श्रीकृष्णः शरणं मम

महर्षिवेदव्यासप्रणीतं

# श्रीमद्भागवतमहापुराणम्

अनेकव्याख्यासमलङ्कृतम्

## तृतीयः स्कन्धः

द्वितीयं फलम्

सम्पादकः

कृष्णशङ्करशास्त्री

वि. सं. २०२२

आदिमपीठाधीश्वर१०८पुष्टिपथाचार्यगोस्वामिश्री-
रणछोडलालमहाराजानां वरदकरसरोजयुगलेन —

## श्रीतृतीयस्कन्धोद्घाटनम्

समग्रविद्वत्कुलकल्पवृक्षाः
श्रीपुष्टिमार्गप्रथनाय दक्षाः ।
अधिष्ठिताश्चादिमपीठमेते
जयन्ति ते श्रीरणछोडलालाः ॥

उपस्थितास्तेऽपि समेधयन्तः
यशोऽकलङ्कं बुधसौहृदेन ।
स्कन्धं तृतीयं वितर्ति प्रणेतुं
संयोजिते भव्यमहोत्सवेऽस्मिन् ॥

पण्डितपञ्चाननतर्करत्नविद्यावाचस्पतिशुकावतार-
श्रीबदरीनाथशास्त्रिवर्याणां सुमङ्गलकरकमलयोः—

## श्रीतृतीयस्कन्धसमपर्णम्

प्रकाण्डं पाण्डित्यं निखिलनिगमाद्यागममहो
विशिष्टं वाग्मित्वं सकलविषयेष्वप्रतिभटम् ।
स्फुरत्काव्यस्रोतो व्रजपतिरतिर्यच्छ्रवणतः
लसत् सद्विप्रत्वं न्वृषिगुणवरेण्यं स्वतपसा ॥

क्वचिद् गर्गो व्यासः शुककविवरो जैमिनिमुनिः
कणादो वा योगी जनगणनुतः पाणिनिरहो ।
मया लोकैर्दृष्टो विबुधबदरीनाथमहिमा
तृतीयस्कन्धस्तत्करकमलयोरस्तु सुभगः ॥

श्रीराधाकृष्णाभ्यां नमः

महर्षिवेदव्यासप्रणीतं

# श्रीमद्भागवतमहापुराणम्

श्रीधरस्वामिविरचित-भावार्थदीपिका, श्रीवंशीधरकृत-भावार्थदीपिकाप्रकाशः, श्रीराधारमणदासगोस्वामिप्रणीत-दीपिनी, श्रीमद्वीरराघवाचार्यभावित-भागवतचन्द्रिका, श्रीमद्विजयध्वजतीर्थरचित-पदरत्नावली श्रीमज्जीवगोस्वामिनिष्पादित-क्रमसंदर्भः, श्रीमद्विश्वनाथचक्रवर्तिसाधित-सारार्थदर्शिनी, श्रीमच्छुकदेवनिर्वर्तित-सिद्धान्तप्रदीपः, श्रीमद्वल्लभाचार्यनिर्मित-सुबोधिनी, श्रीपुरुषोत्तमचरणगोस्वामिरचित-सुबोधिनीप्रकाशः, गोस्वामि-श्रीगिरिधरलालविहित-बालप्रबोधिनी, इत्येताभि-र्व्याख्याभिर्भाषानुवादेन च

समलङ्कृतम् ।

## तृतीयः स्कन्धः


सम्पादकः

श्रीदलसुखरामात्मजः कृष्णशङ्करः शास्त्री

'अभिनवशुकः' वेदान्ताचार्यः साहित्यतीर्थः श्रीभागवतसुधानिधिः ।



प्रकाशकाः

कृष्णशङ्करः शास्त्री

कृष्णराजभाई ठाकरसी

जयराजभाई द्वारकादासः

( श्रीविद्याहितनिधिसदस्याः )

[ वि. सं. २०२२

ई. सन् १९६५ ]

श्री हरिः

# विनयाञ्जलिः

किं वा लेखितव्येन वक्तव्येन वाग्मिकेन। प्रसङ्गप्राप्तप्रस्तावनायामस्ति सुतरामवकाश इति नात्र प्रपञ्च्यते। प्रासङ्गिकमेव किञ्चिद् ब्रवीमि।

श्रीमद्भागवतस्य भगवन्नामस्वरूपिणोऽयं तृतीयस्कन्धः श्रीमद्भिः कृष्णद्वैपायनमुनिभिस्त्रयस्त्रिंशदध्यायैरुपनिबद्धः साम्प्रतं द्वादशभिर्व्याख्याभिर्मुद्राप्यते श्रीविद्याहितनिधिना। भुवि सन्ति किल बह्व्यो व्याख्या वैलक्षण्येन भागवतार्थं प्रतिपादयन्त्यस्ताभ्यो यावच्छक्यमिह सङ्गृहीताः।

सर्गसंज्ञोऽयं तृतीयस्कन्धः श्रीमद्भगवतो वरदोऽभयदोऽदीनो दक्षिणः करो भक्तानां मङ्गलकरः। कृपामयस्तपोमयो वरं ददाति ज्ञानमयो भयान्मोचयति क्रियामय एव ह्यदीनो भवति। क्रियात्मकोऽयं भगवत्करो निश्चितं भक्तानदीनान्करोति।

कस्तावत्सर्गपदार्थश्चे'त्कारणानामुत्पत्तिः सर्गः', 'भूतमात्रेन्द्रियधियां जन्म सर्ग उदाहृतः। अव्याकृतगुणक्षोभान्महतस्त्रिवृतोऽहमः॥ भूतमात्रेन्द्रियार्थानां सम्भवः सर्ग उच्यते॥' इत्थमनेकधा सर्गलक्षणानि वरीवर्तन्ते। तानि यथावसरं विचारयिष्यामि। विश्वस्य कारणानामुत्पत्तिः सर्ग इति पुराणवाक्यानुसारं देवानां तत्वानाञ्चोत्पत्तिः सर्ग इत्यर्थः सर्गस्य। स च सर्गो लौकिकाऽलौकिकभेदेन द्विविधः। अलौकिके सर्गे अष्टौ वसव एकादश रुद्रा द्वादश आदित्याः इन्द्रप्रजापतीति त्रयस्त्रिंशद्देवाः परिगणितास्तान् किल भगवान् कररूपेणाऽसृजत्। संजातास्ते किल यज्ञेन यज्ञमयजन् जनानामभयमकुर्वन्। लौकिके च सर्गे अष्टाविंशतितत्त्वानि चत्वारि भूतबीजानि कालश्चेति तानि त्रयस्त्रिंशज्जगद्रूपेण भवन्ति। तेषां निरूपणाय त्रयस्त्रिंशदध्यायास्तृतीयस्कन्धस्य। तेन सम्पूर्ण एव स्कन्धः सर्गरूपः।

स्कन्धस्यास्य द्वे प्रकरणे। 'तत्रैकोनविंशतिश्चतुर्दश' इति प्रकरणाध्यायविभागः कर्मज्ञानस्वरूपनिरूपकः। यज्ञात्मकस्य वराहस्याविर्भावक्रियाचरितादिभिर्विविच्यमानं कर्म प्रथमप्रकरणे भगवतः कपिलस्यावतारचरितसांख्यज्ञानोपदेशादि चर्चयद् द्वितीयं ज्ञानप्रकरणम्। उभयोर्मिलित्वाऽवान्तरप्रकरणानि दशसंख्याकानि भवन्ति। तत्रैकोनविंशत्यध्यायेषु बद्धसृष्टेर्जीवानां विचारः। चतुर्दशाध्यायेषु मुक्तजीवसृष्टिविषयकः विमर्शः। इमं परामर्शप्रस्तावनायां यथामति विस्तरतो वर्णयिष्यामि।

साम्प्रतं तु यस्य भगवतः श्रीगोवर्द्धननाथस्यैव मनोरथेनायमनेकव्याख्यासमलङ्कृतः सद्भक्तकल्पतरुश्रीमद्भागवतस्य तृतीयस्कन्धः प्रसिध्यति तच्चरणसरोजपरागपुञ्जं प्रणमामि।

ग्रन्थप्रकाशनमयं परमं मखमाचरन् "श्रीविद्याहितनिधिः" श्रीकृष्णकृपया सम्पूर्णं द्वादशस्कन्धसमन्वितं श्रीमद्भागवतमनायासं सानन्दमित्थं प्रकटयत्विति प्रह्वीभूतेन चेतसा प्रार्थयामि परमात्मानम्।

आत्मनः सुहृदौ श्रीजितेन्द्रियाचार्यश्रीप्राणलालाचार्यशास्त्रिणौ मुद्रणालयाधिपतिं श्रीमन्तं बलदेवदासश्रेष्ठिनं च मानयन् विरमामि।

श्रीव्यासपूर्णिमा। २०२२
'आतिथेयम्' नैमिषारण्यम्
नडियाद (गुजरातराज्यम्)

अस्मि विदुषां वशी
अतिथिः
(कृष्णशङ्करः)

# श्रीमद्भागवतमहापुराणतृतीयस्कन्धस्थविषयानुक्रमः

ॐ तत्सत्

श्रीगणेशाय नमः

# श्रीमद्भागवतम्

## अनेकव्याख्यासमलङ्कृतम्

## तृतीयः स्कन्धः

### अथ प्रथमोऽध्यायः

श्रीशुक उवाच

एवमेतत्पुरा पृष्टो मैत्रेयो भगवान् किल । क्षत्त्रा वनं प्रविष्टेन त्यक्त्वा स्वगृहमृद्धिमत् ॥ १ ॥

श्रीधरस्वामिविरचिता भावार्थदीपिका ।

श्रीगणेशाय नमः ॥ नमो भगवते वासुदेवाय ॥

तृतीये तु त्रयस्त्रिंशदध्यायैः सर्गवर्णनम् । ईशेक्षया गुणक्षोभात्सर्गो ब्रह्मांडसंभवः ॥ १ ॥
तत्र तु प्रथमेऽध्याये बंधून्हित्वा गतायुषः । निर्गतस्योद्धवेनादौ संवादः क्षत्तुरुच्यते ॥ २ ॥
भगवद्ब्रह्मसंप्रोक्तं संक्षिप्तं वर्णितं पुरा ॥ प्राह भागवतं शेषप्रोक्तं विस्तरतः पुनः ॥ ३ ॥

द्वेधा हि श्रीमद्भागवतसंप्रदायप्रवृत्तिः एकतः संक्षेपतः श्रीनारायणब्रह्मनारदादिद्वारेण अन्यतस्तु विस्तरतः शेषसनत्कुमारसांख्यायनादिद्वारेण तत्र द्वितीये श्रीनारायणब्रह्मसंवादेन संक्षेपतोऽहमेवासमित्यादिचतुःश्लोक्या श्रीभागवतं निरूपितम् । तदेव ब्रह्मनारदसंवादेन दशलक्षणतया किंचिद्विस्तरेणोक्तम् । तदेव शेषोक्तमतिविस्तरतो वक्तुं तृतीयाद्यारंभः तत्र तृतीये प्रथमं क्षत्तुर्मैत्रेयसंगमश्चतुर्भिरध्यायैः ततोऽष्टभिः सविसर्गः सर्गप्रपंचः ततो विसर्गप्रस्तावेन सप्तभिर्वराहावतारः तत एकेन विसर्गसमाहारः तत्प्रसंगेन चतुर्भिः कपिलावतारः ततो नवभिः कपिलाख्यानमिति त्रयस्त्रिंशद्भिरध्यायैस्तृतीयस्कंधप्रवृत्तिः । तत्र । द्वितीयांते "परिमाणं च कालस्य कल्पलक्षणविग्रहम् ॥ यथा पुरस्ताद्व्याख्यास्ये पाद्मं कल्पमथो शृणु ।" इति प्रतिज्ञातमर्थं विस्तरेण निरूपयितुमितिहासं प्रस्तौति भगवान् शुकः । एवमिति द्वाभ्याम् । ऋद्धिमत्सर्वसंपद्भिः परिपूर्णम् ॥ १ ॥

श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः ।

ॐ स्वस्तिश्रीगणेशाय नमः ।

श्रीकृष्णं सच्चिदानन्दं वल्लवीजनवल्लभम् । वंदे स्वाज्ञानहतये ज्ञानावाप्त्यै सदोद्यतः ॥ १ ॥

इह प्रतिस्कंधकर्त्तव्यं श्रीरामचंद्रनतिरूपं मंगलमवश्यकर्त्तव्यताकत्वेन शास्त्रवर्णनीयसर्गादिदशलक्षणाद्यसर्गलक्षणस्यारब्धत्वात्प्राप्तं लेखकप्रमादादत्र नास्तीति । यद्वा । दुर्ज्ञेयसर्गविचाराकुलत्वात्तद्विस्मृतमिति ज्ञेयम् । सर्गलक्षणमाह—ईशेच्छयेति ॥ (१) ॥ तत्र त्रयस्त्रिंशत्स्वाध्यायेषु गतायुषः नष्टायुर्दायान् (॥ २ ॥ ३ ॥) एकतः एका प्रथमार्थे तसिः । अन्यतोऽन्या द्वितीयेति तत्र द्वयोर्मध्ये द्वितीये स्कंधे तदेव संक्षेपनिरूपितमेव तृतीयादीनां स्कंधानामारंभस्तृतीयाद्यारंभः । यत्र तृतीयादिषु स्कंधेषु ततश्चतुरध्यायोत्तरं

तत्रादौ द्वितीयस्कंधाष्टमाध्याये राज्ञा कृतेषु बहुषु प्रश्नेषु श्रीशुको द्वित्रिप्रश्नोत्तरं दत्वा चेतसीति विचारयामास एतत्प्रश्नजातं प्रति एवमेव पुरा भगवांस्त्रिकालदर्शी मैत्रेयः क्षत्रा विदुरेण पृष्टः तत्स्वगृहं त्यक्त्वा वनं प्रविष्टेन अग्रिमपद्ये यत्पददर्शनादत्र तदित्यानेयम् ॥ १ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनीव्याख्या ।

श्री चैतन्यं सावधूतं साद्वैतं च तथा प्रभुम् । श्रीमद्गोपालभट्टं च नत्वा व्याख्यां समारभे ॥ १ ॥

तत्र श्रीधरनामा यतीन्द्रः सर्गादिदशलक्षणानि द्वादशस्कंधे सर्वत्र स्थितान्यपि प्राधान्येन तृतीयादिदशस्कन्धेषु योजयिष्यन् आदौ तृतीयार्थमाह तृतीयेत्विति । तत्र सर्गलक्षणं ईशेच्छयेति । तत्र त्रयस्त्रिंशदध्यायमध्ये बन्धून् धृतराष्ट्रादीन् भक्तापराधित्वाद्गतायुषः जीवन्मृतान् । संवादः प्रश्नोत्तरकथा । क्षत्तुर्विदुरस्य अथ द्वितीयव्याख्यानंतरं भगवद्ब्रह्मसंप्रोक्तं भगवता ब्रह्मणे सम्यग्संदेहनिरास-पूर्वकमुक्तं ब्रह्मणा च नारदाय तथैवोक्तं भागवतं संक्षिप्तं यथा स्यात्तथा श्रीशुकेन वर्णितम् । द्वेधाहि प्रकारद्वयेन एकत एकप्रकारेण अन्यतः प्रकारांतरेण प्रकारभेदश्च संक्षेपविस्तरशब्दानुपूर्वी विषयो व्याख्येयः तात्पर्य्याऽविशेषात् तत्र प्रकारद्वयमध्ये पुनस्तत्र तृतीयादिमध्ये सविसर्गः कारणसृष्टिसहितः सर्गप्रपञ्चकार्य्यसृष्टिविस्तारः तत्प्रसंगेन विसर्गसमाहारप्रसंगेन प्रवृत्तिः प्रचारः तत्र एवं सति अर्थकालपरिणामादिलक्षणमेवं यथा त्वं पृच्छसि तथा एतत्कालपरिमाणाद्यर्थजातं प्रति ॥ १ ॥

### श्रीमद्वीरराघवव्याख्या

श्रीमते रामानुजाय नमः

अथ भगवान् बादरायणिः पूर्वस्कंधांते यथापुरस्ताद्व्याख्यास्ये पाद्मं कल्पमथो शृण्विति ज्ञातमर्थं प्रतिपादयिषुः स्वप्रति-पिपादयिषि तस्य प्रामाणिकत्वप्रथिम्ने विदुरमैत्रेयसंवादं प्रस्तोष्यन् भवताहमिव मैत्रेयोऽपि विदुरेण पृष्ट इत्याह श्लोकद्वयेन एवमिति । वः पांडवानां मंत्रकृद्दौत्यकर्त्ता अखिलेश्वरः यमस्तदंशभूतो भगवान् विदुरः आत्मसात्कृतं स्वकीयत्वबुद्ध्या परिगृहीतं पौरवेंद्रगृहं पौरवेंद्रो धृतराष्ट्रस्तस्य गृहं हित्वा त्यक्त्वा यद्वा यदा वा प्रविवेश वनमिति शेषः तदा ऋद्धिमत्संपन्नं स्वगृहं त्यक्त्वा वनं प्रविष्टेन विदुरेण क्षत्रा भगवान्मैत्रेयो मित्रासुतः कौषारविः एतद्भगवता पृष्टं प्रत्येवं भवदीयप्रश्नानुसारेण पुरा पृष्टः । त्यक्त्वा स्वगृहमिति पौरवेंद्रगृहं हित्वेति च कायिको मानसश्च त्यागो विवक्षितः अतो न पौनरुक्त्यं गृहस्य ऋद्धिमत्त्वहेतुतया भगवानखिलेश्वर इति श्रीकृष्णस्य पौरवेंद्रगृहप्रवेशकथनमसंगतं तद्गृहस्य भगवन्निग्रहविषयतया विनंक्ष्यमाणत्वेन ऋद्धिसत्वे वर्णनासंगत्याद्वित्वेति पदास्वारस्याच्च ॥ १ ॥ २ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

श्रीवेदव्यासाय नमः

यल्लीलाजलराशिलोलहरीस्नानक्षमाणां नृणां संसारोदधिराशु शुष्यतितरामग्न्युग्रशुष्कैधवत् ॥
यस्माद्विश्वमशेषमुद्भवति यस्तत्त्वं परं योगिनां श्रीमन्तं तमुपास्महे सुमनसामिष्टप्रदं विट्ठलम् ॥ १ ॥
अगाधश्रीमद्भागवतजलराशौ मणिगणं तृतीयस्कंधोद्भ्रममनवगाहं मृगयति ।
निमज्ज्योन्मज्ज्यार्थेऽनुपदमनुरक्तेऽमलधियः कृपाले शंसंतः खलु विदधतां मय्यनुपदम् ॥ २ ॥

अत्र मुमुक्षूणां स्वस्वयोग्यभगवदपरोक्षज्ञानोत्पत्तौ प्रधानसाधनं भक्तिरेव तत्साधनमितरत् सर्वमिति प्रपञ्च्यते । तत्र सूतः शौनकप्रश्नपरिहाराय शुकपरीक्षित्संवादं कथयति एवमिति । यथाहं च त्वया एतत्प्रमेयं प्रतिपृष्ट एवं तथा क्षत्त्रापि विदुरेणापि-भगवांस्त्रिकालज्ञो मैत्रेयः पृष्ट इत्यन्वयः । ऋद्धिमत्स्वगृहं त्यक्त्वेत्यनेन वैराग्यं प्रथमसाधनमिति सूचितम् ॥ १ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

श्रीमद्राधागोविन्दचरणकमलेभ्यो नमः ॥
तृतीयक्रमसन्दर्भे सन्दर्भाणां समाहृतिः । क्रियते यन्निदेशेन स मेऽनन्यगतेर्गतिः ॥ १ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

प्रणम्य श्रीगुरुं भूयः श्रीकृष्णं करुणार्णवम् । लोकनाथं जगच्चक्षुः श्रीशुकं तमुपाश्रये ॥
गोपरामाजनप्राणप्रेयसेति प्रभूष्णवे । तदीयप्रियदास्याय मां यदीयमहं ददे ॥
त्र्यधिकत्रिंशताध्यायया तृतीये सर्ग उच्यते । तत्वैः समष्टिसृष्टिर्यः प्रधानात् पुरुषेक्षितात् ॥

प्रदर्श्य भगवद्ब्रह्मनारदाद्यैः प्रवर्त्तितम्। श्रीमद्भागवतं शेषकुमाराद्यैश्च दर्श्यते ॥
विदुरोद्धवसंवादश्चतुर्भिः पुनरष्टभिः। सविसर्गः सर्गविधिः सप्तभिः क्रोडकीर्त्तनम् ॥
ततो विसर्गसंक्षेपः एकेन कपिलोदयः। चतुर्भिर्नवभिश्चेति तृतीयस्कन्धसंग्रहः ॥
तत्र तु प्रथमाध्याये क्षत्ता हित्वाग्रजं गतः। तीर्थं तत्र श्रुतानिष्टोऽपृच्छन्मिलितमुद्धवम् ॥

पूर्व्वस्कन्धेऽष्टमेऽध्याये राज्ञा कृतेषु बहुषु प्रश्नेषु द्वित्रिप्रश्नानामुत्तरं दत्त्वा महामुनिर्मनसि परामम‍र्श। यथाऽनेन राज्ञा संप्रत्यहं पृष्टस्तथैव पूर्वं विदुरेणापि मैत्रेयः पृष्ट इति। ततश्च तत् प्रस्तावेनैवोत्थापितेन राज्ञः सर्वप्रश्नोत्तरं दास्यामीति निश्चित्याह एवमिति ऋद्धिमत् सर्वसम्पद्भिः पूर्णम् ॥ १ ॥

श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः
श्रीमते मङ्गलमूर्तये भगवन्निम्बार्काय नमः ॥

श्रीनिम्बार्कं नमस्कृत्य प्रदीपोऽयं विरच्यते। अधिकत्रिंशदध्यायसंयुक्ते तु तृतीयके ॥ १ ॥
सर्गादयस्तु सन्त्येव ह्येकत्रापि ह्यनेकशः। प्राधान्यतस्तु वर्ण्यन्ते तृतीयादिषु ते क्रमात् ॥ २ ॥

अतिक्रान्तस्कन्धान्ते परिमाणं च कालस्य कल्पलक्षणविग्रहं यथा पुरस्ताद् व्याख्यास्ये पाद्मं कल्पमथो शृण्विति प्रतिज्ञातमर्थं विस्तरतो वर्णयितुमितिहासं प्रस्तौति श्रीशुकः एवमिति द्वयेन। मैत्रेयः मित्रायाः पुत्रः क्षत्ता भुजिष्यापुत्रेण विदुरेण क्षत्ताशूद्रा तु क्षत्रियाजे प्रतिहारे च सारथौ भुजिष्यातनये क्षत्तानियुक्ते च प्रजासृजीति विश्वः। ऋद्धयः संपदो विद्यन्ते यस्मिन् तत् ॥ १ ॥

श्रीमद्वल्लभाचार्यविरचिता सुबोधिनीव्याख्या

अधिकारिषु साङ्गं हि श्रवणं सुनिरूपितम्। स्कन्धद्वयेन, शेषेषु[1] क्रियते विषयाभिधा ॥ १ ॥
त्रयस्त्रिंशदथाऽध्यायास्तृतीये सर्गवर्णने। स्वा[2]भिप्रेते स[3]विशेषे हरेर्माहात्म्यसूचके ॥ २ ॥
लोके सर्गविसर्गौ हि यादृशौ नेह तौ मतौ। किन्तु तौ लीलया वाच्यौ तेन स्कन्धद्वयं ततम् ॥ ३ ॥
भू[4]तमात्रेन्द्रियधियां जन्म सर्ग उदाहृतः। ब्र[5]ह्मणो गुणवैषम्यादिति सर्गस्य लक्षणम् ॥ ४ ॥
अत्रार्थो द्विविधोऽप्यस्ति विवक्षित इति स्फुटः। ब्रह्मतो जायते सर्गो ब्रह्मार्थं क्रियते परः ॥ ५ ॥
अतोऽत्र द्विविधः सर्गः श्रुतिसाङ्ख्यानुसारतः। भूतमात्रेन्द्रियधियः प्रथ[6]मे त्रिविधा मताः ॥ ६ ॥
अधिका[7]रे ह[8]रौ का[9]र्ये सत्त्वादिगुणभेदतः। अतश्चतुर्णामुत्पत्तौ द्वादशाध्यायवर्णनम् ॥ ७ ॥
ततोऽत्र[10] युक्तरूपस्य[11] ब्रह्मणो विनिरूपणम्। गुणवैषम्यकथनं षडध्याय्या निरूप्यते ॥ ८ ॥
कर्मादि[12]मार्गा वेदोक्ताः फलत[13]स्ते यदि स्थिराः। सर्गोऽत्र नैव जायेत ततस्तन्नाश उच्यते ॥ ९ ॥
कामेन कर्मनाशः स्यात् क्रोधेन ज्ञाननाशनम्। लोभेनापि च भक्तेर्हि धर्मिज्ञा[14]नीश्वरैः कृताः ॥ १० ॥
ततो गुणानां वैषम्यं तमः सत्त्वरजस्त्वतः। एवमेकोनविंशत्या हरिकर्तृक ईरितः ॥ ११ ॥
चतुर्दशभिरध्यायैर्हरये सर्ग उच्यते। गुणवैषम्यमेकेन भगवद्भोगसिद्धये ॥ १२ ॥
भूतमात्रेन्द्रियधियां जन्म भोगाय देहतः। चतुर्भिरुच्यतेऽध्यायैर्नवभिश्च गुणास्त्रयः ॥ १३ ॥
यादृशैर्भगवद्भोगस्तेषां सर्गो निरूप्यते। कथायां त्वधिकारोऽत्र[15] चतुर्भिः करणं परैः[16] ॥ १४ ॥
सर्गस्य सविभूतेश्च सर्वत्रैवानुवर्णनम्। उ[17]त्तमे त्वधिकारे हि[18] लीलामात्रं फलाय वै ॥ १५ ॥
किं पुनर्दशधा लीलेत्येवं वैदुरिकी कथा[19]। त[20]त्राऽधिका[21]रे प्रथ[22]मे देहवैशिष्ट्यकारणम् ॥ १६ ॥
भूतानां संस्कृतानां हि त्रेधा[23] सर्गो निरूप्यते। तीर्थसङ्गगुणस्मृत्या पञ्चधा[24] वा निरूप्यते ॥ १७ ॥

---

१. दशसु स्कन्धेषु इति प्रकाशः। २. शुकव्याससयोराशयगोचरे. प्र.। ३. अव्याकृतगुणक्षोभात् ( १२ स्क ७ अ. ११ श्लो. ) इतिद्वादशस्कन्धोक्तमहापुराणसामान्यलक्षणाद्यो विशेषस्तत्सहिते. प्र. ४. अत्रार्धेन मूलस्थलक्षणानुवादः. प्र.। ५. ब्रह्मण इति संबन्धषष्ठी, तेन रूपेण कर्तृत्वतादर्थ्ययोरुभयोरपि संग्राहिका, तेन भगवदुपादानको मायिकश्चेति द्वौ सर्गौ. प्र.। भगवदुपादानकसर्गप्रकरणे. प्र.। ७. अधिकारादिपदेषु तादर्थ्ये सप्तमी. प्र.। ८. हरिशब्दः पुरुषशरीरवाचकः. प्र.। ९. कार्यशब्दो भौतिकसृष्टिपरः. प्र.। १०. त्रयोदशेऽध्याये. प्र.। ११. क्रियाशक्तिप्रधानस्य वराहरूपस्य ब्रह्मणः. प्र.। १२. आदिपदेन भक्तिज्ञाने. प्र.। १३. फलमोक्षस्तत्प्रापकतया. प्र.। १४. कामक्रोधलोभाः क्रमेण धर्मिज्ञानीश्वरैः ( कश्यप-सनकादि-द्वारपालैः ) कृताः प्र.। १५. सुबोधिन्यां प्रकाशः.। १६. अग्रिमैरध्यायैः. प्र.। १७. नन्वधिकारस्य प्रथमस्कन्ध एवोक्तत्वात्पुनः कथनस्य किं प्रयोजनमत आहुः उत्तमे त्वित्यादि. प्र.। १८. तु क. ङ. च.। १९. विदुरमैत्रेयसंवादरूपा कथा. प्र.। २०. अर्थनिरूपणप्रस्तावे. प्र.। २१. अधिकारप्रकरणे. प्र.। २२. अध्याये. प्र.। २३. आकाशस्य निर्लेपत्वाद् मुख्यप्राणस्यापहतपाप्मत्वात् तत्संस्कारो नापेक्ष्यत इति शिष्टानां त्रयाणामेव स, इत्यतस्त्रेधेत्युक्तम्. प्र.। २४. 'पृथिव्यापस्तेजोवायुराकाशा मे शुद्ध्यन्ताम्' इति विरजाहोममन्त्रलिङ्गेन वाय्ववाकाशयोरप्यशुद्धेः पञ्चधेति पक्षान्तरमुक्तम्. प्र.।

तीर्थद्वयेन हरिणा भक्तैस्तत्कथयाऽपि च।
अस्मिन् भागवते शास्त्रे पूर्वदेहस्य नाशनम्। नापेक्ष्यते यतः सर्वे भक्तिमार्गाधिकारिणः ॥ १८ ॥

एवं पूर्वाध्यायान्ते 'तद्वोऽभिधास्ये शृणुत' इत्युक्तम्। शुकोऽपि सर्गे विदुरकथैव युक्तेति तत्कथाक्षेपणार्थं विदुरेणैवं प्रश्नः कृत इत्याह श्लोकद्वयेन—एवमिति। यथा त्वया बहवः प्रश्नाः कृताः पूर्वपक्षपुरस्सरम्। एतत् सर्वमग्रे वक्ष्यमाणम्। एवमेव विदुरेण पृष्टो मैत्रेय आहेति नोच्यते। नहि सर्वे पदार्थाः पृष्टा वक्तव्याः। यदेव तस्योपकारि भवति तदेव वक्तव्यमिति भावः। कियतीं भगवत्कथां श्रुत्वा तस्यां हृदयं गतायां तद्दार्ढ्यार्थं विशेषं पृच्छति सर्वोऽपीति। कार्यसिद्धिः श्रोतु[1]र्निरूप्यते। अन्यथा व्युत्थितस्य शङ्कया[2] न वक्तव्यं स्यात्। भगवत्त्वमत्र शास्त्रे द्विविधम्, नित्यं कार्यं च। तद्भगवति नित्यम्। तत्प्रसादविषयेषु कार्यम्। त[3]स्याऽधिकारार्थमुपदेशादिषु गुरुत्वज्ञानित्वादिसिद्ध्यर्थमिहोच्यते। अतो मैत्रेयस्यापि प्रमेयसञ्चारणसामर्थ्यार्थं सर्वसन्देहवारणसामर्थ्यार्थं च भगवत्त्वं विरूप्यते। मित्रायाः पुत्र इति जन्मत एव तस्य सर्वोपकारित्वं सूचितम्। अग्रे भगवच्छब्दाच्च न तथा[4] दूषणम्। किलेति प्रसिद्धिरुभयत्र, भगवत्त्वे प्रश्ने च। अन्यथा स्वस्य तदन्वयप्रवेशाभावात् कथनमयुक्तं स्यात् क्षत्ता नाम अन्तःपुराध्यक्षः सर्वथा जितेन्द्रियः। तादृशाभावे नपुंसकोऽपि क्रियते। अतो विदुरस्य जितेन्द्रिय[5]त्वं वक्तुं क्षत्तृत्व[6]माह—क्षत्रेति। वनं प्रविष्टेनेति तादृशस्य सर्वपरित्यागपूर्वकवनस्थितिः, प्रश्नाधिकारो निरूपितः। वनस्यैवेप्सितत्वात् कर्मत्वम्। प्रकर्षस्तत्रैव देहत्यागविवक्षया। त्याज्यस्योत्कृष्टत्वमधिकारसूचकमिति तदाह—स्वगृहमृद्धिमदिति। अनन्याधीनत्वं सर्वसम्पत्तिश्च उद्वेगाभावाय। चित्तोद्वेगेन यत् क्रियते कर्त्तव्यत्वसहितेनाऽपि न तत्फलायेति ॥ १ ॥

## श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः।

अथ तृतीयस्कन्धविवरणं चिकीर्षवो निबन्धे स्कन्धार्थस्य सङ्क्षेपेणोक्तत्वात् तत्स्मारयितुं ताभिरेव कारिकाभिस्तदनुवदन्ति—अधिकारीत्यादि। तेन प्रथमस्कन्धार्थो हीन[7]मध्यमोत्तमभेदेन द्विविधः। सगुणोऽग्रिमो गुणातीतश्चेति त्रिविधोऽधिकार इति तादृशेष्वधिकारिषु द्वितीये साङ्गं वस्तुनिर्देशश्रद्धाविमर्शाख्यसपरिकराङ्गसहितं श्रवणं स्कन्धद्वयेन कर्तव्यतया सुनिरूपितं कीर्तयित्वा शुकेन स्वव्यसनेन निरूपणात्तत्र विधिविषयत्वाभावेन व्यासपादैः श्रवणं विधिविषयतया मुख्यमुपनिबद्धम्। तत्र विषयापेक्षायां शेषेषु दशसु स्कन्धेषु विषयाभिधा अत्र सर्गो विसर्गश्चेति श्लोकोद्दिष्टानां भूतमात्रेन्द्रियधियामित्यादिभिर्लक्षितानां लीलारूपाणां विषयाणां अभिधा अभिधानं परीक्षापूर्वकं निरूपणं क्रियते। तथा येन रूपेण विषयत्वं तदत्र विचार्यत इत्यर्थः। एवं विषयविषयीभावरूपा स्कन्धसङ्गतिः स्मारिता। प्रस्तुतस्कन्धवाक्यार्थं व्याख्यातुमध्यायसङ्ख्यामनुवदन्ति—त्रय इत्यादि। सङ्ख्याप्रयोजनं द्वितीयसुबोधिन्यां निरूपितम्, तन्निबन्धविचारादविवक्षितम्। तन्मया तृतीयस्यावरणभङ्गे सम्यगुपपादितमिति ततोऽवगन्तव्यम्। स्वाभिप्रेत इति। शुकव्यासयोराशयगोचरे। सविशेष इति। "अव्याकृतगुणक्षोभात्" इति द्वादशस्कन्धोक्तमहापुराणसामान्यलक्षणाद्यो विशेषस्तत्सहिते। तदपि तत्रैव व्युत्पादितं सर्गं भगवद्रूपतैव विशेष इति। हरेर्माहात्म्यसूचक इति। एतेन सविशेषत्वस्य प्रयोजनमुक्तम्। निबन्धे तु "स्वोपयुक्तार्थसंयुतः" इति पठितम्। स्वस्य श्रोतुरुपयुक्तो योऽर्थो मोक्षादिफलं तद्युक्त इति तत्रार्थः। तथा सति "बध्नन्नेव मोचयति" इति सर्वदुःखहर्तुर्माहात्म्यसूचकं तद्वर्णनमिति तस्यैवायं निष्कृष्टार्थ उक्तः। ननु सर्गविसर्गयोरुत्पत्तित्वाविशेषात् स्कन्धविभेदे किं बीजम्, एतावद्विस्तारस्य च किं प्रयोजनमित्याकाङ्क्षायामाहुः—लोक इत्यादि। तथा च लीलाभेद एव बीजम्, तदर्थ एव च विस्तार इत्यर्थः। निबन्धे तु लीलयेत्यत्र सार्थकाविति पाठः। अर्थस्तु सार्थकौ पुरुषार्थपर्यवसायिनौ, तेनैकैका लीला स्वतन्त्रेति प्रत्येकमेकैकस्कन्धवाच्यता, तेन स्कन्धविस्तार इति विवृतः। तेन तत्र फलमुखेन भेदः, अत्र तु हेतुमुखेनेति भेदः, तात्पर्यन्त्वेकमेव। इतोऽग्रे कारिका भिद्यन्त इति तत्रत्यं प्रमेयं नानूद्यते। अवान्तरभेदेऽपि पर्यवसान ऐकार्थ्याच्चेति। नन्वत्र सकृदपि सर्गकथने स्कन्धार्थसिद्धेर्वारद्वयं तत्कथनस्य किं तात्पर्यमित्याकाङ्क्षायां सोपपत्तिकं तदाहुः—भूतेत्यादिसार्द्धाभ्याम्। अत्राद्येन मूलस्थलक्षणानुवादः। द्वितीये [8]एको ब्रह्मतः स्फुटो जायते। अपरः ब्रह्मार्थं क्रियत इति प्रकाश्यत्वं कार्यत्वं च द्वयोर्भेदकमुक्तम्। यत एवमग्रे द्वैविध्यं दृश्यते। अतोऽत्र लक्षणवाक्ये द्विविधोऽपि सर्गो विवक्षित इत्यर्थः। तथा च लक्षणवाक्ये ब्रह्मण इति सम्बन्धषष्ठी तेन रूपेण कर्तृत्वतादर्थ्ययोरुभयोरपि सङ्ग्राहिकी (?) तेन भगवदुपादानको मायिकश्चेति द्वौ सर्गौ। तत्राद्य इदमुपादानलक्षणं द्वितीये तटस्थलक्षणमिति बोधितम्। इदं चैकादशेऽन्यत्र सर्वत्रैवानुसन्धेयमित्येतदर्थम्। अथवा घटितपूरितपात्रवद्वा द्वौ, तदा तूपादानलक्षणमेवेति। अयमत्र निबन्धाद्विशेषः। वाक्यपदाक्षरार्थानामत्र वक्तव्यत्वात्, तत्र तु शास्त्रार्थाद्युपयोगिन एवार्थस्योक्तत्वादिति। एवं द्विरुक्तिमुपपाद्य तदवान्तरप्रकरणानि विभक्तुमध्यायान्विभजन्तस्तत्प्रयोज-

---

१. विदुरस्य. प्र.। २. शङ्कायाम् ङ.। ३. मैत्रेयस्य. प्र.। ४. तथा च सर्वोपकारित्वात् तस्या मित्रात्वम्, न तु जाबालवदित्यर्थः प्रकाशः. पुस्तकेषु तु तयेति पाठः. ५. जितेन्द्रियचयत्व च. ख.। ६. क्षत्रियत्वमित्यपि पाठः प्रकाशे,। ७. न्यूनेति पाठः। ८. उपलब्धपुस्तकेषु तु 'एकम्' इति पाठः।

नान्याहुः—भूतेत्यादिभिः पञ्चभिः। प्रथमत[1] इति। भगवदुपादानकसर्गप्रकरणे। अधिकारादिपदेषु तादर्थ्ये सप्तमी। हरिशब्दः पुरुषशरीरवाचकः। कार्यशब्दो भौतिकसृष्टिपरः। अत्रैतद्बोध्यम्। पञ्चमाध्याये "अथ ते भगवल्लीला योगमायोपबृंहिताः" इत्युपक्रम्य "कालवृत्त्या तु मायायां गुणमय्यामधोक्षजः। पुरुषेणात्मभूतेन वीर्यमाधत्त वीर्यवान्। ततोऽभवन्महत्तत्त्वमव्यक्तात्कालनोदितात्" इत्यादिना अतीन्द्रियभगवत्कर्तृकपुरुषकरणकमायाधिकरणकवीर्याधानेन महत्तत्त्वोत्पन्ने ततः क्रमेण त्रयोविंशतितत्त्वोत्पत्तिमुक्त्वा, षष्ठे ब्रह्माण्डपुरुषशरीरोत्पत्तिरुच्यते, तस्याद्यावतारत्वं चोच्यते। तेनैकः सर्गस्तच्छरीरनिर्माणार्थः। ततस्तादृशशरीरविशिष्टावतारस्वरूपदर्शनमष्टम उक्त्वा, नवमे तत्प्रसादेन तदाज्ञया दशमे चतुर्दशलोकसृष्टिरुच्यते। तेन तत्प्रकरणस्य समाप्तिरवगम्यते। ततो दशम एवाध्याये "गुणव्यतिकराकारो निर्विशेषोऽप्रतिष्ठितः। पुरुषस्तदुपादानमात्मानं लीलयाऽसृजत्" इति कालस्योपादानतामुपक्रम्य "विश्वं वै ब्रह्म तन्मात्रम्" इत्यनेन जगतः सूक्ष्मरूपमादिकारणं ब्रह्मेत्युक्त्वा "सर्गो नवविधस्तस्य" इति प्रतिज्ञाय "आद्यस्तु महतः सर्गो गुणवैषम्यमात्मनः" इत्यादिना आत्महेतुगुणवैषम्यरूपं भूतमात्रेन्द्रियधीसङ्घातात्मकतच्छरीरजन्मोक्त्वाऽन्येषां तेन तेन प्रकारेण सर्गपदोक्तिपूर्वोक्तं जन्मोच्यते। तेन स सर्गः कार्यशरीरनिर्माणार्थः। एवं च यद्यपि पूर्वप्रकरणस्याष्टम एव समाप्तिस्तथापि सप्तमाध्याये विभूतिप्रश्नान्नवमे विभूतिमत्त्वं पूर्वोक्तस्य निरूप्य तद्विभूतिः पूर्वमुच्यत इति कालात्पूर्वं निरूप्यमाणस्य सर्गस्य मैत्रेयविचारेण पूर्वशेषत्वम्। व्यासविचारे तु प्रकरणान्तरशेषत्वमेवेत्युभयं समञ्जसम्। तदिदं निबन्धादवगन्तव्यम्। एवमत्र प्रकरणद्वये सर्गभेदस्य निर्धारात्प्रथमेऽधिकारप्रकरणेऽप्यधिकारस्य भगवदेकसाध्यत्वाच्चतुरध्याय्यां तत्रापि भूतादिसर्गः संख्याबलादवगन्तव्य इति त्रिष्वप्यवान्तरप्रकरणेषु चतुर्णां सर्ग इति हृदयम्। यद्यपि द्वितीये भगवत्कर्तृकत्वं न स्पष्टम्, तथापि सिद्धवदनुवादात्पूर्वोक्त एव कर्त्ताऽत्राऽप्यायातीति भगवत्कर्तृकत्वमप्यक्षुण्णम्। तदेतदभिसन्धायोक्तम्—अधिकारे हरौ कार्य इति। प्रकृतमनुसरामः। अतश्चेति। प्रयोजनभेदाद्रूपभेदाच्च। यद्यपि भूतमात्रास्तामस्य इन्द्रियाणि राजसानि, धियः सात्त्विक्यस्तथापि तत्तत्कार्यार्थं कारणभूतसत्त्वादीनां तत्राधिक्येन निवेशाद्गुणभेदकृतो भेदस्तेषु बोध्यः। ततोऽत्रेति द्वादशाध्यायोत्तरं त्रयोदशेऽध्याये युक्तरूपस्य क्रियाशक्तिप्रधानस्य वराहरूपस्य ब्रह्मणो विशेषेण निरूपणम्। ननु गुणवैषम्ये निरूपणीये कश्यपदित्यादिकथायाः किं प्रयोजनमित्याकाङ्क्षायामाहुः–कर्मादीत्यादि। आदिपदेन भक्तिज्ञाने। फलत इति फलं मोक्षस्तत्प्रापकतया। ततो हेतोस्तन्नाशककामक्रोधाभ्यां कर्मज्ञानयोर्नाशः हेतूपोद्घाततया शुकेनोच्यते, अतः प्रकृतसर्गसिद्धिरेव प्रयोजनमित्यर्थः। ननु 'न मे भक्तः प्रणश्यति' इति भगवतः प्रतिज्ञयेति भक्तयोर्दौवारिकयोः कथं भक्तिनाश इत्यत आहुः—लोभेनेत्यादि। तथा च दोषवशान्नाश इत्यर्थः। ननु तादृशेषु कथं कामादिदोषोत्पत्तिरित्यत आहुः—धर्मीत्यादि। कामक्रोधलोभाः क्रमेण धर्मिज्ञानीश्वरैः कृताः। अपत्यकामायाः [2]कामपूर्त्तये यथा कामी भवेन्नित्यमित्यादिविध्यनुरोधिना धर्मिणा धर्माभिमानात्कामः, ज्ञानवता ज्ञानाभिमानात्क्रोधः, ईश्वरेण तदभिमानात्तेषु लोभ इति ते तैः कृताः। बन्धलीलात्वान्नात्राभिमानो दोषः। लीलात्वाच्च न भगवद्बन्धक इति सुस्थम्। तथा च मार्गत्रयनाशरूपसृष्टीच्छाव्यापारबोधनाय तत्कथेति भावः। अग्रे स्फुटम्। एतेन साङ्ख्याद्वैधर्म्यं वैषम्येऽपि बोधितम्। साङ्ख्ये गुणानां स्वभावादेव क्षोभरूपवैषम्यम्, इह तु भगवदिच्छयेतीयमवान्तरकथाऽपि मूलवैषम्यस्य तथात्वबोधनार्था। एवं पञ्चभिः प्रथमप्रकरणाध्यायसङ्ख्याप्रयोजनोक्तिपूर्वकं प्रथमप्रकरणार्थ उक्तः। एवं द्वितीयस्य सार्द्धाभ्यामाहुः—चतुर्दशेत्यादि। देहतो जन्मेति योजना। तेषामिति। तादृशां भूतादीनां गुणानां च। तदिदं विंशेऽध्याये स्फुटिष्यति। एवमत्र सर्गलक्षणघटकपदार्थानां प्रत्येकं निरूपणेन यथा सृष्टित्वाऽविशेषेऽप्यवान्तरविशेषात्सर्गविसर्गाभ्यां स्कन्धभेदस्तथा प्रयोजनभेदभिन्नाभ्यां सर्गाभ्यां कुतो नेत्याशङ्काऽपि निरस्ता। लक्षणभेदस्याभावादिति निबन्धे तु चतुःप्रकरणी स्थौल्ये सौक्ष्म्ये तु दशधा मतेति प्रकरणविभागे उक्तम्। अत्र तु कथामात्रोपयोगाय ततोऽपि स्थूलतयोच्यते इत्याशयेनाहुः—कथायामित्यादि। अत्र सुबोधिन्यां तु चतुर्भिरध्यायैरधिकार उच्यत, परैरग्रिमैरध्यायैः सर्गस्य करणम्। 'तद्विभूतीर्वदस्व न' इति विशेषप्रश्नात्सविभूतेः सर्गस्य सर्वेष्वेवाध्यायेष्वनुवर्णनम्। तथा च विदुरमैत्रेयसंवादमात्रसिद्धं यत्तन्यात्रमत्रोच्यते, अतो न दोष इत्यर्थः। एतेन विदुरोद्धवकथायां सर्गप्रश्नाभावात्तत्र भूताद्युत्पत्तिव्याख्यानं न युक्तमिति शङ्कापि निरस्ता, तस्यैतत्कथोपनिबन्धकव्यासाशयगोचरत्वादिति। नन्वधिकारस्य प्रथमस्कन्ध एवोक्तत्वात्पुनः कथनस्य किं प्रयोजनमत आहुः—उत्तमेत्वित्यादि। कथेति विदुरमैत्रेतसंवादरूपा कथा। तथा च फलोपोद्घातत्वेन शुकेन व्यासपादैश्चोच्यते। लीलोत्कर्षबोधनं प्रयोजनमित्यर्थः।

एवं कथोपयोगिप्रकरणार्थमुक्त्वा प्रथमाध्यायार्थमाहुः—तत्रेत्यादि। तत्र अर्थनिरूपणप्रस्तावे, अधिकारे अधिकारप्रकरणे प्रथमेऽध्याये संस्कृतानां सत्त्वेन शुद्धिं प्राप्तानां भूतानां त्रेधा पञ्चधा वा सर्गो निरूप्यते। भूतादीनां लक्षणं तु पञ्चमाध्याये स्फुटीकार्यम्। आकाशस्य निर्लेपत्वान्मुख्यप्राणस्यापहतपाप्मत्वात्तत्संस्कारो नापेक्ष्यते, इति शिष्टानां त्रयाणामेव स इत्यतस्त्रेधेत्युक्तम्। अस्मिन्पक्षे भगवदीयं स्मरणं गुणस्मृतिकोटौ निविशतीति ज्ञेयम्। पृथिव्यापस्तेजोवायुराकाशा मे शुद्ध्यन्तामिति विराजाहोम-

---

१. 'त' इति विशेषः प्रतिभाति। २. ज्ञानवता ज्ञानाकाम पूर्तये इत्यपि पाठः।

मन्त्रलिङ्गेन वाय्वाकाशयोरप्यशुद्धेः पञ्चधेति पक्षान्तरमुक्तम्। नस्यादिशुद्ध्यपेक्षणाच्च। देहवैशिष्ट्यलक्षणमित्यनेन संस्कारे प्रमाणमुक्तम्। अन्यथा उक्तविधवैशिष्ट्यवान् देहो न स्यादिति। कारणमिति पाठेऽपि वैशिष्ट्यरूपकार्येण कारणानुमानात्स एवार्थः। तृतीया सर्वत्र करणार्थे। तेन हरिणेत्यत्र स्मृत्यारूढस्य भगवत एवं करणत्वम्। अभिन्ननिमित्तोपादनत्ववत्कर्तृकरणाभेदस्याऽप्यदुष्टत्वादिति। स्मर्यमाणस्य रूपस्य वा करणत्वं द्वितीयस्कन्धेऽङ्गुलीयकविमर्षे स्मर्यमाणरूपाणां नानात्वेन भेदस्य सिद्धत्वात्। व्यापारत्वं तु स्मरणस्यैवेति बोध्यम्। एवं कर्तृकरणव्यापारफलानि सर्वत्रैवानुसन्धेयानि। ननु प्राप्यमिव यत्किञ्चिददृष्टजन्ये देहस्थितानां भूतानां नाशाभावे कथं संस्कृतभूतसर्गः शक्यवचन इत्याशङ्कायामाहुः—अस्मिन्नित्यादि। तथा च यथा वैदिकसाधनाधिकारार्थं शूद्रदेहनाशापेक्षा, तथा 'देवाऽसुरो मनुष्यो वा' इत्यादिवाक्यात्स्वरूपयोग्यतायाः स्वत एव सिद्धत्वान्नात्राधिकारार्थं पूर्वदेहनाशापेक्षा, किन्तु फलोपधानार्थं प्रोक्षणादिवत् संस्कारेण तेषां रूपान्तरापत्तिरेव सर्ग इति स नाऽशक्यवचन इत्यर्थः।

१. एवं सर्गमुपपाद्य व्याख्यातुमारभमाणा अवतारणमुखेन विदुरकथासङ्गतिमाहुः—एवमित्यादि। युक्तेति। उपदेशनार्थं भगवता विचारितत्वेन तत्कथारीत्या बोधस्य शीघ्रं सम्भवाद्युक्तेत्यर्थः। तथा च सूतोक्तौ प्रसङ्गः शुकोक्तौ तु हेतुतागर्भः स इत्यर्थः। श्रोतुरिति विदुरस्य। एतेनाऽपि युक्तत्वं विशदीकृतं बोध्यम् तस्येति प्रसादविषयस्य मैत्रेयस्य। न तथा दूषणमिति। तथा च सर्वोपकारत्वात्तस्या मित्रात्वं न[1] तु जबालावदित्यर्थः। नन्वत्र प्रसिद्धेः प्रमाणतया कथनस्य किं प्रयोजनमत आहु—अन्यथेत्यादि। तदन्वयप्र[2]वेशाभावादिति। संवादावसरे सहचराभावात् क्षत्रियत्वमिति। निबन्धोक्तरीतिकम्। वस्तुतस्तु क्षत्तृत्वमिति पाठः॥ १॥

## श्रीगिरिधरकृता बालप्रबोधिनी

### श्रीकृष्णाय नमः

प्रवृत्तो महदादीनां सर्गो यस्य कटाक्षतः। तृतीतस्कन्धटीकायां करोतु स सहायताम्॥ १॥
पूर्वं दशभिरध्यायैः श्रवणाङ्गं निरूपितम्। त्रयस्त्रिंशद्भिरध्यायैस्तृतीये सर्ग उच्यते॥ २॥
विदुरोद्धवसंवादश्चतुर्भिः पुनरष्टभिः। सविसर्गः सर्गविधिः सप्तभिः क्रोडकीर्त्तनम्॥ ३॥
ततो विसर्गसङ्क्षेप एकेन कपिलोदयः। चतुर्भिर्नवभिश्चेति तृतीयस्कन्धसङ्ग्रहः॥ ४॥
तत्र तु प्रथमेऽध्याये बन्धुत्यागस्य कारणम्। विदुरस्योद्धवेनाथ संवादश्च निरूप्यते॥ ५॥

सर्गस्याष्टाविंशतितत्त्वानि चतुर्विधभूतबीजानि कालश्चेति त्रयस्त्रिंशद्विधत्वात्तावद्भिरध्यायैस्तन्निरूपणम्, तत्रापि बन्धसर्गमोक्षसर्गभेदात् प्रकरणद्वयम्, तत्रैकोनविंशद्भिरध्यायैर्बन्धसर्गनिरूपणम्, चतुर्दशभिरध्यायैर्मोक्षसर्गनिरूपणमिति सङ्क्षेपः। विस्तरस्तु निबन्धादौ द्रष्टव्यः। विस्तरभयान्न लिख्यते। द्वेधा हि श्रीभागवतसम्प्रदायप्रवृत्तिः, एकतः सङ्क्षेपतः श्रीनारायणब्रह्मनारदादिद्वारेण, अन्यतस्तु विस्तरतः शेषसनत्कुमारसाङ्ख्यायनादिद्वारेण। तत्र द्वितीयस्कन्धे श्रीनारायणब्रह्मसंवादेन सङ्क्षेपतश्चतुश्श्लोक्या श्रीभागवतं निरूपितं तदेव ब्रह्मनारदसंवादेन दशलक्षणतया किञ्चिद्विस्तरेणोक्तम्। तदेव शेषोक्तमतिविस्तरतो वक्तुं तृतीयादिस्कन्धारम्भः। तत्र तृतीये प्रथमं विदुरोद्धवसंवादो विदुरमैत्रेयसङ्गमश्च चतुर्भिरध्यायैः, ततोऽष्टभिः सविसर्गः सर्गप्रपञ्चः, ततो विसर्गप्रस्तावेन सप्तभिर्वाराहावतारकथा, तत एकेन विसर्गसमाहारः, ततश्च तत्प्रसङ्गेन चतुर्भिः कपिलावतारकथा, ततो नवभिः कपिलाख्यानमित्येवं त्रयस्त्रिंशताऽध्यायैस्तृतीयस्कन्धप्रवृत्तिः। तत्र द्वितीयस्कन्धान्ते 'परिमाणं च कालस्य कल्पलक्षणविग्रहम्॥ यथा पुरस्ताद्व्याख्यास्ये पाद्मं कल्पमथो शृणु' इति प्रतिज्ञा[3]तमर्थं विस्तरेण प्रतिपिपादयिषुर्भगवान् बादरायणिः स्वप्रतिपिपादयिषितस्य प्रामाणिकत्वप्रथिम्ने विदुरमैत्रेयसंवादं प्रस्तोष्यन् भवताऽहमिव मैत्रेयोऽपि विदुरेण पृष्ट इत्याह—एवमिति द्वयेन। यथा भवान् मां परिपृष्टवान् एवमेवैतत् पुरा पूर्वं स्वगृहं त्यक्त्वा वनं प्रविष्टेन क्षत्रा विदुरेण भगवान् सर्वज्ञो मैत्रेयः पृष्ट इत्यन्वयः। किलेति स्मरणम्। तत्स्मरणं ममास्तीत्याशयः। तद्गृहं धनधर्मादिहीनं किं येन तत्त्यक्त्वा वनं गत इत्याशङ्क्याह—ऋद्धिमदिति, सर्वसम्पद्भिः पूर्णमित्यर्थः॥ १॥

## हिन्दी अनुवाद

### उद्धव और विदुरकी भेंट

श्री शुकदेवजीने कहा——परीक्षित्! जो बात तुमने पूछी है, वही पूर्वकालमें अपने सुख-समृद्धिसे पूर्ण घरको छोड़कर वनमें गये हुए विदुरजीने भगवान् मैत्रेयजीसे पूछी थी॥ १॥

---

१. तनुजबालावत् पाठः। २. प्रवेशेति पदं प्रकाशपुस्तकेषु नोपलभ्यते। ३. दशमाध्यायस्यैकोनपञ्चाशत्तमेन श्लोकेन।

**यद्वा अयं मन्त्रकृद्वो भगवानखिलेश्वरः । पौरवेन्द्रगृहं हित्वा प्रविवेशात्मसात्कृतम् ॥ २ ॥**

**राजोवाच**

**कुत्र क्षत्तुर्भगवता मैत्रेयेणास सङ्गमः । कदा वा सह संवाद एतद्वर्णय नः प्रभो ॥ ३ ॥**

**न ह्यल्पार्थोदयस्तस्य विदुरस्यामलात्मनः । तस्मिन् वरीयसि प्रश्नः साधुवादोपबृंहितः ॥ ४ ॥**

### श्रीधरस्वामिविरचिता भावार्थदीपिका

किंच । अतिश्लाघ्यं त्यागानर्हमित्याह । यद्वै प्रसिद्धं गृहं वः पांडवानां मंत्रकृद्दौत्यकर्ता सन्नयं श्रीकृष्णः बुद्धिसन्निधानादयमिति निर्देशः पौरवेंद्रो दुर्योधनस्तस्य गृहं हित्वाऽनाहूत एव विदुरगृहं प्रविवेश । तत्र हेतुः । आत्मसात्कृतमात्मीयत्वेन गृहीतम् ॥ २ ॥ ❀ ❀ कुत्र संगम आस ? बभूव ? ॥ ३ ॥ ❀ ❀ वरीयसि श्रेष्ठेऽल्पस्यार्थस्योदयो यस्मात्तथाभूतो न भवति । साधुवादेन सतामनुमोदनेनोपबृंहितः संवर्धितः । यद्वा । साधोर्मैत्रेयस्य वादेनोत्तरेण श्लाघित इत्यर्थः ॥ ४ ॥ ५ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

तद्गृहस्यातीव श्रैष्ठ्यमाह—किं चेति । तत्रानाहूतप्रवेशे ॥ २ ॥ ❀ ❀ एतत्क्षत्तृमैत्रेयसंगमादि । प्रभो स्वामिन् ॥ ३ ॥ ❀ ❀ विदुरमैत्रेयसंगमेऽन्यसंगमाश्रवणादाह—यद्वेति । इत्यर्थ इति । श्लाघ्यप्रश्नत्वात्तदुत्तरं दत्तवानिति भावः । तस्मिन्मैत्रेये ॥ ४ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनीव्याख्या

तत्रानाहूतस्यापि विदुरगृहप्रवेशे हेतुः आत्मसात्कृतं स्वगृहे नाह्वानापेक्षेत्यर्थः ॥ २ ॥ ❀ ❀ कुत्र सङ्गमः आस ? कुत्र कस्मिन् विषये संवादः ? कदा वा आस बभूव ? एतत् त्रयम् ॥ ३ ॥ ❀ ❀ सत्कर्तृकानुमोदनस्य संवादकालेऽश्रुतत्वाद्वेत्युपबृंहणस्य श्लाघाकार्यत्वादित्यर्थः इत्युक्तम् ॥ ४ ॥

### श्रीमद्वीरराघवव्याख्या

अत्र लब्धप्रश्नावसरो राजा पृच्छति द्वयेन कुत्रेति—कुत्र प्रदेशे मैत्रेयेण सह भगवतो क्षत्तुर्विदुरस्य संगमः संगतिरास बभूव ? कदा कस्मिन्काले वा तेन सह सम्वादोऽभूदेतद् हे प्रभो शुक, नोऽस्मभ्यं वर्णय ॥ ३ ॥ ❀ ❀ स्वस्य शुश्रूषामाविःकरोति न हीति । महात्मनः भगवत्प्रवणचित्तस्य विदुरस्य सम्बन्धि वरीयसि परावरतत्वज्ञत्वादिगुणैरुत्कृष्टे मैत्रेये प्रश्नः अल्पार्थोदयः अल्पस्यार्थस्योदयो यस्मात्स अल्पप्रयोजनोदयः न हि भवति । कथंभूतः प्रश्नः साधुवादोपबृंहितो विस्तृतोऽतस्तदवश्यं मया श्रोतव्य इति भावः ॥ ४ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

विदुरमैत्रेयसंवादं घटयितुं तीर्थयात्राकालापदेशेन प्रश्नबीजमुत्थापयति यदात्विति—वः पितामहानामर्थे मंत्रकृत् सन्धिकृत् सन्धिकार्येऽनुत्पन्ने पौरवेन्द्रपुरं हस्तिनापुरं त्यक्त्वाऽऽत्मसात्कृतमुपप्लाव्याख्यपुरं यदा प्रविवेश तदा विदुरस्तीर्थयात्रार्थं गत इति शेष इत्यन्वयः । अत्र तु शब्देन युद्धकाले तु विदुरस्तीर्थयात्रां गतोऽपि सन् प्राय आस्ते गजपुरे पाण्डवानां हितेच्छयेति वाक्यं विशिनष्टि अनेन विदुरेण तीर्थसेवा कदाचित् कृता न युद्धकालमारभ्य तत्समाप्तिपर्यन्तमित्युक्तं भवति ॥ २ ॥ ❀ ❀ तीर्थनिषेवणो विदुरस्य सामान्यतो ज्ञातमैत्रेयसङ्गकालघटनोऽपि राजा देशविशेषबुभुत्सया पृच्छति कुत्रेति ? कुत्र कस्मिन्तीर्थविशेषे पुरान्निर्याणहेतुरपि वक्तव्य इत्यतो वर्णयेत्युक्तम् ॥ ३ ॥ ❀ ❀ विविदिषालौल्यकारणमाह नहीति । हि शब्दो हेत्वर्थः । यस्मादल्पार्थोदयो न तस्माद्वर्णयेत्यर्थः । अत्रापि हेतुमाह साध्विति । साधुस्त्रिषुचिते सौम्ये सज्जने वार्धुषौ पुमानिति यादवः ॥ ४ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

यद्वेत्यत्र यदाश्रयमिति । चित्सुखः ॥ २ ॥ ❀ ❀ शौनकवद्राजाऽपि तत्कथाया उत्कण्ठया तां विशेषतः पृच्छति कुत्रेति । कुत्र कदा सङ्गम आस आसीत् संवादो वा तत्र कुत्रेति कस्मिन्स्थाने विषये वेति गम्यम् । एतदिति तदेतत्त्रयमित्यर्थः ॥ ३—७ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

किञ्च तस्य तद्गृहं तज्जिगमिषत्येभ्यस्तीर्थेभ्यः सर्वेभ्योऽप्यतिश्रेष्ठं त्यागानर्हम् । तदपि भातृदत्तेन सन्तापेनैव तत्याजेत्याह यदिति । वै निश्चितं यद्गृहं वः पाण्डवानां मन्त्रकृद् दूत्यकर्ता सन् अयं श्रीकृष्णो बुद्धिसन्निधानादयमिति निर्देशः । पौरवेन्द्रस्तदा दुर्योधनः । अनाहुत एव प्रविवेश तत्र हेतुः—आत्मसात्कृतमात्मीयत्वेन स्वीकृतम् ॥ २ ॥ ❀ ❀ आस बभूव ॥ ३ ॥

❀ ❀ वरीयसि श्रेष्ठे। अल्पस्यार्थस्योदयो यस्मात् तथाभूतो न भवति साधुवादेन सतामनुमोदनेनोपबृंहितः सम्वर्द्धितः। यद्वा साधोर्मैत्रेयस्य वादेनोत्तरेण श्लाघित इत्यर्थः॥ ४॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

न केवलमृद्धिमदपितु तीर्थरूपमित्याह यदिति। वै प्रसिद्धं यदयं श्रीकृष्णोऽखिलेश्वरः सर्वेश्वरोऽपि वो युष्माकं पाण्डवानां मंत्रकृद् दौत्यकर्ता पञ्चग्रामयाचनार्थं हस्तिनापुरं गतः पौरवेन्द्रस्य सुयोधनस्य गृहं हित्वा वै प्रसिद्धं यद् विदुरगृहमात्मसात्कृतमात्मीयत्वेन गृहितमनाहूत एव प्रविवेश। एतदुद्योगपर्वणि द्रष्टव्यम्॥ २॥ ❀ ❀ आस बभूव॥ ३॥ ❀ ❀ वरीयसि श्रेष्ठे। अल्पार्थोदयोऽल्पफलो न॥ ४॥ ५॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनीव्याख्या

ननु ज्ञानमार्ग एव परित्यागोऽङ्गम्, गृहस्य तद्विरोधित्वात्, भक्तिमार्गे तु गृहस्योत्कृष्टत्वकथनादुद्वेगादेव तस्य गमनमाशङ्क्य निवारयति—यद्वा अयमिति। यद् गृहं भगवता आत्मसात्कृतम्। भगवान् विदुरगृहं लोकप्रतीत्या मन्यते। न केवलमभिमतिमात्रम्, किन्तु व्यवहारोऽपि तत्र भगवदीय एवेत्याह—प्रविवेशेति। हेत्वन्तराणि निवारयति—पौरवेन्द्रगृहं हित्वेति। दुःशासनगृहं भगवत्स्थित्यर्थमिन्द्रगृहादप्युत्तमं तैः प्रार्थ्यमानमपि हित्वा। उचितं च दुःशासनगृहे गन्तुं मन्त्रार्थमागतस्य। तत्रापि भक्तानां कार्यसाधकस्य, तत्रापि भगवतः सर्वोत्कृष्टपूर्णगुणवतः, उत्कृष्ट एव स्थाने स्थातुमुचितम्। किञ्च। अभक्तत्वदैत्यत्वादिधर्मा न शङ्कनीयाः, यतोऽयमखिलेश्वरः सर्वस्यापि स्वामी सर्वनियन्ता। अतो यथा भगवद्गृहे देवालयादौ स्थितिरुचिता, तथा तस्य स्वगृहेऽपि। तथापि गृहमिति त्यक्तव्यमेव। गृहस्थितेरुत्कृष्टत्वं न भगवदीयत्वमात्रेण, किन्तु भगवता सह स्थित्या भगवत्कार्यार्थं वा, अन्यथा न स्थातव्यमिति स्थितिः॥ २॥ ❀ ❀ प्रश्ने कृते तूत्तरं देयम्, न त्वन्यस्य वचनं तत्र वक्तव्यमित्याशङ्क्य तत्रत्यौ देशकालावुत्कृष्टौ भविष्यत इति तौ पृच्छति कुत्रेति। अनुवादे[1] पूर्वोक्तपदानां कीर्तनम्। तदुक्तार्थपरिज्ञानबोधकम्। प्रश्ने हि सङ्गमोऽपेक्ष्यते। महतां सङ्गमनिमित्तो देश उत्कृष्ट एव भवतीति आस सङ्गम इति। समागम इति पाठेऽपि अस्तीत्यादिप्रयोगः सिद्ध एव। कदा वेति कालस्यानादरणीयत्वम्। सह संवाद इति साक्षात् राजा 'बहुप्रष्टमिति प्रश्नक्रमेणैवोत्तरं वक्तव्यमित्याशङ्क्य निवारयति—एतद्वर्णयेति। न इत्यस्मभ्यमुपकारित्वात्। प्रभो इति सामर्थ्यं पूर्वोत्तरमत्रैव सङ्क्रामयितुम्। अनेनैव वा तत्सन्देहनिवारणं कर्तुं सूचितम्॥ ३॥ ❀ ❀ पूर्वापेक्षयापि मुख्यतयैतच्छ्रवणे हेतुमाह न ह्यल्पार्थोदय इति। खण्डशः पदार्थश्रवणं खण्डमेव फलं जनयति। इदं तु खण्डमपि अखण्डमेव फलं जनयिष्यति, संबन्धिवैशिष्ट्यात्, देशकालपात्रविशेषे जलादिदानवत्। तदाह—अल्पस्याऽर्थस्य उदयो यत्र। तादृशः स प्रश्नो न भवतीति हीत्यनेन तादृशस्य वैयर्थ्यापत्तिरिति युक्तिरुक्ता। संबन्धिनो वैशिष्ट्यमाह—विदुरस्याऽमलात्मन इति। परमनीतिज्ञस्य निर्मलान्तःकरणस्येत्यर्थः। वयं त्वनीतिज्ञाः शापादिना च न शुद्धान्तःकरणाः। अतो यत् किञ्चित् पृच्छाम इति भावः। ततोऽपि तद्गुरुरुत्कृष्ट इत्याह—वरीयसीति। साधुवादोपबृंहित इति। अन्तरुत्साहो हेतुरुक्तः फलावश्यंभावाय। अतएव तेन उपबृंहितोऽधिकः पुष्टः कृत इति॥ ४॥

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

तस्य स्वगृहेऽपीति। विदुरस्य स्वगृहेऽपि॥ २॥ ❀ ❀ कुत्रेत्यत्र। कालस्यानादरणीयत्वमिति। तस्य कालस्येदानीमभावेन स्वस्यानुपयोगात्तथेत्यर्थः। बहुप्रष्टमिति। एतत्प्रश्नात्पूर्वं बहुप्रष्टम् उपकारित्वादिति। संवादस्योत्तमद्वयसम्बन्धित्वेन शीघ्रं फलजनकतया तथात्वात्॥ ३॥ ❀ ❀ न ह्यत्र अन्तरुत्साह इति। मैत्रेयस्य सः। परित्यागहेतुप्रश्नः साधुवादोपबृंहणाक्षिप्तो ज्ञेयः॥ ४॥

### श्रीगिरिधरकृता बालप्रबोधिनी

किञ्च तस्य गृहं भगवत्प्रवेशादपि सर्वतीर्थेभ्योऽपि श्रेष्ठत्वेन त्यागानर्हमित्याशयेनाह—यदिति। वै निश्चये। पौरवेन्द्रो दुर्योधनस्तद्गृहं हित्वा यद्विदुरस्य गृहं अयं श्रीकृष्णः स्वयमनाहूतोऽपि प्रविवेशेत्यन्वयः। बुद्धिसन्निधानादयमिति निर्देशः। तत्प्रवेशेऽपि कोऽतिशय इत्याशङ्क्याह—अखिलेश्वर इति। तत्र हेतुमाह—भगवानिति, नित्याचिन्त्यानन्तगुणपूर्ण इत्यर्थः। ननु त्यागस्य स्वीकारपूर्वकत्वात् पूर्वं भगवान् दुर्योधनगृहं किमर्थं गत इत्यपेक्षायामाह—मन्त्रकृद्ध इति। वो युष्माकं पाण्डवानां मन्त्रकृत् दौत्यादिकर्ता। दौत्यार्थं गत इति भावः। विदुरगृहप्रवेशे हेतुमाह—आत्मसात्कृतमिति, आत्मीयत्वेन स्वीकृतमित्यर्थः॥ २॥ ❀ ❀ यदुक्तं 'राज्ञा परीक्षिता पृष्टः'[4] इति तदेव लब्धावसरस्य राज्ञः प्रश्नं दर्शयति—कुत्रेति द्वाभ्याम्। भगवता सर्वज्ञेन मैत्रेयेण सह क्षत्तुर्विदुरस्य सङ्गमः सङ्गतिः कुत्र प्रदेशे आस बभूव ? कदा कस्मिन् वा काले तेन संवादोऽभूत् ?

---

१. अधीत्यधिकम्. क.। २. एतत्प्रश्नात् पूर्वम्. प्र.। ३. मैत्रेयस्य. प्रकाशः। ४. स्कं० २, अ० १०, श्लो० ५३।

प्रभो हे सर्वज्ञतया वर्णयितुं समर्थ एतन्नोऽस्मभ्यं वर्णयेत्यन्वयः ॥ ३ ॥ * * अन्यश्रवणमुपेक्ष्यैतच्छ्रवणौत्सुक्यं तव कुत इत्यपेक्षायां तत्र हेतुमाह—न हीति। हि यस्मात्तस्मिन्मैत्रेये तस्य विदुरस्य अल्पार्थस्योदयो यस्मात्तादृशः प्रश्नो न सम्भवति किन्तु साधुवादोपबृंहितः साधूनां सतां वादेन चरित्ररूपेणोत्तरतया वक्तव्यत्वेनोपबृंहितः विस्तृत एव। अतो मया तत्संवादोऽवश्यं श्रोतव्य इति भावः। एवं प्रश्ने श्रोतृवक्त्रोरुत्तमत्वं हेतुमङ्गीकृत्य तौ विशिनष्टि—अमलात्मन इति, विशुद्धान्तःकरणस्येत्यर्थः। वरीयसीति, परावरतत्त्वज्ञादिगुणैरुत्कृष्टे इत्यर्थः ॥ ४ ॥

### हिन्दी अनुवाद

जब सर्वेश्वर भगवान् श्रीकृष्ण पाण्डवोंके दूत बनकर गये थे, तब वे दुर्योधनके महलोंको छोड़कर, उसी विदुरजीके घरमें उसे अपना ही समझकर बिना बुलाये चले गये थे ॥ २ ॥ * * राजा परीक्षित्ने पूछा—प्रभो! यह तो बतलाइये कि भगवान् मैत्रेयके साथ विदुरजीका समागम कहाँ और किस समय हुआ था? ॥ ३ ॥ * * पवित्रात्मा विदुरने महात्मा मैत्रेयजीसे कोई साधारण प्रश्न नहीं किया होगा; क्योंकि उसे तो मैत्रेयजी-जैसे साधुशिरोमणिने अभिनन्दनपूर्वक उत्तर देकर महिमान्वित किया था ॥ ४ ॥

### सूत उवाच

**स एवमृषिवर्योऽयं[1] पृष्टो राज्ञा परीक्षिता। प्रत्याह तं सुबहुवित्प्रीतात्मा श्रूयतामिति ॥ ५ ॥**

### श्रीशुक[2] उवाच

**यदा तु राजा स्वसुतानसाधून् पुष्णन्नधर्मेण विनष्टदृष्टिः। भ्रातुर्यविष्ठस्य सुतान् विबन्धून् प्रवेश्य लाक्षाभवने ददाह॥६॥**
**यदा सभायां कुरुदेवदेव्याः केशाभिमर्शं सुतकर्म गर्ह्यम्। न वारयामास नृपः स्नुषायाः स्वास्रैर्हरन्त्याः कुचकुङ्कुमानि॥७॥**
**द्यूते त्वधर्मेण जितस्य साधोः सत्यावलम्बस्य वनागतस्य। न याचतोऽदात्समयेन दायं तमो जुषाणो यदजातशत्रोः॥८॥**
**यदा च पार्थप्रहितः सभायां जगद्गुरुर्यानि जगाद कृष्णः। न तानि पुंसाममृतायनानि राजोरु मेने क्षतपुण्यलेशः॥९॥**

### श्रीधरस्वामिविरचिता भावार्थदीपिका।

त्यागानर्हस्यापि गृहस्य त्यागे हेतुत्वेन कौरवापराधानाह। यदेत्येकादशभिः। एतेषां च तदा स क्षत्ता अयादित्येकादश क्रियासंबंधः। यविष्ठस्य कनिष्ठस्य पांडोः विबंधून् पितृहीनान् ॥ ६ ॥ * * कुरुदेवस्य युधिष्ठिरस्य देव्या द्रौपद्याः आत्मनः स्नुषायाः स्वीयैरस्रैरश्रुभिः स्वकुचकुंकुमानि रिपुस्त्रीणां वा तद्भर्तृवधेन हरंत्याः ॥ ७ ॥ * * सत्यावलंबस्य सत्याश्रयस्य समयेन पूर्वकृतेन दायमंशं याचमानस्य यद्यदा नादान्न ददौ। तमो मोहं जुषाणः पुत्रं सेवमानः अविवेकं वा ॥ ८ ॥ * * यानि वचनानि पुंसां भीष्मादीनाममृतायनान्यमृतस्राविणि। राजा धृतराष्ट्रो दुर्योधनो वा उरु बहु न मेने क्षतो नष्टः पुण्यलेशो यस्य सः न सुखकीर्तिर्धर्मादिहेतुः किंतु राज्यप्राप्तिमात्रहेतुः पुण्यलेश एवासीत् तस्यापि नष्टत्वादनादृतवानित्यर्थः ॥ ९ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः।

स श्रीशुकः। तं परीक्षितम्। श्रूयतामित्यविवक्षितकर्मकत्वेनाकर्मकत्वाद्भावे लट् ॥ ५ ॥ * * विदुरस्य तीर्थयात्रानिमित्तमाह—यदा त्विति। एतेषां यदा त्वित्यादीनाम्। राजा धृतराष्ट्रः। स्वसुतान् दुर्योधनादीन्। असाधूनन्यायवर्तिनः। लाक्षाभवने वारणावतनगरस्थे शणतृणतैलाढ्यलाक्षानिर्मिते। विबंधूनिति। विर्विष्णुर्विदुरो वा बंधुर्हितकर्त्ता येषां ते तान् एकदेशन्यायेन विपदमुभयार्थकम्। यद्वा। विशिष्टः सर्वोत्कृष्टः श्रीकृष्णो विदुरोपि कौरवपुण्यलब्ध इति वक्ष्यमाणत्वात्सर्वोत्कृष्ट एव वा बंधुर्येषां तान् अत्र तुशब्दोऽवधारणे यदातदाशब्दौ तु हेत्वर्थकौ 'यदा तदेति हेत्वर्थे कालार्थेपि च भण्यते' इति। विनष्टदृष्टिर्ज्ञानहीनः ॥ ६ ॥ * * निमित्तांतरमाह—नृपो धृतराष्ट्रः। देव्याः पट्टाभिषिक्तायाः 'देवी कृताभिषेकायाम्' इत्यमरः। सुतस्य दुःशासनस्य कर्म केशाभिमर्शं कबरीभारपरामर्शं गर्ह्यं निंद्यं यदा यतः भ्रातृपुत्राणामपि स्वपुत्रत्वात्स्नुषाया इति द्रौपदीरोदनेन रोदनकारयितृवधूकुचकुंकुमान्यपि धौतानीत्युक्तं पुरस्तात् "पत्न्यास्तवाधिमखक्लृप्तमहाभिषेकश्लाघिष्टचारुकबरं कितवैः सभायाम्। स्पृष्टं विकीर्य पदयोः पतितास्रुमुख्या यैस्तत्स्त्रियो कृतहतेशविमुक्तकेशाः" इति ॥ ७ ॥ * * तृतीयं हेतुमाह—द्यूते त्विति तुरित्यवधारणेऽधर्मेणेत्यनेन संबध्यतेऽधर्मेणैवेत्यर्थः। साधोरिति पितृधनदाययोग्यत्वमाह। साधुत्वे हेतुः। अवलंब आधारयष्टिः दायं स्वप्राप्तियोग्यं पितृधनं मोहं यथार्थज्ञानग्लानिकारणं पुत्रवचः जुषमाणोंगीकुर्वाण इत्यर्थः ॥ ८ ॥ * *

---

१. प्रा. पा. एवं मुनिवर्योऽथ। २. प्राचीने पाठे 'श्री' इति पदं नास्ति।

चतुर्थहेतुमाह—अमृतस्राविणि मोक्षादिसकलपुरुषार्थसाधनानि। पार्थेन युधिष्ठिरेण प्रहितः प्रेषितः यानि वचनानि गुरुमात्रस्यापि वचो ग्राह्यमस्ति किमुत जगद्गुरोरिति कैमुत्यसूचनायोक्तं जगद्गुरुरिति। तस्यापि पुण्यलेशस्यापि। इत्यर्थ इति। "वाक्यं शास्त्रगुरूणां न नष्टपुण्यस्य रोचते" इत्यादिपुराणादिति भावः ॥ ९ ॥

## श्रीराधारमणदासगोस्वामिविरचिता दीपिनीव्याख्या।

एतेषां च यदेत्यादिदशपद्यानां तदा तादृशाऽपराधदर्शनकाले ॥ ६ ॥ ❀ ❀ तद्भर्तृवधेनेति रिपुस्त्रीभर्तृवधेन अत्र द्रौपद्यश्रुस्रावस्य कारणत्वरिपुस्त्रीकुकुंमहरणस्य कार्यत्वमिति चतुर्थ्यतिशयोक्तिरुत्प्रेक्षा च व्यञ्जिता तथा च तल्लक्षणं चतुर्थस्य कारणस्य गदितुं शीघ्रकारितां यदेति कार्यस्य पूर्वोक्तिरिति ॥ ७ ॥ ८ ॥ ९ ॥

## श्रीमद्वीरराघवव्याख्या

एवं स पृष्टो राज्ञा मुनिराहेति सूत आह स इति। राज्ञा परीक्षिता एवमापृष्टः साकल्येन पृष्टः सुबहुवित्सुहृद्। बहुवेत्तीति सुबहुविद् मुनिः श्रीशुकः प्रीतात्मा समीचीनप्रश्नेन संतुष्टचित्तः श्रूयतां इत्यामंत्र्य राजानं प्रत्याह ॥ ५ ॥ ❀ ❀ एवं राज्ञा पृष्टो मुनिस्तमेव संवादं प्रतुष्टूपुस्तावद्विदुरस्य पौरवेंद्रगृहत्यागे निमित्तान्याह यदेति। यदा राजा धृतराष्ट्रो यविष्ठस्य कनीयसो भ्रातुः पांडोः सुतान् विबंधून् पितृहीनान्युधिष्ठिरादीन् लाक्षाभवने जतुगृहे प्रवेश्य प्रविष्टान्कृत्वा ददाह दग्धवान् तदा स विदुरः अपासरद्गत इत्येकादशे क्रियासंबंधः एवमुभयत्रापि। कथंभूतो राजा विनष्टदृष्टिः विनष्टा दृष्टिर्ज्ञानविषयकं ज्ञानं चक्षुश्च यस्य सः अत एवाधर्मेणासाधून्वालान्स्वसुतान्पुष्णन् एवंभूतो ददाहेत्यन्वयः ॥ ६ ॥ ❀ ❀ यदा च नृपः धृतराष्ट्रः सभायां कुरुदेवस्य युधिष्ठिरस्य देव्या द्रौपद्याः केशाभिमर्शरूपं गर्ह्यं निंदितं सुतकर्म पुत्रकर्तृकं कर्म न वारयामास तदायादित्यन्वयः। कथंभूतायाः कुरुदेव्याः आत्मनः स्नुषायाः स्वास्रैः स्वीयैरश्रुभिः कुचकुंकुमानि स्वस्तनगतकुंकुमानि हरंत्याः अपहरंत्याः ॥ ७ ॥ ❀ ❀ द्यूत इति तमोजुषाणोऽजातशत्रोः तमःप्रधानो राजा यद्यदा समयेन प्रतिज्ञानुसारेण दायं रिक्थं याचतो नादान्न ददौ तदायादित्यर्थः। कथंभूतस्याजातशत्रोर्वनागतस्य वनात्प्रत्यागतस्य सत्यावलम्बस्य सत्यं धर्मण्वालम्बनमाश्रयो यस्य तस्य साधोः साधुलक्षणलक्षितस्य द्यूतेऽज्ञानिभिरधर्मेणाधर्मरूपेण दुर्योधनेन वा जितस्य पराजितस्य ॥ ८ ॥ ९ ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली।

सूतः शौनकप्रश्नपरिहाराय तत्संवादं कथयति स एवमिति। बहुपूर्णतायामिति धातोर्देवादिसज्जननिषेवितं पूर्णं भगवन्तम्। वेत्तीति सुबहुविदिति तज्ज्ञानफलमाह प्रीतात्मेति। प्रियो हि ज्ञानिनोऽत्यर्थमिति स्मृतेः प्रसन्नमना वा श्रूयतामित्यनेन वक्तव्यार्थे आदरं जनयति उच्यमानं सहेतुकं चेच्छ्रद्धां जनयति अस्य कथं तदित्यत उक्तमितीति। इति हेतुप्रकरणप्रकारादिष्विति यादवः ॥ ५ ॥ ❀ ❀ विदुरस्य तीर्थयात्रायां निमित्तमाह यदात्विति। अत्र यदा शब्दो हेत्वर्थे। यदा तदेतिहेत्वर्थे कालार्थेऽपि च भण्यत इति वचनात् अधर्मेणेत्यस्यावधारणार्थे तुशब्दः विनष्टा भगवद्विषया दृष्टिर्यस्य स तथा असाधून्न्यायवर्तिनः अधर्मेण धर्मविरुद्धकर्मणा यविष्ठस्य कनिष्ठस्य विबंधून् लौकिकबंधुरहितान् लाक्षाभवने लाक्षोपगूढगृहे ददाह यदा यस्मात्तदातस्मादित्येको हेतुः ॥ ६ ॥ ❀ ❀ अयमेको हेतुरित्याह यदेति। नृपो धृतराष्ट्रः कुचकुंकुमान्यस्रैर्नेत्रजलैर्हरंत्याः स्वस्याः स्नुषायाः कुरुदेवस्य युधिष्ठिरस्य देव्याः पट्टाभिषिक्ताया द्रौपद्याः सभायां गर्ह्यं निंद्यं सुतस्य दुःशासनस्य कर्म केशाभिमर्शं कबरीभारपरामर्शलक्षणं न निवारयामास यदा यस्मात्तस्मात् ॥ ७ ॥ ❀ ❀ अयं तृतीयो हेतुरित्याह द्यूतेत्विति। तुशब्दोऽवधारणार्थः अधर्मेणेत्यनेन संबध्यते साधुत्वादीनि पितृधनदानयोग्यत्वहेतव इति प्रकाशनायोक्तानीति अवलंब आधारयष्टिः दायं स्वस्य प्राप्तियोग्यं पितृधनं वनवासावसानसमये नादादिति यत्तस्मादिति शेषः तत्र हेतुः तम इति। तमो यथार्थज्ञानग्लानिकारणं पुत्रवचनं जुषाणः सेवमानोऽङ्गीकुर्वाण इत्यर्थः ॥ ८ ॥ ९ ॥

## श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः।

यदेति—अमृतायनानीत्यत्र अमृतावहानीति क्षत्तेप्यत्र हृतेति चित्सुखः ॥ ८–१४ ॥

## श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी।

यदेत्यादीनां तदा स क्षत्ता अयादित्येकादशस्थया क्रियया सम्बन्धः विनष्टे दृष्टी नेत्रे दृष्टिर्ज्ञानञ्च यस्य यविष्ठस्य कनिष्ठस्य पाण्डोः विबन्धून् पितृहीनान् ॥ ५ ॥ ❀ ❀ कुरुदेवदेव्या द्रौपद्याः कुचकुंकुमानि स्वस्य रिपुस्त्रीणाम्वा तद्भर्तृवधेन हरन्त्या इति चतुर्थ्यतिशयोक्तिरुत्प्रेक्षा च व्यञ्जिता ॥ ६ ॥ ❀ ❀ वनात् प्रत्यागतस्य समयेन पूर्वकृतेन दायं भागं याचमानस्य यत् यदा ॥ ७ ॥ ❀ ❀ पुंसां तद्भक्तानां भीष्मादीनां राजा धृतराष्ट्रो दुर्योधनो वा उरु बहु न मेने तत्र हेतुः क्षत्तेति। न सुखकीर्तिधर्मादिकरः किन्तु राज्यप्रापको यः पुण्यलेश आसीत्तस्यापि नष्टत्वादित्यर्थः ॥ ८ ॥ ९ ॥

श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः ।

तादृशमपि गृहं दुर्जनकृतोपद्रवात्त्यक्तवानित्याह यदेत्येकादशभिः । विनष्टा दृष्टिर्यस्य स राजा धृतराष्ट्रः असाधून् दुष्टान् दुर्योधनादीन् अधर्मेण पुष्णन् यविष्टस्य कनीयसो भ्रातुः पांडोः सुतान् युधिष्ठिरादीन विबंधून् मृतपितृकान् लाक्षाभवने प्रवेश्य यदा ददाह तदा स विदुरः अयादित्येकादशे क्रियासंबंधः लाक्षाभवनदाहे मनसा अयात् दुर्योधनासत्कारे तु स्वयमिति विवेकः एवमग्रेऽपि ॥ ६ ॥ ❀ ❀ नृपः धृतराष्ट्रः आत्मनः स्नुषायाः कुरुदेवस्य युधिष्ठिरस्य देव्या द्रौपद्याः केशाभिमर्शरूपं गर्ह्यं निन्द्यं सुतस्य दुःशासनस्य कर्म न वारयामास तदा अयात् ॥ ७ ॥ ❀ ❀ द्यूते अधर्मेण अन्यायेन जितस्य वनात्प्रत्यागतस्य साधोः शिष्टस्य युधिष्ठिरस्य पराजितं द्वादशवर्षाणि वने एकं वर्षमलक्षितः पुर्युषित्वा पुनरागत्य स्वरिक्थभाग् भवतु इत्येकं पूर्वकृतेन समयेन दायं रिक्थं याचमानस्य तमोजुषाणः तामसकल्पं दुर्योधनं सेवमानो धृतराष्ट्रः यत् यदा नादात् तदायात् ॥ ८ ॥ ९ ॥

श्री मद्वल्लभाचार्यविरचिता सुबोधिनीव्याख्या

अत्र देशकालपरित्यागहेतवस्त्रयः पृष्टाः, तत्र प्राथमिकत्वात्परित्यागहेतुर्वक्तव्यः । स च साक्षाद्भगवत्कथारूपो न भवतीति शुकेनाऽवर्णनीयत्वमाशङ्क्य तादृशवर्णनायां हेतुमाह सूतः—स एवमिति । ऋषयो हि मन्त्रद्रष्टारः । येन मन्त्रेण भगवदङ्गानां मध्ये उत्कृष्टेन शीघ्रमस्य हृदयं शुद्धं भविष्यतीति तदुपकारार्थं शुकप्रवृत्तिं बोधयति । वर्यपदेन स्पृहानिर्निवारिता । अयमिति पुरःस्थितत्वेन तस्य भगवत्त्वं फलं जातमिति परोपकारनिरतत्वं सूचितम् । राज्ञेति लोके तत्प्रश्नोत्तरमावश्यकम् । परीक्षितेति तस्य बीजसंस्कारः सूचितः । अत इदं तदुपकारीति प्रत्याह ।सर्वतत्त्वपरिज्ञापनार्थं सुबहुविदिति । मुख्यभगवत्त्वेनोपस्थितत्वात् प्रीतात्मा । अत्रापि शङ्कान्तरं न कर्तव्यमिति श्रूयतामित्याह ॥५ ॥ ❀ ❀ अस्य परित्यागो भगवन्निमित्तं भगवतैव कृत इति निरूपयितुम्, भगवत्पक्षपातिनो भगवद्विमुखैः सह स्थितिरनुचितेति वक्तुं कौरवाणां भगवद्विमुखत्वमाह चतुर्भिः—यदा त्विति । विदुरस्य गृहत्यागे दशभिर्हेतुरुच्यते । चतुर्भिरपराधोक्तिरेकेन हि समागमः । त्रिभिर्मन्त्रोक्तिरपरे निषेधकनिवारणे ॥ १ ॥ धर्मशास्त्रविरुद्धं लोकशास्त्रविरुद्धं नीतिविरुद्धमीश्वरवचनोल्लङ्घनमित्यपराधाः । यद्यपि धृतराष्ट्रेणैवं न कृतम्, तथापि 'अप्रतिषिद्धमनुमतं भवति'इति न्यायादपराधित्वं भवति, प्रयोजकत्वात् । स एव कथ्यते । नैमित्तिकत्वाच्च निमित्तपरित्यागकथनं न दोषाय । अत्र मुख्यापराधो भगवद्वाक्योल्लङ्घनम्, तत्स्वभावतो जीवस्य न घटत इति दोषत्रयसंनिपातस्तद्धेतुत्वेन वक्तव्यः । न हि संनिपाताभावे कश्चिद्भगवद्वाक्यं न मन्यते । तत्र प्रथमं तामसं दोषमाह—यदेति । राजेत्यदीर्घदर्शित्वम् । तुशब्दो विदुरस्य पूर्वस्नेहव्यावृत्तिसूचकः । स्वसुतानिति औरसत्वादत्यागः । असाधुसंवर्द्धनं दोषायेति तदधर्मेण सुतरामन्तर्दृष्टिरपि गता । तदाह—विनष्टदृष्टिरिति । भ्रातुर्यविष्ठस्येति संबन्धकृतधर्मोऽपि नास्तीति सूचितम् । विबन्धूनिति सर्वथा दयाभावः । कनिष्ठभ्रातुः पाण्डोः पुत्रान् पाण्डवान् राज्यस्पर्द्धादिशङ्कारहितान् स्ववशान् पितृहीनान् सर्वथा परिपालनीयान् लाक्षाभवने प्रवेश्य विश्वास[1]घातं कृत्वा ददाहेत्यर्थः । अनेनाऽस्य क्रिया संपूर्णेति पाण्डवानाममरणेऽपि वधदोषो जात एवेति भावः ॥ ६ ॥ ❀ ❀ राजसं दोषमाह—यदेति । भगवता संरक्षितानां तेषां राजसूयेन राजत्वयुक्तानां राज्याकाङ्क्षां परित्यज्य तूर्ष्णीं स्थितानां बलादपराधकरणं सर्वनाशकम् । युधिष्ठिरस्य कुरुदेवत्वात् राजपत्नीकेशाकर्षणं सर्वनाशायेति जानन्नपि न वारयामास । सभायामिति परलोकनाशोऽपि सूचितः । 'सभां वा न प्रवेष्टव्यम्' इति स्मृतेः । अवमर्शं आकर्षणम् । उत्पादकस्य परिपालनमावश्यकमिति सुतपदम् । परलोकसाधकत्वाभावात् न पुत्रपदम् । कर्मेति । दुरदृष्टजनकम् । गर्ह्यमिति लोकेऽपि निन्दाजनकम् । ब्राह्मणः समदृक् शान्तो दीनानां समुपेक्षकः । स्रवते ब्रह्म तस्याऽपि भिन्नभाण्डात्पयो यथा" इति । सम्बन्धरहितानां ब्राह्मणानामप्येतदुचितम् । तदपि न कृतवानित्याह—न वारयामासेति । अनेन क्षत्रत्वं तस्य गतमिति सूचितम् । नृप इति सामर्थ्यम् । स्नुषाया इत्यतिलोकविरोधः अस्रैः कुचकुङ्कुमानि हरन्त्या इति दयाहेतुत्वममङ्गलत्वं च सूचितम् । स्रशब्देनास्राणामलौकिकसामर्थ्यं सूचितम् कुचकुङ्कुमानीत्युपरि वस्त्राभावः । कुङ्कुमानामपि गमनेऽतिलज्जा । इतररागाभावार्थं तथा करणम् । एवं प्रत्यक्षतोऽपि [2]क्रौर्यं निरूपितम् ॥ ७ ॥ ❀ ❀ सात्त्विकं दोषमाह—द्यूते त्विति । तुशब्देन अस्मिन् कृते पूर्वं कृता अपराधा अपि अकृता भवन्तीति सूचितम् । पूर्वं तेषां राज्यापहरणं केवलमधर्मेणैव । तदपि सोढ्वा महद्दुःखमनुभूय स्वकीयं दायं शास्त्रतो लोकतश्चाविरुद्धं समयेन मर्यादया याचतो याचयतः । याचमानाय वा, पदव्यत्ययश्छान्दसः । अदाने हेतुस्तमो जुषाण इति मोहं जुषाणः । अजातशत्रारिति विपरीतशङ्काभावः । स्वकृतनियमोल्लङ्घनान्मोहः ॥ ८ ॥ ❀ ❀ एवं त्रिदोषव्याप्तो भगवद्वाक्यं नाङ्गीकृतवानित्याह—यदा च पार्थेति । पृथासम्बन्धात्प्रेषणं नात्यन्तानुचितम् । स्वतो न दत्तवानेव । यदा च न दत्तवान् तदा पार्थेन युधिष्ठिरेण प्रहितः प्रेषितः ( सः ) भगवान् यानि जगाद तानि नोह मेन इति सम्बन्धः । सभायामित्युक्तेर्लोकप्रतीत्या[3]ऽपि नाऽन्यथाकथनम् । जगद्गुरुरिति सर्वेषां हितोपदेशकर्तृत्वात् परमार्थतोऽपि नान्यथाकरणम् । यानि

---

१. विश्वासपातकम्. क. ग. ङ. च. छ. । २. अतिक्रौर्यम् ख. ग. घ. च. छ. । ३. प्रीत्यापि क. ।

जगादेति। सन्ध्यनुगुणतया अविरोधवाक्यानि जगद्गुरुत्वप्रतिपादनार्थं धर्मान्तरेणान्यथावचनव्यावृत्त्यर्थम्। सर्वेषामेव तानि वाक्यानि सर्वदुःखनिवर्त्तकानीत्याह—अमृतायनानीति। अमृतस्य अयनानि स्थानभूतानि अमृतकुण्डिका इत्यर्थः। यथा क्षीरसागरं मथित्वाऽमृतकलशमुद्धृतवानेवं सर्वशास्त्राणि मथित्वा तानि वाक्यान्युद्धृत्य व्याहृतवानित्यर्थः। राजत्वादज्ञानपोषः। पूर्वं जीवनसुकृतम्, राज्यभोगसुकृतम्, जीवत्पुत्रसुकृतं चेति लेशत्रयं स्थितम्। [1]तन्मध्ये क्षताः पुण्यलेशा यस्य स तथोक्तः। उरुसंमाननायां न कश्चनापकारो भवेदिति भावः। जीवनं विद्यमानमपि गतप्रायं सूचितम्, पुण्यांशस्य गतत्वात्। केवलं पापांशेन जीवतीति भावः॥ ९॥

## श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

स एवमित्यत्र। भगवदङ्गानामिति। प्रापकत्वेन शेषाणाम्। स्वाहानिरिति। तपोबलादिहानिः। मुख्यभगवत्त्वेनेति। गुणातीतत्वेन प्राप्तब्रह्मतया तथात्वेन॥ ५॥ ❀ ❀ यदा त्वित्यत्र। अस्य परित्याग इति। विदुरकर्तृकपरित्यागः। नन्वत्र विदुरस्योत्तमाधिकारबोधनाय गृहत्यागे वक्तव्ये दुर्वाक्यवारितेन निर्गमनकथनं न युक्तम्। उद्वेगप्रसञ्जकत्वेनाधिकारजघन्यापादकत्वादित्यत आहुः—नैमित्तिकत्वादित्यादि। भक्तस्य द्विधा गृहस्थितिः पूर्वमुक्ता। तत्र भगवति पाण्डवान्प्रति प्रचलिते सहस्थितेरभावाद्भगवत्कार्यार्थं स्थितिरवशिष्यते, कार्यं तु पाण्डवरक्षारूपम्, तद्यदा न सिध्यति तदा तदर्थस्थितेरप्यभावात्तत्त्यक्तव्यमिति, गृहत्यागस्य नैमित्तिकत्वादस्थितौ निमित्तभूतानां बहिर्मुखानां कौरवाणां नगरस्य परित्यागकथनमुद्वेगप्रसञ्जकत्वेऽपि नाधिकारन्यूनत्वायेत्यर्थः। नन्वेवं सति तेषां तद्बहिर्मुखत्वमात्रं वक्तव्यम्, किं दोषान्तरकथनेनेत्याकाङ्क्षायामाहुः—अत्र मुख्येत्यादि। तथा च मुख्यदोषकारणबोधनार्थं दोषान्तरकथनमित्यर्थः॥ ६॥ ❀ ❀ यदा चेत्यत्र। धर्मान्तरेणेति। पार्थप्रहितत्वेन। तन्मध्य इति। पूर्वोक्तदोषत्रयेणाल्पीभूतसुकृतमध्ये॥ ९॥

## श्रीगिरिधरकृता बालप्रबोधिनी

सोऽयं शुको राज्ञा परीक्षिता पृष्टः प्रीतात्मा प्रसन्नचित्तस्तं राजानं प्रति इति वक्ष्यमाणमाह तत्त्वया श्रूयतामित्यन्वयः। प्रसन्नतायामुत्तरदाने सामर्थ्येन क्लेशाभावं हेतुं सूचयन् विशिनष्टि—ऋषिवर्य इति। तत्र हेतुमाह—सुबहुविदिति, सर्वज्ञ इत्यर्थः॥ ५॥ ❀ ❀ एवं राज्ञा पृष्टो मुनिस्तमेव संवादं प्रस्तुष्टुपुस्तावद्विदुरस्य त्यागानर्हस्यापि गृहस्य त्यागे निमित्तरूपान् कौरवापराधानाह—यदा त्वित्यादिना। यदा तु राजा धृतराष्ट्रो यविष्ठस्य कनीयसो भ्रातुः पाण्डोः सुतान् युधिष्ठिरादीन् लाक्षाभवने जतुगृहे प्रवेश्य ददाह, तदा स विदुरः अयात् गृहाद्विनिर्गत इत्येकादशे क्रियासम्बन्धः। एवमुत्तरत्रापि। तस्य तेषु दयैवोचितेत्याशयेनाह—विबन्धूनिति, पितृहीनानित्यर्थः। किमर्थं ददाहेत्यपेक्षायामाह—स्वसुतान् पुष्णन्निति, स्वपुत्रान् पोषयितुमित्यर्थः। एवं तेषां पोषणे तस्याधर्म एव जात इत्याह—अधर्मेणेति। कुत इत्यपेक्षायामाह—असाधूनिति। अधर्मिष्ठपक्षपातेनाधर्मो जात इति भावः। तर्हि कुत एवं नरकपातहेतुमधर्मं कृतवानित्यपेक्षायामाह—विनष्टदृष्टिरिति, विनष्टा दृष्टिर्धर्मविषयकं ज्ञानं चक्षुश्च यस्य स इत्यर्थः॥ ६॥ ❀ ❀ यदा च नृपो धृतराष्ट्रः सभायां कुरुदेवस्य परम्परयाऽऽगतराज्याधिकारिणो युधिष्ठिरस्य देव्याः पत्न्याः द्रौपद्याः केशानामभिमर्शमाकर्षणरूपं गर्ह्यं लोकवेदयोर्निन्दितं स्वसुतस्य दुर्योधनस्य कर्म न वारयामास तदाऽयादित्यन्वयः। सभायामित्यनेन सभ्यानामपि दोषः सूचितः 'सभा न प्रविशेत्प्राज्ञः सभ्यदोषमनुस्मरन्॥ अब्रुवन् विब्रुवन्नज्ञो नरः किल्बिषमश्नुते' इति वाक्यात्। तत्कर्मणो लोकनिन्दितत्वे हेतुमाह—स्नुषाया इति। तदैव तस्यामङ्गलं च जातमिति सूचयंस्तस्या दैन्यमाह—स्वास्रैः कुचकुङ्कुमानि हरन्त्याः क्षालयन्त्या इति अनेन तदावरकं वस्त्रमपि स्खलितमिति सूचितम्॥ ७॥ ❀ ❀ वनादागतस्य समयेन पूर्वकृतसङ्केतेन दायं स्वभागं याचतो याचमानस्य अजातशत्रोर्युधिष्ठिरस्य [2]यदा नादात् न ददौ तदाऽयादित्यन्वयः। ननु पूर्वं वनं कुतो गत इत्याकांक्षायां द्यूते कृतसमयबन्धादिति सूचयन्नाह—द्यूते त्वधर्मेण जितस्य पराजितस्य सत्यावलम्बस्य सत्याश्रयस्येति। अधर्मेण बलात्पराजितश्चेत्कथं वनं गतस्तद्विनाऽपि सत्यहान्यभावादित्याशङ्क्याह—साधोरिति, शान्त्यादिगुणवत इत्यर्थः। तर्हि किमिति नादादित्यपेक्षायां तत्र हेतुमाह—तमोजुषाण इति, अज्ञानपूर्ण इत्यर्थः॥ ८॥ ❀ ❀ भगवद्भक्तानां भगवद्विद्विमुखैः सह स्थितिरनुचितैवेति कौरवाणां भगवद्वैमुख्यमपि विदुरनिर्गमने मुख्यो हेतुरिति सूचयंस्तेषां भगवद्वाक्योल्लङ्घित्वमेव दर्शयति—यदा चेति। पार्थेन युधिष्ठिरेण प्रहितः प्रेषितो जगतां गुरुः सन्मार्गोपदेष्टा भगवान् कृष्णः सभायां यानि पुंसां भीष्मादीनाममृतायनानि अमृतस्राबीणि वचांसि जगाद तानि [3]यदा च राजा धृतराष्ट्रः उरु बहु न मेने तदाऽयादित्यन्वयः। भगवतो जगद्गुरुत्वात्तस्यापि हितमेवोपदिष्टं स्यात्तत्कुतो न मेने इत्यपेक्षायामाह—क्षतपुण्यलेश इति, तस्य न सुखकीर्तिधर्मादिहेतुः पुण्यमासीत्, किन्तु राज्यप्राप्तिमात्रहेतुः पुण्यलेश एव, तस्यापि नष्टत्वाद् भगवद्वाक्यानि अनादृतवानित्यर्थः॥ ९॥

---

१. पूर्वोक्तदोपत्रयेणाल्पीभूतसुकृतमध्ये. प्रकाशः। २. षोडशश्लोकस्थक्रियया सम्बन्ध इत्यर्थः। ३. मूलमतयेच्छब्दार्थोऽयम्।

## हिन्दी अनुवाद

सूतजी कहते हैं— सर्वज्ञ शुकदेवजीने राजा परीक्षित्के इस प्रकार पूछनेपर अति प्रसन्न होकर कहा—सुनो ॥ ५ ॥ ❀ ❀ श्रीशुकदेवजी कहने लगे—परीक्षित् ! यह उन दिनोंकी बात है, जब अन्धे राजा धृतराष्ट्रने अन्यायपूर्वक अपने दुष्ट पुत्रोंका पालन-पोषण करते हुए अपने छोटे भाई पाण्डुके अनाथ बालकोंको लाक्षाभवनमें भेजकर आग लगवा दी ॥ ६ ॥ जब उनकी पुत्रवधू और महाराज युधिष्ठिरकी पटरानी द्रौपदीके केश दुःशासनने भरी सभामें खींचे, उस समय द्रौपदीकी आँखोंसे आँसुओंकी धारा बह चली और उस प्रवाहसे उसके वक्षःस्थलपर लगा हुआ केसर भी बह चला; किन्तु धृतराष्ट्रने अपने पुत्रको उस कुकर्मसे नहीं रोका ॥ ७ ॥ ❀ ❀ दुर्योधनने सत्यपरायण और भोले-भाले युधिष्ठिरका राज्य जुएमें अन्यायसे जीत लिया और उन्हें वनमें निकाल दिया । किन्तु वनसे लौटनेपर प्रतिज्ञानुसार जब उन्होंने अपना न्यायोचित पैतृक भाग माँगा, तब भी मोहवश उन्होंने अजातशत्रु युधिष्ठिरको उनका हिस्सा नहीं दिया ॥ ८ ॥ ❀ ❀ महाराज युधिष्ठिरके भेजनेपर जब जगद्गुरु भगवान् श्रीकृष्णने कौरवोंकी सभामें हितभरे सुमधुर वचन कहे जो भीष्मादि सज्जनोंको अमृत-से लगे, पर कुरुराजने उनके कथनको कुछ भी आदर नहीं दिया । देते कैसे ? उनके तो सारे पुण्य नष्ट हो चुके थे ॥ ९ ॥

यदोपहूतो भवनं प्रविष्टो मन्त्राय पृष्टः किल पूर्वजेन ।
अथाह तन्मन्त्रदृशां वरीयान् यन्मन्त्रिणो वैदुरिकं वदन्ति ॥ १० ॥
अजातशत्रोः प्रतियच्छ दायं तितिक्षतो दुर्विषहं तवागः ।
[1]सहानुजो यत्र वृकोदराहिः श्वसन् रुषा यत्त्वमलं बिभेषि ॥ ११ ॥
पार्थांस्तु देवो भगवान्मुकुन्दो गृहीतवान् सक्षितिदेवदेवः ।
आस्ते स्वपुर्यां यदुदेवदेवो विनिर्जिताशेषनृदेवदेवः ॥ १२ ॥
स एष दोषः पुरुषद्विडास्ते गृहान् प्रविष्टो यमपत्यमत्या ।
पुष्णासि कृष्णाद्विमुखो गतश्रीस्त्यजाश्वशैवं कुलकौशलाय ॥ १३ ॥
इत्यूचिवांस्तत्र सुयोधनेन प्रवृद्धकोपस्फुरिताधरेण ।
असत्कृतः [2]सत्स्पृहणीयशीलः क्षत्ता सकर्णानुजसौबलेन ॥ १४ ॥
क एनमत्रोपजुहाव जिह्मं दास्याः सुतं यद्बलिनैव पुष्टः ।
तस्मिन् प्रतीपः परकृत्य आस्ते निर्वास्यतामाशु पुराच्छ्वसानः ॥ १५ ॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

इदानीं विदुरस्यैव कृतं पराभवं दर्शयति । यदेत्यादिषड्भिः । यदा पूर्वजेन धृतराष्ट्रेण मंत्राय चोपहूतोऽतर्गृहं प्रविष्टो मंत्रं पृष्टः सन्नथानंतरं तदाह । किं मंत्रिणोऽद्यापि यद्वैदुरिकं विदुरवाक्यमिति प्रसिद्धं वदंति ॥ १० ॥ ❀ ❀ तदेवाह । अजातशत्रोरिति त्रिभिः । तवागोऽपराधं सहमानस्य दायं प्रति यच्छ देहि यत्रापराधेऽनुजैः सह वर्तमानो वृकोदररूपोऽहिः क्रोधेन श्वसन् वर्तते । यद्यस्मात्त्वमलमत्यर्थं बिभेषि ॥ ११ ॥ ❀ ❀ ननु मम तादृशाः पुत्रा बहवः संतीति गर्वं मा कृथा इत्याह । पार्थांस्तु मुकुंद आत्मीयत्वेन गृहीतवान् स च देवः तत्रापि भगवान्न तु प्राकृतः । किंच सह क्षितिदेवैर्विप्रैर्देवैश्चेंद्रादिभिर्वर्तमानः यतोऽसौ तत्रैव विप्रा देवाश्चेत्यर्थः । स च स्वपुर्यामेव सुखमास्ते नत्वन्यत्र गतः । किंच यदुदेवानां देवः पूज्यः यतोऽसौ तत्रैव यदुप्रवीरा इत्यर्थः । किंच नृदेवेषु मंडलेश्वरेषु दीव्यंति प्रकाशंत इति नृदेवदेवा राजानो विनिर्जिता अशेषा नृदेवदेवा येन यतोऽसौ तत्रैव सर्वे राजानः अतः पार्थानां दायं देहीति ॥ १२ ॥ ❀ ❀ दुर्योधनस्तत्र मन्यत इति चेदत आह । स एष मूर्तो दोष एव गृहान्प्रविष्ट आस्ते । दोषत्वे हेतुः । पुरुषद्विट् श्रीकृष्णद्वेष्टा कोऽसौ यं त्वमपत्यमत्या पुष्णासि न त्वपत्यमसा न पतत्यस्मादिति ह्यपत्यं प्राहुः । गता श्रीर्यस्मात्स त्वमित्याक्रोशति । अत एनमशैवममंगलमाशु त्यज कथं पुत्रस्त्याज्यस्तत्राह । कुलस्य कौशलाय । 'त्यजेदेकं कुलस्यार्थे' इति हि न्यायः ॥ १३ ॥ ❀ ❀ इत्यूचिवानेव मुक्तवान् असौ क्षत्ता विदुरः सतां स्पृहणीयं शीलं यस्य

---

१. प्राचीन पाठस्य मूले 'सहानुजो···' इत्यारभ्य '···नृदेवदेवः' पर्यन्तं सार्धैकश्लोको न । पश्चाल्लिखितायां टिप्पण्यां वर्तते ।
२. प्रा० पा०—संस्पृह० ।

स कर्णदुःशासनशकुनिसहितेन दुर्योधनेनासत्कृतस्तिरस्कृतः ॥ १४ ॥ ❀ ❀ तिरस्कारमाह । क इति दासीसुतो ह्यत्राह्वाननार्हः । जिह्मश्च कुटिलः । जिह्मतामाह यस्य बलिनाऽन्नेन पुष्टस्तस्मिन्नेव प्रतीपः प्रतिकूलः परेषां कार्ये वर्तते । अतः पुरान्निर्वास्यताम् । श्वसानः श्वसन् जीवमात्रशेष इत्यर्थः । पाठांतरे श्मशानवदमंगलः ॥ १५ ॥

### वंशीधरकृतो भावार्थदीपिकाप्रकाशः

विशेषहेतुं पंचममाह इदानीमिति । मंत्राय स्वकर्त्तव्यालोचनाय । किलेति । श्रीकृष्णे संधिकार्यमकृत्वैवोपप्लाव्यं गते सत्युपहूत इत्याह मंत्रिणो हिताहितविचारनिपुणाः ॥ १० ॥ ❀ ❀ तदेव विदुरवाक्यमाह—वृकोदरो भीमः यस्माद्भीमात् ॥ ११ ॥ ❀ ❀ गर्वितं प्रत्याह—पार्थांस्त्विति । आत्मत्वेन मदीया एते इत्येवं स्वीकृतवान् । तत्रापि देवेष्वपि भगवान् सर्वशक्तियुतः प्राकृतः देवतांतरसमः कारणांतरमाह । किञ्चेति । क्षितिदेवा विप्राः यतो यत्रासौ कृष्णः । इत्यर्थ इति । स्वस्वामित्वेन देवा विप्राश्चापि तमेवाश्रिता इति भावः । स कृष्णः स्वपुर्यां द्वारकायां कारणांतरमाह—किं चेति । यदुदेवानां यदुवीराणाम् । इत्यर्थ इति यदुवंशनाथत्वादिति भावः । कारणांतरमाह । अतः सर्वथाबलित्वात् ॥ १२ ॥ ❀ ❀ तद्राज्यदानम् । अतः श्रीरक्षणाद्धेतोः । एनं दुर्योधनम् । "श्वःश्रेयसं शिवं भद्रम्" इत्यमरः । शिवमेव शैवं तद्भिन्नमशैवममंगलरूपम् । अत्राक्षिपति कथमिति । न्यायप्रतिपादकं समग्रश्लोकं पठति "त्यजेदेकं कुलस्यार्थे ग्रामस्यार्थे कुलं त्यजेत् । ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेत्" इति चाणक्यः ॥ १३ ॥ ❀ ❀ इति शब्दोऽत्र प्रकारवचनः एवं प्रकारं बहु । तत्र मंत्रप्रदानसमये । स्फुरणं संचलनम् ॥ १४ ॥ ❀ ❀ मंत्रे दासीसुतः सर्वथा नानेयस्तस्याशुचित्वात् । तदुक्तं मनुना "सर्वेषां तु विशिष्टेन ब्राह्मणेन विपश्चिता । मंत्रयेत परं मंत्रं राजा षाड्गुण्यसंयुतम्" । किं च "अन्यानपि प्रकुर्वीत शुचीन्प्राज्ञानवस्थितान् । सम्यगर्थसमाहर्तॄनमात्यान्सुपरीक्षितान्" इति । बलिनाऽपवर्जितान्नेन परेषामस्मच्छत्रूणां पांडवानाम् । अतः परकार्यवर्त्तित्वात् । इत्यर्थ इति । सर्वस्वमस्यापहृत्य निष्कास्यतामयमिति भावः । पाठांतरे श्मशान इति पाठे ॥ १५ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनीव्याख्या

प्रचुरपुण्ये लेशमात्रमेव नष्टं न सर्वमित्यर्थं भ्रान्तिवारणाय व्याचष्टे न सुखकीर्त्तीत्यादि । हेतुगर्भमिदं विशेषणम् ॥ १० ॥ ❀ ❀ अनन्तरं प्रश्नानन्तरं तद्वाक्यमाह मंत्रिणोऽद्यापि न्यायोपेतं वाक्यमन्यस्यापि वैदुरवाक्यसदृशमिति वदन्ति ॥ ११ ॥ १२ ॥ ❀ ❀ तत्रापि देवेष्वपि सक्षितीति विशेषणस्य प्रयोजनं व्याचष्टे यतोऽसाविति । एवमग्रेऽपि ॥ १३ ॥ ❀ ❀ त्यजेदेकं कुलस्यार्थे ग्रामस्यार्थे कुलं त्यजेत् । ग्रामं जनपदस्यार्थे आत्मार्थे सकलं त्यजेदिति समग्रवाक्यं ज्ञेयम् ॥ १४ ॥ ❀ ❀ एवं नीतिप्रकारेण ॥ विदुरो धृतराष्ट्रं प्रति उक्तवान् ॥ १५ ॥

### श्रीमद्वीरराघवव्याख्या

यदेति । पार्थेन युधिष्ठिरेण प्रहितः जगतो गुरुः धर्मोपदेष्टा भगवान् श्रीकृष्णः सभायां यानि पुंसां भीष्मादीनाममृतायनान्यमृतस्रावीणि वचांसि जगाद तानि वचांसि यदा च राजा धृतराष्ट्रो नोरु मेने न बहु मेने तदायादित्यन्वयः । कथंभूतो राजा क्षतपुण्यलेशः क्षतो विनष्टः पुण्यस्य लेशो यस्य सः ॥ १० ॥ ❀ ❀ यदेति । यदा पूर्वजेन धृतराष्ट्रेण मंत्राय उपहूतः उप समीपे हूतः आहूतः भगवद्गृहे प्रविष्टः मंत्रदृशां मंत्रविदां मध्ये वरीयान् श्रेष्ठो विपश्चिन्मन्त्रं समालोचनं प्रतिपृष्टः मन्त्रदृशां मन्त्रविदां मध्ये वरीयान् विदुरः अथ प्रश्नानंतरमुवाच मंत्रमेवाह यत् यतः वैदुरिकं विदुरोक्तमेव मंत्रिणः इतरे सर्वे मंत्रिणः वदंति ॥ ११ ॥ ❀ ❀ पृष्टः किमाहेत्यत आह अजातशत्रोरिति त्रिभिः । दुर्विषहं सोढुमशक्यं तवागः अपराधं तितिक्षतो मृष्यतः अजातशत्रोर्दायं प्रति यच्छ असमर्थे परं तितिक्षयैव भवितव्यमित्यत आह सहानुजः अनुजैरर्जुनादिभिः सहितः वृकोदरः भीमः स एवाहिः स रुषा श्वसन् यत्राजातशत्रुसन्निधौ वर्त्तते यद्यस्माद् वृकोदरात्त्वमलं नितरां बिभेषि यं त्वमित्यपि पाठः । तदायं प्रतिबिभेषीत्यर्थः ॥ १२ ॥ ❀ ❀ भगवत्सहायानां पार्थानां बलीयस्त्वं किमु वक्तव्यमित्याह पार्थानिति । देवः भगवान्समयज्ञानशक्त्यादिसंपन्नः मुकुंदः श्रीकृष्णः पार्थान् गृहीतवान् । मम प्राणा हि पांडवा इत्यभिमानविशेषेण परिगृहीतवान् गृह्णातु भगवांस्ततोपि किमित्यत आह स भगवान् क्षितिदेवाः ब्राह्मणास्तेषां देवः ब्रह्मण्य इत्यर्थः । यत्र भगवान् ब्रह्मण्यो वर्त्तते तत्र श्रीर्विजयो भूतिरिति न्यायेन तत्रैव विजय इत्यर्थः । दूरस्थेन भगवता किं भवितव्यं इति मावोच इत्याह स्वपुर्यामेवास्ते आस्तां स्वपुर्यां तथाप्येकेन तेन किं इत्यत आह यदुदेवदेवः यदुदेवाः यदुश्रेष्ठसात्यकिप्रद्युम्नानिरुद्धादयः तेषां देवः प्रभु यादवास्तत्संनिधावेवासते इत्यर्थः । यादवतुल्या योद्धारो मत्संनिधावपि संतीत्यत आह विनिर्जिताशेषनृदेवदेवः विनिर्जिता अशेषाः नृदेवाः राजानः यैस्तेषामपि देव इत्यर्थः । समस्तदिग्विजेतॄणामपि प्रभुः ॥ १३ ॥ ❀ ❀ एवं भगवत्सहायानां पार्थानामजेयत्वमभिधाय स्वकुलविनाशको भगवद्द्वेषी तव सुतो निर्वास्यतामित्याह यं दुर्योधनमपत्यबुद्ध्या त्वं पुष्णासि स एष दुर्योधनः दोषप्रचुरः त्वदीयपापराशिरेवापत्यरूपेण मूर्त्तः सन् गृहान्प्रविष्टः कुतः यतः पुरुषद्विड् भगवद्द्वेषी आस्ते कथंभूतः पुष्णासि कृष्णाद्विमुखः अतएव गतश्रीः अत आश्वशैवममंगलमेनं दुर्योधनं कुलकौशलाय त्यजेदेकं कुलस्यार्थे इति न्यायेन स्वकुला-

निष्टनिवृत्तये त्यजेति आश्वथैनं आश्वसेत्यमित्यपि पाठः आश्वेनं दुर्योधनमपीत्यर्थः। असेत्थं मूर्खं तमाशु त्यजेत्यर्थः ॥ १४ ॥ ❀ ❀ इति स्वमूचिवान् विदुरः इति शेषः अथैतस्य गृहत्यागं वक्ष्यन्नेतस्मिन्साक्षात्परकृताभिभवमाह तत्र विदुरेणैवमुच्यमाने प्रवृद्धकोपस्फुरिताधरेण प्रवृद्धः यः कोपः तेन स्फुरितश्चञ्चल अधरो यस्य तेन सकर्णानुजसौवलेन कर्णदुःशासनशकुनिसहितेन दुर्योधनेन सद्भिः स्पृहणीयं शीलं यस्य सः क्षत्ताऽसत्कृतः तिरस्कृतः ॥ १५ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

चतुर्थं हेतुमाह यदात्विति। पार्थेन युधिष्ठिरेण प्रहितः प्रेषितः पुंसाममृतायनानि मोक्षादिसकलपुरुषार्थसाधनानि। हतः पुण्यलेशो यस्य स तथा लिश अल्पीभाव इति धातुः अनेन पापं बहुलं पुण्यमल्पं तदपि नष्टमित्युक्तं भवति इदमेव सुखलेशविनाशकारणमित्यस्मिन्नर्थे तु शब्दः गुरुमात्रस्यापि वाक्यं ग्राह्यं किमु जगद्गुरोरित्यभिप्रायेण तथोक्तम् ॥ १० ॥ ❀ ❀ ततः किं विदुरस्य तीर्थयात्रायामित्यतो विशेषहेतुमाह यदेति। पूर्वजेन ज्येष्ठेन यदोपहूतो भवनं प्रविष्टो विदुरो मंत्राय स्वकर्तव्यतालोचनाय पृष्टः किं कार्यं तद्ब्रूहि इति अथ तदा मंत्रदृशां मंत्रज्ञानां वरीयांस्तं धृतराष्ट्रमाह मंत्रदृग्वरीयस्त्वं कुत इति तत्राह यदिति। वैदुरिकं विदुरेणोक्तं यद्यस्मात्तस्मादिति शेषः। कृष्णे संधिकार्यमनुत्पाद्योपप्लव्यं गते सत्युपहूत इत्यस्मिन्नर्थे किलशब्दः ॥ ११ ॥ ❀ ❀ किमाहेति तत्राह अजातशत्रोरिति। प्रतियच्छ प्रदेहि प्रदानं हेतुमाह सहानुज इति। हि शब्दो हेत्वर्थः। यत्र यस्य युधिष्ठिरस्याभिप्रेतसाधक इति शेषः। किमनेनेत्याह यमिति—यं भीमं प्रति। अत्रापि हेतुमाह स्वशत्रुहेति। स्वस्य राज्यलक्षणद्रव्यस्य शत्रवो दुर्योधनादयस्तान् हतवानिति निश्चितत्वात्तथा प्रयोगः ॥ १२ ॥ ❀ ❀ राज्यप्रदाने वलवद्धेत्वंतरं चाह यदात्विति। क्षितिदेवाः ब्राह्मणाः तेषां देवः पूज्यः मुक्तिमपि ददाति किमुराज्यमित्यतो मुकुंद इति। एवंविधसामर्थ्यवान् पार्थान् गृहीतवानिति यदा तस्माच्च सोपि न दूरस्थ इत्याह आस्त इति। स्वेषां पांडवानां पुर्यामुपप्लाव्याख्या यामास्त इति यस्मात्तस्माच सांप्रतं सावसर इत्याह विनिर्जितेति ॥ १३ ॥ ❀ ❀ पुत्रसंवादाभावाद्युधिष्ठिराय राज्यं न दत्तमिति धृतराष्ट्राभिप्रायं विद्वान्विदुरो विष्णुवैष्णवद्वेषिणः पुत्रस्यापि परित्यागः श्रेयानिति वक्ति स एष इति। हे ज्येष्ठ त्वं यमपत्यमत्या न पतति कुलं यस्मात्तदपत्यमिति बुद्ध्या पुष्णासि स एष दोषो गृहं प्रविष्ट आस्त इत्यन्वयः। कीदृशो दोषः पापात्मा पुरुषं पूर्णषड्गुणं विष्णुं द्वेष्टीति पुरुषद्विट् कुतः। कृष्णाद्विमुखः उपलक्षणमेतत्। तद्भक्तविमुखश्चात एव गतश्रीः श्रीप्रसादरहितः यत एवंविधोऽथतस्मात् कुलकौशलायाशु कालक्षेपसंतरेणैनं दुर्योधनं त्यजेत्यन्वयः ॥ १४ ॥ ❀ ❀ स्ववचनादिकं धृतराष्ट्रेण नांगीकृतमित्येतावता विदुरस्य तीर्थयात्राकारणविरागमहेतुः कः प्राप्त इति तत्राह इतीति। इतिशब्द आदिवचनः एवमादिवाक्यमुक्तवान् प्रकारवचनो वा स्फुरणं संचलनं तत्र ज्येष्ठस्य पुरतः असत्कृतोधिक्कृतः ॥ १५ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

इदानीं विदुरस्यैव पराभवं तत्कृतं दर्शयति षड्भिः। अथानन्तरं विदुरः तदाह किं मन्त्रिणोऽद्यापि यद् वैदुरिकं विदुरवाक्यमिति प्रसिद्धं वदन्ति ॥ १० ॥ ❀ ❀ तदेवाह अजातेति। यत् यत्र आगसि वृकोदररूपोऽहिः क्रोधेन श्वसन् वर्त्तते। यत् यस्मात् त्वमलमत्यर्थं बिभेषि ॥ ११ ॥ ❀ ❀ संप्रति त्वन्यदप्यद्भुतं तेषां महाबलाधिक्यं शृण्वित्याह पार्थांस्त्विति। आत्मीयत्वेन गृहीतवान् स च देवः तत्रापि भगवान् क्षितिदेवैर्विप्रैर्देवैश्च सहितः तत् पक्ष एव विप्रा देवाश्चेति भावः। तत्रापि स्वपुर्यामेवास्ते नत्वन्यत्र गतः। यदुदेवा यदुप्रवरा देवा इव बलिष्ठा यस्मात् सः। यत्रासौ तत्रैव यदुप्रवीरा इत्यर्थः। किञ्च तस्यैव बलं शृण्वित्याह विनिर्जिता अशेषा नृदेवाः कंसजरासन्धादयो देवाश्च बाल्यमारभ्यैव ब्रह्मेन्द्रवरुणरुद्रादयो येन सः। अतः पार्थानां दायं देहि यद्यात्मनो भद्रमिच्छसीति भावः ॥ १२ ॥ ❀ ❀ मत्पुत्रो दुर्योधनोऽत्र विप्रतिपत्स्यते इति चेत्तत्राह स एष इति। त्वत्कोटिजन्मकृतदुष्कृतफलभूत इत्यर्थः। दोषो मूर्त्त एव यतः पुरुषं परमेश्वरं द्वेष्टि तत्रापि तव गृहान् बाह्यान् अभ्यन्तरान् मनोबुद्ध्यादिरूपानपि प्रविष्ट एवास्ते तत्रापि त्वं तं पुष्णासि तत्राप्यपत्यमत्या नह्यसावपत्यं नपतत्यस्मादित्यपत्यमिति निरुक्तेः। अतएव त्वमनुमीयसे कृष्णाद्विमुखः गतश्रीरिति लक्ष्मीस्तव गृहेभ्यो निःसृत्य गतेति जानीहि। ननु तर्हि कोऽत्र प्रतीकारस्तत्राह आशु शीघ्रमशैवममंगलमेनं त्यज ननु मया पित्रा पुत्रस्य त्यागे मत्कुले कलंकः स्यात् तत्राह। कुलस्यैव कौशलाय त्यजेदेकं कुलस्यार्थे इति न्यायात्। अन्यथा कुलमेव सर्वं ते नंक्ष्यतीति भावः ॥ १३ ॥ ❀ ❀ इत्यूचिवान् एवमुक्तवान् विदुरः सुयोधनेन असत्कृतः तिरस्कृतः कर्णदुःशासनशकुनिसहितेन ॥ १४ ॥ ❀ ❀ तिरस्कारमेवाह क एनमत्र महाराजसदसि आजुहावेति आह्वानानर्हमिति भावः। तत्र हेतुः दास्याः सुतमिति जन्मनैव दुष्टम्। जिह्मं कुटिलमिति। कर्मणापि कौटिल्यमाह। यद्बलिना यद्दत्तेनान्नेन पुष्टस्तस्मिन्नेव स्वस्वामिनि प्रतीपः प्रतीकूलः परेषां शत्रूणां कृत्ये कार्ये वर्त्तते। अतोऽयमत्र स्थितः सर्वमेवास्मत्कुलं नाशयितुं यतिष्यत इति भावः। निर्वास्यतां अयमितो निष्काश्यतां यः कोऽप्यत्र मदीयो वर्त्तते तेनेति भावः। तत्राप्याशु मा विलम्बेन तत्रापि श्वसानः श्वासमात्रावशिष्ट इति सबहुवेत्रप्रहारमिति भावः। श्मशान इति पाठे श्मशानवदमंगलोऽयं केनास्मत्गृहमध्ये आनीतो यो मामेवामंगलं वक्ति। अत आशु निष्काश्यतामन्यथा राजपुरमिदं श्मशानमेव करिष्यतीति भावः ॥ १५ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

राजा धृतराष्ट्रः अमृतायनानि श्रेयोमूलानि ॥ १० ॥ ❀ ❀ पूर्वजेन धृतराष्ट्रेण मंत्रिणो यद्वैदुरिकं विदुरवाक्यं वदन्ति तदाह ॥ ११ ॥ ❀ ❀ यद्यस्मान्महाबलस्त्वमलमत्यर्थं बिभेषि स वृकोदराख्योऽहिः सहानुजः अर्जुनादिसहितः यत्रागसि क्रोधेन श्वसन् आस्ते तत्तवाग अपराधं तितिक्षतः सहमानस्य अजातशत्रोः युधिष्ठिरस्य दायं प्रतियच्छ प्रत्यर्पय ॥ १२ ॥ ❀ ❀ तद्दायप्रत्यर्पणं तव यशोऽर्थं पाडवास्तु श्रीकृष्णप्रिया अतः कृतार्था एवेत्याशयेनाह पार्थास्त्विति ॥ १३ ॥ ❀ ❀ दुर्योधनस्त-द्दायप्रदानं नांगीकरोत्यत आह स इति । योजन्मकाले कुत्सितान् शब्दान्कुलनाशसूचकानकरोत् तदैव मया प्रार्थितो भवान् पुत्रं दोषरूपं त्यजेति एवं मया वार्यमाणोऽपि यमपत्यबुद्धया पुष्णासि स एष मूर्त्तो दोष एव गृहान् प्रविष्ट आस्ते दोषत्वे हेतुमाह पुरुषान् युधिष्ठिरादीन् श्रीकृष्णप्रियान् द्वेष्टी ति स तथा कृष्णाद्विमुखश्चे ति तस्मादशैवममंगलं दुर्योदनमाशु त्यज कथं पुत्र-स्त्याज्य इत्यत्राह कुलकौशलायेति । त्यजेकं कुलस्यार्थे ग्रामस्यार्थे कुलं त्यजेत् । ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेदिति न्यायात् ॥ १४ ॥ ❀ ❀ क्षत्ता विदुरः इतीत्थम् ऊचिवान् तत्र सभायामेव कर्णदुःशासनशकुनिसहितेन सुयोधनेन दुर्योधनेन असत्कृतः तिरस्कृतः ॥ १५ ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनीव्याख्या

एवं पुत्रस्नेहेन भगवद्वाक्योल्लङ्घने कृते, तत्प्रभृति स्वतस्तद्गृहे अगच्छन्नपि यदा उपहूत आकारितस्तदा भवनं प्रविष्ट इत्याह—यदेति । तदनन्तरं मन्त्रार्थं पृष्टः । किलेति वचनं स्वस्य तथाऽनुसन्धाने व्यर्थगूढार्थभावकत्वात् अनात्मवित्त्वं स्यादिति तन्निराकरणार्थमुक्तम् । पूर्वजेनेति कथनावश्यकत्वम् । तथा भिन्नक्रमेणोक्तवानित्याह—अथाहेति । सम्बन्धादिक्रमनपेक्ष्य भयादि-कमप्यनपेक्ष्य अथ स्वतन्त्रतया आह । तस्य मन्त्रस्य प्रसिद्धिमाह—तमिति । तादृशकथने हेतुः—मन्त्रदृशां बरीयानिति । यथा वेदे 'स एतं मन्त्रमपश्यत्' इति बृहस्पतिप्रभृतयो मन्त्रद्रष्टारो भवन्ति, तथा नीतिशास्त्रेऽपि ये मन्त्रद्रष्टारस्तेषां मध्ये बरीयान् । किञ्च । अस्य मन्त्रस्य सर्वलोकप्रसिद्धिरस्तीत्याह—यन्मन्त्रिण[1] इति । विदुरेण प्रोक्तं वैदुरिकमिति । तेन प्रोक्तमित्यधिकारसिद्धत्वात् सर्व-जनीनप्रसिद्धिः ॥ १० ॥ ❀ ❀ मन्त्रमेवाह—अजातशत्रोरिति । इति उपायचतुष्टयमध्ये दानमेव मन्त्रः । दायमिति न हीनता । अजात-शत्रोरिति विपरीतशङ्काभावः । तस्याजातशत्रुत्वं न केवलं नामतः, किन्तु कार्यतोऽपीत्याह—अन्यैर्दुर्विषहमपराधं सहत इति । अजातशत्रुत्वादेवाऽदानमस्त्वित्याशङ्क्य भीममुपस्थापयति । सहानुज इति अनुजैः सह वर्तत इति । सादेशाभावः । अर्जुनादीनामपि क्रूरत्वं सूचितम् । यत्र यस्य राज्ञो निकटे रुषा श्वसन् वृकोदरनामा अहिरस्ति । न हि सर्पवैरं कार्यमकृत्वा निवर्त्तते । तस्मात्त-त्सन्तोषार्थं दायं देयमित्यर्थः । ननु ते चत्वारः किं करिष्यन्ति, मम तादृशाः शतं पुत्राः सन्तीत्याशङ्क्याऽऽह—यस्त्वमलं बिभेषीति । यस्माद् भीमादेकस्मादपि त्वमलं बिभेषि । आकाशवाणीश्रवणादेक एव भीमः सर्वान्मारयिष्यतीति शतमप्यप्रयोजकम् । विपरीत-शङ्काऽपि निवारिता । आस्त इत्यर्थात् । अनेन भेदो दण्डश्च निवारितः । दायत्वाच्च अदाने न साम ॥ ११ ॥ ❀ ❀ सहायाभावमाशङ्क्य एकसहायेनैव त्रैलोक्यजयसामर्थ्यं भवतीति तं विशिनष्टि—पार्थांस्तु देव इति । सहायार्थं प्रार्थनापि नापेक्ष्यते । तु पुनः स्वयमेव गृहीतवान् । पार्थानिति सम्बन्धेन बहुवचनेन च सर्वथा तदुद्योगो लक्ष्यते । न हि बहून् स्वकीयान् गृहीत्वा कश्चित्तूष्णीं तिष्ठति । देवत्वान्न मानुषैर्जेतुं शक्यः । अत एव दुर्योधनस्य दैत्यत्वान्मारणमपि गम्यते । देवदैत्यानामजेयत्वाय भगवानिति । अनेन प्रारब्धकर्मापि चेद्विपरीतं भवेत्, तदप्यन्यथा कुर्यादिति सूचितम् । कालजयाय मुकुन्द इति । अन्येषामपि दुःखं दूरीकृत्य मोक्षदातुः कालजयः किं वक्तव्य इत्यर्थः । अनेन राज्यदानं चावश्यकमिति ज्ञापितम् । किञ्च । स भगवान् क्षितिदेवदेव इति । क्षितिदेवा ब्राह्मणास्तेषामपि देवस्तद्धितकर्तृत्वात् । अतो यत्र भगवांस्तत्रैव ब्राह्मणा इति तव ब्राह्मणा अपि न सहायाः । किञ्च । आस्ते स्वपुर्यां यदुदेवदेव इति । यो भगवान् स्मृतो ध्यातो वा सर्वमनिष्टं निवार्य राज्यादिकं प्रयच्छति । तत्र साक्षादेव भक्तानां हितार्थे भक्तपुर्यामास्ते । किञ्च । यदुदेवा यादवा यदोर्वंशे उत्पन्ना देवा इति तेषामपि देव इति यत्र भगवांस्तत्रैव यादवा इति । तव बन्धुसहायोऽपि नास्तीत्युक्तम् । किञ्च । विनिर्जिताशेषनृदेवदेव इति । नृदेवा राजानस्ते सर्वे विशेषेण निर्जिता येन । तमपि विजिगीषत इति जरासन्धादिजेतृत्वेन सर्वे राजानस्तद्वश्याः । अतस्तव राजसहायोऽपि नास्तीत्युक्तम् । नृदेवदेवा जरासन्धादयस्ते वा निर्जिता येन । अतो निर्बलस्य तव जये कः प्रयास इति भावः ॥ १२ ॥ ❀ ❀ दुर्योधनो न मन्यत इति चेत्तत्राऽऽह—स एष दोष इति । स प्रसिद्धस्त्रिदोषोऽयमेव । दोष इति वचनात् तदनङ्गीकारो न बाधकः । दोषः सर्वैरुपायैस्त्याज्यो न तु दोषानुरोधेन औषधं त्याज्यमिति भावः । तस्य दोषत्वे हेतुमाह—पुरुषद्विडिति । यः पुरुषं द्वेष्टि स दोषः । अन्यथा तस्यैव शरीरे तन्नियम्ये स्वयं स्थितः कथं तं द्वेष्टि । यस्य राज्ये ग्रामेऽपि स्थितस्तं न द्वेष्टि, तत्र तच्छरीरे विद्यमानो रोगमृते कथं द्विष्यात् । अतः पुरुषद्वेषाद्दोष इत्य[2]वसीयते । तत्त्याग उपपत्तिरूपो नि[3]दानमित्यर्थः । आस्त इति शीघ्रं तस्य प्रतीकारः

---

१. यन्मन्त्रवाक्यम्. प्र. । २. अध्यवसीयते. ख. । ३. रोगोच्छेदमूलकारणम्. प्रकाशः ।

कर्त्तव्यः। साम्प्रतं स्वकार्यमकृत्वैव तूष्णीं तिष्ठति। उपेक्षितस्तु कुलमेव नाशयिष्यतीति भावः। कोऽस्तीत्याकाङ्क्षायामाह—सर्वत्रैव तव—गृहान् प्रविष्ट आस्ते। ममत्वात्सर्वगृहप्रवेशने निवारणाशक्तिः। अयमिति दूरे स्थितमङ्गुल्या निर्दिशति। तथाप्यन्धत्वात्तं न द्रक्ष्यतीति प्रकारान्तरेण बोधयति। यमपत्यमत्या त्वं पुष्णासि। आपद्भ्यस्त्रायत इत्यपत्यम्। तन्मतिरेव। किञ्च। त्वं च कृष्णाद्विमुखः, यतः पुष्णासि। अत एव गतश्रीश्च भविष्यसि। तस्मादस्य सर्वानर्थमूलत्वात् 'त्यजेदेकं कुलस्यार्थे' इति न्यायात् एनं त्यज। चकारात्कृष्णवैमुख्यं च त्यजेत्यर्थः। यदा एवमाक्रोशपूर्वकमाज्ञारूपेणोक्तवान्। तदा असत्कृत इत्यूचिवानिति संबन्धः। इत्यूचिवानिति वा भिन्नम्। तत्र स्थाने आगतेन भ्रातुरन्तिके वा सुयोधन इति तस्यापकर्षार्थं वचनम्। ननु पितृव्यतिरस्कारं कथं कृतवानित्याशङ्क्य अन्तः क्रोधेन, बहिर्दुष्टैराक्रान्तत्वादिति तृतीयान्तं विशेषणद्वयम्। प्रवृद्धो यः कोपस्तेन स्फुरितमधरं यस्य। अनेन क्रोधेन लोभ एव स्फुरित इति तदुक्तो दानरूप उपायोऽप्यसंमत इति सूचितम्। असत्कारो धिक्कारः, अग्रे वक्तव्यो वा। एवमप्रियकथनं धर्मनीतिविरुद्धम्, "सत्यं ब्रूयात् प्रियं ब्रूयात्" इति स्मृतेः। प्रधानपरित्यागश्च नीतिविरुद्धः। सोऽपि सन्मानेनैव बोधनीयो भवति। तथाप्येवं वचनं परित्यागार्थमेव, भगवद्विमुखैः सह स्थातुमयुक्तत्वात्। स्नेहश्च न स्थापनीयः। चित्तस्याऽतिदुष्टत्वात् सर्वथा परित्यागमपि न सहते। अत एवं वचनमेतदभिसन्धायाऽऽह—सत्स्पृहणीयेति। सद्भिः स्पृहणीयं शीलं यस्य। एवमेवासद्भिः सह स्थितौ तत्परित्यागार्थमेवं कर्त्तव्यमिति सत्स्पृहणीयता। त्वतेति विश्वासपात्रत्वं सूचितम्। दुष्टचतुष्टयमध्ये दुर्योधनो मुख्यः। कर्णदुःशासनशकुनयस्तु सहायाः। तदाह तैः सहित इति। अथवा। ननु मन्त्रस्य स्वहितत्वादङ्गीकारमेव कथं न कृतवानित्याह सद्भिरेव स्पृहणीयं शीलं यस्येति। तस्य सपरिवारस्यासत्त्वादिति भावः ॥ १३ ॥ १४ ॥ क एनमिति। लोकोक्त्या अधिक्षेपः। पित्रा समाहूतत्वं ज्ञात्वा अयुक्तकरणात्तमप्याक्षिपतीति ज्ञायते। स्वभावजातिक्रियादुष्टस्य मन्त्रानर्हत्वात्। अयं तु तादृश इति विशेषणत्रयम्। द्वयं सिद्धम्, क्रियैव तृतीया। जिह्मः कुटिलश्छिद्रान्वेषी। मया कापट्येन स्थातव्यम्, विश्वासं जनयता स्वावसरेऽपकर्तव्यमिति जिह्मलक्षणम्। तदत्र विदुरे स्पष्टं जातम्। स्वाधिकारानुसारेण भगवान् सर्वत्र तथा स्फुरतीति सत्त्वादीनामापेक्षिकत्वं ज्ञापितम्। दास्याः सुतमिति जातिदोषः। क्रियादोषं वक्तुं कृतघ्नतामाह—यद्बलिनैव पुष्टस्तस्मिन् प्रतीप इति। यथा आश्रितत्वाच्चाण्डालादिभ्यो बलिर्दीयते तथाऽयमपि पतितः। ब्रह्मबीजस्य शूद्रायां जातत्वात्। अत एवैवकारः। बलिपुष्टाश्च काका एवमेव भवन्तीति ज्ञापितम्। पोष एव तथाभावे हेतुः। परेषां शत्रूणां कृत्ये आस्त इति क्रियादोषः। दण्डो निर्वास्यतामिति। आश्विति यावच्चित्ते तदुक्तं न प्रविशति। तेषामपि तेनाऽपि वधस्यानुक्तत्वात् परित्यागस्यैवोक्तत्वान् निर्वासनं दण्डः। श्वसानः प्राणमात्रावशेषः। असतां दृष्ट्या प्राणहरणापेक्षयाऽधिकोऽयं दण्डः। श्मशान इति पाठे यत्र स्थास्यति तेषाममङ्गलं भविष्यतीत्यर्थः। यमत्वेन मृतोपजीवित्वाद्वा। अत एव पुरान्निर्वास्य इति केवलं वचनमुक्तवान्। एवं दशभिः श्लोकैः पूर्वावस्थापरित्यागहेतुरुक्तः। अनेन पूर्वदेहसंबन्धिनोऽपि त्यक्ता इव ॥ १५ ॥

## श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

यदोपेत्यत्र। यदिति मन्त्रवाक्यम् ॥ १० ॥ ❀ ❀ पार्थानित्यादि पूर्वश्लोक एकस्याजातशत्रोरेव कथनादत्र बहुवचनं किमभिप्रायमिति शङ्कायामाहुः—बहुवचनेनेत्यादि। लक्ष्यत इत्यजहत्स्वार्थया बोधनान्न 'प्रतिज्ञाहानिः। जरासन्धस्य राजसूयारम्भे जितत्वात्तद्विजिगीषा नेदानीं युज्यत इत्यरुच्याऽर्थान्तरमाहुः—नृदेवदेवा इत्यादि ॥ १२ ॥ ❀ ❀ स एष इत्यत्र। निदानमिति। रोगोच्छेदमूलकारणम्। अयमिति। एष इत्यस्यार्थनिर्देशः ॥ १३ ॥ ❀ ❀ इत्यूचिवानित्यत्र। मन्त्रस्य श्लोकत्रयात्मकत्वेन पूर्वोक्ता या आहेति क्रिया एतन्दन्तसम्बन्धे पुनर्वचनक्रिया व्यर्थेत्याशङ्क्य पदसम्बन्धमाहुः—इत्यूचिवानिति सम्बन्ध इति। इत्यूचिवानित्यस्यासत्कृत इत्यनेन सम्बन्ध इति पूर्वोक्तोपसंहार एवायं न तु क्रियान्तरमित्यर्थः। मन्त्रस्य श्लोकद्वयात्मकत्वे 'स एष' इति वाक्यस्य क्रियाकाङ्क्षित्वात्तदादाय पक्षान्तरमाहुः—इत्यूचिवानिति वा भिन्नमिति। एवमप्रियेत्यादि एतदारभ्य सत्स्पृहणीयशील इत्यस्याभासो बोध्यः। अग्रे तथापीति कथनादत्र यद्यपीत्यध्याहार्यम्। चित्तस्येत्यादि। दुर्योधनादिचित्तस्य तथात्वात्स विदुरकृतं परित्यागमपि न मर्षयति, किन्तु विपक्षप्रवेशशङ्कया बध्नात्यतो हेतोर्नीत्यैव तथा वचनमित्यर्थः। एवं व्याख्यानस्यातिदुरूहत्वात्प्रयोजनान्तरमाहुः—अथवेत्यादि ॥ १४ ॥ ❀ ❀ क एनमित्यत्र। विशेषेण द्वयस्यैव दर्शनात्कथं त्रयमित्याकाङ्क्षायामाहुः—क्रियैवेत्यादि। परकृत्य आस्त इति क्रिया। सत्वादीनामिति। सदसदुदासीनादिभावानाम्। चित्त इति। धृतराष्ट्रचित्ते ॥ १५ ॥

## श्रीगिरिधरकृता बालप्रबोधिनी

इदानीं तत्कृतं साक्षाद्विदुरस्यैव पराभवं दर्शयति—यदोपहूत इति षड्भिः। यदा पूर्वजेन धृतराष्ट्रेण मन्त्राय उपहूतः

१. नाशयति. क. ङ.। २. एष इत्यस्यार्थनिर्देशः. प्र.। ३. इत्यत आह ख.। ४. परकृत्य आस्त इति क्रिया. प्र.। ५. सदसदुदासीनादिभावानाम्. प्र.। ६. प्रतीपः. ग.। ७. धृतराष्ट्रचित्ते. प्र.। ८. प्रतिज्ञानिरित्येव पाठः पुस्तकेषु।

आकारितः अतो भवनं प्रविष्टः। अनेन भगद्वाक्यानादरमारभ्य तद्गृहं स्वतो नागच्छदिति सूचितम्। तत्र च मन्त्रं पृष्टः[1] अथ प्रश्नानन्तरं तन्मन्त्रमाह। यदिदानीमपि मन्त्रिणो वैदुरिकं वदन्ति विदुरवाक्यमिति श्लाघां कुर्वन्तीत्यर्थः। तथा कथने हेतुमाह—मन्त्रदृशां वरीयानिति, मन्त्रविदां मध्येऽतिश्रेष्ठ इत्यर्थः। तन्मन्त्रस्य प्रसिद्धिं सूचयति—किलेति॥ १०॥ ❀ ❀ किं तन्मन्त्रमित्यपेक्षायां तद्दर्शयति—अजातशत्रोरित्यादिना। तत्रोपायचतुष्टयमध्ये अत्र दानमेव युक्तमित्याह—अजातशत्रोर्युधिष्ठिरस्य दायं भागं प्रतियच्छ। न च शत्रोर्भागदाने तस्योत्कर्षेण स्वपराभवः स्यादिति शङ्कनीयम्, तद्दृष्टौ शत्रुत्वाभावात्, इत्यजातशत्रुपदेन सूचितम्। न च तस्याजातशत्रुत्वं केवलं नाममात्रं किन्तु कार्यतोऽपि तथात्वमेवेत्याशयेनाह—तितिक्षत इति, अन्यैर्दुर्विषहं सोढुमशक्यमपि तवागः अपराधं तितिक्षतः सहमानस्येत्यर्थः। नन्वजातशत्रुत्वादेव तद्भागादानं सुकरमित्याशङ्क्याह—सहानुज इति। अनुजैरर्जुनादिभिः सह यत्र[2] युधिष्ठिरपक्षे रुषा श्वसन् वृकोदरो भीम एवाहिर्वर्तते। ननु ते चत्वारः किं करिष्यन्ति यतो मम तादृशाः शतं पुत्राः सन्तीत्याशङ्क्याह—यस्त्वमलं बिभेषीति। यत् यस्माद्भीमादेकस्मादपि त्वमतिशयेन बिभेषि। स एक एव सर्वान् मारयिष्यतीति शतमप्यप्रयोजकमिति भावः। अनेन भेदो दण्डश्च निवारितः। दायत्वाच्च तददाने समोऽपि न सम्भवतीति सूचितम्॥ ११॥ ❀ ❀ न च तेषां सहायाभावः एकेनैव सहायभूतेन ते त्रैलोक्यमपि जयेयुः का तव वार्त्तेत्याशयेनाह—पार्थांस्त्विति। पार्थांस्तु मुकुन्दो मुक्तिदाता श्रीकृष्णः स्वकीयत्वेन गृहीतवान्। तथापि तेन किमित्यत आह—देव इति। देवा अपि पराजिता भवन्ति। तथात्वेऽपि किमित्यत आह—भगवानिति, समग्रज्ञानवीर्यादिसम्पन्न इत्यर्थः। तथापि दूरस्थेन तेन किं भवितव्यमित्याशङ्क्याह—स्वपुर्यामिति, द्वारकायामास्ते, नत्वन्यत्र गत इत्यर्थः। आस्तां स्वपुर्यां तथापि तेनैकेन किमित्याशङ्क्याह—सक्षितिदेवदेव इति, क्षितिदेवैर्विप्रैर्देवैश्च इन्द्रादिभिश्च सहित इत्यर्थः। अतो यतोऽसौ तत्रैव विप्रा देवाश्चेति भावः। किञ्च यदुदेवाः यदुषु श्रेष्ठा ये सात्यकिप्रद्युम्नानिरुद्धादयस्तेषामपि देवः प्रभुः। अतो यतोऽसौ तत्रैव यदुप्रवीरा इति भावः। किञ्च, नृदेवेषु मण्डलेश्वरेषु दिव्यन्ति प्रकाशन्ते इति नृदेवदेवा महाराजाः, विनिर्जिता अशेषा नृदेवदेवा येन सः। अतो यतोऽसौ तत्रैव सर्वे राजान इति भावः अतः पार्थानां दायमवश्यं देहीति भावः॥ १२॥ ❀ ❀ सत्यमेवं यद्यपि पाण्डवविरोधे न निर्वाहस्तत्रापि दुर्योधनस्तद्दायप्रदानं न मन्यते मया किं कर्तव्यमित्यत आह—स एष इति। स प्रसिद्धः एष दोषः शरीरनाशकत्रिदोषवत् कुलनाशक एव तव गृहान् प्रविष्ट आस्ते इत्यन्वयः। गृहानीति बहुवचनं तु मनोबुद्ध्यादिसंग्रहार्थम्। कोऽसावित्यपेक्षायामाह—यमपत्यबुद्ध्या पुष्णासि स दुर्योधन इत्यन्वयः। दोषत्वे हेतुमाह—पुरुषद्विडिति, यतः परमपुरुषस्य श्रीकृष्णस्य द्वेषीत्यर्थः। द्वेषश्च 'आज्ञोल्लङ्घी मम द्वेषी' इति वचनादाज्ञोल्लङ्घनरूपो ज्ञेयः। अपत्यबुद्ध्येत्यनेन न पतन्ति पितरो नरके यस्मात् तदपत्यमिति निरुक्तेरस्य चाधर्मितया नरकपातहेतुत्वात् ततो रक्षकत्वाभावान्नासावपत्यं, तव तु तथाबुद्धिर्भ्रम एवेति सूचितम्। अत एनं दुर्योधनमाशु शीघ्रमेव त्यज। तत्र तत्र हेत्वन्तरमप्याह—अशैवममङ्गलरूपमिति। तथापि पुत्रः कथं त्याज्य इत्याशङ्क्य 'त्यजेदेकं कुलस्यार्थे' इति न्यायेन तत्त्याग उचित एवेत्याह—कुलकौशलायेति। अन्यथा सर्वमपि कुलं विनङ्क्ष्यति त्वं च श्रीकृष्णाद्विमुखो गतश्रीर्भविष्यसीति शेषः॥ १३॥ ❀ ❀ इति विदुरोक्तं मन्त्रं प्रदर्श्य ततो यज्जातं तदाह—इतीति। यदा क्षत्ता विदुर इत्येवमूचिवान् उक्तवान् तत्र तदा स सुयोधनेन दुर्योधनेनासत्कृतः तिरस्कृत इत्यन्वयः। न च स तिरस्कारार्ह इत्याशयेन विशिनिष्टि—सदिति। सद्भिः स्पृहणीयं शीलं यस्य सः। तर्हि कुतस्तिरस्कृतवानित्यपेक्षायां स्वक्रौर्येणेत्याशयेन विशिनष्टि—प्रवृद्धेति, प्रवृद्धो यः कोपस्तेन स्फुरितश्चञ्चलः अधरो यस्य तेन। न कैवलं तस्यैव दोषः किन्तु तत्सङ्गिनोऽपि तथैव दुष्टा इति तदनुसारेणापि तिरस्कृतवानित्याशयेन विशिनष्टि—सकर्णेति, कर्णदुश्शासनशकुनिसहितेनेत्यर्थः॥ १४॥ ❀ ❀ तत्कृतं तिरस्कारमेव दर्शयति—क इति। अत्र मन्त्रप्रसङ्गे एनं विदुरं क उपजुहाव आहूतवानिति पित्र समाहूत इति जानन्नपि दुष्टस्वभावात्तमप्यर्थादाक्षिपति। आह्वानानर्हत्वं कथमित्यपेक्षायामनधिकारित्वादित्याह—दास्याः सुतमिति। एवं वैदिकव्यवहारानधिकारित्वेऽपि लौकिकव्यवहारप्रश्ने को दोष इत्यत आह—जिह्ममिति, कुटिलमित्यर्थः। किं वा कुटिलत्वमनेन कृतमित्यपेक्षायां तदाह—यद्बलिनेति। यस्य मम बलिना अन्नेनैव पुष्टः संवर्द्धितस्तस्मिन्नपि प्रतीपः प्रतिकूल आस्ते। कथं त्वयि प्रतिकूलतेत्यत आह—परकृत्य आस्ते इति। अस्मद्विश्वासं जनयन्नपकारावसरं प्रतीक्षमाणश्च शत्रूणां कार्यसाधकतया वर्तते इत्यर्थः। एवं तत्रत्यान् विश्राव्य आज्ञापयति—निर्वास्यतामिति। श्वसानः श्वसन् जीवनमात्रावशिष्टोऽयमाशु विलम्बे किञ्चिदनर्थमेव कुर्यादतः शीघ्रमेव पुरान्निर्वास्यतां, निष्कास्यतामित्यर्थः। श्वसान इत्यनेन यष्ट्यादिप्रहारोऽपि सूचितः। श्शान इति पाठे तु श्मशानवत् अमङ्गलरूपः शूद्र इत्यर्थः, "एतत् श्मशानं यच्छूद्रः" इति श्रुतेः॥ १५॥

## हिन्दी अनुवाद

फिर जब सलाहके लिये विदुरजीको बुलाया गया, तब मन्त्रियोंमें श्रेष्ठ विदुरजीने राज्यभवनमें जाकर बड़े भाई धृतराष्ट्रके पूछनेपर उन्हें वह सम्मति दी, जिसे नीति-शास्त्रके जाननेवाले पुरुष 'विदुरनीति' कहते हैं॥ १०॥ ❀ ❀

---

१. धृतराष्ट्रेण पृष्ट इत्यर्थो ज्ञेयम्। २. यत्रापराधे इति श्रीधरस्वामिनः।

उन्होंने कहा—'महाराज ! आप अजातशत्रु महात्मा युधिष्ठिरको उनका हिस्सा दे दीजिये । वे आपके न सहनेयोग्य अपराधको भी सह रहे हैं । भीमरूप काले नागसे तो आप भी बहुत डरते हैं; देखिये, वह अपने छोटे भाइयोंके सहित बदला लेनेके लिये बड़े क्रोधसे फुफकारें मार रहा है ॥ ११ ॥ ❀ ❀ आपको पता नहीं, भगवान् श्रीकृष्णने पाण्वोंको अपना लिया है। वे यदुवीरोंके आराध्यदेव इस समय अपनी राजधानी द्वारकापुरीमें विराजमान हैं । उन्होंने पृथ्वीके सभी बड़े-बड़े राजाओंको अपने अधीन कर लिया है, तथा ब्राह्मण और देवता भी उन्हींके पक्षमें हैं ॥ १२ ॥ ❀ ❀ जिसे आप पुत्र मानकर पाल रहे हैं तथा जिसकी हाँ-में-हाँ मिलाते जा रहे हैं, उस दुर्योधनके रूपमें तो मूर्तिमान् दोष ही आपके घरमें घुसा बैठा है । यह तो साक्षात् भगवान् श्रीकृष्णसे द्वेष करनेवाला है । इसीके कारण आप भगवान् श्रीकृष्णसे विमुख होकर श्रीहीन हो रहे हैं । अतएव यदि आप अपने कुलकी कुशल चाहते हैं तो इस दुष्टको तुरंत ही त्याग दीजिये' ॥ १३ ॥ ❀ ❀ विदुरजीका ऐसा सुन्दर स्वभाव था कि साधुजन भी उसे प्राप्त करनेकी इच्छा करते थे । किंतु उनकी यह बात सुनते ही कर्ण, दुःशासन और शकुनिके सहित दुर्योधनके होठ अत्यन्त क्रोधसे फड़कने लगे और उसने उनका तिरस्कार करते हुए कहा—'अरे ! इस कुटिल दासीपुत्रको यहाँ किसने बुलाया है ? यह जिनके टुकड़े खा-खाकर जीता है, उन्हींके प्रतिकूल होकर शत्रुका काम बनाना चाहता है । इसके प्राण तो मत लो, परंतु इसे हमारे नगरसे तुरंत बाहर निकाल दो' ॥ १४-१५ ॥

स इत्थमत्युल्बणकर्णबाणैर्भ्रातुः पुरो मर्मसु ताडितोऽपि ।
स्वयं धनुर्द्वारि निधाय मायां गतव्यथोऽयादुरु मानयानः ॥ १६ ॥
स निर्गतः कौरवपुण्यलब्धो गजाह्वयात्तीर्थपदः पदानि ।
अन्वाक्रमत्पुण्यचिकीर्षयोर्व्यां स्वधिष्ठितो यानि सहस्रमूर्तिः ॥ १७ ॥
पुरेषु पुण्योपवनाद्रिकुञ्जेष्वपङ्कतोयेषु सरित्सरःसु ।
अनन्तलिङ्गैः समलङ्कृतेषु चचार तीर्थायतनेष्वनन्यः ॥ १८ ॥
गां पर्यटन्मेध्यविविक्तवृत्तिः सदाऽऽप्लुतोऽधःशयनोऽवधूतः ।
अलक्षितः स्वैरवधूतवेषो व्रतानि चेरे हरितोषणानि ॥ १९ ॥
इत्थं व्रजन् भारतमेव वर्षं कालेन यावद्गतवान् प्रभासम् ।
तावच्छशास क्षितिमेकचक्रामेकातपत्रामजितेन पार्थः ॥ २० ॥
तत्राथ[1] शुश्राव सुहृद्विनष्टिं वनं यथा वेणुजवह्निसंश्रयम्[2] ।
संस्पर्धया दग्धमथानुशोचन् सरस्वतीं प्रत्यगियाय[3] तूष्णीम् ॥ २१ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका ।

अत्युल्बणैः कर्णयोर्बाणवत्प्रविशद्भिः परुषवाक्यैर्मर्मसु ताडितोऽपि गतव्यथः । तत्र हेतुः । मायामुरु बहु मानयन्नहो मायाया माहात्म्यमिति तामेव तत्र हेतुं मन्यमानस्तन्निःसारणात्पूर्वं स्वयमेवायान्निर्जगाम । किं कृत्वा एते नूनं मरिष्यंति किं धनुषेति तस्य द्वारि धनुर्निधाय । यद्वा । भीमादिभिः संगत्यास्माभिर्योत्स्यतीति माशंकीति धनुर्निधानम् ॥ १६ ॥ ❀ ❀ ततो निर्गतस्य तीर्थाटनप्रकारमाह । स इत्यष्टभिः । स गजाह्वयान्निर्गतः सन् तीर्थं पादौ यस्य तस्य हरेः पदानि क्षेत्राणि पुण्यचिकीर्षयान्वाक्रमत् प्रत्यपद्यत । कौरवाणां पुण्येन लब्ध इति तेषां भाग्यमेव तेन रूपेण गतमिति सूचितम् । उर्व्यां सहस्रमूर्तिर्ब्रह्मरुद्राद्यनेकमूर्तिः संस्तीर्थपात् यानि यान्यधिष्ठाय स्थितस्तानि तानि जगामेत्यर्थः ॥ १७ ॥ ❀ ❀ पुण्यानि यान्युपवनादीनि तेषु कुंजं लतादिगूढस्थानं अपंकानि तोयानि येषां तेषु सरित्सरस्सु च तीर्थेष्वायतनेषु क्षेत्रेषु च कीदृशेषु अनंतस्य लिंगैर्मूर्तिभिः सम्यगलंकृतेषु । अनन्य एकाकी ॥ १८ ॥ ❀ ❀ किंच गां पर्यटन् व्रतानि चेरे आचरत् । मेध्या पवित्रा विविक्ताऽसंकीर्णा वृत्तिर्जीविका यस्य । सदाप्लुतः प्रतितीर्थं स्नातः । अधःशयनं यस्य अवधूतोऽसंस्कृतदेहः अवधूतवेषो वल्कलादिधारी अत एव स्वैरलक्षितः ॥ १९ ॥ ❀ ❀ एकस्यैव चक्रं सैन्यं यस्याम् । एकमेव राजचिह्नं श्वेतातपत्रं यस्यां ताम् । अजितेन श्रीकृष्णेन सहायेन ॥ २० ॥ ❀ ❀ तत्र प्रभासे परस्परस्पर्धया निमित्तभूतया सुहृदां कौरवाणां विनष्टिं विनाशमश्रृणोत् । परस्परनाशे दृष्टांतः । वेणुजं वह्निं संश्रयते यद्वनं तद्यथा दग्धं भवति तथा प्रत्यगुद्गमाभिमुखम् ॥ २१ ॥

---

१. प्रा० पा०—तदाथ । २. प्रा० पा०—वह्निनाभयम् । ३. प्रा० पा०—प्रत्यगियात्ततश्च ।

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः।

स विदुरः। अत्युल्बणैरतीव कठोरैः। तत्र गतव्यथत्वे। तामेव तत्र परुषोक्तौ तत्कृतनिस्सारणात् तस्य दुर्योधनस्य ननु तस्य द्वारे धनुः कुतो न्यस्तं तत्पातोऽन्यत्र कुतो न कृत इति तन्निरीक्षणेन तच्छंकापनोदार्थमेव तत्र न्यस्तवानित्याह—यद्वेति। अनेन मा शंकीति भ्रातुः पुर इत्यनेनाधिक्षेपोत्कर्षः सूचितः॥ १६॥ ❀ ❀ ततो हस्तिनापुरतः। स विदुरः। तानि जगामेत्यर्थः। यद्वा। यानीति वीक्षया व्याख्येयं यानि यानि तत्तुल्ययोगक्षेमत्वात्तत्पदेऽपि तानि तानीति॥ १७॥ ❀ ❀ पुण्यानि पवित्राणि उपपदमत्र न स्वार्थपरं तेनोपवनानि वनानि वृंदावनादीनि। पुण्याद्रयो गोवर्द्धनादयः। पुण्यकुंजाश्च श्यामाकुंजादयो वृंदावनाद्यंतर्गताः कुंजाः अपंकानि अकर्दमानि सरितो नर्मदाद्याः सरांसि पंपासरोवरादीनि तीर्थेषु पुष्करादिषु क्षेत्रेषु कुरुक्षेत्रादिषु। अनंतस्य हरेः अनेन हरिभक्तीनामनंतभेदाः संतीत्युक्तम्॥ १८॥ ❀ ❀ अन्यदाह किंचेति। हरितोषणानीति व्रतानामुद्देश्य देवतावशीकरणसमर्थत्वेन व्रतशब्दनिर्वचनसूचितं वृञ् वरणे इति धातोर्व्रियतेऽनेनैतदित्यस्मिन्नर्थे व्रतमिदं रूपं सिध्यति बाहुलकात्। अत एव वल्कलादिधारित्वादेव "यो विलंघ्याश्रमान्वर्णानात्मन्येव स्थितः पुमान्। अतिवर्णाश्रमो योगी अवधूतः स कथ्यते" इति शिष्टगीतोक्तेः॥ १९॥ ❀ ❀ भारतमेवेति। कर्मभूमित्वादन्यत्र न गत इति सूचनार्यैवकारः॥ २०॥ ❀ ❀ अथ प्रभासगमनोत्तरम्। अथ सुहृद्भिनष्टयुत्तरम्। उद्गम आविर्भावस्तस्य संमुखं यस्मिंस्तद्यथा भवति तथा। यत्र सरस्वत्या आविर्भावो जातस्तत्र ययावित्यर्थः। तीर्थविश्वनाथौ तु प्रत्यक् सरस्वतीं पश्चिमवाहिनीं सरस्वतीमिति जगदतुः॥ २१॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनीव्याख्या।

अत्र मन्त्रसभायाम्। तस्मिन्नेवान्नदातरि परेषां शत्रूणां युधिष्ठिरादीनामतः शत्रुकार्यपरत्वात्सर्वस्य श्वसंस्त्वात्प्रकृतानुपयोगमाशङ्क्य व्यञ्जनया व्याचष्टे जीवनेति। श्मशान इति पाठान्तरम्॥ १६॥ ❀ ❀ तत्र गतव्यथत्वहेतुः मायाया मोहनशक्तेः तामेव मायामेव तत्र स्वतिरस्कारे तन्निःसारणाद् दुर्योधनादिकर्तृकनिःसारणादेते भक्ताऽपराधिनो दुर्योधनादयः। तस्य धृतराष्ट्रस्य पूर्वार्थे महानुभावस्यास्य परमरणसंकल्पानौचित्यमित्यरुचेर्यद्वेति॥ १७॥ ❀ ❀ ततो गृहात्। अधिपूर्वस्याधातोः सकर्मकत्वेन कर्मप्रत्ययशङ्कां वारयितुमधिष्ठाय स्थित इति कर्तृसाधनतया व्याख्यानादित्यर्थ इत्युक्तम्। पुण्यचिकीर्षया भक्तापराधिसङ्गप्रायश्चित्तेच्छया अतो भक्तद्रोहिसङ्गलक्षणदोषग्रस्तमात्मानं मन्यमानस्सहसा श्रीकृष्णदर्शनार्थमपि न जगामेति ज्ञेयम्॥ १८॥ ❀ ❀ पुरेषु प्रसिद्धेष्वयोध्यादिषु अनन्य एकलः सर्वत्र श्रीकृष्णैकस्फूर्त्तिमय इति वा॥ १९॥ ❀ ❀ असंकीर्णा परवृत्तिभिरसंमिश्रा अतएवावधूतवेशत्वादेव॥ २०॥

### श्रीमद्वीरराघवव्याख्या

तिरस्कारप्रकारमेवाह क इति। दास्याः सुतं जिह्मं कुटिलात्मानमेनमत्र मंत्रे क उपजुहावाहूतवान्? जिह्मत्वं स्फुटयति यद्बलिना यस्य मम बलिनाऽन्नेनैव पुष्टः संवर्द्धितस्तस्मिन्मयि प्रतीपः प्रतिकूलः परकृते परेषां शत्रूणां कृत्ये कार्ये प्रथमांतत्वे व्यधिकरणबहुव्रीहिः शत्रुकार्यपर आस्ते वर्त्तते अतः श्मशानः शूद्रः यद्वा एतच्छ्मशानं यच्छूद्र इति श्रुतेः पुरान्निर्वास्यतां निर्याप्यताम्॥ १६॥ ❀ ❀ स विदुरः अत्युल्बणैः कठिनैः भ्रातुः पुरः कर्णयोर्बाणवदायतैर्वाक्यैः तीक्ष्णैर्मर्मसु ताडितोऽपि प्रव्यथितोपि विगतव्यथः यं हि न व्यथयंत्येते पुरुषं पुरुषर्षभ इत्युक्तरीत्या गतव्यथः अत एव स्मयन्नीषद्धसन्स्वयमिति पाठे धनुर्विशेषणं धनुः शरासनं द्वारि निधाय तीर्थान्यटिष्यति मम किं धनुषेति बुद्ध्या निधाय मायां सर्वजनमोहिनीं भगवन्मायां उरुमानयानः अहो माया माहात्म्यमिति बहुमन्यमानः अयान्निर्गतः गृहादिति शेषः॥ १७॥ ❀ ❀ एवं गृहत्यागहेतून् त्यागं चाभिधाय तस्य तीर्थाटनप्रकारमाह स इत्यष्टभिः। कौरवपुण्यलब्धः स विदुरः गजाह्वयात्पद्भ्यां निर्गतः कौरवपुण्यलब्धः स इत्यनेन तेषां भाग्यं तेन रूपेण निर्गतमिति सूचितं तीर्थपदः तीर्थं गंगापादं यस्य तस्य हरेः पदानि स्थानानि पुण्यं कर्तुमिच्छयाऽन्वाक्रमदनुचचार कानि पदानि उर्व्यां भूम्यां यानि पदानि सहस्रमूर्तिः सहस्राणि बहूनि मूर्त्तयो रंगेशवेंकटेशहयशीर्षाद्यर्चारूपाणि यस्य तथाभूतो भगवान् अधिष्ठितः अधिष्ठाय स्थितः॥ १८॥ ❀ ❀ पुरेषु पुण्यवान्युपवनानि चाद्रयश्च कुंजानि च तेषु तेष्वपंकानि निर्मलानि तोयानि येषु तेषु सरित्सरःसु सरितश्च सरांसि च तेष्वनंतस्य भगवतो लिंगैर्मूर्तिभिः सम्यगलंकृतेषु तीर्थायतनेष्वनन्यः अव्यभिचरित भगवद्भक्तियोगनिष्ठः चचार पर्यटन्॥ १९॥ ❀ ❀ गां भूमिं पर्यटन्मेध्यैर्विविक्तैर्जात्याश्रयनिमित्ताद्दुष्टैरन्नादिभिर्वृत्तिराजीविका यस्य सः सदा आप्लुतः स्नातः अधः-शयनं यस्य सः अवधूतः अभ्यंगोद्वर्तनादिदेहसंस्कारहितः स्वैः स्वदेहसंबंधिभिरलक्षितः अदृष्टः अवधूतानां विषो वल्कलाजिनधारणादिरूपो यस्य सः हरितोषणानि हरिस्तोष्यते एभिरिति, हरितोषणानि व्रतानि चेरेऽचरत्॥ २०॥ ❀ ❀ इत्थमिति भारतवर्षमेव इत्थं व्रजन्पर्यटन्कालेन यावद्यावता कालेन प्रभासं प्रभासतीर्थं प्रति गतवान् विदुरस्तावंतं कालं पार्थो युधिष्ठिरः अजितेनार्जुनेन साकं श्रीकृष्णेन हेतुना वा एकातपत्रां एकमातपत्रं यस्यां तां एकचक्रां एकस्यैव चक्रं सैन्यं यस्यां तां क्षितिं शशासानुशिष्टवान्॥ २१॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

धिक्कारप्रकारमाह क एनमिति । दास्याः सुतमित्याक्रोशे षष्ठी । उपजुहावाहूतान् जिह्मं वक्रहृदयं यस्य पुंसो बलिनाऽपवर्जितान्नेन तस्मिन्पुंसि प्रतीपो विरोधी परेषां मम विरोधिनां पाण्डवानां कृत्ये कार्ये आस्ते यस्मात्तस्मादिति शेषः । निर्वासयतां निष्काशयतां श्वसानः श्वास मात्रावशेषी स्वकृतो दोषः स्वस्यैवेति सूचनाय शानच्प्रयोगः ॥ १६ ॥ ❀ ❀ संभावितस्य ताडनात्प्रागेव निर्गमनं श्रेय इति भावं श्लोकद्वयेन सूचयन्नाह स इति भ्रातुर्धृतराष्ट्रस्य स्मयन् मंदस्मितं कुर्वन् मायां पुत्र इत्यादिस्नेहलक्षणां हरेर्बंधकशक्तिमुरुमानयानो बहुमन्वानः सोऽयाययौ तीर्थमिति शेषः ॥ १७ ॥ ❀ ❀ पुण्यलब्ध इत्यनेन हस्तिनापुरमपि पुण्यक्षेत्रमिति सूचयति तीर्थपदो हरेः पदानि स्थानानि सहस्रमूर्तिरनंतमूर्तिः वदेतत्सहस्रं तत्सर्वमिति श्रुतिः ॥ १८ ॥ ❀ ❀ एतदेव विशिनष्टि वनेष्विति । तीर्थानां शुद्धजलानामायतनेषु स्थानेषु नित्यशुद्धस्य हरेः सन्निधानस्थानेषु वा पुण्यशब्दः प्रत्येकमभिसंबध्यते उपवनेषु पुरोपकंठवनेषु अद्रिषु श्रीपार्वतीषु कुंजेषु सिंहगिरिव्रजाद्यणुतरपर्वतेषु वनेषु वृंदावनेषु सेव्यत्वे हेतुमाह अपंकेति । सरित्सु गोदावर्यादिनदीषु सरःसु पुष्करादिषु अनंतस्य हरेर्लिंगैः प्रतिमाभिः सम्यगलंकृतेषु ॥ १९ ॥ ❀ ❀ चरणं विशिनष्टि गामिति । गां भूमिं मेध्यैः शुद्धैः विविक्तैः पृथग्भूतैर्वृक्षात्पतितैः पत्रादिभिर्वृत्तिराजीविका जीवनं यस्य स तथोक्तः यद्वा शुद्ध एकांतस्थले वृत्तिरवस्थानं यस्य स तथा अधःशयनेन स्थंडिले शयनेनावधूतो रजोरूषितदेहः स्वैः स्वकीयैरलक्षितोऽविज्ञातः अवधूता वायुनोद्धूताः केशा यस्य स तथा यद्वा पाठांतरे अवधूतवेषवद्वेषो यस्य स तथा कीदृशानि व्रतानि हरितोषणानि यानि यानि व्रतानि चेरे तानि तानि सर्वाण्यपि हरिप्रसादजनकानीत्यर्थः । अनेनोद्देश्यव्रतदेवतावशीकरणसमर्थानिति व्रतशब्दनिर्वचनं सूचितं वृञ् वरण इति धातोर्व्रियतेनेनैतदित्यस्मिन्नर्थे व्रतमिति रूपं सिध्यति ॥ २० ॥ ❀ ❀ कर्मभूमित्वाद्भारतवर्षमेवाटितवान् नान्यदित्यस्मिन्नर्थे एवशब्दः केनचित्कालेन यावद्यदा तावत्तदा पार्थोऽजितेन कृष्णेनोक्तविधिनैकचक्रामेकाज्ञां एकमेवातपत्रं श्वेतच्छत्रं यत्र सा तथा तां क्षिनिवासगत्योरिति धातोः सर्वत्र सन्निवासः सुगमनं चोराद्युपद्रवो नास्तीत्येतत्सूचनाय क्षितिमिति प्रयोजि इत्थमित्यनेन नियमभंगो नास्तीति सूच्यते ॥ २० ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

स्वमित्यत्र स्मयदिति चित्सुखः ॥ १६ ॥ ❀ ❀ अन्वाक्रमत् अनुक्रमेण प्राप । पुण्यचिकीर्षया तद्दुःसंगप्रायश्चित्तेच्छया । अतः सदोषम्मन्यः सहसा श्रीकृष्णमपि न जगामेति भावः । पुरेषु अयोध्यादिषु प्रसिद्धेषु न विद्यते पङ्कं पापं येभ्यस्तेषु पापहन्तृषु तोयेषु अनन्यः सर्व्वत्र श्रीकृष्णैकदृष्टिः ॥ १७ ॥ ❀ ❀ विविक्तत्वं परवृत्तिभिरमिश्रत्वम् ॥ १८ ॥ ❀ ❀ भारतमेव वर्षमिति तन्मध्यवर्त्ति कुमारिकाखण्डमेव ज्ञेयं विष्णुपुराणानुसारेणान्यत्रागम्यत्वात् ॥ १९ ॥ ❀ ❀ सुहृद्विनष्टिमिति । यादवानां विनष्टिमित्येव ज्ञेयम् । नातिविलम्बादेवोद्धवेन मिलनात् ॥ २१—२३

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

स इत्थमत्युल्बणकर्णबाणैः अत्युल्बणैः परुषवाक्यैः कर्णयोर्बाणैरिव प्रविश्य मर्म्मस्थानेषु ताडितस्तत्रापि भ्रातुः पुरः अरे किमेव ब्रूषे इत्यप्यनुक्तवतः । किञ्च । ताडितोऽपि गतव्यथः । धन्योऽसि अरे दुर्योधन धन्योसि त्वया मम सर्वा अपि व्यथा निर्व्वापिता यदितो निःसार्यमाणस्य दूरे कचन तीर्थादिषु निर्विण्णतया स्थास्यतस्त्वज्जनके ममतां त्यक्तवतो मम का व्यथेति मनस्यनुल्प्येति भावः । अयात् निर्जगाम स्वयमिति दुष्टैर्निःसारणात् स्वयमेव निःसरणं भद्रमिति भावः धनुर्द्वारि निधायेति संप्रति सर्व्वं स्वगृहादिकमपि त्यक्तवतो विविक्ते कचिदुपविश्य कृष्णं भजिष्यतो मम किमनेन दुश्चिह्नेन धनुषेति भावः । यद्वा भीमादिभिः संगत्याऽस्माभिः सह योत्स्यत इति पापोऽयं माशंकेतेति धनुर्निधानं मायां उरुमानयानः मानयन्निति माययैवान्धीकृतः पुरः सन्तमपि कृष्णं न पश्यति ॥ यद्वा अहो मायामाहात्म्यं भगवतः कृष्णस्य यदेवं प्रकारेण मां स्वभक्तमितो निष्काश्य भीमादिभिर्निःसंशयमेते घातयिष्यन्त इति ॥ १६ ॥ ❀ ❀ कुरोस्तद्वंश्यानाञ्च पुण्येन लब्धं इति तेषां भाग्यमेव तेन रूपेण गतमिति सूचितं तीर्थं पादौ यस्य तस्य हरेरिति तच्चरणबुद्ध्यैव तादृशानां तीर्थदिदृक्षेति सूचितं पदानि क्षेत्राणि, सहस्रमूर्त्तिर्मत्स्यकूर्माद्यनेकमूर्त्तिः सन् यानि यान्यधिष्ठाय स्थितः ॥ १७ ॥ ❀ ❀ अनन्य एकाकी ॥ १८ ॥ ❀ ❀ गां पृथ्वीं मेध्या पवित्रा विविक्ता वृत्त्यन्तरेणामिश्रिता वृत्तिर्जीविका यस्य सः सदा आप्लुतः प्रतितीर्थं स्नात इति स्नानेन पावित्र्यं लक्ष्यते स्नानानन्तरं कदाचिदस्पृश्यस्पर्शे पुनरपि स्नातीति सदा भगवन्मन्त्रादिस्मरणार्थं पवित्र एव तिष्ठतीत्यर्थः । अवधूतोऽसंस्कृतदेहः अवधूतवेशो वल्कलादिधारी अत एव स्वैरलक्षितः ॥ १९ ॥ ❀ ❀ एकस्यैव चक्रं सैन्यं यस्यां एकमेव राजचिह्नं श्वेतातपत्रं यस्यां तां अजितेन श्रीकृष्णेन सहायेन हेतुना पार्थो युधिष्ठिरः ॥ २० ॥ ❀ ❀ तत्र प्रभासे सुहृदां कौरवाणां विनाशं दुर्योधनादिषु सौहार्द्राभावादनतिविलम्ब एवोद्धवमिलनाच्च सुहृदां यादवानामिति केचिद्व्याचक्षते वनं यथादग्धं भवतीत्यन्वयः । प्रत्यक् प्रतीचीं पश्चिमवाहिनीमित्यर्थः ॥ २१ ॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

तदेवाह क इति । जिह्मं कुटिलम् । यस्य बलिना अन्नेन पुष्टस्तस्मिन्नेव प्रतीपः प्रतिकूलः परकृत्ये आस्ते शत्रुकार्ये वर्तते व्याप्रियते अतः श्वसानः श्वसन् जीवन्मात्रशेषः पुरात्निर्वास्यताम् ॥ १६ ॥ ❀ ❀ प्रसिद्धा बाणाः देहं भित्वाऽन्यत्र पतंति उद्धर्तुं च शक्याः वाग्बाणास्तु हृदि नित्यं शयनं कुर्वंति यथोक्तं महाभारते कर्णिनालीकनाराचा उद्धरंति शरीरतः । वाग्बाणस्तु न निर्हतुं शक्यो हृदिशयो हि स इति । वाक्सायका वदनान्निःपतंति यैराहतः शोचति रात्र्यहाणि परस्परम्मर्म सुते पतंति । तान्पंडितो नावसृजेत्कदाचिदिति च एवमत्युल्वणैः कर्णयोर्बाणवत्प्रविशद्भिः परुषवाक्यैः भ्रातुर्धृतराष्ट्रस्य पुरो मर्म सुताडितोऽपि गतव्यथः स्वयमयात् दुर्योधननियुक्तपुरुषकर्तृकनिःसारणप्रयत्नात्पूर्वं स्वयमेव निर्जगाम । कथंभूतः ? मायां विश्वमोहिनीं भगवन्मायां उरु बहु मानयानः भगवन्मायाऽत्र निमित्तमिति मन्यमानः । किं कृत्वा धनुर्द्वारि निधाय भयदेभ्योऽपि स्वतोऽभयं दातुं तद्द्वारि धनुरुपलक्षितं शस्त्रास्त्रपूगं त्यक्त्वेत्यर्थः । विदुरतुल्यानां दौर्लभ्यमुक्तम् । पुरुषा बहवो लोके साधवः साधूकारिषु । दुर्लभः पुरुषो लोके यः साधुरसाधुष्विति ॥१७॥ ❀ ❀ यद्गृहं श्रीकृष्णेनात्मसात्कृतं तदपि दुर्जनसंगदोषात्त्यक्तमित्युक्तम् । इदानीं तस्य तीर्थाटनप्रकारमाह स इत्यष्टभिः । स विदुरः कौरवपुण्यलब्धः कौरवाणां पुण्येन लब्धः तत्कुलभूषणपुण्यरूपः गजाह्वयान्निर्गतः तत्कुलदूषणस्तु तत्रैव स्थित आसीदिति भावः । उर्व्यां यानि सहस्रमूर्तिः अनंतमूर्तिः भगवान् स्वधिष्ठितः सुष्ठु अधिष्ठाय स्थितः तानि तीर्थपदः तीर्थं पादौ यस्य तस्य भगवतः पदानि वासस्थानानि पुण्यं कर्तुमिच्छया अन्वाक्रमत् अनुचचार ॥ १८ ॥ ❀ ❀ पुरेषु पुण्यानि उपवनानि च अद्रयश्च कुंजानि गूढस्थानानि च तेषु सपंकानि पापरुपपंकनिवारकाणि तोयानि येषु सरित्सरस्सु च अनंतस्य भगवतो लिंगैर्मूर्तिभिः सम्यगलंकृतेषु तीर्थेषु जनशोधकेष्वायतनेषु च ॥ १९ ॥ ❀ ❀ गां पृथिवीं पर्यटन् हरिस्तोष्यते एभिरिति हरितोषणानि व्रतानि चेरे अचरत् । मेध्या पवित्रा विविक्ता असंकीर्णा वृत्तिर्जीविका यस्य सः सदा आप्लुतः स्नातः अधःशयनं यस्य सः अवधूतः उद्वर्तनादिशरीरसंस्कारवर्जितः अवधूतानां तापसानां वल्कलाजिनधारणरूपो वेषो यस्य सः अतएव स्वैरलक्षितः ॥ २० ॥ ❀ ❀ यावत् यावता कालेन विदुरः प्रभासं गतवान् तावता कालेन पार्थो युधिष्ठिरः एकस्यैव चक्रमाज्ञा यस्यां ताम् एकमेव राजचिह्नं श्वेतातपत्रं यस्यां ताम् । अजितेन श्रीकृष्णेन सहायेन शशास ॥ २१ ॥

## श्रीमद्वल्लभाचार्यविरचिता सुबोधिनीव्याख्या

परित्यागमाह स इत्थमिति । अत्युल्बणत्वं शीघ्रकार्यकरणात् । दशैते बाणाः कर्णद्वारा हृदयं प्रविष्टाः । दशप्राणस्थानेषु मर्मसु ताडितोऽपि । भ्रातुः पुर इति मृत्युसन्निधाविव बाणानां प्राणहारकत्वं दृष्टान्तीकृतम् । ताडितोऽपि गतव्यथः । तत्र हेतुः—माया मधिकं मानयानः । धनुर्द्वारि निधायेति प्रतिपक्षगमनशङ्का निवर्तिता । निःसारणात्पूर्वमेव अयात् , स्वकर्तृकस्यैव परित्यागस्य हेतुत्वात् , अन्यथा 'सर्वान् बलकृतानर्थानकृतान् मनुरब्रवीत्' इति विरोधः स्यात् ॥ १६ ॥ ❀ ❀ एवमपमानतो निर्विण्णस्य तीर्थादिजनितसुकृतपरिपाकेन पृथिवीजलयोः संस्कृतत्वादधिकाधिकारिदेहे द्वयसम्पत्तिं निरूप्य तेजोनिरूपणार्थं सत्सङ्गो जात इत्याह—स निर्गत इत्यष्टभिः । चतुर्भिर्भूमिसंस्कारस्तथाऽन्यैश्च जलस्य च । उत्तरोत्तरशेषत्वात्तच्छेषोऽप्युच्यते स्फुटः ॥ १ ॥ पुण्यदेशार्थगमनं पुण्यदेशे तथैव च । तदङ्गानि फलं चेति चतुर्धा भूमिसत्क्रिया ॥ २ ॥ जले सामान्यसम्बन्धो विशेषश्चापि तद्गतः । साधनं च फलं चेति जलोक्तिश्च चतुर्विधा ॥ ३ ॥ मन्त्रगृहान्निर्गतो न स्वगृहं गतः, किन्तु पुरादपि निर्गत इत्याह—स निर्गत इति । कौरवपुण्यलब्ध इति पूर्वजोपार्जितसुकृतेन प्राप्तो निर्गतश्चेद्वंशस्थापकसुकृतमेव तद्द्वारा निर्गतमिति सूचितम् । पुण्यलब्धत्वं भगवत्स्थानगमनेऽपि हेतुः । सर्वतीर्थानि पादे यस्येति । तस्य स्थानेष्विति तीर्थेष्वपि विशेषः, वैष्णवस्थानेष्वेव गत इत्यर्थः । अन्वाक्रमत् मध्ये स्थानानतिक्रमेणाऽऽक्रान्तवान् । राजनिवेशनवन्न स्थानमात्रम् , किन्तु नानामूर्त्या अभिमानेनाऽनुभावं प्रदर्शयन् स्वयमधिष्ठाय येषु स्थितः । तानि तीर्थानीति पूर्वेण सम्बन्धः । पुण्यचिकीर्षयेति तत्त्वाज्ञानादुक्तम् , परमेश्वरप्राप्तिसाधनत्वाद्वा । अथवा । उर्व्यां पुण्यचिकीर्षया, पुण्येन पृथिवीं संस्कर्तुमिति । दैत्याधिष्ठिते स संस्कारो न भविष्यतीति, उर्व्यां यानि सहस्रमूर्तिर्भगवानधिष्ठाय स्थित इत्युक्तम् । अनेन संस्कृते देवाधिष्ठानात्पञ्चाग्निविद्यावद्भगवन्मूर्त्तिष्वेव तस्य संस्कारः प्रदर्शितः ॥ १७ ॥ ❀ ❀ विशेषमाह—पुरेष्विति मथुरादिनगरेषु, परमेश्वरक्रीडास्थानत्वात् । गोकुलनिकटवृन्दावनानि उपवनानि । अद्रिर्गोवर्द्धनादिः । कुञ्जानि लतागृहाः । सर्वाण्येतानि भगवत्सम्बन्धात्पुण्यजनकान्यपि भक्तिजनकानि । अपङ्कतोयेष्विति कृष्णजलक्रीडादियोग्येषु । सरितां सरस्सु कालियादिह्रदेषु । तेषु पर्यटने निमित्तम् , अनन्तमूर्तेः रासादिक्रिडाचिह्नैः सम्यगलङ्कृतेषु । जलस्थलप्रधानेषु एकाकी चरति स्मेत्यर्थः । अनन्यो भक्तो वा । अनेन पञ्चगुणा पृथ्वी संस्कृतेति ज्ञापितम् । तत्र पृथिवी द्विविधा मृत्पाषाणभेदेन, पुरेष्वद्रिष्विति । उपवनेन गन्धः, कुञ्जेषु स्पर्शः सरस्सु रसः, अनन्तलिङ्गसमलङ्कृतत्वेन रूपम् ; कुञ्जेषु वा शब्दः, अपङ्कतोयेष्विति रसः, सरस्सु इति स्पर्शः । अनन्यत्वेनैव मौनं सिद्धम् , तेन वा शब्दः संस्कृतः ॥ १८ ॥ ❀ ❀ साधनान्याह—गां पर्यटन्निति । एते सप्तत्वगादिधातु-

---

१. गमनमित्यनुषङ्गः प्रकाशः । २. संस्काराङ्गानि मेध्यविविक्तवृत्तित्वादीनि प्र. । ३. सरस्वतीसम्बन्धः प्र० । ४. सरस्वतीगतः, प्र० । ५. कृत्रिमतीर्थसेवनम् प्र० ६. जलसंस्कारोक्तिः प्र० । ७. क्षेत्रादिरूपाम् प्र० । ८. भूतल इत्यर्थात् प्र० ।

संस्काराः। व्रतान्यन्तःकरणसंस्कारकाणि। एकाकिपरिभ्रमणं भगवच्चरित्रस्याऽतिगोप्यत्वात्। एवं दर्शनेन किञ्चिद्भक्त्युत्पत्तेः कृष्णाप्राप्त्यभावाद्विरहेण तत्प्राप्तय एव व्रतानि। कृतवान्। अत्रैवं क्रमः। अन्वेषणार्थं प्रथमं पर्यटनम्, ततोऽन्तर्बहिर्नियमाः, ततोऽपि व्रतानि। तत्र मेध्ये एकान्ते ध्यानाद्यर्थमुपवेशनादिरूपा स्थितिर्यस्येति। पवित्रैकरात्रान्तरिताऽऽहारादिजीविका यस्येति वा। त्रिकालस्नानभूशयनाभ्यङ्गवर्जनादयस्त्रयो गुणा दोषत्रयनिवारकाः। नन्वेवंकरणे वन्धुभिः कथं न बद्धः? तत्राऽऽह—अलक्षितः स्वैरिति। तत्र हेतुः—अवधुतवेषः कृत्रिमवेषधारी। व्रतानि चत्वारि; एकादश्युपवासः, सर्वभूतदया, यथालाभसन्तोषः, सर्वेन्द्रियोपशमश्चेति। एतानि भगवत्तोषहेतुभूतानि॥ १९॥ ❀ ❀ फलमाह—इत्थमिति। शुद्धो हि देवेदेशे तिष्ठतीति पूर्वकामनाऽपि संपूर्णा। ज्ञापकं चैतत्फलस्य। यथा असदधिष्ठानं भूमौ गतम्, तथा शरीरेऽपीति। पुण्याधिक्याद्भारत एव पर्यटनं बहुनाऽपि कालेन। यावत्प्रभासपर्यन्तं गतवांस्तावदन्यथा सर्वमासीदित्याह—तावदिति। एकस्य चक्रं सैन्यं यस्याम्। सैन्यं वा, राजचिह्नं वा अन्यस्य नास्तीत्यर्थः। भारतमेव वर्षं यावत्प्रभासं तावच्छब्देनोच्यते। तावदित्यर्थविशेषे वा। अस्य तीर्थपर्यटनमेव भगवद्भक्तानां भगवता राज्योपलम्भने हेतुः। अजितेनेति सामर्थ्यम्। पार्थ इति हेतुः॥ २०॥ ❀ ❀ एतत्तु पूर्वं जातमप्यसम्भावनया जिज्ञासाभावान्न ज्ञातवान् प्रभासे तु, अधिकारिणो देहपरित्यागार्थं तत् स्थानमिति, तत्र गतो बहिश्चित्त इव जातः। ततः शुश्रावेत्याह—तत्राथेति। अथेति भिन्नक्रमे। सुहृदां विनष्टिम्। श्रुतवान्। तस्य शोकहेतुत्वाय विशेषणम्। सुहृद्विनष्टिमेव निरूपयति—संस्पर्द्धया दग्धमिति। अनुवादे धर्मप्राधान्यम्, निरूपणे धर्मिण इति वैपरीत्यमवस्थाभेदेन। औदासीन्यशोकनिरूपणार्थं उपपादन एव विशेषणम्। वनं यथा वेणुजवह्निसंश्रयमिति। वेणुजो वह्निः सम्यगाश्रयो यस्य, सम्यक् श्रयते यमिति वा अर्थः। संस्पर्द्धया दग्धमित्यन्यायनाशः। तत्र प्रभासे। संस्पर्द्धिनां भवतु नाशः, तत्संवन्धात्सर्वेऽपि सुहृदो नष्टा इति शोकः। नाशे दृष्टान्तः। वेणुभ्यां जातो वन्हिर्न तावन्मात्रं नाशयति, किन्तु वनमेव सर्वम्। तद्वत् कौरवपाण्डवसंस्पर्द्धयेति नाशे हेतुः। अनेनाऽनुपयोगनाशः सूचितः। अत एवाऽनुशोकः। सरस्वती धर्महेतुर्जलसंस्काररूपिणी। भक्तिहेतुस्तु यमुना सत्सङ्गात्तैजसी स्मृता। ज्ञानहेतुस्तु गङ्गा स्यात् बुद्धिसंस्कारकत्वतः॥ १॥ प्रत्यक् स्रोतोऽभिमुखम्। तूष्णीं शोचन्नित्यप्रकटत्वाय। द्वारकागमनाभावायैवमुक्तम्॥ २१॥

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

स इत्थमित्यत्र। वाक्यस्यैकत्वाद्बाणैरिति बहुत्वानुपपत्तिमाशङ्क्य तत्समाधानायाहुः—दशेति। सुयोधनतदनुगकृतौ पूर्वश्लोकोक्तावसत्कारावेतच्छ्लोकोक्ता आह्वानाक्षेपादयोष्टा इत्येवं दशकर्णवाणपद उत्तरपदलोपिनं बोधयितुमाहुः—कर्णद्वारेत्यादि॥१६॥ ❀ ❀ स निर्गत इत्यत्र कारिकासु। भूसँस्कारनिरूपणे सरित्सरःकथनस्य जलसंस्कारनिरूपणे तेजःसंस्कारकसत्सङ्गकथनस्य किं प्रयोजनमित्यत आहुः—उत्तरोत्तरेत्यादि। पृथिवीजलतेजस्सु पूर्वपूर्वस्योत्तरोत्तरशेषत्वात्तच्छेषः। तस्य संस्कारकस्य जलस्य तेजसश्चांशः शेषित्वाय स्फुट उच्यते। तथा चैतज्ज्ञापनं प्रयोजनमित्यर्थः। यद्यपि संस्कारकस्य संस्कार्यार्थत्वाद्विपरीतः शेषशेषीभावः, तथापि सँस्कार्यस्वरूपविचारे पृथिव्यपेक्षया जलस्य तदपेक्षया तेजसश्चान्तरतायाः क्रममुक्तिकथने सिद्धत्वात्पूर्वपूर्वस्यैवोत्तरोत्तरशेषत्वमतो न शङ्कालेशः। पुण्यदेश इत्यत्र गमनमित्यनुषङ्गः। तदङ्गानीति। सँस्काराङ्गानि मेध्यविविक्तवृत्तित्वादीनि। फलमिति। स्वशरीरसंस्कारार्थप्रयत्नस्यानुषङ्गिकं भूमेर्दैवसम्वन्धित्वरूपं फलम्। जले सामान्यसम्वन्ध इति सरस्वतीसम्वन्धः। तद्गत इति। सरस्वतीगतः। साधनमिति। कृत्रिमतीर्थसेवनम्। फलमिति। भगवदीयसङ्गः। जलोक्तिरिति। जलसंस्कारोक्तिः। तत्वज्ञानादिति। विदुरस्य स्वस्वरूपस्य चाज्ञानात्। ननु सनत्सुजातादिसङ्गस्य जातत्वात्तत्त्वाज्ञानं न युक्तमित्यतः पक्षान्तरमाहुः—परमेश्वरेत्यादि। ननु स्वगृहे भगवत आगमनेन साऽपि सिद्धैवेत्यतः पक्षान्तरमाहुः-अथवेत्यादि। पृथिवीमिति। क्षेत्रादिरूपाम्। दैत्याधिष्ठित इति भूतल इत्यर्थात्। ननु दैत्याधिष्ठानं न शिवालयादिरूप इति नेदं विशेषणतात्पर्यमित्यत आहुः—अनेनेत्यादि। तथा च यथा प्रोक्षणादिक्रियया व्रीह्यादियज्ञनिवर्त्तनरूपोऽतिशय उदेति। तथा क्षेत्रेषु तद्गमनादिना भगवन्मूर्त्तिष्वनुभावप्रदर्शनादिरूपो योऽतिशयः, सोऽनेन विशेषेण प्रदर्शित इत्यर्थः। एवं चाऽनुभावदर्शनादिरूपो विदुरगोलकसंस्कारोऽत्र मुख्यः, अन्येष्वप्यनुभावप्रदर्शकत्वरूपो भगवन्मूर्तिक्षेत्रादिष्वानुषङ्गिक इति द्विविधोऽप्यत्र विवक्षित इति ज्ञापितम्। 'तीर्थीकुर्वन्ति तीर्थानि' इति वाक्यस्वारस्यात्। तेन स्वाध्यायनियमाधीतमन्त्राणां यथा पुरश्चरणादिभिः शीघ्रफलदत्वम्, तथा विदुरक्रियया भगवन्मूर्त्यादिषु विशेषानुभावप्रदर्शकत्वमिति सिद्ध्यति॥ १७॥ ❀ ❀ पुरेष्वित्यत्र। भक्तिजनकानीति। एतेन वैदुरिकशरीरेऽतिशयो भक्त्याधिक्यानुकूलरूपो बोधितः। अनेनेत्यादि। भूतान्तरगुणानामग्रे वाच्यत्वादत्र सैव तथाविधा संस्कृतेत्यर्थः। घ्राणस्पर्शनरसनदर्शनक्रियाभिर्विषयस्य जनकस्य च संस्कारो युगपदेव सम्भवति। ननु शब्दस्य ग्रहणजननगोलकयोर्भेदादित्यत आहुः— अनन्यत्वेनेत्यादि॥ १८॥ ❀ ❀ तत्राऽथेत्यत्र। तस्येति। श्रवणस्य[1]। विशेषणमिति[3]। सुहृत्पदम्[2]। नन्वेवं सति तृतीयपादोक्तस्य विशेषणान्तरस्य किं प्रयोजनमत आहुः अनुवाद इत्यादि। बहुकालगमनोत्तरमपि यत्तत्रत्यैरनूद्यते तत्सर्वनाशकत्वरूपधर्मप्रा-

---

१. श्रवणस्य प्रकाशः। २ सुहृत्पदम् प्र०। ३. विशेषणार्थम् ख. ग. घ. च. छ.।

धान्येनैव, न तु कौरवनाशरूपधर्मिप्राधान्येनेति वैपरीत्यं धर्मिणः पूर्वं कथनं विनाशस्यावस्थाभेदेनौदासीन्यशोकयोर्निरूपणार्थमित्यर्थः ॥ २१ ॥

### श्रीगिरिधरकृता बालप्रबोधिनी

भ्रातुर्धृतराष्ट्रस्य पुरोऽग्रे स विदुर इत्थमत्युल्बणैर्दुस्सहैः कर्णयोर्बाणवत्प्रविशद्भिः तीक्ष्णैर्वाक्यैर्मर्मसु हृदयादिप्राणस्थानेषु ताडितोऽपि गतव्यथस्तन्निस्सारणात् पूर्वमेव स्वयं तीर्थान्यटिष्यतो मम किं धनुषेति बुद्ध्या धनुर्द्वारि निधाय तन्मन्त्रगृहादयान्निर्गत इत्यन्वयः। विगतव्यथत्वे हेतुमाह—मायामिति। अहो भगवन्मायामाहात्म्यं येन सम्मोहिता एते पुरस्स्थितं भगवन्तं तथात्वेन न पश्यन्ति प्रत्युत तदपमानं कुर्वन्त्यहं चैतैर्निस्सारितः सर्वबन्धाद्विनिर्मुक्तः सुखेन तमनुचिन्तयन् पर्यटिष्यामीति भगवन्मायां बहु मन्यमान इत्यर्थः॥ १६॥ ❀ ❀ एवं गृहत्यागहेतूंस्तत्त्यागं चाभिधाय तस्य तीर्थाटनप्रकारमाह—स इत्यष्टभिः विदुरो गजाह्वयसंज्ञकात् पट्टनान्निर्गतः सन् पुण्यचिकीर्षया भगवत्प्राप्तिप्रतिबन्धकदुरितनिवर्त्तकपुण्यसम्पादनेच्छया सहस्रमूर्तिर्ब्रह्मरुद्राद्यनन्तमूर्तिः सन् भगवान् उर्व्यां भूमौ यानि स्वधिष्ठितः सम्यगधिष्ठाय स्थितः तानि तीर्थानि पादे यस्य तस्य भगवतः पदानि स्थानानि अन्वाक्रमत् अनुचचारेत्यन्वयः। विदुरनिर्गममिषेण कौरववंश्यानां समृद्धिहेतु पुण्यमेव निर्गतमित्याशयेनाह—कौरपुण्यलब्ध इति॥ १७॥ ❀ ❀ पुरेषु पुण्यानि पुण्यजनकानि उपवनानि वृन्दावनादीनि अद्रयश्च गोवर्द्धनादयः कुञ्जानि लतापिहितस्थानानि च तेषु अपङ्कानि निर्मलानि तोयानि येषु सरित्सु यमुनागङ्गादिषु सरस्सु पुष्करादिषु च अन्येष्वपि अनन्तस्य भगवतो लिङ्गैर्मूर्तिभिः सम्यगलङ्कृतेषु स्थानेषु शोभमानेषु च अनन्यः एकाकी अव्यभिचारिभगवद्भक्तियोगनिष्ठो वा चचारेत्यन्वयः॥ १८॥ ❀ ❀ गां पर्यटन् मेध्यविविक्तवृत्तिः मध्ये पवित्रे विविक्ते एकान्तदेशे वृत्तिर्भगवद्ध्यानार्थं स्थितिर्यस्य सः, मेध्या पवित्रा विविक्ता अन्यवृत्त्यसङ्कीर्णा वृत्तिर्जीविका यस्य स इति वा, सदा त्रिकालमाप्लुतः स्नातः, अधः भूमौ शयनं यस्य सः, अवधूतः अभ्यङ्गोद्वर्तनादिदेहसंस्काररहितः, स्वैः स्वकीयैर्ज्ञात्यादिभिरलक्षितः अज्ञातः—तत्र हेतुं सूचयति—अवधूतानां वेषो वल्कलाजिनादिधारणरूपो यस्य सः, हरितोषणानि 'दयया सर्वभूतेषु सन्तुष्ट्या येन केनचित्॥ सर्वेन्द्रियोपशान्त्या च तुष्यत्याशु जनार्दनः' इति नारदोक्तानि व्रतानि चेरे आचरत्॥ १९॥ ❀ ❀ इत्थं एवं पूर्वोक्तनियमपूर्वकं भारतमेव वर्षं व्रजन् पर्यटन् यावत् यावता कालेन प्रभासाख्यं तीर्थं विदुरो गतवान् तावत् तावता कालेन एकस्यैव चक्रं सैन्यमाज्ञा वा यस्यां तां तथैकमेव असाधारणं राजचिह्नमातपत्रं यस्यां तथाभूतां सतीं क्षितिमजितेन सर्वत्र पराजयरहितेन सहायभूतेन श्रीकृष्णेन पार्थो युधिष्ठिरः शशासेत्यन्वयः। तावता तस्य विजयपूर्वकं राज्यं सिद्धमित्यर्थः॥ २०॥ ❀ ❀ तत्र प्रभासे अथागमनानन्तरं संस्पर्द्धया निमित्तभूतया सुहृदां कौरवादीनां विनष्टिं विनाशं शुश्राव अशृणोत्। अथ तच्छ्रवणानन्तरमनुशोचन् तूष्णीमेव 'प्रत्यक् पश्चिमाभिमुखं सरस्वतीं नदीं प्रति इयाय गतवान्॥ २१॥

### हिन्दी अनुवाद

भाईके सामने ही कानोंमें बाणके समान लगनेवाले इन अत्यन्त कठोर वचनोंसे मर्माहत होकर भी विदुरजीने कुछ बुरा न माना और भगवान्‌की मायाको प्रबल समझकर अपना धनुष राजद्वारपर रख वे हस्तिनापुरसे चल दिये॥ १६॥ ❀ ❀ कौरवोंको विदुर-जैसे महात्मा बड़े पुण्यसे प्राप्त हुए थे। वे हस्तिनापुरसे चलकर पुण्य करनेकी इच्छासे भूमण्डलमें तीर्थपाद भगवान्‌के क्षेत्रोंमें विचरने लगे, जहाँ श्रीहरि ब्रह्मा, रुद्र, अनन्त आदि अनेकों मूर्तियोंके रूपमें विराजमान हैं॥ १७॥ ❀ ❀ जहाँ-जहाँ भगवान्‌की प्रतिमाओंसे सुशोभित तीर्थस्थान, नगर, पवित्र वन, पर्वत, निकुञ्ज और निर्मल जलसे भरे हुए नदीसरोवर आदि थे, उन सभी स्थानोंमें वे अकेले ही विचरते रहे॥ १८॥ ❀ ❀ वे अवधूत-वेषमें स्वच्छन्दतापूर्वक पृथ्वीपर विचरते थे, जिससे आत्मीयजन उन्हें पहचान न सकें। वे शरीरको सजाते न थे, पवित्र और साधारण भोजन करते, शुद्धवृत्तिसे जीवन-निर्वाह करते, प्रत्येक तीर्थमें स्नान करते, जमीनपर सोते और भगवान्‌को प्रसन्न करनेवाले व्रतोंका पालन करते रहते थे॥ १९॥ ❀ ❀ इस प्रकार भारतवर्षमें ही विचरते-विचरते जबतक वे प्रभासक्षेत्रमें पहुँचे, तबतक भगवान् श्रीकृष्णकी सहायतासे महाराज युधिष्ठिर पृथ्वीका एकछत्र अखण्ड राज्य करने लगे थे॥२०॥ ❀ ❀ वहाँ उन्होंने अपने कौरव बन्धुओंके विनाशका समाचार सुना, जो आपसकी कलहके कारण परस्पर लड़-भिड़कर उसी प्रकार नष्ट हो गये थे, जैसे अपनी ही रगड़से उत्पन्न हुई आगसे बाँसोंका सारा जंगल जलकर खाक हो जाता है। यह सुनकर वे शोक करते हुए चुपचाप सरस्वतीके तीरपर आये॥ २१॥

---

१. क्रियाविशेषणमेतत्।

तस्यां त्रितस्योशनसो मनोश्च पृथोरथाग्नेरसितस्य वायोः ।
तीर्थं सुदासस्य गवां गुहस्य यच्छ्राद्धदेवस्य स आसिषेवे ॥ २२ ॥
अन्यानि चेह द्विजदेवदेवैः कृतानि नानायतनानि विष्णोः ।
प्रत्यङ्गमुख्याङ्कितमन्दिराणि यद्दर्शनात्कृष्णमनुस्मरन्ति ॥ २३ ॥
ततस्त्वतिव्रज्य सुराष्ट्रमृद्धं सौवीरमत्स्यान् कुरुजाङ्गलांश्च ।
कालेन तावद्यमुनामुपेत्य तत्रोद्धवं भागवतं ददर्श ॥ २४ ॥
स वासुदेवानुचरं प्रशान्तं बृहस्पतेः प्राक्तनयं प्रतीतम् ।
आलिङ्ग्य गाढं प्रणयेन भद्रं स्वानामपृच्छद्भगवत्प्रजानाम् ॥ २५ ॥
कच्चित्पुराणौ पुरुषौ स्वनाभ्यपाद्मानुवृत्त्येह किलावतीर्णौ ।
आसात उर्व्याः कुशलं विधाय कृतक्षणौ कुशलं शूरगेहे ॥ २६ ॥
कच्चित्कुरूणां परमः सुहृन्नो भामः स आस्ते सुखमङ्ग शौरिः ।
यो वै स्वसॄणां पितृवद्ददाति वरान् वदान्यो वरतर्पणेन ॥ २७ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका ।

त्रितादीनामेकादश तीर्थानि तत्तन्नाम्ना प्रसिद्धान्यासेवितवान् ॥ २२ ॥ ❀ ❀ द्विजदेवैर्ऋषिभिर्देवैश्च कृतानि अंगमंगं प्रति वर्तत इति प्रत्यंगान्यायुधानि तेषु मुख्यं चक्रं तेनांकितानि मूर्धनि हेमकुंभेषु चिह्नितानि मंदिराणि येषु तानि नानाविधानि विष्णोरायतनानि क्षेत्राणि तीर्थानि चासिषेवे । येषां चक्रांकितमंदिरवतां दर्शनाच्छ्रीकृष्णस्मरणं भवति ॥ २३ ॥ ❀ ❀ अतिव्रज्यातिक्रम्य यावदुद्धवः प्राप्तस्तावत्स्वयमपि यमुनामुपेत्य ॥ २४ ॥ ❀ ❀ स विदुरः प्राक्तनयं पूर्वशिष्यं नीतिशास्त्रे । पाठांतरे प्राप्तो नयो नीतिशास्त्रं येन तम् । प्रतीतं प्रख्यातं स्वानां ज्ञातीनां भद्रमपृच्छत् । प्रश्ने हेतुः । भगवतः प्रजानां पोष्याणाम् ॥ २५ ॥ ❀ ❀ प्रथमं तावद्रामकृष्णयोः कुशलं पृच्छति । कच्चिदिति प्रश्ने । स्वनाभौ भवः स्वनाभ्यः पाद्मो ब्रह्मा तस्यानुवृत्त्या प्रार्थनयेहावतीर्णौ कुशलमासाते वर्तेते । कृतक्षणौ दत्तावसरौ सर्वेषां कृतोत्सवाविति वा । तयोर्नित्यकुशलत्वेऽप्युक्तविशेषणविशिष्टौ शूरसेनस्य गृहे कच्चिदासाते इति प्रश्नः ॥ २६ ॥ ❀ ❀ यदूनां कुशलं पृच्छति कच्चिदिति नवभिः । भामः पूज्यः शौरिर्वसुदेवः । यद्वा भामो भगिनीभर्ता कुंती वसुदेवस्य भगिनी अतो देवकी पांडोर्भगिनीति लोकव्यवहारः वरानर्थान् वदान्योऽत्युदारः वराणां तत्पतीनां तर्पणेन संतर्पणेन सह ॥ २७ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः ।

तस्यां सरस्वत्यां त्रितस्यर्षेः सुदासस्य राज्ञः । स विदुरः ॥ २२ ॥ ❀ ❀ इह सरस्वतीतटे मूर्द्धन्यहेमकुंभेषु उपरिष्ठस्वर्णकलशेषु आयतनानां दर्शनात् ॥ २३ ॥ ❀ ❀ ततः सरस्वतीतटात् प्रभासक्षेत्रमगात् । सुराष्ट्रो देशः ऋद्धदेशातिक्रमे तीर्थस्नेहाधिक्यहेतुः । सौवीरो देशविशेषः । यद्वा । सुवीराणां सत्पुरुषाणां समूहः सौवीरं तन्मुख्यं येषु तान्कुरुजांगलान् हरिभक्तिप्रधानपुरुषवत इत्यर्थः । तत्र यमुनातटे ॥ २४ ॥ ❀ ❀ तनोति वंशमिति तनयस्तं वंशो हि द्विधा विद्यया जन्मना च विद्यया शिष्यः जन्मना पुत्रः 'शिष्ये पुत्रे तथा वैद्ये तनयः परिकीर्त्तितः' इति निरुक्तिः । पाठांतरे प्राप्तनयमिति पाठे पोष्याणां पाल्यानाम् ॥ २५ ॥ ❀ ❀ तावद्वाक्यालंकारे पोष्यकुशलं पोषककुशलाधीनमतः प्रथमं तदेव प्रष्टव्यमित्याशयेन स्वामिचरणैरुक्तं प्रथमं तावदिति । दत्तावसरौ भूभारापाकरणेन दत्तसुखसमयौ लोकानां स्वस्वकार्याकुलत्वाद्दत्तावसरत्वासंभवमिव मन्वान आह । कृतोत्सवौ वेति । तच्छत्रूणामपि वैकुंठाद्यवाप्तेः सर्वेषामित्युक्तं स्वामिना 'क्षणः पर्वोत्सवव्यापारेषु मानेष्यनेहशः' इति मेदिनी । तयो रामकृष्णयोरीश्वरत्वात्सदा कुशलत्वेपि । उक्तविशेषणविशिष्टौ सर्वलोकदत्तोत्सवत्वविशिष्टरूपेण कुशलप्रश्नः । सौहार्देन वेति मां प्रतिभाति ॥ २६ ॥ ❀ ❀ "भामस्तु भगिनीभर्ता दीप्तः पूज्यश्च क्रोधनः" इति निरुक्तिः । पूज्यत्वमन्येषामप्यस्तीति चेदाह—यद्वेति । अतो लोकव्यवहारत्वात् । एतद्व्यवहारस्याप्रसिद्धत्वात्प्रसिद्धार्थमाह । वसुदेवस्य पौरव्या रोहिण्याः पतित्वाद्भामत्वं प्रसिद्धं तदुक्तं हरिवंशे "पौरवी रोहिणी नाम बाह्लीकस्यात्मजाभवत् । ज्येष्ठा पत्नी महाराज दयिताऽनकदुंदुभेः" इति । यद्यपि रोहिण्याश्शंतनुभ्रातृबाह्लीकपुत्रीत्वेन विचित्रवीर्यभगिनीत्वमायाति तथापि पितृपुत्रयोरभेदोपचाराद्विदुरस्यापि कथंचिद्भगिनीत्वं ज्ञेयमिति तत्पतीनां स्वसृपतीनां "वरो जामातरि श्रेष्ठे दक्षिणासहजापयोः" इति सहजां पातीति सहजापः ॥ २७ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनीव्याख्या

कौरवेषु सौहार्दाभावेऽपि शोकोऽयं स्ववाक्याऽमननादेवेति ज्ञेयम्। उद्गमाधिमुखं प्रवाहाभिमुखम् ॥ २२ ॥ ❀ ❀ तस्यां सरस्वत्याम्। यत्तीर्थं तदा सिशेवे तत्तन्नाम्नात्रिततीर्थोशनस्तीर्थादिनाम्ना ॥ २३ ॥ ❀ ❀ क्षेत्राणि पुरुषोत्तम-मथुरादीनि तीर्थानि। ऋषिजुष्टजलानि चेत्यन्यानि चेत्यस्य व्याख्यानम् ॥ २४ ॥ ❀ ❀ ❀ तत्र यमुनातीरे ॥ २५ ॥ ❀ ❀ पाठांतरे प्राप्तनयमिति पाठे अत्र श्रीभगवत्पितृव्यविदुरकर्तृकालिङ्गनेऽप्युद्धवस्य नमनाद्यभावस्तस्य श्रीभगवद्विरह-मूर्छामभिव्यञ्जयति ॥ २६ ॥ ❀ ❀ उक्तविशेषणं हि प्रपञ्चेऽवतीर्णत्वं तथा च नित्यकुशलत्वेऽपि प्रपञ्चानुग्रहपूर्वकं शूरगृहे आसाते किम्वाऽप्रकटं विहरत इति प्रश्नः इत्यर्थः ॥ २७ ॥

### श्रीमद्वीरराघवव्याख्या

तत्रेति। अथ प्रभासतीर्थं स समीपे संस्पर्द्धया परस्परसंघर्षेण सुहृदां कौरवादीनां विनष्टिं शुश्रावाश्रृणोत्। परस्परसं-स्पर्द्धया विनाशे दृष्टांतः वेणुभ्यो जातो यो वह्निस्तस्य संश्रयमाश्रयं वनं यथा दग्धं तद्वत्। अथ सुहृद्विनष्टिश्रवणानंतरम-नुशोचन्प्रत्यक् पश्चिमाभिमुखं सरस्वतीं नदीं प्रति तूष्णीमियाय गतवान् ॥ २२ ॥ ❀ ❀ तस्यां सरस्वत्यां त्रितेन सेवितं तीर्थमित्यर्थः। त्रितादीनामेकादशतीर्थानि तत्तन्नाम्ना प्रसिद्धानि आसिषेवे आसेवितवान् ॥ २३ ॥ ❀ ❀ अन्यानीति। द्विजदेवा ऋषयस्तैर्देवैश्च कृतानि विष्णोरायतनानि बहुविधानि स्थानानि यद्दर्शनात् येषामायतनानां दर्शनात् कृष्णमनुस्मरन्ति कृष्णस्मारकानीत्यर्थः। प्रत्यंगान्यायुधानि तेषां मुख्यं चक्रं सुदर्शनं तेनांकितानि मूर्द्धन्यहेमकुंभेषु विहितानि मंदिराणि येषु तान्यन्यानि च तीर्थान्यासिषेवे इति पूर्वेणान्वयः ॥ २४ ॥ ❀ ❀ ततः सरस्वत्या ऋद्धं समृद्धं सुराष्ट्रं देशं सौवीरांश्च देशानतिक्रम्य यावदुद्धवः प्राप्तस्तावत्स्वयमपि कालेन यमुनामुपेत्य तत्र यमुनातीरे भागवतं उद्धवं ददर्श ॥ २५ ॥ ❀ ❀ विदुरः वासुदेवानुचरस्तं येन येन धातागच्छतीत्युक्तमुक्तवत्प्रवृद्धभगवदायत्तस्थितिप्रवृत्तिमंतं शमदमादिसंपन्नं बृहस्पतेः स-काशात्प्राप्तनयं प्राप्तो नयो नीतिर्येन तं प्रतीतं प्रख्यातं उद्धवं प्रणयेन गाढं यथा तथा आलिंग्य स्वानां स्वसंबंधिनां भगवत्प्रजानां भगवतस्तत्प्रजानां पुत्रपौत्रादीनामन्येषां तु पोष्याणां च भद्रं कुशलमपृच्छत् ॥ २६ ॥ ❀ ❀ प्रथमं तावद्रामकृष्णयोः कुशलं पृच्छति कच्चिदिति। कुशलप्रश्ने द्योतकमव्ययं स्वस्य नाभौ भवः स्वनाभ्यः स चासौ पद्मः पद्मसंभवो ब्रह्मा तस्यानुवृत्त्या प्रार्थनयेह भूर्लोकेऽवतीर्णौ पुराणौ पुरुषौ उर्व्यां कुशलं सुखं विधाय कृत्वा कृतक्षणौ लब्धावसरौ शूरगेहे वसुदेवगृहे कुशलं सुखं कच्चिदासाते किल ॥ २७ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

प्रभासतीर्थागमनेन कश्चिदर्थविशेषः सूचितः कोऽसाविति तत्राह तत्रेति। अथ प्रभासक्षेत्रगमनानंतरं तत्र प्रभासे तिष्ठन् विदुरः सुहृदां यदूनां विनष्टिं विप्रशापनिमित्तविनाशं शुश्रावेत्यन्वयः। विदुरस्तु प्रभासस्थः शापं संक्षेपतोऽश्रृणोत् यदूनां विस्तरात्पश्चादुद्धवाद्यमुनामनु इति वचनात्। विप्रशापेन भविष्यंतं यदुविनाशं श्रुतवान् अन्यथा महाभारतविरोधः स्यादित्यर्थः। तज्जिज्ञासुस्तत्रागमत्किं नेत्याह यथेति। वायुनोद्धूतवेणुसंघर्षणलक्षणसंस्पर्शोत्थितवह्निना तदाश्रयं वनं यथा दग्धं भविष्यति— तथा विप्रशापहेतुसंस्पर्धयाऽन्योन्यममर्मस्पर्शनवचनोत्थितकलहवह्निना दहिष्यत्स्वकुलमनुशोचन्नथ प्रत्यक् सरस्वतीं पश्चिमवाहिनी नाम्ना सरस्वतीं नदीमियायेत्यन्वयः। तूष्णीमित्यनेन दुःखेन क्षेत्रवासिनोनापृच्छ्यादिति सूचयति ॥ २२ ॥ ❀ ❀ दुःखाग्नि-संतप्तस्तत्र सरस्वत्यां मर्तुं किं गत इति तत्राह तस्यामिति। अनेन विदुरस्य शास्त्रज्ञानाधिक्यं सूचयति यतः संसारः क्षणभंगुरोऽतस्तीर्थस्नानादिना शुद्धांतःकरणस्य भगवदपरोक्षज्ञानेन पुरुषार्थः स्यादित्यनेन तीर्थस्नानमकारि नान्यो व्यापार इति ॥ २३ ॥ ❀ ❀ न केवलं नदीतीर्थान्येव निषेवितानि किंतु तद्देशभवानि क्षेत्राणीत्याह अन्यानि चेति। इह नद्यां सुराष्ट्रे च कीदृशान्यायतनानि प्रत्यंकाः। सम्यक्लक्षणवंतो ब्रह्मादयस्तेषां मुख्यो विष्णुस्तस्य प्रतिमाभिरंकितानि चिह्नितानि मंदिराणि येषु तानि तथा ब्रह्मा प्रत्यंकवान्सम्यक्विष्णुर्लक्षणवत्तम इति। प्रत्यंकमुख्यमायुधश्रेष्ठं चक्रं तदंकितानीति व्याख्यानं चिंत्यं निघंटुकारेण तथाऽनभिहितत्वादिति। येषां क्षेत्राणां दर्शनात् ॥ २४ ॥ ❀ ❀ विदुरस्य तीर्थसेवायां तात्पर्याधिक्यं सूचितमृद्धमित्यनेन। अन्यथासमृद्धदेशत्यागे कारणाभावात् कालेन केनचिदिति ॥ २५ ॥ ❀ ❀ तत्र तीर्थस्नानमंतरेणोद्धवं दृष्ट्वाऽनेन किमकारि तन्मह्यं ब्रूहीति परीक्षितो हार्दं चोद्यं परिहरति स इति। प्रशांतमित्यादि विशेषणत्रयेणोद्धवस्य भगवन्निष्ठाया वैराग्यस्य शास्त्रज्ञानस्य प्रख्यातेश्चाधिक्यं सूचयति भगवान् कृष्णः प्रजापुत्रो येषां ते तथोक्तास्तेषां अपृ-च्छदिति द्विकर्मको धातुः तेनोद्धवमित्यन्वेतव्यम् ॥ २६ ॥ ❀ ❀ स्वो विष्णुस्तस्य नाभ्यो नाभिजातः पद्मो ब्रह्मा तस्यानुवृत्त्या प्रार्थनालक्षणसेवया कृतक्षणौ कृतावसरौ कच्चित्कामप्रवेदन इति वचनात् प्रश्नार्थे वर्तते काचिच्छन्दः पद्मो ब्रह्मा समुद्दिष्टः पद्मा श्रीरपि चोच्यत इति च लोकानां सुखकर्तृत्वमपेक्ष्य कुशलं विभोः। पृच्छ्यते सततानंदात्कथं तस्यैव पृच्छतः इति वचनात्। हरेः कुशलप्रश्नो लोकानां सुखकर्तृत्वमपेक्ष्येति ज्ञातव्यम् ॥ २७ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

सुहृद्विनष्टेः श्रुतत्वेऽपि स्वानां भद्रमपृच्छदिति । शोकावेशस्वभावोऽयम् । स्वानां स्वेषां परमात्मीयानाम् ।।२५।। ❀ ❀ स्वनाभ्येति । स्वीयस्य गर्भोदशायिनो नाभौ भवः स्वनाभ्यः निजशासनार्हणमिति यत् व्याख्यातं कुशलं लोकानां मंगलं यस्मात् तद्यथा स्यात् ।। २६ ।। ❀ ❀ भामो भगिनीभर्त्ता । पौरवी रोहिण्योः पतित्वात् । स्वसॄणामिति कुन्तीस्नेहत्वात्-पर्यादुक्तम् ।। २७ ।।

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

त्रितस्येति । त्रिततीर्थमित्यादिनाम्ना यद्यत् प्रसिद्धमित्यर्थः ।। २२ ।। ❀ ❀ द्विजदेवैऋषिभिर्देवैश्च अंगमंगं प्रति वर्त्तन्त इतिप्रत्यंगान्युधानि तेषु मुख्यं चक्रं तेनाङ्कितानि मन्दिराणि येषु तानि ।। २३ ।। ❀ ❀ तावदिति । वाक्यालङ्कारे सम्भ्रमे वा ।। २४ ।। ❀ ❀ प्राक्तनयं पूर्वशिष्यं नीतिशास्त्रे प्राप्तनयमिति वा पाठः । प्रतीते ख्यातं अत्र विदुरकर्तृकालिंगनेऽपि उद्धवस्य नमस्काराभावः प्रेममूर्च्छयैव ज्ञेयः ।। २५ ।। ❀ ❀ भगवत्प्रकटस्थित्यैव तत्प्रजानां भद्रमिति भगवत्सुखस्थितिं पृच्छति कच्चिदिति । प्रश्ने स्वनाभौ भवः स्वनाभ्यः पाद्मो ब्रह्मा कृतक्षणौ कृतोत्सवौ तयोर्नित्यकुशलिनोरपि कुशलप्रश्नः प्रेम्णैव ज्ञेयः ।। २६ ।। ❀ ❀ भामो भगिनीभर्त्ता वसुदेवभार्यायाः पौरव्या विदुरादीनां भगिनीत्वात् शौरिर्वसुदेवः । स्वसॄणामिति । कुन्त्याः स्नेहातिशयो ध्वन्यते । अन्यासु स्वसृषु तथाभावाद्दृष्टेः । वरानभीप्सितानर्थान् वराणां तत्पतीनां तर्पणेन सम्भाषणेन सह ।। २७ ।।

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

तत्र प्रभासे वेणुजं वह्निं संश्रयते इति तथा वनं यथा दग्धं भवति तथा संस्पर्द्धया परस्पराभिभवेच्छया निमित्तभूतया सुहृदां कौरवाणां विनष्टिं विनाशं शुश्राव अशृणोत् । अथानंतरं शोचन् प्रत्यगभिमुखं सरस्वतीं तूष्णीमियाय गतवान् ।। २२ ।। ❀ ❀ स विदुरः त्रितादीनामेकादशानामेकादशतीर्थानि आसिषे च आसेवितवान् ।। २३ ।। ❀ ❀ अन्यानि च विष्णोः आयतनानि तीर्थानि स आसिषेवे इति पूर्वेणान्वयः । कथंभूतानि द्विजदेवैः ऋषिभिर्देवैश्च कृतानि अंगमंगं प्रतिवर्तंते इति प्रत्यंगान्यायुधानि तेषु मुख्येन श्रीसुदर्शनेनांकितानि मूर्द्धन्यहेमकुंभेषु चिह्नितानि मंदिराणि येषु तानि यत् येषामायतनानां दर्शनात् कृष्णमनुस्मरंतीति श्रीकृष्णस्मरणं भवतीत्यर्थः ।। २४ ।। ❀ ❀ ततस्तदनंतरं सुराष्ट्रादीन् देशान् अतिव्रज्य अतिक्रम्य यावन्कालेनोद्धवः प्राप्तस्तावत्स्वयमपि यमुनामुपेत्य तत्र यमुनातटे भागवतमुद्धवं ददर्श ।। २६ ।। ❀ ❀ स विदुरः बृहस्पतेः प्राक्तनयं पूर्वं शिष्यमत एव प्रतीतं प्रख्यातम् उद्धवं प्रणयेन गाढं यथा भवति तथा आलिंग्य आलिंगने हेतुगर्भं विशेषणं वासुदेवानुचरमिति । स्वानां ज्ञातीनां भद्रं कुशलमपृच्छत् तद्भद्रप्रश्ने हेतुः भगवत्प्रजानामिति भगवतः पोष्याणाम् ।। २७ ।।

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनीव्याख्या

ननु भगवद्वासभूतद्वारकात्यागेन वृथाऽन्यत्र गत इत्याशङ्क्य, तत्र कृष्णस्मारकाणि बहूनि सन्तीत्याह । तस्यामिति द्वयेन— तस्यां सरस्वत्यामेकादशतीर्थानि प्रसिद्धानि । अत्र व्युत्क्रमो जलप्राधान्याज्जलक्रमानुरोधेन । तत्र सरस्वत्यामेव त्रितकूपमस्ति । तत्प्रथमं निर्दिशति, कूप्यानामेवाऽपां प्राथम्यात् । एवमन्यान्यपि ज्ञातव्यानि । उशनसादीनां ( ? ) तपस्थानानि तानि । मनुःस्वायम्भुवः पृथुर्वैन्यः । तीर्थचतुष्टये सेविते शोकादयः सर्वे व्यावृत्ताः । त्रितस्तु कूपे पतितस्तस्मात्सङ्कटान्निस्तीर्णः, तथाऽयमपि शोकसङ्कटान्निस्तीर्णः । उशनास्तत्र मृतसञ्जीविनीं विद्यां प्राप्तवान् , तथाऽयं मृतो जीवितः । मनोस्त्विष्टसिद्धिर्ज्ञानिरूपा, अस्याऽपि शोकनिवृत्तिर्ज्ञानोत्पत्तिस्तत्र । पृथुस्तु पूर्वजातसर्वदोषनिवर्तकः । एवं चतुर्भिः पूर्वावस्था [1]गता, तेन प्राप्ता । अतः परमथ भिन्नक्रमेण विशोकस्तीर्थानि कृतवानित्याह—अग्नेरिति । असित ऋषिः, वायुर्देवता, सुदासो राजा, गवाम् गोसत्रस्थानं गोतीर्थम् , गुहः कुमारः श्राद्धदेवो वैवस्वतमनुः । एतानि सप्ततीर्थान्यवश्यं सप्तधातुशोधकानि ।। २२ ।। ❀ ❀ अन्यानि प्रकीर्णकानि प्लक्षजातपर्यन्तं निरन्तरं कृतानि सर्वशोधकानि जातानीत्याह—अन्यानि चेति । एतानि तपःकरणाल्लोके तथा ख्यातानि नित्यान्येव । अन्यानि तु द्विजदेवैर्ब्राह्मणैर्देवैश्च कृतानि, अत एव नानाऽऽयतनानि नानास्थानानि येषु तीर्थेषु । किञ्च । तेष्वायतनेषु विष्णोः प्रत्यङ्गमुख्याङ्कितमन्दिराणि सन्ति । प्रत्यङ्गान्यायुधानि, तेषु मुख्यं सुदर्शनम् । चक्राङ्कितानि चक्रेणोपरि चिह्नितानि भगवन्मन्दिराणि भवन्ति । किं तावतेत्यत आह—यद्दर्शनात् कृष्णमनुस्मरन्तीति । भगवत्स्मरणं बहुजन्मसुकृतेन भवति । तदत्र चिह्नदर्शनेनैव भवतीति तीर्थानामाधिक्यम् । सङ्घस्य भगवतस्तत्र स्थितिरित्यपि । अनेन स्मारकदर्शनाच्चिरं स्थित्वा तत्र तत्र गत इति लक्ष्यते । अत एव कालविलम्बात् यदुकुलनिवृत्तिरपि जाता ।। २३ ।। ❀ ❀ एवं तीर्थगमनेनैव सर्वे देशा अतिक्रान्ता इत्याह—ततस्त्वतिव्रज्येति ।

---

१. नाशश्रवणाद्गताः प्रकाशः ।

ऋद्धमित्यनेन तत्र भगवानस्तीति ज्ञापितम्। सौवीरदेशो गुर्जरदेशः मत्स्यास्ततोऽर्वाक्। कुरुजाङ्गलदेशः कुरुक्षेत्रदेशः। सर्वत्र ग्रामैकरात्रविधिना समागमने षट्त्रिंशद्वर्षा जाताः। तदाह—कालेन तावदिति। यावत्कालं भगवान् स्थितः, मौशलं च जातम्, तावद्यमुनामुपेत्य तावता कालेन यमुनां गतस्तत्रोद्धवं ददर्शेति संबन्धः। दर्शने हेतुः—भागवतमिति। इदं दर्शनं प्रत्यय'जनकम्। यावतोद्धवः प्राप्तस्तावता स्वयमपि तत्र गत इति॥ २४॥ ❀ ❀ अतः परं सत्सङ्गेन अग्निसंयोगवत् स्वस्याऽपि तेजःप्राप्तिरिति तं विशिनष्टि स वासुदेवानुचरमिति। भगवद्भक्तत्वेऽपि सेवकत्वं विशेषः। वासुदेवसेवकत्वान्मोक्षोपयोगित्वं तद्दर्शनस्य। अनेन संभाषणीयत्वं सूचितम्। प्रकटेऽपि नीतिज्ञत्वादन्यं न बोधयिष्यतीति विशेषणम्। बृहस्पतेः प्राप्तनयमिति। बृहस्पतेः सकाशात् प्राप्तो नयो नीतिशास्त्रं येन। प्राक्तनयमिति पाठे पूर्वमुद्धवः पुत्रत्वेन स्थित इति देवगुह्याभिज्ञः। प्रशान्तत्वान्न स्वयमासज्जते। प्रतीतत्वान्न परिहारः सम्भवति। आलिङ्ग्य गाढमित्युभयोर्भगवदीयत्वात् पूर्वस्नेहः सूचितः। प्रणयेनेत्युभय'त्र। स्वानां भद्रत्वे हेतुः—भगवत्प्रजानामिति। भगवत्परिपाल्यानाम्, भगवतांशावतारेणोत्पादितानां वा। तस्मिन् दृष्टे स्वयमपि भगवत्संबन्धी जात इति, तदीयानां स्मरणेन पञ्चभूतेषु वा'युः संस्कृतः॥ २५॥ ❀ ❀ भगवदीयानां कुशलं द्विविधम्, सामान्यविशेषरूपेण। तत्र सामान्यं भगवत्पोष्याणां कुशलं भगवत्स्थितिसाध्यमिति प्रथमं हेतुभूतां भगवत्स्थितिं पृच्छति—कच्चिदिति। अवतारावेशाभिप्रायेण द्विवचनम्, स्व'गतभेदाभावाद्भगवन्मूर्तीनाम्। पुराणाविति पुरुषोत्तमौ। जीववैलक्षण्यायोक्तम्। अविशेषेण कार्यमाह—नाभौ भवे पद्म आविर्भूतो ब्रह्मा स्वनाभ्यपाद्मः, तस्यानुवृत्तिः प्रार्थना। किलेति पुराणादौ तथा प्रसिद्धत्वात्। भूम्याः कुशलं भारावतरणं कृत्वा, सर्वेषां कुशलं यथा भवति तथा दत्तावसरौ कृतक्षणौ, निश्चिन्ततया स्वानन्दानुभवे निर्मितक्षणौ वा। वसुदेवगृहे किमासाते? इति प्रश्नः। अनेन सर्वेषां साधारणं कुशलं पृष्टम्॥ २६॥ ❀ ❀ विशेषं पृच्छति—कच्चित्कुरूणामिति। प्रथमं वसुदेवकुशलप्रश्ने हेतुः—कुरुणां सुहृत् नो भामश्च। 'भामस्तु भगिनीपतिः'। प्रतिविवाहसम्भावनया देवक्यपि स्वभगिनीत्यभिप्रायेणोक्तम्। कौरवगृहे वा तस्याऽन्यो विवाहः। पृथापेक्षया वसुदेवस्य ज्येष्ठत्वात् देशन्यायेन कनिष्ठभगिनीभर्ता शालक इति भावुकत्वम्। किञ्च। न सम्बन्धमात्रं वसुदेवे, किन्तु उपजीव्य इत्याह—यो वै स्वसॄणामिति। शूरः श्वशुरो ददात्येव, स्वयमपि भगिनीनां ददाति। वरानभिलषितार्थान्। अविहितत्वान्न चतुर्थी। अधिकदाने हेतुः—वदान्य इति। भगिनीनां भर्तृतर्पणमपि कृत्वा॥ २७॥

## श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः।

तस्यामित्यत्र। गतेति नाशश्रवणाद्गता॥ २२॥ ❀ ❀ तत इत्यत्र। प्रत्ययजनकमिति। श्रुतस्यार्थस्य प्रकारयाथार्थ्यबोधजनकम्॥ २४॥ ❀ ❀ स वासुदेवेत्यत्र। उभयत्रेति आलिङ्गने प्रश्ने च। हेतुरिति शेषः। वायुरिति। स्मरणसमानाधिकरणप्राणरूपो वायुः। कच्चित्पुराणावित्यत्र। स्वगतशब्दोऽन्तर्यामिबोधकः॥ २६॥

## श्रीगिरिधरकृता बालप्रबोधिनी

तस्यां सरस्वत्यामेकादश तीर्थानि तत्तन्नाम्ना प्रसिद्धानि आसिषेवे इत्यन्वयः। उशनसः शुक्रस्य। मनोः स्वायम्भुवस्य। पृथोर्वैन्यस्य। असितस्य ऋषेः। सुदासस्य तन्नाम्नो राज्ञः। गवां तीर्थं गोसत्रस्थानम्॥ २२॥ ❀ ❀ इह भूलोके यान्यन्यानि च द्विजदेवैर्ऋषिभिर्देवैश्च कृतानि निर्मितानि विष्णोरायतनानि स्थानानि तानि आसिषेवे इति पूर्वेणैवान्वयः। श्रीकृष्णस्मरणं बहुजन्मानुष्ठितसुकृतेन भवति तत्त्वत्र मन्दिरदर्शनमात्रेणैवेति तेषामाधिक्यं दर्शयति—यदिति। येषामायतनानां दर्शनात् कृष्णमनुस्मरन्तीत्यर्थः। अङ्गमङ्ग प्रति वर्तन्ते इति प्रत्यङ्गानि आयुधानि तेषु मुख्यं चक्रं तेनाङ्कितानि मूर्द्धन्यहेमकुम्भेषु चिह्नितानि मन्दिराणि येषु तान्यायतनानीत्यर्थः॥ २३॥ ❀ ❀ ततस्तदनन्तरं तु ऋद्धं समृद्धं सुराष्ट्रं सौवीरादींश्च देशान् अतिव्रज्य अभिक्रम्य यावदुद्धवः प्राप्तस्तावद्विदुरोऽपि स्वयं यमुनामुपेत्य तत्र यमुनातीरे भागवतं भगवद्भक्तमुद्धवं ददर्शेत्यन्वयः॥ २४॥ ❀ ❀ स विदुरः प्रतीतं दृष्टमुद्धवं प्रणयेन प्रेम्णा गाढं यथा स्यात्तथा आलिङ्गय स्वानां स्वसम्बन्धिनां भद्रं कुशलमपृच्छदित्यन्वयः। प्रश्नहेतुमाह—भगवतः प्रजानामिति। उद्धवस्य प्रश्नयोग्यतां सूचयंस्तं विशिनष्टि—प्रशान्तमिति, कामक्रोधादिरहितमित्यर्थः। तत्र हेतुमाह—बृहस्पतेरिति, प्राक्तनयं नीतिशास्त्रे पूर्वं शिष्यमित्यर्थः। अस्मिंश्च जन्मनि वासुदेवस्य वसुदेवनन्दनस्य श्रीकृष्णस्यानुचरं सेवकमित्यर्थः॥ २५॥ ❀ ❀ प्रथमं तावद्रामकृष्णयोः कुशलं पृच्छति—कच्चिदिति। कच्चिदिति कुशलप्रश्नद्योतकमव्ययम्। स्वनाभौ भवः स्वनाभ्यः स चासौ पाद्मः पद्मसम्भवो ब्रह्मा तस्यानुवृत्त्या प्रार्थनया इह भूलोकेऽवतीर्णौ पुराणौ परमकारणभूतौ पुरुषौ पुरुषाकारौ रामकृष्णौ उर्व्याः भारापाकरणेन कुशलं सुखं विधाय कृत्वा कृतक्षणौ लब्धविश्रामावसरौ शूरगेहे वसुदेवगेहे कुशलं सुखं यथा भवति तथा कच्चिदासाते वर्त्तेते इत्यन्वयः।

---

१. श्रुतस्याऽर्थस्य प्रकारयाथार्थ्यबोधजनकम् प्रकाशः। २. आलिङ्गने प्रश्ने च। हेतुरिति शेषः प्र.। ३. स्मरणसमानाधिकरणः प्राणरूपो वायुः प्र.। ४. स्वगतशब्दोऽन्तर्यामिबोधकः प्र.।

तयोः पुराणपुरुषत्वं पुराणादिप्रसिद्धं स्मर्यते इत्याह—किलेति ॥ २६ ॥ ❀ ❀ अङ्गेति सम्बोधनेन भगवद्भक्तत्वेनावयोरेकत्वमस्तीति सूचयति। नोऽस्माकं कुरूणां परमः सुहृत् निरन्तरं हितचिन्तकः भामः भद्रः पूज्यो वा, यद्वा भगिनीपतिः कुन्ती वसुदेवस्य भगिनी अतो देवकीपाण्डोर्भगिनीति देशव्यवहारात्। स प्रसिद्धः शौरिः शूरस्यापत्यं वसुदेवः कच्चित्सुखमास्ते ?। तस्य विशेषतः प्रश्ने उदारत्वं हेतुं सूचयति—यो वा इति। वा इति निश्चये। अत्र सन्देहो नास्तीति भावः। यो वदान्यः अत्युदारः स्वसृणां भगिनीनां वरतर्पणेन वराणां तत्पतीनां तर्पणेन तृप्तिकरवस्तुजातप्रदानेन सह वरान् अभीष्टानर्थान् पितृवत् ददाति ॥ २७ ॥

### हिन्दी अनुवाद

वहाँ उन्होंने त्रित, उशना, मनु, पृथु, अग्नि, असित, वायु, सुदास, गौ, गुह और श्राद्धदेवके नामोंसे प्रसिद्ध ग्यारह तीर्थोंका सेवन किया ॥ २२ ॥ ❀ ❀ इनके सिवा पृथ्वीमें ब्राह्मण और देवताओंके स्थापित किये हुए जो भगवान् विष्णुके और भी अनेकों मन्दिर थे, जिनके शिखरोंपर भगवान्के प्रधान आयुध चक्रके चिह्न थे और जिनके दर्शनमात्रसे श्रीकृष्णका स्मरण हो आता था, उनका भी सेवन किया ॥ २३ ॥ ❀ ❀ वहाँसे चलकर वे धन-धान्यपूर्ण सौराष्ट्र, सौवीर, मत्स्य और कुरुजाङ्गल आदि देशोंमें होते हुए जब कुछ दिनोंमें यमुना-तटपर पहुँचे, तब वहाँ उन्होंने परमभागवत उद्धवजीका दर्शन किया ॥ २४ ॥ ❀ ❀ वे भगवान् श्रीकृष्णके प्रख्यात सेवक और अत्यन्त शान्तस्वभाव थे। उन्होंने बृहस्पतिजीसे नीतिशास्त्रकी शिक्षा पायी थी। विदुरजीने उन्हें देखकर प्रेमसे गाढ़ आलिङ्गन किया और उनसे अपने आराध्य भगवान् श्रीकृष्ण और उनके आश्रित अपने स्वजनोंका कुशलसमाचार पूछा ॥ २५ ॥ ❀ ❀ विदुरजी कहने लगे—उद्धवजी! पुराणपुरुष बलरामजी और श्रीकृष्णने अपने ही नाभिकमलसे उत्पन्न हुए ब्रह्माजीकी प्रार्थनासे इस जगत्में अवतार लिया है। वे पृथ्वीका भार उतारकर सबको आनन्द देते हुए अब श्रीवसुदेवजीके घर कुशलसे रह रहे हैं न ? ॥ २६ ॥ ❀ ❀ प्रियवर! हम कुरुवंशियोंके परम सुहृद् और पूज्य वसुदेवजी, जो पिताके समान उदारतापूर्वक अपनी कुन्ती आदि बहिनोंको उनके स्वामियोंका सन्तोष कराते हुए उनकी सभी मनचाही वस्तुएँ देते आये हैं, आनन्दपूर्वक हैं न ? ॥ २७ ॥

**कच्चिद्वरूथाधिपतिर्यदूनां प्रद्युम्न आस्ते सुखमङ्ग वीरः।**<br>
**यं रुक्मिणी भगवतोऽभिलेभे आराध्य विप्रान् स्मरमादिसर्गे ॥ २८ ॥**<br>
**कच्चित्सुखं सात्वतवृष्णिभोजदाशार्हकाणामधिपः स आस्ते।**<br>
**यमभ्यषिञ्चच्छतपत्रनेत्रो नृपासनाशां परिहृत्य दूरात् ॥ २९ ॥**<br>
**कच्चिद्धरेः सौम्य सुतः सदृक्ष आस्तेऽग्रणी रथिनां साधु साम्बः।**<br>
**असूत यं जाम्बवती व्रताढ्या देवं गुहं योऽम्बिकया धृतोऽग्रे ॥ ३० ॥**<br>
**क्षेमं स कच्चिद्युयुधान आस्ते यः फाल्गुनाल्लब्धधनूरहस्यः।**<br>
**लेभेऽञ्जसाधोक्षजसेवयैव गतिं तदीयां यतिभिर्दुरापाम् ॥ ३१ ॥**

### श्रीधरस्वामिविरचिता भावार्थदीपिका।

वरूथाधिपतिः सेनानीः आदिसर्गे पूर्वजन्मनि स्मरं कामं संतमभिलेभे पुत्रं लब्धवती ॥ २८ ॥ ❀ ❀ सात्वतादीनामधिप उग्रसेनः शतपत्रनेत्रः श्रीकृष्णः नृपासनाशां राज्याभिलाषं परिहृत्य प्राणभयेन दूरात्स्थितमित्यर्थः ॥ २९ ॥ ❀ ❀ हे सौम्य हरेः सुतस्तेन सदृशः साधु सुखमास्ते गुहं स्वामिकार्तिकेयं अग्रे पूर्वजन्मनि यो भवान्या गर्भे धृतस्तम् ॥ ३० ॥ ❀ ❀ युयुधानः सात्यकिः क्षेमं कुशलमास्ते। फाल्गुनादर्जुनाल्लब्धं धनुषो रहस्यं येन। तदीयामधोक्षजसंबंधिनीम् ॥ ३१ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः।

विप्रानाराध्येति नरलीलाप्रदर्शितः। स्मरमिति। स्मरस्तस्मिन्प्रविष्टो ज्ञेयोऽन्यथा तस्य साक्षाद्भगवच्चतुर्थव्यूहता न सेत्स्यति। एतच्च श्रीकृष्णे नारायणप्रवेशादेव वसुदेवगृहे नारायणोऽवतीर्ण इति वद्द्येमन्यथा 'नारायणोंगं नरभूजलायनात्' इत्युक्तिर्न सेत्स्यतीति एवं शेषवसुगुहादिप्रवेशो बलदेवोद्धवसांबादिषु ज्ञेय इति। अंशांशिनोरभेदोक्त्युपचारात् ॥ २८ ॥ ❀ ❀ इत्यर्थ इति। कंसो मम प्राणान्हरिष्यतीति भयेन राज्याशां परिहृत्य दूरात्स्थितं यमुग्रसेनं कृष्णोऽभ्यषिञ्चत्स इति भावः। यद्वा। शतपत्रनेत्र एव शापभयेन स्वयं नृपासनस्याशां दिशमपि त्यक्त्वा यमभ्यषिञ्चदित्यन्वयः ॥ २९ ॥ ❀ ❀ तेन हरिणा योंऽबिकया धृत एव न तु ततो जातस्तथाहि—रतिप्रवृत्तशिवयोस्तद्वारणाय देवप्रेषिताग्निना तद्रेतो गृहीत्वा तदसह्यं मत्वा गंगायै दत्तं तयापि तथा

मत्वा शरवणे क्षिप्तं तत्र स बालको भूत्वा रुरोद तदा पतित्यक्तार्षिपत्नीभिस्तन्मुखस्तनदाने कृत्तिकारूपाभिर्मतो धृतं स तदैव षण्मुखोऽभूत्तद्वृत्तं नारदाद्यैरुमायै प्रोक्तं तच्छ्रुत्वा तमानाय्य धारयामासेति साधूक्तं धृतोंबिकयाग्रे विस्तृतमेतद्वृत्तं श्रीभारतादौ ॥ ३० ॥ ❀ ❀ यतिभिर्यत्नशीलैः प्रष्टव्ये ज्ञानाधिक्यं भगवत्प्रियत्वं च हेतुरेवमग्रेऽपि ज्ञेयम् ॥ ३१ ॥

## श्रीराधारमणदासगोस्वामिविरचिता दीपिनीव्याख्या

पूर्वार्थे भामशब्दस्य पूज्यतारूपेऽर्थेऽप्रसिद्धेऽपि हेतुर्नोक्त इत्यरुचेर्यद्वेति । लोकव्यवहारोऽयमेकदेशिक एव नतु सार्वत्रिकः वस्तुतस्तु पौरविमदिरा इला इत्यादिनवमोक्तेः पुरुवंशभवायाः पुरुवंशभवत्वेन च वसुदेवस्त्रीत्वात् पौरव्याः विदुरभगिनीत्त्वात् वासुदेवो भगिनीभर्तेति ज्ञेयम् । अर्थान् धनादिभोगान् ॥ २८ ॥ ❀ ❀ पूर्वजन्मनि अंशेन कामं सन्तमिति व्याख्येयम् । तस्य श्रीकृष्णचतुर्व्यूहत्वेन मूलप्रद्युम्नत्वात्प्राकृतस्मरत्त्वं न संगच्छते विशेषजिज्ञासा चेत्कृष्णसन्दर्भदशमदीपिकादीपने द्रष्टव्ये ॥ २८ ॥ ❀ ❀ प्राणभयेन ययातिशापप्रयुक्तेन अत्र परिहाराभिषेकयोः समानकर्तृत्वमभिप्रेतं न संगच्छते भगवतः प्राणभयसंभावनौचित्यात् अतः स्थितमिति साध्याहारादिव्याख्यानादित्यर्थः इत्युक्तम् ॥ ३० ॥ ❀ ❀ पूर्ववद्वहमित्यप्यंशांशय-भेदाभिप्रायेण योजनीयम् एते हि यादवाः सर्वे मद्गणा एव भामिनीति सत्यां भगवद्वाक्येन तत्र कैमुत्यात् अतएव । तस्य दौर्लभ्य-सूचनार्थं व्रताढ्येत्युक्तम् ॥ ३१ ॥

## श्रीमद्वीरराघवव्याख्या

वसुदेवस्य कुशलं पृच्छति कुरूणां नः परमः सुहृद्भामः भद्रः पूज्यो वा यद्वा भगिनीपतिः अतो देवकी पांडोर्भगिनीति लोकस्य व्यवहारः सः प्रसिद्धः शौरिः शूरस्यापत्यं वसुदेवः अंग हे उद्धव सुखमास्ते कच्चित् ? कथंभूतः ? शौरिर्वदान्योऽत्युदारः स्वसॄणां भगिनीनां वरतर्पणेन वराणां तत्पतीनां तर्पणेन तृप्तिकरवस्तुजातप्रदानेन सह वरानभीष्टानर्थान् पितृवद्ददात्यदात् ॥ २८ ॥ ❀ ❀ प्रद्युम्नमापृच्छति यदूनां वरुथाधिपतिः सेनापतिर्वीरः प्रद्युम्नः सुखमास्ते कच्चिदंग हे उद्धव कथंभूतः ? प्रद्युम्नः रूक्मिणी-विप्रानाराध्यादिसर्गे पूर्वजन्मनि स्मरं कामं संतं प्रद्युम्नं केशवतः सकाशाल्लेभे लब्धवती ॥ २९ ॥ ❀ ❀ उग्रसेनं पृच्छति सात्वतादीनामधिपतिः स उग्रसेनः सुखमास्ते कच्चिच्छतपत्रनेत्रः पुंडरीकाक्षो भगवान्स्वयं नृपासनस्याशामभिलाषं दूरात्परिहृत्य यमुग्रसेनमभ्यषिंचत् अभिषिक्तवान् ॥ ३० ॥ ❀ ❀ साम्बं पृच्छति हे सौम्य रथिनां रथिकानामग्रणीः श्रेष्ठः हरेः श्रीकृष्णस्य सुतः सदृक्षः हरिणा समानः साम्बो साध्वास्ते कच्चित् जांबवतीव्रताढ्या व्रतनिष्ठा सती देवं गुहं पूर्वजन्मनि कार्तिकेयं यं साम्बं प्रासूतवती यः गुहः अग्रे पूर्व जन्मन्यम्बिकया भवान्या धृतः गर्भे इति शेषः ॥ ३१ ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

भामः पूज्यः वदान्यो दानशीलः वरतर्पणेन भर्तृतर्पणेन ॥ २८ ॥ ❀ ❀ यदूनां वरूथाधिपतिः सेनापतिः आदि-सर्गे पूर्वजन्मनि स्मरं कामं विप्रानाराध्येति कथनं लोकवनितानां ब्राह्मणप्रसादेन स्वाभीष्टावाप्तिरिति प्रदर्शनपरं न तु स्वार्थपर-मित्यभिप्रायः ॥ २९ ॥ ❀ ❀ सात्वतानामधिप उग्रसेनः शतपत्रनेत्रः पुंडरीकाक्षः नृपासनाधिसिंहासनं मम नाभूदिति य आधिः मनस्तापं परिहृत्य आधिर्मनोवरुथं च आत्माखमपि चोच्यत इति ॥ ३० ॥ ❀ ❀ सदृक्षः पुत्रत्वयोग्यः दक्ष इति पाठे कर्तव्यत्वेन युगपदनेकेषु कार्येषु प्राप्तेष्वव्यामोहेन क्रमेण कर्ता दक्ष इत्यर्थः । अग्रे पूर्वजन्मनि अंबिकया पार्वत्या धृतो गर्भे इति शेषः ॥ ३१ ॥

## श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

स्मरं श्रीभगवद्व्यूहरूपम् । श्रीकृष्णसन्दर्भे तथा निर्णीय व्याख्यातत्वात् ॥ २८ ॥ ❀ ❀ नृपासनाशां तद्दिशमपि परिहृत्येत्यस्य शतपत्रनेत्र एव वा कर्त्ता ॥ २९ ॥ ❀ ❀ साम्बस्य गुहत्वं प्रद्युम्नवदेव ॥ ३० ॥ ❀ ❀ तदीयां गतिं परमान्तरंगाम् ॥ ३० ॥

## श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

अत्र प्रश्ने तेनातिवैक्लव्यात् क्रमो नानुसृतः । वरुथाधिपतिः सेनानिः आदिसर्गे पूर्वजन्मनि स्मरं कन्दर्पमिति कन्दर्पस्य देवत्वात् प्रद्युम्नस्य नरत्वात् तथा भूतत्वे उत्कर्षद्योतनावस्तुतः सिद्धान्ते तु कन्दर्पस्तद्विभूतिविशेष एव एवमग्रेऽपि तदंशविभूतयोऽपि सर्वत्र तल्लीलाकथासु तादात्म्येनैवोच्यन्ते । यथा देवकीवसुदेवावपि पृश्निसुतपसावुक्तौ स्वयं भगवतैव त्वमेव पूर्वसर्गेऽभूः पृश्निः स्वायम्भुवे सतीत्यादिना सर्वत्र नरलंलिता पृष्टया चमत्कार एव कारणं ज्ञेयं यथा तत्रैव आराध्य विप्रानिति जाम्बवती व्रताढ्येति रुक्मिणीजाम्बवत्यादीनां भगवत्स्वरूपशक्तीनामपि तत्तदर्थं तत्तत्साधनमपि ॥ २८ ॥ ❀ ❀ अधिपः उग्रसेनः यं उग्रसेनं नृपासनाशां राज्याभिलाषं परिहृत्य प्राणभयेन दूरात् स्थितमित्यर्थः । शतपत्रनेत्रः श्रीकृष्णः ॥ २९ ॥ ❀ ❀ सदृक्षः सदृशः गुहं

कार्त्तिकेयं अंशांशिनोरैक्यात् रुद्रस्य भगवदंशत्वात् तत्पुत्रस्य कार्त्तिकेयस्यापि भगवत्पुत्रांशत्वं युक्त्या ज्ञेयम्। यद्वा परावरेशौ महदंशयुक्त इत्यादि वक्ष्यमाणयुक्त्या अवतारकाले श्रीकृष्णे नारायणप्रवेशे सति नारायण एव वसुदेव गृहेऽवतीर्ण इति प्रतीतिरिव साम्बे गुहप्रवेशात् प्रद्युम्ने कामप्रवेशात् उद्धवादिष्वपि वस्वादेः प्रवेशात् तथोक्तिर्नानुपपन्ना ॥ ३० ॥ ❀ ❀ युयुधानः सात्यकिः फाल्गुनादर्ज्जुनात् ॥ ३१ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

हे अंग उद्धव यः वदान्यः अत्युदारः स्वसृणां भगिनीनां वरतर्पणेन पतितर्पणेन सह वरान् पदार्थान् ददाति स भामः पूज्यः शौरिर्वसुदेवः नोऽस्माकं परमः सुहृत् सुखमास्ते कच्चित् ॥ २८ ॥ ❀ ❀ आदिसर्गे पूर्वजन्मनि स्मरं संतं रुक्मिणी यं सुतमभिलेभे प्राप्तवती स यदूनां वरूथाधिपतिः सेनानी प्रद्युम्नः सुखमास्ते कच्चित् प्रद्युम्नविभूतिः स्मरः विभूतितद्वतोरभेदाभिप्रायेण प्रद्युम्नस्तथोक्तः ॥ २९ ॥ ❀ ❀ नृपासनाशां परिहृत्य दूरात् प्राणभयेन स्थितिमिति शेषः। यं शतपत्रनेत्रः अभ्यर्षिचत् स उग्रसेनः ॥ ३० ॥ ❀ ❀ सौम्य हे उद्धव हरेः सदृक्षः सदृशः सुतः ॥ ३१ ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनीव्याख्या

यादवानां मध्ये सर्वत उत्तमं प्रद्युम्नं पृच्छति—कच्चिदिति। वरूथाधिपतिः सेनापतिः। यदूनां मध्ये वीरः। यदूनां वा वरूथाधिपतिः। स्वतो वीरः, सेनातो जन्मपरम्परया च। तदाह—प्रद्युम्न इति। प्रकृष्टधनात्मकः। अतो राजापेक्षया प्रथमं पृष्टः। किञ्च। स पूर्वं सर्गहेतुः कामः। यं रुक्मिणी भगवन्तं प्रार्थयित्वा, वंशजननार्थं विप्रानाराध्य, धर्मसिद्ध्यर्थं तपः कृत्वा (रुक्मिणी तं) लेभे। आराध्य विप्रानिति तदर्थं शक्त्यतिशयाधानं कृतं गम्यते। भगवत्त इति पुत्रार्थमेव यत्नः ॥ २८ ॥ ❀ ❀ कच्चित्सुखमिति। राज्ञो राज्यं तु काकतालीयन्यायेनाऽऽगतमित्याह—यमभ्यषिञ्चदिति। मृतपुत्रस्य दुःखाभावेन राज्यस्वीकारे हेतुः—शतपत्रनेत्र इति। दृष्ट्यैव सर्वतापहारी कमलनयनः। दूरादिति पुत्र-पौत्रद्वाराऽपि ॥ २९ ॥ ❀ ❀ निरतिशयस्वरूपसामर्थ्यसद्भावात्साम्बादीन्, माहात्म्यस्वरूपे वदन्, पृच्छति—कच्चिद्धरेरिति। संबोधनानि तत्र तत्र कथने हेतुभूतानि। हरेरेव सदृक्षो रथिनामग्रणीः साधु आस्त इति। साम्बपदेन च पार्वत्या सहितो महादेव एवाऽवतीर्ण इति ज्ञायते। अत एव तस्य जननं न प्राकृततया शक्यमित्याह—असूत यं जाम्बवती व्रताढ्येति। जाम्बवान् बले भगवत्तुल्यो भक्तश्च, तस्य कन्या ततोऽपि व्रताढ्या। तस्य स्वरूपतः सामर्थ्यमाह—देवं गुहमिति। गुहस्य देवत्वमुत्कर्षो भूतगणमध्यपातित्वाभावाय। अम्बिकया अग्निपत्न्यामन्तर्भूतया। अयमपि तस्योत्कर्षः ॥ ३० ॥ ❀ ❀ शूरानुक्त्वा शूरभक्तमाह— क्षेमं स कच्चिदिति। युयुधानःसात्यकिरर्जुनशिष्यः। गतिं परमभक्तिफलरूपाम्। तत्र साधनं भगवत्सेवैव, न तु ज्ञानमपीत्याह—यतिभिर्दुरापामिति ॥ ३१ ॥

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

कच्चिद्वरूथेत्यत्र। शक्त्यतिशयाधानमिति पूर्ववद्रुद्रपराभवो माभूदित्येतदर्थं तथाकृतमित्यर्थः[1] ॥ २८ ॥

### श्रीगिरिधरकृता बालप्रबोधिनी

अङ्ग हे उद्धव यदूनां यादवानां वरूथाधिपतिः सेनापतिः। तत्र हेतुमाह—वीर इति। प्रद्युम्नः कच्चित्सुखमास्ते इत्यन्वयः तन्माहात्म्यं सूचयन् विशिनष्टि—आदिसर्गे पूर्वजन्मनि स्मरं कामदेवं सन्तं यं विप्रानाराध्य भगवतः सकाशात् रुक्मिण्यभिलेभे लब्धवती ॥२८॥ ❀ ❀ स प्रसिद्धः सात्त्वतादीनां यादवविशेषाणामधिपतिः उग्रसेनः कच्चित्सुखमास्ते ? अन्यसुखस्य तत्सुखाधीनत्वात् तत्सुखमवश्यमपेक्षणीयमित्याशयेनाह—यमिति। शतपत्रनेत्रः कमलनयनः श्रीकृष्णः स्वयं दूरादेव नृपासनस्याशामिच्छां परिहृत्य त्यक्त्वा यं राजासनेऽभ्यषिञ्चदित्यन्वयः ॥२९॥ ❀ ❀ हे सौम्य प्रिय रथिनामग्रणीः श्रेष्ठः हरेः सुतः सदृक्षः तत्सदृशः साम्बः कच्चित्साधु सुखमास्ते ? तस्यापि प्रभावातिशयं सूचयन्विशिनष्टि-असूतेति। यः अग्रे पूर्वजन्मन्यम्बिकया पार्वत्या गर्भे धृतस्तं यं देवं देवसेनापतिं गुहं कार्त्तिकेयं व्रतेनाढ्या युक्ता सती जाम्बवती असूत सः ॥ ३० ॥ ❀ ❀ स वीरतया प्रसिद्धो युयुधानः सात्यकिः कच्चित् क्षेमं सुखमास्ते ?। वीरत्वेन प्रसिद्धौ हेतुमाह—य इति। फाल्गुनात् अर्जुनात् लब्धं धनूरहस्यं धनुर्वेदो येन तथाभूतो य इत्यर्थः। तस्यकृतार्थत्वं द्योतयन् विशिनष्टि—लेभे इति। यो यतिभिः सन्न्यासिभिरपि दुरापां तदीयां भगवत्सम्बन्धिनीं गतिं परमफलरूपां परमप्रेमलक्षणां अधोक्षजस्य श्रीकृष्णस्य सेवयाऽञ्जसा अनायासेन सुखेनैव लेभे इत्यन्वयः ॥ ३१ ॥

---

१. पूर्ववद्रुद्रपराभवो मा भूदित्येतदर्थं तथा कृतमित्यर्थः प्र.। २. एतन्नास्ति क. घ. ङ.।

## हिन्दी अनुवाद

प्यारे उद्धवजी ! यादवोंके सेनापति वीरवर प्रद्युम्नजी तो प्रसन्न हैं न, जो पूर्व जन्ममें कामदेव थे तथा जिन्हें देवी रुक्मिणीजीने ब्राह्मणोंकी आराधना करके भगवान्‌से प्राप्त किया था ॥ २८ ॥ ❀ ❀ सात्वत, वृष्णि, भोज और दाशार्हवंशी यादवोंके अधिपति महाराज उग्रसेन तो सुखसे हैं न, जिन्होंने राज्य पानेकी आशाका सर्वथा परित्याग कर दिया था; किन्तु कमलनयन भगवान् श्रीकृष्णने जिन्हें फिरसे राज्यसिंहासनपर बैठाया ॥ २९ ॥ ❀ ❀ सौम्य ! अपने पिता श्रीकृष्णके समान समस्त रथियोंमें अग्रगण्य श्रीकृष्णतनय साम्ब सकुशल तो हैं ? ये पहले पार्वतीजीके द्वारा गर्भमें धारण किये हुए स्वामिकार्तिक हैं। अनेकों व्रत करके जाम्बवतीने इन्हें जन्म दिया था ॥ ३० ॥ ❀ ❀ जिन्होंने अर्जुनसे रहस्ययुक्त धनुर्विद्याकी शिक्षा पायी है, वे सात्यकि तो कुशलपूर्वक हैं ? वे भगवान् श्रीकृष्णकी सेवासे अनायास ही भगवज्जनोंकी उस महान् स्थितिपर पहुँच गये हैं, जो बड़े-बड़े योगियोंको भी दुर्लभ है ॥ ३१ ॥

**कच्चिद् बुधः स्वस्त्यनमीव आस्ते श्वफल्कपुत्रो भगवत्प्रपन्नः ।**
**यः कृष्णपादाङ्कितमार्गपांसुष्वचेष्टत प्रेमविभिन्नधैर्यः ॥ ३२ ॥**
**कच्चिच्छिवं देवकभोजपुत्र्या विष्णुप्रजाया इव देवमातुः ।**
**या वै स्वगर्भेण दधार देवं त्रयी यथा यज्ञवितानमर्थम् ॥ ३३ ॥**
**अपिस्विदास्ते भगवान् सुखं वो यः सात्वतां कामदुघोऽनिरुद्धः ।**
**यमामनन्ति स्म हं शब्दयोनिं मनोमयं सत्त्वतुरीयतत्त्वम् ॥ ३४ ॥**
**अपिस्विदन्ये च निजात्मदैवमनन्यवृत्त्या समनुव्रता ये ।**
**हृदीकसत्यात्मजचारुदेष्ण-गदादयः स्वस्ति चरन्ति सौम्य ॥ ३५ ॥**
**अपि स्वदोर्भ्यां विजयाच्युताभ्यां धर्मेण धर्मः परिपाति सेतुम् ।**
**दुर्योधनोऽतप्यत यत्सभायां साम्राज्यलक्ष्म्या विजयानुवृत्त्या ॥ ३६ ॥**

### श्रीधरस्वामिविरचिता भावार्थदीपिका।

श्वफल्कपुत्रोऽक्रूरः बुधो विद्वान् अतो भगवंतं प्रपन्नोऽनुसृतः अत एवानमीवो निष्पापः। भक्तौ लिंगं योऽचेष्टत व्यलुठत्। प्रेम्णा विभिन्नं विदीर्णं धैर्यं यस्य सः स्वस्ति क्षेममास्ते ॥ ३२ ॥ ❀ ❀ देवकनामा यो भोजस्तस्य पुत्र्याः। देवक्याः विष्णुः प्रजा पुत्रो यस्यास्तस्य देवमातुरदितेरिव कच्चित् शिवम्। यज्ञवितानरूपमर्थं त्रयी यथा प्रकाशकतः या बिभर्ति तथा दधार ॥ ३३ ॥ ❀ ❀ सात्वतानामुपासकानां कामान् दोग्धि पूरयतीति कामदुघः। भगवत्त्वे हेतुः। यं शब्दस्य शास्त्रस्य योनिं कारणमामनंति वेदाः। कुतः मनोमयं मनसः प्रवर्तकम्। तत्कुतः। सत्त्वस्यांतःकरणस्य चतुर्विधस्य तुरीयं तत्त्वं चतुर्थमधिदैवम्। चित्ताहंकारबुद्धिमनसामंतःकरणभेदानां क्रमेण वासुदेवसंकर्षणप्रद्युम्नानिरुद्धा ह्यधिष्ठातारः। मनसश्च शब्दयोनित्वं प्रसिद्धम्। "मनः पूर्वरूपं वागुत्तररूपम्" इति। तथा। "अन्योंऽतर आत्मा मनोमयः" इति प्रस्तुत्य "तस्य यजुरेव शिरः ऋग् दक्षिणः पक्षः सामोत्तरः पक्षः" इत्यादिश्रुतेः। तथा च शिक्षायाम्। "आत्मा बुद्ध्या समेत्यार्थान्मनो युंक्ते विवक्षया। मनः कायाग्निमाहंति स प्रेरयति मारुतम् ॥ मारुतस्तूरसि चरन्मंद्रं जनयति स्वरम्" इत्यादि ॥ ३४ ॥ ❀ ❀ अपिस्वित् किंस्वित् अन्ये च स्वस्ति चरंति निजस्य देहादिव्यतिरिक्तस्यात्मनो दैवं श्रीकृष्णमनन्यवृत्त्या एकांतभक्तिभावेन ये सम्यगनुव्रता अनुसृताः। हृदीकश्च सत्यभामाया आत्मजश्च चारुदेष्णश्च गदश्चादिर्येषां तेऽपि ॥ ३५ ॥ ❀ ❀ इदानीं कुरून्पृच्छति षड्भिः। अपि किम्। स्वदोर्भ्यां स्वबाहुवद्वर्तमानाभ्यां विजयाच्युताभ्यामर्जुनकृष्णाभ्यां धर्ममार्गेण धर्मो युधिष्ठिरः सेतुं धर्ममर्यादां परिपाति। यस्य सभायां विजयानुवृत्त्या जयपरंपरयार्जुनस्य सेवयेति वा एवंभूतं यस्यैश्वर्यमित्यर्थः ॥ ३६ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः।

अतो विद्वत्वादेव अत एव भगवदनुसृतत्वादेव। धीरस्य भावो धैर्यं कृष्णपादाभ्यामंकिता ये मार्गपांशवस्तेषु ॥ ३२ ॥ ❀ ❀ भोजो भोजवंश्यः देवक्या गर्भधारणं कादाचित्कं त्रय्या अर्थधारणं च सनातनं कथं तन्निदर्शनं स्याद्वैषम्यादिति चेदाह—दृष्टांतदार्ष्टांतिकयोरेकदेशस्य साम्यं यदि स्यात्तन्न दोषाय 'सर्वसाम्ये ह्यसत्यपि' इत्युक्तेः। या देवकी यथा त्रयी यज्ञविता-

---

१. प्रा० पा०—हि।

नार्थप्रकाशिकैव न तूत्पादिका तथा देवक्यपि भगवन्मूर्त्तेः प्रकाशिकैव न तूत्पादिका स्वगर्भेण सह वायुपूरितगर्भेण सह यं चेतसा दधार 'काष्ठा यथानंदकरं मनस्तः' इति श्रीदशमे वक्ष्यमाणत्वात् उत्तानार्थस्वीकारो नोचितो यतस्तत्पत्सेविनामपि गर्भवासो नास्ति तस्य तु किमुतात एव गर्भस्थजीवस्तुतौ वक्ष्यति 'भूयो यथा व्यसनमेतदनेकरंध्रं मा मे भविष्यदुपसादितविष्णुपादः" इति ॥ ३३ ॥ ❀ ❀ तन्मनःप्रवर्त्तकत्वं मनसः शब्दयोनित्वे प्रमाणमाह—मन इति। श्रुत्यंतरं तथेति स्पष्टार्थत्वान्न व्याख्यातम्। यथा श्रुत्या मनसः शब्दकारणत्वमुक्तं तथा च तथैव। शिक्षायां पाणिनिशिक्षायां इत्यादिरित्यत्रोक्तादिपदेन "प्रातः सवनयोगं तं छंदो गायत्रमाश्रितम्। कंठे माध्यंदिनयुजं मध्यमं त्रैष्टुभानुगम्। तारं तार्तीयसवनं शीर्षण्यं जागतानुगम्। सोदीर्णो मूर्द्धन्यभिहितो वक्त्रमापद्य मारुतः। वर्णान् जनयते तेषां विभागः पंचधा स्मृतः" इति। अस्यार्थः—आत्मा शरीरेन्द्रियमनोबुद्धिव्यतिरिक्तः बुद्ध्या सहार्थान्वाह्यान्समर्थ्य सम्यगवगम्यार्थप्रत्यायनाय यदि शब्दा उच्चार्यन्ते तदा नियुंक्ते मनः वक्तुमिच्छया तत्रात्मनि युक्तं मनः शरीराग्निमाभिमुख्येन हंति प्राप्नोति स च शरीराग्निर्वायुं प्रेरयति उरसि वक्षसि मंद्रं गंभीरं प्रातःसवनेन सह योगोऽस्येति तं तथा च सुयज्ञः मंद्रया वाचा प्रातःसवनमिति गायत्रं छन्दोऽस्य मंद्रस्वरस्याश्रय इति कंठे चरन्वायुर्मध्यमं स्वरं जनयति मध्यंदिनं युनक्तीति माध्यंदिनं सवनभाजं त्रिष्टुप्छंदोनुगामिनमिति। तार्तीयसवनभाजं तारं स्वरं मूर्द्धनि चरन्वायुर्जनयति जागतं छंदोऽनुगच्छतीति तथा तं शीर्षण्यं शिरसि भवं शीर्षश्छंदसि" इति शिरसः शीर्षादेशः। स वायुरुदीर्ण ऊर्द्ध्वं गतः मूर्द्धानं यावदुपरितनां गतिमलभमानः शिरः कपालेनावष्टब्धत्वात्पुनः प्रत्यावृत्य वक्त्रमेवाभिपद्य वर्णान् जनयति तेषां वर्णानां विभागो वक्ष्यमाणरीत्या पंचधेति ॥३४॥ ❀ ❀ आत्मनो देहादिव्यतिरिक्तत्वं तु द्रष्टा हि दृश्याद्व्यतिरिक्तो भवति प्रयोजकत्वात्। बुद्ध्यादीनि कर्तृप्रयोज्यानि करणत्वात्कुठारवदिति प्रयोगात्। "अग्निहोत्रं जुहुयात्स्वर्गकामः" इत्यादिश्रुतेः स्वर्गादिफलसाधनानि कर्माणि श्रूयंते स्वर्गश्च। न च शरीरोपभोग्य इति तद्व्यतिरिक्त आत्मा शरीरादेः। "तस्य हैतस्य हृदयाग्रं प्रद्योतने तेन प्रद्योतते नैष आत्मा निष्क्रामति चक्षुषो वा मूर्ध्नो वा अन्येभ्यो वा शरीरदेशेभ्यः"। इति शरीरापक्रमणा च शरीरादिव्यतिरिक्त आत्मा छांदोग्येपि "एवमेवैष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिः स्वरूपं संपद्य स्वेन रूपेणाभिनिष्पद्यते" इति शरीराद्व्यतिरिक्त एवात्मेति बहुश उक्तं द्वितीयस्कंधेप्येतत्साधितमग्रेऽपि साधयिष्याम इति ॥ ३५ ॥ ❀ ❀ किमिति प्रश्ने महाभारते कर्णादिभ्यो युधिष्ठिरपराजयस्यापि श्रुतत्वादाह—अर्जुनस्येति। "विजयो वानरध्वजः" इत्यर्जुननामापि विजयः। इत्यर्थ इति। अहो साक्षान्नरनारायणौ यस्याज्ञाकारिणौ कस्तस्मादधिकैश्वर्यवान्न कोपीति भावः। यद्वेतरराजकर्तृकयाऽर्जुनस्य सेवयेत्यर्थः ॥ ३६ ॥

## श्रीराधारमणदासगोस्वामिविरचिता दीपिनीव्याख्या

रहस्यं तत्त्वं गतिमप्रकटप्रकाशाख्यं द्वारकाधाम अत एव यतिभिर्ब्रह्मविद्भिरपि दुर्लभाम् ॥ ३२ ॥ ❀ ❀ अतो बुधत्वाद् अत एव० प्रपन्नत्वादेव सत्यपि सम्बन्धान्तरे व्रजसंबंधेन श्लाघनात्तस्य वैशिष्ट्यं व्यक्तम् ॥ ३३ ॥ ❀ ❀ देवमातुरिवेति देवानां रक्षणांशे ऐश्वर्यांशे दृष्टांतो न तु तारतम्ये कृष्णस्तु भगवान्स्वयमित्युक्तेः स्वगर्भेणेति लौकिकोक्तिः मातरि तथा व्यवहारस्य रसावहत्वेन तदुक्तेरेवौचित्यात् वस्तुतस्तु मनसैव काष्ठा यथानंदकरं मनस्त इति दशमे प्रकरणोक्तेः समाख्यातः प्राबल्यादिति ज्ञेयम्। अतएव दृष्टांते प्रकाशकतयेति व्याख्यातम्। यज्ञवितानार्थो हि शब्दप्रकाश्यो न तु तज्जन्यः कर्मणश्शब्दजन्यत्वाभावात्। भावनां लिङादिज्ञानस्य ज्ञापकत्वेन करणत्वं न तूत्पादकत्वेनेति तदीयस्वारस्यादिति ॥ ३४ ॥ ❀ ❀ मनःपूर्वरूपमिति पश्यन्त्यांख्यस्य मनःप्रधानत्वात् वैखरीरूपस्य वागिन्द्रियप्रधानत्वाच्छब्दस्य मनःपूर्वरूपं वागुत्तररूपमिति श्रुतिपदार्थः तथान्यः प्राणमयाद्भिन्नः अंतरस्तदनुस्यूतः ज्ञानेंद्रियैः सहितं मनः मनोमय आत्मा तस्य मनोमयात्मनः शिक्षाशास्त्रे आत्मा जीवः बुद्ध्या अर्थांस्तत्तच्छब्दार्थान्समेत्य सम्यग् ज्ञात्वा विवक्षया मनः प्रतियुङ्क्ते तानर्थान् वक्तुं पूर्वरूपे मनसि यो जयतीत्यर्थः। मनःकर्तृ काये स्थितं वाचा वह्निर्मुखं भेज इत्यादेः वागधिदैवतमग्निमाहत्य संप्रेर्य्य मारुतं वैखर्य्युच्चारणे निमित्तं प्रेरयति मन्द्रं गंभीरं स्वरामकारादिस्वरोपलक्षितं वर्णसमूहं जनयति ॥ ३५ ॥ ❀ ❀ एकान्तभावेन शुद्धदास्यभावेनानुसृता व्याप्ताः भृत्यदारुकप्रभृतयः तेपीति ये शुद्धगुरुत्वभावनावन्तो लाल्याः सत्यभामात्मजादयः पुत्राः तत्र हृदीकः पार्षदविशेषः तेऽपीत्यर्थः ॥ ३६ ॥

## श्रीमद्वीरराघवव्याख्या

सात्यकिं पृच्छति क्षेममिति। युयुधानः सात्यकिः क्षेमं कुशलमास्ते कच्चित् यः युयुधानः फाल्गुनादर्जुनाल्लब्धं धनूरहस्यं धनुर्वेदो यस्य सः अधोक्षजस्य श्रीकृष्णस्य सेवयैव तदीयामधोक्षजसंबंधिनीं यतिभिरपि दुरापां गतिमंजसा सुखेनैव लेभे प्राप्तवान् ॥ ३२ ॥ ❀ ❀ अक्रूरं पृच्छति बुधः विज्ञाततत्वः अतएवानमीवः अपापः भगवंतं शरणं गतः श्वफल्कपुत्रः अक्रूरः स्वस्तिकुशलमास्ते कच्चित् यः श्वफल्कपुत्रः कृष्णस्य पादाभ्यामंकितः चिह्नितः यो मार्गस्तस्य पांशुषु रजःसु प्रेम्णा कृष्णपादांकितमार्गदर्शनजनितप्रीत्यतिशयेन विभिन्नं धैर्यं यस्य सः अचेष्टत व्यलुठत् ॥ ३३ ॥ ❀ ❀ देवकीं पृच्छति देवकनामा भोजस्तस्य पुत्रो विष्णुः श्रीकृष्णः प्रजाऽपत्यं यस्यास्तस्या देवक्याः देवमातुरदितेरिव शिवं कुशलं कच्चित् या देवकी स्वगर्भेण

देवं भगवंतं दधार तत्र दृष्टांतः त्रयी वेदः यज्ञवितानमर्थं यथा प्रकाशकतया बिभर्ति तद्वदित्यर्थः ॥ ३४ ॥ ❀ ❀ अनिरुद्धं पृच्छति । अपीति सात्वतां भक्तानां वः युष्माकं कामदुघः अभीष्टप्रपूरकः भगवाननिरुद्धः सुखमास्तेऽपिस्वित् अपिस्विदादयः कच्चित्पर्यायाः यमनिरुद्धं शब्दयोनिशास्त्रप्रमाणकं सत्वतुरीयतत्वं सत्वमेव तस्य तुरीयं तत्वं चतुर्थांशमामनंति शब्दयोनित्वं कुतः मनोमयं योगपरिशुद्धमनोग्राह्यं लौकिकप्रमाणाविषयमित्यर्थः ॥ ३५ ॥ ❀ ❀ अवशिष्टसर्वयादवानां कुशलं युगपत्पृच्छति निजात्मदैवतं भगवंतमनन्यवृत्त्या एकांतभक्त्या समनुवर्त्तका ये हृदीकादयः ते सर्वे हे सौम्य स्वस्ति कुशलं चरत्यपिस्वित् ॥ ३६ ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

युयुधानः सात्यकिः फाल्गुनादर्जुनात् अनेन धनुर्वेदज्ञानाधिक्यं भगवत्प्रियतमत्वं च प्रष्टव्यत्वे हेतुरिति सूचयति एवमुत्तरत्राप्यूह्यम् ॥ ३२ ॥ ❀ ❀ अनमीवो निष्पापः श्वफल्कपुत्रोऽक्रूरः प्रेम्णा भक्त्या विभिन्नं नष्टं धैर्यं रजोवेष्टनाहंकार-रूपं मनो यस्य स तथा ॥ ३३ ॥ ❀ ❀ विष्णुः प्रजापुत्रो यस्याः सा विष्णुप्रजा तस्या देवकश्चासौ भोजश्च देवकभोजः नाम्ना देवकः कुलेन भोजः तस्य पुत्र्या देवक्या देवतामातुरदितेरिव विष्णुप्रजाया इति योजना यज्ञो विष्णुर्वितानो विभूतिर्विष्णु-विभूतिरूपमर्थं प्रतिपाद्यं यागलक्षणमर्थं वा कादाचित्कं देवक्या गर्भधारणं त्रय्या अर्थधारणं सनातनमतस्तन्निदर्शनं कथं स्यादित्यत उक्तं वेति । दृष्टांतदार्ष्टांतिकयोरेकदेशसाम्येनालं तत्प्रसिद्धेरिति ॥ ३४ ॥ ❀ ❀ अनिरुद्धो भगवान्वा सुखमास्तेऽपिस्वित् किमि-त्यन्वयः । अनिरुद्धशब्दार्थं लक्षयति यः सात्वतामिति । न केवलं कामेन निरुणद्धि किंतु तत्तदिष्टदायकआश्रितानामतोऽनिरुद्धः पूज्यश्च कामदुघ इति छांदसपदप्रयोगेण सूचितं वैदिकत्वं स्पष्टमाह यमिति । शब्दो वेदो योनिर्ज्ञप्तिः कारणं यस्य स तथोक्तस्तं भद्रं नो अपि वातय मन इत्येवंरूपः शब्दः ननु हे मनस्त्वं क्रतुं दक्षं दर्शनमुत भद्रं मंगलं विष्णुं प्रति वातय गमयेति मनो-मयमिति सर्वकार्येषु मनः प्रथयतीति मनोऽभिमानित्वादनिरुद्धस्य मनःशब्देन स एवोच्यते मनसा वा अग्रे संकल्पयति मन एव मनुष्याणां कारणं बधमोक्षयोरित्यादेः नो मनो भद्रं वातयेति मनसः कर्मत्वप्रतीतेः कथमनेन उच्यते इति चेत्सत्यं स एव तर्ह्यनिरुद्धः स्यात् ननु हंत तर्हि मनःशब्दाभिधेयत्वं गतमत्राह सत्त्वेति । सत्वाच्चित्तातुरीयं चतुर्थं मनःशब्दार्थमनिरुद्धमामंनति मनोबुद्धिरहंकारश्चित्तमित्यंतरात्मनः । यद्विदुर्ह्यनिरुद्धाख्यं हृषीकाणामधीश्वरम् । शारदें-दीवरश्यामं सराध्यं योगिभिः शनैरित्यादिना हे मनोनाथानिरुद्ध नोऽस्माकं क्रतुं संकल्पदर्शनज्ञानं तत्त्वविषयं कुरु हे भगवन्नो मनोदक्षं समर्थं क्रतुमध्वरं च भद्रं त्वं वातय प्रापयेत्युभयथापि हि तद्विषयत्वं संगच्छते दक्षौ दर्शनं पंडिताविति यादवः । कामदुघत्वादिमाहात्म्यं हरेरितरत्रासंभावितं कथमस्मिन्योज्यत इत्यतो वाऽऽह यमिति । यं कामपुत्रं सत्त्वस्य बलविज्ञान-पूर्णस्य चतुर्मूर्तेर्हरेस्तुरीयमर्थमनिरुद्धनामानं हरिमामनंतीत्यतो युक्तं तदावेशित्वात्तादृशमाहात्म्यकथनं पृथ्व्यादौ दर्शनादिति ॥ ३५ ॥ ❀ ❀ उक्तकुशलप्रश्नं प्रसिद्धाप्रसिद्धेष्वप्यतिदिशति अपिस्विदिति ॥ ३६ ॥

## श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

अक्रूरस्य सर्वदा परमभक्तिमत्त्वेऽपि यः कृष्णेति कालदेशादिवैशिष्ट्येन चमत्कारत्वादयुक्तम् ॥ ३२ ॥ ❀ ❀ देवमातुरिवेति दृष्टान्तत्वं तदितराभावेन ॥ ३३ ॥ ❀ ❀ एवमनिरुद्धस्यापि साक्षाच्चतुर्व्यूहत्वे लिंगमाह अपिस्विदिति । शब्द-योनिं निश्वासव्यञ्जितवेदवृन्दं एवं वा अरेऽस्य महतो भूतस्य निश्वसितमेतद् यद् ऋग्वेद इत्यादिश्रुतेः मनोमयं चित्ते वासुदेववन्म-नस्युपास्यम् । सत्त्वं शुद्धसत्त्वात्मकं श्रीवासुदेवादिरूपो भगवान् तत्र तुरीयं रूपम् । अतो बाणयुद्धादौ बन्धनानुकरणादिकमात्मेच्छा-मयी लीलैव श्रीरामचन्द्रादिवत् । अस्य पाद्मबृहत्सहस्रनाम्नि माहात्म्यनामानि चैतानि । अनिरुद्धो बृहद्ब्रह्म प्रद्युम्नो विश्वमोहनः चतुरात्मा चतुर्व्वर्णश्चतुर्युगविधायकः । चतुर्भेदैकविश्वात्मा सर्वोत्कृष्टांशको विभुः । आश्रयात्मेति । अतः श्रीकृष्णव्यूहत्वेन महानिरुद्धत्वादस्यैवाविर्भावविशेषः प्रलयार्णवादिधामा पुरुष इति ज्ञेयम् । अत एवाभेदेन जगृहे पौरुषं रूपं भगवानित्याद्युक्तं मूलसंकर्षणाद्यंशैरेव ह्यीतरसङ्कर्षणाद्यवस्थात्रयं पुरुषं प्रकाशयतीति तथैवाभेदेन विष्णुधर्मोत्तरेऽपीदमुक्तम् । अत्र श्रीवज्रप्रश्नः । कस्त्वसौ बालरूपेण कल्पान्तेषु पुनः पुनः दृष्टो येन त्वया ज्ञातस्तत्र कौतूहलं मम । श्रीमार्कण्डेयोत्तरञ्च । भूयोभूयस्त्वसौ दृष्टो मया देवो जगत्पतिः । कल्पक्षये न विज्ञातः स मया मोहितेन वै । कल्पक्षये व्यतीते तु तं देवं प्रपितामहात् । अनिरुद्धं विजानामि पितरं ते जगत्पतिमिति । भीष्मपर्व्वणि दुर्योधनं प्रति भीष्मशिक्षायां श्रीकृष्णस्यावतारारम्भे गन्धमादनमागतस्य ब्रह्मणस्तदावि-र्भावं मनसि पश्यत स्तुवानस्य तदिदं वचनम् । सृष्ट्वा सङ्कर्षणं देवं स्वयमात्मानमात्मना । कृष्णत्वमात्मनाऽस्राक्षीः प्रद्युम्नश्चात्म-सम्भवम् । प्रद्युम्नाच्चानिरुद्धन्तु यं विदुर्विष्णुमव्ययम् । अनिरुद्धोऽसृजन्मां वै ब्रह्माणं लोकधारिणम् । वासुदेवमयः सोऽहं त्वयैवास्मि विनिर्मित इति । अत एव च पूर्वमपि जगृहे इत्यत्र श्रीकृष्णस्यानिरुद्धावतारान्तपातित्वं न व्याख्यातम् । अतएव विशेषः कृष्णसन्दर्भेऽस्ति ॥३४॥ ❀ ❀ निजस्य आत्मीयस्य आत्मनश्च दैवं श्रीकृष्णम् ॥३५॥ ❀ ❀ अपि स्वदोर्भ्यामित्यादिकं श्रीभगवदन्तर्द्धानेन तेषां प्राकट्यासम्भवात् ॥ ३६ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

अनमीवो निष्पापः श्वफल्कपुत्रोऽक्रूरः अचेष्टत नन्दग्रामप्रवेशे व्यलुठत् ॥ ३२ ॥ ❀ ❀ देवकनामा यो भोजस्तस्य पुत्र्या देवक्याः विष्णुः प्रजा अपत्यं यस्यास्तया देवमातुरदितेरिव ॥ ३३ ॥ ❀ ❀ सात्वतां यादवविशेषाणां भक्तानां वा । शब्दयोनिं निश्वासव्यञ्जितवेदवृन्दं एवं वा अरे अस्य महतो भूतस्य निःश्वसितमेतदृग्वेद इत्यादि श्रुतेः । मनो मयते इति मनोमयं मनसः प्रवर्त्तकं तथा सत्त्वस्य शुद्धसत्त्वरूपस्य चतुर्व्यूहस्य तुरीयं चतुर्थं तत्त्वं तदप्यस्य बाणयुद्धादौ बन्धनादिकमचिन्त्यात्मेच्छामयी लीलैव श्रीरामचन्द्रादिवत्। अत्रास्य चतुर्व्यूहत्वे प्रमाणं विष्णुधर्म्मोत्तरे वज्रप्रश्ने मार्कण्डेयोत्तरं यथा । भूयो भूयस्त्वसौ दृष्टो मया देवो जगत्पतिः । कल्प क्षये न विज्ञातः स मया मोहितेन वै । कल्पक्षये व्यतीते तु तन्तु देवं पितामहात्। अनिरुद्धं विजानामि पितरं ते जगत्पतिमिति । भीष्मपर्व्वणि दुर्योधनं प्रति भीष्मशिक्षायां श्रीकृष्णस्यावतारारम्भे गन्धमादनमागतस्य तस्य ब्रह्मणस्तदाविर्भावं मनसि पश्यत स्तुवानस्य तदिदं ब्रह्मवचनम्। सृष्ट्वा सङ्कर्षणं देवं स्वयमात्मानमात्मना कृष्णत्वमात्मनाऽस्राक्षीः प्रद्युम्नं ह्यात्मसम्भवम्। प्रद्युम्नाच्चानिरुद्धस्तु यं विदुर्विष्णुमव्ययम्। अनिरुद्धोऽसृजन्मां वै ब्रह्माणं लोकधारिणम्। वासुदेवमयः सोऽहं त्वयैवास्मि विनिर्मित इति ॥ ३४ ॥ ❀ ❀ निजस्यात्मनो दैवं मूर्त्तं भाग्यमिव श्रीकृष्णं सम्यगनुव्रता अनुसृताः ॥ ३५ ॥ ❀ ❀ इदानीं कुरून् पृच्छति षड्भिः । दोस्तुल्याभ्यामर्ज्जुनकृष्णाभ्यां धर्म्मो युधिष्ठिरः सेतुं धर्म्ममर्य्यादां साम्राज्यसम्पत्त्या कीदृश्या विजयस्य सर्वोत्कर्षस्य अनुवृत्तिर्यस्यां तया ॥ ३६ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

युयुधानः सात्यकिः ॥ ३२ ॥ ❀ ❀ अनमीवः अपापः अचेष्टत व्यलुठत ॥ ३३ ॥ ❀ ❀ देवकस्य भोजस्य पुत्र्या श्रीदेवक्या विष्णुर्वामनः प्रजापुत्रो यस्यास्तस्याः देवानां मातुरदितेरिव शिवं कुशलं कच्चित् या देवकी स्वगर्भेण देवं वासुदेवं यथा त्रयी यज्ञवितानरूपमर्थं प्रकाशकतया बिभर्ति तथा दधार ॥ ३४ ॥ ❀ ❀ यं शब्दयोनिं शब्दो वेदः योनिः ज्ञापको यस्य स तथा तं वेदैकवेद्यमामनंति तत्र हेतुगर्भं विशेषणं सत्वतुरीयतत्वमिति सत्वस्य जगत्कारणस्य वासुदेवस्य तुरीयं तत्वं चतुर्थं तत्वमित्यर्थः । यद्वा सत्वेषु वासुदेवसंकर्षणप्रद्युम्नानिरुद्धानामुपास्यानां क्रमेण वासस्थानेषु चित्ताहंकारबुद्धिमनःसु तुरीये मनसि तत्वमुपास्यमित्यर्थः । अत एव मनोमयं शुद्धमनोग्राह्यम्। अत एव सात्वतामुपासकानां वां युष्माकं यः कामान् दोग्धि पूरयतीति कामदुघः स भगवान् अनिरुद्धः सुखमास्ते अपिस्वित् किंचित् ॥ ३५ ॥ ❀ ❀ हृदीकश्च सत्यात्मजाः सत्यभामात्मजाश्च चारुदेष्णगदादयश्च अन्ये च ये निजात्मनःस्वरूपस्य अंशस्य दैवमिष्टमंशिनं श्रीकृष्णमनन्यवृत्त्या अनन्येन भावेन सम्यगनुवृताः ते अपिंस्वित् किंचित् हे सौम्य स्वस्ति चरंति ॥ ३६ ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनीव्याख्या

परमभक्तमाह—कच्चिद् बुध इति । अत एव बुधः । अनमीवो नीरोगः । कृष्णसेवायोग्यत्वाय तथा प्रश्नः । श्वफल्कपुत्रोऽक्रूरः । भगवत्प्रपन्नः शरणागतः । तस्य भक्तिर्लोके प्रसिद्धेत्याह—यः कृष्णपादाङ्कितेति । मार्गपांसुरत्यन्तमपवित्रः, सोऽपि कृष्णपादाङ्कित इति गङ्गापेक्षया तस्योत्तमत्वं मत्वा तत्र लोटनं कृतवान् । अचेष्टतेति भक्त्यावेशेन लौकिकपदार्थज्ञानाभावः सूचितः । प्रबोधितोऽपि भक्त्याविष्टो न प्रबुद्ध इत्याह—प्रेमविभिन्नधैर्य इति । धीरो हि सर्वग्रहणे समर्थः ॥ ३२ ॥ ❀ ❀ यद्भक्त्या पुत्रत्वमपि प्राप्तो हरिः, तामतिभक्तां पृच्छति—कच्चिच्छिवमिति । भोजेति वंशनाम । देवक एव भोजः । पुत्रत्वमघटमानमाशङ्क्य दृष्टान्तः, अदितिर्यथा वामनमाता । विष्णुरेवप्रजा यस्याः । देवानां मातेति सर्वदेवास्तस्यामाविर्भूता इति भगवानपि स्वयमाविर्भूतः । पुत्रत्वं च गर्भस्थितिमात्रेण, न जननात् । तदाह—या वै स्वगर्भेण दधार देवमिति । धारणमपि सर्वलोकार्थं तदाह—त्रयी यथेति । गर्भस्थितिमात्रेण जनकत्वं वारयन्माहात्म्यमुक्तं[1] भवति । अर्थमिति सहजसम्बन्धरूपत्वादन्तर्यामितया विद्यमान एव प्रादुर्भूत इति सूचितम् ॥ ३३ ॥ ❀ ❀ अनिरुद्धे जीवस्योत्कर्षभावेनाऽऽविष्टस्य भगवत एव माहात्म्यं वदन् स्तौति—अपीति । भगवानिरुद्धः । सात्वतां वैष्णवानां सर्वकामपूरकः । अनिरुद्ध एव हि पालकः । स हि मनसोऽधिष्ठात्री देवता । अत एव यं शब्दयोमिमामनन्ति । स्मेति प्रसिद्धे । 'मनः पूर्वरूपं वागुत्तररूपम्' इति श्रुतेः । हेत्याश्चर्यम् , तादृशस्याऽवतार इति । यतोऽयं मनोमयः, तद्देवतात्वेनैव प्रसिद्धः; अत एव न केनाऽपि रोद्धुं शक्यत इत्यनिरुद्धः । किञ्च । सत्त्वस्याऽन्तःकरणस्य तुरीयं यन्मनस्तस्य परमार्थतत्त्वम् । अनेन सर्वात्मत्वं तस्य लोकसिद्धमपीत्युक्तम् ॥३४॥ ❀ ❀ एवं कतिपयान् विशेषेण पृष्ट्वा, अन्यान् सर्वानेकेन पृच्छति—अपि स्विदन्ये चेति ।निजश्चासावात्मा च चैतन्यरूपः, तस्याऽपि यो देवस्तादृशम्। अनन्यवृत्त्या सर्वभावेन ये तदेकनिष्ठा हृदीकादयः। सत्यात्मजाः सत्यभामापुत्राः । चारुदेष्णः प्रद्युम्नभ्राता । गदादयो भ्रात्रादयः । आदिशब्देन सर्वे संगृहीताः । तेषां चरित्रमपि किं समीचीनमिति प्रश्नः ॥ ३५ ॥ ❀ ❀ युधिष्ठिरस्य कुशलं पृच्छति—अपि स्वदोर्भ्यामिति । असाध्यसाधने हेतुः—विजया-

---

१. त्रयीदृष्टान्तेनोक्तं भवति. प्रकाशः ।

च्युताभ्यामिति। तौ हि नरनारायणौ, अनिरुद्धांशौ धर्मरक्षकौ। राजा च धर्मः। बाहुभ्यां चाऽऽत्मा रक्ष्यते, अत उक्तं स्वदोर्भ्यामिति। विजयोऽर्जुनः। अच्युतो भगवान्। सेतुं मर्यादां परम्परागताम्। धर्मेण विहितप्रकारेण। किं परिपालयतीति प्रश्नः। धर्मत्वेन धर्मतः परिपालनं सिद्धमेव, किमिति पुनः पृच्छ्यत इत्याशङ्क्य सिंहासनस्याऽनर्थहेतुत्वमाह—दुर्योधन इति। विविधो जयो विजयस्तस्य परम्परा यस्याम्, तादृशलक्ष्म्या। विजयोऽर्जुनस्तदनुवृत्त्या सेवया साम्राज्यलक्ष्म्या च यत्सभायां दुर्योधनोऽतप्यतेति भिन्नं वा। राज्ञस्तु गुणद्वयमधिकमस्तीति सुतरां तापः सम्भवतीति भावः॥ ३६॥

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

कच्चिच्छिवमित्यत्र उक्तं भवतीति। त्रयीदृष्टान्तेनोक्तं भवति॥ ३३॥ ❀ ❀ अपिस्विदास्त इत्यत्र। लोकसिद्धमिति। मनस[2]आत्माभेदस्य लोके प्रसिद्धत्वादित्यर्थः॥ ३४॥ ❀ ❀ अपि स्वदोर्भ्यामित्यत्र गुणद्वयमिति। राजसूयकृतं साम्राज्यलक्ष्मीरर्जुनकृता सेवा चेति गुणद्वयम्[1]॥ ३६॥

### श्रीगिरिधरकृता बालप्रबोधिनी

अनमीवः निर्दोषः श्वफल्कपुत्रः अक्रूरः कच्चित् स्वस्ति कुशलमास्ते?। निर्दोषत्वे हेतुमाह—बुध इति, विज्ञाततत्त्व इत्यर्थः। तस्य बुधत्वं कुत इति चेत्तत्र हेतुमाह—भगवत्प्रपन्न इति। तस्य तथात्वं कथं ज्ञातमित्यत आह—य इति। श्रीकृष्णपादाङ्कितमार्गपांसुदर्शनेन प्रेम्णा प्रीत्यतिशयेन विभिन्नं निर्गतं धैर्यं लज्जादिकारणं यस्य तथाभूतः सन् यः कृष्णस्य पादाभ्यामङ्कितश्चिह्नितो यो मार्गस्तस्य पांसुषु रजस्सु अचेष्टत व्यलुठतेत्यर्थः॥ ३२॥ ❀ ❀ देवकनामा यो भोजस्तस्य पुत्र्याः देवक्याः कच्चिच्छिवं कुशलमस्ति? इत्यन्वयः। तत्कुशलमावश्यकमित्याशयेनाह—विष्णुप्रजाया इति, विष्णुः श्रीकृष्णः प्रजा अपत्यं यस्यास्तस्या इत्यर्थः। तत्र दृष्टान्तमाह—इव देवमातुरिति। वामनरूपो विष्णुः प्रजा यस्यास्तस्या देवमातुर्यथा कुशलमस्ति तथेत्यर्थः। विष्णुप्रजात्वमेवाश्चर्येणोपपादयति—येति। वा इत्याश्चर्ये। या देवकी स्वगर्भेण देवं भगवन्तं दधार। एवं भगवतः प्राकृतजनवद्गर्भवासलक्षणं दोषमाशङ्क्य तन्निरासाय दृष्टान्तमाह—त्रयीति। त्रयी वेदत्रयी यज्ञवितानरूपमर्थं यथा प्रकाशकतया बिभर्ति तद्वदित्यर्थः॥ ३३॥ ❀ ❀ यो वः युष्माकं सात्वतां भक्तानां यादवविशेषाणां वा यः कामदुघः अभीष्टप्रपूरकः सोऽनिरुद्धः अपिस्वित् कच्चित् सुखमास्ते?। कामदुघत्वे हेतुं सूचयंस्तं विशिनष्टि—भगवानिति, यतः स्वयमैश्वर्यादिपरिपूर्ण इत्यर्थः। भगवत्त्वमेवोपपादयति—यमिति। यमनिरुद्धं शब्दस्य शास्त्रस्य योनिं कारणं आमनन्ति वेदा कथयन्ति। शब्दकारणत्वे हेतुमाह—मनोमयमिति, मनसः प्रवर्त्तकमित्यर्थः। तत्रापि हेतुमाह—सत्त्वतुरीयतत्त्वमिति, सत्त्वस्यान्तःकरणस्य चतुर्विधस्य तुरीयं चतुर्थमधिदैवमित्यर्थः। चित्ताहङ्कारबुद्धिमनसामन्तःकरणभेदानां क्रमेण वासुदेवसङ्कर्षणप्रद्युम्नानिरुद्धाः ह्यधिष्ठातारः। मनसश्च शब्दयोनित्वं शास्त्रप्रसिद्धमिति सूचयन्नाह—स्मेति। तथा च श्रुतिः—"मनः पूर्वरूपं, वागुत्तररूपम्" इति। तथा—"अन्योऽन्तर आत्मा मनोमयः" इति प्रस्तुत्य "तस्य यजूरेव शिरः, ऋग्दक्षिणः पक्षः सामोत्तरः पक्षः" इत्यादिः। तथा च शिक्षायाम्—'आत्मा बुद्ध्या समेत्यार्थान् मनो युङ्क्ते विवक्षया॥ मनः कायाग्निमाहन्ति स प्रेरयति मारुतम्॥ मारुतस्तूरसि चरन्मन्द्रं जनयति स्वरम्' इति॥ ३४॥ ❀ ❀ अवशिष्टसर्वयादवानां कुशलं युगपदेव पृच्छति—अपीति। हे सौम्य निजात्मदैवं श्रीकृष्णं अनन्यवृत्त्या एकान्तभक्त्या समनुव्रताः संसेवमाना ये अन्ये हृदीकादयस्ते अपिस्वित् कच्चित् स्वस्ति कुशलं चरन्तीत्यन्वयः॥ ३५॥ ❀ ❀ एवं यादवानां कुशलं पृष्ट्वा पाण्डवानां तत्पृच्छति—अपीति षड्भिः। स्वदोर्भ्यां स्वभुजवद्वशे वर्तमानाभ्यां विजयाच्युताभ्यां अर्जुनकृष्णाभ्यां सह धर्मो धर्मपुत्रो युधिष्ठिरो धर्मेण वेदशास्त्रानुसारेण सेतुं वर्णाश्रमादिमर्यादामपि कच्चित् परिपाति?। तस्यैवं तत्पालने तु न सन्देहः परन्तु विघ्नवशात् कदाचिदन्यथा स्यादत एवं पृच्छामीत्याशयेनाह—दुर्योधन इति। यस्य युधिष्ठिरस्य सभायां विजयस्यानुवृत्त्या परम्परया अर्जुनस्य सेवया वा हेतुभूतया साम्राज्यलक्ष्म्या च दुर्योधनोऽतप्यत तापं प्राप॥ ३६॥

### हिन्दी अनुवाद

भगवान्‌के शरणागत निर्मल भक्त बुद्धिमान् अक्रूरजी भी प्रसन्न हैं न, जो श्रीकृष्णके चरण-चिह्नोंसे अङ्कित व्रजके मार्गकी रजमें प्रेमसे अधीर होकर लोटने लगे थे॥ ३२॥ ❀ ❀ भोजवंशी देवककी पुत्री देवकीजी अच्छी तरह हैं न, जो देवमाता अदितिके समान ही साक्षात् विष्णुभगवान्‌की माता हैं। जैसे वेदत्रयी यज्ञविस्ताररूप अर्थको अपने मन्त्रोंमें धारण किये रहती है, उसी प्रकार उन्होंने भगवान् श्रीकृष्णको अपने गर्भमें धारण किया था॥ ३३॥ ❀ ❀ आप भक्तजनोंकी कामनाएँ पूर्ण करनेवाले भगवान् अनिरुद्धजी सुखपूर्वक हैं न, जिन्हें शास्त्र-वेदोंने आदिकारण और अन्तःकरण-चतुष्टयके चौथे अंश मनके अधिष्ठाता बतलाते हैं[3]॥ ३४॥ ❀ ❀ सौम्यस्वभाव उद्धवजी! अपने हृदयेश्वर भगवान्

---

१. राजसूयकृता साम्राज्यलक्ष्मीरर्जुनकृता सेवा च. प्रकाशः। २. आमनस्यात्माभेदस्य—इति पाठः। ३. चित्त, अहंकार, बुद्धि और मन—ये अन्तःकरणके चार अंश हैं। इनके अधिष्ठाता क्रमशः वासुदेव, सङ्कर्षण, प्रद्युम्न और अनिरुद्ध हैं।

श्रीकृष्णका अनन्यभावसे अनुसरण करनेवाले जो हृदीक, सत्यभामानन्दन चारुदेष्ण और गद आदि अन्य भगवान्‌के पुत्र हैं, वे सब भी कुशलपूर्वक हैं न ? ॥ ३५ ॥ ❀ ❀ महाराज युधिष्ठिर अपनी अर्जुन और श्रीकृष्णरूप दोनों भुजाओंकी सहायतासे धर्ममर्यादाका न्यायपूर्वक पालन करते हैं न ? मय दानवकी बनायी हुई सभामें इनके राज्यवैभव और दबदबेको देखकर दुर्योधनको बड़ा डाह हुआ था ॥ ३६ ॥

**किं वा कृताघेष्वघमत्यमर्षी भीमोऽहिवद्दीर्घतमं व्यमुञ्चत् ।**
**यस्याङ्घ्रिपातं रणभूर्न सेहे मार्गं गदायाश्चरतो विचित्रम् ॥ ३७ ॥**
**कच्चिद्यशोधा रथयूथपानां गाण्डीवधन्वोपरतारिरास्ते ।**
**अलक्षितो यच्छरकूटगूढो मायाकिरातो गिरिशस्तुतोष ॥ ३८ ॥**
**यमावुतस्वित्तनयौ पृथायाः पार्थैर्वृतौ पक्ष्मभिरक्षिणीव ।**
**रेमात उद्दाय मृधे स्वरिक्थं परात्सुपर्णाविव वज्रिवक्त्रात् ॥ ३९ ॥**
**अहो पृथापि ध्रियतेऽर्भकार्थे राजर्षिवर्येण विनापि तेन ।**
**यस्त्वेकवीरोऽधिरथो[1] विजिग्ये धनुर्द्वितीयः ककुभश्चतस्रः ॥ ४० ॥**
**सौम्यानुशोचे तमधःपतन्तं भ्रात्रे परेताय विदुद्रुहे[2] यः ।**
**निर्यापितो येन सुहृत्स्वपुर्या अहं स्वपुत्रान् समनुव्रतेन ॥ ४१ ॥**

### श्रीधरस्वामिविरचिता भावार्थदीपिका

कृताघेषु स्वकर्तृकमघं दीर्घतमं बहुकालानु चिंतितमहिवदत्यमर्षी भीमः किं व्यमुंचन्नो वा । गदाया विचित्रं विविधं मार्गं चरतः ॥ ३७ ॥ ❀ ❀ रथयूथपानां मध्ये यशोधाः कीर्तिधारी यद्वा स्वीयानां तेषां कीर्तिप्रदः उपरता अरयो यस्मात् यस्य शरकूटेन बाणसमूहेन गूढ आच्छन्नः ॥ ३८ ॥ ❀ ❀ उतस्विकिंस्वित् यमौ नकुलसहदेवौ रेमाते क्रीडात इत्यर्थः । माद्र्याः सुतावपि पृथायास्तनयौ पृथायाः पुत्रैर्वृतौ सुपर्णाविव रेमाते । किं कृत्वा पराद् दुर्योधनात्स्वरिक्थं स्वीयं राज्यमुद्दाय आच्छिद्य वज्रिवक्त्रादिंद्रस्य मुखात्स्वरिक्थममृतं गरुड इवेति । यद्वा । सुपर्णाविवेति । यदि द्वौ गरुडावमृतमानयेतां तर्हि तद्वत् । अक्षिणीवेति मणीवादिगणत्वात्संधिः ॥ ३९ ॥ ❀ ❀ पृथायाः किं नु कुशलं पृच्छेयम् । यतस्तस्याः पांडुना विना प्राणधारणमेवाश्चर्यमित्याह । अहो इति । ध्रियते जीवति न चात्याश्चर्यम् । यतोऽर्भकार्थे ध्रियते न भोगार्थं तथापि त्वाश्चर्यमेवेत्याह । तेन तथाभूतेन विना । तदेवाह । यस्त्विति । धनुरेव द्वितीयं सहायो यस्य ॥ ४० ॥ ❀ ❀ पृथार्भकार्थे जीवतीति युक्तमेवेत्याह । हे सौम्य तं धृतराष्ट्रं जीवंतमनुशोचामि तत्किं अधः पतंतं तत्र हेतुः परेताय मृताय भ्रात्रे पांडवे तत्पुत्रद्रोहेण यो विदुद्रुहे द्रोहं कृतवान् । किंच जीवतोऽपि भ्रातुर्ममापकृतवानित्याह । येन सुहृद् भ्राताहं स्वपुर्याः सकाशान्निर्यापितो विवासितः ॥ ४१ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

अघं रोषम् 'अघो रोषेऽपि कीर्तितः' इति तीर्थः । किमिति वितर्के अत्यमर्षी अतीवक्रोधी ॥ ३७ ॥ ❀ ❀ कीर्तिधारी बहुरथयूथपजेतृत्वात् । बहुरथयूथपजेतारोऽन्येप्यश्वत्थामादयस्संतीति चेदाह—यद्वेति । तेषां रथयूथपानां स्वयं जित्वा यूथपजयमुद्घोधयतीत्यर्थः ॥ ३८ ॥ ❀ ❀ सुपर्णाविवेति स्वातंत्र्यमाह इत्यर्थ इति । तयोः सौभ्रात्रमस्तीति भावः । गरुड इत्याध्याहारगौरवादाह यद्वेति । दृष्टांते द्वित्वं दार्ष्टांतिकापेक्षम् । अभूतोपमालंकारः । मुखोद्धृतस्योच्छिष्टत्वेन ग्रहणायोग्यत्वेपि सिंहास्यादुद्धृत वास्त्वतिवत् । वज्रिवक्त्रादिति प्रयोगस्तु लौकिकव्यवहारापेक्षः, वस्तुतस्तु इंद्रसमीपात् । यद्वा वज्री वक्त्रं प्रधानं यत्र स वज्रिवक्त्रो देवसमूहस्तस्मात् । 'वक्त्रं मुख्यास्ययोरपि' इति धरणिः, तत्कथमानीतमित्याकांक्षोपशमनायात्र भारतीयं गाथानुसंधेया ।.तथा हि—कद्रूः विनता चैते दाक्षायिण्यौ कश्यपभार्ये कश्यपाद्गर्भं गृहीत्वांडानि सुषुवाते कद्रूर्हि पूर्वमेव स्वीयांडानि विभिद्यात्मजान्सर्पाञ्जालयामास । विनतां प्रति कश्यपेनोक्तं तव अंडे भविष्यतस्ते च सहस्रवर्षादर्वाक्तया न भेत्तव्ये । सा चैवं जानंत्यपि कद्रूपुत्रान्वीक्ष्यैकमंडं विभेद पंचशतवर्षांते तन्मध्यतोऽनूरुर्जातः, स च जातमात्रो मातरं शशाप यतस्त्वयाऽपूर्णांगस्य ममांडं विभिन्नमतस्त्वं दासी भविष्यसीति । किं च द्वितीयं मम भ्रातुरंडं त्वया न भेत्तव्यमवधेः प्राक् । तया तथैव कृतं ततो वर्षसहस्रांते द्वितीयांडाद्गरुडो बभूव स च महाबलयास । किञ्च कदाचित्कद्रूविनतयोर्विवादोऽभूत्—सूर्याश्वपुच्छा हरिद्वर्णाः कृष्ण-

---

१. प्रा. पा. ऽविरथो । २. प्रा. पा. च दुद्रुहे यः ।

वर्णा वेति तत्र विनतयोक्तं हरिद्वर्णाः। कद्र्वा चोक्तं कृष्णवर्णा इति। तत् श्रुत्वा कद्रूरुवाच यदि कृष्णवर्णाः सूर्याश्वपुच्छास्तर्हि त्वं मे दासी भविष्यसि हरिद्वर्णाश्चेत्तर्हि तवाहं दासी भविष्यामीति ताभ्यां पणः कृतः। पुनरन्योन्यं ताभ्यामुक्तं तत्र गत्वा द्रष्टव्यास्ते ततो गमनसमये कद्रूः स्वात्मजान्नागान्प्रोवाच हे पुत्रा यूयं रोमरूपा भूत्वा श्यामीभूय सूर्याश्वपुच्छेषु लग्ना भविष्यथान्यथा सर्वेऽग्नौ धक्ष्यथ मदाज्ञास्वीकारे चाहं विनता दासी न भविष्यामीति ते च तथैव चक्रुः ततस्ते उड्डीय कृष्णवर्णानेव ददृशतुः तदा च विनता कद्रूदासी जाता कदाचिद्गरुडः स्वमातरं नागान्वहंतीं स्वयं च मात्रा सह नागान्वहन् खिन्नः प्रोवाच मातस्त्वं कथं दासी जाता तया स्ववृत्तं यथावदुक्तं गरुडाय सूनवे। स च श्रुत्वोवाच मातरेतां त्वमेव पृच्छ कथं मम दासीत्वं नंक्ष्यति सा च तथैव पप्रच्छ तयोक्तं यदि त्वदात्मजो गरुडः स्वर्गान्मदात्मजार्थममृतमानयेत्तदा ते दासीभावो नंक्ष्यत्यन्यथा नेति तया च तत् श्रुत्वा गरुडायोक्तं स च स्वर्गं गत्वेंद्रादीन्निर्जित्यामृतकलशमानयामास इंद्रश्च गरुडं पप्रच्छ किमर्थं देवभोग्यममृतं मर्त्यलोकं नेष्यसि स उवाच नागार्थं तत इंद्रः प्रोवाच ते तु स्वभावत एव क्रूरा अमृताशनेन ते सर्वे निर्भया जगन्नाशयिष्यंतीति न देयमेतत्तेभ्य इति। ततो गरुड आह मया तत्रामृतं नेतव्यमेव न तेभ्यो दाने हठः किं तु मातृदासीत्वापनयन एव हठोऽतस्त्वया ततः कथंचिदानेयमित्युक्त्वाऽमृतकलशं गृहीत्वा कद्र्वै प्रोवाचैतदमृतकलशमानीतं मया मन्मातुर्दासीत्वं गतं तया त्रिरुक्तं गतमिति। तत इंद्रो नागानमृतपाने प्रवृत्तान्विप्रो भूत्वा प्रोवाच नेदमस्नात्वा दानाद्यकृत्वा च पेयं ते च तच्छ्रुत्वा स्नानार्थं गता इंद्रोऽमृतकलशमादाय स्वर्गं ययाविति सर्वं महाभारते प्रथितम् ॥ ३९ ॥ ❀ ❀ अत्राक्षिपति न चेति। तथापि भोगार्थं विनापि अर्भकार्थे युधिष्ठिरादिबालकपालनार्थं यदि युधिष्ठिरादयो नाभविष्यंस्तदा सा मरिष्यदेवेत्यर्थः। तथाभूतेन पांडुना तदेव तथाभूतत्वमेव। रथमधिरूढोऽधिरथः "द्वितीया तिथिभित्पत्न्योः पूरणे तूभये त्रिपु" इति मेदिनी। 'द्वितीया सहकारिणी' इति च कोशांतरम्। ककुभो दिशः 'दिशश्च ककुभः काष्ठाः' इत्यमरः ॥ ४० ॥ ❀ ❀ धृतराष्ट्रं न शोचामि तदधःपतनं शोचामीति। यद्वा पांडुं न शोचामि सद्गत्यर्हत्वात्। धृतराष्ट्रं शोचामि तद्वैपरीत्यादित्याह—सौम्येति। तच्छोचनं किं कुतः तत्राधःपतनेन केवलं मृतमेव भ्रातरं दुद्रुहेऽपि तु जीवंतमपि मां द्रुग्धवानित्याह—किं चेति। येन धृतराष्ट्रेण प्राचीनतरपुस्तकेषु 'कुपुत्रान्' इति पाठः। समनुव्रतेन सुहृत्—प्रत्युपकारमनपेक्ष्योपकारकर्त्ता, भ्रात्र इति। "क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः" इति सम्प्रदानत्वाच्चतुर्थी ॥ ४१ ॥

## श्रीराधारमणदासगोस्वामिविरचिता दीपिनीव्याख्या

कुरून् तद्विशेषान् पाण्डवादीन् श्रीभगवदन्तर्धाने तेषां पाकस्यासम्भवादनिष्टशंकया पृच्छति तेषां कुशलप्रश्ने दुर्योधनतापकथनस्यानुपयोगमाशंक्य तात्पर्य्यार्थमाह एवंभूतमिति। अत एवेत्यर्थ इत्युक्तम् ॥ ३७ ॥ ❀ ❀ अघं क्रोधजमासक्त्यपरपर्य्यायं व्यसनं अंहो दुःखव्यसनेष्वघमित्यमरः। भीमदुर्योधनमृधस्यानिर्णयात् यस्यांघ्रीत्यनुमानेनैवोक्तम् ॥ ३८ ॥ ❀ ❀ पूर्वार्थे निर्द्धारणषष्ठ्याः पश्चादुपस्थितत्वात्प्रतिपत्तिगौरवमतः कुलदीपकत्वलक्षणं गुणोत्कर्षं वक्तुं यद्वेति। तेषां रथयूथपानां सम्बन्धे कीर्त्तौ स्वत्वध्वंसाभावान्न संप्रदानम् ॥ ३९ ॥ ❀ ❀ पूर्वार्थे गरुड इवेत्यध्याहृतमित्यरुचौ यद्वेति यदीत्युक्त्याऽभूतोपमा व्यञ्जिता ॥ ४० ॥ ❀ ❀ तथाभूतेन महावीरेण अर्भकार्थ इति तदर्थमेव जीवनात् तेषामेव कुशले तस्याश्च कुशलं स्यादिति तदेववदेति भावः ॥ ४१ ॥

## श्रीमद्वीरराघवव्याख्या

एवं यादवानां कुशलं पृष्टमथ पांडवानां तत्पृच्छति अपीति। स्वदोर्भ्यां विजयाच्युताभ्यामर्जुनकृष्णाभ्यां सह धर्मो युधिष्ठिरः धर्मेण वेदशास्त्राविरोधेन सेतुं वर्णाश्रमादिमर्यादां परिपात्यपिस्वित् यत्सभायां यस्य युधिष्ठिरस्य सभायां विजयोऽर्जुनस्तत्कर्तृका या अनुवृत्तिः सेवा तया हेतुभूतया या साम्राज्यलक्ष्मीस्तया दुर्योधनोऽतप्यत यमनुवर्तते विजयस्तमेव साम्राज्यलक्ष्मीरप्यनुवर्तते इति बुद्ध्याऽतप्यतेत्यर्थः ॥ ३७ ॥ ❀ ❀ किं वेति कृताघेषु कृतापराधेषु तत्कृतमघमपराधं कथंभूतं दीर्घतमं बहुकालानुसंचितमहिवदत्यमर्ष्यसहिष्णुर्भीमो व्यमुंचत् किंवा अमर्षमिति शेषः। अमर्षमत्यजत् किं इत्यर्थः। यस्य भीमस्यांघ्रिपातपादघातं रणभूर्न सेहे कथंभूतस्य गदाया विचित्रं मार्गं गतिं चरतः गदां विचित्रं भ्रामयत इत्यर्थः ॥ ३८ ॥ ❀ ❀ कच्चिदिति। रथयूथपानां मध्ये यशोधाः कीर्तिधारकः उपरता निवृत्ता अरयो तस्मात्स उपरतारिर्गांडीवधन्वा आस्ते कच्चित्। यस्य गांडीवधन्वनः शरकूटेन बाणसमूहेन गूढः संवृतः अर्जुनेतरैरलक्षितः मायाकिरातः मायया किरात वेषधरः गिरिशो रुद्रस्तुतोष संतुष्टः ॥ ३९ ॥ ❀ ❀ नकुलसहदेवौ पृच्छति एकेन यमाविति। पार्थैर्युधिष्ठिरभीमार्जुनैः पक्ष्मभिरक्षिणीव वृतौ रक्षितौ अक्षिणीवेति प्रगृह्यत्वाभाव आर्षः पृथायाः कुंत्यास्तनयौ तनयीयंतौ यमौ युगपन्निष्कांतौ नकुलसहदेवौ मृधे युद्धे स्वरिक्थं पराच्छत्रारुद्दाय लब्ध्वा रेमाते उतस्वित् परात्स्वरिक्थलाभे दृष्टांतः वज्रिवक्त्रादिन्द्रमुखात्सुपर्णाविव यदि द्वौ गरुडावमृतमानयेतां तद्वदित्यर्थः अभूतोपमेयम् ॥ ४० ॥ ❀ ❀ पृथायाः कुशलं किं पृच्छेयं यतस्तस्याः पांडुं विना प्राणधारणमेवाश्चर्यं इत्याह अहो इति। तेन प्रसिद्धेन राजर्षिवर्येण पांडुना विनाप्यर्भकार्थेऽर्भकपोषणार्थं पृथा कुंती ध्रियतेऽवतिष्ठते अहो इत्याश्चर्ये। यस्तु

पांडुरेकवीरः असहायवीरः धनुरेव द्वितीयं यस्येत्यतिरथः एवं भूतश्चतस्रः ककुभः दिशः विजिग्ये जितवानेवंभूतेन पांडुना विना पृथाजीवनमप्याश्चर्यमेव ॥ ४१ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली।

धर्मो धर्मपुत्रः। विजयाच्युताभ्यां स्वदोर्भ्यां धर्मेण धर्मशास्त्रमनतिक्रम्य धर्मसेतुं परिपाति किमित्यन्वयः। यस्य युधिष्ठिरस्य सभायां दिग्विजयेनानुवृत्तिरनुगमनं यस्याः सा तथा विजयादर्जुनादनुवृत्तिर्यस्याः सा तथा विजयस्य हरेरनुवृत्तिर्यस्याः सा तथा तया वा श्रीमदादितरेषां धर्मसेतुलंघनं संभाव्य तेनास्य तदस्तीति प्रश्नः तत एव धर्म इति प्रायोजि॥ ३७॥ ❀ ❀ भीमः कृताघेषु दुर्योधनादिषु अघं व्यमुंचत्किं वा ❀पुनरपराधबुद्धिमुक्त्वाऽऽस्ते किं प्रश्ननिमित्तमाह अत्यमर्षीति। तस्य पराक्रममाह यस्येति। अन्घ्रिपाते निमित्तमाह मार्गमिति ॥ ३८॥ ❀ ❀ रथयूथपानां यशोदधातीति यशोधाः यच्छरकूटेन यस्य शरपंजरेण गूढो निलीनः माययेच्छया किरातः गृहीतशंबरवेषः ॥ ३९॥ ❀ ❀ पक्ष्मभिरावृते अक्षिणी इव पार्थैरावृतौ रक्षितौ माद्रयास्तनयौ यमौ वज्रिण इंद्रस्य वक्रात्सुपर्णौ गरुडौ सुधामिव मृधे युद्धे स्ववैरिमुखात् स्वरिक्थं निजराज्याख्यं धनमुद्धृत्य रेमाते उतस्वित् किमित्यन्वयः। सुपर्णाविति दार्ष्टांतिकापेक्षया द्विवचनम् ॥ ४०॥ ❀ ❀ तेन राजर्षिवर्येण पांडुचक्रवर्तिना विना रहितापि ध्रियते पुत्रैरिति शेषः। राजर्षिवर्यत्वं दर्शयति यस्त्विति। चतस्रः चतसृः ॥ ४१॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः।

अघं क्रोधजं व्यसनम्॥ अंहो दुःखव्यसनेष्वघमित्यमरः यस्यांघ्रीत्यनुमानेनैवोक्तम्॥ ३७॥ ३८॥ ❀ ❀ उद्दायेत्यस्य कर्त्तारः पार्था एव वा तथाहि यौ पार्थैर्वृतौ पाल्यमानौ सन्तौ स्वच्छन्दविहारित्वेन सुपर्णाविव रेमाते॥ किं कृत्वा वृतौ परात् स्वरिक्थमुद्दाय॥ कस्मादिव वज्रिणो वज्रहस्तस्य मुखादिवेत्यभूतोपमा उद्दायेत्यत्र उद्धृत्य इति पुण्यारण्यपाठान्तरम्॥ ३९॥ ❀ ❀ सर्वानेव तान् युगपत् पृच्छत् कुन्तीमपि शोचति अहो इति तेषामपि परमसद्गुणानामर्भकाणामर्थे इत्यर्थः। ततश्च तेषामेव कुशलेन तस्याश्च कुशलं स्यादिति तदेव वदेति भावः॥ ४०॥ ❀ ❀ तदेवमजीवन्तं पाण्डुं न शोचामि सद्गत्यर्हत्वाद् धृतराष्ट्रं तु जीवन्तमपि तद्वैपरीत्याच्छोचाम्येवेत्याह सोम्येति॥ ४२॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी।

कृताघेषु कुरुषु स्वकर्त्तकमघं विषमिव वधहेतुं दीर्घतमं बहुकालानुचिन्तितं किं व्यमुञ्चत् नो वा॥ ३७॥ ❀ ❀ रथयूथपानाम्मध्ये यशोधा कीर्त्तिधारी उपरतारिर्विनष्टशत्रुः सन्नास्ते यच्छरसमूहेन गुढ आच्छन्नः॥ ३८॥ ❀ ❀ यमौ नकुलसहदेवौ माद्रयाः सुतावपि पृथाया एव तनयौ पक्ष्मभी रक्षिते अक्षिणी इव पार्थैर्वृतौ अक्षिणी वेति मणीवादिः पराच्छत्रोर्दुर्योधनात्सकाशान्मृधे युद्धे स्वरिक्थं राज्यं उद्दाय आच्छिद्य रे मातेकस्मात्किमाच्छिद्यकाविव वज्रिवक्त्रादिन्द्रस्य मुखात् रिक्थममृतमाच्छिद्य द्वौ सुपर्णाविव उद्दायेत्यस्य कर्त्तार एव पार्था एव वा तथाहि पार्थैर्वृतौ पाल्यमानौ रेमाते किं कृत्वा वृत्तौ परात्स्वरिक्थमादाय कस्मादिव वज्रिणो वज्रहस्तस्य मुखादिव सुपर्णाविवेत्यभूतोपमेयम्॥ ३९॥ ❀ ❀ अहो आश्चर्यमत्र कुशलप्रश्ने मया पृथाऽपि ध्रियते इति तस्या अपि कुशलं ब्रूहीति भावः॥ ननु किमेवं ब्रूषे तत्राह राजर्षिवर्येण पाण्डुना स्वपतिना विनाऽपि अर्भकार्थे युधिष्ठिरादिबालकपालनार्थमेव स्थिता यदि। युधिष्ठिरादयोऽर्भका नाभविष्यंस्तदा सा अमरिष्यदेवेति भावः। यः पाण्डुरेको निस्सहाय एव वीरो धनुरेव द्वितीयं यस्य सः॥ ४०॥ ❀ ❀ धृतराष्ट्रस्यान्धस्य तु कुशलं नैव पृच्छामि किंतु तमधःपतन्तमनुशोचे हे सौम्य उद्धव यः परेताय मृतायापि भ्रात्रे तत्पुत्रद्रोहेण विदुद्रुहे द्रोहं कृतवान् मह्यमपरस्मै भ्रात्रे जीवतेऽपि विदुद्रुहे इत्यहं निर्यापित इति सुवृत्तस्य हितकार्यपि॥ ४१॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः।

इत्थं यादवानां कुशलं पृष्ट्वाऽथ कौरवाणां कुशलं पृच्छति अपीति षड्भिः। यत् यस्य सभायां विजयस्य अनुवृत्त्या सेवया हेतुभूतया या लक्ष्मीस्तया दुर्योधनोऽतप्यत स धर्मो युधिष्ठिरः दोर्भ्यां भुजवदनुकूलाभ्यां विजयाच्युताभ्यां अर्जुनवासुदेवाभ्यां धर्मेण राजशास्त्रोक्तेन धर्ममार्गेण सेतुं पूर्वैः कृतां धर्ममर्यादां अपि किंस्वित् परिपाति॥ ३८॥ ❀ ❀ यस्य गदाया विचित्रं मार्गं चरतो भ्रमतः अंघ्रिपातं रणभूर्न सेहे स अहिवदत्यमर्षी भीमः कृताघेषु गरदानादिभिः कृतापराधेषु दुर्योधनादिषु दीर्घतमं बहुकालात्संकल्पितं स्वकर्तृकमघं किं वाव्यमुंचत्॥ ३८॥ ❀ ❀ मायया आत्मगोपालनलीलया किरातः अत एव लक्षितः अर्जुनेन शिवोयमित्येव ज्ञातः गिरिशः यत् यस्य शरकूटेन बाणसमूहेन गूढः आच्छन्नः तुतोष सरथयूथपानां मध्ये यशोधा कीर्तिधारी उपरता अरयो यस्मात् स तथा आस्ते कच्चित्॥ ३९॥ ❀ ❀ यमौ माद्रेयौ पृथया पालितत्वात्तत्तनयौ पार्थैः युधिष्ठिरादिभिः पक्ष्मभिः अक्षिणीव मणीवादिगणत्वात्संधिः वृत्तौ रक्षितौ परात् शत्रोः सकाशात् स्वरिक्थं स्वयं भागं उद्दाय आच्छिद्य

---

❀ अघशब्दस्य पापपरत्वभ्रान्तिवारणाय तात्पर्यप्रदर्शितार्थमाह

उतस्वित् रेमाते क्रीडेते परात् स्वरिक्थादाने दृष्टांतः सुपर्णाविव वज्रिवक्रादिति । यदि द्वौ गरुडौ इंद्रवक्रादमृतमानयेतां तद्वद्भूतोपपमालंकारः ॥ ४० ॥ ❀ ❀ पृथायाः किं कुशलं पृच्छेयं तस्याः भर्तृविहीनायाः जीवनमप्याश्चर्यमित्याह अहो इति । य एकवीरः असहायः धनुरेव द्वितीयं सहायो यस्य सः चतस्रः ककुभो विजिग्ये जितवान् एवंभूतेन तेन पांडुना विनापि पृथा अर्भकार्थे पुत्रपालनार्थं पुत्रपालनव्याजेन अहो इत्याश्चर्यं म्रियते जीवति ॥ ४१ ॥

## श्रीमद्वल्लभाचार्यविरचिता सुबोधिनीव्याख्या

भीमं पृच्छति किं वेति । कृतापराधेषु अमर्षी भीमोऽघमतिः[1] किमिति प्रश्नः । अघमत्या अमर्षी किमिति वा । अघमतिः पापमतिर्मारक इत्यर्थः । अघमत्या मारयिष्यामीति बुद्ध्या । अघमपराधं दण्डरूपम्, अत्यमर्षी भीम इति वा । अत्यमर्षित्वे दृष्टान्तः । दीर्घतमं दीर्घकालचिन्तितम्, पुत्रादिपरम्पराविषयमपि वा । अनेन प्रतिज्ञा भीमेन पालिता न वा, अर्जुनेन वा ते मारिताः ? इति प्रश्नः । अशक्यं तु तस्य नास्तीत्याह यस्येति । यस्य भीमस्याङ्घ्रिपातं रणभूः कर्कशाऽपि न सेहे सोढुमशक्ता । अङ्घ्रेः पात उत्प्लुत्य पतनात्मकः । तस्याऽवसरमाह–मार्गं गदायाश्चरत इति । गदाया विविधशिक्षाप्रकारं कर्तुं चरतः । गदायुद्ध एव उत्प्लुत्यादिप्रकाराः ॥ ❀ ❀ अर्जुनं पृच्छति—कच्चिदिति । रथयूथपानां यशोधा यशोधारकः । यशोहेति पाठे सर्वेषां यशो दूरीकरोतीति । तत्र सामर्थ्यं गाण्डीवधन्वेति । यशोधाः कीर्तिधारी । सर्वेषां कीर्तिं तन्मारणेन स्वयमेव बिभर्त्तीति तथा, तन्मध्ये वा । अनेन स्वतः परतश्च सामर्थ्यं सूचितम् । गाण्डीवधन्वेति तस्य त्रिषु लोकेष्वप्यरीणां विद्यमानत्वात् । उपरतारिर्जातो न वेति प्रश्नः । सामर्थ्यमाह—अलक्षित इति युद्धसम्बन्धार्थम् । मायाकिरातः, अत एवाऽलक्षितः । अत एव यच्छरकूटेन आच्छन्नः । एतादृशसामर्थ्यवतो जये विलम्बकारणं नास्ति, प्रतियोगिप्राप्त्यभावव्यतिरेकेण । अतः संदेहः, किं सर्वे प्रतियोगिनः प्राप्ता न वेति ? ॥ ३८ ॥ ❀ ❀ यमौ पृच्छति—यमाविति । मातृभ्रातृसंमाननशत्रुजयसन्देहाभावेऽपि स्वतो रमणमस्ति नवेति सन्देहात्पृच्छति । माद्रीपुत्रावपि पृथायां समर्पणात्तत्पुत्रौ । परात् उद्दाय आच्छिद्य । सुपर्णाविवेति सम्भावनया गरुडदृष्टान्तः । वज्रिवक्त्रादिति पीयमानमप्यमृतमाच्छिद्य नेतुं समर्थौ यथा गरुडौ । परादिति वैकल्पिकः, छान्दसो वा । तेन शत्रुं जित्वा अजित्वा वा धनमानयत इति ज्ञापितम् ॥ ३९ ॥ ❀ ❀ कुन्तीं पृच्छति—अहो इति । पृथाऽपि म्रियते अर्थात् प्राणान् । अथवा, अर्भकश्च अर्थश्च अर्भकार्थे । छान्दसो नपुंसकभावः । तेन राजर्षिवर्येण पाण्डुना विनाऽपि । भर्त्रा सहितावेव धनपुत्रौ रक्षणीयौ, तदभावेऽपि रक्षणादाश्चर्यम् । तस्य सामर्थ्यमाह—यस्त्वेकवीर इति । यस्य सहायापेक्षाऽपि नास्ति शत्रुजये । वीर इति स्वयमेव युद्धकर्ता । अधिरथ इति रथवद्भ्यः सर्वेभ्य एवाऽधिकः । चतस्रः ककुभो विजिग्ये विजितवान् । सहायो धनुरेव, अन्यथा मन्त्रादिना सिद्ध्या वा जयः सिद्धो भवेत्, तच्च नाश्चर्यकारि । अत उक्तं धनुर्द्वितीय इति ॥ ४० ॥ ❀ ❀ एतावता कालेन पूर्वं येषु येष्वनुरागः स्थितः स सर्वोऽप्युक्तः । साम्प्रतं द्वेषमनुवदति । तत्र प्रथमं धृतराष्ट्रं शोचति—सौम्यानुशोच इति । सौम्येति संबोधनं मित्रत्वज्ञापनाय । अन्यस्य स्थाने अवक्तव्यं न वक्तव्यमिति, स एव स्वयमधः पतन् शोचति । तमन्वहमपि शोचामि । शोके हेतुः—अधः पतन्तमिति । पाते हेतुः—भ्रात्रे परेताय च दुद्रुहे इति । जीवदशायामप्यपकृतः । मरणानन्तरमपि तत्पुत्रद्रोहेणाऽपकृतः । जीवन् भ्राताऽहमप्यपकृत इत्याह—निर्यापित इति । मया त्वपकारो न कृत इत्याह–सुहृदिति । स्वनगरादेवाऽहं निर्यापितः । पुत्रद्वाराऽपि कृतं स्वकृतमेव, यतः पुत्रान् स्वयमनुसृतः । एवं जीवन्मृतभ्रातृद्रोहादधः पातः । शोचे इतीदानीमपि शोचामि । तत्र कारणमस्ति नवेति प्रश्नः । एवमपकृतगृहे स्थित्वा जीवतीति ॥ ४१ ॥

## श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

किं वेत्यत्र । अघमतिपदं 'सुपां सुलुक्' इत्यनेन लुप्तविभक्तिकमित्याशयेनाहुः—अघमतिः किमिति ॥ ३७ ॥ ❀ ❀ अहो इत्यत्र । म्रियत इत्यत्र विकरणव्यत्ययमभिप्रेत्याहुः—अर्थात्प्राणानिति ॥ ४० ॥

## श्रीगिरिधरकृता बालप्रबोधिनी

भीमः कृताघेषु कृतापराधेषु कौरवेषु दीर्घतमं बहुकालानुचिन्तितं स्वकर्तृकमघं दण्डं किं वा कच्चित् व्यमुञ्चत्, नो वा ? । दण्डप्रदाने हेतुमाह—अहिवदत्यमर्षी असहिष्णुः । अशक्यमपि तस्य नास्तीत्याशयेन विशिनष्टि—यस्येति । गदायाः विचित्रं गदां भ्रामयतो यस्याङ्घ्रिपातं पादाघातं रणभूर्न सेहे इत्यन्वयः ॥ ३७ ॥ ❀ ❀ गाण्डीवधन्वा अर्जुनः उपरताः निर्वृत्ताः अरयो यस्मात् तथाभूतः सन् कच्चिदास्ते ? । तस्यारिसंहारे तु सामर्थ्यमस्तीत्याशयेन विशिनष्टि—रथयूथपानां यशोधा इति, स्वपरसैन्यस्थानां रथयूथपानां मध्ये यशोधाः कीर्तिधारक इत्यर्थः, यद्वा स्वसैन्यस्थानां रथयूथपानां परसैन्यसंहारेण यशःप्रद इत्यर्थः । मनुष्यविजये तस्य सामर्थ्यमस्तीति किं वक्तव्यं यतस्तेनेश्वरोऽपि युद्धे विस्मापित इत्याशयेनाह—अलक्षित इति । यस्यार्जुनस्य शरकूटेन बाणसमूहेन गूढः संवृतो रुद्रस्तुतोष सन्तोषं प्रापेत्यर्थः ॥ ३८ ॥ ❀ ❀ पार्थैः युधिष्ठिरभीमार्जुनैः

---

१. अघमतिपदं 'सुपां सुलुक्......' इत्यनेन लुप्तविभक्तिकमित्याशयेनाहुः—अघमतिः किमिति. प्र. ।

पक्ष्मभिरक्षिणी इव वृतौ सुरक्षितौ माद्रीतनयत्वेऽपि पृथायां समर्पणात् पृथायास्तनयौ यमौ युगपज्जातौ नकुलसहदेवौ उत अपि मृधे युद्धे शत्रुं विजित्य परात् शत्रोः सकाशात् स्वरिक्थं स्वधनमुद्दाय उतस्वित् कच्चित् सुखं रेमाते इत्यन्वयः। शत्रोः स्वरिक्थादाने दृष्टान्तमाह—सुपर्णाविवेति। वज्रिवक्त्रात् इन्द्रमुखात् सुपर्णाविव, यथा द्वौ गरुडावमृतमानयेतां तद्वदित्यर्थः। अक्षिणीवेति सन्धिरार्षः। मणीवादिगणस्थवत्सन्धिर्बोध्यः॥ ३९॥ ❀ ❀ पृथायाः कुशलं तु किं पृच्छेयं यतस्तस्याः पाण्डुं विना प्राणधारणमेवाश्चर्यमित्याह—अहो इति। तेनातिरथतया प्रसिद्धेन राजर्षिवर्येण पाण्डुना विनाऽपि अर्भकार्थे बालानां पोषणार्थं पृथा कुन्ती म्रियते अवतिष्ठते अहो आश्चर्यम्। उक्तमेव स्पष्टयति—यस्त्वतिरथः एकवीरः असहाय एव धनुरेव द्वितीयं सहायो यस्य सः चतस्रः ककुभो दिशो विजिग्ये जितवान्॥ ४०॥ ❀ ❀ हे सौम्य प्रियदर्शन परेताय परलोकं गताय भ्रात्रे पाण्डवे यो विदुद्रुहे तत्पुत्रद्रोहकरणेन तस्यैव द्रोहं कृतवान्। येन च स्वपुत्रान् दुर्योधनादीन् सम्यगनुव्रतेन स्वपुत्रवशवर्तिना सुहृत् हितोपदेष्टाऽहं भ्राता जीवन्नेव स्वपुर्याः सकाशान्निर्यापितो निस्सारितस्तमेवं दुराचारमधो नरके पतन्तं धृतराष्ट्रमनुशोचे इत्यन्वयः॥ ४१॥

हिन्दी अनुवाद

अपराधियोंके प्रति अत्यन्त असहिष्णु भीमसेनने सर्पके समान दीर्घकालीन क्रोधको छोड़ दिया है क्या? जब वे गदायुद्धमें तरह-तरहके पैंतरे बदलते थे, तब उनके पैरोंकी धमकसे धरती डोलने लगती थी॥ ३७॥ ❀ ❀ जिनके बाणोंके जालसे छिपकर किरातवेषधारी, अतएव किसीकी पहचानमें न आनेवाले भगवान् शङ्कर प्रसन्न हो गये थे, वे रथी और यूथ-पतियोंका सुयश बढ़ानेवाले गाण्डीवधारी अर्जुन तो प्रसन्न हैं न? अब तो उनके सभी शत्रु शान्त हो चुके होंगे?॥ ३८॥ ❀ ❀ पलक जिस प्रकार नेत्रोंकी रक्षा करते हैं, उसी प्रकार कुन्तीके पुत्र युधिष्ठिरादि जिनकी सर्वदा सँभाल रखते हैं और कुन्तीने ही जिनका लालन-पालन किया है, वे माद्रीके यमज पुत्र नकुल-सहदेव कुशलसे तो हैं न? उन्होंने युद्धमें शत्रुसे अपना राज्य उसी प्रकार छीन लिया, जैसे दो गरुड़ इन्द्रके मुखसे अमृत निकाल लायें॥ ३९॥ ❀ ❀ अहो! बेचारी कुन्ती तो राजर्षिश्रेष्ठ पाण्डुके वियोगमें मृतप्राय-सी होकर भी इन बालकोंके लिये ही प्राण धारण किये हुए है। रथियोंमें श्रेष्ठ महाराज पाण्डु ऐसे अनुपम वीर थे कि उन्होंने केवल एक धनुष लेकर ही अकेले ही चारों दिशाओंको जीत लिया था॥ ४०॥ ❀ ❀ सौम्यस्वभाव उद्धवजी! मुझे तो अधःपतनकी ओर जानेवाले उन धृतराष्ट्रके लिये बार-बार शोक होता है, जिन्होंने पाण्डवोंके रूपमें अपने परलोकवासी भाई पाण्डुसे ही द्रोह किया तथा अपने पुत्रोंकी हाँ-में-हाँ मिलाकर अपने हितचिन्तक मुझको भी नगरसे निकलवा दिया॥ ४१॥

सोऽहं हरेर्मर्त्यविडम्बनेन दृशो नृणां चालयतो विधातुः।
नान्योपलक्ष्यः पदवीं प्रसादाच्चरामि पश्यन् गतविस्मयोऽत्र॥ ४२॥
नूनं नृपाणां त्रिमदोत्पथानां महीं मुहुश्चालयतां चमूभिः।
वधात्प्रपन्नार्तिजिहीर्षयेशोऽप्युपैक्षताघं भगवान् कुरूणाम्॥ ४३॥
अजस्य जन्मोत्पथनाशनाय कर्माण्यकर्तुर्ग्रहणाय पुंसाम्।
नन्वन्यथा कोऽर्हति देहयोगं परो गुणानामुत कर्मतन्त्रम्॥ ४४॥
तस्य प्रपन्नाखिललोकपानामवस्थितानामनुशासने स्वे।
अर्थाय[1] जातस्य यदुष्वजस्य वार्तां सखे कीर्तय तीर्थकीर्तेः॥ ४५॥

**इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां तृतीयस्कन्धे विदुरोद्धवसम्वादे प्रथमोऽध्यायः**

**श्रीधरस्वामिविरचिता भावार्थदीपिका।**

अहो खलु विस्मयः जानतोपि तस्यैवं दुश्चेष्टितं यतस्त्वं साधुरपि दुःखं प्रापितोऽसीत्यत आह। सोऽहं हरेः प्रसादात्तस्य पदवीं माहात्म्यं पश्यन् गतविस्मयोऽत्र भूतले नान्योपलक्ष्यो गूढः सन् सुखं विचरामि। कथंभूतस्य मर्त्यविडंबनैश्वर्याच्छादकेन मानुष्यानुकरणेन नृणां दृशश्चित्तवृत्तीश्चालयतो भ्रामयतः॥ ४२॥ ❀ ❀ ननु हरेः किमेवं लीलया येन स्वभक्तानां वनवासादिक्लेशा भवंति स्वस्य च दौत्ये बंधनोद्यमादिपराभवस्तद्वरं तेषामपराधानंतरमेव हननं नापराधोपेक्षेत्यत आह। नूनं निश्चितं त्रिभिर्मदैरुत्पथानामुद्धतानां वधाद्धेतोः प्रपन्नानामार्तिजिहीर्षयेशोधसमय एव हंतुं समर्थोऽपि कुरूणामघमुपैक्षत। तदानीमेव तेषां वधे सर्वदुष्टराजवधो न स्यादित्याशयेनेत्यर्थः। "विद्यामदो धनमदस्तथैवाभिजनो मदः॥ एते मदा मदांधानां त एव हि सतां दमाः" इति त्रयो मदाः॥ ४३॥ ❀ ❀ सर्वदुर्वृत्तवधायर्थमेव भगवतो जन्मकर्माणि नान्यथेति कैमुत्य-

---

१. प्रा० पा० अथोपजातस्य।

न्यायेनाह । अजस्यापि जन्म अकर्तुरपि कर्माणि पुंसां ग्रहणाय कर्मसु प्रवृत्तये अन्यथा न चेदेवं तर्हि भगवतो जन्मादिकथा तावदास्ताम् । को वान्योऽपि गुणानां परो गुणातीतो देहयोगं कर्मविस्तारं वाऽर्हतीति ॥ ४४ ॥ ❀ ❀ तस्मादेवंभूताचिंत्य-मायाविनोदस्य कथां कथयेत्याह । तस्य प्रसन्ना येऽखिललोकपालास्तेषामन्येषां च स्वीयेऽनुशासने स्थितानामर्थाय प्रयोजनाय यदुषु जातस्य तीर्थं संसारतारिणी कीर्तिर्थस्येति ॥ ४५ ॥

**इति श्रीभागवते तृतीयस्कंधे टीकायां प्रथमोऽध्यायः ।**

**श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः ।**

तस्य धृतराष्ट्रस्यैवं दुश्चेष्टितम् । तिरस्कृतिनिष्कासनादिरूपं तस्य हरेः पदवीं चरणन्यासवर्त्म चरणौ च पश्यन्निति विश्वनाथः । हरेः पदवीं निवृत्तिमार्गमिति तीर्थः । पद्भ्यामवति यतः सा पदवी माया तां "मामेवं ये प्रपद्यन्ते मायामेतां तरंति ते" इति श्रीमुखोक्तेः । भगवता मम हस्तिनापुरतो निष्कासनं धृतराष्ट्रव्यवहारावेशनिवृत्तिपूर्वकं स्वस्मिन्नावेशाय कृतमिति पश्यन् । गतविस्मयो नष्टसंदेहः प्राप्ताश्चर्यो वा ॥ ४२ ॥ ❀ ❀ उपेक्षा औदासीन्यम् । इत्यर्थ इति । एते दुर्योधनादयः । स्वसदृशान्सर्वान्स्वेषु संगमयिष्यंति ततो वधार्थं पृथक्पृथगन्वेषणापेक्ष्यैकत्र संगतान् हनिष्यामीति भावः । आभिजनः परिजनः पुत्रभ्रातृसुहृन्मित्रसैन्यादिरिति यावत् ॥ ४३ ॥ ❀ ❀ अन्यथा लोकसंग्रहाभावे परमानंदस्वरूपस्य भगवतः कर्मकरणं न संपद्यते "यदि ह्यहं न वर्त्तेयं जातुकर्मण्यतंद्रितः । मम वर्त्मानुवर्त्तंते मनुष्याः पार्थ सर्वशः" इति गीतासूक्तेः । मूले ननु इति च्छेदेन पदद्वयं वोध्यं नेत्यस्यान्यथेत्यनेन संवंधः । वितर्कार्थस्य नुपदस्यार्थश्चेदेवं तर्हीति । यद्वा । पुंसां सर्वेषां ग्रहणाय स्वस्मिन्नाकर्षणाय "यल्लीलां मृगपतिरादेदेऽनवद्यामादातुं स्वजनमनांस्युदारवीर्यः" इति संदर्भकारः । विश्वनाथस्तु पुंसां मुक्तमुमुक्षु-विषयिणां सर्वेषां ग्रहणाय 'निवृत्ततर्षैरुपगनीयमानात्' इत्याद्युक्तेः । उत्पथानां वेदमार्गाननुयायिनां नाशनाय यद्वोत्पथो नरकादि-स्तन्नाशनाय मोक्षाय गुणातीतो ब्रह्मनिष्ठः । यद्वा न त्वन्यथेति यथा जीवानां स्वकर्माधीनो देहयोगस्तथा नेत्यर्थः । देहो उतेति वार्थे इत्यभिप्रेत्याह—कर्मविस्तारं वेति । कर्मतंत्रं देहयोगं नार्हतीत्युक्त्या वस्तुतः परमेश्वरस्य मायया योगासंभवात् । चिदानंद-घनोकर्मतंत्रस्तस्य देहो युज्यत एवेति लक्ष्यते ॥ ४४ ॥ ❀ ❀ यतः श्रोतृवक्तृजनसंसारहारिणी तत्कथा तस्माद्धेतोः तस्याजस्य वस्तुतो जन्मरहितस्य तीर्थकीर्त्तेरिति भगवद्यशोरूपगंगाप्रवाहे मां स्नापयेति भावः ॥ ४५ ॥

**इति श्रीभागवतभावार्थदीपिकाप्रकाशे तृतीयस्कन्धे प्रथमोऽध्यायः ॥ १ ॥**

**श्रीराधारमणदासगोस्वामिविरचिता दीपिनीव्याख्या ।**

धृतराष्ट्रं जीवन्तमिति अजीवन्तमपि पाण्डुं न शोचामि संगत्यर्हत्वादिति सूचितम् ॥ ४२ ॥ ❀ ❀ माहात्म्यं जानतोपि धृतराष्ट्रस्य स्वमायया व्यामोहकत्वं गतविस्मय अहो भगवन्मायायां किमशक्यमिति विगताश्चर्य्यस्सन् अत्रेदं तत्वं दुर्योधननिस्सारणसमयो विदुरेण विचारितम् अहो भगवद्विमुखसङ्गदुष्टेन मया सहसा भगवदभिगमनेत्रपासागरे कथं मज्ज्यते ? दुस्सङ्गप्रायश्चित्तात्मकतीर्थयात्राव्रतादिकमेव कर्त्तव्यं किंतु तद्वियोगाधिः कथं सोढव्य इति विकलो भूत्वा हे पार्थ सखे हे दीनदयालो भक्तवत्सल हा हन्त त्वद्वियोगविषज्वालया ज्वलन्ति दिनानि कथं नयामि इति फूत्कृत्य मुहू रुरोद तदा प्रत्यक्षीभूय भगवतोक्तं भो पाण्डवप्राणरक्षक भो मद्भक्तपक्षपातिन् भो दुस्सङ्गदोषगन्धशून्य मत्प्रियपितृव्य विदुर मद्विरहेण किमित्येवं खिद्यसि यत्र त्वं यास्यसि तत्रैव तीर्थे त्वदग्रे चलन् संवदन् आत्मानं दर्शयन्नहमपि तीर्थयात्रां करिष्यामि मा खिदेति भगवता वरो दत्त इत्यनुमीयते अन्यथा यदि मात्रगमने मूर्छा तादृशानां स्यात् अत एव दुर्योधनवधानन्तरं युधिष्ठिरराज्यप्राप्तिं श्रीकृष्णस्यैव तत्र स्वाराज्यं श्रुत्वापि साक्षात्तद्दर्शनानन्दमत्तेन तेन नायातम् अन्यथावश्यमायास्यतैव किन्तु मौसललीलान्ते प्रपञ्चाद्भगवदतर्द्धाने विदुरनेत्रादप्यंतर्धानमिति ज्ञायते इति तदवधिविदुरस्य वैकल्यमत एव प्रसादात्तादृशवरलक्षणात् पदवीं चरणविन्यासवर्त्मेत्यपि व्याख्येयम् ॥ ४३ ॥ ❀ ❀ येन लीलाप्रकारेण तत्तस्मात् तदानीमेव अपराधानंतरमेव तेषां कुरूणाम् ॥ ४४ ॥ ❀ ❀ दुर्वृत्ताः दुराचाराः आदिना सुकर्मप्रवृत्तेर्ग्रहः अन्या० जीववत्कर्मपारतन्त्र्येण अजस्य प्राकृतजन्मरहितस्यापि जन्माविर्भावभात्रं अकर्तुः अपूर्त्तस्य निज-पूर्त्यर्थं चेष्टाकर्म तद्रहितस्यापि कर्माणि स्वरुपानन्दोल्लासमयानि चेष्टितानि कर्मसु सदाचारेसु प्रवृत्तये शिक्षणायेत्यानुषङ्गिकं प्रयोजनं वस्तुतस्तुग्रहणाय० स्वस्मिन्मनस आकर्षणाय न चेदेवं यदि दुर्वृत्तवधादिप्रयोजनं न स्यात् अन्योपि पार्षदादिरपि देहेन्द्रियादि-शून्यानामित्युक्तेर्गुणातीतः देहयोगं प्राकृतपित्रादिचर्मधातुप्रवेष्टवद्देहसम्बन्धं प्राकृतविषयविषार्थं कर्मविस्तारं च कोऽर्हति किमुत भगवानित्यर्थः । तस्माद्भगवतस्तद्भक्तानां च जन्मकर्माणि परमालौकिकानि स्वरूपशक्तेर्विलासरूपाण्येवेति भावः ॥ ४४ ॥ ❀ ❀ यस्मात्परमालौकिकान्येव तस्य जन्मकर्माणि तस्मात् एवं भूताजत्वेपि अकर्त्तत्वेपि वास्तवजन्मकर्मप्रकाशिका अतएवाचिन्त्या या माया स्वरूपशक्तिस्तया विनोदः क्रीडा यस्य तस्य जन्मादिकथां कथयेत्याह तथा च वियोगाब्धौ पतितस्य ममेदानीं तस्य जन्मादि-कथैव निस्तारिणीति भावः ॥ ४५ ॥

**इति श्रीमद्भागवते तृतीयस्कन्धे दीपिकादीपने प्रथमोऽध्यायः ॥ १॥**

### श्रीमद्वीरराघवव्याख्या

धृतराष्ट्रमनुशोचति हे सौम्य उद्धव परेताय परलोकं गताय भ्रात्रे पांडवे यो दुद्रुहे तत्पुत्रेभ्यो द्रोहकरणेन तस्मा एव द्रोहं कृतवानित्यर्थः । अतएवाधः नरके पतंतं धृतराष्ट्रमनुशोचे येन धृवराष्ट्रेण सुहृन्मित्रमहं पुर्याः निर्यापितः येन कथंभूतेन स्वस्य पुत्रान् दुर्योधनादिन्सम्यगनुव्रतेन स्वपुत्रानुसारिणेत्यर्थः ॥ ४२ ॥ ❀ ❀ एवं यादवपांडवकौरवाणां कुशलं पृष्ट्वा स्वप्रस्थान-प्रकारमाह स इति । सोहं तेन निर्यापितोहं मर्त्यविडंबनेनैश्वर्याच्छादकमर्त्यानुकारेण नृणां दृशे दृष्टीश्चित्तवृत्तीः ताश्चालयतः भ्रामयतः विधातुर्जगन्नियंतुर्हरेः श्रीकृष्णस्य प्रसादादनुग्रहात्पदवीं विभूतिं जगत्पश्यन्नत एव गतविस्मयः विवृत्ताश्चर्यः अत्र भूतले नान्यो-पलक्ष्यः प्रच्छन्नश्चरामि ॥ ४३ ॥ ❀ ❀ नन्वयं श्रीकृष्णो विधाता भक्तानुग्रहीता चेति किमिति पार्थान् स्वभक्तान् नानुजग्राह किमिति वा कौरवान्स्वस्मिन् द्वेषिणो न निगृहीतवानित्यत आह नूनमिति । त्रिमदः अभिजनवित्तविद्यामदः यद्वा धनैश्वर्य-सौन्दर्य्याणां मदः तेनोत्पथानां उद्धतानां च भूमिः सेनाभिः महीं पुनश्चालयतां नृपाणां बाधाद्धेतोः प्रपन्नानां पांडवानामार्त्ते पीडाया जिहीर्षया हर्त्तुमिच्छया ईशोप्यद्य समय एव हेतुं समर्थोपि भगवान् कुरूणामघमपराधमुपैक्षत तदानीमेव तेषां वधो असज्जन-राजन्यवधो न स्यादित्याशयेन प्रतीक्षितवानित्यर्थः । नूनं निश्चितम् ॥ ४३ ॥ ❀ ❀ ननु जगन्नियंतुर्भगवतः किं मर्त्त्यविडंबनेन प्रयोजनमित्यत आह अजस्येति । अजस्य कर्मायत्तोत्पत्तिरहितस्य जन्म अकर्मायत्ताप्राकृतच्छैच्छिकदिव्यविग्रहरूपं जन्म उत्पथानां नाशाय कर्त्तुः कर्माधीनकारणायत्तव्यापाररहितस्य कर्माणि पुंसां ग्रहणाय लोकसंग्रहायेत्यर्थः । अन्यथा दुःकृतविनाशाद्यर्थं जन्मादिकं न चेत्तर्हि हे उद्धव गुणानां सत्वादीनां परः नियंता गुणवश्य इत्यर्थः । देहं कर्मकृतं देहं कर्मतंत्रं कर्मविस्तार च कोऽर्हति अतो न कर्मायत्त जन्मकर्मादिकं अपितूत्पथनाशाद्यर्थमित्यर्थः । एवं साधुपरित्राणाद्यर्थमवतीर्णस्याश्रितवात्सल्यजलधेः वार्त्तां कथयेति उपसंहरति तस्येति । स्वस्वकीयेऽनुशासने आज्ञायामास्थितानामाज्ञानुल्लंघिनामित्यर्थः । प्रपन्नायेऽखिललोकपाला इन्द्रादयस्तेषामर्थाय प्रयोजनाय यदुषु जातस्यावतीर्णस्याजस्य कर्मायत्तोत्पत्तिशून्यस्य तीर्थकीर्तेः पवित्रकीर्त्तेः तस्य भगवतः श्रीकृष्णस्य वार्त्तां वृत्तांतं हे सखे उद्धव कीर्त्तय कथय ॥ ४५ ॥

इति श्रीमद्भागवतमहापुराणे तृतीयस्कंधे श्रीमद्वीरराघवाचार्य्यकृतटीकायां प्रथमोध्यायः ॥ १ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

परेताय मृताय भ्रात्रे पांडवे क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोप इति चतुर्थी सुहृत्प्रत्युपकारकर्त्ता ॥ ४२ ॥ ❀ ❀ विधातुः कृष्णस्य पदवीं निवृत्तिमार्गं चरामि पश्यन् संसारिणां क्लेशमिति शेषः ॥ ४३ ॥ ❀ ❀ ननु कंसादिवधवत्कुरूणां हननं झटिति किमिति न कृतं न कारितं चेत्याशंक्य प्रयोजनांतरसद्भावादुपेक्षितमित्याशयेनाह नूनमिति । भगवान्कुरूणामघम-पराधमुपैक्षत नूनमुपेक्षितवानिति तर्कयामि तर्कनिश्चययोर्नूनमिति यादवः । तद्धननासामर्थ्यान्नेत्यत उक्तं ईशो हीति । तर्हि किन्नि-मित्तमिति तत्राह नृपाणामिति । त्रिमदाद्विद्याधनाभिजननिमित्तान्मदादुत्पथानां संतपंथानमपहाय वर्तमानानां च भूमिरनेकाक्षौ-हिणीगणिताभिर्मुहुर्महीं चालयतां नृपाणां कंसादीनां वधाद्धेतोः तद्वधप्राथम्येपीदं निमित्तमित्याह प्रपन्नेति । प्रपन्नानां देवा-वताराणां वसुदेवादीनामार्तिं जिहीर्षयाऽसह्यदुःखहरणेच्छाया कारणेन अनेन हरेः प्रवृत्तिर्भक्ताभीष्टानुसारिणीति दर्शितं भवति ॥ ४४ ॥ ❀ ❀ भक्ताभीष्टं च भूभारायितदुष्टजननिधनं यत्तदेवतावतारप्रयोजनमिति भावेनाह अजस्येति । अजस्य विष्णो-र्जन्मावतारः उत्पथनाशनाय कंसादिनिधनाय प्रयोजनांतरं चास्तीत्याह कर्माणीति । फलमनुसन्धायाकर्तुः स्वत एव सृष्ट्यादेः कर्तुर्हरेः कर्माणि जगत्सर्जनादिलक्षणानि पुंसां शरणागतानां ग्रहणाय श्रवणमननादिरूपजिज्ञासायै हरिः कर्ताप्यकर्तेति फलाभावेन भण्यत इति । बालवल्लीलार्थं देहं गृह्णातीति किं न स्यादितीमं पक्षमाक्षिपति नत्विति । अन्यथा भक्तजनग्रहणादिकमंतरेण स्वप्रयो-जनमपेक्ष्य नैव कुतः । असंभवात् तथा हि कः पुरुषः शुक्रशोणितसंपृक्तदेहं प्रत्यर्हति न कोऽप्यर्हति हरिरर्हतीति नेत्याह पर इति । गुणानां सकाशात्परस्तदतीतत्वेनोत्तमः गुणसंसर्गोऽपि नास्तीति गुणानामिति षष्ठी । सदेह इति हरेर्देहित्वप्रतीतेः कोर्हतीति कथ-माक्षिप्यते इत्यत उक्तं कर्मेति । मनुष्यादिदेहयोगाद्यसंभवेपि देवादिशरीरयोगः स्याद्वेत्यत उक्तं उतेति । उतात्यर्थविकल्पयोरिति विकल्पोऽपि न घटत इत्यर्थः । न देहयोगादिजनिर्विष्णोर्व्यक्तिजनिः स्मृतेर्निर्विशेषवचनाच्च देहे योगांगीकारपक्षो गर्हित इति भावः किंबहुनोक्तेनेति विदुरः स्वाभीष्टं वक्ति तस्येति ॥ ४५ ॥

इति श्रीमद्भागवतमहापुराणे तृतीयस्कंधे श्रीमद्विजयध्वजकृतटीकायां प्रथमोऽध्यायः ॥ १ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

अहन्तु तत्सङ्गत्यपि भगवत्प्रसादान्न तादृशाज्ञानवान् । अतस्तत्सङ्गं त्यक्त्वा तद्वार्त्ताश्रवणेऽपि निर्विण्णः सन् लोकेष्वा-त्मानं गोपयंश्चरामीत्याह सोऽहमिति । गतविस्मयः गतसन्देहः । अथ विदुरस्य श्रीकृष्णे परमपरायणस्यापि व्यवहारमात्रदृष्ट्या

श्रीकृष्णपरित्यागेन यावज्जीवं दूरगमनमिदं श्रीकृष्णेनैव कारितमिति लक्ष्यते तच्च धृतराष्ट्रादिव्यवहारावेशपरित्याजनाय स्वैकमात्रवेशाय च पश्चात्तापं सम्पादयितुमिति अतः पूर्वं यो विदुराभिप्रायो व्याख्यातः सोऽपि तदिच्छयैव जात इति ज्ञेयम् ॥ ४२॥ ४३ ॥ ❀ ❀ अजस्य जन्मेत्याविर्भावमात्रं तदित्यर्थः। अकर्त्तुः कर्म्माणीति स्वैरलीला इत्यर्थः। पुंसां सर्वेषां ग्रहणाय स्वस्मिन्मनस आकर्षणाय। यथोक्तं पञ्चमे। यल्लीलां मृगपतिराददेऽनवद्यामादातुं स्वजनमनांस्युदारवीर्य इति। अतो देहयोगमिति पितृत्वेन स्वीयक्रियमाणानां देहेष्वाविर्भावमात्रमित्यर्थः। गुणानां परः कः पार्षदादिरपि ॥ ४४ ॥ ❀ ❀ हन्त हन्त सा दुर्वार्त्ता मया प्रभासे श्रुतैव तदाप्युत्तरमददानेऽपि त्वयि प्रत्यवयवं यत् स्पृष्टं तत् खलु विलपितमेव तस्माज्जन्मादिलीलामेव तद्विस्मरणाय श्रोतुमिच्छामीत्याह तस्येति ॥ ४५ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे प्रथमोऽध्यायः ॥ १ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

किञ्च। मयि तस्य द्रोहो न ममापकारकोऽभूत् प्रत्युत परमोपकारक एवाभूदित्याह सोऽहमिति। मर्त्यानां धृतराष्ट्रादीनां स्वप्रसादालम्भनाद्विडम्बनेन वञ्चनेन नृणां तत्सदृशानामन्येषामपि प्राकृतानां दृशो बुद्धिवृत्तीश्चालयतो भ्रमयतः हरेः प्रसादात् तत्पदवीं तस्य चरणविन्यासवर्त्म चरणौ च पश्यन् भक्तवत्सलस्य भगवतः कियदेव तदाश्चर्य्यमिति गतविस्मयः क्वाप्येतद्रहस्यानुद्घाटनादनन्योपलक्ष्यः सन् अत्र तीर्थेष्वेव चरामि अत्र दुर्योधननिःसारितस्य खेदसमुद्रे निमज्जतो विदुरस्य प्रत्यक्षीभूय भगवता तस्मिन्नेव काले एवमुक्तं भो मत्परमभक्त विदुर मद्विरहमनुस्मृत्य किमित्येवं खिद्यसे यत्र यत्र त्वं यास्यसीति तत्र तत्रैव तीर्थे तदग्रे चलन्तं त्वया सह कृतसंवादमेव मां पश्यन्नेव यास्यसीति भगवद्वरोऽनुमीयते अतएव दुर्योधनवधानन्तरमपि युधिष्ठिरराज्यप्राप्तावपि भगवद्दर्शनानन्दनिर्वृतेनैव विदुरेण नायातमन्यथा अवश्यमायास्यतैव। किञ्च मौसललीलान्तेऽन्तर्दधता भगवता विदुरनेत्रादप्यन्तर्हितम्। अतएव तदवधि उद्धवदर्शनपर्यन्तं विदुरस्य वैकल्यम् ॥ ४२ ॥ ❀ ❀ ननु भगवतः किमेवं लीलया येन स्वभक्तानां वनवासादिक्लेशा भवन्ति। स्वस्य च दैत्ये बन्धनोद्यमादिपराभवः तदुत्तरं तेषामपराधानन्तरमेव हननं नापराधोपेक्षेत्यत आह न्यूनमिति। त्रिभिर्मदैरुत्पथानामुद्वृत्तानां वधादेव प्रपन्नानामार्त्तिजिहीर्षया ईशः अघसमये हन्तुं समर्थोऽपि कुरूणामघमुपैक्षत। तदानीमेव तेषां वधे सर्वदुष्टराजन्यवधो न स्यादित्याशयेनेत्यर्थः। विद्यामदो धनमदस्तथैवाभिजनो मदः। एते सदा मदान्धानां त एव हि सतां मदा इति त्रयो मदाः ॥ ४३ ॥ ❀ ❀ ननु चिद्घनानन्दरूपस्य भगवतः किमेवं प्राकृतलोकभद्राभद्रमध्यवर्त्तित्वेन सत्यं स्वभक्तेषु वात्सल्यं अन्यत्र सर्वत्रापि हितैषित्वमिति द्वावेव तत्र हेतू इत्याह अजस्य जीववन्मायाधीनतया जन्मादिविकाररहितस्यापि जन्म योगमायया भक्तप्रेमाधीनतया जन्मादिविलासवत्त्वं उत्पथानां सन्मार्गच्छिदामसुराणां नाशनाय स्वकर्तृकनाशनेन तेषां मोक्षदानाय अकर्त्तुः नास्य कर्मणि जन्मादावित्युक्तदिशा सत्त्वादिगुणनिबन्धनकर्तृत्वरहितस्यापि कर्माणि चिदानन्दमयानि गोवर्द्धनोद्धरणादीनि। पुंसां स्वभक्तानां सर्वत्र स्वर्गमोक्षादिसुखेष्वपि विरक्तानां ग्रहणाय आस्वादनीयत्वेन स्वीकाराय। यद्वा। पुंसां मुक्तमुमुक्षुसंसारिकाणामपि जीवानां ग्रहणाय स्वस्मिन्नाकर्षणाय निवृत्ततर्षैरुपगीयमानादित्यादेः। तत्वन्यथा जीवानां स्वकर्माधीनमेव यथा जन्म कर्म्म न तथा इत्यर्थः। कर्म्माधीनजन्मकर्मवत्त्वे देहेनापि तस्य सम्बन्धः कर्माधीन एव स्यात्। स च देहयोगो गुणातीतभक्तिसिद्धजीवस्यापि नास्ति किं पुनः साक्षात् परमेश्वरस्य तस्येत्याह गुणानां परः गुणेभ्यः पृथग्भूतः सन्नपि कः खलु जीवोऽपि कर्मतन्त्रं कर्माधीनं देहयोगे अर्हति अपि तु न कोऽपि अत्र कर्मतन्त्रं देहयोगं नार्हतीत्युक्ते अकर्मतन्त्रं देहयोगमर्हतीत्यर्थो लभ्यते। तस्य परमेश्वरस्य तु मायया सहयोगासम्भवात् तद्देहस्य चिदानन्दघनत्वं स्वत एवायातम् ॥ ४४ ॥ ❀ ❀ अतस्तस्य चिद्घनानन्दरूपाणि जन्मकर्म्माण्येव कथयेत्याशयेनाह तस्य प्रपन्ना येऽखिललोकपालास्तेषामन्येषाञ्च स्वीये अनुशासने स्थितानां अर्थाय प्रयोजनाय। तीर्थं परमपावनी संसारतारिणी च कीर्त्तिर्यस्य तस्याः। सर्वेषु तीर्थेषु प्रायः कृतमज्जन एवास्मि। सम्प्रति त्वं तेषां साफल्यमुपादाय कृष्णस्य कीर्त्तितीर्थामृते निमज्जयेति भावः ॥ ४५ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्। तृतीये प्रथमोऽध्यायः संगतः संगतः सताम् ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

पृथा विष्णुभक्तपुत्रार्थे जीवति अतस्तस्या जीवनस्य पुण्यावहत्वात् मृता सा पुण्यलोकं गमिष्यत्यतस्तां न शोचे ज्येष्ठं भ्रातरं तु शोचे यतस्तज्जीवनस्य पापावहत्वात् मृतः स पापलोकं गन्तेत्याशयेनाह सौम्येति। हे सौम्य यः परेताय मृताय भ्रात्रे पांडवे तत्पुत्रद्रोहेण विदुद्रुहे द्रोहं कृतवान् येनैव सुहृदनुकूलः भ्राता अहं स्वपुर्य्याः सकाशात् निर्यापितः विवासितः तमधःपतंतं धृतराष्ट्रमनुशोचे ॥ ४२ ॥ ❀ ❀ एवं यादवानां कौरवाणां च कुशलं पृष्ट्वा नृणां पुत्राद्यनुरागेण महदुपेक्षादिरूपो मोहस्तत्कर्मानुसारि भगवदिच्छयैवेति वदन् स्वस्य तीर्थाटने प्रयोजनविशेषमाह सोहमिति। विधातुः पाणिकर्मफलविधानकर्तुः मर्त्यविडंब-

नेन येन परमेश्वरेण जीवानां मर्त्यत्वभ्रमस्ते न मर्त्यानुकरणेन नृणां धृतराष्ट्रादीनां दृशो दृष्टीः महांतः कथंचित्पृथग्भूता अपि स्वादरणीया दुर्वृत्ताः पुत्रादयोऽप्युपेक्षणीया इति शिष्टव्यवहारतश्चालयतः हरेः पदवीं प्राप्तिमार्गं तत्प्राप्तिसाधनोपदेष्टारं पुरुषमित्यर्थः। पश्यन् मृगयन् चरामि कथंभूतो नान्योपलक्ष्यः गूढः विदुरोऽयं चरतीति परैः स्वकीयैर्वाभिज्ञाने तु तत्र विघ्नः स्यादिति भावः॥४३॥ ❀ ❀ नन्वसकृदपराधकारिणो दुर्वृत्ता कौरवाः प्रथमापराधे कुतो न विगृहीता इत्यत आह नूनमिति। नूनं निश्चितम्। त्रिभिर्विद्या धनाभिजनहेतुकैर्मदैः उत्पथानामुद्धतानां महीं चमूभिर्मुहुश्चालयतां भूभारभूतानां नृपाणां वधाद्धेतोः प्रपन्नानां तत्तद्दुष्टनृपहेतुकीर्त्तिजिहीर्षया ईशः प्रथमापराधसमये एव निगृहीतुमीशः समर्थोऽपि कुरूणां दुर्योधनादीनामघमपराधमुपैक्षत प्रथमापराधे दुर्योधनादिनिग्रहे पांडवानामेवार्त्तिनिवृत्तिः स्यान्नान्येषां प्रपन्नानां तस्मात्सर्वदुष्टनृपनिग्रहार्थं कुरूणामघमुपैक्षतेति फलितार्थः॥४४॥ ❀ ❀ अतः अजस्य कर्मफलभोगनिमित्तकजन्मरहितस्य उत्पथनाशनाय अपाकृतदेहस्य वसुदेवादिपुत्रत्वेन प्रकटीकरणं जन्म अकर्त्तुः फलभोगनिमित्तककर्माकर्तुः पुंसां ग्रहणाय कर्मरुच्युत्पादनाय कर्माणि अन्यथा तु ईदृशप्रयोजनाभावे तु ननु निश्चितम् भगवतो जन्मकर्मवार्ता तावदास्तां गुणानां परः प्रकृतिमंडलबाह्यः मुक्तो जीवोऽपि देहयोगं देहैः पित्रादिदेहैर्योगं पुत्रत्वेन संयोगं कर्मतन्त्रं कर्मशास्त्रं कर्मनिष्ठामित्यर्थः। कोऽर्हति न कोऽपीत्यर्थः प्रपन्नोपकारार्थं तु मुक्ता अपि जन्मानि कर्माणि भगवदाज्ञया स्वीकुर्वंतीति भावः। तस्मादेवं भूतस्य प्रपन्ना ये अखिला सर्वलोकपास्तेषाम् अन्येषां च स्वेऽनुशासने स्थितानाम् अर्थायोपकाराय यदुषु जातस्य कृताविर्भावस्य तीर्थकीर्तेः पवित्रयशसः वार्त्तां वृत्तांतं हे सखे कीर्तय कथय॥ ४५॥

इति श्रीसनत्कुमारसंततिप्रवर्तकभगवन्निंबार्कचरणचिंतकशुकसुधीप्रणीते श्रीमद्भागवतसिद्धांतप्रदीपे तृतीयस्कंधीये प्रथमाध्यायार्थप्रकाशः॥ १॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनीव्याख्या

ननु यथा पुत्रापराधेन समर्थोपेक्षया धृतराष्ट्रस्याऽपराधित्वम्, तथा तवाऽप्युपेक्षादोषाद्दुष्टत्वमित्याशङ्क्य धृतराष्ट्रभीष्मद्रोणादीनां वासुदेवमोहितानां प्रतिपक्षशङ्कया स्वहितमेव कृतवानहमित्याह—सोऽहमिति सोऽहमेवं धृतराष्ट्रादिभिरपकृतो विधातुः प्रसादात् गतविस्मय एव चरामि। अत्राप्यर्थे संदेहः, किं युक्तमयुक्तमिति। सर्वदुःखहर्ता भगवान्। स हि यथासुखं सर्वान्भ्युदयनिःश्रेयसादिषु योजयति। तत्र ये प्रवृत्त्या सुखाधिकारिणो निवृत्त्या सुखमिच्छन्ति, तान् व्यामोहयति भगवान्। नृणां संबन्धी यत् मर्त्यदेहस्तस्य विडम्बनेन अनुकरणेन। नृणां विधातुरिति वा। कपटमानुषचेष्टया नृणां दृशश्चालयितुः। यदि न व्यामोहयेत् तदा तेषां सृष्टिं कथं कुर्यात्? पुनः पुनः सृष्ट्यर्थं तान् व्यामोहयतीत्यर्थः। यथा भगवान् केनाऽपि न ज्ञातस्तथाऽहमपि नाऽन्योपलक्ष्यः। अत एव तत्प्रसादो मय्यस्तीति ज्ञायते। अन्तस्तत्प्रसादसूचको विस्मयाभावः बहिस्तत्प्रसादसूचको लोके ज्ञानाभावः। अत एवाऽन्ये बद्धा मारिताः, अहं विचरामीति। नृणां भीष्मादीनामन्तःकरणवृत्तीर्भ्रामयतः। प्रसादात्कृतमप्यपराधादिकं तदिच्छयेति जानन् गताभिमानस्तत्प्राप्त्युपायतीर्थाटनं करोमीत्यर्थः॥ ४२॥ ❀ ❀ ननु सर्वसमर्थः परमेश्वरः कथमुपेक्षितवानित्यत आह—नूनमिति। यद्यपि भगवान् दुष्टनाशार्थमेवाऽवतीर्णः, तथापि यत् दुर्योधनादीन् न हतवांस्तत्प्रपन्नार्तिजिहीर्षया। शरणागतभीमादिप्रतिज्ञापूरणार्थमित्यर्थः। त्रिमदा विद्याधनाभिजनाख्याः। विद्यामदो धनमदस्तथैवाभिजनो मदः।' इति। तेन त्रिमदेनोत्पथानां नृपाणां वधात्। ल्यब्लोपे पञ्चमी। वधं कृत्वाऽपि कुरूणां वधादुपेक्षां कृतवान्। यत ईशः, भक्तद्वाराऽपि मारयितुं समर्थः॥ ४३॥ ❀ ❀ एवं भगवच्चरित्रं सर्वमेवाऽहं तत्प्रसादाज्जानामीति स्वज्ञानं निरूप्य, भगवत्स्वरूपमपि जानामीत्याह—अजस्येति। अजस्य अकर्तुश्च जन्मानि कर्माणि च उत्पथानां दुष्टानां नाशाय, सतां शिक्षणाय च। न हि सूर्योत्पत्तिव्यतिरेकेणाऽन्धकारो नश्यति, न हि भगवदाचरणव्यतिरेकेण कश्चिद्धर्ममाचरति। अतो दुष्टनिग्रहशिष्टपरिपालनार्थं भगवतो जन्मानि कर्माणि विरुद्धान्यपि जायन्ते, अन्यथा कर्मपारतन्त्र्यरहितः कथं जन्म स्वीकुर्यात्। [1]अनेन साधारणपक्षे ज्ञायते, स्वेच्छया जनिते देहे अग्निवद्भगवदावेश इति। गुणानामपि पर इत्यनेन गुणजनितकर्मपर इत्यनेन गुणजनितकर्मपरतन्त्रः कथं भवेदिति महद्वैलक्षण्यं सूचितम्। देहमात्रस्यैव कर्मपरतन्त्रत्वं मन्यते। यथा सर्वमेव काष्ठमनित्यम्, तत्र प्रविष्टोऽग्निरपि सुतरामनित्याविर्भावो भवतीति भावः। यथा वा भार्यादेहो भर्तृवशोऽपि भार्याजीवाधीन एव, तथेश्वरपरिगृहीतोऽपि देहः कर्माधीन एवेति केषांचिन्मतम्। तथाऽयमपि मन्यते। तदग्रे दूषयिष्यत्युद्धवः॥ ४४॥ ❀ ❀ एवं स्वस्य सर्वबुद्धिमुक्त्वा, तेनाऽधिकारिदेहहेतुभूतवायुसंस्कारं निरूप्य, संस्कृता[2]काशसिद्ध्यर्थं भगवच्चरित्रं पृच्छति—तस्येति। प्रपन्नाखिललोकपानाम्। प्रपन्नाश्च ते अखिललोकपाश्च, सर्वे हीन्द्रादयो भगवत्प्रपन्नास्तदाज्ञाकारिणश्च। अतस्तेषां कार्यार्थमाविर्भूतस्य यदुकुले, वस्तुतो जन्मरहितस्य। वार्तां कथयेति तृतीयः प्रश्नः। तीर्थयात्रार्थं कृतसङ्कल्पः कथमन्यच्छ्रोष्यतीत्याशङ्क्याऽऽह—तीर्थकीर्तेरिति। तीर्थरूपा कीर्तिर्यस्य। सखे। इति। संबोधनं युक्तमयुक्तं वा पृष्टं वक्तव्यमेवेति ज्ञापनार्थम्। एवं भगवच्चरित्रे भगवदीयानां चरित्रे शुश्रूषुः, प्राप्तसत्सङ्गः, तीर्थायतनैः कृतपुण्यपुञ्जः, योग्यं देहं प्राप्याऽधिकारी भवति—इति भगवदधिकारसर्गे भूतसर्गो निरूपितः॥ ४५॥

इति श्रीभागवतसुबोधिन्यां श्रीलक्ष्मणभट्टात्मजश्रीवल्लभाचार्यविरचितायां तृतीयस्कन्धे प्रथमाध्यायविवरणम्।

---

१. विदुरेण. प्रकाशः। २. भगवच्चरित्रस्मृत्या संस्कृतहृदयाकाशभवनार्थम्. संवादे. प्र.।

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

अजस्येत्यत्र। अनेनेति। विदुरेण ॥ ४४ ॥ ❀ ❀ तस्येत्यत्र। संस्कृताकाशसिद्ध्यर्थमिति। भगवच्चरित्रस्मृत्या संस्कृतहृदयाकाशभवनार्थम्। अत्र भग[1]वच्चरित्रेत्यादिपदैराकाशादिक्रमेणोल्लेख्ये (?) ज्ञेयः ॥ ४५ ॥

इति श्रीगोस्वामिपुरुषोत्तमजीमहाराजकृत—तृतीयस्कन्धसुबोधिनीप्रकाशे प्रथमाध्यायविवरणम् ॥ १ ॥

### श्रीगिरिधरकृता बालप्रबोधिनी

अहो आश्चर्यं त्वं साधुरपि तेन दुःखं प्रापितोऽसीत्यत आह—स इति। स तेन निर्यापितोऽहं हरेः प्रसादात्तस्य पदवीं माहात्म्यं पश्यन् गतविस्मयो निवृत्तसर्वाश्चर्यः अत्र भूतले नान्योपलक्ष्यः प्रच्छन्नः सन्सुखं विचरामि। कोऽसौ हरिरित्यपेक्षायां श्रीकृष्ण एवेत्याह—मर्त्येति। मर्त्यविडम्बनेन ऐश्वर्याच्छादकमर्त्यानुकरणेन नृणां दृशः दृष्टीः चित्तवृत्तीश्चालयतो भ्रामयत इत्यर्थः। किमर्थमेवं दृष्टिचालनं करोतीत्यपेक्षायां जगज्जन्मादिविधातृत्वात् सर्वेषां स्वतत्त्वसाक्षात्कारे सर्वविमुक्त्या संसारविलयः स्यात्तन्मा भूदित्याशयेन नृणां दृष्टीर्भ्रामयतीत्याशयेनाह—विधातुरिति ॥ ४२ ॥ ❀ ❀ नन्वयं श्रीकृष्ण एव भक्तानुगृहीता विधाता चेत्तर्हि किमिति कौरवापराधमुपेक्षितवान् येन स्वभक्तानां पाण्डवादीनां वनवासादिक्लेशा जाताः स्वस्य च दौत्ये बन्धनोद्यमादिना पराभवो जातस्तद्वरं तेषामपराधानन्तरमेव तेषां हननं तत्कुतो न कृतवानित्यपेक्षायामाह—नूनमिति निश्चितमेतत्त्रिभिः। 'विद्यामदो धनमदस्तथैवाभिजनो मदः ॥ एते मदा मदान्धानां त एव हि सतां दमाः' इत्युक्तलक्षणैर्मदैरुत्पथानामुद्वृत्तानां चमूभिः सेनाभिर्महीं मुहुः पुनः पुनश्चालयतां नृपाणां वधाद्धेतोः प्रपन्नानां शरणागतभक्तानां पाण्डवादीनामार्तेः पीडाया जिहीर्षया हर्तुमिच्छया ईशोऽप्यघसमय एव हन्तुं समर्थोऽपि भगवान् कृष्णः कुरूणामघमपराधमुपैक्षतेत्यन्वयः। तदानीमेव तेषां वधे सर्वासद्वृत्तिराजन्यवधः पाण्डवयशश्च न स्यादिति भावः ॥ ४३ ॥ ❀ ❀ ननु जगन्नियन्तुर्भगवतो मर्त्यविडम्बनेन किं प्रयोजनमित्यत आह—अजस्येति। अजस्य कर्मायत्तजन्मरहितस्य भगवतो जन्म कर्माधीनजन्मवत्प्रादुर्भावः उत्पथानां वेदविरुद्धमार्गवर्तिनां नाशनाय। अकर्तुर्धर्माधर्मसंश्लेषरहितस्यापि कर्माणि सन्ध्योपासनयज्ञादीनि पुंसां ग्रहणाय 'यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः' इति न्यायेन लोकसङ्ग्रहायेत्यर्थः। अन्यथा ननु चेदेवं तर्हि तस्य भगवतो जन्मादिकथा तावदास्तां अन्यो जीवोऽपि गुणानां परो गुणकार्य्यदेहादिष्वात्माध्यासरहितो देहयोगं कर्मतन्त्रं कर्मविस्तारं वा कोऽर्हति ?। उतेति वाशब्दार्थे ॥ ४४ ॥ ❀ ❀ उपसंहरति—तस्येति। प्रपन्ना शरणमागता येऽखिललोकपा ब्रह्मादयस्तेषामर्थाय दैत्यादिवधाय तथाऽन्येषां स्वे स्वीये वेदरूपेऽनुशासने आज्ञायां अवस्थितानां अर्थाय कर्मानुष्ठानेनाचारशिक्षणाय यदुषु जातस्य स्वेच्छया प्रादुर्भूतस्य अजस्य कर्माद्यधीनजन्मरहितस्य श्रीकृष्णस्य वार्तां कथां कीर्तय कथयेत्यन्वयः। सखे इति सम्बोधनेन यदि किञ्चिदयुक्तमुक्तं तत्सोढव्यं भगवद्वार्ता चावश्यं वक्तव्येति सूचयति। ननु तीर्थयात्रार्थं कृतसङ्कल्पस्य तव कथमेतच्छुश्रूषेत्याशङ्क्याह—तीर्थकीर्तेरिति, तीर्थरूपा कीर्तिर्यस्य तस्येत्यर्थः। तीर्थपर्यटनकार्यं सर्वं भगवद्यशश्श्रवणेनैव भविष्यतीति भावः ॥ ४५ ॥

इति श्रीवल्लभाचार्यवंश्यगोपालसूनुना ॥ श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा ॥ १ ॥
श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये ॥ श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी ॥ २ ॥
रचिता च तृतीयेऽस्मिन् बन्धसृष्टिनिरूपणे ॥ प्रथमो विवृतो बन्धुत्यागहेतुनिरूपकः ॥ ३ ॥

### हिन्दी अनुवाद

किंतु भाई! मुझे इसका कुछ भी खेद अथवा आश्चर्य नहीं है। जगद्विधाता भगवान् श्रीकृष्ण ही मनुष्योंकी-सी लीलाएँ करके लोगोंकी मनोवृत्तियोंको भ्रमित कर देते हैं। मैं तो उन्हींकी कृपासे उनकी महिमाको देखता हुआ दूसरोंकी दृष्टिसे दूर रहकर सानन्द विचर रहा हूँ ॥ ४२ ॥ ❀ ❀ यद्यपि कौरवोंने उनके बहुत-से अपराध किये, फिर भी भगवान्ने उनकी इसीलिये उपेक्षा कर दी थी कि वे उनके साथ उन दुष्ट राजाओंको भी मारकर अपने शरणागतोंका दुःख दूर करना चाहते थे, जो धन, विद्या और जातिके मदसे अंधे होकर कुमार्गगामी हो रहे थे और बार-बार अपनी सेनाओंसे पृथ्वीको कँपा रहे थे ॥ ४३ ॥ ❀ ❀ उद्धवजी! भगवान् श्रीकृष्ण जन्म और कर्मसे रहित हैं; फिर भी दुष्टोंका नाश करनेके लिये और लोगोंको अपनी ओर आकर्षित करनेके लिये उनके दिव्य जन्म-कर्म हुआ करते हैं। नहीं तो भगवान्की तो बात ही क्या—दूसरे जो लोग गुणोंसे पार हो गये हैं, उनमें भी ऐसा कौन है, जो इस कर्माधीन देहके बन्धनमें पड़ना चाहेगा ॥ ४४ ॥ ❀ ❀ अतः मित्र! जिन्होंने अजन्मा होकर भी अपनी शरणमें आये हुए समस्त लोकपाल और आज्ञाकारी भक्तोंका प्रिय करनेके लिये यदुकुलमें जन्म लिया है, उन पवित्रकीर्ति श्रीहरिकी बातें सुनाओ ॥ ४५ ॥

**पहला अध्याय समाप्त**

---

१. भगवच्चरित्रेत्यादिपदैः सका···पाठः।

# अथ द्वितीयोऽध्यायः

### श्रीशुक उवाच

इति भागवतः पृष्टः क्षत्त्रा वार्तां प्रियाश्रयाम्। प्रतिवक्तुं न चोत्सेह औत्कण्ठ्यात्स्मारितेश्वरः ॥ १ ॥
यः पञ्चहायनो मात्रा प्रातराशाय याचितः। तन्नैच्छद्रचयन् यस्य सपर्यां बाललीलया ॥ २ ॥
स कथं सेवया तस्य कालेन जरसं गतः। पृष्टो वार्तां प्रतिब्रूयाद्भर्तुः पादावनुस्मरन् ॥ ३ ॥
स मुहूर्तमभूत्तूष्णीं कृष्णाङ्घ्रिसुधया भृशम्। तीव्रेण भक्तियोगेन निमग्नः साधु निर्वृतः ॥ ४ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

द्वितीये कृष्णविश्लेषादनुशोचन्नथोद्धवः। क्षत्त्रे बालचरित्राणि कृष्णस्यावर्णयच्छ्वसन् ॥ १ ॥

तदेवं प्रियवार्तां पृष्टस्योद्धवस्य श्रीकृष्णविरहौत्कंठ्यावेशेन प्रतिवचनासामर्थ्यमाह षड्भिः। इतीति। स्मारित ईश्वरो यस्य ॥ १ ॥ ❀ ❀ एतदेव कैमुत्यन्यायेन प्रपंचयति। य इति द्वाभ्याम्। यः पंचवर्षोऽपि बाललीलयेति कृष्णं कंचित्परिकल्प्य कल्पितैरेव साधनैः परिचर्यां कुर्वन् प्रातर्भोजनार्थं प्रार्थितोऽपि तद्भोजनं नैच्छत् ॥ २ ॥ ❀ ❀ जरसं वृद्धत्वं गतः प्राप्तः ॥ ३ ॥ ❀ ❀ श्रीकृष्णांघ्रिसुधया साधु निर्वृतस्तस्यामेव तीव्रेण विवशत्वापादकेन भक्तियोगेन भृशं निमग्नश्च ॥ ४ ॥

### वंशीधरकृतो भावार्थदीपिकाप्रकाशः

श्वसन् श्रीकृष्णविरहेण निश्वासं त्यजन् ॥ (१) ॥ अधुनाऽध्यायत्रयेण विदुरानुयोगप्रतिवाक्याय संक्षिप्य कृष्णकथां वक्ष्यति। औत्कंठ्यावेशेन भक्त्युद्रेकेण यद्वा चित्तद्रवणहेतुः भूतौत्सुक्येन स्मारितः स्मरणविषयं प्रापितः ॥ १ ॥ ❀ ❀ एतदेव प्रतिवचनादानमेव य उद्धवः बाललीलया पञ्चालिकाभिः खेलन् कंचित्पंचालिकाविशेषम् ॥ २ ॥ ❀ ❀ वृद्धत्वं चिरसेवित्वमित्यर्थः। "तत्र प्रवयसोप्यासन्युवानोतिबलीयसः" इत्युक्तिविरोधात् यद्वा काले समयेपि हरिसेवाप्रभावेण जरसं न गत इत्यर्थः। भर्तुः प्रभोः ॥ ३ ॥ ❀ ❀ विभक्तिविपरिणामेनावृत्त्या योजनादाह। तस्यामेवेति। स उद्धवः ॥ ४ ॥ ५ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनीव्याख्या

अथ० जन्मादिकथाप्रश्नानन्तरं अनुशोचन्निति शोकः स्थायीभावः श्वसन्निति शत्रावर्णनसमकालत्वेन श्वासस्य भूमत्वं व्यज्यते तेन श्वासभूमालोकानपेक्षतेत्युक्तेः क्षेपणोद्धास्वरानुभावः ताभ्यां तत्संवलनात्मककरुणरसोऽभिव्यञ्जितः तदुक्तं रसाभिज्ञैः सद्भावश्चेद्विभावाद्यैः किञ्चिन्मात्रस्य जायते सद्यश्चतुष्टयाक्षेपात्पूर्णतैवोपपद्यते इति प्रतिवचनं प्रत्युत्तरं प्रियाश्रयां प्रियसंबंधिनीम् ॥ १ ॥ ❀ ❀ य इति युग्मकम्। एतदेव प्रतिवचनाऽसामर्थ्यमेव वृद्धत्वं चिरसेवकत्वं न तु कालकन्यां जरां तत्र प्रवयसोऽप्यासन् युवानोऽतिबलौजस इत्यनेन कैमुत्येन विरोधात् ॥ २ ॥ ❀ ❀ कृष्णाघ्रिसुधया स्फूर्त्या साक्षात्कृतया साधु यथा-स्यात्तथा निर्वृतः आनंदितः अतएव वियोगशान्त्याप्रतिवचनशक्तो भविष्यतीति भावः ॥ ॥ ३ ॥ ❀ ❀ स्नेहः प्रेमोत्कर्षावस्थारूपो भावविशेषस्तु तथा तल्लक्षणं सांद्रं चित्तद्रवं कुर्वन् प्रेमा स्नेह इतीर्य्यत इति ॥ ४ ॥

### श्रीमद्वीरराघवव्याख्या

एवं विदुरेण पृष्टे उद्धवे तस्य भगवतोऽवतारप्रभृतितत्समाप्त्यवधिदिव्यचेष्टितवर्णनानुरूपमुत्तरं वक्ष्यंस्तावदुद्धवस्य भगवद्विरहौत्कंठ्यावेशेन प्रतिवचनासामर्थ्यमाह बादरायणिरितीत्यादिषड्भिः। क्षत्रा विदुरेण प्रियाश्रयां प्रियभगवद्विषयां वार्त्तां प्रत्युक्तप्रकारेण पृष्टः भागवत उद्धवः औत्कंठ्यात् प्रेमविशेषात्स्मारित ईश्वरः श्रीकृष्णो यस्य सः प्रतिवक्तुं उत्तरं वक्तुं न चोत्सेहे न समर्थोऽभूत् ॥ १ ॥ ❀ ❀ एतदेव कैमुत्यन्यायेन प्रपंचयति य इति द्वाभ्याम्। पंचहायनः पंचवर्षः य उद्धवः मात्रा जनन्या प्रातरासाय प्रातभोजनार्थं याचितः प्रार्थितः तत्प्रातराशं नैच्छत् कथंभूतः सन् अस्य श्रीकृष्णस्य सपर्यां पूजां बाललीलया रचयन् बालक्रीडया श्रीकृष्णं कंचित्परिकल्प्याकल्पितैरेव साधनैः परिचर्यां कुर्वन्नित्यर्थः ॥ २ ॥ ❀ ❀ एवं बाल्यप्रभृति तस्य भगवतः सेवया कालेन जरसं जरां वृद्धत्वं गतः प्राप्तः स उद्धवः वार्त्तां प्रति पृष्टः भर्त्तुः श्रीकृष्णस्य पादावनुस्मरन् कथं प्रतिब्रूयात् एवं प्रत्यु-

---

१. प्राचीने पाठे 'श्री' नास्ति। २. प्रा० पा०—रजसं।

त्तरासामर्थ्यमभिधायाथ तस्य परिपूर्णभक्तियोगेन परवशस्य महता प्रयत्नेन सामर्थ्यमाह समुहूर्तमिति । कृष्णांघ्रिसुधया साधु यथा तथा निर्वृतः भृशमत्यंतं तीव्रेण भक्तियोगेन निमग्नः परवशः स उद्धवः मुहूर्तं मुहूर्तमात्रं तूष्णीमभूत् ॥ ४ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

अत्राध्यायत्रये उद्धवेन विदुरप्रश्नप्रतिवचनाय हरेः श्रीकृष्णावतारसंक्षेपकथा निरूप्यते तत्र प्रथमत उद्धवस्य भगवति भक्त्युद्रेकलक्षणं शुकः परीक्षितं कथयतीत्याह सूतः शौनकाय इतीति । आत्मादेरपि प्रियः प्रेष्ठो हरिराश्रयो यस्याः सा तथा तां वार्तां कथामौत्कंठ्यं चित्तविद्रवणहेतुभूतौत्सुक्यं तस्माद्गद्गदकंठत्वादिविशेषः स्मरितेश्वरः प्रसंगविशेषादिति शेषः ॥ १ ॥ ❀ ❀ एकांतभक्तानामेतद्युक्तमिति भावेनाह य इति । पंचहायना वत्सरा यस्य स तथा प्रातराशाय प्रातर्भोजनाय तत्प्रातर्भोजनं सपर्यां पूजां रचयन् प्रचयन् ॥ २ ॥ ❀ ❀ तस्य हरेर्जरसं जरां वार्धकं वयः ॥ ३ ॥ ❀ ❀ कृष्णांघ्रिस्मरणसुधया तृतीया सप्तम्यर्थे तस्यां निमग्नो निर्वृतः परमानंदं प्राप्तः ॥ ४ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

स्मारितेति स्मरणविशेषं गमयति ॥ १ ॥ ❀ ❀ य इति । युग्मकम् । यस्य पञ्चालिकारूपस्य जरसं जरां कृतचिर-सेवित्वमित्यर्थः । प्रवयसोऽप्यासन् युवानोऽतिबलौजस इत्यनेन विरोधात् ॥ २ ॥ ❀ ❀ तर्हि कथं प्रत्युक्तवान् उच्यते श्रीभगवतैव स्वनित्यलीलाया मनसि दर्शनेन सान्त्वनादित्याह स इति त्रिभिः ॥ ३—५ ॥

### श्री मद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

द्वितीये प्रेमवैक्लव्यरोदनस्नपिताननः ।
व्रजलीलां समासेन रासान्तामुद्धवोऽवदत् ॥ ० ॥

श्रीकृष्णविश्लेषविवृद्धप्रेममूर्च्छितस्योद्धवस्य प्रतिवचनासामर्थ्यं वदन् कामपि दशां दर्शयति । विदुरस्योच्चैः प्रश्नेभ्यो मूर्च्छाभङ्गेन स्मारित ईश्वरो यस्य सः ॥ १ ॥ ❀ ❀ तस्य प्राक्तनीं भक्तिं दर्शयति बाललीलयेति । पञ्चालिकाभिः खेलन्नेव कामपि पञ्चालिकां कृष्णं परिकल्प्य कल्पितैरेवोपचारैः परिचर्यां कुर्वन् मात्रा प्रातर्भोजनार्थं प्रार्थितोऽपि संप्रत्यपि मे भगवत्-परिचर्या न निर्व्यूढेति तद्भोजनं नैच्छत् ॥ २ ॥ ❀ ❀ तस्य सेवया हेतुना सेवाप्रभावेणेत्यर्थः । काले समयेऽपि जरसं वृद्धत्वं न गतः यद्वा काले या सेवा यस्मिन् काले या समुचिता सेवा तया कालेनेति । तृतीयान्ततया व्याख्यानं त्वसङ्गतं तत्र प्रवयसोऽप्या-सन् युवानोतिबलौजस इत्यनेन विरोधात् ॥ ३ ॥ ❀ ❀ पादयोरनुस्मरणं विवृणोति स इति । विदुरप्रश्नैरुद्धवस्य मूर्च्छाभङ्गे सति हन्त हन्त तेन प्रभुणाहं विरहितोऽस्मीति श्रीकृष्णाघ्र्योः स्मरणेन साक्षात्कारे सति प्राप्ता या सौन्दर्यसुधा तया आस्वाद्यमानया मुहूर्तं घटिकाद्वयपर्यन्तं तूष्णीं स्थितोऽभूत् ततश्च तीव्रेण कृष्णविश्लेषविवृद्धेन भक्तियोगेन प्रेम्णाऽऽस्वादनभूम्ना तस्यामेव सुधायां निमग्नः विस्मृतकृष्णविश्लेषदुःखः सन् साधु यथा स्यात्तथा निर्वृतोऽभूत् ॥ ४ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

एवं विदुरेण पृष्ट उद्धवो यादवादीनां वृत्तांतं भगवतो वार्तां प्रादुर्भावादिस्वधामारोहणपर्यंतां च विदुरायोपदिश्य बदर्या-श्रममगाद्विदुरस्तद्वचनान्मैत्रेयाश्रममगादित्याह श्रीशुकस्त्रिभिरध्यायैः । तत्र तावदुद्धवस्य श्रीकृष्णस्य विरहग्रहाविष्टत्वेन प्रतिवचना-सामर्थ्यमाह इतीति पंचभिः ॥ १ ॥ ❀ ❀ तत्कैमुत्यन्यायेन वर्णयति य इति द्वयेन । प्रातराशाय प्रातर्भोजनाय । यस्य कृष्णस्य ॥ २ ॥ ❀ ❀ जरसं वृद्धत्वम् ॥ ३ ॥ ❀ ❀ साधु यथा तथा निर्वृतः सुखितः ॥ ४ ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनीव्याख्या

अधिकारार्थसर्गे हि भूतसर्गो निरूपितः । मात्राणामेव सर्गोऽत्र द्वितीये विनिरूप्यते ॥ १ ॥
मुख्या[1]धिकारिणो भक्तौ क्रियाज्ञानविभेदतः । अलौकिकचरित्रेण माहात्म्यं विषयो मतः ॥ २ ॥
क्रिया तु भगवत्येव नाऽन्यत्रेति निरूप्यते । षड्भिस्तु मनसा तानि षट्कर्माणीन्द्रियैर्यतः ॥ ३ ॥
षड्गुणैश्वर्यसम्पन्नो भगवानेक एव सः । सप्ताधिकेन विंशत्या तावन्तो भगवद्गुणाः ॥ ४ ॥
तत्त्वतो विषयाः प्रोक्तास्ते[2]देवाः सर्व एव हि । कथा[3]यां त्रिभिरध्यायैरधुनोत्तरमुच्यते ॥ ५ ॥
सामा"न्यकुशले. त्वत्र त्रेधाऽप्युत्तरमुच्यते । लोकद्वये च भक्तौ च दुर्भाग्या यादवा इति ॥ ६ ॥

---

१. षष्ठी. प्र. । २. अत्रोच्यमानाः सर्वं एव यादवा देवाः संस्कृताः. प्र. । ३. प्रश्नोत्तरात्मके संवादे. प्र. ।

तत्र प्रथमं विदुरेण पृष्ट उद्धवो नोत्तरमुक्तवानित्याह षड्भिः। भक्त्युद्रेकोद्धवे षड्भिस्ताद्दशोक्तं फलाय हि। अशक्तिर्भक्तिलिङ्गं हि हेतूक्त्या[2] तस्य साधनम् ॥ १ ॥ सर्वव्यापारराहित्यं भक्तिलिङ्गस्य दर्शनम्। तथापि कृष्णमाहात्म्यकथनाय समुद्यमः ॥ २ ॥ तत्र प्रथमं तस्याऽशक्तिरुच्यते—

इति भागवत इति। इतिशब्देन पूर्वाध्यायार्थःप्रकारविशेषादवक्तव्यत्वाय संगृहीतः। [3]तत्र हेतुः भागवत इति। एतादृशीं कथामन्यो वक्तुं शक्तः, न तु भागवतः। तथापि पृष्टश्चेद्भगवानिव स्वयमप्यन्तर्हितशक्तिरेव भवति। तत्राप्यज्ञेन कुशलेन पृष्टः। तदाह—पृष्टः क्षत्रेति। सा हि वार्ता प्रियाश्रिता उत्तरे तु निराश्रया, न हि निराश्रया केनचिद्वक्तुं शक्या। तदाह—प्रियाश्रयां प्रतिवक्तुं नोत्सहे इति। चकारान्निषेधेऽप्यशक्तो न प्रष्टव्य इति। इन्द्रियसामर्थ्ये विद्यमानेऽपि ज्ञानांशसहायेऽपि क्रियांशं मन उत्साहात्मकं तत्र न जातमिति नोत्सहे इत्युक्तम्। प्रत्युत कथाश्रयान्वेषणार्थं प्रवृत्तं चित्तं भगवन्तं स्मारयितुमुत्कण्ठामुत्पादितवत्। अनेन भक्तिर्वचनप्रतिबन्धिका जातेत्युक्तं भवति। ईश्वरत्वाच्च न प्राणोद्गमः॥ १॥ ❀ ❀ एवमशक्तिं निरूप्य तस्या भक्तिलिङ्गत्वं वदन् हेतूक्त्या तां साधयति द्वाभ्याम्—यः पञ्चहायन इति। पञ्चवार्षिको हि सेवायामधिकारी। बालस्य प्रातर्भोजनं संपूर्णदिवसे बलजनकम्, मात्रा लालनमुत्साहजनकम्, तद्द्वयं तस्य पूर्वमेव नासीत्। बलं तु सपर्ययैव। उत्साहस्तु लीलयैव। बालत्वं तु तदानीन्तनं कीर्तितम्। तदुभयमिदानीं नास्तीति न बलम्, न प्रोत्साहः। अत एवाऽशक्तिर्भक्तिलिङ्गम्। अनेन हस्तव्यापारो भगवत्येवेति निरूपितम्। मनोव्यापारस्तु प्रथमे स्पष्टः। मात्रा याचित इति। लौकिकवैदिकधर्मापेक्षाऽपि निराकृता। इच्छाभावेन भगवदीयानां पदार्थानां लौकिकापेक्षया अतिबलीयस्त्वं निरूपितम्। यस्येति कृष्णस्य। सपर्या परिचर्या। क्रीडार्थं भगवदधिष्ठानं परिकल्प्य तत्र राजोपचारैः क्रीडनं बाललीला॥ २॥ ❀ ❀ एवमशक्तेर्भक्तिलिङ्गत्वं निरूप्य प्रकृते हेतूक्त्या अशक्तिं साधयति—स कथमिति। तस्य बाल्य एव तथात्वं न, किन्त्वाजन्म भगवदीयैरेव सामर्थ्यम्, यतः सेवयैव सह जरां प्राप्तः। अनेन तस्य सेवा जराभावाद्यर्थमपि न व्यापृता। आनुषङ्गिकं तु न जातम्, कालस्य बलीयस्त्वादित्याह—कालेनेति। जरसं वार्द्धक्यम्। पूर्वसिद्धस्य शक्तिहेतोरभावात्कथमिति शक्त्यर्थं प्रश्नः। अत एव वार्तां कथं ब्रूयात्? अग्रेऽपि वार्तां पृष्टो माहात्म्यं कथयिष्यति। तत्तु सर्वदा साश्रयमेव, अलौकिकत्वात्। वार्ता तु लौकिकी। न चात्र भक्तिविरोधः, प्रकारान्तरेण भक्तेः क्रियमाणत्वात्। तदाह—भर्तुः पादावनुस्मरन्निति। भर्तृपदेन तस्यैवं लीला श्रुतिसिद्धा युक्तेति सूचयति। "'भर्ता सन् भ्रियमाणो बिभर्ति' इत्यादिश्रुतेः। पादाविति द्विवचनं भक्तिमार्गख्यापनाय। अन्विति उपदेशानतिक्रमाय। अनेन बहिर्वागिन्द्रियविषयनिवृत्तिरुक्ता॥३॥ ❀ ❀ अशक्तिर्न केवलं वागिन्द्रिये, किन्तु सर्वत्रैवेति सर्वव्यापारराहित्यमाह—स मुहूर्त्तमिति। मुहूर्त्तमात्रमेव भगवति स्थितः। स हि कलारूपः, पादस्मरणेन च पादान्तिकं नीतः। तूष्णीमिति सर्वेन्द्रियव्यापारराहित्यम्। तस्य सद्योमुक्तिमाह—कृष्णाङ्घ्रिसुधयानिर्वृत इति। ब्रह्मानन्दं प्राप्त इत्यर्थः। सुधापदेन च तत्र प्राणलयाभावः सूचितः स्मरणे तदानन्दाविर्भावाभावात्। तदर्थमुपायमाह—तीव्रेण भक्तियोगेन साधु निमग्न इति। तीव्रेणेति बहिर्व्यापारोच्छेदनसामर्थ्यं सूचितम्। भक्तिरत्र प्रेमलक्षणा। स चोपायभूतः सर्वदा विद्यमानः। न हि योगेन निमग्नः शीघ्रमुत्तिष्ठति। अनेन क्रियारूपस्पर्शेन्द्रियव्यावृत्तिरुक्ता। विषयोऽपि भक्तानामनेन निरूपितः॥ ४॥

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

अथ द्वितीयाध्यायं विवरिषवः सङ्गतिं वक्तुमध्यायद्वयार्थमाहुः—अधिकारेत्यादि। तथा चावसरः सङ्गतिरित्यर्थः। ननु द्वितीयाध्याय उद्धवचरितं भगवद्वार्त्ता चोच्यते। तत्र मात्रासर्गे आद्ये वाच्यस्तत्रोद्धवचरित्रस्य लौकिकवत्प्रतिभानात्कथं मात्रासर्गरूपतेत्यत आहुः—मुख्येत्यादि। मुख्याधिकारिण इति षष्ठी। तथा च तादृशचरित्रप्रयोजकतदवस्थायास्तदानीन्तनत्वेन विदुरानुभूयमानमाहात्म्यरूपतयैव विषयतेति मात्रासर्गस्तेन रूपेणेत्यर्थः। ननु मात्रासर्गे श्रीमदुद्धवमाहात्म्यसूचने हरेर्माहात्म्यसूचकपूर्वग्रन्थविरोध इत्यत आहुः—क्रिया त्वित्यादि। तथा च क्रिया भगवन्निष्ठैवात्र निरूप्यत इति तन्माहात्म्यसूचनस्याबाधान्न विरोध इत्यर्थः। ननु मात्राणां पञ्चसङ्ख्याकत्वात् षड्भिस्तन्निरूपणं कुत इत्यपेक्षायामाहुः—षड्भिरित्यादि। तथा च सँस्कारकाणां तावत्त्वेन षड्भिरुक्तिरतो न दोष इत्यर्थः। नन्वेतावतैव मात्रासर्गोक्तिसिद्धौ शिष्टानामष्टाविंशतीनां कोऽर्थ इत्यत आहुः—षड्गु-

---

४. पूर्वाध्याये सामान्यकुशलं विशेषकुशलं भगवच्चरित्रं चेति त्रयं क्रमेण पृष्टम्, तत्र सामान्यकुशले त्वष्टादशभिस्त्रेधोत्तरमित्यर्थः। तथा सति शिष्टा अष्टादश चरित्रप्रश्नोत्तरभूता इत्यर्थः प्रकाशः.। १. भक्त्युद्रेकयुक्ते उद्धवे प्र.। २. तत्स्वभावकथनेनाऽसामर्थ्यसाधनम्. प्र.। ३. अवक्तव्ये. प्र.। ४. 'तत्र प्रवयसोऽप्यासन्......' इति श्लोकोक्तं भक्तेर्गौणं फलम्. प्रकाशः.। ५. तैत्तिरीयारण्यकषष्ठप्रश्नेऽयमनुवाकः। स सर्वोऽप्येतल्लीलास्वरूपयोर्बोधको मया विद्वन्मण्डनविवरणे व्याख्याय व्युत्पादित इति ततोऽवधेयः. प्र. ६. अग्रिमानुवाकसंग्रहः. प्र.। ७. आनन्दवत्प्रियानिरूपकस्पर्शेन्द्रियमुपस्थस्तस्यान्तरमुखत्वमित्यर्थः. प्र.। ८. उक्तेन्द्रियविषयो भक्तिरूपः. प्र.।

णेत्यादि । तथा च सप्तसहितेनाधिकेनाद्येन भगवतोऽग्निमैर्गुणानां च निरूपणात्तत्त्वतः संस्कारकारणत्वेन ज्ञानविषयाः प्रोक्ताः, हि यतो हेतोः, ते अत्रोच्यमानाः सर्व एव यादवा देवाः संस्कृताः, तथा च संस्कारकसँस्कृतयोर्बोधनाय तत्कृतकथनमित्यर्थः । एवं शुकव्यासयोराशयमुक्त्वा विदुरोद्धवसंवादेऽस्यार्थस्यानुपयोगात्तदर्थं सङ्गत्यन्तरमाहुः—कथायामित्यादि । कथायामिति । प्रश्नोत्तरात्मके संवादे । तथा चाऽध्यायचतुष्टये प्रश्नोत्तरभावः सामान्यसङ्गतिरित्यर्थः । कस्य किमुत्तरमित्याकाङ्क्षायां विशिष्य तामाहुः—सामान्येत्यादि । पूर्वाध्याये सामान्यकुशलम् , विशेषकुशलम् , 'भगवच्चरित्रञ्चेति त्रयं क्रमेण पृष्टम् । तत्र सामान्यकुशले त्वष्टादशभिस्त्रेधोत्तरमित्यर्थः । तथा सति शिष्टा दश चरित्रप्रश्नोत्तरभूता इत्यर्थः सिद्ध्यति । ननु कथायां प्राथमिकानां षण्णां श्लोकानां का सङ्गतिरित्यत आहुः—भक्तीत्यादि । भक्त्युद्रेकयुक्त उद्धवे षड्भिः श्लोकैः पञ्चार्थाः, षडर्था वा उच्यन्त इति शेषः । स्फुटमग्रे । तथा च फलोपोद्घात एव सङ्गतिरित्यर्थः । हेतूक्त्या तस्य साधनमिति । तत्स्वभावकथनेनासामर्थ्यसाधनम् ।

इतीत्यत्र । तत्र हेतुरिति । अवक्तव्ये हेतुः । ननु मास्तु स्वतः कथनं तथापि प्रश्ने तूत्तरदानमावश्यकमिति कुतो नोक्तवानित्यत आहुः—भगवानिवेत्यादि । हेत्वन्तरमाहुः—सा हीत्यादि । ननु निषेधे कुतोऽशक्तिरित्यत आहुः—प्रत्युतेत्यादि ॥ १ ॥ ❀ ❀ य इत्यत्र । अत एवेति । अशक्तेः सेवाद्यभावजन्यत्वादेव । एवञ्चायमुद्रिका ( ? ) भक्तिः सेवां विनाऽशक्तत्वात् ? । य एवम् , स एवम् , यो नैवम् , स नैवमित्येवमत्र भक्तिलिङ्गत्वमर्थात्साधितं ज्ञेयम् ॥ २ ॥ ❀ ❀ स कथमित्यत्र । प्रकृत इत्यादि । असामर्थ्ये हेतूक्त्या हेत्वभावेन कार्याभावं वदन्नभावमुखेन कण्ठतो भक्तिलिङ्गतया साधयतीत्यर्थः । आनुषङ्गिकमिति । तत्र 'प्रवयसोऽप्यासन्' इति श्लोकोक्तं भगवद्दर्शनस्य गौणं फलम् । प्रश्न इति । प्रसिद्धौचित्यानुवादात्मकः प्रश्नः । भर्त्ता सन्नित्यादि । तैत्तिरीयारण्यकषष्ठप्रश्नेऽयमनुवाकः, स सर्वेऽप्येतल्लीलाभिप्रायस्वरूपयोर्बोधको मया विद्वन्मण्डनविवरणे व्याख्याय व्युत्पादित इति ततोऽवधेयः । इत्यादिश्रुतेरिति । आदिपदेनाग्रिमानुवाकसङ्ग्रहः ॥ ३ ॥ ❀ ❀ स मुहूर्तमित्यत । ननु सद्यो मुक्तौ प्राणलयस्यावश्यकत्वात्तदभावे को हेतुरित्यत आहुः—सुधापदेनेत्यादि । स्मरण इति केवले स्मरणे । क्रियारूपस्पर्शेन्द्रियेत्यादि । आनन्दनक्रियानिरूपकस्पर्शेन्द्रियमुपस्थस्तस्यान्तर्मुखत्वमित्यर्थः । विषय इत्यादि । उक्तेन्द्रियविषयो भक्तिरूपो निरूपित इत्यर्थः ॥ ४ ॥

## श्रीगिरिधरकृता बालप्रबोधिनी ।

एवं क्षत्त्रा विपृष्टेन द्वितीय उद्धवेन वै । बाल्यमारभ्य कृष्णस्य व्रजलीला निरूप्यते ॥ १ ॥

एवं विदुरेण पृष्टस्योद्धवस्य भगवद्विरहौत्कण्ठ्यावेशेन प्रतिवचनासामर्थ्यमाह—इतीति षड्भिः । इत्येवमुक्तप्रकारेण क्षत्त्रा विदुरेण प्रियाश्रयां प्रियो भगवान् कृष्ण एवाश्रयो विषयो यस्यास्तां वार्तां पृष्टो भागवत उद्धव औत्कण्ठ्यात् स्नेहविशेषात् स्मारित ईश्वरः श्रीकृष्णो यस्य सः प्रतिवक्तुमुत्तरं दातुं न चोत्सेहे न समर्थोऽभूदित्यन्वयः ॥ १ ॥ ❀ ❀ एतदेव कैमुत्यन्यायेन प्रपञ्चयति—य इति द्वाभ्याम् । पञ्चहायनः पञ्चवर्षो य उद्धवो बाललीलया यस्य श्रीकृष्णस्य सपर्यां रचयन् कञ्चित् श्रीकृष्णं परिकल्प्य कल्पितैरेव साधनैः पूजां कुर्वन् मात्रा जनन्या प्रातराशाय प्रातर्भोजनार्थं याचितः प्रार्थितोऽपि तद्भोजनं नैच्छदित्यन्वयः ॥ २ ॥ ❀ ❀ एवं बालप्रभृति तस्य भगवतः सेवया कालेन जरसं जरां गतः प्राप्तः स उद्धवः वार्तां पृष्टो भर्तुस्तस्य पादावनुस्मरन् कथं प्रतिब्रूयात् उत्तरं दद्यात् ? इत्यन्वयः ॥ ३ ॥ ❀ ❀ एवं परिपूर्णभक्तियोगेन परवशस्य तस्य कृतार्थत्वमाह—स इति द्वाभ्याम् । स उद्धवः कृष्णाङ्घ्रिसुधया कृष्णाङ्घ्रिस्मरणजनितपरमानन्देन साधु सम्यक् निर्वृत आनन्दितः तीव्रेण विवशत्वापादकेन भक्तियोगेन स्नेहेन तत्र भृशं निमग्नश्च सन् मुहूर्तमात्रकालं तूष्णीं सर्वेन्द्रियव्यापाररहितोऽभूदित्यन्वयः ॥ ४ ॥

## हिन्दी अनुवाद

### उद्धवजीद्वारा भगवान्‌की बाललीलाओंका वर्णन

श्रीशुकदेवजी कहते हैं—जब विदुरजीने परम भक्त उद्धवसे इस प्रकार उनके प्रियतम श्रीकृष्णसे सम्बन्ध रखनेवाली बातें पूछीं, तब उन्हें अपने स्वामीका स्मरण हो आया और वे हृदय भर आनेके कारण कुछ भी उत्तर न दे सके ॥ १ ॥ ❀ ❀ जब ये पाँच वर्षके थे, तब बालकोंकी तरह खेलमें ही श्रीकृष्णकी मूर्ति बनाकर उसकी सेवा-पूजामें ऐसे तन्मय हो जाते थे कि कलेवेके लिए माताके बुलानेपर भी उसे छोड़कर नहीं जाना चाहते थे ॥ २ ॥ ❀ ❀ अब तो दीर्घकालसे उन्हींकी सेवामें रहते-रहते ये बूढ़े हो चले थे; अतः विदुरजीके पूछनेसे उन्हें अपने प्यारे प्रभु के चरणकमलोंका स्मरण हो आया—उनका चित्त विरहसे व्याकुल हो गया । फिर वे कैसे उत्तर दे सकते थे ॥ ३ ॥ ❀ ❀ उद्धवजी श्रीकृष्णके चरणारविन्द मकरन्द-सुधासे सराबोर होकर दो घड़ीतक कुछ भी नहीं बोल सके । तीव्र भक्तियोगसे उसमें डूबकर वे आनन्दमग्न हो गये ॥ ४ ॥

पुलकोद्भिन्नसर्वाङ्गो मुञ्चन्मीलद्दृशा शुचः। पूर्णार्थो लक्षितस्तेन स्नेहप्रसरसंप्लुतः ॥ ५ ॥
शनकैर्भगवल्लोकान्नृलोकं पुनरागतः। विमृज्य नेत्रे विदुरं प्रत्याहोद्धव उत्स्मयन् ॥ ६ ॥

उद्धव उवाच

कृष्णद्युमणिनिम्लोचे गीर्णेष्वजगरेण ह। किं नु[1] नः कुशलं ब्रूयां गतश्रीषु गृहेष्वहम् ॥ ७ ॥
दुर्भगो बत लोकोऽयं यदवो नितरामपि। ये संवसन्तो न विदुर्हरिं मीना इवोडुपम् ॥ ८ ॥
इङ्गितज्ञाः पुरुप्रौढा एकारामाश्च सात्वताः। सात्वतामृषभं सर्वे भूतावासममंसत ॥ ९ ॥
देवस्य मायया स्पृष्टा ये चान्यदसदाश्रिताः। भ्राम्यते धीर्न तद्वाक्यैरात्मन्युप्तात्मनो हरौ ॥१०॥

श्रीधरस्वामिविरचिता भावार्थदीपिका।

पुलकैरुद्भिन्नान्युज्जृम्भितानि सर्वाण्यंगानि यस्य। मीलंत्या दृशा शुचाऽश्रूणि मुंचंस्तेन विदुरेण पूर्णार्थः कृतार्थो लक्षितः। यतो भगवति यः स्नेहस्तस्य प्रसरः पूरस्तस्मिन् संप्लुतो निमग्नः॥ ५॥ ❀ ❀ भगवानेव लोकस्तस्मान्नृलोकं देहानुसंधानं प्रत्यागत उत्स्मयन् यदुकुलसंहारादि भगवच्चातुर्यस्मरणेन विस्मयं प्राप्नुवन्॥ ६॥ ❀ ❀ श्रीकृष्णविरहेण संतप्यमानः प्रत्याह। श्रीकृष्ण एव द्युमणिः सूर्यस्तस्य निम्लोचेऽस्तमये सत्यजगरेण कालमहासर्पेण गीर्णेषु निगिलितेषु नो गृहेषु त्वत्पृष्टानां बंधूनां कि नु कुशलं ब्रूयाम्॥ ७॥ ❀ ❀ अनुशोचन्नाह। दुर्भगो भाग्यहीनः ये सह वसंतोऽपि श्रीहरिरयमिति न विदुः यथा क्षीरसमुद्रे जातमुडुपं चंद्रं तदा तत्रत्या मीनाः केवलं कमनीयः कश्चिज्जलचर इत्येवं विदुर्न त्वमृतमय इति तद्वत् यद्वा जले प्रतिबिंबितं चंद्रं यथेति॥ ८॥ ❀ ❀ भाग्यहीनत्वादेव न विदुर्न तु ज्ञानसामग्र्यभावादित्याह। इंगितं चित्तस्थं जानंतीति तथा पुरु अतिशयेन प्रौढा निपुणा एकस्मिन्नेव स्थाने आरमंतीति तथा एवंभूता अपि भूतानामावासमीश्वरं संतं सात्वतामृषभं सात्वतश्रेष्ठममन्यन्त॥ ९॥ ❀ ❀ ये केऽपि भाग्यवंतस्तमिंगितादिनेश्वरतया जानंतोऽप्यतद्विदां प्रवृत्त्या वा मुह्येयुरिति। किं भाग्यवत्तयापि तत्राह। देवस्येति। ये यादवा देवस्य मायया स्पृष्टा व्याप्ता यादवोऽयमस्मद्बंधुरिति वदंति। ये च शिशुपाला-दयोऽसदेवान्यद्वैरमाश्रिता निंदंति। तेषां वाक्यैरात्मनि हरौ उप्तात्मनो निक्षिप्तचित्तस्य मादृशस्य बुद्धिर्न भ्राम्यते मोहं न प्राप्यते। अन्ये तु मूढा एवेत्यर्थः॥ १०॥

श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः।

यद्वा भगवल्लोकात् भगवन्नित्यलीलामयद्वारकाख्यात्। नृलोकं विदुरादिमयं मनुष्यलोकम्। आगतोऽनुसंदधानः उत्स्मयन् तदनुभवेनोच्चैरानंदित इत्यर्थमाह संदर्भकारः॥ ६॥ ❀ ❀ अस्तमयेऽस्तं नित्यनिवासं श्रीगोलोकमये प्राप्ते सती-त्यर्थः। "अस्तं क्षिप्तेप्यवसिते वासांतद्वयंतपर्वतः" इति धरणिः। अजं वस्तं गिरतीत्यजगरः। महाकालपक्षे अजं ब्रह्माणं द्विपरार्द्धांते गिरतीति तथा नु वितर्के हेत्यनेन कुशलप्रश्नप्रत्युत्तरारंभो न कार्यः। विप्रशापेन सन्निकृष्टनाशस्य प्रसिद्धत्वादिति दर्शयति 'प्रत्यारंभे प्रसिद्धेह' इति यादवः। विश्वनाथस्तु शोकव्याकुलं विदुरमाश्वासयितुं सिद्धांतं ब्रुवन्बहिर्वृत्त्या तद्विरहसंतापलोकानां दुरवस्थानं च दर्शयति कृष्ण एव द्युमणिस्तस्य निम्नलोचेऽस्तमये सति महासर्परूपशोकांधकारेण गीर्णेषु अनेनेति ध्वनितं यथा ज्योतिश्चक्रे स्थितस्यैव द्युमणेरश्वरथस्य रथादिसपरिकरविशिष्टस्य यस्मिन्वर्षेऽस्तसमयो दृश्यते तदन्येषु वर्षेषु तदैव तस्योदयपूर्वाह्न-मध्याह्नादयो दृश्यंते तथैव गोकुलमथुराद्वारकास्थस्य सपरिकरस्य तत्तल्लीलामृतमज्जितजगज्जनस्यैव कृष्णस्य यस्मिन्ब्रह्मांडेंतर्द्धानं दृश्यते तदन्येषु ब्रह्मांडेषु जन्मोत्सवरासोत्सवकंसवधरुक्मिण्यादिपरिणयनोत्सवाद्या लीला दृश्यंते ज्योतिश्चक्रे सूर्यस्योदयपूर्वाह्नाद्याः प्रतीयमानत्वादवास्तवाः कृष्णस्य तु जन्माद्यास्तत्र नित्यत्वाद्वास्तवा एवेति विशेषः। सर्वासां लीलानां नित्यत्वं प्रथमस्कंधे दर्शितं यथा सूर्यास्तमयसंबंधिनि वर्षे अंधकारेण कमलानि म्लायंति चक्रवाका विभिंदंति विलपंति च चोरदस्युराक्षसप्रेतोलूकाद्या हृष्यंति तथैव श्रीकृष्णांतर्द्धानसम्बन्धिनि ब्रह्मांडे दुःखाजगरग्रस्ते साधवो म्लायंति धर्मसेतवो भिद्यंते कृष्णानुरागिणो विलपंति अधार्मिका भगवद्बहिर्मुखा हृष्यंतीति॥ ७॥ ❀ ❀ उद्धवेन क्षीरसमुद्रे चंद्रवासस्यादृष्टचरत्वादाह—यद्वेति। यद्वा दक्षशापनष्टस्वकला-वाप्तये प्रभासे समुद्रमग्नं तमुडुपं मीना यथा मधुरोज्ज्वलत्वेनैव विदुः। न तु देवोत्तमत्वेनेति संदर्भः। विश्वनाथस्तु—यथा समुद्रगा मीनाः कमनीय आस्माकीनो जलचरः कश्चिदित्येव विदुर्नतु सुधांशुर्निशापतिरिति तद्वद्यदवोपि कृष्णमाधुर्यमेव जानंति न त्वैश्वर्यमिति दुःखेन ब्रवीमि दुर्भग इत्यादि। वस्तुतस्तु—दुर्ज्ञेयो भगो माहात्म्यं यस्य स तथा ऐश्वर्यज्ञाननिष्ठेभ्योपि माधुर्य्य-ज्ञाननिष्ठानामुत्कर्षस्य दशमे व्याख्यास्यमानत्वात्। अत्र न विदुरिति वर्त्तमाननिर्देशेन द्वारिकावासिनां यदूनां च भगवन्नित्य-

---

१. प्रा० पा०—किं पुनः।

संगित्वज्ञापनाय भो विदुर त्वत्पृष्टकुशला यादवादयः संप्रति श्रीभगवता सहैव सुखेन क्रीडंति केवलं प्रष्टा त्वं पृष्टश्चाहमित्यावामेव तत्संवासविरहितत्वादकुशलिनावत आवामेवावां शोचाव इति भावः। अत्र यदि तदानीं कृष्णेन सह तेषां संवासो नाभविष्यत्तदा मावेदिषुरित्येवावक्ष्यदिति ज्ञेयम्। केचित्तु यथा मीनास्तिमिंगिलादयो हरिं मत्स्यरूपिणमुडुपं संसारतारकं न विदुस्तथेत्याहुः। समुद्रमथनात्पूर्वं मीनाः सह वसंतोप्युडुपं हरिं संतापहारिणं न विदुस्तथेत्यन्ये ॥ ८ ॥ ❀ ❀ सर्वभूताधिवास इति श्रुतिप्रसिद्धमविशेषेण सकलजगन्निवासमिति तीर्थः। चक्रवर्त्ती तु ननु शुद्धप्रेमैकमाधुर्यभुजो गोकुलवासिन इव द्वारिकावासिनो न खल्वैश्वर्यज्ञानशून्याः संति तत्कथं न विदुरिति ब्रवीमि तत्राह—इङ्गितज्ञा इति। "इंगितो हृद्गतो भावः" इत्यभिधानात्। तदीयचित्तस्थमपि वस्तु जानंति किं पुनः शरीरस्थं सौंदर्य्यलावण्यादिकं तत्र हेतुः पुरुप्रौढा सूक्ष्मधियः। तदप्यैश्वर्यज्ञानाभावमाह—एकस्मिन्नेवासनशयनादावारमंत इत्येकारामाः। सात्वतां स्वेषामेव ऋषभं नित्यकुलपतित्वेन वर्तमानं कृष्णं भूतावासं सर्वभूतेष्ववसंतमंतर्यामिणमेवामंसत 'एको देवः' इत्यादौ 'सर्वभूताधिवासः' इत्यंतर्यामिश्रुतेः। न तु स्वयं भगवत्त्वेन साक्षान्नारायणस्याप्यंशिनमित्यतस्ते हरिं न विदुरित्यहमवोचमिह जगति समुचितं जानंतोऽजानंतश्च न निंद्यते निंद्यंते तु तन्मध्यवर्त्तिनोऽर्द्धमर्द्धं जानंत इति भावः ॥ ९ ॥ ❀ ❀ इत्यर्थ इति। शिशुपालप्रभृतयः सर्वे ज्ञानिन एव न तद्वाक्यं श्रद्धेयमिति भावः। तद्वाक्यैः कृष्णः शरीरं त्यक्त्वा वैकुंठं गतस्तथा धृतराष्ट्रजरासंधादिमहाराजद्रोहेण सकुलमेव नाशं प्राप्त इत्येवंरूपैः हरौ सच्चिदानंदे 'जीहाङ् गतौ' धातोर्हानं इति ज्ञानं 'रमु' क्रिडायाम् अतो रीत्यतिशयितसुखम्। तेन हश्चासौरिश्चेति हरिः सच्चिदानन्दलक्षणः कृष्ण इति ज्ञेयम् ॥१०॥

## श्रीराधारमणदासगोस्वामिविरचिता दीपिनीव्याख्या।

भगवानेव लोको भक्तानां स्फूर्त्या निवासस्थानं तस्मात् संहारादित्यादिना स्वनियार्णादिमहोत्सवः तत्र यद्भगवतश्चातुर्य्यं बहिर्मुखान्प्रतिशुष्कवैराग्यदर्शनान्तर्मुखान्प्रति तु प्रपञ्चाप्रकटनित्यलीलाया गोप्यत्वप्रदर्शनं इति युगपत्समाधानं तस्य स्मरणेन तथाहि तल्लक्षणं चतुरो युगपद्भूरि समाधानकृदुच्यत इति ॥ ५ ॥ ❀ ❀ वहिर्देहानुसंधानेन तादृशस्फूर्त्तिभङ्गात् श्रीकृष्णविरहेणेत्यादि श्रीकृष्णस्य सूर्य्यत्वेन मथुराया उदयचलत्वं साधकानां पद्मत्वं सिद्धानां चक्रवाकत्वं प्रभासस्यास्ताचलत्वमाक्षिप्यते अस्तमयेऽस्तत्वे सति ॥ ६ ॥ ❀ ❀ अत्र यदूनां तन्नित्यपरिकरत्वेन महाभाग्यवत्वेऽपि दुर्भगातिशयोक्तिः श्रीव्रजपरिकरवच्छुद्धमाधुर्य्यावगाहित्वाभावात् श्रीहरिः परममनोहरोऽयमस्मद्बन्धुरिति न विदुर्न जानंति किन्तु वृष्णीनां परदेवतेत्युक्तेरैश्वर्य्यवत्त्वेनैव जानंतीति व्याख्येयम्। अत्र नित्यं तेन तत्संयोगाभावेनावेदिषुः ये सम्वसन्तो हरिमित्येवावक्ष्यदिति ज्ञेयम्। स्वामिपादैस्तु उद्धवस्य परमनिर्वेदार्त्तिभ्यां तस्य वियोगे तत्पारमैश्वर्य्यमेवास्फुरत् प्रेम्णो हि वियोगकालीनोऽयं स्वभावो यदसन्तमप्यैश्वर्य्यं स्फोरयति किमुत सन्तं यथाऽदिभरतचरिते मृगबालकपादस्पर्शसौभाग्येन पृथिव्यास्तपस्सौभाग्यं वर्णितमित्यभिप्रेत्यैवैश्वर्य्यज्ञानाभावेन दुर्भगत्वं व्याख्यातं नत्वैश्वर्य्यमाधुर्ययोस्तारतम्यविवक्षयेति ज्ञेयम्। अन्यथा दुर्ल्लभन्तु मयि पुत्रतया प्रेमेत्यादितद्व्याख्यानमेव परस्परं व्याहन्येत, दृष्टान्ते तदा जन्मकाले अत्र पूर्वार्थे तेषां मीनानां जनिकाले चंद्रे जलत्वज्ञानं कल्पितमेव न तु निश्चितं विदुरिति वर्त्तमाननिर्देशश्च न संगच्छते सदा साक्षात्समुद्रे चंद्रस्थित्यसम्भवादित्यरुचौ यद्वेति ॥ ७ ॥ ❀ ❀ वियोगार्त्त्या पारमैश्वर्य्यस्फूर्त्तेरेव भाग्यहीनत्वादेव न विदुरित्यपि व्याख्यातम्। वस्तुतस्तु अनुवादमनुक्त्वैव नविधेयमुदीरयेदित्युक्तेः सात्वतां स्वेषामेव मृषभं कुलपतिं स्वयं भगवन्तमपि भूतावासं तदंशमंतर्यामिणमेवामंसत सर्वभूताधिवासमित्यंतर्य्यामिश्रुतेः वृष्णीनां परदेवतेत्युक्तेश्चेति व्याख्येयम् ॥ ८ ॥ ❀ ❀ मायया व्यामोहनशक्त्या अन्ये यादवाः शिशुपालादयश्च तत्र पूर्वप्रेममुग्धत्वेन उत्तरे च मिथ्याज्ञानेन मूढा एवेत्यर्थः ॥ ९ ॥ ❀ ❀ अतः अतप्ततपस्त्वात् तादृशस्य श्रीकृष्णसदृशस्य ॥ १० ॥

## श्रीमद्वीरराघवव्याख्या

पुलकेन रोमांचेनोद्भिन्नं व्याप्तं सर्वमंगं यस्य सः मीलद्दृशा निमीलद्दृष्ट्या शुचः आनंदाश्रूणि मुंचन्स्नेहप्रसरसंप्लुतः भगवति यः स्नेहः तस्य प्रसरेण संप्लुतो व्याप्तः उद्धवस्तेन विदुरेण पूर्णार्थः कृतकृत्यो लक्षितः ॥ ५ ॥ ❀ ❀ शनकैरिति भगवानेव लोकस्तस्मान्नृलोकं देहानुसंधानं शनकैःपुनरागतः। नेत्रे विमृज्य संमृज्य उत्स्मयन् भगवदाख्यस्य लोकस्य ज्ञातत्वाद्विस्मयं प्राप्नुवन्नुद्धवः विदुरं प्रत्याह प्रत्यभाषत ॥ ६ ॥ ❀ ❀ कृष्णेत्यादिकृष्ण एव द्युमणिः सूर्यस्तस्य निम्लोचेऽस्तमये सत्यजगरेण कालरूपमहासर्पेण नोऽस्माकं गृहेषु गीर्णेषु सत्सु कुशलं त्वत्पृष्टानां कुशलमहं किं ब्रूयाम् ॥ ७ ॥ ❀ ❀ दुर्भग इति बतेति खेदेऽयं लोकः जनः दुर्भगः यादवास्तु सुतरामपि दुर्भगाः ये यादवाः संवसंतः श्रीकृष्णेन सह संवसंतोपि हरिं भगवंतं नाविदुः किंतु स्वसदृश एवायमपीति विदुः तत्र दृष्टांतः मीना मत्स्योडुपप्लवमिव मीना हयुडुपमयमपि कश्चिज्जलचर इति जानंति न तूत्तारणहेतुरयमिति एव यादवा अप्ययं श्रीकृष्णः स्वाश्रितदुरितान्यपहरेन्संसारपारं तारयतीति न जानंति किन्तु कश्चिद्यादवो बलवानेवेति ॥ ८ ॥ ❀ ❀ एतदेवाह इंगितज्ञा इति इंगितज्ञाः परचित्तवृत्तिज्ञाः अतएव पुरुप्रौढाः बहुनिपुणाः एकारामाः एकस्थानवर्त्तिनश्च सात्वताः यादवाः सर्वे सात्वतामृषभं यादवानां श्रेष्ठं श्रीकृष्णं भूतावासं क्षेत्रज्ञमेवा-

मन्यंत ॥ ९ ॥ ❀ ❀ न केवलं यादवा एव भूतावासं श्रीकृष्णममंसत किंत्वन्येऽपीत्याह देवस्य भगवतो मायया स्पृष्टा मोहिता अतएवासदचेतनं शब्दादिकं भोग्यत्वेनाश्रिताः अन्ये शिशुपालादयः ते सर्वेऽपि भूतावासममंसतेति पूर्वेणान्वयः तर्हि भगवदादयोपि मायास्पर्शाविशेषान्न जानीयुरित्यत आह भ्राम्यत इति । आत्मनि परमात्मनि हरौ उन्नात्मनां समर्पितमनसां मादृशानां धीः तद्वाक्यैर्भगवन्मायामोहितानां जीवोऽयमित्यादिवाक्यैर्न भ्राम्यते ददामि बुद्धियोगं तं येन मामुपयांति इति भगवतैव गीतत्वादिति भावः ॥ १० ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली ।

उद्धवस्यैवंविधामवस्थां पश्यतो विदुरस्य मनसि किं प्रत्यभादत्राह पुलकेति । तेन विदुरेण पुलको रोमांचस्तेनाद्भिन्न-मंकुरितं सर्वांगं यस्य सः मीलद्दृशाऽर्धोन्मीलितनेत्रेणाश्रुबाष्पकलां मुंचन्स्नेहप्रसरसंप्लुतो भक्तिनदीप्रवाहमग्नः स उद्धवः पूर्णार्थः कृतकृत्यो लक्षितो लक्षणतो ज्ञात इत्यन्वयः ॥ ५ ॥ ❀ ❀ ततः परं विदुरस्य काभीष्टा सिद्धिरभूदित्याशंक्य तत्प्रश्नप्रवचनोपक्रमसिद्धिरित्याह शनकैरिति । भगवल्लोकादसंप्रज्ञातावस्थालक्षणान्नृलोकं मनुष्यदेहाभिमानमागतः उत्स्मयन्नु-त्कृष्टं मंदस्मितं कुर्वन् ॥ ६ ॥ ❀ ❀ कीदृशी सेत्यत्राह कृष्णेति । कृष्ण एव द्युमणिः सूर्यस्तस्य निम्लोचे अस्तमये सति अतएव गतश्रीषु नष्टालोकेषु अतएव कालाजगरेण गीर्णेषु ग्रस्तेषु अस्तंगतेषु विनाशं यातेषु नः संबंधिषु यदुषु किं नु कुशलं ब्रूयां हेत्यनेन कुशलप्रश्नप्रवचनप्रत्यारंभो न कर्तव्यो विप्रशापेन सन्निकृष्टनाशस्य प्रसिद्धत्वादिति दर्शयति प्रत्यारंभे प्रसिद्धे हेति यादवः ॥ ७ ॥ ❀ ❀ दुष्टनिधनव्याजेन ज्ञानोपदेशार्थमवतीर्णस्य कृष्णस्य ज्ञानेन नाशं यास्यतामपि यदूनां त्रिलोक्याश्च श्रेयः सिद्धिः स्यादित्याशंक्य ज्ञाने सति श्रेयस्तदेव नास्तीत्यनुतपन्नुद्धव इत्याह दुर्भगेति । लोको जनः बतशब्दः खेदवचनः हरिं न विदुर्दुस्तरसंसारसंहारक-त्वेनेति शेषः ॥ ८ ॥ ❀ ❀ न केवलमज्ञा मिथ्याज्ञानिनोपि जाता इत्याह इंगितज्ञा इति । अत्रेंगितशब्दो द्विरावृत्त्या व्याख्यातव्यः । इगि चेष्टायामिति धातुः लोकरयेंगितेन चेष्टितेनेंगितं हृद्गतभावं जानंतीतींगितज्ञाः इंगितं हृद्गतो भाव इंगितं चांगचेष्टितमित्यभिधानं पुरुप्रौढाः शरीराभिमानिनः गृहस्वामिनो वा एकारामाः केवलक्रीडालोलाः एके मुख्यान्यकेवला इति च । एवंविधाः सर्वे सात्वताः यादवाः सात्वतां ब्रह्मादिभागवतानामृषभं स्वामिनं प्राकृतप्रधानपुरुषवत् भूतावासं कतिपयजनावासहेतुभूतममंसतामन्यंतेत्यन्वयः । एको देव इति प्रतिपाद्यत्वेन प्रसिद्धं भूतावासमविशेषेण सकल-जगन्निवासं भगवन्तं सात्वतां यादवानामेव ऋषभममंसतेति वा ॥ ९ ॥ ❀ ❀ प्रसंगाज्ज्ञानिलक्षणमाह देवस्येति देवस्य हरेर्मायया बंधकशक्त्या स्पृष्टा उपतप्तज्ञानत्वादन्यथाज्ञानिनो येचान्ये असतां जनानाममंगलानां विषयाणां वाश्रयास्त-द्वाक्यैस्तेषां नृणां वाक्यैरात्मनि परमात्मनि उन्नात्मनां संततन्यस्तनिर्दोषमनसां ज्ञानिनां धीर्न भ्राम्यते नान्यथा भवतीत्यनेन सम्यग्ज्ञानित्वमेवंविधमित्युक्तं भवति हराविंत्यक्षरद्वयेन ओहाङ्गताविति हेति ज्ञानं रमुक्रीडायामिति रीत्यतिशयितसुखमिति सच्चिदानन्दलक्षणो विष्णुरुच्यत इति ज्ञातव्यम् ॥ १० ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः ॥

भवगल्लोकात् नित्यलीलामयद्वारकाख्यात् । नृलोकं बहिर्दृश्यमानं विदुरादिमयं मनुष्यलोकं आगतः अनुसदधानः । उत्स्मयन् तदनुभवेनोच्चैरानन्दित इत्यर्थः ॥ ६ ॥ ७ ॥ ❀ दुर्भग इति । अयं मम हृदये स्फुरन् द्वारकावासी लोकः । दुर्भगो भाग्यहीनः । ये संवसन्तः सह वसन्तोऽपि न विदुर्न जानन्ति अहं तु सम्वासभाग्यहीनो न जानामीति नाश्चर्यमिति भावः । अत्र तदानीं यदि संवासो नाभविष्यत् तदा नावेदिषुरित्येवावक्ष्यदिति ज्ञेयं किञ्च हरिः सर्व्वमनोहरत्वेन ज्ञात अपि तं नाविदुः स्वयं भग-वत्त्वेन न जानन्ति तत्र दृष्टान्तः मीना इवोडुपमिति स्वकलावर्द्धनार्थं प्रभासे समुद्रमग्नं तं मीना यथा केवलं मधुरोज्ज्वलत्वेनैव विदुः न तु देवोत्तमत्वेन तद्वदित्यर्थः ॥ ८ ॥ ❀ ❀ नन्वधुनापि न जानन्तीति कथं जानासि इत्याशंक्य तत्र हेतुं प्राचीननिजानुभवमाह इङ्गितज्ञा इति । सात्वतां स्वेषामेव ऋषभं नित्यकुलपतित्वे वर्त्तमानं स्वयं भगवन्तमतिभूतावासं तदंशरूपं भूतान्तर्यामिणमेवामंसतेति एको देव इत्यादौ सर्व्वभूताधिवास इत्यन्तर्यामीतिश्रुतेः उक्तञ्च वृष्णीनां परदेवतेति ॥ ९ ॥ ❀ ❀देवस्येति । ये च यादवे-भ्योऽन्योविद्विदुषामित्याद्युक्तप्रकारेण परमविद्वांसस्तेत्वन्यदसत् परमोत्कृष्टभौतिकदेहोऽसाविति मन्यन्त इत्यर्थः ॥ १० ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

निर्वृत्त्यनुभावं दर्शयति पुलकैरुद्भिन्नानि अंकुरितानि सर्व्वाण्यङ्गानीति उद्भिदस्तरुगुल्माद्या इति स्तम्भश्च व्यञ्जितः । मीलन्त्या दृशा शुचः अश्रूणि मुञ्चन् तेन विदुरेण पूर्णार्थः कृतार्थो लक्षितः अनुभावैरनुमितेन प्रेम्णेत्यर्थः । यतः प्रेम्ण एव भगवति स्नेहश्चित्त-द्रवस्तस्य प्रसरः पूरस्तस्मिन्संप्लुतः निमग्नः प्रथमं प्रेम्णि निमग्नस्तद्द्वितीयकक्षायां स्नेहनिमग्न इत्यर्थः ॥ ५ ॥ ❀ ❀ ततश्च भगव-ल्लोकात् स्वप्रेमोद्रेकेण प्रापितान्नित्यलीलामयद्वारकाख्यां नृलोकं विदुरप्रेम्णा आकृष्यमाणः सन्नागतः पुनरिति । द्वितीयमूर्च्छाभङ्गे सती-त्यर्थः । उत्स्मयन् भूभारहरणादिचातुर्य्यस्मरणेन विस्मयं प्राप्नुवन् । यद्वा भो उद्धव विदुरं प्रत्युत्तरेण समाधाय पुनरत्रागच्छेति

भगवदाश्वासनेनोत्कृष्टं स्मितं कुर्वन् ॥ ६ ॥ ❀ ❀ शोकव्याकुलं विदुरमाश्वासयितुं प्रथममेव सिद्धान्तं ब्रुवन् स्वबहिर्वृत्त्या तद्विरहसन्तापं लोकानां दुरवस्थानं चावेदयति। कृष्ण एव द्युमणिः सूर्यस्तस्य निम्लोचे अस्तमये सति अजगरेण महासर्परूप-शोकान्धकारेण गीर्णेषु निगिलितेषु गृहेषु नोऽस्माकं त्वत्पृष्टानां बन्धूनां किं कुशलं ब्रूयाम्। अत्र ज्योतिश्चक्रे स्थितस्यैव द्युमणेरश्वरथ-सारथ्यादिपरिकरविशिष्टस्य यस्मिन् वर्षे अस्तमयो दृश्यते तदन्येषु वर्षेषु तदैवोदयपूर्वाह्णमध्याह्नादयो दृश्यन्ते यथा तथैव गोकुलमथुराः द्वारकास्थस्य सपरिकरस्य तत्तल्लीलामृतमज्जितजगज्जनस्यैव कृष्णस्य यस्मिन् ब्रह्माण्डेऽन्तर्द्धानं दृश्यते तदेवान्येषु ब्रह्माण्डेषु जन्मोत्सवरासोत्सवकंसवधरुक्मिण्यादिपरिणयोत्सवाद्या लीला दृश्यन्ते ज्योतिश्चक्रे सूर्यस्योदयपूर्वाह्णाद्या प्रतीय-मानत्वादवास्तवाः। कृष्णस्य तु जन्माद्यास्तत्र तत्र नित्यत्वाद्वास्तवा एवेति विशेषः। सर्वासां लीलानां नित्यत्वं प्रथमस्कन्धे दर्शितं दशमे च पुनः स प्रमाणकं दर्शयिष्यते च यथा सूर्यास्तमयं सम्बन्धिनि वर्षे अन्धकारेण ग्रस्यमाने कमलानि ग्लायन्ति चक्रवाका विलपन्ति चोरदस्युराक्षसप्रेताद्या हृष्यन्ति तथैव श्रीकृष्णान्तर्द्धानसम्बन्धिनि ब्रह्माण्डे दुःखाजगरग्रस्ते साधवो म्लायन्ति कृष्णानुरागिणो विलपन्ति धर्मसेतवो भिद्यन्ते अधार्मिका भगवद्बहिर्मुखा हृष्यन्तीत्युद्धवेन गीर्णेष्वित्यादिना सूचितम् ॥ ७ ॥ ❀ ❀ एवं तद्विनाभूतानामुत्तमलोकानां दुरवस्थां दर्शयित्वा तद्विरहोद्रेकेणाकस्मात् स्फुरितं तदीयमहैश्वर्यज्ञानं स्वस्मिन् नालक्ष्य तद्विनाभूतानां तल्लीलापरिकराणां तादृशमहैश्वर्य्यस्फूर्तिमनालक्ष्य प्रेमविभ्रमस्य केनापि वैचित्र्येणैव तान्निन्दति दुर्भग इति। अयं मम हृदये स्फुरन् द्वारकावासी लोकः दुर्भगो भाग्यहीनस्तत्रापि यदवस्तदतिसमीपसम्बन्धिनो नितरां दुर्भगाः। ये संवसंतः सह वसन्तोऽपि हरिं स्वमाधुर्य्येण तत्तन्मनोहरन्तं न विदुर्न जानन्ति। अहन्तु संवासभाग्यहीनत्वात् ज्ञात्वाप्यतिदुर्भग इति भावः यथा क्षीरसमुद्रे जातमुडुपं तत्रस्थं चन्द्रं तत्रत्या मीनाः केवलमतिकमनीय आस्माकीनः कश्चिज्जलचर इत्येव विदुर्न तु देवतारूपः सुधांशुनिशापतिरिति तद्वद्यदवः कृष्णस्य माधुर्य्यमेव जानन्ति न त्वैश्वर्य्यमिति दुःखेन तान् दुर्भगानेव ब्रवीमि इति भावः। वस्तु-तस्तु दुर्ज्ञेयो भगो माहात्म्यं यस्य सः। ऐश्वर्य्यज्ञाननिष्ठेभ्योऽपि माधुर्य्यज्ञाननिष्ठानामुत्कर्षस्य दशमे व्याख्यास्यमानत्वाद् अत्र न विदुरिति वर्त्तमाननिर्द्देशेन द्वारकावासिनां यदूनाञ्च भगवन्नित्यसङ्गित्वज्ञापनाय भो विदुर त्वत्पृष्टकुशला यादवादयः सम्प्रति श्रीभगवता सहैव सुखेनैव खेलन्ति। केवलं प्रष्टा त्वं पृष्टश्चाहमित्यावामेव तत् संवासविरहितत्वात् अकुशलिनावत आवामेव शोचाव इति भावः। अत्र यदि तदानीं कृष्णेन सह तेषां संवासो नाभविष्यत्तदा नावेदिषुर्ये वसन्त इत्येवावक्ष्यदिति ज्ञेयम् ॥ ८ ॥ ❀ ❀ ननु शुद्धप्रेमैकमाधुर्य्यभुजो गोकुलवासिन इव द्वारकावासिनो न स्वस्वैश्वर्य्यज्ञानशून्या भवन्ति तत् कथं न विदुरिति ब्रवीषि तत्राह इङ्गितज्ञा इति। तदीयचित्तस्थमपि वस्तु जानन्ति किं पुनः शरीरस्थं सौन्दर्य्यलावण्यादिकं तत्र हेतुः पुरुप्रौढा अतिसूक्ष्मबुद्धयः। तदप्यैश्वर्य्यज्ञानभावमाह एकस्मिन्नेवासनशयनादौ आरमन्ते सात्वतां स्वेषामेव ऋषभं नित्यकुल-पतित्वेन वर्त्तमानं कृष्णं भूतावासं सर्व्वभूतेष्वावसन्तमन्तर्य्यामिणमेवामंसत एको देव इत्यादौ सर्व्व भूताधिवास इत्यन्त-र्यामिश्रुतेः। न तु स्वयं भगवत्त्वेन साक्षान्नारायणस्याप्यंशिनमित्यतस्ते हरिं न विदुरित्यहमवोचमिह जगति समुचितं जानन्तोऽजानन्तश्च न निन्द्यन्ते निन्द्यन्ते तु तन्मध्यवर्तिनो नोऽर्द्धमर्द्धं जानन्त इति भावः ॥ ९ ॥ ❀ ❀ एवञ्च ये मर्त्यलोकवर्तिनः साधवस्तद्विरहदुःखिनः ये च यादवाद्यास्तन्नित्यसङ्गिनः संयोगसुखिनस्ते द्वय एव भक्तिमत्त्वात् धन्या एव अन्ये त्वभक्ता नारकिन एवेत्याह–देवस्य मायया ये स्पृष्टा विद्वन्मानिनस्तत्रापि ये च अन्यत् शिष्टसिद्धान्तादपरमति-दुष्टमतमासुरमाश्रितास्तेषां वाक्यैः कृष्णः शरीरं परित्यज्य वैकुण्ठं गत इति। तथा कृष्णो धृतराष्ट्रजरासन्धादिमहामहा राजद्रोहाधर्म्मजनितेन ब्रह्मशापेन सकुल एव नाशं प्राप्त इति निन्दा भाषितैर्हरौ आत्मनि परमात्मनि उप्तात्मनो निक्षिप्तचित्तस्य भक्तजनस्य धीर्न भ्राम्यति किन्तु तन्माधुर्य्ये एव निमज्जति येषां भ्राम्यति तैरप्यलं नारकिभिरिति भावः ॥ १० ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः।

पुलकैरोमांचैरुद्भिन्नमंगं शरीरं यस्य सः मीलंत्या दृशा शुचः प्रेमाश्रूणि मुञ्चन् स्नेहप्रसरे श्रीकृष्णप्रेमपूरे संस्तुतस्तेन क्षत्रा पूर्णार्थः कृतकृत्यो लक्षितः ॥ ५ ॥ ❀ ❀ भगवानेव लोकः प्रवेशस्थानं ततो नृलोकं शरीराद्यनुसंधानम् ॥ ६ ॥ ❀ ❀ कृष्णद्युमणेः कृष्णाख्यभास्करस्य निम्लोचे अस्तमिते सति अजगरेण कालमहाहिना गीर्णेषु ग्रस्तेषु नोऽस्माकं गृहेषु त्वत्पृष्टानां किं नु कुशलं ब्रूयाम् ॥ ७ ॥ ❀ ❀ यो हरिं संसारतापहरं न वेद सोऽयं दुर्योधनादिलोको जनो दुर्भगो भाग्यहीनः ये केचित् सवसन्तः हरिणा सह वासमपि कुर्वंतः कृतवर्मादयो हरिं संसारतापहरं न विदुः। ते यादवा अपि बतेति खेदे। नितरां दुर्भगाः यथा मीनाः जलशैत्यसम्पादनेन पद्मवृद्धिकरत्वेनार्कतापहरमुडुपं न जानंति तद्वदित्यर्थः ॥ ८ ॥ ❀ ❀ यादवविशेषान् कौरवविशेषान् भगवत्तत्त्वानभिज्ञत्वेन विनिंद्याथ यादवान् कौरवांश्च भगवत्तत्वज्ञान् स्तौति इंगितज्ञा इति। इंगितज्ञाः शास्त्राचार्याभिप्रायज्ञाः पुरुप्रौढाः पुरुकुलमुख्याः युधिष्ठिरादयः सात्वता वसुदेवादयः सात्वता मृषभं सात्वतश्रेष्ठं श्रीकृष्णं भूतावासं सर्वभूताधारं ब्रह्म अमंसत अमन्यंत एकारामाः एकस्मिन् भगवति आरमंतीति ते तया कृतार्था इत्यर्थः ॥ ९ ॥ ❀ ❀ हरिप्रावण्याप्रावण्ययोः हरिद्वेषिजनवचनादेः त्यागस्वीकाराज्ञापकमित्याह देवस्येति। मायया स्पृष्टाः अतएव असदेव

वैरमाश्रिताः ये शिशुपालपौंड्रकाद्याः तेषां वाक्यैः आत्मनि परमात्मनि उन्नात्मनः अर्पितबुद्धेः हरिभक्तस्य बुद्धिर्न भ्राम्यते मोहं न प्राप्यते अन्यस्य परमात्मनि अनुन्नात्मनस्तु बुद्धिर्भ्राम्यते इत्यर्थः ॥ १० ॥

## श्रीमद्वल्लभाचार्यविरचिता सुबोधिनीव्याख्या

एवं सर्वव्यापाररहित्यं निरूप्य तस्य भक्तिलिङ्गजनकत्वम्, अन्यथा तद्व्यर्थमिति तदाह—पुलकोद्भिन्नसर्वाङ्ग इति। पुलकैः रोमोद्गमैरुद्भिन्नानि सर्वाङ्गानि यस्य। अनेनाऽऽनन्दः पूर्णो मध्ये जात इत्युक्तम्। बहिरपि निर्गच्छतीत्याह—मुञ्चन्मीलद्दृशाऽशुच इति। मीलदिति अन्तर्भोगो निरूप्यते, न तु जलनिमग्नवत् केवलमन्तःपूर्णता। अशुच आनन्दाश्रूणि। अनेन शोकं निवार्य स्वयं निर्गच्छन्तीति सूचितम्। एवं रोमोद्गमादीनां भक्तिलिङ्गानामुत्पत्तिमुक्त्वा तेषां लिङ्गत्वमाह—पूर्णार्थो लक्षित इति। अर्थो भगवानानन्दरूपः पूर्णो यस्मिन्। तेन विदुरेण, नेत्रोदकादिना वा। तस्य भक्तिदर्शनेन स्वस्याऽपि भक्तिर्जाता। स्वात्मानं विकलीकरोतीति, भक्तेरतिपूरेणाऽयं बहुदूरे प्लावित इत्यपि लक्षितः। भक्तेः प्लावकत्वं न सम्भवतीति स्नेहस्य प्रसर उक्तः। सा हि शास्त्रतो जायमाना यावत्कार्यमेव जायते। अनेन[1] विसर्[2]जनक्रिया निरूपिता। एवमेव सर्वेन्द्रियाणां भगवद्विषयत्वम् ॥ ५ ॥ ❀ ❀ तादृशोऽपि भगवन्तं दृष्ट्वालब्धाश्रयो भगवन्माहात्म्यकथनार्थं विदुरं कृतार्थीकर्तुं भगवदिच्छया भगवन्तमाश्रयभूतं गृ[3]हीत्वैव सावधानतया समागत इत्याह—शनकैरिति। शनकैरिति सावधानत्वम्। न तस्य स्मरणमात्रं जातम्, किन्तु व्यापिवैकुण्ठे गत्वा समागत इत्याह—भगवल्लोकान्नृलोकं पुनरागत इति। पुनःपदेन च पूर्वमप्युद्धवो वैकुण्ठादेव समागत इति ज्ञायते, अन्यथा 'स्वधाम नय मामपि' इति तस्य कामना प्रतिहता स्यात् पूर्वं तु भगवत आज्ञापरिपालनार्थं समागतः, इदानीं तु भक्तस्य। नेत्रे विमृज्येति निद्राप[4]ायोत्थितत्वं सूचितम्। स्वस्य पूर्णत्वेन महत्त्वमल्पेष्वागतं गर्वाय भवतीति तन्निवृत्त्यर्थमाह—उत्स्मयन्निति। उच्छब्दो विवृ[5]तिवाची हासवन्मुखविकासं बोधयति। ताद[6]शो भूत्वा प्रत्याह ॥ ६ ॥ ❀ ❀ एकेन साधरणमुत्तरम्—कृष्णद्युमणीति। कृष्णो हि सदानन्दः सर्वदा द्युमणिरेव। न हि कदाचिदपि सूर्यो भूमौ समायाति, तत्र स्थित एव परमिदं जगत् प्रकाशयति, तथा भगवान् व्यापिवैकुण्ठ एव स्थितोऽस्मदादिरूपां पृथ्वीं प्रकाशितवान्। स इदानीमत्रहिर्मु[7]खान् अस्मत्परभागस्थितान् प्रकाशयितुं निम्लोचति। तस्य निम्लोचे सति सर्वमेव जगत् पूर्वं तत्प्रकाशितमन्धकारेण गृह्यते। स ह्यन्धकारोऽजगर आ[8]धिदैविकः। इदं हि लोके परिदृश्यमानं तम आ[9]धिभौतिकम्। 'हुतं रूपं तु तमसा वायौ ज्योतिः प्रलीयते' इत्याध्यात्मिकम्। 'आत्मप्रस्वापनं तमः' इत्याधिदैविकम्। महत्तत्त्वं तु मुख्यो ब्रह्मा। अजस्य गरणं गिलनं येनेति। 'गृनि गरणे' इति धातोः। येन महत्तत्त्वमपि भक्ष्यते, भगवत्प्रकाशावसाने तेनैवेते भक्षिताः। स हि अमुक्तानामभक्तानां च भक्षको नियतः। तदाह—हीति। हेति पाठे भगवदीयानामेतन्महदाश्चर्यम्। कुशलं हि विद्यमानमुच्यते। एतावत्तु जातम्, अतः परं किं कुशलमिति न जान इत्याह—किं पुनः कुशलं ब्रूयामिति। किञ्च। कुशलं सर्वं लक्ष्मीकार्यं भगवत्कार्यं च। तत्र भगवता न तेषु किञ्चित् कुशलं कृतम्। लक्ष्मीकृतं गृहे स्त्रीषु च भवति, तल्लक्ष्म्यामपि गतायां गतश्रीषु गृहेषु सत्सु किं कुशलं ब्रूयामिति सर्वकुशलनिवृत्तिः। अहमित्यहमेवोर्वरित एतादृशः, अतो मां दृष्ट्वैव ज्ञातव्यं यज्ज्ञातव्यम्। वक्तव्यं तु नाऽवशिष्यत इत्यर्थः ॥ ७ ॥ ❀ ❀ ननु भगवता ते कथं नोपकृताः? तत्राऽऽह—दुर्भगेति त्रिभिः-तामसादिगुणैस्ते भगवन्तं न जानन्ति। सामान्यतोऽज्ञानम्, अन्यथाज्ञानम्, विरुद्धं च ज्ञानमस्तीति भगवता ते नोपकृताः। तेषां सामान्यतोऽज्ञानं सहेतुकमुपपादयति। अयं लोको भूर्लोकः, दुर्गतं भाग्यं यस्य तादृशः। वतेति खेदे। न हि भाग्ये विद्यमाने स्वयं तिष्ठति भगवति गते। अभाग्यं तु नास्ति, कियत्कालं भगवदनुभवात् यथा दुर्भगा तथाऽयं लोकः। एतावता वर्त्तत एव दुर्भगता परमन्यस्याम्। अयमिति जनात्मकः। तथा स्वयं भगवति व्यवहृतवान्, येन दुर्भगो जातः। यादवास्तु सुतरामेव तथा जाताः। ये चक्षुष्मन्तोऽप्यन्धा इव कूपे पतिताः। सर्वतोमृत्युरयं लोकः, यादवास्त्वन्योन्यघातेन तथैव जाता इति भावः। अन्धत्वमाह—ये सम्यगेकत्र वसन्तोऽपि न विदुरिति। ज्ञाते किं स्यादित्याशङ्क्य दृष्टान्तेन विपरीते फलाभावमाह—मीना इवोडुपमिति। पूर्वं समुद्रे मत्स्याश्चन्द्रश्चैकत्र स्थिताः। ते चेच्चन्द्रं प्रार्थयेयुस्तदा अमृतपानेन अमरा भवेयुः। सह्यमृतमयः, अमृतं च दातुं शक्तः। मत्स्याश्च सर्वतो मृत्यवो ज्ञातिघातिनश्च। तेषामप्रार्थनायामज्ञानमेव मूलम्। तथा यादवा भगवदज्ञानान्न मुक्ताः, किन्तु सर्वतो मृत्यवो जाता इत्यर्थः। तस्य दानसामर्थ्यमाह—उडुपमिति। तदमृतलेशेनैव नक्षत्राणि प्रकाशन्ते तत्तिरोभावेऽपि, एवं भगवत्तिरोभावेऽप्येते प्रकाशं प्राप्नुयुर्यदि जानीयुः, सर्वदुःखहर्तृत्वाद्भगवतः ॥ ८ ॥ ❀ ❀ किञ्च। मीनानां ज्ञानसामर्थ्यमपि नास्ति, एते तु ज्ञानसमर्था अपि न ज्ञातवन्त इत्याह—इङ्गितज्ञा इति। भगवतश्चेष्टितमपि जानन्ति, कदाचिद्भगवान् किञ्चिच्चिकीर्षया दिगादिकमपि पश्यति, तदैव जानन्त्येतत् करिष्यतीति। एवं ज्ञानशक्तिरुक्ता। पुरु

---

१ पुलकोद्भेदकथनेन, प्रकाशः. २ 'सर्वेषां विसर्गाणां पायुरेकायनम्' इति श्रुत्युक्ता विसर्जनक्रिया निरूपितेत्यर्थः प्र. ३ संनिधाप्येत्यर्थः. प्र. ४ यथा सुषुप्तौ सति संपद्य निद्रापाये जीवो बहिरायाति तद्वदागतत्वमित्यर्थः प्र. ५ निवृत्तिवाची काष्ठवत् ख. ग. घ. ङ. च. छ. ६ तथा चैतेन नरवत्प्रियत्वसाधकमुख्यभक्तिप्रतिबन्धकीभूतगर्वस्याऽभावः सूचितः. प्र. ७ देवे विद्यमानो मूलाविद्यास्वरूपः प्र. ८ भौतिकेन तेजसा ग्रस्यमानत्वात् प्र. ९ भूतरूपतेजोमात्राहारकत्वानाध्यात्मिकत्वमित्यर्थः प्र.

अधिकं प्रौढा अतिक्रियाशक्तियुक्ताः । अत एव ज्ञानक्रियाशक्तियुक्तत्वादेकारामाः, भगवता सह एकत्रैवाऽऽरामो येषाम् । शक्तिद्वयस्य फलमेतत् । सात्वता इति वैष्णवाः । एवं लौकिकप्रकारेण ज्ञानक्रियातत्फलभक्तियुक्ता अपि न जानन्तीत्याह—सात्वतामृषभमिति । समस्तवैष्णवानां स्वामिनम्, मुक्तानामपि कामपूरकम् । भूतेष्वावासो यस्य । पाञ्चभौतिकदेहे स्थितम्, कारणभूतदेहे स्थितं वा । अमंसत ज्ञातवन्तः । अनेन विपरीतज्ञानं तेषां स्थितमतो ज्ञातुमपि न यतन्त इति भावः ॥ ९ ॥ ❀ ❀ एवं श्लोकद्वयेन अज्ञानम्, स्वसाधारण्येनाऽन्यथाज्ञानं चोपपादयन् रागमुपपाद्य द्वेषमुपपादयति—देवस्येति । देवस्य ज्ञानात्मकस्य मायया व्यामोहिकया केचन स्पृष्टा आत्मानं परं च न जानन्ति, पशुवद्भगवति व्यवहरन्ति । ये च पुनः मायया सम्यग्व्याप्ताः शिशुपालादयस्ते असद् द्वेषमेवाश्रिताः । यदसदन्यद्भवति, भगवत्संबन्धं दूरीकरोति । अथवा । केचिदन्यदेवाश्रिताः, येन भगवता भिन्ना भवन्ति । अहङ्कारं गर्वसहितमित्यर्थः । अन्ये पुनश्चकारोक्ताः सर्वथा तत्पदायोग्या अपि पाषण्डा असद्भगवन्निन्दामेवाऽऽश्रिताः । अनेन ये केचिज्ज्ञातुमपि यतन्ते तानपि ते नाशयन्तीति भावः । तर्हि सर्व एव नष्टाः, तथा सति भगवदवतारफलं न जातमित्याशङ्क्याऽऽह—भ्राम्यते धीरिति । न हि सर्वेषां बुद्धिं ते भ्रामयितुं शक्ताः । ये तद्वाक्यं मन्यन्ते अदृढमूलाः शास्त्ररहितास्त एव भ्रान्ता भवन्ति, ये त्वस्मदादय आत्मरूपे भगवति उप्तात्मानस्ते न भ्रमन्ते । एकवचनं दुर्लभाभिप्रायेण । उप्त आत्मा येनेति । कृष्यादिना भूमिं भित्त्वा सर्वतः संस्कृत्य शुद्धं बीजं यैरुप्यते, तद्बीजं जाताङ्कुरं वायुना न गच्छति; अमूलं पतितं तृणादिकमेव गच्छति । आत्मशब्देन च अन्तःकरणस्य शुद्धता उक्ता । भगवांस्तु स्वयं स्वचरणयोरुप्तं चित्तं केषामपि न दूरीकरोति, सर्वदुःखहर्तृत्वात् । इत्याह—हराविति ॥ १० ॥

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

पुलकेत्यत्र । अन्यथेति । सर्वव्यापाररहित्येन भक्तिलिङ्गाजनने पश्यतो भक्त्यजननात् सर्वव्यापाररहित्यस्य भक्तिलिङ्गजनकत्वमाहेत्यर्थः । नन्वेवं संप्लावकस्नेहप्रसरकथनस्य किं प्रयोजनमत आहुः—सा हीत्यादि । तथा च भक्तेः साहजिकत्वज्ञापनाय तदुक्तिरित्यर्थः । पुलकोद्भेदनिरूपणप्रयोजनमाहुः—अनेनेत्यादि । अनेन पुलकोद्भेदकथनेन 'सर्वेषां विसर्गाणां पायुरेकायनम्' इति श्रुत्युक्ता विसर्जनक्रिया निरूपितेत्यर्थः । इदमेव 'अक्षण्वताम्' इत्यत्र 'रोमोद्गमस्तथा' इत्यनेनोक्तं ज्ञेयम् । न चात्र गोलकस्यापि कारणत्वं शङ्क्यम् । इन्द्रियस्थित्यर्थमेव तस्यापेक्षणात् । अन्यथा खञ्जादीनां हस्तेन चलनस्यान्येषां पादेन शिल्पस्याऽप्यसम्भावापातात् 'सर्वेषाम्' इति विशेषणश्रुतिवाक्ययोपपत्तेश्च । इमं न्यायं सजातीयेष्वप्यतिदिशन्ति नियच्छन्ति च । एवमेवेत्यादि । भक्त्युद्रेक इन्द्रियाणां पराक्त्वनिवृत्तौ तैरन्तर्भगवत्साक्षात्कारे भक्तदेहनिष्ठानां मात्राणां 'घ्राणं च गन्धः' इति न्यायेन भगवदिन्द्रियरूपत्वप्राप्तिरेवं बहिर्विषयाणामपीत्येवं मात्रासर्गोऽत्र तेन विदुरस्याऽपि भावीति ज्ञापनायाऽत्र बोधित इति भावः ॥ ५ ॥ ❀ ❀ शनकैरित्यत्र । गृहीत्वेति सन्निधाप्येत्यर्थः । निद्रापायोत्थितत्वमिति । यथा सुषुप्तौ सति संपन्न निद्रापाये जीवो बहिरायातीति तद्वदागतत्वमित्यर्थः । तादृश इत्यादि । तथा चैतेन नरवत् (?) प्रियत्वसाधकमुख्यभक्तिप्रतिबन्धकीभूतगर्वस्याभावः सूचित इत्यर्थः ॥ ६ ॥ ❀ ❀ कृष्णद्युमणीत्यत्र । आधिदैविक इति । देवे विद्यमानो मूलाविद्यास्वरूपः । आधिभौतिकमिति । भौतिकेन तेजसा ग्रस्यमानत्वात् । हृतेत्यादि । तथा च भूतरूपतेजोमात्राहारकत्वादाध्यात्मिकमित्यर्थः ॥ ७ ॥ ❀ ❀ देवस्येत्यत्र । रागमिति । स्वस्य यादवेषु स्नेहम् ॥ १० ॥

### श्रीगिरिधरकृता बालप्रबोधिनी

पुलकेन रोमाञ्चेनोद्भिन्नं व्याप्तं सर्वमङ्गं यस्य सः, मीलद्दृशा निमीलितदृष्ट्या शुच आनन्दाश्रूणि मुञ्चन्, स्नेहप्रसरसम्प्लुतः भगवति यः स्नेहस्तस्य प्रसरः पूरः तस्मिन् सम्प्लुतो निमग्न उद्धवस्तेन विदुरेण नेत्रोदकादिनिर्गमपूर्वकभक्तिदर्शनेन वा पूर्णार्थः परमानन्दरूपो भगवान् यस्मिंस्तथाभूतो लक्षितो दृष्टः ॥ ५ ॥ ❀ ❀ एवं परमया भक्त्या वैकुण्ठाख्यं भगवल्लोकं प्राप्तः पुनस्तस्माच्छनकैर्नृलोकं मनुष्यलोकानुसन्धानं आगतः सन् उद्धवो नेत्रे विमृज्योत्स्मयन् भगवल्लोकानुभूततद्वैभवस्मरणेन विस्मयं प्राप्नुवन् विदुरं प्रत्याह प्राभाषतेत्यन्वयः ॥ ६ ॥ ❀ ❀ तद्भाषणमेव दर्शयति—कृष्णेत्यादिना । कृष्ण एव अस्मदादिसमृद्धिप्रकाशकत्वात् द्युमणिः सूर्यस्तस्य निम्लोचे अस्तमये सति अजगरेण कालरूपमहासर्पेण नोऽस्माकं गृहेषु गीर्णेषु ग्रस्तेषु अतएव गतश्रीषु भ्रष्टसमृद्धिषु सत्सु त्वत्पृष्टानां नः अस्माकं कुशलमहं किं नु ब्रूयामित्यन्वयः । हेत्याश्चर्ये ॥ ७ ॥ ❀ ❀ बतेति खेदे । अयं लोकः सर्वोऽपि जनो दुर्भगो भाग्यहीनः, यदवस्तु सुतरामपि दुर्भगाः । कुत एवं तत्राह—ये यदवः संवसन्तः सम्यक् श्रीकृष्णेन सह वसन्तोऽपि तं हरिं संसारदुःखहारित्वेन न विदुर्न जानन्ति स्म । तत्र दृष्टान्तमाह—मीना इवोडुपमिति । यथा समुद्रमथनात् पूर्वं तत्र स्थितमुडुपं चन्द्रं तत्रत्या मीना अमृतमयजरारोगादिनिवर्तकोऽयं इत्येवं न विदुः किन्तु कमनीयः कश्चिज्जलचरविशेष इत्येव विदुस्तथेत्यर्थः । यद्वा यथा मत्स्यावतारसमये तत्र जलस्था मीना हरिं मत्स्यरूपिण-

---

१, स्वस्य यादवेषु स्नेहम्, प्रकाशः । २, एवञ्चैयमुद्रिक्ता भक्तिरिति, एवञ्चायमुद्रिक्तभक्तिरिति पाठः प्रतीयते ।

मुडुपं संसारतारकं न विदुः किन्तु कश्चिज्जलचरविशेष इत्येव विदुस्तथेत्यर्थः ॥ ८ ॥ ❀ ❀ भाग्यहीनत्वादेव न विदुः, नतु ज्ञानसामग्र्यभावादिति सूचयन्नुक्तमेव स्पष्टयति—इङ्गितज्ञा इति । पुरुप्रौढाः बहुनिपुणाः । तत्र हेतुमाह—इङ्गितं परचित्तस्थं जानन्तीति तथाभूताः सर्वेऽपि सात्वताः यादवाः भूतावासं सर्वान्तर्यामिणं श्रीकृष्णं सात्त्वतामृषभं यादवानां श्रेष्ठमेवामंसत अमन्यन्त । ननु दूरस्थाः कथं जानीयुरित्याशङ्क्याह—एकारामाश्चेति, एकस्मिन्नेवारमन्ति तथाभूता अपीत्यर्थः ॥ ९ ॥ ❀ ❀ कथमेव मतिनिपुणानामपि बुद्धिभ्रमः कथं वा भवतस्त्वयथार्थज्ञानं इत्यपेक्षायां विषयाविष्टचित्तत्वेन तेषां भ्रमो भगवदेकशरणतया मादृशस्य यथार्थज्ञानमिति व्यवस्थामाह—देवस्येति । ये च देवस्य भगवतः श्रीकृष्णस्य मायया स्पृष्टाः मोहेनाहन्ताममताभ्यां देहादौ निबद्धा अतएव भगवतोऽन्यत् व्यतिरिक्तं असदतितुच्छं शब्दादिविषयं भोग्यत्वेनाश्रिताः भगवत्तत्त्वानभिज्ञाः तद्वाक्यैस्तेषां यादवोऽयमित्यादिवाक्यैः आत्मनि परमात्मनि उन्नात्मनः समर्पितमनसो मादृशस्य धीर्न भ्राम्यते मोहं न प्राप्यते । 'ददामि बुद्धियोगं तं येन मामुपयान्ति ते' इति वदतो भगवदनुग्रहादेवेति भावः । ननु भगवतः का वाऽपेक्षा यतोऽनुगृह्णातीत्याशङ्क्य पूर्णकामत्वेन सर्वापेक्षारहितोऽपि स्वभक्तानां दुःखहरणशीलत्वात् कृपयैवानुगृह्णातीत्याशयेनाह—हराविति ॥ १० ॥

## हिन्दी अनुवाद

उनके सारे शरीरमें रोमाञ्च हो आया तथा मुँदे हुए नेत्रोंसे प्रेमके आँसुओंकी धारा बहने लगी। उद्धवजीको इस प्रकार प्रेम-प्रवाहमें डूबे हुए देखकर विदुरजीने इन्हें कृतकृत्य माना ॥ ५ ॥ ❀ ❀ कुछ समय बाद जब उद्धवजी भगवान्के प्रेमधामसे उतरकर पुनः धीरे-धीरे संसारमें आये तब अपने नेत्रोंको पोंछकर भगवल्लीलाओंका स्मरण हो आनेसे विस्मित हो विदुरजीसे इस प्रकार कहने लगे ॥ ६ ॥ ❀ ❀ उद्धवजी बोले—विदुरजी ! श्रीकृष्णरूप सूर्यके छिप जानेसे हमारे घरोंको कालरूप अजगरने खा डाला है, वे श्रीहीन हो गये हैं; अब मैं उनकी क्या कुशल सुनाऊँ ॥ ७ ॥ ❀ ❀ ओह ! यह मनुष्यलोक बड़ा ही अभागा है; इसमें भी यादव तो नितान्त भाग्यहीन हैं, जिन्होंने निरन्तर श्रीकृष्णके साथ रहते हुए भी उन्हें नहीं पहचाना—जिस तरह अमृतमय चन्द्रमाके समुद्रमें रहते समय मछलियाँ उन्हें नहीं पहचान सकी थीं ॥ ८ ॥ ❀ ❀ यादवलोग मनके भावको ताड़नेवाले, बड़े ही समझदार और भगवान्के साथ एक ही स्थानमें रहकर क्रीड़ा करनेवाले थे; तो भी उन सबने समस्त विश्वके आश्रय, सर्वान्तर्यामी श्रीकृष्णको एक श्रेष्ठ यादव ही समझा ॥ ९ ॥ ❀ ❀ किंतु भगवान्की मायासे मोहित इन यादवों और इनसे व्यर्थका वैर ठाननेवाले शिशुपाल आदिके अवहेलना और निन्दासूचक वाक्योंसे भगवत्प्राण महानुभावोंकी बुद्धि भ्रममें नहीं पड़ती थी ॥ १० ॥

**प्रदर्श्यातप्ततपसामवितृप्तदृशां नृणाम् । आदायान्तरधाद्यस्तु स्वबिम्बं लोकलोचनम् ॥ ११ ॥**
**यन्मर्त्यलीलौपयिकं स्वयोगमायाबलं दर्शयता गृहीतम् ।**
**विस्मापनं स्वस्य च सौभगर्द्धेः परं पदं भूषणभूषणाङ्गम् ॥ १२ ॥**
**यद्धर्मसूनोर्बत राजसूये निरीक्ष्य दृक्स्वस्त्ययनं त्रिलोकः ।**
**कार्त्स्न्येन चाद्येह[1] गतं विधातुरर्वाक्सृतौ कौशलमित्यमन्यत ॥ १३ ॥**
**यस्यानुरागप्लुतहासरासलीलावलोकप्रतिलब्धमानाः ।**
**व्रजस्त्रियो दृग्भिरनुप्रवृत्तधियोऽवतस्थुः किल कृत्यशेषाः ॥ १४ ॥**
**स्व[2]शान्तरूपेष्वितरैः स्वरूपैरभ्यर्द्यमानेष्वनुकम्पितात्मा ।**
**परावरेशो महदंशयुक्तो ह्यजोऽपि जातो भगवान् यथाग्निः ॥ १५ ॥**

## श्रीधरस्वामिविरचिता भावार्थदीपिका ।

कोऽसौ हरिरित्यपेक्षायामाह । प्रदर्श्येति । न तप्तं तपो यैरतोऽवितृप्ता दृशो येषां तेषां स्वबिंबं श्रीमूर्तिमेतावंतं कालं दर्शयित्वा योंऽतर्हितवान् । लोकस्य लोचनमादायाच्छिद्य तादृशस्यान्यस्य विलोकनीयस्याभावात् ॥ ११ ॥ ❀ ❀ तदेव बिंबं वर्णयति त्रिभिः । यन्मर्त्यलीलास्वौपयिकं योग्यं स्वस्यापि विस्मयजनकम् । यतः सौभगर्द्धेः सोभाग्यातिशयस्य परमं पदं परा काष्ठा भूषणानां भूषणान्यंगानि यस्मिन् ॥ १२ ॥ ❀ ❀ दृशां स्वस्त्ययनं परमानंदकरम् । त्रिभुवनस्थो लोकः प्राणिमात्रम् अद्येदानीमिह बिंबेऽर्वाक्सृतावर्वाचीनसंसारनिर्माणे मनुष्यनिर्माणे वा यत्कौशलं नैपुण्यं तत्कार्त्स्न्येन गतमुपक्षीणं नातः परं तस्य कौशल-

---

१. प्रा० पा०—चाद्यैव । २. प्रा० पा०—प्रशान्त० ।

मस्तीत्येवं मेने। तन्मूर्तेर्विधातुः सृज्यत्वाभावेऽपि लोकदृष्टिरियमुक्ता ॥ १३ ॥ ❀ ❀ अनुरागेण प्लुतो व्याप्तो हासो रासो विनोदश्च लीलाऽवलोकश्च तैः स्वकृतहासाद्यनंतरं प्रतिलब्धो मानो याभिस्ताः। दृग्भिः सहानुप्रवृत्ता गच्छंतं तमेवानुगता धियो यासां ताः। कृत्ये शेषो यासां ताः। असमापितकृत्या एव तस्थुः ॥ १४ ॥ ❀ ❀ एवंभूतविंबप्रदर्शने कारणमाह। स्वीयान्येव शांतान्यशांतानि च रूपाणि तत्र शांतरूपेष्वितरैरशांतैर्दैत्यादिभिः पीड्यमानेष्वनुकंपितः कृतानुकंप आत्मा यस्य। अजोऽपि जात आविर्भूतः महाभूतरूपेण नित्यसिद्ध एवाग्निर्यथा काष्ठेष्वाविर्भवति तद्वत्। अजस्य जन्मनि हेतुः। महान्महत्तत्त्वमंशः कार्यलेशो यस्याव्यक्तस्य तन्महदंशं तद्युक्त इति ॥ १५ ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः।

नेत्यव्ययमल्पार्थेत्र ज्ञेयम्। अल्पतपसामित्यर्थः। लोकस्य लोचनं यत्र तत्स्वरूपं गृहीत्वा योंतरधात् तदुक्तं मौशलपर्वणि "कृत्वा भारावतरणं पृथिव्याः पुरुलोचनः। त्याजयित्वा तनूः कृष्णः प्राप्तः स्वस्थानमुत्तमम्" इति। मोचयित्वा भारावतरणात्त्याजयित्वा न तु मुक्त्वेत्यर्थः ॥ ११ ॥ ❀ ❀ यद्बिंबमंतरधात्तदेवेत्यर्थः। स्वयोगमायाबलं स्वचिच्छक्तिवीर्यं न च किमप्यैश्वर्यं माधुर्यं वा निह्नुत्य स्थापितमपि तु सर्वस्वमेवात्र बिंबे निक्षिप्तं नापि वैकुंठेप्येवं बलं दर्शितमिति भावः। गृहीतमिति। "स्थितिसर्गनिरोधेषु गृहीता मायया विभोः" इत्यत्र मायया गुणगृहीता इतिवदभेदेपि भेदोक्तिः बुद्धिर्हि भगवति अभेदेपि भेदं जनयतीति न्यायात्। गृहीतमाविष्कृतमिति संदर्भः। यद्वा। यद्बिंबं दर्शयता दर्शयितुं स्वयोगमायाबलं गृहीतं रासमहिषीविवाहादिषु तथा प्रसिद्धं बलं द्योतयति स्वस्य च वैकुंठस्थस्य श्रीनारायणस्वरूपस्यापि विस्मापनम्। अहोरूपमहो साद्गुण्यमिति चमत्कारप्रापकम्। अस्यावताररूपगुणलीलादिदर्शिनां वैकुंठपार्षदादीनां का वार्त्तेति भावः। अत एव सौभगर्द्धेः सौभाग्यसंपत्तेः। परं पदं परावधिस्थानम् अतो वैकुंठनाथस्यापि तद्दर्शनेच्छा भवति "द्विजात्मजा मे युवयोर्दिदृक्षुणा" इत्युक्तेः। ननु तस्य भूषणं त्वस्ति सौभाग्यजनकं तत्राह—भूषणेति। भूषणानि भूषयंतीति भूषणभूषणानि तादृशान्यंगानि यस्येति परमसौंदर्यमुक्तम्। मर्त्यलीला बाल्यकौमारपौगंडादिलीला उपयातीति मर्त्यलीलौपयिकं नराकृतीत्यर्थः। उपपूर्वाद्यातेरौणादिककिक्प्रत्यये रूपमुपयिकमिति ॥ १२ ॥ ❀ ❀ अर्वाक्सृत्यंतर्गतपश्वादिरचनकौशलमप्यस्तीति चेदाह—मनुष्येति। यद्यपि विधातृरचितत्वं तत्र नास्ति तथापीयमज्ञलोकदृष्टिरिति ज्ञेयम्। तीर्थस्तु—इह जीवराशौ त्रिषु वेदादिषु कालेषु वा लोको ज्ञानं यस्य स त्रिलोको वेदैकप्रमाणो जनः त्रिषु लोकेषु स्थितो जनस्त्रिलोकः त्रिभिर्ब्रह्मादिभिर्वा लोक्यते स्वहृदये चिंत्यते उत्पत्त्याद्यर्थः इति वा। त्रिभिर्दानयज्ञोपासनाभिर्लोकः स्वर्गादिर्यस्य स भूमिष्ठ इत्यर्थः। धर्मसूनो राजसूये उपगतं सर्वाधिकत्वेन स्थितं यद्वपुर्निरीक्ष्य सृतौ मनुष्यसृष्टिमार्गे प्रवर्त्तमानस्य विधातुर्यत्कार्त्स्न्येन कौशलं निर्माणपाटवं तदर्वाक् नीचमित्यमन्यत श्रीकृष्णसौंदर्यस्याकृत्रिमत्वादत्युत्कृष्टत्वमुक्तमत्रेत्याह ॥ १३ ॥ ❀ ❀ यस्य कृष्णस्य ॥ १४ ॥ ❀ ❀ एवं भूनोऽतीवसौंदर्ययुक्तः तत्र तेषु शांतरूपेषु भक्तेषु इतरैरशांतरूपैरसुरादिभिरभ्यर्द्यमानेषु सत्सु आविर्भवति मथनादिना तद्वद्भगवानपि भक्तजनप्रार्थनादिना। यद्वा। महांश्चासावंशैर्मत्स्यकूर्मवराहाद्यैर्भगवदवतारसमये तत्रागत्य लीनैर्युक्तः। यद्वा। महदंशो ब्रह्मा तेन युक्तो विनियुक्तः प्रार्थित इति यावत्। यद्वा। महतः स्वस्यैवांशैर्युक्तः "महांतं विभुमात्मानम्" इति श्रुतेः। 'महद्वच' इति न्यायाच्च। यद्वा। महांतो ये पुरुषादयोंशास्तैर्युक्तः लोकनाथं महद्भूतमितिवदात्वाभावः। अन्यथा महांशयुक्तः इति स्यात् ॥ १५ ॥

## श्रीराधारमणदासगोस्वामिविरचिता दीपिनीव्याख्या

स्वयोगमायास्वरूपशक्तिस्तस्या बलं सर्वावतारिभ्यः सौन्दर्य्यप्रकाशकं वीर्य्यं दर्शयता गृहीतमाविष्कृतं यदिति विंबनिर्देशः दर्पणमणिचत्वरादौ स्वमूर्तिदर्शने स्वस्यापि विस्मापनं तथा च तद्वाक्यं अपरिकलितपूर्वः कश्चमत्कारकारी स्फुरति मम गरीयानेष माधुर्य्यपूरः अयमहमपि हंत प्रेक्ष्य यं लुब्धचेताः सरभसमुपभोक्तुं कामये राधिकेवेति ॥ ११ ॥ ❀ ❀ यद्बिम्बं कर्म इयं विधातुः कौशलस्य कृष्णमूर्त्तिसौंदर्य्ये परावधित्वमननलक्षणाल्लोकस्य प्राकृतस्य दृष्टिरुक्ता न तु विज्ञस्य विज्ञदृष्ट्यात्वयमर्थः इह श्रीकृष्णबिम्बे विधातुः कौशलं गतं नष्टं सर्वत्र तत्कौशलं न तु भगवत्सौन्दर्य्ये तस्य स्वाभाविकत्वादिति ॥ १२ ॥ ❀ ❀ अनुरागेण व्रजसुन्दरीविषयकप्रेममयतृष्णातिशयेन यदुक्तं रसामृतसिंधौ। सदानुभूतमपि यः कुर्वन्नवनवं प्रियं रागोभवन्नवनवः सोऽनुराग इतीर्यते इति स्वकृतेति प्रतिशब्दबलादध्याहृतम् ॥ १३ ॥ ❀ ❀ तत्र शांताऽशान्तरूपद्वयमध्ये शान्तरूपेषु श्रीवासुदेवादिषु इतरैरशान्तरूपैः कंसादिभिः स्वरूपैः सुष्ठुरूपैः विकटरूपैरिति श्लिष्टोर्थः सञ्जातार्थेइतच्प्रत्ययः तस्यैवार्थः कृतानुकम्प इति आत्मा मनः तदुक्त इति प्रपञ्चोऽवतीर्ण इत्यर्थः। यद्वा महद्भिरंशिभिरंशैश्च युक्त इति एते चांशकला पुंसः कृष्णस्तु भगवान्स्वयमिति परिभाषाश्रुतेः ॥ १४ ॥ ❀ ❀ पारतंत्र्यप्रतीतं जन्मभयादिना कर्माधीनत्वभानात् तत्र जन्मनो दिव्यत्वाल्लौकिकानुकरणं दुर्वितर्कभयपलायनादित्वसंभवाद् दुर्घटमिति ज्ञेयम् ॥ १५ ॥

### श्रीमद्वीरराघवव्याख्या

भवत्वेवमजस्य वार्त्तां सखे कीर्त्तयेत्यस्य किमुत्तरमित्यत आह प्रदर्श्येत्यादिना । यो भगवान् तप्तं तपो यैस्तेषामवितृप्ता दृशः येषां नृणां लोकलोचनलोकैरवलोकनीयं कर्मणि ल्युट् अतिसुंदरं स्वस्य बिंबं वपुः प्रदर्शयित्वा आदाय स्वबिंबं गृहीत्वांऽतरधादं-तर्द्धे आदायांतरधादित्यनेन स्वबिंबेन सहैव गमनमप्राकृतवदिति सूचितम् ॥ ११ ॥ ❀ ❀ लोकलोचनमित्यनेन सूचित-मेव वपुषः सौंदर्यं वर्णयेति त्रिभिः यदिति । मर्त्यलीलासु मनुष्यलीलास्वौपयिकं योग्यं स्वस्य या योगमाया आश्चर्यशक्तिः तस्या बलं दर्शयता लोकस्येति शेषः गृहीतं स्वस्यातिविस्मापनमाश्चर्यकरं सौभगर्द्धेः सौभाग्यसमृद्धेः परं पदं पराकाष्ठाभूतं भूषण-भूषणांगं भूषणानि कौस्तुभादीनि भूषयंत्यलं कुर्वंतीति भूषणानि अंगानि उरःप्रभृतीनि यस्मिंस्तदेवं यद्वपुः तदादायांतरधादिति पूर्वेणान्वयः ॥ १२ ॥ ❀ ❀ यदिति । धर्मसूनोर्युधिष्ठिरस्य राजसूये यागे त्रिलोकं त्रिभुवनस्थलोकं दृशां स्वस्त्ययनं परमानंदकरं यद्वपुर्निरीक्ष्य विधातुर्ब्रह्मणः अर्वाक्सृतौ अर्वाचीनमनुष्यसृष्टौ यत्कौशलं नैपुण्यं तत्कार्त्स्न्येन साकल्येन इह वपुषि अद्य इदानीं गतं पर्यवसितमित्यमन्यत मेने विधातुः कौशलं कार्त्स्न्येनास्मिन्नेव वपुष्युपक्षीणं नातः परं तस्य कौशलमस्तीत्येवं मेन इत्यर्थः । तद्वपुषो विधात्रसृष्टत्वेपि लोकदृष्टेरियमुक्तिः ॥ १३ ॥ ❀ ❀ यस्येति । यस्य भगवतः अनु-रागेण वृत्तः हासो हसनं रासः क्रीडा लीलावलोकश्च तैः साधनैः प्रतिलब्धः मानो बहुमानो याभिस्ता व्रजस्त्रियः दृग्भिः सहानु-प्रवृत्तधियः अनुप्रवृत्ताः गच्छन्तमेवानुगताः धियो यासां ताः भगवद्गृहानुवृत्त्यन्तर्ब्राह्येंद्रियवृत्तय इत्यर्थः । अत एव खिलकृत्यशेषाः खिलस्य कृत्यस्य शेषो यासां ताः कृत्याकृत्यविवेकशून्याः सत्योऽवतस्थुः किलकृत्यशेषा इत्ययमपि पाठः ॥ १४ ॥ ❀ ❀ नन्वीदृशं भुवनसुंदरं वपुः किमर्थमंतर्द्धापितवानितीमामाशंकां वपुःपरिग्रहनिमित्तं वपुषः स्वरूपं चाह स्वशांतरूपेष्विति । अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि नामरूपयोर्निर्वहिता ते यदंतरा तद्ब्रह्मसत्यं वानृतं च सत्यमभवदित्यादि श्रुत्युक्तरीत्या सर्वाणि सत्त्वप्रचुराणि रजस्तमःप्रचुराणि च रूपाणि स्वस्यैव रूपाणि स्वस्यैव शरीराणि तत्र प्रशांतरूपेषु सत्त्वोत्तरेषु रूपेषु इतरैः स्वरूपैरर्द्यमानेषु पीड्यमानेषु सत्सु अनुकंपितः आत्मा चित्तं यस्य सः सत्त्वोत्तरेष्वनुकंपापरः परावरेशः सत्त्वा-धिपतिः भगवानजोऽपि कर्मायत्तोत्पत्तिशून्योपि महदंशयुक्तः महतांऽशेन च रामरूपेण युक्तः अकर्मायत्तस्वेच्छोपात्ताप्राकृतदिव्य-रूपविशिष्टोऽवतीर्ण इत्यर्थः । यथाग्निर्दार्वादिष्वाविर्भवन्स्वस्वभावमजहन्नेवाविर्भवति तथायमपि भगवान् देवमनुष्यादियो-निष्वाविर्भवन्निरस्तनिखिलदोषानवधिकातिशयासंख्येयकल्याणगुणाकरत्वस्वभावमजहन्नेवावतीर्ण इति दृष्टांताभिप्रायः ॥ १५ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

यो ज्ञानिबुद्धिविषयो हरिः स एवायं कृष्ण इत्याह प्रदर्श्येति । अतप्ततपसामस्मिन् जन्मनीति शेषः । अनेन पूर्वतनतप्त-तपस्त्वं सूच्यते स्वबिंबमिति । सच्चिदानंदलक्षणं स्वरूपं तत्प्रतिमा च गृह्यते । तेन ज्ञानिनां साक्षादितरेषामिति ज्ञायते लोकस्य जनस्य लोचनं नेत्रं यस्मिंस्तल्लोकलोचनं जनरंजनं वा अधादिति लुङ्लङर्थे अंतर्धास्यतीत्यर्थः । बिंबो स्त्रीमंडलं समं प्रतिमामुख्यलक्ष्म-स्विति तु, नाद्धे वाव ब्रह्मणो रूपे इत्यादिश्रुतिं सूचयति ॥ ११ ॥ ❀ ❀ पुनरपि यद्वपुः स्वयोगमायाबलं स्वरूपेच्छासामर्थ्यं दर्शयता हरिणा गृहीतं यच्च मर्त्यलीलौपयिकं मानुषलीलां बालकौमारादिविषयामुपयातीति अनेन स्वत एकप्रकारलक्षणमुक्तं भवति । स्वस्य कृष्णस्य च विस्मापनं विस्मयकरं यच्च सौभगर्द्धेः सौंदर्यसमृद्धेः परं पदं स्थानं यच्च भूषणानामपि भूषणान्यंगानि यस्मिन् तत् ॥ १२ ॥ ❀ ❀ पुनरपि कीदृशं धर्मसूनो राजसूये यज्ञे पश्यतो जनस्य दृशां स्वस्त्ययनं आनंदाश्रयं यद्वपुर्निरीक्ष्य त्रिलोक इत्यमन्यत कथं विधातुर्विरिंचस्यार्वाक् सृतावंत्यसृष्टौ कार्त्स्न्येन कौशलमत्र कृष्णवपुषि उपगतं पर्याप्तमिति नैतत्सत्यमित्याह वतेति । अनेन त्रिलोकस्याज्ञानमाश्चर्यमिति विस्मयं करोति आनंदरूपं दृष्ट्वाऽपि लोको भौतिकमेव तु मन्यते विष्णुरूपं च अहो भ्रांतिर्बहुस्थितेति वचनात् ज्ञान्यज्ञानिनां समुच्चये चकारः तथाचैवंयोजना अत्र जीवराशौ त्रिषु वेदादिषु लोकः प्रकाशो ज्ञानं यस्य स तथा वेदैकप्रमाणो जनो धर्मसूनो राजसूये उपगतं सर्वाधिकत्वेन स्थितं यद्वपुर्निरीक्ष्य सृतौ मनुष्यसृष्टिमार्गे प्रवर्तमानस्य विधातुर्यत्कार्त्स्न्येन कौशलमंगलविषयं निर्माणपाटवं तदर्वाक् नीचमित्यमन्यत श्रीकृष्णसौंदर्यस्याकृत्रिमत्वात् अत एवानंतत्वाच्च तज्ज्ञान्यज्ञानिनां ज्ञानेऽज्ञाने वा वैचित्र्यमहो इत्यास्वादयति ॥ १३ ॥ ❀ ❀ यस्य श्रीकृष्णस्यानुरागेण स्नेहेन प्लुतौ हासरासौ अनुस्मितहासरासक्रीडे ताभ्यां सहितेन लीलावलोकेन प्रतिलब्धो मानो यासां तास्तथोक्ताः हासरासशब्दो रसपरस्तेन वा रसः सीरोवर इति वचनात् । रस एव रासः । वार्तासंभवयोः किलेति वचनात् संभावितोयमर्थः व्रजे गोष्ठे ॥ १४ ॥ ❀ ❀ अवतारप्रयोजनमाह स्वशांतेति । स्वस्य शांतरूपेषु सात्त्विकप्रकृतिषु सुरादिषु इतरैरशांतरूपैरसुरैरभ्यर्द्यमानेषु सत्सु अनुकंपितात्मा अनुवृत्तचित्तो महदंशयुक्तः महांश्चासावंशो महदंशो मुख्यप्रतिबिंबभूतो ब्रह्मा तेन प्रार्थितत्वेन युक्तो विनियुक्तः पराव-रेशोऽजो विष्णुर्जातो भवतीत्यन्वयः, यथाग्निर्दारुण इति शेषः । अनेन जनी प्रादुर्भाव इति धात्वर्थो विवृत इति ॥ १५ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

यथा तथापि सर्वाकर्षणमेव तद्रूपमित्याह प्रदर्श्येति । चक्षुषश्चक्षुरिति श्रुत्युक्तदिशा । लोकलोचनरूपं स्वबिम्बं स्वमूर्त्तिमादाय गृहीत्वा । तथोक्तं मौसले पर्वणि । कृत्वा भारावतरणं पृथिव्याः पृथुलोचनः । मोचयित्वा तनुं कृष्णः प्राप्तः

स्वस्थानमुत्तममिति । मोचयित्वा भारावतरणात् त्याजयित्वा नतु मुक्त्वेत्यर्थः ॥ ११ ॥ ❀ ❀ तत्र हरावुप्रात्मनां निश्चयमाह यस्मत्यैति । स्वयोगमायाबलं स्वचिच्छक्तेवीर्यं एतादृशसौभाग्यस्यापि प्रकाशिकेयं भवतीत्येवंविधं दर्शयताविष्कृतम् । सकलस्ववैभवविद्वद्गणविस्मापनायेति भावः । न केवलमेतावत् तस्यैव रूपान्तरे तादृशत्वाननुभवात् तत्रापि प्रतिक्षणमप्यपूर्वप्रकाशात् स्वस्यापि विस्मापनं यतः सौमगर्द्धेः परं पदं परा प्रतिष्ठा । ननु तस्य भूषणं त्वस्ति सौभगहेतुरित्यत आह भूषणेति । कीदृशं मर्त्यलीलौपयिकं नराकृतीत्यर्थः । तस्मात् सुतरामेव युक्तमुक्तं श्रीमहाकालपुराधिपेनापि द्विजात्मजा मे युवयोर्दिदृक्षुणा मयोपनीता इति । श्रीहरिवंशे श्रीकृष्णेन च । मद्दर्शनार्थं ते बाला हृतास्तेन महात्मनेति ॥ १२ ॥ ❀ ❀ देवमायास्पृष्टानामाह यद्धर्मेति ॥ १३ ॥ ❀ ❀ अथ प्रेमविलासयोः परमोत्कर्षमाह यस्येति । एषु वाक्येषु यच्छब्दानां पूर्ववाक्यस्यान्ते पठितत्वात् न पूर्वान्वयापेक्षा ॥ १४ ॥ ❀ ❀ अनुकम्पामाह स्वशान्तेति । इतरैरशान्तैः स्वरूपैः तत्स्वभावजरूपैरित्यर्थः । तच्च जन्मनि तत्तदंशानादायैवेत्याह महदंशयुक्तः महतः स्वस्यैवांशैर्युक्तः महान्तं विभुमात्मानमित्यादि श्रुतेः । महद्भ्चेति न्यायप्रसिद्धेश्च । महान्तो ये पुरुषादयोंशास्तैर्युक्त इति वा लोकनाथं महद्भूतमितिवदात्मव्यभिचारः । महद्भिर्वंशैश्च युक्त इति वा १५ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

तस्माद्भक्तानां मतमेव वास्तवं भवेत्तदेव किमिति अपेक्षायामाह प्रदर्श्येति । अवितृप्तदृशां नृणामित्यनादरे षष्ठी । यस्तु स्वबिम्बं स्वीयं श्रीविग्रहं नॄन् प्रदर्श्य तन्माधुर्य्यमास्वादयितुमारब्धवत एव तान् अवितृप्तदृशोऽनादृत्य स्वबिम्बं पुनरादाय तद्दृग्भ्य आच्छिद्य नीत्वा अन्तरधात् शीघ्रं तिरोबभूव । अत्र यत्पदस्योत्तरवाक्यार्थगतत्वेन न तत्पदापेक्षा । साधु चन्द्रमसि पुष्करैः कृतं मीलितं यदभिरामताधिक इतिवत् । तिरोधानाकरणे अतिलोभिनस्ते पुनरपि निर्भरमास्वादयिष्यन्तीति बुद्ध्यैवेत्युत्प्रेक्षा ध्वनिता । ननु तर्हि दत्तापहारी सोऽभूत्तत्राह लोकानां लोचनानि स्थितानि यत्रेति लोचनान्यपहर्त्तुमेव नृभ्यः स्वबिम्बं दत्तं नतु तत्तस्य परमार्थदानं किन्तु चौरस्येवेति पुनरप्युत्प्रेक्षा । ततश्च कृष्णेन पृथिव्यामवतीर्य सर्वचक्षुर्हरणाल्लोका अन्धीकृता एव नतु पालिता इति व्याजस्तुतिः । ननु स्वबिम्बमाधुर्यस्यानन्त्यात् चिरायापि पायने तस्य का हानिरभविष्यत्तत्र तस्य कृपासिन्धोः को दोषः, किन्तु लोकानामेव भाग्याभाव इत्याह अतप्ततपसामिति लोकानीत्यैवोक्तिर्वस्तुतस्तु अतप्ततपसां किन्तु प्राप्ततत्कृपाभराणामित्यर्थः । न ह्येतादृशामनुरागित्वापादनमेव मुख्यप्रयोजनञ्च ध्वनितं अस्मिन्नभ्युदिते जातु न तृप्तिर्दर्शनादिष्विवत्युज्ज्वलनीलमण्युक्तेरतृप्तनेत्रत्वं स्नेहलक्षणं तृष्णाधिक्यादनुरागलक्षणं वा ज्ञेयम् । तथा स्वबिम्बं आदायैव अंतरधात् । नतु परित्यज्य इति शरीरपरित्यागवादिनः पराहताः । तथा यन्मर्त्यलीलौपयिकमिति यद्धर्मसूनोरित्युत्तरश्लोकेषु स्वबिम्बस्यैव विशेषणदानान्मानुषं बिम्बं परिहाय दिव्यं स्वबिम्बमादायागादिति विरुद्धं व्याचक्षाणा अपि पराहताः । तथा प्रदर्श्येति अन्तरधादिति नतु पश्यति स्मेति प्रदर्शने अन्तर्द्धाने च तस्येच्छैव कारणमिति कर्माधीनत्वविवादिनोऽपि पराहताः । तस्माद्देवस्य मायया स्पृष्टा इति पूर्वश्लोकोक्तानामसतां मतं दूषयितुं प्रवृत्तस्योद्धवस्यैवेयं वाणी प्रमाणीकर्त्तव्या नत्वेतत्प्रतिकूलानां वाक्यानां कोटीरपीत्येतद्वाक्यं कृष्णस्तु भगवान् स्वयमिति वाक्यादेव मन्तव्यमिति शास्त्रस्यास्य स्वरसो रसनीयः ॥ ११ ॥ ❀ ❀ नन्वन्तर्द्धाय स्वबिम्बं वैकुण्ठमेव किं नीतवांस्तत्राह यद्बिम्बं मर्त्यलीलासु औपयिकमुपयुक्तं कथं वैकुण्ठं यात्विति भावः । तेन द्वारकायामेव सम्प्रत्यपि यथापूर्वमेव तद्वर्त्तत एव तदिच्छाभावादत्रत्या लोकास्तन्न पश्यन्तीति मात्रं विशेष इति भावः । नच मर्त्यलीलौपयिकत्वेन तस्यापकर्षो मन्तव्यः प्रत्युत वैकुण्ठलीलास्वरूपेभ्योऽपि परमोत्कर्ष एवेत्याह । स्वयोगमाया स्वरूपभूता चिच्छक्तिस्तस्या बलं सम्पूर्णमेव सामर्थ्यं दर्शयता दर्शयितुमिति नच किमप्यैश्वर्यं माधुर्य्यं वा निंह्नुत्य स्थापितमपि तु स्वसर्व्वस्वमेवात्र बिम्बे निक्षिप्तं नापि वैकुण्ठेऽप्येवं बलं दर्शितमिति भावः । गृहीतमिति स्थितिसर्गनिरोधेषु गृहीता मायया विभोरित्यत्र मायया गुणा गृहीता इतिवदभेदेऽपि भेदोक्तिः । बुद्धिर्हि भगवती अभेदेऽपि भेदं जनयतीति न्यायात् गृहीतमाविष्कृतमिति सन्दर्भः । यद्वा यद्बिम्बं दर्शयता दर्शयितुं स्वयोगमायाबलं गृहीतं राजमहिषीविवाहादिषु तथा प्रसिद्धेः बलमेव द्योतयति स्वस्य च वैकुण्ठस्थस्य श्रीनारायणस्वरूपस्यापि विस्मापनम् अहो रूपमहो साद्गुण्यमिति चमत्कारप्रापकं अन्यावताररूपगुणादिदर्शिनां वैकुण्ठीयपार्षदादीनां का वार्त्तेति भावः । अतएव सौभगर्द्धेः सौभाग्यसम्पत्तेः परं पदं परावधिस्थानं अतो वैकुण्ठस्यापि तद्दर्शनेच्छोद्भवति । द्विजात्मजा मे युवयोर्दिदृक्षुणेत्यादेः भूषणानामपि भूषणान्यंगानि यस्येति परमसौन्दर्यमुक्तम् ॥ १२ ॥ ❀ ❀ तस्य सौभगर्द्धिमत्त्वं त्वयापि साक्षात्कृतमिति स्मारयति यद्धर्मेति । त्रिलोकः त्रिभुवनस्थो लोको ब्रह्मेन्द्रादिरपि इति अमन्यत किं अद्य इह जगति विधातुरर्वाक् सृतौ अर्वाचीनविचित्रसंसारनिर्माणे यत् कौशलं तत् सर्वं गतमुपक्षीणं एतदंगकान्तौ दृष्टायां विधातृसृष्टानां नीलोत्पलदलिताञ्जनेन्द्रनीलमणिनीरदानां जुगुप्सा एतन्मुखे दृष्टे चन्द्रपद्मयोरपि धिक्कार इत्येवम् ॥ १३ ॥ ❀ ❀ किञ्चैवमनुरक्तेभ्यखिलोकस्थेभ्यो ब्रह्मरुद्रादिभ्योऽपि व्रजस्त्रीणामनुरागाधिक्यं यतस्तैस्तथा सम्मानितेन कृष्णेनापि ता एव यथा सम्मानिता नतु तथा तेऽपीत्याह । अनुरागेण प्लुतैर्व्याप्तैर्हासै रासो रससमूहो यत्र तथाभूतो यो लीलाया अवलोकस्तेन स्वकृतेन जन्मनामादानानन्तरं प्रतिलब्धो मान आदरो याभिस्तास्तदैव दृग्भिः

सह अनुप्रवृत्त्या गच्छन्तं तं एवानुगता धियोऽपि यासां ताः । अवतस्थुस्तत्क्षण एव जाड्योदयात् किमपि चेष्टितुं न प्रबभूवु-रित्यर्थः । ततश्च कृत्येषु मार्जनलेपन-दधिमथन-परिवेषणादिषु शेषो यासां ताः तत्तत्कृत्यमध्य एवाकस्मिक-तद्दर्शनप्राप्तेरसमापित-कृत्या एव बभूवुरित्यर्थः । तेन तस्य स्वपर्यन्तसर्वजगत्सु विस्मापनतां व्रजस्त्रीषु पुनर्मोहनता च प्रेमाधिक्येनैवाभूदिति भावः । तदेवं तद्बिम्बस्य मर्त्यलीलौपयिकत्वप्रपञ्चनेन मर्त्यलोकस्थगोकुलमथुराद्वारकास्वेव नित्यस्थितत्वं द्युमणिदृष्टान्तेन दर्शनादर्शनमात्र-विशेषत्वञ्च ध्वनितम् ॥ १४ ॥ ❀ ❀ ननु वैकुण्ठान्नारायण एवागत्य वसुदेवगृहे अवततारेति कचित् पुराणपुरुषः सित-कृष्णकेश एवेति कचित् क्षीरोदनाथ इति कचिन्नरनारायणाविति कचिदुपेन्द्र इति त्वन्मुखात्तु द्वारकादिधामस्थो मर्त्यलीलौपयिकः सर्वोत्कृष्ट इति श्रूयते अत्र को निश्चय इत्यत आह स्वशान्तेति । स्वीया ये शान्तरूपा भक्तास्तेषु इतरैः स्वरूपैर्घोरैर्मूढैश्च पीड्यमानेषु सत्सु अनुकम्पितो जातानुकम्प आत्मा मनो यस्य सः । प्रकृतेः परे ये नारायणादिस्वरूपा अपरे ब्रह्मादयश्च तेषामीशः स्वयं भगवान् श्रीकृष्ण-महदंशयुक्तः महान् महत्स्रष्टा पुरुषः महान्तं विभुमात्मानमित्यादि श्रुतेः ॥ अंशा मत्स्यकूर्म-नृहरि-नरनारायण-वामना-दयस्तैर्युक्तः सन् अजोऽपि आत्यन्तिककारणत्वादजन्योऽपि प्राकृतजन्मरहितोऽपि वा जात आविर्भूतः महाभूतरूपेण नित्यसिद्ध एवाग्निर्यथा मणिशिलासु घर्षणवशादाविर्भवति तद्वत् । तेन मथुरादिस्वीयनित्यधामस्थ एव भगवान् मथुरास्थवसुदेवोग्रसेना-दिषु स्वभक्तेषु लब्धातिकष्टेषु कृपाशक्तिघर्षणवशेनाविर्भूतो दृश्यो बभूवेत्यग्निदृष्टान्तः । तथा मथुरोदयशैले देवक्यां प्राच्यां दिशि उदितः सन् दुष्टतमांसि संहृत्य शिष्टकमलान्यनुरागिचक्रवाकांश्च तैरभ्यर्दितानि संतोष्य धर्ममर्यादाः प्रवर्त्य प्रभासास्तशैले अस्तं-गत इति द्युमणिदृष्टान्तश्च परम्परानुकूलः स्वधामस्थं सन्तमेवाविर्भूतं तं स्पष्टमेवाभिदधाति न तु कुतश्चिद्वैकुण्ठनाथो वैकुण्ठात् क्षीरोदनाथः क्षीरोदात् नरनारायणावुपेन्द्रादयश्च स्वस्वधामत आगत्यावततारेति यथास्थानं प्रसिद्धिरपि महदंशयुक्त इति विशे-षणादाविर्भावसमये तैर्वैकुण्ठनाथादिभिरागत्य परावरेशे कृष्णे संमिलनात् सुसंगतैवेति सर्वं मुनिवाक्यञ्च प्रमाणम् ॥ १५ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

यादवादीनां कुशलप्रश्ने किं नु नः कुशलं ब्रूयामित्युक्तमथ कोऽसौ हरिरित्याकांक्षायां हरिस्वरूपगुणविग्रहादिकं वर्णयन् अर्थाय जातस्य यदुध्वजस्य वार्त्तां सखे कीर्त्तय तीर्थकीर्तेरित्यस्योत्तरमाह प्रदर्श्येत्यादिना । यः कृतज्ञत्वादिगुणगणमंदिरः आसमंततः तप्तानि तपांसि यैस्तेषां अवितृप्तास्तदितरदर्शने दृशो येषामन्यदर्शनोपेक्षकाणां महतां लोकैरवलोकनीयं लोकलोचनं कर्मणि ल्युट् स्वविंबं स्वासाधारणं प्राकृतं श्रीमद्विग्रहं प्रदर्श्य आविष्कृत्य पुनरादाय स्वबिम्बेन सहैव योंतरधात् अन्तर्हितवान् स हरिरित्यन्वयः । अनेन भगवन्मूर्तेर्नित्यता प्रतिपादिता ॥ ११ ॥ ❀ ❀ बिंबस्य लोकलोचनमिति विशेषणेन दर्शितं दर्शनी-यत्वं प्रपञ्चयति त्रिभिः । मर्त्येषु या लीलास्ताखौपयिकं योग्यं यदप्राकृतमेव न हि प्राकृते देहे सकलविश्वप्रकाशनादिलीला संभवती-ति भावः । स्वयोगमायायाः शक्तिभूतायाः बलं सामर्थ्यं दर्शयता गृहीतमुपात्तं स्वस्य च स्वस्यापि विस्मापनं विस्मयजनकं सौभगर्द्धेः सौभाग्यसमृद्धेः परं श्रेष्ठं पदमाश्रयं भूषणानां भूषणान्यंगानि यस्मिंस्तत् एवंभूतं यद्बिम्बं तदादायान्तरधादिति पूर्वेण संबंधः ॥ १२ ॥ ❀ ❀ धर्मसूनोर्युधिष्ठिरस्य राजसूये यत् दृशां स्वस्त्ययनं निरतिशयसुखदम् । त्रिलोकः त्रिगुणजनो न तु दिव्यदृष्टि-र्नारदादिलोकः निरीक्ष्य अद्येदानीं इह श्रीकृष्णविग्रहे विधातुरब्जयोनेः अर्वाक्सृतौ अर्वाचीनसृष्टौ यत्कौशलं नैपुण्यं तत्कात्स्न्र्ये-न गतं पर्य्यवसितमित्यमन्यत ॥ १३ ॥ ❀ ❀ यस्य अनुरागेण स्वभक्तविषययानुरक्त्या प्लुतो व्याप्तो हासः रासो विनोदः लीलावलोकश्च तैः प्रतिलब्धः मानो याभिस्ताः व्रजस्त्रियः दृग्भिः सह अनुप्रवृत्ताः व्रजंतमनुगताः धियो यासां ताः कृत्ये शेषो या-सां ताः असमाप्तकृत्या एव तस्थुः ॥ १४ ॥ ❀ ❀ बिंबप्राकट्यकरणे कारणं दर्शयति स्वशांतरूपेष्विति । महता संकर्षणाख्ये-नांशेन सह अजोपि अपूर्वदेहग्रहणरूपजन्मशून्योपि जातः देवक्यां नित्यमूर्तिरेवाविर्भूतः वसुदेवपुत्रभावं गतः यथा नित्यसिद्ध एवाग्निररण्यमाविर्भवति तद्वत् ॥ १५ ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनीव्याख्या

अत एव भगवान् ज्ञापनार्थमागतः प्रायेण सर्वानेवाऽनधिकारिणो ज्ञात्वा स्वरूपमुपसंहृतवानित्याह—प्रदर्श्येति । स्वोपेक्षादोषाभावाय प्रकर्षेण दर्शयित्वा । इन्द्रियाणां बहिर्मुखत्वेन दर्शनकरणायोग्यत्वेऽपि स्वसामर्थ्यं दत्त्वा प्रदर्शनं प्रशब्दार्थः । तेषां दृष्टीनां साधनान्तराभावमाह—अतप्ततपसामिति । 'अतप्ततनूर्न तदामोऽश्नुते' इति श्रुतेः । येन न तप्तं तपः स त्वामोऽपक्वः, नहि स जलाधारो भवितुमर्हति । जलनिकटे स्थितेऽप्यामघटे न जलं प्रक्षिप्यते, स्वरूपनाशशङ्कया । तथा भगवानपि स्वरूपं तेषां दृष्टौ न स्थापितवान्, तपोव्यतिरेकेण भगवत्यन्यथाबुद्धिसम्भवात्तन्नाश एव स्यात् । तर्ह्येतावत्कालं कथं स्थापितवांस्तत्राऽऽह— अवितृप्तदृशामिति । न विशेषेण तृप्ता दृष्टिर्येषाम् । वस्तुसामर्थ्यात् वस्तुविचारमकृत्वैव रूपमेव पश्यन्तः स्थितास्तृप्तप्राया जाताः । सर्वथा तृप्ताश्चेदन्यथा[1] जानीयुः । अत[2] एव[3] उपसंहृतवानित्यर्थः । नृणामिति राजसत्वम् । आदायेति धर्मद्वारा तेषां दृष्टिषु प्रविष्टं

---

१. दोषारोपपुरस्सरं जानीयुः प्रकाश. २. एतदर्थम् प्र. ३. 'एव' इति नास्ति ख. ग. घ. ङ.

तत आच्छिद्य स्वयमप्यन्तर्हितवान्, मध्ये वा स्थापितवान्। अविवन्मेषवद्वा तृप्ता दृष्टिर्येषाम्। ते ह्यधोमुखा नीचदृष्टयः। अत एवाऽऽदाने सुगमता। स्वबिम्बमिति स्वयमादित्यो बिम्बं रूपम्। अनेन विदुर[1]ज्ञानं परास्तम्। यथा तेजोरूपं विम्बम्, तथाऽऽकृतिः सच्चिदानन्दरू[2]पेति। किञ्च तद्रूपं लोकानां लोचनं ज्ञानरूपम्। न हि पदार्थबोधव्यतिरेकेण चक्षुषा किञ्चिज्जानाति। 'चक्षुषश्चक्षुः' इति श्रुतेर्लोचनमेतदेव। न हि लोचनं दृश्यं भवति, निमेषमात्रेण च तिरोभवतीति तस्य तिरोभावो युक्त इत्यर्थः। तुशब्देन रूपान्तरेण तिष्ठतीति सूचितम्॥ ११॥ ❀ ❀ तद्रूपं सच्चिदानन्दरूपमिति निरूपयितुं सदुत्कर्षं चिदुत्कर्षमानन्दोत्कर्षं चाऽऽह त्रिभिः—यन्मर्त्यलीलौपयिकमिति। इदं हि भगवतो रूपं सद्रूपम्। पञ्चभूतप्रकारेण पञ्चभूतसममपि पञ्चभूतेभ्यो विशिष्यत इति सदुत्कर्षः। तत्र पृथि[3]व्युत्कर्षमाह—यन्मर्त्यलोलौपयिकमिति। मृद्भावमापन्ना मर्त्याः, मृद्भावं त्यजन्तीति वा मर्त्याः। पृथिव्यां ये भवन्ति, तेषां या लीला स्वरूपक्लेशव्यतिरेकेण सर्वमनोहरचेष्टारूपा, तस्य औपयिकं योग्यम्। मर्त्यानां न लीलाधारत्वम्, अमर्त्येषु मर्त्यलीलाभावः, तथापि पार्थिवानां न योग्यता। अतोऽलौकिकमेव यन्मनुष्यरूपसदृशं शुद्धं सद्रूपं तदेव लीलायोग्यम्, का[4]र्यदोषराहित्यात्। किञ्च, स्वयोगमायाऽलं दर्शयता गृहीतम्। स्वस्याऽसाधारणरूपा साधनभूता सर्वभवनसमर्था या कारणरूपा माया, तस्या बलम्। परीक्षार्थं बलिना यथा महत् कर्म कार्यते, तथा सतोऽनन्तरूपकर्त्र्याः सर्वसामर्थ्यमेकत्र व्याप्तं प्रदर्शनीयमिति तादृशं रूपं निर्मितम्। नानाविधानि रूपाणि जलं स्वच्छतया गृह्णाति। तस्य जलस्योत्कर्षो माया। वैकुण्ठस्थितमपि रूपं गृह्णातीति जलभावेऽपि जलोत्कर्षः। किञ्च, स्वस्याऽपि विस्मापनम्। स्वयं हि तेजोमयः सर्वप्रकाशकः सर्वमेव स्वरूपमन्येभ्यः प्रदर्शयति, तस्य न किञ्चित् विस्मयम्, तादृशस्याऽप्येतत् विस्मापनं विस्मयजनकम्, अहो मयैतादृशमपि लोके प्रदर्श्यत इति। तेजोरूपं सत्तेजसोऽप्युत्कृष्टम्। किञ्च, सौभगर्द्धेः परं पदम्। सौभाग्यस्यर्द्धेरणिमाद्यष्टैश्वर्यस्य च परमं स्थानम्। प्राणस्य योगस्य च कार्यमेतद् द्वयम्, तेन वायुरूपं सद्वायोरुत्कृष्टम्। सौभगमत्र सौन्दर्यातिशयः सर्वपुरुषरोचकत्वम्। ऋद्धिः समृद्धिः। पुरुषोत्तमस्यापि रुचिजनकमत एवैतद्रूपे भगवतोऽतिप्रीतिः, प्राणादप्यधिका। किञ्च, भूषणभूषणाङ्गमिति। भूषणानां भूषणभूतानि अङ्गानि यस्य। भूषणान्यङ्गदादीनि कौस्तुभान्तानि, तेषां भूषणमङ्गमेव। यथेन्द्रनीलमणिः स्वर्णमणीनाम्। अनेन नभस्तले विमानविद्युदादय इव भगवद्रूपे आभरणानि शोभन्त इत्याकाशतुल्यमप्याकाशादुत्कृष्टम्॥ १२॥ ❀ ❀ एवं सदुत्कर्षं निरूप्य चिदुत्कर्षमाह—यद्धर्मसूनोरिति। धर्मे हि ज्ञानमभिव्यक्तं भवति। धर्माज्जातं धर्मादप्युत्कृष्टम्। तस्याऽपि राजसूययागो धर्मोत्कर्षरूपः। तादृशीमवस्थां स्मृत्वा धर्मेणाऽऽह। बतेति हर्षे। [5]सर्वेऽपि यत् भगवद्रूपं दृष्ट्वा एवं ज्ञातवन्तस्तद्रूपं वर्णयति—दृक्स्वस्त्ययनमिति। दृष्टीनां स्वस्ति कल्याणरूपमयनं स्थानम्। सर्वेऽपि विषया दृष्टीनां नाशकाः, येऽपि भगवद्विषयास्तेऽपि स्वरूपतः कल्याणरूपा न। किं बहुना, विषयमात्रमेव तद्दृष्टिव्ययजनकम्, न तु पोषकम्। ज्ञानमेव तु दृष्टिपोषकम्। ज्ञानेन्द्रियाणां च तदेवायनम्। सजातीय एव प्रविष्टं सजातीयं वर्द्धते। तेन विषयपक्षेऽपि 'कश्चिद्धीरः प्रत्यगात्मानमैक्षत्' इति न्यायेन यदा ज्ञानमेव पश्यति चक्षुस्तदा स्वस्त्ययनं भवति। 'चक्षुषश्चक्षुः' इति श्रुतेश्च। तदा त्रिलोकस्य या बुद्धिर्जाता तामाह—इह चिद्रूपे भगवच्छरीरे—कौशलं विधातुर्जगत्कर्तुर्गतम्। अर्वाक्सृतावेव कौशलम्। इतो[6]ऽर्वाक् सत्त्वसृष्टावेव जगत्कर्तुः सामर्थ्यम्। अथवा, अर्वाक्सृतिर्मनुष्यसृष्टिरर्वाक्स्रोतस्त्वात्, तत्र यत्कौशलं तदिह गतम्। अर्वाक्सृतिकौशलेन इदं कर्तुं न शक्यत इत्यमन्यत। तेन स्वस्त्ययनत्वात्, सर्वलोकप्रतीतिसिद्धत्वात्, सत्त्वसृष्ट्यतिरिक्तमेतच्चिद्रूपमिति॥ १३॥ ❀ ❀ आनन्द[7]रूपतामाह—यस्यानुरागेति। स्त्रियो ह्यानन्दप्रधानाः, तासां दृष्टिरानन्द एव भवति। यत आनन्दार्थमेव प्रयतन्ते, साधने वा। प्रकृते साधनत्वाभावात् निरुपाधिकस्त्रीदृष्टिविषयत्वेन आनन्दत्वमुच्यते। यस्य भगवतोऽनुरागेण प्लुतो यो हासः, प्लुतो निमग्नोऽधिको वा, तत्सहितो यो रासः रससमूहात्मको बहुनर्तकीयुक्तो नृत्यविशेषः; तत्र यल्लीलावलोकनम्, तेन प्रतिलब्धो मानो याभिः। पूर्वमभिमानं परित्यज्य भक्तिमार्गानुसारेण भगवन्तं प्रपन्नाः। तत्र सख्यपर्यन्तं भगवद्भजने जाते अनुरागः प्रवृद्धः। हाससहितो रासो भावोद्गारी हृदये भगवदैक्यं प्रापयति। तत्र हास्यांशः काममध्ये प्रविष्टो भेदमपि बोध[8]येदित्यनुरागेण प्लुतः कृतः परमप्रेमात्मको जातः। उत्साहजनकत्वात् हासोऽप्यपेक्षितः। रासो वश्यतापादकः। अत एव तत्र वशीभूतस्य भगवतो यल्लीलावलोकनम्, तेन पूर्वं त्यक्तोऽपि मानो भगवता स्थापितो दृष्टिद्वारा दत्त इति प्रतिलब्धमाना भवन्ति। अनेन दीनतया भक्तिरस आ[9]क्षिप्तः। स्वत[10]न्त्रा एव ता भगवदानन्दानुभवे समर्था जाता इत्यर्थः। व्रजस्त्रियो गोकुलस्त्रियः। व्रजतीति व्रजः, सदैकत्र स्थितिरहितः। तादृशीनां स्तब्धतयैकत्र रसास्वादनं स्वभावेन विरुद्ध्यत इति स्वभावविजयी भगवानानन्दमयः। कामसाधकत्वाभावमाह—दृग्भिरनुप्रवृत्तधिय इति। दृग्भिः सह अनुप्रवृत्ता धियो यासाम्। यथा दृष्टिर्भगवति प्रविष्टा, तत्सङ्गे चेतनाऽपि तत्रैव गता। अतो न स्वशरीरे तासां कामभोगापेक्षा, भगवत्स्वरूप एवानन्दानुभवात्। न कामेनानन्दो न वा स्वस्मिन् जातस्याऽऽनन्दस्याऽनुभवः, अन्तःकरणादीनां तत्रैव व्याप्तत्वात्। नाऽऽत्मन्यानन्दजननसामर्थ्यम्। अस्मिन्नर्थे न सन्देहः कर्तव्य इत्याह—किलेति। किञ्च। कृत्यशेषा एवाऽव-

---

१. 'अजस्य जन्न...' इति पद्योक्तं स्वेच्छया जनिते देहेऽग्निवद्भगवदावेश इत्याकारकं ज्ञानम्. प्र. २. इतिहेतौ. प्र.। ३. पृथिव्यपेक्षयोत्कर्षम्. प्रकाशः. ४. भावविकारराहित्यात् प्र. ५. दृक्स्वस्त्ययनं व्युत्पादयन्ति. प्र. ६. चितोऽर्वाक्। तस्यैव विवरणं—सत्त्वसृष्टाविति। ७. उत्कृष्टानन्दरूपताम्. प्रकाशः. ८. तदभावार्थम्. प्र. ९. अर्थादाक्षितः.प्र. १०. 'सोऽश्नुते...' इत्युक्तरीत्या स्वतन्त्राः प्र.

तस्थुः। कृत्ये शेषो यासाम्। प्रतिक्षणं भगवदात्मकतामेव प्राप्नुवन्तीति गृहकृत्ये तासां कृत्यशेष एव तिष्ठति, देहस्मरणाभावात्। अतोऽपि स्वस्मिन्नानन्दोत्पत्तिः। यथा दूरे स्थितं दृष्टिर्विषयीकरोति, तथा दूरे स्थितं भगवन्तमप्यानन्दरूपं दृष्टिर्विषयीकरोति, अन्यथा आनन्दप्रेप्सूनामेवं स्थितिर्न स्यात्॥ १४॥ ❀ ❀ एवं सच्चिदानन्दत्वं स्वरूपस्योपपाद्य, तत्र जीवस्येव भगवतोऽपि स्थितिर्वक्त-व्येत्याशङ्क्या, तत्रैव सच्चिदानन्दरूपेऽक्षरे स्थितस्य पुरुषोत्तमस्याऽग्निवत्तत्र प्रादुर्भाव इत्याह—स्वशान्तरूपेष्विति। अक्षरस्यैवं-प्रकारेणाविर्भावः, तत्र भगवदाविर्भावश्च निर्निमित्तं न भवति। अन्यद्वारा 'तमर्थं कारयन् विषमो भवेत्। अतः पुत्रशिक्षावत् भगवान् दैत्यान् मारयतीत्याह—स्वस्य शान्तेषु स्वरूपेषु देवादिरूपेषु अशान्तैरितरैः स्वरूपभूतैरेव दैत्यैरर्द्यमानेषु सत्सु दयाविष्टचित्तः सर्वांशेनाऽप्यज उभयसमाधानार्थं स्वयं साक्षरः पुरुषोत्तम आविर्भूत इत्यर्थः। कालकर्मादिप्रेरणाभावार्थमाह—परावरेश इति। परः कालादिः, अवरः कर्मादि, तेषां नियन्ता। ननु पुरुषो नारायणः प्रथमपुरुषो वा स्वानन्देन सहाऽऽविर्भावं लभताम्, किं पुरुषोत्तमाविर्भावेनेत्यत आह—महदंशयुक्त इति। 'महानंशो यस्य प्रथमपुरुषस्य, तद्युक्तः। सृष्ट्यर्थं स्वस्मिन् प्रकृतिपुरुषमन्तर्भा-व्यैवाऽऽविर्भवति। अत एव स्वस्मिन् यशोदादिभिर्जगदुपलभ्यते। एतदेव हि ब्रह्मलिङ्गम्। अन्य'व्यावृत्त्यर्थमाह—भगवानिति। यथाऽग्निरिति व्याख्यातम्॥ १५॥

## श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

प्रदर्श्येत्यत्र। अन्यथा जानीयुरिति। अन्यथा दोषारोपपुरःसरं जानीयुः। अत एवेति। एतदर्थम्। विदुरज्ञानमिति। 'अजस्य जन्म' इति पद्योक्तं स्वेच्छया जनिते देहेऽग्निवद्भगवदावेश इत्याकारकं ज्ञानम्। तत्र हेतुः—यथेत्यादि। इविर्हेतौ। ननु लोच्यतेऽनेनेति करणव्युत्पत्त्या लोचनशब्दस्य ज्ञानजनकत्वमेवार्थो युज्यते, न तु ज्ञानरूपत्वमिति चेत्तत्राहुः—न हीत्यादि। तथा च बोधवैशिष्ट्य एव चक्षुषः करणत्वेन ज्ञानजनकत्वस्य बोध एव पर्यवसानात्तत्करणत्वेऽपि ज्ञानरूपत्वं नायुक्तम्। विशिष्टज्ञानं प्रति विशेषज्ञानस्य हानोपादानबुद्धिं प्रति विषयत्वेन विषयज्ञानस्य मणित्वेन मणिज्ञानस्य च करणत्वेऽपि ज्ञानरूपत्वानपायेन ज्ञानरूपत्वव्याख्यानेऽपि दोषाभावादित्यर्थः। ननु तथापि गौण्यापत्तिस्तु दुर्वारैवेत्यत आहुः—चक्षुष इत्यादि। तथा च लौकिक एव प्रत्युत गौणीत्यर्थः। लोचनाधिदैविकत्वात्तद्धर्मानत्राहुः—न हीत्यादि। नश्वरत्वपरिहाराय तु-शब्द इत्याहुः—तुशब्देनेत्यादि ॥ ११॥ ❀ ❀ यन्मर्त्येत्यत्र। सच्चिदानन्दरूपमिति। निरूपयितुमिति। पूर्वं यादवज्ञानानुवादे 'भूतावासममंसत' इति तेषां विरुद्धज्ञानमुक्तम्। तस्य विरुद्धत्वबोधनायाविभक्तसच्चिदानन्दमक्षररूपमिति वक्तुं सजातीयविजातीयस्वगतवर्जितमित्यर्थः। पृथिव्युत्कर्षमिति। पृथिव्यपेक्षयोत्कर्षम्। ननु मर्त्यानां लीलेति समासे सम्बन्धषष्ठ्या आधारतारूप एव सम्बन्धः प्रतीयते। तथा सति मर्त्याधारकलीलायोग्यमित्यर्थो भवति। तेन को वा पृथिव्युत्कर्षः सिद्ध इत्यत आहुः—मर्त्यानामित्यादि। अत्र मर्त्यमिति नोक्तम्। किन्तु नटचेष्टावत् अनुकार्यतच्चेष्टासजातीयचेष्टायोग्यत्वम्, तेन तस्य मर्त्यभेदः सिद्ध इत्येष उत्कर्षः इत्यर्थः। एतदेव प्रथमस्कन्धे स्फुटमुक्तम् 'धत्ते जह्याद्यथा नटः' इति। कार्यदोषराहित्यादिति भावविकारराहित्यात्। अनन्तरूपकव्या इति संचायकवद्रूपप्रयोजिकायाः। प्रदर्शनीयमित्यादि। स्वस्वरूपज्ञातृषु प्रदर्शनीयमित्यतो हेतोः तादृशं रूपं संचेयन्यायेन मायायां निर्मितम्। तेन जलोत्कर्षः कथमित्यत आहुः—नानेत्यादि। माया च स्वच्छत्वरूपा, तथा च यथा तेजोरूपस्य चन्द्राद्रेः प्रतिबिंबो ह्यंशानां किरणानां जले प्रवेशात् भवति, तत्र प्रविष्टे चांशे चन्द्रधर्माः सर्वे मायया प्रत्याय्यन्ते, तथा च संचायकस्थानापन्ना शुद्धसत्त्वात्मिका माया तस्यां संश्लेयन्यायेन प्रविष्टो योंऽशस्तस्मिन् मूलधर्माः प्र'त्याय्यन्ते, तयेत्येष मायिकत्वेऽपि मायोत्कर्षः इत्यर्थः। एवं च संचेयतया भगवतो योगमायासमावृतत्वेन सर्वेषां भगवानप्रकाश इति। 'नाहं प्रकाशः' इति गीतावाक्यम्। मायावच्छिन्नेश्वरवादस्तत्र च मायया मूलधर्मप्रतीतिर्मूले वास्तवावास्तवे धर्मा आवृते कंपादिवन्मर्त्यधर्मप्रतीतिः, वस्तुतस्तदभाव इति सर्वं यथास्थितं सङ्गतं भवति॥ १२॥ ❀ ❀ यद्धर्मसूनोरित्यत्र। दृक्स्वस्त्ययनं व्युत्पादयन्ति—सर्व इत्यादि। नाशका इति। अंशतो नाशकाः। अत एव मणिपरीक्षकादीनां तत् स्थापनार्थं बाल्यादेवोपनयनाऽभ्यासः। ननु 'स सर्वधीवृत्तिः' इत्यत्रासदिन्द्रियाणां भगवद्विषयत्वं व्युत्पादितम्। तथा सति अस्मद्दृशो भगवद्विषयत्वम्, तथा च न स्वनाशः क्रियत इति पूर्वोक्तमसङ्गतमित्याहुः—येऽपीत्यादि। स्वस्ति पदं ह्यविनाशे कल्याणे च रूढम्। तथा चानाशकत्वाभावे दृष्टेः स्वपोषकत्वान्न तेषामपि कल्याणरूपतेत्यर्थः। एतदेवाहुः—किं बहुनेत्यादि। तर्हि प्रकृतेऽपि विषयत्वात्तथात्वापत्तिरित्यत आहुः—तथा च विषयत्वेऽपि ज्ञानरूपत्वान्न तथात्व-मित्यर्थः। तदुपपादयन्ति—ज्ञानेन्द्रियेत्यादि। सच्चिदानन्दरूपे प्रपञ्चे इन्द्रियाणां स्वसजातीयविषयग्राहकत्वमप्यत्रोपपादितम्, दशमस्कन्धे 'अदर्शनं स्वशिरसः' इत्यत्रोपपादयिष्यते च। एवं सति ज्ञानरूपाणामिन्द्रियाणां तस्यैव स्थानत्वादुक्तरीत्या तथेत्यर्थः। नन्वेवं ज्ञानरूपत्वेऽपि विषयविषयीभावाद्(?)कामभावेन साजात्याभावात् कथं पोषकत्वमित्यत आहुः—नृचक्षुष इत्यादि। तथा

---

१. आविर्भावनिमित्तभूतमर्थम्. प्र. २. महत्तत्त्वम्. प्र.। ३. अन्तर्भावान्न प्रतीतिः प्रकाशः. ४. अन्यथा. क. घ.५. अक्षरपुरुषव्या-वृत्त्यर्थम्. प्र.१ प्रत्याप्यन्ते, पाठः २ प्रत्याप्यन्ते, पाठः।

चैवं साजात्ये सर्वदृशां तत्र प्रवेशेन संसर्गाद्[1](?)वर्धने युक्तैव कल्याणरूपेत्यर्थः । अत एव स्वरूपवर्णने मनोनयनवर्द्धनमिति प्रयोगोऽपि । एवं चिद्रूपत्वं प्रतिपाद्य तदुत्कर्षं साधयन्ति–तद्देत्यादि । इतोऽर्वागिति । इतोऽर्वाक् । तस्यैव विवरणं सत्त्वसृष्टाविति ॥ १३ ॥ ❀ ❀ यस्यानुरागेत्यत्र । आनन्दरूपतामिति । उत्कृष्टानन्दरूपताम् । तदुपपादयन्ति–स्त्रिय इत्यादि । निरूपाधिक-दृष्टिविषयत्वं व्युत्पादयन्ति–पूर्वमित्यादि । अनुराग इति एतासां भगवत्यनुरागः । भगवदैक्यमिति । मनसो लये चिदंशस्य स्वात्मनो रसात्मना भगवता सहाभेदप्रतीतिः, तदभावार्थम् । परमप्रेमात्मक इति । वाक्यान्वयाधिकरणोक्तरीतिकब्रह्मधर्मात्मकः । एतेनानुरागस्यानया प्रणाड्या निरुपाधिकत्वं प्रकटीकृतम् । नन्वेवं परमप्रेम्णा अभेद एव संपाद्ये भेदबोधकस्य हासस्य किमिति मध्ये निवेश इत्यत आहुः–उत्साहेत्यादि । 'सत्स्त्रियः सत्पतिं यथा' इति दृष्टान्तबोधितं रासस्य कार्यान्तरमाहुः–रास इत्यादि । ननु तादृशभक्त्यभावे कथं रासेन वश्यतेत्यत आहुः–अनेनेत्यादि । आक्षिप्त इति । अर्थाक्षिप्तः । स्वतन्त्रा इति 'सोऽश्नुते' इत्युक्तरीत्या स्वतन्त्राः । आनन्दमय इति । निरवध्यानन्दात्मको भूमेत्यर्थः । एवमानन्दोत्कर्षः समर्थितः । एतद्दार्ढ्यार्थं आनन्दसाधनत्वेन दर्शनविषयत्ववारणायाहुः–कामेत्यादि । अन्यथेत्यादि । तथा च यद्यानन्दसाधनत्वेन भगवान् दर्शनविषयः स्यात्, चेतनायाः सर्वांशेन भगवत्यनुप्रवृत्तिर्न स्यात् । यदि तथा स्यात् तदा सर्वकृत्यशेषत्वेनावस्थानं न स्यात् । एतेन यत्किंचित्कृत्यकरणमपि तासां 'ते तु ब्रह्महृदम्' इति न्यायेन[2] भगवत्कृतमेवेति सिध्यति, तेन न कोऽपि शङ्कालेशः ॥१४॥ ❀ ❀ स्वशान्तरूपेष्वित्यत्र । तमर्थमिति । आविर्भावनिमित्तभूतमर्थम् । महानिति । महत्तत्त्वम् । ननु प्रथमपुरुषयुक्तत्वे आवरणादि-वत्तत्प्रतीतिः स्यादित्यत आहुः–सृष्टीत्यादि । तथा चान्तरभावान्न प्रतीतिरित्यर्थः । अन्तर्भावे किं मानमत आहुः–अत एवेत्यादि । एतदेवेति । जन्मादिसूत्रोक्तं जगदाधारत्वं विरुद्धधर्माश्रयत्वं च । अन्यथा व्यावृत्त्यर्थमिति । अक्षरपुरुषव्यावृत्त्यर्थम् । व्याख्यात-मिति । विद्यमानस्यैव प्रकटीभावो नत्वागमनमित्येतदाभासग्रन्थ एवोक्तमित्यर्थः । एतेन व्यापिवैकुण्ठे स्थितेरत्र स्थितेश्चैतावान् विशेष इति बोधितम् । तेन 'वृन्दावन सखि'-इत्यस्याभाषटिप्पणी यथा श्रुतैव सङ्गच्छत इति ज्ञेयम् ॥ १५ ॥

## श्रीगिरिधरकृता बालप्रबोधिनी ।

स च परमेश्वरो भगवान् श्रीकृष्ण एवेत्याशयेनाह—प्रदर्श्येति । यस्तु भगवान् स्वबिम्बं स्वमूर्तिं नृणां प्रदर्श्य तेषां पश्यतामवितृप्तदृशां दर्शनेन न विशेषेण तृप्ता दृशो नेत्राणि येषां तथाभूतानामेव सतां स्वबिम्बमादायान्तरधादित्यन्वयः । दृशाम-तृप्तौ हेतुमाह लोकलोचनमिति, लोकैर्जनैरवलोकनीयमित्यर्थः । दृशामतृप्तावप्यन्तर्धाने हेतुमाह—अतप्ततपसामिति, न तप्तं तपो यैस्तेषामित्यर्थः । यावत्तेषां स्वदर्शनयोग्यं तप आसीत्तावत्स्वरूपं प्रदर्श्य तदग्रे तद्दर्शनहेतुतपसोऽभावात्तद्विना दर्शनस्य दुर्लभत्वा-दन्तर्हितवानिति भावः ॥ ११ ॥ ❀ ❀ लोकलोचनमित्यनेन सूचितमेव वपुषोऽतिसौन्दर्यं दर्शयति—यदिति त्रिभिः । अन्यस्य त्वाश्चर्यं किं वक्तव्यं ? यद्बिम्बं स्वस्य च भगवतोऽपि विस्मापनमाश्चर्यकरम् । तत्र हेतुमाह—सौभगर्द्धेरिति, सौन्दर्यसमृद्धेः परं पदं परकाष्ठाभूतमित्यर्थः । एतदेव स्पष्टयति—भूषणभूषणाङ्गमिति । अन्यत्र भूषणान्येवाङ्गशोभां जनयन्ति अत्र तु भग-वदङ्गान्येव भूषणानां शोभां कुर्वन्तीत्याश्चर्यजनकत्वमेव तत्सौन्दर्यस्येति भावः । किमर्थमेवम्भूतं स्वरूपं गृहीतमित्यपेक्षायामाह—मर्त्यलीलौपयिकमिति, मनुष्यलीलासु योग्यमित्यर्थः । मनुष्यलीलार्थमिति भावः । तथा लीलाऽपि किमर्थेत्यपेक्षायां स्वमाया-माहात्म्यप्रदर्शनेन स्वभक्तानां संसारविस्मृतिपूर्वकस्वपरतार्थमित्याशयेनाह—स्वयोगमायाबलं दर्शयता गृहीतमिति ॥ १२ ॥ ❀ ❀ तस्य सौन्दर्यं राजसूये त्वयाऽप्यनुभूतमेवेति सूचयन्नाह—यदिति । बतेत्याश्चर्ये । धर्मसूनोर्युधिष्ठिरस्य राजसूये यागे त्रिलोकः त्रिभुवनस्थो जनो दृशां स्वस्त्ययनं परमानन्दकरं यद्वपुर्निरीक्ष्य विधातुर्ब्रह्मणः अर्वाक्सृतौ अर्वाचीनमनुष्यसृष्टौ यत्कौशलं नैपुण्यं तत्कार्त्स्न्येन साकल्येन इह वपुषि अद्येदानीं गतमुपक्षीणं, नातः परं तस्य कौशलमस्तीत्येवं अमन्यत मेने इत्यन्वयः । तद्वपुषो विधात्रसृष्टत्वेऽपि लोकदृष्टिरियमुक्ता ॥ १३ ॥ ❀ ❀ यस्य भगवतः अनुरागेणाप्लुतो व्याप्तो हासो हसनं रासो रससमूहा-त्मको बहुनर्त्तकीयुक्तो नृत्यविशेषस्तत्र यल्लीलयाऽवलोकश्च तैः साधनैः प्रतिलब्धः स्वकृतहासादिसन्मानानन्तरं लब्धो मान आदरो याभिस्ताः व्रजस्त्रियो दृग्भिः सह अनुप्रवृत्ताः गच्छन्तं श्रीकृष्णमेव अनुगताः धियो यासां ताः । कृत्येषु मार्जनलेपनदधिमन्थन-परिवेषणादिगृहकार्ये शेषो यासां तथाभूताः साकल्येन तत्कर्तुमशक्ता एवावतस्थुरित्यन्वयः । किलेत्यवधारणे ॥ १४ ॥ ❀ ❀ स्वमायाबलं दर्शयता गृहीतमिति यदुक्तं तदेव स्पष्टयति—स्वशान्तेति । सर्वात्मकस्य सर्वाण्येव रूपाणि, तत्र शान्तरूपेषु सात्त्विकेषु देवादिस्वभक्तेषु इतरैः स्वरूपैः राजसतामसैर्दैत्यादिभिरर्द्यमानेषु पीड्यमानेषु सत्सु तेष्वनुकम्पितः कृपायुक्तः आत्मा चित्तं यस्य सः । परावरेशः परे ब्रह्मादयः अवरेऽस्मदादयस्तेषामीशो नियन्ता भगवान् ऐश्वर्यादिपूर्णगुणकः अजः कर्माधीनजन्मादिरहितोऽपि महदंशयुक्तः भक्तानां रक्षणार्थं महता अंशेन बलभद्रेण सहितो जातः, यद्वा महत् तत्त्वमंशो यस्य सत्त्वगुणस्य तन्महदंशं तद्युक्तो जात इत्यन्वयः । नन्वेवं जातस्य तस्य प्रपञ्चसम्बन्धाद्दैत्यादिवधेन च दोषप्रसङ्गाद् गुणादिन्यूनता स्यादित्याशङ्क्य दृष्टान्तेन निरा-

---

१ 'संसर्गाद्वर्धने' । २ उपलब्धपुस्तकेषु तु ज्ञायेतेत्येव पाठः ।

करोति—यथेति। यथा महाभूतरूपेण नित्यसिद्धः सर्वत्र व्यापक एवाग्निः दार्वादिष्वाविर्भवन् स्वस्वभावमत्यजन्नेव आविर्भवति, तत उच्चनीचादिवस्तु दहन्नपि निर्दोष एवावतिष्ठते एवं भगवानपि नित्यसिद्धः सर्वत्र व्यापक एव देवक्यामाविर्भवन् निरस्त-निखिलदोषः साम्यातिशयासङ्ख्येयनित्यकल्याणगुणाकरत्वस्वभावं अत्यजन्नेव अवतीर्णः। ततश्च दैत्यवधादिकर्माणि कुर्वन्नपि निर्दोष एवासीदित्यर्थः॥ १५॥

### हिन्दी अनुवाद

जिन्होंने कभी तप नहीं किया, उन लोगोंको भी इतने दिनोंतक दर्शन देकर अब उनकी दर्शन-लालसाको तृप्त किये बिना ही वे भगवान् श्रीकृष्ण अपने त्रिभुवनमोहन श्रीविग्रहको छिपाकर अन्तर्धान हो गये हैं और इस प्रकार उन्होंने मानो उनके नेत्रोंको ही छीन लिया है॥ ११॥ ❀ ❀ भगवान्ने अपनी योगमायाका प्रभाव दिखानेके लिये मानवलीलाओंके योग्य जो दिव्य श्रीविग्रह प्रकट किया था वह इतना सुन्दर था कि उसे देखकर सारा जगत् तो मोहित हो ही जाता था, वे स्वयं भी विस्मित हो जाते थे। सौभाग्य और सुन्दरताकी पराकाष्ठा थी। उस रूपमें उससे आभूषण ( अङ्गोंके गहने ) भी विभूषित हो जाते थे॥ १२॥ ❀ ❀ धर्मराज युधिष्ठिरके राजसूय यज्ञमें जब भगवान्के उस नयनाभिराम रूपपर लोगोंकी दृष्टि पड़ी थी, तब त्रिलोकीने यही माना था कि मानवसृष्टिकी रचनामें विधाताकी जितनी चतुराई है, सब इसी रूपमें पूरी हो गयी है॥ १३॥ ❀ ❀ उनके प्रेमपूर्ण हास्य-विनोद और लीलामय चितवनसे सम्मानित होनेपर व्रजबालाओंकी आँखें उन्हींकी ओर लग जाती थीं और उनका चित्त भी ऐसा तल्लीन हो जाता था कि वे घरके काम-धंधोंको अधूरा ही छोड़कर जड़ पुतलियोंकी तरह खड़ी रह जाती थीं॥ १४॥ ❀ ❀ चराचर जगत् और प्रकृतिके स्वामी भगवान्ने जब अपने शान्त रूप महात्माओंको अपने ही घोररूप असुरोंसे सताये जाते देखा, तब वे करुणाभावसे द्रवित हो गये और अजन्मा होनेपर भी अपने अंश बलरामजीके साथ काष्ठमें अग्निके समान प्रकट हुए॥ १५॥

मां खेदयत्येतदजस्य जन्मविडम्बनं यद्वसुदेवगेहे।
व्रजे च वासोऽरिभयादिव स्वयं पुराद् व्यवात्सीद्यदनन्तवीर्यः॥ १६॥
दुनोति चेतः स्मरतो ममैतद् यदाह पादावभिवन्द्य पित्रोः।
ताताम्ब कंसादुरुशङ्कितानां प्रसीदतं नोऽकृतनिष्कृतीनाम्॥ १७॥
को वा अमुष्याङ्घ्रिसरोजरेणुं विस्मर्तुमीशीत पुमान् विजिघ्रन्।
यो विस्फुरद्भ्रूविटपेन भूमेर्भारं कृतान्तेन तिरश्चकार॥ १८॥
दृष्टा भवद्भिर्ननु राजसूये चैद्यस्य कृष्णं द्विषतोऽपि सिद्धिः।
यां योगिनः संस्पृहयन्ति सम्यग् योगेन कस्तद्विरहं सहेत॥ १९॥
तथैव चान्ये नरलोकवीरा य आहवे कृष्णमुखारविन्दम्।
नेत्रैः पिबन्तो नयनाभिरामं पार्थास्त्रपूतः पदमापुरस्य॥ २०॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका।

ननु कुतोऽसौ परावराणामीशः पारतंत्र्यप्रतीतेस्तत्राह। द्वाभ्याम्। मामप्येतद्दुर्वितर्क्यं दुर्घटं च खेदयति तदेवाह। वसुदेवगेहे बंधनागारे यज्जन्मनो विडंबनमनुकरणं न तु नृसिंहवदकस्मादाविर्भावः। कंसभयादिव निलीय व्रजे वासश्च कालयवनादिरिपुभयादिव पुरान्मथुराया व्यवात्सीत् पलायत॥ १६॥ ❀ ❀ एतच्च हरेश्चरितं स्मरतो मम चेतः कर्मभूतं दुनोति व्यथयति। तदेवं दर्शयति हे तात हे अम्ब युवां प्रसीदतं प्रसादं कुरुतम्। न कृता निष्कृतिः शुश्रूषणं यैस्तेषां नोऽस्माक-मिति बहुवचनं तु रामाद्यभिप्रायम्॥ १७॥ ❀ ❀ ननु तर्ह्यनीश्वर एव किं न स्यात्तव तु श्रद्धामात्रमेतत्तत्राह त्रिभिः। को वा अङ्घ्रिसरोजे यो रेणुस्तमपि विजिघ्रन् सेवमानः पुमान् विस्मर्तुमीशीत शक्नुयात्। विस्फुरन् भ्रूविटपो भ्रूलता एव कृतांतस्तेन॥ १८॥ ❀ ❀ न च तस्येश्वरत्वं साधनीयं भवद्भिरपि दृष्टत्वादित्याह। दृष्टेति। यां सिद्धिं सम्यग्योगेन प्राप्तुमिच्छंति॥ १९॥ ❀ ❀ आहवे युद्धे पार्थस्यास्त्रैः पूता निष्पापाः संतः॥ २०॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः।

अत्राक्षिपति—नन्विति। तदेव दुर्वितर्क्यत्वमेव॥ १६॥ ❀ ❀ रामो बलदेवः अत्रादिना गदादिग्रहः॥ १७॥ ❀ ❀ पुनराशंकते नन्विति तवोद्धवस्यैतत् कृष्णेशत्वादि। अयं वसुदेवनंदनः परमेश इत्येवं श्रद्धैवेत्यर्थः॥ १८॥ ❀ ❀

तस्येश्वरत्वं दृष्टमेवेत्याह—योगिन उपक्रमादिना वेदतात्पर्यविदः। यां सायुज्यलक्षणां सम्यग्योगेन भक्तिज्ञानान्यतरेण तस्य कृष्णस्य विरहम्॥ १९॥ ❀ ❀ अस्त्रैः पाशुपताद्यैः अस्य कृष्णस्य पिबन्तः सादरमवलोकयंतः॥ २०॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनीव्याख्या।

एतच्च० वक्ष्यमाणञ्च चरितं कर्तृ भूतरामादीत्यादिना गदादिग्रहः॥ १६॥ ❀ ❀ यर्हि जीववदाचरति तर्ह्यनीश्वरो जीव एव कुतो न भवेत्॥ एतच्चरितस्य दुर्वितर्कत्वादिश्रद्धामात्रम्। आरोपितविश्वासमात्रम्। भ्रूलता भ्रूरेव लता शाखाविशेषः विटपशब्दस्य शाखावाचकत्वं विटपः पल्लवे षिड्गे विस्तारे स्तम्बशाखयोरिति विश्वप्रकाशात्। अयं भावः—नेदं श्रद्धामात्रं तथात्वे तादृशमाधुर्य्याभावेन विस्मृतिः कुतो न स्यात् दृश्यते च तत्र मुक्तानामपि परमानन्दावेशेन तादृशतल्लीलावर्णनं नह्यनीश्वरस्य चरितं आत्मारामा आवेशेन वर्णयन्ति तथा भूभारहरणञ्चानीश्वरत्वेन संगच्छते तस्माद्यथार्थे। वेषा मम श्रद्धा नारोपितेति॥ १७॥ ❀ ❀ न च तस्य श्रीकृष्णस्येश्वरत्वं साधनीयमिति। श्रीकृष्ण ईश्वरः संततविस्मृतपादरेणुकत्वात् भूभारहारित्वात् नारायणवत् व्यतिरेके जीववच्चेत्यनुमानस्य नात्र प्रवृत्तिरित्यर्थः। कुतः पक्षताविरहादित्याह भवद्भिरपि दृष्टादिति। सिषाधयिषाविरहविशिष्टसिद्ध्यभावो हि पक्षता। तत्र हि साध्यसिद्धिरनुमितिप्रतिबंधिका अत्र हि साध्यस्येश्वरेत्यस्य सिद्धिः हतारिगतिदायकत्वेन प्रत्यक्षं वर्त्तत एवेति नानुमानमपि कर्त्तव्यं संदिग्धे न्यायः प्रवर्त्तते न तु निर्णीते इति न्यायादित्यर्थः। शिष्टं स्पष्टम्॥ १८॥ ❀ ❀ अत्र पार्थास्त्र-पूतत्वं तद्दर्शनयाथार्थ्ये हेतुः स्वतस्तेषामासुरभावत्वात्सादरावलोकनलक्षणपानानुपपत्तेः॥ १९॥ ❀ ❀ स्वयन्त्विति युग्मकम्। तत्र० असाम्यातिशयत्वे त्रयाणां महत्स्रष्टब्रह्माण्डस्य सर्वभूतस्थानां पुरुषाणामीशः चिरकालीनैरप्राकृतैः॥ २०॥

### श्रीमद्वीरराघवव्याख्या

अजहत्सर्वज्ञत्वसत्यसंकल्पत्वज्ञानशक्त्यादिस्वभावस्यैव पुनर्मर्त्यलीलानुकार ऐश्वर्याच्छादको न कर्मायत्त इत्याह मामिति द्वयेन। अजस्य भगवतः वसुदेवगेहे बंधनागारे यज्जन्मनो विडंबनमनुकरणं न तु नृसिंहवदकस्मादाविर्भावः पश्चात्स्वयमनंतवीर्यः कंसभयादिव व्रजे च वासः कालयवनादिभयादिव पुरान्मथुराया व्यवात्सीत्प्रोषितवानिति च यदेतन्मां खेदयति मच्चित्तं व्यामोह-यति एतत्सर्वमैश्वर्याच्छादकमेवेत्यर्थः॥ १६॥ ❀ ❀ दुनोतीति पित्रोर्देवकीवसुदेवयोः पादावभिवंद्य नमस्कृत्य हे तात पितः हे अम्ब मातः कंसादुर्वेधिकं शंकितानां भीतानामकृतनिष्कृतीनामकृतशुश्रुषाणां नोस्माकं युवां प्रसीदतं प्रसादं कुरुतमिति यदाह एतत्स्मरतो मम चित्तं कर्म दुनोति खेदयति॥ १७॥ ❀ ❀ एवं तर्ह्यनीश्वर एवायं किं न स्यादित्याशंकापरिहाराय मर्त्य-लीलामनुकुर्वन्यतः पुनरैश्वर्यमपि प्रकाशितवानिति वदन् निरतिशयवात्सल्यादिगुणवतस्तस्य विरहोऽतिदुःसह इत्याह सप्तभिः॥ ०॥ ❀ ❀ क इति। अमुष्य श्रीकृष्णस्यांघ्रिसरोजरेणुं विजिघ्रन्को वा पुमान्विस्मर्तुमीशीत शक्नुयात्? यः कृष्णः भ्रूरेव विटपः विस्फुरंश्चलन्यो भ्रूविटपः तेन भ्रूभङ्गानुवर्तिना कृतान्तेन मृत्युना भूमेर्भारं तिरश्चकारापहृतवान् भ्रूभंगेन भूभारापहरणमैश्वर्यप्रकाशकम्॥ १८॥ ❀ ❀ दृष्टेति। राजसूये कृष्णं द्विषतोपि चैद्यस्य शिशुपालस्य सिद्धिर्भगवत्प्राप्तिर्भवद्भिर्दृष्टा ननु कथंभूता सिद्धिः यां सिद्धिं योगिनः भक्तियोगनिष्ठाः सम्यग्योगैनैकांतभक्तियोगेन संस्पृहयंति वांछन्ति तस्य द्विषतोपि निरतिशयपुरुषार्थरूपमुक्तिं प्रयच्छतो वात्सल्यनिधेः श्रीकृष्णस्य विरहं कः सहेत॥ १९॥ ❀ ❀ न केवलं द्विषतां भजतां च स्वपदप्रापकः उदासीनानामपीत्याह तथैवेति। ये युद्धे नयनाभिरामं नयनांनदकरं श्रीकृष्णमुखकमलं नेत्रैः पिबंतोऽनुभवतः पार्थस्यार्जुनस्यास्त्रैः पूताः पवित्रिताः अन्येपि राजानः अस्य भगवतः पदं स्थानमापुः॥ २०॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

ब्रह्मादीनामपि भगवद्विषयज्ञानं मध्याह्नार्कवत्संचलति किमुतास्मदीयमिति भावेनाह मां खेदयतीति। वसुदेवस्य गृहे भार्यायां जन्म विडंबनं जातवदनुकरणं अरिः कंसो जरासंधश्च मथुरापुरात् गोमतद्वारकयोर्विवासः प्रवासः अनंतवीर्य इत्ययं लोकानुकरणं स्मारयति॥ १६॥ ❀ ❀ एतत्कंसवधानंतरं क्रियमाणं कर्म पित्रोर्देवकीवसुदेवयोः अकृतनिष्कृतीनामननुष्ठित-कंसप्रकृतप्रतिक्रियाणाम्॥ १७॥ ❀ ❀ विस्फुरद्भ्रूविटपेन विस्फुरंत्योर्भ्रमत्योर्भ्रुवोर्विटपेन लेशेन कृतांतेन कालोपमेन॥ १८॥ ❀ ❀ रसज्ञेन पुरुषेण हरेर्विरहो न सोढुं युक्त इति भावेनाह दृष्टेति-योगिनो युक्त्युपक्रमादिलक्षणेन वेदतात्पर्य-वेदिनो यां सिद्धिं स्पृहयंति वांछंति राजसूये भवद्भिश्चासुरप्रवेशात्कृष्णं द्विषतोपि चैद्यस्य कृष्णप्रवेशलक्षणा सिद्धिर्दृष्टा अपिना निंदितात् द्वेषात् भक्त्यैकलभ्यात्तत्प्रवेशलक्षणा सिद्धिः कथं संभवतीति चोद्यं नन्वित्यनेन परिहृतम्। तथाहि 'प्रश्नावधारणैतिह्यसमी-हानुमते नन्वि'ति वचनात् यथा प्रमाणे नानुमतं तथांगीकर्त्तव्यं प्रमाणं तु असुरा अपि ये विष्णुं शंखचक्रधरं रणे भक्तिपूर्वमवेक्ष ते ज्ञेया भागवता इति विद्विषंति तु यो विष्णुमृषिपुत्रा अपि स्फुटम्। असुरास्तेपि विज्ञेया गच्छन्ति च सदा तमः इति अतएव सम्य-ग्योगेनेत्युक्तं सर्वथा भक्तितो मुक्तिर्द्वेषात्तम उदीरितमित्यादेः ततः किं तत्राह क इति। यस्मात् जीवद्वयसमायोगेन जातान् जयादीन्

भक्त्या दुष्टावेशाद्विमोच्य दुष्टांस्तमसि प्रापय्य प्रवर्त्तते तस्मात्कृपालोस्तस्य विरहं विस्मरणलक्षणं कः पुमान् सहेत भक्तिमानिति शेषः । जीवद्वयसमायोगाद्धिरण्यकमुखाः पर इत्यादेः एकस्मिन् जीवद्वयसमायोगोस्तीति ज्ञायते ॥ १९॥ ❀ ❀ चैद्यवदन्येपि स्वयोग्यां सिद्धिमापुरित्याह तथैवेति । ये भारतयुद्धे दुर्योधनपक्षपातिनोऽन्ये नरलोकवीराः कर्णादयो नयनाभिरामं नेत्रोत्सवजनकं कृष्णमुखारविन्दं नेत्रैः पिबंतः पार्थास्त्रपूताः पार्थस्य पाशुपताद्यस्त्रेण पूताश्छिन्नशिरस्का मृतास्तेऽपि तथैव चैद्यवदेवास्य कृष्णस्य प्रसादात्तदधीनं स्वयोग्यं पदमापुरित्यन्वयः । स्वपदप्राप्त्यनंतरं मुक्तिं च प्रापुरित्यस्मिन्नर्थे च शब्दः पुं छेदन इति धातुः पूङ् पवन इति धातुपाठे द्वेषं मुक्त्वा भक्त्या शुद्धा इत्यर्थः॥ २० ॥

## श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

अहो तादृशमहिम्नोऽपि तस्य परमसौशील्येन स्वजनसुखदात्रीं लोकवल्लीलेयमीक्ष्यतां यत एवास्माकं तद्वियोगखेदोतिऽशेते इत्याह मामिति द्वयेन ॥ १६ ॥ १७ ॥ ❀ ❀ तत्तच्च माधुर्यं तस्य परमप्रभावत्वेऽपि सर्वेषामप्याकर्षकमित्याह को वेति । माधुर्ये कैमुत्यमङ्ध्रीति । तद्रेणुमपीत्यर्थः । कीदृशस्यापि तत्राह य इति । विटपः पल्लवे षिङ्गे विस्तारे स्तम्बशाखयोरिति विश्वप्रकाशः ॥ १८ ॥ ❀ ❀ कृपाया अत्यमर्यादत्वमाह दृष्टेति ॥ १९॥ ❀ ❀ तथैवेति पार्थास्त्रपूतत्वमत्र तन्मुखारविन्ददर्शनयाथार्थ्यहेतुः । तदेतत्तु स्थापितं यथारहद्भ्रुवोर्भारमित्यादौ ॥ २० ॥

## श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

एवं सर्व एव सिद्धान्तस्तुभ्यं यथात्मबोधमाविष्कृतः, किन्तु यन्मादृशैरपि दुर्ज्ञेयं विद्वद्भ्यः पृष्ट्वाप्यप्राप्ततत्वं तत्र खेद एव मम पूर्वमासीदित्याह अजस्येति । एकस्यैवाजत्वं जन्मवत्त्वञ्च कथं संभवेदिति । किञ्चात्र जन्मवत्त्वस्यानुकरणमात्रत्वेनावास्तवत्वे खेदो नस्यादित्युभयोरेव वास्तवत्वमुद्धवस्य विवक्षितं ज्ञेयम् । तथा वसुदेवगेहे कंसकारागारे यज्जन्म एतन्मां खेदयति पूर्वमखेदयत् । वर्त्तमानसामीप्ये वर्त्तमानवद्वेति लट् । यतो विडम्बनमपकर्ष एव तस्य जन्मलीला हि मातापित्रोर्बन्धूनामन्येषाञ्च भक्तानां परमोत्सवमयी भवितुमर्हति परमस्वतन्त्रेण तेन तथा कथं न कृतेति तथा व्रजे च वासस्तस्य स्वाभाविकः परमसुखमय एव तत्र अरिभयस्य कारणत्वं कथं ख्यापितं इवकारेण यद्यपि कंसाद्व्रजे स्थितो न बिभेति तदपि तथा पुरान्मथुरातः व्यवात्सीत् । अपरिमितबलोऽपि कालयवनादिरिपुभयात् पलायत । 'नह्यस्य कर्हिचिद्राजन् पुमान् वेद विधित्सितमिति श्रीभीष्मेणाप्युक्तं किन्तु रहसि मत्पृष्टेन श्रीभगवतैव प्रबोधितस्य मम संप्रत्येव खेदोऽपगत इति भावः ॥ १६ ॥ ❀ ❀ एवमेवैतच्चरितं स्मरतो मम चेतः कर्म्मभूतं दुनोति स्मेत्यर्थः । यदाहेति मातापितरौ स्वापराधं क्षमापयति स्म हे तात हे अम्ब युवां नोऽस्मान् प्रसीदतं द्वितीयार्थे षष्ठ्याः अत्र कंसादुरुशङ्कितानामित्यस्य वाक्यस्य सत्यत्वे ईश्वरत्वव्यभिचारः मिथ्यात्वे ईश्वरवाक् कथं मिथ्येति पूर्ववत् खेदः । अतिसर्वेश्वरस्याप्येवं लोकरीत्या विनयोऽतिमाधुर्य्यपोषकः कथं मया विस्मर्त्तव्य इति मच्चेतसि तत्तच्चरितं शल्यमिवाभूदित्युद्धवविलापः ॥ १७ ॥ ❀ ❀ ननु तर्ह्यनीश्वर एव किं न स्यात्तत्र तु श्रद्धामात्रमेव तत्राह । त्रिभिः विस्फुरन् भ्रूविटपः स एव कृतान्तस्तेन । विटपः पल्लवे षिङ्गे विस्तारे स्तम्बशाखयोरिति विश्वः ॥ १८ ॥ ❀ ❀ तस्य परमेश्वरत्वानुभावः कैर्वा न साक्षात् कृत इत्याह दृष्टा इति द्विषत इति कृपाया अप्यपारत्वं यां यस्यै ॥ १९ ॥ ❀ ❀ द्वेषवत्सु मोक्षदायिनीं कृपामुक्त्वा तदन्येषु तटस्थेष्वपि प्रेमप्रदायिनीं कृपामाह तथैवेति । नेत्रैः पिबन्त इति त एव धन्या वयमधन्याः तन्माधुर्य्यपानतत्पदप्राप्तिभ्यां वञ्चिता इति विलापध्वनिः ॥ २० ॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

अतएव भगवतो जन्म कर्म चात्यंतमद्भुतमित्याह मां खेदयतीति द्वाभ्याम् । जन्मनो विडंबनमनुकरणं पूर्वदेहत्यागपूर्वकं देहांतरग्रहणाभावात् खेदयत्यतर्क्यत्वान्मोहयति अनंतवीर्यः अरिभयादिव यो व्यवात्सीत्तदपि भगवत्कर्म मां खेदयति ॥ १६ ॥ ❀ ❀ पित्रोर्देवकीवसुदेवयोः नः अस्माकं युवां प्रसीदतमिति यद्भगवतः कर्म एतदपि मम चेतो दुनोति व्यथयति ॥ १७ ॥ ईशीत शक्नुयात् विस्फुरता भ्रूविटपेन भ्रूप्रांतेन कृतान्तेन ॥ १८ ॥ १९ ॥ २० ॥

## श्रीमद्वल्लभाचार्यविरचिता सुबोधिनीव्याख्या

एवमक्षरपुरुषोत्तमत्वं भगवद्देहात्मनोरुपपाद्य लोकप्रतीतिविरोधं भगवद्वाक्यविरोधं च परिहर्तुमाह द्वयेन—मां खेदयत्येतदिति । । भगवान् लोकवञ्चनार्थं प्राकृतदेहत्वं वसुदेवपुत्रत्वादिविडम्बनं यत् करोति; तद्विडम्बनमपि तस्य सर्वथा अयुक्तमिति किं सर्वसमर्थस्य वञ्चनेनेति तथाकरणं मां खेदयतीत्याह—अजस्य जन्मविडम्बनमिति । तत्रापि वसुदेवगेहे वसुदेवस्य भार्यायां देवक्याम् । एतदपेक्षया स्तम्भ इव, जल इव, ब्रह्मणो हृदयादिव आविर्भावविडम्बनं समीचीनमिति मां खेदयति । किञ्च, व्रजे च

वासो मां खेदयति। कुत्र व्यापिवैकुण्ठवासी, लौकिका[1]नामपि वासायोग्ये गोकुले किमित्यवात्सीदिति। किञ्च। अरिभयादिव जरासन्धादिभिर्भीत इव पुरान्मथुरातो व्यवात्सीदिति यत्, पुरात् पलाय्य स्थानान्तरं गतमिति यत्[2]। विवासः परदेशवासः। अयुक्तत्वे हेतुः—अनन्तवीर्य इति। व्रजे चेति चकारो गुरुकुलादिसंग्रहार्थः। अरिभयादिति भयाभावादित्युक्तम्। न हि सर्वात्मनोऽरयः सन्ति, न वा तस्य भयम्। अन्येषां भयनिवर्तकत्वाच्च। स्वयमिति नांशद्वारा॥ १६॥ ❀ ❀ वाक्यविरोधं परिहरति—दुनोति चेत इति। पित्रोः पादावभिवन्द्य कंसवधानन्तरं देवकीवसुदेवपादावभिवन्द्य भगवानेवमाह—हे तात! हे अम्ब! कंसादुरुशङ्कितानां किं करिष्यतीति शङ्कया अतिभीतानामस्माकमुपरि प्रसीदतं प्रसन्नौ भवतमिति। यदेतद्वाक्यं तत्स्मरतो मम चेतः, दुनोति दुःखितं करोति। अनेन सर्वाण्येव भगवद्वाक्यानि 'मानुषीं तनुमास्थितम्।' 'वदन्ति वासुदेवेति वसुदेवसुतं हि माम्।' इत्यादिवाक्यानि लोकव्यामोहार्थमिति व्याख्यातानि। यदा भगवद्वाक्यानामेवैषा गतिः, तदा तैर्व्यामोहितानां वाक्यानां किं वक्तव्यमिति भावः॥ १७॥ ❀ ❀ एवं सर्वविरोधं परिहृत्य, साक्षात्पुरुषोत्तमत्वमुपपाद्य, तस्य गुणकर्माणि निरूपयिष्यन्[4], भक्तिमार्गसिद्धये आदौ भजनीयान् गुणान् निरूपयति—को वेति। भजनीयः स एव स्यात्, यः स्वयमभयः, सकृदपि प्रपन्नं सर्वतो भयान्मोचयति, ऐहिकामुष्मिकीं च ऋद्धिं मोक्षं च प्रयच्छति, भजनसन्देहेऽपि अनुषङ्गादपि यो मुक्तिं प्रयच्छति, स्वयं च निर्दोषपूर्णगुणविग्रहः, अनधिकारिणोऽपि गतिं प्रयच्छति, परार्थं स्वकृतनियममपि विरुद्धं न मन्यते—एवं यः सप्तगुणो भवति, षडङ्गसहितभजनोपयोगिमहागुणवान् स भजनीय इति। सप्तस्वपि गुणेषु हेतुभूतं गुणत्रयमन्यच्चेत्, भवत्यतिसामर्थ्यम्, स्वरूपत एव सर्वोत्कर्षः, परमा दया च; स सर्वेषामुपास्यो भवति। तदाह—सप्तभिः श्लोकैः। प्रत्येकमेकैकेन सप्तगुणाः। द्वाभ्यां त्रिभिस्ततो द्वाभ्यां तैरेव स्थूलगुणा निरूप्यन्ते। तत्र प्रथममतिसामर्थ्यं निरूपयन्नाश्रितसर्वदुःखदूरीकर्तृत्वमाह—को वेति। सर्वे हि प्राणिनः सर्वानेव भजन्ते। तद्गतगुणदोषैरनुरक्ता विरक्ताश्च भवन्ति। एवमत्र निर्द्धारः। भजनीयदोषव्यतिरेकेण सेव्यमानं न त्यजन्ति। लोके हि सर्वेषामेव देवानां मनुष्याणां वा सेवकास्तत्परित्यज्य भगवदीया जायन्ते, न भगवदीयाः कदाचिदप्यन्यस्य। ततस्त्विमं शास्त्रार्थमन्यथा करिष्यामीति भगवन्मार्गे समागत्य तं त्यक्तुमिच्छति कौतुकादपि, सोऽपि तथा कर्तुं न शक्नोति। तदाह—अमुष्याङ्घ्रिसरोजरेणुं सकृदपि विजिघ्रन् को वा विस्मर्तुमीशीतेति। अतः स एव ईशः, यस्त्वीशितव्यान् वशीकरोति। रेणुर्घ्राणमार्गेणान्तर्गतः पूर्वोक्तस्तस्य सङ्घातं भगवदीयमेव करोति। स तदर्थोत्पादितसङ्घातः सर्वतो व्याप्तं तं रेणुं विस्मर्तुं न समर्थो भवेत्। ननु क्लिष्टः सङ्घातमपि विस्मरति, क्लेशनाशकमेवाऽधिमन्यत इति चेत्। तत्राऽऽह—यो विस्फुरदिति। अयं हि कल्पतरुः, यस्य भ्रूः पर्णसहिता काचिच्छाखा। अनन्तशाखस्य सा एका शाखा संहारकर्त्री स्वभावतः। संतुष्टा तु सापि परमैश्वर्यं प्रयच्छति। अतस्तादृशशाखाया विद्यमानत्वात् स्वानिष्टनाशे का शङ्का? यतो भूमेरेव सर्वाधारभूतायाः कृतोऽन्तो येन। विशेषेण स्फुरता। यत्र भारसम्भावनाऽपि तत्र स्वयं गत्वा दूरीकरणस्वभावेन भ्रूविटपेन भारमपि तिरश्चकार। यदर्थं सर्वेषामपि देवादीनां महान् यत्नः। यावत्ते दूरीकर्तुमायान्ति, तावत्स भारः पूर्वमेव तिरोभवति। यथा प्रथमोद्गतैः सूर्यकिरणैरेव सर्वतमोनाशः, सूर्यस्तु तमः पश्यत्यपि न; तथा भगवान् भक्तानामित्यर्थः॥ १८॥ ❀ ❀ इष्टफलं तु भक्तानां न वक्तव्यमेव। यतो द्विषन्नपि भगवन्तमसुरोऽपि लोभाभिभूतः सर्वधर्मप्रतिपक्षो भगवत्संबन्धमात्रेणैव निषिद्धेना[3]पि ज्ञानिनोऽपि दुर्लभं सायुज्यं प्राप्तवान्। अयं चाऽर्थः सर्वजनीनस्तदाह—दृष्टेति। कृष्णं द्विषतोऽपि चैद्यस्य शिशुपालस्य राजसूयसभायां सर्वैरेव राजभिस्तत्र सेवायां क्रियमाणायां या सिद्धिः सायुज्यरूपा, सा भवद्भिरेव दृष्टा। नन्विति संबोधनं संमत्यर्थम्। यां सिद्धिम्। योगिनः स्वभावत उत्तमाः फलपर्यवसायिना सर्वसाधनसहितेनाऽपि योगेन वाञ्छामेव केवलं कुर्वन्ति, न तु भगवत्संबन्धव्यतिरेकेण तां प्राप्नुवन्ति। अतः को वा तत्संबन्धाभावरूपं भगवद्विरहं सहेत? भगवत्संबन्धो हि कोटिकल्पवृक्षादप्यधिकः। स प्राप्तः केन वा त्यक्तुं शक्य इत्यर्थः॥ १९॥ ❀ ❀ एवमिष्टसिद्धिहेतवनिष्टनिवारकभगवद्गुणं निरूप्य, स्वरूपं निरूपय[4]न्, संबन्धव्यतिरेकेणाऽपि केवलस्वरूपसंबन्धेनैव पूर्वोक्तादप्यधिकं फलं प्रयच्छतीत्याह—तथैवेति। ये नरलोके वीराः, अन्ये भगवत्संबन्धरहिताः, भगवन्तं जानन्त्यपि न; तेऽप्याहवे स्वरूपसौन्दर्येणैव व्यामुग्धाः, नेत्रैः नयनाभिरामं लावण्यामृतपूरं कृष्णमुखारविन्दं पश्यन्तो भगवत्सायुज्ये प्रतिबन्धकरूपमशुद्धं देहं निराकृत्य पार्थास्त्रैः पूता बहव एव व्यापिवैकुण्ठं तच्चरणारविन्दं प्रापुः॥ २०॥

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

मामित्यत्र। एवमिति। त्रिभिः स्वरूपमुक्त्वा तस्मिन्नग्निवत् स्थितस्याविर्भावकथनेन। अयुक्तत्वे हेतुमाहुः–किमित्यादि। खेदे हेतुमाहुः–एतदपेक्षयेत्यादि। तथा च यदि जन्मानुकरणमेवावश्यकम्, तदा नृसिंहमत्स्यवराहवत्तत्कर्तव्यम्, तदभावात् खेद इत्यर्थः। लौकिकानामिति। लोक उत्कृष्टानाम्। उभयाभावं व्याकुर्वन्ति–नहीत्यादि॥ १६॥ ❀ ❀ दुनोतीत्यत्र। एषा गतिरिति। स्वरूपविरोधाद्भगवद्वाक्यान्तरविरोधाच्चानादरणीयत्वम्॥ १७॥ ❀ ❀ को वेत्यादिसप्तानां तात्पर्योक्तौ स्वयं

---

१. लोक उत्कृष्टानाम्. प्र. २. यावत् ख.। ३. प्रकारेणेति शेषः प्रकाशः। ४. निरूपयिष्यन्। 'वर्त्तमानसामीप्ये वर्त्तमानवद्वा प्र.।'

निर्दोषपूर्णगुणविग्रह इति पद्यद्वयतात्पर्यबोधकम् । मूलगुण इति । अतिसामर्थ्यादयः । को वेत्यत्र वेत्त्यनादरस्य यो विषयस्तं स्फुटीकुर्वन्ति–यस्त्वित्यादि । ये चाऽन्ये मन्दा मन्दभाग्या आधुनिकास्तथा कुर्वते, तत्र हेतुं व्याकुर्वन्ति–रेणुरित्यादि । तथा च यद्घ्राणद्वारा स रेणुर्नाऽन्तः प्रविष्टः, सोऽनादरविषय इत्यर्थः । परमैश्वर्यं प्रयच्छतीति तद्भ्रूविजृम्भः परमेष्ठिधिष्ण्यम्' इति वाक्यात्तथेत्यर्थः ॥ १८ ॥ ❀ ❀ दृष्टेत्यत्र । निषिद्धेनेति, प्रकारेणेति शेषः ॥ १९ ॥ ❀ ❀ तथैवेत्यत्र । निरूपयन्निति । निरूपयिष्यन् । वर्तमानसामीप्ये वर्तमानवद्वा ॥ २० ॥

### श्रीगिरिधरकृता बालप्रबोधिनी

ननु कुतोऽस्य परावरेशत्वमस्मदादिवत्पारतन्त्र्यप्रतीतेरित्याशङ्क्याह—मामिति द्वाभ्याम् । एतद्विडम्बनं मनुष्यानुकरणं अनीश्वरत्वाशङ्कोत्थापकत्वान्मां दासं खेदयति । तद्विडम्बनमेवाह–अजस्यापि यद्वसुदेवस्य गेहे बन्धनागारे प्राकृतवज्जन्म, न तु नृसिंहहयग्रीववराहमत्स्यादिवदकस्मादेवाविर्भावः । अरेः कंसस्य भयादिव निलीय व्रजे वासश्च । यच्च स्वयमनन्तवीर्यः अमितबलपराक्रमोऽपि कालयवनाद्यरिभयादिव पुरान्मथुरायाः सकाशात् व्यवात्सीत् पलायत[1] । वस्तुतः सर्वात्मनः शत्रुमित्राद्यसम्भवात् भयासम्भवाच्चेति सूचयितुं इवशब्दप्रयोगः ॥ १६ ॥ ❀ ❀ किञ्च कंसवधानन्तरं पित्रोर्देवकीवसुदेवयोः पादावभिवन्द्य नमस्कृत्य तात हे पितः अम्ब हे मातः कंसात् उरु अधिकं शङ्कितानां अतएव अकृतनिष्कृतीनां अकृतशुश्रूषाणां नोऽस्माकं युवां प्रसीदतं शुश्रूषाभावप्रयुक्तापराधं अगणयित्वा प्रसादं कुरुतमिति यदाह तदेतत्-कर्तृ-स्मरतो मम चित्तं-कर्मभूतं दुनोति कम्पयति ॥ १७ ॥ ❀ ❀ एवं चेत्तर्ह्यनीश्वर एवायं किं न स्यादित्याशङ्क्य तस्येश्वरत्वाभिव्यञ्जकान् गुणानेवाह–को वेति सप्तभिः । अमुष्य श्रीकृष्णस्याङ्घ्रिसरोजरेणुं विजिघ्रन् को वा तत्सेवको मादृशः पुमांस्तत्प्रभावं विस्मर्तुमीशीत शक्नुयात् ? । तत्प्रभावमेवाह-य इति । यः कृष्णो विस्फुरन् प्रचलन् भ्रूविटपः भ्रूलता स एव कृतान्तः कालस्तेन भूमेर्भारं तिरश्चकार, भूमिभाररूपमनेकाक्षौहिणीसैन्यं नाशितवानित्यर्थः ॥ १८ ॥ ❀ ❀ ननु निश्चितमेतत् युधिष्ठिरस्य राजसूये यज्ञे कृष्णं द्विषतोऽपि चैद्यस्य शिशुपालस्य सिद्धिस्तत्प्राप्तिरूपा मुक्तिर्भवद्भिर्दृष्टैव । ननु तत्प्राप्तिलक्षणस्य मोक्षस्य कथं दुर्लभत्वमित्याशङ्क्य विशिनष्टि-यामिति । यां सिद्धिं सम्यगनुष्ठितेन भक्तियोगेन योगिनो भक्तियोगनिष्ठाः स्पृहयन्ति केवलं वाञ्छन्ति, तत्कृपां विना न प्राप्नुवन्ति, तस्य द्विषतोऽपि निरतिशयपुरुषार्थरूपमुक्तिं प्रयच्छतो वात्सल्यनिधेः कृष्णस्य विरहं कः सेवकः सहेत ॥ १९ ॥ ❀ ❀ न केवलं द्विषतां भजतां च स्वपदप्रापकः किन्तूदासीनानामपीत्याह—तथैवेति । अन्ये च सर्वथा सम्बन्धरहिता अपि ये नरलोकवीरा आहवे युद्धे नयनाभिरामं नयनानन्दकरं कृष्णमुखारविन्दं नेत्रैः पिबन्तस्तत्सौन्दर्यमनुभवन्तः पार्थस्यार्जुनस्यास्त्रैः पूताः पवित्रिताः सन्तो मृतास्तेऽपि तथैव शिशुपालवदस्य भगवतः पदं स्थानं स्वरूपं चरणं वा आपुः प्रापुः ॥ २० ॥

### हिन्दी अनुवाद

अजन्मा होकर भी वसुदेवजीके यहाँ जन्म लेनेकी लीला करना, सबको अभय देनेवाले होनेपर भी मानो कंसके भयसे व्रजमें जाकर छिप रहना और अनन्त पराक्रमी होनेपर भी कालयवनके सामने मथुरापुरीको छोड़कर भाग जाना—भगवान्‌की ये लीलाएँ याद आ-आकर मुझे बेचैन कर डालती हैं ॥ १६ ॥ ❀ ❀ उन्होंने जो देवकी वसुदेवकी चरण-वन्दना करके कहा था—'पिताजी, माताजी ! कंसका बड़ा भय रहनेके कारण मुझसे आपकी कोई सेवा न बन सकी,' आप मेरे इस अपराधपर ध्यान न देकर मुझपर प्रसन्न हों ।' श्रीकृष्णकी ये बातें जब याद आती हैं, तब आज भी मेरा चित्त अत्यन्त व्यथित हो जाता है ॥ १७ ॥ ❀ ❀ जिन्होंने कालरूप अपने भ्रुकुटिविलाससे ही पृथ्वीका सारा भार उतार दिया था, उन श्रीकृष्णके पाद-पद्मपरागका सेवन करनेवाला ऐसा कौन पुरुष है, जो उसे भूल सके ॥ १८ ॥ ❀ ❀ आप लोगोंने राजसूय यज्ञमें प्रत्यक्ष ही देखा था कि श्रीकृष्णसे द्वेष करनेवाले शिशुपालको वह सिद्धि मिल गयी, जिसकी बड़े-बड़े योगी भली-भाँति योग-साधन करके स्पृहा करते रहते हैं । उनका विरह भला, कौन सह सकता है ॥ १९ ॥ ❀ ❀ शिशुपालके ही समान महाभारत-युद्धमें जिन दूसरे योद्धाओंने अपनी आँखोंसे भगवान् श्रीकृष्णके नयनाभिराम मुख-कमलका मकरन्द पान करते हुए, अर्जुनके बाणोंसे बिंधकर प्राणत्याग किया, वे पवित्र होकर सब-के-सब भगवान्‌के परमधामको प्राप्त हो गये ॥२०॥

**स्वयं त्वसाम्यातिशयस्त्र्यधीशः स्वा[2]राज्यलक्ष्म्याप्तसमस्तकामः ।**
**बलिं हरद्भिश्चिरलोकपालैः किरीटकोट्येडितपादपीठः ॥ २१ ॥**

---

१. क-ख-पुस्तकयोरपलायत् । २. प्रा० पा०—साम्राज्य० ।

तत्तस्य कैङ्कर्यमलं भृतान्नो विग्लापयत्यङ्ग यदुग्रसेनम् ।
तिष्ठन्निषण्णं परमेष्ठिधिष्ण्ये न्यबोधयद्देव निधारयेति ॥ २२ ॥
अहो बकी यं स्तनकालकूटं जिघांसयापाययदप्यसाध्वी ।
लेभे गतिं धात्र्युचितां ततोऽन्यं कं वा दयालुं शरणं व्रजेम ॥ २३ ॥
मन्येऽसुरान् भागवतांस्त्र्यधीशे संरम्भमार्गाभिनिविष्टचित्तान् ।
ये संयुगेऽचक्षत तार्क्ष्यपुत्रमंसे सुनाभायुधमापतन्तम् ॥ २४ ॥
वसुदेवस्य देवक्यां जातो भोजेन्द्रबन्धने ।
चिकीर्षुर्भगवानस्याः शमजेनाभियाचितः ॥ २५ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

तदेवं परमैश्वर्ये सत्यपि यदुग्रसेनानुवर्तिनं तत्पुनरस्मानत्यंतं व्यथतीत्याह । स्वयं तु य एवंभूतस्तस्य तत्कैंकर्यं नोऽस्मान् विग्लापयतीत्युत्तरेणान्वयः । न साम्यातिशयौ यस्य यमपेक्ष्यान्यस्य साम्यमतिशयश्च नास्तीत्यर्थः । तत्र हेतवः त्र्यधीशस्त्रयाणां पुरुषाणां लोकानां गुणानां वा ईशः स्वाराज्यलक्ष्म्या परमानंदस्वरूपसंपत्त्यैव प्राप्तसमस्तभोगः बलिं करमर्हणं वा हरद्भिः समर्पयद्भिश्चिरकालीनैर्लोकपालैः किरीटाग्रेण ईडितं स्तुतं पादपीठं यस्य प्रणमतां किरीटसंघट्टध्वनिरेव स्तुतित्वेनोत्प्रेक्ष्यते ॥ २१ ॥ ❀ ❀ अंग विदुर भृतान् भृत्यान् उग्रसेने यत्किंकरत्वं तदेवाह । परमेष्ठिधिष्ण्ये राज्यासने विषण्णमासीनं स्वयं तिष्ठन् हे देव निर्धार्यावधारयेति न्यबोधयद्विज्ञापितवान् ॥ २२ ॥ ❀ ❀ एवमनुवृत्तिः कृपयैवेति सूचयन्नपकारिष्वपि तस्य कृपालुतां दर्शयन्नाह । अहो आश्चर्यं कृपालुतायाः हंतुमिच्छयाऽपि स्तनयोः संभृतं कालकूटं विषं यमपाययत् । बकी पूतना साध्वी दुष्टाऽपि धात्र्या यशोदाया उचितां गतिं लेभे भक्तवेषमात्रेण यः सद्गतिं दत्तवानित्यर्थः । ततोऽन्यं कं वा भजेम ॥ २३ ॥ ❀ ❀ ननु भागवतानेव भगवाननुगृह्णातीति प्रसिद्धम् । सत्यम् । असुरानप्यहं भागवतानेव मन्ये । यतो भागवता इव तेऽपि भगवद्ध्यानाभिनिवेशेन भगवंतमपरोऽक्षं पश्यंतीत्याह । संरंभः क्रोधावेशस्तेन मार्गेणाभिनिविष्टं चित्तं येषां तान् । अत एव ये संग्रामे तार्क्ष्यः कश्यपस्तस्य पुत्रं गरुडमंसे स्कंधे सुनाभायुधश्चक्रायुधो हरिर्यस्य तम् । अचक्षतापश्यन् तस्मात्तेष्वप्यनुग्रहो युक्त एवेत्यर्थः । वक्ष्यति च । "तस्मात्केनाप्युपायेन मनः कृष्णे निवेशयेत्" इति ॥ २४ ॥ ❀ ❀ इदानीं तस्यांतर्धानप्रकारं वक्तुमादित आरभ्य तच्चरितं संक्षेपतः कथयति । वसुदेवस्य भार्यायां जातो भोजेंद्रः कंसस्तस्य बंधनागारे अस्याः पृथिव्याः शं सुखं स्वयं चिकीर्षुः अजेन ब्रह्मणा च याचितः सन् ॥ २५ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

एवंभूतः साम्याधिक्यरहितस्तस्य कृष्णस्य तत्कैंकर्यमुग्रसेनभृत्यत्वं विग्लापयति माहात्म्यविषयेऽज्ञानलक्षणं ग्लानिमुत्पादयति । इत्यर्थ इति । 'न त्वत्समोस्त्यभ्यधिकः कुतोन्यः' इति गीतोक्तेरिति भावः ॥ २१ ॥ ❀ ❀ तत्रासाम्यातिशयत्वे पुरुषाणां महत्स्रष्टादीनां ब्रह्मादीनां वा देव हे महाराजाधिराज परमेष्ठिधिष्ण्ये महाराजसिंहासने अवधार्य एतत्कृत्यं निश्चिन्विति ॥ २२ ॥ ❀ ❀ संभृतं पूरितम् इत्यर्थ इति । किं पुनर्भक्तानामिति भावः । ततः कृष्णात् कं विषदेभ्योप्यमृतदमन्यमेतादृशासाधारणदयावंतम् । शरणं रक्षितारं 'शरणं गृहरक्षित्रोः' इत्यमरः । 'अम्बिका च कलिंवा च धात्रके स्तनदात्रिके' इति द्वे कृष्णस्य धात्र्यौ स्तस्तदुचितां तद्योग्याम् ॥ २३ ॥ ❀ ❀ अत्राक्षिपति—अत एव अभिनिविष्टचित्तत्वादेव । इत्यर्थ इति भगवति मन आवेशो भगवदनुग्रहे हेतुर्न जात्यादिरिति भावः ॥२४॥ ❀ ❀ उपोद्घातकथामाह इदानीमिति बंधनागारे कारागृहे ॥ २५ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनीव्याख्या

अनुवृत्तिरुग्रसेनानुवर्तित्वं आश्चर्य्यत्वं दयालुतायाः काप्यन्यावतारावतारिषु प्रेमपर्य्यंतहतारिगतिदायकत्वाश्रवणात् तस्यैव प्रकाशांतरेपि व्रजं विना निरंकुशकृपानुदयात् तत्रैव तस्य पूर्णतमत्वमित्यर्थः । गतिं स्तन्यामृतदायिनीषु स्थितिं अहो व्रजस्थशुद्धभावस्य परमवैशिष्ट्यं यस्यामात्रकृत्या सापराधयापि सत्यधातृगणप्रवेश इत्यर्थः ॥ २१ ॥ ❀ ❀ मन्य इति उत्प्रेक्षाव्यञ्जकः शब्दः यद्यपि न तेषु वस्तुतो भावतत्वं तथाप्यंतिमसमये तत्साक्षात्कारतत्पदप्राप्तिलिङ्गेन तत्र भागवत्तत्वमुत्प्रेक्ष्यत इत्यर्थः । तेन चांतिमसमये स्वस्य तद्दर्शनसौभाग्यासंभावनाया निर्वेदेन स्वनिन्दा व्यज्यते ॥ २२ ॥ २३ ॥ ❀ ❀ पित्रा वसुदेवेन बिभ्यता

हेतुभूतेन गत इति कर्त्तरि क्तः तत्र व्रजे ॥ एकादशेतिव्रजे कालेनाल्पेन राजर्षे इत्यारभ्य बाललीलानुक्रमत एव महाराजकुमारत्वेन बाल्ये पौगंडप्रवेशः पौगण्डानवसान एव कैशोरं प्रवेश इति एकादशवर्षमात्रेणैव नव्ययौवनापरपर्य्यायपूर्णकैशोरत्वादेकादशेत्युक्तम् । अतएव स्वमुखेनैव वसुदेवं प्रति बाल्यपौगण्डकैशोराः पुत्राभ्यामभवन् कचिदिति । श्रीभगवतोक्तमिति ज्ञेयम् । गूढार्चिः व्रजवासिनां प्रेमभरेणापि हितैश्वर्य्यैः ॥ २४ ॥ ❀ ❀ व्याहरदिति प्रामादिकः पाठः अक्रीडदिति व्याख्यानात् व्याङ्पूर्वकहरतेर्व्याहार उक्तिर्लपितमित्यमरात् भाषनार्थप्रसंगाच्च ॥ २५ ॥

### श्रीमद्वीरराघवव्याख्या

एवं मर्त्यलीलामनुकुर्वतो भूभारावतरणमुक्तिप्रदत्वादिकमैश्वर्यप्रकाशकमभिहितं पुनरैश्वर्यं प्रकाशयतो मर्त्यलीलानुकृतिमाह स्वयमिति । द्वाभ्यां असाम्यतिशयः समाभ्यधिकरहितः अत एव त्र्यधीशः प्रकृतपुरुषकालानामीशः यद्वा त्रिलोकाधिपतिः सत्वादिगुणेशो वा अतः स्वराज्यलक्ष्म्या स्वराडनन्यायत्तः तस्य भावः स्वराज्यं तेन या लक्ष्मीरैश्वर्यं आदिसंपत्तिस्तया आप्ताः समस्ताः कामा यस्य सः । नित्यं निहितभोग्याभोगोपकरणभोगस्थानसमृद्ध इत्यर्थः । बलिं पूजां हरद्भिः स्वीकुर्वद्भिः चिरलोकपालैश्चिरं लोकपान्पालयद्भिः किरीटानां कोटिभिरीडितः सेवितः पादपीठो यस्य सः ॥ २१ ॥ ❀ ❀ स्वयमेवंभूतोपि भगवान् अङ्ग हे विदुर परमेष्ठिधिष्ण्ये सार्वभौमसिंहासने विनिषण्णमुपविष्टमुग्रसेनं प्रति स्वयं तिष्ठन् हे देव निधारयावधारयेति अवोधयद्विज्ञापितवान् तद्विज्ञापनवचः तस्य भगवतः कैंकर्यं किंकरभावं उपाश्रितानस्मान् अलंभृतान् पाठेप्ययमेवार्थः । अस्मान् विग्लापयति विस्मारयतीत्यर्थः ॥२२॥ ❀ ❀ पुनरैश्वर्यं दयालुतां चाह अहो इत्याश्चर्ये इयं बकी पूतना स्तनकालकूटं स्तनयोः संभृतं कालकूटविषं जिघांसया हंतुमिच्छयाऽपाययदेवमसाध्वी दुष्टापि बकी धात्र्या यशोदायाः उचितां तत्संबंधिनीं गतिं लेभे प्राप्तवती एवमपराधवत्या अपि मुक्तिं यो दत्तवान् ततो भगवतोऽन्यं दयालुं कं पुरुषं शरणं भजेम व्रजेम ॥ २३ ॥ ❀ ❀ ननु नान्यः पंथा विद्यतेऽयनायेति भगवतः भक्तियोगप्राप्यत्वश्रवणात्कथमुदासीनां द्विषतां च मुक्तिं प्रायच्छदित्युच्यत इत्यत आह मन्य । इति अधीशे त्रिलोकेशे भगवति ये संरंभमार्गाभिनिविष्टचित्ताः संरंभःक्रोधावेशः तेन मार्गेण अभिनिविष्टं चित्तं येषां ते ये च संयुगे । युद्धे प्राणांस्त्यक्ष्यंतस्तार्क्ष्यपुत्रस्य गरुत्मतोंऽसे भुजे आपतंत मधितिष्ठंतं सुनाभं च क्रमायुधं यस्य तत्सुनाभायुधं चक्रायुधधरं भगवंतमचक्षतापश्यत तान्सर्वानसुरान् दैवसंपत्त्या जातान् भागवतान् भगवद्भक्तानेव मन्ये तस्मात्केनाप्युपायेन मनः कृष्णे निवशयेदिति वक्ष्यमाणरीत्या भक्तियोगनिष्ठतुल्या एव द्विषदादयोपीति भावः॥२४॥❀ ❀ अथवावतारप्रभृतिदिव्यचेष्टितानि संग्रहेण वर्णयति वसुदेवस्येत्यादिना । भोजेंद्रः कंसस्तस्य बन्धने कारागृहे वसुदेवस्य तद्भार्यायां देवक्यां जातः प्रादुर्भूतः कथंभूतो भगवान्समग्रज्ञानशक्तिबलैश्वर्यादिसंपन्नः अजेन ब्रह्मणाभियाचितः प्रार्थितः अस्या भूमेः कं सुखं चिकीर्षुः कर्त्तुमिच्छुः एवंभूतोऽवतीर्ण इत्यर्थः ॥ २५ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

एवंविधस्य हरेर्भक्तानुकंपामंतरेण नान्यत्प्रयोजनं मत्स्यावतारादिनेत्याशयेनाह स्वयं त्विति । न साम्यातिशयो यस्य स तथोक्तः एकमेवाद्वितीयमिति श्रुतेः स्वाराज्यलक्ष्म्यास्स्वरूपानुभवलक्ष्म्याः स्वे महिम्नीति श्रुतेः बलिं पूजाम् ॥ २१ ॥ ❀ ❀ इदमपि तन्माहात्म्यातिशयसूचकं यस्मादेवंविधज्ञानवतोऽस्मान् विग्लापयति तत्कर्मेति भावेनाह तत्तस्येति तद्वचः कैंकर्यं दासत्वं विग्लापयति माहात्म्यविषयेऽज्ञानलक्षणां ग्लानिमुत्पादयंति तदिति किं तत्राह यदिति । परमेष्ठिधिष्ण्ये सिंहासने निषण्णमुग्रसेनं स्वयमुत्तिष्ठन् यद्वचोन्यबोधयत् विज्ञापयामास हे देव अस्मद्विज्ञापनं निधारय चित्ते कुर्विति ॥ २२ ॥ ❀ ❀ पूर्वमर्थंत उक्तं दयालुत्वमधुना वाक्यतः कथयति अहो इति । बकभक्षणा इति धातोर्भक्षणाशीलत्वात् बकीपूतना अपिना ताटकां गर्हयति धात्रीणां शुभानां योग्यताभेदेनोचितां कंसपूतनिकाद्याश्च बांधवादियुता यतः जीवद्वयसमारोपाद्गतिद्वयजिगीषव इति वचनात् दयालुत्वमुर्वशीं प्रति ॥ २३ ॥ ❀ ❀ असुरयोनित्वप्रयोजकं भागवतत्त्वे किं तु निर्दोषा भक्तिरेवेत्याशयेनाह मन्य इति । संरंभमार्गाभिनिविष्टचित्तानिति यथा कीटः पेशस्कारिणा कुड्यै निरुद्धस्तस्मिन् भृङ्गे प्रथमं द्वेषयुक्तः पश्चादन्नदानात्तं द्वेषं विहाय स्नेहेन तं भृङ्गं स्मरन् तत्स्वरूपतां याति तथा तेप्यसुराः संरंभमार्गेण स्मरंतस्तस्मिन् संरंभं विहाय भक्त्यैव तस्मिन्नभिनिविष्टचित्तः—निरंतरं तन्मनस्का इत्यर्थः । इदं तत्र हेतुगर्भविशेषणं सुनाभायुधं चक्रायुधमचक्षतापश्यन् अतएव असुरा अपि ये विष्णुं शंखचक्रधरं रण इत्युक्तं तार्क्ष्यपुत्रस्य गरुणस्यांसे स्थितम् ॥२४॥ ❀ ❀ नातिचिरेण कृष्णस्य यादवानां च स्वलोकप्रयाणं भविष्यतीति निवेद्य भक्त्यतिशयात्तस्यावतारलीला अनुक्रमिष्यन्नादौ तदवतारमाह वसुदेवस्येत्यादिना । वसुदेवस्य सकाशाद्देवक्यां जातः प्रयोजनमाह भोजेन्द्रेति । भोजेन्द्रेण तयोः कारागृहे बंधने सति तं कंसं हत्वा बंधनादुन्मुच्य तयोः शर्म चिकीर्षुरिति हेतुगर्भनिमित्तांतरं चाह अब्जजेनेति ॥ २५ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः ।

पुनरलौकिकलीलायां परमविनयगुणत्वमाह स्वयन्त्वित्यादि युग्मकेन । अधीशः त्रयाणां महत्स्रष्टॄणां ब्रह्माण्डस्थित-सर्वभूतस्थानामीशः । विष्णोस्तु त्रीणि रूपाणीत्यादि । चिरलोकपालैः । अप्राकृतलोकपालैः । मनुरूपैश्च दशभिर्दिक्पालैः परितो वृतमिति ब्रह्मसंहितातः ॥ २१ ॥ २२ ॥ ❀ ❀ अहो बकीत्यादौ पुनर्लौकिकलीलायां कृपाया अत्यमर्यादत्वम् अन्यत्रावतारादावदर्शनात् । तत्र धात्रीणां किमु गावोनुमातर इत्यनुसारेण तस्मै स्तन्यामृतदायिनीनां कासाञ्चित्तां गतिम् ॥ २३ ॥ ❀ ❀ मन्ये इति यद्यपि तेषु वस्तुतो भागवतत्त्वं नास्ति तथाप्युतप्रेक्षत एवेत्यर्थः । ततश्च निजबहिर्मुखत्वेनैवान्तिमसमये तद्दर्शनं न प्राप्स्यामीति स्वनिन्दार्थमुक्तम् ॥ २४ ॥ २५ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी ।

किञ्च ब्रह्मादिष्वादिपुरुषादिष्वपि तस्य प्रभुत्वं वा क उग्रसेने कैङ्कर्यं वा क्वेति भक्तवश्यत्वमाधुर्यं मया कथं विस्मर्त्तुं शक्यमिति विलपति द्वाभ्याम् । न विद्यते साम्यं किमुतातिशयो यस्य सः । यमपेक्ष्यान्यस्य साम्यमेव नास्ति किमुतातिशय इत्यर्थः । तत्र हेतवः त्रयाणां महत्स्रष्ट्रादिपुरुषाणां तिसृणां चिच्छक्तिजीवशक्तिमायाशक्तीनाञ्चेशः स्वैरंशैर्भक्तैः शक्तिभिर्लीलाभिरैश्वर्यैर्माधुर्यैश्च राजत इति तस्य भावः स्वाराज्यं तदेव लक्ष्मीस्तया हेतुना आप्ताः समस्ताः कामा यं सः चिरकालीनैर्लोकपालैरनन्तकोटि-ब्रह्माण्डेषु सृजद्भिर्ब्रह्मभिः पालयद्भिर्विष्णुभिः संहरद्भिः रुद्रैर्धारयद्भिः शेषैः किरीटाग्रेण ईडितं स्तुतं पादपीठं यस्य सः प्रणमतां किरीटसंघट्टनध्वनिरेव स्तुतित्वेनोत्प्रेक्ष्यते ॥ २१ ॥ ❀ ❀ अङ्ग हे विदुर तान् भृत्यान् उग्रसेने यत् किङ्करत्वं तदेवाह परमेष्ठिधिष्ण्ये महाराजसिंहासने निषण्णमासीनं स्वयं तत्तले तिष्ठन् कस्यापि सहायं कुर्वन् हे देव महाराजाधिराज अस्य त्वदीयमण्डलेश्वरस्य कृत्यं निधारयेति न्यबोधयदवधापयामास ॥ २२ ॥ ❀ ❀ अवतारारम्भत एव परोपकारिष्वपि कृपामाधुर्यं स्मरन् विलपति अहो आश्चर्यं बकी पूतनेति मातृभावस्य कृत्रिमत्वेऽपि तत्रापि जिघांसयापि कालकूटमपि यमपाययत् ततः सकाशात् धात्र्युचितां अम्बिका च किलिम्बा च धात्रिके स्तन्यदातृके इति द्वे कृष्णस्य धात्र्यौ तदुचितां गोलोके गतिं लेभे भक्तवेशमात्रेणापि भक्तोचितां रतिं प्राप्नोतीत्यत्र भगवता द्विषत्यपि पूतना दृष्टान्तीकृता एवं द्विषतामपि मुक्तिर्भक्तिश्च स्यादिति कृष्णावतारस्यासाधारणो धर्म्म उक्तः ॥ २३ ॥ ❀ ❀ मन्य इति विलाप एव नतु सिद्धान्तः असुरान् भागवतान् मन्य इति अन्तिमसमये भगवतसाक्षातकारभगवतपदप्राप्तिभ्यां लिङ्गाभ्यां तेनास्मदादीन् बहिर्मुखात् मन्ये अन्तिमसमये तद्दर्शनाभाव-तत्प्राप्त्यभावाभ्यामिति ध्वनितं संरम्भः क्रोधावेशः । तार्क्ष्यः कश्यपस्तत्पुत्रं गरुडं अचक्षत अपश्यन् । कीदृशं अंसे स्कन्धे सुनाभायुधश्चक्रायुधो यस्य तं आपतन्तं सम्मुखमायान्तम् ॥ २४ ॥ ❀ ❀ विदुरप्रश्नसमाधानार्थं मौशललीला अवश्यं वक्तव्येति तां दुःखमयीं लीलां सुखमय्या लीलया सहितीकृत्यैव विवक्षुराह वसुदेवस्येति । भोजेन्द्रस्य बन्धनागारे । अस्याः पृथिव्या शं सुखं अजेन ब्रह्मणा ॥ २५ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः ॥

अधीशस्त्रिलोकाधिपः स्वाराज्यलक्ष्म्या स्वातंत्र्यसम्पत्त्या ॥ २१ ॥ ❀ ❀ अंग हे विदुर परमेष्ठिधिष्ण्ये महाराजासने निषण्णमासीनं स्वयं तिष्ठन् हे देव निधारय अवधारयेति न्यबोधयत् इति यत् तस्योक्तमहिम्नः कैंकर्यं उग्रसेन-किंकरत्वं भृत्यान् नोऽलं विग्लापयति ॥ २२ ॥ ❀ ❀ बकी पूतना यं श्रीकृष्णम् ॥ २३ ॥ ❀ ❀ अधीशे त्रिगुणनियन्तरि संरंभमार्गेण क्रोधावेशमार्गेण अभिनिविष्टं चित्तं येषां तान् असुरानपि भागवतान् मन्ये ये हि अंसे स्कंधे सुनाभायुधश्चक्रायुधो यस्य तं संयुगे आपतंतं तार्क्ष्यपुत्रं गरुडम् अचक्षत अपश्यन् कंठे काल इतिवत्सप्तम्या अलुक् ॥ २४ ॥ ❀ ❀ अस्या भूमेः शं सुखम् अजेन ब्रह्मणा ॥ २५ ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनीव्याख्या

एतादृशे का फलचिन्ता ? अत्र परमेकमेव बाधकम् , व्यामोहिका भगवल्लीला; [१]तया चेन्न व्यामुग्धः । सा हि भगवतः सर्वोत्तमत्वादिगुणान् भजनीयतां च शास्त्ररहितानां बुद्धौ स्थितामपनयति । तत्र सावधानेन भाव्यमित्याह द्वाभ्याम्—स्वयं त्विति । एषा लीला व्यामोहिका, या स्वयमीश्वरो भूत्वा सर्वोत्तमः सर्वाधमस्य स्तब्धस्य, स्वयं ते तादृशं विधाय कैङ्कर्यं करोतीति । येन ( भ्रान्तानां हृदये ) अयमेतादृश एवेति भ्रान्ता मन्यन्ते । तत्र प्रथमं तस्य सर्वोत्तमत्वमाह—स्वयमिति । तु शब्दो भ्रान्त-

---

१. अनेन तदानीमपि येषाममुक्तिस्तत्रोपपत्तिरुक्ता. प्रकाशः. । २. ईश्वरम. प्र. ।

प्रतीतिव्यावृत्यर्थः । न विद्यते लोके वेदे वा साम्यमतिशयश्च यस्य । यस्मात् स्वरूपतो गुणतश्च प्रसिध्याऽपि त्र्य[1]धीशः । किञ्च । अपेक्षितमपि किमपि नाऽवशिष्यते, यल्लौकिकन्यायेन कैङ्कर्यहेतुर्भवति । तदाह—स्वाराज्यलक्ष्म्या । स्वस्मिन्नेव यद्राज्यम्, सर्वमेव हि जगत् स्वस्मिन्नेव वर्तते; यः स्वस्मिन् राज्यं करोति । स सर्वस्मिन्नेव करोति । तत्र या लक्ष्मीः निरतिशयानन्दरूपा, तयैव प्राप्ताः सर्वे कामा येन । अस्यैवाऽऽनन्दस्य अन्यानि मात्रामुपजीवन्तीति श्रुतेः । किञ्च । लोकेऽपि तस्यैश्वर्यं सिद्धम् । यतो बलिं हरद्भिश्चिरकालीनैर्लोकपालैः किरीटकोटिभिरीडितं स्तुतं पादपीठं यस्य । य[2]था पदार्थकरणपक्षस्तथा किरीटैरपि पीठस्य स्तोत्रम् । स्वयमपकृष्टभावेन नम्राः स्वसंबन्धिनं सर्वोत्कृष्टत्वेन बोधयन्ति । घट्टनोद्गतशब्देनेति केचित् ॥ २१ ॥ ❀ ❀ एतादृशः स्वसिंहासने स्थितः स्वानन्दलक्ष्मीमनुभवन्नेव स्थातुं योग्यः, न तु कैङ्कर्यं कर्तुं योग्यः इत्याह—यत्तस्य कैङ्कर्यमिति । किङ्करस्य भावः कैङ्कर्यम् । तदिति प्रसिद्धम् । यस्येति पूर्वोक्तस्य । ननु करोतु किमपि भगवान्, किं तवाऽनेन विचारेणेत्याशङ्क्याऽऽह—अलं भृतान्न इति । वयमत्यर्थं भगवता भृताः । धृताः पोषिता वा । सेवार्थमेव वयं पोषिताः । यदि सर्गे इव सेवापि भगव[3]तः कर्तव्या स्यात्, तस्मिन्नपि पक्षे वयं मुख्यसेवार्थमुत्पादिताः, अस्मद्द्वारैव कारयतु । तदर्थमस्मानुत्पाद्य पुनः स्वयमेव करणात्तत्कैङ्कर्यमस्मान् ग्लापयति । स्वयं ग्लपयति । अस्मानपि ग्लापयति । ग्लाययतीति पाठे, ग्लयधातुर्ग्लापार्थः । अंऽगेति स्वदुःखख्यापनयोग्यमित्रस्य सम्बोधनम् । उग्रसेनमिति । उग्रा सेना यस्य । कंसपिता, तम् । परमेष्ठ्यधिष्ण्ये ब्रह्मणः स्थाने । अधिष्ण्यं धिष्ण्यमिति पर्यायः । तस्मिन्निषण्णम् । स्वयं तिष्ठन् समागतान् सर्वानेव न्यबोधयत् । हे देव ! अयमागतो नमस्करोति, पश्येति न्यबोधयत् । इदं ह्यतिदीनदौवारिककृत्यम् । यद्यपि सर्वं कृत्यं भगवत्कर्तृकमेव, तथापि रूपान्तरमेव कृत्वा करोति । यदि स्वयमेव कर्तव्यम्, तदा विपरीतं किं न करोतीति चित्तक्लेशः । देवसभायां यत्र ब्रह्मा उपविशति, तद्राजासनमिति परमेष्ठ्यधिष्ण्यमुक्तम् । अनेन ब्राह्मणेष्वपि तस्याऽनभ्युत्थानं निरूपितम् । अप्रतीकार्यश्चाऽयं क्लेशः ॥ २२ ❀ ❀ एवं रूपं मोहनं चोक्त्वा, तस्याभिप्रायापरिज्ञानादज्ञस्य तव क्लेश इत्याशङ्क्य, तदभिप्रायमपि जानामि, तथापि क्लेश इति वक्तुं तस्य दयां निरूपयति । क्लेशस्तु बुद्धिकृतो न भगवत्कृतः । हि भगवान् सर्वानेव भक्तान् सेवकानात्मनोऽप्यधिकत्वेन ज्ञापयति । तत्रान्यासहनमयुक्तम् । उग्रसेनोऽपि न वक्तव्यः, भगवतैव तथा क्रियमाणत्वात् । विपरीतं च करोति, पूर्वश्लोके तथैव कथनात् । तस्मात् प्रमाणबलमतिक्रम्य प्रमेयबलेन तथा करोतीति तस्य प्रमेयबलं निरूपयन् भजनीयत्वं स्थापयति—अहो इति । यथा भगवतः साधनं सर्वाश्चर्यकरम्, फल[4]पूर्णस्य तुच्छफलसाधकम्; तथा तुच्छस्य साधनरहितस्याऽपि पूर्णफलदानमित्यहो आश्चर्यम् । बकस्य भगिनी दैत्यबकरूपा, तद्वृत्त्या सन्तोऽपि न मुक्ता भवन्ति । इयमिति बुद्ध्या भगवत्सङ्गे साऽप्युपस्थिता । स्तनकालकूटमिति । स्तने विद्यमानं कालकूटम्, कालानां कूटं समूहः । सहस्रं हि काला मृत्यवः सन्ति, तेन सर्वे तस्याः एकीभूताः स्तन्ये । अतः कालानां कूटं यत्र, तादृशं स्तन्यमपाययत् । ज्ञान[5]हेतुपक्षेऽपि तस्यां दुष्टत्वमाह—जिघांसयेति हन्तुमिच्छायाः पूर्वमपि तस्या दुष्टत्वमाह—असाध्वीति । अनेन दैत्यधर्मोऽपि तस्यां नास्तीत्युक्तम्, ते हि जितेन्द्रियाः । तथाप्याकृतिक्रिययोर्यशोदातुल्यत्वात् तद्गतं दोषमविचार्यैव क्रियाफलं दत्तवान् । अनेन भगवत्स्वरूपं यथाकथञ्चिदपि संबद्धं साधनान्तरनिरपेक्षं फलं साधयतीत्युक्तम् । भगवांश्च गुणानेव गृह्णाति न दोषान् । अतः परमदयालुरित्याह—कं वा दयालुमिति । अन्यस्तु दयालुर्दैन्यमपेक्षते, नम्रतां वा, दोषाभावं वा । अयं तु किमपि नापेक्षत इति ततोऽन्यं कं वा दयालुं शरणं व्रजेम । शरणपदेन च सेवाभक्त्यादिकमपि निवारितम् । ॥ २३ ॥ ❀ ❀ ननु 'निबन्धायाऽऽसुरी मता' इति आसुर्यां संपदि जाताः कथं मुच्यन्ते ? 'तानहं द्विषतः क्रूरान्' इति भगवतैवाऽन्यथाप्रतिज्ञानात् । तत्राऽऽह—मन्येऽसुरानिति । असुरानहं भागवतानेव मन्ये, 'मामप्राप्यैव' इति वच[6]नात् । ये प्राप्नुवन्ति भगवन्तं दृष्ट्यादिनाऽपि, तेषामधमगत्यर्थमप्राप्त्यभावात् मुक्ता एव भवन्ति । ये तु मामात्मपरदेहेषु प्रद्विषन्तः इति द्वेषसाधना भगवदप्राप्तिसाध्या निरूपिताः, ते जगद्रूपमेव भगवन्तं द्विषन्ति, न तु साक्षात् । ये तु साक्षात् द्विषन्ति ते प्राप्नुवन्त्येव । केनचिदन्तः[7]करणधर्मेण ते भगवत्संबन्धिन इति भागवताः । ये तु सहजा दानवाः 'दानवास्तु तमोलयाः' इति वै[8]ष्णवैर्निरूपिताः, ते वेदेऽपि देवप्रतिपक्षत्वेन निरूपिता न मुच्यन्त इति केचित् । ततश्च मुच्यमानेषु पूतनादिषु न सहजासुरत्वम्, किन्त्वसुरावेशः । स तु भगवत्संबन्धे गच्छतीति तेषां मुक्तिर्युक्तेति । एतद[9]र्थं भेदवादं वैनाशिकीं च प्रक्रियाम्, मोहकवाक्यवत् स्वविरुद्धं भगवद्वाक्यं वेदवाक्यानि च मन्यन्ते, ते बहुवाक्यविरोधाच्चिन्त्याः । भक्त्यर्थं वा तथा वदन्तीति लोकशिक्षार्थं वा । असुराणां भगवत्प्राप्तावुपायमाह—संरम्भमार्गाभिनिविष्टचित्तानिति । क्रोधसंरम्भ एव भगवत्प्रापको मार्गः; तत्राऽभिनिविष्टं चित्तं येषाम् ।

---

१. गुणत्रयेशो लोकत्रयेशश्च. प्र. । २. स्तुतौ वाचः करणत्वेन किरीटकोटौ च तदभावेन स्तुत्यसंभवमाशङ्क्य तत्रोपपत्तिमाहुः—यथेत्यादि । सकृदुच्चारितैः पदैः पदार्थे बोधिते संस्कारोपनीतपदार्थानां वाक्यार्थबोधकरणत्वं शब्दधर्मरूपमशब्देषु पदार्थेषु भाट्टैः स्वीक्रियते तथेत्यर्थः. प्र. । ३. भगवत्कृतिसाध्या. प्र. । ४. फलेन निरवध्यानन्देन पूर्णस्य. प्रकाशः. । ५. भगवानविनाशी, तत्रैतद्दोषस्य संबन्धी न भविष्यतीति ज्ञानस्य हेतुत्वपक्षे. प्र. । ६. अस्मिन् वाक्ये भगवदप्राप्तिरभावात्. प्र. । ७. बुद्धिवृत्तिविशेषेण. प्र. । ८. तन्त्रैः प्रकाशः. । ९. द्विविधाना मुक्त्यमुक्तिव्यवस्थायाम्. प्र. ।

क्रोधमार्गेण तेषां चित्तं भगवति प्रविशतीत्यर्थः। ज्ञानेच्छाप्रयत्नानामिव भगवद्विषयत्वेन क्रोधस्यापि भगवन्मार्गत्वम्। भगवतः परमदयालुत्वसिद्ध्यर्थं क्रोधस्याऽपि मुक्तिहेतुत्वं निरूप्यते, अन्यथा दयालुत्वं न स्यात्। तस्माद्वैष्णववैरेकमङ्गीकर्त्तव्यम्, दैत्यानां मुक्त्यभावो वा, भगवतो दया वा। तत्राऽपि बलिष्ठा दयेत्याह—ये संयुगेऽचक्षतेति। ते हि युद्धे मर्तुं समायान्ति। तेषु चेद्भगवतो दया न भवेत्, तदा परोक्षे स्थितोऽन्येन वा मारयेत्, न तु स्वयं प्रत्यक्षो भवेत्। ननु तथा सति भक्तिमार्गविरोध इति। चेत्तत्राऽऽह—तार्क्ष्यपुत्रमिति। अंसे सुनाभं चक्रमायुधं यस्य तादृशं गरुडं पश्यन्ति। अंसे सुनाभायुधमित्यलुक्समासः। एतावान् भेदो भक्तदैत्ययोः, भक्ताः सर्वरूपं सर्वदा भगवन्तं पश्यन्ति, गरुडाधिरूढं च, अन्यैः सह संयुगे च, दैत्यास्तु संयुग एव गरुडमेव पश्यन्ति। परं भगवदारूढम्, भगवानारूढो यमिति। अयमर्थः। कालात्मको गरुडः, तदुपरि च भगवान्, अतः कालं प्राप्य भगवन्तं प्राप्नुवन्ति, न तु जीवन्त इति विशेष इति॥ २४॥ ❀ ❀ एवं भगवतः स्वरूपगुणानुक्त्वा, विदुरस्य तद्विषयकमज्ञानं दूरीकृत्य, दृष्टकथायामुत्तरं वदन् पञ्चाऽपि मात्रा निरूपयति दशभिः श्लोकैः—वसुदेवस्य देवक्यामित्यादिभिः। गन्धो भगवतः स्थानं रसः क्रीडाऽपि बालकैः। रूपं त्रिभङ्गि ललितं सर्वदोषनिवारकम्। १। मृ[1]त्योरमार्गतो रक्षा तस्य स्पर्शोऽभिधीयते लो[2]कवेदविरोधेन मनोवागनुसारतः। २। प्रपन्ने भगवल्लीला दुःखाभावसुखात्मिका। स शब्दो नाऽन्य इत्येषमात्रा रूपोऽधिकारकृत्। ३। वसुदेवस्य भार्यायां देवक्याम्। भोजेन्द्रस्य कंसस्य बन्धनं यस्मिन्, तादृशे गृहे। वसुदेवस्य देवकीनिमित्तं भोजेन्द्रबन्धने जाते वा। ता[3]त्पर्यस्य निरूपितत्वाद्यथा लोकसिद्धां कथां निरूपयति, [4]सर्वभावविकाराणां तुल्यत्वाय। अस्याः पृथिव्याः शं कल्याणं चिकीर्षुः पृथिवीसुखार्थं भगवदवतार इति प्रयोजनम्। ब्रह्मप्रार्थनाऽपि भक्तोद्धारार्था। अपिशब्देनाऽन्येषामपि प्रार्थना सर्वोद्धारार्था॥ २५॥

## श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

स्वयं त्वित्यत्र। तया चेन्न व्यामुग्ध इत्यनेन तदानीमपि येषाममुक्तिस्तत्रोपपत्तिरुक्ता। तादृशमिति। ईश्वरम्। त्र्यधीश इति। गुणत्रयेशो लोकत्रयेशश्च। स्तुतौ वाचः करणत्वेन किरीटकोटौ च तद्भावेन स्तुत्यसंभवमाशङ्क्य तत्रोपपत्तिमाहुः—यथेत्यादि। सकृदुच्चारितैः पदैः पदार्थे बोधिते संस्कारोपनीतपदार्थानां वाक्यार्थबोधकरणत्वं शब्दधर्मरूपमशब्देषु पदार्थेषु भाट्टैः स्वीक्रियते तथेत्यर्थः॥ २१॥ ❀ ❀ तत्तस्येत्यत्र। भगवतः कर्तव्येति। भगवत्कृतिसाध्या। अयमिति। उपविष्टस्याऽग्रे भगवत्तिष्ठत्वदर्शनादिरूपः। नन्वभिप्राये ज्ञाते कथं क्लेशसत्तेत्यत आहुः—क्लेश इत्यादि। [5]भगवत्कृतत्वाभावं व्युत्पादयितुं तदाशयमाहुः—स हीत्यादि॥ २२॥ ❀ ❀ अहो इत्यत्र। फलपूर्णस्येत्यादि। फलेन निरवध्यानन्देन पूर्णस्य स्वस्य तुच्छफलत्वसाधकमित्यर्थः। ज्ञानहेतुपक्ष इति। भगवाननविनाशी, तत्रैतद्दोषसम्बन्धो न भविष्यतीति ज्ञानस्य हेतुत्वपक्षे॥ २३॥ ❀ ❀ मन्येऽसुरानित्यत्र। इति वचनादिति। अस्मिन् वाक्ये भगवतप्राप्त्यधमगत्योर्हेतुमद्भाववचनात्। अप्राप्त्यभावादिति। तद्धेतुभूताया भगवदप्राप्तेरभावात्। तर्हि येषां न मुक्त्यधिकारस्ते क्व इत्यत आहुः—ये तु मामित्यादि। अन्तःकरणधर्मेणेति। बुद्धिवृत्तिविशेषेण। अत्र मतान्तरमाहुः—ये त्वित्यादिमन्यन्त इत्यन्तं वैष्णववैरिति। तन्त्रैः। तत इति। उक्तवाक्येन तेषां तमोलयनिश्चयात्। एतदर्थामिति। द्विविधानां मुक्तयमुक्तिव्यवस्थार्थम्। जीवः परमार्थतो ब्रह्मभिन्न इति वादं नैयायिकवदागन्तुकसत्तावादेन दृष्टसृष्टिमुपगम्य प्रातिभासिकसत्तावादेन वा विनाशसम्बन्धिनीं प्रपञ्चक्रियां च मन्यन्ते। स्वमतविरुद्धं भगवद्वाक्यम्, तादृशानि वेदवाक्यानि च मोहकवाक्यवन्मत्वा प्रतिपादकानि मन्यन्त इत्यर्थः। एवं तन्मतमनूद्य तत्र दूषणमाहुः—ते बहित्यादि। वास्तवभेदवैनाशिकप्रक्रिययोरङ्गीकारे 'यथाग्नेः क्षुद्रा विस्फुलिङ्गाः' इत्युक्तं सर्वलोकप्राणदेवात्मनां ब्रह्मणः सकाशाद्विभागेन व्युच्चरणबोधकं श्रुतिवाक्यं 'एकोऽहं बहु स्यां प्रजायेय' इत्यागन्तुकभेदसृष्टिबोधकानि श्रुतिवाक्यानि; 'ममैवांशः' 'अहं सर्वस्य प्रभवः' 'त्वय्यग्र आसीत्' 'विश्वं वै ब्रह्म तन्मात्रम्' चतुःश्लोकीप्रभृतिवाक्यानि जीवद्वयप्रवेशाङ्गीकारे जयविजयशापबोधकवाक्यानि च विरुध्येरन्। उक्तवाक्यानां मोहकवाक्यतुल्यत्वाङ्गीकारे 'यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते। अथ तस्य भयं भवति' तत्त्वेव भयं विदुषोऽमन्वानस्य' इति 'मां विधत्तेऽभिधत्ते माम्' इत्यादीनि विरुद्ध्येरन्, अतश्चिन्त्या इत्यर्थः। तेषां वैष्णवत्वेन तेषु पक्षपातादाशयान्तरमाहुः—भक्त्यर्थं वेति। भक्तिस्तु पूर्वोक्ते सैद्धान्तिकारेऽपि सिद्ध्यतीति विरोधापरिहारात् पक्षान्तरमाहुः—लोकशिक्षार्थमिति। तथा च भेदादौ तात्पर्याभावान्न विरोध इत्यर्थः॥ २४॥ ❀ ❀ वसुदेवेत्यत्र। कारिकासु। पूर्वमुद्धवावस्थानिरूपणे मात्रासंस्कारो भक्तयुद्रेकेणान्तर्भगवत्साक्षात्कारे सामान्यत उक्तः, तथापि साक्षात्कारोत्तरं केन प्रकारेण भवतीति नोक्तम्, अतो व्यापारविशेषबोधनायायं ग्रन्थ इत्याशयेनाहुः—गन्ध इत्यादि। अत्र मृत्योरिति पञ्चमी। लोकविरोधेन भगवन्मनोनुसारतः प्रपत्तिरन्नकूटकरणे, वेदविरोधेन भगवद्वागनुसारतः प्रपत्तिर्वेणुस्वनश्रवणादागमने बोध्या। दुःखाभावपदेनानुद्भूतः परमानन्दो बोध्यः। दुःखस्यानन्दाभावरूपतायाः सर्वनिर्णये व्युत्पादितत्वेन तदभावस्यानन्दात्मकत्वादिति। एतेनाधुनापि कृपावलोकितानां हृद्ये तद्भानेनेतरेव

---

१. पञ्चमी प्र.। २. लोकविरोधेन भगवन्मनोऽनुसारतः प्रपत्तिरन्नकूटकरणे, वेदविरोधेन भगवद्वागनुसारतः प्रपत्तिर्वेणुस्वनश्रवणादागमने बोध्या. प्र.। ३. सर्वमुक्तयभावाय लोकवञ्चनरूपस्य. प्र.। ४. भगवति प्रतीयमानानां तेषां वचनका एवत्वाय. प्र.। ५. 'अहो'इत्यस्याभासे।

मात्रासंस्कार इति बोधितम्, गन्ध एतेषां करणत्वं स्मरणादेस्तु व्यापारतेति बोध्यम्। विवृतौ। तात्पर्यस्येति। सर्वेमुक्तत्वभावाय लोकवचनरूपस्य। सर्वेत्यादि। भगवति प्रतीयमानानां तेषां वचनकरणत्वाय ॥ २५ ॥

### श्रीगिरिधरकृता बालप्रबोधिनी

एवम्भूतस्य परमेश्वरस्योग्रसेनकैङ्कर्यमनुस्मरन्नाह—स्वयमिति द्वयेन। असाम्यातिशयः गुणैश्वर्यादिभिः कृत्वा स्वसाम्याधिकरहितः। तत्र हेतुमाह—त्र्यधीश इति। त्रयाणां लोकानां त्रयाणां सत्त्वरजस्तमसां गुणानां वा ब्रह्मविष्णुरुद्राणां वा अधीशः, नियन्तेत्यर्थः। अतएव स्वाराज्यलक्ष्म्या निरतिशयनिजानन्दरूपेण आप्ताः समस्ताः कामा भोगा यस्य सः "अस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति" इति श्रुतेः। न केवलं शास्त्रदृष्ट्या तस्याप्तकामत्वं किन्तु लोकव्यवहारतोऽपीत्याह—बलिमिति। बलिं करं अर्हणं वा हरद्भिः समर्पयद्भिश्चिरकालीनैर्लोकपालैर्ब्रह्मेन्द्रादिभिः किरीटानां कोटिभिः अग्रभागैः ईडितः स्तुतः पादपीठो यस्य सः। प्रणमतां किरीटसङ्घट्टनध्वनिरेव स्तुतित्वेनोत्प्रेक्ष्यते ॥ २१ ॥ ❀ ❀ यः स्वयमेवम्भूतस्तस्य तत्कैङ्कर्यं नोऽस्मानलं विग्लापयति विशेषतो ग्लानिं प्रापयतीति द्वयोरन्वयः। तत्र हेतुमाह—भृतानिति, भृतान् सेवकानित्यर्थः। स्वाम्यापकर्षेण सेवकानां ग्लानिर्भवत्येवेति भावः। तवाप्येतत्सम्मतमिति सूचयन् सम्बोधयति—अङ्गेति। किं तत्कैङ्कर्यमित्यपेक्षायामाह—यदीति। परमेष्ठिधिष्ण्ये राज्यसिंहासने निषण्णमुपविष्टमुग्रसेनं स्वयं तदग्रे तिष्ठन् हे देव निधारय तस्माद्देशादयमागत एवं वदति तदवधारयेति यन्न्यबोधयद्विज्ञापितवांस्तदित्यन्वयः ॥ २२ ॥ ❀ ❀ तर्हि किमित्येवं कृतवानित्यपेक्षायां केवलं दययैवेति सूचयन् भगवतो दयालुताया आश्चर्यमाह—अहो इति। इयं बकी पूतना जिघांसया हन्तुमिच्छया स्तनकालकूटं स्तनयोः सम्भृ[2]तं कालकूटाख्यं विषमपाययत्, अतएवासाध्वी दुष्टा नरकपातनयोग्याऽपि वेषेण स्तनदानक्रियया च तुल्यत्वात् धात्र्या यशोदाया उचितां तद्धामप्राप्तिरूपां गतिं लेभे प्राप्तवती। एवमपराधवत्या अपि यो मुक्तिं दत्तवांस्ततोऽन्यः को वा दयालुरस्ति यं वयं भक्ताः शरणं व्रजेम? ॥ २३ ॥ ❀ ❀ ननु भक्तानां मुक्तिस्तु शास्त्रप्रसिद्धा तद्विरुद्धा असुराणां मुक्तिः कथं सङ्गच्छते इत्याशङ्क्याह—मन्ये इति। ये संयुगे युद्धे प्राणान् त्यक्ष्यन्तः अंसे सुनाभायुधश्चक्रायुधो भगवान् यस्य तथाभूतं आपतन्तमागच्छन्तं तार्क्ष्यपुत्रं गरुडमचक्षत अपश्यन् तानसुरानप्यहं भागवतानेव मन्ये इत्यन्वयः। नन्वसुराणां कथं भागवतत्त्वमित्यपेक्षायां 'तस्मात्केनाप्युपायेन मनः कृष्णे निवेशयेत्' इति वक्ष्यमाणरीत्या भगवदाविष्टचित्तत्त्वेन भक्ततुल्यत्वादित्याह—त्र्यधीश इति। त्रिलोकेशे संरम्भः क्रोधावेशस्तेन मार्गेण अभिनिविष्टं चित्तं येषां तानित्यर्थः। न च तर्हि 'तानहं द्विषतः क्रूरान् संसारेषु नराधमान्॥ क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु॥ आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि॥ मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम्' इति कथमासुरसम्पद्वतां भगवता संसारे आसुरीषु योनिषु पातः स्वप्राप्त्यभावेन मोक्षाभावश्चोक्त इति शङ्कनीयम्, तत्र विषयाविष्टचित्तानामेव मोक्षाभाव उक्तः, अत्र तु भगवदाविष्टचित्तानामेव मोक्ष इति न विरोधः ॥ २४ ॥ ❀ ❀ अथावतारप्रभृतिदिव्यचेष्टितानि सङ्ग्रहेण वर्णयति—वसुदेवस्येत्यादिना। भोजेन्द्रस्य कंसस्य बन्धने बन्धनागारे, यद्वा भोजेन्द्रेण बन्धने कृते सति वसुदेवस्य भार्यायां देवक्यां भगवान् समग्रज्ञानशक्तिबलैश्वर्यादिसम्पन्न एव जातः प्रादुर्भूतः। किमर्थं जात इत्यपेक्षायामाह—अस्याः भूमेः शं भारावतारणेन सुखं चिकीर्षुः कर्तुमिच्छुरिति। तथेच्छायां हेतुमाह—अजेनेति, तदर्थं अजेन ब्रह्मणाऽभियाचितः सम्प्रार्थितः ॥ २५ ॥

### हिन्दी अनुवाद

स्वयं भगवान् श्रीकृष्ण तीनों लोकोंके अधीश्वर हैं। उनके समान भी कोई नहीं है, उनसे बढ़कर तो कौन होगा। वे अपने स्वतःसिद्ध ऐश्वर्यसे ही सर्वदा पूर्णकाम हैं। इन्द्रादि असंख्य लोकपालगण नाना प्रकारकी भेंटें ला-लाकर अपने-अपने मुकुटोंके अग्रभागसे उनके चरण रखनेकी चौकीको प्रणाम किया करते हैं ॥ २१ ॥ ❀ ❀ विदुरजी! वे ही भगवान् श्रीकृष्ण राजसिंहासनपर बैठे हुए उग्रसेनके सामने खड़े होकर निवेदन करते थे, 'देव! हमारी प्रार्थना सुनिये।' उनके इस सेवा-भावकी याद आते ही हम-जैसे सेवकोंका चित्त अत्यन्त व्यथित हो जाता है ॥ २२ ॥ ❀ ❀ पापिनी पूतनाने अपने स्तनोंमें हलाहल विष लगाकर श्रीकृष्णको मार डालनेकी नीयतसे उन्हें दूध पिलाया था; उसको भी भगवान्ने वह परम गति दी, जो धायको मिलनी चाहिये। उन भगवान् श्रीकृष्णके अतिरिक्त और कौन दयालु है, जिनकी शरण ग्रहण करें ॥ २३ ॥ ❀ ❀ मैं असुरोंको भी भगवान्का भक्त समझता हूँ; क्योंकि वैरभावजनित क्रोधके कारण उनका चित्त सदा श्रीकृष्णमें लगा रहता था और उन्हें रणभूमिमें सुदर्शन-चक्रधारी भगवान्को कंधेपर चढ़ाकर झपटते हुए गरुड़जीके दर्शन हुआ करते थे ॥ २४ ॥ ❀ ❀ ब्रह्माजीकी प्रार्थनासे पृथ्वीका भार उतारकर उसे सुखी करनेके लिये कंसके कारागारमें वसुदेव-देवकीके यहाँ भगवान्ने अवतार लिया था ॥ २५ ॥

---

१. 'न्याहरत्' इति कुत्रचित्पाठः। २. सम्भृतं पूरितम्। न तु लिप्तम्।

ततो नन्दव्रजमितः पित्रा कंसाद्विबिभ्यता । एकादश समास्तत्र गूढार्चिः सबलोऽवसत् ॥ २६ ॥
परीतो वत्सपैर्वत्सांश्चारयन् व्याहरद्विभुः । यमुनोपवने कूजद्द्विजसंकुलिताङ्घ्रिपे ॥ २७ ॥
कौमारीं दर्शयंश्चेष्टां प्रेक्षणीयां व्रजौकसाम् । रुदन्निव हसन्मुग्धबालसिंहावलोकनः ॥ २८ ॥
स एव गोधनं लक्ष्म्या निकेतं सितगोवृषम् । चारयन्ननुगान् गोपान् रणद्वेणुररीरमत् ॥ २९ ॥
प्रयुक्तान् भोजराजेन मायिनः कामरूपिणः । लीलयाव्यनुदत्तांस्तान् बालः क्रीडनकानिव ॥ ३० ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

कंसाद्विभ्यता पित्रा हेतुभूतेन नंदव्रजमितो गतः समाः संवत्सरान् गूढार्चिर्गुप्ततेजाः ॥ २६ ॥ ❀ ❀ व्याहरदाक्रीडत् । कूजद्भिर्द्विजैः पक्षिभिः संकुलिता व्याप्ता अंघ्रिपा यस्मिन् ॥ २७ ॥ ❀ ❀ रुदन्निवेतीवशब्दस्य यथायोगं सर्वत्राप्यन्वयः । मुग्धो बालश्च यः सिंहस्तद्वदवलोकनं यस्य सः ॥ २८ ॥ ❀ ❀ स एवाधिकं वयः प्राप्तः सन् गोधनं चारयन् कथंभूतं गोधनं लक्ष्म्याः शोभादिसंपदो निकेतं सिता गावो वृषा यस्मिन्नानावर्णे गोसंघे रणन् शब्दं कुर्वन् वेणुर्यस्य अरीरमद्रमयामास ॥ २९ ॥ ❀ ❀ व्यनुदज्जधान क्रीडनकांस्तृनकांस्तृणादिनिर्मितान् सिंहादीन्यथा ॥ ३० ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

ततो मथुरापुरतः । गूढार्चिरिति । यथा गुप्ततेजा अग्निः क्वचित्क्वचित्प्राप्तं प्राप्तमिंधनं दहति तथा भगवानपि प्राप्तं प्राप्तमसुरं गोपाललीलया गुप्तप्रभावोऽदहदिति एकादश समाः इति बाल्यपौगंडानां तत्रैव समाप्तत्वात् । "बाल्यपौगंडकैशोराः पुत्राभ्यामभवन्क्वचित्" इति वसुदेवदेवकीं प्रति श्रीमुखोक्तेः ॥ २६ ॥ ❀ ❀ कूजद्भिरव्यक्तशब्दं कुर्वद्भिः "द्विजस्त्याद्ब्राह्मणक्षत्रवैश्यदंतांडजेषु ना" इति मेदिनी ॥ २७ ॥ यथायोगमिति । रुदन्निव हसन्निव कौमारीमिव मुग्धसुंदरः 'मुग्धः सुंदरमूढयोः' इति विश्वः । बालानां रोदनं चास्त्रम्' इति न्यायेन विनापि रोदनहेतुमदेयलोभ्यवस्तुप्रार्थनादौ रुदन्निव तत्प्राप्तौ च हसन्निव भीषणदैत्यागमे यथा बालोपि सिंहो घोरसत्त्वान्न बिभेति किं तु स्वपराक्रमदृष्ट्या द्योतयति तथा कृष्णोऽपीति भावः ॥ २८ ॥ ❀ ❀ कौमारलीलादर्शयिता गाव एव धनं गोधनमिति व्यधिकरणकर्मधारयः । यद्वा गवां घनम् समूहो गोधनं "द्रव्ये द्वितीयभावे च धनं स्त्रीयसमूहयोः" । "धनिनि गोधनेपि" इति निरुक्तिः । लक्ष्म्या रमाया निकेतनं गोशकृति लक्ष्मीर्वसतीति महाभारते प्रसिद्धम् 'गोमये वसते लक्ष्मीः' इति मंत्राच्च । गोमयस्य गोदेहस्थत्वेन तदावश्यं लक्ष्मीनिकेतमिति दुग्धघृताद्युत्पादकत्वेनापि संपद्धेतुत्वात्तन्निकेतमिति । वा यच्च तीर्थेनोक्तं सितारज्जुतंतुभिर्नसि प्रोताः ककुद्मंतो यत्रेति तन्न शोभनम् । प्रतिककुद्मिनम् कुत्रापि बद्धत्वादर्शनात् ॥ २९ ॥ ❀ ❀ कामरूपिणः स्वाभिलषितरूपधारिणः तत्र हेतुः मायिनः भोजराजेन कंसेन प्रयुक्तान्प्रेषितान् ॥ ३० ॥

### श्रीराधारमणदासगोस्वामिविरचिता दिपिनीव्याख्या

कौमारीमिति यद्यप्यनंतबाल्यलीलेयं वत्सचारणलीलातः प्राक् वर्णनीया तथापि विरहावेशेन व्यत्यस्य पठिता इव शब्दोत्र बाल्यस्वभावत्वाद्रोदनादेरस्थैर्यं व्यनक्ति ॥ रुदन्निव हसन्निव प्राकृतकौमारीभिर्वेति सर्वत्राप्यन्वयः । मुग्धः सुन्दरः मुग्धस्सुन्दरमूढयोरित्यभिधानात् ॥ २६ ॥ ❀ ❀ यो बाल्ये वत्सानचारयत्स एवाधिकं पौगण्डं वयः प्राप्तः सन्निति ॥ २७ ॥ २८ ॥ ❀ ❀ तदेव विषदुष्टमेव ॥ २९ ॥

### श्रीमद्वीरराघवव्याख्या

कंसाद्विबिभ्यतातिभीतेन पित्रा वसुदेवेन निमित्तभूतेन नंदव्रजं इतः गतः एकादशसमाः संवत्सरान् तत्र नंदव्रजे गूढार्चिरनभिव्यक्तैश्वर्यः सबलः सरामः अवसदुषितवान् ॥ २६ ॥ ❀ ❀ किं कुर्वन्नवसदित्यत आह परीत इति । वत्सपैर्वत्सपालकैः सहवत्सान्परितश्चारयन् कूजद्भिः शब्दं कुर्वद्भिर्ये संकुचिताः व्याप्ता अंघ्रिपा वृक्षा यस्मिन् तस्मिन्यमुनाया नद्या उपवने प्रांतवने स्वयं विभुः सर्वांतर्यामी सन् ॥ २७ ॥ ❀ ❀ कौमारविंध्यवासिनां प्रेक्षणीयां चेष्टां दर्शयन् स्वयं हसन्निव रुदन्निव मुग्धः सुंदरो बालसिंहः तस्येवालोकनं यस्य सः व्यहरदाक्रीडदिति श्लोकद्वयमेकान्वयम् ॥ २८ ॥ २९ ॥ ❀ ❀ प्रयुक्तानिति भोजराजेन कंसेन प्रयुक्तान्प्रेषितान् मायिनः वंचकान्कामरूपिणः स्वेच्छानुरूपवेषधारिणः तांस्तान् शकटधेनुकारिष्टादीन् व्यनुददहनत् बालः क्रीडनकानि वेत्यनायासे दृष्टांतः क्रीडनकान् क्रीडार्थं स्वकल्पितोपकरणानीत्यर्थः ॥ ३० ॥

---

१. प्रा० पा०—व्यचरद् भुवि ।

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

ततो मथुरापुरात् गूढार्चिरप्रकाशितस्वमाहात्म्यः ॥ २६ ॥ ❀ ❀ कूजंतोऽव्यक्तशब्दं कुर्वंतो द्विजाः पक्षिणस्तैः संकुलिता अंघ्रिपा वृक्षा यस्मिन्त्तथोक्तं तस्मिन् ॥ २७ ॥ ❀ ❀ कौमारा इत्यत्र जीवभावश्रेष्टानां वैलक्षण्यप्रदर्शनार्थः । बालसिंहस्यावलोकनमिवावलोकनं यस्य स तथोक्तः ॥ २८ ॥ ❀ ❀ लक्ष्म्या निकेतं मंदिरं सितास्तंतूनां रज्ज्वा नासिकायां स्यूताः प्रोता गोवृषाः ककुद्मंतो यस्मिन् तथोक्तं चारयंस्तृणानीति शेषः ॥ २९ ॥ ❀ ❀ प्रयुक्तान् प्रहितान् मायिनः ॥ मायया वेषांतरधारिणस्तांस्तानितिजातिभेदायोक्तं क्रीडनकान् लीलासाधनानि ॥ ३० ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

एकादशेति । तावतैव पूर्णकैशोरत्वात्तथोक्तं कालेनाल्पेन राजर्षे इत्यादि । कचातिसुकुमाराङ्गी किशोरी नाप्तयौवनाचित्यादिवाल्य-पौगण्ड-कैशोराः पुत्राभ्यामभवन् कचिदित्यादिभ्यः गूढार्चिरिति यथा गूढार्चिः कुत्राप्यग्निः प्राप्तं प्राप्तमिन्धनं दहति । तथा गोपलीलाया गूढप्रभाव एव सन् प्राप्तं प्राप्तमसुरवृन्दं दहन्नित्यर्थः । एकादशपर्य्यन्तं गूढार्चिः ततः परं पञ्चदशपर्यन्तम् । प्रकटार्चिरिति साध्याहारं व्याख्यानं त्वघटमानञ्च एकादशाभ्यन्तरे तत्तत्प्रभावस्य मध्ये मध्ये प्रसृतत्वात् । तावतैव पूर्णकैशोरत्वात्तथोक्तम् ॥ २६—२७ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

पित्रा हेतुना इतो गतः एकादशसमा संवत्सरान् व्याप्यावसत् । तावतैव कालेन बाल्यपौगण्डकैशोरलीलासंपूर्त्तेः गूढार्चिः प्राकृतैः कंसादिभिरलक्षिततत्त्वः माधुर्योद्रेकेण गूढैश्वर्य्ये इति वा ॥ २६ ॥ ❀ ❀ कूजद्भिर्द्विजैः संकुलिता व्याप्ता अङ्घ्रिपा यत्र तस्मिन् ॥ २७ ॥ ❀ ❀ रुदन्निवेति बालानां रोदनञ्चास्त्रमिति यथा बाला विनापि रोदनचिह्नं रोदनं दर्शयन्ति तथैव मातॄणामग्रे अदेयलोभ्यवस्तु प्रार्थनहठादौ रुदन्निव भवति तदैव तत्प्राप्तौ हसन् । किञ्च । भीपणदैत्याद्यागमे मुग्धोऽपि बालोऽपि सिंहो यथा घोरसत्त्वान्न बिभेति किंतु स्वपराक्रममेव दृष्ट्या द्योतयति तथाभूतस्य सिंहस्यैवालोकनं यस्य सः । परमवत्सलान् पित्रादीन् व्याकुलयति ॥ २८ ॥ ❀ ❀ स एव किञ्चिदधिकवया भवन् वत्सचरणं समाप्य लक्ष्म्याः शुक्लनीलहरितपीतधूमलसुवर्णशोभायानिकेतं गोधनं चारयन् सिता गोवृषा यत्र तत् गोपान् रमयामास ॥ २९ ॥ ❀ ❀ व्यनुदत् जघान क्रीडनकान् पत्रादिनिर्मितान् सिंहादीनिव ॥ ३० ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

पित्रा नेत्रा इतो गतः ॥ २६ ॥ ❀ ❀ कूजद्भिर्द्विजैर्मयूरादिभिः संकुलिताः व्याप्ताः अंघ्रिपाः द्रुमा यस्मिन् ॥ २७ ॥ ❀ ❀ मुग्धोऽपटुर्नरदारकः तद्वत्सुरेषु बालो यः सिंहस्तद्वदसुरेषु च अवलोकनं यस्य स व्याहरदिति पूर्वेणान्वयः ॥ २८ ॥ ❀ ❀ अरीरमत् रमयामास ॥ २९ ॥ ❀ ❀ मायिनः वंचकान् व्यनुदत् जघान ॥ ३० ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनीव्याख्या

ततो मथुरायां जननान्तरम् , पित्रा वसुदेवेन कंसाद्विशेषेण बिभ्यता नन्दव्रजमितः प्राप्तः । तत्र चोपसंहृततेजा भूत्वा, एकादश समा एकदशवर्षाणि, बलभद्रसहितः, स एव निजसहाय इति तत्सहितोऽवसत् । [१]एते हि दश प्राणात्मकाः, द्वौ द्वौ च विषयात्मकौ । जनने हेतुत्र[२]यम् ; गोकुलसमागमने हेतुद्व[३]यम् । अजेनाऽपीत्यनुषङ्गात् । [४]इदं च न प्रयोजनमध्ये प्रविशति, भिन्नतया स्वातन्त्र्येण निरूपणात् । इदं चान्त[५]रिक्षस्थानमिव । अत एव रुद्रप्रीत्यर्थमेकादशसमा अवसत् । वायोस्तुल्यरूपतया प्रीत्यर्थं गूढार्चिष्ट्वं[६] सबलत्वं च समा वर्षाः ॥ २६ ॥ ❀ ❀ एवं भिन्न[७]तया स्थितस्य पूर्वोक्तप्रयोजनाभावात् , शिरोभूतवासुदेवरूपेण क्रीडां कृतवानित्याहाऽष्टभिः । 'सप्त वै शीर्षण्या वागष्टमी' इति श्रुतेः । तत्र श्रोत्रे आह—परीत इति द्वाभ्याम्—वक्त्र[८]मेतद्द्वयम् , स्कन्धार्थत्वेन । श्रो[९]त्रमेतद्द्वयम् , प्रकरणार्थत्वेन । वत्सपैर्गोपालैर्बालकैर्वेष्टितो वत्सांश्चारयन्निति । क्रियैव वा[१०]योः प्राणा[११]नां च,

१. समुदायेन दशभिः प्रत्येकं द्वाभ्यां निरूपणस्य तात्पर्यमाहुः—एत इत्यादि । प्रकाशः. २. भ्रादिमुखचिकीर्षा प्रार्थनाद्वयं च. प्र. ३. पितुर्भयं ब्रह्मप्रार्थना च. प्र. ४. प्रार्थितपूरणम्. प्र. ५. अन्तरिक्षं यथा रुद्रदैवतं 'तेन्तरिक्षमजयन्' इति श्रुत्या बोध्यते, तथा व्रजोऽपि रुद्रस्य पशुपतित्वाद्रुद्दैवत इति तथेत्यर्थः. प्र. ६. वायुवदनासंगेन. प्र. ७. स्कन्धार्थो हि सर्वसर्गः, स च बलं विना न संभवति । बलं च प्राणधर्मः, प्राणश्चापोमयः, ताश्च रसप्रधानाः, तद्ग्राहकं मुखम् ; अतोऽत्र युक्तं रसनिरूपणम्. प्र. ८. प्रकरणार्थोऽत्र श्रोतुरधिकारः । श्रोता श्रोत्रप्रधानोऽतस्तथेत्यर्थः प्र. ९. अत्र वत्सचारणस्य वायुक्रियात्वं द्रव्यनयनात्मकत्वेन बोध्यम्. प्र. १०. प्राणक्रियात्वं तु कूजनग्रहणानुकूल्तया. प्र. ।

व्याहरत् विहारं कृतवान्, बालैः सह क्रीडितवानित्यर्थः। बाधाभावायाऽऽह—यमुनोपवन इति। यमुना[१]याः समीपवने। चित्तोद्वेगाभावायाऽऽह—कूजद्भिर्द्विजैः सङ्कुलिता अङ्घ्रिपा यस्मिन्। भगवद्भक्ता वेदकल्पवृक्षेषु स्थिता भक्तिमाश्रित्य भगवन्तं गायन्तीत्युक्तं भवति ॥ २७ ॥ ❀ ❀ वने क्रीडामुक्त्वा सन्ध्यादिषु व्रजे क्रीडामाह—कौमारीं दर्शयंश्चेष्टामिति। कुमारसंबन्धिनी पञ्चवर्षपर्यन्तं जायमाना। पञ्चाऽपि लीलाः पञ्चवर्षैः क्रियमाणा व्रजवासिनां पञ्चविधानाम्। त्रिविधाः पुरुषाः, द्विविधाः स्त्रियः न हिं सात्त्विक्यः स्त्रियः सन्ति। अतः सर्वेषामेव प्रेक्षणीयां चेष्टां प्रदर्शयन् व्याहरदिति संबन्धः। समर्थो हि स सर्वं कर्तुम्। दर्शयन्नित्यनेन स्वयं तथा न कृतवानेव। तत्र [३]प्रथमं रुदन्निव, तामस्यस्तदैव तुष्यन्ति, रुद्रप्रीत्यर्थं च। हसन्निति राजस्यः। मुग्धभावेन तामसाः बालभावेन राजसाः, सिंहावलोकनेन सात्त्विकाः। अत्राऽप्यागतः [४]पूर्वं भक्तान् स्मरतीति रुदन्निव। सहन् मुग्धो यो बालः सिंहस्तद्वदवलोकनं यस्य ॥ २८ ॥ ❀ ❀ पौगण्डलीलामाह—स एवेति। शिष्टेषु षट्सु षड्भिर्लोकैर्विशेषतः तास्ता लीला इहोद्दिष्टाः क्रमो नाऽत्र विवक्षितः ।१। स एव, यः पूर्वमुक्तः। गोधनं गवां समूहम्। लक्ष्म्यानिके[५]तमतिसुन्दरम्, चारणे हेतुः, सिता गावो वृषा यत्रेति। धर्मप्राधान्यं निरूपितम्, अतस्तच्चारणं धर्मकरणमेवेत्युक्तम्। अन्यान् स्वाज्ञता धर्मकर्तॄन् शीघ्रमेव फलसम्बद्धान् कृतवानित्यभिप्रायेणाऽऽह—अनुगान् स्वस्य पश्चाद्भावोपजीविनो गोपालान्, वेणुवादनं कृत्वा, ब्रह्मामृतं पायित्वा, परब्रह्मानन्दे अरीरमत् रमयामास ॥ २९ ॥ ❀ ❀ तत्र बाधकांस्तु लीलयैव दूरीकृतवानित्याह प्रयुक्तानिति। भोजराजेन कंसेन प्रेषितान्, नानारूपधारिणो दैत्यान्, व्यामोहनार्थं समागतान्, लीलयैव क्रीडारूपयैव, विशेषेणाऽनुदत् दूरीकृतवान्। तांस्तानिति प्रसिद्धान्। श्रमाभावायाऽऽह—बालः क्रीडनकानिवेति। वस्त्रपुत्रिकाः, काष्ठादिक्रीडासाधनानि वा। द्वयमेकवर्षकृत्यम् ॥ ३० ॥

## श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

तत इत्यत्र। समुदायेन दशभिः प्रत्येकं द्वाभ्यां निरूपणस्य तात्पर्यमाहुः—एत इत्यादि। प्राणात्मका इति इन्द्रियात्मकाः। विषयात्मकाविति। सृष्ट्युत्तरं मात्राणां भूतगुणतया प्रवेशादिन्द्रियैर्मात्राग्रहणे भूतानामपि विषयत्वात्तथेत्यर्थः। इदं यथा तथा मया प्रस्थानरत्नाकरे व्युत्पादितम्। श्लोकद्वयोक्तं संगृह्णते जनन इत्यादि। हेतुत्रयमिति। भ्वादिसुखचिकीर्षा प्रार्थनाद्वयं च। हेतुद्वयमिति। पितुर्भयं ब्रह्मप्रार्थना च। एवमनुषङ्गे कृते व्रजवासोऽपि ब्रह्मप्रीत्यर्थः इति शङ्का स्यादिति तन्निवृत्त्यर्थमाहुः—इदमित्यादि। प्रार्थितपूरणम्। तर्हि किं प्रयोजनमित्याकाङ्क्षायामाहुः—इदं चान्तरिक्षेत्यादि। अन्तरिक्षं यथा रुद्रदैवतं तेऽन्तरिक्षमजयन्निति श्रुत्या बोध्यते; तथा व्रजोऽपि रुद्रस्य पशुपतित्वाद्रुद्रदैवत इति तथेत्यर्थः। अत्रायमेवाशय इत्यत्र किं गमकमत आहुः—अत एवेत्यादि। तुल्यतां समर्थयन्ति—वायोरित्यादि। वायौ कार्यस्य यथा गूढत्वम्, तथाऽत्रेति वायोर्वासोन्तरिक्षतौल्यसमर्थक इत्यर्थः। सबलत्वमिति। बलस्य सङ्कर्षणत्वेन रुद्राधिदैविकत्वात्तत्प्रीत्यर्थं बलसाहित्यमित्यर्थः। एवं च तावद्वर्षवासः पूतनामारणाद्याः सङ्कर्षणलीलाः बलसाहित्येन कृता गोचारणाद्याः। फलप्रकरणीयषष्ठाध्यायलीलाश्च रुद्रप्रीत्यर्थाः। केवलकृता मारणव्यतिरिक्ताश्च न तदर्था इति फलति। तथा जन्मस्थानभूमिर्व्रजस्थो गन्धश्चेति विषयद्वयं गन्धमात्रासंस्कारकमिति च ॥ २६ ॥ ❀ ❀ परीत इत्यत्र। भिन्नतयेति वायुवदनासङ्गेन। पूर्वोक्तप्रयोजनं भूप्रभृतीनां सुखरूपं बोध्यम्। लीलाकर्तुः शिरोरूपत्वं साधयितुमष्टभिः कथने हेतुमाहुः—सप्तेत्यादि। सप्तगोलकानां वाचश्चेत्यष्टानां तत्र स्थित्या तत्साम्येन वासुदेवस्य तथात्वमित्यर्थः। अत्र वासुदेवस्य शिरोरूपकत्वकथनेन सङ्कर्षणस्य मध्यभागरूपता बोधिता। आगलाद्रुद्रमीशानमिति प्रकारस्य नृसिंहसहस्रनामोक्तत्वेन तस्याऽन्यत्र वक्तुमयुक्तत्वादिति। नन्वेवं सति रसनिरूपणं कथमत्र युज्येतेत्यत आहुः—वक्त्रमित्यादि। स्कन्धार्थो हि भूतादिसर्वसर्गः सर्वगतः,[६] स च बलं विना न भवति, बलं च प्राणधर्मः प्राणश्चापोमयः, ताश्च रसप्रधानाः, तद्ग्राहकं मुखम्, अतोऽत्र युक्तं रसनिरूपणमित्यर्थः। तर्हि कथं श्रोत्ररूपतेत्यत आहुः—श्रोत्रमित्यादि। प्रकरणार्थोऽत्र श्रोतुरधिकारः, श्रोता श्रोत्रप्रधानोऽतस्तथेत्यर्थः। तथा च रूपभेदेनोभयमपि सङ्गतमिति भावः। अत्र वत्सचारणस्य वायुक्रियात्वं द्रव्यनयनात्मकत्वेन बोध्यम्। नेतृत्वं द्रव्यशब्दयोरिति वायोः कर्मलक्षणस्य वक्ष्यमाणत्वात्। प्राणक्रियात्वं तु कूजनग्रहणानुकूलतया। प्राणनामिति बहुवचनं त्वग्रिमक्रियास्वपि तथात्वातिदेशाय। तेन विहारस्यैव भगवदभिप्रेतत्वाद्वत्सचारणस्याप्येतेनैव रूपेण भगवत्क्रियात्वमिति भावः। बालकैः सह क्रीडायाः कथं रसत्वमित्यत आहुः—यमुनायाः समीप इति। तथा च जलस्य रसप्रधानत्वात् सामीप्येन[७] रसत्वमित्यर्थः। श्रोत्रत्वसमर्थनायायुः—भगवदित्यादि। वेदकल्पवृक्षेष्विति। अक्षरात्मकस्य व्यापिवैकुण्ठस्य दहर इवात्र सत्त्वात् प्रणवबीजस्य वेदतरोस्तत्र शक्तिविश्लेषेण नानारूपेषु तेषु। तथा च कूजनग्रहणाच्छ्रोत्रत्वमित्यर्थः ॥ २७ ॥ ❀ ❀ कौमारीमित्यत्र। प्रथममिति। प्रथमवर्षे। पूर्वं भक्तानिति। ततः प्राक्कालीनान् भक्तान्। अस्मिन्नपि श्लोके बाल्ये स्तन्यादिरसग्रहणस्यैव प्राधान्याद्रसनिरूपकत्वम् ॥ २८ ॥ ❀ ❀ स एवेत्यत्र। रूपस्याऽत्र निरूपणाद् अग्रिमे बाधकहरं तेजो बोध्यम्।

---

१. तथा च जलस्य रसप्रधानत्वात् सामीप्येन रसत्वमित्यर्थः. प्र. २. श्रोत्रत्वसमर्थनायाहुः—भगवदित्यादि. प्र. ३. प्रथमवर्षे. प्र. ४. ततः प्राक्कालीनान् भक्तान्. प्र.। ५. निकेतमिति. ख. घ. ङ.। ६. अयं पाठो विशेषः। ७. इतः पूर्वः 'सा' इत्यधिकं पुस्तके।

प्राणपक्षे त्वत्र तद्ग्राहकेऽत्र नेत्रे बोध्ये। अत एवाऽत्र श्रीनिकेतनत्वेन गोधनं विशेषितम्। अग्रिमे च बाधकाः कामरूपित्वेन विशेषिताः। तद्विवेकस्य नेत्रकार्यत्वादिति ॥ २९ ॥

### श्रीगिरिधरकृता बालप्रबोधिनी

ततः प्रादुर्भावानन्तरमेव कंसात् बिबिभ्यता विशेषतो भीतेन पित्रा वसुदेवेन निमित्तभूतेन नन्दस्य व्रजं इतः गतः तत्र व्रजे गूढार्चिः अनभिव्यक्तप्रभावः सन् सबलः बलरामेण सहितः एकादश समाः संवत्सरान् अवसत् उषितवान् ॥ २६ ॥ ❀ ❀ व्रजे वसन् किमकरोदित्यपेक्षायां व्रजलीलामाह—परीत इति। विभुः सर्वेश्वरः वत्सपैर्बालकैः परीतः परिवेष्टितः, व्रजौकसां व्रजवासिनां प्रेक्षणीयां कौमारीं चेष्टां दर्शयन् रुदन्निव हसन्निव मुग्धः सुन्दरो यो बालसिंहस्तस्येव अवलोकनं यस्य सः यमुनाया उपवने प्रान्तवने वत्सांश्चारयन् व्यहरत् अक्रीडदिति द्वयोरन्वयः। क्रीडास्थानस्य रम्यत्वं दर्शयति—कूजदिति। कूजद्भिः नानाविधशब्दान् कुर्वद्भिर्द्विजैः सङ्कुलिताः व्याप्ताः अङ्घ्रिपाः यस्मिंस्तस्मिन्नित्यर्थः। वस्तुतो रोदनादेरसम्भवात् इवशब्दप्रयोगः ॥ २७ ॥ २८ ॥ ❀ ❀ पौगण्डलीलामाह—स एवेति। स एव कृष्णः अधिकं वयः प्राप्तः सन् गोधनं चारयन् अरीरमत् रमयामास। तत्र हेतुमाह—अनुगानिति स्वानुसारिण इत्यर्थः। तत्र प्रकारं सूचयति—रणद्वेणुरिति, रणन् शब्दं कुर्वन् वेणुर्यस्य सः। वेणुवादनेनेति भावः। गोधनशोभातिशयमाह—लक्ष्म्याः शोभादिसम्पदो निकेतमाश्रयमित्यर्थः। तत्र हेतुमाह—सिताः श्वेताः गोवृषाः यस्मिन्नानावर्णे गोसङ्घे तत् ॥ २९ ॥ ❀ ❀ लीलाबाधकांस्तु लीलयैव दूरीकृतवानित्याह—प्रयुक्तानिति। भोजराजेन कंसेन प्रयुक्तान् पूतनादीन् दैत्यान् लीलया अनायासेनैव व्यनुदत् जघान। तत्र दृष्टान्तमाह—बाल इति, क्रीडनकान् क्रीडार्थं मृदादिनिर्मितान् व्याघ्रादीन् यथा बालो निहन्ति तद्वदित्यर्थः। तेषां हननमतिदुष्करमित्याह—कामरूपिण इति, यथेष्टरूपधारिण इत्यर्थः। तत्र हेतुमाह—मायिन इति ॥ ३० ॥

### हिन्दी अनुवाद

उस समय कंसके डरसे पिता वसुदेवजीने उन्हें नन्दबाबाके व्रजमें पहुँचा दिया था। वहाँ वे बलरामजीके साथ ग्यारह वर्षतक इस प्रकार छिपकर रहे कि उनका प्रभाव व्रजके बाहर किसीपर प्रकट नहीं हुआ ॥ २६ ॥ ❀ ❀ यमुनाके उपवनमें, जिसके हरे-भरे वृक्षोंपर कलरव करते हुए पक्षियोंके झुंड-के झुंड रहते हैं, भगवान् श्रीकृष्णने बछड़ोंको चराते हुए ग्वाल-बालोंकी मण्डलीके साथ विहार किया था ॥ २७ ॥ ❀ ❀ वे व्रजवासियोंकी दृष्टि आकृष्ट करनेके लिए अनेकों बाल-लीला उन्हें दिखाते थे। कभी रोने-से लगते, कभी हँसते और कभी सिंह-शावकके समान मुग्ध दृष्टिसे देखते ॥ २८ ॥ ❀ ❀ फिर कुछ बड़े होनेपर वे सफेद बैल और रंग-बिरंगी शोभाकी मूर्ति गौओंको चराते हुए अपने अपने साथी गोपोंको बाँसुरी बजा-बजाकर रिझाने लगे ॥ २९ ॥ ❀ ❀ इसी समय जब कंसने उन्हें मारनेके लिए बहुत-से मायावी और मनमाना रूप धारण करनेवाले राक्षस भेजे, तब उनको खेल-ही-खेलमें भगवान्ने मार डाला—जैसे बालक खिलौनोंको तोड़-फोड़ डालता है ॥ ३० ॥

**विपन्नान् विषपानेन निगृह्य भुजगाधिपम्। उत्थाप्यापाययद्गावस्तत्तोयं प्रकृतिस्थितम् ॥ ३१ ॥**
**अयाजयद्गोसवेन गोपराजं द्विजोत्तमैः। वित्तस्य चोरुभारस्य चिकीर्षन् सद्व्ययं विभुः ॥ ३२ ॥**
**वर्षतीन्द्रे व्रजः कोपाद्भग्नमानेऽतिविह्वलः। गोत्रलीलातपत्रेण त्रातो भद्रानुगृह्णता ॥ ३३ ॥**
**शरच्छशिकरैर्मृष्टं मानयन् रजनीमुखम्। गायन् कलपदं रेमे स्त्रीणां मण्डलमण्डनः ॥ ३४ ॥**

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां तृतीयस्कन्धे विदुरोद्धवसंवादे द्वितीयोऽध्यायः ॥ २ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

विपन्नान्मृतान् गोपान् गाव इति गाश्चोत्थाप्य तदेव तोयं प्रकृतिस्थितं निर्विषम् ॥ ३१ ॥ ❀ ❀ इंद्रपूजाभंगेन कृता गवां पूजैव गोसवस्तेन गोपराजं नंदं वित्तस्य चेति चकारादिंद्रस्य मानभंगं कुर्वन्नुरुभारस्यातिसमृद्धस्य ॥ ३२ ॥ ❀ ❀ कोपाद्वर्षति गोत्रः पर्वत एव लीलातपत्रं तेन हे भद्र ॥ ३३ ॥ ❀ ❀ मृष्टमुज्ज्वलं स्त्रीणां मंडलं मंडयतीति यथा ॥ ३४ ॥

इति तृतीये टीकायां द्वितीयोऽध्यायः ॥ २ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

अपाययत्पाययामास ॥ ३१ ॥ ❀ ❀ सद्व्ययमित्युक्त्या शक्रस्य समृद्धिसाभिमानत्वात्तादृशे दानव्ययस्यासद्व्ययत्वं सूचितमिति । तेन देयं शांताय विदुषे इति स्मृत्यर्थो व्याख्यातः ॥ ३२ ॥ ❀ ❀ गोत्रः शैले "गोत्रं कुलाख्ययोः" इति मेदिनी । लीलातपत्रोक्त्या परिश्रमाभावो ध्वनितस्तद्धृताविति कृष्णलीलाश्रवणचेतस्त्वाज्जन्मांतरकृतसुकृतोसीत्याह—हे भद्र कल्याणरूप ॥ ३३ ॥ ❀ ❀ 'प्रदोषो रजनीमुखम्' इत्यमरः । मानयन्स्तुवन् यद्वाऽहो स्वाधीनपतिकाया अस्या रजनीनायिकायां मुखं नायकस्य शशिनः करैरधुना मृष्टमतोऽहमप्येवं करोमीत्यभिनंदन्नित्यर्थः । कलौ ककारलकारौ पद्येते प्राप्येते यत्र तत्कलपदं कामबीजम् । मण्डलं समूहं मण्डयति भूषयतीति मण्डलमण्डनः । 'मडि भूषायाम्' ॥ ३४ ॥

इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे द्वितीयस्कन्धे द्वितीयोऽध्यायः ॥ २ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनीव्याख्या

गवां पूजा चेयं प्रतिपद्दर्शसंयोगे क्रीडनन्तु गवाम्मतमिति वैदिक्ये वावतारसमये श्रीभगवता प्रकटीकृतेति ज्ञेयम् ॥ ३० ॥ ३१ ॥ ❀ ❀ शरदिति आश्विनपूर्णिमायां रासलीला सूचिता ॥ ३२ ॥

इति श्रीमद्भागवतमहापुराणे तृतीयस्कंधे दीपिकादीपनीटीकायां द्वितीयोऽध्यायः ॥ २ ॥

### श्रीमद्वीरराघवव्याख्या

विपन्नानिति विषतोयेन कालियह्रदजलेन विपन्नानापन्नान्मूर्छितानित्यर्थः । दृष्ट्वेति शेषः । भुजगाधिपं कालियं निगृह्य विपन्नानुत्थाप्य प्रकृतिस्थितं स्वभावस्थितं तोयं जलं गाः अपाययत्पानमकारयन् ॥ ३१ ॥ ❀ ❀ अयाजयदिति । उरुभारस्य बहुभारस्य संभृतस्य वित्तस्य सद्व्ययं समीचीनोपयोगं चिकीर्षन्प्रभुः द्विजोत्तमैः सहितः गोसवेन गोसवाख्ययागेन गोपराजं नंदमयजत् ॥ ३२ ॥ ❀ ❀ वर्षतीति । भग्नमाने विहतपूजे इंद्रे कोपाद्वर्षति सति हे भद्र विदुर अति विह्वलः अत्यापन्नः व्रजः अनुगृह्णता गोत्रं पर्वत एव लीलापत्रं यस्य तेन भगवता त्रातः रक्षितः ॥ ३३ ॥ ❀ ❀ शरदि शरत्कालेयः शशी चंद्रमास्तस्य करैः किरणैर्मृष्टम् उज्ज्वलं रजनीमुखं प्रदोषं मानयन् कृतार्थतां तस्यापादयन्नित्यर्थः । स्त्रीणां गोपीनां मण्डलं मंडयति भूषयतीति मंडलमंडनः कलान्यव्यक्तमधुराणि पदान्यक्षराणि यस्मिन्कर्मणि तथा गायन् रेमेऽरमत् ॥ ३४ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कंधे वीरराघवाचार्यकृतटीकायां द्वितीयोऽध्यायः ॥ २ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

विपन्नान्मृतप्रायान् यमुनाया उत्थाप्य गावो गास्तस्या यमुनायास्तोयं प्रकृतिस्थितं विषमिश्रणात् प्राग्यथा शुद्धं तथा स्थितम् ॥ ३१ ॥ ❀ ❀ गोसवेन गोयज्ञेन उरुभारस्य बहुसंख्याविशेषविशिष्टस्य सत्प्रशस्तो व्ययस्त्यागविशेषस्तम् ॥ ३२ ॥ ❀ ❀ भग्नमाने नष्टाभिमाने अतएवातिविह्वले कर्तव्यमूढे गोत्रलीलातपत्रेण पर्वताख्यक्रीडार्थवेतच्छत्रेण भो भद्र कल्याणात्मन् ॥ ३३ ॥ ❀ ❀ शरदृतावुदितः शशी शरच्छशी तस्य करैर्मृष्टमलं कृते रजनीमुखं प्रदोषं कलपदं यथा भवति तथा मंडलं मंडयतीति मंडलमंडनः ॥ ३४ ॥

इति श्रीभागवतमहापुराणे तृतीयस्कंधे विजयध्वजटीकायां द्वितीयोऽध्यायः ॥ २ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

कौमारीमिति । अत्यन्तबाल्यत्वाद्वत्सचारणस्य प्राक्तनीयं लीला शोकावेशेन व्यत्यस्य पठिताय एवम्भूतः स परीत इत्यादि योज्यं तत्र रुदन्निव हसन्निव बाल्यस्वभावो दर्शितः ॥ २८—३४ ॥

इति श्रीभागवतमहापुराणे तृतीयस्कंधे श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे द्वितीयोऽध्यायः ॥ २ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

विषोदकपानेन क्रीडनकान् मूर्च्छितान् गोपालान् गाश्चोत्थाप्य प्रकृतिस्थितं निर्विषम् ॥ ३१ ॥ ❀ ❀ गोसवेनेन्द्रमखभङ्गतः प्रवर्त्तितेन गवां पूजनेन चकारादिन्द्रस्य च मानभङ्गं उरुभारस्य अतिसमृद्धस्य ॥ ३२ ॥ कोपाद्वर्षति सति गोत्रः पर्वत एव लीलातपत्रं तेन हे भद्र ॥ ३३ ॥ ❀ ❀ रजनीमुखं प्रदोषं पक्षे शरच्छशिनो नायकस्य करतलघर्षणैर्मृष्टं प्रस्वेदा-

द्यपसारणेनोज्ज्वलीकृतं रजन्या नायिकायाः स्वाधीनभर्तृकाया मुखं मानयन् अभिनन्दयन्नहमप्येवमेव करोमीति स्त्रीणां मण्डलं रासभोगलीलानन्तरं मण्डयति सः ॥ ३४ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्। तृतीये द्वितीयोऽध्यायः सङ्गतः सङ्गतः सताम् ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

प्रकृतिस्थितं निर्विषं गावः गाः ॥ ३१ ॥ ❀ ❀ सद्व्ययं सत्कर्मणि उपयोग्यं गोसवेन गोपूजनयागेन गोपराजं श्रीनन्दम् ॥ ३२ ॥ ❀ ❀ यागनिराकरणेन भग्नो मानो यस्य तस्मिन् कोपाद् वर्षति सति गोत्रो गिरिरेव लीलातपत्रं तेन भद्र हे विदुर ॥ ३३ ॥ ❀ ❀ स्त्रीणां मण्डनं मन्दयतीति तथा मृष्टमुज्ज्वलं कलपदं मधुरपदं गायन् ॥ ३४ ॥

इति श्रीमद्भागवतमहापुराणे तृतीयस्कन्धे सिद्धान्तप्रदीपटीकायां द्वितीयोऽध्यायः ॥ २ ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनीव्याख्या

सप्तमवर्षकृत्यमाह—विपन्नान्विषपानेनेति। कालियह्रदे विषतोयपानेन विपन्नान् मृतान्, भुजगाधिपं निगृह्य, तन्मारकं दण्डयित्वा, तान् सजीवानुत्थाप्य, तदेव तोयं गाश्चाऽपाययत्। गाव इति गाः। भुजगाधिपः कालियः। तत्तोयं कलियह्रदतोयम्। प्रकृ२तिस्थितं विषरहितम् ॥ ३१ ॥ ❀ ❀ अयाजयदिति। सप्तमान्तलीला। गोसवेनेतीन्द्रयागं भङ्क्त्वा। वैश्य३स्तोमम्। गावः सूयन्तेऽनेनेति गोसवं गोवृद्धिकरम्। वैश्यस्तोमा४त्मकं गोपराजं नन्दम्। द्विजोत्तमैरिति तेषां याजकत्वम्, न स्वस्येति ज्ञापितम्। इन्द्रयागभङ्गेन तथाकरणे हेतुः—वित्तस्येति। कोऽप्यवधिद्रव्यस्य भाररूपेण स्थितस्य सव्ययं चिकीर्षुः। पूर्वस्थितयाऽन्यथाकरणे सामर्थ्यं विभुरिति ॥ ३२ ॥ ❀ ❀ अष्टमवर्षादिकृत्यमाह—वर्षतीन्द्र इति। देवता५प्रधानपक्षो मुख्य इति ख्यापयितुमिन्द्रेण वृष्टिं कारितवान्। पुष्टि६लीलां च स्थापयितुं गोवर्द्धनोद्धरणं च कृतवान्। व्रजविषयककोपाद्धेतोरिन्द्रे मेघद्वारा वर्षति सति, व्रजनाशमाश७ङ्क्य स व्रजो रक्षति। इन्द्रस्य कथमेवं करणमित्याशङ्क्याऽऽह—भग्नो मानो यस्य तस्मिन् सति, पश्चाद्वर्षति सति। गोत्रः पर्वतः स एव लीलातपत्रम्। पृथिवीरक्षका अपि धर्मिष्ठत्वाद्भगवता उद्धृताः७। लीलया आतपत्रमिव लीलातपत्रम्। छत्राकं वा। त्रातो रक्षितः भद्रेति संबोधनमुक्तविश्वासाय, भवानपि तथा रक्षित इति ज्ञापनार्थं वा। अन्यथाऽपि पालयितुं समर्थः, स्वस्य परममनुग्रहं व्रजविषयकं लोके ख्यापयितुं पर्वतोद्धरणं कृतवानित्यभिप्रायेणाह—अनुगृह्णतेति ॥ ३३ ॥ ❀ ❀ वर्षचतुष्टयकृत्यमाह—शरच्छशिकरैर्मृष्टमिति। प्रत्यग्रोदितचन्द्रकिरणैर्मृष्टमुज्ज्वलितं रजनीमुखं मानयन् रेमे। रजनी स्त्री, शशी भर्ता। स हि बहुकालेन समागतो मानिनीं तामन्तस्तापेन क्लिष्टां स्वकरैर्मृजन् मानापनोदनं करोति, न तावता तस्या मानोऽपगच्छति। सा हि देवता निष्कलङ्केन रमणमपेक्षते। स हि भर्ता शशी, शशकलङ्कयुक्तः। अत उभयसमाधानार्थं स्वयमुपायं कृतवान्। रजनीं स्त्रीसहस्ररूपां कृत्वा, चन्द्रं स्वमनोभवं विधाय, तस्य म८नोऽधिष्ठातृदेवतात्वसिद्ध्यर्थं शब्दब्रह्मोद्गिरन्, परमां रतिक्रीडां कृतवान्। शरत्कालीनः शशीति, वर्षाकाले रजनीमुखे वृष्टिर्भवतीति, रुदतीव सा। अत एव तदनन्तरकाले उत्पन्नः स्वकरैर्मार्जनं करोतीति युक्तम्। नह्यन्ये रजनीमुखं मानयति, महतां तस्मिन् काले क्रीडाभावात्। दोषस्तु रसात्मक९ एव न भवति। निर्दोषतया माननं भगवदेकनिष्ठतयैव। स्त्रीणां मण्डलं मण्डनं यस्य, मण्डलस्य वा मण्डनभूतः सुवर्णे नीलमणिवत् कषपाणे वा सुवर्णरेखा ॥ ३४ ॥

इति श्रीभागवतसुबोधिन्यां श्रीलक्ष्मणभट्टात्मजश्रीवल्लभदीक्षितविरचितायां तृतीयस्कन्धे द्वितीयाध्यायविवरणम् ॥ २ ॥

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

विपन्नानित्यत्र। निग्रहस्योत्थापनस्य च त्वचनेत्रस्पर्शे१० जननात्ताभ्यां कृता मृत्योः सकाशाद्रक्षा स्पर्शरूपा अग्रिमे गोप्रसूतेः स्पर्शकार्यत्वात्तज्जनको याग एव मार्गाद्व्यावर्तकः स्पर्शक्रियारूपो बोध्यः ॥ ३१ ॥ ❀ ❀ अयाजयदित्यत्र। वैश्यस्तोममिति। गोसवस्य नामान्तरम्। वैश्यस्तोमात्मकमिति। वैश्यराजत्वात्तत्समूहात्मकम्। प्राणपक्षे तु क्रमस्य लीलायामिवात्राप्यविवक्षितत्वादयाजयदित्यत्र मुखम्। शरच्छशीत्यत्र वाक्चेति पारिशेष्याद्विपन्नान् वर्षतीत्येतयोर्घ्राणं बोध्यम् ॥ ३२ ॥ ❀ ❀ वर्षतीत्यत्र। देवताप्रधानपक्ष इति। विग्रहवतो देवतैव यागे मुख्येति पक्षः। पुष्टिलीलामिति। ऐहिकानुग्रहरूपां लीलाम्। व्रजनाशमाशङ्क्येत्यति-

---

२. प्रकृत्या. ३. गोसवस्य नामान्तरम्. प्रकाशः. ४. वैश्यराजत्वात्तत्समूहात्मकम्. प्र. ५. विग्रहवती देवतैव यागे मुख्येति पक्षः. प्र. ६. ऐहिकानुग्रहरूपां लीलाम्. प्र. ७. विह्वलपदतात्पर्यम्. प्र. । ७. आतपत्रपदतात्पर्यम्, प्र. ५. 'मनः पूर्वोवागुत्तर' इतिश्रुतेरित्यर्थः प्र. ९. 'सतमीयम्' प्र.। १० 'त्वङ्नेत्रस्पर्शे' इति

विह्वलपदतात्पर्यम् । उद्धृता इति आतपत्रपदतात्पर्यम् । रक्षित इति दुष्टचतुष्टयीतो रक्षितः ॥ ३३ ॥ ❀ ❀ शरदित्यत्र । तस्य मन इत्यादि । 'मनःपूर्वो वागुत्तरम्' इति श्रुतेरित्यर्थः । रसात्मक इति सप्तमीयम् । एवमष्टभिरत्र शिरोरूपवासुदेवव्यूहलीलोक्ता । अत्रैतद्बोध्यम् । इयं सर्वापि लीला वासुदेवगृहे प्रकटस्य, स च परः पुरुषः, तत्स्वरूपं च यन्मर्त्यैत्यादिभिरुक्तम्, उत्कृष्ट-सच्चिदानन्दात्मकम् । तथा सत्यक्षरात्मके पुरुषोत्तमदेहे व्यूहविभागः सिद्ध्यति । अत एव द्वादशे 'वासुदेवः सङ्कर्षणः प्रद्युम्नः पुरुषः स्वयम् । अनिरुद्ध इति ब्रह्ममूर्त्तिव्यूहोऽभिधीयते' इत्यत्र मूर्तिपदम् । एवं च मथुरायां चतुर्व्यूहरूपेण प्राकट्यम् । गोकुले तु वासुदेवरूपेण स्तन्यजननं तत्प्रयोजनम् । पुरुषोत्तमस्तु अजन एवेति ताभिरेव ज्ञातम् । 'स त्वक्षरात्परतः परः' इति, 'अतोऽस्मि लोके वेदे च' इति श्रुतिस्मृतिभ्यां ततः पर उत्कृष्ट उक्तः । स तु 'कृषिर्भूवाचकः' इति श्रुत्या सदानन्दः । 'आनन्दमात्रकरपादमुखोदरादिः' इति स्मृत्या 'आनन्दरूपममृतं यद्विभाति' इति श्रुत्या च साकारः । अयमेव रसात्मा स्वप्रतिष्ठ एवेति तस्य लीला अर्थोक्त्यैव; वाङ्नि-वृत्तिश्रुतेरिति तत्कृपावलोकितैरवधेयमिति दिक् ॥ ३४ ॥

इति श्रीगोस्वामिपुरुषोत्तमजीमहाराजकृत-तृतीयस्कन्धसुबोधिनीप्रकाशे द्वितीयाध्यायविवरणम् ॥ २ ॥

## श्रीगिरिधरकृता बालप्रबोधिनी

विषपानेन कालियह्रदगतविषयुक्तजलपानेन विपन्नान् मृतान् बालान् गावो गाश्च अमृतदृष्ट्या उत्थाप्य जीवयित्वा भुजगाधिपं कालियं निगृह्य ततो निस्सार्य तत्तोयं प्रकृतिस्थितं निर्विषीकृतं तान् गोपान् गाश्चापाययदित्यन्वयः ॥ ३१ ॥ ❀ ❀ उरुभारस्य अतिसमृद्धस्य वित्तस्य धनस्य सद्व्ययं समीचीनोपयोगं—चकारादिन्द्रमानभङ्गं च चिकीर्षन् कर्त्तुमिच्छन् द्विजोत्तमैः सहितः गोसवेन गोसवाख्ययागेन गोपराजं नन्दं अयाजयदित्यन्वयः । ननु पुत्रः कथं पितरं याजयितुं समर्थस्तत्राह—प्रभुरिति, सर्वथा सर्वकरणे समर्थ इत्यर्थः ॥ ३२ ॥ ❀ ❀ शुद्धान्तःकरणस्यैव भगवत्प्रभावे विश्वासो भवति तथाभूतश्च त्वमिति सूचयन्सम्बोधयति—भद्रेति । भग्नमाने यागविध्वंसनेन भग्नो मानो यस्य तथाभूते इन्द्रे कोपाद्व्रजनाशाय वर्षति सति अति-विह्वलो व्रजः पूर्णकामतया स्वप्रयोजनाभावेऽप्यनुगृह्णता कृष्णेन गोत्रं गोवर्द्धनपर्वत एव लीलार्थमातपत्रं छत्रं तेन त्रातो रक्षित इत्यन्वयः ॥ ३३ ॥ ❀ ❀ शरदि शरत्काले यः शशी चन्द्रमाः तस्य करैः किरणैः मृष्टमुज्ज्वलं रजनीमुखं प्रदोषं मानयन् अभिनन्दन् स्त्रीणां गोपीनां मण्डलं मण्डयति भूषयतीति तथाभूतः कलानि मधुराणि पदान्यक्षराणि यस्मिंस्तत् यथा भवति तथा गायन् रेमे इत्यन्वयः ॥ ३४ ॥

इति श्रीवल्लभाचार्यवंश्यगोपालसूनुना ॥ श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा ॥ १ ॥
श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये ॥ श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी ॥ २ ॥
रचिता च तृतीयेऽत्र बन्धसर्गनिरूपणे ॥ द्वितीयो विवृतोऽध्यायो व्रजलीलानिरूपकः ॥ ३ ॥

## हिन्दी अनुवाद

कालियनागका दमन करके विष मिला हुआ जल पीनेसे मरे हुए ग्वालबालों और गौओंको जीवितकर उन्हें कालिय-ह्रदका निर्दोष जल पीनेकी सुविधा कर दी ॥ ३१ ॥ ❀ ❀ भगवान् श्रीकृष्णने बढ़े हुए धनका सद्व्यय करानेकी इच्छासे श्रेष्ठ ब्राह्मणोंके द्वारा नन्दबाबासे गोवर्धनपूजारूप गोयज्ञ करवाया ॥ ३२ ॥ ❀ ❀ भद्र! इससे अपना मानभङ्ग होनेके कारण जब इन्द्रने क्रोधित होकर व्रजका विनाश करनेके लिये मूसलधार बरसाना आरम्भ किया, तब भगवान्ने करुणावश खेल-ही खेलमें छत्तेके समान गोवर्धन पर्वतको उठा लिया और अत्यन्त घबराये हुए व्रजवासियोंकी तथा उनके पशुओंकी रक्षा की ॥ ३३ ॥ ❀ ❀ सन्ध्याके समय जब सारे वृन्दावनमें शरद्के चन्द्रमाकी चाँदनी छिटक जाती, तब श्रीकृष्ण उसका सम्मान करते हुए मधुर गान करते और गोपियोंकी मण्डलीकी शोभा बढ़ाते हुए उनके साथ रासविहार करते रहे ॥ ३४ ॥

**दूसरा अध्याय समाप्त**

# अथ तृतीयोऽध्यायः

## उद्धव उवाच

ततः स आगत्य पुरं स्वपित्रोश्चिकीर्षया शं बलदेवसंयुतः ।
निपात्य तुङ्गाद्रिपुयूथनाथं हतं व्यकर्षद् व्यसुमोजसोर्व्याम् ॥ १ ॥
सान्दीपनेः सकृत्प्रोक्तं ब्रह्माधीत्य सविस्तरम् । तस्मै प्रादाद्वरं पुत्रं मृतं पञ्चजनोदरात् ॥ २ ॥
समाहुता भीष्मककन्यया ये श्रियः सवर्णेन बुभूषयैषाम् ।
गान्धर्ववृत्त्या मिषतां स्वभागं जह्रे पदं मूर्ध्नि दधत्[१] सुपर्णः ॥ ३ ॥
ककुद्मतोऽविद्धनसो दमित्वा स्वयंवरे नाग्नजितीमुवाह[२] ।
तद्भग्नमानानपि गृध्यतोऽज्ञाञ्जघ्नेऽक्षतः शस्त्रभृतः स्वशस्त्रैः ॥ ४ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

तृतीये मथुरामेत्य व्रजात्कंसवधादिकम् । यत्कृतं द्वारकायां च कृष्णेन तदवर्णयत् ॥ १ ॥

शमित्यव्ययम् । पित्रोः सुखस्य चिकीर्षयेत्यर्थः । तुंगाद्राजमंचात् रिपुयूथानां नाथं कंसं व्यसोरपि विकर्षणं पित्रोः सुखार्थम् ॥ १ ॥ ❀ ❀ ब्रह्म वेदं सविस्तरं षडंगादिसहितम् । पंचजनोदरविदारणद्वारा पुत्रमानीयेत्यर्थः ॥ २ ॥ ❀ ❀ भीष्मककन्यया रुक्मिण्या ये राजानः समाहूताः । ह्रस्वत्वमार्षम् । समाहृता इति पाठे आकृष्टा इत्यर्थः । केन, साधनेन श्रियो लक्ष्म्याः सवर्णेन समानेन रूपेण यद्यपि तया केवलं श्रीकृष्ण एवाहूतो न सर्वे तथापि तस्या लावण्यं तेषामागमने हेतुरिति तयैवाहूता इत्युच्यन्ते । एषां मिषतां पश्यतां मूर्ध्नि पदं दधत् तया सह गांधर्ववृत्त्या परस्परसमयरूपया बुभूषया भवितुमिच्छया जहार । कथंभूतां स्वभागं लक्ष्म्यंशत्वात्तया स्वात्मनोऽर्पितत्वाच्च सुपर्णः सुपतनः यद्वा सुपर्ण इव स्वभागं सुधामित्यर्थः । यद्वा श्रियो रुक्मिण्याः समानं वर्णद्वयं वाचकं यस्य सः श्रियः सवर्णो रुक्मी तेन समाहूताः शिशुपालादयः । किमर्थं भीष्मककन्यया सह तेषां बुभूषया भूतिर्भवत्वित्येतदर्थम् । तत्र शिशुपालस्याह्वानं वरत्वेन बुभूषया जरासंधादीनां तद्विवाहोत्सवेन शेषं पूर्ववत् ॥ ३ ॥ ❀ ❀ ककुद्मतो वृषभानविद्धनासिकान्विद्धनासिकान्कृत्वति वा तैर्वृषभैस्तद्दमनेन च भग्नो मानो येषां तथापि तान् गृद्ध्यतः कामयमानानत एवाज्ञान् शस्त्रभृतो राज्ञस्तच्छस्त्रैरक्षत एव जघान ॥ ४ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

अत्र व्रजान्मथुरामेत्येत्युक्तेर्व्रजमथुरयोर्ब्राह्मणपरिव्राजकन्यायेन भेदाभेद एव । यद्वा व्रजाद्गोव्रजात् नाममात्रैकदेशन्यायोत्रानुसंधेयः यत्कर्म ॥ १ ॥ ❀ ❀ शमित्यव्ययं सुखवाचकम् । इत्यर्थ इति । अव्ययानां सार्वविभक्तिकत्वेन षष्ठ्यंततात्र व्याख्येयेति भावः । ततो व्रजात् स कृष्णः । पुरं मथुराम् । तुंगादुच्चात् 'पुन्नागागोन्नते तुंगः' इति धरणिः । रिपवस्तृणावर्त्तादयस्तेषां यूथानां स्वामिनं हतमुच्चपातात्प्राप्ताघातं व्यसुं गतप्राणं पित्रोर्मूर्छां संभावयतोर्देवकीवसुदेवयोः देवानां वा प्रीणनार्थं कर्षणम् । यद्वा स्वपित्रोः पुरमागत्य हतं व्यसुं रिपुनाथं प्रति शंचिकीर्षया जीवतानेन राज्ञा ब्रह्मादिप्रार्थ्यस्पर्शव्रजभूरजो न स्पृष्टमतोहमेनं मृतं व्रजभूरजोगंगायां देहप्लावनेन सद्गतिं प्रापयिष्य इत्यभिसंधाय व्यकर्षदित्यर्थः ॥ १ ॥ ❀ ❀ षडंगानि शिक्षादीनि आदिना पदक्रमजटाघनादिग्रह इत्यर्थ इति । ल्यब्लोपे पञ्चमीत्वेन पंचजनोदरं विदार्येति व्याख्येयमिति भावः । तस्मै सांदीपनये मृतमानीयेति शेषः, वरं दक्षिणाम् । "वरो जामातरि देवादवृते श्रेष्ठे त्रिषु क्षमे । दक्षिणायां तथा धेनौ स्त्रियामौषधदेवयोः" इगि ॥ २ ॥ ❀ ❀ इत्यर्थः इति । उपसर्गवशादाकर्षणेपि हरतिरिति भावः । मिषतां कृष्ण इहागत्य कन्यां न हरेदिति हेतोरितस्ततः पश्यतां तया रुक्मिण्या परस्परसमयरूपयाऽन्योन्यकृतसंकेतरूपया लक्ष्म्यंशत्वात् । 'मानुषत्वे च मानुषी' इति पराशरोक्तेः । तया रुक्मिण्याऽर्पितत्वाच्च । 'आत्मार्पितश्च भवतोत्र विभो विधेहि' इति दशमोत्तरार्द्धे वक्ष्यमाणत्वात् । सुपतनः शोभनागमनः सुपर्णपदस्य प्रसिद्धार्थस्यागमनार्ह

---

१. प्रा० पा०—ददत् । २. प्रा० पा०—नाग्नजितीं व्युवाह ।

मत्वाह—यद्वेति। इत्यर्थ इति। आर्षत्वादत्रोपमावाचके वलोप इति भावः। अक्षरेभ्योऽर्थलब्धौ क्लिष्टकल्पनया तत्साधनमयोग्यम्। "अक्के चेन्मधु विंदेत किमर्थं पर्वतं व्रजेत्" इति न्यायमाश्रित्याह यद्वेति। वर्णद्वयं रुक्मीत्यक्षरद्वयं तत्र तेषु राजसु। शेषं गांधर्ववृत्त्येत्याद्यवशिष्टम्॥ ३॥ ❀ ❀ 'ककुद्वृषांके' इत्यमरः। अविद्धनासिकानां दमनासंभवादाह—विद्धनासिकेति। अतो वृषभग्नमानत्वेपि कामयमानत्वात्। यद्वा। शस्त्रैर्भृत आच्छादित इति प्रथमा॥ ४॥

## श्रीराधारमणदासगोस्वामिविरचिता दीपिनीव्याख्या

रासलीलावर्णनवैवश्येनाध्यायसमाप्तिः पश्चात्कथमपि बहिरनुसंधाने उद्धव उवाचेत्युक्तम्। ततः व्रजलीलानंतरं शमित्यत्र षष्ठ्याः स्वीकारादित्यर्थ इत्युक्तम्। अस्फुटंतं व्यसुं मृतं पित्रोः सुखार्थमित्युपलक्षणं देवादीनां मृतिनिश्चयापादनेन सुखातिशयार्थं तत्स्थूलशरीरस्यान्यैर्विश्रांतिघट्टपर्य्यंतं नेतुमशक्यत्वादुत्तरक्रियार्थं निजधामरजसि विलुंठनसौभाग्यदर्शनार्थं चेत्यर्थः॥ १॥ ❀ ❀ तस्मै सांदीपनये वरं दक्षिणां पञ्चजनोदरात् तदुदरं विदार्यैति ल्यब्लोपे पंचमी स्वीकृता यमालयादानीयेत्यार्थिकोऽर्थः॥ २॥ ❀ ❀ परस्परसमयरूपया श्वो भाविनि त्वमजितोद्वहन इति श्रीरुक्मिणीसंकेतः तामानयिष्ये उन्मथ्येति श्रीभगवतश्च संकेत इति परस्परसंकेतरूपाया भवितुं स्वस्य वरत्वेन तस्याश्च भार्य्यात्वेन भवितुमिच्छा तया जहारेति प्रथमपक्षेऽर्थः। सुपतनः शोभनागमनः पूर्वार्थे रुक्मिण्यामाह्वानकर्तृत्वमारोपितं श्रीकृष्णानुरक्तया तया बीभत्सितस्य तस्याह्वानानर्हत्वात् मां राक्षसेन विधिनेति वाक्येन राक्षसविवाहस्य गान्धर्वविवाहत्वासम्भवाच्चारुचेर्यद्वेति शिशुपालस्य वरत्वेन भूतिस्संपत्तिरस्तु जरासंधादीनां भोजनदक्षिणादिविभूतिरस्तु इति तया समाहूत इति याबुभूषा सापि रुक्मिणः परस्परपत्रप्रेषणमयी कथञ्चिद्गान्धर्ववृत्तिरेवेति योज्यम्। शेषं पूर्ववदित्युक्तम्॥ ३॥ ❀ ❀ प्रथमे पक्षेऽकारप्रश्लेषात् अविद्धनस इति अनुवादमात्रं दमनमेव विधेयम्। द्वितीये तु विद्धनासिकत्वविशिष्टं दमनं विधीयते तथापि भग्नमानत्वेपि तां नाग्नजितीम् अतएव भग्नमानत्वेपि कामयमानत्वादेव तच्छस्त्रैः जरासन्धाद्यस्त्रैरित्यपेक्षितत्वात्करणपदमध्याहृतं न तु स्वशस्त्रैरित्यस्य व्याख्यानं स्वशब्दस्य वाक्यस्थकर्तृपरामर्शकत्वात् तस्मादेवं व्याख्येयम् तच्छस्त्रैरक्षत एव स्वशस्त्रैः स्वकस्याऽर्जुनस्यास्त्रैर्जघानेति। तदुक्तं दशमे गांडीवी कालयामास सिंहः क्षुद्रमृगानिवेति॥ ४॥

## श्रीमद्वीरराघवव्याख्या

एवं नंदव्रजे वृंदावने च श्रीकृष्णकृतानि चेष्टितानि संग्रहेणावर्णयत् अथ व्रजान्मथुरामेत्य भगवता कृतानि ततो द्वारकां चैत्य कृतानि च संग्रहेण वर्णयत्यध्यायद्वयेन। तत्र मथुरायां कृतानि भगवच्चेष्टितान्याह तत इति द्वाभ्याम्। स्वपित्रोर्देवकीवसुदेवयोः शं सुखं चिकीर्षया कर्तुमिच्छया बलदेवेन संयुतः ततः व्रजात्पुरीं मधुपुरीमागत्य हतं स्वेनेति शेषः। रिपुयूथनाथं शत्रुसमूहनायकं कंसं व्यसुं गतप्राणमोजसा बलेन तुंगाद्राजमंचादुर्व्यां भूम्यां निपात्य व्यकर्षद्देवानां विश्वासार्थमिति भावः॥ १॥ ❀ ❀ सांदीपनेरुपाध्यायात्सकृत्प्रोक्तं सविस्तरं षडंगोपेतं तं ब्रह्मवेदमधीत्य तस्मै सांदीपनये मृतं पुत्रं मृतपुत्रप्रदानरूपं वरं पंचजनोदरात्पंचजनो नाम कश्चिदसुरस्तस्योदरविदारणद्वारा यमपुरीं गत्वा ततः पुत्रमानीय प्रादात्॥ २॥ ❀ ❀ द्वारकाचेष्टितान्याह समाहुता इति श्रियो लक्ष्म्याः सवर्णेन समानरूपेण युक्तयेति शेषः। भीष्मककन्यया रुक्मिण्या निमित्तभूतया तदुद्वाहार्थमित्यर्थः, ये शिशुपालादयः समाहुताः सम्यगाहुताः रुक्म्यादिभिरिति शेषः, तेषां चैद्यादीनां मिषतां पश्यतां मूर्ध्नि पदं दधद्दधानः तानभिभूयेत्यर्थः गांधर्ववृत्त्या परस्परसंकेतरूपया वृत्त्या बुभूषया भवितुमुद्वोढुमिच्छया सुपर्णः शोभमानरथः स्वभागं रुक्मिणीं 'राघवत्वेऽभवत्सीता रुक्मिणी कृष्णजन्मनि। अन्येष्वप्यवतारेषु विष्णोरेषानपायिनी।' भास्करस्य प्रभा यथेत्याद्युक्तरीत्या स्वांशभूतां नित्यामनपायिनीं जह्रे हृतवान्॥ ३॥ ❀ ❀ ककुद्मिन इति अविद्धनसः अच्छिद्रनासिकान् ककुद्मिनः वृषभान् दमित्वा छिन्ननासिकान् कृत्वा नाग्नजितीं नग्नजितो राज्ञः कन्यां स्वयंवर उवाह उदवहत् तद्भग्नमानान् तेन ककुद्मिदमनेन भग्नः मानः बलिनो वयं इति मानो येषां तानपि गृध्यतः कामयमानान् नाग्नजितीमित्यर्थः। अत एवाज्ञान् मूढान् शस्त्रभृतः शस्त्रधारिणो राज्ञः स्वशस्त्रैः स्वस्य दिव्यैः सुदर्शनादिभिरायुधैः स्वयमक्षतः क्षतवर्जितः सन् जघ्ने हतवान् तान्। विजिघ्नन्नाग्नजितीमुदवहदित्यर्थः॥ ४॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

ततो वृंदावनात् आशादिगतितृष्णयोरिति स्वपित्रोराकांक्षितां चिकीर्षया कर्तुमिच्छया व्यसुं गतप्राणम्॥ १॥ ❀ ❀ ब्रह्म वेदं पंचजनोदरात् पंचजनाख्यदैत्योदरात् सांदीपिनेरधीत्य सकृत्प्रोक्तं तेनेति शेषः॥ २॥ ❀ ❀ भीष्मककन्येति तृतीया तादर्थ्ये भीष्मककन्याया रुक्मिण्या अर्थे सवर्णेन क्षत्रियत्वमात्रयोग्यतया समाहूताः एषां क्षत्रियाणां श्रियो जिहीर्षया तेषां मूर्ध्नि पदं दधदित्यनेन स्त्रीहरणप्रकारः मिषतां पश्यतां सुपर्णः परानंदात् काकुत्स्थो वाचि संस्थितेरिति वचनात् सुष्ठु परमानंदरूपः सुपर्ण इत्यनेन सोप्यक्लेशनेति दर्शितं गांधर्ववृत्त्या कन्यासंवादलक्षणया इत्यनेन बहवो विवाहविधयो दर्शिता भवंति। स्वभागमित्यनेन स्वयोग्यमिति दर्शयति॥ ३॥ ❀ ❀ अविद्धनसोऽच्छिद्रनासिकान् ककुद्मतो वृषभान् वृषभाणामाटोप-

समयसूचनाय स्वयंवर इत्युक्तं किंच स्वयमक्षतः सन् ये स्वयंवरार्थमागतास्तान् क्षत्रियान् जघ्न इत्यन्वयः, कन्यायाः स्वलाभेन भग्नमानान् अभिगृध्यतः कन्यामाकांक्षमाणानज्ञान् कृष्णप्राप्तियोग्यमजानतः शस्त्रभृत इत्यनेन गृह्यंते क्षत्रिया एव न वृथा इति ज्ञायते । चशब्दः समुच्चये ॥ ४ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

उद्धव उवाचेति । रासलीलावर्णनारम्भे प्रेमवैवश्याद्ध्यायसमाप्तिः । पश्चात् कथमपि बहिरनुसन्धाने सतीति ज्ञेयम् । तत इति प्रियादि प्रियजनपीडकत्वाद्देवादीनां प्रीतिविषयकत्वाच्च विकर्षणम् ॥ १ ॥ ❀ ❀ पञ्चजनोदरं प्राप्य मृतं यमलोकादानीय प्रादादिति वोद्धव्यम् ॥ २ ॥ ❀ ❀ भीष्मककन्याया या बुभूषा तयेति व्यधिकरण एव तृतीयाद्वयं स्वभागं श्रीरुक्मिणीरूपं जहार ॥ ३ ॥ ❀ ❀ स्वेषामर्ज्जुनादीनां शस्त्रैर्जघ्ने । तेषु स्वप्रभावावेशात् स्वयमेव जघानेत्यर्थः । गाण्डीवी कालयामासेति श्रीदशमसंवादायेत्थं व्याख्यायते ॥ ४ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

तृतीये मथुराद्वारवत्योः कंसवधादिकाः । लीलाः कुरूणां निधनमपि संक्षिप्य वर्णितम् । शमित्यव्ययं सुखवाचकं पित्रोः सुखस्य चिकीर्षयेत्यर्थः । तुंगात् मञ्चात् हतं प्राप्ताघातं ततो व्यसुं प्राप्तमृत्युमपि व्यकर्षदिति तन्मरणमसम्भावयतां विभ्यतां पित्रादीनां मूर्छितत्वभाननिरासार्थम् ॥ १ ॥ ❀ ❀ ब्रह्म वेदं सविस्तरं षडङ्गादिसहितं पञ्चजनोदरं विदार्येति ल्यब्लोपे पञ्चमी यमलोकादानीयेति शेषः ॥ २ ॥ ❀ ❀ भीष्मककन्ययेति षष्ठ्यर्थे तृतीया, भीष्मककन्याया रुक्मिण्याः श्रियः साक्षात् लक्ष्म्याः समानौ वर्णौ द्वौ रुक्मीत्यक्षरद्वयं वाचकं यस्य तेन रुक्मिणा ये राजानः समाहुता ह्रस्वत्वमार्षं समाहृता इति पाठे समानीता इत्यर्थः । येषां राज्ञां मूर्ध्नि पदं दधत् सुपर्णो गरुडः सुधामिव स्वभागं रुक्मिणीं जह्रे । एषां कीदृशानां गान्धर्वे विवाहे या वृत्तिस्तथा शिशुपालस्य वरत्वेन अन्येषां वरयात्रत्वेन यद्वरणं तेनेत्यर्थः । बुभूषया अहं वर इति वयं वरयात्रा इति भवितुमिच्छया मिषतां कदाचित् कृष्ण आगत्य कन्यामपहरेदित्यत इतस्ततः सचकितं पश्यताम् ॥ ३ ॥ ❀ ❀ ककुद्मिनो वृषभान् अविद्धनासिकानेव दमित्वा तैर्नृपैः पराभूतत्वेन भग्नो मानो येषां तान् । तदपि गृध्यतः कन्यामभिकांक्षतः अत एवाज्ञान् राज्ञः स्वशस्त्रैर्जघ्ने तेषां शस्त्रैर्भृतः पूर्ण आच्छन्नोऽप्यक्षतः ॥ ४ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

स्वपित्रोः देवकीवसुदेवयोः शं सुखम् ॥ १ ॥ ❀ ❀ सविस्तरं सांगम् ॥ २ ॥ ❀ ❀ भीष्मककन्यया निमित्तभूतया तदुद्वाहार्थमित्यर्थः । श्रियः सवर्णेन रुक्मिण्याः समनाम्ना रुक्मिणा ये समाहुताः सम्यगाहूताः तेषां मिषतां मूर्ध्नि पदं दधत् तानभिभूय सुपर्णः शोभनं रुक्मिण्यनुमत्या गमनं यस्य सः, गांधर्ववृत्त्या बुभूषया सदारो भवितुमिच्छया स्वभागं स्वीयां जह्रे हृतवान् इत्यन्वयः ॥ ३ ॥ ❀ ❀ अविद्धनसः ककुद्मिनः वृषान् ॥ ४ ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनीव्याख्या

तृतीये मध्यचरितं कृष्णस्य विनिरूप्यते । इन्द्रियाणां तथा सर्गमधिकारस्य पोषकम् ॥ १ ॥
आविर्भूतो हि भगवांस्तत्त्वान्येव प्रवर्तयन् । सर्वां सृष्टिं वितनुते तावन्तोऽत्र ततो गुणाः ॥ २ ॥
दशेन्द्रियाणि, चत्वारि मनआदीनि, देवताः । अष्टाविंशतिरूपाणि निरूप्यन्ते ततोऽत्र हि ॥ ३ ॥

पूर्वाध्याये मथुरायामुत्पत्तिमुक्त्वा, तत्र कर्तव्यचरित्रे वक्तव्ये, मध्ये गोकुलवासादिकं निरूपितम्; इदानीमावि-[१]र्भावकार्यं निरूप्यते । तत्र प्रथमं गोकुलात्समागत्य कंसं हतवानित्याह—तत इति । ततो गोकुलात्स भगवान् स्वपुरं मथुरामागत्य, स्वपित्रोः शं चिकीर्षयोभयोः कार्यसिद्ध्यर्थम्, बलदेवेन संयुतो रिपुयूथानां नाथं कंसं तुङ्गान्मञ्चान्निपात्य, तदुपरि स्वयं पतित्वा, मृते तस्मिन् पित्रोः प्रियचिकीर्षया हतमपि तं व्यकर्षत्, विकर्षणं कृतवान् । एवं हि तेषां कामना स्थिता, क एनमित्थं करिष्यतीति । ओजसेति । यथा तस्याऽवयवा विशीर्णा भवन्ति, तथा महाप्रयत्नेन विकर्षणं कृतवानित्यर्थः । इदमेव भक्तानां मनः । भक्तानां मनसि स्थितं दैत्यं हत्वा तन्मनः स्वस्थं कृतमिति । एतादृशे चरित्रे कृते तेषां हृदये य[२]ज्जायते—अस्माभिरप्येवं कर्तव्यम्, भगवदपेक्षया स्थातव्यम्, भगवानेव चित्ते स्थितं दोषं परिहृत्य मनः स्थिरीकरिष्यतीति ॥ १ ॥ ❀ ❀

---

१. चतुर्व्यूहरूपेणाविर्भावकार्यम्. प्रकाशः. प्र. । २. यस्मात्. प्र.

एवं दुष्टनिग्रहं निरूप्य शिष्टपरिपालनं वक्तुं सतां शिक्षार्थं स्वयमाद्यं ब्रह्मचर्यलक्षणं धर्मं संपूर्णं कृतवानित्याह—सान्दीपनेरिति। सन्दीपनस्य पुत्रः सर्वज्ञः, तस्य सकाशात् ब्रह्म वेदमधीत्य। सकृत्प्रोक्तमित्यतिसौबुद्ध्यं लोकप्रतीत्या निरूप्यते, विधिपरिपालनार्थं वा। सुष्ठु विस्तरमिति अर्थावबोधाङ्गादिसहितम्। अधीत्य, विद्यां समाप्य, गुरवे दक्षिणां दत्तवान्। सा दक्षिणा वररूपा, सोऽपि पुत्ररूपः, सोऽपि पूर्वं मृतरूपः। पूर्वं पञ्चजनोदरं प्राप्य मृतं पुत्रम्, मरणात् पूर्वावसरे स्थितरूपम्, तस्मै प्रादात्। भगवदाज्ञया कालेन मरणक्षणमारभ्य सर्वतत्त्वसमूहस्य सङ्घातस्य प्रतिक्षणं यो विकारो जातः, तं सर्वमेव विकारं काल उद्गिरणं कृतवान्, तदा स सर्वोऽपि सङ्घातः पूर्वस्थित एव भवति । इयमेव मनोधिकारिदेवता, चन्द्र एव हि क्षीणो वर्द्धते, शब्दहेतुश्च भवति ॥ २ ॥ ❀ ❀ एवमाचारेण शिष्टपरिपालनमुक्त्वा, द्वितीयाश्रमलक्षणं धर्ममाचारेण प्रवर्तयन् कृतवानित्याह—समाहुता इति। भीष्मककन्ययैषा बुभूषया, श्रियः सवर्णेन रुक्मिणा, ये समाहुतास्तेषां मूर्ध्निपदं दत्वा गान्धर्ववृत्या तां हृतवान्। गान्धर्वो राक्षसश्चैव धर्म्यौ क्षत्रस्य तौ स्मृतौ इति प्रथमविवाहे तदुभयं विधातुम्, रुक्मिण्यंशे गन्धर्वता, इतरविषये प्रसह्य कन्याहरणात् राक्षसत्वमिति गान्धर्ववृत्त्या जह्रे उत्युक्तम्। तेषां मूर्ध्नि पदं दधदिति। बन्धुभिर्यत्तेभ्यो दत्तम्, तदेका बहुभ्यो दातुमशक्येति, यो रोचते, यो वा महांस्तस्मै देयमितीच्छाया जातत्वात्, तत्सिद्ध्यर्थं सर्वेषां मस्तके स्वपदं सर्वानुकूलपरूपं दत्तवान्। अनेन तेषामिच्छापि समर्थिता सर्वप्रतिरूपत्वाद्भगवतः। श्रियः समानवर्णेन रुक्मिणीरूपेण ये समाहृताः इति वा पाठः। रूपेण व्यामुग्धाः समागता इति, तेषां मस्तके पददानेन, तस्मिन् पक्षे तेषां मोहो निराकृतः। भीष्मककन्यया कर्त्र्या, श्रियः सवर्णेन करणेन, गान्धर्ववृत्त्या बुभूषया ये समाहृता इत्यर्थे, अनियतत्वात् सर्वप्रतिरूपतया गान्धर्वत्वम्। प्रसह्य कन्याहरणं तु सर्वत्र तुल्यमेव। मिषतामिति चौर्यं निवारितम्, सर्वेषां बलहानिर्वा निरूप्यते। स्वभागमिति न वैधो दोषः। सुपर्ण इति गरुडभावमापन्नो भगवानेव। तथा सत्यमृतमिव तां हृतवान् मातुः प्रियचिकीर्षया। स्वभागमिति वचनादियं ज्ञानशक्तिः। एषैव बुद्धिरधिकारिणी या भगवदेकपरा, भगवतैव सर्वान् दोषान् दूरीकृत्य, स्वार्थमेवात्मसात्कृता भवति ॥ ३ ॥ ❀ ❀ एवं सोमवंशे विवाहमुक्त्वा सूर्यवंशे सोत्सवं विवाहमाह—ककुद्मिन इति। ककुद्मिनो वृषभान् पणत्वेन स्वीकृतान्, विद्धनसः कृत्वा नासिकां भित्त्वा, तत्र रज्जुं निपात्य, समाकर्षणेन दमित्वा भग्नवीर्यान् कृत्वा। तत्रापि स्वयंवर एव, न त्वाहूय दानम्। अनेन स्वधर्मोऽप्युक्तो गान्धर्वः। नग्नजितः पुत्रीं सत्यामुवाह। तस्यां राक्षसत्वमप्याह—तद्भग्नमानान् पूर्वं स्वयंवरार्थमागतान्, समयबन्धरूपैस्तैरेव वृषैर्भग्नो मानो येषाम्। तथाभूतानपि तन्मारकवृषभजेतुः भगवतः सकाशात्तां हर्तुं गृध्नतोऽधिकाकाङ्क्षावतः, अत एव अज्ञान्, स्वयमक्षत एव स्वशस्त्रैस्तान् शस्त्रभृतो जघ्ने। अनेन तान् हत्त्वानयनात् राक्षसत्वं निरूपितम्। इयमेव हि बुद्धिदेवता ब्रह्मरूपा। तस्या दोषा द्विविधा नियता अनियताश्च। नियता मायाकृताः सप्तव्यसनात्मकाः अनियतास्तु अनन्ता एव। तानुभयविधानपि भगवान् दूरीकृत्य, नग्नान् पाषण्डान् जयतीति वेदो धर्मो वा, तज्जनिकां देवतां स्वनिष्ठामेव कृतवानिति, न स्वभावतोऽपि भगवदीयानां बुद्धिरन्यविषया भवति ॥ ४ ॥

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

अथ तृतीयाध्यायं विवरिषवः संवादे उत्तररूपा, शास्त्रे तु संस्कार्यसंस्कारकभेदेन द्विविधस्य मात्रासर्गस्य पूर्वाध्याय उक्तत्वात्तयोः संसर्गस्य च 'इन्द्रियैर्विषयाकृष्टे' इति न्यायेनेन्द्रियद्वारकत्वान्न संस्काराभावे भगवदीयमात्राभिस्तदनाकर्षे सम्यक् संसर्गाभावान्न मात्रासंस्कारसिद्धिरिति तदर्थं हेतुता अवसरश्च सङ्गतिरिति बोधयन्तस्तस्यार्थमाहुः—तृतीय इत्यादि। पोषकमिति। एतेन पूर्वोक्तयोर्भूतमात्रासर्गयोरधिकारजनकत्वं बोधितम्। जातेष्ट्यधिकरणे संख्यायास्तात्पर्यवत्त्वस्य सिद्धत्वेनात्र श्लोकसंख्यातात्पर्यमाहुः—आविरित्यादि। स्पष्टम्। तत्त्वानि गुणाश्चाहुः—दशेत्यादि।

प्रथमपद्ये। आविर्भावकार्यमिति चतुर्व्यूहरूपेणावतारकार्यम्। ननु स्वरूपस्य बाह्यचेष्टारूपत्वात् कथं मनस्त्वमित्याशङ्क्य तत्रोपपत्तिमाहुः—भक्तानामित्यादि। तया च 'प्राणन्नेव प्राणो भवति वदन्वाक्' इति श्रुत्युक्तन्यायेन मनस्त्वम्, लीलास्तु करणभूतः स्मरणं च व्यापार इत्यर्थः। एवमग्रेऽपि बोध्यम्। नन्वेवं तन्मनःसंस्कारेऽपि कथमन्येषां मनःसंस्कारसिद्धिरित्यत आहुः—एतादृश इत्यादि। यदिति यस्मात् ॥ १ ॥ ❀ ❀ सान्दीपनेरित्यत्र। इयमिति। कालोद्गीर्णगुरुपुत्रदेहरूपा ॥ २ ॥ ❀ ❀ समाहुता इत्यत्र। मूलस्थं बुभूषयेति पदं भूप्राप्तावित्यस्येत्यभिप्रेत्याहुः—भीष्मकेत्यादि। तथा च भीष्मककन्याकर्तृका या एषां राज्ञां प्राप्तीच्छा तया स्वोट्टंकितया हेतुभूतया रुक्मिणा समाहूता इत्यर्थो ज्ञेयः। समाहुता इत्यत्र चाऽऽर्षो ह्रस्वः। श्रियः सवर्णेनेति। श्रियो रुक्मिण्याः समानौ वर्णौ वाचकौ यस्यासौ सवर्णस्तेनेति श्रीधरीये व्याख्यातम्। दत्तमिति भावे क्तः। देयमिति। दानं कर्तव्यम्। पदस्य सर्वानुकूलपरूपत्वं कथमित्यत आहुः सर्वप्रतिरूपत्वादिति। सर्वप्रपंचरूपमूलत्वात्; प्रतिशब्दस्य मूलस्वरू-

---

१. कालोद्गीर्णगुरुपुत्रदेहरूपा. प्रा.। २. बुभूषेतिपदं भूप्राप्तावित्यस्य. प्र.। ३. भावे क्तः. प्रकाशः. ४. दानं कर्त्तव्यम्. प्र.। ५. प्रतिशब्दस्य मूलस्वरूपवाचकत्वं प्रतिपुस्तकादिपदे प्रसिद्धम्. प्र.। ६. श्रीरुक्मिणीरूपविषयिका आसक्तिः. प्र.। ७. पक्षत्रयेऽपि. प्र.।

पवाचकत्वं प्रतिपुस्तकादिपदे प्रसिद्धम् । मोह इति श्रीरुक्मणीरूपविषयिका आसक्तिः । अस्मिन् पक्षे मूलयोजनामाहुः—भीष्मकेत्यादि । तृतीययोजनायां गान्धर्वत्वप्रकारमाहुः—गान्धर्वेत्यादि । अनियतत्वात् । इच्छाया अनिश्चितत्वात् । भगवतः सर्वप्रतिरूपत्वात् कुत्रापीच्छाभवने भगवत्येव पर्यवसानाद्विवाहस्य गान्धर्वत्वमित्यर्थः । श्रीधरेण त्रिधा व्याख्यातत्वादत्रापि तदादृत्य त्रिधा व्युत्पादितम् । सर्वत्रेति । पक्षत्रयेऽपि । स्कन्धार्थविचारेणाऽत्र बुद्धिसर्गे गमकमाहुः—स्वभागमित्यादि । तथा चेयं संस्कारिकेत्यर्थः । संस्कार्यस्वरूपमाहुः—एषैवेत्यादि ॥ ३ ॥ ❀ ❀ ककुद्मिन इत्यत्र । तज्जनिकामिति । तस्माद्वेदाद्धर्माद्वा जनिर्जननं यस्याः सा तथा । बुद्धिजनिकामिति वा । अत्राऽपि संस्कारवत्त्वं भगवत एव । एवं सर्वत्र बोध्यम् ॥ ४ ॥

### श्रीगिरिधरकृता बालप्रबोधिनी

बाललीलां निरूप्यैवं मथुरायां च या कृता ॥ राजलीला द्वारकायां तृतीये सा निरूप्यते ॥ १ ॥

स्वपित्रोर्देवकीवसुदेवयोः शं सुखं चिकीर्षया बलदेवसंयुतः स कृष्णस्ततो व्रजात् पुरं मधुपुरं आगत्य रिपुयूथनाथं कंसं तुङ्गात् राजमञ्चात् निपात्य हतं व्यसुं गतप्राणं उर्व्यां भूम्यां ओजसा बलेन पित्रोः सन्तोषार्थं व्यकर्षत् ॥ १ ॥ ❀ ❀ एवं दुष्टनिग्रहं निरूप्य शिष्टपरिपालनं वक्तुं सतां शिक्षार्थं स्वयमाद्यं ब्रह्मचर्यलक्षणं धर्मं सम्पूर्णं कृतवानित्याह—सान्दीपनेरिति । सान्दीपनेरुपाध्यायात् सकाशात् तेन सकृत्प्रोक्तं सविस्तरं षडङ्गोपेतं ब्रह्म वेदं अधीत्य तस्मै सान्दीपनये मृतं पुत्रं मृतपुत्रप्रदानरूपं वरं पञ्चजनोदरात् पञ्चजननामकदैत्यस्योदरविदारणपूर्वकं यमलोकादानीय प्रादादित्यन्वयः ॥ २ ॥ ❀ ❀ द्वितीयाश्रमधर्ममपि स्वाचारेण प्रवर्तयन् कृतवांस्तदाह—समाहुता इति । श्रियो लक्ष्म्याः सवर्णेन समानेन रूपेण साधनभूतेन भीष्मककन्यया रुक्मिण्या ये शिशुपालजरासन्धादयो राजानः समाहुताः समाहूताः—ह्रस्वत्वमार्षम्—समाहृता इति पाठे आकृष्टा इत्यर्थः । यद्यपि तया केवलं श्रीकृष्ण एव समाहूतो नान्ये तथापि तस्या लावण्यस्यैव तेषामागमनहेतुत्वात्तयैव समाहूता इत्युच्यते । एषां समागतानां राज्ञां मिषतां यदि कदाचित् कृष्ण आगत्य कन्यां हरेत्तदा तेन योद्धव्यमिति सावधानतया पश्यतामेव सतां मूर्ध्नि पदं दधत् तया सह गान्धर्ववृत्त्या परस्परसमयरूपया बुभूषया भवितुमिच्छया स्वभागं 'राघवत्वेऽभवत् सीता रुक्मिणी कृष्णजन्मनि ॥ अन्येष्वप्यवतारेषु विष्णोरेषाऽनपायिनी' इत्यादिवाक्यानुसारेण लक्ष्म्यंशभूतां रुक्मिणीं जह्रे जहारेत्यन्वयः । तत्र दृष्टान्तमाह—सुपर्ण इति । सुपर्णो गरुडो यथेन्द्रादीनां मूर्ध्नि पदं दधत् स्वभागं सुधां जहार तथेत्यर्थः । यद्वा श्रियः रुक्मिण्याः समानं वर्णद्वयं वाचकं यस्य स श्रियः सवर्णो रुक्मी तेन भीष्मककन्यया सह तेषां बुभूषया विभूतिर्भवत्वितीच्छया ये समाहूता इति । तत्र शिशुपालस्याह्वानं वरत्वेन बुभूषया, जरासन्धादीनां तु तद्विवाहसाधनार्थमुत्सवार्थं चेति ज्ञेयम् । शेषं समानम् ॥ ३ ॥ ❀ ❀ अविद्धनसः अच्छिद्रनासिकान् ककुद्मिनः य एतान् विद्धनासिकान् करिष्यति तस्मा इयं कन्या देयेति पणभूतान् वृषभान् दमित्वा विद्धनासिकान् कृत्वा नाग्नजितीं नग्नजितो राज्ञः कन्यां सत्यां स्वयंवरे उवाह । तद्भग्नमानान् तैर्वृषभैस्तद्दमनेन वा भग्नो मानो बलिनो वयमित्यभिमानो येषां तथाभूतानपि गृध्यतः कन्यां ग्रहीतुं कामयमानान् । भग्नमानानां कुत एवं कामना तत्राह—अज्ञान् मूर्खान् । शस्त्रभृतः शस्त्रधारिणो नृपान् स्वयं तच्छस्त्रैरक्षत एव स्वशस्त्रैर्जघ्ने जघान ॥ ४ ॥

### हिन्दी अनुवाद

### भगवान्‌के अन्य लीला-चरित्रोंका वर्णन

उद्धवजी कहते हैं—इसके बाद श्रीकृष्ण अपने माता-पिता देवकी-वसुदेवको सुख पहुँचानेकी इच्छासे बलदेवजीके साथ मथुरा पधारे और उन्होंने शत्रुसमुदायके स्वामी कंसको ऊँचे सिंहासनसे नीचे पटककर तथा उसके प्राण लेकर उसकी लाशको बड़े जोरसे पृथ्वीपर घसीटा ॥ १ ॥ ❀ ❀ सान्दीपनि मुनिके द्वारा एक बार उच्चारण किये हुए साङ्गोपाङ्ग वेदका अध्ययन करके दक्षिणास्वरूप उनके मरे हुए पुत्रको पञ्चजन नामक राक्षसके पेटसे ( यमपुरीसे ) लाकर दे दिया ॥ २ ॥ ❀ ❀ भीष्मकनन्दिनी रुक्मिणीके सौन्दर्यसे अथवा रुक्मीके बुलानेसे जो शिशुपाल और उसके सहायक वहाँ आये हुये थे उनके सिरपर पैर रखकर गान्धर्व-विधिके द्वारा विवाह करनेके लिये अपनी नित्यसंगिनी रुक्मिणीको वे वैसे ही हरण कर लाये, जैसे गरुड अमृत-कलशको ले आये थे ॥ ३ ॥ ❀ ❀ स्वयंवरमें सात बिना नथे हुए बैलोंको नाथकर नाग्नजिती ( सत्या ) से विवाह किया । इस प्रकार मानभङ्ग हो जानेपर मूर्ख राजाओंने शस्त्र उठाकर राजकुमारीको छीनना चाहा । तब भगवान् श्रीकृष्णने स्वयं बिना घायल हुए अपने शस्त्रोंसे उन्हें मार डाला ॥ ४ ॥

---

१. रुक्मिण्याः सौन्दर्यातिशयं श्रुत्वा अनाहूता अपि स्वयमेवागता इत्यर्थः ।

प्रियं प्रभुर्ग्राम्य इव प्रियाया विधित्सुरार्च्छद् द्युतरुं यदर्थे।
वज्र्यद्रवत्तं सगणो रुषान्धः क्रीडामृगो नूनमयं वधूनाम् ॥ ५ ॥
सुतं मृधे खं वपुषा ग्रसन्तं दृष्ट्वा सुनाभोन्मथितं धरित्र्या।
आमन्त्रितस्तत्तनयाय शेषं[1] दत्त्वा तदन्तःपुरमाविवेश ॥ ६ ॥
तत्राहृतास्ता नरदेवकन्याः कुजेन दृष्ट्वा हरिमार्तबन्धुम्।
उत्थाय सद्यो जगृहुः प्रहर्षव्रीडानुरागप्रहितावलोकैः[2] ॥ ७ ॥
आसां मुहूर्त एकस्मिन्नानागारेषु योषिताम्। सविधिं जगृहे पाणिन[3]नुरूपः स्वमायया ॥ ८ ॥
तास्वपत्यान्यजनयदात्मतुल्यानि सर्वतः। एकैकस्यां दश दश प्रकृतेर्विबुभूषया ॥ ९ ॥
कालमागधशाल्वादीननीकै रुन्धतः पुरम्। अजीघनत्स्वयं दिव्यं स्वपुंसां तेज आदिशत् ॥१०॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

यदादित्याः कुंडले दातुं स्वर्गं गतस्तदा प्रभुः स्वतंत्रोऽपि ग्राम्यः स्त्रीपरतंत्र इव प्रियायाः सत्यभामायाः प्रियं विधातुमिच्छुर्द्युतरुं पारिजातमानीतवान्। यदर्थे यन्निमित्तं तं कृष्णं वज्री स्त्रीप्रेरितो योद्धुमन्वधावत्। स्वकार्यसाधकेन तेन युद्धोद्यमस्तस्यायुक्त एवेत्याह। क्रीडामृग इति। अयं वज्री ॥ ५ ॥ ❀ ❀ सुनाभेन चक्रेणोन्मथितं हतं सुतं भौमं दृष्ट्वा तस्य मात्रा धरित्र्या भूम्या आमंत्रितः प्रार्थितः संस्तस्य तनयाय भगदत्ताय हृतशेषं राज्यं दत्वा ॥ ६ ॥ ❀ ❀ तत्रांतःपुरे कुजेन भौमेन या आहृतास्ताः प्रहर्षश्च व्रीडा चानुरागश्च तैः प्रहिताः प्रेरिता येऽवलोकास्तैर्जगृहुः स्वीकृतवत्यः ॥ ७ ॥ ❀ ❀ आसां योषितां पाणींस्तत्तदनुरूपः सन्सविधं विवाहो चितप्रकारसहितं यथा भवति ॥ ८ ॥ ❀ ❀ सर्वतः सर्वैर्गुणैः स्वतुल्यानि प्रकृतेर्मायाया विविधं भवनं विस्तारस्तदिच्छया यद्वा प्रकृतेर्हेतोर्विविधं भवितुमिच्छया ॥ ९ ॥ ❀ ❀ कालः कालयवनः रुंधत आवृण्वतः मुचुकुंदभीमादिभिर्निमित्तमात्रैः स्वयमेवाजीघनद्घातितवान्। तेन च स्वपुंसां तेजःप्रभावं कीर्तिं वा दत्तवान् ॥ १० ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

यद्वा 'आत्मवन्मन्यते जगत्' इति न्यायेन अयं कृष्णो वधूनां सत्यभामादीनां क्रीडामृग इति निंदन्नेवाद्रवदित्यर्थः। सगणो मरुद्गणसहितः। रुषा घनमदजातक्रोधेनांध इति। परमेशेन युद्धार्थमाद्रवणे हेतुः ॥ ५ ॥ ❀ ❀ सुष्ठु नाभिर्मध्यं यस्य स सुनाभः "अच् प्रत्यन्ववपूर्वात्सामलोम्नः" इत्यत्राजितियोगविभागात्समासान्तोऽत्राच्। तस्य नरकस्य शेषपदेनैव किञ्चिद्राज्यहरणं ज्ञायत इति। शुद्धमातृपितृकस्यापि नरकस्य बाणासुरसंगात्कुबुद्धिरुत्पन्नेति पुराणांतरकथात्र ज्ञेया। "दुष्टायाः संगदोषेण सत्याश्च मतिविभ्रमः। यथैकरात्रसंगेन काष्ठघंटा गवा धृता" इति नीतिग्रंथेप्युक्तम् ॥ ६ ॥ ❀ ❀ आहृता दिग्विजये नृपान्विजित्य तेषां कन्या आनीता यास्ता इत्यर्थः। स्वीकृतवत्यः पतित्वेन वव्रुः ॥ ७ ॥ ❀ ❀ आसां भौमगृहानीतानां पुरुरूप इति पाठे तु योगिवत्स्वचिच्छक्त्या कृतानैकरूपः ॥ ८ ॥ ❀ ❀ जडाया मायाया बहुधा भवने जाड्याधिक्यं प्रसज्येतेति चेदाह। यद्वेति। "प्रकृतिं स्वामधिष्ठाय बहुरूपो भवाम्यहम्" इत्युक्तेः "इंद्रो मायाभिः पुरुरूप ईयते" इति श्रुतेश्च। यद्वा प्रकृतेः स्वरूपस्य विशेषेण बुभूषा तयेति "प्रकृतिश्च स्वरूपं च स्वभावश्च" इत्यमरः। पंचमे प्रकृतिं भजस्वेत्यस्य स्वरूपं भजस्वेति व्याख्या कृता प्राग्भिः। तासु भौमगृहानीतविवाहितासु ॥ ९ ॥ ❀ ❀ आदिना पौंड्रकग्रहः। पौंड्रकेनापि कृष्णे कैलासं गते द्वारकाऽऽगत्य निरुद्धेति स्फुटं हरिवंशे। अत्र तु स काश्यां हतः इति विरोधः कल्पांतरविवक्षया परिहर्त्तव्य इति स्वीयशक्तिप्रवेशनेनाघातयत्। तेन तद्द्वारा घातनेन तेषां स्वपुंसां "निमित्तं परमीशस्य विश्वसर्गनिरोधयोः। हिरण्यगर्भः शर्वश्च" इति श्रीदशमे वक्ष्यमाणत्वान्मुचुकुंदादीनामन्येषां निमित्तमात्रतैव हनन इति भावः ॥ १० ॥

### श्रीराधारमणदासगोस्वामिविरचितादीपनी व्याख्या

स्त्रीपरतंत्रः प्राकृतकामीव नतु स एव यतः प्रियायाः स्वविषयकप्रीतिमत्या न तु कामिन्याः प्रियं रुक्मिण्यादिभ्य उत्कर्षलक्षणं सुखं तेन श्रीकृष्णेन सह तस्य वज्रिणः युक्त एवेति वानरो हि स्वपालकमेव पशुत्वाद्दंशति तत्तुल्यत्वात्तस्यापि तेन स युक्त एवेत्यर्थः। अयुक्त इति पाठस्तु लेखकभ्रमाद् असम्बद्धार्थत्वात् ॥ ५ ॥ ❀ ❀ यद्यपि श्रीवाराहपृथिवीभ्यां जातस्याऽसुरत्वं न संगच्छते तथापि बाणासुरदुस्संग एव तत्र हेतुरिति पुराणान्तराद्विशेषो ज्ञेयः ॥ ६ ॥ ७ ॥ ❀ ❀ स्वमायया

---

१. प्रा. पा. राज्यं। २. प्रा. पा. लोकाः। ३ प्रा. पा. पाणीनुरूपः। ४ प्रा. पा. घातयन्।

अचिन्त्यचिच्छक्तया ॥ ८ ॥ ❀ ❀ पूर्वार्धे तेषामात्मतुल्यानां मायिकत्वप्रसक्तिरतो यद्वेति प्रकृतेस्स्वाभाविकस्वरूपशक्तेर्हेतोः प्रकृतिश्च स्वरूपं च स्वभावश्चेत्यमरः, व्याख्यातञ्च स्वामिभिरेव प्रकृतिं भजस्वेत्यत्र प्रकृतिं स्वरूपमिति ॥ ९ ॥ ❀ ❀ स्वयमेवेति तत्र तत्र साक्षादावेशात् तेन तत्तद्द्वाराहननेन तेषां स्वंपुसां मुचुकुन्दादीनां सम्बन्धे प्रभावकीर्त्यादिषु स्वत्वध्वंसाभावान्न संप्रदानत्वम् ॥ १० ॥

### श्रीमद्वीरराघवव्याख्या

प्रियमिति स्वयं प्रभुः स्वतंत्र एव ग्राम्य इव स्त्रीपरतंत्रग्रामजन इव प्रियायाः सत्यभामायाः प्रियं चिकीर्षुः कर्त्तुमिच्छुः द्युतरुं पारिजातमाहृतवान् । कथंभूतं ? यदर्थे यस्य पारिजातस्यार्थे तद्विमोचनायेत्यर्थः । वज्री इन्द्रः सगणः मरुद्गणसहितः रुषा क्रोधेनांधः तं पारिजातापहर्त्तारं भगवंतं प्रत्याद्रवत् स्त्रीप्रेरितो युद्धमभिमुखमापतत्तथाभूतमित्यर्थः । कृत्स्नस्य श्रीकृष्ण-शेषनामजानानस्त्रीपरतंत्रं वज्री आद्रवत् । अयं वज्री वधूनां स्त्रीणां क्रीडामृगः क्रीडार्थसंपादितमृग इव भगवतस्तु पतिर्विश्वस्येति श्रुत्युक्तरीत्या विश्वशेषित्वात्तस्य स्वशेषभूतपारिजातापहरणं युक्तमेवैतावता च स्त्रीपारतन्त्र्यमिन्द्रस्यानात्मन्यात्मबुद्धिर्या अश्वे-भादिष्विव मदीयमिति तद्वत् पारिजाते स्वत्वमभिमन्यतोऽज्ञानमेवेति भावः ॥ ५ ॥ ❀ ❀ अन्यदपि दिव्यचेष्टितमाह सुतमिति । मृधे युद्धे वपुषा खमंतरिक्षं ग्रसंतं इव स्थितं सुनाभेन चक्रायुधेन उन्मथितं भिन्नं सुतं नरकं दृष्ट्वा धरित्र्या मात्रा भूम्या आमंत्रितः प्रार्थितः तत्तनयाय नरकस्य सुताय शेषं स्वपरिगृहीतावशिष्टं कोशराज्यादिकं दत्त्वा तस्मात् पुरमाविवेश प्रविष्टवान् ॥ ६ ॥ ❀ ❀ तत्रेति । तत्रांतःपुरे • कुजेन भूमिपुत्रेण नरकेणाहृता आनीतास्ताः प्रसिद्धाः नरदेवकन्या राजकुमार्यः आर्तबंधुं हरिं दृष्ट्वा सद्यः तदैवोत्थाय प्रहर्षश्च कीडा चानुरागश्च तैः प्रहिताः प्रेरिताः येऽवलोकास्तैर्जगृहुः स्वीकृतवत्यः ॥ ७ ॥ ❀ ❀ आसां स्वीकृतवतीनां योषितां स्त्रीणां पाणीन्नागारेषु प्रतियोषिद्विभिन्नेषु गृहेषु एकस्मिन्नेव मुहूर्ते स्वमायया स्वीयसंकल्पेन स्वयमपि बहुरूपः सविधं जगृहे गृहीतवान् ॥ ८ ॥ ❀ ❀ तासु गृहीतपाणिषु स्त्रीषु एकैकस्यां भार्यायां सर्वशः सर्वप्रकारेणात्मना तुल्यान्यपत्यानि दश दश अजनयदुत्पादयामास किं कर्त्तुमिच्छया प्रकृतेर्विवुभूषया विभूषितुमिच्छया पृथ्वीच्छयेत्यर्थः । मन्नियम्यायाः प्रकृतेः वृद्धिरीदृशीति प्रकाशयितुमिच्छयेति यावत् ॥ ९ ॥ ❀ ❀ कालेत्यादि कालः कालयवनः मागधो जरासंधः कालप्रभृतीननीकैः सैन्यैः पुरीं रुंधतः आवृण्वतः स्वयमजीघनत् घातितवान् । स्वपुंसां भीमार्जुनादीनां दिव्यं स्वीयतेजः आदिशद्दत्तवान् भीमादिद्वारा स्वयमेव तेषां सामर्थ्यप्रदानेन हता इत्यर्थः ॥ १० ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

ग्राम्यविषयभोगासक्त इव प्रियायाः सत्यभामायाः प्रियमभीष्टं विधित्सुः कर्तुकामः प्रभुः द्युतरुं स्वर्गवृक्षं परिजातमाच्छेन् अहार्षीत् । रुषांधः सगणो मरुद्गणेन सहितः वज्री इंद्रः यदर्थे यस्य द्युतरोरर्थे तं कृष्णमाद्रवत् शच्या वचनादिति शेषः । स्वार्थे स्वप्रयोजनाय यं कृष्णं तैः सहानतः प्रणतिविशिष्टो भूत्वा ॥ ५ ॥ ❀ ❀ धरित्र्याः सुतं नरकं आमंत्रितस्तयेति शेषः ॥ ६ ॥ ❀ ❀ तत्रांतःपुरे कथं जगृहुरिति तत्राह व्रीडेति । प्रहर्षेण सहिताभ्यां व्रीडानुरागाभ्यां लज्जास्नेहाभ्यां प्रहितैः प्रेरितैर-वलोकैर्गृहीतवत्य इत्यर्थः । ग्रहणं च पतित्वेनेति शेषः ॥ ७ ॥ ❀ ❀ भगवता पुनः किं कृतमत्राह आसामिति । विधिना शास्त्रोक्तकर्मणा सह वर्त्तत इति । एकस्य नानाविधगृहेषु स्त्रीणां करग्रहणं कथं घटत इत्यत उक्तं पुरुरूप इति । योगिवत्स्वसामर्थ्येन गृहीतबहुरूपेण घटत इत्यर्थः ॥ ८ ॥ ❀ ❀ उत्तमैः सर्वतः साम्यं किंचित्साम्यमुदीरितमिति वचनात् सर्वत आत्मतुल्यत्वं किंचित्सादृश्यविवक्षयेति ज्ञातव्यं पुत्रत्वेन पुत्रवत्याशापूर्तिसंभवादृशत्वसंख्या किमभिप्रायेणेत्यत उक्तं प्रकृतेरिति जडप्रकृतेर्वि-वुभूषया विविधभावेच्छया बहुत्वसंख्याविशिष्टत्वेच्छया ॥ ९ ॥ ❀ ❀ यदर्थमवतीर्णं तत्प्रयोजनमाह कालेति । कालो गर्गनिर्मितः तेजः प्रभावं अनेन मुचुकुंदादिकृतं वधमप्यात्मनैव कृतं ज्ञापयति इत्यतोऽजीघनदित्ययं लौकिकः ॥ १० ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

ग्राम्यः कामीवद्दृश्यमानोऽपि वस्तुतः प्रियायाः प्रेमवत्याः प्रियं प्रेम्णेप्सितं यत्तद्विधित्सुर्यदर्थे द्युतरुमाच्छेत् वज्री त्वात्मानुसारेण तमन्यथा मत्वैवाद्रवत् अन्यथा मननमेवाह अयं कृष्णो वधूनां सौन्दर्यमात्रलोभेन स्वीकृतानां कामिनीनां नूनं क्रीडामृगः कामवश इति ॥ ५—७ ॥ ❀ ❀ स्वमायया अचिन्त्यचिच्छक्त्या सविधिमिति पुण्यारण्यः ॥ ८ ॥ ❀ ❀ प्रकृते स्वरूपस्यैव वैभवेच्छया प्रकृतिश्च स्वरूपञ्च स्वभावश्चेत्यमरः, व्याख्यातञ्च टीकाकृद्भिः पञ्चमे प्रकृतिं भजस्वेत्यत्र प्रकृतिं स्वरूपमिति ॥ ९ ॥ ❀ ❀ स्वयमिति साक्षादेव कुत्रचित्तु तत्र तत्रावेशेनेत्यर्थः ॥ १० ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

ग्राम्यः कामीव दृश्यमानोऽपि वस्तुतस्तु प्रियायाः प्रेमवत्याः प्रियं प्रेमवशत्वेन प्रीतिं विधित्सुर्द्युतरुं पारिजातमाच्छेत् आहृतवान् यदर्थे वज्री वज्रसहित एव तम् आद्रवत् आ ईषत् योद्धुमागतवान् । तत्र हेतुः अन्ध इति तत्रापि हेतुः वधूनां शच्या-

दीनां क्रीडामृग इति यद्वा आत्मवन्मन्यते जगदिति न्यायेन वधूनां सत्यभामादीनामयं क्रीडामृग इति निन्दन्नेवाद्रवदित्यर्थः ॥ ५ ॥ ❀ ❀ सुतं नरकासुरं सुनाभेनोन्मथितं हतं दृष्ट्वा धरित्र्या तन्मात्रा आमन्त्रितः विनोदितः तत्तनयाय भगदत्ताय अत्र शुद्धमातापितृकस्यापि तस्य बाणासुरसङ्गादेव कुबुद्धिरिति असाधुसङ्गमहिमप्रस्तावे पुराणान्तरकथा ज्ञेया ॥ ६ ॥ ❀ ❀ तत्रान्तः-पुरे कुजेन नारकासुरेण प्रहर्षश्च व्रीडा च अनुरागश्च तैः प्रहिताः प्रेषिता अवलोकास्तैर्जगृहुर्ममायमेव वर इति प्रत्येकं स्वीचक्रुः ॥ ७ ॥ ❀ ❀ सविधे विवाहोचितप्रकारसहितं स्वमायया योगमायया सुष्ठु अमाययेति वा ॥ ८ ॥ ❀ ❀ प्रकृतेः स्वस्वभावस्य विबुभूषया विभवेच्छया आत्मतुल्यानीत्युक्तेः प्रकृतिश्च स्वरूपञ्च स्वभावश्चेत्यमरः ॥ ९ ॥ ❀ ❀ कालः काल-यवनः अनीकैः सैन्यैः रुन्धतः आवृण्वतः मुचुकुन्दभीमादिभिर्निमित्तमात्रैः स्वयमेव अजीघनत् घातितवान् तेन च तेषां स्वपुंसां तेजः प्रभावं कीर्त्तिं च दत्तवान् ॥ १० ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

प्रियायाः सत्यभामायाः प्रियं विधित्सुः विधातुमिच्छुः द्युतरुपारिजातम् आर्छदानीतवान् तं श्री कृष्णम्। यदर्थे द्युत-वर्थे वज्री आद्रवत् योद्‌धुमन्वधावत्। ननु सर्वस्वामिनं प्रत्येवं कर्मेन्द्रस्य न युक्तमित्यत्राह अयं वज्री ग्राम्य इव वधूनां क्रीडामृगः स्त्रैणाणां किमकृत्यमिति भावः ॥ ५ ॥ ❀ ❀ शोभना नाभिर्यस्य तेन श्रीकृष्णेनोन्मथितं सुतं भौमं दृष्ट्वा धरित्र्या भूम्या आमंत्रितः प्रार्थितः सन् तत्तनयाय भौमसुताय भगदत्ताय शेषं हतशेषसैन्यं तत्साध्यं राज्यमित्यर्थः ॥ ६ ॥ ❀ ❀ कुजेन भौमेन-या आहृताः ताः हर्षादिभिः प्रहिता येऽवलोकास्तैर्हरिं जगृहुः अयमस्माकं पतिरिति स्वीकृतवत्यः ॥ ७ ॥ ❀ ❀ स्वमायया स्वसंकल्पेन अनुरूपः तत्तदनुरूपः सविधं पाणिग्रहणप्रकारसहितं यथा भवति तथा एकस्मिन् मुहूर्ते पाणीन् जगृहे ॥ ८ ॥ ❀ ❀ प्रकृते पराप्रकृतेः जीवभूतायाः विशिष्टं भवनं जन्म तदिच्छया उत्तमपुरुषप्रकटीकरणेच्छयेत्यर्थः। अत एव सर्वतः सर्वगुणैः स्वतुल्यानि अपत्यान्यजनयत् प्रद्युम्नः भगवन्मूर्तिभूत एव केचित् श्रीकृष्णसारूप्यं गताः मुक्ताः केचिद्भक्ताश्चरमजन्मानश्च भगव-त्पुत्रत्वेनोत्पन्ना इति यथासम्भवमूह्यम् ॥ ९ ॥ ❀ ❀ कालः कालयवनः मागधो जरासंधः शाल्वः प्रसिद्धस्तदानीं निमित्त-भूतैर्मुचकुंदादिभिः स्वयमेव अजीघनत् घातितवान्। यतः स्वपुंसां मुचुकुंदादीनां दिव्यलौकिकं स्वतेजः आदिशत् दत्तवान् ॥ १० ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनीव्याख्या

एवं विवाहमुक्त्वा तत्र रमणमासक्तिव्यतिरेकेण न भवतीति तदासक्तिकार्यमाह—प्रभुरिति। प्रियायाः सत्यभामायाः ग्राम्य इव प्रियं विधित्सुर्द्युतरुमाच्छ[१]त् पारिजातमाहृतवान्। स्वर्गस्थितियोग्यं देवोपभोग्यमिति पारिजातमर्यादा; तां भङ्क्त्वा, प्रियार्थम्, तथा ग्रामीणः कामरसाविष्टो मर्यादां भङ्क्त्वा रसमनुभवति, तथा दिव्यभोगं कृतवानित्यर्थः। पारिजातस्य स्वर्गेऽपि दुर्लभतां ख्यापयितुमाह यदर्थं इति। यस्य पारिजातस्य अर्थे, वज्री इन्द्रो, वज्रं गृहीत्वा स्वर्गार्थं ब्राह्मणवधमप्यङ्गीकृत्य, यो ब्राह्मणं वृत्रं हतवान् तादृशत्वं वज्रिपदेन सूच्यते, भगवताऽपि सह कलहार्थं सगणो देवादिसहितः, विचारानुत्पत्तये रुपाऽन्धः आद्रवत् आभिमुख्येन युद्धार्थमागतः। अनेन सर्वस्मादपि स्वर्गात् पारिजातोऽधिक इत्युक्तम्, यदर्थमिन्द्रादयोऽपि मर्तुं समुद्यता इति। नन्विन्द्रः सर्वज्ञो देवो बृहस्पतिशिष्यः कथमेवम्? नीतिविरुद्धं सर्वप्रकारेणोपजीव्येन भगवता कथं विरोधं कृतवानित्याशङ्-क्याऽऽह—क्रीडामृगो नूनमयं वधूनामिति। अयमिन्द्रो वधूनामिन्द्राण्यादीनां निश्चयेन क्रीडामृगो वानरः वानरो यथा यथोक्तमेव करोति नतु किञ्चिदपि विचारयति। वधूशब्देन च ता एव गृहपतय उक्ताः तद्रक्षार्थमेवेन्द्रादीनामुपयोग इत्यय[१]महङ्कारो निरूपितः। भगवद्भक्तानां भगवतैव स्थापितोऽहङ्कारः फलयेति। अस्याऽभिमानिनी देवता रुद्रः। तद्भक्तनिराकरणेन भगवानेव तद्रूप[२] इति भक्ताहङ्कारनिर्वाहकं रूपमुत्तरत्र वर्ण्यते ॥ ५ ॥ ❀ ❀ भगवतो भोगोऽपि भक्तेष्टसिद्धयर्थमेवेति, तस्य दयां प्रतिपादयन्, दुष्टनिग्रहपूर्वकं भक्तानां सर्वमेवेष्टं प्रयच्छन्, भोगं करोतीत्याह—सुतं मृध इत्यादि चतुर्भिः सुतं नरकासुरं भगवता हतं दृष्ट्वा धरित्री भगवन्तं प्रार्थितवती शेषरक्षार्थम्। कृ[३]ते करणाभावात्, तदा तथा आमन्त्रितस्तत्तनयाय भगदत्ताय, शिष्टं सर्वमेव राज्यं दत्त्वा, तत्पुत्रोपयोगाभावपदार्थग्रहणार्थं तदन्तःपुरमाविवेशेत्यन्वयः। भगवान् सर्वेषां स्वकीयानां सर्वमेव कार्यं स्वयं करोतीति भगवच्चरित्रमुक्तम्। इद[४]मेव रूपमहङ्कारदेवतायाः। नर[५]कासुरवधे हेतुः—खं वपुषा ग्रसन्तमिति। वृत्रतुल्यता निरूपिता। ब्रह्मणा हि कृतं जगत् परिपालयितुं समुद्यतो विष्णुः, रुद्रप्रसादान्महाभूतग्रसनसामर्थ्यं प्राप्तवन्तं स्थित्यर्थं स्वपुत्रमपि हतवान्। पौत्रस्थापनं तु भार्याप्रार्थनया। दोपाभावाय मृध इत्युक्तम्। संग्रामे हननं क्षत्रियाणां न दोषाय। शू[६]न्यं हि वस्तुना पूरितं भवति,

---

१. श्रीसत्यभामानिष्ठः। स संस्कार्यत्वेन निरूपित इत्यर्थः प्रकाशः। २ अहङ्कारदेवतारूपः प्र. ३ कृते भौमहनने, पुनरहननस्याभावा-दित्यर्थः प्र. ४. स्वयंकर्तृत्वाभिमानरूपम् प्र. ५. ननु वामनावतारपुत्रं भौमं कुतो हतवानित्याहुः—नरकेत्यादि, ६. ग्रासस्य गिरणात्मकत्वान्मुख-कार्यत्वाच्च, प्रकृते तदभावेन, कर्तृकरणकर्मणामनुपपत्तिमाशङ्क्याहुः—शून्यमित्यादि। तथा च गौण्या अभिप्रेतत्वान्नानुपपत्तिरित्यर्थः प्र.

खमाकाशं शरीरेण पूरितमिति तेन ग्रासो निरूप्यते ग्रसन्तमिति तच्छ[1]रीरं मथित्वा तत्र स्थितं जीवमुद्धृतवानिति वा[2]। तदन्तः[3] पुरप्रवेशात् तमात्मनि सायुज्यं प्रापितवानिति लक्ष्यते। अत एव न दोषोऽपि केना[4]प्यंशेन। ताश्च देवस्त्रिय इति च। संवन्ध एव वरप्राप्त इत्यष्टावक्रशापप्रसादाभ्यामवगम्यते ॥ ६ ॥ ❀ ❀ तत्र ताभिर्वृत इत्याह—तत्राहृता इति। ताः पूर्वोक्ता देवस्त्रियः, साम्प्रतं नरदेवकन्याः कुजेन नरकासुरेण आहृताः, तत्रान्तः—पुरे, सर्वदुःखहर्तारमैहिकपारलौकिकदोषदूरीकरणसमर्थम्, स्वभोगार्थं तथा करोतीत्याशङ्कानिवृत्त्यर्थमार्तबन्धुमार्तानां तदीयत्वे वन्धुवद्धितकर्तारम्, दृष्ट्वा उत्थाय सद्य एकवारमेव तं पतित्वेन जगृहुः। हरिमार्तबन्धुमिति विशेषणं न ज्ञातमुपयुज्यते, किन्तु स्वरूपसदेव। अत एव भगवद्दर्शनमात्रेण वन्दीक्लेशबन्धुत्यागादि-सर्वदुःखानामपुनःस्मरणं विस्मृतत्वात्। स्वगृहे पुष्टा इव कामकलापूर्णाः कन्दर्पकोटिलावण्यं भगवन्तं भोगेच्छया गृहीतवत्य इत्याह—प्रहर्षव्रीडानुरागप्रहितावलोकैरिति। भगवन्तं हस्तेन दीनतया शरीरेण वा वन्धुमिव न गृहीतवत्यः। किन्तु हर्षेण, व्रीडया, अनुरागेण च प्रहितानि यान्यवलोकनानि, आनन्दचित्सद्भावदृष्टयः। प्रथमतो भगवन्तमानन्दमयं दृष्ट्वा प्रकृष्टो हर्षो जातः, तेनानन्दानुभवार्थं दृष्टिः प्रथमं प्रेपिता। ततोऽधिभुज्यमाने भगवति पतिस्त्रीरूपं चेतनभावमापन्ना, व्रीडया भोगं निवार्य, तदीयत्वख्यापिका दृष्टिः प्रेपिता। ततोऽन्तःकरणे भगवति परमप्रेमोत्पत्तौ भगवतोऽपि स्वस्मिन् दृष्टिपाते, अनु पश्चादुद्गतो रागो जातः। तेन परमवैषयिकभोगार्थं भगवति सा दृष्टिः प्रेषिता। तान्येवाऽवलोकनानि, भगवद्ग्राहकाणि। अ[5]नेन भगवदीयानामेवं चित्तं[6] भगवतोत्पाद्यत इत्युक्तम् ॥ ७ ॥ ❀ ❀ तासां भगवतः स्वीकारमाह—आसां मुहूर्त एकस्मिन्निति। समुदायेन भोगः सुखकरो न भवतीति, तासां कालत इच्छाबाधनाभावाय भगवानुरुरूपो भूत्वा, लौकिकवाच्यतोनिवृत्त्यै, सविधि विधानपूर्वकम्, समानफलसिद्धये भगवत्त्वख्यापनाय च, एकस्मिन् मुहूर्ते पाणिं जगृहे विवाहं कृतवानित्यर्थः। स्वमायया जगत्कर्तुः करणभूतया। केवलसच्चिदानन्देऽपि भोगार्थं तद्ग्रहणयोग्यत्वाय स्वरूपमाच्छादयतीति, मायायाः करणत्वम्। य[7]था सर्वमेव जगत् भगवद्रूपं चिदंशमायया व्यवहितं सर्वैर्यथेष्टं व्यवह्रियते, तथा भगवान् स्वमायया तासामभिलषितभोगार्थमुरुरूपो जात इत्यर्थः। योषितामिति भोगदशा प्रदर्शिता। नानागारेष्विति पूर्णरसाविर्भावाय। अत्र विधिर्गान्धर्व इति प्रतिभाति, क्षत्रियाणां मुख्यत्वात्। ए[8]वं ग्रहणमेव चित्ताधिष्ठातुर्वासुदेवस्य भक्तान् प्रति चित्तप्रेरणमित्युक्तम् ॥ ८ ॥ ❀ ❀ तासां फलमाह—तास्वपत्यान्यजनयदिति। अपत्यानि कन्यापुत्ररूपाणि। तासामधिकरणत्वेन तत्तुल्यापत्यजननं निवारितम्। तथा सति भगवदिच्छया प्रकृतिपुरुषसंवन्धेनैव तासां पुत्रा जायेरंस्तद्व्यावृत्त्यर्थमात्मतुल्यानित्याह। सर्वंश इति पञ्चधा। शरीरत इन्द्रियतः प्राणतोऽन्तःकरणतः स्वरूप[9]-तस्तत्सर्वधर्मतश्चेति। एकैकस्यां दशदशेति विध्यर्थः परिपालितः। 'दशास्यां पुत्रानाधेहि' इति श्रुतेः। प्रकृतेर्विशेषभवनेच्छयेति करणं सङ्ख्यायाम्। सा ह्येकमेव पुरुषं सकृदुपलभ्य महत्त्वकार्यं कृतवती, पुनः सम्बन्धे प्रयोजनाभावात् सकामैव स्थिता। इदानीं भगवांश्चेदनन्तरूपो भवति तदा तद्भोगार्थं पुनः-पुनः पुरुषसंवन्धं प्राप्य कार्याणि जनयिष्यतीति। तस्या विवुभूषा सिद्ध्यति। याग[10]वत्करणताऽस्याः। भगवदिच्छया व्यापृता वहुधा जननं साधयतीति। अ[11]नेन साङ्ख्यवत् भगवद्भक्तानामिन्द्रि[12]यप्रवृत्तिरिति दशसङ्ख्यया वहिरिन्द्रियाणां स्वरूपमुक्तम्। ते[13] ह्यग्रे न वीजभावं प्राप्नुवन्ति, भोगश्चान्येच्छयेति; तत्रा[14]पि न भोगेच्छा कारणम्, किन्तु भवनेच्छैव कारणम् ॥ ९ ॥ ❀ ❀ एवं कामलीलामुपपाद्य क्रोधलीलां सोपपत्तिकामुपपादयति—कालमागधेत्यादि सप्तभिः—कामजनकानि चत्वार्येव वहिरिन्द्रियाणि। इन्द्रि[15]यं, स्प[16]र्शः, श्रोत्रं, चक्षुरिति। रक्ष्यते च चतुर्भिः क्रोधांशैः संवत्स[17]र-रुद्रपालकसूर्यैः। कामक्रोधौ समौ कर्तुं सप्त सप्तनिरूपिताः। यल्लोभे गुणसङ्ख्यास्ते[18] निवृत्तिः सप्तधा ततः। १। ततो मध्ये चतुर्मूर्तेः प्रद्युम्नादेर्निरूपिताः। वासुदेवाद्भक्तरक्षा तृतीया सा निरूप्यते ॥ २ ॥ तत्र प्रथमं सर्वपरिपालनार्थं भूभाररूपान् शत्रूनत्युत्कटान् प्रथमं मारयतीत्याह। कालेति। त्रयो ह्युद्धताः स्वयमागत्य भक्तद्रोहं कृतवन्त इति तान् हतवान्। तत्र[19] कालमागधौ मथुरापुरनिरोधकौ। शाल्वो द्वारकाया निरोधकः। कालः कालयवनः। मागधो जरासन्धः। कालस्य प्रथमत उपादानमग्रे जरासन्धवधात्। आदिशब्दस्त्रिष्वपि संवध्यते। तेन ससमूहास्ते त्रय एवोक्ता भवन्ति तामसादिगणाध्यक्षाः। अनीकैरिति सेनानां रोधे करणत्वम्। अनेन तज्जयस्य दुर्लभता वा सूचिता। तथाप्यजीघनत्। स्वयमिति। भिन्नतया स्वोद्योगे, नतु तदुद्योगे। स्वपुंसां मुचुकुन्दभी-

---

१. छान्दोग्ये 'प्राणः पिता प्राणो माता' इति निर्धारणादत्र सुतत्वम्। मथनं च जीवपर्यन्तम्। तस्य चाच्छेद्यत्वमपि शास्त्रसिद्धम्, अतोऽत्रोन्मथनेन जीवोद्धारोर्थादेव प्राप्यत इति तथेत्यर्थः प्र. २. वाशब्द एवकारार्थो वाक्यालङ्कारे प्र. ३. ननून्मथनस्य जीवपर्यन्तत्वमर्थादस्तु, उद्धारस्य न ततः प्राप्तिरित्याशङ्कायामाहुः—तदन्तरित्यादि। परोक्षवादत्वान्नात्र लक्षणादोषः प्र. ४. स्वस्य क्रूरतया, बाह्यान्तःपुरस्य पारक्यतया च. प्र. ५. स्कन्धार्थविचारेणाहुः—अनेनेत्यादि प्रकाशः ६ निश्चयात्मकवृत्तिकमन्तःकरणम् प्र. ७. यतः क. ख. घ. ङ. च. छ. ८. गान्धर्वेण भक्तपाणिग्रहणम्. ९. स्वरूपत इति पदं शरीरत इत्यादीनां विशेषणं ज्ञेयम्. प्र. १० यावत्फलसमापनं स्वरूपे सतीत्यर्थः प्रकाशः ११. पद्येन. प्र. १२. आनन्दजनकेन्द्रियप्रवृत्तिः प्र. १३. साङ्ख्यजीवाः प्र. १४. भोगेपि प्र. १५. ब्रह्मदेवताकमिन्द्रियम् प्र. १६. त्वक् प्र. १७. अत्र कालहा मुचुकुन्द इति संवत्सरात्मकः, मागधादिहन्तृषु रुद्रात्मकः पाण्डवेषु पालकात्मकः, सूर्यास्त्वग्रे यादवा स्फुटा एवेति प्र. १८. श्लोकाः प्र. १९. क्रोधलीलायाम्।

मप्रद्युम्नबलभद्रादीनां तेज आदिशत् । अनेन प्रतिष्ठार्थं तान्मारकत्वेनोपस्थापितवान् । ते[1] हि मार्ग[2]त्रयस्थाः लौकिका[3]दिप्रकारेण ब्राह्मणब्रह्मशिवप्रपन्ना भक्तकामनाविक्षेपका भवन्ति । तन्निवारको भगवान् त्रिमू[4]र्तिरपि त्रिविधकामनियन्ता ॥ १० ॥

## श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः ।

प्रभुरित्यत्र ! अयमहङ्कार इति । श्रीसत्यभामानिष्ठः सः सँस्कार्यत्वेन निरूपित इत्यर्थः । संस्कृतस्वरूपमाहुः—भगवदित्यादि । सँस्कारप्रकारं वदन्तः परिचारकमप्याहुः—अस्येत्यादि । तद्रूप इति । अहङ्कारदेवतारूपः ॥ ५ ॥ ❀ ❀ सुतं मृध इत्यत्र । कृते करणाभावादिति । कृते भौमहनने पुनरहननस्याभावादित्यर्थः । उक्तमिति । संस्कारकमुक्तम् । स्वयं कर्तृत्वाभिमानरूपम् । ननु वामनावतारपुत्रं भौमं कुतो हतवानित्यत आहुः—नरकेत्यादि । ग्रासस्य गिरणात्मकत्वान्मुखकार्यत्वाच्च प्रकृते तदभावेन कर्तृकरणकर्मणामनुपपत्तिमाशंक्याहुः—शून्यमित्यादि । तथा च गौण्या अभिप्रेतत्वान्नानुपपत्तिरित्यर्थः । उन्मथने शरीरस्य वाच्ये तस्य भौमविशेषणत्वमयुक्तमित्याशङ्क्य तत्तात्पर्यमाहुः—तच्छरीरमित्यादि । छान्दोग्ये "प्राणः पिता प्राणो माता" इति निर्धारणादत्र सुतत्वं मथनं च जीवपर्यन्तं तस्य चाच्छेद्यत्वमपि शास्त्रसिद्धम्; अतोऽत्रोन्मथनेन जीवोद्धारोऽर्थादेव प्राप्यत इति तदेत्यर्थः । वाशब्द एवकारार्थो वाक्यालङ्कारे । ननून्मथनस्य जीवपर्यन्तत्वमर्थादस्तु, उद्धारस्य न ततः प्राप्तिरित्याशङ्कायामाहुः—तदन्तरित्यादि । परोक्षवादत्वान्नात्र लक्षणादोपः । बहिर्विचारणे स्वार्थत्यागाभावाच्च । एवं व्याख्याने गुणान्तरमप्याहुः—अत एवेत्यादि । केनाप्यंशेनेति । स्वस्य क्रूरतया बाह्यान्तःपुरस्य पारक्यतया च । हनने दोषाभावस्य हेत्वन्तरमप्याहुः—ता इत्यादि । तथा च, यथा 'देवस्त्रियोऽसुरगृहे पिहिता अनाथाः' इत्यत्र । नृसिंहरूपेण तदर्थं हिरण्यकशिपुवधस्तथेत्यर्थः । बाह्यप्रवेशेऽपि हेतुमाहुः—सम्बन्ध इत्यादि । अतो न केनाप्यंशेन दोष इत्यर्थः ॥ ६ ॥ ❀ ❀ तत्राहृता इत्यत्र । हरिपदस्य विशेषणत्वं प्रकरणबलेन विशेष्यतया च भगवतः प्राप्तत्वाद्बोध्यम् । स्कन्धार्थविचारेणाहुः—अनेनेत्यादि । चित्तमिति । निश्चयात्मकवृत्तिकमन्तःकरणम् । एवमत्र संस्कार्यसंस्कारकयोः स्वरूपमुक्तं ज्ञेयम् ॥ ७ ॥ ❀ ❀ आसामित्यत्र । एवं ग्रहणमिति गान्धर्वेण भ[5]क्तपाणिग्रहणम् । इदमत्र संस्कार्यस्वरूपम् । संस्कारकस्तु स्वयमेव, न त्वयम् । नामसाम्येऽपि स्वरूपभेदादिति ॥ ८ ॥ ❀ ❀ तास्वित्यत्र । स्वरूपत इति पदं शरीरत इत्यादीनां विशेषणं ज्ञेयम् । यागवदिति । यावत्फलसमापनं स्वरूपसतीत्यर्थः । व्यापाराकाङ्क्षायामाहुः—भगवदिच्छयेत्यादि । स्कन्धार्थविचारेणाहुः—अनेनेत्यादि । अनेनेति पद्येन । इन्द्रियप्रवृत्तिरिति । आनन्दजनकेन्द्रियवृत्तिः । प्रवृत्तौ साङ्ख्यतुल्यत्वं स्फुटीकुर्वन्ति—ते हीत्यादि । ते इति साङ्ख्यजीवाः । तत्रापीति । भोगेऽपि । अत्र ह्यपत्यपदेनापगतित्याजकत्वस्य सङ्ख्यया च बाह्यत्वरूपतत्स्वरूपस्य बोधनादेतद्द्वयमुक्तम् । तेषां कदेवताकेन्द्रियकार्यत्वात्तद्वा तदिन्द्रियमपि विशेषाकारेणोक्तमित्यर्थः ॥ ९ ॥ ❀ ❀ कालेत्यत्र । लीलाक्रतिक्रमं विहाय करणक्रमेण यदत्र निरूपणम्, तस्य तात्पर्यमाहुः—कामेत्यादि । इन्द्रियमिति । कदेवताकमिन्द्रियम् । स्पर्श इति त्वक् । अत्रैवं प्रतिभाति । तास्वित्यत्रेन्द्रियं कामजनकमुक्तमपत्योत्पादनात् । आसामित्यत्र स्पर्शः, पाणिग्रहणात् । तत्राहृता इत्यत्र चक्षुः तद्दृष्ट्या भगवतोऽपि तासु दृष्टेः । समाहुता इत्यादित्रये श्रोत्रम्, सुतं मृध इति तु दृष्टेरेव शेष इति अत्र मनसोऽनु[6]क्त्या भगवतः साङ्ख्यवदास्थितिरुपपादिता । असक्तः साङ्ख्यमास्थित इति वक्ष्यमाणत्वात् । तथा सति तद्रक्षाऽपि असक्तत्वेनैवेति तद्रक्षका अपि बाह्या एव । जनकसमसङ्ख्याका युक्ता इत्याशयेनाहुः—रक्ष्यत इत्यादि । अत्र कालहा मुचुकुन्द इति तदाविष्टः संवत्सरात्मकः । मागधादिहन्तृषु रुद्रात्मकः । पाण्डवेषु पालकात्मकः । सूर्यास्त्वग्रे यादवाः स्फुटा एवेति । सङ्ख्यातात्पर्यमाहुः—कामेत्यादि । तथा च नाऽत्र स्वरूपेण गुणैश्च सप्तत्वं विवक्षितमित्यर्थः । लोभलीलायामपि न स्वरूपस्य कर्तृत्वेन प्रवेश इत्याहुः—षडित्यादि । त इति श्लोकाः । अत्र क्रोधलीलान्तिमस्यैवं संचिन्त्येति श्लोकस्य देहलीदीपवदुभयत्रोपकाराल्लोभेऽपि निवेशो बोध्यः । निवृत्तिः सप्तधा तत इति । ततः त्रिविधलीलोत्तरं तस्यैवं रममाणस्येति सप्तभिर्निवृत्तिरुक्ता । यतश्चतुर्धा लीला अत्रोक्ता, ततो हेतोरत्रैतन्मध्य एव चतुर्मूर्त्तेः प्रद्युम्नादेर्लीला निरूपिता । सा चानिरुद्धप्रद्युम्नवासुदेवसङ्कर्षणक्रमेणेति ज्ञापनायाहुः—वासुदेवादित्यादि । एवं सङ्ख्यादितात्पर्यमुक्त्वा व्याकुर्वते—तत्रेत्यादि । तत्रेति क्रोधलीलायाम् । ते हीत्यादि । कालमागधशाल्वादिमार्गत्रयस्थाः क्रमेण प्रवाहमर्यादापुष्टिस्थाः । तद्विशदयन्ति—लौकिकेत्यादि । कालो गर्गपुत्रत्वाल्लौकिकप्रकारेण ब्राह्मणप्रपन्नः, द्वितीयो मर्यादया वेदप्रपन्नः, तृतीयः पुष्ट्या शिवप्रपन्न इति तथेत्यर्थः । त्रिमूर्तिरपि त्रिविधकामनियन्तेति । मुचुकुन्दभीमप्रद्युम्नमूर्तिरपि सात्त्विकादीनां त्रयाणां कामपूरकः । तथा चात्र पूर्वोक्तेन्द्रियनियामिका देवता व्यासचरणैः स्कन्धार्थविचारेण बोधितेत्यर्थः ॥ १० ॥

---

१. कालमागधशाल्वाः प्र. २. क्रमेण प्रवाहमर्यादापुष्टिस्थाः प्र. ३. कालो गर्गपुत्रत्वाल्लौकिकप्रकारेण ब्राह्मणप्रपन्नः, द्वितीयो मर्यादया वेदप्रपन्नः, तृतीयः पुष्ट्या शिवप्रपन्न इति तथेत्यर्थः प्र. ४. मुचुकुन्द-भीमप्रद्युम्नमूर्तिरपि सात्त्विकादीनां त्रयाणां कामपूरकः, प्र. ५. भक्तिपाणिग्रहणम्, प्र. ६. अनुभक्त्या.

### श्रीगिरिधरकृता बालप्रबोधिनी

स्वयं प्रभुः आप्तकामत्वेन स्वतन्त्रोऽपि ग्राम्य इव स्त्रीपरतन्त्रग्रामजन इव प्रियायाः सत्यभामायाः प्रियं विधित्सुः कर्तुमिच्छुर्द्युतरुं पारिजातमाच्छेत् हृतवान्। स्वर्गिभागत्वेन तस्य दुर्लभत्वं सूचयन्नाह—यदर्थे इति। यस्य पारिजातस्यार्थे निमित्ते यद्विमोचनाय सगणो मरुद्गणसहितो वज्री वज्रधारी इन्द्रस्तं भगवन्तं प्रति आद्रवत् योद्धुमभिमुखमाजगाम। तत्र हेतुमाह—रुषा क्रोधेनान्ध इति। ननु नरकादिशत्रुवधपूर्वकादितिकुण्डलदानादिस्वकार्यसाधके परमेश्वरे तस्मिन् क्रोधोऽप्यनुचित एवेति चेत्तत्राह—क्रीडेति। नूनं निश्चितमेतत्, अयं वज्री वधूनां स्त्रीणां क्रीडामृगः क्रीडार्थं सम्पादितो मृगो वानर इव वशवर्तीत्यर्थः। कामान्धो विवेकहीनः स्त्रीप्रेरितः क्रोधेन योद्धुमागत इति भावः॥ ५॥ ❀ ❀ मृधे युद्धे वपुषा शरीरेण खमाकाशं ग्रसन्तमिव स्थितमतिमहान्तं सुनाभेन चक्रेण उन्मथितं खण्डितं मृतं स्वसुतं नरकं दृष्ट्वा धरित्र्या मात्रा भूम्या आमन्त्रितः प्रार्थितः सन् तस्य नरकस्य तनयाय भगदत्ताय शेषं स्वपरिगृहीतावशिष्टं कोशराज्यादिकं दत्त्वा तस्य नरकस्यान्तःपुरं आविवेश ॥ ६॥ ❀ ❀ तत्रान्तःपुरे कुजेन नरकेण आहृताः नरदेवानां राज्ञां कन्या आर्त्तानां बन्धुं हितकर्तारं हरिं दृष्ट्वा सद्यस्त-दैवोत्थाय प्रहर्षश्च व्रीडा च अनुरागश्च तैः प्रहिताः प्रेरिताः येऽवलोकास्तैः स्वामित्वेन जगृहुरित्यन्वयः ॥ ७॥ ❀ ❀ नानागारेषु प्रतियोषितं भिन्नतया कल्पितेषु गृहेषु स्वमायया स्वेच्छया स्वयमपि तत्तदनुरूपः बहुरूपः सन् सविधं विवाहोचित-प्रकारसहितं यथा स्यात्तथा एकस्मिन्नेव मुहूर्त्ते आसां स्वीकृतवतीनां योषितां पाणीन् जगृहे इत्यन्वयः ॥ ८॥ ❀ ❀ तासु गृहीतपाणिषु स्त्रीष्वेकैकस्यां भार्यायां सर्वशः रूपगुणस्वभावादिसर्वप्रकारेणात्मना तुल्यानि दशदशापत्यानि प्रकृतेर्विबुभूषया विविधभवनं विस्तारस्तदिच्छया अजनयत् उत्पादयामास ॥ ९॥ ❀ ❀ अनीकैः सैन्यैः पुरीं रुन्धतः कालयवनादीन् स्वयमजीघनत् घातितवान्, येन स्वपुंसां स्वभक्तानां भीमार्जुनादीनां दिव्यं स्वीयमेव तेजः आदिशत् दत्तवान्। तेषां सामर्थ्य-प्रदानेन तद्द्वारा स्वयमेव हतवानित्यर्थः। कालः कालयवनः। मागधो जरासन्धः॥ १०॥

### हिन्दी अनुवाद

भगवान् विषयी पुरुषोंकी-सी लीला करते हुए अपनी प्राणप्रिया सत्यभामाको प्रसन्न करनेकी इच्छासे उनके लिये स्वर्गसे कल्पवृक्ष उखाड़ लाये। उस समय इन्द्रने क्रोधसे अंधे होकर अपने सैनिकोंसहित उनपर आक्रमण कर दिया; क्योंकि वह निश्चय ही अपनी स्त्रियोंका क्रीडामृग बना हुआ है॥ ५॥ ❀ ❀ अपने विशाल डीलडौलसे आकाशको भी ढक देनेवाले अपने पुत्र भौमासुरको भगवान्‌के हाथसे मरा हुआ देखकर पृथ्वीने जब उनसे प्रार्थना की, तब उन्होंने भौमासुरके पुत्र भगदत्तको उसका बचा हुआ राज्य देकर उसके अन्तःपुरमें प्रवेश किया॥ ६॥ ❀ ❀ वहाँ भौमासुरद्वारा हरकर लायी हुई बहुत-सी राजकन्याएँ थीं। वे दीनबन्धु श्रीकृष्णचन्द्रको देखते ही खड़ी हो गयीं और सबने महान् हर्ष, लज्जा एवं प्रेमपूर्ण चितवनसे तत्काल ही भगवान्‌को पतिरूपमें वरण कर लिया॥ ७॥ ❀ ❀ तब भगवान्‌ने अपनी निजशक्ति योगमायासे उन ललनाओंके अनुरूप उतने ही रूप धारणकर उन सबका अलग-अलग महलोंमें एक ही मुहूर्तमें विधिवत् पाणिग्रहण किया॥ ८॥ ❀ ❀ अपनी लीलाका विस्तार करनेके लिये उन्होंने उनमेंसे प्रत्येकके गर्भसे सभी गुणोंमें अपने ही समान दस-दस पुत्र उत्पन्न किये॥ ९॥ ❀ ❀ जब कालयवन, जरासन्ध और शाल्वादिने अपनी सेनाओंसे मथुरा और द्वारकापुरीको घेरा था, तब भगवान्‌ने निजजनोंको अपनी अलौकिक शक्ति देकर उन्हें स्वयं मरवाया था॥ १०॥

**शम्बरं द्विविदं बाणं मुरं बल्वलमेव च। अन्यांश्च दन्तवक्त्रादीनवधीत्कांश्च घातयत्[1] ॥११॥**
**अथ ते भ्रातृपुत्राणां पक्षयोः पतितान्नृपान्। चचाल भूः कुरुक्षेत्रं येषामापततां बलैः ॥१२॥**
**सकर्णदुःशासनसौबलानां कुमन्त्रपाकेन हतश्रियायुषम्[2]।**
**सुयोधनं सानुचरं[3] शयानं भग्नोरुमूर्व्यां न ननन्द पश्यन् ॥१३॥**
**कियान् भुवोऽयं क्षपितोरुभारो यद्द्रोणभीष्मार्जुनभीममूलैः।**
**अष्टादशाक्षौहिणिको मदंशैरास्ते बलं दुर्विषहं यदूनाम् ॥१४॥**
**मिथो यदैषां भविता विवादो मध्वा[4]मदाताम्रविलोचनानाम्।**
**नैषां वधोपाय इयानतोऽन्यो मय्युद्यतेऽन्तर्दधते स्वयं स्म ॥१५॥**

---

१ प्रा. पा. घातयन्। २. प्रा. पा. श्रियाङ्गुषाम्। ३. प्रा. पा. सानुबलं। ४ प्रा. पा. मध्वामदार्ताम्बुजलोच०।

### श्रीधरस्वामिविरचिता भावार्थदीपिका।

शंबरद्विविदबल्वलानन्यानपि कांश्चित्प्रद्युम्नरामादिभिर्निमित्तमात्रैर्घातयद्घातयत्। घातयन्निति वा पाठः। दंतवक्त्रादीन् स्वयमवधीत्॥ ११॥ ❀ ❀ नृपानघातयदित्यनुषंगः। कथंभूतान्? कुरुक्षेत्रमापततां गच्छतां येषां बलैः सैन्यैर्भूः सर्वाऽपि चचाल चकंपे॥ १२॥ ❀ ❀ स कृष्णः। हता श्रीरायुश्च यस्य तम्। भग्नावूरू यस्य तम् उर्व्यां शयानं पश्यन्नपि न ननंद संतोषं न प्राप॥ १३॥ ❀ ❀ अनभिनंदनप्रकारमेवाह। कियानिति। द्रोणादिभिर्मूलैः कारणभूतैः। यदिति योऽष्टादशाक्षौहिणियुक्तः ह्रस्वत्वमार्षम्। क्षपितो य उरुभारो भुवः अयं कियानल्पल इत्यर्थः। यस्मान्मदंशैः प्रद्युम्नादिभिर्हेतुभूतैर्दुर्विषहं बलमास्ते॥ १४॥ ❀ ❀ न चात्रान्य उपायः प्रभवति। किंतु मधुना य आमदः सर्वतो मदस्तेनाताम्रविलोचनानामेष विवादो यदा भविष्यति तदेयानेवैषां वधोपायोऽन्यो नास्ति। एकात्मानोऽपि मय्युद्यते सति स्वयमेव विवादेनांतर्द्धीरन्नित्यर्थः॥ १५॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

आदिना विदूरथादिग्रहः प्रद्युम्नादिभिः शंबरादीनघातयत्। मुरादीन्स्वयमवधीदिति यथासंभवं योज्यम्॥ ११॥ ❀ ❀ अथ शंबरादिघातनानंतरं ते विदुरस्य भ्रात्रोः पांडुधृतराष्ट्रयोः पुत्राणां युधिष्ठिरदुर्योधनादीनां पक्षयोः पार्श्वग्रहयोर्बलयोस्सेनयोर्वा पतितान् प्राप्तान् "पक्षो मासार्द्धके पार्श्वग्रहे साध्यविरोधयोः। केशादेः परतो वृंदे बले सखिसहाययोः" इति मेदिनी॥ १२॥ १३॥ ❀ ❀ यद्वा उरु यथा भवति तथा क्षपितो भुवो भार इति योज्यम्। संधिरत्रार्षः। इत्यर्थ इति। तदपेक्षयाऽधिकस्य यदुसैन्यस्य विद्यमानत्वादिति भावः। मदंशैरिति द्रोणादेरपि विशेषणं तेषामपि भगवदंशाविष्टत्वात्। ननु भूभारस्तावद्व्यक्तिबाहुल्येन न स्यात्पर्वतसमुद्रादीनां प्राचुर्य्यात् किं त्वधार्मिकप्राचुर्य्येणैव ते चाधार्मिका भगवता संहृता एव। न च यदुकुलस्याधार्मिकत्वमिति वाच्यं भगवत्परिकररूपत्वात्। "ब्रह्मण्यानां वदान्यानां नित्यं वृद्धोपसेविनाम्। विप्रशापः कथमभूद् वृष्णीनां कृष्णचेतसाम्। शय्यासनाटनालापक्रीडास्नानाशनादिषु। न विदुः संतमात्मानं वृष्णयः कृष्णचेतसः" इत्याद्युक्तिभ्यश्च। अतोऽत्रोच्यते भारो हि द्विविधः दुःखरूपः सुखरूपश्च। आद्यो दुःसहो यथा ग्रीष्मर्त्तौ परिहितवस्त्रादेः। द्वितीयस्तु सुसह एव यथा युवत्याः स्वरमणस्य भारः। यथा च वत्सलतया मात्रांकीकृतस्वपोतस्य यथा च वणिजां स्वमूर्ध्न्यारोपितस्वधनस्य। किञ्चाल्पबलेन जनेन स्वस्मादतिबलः सुखकरोपि भारो वोढुं न शक्यते यथा परमधार्मिकस्य महाभागवतस्य तपोबलाधिक्यमाविष्कुर्वतो ध्रुवस्यापि भारः। पृथिव्याः तदुक्तं "यदैकपादेन स पार्थिवार्भकस्तस्थौ तदंगुष्ठनिपीडिता मही। ननाम तत्रार्द्धमिभेन्द्रधिष्ठिता तरीव सव्येतरतः पदे पदे" इति यदा च भगवतापि स्वबलमाविष्क्रियते तदा परमानंदरूपस्यापि भारो न वोढुं शक्यते यथा श्रीभीष्मस्तुतौ "धृतरथचरणोभ्ययाच्चलद्गुः।" इति। नृसिंहावतारेऽपि "प्रोत्सर्पेत क्ष्मा च यदाभिपीडितः" इति। अतोऽत्र यद्यपि यदुकुलस्य भारः पृथिव्या भारत्वेन न मन्यते। यथा सुकुमार्यापि स्त्रिया बहुस्वर्णरत्नाद्याभरणभारस्तदपि प्रेमवता तत्कांतेन तदंगेभ्यः कश्चन कश्चनोत्सवादागंतुक एवाभरणभारो निष्कास्यते स्थाप्यते च सर्वदोपयोगी तथैवांशावतरणसमये नित्यपरिकररूपेषु यादवादिषु ये देवादयोंशाः प्रविष्टास्त एव द्वारकातो निष्क्रमय्य प्रभासे नीत्वोपसंहृता इति सर्वमनवद्यम्। दुर्विषहमन्यैः सोढुमशक्यम्॥ १४॥ ❀ ❀ अत्र यदुकुलनाशे आताम्राणि सर्वतो रक्तानि विलोचनानि येषां तेषाम् अतो विवादात् इत्यर्थ इति। इमान्मयि संजिहीर्षौ सति मन्मायामोहपतिमद्यजविवादेनांतर्धास्यंत एवेति भावः। इयानेतावान्॥ १५॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनीव्याख्या

घातयदित्यत्राडागमाभाव आर्षः। धातयन्निति शत्रन्तो वा पाठः शम्बरमिति युग्मकम्॥ ११॥ ❀ ❀ हता श्रीः आयुश्च यस्येति समासाभिप्रायाद्धतश्रियायुषमित्येकं पदम्। व्याडिगालवमते यकारस्य वैकल्पिकत्वात्॥ १२॥ ❀ ❀ यदूनां दुर्विषहं बलमित्यत्र तत्सैन्यस्य ब्रह्मण्यानां वदान्यानां नित्यं वृद्धोपसेविनामित्यादिवचनैः परमधार्मिकत्वेऽपि दुर्विषहत्वं श्रीकृष्णवियोगेन क्षुभितैर्विलुण्ठद्भिस्तैः परार्द्धैः पीडिता पृथिवी नश्येदित्यभिप्रायादेव॥ १३॥ ❀ ❀ अतएव न चात्रान्य उपाय इत्यादिव्याख्यानं अत्र—यदुकुलसंहरणे वधोपायस्तुल्यः पृथिवीत्याजनोपायः विवादेन मायिकेनांतर्द्धीरन् न तु नाशं प्राप्यस्यन्तीत्यर्थः॥ १४॥ ❀ ❀ स्थाप्येत्यार्षं स्थापयित्वेत्यर्थः॥ १५॥

### श्रीमद्वीरराघवव्याख्या

एतदेवाह शंबरद्विविदबल्वलानन्यानपि कांश्चिद्रामप्रद्युम्नादिभिर्घातयत् अडभाव आर्षः घातितवान् घातयन्निति वा पाठः दंतवक्त्रादीन्स्वयमेवावधीत्॥ ११॥ ❀ ❀ अथेति ते तव भ्रात्रोः पांडुधृतराष्ट्रयोर्ये पुत्रा युधिष्ठिरादयो दुर्योधनादयश्च त्वेषां पक्षयोः पतितान्प्राप्तान्नृपानघातयदित्यनुषज्जते। कथंभूतान्नृपान्? येषां कुरुक्षेत्रं प्रत्यापततां नृपाणां बलैः सैन्यैर्भूः सर्वापि भूमिश्चचाल चलितवती॥ १२॥ ❀ ❀ एवं स्वयं निहत्य घातयित्वा च स्वकुलं संजिहीर्षुस्त्वद्भ्रातृपुत्रतत्पक्षपातिनां च वधेन भुवो भारः क्षपित इति स भगवान् कर्णादीनां कुत्सितमंत्रपाकेन स्वानिष्टावहालोचनेन फलेन हता

श्रीः सम्पदायुश्च यस्य तं भग्नोरुम् उर्व्यां भूम्यां शयानं सानुचरं दुर्योधनं पश्यन्नपि न ननंद न तोषं प्राप ॥ १३ ॥ ❀ ❀ असंतोषहेतुं वदँस्तत्प्रकारमेवाह कियानिति । मदंशैर्मच्छरीरभूतैर्द्रोणभीष्मार्जुनभीमाः मूलमादिर्येषां तैः मदंशैर्भीमार्जुनादिभिरष्टादशाक्षौहिणीसंख्यायुक्तः क्षपितः निरस्तः स साचावुरुभारश्च क्षपितोरुभारोऽयं कियानत्यल्प इत्यर्थः । भीष्मादिद्वारानया भूभारो निःशेषो नावतारितः कुतः यद्यस्मात्तद्दुर्विषह सोढुमशक्यं यदूनां बलमास्ते तिष्ठति ॥ १४ ॥ ❀ ❀ एवमभिनंद्य स्वकुलसंहृतौ उपायं संचिंतितवानित्याह मिथ इति माध्व्याः सुरायाः मदादाताम्राणि विलोचनानि येषां तेषां एषां यदूनां यथा विप्रशापपरिजिहीर्षया प्रभासतीर्थगमनानंतरं विवादो भविता तदियानेव एषां वधोपायः नान्योऽस्ति कोऽसावित्यत आह—मयि सर्वान्तरात्मनि सर्वसंहर्त्तरि मयि उद्यते मल्लोकं गतुमुद्युक्ते सति स्वयमेवैते विवादेनांतर्द्धीरन्नक्ष्यन्ति स्मेति ॥ १५ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

एतदेव किंचिद्विवेचयति शंवरमिति । शंवरद्विविदौ प्रद्युम्नवलभद्राभ्यामघातयत् मुरादीन्स्वयमेवावधीदिति विवेकः ॥ ११ ॥ ❀ ❀ अथ दंतवक्त्रवधानंतरं ते तव भ्रातृपुत्राणां कुरूणां पांडवानां च कुरुक्षेत्रे प्रत्यापततां येषां नृपाणाम् ॥ १२ ॥ ❀ ❀ श्रीकृष्णस्य दुर्योधनपातेन भीमे प्रसादातिशयमाह सकर्णेति । स कृष्णः सुयोधनं भग्नोरुमुर्व्यां शयानं पश्यन्ननंद भीमायेति शेष इत्यन्वयः । अनुचरैर्दुःशासनादिभिः शृगालादिभिर्वा सह वर्तत इति सानुचरं तं हते नष्टे श्रीश्चायुश्च यस्य स तथा तम् ॥ १३ ॥ ❀ ❀ कलियुगे सज्जनप्राचुर्यावस्थानस्य दुष्टभारस्यैवानभीष्टत्वात्सोपि संहार्य इति यादवबलसंहरणोपायसंचिंतनप्रकारमाह । कियानिति । मत्सन्निधानविशेषयुक्तत्वान्मदंशैर्द्रोणभीष्मार्जुनभीमशल्यैः क्षपितोऽष्टादशाक्षौहिणीको भुवो यद्योयं भारः स कियानल्प एव । कुतः सुरासुरैर्दुर्विषहं यदूनां बलमास्त इति यस्मात्तस्मादित्यन्वयः ॥ १४ ॥ ❀ ❀ तत्रैषां यदूनां वधोपाय इयानेतावानेव यदा माध्व्या वारुण्याः पानादुत्पन्नान्मदाद्भ्रष्टबुद्धीनां ताम्रलोचनानां रक्तनेत्राणां रजोगुणोपरक्तज्ञानानां वा यदूनां मिथो विवादो भविता तदा स एव वधोपायो भविष्यत्यतोऽन्यो नास्ति तदर्थं किं कर्तव्यमिति न चिन्तनीयमित्याह मयीति । मय्युद्यते सति स्वयं सर्वेन्तर्दधते तिरोधानलक्षणं मरणं प्राप्नुवन्ति स्म स्मृतमित्यर्थः ॥ १५ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः ।

शम्बरमिति युग्मकम् । शम्बरादीनघातयत् वाणादीनवधीदिति यथायथं योज्यम् ॥ ११ ॥ ❀ ❀ पतितानिति स्वयं पृथ्वीभारभूतत्वेन कांश्चित् तत्पक्षगामित्वेन च कांश्चिद्रक्षणीयेभ्यश्च्युतानित्यर्थः ॥ १२ ॥ १३ ॥ ❀ ❀ आस्ते बलमित्यस्यायं भावः । भूभारस्तावद्व्यक्तिबाहुल्येन न स्यात् पर्वतसमुद्रादीनां तत्र प्राचुर्यात् । किन्त्वधार्मिकप्राचुर्येणैव तत्र भारः स्यात् । तत्रास्तां तावत्प्रद्युम्नादिमदंशानां यदुमात्राणां परमधार्मिकत्वमेवोक्तम् । ब्रह्मण्यानां वदान्यानां नित्यं वृद्धोपसेविनाम् । विप्रशापः कथमभूद्वृष्णीनां कृष्णचेतसामित्यादौ । शय्यासनाटनालापक्रीडास्नानाशनादिषु । न विदुः सन्तमात्मानं वृष्णयः कृष्णचेतस इत्यादौ तस्माद् यदत्र दुर्विषहत्वेन भारत्वमुच्यते तत् खलु तांस्त्यक्त्वा केवलस्य ममान्तर्धाने तेषां मद्वियोगेन पीडार्तानां परार्द्धसंख्यानां सञ्जातपृथिवीयं पीडिता स्यादितीत्येव गम्यते ॥ १४ ॥ ❀ ❀

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

अथ तदनन्तरं कांश्च नृपान् घातयदित्यडागमाभाव आर्षः । घातयन्निति पाठे बभूवेति शेषः ॥ ११ ॥ ❀ ❀ कांश्च कीदृशान् ते तव भ्रातृपुत्राणां युधिष्ठिरादीनां दुर्योधनादीनाञ्च पक्षयोः पतितान् प्राप्तान् कुरुक्षेत्रमापततामागच्छतां येषां बलैः सैन्यैः भूः सर्वापि चचाल चकम्पे ॥ १२ ॥ ❀ ❀ स कृष्णः पश्यन्नपि न ननन्द ॥ १३ ॥ ❀ ❀ तत्र हेतुः कियानिति यतो द्रोणादिभिर्मूलैः कारणभूतैरष्टादशाक्षौहिणीभरः भुवो भारः उरु यथा स्यात्तथा क्षपितः अयं कियान् अत्यल्प इत्यर्थः । सन्धिरार्षः । समासव्याख्यायां विश्रेयांशाविमर्शः सोढव्यः । यस्मान्मदंशैः प्रद्युम्नादिभिर्हेतुभूतैर्दुर्विषहं बलमास्ते । ननु भूभारस्तावद्व्यक्तिबाहुल्येन न स्यात् पर्वतसमुद्रादीनां तत्र प्राचुर्यात् किन्त्वधार्मिकप्राचुर्येणैव ते चाधार्मिका भगवता संहृता एव । न यदुकुलस्याधार्मिकत्वं वाच्यं भगवत्परिकररूपत्वात् । ब्रह्मण्यानां वदान्यानां नित्यं वृद्धोपसेविनाम् । विप्रशापः कथमभूद्वृष्णीनां कृष्णचेतसाम् ॥ शय्यासनाटनालापक्रीडास्नानाशनादिषु । न विदुः सन्तमात्मानं वृष्णयः कृष्णचेतस इत्याद्युक्तिभ्यश्च अत्रोच्यते भारो हि द्विविधो भवति दुःखरूपः सुखरूपश्च प्रथमो दुःसहः द्वितीयस्तु सुवह एव यथा युवत्याः स्वरमणस्य भारः यथा चावलया मात्रा स्वपोतस्य क्रोडे कृतस्य भारः यथा च वणिजा शिरसि धृतस्य स्वधनस्य भारः किञ्चाल्पबलेन जनेन स्वस्मादतिबहुलः सुखरूपोऽपि भारो वोढुं न शक्यते यथा परमधार्मिकस्य महाभागवतस्य तपोबलाधिक्यमाविष्कुर्वतो ध्रुवस्यापि भारः पृथिव्याः ॥ यदुक्तं 'यदैकपादेन सपार्थिवार्भकस्तस्थौ तदंगुष्ठनिपीडिता मही । ननाम तत्रार्द्धमिभेन्द्रधिष्ठिता तरीव सव्येतरतः पदे पदे ॥' इति यदा च भगवतापि स्वबलमाविष्क्रियते तदा तस्य परमानन्दरूपस्यापि भारो न वोढुं शक्यते यथा भीष्मस्तुतौ धृतरथचरणोऽभ्ययाच्चलद्गुरिति नृसिंहाविर्भावे च प्रोत्सर्पतः क्ष्मा च पदाभिपीडितेति । अतोऽत्र यद्यपि यदुकुलस्य भारः पृथिव्या भारत्वेन नाभिमन्यते यथा

सुकुमार्यापि स्त्रिया बहुस्वर्णरत्नाद्याभरणभारस्तदपि प्रेमवता तत्कान्तेन तदंगेभ्यः कश्चन कश्चनोत्सवादावागन्तुक एवाभरणभारो निष्कास्यते स्थाप्यते च सर्वदोपयोगी तथैव अंशावतरणसमये नित्यपरिकररूपेषु यादवादिषु ये देवादयोंऽशाः प्रविष्टास्त एव द्वारकातो निष्क्रमय्य प्रभास उपसंहृताः ॥ १४ ॥ ❀ ❀ तत्रान्येषामिव नैषां संहारः सम्भवति किन्तु प्रकारान्तरेणैवेति स्वगतमाह मिथ इति । मधुना य आ सम्यङ्मदस्तेनाताम्रनेत्राणां विवादस्तदापि एषां वधरूप उपायो न भवति । किन्तु अतो वधात् अन्य एव इयान् वधसदृशो नतु वध इत्यर्थः । तेन लोका वस्तुतस्त्ववश्यं वधमेव परस्परवधं द्रक्ष्यन्तीत्यर्थः । वास्तवं वस्तुतस्तु स्पष्टमाह मयि उद्यते इमानुपसञ्जिहीर्षौ सति स्वयमेव इमे अन्तर्दधते अन्तर्द्धास्यन्ते स्मेति निश्चये ॥ १५ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

शंबरादीन् प्रद्युम्नादिभिः घातयत् अडभाव आर्षः । तत्र कांश्चित्स्वयमवधीत् तत्र बाणवधस्तद्भुजनिकृंतनमात्रम् ॥ ११ ॥ नृपान् अघातयदिति पूर्वेणैव सम्बन्धः ॥ १२ ॥ ❀ ❀ सः श्रीकृष्णः न ननंद संतोषं न प्राप ॥ १३ ॥ ❀ ❀ असंतोषे हेतुमाह क्रियानिति मदंशैर्मत्प्रेरितैर्द्रोणादिभिः मूलैः कारणभूतैः अष्टादशाक्षौहिणिकः ह्रस्वत्वमार्षम् अष्टादशक्षौहिणीयुक्तः क्षपितो निरस्तश्चासावुरुभारश्च भुवोऽयं कियान् अत्यल्प इत्यर्थः । यत् यस्मात् दुर्विषहं सोढुमशक्यं यदूनां बलमास्ते यादवा भूभारभूता न किंतु तेषु भुवि वर्तमानेषु तन्निमित्ततः पुनर्यतस्ततो दैत्यादिभिर्भूभारो भविष्यतीति भावः ॥ १४ ॥ ❀ ❀ तत्रोपायमाह मिथ इति । मधुना य आ सर्वतो मदस्तेन आताम्रविलोचनानामेषां यदा मिथो विवादो भविता भविष्यति तदा इयानेवैषां वधोपायः अतोऽन्यो न विद्यते तत्समयमाह मयि उद्यते परमं धाम गंतुं प्रवृत्ते सति स्वयमेवैते मिथो विवादे न अंतर्दधते अंतर्दधीरन्नित्यर्थः ॥ १५ ॥ १६ ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनीव्याख्या

एवमुद्यतान् त्रिविधान् हत्वा स्वतोऽनुद्यतान् अन्यद्द्वारैव कांश्चिन्मारितवानित्याह—शम्बरमिति । शम्बरः प्रद्युम्नेन मारितः । द्विविदो बलेन । बाणः छिन्नभुजो भगवतैव कृतः । बल्वलोऽपि बलेनैव । दन्तवक्त्रादयो भगवतैव । आदिशब्देन विदूरथादयस्तत्पक्षपातिनः । एतान् कांश्चित् घातयन् कांश्चिदवधीत् । हस्ता[१]वुक्तौ । भगवदीयैर्भगवत्कर्तव्यं भगवदाज्ञया कर्तव्यमिति॥११॥ एवं दोषनिर्हारार्थमुद्यतानतनुद्यतांश्च दैत्यान् हत्वा शस्त्रसंन्यासं विधाय भूमिभारं निराकृतवानित्याह—अथेति द्वाभ्याम्—भक्तानामेव यद्दुःखं दोषरूपं न्यवारयत्[२] । भूमेस्तु देहजो[३] भारो न शस्त्रेण निवार्यते ॥ १ ॥ उत्तारितस्तु भूमारः कण्डूयां जनयेद्ध्रुवम् । ततस्तस्यातिवृत्त्यर्थं नखरूपैर्हि पाण्डवैः ॥ २ ॥ प्रयत्नप्रेरितैर्बाह्यां स्वयमेव न्यवारयत् । अन्तरन्यां[४] च तामेव पूर्वस्पर्शसमुद्भवाम् । कृमिकन्टकरूपां[५] तां तन्नाशेना[६]ऽवधीत्पुनः ॥ ३ ॥ अथेति प्रक्रमान्तरे सारथ्यभावेन । ते भ्रातृपुत्राणां पाण्डवानां दुर्योधनादीनां च पक्षयोः सहाययोः पतितान् धर्ममनपेक्ष्य स्नेहाग्रहभावेन पतितान् घातयन्निति पूर्वेण सम्बन्धः । तेषामाधिक्यमाह—चचालेति । कुरुक्षेत्ररूपा भूः । धर्मक्षेत्रे हि तेऽधर्मभावं प्रापिताः । चलनमधर्मात् ते सर्वेह्यधर्मैकनिष्ठा ज्ञातिघातिनः । अत एव येषां बलैर्भूश्चचालेति । देवेन्द्रकार्यं कृतवानित्यर्थः ॥ १२ ॥ ❀ ❀ किञ्च । अप्रधानवधमुक्त्वा प्रधानवधमाह—सकर्णदुःशासनेति । ननु जीवनादृष्टे विद्यमाने कथं सर्वे संभूय मृताः । नह्येकमदृष्टं सर्वेषामित्याशङ्क्य दुर्योधनपक्षपातेनैव सर्वेषामायुः क्षीणमित्याह—सकर्णो दुर्योधनः कर्णसहितः । दुःशासनो भ्राता । सौबलिः शकुनिर्मातुलः । एते चत्वारो दुष्टा; एतेषां कुमन्त्रस्य यः परिपाकस्तत्कुमन्त्रे ये स्थिताः, तेषां श्रीः, आयुश्च पाकेनैव हतमित्याह—हतेति हता श्रीरायुश्च येषामिति । येषामिति[७] विशेषणम् । दुर्योधनमपि हतवानिति संबन्धः । अनुचरसहितो भग्नोरुः शयानः पश्यति कर्म[८] । एवं सर्वं कार्यं कृत्वापि भारनिवृत्तये समागतो निवर्तकैर्भारं जनयन् पूर्वभारं दूरीकृत्यापि न ननन्द सन्तोषं न कृतवान् । स्पर्शरूपता निरूपिता । भगवदीयानां स्पर्शनेन्द्रियं ज्ञानहेतुरेव न सुखहेतुरिति ॥ १३ ॥ ❀ ❀ द्वितीयं भारं दूरीकर्तुमनन्दनमेवाऽऽह—कियानिति । क्षुद्रनिराकरणार्थं क्षुद्रग्रामे यदि महाराजः समायाति तदा तत्सेनयैव ग्रामो नश्यति । तत्रत्यः क्षुद्रस्त्वल्पमेव नाशयति, सैनिकास्तु सर्वमिति न्यायेनाऽऽह—भुवः कियान् वा भारो मया क्षपितः मदंशैः करणैर्दूरीकृतः । तानंशानाह—यद्द्रोणभीष्मार्जुनभीममूलैरिति । द्वयं द्वयमुभयत्र । तेषां मूलभूतैः स्वतेजोभिरेव । एवं चतुर्विधैरपि तेजोभिश्चतुरङ्गसेनारूपोऽष्टादशक्षौहिणिकस्तावदक्षौहिणीभिर्जातो भारो यस्मात् दूरीकृतस्ततोऽप्यधिको भारोऽस्तीत्याह—आस्ते बलमिति । अधिकत्वे हेतुः—दुर्विषहमिति केनापि सोढुमशक्यम् । दुर्विषहत्वे हेतुः—मदंशैरिति । सर्वस्यापि भगवदंशत्वेऽपि यदूनां संबन्धिभिर्मदंशैरिति भक्तपक्षपातादनिवार्यत्वं निरूपितम् ।

---

१. संस्कार्य्यौ हस्तौ. प्र. २ स्वोद्यमेन न्यवारयत्. प्रकाशः. ३ राजादिदेहजः. प्र. ४ 'कियान्...' इत्यादिश्लोकेषु चिन्तिताम्. प्र. ५ कीटक. ग. ङ. छ. ६ यदुकुलनाशेन. प्र. ७ पूर्वश्लोकोक्तं 'येष.म्...' इत्यादिकं दुर्योधनादीनां विशेषणमित्यर्थः. प्र. ८ पश्यतेः कर्म. प्र. ९ 'क्षपित इति भिन्नं पदम् , तत्र सोढुक्. प्र. १० अक्षौहिणीपदे ह्रस्वत्वमार्षम्. प्र.

वायुरत्र वलाधिष्ठाता भगवत्संवन्धिनीमेव स्पर्शबुद्धिं जनयति तत्र[1] सुखं पूर्णम्, न तेन परिच्छिन्नेन ग्रहीतुं शक्यत इति परिच्छिन्नतुल्यतया ज्ञानं न भगवदभिप्रेतमिति स्पर्शदेवतानिर्णयः[2] ॥ १४ ॥ ❀ ❀ तस्याऽपि भारस्य निवृत्त्युपायमाह—मिथो यदेषामिति । यत्[3] यदा[4] एषां यादवानां मिथो विवादो भविता । सोऽपि विवादो विवेकरहितो मौढ्यान्नाशपर्यवसायी जात इत्यभिप्रायेणाऽऽह—माध्व्या मदाताम्रविलोचनानामिति । माध्वी मदिरा वहुपानसिद्ध्यर्थं मधुररसां तामुक्तवान् । तया यो मदः गर्वो देहविवेकादिविस्मरणात्मकः । तेन आताम्राणि विलोचनानि येषाम् । नन्वन्योन्यघातेन मदिरया निषिद्धमरणेन च भ(ग)वत्सहायार्थमागतानां भ(ग)वदीयानामयुक्ततेत्याशङ्क्य प्रकारान्तराभावादेवं क्रियत इति आह—नैषां वधोपाय इयानतोऽन्य इति । एषामियानेव वधोपायो नत्वन्यः । तत्र हेतुमाह—मय्युद्यत इति । अन्यस्तूपायः सांशे मय्युद्यते स्वयमेवान्तर्दधते । न हि सूर्याणां निराकरणं तमसा भवति । तुल्यत्वाच्च नैकेन । स्मेति प्रसिद्धे । यदा यदा यादवनाशार्थं मागधादयः प्रवृत्ताः, तदाऽहमुद्यतस्तान् हन्तुम् । तदा मयि उद्यते, अन्ये उपाया अन्तर्दधते । ननुकेयं भगवतो लीला यत्स्वकीयान् सेवकान् स्वसङ्गे समागतान् अनन्यशरणान् स्वयमेवमन्यायेन नष्टान् करोतीति । उच्यते, सर्गार्थमेवमिति । स्वात्मना सह च तुल्यता, अतो नात्यन्तभक्तिविरोधः । स्वतस्तेषामाविर्भावसामर्थ्याभावात् माययैव आविर्भावतिरोभावौ । खेदाभावाय तथावस्था । उत्पत्तिलीलार्थमिति न लीलाविरोधः । यथाऽस्य सर्गहेतुत्वं तथाऽग्रे वक्ष्यते । न च तेषां दुर्गतिः । मुक्तावेतदर्थमेवोक्तत्वात् सर्गादौ मुक्त्यन्ते चोक्तत्वात् । सर्वत्र तान् विना नाश्रयो निरूपयितुं शक्य इति सूचितम् । तस्मात्स्वाविर्भावे तेषामाविर्भावं कारयन्, स्वतिरोभावे च तांस्तिरोभावयन् स्वसमानान् करोतीति न भक्तेषु कापि तिरस्कारलीला । एवंविसर्गो[5] निरूपितः ॥ १५ ॥

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

स्कन्धार्थविचारेणाहुः—हस्ताविति । संस्कार्यौ । हस्तौ । प्रकारमाहुः—भगवदीयैरित्यादि ॥ ११ ॥ ❀ ❀ अथेत्यत्र । भिन्नप्रक्रमकथनतात्पर्यमाहुः—सार्धभिस्तिसृभिर्भक्तानामित्यादिभिः । अत्रार्द्धेन पूर्वाऽनुवादः । न्यवारयति । स्वोद्यमेन न्यवारयत् । देहज इति । राजादिदेहजः । शस्त्रेणानिवारणे हेतुमाहुः—उत्तरित इत्यादि । जरासन्धानीतद्विचत्वारिंशदधिकचतुःशताक्षौहिणीनां म्लेच्छकोटित्रयस्यान्येषां च दुष्टानां मथुरासमीपे हननेन शाल्वादीनां द्वारकासमीपे हननेन पौण्ड्रकादीनां तत्र हननेन चोत्तारित इति स्वयमेव न्यवारयदित्यर्थः—अन्तरन्यामिति । क्रियानित्यादिश्लोकेषु चिन्तितम् । तन्नाशेनेति । यदुकुलनाशेन । तथा चैवं भावबोधनार्थं भिन्नप्रक्रम इत्यर्थः । स्कन्धार्थविचारेणाहुः—देवेन्द्रेत्यादि । तथा च सारथिरूपेणानया लीलया स्मरणादिव्यापारेण हस्तदेवतासँस्कृतेत्यर्थः ॥ १२ ॥ ❀ ❀ सकर्णेत्यत्र । येषामिति विशेषणमिति । पूर्वश्लोकोक्तं येषामित्यादिकं दुर्योधनादीनां विशेषणमित्यर्थः । पश्यतिकर्मेति । पश्यतेः कर्म । स्कन्धार्थविचारेणाहुः—स्पर्शरूपतेत्यादि । त्वगिन्द्रियकार्यकर्तृत्वेन तद्रूपत्वं भगवतो निरूपितमित्यर्थः । सँस्कृतस्य त्वगिन्द्रियस्य कार्यमाहुः—भगवदीयानामित्यादि ॥ १३ ॥ ❀ ❀ क्रियानित्यत्र । मूले क्षपित इति भिन्नं पदम् । तत्र सोर्लुक् । अक्षौहिणीपदे ह्रस्वमार्षम् । स्कन्धार्थविचारेणाहुः—वायुरित्यादि । अत्र यादवेषु दुर्विषह्बलाधिष्ठाता वायुरन्यानसमानो भगवत्सम्बधिनीमेव स्पर्शबुद्धिं जनयति । तथा च भगवति संनतिं जनयत् इतरासह्यवलप्रयोजकं रूपमत्र स्पर्शदेवतेत्यर्थः । तर्हि कुतस्तस्यानन्दनहेतुत्वमित्यत आहुः—तत्रेत्यादि । तत्रेति । भगवति । स्पर्शदेवतानिर्णय इति । तस्याः सुखाजनकत्वनिर्णयः । तथा च तादृशं रूपं भगवत्सुखे परिच्छिन्नतुल्यता ज्ञानं यदा न जनयति, तदैवाधिकारिनिष्ठस्पर्शदेवतासँस्कारार्थकं तथा श्रीमदुद्धवे, इतरथा तु न तत्संस्कारकमित्येष निर्णय इत्यर्थः ॥ १४ ॥ ❀ ❀ मिथ इत्यत्र । एकवचनपक्षे दधत इति दधधारण इत्यस्य रूपम् । उपायान्तराभावे हेतुं व्युत्पादयन्ति—नहीत्यादि । अस्यां लीलायां भक्तक्लेशदर्शनादक्लिष्टकर्मत्वं न स्यादित्याशङ्कते—नन्वीत्यादि । समादधते—सर्गार्थमेवेति । अन्यथारूपत्यागेन स्वरूपापत्तिरपि सर्गविशेष एव । कारणं संभूतिरूपत्वात् जीवस्य हेतुत्वात् । अतस्तदर्थमित्यर्थः । ननु हेतुत्वदशायां तस्याविद्याकर्मसाहित्यमायास्यतीति चेन्नेत्याहुः—स्वात्मनेत्यादि । तथा च मुक्तित्वेन भूरितया तुल्यताभिप्रेयत इति स्वात्मवद्धेतुतेति न स इह दोष इत्यर्थः । अतो नेति । आपाततः प्रतीयमानोऽपि फलतो नेष्टकर्मत्वमित्यर्थः । ननु मुक्तत्वे तुल्यत्वम् । नत्विदानीमिति स्वरूपतस्तु भक्तिविरोधो नापैतीत्यत आहुः—स्वत इत्यादि । स्वतो सामर्थ्यं सूर्यकिरणवज्ज्ञेयम् । तथा चेदानीमप्यंशत्वात्कर्मत्वजन्योत्पत्तिनाशाभावाच्च तुल्यतेत्यर्थः । अत एव 'न कर्म बन्धनं जन्म वैष्णवानां च विद्यते' इत्यादीनि पाद्मादिवाक्यानि । ननु यद्येवम्, तदा कथमयं प्रकार इत्यतस्तिरोभावप्रकारस्य तात्पर्यमाहुः—खेदाभावायेत्यादि । युद्धे तदर्थं तथेत्यर्थः । एतेन सिद्धमर्थान्तिन्तरमाहुः—सर्गादावित्यादि । तथा च सर्वासु लीलासु तत्साहित्यमित्यर्थः । सिद्धमाहुः—तस्मादित्यादि । तथा चापाततः क्लिष्टत्वभानम्, न तु वस्तुतः क्लेश इति

---

१ भगवति. प्रकाशः. २ तस्याः सुखाजनकत्वनिर्णयः. प्र. ३ एतन्नास्ति, क. ग. घ. ४ एतन्नास्ति. ङ. ५ विसर्गपदं करणव्युत्पन्नम् । तथा च स्मृतमेतद्द्रूपमनेन व्यापारेण विसर्जनकेन्द्रियसंस्कारकमुक्तमित्यर्थः. प्र. ।

न स्वरूपतोऽपि विरोध इत्यर्थः । एवं दोषं परिहृत्य स्कन्धार्थविचारेणाऽस्यार्थमाहुः—एवमित्यादि । विसर्गपदं करणव्युत्पन्नम् । तथा च स्मृतमेतद्रूपमनेन व्यापारेण विसर्गजनकेन्द्रियसंस्कारकमुक्तमित्यर्थः ॥ १५ ॥

### श्रीगिरिधरकृता बालप्रबोधिनी

शम्बरद्विविदबल्वलादीन् अन्यानपि कांश्चिन् प्रद्युम्नरामादिभिर्घातयत्—अडभाव आर्षः—घातितवान् । दन्तवक्त्रादीन् स्वयमेवावधीत् ॥ ११ ॥ ❀ ❀ अथानन्तरं ते तव भ्रात्रोः पाण्डुधृतराष्ट्रयोर्ये पुत्रा युधिष्ठिरदुर्योधनादयस्तेषां पक्षयोः पतितान् प्राप्तान् नृपान् अघातयदित्यनुषज्जते । तेषां हननमपि तत्साहाय्यं विना दुर्घटमेवेत्याशयेन विशिनष्टि—चचालेति । येषां कुरुक्षेत्रं आपवतामागच्छतां बलैः सैन्यैः सर्वा भूश्चचाल चकम्पे ॥१२॥ ❀ ❀ स एवं कृतदुष्टसंहारोऽपि भगवान् कर्णादीनां कुमन्त्रपाकेन कुत्सितमन्त्रेणाचरितपापेन हृताः श्रीः सम्पदायुश्च अस्य तं अतएव भग्नावुरू यस्य तं सानुचरं उर्व्यां भूम्यां शयानं सुयोधनं पश्यन्नपि न ननन्द सन्तोषं न प्राप ॥ १३ ॥ ❀ ❀ भगवदसन्तोषप्रकारमेव दर्शयति—कियानिति । द्रोणादिभिर्मूलैः कारणभूतैः यत् योऽष्टादशाक्षौहिणीसङ्ख्यायुक्तो भुवः लोकदृष्ट्या क्षपितो निरस्त उरुर्महान् भारः सोऽयं कियान् ? अत्यल्प इत्यर्थः । अक्षौहिणिक इति ह्रस्वत्वमार्षम् । यस्मान्मदंशैः प्रद्युम्नादिभिर्हेतुभूतैर्दुर्विषहं भूम्याः सोढुमशक्यं यदूनां बलं सैन्यमास्ते तिष्ठति ॥ १४ ॥ ❀ ❀ एवमनभिनन्द्य स्वकुलसंहृतावुपायं सञ्चिन्तितवांस्तदाह—मिथ इति । माध्व्या सुरया मदाताम्राणि सर्वतो रक्तवर्णानि विलोचनानि नेत्राणि येषां तेषामेषां यदूनां यदा मिथः परस्परं विवादो भविता तदैव नाशो भविता अत इयान् परस्परविवाद एवैषां वधोपायः, अतोऽन्य उपायो नास्तीत्यन्वयः । ननु परस्परैकचित्तानामेषां विवादोऽपि कथं स्यादित्याशङ्क्याह—मयीति । मय्यन्तर्यामिण्युद्यते कृतप्रलये सति विवादेन स्वयमेव अन्तर्दधते अन्तर्दधीरन् । नात्र सन्देह इत्याह—स्मेति ॥ १५ ॥

### हिन्दी अनुवाद

शम्बर, द्विविद, बाणासुर, मुर, बल्वल तथा दन्तवक्त्र आदि अन्य योद्धाओंमेंसे भी किसीको उन्होंने स्वयं मारा था और किसीको दूसरेसे मरवाया ॥ ११ ॥ ❀ ❀ इसके बाद उन्होंने आपके भाई धृतराष्ट्र और पाण्डुके पुत्रोंका पक्ष लेकर आये हुए राजाओंका भी संहार किया, जिनके सेनासहित कुरुक्षेत्रमें पहुँचनेपर पृथ्वी डगमगाने लगी थी ॥ १२ ॥ ❀ ❀ कर्ण, दुःशासन और शकुनिकी खोटी सलाहसे जिसकी आयु और श्री दोनों नष्ट हो चुकी थीं, तथा भीमसेनकी गदासे जिसकी जाँघ टूट चुकी थी, उस दुर्योधनको अपने साथियोंके सहित पृथ्वीपर पड़ा देखकर भी उन्हें प्रसन्नता न हुई ॥ १३ ॥ ❀ ❀ वे सोचने लगे—यदि द्रोण, भीष्म, अर्जुन और भीमसेनके द्वारा इस अठारह अक्षौहिणी सेनाका विपुल संहार हो भी गया, तो इससे पृथ्वीका कितना भार हल्का हुआ ? अभी तो मेरे अंशरूप प्रद्युम्न आदिके बलसे बढ़े हुए यादवोंका दुःसह दल बना ही हुआ है ॥ १४ ॥ ❀ ❀ जब ये मधुपानसे मतवाले हो लाल-लाल आँखें करके आपसमें लड़ने लगेंगे, तब उससे ही इनका नाश होगा । इसके सिवा और कोई उपाय नहीं है । असलमें मेरे संकल्प करनेपर ये स्वयं ही अन्तर्धान हो जायँगे ॥ १५ ॥

**एवं सञ्चिन्त्य भगवान् स्वराज्ये स्थाप्य धर्मजम् । नन्दयामास सुहृदः साधूनां वर्त्म दर्शयन् ॥१६॥**
**उत्तरायां धृतः पूरोर्वंशः साध्वभिमन्युना । स वै द्रौण्यस्त्रसंछिन्नः पुनर्भगवता धृतः ॥१७॥**
**अयाजयद्धर्मसुतमश्वमेधैस्त्रिभिर्विभुः । सोऽपि क्ष्मामनुजै रक्षन् रेमे कृष्णमनुव्रतः ॥१८॥**
**भगवानपि विश्वात्मा लोकवेदपथानुगः । कामान् सिषेवे[1] द्वार्वत्यामसक्तः सांख्यमास्थितः ॥१९॥**
**स्निग्धस्मितावलोकेन वाचा पीयूषकल्पया । चरित्रेणानवद्येन[2] श्रीनिकेतेन चात्मना ॥ २० ॥**

### श्रीधरस्वामिविरचिता भावार्थदीपिका

एवं श्लोकद्वयेनोक्तं क्रमेण संचिंत्य स्वराज्ये स्थापयित्वा ॥ १६ ॥ ❀ ❀ धृतो रक्षितः ॥ १७ ॥ ❀ ❀ अनुजैः सह ॥ १८ ॥ ❀ ❀ सांख्यं प्रकृतिपुरुषविवेकम् ॥ १९ ॥ ❀ ❀ स्निग्धो यः स्मितसहितोऽवलोकस्तेन । पीयूषकल्पया सुधातुल्यया पाठांतरे सुधाप्रवाहरूपया आत्मना देहेन ॥ २० ॥

---

१. प्रा० पा०—निषेवे । २. प्रा० पा०—चारित्र्येणा० ।

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः ।

स्थाप्य स्थापयित्वा आर्षत्वाद्विनापि समासं ल्यप् । साधूनां वेदानुयायिनाम् ॥ १६ ॥ ❀ ❀ सः गर्भः धृतो जीवयुतः कृतः । पुनरित्युक्त्या भारतविरोधः परिहृतः ॥ १७ ॥ ❀ ❀ स धर्मसुतोऽनपत्योपि 'पुत्रहीनस्य किं राज्यैः' इत्युक्तेस्तत उपरतोपि कृष्णाज्ञया पुत्रतुल्यैरनुजैः सह राज्यं चकारेत्यर्थोपि नोक्तः । त्रिभिरिति त्रिगुणदक्षिणादानेनैकस्यैव त्रित्वमभूत्तदुक्तं "सकृत्कृतकर्मणो या वै दक्षिणा विहितागमो यावंति वर्द्धयेत्तां वै तावत्कृतकर्मणः फलम्" इति नीलकण्ठाद्यैर्भारतटीकाकृद्भिरुक्तम् । नोक्तः ॥ १८ ॥ ❀ ❀ अपीत्यनेन लोकसंग्रहार्थं गृहस्थधर्मानुचरणं न तु स्वार्थं सत्यसंकल्पत्वादितीममर्थं सूचयति विषयसेवया तल्लेपो नास्तीत्याह । असक्त इति । तत्र हेतुः सांख्यं स्वात्मज्ञानं "केवलं स्वात्मविज्ञानं सांख्यमित्यभिधीयते" इति तीर्थः । 'तद्ब्रह्मावेदहं ब्रह्मास्मि' इति श्रुतेः । 'लोकवेदपथानुगः' इत्युक्तिर्लोकवेदाविरुद्धानेव कामान्सुखरूपानिंद्राद्यैरुपायनत्वेन प्रेषितानित्याह ॥ १९ ॥ ❀ ❀ पाठांतरे 'पीयूषकुल्यया' इति पाठे । जीवगोस्वामिनस्तु मायाशक्तिविलास एव तस्यानासक्तिश्चिच्छक्तिविलासे त्वासक्तिरेवेत्याहुः । क्रमेणावलोकवचनलीलारूपैश्चतुर्भिर्माधुर्य्यै रमयन्नित्यग्रिमेणान्वयः ॥ २० ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

पूर्वं धृतः स्थापितः पुनर्धृतो रक्षितः ॥ १६ ॥ ❀ ❀ सोपि कृष्णमनुव्रतस्सन्निति अन्योन्यप्रीतेरुल्लासः ॥ १७ ॥ ❀ ❀ भगवत्प्रीत्यर्थमेव वैराग्यं क्रियतेऽन्यैर्विषयिभिर्नतु भगवता मायां व्युदस्य चिच्छक्त्या कैवल्ये स्थित आत्मनीति सदैव तत्रानासक्तत्वादेवंभूतो भगवानपि लोकशिक्षार्थं सांख्यमाश्रितः वैराग्यलीलां प्रकाशितवानित्यर्थः ॥ १८ ॥ ❀ ❀ वैराग्यलीलायाः क्रममाह त्रिभिस्तत्र स्निग्धेति युग्मकम् । पीयूषकुल्ययेति पाठान्तरं कुल्याल्पा कृत्रिमा सरिदित्यमरः । अवसरः रहक्रीडावकाशः ॥ १९ ॥ ❀ ❀ संन्यस्तवद्विरागानभिधानाल्लक्षणयौदासीन्यमित्यार्थिकोर्थः ॥ २० ॥

### श्रीमद्वीरराघवव्याख्या

एवमिति एवमुक्तरीत्या संचिंत्य भगवान् स्वराज्ये स्वस्य धर्मजस्य राज्यं तस्मिन् धर्मजं युधिष्ठिरं स्थाप्य स्थापयित्वा ल्यबार्षोऽसमासत्वात् , साधूनां वर्त्म वर्णाश्रममर्यादां दर्शयन्स्वानुष्ठानेन लोपमनुष्ठापयन्सुहृदः मित्राणि नंदयामास संतोषयामास ॥ १६ ॥ ❀ ❀ उत्तरायामिति । अभिमन्युना स्वभार्यायां उत्तरायां पूरोर्वंशः साधुधृतः पूरोर्वंशवर्द्धकः परीक्षिदुत्पादितः स वै परीक्षिदुत्तरागर्भस्थः द्रौणेरश्वत्थाम्नोऽस्त्रेण ब्रह्मशिरोऽस्त्रेण संभिन्नः पुनर्भगवता श्रीकृष्णेन धृतः परिरक्षितः ॥ १७ ॥ ❀ ❀ अयाजयदिति । सोपि धर्मसुतोपि कृष्णमनुव्रतः सेवमानः अनुजैः सह क्ष्मां पृथिवीं रक्षन् रेमे ॥ १८ ॥ ❀ ❀ भगवानिति विश्वात्मा विश्वस्यांतःप्रविश्य धारकः भगवान् श्रीकृष्णोपि लोकवेदपथानुगः श्रौतस्मार्त्तधर्माननुवर्तमानः द्वार्वत्यां पुर्यां कामान् सिषेवे कथंभूतः साख्यं संख्या बुद्धिस्तया गम्यं सांख्यं मुमुक्षूपास्यं स्वात्मानमास्थितः स्वानंदमेवानुभवन्नित्यर्थः । अत एवासक्तः शब्दादिष्वनासक्तः। अत्र काम्यंते इति कामाः कल्याणगुणाः तान्सिषेवे स्वकीयकल्याणगुणसंशीलनपरो बभूवेत्यर्थः । न तु शब्दादिविषयानुभवो विवक्षितः यद्वा कामाननुभवन्निवावस्थावित्यर्थः ॥ १९ ॥ ❀ ❀ तदेव प्रपंचयति स्निग्धेत्यादिना । स्निग्धः कृपायुक्तो यः स्मितावलोकः मंदहासयुक्तावलोकः तेन पीयूषममृतं तत्तुल्यया वाचा अनवद्येन निर्दुष्टेन चारित्रेण श्रियो लक्ष्म्या निकेतनाश्रयेणात्मना शरीरेण च इमं भूलोकममुं उपरिलोकाश्च रमयस्मिन्न लोके यदूश्च सुतरां रमयन् क्षणदया रात्र्या दत्तं क्षणं क्षणमात्रं स्त्रीणामीक्षारूपं सौहृदं येन सः दत्तक्षणः स्त्रीक्षणसौहृदः रेमे ॥ २० ॥ २१ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

स्वाराज्ये स्वर्गसमराज्ये ॥ १६ ॥ ❀ ❀ यः पुरोर्वंशोऽभिमन्युना साधूत्तरायां धृतः स द्रौण्यस्त्रेण संछिन्नः संछादितः पुनर्भगवता धृतो रक्षितोऽभूदित्यन्वयः ॥ १७ ॥ १८ ॥ ❀ ❀ अपीत्यनेन लोकसंग्रहणार्थं गृहस्थधर्मानुचरणं न तु स्वार्थं सत्यसंकल्पत्वादितीममर्थं सूचयति विषयसेवयापि तल्लेपो नास्तीत्यसक्त इति तत्र हेतुगर्भविशेषणमाह सांख्यमिति । केवलं भगवज्ज्ञानं सांख्यमित्यभिधीयत इति वचनात् न सांख्यशास्त्रोक्तविधिः किंतु स्वरूपज्ञानमेव गृह्यते तद्ब्रह्मवदहं ब्रह्मास्मीति श्रुतेः ॥ १९ ॥ ❀ ❀ श्रियोनिकेतेन वासेनात्मना देहेन ॥ २० ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

पूर्वं धृतः स्थापितः पुनर्धृतो रक्षितः ॥ १७ ॥ १८ ॥ ❀ ❀ भगवानपीति कृतकृत्यतायां जातायां वैराग्यलीला प्रकाशितेत्यर्थः ॥ १९ ॥ ❀ ❀ तत्र क्रममाह त्रिभिः । स्निग्धेति युग्मकम् ॥ २० ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

स्थाप्य स्थापयित्वा ॥ १६ ॥ ❀ ❀ धृत आहितः ! धृतो रक्षितः ॥ १७ ॥ ❀ ❀ रेमे विरराज ॥ १८ ॥ ❀ ❀ पञ्चमषष्ठैश्वर्य्ये द्योतयति भगवानपि । विश्वस्यान्तर्यामीव असक्तः लोकवेदेति लोकवेदयोरनिषिद्धानेव कामान् सुख-

रूपान् इन्द्रादिभिरुपायनत्वेन प्रेषितान् सिषेवे बुभुजे अत्र असक्त इति वैराग्यं सांख्यमिति ज्ञानम् ॥ १९ ॥ ॐ ॐ माया-शक्तिविलास एव तस्यानासक्तिश्चिच्छक्तिविलासस्त्वासक्तिरेवेत्याह स्निग्धेति। क्रमेणावलोकवचनलीलारूपैश्चतुर्भिर्माधुर्यैः ॥ २० ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

अभिमन्युना धृतः स्थापितः भगवता धृतः रक्षितः ॥ १७ ॥ १८ ॥ ॐ ॐ सांख्यमात्मानात्मविवेकम् ॥ १९-२० ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

तत्र देवतां मित्रं निरूपयन् प्रद्युम्नं निरूप्य वासुदेवं निरूपयति षड्भिः। यदापाततो भक्तानामहितप्रतिभानम्, तद्भक्तिमार्गस्य तथात्वख्यापनाय[1]। दशलीलापरे व्यापिवैकुण्ठे नित्यवत् स्थितिः। रूपान्तरेण भजनं स्वामिसेवकयोर्हिते ॥ १ ॥ स्वामित्वं सेवको हन्ति सेवकत्वं तथापरः। अन्यथा सफलो न स्याद्भक्तिमार्गः ससाधनः ॥ २ ॥ सेवादशायां चेत्स्वामी विरसः सिद्ध्यभावतः। पश्चाच्चेत्सेवकत्वं स्यात्फलमीशश्च नो भवेत् ॥ ३ ॥ यावत्साधनमात्मानं सर्वशास्त्रविरोधिनम्। कृत्वाऽन्ते पूर्वधर्मस्य नाशं च कुरुते फले ॥ ४ ॥ अतः स्थितिदशायां हि तद्विचिन्त्य हरिः स्वयम्। स्वानभिप्रेतविषयान् भोजयत्येव नान्यथा ॥ ५ ॥ तदाह—एवं प्रकारेण सम्यक् विचारयित्वा तथा करणसामर्थ्यं[2] तस्यैवेति भगवानित्याह। स्वराज्ये पितृपैतामहे, स्वस्यैव राज्ये वा, 'शास्त्रफलं प्रयोक्तरि' इतिन्यायेन भगवद्राज्ये वा। धर्मजमिति तथा स्थाने स्थापनाधिकारो दर्शितः। नन्दयामासेति सर्वानेव सुहृदः सर्वप्रकारेणानन्द-युक्तांश्चकार। न केवलं लौकिकविषयैरेव पूर्णान् करोति, किन्तु वैदिकमार्गेणाऽपीत्याह—साधूनां वर्त्म दर्शयन्निति। सतां मार्गो वैदिकस्तद्धर्मनिष्ठा। तद्दर्शयन् स्वयं यज्ञादिधर्मान् कुर्वन् वैदिकमार्गेणाऽपि नन्दयामासेत्यर्थः। अनेन प्रवाहं मर्यादां च स्थिरीकृतवानित्युक्तम् ॥ १६ ॥ ॐ ॐ पुष्टिमार्गमपि तावत् स्थिरीकरोतीत्याह—उत्तरायामिति। पूरोर्वंशोऽभिमन्युना उत्तरायां शास्त्रानुसारेण धृतः। स्वभार्यायामर्जुनपुत्रो यथाशास्त्रं गर्भं धृतवान्। इमां मर्यादां प्रवाहो दूरीकृतवानित्याह—स वै द्रौण्यस्त्रसंछिन्न इति। निश्चयोऽत्र ब्रह्मास्त्रस्याऽमोघत्वात्, अत एव सम्यक् छिन्नः। अग्रे सन्ततिश्छिन्ना। पुनश्छेदनानन्तरं स एव वंशो भगवता धृतः। छिन्नो हि पूर्वभागो[3] नोत्तरं बिभर्ति। वंशः प्रदीपसन्ततिवद्भवति। यथा निरन्तरमुत्पद्यमानास्तेजो-वयवा अङ्गुल्यग्रपरिमितां दीपशिखां स्वप्रवेशनिर्गमाभ्यां समास्थापयन्ति तैलं वर्तिकां च निमित्तमाश्रित्य; तथा पूर्वदेहे[4] अन्नायुषी समासाद्य शरीरोत्पादकावयवाः स्थूलतया परिदृश्यमानं रूपं प्रवेशनिर्गमाभ्यां सममेव स्थापयन्तो वस्त्रवत् सूक्ष्मतानत्वात् तन्मध्य उत्तरोत्तरं शुक्रान्तानि सप्तावरणानि सूक्ष्मसूक्ष्माणि[5] कुर्वन्ति। ततोऽन्तः सूक्ष्ममावरणं प्रशिथिलावयवं सूक्ष्मवस्त्रवत् स्थितं योषाग्निसंबन्धात् सर्वत आकृष्टं पिण्डीभूतमिव योनौ प्रविशति। तत्राप्यन्नायुषी निमित्तमाश्रित्य पूर्ववत्त्त्रापि सप्तधातून् सृष्ट्वा अन्तः सूक्ष्मसूक्ष्मान् रूपविशेषान् कुर्वन्तीत्यात्रह्मतृणस्तम्बानां व्यवस्था। तत्र तस्याः सन्ततेर्विच्छेदे[6] पूर्वसाधितस्य पिण्डस्य विनाशकेन विघाते उत्तरोत्पादनासामर्थ्ये भगवान् स्वयं प्रविष्टस्तां सन्ततिं तथैव रक्षितवान्, न तु कृष्यादिवद्बीजान्तराधानेन संतत्यन्तरमेव। शास्त्रतोऽभ्यनुज्ञानात् पूर्वसंततिं कृतवानित्यर्थः। अनेन पुष्टिमार्गप्रवृत्तिः प्रवाहेण मर्यादाभङ्ग[7] एवेति सूचितम् ॥ १७ ॥ ॐ ॐ स चेत्पुष्टिमार्गो मर्यादां यथास्थानस्थितां न कुर्यात्, प्रवाहवत् तस्यापि बाधकत्वमेव स्यादिति तद्व्यावृत्त्यर्थमाह—अयाजयद्धर्मसुतमिति। अन्तः[8] ब्राह्मणानां स्वतः प्रवृत्त्यभावात् भगवत्प्रेरणयैव याजनं कुर्वन्तीति भगवानयाजय-दित्युक्तम्। मन्त्रसहितदेवतासान्निध्यकरणाद्वा। त्रिभिरिति कायिकादिसर्वपरिहारार्थम्। 'तरति मृत्युं तरति पाप्मानं तरति ब्रह्महत्याम्' इति श्रुतेस्त्रिविधफलसिद्ध्यर्थमाहारपृथक्त्वन्यायेन त्रयोऽश्वमेधाः कृताः। याजनादिसामर्थ्यार्थमाह—विभुरिति। एवं निर्दुष्टस्याऽग्रिमकार्यमाह—सोऽपीति। क्ष्मां पृथ्वीमनुजैर्भ्रातृभिः सह रक्षन् द्विविधधर्मसम्पन्नः[9] कृष्णभक्तो जात इत्यर्थः। सदेवौ पादौ निरूपितौ ॥ १८ ॥ ॐ ॐ एवं भगवान् भक्तहितं विधाय धर्मस्थापनफलमिव स्वार्थं कृतां सृष्टिं बुभुजे इत्याह त्रिभिः—भगवानपीति। भगवत्सेवको युधिष्ठिरादिरपि भगवद्दत्तं राज्यं बुभुजे। भगवानपि कामान् सिषेवे। विषयान्नाना-विधान् बुभुजे इत्यर्थः। तस्य स्वार्थसृष्टस्य जगतो भोगे जीवतुल्यता स्यादत आह—विश्वात्मेति। न हि भगवान् विश्वं विषयत्वेन भुक्तवान्, किन्त्वात्मत्वेन। सहि विश्वात्मा त्रिविधपरिच्छेदा[10]भावेन, न तु केवलं विश्वरूपेण। ननु तस्य विषयभोगः सर्वत्र स्वत एव सिद्धः किमिति विशेषाकारेणोच्यत इत्यत आह—लोकवेदपथानुग इति। स हि सर्वदा ब्रह्मत्वेन सर्वान् विषयान् भुङ्क्ते। अत्र तु लोकानुसारेण लौकिकसाधनेन लौकिकक्रियारूपेण लौकिकान् विषयान् भुङ्क्ते। वेदानु-सारेण तु वैदिकक्रियया वैदिकान् पुत्रानुत्पाद्यताननुभवति। अतोऽत्र प्रकारत्रयेणाप्यनुभवतीत्यर्थः[11]। कामभोगे

---

१. नित्यस्थितिविरुद्धत्वख्यापनाय प्रकाशः २ विचारमात्रेण, प्रकाशः. ३ मूलभागः. प्र. ४ पितृशरीरे. प्र. ५ रूपाणि. क. ङ. ६ पितृशरीर इव. प्र. ७ मर्यादाभङ्गे सति. प्र. ८ अतः. क, ख. घ. च. ९ वैदिकधर्मभगवद्धर्मसंपन्नः. प्रकाशः. १० विश्वात्मेत्यत्र कर्मधारयबोधनायाहुः—त्रिविधेत्यादि. प्र. ११ अथोच्यते इत्यर्थः प्र.

हि निर्गमनमार्गो नास्तीति तस्य सर्वावरकत्वात् कथं भगवान् जीववत् कामान् सिषेव इत्यत आह-द्वार्वत्यामिति। अनेन कर्मविरोधः परिहृतः। यथा निस्तारणोपायं कुर्वाणः कर्मफलमुपभुङ्क्ते तद्वदिति। ज्ञानविरोधाभावाय-असक्त इति। असक्त्या भोगो हि ज्ञानविरोधी। स्वार्थं कृतसृष्टिमनुभवतीति ज्ञापयितुमाह—सांख्यमास्थित इति। संख्या हि तत्त्वानाम्। यत्र भिन्नतया गणना साक्षित्वे[1] पर्यवस्यतीति सर्गभेदे हेतुर्निरूपितः। अनेन[2] भक्तिविरोधोऽपि परिहृतः। भगवान् भुङ्क्ते जीवोऽपि भुङ्क्ते। जीवद्वारा भगवान् भुङ्क्त इति पक्षे भक्तिमार्गविरोधो भवति[3]। घ्राणं निरूपितम्॥ १९॥ ❀ ❀ रमणं पुरुषोत्तमरूपेण पुरुषरूपेण चेति, द्वितीये भोगं वदन् रमयामासेत्येतद्विस्तारयति—स्निग्धस्मितावलोकेनेति। चतुर्भिश्चतुर्विधानां भूतानां भोगो निरूप्यते। चतुर्विधान्यत्र भूतानि। त्रिविधा जीवा मार्गत्रयवर्तिनो व्यापिवैकुण्ठवासिनश्च। तत्र भगवानिमं लोकं स्निग्धस्मितावलोकेन रमयामास। अत्र हि द्विविधा जीवाः 'द्वौ भूतसर्गौ लोकेऽस्मिन्' इति। तत्र दैवाः स्निग्धावलोकेन प्रेमदृष्ट्या रतियुक्ताः कृताः, आसुरास्तु स्मितेन मन्दहासेनार्द्धमायामोहेन। सर्वथा मुग्धाः शुद्धदैत्या भवन्ति, ते दोषमलात्मकाः। अर्द्धमुग्धास्तु लौकिका भगवत्प्रसादेन सर्वानेव विषयान् प्राप्नुवन्तीति तत्र स्मितावलोकस्य हेतुत्वम्। आमुष्मिकान् वाचा पीयूषकल्पया रमयामास। ते हि मर्यादावन्तो वैदिकफलभोक्तारः। तद्धि स्वर्गापवर्गाख्यम्। तद्भगवद्वाचा वेदेन स्वर्गाख्यं भवति। अमृतकल्पेन च उपनिषद्भागवतादिना आमुष्मिकं फलं प्राप्नुवन्ति। अनवद्येन चरित्रेण सर्वानेव पुष्टिमार्गस्थितान् भक्तान् यदूंश्च सुतरां रमयामास। चरित्रेणैव हि भक्ता रज्यन्ते। लोकनिन्दारहितेन तु कुलीना यादवाः सुतरां रज्यन्ते। वैकुण्ठस्थिताः श्रीनिकेतेनाऽऽनन्दयुक्तेन आत्मना सच्चिदानन्दरूपेण। चकारात् श्र्यादिविभूत्या। क्षणदया दत्तक्षणो रात्र्या दत्तावसरः। स्वप्नसुषुप्तिसुखं निद्रया भवतीति रात्रेः क्षणदात्वं लौकिकम्। ततोऽत्र विशेषं वक्तुं स्त्रीणां सम्बन्धिनि क्षणे सुखे सौहृदं यस्येत्युक्तम्। वैकुण्ठसुखं हि निष्प्रपञ्चे स्वरूपे स्थितो रमते। रात्र्यामवतीर्णोऽपि तथा स्त्रीसुखे। एवं चतुर्भिः सर्वेषां रमणमुक्तम्। स्निग्धेति घ्राणदेवता। इममिति वाक्। अत [4]एव तस्यैवमित्यग्निः॥ २०॥ २१॥

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

एवं संचिन्त्येत्यत्र। प्रद्युम्नं निरूप्येति कामलीलाया विधिप्रयुक्तत्वेन तया अनिरुद्धनिरूपणोत्तरं क्रोधलीलायास्तिरोधानविचारलीलायाश्च मोक्षात्मकसर्गोपयोगित्वेन तया प्रद्युम्नं निरूप्येत्यर्थः। नन्वेवं माध्वीपानार्थं प्रेरणे प्रद्युम्नस्य कथं मित्रत्वमित्यपेक्षायां तस्याश्चिन्तायाः तात्पर्यं वक्तुं पूर्वमहितभानप्रयोजनमाहुः—यदित्यादि तथात्वख्यापनायेति। नित्यस्थितिविरुद्धत्वख्यापनाय। तदेतत् कारिकाभिर्व्युत्पादयन्ति—दशेत्यादि। ज्ञानाश्रयस्यात्मरूपत्वे 'अहमात्मा गुणाकेश' इति वाक्याद्विभूतिरूपत्वेन दशमलीलात्वम्। तथा सति 'दशभ्यः परमक्षरम्' तच्च भगवतः परमं धामव्यापि वैकुण्ठात्मकम् "तस्मिन् यदक्षरे परमे प्रजाः" इति श्रुतेः तत्रत्यं सर्वं परब्रह्मात्ममेवेति सर्वेषां नित्यवत् स्थिताः, एकरसा स्थितिर्न सेव्यसेवकभावः। तत्र हेतुः, यतो भजनं रूपान्तरेण ते च रूपे स्वामिसेवकयोः। एकः स्वामी, इतरः सेवक इति। तत्र स्वामित्वं सेवको हन्ति, स्वस्मिन् विद्यमानं तद्विरुद्धत्वात् दूरीकरोति, एवं स्वामी स्वस्मिन् विद्यमानं सेवकत्वं दूरीकरोति, तेन स्वामिसेवकभावात् नित्यवदेकरस्येन तत्र स्थितिरित्यर्थः। ननु प्रजारूपेण तत्र विद्यमानत्वे एवं स्थितेः किं प्रयोजनमत आहुः—अन्यथेत्यादि। ससाधनायां भक्तौ ह्यण्वी गतिः फलम्। यद्येवं स्थितिर्न स्यात्, तदा तद्गतेरण्वीत्वाभावेन ससाधनो भक्तिमार्गः सफलो न स्यात्। अतो गतेरण्वीत्वमेव प्रयोजनमित्यर्थः। अत्र ससाधन इति विशेषणेन निःसाधने भक्तिमार्गे अयं न प्रकार इति तद्रीत्या शङ्का न कार्येति बोधितम्। एवं फलदशास्थितिमुक्त्वा साधनदशास्थितिमाहुः—सेवेत्यादि। सिद्ध्यभाववतेति। सिद्धेरभावता। तथा च विद्यमानाऽपि सिद्धिरसिद्धिरूपेति सेवादशायां स्वामिसारस्यमावश्यकम्, सारस्येन पश्चात् फलदशायां चेत् सेवकत्वं फलं स्यात्, सेवक ईशो न भवेदेव। चोऽवधारणे। तथा चाण्वीत्वार्थं फलदशायामीशत्वमावश्यकम्। अतो दशाद्वयस्थितिसाधनाय यावत्साधनं साधनदशापर्यन्तमात्मानमेव सर्वशास्त्रविरोधिनमुच्छृङ्खलसेवकरूपं कृत्वा, अन्ते साधनदशासमाप्तौ फले देये, पूर्वधर्मस्य सेवकत्वादेर्नाशमपि कुरुते। चोऽप्यर्थे। अतः उच्छृङ्खलस्वात्मप्रवेशात् स्थितिदिशायां हि निश्चयेन तत्फलं विचिन्त्य स्वानभिप्रेतविषयान् माध्व्यादिरूपान् भोजयत्येव। तेन प्रविष्टरूपेण स्वयं भुञ्जानस्तानपि भोजयति। नाऽन्यथा नाऽनिष्टार्थम्, तथा चैवं प्रेरणादिचिन्तायास्तात्पर्यात् प्रद्युम्नस्य मित्रत्वं युक्तमेवेत्यर्थः। एवं कारिकाभिर्विचारतात्पर्यम्, तेन मित्राख्यदेवतासँस्कारं च बोधयित्वा निगमयन्ति—तदाहेति। तथेति विचारमात्रेण। एतेन वासुदेवत्वमपि विवक्ष्यमाणलीलाया बोधितम्॥ १६॥ ❀ ❀ उत्तरायामित्यत्र। प्रवाहादिति। अविच्छिन्नसर्गपरम्परातः। छिन्नस्य कथं पुनरविच्छिन्नतया स्थापनमित्याकाङ्क्षायां छेदस्य वंशस्य स्वरूपं वदन्तो व्युत्पादयन्ति-छिन्न इत्यादि। पूर्वभाग इति मूलभागः। पूर्वदेह इति। पितृशरीरे। पूर्ववदिति। पितृशरीर इव। सिवनेन छिन्नवस्त्रवदेकीकृत्य मर्यादाभङ्ग इति। मर्यादाभङ्गे सति॥ १७॥ ❀ ❀ सोऽपीत्यत्र (?)। द्विविधधर्मसम्पन्न इति। वैदिकधर्मभगवद्धर्मसम्पन्नः। स्कन्धार्थविचारेणाऽऽहुः—सदेवौ पादाविति। गतिसाधनभूतौ वैदिकभगवद्धर्मौ पादौ, तत्पोषको विष्णुर्देवः। तथा च स्मृतेनैतल्लीलाविशिष्टेन रूपेण

[1] तत्त्वानां संघाततया पारार्थ्येन सा तथेत्यर्थः. प्र. [2] एवं जीवेश्वरसाधारणपारार्थ्यबोधनेन. प्र. [3] भगवदर्थत्वाभावात्. प्र. [4]. वाक्सन्निधानात् प्रकाशः

पादयोः सदेवयोः सँस्कार इत्यर्थः ।। १८ ।। ❀ ❀ भगवानित्यत्र । विश्वात्मेत्यत्र । कर्मधारयबोधनायाऽऽहुः—त्रिविधेत्यादि । विश्वतया वस्तुपरिच्छेदाभावः, आत्मत्वेन व्याप्त्या देशपरिच्छेदाभावस्तेनैव नित्यतया कालपरिच्छेदाभावो बोध्यः । स्वत एव सिद्ध इति । "स सर्वधीवृत्तीति" ( २-१-३९ ) न्यायेन सिद्धः इत्यर्थ इति । अर्थ उच्यत इत्यर्थः । साक्षित्वे पर्यवस्यतीति । तत्त्वानां सङ्घाततया पारार्थ्येन सा तथेत्यर्थः । अनेनेति एवं जीवेश्वरसाधारणपारार्थ्यबोधनेन । भवतीति । भगवदर्थत्वाभावाद्भवति । स्कन्धार्थविचारेणाऽऽहुः–घ्राणमिति । "षाड्वर्गिकं जिघ्रति" इत्यत्रोक्ता घ्राणक्रिया । तथा चैतल्लीलाविशिष्टस्मृतं सत् घ्राणेन्द्रियसँस्कारजनकमित्याशयेन निरूपितमित्यर्थः । ।। १९ ।। ❀ ❀ स्निग्धेत्यत्र । स्कन्धार्थविचारेणाऽऽहुः–घ्राणदेवतेत्यादि । पुरुषरूपो भौमविस्तारो हि स्निग्धेत्यादिभिरुक्तैः करणैरत्रोच्यते । भूर्लोको गन्धप्रधान इति तत्रत्यानां रमणकथनादनेन कारणेन सा निरूप्यते ।। २० ।।

### श्रीगिरिधरकृता बालप्रबोधिनी

एवमुक्तप्रकारेण भगवान् सञ्चिन्त्य धर्मजं धर्मपुत्रं युधिष्ठिरं स्वराज्ये तस्यैव परम्परागते राज्ये स्थाप्य स्थापयित्वा—ल्यबार्षः असमासत्वात्—साधूनां परलोकसाधकानां वैदिकानां वर्त्म वर्णाश्रमाचारलक्षणं दर्शयन् स्वानुष्ठानेन अन्याननुष्ठापयन् सुहृदो मित्राणि नन्दयामास ।। १६ ।। ❀ ❀ अभिमन्युना उत्तरायां स्वभार्यायां पूरोर्वंशः सन्ततिबीजभूतः परीक्षित् साधु सम्यक् मर्यादया धृत उत्पादितः, स वै गर्भस्थ एव द्रौणेर्ब्रह्मास्त्रेण सञ्छिन्नः पुनः भगवता श्रीकृष्णेन धृतः संरक्षणेन जीवितः ।। १७ ।। ❀ ❀ ततश्च विभुः सर्वथा समर्थः श्रीकृष्णः त्रिभिरश्वमेधैर्धर्मसुतं युधिष्ठिरमयाजयत् । स युधिष्ठिरोऽपि कृष्णमनुव्रतः अनुसृतः भूमिपालने तत्प्रीतिमालक्ष्य अनुजैरर्जुनादिभिः सह क्ष्मां पृथ्वीं रक्षन् रेमे भोगं चकार।। १८ ।। ❀ ❀ भगवान् षड्गुणपरिपूर्णोऽपि श्रीकृष्णो द्वारवत्यां स्थितः कामान् शब्दादिविषयान् सिषेवे बुभुजे इत्यन्वयः । ननु भगवतो लौकिकविषयभोगः कथं सङ्गच्छते तत्राह—लोकवेदपथानुग इति, जनान् शिक्षयितुं लोकवेदाचारनिष्ठ इत्यर्थः । तस्य जनशिक्षार्थप्रवृत्तिरपि कथमित्यपेक्षायामाह—विश्वात्मेति । सर्वात्मत्वेन सर्वहितैषित्वादिति भावः । तर्हि लौकिकजनवत्तस्यापि बन्धः स्यादित्याशङ्क्याह—असक्त इति । तत्र हेतुमाह—साङ्ख्यमास्थित इति, प्रकृतिपुरुषविवेकित्वेन स्वरूपानुसन्धानपर इत्यर्थः ।। १९ ।। ❀ ❀ उक्तमेव प्रपञ्चयति—स्निग्धेति । स्निग्धः कृपायुक्तो यः स्मितपूर्वकोऽवलोकस्तेन पीयूषममृतं तत्कल्पया तत्तुल्यया वाचा अनवद्येन अवद्यं पापं तन्निवर्तकेन चरित्रेण च श्रियो लक्ष्म्या निकेतेन आश्रयेण आत्मना देहेन च ।। २० ।।

### हिन्दी अनुवाद

यों सोचकर भगवान्ने युधिष्ठिरको अपनी पैतृक राजगद्दीपर बैठाया और अपने सभी सगे-सम्बन्धियोंको सत्पुरुषोंका मार्ग दिखाकर आनन्दित किया ।। १६ ।। ❀ ❀ उत्तराके उदरमें जो अभिमन्युने पुरुवंशका बीज स्थापित किया था, वह भी अश्वत्थामाके ब्रह्मास्त्रसे नष्ट-सा हो चुका था; किन्तु भगवान्ने उसे बचा लिया ।। १७ ।। ❀ ❀ उन्होंने धर्मराज युधिष्ठिरसे तीन अश्वमेध-यज्ञ करवाये और वे भी श्रीकृष्णके अनुगामी होकर अपने छोटे भाइयोंकी सहायतासे पृथ्वीकी रक्षा करते हुए बड़े आनन्दसे रहने लगे ।। १८ ।। ❀ ❀ विश्वात्मा श्रीभगवान्ने भी द्वारकापुरीमें रहकर लोक और वेदकी मर्यादाका पालन करते हुए सब प्रकारके भोग-भोगे, किंतु सांख्ययोग की स्थापना करनेके लिये उनमें कभी आसक्त नहीं हुई ।। १९ ।। ❀ ❀ मधुर मुसकान, स्नेहमयी चितवन, सुधामयी वाणी, निर्मल चरित्र तथा समस्त शोभा और सुन्दरताके निवास अपने श्रीविग्रहसे लोक-परलोक और विशेषतया यादवोंको आनन्दित किया तथा रात्रिमें अपनी प्रियाओंके साथ क्षणिक अनुरागयुक्त होकर समयोचित विहार किया और इस प्रकार उन्हें भी सुख दिया ।। २०-२१ ।।

**इमं लोकममुं चैव रमयन् सुतरां यदून् । रेमे क्षणदया दत्तक्षणस्त्रीक्षणसौहृदः ।। २१ ।।**
**[1]तस्यैवं रममाणस्य संवत्सरगणान् बहून् । गृहमेधेषु योगेषु विरागः समजायत ।। २२ ।।**
**दैवाधीनेषु कामेषु दैवाधीनः स्वयं पुमान् । को विस्रम्भेत योगेन योगेश्वरमनुव्रतः ।। २३ ।।**
**पुर्यां कदाचित्क्रीडद्भिर्यदुभोजकुमारकैः । कोपिता मुनयः शेपुर्भगवन्मतकोविदाः ।। २४ ।।**
**ततः कतिपयैर्मासैर्वृष्णिभोजान्धकादयः । ययुः प्रभासं संहृष्टा रथैर्देवविमोहिताः ।। २५ ।।**
**तत्र स्नात्वा पितॄन्देवानृषींश्चैव तदम्भसा । तर्पयित्वाथ विप्रेभ्यो गावो बहुगुणा ददुः ।। २६ ।।**

---

१. प्रा० पा०—तस्येत्थं ।

हिरण्यं रजतं शय्यां वासांस्यजिनकम्बलान् । [1]यानं रथानिभान् कन्या धरां वृत्तिकरीमपि ॥ २७ ॥
अन्नं चोरुरसं तेभ्यो दत्त्वा भगवदर्पणम् । गोविप्रार्थासवः शूराः प्रणेमुर्भुवि मूर्धभिः ॥ २८ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां तृतीयस्कन्धे विदुरोद्धवसंवादे तृतीयोऽध्यायः

### श्रीधरस्वामिविरचिता भावार्थदीपिका

क्षणदया रात्र्या दत्तः क्षणोवसर उत्सवो वा यासां स्त्रीणां तासु क्षणं सौहृदं यस्य सः ॥ २१ ॥ ❀ ❀ गृहमेधेषु धर्मेषु योगेषु कामभोगोपायेषु विराग औदासीन्यं जातमित्यर्थः ॥ २२ ॥ ❀ ❀ यदा स्वाधीनेष्वपि भगवतो विरागस्तदा दैवाधीने को विस्रंभेत विश्वासं प्रीतिं वा कुर्यात् । योगेन चेद्योगेश्वरं श्रीकृष्णमनुव्रतः ॥ २३ ॥ ❀ ❀ शेपुः शापं ददुः । भगवतो मतेऽभिप्राये कोविदा अभिज्ञाः ॥ २४ ॥ २५ ॥ ❀ ❀ वयःशीलादिबहुगुणोपेता याः गावस्ताः ॥ २६ ॥ ❀ ❀ कन्याश्च । वृत्तिकरीं जीविकापर्याप्ताम् ॥ २७ ॥ ❀ ❀ भगवदर्पणं यथा भवति गोविप्रार्थाः असवो येषाम् ॥ २८ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे टीकायां तृतीयोऽध्यायः ॥ ३ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

इमं लोकमत्रस्थं भक्तजनममुं देवादिलोकगं तत्रापि स्त्रीषु रेमे अवसरदानं दिनस्याप्यस्ति तत्र स च निन्द्य इत्यत आह– उत्सवो वेति । अनेन क्षणदापदार्थो ध्वनितः । यद्वा । क्षणेन कामोत्सवेन सौहृदं यस्य सः तीर्थस्तु पाठान्तरमपि व्याख्यत् । त्रीक्षणो रुद्रस्तस्य सौहृदं यत्रेति त्रीक्षणसौहृद इति । अनेन रुद्रगणचरणसमये स्त्रीभिस्सह रमणं कथमिति चोद्यं परिहृतम् ॥ २१ ॥ ❀ ❀ तस्य श्रीकृष्णस्य कामभोगोपायेषु रजोगुणमयकर्ममार्गेषु तदुपलक्षितकर्मिजनोपनीतभोग्यवस्तुषु च । इत्यर्थ इति । सर्वदा विरक्तस्यापि भगवतस्तदानीं लोकशिक्षार्थं स्पष्टीबभूवेति भावः ॥ २२ ॥ ❀ ❀ सा च वैराग्यलीलैतद्बोधयितुमित्याह–यदेति । न कोपीत्यर्थतो ज्ञेयम् ॥ २३ ॥ ❀ ❀ भगवन्मतं 'मिथो यथैषां भविता विवादः' इत्युक्तोक्तब्राह्मणशापजमिथोविवादेनैते नश्यंत्वित्येवंलक्षणं तस्यां कोविदा विज्ञातारः । अनेन मुनिशब्दार्थो ध्वनितः ॥ २४ ॥ ❀ ❀ ततो द्वारकातः सुखासक्तत्वात्कतिपयैर्मासैः देवमोहिता एव ययुः । नित्यभूतास्तु प्रद्युम्नादयस्तत्रैव प्रापंचिकलोकालक्ष्यतया तस्थुरिति देवाश्च ते मोहिताश्चेति देवमोहिता वा ॥ २५ ॥ ❀ ❀ तत्र प्रभासे तदंभसा प्रभासतीर्थोदकेन अथ तर्पणोत्तरं गावो गाः ॥ २६ ॥ ❀ ❀ न केवलं गा एव ददुः किंतु परलोकसुखदमन्यदपि द्रव्यजातं ददुरित्याह–हिरण्यमिति । हिनोति दुःखं राति सुखमिति हिरण्यं रज्यति रागं तनोतीति रजतम् शय्यतेऽत्रेति शय्या वस्यंत आच्छाद्यन्त एभिरिति वासांसि अजिनं नयतीत्यजिनं कं सुखं वलयति धारयतीति कंबलम् । यानं यात्यनेनेति यानं हयः । क्वचिद्धयानिति पाठः । तत्र हयति गंतव्यमनेनेति हयः 'हय गतौ', इष्टं भावयंतीतीभा हस्तिनः कनं दीप्तिं यापयतीति कन्या रमतेऽत्रेति रथः ध्रियते विश्वमनयेति धरा, वृत्तिकरीं यावज्जीवं जीवनहेतुभूतां यानलक्षणम् । दिवोदासीये "देशान्तरं स्वीयगत्या यद्याति यापयेच्च यत् । तद्यानं विबुधैः प्रोक्तं शकटयादि न तद्भवेत्" इति इभानां यानत्वेपि पृथग्ग्रहणं शोभार्थं मुख्यत्वाद्वेति ॥ २७ ॥ ❀ ❀ उरुरसं षड्रसं तेभ्यो विप्रेभ्यः । असवो जीवनम् । अनेन तेषां धार्मिकत्वं व्यंजितं भगवदिच्छाधीनसंहारत्वं च भगवदिच्छा च ब्राह्मणा न कोपनीया इति लोकप्रवर्त्तनानित्यभूतया देवेभ्यो देवाद्यंशविभाजना तेषां तन्मिषेण तत्तत्पदप्रापणा स्वीयषडैश्वर्यद्योतना स्वभक्तिभक्तधामलीलापरिकरादिमाहात्म्यगोपनेन बहिर्मुखलोकप्रतारणा स्वभक्तजनानुरागविस्तारणाद्या इति । प्रणामस्वरूपं हि भुवि मूर्द्धभिरिति ॥ २८ ॥

इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे तृतीयस्कन्धे तृतीयोऽध्यायः ॥ ३ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या ।

तादृशलीलायाः प्रयोजनं व्याचष्टे यदा स्वाधीनेष्विति । योगेन भक्तियोगेन ॥ २१ ॥ ❀ ❀ अभिप्रायो ब्राह्मणमहिमदर्शनद्वारा प्रपञ्चात्तिरोधानलक्षणे ॥ २२ ॥ ❀ ❀ ततः शापानंतरम् ॥ २३ ॥ ❀ ❀ तत्रेति युग्मकम् । तत्र प्रभासे ॥ २४ ॥ ❀ ❀ गोविप्रार्थासव इति तेषां परमधार्मिकत्वेऽपि ब्राह्मणवंचनं भगवदिच्छयैव तथा शापाभासश्च लोकविभीषामात्रमेवेति व्यंजितम् ॥ २५ ॥

इति श्रीमद्भागवते तृतीयस्कन्धे दीपिकादीपन्यां तृतीयोऽध्यायः ॥ १ ॥

---

१. प्रा० पा०—हयान्रथानिभान्कन्यां ।

## श्रीमद्वीरराघवव्याख्या

तस्येति । इत्थमनासक्त्या बहून्संवत्सरगणान् रममाणस्य तस्य भगवतः गृहमेधेषु गृहाश्रमप्रयुक्तेषु योगेषु धर्मेषु विरागः उपसंजिहीर्षया अनादरः समजायत ॥ २२ ॥ ❀ ❀ एतदेव कैमुत्यनयेनाह दैवाधीनेति । योगेश्वरं योगफलप्रदं भगवंतं योगेन भक्तियोगेन अनुव्रतः सेवमानः स्वयं दैवाधीनः दैवायत्तः कः पुमान् दैवायत्तेषु कामेषु विस्रंभेत विश्वसेत् न कोपीत्यर्थः, किमुत भगवान्न विश्वसेदित्यभिप्रायः ॥२३॥ ❀ ❀ अथ स्वकुलं संजिहीर्षोर्भगवतोभिप्रायानुसारेण विप्रशापप्रवृत्तं यदुकुलसंहृतिं च संग्रहेणाह पुर्यामिति । पुर्यां द्वारकायां कदाचिद्भगवत्स्वकुलसंजिहीर्षानंतरकाले क्रीडद्भिः रममाणैर्यदुभोजकुमारकैः कोपिताः कोपं प्रापिता मुनयः भगवन्मतकोविदा भगवदभिप्रायाभिज्ञाः शेपुः शापं दत्तवंतः ॥ २४ ॥ ❀ ❀ ततः शापानंतरं कतिपयैर्मासैः नानाविधारिष्टदर्शनानंतरं वृष्ण्यादयो दैवविमोहिताः अतएव संहृष्टाः संतो रथैः सह प्रभासं तीर्थं ययुः ॥ २५ ॥ ❀ ❀ तत्र प्रभासे स्नात्वा तदंभसा प्रभासांभसा पित्रादींस्तर्पयित्वा बहुगुणाः वयःशीलादिबहुगुणो पेताः गावः गाः विप्रेभ्यो ददुः ॥ २६ ॥ ❀ ❀ हिरण्यादीन् वृत्तिकरीं जीवनकरीं धरां भूमिं च ददुरिति पूर्वेणान्वयः । यद्वा दत्वेत्युत्तरेणान्वयः ॥ २७ ॥ ❀ ❀ चारुरसं मृष्टरसमन्नं तेभ्यो विप्रेभ्यः भगवदर्पणं यथा भवति तथा दत्वा भगवत्प्रीणनकरमन्नं दत्वेति वा गोविप्रार्थप्राणाः शूरा यदवः विप्रेभ्यः मूर्द्धभिः प्रणेमुः नमस्कृतवन्तः ॥ २८ ॥

इति श्रीमद्भागवतमहापुराणे तृतीयस्कंधे श्रीमद्वीरराघवाचार्य्यकृतटीकायां तृतीयोऽध्यायः ॥ १ ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

क्षणदया रात्र्या दत्तक्षणो दत्तावसरः अनेन क्षणदाशब्दार्थो दर्शितः स्त्रीषु क्षणकालं सौहृदं यस्य स स्त्रीक्षणसौहृदः। स्त्रीक्षणो रुद्रस्तस्य सौहृदं यस्मिन् स तथा वा अनेन रुद्रगणचरणयोग्यसमये स्त्रीभिः सह रमणं कथमिति चोद्यं परिहृतम् ॥ २१ ॥ ❀ ❀ गृहस्थधर्ममनुवर्तमानस्य हरेर्लोकशिक्षार्थं बाह्यविषयेषु वैराग्यप्रदर्शनमित्यभिप्रेत्याह तस्येति । सर्वदाऽपि विरक्तः सन् भासयीत विरागवत् । कादाचित्कः कुतस्तस्य लोकशिक्षार्थमिष्यते इति स्मृतेः । योगेषु विषयसाधनेषु विरागः समजायत वैराग्यमभूदिति दर्शयामास ॥ २२ ॥ ❀ ❀ नित्यविरक्तस्य कादाचित्कविरक्त्यनुपपत्तेर्लोकशिक्षार्थमेव दर्शितमित्येतत्स्पष्टयति दैवेति । नित्यविरक्तेनापि भगवता विरागः प्रदर्शित इति यस्मात्तस्मात् स्वयं दैवाधीनो योगेन ध्यानलक्षणोपास्त्या योगेश्वरं कृष्णमनुव्रतः कः पुमान् दैवाधीनेषु कामेषु विषयेषु विश्रंभेत नित्या इति विश्वासं कुर्यात् न कोपीत्यर्थः । अत्र दैवाधीनत्वं हरेर्नित्यविरक्तत्वेन विषयाणामागमापायित्वेन नश्वरत्वे हेतुः ॥ २३ ॥ ❀ ❀ इत्थं भगवच्चरितमुक्त्वा यदुकुलनाशनिमित्तमाह पुर्यामिति । भगवन्मतकोविदा इत्यनेन मुनिशब्दार्थो दर्शितः ॥ २४ ॥ ❀ ❀ भविष्यद्यदुकुलनाशं वक्ष्यंस्तेषां प्रभासयात्रामाह तत इति । एष्यंतु निश्चितं यत्तदतीतत्वेन भण्यते । चक्रवत्परिवृत्तेर्वा दुष्टानां मोहनाय चेति वचनाद्ययुरित्यादिप्रयोगो युज्यते सुखहेतुत्वान्मासैरिव संवत्सरैः ॥२५॥ ❀ ❀ बहुगुणाः सौशील्यादिसर्वगुणोपेता गावो गाः ॥ २६ ॥ ❀ ❀ न केवलं गा एव ददुः किंतु परलोके यद्यत्स्वात्मनः पुण्यफलत्वेन प्राप्यं तत्तत् द्रव्यजातं ददुरित्याह हिरण्यमित्यादिना हिनोति दुःखं राति सुखमिति हिरण्यं रंजनं रागं चातनोति इति रजतं अजितं नयतीत्यजिनं कं सुखं वलयतीति कंबलः हयत्यनेन गंतव्यमिति हयः पुंसि संज्ञायां घः प्रायेणेति घः हयगताविति धातुः । रथगताविति रथति चरति रतिं स्थापयतीति वा रथः इष्टं भासयंतीति इभाः भादीप्ताविति धातुः कनं दीप्तिं यापयतीति कन्या ध्रियतेऽनयेति धरा ॥ २७ ॥ ❀ ❀ उरुरसं षड्रसोपेतं भगवदर्पणं गवार्थे विप्रार्थे असवो जीवनं येषां ते तथोक्ताः ॥ २८ ॥

इति श्रीमद्भागवतमहापुराणे तृतीयस्कंधे श्रीमद्विजयध्वजकृतटीकायां तृतीयोऽध्यायः ॥ १ ॥

## श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

रजन्या दत्तावसरस्त्रीणां क्षणमुत्सवरूपं सौहृदं यस्य ॥ २१ ॥ ❀ ❀ गृहमेधेषु गार्हस्थ्योचितधर्मानुष्ठानेषु वैराग्यमौदासीन्यम् ॥ २२ ॥ ❀ ❀ सा च वैराग्यलीलैतद्बाधयितुमित्याह दैवेति ॥ २३ ॥ ❀ ❀ भगवन्मतन्तु विप्रशापव्याजेन मिथो यदैषामित्यादिना पूर्वमुक्तम् ॥ देवः श्रीकृष्णः ॥ २४ ॥ ❀ ❀ तत्रेति युग्मकम् ॥ २५ ॥ २६ ॥ ❀ ❀ गोविप्रार्थासव इति परमधार्मिकत्वमेव दृढीकृतं तेन भगवदिच्छयैव तादृशबुद्धित्वमागन्तुकमिति व्यञ्जितम् । ततश्च तत्र तत्र दंडश्च लोकभीषणार्थमेव नतु वास्तवमिति च दर्शितम् ॥ २७ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे तृतीयोऽध्यायः ॥ १ ॥

## श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी ।

इमं लोकं मर्त्यलोकस्थं स्वभक्तं अमुं देवलोकस्थं तेष्वपि मध्ये यदून् नितरां यदुष्वपि मध्ये स्त्रीषु रेमे इत्यासक्त्याधिक्यं क्षणदया रजन्या दत्तः क्षणोऽवसरो यासां तथाभूतासु स्त्रीषु क्षणेन रतोत्सवेन सौहृदं यस्य सः । पट्टमहिषीणां स्वरूपभूतत्वाच्चि-

च्छक्तित्वं स्कान्धप्रभासखण्डे शिवगौरीसंवादे गोप्यादिमाहात्म्ये दृष्टम्। पोडशैव सहस्राणि गोप्यस्तत्र समागताः। लक्षमेकं तथा षष्टिरेते कृष्णसुताः प्रिये। इत्युपक्रम्य हंस एव मतः कृष्णः परमात्मा जनार्दनः। तस्यैताः शक्तयो देवी पोडशैव प्रकीर्त्तिताः। चन्द्ररूपी मतः कृष्णः कलारूपास्तु ताः स्मृता इति। अत्र विशेषो दशमे प्रपञ्चयिष्यते॥ २१॥ ❀ ❀ गृहमेधेषु योगेषु रजोगुणमयकर्ममार्गेषु तदुपलक्षितकर्मिजनोपनीतभोग्यवस्तुषु च विराग औदासीन्यं सम्यगजायतेति सर्वकालमेव स आसीदेव। तदानीं त्वतिस्पष्टीबभूवेत्यर्थः। गुणेष्वसङ्गो वैराग्यमिति वैराग्यस्य लक्षणाद् गुणातीतेषु शुद्धसत्वमयेषु रुक्मिण्यादिविलासेषु वैराग्यं न व्याख्येयम्॥ २२॥ ❀ ❀ सा च वैराग्यलीला एतद्बोधयितुमित्याह यदा स्वाधीनेष्वपि भगवतो विरागस्तदा दैवाधीनेषु को विस्रम्भेत विश्वासं प्रीतिं वा कुर्वीत योगेन चेत् योगेश्वरं भगवन्तमनुव्रतः स्यात्॥ २३॥ ❀ ❀ भगवतो मते अभिप्राये कोविदा इति मुनीनां दोषः परिहृतः भगवतोऽपि तादृशाभिप्रायकारणमेकादशान्ते व्याख्यास्यते। दैवमोहिता एव वृष्ण्यादयो ययुर्नित्यभूतास्तु द्वारकायामेव प्रापञ्चिकलोकालक्ष्यतया तस्थुः। दैवाश्च ते मोहिताश्चेति वा॥ २४॥ ❀ गावो गाः बहुगुणाः पयःशीलादिमतीः॥ २५॥ ❀ ❀ वृत्तिकरीं जीविकापर्य्याप्तां भगवतेऽर्पणं यत्र तत् यथा स्यात्तथा गोविप्रार्था असवो येषां ते इति तेषां धार्मिकत्वं दृढीकृत्य भगवदिच्छाधीनसंहारत्वं व्यञ्जितम्। भगवदिच्छा च ब्राह्मणा न कोपनीया इति लोकप्रवर्त्तना नित्यभूतेभ्यो यादवेभ्यो देवाद्यंशविभाजना तेषां तन्मिषेण स्वस्वपदप्रापणा स्वीयपड्ऐश्वर्यद्योतना। स्वभक्तिभक्तधामलीलापरिकरादिमाहात्म्यगोपनेन बहिर्मुखलोकप्रतारणा स्वभक्तजनानुरागविस्तारणाद्या इति॥ २६॥ २७॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्। तृतीयोऽयं तृतीयेऽत्र संगतः संगतः सताम्॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः।

क्षणदया रात्र्या दत्तः क्षणः अवसरो यासां स्त्रीणां तासु क्षणं सौहृदं यस्य सः॥ २१॥ ❀ ❀ गृहमेधेषु गृहधर्मेषु योगेषु कामभोगसाधनेषु॥ २२॥ ❀ ❀ यदा स्वाधीनस्य श्रीकृष्णस्य स्वाधीनेषु विरागो जातः तदा योगेन हेयोपादेयविवेकेन योगेश्वरं श्रीकृष्णमनुव्रतः दैवाधीनः कर्मवश्यः कः दैवाधीनेषु स्वकृतकर्मफलेषु अनित्येषु कामेषु काम्यंते इति कामाः गृहादिपदार्थास्तेषु विस्रंभेत विश्वासं प्रीतिमिति यावत् कुर्यात्॥ २३॥ २४॥ २५॥ ❀ ❀ याः बहुगुणाः गावः ताः॥ २६॥ ॥ २७॥ ❀ ❀ भगवदर्पणं यथा स्यात्तथा दत्वा गोविप्रार्था असवो येषां ते तेभ्यो विप्रेभ्यः प्रणेमुः॥ २८॥

इति श्रीमद्भागवतसिद्धांतप्रदीपे तृतीयस्कंधीये तृतीयेऽध्यायार्थप्रकाशः॥ ३॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनीव्याख्या

सङ्कर्षणचरित्रमाह—तस्यैवमिति। एवं [1]प्रकारद्वयेन रममाणस्य विरागो भोगप्रतिबन्धात्मा षष्ठो भगवदीयो गुणः प्रादुर्भूतो जात इत्याह। द्विविधा हि विरक्तिः, भोग्यपरित्यागेन दोषदर्शनसहितेन शास्त्रदृष्ट्या साधारणी, लौकिकानामतिभोगेन च। भगवतो विशिष्टा[2] सा जातेति वक्तुं तद्धेतुमाह—संवत्सरगणान्बहूनिति। संवत्सराणां गणाः प्रभवादिसमूहाः। तेऽपि बहवो बहुरूपेण रमणात्। वैराग्यस्य विषयमाह—गृहमेधेषु योगेष्विति। उपायेषु वैराग्यम्, न तु स्वरूपभोगे। उपायो द्विविधः पूर्वमुक्तो लौकिको वैदिकश्च। तत्र सुतरां लौकिकेष्विति। गृह एव मेधा बुद्धिर्यैरिति। विरागो रागाभावरूपो रागनिवर्त्तको वा॥ २२॥ ❀ ❀ रागस्य हि उभयं निवर्तकम्, असाध्यताज्ञानमनिष्टज्ञानं च। तत्राऽनिष्टज्ञानं लौकिकेषु विहितेषु शास्त्रतः परमार्थतश्चेति तुल्यबलत्वाभावादकार्यताज्ञानं लोके निवर्तकं मन्यमानो भगवति वैराग्यमुक्त्वा पुरुषरूपेऽपि कैमुतिकन्यायेन वैराग्यमाह—दैवाधीनेष्विति। यत्र स्वप्रयत्नसाध्यता नास्ति तेनाऽप्यंशेन तत्र रागो न जायते। दृष्ट एव प्रयत्नसाध्यता, नाऽदृष्टे। सर्वमेव चाऽत्राऽदृष्टरूपकर्मसाध्यम्। तत्र देहो भोगाधिष्ठानम्, विषयास्तदाधारा भोग्याः, भोक्ता च तदभिमानी—त्रयमपि दैवाधीनम्। स्वयं पुमान्, अनेनाऽऽक्षिप्तो देहो वा। स्रगादयश्च विषयाः। ततः किमत आह—को विस्रम्भेतेति। को वा विश्वासं कुर्याद्भोगो भविष्यतीति। घुणाक्षरन्यायेन कदाचिद्भवति। न ह्येतावता घुणकीटोऽक्षराणि लिखितुं जानातीति घुणभक्षितकाष्ठेऽक्षराणि वाचयितुं कश्चिद्विचारयति। तथा दैवगत्या स्वप्नवत् कदाचिद्भोगे जाते सर्वदा भविष्यतीति को वा विश्वासं कुर्यादित्यर्थः। ननु जगदेव विश्वासं करोति, कुतो निषिध्यत इत्याशङ्क्याऽह—योगेन योगेश्वरमनुव्रत इति। शास्त्रोक्तप्रकारेण शास्त्रं बुद्ध्वा विहितभक्तिमार्गेण उपायेन योगेश्वरं सर्वोपायप्रवर्त्तकं यः सेवते सर्वभावेन, स विश्वासं न करोतीत्यर्थः॥ २३॥ ❀ ❀ एवं वैराग्यमुक्त्वा सत्यसङ्कल्पत्वाय तदनुगुणं बहिर्वैराग्यजनकं शापं निरूपयति—पुर्यामिति। पुर्यां द्वारकायाम्। सामीप्ये सप्तमी। कदाचिदिति भगवद्विचारितकाले। क्रीडद्भिरिति न तेषां स्वभावतो दुष्टत्वम्। यदुभोजकुमारकैरिति उपजीव्याः सर्वे एव भगवदीया बालकाः, तत्रापि कुमाराः, 'न वै शिशूनां गुणदोषयोः पदम्' इति दोषाभावः सूचितः। तैः कोपिता मुनयो मननशीला ब्रह्मर्षयः शेपुः शापं दत्तवन्तः। तत्र हेतुः—भगवन्मतकोविदा इति। भगवदभिप्रायं जानन्तीति सर्वदोषाभावः॥ २४॥ ❀ ❀ ततः परित्यागत्रयमाह—ततः

१. लौकिकेन वैदिकेन च. प्र.। २. अतिभोगजा. प्र.।

कतिपयैरिति त्रिभिः—गृहपरित्यागः, प्रवाहपरित्यागः, सर्वस्वपरित्यागश्चेति; रागाभावद्वयस्य तद्धेतुभूतशापस्य च त्रिषु पर्यवसानात्। तत्राऽऽद्यमाह—कतिपयैरेव मासैः त्रिभिर्मासैः सर्वेऽपि यादवा निर्गता इति। वृष्णिभोजान्धकाः सात्त्विकराजसतामसा निर्दिष्टाः। तदादयः सर्वेऽपि त्रिष्वेवाऽन्तर्भवन्तीति। अत एव संहृष्टा ययुः। न हि भगवदभिप्रायं सगुणा जानन्ति। प्रकर्षेण भानस्थानं संहर्तुः सङ्कर्षणस्य स्थानं प्रभासः। रथैरिति युद्धसाधननयनं सूचितम्। एवं गमने हेतुर्दैवरूपेण भगवता मोहिता इति। मनुष्यभावं परित्यज्य देवभावः प्राप्तव्य इति। अनेन शापोऽत्र विपरीतो निरूपितः॥ २५॥ ❀ ❀ शापो हि हीनभावं नयति, न तूत्कृष्टभावम्। एते तु शापादेवभावं प्राप्स्यन्तीति लौकिकक्रियापरित्यागार्थमाह—तत्र स्नात्वेति। अयमेव वा विशेषमोहः। ते हि भगवद्भक्ता भगवद्भक्त्यर्थमेव सर्वसमाधानं कर्तुमुचितास्तथापि स्नानादिकमेव कृतवन्तः। तत्र सरस्वत्यामग्निकुण्डे वा स्नात्वा देवर्षिपितृतर्पणं विधाय विप्रेभ्यो बहुगुणा गावः। बहुदोहसारदुग्धसाधुत्वादयो बहवो गुणाः। अनेनाध्यात्मिकाधिदैविकाधिभौतिकदोषः सम्पादित इत्युक्तम्॥ २६॥ ❀ ❀ धनत्यागमाह—हिरण्यमिति हिरण्यं सुवर्णम्। हिरण्यं रजतमिति देवपितृप्रीत्यर्थं दक्षिणाविषयः। शय्यां वासांसि इति रात्रिदिनसुखकराणि। अजिनकम्बलानिति आस्तरणपरिधेयानि। त्रिविधान्येतानि सत्त्वरजस्तमोभेदेन साधारणानां देयानि। हयान् रथान्, केवलाः सहिताश्चाश्वाः। इभा हस्तिनः स्वतन्त्राः। कन्यां धरामिति राजसं दानम्। हयाः सात्त्विकाः। वृत्तिकरीमपीति भूमिमात्रम्। पूर्वं धरा ग्रामादिरूपा। किं बहुना, येषां यदस्ति, यत्किञ्चिन्नीतम्। तत् सर्वं ब्राह्मणद्वारा परित्यक्तमित्यर्थः॥ २७॥ ❀ ❀ एवं परित्यज्य शुद्धा भूत्वा भगवत्प्रीतिकरं कर्म कृतवन्त इत्याह—अन्नं चोरुरसमिति। अनेकव्यञ्जनयुक्तमन्नं पूर्वोक्तेभ्य एव ब्राह्मणेभ्यः कृष्णप्रीत्यर्थं दत्त्वा निवृत्तपापा भक्त्यावेशेन सात्त्विकभावं प्राप्ताः स्वधर्मोद्बोधेन राजसः मिश्राः सात्त्विका जाता इत्याह—गोविप्रार्थासवः शूरा इति। गवां विप्राणामेवार्थे असवः प्राणा येषामिति सात्त्विकत्वम्। शूरा इति राजसाः। तादृशानां सर्वप्रायश्चित्तमाह—प्रणेमुर्भुवि मूर्धभिरिति। य एवं शापं दत्तवन्तस्तेभ्यस्तदीयेभ्यो वा भूमौ साष्टाङ्गप्रणामं कृतवन्तः। शिष्टेषु शिष्टानि। एवं मर्यादया चतुर्विधं भगवच्चरित्रमत्र निरूपितम्, इन्द्रियाणां ज्ञानकर्मभेदो विहिताविहितभेदश्च। अष्टभिः सप्तभिश्चैव षड्भिः सप्तभिरेव च। चतुर्मूर्तेर्भगवतश्चरित्रं 'खमिहोच्यते। १। एतद्रूपाणीन्द्रियाणि नान्यं गृह्णन्ति च क्वचित्। सर्गार्थं हेतवश्चोक्ता जन्महेतुस्वभावतः। २।—॥ २८॥

इति श्रीभागवतसुबोधिन्यां श्रीलक्ष्मणभट्टात्मजश्रीवल्लभाचार्यविरचितायां तृतीयस्कन्धे तृतीयाध्यायविवरणम्॥३॥

## श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

तस्यैवमित्यत्र। प्रकारद्वयेनेति। लौकिकेन वैदिकेन च। विशिष्टेति। अधिभोगजा॥ २२॥ ❀ ❀ दैवाधीनेत्यत्र। भगवद्वार्ताकथनप्रस्तावे वार्तान्तरस्य कुतः कथनमित्याकाङ्क्षायामाहुः—रागस्येत्यादि। तुल्यबलत्वाभावादिति। वैराग्योपाधिकेषु, रागोपाधिकेषु च विहितत्वस्य निन्दितत्वस्य तौल्येऽपि परमार्थविचारे बलस्य तुल्यत्वाभावात्। तथा च वैराग्ये प्रस्तुते तत्प्रसङ्गात् कथनमित्यर्थः॥ २३॥ ❀ ❀ अन्तिमसमाप्तौ। स्कन्धार्थविचारेण षण्णां तात्पर्यमाहुः—शिष्टेषु शिष्टानीति। तथा च "दैवाधीनः" इत्यत्रोक्तरीत्या कामेषु[2] विश्रंभभावश्चक्षुःकार्यम्। "पुर्याम्" इत्यत्र भगवन्मतज्ञानेन प्रेरणं तद्देवताभूतस्यार्कस्य कार्यम्। 'ततः' इत्यत्र शापस्य भगवदाज्ञायाः श्रवणाद्गमनं श्रोत्रकार्यम्। 'तत्र' इत्यत्र स्नानतर्पणादिकं दिग्विशेषनियतत्वात् तत्र प्रेरणं दिक्कार्यम्। "हिरण्यम्" इत्यत्र वृत्तिकरधरादाने प्रेरणं रसनेन्द्रियदेवताकार्यम्। "अन्नम्" इत्यत्र रसनकार्यं स्फुटमेवेत्येवमेतानि त्रीणीन्द्रियाणि सदेवताकान्युक्तानीत्यर्थः। वार्तापक्षे अध्यायार्थं सङ्गृह्णन्ति—एवमित्यादि। अत्र मर्यादयेत्यनेन सर्वलीलास्वनिरुद्धसम्बन्धो न बाध्यते। किन्तु मर्यादापदं विभागपरम्। स्कन्धार्थविचारेणेन्द्रियनिरूपणेऽपि किञ्चिद्विशेषमाहुः—इन्द्रियाणामित्यादि। द्विविधान्यपि बहिरिन्द्रियाण्यान्तराणि च कार्यानुमेयानीति कार्यद्वारा तद्भेदः। मध्ये माध्व्या मदेत्यनेनाविहितकार्यस्याऽपि बोधनाद्विहिताविहितभेदश्चोक्त इति। चरित्रोक्तौ श्लोकसङ्ख्या वदन्तोऽध्यायार्थं कारिकाभ्यां सङ्गृह्णन्ति—अष्टभिरित्यादि। खमिन्द्रियम्। तथा च भगवानिन्द्रियसर्गकर्ता, चतुर्मूर्तिदेवताचरित्रमिन्द्रियरूपं करणम्, तेन करणेन स्मरणादिना व्यापारेणाधिकारिण एतद्रूपाणीन्द्रियाणि यदा करोति, तदा तानि भगवदतिरिक्तं न विषयतया स्वीकुर्वन्ति। तथा चैवं सर्वत्र लौकिकपदार्थेषु कार्येषु च चतुर्मूर्तिचरित्रत्वेन ग्रहणं यस्य भवति, तदिन्द्रियाणि सँस्कृतानीति ज्ञेयमित्यर्थः। एवमिन्द्रियसंस्कारः कस्य जीवस्येत्यपेक्षायां तत्स्वरूपं बोधयितुं यादवनिरूपणमित्याशयेनाहुः—सर्गेत्यादि। सर्गार्थं लीलासृष्टौ पुनरत्रागमनार्थं हेतुर्जीवोऽस्य सर्गादेरित्यत्रोक्ता अविद्याकर्मणां कारका हेतुभूता जीवा अधिकारित्वेनोक्ताः। तत्र हेतुः—जन्मेत्यादि। तथा चैतादृक्स्वभावविशिष्टानां लीलासृष्टावतारणयोग्यानामेवमिन्द्रियसंस्कार इत्यर्थः। एतेन कालमागधादीनामपि "निलयं तदीयम्" इति वाक्यात् क्रोधादिपूर्वकस्मरणेन मुक्त्यर्थमवतारणाय च सँस्कारो बोधितः। तेन कामादिना सर्वात्मभावेन च यथाधिकारे यथाकार्यमिन्द्रियसँस्कारो बोद्धव्य इति ज्ञापितम्॥ २८॥

इति श्रीगोस्वामिपुरुषोत्तमजीमहाराजकृत—तृतीयस्कन्धसुबोधिनीप्रकाशे तृतीयाध्यायविवरणम्।

---

१. इन्द्रियम्. प्रकाशः। २. पुस्तकेषु 'भ' इति नास्ति।

### श्रीगिरिधरकृता बालप्रबोधिनी ।

इमं लोकं भूलोकस्थं जनममुं च उपरिलोकस्थं जनञ्च यदूंश्च सुतरामेव रमयन्स्वयमपि यथेष्टं रेमे । एवं रममाणस्य स्त्रीलम्पटता प्रतिभाति तां निरस्य विशिनष्टि क्षणदया रात्र्या दत्तः क्षणः अवसरः उत्सवो वा यासां स्त्रीणां तासु क्षणं सौहृदं प्रेम यस्य स इति ॥ २१ ॥ ❀ ❀ एवमनासक्त्या बहून्संवत्सरगणान्रममाणस्य तस्य भगवतः गृहमेधेषु गृहे मेधा बुद्धिर्येषां स्तेषु योगेषु कामभोगोपायेषु विरागः समजायत । यद्यपि भगवत्त्वम् सर्वदैव पूर्णं वैराग्यं तस्यास्ति तथापि मनुष्यनाट्येन विषयेष्वासक्तिर्दर्शिता ऽऽसीत्, तत्रेदानीमौदासीन्यं प्रकटितमित्यर्थः ॥ २२ ॥ ❀ ❀ एवं वैराग्यानुकरणमपि तस्य किमर्थमित्यपेक्षायां कैमुत्य-न्यायेन जनशिक्षार्थमेवेत्याशयेनाह—दैवाधीनेष्विति । यदा स्वतन्त्रो भगवान् स्वाधीनेष्वपि कामेषु विरक्तस्तदा स्वयं दैवाधीनः प्रारब्धाधीनः पुमान् दैवाधीनेषु कामेषु विषयेषु को विश्रम्भेत विश्वासं कुर्यात् ? इत्यन्वयः । ननु बहवोऽपि तेत्र विश्वासं गता दृश्यन्ते इत्याशङ्क्याह—योगेनेति, योगेन भक्तियोगेन योगेश्वरं योगफलदातारं श्रीकृष्णमनुव्रतः अनुसृतः तन्मार्गनिष्ठ इत्यर्थः ॥ २३ ॥ ❀ ❀ अथ स्वकुलं सञ्जिहीर्षोर्भगवतोऽभिप्रायानुसारेण विप्रशापप्रवृत्तिं यदुकुलसङ्ग्रहेणाह—पुर्यामित्या-दिना । पुर्यां द्वारकायां कदाचिद्भगवत्स्वकुलसञ्जिहीर्षानन्तरकाले क्रीडद्भिः रममाणैः यदुभोजकुमारकैः कोपिताः वञ्चनेन कोपं प्रापिताः मुनयः शेपुः शापं दत्तवन्त इत्यर्थः । ननु कुमाराणामज्ञत्वेन वञ्चने प्रवृत्तिसम्भवेऽपि ते मननशीलाः कथं शापे प्रवृत्ता इति शङ्कानिरासायाह—भगवन्मतकोविदा इति वि[१]प्रशापद्वारा स्वकुलं संहर्त्तव्यमिति हि भगवतो मतमभिप्रायस्तत्र कोविदास्तद्-भिज्ञा इत्यर्थः ॥ २४ ॥ ❀ ❀ ततः शापानन्तरं कतिपयैर्मासैर्नानावि[२]धारिष्टदर्शनानन्तरं तदरिष्टशान्त्यर्थं संहृष्टाःसन्तो सन्तो वृष्ण्यादयो यादवाः रथैः प्रभासं तीर्थं ययुरित्यन्वयः । ननु विप्रैः शप्तानां तेषां कथं हर्षः सम्भवति कथं वा तेषां भगवद्भ-क्तानां सर्वारिष्टनिवारकं भगवन्तं विहायारिष्टनिवृत्त्यर्थं तीर्थादौ श्रद्धा जातेत्याशङ्क्याह—देवेति । देवेन श्रीकृष्णेनैव अन्तर्यामि-रूपेण विमोहिताः संहारार्थं भ्रान्ताः कृताः । अन्यथा यदि शरणमागच्छेयुस्तदा संहारो न स्यादिति भावः ॥ २५ ॥ ❀ ❀ तत्र गताः किं कृतवन्त इत्यपेक्षायामाह—तत्रेति त्रिभिः । तत्र प्रभासे स्नात्वा तस्य तीर्थस्याम्भसा जलेन पित्रादींस्तर्पयित्वा अथानन्तरं बहुगुणाः पयश्शीलादिबहुगुणोपेताः गावो गाः विप्रेभ्यो ददुः ॥ २६ ॥ ❀ ❀ तथा हिरण्यादीन् कन्याश्च वृत्तिकरीं जीविकापर्याप्तां धरां भूमिमपि ददुरिति पूर्वेणान्वयः । दत्त्वेत्यग्रेण वाऽन्वयः ॥ २७ ॥ ❀ ❀ भगवत्यर्पणं यथा भवति तथा उरुरसं मधुरादिबहुरसयुक्तमन्नं च तेभ्यो विप्रेभ्यो दत्त्वा गोविप्रार्थाः सर्वस्वदानेनावशिष्टाः असवः प्राणाः येषां तथाभूताः सन्तस्तान् मूर्द्धभिर्भुवि प्रणेमुरित्यन्वयः । कथमेवं सर्वस्वदानं सम्भवतीत्यपेक्षायामाह—शूरा इति ॥ २८ ॥

इति श्रीवल्लभाचार्यवंश्यगोपालसूनुना ॥ श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा ॥ १ ॥
श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये ॥ श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी ॥ २ ॥
रचिता च तृतीयेऽत्र बन्धसर्गनिरूपणे ॥ तृतीयो विवृतोऽध्यायो राजलीलानिरूपकः ॥ ३ ॥

### हिन्दी अनुवाद

इस तरह बहुत वर्षों तक विहार करते-करते उन्हें गृहस्थ-आश्रम-सम्बन्धी भोग-सामग्रियोंसे वैराग्य हो गया ॥ २२ ॥ ❀ ❀ ये भोग-सामग्रियाँ ईश्वरके अधीन हैं और जीव भी उन्हींके अधीन है । जब योगेश्वर भगवान् श्रीकृष्णको ही उनसे वैराग्य हो गया तब भक्तियोगके द्वारा उनका अनुगमन करनेवाला भक्त तो उनपर विश्वास ही कैसे करेगा ? ॥ २३ ॥ ❀ ❀ एक बार द्वारकापुरीमें खेलते हुए यदुवंशी और भोजवंशी बालकोंने खेल-खेलमें कुछ मुनीश्वरोंको चिढ़ा दिया । तब यादवकुलका नाश ही भगवान्को अभीष्ट है—यह समझकर उन ऋषियोंने बालकोंको शाप दे दिया ॥ २४ ॥ ❀ ❀ इसके कुछ ही महीने बाद भावीवश वृष्णि, भोज और अन्धकवंशी यादव बड़े हर्षसे रथोंपर चढ़कर प्रभासक्षेत्रको गये ॥ २५ ॥ ❀ ❀ वहाँ स्नान करके उन्होंने उस तीर्थके जलसे पितर, देवता और ऋषियोंका तर्पण किया तथा ब्राह्मणोंको श्रेष्ठ गौएँ दीं ॥ २६ ॥ ❀ ❀ उन्होंने सोना, चाँदी, शय्या, वस्त्र, मृगचर्म, कम्बल, पालकी, रथ, हाथी, कन्याएँ और ऐसी भूमि जिससे जीविका चल सके तथा नाना प्रकारके सरस अन्न भी भगवदर्पण करके ब्राह्मणोंको दिये । इसके पश्चात् गौ और ब्राह्मणोंके लिए ही प्राण धारण करनेवाले उन वीरोंने पृथ्वीपर सिर टेककर उन्हें प्रणाम किया ॥ २७-२८ ॥

**तीसरा अध्याय समाप्त**

---

१. विप्राणां यदुकुलशापप्रदानं तु एकादशस्कन्धस्य प्रथमाध्याये ( श्लो० १०—२४ ) द्रष्टव्यम् । २. एतान्नानाविधारिष्टदर्शनं त्रिंशेऽध्यायेऽवलोकनीयम् ।

# अथ चतुर्थोऽध्यायः

## उद्धव उवाच

अथ ते तदनुज्ञाता भुक्त्वा पीत्वा च वारुणीम् । तया विभ्रंशितज्ञाना दुरुक्तैर्मर्म पस्पृशुः ॥ १ ॥
तेषां मैरेयदोषेण विषमीकृतचेतसाम् । निम्लोचति रवावासीद्वेणूनामिव मर्दनम् ॥ २ ॥
भगवान् स्वात्ममायाया गतिं तामवलोक्य सः । सरस्वतीमुपस्पृश्य वृक्षमूलमुपाविशत् ॥ ३ ॥
अहं चोक्तो भगवता प्रपन्नार्तिहरेण ह । बदरीं त्वं प्रयाहीति स्वकुलं संजिहीर्षुणा ॥ ४ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका ।

चतुर्थे बंधुनिधनं श्रुत्वात्मज्ञानलब्धये ॥
उद्धवस्योपदेशेन क्षत्ता मैत्रेयमागमत् ॥ १ ॥

तैर्ब्राह्मणैरनुज्ञाताः वारुणीं पैष्टीं मदिराम् ॥ १ ॥ ❀ ❀ वारुण्येव मैरेयं तस्य दोषेण । रवौ निम्लोचत्यस्तं गच्छति सति मर्दनं कदनम् ॥ २ ॥ ❀ ❀ उपस्पृश्य सरस्वत्यामाचम्य ॥ ३ ॥ ❀ ❀ अहं चोक्तः पूर्वमेव द्वारकायाम् ॥ ४ ॥

### वंशीधरकृतो भावार्थदीपिकाप्रकाशः

तेन कृष्णेन वानुज्ञाता दिवं गंतुमित्येव तत्त्वं तथा वारुण्या उपलक्षणभूतया भगवतैव विभ्रंशितं ज्ञानं येषां ते पैष्टीं यवादिपिष्टोद्भूतां दुर्वचोभिः परस्परमिति शेषः । मर्म पस्पृशुरतिपीडाकराणि दुर्वाक्यान्यूचुरित्यर्थः ॥ १ ॥ ❀ ❀ तेषां यदूनाम् ॥ २ ॥ ❀ ❀ स्वात्ममायाया इति मौशललीलां भगवतेन्द्रजालवदेव दर्शिता तेन च नित्यभूता लीलापरिकराः प्रद्युम्नाद्या यादवास्तु—द्वारकायामेव स्थितास्तत्तत्प्रविष्टदेवाश्च तत्तदंगेभ्यः पृथक्कृत्य तत्तद्रूपेण प्रभासमानीय संहृताः । रामप्रद्युम्नानिरुद्धानां भगवद्व्यूहत्वात् । "एते हि यादवाः सर्वे मद्गणा एव भामिनि । सर्वदा मत्प्रिया देवि मत्तुल्यगुणशालिनः । यथा सौमित्रिभरतौ यथा संकर्षणादयः । तथा ते नैव जायन्ते निजलोकाद्यदृच्छया" इति पाद्मोक्तेः । 'देवानां च हितार्थाय वयं प्राप्ता मनुष्यताम्' इति हरिवंशेऽक्रूरोक्तेश्च । यादवानां नित्यलीलापरिकरत्वात् तेषु सांबादिषु प्रविष्टानां ब्रह्मादीनां देवानामप्यधिकारमध्य एव नाशानर्हत्वात् मौशललीलेयं मायिक्येव मायिक्यपि सर्वमायिकसृष्ट्यभावेपि श्रीकृष्णलीलांतर्वर्त्तित्वादचिंत्ययोगमायानुमोदिता नित्यैव ज्ञेया ॥ ३ ॥ ❀ ❀ प्रपन्नस्य ममार्त्तिहरेण संजिहीर्षुणांतर्द्धापयता ॥ ४ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

तया वारुण्या उपलक्षणमात्रया भगवतैव विभ्रंशितं ज्ञानं येषां ते ॥ १ ॥ २ ॥ ❀ ❀ स्वात्ममायाया इन्द्रजालवत्स्वाचिंत्येच्छाशक्त्या गतिं वृत्तिं तु प्रपञ्चात्तिरोधानलक्षणां मौशललीलाम् ॥ ३ ॥ ❀ ❀ चकारोत्र स्वद्वाराज्ञानशिक्षालक्षणं लीलांतरं समुच्चिनोति बदरीप्रयाणाज्ञायां प्रयोजनं तु अस्माल्लोकादुपरत इत्यादिकं ज्ञेयम् ॥ ४ ॥

### श्रीमद्वीरराघवव्याख्या

अथ स्नानदानाद्यनंतरं ते यदवः तदनुज्ञाताः विप्रैरनुज्ञाताः भुक्त्वा वारुणीं पैष्टीं मदिरां पीत्वा तया वारुण्यैव विभ्रंशितज्ञानाः विभ्रष्टस्वपरविज्ञानाः संतो दुरुक्तैः मर्मस्थानि पस्पृशुः ॥ १ ॥ ❀ ❀ ततः मैरेयस्य मद्यस्य दोषेण मदेन विषमीकृतानि विभ्रंशितानि चेतांसि येषां यदूनां रवौ सूर्ये निम्लोचत्यस्तं गच्छति सति वेणूनामिव मर्दनं परस्परसंघर्षणमासीत् ॥ २ ॥ ❀ ❀ भगवांस्त्विति स भगवानात्मनो मायायाः प्राक्तनसंकल्पस्य गतिं फलरूपां तां स्वकुलसंहृतिमवलोक्य सरस्वतीमुपस्पृश्य सरस्वत्यां स्नात्वा वृक्षमूलं अश्वत्थवृक्षमूलमुपाविशत् प्राविशत् ॥ ३ ॥ ❀ ❀ अहमिति प्रपन्नार्त्तिहरेण स्वकुलं संजिहीर्षुणा भगवता त्वं बदरिकाश्रमं प्रति प्रयाहि गच्छेत्युक्तोहम् ॥ ४ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली ।

अथ तदनुज्ञातास्तैर्विप्रैर्भोजनायानुज्ञाताः तया वारुण्या विभ्रंशितं स्वः पर इति ज्ञानं येषां ते तथोक्ताः परस्पृशुस्ताडितवंतः। स्पृश उपतापे ॥ १ ॥ ❀ ❀ मैरेयदोषेण मैरेयाख्यमद्यपानदोषेण रवावादित्ये निम्लोचति अस्तं गच्छति सति आसीत् विमर्दनं विनाशलक्षणः कलहोऽन्योन्यसंघर्षलक्षणः ॥ २ ॥ ❀ ❀ तदा भगवता किमकारीति तत्राह भगवानिति । आत्ममायाया आत्मसामर्थ्यस्य गतिमवलोक्य[१] पूर्वमेवेति शेषः तत्तद्योग्यतया तत्तद्वस्तुषु प्राकट्येन या वर्तते तां ज्ञात्वा कतिपयैर्वर्षैः पूर्वमेव जनार्दनः मौसलं ज्ञानसंतत्या उद्धवं बदरीं नयदिति नयदनैषीत् ॥ ३ ॥ ❀ ❀ संक्षिप्योक्तं विवेचयति अहं चेति संजिहीर्षुणा संहर्तुकामेन हेत्यनेन तज्ज्ञानं तत्र विस्तीर्य पुनर्द्वारवतीमगादिति वचनात् स्वर्गारोहणात्पूर्वमपि भगवदाज्ञया बदरीगमनं स्पष्टयति ॥ ४ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

तया उपलक्षणभूतया भगवतैव विभ्रंशितं ज्ञानं येषां ते ॥ १ ॥ २ ॥ स्वात्ममायाया इति इन्द्रजालवदेव मौसललीला व्यञ्जिता ॥ ३ ॥ ❀ ❀ बदरीं त्वं प्रयाहीति । अत्र अस्माल्लोकादुपरत इत्यादि वक्ष्यति ॥ ४ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

अप्राकट्यं हरेः श्रुत्वा स्वकुलस्योद्धवाच्छ्वसन् । चतुर्थे स्वोपदेशार्थं मैत्रेयं विदुरोऽन्वगात् ॥ १ ॥

तैर्ब्राह्मणैस्तेन कृष्णेन वा अनुज्ञाताः मर्म परस्परमिति शेषः ॥ १ ॥ ❀ ❀ वारुण्येव मैरेयं तस्य दोषेण निम्लोचति अस्तं गच्छति सति मर्दनं नाशः ॥ २ ॥ ❀ ❀ ननु वात्सल्यपारावारो भगवान् कृतचरपुत्रपौत्रादिपरमपालनः प्रद्युम्नादिवधं कथं साक्षाद् दृष्टवानित्यत आह भगवानिति । मायाया गतिं चेष्टां प्रद्युम्नाद्या यादवाः परस्परवधेन सद्य एव नाशं प्रापुरिति सर्वलोकप्रत्यायनरूपां स्वात्मेति नहि यदीया माया तमपि सा मोहयेदित्यर्थः । मायायाः स्वाश्रयाव्यामोहनस्वाभावत्वात् ततश्च भगवता त्वेवं विलोकितं नित्यभूता लीलापरिकराः प्रद्युम्नादयो यादवा द्वारकायामेव स्थितास्तत्तत्प्रविष्टचरा देवास्तु तत्तदङ्गेभ्यः पृथक् कृतास्तत्तद्रूपेण प्रभासमानीता भुक्त्वा पीत्वा स्वलब्धानुज्ञाः सुखेन दिवं ययुरिति । अतएव पूर्वपद्ये तदनुज्ञाता इति दिवं गन्तुमित्येव तत्त्वम् । अत्र रामप्रद्युम्नानिरुद्धानां भगवद्व्यूहत्वात् एते हि यादवाः सर्वे मद्गणा एव भामिनि । सर्वदा मत्प्रिया देवि मत्तुल्या गुणशालिन इति यथा सौमित्रिभरतौ यथा सङ्कर्षणादयः । तथा तेनैव जायन्ते निजलोकाद्यदृच्छयेत्यादि पाद्मोक्तेः । देवानाञ्च हितार्थाय वयं प्राप्ता मनुष्यतामिति । हरिवंशे अक्रूरोक्तेश्च । यादवानां नित्यलीलापरिकरत्वात् तेषु साम्बादिषु प्रविष्टानां गुहादीनां देवानामप्यधिकारमध्य एव नाशानर्हात् मौसललीलेऽयं मायिक्येव मायिक्यपि सर्वमायिकसृष्ट्यभावेऽपि श्रीकृष्णलीलान्तर्वर्त्तित्वादचिन्त्ययोगमायानुमोदिता नित्यैव ज्ञेया ॥ ३ ॥ ❀ ❀ अहञ्चोक्तः पूर्वमेव द्वारकायां अहञ्चेति । प्रकाशभेदेन स्वसङ्गे अहं रक्षित इदमुक्तश्चेति सरस्वत्यां चकार प्रयोजित उद्धवः । तत्र हेतुः प्रथमे पक्षे प्रपन्नस्य मम आर्त्तिं स्वविरहपीडां हरतीति तेन द्वितीये अस्माल्लोकादुपरत इति वक्ष्यमाणयुक्त्या प्रपन्नानां बदर्य्याश्रमवासिनां स्वांशनरनायणादीनां आर्त्तिं स्वचरितं भक्तिज्ञानवैराग्यादिश्रवणोत्कण्ठारूपं हरतीति तेन ॥ ४ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

तदनुज्ञाता विप्रानुमोदिताः ॥ १ ॥ ❀ ❀ मैरेयदोषेण वारुणीव्यामोहेन ॥ २ ॥ ❀ ❀ भगवान्स्वात्मनः मायायाः संकल्पस्य तां पूर्वत्र संकल्पितां गतिं फलं यदुकुलसंहारम् अवलोक्य सरस्वतीमुपस्पृश्य तस्यामाचम्य ॥ ३ ॥ ❀ ❀ बदरीं त्वं प्रयाहीति द्वारवत्यामहमुक्तः ॥ ४ ॥ ५ ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनीव्याख्या

चतुर्थे ह्यधिकारार्थं बुद्धिर्भगवतोच्यते । पञ्चधा[२] साऽत्र सम्प्रोक्ता पञ्चपर्वाधिकारिणाम् ॥ १ ॥
स्वरूपं च गुणाः प्रोक्ताः फलमत्र निरूप्यते । एतादृशे हि पुरुषे भगवानाविशेद्यतः ॥ २ ॥
तदैव तद्गताः सर्वे बुद्ध्यन्ते नाऽन्यथा[३]यथा । अतो भगवतः सर्गे हेतुश्चाऽयं निरूप्य[४]ते ॥ ३ ॥

तत्र प्रथमं स्मृत्यात्मिका बुद्धिर्भगवदिच्छयोत्पन्नेत्याह—अथेत्यादित्रिभिः—तामसी राजसी चैव सात्त्विकी चेति सा क्रमात् । पूर्वमेतादृशा अपि सर्वदोषविनिर्मुक्ताः । भगवदिच्छया श्रमापनोदनं कर्तव्यमिति तेषां मतिरुत्पन्ना । ततः पूर्ववासनया तेषामसद्-

---

१ स्वर्गारोहणापेक्षया षड्विंशत्या वत्सरेभ्यः पूर्वमित्यर्थः ॥ २. स्मृति–निश्चय–संशय–विपर्ययद्वयरूपेण पञ्चधा तत्र हेतुः प्रकाशः ।
३. यथावत् प्रकाशः । ४. निरूपितः ग. घ. च. ।

बुद्धिरुत्पन्नेत्याह—अथ भिन्नप्रक्रमेण। ते पूर्वोक्ता ब्राह्मणैरनुज्ञाताः। भुक्त्वेत्यन्तं पूर्वसम्बन्धि। वारुणीं पीत्वेति निषिद्धाचरणम्। तस्याः फलमाह—तया विभ्रंशितज्ञाना इति। सर्वं हि साधनं व्यर्थं यदि बुद्धिर्विनश्यति। अकर्त्तव्यं तदा नाऽस्ति महतामपि निश्चितम्। १। तस्मादेवं न कर्तव्यमिति [1]बुद्धिरिहोच्यते। अतोऽत्र शास्त्रे सर्वत्र ह्यप्रामाण्यं स्मृतेः सदा। २। बुद्धिभ्रंशफलमाह—दुरुक्तैर्मर्म पस्पृशुरिति। दुरुक्तानि दुर्वाक्यान्यपकर्षबोधकानि। यस्य यन्नोचितं तत् प्रमादाज्जातं मर्मेत्युच्यते। अपकर्षवाक्यैस्तादृशमुक्तवन्त इत्यर्थः। ज्ञानं चाऽत्र शास्त्रे स्थिरम्, न त्रिक्षणावस्थायि। घ्राणेन गन्धवन्मनसा तस्य ग्रहणे स्फुरणम्। तद्भगवति नित्यमेव, अन्येषां तु जन्यम्। शरीरस्याऽन्नमिव लोकशास्त्रादिकं तस्य पोषकम्। इन्द्रियाणि जनकानि, अभ्यासो दार्ढ्यहेतुः। तच्च त्रिविधम्, सात्त्विकादिविभेदेन। देशादयश्च षट्पदार्था निषिद्धास्तस्य नाशकाः, विहितास्त्वन्तःकरणशुद्धिहेतवः पोषकाः। तत्र[2] जीवस्य प्रयत्नेन[3] स्थापितं तिष्ठति, गृहे पदार्था इव। शब्दा विषयाश्चोद्दीपका जनितस्य, अजनितस्योत्पादन एवं सामग्रीरूपाः। तदेव बुद्धिचेतनादिवाच्यम्। तदेकं भगवद्रूपम्। तस्योत्पत्तिरनेकधा। आनन्त्येऽपि दशधा तन्निरूप्यते, लीलावत्। आश्रय[4]रूपं [5]मुख्यमविकृतं सर्वोपास्यं सर्वात्मभूतं च। तदेव प्रकाशकधर्मरूपेणाऽऽविर्भूतमविकृतमेव भगवद्गुणत्वेनोच्यते। तदेव[6] पुनः सृष्ट्यर्थं[7] वेदशरीरं गृह्णाति। तदपि रूपं विराडिवाऽन[8]न्तम्। पश्चाद्बीजतामप्यापद्यते शरीरविशिष्टम्। तदा व्यष्टय इव विकृताः सर्वे शब्दा भवन्ति। तदेव पुनः प्रमातारं प्रमेयं चाऽऽश्रयते[9]। तत्र प्रमेयाश्रयं प्रमेयानन्त्यादनन्तमेव। परं प्रमेयरूपतया एकविधमिति तदेकमेवोच्यते। प्रमातरि तु पञ्चधा तद्भवति, अन्तःकरणेन्द्रियाश्रयणात्। अन्तःकरणे तु चतुर्धा, इन्द्रिये त्वेकधा[10]। विशेषास्तु विषयाश्रयज्ञानद्विगुणतया पुष्टा भवन्ति। तत्र[11] मनसा जनितं संशयात्मकं भवति, विशेषास्त्वत्राऽपि विषयकृताः। अहङ्कारो बुद्ध्या सहितः स्वापं पश्यतीति स्वप्नज्ञानमहङ्काराश्रितम्। शरीराभिमतिस्तु अहङ्कारेण कृता बुद्ध्याश्रया। चित्तं त्वात्मानमेव सुषुप्तौ पश्यत्यन्यदा लीनमतो निर्विषयकं ज्ञानं चित्ताश्रितम्। तस्य च स्थितिर्निरूपिता शास्त्रादिभिरिति नाशोऽपि विशेषेण रू[12]प्यते। पूर्वोक्तमर्यादाभाव एव सामान्यतो नाशः। [13]तत्र हेतुर्माया, ज्ञानस्यैव तिरस्करिणी। तस्या षडाश्रयभूताः कालादयः। कलिर्मगधमद्यादिदैत्यशाक्तनिषिद्धक्रियाः। ते यथायथं स्वरूपतः, स्थानतो, गुणतश्च ज्ञानस्यांशतो नाशं कुर्वन्ति। येषु ज्ञानं जायते तेष्वेव नश्यति। अतोऽत्र मदिरया, तेषां यज्ज्ञानं पूर्वस्थितं प्रमातरि बुद्ध्[14]याश्रयम्, तद[15]धस्तात्पतितमिति विभ्रंशितज्ञानत्वम्। मायया चाऽविद्यमानाः पदार्था बुद्धावेवोपस्थाप्यन्ते। तद्विषयसहकृतं बुद्ध्याश्रितं ज्ञानं स्मृतिरूपं भवति। तया कृत्वा तद्विषयसम्बन्धीनि वाक्यानि दुरुक्तानि भवन्ति। तानि च विषयसहितानि विष[16]याश्रयाधारं मर्म स्पृशन्ति। 'मृङ् प्राणत्यागे' इति धातोरावश्यकमरणार्थं धातोर्द्विर्भावे कृते 'डन्'—प्रत्यये कृते मर्मेति भवति। तत्राऽप्यल्पोऽप्याघातः शब्दकृतोऽपि महतीं व्यथां जनयति। मत्तत्वात् स्पर्शमात्रमुक्तम्, न त्वाघातः॥ १॥ ❀ ❀ एवं स्वरूपविस्मरणपूर्वकविपरीतपदार्थस्मरणैः शब्दस्पर्शेन क्षोभं जनयित्वा, शस्त्रादिभिरपि स्पर्शं कृतवन्त इत्याह—तेषामिति। मैरेयेण द्रव्येण पूर्वज्ञाननाशपूर्वकविपरीतज्ञानजननलक्षणदोषेण स्वस्थाऽपि चेतनात्मिका बुद्धिः स्नेहेनाऽतिसमापि विषमा जाता। विषयाश्रितमपि ज्ञानं तेजःप्रकाशापेक्षमिति, तदभावे तदपि नेन्द्रियपोषकं जातमित्यभिप्रायेणाऽऽह—निम्लोचति रवावासोदिति। सर्वत्र दोषः समानो जात इत्याह—वेणूनामिवेति। मर्दनं नाशः॥ २॥ ❀ ❀ एवं तेषां पूर्वस्थितिं साधनसाध्यभावेन तिरोभावं प्रापयित्वा, स्वस्याऽप्यनीश्वरत्वं तिरोभावयितुं साधनं साध्यं चाऽऽह—भगवानिति। अनैश्वर्यतिरोभावे हेतुः। स्वस्य य आत्मा चिदंशः, तस्य[17] मायाया गतिं प्रवृत्तिं कार्यकरणमिति यावत्। तां पूर्वोक्ता[18]म्। अवलोक्येत्युत्तरत्र साधनम्। स इति तदर्थं प्रवृत्तः। अनैश्वर्यतिरोभावो द्वयेन भवति, वेदैर्वैष्णवैश्च। तदुभयं कृतवानित्याह—सरस्वतीमुपस्पृश्य वृक्षमूलमुपाविशदिति। सरस्वती वेदात्मिका, सैव नदी, तदुपस्पर्शनं स्नानम्। अनेन वेदेषु स्वात्मानं स्थापितवानित्युक्तम्। द्वितीयमाह—वृक्षमूलमिति। 'वैष्णवा वै वनस्पतयः' इति श्रुतेः। तस्य मूलं येन रूपेण विष्णुना ते जनितास्तद्बीजात्मकं मूलम्। तत्र विष्णौ बीजात्मकेऽर्थांशं स्थापितवानित्यर्थः। एवमैश्वर्यादिगुणानेकत्र, स्वरूपं चैकत्र स्थापयित्वा आश्रयाभावेनाऽनैश्वर्यं निराकृतवानित्यर्थः। ननु भगवान् बीजे[19] किमिति स्थापितवान्? वैकुण्ठे हि स्थापनीयम्। तत्राऽऽह—उपाविशदिति। उप समीपे वैकुण्ठे स्थितेन सर्गलीलाकर्तुमशक्या, अतस्तत्समीप एव आ सर्वतः सर्वभावेन तत्र प्रविष्टः सृष्ट्यर्थम्। एतदर्थम्। एतदर्थमेव प्रथमत इयं कथा कथिता। यथा भगवान् ऐश्वर्येण बीजे प्रविशति।

---

१. निषिद्धाचरणनिषेधिका बुद्धिरिह श्लोके सूच्यते प्र०। २. अन्तःकरणे प्र०। ३. स्थापकव्यापारेण प्र०। ४. दश प्रकारान् स्फुटीकुर्वन्ति—आश्रयेत्यादि प्र०। ५. कारणभूतम् प्र०। ६. गुणरूपं। ७. नामसृष्ट्यर्थं वैदिकसृष्ट्यर्थं वा. प्र. ८. 'अनन्ता वै वेदा' इति श्रुतेरनन्तत्वम् प्र. ९. अर्थप्रकाशरूपेण लोके प्रकटीभवितुं तदुभयमधितिष्ठति. प्र. १०. निर्विकल्पत्वेनैकधा. प्र. ११ तर्ह्यन्तःकरणे कथं चतुर्द्धेत्याकाङ्क्षायां तत्राऽकारभेदेन भेदानाहुः—तत्र मनसेत्यारभ्य चित्ताश्रयामित्यन्तम्। १२. हे तुबोधनपूर्वकमुच्यते. प्रकाशः. १३. मर्यादाभावे, सामान्यतो नाशे वा. प्र. १४. शरीराभिमानरूपम्. प्र. १५. बुद्धेर्मलिनभागे तामसेंऽशतः पतितम्. प्र. १६. विषयो दोषस्तदाश्रयः पुरुषः, स आधारो यस्य तत्तथा. प्र. १७. तद्व्यामोहिकाया मायायाः. प्र. १८. 'मिथो यदि (३-३-१५) त्यत्र विचारितमर्दनरूपाम्. प्र. । १९. शुद्धसत्त्वाविर्भूतेऽक्षरात्मके. प्र. ।

'अयमेव चाऽधिकारः। माहात्म्यम्, (स्व)रूपम्, लीला, विषयः, चरित्रम्, इन्द्रियाणि, स्वांशेन कारणप्रवेशः, बुद्धिरिति बीजरूपोऽयं सर्गः। विष्णोर्जाता वैष्णवाः, विष्णोरिमे इति च। अतो भगवान् स्वयं वृक्षमूले उपविश्य सृष्टिकारणबीजमुपपाद्य मोक्षकारणबीजमप्युपपादयितुं वैष्णवमुद्धवं पूर्वमेव विचारितवान्। 'नवसु लीलासु प्रथमा मया कर्तव्या, अन्तिमा त्वनेन, मध्यमास्तु कालादिभिरिति। उद्धवस्य च कामना 'स्वधाम नय मामपि' इति। तद्यदा यत्र तिष्ठति तत् स्वधाम। इदानीं बीजात्मके कारणरूपे विष्णौ स्वयं स्थितः। तं च कारणरूपे अमृतदर्यात्मकबदर्यामानन्दानुभवार्थं मोक्षैकसाधनतपः संनिधाने तिष्ठत्विति विचारितवान्॥ ३॥ ❀ ❀ तस्याऽपि पूर्वस्थितिविनाश एव भवतीति, विनाशस्थाने प्रभासे समागच्छत्विति चेच्छां कृतवान्। अतो द्वितीयं बीजं निरूपयन् निश्चयरूपां बुद्धिमेकोनविंशतिश्लोकैराह। अष्टादशविद्यास्थानातिक्रमे हि बुद्धिर्निश्चयमवलम्बते। तत्र सप्ताऽङ्गानि मीमांसया सहितानि, द्वादशात्मा स्वतन्त्रतया प्रकाशकत्वात्। अनेनैव पूर्वावस्था गच्छतीति ज्ञापितम्। मुक्तौ तु कारणस्याऽवक्तव्यत्वादिमामेव लीलामन्यथोक्तवान्। बीजात् फले विस्तारो भवतीति च। अतः प्रथमं भगवदुक्तमाह— अहं चोक्त इति। स्वकीया अन्येऽपि प्रभासगमनार्थमुक्ताः, अहं चोक्तः बदरीं त्वं प्रयाहीति। चकारात् प्रभासे गत्वेति हृदयम्। भगवतेति कार्यसिद्ध्यावश्यकता तद्वाक्ये सूचिता। ननु किमित्येवमुक्तवानित्याशङ्कयाऽऽह—प्रपन्नार्तिहरणेति। प्रपन्नानामार्तिं सर्वक्लेशं सृष्टौ सर्वैश्वर्यदानेन दूरीकरिष्यामीति तथोक्तवान्। हेत्वाश्चर्यम्, विपरीतेन साधनेन साध्यमिति। बदर्यप्यरण्यात्मिका, फलार्थममृतरूपा च। तस्याऽमृतस्य दरी बदरीति। त्वं प्रयाहीति विशेषतया निर्दिष्टम्। प्रकर्षेण गमनं पदार्थाविस्मरणात्। अन्यत्तु, स्वकुलं स्वसमूहः। ते सृष्टावेवोपयुज्यन्ते, अतः स्वार्थं सम्यक् जिहीर्षुः, अन्यथा अनन्तविधा सृष्टिर्न स्यात्॥ ४॥

## श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

अथ चतुर्थाध्यायं विवरिषवः कथासङ्गतेः स्फुटत्वात् स्कन्धाद्यर्थानुरूपां सङ्गतिं व्युत्पादयन्ति त्रिभिः—चतुर्थ इत्यादि। भगवतेति। व्यासेन शुकेन वा। तेनावसरः सङ्गतिः। येन रूपेणावश्यवक्तव्यत्वं तद्वक्तुं पूर्वाध्यायार्थमनुवदन्त आहुः—पञ्चधेत्यादि। पञ्चधेति स्मृतिनिश्चयसंशयविपर्ययद्वयरूपेण पञ्चधा। तत्र हेतुः—पञ्चेत्यादि। यतः पूर्वाध्याये तादृशं तदुक्तम्, अतस्तादृशां रूपं फलमत्र निरूप्यते। तथा च तदनुकूलबुद्धित्वेन रूपेणावश्यवक्तव्यमित्यर्थः। नन्वत्र सर्गावान्तरविशेषे वक्तव्ये फलनिरूपणस्य किं प्रयोजनमत आहुः—एतादृश इत्यादि। यथेति। यथावत्। तथा चावेशयोग्यताबोधनाय पूर्वाध्यायान्ते तेषां स्वरूपं गुणाश्चोक्ताः। यदा आविशेत् तदा सम्यक् तद्गुणा बोद्धुं शक्यन्ते, अतस्तेषु भगवदावेशरूपं फलं तद्गुणज्ञापनायोच्यते, इति तदेव प्रयोजनमित्यर्थः। एतस्यावेशस्याऽपि फलान्तरमाहुः—अत इत्यादि। यतो लीलार्थं स्वसङ्गेऽवतारणीया, अतो हेतोर्भगवत्कर्तृकेऽधिकारिबुद्धिसर्गेऽयमावेशो हेतुभिरपि निरूपितः। तथा चाग्रिमलीलार्थमेवायमावेश इति साऽस्य प्रयोजनमित्यर्थः। एवं च हेतुतारूपं सङ्गत्यन्तरमपि बोधितम्।

अथेत्यत्र। मूलेऽथ शब्दः पूर्वोक्तप्रणामान्तकृत्यानन्तर्यस्यापि बोधक इत्याशयेनाहुः—मुक्त्वेत्यन्तं पूर्वसम्बन्धीति। नन्वत्राधिकारोपयोगिबुद्धौ निरूप्यायां ज्ञानविभ्रंशादिकथनस्य किं प्रयोजनमत आहुः—सर्वमित्यादि। इति बुद्धिरिहोच्यत इति। एवं ज्ञानविभ्रंशबोधनादिना निषिद्धाचरणनिषेधिका बुद्धिरिह श्लोके सूच्यते इति तद्बोधनं स्वमहत्त्वानुसन्धानस्य दुष्टत्वबोधनं च प्रयोजनमित्यर्थः। एतेन सिद्धं प्रयोजनान्तरमाहुः—अतोऽत्रेत्यादि। यतोऽत्र श्लोके निषिद्धाचरणनिवर्तिका बुद्धिः सृज्यत्वेन विवक्षिता, सैव च प्रमाणभूता, अतः सर्वत्र शास्त्रे तद्विरुद्धायाः निषिद्धप्रवृत्तिजनिकायाः स्मृतेः सदैव प्रामाण्यमित्यपि सूच्यत इत्यर्थः। ननु स्मृतेः संस्कारजन्यत्वात् तस्य चानुभवजन्यत्वात् तेन सँस्कारद्वारा स्वसमानाकारस्मृत्युत्पादनं क्रियत इति तज्जनकानुभवस्य प्रामाण्ये कथं स्मृतेरप्रामाण्यमित्याशङ्कायां प्रमाणानुभवजन्यत्वेऽपि तस्या अप्रामाण्यं व्युत्पादयितुमत्र सिद्धज्ञानस्य स्थिरत्वं पूर्वं व्युत्पादयन्ति—ज्ञानं चेत्यादि। चोऽप्यर्थे। ननु ज्ञानस्य स्थिरत्वे सर्वदा तदनुव्यवसायापत्तिरित्यत आहुः—घ्राणेनेत्यादि। यथा गृहादौ व्याप्तो घ्राणसम्बद्धोऽपि गन्धः संयुक्तसमवायेन संयोगेन वा ग्रहण एव स्फुरति, न तु सर्वदा अत्यन्तसम्बन्धेन ग्राहकतायाः कौण्ठ्यात्, एवं मनसा तस्य संयुक्तसमवायेन संयुक्तविशेषणतया वा ग्रहणे स्फुरणम्, अतिसम्बन्धेन ग्राहकता कौण्ठ्ये चास्फुरणम्, अतो न सर्वदा तदापत्तिरित्यर्थः। ननु भवत्वेवम्, तथापि सर्वदा विषयस्फूर्तिः केन वार्यतेत्यत आहुः—तदित्यादि। तथा च भगवति नित्यसर्वविषयकज्ञानस्य मतान्तरे संमतत्वान्न तत्र तद्वारणापेक्षा। अन्येषां तु जन्यत्वाद्भावविकाराणां तत्रापि वक्तव्यत्वेन तस्योत्पत्तौ पोषे दार्ढ्ये च विषयस्फूर्तिः, तदभावे च तदभाव इति तद्वारणमित्यर्थः। पोषणं तु सजातीयसंवलनम्, दार्ढ्यन्तु सजा-

---

१. बुद्धिस्थः. प्रकाशः २. भूतानि. प्र. ३. मात्रा. प्र. ४. एता लीलासु बीजरूपेणाऽनुभाव्यमाना ज्ञेयाः. प्र. ५. चोऽप्यर्थे. प्र. ६. अत्रोक्तत्वेन पुनरवक्तव्यत्वात्. प्र. ७. वैराग्येण गोविचरणपूर्वकम्. प्र. ८. 'अरश्च ह वैण्यश्चार्णवौ ब्रह्मलोके' इति श्रुतेः, 'अरनामाऽमृताम्भोधिर्ण्यनामाऽमृतसागरः' इति स्मृतेश्च ब्रह्मलोकत्वेन तदात्मिका. प्र. ९. बदरीपदयौगिकार्थाविस्मरणं विधाय प्र.। १०. हेतुमपि।

तीयस्थितिसाधिका घनता । एवं सत्यस्मिन् पक्षे स्मृतिजननार्थं न संस्कारापेक्षा । इन्द्रियैर्जनितेन लोक'शास्त्रादिपुष्टेनाभ्यासादृढेनोद्बोधकैरुद्बुद्धेन तेनैव कालान्तरे स्मृतिसंभवात्, संस्कारपक्षेऽनन्तसंस्कारतदुत्पत्तिध्वंसादिकल्पनागौरवाच्चेति विरुद्धवृत्तितिरोहितं सूक्ष्मावस्थं ज्ञानमेव सँस्कारः । धारावाहिकस्थले चैकमेव प्रकाशमानं तदिति फलति । एवं स्थिरत्वं साधयित्वा तत्पोषस्य नाशस्य च बोधनार्थं गीतादिसिद्धान्तस्य प्रकारानाहुः—तत्रेत्यादि । एतेन सजातीयविजातीयभेदस्य प्रामाणिकता दर्शिता । ननु भवत्वेवम्, तथापि विषयानन्तरविषयकज्ञानेव तन्नाशाभावे तन्नाशः केन वक्तव्य इत्यत आहुः—देशेत्यादि । नन्वेवं सति देशाद्यन्यतमस्य नाशकस्य तत्र तत्र सुलभत्वात् स्थिरत्वं तस्य दुर्घटमेवेत्यत आहुः—विहिता इत्यादि । तथा च नाशकवत्पोषकस्याऽपि सत्त्वात् न स्थैर्यं दौर्घट्यमित्यर्थः । एतेन ह्रीर्धीर्भीरित्येतत् सर्वं मन एवेति श्रुतिबोधितं मनोधर्मत्वमपि तस्य स्मारितम् । तेन सिद्धमाहुः—तत्रेत्यादि । तत्रेत्यन्तःकरणे । प्रयत्नेनेति स्थापकव्यापारेण । एवं स्थैर्यहेतुमुक्त्वा सर्वदा सर्वस्फूर्त्यभावे हेतुं स्फुटीकुर्वन्ति—गृह इत्यादि । तथा चोद्दीपकसमसमवधानस्यासार्वदिकत्वान्न सर्वदा सर्वस्फूर्तिरित्यर्थः । नन्विन्द्रियाणां जनकत्वे सर्वदा कुतो न सर्वज्ञानानां जननमित्याकांक्षायामेतेषामेव सहकारित्वमाहुः—अजनितस्येत्यादि । सामग्रीसमवधानाभावान्न सर्वदोत्पत्तिरित्यर्थः । अग्रे तत्प्रकाराणां भेदान् वक्तुं तन्नामानि तत्स्वरूपं चाहुः—तदेवेत्यादि । एकत्वे प्रतिशरीरं भिन्नवत्स्थित्यनुपपत्तिमाशङ्क्याहुः—तस्येत्यादि । उपपत्तिरित्याविर्भावः । तथा चैवमाविर्भावभेदान्नानुपपत्तिरित्यर्थः । एतेन व्यापकत्वमपि तस्य बोधितम् । तेन बीजयोनिप्रतिपत्तिन्यायेन घटाकाशन्यायेन चैकस्यैवानेकत्वं परिच्छिन्नत्वं चोपाधिवशात् सिद्धयति । आनन्त्येऽपि तत्प्रकारज्ञानोपायमाहुः—आनन्त्य इत्यादि । तथा चैवं राशिभेदेन तत्प्रकारज्ञानं सुघटमित्यर्थः । दश प्रकारान् स्फुटीकुर्वन्ति—आश्रयेत्यादि । मुख्यमिति । कारणभूतम् । इदमेकं निर्विषयम् । द्वितीयं भगवद्गुणरूपं नित्यं सविषयम् । एतेन जीवरूपं ज्ञानं पूर्वस्य तद्धर्मरूपं तु द्वितीयस्यांश इत्यपि बोधितम् । तदेवेति । गुणरूपम् । सृष्ट्यर्थमपि । नामसृष्ट्यर्थम्, वैदिकसृष्ट्यर्थं वा । तेन वेदात्मकशब्दशरीरविशिष्टं तृतीयम् । अनन्तकमिति । 'अनन्ता वै वेदाः' इति श्रुतेरनन्तम् । इदमेव 'स एष जीवो विवरप्रसूतिः' इत्यत्र(?)(मे) व्यक्तिरियं हि वाणीति[2] वैखरीरूपं वेदात्मकत्वेनोक्तम् । ततः शब्दसृष्टिमाहुः—पश्चादित्यादि । 'सर्वेषां स तु नामानि रूपाणि च पृथक् पृथक् । वेदशब्देभ्य एवादौ निर्ममे स महेश्वरः' इति स्मृतौ तथा कथनात्तथेत्यर्थः । इदं विकृतशब्दशरीरविशिष्टं तुरीयम् । पञ्चमादिरूपाणि वक्तुं केवलस्य तस्याश्रयभेदमाहुः—तदेवेत्यादि । आश्रयत इति । अर्थप्रकाशरूपेण लोके प्रकटीभवितुं तदुभयमधितिष्ठति । पञ्चमं रूपमाहुः—तत्रेत्यादि । प्रमेयाश्रयमिति । व्यापकत्वात् प्रमेयावच्छिन्नम् । अन्यानि पञ्चाहुः—प्रमातरीत्यादि । एतेनैतेषामव्यापकत्वं बोधितम् । एकधेति । निर्विकल्पकत्वेनैकधा । ननु बहिरिन्द्रियाणां पञ्चसङ्ख्याकत्वात्तैर्नानाविधमविकल्पकज्ञानजननदर्शनाच्च कथं तत्रैकत्वेत्यत आहुः—विशेषा इत्यादि । सविकल्पकरूपा विशेषास्तु विषयाश्रयं प्रमेयरूपं यज्ज्ञानं तेन कृता या द्विगुणता, प्राथमिकसंयोगेन ज्ञाने जाते तदुत्तरं विषयविमर्षणाय पुनश्चतुष्टयसंयोगे यद्विशिष्टज्ञानं तद्रूपा तया प्रकाशिताकारा भवन्तीति तेषामनुग्राहकान्तरजन्यत्वान्न तैरिन्द्रियै (नि?) र्ज्ञानस्यैकविधत्वभङ्ग इत्यर्थः । तर्ह्यन्तःकरणे कथं चतुर्धेत्याकांक्षायां तत्राकारभेदेन भेदानाहुः—तत्र मनसेत्यारभ्य चित्ताश्रयमित्यन्तम् । अन्यदेति । जाग्रत्स्वप्नयोः चित्तलयप्रकारस्तु सप्तविंशे स्फुटीकार्यः । एवं ज्ञानस्य दशप्रकारान् जन्यस्योत्पत्तिप्रकारं चोक्त्वा स्थितिनाशयोः प्रकारं सप्रमाणमुपपादयन्ति—तस्य चेत्यादि । शास्त्रादिभिरिति । "स्थिरबुद्धिरसंमूढः" प्रसन्नचेतसो ह्याशु बुद्धिः पर्यवतिष्ठते" इत्यादिशास्त्रेण स्मृत्यन्यथाऽनुपपत्तिरूपया साधकयुक्त्या त्रिक्षणावस्थायित्वबाधिकया गौरवरूपयुक्त्या चेत्यर्थः । रूप्यत इति हेतुबोधनपूर्वकमुच्यते । नाशप्रकारमाहुः—पूर्वोक्तेत्यादि । पूर्वोक्तमर्यादाभाव इति । विहितार्थसंसर्गाभावे । तत्रेति । मर्यादाभावे सामान्यतो नाशे वा । ननु पूर्वं देशादीनां नाशकत्वमुक्तम्, इदानीं कथं मायाया उच्यते इत्यत आहुः—तस्या इत्यादि । ननु तस्या एव ज्ञाननाशकत्वे एतेषामनुपयोगात् । पूर्वोक्तमसङ्गतमित्याशङ्कायामाहुः—त इत्यादि । यथायथमिति देशकालाभ्यां स्वरूपतः; द्रव्यकर्तृभ्यां स्थानतः; मन्त्रकर्मभ्यां गुणत इति । तथा च विशेषनाशे तेषामुपयोगान्न पूर्वोक्तमसङ्गतमित्यर्थः । एवं नाशं व्युत्पाद्य प्रकृते तदूनां बुद्धेर्न सामान्यतो नाशः, किन्तु विशेषत इति बोधयितुं तं विशेषमाहुः—अत इत्यादि । बुद्ध्याश्रयमिति शरीराभिमानरूपम् । अधस्तात् पतितमिति । बुद्धेर्मलिनभागे तामसेंऽशतः पतितम् । तथा चैवं शरीराभिमतेर्मलिनदेशे पाते कालेन स्वरूपतोंऽशान्नाशितम्, निषिद्धया पानक्रियया च गुणतोंऽशान्नाशितम्, तदा तेषां स्वस्मिन्नुत्कर्षेऽन्यस्मिन्नपकर्षे च भाते तत्तद्दोषांशस्फूर्तिरभूत् । तेन कार्यान्तरमाहुः—माययेत्यादि । विषयाश्रयाधारमिति । विषयो दोषः, तदाश्रयः पुरुषः, स आधारं यस्य तत्तथा । तथा च पूर्वं दोषांशे स्फुरिते ततो मायया अविद्यमाने प्रत्यनीकत्वे बुद्धावुपस्थापिते तादृशैर्वाक्यैर्मर्म स्पृष्टवन्तः । अतः प्रमाणज्ञानोत्पन्नत्वेऽपि तस्मिन् मायया विजातीयसंवलनात् तद्गुणांशनिवृत्तौ तज्जन्या स्मृतिरप्रमाणभूता जातेति तया तथा करणात् तादृश्याः स्मृतेः स्वरूपतो गुणतः फलतश्चाप्रामाण्यमित्यर्थः ॥ १ ॥ ❀ ❀ तेषामित्यत्र । तेजः प्रकाशापेक्षमिति । विषयालोकसंसर्गेण तमोनाशात् स्वोत्पत्तौ तत्सापेक्षम् ॥ २ ॥ ❀ ❀ भगवानित्यत्र ।

---

१. लोकशास्त्र...... २. वाणीरिवैश्वरी, पा. ।

एवं तेषामित्यादि। यादवानां स्नेहेन वर्तमानतया च स्थितिं मैरेयपानरूपसाधनविपरीतस्मृत्याख्यबुद्धिवृत्तिविशेषरूपसाध्यभावेन पूर्वोक्तरीत्या तिरोभावयित्वा, तथा तिरोभावप्रापकस्य भगवतो यादववर्तमानत्वस्थापनासामर्थ्यं तिरोभावयितुं अनैश्वर्येतिरोभाव-साधनं स्वात्ममार्गगत्यवलोकनं तत्साध्यमसामर्थ्यतिरोभावं चाहेत्यर्थः। तस्य मायाया इति। तद्व्यामोहिकाया मायायाः। पूर्वोक्तामिति। 'मिथो यत्' इत्यत्र विचारितमर्दनरूपाम्। उत्तरत्रेति। वक्ष्यमाणे कार्ये। द्वयेनेति। गुणानां स्वरूपस्य च स्थापनेन। आश्रयाभावेनानैश्वर्यं निराकृतवानिति। अत्रायमर्थः। यदा भगवान् स्वरूपं लीलामुभयं वा तिरोधापयितुमिच्छति, तदा व्यामोहिकां चिदंशमायां विस्तारयति, माययैव तिरोभाव इति। तस्याश्च षडाश्रयाः पूर्वमुक्ताः। तेषु देशकर्तृमन्त्राणां प्रकृते अभावात् कालद्रव्यक्रियाभ्यस्तामुत्थापितवान्। ततस्तया तत्तद्बुद्धिषु व्यामोह उदपादि। ततस्तं सहकृत्य प्रत्यनीकत्वे भासमाना विषयतारूपास्ते ते तत्तद्बुद्धिं प्रति प्रत्ययिताः, ततो व्यामुग्धानां लीलामध्यपातिनां शस्त्राहतिद्वारा तेषां प्राकृतानि शरीराण्यन्यथा-कृत्य तेभ्यो देहेभ्यो वैकुण्ठपुरवासिनः साकारानुद्धृत्य स्वस्थानं प्रापितवानिति तेषां विद्यमानत्वं लीला, तत्सम्बन्धिनित्यत्वस्थाप-कैर्वेदवाक्यैस्तदर्थाभिज्ञवैष्णवसङ्गेन च ज्ञातं भवतीति वेदेषु गुणस्थापनेनैश्वर्यं सिद्धीकृत्य वैष्णवेषु स्वरूपस्थापनेनैश्वर्याधारं सिद्धीकृत्य, ऐश्वर्याश्रयाभावेन प्राप्स्यमानमनैश्वर्यं भगत्त्वेन निराकृतवानित्यर्थः। बीज इति। शुद्धसत्त्वाविर्भूत अक्षरात्मके। ननु सृष्ट्यर्थमेवं प्रवेशोक्तौ किं मानमत आहुः—एतदर्थमित्यादि। यथेत्यादिनोक्तस्यार्थस्य ज्ञापनाय तथोक्तेरर्थः। नन्वेवं सृष्ट्यर्थं प्रवेशेऽप्यधिकारे क उपयोग इत्यत आहुः—अयमित्यादि। अयमिति बुद्धिस्थः। रूपमिति भूतानि। विषय इति मात्राः। नन्वेवं तेषां कथमधिकारोपयोगिभूतादिरूपतेत्यत आहुः—बीजेत्यादि। तथा चैतेषां तत्र तत्र बीजरूपेण प्रवेश एवाधिकारसिद्धेरेतेषां तथात्वमित्यर्थः। अग्रे ब्रह्मशापापदेशेनेत्यत्र वक्ष्यमाणायाश्चिन्ताया अधिकारकारणत्वं बोधयितुं वृक्षमूलोपवेशादिबोधितं तदाकार-माहुः—विष्णोरित्यादि। अत इति। वैष्णवद्वैविध्यादधिकारसृष्टिकारणभूतं बीजं वृक्षमूलोपवेशनक्रियारूपोपायचातुर्येण स्वजातेषु वैष्णवेषु स्थापयित्वा मोक्षकारणबीजं स्वस्वामिकेपूपदेशक्रियया स्थापयितुं तथा कृतवानित्यर्थः। नवस्वित्यादि। एता लीलास्तु बीजरूपेणानुभाव्यमाना ज्ञेयाः तं चेति। चोऽप्यर्थे। एवं कृतवानित्यन्तेन विचाराकारः संगृहीतः॥ ३॥ ❀ ❀ अहमित्यत्र। अतो द्वितीयं बीजमिति। एवमिच्छाया आकारात् मोक्षकारणीभूतमाज्ञैव कार्येति निश्चयरूपं बीजम्। द्वादशात्मेति। 'सैषा त्रय्येव विद्या तपति, य एषोऽन्तरादित्ये हिरण्मयः पुरुषः' इति श्रुत्युक्तेः। अनेनैवेति। नाऽनुध्यायाद्बहून् शब्दानिति श्रुतेरेवम-परविद्यास्थानातिक्रमेणैव। ननु यदि पूर्वावस्थात्यागे एतावदेव कारणम्, तदैकादशे स्कन्धे किमित्यन्यथोक्तमित्यत आहुः—मुक्तावि-त्यादि। अवक्तव्यत्वादिति। अत्रोक्तत्वेन पुनरवक्तव्यत्वात्। अन्यथेति वैराग्येण गोपिप्रचुरणपूर्वकम्। तथा च विस्तारार्थं अन्यथोक्त-वानित्यर्थः। अरण्यात्मिकेति। 'अरश्च ह्वैण्यश्चार्णवौ ब्रह्मलोके' इति श्रुतेः, 'अरनामामृतम्भोधिर्ण्यनामामृतसागरः' इति स्मृतेश्च ब्रह्मलोकत्वेन तदात्मिका। पदार्थाविस्मरणादिति। बदरीपदयौगिकार्थाविस्मरणं विधाय॥ ४॥

## श्रीगिरिधरकृता बालप्रबोधिनी

उद्धवस्योपदेशेन गङ्गाद्वारे चतुर्थके॥ क्षत्तुर्मित्रासुतेनाथ सङ्गमो विनिरूप्यते॥ १॥

अथ स्नानदानाद्यनन्तरं ते यादवास्तैर्विप्रैरनुज्ञाता अन्नं भुक्त्वा वारुणीं पैष्टीं मदिरां च पीत्वा तया मदिरया विभ्रंशितं ज्ञानं युक्तायुक्तविवेको येषां तथाभूताः सन्तो दुरुक्तैर्निन्दावचनैर्बाणवत्तीक्ष्णैर्मर्म पस्पृशुः, परस्परं हृदयं विद्धवन्त इत्यर्थः॥ १॥ ❀ ❀ मैरेयस्य मदिराया दोषेण मदेन विषमीकृतानि विभ्रंशितानि चेतांसि येषां तेषां यादवानां रवौ सूर्ये निम्लोचति अस्तं गच्छति सति मर्दनं परस्परं सङ्घर्षणेन विनाश आसीत्। तत्र दृष्टान्तमाह—वेणूनामिवेति॥ २॥ ❀ ❀ स भगवानपि स्वस्यात्मनोऽन्तःकरणस्य मायायाः सङ्कल्परूपायास्तां गतिं स्वकुलसंहाररूपं फलमवलोक्य सरस्वतीमुपस्पृश्य सरस्वत्यां स्नानाच-मनादिकं कृत्वा अश्वत्थवृक्षस्य मूलमुपाविशत्॥ ३॥ ❀ ❀ स्वकुलं सञ्जिहीर्षुणा संहर्तुमिच्छता भगवता पूर्वं द्वारकाया-मेवाहं त्वं बदरीं बदरिकाश्रमं प्रतियाहि गच्छेत्युक्तोऽपि तदभिप्रेतं स्वकुलसंहारादिकं जानन्नपि पृष्ठतस्तं अन्वगममित्युत्तरेणा-न्वयः। चकारोऽप्यर्थे। किमर्थमेवमुक्त इत्यपेक्षायामाह—प्रपन्नार्तिहरेणेति। भक्तिरहस्याद्युपदेशेन भगवत्प्रपन्नानां संसारदुः-खनिवृत्त्यर्थमिति भावः। भगवद्वा[1]त्सल्यस्य आश्चर्यं सूचयति—हेति॥ ४॥

## हिन्दी-अनुवाद

### उद्धवजीसे विदा होकर विदुरजीका मैत्रेय ऋषिके पास जाना

उद्धवजीने कहा—फिर ब्राह्मणोंकी आज्ञा पाकर यादवोंने भोजन किया और वारुणी मदिरा पी। उससे उनका ज्ञान नष्ट हो गया और वे दुर्वचनसे एक-दूसरेके हृदयको चोट पहुँचाने लगे॥ १॥ ❀ ❀ मदिराके नशेसे उनकी बुद्धि बिगड़ गयी और जैसे आपसकी रगड़से बाँसोंमें आग लग जाती है, उसी प्रकार सूर्यास्त होते-होते उनमें मार-काट होने लगी॥ २॥

---

१. क—ख—पुस्तक० 'वात्सल्यतायाः' इति।

❀ ❀ भगवान् अपनी मायाकी उस विचित्र गतिको देखकर सरस्वतीके जलसे आचमन करके एक वृक्षके नीचे बैठ गये ॥ ३ ॥ ❀ ❀ इससे पहले ही शरणागतोंका दुःख दूर करनेवाले भगवान् श्रीकृष्णने अपने कुलका संहार करनेकी इच्छा होनेपर मुझसे कह दिया था कि तु बदरिकाश्रम चले जाओ ॥ ४ ॥

**अथापि तदभिप्रेतं जानन्नहमरिन्दम । पृष्ठतोऽन्वगमं भर्तुः पादविश्लेषणाक्षमः ॥ ५ ॥**
**अद्राक्षमेकमासीनं विचिन्वन् दयितं पतिम् । श्रीनिकेतं सरस्वत्यां कृतकेतमकेतनम् ॥ ६ ॥**
**श्यामावदातं विरजं प्रशान्तारुणलोचनम् । दोर्भिश्चतुर्भिर्विदितं पीतकौशाम्बरेण च ॥ ७ ॥**
**वाम ऊरावधिश्रित्य दक्षिणाङ्घ्रिसरोरुहम् । अपाश्रितार्भकाश्वत्थमकृशं त्यक्तपिप्पलम् ॥ ८ ॥**
**तस्मिन्महाभागवतो द्वैपायनसुहृत्सखा । लोकाननुचरन् सिद्ध आससाद यदृच्छया ॥ ९ ॥**
**तस्यानुरक्तस्य मुनेर्मुकुन्दः प्रमोदभावानतकन्धरस्य ।**
**आशृण्वतो मामनुरागहाससमीक्षया विश्रमयन्नुवाच ॥१०॥**

### श्रीधरस्वामिविरचिता भावार्थदीपिका।

तदभिप्रेतं कुलसंहारादिकम् ॥ ५ ॥ ❀ ❀ कृतकेतं कृतावासम्। अकेतनमनाश्रयम्। ॥ ६ ॥ ❀ ❀ विरजं संशुद्धं सत्त्वमयम्। विदितं लक्षितम्। कौशं कौशेयम् ॥ ७ ॥ ❀ ❀ अधिश्रित्योपरि स्थापयित्वा। अपाश्रितः पृष्ठतोऽवष्टब्धोऽर्भको बालः कोमलोऽश्वत्थो येन तं त्यक्तं पिप्पलं विषयसुखं येन तं तथाऽप्यकृशमानंदपूर्णम् ॥ ८ ॥ ❀ ❀ द्वैपायनः सुहृत्सखा च यस्य सः। स्वगुरुपुत्रत्वात् पराशरशिष्यो मैत्रेय इत्यर्थः ॥ ९ ॥ ❀ ❀ प्रमोदेन भावेन चानता कंधरा यस्य। पाठांतरे प्रमोदस्य भारेण। अनुरागेण सह हासो यस्यां तया समीक्षया विश्रमयन् विगतश्रमं कुर्वन् ॥ १० ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः।

अथापि कुलसंजिहीर्षुत्वे यद्वा। प्रभुर्मां न त्यक्ष्यतीति तदभिप्रेतम् ॥ ५ ॥ ६ ॥ ❀ ❀ कुशा जीवविशेषास्तदुद्भवं कौशम् ॥ ७ ॥ ❀ ❀ तथापि त्यक्तपिप्पलत्वेपि संदर्भस्तु—न श्वोपि तिष्ठतीति विश्वासानर्हं पांचभौतिकं ब्रह्मांडमश्वत्थपदेनाह अर्भकपदेन सर्वब्रह्मांडेष्वस्य ब्रह्माण्डस्य क्षुद्रत्वमुक्तं त्यक्तपिप्पलं समापितैतद्ब्रह्मांडलीलम् ॥ ८ ॥ ❀ ❀ यद्यपि सुहृत्सख इति पाठो बहुपुस्तकेष्वस्ति तथापि बहुव्रीहौ टचोऽसंभवादयुक्त इव प्रतिभाति। दृष्टश्च प्राचीनतमटीकासु सुहृत्सखेति पाठः। आर्षत्वाश्रयणे टचोपि न दुर्लभत्वमिति टजंतोपि श्रेयान् सिद्धो योगसिद्धः लोकान्भूरादिकान् यदृच्छया केनापि भाग्ययोगेन "यदृच्छा निर्निमित्ते स्याद्भाग्ययोगेऽपि चेष्यते" इति ॥ ९ ॥ ❀ ❀ तस्य मैत्रेयस्य आशृण्वतः सतो मामेवोवाचेति तस्मादपि स्वस्मिन्ननुग्रहाधिक्यमाह। विश्रमयन् विरहश्रममपाकुर्वन् संसारक्लेशमपहृत्यानंदं जनयन्निति यावत्। समीक्षया दृष्ट्या पाठांतरे प्रमोदभारानतेति पाठे ॥ १० ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

अथापि तथोक्त्याऽऽज्ञप्तत्वेऽपि पृष्ठतोन्वगमने हेतुः पादविश्लेषणाक्षम इति ॥ ५ ॥ ❀ ❀ अद्राक्षमिति त्रिकम् अनाश्रयं सर्वाधारत्वादाश्रयान्तरविरहितम्। शुद्धसत्त्वमयं सम्विद्वपुं लक्षितं परमेश्वरत्वेन ज्ञातं यद्यपि व्रत्र न कदाचिद्विषयसुखानुभवस्तस्य प्राकृतत्वे तत्रस्थज्ञानौचित्यात् न यत्र मायेत्याद्युक्तेस्तथापि प्रकटलीलायाः प्रपंचाप्रपञ्चमिश्रत्वात् अज्ञानां यत्तदिव भाति तदपि त्यक्तं येन वैराग्यलीलाप्रदर्शनात् त्यक्तविषयसुखो हि कृशो भवति प्रकृतिजे लोके तथाप्यकृशं स्वानन्दपूर्णत्वात् ॥ ६ ॥ ॥ ७ ॥ ८ ॥ ❀ ❀ तस्मिन् सरस्वतीतीरे अत्रात्यंततिरस्कृतवाच्यध्वनिन्यायेन मेयार्थलक्षणया मैत्रेयाभिधानमात्रस्य विवक्षितत्वादित्यर्थ इत्युक्तम्सखा इति। क्वचित्पाठस्तत्र टजभावश्चार्षः। सिद्धः प्राप्तः यथावद्भगवत्साक्षात्कारत्वेन जीवन्मुक्तः यदृच्छया केनापि भाग्योदयेन ॥ ९ ॥ ❀ ❀ प्रमोदेन दर्शनोत्थानंदभारेण भावेन दास्यभावेन च, प्रमोदभारेणेति पाठान्तरम्। आशृण्वतोपि मामेवोवाचेति स्वस्मिन्ननुग्राह्यत्वातिशयस्तस्माद्गोपनमुद्रा चाभिप्रेता। श्रमोत्र विरहखेदोत्थवैवश्यम् ॥ १० ॥

### श्रीमद्वीरराघवव्याख्या

तथाप्येवमुक्तोप्यहं तदभिप्रेतं कुलसंहारादिकं जानन् हे अरिंदम हे विदुर भर्तुर्भगवतः पादविश्लेषणेऽक्षमः तमेव पृष्ठतोन्वगममन्ववर्त्तम् ॥ ५ ॥ ❀ ❀ एवमनुगच्छन्नहं तमेव विचिन्वन्मनसा विचिंतयन्नद्राक्षं चक्षुषा च दृष्टवानस्मि कथंभूतं एकं असहायं दयितं निरतिशयप्रियतमं पतिं निरुपाधिकशेषिणं श्रीनिकेतं श्रीनिवासं सरस्वत्यां सरस्वतीतीरे कृतकेतं कृत-

निवासं स्वतः अकेतनमनाश्रयं तस्यैव सर्वाश्रयत्वात् इति भावः ॥ ६ ॥ ❀ ❀ श्यामावदातं नीलश्वेतवर्णं विरजं निर्मलं प्रसन्ने अरुणे लोचने यस्य तं चतुर्भिर्दोर्भिर्भुजैः पीतकौशांबरेण च कौशं कौशेयं पीतकौशेयांबरेण च विदितं लक्षितम् ॥ ७ ॥ ❀ ❀ दक्षिणपादसरोरुहं वामे ऊरावधिश्रित्य उपरि स्थापयित्वा उपाश्रितः पृष्ठतोवष्टब्धः अर्भको बालः कोमलोऽश्वत्थो येन तं त्यक्तपिप्पलं त्यक्तकर्मफलं अतएवाकृशं कर्मायत्तकार्श्यस्थौल्याधिव्याध्यादिरहितम् ॥ ८ ॥ ❀ ❀ तस्मिन्निति तस्मिन्भगवत्संनिधौ द्वैपायनसुहृत्सखः द्वैपायनो व्यासः तस्य सुहृन्मित्रं सखा च सौहार्दं सहाध्येतृत्वं चोभयमपि विवक्षितं महाभागवतः भागवताग्रगण्यः अतएव सिद्धः कृतकृत्यः मैत्रेयः लोकाननुचरन् यदृच्छया भगवदिछया आससादागतोऽभूदित्यर्थः ॥ ९ ॥ ❀ ❀ तस्येति प्रमोदेन भगवद्दर्शनजनितसंतोषेण भावेन भक्त्या आनता कंधरा यस्य अनुरक्तस्य भगवत्यनुरागयुक्तस्य मुनेर्मैत्रेयस्याशृण्वतः सतः मुकुंदो भगवाननुरागहाससमीक्षयाऽनुरागहासान्वितावलोकेन विश्रमयन् श्रमहानिं जनयन्मां प्रत्युवाच ॥ १० ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

हे अरिंदम विदुर अथापि पूर्वदिष्टोऽहं पुनः स्वर्गारोहणकाले भर्तुः पृष्ठतोऽन्वगममनुगमिष्य इत्यन्वयः। चर्वितचर्वणवत् अनुगमनं निष्प्रयोजनं नेत्याह तदभिप्रेतमिति। तस्य कृष्णस्याभिप्रेतं ज्ञानोपदेशलक्षणहार्दं जानन् प्रयोजनांतरं चास्तीति ध्वनयति। पादेति। तदुक्तं पूर्वमेवोपदिष्टोपि हरिणा ज्ञानमुद्धवः। स्वर्गारोहणकाले तु पुनः पप्रच्छ केशवमित्यादि ॥५॥ ❀ ❀ ननु अनुगमनवचनेन मौसलावस्थायामनवस्थानं प्रतीयते तथा च तद्दर्शनाभावेन तज्ज्ञानोपदेशासंभवः स्यादित्युक्तमयुक्तमिति तत्राह अद्राक्षमिति। विचिन्वन् मार्गमाणः दयितं प्रेष्ठं पतिमात्मज्ञानदानेन पातारं सरस्वत्यां तत्तीरे कृतकेतं कृतनिवासं अकेतनमनन्याधारम् ॥६॥ ❀ ❀ श्यामश्चायमवदातश्च निर्मलश्चेति श्यामावदातस्तं श्यामायां रात्र्यामप्यवदातमरुणं सूर्यवत्प्रकाशमानमित्यर्थः। अवदातः सितेऽरुण इत्यभिधानाद्योग्यताभेदात् सितोरुणश्चाधिकारिणां भेदात्प्रतीयत इति द्योतनाय तथोक्तमिति वा। प्रशांते स्तिमिते अरुणे लोचने यस्य स तथा तं कृमिकोशेन रचितं कौशेयं तेनाम्बरेण च विदितं विशेषितं कौशेयं कृमिकोशोत्थमित्यभिधानं छंदोभंगभयात् भ्रंशितं अण्प्रत्ययाद्वा ॥ ७ ॥ ❀ ❀ अपाश्रितार्भकावस्थमवतारदशायां याऽवस्था तामाश्रितं अकृशं पूर्णं त्यक्तकर्मफलं योगाद्वोत्सृष्टाश्वत्थमूलम् ॥ ८ ॥ ❀ ❀ तस्मिन्नवसरे द्वैपायनस्य वेदव्यासस्य सुहृत्सखा च भूम्यादिलोकाननुचरन् पर्यटन् सिद्धो ज्ञानी मैत्रेयो यदृच्छया भगवदिच्छयाऽऽससाद हरिमिति शेषः ॥ ९ ॥ ❀ ❀ हरेरनुग्रहातिशयसूचनाय मुनेराशृण्वतः सत इत्युक्तं सम्यगनुरागहासाभ्यां स्नेहमंदस्मिताभ्यां सहितया समीचीनया कटाक्षेक्षया विश्रमयन् संसारक्लेशं परिहृत्यानंदं जनयन् 'समभेदे समीचीन' इति यादवः ॥ १० ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

अद्राक्षमिति त्रिकम् ॥ ६—७ ॥ ❀ ❀ यदृच्छया केनापि भाग्योदयेन द्वैपायनसुहृत्सखेति टजभाव आर्षः ॥ ९ ॥ ❀ ❀ तस्य तथाभूतस्य आशृण्वतोऽपि मामेवोवाचेति। ततोऽपि स्वस्यानुग्राह्यत्वं व्यञ्जितम्। तथा च वक्ष्यते स्वयं भगवता अस्माल्लोकादुपरते इत्यादि द्वाभ्याम्। अतएव षष्ठी। अतएव तस्याशृण्वत इति तद्वचने किञ्चिद्गोपानमुद्रा च दर्शिता ॥ १० ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

तदभिप्रेतं याहीति ब्रुवन्नपि प्रभुर्मां प्रायो न त्यक्ष्यतीति वा कुलसंहारादिकं वा ॥ ५ ॥ ❀ ❀ केतनमाश्रयो न विद्यते यस्य तं प्राकृतवस्तूनां वस्तुतस्तदाश्रितत्वादिति भावः ॥ ६—७ ॥ ❀ ❀ अधिश्रित्य उपरि स्थापयित्वा अपाश्रितः पृष्ठतोऽवष्टब्धोऽश्वत्थपोतो येन तं न श्वस्तिष्ठतीत्यश्वत्थः भूरादिपञ्चपादविभूतिरस्थिरा मायिकी सा पृष्ठीकृतेत्यतः परं प्रापञ्चिका लोका मां न पश्यन्त्वित्याशयेन अर्भकपदेन सर्वब्रह्माण्डेषु मध्ये अस्य ब्रह्माण्डस्यातिक्षुद्रत्वं व्यञ्जितम्, त्यक्तपिप्पलं समाप्तीकृतैतद्ब्रह्माण्डविलासम्। पिप्पलशब्दे न श्रुत्या विषयसुखोक्तेः ॥ ८ ॥ ❀ ❀ द्वैपायनो व्यासः स्वगुरुपुत्रत्वात् सुहृत् सखा च यस्य सः मैत्रेयः पराशरस्य शिष्य इत्यर्थः। यदृच्छया अकस्मादेव ॥ ९ ॥ ❀ ❀ तस्यानुरक्तेत्यादिविशेषणविशिष्टस्यापि मामेवोवाचेति तस्मादपि स्वस्य प्रेमास्पदत्वाधिक्यं व्यञ्जितम्, अतएव षष्ठी। अनुरागस्य हासः प्रकाशो यस्यां तया समीक्षया अनुरागहासाभ्यां युक्तया समीक्षया वा विश्रमयन् मां विगतविरहश्रमं कुर्वन् ॥ १० ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः।

अकेतनं सर्ववासमपि कृतकेतं कृतवासम् ॥ ६—७ ॥ ❀ ❀ अपाश्रितः पृष्ठतोऽवष्टब्धः अर्भकाश्वत्थो बालपिप्पलो येन तम्। त्यक्तः पिप्पलः वासस्थानम् येन तम् अकृशं तत्त्यागनिमित्तकार्श्यरहितम् ॥ ८ ॥ ❀ ❀ द्वैपायनः सुहृत् सखा च

यस्य स मैत्रेयः ॥ ९ ॥ ❀ ❀ प्रमोदभारेण आनता कंधरा यस्य स तथा तस्य अनुरागेण सह हासो यस्यां तया सम्यगीक्षया ॥ १० ॥

## श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

यद्यपि भगवता मुखत एवमुक्तम्, तथापि प्रभासे समागत्य गन्तव्यमिति हृदयाभिप्रायः। अन्यथा पूर्वावस्थापरित्यागो न स्यात्। तदाह—अथापीति। तदभिप्रेतं पूर्वोक्तम्। जानन्नहमिति उपदेशज्ञानेन सर्वज्ञताया जातत्वात्। भगवत्कृपया तदपि ज्ञातम्, परं मयैव। अरिन्दमेति संबोधनमभिप्रायज्ञानार्थम्। राजनीतावपि प्रभोरभिप्रेतमपि कर्तव्यम्, नैतावता वाक्योल्लङ्घनम्। तथापि सह न गतम्, प्रथमतयैव बदरिकाश्रमयात्रा कृता। गिरिदुर्गपर्यन्तं समागत्य पश्चात्प्रभासं गत इति [1]लक्ष्यते। अभिप्रायस्य सन्देहेऽपि पूर्वावस्थाया विद्यमानत्वात् स्नेहादपि गत इत्याह—पादयोर्विश्लेषणं वियोगः, पूर्वावस्थाया वा परित्यागः, तत्राऽहमक्षमः ॥ ५ ॥ ❀ ❀ अभि[2]प्रेतोऽर्थस्तर्कितोऽपि प्रमितो जात इत्याह—अद्राक्षमिति। तदा भगवत ऐश्वर्यस्य प्रादुर्भूतत्वात् षोडशाऽपि कलास्तदा भगवति दृष्टाः। स पूर्णो भवति। अतोऽत्र भगवतः षोडश विशेषणानि। एतान्येव गुणो[3]पसंहारे षोडशाधिकरण्या प्रतिपादितानि। एवं सर्वार्थस्य सर्वगुणविशिष्टस्य साक्षात्कारो जात इत्यद्राक्षमित्युक्तम्, ब्रह्मसाक्षात्कारादेव पूर्वावस्थापरित्यागात्। तत्र प्रथमं भगवतोऽयमसाधारणो गुणः—यत्सर्वप्रपञ्चातीतः सर्वमुपसंहृत्य एको भवति, कारणरूपश्च भवति। किञ्च। भगवानासीनो भवति सर्वत्रैव, विशेषतो वैष्णवानां समीपे। अव्यग्रत्वाय चोक्तम्, कार्याभावात्। उपविष्ट एव हि सृष्टिं करोतीति च ज्ञापितम। [4]अनेन लोकेष्ववयवोपसंहारश्च ज्ञापितः। भगवतोऽपि दर्शनं भगवदिच्छयैव जातमित्याह—विचिन्वन्निति। सर्वत्र सरस्वतीतीरे गरुडध्वजादिरथान्वेषणेन क्वाऽस्तीति विचारयन् यत्रोपविष्टः स्थितस्तत्र दृष्ट इत्यर्थः। अनेन विचारदशायां सर्वभूतस्थितमेकमेव विचारयेत्। तदनन्तरं स प्रियत्वेनाऽऽत्मत्वेन पर्यवस्यति, ततोऽपि ब्रह्मवित्त्वे ब्रह्मात्मभावे जाते पतित्वेन पर्यवस्यति, अक्षरस्यापि पुरुषोत्तमः पतिरिति। एवं चतूरूपं [5]प्रमेये निरूपितम्, साधनफलभेदेन। प्रमाणे तस्य रूपत्रयमाह—अर्थशब्दफलानां तत्र प्राधान्यात्। तत्रार्थः श्रीनिकेतः। अनेन प्रपञ्चयज्ञसौभाग्यैर्युक्त इत्युक्तः। सरस्वत्यां कृतकेतमिति वेदैकसमधिगम्यता। अकेतनमिति फलम्। सर्वाश्रयराहित्येन स्वरूपस्थित इति, स्व[6]रूपे तादृशस्यैवोक्तत्वात्। श्रीवत्से लक्ष्मीश्चाऽत्रोपविष्टा दृष्टा। सरस्वतीतीरे च शुद्धे उपदेशनार्थं स्थितो दृष्टः। अनाश्रितत्वेन सर्वे हेतुवादा विरोधाश्च परिहृताः, गृहरथासनाद्यभावश्च ; एवमेकेन प्रमाणप्रमेयनिर्णयः। चतुर्मूर्तिस्त्रिमूर्तिश्चोक्तः। एकः सङ्कर्षणः, आसीनो वासुदेवः, दयितः प्रद्युम्नः, पतिरनिरुद्ध इति। श्रीनिकेतो विष्णुः, इतरौ ब्रह्मशिवौ ॥ ६ ॥ ❀ ❀ एवं प्रमेयप्रमाणे निरूप्य फलरूपं भगवन्तं पञ्चरूपमाह—श्यामावदातमिति। श्यामश्चासाववदातश्चेति। मध्य[7]न्दिनसवितृमण्डलमध्यसदृशवत् भासत इत्यर्थः। 'आदि[8]त्यवर्णं तमसः परस्तात्' इति श्रुतेः। अनेन सारूप्यरूपा मुक्तिरप्युक्ता भवति। विरजं निर्मलम्, व्यापिवैकुण्ठे रजोऽभावः। अनेन सालोक्यमप्युक्तम्, उत्पा[9]दकसंस्कृतभूताभावश्च; तेन सालोक्येऽपि पुनरुत्पत्तिर्निवारिता। मुक्त्युपदेष्टारमेनं प्रति तथाविधमात्मानं प्रदर्शयति फलत्वाय। [10]अनेन षोडशकलोऽयं मनोमयो वेदात्मा सूचितः। प्रशान्तारुणलोचनमिति। प्रकर्षेण शान्ते अरुणे लोचने यस्य। ज्ञानशक्तिक्रियाशक्ती लोचने यस्येत्युक्तम्। प्रकर्षः साधनसाहित्यम्, अनेन [11]सार्ष्टिरुक्ता। समानैश्वर्यम्। इदमेव हि सामीप्यम्, ज्ञानक्रियाशक्तिमत्त्वस्यैव तथात्वात्। अनेन वेदार्थोऽप्ये[12]तावानेवाऽत्र प्रसिद्ध इति सूचितम्। दोर्भिश्चतुर्भिर्विदितमिति। विदितं ज्ञातम्। [13]अनेन सायुज्यमुक्तम्, उभ[14]योर्बाहुचतुष्टयं ज्ञापि[15]तमिव। अत्र यत् प[16]दत्रयम्, क्रियया, भक्त्या, ज्ञानेन च सायुज्यं भवतीति ज्ञापयितुम्। दोर्भिः क्रियाभिः, चतुर्भिः पादसेवनादिभिः। विशेषेण विदितं यस्मादिति सर्वाज्ञाननिवर्तकं वा, अन्यथा चतुर्भुजमित्येवोक्तं स्यात्, प्रकटचतुर्भुजार्थं वा। पीतकौशाम्बरेण चेति। पीतं कौशं कौशेयं यदम्बरम्, तेन च विदितम्। अनेन ब्रह्मभावेऽपि ज्ञानमङ्गमिति तदेव विशेषणमाह—पीतमिति, अहन्ताममताभावः। कौशमिति कुशसंबन्धिनो यमनियमादयः। अम्बरमिति अवस्थात्रयपरित्यागेन निर्लेपता। एतानि ब्रह्मभावे ज्ञानसाधनानि। 'वैराग्यं च तपश्चैव समाधिरिति साधनम्। [17]एकमेवैतत्, न प्रत्येकपर्यवसायि। चकारोऽनुक्तसर्वफलसमुच्चयार्थः। सर्वफलरूपो भगवानित्यर्थः ॥ ७ ॥ ❀ ❀ एवं फलरूपं निरूप्य साधनरूपं

---

१. 'पृष्ठतः' इतिपदेनाजहत्स्वार्थया बोध्यते. प्रकाशः. २. स्वकुलसंहाररूपः. प्र. ३. चतुर्लक्षण्यास्तृतीयाध्यायस्य तृतीये पादे. प्र. ४. निर्व्यग्रतया आसीनत्वेन. प्र. ५ प्रमेयाविरोधप्रतिपादके द्वितीयाध्याये. प्र. ६. भूमस्वरूपे 'स्वे महिम्नि प्रतिष्ठितः' इत्यनेन स्वप्रतिष्ठितताया एव श्रवणादित्यर्थः प्र. ७. 'तन्मध्ये यत् कृष्णं तदन्नस्य' इति श्रुतेः पार्थिवं यत् कृष्णम्, तत्सदृशं यद्धिरण्मयपुरुषस्य भास्वरं श्यामरूपं तद्वदित्यर्थः. प्र. । ८. अत्रादित्यतुल्यवर्णत्वस्य ब्रह्मणि बोधनादादित्यान्तःस्थितेऽपि तद्वर्णतास्तीति तथेत्यर्थः. प्रकाशः. ९. उत्पादकं रजः, तज्जन्यं कर्म चादृष्टरूपम्. तत्संस्कृतभूताभावः. प्र. १०. उपदेशार्थं तादृग्रूपप्रदर्शनेन. प्र. ११. प्रकर्षबोधनेन. प्र. १२. प्रकृष्टज्ञानक्रियाशक्तिमान्, न तु ततोधिको रसात्मा. प्र. १३. ज्ञातत्वकथनेन. प्र. १४. वामदक्षिणभागयोः. प्र. १५. भावे क्तः। ज्ञापनमिवेत्यर्थः. प्र. १६. असमस्तं पदत्रयम्. १७. एतत् त्रयं समुच्चितमेव साधनमित्यर्थः प्र.।

चतूरूपं निरूपयति—वाम ऊराविति। वामे ऊरौ दक्षिणाङ्घ्रिसरोरुहमधिश्रित्य स्थितम्। दक्षिण[1]मङ्घ्रिसरोरुहं यस्येति वा। भक्ति[2]रनेन साधनत्वेनोक्ता। वामा[3] मनोहरा ये भगवत्प्रतिच्छायरूपाः, तेपु भगवद्भक्तिमार्गः कमलवत्सुन्दरः सर्वाप्यायिकश्च स्थापितः। सरोरुहत्वे प्रेम्णैव तदुद्गच्छतीति सूचितम्। दक्षिणपदेन भक्तिमार्गे त्रीणि विशेपणानीति सूचितम्। चातुर्यं, दक्षिणो देशः, पाषण्डाभाव एव च। भक्त चोरुपदं सकुटुम्बस्य भक्तिपरत्वाय, स्त्रीपुत्रादिस्थानेऽपि भक्तिरेवेति वा। अधिश्रयणं पाकार्थे यथा सर्वोपयोगि भवति। वैष्णवैः संस्कृतो भक्तिमार्गः साधनमिति। एवं भक्तिं साधनत्वेन निरूप्य, कर्माणि साधनत्वेन निरूपयति—अपाश्रितार्भकाश्वत्थमिति। अपाश्रित [4]आश्रितोऽर्भकाश्वत्थो येन। [5]आश्रितः पश्चादिति वा। अर्भाणां कं सुखं यस्मात्, वालकसुखदायी। अर्भकरूपः कोमलोऽश्वत्थो वा। तस्यैवाऽरणी भवतः। कर्माणि सर्वाणि तत्साधनान्येव। अपाश्रयपदेन च साधनत्वेनैव कर्मणामपेक्षा, न तु तद्गतं फलमप्यपेक्षितमिति सूचितम्। अपाश्रिता अर्भका यस्मिन्निति वालाधिकारः कर्मणि सूचितः। अकृशमिति ज्ञानपूर्णत्वात्, अन्येषां परिच्छेदरूपत्वात्। अनेन पूर्णमेव ज्ञानं साधनमिति, न तु खण्डब्रह्मज्ञानानि शारीरकादीनि। सर्वेषां भक्तानामुपसंहृतत्वाद्दौर्बल्यमाशङ्क्य निराकृतम्, भक्तानां तत्रैव प्रवेशात्। अनेनाऽन्येऽपि दैहिका धर्मा निवारिताः। उत्पत्तिकार्यतपस्यादीनि चाऽक्षरसाम्यान्निवारितानि। 'अस[6] भुवि' 'डुकृञ् करणे' 'शम उपशमे' इति धात्वादयो गृहीताः। प्रपञ्चकर्मज्ञानानि वा ज्ञानसाधनानि; ततः ससाधनं ज्ञानमुक्तं भवति। त्यक्तपिप्प[7]लमिति। त्यक्तं पिप्प[8]लं [9]कर्मफलं येन। वैराग्यमेतत्। पिप्पाँल्लातीति पिप्पलम्। पिपः पान्तीति पिप्पाः। पिबतीति पिः कालः, अविशेषेण सर्वभक्षकत्वात्। तद्रक्षकाणि कर्माणि, कालविशेष एव विहितत्वात्। कर्माणि च फलमेवा[10]ऽऽदत्ते, फलकामनयैव कर्मकरणात्। तत्रैकवचनं सर्वं त्याज्यत्वेनैकरूपमिति। अनेन वैराग्ये लौकिकानि, दैहिकानि[11] भक्तिमार्गस्थानि वा विरक्तस्य न निषिद्धानि, न वा नित्यानि, फलेन तेषामप्यनाकर्षात्। नैमित्तिकानि चार्द्धनिषिद्धानि, काल-पोषकत्वात्। अग्निहोत्रादीन्यपि नियतकालकर्तव्यानि नैमित्तिकान्येव। सर्वदा कर्तुं शक्यान्येव नित्यानि। योगेनाऽऽत्मदर्शनम्, दानादि पदार्थक्रिया, भगवद्भजनमित्यादि; एतेषां न कालपरिपालकत्वम्। अतो वैराग्ये नित्यानि कर्तव्यान्येव, नैमित्तिकानि विकल्प्यन्ते; काम्यानि तु त्यक्तव्यान्येवेति सूचितम्। गीतायां यद्भगवद्वचनम्—'यज्ञदानतपः···' इति। तत्रापि यज्ञा नित्याः, जरा-मर्यादादयो वा। दानमपि ज्ञानोपदेशादयः सर्वदा दातुं शक्याः, अक्षयत्वात्। तपोऽपि नित्यमेव यत्सम्भवति, ऊर्द्ध्वरेतआदि-रूपम्, न तु कृच्छ्रादि; तेषां सर्वदा कर्तुमशक्यत्वात्। एवं षोडशकलं भगवन्तं दृष्टवान्। प्रमेये साधने चैव चतुर्मूर्तिः फले पुनः। पञ्चात्मकस्त्रिमूर्तिस्तु प्रमाण इति निश्चयः ॥ ८ ॥ ❀ ❀ यदैव मया भगवान् दृष्टः, तदैव मैत्रेयोऽपि समागतः, विदुरोद्धारार्थं तदानयनात्। अत एव मुख्यं भागवतं मैत्रेयोक्तमपि भवति, ब्रह्मस[12]मानत्वात्, साक्षाद्भगवता त्रयाणां स्थाने निरूपितत्वात्। अतः शुकोक्तत्वमपि पृष्ठतः कृत्वा मैत्रेयोक्तत्वमेवोक्तम्[13]। एकान्तरितत्वाल्लीलाद्वयेन कृतार्थता विदुरस्य, एवमुद्धवोक्तेऽपि भविष्यति कल्पान्तरे। ब्रह्मोद्धवमैत्रेयाणां सूक्ष्मलीलामात्रश्रवणेनैव कृतार्थता। सा च लीला आश्रयरूपा, 'परमां स्थितिम्' इति वचनात्। तस्याऽप्यागमनं भगवदिच्छया। पूर्वमपि स वेदव्यासतुल्यः, शुकतुल्योऽपि, नारदतुल्योऽपि। अतो ब्रह्मपरम्परायां यावन्तस्ते सर्वे, मैत्रेय एक एवेति, न परम्पराद्वयस्याऽल्पमपि वैलक्षण्यमिति। तादृशरूपो मैत्रेयः समागत इत्याह—तस्मिन् महाभागवत इति। तस्मिन् देशे काले च[14]। भगवद्भक्तानामपि कृतार्थकरणसामर्थ्यात् महाभागवतत्वम्। द्वैपायन इति तदर्थमेव पुष्ट्या भगवदवतारः, तथाऽयमपीति ज्ञातव्यम्। तस्य सुहृत्, तस्यापि हितकारी सखा च, पराशरशिष्यत्वात्। अनेन पुराणमेव व्यासवत् परम्परया पराशरादवगतम्, न तु भागवतमिति सूचितम्। व्यासोऽपि नारदादेव भागवतं ज्ञातवान्। अनेन मैत्रेयस्याऽपि भगवदाज्ञया पुराणकथनं न व्यासस्याऽधिकारिणो विरोधहेतुः; तत्पुत्रोपदेशाच्च। एतदर्थं मित्रत्वमुक्तम्। लोकाननुचरन्निति शुकवत्स सिद्ध उक्तः। शुको ह्याचरन्नेव सिद्धो जातः। आससाद यदृच्छयेति नारदतुल्यता निरूपिता, स हि यादृच्छिकः ॥ ९ ॥ ❀ ❀ एवं भगवान् सर्वसंविधानं विधाय पूर्वावस्थां त्याजयितुं स्वस्य कृपायामसाधारणं कारणं स्वयमेव सम्पादितवानित्याह—तस्याऽनुरक्तस्येति। ननु 'गोप्या द्वयोपदेशश्च, उपदेशो न हि द्वयोः। भिन्नप्रकारयोर्जात्या स्वरूपेण गुणेन च'। १। इत्याशङ्क्याऽऽह—अनुरक्तस्येति। अनुरक्तस्य प्रसिद्धस्य मैत्रेयस्य आश्शृण्वतो मामाहेति सम्बन्धः। अन्यत्र कथनाभावाय मुनेरिति। कृपाकथने हेतुः—मुकुन्द इति। स हि मोक्षदाता

---

१. अधिश्रित्येत्यस्य ल्यबन्तत्वाङ्गीकारेऽध्याहारापत्तिरिति तन्निवृत्त्यर्थं पक्षान्तरमाहुः—दक्षिणमित्यादि तथा च अधिश्रित्यपदं ल्यबन्तम्, तेन नाध्याहार इत्यर्थः. प्र. २. वामोरौ दक्षिणचरणस्थापनकथनेन. प्र. ३. अत्राङ्घ्रेर्गतिसाधनत्वेन मार्गत्वम्। जले स्नेहाख्यगुणसत्त्वेन सरोरुहपदं प्रेमजन्यश्रवणादिपरं बोध्यम्. प्र. ४. छायार्थमाश्रितः. प्र. ५. अयमर्थः श्रीधरव्याख्यातः संगृहीतः. प्र.। ६. 'रघोः कुलेऽखिलं राति राजतेजो महीं स्थितः। स राम इति लोकेषु विद्वद्भिः प्रकटीकृतः।' इति रामतापनीयमन्त्रे आद्याक्षरमात्रेण धात्वर्थग्रहणदर्शनादत्रापि तथार्थोक्तौ न दोष इत्यर्थः, प्र। ७. अत्र पिप्पलं पिःपलमिति द्विधा प्रयोगो दृश्यते। तत्र पकारद्वयपक्षे पिप् कालः, विसर्गपक्षे पिः कालः। तत्रैकस्मिन् पक्षे पिपः पान्तीति; अन्यस्मिन् पीन् पान्तीतिः अत्र सकारागमश्च बोध्यः प्र.। ८. अत्र पिप्पानि च लानि चेति पिप्पलम्, एकवद्भावो विग्रहे बोध्यः, प्र। ९. कर्मेति भिन्नं पदम्, प्र। १०. अर्थस्य तौल्येन, प्र। ११. प्राणधारणोपयोगीनि भिक्षाटनादीनि. प्र। १२. ब्रह्मणे यथा आश्रयलीलोपदिष्टा तथोद्धवायेदानीमुपदेष्टव्येति तच्छ्रवणाधिकारिकत्वेन तथात्वात्, प्र। १३. व्यासपादैरत्रोपनिबद्धम्, प्र। १४. वा. ग.।

सर्वेषाम्, यथा जगत्कर्ता; अतस्तथोक्तवान्। तर्ह्युभयोः प्रधानत्वं कथं नोच्यते ? तत्राऽऽह—प्रकृष्टमोदानतकन्धरस्येति। प्रकृष्टो यो मोदस्तेन आनता कन्धरा यस्य। स हि प्रेमभरेण गृहीतो ज्ञानाधारमधः कृत्वा प्रेमाश्रु मुञ्चन् चरणमेव पश्यन्, स्थितः। अतः साक्षादुपदेशानधिकारी, भक्त्या च कृतार्थः। अतस्तस्य शृण्वत एव सतो मामुद्दिश्यैवाऽऽह। स्वस्थे हि चित्ते उपदेशो घटते। स्वास्थ्यं च देशकालवैपरीत्यदर्शनात्, श्रमादिना च न सम्भाव्यते। अत आह—अनुरागहाससमीक्षयेति। अनुरागाद्भयनिवृत्तिः, न ह्यनुरक्तो भगवान् मारयति। हासेन च मोहः। भगवता पूर्णं कृतं पश्यन्नपि नानुसन्धत्ते। सम्यगीक्षा समीक्षणं दयासहितम्, तेन देशकालभयानि सर्वाण्यपि निवृत्तानि। विशिष्टेन श्रमाभावः। अनुरागपूर्वको यो हासस्तत्सहिता समीक्षेति ॥ १० ॥

श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

अथापीत्यत्र। लक्ष्यते इति पृष्टत इति पदेनाजहत्स्वार्थया बोध्यते ॥ ५ ॥ ❀ ❀ अद्राक्षमित्यत्र। अभिप्रेतोऽर्थः इति। स्वकुलसंहाररूपः। गुणोपसंहार इति। चतुर्लक्षण्यास्तृतीयाध्यायस्य तृतीये पादे। अनेनेति निर्व्यग्रतया आसीनत्वेन। मध्ये विचयनोक्तेस्तात्पर्यमाहुः—अनेन विचारेत्यादि। गुणोपसंहारे पूर्वोक्ता एव गुणा उपास्ये मननीये च रूप उपसंहृता इति यत्रैत उक्तास्तत्स्थानमाहुः—एवं प्रमेय इत्यादि। प्रमेय इति प्रमेयाविरोधप्रतिपादके द्वितीयाध्याये। तत्राद्यपादद्वयेन साङ्ख्यादीनि मतान्यपाकृत्य तृतीयादिपादद्वये वियदादिसर्ववस्तुकारणत्वं प्रतिपादितम्। तत्रापि 'तदभिध्यानादेव तु तल्लिङ्गात् सः' इति सूत्रे आकाशादिकं सृष्ट्वा तेषु तत्तद्रूपेण स्थित्वा तत्तत्कार्यं स्वयं करोतीति प्रतिपादितम्। तेनैकत्वमासीनत्वं च स्फुटमेव सिद्धम्। तत्रैक्यं विचार्यमाणं स्वजीवस्याऽपि तदात्मकत्वं बोधयत्तस्यैव निरुपाधिप्रियत्वे पर्यवस्यति। स्थितिस्तु विचार्यमाणात् तत्तद्वस्तु-नियामकतां भगवति बोधयन्ती अक्षरादपि परत्वेन तावत्पर्यन्तस्य नियम्यतया अक्षरस्याऽपि भगवान् पतिरित्यत्र पर्यवस्यतीत्येवं चतूरूपं तत्र निरूपितमित्यर्थः। अग्रिमं रूपत्रयं प्रथमाध्याये निरूपितमित्याहुः—साधनेत्यादि। तत्र हि जन्माद्यधिकरणे सृष्टिस्थिति-भङ्गकर्तृत्वं प्रतिपादितम्, तच्चावान्तरकार्ये ब्रह्मादिरूपेषु नियतमित्यण्डसम्बन्धिष्वपि सृष्ट्यादिषु तदेव त्रिरूपं करणतया सिध्यतीति साधनत्वेन तत्त्रयं प्रतिपादितम्, तथा च समन्वयेक्षत्यानन्दमयाधिकरणेषु क्रमेणार्थादीनां त्रयाणामेव हेतुतया प्राधान्यात् सच्चिदा-नन्दात्मकं रूपत्रयं फलत्वेन प्रतिपादितमिति द्वेधा रूपत्रयं निरूपितमित्यर्थः। तदेतद्विभजन्ते—तत्रेत्यादि। प्रपञ्चेत्यादि। द्विविधप्रपञ्चकरणाद्विराजः सौभगभाजनत्वाच्च तैर्युक्तः। अनेन सत्फलत्वमुक्तम्। द्वितीये शब्दफलत्वम्। तृतीये आनन्दफलत्वम्। तत्र हेतुमाहुः—स्वरूप इत्यादि। भूमस्वरूपे स्वे महिम्नि प्रतिष्ठित इत्यनेन स्वप्रतिष्ठाया(?)एव श्रवणादित्यर्थः। पुरः स्फूर्तिकमर्थ-माहुः—श्रीवत्स इत्यादि। अकेतनपदात् सिद्धमन्यमप्यर्थमाहुः—अनाश्रितत्वेनेत्यादि। एकेनेति। श्लोकेन। अत्र सर्वहेतुवादपरिहारः प्रमेयनिर्णयः। प्रमाणाध्यायसमाप्तौ[१] सर्वाधारत्वेनानाश्रितत्वस्यैव सिद्धत्वादाधाररहित्यं प्रमाणनिर्णयो बोध्यः। इतरावित्यादि। प्रवाहाद्वेदमार्गस्थितत्वाद् ब्रह्मा, अग्रहत्वाद्वैराग्याच्च शिव इत्यर्थः। गुणोपसंहारे तु सर्वविद्याविषयत्वेनैकत्वम्, वेदैकसमधिगम्यत्वं चेति द्वयं सर्ववेदान्तप्रत्ययाधिकरणे सिद्धम्। आसीनत्वं 'व्याप्तेश्च समञ्जसम्' इत्यत्र सर्वव्याप्तिबोधनेन। विशेषतो वैष्णवसमीपे स्थितिस्तु चतुर्थस्य प्रथमे आसीनः सम्भावादिति सूत्रे। प्रियत्वं कार्याख्यानाधिकरणस्य द्वितीयवर्णके सम्यक् प्रतिपादितम्। पतित्वं तु आत्मगृहीत्यधिकरणे। प्रियशिरस्त्वाधिकरणसिद्धस्य[३] निरुपधिप्रियस्यैवानन्दमयस्य सर्वनियामकत्वबोधनात्। आनन्दमया-धिकरणविषयवाक्ये ब्रह्म पुच्छं प्रतिष्ठेति। ब्रह्मणः पुच्छत्वश्रावणेन नियम्यत्वसिद्ध्या पुरुषोत्तमे तन्नियामकत्वमर्थबलादेव सिद्ध्यति। तत एवाकेतनत्वमपि, श्रीनिकेतत्वं पुरुषविद्याधिकरणे पुरुषसूक्ते "स भूमिं विश्वतो वृत्वा" इत्यनेन प्रपञ्चसाहित्यस्य "तं यज्ञं बर्हिषि प्रौक्षन्" इत्यनेन यज्ञसाहित्यस्य, "तद्गात्रं वस्तुसाराणां सौभगस्य च भाजनम्" इति पुरुषसूक्तव्याख्याने स्मृत्या श्रीसाहित्यस्य सिद्धत्वादिति ॥ ६ ॥ ❀ ❀ श्यामावदातमित्यत्र। श्यामत्वेनाप्रकाशत्वे प्राप्ते तद्वारणायावदातपदमित्याशयेनाहुः—मध्यन्दिनेत्यादि। "तन्मध्ये यत्कृष्णं तदन्नस्य" इति श्रुतेः, पार्थिवं यत्कृष्णं तत्सदृशं यद्धिरण्मयपुरुषस्य भास्वरं श्यामरूपं तद्वदित्यर्थः। ननु तादृशभास्वररूपे किं मानमत आदित्येत्यादि। अत्रादित्यतुल्यवर्णत्वस्य ब्रह्मणि बोधनादादित्यान्तःस्थितेऽपि तद्वर्णतास्तीति तथेत्यर्थः। सदृशपदाभावे तु प्राञ्जलमेव तत्। एतेन सिद्धमन्यमप्याहुः—अनेनेत्यादि। भगवति तत्सारूप्यकथने[४]न तस्मिन्नपि भगवद्धर्मस्यैव संक्रान्तत्वात् सापि भगवदात्मिका उक्ता भवतीत्यर्थः। विरजत्वेन सिद्धं फलरूपत्वमाहुः—व्यापीत्यादि। "क्षयन्तमस्य रजसः पराके" इति श्रुतेरित्यर्थः। उत्पादकेत्यादि। उत्पादकं रजस्तज्जन्यं कर्म चादृष्टरूपं तत् संस्कृतभूताभावः। स च रजस्तमोराहित्यबोधनेनैवोक्त इत्यर्थः। एवं सर्वधर्मप्रत्यायनप्रयोजनमाहुः—मुक्तीत्यादि। अनेनेति। उपदेशार्थं तादृग्रूपप्रदर्शनेन। प्रकर्षः साधनसाहित्यमिति। लोचनपदेन विचारक्रियाया अपि लाभादत्र शक्तिद्वयमपि बोध्यते। तत्र ज्ञानशक्तौ शान्तिप्रकर्षः। क्रियाशक्तावारुण्यं साधनसाहित्यमित्यर्थः। एतेन सिद्धं फलरूपमाहुः—अनेन सार्ष्टिरित्यादि। अनेनेति प्रकर्षबोधनेन। प्रकर्षमात्रस्यैव तुल्यैश्वर्यत्वप्रयोजकत्वात्। अन्यथा "न तत्समश्च" इति श्रुतिविरोधापत्तिरिति भावः। इदमित्यस्यैव विवरणं ज्ञानेत्यादि। एतावानिति। प्रकृष्टज्ञानक्रियाशक्तिमान्। ननु ततोऽधिको रसात्मा तस्यात्राप्राकट्यादिति। अनेनेत्यादि। ज्ञातत्वकथनेन। "ब्रह्म वेद ब्रह्मैव भवति" इत्यत्रोक्तं तदुक्तमित्यर्थः। तर्हि पदान्तरस्य किं प्रयोजनमत आहुः—उभयोरित्यादि। उभयोरिति वाम-

१. हिर्देतौ प्रकाशः। २. प्रवहद्वे....। ३. इतः पूर्वं प्रियशिरस्त्वाधिकरणे, इत्यपि लभ्यते। ४ तत्सारूप्यके धनेनेत्येवेषु, पुस्तकेषूपलभ्यते।

दक्षिणभागयोः । ज्ञापितमिति । भावे क्तः । ज्ञापनमित्यर्थः । कथं तज्ज्ञापनात्मकमित्यत आहुः–अत्रेत्यादि । पदत्रयमिति । असमस्तं पदत्रयं विदितं यस्मादिति समासमभिप्रेत्याहुः–कालेत्यादि । तथा च ज्ञानविषये रूढं विदितवदमुक्तयोगद्वयोपकृतं सदेव तावन्तमर्थं बोधितवदित्यर्थः । अत्र गमकमाहुः–अन्यथेत्यादि । अहन्ताममताभाव इति । "वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः । आपं चैव हलन्तानां यथा वाचा निशा दिशा" इत्यनुशासनात् पीतपदमपीतार्थकं सदहन्ताद्यभावं बोधयतीति तथा । अवस्थात्रयं जाग्रदादिरूपं बोध्यम् । ऐकपद्यसूचितमर्थमाहुः–एकमित्यादि । एतत्त्रयं समुच्चितमेव साधनमित्यर्थः । फलाध्याये तु ब्राह्मणेत्यधिकरणे द्वादशाहसूत्रे सारूप्यदेहेन्द्रियासुहीनानामेव साकारत्वेन सारूप्यात् सिद्ध्यति । भोगसाधनेनैव सामीप्यसार्ष्टिसालोक्यान्यपि सिद्ध्यन्ति । सायुज्यं त्वनावृत्तिसूत्रे "अनावृत्तिः शब्दात्" इत्यस्य पुनः कथनेन मुख्याधिकाररहितानां साधितम् । गुणोपसंहारे तु रजस्तमोराहित्येन प्रकाशकत्वं पुरुषविद्याधिकरण एव सिद्ध्यति । "आदित्यवर्णम्" इति श्रुतेस्तद्विषयवाक्ये सत्त्वात् । रजोराहित्येन निर्दोषत्वं वेधाद्यधिकरणे । तत्र विभूतिरूपस्य मुख्यप्राणस्य निर्दुष्टतास्थापनेन कैमुतिकेनैव भगवतो दोषराहित्यस्य सिद्धत्वात् । प्रकृष्टज्ञानक्रियाशक्तिमत्त्वं सम्भृत्यधिकरणे । तद्विषयवाक्येऽन्यस्य ब्रह्मणा स्पर्द्धितुमसामर्थ्यस्य प्रतिपादनात् । तस्य च क्रिययेव ज्ञानेनाऽपि तुल्यत्वात् । सारूप्यादिप्रदत्वं च हानौ तूपायनेत्यधिकरणे । तत्र ब्रह्मप्राप्त्यर्थं[1] तरं(?) कैर्धर्मैः साम्यमिति विचारे सारूप्यादिचतुर्दातृत्वस्यार्थबलादेव सिद्धेः । भक्त्यादिभिः सायुज्यदातृत्वं गतेरित्यर्थवत्त्वमित्यधिकरणे । तत्र मर्यादा-पुष्टिभेदेनाङ्गीकारस्य तत्तत्फलहेतुत्वबोधनेन, मर्यादामार्गीयाङ्गीकारे यथाधिकारं विहितभक्त्यादिसाधननिवेशादिति । एतेनैव ब्रह्मभावप्रदत्वं तत्साधनसमुपनिवेशश्च सिद्ध्यतीति बोध्यम् ॥ ७ ॥ ❀ ❀ वाम ऊरावित्यत्र । अधिश्रित्येत्यस्य ल्यबन्त-त्वाङ्गीकारेऽध्याहारापत्तिरिति तन्निवृत्त्यर्थं पक्षान्तरमाहुः–दक्षिणमित्यादि । तथा चाधिश्रित्यपदं क्यबन्तं तेन नाऽध्याहार इत्यर्थः । अनेनेति । वामोरौ दक्षिणचरणस्थापनकथनेन । तद्व्याकुर्वन्ति–वामा इत्यादि । अत्राङ्घ्रेर्गतिसाधनत्वेन मार्गत्वम्, जले स्नेहाख्यगुणसत्त्वेन सरोरुहपदं प्रेमजन्यश्रवणादिपरं बोध्यम् । आश्रित इति छायार्थमाश्रितः । द्वितीयोऽर्थः श्रीधरव्याख्यातः संगृहीतः । एतेन कथं कर्मबोध इत्याकांक्षायां व्याकुर्वन्ति–अर्भाणामित्यादि । तथा च बालसुखदायकत्वेनारणिजन्यत्वेन चाऽत्र कर्मबोध इत्यर्थः । सूचितमिति, अपोपसर्गस्य वर्जनेऽपि शक्तत्वाद्वर्जितत्वेनाश्रित इत्यर्थस्य द्योतनेन तादृशकर्मणोऽ-नभिप्रेतत्वं सूचितमित्यर्थः । अस्मिन् पक्षे वृत्तेरपि पारोक्ष्याद्व्याख्यानान्तरमाहुः–अपाश्रिता इत्यादि । अस्मिन् पक्षे अपाश्रितार्भकं अश्वत्थे यस्येति गड्वादिसमासो बोधितः । परिच्छेदरूपत्वादिति । तत्परिच्छेदेन रूप्यन्त इति रूपाणि, भक्त्युपासनाभेदानां तथात्वादित्यर्थः । पुरः स्फूर्तिकमर्थमाहुः–सर्वेषामित्यादि । तपस्यादीनीति । तपस इदं तपस्यम्, यत्प्रत्ययस्तद्धितोऽत्र । शब्द-विशेषसूचितमर्थान्तरमाहुः–असित्यादि । 'रघोः कुलेऽखिलं राति राजते यो महीं स्थितः । स राम इति लोकेषु विद्वद्भिः प्रकटीकृतः' इति रामतापनीयमन्त्रे । आद्याक्षरमात्रेण धात्वर्थग्रहणदर्शनादत्रापि तथार्थोक्तौ न दोष इत्यर्थः । कर्मफलमित्यत्र कर्मेति भिन्नं पदम् । अत्र कर्मत्यागो न सुबोधः । इति तदर्थं योगमाहुः–पिप्पलानित्यादि (?) अत्र पिप्पलं पिः पलमिति द्विधा प्रयोगो दृश्यते । तत्र पकारद्वयपक्षे पिप् कालः । विसर्गपक्षे पिः कालः । तत्रैकस्मिन् पक्षे पिपः पान्तीति, अन्यस्मिन् पीन् पान्तीति तत्र सकारागमश्च बोध्यः । पक्षद्वयसंग्रहायाहुः–अविशेषेणेति । अर्थस्य तौल्येन । तमेवार्थमाहुः–सर्वभक्षकत्वादिति । अत्र पिप्पानि च लानि चेति पिप्पलम्, एकवद्भावो विग्रहे बोध्यः । एकवचनविग्रहपक्षेऽप्ययमेवार्थः । एवमर्थस्याऽग्रे स्फुटत्वादत्र पाठोऽप्येतद-नुसारेण बोद्धव्यः । एतद्विशेषसूचितमर्थमाहुः–अनेन वैराग्य इत्यादि । दैहिकानि प्राणधारणोपयोगीनि भिक्षाटनादीनि । नित्यानां विवक्षितं, स्वरूपमाहुः–सर्वदेत्यादि । स्फुटमग्रिमम् । साधनाध्याये तु वैराग्यं प्रथमपादार्थः । ज्ञानं द्वितीयस्य । कर्म तुरीयस्य । भक्तिस्तृतीयस्य । तत्र सर्वात्मभावस्यैव मुख्यतया निर्धारितत्वादिति । गुणोपसंहारे तु भक्तिरूपत्वं लिङ्गभूयस्त्वाधिकरणे । तत्र भक्तिमार्गीयस्य सर्वात्मभावस्य भगवद्रूपत्वनिर्धारणादिति तत्प्राप्यत्वं स्फुटमेव । ज्ञानरूपत्वं त्वक्षरधियामित्यधिकरणे । अक्षरस्य ज्ञानप्रधानत्वादिति ज्ञानप्राप्यत्वं स्फुटमेव । स्वानभिप्रेतकाम्यकर्मफलदातृत्वं तु नानाशब्दादिभेदादित्याद्यधिकरणत्रये स्फुटम् । वैराग्यं तु तादृशकर्मणां तत्फलस्य चानभिप्रेतत्वात्तेष्वेव सिद्धम् । न वा तत्सहभावाश्रुतेरित्यधिकरणे । सर्वरूपत्वं समहाराधिकरणे । एवं षोडशाधिकरण्येमानि विशेषणानि बोधितानीति प्रतिभाति ॥ ८ ॥ ❀ ❀ तस्मिन्नित्यत्र । ब्रह्मसमानत्वादिति । ब्रह्मणे यथा आश्रयलीला उपदिष्टा तथोद्धवायेदानीमुपदेष्टव्येति तच्छ्रवणाधिकारित्वेन तथात्वात् । उक्तमिति । व्यासपादैरत्रोपनिबद्धम् ॥ ९ ॥ ❀ ❀ तस्येत्यत्र । नहीत्यत्र हिर्हेतौ नोचित इत्यर्थः ॥ १० ॥

## श्रीगिरिधरकृता बालप्रबोधिनी ।

एवं सर्वं ज्ञात्वाऽपि तदनुगमने हेतुमाह—भर्तुरिति । भर्तुः स्वामिनः पादयोर्विश्लेषणे अक्षमः, असमर्थ इत्यर्थः । त्वयाऽपि निर्जितेन्द्रियादिशत्रुत्वात् भगवदादिवियोगेऽपि धैर्यमेवावलम्बनीयमिति सूचयन् सम्बोधयति—अरिन्दमेति ॥ ५ ॥ ❀ ❀ अनुगच्छन्नहं तमेव सर्वतो विचिन्वन्नद्राक्षं दृष्टवानस्मीत्यन्वयः । दृष्टं भगवन्तं वर्णयति—सरस्वत्यां सरस्वतीतीरे

१ ब्रह्मप्राप्त्यनन्तरमिति स्यात् ।

कृतकेतं कृतनिवासम्। एकमसहायम्। आसीनमुपविष्टम्। दयितं निरतिशयप्रियम्। तत्र हेतुमाह—पतिं स्वामिनम्। श्रीनिकेतं श्रियः लक्ष्म्याः शोभाया वाश्रयम्। एवं विशेषणैर्लौकिकत्वमाशङ्क्याह—अकेतनमिति, तस्यैव सर्वाधारत्वाद्वस्तुतोऽनाश्रयमित्यर्थः ॥ ६ ॥ ❀ ❀ श्यामश्चासाववदातः स्वच्छश्च तम्। अवदातत्वे हेतुमाह–विरजमिति, विरजसमित्यर्थः। प्रशान्ते प्रसन्ने अरुणे लोचने यस्य तम्। चतुर्भिर्दोर्भिर्भुजैः पीतकौशाम्बरेण कौशं कौशेयं पीतकौशेयाम्बरेण च विदितं लक्षितम् ॥ ७ ॥ ❀ ❀ दक्षिणचरणसरोरुहं वामे उरौ अधिश्रित्य स्थापयित्वा अपाश्रितः पृष्ठतोऽवष्टब्धः अर्भको बालः कोमलोऽश्वत्थो येन तम्। त्यक्तपिप्पलं त्यक्तकर्मफलम्। अतएवाकृशं कर्मायत्तकार्श्यस्थौल्यादिरहितमित्यर्थः ॥ ८ ॥ ❀ ❀ तस्मिन्देशे तदा द्वैपायनो वेदव्यासः सुहृत् हितैषी सखा[1] यस्य सः स्वगुरुपुत्रत्वात् पराशरशिष्यो मैत्रेयो लोकान् अनुचरन् यदृच्छया अकस्मादेव आससाद आजगामेत्यन्वयः। लोकानुचरणे हेतुमाह—सिद्ध इति, कृतकृत्य इत्यर्थः। तत्र हेतुमाह—महाभागवत इति, भगवद्भक्तेषु श्रेष्ठ इत्यर्थः ॥ ९ ॥ ❀ ❀ तस्य मैत्रेयस्य आशृण्वत एव सतः अनुरागहासान्वितसम्यगीक्षणेन मां विश्रमयन् वियोगेन श्रमितस्य सम्यगवधारणासम्भवात् विगतश्रमं कुर्वन् मुकुन्दो मुक्तिदाता श्रीकृष्ण उवाचेत्यन्वयः। तस्य मैत्रेयस्यापि श्रवणाधिकारित्वं सूचयन् विशिनष्टि—प्रमोदेति। भगवद्दर्शजनन्यप्रमोदभारेण आनता कन्धरा यस्य तस्य। प्रमोदभात्रेति पाठान्तरम्। तदा प्रमोदेन भावेन चानता कन्धरा यस्य तस्य। प्रमोदे हेतुमाह—अनुरक्तस्येति, स्वस्मिन् प्रेमवत इत्यर्थः। तत्रापि हेतुमाह—मुनेरिति, मननशीलस्येत्यर्थः ॥ १० ॥

### हिन्दी अनुवाद

विदुरजी! इससे यद्यपि मैं उनका आशय समझ गया था, तो भी स्वामीके चरणोंका वियोग न सह सकनेके कारण मैं उनके पीछे-पीछे प्रभासक्षेत्रमें पहुँच गया ॥ ५ ॥ ❀ ❀ वहाँ मैंने देखा कि जो सबके आश्रय हैं किन्तु जिनका कोई और आश्रय नहीं है, वे प्रियतम प्रभु शोभाधाम श्यामसुन्दर सरस्वतीके तटपर अकेले ही बैठे हैं ॥ ६ ॥ ❀ ❀ दिव्य विशुद्धसत्त्वमय अत्यन्त सुन्दर श्याम शरीर है, शान्तिसे भरी रतनारी आँखें हैं। उनकी चार भुजाएँ और रेशमी पीताम्बर देखकर मैंने उनको दूरसे ही पहचान लिया ॥ ७ ॥ ❀ ❀ वे एक पीपलके छोटे-से वृक्षका सहारा लिये बायीं जाँघपर दायाँ चरणकमल रक्खे बैठे थे। भोजन-पानका त्याग कर देनेपर भी वे आनन्दसे प्रफुल्लित हो रहे थे ॥ ८ ॥ ❀ ❀ इसी समय व्यासजीके प्रिय मित्र परम भागवत सिद्ध मैत्रेयजी लोकोंमें स्वच्छन्द विचरते हुए वहाँ आ पहुँचे ॥ ९ ॥ ❀ ❀ मैत्रेय मुनि भगवान्के अनुरागी भक्त हैं। आनन्द और भक्तिभावसे उनकी गर्दन झुक रही थी। उनके सामने ही श्रीहरिने प्रेम एवं मुसकानयुक्त चितवनसे मुझे आनन्दित करते हुए कहा ॥ १० ॥

### श्रीभगवानुवाच

**वेदाहमन्तर्मनसीप्सितं[2] ते ददामि यत्तद् दुरवापमन्यैः ।**
**सत्रे पुरा विश्वसृजां वसूनां मत्सिद्धिकामेन वसो त्वयेष्टः ॥ ११ ॥**
**स एष साधो चरमो भवानामासादितस्ते मदनुग्रहो य[3]त् ।**
**यन्मां नृलोका[4]न् रह उत्सृजन्तं दिष्ट्या ददृश्वान् विशदानुवृत्त्या ॥ १२ ॥**
**पुरा मया प्रोक्तमजाय नाभ्ये पद्मे निषण्णाय ममादिसर्गे ।**
**ज्ञानं परं मन्महिमावभासं यत्सूरयो भागवतं वदन्ति ॥ १३ ॥**
**इत्यादृतोक्तः परमस्य पुंसः प्रतिक्षणानुग्रहभाजनोऽहम् ।**
**स्नेहोत्थरोमा स्खलिताक्षरस्तं मुञ्चञ्छुचः प्राञ्जलिराबभाषे ॥ १४ ॥**
**को न्वीश ते पादसरोजभाजां सुदुर्ल[5]भोऽर्थेषु चतुर्ष्वपीह ।**
**तथापि नाहं प्रवृणोमि भूमन् भवत्पदाम्भोजनिषेवणोत्सुकः ॥ १५ ॥**

### श्रीधरस्वामिविरचिता भावार्थदीपिका।

हे उद्धव ते मनसीप्सितमहमंतः स्थितो वेद वेद्मि। दाने हेतुः। विश्वसृजां वसूनां च मिलितानां सत्रे हे वसो इति पुरा पूर्वजन्मनि त्वं वसुरभूस्तदा मत्प्राप्तिकामेन त्वयाऽहमिष्टोऽतस्तत्साधनं ददामि दास्यामि अन्यैर्मत्पराङ्मुखैर्दुष्प्रापम् ॥ ११ ॥

---

१. बहुव्रीहौ सुहृत्सखेति पाठश्चोऽभावात्, कर्मधारये तु सुहृत्सख इत्येव सुबोधिन्यां कर्मधारय उपलभ्यते। श्रीधरस्वामी तु बहुव्रीहिमदर्शयत्। २. प्रा० पा०—मनसेप्सितं। ३. प्रा० पा०—यः। ४. प्रा० पा०—कानिह। ५. प्रा० पा०—नूनं।

❀ ❀ तस्य भाग्यमभिनंदति । स एष भावो जन्म ते भवानां मध्ये चरमः यद्यस्मिन् मदनुग्रह आसादितो लब्धः यत्पुनर्मां रह एकांते विशदानुवृत्त्या एकांतभक्त्या दृष्टवान्दृष्टवानसि एतद्दिष्ट्या भद्रं जातमित्यर्थः । नृलोकान् नृशब्देन जीवास्तेषां लोकानुत्सृजंतं वैकुंठं गच्छंतमित्यर्थः ॥ १२ ॥ ❀ ❀ ददामीति यदुक्तं तदेव निर्दिशति । पुरा पूर्वस्मिन्पाद्मे कल्पे आदिसर्गे सर्गोपक्रमे मम महिमा लीलाऽवभास्यते येन तत् ॥ १३ ॥ ❀ ❀ इत्येवमादृतश्चासावुक्तश्चाहं प्रतीक्षणं कृपाऽवलोक एवानुग्रहस्तस्य भाजनः । पात्रभूतः पाठांतरे प्रतिक्षणमनुग्रहस्य पात्रमिति शुचोऽश्रूणि मुंचन्नावभाषे उक्तवानस्मि ॥ १५ ॥ ❀ ❀ न हि स्वाज्ञाननिवृत्तिमात्रकामोऽहं किंतु त्वन्निषेवणोत्सुकस्त्वयि चाघटमानाचरणं दृष्ट्वा मे मोहो भवत्यतस्तत्वं तत्त्वं ज्ञानं देहीति प्रार्थयितुमाह । कोऽन्विति । चतुर्षु धर्मादिषु तथापि हे भूमन् भवत्पदांभोजनिषेवणोत्सुकोऽहं तान्न प्रवृणोमि ॥ १५ ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः ।

तं विनापि विश्वसृग्भ्यो वसूनां भिन्नत्वप्रसिद्धेरेव स्वामिचरणैर्वसूनां वेत्युक्तम् । अत्र सिद्धिपदं प्राप्तिपरं प्राप्तेरेव सिद्धित्वात् यतः पुरेष्टः पूजितोऽहमतो हेतोः तत्साधनं मत्प्राप्तिसाधनं ज्ञानं मत्पराङ्मुखैः मद्भक्तिहीनैः तत्त्वमाह नित्यलीला-परिकर उद्धवे वसोः प्रवेशान्नित्यसिद्धस्याप्युद्धवस्य साधनसिद्धत्वमेव । मैत्रेयमुद्धवं च ज्ञापयामास नित्यलीलाया रहस्यत्वरक्षणार्थम् । केचित्तु लीलाकर उद्धवो द्वारकायामेवास्ते इत्याहुः ॥ ११ ॥ ❀ ❀ तस्योद्धवस्य । इत्यर्थ इति । विभक्तिप्रतिरूपकाव्ययमिदं कल्याणार्थे न तृतीयांतशब्द इति भावः । इत्यर्थ इति । एतेन ब्रह्मादिप्रार्थनया तत्तल्लोकं मार्गप्राप्तमुत्सृज्य निजधाम यान्तमिति भावः । यद्यपि "भूत्वा द्विजवरस्त्वं वै मामुपैष्यसि केवलम्" इति मुचुकुंदं प्रति श्रीकृष्णोक्तेः "प्रज्ञां कुर्वीत ब्राह्मणः" इति श्रुतेश्च विप्रस्यैव ज्ञानसाधनीभूतप्रव्रज्याधिकारित्वेन चरमशरीरत्वं तथापि यस्मिञ्शरीरे भगवतोऽत्यंतानुग्रहो जायेत तच्छरीरमपि चरममेवेत्याशयेनोक्तं मदनुग्रहो यदिति । अत एवोक्तं प्राक्तनपद्ये 'दुरवापमन्यैः' इति । अन्यैर्मद्भक्तेतरैः क्षत्रादिजन्मभाग्भि-र्दुरवापं विप्रदेहं विनैव तद्देहप्राप्यस्य प्राप्तत्वाद् दुर्लभमित्यर्थः । यद्वा । भवानामवताराणां मध्ये एष चरमः परमकाष्ठामापन्नस्तद्-शिरूप इत्यर्थः । "एते चांशकलाः सर्वे कृष्णस्तु भगवान्स्वयम्" इत्युक्तेः । स एष भावश्चरम इति पाठे "भावः सत्ता स्वभावाभि-प्रायचेष्टात्मजन्मसु" इत्यमरात् भावो जन्मेत्यर्थः । यद्वा । स एष चरमो भावः । प्रेमा यद्येन मदनुग्रह इत्यर्थः । विनानुग्रह-मेकांतसंगो न भवतीति भावः । सदाचरणशीलत्वात्तव मद्दर्शनादि जातमित्यभिप्रेत्याह–साधो इति ॥ १२ ॥ ❀ ❀ मम नाभ्ये नाभिभवे ज्ञानं चतुःश्लोक्युपदेशरूपं परं केवलं मन्महिमावभास्यते येन तत् शुद्धभगवद्भक्तिप्रतिपादकमित्याह—भागवत-मिति । यद्वा । परमिति भागवतविशेषणं परं सर्वपुराणेषु श्रेष्ठं "क्षेत्राणां चैव सर्वेषां यथा काशी ह्यनुत्तमा । तथा पुराणव्रातानां श्रीमद्भागवतं द्विजाः" इति द्वादशे सूतोक्तेः । ज्ञायतेऽनेनेति ज्ञानं भगवज्ज्ञानसाधनं भागवतमेवेत्यर्थः । 'वेद्यं वास्तवमत्र वस्तु शिवदम्' इत्युक्तेः ॥ १३ ॥ ❀ ❀ भाजन इति पुंस्त्वमार्षम् । 'भाजनं योग्यपात्रयोः' इति मेदिनी । पाठांतरे प्रतिक्षणेति पाठे । आवभाष इति । परोक्षव्यपदेशः । सर्वेन्द्रियाणां भगवदेकविषयत्वेन बाह्यप्रवृत्तिशून्यतामपेक्ष्येति ज्ञायते "सुप्तोहं किल विललाप" इत्यादौ तथा दृष्टत्वात् ॥ १४ ॥ ❀ ❀ ननु तवाज्ञाननिवृत्तिरपेक्षिता चेत्तर्हि तामप्यहं करोमीति चेदाह— न हीति । अघटमानाचरणमसंभवाचरणं मोहोऽज्ञानं यतो भवति अतो हेतोः हे ईश सर्वसंपादनसमर्थोसि त्वमित्यभिप्रायः । यद्यपि त्वच्चरणारविंदसेविनां चतुर्षु धर्मार्थकाममोक्षरूपेष्वर्थेषु वर्गेषु न कोप्यतिशयेन दुर्लभस्तथापीति तानहं न वांछामि । तत्र हेतुः भवत्पदांभोजेति । भूमन्निति सर्वोत्कृष्टसेवया सर्वयत्नेनैव प्राप्यत इत्याह ॥ १५ ॥

## श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या ।

श्रीमदुद्धवस्य नित्यपार्षदत्वेपि वसो इति सम्बोधनमेकांशेनाभेदविवक्षया अत एव तत्साधनं प्राप्तिसाधनं दास्यामी-त्युक्तम् ॥ ११ ॥ ❀ ❀ साधो इत्यत्र भाव इति पाठः प्रामादिकः । भवशब्दस्य जन्मार्थेऽप्रसिद्धेः, तस्मान्निर्द्धारणशक्त्या-क्षिप्तोयं भवशब्दः भवस्य चरमत्वोक्तिरंशेन सहाभेदविवक्षया एतदेकान्तभक्त्यायेकान्ते दर्शनम् ॥ १२ ॥ ❀ ❀ पाद्मे कल्पे इति यद्यपि द्वितीयस्कंधे ब्राह्मे कल्पे तत्कथितं तथापि पाद्मे पुनरप्युपदिष्टं कालातिशयेन सन्दिग्धत्वादत एव तस्य सावित्रिपरिग्रहलक्षणो मोहोपि मध्ये संघटेत लीलावभासकत्वेन श्रीमद्भागवतस्य शुष्कज्ञानपरत्वं व्यावृत्तम् ॥ १३ ॥ ❀ ❀ प्रतिक्षणेति पाठान्तरम् ॥ १४ ॥ ❀ ❀ उद्धवस्य श्रीमद्भागवते मुख्याधिकारित्वं व्यंजयितुं तदभिप्रायं व्याचष्टे नहीति । स्वाज्ञाननिवृत्तिनिर्विशेष-स्वरूपज्ञानं तावन्मात्रकामोहं नास्मि येन श्रीभागवताऽधिकारी न स्याम्, किन्तु त्वन्निषेवणोत्सुकः अतः अघटमानाचरणस्य मोहावह-त्वात् तन्निवृत्यर्थं तत्त्वज्ञानं लीलायाथार्थ्यानुभवम् ॥ १५ ॥

## श्रीमद्वीरराघवव्याख्या

भगवद्भक्तिमेवाह द्वयेन वेदेति । हे वसो उद्धव पूर्वजन्माभिप्रायेणेदं संबोधनं विश्वसृजां प्रजापतीनां वसूनां च सत्रे पुरा पूर्वजन्मनि मत्सिद्धिकामेन मत्प्राप्तिकामेन त्वयाऽहमिष्टः सम्यगाराधितः अतस्ते तवांतर्मनसांतःकरणेनेप्सितं यत्तद्वेद जानामि ।

अन्यैरनाराधितमचरणैर्दुरवापं दुःखेनाप्यवाप्तुमशक्यं तद्ददामि दास्यामि ॥ ११ ॥ ꕥ ꕥ स इति हे साधो उद्धव भवानां जन्मनां मध्यं स एष भवः चरमः अंतिमः कुतः यद्यस्मात्ते त्वया मदनुग्रहः आसादितः लब्धः यस्माच्च पुनर्नृलोकान्मर्त्यलोकान् रहः एकांते उत्सृजंतं त्यजंतं मर्त्यलोकाद्वैकुंठं गच्छन्तं माविशदनुवृत्त्या एकांतभक्त्या ददृश्वान् दृष्टवानसि एतद्दिष्ट्या जातमित्यर्थः । ॥ १२ ॥ ꕥ ꕥ किं ददासीत्यपेक्षायां देयं निर्दिशति पुरेति । आदिसर्गे सृष्ट्युपक्रमे नाभ्ये नाभिभवे पद्मे कमले निषण्णाय उपविष्टायाजाय ब्रह्मणे पूरा पूर्वकाले मया प्रोक्तं मम महिमाऽवभास्यते प्रकाश्यतेऽनेनेति मन्महिमावभासं यदेव सूरयो भागवतमिति वदंति तत्परमं ज्ञानं ददामीत्यनुषंगः ॥ १३ ॥ ꕥ ꕥ एवं भगवतोक्ते मयैवमुक्तमित्याह इतीति । इतीत्थमाद्दतोक्तः आद्दतश्चासावुक्तश्च परमस्य पुंसः परमपुरुषस्य प्रतीक्षणं कृपावलोकनमनुग्रहश्च तयोर्भाजनः पात्रभूतः स्नेहोर्ध्वरोमा स्नेहेनोर्ध्वानि पुलकितानि रोमाणि यस्य सः स्खलिताक्षरः गद्गदवागहं शुच आनन्दाश्रूणि मुंचन्प्राञ्जलिस्तं भगवंतं प्रत्याबभाषे आभाषितवानस्मीत्यर्थः ॥ १४ ॥ ꕥ ꕥ किमाभाषितवानसीत्यत आह क इति । हे ईश ते तव पादसरोजभाजां पादकमलं भजमानानामिह पुरुषाणां चतुर्ष्वर्थेषु धर्मार्थकाममोक्षेषु को नु सुदुर्लभः न कोपि दुर्लभ इत्यर्थः । तथापि पुरुषार्थचतुष्टयस्य सुलभत्वेपि हे भूमन् विभो नाहं प्रवृणोमि पुरुषार्थचतुष्टयमिति शेषः । कथंभूतोहं भवत्पदांभोजयोर्निषेवणे उत्सुकः, तेषां ज्ञानी नित्ययुक्त इत्युक्तविधज्ञान्यहम् ॥ १५ ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

किमित्याह हरिरिति तत्राह वेदेति । हे वसो मद्भक्तशिरामणे ते तव मनस्यंतर्हृदि यदीप्सितं तदहं वेद ततः किं तत्राह ददामीति ते तुभ्यं त्वदभीष्टं ददामि दास्यामीतीच्छामि अन्यैः प्राप्यं चेत् किमनेनेत्यत उक्तं दुरवापमिति । अन्यैर्मद्भक्तिरहितैः त्वन्मुखारविंदान्निःसृतं श्रोतुं महता पुण्येन भाव्यं अननुष्ठितपुण्यकर्मणामेतत्कथं स्यादिति तत्राह सत्र इति । पुरा पूर्वजन्मनि नित्यं भगवदुपासनशीलत्वान्मुनिशब्दवाच्यानां देवानां सत्रे यज्ञविशेषे मत्सिद्धिकामेन त्वयेष्टः पूजितः ॥ ११ ॥ ꕥ ꕥ फलांतरं चाह स एष इति । हे साधो उद्धव ते त्वयाऽऽसादितो यो भावः शरीरसंयोगलक्षणः प्रसादविशेषः कुतोवगतमेतदितितत्राह यन्मामिति । भवान् रह एकांते नृलोकमुत्सृजंतं मां विशदानुवृत्त्या निर्मलसेवया ददृश्वानिति यदत इत्यन्वयः । दिष्ट्येत्यव्ययं भद्रमित्येतस्मिन्नर्थे वर्तते ॥ १२ ॥ ꕥ ꕥ वक्तव्यार्थे श्रद्धातिशयजननार्थं ज्ञानं स्तौति पुरेति । तज्ज्ञानं तुभ्यमुपदेक्ष्यामि इत्यध्याहृत्यान्वयः कर्तव्यः । ज्ञानं यत्परमुत्तमं मन्महिम्नोवभासः प्रकाशो यस्मात्तत् सूरयो यच्च भागवतं भगवदेकविषयत्वाद्वदति ॥ १३ ॥ ꕥ ꕥ इति शब्देन ज्ञानस्य विशेषणान्तरविशिष्टत्वं सूचयति अमत्रं भाजनं पात्रमित्यभिधानं स्नेहोत्थरोमा भक्त्या समुत्पन्नरोमांचः आबभाष इति परोक्षव्यपदेशः सर्वेंद्रियाणां भगवद्विषयत्वेन बाह्यप्रवृत्तिशून्यतामपेक्ष्येति ज्ञायते, सुप्तोहं किल विललापेत्यादौ दृष्टत्वात् ॥ १४ ॥ ꕥ ꕥ भगवदपरोक्षज्ञानसाधनपादारविंदभक्तिमंतरेण नान्यदाकांक्ष इत्याह कोऽन्विति । भवत्पदांभोजनिषेवणोत्सुक इत्यनेन एतावंतं कालं न प्रवृणोमि उत्तरत्र कथमिति न जान इत्यपि व्याख्यानं प्रत्युक्तम्, अध्याहारस्याप्रामाणिकत्वात् उत्सुकत्वस्य सदातनत्वप्रतीतेश्च ॥ १५॥

## श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः ।

अतएव नित्यपार्षदत्वेप्येकांशेन वसुत्वमुद्धाव्यादिष्टम् ॥ ११ ॥ ꕥ ꕥ नवानां वस्वादिरूपेणापिलोकसंग्रहार्थं बहूनामवताराणां चरमः । परमकाष्ठामापन्नस्तदंशिरूप इत्यर्थः ॥ विशदानुवृत्त्या शुद्धभावतया अनुगमनेन यद् दृष्टवांस्तद्दिष्ट्याभद्रमेव कृतम् ॥ १२ ॥ ꕥ ꕥ पुरा मयेति । पुरा ब्राह्मे कल्पे द्वितीये स्कन्धे ब्रह्मकल्पकथनात् ॥ ज्ञानं परं चतुःश्लोकीरूपम् । मन्महिमावभासमिति तस्य निर्विशेषप्रतिपादकत्वेनाङ्गीकृतम् ॥ १३ ॥ ꕥ ꕥ अतएवाह इतीत्यादि ॥ १४ ॥ ꕥ ꕥ तथैव निवेदयति कोन्विति ॥ १५ ॥

## श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी ।

वेद वेद्मि यदन्यैर्दुरापं तद्ददामि दाने हेतुः विश्वसृजां वसूनाञ्च मिलितानां सत्रे हे वसो इति पूर्वजन्मनि त्वं वसुरभूः तदा मत्प्राप्तिकामेन त्वयाऽहमिष्टः इति नित्यलीलापरिकरे उद्धव वसोः प्रवेशात् नित्यसिद्धस्याप्युद्धवस्य साधनासिद्धत्वमेव मैत्रेयमुद्धवश्च ज्ञापयामास नित्यलीलाया रहस्यत्वरक्षणार्थम् । केचित्तु लीलापरिकर उद्धवो द्वारकायामेव स्थितः वसुरूपे उद्धवोयमित्याहुः ॥ ११ ॥ ꕥ ꕥ तमाश्वासयति स इति । भवानां जन्मनां मध्ये एष भवश्चरमः शेषः यद्यस्मिन्नासादितः प्राप्तः । यत् पुनर्मां रह एकान्ते विशदानुवृत्त्या एकान्त भक्त्या ददृश्वान् दृष्टवानसि एतद्दिष्ट्या भद्रं जातमित्यर्थः । नृलोकान्नृशब्देन जीवास्तेषां लोकान् उत्सृजंतं वैकुण्ठं गच्छन्तमित्यर्थः ॥ १२ ॥ ꕥ ꕥ ददामीति यत् प्रतिश्रुतं तन्निर्दिशति पुरेति । आदिसर्गे ब्राह्मे कल्पे मे महिमा लीला अवभास्यते येन तदिति स्वामिचरणाः, महिममाहात्म्यमित्यन्ये । भागवतं चतुःश्लोकीरूपम् ॥ १३ ॥

❀ ❀ इत्येवमादृतश्चासावुक्तश्च प्रतीक्षणे मन्त्रणादिषु उद्धवं विना एतत् कोपि न जानाति स आगच्छतु तत इदं भविष्यतीत्यादिप्रतीक्षा ह्रस्वमध्यपाठे प्रतिक्षणं क्षणे क्षणे योऽनुग्रहस्तस्य पात्रं शुचः अश्रूणि ॥ १४ ॥ ❀ ❀ ननु भगवन् प्रभो किङ्करं मां संसारान्मोचयितुं सारूप्यादिकं वा ग्राहयितुं स्वज्ञानं व्याजिहीर्षसि चेदलं तेनेत्याह कोन्विति। चतुर्षु धर्मादिषु मध्ये पादसरोजं भजतां को नु दुर्लभ इति सकामानामपि विनापि ज्ञानं पादभजनेनैव मोक्षादिफलसिद्धिः स्यादिति भावः। अहन्तु तथापि स्वत एव प्राप्तानपि तानर्थान्न वृणोमि तत्र हेतुर्भवदिति। अतो ज्ञानेन मम किं कार्य्यमिति भावः ॥ १५ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः ॥

वसो उद्धव विश्वसृजां वसूनां च मिलितानां सत्रे पुरा पूर्वजन्मनि वसुभावे मत्सिद्धिकामेन मत्प्राप्तिकामेन त्वयाहमिष्टः आराधितः। अतो यत्ते मनसि ईप्सितं मत्प्राप्त्युपायम् अहमंतःस्थितो वेद वेद्मि तदन्यैर्दुरवापमपि तुभ्यं ददाभि दास्यामि ॥ ११ ॥ ❀ ❀ ते भवानां जन्मनां मध्ये एष भवो जन्म चरमः यत् यस्मिन् मदनुग्रहः त्वया आसादितः लब्धः यच्च नृलोकान् उत्सृजंतं बद्धजीवलोकान् त्यक्त्वा निजलोकं गच्छंतं मां विशदानुवृत्त्या रह एकांते दृष्ट्वान् दृष्टवानसि। एतत्-दिष्ट्या भद्रम् ॥ १२ ॥ ❀ ❀ ददामीत्युक्तं तत्र किं ददासीत्याकांक्षायामाह। पुरेति। पुरा पाद्मे कल्पे आदिसर्गे सर्गोपक्रमे मम नाभ्ये नाभिस्थे पद्मे निषण्णाय मन्महिमावभासं मम वैभवविषयकं परं ज्ञानं प्रोक्तं ददामीत्यन्वयः ॥ १३ ॥ ❀ ❀ इत्येवमादृतश्चासावुक्तश्च शुचः अश्रूणि ॥ १४ ॥ ❀ ❀ पादसरोजभाजां चरणकमले भजमानानाम् ॥ १५ ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनीव्याख्या

पूर्वम् 'अतिव्रज्य गतीस्तिस्रो मामुपैष्यसि केवलम्।' इति भगवता प्रोक्तम्, तदुद्धवस्य सर्वथा हितमिव भवति। स हि भगवन्तमेव प्राप्तुमीष्टे, निरन्तरं च निकटे स्थातुम्। साधनानि च न कर्तुं वाञ्छति। तादृशस्य बदरिकाश्रमप्रेषणं नाऽत्यन्तमभीष्टमिति तदिच्छामनुवदन् देयान्तरमाह। अस्मिन् दत्ते तदेतच्चा[1]ऽन्यार्थं भविष्यति। अहमिव तथा करिष्यतीत्यभिप्रायेणाऽऽह—वेदाहमिति। ते यदन्तर्मनसीप्सितं तदहं वेद। इदं वाक्यमनुवादकम्, तत् फलं दास्यामीत्येतदर्थम्। एवमुक्ते प्रथमत एवाऽऽश्वासो भवति, अन्यथा काकतालीयशङ्का स्यात्, अन्यथाभिप्रायशङ्का च। ननु तद्भगवदात्मकं लोकवेदतोऽदेयं कथं दास्यतीत्यत आह—ददामि यत्तदिति। यत्त्वया मनसि कृतं तदेव दास्यामीत्यर्थः। तस्याऽसाधारणत्वमाह—दुरवापमन्यैरिति। त्वद्व्यतिरिक्तैः सर्वैरेव दुरवापम्। तां कामनां विस्मृतामिव स्मारयति—सत्रे पुरेति। 'विश्व[2]सृजः प्रथमाः सत्रमासत' इति श्रुतौ सहस्रसमयागे विश्वासृजां मध्ये वसवोऽपि स्थिताः, तन्मध्ये त्वमेको मत्सिद्धिकामः, न हि सर्वे। 'एतेन वै विश्वसृज इदं विश्वमसृजन्त' इति श्रुतेः, 'ब्रह्मणः सायुज्यं सलोकतां यन्ति' इति श्रुतेश्च विश्वसामर्थ्यम्। ततो विश्वं सृष्ट्वा ब्रह्मसायुज्यं प्राप्नुवन्तीति सर्वेषां फलम्। तदधिकारिविशेषप्रयुक्तं विश्वकरणसामर्थ्यं यागस्य। स्वतः सामर्थ्यं हिरण्मयशकुनिरूपब्रह्मोत्पत्तिः। तदा ते विश्वं सृष्ट्वा ब्रह्मसायुज्यं प्राप्ताः। भवांस्तु तदुभयं न काङ्क्षितवान्, किन्तु सज्ज्ञानुरोधेन यागे प्रवृत्तो मत्सिद्धिमेव काङ्क्षितवान्। मम सिद्धिर्मद्भावः 'पुरुषोत्तमो मम भवतु, अहं वा भवामि' इति; तच्च सर्वथा दुर्लभं यागात्। अतो यागः कामितत्वाभावान्न नियतं फलं दत्तवान्। एतच्च दातुमसमर्थस्त्वामेवंरूपमुत्पाद्य मत्सेवां कारितवान्। अतो मया सेवाफलं बदरीस्थाने पुरुषोत्तमप्राप्तिरूपं यथा सिद्ध्यति तथोपाय[3] उक्तः। यागफलं तु न दत्तम्, तदिदानीं दास्यामीत्यर्थः। वसो इति सम्बोधनमेतदर्थानुसन्धानं भगवत्कृपया तस्य जातमिति ख्यापनार्थम्। फलार्थमेव याग इति त्वयाऽहमेवेष्टः ॥ ११ ॥ ❀ ❀ तर्हि किं दातव्यम्? कथं दातव्यम्? इत्याकाङ्क्षायामाह—स एष इति। स एष भावो जन्म, ते भवानां चरमः। यदीदानीं न दत्तं स्यात्, तदा तवाऽग्रे जन्माभावात्फलं न भवेदेव। ततः किमत आह—यद्यस्मिन् जन्मनि मदनुग्रहः प्राप्तः। ममानुग्रहः फलसूचकोऽनन्तिमजन्मनोऽप्यन्तिमत्वं साधयति। एवमन्तिमे जन्मन्यनुग्रहो जात इति फलमावश्यकम्। किञ्च, न योग्यतामात्रम्, किन्तु फलमुखमेव तज्जातमित्याह—यन्मां नृलोकान् रह उत्सृजन्तमिति। नृलोकान् सर्वानेव एकान्ते स्थित्वा उत्सृजन्तं मां ददृश्वान् दृष्टवानसि ॥ १२ ॥ ❀ ❀ एतच्च दर्शनं निर्मलया सेवया जातम्; अतः ससाधनत्वात्तत् स्थिरम्, न काकतालीयम्। उत्सृजन्तमित्यनेन त्यजन्तमूर्द्ध्वं सृजन्तं चेत्यर्थद्वयं विवक्षितम्। तेन यागप्रयोजनं मद्भावश्च एकरूपो भवति। मद्भावेप्येतद् द्वयं कर्तव्यम्, गुप्ततया स्थित्वा विश्वजननं सर्वलोकपरित्यागश्च। त्वज्जन्मनश्चरमत्वादेव परित्यागः सिद्धः। मद्भावेन जगज्जननमवशिष्यते। तत्र मत्सायुज्ये जगज्जननमन्यथासिद्धं भवति, एकीभावश्रुतेः। 'यथा सर्वासामपां समुद्र एकायनम्' इति। भिन्नतया ब्रह्मभावे 'जगद्व्यापारवर्जम्' इति न्यायान्न जगत्कर्तृत्वम्। अतः सर्वाविरोधेन मद्भावेन जगज्जननं यथा सिध्यति, तथा वक्ष्यामीत्यभिप्रायेण, ब्रह्मणोऽप्येतदेव मयोक्तमित्येतदर्थज्ञानेन यथा ब्रह्मा मद्रूपो भूत्वा मद्रूपं जगत्कृतवान्, क्रियया तस्य तथाऽधिकारात्; त्वमप्येतज्ज्ञानान्मद्रूपो भूत्वा मद्रूपं जगत् ज्ञानेन करिष्यसीत्याशयेन तज्ज्ञानमाह—पुरेति। एतद्वक्ष्यमाणं ज्ञानम्, मम नाभ्ये पद्मे निषण्णाय अजाय आदिसर्गे प्रोक्तम्। तत्र हि सर्वे कृतयुगे ब्रह्मविदो ब्रह्मरूपाः। मच्छिक्षया ब्रह्मा पुरुषोत्तमरूपान् कृतवान्। 'यदा विवेकनिपुणा आदौ कृतयुगे युगे' इति

---

१. साधनकारणं बदरिकाश्रप्रेक्षणं च प्र.। २. श्रुतिस्तु तैत्तिरीयाणां ब्राह्मणे तृतीयाष्टकद्वादशप्रपाठकसप्तमानुवाका, प्र.। ३. बदरीगमनरूपः प्र.।

भगवद्वाक्यात् । नाभौ भवं नाभ्यम् । अज इति योनिद्वारा न जात इति । असंबन्धेन देहे संबन्धेन वा । समष्टिव्यष्ट्युभयरूपत्वाभावात् । तस्य स्वरूपमग्रे वक्तव्यम् । 'रजोभाजो भगवतो लीलेयम्' इत्यतोऽयमजः¹ । यदुक्तं तत्किमित्याकाङ्क्षायामाह—ज्ञानं परमिति । ज्ञानमध्यात्मरूपमपि भवति, तद्व्यावृत्त्यर्थमाह—परमिति । तदौपनिषदमपि भवतीति ततोऽप्युत्कृष्टमाह—मन्महिमावभासमिति । मन्महिम्नोऽवभासो यत्रेति, यस्मिन् ज्ञाने मम पुरुषोत्तमत्वं भासते । माहात्म्यप्रतिपादका गुणाः, कर्माणि, शक्तयश्च, अलौकिकं च सामर्थ्यम्; एतत्सर्वं यत्र भासते तद्भागवतमिति लोके प्रसिद्धम् । सूरयस्तथा वदन्तीत्यतो²ऽस्मिन्नपि शास्त्रे वादिनामपि वाद एव ॥ १३ ॥ ❀ ❀ तत्कथयिष्यामीति तु नोक्तम्, वस्तुनिर्देश एव परं कृतः । 'नाऽपृष्टः कस्यचिद् ब्रूयात्' इति शास्त्रमर्यादा । वस्तुनिर्देश एव पृच्छेत्यस्य ज्ञापकः । अतोऽधिकारी भगवदभिप्रायं ज्ञात्वा पृष्टे वक्तव्यमिति पृष्टवानित्याह—इत्यादृतोक्त इति । आदृतश्चासावुक्तश्च । 'वसो' इत्यादिसंबोधनपूर्वकं पूर्वकृतसेवानुवादादादृतः, वस्तुनिर्देशादुक्तश्च । आदृत एव वा उक्तः, 'प्रष्टव्यम्' इति । अन्यथोत्तरस्य वाग्व्ययरूपस्य क्लेशरूपत्वाद्भक्तस्य प्रश्नो न घटेत । आज्ञायां तु सर्वथा कर्तव्य एव । तदुक्तमुक्त इति । आदरस्तु स्फुरणार्थः । अनेन प्रमाणबलं प्रमेयबलं च दत्तमित्युक्तम् । ततः किं जातमित्यत आह—परमस्य पुंसः प्रतिक्षणानुग्रहभाजनोऽहं जात इति । अहमेतावत्कालं कालस्य स्थितः, इदानीं परमस्य³ जातः । ननु कालोऽपि पर एव । तत्राऽऽह—पुंस इति । ज्ञानेना⁴ऽक्षरभावो वा परशब्देन प्राप्तः पुरुषशब्देन निवार्यते । किञ्च । न संबन्धित्वमात्रम्, किन्तु प्रतिक्षणानुग्रहभाजनः । भक्तं दृष्ट्वा भगवदनुग्रहस्य तरङ्गा उद्गच्छन्ति, तेषां भाजनं पात्रमहमेव जातः, न त्वचेतने समुद्रे तरङ्गाणां लय इव भगवत्येवाऽनुग्रहो लीन इति, निरन्तरं मद्विषयक एव जात इति वा । तदा भगवदनुग्रहस्य कार्यं⁵मयि जातमित्याह—स्नेहोत्थरोमेति । अन्तर्भक्तिरसः पूर्णः । तदा स्नेहेनोत्थितानि सर्वाण्येव रोमाण्यवयवशः । सर्वत्रैवाऽङ्गे लोमशो देवताः सन्ति, ते भगवति सन्तुष्टे सर्वे सन्तुष्टा एवोत्थिताः । तत्रापि स्नेहेन, महदस्य सुखं कर्तव्यमिति । स्खलिताक्षरश्च जातः, पदवाक्योच्चारणं दूरे, अक्षराण्यपि उच्चारयितुं धृतानि क्षरन्तीति । अनेन मर्यादा सर्वथाऽपि शान्ता, वाचः प्रयत्नपरित्यागात् । किञ्च, मुञ्चन् शुचः । नेत्राभ्यां शोकाश्रूणि मुञ्चन् । अनेन ससाधनं ज्ञानं पूर्वस्थितं निवृत्तमिति ज्ञापितम् । प्रकृष्टोऽञ्जलिर्यस्य । अञ्जलिमेव पुरतो निधाय विज्ञापितवान् । अनेन तस्य प्रश्नाधिकारः सूचितः । आ ईषदर्थे भाषे, यथा कथञ्चिन्मुखाद्वर्णा निःसृता इत्यर्थः ॥ १४ ॥ ❀ ❀ उद्धवः स्वाभीप्सितं प्रार्थयितुमन्यनिषेधं तत्र हेतुं चाऽऽह त्रिभिः । तत्र ब्रह्मणे मया भागवतं प्रोक्तमिति श्रवणे प्रायेणाऽयं मां ब्रह्माण्डान्तरे ब्रह्माणं करिष्यतीति प्रतिभातं निवारयति—कोन्वीशेति । ईशेति संबोधनं सर्वसामर्थ्यबोधनाय । ते पादसरोजभाजां संबन्धिषु चतुर्ष्वप्यर्थेषु को नु दुर्लभः ? चरणरूपा पृथिवी, ब्रह्माण्डमपि पृथिव्यात्मकमेव, तत्तु प्राप्य दुग्धपानवत्सेवते । तत्रापि सरोरुहं जलोद्भवं पद्मम्, जलस्यापि फलरूपम् । अनेन सर्वमेव ब्रह्माण्डे स्थितं फलम्, तापापापनोदश्च त्वद्भजने स्वतः सिद्धः । अत्र तीर्थैकदेशे मुक्तिः प्रसिद्धा, लक्ष्म्येकदेशेऽर्थः प्रसिद्धः, फलत्वेन सेवनया कामः प्रसिद्धः, विहितत्वाद्धर्मः सिद्ध एव । अतस्तेषां को वा दुर्लभः ? ईशेति संबोधनादसाध्यमपि सिद्ध्यति । चतुर्ष्वपीति निर्द्धारवचनम् । अवान्तरभेदेन सर्वे एवैतेष्वन्तर्भवन्तीति सूचितम्, तथापि सूक्ष्मतया प्राप्तमपि स्थूलतया प्राप्तव्यमिति चेत्तत्राऽऽह—तथापि नाऽहं प्रवृणोमीति । यदि भगवदिच्छा तथैव भविष्यति, तदा केन निवारयितुं शक्या । तथापि तन्नास्मदभिप्रेतम्, न वा याचनीयम् । किञ्च । न च ब्रह्मत्वं दुर्लभम्, बहव एव ब्रह्माणो जायन्ते, यतो भूमा भगवान् ब्रह्माण्डकोटिविग्रहः । तत्र किमेकस्मिन् ब्रह्माण्डे स्थितेन ब्रह्मणा कार्यं भविष्यतीति, संपूर्णं परित्यज्य कोट्यंशग्रहणात् । अतोऽहं भवत्पदाम्भोजनिषेवणोत्सुक एव । चिन्तामणिवत्सर्वसाध्यापेक्षया साधनमेवाऽधिकम् । न हि चिन्तामणिर्वस्त्रं प्रयच्छतीति कश्चित् चिन्तामणिं परित्यज्य वस्त्रमिच्छति । तस्मात्किं ब्रह्मत्वेनेत्यर्थः ॥ १५ ॥

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

वेदेत्यत्र । तदेतच्चेति । साधनकरणम्, बदरिकाश्रमप्रेषणं च । अन्यार्थभवने प्रकारमाहुः—अहमिवेत्यादि । श्रुतिस्तु तैत्तिरीयाणां ब्राह्मणे तृतीयाष्टकद्वादशप्रपाठकसप्तमानुवाकस्था । उपाय इति । बदरीगमनरूपः ॥ ११ ॥ ❀ ❀ पुरेत्यत्र । स्वस्य पुरुषोत्तमरूपत्वाभावे स्वयं कथं तादृशान् सृष्टवानित्याकाङ्क्षायां नाभ्यादिपदतात्पर्यमाहुः—असम्बन्धेनेत्यादि । कार्यं हि कारणेन सम्बद्धमेवोत्पद्यते अयं तु साक्षात् सम्बन्धाभावेन नाभ्ये पद्मे निषण्णत्वेन समवेतसंयोगेऽपि समवेतत्वाभावेनोभयविधकार्यरूपत्वाभावादित्यर्थः । तर्हि किं तस्य स्वरूपमित्यत आहुः—तस्येत्यादि । अज इति पुरुषोत्तमरूपः । अत इति विद्वत्संमतत्वात् ॥ १३ ॥ ❀ ❀ इतीत्यत्र । आदृत एव वेति । अस्मिन् पक्षे सम्बोधनवस्तुनिर्देशांशावादर एव हेतू इति भेदः । समासस्तु स एव । परमस्येत्यत्र परं—अस्येति पदच्छेदः । एकपदाभिप्रायेणार्थान्तरमाहुः—ज्ञानेनेत्यादि । निवार्यत इति । भगवतः सकाशान्निवार्यते ॥ १४ ॥

### श्रीगिरिधरकृता बालप्रबोधिनी

भगवदुक्तिमेव दर्शयति—वेदाहमिति त्रिभिः । पूर्वजन्मनि त्वं वसुरभूरिति सूचयन् सम्बोधयति—वसो इति । पुरा पूर्वजन्मनि विश्वसृजां प्रजापतीनां वसूनां च सत्रसंज्ञके यागे यतो मत्सिद्धिर्मत्प्राप्तिस्तत्कामेन त्वया अहमिष्टः सम्यगाराधितः,

१. पुरुषोत्तमरूपः प्र. । २. विद्वत्संमतत्वात् प्र. । ३. परम् अस्य इति पदच्छेदः प्र. । ४. एकपदाभिप्रायेणार्थान्तरमाहुः—ज्ञानेनेत्यादि, प्र. । ५. कार्यमपि क. ग. घ. ।

अतस्ते तव अन्तर्मनसि अन्तःकरणरूपे मनसि यदीप्सितं वाञ्छितं तदहं वेद जानाम्येव, तदन्यैरनाराधितमच्चरणैर्दुरवापं दुःखेनापि अवाप्तुमशक्यमपि तुभ्यं ददामि दास्यामीत्यन्वयः ॥ ११ ॥ ❀ ❀ तत्प्रोत्साहयति—हे साधो! तव भवानां जन्मनां स एष भवः चरमः अन्तिमः, इतोऽग्रे जन्म न भविष्यति, किन्तु विमुक्तो भविष्यसीत्यर्थः। कुत इत्यपेक्षायामाह—यदिति। यस्मात्ते त्वयाऽस्मिन् जन्मनि मदनुग्रहः आसादितः सम्पादितः। तदपि कथमित्यपेक्षायामाह—यदिति। नृलोकान् उत्सृजन्तं नृलोकं त्यक्त्वा वैकुण्ठं गच्छन्तं मां विशदानुवृत्त्या एकान्तभक्त्या रह एकान्ते यद्दृष्टवान् दृष्टवानसि, तदेतद्दिष्ट्या भद्रमेव जातमित्यर्थः। स एष साधो इत्यत्र स एष भाव इति पाठान्तरम् ॥ १२ ॥ ❀ ❀ किं ददासीत्यपेक्षायां तन्निर्दिशति—पुरेति। आदिसर्गे सर्गोपक्रमे पुरा पूर्वस्मिन् काले मम नाभ्ये नाभिभवे पद्मे निषण्णाय उपविष्टाय अजाय ब्रह्मणे मम महिमा प्रभावोऽवभास्यते अनेनेति मन्महिमावभासं यत्परं सर्वोत्कृष्टं ज्ञानं मया प्रोक्तं यच्चेदानीमपि सूरयो विवेकिनो भागवतं वदन्ति तद्ददामीत्यनुषङ्गेणान्वयः ॥ १३ ॥ ❀ ❀ इत्येवं परमस्य पुंसः पुरुषोत्तमस्य प्रतीक्षणं कृपावलोकनमनुग्रहश्च तयोर्भाजनः पात्रभूतस्तेन आदृतः 'वेदाहं' इत्यादिनाऽसावुक्तश्च ज्ञानं ददामीति तथाभूतोऽहम्। प्रतिक्षणेति ह्रस्वपाठे क्षणे क्षणेऽनुग्रहभाजनोऽहम्। अनेन स्वस्यानुग्रहपात्रत्वेन भाषणे निर्भयत्वं सूचितम्। अतएव स्नेहेन उत्थानि पुलकितानि रोमाणि यस्य सः। अतएव स्खलिताक्षरो गद्गदवाक् शुचः आनन्दाश्रूणि मुञ्चन् प्राञ्जलिर्बद्धाञ्जलिश्च सन् तं भगवन्तं प्रति आबभाषे आभाषितवानस्मि ॥ १४ ॥ ❀ ❀ किमाभाषितवानसीत्यपेक्षायामाह—क इति। यतस्त्वं सर्वं दातुं समर्थोऽसीति सूचयन् सम्बोधयति—ईशेति। अतस्ते तव पादसरोजभाजां चरणकमलं भजमानानां पुंसां इह लौकिकवैदिकमार्गे चतुर्ष्वप्यर्थेषु धर्मार्थकाममोक्षेषु पुरुषार्थेषु को नु पुरुषार्थो दुर्लभः? न कोऽपि। यद्यप्येवं तथापि सर्वपुरुषार्थानां सुलभत्वेऽपि तानहं न प्रवृणोमि। तत्र हेतुमाह—भवेतः पदाम्भोजयोर्नितरां संसेवने औत्सुक्यं यस्य तथाभूतोऽहमित्यर्थः। तव चान्तर्बहिर्न किञ्चिदविदितमिति किं बहुनोक्तेनेति सूचयन् सम्बोधयति—भूमन्निति ॥ १५ ॥

## हिन्दी अनुवाद

श्रीभगवान् कहने लगे—मैं तुम्हारी आन्तरिक अभिलाषा जानता हूँ; इसलिये मैं तुम्हें वह साधन देता हूँ, जो दूसरोंके लिये अत्यन्त दुर्लभ है। उद्धव! तुम पूर्व-जन्ममें वसु थे। विश्वकी रचना करनेवाले प्रजापतियों और वसुओंके यज्ञमें मुझे पानेकी इच्छासे ही तुमने मेरी आराधना की थी॥ ११॥ ❀ ❀ साधुस्वभाव उद्धव! संसारमें तुम्हारा यह अन्तिम जन्म है; क्योंकि इसमें तुमने मेरा अनुग्रह प्राप्त कर लिया है। अब मैं मर्त्यलोकको छोड़कर अपने धाममें जाना चाहता हूँ। इस समय यहाँ एकान्तमें तुमने अपनी अनन्य भक्तिके कारण ही मेरा दर्शन पाया है, यह बड़े सौभाग्यकी बात है॥ १२॥ ❀ ❀ पूर्वकालमें पाद्मकल्पके आरम्भमें मैंने अपने नाभि-कमलपर बैठे हुए ब्रह्माको अपनी महिमाके प्रकट करनेवाले जिस श्रेष्ठ ज्ञानका उपदेश किया था और जिसे विवेकी लोग 'भागवत' कहते हैं, वही मैं तुम्हें देता हूँ॥ १३॥ ❀ ❀ विदुरजी! मुझपर तो प्रतिक्षण उन परम पुरुषकी कृपा बरसा करती थी। इस समय उनके इस प्रकार आदरपूर्वक कहनेसे स्नेहवश मुझे रोमाञ्च हो आया, मेरी वाणी गद्गद हो गयी और नेत्रोंसे आँसुओंकी धारा बहने लगी। उस समय मैंने हाथ जोड़कर उनसे कहा—॥ १४॥ ❀ ❀ 'स्वामिन्! आपके चरण-कमलोंकी सेवा करनेवाले पुरुषोंको इस संसारमें अर्थ, धर्म, काम, मोक्ष—इन चारोंमेंसे कोई भी पदार्थ दुर्लभ नहीं हैं; तथा मुझे उनमेंसे किसीकी इच्छा नहीं है। मैं तो केवल आपके चरणकमलोंकी सेवाके लिये ही लालायित रहता हूँ ॥ १५ ॥

**कर्माण्यनीहस्य भवोऽभवस्य ते दुर्गाश्रयोऽथारिभयात्पलायनम्।**
**कालात्मनो यत्प्रमदायुताश्रयः स्वात्मन्रतेः खिद्यति धीर्विदामिह ॥ १६ ॥**
**मन्त्रेषु मां वा उपहूय यत्त्वमकुण्ठिताखण्डसदात्मबोधः।**
**पृच्छेः प्रभो मुग्ध इवाप्रमत्तस्तन्नो मनो मोहयतीव देव ॥ १७ ॥**
**ज्ञानं परं स्वात्मरहःप्रकाशं प्रोवाच कस्मै भगवान् समग्रम्।**
**अपि क्षमं नो ग्रहणाय भर्तर्वदाञ्जसा यद् वृजिनं तरेम ॥ १८ ॥**
**इत्यावेदितहार्दाय मह्यं स भगवान् परः। आदिदेशारविन्दाक्ष आत्मनः परमां स्थितिम् ॥ १९ ॥**
**स एवमाराधितपादतीर्थादधीततत्त्वात्मविबोधमार्गः।**
**प्रणम्य पादौ परिवृत्य देवमिहागतोऽहं विरहातुरात्मा ॥ २० ॥**

### श्रीधरस्वामिविरचिता भावार्थदीपिका।

अघटमानाचरणं दर्शयति। कर्माण्यनीहस्य निःस्पृहस्य निष्क्रियस्य वा अभवस्याजन्मनो भवो जन्म कालात्मनस्त्वारिभयाद् दुर्गाश्रयः पलायनं च स्वात्मनि रतिर्यस्य तस्य बह्वीभिः स्त्रीभिर्गृहस्थाश्रम इति यदिहास्मिन् संसारे विदुषामपि धीः संशयेन खिद्यति ॥ १६ ॥ ❀ ❀ किं च। मंत्रेषु च प्रस्तुतेषु सत्सु मामाहूय वै अहो पृच्छेरपृच्छः। अकुंठितः कालादिनाऽखंडः संततः सदात्मा संशयादिरहितो बोधो विद्याशक्तिर्यस्य। मुग्धवदज्ञवत्। अप्रमत्तोऽवहितः सन् ॥ १७ ॥ ❀ ❀ स्वात्मनस्तव रहो रहस्यं तत्त्वं तस्य प्रकाशकम्। कस्मै ब्रह्मणे सर्वनामत्वमार्षम्। नोऽस्माकं ग्रहणायापि क्षमं यदि योग्यं तर्हि वद। भर्त्तः स्वामिन्। यद्यतो वृजिनं संसारदुःखमनायासेन तरिष्यामः ॥ १८ ॥ ❀ ❀ आवेदितो हार्दो हृदिस्थितोऽभिप्रायो येन तस्मै ॥ १९ ॥ ❀ ❀ आराधितपादो भगवान् स एव तीर्थं गुरुस्तस्मादधीतोऽधिगतस्तत्त्वात्मविबोधस्य परमार्थात्मज्ञानस्य मार्गो येन सोऽहं देवं परिवृत्य प्रदक्षिणीकृत्य ॥ २० ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः।

अस्माकं दासानां त्वद्गुणरूपलीलैव दर्शनश्रवणादिभिरानंदहेतुरतो नातीव हठो ज्ञाने यत्किञ्चिज्ज्ञानस्य सत्त्वात्सामस्त्येन ज्ञानासंभवाच्च। किं तु लीला अपि काश्चन काश्चन विरुद्धाः संति तत्रैव मे जिज्ञासास्तीत्याह द्वाभ्याम्। अनीहस्य निष्क्रियस्य कर्माणि गोवर्द्धनोद्धरणादीनि न तु विश्वसृष्ट्यादीनि तेषां हि मायागुणकृतत्वेन त्वय्यारोपितत्वेन स्वरूपतस्तावकत्वाभावात्। 'निष्क्रियं निष्कलं शांतं निरवद्यं निरंजनम्" इति श्रुत्युक्तेन निष्क्रियत्वेन न विरोधः। गोवर्द्धनोद्धरणादिकर्मणां तु त्वया स्वरूपेणैव कृतत्वात्तेषां निष्क्रियत्वेन विरोध एवेति संशयः।' यद्वा। नराकृति परब्रह्म संभवः नराकृतित्वेऽप्राकृतानंतकर्मवत्त्वं ब्रह्मत्वे प्राकृताप्राकृतकर्मराहित्यं तत्रैव ब्रह्मशब्दस्य रूढेः। न च निर्विशेषस्वरूपमेव ब्रह्म सविशेषस्वरूपो भगवानिति स्वरूपभेदाद्व्यवस्थेयमिति वाच्यं स्वरूपद्वयाभावादिति षष्ठोक्तेः संशय एव यतस्ततस्तथाऽभवस्याजन्मनो जन्म तथा कालात्मनो जरासंधादिभयात्पलायनं समुद्रदुर्गाश्रयश्च तथात्मन्येव रतिर्यस्य तस्य प्रमदानामयुतेन सहाश्रमप्रयुक्तपित्रादियोगेन आत्मारामस्य तव रतिः रुक्मिण्यादिप्रमदाभी रमणे तु तवात्मारामता नापगच्छेत्। तासामात्मभूतत्वादित्यहं जानाम्येव। अत एव मया आश्रमशब्दः प्रयुक्तः। इहास्मिन् विरोधे विदां विदुषामपि धीः समाधानानुपलब्धेः खिद्यति। न च निष्क्रियत्वाजत्वकालात्मत्वात्मारामत्वादीनामेव सत्यत्वं सक्रियत्वजन्मवत्त्वभीरुत्वग्रहाश्रमत्वानामनुकरणमात्रत्वमिति वाच्यं, तथात्वे विदुषां धीरत्र खिद्यतीति नोक्तं स्यात्। सक्रियत्वादीन्यनुकरणान्येव न तु वास्तवानीति ज्ञाने कुतः खेदः तथैवाक्रियत्वादिभिः प्राकृतक्रियादय एव निषिद्धा न त्वप्राकृतक्रियादय इति ज्ञाने कुतः खेदः। तथैव ब्रह्मत्वभगवत्त्वाभ्यामक्रियत्वशक्तिसक्रियत्वादिव्यवस्थेति ज्ञानेकुतः खेदः इति च ततश्च सक्रियत्वादीन्यनुकरणमात्राणीति ब्रुवाणाः अक्रियत्वमप्राकृतक्रियत्वम्। अभवत्वमप्राकृतजन्मवत्त्वमिति च ब्रुवाणा ब्रह्मत्वं भगवत्वाभ्यामक्रियत्वादिव्यवस्थेति ब्रुवाणा अखिद्यद्बुद्धय एव विद्वांस इति ध्वनिः। यदुक्तं स्वयं भगवता "न मे विदुः सुरगणाः प्रभवं न महर्षयः" इति सुरगणा ब्रह्माद्या महर्षयो व्यासाद्या अपि मे प्रकृष्टभवञ्जन्म न विदुरित्यर्थः। भीष्मेणेत्युक्तं "न ह्यस्य कर्हिचिद्राजन्पुमान्वेद विधित्सितम्। यद्विजिज्ञासया युक्ता मुह्यन्ते कवयोपि हि" इति ॥ १६ ॥ ❀ ❀ अन्यदाह किञ्चेति। प्रस्तुतेषु जरासंधवधराजसूयाद्यर्थगमनादिविचारेषु अपृच्छः। उद्धव त्वमत्र कर्त्तव्यं ब्रूहीति पृष्टवान् अत्र मुग्ध इव त्वं न तु मुग्धः मोहयतीव, न तु मोहयति सर्वज्ञसदादयालुनस्तथात्वानुपपत्तेरिति ॥ १७ ॥ ❀ ❀ स्वामिनो भृत्यदुःखहरणं योग्यमेवेत्याह-भर्तेरिति। यद्वा कस्मै प्रोवाच न कस्मा अपीत्यर्थः। तेन यज्ज्ञानं कस्मैचिदपि नोक्तं तन्नोऽस्माकं ग्रहणाय क्षमं तव भृत्यत्वाद्वयं तवोपासका ज्ञानाधिकारिण एवेति भावः। "वृजिनं कल्मषे दुःखे" इति मेदिनी। "तरति शोकमात्मवित्" इति श्रुतेः। शोकं संसृतिक्लेशम् ॥ १८ ॥ ❀ ❀ मह्यमुद्धवाय परमां चतुःश्लोकीप्रोक्ताम्। यद्वा। या स्थितिः शुकदेवेन न विवृता नापि मैत्रेयेण विदुराय च तामलौकिकीमित्यर्थः ॥ १९ ॥ २० ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

अघटमानेति। अत्र यदि कर्मादीनि वस्तुतरवानि न स्युस्तर्हि विदुषां मोहो न स्यात् भक्तसम्बन्धेन भयपलायनादिलीलाया अपि स्वरूपानन्दोल्लाससारत्वात्परस्परविरुद्धधर्माचरणं चिन्त्यमिति संशये खिद्यत इति भावः ॥ १६ ॥ ❀ ❀ अकुंठितोऽनादयः संततः व्ययशून्यः सदात्मा सद्रूपो यथार्थस्तथा च संशयादि। रहित इति व्याख्यातम्। अवहितः मन्मन्त्रश्रवणे सावधानः अत्रापि तत्तदुभयं तात्त्विकमेव तथाप्यचिन्त्यशक्तिमाहात्म्यदृष्ट्या न कश्चन मोह इति इवेत्युक्तम् ॥ १७ ॥ ❀ ❀ तत्त्वं रूपगुणलीलादीनां याथार्थ्यं ज्ञानं भगवज्ज्ञानं साधनं श्रीमद्भागवतं समग्रं सर्वशास्त्रेभ्यः पूर्णं कृष्णप्रतिपादकत्वात् अनभ्यासेनानुषंगेन ॥ १८ ॥ ❀, ❀ परमां, स्थिति नित्यां प्रकटधामिनः नित्यपरिकरैस्सहावस्थितिम् ॥ १९ ॥ ❀ ❀ अत्र श्रीभद्भागवतश्रवणानंतरमपि विरहातुरत्वं श्रीमद्भागवतस्य रूक्षज्ञानपरत्वं निराचष्टे ॥ २० ॥

### श्रीमद्वीरराघवव्याख्या

नित्ययोगविरोधनं धर्मादिकं न वृणोमि किंत्वघटितघटनासामर्थ्यरूपां भवदीयां शक्तिं स्मरतां चित्तं पारवश्यं यातीत्यद्भुवमित्याह कर्माणीति । अनीहस्य निर्व्यापारस्य तव कर्माण्यभवस्य जन्मरहितस्य भवः जन्म कालात्मनः कालशरीरस्य दुर्गाश्रयः द्वारकारूपजलदुर्गाश्रयः यच्चारिभयात्कालयवनादिभयात्पलायनं स्वात्मनिरतः प्रमदायुताश्रमः बह्वीभिः प्रमदाभिः स्त्रीभिर्युतः य आश्रमः गृहस्थाश्रमः इति च यदिहास्मिन् विषये विदां विदुषामपि धीः खिद्यति पारवश्यं याति ॥ १६ ॥ ❀ ❀ किं च मंत्रेषु सत्सु मामुपहूय वै आहूयैव पृच्छेः पृष्टवानसि कथंभूतस्त्वकुंठिताखंडसदात्मबोधः अकुंठितः आवरणरहितः अखंडः अपरिच्छिन्नः सन्सत्यरूपः आत्मनः स्वस्य बोधः यस्य सः अनावृताऽपरिच्छिन्नात्मज्ञान इत्यर्थः । अतएवाममन्तः स्वयमेवंभूतोपि मुग्ध इव मूढ इव यत्पृष्टवानसि तन्मे मनो मोहयतीव मोहं प्रापयतीव वर्त्तते । इवशब्देन परमार्थत एतत्सर्वमुपपन्नमेवेति सूच्यते । तथाहि अकर्मायत्तक्रियस्य लीलया कर्माणि अकर्मायत्तभवस्य स्वेच्छोपात्ताप्राकृतदिव्यमंगलास्पदविग्रहपरिग्रहरूपो भवश्च उपपद्यते । दुर्गाश्रयादिकंमर्त्यलीलयोपपद्यते यो वैवालोक एतेषां पुरुषाणां कर्त्ता यस्य चैतत्कर्म अजायमानो बहुधा विजायते लोकवत्तु लीलाकैवल्यमित्यादिश्रुतिसूत्रादिभ्यः ॥ १७ ॥ ❀ ❀ एवमुक्त्वा हार्दमपि निवेदितवानस्मीत्याह ज्ञानमिति । स्वात्मनस्तव रहः याथात्म्यं तस्य प्रकाशं परं ज्ञातव्येषु प्रधानभूतं समग्रमंगोपेतं यज्ज्ञानं भगवान्पूर्णषाड्गुण्यो भगवान्कस्मै काय ब्रह्मणे सर्वनामत्वमार्षं प्रोवाचोचिवान् तज्ज्ञानं हे भर्त्तः स्वामिन्नोऽस्माकं ग्रहणाय गृहीतुं क्षमं योग्यमपि चेद्वद यद्यस्माज्ज्ञानाद् वृजिनं दुःखात्मकसंसारमंजसा सुखेन तरेमातिवर्त्तेमहि ॥ १८ ॥ ❀ ❀ एवं स्वाभिप्राये निवेदिते मह्यं स भगवांस्तत्वमुपदिदेशेत्याह इतीति । इतीत्थमावेदितं हार्दमभिप्रायो येन तस्मै मह्यं स भगवानरविन्दाक्षः आत्मनः स्वात्मनः परमां परो ज्ञातव्यो मानः यस्यास्तां परमां ज्ञातव्यांतररहितां स्थितिं याथात्म्यावगतिमादिदेश उपदिदेश ॥ १९ ॥ ❀ ❀ उपसंहरति स इति आराधितपादतीर्थात् तीर्थशब्दः पावनवाची आराधितपवित्रपादादित्यर्थः । यद्वा पादे तीर्थं यस्य सः आराधितश्चासौ पादतीर्थश्च तस्माद्भगवतः एवमधीततत्त्वात्मविबोधमार्गः तत्तवात्मकपरमात्मयाथात्म्यावगतिरूपो बोधः स मृग्यते परिशील्यतेऽनेनेति तत्त्वात्मविबोधमार्गः आत्मयाथात्म्यावगतिप्रकाशकं शास्त्रम् अधीतः तत्त्वात्मविबोधमार्गः येन सोऽहं पादौ भगवच्चरणौ प्रणम्य देवं श्रीकृष्णं परिवृत्य प्रदक्षिणीकृत्य तद्विरहेण भगवद्विश्लेषेण आतुरः खिन्नः आत्मा चित्तं यस्य सः एवंभूतः सन्निहागतोस्मि ॥ २० ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

ज्ञानांतरं गगुणोपसंहारलक्षणोपासनामंतरेण भक्तेराकांक्षितत्वे किं कारणमित्याशंक्य हरेर्देवदत्तकर्मवत्कर्मप्रतीतेर्गुणानां दुरवबोधत्वं निमित्तमित्याह कर्माणीति । अनीहत्वादिमतस्तव कर्मादिदर्शनं लोकविरुद्धमतो जन्माद्यभावविदामस्माकमपि बुद्धिः खिद्यत इति अभवस्य जन्मरहितस्य भवो जन्म नित्यमुक्तस्य बंधो वा अदुर्गस्य नित्यनिकटवर्तिनो द्वारकादिदुर्गाश्रयः अत एव जरासंधाद्यरिभयात्पलायनं गोमंतमिति शेषः, कलकामधेनाविति धातोः कालात्मनः सर्वसंहर्तुर्वा स्वात्मन्रतेः स्वात्मनि रतिः रमणं यस्य स तथा तस्य प्रमदानामयुताश्रय इति यत्तत्सर्वं विरुद्धमत इति अपिना लोकविडंबनमिदं न तु तत्त्वमिति सूचयति ॥१६॥ ❀ ❀ इदमपि ज्ञानदुर्बलानां बुद्धिव्यामोहकरमित्याह मंत्रेष्विति । वैशब्दादक्रूरादिकं ग्राहयति अकुण्ठितोऽविमिश्रितः अखंडः पूर्णः संश्चिर्दोषः आत्मबोधः स्वरूपज्ञानं यस्य स तथा ॥ १७ ॥ ❀ ❀ ज्ञानाख्याव्याकृताकाशस्तद्योग्यताभेदं जानन्नात्मयोग्यमेवोपदिशति भवान् तथापि स्वचापल्याद्विज्ञापयामीत्याह । ज्ञानमिति । स्वात्मरहः प्रकाशो यस्मात्तत्तथा तत् कस्मै ब्रह्मणे नोऽस्माकं तत्समग्रमपि ग्रहणाय क्षममपि किंनोऽक्षमं योग्यताभेदात्तर्हि कीदृशमुपदिशामोति तत्राह वेदेति । भवान्यदस्याधिकारिणो योग्यं वेद वयं च यद्येन ज्ञानेनांजसा वृजिनं संसारदुःखं तरेम तदुपदिशेत्यन्वयः । अनेन बाह्माद्युत्तमाधिकार्युपदिष्टज्ञानैकदेशं संसारदुःखनिर्मूलनमस्मद्योग्यमुपदिशेत्युक्तं भवति ॥ १८ ॥ ❀ ❀ एतदेवोपदिष्टं हरिणा नान्यदिति वक्ति इतीति । हार्दं हृद्गतं परमां स्थितिं ब्रह्मादिजीवराशेरुत्कृष्टतामन्येषामपकृष्टतामन्योन्यं तारतम्यं च ॥ १९ ॥ ❀ ❀ एवमित्येतदधीतेत्यनेनान्वेतव्यं आराधितं पादतीर्थं पादोदकं यस्य स तथा तस्मात् श्रीकृष्णादेव मुक्तप्रकारेणाधीतोधिगतस्तत्वात्मनः अनारोपिताद्वितीयज्ञानानंदात्मनो हरेः विबोधमार्गो विशिष्टज्ञानमार्गो येन स तथा परिवृत्य प्रदक्षिणीकृत्य विरहेणातुरः क्लिष्ट आत्मा यस्य स तथा ॥ २० ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

नन्वेवं चेत्तर्हि: कथं किमपि ज्ञातुमिष्टं वर्त्तते यदेव मया व्यञ्जितं वेदाहमन्तर्म्मनसीप्सितं त इत्यनेन सत्यं किन्तु नात्मार्थं यस्यां लीलायां पृच्छा तस्यास्तव भक्तकृपावैभवमयत्वेन ज्ञातत्वात् तथापि मैत्रेयसाक्षिकेण त्वद्वचनेनान्यांस्तथा सुष्ठु प्रत्यापयितुमेव मम तथेप्सेति विज्ञापयन्नाह कर्म्माणीति त्रिभिः । विदामेतादृशानां सर्व्वज्ञानामपि ॥ १६ ॥ ❀ ❀ मोहयतीवेति वस्तुतः स्वस्य मोहाभावात् ॥ १७ ॥ ❀ ❀ तस्मात् ज्ञानं परमिति वृजिनं विदामपि तथा त्वयि सन्देहेन जातं निजदुःखं भवत्पदाम्भोजनिषेवणोत्सुकानामस्माकमन्युदुःखास्पृष्टत्वादिति भावः ॥ १८ ॥ ❀ ❀ परमां स्थितिं चतुःश्लोकीप्रोक्तां तादृशरूपत्वेऽपि रहस्याख्यप्रेमवशतामयलीलामयीम् ॥ १९ ॥ ❀ ❀ अधीतो ज्ञातः तत्त्वेन याथार्थ्येन आत्माभीष्टविज्ञानस्य

मार्गश्चतुःश्लोकीरूपो येन सः तस्य च भगवत्प्रेमवश्यत्वप्रतिपादकत्वाद्विरहातुरात्मेव सन्निहागतोऽहमिति अनेन च तस्य रुक्षज्ञानतात्पर्य्यत्वं स्वत एव खण्डितम् ॥ २० ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

अस्माकं दासानां पुनस्तद्रूपगुणलीला एव दर्शनस्मरणाद्यैः परमानन्दहेतुस्तासामपि ज्ञानेनातीवाग्रहः। यत्किञ्चिज्ज्ञानस्य सत्त्वात् सामस्त्येन ज्ञानासम्भवाच्च। किन्तु तत्र लीलाः काश्चन काश्चन युक्त्या विरुद्ध्यन्ते तत्रैव मे जिज्ञासितं वर्त्तत इत्याह द्वाभ्याम्! अनीहस्य निष्क्रियस्य कर्म्माणि गोवर्द्धनोद्धरणादीनि तेषां हि मायागुणकृतानां त्वय्यारोपितत्वेन स्वरूपतः तावकत्वाभावान्निष्कलं निष्क्रियं शांतं निरवद्यं निरंजनमिति श्रुत्युक्तेन निष्क्रियत्वेन न विरोधः। गोवर्द्धनोद्धरणादीनां कर्म्मणान्तु त्वयास्वरूपेणैव कृतत्त्वात्तेषां निष्क्रियत्वेन विरोध एवेति मम संशयः। यद्वा नराकृतिपरब्रह्मणस्तव नराकृतित्वे अप्राकृतानन्तकर्म्मवत्त्वं ब्रह्मत्वे प्राकृताप्राकृतकर्म्मराहित्यं तत्रैव ब्रह्मपदस्य रुढेः नच निर्विशेषस्वरूपमेव ब्रह्म सविशेषस्वरूपो भगवानिति स्वरूपभेदाद्व्यवस्थेयमिति वाच्यं स्वरूपद्वयाभावादिति षष्ठोक्तेः संशय एव इतस्तथा। अभवस्याजन्मनो जन्म। कालात्मनस्तव जरासन्धाद्यरिभयात् पलायनं समुद्रदुर्गाश्रयश्च स्वात्मन्येव रतिर्यस्य तस्यापि प्रमदानामयुतेन सहाश्रमो गृहाश्रमः गृहाश्रमप्रयुक्तदेवपित्रादियोगे स्वात्मारामस्य तव रतिः! रुक्मिण्यादिप्रमदाभी रमणे तु तथात्मारामता नापगच्छेत् तासामात्मभूतत्वादित्यहं जानाम्येव। अत एव मया आश्रमशब्दः प्रयुक्तः। इह अस्मिन् विरोधेविदां विदुषामपि धीः समाधानादर्शनात् खिद्यति। नच निष्क्रियत्वाजडत्वकालात्मत्वाऽत्मारामत्वादीनामेव सत्यत्वं सक्रियत्वजन्मवत्त्वभीतत्वगृहाश्रमत्वानामनुकरणभावत्वामिति वाच्यं तथात्वे विदुषां धीरत्र खिद्यतीति नोक्तं स्यात् सक्रियत्वादीन्यनुकरणान्येव नतु वास्तवानीति ज्ञाने कुतः खेदः तथैवाक्रियत्वादिभिः प्राकृतक्रियादय एव निषिध्यन्ते न त्वप्राकृतक्रियादय इति ज्ञाने कुतः खेदः तथैव ब्रह्मत्वभगवत्त्वाभ्यामेवाक्रियत्वसक्रियत्वादिव्यवस्थेति ज्ञाने कुतः खेद इति च ततश्च सक्रियत्वादीन्यनुकरणमात्राणीति ब्रुवाणा अक्रियत्वमप्राकृतक्रियत्वं अभवत्वमप्राकृतजन्मवत्त्वमितिच ब्रुवाणा ब्रह्मत्वभगवत्त्वाभ्यामेवाक्रियत्वसक्रियत्वादिव्यवस्थेति ब्रुवाणा अखिद्यद्बुद्धय एवाविद्वांस इति ध्वनिः। यदुक्तं स्वयं भगवता 'न मे विदुः सुरगणा प्रभवं न महर्षय' इति। सुरगणा ब्रह्माद्या अपि महर्षयो व्यासाद्या अपि मे प्रकृष्टं भवं जन्म न विदुरिति तत्रार्थः। भीष्मेणाप्युक्तं न ह्यस्य कर्हिचिद्राजन् पुमान् वेद विधित्सितम्। यद्विजज्ञासया युक्ता मुह्यन्ते कवयोऽपि हीति ॥ १६ ॥ ❀ ❀ किञ्च मन्त्रेषु जरासन्धवधराजसूयाद्यर्थगमनविचारादिषु प्रस्तुतेषु मां वै निश्चितमुपहूय पृच्छेः उद्धव! त्वमत्र कर्तव्यं ब्रूहीत्यपृच्छः। अकुण्ठितः कालादिना अखण्डः। परिपूर्णः सदा सार्व्वदिक एव आत्मनो बोधः सच्चिच्छक्तिर्यस्य सः मुग्ध इव यथान्यो मुग्धो जनः पृच्छति तथेत्यर्थः। किञ्च अप्रमत्तः कार्य्यान्तरव्यावृत्त्यापिरहितत्वादिति भावः। तत्तव युगपदेव मौग्ध्यं सार्व्वज्ञ्यञ्च मोहयतीव मोहयत्येव। अत्र मुग्ध इव त्वं नतु मुग्ध इति तथा मोहयतीव नतु मोहयतीति व्याख्यायामसङ्गत्यभावादिति सङ्गतेषु वाक्येषु मध्येऽस्योत्थापनं व्यर्थं स्यादित्यतस्तथा न व्याख्येयम् ॥ १७ ॥ ❀ ❀ अत एतदादिसंशयापनोदनमेव ज्ञानमिच्छामीत्याह ज्ञानमिति। स्वात्मनस्तव रहः सर्व्वागम्यं रहस्यं यन्मम जिज्ञास्यं तस्य प्रकाशो यत्र तज्ज्ञानं नतु त्वया दातुं प्रतिश्रुतं तन्महिमावभासमित्यर्थः। कस्मै भवान् प्रोवाच चेद्वद यद्वा कस्मै भवान् प्रोवाच अपितु न कस्मा अपीत्यर्थः तदपि यद्येवं मामनुकम्पसे तदा हे भर्त्तर्वद तच्च नाग्रहणाय क्षमम् अस्माकं शुद्धदास्यवतां ग्रहीतुं यदि योग्यं स्यात् किम्वा योग्यत्वेऽपि यदि शक्यं स्यात्तदा वद नोचेन्मा वदेति भावः। यतो ज्ञानाद् वृजिनमुक्तलक्षणम् मज्जिज्ञास्यं संप्रत्युपस्थितं यदुकुलसंहारं त्वद्देहान्तर्द्धानादिकं च दुःखसिन्धुम् ॥१८॥ ❀ ❀ महां न तु मैत्रेयायापीत्यर्थः। आत्मनः स्वस्य स्थितिं व्यवसितं लीलाया मर्य्यादाञ्च द्वारकादिधामसु नित्यनिवासं च किन्तु या स्थितिः शुकदेवेन न विवृता नाप्युद्धवेन विदुरायान्यस्मै कस्मैचिदपीत्यतः सिद्धान्तविशेषालाभात् निष्क्रियत्वसक्रियत्वादीनामचिन्त्यशक्तिसिद्धत्वमेवाहुरेके यथोक्तं भागवतामृते कर्म्माण्यनीहेति पद्यमधिकृत्य तत्तन्न वास्तवं चेत् स्याद्विदां बुद्धिभ्रमस्तदा न स्याद्देवेत्यचिन्त्यैव शक्तिर्लीलासु कारणमिति ॥ १९ ॥ ❀ ❀ स उद्धवोऽहं आराधितपादो भगवान् स एव तीर्थं गुरुस्तस्मादधीततत्त्वरूपस्य आत्मविबोधस्य मार्गो येन सः परिवृत्य परिक्रम्य ततः परं भगवता किं कृतं तन्मया न दृष्टमिति भावः ॥ २० ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

अनीहस्य फलसेवनस्पृहारहितस्य कर्माणि संध्योपासनादीनि। अभवस्योत्पत्तिविनाशवद्देहरहितस्य भवो जन्म कालात्मनः कालशक्तेः दुर्गाश्रयः पलायनं च स्वात्मनि रतिर्यस्य तस्य प्रमदायुताश्रयः इति यत् इहास्मिन् विषये विदामपि धीः खिद्यति किमुत मूर्खाणामित्यर्थः। त्वया सर्वं लोकसंग्रहार्थं कृतं तत्र जीवास्तु केचित्तत्तल्लीलाप्रयोजनानभिज्ञा मुह्यंतीति भावः ॥१६॥ ❀ ❀ आस्तामन्यवार्ता तव चेष्टितं मामपि मोहयतीत्याह मंत्रेष्विति पृच्छेः आपृच्छः ॥ १७ ॥ ❀ ❀ स्वात्मरहःप्रकाशं स्वात्मनस्तव तत्त्वप्रकाशकम्। कस्मै ब्रह्मणे प्रोवाच सर्वनामत्वमार्षम् अपि यदि नास्माकं ग्रहणाय क्षमं योग्यं तर्हि हे भर्तः

स्वामिन् वद यत् यतः अंजसा अनायासेन वृजिनं दुःखं संसारं तरेम तरिष्यामः ॥ १८ ॥ ❀ ❀ परमां ज्ञातव्यांतररहितां स्थितिं सर्वश्रेष्ठं याथात्म्यम् आदिदेशोपदिष्टवान् ॥ १९ ॥ ❀ ❀ आराधितपादानां ब्रह्मादीनामपि तीर्थं शुद्धिहेतुर्गुरुस्तस्मात् अधीततत्त्वानां प्रकृतिपुरुषादीनामात्मन आश्रयस्य भगवतः यो विबोधः भगवद्विषयकं ज्ञानं तस्य मार्गः शास्त्रं येन सः परिवृत्य प्रदक्षिणीकृत्य ॥ २० ॥ २१ ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

तर्ह्येवं सति न किञ्चित्प्रार्थनीयमित्यायाति तत्राऽऽह—कर्माण्यनीहस्येति। अत्र चरणभजने एकं प्रार्थनीयम्, दोषाभाव इति। तत्र दोषो द्विविधः। भगवद्भजने क्रियमाणे स्वत एको दोष उत्पद्यते, भगवता चापरः क्रियते। तदुभयं यथा न भवति तथोपायो वक्तव्यः। तच्चेद्भागवतं भविष्यति, तदा तद्वक्तव्यमिति। प्रथमतो दोषद्वयमनुवदति। दोषानिवर्त्तकत्वे भागवतेनाऽपि न कृत्यम्, न हि भगवच्चरणारविन्दादन्यत्। फलमस्ति। तत्सेवमानानां तद्बाधकनिवृत्तिरेव प्रार्थनीया। तच्च बाधकं सर्वैरेव पोष्यते, न तु बाध्यते। तदेतदत्यभीष्टमिति ज्ञापयितुं प्रथमं फलादाह[1]–कर्माण्यनीहस्येति। अनेना[2]ऽयमुक्तमोऽधिकारीति ज्ञापितम्। भगवतो विरुद्धानि कर्माणि स्वबुद्धौ स्फुरितानि बाधकानि। सामान्यदूषणद्वयम्, विशेषेण दूषणत्रयमिति भगवतः सेव्यत्वसिद्धये स्वस्य जन्मादिदुःखनिवृत्त्यर्थमभवः सेव्य इति भगवानभवोऽङ्गीकर्त्तव्यः। स्वस्य कर्मणा नानाविधक्लेशा भवन्ति, तदभावाय सेव्यो भगवानिति तस्य तदभावोऽङ्गीकर्त्तव्यः। तच्च प्रत्यक्षेण भजनहेतुना विरुध्यते, वसुदेवस्य गृहे जननात्, निरन्तरं कर्मकरणाच्च। प्रत्यक्षं तु युक्तिरूपानुमानाबलिष्ठम्। चरणभजनं तु स्वतोऽतिरसं प्रयच्छतीति फलतो महत्त्वं च प्रत्यक्षसिद्धम्। पर्यवसाने तु बाधः। यत्र भगवानेव जायते, एवं च करोति, तत्र तदाश्रयाणामस्माकं का वार्त्ता? भगवानेव हि फलदाता, यद्यन्ततः स एव भविष्यामस्तथाप्येवंरूप इति। जननादिक्लेशस्य विद्यमानत्वात् किं भजनेनेत्यनास्था प्रतिभाति। किञ्च, साधारणेश्वरादप्यन्यथा प्रतिभाति। वस्तुतो ब्रह्मादीनामप्युपास्यत्वस्य प्रत्यक्षसिद्धत्वान्महानेवाऽयमिति प्रतिभाति, तथापि त्रयो दोषा बुद्धौ स्फुरन्ति। कथं भगवान् स्वकीयं स्थानं मथुरां परित्यज्य शत्रुभयात्पलायितो द्वारकाख्यं दुर्गमाश्रितः? कथं वा कालयवनात्पलायते? कथं वा स्वरूपानन्दः स्वभोगार्थं स्त्रीसहस्रं परिगृह्णाति, उपभुङ्क्ते च ताः? अतो यावज्जन्मैवाऽन्यथाप्रतिभानाद्भजनबाधकमभगवत्त्वमेव प्रतिभाति। अथ यदि मोहनार्थमेवं करोतीत्यभिप्रायः कल्प्येत, तथापि यावदवतारं मोहकत्वात् कथमुपास्यो भवेत्। अथोपासकं न व्यामोहयतीति कल्प्येत, तदपि न सम्भवति। स्वयं सर्वज्ञोऽसर्वज्ञ इव मन्त्रेषु मामुपहूय कर्त्तव्यं पृच्छति, उक्तं च करोति। अतः केनाऽपि प्रकारेण चरित्रादिदर्शनेन भगवद्भजनबुद्धेर्नाश एव दृश्यते। व्यामुग्धानां वचनानि तु किं वक्तव्यानि? यद्येतानि दूषणानि भागवते परिहृतानि भवन्ति, तदा तद्वक्तव्यमित्यभिप्रायेण, अन्तिमां लीलां पश्यन्नेव आन्तं[3] दूषणान्येव सिद्धानीति तां दशां पश्यन् पूर्वदूषणान्येवाऽनुवदति। दूषणत्वाय स्वरूपं च कीर्त्तयति, सिद्धान्तसम्भावनार्थं च कर्माणि पूतनासुपयःपानादीनि। अनीहस्य पूर्णब्रह्मणः। अभवस्य निर्विकारस्य। भवः सर्वविकारहेतुर्जननात्मा। सर्वसंहर्तुः सर्वनियन्तुश्च कालात्मनः स्वरक्षकत्वेन, दुःखगतिहेतुं दुर्गादिकं स्वरक्षकत्वेन मन्यते। अथेति भिन्नप्रक्रमेण। अनेन दुर्गाश्रयेऽपि पलायनं स्वतन्त्रतयाऽपि पलायनं सूचितम्। आत्मारामस्य च प्रमदायुताश्रयणम्। एतल्लीलापञ्चकम्। ब्रह्मत्वेन त्वां जानताम्, लीलापञ्चकं च पश्यतां सङ्कटे पतिता धीः खिद्यति। इहेत्यस्मिन्नर्थे ॥ १६ ॥ ❀ ❀ त्वत्कायिकेन व्यामुग्धोऽहं वाचिकेनाऽपि मुग्धो जात इत्याह—मन्त्रेष्विति। जरासन्धवधार्थं राजप्रार्थनायाम्, यागार्थं युधिष्ठिरप्रार्थनायां च स्वयमुपायं जानन्नेव मामुपहूय। मन्त्रेष्विति बहुवचनेन कालान्तरेऽपि स्यमन्तकादिषु पृष्टमिति प्रतिभाति। वेत्यनादरे। आहूयेति प्रासङ्गिकत्वं निषिद्धम्। त्वमिति नाऽत्र तिरोहितं किञ्चिदिति सूचितम्। सर्वशास्त्रानुसारेण न कुण्ठितः। तीक्ष्णतामप्यपरित्यज्य स्वकार्यकर्ता अकुण्ठितः। अखण्डस्तैलधारावदनवच्छिन्नः, न कालादिना शङ्कितभङ्ग आत्मबोधो यस्य। पृच्छेरामन्त्रणेन पृष्टवानसि। विधिप्रयोगात् परिहर्तुमप्यशक्य इति सूचितम्। प्रभो इति संबोधनं पूर्वस्थितिमपि नाशयेदिति, भयादपि कथनं सूचितम्। मुग्ध इवेति तदानीन्तनचेष्टया न जानातीत्येव प्रतीतिरुत्पन्ना, अन्यथा न सोपपत्तिकं वदेत्। बहूनामपि वाक्ये युक्त्या बलिष्ठत्वज्ञानेऽपि पक्षान्तरे स्वाभिप्रेतमेव करोतीत्यप्रमत्त इत्युक्तम्। अतस्तवैतादृशं चरित्रम्, नोऽस्माकमेव सर्वेषां भक्तानां मनो मोहयतीव। सान्निध्याद्भजनाच्च माहात्म्यं प्रतिभातीतीवप्रयोगः। देवेति संबोधनं [ च ] पूर्वपक्षसमाप्तिसूचकम्, देवचरित्रं मनुष्यबुद्ध्या निर्द्धारणाशक्यमिति सूचनात् ॥ १७ ॥ ❀ ❀ तस्मात्तदर्थं भागवतं कथयेत्याह—ज्ञानं परमिति। पूर्वोक्तोऽस्माकं यो मोहः सोऽज्ञानकृत इति। ज्ञानेनैव तन्निवर्तते, अतो ज्ञानैकप्रतिपाद्येतादृशं[4] भागवतं कथनीयम्। ननु जाग्रत्स्वप्नवत् ज्ञानाज्ञाने अन्योन्यविरोधिनी, तथा चोभयतुल्यत्वादन्योन्योपमर्दसम्भवात् किं ज्ञानेनेत्यत आह–परमिति। प्रकृत्यादिनियन्तृ, अज्ञाननिवर्तनसमर्थम्। ननु भगवदिच्छायाः प्रधानत्वादस्य

---

१ फलं सेवनं स्वरूपज्ञानं वा, तस्माज्जातं दोषमाहेत्यर्थः, प्र.। २ बाधकानिवृत्तिप्रार्थनेन। भजनहेतुर्भगवत्त्वम् तेन, प्र.।
३ अनन्तानि, क। ४ अत्र प्रतिपाद्येति पदच्छेदः, प्रकाशः।

ज्ञानं नश्यत्वितीच्छया, भगवत्प्रेरितमायया वा अज्ञानादिनिवर्तकमपि ज्ञानं नश्येदेव । 'ज्ञानिनामपि चेतांसि देवी भगवती हि सा । बलादाकृष्य मोहाय महामाया प्रयच्छति' इति वाक्यात् परेणाऽपि ज्ञानेन किं प्रयोजनमित्याशङ्क्य पुनर्विशिनष्टि–स्वात्मरहःप्रकाशमिति । स्वकीयानां मायादिशक्तीनामात्मनो भगवतश्च रहो यन्मर्म, बन्धनमोचनलीलायां कीदृशो भगवदभिप्रायस्तदीयानां चेति; यत्र ज्ञाने इदं रहः प्रकाश्यते, तादृशज्ञानरूपं ब्रह्मणे भगवता प्रोक्तमिति श्रुतम् । कस्मा इति द्व्यर्थवचनात् न ज्ञायते कस्मै प्रोक्तम्, अन्यथा स वै पृष्टः स्यादिति गम्यते । तत्राऽप्यवान्तरभेदाः सन्ति, भगवदभिप्रायाणामनन्तत्वात् । अतः सर्व एवाऽभिप्रायो यत्र गम्यते, तत्समग्रम् । भगवानित्यचिन्त्यैश्वर्यतया कदाचित्तादृशमपि ज्ञानं भवेद्वदेद्वेति सम्भावना । तत् ज्ञानं पुरुषविशेष एव भवतीति चेत्तत्राऽह–तत् ज्ञानं नोऽस्माकं ग्रहणाय क्षमं चेत्तदा वक्तव्यम् । अपीति सम्भावनायाम्, कृपाविषयत्वान्मम । वस्तुनिर्देशाच्च मय्यपि तत्सम्भावितम् । ननु तत् ज्ञानं मद्रूपं कथमन्यस्य सम्भवति ? स तु ब्रह्मा मदवतार इति चेत्तत्राऽऽह–हे भर्तः । अनधिकार्यपि भार्यारूपः पतिं तद्गतं च धर्मं बिभर्ति । अतोऽस्माकं त्वं भर्तेति स्वरूपत्वेऽपि वद् युज्यते । अतस्तत्सर्वथ वक्तव्यमित्याह–वदेति । प्रार्थनायां लोट् । आग्रहे हेतुः–अञ्जसा यद् वृजिनं तरेमेति । वृजिनं पूर्वोक्तदुःखम्, तदनायासेनैव तरेमेति ॥ १८ ॥ ❀ ❀ एवं स्वाभिप्राये प्रकटिते अधिकार्ययं भवतीति भगवांस्तदाहेत्याह—इत्यावेदितहार्दायेति । हार्दं हृदयस्थितम्, अभिप्रेतमिति यावत् । तदा तत् ज्ञानं भगवान् मह्यमादिदेश । सिद्धमेव वस्तु यथा किञ्चिदादिश्यते–इदमिति । आज्ञाया[1] अपि दत्तत्वात् स्वपरव्यवहारोपयोगि भविष्यति, अन्यथा केवलनिर्देशो व्यर्थः स्यात् । भगवति स्थितमेव तत् ज्ञानमुद्धवेन व्यवहर्तव्यम्, न तु यथा ब्रह्मणे दत्तं तथाऽस्मै दत्तम्; तथा[2] सामर्थ्यात् । तर्हि सर्वस्वं प्रदर्शितं कथम् ? तत्राऽऽह–अरविन्दाक्ष इति । अरविन्दवदक्षिणी यस्य । अनेन तापहारित्वेन दृष्ट्यैव तदनधिकारो निवारितः । भगवद्विचारेण सिद्धं तत्किंरूपमित्याकांक्षायामाह–आत्मनः परमां स्थितिमिति । परमाश्रयरूपा भगवतः स्थितिः, न ततः परमन्यत्, सा परा काष्ठा ॥ १९ ॥ ❀ ❀ ततस्त्वया किं कृतमित्याकांक्षायामाह—स एवमिति । एवं प्रकारेण भगवता ज्ञापितार्थोऽहं–पादौ प्रणम्य परिवृत्त्य विरहातुरात्मा इहागत इति सम्बन्धः । इहाऽऽगत्य वा विरहातुरात्मा जात इति । तद्भागवताख्यं शब्दब्रह्म मया स्वाधीनं कृतम् । तच्च गुरुसेवाव्यतिरेकेण न भवतीति, प्रभुत्वेन सेवितोऽपि भगवान् गुरुत्वेनाऽपि सेवितस्तदाह–आराधितपादतीर्थादिति । आराधितपादश्चाऽसौ तीर्थरूपश्च । तीर्थशब्देन गुरुरत्रोच्यते । आराधितौ पादौ यस्येति, गुरोश्चरणसेवा कृतेति गम्यते । तादृशतीर्थाद्भगवतोऽधीतो विबोधमार्गो येन । ते च विबोधमार्गा बहव इति प्रतीकादिव्यावृत्त्यर्थमात्मेत्युक्तम् । आत्मविषयको विबोधमार्ग इति । तत्रापि शारीरादिपक्षाः सन्तीति तद्व्यावृत्त्यर्थमाह–तत्त्वेति । तत्त्वं परमार्थरूपम्, तस्य यः सहजो भाव इति । स्वरूपेणैव प्रादुर्भूत इति स्वरूपमेवाऽत्राऽऽत्मशब्देनोच्यते । विशेषबोधः पूर्वसन्देहवारकः । तदनन्तरं विश्वासमाप्तौ पादौ प्रणम्य, पुनस्तां गुरुत्वबुद्धिं परित्यज्य, देवं स्वामिनमुपास्यं तं परिवृत्त्य प्रदक्षिणीकृत्येहैवागतः । भगवत्प्रदक्षिणानन्तरमत्रैव ममात्मलाभो जातः, 'अयमहम्' इति । किं भगवदिच्छया तत एकेनैव पदा अत्रागतः, क्रमेण वेति न जानामि । परं प्रदक्षिणा, इदं च स्थानं स्मर्यते । अत एवेदानीं विरहातुरात्मा जातः, अन्यथैतावद् दूरमागमनमेव न स्यात् । अनेनाऽग्रिमवार्त्ताऽपि तत्रत्या न ज्ञायत इत्युक्तं भवति । इदानीं तु विरहेण आतुर आत्मा अन्तःकरणं विद्यते ॥ २० ॥

## श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

कर्माणीत्यत्र । फलादाहेति । फलं सेवनम्, स्वरूपज्ञानं वा, तस्माज्जातं दोषमाहेत्यर्थः । अनेनेति । बाधकनिवृत्तिप्रार्थनेन । भजनहेतुर्भगवत्त्वं तेन ॥ १६ ॥ ❀ ❀ ज्ञानमित्यत्र । प्रतिपाद्येतादृशमित्यत्र प्रतिपादीति पदच्छेदः ॥ १८ ॥ ❀ ❀ इत्यावेदितेत्यत्र । आज्ञाया इति । अतो मद्वयुनमिति विचारवाक्यबोधितायाः । तथा सामर्थ्यादिति । उद्धवे गुणादेरस्याभावेन भगवत्स्थितज्ञानव्यवहारसामर्थ्यात् ॥ १९ ॥

## श्रीगिरिधरकृता बालप्रबोधिनी

तथापि तव दुर्घटाचरणं दृष्ट्वा मोहो भवति स माभूदित्याह—कर्माणीति । वस्तुतोऽनीहस्य निर्व्यापारस्य कर्माणि अभवस्य जन्मरहितस्य ते तव भवो जन्म, कालात्मना कालनियन्तुः शत्रुभयात् द्वारकारूपजलदुर्गस्याश्रय आश्रयणं कालयवनभयात् पलायनं च, स्वात्मन् स्वात्मनि निजानन्दरूपे रतिर्यस्य तस्य प्रमदानामयुतेन बह्वीभिः प्रमदाभिः सह आश्रयः गृहाश्रय इति यत् इह एतस्मिन् विषये विदां त्रिदुषामपि धीः खिद्यति, मुह्यति, किमुत मादृशाम् ? ॥ १६ ॥ ❀ ❀ किञ्च प्रभो इति देवेति च सम्बोधनद्वयेन सर्वथा समर्थस्य देवदेवस्य ते चिकीर्षितं त्वदनुग्रहं विना न कोऽपि ज्ञातुं शक्नोतीति सूचयति । अकुण्ठित आवरणरहितः अखण्डः अपरिच्छिन्नः सदा संशयविपर्ययादिविलक्षणो यथार्थो बोधो यस्य तथाभूतोऽपि त्वं यत् मन्त्रेषु प्रस्तुतेषु सत्सु मामेवोपहूय मुग्ध इव अज्ञवत् अप्रमत्तः सावधानः सन् पृच्छेः पृष्टवानसि तन्नोऽस्माकं सेवकानां मनो मोहयत्येवे-

---

१ 'अतो मद्वयुनम्...' इति विचारवाक्यबोधितायाः, प्र. । २ उद्धवे गुणादेरस्याऽभावेन भगवत्स्थितज्ञानव्यवहारसामर्थ्यात्, प्र. ।

त्यन्वयः । वैशब्द इवशब्दश्चैवशब्दार्थकः ॥ १७ ॥ ❀ ❀ स्वात्मनस्तव रहः रहस्यं महिमा तस्य प्रकाशो यस्मात्तत् अत-एव परं सर्वत उत्कृष्टं समग्रं साङ्गोपाङ्गं यज्ज्ञानं भगवान् सर्वज्ञो भवान् कस्मै-सर्वनामत्वमार्षं-काय ब्रह्मणे प्रोवाच हे भर्त्तः स्वामिन् तज्ज्ञानं यदि नोऽस्माकं त्वत्सेवकानामपि ग्रहणाय गृहीतुं क्षमं मोहनिवर्तकत्वेन योग्यं तर्हि वद, यत् यस्माज्ज्ञानात् अञ्जसा अनायासेनैव वृजिनं पूर्वोक्तं मोहं तरेमेत्यन्वयः ॥ १८ ॥ ❀ ❀ इत्येवमावेदितं प्रकाशितं हार्दं हृदि गतमभिप्रायं येन यस्मै मह्यं स भगवान् कृष्ण आत्मनः स्वस्य परमां परां काष्ठामापन्नां स्थितिं याथात्म्यावगतिं आदिदेश उपदिदेशेत्यन्वयः । तत्कृपादृष्ट्यैव मम सर्वोऽपि तापो निवृत्त इति सूचयन् विशिनष्टि—अरविन्दाक्ष इति । तस्य कथमेवं कृपालुत्वमित्यत आह—पर इति, यतः परमेश्वर इत्यर्थः ॥ १९ ॥ ❀ ❀ आराधितपादो भगवान् स एव तीर्थं गुरुस्तस्मात् एवमुक्तप्रकारेण अधीतः अधिगतः तत्त्वात्मविबोधस्य यथार्थात्मज्ञानस्य मार्गो मृग्यते परिशील्यतेऽनेनेति मार्गः प्रकाशकं शास्त्रं येन सः तस्य पादौ प्रणम्य तमेव देवं परिवृत्य प्रदक्षिणीकृत्य तद्विरहेणातुरो व्याकुल आत्माऽन्तःकरणं यस्य सोऽहमिहागतोऽस्मि ॥ २० ॥

### हिन्दी अनुवाद

प्रभो ! आप निःस्पृह होकर भी कर्म करते हैं, अजन्मा होकर भी जन्म लेते हैं, कालरूप होकर छिप रहते हैं तथा स्वात्माराम होकर भी सोलह हजार स्त्रियोंके साथ रमण करते हैं—इन विचित्र चरित्रोंको देखकर विद्वानोंकी बुद्धि भी चक्करमें पड़ जाती है ॥ १६ ॥ ❀ ❀ देव ! आपका स्वरूपज्ञान सर्वथा अबाध और अखण्ड है। फिर भी आप सलाह लेनेके लिये मुझे बुलाकर जो भोले मनुष्योंकी तरह बड़ी सावधानीसे मेरी सम्मति पूछा करते थे, प्रभो ! आपकी वह लीला मेरे मनको मोहित-सा कर देती है ॥ १७ ॥ ❀ ❀ स्वामिन् ! अपने स्वरूपका गूढ़ रहस्य प्रकट करनेवाला जो श्रेष्ठ एवं समग्र ज्ञान आपने ब्रह्माजीको बतलाया था, वह यदि मेरे समझने योग्य हो तो मुझे भी सुनाइये, जिससे मैं भी इस संसार-दुःखको सुगमतासे पार कर जाऊँ ॥ १८ ॥ ❀ ❀ जब मैंने इस प्रकार अपने हृदयका भाव निवेदित किया, तब परमपुरुष कमलनयन भगवान् श्रीकृष्णने मुझे अपने स्वरूपकी परम स्थितिका उपदेश दिया ॥ १९ ॥ ❀ ❀ इस प्रकार पूज्यपाद गुरु श्रीकृष्णसे आत्मतत्त्वकी उपलब्धिका साधन सुनकर तथा उन प्रभुके चरणोंकी वन्दना और परिक्रमा करके मैं यहाँ आया हूँ। इस समय उनके विरहसे मेरा चित्त अत्यन्त व्याकुल हो रहा है ॥ २० ॥

**सोऽहं तद्दर्शनाह्लादवियोगार्तियुतः प्रभो । गमिष्ये दयितं तस्य बदर्याश्रममण्डलम् ॥ २१ ॥**
**यत्र नारायणो देवो नरश्च भगवानृषिः । मृदु तीव्रं तपो दीर्घं तेपाते लोकभावनौ ॥ २२ ॥**

### श्रीशुक उवाच

**इत्युद्धवादुपाकर्ण्य सुहृदां दुःसहं वधम् । ज्ञानेनाशमयत्क्षत्ता शोकमुत्पतितं बुधः ॥ २३ ॥**
**स तं महाभागवतं व्रजन्तं कौरवर्षभः । विश्रम्भादभ्यधत्तेदं मुख्यं कृष्णपरिग्रहे ॥ २४ ॥**

### विदुर[1] उवाच

**ज्ञानं परं स्वात्मरहःप्रकाशं यदाह योगेश्वर ईश्वरस्ते ।**
**वक्तुं भवान्नोऽर्हति यद्धि विष्णोर्भृत्याः स्वभृत्यार्थकृतश्चरन्ति ॥ २५ ॥**

### श्रीधरस्वामिविरचिता भावार्थदीपिका

तस्य दर्शनेनाह्लादो वियोगेनार्तिश्च ताभ्यां युतो बदर्याश्रमस्थानं गमिष्यामि ॥ २१ ॥ ❀ ❀ मृदु परोपद्रवशून्यं तीव्रं दुश्चरं दीर्घमाकल्पांतं तेपाते तपश्चरत इत्यर्थः। लोकभावनौ लोकानुग्रहकारकौ ॥ २२ ॥ ❀ ❀ ज्ञानेन विवेकेन ॥ २३ ॥ ❀ ❀ कृष्णपरिग्रहे परिवारे मुख्यं विश्रंभाद्विश्वासात् । कौरवर्षभ हे परीक्षित् ॥ २४ ॥ ❀ ❀ यद्यस्माद्विष्णोर्भृत्याः स्वभृत्यप्रयोजनसाधकाः संतश्चरंति न हि कृतार्थानामन्यत्कृत्यमस्तीत्यर्थः ॥ २५ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

तस्य भगवतः दयितं प्रियम् ॥ २१ ॥ ❀ ❀ यत्र बदर्य्याश्रमे इत्यर्थ इति । संलापार्थतपतेश्चरणमप्यनेकार्थत्वादर्थ इति भावः । लोकानुग्रहेत्युक्तेर्लोकसंग्रह एवार्थः ॥ २२ ॥ ❀ ❀ उत्पतितं प्राप्तं ज्ञानेन तत्त्वज्ञानेन यतो बुधः ॥ २३ ॥ ❀ ❀ स विदुरः तमुद्धवं विश्वासादयमुद्धवो मदभीष्टं वक्ष्यतीत्येवंरूपात्प्रणयाद्वा 'विस्रंभः प्रणयेऽपि च' इत्यमरात् ।

---

[1] १. प्राचीने पाठे 'विदुर उवाच' इति न ।

कृष्णपरिग्रहे कृष्णपरिचायकजने तदुक्तं वररुचिना "महिषी च सुतो भ्राता मातुलः श्यालकस्तथा। मन्त्री दलश्च सेना च सर्वे एते परिग्रहाः" इत्यत्रोद्देश्यविधेयभावत्वान्न लिङ्गादिनियम इति "यत्रोद्देश्यविधेयत्वं तत्रायं नियमो न हि। रामदाराश्च सीतेयं करुणाभाजनं हरिः" इत्युक्तेः॥ २४॥ स्वात्मरहःप्रकाशं चतुःश्लोकीरूपम्। यद्वा स्वोऽसाधारणो यो भृत्यस्यार्थः 'भवत्पदांभोजनिषेवणोत्सुकः' इत्यत्रोक्तस्तं कुर्वंतीति तथा इत्यर्थः। इति "नैवेह नामुत्र च कश्चनार्थ ऋते परानुग्रहमात्मशीलम्" इत्युक्तेरिति भावः॥ २५॥

## श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

स विरहातुरोप्यहं तदाज्ञां पालयितुं बदर्य्याश्रममंडलं गमिष्ये, नन्वातुरस्य तव चलने गदेन च कथं शक्तिस्तत्राह तद्दर्शनेतिदर्शनं चेदं शनकैर्भगवल्लोकादितिवत्स्फूर्त्तिमयांतः साक्षात्कारस्तथा वियोगश्च स्फूर्त्तिभङ्गे तथा च स्फूर्त्तिदार्ढ्येनैव तत्तच्छक्तिरिति भावः। दयितं मां प्रस्थापयितुमिष्टम्॥२१॥ ❀ ❀ अत्र तपस्तेपात इत्यत्र यद्यपि तप इत्यधिकम्, तथापि प्रयोगाचारणमात्रार्थत्वेन तपधात्वर्थस्याविवक्षितत्वात् उक्तार्थानामप्रयोगाच्च मिलित्वा तपश्चरत इत्यार्थिकोर्थः॥ २२॥ ❀ ❀ विवेकेन मौशललीलेयमिंद्रजालवन्मायिकी नित्यलीलात्वमायिकीति पृथक् पृथक् ज्ञानेनेत्यर्थः॥ २३॥ ❀ ❀ कृष्णपरिग्रहे द्वारकास्थतत्पार्षदमध्ये॥ २४॥ ❀ ❀ स्वात्मरहः स्वरूपभूतं प्रेम तस्य प्रयोजनतया प्रकाशकं परं ज्ञानं परतत्त्वसाक्षात्कारसाधनं श्रीमद्भागवतं शास्त्रमित्यर्थः। कैवल्यैकप्रयोजनमिति सद्यो हृद्यवरुध्यते तत्कृतिभिरिति च तद्विशेषणात्॥ २५॥

## श्रीमद्वीरराघवव्याख्या

इहागतस्त्वं क गमिष्यसीत्यत आह स इति। सोहं बदरीं त्वं प्रयाहीत्याज्ञप्तोहं तस्य भगवतः दर्शने यो ममाह्लादः वियोगेनार्तिश्च ताभ्यां युतः सन्प्रभोर्भगवतः तस्य दयितं प्रियं बदर्याश्रममंडलं प्रति गमिष्ये॥ २१॥ ❀ ❀ आश्रमं प्रस्तौति अत्रेति। यत्र बदर्याश्रममंडले ऋषिः सर्वज्ञो नारायणो नरश्च मृदुलोकानां क्षेमस्वस्त्यादिकरं तीव्रं दुश्चरं दीर्घमाकल्पांतं तपस्तेपाते चक्राते कथंभूतौ तेपाते लोकभावनौ लोकानुग्राहकौ लोकानुग्रहार्थं तस्य तपश्चरणमिति भावः॥२२॥ ❀ ❀ एवमुद्धवादुपश्रुतवृत्तांतस्य क्षत्तुरवस्थितिप्रकारमाह शुकः श्लोकद्वयेन इतीति। क्षत्ता विदुरः बुधः विद्वानित्युक्तप्रकारेण उद्धवादुद्धवमुखात् ज्ञातीनां दुःसहं सोढुमशक्यमत्यंतदुःखजनकमित्यर्थः। वधं नाशमुपाकर्ण्य श्रुत्वोत्पतितमुत्पन्नं शोकं ज्ञानेन स्वात्मपरमात्मयाथात्म्यज्ञानेनाशमयत्॥ २३॥ ❀ ❀ स इति स कौरवर्षभः विदुरः व्रजंतं व्रजिष्यंतं बदर्याश्रमं प्रतीति शेषः। महाभागवतं भागवतश्रेष्ठमुद्धवं विस्रंभाद्विश्वासादिदमभ्यधत्तानुसंहितवान्निश्चितवानित्यर्थः। किं कृष्णपरिग्रहे कृष्णानुग्रहेऽयमुद्धवो मुख्य इति कृष्णपरिग्रहविषयाणां मध्येऽयं मुख्य इति विश्वासपूर्वकं निश्चितवानित्यर्थः॥ २४॥ ❀ ❀ अथ श्रुतभगवद्वृत्तान्तं तदुपदिष्टतत्त्वं जिज्ञासु क्षत्ता पृच्छति ज्ञानमिति। योगीश्वरः योगफलप्रदः ईश्वरो भगवान् ते तुभ्यमात्मरहः प्रकाशं पर यज्ज्ञानमाह तद्ज्ञानं भवान्नः अस्मभ्यं वक्तुमर्हति यद्यस्माद्विष्णोर्भक्ताः स्वभृत्यार्थकृतः स्वभृत्यप्रयोजनकारिणश्चरंति हि॥ २५॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

इतः कुत्र यास्यसीति तत्राह सोहमिति। त्वद्दर्शनजाताह्लादेन कृष्णवियोगोत्पन्नार्त्या च युतः बदर्याश्रममंडलं बदरिकाश्रमपरिसरवर्तिकलापग्रामम्॥ २१॥ ❀ ❀ कृष्णप्रियत्वे निमित्तमाह यत्रेति। धर्मस्य भगवतः पुत्रत्वेनावतीर्णः साक्षान्नारायणांशो नारायणनामा शेषांशो नरो भगवांश्च मृदुलोकसुखकरं तीव्रं दुष्करं लोकभावनौ लोकग्राहकौ अनेन फलानपेक्षितावित्युक्तं भवति तप आलोचने करणे च॥ २२॥ ❀ ❀ परमात्मनो जीवात्मनश्च स्वातंत्र्यपारतंत्र्यादिविशेषज्ञानेन वधं भविष्यंतम्॥ २३॥ ❀ ❀ नन्वत्र विदुरेण यदूनामेष्यद्वधश्रवणेनोत्पन्नशोकशमनप्रयत्न एव कृत उतान्योपि प्रसंग इत्यत्राह सतमिति। कृष्णपरिग्रहे कृष्णपरिवारजने विश्रंभादयमुद्धवो मदभीष्टं वक्ष्यतीति विश्वासात्॥ २४॥ ❀ ❀ इदमित्युक्तं विशिनष्टि ज्ञानमिति। अत्र हेतुमाह यदिति। हिशब्दोवधारणार्थः हि हेताववधारण इति यादवः, स्वभृत्याः स्वदासास्तेषामर्थं प्रयोजनं कुर्वंतः स्वभृत्यार्थकृतश्चरंति॥ २५॥

## श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

विरहातुरात्मा चेत्तर्हि कथं चलितुं गदितुं वा शक्नोषि तत्राह सोऽहमिति। दर्शनाह्लादः शनकैर्भगवल्लोकादित्यनुसारेण वियोगार्त्तियुतस्तु नृलोकं पुनरागत इत्यनुसारेण ततो वियोगेऽपि मध्ये मध्ये स्वसाक्षात्कारात् समर्थः सन् तस्य दयितं मां प्रस्थापयितुं व्यञ्जितं बदर्याश्रममपि गमिष्यामीत्यर्थः॥ २१॥ २२॥ २३॥ ❀ ❀ विस्रम्भात् प्रणयात् विस्रम्भः प्रणयेऽपि चेत्यमरः॥ २४॥ ❀ ❀ यदेव ज्ञानं स्वोऽसाधारणो यो भृत्यार्थः भवत्पदाम्भोजनिषेवणोत्सुक इत्युक्तानुसारेण सेवारूपस्तत् कारिणो विष्णोर्भृत्याश्चरन्ति अनुतिष्ठन्तीति तस्य ज्ञानस्य भक्तिमयत्वं व्यक्तं अतएवास्मिन् वाक्ये पूर्वोक्त-

श्रीमदुद्धववाक्ये रहःशब्दश्चतुश्लोकीपठितरहस्यशब्देन समानार्थतया निर्दिष्टः अतः श्रीभगवद्वाक्ये मन्महिमावभासमिति महिमशब्दस्यापि तत्पर्य्यन्ततायामेव तात्पर्यम्। अतस्तथाभूतोऽपि प्रेमवश एवाहं तथा तथा वरलीलादावाविष्टोभवामीति श्रीभगवता सिद्धान्तितमपि परमस्थितिशब्दस्याप्यत्रैव तात्पर्य्यात् ॥ २५ ॥ २६ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

ननु त्वं तद्विरहव्यथयापि कथं जीवसीति तत्राह क्षणे क्षणे तद्दर्शनेन ह्लादस्तद्वियोगेनार्त्तिश्च ताभ्यां युतः बदर्य्याश्रममिति तत्रैव गन्तुं भगवदादेशात् ॥ २१ ॥ ❀ ❀ तत्रैव तदंशः साक्षान्नारायण आस्त इत्याह यत्रेति । मृदु सर्व्वलोकसुखदं तीव्रं सर्व्व-लोकैर्दुश्चरं दीर्घं बहुकालव्यापि लोकानां भावनौ उत्पादकौ पालकौवा ॥ २२ ॥ ❀ ❀ सुहृदां वधं दुःसहमपि उद्धवात् सकाशात्-इत्येवंप्रकारकम् उपकर्ण्येत्यन्वयः। ज्ञानेन कृष्णद्युमनि निम्लोच इत्याद्युद्धवोक्तितात्पर्य्यपर्य्यालोचनजनितेन ॥ २३ ॥ ❀ ❀ विस्रम्भात् विश्वासात् स्वतोऽतिकनिष्ठमपि कृष्णपरिग्रहे कृष्णं परिग्रहीतुं वशीकर्तुं मुख्यं स्वतोऽतिश्रेष्ठं अतः कनिष्ठा अपि भक्त्युद्रेक-वन्तो ज्येष्ठैरपि गुरवः कर्त्तव्या इत्यत्र विदुरवाक्यमेव प्रमाणमिति बोधितम् ॥ २४ ॥ ❀ ❀ नोऽस्मभ्यमित्यस्मदोर्द्वयोश्चेत्ये-कत्वेपि द्वित्वेऽपि बहुत्वं यद्यस्माद्विष्णोर्भृत्या वैष्णवाः स्वभृत्यानामर्थं भक्त्युपदेशरूपं कुर्वाणाः कृपया अज्ञलोकानां गुरवो भवन्त-एव भ्रमन्ति अतस्तत्सेवकाभिमानिने मह्यं भगवज्ज्ञानमुपदिशेत्यर्थः ॥ २५ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

लोकभावनौ लौकशिक्षार्थं प्रवृत्तौ मृदु सात्त्विकं तीव्रं रजस्तमोवृत्तिभिर्दुश्चरं दीर्घमाकल्पांतम् ॥ २२ ॥ २३ ॥ ॥ २४ ॥ ❀ ❀ यत् यतः स्वभृत्यार्थकृतः स्वभक्तप्रयोजनकारिणः ॥ २५ ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनीव्याख्या

तर्हि किमतः परं कर्तव्यमित्याकांक्षायामाह—सोऽहमिति। तस्य दर्शनेनाऽऽह्लादः, वियोगेन च आर्तिः; उभययुतः सन्। सर्वसन्देहानां भगवता निवारितत्वात्, प्रभोर्भगवत आज्ञा अवश्यं परिपालनीयेति, द्वारकापेक्षयाऽपि दयितं प्रियमत्यन्तम्, बदरीस्थानमेव भगवत ऋषिरूपस्य आश्रममिति बदर्येवाश्रमम्, गमिष्यामि। तत्राऽधिकं विशेषमाह–मण्डलमिति। यथा सवितृमण्डलमध्यवर्ती नारायणः, बदर्याश्रममण्डलमिति तत्र भगवतो नित्यसन्निधानं बोधितम् ॥ २१ ॥ ❀ ❀ उपपादयत्यपि—यत्रेति। यत्र बदरिकाश्रमे उभयरूपेण भगवानस्ति। आश्रमे ऋषिः, नरश्च। चकाराद्भगवान्। नरप्राधान्येन ऋषिर्भगवानाश्रमे, नारायणप्रधानो देवो नरसहितो मण्डले। अतः सूर्यमण्डलापेक्षयाऽपि तत् स्थानं समीचीनमित्युक्तं भवति, उभयोर्भगवत्त्वमृषित्वं देवत्वं च। अतो मृदु तीव्रं दीर्घं तपस्तेपाते। देवत्वात् मृदु तपः कुर्वाते, ते हि सात्त्विका नात्युग्रतपोयोग्यः; भगवत्त्वात्तीव्रं कुर्वाते; ऋषित्वाद्दीर्घम्, ते ह्याजन्म तपः कुर्वन्ति। भगवांस्तु शीघ्रफलकं कर्म करोति, विलम्बे कारणाभावात्, अतस्तीव्रत्वमुक्तम्। ततोऽत्र समाधिरूपमाहारपरित्यागपूर्वकम्। नन्वेतादृशतपःकरणे को हेतुस्तत्राऽऽह—लोकभावना-विति। लोकं भावयतः। लोकास्तु त्रिविधाः, अतः सर्वहितार्थं त्रिविधं तपः करोतीत्यर्थः ॥ २२ ॥ ❀ ❀ एवं निश्चयां बुद्धिं निरूप्य[२], विपर्ययस्याऽत्राऽप्रयोज[३]कत्वात् त्याज्यत्वेन तद्वदन्नेव संशयमाह। इत्युद्धवादिति त्रिभिः—अत्र प्रथमं सुहृदां वधं श्रुत्वा, भगवदिच्छां च श्रुत्वा, द्व[४]योः फले जाते शोके तदपगमे च, ततो बुधो भूत्वा स[५]न्देहनिवृत्त्यर्थं तमेवाऽर्थमुद्धवं पृच्छतीति स्वाधिकारकवक्तृवाच्यनिरूपणाद्वाक्यत्रयम्। सन्देहस्याऽनिवृत्तत्वादग्रिमवाक्यं सन्देहस्थापकमिति नेयं बुद्धिर्निश्चयरूपा, पदार्थ-स्याऽनिर्द्धारितत्वात्। उपायनिर्द्धारणपक्षे तु संशयस्याऽप्रयोजकत्त्वात् साधननिश्चयात्मक एव स[६] निरूप्यते। इत्थं पूर्वोक्तप्रकारेण मदिरापानादिना सुहृदां वधमुद्धवादुपाकर्ण्य, श्रोतुमप्यशक्यं शोकादि स्वकार्यावश्यम्भावि दुःसहमुद्धवात् श्रुतमिति विपरीत-शङ्काभावात्, दूराद्वह्निरिव तस्य हृदये शोक आपतितः। तत उत्प्लुत्याऽत्रैवागत इत्यर्थः। तं शोकं ज्ञानेनाऽशमयत्। तत् ज्ञानं तस्य पूर्वसिद्धमित्याह—क्षत्तेति। येन ज्ञानेन पूर्वमिन्द्रियजयेन रागो निवार्यते, तेनैव शोकोऽपि निवारितः। कामादस्य विशेषमाह–उत्पतितमिति। उद्यतो हि कामस्तेन न निवारितः परमनुत्पत्त्यर्थमेव यत्नं कृतवान्; शोकं तूत्पतितमपि निवारयामास; यतोऽयं बुधः। भगवत्स्मरणेन तस्य ज्ञानोत्पत्तेर्मनसा भगवतैवाऽयमुपदिष्टः ॥ २३ ॥ ❀ ❀ एवं भगवच्छिष्योऽपि भूत्वा, शोकं निर्वार्य विशेषाकारेण कथनार्थं तं पृच्छतीत्याह—स तमिति। महाभागवतत्वात् प्रार्थना। भगवदनुगृहीतो भगवानिव वक्तव्यो भवति। स तमिति पदाभ्यां भगवतैवैतत्संघट्टनं कृतमिति प्रायेणैतद्द्वारैव विशेषं वक्ष्यतीति प्रश्ने हेतुः। व्रजन्तमिति सेवादिना मनोनुरञ्जनानन्तरं प्रष्टव्यमिति पक्षो निवारितः। स्व[७]स्याऽधिकारनिरूपणार्थं कौरवर्षभेत्युक्तम्। एकस्वामिसेवकत्वात् पूर्वस्ने-

---

१. स्कन्धार्थविचारेणाऽग्रे का वा बुद्धिरुच्यत इत्याकाङ्क्षायामाहुः–एवमित्यादि. प्रकाशः. २ सन्त्यत्वेनोक्त्वेनोक्त्वा. प्र. ३. अधिकारे-ऽनुकूलत्वात् प्र. ४. द्वयोः फलस्य विवरणं शोके तदपगमे चेति. प्र. ५. 'सुखाय कर्माणि'''''इत्यादिश्लोकद्वयोक्तसन्देहनिवृत्त्यर्थम्. ६. बुद्धिवृ-त्तिविशेषः प्र. ७. परीक्षितः, प्र.।

हाव पृष्टे वक्ष्यतीति कुतो विश्रम्भो विश्वासः, स्नेहनिश्चयो वा। इदं वक्ष्यमाणमभ्यधत्त। तथापि भगवद्भक्तः कथमन्यं प्रार्थयत इत्याशङ्क्याऽऽह—मुख्यं कृष्णपरिग्रहे इति। भगवता यावन्तः सेवकाः परिगृहीताः, तत्रोद्धवो मुख्य इति, तादृशप्रार्थने न कोऽपि भक्तिविरोध इत्यर्थः॥ २४॥ ❀ ❀ प्रष्टव्यं पृच्छति—ज्ञानं परमिति। पूर्ववद् व्याख्यानं पदत्रयस्य। एतादृशं यद्भगवांस्तुभ्यमाह, तद्भवान् नोऽस्मभ्यं वक्तुमर्हतीत्यन्वयः। ननु बहव एव सन्ति ज्ञानिनो व्यासादयः, किमिति मामेव प्रार्थयसे, इत्याशङ्क्यैतन्न कोऽपि जानातीति हेतुभूतं पदद्वयमाह—योगेश्वर ईश्वर इति। साधनतः स्वरूपतश्च यः सर्वेश्वरः, स च तुभ्यमेवं-प्रकारेणोक्तवांस्तदतिदुर्लभम्। न हि व्यासादय ईश्वराः, न वाऽनिरुद्धादयो योगेश्वराः। उभयभावमवलम्ब्याऽपि यद्भगवान् तुभ्यमुपदिष्टवान्, तेनाऽवश्यमेतद्वक्तव्यमिति। तदाह—वक्तुं भवान्नोऽर्हतीति। यथा भगवान् भवान्, तथा भवानहम्। अतो यथा तादृशे योगे भगवानवक्तव्यमप्युक्तवान्, एवं त्वमपि वदेत्यर्थः। ननु भगवान् भक्तोद्धारार्थमेव यतते, स्वतन्त्रश्च; अत उपदेशं करोतु नाम। अस्माभिस्तु तत्कथं कर्तुं शक्यमित्यत आह—भृत्याः स्वभृत्यार्थकृतश्चरन्तीति। यद्यस्मात् विष्णो-र्भृत्याः। स्वामिसमानधर्मत्वात्सेवकानाम्। यथा स्वामी सेवकोद्धारकः, एवं भृत्या अपि स्वभृत्यार्थमेव कृतं येषाम्, तादृशा एव भूत्वा स्वभृत्यानन्वेष्टुं चरन्ति, अन्यथा भगवदीयत्वेनैव कृतार्थाः सन्तः किमिति परिभ्रमेयुः। भगवत्स्मरणाचोद्धव उपदेशार्थमेव रक्षित इति हृदये प्रतिभातम्। अतो भगवदाज्ञयैवाऽऽगच्छन्तमप्युद्धवं स्वभृत्यार्थकृतश्चरन्तीत्युक्तवान्॥ २५॥

## श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

इत्युद्धवेत्यत्र। स्कन्धार्थविचारेणाऽग्रे का वा बुद्धिरुच्यत इत्याकाङ्क्षायामाहुः—एवमित्यादि। निरूप्येति। सृज्यत्वे-नोक्त्वा। अत्राप्रयोजकत्वादिति अधिकारेऽनु[1]कूलत्वात्। द्वयोःफलस्य विवरणं शोके तदपगमे चेति। सन्देहनिवृत्त्यर्थम्। कर्माणी-त्यादिश्लोकद्वयोक्तसन्देहनिवृत्त्यर्थम्। नन्वत्र संशयरुपा बुद्धिरुच्यत इत्यत्र किं मानमित्यत आहुः—सन्देहेत्यादि। स इति बुद्धिवृ-त्तिविशेषः॥ २३॥ ❀ ❀ स तमित्यत्र। स्वस्येति परीक्षितः।

## श्रीगिरिधरकृता बालप्रबोधिनी

इतः क्व गमिष्यसीत्यपेक्षायामाह—स इति। सः 'बदरीं त्वं प्रयाहि' इत्यज्ञाप्तोऽहं तस्य भगवतो दर्शनेन य आह्लादो वियोगेनार्तिः पीडा च ताभ्यां युतः सन् तस्य प्रभोर्दयितं प्रियं बदर्याश्रमस्थानं प्रति गमिष्ये गमिष्यामीत्यन्वयः॥ २१॥ ❀ ❀ आश्रमस्य दयितत्वं दर्शयति—यत्रेति। यत्राश्रमे नारायणो नरश्च मृदु जनोपद्रवशून्यं तीव्रं[2] दुश्चरं दीर्घमाकल्पान्तं तप आहा-रादिनियमपूर्वकं आत्मसमाधिलक्षणं तेपाते इत्यन्वयः। देवत्वं[3] भगवत्वमृषित्वं च द्वयोर्विशेषणम्। तपश्चरणे हेतुमाह—लोकभावनाविति। स्वतपःप्रदर्शनेन तपसि लोकान् प्रवर्त्य भावयतः पुरुषार्थसम्पन्नान् कुरुत इति तथा तौ॥ २२॥ ❀ ❀ इत्येवमुद्धवात् उद्धवमुखात् दुस्सहं सोढुमशक्यमत्यन्तदुःखजनकं सुहृदां ज्ञातीनां मित्रादीनां च वधं विनाशमुपाकर्ण्य श्रुत्वा उत्पतितमुत्पन्नं शोकं क्षत्ता विदुरो ज्ञानेन 'जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च' इति विवेकेनाशमयत्। यतो बुधो विवेकी॥ २३॥ ❀ ❀ स विदुरस्तं बदर्याश्रमं प्रति व्रजन्तं व्रजिष्यन्तं उद्धवं प्रति विस्रम्भात् विश्वासात् इदं वक्ष्यमाणं अभ्यधत्त उक्तवानित्यन्वयः। उद्धवस्य प्रार्थनायोग्यत्वमाह—महाभागवतमिति। तत्र हेतुमाह—मुख्यमिति, सेवकत्वेन कृष्णेन भगवता परिगृहीतं भृत्यगणे मुख्यमित्यर्थः। विदुरस्याप्येवमादरेण प्रार्थना युक्तैव। तत्र हेतुमाह—कौरवर्षभ इति। कौरवाणां मध्ये भगवद्भक्तत्वेन श्रेष्ठ इत्यर्थः॥ २४॥ ❀ ❀ यदुक्तवांस्तदाह—ज्ञानमिति। स्वस्यात्मनः परमात्मनो रहःप्रकाशं अतएव साधनान्तरापेक्षाया परं श्रेष्ठं यज्ज्ञानं योगेश्वरः योगानां कर्मयोगभक्तियोगाष्टाङ्गयोगज्ञानयोगादीनां पुरुषार्थोपायभू-तानामीश्वरः फलप्रद ईश्वरः श्रीकृष्णस्ते तुभ्यमाह तद्भवान्नोऽस्मभ्यं स्वभक्तेभ्यो वक्तुमर्हति। तत्र हेतुमाह-यदिति। हीत्यवधार-णार्थः यस्मात् विष्णोर्भृत्याः भक्ताः स्वभृत्यार्थकृतः स्वभक्तप्रयोजनकारिणः सन्त एव चरन्ति। नहि तेषां कृतार्थानां विचरणेन किञ्चित्स्वार्थमस्तीति भावः॥ २५॥

## हिन्दी अनुवाद

विदुरजी! पहले तो उनके दर्शन पाकर मुझे आनन्द हुआ था, किन्तु अब तो मेरे हृदयको उनकी विरहव्यथा अत्यन्त पीड़ित कर रही है। अब मैं उनके प्रिय क्षेत्र बदरिकाश्रमको जा रहा हूँ, जहाँ भगवान् श्रीनारायणदेव और नर—ये दोनों ऋषि लोगोंपर अनुग्रह करनेके लिये दीर्घकालीन सौम्य दूसरोंको सुख पहुँचानेवाली एवं कठिन तपस्या कर रहे हैं॥ २१-२२॥ ❀ ❀ श्रीशुकदेवजी कहते हैं—इस प्रकार उद्धवजीके मुखसे अपने प्रिय बन्धुओंके विनाशका असह्य समा-

---

१. अननुकूलत्यादिति स्यात्। २. अन्यैरित्यर्थाञ्ज्ञेयम्। ३. 'देवः, भगवान्, ऋषिः' एतानि त्रीणि विशेषणानि नरनारायण-योर्द्वयोरपीत्यर्थः।

चार सुनकर परम ज्ञानी विदुरजीको जो शोक उत्पन्न हुआ उसे उन्होंने ज्ञानद्वारा शान्त कर दिया ॥ २३ ॥ ❀ ❀ जब भगवान् श्रीकृष्णके परिकरोंमें प्रधान महाभागवत उद्धवजी बदरिकाश्रमकी ओर जाने लगे, तब कुरुश्रेष्ठ विदुरजीने श्रद्धापूर्वक उनसे पूछा—॥ २४ ॥ ❀ ❀ विदुरजीने कहा—उद्धवजी ! योगेश्वर भगवान् श्रीकृष्णने अपने स्वरूपके गूढ रहस्यको प्रकट करनेवाला जो परमज्ञान आपसे कहा था, वह आप हमें भी सुनाइये; क्योंकि भगवान्‌के सेवक तो अपने सेवकोंका कार्य सिद्ध करनेके लिये ही विचरा करते हैं ॥ २५ ॥

उद्धव उवाच

ननु[1] ते तत्त्वसंराध्य ऋषिः कौषारवोऽन्ति मे । साक्षाद्भगवताऽऽदिष्टो मर्त्यलोकं जिहासता ॥ २६ ॥

श्रीशुक उवाच

इति सह विदुरेण विश्वमूर्तेर्गुणकथया सुधया प्लावितोरुतापः ।
क्षणमिव पुलिने यमस्वसुस्तां समुषित औपगविर्निशां ततोऽगात् ॥ २७ ॥

राजोवाच

निधनमुपगतेषु वृष्णिभोजेष्वधिरथयूथपयूथपेषु मुख्यः ।
स तु कथमवशिष्ट उद्धवो यद् हरिरपि तत्यज आकृतिं त्र्यधीशः ॥ २८ ॥

श्रीशुक उवाच

ब्रह्मशापापदेशेन कालेनामोघवाञ्छितः । संहृत्य स्वकुलं नूनं त्यक्ष्यन्देहमचिन्तयत् ॥ २९ ॥
अस्माल्लोकादुपरते मयि ज्ञानं मदाश्रयम् । अर्हत्युद्धव एवाद्धा सम्प्रत्यात्मवतां वरः ॥ ३० ॥

श्रीधरस्वामिविरचिता भावार्थदीपिका

तत्त्वाय संराध्य इति । अयं भावः । भगवतैव स्मरणमात्रेण तवापि तत्त्वमुपदिष्टप्रायम् । अथ केवलमसंभावनादिनिवृत्तये ज्ञानी कश्चिदाराध्यः स च तवाराध्यो मैत्रेयो न त्वहं मर्मांतिक एव त्वदुपदेशे तस्यादिष्टत्वादिति ॥ २६ ॥ ❀ ❀ प्लावितोऽपनीत उरुस्तापो यस्य सः । यमस्वसुर्यमुनायाः पुलिने तीरे तां निशां क्षणमिव समुषितः । औपगविरुद्धवः ॥ २७ ॥ ❀ ❀ ब्रह्मशापेन निधनं प्राप्तेषु यद्यस्मात्त्रयाणां ब्रह्मादीनामीशो हरिरप्याकृतिं मनुष्याकारं त्यक्तवान् ॥ २८ ॥ ❀ ❀ ब्रह्मशापोऽपदेशो मिषं यस्य तेन कालेन स्वशक्तिरूपेणामोघं वाञ्छितं यस्य न ह्यत्र शापः प्रभुः किंतु भगवदिच्छैवेत्यर्थः ॥ २९ ॥ ❀ ❀ मय्युपरते सति ज्ञानमर्हति ज्ञानयोग्यो भवति ॥ ३० ॥

श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

तत्त्वाय ज्ञानाय संराध्यस्ते त्वया ननु निश्चये अत्राशयमाह अयं भाव इति कौषारवो मैत्रेयः मे ममातिसमीपे ॥ २६ ॥ ❀ ❀ वृत्तान्यथात्वमार्षम् । गाथा वा छंदः । उपगुरप्युद्धवपितुर्नामांतरमस्ति, हरिवंशे तु तस्य महाभाग इति नामोक्तम् । "उद्धवो देवभागस्य महाभागसुतोऽभवत्" इति । ततो राव्यंते ॥ २७ ॥ ❀ ❀ निश्चितं धनं भगवतो नित्यधाम उपगतेषु समीपं प्राप्तेषु सत्सु इति वास्तवोर्थः । अयोद्धृत्वादवशिष्ट इति चेदाह । अधिरथेति । अधिरथाः प्रबलयोद्धारस्तेषां यूथपाः पुनस्तेषां यूथपास्तेष्वपि मुख्य एतेन न तत्सदृशोऽन्यो योद्धास्तीत्यर्थः । यद्वेदं हरेर्विशेषणमेवं आकृतिं पृथिवीं 'भूमिरवनिराकृतिः' इति कोशात् । मर्त्यलोकं जिहासता "अस्माल्लोकादुपरते मयि" इत्याद्युक्तेः । मर्त्यलोकपरित्यागो देहत्यागोऽत्र विवक्षित इति ॥ २८ ॥ ❀ ❀ त्यक्ष्यन्देहमिति । अत्र तत्त्वमाह । यद्यपि श्रीकृष्णस्य स्वयं भगवत्त्वेन नित्यस्थितिः सिद्धापि तथापि मंदधियां भ्रांत्यपनोदार्थमेवं व्याख्यायते । भगवदाराधनवाक्येन सा सिध्यति आराध्याभावे चाराधनस्यैवासिद्धेः, तस्य च परमाप्ते शास्त्रे विना तत्कथनं न संभवति असंभवकथनस्यापुरुषार्थत्वात् । आरोपश्च परिच्छिन्नगुणरूप एव वस्तुनि कल्प्यते नानंतगुणरूपे "एतच्च धारणाध्यानमंगलम्" इत्यत्रैकादशस्कंधे स्फुटतरं व्याख्यास्यामः । भगवदाकाराणां नित्यत्वं पंचमस्कंधेपि वर्णितं "नयस्वपि वर्षेषु

---

१. प्राचीनप्रतौ 'ननु ते' इत्यारभ्य आकृतिं त्र्यधीशः 'पर्यन्तं श्लोकत्रयं नास्ति, तथा मध्यपठितम् 'उवाच' इत्यपि पदं न वर्तते, टिप्पण्यां सर्वमस्ति । तेनानुमीयते यद्मूले विस्मृतमेतट्टिप्पण्यां लिखितमिति ।

भगवान्नारायणो महापुरुषः महापुरुषाणां तदनुग्रहायात्मतत्त्वव्यूहेनात्मनाद्यापि सन्निधीयते सन्निधानं च साक्षाद्रूपेणैवात्मना'' इत्युक्तेः । नित्यत्वांगीकार एव शालिग्रामशिलादिषु नृसिंहादिभेदश्च संगच्छते तत्तदवतारसान्निध्यादेव हि तत्तद्भेदः कृष्णमधिकृत्य गोपालतापिन्यां च ''तदुहोवाच ब्रह्मणोसावनवरतं ध्यातः स्तुतः परार्द्धांते सोऽबुध्यत गोपालवेशो मे पुरस्तादाविर्बभूव'' इति । ''तथा गोविंदं सच्चिदानंदविग्रहं सुरभूरुहतलासीनं सततं समरुद्गणोहं तोषयामि'' इति श्रुतेश्च । तथा माध्वभाष्येऽपि ''श्रुतिश्च वासुदेवः संकर्षणः प्रद्युम्नोऽनिरुद्धोऽहं मत्स्यः कूर्मो वराहो नरसिंहो वामनो रामो रामो रामकृष्णौ बुद्धः कल्किरहं शतधाहं सहस्रधाहममितोहमनंतोहं नैवैते जायंते नैते म्रियंते नैषामज्ञानबंधो न मुक्तिः सर्व एव ह्येते पूर्णा अजरा अमृताः परमाः परमानंदाः'' इति चतुर्वेदशिखायाम् । तथा नृसिंहपुराणे ''युगे-युगे विष्णुरनादिमूर्त्तिमास्थाय विश्वं परिपाति दुष्टहा'' इति । तथा श्रीनृसिंहतापिन्यां ''तद्भाष्यकृद्भिर्व्याख्यातम्'' एतदेव नृसिंहविग्रहं नित्यमिति श्रुतिश्च सेयं ''ऋतं सत्यं परं ब्रह्म नृकेशीरविग्रहम्'' इति । एवं च श्रीमत्स्यादीनां पृथक् पृथक् वैकुंठलोकाः श्रूयंते पाद्मोत्तरखंडे एवमेव 'जलेषु मां रक्षतु मत्स्यमूर्त्तिः' इति नारायणवर्मोक्तमपि संगच्छते अत एव श्रीशुकदेवेन प्रतिपादितं 'पतिर्गतिश्चांधकवृष्णिसात्वताम्' इति । विशेषस्त्वत्र कृष्णसंदर्भे निरीक्षणीय इति ॥ २९ ॥ ❀ ❀ अस्मान्मर्त्यलोकात् उपरते गते सति ॥ ३० ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

ननु सर्वैरेव मुमुक्षुभिर्ज्ञानी कश्चिदाराध्य एव साक्षाद्भगवदादेशस्य किं फलमित्यपेक्षायामाह । अयं भाव इति । त्वदुपदेशे त्वामुद्दिश्योपदेशे तस्य मैत्रेयस्य ॥ २६ ॥ ❀ ❀ ततः यमुनापुलिनात् ॥ २७ ॥ ❀ ❀ मनुष्याकारं तद्रूपत्वेन रूपितं प्रपञ्चं मर्त्यलोकं जिहासतेति अस्माल्लोकादुपरतेतिपूर्वापरवाक्यगतिसामान्यात् । वस्तुतस्तु एते हि यादवाः सर्वे मद्गणा एव भामिनीत्यादिप्रामाण्यात् नितरां धनं यदूनां सर्वस्वं नित्यलीलास्थलम् ॥ २८ ॥ ❀ ❀ अत्र धार्मिकयदुकुलसंहरणे देहं पातालमेतस्य हि पादपद्ममित्यादिना रूपितं विराडाकारं प्रपञ्चम् ॥ २९ ॥ ❀ ❀ न चान्य इति एवकारार्थः मदाश्रयं स्वयं भगवद्रूपकृष्णविषयकं आत्मवतां श्रीकृष्णैकपुरुषार्थवताम् ॥ ३० ॥ ३१ ॥

### श्रीमद्वीरराघवव्याख्या

तत्वजिज्ञासुना क्षत्त्रा पृष्ट उद्धव आह नन्विति । ननु हे विदुर ! ते त्वया ऋषिस्तत्वदर्शी कौषारवो मैत्रेयः तत्त्वसंराज्यः तत्त्वोपदेशार्थमाराधनीयः पूज्यः न त्वहं कथंभूतः कौषारविः मर्त्यलोकं जिहासता हातुमिच्छता भगवता मेंऽति समीपे साक्षादादिष्ट आज्ञप्तः तीर्थान्यटित्वा भवंतमुपसन्नाय क्षत्रे त्वमुपदिशेत्यादिष्ट इत्यर्थः ॥ २६ ॥ ❀ ❀ विदुरोद्धवसंवादमुपसंहरति शुक इतीति । इतीत्थं विदुरेण सह विश्वमूर्तेः विश्वशरीरस्य भगवतो गुणकथारूपया सुधया आप्लुतः निरस्तः उरुस्तापो यस्य सः औपगविरुद्धवः यमस्वसुर्यमुनायाः पुलिने तटे तां निशां रात्रिं क्षणमिव समुषितः सम्यग्भगवद्गुणकथया तां रात्रिं क्षणमिव नीत्वा ततः यमुनाया अगात् बदर्याश्रमं प्रतीति शेषः ॥ २७ ॥ ❀ ❀ अत्रोद्धवविषये किंचिद्राजा पृच्छति निधनमिति । वृष्णिभोजेषु निधनं ब्रह्मशापेन नाशमुपगतेषु सत्सूद्धवस्तुकथमेकोऽवशिष्टः अस्यापि विप्रशापविषयत्वादित्यभिप्रायः । किमु वक्तव्यं वृष्ण्यादयो निधनमुपगता इति यद्यतः अतिरथानां यूथं पांतीत्यतिरथयूथपाः तेषामपि ये यूथपास्तेष्वपि मुख्यः त्र्यधीशः लोकत्रयेशः हरिरप्याकृतिं मनुष्यसजातीयसंनिवेशं तिरोभावयामास अत्र भूत्याग एव विवक्षितः । सर्वे नित्याः शाश्वताश्च देहास्तस्य महात्मन इति स्मरणात् ॥ २८ ॥ ❀ ❀ विप्रशापादेः सर्वस्य भगवत्संकल्पानुविधायित्वात्तत्संकल्पेनायं शापविषयोप्युद्धव इहैव स्थापित इत्युत्तरमाह वैयासकिः ब्रह्मेत्यादि । ब्रह्मशापापदेशेन विप्रशापव्याजेन कालेन स्वसंकल्पितकालेनामोघं वांछितं यस्य सः सत्यसंकल्प इत्यर्थः । एवंभूतो भगवान् स्फीतं समृद्धं स्वकुलं संहृत्य देहं स्वदेहं त्यक्ष्यन् तिरोभावयिष्यन्निदमचिंतयत् ॥ २९ ॥ ❀ ❀ चिंतामेवाह अस्मादिति । अस्माल्लोकान्मर्त्यैकान्मय्युपरते स्वलोकं गते सति मदाश्रयं अहमाश्रयो विषयो यस्य तन्मदाश्रयं मद्विषयं ज्ञानं संप्रतीदानीमुद्धव एवाऽद्धा तत्त्वेन साक्षादर्हतीति स्वयं गृहीतुमन्यान् ग्राहयितुं च उद्धव एव योग्यो नत्वन्य इत्यर्थः । कथंभूत उद्धवः आत्मवतां स्वात्मवतां स्वात्मपरमात्मयाथात्म्यज्ञानवतां मध्ये वरः मुख्यः ॥ ३० ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

नन्वत्रोद्धवेन श्रुत्वा तूष्णींगतमुत किमप्यभिहितं तत्राह नन्विति । ननुशब्दो हेत्वर्थः । तत्त्वसंराद्धः तत्त्वज्ञानसिद्धः कौषारवो मैत्रेयः इदं गुणनामापि वैशंपायनवल्लोके प्रसिद्धत्वादुच्यते । अंतिके मम समीपे स्थितस्ते तव भगवताऽऽदिष्टः । तत्त्वज्ञानोपदेशायेति शेषः । जिहासता हातुकामेन तस्मान्न मया पृथग्वक्तव्यमिति शेषः ॥ २६ ॥ ❀ ❀ सूतः शौनकायेमां कथां कथयति इतीति । गुणकथाख्यया सुधया प्लुतो गत उरुस्तापो यस्य स तथा प्लुङ्गताविति धातुः । यमस्वसुः यमुनायाः यस्याः पूर्वसंध्यायां विदुरदर्शनं तां दिशां समुषितः सुखमुषित औपगविः उपगोरपत्यमुद्धवस्ततो यमुनायाः ॥ २७ ॥ ❀ ❀ परीक्षित् बदरीं त्वं प्रयाहीत्यादिश्रुतकथनत्वेन ज्ञातोद्धवावशेषो विशेषबुभुत्सया पृच्छति निधनमिति । तुशब्द एवार्थः तेषु वृष्ण्यादिषु निधनं

देहत्यागलक्षणं नाशमुपगतेषु सत्सु स उद्धव एव कथमवशिष्ट इत्यन्वयः । अयोद्धृमुख्यत्वादुर्वारित इति तत्राह अधिरथेति । अधिरथानां यूथं पांतीति अधिरथयूथपास्तेषां यूथं पांतीति अधिरथयूथपयूथपास्तेषु मुख्यो मुख्यतो योद्धा हरेरवशिष्टत्वात्तदपेक्षयेति । तत्राह यद्धरिरिति । हरिरप्याकृतिं पृथिवीं तत्यजे तत्याजेत्यन्वयः । इति यदतस्तदपेक्षापि दूरोत्सारिता त्रिलोकेशत्वमिंद्रस्याप्यस्तीति त्र्यधीश इति अनेन भूलोकात्स्वर्गलोकं गत इत्यर्थः संपद्यते । आकृतिशब्दस्य पृथिव्यभिधेयत्वे सर्वमुपपद्यते तत्कथमितीयमाशंका शरीरमाकृतिर्देहः कुः पृथ्वी च मही तथेत्यनेन परिहृता । अतस्त्वाकृतेः पृथिवीपर्यायत्वं तथाप्यत्र तच्छब्देन शरीरमेवोच्यत इति अंगीकर्तव्यं अनन्तरमपि निश्चेतनत्वेन तदाकारदर्शनात् अतो युक्तिर्वक्तव्येति चेन्न नित्यानंदस्वरूपत्वेन देहत्यागायोगात् अतो देहत्यागो नाम पृथिवीलोकत्याग एव तेन तदाकारदर्शनं दुष्टजनमोहनाय कृतं तदुक्तं 'पृथिवीलोकसंत्यागो देहत्यागो हरेः स्मृतः । नित्यानंदस्वरूपत्वादन्यो नैवोपलक्ष्यते' दर्शयन् जनमोहाय सदृशीं तत्तदाकृतिं नटवद्भगवान् विष्णुः परज्ञानकृतिः सदेति 'राजन्परस्य तनुभृज्जननाप्ययेहां मायाविडंबनमवेहि यथा नटस्य' इत्यत्राप्युक्तम् ॥ २८ ॥ ❀ ❀ परिहारं वक्ष्यन् नृपं शुको वक्ति ब्रह्मेति । ब्रह्मशापापदेशेन कालेन मृत्युना देहं पृथिवीं यस्य पृथिवी शरीरमिति श्रुतिः ॥ २९ ॥ ❀ ❀ परिहरति अस्मादिति । अस्मात्पृथिवीलोकात् उपरते स्वर्लोकं गते सति अर्हति उपदेष्टुमिति शेषः आत्मवतां ब्रह्मज्ञानिनां मध्ये परः ॥ ३० ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

विश्वमूर्त्तेः सर्व्वतः साक्षादिव स्फुरतः । अत एव विरहेऽपि गुणकथयेत्यादि ॥ २७ ॥ ❀ ❀ निधनं नितरां धनस्वरूपं श्रीकृष्णनित्यलीलाधाम । उप समीपतो व्यवधानं विनैव गतेषु स तु कथमवशिष्टः । एक एव प्रपञ्चे स्थितः । यतः यस्मात् त्रयाणां ब्रह्मादीनां महत्स्रष्ट्रादीनां वा अधीशो हरिराकृतिं विराडाकारं त्यक्तवान् । मर्त्यलोकं जिहासतेति अस्माल्लोकादुपरते इति पूर्वापरानुरोधात् ॥ २८ ॥ ❀ ❀ एवं त्यक्ष्यन्देहमिति च ज्ञेयम् । एतच्च श्रीकृष्णसन्दर्भस्य त्रिनवतितमवाक्यप्रघट्टकदृष्ट्या विचार्य्यम् । तथाहि तदेवम् । यद्यपि भगवतः श्रीकृष्णस्य स्वयं भगवत्त्वं सुष्ठु निर्द्धारिते नित्यमेव तद्रूपत्वेनावस्थितिरपि सिद्धा तथापि मन्दधियां भ्रान्तिहानार्थमिदं विविच्यते । तत्र तावदाराधनावाक्येनैव सा सिद्ध्यति । आराध्यस्य भावे आराधनानोदनाया विप्रलिप्साजन्यत्वापत्तेः । तच्च परमाप्ते शास्त्रे न संभवति संभवे च पुरुषार्थाभावात् शास्त्रानर्थक्यं आरोपश्च परिच्छिन्नगुणरूप एव वस्तुनि कल्प्यते नानन्तगुणरूपे । श्रीस्वामिचरणैरपीदमेव पृष्टमेकादशान्ते । धारणाध्यानमङ्गलमित्यत्र धारणाया ध्यानस्य च मंगलं शोभनं विषयः । इतरथा तयोर्निर्विषयत्वम् । दृश्यते चाद्याप्युपासकानां साक्षात्कारस्तत्फलप्राप्तिश्चेति भाव इति । श्रूयते चैवं पञ्चमे नवसु वर्षेषु तत्तदवतारोपासनादि । यथोक्तं नवस्वपि वर्षेषु भगवान्नारायणो महापुरुषः पुरुषाणां तदनुग्रहायात्मतत्तद्व्यूहेनात्मनाद्यापि सन्निधीयत इति । सन्निधानं चेदं साक्षाद्रूपेणैव । श्रीप्रद्युम्नादौ गतिविलासादेर्वर्णितत्वात् । तत्र चात्मना स्वयमेवेत्युक्तम् । तथा नित्यत्व एव शालग्रामशिलादिषु नरसिंहत्वादिभेदश्च सङ्गच्छते । तत्तदवतारसान्निध्यादेव हि तत्तद्भेदः तथा श्रीकृष्णमधिकृत्यापि गीतं विष्णुधर्म्मोत्तरस्य श्रीकृष्णसहस्रनामप्रारम्भे । तस्य हृष्टाशयः स्तुत्वा विष्णुगोपांगनावृतः । तापिच्छश्यामलं रूपं पिच्छोत्तंसमदर्शयदिति । अग्रे च तद्वाक्यं मामवेहि महाभाग कृष्णकृत्यविदांवर पुरस्कृतोऽस्मि त्वद्भक्त्या पूर्णाः स्युस्ते मनोरथा इति तथा पाद्मनिर्व्वाणखण्डे । पश्य त्वं दर्शयिष्यामि स्वरूपं वेदगोपितमिति— श्रीभगवद्वाक्यानन्तरं ब्रह्मवाक्यं ततोऽपश्यमहं भूप बालं कालाम्बुदप्रभम् । गोपकन्यावृतं गोपं हसन्तं गोपबालकैः । कदम्बमूल आसीनं पीतवाससमद्भुतम् ॥ वनं वृन्दावनं नाम नवपल्लवमण्डितमित्यादि । त्रैलोक्यसम्मोहनतंत्रे श्रीमदष्टादशाक्षरप्रसङ्गे । अहर्निशं जपेन्मन्त्रं मंत्री नियतमानसः । स पश्यति न संदेहो गोपरूपधरं हरिमिति । गौतमीये च सदाचारप्रसंगे । अहर्निशं जपेद्यस्तु मंत्री नियतमानसः । स पश्यति न सन्देहो गोपवेषधरं हरिमिति । श्रीगोपालतापनीश्रुतिश्चैवम् । तदुहोवाच ब्राह्मणोसावनवरतं मेध्यातः स्तुतः परार्द्धान्ते सोऽबुध्यत गोपवेशो मे पुरस्तादाविर्व्वभूवेति । सिद्धनिर्देशोऽपि श्रूयते यथा वन्दे वृन्दावनासीनमिन्दिरानन्दमन्दिरमिति । बृहन्नारदीयारम्भे मङ्गलाचरणम् । गृहे संतिष्ठते यस्य माहात्म्यं दैत्यनाशकम् । द्वारकायाः समुद्भूतं सान्निध्यं केशवस्य च ॥ रुक्मिणीसहितः कृष्णो नित्यं निवसते गृहे ॥ इति । स्कन्धद्वारकामाहात्म्ये बलिं प्रति श्रीप्रह्लादवाक्यं व्रतिनः कार्त्तिके मासे स्नातस्य विधिवन्मम । गृहाणार्घ्यं मया दत्तं राधया सहितो हरे इति । पाद्मकार्त्तिकमाहात्म्ये तत्प्रातः स्नानार्घ्यमन्त्रः । एवञ्च श्रीमदष्टादशाक्षरादयो मन्त्रास्तत्तत्परिकरादविशिष्टतयैवाराध्यत्वेन सिद्धनिर्देशमेव कुर्व्वन्ति तदा आवरणादि पूजामन्त्राश्च । किं बहुना कर्मविपाकप्रायश्चित्तशास्त्रेऽपि तथा श्रूयते यदाह बौधायनः होमस्तु पूर्ववत् कार्यो गोविन्दप्रीतये ततः । इत्याद्यनन्तरं गोविन्द गोपीजनवल्लभेश कंसासुरघ्नत्रिदशेन्द्रवन्द्य गोदानतृप्तः कुरु मे दयालो अर्शोविनाशं क्षपितारिवर्ग ॥ इति अन्यत्र च यथा गोविन्द गोपीजनवल्लभेश विध्वस्तकंस त्रिदशेन्द्रवन्द्य । गोवर्धनाद्रिप्रवरैकहस्त संरक्षिता शेषगवां प्रवीण गोवेत्रवेणुक्षपणप्रभूतमान्ध्यस्तथोग्रं तिमिरं क्षपास्विति स्पष्टं च तथा तं श्रीगोपालतापन्यां गोविन्दं सच्चिदानन्दविग्रहं सुरभूरुहतलासीनं सततं समरुद्गणोऽहं तोषयामीति अतएव पुरस्कृतोऽस्मि त्वद्भक्त्येत्येवोक्तमिति अलं चैवम्विधप्रमाणसंग्रहप्रपञ्चेन । यतश्चिच्छक्त्यैकव्यञ्जितानां तत्परिच्छेदादीनामपि तथा नित्यावस्थितित्वेनाविर्भावतिरोभावावेव द्वितीयसन्दर्भे साधितौ स्तः सर्व्वथोत्पत्तिनाशौ तु निषिद्धौ ततस्तदवताराणां

किमुत स्वयं भगवतो वा तस्य किमुततरामिति यथाच व्याख्यातं जगृहे पौरुषं रूपमित्यत्र तत्त्ववादगुरुभिः व्यक्त्यपेक्षया जगृहे तथाहि मन्त्रभागवते अहेयमनुपादेयं यद्रूपं नित्यमव्ययम् स एवापेक्ष्यरूपाणां व्यक्तिमेव जनार्दनः ॥ अगृह्णाद्व्यसृजच्चेति कृष्णरामादिकां तनुम् ॥ पठ्यते भगवानीशो मूढबुद्धिव्यपेक्षया। तमसा ह्युपगूढस्य यत्तमःपानमीशितुः एतत् पुरुषरूपस्य ग्रहणं समुदीर्य्यते। कृष्णरामादिरूपाणां लोकव्यक्तिव्यपेक्षयेति। एवमेव प्रथमे द्वादशाध्याये विधूयेत्यादिपद्ये स्वामिभिरपि व्याख्यातं यत्र दृष्टस्तत्रैवान्तर्हितः नत्वन्यत्र गतः यतो विभुः सर्व्वगत इति तथा माध्वभाष्यप्रमाणिता श्रुतिश्च वासुदेवः सङ्कर्षणः प्रद्युम्नोऽनिरुद्धोऽहं मत्स्यः कूर्म्मो वराहो नारसिंहो वामनो रामो रामो रामकृष्णौ बुद्धः कल्किरहं शतधाहं सहस्रधाहममितोहमनन्तोऽहं नैवैते जायन्ते नैते म्रियन्ते नैषामज्ञानबन्धो न मुक्तिः सर्व्व एव ह्येते पूर्णा अजरा अमृताः परमा परमानन्दा इति चतुर्वेदशिखायां तथाच श्रीनृसिंहपुराणे युगे युगे विष्णुरनादिमूर्त्तिमास्थाय विश्वं परिपाति दुष्टहेति तथाच श्रीनृसिंहतापन्यां तद्भाष्यकृद्भिर्व्याख्यातं एतदेव नृसिंहावग्रहे नित्यमिति श्रुतिश्च सेयं ऋतं सत्यं परं ब्रह्म पुरुषं नृकेशरिविग्रहमिति एवञ्च ब्रह्मपाद्मोत्तरखण्डादावपि श्रीमत्स्यदेवादीनाञ्च पृथक् पृथक् वैकुण्ठलोकाः श्रूयन्ते। एवमेव जलेषु मां रक्षतु मत्स्यमूर्त्तिरिति नारायणवर्म्माद्युक्तमपि संगच्छते तस्मात् स्वयं भगवति श्रीकृष्णेऽप्यन्यथासम्भावनमनादिपापविक्षेप एव तदेवमभिप्रेत्य तान् दुर्बुद्धीनपि बोधयितुं तस्य स्वोपास्यत्वं श्रीशुकदेवेन प्रतिपादितं पतिर्गतिश्चान्धकवृष्णिसात्वतां प्रसीदतां मे भगवान्सतांपतिरिति अत्र विशेषजिज्ञासा चेत् कृष्णसन्दर्भो द्रष्टव्यः ॥ २९ ॥ ❀ ❀ अहं श्रीकृष्णरूप आश्रयो यस्येति ज्ञानस्यापि वैशिष्ट्यमुक्तं आत्मा अहमेव परमपुरुषार्थत्वेन विद्यते तेषां तेषामात्मवतां श्रेष्ठः ॥ ३० ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

इममभ्यर्हणीयं कथमहं शिष्यीकुर्य्यामिति स्वगतं ब्रुवन्नये महाभाग यद्भगवन्मुखादवगतं तस्य तदीययादवादीनाञ्च देहत्यागं विनैव स्वस्वधामस्थितत्वं तत्तन्मयोक्तमेव किंतु तदीयजन्मकर्माद्यञ्चेद् विशेषतत्त्वानि जिज्ञाससे चेत् तर्हि ऋषिर्मैत्रेय एव गुरुः कर्त्तव्य इत्याह नन्विति। ननु निश्चितमेव तस्य भावस्तत्त्वं तेन स्वभृत्यार्थकृतत्वेन गुरुत्वेनेति यावत् संराध्य आराध्यो मैत्रेय एव न तु अहं यतस्तदुपदेशार्थं ममांतिके भगवता साक्षात् स आदिष्ट एव ॥ २६ ॥ ❀ ❀ तां निशां क्षणमिव समुषितः औपगविः औपगवस्यापत्यमुद्धवः ततः प्रातरगात् ॥ २७ ॥ ❀ ❀ निधनं नाशं यद्यस्मात्त्र्यधीशो हरिरपि आ सम्यक् प्रकारेण कृतिं चेष्टां लीलां तत्यजे समाप्तीचकारेति प्रकटोऽर्थः वस्तवर्थस्तु नितरां धनं सर्व्वस्वं कृष्णं प्रपञ्चागोचरीभूतमपि उपगतेषु निकटं प्राप्तेषु वृष्ण्यादिषु स तु उद्धवः कथमवशिष्टः तदीयविरहसन्तापमुपलब्धुमेकांशेनापि प्रकटतया स्थित्यनौचित्यादिति भावः। न च स वृष्ण्यादिष्वप्रसिद्धो मन्तव्यः यतः अधिरथेत्यादि। ननु बदरीं त्वं प्रयाहीति भगवदाज्ञां कथमन्यथा कुर्य्यात्तत्राह यस्य हरिः सर्व्वदुःखहर्त्तापि प्रभुः आकृतिं इङ्गितमपि तत्याज। आकारस्त्विङ्ग इंगितमित्यमरः। व्रजदेवीषु तद्यातमाचिरं गोष्पम्। शुश्रूषध्वं पतीन् सतीरितिवदाज्ञादानसमये यदि किमपींगितमकरिष्यत्तदा महासुबुद्धिरसावुद्धवो बदरिकाश्रमं नागमिष्यत्तत्समीप एवास्थास्यदित्यर्थः ॥ २८ ॥ ❀ ❀ प्रत्युत्तरमाह ब्रह्मशापापदेशः प्रपञ्चागोचरीकरणे मिषं तेन स्वकुलं संहृत्य अचिन्तयत् कालेनापि अमोघं व्यर्थीकर्त्तुं अशक्यं वाञ्छितमिच्छा यस्य सः। स्फीतं स्वमर्य्यादातोप्यतिविस्तृतं देहं त्यक्ष्यन् अचिन्तयत्। तद्देहस्य निबन्धनं प्रापञ्चिकलोकचक्षुर्गोचरीभूतत्वमेव स्फीतत्वम्। तत्र सविशेषणे हि विधिनिषेधौ विशेषणमुपसंक्रामतः सति विशेष्यबाध इति न्यायेन त्यागक्रिया विशेषण एवान्वेति न तु विशेष्ये यथा चैत्रो राजा भवति देहं त्यक्ष्यन् पुष्टमसौ चकार इयं साध्वी स्त्री नष्टाऽभवदिति। अत्र त्यागक्रियाया देहेऽन्वयबाधो भगवद्देहस्य सच्चिदानन्दरूपत्वेन नित्यत्वात् तथाहि महावाराहे। सर्व्वे नित्याः शाश्वताश्च देहास्तस्य परात्मनः। हानोपादानरहिता नैव प्रकृतिजाः क्वचित्। परमानन्दसन्दोहा ज्ञानमात्राश्च सर्व्वत इति। तथा माध्वभाष्यप्रमाणिता श्रुतिश्च वासुदेवः सङ्कर्षणः प्रद्युम्नोऽनिरुध्दो हंसो मत्स्यः कूर्म्मो वराहो नरसिंहो वामनो रामो रामो रामकृष्णौ बुद्धः कल्किरहं शतधाहं सहस्रधाहममितोऽहमनन्तोऽहं नैवैते जायन्ते नैते म्रियन्ते नैषां बन्धो न मुक्तिः सर्व्व एव ह्येते पूर्णाः अजरा अमृताः सच्चिदानन्दरूपत्वेन विभुत्वेपि स्वरूपाः परमानन्दा इति गोविंदं सच्चिदानन्दविग्रहं वृन्दावनसुरभूरुहतलासीनमिति गोपालतापनी ऋतं सत्यं परं ब्रह्म पुरुषं नृकेसरिविग्रहमिति नृसिंहतापनी च। तथा अत्रैव कृष्णद्युमणि निम्लोच इति। आदायान्तरधाद्यस्तु स्वबिंबं लोकलोचनमिति व्रजपुरवनितानां वर्द्धयन् कामदेवमित्यादिश्रुतिस्मृतिवाक्यानि बहून्येव द्रष्टव्यानि। अत्र तु प्रकटार्थेन देहत्यागमवगमय्य पूर्वापरवाक्याविरोधमनवधार्य्य च आसुरप्रकृतय एव प्रेमभक्त्यमृताद्वञ्चिताः श्रीभगवतस्स्वमोहिनीत्वे व्याख्यातत्वात् व्याख्यास्यमानत्वाच्च न्यूनमिति पाठे तु निश्चितं ऊनं देहं स्वांशरूपं नारायणाभिधं अवतारकाले स्वस्मिन् वैकुण्ठादागत्य मिलितं सम्प्रति पुनर्वैकुण्ठे प्रस्थापयितुं स्वदेहाद्विभज्य त्यक्ष्यन् आगतेभ्यो ब्रह्मादिभ्यः पालनार्थं दास्यन् त्यजेर्दानार्थत्वात् देहं विराडाकारं पृथ्वीमिति संदर्भः ॥ २९ ॥ ❀ ❀ अस्मात् प्रापञ्चिकलोकादुपरते स्वीयरूपगुणलीलामाधुर्य्यवृष्टिभ्यो विरते सति अहमेवाश्रयो यस्य तत् अहं यज्जानामि तदुद्धवोऽपि ज्ञातुमर्हतीत्यर्थः। मां दिदृक्षून् मन्मुखाज्ज्ञानं जिज्ञासून् बदरिकाश्रमवासिनो मुनीन् मत् प्रतिमूर्त्तित्वेन ज्ञानं ग्राहयितुमिति भावः। आत्मा अहमेव स्वामित्वेन वर्त्तेयेषां तेषामात्मवतां वरः श्रेष्ठः ॥ ३० ॥

**श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः**

ननु हे विदुर ! तत्त्वसंराध्यः तत्त्वोपदेशार्थं संराध्यः पूजनीयः मे इति मम समीपे त्वदुपदेशार्थं साक्षाद्भगवता आदिष्ट आज्ञप्तः ॥ २६ ॥ ❀ ❀ औपगविरुद्धवः गुणकथया सुधया प्लावितः अपनीत उरुस्तपो यस्य सः यमस्वसुर्यमुनायाः पुलिने तां निशां क्षणमिव समुषितः तां रात्रिं क्षणमिव नीत्वा ततः पुलिनादगात् ॥ २७ ॥ ❀ ❀ आकृतिं त्रिगुणाभिव्यक्तिरूपं लोकम् । त्र्यधीशः त्रिगुणनियंता ॥ २८ ॥ ❀ ❀ अमोघं वांछितं यस्य सः भगवान् ब्रह्मशापः अपदेशो मिषं यस्य तेन स्वशक्तिभूतेन कालेन स्वं कुलं संहृत्य देहं लीलायतनं ब्रह्मांडं त्यक्ष्यन् अचिंतयत् ॥ २९ ॥ ❀ ❀ मदाश्रयं मद्विषयम् ॥ ३० ॥

**श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या**

विदुरोक्तमभिप्रायमङ्गीकृत्य, सामान्यन्यायोऽयमेवेति मत्वा, विदुरे भगवत्कृतो विशेषोऽस्तीति भगवद्वाक्यपरिपालनार्थं भिन्नेन प्रकारेणोपदिशति—ननु ते इति । तत्त्वोपदेशस्तु भगवता कृत एव, केवलम् 'आचार्यवान् पुरुषो वेद' इति विधिपरिपालनार्थं यदि कश्चिद् गुरुः सेव्यः, तदा भगवतैव निर्दिष्टः कौषारवो मैत्रेयस्ते तव तत्त्वज्ञानार्थं संराध्यः । यतः स ऋषिः, भगवदीयत्वेऽपि ऋषित्वं तत्राऽधिकमित्यर्थः । भगवता च निर्दिष्ट इति सोऽवश्यं तुभ्यं वक्ष्यति । तदाह—साक्षाद्भगवताऽऽदिष्ट इति । तादृशे समये आज्ञप्तः, सन्देहो वा पुनः प्रश्नो वा यत्र नोत्पद्यत एव । तदाह—मर्त्यलोकं जिहासतेति । अतः परमस्मिन् लोके स्थितस्तदाज्ञां चेन्न कुर्यात्सोऽपि लोकवत्त्यक्तव्य एव स्यात्, अतः सर्वांस्त्यजन् भगवांस्तं परिगृह्याऽऽह 'विदुर उपदेष्टव्यः' इति । अतः सर्वथा स उपदेक्ष्यति । भगवदाज्ञा च पुनस्त्वया मयाऽपि कर्त्तव्या, अतस्तत्र गच्छेत्यर्थः ॥ २६ ॥ ❀ ❀ एवं विदुरमुक्त्वा स गत इति वक्तुम्, प्रसङ्गादन्यां कथामुपसंहारव्याजेन कथयति—इतीति । सन्ध्याकाले यमुनातीरे दृष्ट उद्धवः प्रातःकालपर्यन्तं भगवत्कथामेव कथितवान्, यथा यथा यस्मिन्नवसरे पुष्ट्यादिलीलया स्वस्मिन् कृपां कृतवान् । एवं विदुरोऽप्युद्धवं प्रति भगवत्कृपाकथां कथयति स्म । तदाह—सह विदुरेणेति । इतीत्युपसंहारः । प्रसङ्गादन्यामपि कथां कथयन्तौ भविष्यत इत्याशङ्क्य तन्निराकरणार्थमाह—विश्वमूर्त्तेरिति । विश्वमेव मूर्त्तौ यस्य । अनन्तमूर्तिर्वा भगवान्, तेन प्रासङ्गिक्यपि कथा भगवद्विषयिकैव भवति । अतस्तस्याऽनन्तगुणस्य सर्वोत्तमत्वप्रतिपादका ये धर्मास्तत्कथयैव क्षुत्पिपासाश्रमादयः सर्वे तापा उभयोरपि निवृत्ताः । ननु कथया कथं क्षुत्पिपासादिकं निवर्त्तते, स्वाभाविकत्वाद्दोषाणाम्; कथायाश्च तन्निवर्त्तकत्वेन लोके प्रसिद्ध्यभावादस्वाभाविकत्वम्, अतः कथं निवर्त्तकत्वमिति चेत्तत्राऽऽह—सुधयेति । अमृतरूपा हि सा । अमृतं हि तथा भवतीति लोकसिद्धम् । सा कालकृतमपि निवर्त्तयति जरामरणादिकम्, किमुत कालाधीनकर्मस्वभावकृतनिवर्त्तकत्वम् । किञ्च, अल्पयाऽपि कथया सुधया लोका अमरा जायन्ते, अत्र तु महानमृतपूरः; येन आ समन्तात् प्लुत उरुतापो यस्य । अत एव कालोऽपि तेन न ज्ञात इत्याह—क्षणमिवेति । देशकृतोऽपि दोषस्तस्य न स्फुरित इत्याह—पुलिने यमस्वसुरिति । यमभगिनी हि कालिन्दी मकरादिसर्वदुष्टजन्तुसमाश्रिता, तस्याः पुलिने रात्रौ सर्वदोषाः सम्भवन्ति, तेऽपि न स्फुरिताः । अत एव तां निशां सम्यगुषितः । ननु निद्रया पीडितः कथं वार्त्तां कृतवांस्तत्राऽऽह—औपगविरिति । उपगोरपत्यमौपगवः, तस्याऽपत्यमौपगविः । अथवा, 'एको गोत्रे' इति निर्वन्धे बाह्वादित्वादिञेव । उप समीपे गावो यस्य स उपगुरिति, गोरक्षकत्वाद्रात्रौ जागरणाभ्यासः । तस्य चाऽयमपत्यम्, तत्स्वभाव एव । अतस्तां निशां वार्त्तयैव समुषितः । प्रातःकाले तस्मात् पुलिनात् बदरिकाश्रमं गत इत्यर्थः । भगवद्वियोगेऽपि भगवत्कथया स्थित इति सम्यगुषितः । स एव निवासः समीचीनः, यो विषयान्तराभावेन भगवत्कथयैव गच्छतीति सिद्धान्तः ॥ २७ ॥ ❀ ❀ विपर्यय[1]बुद्धिं मायां च[2]ैकीकृत्य प्रश्नोत्तररूपेण निरूपयति—निधनमुपगतेष्विति षड्भिः—विपर्ययः प्रश्न एव, माया सिद्धान्तगोपने । सिद्धान्तकथनेऽप्यस्य बुद्धिः [3]पर्यवसानगा । १ । कथामात्रं शुको राज्ञे कथयिष्यतीति सि[4]द्धान्तात्, न सप्तार्थी[5] राज्ञा बुद्धा । न वा एते शब्दाः, किन्तु शब्दान्तरैरेतैश्च यथासम्भवं कथैव श्रुता । अतोऽस्य भगवत्स्वरूपाज्ञानादेव प्रश्नो युक्त एव । स हि शापादेव सर्वं जातमिति मन्यते, यथा स्वतक्षकम् । ततः पृच्छति—निधनमुपगतेषु निधनं मरणं प्राप्तेषु । वृष्णिभोजेष्विति षट्सु यादवेषु द्वौ बहुवचनान्तौ निर्दिष्टौ, षण्णां सात्त्विकादित्वख्यापनाय । वृष्णिभोजेषु निधनमुपगतेषु सत्स्वुद्धवः कथमवशिष्टः ? इति प्रश्नः । नन्वप्रयोजका बहव एव तिष्ठन्ति; शापश्च प्रधानपरः; अत एव भगवद्वाक्यम्, 'स्त्रियो बालाश्च वृद्धाश्च' इति । तथाऽयमपि संन्यासी उर्वरित इति चेत्तत्राह—अधिरथयूथपयूथपेषु मुख्य इति । अधिरथानां यूथपाः सेनापतयो महामात्रतुल्याः, तेषां यूथं पान्तीति महाराजा ( नो ) जरासन्धप्रभृतयः, क्षत्रियाणां बलेनैवाऽऽधिक्यात्; तेष्वपि मुख्यो महाबल इत्यर्थः । अतः स कथमवशिष्टः ? यस्मान्नाम्नैव स तादृश इत्याह—उद्धवो यदिति । यस्मादुद्धवः, ऊर्ध्वं हवो यस्य । सर्वापेक्षया तस्य सङ्ग्राम उच्चैर्भवतीति । उत्सवपरत्वेऽपि क्षत्रियाणां युद्धादेवोत्सवो भवति । प्रायिकमेतदिति चेत्, तथा सति शापवैयर्थ्यापत्तेः । उद्धतपरमिति चेत्तत्राऽऽह—हरिरपीति ।

---

१. स्कन्धार्थविचारेणाग्रिमग्रन्थैका बुद्धिरुच्यत इत्यपेक्षायां तामाहुः-विपर्ययबुद्धिमित्यादि प्र. । २. चोऽप्यर्थे प्र. । ३ परिदृश्यमाननिधनरूपपदार्थग्राहिका प्र. । ४. अयंसिद्धान्तः प्रथमस्कन्धनिबन्धनादवगन्तव्यः प्र. । ५. अनीहत्वाऽभवत्वकालात्मत्वाऽऽत्मारामत्वाऽकुण्ठिताखण्डसदात्मबोधत्वाप्रमत्तत्वदेवत्वरूपा प्र. ।

औद्धत्यशङ्काऽपि यत्र नाऽस्तीत्यर्थः। यादवाकृतिम्, यथा नरवानरादेरेकान्नजबीजत्वेऽपि पूर्वबीजसन्ततिपाताज्जात्यैव भेदो[1] भवति, एवं ब्राह्मणक्षत्रिययोर्यादवायादवयोश्च। अतो यादवेषु कश्च[2]नधर्मो वर्त्तते येन त इति ज्ञायन्ते, तन्निवृत्त्यर्थमेव शापः। अतो यादवत्वख्यापनार्थं भगवांस्तल्लक्षणं स्वरूपे प्रदर्शितवान्, तदेवाऽऽकृतिशब्देनोच्यते; तां तत्यज इति स्व[3]बुद्धिः। त्र्यधीश इति गुणत्रयस्वामी, सर्वमन्यथाकर्तुं समर्थः। तादृशोऽपि शापं नाऽन्यथा कृतवानित्यर्थः॥ २८॥ ❀ ❀ शुकस्तद्बुद्धिमनुसृत्यैव, भगवानिव तां बुद्धिं लोके स्थापयितुम्, प्रकारान्तरेण समाधानमाह—ब्रह्मशापापदेशेनेति। ब्रह्मशाप इत्यपदेशमात्रम्, किन्तु स्वाज्ञाकारिणा कालेन सर्वं कुलं संहृत्य आज्ञामपीच्छयैव कृतवान्। पश्चात्स्वयमेव सर्वमेव लोकं त्यजन्, बीज[4]भावेन प्रवेशं कुर्वन्, एवमचिन्तयत्। तदाह—अस्माल्लोकादिति। निश्चयेन मया अयं लोकस्त्यक्तव्यः। तत्र गुणपञ्चकानां कार्यस्य जातत्वात् ज्ञानकार्यमवशिष्यते। तत्तु न ग्रन्थमात्रेण भवति, प्रत्यग्रसन्देहानां तत्राऽनिराकरणात्। अतः केनचित्पुरुषेण तत्प्रवर्त्तकेन स्थातव्यम्। तत्र ममाऽनन्तगुणत्वेऽपि, प्रचार्यमाणे ज्ञाने, अहं वा, उद्धवो वा प्रचारणसमर्थो भवति। यतस्तत् ज्ञानं मद्विषयकमेव, न ह्यन्यो मां जानाति। अहं वा जानामि, 'भक्त्या मामभिजानाति' इति ज्ञानपूर्णभक्तो वा। अत उद्धवं ज्ञानपूर्णं भक्तं ज्ञात्वा स्वस्थाने तं स्थापितवान्। किञ्च, तत् ज्ञानं मदाश्रयम्, मामेवाऽऽश्रित्य तिष्ठति, भगशब्दवाच्यगुणमध्यपातात्। शब्दाश्रितं तु ज्ञानं वाक्यश्रवणात् सर्वस्यैवाऽधिकारिणो भवति, इदं तु मय्येव हृदि स्थिते मत्सङ्गेन समायाति। नारदादयोऽपि शास्त्राश्रितमेव ज्ञानं समाश्रिताः, इदं तु पुष्ट्यात्मकम्। अहं तु स्वस्मिन् वा भक्ते वा तिष्ठामि, अतो भक्तोत्तमत्वात् साक्षादुद्धव एवाऽर्हति। ननु सन्ति ज्ञानिनोऽन्येपि भक्ताश्च, कोऽस्मिन् विशेष इत्याशङ्कयाऽऽह—सम्प्रत्यात्मवतां वर इति। सम्प्रति मज्ज्ञानधारकः कोऽपि नास्ति। अत्राऽङ्गत्रयमपेक्ष्यते; ज्ञानम्, भक्तिरतिः, जितेन्द्रियता च। तत्त्रयं कस्याऽपि नास्ति, एकेन द्वयेन वा नेदं ज्ञानं तिष्ठति। अयं च कालः सर्वानेवाऽजितेन्द्रियानेव करोति, तस्मादुद्धव एव सम्प्रत्यात्मवतां वरः॥ २९॥ ३०॥

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

निधनेत्यत्र। स्कन्धार्थविचारेणाऽग्रिमग्रन्थे का बुद्धिरुच्यत इत्यपेक्षायां तामाहुः—विपर्ययबुद्धिमित्यादि। चोऽप्यर्थे। सकारणान्तां कारिकया विवृण्वन्ति—विपर्यय इत्यादि। तादृशाधिकारविरहेण मायया सिद्धान्तगोपने कृते सति शुकेन सिद्धान्तकथनेऽपि अस्य राज्ञो विदुरपृष्टे भगवच्चरित्र एव विपर्ययः, विपर्ययरूपा बुद्धिरुत्पन्नेत्युच्यते। तत्र गमकं पर्यवसानगेति। परिदृश्यमाननिधनरूपदार्थग्राहिकेति। इति सिद्धान्वादिति। अयं सिद्धान्तः प्रथमस्कन्धनिबन्धादवगन्तव्यः। न सन्नार्थो राज्ञा बुद्धेति। अनीहत्वाभवत्वकालात्मत्वात्मारामत्वाकुण्ठिताखण्डसदात्मबोधत्वाप्रमत्तत्वदेवत्वरूपा राजा पूर्वं न बुद्धचराः। आकृतिं निश्चाययितुमाहुः—यादवाकृतिमिति। एतमर्थं व्युत्पादयन्ति-यथेत्यादि। भेद इति। आकृतिभेदः। कश्चनेति। प्रायो ज्ञापको नियतव्यञ्जकः। स्वबुद्धिरिति राज्ञो विपर्ययबुद्धिः॥ २८॥ ❀ ❀ अस्मादित्यत्र। प्रवेशं कुर्वन्निति। अधिकारिबुद्धौ प्रवेशं कुर्वन्। परोक्षवादत्वात् उत्सृज शब्दार्थत्वाच्च नाऽत्र लक्षणादोषः॥ ३०॥

### श्रीगिरिधरकृता बालप्रबोधिनी

विदुरेणेत्थं प्रार्थित उद्धव आह—नन्विति निश्चितमेतत्, ते तव तत्त्वज्ञानाय संराध्य ऋषिः कौषारवो मैत्रेय एव, यतो मे अन्ति समीपे त्वदुपदेशाय साक्षाद्भगवतैवादिष्टः तीर्थान्यटित्वा भवन्तमुपसन्नाय विदुरायैतदुपदेष्टव्यमित्याज्ञप्तः। तर्हि मामाहूय भगवानेव साक्षात् कुतो नोपदिष्टवानित्याशङ्कयावसराभावादित्याशयेनाह—मर्त्यलोकं जिहासता हातुमिच्छतेत्यर्थः॥ २६॥ ❀ ❀ विदुरोद्धवसंवादमुपसंहरति—इतीति। इत्येवं विदुरेण सह विश्वमूर्तेः विश्वं मूर्तौ यस्य तस्य श्रीकृष्णस्य गुणानां कथया प्लावितः अपनीतः उरुः आध्यात्मिकाधिदैविकाधिभौतिकभेदेन त्रिविधस्तापो यस्य स औपगविः उद्धवः यमस्वसुः यमुनायाः पुलिने तीरे तां निशां रात्रिं क्षणमिव सम्यक् भगवद्गुणं कथयन्नुषितः सन् प्रातःकाले ततो यमुनातीराद्बदरिकाश्रमं प्रत्यगादित्यन्वयः। ननु कथं कथामात्रेण तापनिरासः कथं वा रात्रेः क्षणमात्रत्वमित्यपेक्षायां कथया परमानन्दे निमग्नस्य तदनुसन्धानाभावादित्याशयेन कथां विशिनष्टि—सुधयेति। सुधायास्तापनिवर्तकत्वं सर्वविस्मारकत्वं च लोकप्रसिद्धमेवेति भावः॥ २७॥ ❀ ❀ अत्रोद्धवविषये सन्दिग्धो राजा पृच्छति—निधनमुपगतेष्विति। वृष्णिभोजेषु निधनं ब्रह्मशापेन नाशमुपगतेषु सत्सु स तु उद्धव एकः कथमवशिष्ट इत्यन्वयः। अस्यापि शापविषयत्वादिति भावः। ननु शापस्य मुख्यविषयत्वात् सोऽवशिष्ट इत्याशङ्कय तं विशिनष्टि। यत् यस्मात् शापात् त्र्यधीशो लोकत्रयेशो हरिः श्रीकृष्णोऽपि आकृतिं मनुष्यनाट्यं तत्याज, काऽन्यस्य कथेत्यर्थः॥ २८॥ ❀ ❀ एवं पृष्टः श्रीशुको नात्र केवलं ब्रह्मशाप एव हेतुः किन्तु स द्वारमात्रं मुख्यो हेतुस्तु भगवदिच्छैवेति यथा तदिच्छया यादवा विनष्टास्तथैव तदिच्छयोद्धवोऽवशिष्ट इत्याशयेनाह—ब्रह्मशापेति। ब्रह्मशापमिषेण कालेन स्वचेष्टारूपेण स्वकुलं संहृत्य स्वदेहमपि त्यक्ष्यन् इदं वक्ष्यमाणमचिन्तयत्। कथं तच्चिन्तनेऽपि कार्यसिद्धिरित्यपेक्षायामाह-अमोघवाञ्छित इति। अमोघं

---

१. आकृतिभेदः प्रकाशः। २. प्रायोज्ञापको नियतव्यञ्जकः प्र.। ३. राज्ञो विपर्ययबुद्धिः प्र.। ४. अधिकारिबुद्धौ प्रवेशं कुर्वन्। ५. परोक्षवादत्वाद्धु 'उत्सृज्' शब्दार्थत्वाच्च नाऽत्र लक्षण.दोषः प्र.।

सत्यं वाञ्छितं सङ्कल्पो यस्य सः। नात्र सन्देह इत्याह—नूनमिति ॥ २९ ॥ ❀ ❀ भगवच्चिन्तामेव दर्शयति—अस्मादिति । अस्मात् मर्त्यलोकात् मय्युपरते अन्तर्हिते सति मदाश्रयं मदधीनं ज्ञानं सम्प्रति इदानीमुद्धव एव अद्धा साक्षात् अर्हति स्वयं गृहीतुमन्यान् ग्राहयितुं च योग्यो भवति, नान्यः । यतः आत्मवतां वशीकृतान्तःकरणानां मध्ये वरः श्रेष्ठः ॥ ३० ॥

### हिन्दी अनुवाद

उद्धवजीने कहा—उस तत्त्वज्ञान के लिये आपको मुनिवर मैत्रेयजीकी सेवा करनी चाहिये। इस मर्त्यलोकको छोड़ते समय मेरे सामने स्वयं भगवान्ने ही आपको उपदेश करनेके लिये उन्हें आज्ञा दी थी ॥ २६ ॥ ❀ ❀ श्रीशुकदेवजी कहते हैं—इस प्रकार विदुरजीके साथ विश्वमूर्ति भगवान् श्रीकृष्णके गुणोंकी चर्चा होनेसे उस कथामृतके द्वारा उद्धवजीका वियोगजनित महान् ताप शान्त हो गया। यमुनाजीके तीरपर उनकी वह रात्रि एक क्षणके समान बीत गयी। फिर प्रातःकाल होते ही वे वहाँसे चल दिये ॥ २७ ॥ ❀ ❀ राजा परीक्षितने पूछा —भगवन्! वृष्णिकुल और भोजवंशके सभी रथी और यूथपतियोंके भी यूथपति नष्ट हो गये थे। यहाँतक कि त्रिलोकीनाथ श्रीहरिको भी अपना वह रूप छोड़ना पड़ा था। फिर उन सबके मुखिया उद्धवजी ही कैसे बच रहे ? ॥ २८ ॥ ❀ ❀ श्रीशुकदेवजीने कहा—जिनकी इच्छा कभी व्यर्थ नहीं होती, उन श्रीहरिने ब्राह्मणोंके शापरूप कालके बहाने अपने कुलका संहार कर अपने श्रीविग्रहको त्यागते समय विचार किया ॥ २९ ॥ ❀ ❀ 'अब इस लोकसे मेरे चले जानेपर संयमिशिरोमणि उद्धव ही मेरे ज्ञानको ग्रहण करनेके सच्चे अधिकारी हैं ॥ ३० ॥

**नोद्धवोऽण्वपि मन्न्यूनो यद्गुणैर्नार्दितः प्रभुः । अतो मद्वयुनं लोकं ग्राहयन्निह तिष्ठतु ॥ ३१ ॥**
**एवं त्रिलोकगुरुणा सन्दिष्टः शब्दयोनिना । बदर्याश्रममासाद्य हरिमीजे समाधिना ॥ ३२ ॥**
**विदुरोऽप्युद्धवाच्छ्रुत्वा कृष्णस्य परमात्मनः । क्रीडयोपात्तदेहस्य कर्माणि श्लाघितानि च ॥ ३३ ॥**
**देहन्यासं च तस्यैवं धीराणां धैर्यवर्धनम् । अन्येषां दुस्करतरं पशूनां विक्लवात्मनाम् ॥ ३४ ॥**
**आत्मानं च कुरुश्रेष्ठ कृष्णेन मनसेक्षितम् । ध्यायन् गते भागवते रुरोद प्रेमविह्वलः ॥ ३५ ॥**
**कालिन्द्याः[1] कतिभिः सिद्ध अहोभिर्भर[2]तर्षभः । प्रापद्यत स्वःसरितं यत्र मित्रासुतो मुनिः ॥ ३६ ॥**

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां तृतीयस्कन्धे विदुरोद्धवसंवादे चतुर्थोऽध्यायः ॥ ४ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

मत्तः सकाशादीषदपि न्यूनो न भवति यद्यस्माद् गुणैर्विषयैर्न क्षोभितः मद्वयुनं मद्विषयं ज्ञानं लोकस्योपदिशन्निह तिष्ठतु ॥ ३१ ॥ ❀ ❀ एवमनेनाभिप्रायेण शब्दयोनिना वेदकर्त्रा ईजे पूजयामास ॥ ३२, ३३ ॥ ❀ ❀ अन्येषां पशूनां पशुतुल्यानां विक्लवात्मनामधीरचित्तानाम् ॥ ३४ ॥ ❀ ❀ मनसेक्षितं चिंतितम् ॥ ३५ ॥ ❀ ❀ कालिंद्याः सकाशात् सिद्ध एव विदुरः कतिपयैर्दिनैः स्वःसरितं गंगां प्रापद्यत प्राप्तः ॥ ३६ ॥

इति भागवततृतीयस्कंधे टीकायां चतुर्थोऽध्यायः ॥ ४ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

यद्वा गुणैरप्राकृतैर्बलबुद्धिवीर्यज्ञानवैराग्यादिभिर्नार्दितः तेषां वेगधारणसामर्थ्यमेव तैरनार्दितत्वमत्र बोध्यं यथा कामादिवेगधारणसामर्थ्यमेव कामाद्यनार्दितत्वमुच्यते । उद्धवो हि अधिरथयूथपयूथपेषु मुख्य इत्युच्यते तदपि न क्वापि तादृशस्याप्राकृतबलस्याविष्कारः कृत इति बलवेगधारणमस्यास्तीत्येवं बुद्ध्यादिवेगधारणं ज्ञेयं तदेवाहाहमिवासाधारणः प्रभुर्वशीकृतमाप इत्यर्थः । मद्वयुनं "ज्ञाने गत्या च तंतूनां विस्तारे वयुनं स्मृतम्" इति निरुक्तिः । इह बदरिकाश्रमे मुनिद्वारा लोकं ग्राहयन् ॥ ३१ ॥ ❀ ❀ संदिष्टः संदेशपत्रं दत्त्वा प्रेषित इमं संदेशं नरनारायणौ ब्रूहीत्यर्थः । स च नोद्धवोऽण्वपि इति पद्यमेव शब्दानां वेदलक्षणानामपि योनिनोत्पादकेन अनेन वेदेष्वप्यनुपलभ्यज्ञानं भगवत्यस्तीति ध्वनितं तच्चोद्धवे न्यस्तमित्यनुध्वनिः । उद्धवमुखान्नरनारायणौ तदेव प्राप्ताविति प्रत्यनुध्वनिः । संदेशपत्रं च स्वस्तिश्रीमन्नरनारायणौ प्रति विज्ञापनं चेदम्—सपादशतवर्षपर्यंतश्च मम प्रकाशगता लीला भवेत्तन्मर्यादा च संप्रति वृत्तेति द्वारकायां च मया सपरिकरेणांतर्धीयते प्रभासं च गत्वावतारिताधिका-

१. प्रा. पा.—कालिन्द्यां । २. प्रा. पा.—पारमेद्वा ।

रिकदेवांस्तत्तत्पदे प्रस्थाप्य ब्रह्मप्रार्थितेनैकेनांशेन वैकुंठे सार्जुनेनांशेनालक्षितं युष्मत्पदे च गम्यते। किञ्च मत्पूर्णस्वरूपदर्शनोत्कंठानां युष्माकं कृते मत्प्रियपार्षदमुख्येऽस्मिन्नुद्धवे स्वसारूप्यसाद्गुण्येऽर्पिते यतः "नोद्धवोण्वपि मन्न्यूनो यद्गुणैर्नार्दितः प्रभुः। अतो मद्वयुनं लोकं ग्राहयन्निह तिष्ठति" इदम्॥ ३२॥ ❀ ❀ क्रीडया लीलाशक्त्या कर्त्र्या उपाधिक्येनात्त उपात्तो गृहीतो देहो यस्य तस्य लीलाशक्तेरधीनावेव तस्याविर्भावतिरोभावाविति भावः॥ ३३॥ ❀ ❀ देहस्य न्यासो निक्षेप इव गुप्तरक्षणं धीराणां योगिभक्तानां धैर्यवृद्धये एवान्यथाभगवद्देहत्यागं श्रुत्वा तेषामपि धैर्यं नश्यदिति भावः। यद्वा धीराणां यादवादीनां देहानां न्यासं द्वारकायामप्रकटप्रकाशेऽर्पणप्रभासे च त्यागं श्रुत्वा कीदृशम्। धैर्यवर्द्धनं श्रुत्वैव विदुरो हृदि धैर्यमेतदनिवार्यमत्र शोको न कार्य इत्येवं धृतिं चकारेत्यर्थः। यद्वा वर्द्ध च्छेदनेपि। अहो एतादृशानां यदीत्थं गतिः किं पुनरन्येषां मादृशामिति धैर्यच्यावकमित्यर्थः। अन्येषामभक्तानां योगिनामपि एकत्र देशे देहस्यांतर्द्धापनमन्यत्र देशे त्यागत्वेन लोके ज्ञापनमिति योगिभिरपि दुष्करमतिशयेनेत्यर्थः। संदर्भस्तु। देहन्यासमप्रकटलीलावकाशे धाम्नि स्वविग्रहस्य विन्यासं प्रवेशनमित्याह—पशूनां केवलकर्ममार्गसक्तानां 'पशुर्वै स देवानाम्' इति श्रुतेः। अत एव विक्लवात्मनामेवं कर्तुं व्याकुलमनसाम्॥ ३४॥ ❀ ❀ आत्मानं स्वं विदुरमिति यावत्। चिंतितं मैत्रेयं त्वया मच्छ्रुतं विदुराय वाच्यमिति स्मृतं ध्यायन् अहो मद्भाग्यं श्रीकृष्णेन लोकं त्यक्तवताप्यहं स्मृत इति चिंतयन्। भागवते उद्धवे अहो विदुरो यो भगवता चिंतितः स धन्योहं तु मंदभाग्योस्मीति चिंतयानं श्रीशुकः प्रोत्साहयति त्वं तु मृत एव तेन जीवितोऽतस्तस्मादपि श्रेष्ठोसीत्याह—कुरुश्रेष्ठेति॥ ३५॥ ❀ ❀ सिद्ध एव कृतकृत्य एव यत्र स्वःसरिति मित्रासुतो मैत्रेयः॥ ३६॥

इति श्रीभागवतभावार्थदीपिकाप्रकाशे तृतीयस्कन्धे चतुर्थोऽध्यायः॥ ४॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपनी व्याख्या

समाधिना स्फूर्त्तिविशेषेण ईजे साक्षादिव सिषेवे॥ ३२॥ ३३॥ ३४॥ ३५॥ ❀ ❀ विदुर इति त्रिक्रम्। क्रीडया प्रपञ्चं निष्प्रपञ्चोपि विडम्बयसि भूतल इति न्यायेन भक्तसुखकारिण्या लीलयोपात्तः प्रपञ्चे प्रकटीकृतो देहो येन तस्य देहन्यासं तस्यैव देहस्य प्रपञ्चात्तिरोधापनेनाऽप्रपञ्चधाम्नि विन्यासस्थापनं तं विशिनष्टि धीराणां नित्यलीलास्फूर्त्तिशालिनां नित्यलीलात्वनिर्णयात्स्वप्राप्तिसंभावनायां धैर्यैवर्द्धनम्। अन्येषां तद्विपरीतभावनानां दुष्करतरं दुर्विभाव्यं काष्ठानि कुर्वित्यत्राहरेतिवत्सामान्यार्थो धातुर्विशेषार्थपरः स्वयं भगवता श्रीकृष्णेन चिंतितत्वात्सिद्ध एव॥ ३६॥

इति श्रीमद्भागवतमहापुराणे तृतीयस्कंधे टिप्पण्यां दीपिकादीपन्यां चतुर्थोऽध्यायः॥ २॥

### श्रीमद्वीरराघवव्याख्या

एतदेवाह नेति। उद्धव अतएवापि मन्न्यूनो मत्तो न्यूनो न भवति निरंजनः परमं साम्यमुपैति जगद्व्यापारवर्जं भोगमात्रसाम्यलिंगाच्च मम साधर्म्यमागता इत्यादिश्रुतिसूत्रस्मृत्यादिप्रतिपन्नं भोगे साम्यं विवक्षितं मुक्तौ मया सह समानभोगयोग्य इत्यर्थः। कुतः यद्यस्माद् गुणैः रजस्तमोमिश्रसत्त्वैस्तत्कार्यशब्दादिविषयैर्नार्दितः न पीडितः अतएव प्रभुः स्ववशीकृतेन्द्रियः। अनेन मुक्तिसाधनसमग्रसंपत्तिः सूचिता। अत आत्मवद्धरत्वान्मद्वयुनं मद्विषयं ज्ञानं लोकं ग्राहयन्मर्त्यलोके तिष्ठतु मुक्तिपर्यंतमिति शेषः॥ ३१॥ ❀ ❀ उपसहंरति एवमिति। एवं इत्येवं त्रिलोकगुरुणा शब्दयोनिना शास्त्रप्रमाणगम्येन भगवता संदिष्टः अज्ञाप्त उद्धवः बदर्याश्रममासाद्य समाधिना ध्यानयोगेन हरिं भगवन्तमीजे यष्टवान्॥ ३२॥ ❀ ❀ विदुर इति विदुरोपि क्रीडया क्रीडार्थमुपात्तदेहस्य स्वेच्छोपात्ताप्राकृतदिव्यविग्रहस्य परमात्मनः श्रीकृष्णस्य कर्माणि श्लाघितानि चरित्राणि च उद्धवाच्छ्रुत्वा तस्यैव भगवतः धीराणां योगिनां धैर्यवर्द्धनं योगवर्द्धकं विक्लवात्मनामधीरचित्तानां पशूनामज्ञानिनां दुष्करतरं देहन्यासं च देहत्यागप्रकारं च हे कुरुश्रेष्ठ! राजन् कृष्णेन भगवता कर्त्रा मनसा करणेनेक्षितं दृष्टमात्मानं स्वात्मानं च श्रुत्वेतिपूर्वेणान्वयः। भागवते उद्धवे गते सति तमेव श्रीकृष्णमेव ध्यायन्प्रेमविह्वलः निरतिशयभगवत्प्रेमपरवशस्सन् रुरोद॥ ३३॥ ३४॥ ॥ ३५॥ ❀ ❀ कालिंद्या इति भागवतर्षभः भागवतश्रेष्ठो विदुरः स्वयं सिद्ध एव परिनिष्पन्नभक्तियोगनिष्ठ एव कतिचिदहोभिर्दिनैः कालिंद्याः यमुनायाः सकाशात्स्वःसरितं गंगां प्रापद्यत प्राप्तः, यत्र गंगातीरे हरिद्वारे मित्रासुतो मैत्रेयः आस्ते तत्र प्रापद्यत इत्यर्थः॥ ३६॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कंधे वीरराघवाचार्यकृतभागवतचंद्रचंद्रिकायां टीकायां चतुर्थोऽध्यायः॥ ४॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

एतदेव निर्धारयति नेति। प्रभुरहं यद्गुणैर्यस्य भक्त्यादिगुणैर्निर्जितो वशीकृतः स उद्धवोऽण्वपि किंचिदपि मन्न्यूनो मत्तो हीनो न भवति, किंतु मम सम एव 'उत्तमैरधिकत्वं वा साम्यं वापि जयोपि वा। उच्यतेपि तु नीचानां मोहार्थं

वाप्युपेक्षये ॥' त्यादेर्दुष्टजनमोहार्थं तत्काले स्वज्ञानोपदेष्टुः पुरुषाधिक्यज्ञापनार्थं वा श्रीकृष्णेन स्वस्वाम्यमुद्धवस्योक्तं न तु तत्त्वार्थमिति ज्ञातव्यं यतो मज्ज्ञानोपदेष्टृपुरुषाधिको यमतः पुनर्मद्वयुनं लोकं जनं ज्ञानादिकं ग्राहयन्निह तिष्ठतु इत्यचिंतयदित्यन्वयः। एतेन कारणेनोद्धवोवशिष्ट इति प्रश्नपरिहारः ॥ ३१ ॥ ❀ ❀ उद्धवेनाप्येतदाज्ञा कृतेत्याह एवमिति। शब्दो वेदो योनिर्ज्ञप्तिकारणं यस्य स तथा तेन ईजे पूजयामास ॥ ३२ ॥ ❀ ❀ औद्धवीं समाप्य वैदुरीं कथामाह विदुरोपीत्यादिना ॥ ३३ ॥ ❀ ❀ देहन्यासं पृथ्वीलोकत्यागं पशूनामज्ञानाम् ॥ ३४ ॥ ❀ ❀ आत्मानं स्वमनसेक्षितं स्मृतम् ॥ ३५ ॥ ❀ ❀ द्युसरितं गंगां मित्रासुतो मैत्रेयः ॥ ३६ ॥

इति श्रीभागवते तृतीयस्कंधे श्रीमद्विजयध्वजतीर्थकृतायां पदरत्नावल्यां टीकायां चतुर्थोऽध्यायः ॥ ४ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

यद्यस्मादतिशयेन मदन्यूनत्वाद्धेतोः गुणैः सत्त्वादिभिर्नार्दितः न पीडितः गुणातीत इत्यर्थः। यतः प्रभुः सर्व्वार्थसमर्थश्च मद्वयुनं मद्विषयं ज्ञानं ग्राहयन्निति बदरिकाश्रमगतांस्तान्महामुनीन् प्रत्यपीत्यर्थः। तदिदं ग्राहणं व्यक्तमकथयिष्यमाणमपि ज्ञेयमेव भगवत्संकल्पस्यान्यथात्वाद्यसम्भवात् यथोक्तं अमोघवाञ्छित इति ॥ ३१ ॥ ❀ ❀ बदर्य्याश्रमं प्रति गमनाय भगवदादेशोऽयं श्रीभगवद्विहारमयेऽस्मिन् देशे तेन स्थातुमशक्यत्वादित्यभिप्रायः। समाधिना अनन्यमनोवृत्त्या ईजे साक्षादिव सिषेवे। तदिदं तु मैत्रेयसहिततया संक्षेपेण तद्ग्रहणान्तरमेव ज्ञेयमिति तस्य धैर्यैकारणं दर्शितम् ॥ ३२ ॥ ❀ ❀ विदुर इति त्रिकं उपादानमत्र प्रकटनं प्रापञ्चिकभक्तसमीपानयनार्थत्वात् देहन्यासं अप्रकटलीलावकाशे धाम्नि स्वविग्रहस्य विन्यासं प्रवेशनमित्यर्थः। धीराणां तस्मिन् लुप्तचित्तानां तद्रूपत्वेनैव तदवस्थाननिर्णयाद्धैर्य्यवर्द्धनं अन्येषां तद्विपरीतबुद्धीनां तत्त्वज्ञानाद् दुर्विभावमित्यर्थः ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥

इति श्रीभागवतमहापुराणे तृतीयस्कंधे श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे चतुर्थोऽध्यायः ॥ ४ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

स्वप्रतिमूर्त्तित्वे उद्धवस्य योग्यतामाह अण्वपि मत्तः सकाशादीषदपि न न्यूनः यद्यस्मात् गुणैः सत्त्वादिभिः ननु जगत्यस्मिन् गुणातीताः परःसहस्रा जीवन्मुक्ता गुणैरनर्दिता एव सन्ति तेन किं तेषां भगवत्साम्यात्सत्यं तर्ह्येवं व्याख्येयं गुणैरप्राकृतैर्बलबुद्धिज्ञानवैराग्यादिभिर्नार्दितः तेषां वेगधारणसामर्थ्यमेव तैरनर्दितत्वमत्र ज्ञेयं यथा कामादिवेगधारणसामर्थ्यमेव कामाद्यनर्दितत्वमुच्यते उद्धवो हि अधिरथयूथपयूथपेषु मुख्य इत्युच्यते। तदपि न क्वापि तादृशस्याप्राकृतस्य बलस्याविष्कारः कृत इति बलवेगधारणं एवं बुद्ध्यादीनामपि वेगधारणं ज्ञेयमेतदेवासाधारण्यं प्रभु अहमिव वशीकृतमाय इत्यर्थः ॥ मद्वयुनं मज्ज्ञानम् ॥ ३१ ॥ ❀ ❀ एवमनेन प्रकारेण त्रिलोकस्थानां गुरुणा केषाञ्चिदवशिष्टानां बदरिकाश्रमवासिनामुद्धवद्वारापि गुरुणेत्यर्थः। श्रुतदेवादिमिलनार्थं बाणाद्यसुरजयार्थं पारिजातादिनयनार्थं ब्राह्मणपुत्राद्यानयनार्थं देवपुत्राद्यानयनार्थञ्च प्रायो मिथिलादिसमस्तभूतलस्वर्गवैकुण्ठसुतलादीन् गच्छता स्वदर्शनेन स्वश्रीमुखज्ञानोपदेशेन च तत्रत्यान् कृतार्थतयापि भगवता बदरिकाश्रमानागमनात् तत्रत्यऋषिजनानामप्युत्कण्ठामनुस्मृत्य तत्रोद्धवः प्रस्थापितः कचित् कल्पे बदरिकाश्रमोऽपि स्वयं तेनैव गत इति चेत्तदा उद्धवोऽपि तत्र न प्रस्थापित इति ज्ञेयम्। संदिष्ट इति कश्चित् संदेशोऽपि प्रेषितः। इमं सन्देशं नरनारायणाभ्यां देहीति संदेशविषयीकृत इत्यर्थः। स च नोद्धवोऽण्वपीति पद्यमेव शब्दयोनिना शब्दानां वेदलक्षणानामपि योनिरुत्पत्तिर्यतः इति वेदेष्वप्यनुपलभ्यज्ञानं भगवान् जानातीति ध्वनिः। तच्चोद्धवे न्यस्तमित्यनुध्वनिः। उद्धवमुखान्नरनारायणौ तदेव प्राप्स्यत इति प्रत्यनुध्वनिः। सन्देशपत्री च स्वस्ति श्रीमन्नरनारायणौ प्रति विज्ञापनं चेदम् सपादशतवर्षपर्यन्तैव मत्प्रकटप्रकाशगता लीला भवेत् तन्मर्यादा च सम्प्रति वृत्तेति द्वारकायां सपरिकरेण मया अन्तर्द्धीयते प्रभासञ्च गत्वा अवतारितान् देवादीनाधिकारिकभक्तान् प्रतिस्वास्पदेषु प्रस्थाप्य ब्रह्मप्रार्थितेनैकेनांशेन वैकुण्ठं साऽर्जुनेनांशेनालक्षितं युष्मत्पदं च गम्यते किञ्च मत्पूर्णस्वरूपदर्शनसोत्कंठानां युष्माकं कृते मत्प्रियपार्षदमुख्येऽस्मिन्नुद्धवे स्वसारूप्यसाद्गुण्ये अर्पिते यतः नोद्धवोऽण्वपि मन्न्यूनो यद्गुणैर्नार्दितः प्रभुः। अतो मद्वयुनं लोकं ग्राहयन्निह तिष्ठत्वित्येषा। इह बदरिकाश्रमे ॥ ३२ ॥ ❀ ❀ क्रीडयैव कर्त्र्या उप आधिक्येन आत्तो गृहीतो देहो यस्य तस्य। तस्य लीलाशक्तेरधीन एव स तस्य देहस्तयैव शक्त्याऽऽविर्भाव्यते चान्तर्धाप्यते चेति भावः। तथा एवमनेन प्रकारेण तस्य धीराणां यादवादीनामपि देहानां न्यासं द्वारकायामप्रकटप्रकाशेऽर्पणं प्रभासे च पुनस्त्यागं श्रुत्वा कीदृशं धैर्यवर्द्धनं तथा श्रुत्वैव विदुरो हृदि धैर्य्यमबध्नादित्यर्थः। यद्वा तदपि धैर्यच्छेदनं वर्द्धछेदनं पुनः कीदृशं अन्येषामभक्तानामयोगिनामपि अतिशयेन दुष्करम्। एकत्र देशे देहस्यान्तर्धानमन्यत्र देशे त्यागत्वेन लोके ज्ञापनमिति योगिभिर्दुष्करमित्यर्थः। पशूनामिति भक्त्यभावादिति भावः विक्लवात्मनामेवं कर्तुं व्याकुलमनसां आत्मानं स्वम्

॥ ३३ ॥ ३४ ॥ ३५ ॥ ❀ ❀ कालिन्द्याः सकाशात् कतिभिरहोभिः सिद्धे निष्पन्ने सति भावे क्तः कतिपु अहस्सु वृत्तेपु सत्स्वित्यर्थः, स्वःसरितं गगां प्रापद्यत प्राप्तः ॥ ३६ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्। तृतीयेऽत्रे चतुर्थोऽपि सङ्गतः सङ्गतः सताम् ॥ ४ ॥

**श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः**

मद्वयुनं मद्विषयं ज्ञानम् ॥ ३१ ॥ ❀ ❀ शब्दो वेदः योनिर्ज्ञापकं यस्य तेन वेदवेद्येन ॥ ३२ ॥ ३३ ॥ ❀ ❀ पशूनां दारापत्यादिवश्यत्वेन पशुतुल्यानां विक्लवात्मनां विकलचित्तानां धैर्य्यवर्द्धनम् अन्येषां हरिविमुखानां तत्समक्षं दुष्करं च कर्तुमशक्यम् तस्य भगवतः संबंधिनां धीराणां सात्विक्यादीनां एवं देहन्यासं च श्रुत्वेत्यन्वयः ॥ ३४ ॥ ❀ ❀ मनसैव विदुरं दृष्ट्वा यदा मैत्रेयस्तदुपदेशार्थं प्रवर्तितस्तं कृष्णेन मनसेक्षितमात्मानं ध्यायन्। श्रीकृष्णानुग्रहपात्रीभूतं चिंतयन् रुरोद यतः प्रेमविह्वलः ॥ ३५ ॥ ❀ ❀ अतएव सिद्धः कालिंद्याः सकाशान् कतिभिः अहोभिर्दिवसैर्यत्र मित्रासुतो मैत्रेयस्तत्र स्थले स्वःसरितं गंगां प्रापद्यत प्राप ॥ ३६ ॥

इति श्रीमद्भागवतसिद्धांतप्रदीपे तृतीयस्कंधीये चतुर्थाध्यायार्थप्रकाशः ॥ ४ ॥

**श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या**

किञ्च, नोद्धवोऽण्वपि मन्न्यूनः। ज्ञानाधारत्वार्थं ये गुणा अपेक्ष्यन्ते, ते मय्येव; उद्धवेऽपि सर्वे सन्ति सर्वप्रकारेण। अतोऽणुमात्रमपि मत्तो न्यूनो न भवति। तत्र प्रमाणमाह—यद्‌गुणैर्ना[1]र्दित इति। मज्ज्ञाने स एवाऽधिकारी यस्य गुणक्षोभो न भवति। गुणा हि बहुधा हृदये क्षोभमुत्पादयन्ति। किं बहुना, तत्क्षोभरहितो ब्रह्माऽपि न भवति, अतोऽयमेव गुणैर्नार्दितः। तत्र हेतुमाह—प्रभुरिति। प्रभुः समर्थः स्वभावनियन्ता, स एव शूर इत्युच्यते। शूर एव हि लोके प्रभुर्भवति। तथाऽस्मिन् शास्त्रे य एवं स्वभावं जयति, स एव प्रभुः। तादृशश्चोद्धवः, क्षत्रियः, शूरः, संबन्धी, पितृव्योऽपि भूत्वा नीचादपि नीचभावेनैव सेवते, अयमेव हि स्वभावजयः। इदमेव प्रभुत्वं भगवदवगतम्। अतो मद्वयुनं मज्ज्ञानम्, लोकमधिकारिणं ग्राहयन्, भक्तिज्ञानोपदेशेन जितेन्द्रियत्वं च शिक्षयन्, इह लोके तिष्ठतु। एवमचिन्तयदिति संबन्धः ॥३१॥ ❀ ❀ ततो भगवता आज्ञप्तस्तथैव कृतवानित्याह एवं त्रिलोकगुरुणेति। एवमेव प्रमेयं बोधयित्वा त्वं तिष्ठेत्याज्ञप्तः, 'आज्ञा गुरूणां ह्यविचारणीया' इति ममैतदसाध्यमिति ज्ञात्वाऽपि, जगद्गुरुवाक्यं स्वशक्त्यनुसारेण कर्त्तव्यमिति कृतवान्। ननु भगवानेव सर्वानेवाऽनधिकारिणो ज्ञात्वा किमित्युद्धवं स्थापितवानित्याशङ्क्याऽऽह—शब्दयोनिनेति। स हि वेदकर्ता, सर्वाधिकारेण पदार्थान् वदति। यत्रैव तदधिकारेणाऽऽविशति, स्वयं स एवाधिकारी भवतीति, नास्याऽधिकाराऽनधिकारविचारः कश्चन। 'प्रजापतिरात्मनो वपामुदखिदत्' इत्युपक्रम्य स एतं प्राजापत्यमजं तूपरमालभेत' इत्याह। न ह्येतादृशस्तूपरः केनचिदुत्पादयितुं शक्यते। तथापि सर्वप्रकारेण क्रीडां कुर्वन्, एतत्कर्मणि यमेव यजमानं कृत्वा क्रीडितुं वाञ्छति, तमेव स्वप्रवेशेन तथा करोति। अतोऽत्रापि शब्दयोनिनोपदिष्ट इति, बदरिकाश्रमे गत्वा, भगवदुक्तार्थसिद्धयर्थं साधनान्तरमलभमानः, सर्वदुःखहर्तारं भगवन्तं स्वमनःक्लेशमपि निवारयिष्यतीति समाधिना तमीजे। अतो भगवदाज्ञया स्थित इति न शा[2]पादेर्बाधकत्वम्, न वा साधकत्वम्। यादवभावत्यागोऽपि न परमार्थतः, इदानीमपि भगवतो यादवत्वात्, तथैव भक्तानामनुभवात्। लोकप्र[3]तीत्या लीलायामपि स्वेच्छयैव तथात्वम् ॥ ३२ ॥ ❀ ❀ एवं प्रासङ्गिकं परिहृत्य प्रस्तुतमाह—विदुरोऽपीति। सिद्धान्तस्याऽनुक्तत्वाद् विपर्ययमायासंबन्धस्तत्राऽपि सिद्धः। अतस्त[4]च्छेषत्वेन विदुरकथाऽपि कथ्यते। अत एवाऽग्रे विदुरोऽन्यथा वक्ष्यति 'स एष भगवान् कालः सर्वेषां नः समागतः' इति। यथोद्धवो बदरिकाश्रमं गतः, एवं विदुरोऽपि 'प्रापद्यत स्वःसरितम्' इति संबन्धः। मध्ये स्वस्य सम्यक् ज्ञानं नास्तीति ज्ञापयितुम्, भागवते उद्धवे निर्गते स्वयं प्रेम्णा विह्वलः सन् रुरोद। रोदनहेतवश्च भगवच्चरित्रश्रवणम्, भगवन्मोहकलीलाश्रवणम्, भक्तेषु भगवत्कृपाश्रवणं च। सात्त्विकमेतत्। आद्यं राजसम्। अतस्त्रिभिरपि त्रिविधप्रेमोद्गमात् रोदनम्। उद्धवमुखात्श्रुतत्वात् नाऽन्यथाभावशङ्का। लोकप्रसिद्धयनुसारेण च पदार्थान्निरूपयति—कृष्णस्येति। चरित्राणां भक्तिजनकत्वाय स्वरूपमाहात्म्यमाह—परमात्मन इति। विदुराधिकारेणैवमुक्तम्, स्मृत्यनुसारेणैव तस्य भगवत्स्वरूपज्ञानात्। परमात्मा पुरुषोत्तमः। आत्मा भूत्वा स एव परमः। चिन्तामण्यादेर्लोकप्रतीत्या परमत्वेऽपि नाऽऽत्मत्वम्, न वा जीवस्य परमत्वम्; अत उभयप्रकारेण भगवानेव ज्ञायत इति तथोक्तम्। क्रीडया बा[5]लकनटवत् कपटमानुषवेषं कृतवान्, तदेवोपात्तदेहत्वेनोच्यते। तादृशस्य सर्वैरेव श्लाघितानि कर्माणि भूभारहरणादीनि, गोवर्द्धनोद्धरणादीनि वा। चकारात् गुप्तान्यपि, अद्भुतचरित्रं गोपिकारमणं वा ॥ ३३ ॥ ❀ ❀ देहन्यासमिति।

---

१. नार्यते क. ख. ग. च. छ.। २. शापस्य न स्थितिबाधकत्वम्, कालस्य न स्थितिसाधकत्वमित्यर्थः. प्रकाशः.। ३. लोकप्रतीत्येत्यस्य तथात्वमित्यनेनाऽन्वयः. प्र.। ४. विपर्ययशेषत्वेन. प्रकाशः। ५. वा लोके घ.।

देहस्य न्यासः कारणे स्थापनम्, शब्दच्छलेन नटवत् त्यागो वा। एवमिति श्रुतप्रकारेण। धीराणां वैराग्यानुसन्धानानाम्। धैर्यं साहसम्, सर्वपरित्यागेनैवं योगेनैवैतत्त्याज्यमिति। स्वरूपे गत इति फलप्रदर्शनादवान्तरक्लेशो नाऽनुसन्धेय इति धैर्यवर्द्धनम्। अन्येषामविवेकिनां देहात्ममानिनां दुष्करतमम्, न ह्येवं कश्चित् कर्तुं शक्तः। तथापि पशूनामग्रिमहिताहितविवेकानुसन्धानरहिता-नाम्। तत्रापि विक्लवात्मनाम्, विक्लव आत्मा येषाम्, वैक्लव्यमेव येषामन्तःकरणधर्मः सहजः। मौर्ख्येणाऽपि येषां साहसाभावस्ते पशुभ्योऽपि विशिष्यन्ते॥ ३४॥ ❀ ❀ किञ्च, आत्मानं च भगवता मनसा धृतमिति श्रुत्वा। कुरुश्रेष्ठेति संबोधनं तत्पूर्वजैः कृतानि पुण्यान्येवं वंशीयेपूपतिष्ठन्त इति ज्ञापनार्थम्। चकारादुपदेशनार्थं मैत्रेयाज्ञापनम्। न केवलं स्मरणमात्रम्, किन्तु मनसि स्थापितम्। 'ये यथा मां प्रपद्यन्ते' इति न्यायव्यतिरेकेणाऽपि बहिर्मुखेऽपि भक्ते पलायमानमपि मनसा धृतम्। तादृशं कृपापात्रमात्मानं ध्यायन्, गुणान्तरकथनाभावात् गते भागवते रुरोद। प्रेम्णा च विह्वलो जातः, मूर्च्छितोऽभूदित्यर्थः॥ ३५॥ ❀ ❀ ततो मूर्च्छायां भगवान् समागत्य सर्वमुपदिश्य गत इति सिद्ध एव भूत्वा, ज्ञानादिसम्पन्नो मूर्च्छात उत्थाय, कालिन्द्यास्तीरात् निधिस्थानात् प्राप्तपुरुषार्थः कतिभिरेवाऽहोभिः स्वःसरितं प्रापद्यत। अयं मोहभावो मानुषाणामेव, न तु देवानाम्। देवत्वप्रापिका च गङ्गा, अतोऽत्र विद्यमानाऽपि स्वःसरिदेव। भरतर्षभेति सम्बोधनं फलपर्यवसायिविवेकस्य प्राप्तत्वान्न तस्य मायामोह इति सूचकम्। अहोभिः कतिभिरिति प्रतिबन्धककालापगमार्थमुक्तम्। प्रकर्षेणाऽपद्यतेति मध्ये क्लेशाभाव उक्तः। तत्र गमने हेतुमाह— यत्र मित्रासुतो मुनिरिति। जगन्मित्रायाः पुत्रोऽपि तादृशः, स्वस्वभावादेव सर्वान् कृतार्थान् करिष्यतीति। तस्याऽन्यत्र गमनशङ्कां वारयति—मुनिरिति। स हि मननशीलः, जानाति च विदुरः समायास्यतीति। एतादृश एव देशो वक्ता च भगवत्कथायां फलसाधक इति ज्ञापितम्॥ ३६॥

इति श्रीभागवतसुबोधिन्यां श्रीलक्ष्मणभट्टात्मजश्रीवल्लभदीक्षितविरचितायां तृतीयस्कन्धे चतुर्थाध्यायविवरणम्।

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

एवमित्यत्र। शापादेरित्यादि। शापस्य न स्थितिबाधकत्वम्, कालस्य न सिद्धिसाधकत्वमित्यर्थः। लोकेप्रतीतेत्यस्य तथात्वमित्यनेनान्वयः।

विदुरोऽपीत्यत्र। तच्छेषत्वेनेति विपर्ययशेषत्वेन। एवमत्र स्वांशेन भगवत्प्रवेशात् बुद्धिसंस्कारेण तत्सर्गो निरूपितः॥

इति श्रीगोस्वामिपुरुषोत्तमचरणजीमहाराजकृततृतीयस्कन्धसुबोधिनीप्रकाशे चतुर्थाध्यायविवरणम्॥

### श्रीगिरिधरकृता बालप्रबोधिनी

श्रेष्ठत्वमेवोपपादयति—नेति। उद्धवः अण्वपि अणुमात्रमपि मत्तो न्यूनो न भवति। यतः प्रभुः जितेन्द्रियत्वेन सर्वथा समर्थः। तत्र हेतुमाह—यदिति। यतो गुणैः सत्त्वादिभिस्तत्कार्यैः शब्दादिभिश्च नार्दितः, न विक्षेपीकृतः इत्यर्थः। अतो मत्तुल्यत्वात् मद्वयुनं मदाश्रयं मद्विषयकं च ज्ञानं लोकं जनं ग्राहयन् इह मर्त्यलोके तिष्ठतु॥ ३१॥ ❀ ❀ एवं राजसन्देहं निरस्योद्धवकथामुपसंहरति—एवमिति। एवं सञ्चिन्त्य त्रिलोकगुरुणा श्रीकृष्णेन सन्दिष्टस्तत्त्वोपदेशपूर्वकं बदरीं प्रयाहीत्यादिष्टः अतस्तद्वियोगमनिच्छन्नपि तदाज्ञाया अनुल्लङ्घ्यत्वात् बदर्याश्रममासाद्य आगत्य समाधिना हरिमीजे इत्यन्वयः। किमर्थमेवं हठाज्ज्ञानोपदेशार्थं तत्र प्रस्थापितवानित्याकाङ्क्षायां वेदप्रवर्त्तकत्वात् तन्मर्यादासंरक्षणार्थमिति सूचयन्नाह—शब्दयोनिनेति॥ ३२॥ ❀ ❀ एवं प्रासङ्गिकं समाप्य प्रस्तुतं विदुरचरितमाह—विदुरोऽपीत्यादिना। विदुरोऽपि उद्धवात् क्रीडया क्रीडार्थं स्वेच्छया उपात्तः स्वीकृतो देहो मनुष्यनाट्यं येन तस्य परमात्मनः श्रीकृष्णस्य श्लाघितानि कर्माणि—चकाराज्जन्मादि च—श्रुत्वा॥ ३३॥ ❀ ❀ एवमुक्तप्रकारेण तस्य कृष्णस्य देहन्यासं च श्रुत्वा। देहन्यासमेवाश्चर्येण विशिनष्टि—धीराणां धैर्यवर्धनम्। विक्लवात्मनां अधीरचित्तानां अतएव पशूनां पशुवद्विषयाविष्टचित्तानां त्वन्येषां दुष्करतरमिति॥ ३४॥ ❀ ❀ विदुरकृता भक्तिरपि प्रतिफलितेति सूचयन् सम्बोधयति—कुरुश्रेष्ठेति। आत्मानं स्वात्मानं कृष्णेन मनसा ईक्षितं चिन्तितं च श्रुत्वा तं भगवन्तमेव ध्यायन् तत्प्रेम्णा विह्वलो व्याकुलश्च भागवते उद्धवेऽपि ततो गते सति रुरोदेति त्रयाणामन्वयः॥ ३५॥ ❀ ❀ ततश्च भरतर्षभो विदुरः सिद्धः स्वत एव भगवत्कृपया भक्तिपरिपूर्णोऽपि कतिभिरहोभिः कालिन्द्याः यमुनायाः सकाशात् स्वस्सरितं गङ्गां प्रापद्यत प्राप्त इत्यन्वयः। गङ्गापि बहुस्थलेऽस्ति कुत्र गत इत्यपेक्षायामाह—यत्रेति। यत्र गङ्गातीरे हरिद्वारे मित्रासुतो मुनिर्मैत्रेय आस्ते तत्र प्रापद्यतेत्यन्वयः॥ ३६॥

इति श्रीवल्लभाचार्यवंश्यगोपालसूनुना॥ श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा॥ १॥
श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये॥ श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी॥ २॥
रचिता च तृतीयेऽत्र बन्धसर्गे चतुर्थकः॥ विवृतः क्षत्तृमैत्रेयसङ्गमस्य निरूपकः॥ ३॥

## हिन्दी अनुवाद

उद्धव मुझसे अणुमात्र भी कम नहीं हैं, क्योंकि वे आत्मजयी हैं, विषयोंसे कभी विचलित नहीं हुए। अतः लोगोंको मेरे ज्ञानकी शिक्षा देते हुए वे यहीं रहें ॥ ३१ ॥ ❀ ❀ वेदोंके मूल कारण जगद्गुरु श्रीकृष्णके इस प्रकार आज्ञा देनेपर उद्धवजी बदरिकाश्रममें जाकर समाधियोगद्वारा श्रीहरिकी आराधना करने लगे ॥ ३२ ॥ ❀ ❀ कुरुश्रेष्ठ परीक्षित्! परमात्मा श्रीकृष्णने लीलासे ही अपना श्रीविग्रह प्रकट किया था, और लीलासे ही उसे अन्तर्धान भी कर दिया। उनका वह अन्तर्धान होना भी धीर पुरुषोंका उत्साह बढ़ानेवाला तथा दूसरे पशुतुल्य अधीर पुरुषोंके लिये अत्यन्त दुष्कर था। परम भागवत उद्धवजीके मुखसे उनके प्रशंसनीय कर्म और इस प्रकार अन्तर्धान होनेका समाचार पाकर तथा यह जानकर कि भगवान्ने परमधाम जाते समय मुझे भी स्मरण किया था, विदुरजी उद्धवजीके चले जानेपर प्रेमसे विह्वल होकर रोने लगे ॥ ३३-३५ ॥ ❀ ❀ इसके पश्चात् सिद्धशिरोमणि विदुरजी यमुनातटसे चलकर कुछ दिनोंमें गङ्गाजीके किनारे जा पहुँचे, जहाँ श्रीमैत्रेयजी रहते थे ॥ ३६ ॥

### चौथा अध्याय समाप्त

# अथ पञ्चमोऽध्यायः

**श्रीशुक उवाच**

द्वारि द्युनद्या ऋषभः कुरूणां मैत्रेयमासीनमगाधबोधम् ।
क्षत्तोपसृत्याच्युतभावशुद्धः पप्रच्छ सौशील्यगुणाभितृप्तः ॥ १ ॥

**विदुर उवाच**

सुखाय कर्माणि करोति लोको न तैः सुखं वान्यदुपारमं[1] वा ।
विन्देत भूयस्तत एव दुःखं यदत्र युक्तं भगवान्वदेन्नः ॥ २ ॥
जनस्य कृष्णाद्विमुखस्य देवादधर्मशीलस्य सुदुःखितस्य ।
अनुग्रहायेह चरन्ति नूनं भूतानि भव्यानि जनार्दनस्य ॥ ३ ॥
तत्साधुवर्यादिश वर्त्म[2] शं नः संराधितो भगवान् येन पुंसाम् ।
हृदि स्थितो यच्छति भक्तिपूते ज्ञानं सतत्त्वाधिगमं पुराणम् ॥ ४ ॥

**श्रीधरस्वामिविरचिता भावार्थदीपिका**

पञ्चमे भगवल्लीलां क्षत्त्रा पृष्टो महामुनिः ॥ प्रोवाच महदादीनां सर्गं तैश्च हरेः स्तुतिम् ॥ १ ॥
उक्तश्चतुर्भिरध्यायैः क्षत्तुर्मैत्रेयसंगमः ॥ संवादस्तु तयोः स्कंधद्वयेनाथ निगद्यते ॥ २ ॥

द्युनद्या गंगाया द्वारि हरिद्वारे आसीनं न तु कर्मव्यग्रम् । तत्र हेतुः । अगाधोऽपरिच्छिन्नो बोधो यस्येति मैत्रेयस्य सौशील्यमार्जवादिगुणाश्च करुणादयस्तैरभितृप्तः । पाठांतरे क्षत्तुः सौशील्यादिभिरभितृप्तं संतुष्टं मैत्रेयम् ॥ १ ॥ ❀ ❀ प्रश्नानेवाह । सुखायेति पंचदशभिः । तैः कर्मभिः सुखं वान्यस्य दुःखस्योपशमं वेत्यर्थः । अथवाऽन्यद्वा न विंदेत किं तदित्यपेक्षायां तस्यैव निर्देशः उपारमं वेति ततस्तैः कर्मभिर्भूयः पुनः पुनर्दुःखमेव विंदेत । अत्रैवंविधे संसारे नोऽस्माकं यद्युक्तं कर्तुं योग्यं तत्सर्वज्ञो भगवान्वदेन्निरूपयतु ॥ २ ॥ ❀ ❀ दैवात्प्राचीनकर्मणो निमित्तभूतात्कृष्णाद्विमुखस्यातोऽधर्मशीलस्यातः सुदुःखितस्य जनस्यानुग्रहाय भव्यानि मंगलानि भूतानि चरंति । भवंतः परोपकारस्वभावा एवेत्यर्थः ॥ ३ ॥ ❀ ❀ तत्तस्मात् हे साधुवर्य शं सुखरूपं वर्त्म न आदिश कथय येन वर्त्मना संराधितो हृदि स्थितः सन् तत्त्वाधिगम आत्मापारोक्ष्यं तत्सहितं पुराणमनादिवेदप्रमाणकम् ॥ ४ ॥

**श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः**

महामुनिर्मैत्रेयः तैर्महदाद्यधिष्ठातृदेवैः ॥ १ ॥ अथ संगमानंतरं तयोर्विदुरमैत्रेययोः ॥ २ ॥ तत्र कर्माव्यग्रत्वे पाठांतरे द्वितीयांतपाठे ॥ १ ॥ ❀ ❀ इत्यर्थ इति । उपाङ्पूर्वाद्रमतेः शांतिरर्थ इति भावः । अत्रान्यशब्दस्य समासावस्थायां दुगागमविधायकशास्त्राभावादचारुतां समीक्ष्याह—यद्वेति । अन्यदित्यव्ययमेवान्यार्थे । तस्यैवान्यत्पदनिर्दिष्टस्यैव तत इति तृतीयार्थे तसिरित्याह—तैरिति । एवंविधे बहुदुःखाढ्ये भगवत्पदमत्र भवदर्थकं सर्वे सर्वार्थवाचका इति न्यायमाश्रित्य ॥ २ ॥ ❀ ❀ अहं न वदामीति त्वया न वाच्यं भवादृशां परोपकारस्वभावत्वादित्याह जनस्येति । अतो कृष्णविमुखत्वात् "पापं नातः परतरं यद्वैमुख्यं जनार्दनात्" इत्युक्तेः । अतोऽधर्मशीलत्वात् सुपदमतीवार्थेत्र अतीव दुःखितस्येत्यर्थः । भावयंति चिंतयतीति भूतानि भक्ता इति यावत् । भूमिश्रीकरणचिंतनयोरतो वर्तमान औणादिकः क्तो बोध्यः । 'भावुकं भविकं भव्यं कुशलं क्षेममस्त्रियाम्' इत्यमरः । इत्यर्थ इति । "परोपकाराय सतां विभूतय"

---

१. प्रा० पा० पारमेद्वा । २. प्रा० पा०—साधुवर्त्म संरा० ।

इत्युक्तेरिति भावः ।। ३ ।। ❀ ❀ यद्यस्मात्साधूनामेष स्वभावस्तत्तस्माद्धेतोः त्वं तु साधुवर्योसीत्यवश्यं वक्तव्यमेव त्वयेत्यर्थः । यच्छति ददाति ।। ४ ।।

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

भगवल्लीलां प्रति पृष्टः तैर्महदादिभिः कर्तृभिः 'सप्रसंग उपोद्घातो हेतुतावसरस्तथा । निर्वाहकैक्यकार्य्यैक्ये षोढा सङ्गतिरिष्यते ।।' इत्युक्तेः—उपोद्घातसंगतिमाह उक्त इति । सम्वादः प्रश्नोत्तरकथा अथ संगमानन्तरं तत्र कर्मव्यग्रत्वाभावे । पाठांतरे तृप्तमिति पाठे ।। १ ।। ❀ ❀ पूर्वार्थे एकपदत्वेन्योपरममिति स्यात्तथा चार्पत्वमनेनाऽसन्तोषादथवेति अन्यदिति पृथक् पदं तस्यैवान्यस्य तत इत्यस्य व्याख्या तैरिति भगवानित्यस्य सर्वज्ञ इति ।। २ ।। ❀ ❀ सर्वेषां सतां तथास्वभावत्वे भवन्त इति आर्थिकोर्थः एवकारेण साधवस्तु न स्वार्थसाधका इति सूचितम् ।। ३ ।। ❀ ❀ तस्मात्परोपकारस्वभावत्वात् । भक्तिपूते प्रेमविमले । आत्मपारोक्ष्यं ब्रह्मपरमात्मभगवत्साक्षात्कारः ।। ४ ।।

### श्रीमद्वीरराघवव्याख्या

एवं कुत्र क्षत्तुर्भगवता मैत्रेयेण स संगमः कदा वा सहसंवाद इत्यस्योत्तरमुक्तं अथेतः प्रभृति तृतीयचतुर्थस्कंधाभ्यां विदुरमैत्रेयसंवादं विवक्षिष्यंस्तावद्विदुरस्य मैत्रेयोपसत्तिप्रकारं तत्पृष्टभगवल्लीलारूपमहदादिसृष्टिप्रकारं चाहानेन पंचमेनाध्यायेन ताव-द्यथाविधि क्षत्तुर्मैत्रेयोपसत्तिप्रकारमाह–बादरायणिः द्वारीति । द्युनद्याः गंगायाः द्वारि द्वारे आसीनं निषण्णमगाधबोधमगाधोऽपार-बोध आत्मपरमात्मयाथात्म्यज्ञानं यस्य तं श्रोत्रियं ब्रह्मनिष्ठं इत्याद्युक्ताचार्यलक्षणलक्षितमित्यर्थः, एवंभूतं मैत्रेयम् उपसृत्य गुरुमेवा-भिगच्छेत्समित्पाणिरित्याद्युक्तरीत्योप समीपे प्राप्य क्षत्ता पप्रच्छ कथंभूतः क्षत्ता अच्युतभावः परमात्मभक्तिः तेन शुद्धः निर्मल-चित्तः । अनेन प्रशांतचित्ताय शमान्वितायेत्यस्यार्थ उक्तः सौशीलयगुणाभितृप्तः सौशील्यं महतो मंदैः सह नीरंध्रेण संश्लेषस्वभावत्वं मैत्रेयस्य सौशील्यगुणेनाभितृप्तः सत्यार्जवदयादानाहिंसादीनामप्युपलक्षणं तैरप्यभितृप्तः । एतेनाचार्यत्वपूर्तिरभिप्रेता ।। १ ।। ❀ ❀ किं पृष्टवानित्यपेक्षायां तावत्परीक्ष्य लोकानित्यस्यार्थं सूचयंस्तत्प्रश्नमेवाह सुखायेत्यादिना । लोकः जनः सुखाय सुखार्थं सुखलिप्सयेत्यर्थः कर्माणि कृष्यादीनि लौकिकानि श्रौतस्मार्तानि च करोति । तैः कर्मभिः सुखं वा निरतिशयसुखप्राप्तौ आत्यंति-कदुःखनिवृत्तौ च साधनत्वेन यद्युक्तं कर्त्तव्यं तन्नः अस्मभ्यं भगवानुत्पत्त्यादिज्ञानसंपन्नः त्वं वदेदित्यर्थः । तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते इत्युक्तरीत्या कर्मणामात्यंतिकदुःखनिवृत्तिपूर्वकनिरतिशयसुखप्राप्तिसाधनत्वानु-पपत्तिं परीक्षमाणाय निरतिशयसुखसाधनविवित्सावते मह्यमुपदिशेत्यर्थः ।। २ ।। ❀ ❀ निवृत्तबाह्याभ्यन्तःकरणव्यापारस्य भगवत्प्रवणैकचित्तस्य मे किं भगवत्कृतप्रश्नानां प्रतिवचनेन प्रयोजनमित्याशंकां शमयंस्तस्य प्रतिवचनौत्सुक्यमाविष्करोति जनस्येति । दैवात्पूर्वकर्मवशादधर्मशीलस्याधर्मनिरतस्य 'पापं प्रज्ञां नाशयति क्रियमाणं पुनः पुनः । नष्टप्रज्ञः पापमेव नित्यमारभते जनः ।।" इति वचनात् अत एव कृष्णाद्विमुखस्य पराङ्मुखस्य अत एव सुदुःखितस्य जनस्यानुग्रहाय भव्यानि भद्राणि जनार्दनस्य विष्णोः भूतानि विष्णुभक्ता भवंत इत्यर्थः । इह मर्त्यलोके चरंति । कृपालूनां भवतां लोकानुजिघृक्षयैव मर्त्यलोके संचरणं नान्यथे-त्यर्थः ।। ३ ।। ❀ ❀ बुभुत्सितानि क्रमशः पृच्छति तदिति । हे साधुवर्य ! शं सुखसंपादकं तद्वर्त्म उपायं नः आदिश कथय कथंभूतं वर्त्म येन वर्त्मना संराधितो भगवान्पुंसां भक्तिपूते भक्तियोगेन पवित्रिते हृदि हृदये स्थितः सन् तत्त्वाधिगमं तत्त्वमधि-गम्यते येन तत्तत्त्वावभासकं पुराणमनादिवेदप्रमाणकं ज्ञानं यच्छति तद्वर्त्मादिशेत्यर्थः ।। ४ ।।

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

अत्र गंगाद्वारे मैत्रेयं प्राप्य विदुरस्य प्रश्नप्रकारं कथयति द्वारीति । क्षत्ता द्युनद्या द्वारि गंगाद्वारे आसीनमगाधबोधमनवगाह्य-ज्ञानं विदुरस्य सौशील्यादिगुणैरतितृप्तं मैत्रेयमभिसृत्य गुरूपसत्तिविधिना प्राप्य पप्रच्छेत्यन्वयः । अच्युतभावेन भगवद्भक्त्या शुद्धः । अच्युतभावतृप्त इति पाठे अच्युतलीलामृतपानेन शरीरयात्रावानित्यर्थः । भावो लीला क्रिया चेष्टेत्यभिधानम् । कुरूणामृषभ इत्यनेन कुलीनत्वेन ज्ञानग्रहणयोग्यत्वं सूचयति ।। १ ।। ❀ ❀ ननु पृच्छतेर्द्विकर्मकत्वेन भाव्यत्वादत्र तदप्रतीतेर्निरर्थकोयं प्रश्न इति तत्राह सुखायेति । लोको जनः सुखाय सुखप्राप्तये यागादिकर्माणि करोति तैः कर्मभिः सुखमन्यस्य दुःखस्योपरमं विनाशं वा न विंदेत किं चातो बहुतरानर्थप्राप्तिरपि स्यादित्याह भूय इति । ततः कर्मभ्यो भूयो दुःखमेवाप्नोति तदस्तु तव किमत्राह यदत्रेति । अत्र सुखप्राप्तये दुःखनिवृत्तये च यद्युक्तमविप्रतिपन्नत्वेन योग्यं तत्किं नो वदेदित्यन्वयः । अनेन सुखप्राप्तिं दुःखनिवृत्तिं च पप्रच्छे-त्युक्तं भवति ।। २ ।। ❀ ❀ नन्वत्र सुखप्राप्तिदुःखनिवृत्त्युपायप्रश्ने एव क्रियते न भगवत्तत्त्वविषय इत तत्राह जनस्येति । स्वतो ज्ञानाभावात् बोधकपुरुषालाभाच्च कृष्णाद्विमुखस्येत्याह नत्वयोग्यत्वादन्यथा तस्यानुग्रहाय जनार्दनस्य भूतानि चरंती-त्युक्तिर्विरुद्धा स्यात् भव्यानि मंगलानि एवंविधानि जनार्दनस्य भूतानि ज्ञानोपदेशलक्षणप्रसादकारणायेह कर्मभुवि देहधारणं कृत्वा वर्तंत इति भावः ।। ३ ।। ❀ ❀ फलितमाह तदिति । यतो लोकानुग्रहाय भवज्जीवनं तत्तस्मात्साधुवर्य ! शर्मवर्त्म सुखप्राप्तिमार्गमादिशेत्यन्वयः, येन शर्मवर्त्मना स्वसत्ताधिगमं स्वव्याप्तिज्ञापकं पुराणं संप्रदायागतम् ।। ४ ।।

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

सौशील्यं सुस्वभावः तत्प्रधाना गुणास्तैस्तृप्तो मानादीच्छारहितः पाठान्तरे क्षत्तुः सौशील्यादिभिरभितृप्तं सन्तुष्टं मैत्रेयम् ॥ १ ॥ ❀ ❀ तत्र यद्यपि विदुरः श्रीभगवदिष्टज्ञानं श्रोतुमभीष्टवान् पृष्टवांश्च श्रीमदुद्धवं प्रति पूर्वं श्रीमदुद्धवेन च श्रीमैत्रेयं प्रति प्रष्टुं श्रीभगवदाज्ञानुसारेणोपदिष्टः। तथापि तं प्रति तमनुपृष्टवांस्तत् खलु श्रीमदुद्धवविषयकप्रश्नानंन्तरं जातेन दैन्य-स्वभावेनैव। दैन्यञ्च श्रीभगवता स्वप्रतिनिधिरूपोद्धवद्वारानुपदेशेनात्मनि नातियोग्यतामननात् श्रीभगवांस्तु तस्य श्रीमदु-द्धवाच्चतुःश्लोकीमात्रेण मनःप्रकाशाभावं तथा बहूंश्च प्रष्टव्यानर्थान् विज्ञाय तावत् सम्वादनिर्व्विण्णेन तेन तत्रोपदिदेश किंतु तत्र योग्येन मैत्रेयेणैवेति॥ तस्मादात्मनि तज्ज्ञानयोग्यत्वापादनसाधनायैव स निवेदयति सुखायेति त्रिभिः॥ तत्रात्मनः साधा-रण्याय। लोकमात्रस्य दौस्थ्यं प्रथमेन तादृशं विनान्याश्रयराहित्यं द्वितीयेन। अभीष्टप्रार्थनं तृतीयेन ज्ञेयम्॥ २॥ ❀ ❀ जनस्येति। दैवात् प्राचीनकर्म्मणो हेतोस्तदावेशादधर्म्मशीलस्य भगवद्धर्मैरहितस्येत्यर्थः॥ ३॥ ❀ ❀ तत् साध्विति भक्ति-पूते प्रेमविमले। सत्त्वं ज्ञानं तच्च ब्रह्मभगवत्परमात्मेत्याविर्भावम्॥ ४॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

पञ्चमे जगतः सृष्टयाद्यपृच्छत् सुखदुःखिनः। क्षत्ता प्रत्याय मैत्रेयः सर्गं तत्त्वैः स्तवं हरेः॥ १॥
भङ्गया चतुर्भिरध्यायैराश्रयस्याङ्गिनः स्थितिम्। उक्त्वा तदङ्गेपूक्तोऽपि सर्गः स व्यासमुच्यते॥ २॥

द्युनद्या गङ्गायाः द्वारि हरिद्वार आसीनं नतु कार्य्यव्यग्रं प्रथमान्तपाठे मैत्रेयस्य सौशील्यगुणैः सन्तुष्टः। द्वितीयान्तपाठे विदुरस्य॥ १॥ ❀ ❀ अत्र भगवदुपदिष्टं रहस्यं ज्ञानमुद्धवात् प्राप्य स्वस्य तत्रायोग्यतां मत्वा अतिनिर्व्विण्ण एव विदुरो मनसि परामभर्श। तस्यानुरक्तस्य मुनेर्मुकुन्दः प्रमोदभारानतकन्धरस्य। आशृण्वतो मामानुरागहाससमीक्षया विश्रमय-न्नुवाचेत्युद्धवोक्तेः। परमान्तरंगस्वभक्तचूडामणिमुद्धवमेव भगवान् रहस्यं स्वज्ञानमुपदिदेश। नतु शृण्वन्तमपि मैवं तदहं तज्ज्ञानार्थमिममजानन्तं महानुभावं प्रथमं न प्रार्थयिष्यम्, किन्तु स्वजिज्ञासितमेव यत्किञ्चित् पृच्छामि यदि च तदयं जानाति तद् भो विदुर त्वदर्थं भगवताहमादिष्टो भगवत्प्रोक्तं तस्याजत्वजन्मवत्त्वादिविरोधपरिहारकमिति रहस्यं ज्ञानं त्वं गृहाणेति स्वयमेव वक्ष्यतीत्यत आह सुखायेत्यादि। तैः कर्म्मभिः सुखं वा अन्यत् दुःखोपशमं वा उपारमं वैराग्यं वा न विन्देत किन्तु भूयो भूयः कृतेभ्यस्तेभ्यः कर्म्मभ्यः दुःखमेव। अत्र प्रश्ने यद्युक्तं तदुत्तरं नः अस्मान् वदतु भवान्॥ २॥ ❀ ❀ सर्व्वभूतानुग्राहका भवद्विधा महाभागवता एवं तत्त्वं जानंतीत्याह। भव्यानि भूतानि मङ्गल-रूपा भक्ताः॥ ३॥ ❀ ❀ शं सुखरूपं वर्त्म भजनमार्गं नोऽस्मानादिश स प्रसिद्धो भगवान् तत्त्वस्य वदन्ति तत्तत्त्वविद इत्यनेनोक्तस्य ब्रह्मपरमात्मभगवत्स्वरूपस्याधिगमो यस्मात्तज्ज्ञानं यच्छति। यदुक्तं 'तच्छ्रद्दधाना मुनयो ज्ञानवैराग्ययुक्तया। पश्यन्त्या-त्मनि चात्मानं भक्त्या श्रुतगृहीतया॥" इति। पुराणं पुरातनं न मीमांसादिकमिवार्व्वाचीनम्॥ ४॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

एवं विदुरमैत्रेयसंगमं प्रपंच्याथ पंचमेऽध्याये महदादिसर्गम्। महदादिकृतं भगवत्स्तोत्रं च विदुरमैत्रेयसंवादेन प्रपञ्चयति भगवान् शुकः द्वारीति॥ १॥ ❀ ❀ सुखाय चकाराद् दुःखनिवृत्तये कर्माणि करोति तैः कर्मभिः सुखम्। अन्यदुपारमं दुःखनिवृत्तिं वा न विंदेत। अत्र नोस्माकं यत् युक्तं कर्तुं योग्यं तद्भगवान् वदेत् निरूपयतु॥ २॥ ❀ ❀ दैवात्पूर्वकर्मणः भव्यानि मंगलानि विष्णोर्भूतानि भक्ताः भवद्विधाः॥ ३॥ ❀ ❀ तत्तस्मात्। आत्मनः परोपकारार्थपरत्वाद्धेतोः हे साधुवर्य्य! नोऽस्माकं शं सुखरूपं वर्त्म। आदिश कथय। येन वर्त्मना सम्यगाराधितः भक्त्या पवित्रीकृते हृदिस्थः सन् सतत्त्वाधिगमं तत्त्वाधि-गमेन जिज्ञास्यतत्त्वापरोक्षेण ज्ञानेन साध्येन सहितं ज्ञानं साधनं पुराणं वेदप्रमाणकं यच्छता 'आत्मा वा अरे द्रष्टव्यः' इति जिज्ञास्यतत्त्वापरोक्षं ज्ञानं 'साध्यमुद्दिश्य श्रोतव्यो मंतव्यो निदिध्यासितव्य' इति साधनं ज्ञानं वेदेन विधीयते तादृशं ज्ञानं सम्यगा-राधितो भगवानेव ददातीति गम्यते॥ ४॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनीव्याख्या

चतुर्णां सर्ग आद्योऽत्र ह्यधिकारे निरूपितः। पुरुषत्वाय कृष्णस्य चतुर्भिः सर्ग ईर्यते॥ १॥
स एव भगवल्लीलां श्रोतुमर्हति तत्त्वतः। अन्यथाऽन्यो हि मनुते ह्यधिकारस्ततो हितः[१]॥ २॥
[२]कृष्णार्थसृष्टौ भूतानि जातान्येवेति निश्चयः। वेदे [३]पञ्चभिरेवाऽस्य पुरुषत्वकथोदिता॥ ३॥
त एव बहुधा[४] व्यस्तास्तस्मात्तत्त्वानि तानि वै। भोगः शरीर[५] एवेति मात्रास्तत्र[६] निरूपिताः[७]॥ ४॥
[८]नानाविधानि शास्त्राणि तैः सन्देहविनिश्चयौ। मनो भगवतो ह्युक्तं [९]तेनैवेन्द्रियसंकथा॥ ५॥

---

१. अत्यन्तमावश्यकः प्रकाशः। २. तथा च भूतत्वमत्र जातत्वेनैव विवक्षितम्, नतु पृथिव्याद्यन्यतमत्वेनेत्यर्थः प्र.। ३. आकाशा-दिभिः प्र.। ४. त्रयोविंशतितत्त्वरूपेण प्र.। ५. ब्रह्माण्डात्मके प्र। ६. अध्याये प्र.। ७. पदार्थाः ( इतिशेषः ) प्र। ८. अत्र शास्त्राण्युद्देश्यानि, मनो विधेयम्; तत्र युक्तिः सन्देहनिश्चयाविति प्र.। ९. उभयेन्द्रियप्रेरकेण मनसैव प्र.।

बुद्धिर्भगवतो ब्रह्मा तत्कार्यं[1] च निरूप्यते । स्तुति[2]प्रसादौ कार्याणां[3] भूतानीत्येष निश्चयः[4] ॥ ६ ॥
ततस्तेषां शरीराणि मात्रा एव हरेर्यथा । काल एवेन्द्रियाण्येषां तत्राऽऽसक्तो म्रियेत वै ॥ ७ ॥
बुद्धिस्तेषां महात्मानो वेदा मन्वादयस्तथा । [5]तत्रोक्तैरेव यद्युक्तमुक्तं तेषां हिताय तत् ॥ ८ ॥
कार्योपयोगितत्त्वानां पञ्चमे विनिरूप्यते । उत्पत्तिर्यादृशैः[6] कार्यं तद्भावश्च[7] निरूप्यते ॥ ९ ॥
प्रश्नाभिनन्दने चाङ्गं सर्वत्रैव हरेः कृतौ । अतोऽत्र भगवत्प्रश्नः षड्विधो विनिरूप्यते ॥
वैराग्यादिः, सृष्टिमार्गे विपरीतप्रवेशतः[8] ॥ १० ॥

तत्र प्रथमं तयोः कथार्थं संबन्धमाह—द्वारीति । सर्वेषां देवत्वसिद्ध्यर्थं या देवनदी प्रवृत्ता, सा प्रथमत एव समीचीनं कार्यं करिष्यतीति भगवदाज्ञया मैत्रेयस्तत्रैव स्थितः । गङ्गाद्वारि ब्रह्मकुण्ड एवेति मे मतिः, अन्तर्वेद्यां भगवत्सान्निध्यात् । कुरूणामृषभ इति महानुद्योगः फलपर्यवसायी तस्य लक्ष्यते । मैत्रेयो हितकर्ता । आसीनोऽव्यग्रः । अगाधो बोधो यस्येति स्वबुद्धेस्तत्र निमज्जनं संभविष्यतीति सूचितम्, अन्यथा न सर्वसन्देहनिवृत्तिः । क्षत्ता प्रथमत एव जितेन्द्रियो विचक्षणश्च । अच्युता या अच्युते भक्तिः, तया शापाधिकारादिबीजपातयोनिदोषादिसर्वाशुद्धिनिवृत्त्या शुद्धः । उपसृत्य समीपे गत्वा, विध्यनुसारेण वा । मैत्रेयस्याऽऽर्जवकरुणादयः सौशील्यगुणास्तैरभितृप्तः । कथं वक्ष्यति नवेति सन्देहरूपा क्षुद् गुणैर्निवृत्तेति तादृशो भूत्वा पप्रच्छेत्यर्थः ॥१॥ ❀ ❀ षट्प्रश्नेषु वैराग्यार्थं क उपायः कर्तव्यः ? इति प्रश्नं कुर्वन् स्वभावतो वैराग्यहेतोरप्रयोजकत्वमाह—सुखाय कर्माणीति । फलं लोके द्विविधम्, दुःखाभावः सुखं वा[9] । दुःखस्य सुखप्रतिबन्धकत्वेन वा दुःखाभावः सुख एव हेतुः । अतो लोकः सुखार्थमेव सर्वं व्यापारं करोति, तेन च पुनः कदापि सुखं न प्राप्नोति । लोक इति प्रमाणनिर्देशः । चकारात् पूर्वसुखमपि गच्छति । किञ्च । अन्यदुपारमं [10]वा दुःखाभावो वा न भवति, प्रतिबन्धकाभाव एव कचित् साधनपर्यवसानस्य दृष्टत्वात् । तत्परमपि न जातम्, तथा सति सहजं वा सुखं भवेत् । किञ्च, प्रत्युत तैरेव दुःखं भवति । भूयः सहजादप्यधिकम् । तत एवेति साधनान्तरनिवृत्तिः, साधनान्तरस्याऽदृष्टत्वात् । 'तदुदितः स हि यो यदनन्तरः' इति सुखसाधनस्यैव दुःखसाधकत्वम् । साधनताज्ञानं त्वन्धपरम्परया । अनिवृत्तिः स्वाग्रहात्, अस्मदीयैस्तथैव कृतमिति । भूयो व्यभिचारदर्शनमपि परम्परा श्रद्धा बाधते । एतादृशेऽर्थे फलविपर्ययं दृष्ट्वाऽपि यदि न निवर्तन्ते, तदा वाक्यमात्रेण कथं निवर्तेरन् ? तस्माद्वैराग्यार्थं किं कर्तव्यमिति प्रश्नः । अथवा, येनैवाऽव्यभिचारि सुखं भवति, तद्वा वक्तव्यमिति लोकादतिरिक्तप्रमाणत्वं तस्याऽऽह—भगवानिति । अस्माकं तु भगवदुक्तमेव प्रमाणम्, अतोऽस्माभिः स्वार्थमेव पृच्छ्यत इति नाऽप्रकृतत्वम् । वदेदिति प्रार्थनायाम् ॥ २ ॥ ❀ ❀ नन्वस्माकं भगवदाज्ञा तत्त्वोपदेशार्थे, न त्वेतादृशार्थकथनार्थ इत्याशङ्क्याऽऽह—जनस्य कृष्णाद्विमुखस्येति । भवतु द्वयमस्ति, भगवतः सामान्याज्ञा विशेषाज्ञा चेति । इदं सामान्याऽऽज्ञया वक्तव्यम्; यतो भगवान् भवत एतदर्थमेव सृजति, अन्यथा भगवदीया नोत्पद्येरन्, स्वार्थं तेषां प्रयोजनाभावात् । अत एव तेषु भूतपदप्रयोगः, जातानीत्यर्थः । शब्दच्छलेन ते लग्नाः स्वसमानं कुर्वन्तीति ज्ञाप्यते । यदि लोकानां तथा भाग्यमपि न भवति, तथापि त एव भाग्यरूपा भूत्वा तान् स्वसमानान् कुर्वन्तीति भव्यानीत्युक्तम् । अतो लोकोपकारार्थं समागतानां भवतामेतदावश्यकमिति । जनस्य प्राणिमात्रस्य । जन्मत एव ज्ञायते भगवद्विमुखोऽयमिति, अन्यथा जन्मैव न स्यात् । प्रवृत्त्या चाऽवसीयते । कृष्णादिति मूलसच्चिदानन्दवैमुख्यं महदाश्चर्यमिति । तथापि विमुखस्य, जननानन्तरमपि दैवात् प्राचीनासुरकर्मणो विमुखस्य, दैवादेवाऽधर्मशीलस्य, स्वभावत एवाऽधर्मो रोचत इति । न हि स्वाभाविकं केनचिन्निवर्त्तयितुं शक्यते । अत एव सुदुःखितस्य, अन्यथा[11] तदनुग्रहमपि न मन्येत । इहाऽस्मिन् लोके न ततोऽन्यो दुःखनिवारणहेतुः, नूनं निश्चितम् । सन्देहाभाव उभयत्र । भगवदीयैरेव दुःखाभावो नाऽन्यैरिति । तत्र हेतुर्जनार्दनस्येति । जनां सर्वलोकजननीमर्दयतीति, जनाया वा अर्दनं यस्मादिति । स हि मूलजननं निवारयति, तदीयाश्च तत्साधकाः ॥ ३ ॥ ❀ ❀ अस्योत्तरं 'भगवद्भजनं कर्त्तव्यम्' तदव्यभिचारिसुखहेतुर्भवतीति यदि, तदा तत्रोपायं कथयेति पृच्छति—तत्साधुवर्येति । तत्तदा । यदि भगवद्भजनेनैव प्राणी कृतार्थो भवति, तदा तत्र वर्त्माऽऽदिश । भगवत्प्रेरणया, भगवदाज्ञारूपवेदानुसारेण वा क्रियमाणेऽपि भगवान्न परितुष्यति, [12]दुःखस्यानिवृत्तत्वात् । अतो येन मार्गेण सम्यगाराधितो भगवान् ज्ञानं प्रयच्छति, तमुपायं स्थिरं [13]प्रहितं सर्वलोकप्रसिद्धं कथयेति प्रश्नः । कल्याणरूपमिति साधनदशायामपि सुखरूपत्वम्, यथा विमानयानम् । गूढस्याऽत्यभीष्टस्यापि ज्ञापने हेतुः—साधुवर्येति संबोधनम् । हितमात्रं साधुरपि वदति, एतादृशं तु भगवद्भक्तो यो ब्रह्मवित् स एव वदति, स हि स्वात्मानमिव सर्वं मन्यते । येन मार्गेण प्रथमं भगवान् संराधितो भवति ।

---

१. 'क एष योऽसौ...' इत्याद्युक्तालोचनरूपं बुद्धिकार्यम् प्र. । २. नवमाध्यायोक्तौ प्र. । ३. ब्रह्माण्डान्तर्वर्त्तिव्यष्टीनाम् प्र. । ४. सूक्ष्मेक्षिकया निर्द्धारः प्र. । ५. यद्यस्मात् तत्राध्याय उक्तैर्वेदादिभिः 'नैतत्पूर्वैः कृतं कर्म' इत्यादिकं तेषां कार्याणां हिताय युक्तमुक्तम्, तत्तस्माद्धेतोस्ते महात्मान एव बुद्धिरूपा इत्यर्थः प्रकाशः । ६. विराजः शरीरम् प्र. । ७. तादृशसामर्थ्यम् प्र. । ८. भगवद्गुणानां विपरीतप्रवेशात् । विरक्तो जिज्ञासते ज्ञानी श्रयते, श्रितो गृह्यः श्रद्धत्ते, यशस्यतृप्तो वीर्याणि जिज्ञासते, ज्ञातवीर्यस्तमीश्वरत्वेनाऽनुसन्धत्ते प्र. । ९. वाशब्दावप्यर्थौ प्र. । १०. दुःखाभाव इत्यर्थः, लिङ्गमशिष्यम् प्र. । ११. यदि दुःखं न प्राप्नुयात्, सुखलेशजमदव्याप्तः सत्कुलजन्मादिरूपां भगवदनुग्रहमपि नाऽनुसंदध्यादित्यर्थः प्र । १२. अयं हेतुरपरितोषज्ञापको ज्ञेयः प्र. । १३. प्रकर्षेण हितम् प्र. ।

भगवत्त्वाच्च संराधनं कठिनम्, 'किमासनं ते गरुडासनाय' इति वाक्यात् स्वस्य चाऽमर्यादत्वादिगुणवैशिष्ट्यात्। पुंसामिति बहूनां काकतालीयवदुपायो न मार्गो भवति। किञ्च, भगवानन्तर्यामी सर्वानेव नानाप्रकारेण प्रेरयति, स्वस्वभावात्, जीवस्वभावमनुसृत्य वा। उभयथाऽपि प्रेर्यधर्माविष्टो भवति। तत्र यदि पूर्ववदेव स प्रेरयेत्, तदा कृतमपि भजनं व्यर्थं स्यात्। अतस्तादृश उपायो वक्तव्यः, येन स एवाऽन्तर्यामी भक्त्या पूतो भवति। पूतः पवित्र एव प्रेरयति। भक्त्या पूतो भक्तावेव प्रेरयेत्। स हि स्वभावतः प्रवाहनिर्वाहार्थमेव नियुक्तस्तथा प्रेरयति यथा प्रवाहः सिध्यति। अयं तस्य सहजो धर्मः। तथा करणात् अपूत इव लोके प्रसिद्धः। तस्यैव च बहीरूपं कालः। यथैकेन हस्तेन ध्रियते, अपरेण च मार्यते; तत्रोभयोः पावनार्थं मार्गद्वयं सृष्टम्। वेदः कालस्य, अन्तर्यामिणो भक्तिः। तन्मार्गेण प्रविष्टः सोमवत्[1]पूतो भवति। वेदेन पूतः कालो न मारयति, भक्त्या पूतोऽन्तर्यामी नाऽन्यथा प्रेरयति। इदं च पावनं नाऽशुद्धस्य शुद्धिजनकम्, किन्तु सोमवत् तन्मार्गनिर्गमनम्। अन्योन्याश्रयाच्चाऽयमर्थो न सिध्यतीति प्रश्नः। गुरूपदेशाच्चाऽयमर्थो न सेत्स्यतीत्याह—हृदि स्थित इति। स हि हृदये स्थितः स्वेच्छया यदि प्रेरयेत्, किं बहिरुपदेशेन। अतो भगवता यदुक्तम् 'इदम्' विदुराय ज्ञानं वक्तव्यमिति, तदन्तर्यामिसमाधानव्यतिरेकेण न भविष्यतीति, तत्समाधानार्थं प्रथमतो भगवदाराधना, ततो भगवत्सन्तोषः, ततो भगवता दत्तस्य प्रेम्णः प्राप्तिः, ततः प्रेमभक्त्या तस्यैवान्तर्यामिणो ज्ञानार्थं प्रेरणम्। पूर्वसिद्धनानाविधज्ञानानां विद्यमानत्वात्तदस्मरणपूर्वकं यथा ज्ञानमुदेति वाक्यात्, तथा प्रेरणं पूर्वसिद्धमिति तज्जनितं ज्ञानं न कार्यं समर्पयति। अत एव महताऽपि साधनेन वाक्याज्ज्ञानं नोदेति। यदा पुनः स एवाऽन्तर्यामी स्वस्यैव गुणभूतं ज्ञानं तस्मै प्रयच्छति, तदा पवित्रमिव वाक्यं ज्ञानहेतुर्भवति। तत् ज्ञानं त्रिविधम्। शारीरात्मनो ब्रह्मत्वेनाऽनुभवः, साङ्ख्यं सर्वतत्त्वविवेचनात्मकम्, भगवतश्चाशेषविशेषप्रकारेण स्वरूपबोधकम्। तत्त्रिविधमपि ज्ञानं साधनसाध्यफलभूतभक्त्या पूतो भगवान् प्रयच्छतीति। ज्ञानं ब्रह्मभावः, तच्च सर्वतत्त्वानां ज्ञानसहितम्। तत्राऽपि तत्त्वानां मूलभूतस्य सर्वभावज्ञानं [2]पुराणम्॥ ४॥

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः।

अथ पञ्चमाध्यायं विवरिषवः प्रकरणान्तरस्यारभ्यमाणत्वात् पूर्वोत्तरप्रकरणसङ्गतिं निरूपयितुं द्वयोरप्यर्थं वदन्तो द्वाभ्यां पूर्वोत्तरभावं समर्थयन्ति—चतुर्णामित्यादि। अत्र सर्गनिरूपके स्कन्धे हि यतो हेतोराद्यः सर्गोऽधिकारे निरूपितः। ततः कृष्णस्य पुरुषोत्तमस्य प्रथमपुरुषरूपेण प्राकट्यार्थं सर्गान्तरमीर्यते। अतः स एव अधिकार्येव तथा जानाति नाऽन्य इति सोऽत्यन्तमावश्यकः। तथा च हेतुहेतुमद्भावः सङ्गतिरित्यर्थः। एवं सङ्गतिं निरूप्याग्रे निरूपणीये सर्गद्वये न पूर्ववत् संस्कार्यता सृज्यानां किन्तु स्वरूपस्यैवोत्पत्तिरिति बोधनाय पञ्चमे भूतानां स्वरूपं बोधयन्ति कृष्णार्थेत्यादि। तथा च भूतत्वमत्र जातत्वेनैव विवक्षितम्, न तु पृथिव्याद्यन्तमत्वेनेत्यर्थः। ननु जातत्वस्य साधारणत्वादेतेषु भूतत्वं कयोपपत्त्येत्याकांक्षायां तदुपपादकं रूपमाहुः—वेद इत्यादि। पञ्चभिरिति। आकाशादिभिः। बहुधेति। त्रयोविंशतितत्त्वरूपेण, तथा च वेदोक्तभूतव्यष्टितया तद्भावत्वेन रूपेण भूतत्वमित्यर्थः। अग्रिमाध्यायोक्तानां मात्रात्व उपपत्तिमाहुः—भोग इत्यादि। शरीरे। ब्रह्माण्डात्मके। तत्राध्याये निरूपिताः पदार्था मात्राः। "निर्भिन्नं तालु वरुणः" इत्यादिना भोगस्य कथनात् पुरुषभोग्यत्वमत्र मात्रात्वं विवक्षितम्, न तु भूतसूक्ष्मत्वं शब्दाद्यन्यतमत्वं वेत्यर्थः। तदग्रिमाध्यायप्रोक्तानामिन्द्रियत्वमुपपादयन्ति—नानेत्यादि। अत्र शास्त्राण्युद्देश्यानि। मनो विधेयम्। तत्र युक्तिः—सन्देहविनिश्चयाविति। तेनैवेति। उभयेन्द्रियप्रेरकेण मनसैव। तथा च सन्देहनिश्चयाभ्यां कार्याभ्यामनुमानविधया शास्त्रेषु मनस्त्वं बोधयित्वा उपलक्षणविधयाऽन्येष्विन्द्रियत्वं सङ्घटितमित्यर्थः। तदग्रिमाध्यायोक्तानां बुद्धिरूपत्वमाहुः(?) तदग्रिमाध्यायोक्तस्य बुद्धिरूपत्वं पूर्ववदाहुः—बुद्धिरित्यादि। तत्कार्यमिति। 'क एष योऽसौ' इत्याद्युक्तालोचनरूपं बुद्धिकार्यम्। तथा च बुद्धिकार्यकर्तृत्वात् ब्रह्मा भगवतो बुद्धिरित्यर्थः। एवं भगवत्प्रकरणस्थानां चतुर्णां स्वरूपमुक्त्वा कार्यप्रकरणस्थानां चतुर्णामाहुः—स्तुतीत्यादिसार्द्धैस्त्रिभिः। स्तुतिप्रसादौ नवमाध्यायोक्तौ। कार्याणां ब्रह्माण्डान्तर्वर्तिव्यष्टीनां भूतानि(?)जातत्वात् सञ्जातहेतुत्वाच्चेत्येव निश्चयः सूक्ष्मेक्षिकया निर्धारः। एवमग्रे भोग्यत्वात्तच्छरीराणि मात्रा यथा पूर्वप्रकरणे भगवतः स्वासक्तमृत्युहेतुत्वरूपकार्यात् काल एव तदिन्द्रियाणि यद्यस्मात्तत्राऽध्याय उक्तैर्वेदादिभिः नैतत्पूर्वैः कृतं कर्मेत्यादिकं तेषां कार्याणां हिताय युक्तमुक्तम्। तत्तस्माद्धेतोस्ते महात्मान एव बुद्धिरूपा इत्यर्थः। अत्रेदं बोध्यम्। लक्षणे भूताद्युत्पत्तेरेव सर्गत्वं प्रतिपाद्य तत्परीक्षके[1]ऽस्मिन् स्कन्धे चतुरध्याय्युत्तरं पञ्चमे महदादिसर्वतत्त्वोत्पत्तिम्, ततो ब्रह्माण्डोत्पत्तिम्, ततः शास्त्रकृतसन्देहनिश्चयौ, ततो

---

१. यथा सोमो वल्लीविशेषो वैदिकेन मार्गेण संस्कृतः फलसाधकत्वात् पूतो भवति; तद्वदित्यर्थः प्रकाशः। २. प्रमाणम् क।

१ परिक्षके, पा।

ब्रह्मोत्पत्तिम्, ततो ब्रह्मस्तुत्यादिकम्, ततः पुनर्महदादिसर्गम्, ततः कालम्, ततो ब्रह्मादीन् यद्वक्ति, एवमग्रे वराहावतारणादि-कथामन्यच्च यद्वक्ति, तेनैवं ज्ञायते। यत्सर्वसाधारणभूतादिसर्गो[1] नाऽत्र सर्गत्वेन विवक्षितो भूतादयश्च न ते विवक्षिताः, किन्तु लीलारूपः सर्गः; तदुपयोगितया विचारिता एव च तत्प्रतियोगिनो भूतादय इति। वक्ष्यति च "रजोभाजो भगवतो लीलेयम्" इति। एवं सति पृथिव्याद्यन्यतमत्वं शब्दाद्यन्यतमत्वं चक्षुराद्यन्यतमत्वं चित्ताद्यन्यतमत्वमन्यद्वा न भूतमात्रेन्द्रियधी-लक्षणमभिप्रेतम्, किन्तु विशिष्टदेहादिरूपस्थूलकार्यजनकत्वं भूतत्वम्, भूतसूक्ष्मरूपत्वे सति भोग्यत्वं मात्रात्वं ज्ञानक्रियान्यतर-करणत्वे सति[2] दुर्ज्ञेयत्वमिन्द्रियत्वम्, इन्द्रियाऽनुग्राहकत्वं बुद्धित्वमिति फलोपहितं लक्षणमभिप्रेतम्। एवमग्रिमप्रकरणेऽपि द्रष्टव्यम्। तेनानायासेन भूतादिकार्यं कुर्वते भगवत एव भूतादिरूपत्वम्, तेन तेन रूपेण भवनमेव च सर्ग इति फलति। अयमेवार्थोऽग्रे पञ्चविंशाध्यायारम्भे भगवद्रूपनिष्पत्तावित्यादिकारिकाद्वयेन स्फुटीकरिष्यत इति नाऽत्र चोद्यं किञ्चित्। एवं संक्षेपेणाऽष्टाध्याय्या अर्थं प्रदर्श्य प्रस्तुताध्यायार्थं विशेषाकारेण प्रदर्शयन्ति–कार्येत्यादि। कार्यं विराजः शरीरम्, तदुपयोगिनां तत्त्वानामुत्पत्तिः, च पुनः यादृशैस्तत्कार्यं सिध्यति, तद्भावस्तादृशसामर्थ्यवत्ताप्रकारश्च पञ्चमे निरूप्यत इत्यर्थः। ननु तर्हि प्रश्नाद्युपनिबन्धनस्य किं प्रयोजनमित्याकांक्षायामाहुः–प्रश्नेत्यादि। भगवत्कृतिनिरूपणे यत एतयोरङ्गत्वमतो हेतोः सृष्टिरूपे भगवज्ज्ञानोपाये भगवद्गुणानां विपरीतप्रवेशात् विरक्तो जिज्ञासति(?)ज्ञानी श्रयते, श्रितो यशः श्रद्धत्ते, यशस्यतृप्तो वीर्याणि जिज्ञासति(?) ज्ञातवीर्यैस्त-मीश्वरत्वेनाऽनुसन्धत्त इत्येवं षोढा भगवत्प्रश्नस्तत्त्वानामेव ज्ञानार्थं निरूप्यते, अत उपोद्घातत्वेन तद्बोधनमेव प्रयोजनमित्यर्थः ॥ १ ॥ ❀ ❀ सुखायेत्यत्र। मूले। अन्यदुपारममित्यत्र वर्णागमः, वा शब्दावप्यर्थौ; अथवा अन्यद्वा न तस्यैव व्याख्यान-मुपारममिति, दुःखाभावः इत्यर्थः। लिङ्गमशिष्यम्। एतं पक्षमभिप्रेत्याहुः–प्रतिबन्धकेत्यादि ॥ २ ॥ ❀ ❀ जनस्येत्यत्र। भगवदीयस्य तद्बहिर्मुखस्य चाऽत्र जन्मकथनात् तावन्मात्रं न वैमुख्यगमकमित्यत आहुः–प्रवृत्त्येत्यादि। दुःखितभवन-प्रयोजनमाहुः–अन्यथेत्यादि। यदि दुःखं न प्राप्नुयात्, सुखलेशजमदव्याप्तः सत्कुलजन्मादिरूपं भगवदनुग्रहमपि नानुसन्दध्या-दित्यर्थः ॥ ३ ॥ ❀ ❀ तदित्यत्र। दुःखस्याऽनिवृत्तत्वादिति। अयं हेतुरपरितोषज्ञापको ज्ञेयः। प्रहितमिति। प्रकर्षेण हितम्। सोमवदिति। यथा सोमो वल्लीविशेषो वैदिकेन मार्गेण संस्कृतः फलसाधकत्वात् पूतो भवति तद्वदित्यर्थः। ननु ज्ञानार्थं प्रेरयत्येव अन्यथा ज्ञानाशंसा तव कथं स्यात्–अतः किमर्थं तादृशो प्रेरणोपायप्रश्न इत्याकांक्षायामाहुः–पूर्वेत्यादि। एतज्ज्ञानन्यायेन वैराग्यम-प्येतत्सजातीयमेव प्रष्टं ज्ञेयम्। अज्ञविधस्य ज्ञानान्तरवदपायप्रसङ्गेनास्थिरत्वादिति ॥ ४ ॥

## श्रीगिरिधरकृता बालप्रबोधिनी

गङ्गाद्वारे समासाद्य क्षत्त्रा पृष्टेन पञ्चमे। सर्गस्तु महदादीनां मैत्रेयेण निरूप्यते ॥

हरिद्वारे समागतो विदुरः किं कृतवानित्यपेक्षायामाह—द्वारीति। द्युनद्या गङ्गाया द्वारे आसीनं भगवच्चिन्तनपरतयो-पविष्टं मैत्रेयमुपसृत्य "स गुरुमेवाभिगच्छेत्समित्पाणिः" इत्याद्युक्तरीत्योपसृत्य समीपे प्राप्य तस्य सौशील्यमार्जवादिस्वभावत्वं गुणाः करुणादयस्तैरभितृप्तः क्षत्ता विदुरः पप्रच्छेत्यन्वयः। सौशील्यादिमत्त्वेऽपि यदि तस्य प्रबोधसामर्थ्यं न स्यात्तर्हि किं प्रश्नेनेत्याशङ्क्य "श्रोत्रियं ब्रह्मनिष्ठं" इत्याद्युक्ताचार्यलक्षणं तत्रास्तीत्याह—अगाधबोधमिति। अगाधोऽपारो बोध आत्मपरमात्म-याथात्म्यज्ञानं यस्य तमित्यर्थः। विदुरेऽपि शिष्यलक्षणमस्तीत्याह—कुरुणां मध्ये ऋषभः श्रेष्ठ इति। यतोऽच्युते परिपूर्णानन्द-स्वरूपे श्रीकृष्णे यो भावो भक्तिस्तेन शुद्धो निवृत्ताखिलरागद्वेषादिदोषः ॥ १ ॥ ❀ ❀ तत्प्रश्नानेव दर्शयति—सुखायेति पञ्चदशभिः। लोके हि फलं द्विविधं सुखं दुःखाभावश्चातो लोको जनः सर्वोऽपि सुखाय सुखप्राप्त्यर्थं—चकारात् दुःखनिवृत्त्यर्थं च—कर्माणि लौकिकानि कृषिवाणिज्यादिरूपाणि तथा श्रौतस्मार्त्तादीनि यज्ञादीनि च करोति। तैः कर्मभिः सुखं यथेष्टं निर-तिशयसुखं अन्यस्य दुःखस्य उपारममात्यन्तिकीं निवृतिं वा न विन्दते किन्तु ततस्तैरेव कर्मभिर्भूयः पुनः-पुनर्दुःखमेव विन्देत विन्दते। लौकिके आयासद्रव्यव्यापारादिदुःखस्य प्रसिद्धत्वात् पापाचारसम्भवेन तत्प्रयुक्तनरकपातादिदुःखस्य निश्चयात् श्रौते स्मार्ते च वैगुण्यबाहुल्यात् कदाचित्तद्राहित्येन क्रियासमाप्तौ तत्तल्लोकगमनेऽप्यन्योत्कर्षदर्शनक्षयचिन्तनादिभिर्दुःखस्य निश्चित-त्वात्। अतोऽत्र निरतिशयसुखप्राप्तौ आत्यन्तिकदुःखनिवृत्तौ च नोऽस्माकं यद्युक्तं साधनत्वेन कर्तुं योग्यं तत् भगवान् सर्वज्ञो भवान् वदेत्। प्रार्थनायां लिङ्। तेन भवन्तं प्रार्थयामि, न त्वाज्ञापयामीति सूचयति ॥ २ ॥ ❀ ❀ ननु निवृत्तबाह्यान्तः-करणव्यापारस्य भगवत्प्रवणैकचित्तस्य मे किं भवत्प्रश्नानां प्रतिवचनेन प्रयोजनमित्याशङ्कां शमयन्नाह—जनस्येति। यस्मात् जनार्दनस्य जनां जगज्जननीं मायामर्दयतीति तथा तस्य भगवतो भव्यानि जगतो मङ्गलरूपाणि भूतानि भक्ताः भवन्तः

---

१. यतः पा। २. सदुर्ज्ञेयत्वम्।

सुदुःखितस्य मादृशस्य जनस्यानुग्रहाय यथाधिकारं साधनोपदेशेनोद्धारार्थमेव इह मर्त्यलोके चरन्ति, नूनं निश्चितमेवैतदत्र सन्देहो नास्ति, तस्मात् मत्पृष्टं सुखोपायं वदेति शेषेणान्वयः। ननु जनस्य कुतो दुःखितत्वमित्याकाङ्क्षायामाह—कृष्णाद्विमुखस्येति। तदपि कुत इत्यपेक्षायामाह—दैवादिति, पूर्वकर्मवशादधर्मनिरतस्येत्यर्थः। पापं प्रज्ञां नाशयति, क्रियमाणं पुनः-पुनः नष्टप्रज्ञः पापमेव नित्यमारभते जन इति सिद्धान्तेन त्वहर्निशं विषयासक्त्या क्रियमाणपापेन बुद्धिभ्रंशात् कृष्णविमुखत्वमिति भावः॥ ३३॥ ❀ ❀ साध्नोति स्वपरकार्यमिति साधुः, भवांस्तु भगवद्भक्तत्वेन साधुवर्यस्ततः श्रेष्ठः, अतो भवतोऽस्मदुद्धारप्रयत्न आवश्यक इति सूचयन् सम्बोधयति—साधुवर्येति। ननु त्वया पृष्टो निरतिशयसुखस्योपायस्तु भक्तिपूतहृदयस्य भगवदनुगृहीतं ज्ञानमेवेति चेत्तर्हि येन वर्त्मना आराधितः संसेवितः स सकलसच्छास्त्रप्रसिद्धो भगवान् भक्तियोगेन पूते पवित्रिते पुंसां हृदि स्थितः सन् तत्त्वमधिगम्यते येन तत्तत्त्वाधिगमं पुराणं अनादिवेदप्रमाणकं ज्ञानं प्रयच्छति तत् शं सुखरूपं वर्त्म मार्गमादिशेत्यन्वयः॥ ४॥

## हिन्दी अनुवाद

### विदुरजीका प्रश्न और मैत्रेयजीका सृष्टिक्रमवर्णन

श्रीशुकदेवजी कहते हैं—परमज्ञानी मैत्रेय मुनि ( हरिद्वारक्षेत्र ) में विराजमान थे। भगवद्भक्तिसे शुद्ध हुए हृदयवाले विदुरजी उनके पास जा पहुँचे और उनके साधुस्वभावसे आप्यायित होकर उन्होंने पूछा॥ १॥ ❀ ❀ विदुरजीने कहा—भगवन्! संसारमें सब लोग सुखके लिए कर्म करते हैं; परन्तु उनसे न तो उन्हें सुख ही मिलता है और न उनका दुःख ही दूर होता है, बल्कि उससे भी उनके दुःखकी वृद्धि ही होती है। अतः इस विषयमें क्या करना उचित है, यह आप मुझे कृपा करके बतलाइये॥ २॥ ❀ ❀ जो लोग दुर्भाग्यवश भगवान् श्रीकृष्णसे विमुख, अधर्मपरायण और अत्यन्त दुःखी हैं, उनपर कृपा करनेके लिये ही आप-जैसे भाग्यशाली भगवद्भक्त संसारमें विचरा करते हैं॥ ३॥ ❀ ❀ साधुशिरोमणे! आप मुझे उस शान्तिप्रद साधनका उपदेश दीजिये, जिसके अनुसार आराधना करनेसे भगवान् अपने भक्तोंके भक्तिपूत हृदयमें आकर विराजमान हो जाते हैं और अपने स्वरूपका अपरोक्ष अनुभव करानेवाला सनातन ज्ञान प्रदान करते हैं॥ ४॥

करोति कर्माणि कृतावतारो यान्यात्मतन्त्रो भगवांस्त्र्यधीशः।
यथा ससर्जाग्र इदं निरीहः संस्थाप्य वृत्तिं जगतो विधत्ते॥ ५॥
यथा पुनः स्वे ख इदं निवेश्य शेते गुहायां स निवृत्तवृत्तिः।
योगेश्वराधीश्वर एक एतदनुप्रविष्टो बहुधा यथाऽऽसीत्॥ ६॥
क्रीडन् विधत्ते द्विजगोसुराणां क्षेमाय कर्माण्यवतार[१]भेदैः।
मनो न तृप्यत्यपि[२] शृण्वतां नः सुश्लोकमौलेश्चरितामृतानि॥ ७॥
यैस्तत्त्वभेदैरधिलोकनाथो लोकानलोकान् सह लोकपालान्।
अचीक्लृपद्यत्र हि सर्वसत्त्वनिकायभेदोऽधिकृतः प्रतीतः॥ ८॥
येन प्रजानामुत आत्मकर्मरूपाभिधानां च भिदां व्यधत्त।
नारायणो विश्वसृडात्मयोनिरेतच्च नो वर्णय विप्रवर्य॥ ९॥
परावरेषां भगवन् व्रतानि श्रुतानि मे व्यासमुखादभीक्ष्णम्।
अतृप्नुम क्षुल्लसुखावहानां तेषामृते कृष्णकथामृतौघात्॥ १०॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

करोति कर्माणीत्यादीनां वर्णयेति पंचमश्लोके क्रियासंबंधः। यथा येन प्रकारेण पुरुषरूपेण कृतावतारः संस्त्र्यधीशः त्रिगुणमायानियंता अतः स्वतंत्र एव यानि कर्माणि करोति। कर्माण्येव विशेषतः पृच्छति। यथेत्यादिना। निरीहो निष्क्रियो निःस्पृहो वा संस्थाप्य सुस्थितं कृत्वा। वृत्तिं जीविकाम्॥ ५॥ ❀ ❀ स्वे स्वीये खे हृदयाकाशे निवेश्य स्थापयित्वा। निवृत्ता वृत्तयो यस्य। गुहायां योगमायायाम्। बहुधा ब्रह्मादिरूपेण अधीश्वरः अतएैश्वर्यैः॥ ६॥ ❀ ❀ मत्स्याद्यवतारभेदैः

१. प्रा० पा०—ताररूपैः। २. प्रा० पा०—त्यधिशृण्वतां।

क्रीडन्यानि कर्माणि विधत्ते यथा पुनर्विशेषं प्रष्टुमौत्सुक्यमाविष्करोति। मन इति सुश्लोकाः पुण्यकीर्तयस्तेषां मौलिरिवाधिक्येनोपरि विराजमानस्तस्येत्यर्थः ॥ ७॥ ॐ ॐ अधिलोकनाथो लोकनाथाधिपतिः अलोकाँल्लोकालोकपर्वताद्बहिर्भागान् अचीकॢपत्कल्पयामास। यत्र येषु सर्वाणि यानि सत्त्वानि तेषां निकायास्तेषां भेदः अधिकृतस्तत्तत्कर्माधिकारी आश्रित इति वा॥ ८॥ ॐ ॐ उतापि च येन प्रकारेण जीवानामात्मा स्वभावस्तत्कृतं कर्म तत्कृतं रूपं तत्कृता अभिधास्तासां भेदं कृतवान्। विश्वस्रष्टा स्वयमात्मयोनिः स्वतःसिद्धः॥ ९॥ ॐ ॐ ननु महाभारते त्वया सर्वं श्रुतमेव किं पुनः प्रश्नैस्तत्राह। परे त्रैवर्णिका अवरे शूद्रादयस्तेषां व्रतानि धर्माः मे मया अभीक्ष्णं पुनःपुनः तेषां श्रवणेनातृप्नुम तृप्ताः स्म तेषां तुच्छसुखावहत्वात् यस्तु तत्र कृष्णकथामृतौघः सूचितस्तस्मादृते तत्र त्वलं बुद्धिर्नास्तीत्यर्थः॥ १०॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

अतो मायानियंतृत्वात् ईहापदस्योभयार्थत्वाद्वेति॥ ५॥ ॐ ॐ एकस्यानायासेन बहुधाभवने हेतुः 'योगेश्वराधीश्वरः' इति एतद्विश्वं सृष्ट्वानुप्रविष्ट इति॥ ६॥ ॐ ॐ पुण्यकीर्त्तयः शंकरादयः इत्यर्थ इति। पुण्यश्लोकेड्यकर्मणः इत्युक्तेरिति भावः। "सेशं पुनात्यन्यतमो मुकुन्दात्को नाम लोके भगवत्पदार्थः" इति न्यायेन सर्वोत्कृष्टत्वं हरेरेवेत्यर्थः॥ ७॥ अधिश्रित इति पाठे आश्रित इति वार्थः प्रतीतः। प्रतीतिविषयः॥ ८॥ ॐ ॐ तत्कृतं स्वभावकृतं पुनस्तत्कृतं कर्मकृतं तत्कृता रूपकृता अभिधा नाम स्वभावः सात्त्विकादिः कर्मयज्ञादिरूपस्वरूपं ब्राह्मणत्वादि अभिधा ब्राह्मणादि एतत्स्वभावादि भेदविधानप्रकारकथने सामर्थ्यं द्योतयन्नाह विप्रवर्येति यद्यपि। बहुपुस्तकेषु विश्वसृगात्मयोनिरिति पाठोस्ति तथापि "सृजिदृशोः" इति सूत्रस्थरज्जुसृड्भ्यामिति भाष्यप्रयोगाद्विश्वसृजः पदांते कुत्वाभावादयुक्तः प्रतिभातीति। यद्वा कुत्वकल्पनार्पेति॥ ९॥ ॐ ॐ तेषां परावरधर्माणां तत्र भारते इत्यर्थ इति। कृष्णकथामृतौघस्य प्रतिक्षणं स्वादुतमत्वात्कृष्णकथायामलंबुद्धिर्नोदयत इति भावः। "अभीक्ष्णं मुहुरर्थेन क्षुल्लं तुच्छे क्षुधाजिति। छिक्काकृति क्षुधाकर्तृहर्त्र्योः क्षोदयुते नरे" इति निरुक्तिः॥ १०॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या।

यथेति पूर्वार्द्धेपि योजितम्। अतो मायानियन्तृत्वात्॥ ५॥ ॐ ॐ स महत्स्रष्टृपुरुषः। वृत्तयो मायेक्षणाद्याः शेते ब्रह्मतादात्म्येन तिष्ठति योगमायायां हेतुरूपायां सत्यां यथा एतद्विश्वमंतर्यामिरूपेणानुब्रह्माण्डसृष्ट्यनंतरं तस्मिन्नण्डे प्रविष्टस्सन् बहुधा ब्रह्मादिरूपेण यथासीदिति योजनीयम्॥ ६॥ ॐ ॐ गण्या वृत्त्या व्याख्यानादित्यर्थ इत्युक्तम्॥ ७॥ ॐ ॐ प्रतीतः प्रख्यातः॥ ८॥ ॐ ॐ एतच्च प्रकारविशिष्टस्वभावादिभेदनिर्म्माणम्॥ ९॥ ॐ ॐ महाभारते तदीयकतमकतमांशे॥ १०॥

### श्रीमद्वीरराघवव्याख्या

करोतीति त्र्यधीशः त्रिलोकेशः भगवान्स्वतंत्रः अकर्मवश्य एव कृतावतारः ब्रह्मादिरूपेण कृतानुप्रवेशावतारः यानि कर्माणि करोति अग्रे सृष्टेः पूर्वं निरीहः निर्व्यापार एव स्वयमिदं विश्वं यथा येन प्रकारेण ससर्ज यथा संस्थाप्य सम्यक् स्थितिं रक्षां कृत्वा जगतः वृत्तिं जीविकां विधत्ते करोति एतद्वर्णयेत्युपरितनेनान्वयः एवमग्रेपि॥ ५॥ ॐ ॐ यथेति स भगवान् स्वशरीरभूते खे सूक्ष्मावस्थाऽऽकाशादिकारणभूते अक्षरं तमसि लीयत इत्युक्ततमःशब्दवाच्यप्रकृतिद्रव्ये इदं कार्यप्रपंचं विवेश्य संहृत्य निवृत्तवृत्तिः निवृत्तजगद्व्यापारः गुहायां परमाकाशे वैकुंठ इत्यर्थः, शेते वसति हे योगीश्वराधीश्वर! योगीश्वरश्रेष्ठ! एकः स्वयं एतच्चिदचिदात्मकं जगदनुप्रविष्टः स्वप्रशासनाधीनं कुर्वन् धारकतया स्थितः बहुधा देवमनुष्यादिबहुनामभाक् यथा आसीद्बभूव॥ ६॥ ॐ ॐ क्रीडन्निति यथा च द्विजगोसुराणां ब्राह्मणगोदेवतानां क्षेमायावतारभेदैः रामकृष्णाद्यवतारभेदैः भेदशब्दो गौणावेशशाक्त्याद्यवताराणां प्रदर्शनार्थः स्वयं क्रीडन्नेव कर्माणि दुष्कृद्विनाशनसाधुपरित्राणादिरूपकर्माणि विधत्ते करोति अन्यदपि प्रक्ष्यमाणः अंतरा स्वस्य प्रतिवचनश्रवणौत्सुक्यमावि करोति अर्द्धेन। मन इति सुश्लोकमौलेः सुष्ठु श्लोक्यंते कीर्त्यंत इति सुश्लोकाः पवित्रकीर्तिमंतः तेषां मौलिरिव प्रधानः तस्य भगवतश्चरितामृतान्यमृततुल्यानि चरित्राणि शृण्वतामपि नः मनः न तृप्यत्यलंभावं न गच्छतीत्यर्थः॥ ७॥ ॐ ॐ अन्यदपि पृच्छति यैरिति अधिलोकनाथः लोकाधिपतिः यैस्तत्त्वभेदैर्महदादिभिरित्यर्थः। सहलोकपालान्सहविद्यमानाः लोकपाला येषां तान् लोकान् अलोकान् लोकालोकबहिर्भागान्नरकान् वा अचीक्लपत् कल्पयामास तान्वर्णयेत्यर्थः। यत्र येषु लोकादिषु सर्वाणि यानि सत्त्वानि प्राणिनः तेषां निकाया समूहास्तेषां भेदः भिदा अधिकृतः कर्मानुगुणाधिकारवान् प्रतीतः प्रतीयते॥ ८॥ ॐ ॐ येनेति। उतापि च आत्मन योनिः आत्मवै योनिः कारणं यस्य सः आत्मयोनिः कारणांतरशून्य इत्यर्थः। विश्वस्रष्टा नारायणः प्रजानां व्यष्टिभूतानां आत्मकर्मरूपाभिधानां आत्मा ज्ञानेंद्रियगणः कर्म कर्मेन्द्रियगणः रूपाणि देवमनुष्यादिरूपाणि अभिधादेवो

मनुष्य इत्याद्यभिधाः आसां भिदां येन-येन प्रकारेण व्यधत्ताकरोत् किं साक्षात्परंपरया वेत्यभिप्रायः। एतत्पृष्टं चकारादपृष्टमपि नोऽस्मभ्यं हे विप्रवर्य ! वर्णय ॥ ९ ॥ ❀ ❀ ननु बहुश्रुतस्य तव किमनया शुश्रूषयेत्यत आह परावरेषामिति हे भगवन् मैत्रेय ! परे त्रैवर्णिका अवरे स्त्रीशूद्रादयः तेषां व्रतानि व्यासमुखादभीक्ष्णं पुनः-पुनः मे मया श्रुतानि भगवत्कथामृतपूराद्विना क्षुल्लसुखावहानामल्पसुखसंपादकानां तेषां व्रतानां श्रवणेनेति शेषः, अतृप्नुम तृप्ताः अभूम भगवत्कथामृतश्रवणेन तु न तृप्ता इत्यर्थः ॥ १० ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

सुखवर्त्मापि भगवत्सृष्ट्यादिगुणकर्मकथनश्रवणादिकमेव नातोन्यदित्याशयवान् तत्सृष्ट्यादिप्रकारं पृच्छति करोतीति। देवदत्तव्यावृत्तये आत्मतंत्र इति स्वातंत्र्यं च कतिपयवस्तुष्वेव न सर्वत्रेत्यत उक्तं भगवांस्त्र्यधीश इति। तानि कर्माणि दुष्टनिग्रहादीनि वर्णयेति प्रत्येकमन्वेतव्यं किंचाग्रे आदिकाले यथा इदं जगत्ससर्ज तं प्रकारमिति सर्वत्र योज्यम्। तत् सेतौ संस्थाप्य न्यस्य यथा जगतो वृत्तिं जीविकां विधत्ते तवेयमिति शाश्वतो वक्ति ॥ ५ ॥ ❀ ❀ पुनः प्रलये खे निजोदराकाशे गुहायामिदं निवेश्य निवृत्तजगत्सृष्ट्यादिवृत्तिः स हरिर्यथा शेते एतज्जगत्सृष्ट्वा तदनुप्रविष्टे हरिर्यथा बहुधासीत् अनायासेन बहुरूपं गृह्णातीति योगेश्वराधीश्वर इत्युक्तम् ॥६॥ ❀ ❀ जगत्सर्जनादिकर्मकथनश्रवणादेरवतारभेदैः क्रियमाणकर्मकथनादौ सम्यक् मनो निर्विशतीत्यतस्तानि कर्माणि अवश्यं वक्तव्यानीत्याशयेन पुनरुक्तं करोति क्रीडन्निति। द्विजगोसुराणां क्षेमायेति चतुर्थ्या तदेव प्रयोजनमित्यवधारयति भवता श्रुतपूर्वाणि हरेः कर्माणि पुनः प्रश्नस्य कोर्थ इत्याशंक्य सत्यं किं त्वलं बुद्ध्यभावाद्विशेषश्रवणेच्छा इत्याह मनो नेति। चरितश्रवणपानं कुर्वतामित्यर्थः ॥ ७ ॥ ❀ ❀ ननु चतुर्मुखेन लोकादयः कल्प्यंते सूर्याचंद्रमसौ धाता यथापूर्वमकल्पयदित्यादिश्रुतेः। अतः कथं हरेः सकाशात् लोकादिसर्जनादिकं तत्कथनीयमिति प्रश्न इत्याह यैरिति। महदादितत्त्वभेदैः भेदो विशेषो दलनमित्यभिधानं भूरादिलोकान् अलोकान् पृथिव्यादिबाह्यावरणविशेषान् तत्त्वभेदैरित्युक्त्या प्रथमतो ब्रह्मांडनिर्माणं तदनंतरं लोकादिकल्पनमिति ग्राह्यं तथावक्ष्यमाणत्वात् तेन यत्र ब्रह्मांडे क्लृप्तलोकेषु सर्वसत्त्वानां सर्वप्राणिनां निकायस्य देवमनुष्यादिभेदोधिकृतः। तत्तत्पदाधिकारयोग्यतयाक्लृप्तः प्रतीतः प्रत्यक्षानुमानाभ्यामवगतः कथमित्येतदपि वर्णयेति ॥ ८ ॥ ❀ ❀ नारायणो येन वा प्रजानामात्मना देहेन स्वभावेन वा कर्मणा चेष्टालक्षणेनादृष्टेन वा रूपेण शुक्लनीलाद्याकारविशेषणाभिधानेन घटादिनाम्ना भिदां व्यावृत्तिमुतापि व्यधत्त एतदप्यस्माकं वर्णयेत्यन्वयः। सर्वसत्त्वनिकायेति सामान्येनोक्तस्य विशेषोयं नारायणो देवदत्त इवेत्यत उक्तं विश्वसृगिति। स्वयमन्येन सृष्टः कथं विश्वसृक् स्यादित्यत उक्तमात्मयोनिरिति। आत्मा स्वयमेव योनिः कारणं यस्य स तथा ॥ स्रष्टा धातेति चतुर्मुखस्य स्रष्टृत्वप्रसिद्धेः कथमस्य विश्वसृक्त्वमित्यतो वेत्युक्तमात्मयोनिरिति। आत्मनो विरिंचस्य योनिरित्यर्थः ॥ ९ ॥ ❀ ❀ भगवज्ज्ञानोपयोगित्वेनापादनीयत्वाद्भवत्वेवं मनुष्यादिभेदज्ञानेन किं प्रयोजनमित्याशंक्य तज्ज्ञानस्य भगवज्ज्ञानोपयोगित्वेन युक्तमापाद्यत्वमित्याह परावरेषामिति। परावरेषां ब्रह्मादिदेवमनुष्याणां कृतानि मे मया व्यासमुखादभीक्ष्णं श्रुतानि ततः किं तत्राह नेति। श्रुतानां तेषां ब्रह्मादिचरित्राणामृते अवगमे तात्पर्यज्ञाने सति ब्रह्मादिमहिम्नामपि भगवन्महिमावलंबित्वात्कृष्णकथामृतौघ एवासौ इति यतोऽतस्तेषां भागवतानां कृष्णस्य च कथामृतौघात् श्रुतात् न तृप्नुमः तात्पर्यज्ञाने सति कृष्णकथामृतौघत्वं कुत इति तत्राह कर्णेति। कृष्णकथामृतौघस्यैव कर्णसुखावहत्वं नान्यस्य तस्य कर्णकर्कशत्वमित्यर्थः। ऋ गताविति धातोर्निष्ठांतमृतमिति रूपं न तु ऋत इत्यव्ययं तदंगीकारे तेभ्यो न तृप्नुम इति प्रयोगः स्यात् न तु तेषामिति ग्रंथांतरे भारतस्य प्रशंसानुपपत्तेश्च ॥ ११ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

तत्र बहुषु साधनेषु सत्सु निजहृद्यं निवेदयति करोतीत्यादिभिः टीकायां यथेत्यादिनेति। उभयत्रापि यथाशब्दस्य सम्बन्धात् पूर्व्वमपि योजितम् ॥ ५ ॥ ❀ ❀ स्वे स्वस्वरूपे खे आकाशे आकाशस्तल्लिंगादित्यादिन्यायेन ब्रह्माख्ये निवेश्य विलाप्य गुहायां कस्मिंश्चित् सर्व्वागोचरप्रदेशे तत्तादात्म्येन तिष्ठति महत्स्रष्टृपुरुष इति शेषः ॥ ६—११ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

करोति कर्म्माणीत्यादीनाम्। वर्णयेति। पञ्चमश्लोकस्थेनान्वयः। त्र्यधीशः पुरुषत्रयेशः कृष्णः कर्माणि गोवर्द्धनोद्धरणादीनि। त्रिगुणमायाधिष्ठाता महाविष्णुश्च यथा इदम् अग्रे पूर्व्वमहाकल्पान्ते संस्थाप्य संहृत्य पुनरेतन्महाकल्पादौ ससर्ज स्रष्टा चावृत्तिं जीविकापालनमित्यर्थः ॥ ५ ॥ ❀ ❀ यथा पुनः स्वे स्वीये हृदयाकाशे निवेश्य स्थापयित्वा गुहायां सर्वागम्यत्वाद्विरजायां नद्यामित्यर्थः। निवृत्तमायागुणवृत्तिः एतज्जगत् सृष्ट्वाऽनुप्रविष्टः बहुधा देवमनुष्यादिरूपो यथासीदिति। सृष्ट्यादिप्रश्नपौनःपुन्यं प्रति महाकल्पगता सृष्ट्यादिलीला एकरूपा भिन्नरूपा वेति जिज्ञासया ॥ ६ ॥ ❀ ❀ अवतारभेदैर्मत्स्यकूर्म्मादिभिः ॥ ७ ॥ ❀ ❀ तत्त्वभेदैर्वैराजपादादिभिः पृथिव्याद्यैर्लोकान् पातालादीन् अलोकान् लोकालोक-

पर्व्वताद्बहिर्भागान् अचीक्लृपत् कल्पयामास यत्र येषु सर्व्वप्राणिनिकायानां भेदो नानाविशेषोऽधिकृतः भक्तिज्ञानयोगकर्म्माद्य-धिकारी भवेत् प्रतीतः ख्यातोऽबाधितश्च ॥ ८ ॥ ❀ ❀ उत अपिच येन प्रकारेण जीवानां आत्मा स्वभावः तदनुसृतं—कर्म कर्म्मानुसृतं रूपं रूपानुसृता अभिधा तासां भेदं कृतवान् नारायण एव विश्वसृग्विश्वसष्ट्रयर्थमात्मयोनिर्ब्रह्मा सन्निन्त्यर्थः ॥ ९ ॥ ❀ ❀ नन्वेतत् सर्व्वं महाभारते त्वया श्रुतमेव तत्राह परे देवाद्या अवरे पश्वाद्यास्तेषां व्रतानि स्वभावास्तेषां तैरतृप्नुम तृप्ताः स्मः। नाग्निस्तृप्यति काष्ठानामितिवत् षष्ठी। क्षुल्लं तुच्छं किंतु यस्तत्र कृष्णकथामृतौघस्तस्मादृते। तेन यद्यन्मया पृच्छयते तत्तत् सर्वं कृष्णकथामृतसंपृक्तमेव त्वया वक्तव्यमिति भावः ॥ १० ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

त्र्यधीशः त्रिगुणमायानियंता पुरुषरूपेण कृतावतारः सन्। यानि कर्माणि करोतीत्यादीनां वर्णयेति वक्ष्यमाणेन क्रियापदेनान्वयः। कर्माण्येव विशेषतः पृच्छति यथेत्यादिना। निरीहः निस्पृहः यथा इदं विश्वं ससर्ज यथा च संस्थाप्य वृत्तिं जीविकां विधत्ते करोति ॥ ५ ॥ ❀ ❀ यथा पुनः इदं विश्वं स्वे स्वीये खे कार्यप्रवेशस्थाने कारणे निवेश्य निवृत्तवृत्तिः ॥ निवृत्तजगद्व्यापारः गुहायां शयनस्थाने शेते। यथाच एक एतत् कार्यं अनुप्रविष्टः उपादानरूपेणानुगतः सन् बहुधा तत्तत्कार्यरूपः आसीत् ॥ ६ ॥ ❀ ❀ अवतारभेदैर्मत्स्याद्यवतारैः क्रीडन्। द्विजादिक्षेमाय यानि कर्माणि विधत्ते तानि च। नानाहरि-चरितप्रश्ने कारणमाह मन इति। शोभनाः श्लोकाः यशांसि पद्यानि वा येषां तेषां मौलेः शिरोभूषणवत्प्रतिष्ठाहेतोश्चरितामृतानि शृण्वतां नो मनो न तृप्यति ॥ ७ ॥ ❀ ❀ अलोकान्। लोकालोकगिरितो बहिर्भवान् अचीक्लृपत् कल्पयामास। यत्र येषु लोकादिषु सर्वसत्वनिकायभेदः अधिकृतः। तत्तदनुरूपाधिकारितया निवेशितः प्रतीतो भवति शास्त्रद्वारेति शेषः ॥ ८ ॥ ❀ ❀ आत्मयोनिः स्वतः सिद्धः येन प्रकारेण प्रजानां सृज्यमानानां देवादीनाम् आत्मा स्वभावः तत्कृतं कर्म तत्कृतं रूपं तत्कृताऽभिधा तासां भेदं व्यधत्त अकरोत्। एतच्च नोऽस्मभ्यं वर्णय ॥ ९ ॥ ❀ ❀ हे भगवन् गुरो! परावरेषां! परः श्रीकृष्णः तस्य व्रतानि चरित्राणि अवरे ब्रह्माद्या जीवास्तेषां च व्रतानि कर्माणि व्यासमुखात् महाभारतादिषु अभीक्ष्णं पुनः पुनः मे मया श्रुतानि तेषां व्रतानां कृष्णकथामृतौघादृते क्षुल्लसुखावहानां श्रवणेनेति शेषः। अतृप्नुम तृप्ताः स्मः श्रीकृष्णकथा-मृतौघपाने न तु न तृप्ता इति फलितोर्थः ॥ १० ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनीव्याख्या

नन्वेतन्निरन्तरं भगवद्गुणश्रवणाद्भवतीति चेत्तत्राऽह—करोति कर्माणीति। [१]अयं च तृतीयः प्रश्नः। भगवतो [२]हीयं श्रीः। अत्र सप्त पदार्थाः पृच्छयन्ते, सप्तविधभक्तिसिद्धयर्थम्। भगवतोऽवतारकर्माणि, जगदुत्पत्तिस्थितिप्रलयास्त्रयः, प्रवेश-नानात्वम्, जगतः [३]प्रकारा इति। सप्तानां पूर्वपूर्वसाधकत्वम्। तत्र भगवदवतारकर्माणि किमर्थमित्याकाङ्क्षायाम्, मोक्षार्थमिति चेत्; उत्पत्तिर्व्य[४]र्था न भवेत् किमिति सन्देहः। अथ यदि तदर्थमेवोत्पादनम्, तदाऽवतारकर्माणि व्यर्थानि उभ[५]योरेकत्वात्, [६]अमोहकत्वेनैव च कार्यसिद्धेः। तस्मादुत्पादनलीलाऽपि ज्ञातव्या[७]। उत्पादनमात्रेण च कार्यासिद्धेर्योग्यता-सिद्धयर्थं तावत्कालं स्थितिरपि मृग्या। यदि भगवांस्तन्ना[८]शयेत्, तदा विहितकरणादिनाऽपि कार्यं सेत्स्यतीति नाऽवतारप्रयोज-नम्। किञ्च, यदि बहुधाऽयं भगवान्न भवेत्, तदाऽवतारेण सर्वमुक्तिरेव भवेत्, अतो भिन्नस्वभावेन प्रेरणान्नानाभावाच्च सर्वा व्यवस्था [९]सम्पद्येत। लोकाश्चेद्भगवत्कृता एकविधाः स्युः, ब्रह्माण्डाद्वा निर्गमनं न भवेत्, तदाऽप्यवतारकर्माणि [१०]भिन्नानि। ऐकात्म्ये वा यद्यंकस्य साधनमन्यस्य भवेत्, तथापि व्यर्थं स्यादिति भेदनिर्माणं च ज्ञातव्यं स्यात्। अतः सप्तानामेकः प्रश्नः, सप्ताङ्गत्वाच्छ्रि[११]यः। कृतावातारो भगवान् यानि कर्माणि। यानीति प्रसिद्धिरुक्ता। बहूनि च वक्तव्यानि, तेषां कर्मत्वं च वक्तव्यम्। तानि च भगवत्कर्माणि भवन्ति न भवन्तीति, भगवतः [१२]कर्तव्यमकर्त्तव्यं वा। दोषत्रयाभावस्तु मयैव ज्ञायत इति विशेषणत्रयमाह भगवान् कालाधीनतया न किञ्चित्करोति, कालार्थं वा। यदाह—आत्मतन्त्र इति। स्वतन्त्रो न कालाधीन इत्यर्थः। कर्मस्वभावयोः स्वमध्यपातात् भिन्नतया निवारयति—भगवानिति। कर्माधीनता व्यावर्त्तिता, न हि पूर्णज्ञानवतः कर्माणि बन्धकानि भवन्ति। त्र्यधीश इति त्रिगुणनियन्ता, अतो न स्वभावाधीनः। तस्मादेतादृशेन यानि कर्माणि कृतानि, न स्वभावात्, नाऽदृष्टतः, न काल-प्रेरणात्, तानि कर्माण्यलौकिकान्येव भवन्तीति श्रोतव्यानि भवन्ति। किञ्च, यथा इदं ससर्ज। अग्रे सृष्टेः पूर्वम्। एको दोषा-भावस्तु ज्ञायते, यदयं चेष्टया न करोतीति, मनश्चेष्टाऽपि निवारिता, इच्छायां सन्देहः, प्रयत्नो नास्तीति निश्चयः, ज्ञानं चाऽस्तीति।

---

१. श्लोकपञ्चकेन क्रियमाणः, व्युत्क्रमेण तृतीयस्य श्याख्यस्य गुणस्य प्रश्न इत्यर्थः प्र.। २. पृच्छयमाना प्र.। ३. तत्त्वभेदेन स्वरूपादि-भेदेन द्विविधाः प्रकाराः प्र.। ४. उत्पत्तेः संसारार्थत्वादवतारकर्मभिर्मोक्षे सा तथेति, कथमुभयसामञ्जस्यमिति प्रश्नबीजम् प्र.। ५. जीवोत्पत्त्यवता-रकर्मणोरेकेनैव कार्यसिद्धावितरवैयर्थ्यादित्यर्थः, प्रकाशः। ६. तथा चाऽवतारकर्माणि व्यर्थानीत्यर्थः, प्र.। ७. परस्पराविरोधेन ज्ञातव्या प्र.। ८. स्थितौ मोहं नाशयेत् तन्न नाशयेदिति पाठे तं मोहं न नाशयेदित्यर्थः, प्र.। ९. अतोऽन्तर्यामिस्वभावभेदोऽपि सहेतुको ज्ञातव्य इत्यर्थः, प्र.। १०. न स्युरिति शेषः, प्र.। ११ श्रीरत्र वासुदेवस्य माया ज्ञेया, प्र.। १२. तव्यस्त्वावश्यकार्यः, प्र.।

किञ्च, सर्वमेवोत्पादितं सम्यक् स्थापयित्वा जगतो वृत्तिं विधत्ते, सर्वेषामेव जीविकां प्रयच्छति । [1]अत्र दूषणाद्यभावो न श्रुतो, न ज्ञायते, प्राणिनामन्योन्याहारात् ॥ ५ ॥ ❀ ❀ किञ्च—यथेति । यथा वा इदं सर्वं संहृत्य, स्वे स्वकीये हृदयाकाशे इदं सर्वं निवेश्य, स्वयमपि गुहायां गुप्तस्थाने किल शेते । अत्रैकस्य दूषणस्य परिहारो ज्ञायते । निवृत्ता वृत्तयो यस्य, जाग्रत्स्वप्नसुषुप्तिवृत्तयो यत्र न सन्तीति । का वा गुहा, को वा संगो[2]प्यः ? इति न जानीमः । हृदये च पुनः सर्वं निवेशितवान् । किञ्च, योगश्वराणामधीश्वरः । एक एव एतत्सर्वं सृष्टमनुप्रविष्टो यथा बहुधा आसीत्, तद्वक्तव्यम् । योगेन नानारूपाणि योगी करोति । ते ह्युपायेन स्वयोगं व्ययीकृत्य तथा भवन्ति, यथा कर्मणा । परं कर्मणा क्रमेण भवन्ति । योगेन त्वेकदैव भवन्ति अयं तु तेषामपीश्वरः । अधिशब्देन च योगैश्वर्ये अभ्यधिके निरूपिते भवतः । अनेन बहुधा भवनं सम्भवतीत्युक्तम् । परमखण्डः, समुदायेन वा, खण्डशो वा भवतीति सन्देहः ॥ ६ ॥ ❀ ❀ नन्वेतादृशं चरित्रं भवता बहुधा श्रुतं भारतादौ किमिति पुनः पृच्छयत इत्याशङ्कयाऽऽह—क्रीडन् विधत्त इति । द्विजगोसुराणां क्षेमायाऽवतारभेदैः क्रीडन् कर्माणि विधत्ते । किमतो यद्येवमत आह—तानि कर्माणि शृण्वतामपि मनो न तृप्यति । अन्येषां तृप्तावपि नो मनो न तृप्यति । तत्र हेतुः—सुश्लोकमौलेश्चरितामृतानीति । एकं कर्तुर्विशेषणमपरं कर्मणाम् । सुश्लोका उत्तमा कीर्तिर्मौलौ यस्य । यदा भगवान् दृश्यते, तदा दूरादेव तस्य कीर्तिर्दृश्यते, यथा दूरात् पुरुषस्य मुकुटं दृश्यते । अतो भगवदिच्छायां निवृत्तायां परं कीर्तीच्छा निवर्तते । भगवन्तं मन्यमानः कथं शिरोभूषणान्निवर्तेत ? किञ्च, एतानि कर्माण्यमृतरूपाणि चरितानि । कर्माण्येव चरितानि । चरितानाममृतत्वमनुभवसिद्धम्, क्षुत्पिपासादिनिवारकत्वेन मरणनिव[3]र्त्तकत्वं च । चरितमिति प्रयत्नमात्रम् । भक्ष[4]णवाचकत्वेन वा विरोधेनामृतत्वमद्भुतकर्मत्वेन । कर्माणि च पुनश्चरितेन कृत्वैव अमृतानि, उत्पन्नान्येव नित्यानीति । प्रयत्नमात्रविषयत्वेन तेषां नित्यत्वे, श्रवणादिप्रयत्नविषयाणामपि नित्यत्वात्, सर्वेन्द्रियव्यापारपूर्णत्वेन ऐहिकामुष्मिकदुःखनिवारकाणि भवन्ति, तदोभयामृतत्वं संपद्यते । द्विजगोसुराणामिति मन्त्रा हविर्देवताश्च यागे प्रधानभूतास्त्रयो निर्दिष्टाः, तेषां क्षेमाय कर्मकरणम् । अनेन भगवत्कर्माणि धर्मरूपाणीत्युक्तम् । ततश्च तानि मनसा भावितानि मनोयज्ञा भवन्ति, कीर्तितानि वाग्यज्ञाः, श्रुतानि ज्ञानयज्ञा इति । अवतारभेदैरिति नानाविधैरवतारैः । भेदग्रहणेन लोके तदवतारत्वेन ज्ञातुमशक्यमिति गम्यते । मत्स्याद्यवताराविसदृशत्वात् भेदा इत्युच्यन्ते । अथवा, ज्ञानक्रियाविशिष्टभेदेन त्रयोऽवताराः । तेषां भेदाः । ज्ञानकलावतारा व्यासादयः, क्रियाकलावतारा वराहादयः, उभयं कृष्णः । अवताराश्च भेदाश्चेति वा । तदा भेदा आवेशिनः । अवतारैरावेशैश्च यज्ञानां परिपालनं क्रियत इति करणे रक्षा हेतुः, अतृप्तौ चरितामृतत्वम् । अतश्चरित्राणि वक्तव्यान्येवेत्यर्थः ॥ ७ ॥ ❀ ❀ यैरिति । यैस्तत्त्वभेदैर्लोकानलोकांश्च लोकपालसहितान् अचीक्लृपत् तानि कथयेत्याह । कति तत्त्वानि लोकसर्गे व्यापृतानि, कति चाऽलोके । यदि सर्वैरेव तत्त्वैः सर्व एव कृताः स्युः, तदा लोकालोकादिभेदो न स्यात् । लोक्यत इति लोकः, प्रत्यक्षयोग्यः । लोकालोकात्परभागास्तु न प्रत्यक्षयोग्याः । अस्याऽयं भावः । स्वभावत एव लोकरूपा अलोकरूपाश्च लोकाः, न तु तेजसा प्रकाशिताः, मनुष्याणामेव[5] तदपेक्षणात् । तदभावो[6] वा किंमूलकः ? अत्रैव हि मेघकाष्ठसूर्यादय उत्पद्यन्ते, ते चाऽन्यत्र कुतो न भवन्ति ? अतोऽलोकाः केचन स्वत एवेति । तत्रापि च लोकपालाः सन्ति । तत्र चक्षुषा विषयग्रहणे आलोकापेक्षाभावः, चक्षुरभावो[7] वा । अथवा, लोकान् स्वर्गादीन्, अलोकान् लोकरहितान् उज्जटान् देशान्, लोकेऽपि लोकपालसहितांस्त्रीनित्यर्थः । यत्राऽचीक्लृपत्, तत्कथयेति [8]प्रश्नः । ननु किमिति त्रयो भेदा गणिताः लोका राजसाः, अलोकास्तामसाः, लोकपालाः सात्त्विका इति । तत्राऽऽह—सर्वसत्त्वनिकायभेदोऽधिकृतः प्रतीतश्च । सर्वाणि च सत्त्वानि जीवयोनिभेदाः, तेषां निकायः समूहः, तस्य भेदः सहानवस्थानम् । समूहा अपि भिन्नास्तिष्ठन्तीति । न हि पिपीलिकाः पक्षिणश्च एकत्र भवन्ति । सोऽप्यधिकृतः । तत्राप्यधिकारिणः[9] सन्ति, अन्यथा उपदिकानां मुखे जलम्, काकानामेकाक्षित्वम्, पशूनां च तूपरातूपरभेदो न स्यात् । किञ्च, प्रतीतोऽप्ययं सर्वोऽपि भेदः, यत्र प्रतीयन्ते सर्वे भेदाः, तत्राऽप्रतीताः कियन्तो वा भवन्तीति । युक्त एव महतो निर्माणे तत्त्वभेद इति हिशब्दार्थः । अनेन ब्रह्माण्डनिर्माणं सहेतुकं वक्तव्यमिति प्रश्नः ॥ ८ ॥ ❀ ❀ किञ्च, येनेति । प्रजानामपि प्रत्येकमात्मा कर्म, रूपम्, अभिधा नाम; एतेषां येन हेतुना कृत्वा भिदां व्यधत्त । एकस्यामपि योनौ अनन्ता एव भेदाः; तेषु च एको द्वितीय इव न भवति स्वरूपादिना केनाऽपि । तत् कुतः ? इति प्रश्नः । नन्वेत[10]दकृतमेव स्यात्तत्राऽऽह—नारायणो विश्वसृगात्मयोनिरिति । अत्र हेतुत्रयमस्माभिर्ज्ञायते, नाऽन्य इति । तानाह—'नाराज्ञातानि तत्त्वानि नाराणीति विदुर्बुधाः ।' तान्ययनं यस्येति, तेषु सर्वत्रैव विद्यमानत्वात् । एकेनांशेन द्वयं न क्रियत

---

१. विविधायां जीविकायाम्, प्र । २. स्वस्वरूपमज्ञापनीयः, प्र । ३. मरणनिवर्त्तकत्वेन च, ग । 'क्षुत् खलु वै मनुष्यस्य भ्रातृव्यः' इति श्रुतेः क्षुधस्तथात्वात्तन्निवारकत्वेन तथात्वमित्यर्थः, प्रकाशः । ४. चरित्रे मरणनिवारकत्वस्याऽनुभवसिद्धत्वाभावान्नञ्समासमभिप्रेत्य पक्षान्तरमाहुः–भक्षणेत्यादि । कर्मणां श्रवणासेचनत्वेनाऽत्यास्वादनेऽपि न तेषां हानिसंभावनेति तथेत्यर्थः, प्र. । ५. मनुष्यतुल्यचक्षुष्काणाम्, प्र. । ६. उलूकादिषु आलोकापेक्षाऽभावः प्र. । ७. आलोकपदेन पिपीलिकादिसंग्रहार्थमाहुः–चक्षुरभावो वेति, प्र. । ८. लोकादिजनकतत्त्वभेदादिकरणं कथयेत्यर्थः प्र. । ९. नियतकार्ये नियुक्ताः प्र. । १०. हेतुं विनैव प्र. ।

इति तदंशे विद्यमान एव भगवांस्तावद्भेदहेतुरित्येकः पक्षः। किञ्च, विश्वसृक् सर्वस्य कर्ता भगवान्; सर्वत्रैवोपादानगोचरापरोक्षज्ञानमस्यास्ति, अन्यथा तावतो कः सृजेत्। अतो भगवज्ज्ञानमेव तावद्भेदे हेतुरिति द्वितीयम्। किञ्च, आत्मयोनिरिति। आत्मैव योनिः कारणं यस्य। अयं स्वस्मादेव स्वयमुत्पद्यते। अतो अतो भगवतः कश्चन तादृशो गुणोऽस्ति, येन स्वयमेव स्वस्मादुत्पद्यत इति भिन्नो भवति, एवमेवायमनन्तमूर्तिर्जात इति स्वयमेव तावद्रूपो भवतीति, एवं तत्त्वतो ज्ञानतश्चेति हेतुत्रयं ज्ञायते। अन्यद्वक्तव्यमित्यर्थः। एतच्चेति चकारात् पूर्वोक्त[1]मपि प्रष्टव्यमित्युक्तम्, अन्यथोत्तरमेव वक्तव्यं स्यात् सर्वत्र। न इति बहुवचनमेकशिष्यत्वादवक्तव्यनिराकरणेन प्रचारणपारम्पर्यबहुत्वज्ञानार्थम्। विप्रवर्येति 'प्रा पूरणे' इति धातोर्विशेषेण पूरयतीति सर्वगुणपूर्णता निरूपिता। तेषामपि वर्यत्वात् पूर्णा भगवद्गुणा अस्मिन् सन्तीति सर्वकथने हेतुः॥ ९॥

❀ ❀ नन्वेतत्सर्वं भारते कथितमेव, तथा च पुनः किमर्थं पृच्छ्यत इत्याशङ्क्याऽऽह—परावरेषामिति। श्रुतस्याऽपि श्रवणे किं दूषणम्? आनन्त्यात्पदार्थानामपर्यवसानमिति चेत्, तत्रोच्यते। परावरेषां ब्रह्मादिस्थावरान्तानाम्। व्रतानि नियतधर्माः, कर्माणि च श्रुतान्येव। तानि व्यासमुखादभीक्ष्णशः श्रुतानि। व्यासो हि नीतिज्ञानार्थं बहुधा सर्वेषां धर्मान् कथयति, अन्यथा राज्ये स्थिरा बुद्धिर्न भवतीति। परं राज्यमेव त्यक्तमिति तेभ्य उपरता बुद्धिः। उपरमे हेतुः—क्षुल्लसुखावहानामिति। अल्पमेव सुखमावहन्ति। तद्वतः श्रवणेन तथा हृदयभावनायामन्ततो गत्वा तत्त्वं भवति। तस्माद्वा दोषाद्विमुच्यते। उभयथाऽप्यल्पं सुखं फलतः। स्वरूपतस्तु तद्दुःखात्मकमेव। अत उक्तं क्षुल्लसुखमावहन्तीति। अतस्तैस्तृप्ता जाताः। अतः परं तच्छ्रवणेच्छा नोत्पद्यत इत्यर्थः। तेषामिति प्रसिद्धानामिति। कृष्णकथामृतौघादृते। कृष्णकथैवामृतौघोऽमृतपूरः, तस्मात्परं न तृप्तिः। विरोधाभासश्च सूचितः, क्षुल्लसुखात् तृप्तिः, अमृतपूराच्चाऽतृप्तिरिति। अयमर्थः—इच्छा हि यथाविषयं जायते, तस्मिन् प्राप्ते निवर्त्तते च। सा च विषयसमाना भवति। विषयश्चाऽल्प इत्यल्पीयस्येव सा सर्वत्रोत्पद्यते, पिपीलिकाक्षुद्वत्; न हि पिपीलिका गजभोज्यं भोक्तुमर्हति, अतोऽल्पेनैव निवर्तते। गजस्तु कोटिपिपीलिकान्नेनाऽपि न तृप्यति। अतो भगवद्विषयिणी या इच्छा, अनन्तगुणत्वाद्भगवतः सर्वं ग्रहीतुं महता कालेनाऽप्यशक्ता, न तृप्ता भवति। अतो न निवर्तत इति। कृष्ण इति सदानन्दः; तस्य कथा तद्रूपा, भगवद्धर्माणां भगवद्रूपत्वात्। सरसश्च पदार्थो बहु गृह्यते, अल्परसोऽल्प एवेत्यनुभवः॥ १०॥

## श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

करोतीत्यत्र। अयं चेत्यादिश्लोकपञ्चकेन क्रियमाणः व्युत्क्रमेण तृतीयस्य श्याख्यस्य गुणस्य प्रश्न इत्यर्थः। इयमिति। प्रच्छ्यमाना। प्रकारा इति। तत्त्वभेदेन स्वरूपादिभेदेन द्विविधाः प्रकाराः। नन्वेकप्रश्नमध्ये सप्तानां किमिति निवेश इत्याकांक्षायां निवेशे हेतुमाहुः–सप्तानामित्यादि। तथाहि वस्तूनां स्वरूपभेदः प्रत्यक्षसिद्धः। स च कारणभेदाभावेऽघटमानः कारणीभूततत्त्वभेदं साधयति। तत्त्वभेदश्च प्रवेशभेदः। अन्यथा भगवत एकत्वात्तत्त्वानि न भिद्येरन्। प्रवेशभेदः प्रलयं साधयति। अन्यथा प्रतिकल्पमेकविधमेव ब्रह्माण्डं तिष्ठेत्। प्रलयः स्थिति (?) स्थितिरुत्पत्तिम्। सा च जन्माद्यस्येति न्यायेन भगवन्तं साधयतीत्यतः सप्तानामेकत्र निवेशः। ननु तस्य तस्य तत्तदुपपादकत्वं ज्ञायत एव चेत् प्रश्नस्य किं बीजमित्याकांक्षायां तदाहुः–तत्रेत्यादि। व्यर्थेति। उत्पत्तेः संसारार्थत्वादवतारकर्मभिर्मोक्षे सा तथेति कथमुभयसामञ्जस्यमिति प्रश्नबीजम्। उभयोरेकत्वादिति। जीवोत्पत्त्यवतारकर्मणोरेकेनैव कार्यसिद्धावितरवैयर्थ्यादित्यर्थः। ननु सहकारित्वान्नान्यतरवैयर्थ्यमिति चेत्तत्राहुः–अमोहकत्वेनेत्यादि। तथा चावतारकर्माणि व्यर्थानीत्यर्थः। ज्ञातव्येति। परस्पराविरोधेन ज्ञातव्या। ननूत्पत्तेः स्थितिद्वारैव मुक्त्यर्थत्वमिति चेत्, तत्राहुः–यदीत्यादि। तन्नाशयेदिति। स्थितौ मोहं नाशयेत्। तन्न नाशयेदिति पाठे तं मोहं न नाशयेदित्यर्थः। एतेन नाशलीलाया अपि प्रयोजने सन्देहो बोधितः। संपद्यतेति। अतोऽन्तर्यामिस्वभावभेदोऽपि सहेतुको ज्ञातव्य इत्यर्थः। निर्गमनमिति। तत्त्वभेदेन स्वरूपभेदेन च भेदः। भिन्नानीति। न स्युरिति शेषः। अतो जगतो द्विधा भेदोऽपि ज्ञातव्य इत्यर्थः। सर्वमिति(?)। तत्कारणभूततत्त्वभेदः। अत इति। उत्तरोत्तरज्ञानस्य पूर्वपूर्वज्ञानसाधकत्वात्। श्रीरत्र वासुदेवस्य माया ज्ञेया। अत एवं प्रश्नबीजमुक्त्वा व्याकुर्वते–कुतेत्यादि। प्रसिद्धिरुक्तेति। तथा च न करोतीत्युत्तरं न दातुं शक्यमित्यर्थः। तेषां कर्मत्वमिति। कर्तुरीप्सिततमत्वं तेषां केन रूपेण। एतस्यैव विवरणम्–तानीत्यादि। तस्याऽपि निष्कर्षो भगवत इत्यादि। तव्यस्त्वावश्यकार्यः। ननु कालकर्मस्वभावाधीनः करोतीत्येव कल्पनीयमिति चेत्, तत्राहुः–स्वमध्यपातादिति। अत्रेति। आत्मतन्त्रपदैकदेशबोधितस्वमध्यपाताभावात् (?) अत्रेति। विविधायां जीविकायाम्॥ ५॥ ❀ ❀ यथेत्यत्र। संगोप्य इति। स्वस्वरूपमज्ञापनीयः॥ ६॥ ❀ ❀ क्रीडन्नित्यत्र। मरणनिवर्तकत्वं चेति 'क्षुत् खलु वै मनुष्यस्य भ्रातृव्यः' इति श्रुतेः क्षुधस्तथात्वात्तन्निवारकत्वेन तथात्वमित्यर्थः। चरित्रे मरणनिवारकत्वस्यानुभवसिद्धत्वाभावान्नञ्समासमभिप्रेत्य पक्षान्तरमाहुः–भक्षणेत्यादि। कर्मणां

---

1. नारायणादिपदत्रयोक्तं हेतुत्रयम्, प्र.

श्रवणासेचनत्वेनात्यास्वादनेऽपि न तेषां हानिसंभावनेति तथेत्यर्थः। अद्भुतकर्मत्वमेव व्युत्पादयन्ति—कर्माणीत्यादि। नित्यानीति। ध्वंसाप्रतियोगीनि। अर्थद्वयस्याऽप्यत्र विवक्षितत्वबोधनायाहुः—प्रत्येत्यादि ॥ ७॥ ❀ ❀ यैरित्यत्र। मूले। अधिलोकनाथपदम्, लोकनाथाधिपतित्वबोधकम्। सहलोकपालानित्यनेन अलोकेष्वपि तत्साहित्यस्य प्रतीयमानत्वाल्लोकालोकपरभागे तदभावादलोकपदं न तत्परमित्याशयेनाहुः—अस्यायमित्यादि। मनुष्याणामिति। मनुष्यतुल्यचक्षुष्काणाम्। तदभाव इति। उलूकादिषु आलोकापेक्षाभावः। लोकालोकपरभागस्य अलोकत्वं हृदि कृत्वा आहुः—अत्रैवेत्यादि। तथा च लोकालोकपरभागपक्षे इदं प्रश्नबीजमित्यर्थः। तेन सिद्धमाहुः—अत इत्यादि। तत्रापीति। उलूकादिष्वपि। त्रिलोकपदेन पिपीलिकादिसंग्रहार्थमाहुः—चक्षुरभावो वेति। अलोकपदेन व्याख्यातानां सत्त्वविशेषत्वेनाधेयत्वाद्यत्रेत्याधारवाचकपदविरोध इत्यरुच्या पक्षान्तरमाहुः—अथवेत्यादि। तत्कथयेति लोकादिजनकतत्त्वभेदाधिकरणं कथयेत्यर्थः। अधिकारण इति। नियतकार्ये नियुक्ताः। तत्रार्थप्रमाणत्वेनाहुः—अन्यथेत्यादि। येनेत्यत्र। अकृतमिति। हेतुं विनैव। पूर्वोक्तमिति। नारायणादिपदत्रयोक्तं हेतुत्रयम्। एतेनैश्वर्यं पृष्टं ज्ञेयम्। यशोवीर्ययोरग्रे स्फुटत्वादिति। यशो वाऽत्र। तथा सति "तदस्य" इति श्लोके वीर्यम्, शिवायेति फलकथनात्। स विश्ववेत्यैश्वर्यम्, ईश्वरपदस्य तत्र प्रयोगादिति ॥ ९॥

## श्रीगिरिधरकृता बालप्रबोधिनी

एवं निरतिशयसुखोपायं पृष्ट्वाऽन्यानपि बुभुत्सितानर्थान् पृच्छति—करोतीत्यादिना। त्र्यधीशः त्रयाणां सत्त्वादिगुणानां लोकानां वाऽधीशः अतएवात्मतन्त्रः स्वतन्त्रकालकर्मस्वभावादिपारतन्त्र्यरहितो भगवान् कृतब्रह्माद्यवतारः सन् यानि कर्माणि करोति। अग्रे सृष्टेः पूर्वं निरीहः निर्व्यापारोऽपि स्वयं यथा येन प्रकारेणेदं विश्वं ससर्ज ततश्च संस्थाप्य स्थितिं रक्षां च कृत्वाऽस्य जगतो वृत्तिं जीविकां विधत्ते सम्पादयति एतत्सर्वं वर्णयेत्युपरितनपञ्चमश्लोकेनान्वयः। एवमग्रेऽपि ॥ ५॥ ❀ ❀ पुनरिति सृष्टिप्रलयादीनां प्रवाहं दर्शयति। स्वे स्वकीये खे हृदयाकाशे उदरे यथा इदं विश्वं निवेश्य स्वयं निवृत्तिवृत्तिर्निवृत्तजगज्जननादिव्यापारः गुहायां गुह्यस्थाने जलादौ शेते एवमेक एव सन् योगेश्वराणामप्यधीश्वरो नियन्ता भगवान् एतत् स्वसृष्टं जगदनुप्रविष्टः पुनर्देवमनुष्यादिरूपेण बहुधा बहुप्रकारको यथा आसीत् ॥ ६॥ ❀ ❀ द्विजगोसुराणां क्षेमाय परिपालनाय अवतारभेदैर्नानाविधावतारैः स्वयं क्रीडन्नेव यानि कर्माणि विधत्ते करोति तानि वर्णय। नन्वेतानि त्वया महाभारतादौ श्रुतान्येव किं पुनः प्रश्नेनेत्याशङ्क्य स्वस्य तच्छ्रवणौत्सुक्यमाविष्करोति—मन इति। सुष्ठु श्लोक्यन्ते कीर्त्यन्ते इति सुश्लोकाः पुण्यकीर्तिमन्तस्तेषां मौलिरिव प्राधान्येनोपरि विराजमानस्य भगवतश्चरितामृतानि अमृतवज्जन्ममरणादिनिवर्त्तकानि अतिस्वादूनि च चरितानि शृण्वतामपि नोऽस्माकं तद्भक्तानां मनो न तृप्यतीत्यन्वयः ॥ ७॥ ❀ ❀ प्रश्नान्तराण्याह—यैरिति। अधिलोकनाथो लोकाधिपतिर्भगवान् यैस्तत्त्वभेदैर्महदादिभिः सहलोकपालान् लोकपालैः सहितान् लोकान् पातालादीन् अलोकान् लोकालोकपर्वताद्बहिर्भागान् अचीक्लृपत् कल्पयामास तद्वर्णय। तत्त्वभेदैश्चावश्यम्भावी अन्यथा करणभेदाभावेन सर्वेषां समानता स्यात्, दृश्यते तु वैषम्यमित्याशयेन विशिनष्टि—यत्रेति। येषु लोकादिषु सर्वेषां सत्त्वानां प्राणिनां निकायाः समूहास्तेषां भेदः अधिकृतः तत्तत्कर्माधिकारी तत्तद्भोगाधिकारी च प्रतीतः प्रसिद्ध एव। हीत्यवधारणे ॥ ८॥ ❀ ❀ उत अपि येनापि प्रकारेण विश्वसृग्भगवान् प्रजानां प्राणिनां आत्मा स्वभावः रूपाणि देवतिर्यङ्मनुष्यादीनि अभिधा तत्तद्वाचकनामानि तेषां भिदां भेदं—चकारान्मृत्पाषाणादिभेदं च—व्यधत्त अकरोत्, तदेतत् यत्पृष्टं चकारादपृष्टमपि श्रवणार्हं नोऽस्मभ्यं वर्णयेत्यन्वयः। विश्वस्रष्टुरपि स्रष्टाऽन्यः कश्चित्स्यादिति शङ्कानिरासायाह—आत्मयोनिरिति, आत्मा स्वयमेव योनिः कारणं यस्य सः, स्वतस्सिद्ध इत्यर्थः। तत्र हेतुमाह—नारायण इति। प्रा पूरेण धातुः। विशेषेण पुरुषार्थैः पूरयन्तीति विप्रास्तेष्वपि वर्यः श्रेष्ठस्त्वं, अतस्तव न किञ्चिदविदितमशक्यं वाऽतो मां कृतार्थीकुर्विति सूचयन् सम्बोधयति—विप्रवर्येति ॥ ९॥ ❀ ❀ ननु बहुश्रुतस्य तव किमेतत् श्रवणेनेत्यत आह—परावरेषामिति। सर्वज्ञस्य तवाग्रे न किञ्चिदन्यथा वक्तुमुचितमिति सूचयन् सम्बोधयति—भगवन्निति। परे त्रैवर्णिकाः अवरे स्त्रीशूद्रादयस्तेषां व्रतानि धर्माः मया व्यासमुखात् अभीक्ष्णं पुनः पुनः श्रुतानि। अतस्तेषां श्रवणेन अतृप्नुमः तृप्ता अभूम। परन्तु यस्तत्र कृष्णकथामृतस्य ओघः पूरः सूचितस्तस्मादृते तं विना, तत्र त्वलम्बुद्धिर्नास्तीत्यर्थः। धर्मादिश्रवणे कुतस्तृप्तिः कुतो भगवत्कथाश्रवणे सा नास्ति इत्यपेक्षायां धर्मादीनां तुच्छसुखहेतुत्वाद्भगवत्कथायास्तु निरतिशयानन्दजनकत्वादिति सूचयन् विशिनष्टि—क्षुल्लसुखावहानामिति। क्षुल्लमल्पम् ॥ १०॥

## हिन्दी अनुवाद

त्रिलोकीके नियन्ता और परम स्वतन्त्र श्रीहरि अवतार लेकर जो-जो लीलाएँ करते हैं, जिस प्रकार अकर्ता होकर भी उन्होंने कल्पके आरम्भमें इस सृष्टिकी रचना की, जिस प्रकार इसे स्थापितकर वे जगत्के जीवोंकी जीविकाका विधान करते हैं, फिर जिस प्रकार इसे अपने हृदयाकाशमें लीनकर वृत्तिशून्य हो योगमायाका आश्रय लेकर शयन करते हैं और

जिस प्रकार वे योगेश्वरेश्वर प्रभु एक होनेपर भी इस ब्रह्माण्डमें अन्तर्यामीरूपसे अनुप्रविष्ट होकर अनेक रूपोंमें प्रकट होते हैं—वह सब रहस्य आप हमें समझाइये ॥ ५-६ ॥ ❀ ❀ ब्राह्मण, गौ और देवताओंके कल्याणके लिए जो अनेकों अवतार धारण करके लीलासे ही नाना प्रकारके दिव्य कर्म करते हैं, वे भी हमें सुनाइये। यशस्वियोंके मुकुटमणि श्रीहरिके लीलामृतका पान करते-करते हमारा मन तृप्त नहीं होता ॥ ७ ॥ ❀ ❀ हमें यह भी सुनाइये कि उन समस्त लोकपतियोंके स्वामी श्रीहरिने इन लोकों, लोकपालों और लोकालोक पर्वतसे बाहरके भागोंको, जिनमें ये सब प्रकारके प्राणियोंके अधिकारानुसार भिन्न-भिन्न भेद प्रतीत हो रहे हैं, किन तत्त्वोंसे रचा है ? ॥ ८ ॥ ❀ ❀ द्विजवर! उन विश्व-कर्ता स्वयम्भू श्रीनारायणने अपनी प्रजाके स्वभाव, कर्म, रूप और नामोंके भेदकी किस प्रकार रचना की है ? भगवन्! मैंने श्रीव्यासजीके मुखसे ऊँच-नीच वर्णोंके धर्म तो कई बार सुने हैं। किन्तु अब श्रीकृष्णकथामृतके प्रवाहको छोड़कर अन्य स्वल्पसुखदायक धर्मोंसे मेरा चित्त ऊब गया है ॥ ९, १० ॥

कस्तृप्नुयात्तीर्थपदोऽभिधानात् सत्रेषु वः सूरिभिरीड्यमानात्।
यः कर्णनाडीं पुरुषस्य यातो भवप्रदां गेहरतिं छिनत्ति ॥ ११ ॥
मुनिर्विवक्षुर्भगवद्गुणानां सखापि ते भारतमाह कृष्णः।
यस्मिन्नृणां ग्राम्यसुखानुवादैर्मतिर्गृहीता नु हरेः कथायाम् ॥ १२ ॥
सा श्रद्दधानस्य विवर्धमाना विरक्तिमन्यत्र करोति पुंसः[1]।
हरेः पदानुस्मृतिनिर्वृतस्य समस्तदुःखात्ययमाशु धत्ते ॥ १३ ॥
ताञ्छोच्यशोच्यानविदोऽनुशोचे हरेः कथायां विमुखानघेन।
क्षिणोति देवोऽनिमिषस्तु येषामायुर्वृथावादगतिस्मृतीनाम् ॥ १४ ॥
तदस्य कौषारव शर्मदातुर्हरेः कथामेव कथासु सारम्।
उद्धृत्य पुष्पेभ्य इवार्तबन्धो शिवाय नः कीर्तय तीर्थकीर्तेः ॥ १५ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

तत्र हेतुः। क इति। तीर्थपदः कृष्णस्य अभिधानात्कथामृतौघात् सत्रेषु समाजेषु सूरिभिर्नारदादिभिः ॥ ११ ॥ ❀ ❀ महाभारतस्याप्यत्रैव तात्पर्यमित्याह। मुनिः श्रीकृष्णो वेदव्यासो भगवद्गुणान् मोक्षधर्मांते नारायणीयाख्याने वक्तुमिच्छुः सन्नर्थ-कामादिवर्णनं तु हरिकथायां मतिप्रवेशार्थमेवेत्याह। यस्मिन्निति। नृणां मतिर्ग्राम्यसुखानुवादैर्द्वारभूतैर्नु निश्चितं हरेः कथायां गृहीता नीता। तदुक्तमितिहाससमुच्चये! "कामिनो वर्णयन् कामं लोभं लुब्धस्य वर्णयन्। नरः किं फलमाप्नोति कूपेंऽधमिव पातयन् ॥ लोकचित्तावतारार्थं वर्णयित्वाऽत्र तेन तौ। इतिहासैः पवित्रार्थैः पुनरत्रैव निंदितौ ॥ अन्यथा घोरसंसारबंधहेतू जनस्य तौ ॥ वर्णयेत्स कथं विद्वान्महाकारुणिको मुनिः" इति ॥ १२ ॥ ❀ ❀ श्रीहरिकथायां मतिप्रवेशस्य फलमाह। सा कथा मतिर्वा। अन्यत्र ग्राम्यसुखे। ततः किमत आह। हरेरिति ॥ १३ ॥ ❀ ❀ एवंभूतायां कथायां ये न रमंते तान् शोचति। शोच्या ये तेषामपि शोच्यांश्च तत्राविदो भारततात्पर्यानभिज्ञान् शोच्यान् ये तु ज्ञात्वापि हरेः कथायां विमुखास्तांस्तेषामपि शोच्यानिति योज्यम्। अनिमिषः कालो येषामायुः क्षिपति। अत्रैव हेतुः। वृथैव वादगतिस्मृतयो वाग्देहमनोव्यापारा येषाम् ॥ १४ ॥ ❀ ❀ तत्तस्माद्धे कौषारवास्य विश्वस्य शिवाय कथासु सारभूतां हरेः कथामेवोद्धृत्य नः कीर्तय। यथा पुष्पेभ्यो मधु मधुप उद्धरति तद्वदुद्धृत्य ॥ १५ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

तत्रालंबुद्ध्यभावे 'सत्रं यज्ञे समाजे च च्छादनारण्यछद्मसु' इति निरुक्तिः। तद्वारिकथायां मत्यानयनम्। अत्र भारते तेन व्यासेन तौ कामार्थौ अत्रैव भारत एव अन्यथा कामार्थयोरेव वस्तुतस्तात्पर्ये तौ कामार्थौ विद्वदादिपदत्रयबोध्ये तस्मिन्व्यासे तद्वर्णनं न संगच्छत इति यः कृष्णकथामृतौघः कर्णरूपां नाडीं डलयोरैक्यान्नालीं प्रविश्य हृदयं गतः 'नाली कुल्याशाकभिदोः' इति कोशात् ॥ ११ ॥ ❀ ❀ यस्मिन्भारते ॥ १२ ॥ ❀ ❀ ततः ग्राम्यसुखनिवृत्तेः अतोत्र ॥ १३ ॥ ❀ ❀ शोच्या जडास्तेषामपि

---

१, प्रा० पा०—पुंसां।

सर्वथा शोचनीयान् तत्रेति वाक्यालंकारे। अत्रै वायुःक्षपणे एव यद्वा। त्रिविधा जनाः संति श्रद्धाना अश्रधाना विमुखाश्चेति। भक्तौ परमपुरुषार्थत्वेन ये विश्वसंतस्ते श्रद्धानाः 'तावत्कर्माणि कुर्वीत न निर्विद्येत यावता। मत्कथाश्रवणादौ वा श्रद्धा यावन्न जायते॥ जातश्रद्धो मत्कथासु" इत्यादौ परमपुरुषार्थत्वेनैव प्रतिपादयिष्यमाणत्वात्। पुरुषसाधनमात्रत्वेनैव विश्वसन्तोऽश्रद्धानाः भक्त्या विनैव पुरुषार्थसाधनेच्छवो विमुखा इति। तत्र प्रथमान् साभिनंदनमुक्त्वा द्वितीयानुल्लंध्य तृतीयाञ्छोचति शुद्धभक्त्यै ये शोच्याः स्वर्गमोक्षादिसाधनरतास्तैरपि शोच्यान् भक्तिरहितकर्मज्ञानयोगादिमतोहं शोचामि। तत्र हेतुः शास्त्राण्यधीत्यापि तत्तात्पर्यम-विदुषः यतो हरेरित्यादि। अयेन प्राचीनार्वाचीनमहापराधेनैव हेतुनेत्यर्थः। ननु तेपि स्वमतस्थापने नानावादनानागतिनानास्मृत्यादि-मंतः सदसि प्रगल्भंते तत्र सधिक्कारमाह—वृथेति। वृथेत्युभयत्रान्वयि वा॥ १४॥ ❀ ❀ यद् वृथैवायुः क्षयोऽन्यत्र तस्मा-द्धेतौ॥ १५॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनीव्याख्या

तत्र तृप्त्यभावे यः तीर्थपात् पुरुषस्येतिवर्णाश्रमादिनियमो व्यावृत्तः कर्णनाडीं कर्णप्रदेशं प्रतिच्छिनत्ति इत्यनेन विरा-गस्यानुषङ्गिकत्वं व्यंजितम्॥ ११॥ ❀ ❀ अत्रैव श्रीकृष्णकथायामेव तात्पर्यं वक्तुर्व्यासस्यैच्छिकं प्रयोजनम्। तत् कामा-दिवर्णनस्य हरिकथायां मतिप्रवेशार्थत्वम्। लोकचित्तावतारार्थं जनानां कृष्णकथायां मतिप्रवेशार्थम्। अत्र भारते तेन व्यासेन। अन्यथा निरुक्तप्रयोजनविरहे। तौ कामलोभौ॥ १२॥ ❀ ❀ समस्तेति श्रीहरिसाक्षात्कारेणेति भावः॥ १३॥ ❀ ❀ तत्र शोच्यतच्छोच्ययोर्मध्ये। तत् भारततात्पर्यम्। तेषामपि शोच्यानामपि तैरपि शोच्यानित्यनुशब्दबलाद्व्याख्यातम्॥ १४॥ ❀ ❀ तस्माद्धरिकथामन्तरा सर्ववैयर्थ्यात्॥ १५॥

### श्रीमद्वीरराघवव्याख्या

एतदेवाह क इति। वः युष्माकं सत्रेषु सूरिभिर्विद्वद्भिरीड्यमाना स्तूयमानात्तीर्थपदो भगवतः अभिधानाच्चरित्रात्कः शृण्वन्पुरुषः तृप्नुयात् न कोपि तृप्नुयादित्यर्थः। यस्तीर्थपात्पुरुषस्य शृण्वतः पुंसः कर्णनाडीं श्रोत्रबिलं यातः गतः कथाश्रवणेन श्रोत्रबिलद्वारेण हृदयं प्रविष्ट इत्यर्थः, भवप्रदां संसृतिसंपादिकां गेहरतिं देहापत्यकलत्रादिष्वासक्तिं छिनत्ति। नह्येवं व्रतानां तापत्रयाभिहतिसामर्थ्यमस्तीति भावः॥ ११॥ ❀ ❀ ननु भगवत्कथाया एव तापत्रयात्मकसंसृतिविच्छेदकत्वे सैव प्राधान्येन भगवता व्यासेन महाभारते किमिति नानुवर्णिता किमिति वा प्रायशो व्रतान्येव वर्णितानीत्याशंक्यान्वारोहवा-दन्यायेन श्रीमहाभारतस्यापि भगवद्गुणानुवर्णने तात्पर्यमित्याह मुनिरिति। तव सखा मुनिः कृष्णः व्यासः भगवद्गुणानां विवक्षुः भगवद्गुणान्वक्तुमिच्छुर्भारतमाह यस्मिन् भारते ग्राम्यसुखानुवादैर्द्वारभूतैरनु पश्चाद्धरेः कथायां नृणां मतिः गृहीताऽव-तारितेत्यर्थः। शाखाचंद्रन्यायेन भगवत्कथायां बुद्ध्यवतारार्थं भारते ग्राम्यसुखानुवादः कृतः। न हि तावता तत्रैव तात्पर्यमिति वक्तुं युक्तं तदुक्तमितिहाससमुच्चये 'कामिनो वर्णयन्कामान्। लोभं लुब्धस्य वर्णयन् नरः किं फलमाप्नोति कूपेऽधमिव पातयन्॥ लोकचित्तावतारार्थं वर्णयित्वा तु तेन तौ। इतिहासैः पवित्रार्थैः पुनस्तत्रैव निंदितौ अन्यथा। घोरसंसारबंधहेतू जनस्य तौ। वर्ण-येत्स कथं विद्वान्महाकारुणिको मुनिः॥" इति अतो भारताभिप्रायो दुरवगम इत्यर्थः॥ १२॥ ❀ ❀ भगवत्कथायां मतिप्रवेशस्य फलमाह सेति। सा हरिकथा अहरहः श्रवणेन वृद्धिं प्राप्ता सती श्रद्धानस्य कथाश्रवणे श्रद्धां कुर्वतः पुंसः अन्यत्र शब्दादौ विरक्तिं करोति। ततः किमित्यत आह हरेर्भगवतः पादयोरनुस्मृत्याऽनुध्यानेन निर्वृतस्य सुखितस्य समस्तदुःखानामप्ययं नाशं विधत्ते सा हरिकथेति शेषः॥ १३॥ ❀ ❀ हरिकथैव स्वस्यां श्रद्धानस्य शुश्रूषोः शब्दादिविषयेषु विरक्तिं भगवत्पदार-विंदभक्तिं च जनयति तापत्रयाभिहतिं च विधत्ते अत एवंविधप्रभाववत्यां हरिकथायां ये विमुखास्तान् शोचन्ति तानिति शोच्यशोच्यान् शोच्यानामपि शोच्यानत्यंतशोच्यानित्यर्थः। कुतः अविदः अज्ञान् तान् शोचे ते के हरेः कथायां उक्तगुणशालिन्या-मघेन पापेन ये विमुखाः पराङ्मुखाः अत एव येषां हरिकथाविमुखानामायुरनिमिषो देवः रविः क्षिणोति क्षपयति किमिदमुच्यते यतः कथाः शृण्वतोप्यायुः क्षिणोतीत्याशंकां शमयन्विमुखान्विशिनष्टि वृथावादगतिस्मृतीनामिति वादो वाग्व्यापारः गतिर्देह-व्यापारः स्मृतिर्मनोव्यापारः वृथा व्यर्थाः वादगतिस्मृतयो येषां तेषां भगवतः कथाः शृण्वतस्तु वादगतिस्मृतयः सफला इत्यर्थः। आयुःक्षपणं तु तुल्यमेव॥ १४॥ ❀ ❀ प्रश्नमुपसंहरति द्वाभ्यां तदिति, तस्माद्धरिकथाया एव समस्तदुःखाप्ययकरत्वाद्धेतोः हे कौषारव! मैत्रेय! शर्मदातुः सुखप्रदस्य पवित्रकीर्तेरस्य हरेः कथामेव कथासु सारं सारभूतां उद्धृत्य पुष्पेभ्यः मधुकरो मधु इव नः शिवाय हे आर्तबंधो! तापत्रयाभिपीडितानां सुखकर! कीर्तय कथय॥ १५॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

इतोपि श्रीकृष्णस्य गुणगणकथामृतस्य पात्रीभूतात् भारतात् न कस्यापि तृप्तिरित्याह कस्तृप्नुयादिति। वो युष्माकं सत्रेषु सूतादिसूरिभिरीड्यमानात् स्तूयमानात् तीर्थपदो हरेरभिधानात् भारतनामकीर्तनाद्रसज्ञः कः पुरुषः। तृप्नुयादलमिति

बुद्धिं कुर्यादित्यन्वयः। अलंबुद्ध्यभावे हेतुमाह य इति। यस्तीर्थपात्पुरुषस्य कर्णनाडीद्वारा हृदयगुहां प्रविष्टः संसारप्रदां गेहरतिं गृहजायापुत्रादिस्नेहलक्षणां रतिं छिनत्ति तस्येति शेषः॥ ११॥ ❀ ❀ यन्मोक्षसुखानुवादिशास्त्रं तदेवाभ्यसनीयं भारतस्य ग्राम्यसुखानुवादित्वेन पुरुषार्थानुपयोगित्वादिति तत्राह मुनिरिति। गुणानामिति षष्ठी द्वितीयार्थे भगवद्गुणान् वक्तुं कामस्ते तव सखा मुनिः सर्वज्ञोपि कृष्णो भारतमाह। ननु गुणान् वक्तुमकामयत न त्वभ्यधात्ततो ग्राम्यसुखानुवादेन नृणां मतिर्गृहीतेति तत्राह यस्मिन्निति। यस्मिन्भारते श्रवणादिनाऽभ्यस्यमाने सति नृणां मतिर्ग्राम्यसुखानुवादैर्न गृहीता हरेः कथायामेव गृहीता भारतान्नपरं विष्णोर्महिमावाचकं कचित्। भारतान्न विरागाय भारतान्न विमुक्तये इति वचनात् सत्यकामेन हरिणा विवक्षिता गुणा भारते कथिता इत्यत इदमेव शास्त्रं मुमुक्षुणाभ्यसनीयमित्यविगीतम्॥ १२॥ ❀ ❀ अस्तु हरेः कथायां गृहीता नृणां मतिः ततः किं फलं विधत्त इति तत्राह सा श्रद्धानस्येति ग्राम्यसुखानुवादैर्न गृहीता हरेः कथायां विवर्द्धमाना श्रद्धानस्य पुंसो मतिरन्यत्र विषयेषु विरक्तिं करोतीति प्रथमं वैराग्यं द्वितीयं भक्तिलक्षणं तृतीयमुपासनाजनितापरोक्षज्ञानं चतुर्थं समस्तसंसारदुःखोच्छेदेन परमानंदलक्षणं मोक्षाख्यं फलं करोति। एतदेवाह हरेरिति सदानुस्मृत्या जाता परोक्षज्ञानेन निर्वृतस्यासंप्रज्ञातसमाध्यवस्थासुखं प्राप्तस्याशु कालक्षेपमंतरेण॥ १३॥ ❀ ❀ व्यतिरेकमुखेन हरेः कथाया दुःखाप्ययहेतुत्वमाह तानिति। अविदो ज्ञानदुर्वलान् अघेन व्यसनेन आत्मनः शोकाधिकरणत्वं यथार्थं न मिथ्याभूतमिति द्योतयितुमनुशोच इत्यात्मनेपदप्रयोगः। अनिमिषो देवः कालात्मा विष्णुः वृथावादो वृथागतिर्वृथास्मृतिश्च येषां ते तथा तेषामायुर्वृथा क्षिणोति इति वा वृथावादो विवादस्तत्सहिते गतिस्मृती येषां ते तथा तेषां न हरिकथावतां वृथेति विशेषद्योतकस्तुशब्दः॥ १३॥ ❀ ❀ स्वार्थप्रश्नमुपसंहरति तदिति। हरिकथाविमुखा व्यर्थायुष इति यस्मात्तीर्थं यथा सेवमानानां पापं क्षिणोति तथा हरेः कीर्तिरपि तादृशी तीर्थरूपा कीर्तिर्यस्य स तथा तस्य नान्यकथा शिवसाधनमित्यस्मिन्नर्थे एवशब्दः॥ १५॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

मुनिर्विवक्षुरिति। यस्मिन् ग्राम्यसुखानुवादप्राये। कौरवादीनां कथायां श्रीकृष्णकथानुगतौ। तदेतद्विदुरस्य श्रीव्यासाच्छ्रवणं च तीर्थाटनसमय एव ज्ञेयम्॥ १२॥ ❀ ❀ सा हरेः कथा। समस्तेति श्रीहरिसाक्षात्कारेणेति भावः॥ १३॥ ❀ ❀ अत्र त्रिविधा एव जना दृश्यन्ते केचिदावेशेन हरिकथायां श्रोतारः केचिदनावेशेन केचित्तु विमुखा एवेति। तत्रावेशिनामनावेशिनः शोच्याः। विमुखास्त्वनावेशिनामपीति पर्यालोच्याह तानिति। स्पष्टमेव॥ १४॥ १५॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी।

ननु कृष्णकथापि त्वया बहुश एव श्रुता तत्राह क इति। अभिधानात् नामत एव किमुत कथाभ्यः। यद्वा अभिधानात् कथनमात्रात् ल्यब्लोपे पञ्चमीयम्॥ ११॥ ❀ ❀ महाभारतस्यापि वस्तुतस्तत्रैव तात्पर्यमित्याह मुनिः कृष्णो वेदव्यासः। गुणानामिति द्वितीयायां षष्ठी॥ यद्वा उत्कर्षमित्याक्षेपलभ्यम्॥ यस्मिन् भारते ग्राम्यसुखानुवादैः अर्थकामकथानुकथनैर्नृणां विषयलुब्धानामपि मतिर्गृहीता व्यासेन स्वहस्तवशीकृता—किमर्थं हरेः कथायां भगवद्गीता नारायणीयोपाख्यानादिषु प्रवेशयितुमित्यावेशगम्यम्। अन्यथा परमार्थकथामश्रृण्वन्तस्ते तत्समीपमेव नैवायास्यन्॥ तदुक्तमितिहाससमुच्चये कामिनो वर्णयन् कामान् लोभं लुब्धस्य वर्णयन्॥ नरः किं फलमाप्नोति कूपेऽन्धमिव पातयन्॥ लोकचित्तावतारार्थं वर्णयित्वात्र तेन तौ॥ इतिहासैः पवित्रार्थैः पुनस्तत्रैव निन्दितौ॥ अन्यथा घोरसंसारबन्धहेतू जनस्य तौ। वर्णयेत् स कथं विद्वान् महाकारुहणिको मुनिरिति॥ १२॥ ❀ ❀ हरिकथायां मतिप्रवेशस्य फलमधिकारिभेदेनाह सा हरिकथा श्रद्धानस्य हरिकथायामेव परमपुरुषार्थबुद्ध्या विश्वसतः शुद्धभक्तस्येत्यर्थः॥ अन्यत्र धर्म्मार्थकाममोक्षेषु॥ ननु कथं मोक्षेऽपि विरक्तं चेत् करोति ततः कथं निवृत्तिः संसाराद् दुःखनाशं वा तत्राह हरेः पदयोरनुस्मृतिः प्रतिक्षणमेव माधुर्यानुभूतिस्तयैव निर्वृतस्य लब्धपरमानन्दस्य पुंसः समस्तदुःखो यः संसारस्तस्यापि अप्ययं नाशं तत्रापि आशु शीघ्रमेव॥ १३॥ ❀ ❀ अत्र हरिकथायां त्रिविधा जनाः सम्भवन्ति॥ श्रद्धाना अश्रद्धाना विमुखाश्च श्रीभागवतमते भक्तौ परमपुरुषार्थत्वेन विश्वसन्तः श्रद्धाना उच्यन्ते॥ तावत् कर्म्माणि कुर्व्वीत न निर्विद्येत यावता। मत्कथाश्रवणादौ वा श्रद्धा यावन्न जायते इति॥ जातश्रद्धो मत्कथास्वित्यादौ तथा प्रतिपादयिष्यमाणत्वात् पुरुषार्थसाधनमात्रत्वेनैव विश्वसन्तोऽश्रद्धानाः भक्त्या विनैव पुरुषार्थान् सिषाधयिषवो विमुखास्तत्र प्रथमान् साभिनन्दनमुक्त्वा द्वितीयानुल्लंघ्य तृतीयान् शोचति॥ शुद्धभक्तैर्ये शोच्याः स्वर्गमोक्षादिसाधनरतास्तैरपि शोच्यान् भक्तिरहितकर्म्मज्ञानयोगादिमतोऽहं शोचामि तत्र हेतुः अविदः शास्त्राण्यधीत्यापि तत्तात्पर्य्यमविदुषः यतो हरेरित्यादि अघेन प्राचीनार्व्वाचीनमहापराधेनैव हेतुनेत्यर्थः। अनिमिषः कालः ननु तेऽपि स्वस्वमतस्थापने नानावादनानागतिनानास्मृत्यादिमन्तः सभायां प्रगल्भन्ते तत्र सधिक्कारमाह वृथेत्यादि॥ १४॥ ❀ ❀ तत्तस्मात् हे कौषारव!॥ १५॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

तदेवाह तीर्थपदः श्रीकृष्णस्य वो युष्माकं सत्रेषु समाजेषु सूरिभिः श्रीनारदादिभिरीड्यमानात्प्रस्तूयमानात् अभिधानात् कः तृप्नुयात् न कोपि॥ ११॥ ❀ ❀ महाभारतादौ अन्यकथाभिः सह श्रीकृष्णकथावर्णने श्रीव्यासाभिप्रायमाह

मुनिरिति। कृष्णो व्यासः भगवद्गुणानां तत्प्रसंगतो विवक्षुः वक्तुमिच्छुः भारः ब्रह्मादीनां नानाजीवानां कथावर्णनरूपः अर्थधर्मकाममोक्षवर्णनरूपश्च विद्यते यस्मिन् तद्भारतं मत्वर्थीयस्तप्रत्ययः तद्भारतमाह यस्मिन् भारते नृणां मतिर्ग्राम्यसुखानुवादैर्द्वारभूतैः नु निश्चितं हरेः कथायां गृहीता नीता अतः महाभारतादि कथासामान्याधिकारिविषया उत्तमाधिकारिविषयां केवलां हरिकथां कथयेति भावः॥ १२॥ ❀ ❀ हरिकथाश्रवणफलमाह सेति॥ १३॥ ❀ ❀ हरिकथाविमुखान्निन्दति तानिति शोच्याः। अकृतार्थतया चिंतनीयाः तेषामपि शोच्यान् शोचे अकृतार्थतया चिंतयामि वृथा वादादयो येषां तेषामायुः देवः सूर्यः तथैव क्षिणोति क्षपयति॥ १५॥ ❀ ❀ तत्तस्मात् हे कौषारव! अस्य अस्मद्विधस्य शरणागतस्य शर्मदातुः सुखप्रदस्य हरेः कथां कथासु सारं सारभूतां पुष्पेभ्यः सारं यथोद्धरति तद्वदुद्धृत्य नः शिवाय कल्याणाय कीर्तय॥ १५॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

अत्राऽधिकारिभेदेन व्यवस्था भविष्यतीत्याशङ्क्य निराकरोति—कस्तृप्नुयादिति। अत्रेच्छैव नोत्पद्यते, उत्पन्ना चेत् न कदापि तृप्यति, वह्निराहुतिभिरिव। तद्गुणा इच्छामेव वर्द्धयन्तीति पूर्वं निरूपितम्। युक्तश्चायमर्थः, आसुराणामिच्छाभावात् देवानां मध्ये कस्तृप्नुयात्। विहितार्थं एव हि तेषां प्रवृत्तिः। तत्र विरक्ताविरक्तभेदेन, ब्राह्मणक्षत्रियभेदेन वा यज्ञास्तीर्थानि च विहितानि, चित्तशुद्धिद्वारा मोक्षफलकानि। तानि स्वरूपतो दुःखात्मकान्यपि फलतः समीचीनानि। भगवद्गुणास्तु चतूरूपाणि; स्वरूपतोऽप्यमृतौघानि, फलतो मोक्षफलानि, यज्ञरूपाणि, तीर्थरूपाणि च। अतः कस्तृप्नुयात्। तीर्थानि पादे यस्य। 'तिस्रः कोट्योऽर्द्धकोटी च तीर्थानां वायुरब्रवीत्। दिवि भुव्यन्तरिक्षे च तानि वै जाह्नवीजले।' इति सा गङ्गा भगवत्पदी, तादृशस्य चाऽभिधानम्। शब्दमात्रमेतदिति पक्षोऽग्रे निवर्तयिष्यते। सत्रेषु सूरिभिर्भगवद्गुणाभिज्ञैरीड्यते। सत्रेषु हरिगाथोपगायनमस्ति, यथाऽश्वमेधे 'ब्राह्मणौ वीणागाथिनौ गायेताम्' इति, यथा वा नारदो गानार्थमाहूतः। तेन हि सत्रं पूर्यते 'विष्णोः कर्माणि पश्यत' इत्यादिश्रुतेश्च। किञ्च, यो भगवान् कर्णनाडीं पुरुषस्य यातः, स्वस्य हृदि स्थित्यर्थं, हृदये विद्यमानां गेहरतिं संसारदायिनीमनिष्टरूपां छिनत्ति, अमृतरूपत्वात्। इष्टरूपत्वं पूर्वमेव निरूपितम्, अनिष्टनिवारकत्वं चोक्तम्, यागात्मकता च निरूपिता। कर्णनाडीं पुरुषस्य यात इत्यनेन शब्दो न केवल इत्युक्तम्। भगवत्सहितत्वे तु तीर्थानि सिद्धान्येव॥ ११॥ ❀ ❀ नन्वेवं सति व्यासः कथमन्यदुक्तवानित्याशङ्क्याऽऽह—मुनिर्विवक्षुर्भगवद्गुणानामिति। स हि भगवद्गुणानेव वक्तुमिच्छुः, तेषामधिकारसिद्ध्यर्थं, भवानिव भगवदाज्ञां प्राप्य भरतवंशोत्पन्नानामेव चरित्रमाह। स हि दौष्यन्तिर्मायामत्यगादिति तद्वंश्यास्तादृशा एव। तेषां श्रवणेन देवमायामोहाभावे भगवद्गुणाः श्रोतुं शक्या भवन्ति। अतोऽनधिकारिणोऽपि भगवद्गुणश्रवणसिद्ध्यर्थम्, ते सखाऽपि केवलभगवद्गुणवक्ताऽपि, नाम्ना कृष्णोऽपि भारतमाह। यस्मिन् भारते नृणां बुद्धिरुपायेनाऽऽकृष्टा भवति। तत्र ते सर्वे ग्राम्यकथास्वेवाऽऽविष्टचित्ताः, प्रवृत्तिश्च स्वरुच्यैव। अतस्तेषां बुद्धिग्रहणार्थं ग्राम्यकथासु भगवत्कथाः प्रवेशिताः। ताः कथा ग्राम्यत्वेनाऽपि गृहीताः स्वप्रयोजनं कुर्वन्तीति प्रयत्नः सार्थको भवति। तदाह—नु निश्चयेनेति॥ १२॥ ❀ ❀ ततः किमत आह—सा श्रद्दधानस्येति। आस्तिक्यबुद्धिः श्रद्धा। कथा प्रथमतः स्वकार्यं श्रद्धामेव जनयति। ग्राम्यपदार्थेषूच्चनीचभावे रसानुभवादुत्कृष्टमेव गृह्णाति, न निकृष्टम्। अतः सा मतिः श्रद्दधानस्य विवर्द्धमाना, श्रद्धया निरन्तरश्रवणात् विवर्द्धमाना, अन्यत्र कुशरतया प्राप्ते विरक्तिं करोति। उत्तमान्नसम्पत्तौ न हि कश्चित्पिण्याकं भक्षयति। परमेक एव गुणोऽपेक्ष्यते, स्वातन्त्र्यमिति। तदाह—पुंस इति। ततोऽपि किमत आह—हरेः पदानुस्मृतीति। प्रवृद्धमत्या निरन्तरं भगवत्स्मरणं करोति, तदा चित्ते भगवत्स्मरणस्य निरन्तरस्थितौ चित्तं निर्वृतं भवति, तत्र हि भगवानानन्दमयः प्रविष्ट इति। तदा सम्पन्नं सत्तच्चित्तं ततो न निवर्तते। तदा ततोपि, प्रवृद्धा मतिः समस्तानां दुःखानामत्ययं नाशमाशु शीघ्रमेव धत्ते। अतः परमपुरुषार्थः ससाधनो भारते निर्दिष्टः॥ १३॥ ❀ ❀ एवमप्युपाये कृते येषां चित्तं भगवति न प्रविशति, तानप्यहमनुशोचे—तानिति। भगवान् स्वसेवार्थमिन्द्रियाणि दत्तवान्। कतिपयेभ्यो न दत्तवान् ते शोच्याः। तेषां चेदिन्द्रियाणि भवेयुः, तद्द्वारा भगवद्भजनं कुर्युरिति। ये पुनर्दानसमये आसुराणीन्द्रियाणि प्राप्तवन्तः, ते तां कथां श्रुत्वापि तद्रसानभिज्ञा न भजन्ते, ते शोच्यानामपि शोच्याः। अथवा, ये न जानन्त्येव सङ्गाद्यभावात्; तानहं शोचे। तेऽपि यदि दैवगत्या भगवत्संमुखा भवेयुः, तथाऽपि न शोच्याः; सर्वथा विमुखाश्चेत् तदा शोच्याः। तथात्वे हेतुः—अघेनेति। पापेनैव भगवद्वैमुख्यं कार्यते, स्वनाशशङ्कया। तदा कालोऽपि तान्, ग्रसतीत्याह—क्षिणोतीति। स हि सर्वज्ञो देवः सर्वान् जानाति। ग्रासार्थं चाऽनिमिषः सावधानः। तुशब्दः पक्षान्तरं व्यावर्त्तयति। भगवद्विमुखस्य देवतान्तरेण वा, मार्गान्तरेण वा, निस्तारोऽस्तीति पक्षः। तेषां सर्वेषामेव आयुर्हरति तस्य तदेककार्यत्वात्। ननु कायवाङ्मनोभिस्ते किञ्चित्समीचीनं करिष्यन्तीत्याशङ्क्याऽऽह—वृथा वादगतिस्मृतीनामिति। अर्थशून्यास्त्रयोऽपि वादादयः, त एव तेषां रोचन्ते, दिवाभीतानां यथा तेजः। गतिः कायिकी। तस्मात्तेषां सर्वस्वनाशात्, विद्यमानेऽपि पुरुषार्थसाधने पुरुषार्थभावाच्च, शोच्यानामपि शोच्याः॥ १४॥ ❀ ❀ एवमन्वयव्यतिरेकाभ्यां भारततात्पर्यमुक्त्वा, तेन भगवत्कथायां गृहीतचित्तं मां प्रति भगवत्कथैव केवला वक्तव्येत्याह—तदस्येति। पूर्वप्रश्नाश्चत्वारोऽज्ञानान्यथाज्ञाननिवर्तकाः। अयं तु प्रश्नो

ज्ञात एव, प्रत्यहभोजनवदावश्यकोऽपेक्ष्यते तत्तस्मात्कारणात्। अस्य पुरतः परिदृश्यमानस्य भगवतः, स्वभावतया सर्वेभ्यः शर्मदातुर्दुःखनिवारकस्य च, कथामेव कथय। ननु हरिकथा लौकिक्या[1] संवलिता, कथं भिन्नतया केवला कथयितुं शक्यते तत्रोपायमाह–कथासु सारमुद्धृत्येति। सृष्टिप्रकारा बहवः सन्ति, तत्र भगवत्कर्तृकैव सृष्टिर्वक्तव्या। पालनं बहुविधमस्ति, कालकर्मादिभिः क्रियमाणम्, तत्र भगवत्क्रियमाणमेव वक्तव्यम्। प्रलयोऽपि तथैव। यस्यां सृष्टौ भगवानेव प्रविश्य नाना भवति, न तु जीवः पुरुषोऽन्यो वा। चरित्रमपि प्रक्रुश्याद्यसंवलितं वक्तव्यमिति। किं बहुना भक्तेष्टपूरणदुःखनिवारणैकप्रयोजनं केवलभगवच्चरित्रं सर्वतः सारमुद्धृत्य वक्तव्यम्। बुद्ध्यैवाऽत्रोद्धारः। सूक्ष्मोद्धारे दृष्टान्तमाह–पुष्पेभ्य इवेति। यथा पुष्प एव मकरन्दोऽन्तस्तिष्ठति, परं तं भ्रमर एव पिबति, मधुमक्षिका चोद्धृत्य स्थापयति। तथा यद्यपि भ्रमरवत् पीयते, तथापि परोपकारो न भवतीति मधुमक्षिकावदुद्धृत्य वक्तव्यम्। नन्वेतत् क्लेशात्मकं भवति, पीतस्य पुनरुद्गिरणात्। तत्राऽऽह–आर्त्तबन्धो! इति। लोकोपकारार्थं क्लेशोऽपि सोढव्यः। वस्तुतस्तु पान इव निष्कासनेऽपीन्द्रियसंबन्धस्य तुल्यत्वादविकृतत्वाच्च परोपकारे सिद्धे रोमन्थ इव रसास्वादनं भवति। अतो नोऽस्माकं शिवाय[2] कीर्त्तय। अधिकारो नास्तीति न मन्तव्यम्। तीर्थरूपा कीर्तिर्यस्येति, तेनैवाऽधिकारोपि भविष्यति॥ १५॥

## एकादशतः पञ्चदशश्लोकावधि सुबोधिनीप्रकाशो न

## श्रीगिरिधरकृता बालप्रबोधिनी

अस्माकं भागवतानां का तृप्तिवार्त्ता अन्योऽपि दैवीसम्पदुत्पन्नो वो युष्माकं सत्रेषु यागेषु समाजेषु वा सूरिभिर्विद्वद्भिः ईड्यमानात् स्तूयमानात् तीर्थपदः तीर्थानि 'तिस्रः कोट्योऽर्द्धकोटी च तीर्थानां वायुरब्रवीत्। दिवि भुव्यन्तरिक्षे च तानि वै जाह्नवीजले' इति वचनात्सर्वतीर्थाकरभूता गङ्गा पादे यस्य तस्य भगवतः अभिधानात् चरितात् कः पुरुषस्तृप्नुयात्?। तच्चरित्रश्रवणेन किं फलं भवतीत्यपेक्षायां संसारदुःखनिवृत्तिपूर्वकपरमानन्दप्राप्तिलक्षणमोक्ष एवेत्याह—य इति। यस्तीर्थपात् स्वचरितं शृण्वतः पुरुषस्य कर्णविवरद्वारेण हृदयं यतो गतः सन् भवप्रदां जन्ममरणादिसंसारहेतुभूतां गेहरतिं देहापत्यकलत्राद्यासक्तिं छिनत्ति तस्य चरितादित्यन्वयः॥ ११॥ ॐ ॐ ननु भगवद्गुणकथायाः यद्येवं परमफलहेतुत्वं तदा सैव महाभारते व्यासेन किमिति नानुवर्णिता किमिति प्रायशो व्रतान्येव वर्णितानि इत्याशङ्कयाह—मुनिरिति। ते तव सखा कृष्णो व्यासोऽपि भगवद्गुणानां भगवद्गुणान् विवक्षुर्मोक्षधर्मान्ते नारायणीयाख्याने वक्तुमिच्छुः सन्नेव भारतमाह। तर्ह्यर्थकामादिवर्णनं किमर्थमित्यपेक्षायां भगवत्कथायां मतिप्रवेशार्थमेवेत्याह—यस्मिन्निति। यस्मिन्भारते ग्राम्यसुखानुवादैर्द्वारभूतैस्तु पश्चाद्धरेः कथायां नृणां मतिर्गृहीता अवतारितेत्यर्थः। शाखाचन्द्रन्यायेन भगवत्कथायां बुद्धयवतारार्थमेव भारते ग्राम्यसुखानुवादः कृतः, नहि तावता तत्रैव तात्पर्यमिति वक्तुं युक्तम्। तदुक्तमितिहाससमुच्चये—'कामिनो वर्णयन् कामं लोभं लुब्धस्य वर्णयन्। नरः किं फलमाप्नोति कूपेऽन्धमिव पातयन्॥ लोकचित्तावतारार्थं वर्णयित्वा तु तेन तौ। इतिहासैः पवित्रार्थैः पुनरत्रैव निन्दितौ॥ अन्यथा घोरसंसारबन्धहेतू जनस्य तौ। वर्णयेत्स कथं विद्वान् महाकारुणिको मुनिः' इति। एवं सर्वोपकारं कर्त्तुं स एव समर्थो भगवदवतारत्वेन सर्वज्ञत्वादिति सूचयन्नाह—मुनिरिति॥ १२॥ ॐ ॐ भगवत्कथायां मतिप्रवेशे किं फलं तदाह—सेति। श्रद्धानस्य कथायां श्रद्धावतः पुंसः सा हरिकथारतिर्विवर्द्धमाना अहरहःश्रवणेन वृद्धिं प्राप्ता सती अन्यत्र देहापत्यकलत्रादौ शब्दादिविषये च सर्वत्र विरक्तिं करोति। तथा हरेर्भगवतः पादयोरनुस्मृतिं च करोति। तस्य लब्धपरमानन्दस्य समस्तदुःखानां त्रिविधतापानामत्ययं विनाशमाशु धत्ते करोतीत्यर्थः॥ १३॥ ॐ ॐ एवं परमफलायां भगवत्कथायां ये विमुखास्तान् शोचति—तानिति। तान् शोच्यशोच्यान् श्रवणाद्यनधिकारिणः पशुपक्ष्यादयः कथमेषामुद्धारः स्यादिति शोच्यास्ततोऽपि शोच्यान् अहमनुशोचे निरन्तरं शोचामि। के ते इत्यपेक्षायामाह—हरेरिति। श्रवणाद्यधिकारसत्त्वेऽपि अघेन सञ्चितक्रियमाणपापेन हरेः कथायां विमुखानिति। तथात्वेऽपि कुतः शोक इत्यपेक्षायामाह—क्षिणोतीति। अनिमिषो निमेषरहितः सर्वदा सावधानो देवः कालात्मा सूर्यो येषां त्वायुः क्षिणोति क्षपयतीत्यर्थः। किमिदमुच्यते यतः कथाः शृण्वतामप्यायुः सूर्यः क्षिणोत्येवेति चेत्, सत्यम्, भगवत्कथाः शृण्वतां परमफलस्य दर्शितत्वात्, तेषामायुःक्षयः सफलः, तद्विमुखानां तु स्वाभाविकदेहादिव्यापारस्य नरकादिदुःखहेतुत्वेनायुःक्षयोऽनर्थहेतुरित्याशयेन तान्विशिनष्टि—वृथावादगतिस्मृतीनामिति। वादो वाग्व्यापारः, गतिर्देहव्यापारः, स्मृतिर्मनोव्यापारः, वृथा नरकादिदुःखहेतुभूता वादगतिस्मृतयो येषां तेषामित्यर्थः॥ १४॥ ॐ ॐ प्रश्नमुपसंहरति—तदिति। यतो हरिकथा समस्तदुःखनिवर्तिका तत्तस्मात् हेतोः कौषारव हे मैत्रेय नानाविधासु कथासु सारं सारभूतां शर्मदातुः परमानन्दप्रदस्य हरेः सर्वदुःखहर्त्तुः तीर्थं सर्वपापनिवर्तिका कीर्तिर्यस्य तस्य भगवतः कथामेव उद्धृत्य कथान्तरेभ्यः पृथक्कृत्य नोऽस्माकं शिवाय परमानन्दलब्धये कीर्तय कथयेत्यन्वयः। उद्धारे दृष्टान्तमाह—मधुकरो यथा पुष्पेभ्यो मधूद्धरति तथेति। आर्तबन्धो हे आर्तानां आध्यात्मिकादितापत्रयादिभिः पीडितानां हितकरेति सम्बोधनेन तवास्मद्दुःखनिवारणार्थं प्रयत्न आवश्यक इति सूचयति॥ १५॥

---

१ लौकिक्यसंवलिता घ। २ फलकथनात्, प्रकाशः।

## हिन्दी अनुवाद

उन तीर्थपाद श्रीहरिके गुणानुवादसे तृप्त हो भी कौन सकता है। उनका तो नारदादि महात्मागण भी आप-जैसे साधुओंके समाजमें कीर्तन करते हैं तथा जब ये मनुष्योंके कर्णरन्ध्रोंमें प्रवेश करते हैं, तब उनकी संसारचक्रमें डालनेवाली घर-गृहस्थीकी आसक्तिको काट डालते हैं ॥ ११ ॥ ❀ ❀ भगवन्! आपके साथ मुनिवर कृष्णद्वैपायनने भी भगवान्के गुणोंका वर्णन करनेकी इच्छासे ही महाभारत रचा है। उसमें भी विषयसुखोंका उल्लेख करते हुए मनुष्योंकी बुद्धिको भगवान्की कथाओंकी ओर लगानेका ही प्रयत्न किया गया है ॥ १२ ॥ ❀ ❀ यह भगवत्कथाकी रुचि श्रद्धालु पुरुषके हृदयमें जब बढ़ने लगती है, तब अन्य विषयोंसे उसे विरक्त कर देती है। वह भगवच्चरणोंके निरन्तर चिन्तनसे आनन्दमग्न हो जाता है और उस पुरुषके सभी दुःखोंका तत्काल अन्त हो जाता है ॥ १३ ॥ ❀ ❀ मुझे तो उन शोचनीयोंके भी शोचनीय अज्ञानी पुरुषोंके लिये निरन्तर खेद रहता है, जो अपने पिछले पापोंके कारण श्रीहरिकी कथाओंसे विमुख रहते हैं। हाय! कालभगवान् उनके अमूल्य जीवनको काट रहे हैं और वे वाणी, देह और मनसे व्यर्थ वाद-विवाद, व्यर्थ चेष्टा और व्यर्थ चिन्तनमें लगे रहते हैं ॥ १४ ॥ ❀ ❀ मैत्रेयजी! आप दीनोंपर कृपा करनेवाले हैं; अतः भौंरा जैसे फूलोंमेंसे रस निकाल लेता है, उसी प्रकार इन लौकिक कथाओंमेंसे इनकी सारभूता परम कल्याणकारी पवित्रकीर्ति श्रीहरिकी कथाएँ हमारे कल्याणके लिये सुनाइये ॥ १५ ॥

**स विश्वजन्मस्थितिसंयमार्थे कृतावतारः प्रगृहीतशक्तिः ।**
**चकार कर्माण्यतिपूरुषाणि यानीश्वरः कीर्तय तानि मह्यम् ॥ १६ ॥**

### श्रीशुक उवाच

**स एवं भगवान् पृष्टः क्षत्त्रा कौषारविर्मुनिः । पुंसां निःश्रेयसार्थेन तमाह बहु मानयन् ॥ १७ ॥**

### मैत्रेय उवाच

**साधु पृष्टं त्वया साधो लोकान् साध्वनुगृह्णता । कीर्तिं वितन्वता लोके आत्मनोऽधोक्षजात्मनः ॥ १८ ॥**
**नैतच्चित्रं त्वयि क्षत्तर्बादरायणवीर्यजे । गृहीतोऽनन्यभावेन यत्त्वया हरिरीश्वरः ॥ १९ ॥**
**माण्डव्यशापाद्भगवान् प्रजासंयमनो यमः । भ्रातुः क्षेत्रे भुजिष्यायां जातः सत्यवतीसुतात् ॥ २० ॥**

## श्रीधरस्वामिविरचिता भावार्थदीपिका

विशेषतः श्रीकृष्णकथा कथनीयेत्याशयेनाह । स इति । यो विश्वसर्गाद्यर्थं पूर्वं गृहीतशक्तिः स एव पुरुषेषु कृतावतारः सन् पुरुषानतिक्रम्य वर्तमानानि यानि कर्माणि चकार तानि विस्तराद्वद ॥ १६ ॥ ❀ ❀ पुंसां निःश्रेयसमेवार्थः प्रयोजनं तेन हेतुना पृष्टः ॥ १७ ॥ ❀ ❀ बहुमानमेवाह । साध्विति पंचभिः । अधोक्षज एवात्मा मनो यस्य तस्यात्मनः स्वस्य कीर्तिं च प्रसंगाद्वितन्वता ॥ १८ ॥ ❀ ❀ हरिर्यद्गृहीत एतच्चित्रं न भवति । कुतः । बादरायणवीर्यजे ॥ १९ ॥ ❀ ❀ ननु तर्हि कथं शूद्रत्वं कथं च लोकानुग्राहकत्वं तत्राह । मांडव्यशापादिति । भ्रातुर्विचित्रवीर्यस्य क्षेत्रे क्षेत्रत्वेन स्वीकृतायां भुजिष्यायां दास्यां यम एव त्वं जातोऽसि ॥ २० ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः ।

'मधुरेण समापयेत्' इति न्यायमनुसंदधानो विस्तारेण कृष्णकथैव कीर्त्तनीया श्राव्या चेति तामेव पृच्छति प्रश्नांते स इति । प्रगृहीता शक्तिर्माया तद्गुणा वा येन सः । पिप्रति गाः पालयंति घृतादिविक्रयेण लोकं पूरयंति वेति पुरुषा गोपास्तेषु यानि दावानलपानादीनि ॥ १६ ॥ ❀ ❀ यद्वा पुंसां निःश्रेयसो मुक्तिहेतुः "श्रेयः श्रुतिं भक्तिमुदस्य" इत्याद्युक्तेर्भक्तिः स एवार्थो यस्य तेन भगवल्लीलाश्रवणजातभक्त्या पुमांसो मुच्यन्त इति हेतोः पृष्टवतेत्यर्थः । तं विदुरम् ॥ १७ ॥ ❀ ❀ साध्नोति परकार्यमिति साधुपदार्थमन्वर्थयन्तं तेनैव पदेनामंत्रयन्नाह—साधो इति । साधु समीचीनं यथा स्यात्तथा "साधुर्वार्द्धुषिके चारौ सज्जने त्वभिधेयवत्" इति मेदिनी ॥ १८ ॥ ❀ ❀ ननु बादरायणवीर्यजो धृतराष्ट्रादिरपि सत्यं परं तु त्वयि ततो विशेषं इत्याह—गृहीत इति । यादृशो हरौ भावः प्रेमा न तादृशोऽन्यस्मिन्नित्यनन्यभावः ॥ १९ ॥ ❀ ❀ अत्राक्षिपति तर्हीति ॥ २० ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या।

पुरुषेषु मनुष्येषु ॥ १६ ॥ ❀ ❀ निःश्रेयसं भक्तिरूपं मङ्गलम् ॥ १७ ॥ ❀ ❀ भक्तानां स्वकीर्त्यनपेक्षणात्प्रसंगादिति व्याख्यातम् ॥ १८ ॥ ❀ ❀ अनन्यभावेन निष्किञ्चनभक्तियोगेन वीर्य्यमत्र भक्तोत्पादकसत्संकल्पप्रभावस्तस्माज्जातेनेति व्याख्येयमन्यथा धृतराष्ट्रेतिप्रसंगः स्यादिति ज्ञेयम् ॥ १९ ॥ ❀ ❀ यर्हि बादरायणवीर्य्यजत्वं तर्हि कथं शूद्रत्वं शूद्रत्वे च कथं लोकानुग्राहकत्वम्। महाभागवतो यम एव त्वं न शूद्रः, यतो न शूद्रा भगवद्भक्तास्ते तु भागवताः स्मृताः। सर्ववर्णेषु ते शूद्रा ये न भक्ता जनार्द्दने। इति वस्तुतस्तु भगवत्परिकरोऽयं विदुरो नित्यसिद्ध एव। तत्र यमस्य प्रकटलीलायां प्रवेशादभेद व्यवहार इति ज्ञेयम् ॥ २० ॥

### श्रीमद्वीरराघवव्याख्या

भगवत्कथास्वपि प्राधान्येन श्रीकृष्णकथैव कथनीयेत्याह स इति। यो भगवान् विश्वस्य जन्मस्थितिसंहारार्थे सृष्टिस्थितिसंहारार्थं प्रगृहीतशक्तिः प्रगृहीतोपात्ता शक्तिः ब्रह्मादिरूपा शक्तिर्येन सः शक्तितन्वंशविभूतिशरीरादयः शब्दाः पर्यायाः। पालनाधिकृतस्वावताररूपविष्णुगतपालनानुकूलसामर्थ्यस्य स्वशक्तित्वं बोध्यम्। एवंभूतः स एवेश्वरः कृतावतारः अतिपूरुपाण्यतिमानुषाणि दिव्यानि कर्माणि चकार तानि मह्यं कीर्तय कथय ॥ १६ ॥ ❀ ❀ एवं क्षत्त्रा पृष्टो मैत्रेय आहेत्याह शुकः स एवमित्येकेन भगवानुत्पत्त्यादिज्ञानसंपन्नः स कुषारवसुतो मैत्रेयः एवं क्षत्त्रा विदुरेण पुंसां निःश्रेयसार्थाय मोक्षोदयाय स्वस्य तु संसिद्धत्वान्न स्वनिश्रेयसार्थायेत्यर्थः, एवमापृष्टः तं क्षत्तारं बहुमानयन्संमानयन्नाह ॥ १७ ॥ ❀ ❀ पुंसां निःश्रेयसार्थायेत्यनेन सूचितमेव क्षत्तुः लोकानुग्रहकारित्वमाविष्कुर्वंस्तावत्प्रश्नमभिनंदति मैत्रेयः साध्विति। हे साधो! विदुर! त्वया साधु सम्यक् पृष्टं त्वया कथंभूतेन लोकान्साध्वनुगृह्णता अधोक्षजात्मनः अधोक्षज आत्मा यस्य तस्यात्मनः स्वस्याधोक्षजचित्तस्य स्वस्येति वा कीर्तिं लोके वितन्वता विस्तरवता ॥ १८ ॥ ❀ ❀ हरिकथाप्रश्नस्त्वयि न चित्रमित्याह नैतदिति। हे क्षत्तः बादरायणवीर्यजे व्यासवीर्यसंभूते त्वयि इदं हेतुगर्भविशेषणं एतद्धरिकथाप्रश्न इत्येतन्न चित्रं न केवलं बादरायणवीर्यं तत्त्वमात्रमेव किंतु यद्यस्मादनन्यभावेनैकांतभावेनेश्वरो हरिस्त्वया गृहीतः ॥ १९ ॥ ❀ ❀ बादरायणवीर्यजत्वं च स्पष्टयति मांडव्यशापादिति प्रजानामभागवतानां प्रजानां संयमनो दंडयिता यमः वैवस्वतः मांडव्यस्य मुनेः शापाद् भुजिष्यायां दास्यां सत्यवतीसुताद् व्यासाज्जातः उत्पन्नः यम एव त्वं जातोसीत्यर्थः ॥ २० ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

सारकथापि सृष्ट्यादिविषयलीलैवेत्याशयेनाह स इति। पुरुषा ब्रह्मादयस्तत्कर्मातिक्रांतानि अतिपुरुषाणि कृतवासुदेवाद्यवतारसृष्ट्यादिकर्तारौ ब्रह्मरूद्राविति भ्रांतिनिवारणार्थमीश्वर इत्युक्तं ब्रह्मशिवेशनशील ईश्वर इत्यर्थः। प्रगृहीतसृष्ट्यादीच्छाशक्तिः वशीकृतप्रकृतिशक्तिर्वा ॥ १६ ॥ ❀ ❀ मैत्रेयो विदुरप्रश्नपरिहारं वक्तुमुपक्रमत इत्याह शुकः स एवमिति। निःश्रेयसार्थाय मोक्षादिपुरुषार्थाय ॥ १७ ॥ ❀ ❀ बहुमानप्रकारं वक्ति साध्विति। अधोक्षजे हरावात्मा मनो यस्य स तथा तस्य आत्मनो मम स्वस्य परमात्मनो वा ॥ १८ ॥ ❀ ❀ तव तद्विषयप्रश्न उचित एवेति कथयति नैतदिति यादृशो भावो विष्णोरन्यस्मिन् वस्तुनि नास्ति तादृशो भावोनन्यभावस्तेन सर्वोत्तमत्वज्ञानपूर्वकबहुमानेनेत्यर्थः। हरिरीश्वर इत्येतौ शब्दौ अन्योन्यव्यावर्तकत्वेन प्रवृत्ताविति ज्ञातव्यम् ॥ १९ ॥ ❀ ❀ देवयोनित्वात्तव हरिकथाप्रश्नो नाश्चर्यकर इति भावेन कथयति मांडव्येति। व्यासस्य भ्रातुर्विचित्रवीर्यस्य क्षेत्रे वीर्याधानयोग्यायां भुजिष्यायां दास्यां यः सत्यवतीसुताज्जातः प्रजासंयमनो यमो भवानिति यस्मात् ॥ २० ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

तत्र विशेषतः श्रीकृष्णकथानुरक्तत्वेऽपि विरहदुःखवृद्धिभयात् सामान्यत एव पृच्छति स विश्वेति। अत एव श्रीमैत्रेयोऽपि तत्कथां न प्रस्तुतवानिति ज्ञेयम्। कुतः सम्प्रत्यवतारो येन सः श्रीकृष्णो जन्माद्यर्थप्रगृहीतशक्तित्रयः सन् यानि चकारेति योज्यम् ❀ ❀ पुंसां सर्वेषामेव पुरुषाणां यन्निःश्रेयसं मङ्गलं भक्तिरूपं तदेवार्थः पुरुषार्थो यस्य तेन ॥ १७—२० ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

अतो निराकांक्षत्वार्थमुक्तलक्षणानां मत्प्रश्नानामुत्तरं संक्षेपेणोक्त्वा मधुरेण समापयेदिति न्यायेन श्रीकृष्णवतारकथैव विस्तारार्थं कीर्त्तनीयेत्याह स इति। कृताः पूर्वं पुरुषादयोऽवतारा येन स मह्यं मां प्रसादयितुम् ॥ १६ ॥ ❀ ❀ क्षत्त्रा कीदृशेन पुंसां कलौ जनिष्यमाणानां निःश्रेयसं निस्तार इवार्थो यस्य तेन तस्य श्रीकृष्णपार्षदत्वेन कृतार्थत्वादेवेति भावः ॥ १७ ॥ ❀ ❀ अधोक्षज एव आत्मा मनो यस्य तस्य आत्मनः स्वस्य ॥ १८ ॥ ❀ ❀ त्वय्येतन्नाश्चर्य्यं यतो

बादरायणस्य वीर्याज्जाते यतश्च गृहीत इत्यादि ॥ १९ ॥ ❀ ❀ न त्वं प्राकृतो लोकस्त्वामहं परिचिनोम्येवेत्याह माण्डव्येति। भ्रातुर्विचित्रवीर्यस्य क्षेत्रे क्षेत्रत्वेन स्वीकृतायां दास्याम् ॥ २० ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

कारणं तु ध्येयमिति श्रुतेर्विश्वकारणस्य भजनं विधीयते तच्च विश्वकारणं श्रीकृष्णस्तस्मात् कृष्णकर्माणि वर्णयेत्याह स इति। यो विश्वजन्माद्यर्थं पूर्वं गृहीतशक्तिः स एव कृतावतारः सन् पौरुषाणि पुरुषानतिक्रम्य वर्तमानानि यानि चकार तानि कर्माणि मह्यं विस्तराद्वद ॥ १६ ॥ ❀ ❀ एवं पुंसां निःश्रेयसार्थाय पृष्टः तं क्षत्तारं बहु मानयन्नाह ॥ १७ ॥ ❀ ❀ अधोक्षजे आत्मा मनो यस्य तस्य ॥ १८ ॥ ❀ ❀ यद्धरिर्गृहीतः एतत् त्वयि चित्रं न तत्र हेतुः बादरायणवीर्यजे इति ॥ १९ ॥ ❀ ❀ भ्रातुः सत्यवतीसुतस्य विचित्रवीर्यस्य क्षेत्रे भुजिष्यायां सत्यवतीसुतात् श्रीवेदव्यासात् ॥ २० ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

एवमुद्धृतभगवत्कथां पृष्ट्वा, मूलपुरुषस्य द्वितीयचरित्रं वा पृच्छति—स विश्वेति। यः पूर्वोक्तः स एव कार्यान्तरार्थेऽवतीर्णस्तस्य चरित्रं प्रथमतः पृष्टमिति। अन्ते सर्वस्याऽपि विश्वस्य जन्मस्थितिसंयमार्थे यः कृतावतारः परमपुरुषः, व्यष्टीनां वा जन्माद्यर्थं कृतावतारः, नतु कालादीन् आज्ञापयति, किन्तु स्वयमेवाऽगत्य करोति यः। ननु भगवत्कृतेऽपि इहेत्याद्यनुभवात् कथं केवलं भगवत्कृतं तद्भविष्यतीत्याशङ्कयाऽऽह–प्रगृहीतशक्तिरिति। प्रकर्षेण गृहीताः कालादिशक्तयो येन। ते हि कालादयस्तत्र प्रतीयमाना अपि भगवता नियमिताः, न स्वतः कार्यं कुर्वन्ति। प्रतीतिमात्रं तु न दोषाय। जन्माद्यर्थमेवावतारान् जन्मादीनि करिष्यत्येव। किन्त्वन्येभ्यः पुरुषेभ्यः प्रकर्षेणाऽतिपौरुषाणि यानि चकार। साधारणं तु न करिष्यतीश्वरत्वात्। तानि केवलं मह्यमेव कथय। मया परम्परार्थमप्यन्यस्मै न वक्तव्यमिति भावः ॥ १६ ॥ ❀ ❀ एतादृशप्रश्नकर्ता नाऽन्यो भविष्यति, न वा प्रश्नव्यतिरेकेण वक्तुं शक्यम्। अतोऽस्याधिकारो निरूपितः अनेनैव प्रश्नेनाऽन्ये सहिता भवन्तीति, पर्यवसानत एक एव प्रश्नः सिद्धः। तस्योत्तरमध्यायद्वयेन वक्ष्यति, अवतारादिपौरुषप्रयोजनभेदात्। तस्मादेतदध्यायद्वयं स्वत एवाऽनेनोद्धृत्योक्तम्। अनेन चेदयं प्रश्नान्तरजिज्ञासुर्भविष्यति, तदा पूर्वोक्तानपि विशेषांस्तत्रैव कुशरे पातयित्वा जीवसन्देहनिवृत्त्यर्थं वक्ष्यामीत्यभिप्रायो मैत्रेयस्य, अतः प्रश्नाभिनन्दनं वक्तुम्, तस्याऽयं प्रश्नोऽभिप्रेत इत्याह—एवमिति। मैत्रेय आविष्टो भगवान् वर्त्तत इति स भगवान्। केवलेनैतज्ज्ञातुं वक्तुं चाऽशक्यम्। क्षत्तेति पूर्ववत्। कौषारविरिति पितृनाम्ना विवेकित्वम्। मुनिरिति तदुक्तार्थज्ञानानुसन्धाने हेतुः। इदमतिपवित्रं चरित्रं नैकस्मै प्रयोजनाय वक्तव्यमिति पुंसां निःश्रेयसार्थायेत्युक्तम्। परं तमुद्दिश्यैवेत्याह—तमाहेति। बहुमानेन तस्य हृदये प्रविशतीति, भगवदीयत्वाच्च बहुमानं कृतवानित्यर्थः ॥ १७ ॥ ❀ ❀ त्र चतुर्भिः सन्माननं करोति। पृष्टार्थदेहजीवानां संबन्धस्याऽपि सर्वतः। ज्ञात्वा कथनबोधाय तैरुत्कर्षो निरूप्यते। १। तत्र प्रथमं प्रष्टव्योत्कर्षेण तमभिनन्दति साधु पृष्टमिति। बहव एव पृच्छन्ति, कोप्येवं न पृच्छतीति त्वयेत्युक्तम्। न च तवायं प्रश्नः काकतालीयः किन्तु ज्ञात्वैव कृतः, उत्तरमपि ज्ञायते, तर्हि प्रश्नो व्यर्थ इत्याशङ्कयाऽऽह—लोकान् साध्वनुगृह्णतेति। लोकोद्धारार्थमेव ज्ञात्वाऽपि त्वया प्रश्नः कृतः। अनेनाऽस्मिन् शास्त्रे परोपकारो मुख्यं साधनमित्युक्तं भवति। तवाऽप्येकमानुषङ्गिकं फलं सिद्ध्यतीत्याह—कीर्तिं वितन्वता लोक इति। अस्मिन् लोके आत्मनः कीर्तिं विस्तारयता भवता पृष्टम्। ननु स्वकीर्त्यर्थं तथा करणमनुचितं चेत्तत्राऽऽह—अधोक्षजात्मन इति। अधोक्षज एवाऽन्तःकरणे यस्य। देवालयप्रतिष्ठया देव एव प्रतिष्ठितो भवतीति। परम्पराश्रयणं तु साक्षाद्भगवत इन्द्रियागोचरत्वात्। तदाहाऽधोक्षजेति। एवमस्य प्रश्नस्य स्वपरहितत्वात् साधुत्वम् ॥ १८ ॥ ❀ ❀ देहोत्कर्षमाह शूद्रायोनिदोषाभावाय—नैतच्चित्रमिति। क्षेत्रमेके प्रशंसन्ति बीजमन्ये मनीषिणः। तयोर्बीजमेवोत्तमम्। यद्बीजस्य प्रभावेण तिर्यञ्च ऋषयोऽभवन्। अतो बादरायणस्य वीर्यजे त्वयि चित्रं न, तादृशवक्तुः पुत्रः वक्तुमेव समर्थो भवति, किं पुनः प्रश्ने। अत एव चित्राभावः। तस्य बीजस्य फलमपि जातमित्याह—गृहीत इति। अनेन प्रामादिकबीजत्वशङ्का निवारिता। नह्यन्यथोत्पन्नो भगवद्भक्तो भवति, भगवत्कर्तृकसर्गत्वात्। अत एवाऽनन्यभावेन केवलभगवद्भावेन भगवान् गृहीतः। स हि दुःखमपि शमयति। योन्यादिसर्वदोषानपि दूरीकरोति, यत ईश्वरः। करणे हेतुः—हरिरिति। दीनदयालुत्वात्तथा करोतीत्यर्थः ॥ १९ ॥ ❀ ❀ जीवोत्कर्षमाह—माण्डव्यशापादिति। स हि धर्मराज एव माण्डव्यशापाद् व्यासद्वारा क्षत्रियभोगपत्न्यां जातः। माण्डव्यो हि यमेनाऽज्ञानाद्दण्डितः। कस्यचिच्चिद्राज्ये चौरैः सह माण्डव्यनामा ऋषिस्तपः कुर्वाणः शूले आरोपितः। स हि यमं प्रष्टुं गतः। तेन पृष्टो यम आह 'त्वया बाल्ये शकुन्तायाः पृष्ठे इषीका प्रवेशितेति'। ततः क्रुद्धो मुनिः 'बाल्येन कृतं पित्रोर्भवतीति, अज्ञानात्त्वयाऽहं दण्डित इति, शूद्रो भव' इति शशाप। तस्य देवस्य शापसंबन्धे हेतुमाह—प्रजासंयमन इति। प्रजाः संयमयति मारयतीति तथा। अतस्तेन कर्मणा देवस्याऽपि पापं लग्नम्। ततो दैत्येषु जन्म मा भवत्विति सर्वथा दैत्यसंबन्धरहिते भगवति व्यासे आविष्टः, शापसार्थकत्वाय तस्यैव भ्रातुः क्षेत्रे, भोगपत्न्यां भुजिष्यायां शूद्रायाम्। व्यासस्यापि संक्रमणयोग्यार्थं सत्यवतीसुत इत्युक्तम्। उपरिचरवसोर्बीजान्मत्स्ययोनौ जाता, कैवर्ताधिपेन दाशेन परिपालिता दाशकन्या सत्यवती, तस्याः पुत्रात् व्यासाज्जात इति ॥ २० ॥

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

स विश्वेत्यत्र । विश्वेत्यादिविशेषणप्रयोजनमाहुः—कार्यान्तरेत्यादि । तथा च पूर्वप्रश्नादस्मिन् वैलक्षण्यज्ञापनाय विशेषणमित्यर्थः ॥ १६ ॥ ❀ ❀ एवमित्यस्याभासे । अध्यायद्वयेनेति । तेन विदुरमैत्रेयसंवादे प्रश्नोत्तररूपावान्तरप्रकरणसङ्गतिः[1] बोधिता । द्वाभ्यां कथने हेतुः—भवतारादिति । अवतारश्च तदादिश्चेत्यवतारादी [2]तत्पौरुषयोर्यत् प्रयोजनं तद्भेदादित्यर्थः । पूर्वोक्ते ति । यन्मर्त्यलीलेत्यत्र पूर्वं द्वितीयस्कन्धे चानन्दशक्तित्वेनोक्ता ॥ १७ ॥

### श्रीगिरिधरकृता बालप्रबोधिनी

भगवत्कथास्वपि श्रीकृष्णावतारकथैव विशेषतः कथनीयेत्याह—स इति । यो भगवान् विश्वस्य जन्मस्थितिसंयमार्थे सृष्टिपालनसंहारार्थं पूर्वं प्रगृहीतशक्तिः प्रगृहीतसत्त्वादिगुणः स एव कृतावतारः सन् यानि कर्माणि चकार तानि मह्यं कीर्तयेत्यन्वयः। विशेषत एतच्छ्रवणेच्छायां हेतुमाह—अतिपूरुषैः कर्तुमशक्यानीत्यर्थः। तत्र हेतुमाह—ईश्वर इति, परमेश्वरत्वेन सर्वकरणसमर्थ इत्यर्थः ॥ १६ ॥ ❀ ❀ एवं क्षत्त्रा पृष्टो मैत्रेय आहेत्याह शुकः—स एवमित्येकेन। पुंसां निःश्रेयसं मोक्ष एवाऽर्थः प्रयोजनं तेन हेतुना-चतु[3]र्थ्यन्तपाठो वा-एवं पूर्वोक्तप्रकारेण स प्रसिद्धो मुनिः मननशीलः अतएव भगवान् 'उत्पत्तिं च विनाशं च भूतानामागतिं गतिम् । वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति' इति स्मरणात् उत्पत्त्यादिज्ञानसम्पन्नः कौषारविः कुषारवपुत्रो मैत्रेयः पृष्टस्तं विदुरं बहु मानयन्नाहेत्यन्वयः ॥ १७ ॥ ❀ ❀ 'पुंसां निश्श्रेयसार्थेन' इत्यनेन सूचितमेव क्षत्तुर्लोकानुग्राहकत्वमाविष्कुर्वंस्तावत्प्रश्नमभिनन्दति--साध्विति । साध्नोति स्वपरकार्यमिति साधुस्तथाभूतश्च त्वमित्याशयेन सम्बोधयति--साधो इति । त्वया साधु सम्यगेव पृष्टम् । प्रश्नस्य साधुत्वं कथमित्यपेक्षायां सम्बोधनेन सूचितमेवार्थं स्पष्टयति—लोकानित्यादिना । अज्ञस्य तावदेवं प्रश्नो नैव सम्भवत्यतस्त्वं विज्ञ एव अतस्तथाभूतेनापि त्वया लोकान् साधु सम्यगनुगृह्णता एवं कथाप्रचारणेन लोकानामुद्धारो भवत्विति लोकेष्वनुग्रहं कुर्वतैव पृष्टमिति परकार्यसाधकत्वं दर्शितम् । अधोऽक्षजं ज्ञानं यस्मात्तस्मिन्नात्मा मनो यस्य तस्यापि तवैवं प्रश्नादिकं विना तथात्वेन कीर्तिर्न स्यादत आत्मनः स्वस्यापि कीर्तिं लोके वितन्वता विस्तारयता पृष्टमिति स्वकार्यसाधकत्वं दर्शितम् ॥ १८ ॥ ❀ ❀ हे क्षत्तः यत्त्वया अनन्यभावेन एकान्तभक्त्या हरिः सर्वदुःखहर्त्ता श्रीकृष्णो गृहीतः चित्ते धृतः तदेतत्त्वयि चित्रमाश्चर्यं न भवति । तत्र हेतुमाह—बादरायणवीर्यजे इति । दुःखहर्तृत्वे हेतुमाह—ईश्वर इति ॥ १९ ॥ ❀ ❀ व्यासवीर्यजत्वमेव स्पष्टयन् तत्पूर्वजन्ममहत्त्वमाह—माण्डव्येति । प्रजानां स्वस्थानप्राप्तानां संयमनः दण्डयिता । तत्र हेतुमाह—भगवानिति । गत्यागत्यादिज्ञानवान् धर्माधर्मविवेचको यम एव माण्डव्यस्य मुनेः शापात् भ्रातुः सत्यवतीसुतस्य विचित्रवीर्यस्य क्षेत्रे भार्यात्वेन गृहीतायां भुजिष्यायां दास्यां सत्यवतीसुतात् व्यासात्त्वं जातोऽसीत्यन्वयः ॥ २० ॥

### हिन्दी अनुवाद

उन सर्वेश्वरने संसारकी उत्पत्ति, स्थिति और संहार करनेके लिये अपनी मायाशक्तिको स्वीकार कर राम-कृष्णादि अवतारोंके द्वारा जो अनेकों अलौकिक लीलाएँ की हैं, वे सब मुझे सुनाइये ॥ १६ ॥ ❀ ❀ श्रीशुकदेवजी कहते हैं—जब विदुरजीने जीवोंके कल्याणके लिये इस प्रकार प्रश्न किया, तब तो मुनिश्रेष्ठ भगवान् मैत्रेयजीने उनकी बहुत बड़ाई करते हुए यों कहा ॥ १७ ॥ ❀ ❀ श्रीमैत्रेयजी बोले—साधुस्वभाव विदुरजी ! आपने सब जीवोंपर अत्यन्त अनुग्रह करके यह बड़ी अच्छी बात पूछी है । आपका चित्त तो सर्वदा श्रीभगवान्में ही लगा रहता है, तथापि इससे संसारमें भी आपका बहुत सुयश फैलेगा ॥ १८ ॥ ❀ ❀ आप श्रीव्यासजीके औरस पुत्र हैं; इसलिये आपके लिये यह कोई बड़ी बात नहीं है कि आप अनन्यभावसे सर्वेश्वर श्रीहरिके ही आश्रित हो गये हैं ॥ १९ ॥ ❀ ❀ आप प्रजाको दण्ड देनेवाले भगवान् यम ही हैं । माण्डव्य ऋषिका शाप होनेके कारण ही आपने श्रीव्यासजीके वीर्यसे उनके भाई विचित्रवीर्यकी भोगपत्नी दासीके गर्भसे जन्म लिया है ॥ २० ॥

**भवान् भगवतो नित्यं सम्मतः सानुगस्य च । [4]यस्य ज्ञानोपदेशाय माऽऽदिशद्भगवान् व्रजन् ॥ २१ ॥**
**अथ ते भगवल्लीला योगमायोपबृंहिताः । विश्वस्थित्युद्भवान्तार्था वर्णयाम्यनुपूर्वशः ॥ २२ ॥**

---

१. इतोऽग्रे 'रेव सङ्गतिर्नतु पृथक्' । य (?) सङ्गतिरपीति बोधितम् । इति पाठोऽप्यस्ति २. तयोः । ३. 'निश्श्रेयसार्थाय' इत्येवंरूपः । ४. प्राचीने पाठे श्लोकार्धस्यास्यायं प्रकारो यथा—'यज्ज्ञानादेशये चैव माऽऽदिशद्भगवानिह ।'

भगवानेक आसेदमग्र आत्माऽऽत्मनां विभुः। आत्मेच्छानुगतावात्मा नानामत्युपलक्षणः ॥ २३ ॥
स वा एष तदा द्रष्टा नापश्यद् दृश्यमेकराट्। मेनेऽसन्तमिवात्मानं सुप्तशक्तिरसुप्तदृक् ॥ २४ ॥
सा वा एतस्य संद्रष्टुः शक्तिः सदसदात्मिका। माया नाम महाभाग ययेदं निर्ममे विभुः ॥ २५ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका।

किंच। भवानिति। कुतः यस्य तव ज्ञानोपदेशाय मामादिष्टवान्। चकारात्स्वयमपि स्मृत्यैवोपदिष्टवानिति ॥ २१ ॥ ❀ ❀ विश्वस्थित्यादयोऽर्था विषया यासां ताः ॥ २२ ॥ ❀ ❀ तत्र सृष्टिलीलां वर्णयितुं ततः पूर्वावस्थामाह। इदं विश्वमग्रे सृष्टेः पूर्वं परमात्मा भगवानेक एवास आसीत् आत्मनां जीवानामात्मा स्वरूपं विभुः स्वामी च नान्यद् द्रष्टृदृश्यात्मकं किंचिदासीत्। कारणात्मना सत्त्वेऽपि पृथक्प्रतीत्यभावादित्याह। अनानामत्युपलक्षणो नानाद्रष्टृदृश्यादिमतिभिर्नोपलक्ष्यत इति। तथा। यद्वा। अकारप्रश्लेषं विनैवायमर्थः यः सृष्टौ नानामतिभिरुपलक्ष्यते स तदा एक एवासीदिति। कुतः। आत्मेच्छा माया तस्या अनुगतौ लये सति। यद्वा आत्मन एकाकित्वेनावस्थानेच्छायामनुवृत्तायामित्यर्थः ॥ २३ ॥ ❀ ❀ तत्र प्रथमं मायोद्भव-प्रकारमाह द्वाभ्याम्। स वै एष द्रष्टा सन् दृश्यं नापश्यत्। यतः स एकराडेक एव तदा प्रकाशते आत्मानमसंतमिव मेने दृश्या-भावे द्रष्टृत्वाभावात्। तदाह। सुप्ता मायाद्याः शक्तयो यस्य सः। न त्वसंतमेव मेने यतोऽसुप्ता दृक् चिच्छक्तिर्यस्येति ॥ २४ ॥ सा वै द्रष्टृदृश्यानुसंधानरूपा सदसदात्मिका कार्यकारणरूपा। यद्वा सद्दृश्यमसद्दृश्यमात्मस्वरूपं च तयोरात्मा यस्याः तदुभयानुसंधानरूपत्वात् ॥ २५ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

अन्यदाधिक्यमाह—किञ्चेति। संमतः श्रेष्ठत्वेन मतः अनुगैरुद्धवादिभिस्सहितस्य आदिष्टवान् आज्ञप्तवान् व्रजन्नं-तर्दधत् ॥ २१ ॥ २२ ॥ तत्रादौ ततः सृष्टेः नन्वसत्पुनः कथमासीदिति चेदाह--कारणात्मनेति। 'इष्टस्यार्थस्य संसिद्धौ को विद्वान्य-त्नमाचरेत्" इति न्यायमाश्रित्याह--यद्वेति। तदा सृष्टेः प्राक्काले अत्र हेतुमाशंकते कुत इति। अधिष्ठानलयं विनाधिष्ठेयलयो न दृष्टचर इति चेदाह—यद्वेति। इत्यर्थ इति। सिसृक्षा रिरक्षादिवदेवैकाकिनीष्टा सापि कदाचित्तत्र जीवादृष्टवशादुदयत इति भावः ॥ २३ ॥ ❀ ❀ तत्रेति वाक्यालंकारे। 'स वै नैव रेमे तस्मादेकाकी न रेमे" इति श्रुतेः। तदसदिव मननं चिच्छक्तिः स्वरूपभूतांतरंगशक्तिः ॥ २४ ॥ ❀ ❀ कार्यस्य प्रागभावात्सच्छब्दवाच्यत्वं कारणस्य पूर्वं सत्त्वादसच्छब्दवाच्यत्वं न घटते इति चेदाह—यद्वेति। तयोर्दृश्यादृश्ययोः स्थूलसूक्ष्मयोर्महाभूतमहदादिरूपयोरात्मा स्वरूपं विद्यते यस्या मायायाः सा सदसदात्मिका शैषिकः कप् तयोरुभयोर्दृश्यादृश्ययोरनुसंधानमधिष्ठानं यत्तद्रूपत्वात् तयोस्तस्यानिर्गतत्वादिति भावः ॥ २५ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

सानुग्रहस्य यज्ज्ञानदशा यच्च मामादिशद्भगवान् व्रजन्निति। सम्बन्धोक्तिपाठः, तत्र स्वामिव्याख्या च सङ्गता स्याच्चकारस्य तत्रैव योजनात् ॥ २१ ॥ ❀ ❀ अथ श्रीभगवत्सम्मतत्वात् विषयः प्रतिपाद्यः ॥ २२ ॥ ❀ ❀ तव तत्र तासु त्रिविधलीलासु मध्ये ततः सृष्टेः भगवानित्येतदारभ्य अशेषसंक्लेशशमं विधत्त इत्येतत्पर्य्यन्तं चतुःश्लोकीविवरणं एक एवासीदिति कारणेन भगवता सहैकीभूयासीदित्यर्थः, स्वरूपं रश्मीनां मंडलमिव परमस्वरूपं मूलरूपमित्यर्थः। यथा जीवा-नामात्मत्वेऽपि तदात्मा भगवांस्तथा भगवतोपि कश्चनात्मा स्यादिति भ्रांतिव्युदासाय द्वितीयात्मपदं स्वस्य स्वयमेवात्मा स्वयं-सिद्धस्वरूप इत्यर्थः। पूर्वार्धे एक एवेत्यनेन विवक्षितसिद्धेरकारविश्लेषगौरवाच्च यद्वेति। गुणमायाया एव लयस्सम्भवति नत्वात्म-मायायाः आत्ममाया तदिच्छा स्यात् गुणमाया जडात्मिकेति महासंहितोक्तेरनुगतिशब्दस्य लयवाचकत्वं चाप्रयुक्तमित्यपरितो-षाद्यद्वेति तदा प्राकृतनानात्वाभावेपि वैकुण्ठादिवैभवसद्भावो राजासौ प्रयातीतिवज्ज्ञेयस्तथा चाहमेवासमेवाग्र इत्यद्धं व्याख्यातम् ॥ २३ ॥ ❀ ❀ तत्र सृष्टिलीलायां दृश्यं विश्वं नापश्यत् स्वेच्छया स्वस्मिंल्लीनत्वात् आत्मानं प्रपञ्चद्रष्टृवस्थं स्वांशं पुरुषावतारं तदाह प्रपञ्चद्रष्टृत्वाभाववत्त्वमाह इवशब्दार्थमाह नत्विति। चिच्छक्तिस्स्वरूपभूतांतरङ्गशक्तिः ॥ २४ ॥ ❀ ❀ ऋतेर्थं यत्प्रतीयेत इत्युक्तां बहिरङ्गशक्तिं दर्शयन् पश्चादहं यदेतच्चेति व्याचष्टे सा वै इति द्रष्टृदृश्यानुसंधानरूपा संविच्छक्तेराभासरूपा पूर्वार्थे द्रष्टृदृश्यानुसंधानरूपत्वेन वाचनिकीमत्यरुचेर्यद्वेति दृश्यं विश्वं अदृश्यं यद्द्रष्टृपुरुषाख्यं आत्मपदं व्याचष्टे स्वरूपमिति। तयोः सदऽसतोरनुसंधानविषययोस्स्वरूपं यस्याः सा ज्ञानाभासरूपायाः आत्मरूपमिति तु लेखकभ्रमः तदुभयेति यद्विषयं यदनुसंधानं तत्स्वरूपं तस्मिन्स्वकारणे विषय एव विषयविधया तिष्ठतीति नियमा-दिति भावः ॥ २५ ॥

## श्रीमद्वीरराघवव्याख्या

किंच भवानिति सानुगस्य सभागवतस्य भगवतः श्रीकृष्णस्य भवान्नित्यं संमतः प्रीतिविषयः यद्यस्य तव ज्ञानोपदेशाय मां भगवान् व्रजन्भुवं त्यक्ष्यन्नादिशदादिष्टवान्समीपेऽसंतमपि। भगवंतं स्मृत्वा ज्ञानोपदेशार्थं मामाज्ञप्तवान् एतेन भगवन्निरतिशयप्रीतिविषयत्वमवगम्यते प्रियो हि ज्ञानिनोऽत्यर्थमिति स्मरणात् ॥ २१ ॥ ❀ ❀ अतो निरतिशयभगवत्प्रीतिविषयाय ते यथाप्रश्नं वर्णयामीति संबंधः। कथंभूता योगमायोपबृंहिताः, युज्यते इति योगः स चासौ माया च आश्चर्यशक्तिः तयोपबृंहिताः भगवन्नियाम्याश्चर्यशक्त्युपकल्पिताः अंतः संहारः अर्थो मोक्षः विश्वस्य स्थित्यादयो यासां ताः एवंभूता लीलाः। यद्वा अर्थशब्दः स्वरूपपरः वस्तुन्यर्थशब्दप्रयोगात् अंतशब्देन संहारो मोक्षश्च विवक्षितः। यत्प्रयंत्यभिसंविशतीति श्रुतेः, विश्वस्य स्थित्यादयः अर्थः स्वरूपं यासां ताः लीलाः क्रीडाः चेष्टाः आनुपूर्व्यशः प्रश्नानुसारेण वर्णयामीत्यर्थः। यद्वा सृष्टिलीलादिक्रमेणेत्यर्थः ॥ २२ ॥ ❀ ❀ प्रथमं सृष्टिलीलां वर्णयितुं सृष्टेः पूर्वं कारणत्वेनावस्थितवस्तुस्वरूपमाह त्रयेण भगवानिति। इदं परिदृश्यमाननामरूपविभागार्हस्थूलचिदचिदात्मकं जगदग्रे सृष्टेः पूर्वकाले आत्मनां जीवानामात्मांतः प्रविश्य धारकः विभुः स्वामी एक अविभक्तनामरूपसूक्ष्मचिदचिच्छरीरः भगवानेवासीदित्यर्थः। स एव भगवानात्मेच्छानुगतावात्मनः स्वस्येच्छा सृष्ट्युपयोगी संकल्पः तस्या अनुगतौ उन्मेषे सति नाना मत्युपलक्षितः देवादिनानानामरूपविषयबुद्धिबोध्यः पूर्वस्मिन् कल्पे आसीत् कुतः आत्मा आत्मपर्यंतत्वान्नामरूपविषयमतीनामित्यभिप्रायः एक एव भगवान्कदाचिद्विभक्तनामरूपचिदचिच्छरीरकः कार्यावस्थः नाना स एव कदाचिन्नामरूपविभागानर्हसूक्ष्मचिदचिच्छरीरकः परमात्मा कारणावस्थ इत्यर्थः। यद्वाऽनानामत्युपलक्षित इति छेदः, आत्मेच्छानुगतौ संहारविषयात्मनि संकल्पोन्मेषे सति अनानामत्युपलक्षितः देवादिनामरूपविषयबुद्ध्युपलक्षितः। कुत आत्मा देवादिनामरूपभाक्क तदभावश्चात्मन एवेत्यर्थः। न चैवं विकारित्वप्रसंगः सद्वारकत्वान्नामरूपसंस्पर्शस्येत्यभिप्रायादत्रेदंशब्देन स्थूलचिदचिच्छरीरकः परमात्मैवोच्यते। तस्यैव स्थूलावस्थाप्रहाणेन सूक्ष्मचिदचिच्छरीरकतयाऽवस्थितस्य कारणत्वमुच्यते। नच चिदचिच्छरीरकत्वस्यात्राप्रतीतेरेक एवेत्यनेन सजातीयविजातीयस्वगतभेदशून्यं ब्रह्मैव जगत्कारणमित्युच्यते इति भ्रमितव्यं, अग्र इति कालस्य निर्देशाद्विजातीयभेदस्यात्मनामात्मेति व्यतिरेकनिर्देशेन सजातीयभेदस्य भगवानित्यनेन कारणत्वोपयिकसार्वज्ञ्यसर्वशक्तित्वसत्यसंकल्पत्वादिस्वगतभेदस्य चात्रैव प्रतिपन्नत्वात् तर्ह्येक इत्यनेन किमुच्यत इति चेदुच्यते महदादिसृष्टिक्रमेण वक्ष्यमाणनानात्वप्रतीतिसंबंधि ह्येकत्वमेक इत्यनेनोच्यत इति नामरूपविभागाभावाभिप्रायनिबन्धनो ह्येक इति व्यपदेशः ॥ २३ ॥ ❀ ❀ तद्धेदंतर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यां व्याक्रियते इति प्रकृतिपुरुषकालशरीरकस्य सार्वज्ञ्यादिकल्याणगुणाकरस्यैव कारणत्वं प्रपंचयति द्वाभ्यां स इति। स वा एषः सोऽयं भगवान् तदा प्रलयदशायां द्रष्टा सर्वज्ञः तत्र हेतुः असुप्तदृगसंकुचितज्ञानः तत्कुतः एकराट् एकरूपप्रकाशः नतु जीववत् कर्मायत्तकादाचित्कसंकोचविकासभाग्ज्ञानसंपन्नः सुप्तशक्तिः सूक्ष्मावस्थचिदचिदाख्यस्वशक्तिः तत्कुतः। तन्वादिपर्यायः शक्तिशब्द इत्युक्तं दृश्यं कार्यं नापश्यत् किंतु असंतं व्यवहारानर्हं नामरूपरहितमिति वाऽऽत्मानं मेने अमनुत। इवशब्देन तस्य सूक्ष्मदर्शित्वात्स्वशरीरभूतसूक्ष्मावस्थचिदचिद्विषयज्ञानसंपत्तिः सूच्यते। अनेन सार्वज्ञ्यादिगुणसंपत्तिर्नामरूपविभागाभावश्चोक्तः ॥ २४ ॥ ❀ ❀ अथ चिदचिच्छरीरकत्वमाह सा वा एतस्येति। सद्द्रष्टुः सतो द्रष्टुः सत्तायोगिसकलपदार्थद्रष्टुः शक्तिरपृथक्सिद्धविशेषणभूता माया नाम प्रकृतिः सदसदात्मिका चेतनाचेतनात्मिका भूमिरापोऽनलो वायुः। अपरेयमितस्त्वन्यां प्रकृतिं विद्धीति। चेतनाचेतनयोरुभयोरपि परस्परविलक्षणप्रकृतित्वाभिधानात् यया सदसदात्मिकया प्रकृत्या इदं कार्याऽवस्थं चेतनाचेतनात्मकं जगत्स्वयं विभुः जगद्गतदोषासंस्पृष्टः निर्ममे सृष्टवान्सैषा मायापि विभोः शरीरत्वेन सूक्ष्मावस्थया आसीदित्यर्थः। भगवानेक एवेदमग्र आसीदित्यनेन सूक्ष्मचिदचिद्विशिष्टस्योपादानत्वं ययेदं निर्ममे विभुरित्यनेन केवलनिष्कृष्टस्वरूपस्य निमित्तत्वं चाभिहितम् ॥ २५ ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली।

किंच स्वधाम व्रजन् तव ज्ञानोपदेशाय मामादिशदिति। यस्मात्तस्मात् भवान्सानुगस्य भगवतो नित्यं प्रियत्वेन संमतोऽतो युक्त इति भावः। हिशब्देन संमतत्वे ग्रंथांतरप्रसक्तिं द्योतयति ॥ २१ ॥ ❀ ❀ श्रोतुरभिमुखीकरणार्थं वक्तव्यार्थं प्रतिजानीते अथेति। योगमायोपबृंहिताः स्वरूपसामर्थ्योपेताः ॥ २२ ॥ ❀ ❀ भगवानेक इदमग्रे आत्मा परमात्मा आत्मनां जीवानां विभुरधिपतिः आत्मा आदानादिकर्ता आत्मेच्छां स्वरूपभूतां सृष्टीच्छामनुगतः सिसृक्षामीति भावमुपगतः तदुपकरणाभावे देवदत्तेच्छावत्तदिच्छापि व्यर्था, नेत्याह नानाशक्तीति। स्वाधीननानासाधनोपलक्षितः। नानामत्युपलक्षित इति पाठे सदेव सौम्येदमग्र आसीदसदेवेदमग्र आसीदित्यादिश्रुतितात्पर्यार्थाज्ञानिनानावादिमतोपलक्षित इत्यर्थः। सतो बंधुमसतिनिरविंदन्नित्यादिश्रुतेः असत्त्वमतमासुरमतमिति प्रसिद्धेः ॥ २३ ॥ ❀ ❀ एकस्य सतो हरेः सृष्टीच्छोत्पत्तिप्रकारमाह स वा इति। योऽसावेकराडेको राजा चक्रवर्ती स एष तदा प्रलये विश्वं नापश्यत् सर्वकार्याणां मूलप्रकृतौ लीनत्वादिति शेषः। दर्शनशक्त्य-

भावादित्यत उक्तं द्रष्टेति। नहि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यत इति श्रुतिर्वा इत्यनेन गृहीता असुप्तदृगित्यनेन एतदेव विव्रियते। जीवानां नित्यत्वेनालीनत्वाद्दर्शनसंभवात्कथं नापश्यदिति तत्राह मेन इति। आत्मानमिति जातावेकवचनं परमात्मा यतो जीवं मेनेऽसंतमशक्तत इति वचनादसत्त्वमशक्तत्वमेव न तु स्वव्यतिरेकेणासत्त्वं पुरुष आसीदिति श्रुतेः क्षेत्रज्ञः पुरुषो ह्यात्मा संसारी चेतनो मत इत्यभिधानं सुप्ता आत्मन्येवातीव रता शक्तिः शक्यत्वाद्भार्या रमा यस्य स सुप्तशक्तिः। तदुक्तं शक्यत्वाच्छक्तयो भार्याः शक्तिः सामर्थ्यमुच्यत इति, सुप्तिस्तु प्रकृतेः प्रोक्ता अतीव भगवद्रतिरिति च अनेन प्रकृतिदर्शनमपि प्रत्युक्तं पृथगनवस्थानात् हरिरीषद् निद्रामुद्रितनेत्रत्वेन नापश्यदिति किं न स्यादित्यत उक्तं असुप्तदृगिति। क्वापि तथोच्यमानस्य गतिः अनास्थान्यत्र च प्रोक्ता विष्णोश्चक्षुर्निमीलनमिति वक्तव्या ॥ २४ ॥ ❀ ❀ शक्तेर्नामाह सा इति। महान् भागो भाग्यसमूहो यस्य स तथा महतीं भां प्रतिगच्छतीति महाभागो वा तस्य संबुद्धौ हे महाभागेति एतस्य संद्रष्टुः सर्वदर्शनशक्तिमतो नारायणस्य या प्रलये सायुज्यं प्राप्य रमते सा शक्तिर्माया नाम सर्वप्रधानत्वान्मायी विष्णुस्तस्येयं माया चार्थे वैशब्दः सा जडात्मिका शक्तिश्च माया नाम स विभुर्ययेदं जगन्निर्ममे। कीदृशी सदसदात्मिका आद्या महदादिकारणव्यापिनी द्वितीया तद्रूपा ॥ २५ ॥

**श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः**

सानुगस्येह यज्ज्ञानोपदेशाय च मामादिशद्भगवानज इति सम्बन्धोक्तिपाठः ॥ २१ ॥ २२ ॥ ❀ ❀ अथ तत्प्रार्थितलीलाकथां कथयन्नेव श्रीमद्भगवदादिष्टचतुःश्लोकीज्ञानं विवृत्याह भगवानित्यादि। अशेषसंक्लेशशमं विधत्ते इत्याद्यन्तेन ग्रन्थेन अथ कथाक्रमानुरोधेन चतुर्णामर्था विपर्य्ययेण वक्तव्याः तत्र अहमेवासमेवाग्रे नान्यद्यत् सदसत् परमित्यर्द्धस्यार्थं सृष्टिलीलोपक्रमेण दर्शयति भगवानिति द्वाभ्याम्। इदं विश्वं पुरुषादिपार्थिवपर्य्यन्तं तदानीमेकाकिना स्थितेन भगवता सहैकीभूयासीदित्यर्थः। आत्मनां शुद्धजीवानामपि रश्मिस्थानीयानामात्मा मण्डलस्थानीयं परमस्वरूपम्। न च तस्याप्यन्यत्तदस्ति यत आत्मा स्वयं सिद्धस्वरूप इत्यर्थः। इति तत्र स्वांशानामप्यंशित्वं दर्शितम्। ब्रह्माभिन्नत्वञ्च। कदा आत्मेच्छा तस्य सृष्ट्यादीच्छा तस्यानुगतौ लीनतायां सत्यामित्यर्थः। ननु वैकुण्ठादिबहुवैभवेऽपि सति कथमेक एवासीत् तत्राह वैकुण्ठादि नानामत्यापि स एवैक उपलक्षित इति। सेनासमेतत्वेऽपि राजासौ प्रयातीतिवत् ॥ २३ ॥ ❀ ❀ दृश्यं विश्वं नापश्यत्। तद्दर्शनाभावादेव तल्लीनमासीदित्यर्थः। तथात्मानं आत्मांशं पुरुषमपि असन्तमिव मेने भेदेन नापश्यदित्यर्थः। शक्तिर्माया। दृक् चिच्छक्तिः स्वरूपभूतान्तरङ्गशक्तिरित्यर्थः। एकराट् सर्व्वाधिकारी ॥ २४ ॥ ❀ ❀ पश्चादहं यदेतच्चेत्यस्यार्थं कथयन् सृष्ट्युपयुक्तं बहिरङ्गशक्त्यन्तरमाहंसीत। शक्तित्वेन निमित्तरूपत्वं सदसदात्मकत्वेनोपादानरूपत्वञ्चांशतो व्यञ्जितम् ॥ २५ ॥

**श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी**

न केवलं यमत्वेन त्वमधिकृत भक्त एव किन्तु भगवन्नित्यपार्षदोऽपि प्रकाशान्तरे भवसीत्याह भवानिति। मा मां व्रजन् वैकुंण्ठं गच्छन् ॥ २१ ॥ ❀ ❀ तत्र प्रथमं यथा ससर्जाग्र इदं निरीह इति तत् प्रश्नस्योत्तरत्वेन पुरुषावतारलीलां वक्ष्मीत्याह योगमायास्वरूपशक्तिवृत्तिविशेषः। तथा उपबृंहिताः स्वांशमायाद्वारा विस्तारिताः विश्वस्थित्यादय अर्था विषया यासां ताः मायाशक्तेर्योगमायांशभूतत्वस्य नारदपञ्चरात्रे दृष्टत्वात् ॥ २२ ॥ ❀ ❀ सृष्टिलीलां वर्णयितुं ततः पूर्व्वावस्थामाह इदं विश्वमग्रे सृष्टेः पूर्व्वं भगवान् षडैश्वर्य्यपूर्ण एक एवास आसीत् भगवति लीनत्वेन भगवतोऽधिष्ठानकारणत्वादित्येके। भगवच्छक्तिकार्य्यत्वादित्यन्ये यद्वा इदमग्रे इत्येकपद्येन अस्याः सृष्टेः पूर्व्वमित्यर्थः। तथा स एव योगमार्गेणोपास्य आत्मनां जीवानामात्मा अन्तर्यामी तथास एव ज्ञानमार्गेणोपास्यः सर्व्वव्यापको ब्रह्मेत्यर्थः। एवमुपासकानां भक्तियोगिज्ञानिनां मतभेदान्नानामतिभिरुपलक्षणं यस्य सः तथैव श्रुतयोऽपि यथा वासुदेवो वा इदमग्र आसीन्न ब्रह्मा न च शंकर इति एको नारायण एवासीन्न ब्रह्मा नेशान इति। आत्मैवेदमग्र आसीदिति सदेवासीदित्याद्याः ननु सृष्टेः पूर्व्वमपि कं समयमारभ्य स एक आसेत्यपेक्षायामाह आत्मनां जीवानां तथा इच्छायाः सिसृक्षायाश्च अनुगतालये सति प्राचीनप्राकृतिकप्रलयमारभ्येत्यर्थः ॥ २३ ॥ ❀ ❀ स वै निश्चितं द्रष्टा प्रकृतीक्षणकर्त्ता पुरुषः तदासृष्ट्यारम्भ—काले दृश्यं सृष्ट्यर्थं द्रष्टव्यं प्रधानं नापश्यत्। ततश्चात्मानं स्वं विराजन्तमपि असन्तमिव मेने गृहिणीं विना गृहस्थ इवेति काव्यरीत्योक्तिः यद्वा उत्पत्स्यमानं आत्मानं समष्टिविराजं स्वस्मिन् सूक्ष्मरूपेण सन्तमप्यसन्तमेव मेने प्रकृतीक्षणं विना तस्य प्राकट्यासम्भवादिति भावः। ननु द्रष्टव्यैव भोग्या सा कांता माया तस्य तदा कीदृश्यासीत्तत्राह सुप्ता स्वापवती शक्तिर्माया यस्य सः। न हि स्वापवती कांता संभुज्यत इति भावः। किञ्च तस्यानन्दार्थमन्याः सुभगा बह्व्य एव कान्ता जाग्रत्य एव वर्त्तंत इत्याह असुप्ता दृशश्चिच्छक्तिवृत्तयो लक्ष्म्याद्या यस्य सः तदपि विश्वसृष्ट्याद्यर्थं बहिरङ्गा दुर्भगापि माया शक्तिस्तदानीमपेक्षितव्यैवेति भावः ॥ २४ ॥ ❀ ❀ ततश्च तदिच्छया सा मायाशक्तिस्तदा जजगारेत्याह सा प्रसिद्धा वै निश्चितं सदसदात्मिका कार्य्यकारणरूपा इदं विश्वं विभुः परमेश्वरः ॥ २५ ॥

**श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः**

यस्य तव मायाम् ॥ २१ ॥ ❀ ❀ विश्वस्थित्यादयः अर्थो विषयो यासां ताः ॥ २२ ॥ ❀ ❀ तत्र विश्वसृष्टिलीलां वर्णयितुं विश्वस्य कार्यस्य कारणाभिन्नत्त्वमाह भगवानिति। इदं विश्वमग्रे सृष्टेः पूर्वम् आत्मन एकत्त्वेच्छानुगतौ आत्मा

सर्वात्मा एकः सजातीयविजातीयभेदशून्यः भगवान् स्वगतैश्वर्यवान् आस आसीत् सदेव सौम्येदमग्र आसीदिति श्रुतेः स्वगतभेदं प्रपंचयितुं एकं विशिनष्टि आत्मनामित्युपलक्षणं प्रकृतिकालयोः प्रकृतिपुरुषकालानां शक्तिभूतानाम् आत्मा आश्रयः प्रकृतिपुरुषकालशक्तिमानित्यर्थः। कथंभूतः सृष्टौ यो नानामतिभिरुपलक्ष्यते नानाकार्यविषयबुद्धिभिर्बुध्यते सः॥ २३॥ ❀ ❀ प्रकृत्त्याख्यशक्तिपरिणामतः सृष्टिं वक्तुं तदुद्भवप्रकारमाह स इति द्वाभ्याम्। एष वर्णनीयगुणः श्रीकृष्णः तदा सृष्टेः पूर्वं द्रष्टा सर्वज्ञो यतः असुप्तदृक् दृश्यं कार्यं नापश्यत् यतः स एकराट् तदानीमेक एव प्रकाशते यतः सुप्ताः प्रकृत्याद्याः शक्तयो यस्य अत एव आत्मानमसंतमिव अद्रष्टारमिव मेने दृश्यालाभे द्रष्टृत्वस्यानुपपन्नत्त्वात्॥ २४॥ ❀ ❀ विभुर्यया इदं विश्वं निर्ममे सा एतस्य संद्रष्टुः शक्तिस्तदिच्छया क्षुभिताभूदिति शेषः। यतः सा सदसदात्मिका कार्यकारणरूपा तदानीं कार्योन्मुखी जातेति- फलितोर्थः॥ २५॥

## श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

भवानिति। नित्यं भवान् भगवत्संमतः। सेवकसहितस्यापि, वैष्णवानामपि सुसंमतस्तदाह—सानुगस्येति। सर्वदा संमतिस्तदानीं स्मरणादवसीयते। सेवका अपि भीष्मादयः 'विदुरेण महात्मना' इति वाक्यात् भवन्तं मन्यन्ते। तत्र हेतुमाह—यज्ज्ञानदेशायेति। यस्य तव ज्ञानोपदेशार्थं भगवान् मामादिशत्। चकारात्स्वयमपि स्मरणेनोपदिष्टवान्। भगवानिति। स्मरणे हेतुभावः। व्रजन्निति तस्याऽऽवश्यकत्वम्। देवरात्सुतोत्पत्तिर्विहितेति व्यासस्य भ्रातृपत्नीगमने[१] न दोषः। तस्य रागसंबन्धाभावः प्रयोजक इत्यग्निहोत्रादिवत् कलौ निषिद्धः॥ २१॥ ❀ ❀ एवं तस्याऽभिनन्दनमुक्त्वा तत्पृष्टां भगवल्लीलामाह—अथेति। लोकप्रसिद्धेर्भिन्नः प्रकार इत्यथशब्दः। केवलभगवन्निर्मितचरित्रं वेद एव तथापि तुभ्यं तद्वक्तव्यं न भवतीति, योगमायोपबृंहिता भगवल्लीला वदिष्यामीत्याह—ते भगवल्लीला इति। योगमाया साधनभूता [२]पूर्वोक्ता भगवन्माया, तया उपबृंहिताः स्पृष्टाः, केवलास्तव योग्या न भवन्तीति। तत्राप्यन्तिमप्रश्ने परिहार उच्यत इत्याह—विश्वस्य स्थित्युद्भवान्ता गवाऽर्थाः प्रयोजनानि यासां ताः। आनुपूर्व्येण, क्रमेण वर्णयिष्यामि। भगवल्लीलाया मनोऽनुरञ्जकत्वेन स्नेहजनकत्वम्। योगमायोपबृंहितत्वेनाऽऽश्चर्यरूपत्वादद्भुतत्वम्। बुद्ध्यन्तरविस्मरणायैतदुच्यते, विश्वोत्पत्त्यादिकं तु माहात्म्यज्ञानार्थम्। आनुपूर्वी तु बोधसौकर्याय। एवं सति भक्तिर्भवति। अनेन भगवत्कर्तृकता लीलयैवेति सर्वदोषाभावः। पुरुषोत्तमत्वाय च लीलोपायेन संबद्धेति न साऽपगच्छति। तस्या न कर्तृत्वे प्रवेशः, किन्तु सहभावमात्रम्, अन्यथा सर्ववशीकरणं न स्यात्। विश्वस्य स्वरूपं वक्तव्यम्। तदेकं भगवद्रूपम्। तासां लीलानां तदुत्पत्त्यादयो विषयाः सिद्धा एव। मया परं कीर्त्यन्ते, न तु कविवत् वर्ण्यन्त इत्यानुपूर्वी निरूपिता॥ २२॥ ❀ ❀ एवं प्रतिज्ञाय श्रोतारं सावधानं विधाय विश्वस्योत्पत्तिनिरूपणार्थं पूर्वावस्थामाह—भगवानेक आसेदमिति। इदं सर्वं जगत्पूर्वं भगवानेवाऽऽस। शुद्धा तु भगवल्लीला भगवानेवैवंप्र[३]कारेण भवतीति। योगमायोपबृंहिता तु इदं जगदेकं रूपं भगवतः प्रवाहानादिप्रकारेण आविर्भावतिरोभावयुक्तमनाद्यनन्तं वर्तते। तिरोभावे तद्भगवानेव भवति, यथा लवणं जलमेव भवति। तथापि न तयोः स्वरूपैक्यम्, तस्य मिष्टो रसः, अस्य च लवणः। परं विवेचयितुं न शक्यत इति भगवत्त्वम्। तदाह—इदं जगत्, अग्रे सृष्टेः पूर्वम् भगवानेवाऽऽस। अनन्तमूर्तौ च भगवति न तस्य तिरोभावः किन्त्वेकस्मिन्नेव। आसेति तत्र न भगवत्कर्तव्यता काचित्। विलीनं लवणं जले स्वत एव भवति ततः पृथक्करणं तु महत् कठिनं भगवदेकसाध्यम्। अत इदं भगवच्चरित्रमु[४]च्यते। [५]स्वयं तथाभवने भिन्नतयोत्पादने वा योगिवन्मणिवन्न कोऽपि प्रयासः। ननु जीवानां तदानीन्तनानां चिद्रूपत्वात् कथमेकस्मिन् लयः? तत्राऽऽह—आत्माऽऽत्मनामिति। स हि भगवान् सर्वेषां जीवानामात्मा, समष्टिवन्मूलभूतश्चिद्रूप एव। तत्रैवाऽस्य सत्प्रधानस्य लयः, अन्यथा[६] काठिन्यमेव न स्यात्। सति लये सदेव स्यात्। अमुक्तजीवानां प्रलयाज्जीवाश्रितं जगत्तत्रैव लीनम्। तस्योद्गमनसामर्थ्यायाऽऽह—विभुरिति। स हि सर्वसमर्थः प्रथमतो जीवान् स्वस्मिन् संपाद्य तत्रैव जगल्लयं कारितवान्। अनेन तस्याऽस्पर्शो निरूपितः। एवमैक्येऽप्यस्पर्शे विभुत्वहेतुः। ननु जीवानामिच्छादिधर्माणां विद्यमानत्वात् कथमेकभावेन स्थितिस्तत्राऽऽह—आत्मेच्छानुगतौ सत्याम्। आत्मनां या इच्छा[७] सर्व एव धर्मास्तेषामपि तत्रैवाऽनुगतिः[८]। भगवतो वा इच्छाया यदा तत्र जगत्यनुगतिः, तदा तल्लीनमिति पूर्वप्रलये हेतुर्निरूपितः। तदाऽयं भगवानात्मेत्येव व्यपदिश्यते। आत्मत्वेन वा तस्मिन्निच्छा। तेन[९] वा तदात्ममूतं जातम्। तदा भगवान् सृष्ट्यन्तरवदेकरसो न जातः, किन्तु नानामतिभिरेव उपलक्षितः। अथवा। सर्वैरेव मतिभिरेक एवोपलक्षितः। यथाऽन्योन्यविजातीयानि सहस्रं लवणान्येकस्मिन् जले परिच्छिन्ने प्रक्षिप्तानि, एकरसत्वमप्यापन्नानि नानामतिभिरुपलक्षितमेकं भवति। यथा केनचित्पृष्टः सैन्धवादि क्वेति सर्वार्थे जलमेव निर्दिशति।

---

१. गमनम् ख. ग. घ. च। २. 'यन्मर्त्यलीला'''; इत्यत्र, पूर्वं द्वितीयस्कन्धे चानन्दशक्तित्वेनोक्ता प्रकाशः। ३. अहिकुण्डलवत् स्वतएव सर्वरूपोऽस्तीत्यर्थः। प्रकाशः। ४. 'अतिपौरुषाणि' इति प्रश्नोत्तरत्वेनोच्यते. प्र.। ५. तथाच तत्र प्रयासाभावान्न तदुत्तरत्वमित्यर्थः प्र.। ६. चितिलयाभावे पृथक्करणे प्रयासः. प्र.। ७. इच्छास्त एव क.। ८. पृष्ठतस्तत्र गमनम्. प्र.। ९. आत्मत्वे आत्मेच्छानुगतेर्हेतुत्वकथनेन. प्र.।

आत्मेच्छायाः सर्वत्रानुगमादात्मत्वं वा। तेनैकदेशे एव भगवति विश्वस्य लय उक्तो भवति। 'एकांशेन स्थितो जगत्' इति भगवद्वाक्यं तत्परमेव। आविर्भावेऽपि [1]तथा ॥ २३ ॥ ❀ ❀ एवं पूर्वस्थितिमुक्त्वा प्रथमतो जीवानामुद्गममाह—स वा एष इति। स एव भगवान्, स्वस्मिन् विद्यमानसर्वः। वै निश्चयेन। एष देवदत्तादिरूपेण प्रतीयमानो जीवो जातः। तदा जीवो भूत्वा तिरोभा[2]वप्रकारेणाऽऽविर्भूतः पूर्वसंस्कारेण तदा द्रष्टा जातः। अहं द्रष्टेति पूर्वावस्थां स्मृतवान्। तदा द्रष्टत्वनिर्वाहार्थं दृश्यालोचने क्रियमाणे दृश्यं नाऽपश्यत्। यतः स एक एव सर्वजीवानामात्मभूतो निर्गत इत्येक एव राजते यद्यप्यात्मानमपि द्रष्टुं शक्नोति, तथापि पूर्ववासनया बहिर्मुख एव निर्गत इति स्वातिरिक्तमेव दृश्यमालोचयन्, तदभावे आत्मानमेवाऽसन्तं मेने। इदं त्वर्द्धा-सत्त्वम्। आत्मांशो वर्त्तते, वेद्यांशो नास्तीत्यौपा[3]धिकधर्माणामुपाध्यभावे धर्माभावः। अतो द्रष्टा आत्मानमद्रष्टारमेव मेने। ननु पूर्वं दृश्यस्य विद्यमानत्वात्, साद्दृश्यस्य तस्य लयात्, स्वाविर्भावे दृश्यमपि कुतो नाऽविर्भूतमिति चेत्तत्राऽऽह—सुप्तशक्तिरिति। सुप्ताः शक्तयो यस्य। ये प्रपञ्चोद्बोधकास्ते नाऽद्याप्युपस्थिता इति। एवं तर्हि ज्ञानशक्तिरप्यनुद्गता स्यात्, तत्ततः कुतो मेने आत्मा-नमसन्तमिति तत्राऽऽह—अलुप्तदृगिति। अलुप्ता दृक् यस्य। अस्य ज्ञानशक्तिः पूर्वमपि न लुप्ता, लोपं न प्राप्ता, आत्मवदेव स्थिता, आत्माऽऽविर्भाव एव आविर्भूतेत्यर्थः। स यदा आत्मानं असन्तमिव मेने ॥ २४ ॥ ❀ ❀ एतान्येवात्मासत्त्वज्ञा-नानि एकीभूतानि मायारूपेण जातानीत्याह—सा वा एतस्येति। यदा[4]त्मानमन्यथा ज्ञातवान् एषैव माया। सा पूर्वोक्ता[5] प्रसिद्धा मोहिका सदसदात्मिका। सदसद्रूप आत्मा यस्याः। स्वभावतः सन्, अन्यथाङ्गीकारादसन्, एतादृश एवाऽऽत्मा तस्याः। अय-मेवात्मा, सा धर्मरूपा। तस्या वा स्वरूपमात्मैव समर्पयति। त्रितया[6]त्मकं वा स्वरूपम्। तस्या धर्मत्वमाह—एतस्य संद्रष्टुः शक्तिरिति। एतस्य जीवस्य सम्यग्द्रष्टुः। अर्थादालोचनेनात्मानमेव पश्यतीति। शक्तिरुत्तरकार्ये सामर्थ्यम्। तस्या नाम मायेति। मया सह वर्तत इति प्रत्ययस्याऽलुक्, सुबन्तप्रतिरूपको वाऽयं निपातः; ततोऽण्प्रत्ययः, सवर्णदीर्घः, न ङीप्। महाभागेति संबोधनम्। अयमर्थो दुर्ज्ञेय इति, तज्ज्ञाने महद्भाग्यमिति सूचितम्। [7]ययेदं निर्ममे विभुरिति। यथा मायया चिच्छक्तिरूपया अनुद्धृतसारया इदं जगदेव निर्ममे। यस्य भाव[8]रूपा शक्तिस्तस्य कर्तृत्वं व्यावर्त्तयति विभुरिति। भगवत्कर्तृक एव जगति जीवा-र्थत्वात्, तन्माययैव भगवान् [9]जगत्कृतवान्। येन केनाऽपि जगत्करणात्, विभुरिति ॥ २५ ॥

## श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

अथ त इत्यत्र। अन्तिमप्रश्न इत्यादि 'स विश्वजन्म' इत्यनेनोक्ते ईश्वरकृतिप्रश्ने या कालादिशक्तिभिर्विश्वजन्मादि-संभवेऽपि स्वयं तानि किमर्थं चकारेत्याशङ्का तत्परिहारस्तेषामेव प्रयोजनत्वकथनात् लीलात्वेनोच्यत इत्यर्थः। सर्वदोषाभाव इति। 'करोति कर्माणि' इत्यत्र भगवदवतारकर्माणि किमर्थमित्यादिना वैयर्थ्यादिदोषा उद्भावितास्तेषामभावः। पुरुषोत्तमत्वाय च लीलेति। यदि लीलां च कुर्यात् तदा सर्वस्यैकरूपत्वेन तरतमभावाभावात् पुरुषोत्तमत्वं न सिध्येत् इति तदर्थं सेत्यर्थः। योगमायोपबृंहितत्वकथनप्रयोजनमाहुः—उपायेनेत्यादि। सर्वमुक्त्यनन्तरमाश्रयलीलामात्रस्थितौ पुरुषोत्तमत्वमप्यागन्तुकं स्यादिति तन्निवृत्त्यर्थं सा माया योगार्थमेवोपायरूपेति तया भगवति सम्बद्धा लीला कदापि भगवतो नापैतीति पुरुषोत्तमत्वं नित्यमित्यर्थः। सर्ववशीकरणमिति। मुक्तानां मुमुक्षूणां भक्तानां च वशीकरणम्। आनुपूर्वीकथनस्य प्रयोजनान्तरमाहुः—तासामित्यादि ॥ २२ ॥ ❀ ❀ भगवानित्यत्र। एवं प्रकारेण भवतीति। अहिकुण्डलवत् स्वत एव सर्वरूपोऽस्तीत्यर्थः। इति भगवत्त्वमिति। एतेन स यथा सैन्धवखिल्य उदके प्रास्त इत्यादि यो लयप्रकारः प्रवेशे सत्यभेदप्रतीतिविषयत्वं यच्छ्रावितम्, यच्चतमः परे देव एकीभवतीति श्रुतिच्छायामालम्ब्य रामानुजाचार्यैर्विशिष्टाद्वैतमात्रमुच्यते, तदेतल्लीलामूलकमिति ज्ञापितम्। उच्यत इति। अतिपौरुषाणीति प्रश्नोत्तरत्वेनोच्यते। शुद्धलीलायाः भिन्नतया कर्तृत्वस्य कुतो नोत्तरत्वमित्याकांक्षायां तयोः प्रकारमाहुः—स्वयमित्यादि। तथा च तत्र प्रयासाभावान्न तदुत्तरत्वमित्यर्थः। अन्यथा काठिन्यमिति। चिति लयाभावे पृथक्करणे प्रयासः। चित्येव लये गमकमाहुः—स्वयमित्यादि। अमुक्तेत्यादि। तथा च जीवनाश्रितस्य सति लयाङ्गीकारेऽपि जीवाश्रितस्य तस्य जीवात् पृथग्भावे तेषां मुक्ति-प्रसङ्गात्तदाश्रितं तच्चित्येव लीयत इति मन्तव्यम्। तथा च मुक्तजीवसम्बन्धिनः सति शेषस्य चितीति निष्कर्ष इत्यर्थः। अनुगतिरिति। पृष्ठतस्तत्र गमनम्। पूर्वार्धे आत्मपदस्य सत्त्वेऽप्युत्तरार्धे यदुक्तं तत्प्रयोजनमाहुः—तदेत्यादि। नानामतिसद्भावे सम्यक् लय उपपद्यत इत्यरुच्या सूक्ष्मेक्षिकया प्रकारान्तरं तथात्व एवाहुः—अथवेत्यादि। तेनेति। आत्मत्वे आत्मेच्छानुगतेर्हेतुत्व-कथनेन। तथेति एकांशेन विष्टम्भः[1] ॥ २३ ॥ ❀ ❀ स वा इत्यत्र। तिरोभावप्रकारेणेति। पराभिध्यानसूत्रोक्तप्रकारेण। कुतो नास्तीत्यपेक्षायामाहुः—औपाधिकेत्यादि। औपाधिका धर्मा येषां तादृशां पदार्थानाम्, तदभावे तदभावान्नास्तीत्यर्थः ॥ २४ ॥

---

१. एकांशेन विष्टम्भः। प्रकाश.। २. पराभिध्यानसूत्रोक्तप्रकारेण. प्र.। ३. औपाधिका धर्मा येषां तादृशां पदार्थानां तदभावे तदभावान्नास्तीत्यर्थः. प्र.। ४. यत् आत्मानम् इति पदच्छेदः प्र.। ५. द्वितीयस्कन्धे चिच्छक्तित्वेनोक्ता. प्र.। ६. आत्मासत्त्वज्ञानानां पिण्डी-भावरूपा. प्र. ७. अभिप्रायरूपा, धर्मरूपा वा. प्र. ८. पूर्वस्माद्भिन्नं व्यावहारिकं जगत्कृतवानित्यर्थः. प्र. ९. विष्टभः।

❀ ❀ सा वेत्यत्र। जगतः पूर्वावस्थायां भगवदतिरिक्तस्याभावात् सेत्यन्येन जाग्रती का वा शक्तिः परामर्शनीयेत्यपेक्षायां तस्यास्तत्र सिद्धं स्वरूपं वदन्तः श्लोकमवतारयन्ति—एतानीत्यादि। यदात्मानमित्यत्र यत् आत्मानमिति पदच्छेदः। पूर्वोक्तेति। द्वितीयस्कन्धे चिच्छक्तित्वेनोक्ता। तदाहुः—अयमित्यादि। सतः सकाशादसदात्मिकेत्यभिप्रेत्याहुः—तस्या वेत्यादि। तथा च तमोरूपेत्यर्थः। पक्षान्तरमाहुः—त्रितयेत्यादि। आत्माऽसत्त्वज्ञानानां पिण्डीभावरूपा मायापदेऽण्प्रत्ययोत्तरमादिवृद्धिर्बोध्या। भावरूपेति। अभिप्रायरूपा, धर्मरूपा वा। जगत् कृतवानिति। पूर्वस्माद्भिन्नं व्यावहारिकं जगत्कृतवानित्यर्थः॥ २५॥

## श्रीगिरिधरकृता बालप्रबोधिनी।

न केवलं व्यासपुत्रत्वेन यमत्वेन वा तव महत्त्वं किन्तु भगवत्कृपापात्रत्वेनापीत्याह—भगवानिति। सानुगस्य अनुगैः स्वभक्तैः सहितस्य भगवतः श्रीकृष्णस्य भवान्नित्यं सर्वदा सम्मतः प्रीतिविषयः। कुत इत्यपेक्षायामाह—यस्येति। वैकुण्ठं व्रजन् भगवान् यस्य तव ज्ञानोपदेशाय मा मां आदिशत्। निरतिशयप्रीतिं विनैतन्न स्यादिति भावः॥ २१॥ ❀ ❀ एवं तत्प्रश्नाभिनन्दनं कृत्वा तत्पृष्टां भगवल्लीलां निरूपयितुं प्रतिजानीते। अथेति अर्थान्तरे। योगमाया अचिन्त्या शक्तिस्तया उपबृंहिताः सम्वर्द्धिताः, विश्वस्य स्थितिः पालनम्, उद्भव उत्पत्तिः, अन्तः संहारः, अर्थः स्वरूपम्, स्थित्यादयः स्वरूपं यासां ता भगवल्लीलास्ते तुभ्यं अनुपूर्वशः सृष्ट्यादिलीलाक्रमेण वर्णयामीत्यन्वयः॥ २२॥ ❀ ❀ एवं प्रतिज्ञया श्रोतारं सावधानं विधाय विश्वस्योत्पत्तिनिरूपणार्थं तत्पूर्वावस्थामाह—भगवानेक इति। इदं परिदृश्यमानं नामरूपात्मकं जगत् अग्रे सृष्टेः पूर्वमेकः, अतएव नानामतिभिर्द्रष्टृदृश्यादिमतिभिः न उपलभ्यते इत्यनानामत्युपलक्षणः भगवानेव आस आसीत्। ननु जीवानामप्यविनाशित्वात् कथं स एक एवासीदित्याशङ्क्य तेषामपि तत्रैव लीनत्वादित्याशयेनाह—आत्माऽऽत्मनामिति। आत्मनां जीवानामात्मा स्वरूपमेवेत्यर्थः। एतदपि कथमित्यपेक्षायां जीवानां तदंशित्वादित्याशयेनाह—विभुरिति। नन्वेवमेकत्वे को हेतुरित्यपेक्षायां तदिच्छैवेत्याह—आत्मेच्छेति। आत्मनः स्वस्यैकाकित्वेनावस्थानेच्छायामनुवृत्तायामित्यर्थः। ननु "आत्मा वा इदमग्र आसीत्" इत्यात्मनस्तदैकत्वेन स्थितिश्रवणात्तत्कथं भगवत इत्याशङ्क्य तस्यैव नामान्तरं तदित्याशयेनाह—आत्मेति॥ २३॥ ❀ ❀ तत्र प्रथमं मायोद्भवप्रकारमाह—स वा इति। वा इत्यवधारणे। स एष भगवान् तदा द्रष्टा सन्नपि दृश्यं वस्तु नैवापश्यत्। तत्र हेतुमाह—एकराडिति। यतस्तदैक एव राजते, वस्त्वन्तराभावादित्यर्थः। अतो दृश्याभावे द्रष्टृत्वाभावात् सन्तमप्यात्मानमसन्तमिव मेने। दृश्याभावे हेतुं सूचयन्विशिनष्टि—सुप्तशक्तिरिति। सुप्ता विलीना मायादयः शक्तयो यस्य सः। अतः शक्तिरूपकारणलयात्तत्कार्यं दृश्यमपि विलीनमिति भावः। तर्ह्यसदनुसन्धानमपि मा भूदित्याशङ्क्याह—असुप्तदृगिति। न सुप्ता न लीना दृक् चिच्छक्तिर्यस्य सः॥ २४॥ ❀ ❀ सा वै सैव द्रष्टृदृश्याऽनुसन्धानरूपा सदसदात्मिका कार्यकारणरूपा एतस्य सन्द्रष्टुर्माया नाम शक्तिः यया शक्त्या विभुर्भगवानिदं विश्वं निर्ममे इत्यन्वयः। एतत्तरणं भाग्यं विनाऽशक्यमिति सूचयन् सम्बोधयति—महाभागेति॥ २५॥

## हिन्दी अनुवाद

आप सर्वदा ही श्रीभगवान् और उनके भक्तोंको अत्यन्त प्रिय हैं; इसीलिये भगवान् निजधाम पधारते समय मुझे आपको ज्ञानोपदेश करनेकी आज्ञा दे गये हैं॥ २१॥ ❀ ❀ इसलिये अब मैं जगत्की उत्पत्ति, स्थिति और लयके लिये योगमायाके द्वारा विस्तारित हुई भगवान्की विभिन्न लीलाओंका क्रमशः वर्णन करता हूँ॥ २२॥ ❀ ❀ सृष्टिरचनाके पूर्व समस्त आत्माओंके आत्मा एक पूर्ण परमात्मा ही थे—न द्रष्टा था न दृश्य! सृष्टिकालमें अनेक वृत्तियोंके भेदसे जो अनेकता दिखायी पड़ती है, वह भी वही थे; क्योंकि उनकी इच्छा अकेले रहनेकी थी॥ २३॥ ❀ ❀ वे ही द्रष्टा होकर देखने लगे, परन्तु उन्हें दृश्य दिखायी नहीं पड़ा; क्योंकि उस समय वे ही अद्वितीय रूपसे प्रकाशित हो रहे थे। ऐसी अवस्थामें वे अपनेको असत्के समान समझने लगे। वस्तुतः वे असत् नहीं थे, क्योंकि उनकी शक्तियाँ ही सोयी थीं। उनके ज्ञानका लोप नहीं हुआ था॥ २४॥ ❀ ❀ यह द्रष्टा और दृश्यका अनुसन्धान करनेवाली शक्ति ही—कार्यकारणरूपा माया है। महाभाग विदुरजी! इस भावाभावरूप अनिर्वचनीय मायाके द्वारा ही भगवान्ने इस विश्वका निर्माण किया है॥ २५॥

**कालवृत्त्या तु मायायां गुणमय्यामधोक्षजः। पुरुषेणात्मभूतेन वीर्यमाधत्त वीर्यवान्॥ २६॥**
**ततोऽभवन् महत्तत्त्वमव्यक्तात्कालचोदितात्। विज्ञानात्माऽऽत्मदेहस्थं विश्वं व्यञ्जंस्तमोनुदः॥ २७॥**
**सोऽप्यंशगुणकालात्मा भगवद्दृष्टिगोचरः। आत्मानं व्यकरोदात्मा विश्वस्यास्य सिसृक्षया॥ २८॥**

महत्तत्त्वाद्विकुर्वाणादहंतत्त्वं व्यजायत । कार्यकारणकर्त्रात्मा भूतेन्द्रियमनोमयः[1] ॥ २९ ॥
वैकारिकस्तैजसश्च तामसश्चेत्यहं त्रिधा ।
अहंतत्त्वाद्विकुर्वाणान्मनो वैकारिकादभूत् । वैकारिकाश्च ये देवा अर्थाभिव्यञ्जनं यतः ॥ ३० ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका ।

कालवृत्त्या कालशक्त्या गुणमय्यां क्षुभितगुणायाम् अधोक्षजः परमात्मा आत्मांशभूतेन पुरुषेण प्रकृत्यधिष्ठातृरूपेण वीर्यं चिदाभासमाधत्त । वीर्यवान् चिच्छक्तियुक्तः ॥ २६ ॥ ❀ ❀ कालप्रेरितादव्यक्तान्मायातः तत्त्वपदं परित्यज्य महतो लक्षणमतः पुंल्लिंगनिर्देशो विज्ञानात्मेति । सत्त्वप्रधानत्वात् स्वदेहस्थं विश्वमुच्छूनबीजगतमंकुरादिरूपं वृक्षमिव व्यंजन् व्यंजयन् प्रकाशयन् यतोऽसौ तमोनुदतीति तमोनुदः । तदुक्तं सात्त्वततंत्रे "विष्णोस्तु त्रीणि रूपाणि पुरुषाख्यान्यथो विदुः । प्रथमं महतः स्रष्टृ द्वितीयं त्वण्डसंस्थितम् ॥ तृतीयं सर्वभूतस्थं तानि ज्ञात्वा विमुच्यते" इति ॥ २७ ॥ ❀ ❀ अहंकारोत्पत्तिमाह सार्धाभ्याम् । सोऽपीति । अंशश्चिदाभासो निमित्तं गुणा उपादानं कालः क्षोभकस्तदात्मा तदधीनः भगवान् सर्वाध्यक्षस्तद्दृष्टिगोचरः सन् स्वयमात्मानं व्यकरोद्रूपांतरमनयत् ॥ २८ ॥ ❀ ❀ अहंकारस्य लक्षणमाह । कार्यमधिभूतं कारणमध्यात्मं कर्तृ अधिदैवं तेषामात्मा आश्रयः । अत्र हेतुः । भूतेंद्रियमनोमयस्तद्विकारवान् मन इति देवानामप्युपलक्षणम् ॥ २९ ॥ ❀ ❀ एतदेव विभागतः प्रपंचयति । वैकारिकः सात्त्विकस्तैजसो राजसः देवाश्च वैकारिका सात्त्विकाहंकारकार्यभूता इत्यर्थः । यतो येभ्य इंद्रियाधिष्ठातृभ्यो देवेभ्यो हेतुभूतेभ्योऽर्थाभिव्यंजनं शब्दादिप्रकाशो भवति ॥ ३० ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः ।

क्षुभितो विकारत्वेनोत्थितो गुणो रजो यस्यां तस्यां परमात्मा इन्द्रियजज्ञानातीतः चिदाभासं चित्प्रतिबिंबं समाधत्त स्थापितवान् ॥ २६ ॥ ❀ ❀ कालप्रेरितात् तदुत्पत्त्युचितकालप्रापितविकृतेः विज्ञानात्मा चित्तस्वरूपेण सर्वदेहेषु योऽस्तीत्यर्थः । उच्छूनं धरणिसलिलसंयोगात्किंचित्स्थूलतां प्राप्तं यद्बीजं तत्र गतं तमोनुदः प्रलयकालीनाज्ञानध्वंसकर्त्ता रजोंशरूपेण क्रियाशक्तिमान्महत्तत्त्वभेदः सूत्रतत्त्वमप्यभूदिति च ज्ञेयमत्र यन्महत्स्रष्टुः पुरुषस्य महदभेदेनोपासनस्य फलं तत्सात्त्वततंत्रे पंचरात्रे उक्तं 'विष्णोः' इत्यादिना । यद्वा । विज्ञानात्मा सृष्ट्यनुकूलविज्ञानरूपः श्रुतावीक्षणशब्दनिर्दिष्टः कुलालस्य कार्यानुकूलपूर्वज्ञानभासमानभविष्यद्घटादिवत्स्वस्थं विश्वं व्यंजन्नित्यर्थः । अण्डसंस्थितं विराडंतर्यामिरूपं सर्वभूतस्थं सर्वांतर्यामिरूपम् । तानि त्रीणि रूपाणि ब्रह्माभिन्नानि ज्ञात्वा ॥ २७ ॥ ❀ ❀ सोपि महानपि स्वयमित्यात्मेत्यस्यार्थः । यद्वा । विश्वस्य जनिष्यमाणस्यात्माऽऽश्रय इति महद्विशेषणमिदम् । "आश्रयाधीनयोरात्मा" इति स्वामिचरणाः ॥ २८ ॥ अत्र कार्याद्याश्रयत्वे तद्विकारवान् भूतेन्द्रियमनांसि यत उद्भूता इत्यर्थः ॥ २९ ॥ ❀ ❀ एतदेव गुणभेदेन भूतेन्द्रियादिविकारवत्त्वमेव ॥ ३० ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

चिदाभासं जीवाख्यमाधत्त स्थापितवान् हन्तेमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणीति श्रुतेः ॥ २६ ॥ ❀ ❀ ततः जीवाविशिष्टात् अतस्तत्त्वंपदपरित्यागेन महतो विवक्षितत्वात् सत्वप्रधानत्वात् चित्तं तन्महदात्मकमित्युक्तेस्सत्त्वांशस्य प्राधान्याद्विज्ञानात्मा विशिष्टानुसंधानमयः तमोनुदः प्रलयगताज्ञानध्वंसकर्त्ता तत् पुरुषरूपेण महत्स्रष्टृत्वम् ॥ २७ ॥ ❀ ❀ तस्य त्रिगुणात्मकत्वात् तमोंशप्राधान्ये सति अहंकारोत्पत्तिमाह चिदाभासो जीवशक्तिः तदात्मा तेंशादय आत्मनः प्रवर्त्तका यस्य तथा च तदधीन इति व्याख्यातम् । आत्मा विज्ञानात्मा विश्वस्य जनिष्यमाणस्य सिसृक्षयेति भगवदिच्छाभासस्तत्रारोप्यते नदी कूलं पिपतिषतीतिवत् ॥ २८ ॥ ❀ ❀ महत्तत्वादीत्यर्द्धकम् विकुर्वाणादंशेन परिणतात् ॥ २९ ॥ ❀ ❀ अधिभूतमधिष्ठानविषयरूपं अध्यात्ममिन्द्रियवर्गः अधिदैवं तद्देवतावर्गः तेषामात्मा मूलरूपं सर्वस्य कार्यस्य कारणमेवाश्रय इति तथा व्याख्यातम् । तत्र आश्रयत्वे तद्विकारवान् भूतादिलक्षणकार्य्यवान् एतदेव भूतादिमयत्वमेव ॥ ३० ॥

### श्रीमद्वीरराघवव्याख्या

अथ महदादिक्रमेण सृष्टिं वक्तुं स्वशरीरभूतजीवानुप्रवेशेनाहितसृष्टिसामर्थ्याया एव प्रकृतेर्महदादिरूपेण परिणामः नतु केवलाया इत्याह कालवृत्त्यामिति । कालानुगुणवृत्तिमत्यामत एव गुणमय्यां साम्यानापन्नसत्वादिगुणप्रचुरायां मायायामात्मभूतेन स्वशरीरभूतेन पुरुषेण जीवेन वीर्यं सृष्टिसामर्थ्यं स्वयं वीर्यवानविकृत एवाऽऽधत्त संपादितवान् मायाभिमानी स्वात्मकजीवानुप्रवेशे न मायां सृष्ट्युन्मुखीमकरोदित्यर्थः ॥ २६ ॥ ❀ ❀ महतः सृष्टिमाह तत इति ।

---

१. प्रा० पा०—मनोभवः ।

तत आहितवीर्यात्कालचोदितात् कालप्रेरितादव्यक्तात्स्वात्मकादव्यक्तात्स्वयमेव विज्ञानात्मा विज्ञानं यज्ञं तनुते इत्युक्तरीत्या जीवांतरात्मा आत्मदेहस्थं स्वशरीरभूतप्रकृतिगतं विश्वं कार्यजातं व्यंजन्प्रकाशयन्प्रकाशयितुमित्यर्थः। पर्यवसानं बोध्यं तमोनुदः तमःशब्दवाच्यसूक्ष्मावस्थाप्रकृतिप्रेरको भगवान्महत्तत्वमभवदित्यर्थः। प्रकृतिपुरुषशरीरको भगवानेव महच्छरीरकोऽभूदित्यर्थः ॥ २७ ॥ ❀ ❀ महतोहंकारस्य सृष्टिमाह द्वाभ्यां सोपीति । स महानपि अंशगुणकालात्मा अंशो जीवः अंशो नानाव्यपदेशात् । ममैवांशो जीवलोके जीवभूतः सनातन इति प्रयोगात् गुणाः सत्त्वादयः कालश्च तैरुपलक्षितः आत्मा स्वरूपं यस्य सः कालवश्यो गुणमयो जीवगर्भश्चेत्यर्थः । भगवद्दृष्टिगोचरः भगवतो दृष्टिः संकल्परूपं ज्ञानं तस्य गोचरः विषयः आत्मा परमात्मात्मकः सोप्यात्मेति सामानाधिकरण्यं शरीरात्मभावनिबंधनं एवंभूतो महानस्य विश्वस्य सिसृक्षया अहंकारादीनि स्रष्टुमिच्छया आत्मानं स्वात्मानं व्यकरोद्विकृतमकरोत् ॥ २८ ॥ ❀ ❀ महत्तत्वादिति विकुर्वाणाद्विक्रियमाणान्महत्तत्त्वादहंतत्त्वमहंकारः अजायत उत्पन्नोभूत् कथंभूतः कार्यकारणकर्त्रात्मा कार्यं शरीरं कारणमिंद्रियं तयोः कर्त्रात्मा कर्तृरूपः कारणभूत इत्यर्थः। तद्विवृणोति भूतेंद्रियमनोभवः भूतेन्द्रियमनसा भवः। भवत्यस्मादिति भवः भूतेंद्रियमनोमय इति पाठे भूतेंद्रियादिरूपेण परिणामस्वभावप्रचुरः ॥ २९ ॥ ❀ ❀ अहकारं विभजते वैकारिक इति । वैकारिकः सात्विकाहंकार तैजसो राजसाहंकारः तामसस्तामसाहंकारः तस्यैव भूतादिरिति नामांतरं वैकारिकाहंकारकार्यमाह । अहंतत्त्वादिति । विकुर्वाणाद्विक्रियमाणाद्वैकारिकात्सात्त्विकादहंतत्वादहंकारान्मनोभूदुद्भूत् ये देवाः दिगादिदेवाधिष्ठे यानींद्रियाणीत्यर्थः । न तु दिगादिदेवास्तेषां चतुर्मुखस्वक्ष्यमाणतया अंडोत्पत्तेः पूर्वमुत्पत्त्यसंभवात् अतो देवशब्देन तदधिष्ठेयानीन्द्रियाण्येव विवक्षितानि ये देवास्तेपि वैकारिकाः सात्त्विकाहंकारकार्यभूता इत्यर्थः । कथंभूता देवाः यतो येभ्यः अर्थाभिव्यंजनं शब्दस्पर्शरूपरसादीनामर्थानामभिव्यंजनमुपलंभो भवति एवंभूता देवा वैकारिकादभवन्नित्यर्थः ॥ ३० ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली ।

ययेदं निर्ममे जगदित्युक्तं प्रपंचयति कालवृत्त्यामिति । जगृहे पौरुषं रूपमित्यारभ्योक्तात्ममूलरूपाविर्भूतपुरुषरूपेणाधोक्षजः कालेन पुरुषाणां दृष्टाख्यफलपाचकेन वृत्तिः सिसृक्षत्वादिलक्षणा यस्याश्चेतनायाः सा तथोक्ता अन्यत्र क्षोभलक्षणा वृत्तिः गुणमय्यां सत्त्वादिगुणाभिमानिन्याम् इतरत्र तद्रूपायां मायायां चेतनायां च वीर्यं रेत आख्यं परिणामकरसामर्थ्यं चाधत्त तुशब्देन उभयोर्महावैलक्षण्यं वक्ति वीर्यवानिति। हरेर्नपुंसकरूपं नास्तीति लक्षयति नैनं वाचा स्त्रियं ब्रुवन्नैनमस्त्री पुमान् ब्रुवन्निति श्रुतेः। यद्वा स्वेनाहितवीर्यस्य जनकत्वशक्तिं द्योतयति ॥ २६ ॥ ❀ ❀ नहि लोके वीर्यमादधानाः कार्यं जनयंतो दृश्यंते न चैवमयं तत्कुतः कार्योत्पत्तिदर्शनादित्याह तत इति । यत्र वीर्यमाहितं ततो मायाख्यवस्तुनो महत्तत्वं चतुर्मुखशरीरमभवत् मायाया नामान्तरमाह अव्यक्तादिति । अतिसूक्ष्मत्वात्तन्नाम्नः कालेन सकलप्राण्यदृष्टसाक्षिणा पुरुषेण सृष्ट्युद्बोधकेन च चोदितात् नामांतरप्रेरितात् अभिमानिनोऽभिमानानुत्पादे शरीरोत्पादो व्यर्थ इति तत्राह विज्ञानात्मेति। विज्ञानात्मा ब्रह्मा च ततो व्यक्ताभिमानित्वात्तन्नाम्ना रमाख्यात् कूटस्थादभूत् मदीयोयं देह इत्यभिज्ञानोत्पत्तिमानभूदित्यर्थः । उत्पत्तेः प्रागपि ज्ञाननाशो नास्तीति द्योतनाय विज्ञानात्मेतिपदं अभिमानोत्पत्तेः किं लक्षणमत्राह आप्तदेहस्थमिति । निरालोकं कथमिदं व्यज्यत इत्यत उक्तं तमो नुदन्निति । नारायणप्रसादप्रादुर्भूतज्ञानलक्षणप्रकाशेन सूर्य इव तत्कालभवं तमोनुदन्नभिभूय सूर्यवद्वर्तमान इत्यर्थः । शरीरनिमित्तग्लानिरहितावात्माभिमानरहितो वा ॥ २७ ॥ ❀ ❀ प्रपंचपंचीकरणप्रकारं प्रपंचयति सोपीति । स आत्मा महत्तत्त्वाभिमानी विरिंचोपि अंशो जीवो गुणः सत्त्वादयः कालः फलपाचकः एषामात्माभिमानी भगवतो हरेर्दृष्टेः कटाक्षवीक्षणस्य गोचरी विषयोऽस्य प्रपंचस्य सिसृक्षयात्मानं स्वकीयत्वेनाभिमन्यमानं महत्तत्त्वं व्यकरोत्परिणामोन्मुखं कृतवान् चैतन्यस्याविकारित्वेन अत्रात्मपदं न चैतन्यवाचि किंतु देहवाच्येव कालजीवगुणादीनामभिमानी चतुर्मुख इति वचनात् अंशगुणलीलात्मेत्यत्रात्मपदेनाभिमानित्वमुच्यते न देहः कचिन्न हिंरण्यगर्भस्यांशशब्दवाच्यत्वमंगीकर्त्तव्यं स वै जीवाभिमानित्वादंश इत्येव चोच्यत इति वचनात् ॥ २८ ॥ ❀ ❀ अहंतत्त्वमजायतेत्यत्र जडात् जडस्योत्पत्तिरभिमानिनो गरुडादय उद्भूवन्निति तात्पर्यं ग्राह्यभूतं भूताभिमानी चेतिवचनात् तत्स्वरूपमाह कार्येति । कार्यशरीरं कारणानींद्रियाणि कर्तृ मनः एषामात्मादिकारणं किमुक्तं तत्रापि भूतेति । भूतेन्द्रियमनसां भव उत्पत्तिर्यस्मात्स तथा ॥ २९ ॥ ❀ ❀ भूतादीनां त्रयाणां कारणस्याहंकारस्य नामभेदेन त्रित्वमाह वैकारिक इति । अधुना त्रित्वसंख्याविशिष्टाहंकारात् पृथक् पृथक् सृष्टिभेदमाह अहंतत्त्वादिति । अंशगुणकालानामीशस्य च प्रेरणया विकुर्वाणादहंतत्त्वाद्वैकारिकनाम्नो मनस्तत्त्वमभूदित्यन्वयः ॥ ३० ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः ।

सृष्टिमाह कालवृत्त्येति । भगवानेक आसेदमिति पूर्वोक्तात् अधोक्षजो भगवान् । पुरुषेण प्रकृतिद्रष्ट्रा आत्मभूतेन स्वांशेन द्वारभूतेन कालो वृतिर्यस्यां तया मायया निमित्तभूतया गुणमय्यां मायायां अव्यक्ते वीर्यं जीवाख्यमाधत्त । हन्तेमास्तिस्रो देवता इत्यादि श्रुतेः ॥ २६ ॥ ❀ ❀ तत इति विज्ञानात्मकोऽपि पदार्थः समभवत् । तदेव नाम्ना महत्तत्त्वमिति । तमोनुदः

प्रलयगताज्ञानध्वंसकर्त्ता ॥ २७ ॥ ❀ ❀ सोपीति । भगवान् एतदंशः पुरुष आत्मा विज्ञानात्मैव सिसृक्षयेत्यौपचारिकमेव । नदी कूलं पिपतिषतीतिवत् ॥ २८ ॥ ❀ ❀ महत्तत्त्वादित्यर्द्धकम् ॥ २९ ॥ ३० ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

मायाभर्त्तुरादिपुरुषस्याप्यंशी महावैकुण्ठनाथो भगवानेव सर्व्वकारणकारणमाश्रयतत्त्वमिति दर्शयन् सर्गारम्भमाह कालस्य वृत्त्या प्राथमिक्या महापुरुषनिश्वासरेचनप्रथमक्षणेनेत्यर्थः । अधोक्षजो महावैकुण्ठनाथो भगवान् आत्मभूतेन स्वांशरूपेण मायाधिष्ठात्रा आदिपुरुषेण द्वारा मायायां दूरादीक्षणं नैव संभुक्तायां वीर्य्यं चिदाभासाख्यां जीवशक्तिं आधत्त मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहमित्यत्र गर्भं चिदाभासं दधामि प्रलये मयि लीनं सन्तमविद्याकामकर्म्मानुशयवन्तं क्षेत्रज्ञं सृष्टिसमये भोग्येन क्षेत्रेण संयोजयामीत्यर्थः इति श्रीस्वामिचरणा मधुसूदनसरस्वतीपादाश्च मायाशक्तिजीवशक्त्योर्मेलनेनैव जगदुत्पत्तिसम्भवात् । यया क्षेत्रज्ञशक्तिः सा तारतम्येन वर्त्तत इति । वैष्णवोक्तेर्मायाशक्तौ जीवशक्तेः प्रवेशनान्मायाशक्त्यधीनां जीवशक्तिं चकारेति वाक्यार्थः । किञ्च विष्णुशक्तेरानन्त्यात् मायायामप्रविष्टा अप्यनन्ता एव तस्य जीवा विष्वक्सेनादिनामानो व्यक्ता अव्यक्ताश्च नित्यसिद्धाः सन्तीत्याह वीर्य्यवान् इति । स्त्रियामाहिताद्वीर्य्याद्यधिकप्रमाणमेव वीर्य्यं पुंसि तिष्ठतीति लोकेष्वपि प्रसिद्धेः ॥ २६ ॥ ❀ ❀ पुरुषाधिष्ठानेन लब्धचेतनाया मायायास्तस्यास्त्रयोविंशतौ भागेषु कार्य्यकारणभावेनोत्पत्स्यमानेषु प्रथमं महत्तत्त्वस्य जन्माह तत इति । अव्यक्तात् मायातः कीदृशात् कालचोदितात् तदुत्पत्त्युचितकालप्रापितविकृतेः तत्त्वपदं परित्यज्य महतो लक्षणमाह विज्ञानात्मा स महान् सत्त्वांशप्राधान्येन विशिष्टज्ञानस्वरूपः सर्व्वदेहेषु चित्तरूपेण योंऽशेन वर्त्तत इत्यर्थः । स्वदेहस्थं विश्वं उच्छूनबीजगतमंकुरादिरूपं वृक्षमिव व्यञ्जयन् प्रकाशयन् यतोऽसौ तमोनुदः प्रलयगताज्ञानध्वंसकर्त्ता ततो रजोंऽशप्राधान्ये सति क्रियाशक्त्या महत्तत्त्वभेदः सूत्रतत्त्वमभूदित्यपि ज्ञेयम् ॥ २७ ॥ ❀ ❀ तमोंऽशप्राधान्ये सत्यहंकारोत्पत्तिमाह सोऽपि महान् अंशः पुरुषः वीर्य्यं जीवशक्तिगुणः प्रकृत्यंशाः सत्त्वाद्याः कालश्च तदुत्पत्त्युपयोगी तैरेव कारणैरात्मा स्वरूपं यस्य सः भगवतो दृष्टिरिच्छा तद्विषयीभूतः सन् आत्मानं स्वं व्यकरोत् रूपान्तरमनयत् कीदृशः विश्वस्य जनिष्यमाणस्य आत्मा आश्रयः सिसृक्षया अहंकारसृष्टीच्छया विकुर्व्वाणात् विक्रियमाणात् ॥ २८ ॥ ❀ ❀ अहंकारस्य लक्षणमाह कार्य्यमधिभूतं कारणमध्यात्मं कर्त्तृ अधिदैवतं तेषामात्मा आश्रयः तत्र हेतुः भूतेन्द्रियमनोमयः तद्विकारवान् मन इति देवानामप्युपलक्षणं एतदेव विभज्य वक्तुमाह वैकारिकः सात्त्विकः तैजसो राजसः ॥ २९ ॥ ❀ ❀ ये देवा दिगाद्यास्तेऽपि वैकारिकाः वैकारिकजन्याः यतो येभ्यो देवेभ्य इन्द्रियाधिष्ठातृभ्योऽर्थाभिव्यञ्जनं शब्दादिप्रकाशो भवति ॥ ३० ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः ।

कालवृत्त्या कालशक्त्या सृष्टिकालेनेति यावत् गुणमय्यां क्षुभितगुणायां सृष्ट्युन्मुख्याम् अधोक्षजः परमात्मा वीर्यवान् आत्मा भूतेन स्वावतारेण महत्स्रष्टा वीर्यं सृष्टिसामार्थ्यमाधत्त संयोजितवान् अत्र मायावत् मायावृतो बद्धजीवपुरुषोऽभिक्षुभितो ज्ञेयः प्रकृतिं पुरुषं चैव प्रविश्यात्मेच्छया हरिः क्षोभयामास संप्राप्ते सर्गकाले व्ययाव्ययाविति वैष्णवात् पुरुषद्वारा मायाया वीर्यमापादनमपि युक्तमेव तथैव त्वत्तः पुमान् समधिगम्य ययास्य वीर्यं धत्ते महांतमिव गर्भममोघवीर्यः । सोयं तयानुगत आत्मन आंडकोशं हैमं ससर्ज बहिरावरणैरुपेतामित्येकादशे ब्रह्मादिदेवगणवाक्यं श्रीकृष्णं प्रति अतएव सात्वततंत्रे विष्णोस्तु त्रीणि रूपाणि पुरुषाख्यान्यथो विदुः आद्यं तु महतः स्रष्टृद्वितीयमंडसंभवम् । तृतीयं सर्वभूतस्थं तानि ज्ञात्वा विमुच्यते इति ॥ २६ ॥ ❀ ❀ ततो मायाऽपरपर्य्यायात् अव्यक्तात् बद्धजीवसंयुक्तात् कालेन क्षुभितगुणात् भगवद्वीर्य्यसंयुतात् महत्तत्त्वं महानभवत् स महान् विज्ञायते अनेन निमित्तभूतेनेति विज्ञानं सत्त्वं तदात्मा तत्प्रधानः देहस्थं विश्वं चेतनाचेतनात्मकं कार्यजातं व्यंजयन् व्यंजन् तमो नुदतीति तमोनुदो जात इत्यर्थः ॥ २७ ॥ ❀ ❀ महतोऽहंकारोत्पत्तिमाह स इति सार्द्धद्वयाभ्याम् । सः महान् अंशः जीवपुरुषः "ममैवांशो जीवलोके जीवभूतः सनातन इति" वचनात् गुणाः उपादानं कालः क्षोभकः तदात्मा तदाश्रयः भगवद्दृष्टिगोचर इत्यस्य भगवद्वीर्योपबृंहितः इति फलितोऽर्थः । अस्य विश्वस्य सिसृक्षया आत्मा स्वयमात्मानं व्यकरोत् रूपांतरमनयत् ॥ २८ ॥ ❀ ❀ तदेवाह महत्तत्त्वादिति । कार्यकारणकर्त्तृणाम् अधिभूताध्यात्माधिदैवानाम् आत्मा आश्रयः यतो भूतेन्द्रियमनोमयः तद्विकारवान् उपलक्षिता देवा अपि बोध्याः ॥ २९ ॥ ❀ ❀ अहंकारस्यैव त्रैविध्यमाह वैकारिक इति वैकारिकः सात्त्विकः तैजसो राजसः यतः येभ्यः ॥ ३० ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

या ( त्वया ) सामान्यतः सृष्टिरुक्ता, तां विस्तरेण निरूपयति—कालवृत्त्येति । तु शब्दः पक्षं व्यावर्त्तयति । न वा जीवः कर्ता, न वा अन्येन करोतीति । कालस्य वृत्तिः, कालस्तत्र समागत्य परिवृत्तः, प्रदक्षिणं कृतवान् । कालपरावृत्त्या कृत्वा मायायां

गुणक्षोभो[1] जातः। कालेन व्यापृता क्षुब्धगुणा जातेत्यर्थः। तदा सा व्यामुग्धा सती पुरुष इव कामान्धा जाता, तदा भगवानिन्द्रियातीत एव तस्या अदृश्य एव भूत्वा तस्या भर्तृयोग्यमात्मनः सकाशात् एकं पुरुषं निर्ममे। स हि भर्तृयोग्यो भगवदंशः पुरुषोत्तमात्मक एव। तस्य स्वतः प्रवृत्त्यभावात्, तं निमित्तीकृत्य भगवान् स्वयमेव तदन्तर्यामी भूत्वा, तस्यां वीर्यमाधत्त, यतः स्वयमेव वीर्यवान्। पुरुषजीवयोर्वीर्याभावात्, कोशाभावात्, शरीर एव तयोः कोशसम्भवात्। अतः पुरुषं निमित्तीकृत्य भगवत्स्थापितं वीर्यं मायायां स्थितं जीवप्रवेशात् महत्तत्वमभवत् ॥ २६ ॥ ❀ ❀ तस्यामेव स्थितस्य बीजस्य महत्तत्वता नाऽस्तीति, प्रसवार्थं कालक्षोभात् प्रसवकर्त्र्यास्तस्या महत्तत्वमभवदित्याह—अव्यक्तात्कालचोदितादिति। जीवधर्मादेव भगवदंशाच्च सर्वं चेतनं कार्यं जायते। संज्ञातोत्पत्तिरेवाऽत्राऽभीष्टा, सञ्ज्ञात एव च लीयते। स हि विज्ञानात्मा जातः महत्तत्वमिति। महदिति तस्य नाम। तत्त्वमिति भगवतः कारणभावः। तस्य जनने गुणभावेऽपि, पश्चात्प्रधानभावात्, तत्त्वतां परित्यज्य महान् पुंस्त्वेन निर्दिष्टः। स हि विविधज्ञानात्मा जातः। तद्द्वारैव च सर्वं जगज्जातम्, क्रमसृष्टिपक्षत्वात्। तदा तस्य विज्ञानेन स्वस्मिन् विद्यमानं जगत् प्रकाशयुक्तं जातम्। तद्गतमावरणं च तमो दूरीभूतम्, तदाह—स विज्ञानात्मा आत्मदेहस्थमेव विश्वं प्रकाशयँस्तमोनुदो जात इति। स जगज्जननार्थं भगवता सृष्ट इति पुनस्तूष्णीं तस्मिन् स्थिते कार्यार्थं भगवता स दृष्टः ॥ २७ ॥ ❀ ❀ कालोऽपि समागतः, कारणगुणा अपि समागताः सत्त्वादयः, अंशोऽपि पुरुषः समागतः, आत्मा जीवोऽपि। एते यस्मिन्, तादृशो भूत्वा चतुर्मूर्तिर्भगवद्दृष्ट आत्मानं विविधमकरोत्, व्यापाराविष्टं कृतवान्। यतोऽयं विश्वस्याऽप्यात्मा, अन्यथा स्वात्मा न व्यापृतः स्यात्। तथा किमर्थमकरोदित्याशङ्कयाऽऽह—विश्वस्याऽस्य सिसृक्षयेति। स हि पूर्वं ब्रह्मविदिव स्थितः, पश्चात्कार्यव्यापृतो जात इत्यर्थः ॥ २८ ॥ ❀ ❀ कार्यमाह—महत्तत्त्वादिति। स्वातन्त्र्याभावात् पुनः कारणभावमेवाऽऽपन्न इति महत्तत्वादित्युक्तम्। स यदा विशेषेण कुर्वाणो जातः, कार्यमात्मार्थं कर्तुमैच्छत्, तदा तस्मादहन्तत्त्वमजायत। तस्य त्रैविध्यं पूर्ववन्निरूपयति—कार्य्यकारणेति, कार्यमधिभूतम्, कारणमध्यात्मम्, कर्ता अधिदैवम्। स त्रितयात्मा भूत्वा भूतेन्द्रियमनोमयो जातः। भूतानामिन्द्रियाणां मनसश्च जनकस्त्रिविधोऽहङ्कारो जात इत्यर्थः ॥ २९ ॥ ❀ ❀ तान् भेदान् गणयति—वैकारिक इति। वैकारिकः सात्त्विकः, तैजसो राजसः, तामसो भूतहेतुः। सात्त्विकात्सृष्टिमाह—अहन्तत्त्वादिति। 'वैकारिकाश्च ये देवाः' इति गन्धर्वादिदेवव्युदासः। सात्त्विकाऽहङ्कारकार्यभूता ये देवाः, तेऽपि सात्त्विका जाता इत्यर्थः। तेषां भिन्नत्वे प्रमाणमाह—अर्थाभिव्यञ्जनं यत इति। देवाधिष्ठानव्यतिरेकेण, केवलादिन्द्रियात् शब्दज्ञानादिकं न भवतीति, सामर्थ्यं देवानामेव। इन्द्रियाणामेव तथात्वं कल्प्येत, यदि कल्पितं शास्त्रं स्यात्। यथा सिद्धमत्रोच्यत इति देवाधीनैव विषयप्रकाशनशक्तिः ॥ ३० ॥

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

कालवृत्त्या इत्यत्र गुणक्षोभो जात इति। पूर्वोक्तेषु आत्मादिषु भानविषयीभूतेष्वात्मांशः स त्त्वत्वेन, असत्त्वांशस्तमस्त्वेन ज्ञानांशो रजस्त्वेन परिणममानो गुणसाम्यावस्थारूपं तत्सरूपं कृतवान्। तेन सा गुणमयी प्रथमकार्यरूपा जातेति बोध्यम्। तत एवं तस्या गुणक्षोभ इत्यर्थः ॥ २६ ॥ ❀ ❀ तत इत्यत्र। तस्यामित्यादि। एतेन पुराणान्तरस्था शक्तिनाभिकमलाच्चतुर्मुखोत्पत्तिरेतत्सृष्टिसमानेति ज्ञापितं बोध्यम्। सर्ववेदेतिहाससारत्वात् श्रीभागवतस्य ॥ २७ ॥

### श्रीगिरिधरकृता बालप्रबोधिनी

तया प्रकृत्यात्मिकया मायया विश्वनिर्माणं प्रदर्शयन् प्रथमं ततो महतः सृष्टिमाह—कालवृत्त्येति। कालरूपशक्त्या तु गुणमय्यां क्षुभितगुणायां मायायामधोक्षजः अतीन्द्रियः परमात्मा आत्मभूतेन स्वांशेन पुरुषेण प्रकृत्यधिष्ठातृरूपेण वीर्यं चिदाभासमाधत्त धृतवान्, यतो वीर्यवान् चिच्छक्तिमान् ॥ २६ ॥ ❀ ❀ ततः कालप्रेरितादव्यक्तात् प्रकृतेः सकाशात् महत्तत्त्वमभवदित्यन्वयः। तत्त्वपदं विहाय महतः पुँल्लिङ्गत्वेन निर्दिशंस्तत्प्रयोजनमाह—आत्मनः स्वस्य देहस्थं विश्वमुच्छूनबीजगतं अङ्कुरादिरूपं वृक्षमिव व्यञ्जन् व्यञ्जयन् प्रकाशयन्। तत्र हेतुमाह—तमोनुद इति। तमोऽन्धकारमज्ञानं च नुदति निरस्यतीति तथा। तत्रापि हेतुमाह—विज्ञानात्मेति। सत्त्वप्रधानत्वाद्विज्ञानरूप इत्यर्थः ॥ २७ ॥ ❀ ❀ महतोऽहङ्कारोत्पत्तिमाह—सोऽपीति द्वाभ्याम्। स महानपि-अंशश्चिदाभासो निमित्तम्, गुणाः सत्त्वादयः उपादानम्, कालो गुणक्षोभकः-तत्तदुपलक्षित आत्मा यस्य सः अतोऽस्य विश्वस्यात्मा कारणभूतः भगवतो दृष्टिः सङ्कल्परूपं ज्ञानं तद्गोचरः सन्नस्य विश्वस्य सिसृक्षया अहङ्कारादिद्वारा स्रष्टुमिच्छया स्वात्मानं व्यकरोत् विकृतमकरोत् ॥ २८ ॥ ❀ ❀ विकुर्वाणात् विक्रियमाणात्

---

१. पूर्वोक्तेष्वात्मादिषु भानविषयीभूतेषु, आत्मांशः सत्त्वत्वेन, असत्त्वांशस्तमस्त्वेन, ज्ञानांशो रजस्त्वेन परिणममाणो गुणसाम्यावस्थारूपं तत्स्वरूपं कृतवान्, तेन सा गुणमयी प्रथमकार्यरूपा जातेति बोध्यम्। तत एवं तस्या गुणक्षोभ इत्यर्थः, प्र.। २. 'सद्द्रष्टुः' इत्यपि पाठः क्वचिद् दृश्यते, तत्र सतो दृश्यस्य द्रष्टुरित्यर्थः।

महत्तत्त्वात् अहन्तत्त्वादहङ्कारो व्यजायत उत्पन्नोऽभूत् । तं विशिनष्टि—कार्येति । कार्यमधिभूतम्, कारणमाध्यात्मिकमिन्द्रियम्, कर्तृ अधिदैवम्, तेषामात्मा आश्रयः । एतदेव स्पष्टयति—भूतेन्द्रियमनोमय इति देवानामुपलक्षणम् । भूतादीनां कारणभूत इत्यर्थः ॥ २९ ॥ ❀ ❀ नन्वेकस्याहङ्कारस्य कथं भूतादित्रितयकारणत्वमित्यपेक्षायां तामसाद्यंशभेदादित्याशयेनाहङ्कारं विभजते—वैकारिक इति । वैकारिकः सात्त्विकः तैजसो राजसः तामसश्चेत्येवमहं अहङ्कारस्त्रिधा त्रिविधः । एवमहङ्कारं विभज्य तत्कार्यमाह—अहन्तत्त्वादिति । विकुर्वाणाद्विक्रियमाणादहन्तत्त्वात् वैकारिकात् मनोऽभूत् ॥ ३० ॥

## हिन्दी अनुवाद

कालशक्तिसे जब यह त्रिगुणमयी माया क्षोभको प्राप्त हुई, तब उन इन्द्रियातीत चिन्मय परमात्माने अपने अंश पुरुषरूपसे उसमें चिदाभासरूप बीज स्थापित किया ॥ २७ ॥ ❀ ❀ तब कालकी प्रेरणासे उस अव्यक्त मायासे महत्तत्त्व प्रकट हुआ । वह मिथ्या अज्ञानका नाशक होनेके कारण विज्ञानस्वरूप और अपनेमें सूक्ष्मरूपसे स्थित प्रपञ्चकी अभिव्यक्ति करनेवाला था ॥ २७ ॥ ❀ ❀ फिर चिदाभास, गुण और कालके अधीन उस महत्त्वने भगवान्की दृष्टि पड़नेपर इस विश्वकी रचनाके लिये अपना रूपान्तर किया ॥ २८ ॥ ❀ ❀ महत्तत्त्वके विकृत होनेपर अहङ्कारकी उत्पत्ति हुई—जो कार्य ( अधिभूत ), कारण ( अध्यात्म ) और कर्त्ता ( अधिदैव ) रूप होनेके कारण भूत, इन्द्रिय और मनका कारण है ॥ २९ ॥ ❀ ❀ वह अहङ्कार वैकारिक ( सात्त्विक ), तैजस ( राजस ) और तामस भेदसे तीन प्रकारका है; अतः अहंतत्त्वमें विकार होनेपर वैकारिक अहङ्कारसे मन और जिनसे विषयोंका ज्ञान होता है वे इन्द्रियोंके अधिष्ठाता देवता हुए ॥ ३० ॥

**तैजसानीन्द्रियाण्येव ज्ञानकर्ममयानि च । तामसो भूतसूक्ष्मादिर्यतः खं लिङ्गमात्मनः ॥ ३१ ॥**
**कालमायांशयोगेन भगवद्वीक्षितं नभः । नभसोऽनुसृतं स्पर्शं विकुर्वन्निर्ममेऽनिलम् ॥ ३२ ॥**
**अनिलोऽपि विकुर्वाणो नभसोरुबलान्वितः । ससर्ज रूपतन्मात्रं ज्योतिर्लोकस्य लोचनम् ॥ ३३ ॥**
**अनिलेनान्वितं ज्योतिर्विकुर्वत्परवीक्षितम् । आधत्ताम्भो रसमयं कालमायांशयोगतः ॥ ३४ ॥**

### श्रीधरस्वामिविरचिता भावार्थदीपिका ।

तैजसान्येवेत्यन्वयः । ज्ञानेन्द्रियाणां ज्ञानमयानां सात्त्विकत्वशंका मा भूदित्येवकारः तामसो भूतसूक्ष्मस्य शब्दस्यादिः कारणम् । यतः शब्दात् खमाकाशो भवति आत्मनो लिंगं स्वगुणशब्दरूपेण प्रकाशकं हृदयाकाशतया वा । यद्वा लिंगं शरीरम् । "आकाशशरीरं ब्रह्म" इति श्रुतेः ॥ ३१ ॥ ❀ ❀ नभसः स्वस्मादनुसृतमुद्भूतं स्पर्शं विकुर्वद्रूपांतरं नयदनिलं वायुम् । एवं सर्वत्र तन्मात्रद्वारा भूतोत्पत्तिरिति ज्ञातव्यम् ॥ ३२ ॥ ❀ ❀ नभसा सहितः स्वयं चोरुबलान्वितः ततो ज्योतिस्तेजः लोचनं प्रकाशकम् ॥ ३३ ॥ ३४ ॥ ३५ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

इत्यर्थ इति । सत्त्वस्यैव ज्ञानहेतुत्वात्तत्कार्यभूता देवानामपि ज्ञानहेतुत्वात्सात्त्विकाहंकारकार्यत्वमिति भावः । शब्दरूपेणेति"तं त्वौपनिषदं पुरुषम्" इत्यादिश्रुतेः । हृदयाकाशेहि ब्रह्मप्रकाशो भवति तस्य तत्रस्थत्वात् । 'सर्वस्य चाहं हृदि संनिविष्टः' इति श्रीमुखोक्तेः । यद्वा "तस्माद्वा एतस्मादात्मन आकाशः" इत्यादिश्रुतेरात्मकार्यत्वात्तज्ज्ञापकं लिंगशब्दस्य शरीरवाचकत्वं विमृश्याह—यद्वेति श्रुतिः स्पष्टार्था ॥ ३१ ॥ ❀ ❀ एवं यथाशब्दतन्मात्रद्वाराकाशोत्पत्तिरुक्ता तथा सर्वभूतोत्पत्तिर्ज्ञेयेति ॥ ३२ ॥ ❀ ❀ नभसाकाशेन उरुबलेन भगवद्वीक्षणरूपेणान्वितः ततो रूपतन्मात्रात् ज्योतिःतेजोऽभूदिति शेषः ॥ ३३ ॥ ❀ ❀ रसमयं रसगुणम् । आधत्तासृजत् ॥ ३४ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

ये देवास्तेऽपि वैकारिका इति योज्यम् । चकारोऽप्यर्थकः येभ्य इत्युत्तरवाक्यस्थत्वात्तच्छब्देनापेक्षते ॥ ३० ॥ ❀ ❀ एवकारप्रयोजनं व्याकुर्वन्सांख्यमतं निराचष्टे ज्ञानेन्द्रियाणामिति । आत्मनः परमात्मनः स्वगुणशब्दरूपेण "तस्माद्वा एतस्मादात्मन आकाशः सम्भूत" इति "शास्त्रयोनित्वात् ॥ १ । १ ३ ॥ इत्यादिश्रुतिसूत्रात्मकशब्दद्वारेत्यर्थः । साक्षात्प्रकाशकत्वाभावात् तत्तच्छब्दस्य भगवन्निश्वासजत्वेन प्राकृतनभोगुणत्वाभावाच्च पक्षांतरम् । तत्रापि संकुचिताकाशमननेऽसंतोषाद्यद्वेति "खं ब्रह्मोपासीत" इति प्रतीकोपासनायां ब्रह्मण आकाशशरीरत्वम् ॥ ३१ ॥ ❀ ❀ नभः कर्तृस्पर्शं स्पर्शतन्मात्रम् ॥ ३२ ॥ ❀ ❀ नभसा पूरकेण स्वकारणेन सहित इति तद्गुणस्य शब्दस्यापि तत्र सञ्चारोऽभिप्रेतः ततो रूपतन्मात्रात् ॥ ३३ ॥ ❀ ❀ रसमयं रसतन्मात्रद्वारेत्यर्थः । कालः सृष्टिप्रवर्त्तकः मायापरेशेच्छाभासः विक्षेपशक्तिर्वा अंशश्चिदाभासस्तत्संम्बन्धात् ॥ ३४ ॥ ३५ ॥

### श्रीमद्वीरराघवव्याख्या

ज्ञानकर्ममयानि ज्ञानेन्द्रियाणि कर्मेन्द्रियाणि च इन्द्रियाणि तैजसान्येव तैजसाहंकारसहकृतसात्विकाहंकारकार्याण्येवेत्यर्थः । तैजसस्य वैकारिकतामसयोरनुग्राहकत्वेन पृथक्कार्याभावादनुग्राहकतैव हि तैजसस्य कार्यता ।। अथ तामसाहंकारकार्यमाह तामस इति । तामसः भूतसूक्ष्मादिः भूतानाम् आकाशादीनां तत्सूक्ष्माणां शब्दादीनां चादिः कारणं एतदेवोपपादयति यतः भूतादेः सकाशादात्मनो ब्रह्मणो यल्लिंगं प्रमापकं शब्दः स ततो लिंगात् खमाकाशं चाभूदित्यर्थः । ब्रह्मणः शब्दैकप्रमाणकत्वं शास्त्रयोन्यधिकरणसिद्धम् ।। ३१ ।। ❀ ❀ नभःकार्यमाह कालेत्यादिमायासत्वादिगुणाः सोऽप्यंशगुणकालात्मेति पूर्वमुक्तत्वात् ।। अंशो जीवः कालादियोगेन हेत्वर्थे तृतीया कालादियोगेन हेतुना भगवद्वीक्षितं भगवत्संकल्परूपज्ञानविषयं नभोऽभूत् एवं भूतान्नभसोऽनुसृतमुद्भूतं स्पर्शं स्पर्शतन्मात्रं विकुर्वद्विक्रियमाणं सदनिलं निर्ममेऽसृजत् ।। ३२ ।। ❀ ❀ स्पर्शादुत्पन्नोऽनिलो वायुरपि विकुर्वाणः नभसा नभोगुणेन शब्देन सहितः स्वयं चोरुबलान्वितः अधिकबलयुक्तः बलमपि प्राणनौजः सहसामप्युपलक्षणं रूपतन्मात्रं ससर्ज रूपतन्मात्रं च लोकस्य लोचनं प्रकाशकं ज्योतिः तेजः ससर्ज ।। ३३ ।। ❀ ❀ तच्च ज्योतिरनिलेनान्वितं स्पर्शगुणेनान्वितम् अनिलेनेति नभसोऽप्युपलक्षणम् । एवमग्रेऽपि शब्दस्पर्शाभ्यां स्वकारणभूतगुणाभ्यां स्वगुणेन रूपेण चान्वितं ज्योतिर्भगवत्संकल्पविषयं सत् कालमायांशयोगतो हेतोरसमयं रसगुणकमंभः जलमाधत्त असृजत् भगवद्वीक्षणकालमानायांशयोगाः सर्वत्रान्वितव्याः रसमयमंभः ससर्जेत्यनेन प्रथमं रसतन्मात्रं ततोंऽभ इति क्रमो वेदितव्यः ।। ३४ ।।

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

येभ्योऽर्थानां विषयाणामभिव्यंजनं तद्विषयज्ञानं भवति ये चेन्द्रियाभिमानिनो वैकारिकनामानो देवास्ते च वैकारिकादहंतत्त्वादभूवन्निति सम्बन्धः । ज्ञानकर्ममयानि ज्ञानप्रधानानि श्रोत्रादीनि कर्मप्रधानानि वागादीनि च तैजसान्येव तैजसादहंकारादेवोत्पन्नानि नान्यस्मादहंकारादित्यन्वयः । तामसाहंकारो भूतसूक्ष्माणामादिः कारणं शब्दादितन्मात्रास्तामसाहंकाराज्जाता इत्यर्थः । तत्र कीदृशी शब्दतन्मात्रा यतः शब्दतन्मात्राया आत्मनो हरेर्लिंगं गमकं प्रमाणं खं समुत्पन्नमित्यन्वयः ।। ३१ ।। ❀ ❀ कालमायांशयोगेन । कालस्य सृष्टिविशिष्टस्य मायायाः प्रकृतेरंशस्य जीवाभिमानिनश्चतुर्मुखस्य सन्निकर्षलक्षणसंबंधेन भगवता वीक्षितं कटाक्षितं तामसानुसृतं स्वकारणतामसाहंकारेणानुस्यूतमत एव विकुर्वन्नभः स्पर्शतन्मात्रां निर्ममे तस्मात्स्पर्शादनिलं वायुर्निर्ममे ।। ३२ ।। ❀ ❀ कालादिसहकारिणा नभसा स्वकारणेनानुस्यूतत्वादुरुबलान्वितो विकुर्वाणोऽनिलो रूपतन्मात्रां ससर्ज तन्मात्रया लोकस्य लोचनं प्रकाशकं लुच् प्रकाशन इति धातोः ज्योतिस्तेजस्तत्त्वमस्राक्षीत् ।। ३३ ।। ❀ ❀ रसमयं रसतन्मात्राकार्यं परेण हरिणा वीक्षितं कालमायांशयोगतः कालात्परिणामात् मायायाः प्रकृतेरंशाद्धिरण्यगर्भाच्च ।। ३४ ।।

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

तैजसानीति । आत्मनः परमात्मनः । तस्य लिङ्गं बोधकम् "तस्माद्वा एतस्मादात्मनः आकाशः सम्भूत" इत्यस्याः श्रुतेस्तद्वारा तद्बाधकत्वात् ।। ३१ ।। ❀ ❀ स्पर्शं स्पर्शात्मकं भूतसूक्ष्मरूपं वायुमित्यर्थः । एवमुत्तरत्रापि ।। ३२ ।। ३३ ।। ।। ३४ ।। ३५ ।।

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

इन्द्रियाणि तैजसान्येवेत्यन्वयः । ज्ञानेन्द्रियाणां ज्ञानमयानां सात्त्विकत्वाशंका माभूदित्येवकार तामसो भूतसूक्ष्मस्य शब्दस्यादिः कारणम् । यतः शब्दात् खमाकाशो भवति आत्मनः परमेश्वरस्य लिङ्गं स्वगुणशब्दरूपेण प्रकाशकं यद्वा "तस्माद्वा एतस्मादात्मनः आकाशः सम्भूत" इति श्रुतेरात्मकार्य्यत्वादात्मज्ञापकम् ।। ३१ ।। ❀ ❀ नभः कर्त्तृ नभसः स्वस्मादनुसृतम् उद्भूतं स्पर्शं विकुर्व्वत् रूपान्तरं प्रापयत् सत् अनिलं निर्म्ममे । एवं सर्व्वत्र तन्मात्रद्वारा भूतोत्पत्तिरिति ज्ञेयम् ।। ३२ ।। ❀ ❀ नभसा सहितः स्वयं चोरुबलान्वितः रूपतन्मात्रात् ज्योतिरभूत् लोकस्य लोचनं प्रकाशकम् ।। ३३ ।। ❀ ❀ रसमयं रसगुणं अम्भः आधत्त असृजत् ।। ३४ ।।

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः ।

तामसः भूतसूक्ष्मस्य शब्दतन्मात्रस्य आदिः कारणम् । यतः शब्दतन्मात्रात् खमाकाशः उत्पन्नम् आत्मनो ब्रह्मणो लिंगं शरीरम् आकाशशरीरं ब्रह्मेति श्रुतेः ।। ३१ ।। ❀ ❀ नभः भगवद्वीक्षितमभूत् भगवता कार्योत्पादनाभिमुखीकृतमित्यर्थः । कालमायांशयोगेनेतिकालादियोगः सर्वत्र संबध्यते तस्मान्नभस अनुसृतमुद्भूतस्पर्शं स्पर्शतन्मात्रं विकुर्वत् सत् अनिलं निर्ममे ससर्ज ।। ३२ ।। ❀ ❀ अनिलोऽपि नभसान्वितः स्वयं चोरुबलान्वितः रूपं रूपतन्मात्रं ससर्ज तन्मात्रमपि

लोकस्य लोचनं प्रकाशकं ज्योतिस्तेजः ससर्ज ॥ ३३ ॥ ❀ ❀ अनिलेनान्वितं ज्योतिरंभ आधृतरसतन्मात्रद्वारा जलमसृजत् ॥ ३४ ८

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

राजसात् सृष्टिमाह—तैजसानीन्द्रियाण्येवेति । एवकारः सात्त्विकत्वतामसत्वव्युदासार्थः । ज्ञानं सत्त्वप्रधानम्, क्रिया तमःप्रधानेति । उभयविधानामिन्द्रियाणां राजसत्वे युक्तिः पूर्वमुक्तैव । चकाराद् बुद्धिप्राणौ । तामसात्सृष्टिमाह—तामस इति । भूतसूक्ष्माणामादिः शब्दतन्मात्रम् । तस्य आदित्वेनैव ग्रहणात्तामस इति पुल्लिङ्गनिर्देशः, अहङ्कारविशेषणं वा । तदा भूतानां सूक्ष्माणां च स आदिरिति, सामान्यतस्तस्य कार्यं निर्दिष्टम् । यतोऽहङ्कारात् शब्दतन्मात्राद्वा खमाकाशमात्मनो भगवतो लिङ्गम्, बोधकं, शरीरं वा । आकाशवद्व्यापको निर्लेपश्चेति । यथा वा आकाशे अभ्रतमःप्रकाशा भवन्ति, न भवन्ति च, तथापि न तैराकाशो लिप्यते, एवमात्मा, 'आकाशशरीरं ब्रह्म' इति श्रुतेश्च । माहात्म्यार्थं तथा कथनम् । अन्यथा तामससृष्टिरधमेति न वक्तव्या स्यात् ॥ ३१ ॥ ❀ ❀ आकाशाद्वायोः सृष्टिमाह—कालेति । पूर्ववत् कालो गुणक्षोभकः, माया गुणरूपा, अंशः पुरुषो जीवोऽपि वा । अत्राऽपि पूर्ववद्भगवद्दृष्टिः । भगवद्वीक्षितं नभो जातमिति भिन्नम् । कार्योन्मुखात्सृष्टिमाह—नभस इति । नभसः सकाशादनुसृतमुत्पन्नं स्पर्शं स्पर्शतन्मात्रम् । तत्पुनः विकुर्वदनिलं निर्ममे ॥ ३२ ॥ ❀ ❀ एवमनिलोऽपि नभसा स्वकारणेन कृत्वा उरुबलान्वितो जातः । तदा रूपतन्मात्रं ससर्ज । ततो ज्योतिर्जातम् । लोकस्य लोचनमिति माहात्म्यं तस्य । आलोकाभावे लोकोऽस्मदादिर्विद्यमानेऽपि चक्षुषि न पश्येत् । अतो लोकस्य लोचनमित्युक्तम् ॥ ३३ ॥ ❀ ❀ अनिलेनाऽन्वितं ज्योतिरिति । पूर्ववत्कारणाद्बलसिद्धिः । परेण भगवता वीक्षितं सत् । अम्भो रसमयमिति । रसतन्मात्रं जलात् पृथक् न प्रतीयत इति श्लिष्टमेवोत्पन्नमित्युक्तम् । अत्राऽपि वा क्रमः कल्पनीयः; प्रथमतो रसतन्मात्रम्, पश्चादम्भ इति । कालामायांशयोगत इति । ज्योतिरि[३]त्यस्य साधनम् । एवमग्रेऽपि ॥ ३४ ॥

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

तैजसानीत्यत्र । पूर्वमुक्तैवेति । द्वितीयस्कन्धे उक्तैवेत्यर्थः । भूतसूक्ष्मपदस्याहङ्कारविशेषणत्वेऽहङ्कारादेव मात्राणां भूतानां च पृथगुत्पत्तिः । मात्राभ्यो मात्राः । भूताद्भूतमिति । तदाहुः—तदेत्यादि । तदा शब्दतन्मात्रस्यार्थबलादेव लाभ इत्याशयेनाहुः—यत इत्यादि ॥ ३१ ॥ ❀ ❀ अनिलेत्यत्र । ज्योतिरित्यस्य साधनमिति । ज्योतिःपदोक्तस्याम्भःकारणस्य सहकारि वा निर्वाहकं चेत्यर्थः ॥ ३४ ॥

### श्रीगिरिधरकृता बालप्रबोधिनी ।

ये देवास्तेऽपि वैकारिकाः सात्त्विकाहङ्कारकार्यभूता इत्यर्थः । चतुर्मुखस्रक्ष्यमाणानां देवानां ब्रह्माण्डोत्पत्तेः पूर्वमुत्पत्त्यसम्भवादिन्द्रियाधिष्ठातारो देवा अत्र विवक्षिता इति तान् विशिनष्टि—अर्थे ति । अर्थानां शब्दस्पर्शरूपरसगन्धानामभिव्यञ्जनमुपलम्भो यतो येभ्यो देवेभ्यो भवतीति । ज्ञानकर्ममयानि ज्ञानजनकानि कर्मजनकानि चोभयविधान्यपीन्द्रियाणि तैजसानि राजसाहङ्कारकार्याण्येवेत्यन्वयः । एवकारो ज्ञानेन्द्रियाणां सात्त्विकत्वशङ्कानिरासार्थः ॥ ३१ ॥ ❀ ❀ अथ तामसाहङ्कारकार्यमाह—तामस इति । तामसोऽहङ्कारः भूतसूक्ष्मादिः भूतानामाकाशादीनां तत्सूक्ष्माणां शब्दादीनां च आदिः कारणमित्यर्थः । एतदेवोपपादयति—यत इति । यतो भूतादेः सकाशात् आत्मनो ब्रह्मणो लिङ्गं प्रमापकं शब्दतन्मात्रमभूत् । तद्द्वारा च खमाकाशमभूदित्यर्थः । नभःकार्यमाह—कालेत्यादि । कालादियोगेन सहितं नभो यदा भगवद्वीक्षितमितोऽग्रे सृष्टिर्भवत्विति भगवत्सङ्कल्पविषयोऽभूत् तदा नभसः सकाशात् स्पर्शमनुसृतमुद्भूतं विकुर्वत् विक्रियमाणं सत् अनिलं पवनं निर्ममे असृजत् ॥ ३२ ॥ ❀ ❀ नभसा सहान्वितः अत एवोरुबलान्वितः अधिकबलयुक्तः अनिलोऽपि यदा विकुर्वाणो विक्रियमाणो जातस्तदा रूपतन्मात्रं रूपं तन्मात्रा सूक्ष्मावस्था यस्य तत् लोकस्य लोचनं प्रकाशकं ज्योतिस्तेजः ससर्जेत्यन्वयः ॥ ३३ ॥ ❀ ❀ अनिलेनेति नभआदीनामप्युपलक्षणम्, एवमग्रेऽपि । नभोनिलाभ्यां तद्गुणाभ्यां शब्दस्पर्शाभ्यां स्वगुणेन रूपेण चान्वितं ज्योतिर्भगवद्वीक्षितं भगवता सङ्कल्पेन प्रेरितं सत् कालादियोगतश्च हेतुतो विकुर्वच्च सत् रसमयं रसगुणकं अम्भो जलमाधत्त असृजदित्यन्वयः । भगवद्वीक्षणकालमायांशयोगा यत्र नोक्तास्तत्रापि सर्वत्रान्वेतव्याः ॥ ३४ ॥

### हिन्दी-अनुवाद

तैजस अहङ्कारसे ज्ञानेन्द्रियाँ और कर्मेन्द्रियाँ हुई तथा तामस अहङ्कारसे सूक्ष्म भूतोंका कारण शब्दतन्मात्र हुआ और उससे दृष्टान्तरूपसे आत्माका बोध करनेवाला आकाश उत्पन्न हुआ ॥ ३१ ॥ ❀ ❀ भगवान्की दृष्टि जब आकाशपर पड़ी, तब उससे फिर काल, माया और चिदाभासके योगसे स्पर्शतन्मात्र हुआ और उसके विकृत होनेपर उससे वायुकी उत्पत्ति

---

१. द्वितीयस्कन्धे उक्तैवेत्यर्थः, प्रकाशः । २. कार्योन्मुखाम्, घ. ङ. ३. ज्योतिः पदोक्तस्याऽम्भः कारणस्य वा निर्वाहकं वेत्यर्थः प्र. ।

हुई ॥ ३२ ॥ ❀ ❀ अत्यन्त बलवान् वायुने आकाशके सहित विकृत होकर रूपतन्मात्रकी रचना की और उससे संसारका प्रकाशक तेज उत्पन्न हुआ ॥ ३३ ॥ ❀ ❀ फिर परमात्माकी दृष्टि पड़नेपर वायुयुक्त तेजने काल, माया और चिदंशके योगसे विकृत होकर रसतन्मात्रके कार्य जलको उत्पन्न किया ॥ ३४ ॥

ज्योतिषाम्भोऽनुसंसृष्टं विकुर्वद् ब्रह्मवीक्षितम् । महीं गन्धगुणामाधात्कालमायांशयोगतः ॥ ३५ ॥
भूतानां नभआदीनां यद्यद्भव्यावरावरम्[1] । तेषां परानुसंसर्गाद्यथासंख्यं गुणान् विदुः ॥ ३६ ॥
एते देवाः कला विष्णोः कालमायांशलिङ्गिनः । नानात्वात्स्वक्रियानीशाः प्रोचुः प्राञ्जलयो विभुम् ॥ ३७ ॥

देवा ऊचुः

नमाम ते देव पदारविन्दं प्रपन्नतापोपशमातपत्रम् ।
यन्मूलकेता यतयोऽञ्जसोरु संसारदुःखं बहिरुत्क्षिपन्ति ॥ ३८ ॥
धातर्यदस्मिन् भव ईश जीवास्तापत्रयेणोपहता न शर्म ।
आत्मँल्लभन्ते भगवंस्तवाङ्घ्रिच्छायां सविद्यामत आश्रयेम ॥ ३९ ॥
मार्गन्ति यत्ते मुखपद्मनीडैश्छन्दःसुपर्णैर्ऋषयो विविक्ते ।
यस्याघमर्षोदसरिद्वरायाः पदं पदं तीर्थपदः[2] प्रपन्नाः ॥ ४० ॥

श्रीधरस्वामिविरचिता भावार्थदीपिका ।

हे भव्य विदुर पाठांतरे भाव्यं कार्यं यद्यदवरमवरं कार्यं तेषां कार्याणां परैः कारणैरनुसंसर्गाद्यन्वयाद्यथासंख्यं यथाक्रममुत्तरोत्तरमधिकान् गुणान् विदुः । तथाहि नभसः शब्द एव गुणोऽन्यान्वयाभावात् वायोस्तु स्पर्शः आकाशान्वयाच्छब्दश्च एवं तेजसस्तौ च रूपं च अंभसस्तानि रसश्च मह्याः सर्वे ॥ ३६ ॥ ❀ ❀ देवा महदाद्यभिमानिनः विष्णोः कला अंशाः काललिंगं विकृतिः मायालिंगं विक्षेपः अंशलिंगं चेतना तानि विद्यंते येषु अतः समत्वेन नानात्वात्परस्परासंबंधात्स्वक्रियायां ब्रह्मांडरचनायामनीशा अशक्ताः संतो विभुं परमेश्वरं प्रोचुः ॥ ३७ ॥ ❀ ❀ "मिथः स्पर्धिष्णवो देवा न मिलंतः परस्परम् । विश्वकर्मण्यनीशाना निर्विण्णा हरिमीडिरे ॥" नमामेति । प्रपन्नानां तापोपशमे आतपत्रं छत्रम् । तत्र हेतुः । यस्य पादारविंदस्य मूलं तलं केत आश्रयो येषां ते संसारदुःखं बहिर्दूरत उत्क्षिपंति परित्यजंति । पांथाः स्वगृहं प्राप्य मार्गश्रममिव ॥ ३८ ॥ ❀ ❀ श्रमं विनिवेदयंत आहुः । हे धातः पितः यद्यस्माद्भवे संसारे आत्मन्नात्मनि संबोधनं वा शर्म सुखम् ऋते यदिति पाठे यत्पादभजनं विना शर्म न लभंते । ननु ज्ञानादज्ञानकृतस्तापो निवर्तते किं मदंघ्रिच्छायाश्रयणेन तत्राहुः । सविद्यां तदाश्रयणमेव विद्याप्रापकमित्यर्थः ॥ ३९ ॥ ❀ ❀ अज्ञातस्याश्रयणायोगात्तज्ज्ञानसाधनमाहुः । मार्गं त्वन्वेषयंति यत्तत्तीर्थपदस्ते पदं वयं प्रपन्नाः । कैर्मार्गंति । छंदःसुपर्णैर्वेदपक्षिभिः तवैव मुखपद्मं नीडं येषां यथा पक्षिणो नीडादुद्गतास्ततस्ततः परिभ्रम्य पुनस्तत्रैव विशंति तथा वेदा अपि त्वत्त उद्गतास्त्वय्येव पर्यवस्यंति अतो वेदानाश्रित्य त्वत्पदं मृगयंत इति । विविक्ते असंगे मनसि किंचाघमर्षमघनाशकमुदमुदकं यासां सरितां तासु वराया गंगायाः पदमुद्गमस्थानम् । अतो गंगामनुसेवमाना अपि तदुद्गमस्थानं त्वत्पदं प्राप्नुवंतीत्यर्थः ॥ ४० ॥

श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः ।

अनुसंसृष्टं संयुतमंत्रः ॥ ३५ ॥ ❀ ❀ पाठान्तरे 'भाव्यावरावराम्' इति पाठे भाव्यं च तदवरावरं चेति कर्मधारयः । नभ आदीनां मध्ये भाव्यं कार्यं यद्यदपरमपरं बाह्यादिकं तेषां कार्याणां परैः कारणैरनुसंसर्गात्सम्बन्धात् तौ शब्दस्पर्शौ तानि शब्दस्पर्शरूपाणि सर्वे शब्दस्पर्शरूपरसगन्धा इत्यर्थः । यतः कालादिलिंगिनोऽतो हेतोः समत्वेन तुल्यत्वेन तुल्यानां संध्यभावात्परस्परमसंबंधोऽस्त्येव "वर्णा अपि समाना ये अ-इ-उ-ऋ-ऌ-पंचकाः । एतेऽपि यांति नो संधिं नरादीनां तु का कथा" इति न्यायेन विकृतिर्गुणक्षोभः कालाद् गुणव्यतिकरः विक्षेपः शोकहर्षादिरूपः महदादीनां भगवदिच्छयैव सहसा देहेंद्रियादिमत्त्वमिति ज्ञेयम् । निर्विण्णा निर्वेदमापन्नाः नन्वेते महदादय एव स्वगुणैर्जीवान्बद्ध्वा मुहुः स्वर्गनरकादिषु क्षिपन्तः संसारयंति तदमी निर्हेतुद्रोहिणः सर्वथा ध्वंसनीया एवेति मैवं वादीरेते हि निर्हेतूपकारिण एव । तथा हि-मोक्षसाधनानि ज्ञानयोगनिष्कामकर्माणि एतैर्विना न सिध्यंति तथा प्रेमसाधनानि श्रवणकीर्त्तनस्मरणदास्यसख्यादीनि भगवत्कृपोपव्यंजितैरेभिरेव सिध्यंति । किं च परदारपरद्रव्योपहरणगोब्राह्मणद्रोहादिविविधपात-

१. प्रा० पा०—द्भाव्यं चराचरम् । २. प्रा० पा०—तीर्थपदं ।

कानि नरकसाधनान्येतैरेव सिध्यंतीति नैते दूषणीयाः यथा भागीरथ्या जलं सज्जनानां स्नानपानादिभिः परमपावनममृतमेव कूलस्थेषु तृणगुल्मादिषु धान्यगोधूमादिषु पनसाम्रद्राक्षादिषु प्रविष्टं सर्वविधजनानां परमसुखदमेव विषवृक्षेषु प्रविष्टं मारकं मद्यादिप्रविष्टं पातकं च तेषामेव भवति तत्र भागीरथीजलस्य न दोषः किं तु तत्तत्पात्रस्यैव तथा "तानहं द्विषतः क्रूरान्संसारेषु नराधमान्। क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु" इत्यादिभक्त्यनुसारेण तेषु तेषु दुर्जीवेषु स्थितानामेषामधिकृतभक्तानां को दोषः किन्तु तेषामेवेति। वस्तुतस्तु ते परमवैष्णवा एवेति तत्कृतया स्तुत्यैवाभिव्यंजयितुमाह–एते देवा इति ॥ ३७ ॥ ❀ ❀ 'प्रपन्नः शरणागतः' इत्यभिधानात्। तत्रातपत्रत्वे भक्ताभीष्टदानेन द्योतमानत्वादाह—देवेति ॥ ३८ ॥ ❀ ❀ आर्षत्वकल्पने गौरवं मत्वाह—संबोधनं वेति। अत्राक्षिपति नन्विति। तत्राक्षेपे इत्यर्थं इति। "श्रेयःश्रुतिं भक्तिमुदस्य ते विभो क्लिश्यन्ति ये केवलबोधलब्धये। तेषामसौ क्लेशल एव शिष्यत" इत्युक्तेः "वासुदेवे भगवति भक्तियोगः प्रयोजितः। जनयत्याशु वैराग्यं ज्ञानं यत्तदहैतुकम्" इत्याद्युक्तेश्चेति भावः ॥ ३९ ॥ ❀ ❀ अत्रायं भावः यथा निरास्पदे देशे विश्रामार्थं स्थलं पश्यंत इतस्ततश्चरद्भिः पक्षिभिर्धावमानास्सायं स्वनीडं विशद्भिः सहैव गता विश्रामार्थं तन्नीडाधिष्ठितवृक्षतलमाश्रयंति जनास्तत्र सुखं च प्राप्नुवंति तथा वेदमार्गमाश्रिता अप्यंते त्वामेव विशंतीत्याशयः। एकविधमन्वेषणप्रकारमुक्त्वा द्वितीयमाह—किञ्चेति। यतो गंगोद्भवस्थानं त्वमसि अतो हेतोः। इत्यर्थ इति। गंगाप्रणालिकया गच्छंतस्त्वामेव तदाश्रयत्वेन प्राप्नुवंतीति भावः ॥ ४० ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या।

पाठान्तरे भाव्याऽवराऽवरमिति पाठे भाव्येषु कार्य्येषु मध्ये यद्यद् वरमवरं कार्य्यमस्ति तेषां कार्य्याणामिति व्याख्यातम् अन्वयाद्व्यापनात् तौ स्पर्शशब्दौ तानि स्पर्शशब्दरूपाणि सर्वे पञ्चापि ॥ ३६ ॥ ❀ ❀ अतः कालादिलिङ्गत्वस्याविशेषात् अत्र स्तोतृत्वाद्यद्यपि एते देवा महाभागवता अकृतदासास्तथापि विषवृक्षप्रविष्टगंगोदकवत् बहिर्मुखसङ्गेन तथा तथा प्रतीयन्त इति गंगोदकवन्न तेषां दोष इति ज्ञेयम् ॥ ३७ ॥ ❀ ❀ तत्रातपत्रत्वे पांथा इत्यत्र पांथः स्वशरणं यथेति वाक्यंमानम् ॥ ३८ ॥ ❀ ❀ ऋते यदस्मिन्निति पाठान्तरं तदाश्रयणमङ्घ्रिच्छायाश्रयणमेव ज्ञानोत्पादकं 'वासुदेवे भगवति भक्तियोगः प्रयोजित' इत्यादौ तथा निर्णयात् ॥ ३९ ॥ ❀ ❀ यस्य यत्पदं मार्गन्ति तस्य तत्पदं वयं प्रपन्ना इति योज्यम्। पक्षिनीडान्वेषिणोपि यथा वृक्षमूलमेव प्रपद्यन्ते तन्नीडोपलब्ध्यर्थं तथा तवांघ्रिश्रयणार्थं वेदसाधनेनांघ्रिमेव ऋषयः प्रपद्यन्त इति भावः ॥ ४० ॥

### श्रीमद्वीरराघवव्याख्या

तथांभो ज्योतिषा ज्योतिःस्पर्शशब्दैरनुसंसृष्टमनुसंहितं ब्रह्मसंकल्पविषयं कालादियोगतो हेतोः गंधगुणां महीमाधान्प्रथमं गंधं ततो महीं चाधादसृजत् ॥ ३५ ॥ ❀ ❀ भूतानामिति हे भव्य ! विदुर ! नभआदीनां भूतानां मध्ये परात्परं यद्यदुत्तरभूतं तत्तत्परानुसंसर्गात् कारणद्रव्यगुणानुवृत्त्या यथासंख्यं गुणान्विदुः। प्रथमस्यैको गुणः द्वितीयस्य द्वौ तृतीयस्य त्रयः चतुर्थस्य चत्वारः पंचमस्य पंच गुणा इत्येव विदुः ॥ ३६ ॥ ❀ ❀ अथैतानि महत्तत्वादिपृथिव्यन्तानि तत्त्वानि परस्परपंचीकरणरूपं सम्मेलनाभावात् ब्रह्मांडरचनायामसमर्थानीश्वरं तुष्टुवुरित्याह एत इति। ननु भगवद्दृष्टिगोचरः भगवद्वीक्षितं नभः परवीक्षितं ब्रह्मवीक्षितमित्येषां तत्त्वानां भगवत्संकल्परूपज्ञानविषयकत्वोक्त्या सृष्टिसामर्थ्यावगमात्पुनः स्तुतिप्रीतपरमेश्वरानुप्रवेशकृतसामर्थ्योक्तिर्विरुध्यते, नचान्य एव वक्ष्यमाणोऽनुप्रवेश इति वक्तुं शक्यं विभोरीश्वरस्य ज्ञानेनैवानुप्रवेशस्य वाच्यत्वात्तावतैव तेषां शरीरत्वोपपत्तेः आधेयत्वविधेयत्वशेषत्वानां शरीरत्वनिर्वाहकत्ववत् यस्य चेतनस्य यद्द्रव्यम् आधेयं विधेयं शेषं च तत् तस्य शरीरमिति हि शरीरलक्षणम्। मैवं पूर्वं महदादीनां स्वस्वकार्योत्पादनसामर्थ्यावहेश्वरप्रवेशस्योक्तत्वेऽप्येतैः सर्वैः संहत्यांडोत्पादनसामर्थ्यापादकानुप्रवेशस्यानुक्तत्वेनैवं विधानुप्रवेशाय स्तुतेस्तत्प्रीतपरमात्मनोऽनुप्रवेशस्य ततोंऽडसृष्टेश्चोपपत्तेः एते महदादयो देवा देवस्य भगवतः शरीरत्वादेवा इत्युक्तिः यथा "हंताहमिमास्तिस्रो देवता" इत्यादौ कालमायांशलिंगिनः कालमायांशरूपाणि लिंगान्यस्य संतीति कालमायांशलिंगी तस्य कालमायाजीवशरीरस्येत्यर्थः। विष्णोर्भगवतः कलाः शरीरभूता नानात्वात्पृथग्भूतत्वात्परस्परसंबंधाभावात्स्वक्रियायां ब्रह्माण्डरचनायामनीशा असमर्थाः संतः विभुं भगवंतं प्रांजलयो बद्धांजलयः प्रोचुः तुष्टुवुः ॥ ३७ ॥ ❀ ❀ नन्वचेतनानां महदादीनां स्तोतृत्वानुपपत्तिः नचाधिष्ठातृणामुपपन्नमिति शंक्यम्, अंडसृष्ट्यनंतरं चतुर्मुखस्रक्ष्यमाणादित्येंद्रादीनामंडसृष्टेः प्राक्तदनुपपत्तेः न च तत्त्वशरीरकपरमात्मनः स्तोतृत्वमुपपन्नमिति वाच्यं स्तुत्यत्वस्तोतृत्वयोरेकस्मिन्नसंगतत्वात् ब्रह्मणः सर्वोपादानत्वेन सर्वविकाराश्रयत्वेऽपि सद्वारकविकाराश्रयत्वेन तस्य जीवद्वारैव स्तोतृत्वात् उच्यते परमाकाशवर्तिनस्तत्त्वाभिमानिदेवास्तत्त्वान्यधिष्ठाय तुष्टुवुः वृतं चतुःषोडशपंचशक्तिभिरिति परमाकाशे तत्त्वाभिमानिदेवतास्थित्यवगमात्। यद्वा पुरुषेणात्मभूतेन वीर्यमाधत्त वीर्यवानिति जीवद्वारैव परमात्मनो महदादिपृथिव्यां तत्तत्त्वेष्वनुप्रवेशकथनात्परमात्मात्मकादृष्टविशेषसचिवजीवानुप्रवेशसंपादितसृष्टिसामर्थ्यानां तत्त्वानां स्वस्वकार्योत्पादकत्ववत् स्तोतृत्वोपपत्तेरिति प्रथमं कारणत्वव्याप्तोपास्यत्वमोक्षप्रदत्वगुणविशिष्टं प्रणमंति नमाम

इति । हे देव भगवन् ! तव पदारविंदं नमाम नमस्कुर्मः कथंभूतं पदारविंदं प्रपन्नतापोपशमातपत्रं प्रपन्नाः शरणागतास्तेषां ये तापा आध्यात्मिकाधिदैविकाधिभौतिकास्तेषामुपशमे निर्हरणे आतपत्रं छत्रमिव वर्तमानं अनेन तापत्रयातुरोपास्यत्वमुक्तं यन्मूलकेताः यत्पदारविंदमूलमेव केत आश्रयो येषां ते यतयः मनोनियमने यतमानाः अंजसा सुखेन संसारदुःखम् अनेन मोक्षप्रदत्वमुक्तं बहिर्दूरत एव उत्क्षिपंति । त्यजंति सांसारिकसुखदुःखशब्देन विवक्षितं मुमुक्षोरिष्टप्राप्तिविरोधित्वात्सुखस्यापि दुःखशब्दवाच्यत्वात् ॥ ३८ ॥ ❀ ❀ एतद्व्यतिरेकमुखेनापि कथयंतो नमस्कुर्वंति ऋत इति । हे ईश ! अस्मिन् भवे संसारे यद्दते यत् भगवत्पदांबुजं विना भगवत्पदारविंदोपासनं विना तापत्रयेणाभिहताः जीवा आत्मन्नात्मनि संबोधनं वा शर्म सुखं न लभन्ते । अतोऽन्वयव्यतिरेकाभ्यां भगवत्पदांबुजोपासनस्यैव तापत्रयनिवृत्तिपूर्वकमुक्तिसाधनत्वाद्धेतोः हे भगवन् ! तवांघ्रिच्छायां विद्यामाश्रयेम विद्यां मुक्त्युपायभूतोपासना तत्सहितामंघ्रिछायां मुक्तिमाश्रयेम उपासनानिर्वृत्या मुक्तिं प्राप्नुवामेत्यर्थः ॥ ३९ ॥ ❀ ❀ ननु कथं मत्पदांबुजोपासनमात्रेणात्यंतिकसांसारिकसुखदुःखनिवृत्तिरुच्यते, यतस्तत्सुखदुःखोत्पादकपुण्यपापरूपकर्मणामविनष्टत्वादित्याशंकायां तदुपासनस्यैवात्यंतिककर्मनिरासकत्वमपीति सूचयंतस्तद्भगवत्पदांबुजस्यैव मुमुक्षूपास्यत्वाद्वयमपि तमेव शरणं गता इत्याहुः मार्गंतीति । तीर्थपदस्तव पदांबुजं वयं प्रपन्नाः शरणं गता इत्यन्वयः । तीर्थपदः पवित्रपादस्य स्वाश्रितदुरितनिवर्तकपादकमलस्येत्यर्थः । कथंभूतं त्वत्पदांबुजं यत् अघमर्षोदसरिद्वरायाः अघमर्षाणि पापक्षपणकानि उदानि उदकानि यासु तासु सरित्सु मध्ये वरायाः श्रेष्ठाया गंगायाः परं पदमुत्कृष्टमुत्पत्तिस्थानं एतेनासेवमानसमस्तजनदुरितनिवर्तकसरिद्वराया एव दुरितनिवर्तकत्वात्तदुत्पत्तिस्थानभगवत्पदांबुजस्याश्रितदुरितनिवर्तकत्वं कैमुत्यनयसिद्धं यथा पुष्करपलाश आपो न श्लिष्यंत एवमेवंविदि पापंकर्म न श्लिष्यते इत्यादिका श्रुतिरत्रानुसंधेया उपासकानामात्यंतिकपुण्यपापनिवृत्तिपूर्वकनिरतिशयसुखप्रापकत्वादेव त्वत्पदांबुजं ऋषयः उपासत इत्याहुः मार्गंतीति । ते तव मुखपद्मनीडैर्मुखकमलनिलयैर्मुखकमलोत्पन्नैरिति यावत् । तस्य ह वा एतस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेद इति श्रुतेः भगवन्मुखकमलोत्पत्तिस्थानैः छंदःसुपर्णैर्वेदपक्षिभिः नीडं शकुंता इव जातपक्षा इति न्यायेन साम्यं बोध्यं यथा नीडे जातपक्षाः पक्षिणो नीडादुड्डीना इतस्ततः परिभ्रम्य पुनस्तत्रैव प्रविशंति तथा वेदा अपि त्वन्मुखादुद्गतास्त्वय्येव पर्यवस्यंतीत्यभिप्रायः । एवंविधैः छन्दःसुपर्णैः विविक्ते निःसंगे मनसि ऋषयः मार्गंति परिशीलयंति वेदोक्तकर्मज्ञानोपासनाप्रवृत्तियोगैर्यत्परिशीलयंति तत्पदारविंदं वयं प्रपन्ना इत्यन्वयः ॥ ४० ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

गंधाख्यो गुणो यस्यास्तां गंधगुणकार्यामित्यर्थः ॥ ३५ ॥ ❀ ❀ विशेषगुणत्वाच्छब्दादयो नभआदिव्यावर्तका इति यद्वैशेषिकमतं तन्निराकरोति भूतानामिति । नभआदीनां भूतानां मध्ये यद्यत्परात्परस्मात्पूर्वस्मात्परं पश्चात् यद्द्वाव्यमुत्पाद्यं तेषां परानुसंसर्गात्पूर्वेषां कारणानामुत्तरोत्तरकार्येषु अनुप्रवेशाद्यथासंख्यं एकद्वित्रादिसंख्याविशिष्टान् शब्दादीन् गुणान् विदुः, वैशेषिकादितरे इति शेषः ॥ ३६ ॥ ❀ ❀ ब्रह्मांडोत्पत्तिप्रकारं वक्तुं महदाद्यभिमानिदेवानां स्तुतिप्रकारं कथयति एते देवा इति । ये महदाद्यभिमानित्वेन हरिणा सृष्टा एते ब्रह्मादयो देवा विभुं प्रोचुरित्यन्वयः । कीदृशाः विष्णोः कलाः भिन्नांशाः कालनिमित्तेन मायानिमित्तेनांशनिमित्तेन च लिंगं शरीरमेषामस्तीति कालमायांशलिंगिनः । अत्रैकस्यैव विरिंचस्य कलांशाभिमानिरूपद्वयमस्तीति ग्राह्यं 'कालजीवाभिमानेन रूपद्वंद्वं चतुर्मुख' इति वचनात् स्तुतौ निमित्तमाह नानात्वादिति । नानात्वादश्लिष्टत्वात् स्वक्रियायां ब्रह्मांडोत्पादनक्रियायामनीशा असमर्थाः शिरसि प्रकृष्टोंजलिर्येषां ते तथा ॥ ३७ ॥ ❀ ❀ किमूचुरिति तत्राह नताः स्मेति । ते तव प्रपन्नानां पुंसामाध्यात्मिकादितापोपशमायातपत्रमिव स्थितं आतपात् त्रायत इत्यातपत्रछत्रं न केवलं तात्कालिकतापनिवारणपटु अनादिसंसारदुःखनिवारणसमर्थमिति भावेनाह यन्मूलेति । यत्पदारविंदमेव मूलकेतमधिष्ठानं गृहं येषां ते तथा यतयो निर्जितेंद्रियग्रामा अंजसा ऋजुमार्गेण संसाराख्यं दुःखं हृदयग्रंथिलक्षणं बहिरुत्क्षिपंति निर्मूलयन्ति ॥ ३८ ॥ ❀ ❀ ईश ! अणिमादिपूर्णैश्वर्यमूर्त्ते ! अस्मिन् भवे संसारे जीवा बंधमोक्षोपायभूतपादरविंदमृते तत्सेवां विना आत्मन्नात्मनि शर्म न लभंते यदतो भगवंस्तवांघ्रिच्छायायाः ब्रह्मविद्यायाः अंशविद्यामेकदेशविद्यामाश्रयेम । ब्रह्मविद्या हरेश्छाया तदंशो हि सुरेष्वपि सर्वेविद्याश्रयः प्रोक्तः प्रधानांशश्चतुर्मुखः । इति वचनात् योग्यतातारतम्यमपेक्ष्यांशविद्यामित्युक्तमनेन व्यतिरेकन्यायो दर्शितः ॥ ३९ ॥ ❀ ❀ इतोपि भगवत्पदज्ञानमेव स्वाभीष्टसाधनमिति भावेन स्तुवंति मार्गंतीति । ऋषयो ब्रह्मादिज्ञानिनो विविक्ते स्थित्वा मुखपद्मनीडैः मुखपद्ममेव नीडं येषां ते तथा तैः, छंदांसि वेदा एव सुपर्णाः पक्षिणस्तैः । ते तव यत्पदं मार्गंति अन्विच्छंति विचारयंति अद्यापि मृगयंत इति वा यच्च यस्माच्च प्रपन्नानामघमर्षः दुःखनाशः स्यात् यच्च द्युसरितो धरायाश्च परं पदं वयं तीर्थपदस्ते तव पदं प्रपन्ना इत्यन्वयः ॥ ४० ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

तदेवं पादत्रयार्थो दर्शितः योऽवशिष्येत सोऽस्म्यहमिति तु भगवानेक आसेदमित्यनेनैव दर्शितः । एवं प्रथमश्लोकार्थज्ञानं दर्शयित्वा द्वितीयश्लोकार्थं विज्ञानं वक्ष्यमाणतया त्यक्त्वा परात् परोऽप्यसौ भक्तिवशः स्यादिति रहस्यतत्साधनज्ञाप-

कतृतीयचतुर्थश्लोकार्थं दर्शयति एते देवा इत्यादिना इति तासां स्वशक्तीनामित्याद्यन्तेन ग्रन्थेन। विष्णोः कला विभूतयः कालादयो लिंगञ्च शरीरं सहायत्वेन विद्यन्ते येषां ते अत एव प्राञ्जलयः प्रोचुरिति ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ❀ ❀ मार्गन्तीति यस्य यत्पदं मार्गन्ति तस्य ते तत्पदं वयं प्रपन्ना इति योज्यम्। नीडमार्गिणोऽपि पदस्थानीयं वृक्षमूलमेव प्रपद्यंत इति भावः ॥ ४० ॥

## श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी।

संसृष्टं संयुक्तम् ॥ ३५ ॥ ❀ ❀ हे भव्य! विदुर! भाव्येति पाठे भाव्यं कार्यं नभआदीनां मध्ये यद्यदवरं वाय्वादिकं तेषां कार्याणां परैः कारणैरनुसंसर्गात् अन्वयात् या या संख्या तया गुणान् विदुरिति यथासंख्यमिति वीप्सायामव्ययीभावः। तेन वायोरेकं नभ एव कारणमिति स्वस्य कारणान्वितत्वे द्वित्वसंख्येति द्वौ शब्दस्पर्शौ गुणौ एवं तेजसो द्वौ नभोवायुकारणे इति तदन्वितत्वे स्वस्य त्रित्वसंख्येति त्रय एव गुणाः। एवमम्भसश्चत्वारः पृथिव्याः पञ्च ॥ ३६ ॥ ❀ ❀ नन्वेते महदहंकारादय एव स्वैर्गुणैर्बद्ध्वा स्वर्गनरकादिषु मुहुः क्षिपन्तो जीवान् संसारयन्ति तदमी निर्हेतुद्रोहिणः सर्व्वथा विध्वंसनीया एवेति, मैवं वादीरेते निर्हेतूपकारिणः प्रत्युतार्हणीया एव। तथाहि मोक्षसाधनानि ज्ञानयोगनिष्कामकर्म्माणि एतैर्विना न सिद्ध्यन्ति तथा प्रेमसाधनानि श्रवणकीर्त्तनस्मरणदास्यसख्यादीन्यपि भगवत्कृपोपव्यञ्जितैरेभिरेव सिद्ध्यन्ति किञ्च परदारपरद्रव्यापहरणे गोब्राह्मणद्रोहादिविविधपातकानि नरकसाधनान्येतैरेव सिद्ध्यन्तीति नैते दूषणीयाः। भागीरथ्या जलं सज्जनानां स्नानपानादिभिः परमपावनममृतमेव कूलस्थेषु तृणगुल्मादिषु धान्यगोधूमादिषु पनसाम्रद्राक्षाकरकादिषु प्रविष्टं सर्व्वविधजनानां परमोपकारकं परमसुखदमपि विषवृक्षेषु प्रविष्टं तेषामेव साक्षान्मारकमिति भागीरथीजलस्य न दोषः। किन्तु तत्तत्कुपात्रस्यैव यथा तथा 'तानहं द्विषतः क्रूरान् संसारेषु नराधमान्। क्षिपाम्यजस्रमशुभान्नासुरीष्वेव योनिषु ॥' इत्यादि भगवदुक्त्यनुसारेण तेषु दुर्जीवेषु स्थितानामेषामधिकृतभक्तानां को दोषः किन्तु तेषामेवेति वस्तुतस्त्वेते परमवैष्णवा एवेत्येतत्कृतया स्तुत्यैवाभिव्यञ्जयितुमाह एते देवा महदाद्यभिमानिनः विष्णोः कला मायाशक्तिवृत्तित्वादित्यर्थः। काललिंगं विकृतिः मायालिंगं विवेकहर्षशोकादि अंशलिंगं चेतना तानि विद्यन्ते येषां ते अतः समत्वेन नानात्वात् परस्परासम्बन्धत्वात् स्वक्रियायां ब्रह्माण्डरचनायामनीशा असमर्थाः प्रोचुः तुष्टुवुरिति तत्त्वानामेषां सहसैव सर्व्वेन्द्रियवत् तनुमत्त्वमतर्क्यया भगवच्छक्त्यैवेति तदिच्छाया अनन्यापेक्षत्वद्योतनार्थमिदं ज्ञेयम् ॥ ३७ ॥ ❀ ❀ आतपत्रं छत्रं यस्य पदारविन्दस्य मूलं तलं केत आश्रयो येषां तथाभूता एव यतयो नान्ये अञ्जसा शीघ्रमेव उरु समूलमेव संसारदुःखं स्वगात्रलग्नं जलौकसमिव बलेन निष्कास्य बहिर्दूरत एव उच्चीकृत्य क्षिपन्ति यथा पुनः स्वसमीपं नायाति अत्र अञ्जसेति उर्व्विति बहिरित्युत्क्षिपन्तीति-पदैस्तदनाश्रितयतयो विलम्बेनैव नापि समूलं तथा क्षिपन्ति यथा तान् पुनः संसारो ग्रसतीति लभ्यते। यद्यपि तदानीं यतयो न वर्त्तन्ते स्म तदपि सर्व्वशास्त्रसिद्धान्तविज्ञतयैव तत्त्वविदस्त्रिकालज्ञास्तथा प्राहुरिति ज्ञेयम् ॥ ३८ ॥ ❀ ❀ नन्वज्ञानमूलकं संसारदुःखं ज्ञानेनैवोपशाम्येदिति ज्ञानिनां किं भक्त्येति तत्राहुः ऋते इति यत्पादभजनं विना अस्मिन् भवे संसारे आत्मन् स्वस्मिन् सम्बोधनं वा शर्म्म न लभन्ते। तत्र हेतुः सविद्यां विद्यया सह वर्त्तमानां तवाङ्घ्रिच्छायायामेव विद्या वर्त्तते नान्यत्रेति भक्त्या विना ज्ञानमेव न सिद्ध्यतीति ते मिथ्याज्ञानिन इति भावः ॥ ३९ ॥ ❀ ❀ किञ्च त्वया कृपया स्वचरणकमलसाक्षात्प्राप्त्यर्थं सुखसोपानद्वयं यन्निर्म्मितं तदाश्रित्य ये त्वच्चरणौ दिदृक्षन्ते त एव बुद्धिमन्तस्त एव वास्तवज्ञानिन इत्याहुः। मार्गन्ति यत् तदेव तीर्थपदस्तव पदं वयं प्रपन्नाः कैर्मार्गन्ति छन्दःसुपर्णैर्वेदपक्षिभिः कीदृशैः तवैव मुखपद्मं नीडं येषां तैः यथा निरास्पदे देशे विश्रामार्थं वृक्षतलान्वेषिणो जना इतस्ततश्चरतां पक्षिणामनुपदं धावन्तः सायं स्वनीडं प्रविशतां तेषामास्पदीभूतस्य वृक्षस्य तलं प्राप्नुवन्ति तथा त्वन्मुखादुद्गतानां पुनस्त्वय्येव पर्य्यवसितानां वेदानां तात्पर्य्यमवधार्य्य तेनैव त्वां भजन्तस्त्वां प्राप्नुवन्तीत्येकं सोपानमुक्त्वा द्वितीयं सोपानमाहुः अघमर्षमघनाशकं उदकं यासां सरितां तासु वराया गंगायाः पदमुद्गमस्थानं अतो गंगामनुसेवमाना अपि तदुद्गमस्थानं त्वत्पदं प्राप्नुवन्तीत्यर्थः ॥ ४० ॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

संसृष्टं समन्वितम्। गंधतन्मात्रद्वारा महीम् आधादसृजत् ॥ ३५ ॥ ❀ ❀ हे भव्य! विदुर! भूतानामाकाशादीनां मध्ये यत् यत् अवरावरम् उत्तरोत्तरं तेषां परानुसंसर्गात् कारणान्वयात् यथासंख्यं गुणान् शब्दादीन् विदुः आद्यस्याद्यः द्वितीयस्य द्वौ तृतीयस्य त्रयः चतुर्थस्य चत्वारः पंचमस्य पंचेति जानंति ॥ ३६ ॥ ❀ ❀ मायायां वीर्यमाधत्तेत्यनेन मायायां महदुत्पादनार्थं सामर्थ्यं भगवद्दृष्टिगोचर इत्यादिभिश्चाहंकाराद्युत्पादनार्थं महदादिषु सामर्थ्यं भगवता संस्थापितम्। अथ ब्रह्मांडोत्पादनसामर्थ्यं महदादिप्रार्थितेन भगवता तेषु नियोजितमित्याह एते देवा इत्यादिना। एते महदादयः

देवाः स्वस्वरूपेण द्योतमानाः विष्णोः कलाः कालः क्षोभकः मायोपादानभूताः अंशो बद्धजीवः लिंगमाकृतिः एतानि विद्यंते येषां ते तथाभूता अपि नानात्वात् स्वस्य सामर्थ्यात् स्वस्वक्रियायां ब्रह्माण्डरचनायाम् अनीशाः सन्तः विभुं प्रोचुः ॥ ३७ ॥ ॐ ॐ हे देव ते पदारविंदं नमो नमस्कुर्मः प्रपन्नतापानामाध्यात्मिकाधिदैविकाधिभौतिकानामुपशमे निराकरणे आतपत्रं छत्रम् अस्य पदारविंदस्य मूलं तलं केत आश्रयो येषां ते यतयो यतनशीलाभक्ता अंजसा सुखेन संसारतापं बहिर्दूरत एवोत्क्षिपंति परित्यजंति उपायोपेयरूपो भगवानेवेति बुद्ध्या भगवंतं शरणं गतः प्रपन्नः उपेयो भगवान् तदर्थं ज्ञानभजनाद्युपायपरो भक्त इति भेदः ॥ ३८ ॥ ॐ ॐ ननु प्रपन्नः त्रिविधतापोपशमार्थमन्यमुपायं न जानंति कमित्यत्रोपायांतराभावमाहुः ऋते इति अस्मिन् भवे संसारे यत् पदारविंदं ऋते तापत्रयेणाभिहताः जीवा भक्ताः शर्म सुखं न लभंते। प्रपन्नानां प्रपत्तव्यं भक्तानां भजनीयं त्वत्पदारविंदादन्यन्नेत्यर्थः। अतो वयमपि तवांघ्रिकल्पतरोः शरणागतिरूपां छायां आश्रयेम सविद्यां विद्योपासना-तत्सहितां त्रिभिः संबोधनैः सर्वनियंतृत्वसर्वात्मत्वस्वाभाविकषड्गुणाश्रयत्वादयो भगवदसाधारणाः गुणाः दर्शिताः ॥ ३९ ॥ ॐ ॐ विविक्ते एकान्ते ऋषयः मुखपद्मं भवदीयमुखारविंदं नीडं येषां तैश्छंदःसुपर्णैः शोभननीडाश्रयभूते भगवत्येव प्रतिपादकत्वेन पर्णं पतनं येषां तैर्वेदैर्यस्य भगवतः यत्पदं मार्गंति केवलमन्वेषयंति तस्यैव ते तदेव पदं वयं प्रपन्नाः शरणं गताः कथंभूतम् अधमर्षाणि पापापहानि उदकानि यासां सरितां तासु वरायाः गंगायाः पदमुत्पत्तिस्थानम् ॥ ४० ॥

## श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

ज्योतिषाऽनुसंसृष्टमम्भो दत्तसामर्थ्यं जलम्। गन्धगुणां महीमिति पूर्ववत्। प्रथमतो गन्धतन्मात्रम्, तस्मान्मही ॥ ३५ ॥ तेषां धर्मानाह भूतानामिति। नभ आदिर्येषाम्, वायुप्रभृतीनां मध्ये यदेवोत्तरोत्तरमग्रे भाव्यं तदेवाऽधिकगुणम्। तत्र हेतुः—तेषां परानुसंसर्गादिति। कारणानुसंसर्गात्। यथासङ्ख्यं संख्यामनतिक्रम्य। आकाशस्यैको गुणः शब्दः, वायोर्द्वयं शब्दस्पर्शौ, तेजसस्त्रयः शब्दस्पर्शरूपाणि, अम्भसश्चत्वारः शब्दस्पर्शरूपरसाः, पृथिव्याश्चाऽधिको गन्धः। विदुरिति प्रमाणम् ॥ ३६ ॥ ॐ ॐ एतेषां तत्त्वानां चेतनानां कार्यौपयिकरूपसिद्ध्यर्थं भगवद्भजनमाह—एते देवा इति। देवेन्द्रियाणामैक्यविवक्षायां दशत्वम्, भूततन्मात्राणि च दश, महदहङ्कारमनांसि त्रीणि, एवं प्राकृतिकस्त्रयोविंशतिको गणः। सामान्यनिर्देशात् कालमायादयोऽपि स्तोत्रं कुर्वन्तीति ज्ञायते। सर्वे देवा विष्णोर्भगवतः कलाः, धर्मा इत्यर्थः। कालमायांशाः लिङ्गानि वर्तन्ते येषामिति, हेतुसहिता अपि गुणत्रयकार्यरूपत्वात् भिन्नभावं प्राप्ताः। अतो नानात्वाद्भिन्नभावात् स्वक्रियायां ब्रह्माण्डनिर्माणे अनीशाः सन्तः। त्रिविधत्वादमेलनम्। प्रत्येकं त्वसमर्थाः। अतो विभुं समर्थम्, प्राञ्जलयो भूत्वा प्रोचुः, स्तुतिं कृतवन्त इत्यर्थः। एतेषां देहवचनादिकं विचार्यते। तत्त्वान्येतानि भगवद्भावभूतानि। भावो नाम सर्वान् प्रति सामान्यकारणता। भगवतः कारणता पञ्चविंशतिप्रकारेण जातेत्युक्तं भवति। भावप्राधान्येन धर्मिणोऽप्राधान्यात्, सच्चिदानन्दरूपाण्यपि तिरोहितरूपाणि भवन्ति। यावद्धर्ममात्रप्राकट्यं भगवता क्रियते तादृशा[१] एव भवन्ति। भगवतः सर्वतःपाणिपादत्वात् यदंश एते प्रतिरू[२]पतया निर्गताः, तत्र सर्वत्रैव कारण[३]प्रतिरूपहस्तपादादीनां विद्यमानत्वात्, तैरेव तेषां व्यवहारः। शरीरं तूत्पन्नमेव। अभिमानिनोऽपि चिदंशा देवविशेषाः अत एव ना[४]ऽधिकबलत्वम्। वेदे तु तत्त्वस्थानीयः प्रजापतिरेवेति, समष्ट्यनन्तरमेव तत्रत्यानां पदार्थानां निरूप्यमाणत्वात्। 'द्वया ह प्रजापत्याः' इत्यत्राऽपि सृष्टिभेदेन उभयविधेन्द्रियाण्यपि [५]तत्र सन्तीति, तेषामपीदमेव रूपमिति, 'चक्षुरुदगायत' इत्यादि संगच्छते। यथाऽत्र महत्तत्त्वम्, तथा वेदे प्रजापतिः; यथाऽत्र पुरुषः, तथा विराट्, यथा भगवान्, तथा यज्ञः, तथा कालः, तथा परमेष्ठी; यथा माया, तथा तेषां प्रयत्न इति उत्तरकाण्डे तु यज्ञस्थानीयं ब्रह्म। यथाऽत्र भगवत्स्तुतिः, तथा तत्रोद्गीथः, अधिदैविकत्वात्तेषामस्मदादीन्द्रियनियामकत्वेनोच्यन्ते, अन्यथा दोषगुणादिनियमा भगवदाज्ञा च प्रत्येकं कर्तव्या स्यात्। अतो भगवदिन्द्रियप्रतिरूपेन्द्रियाणां तत्त्वेषु विद्यमानत्वात् वि[६]सर्गे जीवेष्वपि तथात्वात्, न काऽप्यनुपपत्तिः ॥ ३७ ॥

सृष्टौ तु साधकं रूपं भक्त्यादेर्विनिरूप्यते। तत्त्वादिस्तोत्ररूपेण सर्वलीलासु तत्स्थितौ ॥ १ ॥
तत्त्वैस्तु भक्तिनिर्द्धारो ज्ञानस्य ब्रह्मणा तथा। ऋषिभिर्यज्ञनिर्धारस्त्रितयं सृष्टिहेतुकम् ॥ २ ॥
भगवत्कार्यसिद्ध्यर्थम्, कामादिरहितं [७]तथा। साधकं नाऽन्यथारूपमित्यग्रे नाश उच्यते ॥ ३ ॥
कालप्रयुक्ता भक्तिर्हि त्रयोदशविधा यतः। अन्यथा सृष्टिकरणं शुद्ध्या नैव तद्भवेत् ॥ ४ ॥
भक्तिप्रपत्ती प्रत्यक्षं भक्तिज्ञाने परोक्षतः। सात्त्विकीयं समाख्याता वासन्तग्रैष्मभावतः ॥ ५ ॥

---

१. मूले 'देवा' इत्युक्तत्वात् पुँल्लिङ्गनिर्देशः. २. प्रतिनिधिरूपतया. प्र. ३. कालात्मकप्रतिरूपाणां मूलेन्द्रियाणाम्. प्र. ४. 'कानीयसा एव देवाः. इति श्रुत्युक्तं न्यूनबलत्वम्. प्र. ५. प्रजापतौ. प्र. ६. मोक्षसाधकम्. प्र. ७. आद्ययोश्छायेच्छाबोधनाद्वसन्तभावः. द्वितीययोः सरित्प्रकथनाद् ग्रैष्मभावो बोध्यः. प्र. ।

राजसे भक्तिराहित्यात् [1]तदर्थं प्रार्थना [2]पुरा। शरणाऽऽगमनं [3]पश्चान्निन्दया साधनं फले ॥ ६ ॥
तामसे ज्ञाननिन्दातः परोक्षे भजनं स्तुतम्। भगवत्कार्यराहित्यहेतूक्त्या [4]स्वस्य साधनम् ॥ ७ ॥

भगवत्प्रार्थना प्रोक्ता द्विवि[5]धा सा निगद्यते। तत्र प्रथमं सात्त्विकीमुत्तमां भक्तिं [6]प्रत्यक्षे निरूपयति—नमामेति। नमनातिरिक्तस्य प्रत्यक्षे भजनस्याऽभावात्, 'नमो नम एतावत्सदुपशिक्षितम्' इति वाक्याच्च, स्वामिन्, ते चरणारविन्दं नमामेत्याहुः। नमने हेतुरूपमाह—देवेति। यत्रैव देवरूपता प्रतिभाति, स एव नमस्यः। गुर्वादिष्वपि देवत्वमेव नमनप्रयोजकम्, गुरुत्वं तु परिचर्यायाम्। तच्च नमनं त्रिविधम्, लौकिकम्, वैदिकम्, भक्तिमार्गस्थितं च। तत्रेदं भक्तिमार्गस्थितमिति ज्ञापयितुमाह—पदारविन्दमिति। चरणस्य सुसेव्यतां बुद्ध्वा स्नेहेन यन्नमनं चरणारविन्दे, सा भक्तिः। यद्रूपस्य नमनं तद् द्वैधम्, यत्तद्गतधर्माणामैश्वर्यादीनां नमनं तल्लौकिकम्। अनाविर्भूतरूपस्य नमनादरविन्दमित्येकवचनम्। सगुण[7]त्वात्, सृष्ट्यौपयिकत्वात्, सामर्थ्ये क्लेशाभावस्य सहकारित्वात्, क्लेशनिवारकत्वं चरणारविन्दस्य प्रकारद्वयेन निरूप[8]यति प्रपत्तिभक्तिभेदेन। तत्राऽपि प्रपत्त्याधिकारिणस्त्यागाऽसमर्थाः, भक्त्यधिकारिणस्तु त्यागसमर्था इति। अतः प्रथमं तापनिवारणरूपमाह—प्रपन्नतापोपशमातपत्रमिति। प्रपन्नानां शरणागतानां येऽन्तर्बहिस्तापाः, तदुपशमार्थं निकट एव दूरीकरणार्थम्, भगवच्चरणारविन्दमातपत्रं भवति। आतपात् त्रायत इति भगवच्चरणारविन्दं ध्रुवस्येव प्रपन्नस्योपरि तिष्ठति। अनेन यत्र क्वचिदपि स गच्छति, तत्रैव तच्चरणारविन्दं तापं दूरीकुर्वदेव गच्छतीति भक्तवश्यता चरणधर्मो निरूपितः। कालकृतोऽयं ताप इत्यातपत्रत्वैव निरूपिता। स्वभावकृते तु अमृतत्वादि निरूपयति, कर्मकृते तु अगदादिभावेन निरूपयति। प्रपन्नार्थं भगवान् स्वयमागच्छति सह गच्छतीत्यप्युक्तम्। सर्वतो विरक्तान् भक्तान् प्रति चरणमाहात्म्यमाह—यन्मूलकेता इति। यस्य चरणस्य मूलमधोभागः। भगवच्चरणारविन्दाध एव सर्वदा तिष्ठन्ति, न गृहवृक्षाद्यधः, ते मूलकेताः। निकेतनं केतः, स्थानमिति यावत्। यथेच्छव्यवहाराभावादनुपसर्गः। तर्हि तदर्थमन्यद्ग्रहं कर्त्तव्यमिति चेत्, पञ्चाग्नितपोवत्। तत्राऽऽह—यतय इति। भगवन्मार्गे प्रयत्नवन्तः। तत्र पूर्वावस्थात्यागः पूर्वाङ्गम्, तावन्मात्रपर्यवसिताः सालावृकभक्ष्या एव भवन्ति। त्यागासामीचीन्ये तु पाखण्डित्वमेव। ये तु भगवदर्थं यतयः, ते अञ्जसा अनायासेनैव उरु अधिकं संसारदुःखं क्षुत्पिपासादिकृतं वहिरुत्क्षिपन्ति। पारलौकिकं च व[9]हिरेव वर्तत इति मूलकेतानां तन्निवृत्तमेव। अतः सर्वपुरुषार्थरूपत्वाच्चरणारविन्दस्य, तन्नमामेति मुख्यो हेतु[10]र्निरूपितः। येषामर्थे भगवान् समागतस्ते त्रिविधा निरूपिताः, भगवदीयाः प्रपन्नाः, भक्ताश्च ॥ ३८ ॥ ❀ ❀ अन्यार्थमागतं ये भजन्ते, तेषां स्वरूपं कथयन्तो मध्यभावेनाऽऽश्रममाहुः—धातरिति। अन्या[11]र्थं सृष्ट्यर्थं समागत इति ज्ञापितम्। धाता विधाता, कर्ता; पितेत्यर्थः। अस्मिन् भवे संसारे यद्यस्माद्धेतोः जीवास्तापत्रयेणाऽभिहता एव भवन्ति, शर्म क्वाऽपि न लभन्ते। ईशेति संबोधनं तद्दूरीकरणसामर्थ्यार्थं प्रथमत एव निरूपितम्। एकेनाऽपि तापेनाऽभिहतः स्वाभावि[12]कं शर्म न प्राप्नोति, शर्मान्तरस्य च का वार्त्ता? त्रयेण त्वभिहतः सुतरामेव न शर्म प्राप्नोति। अतो वयं प्रथमत एव, संसारे प्रवेशमकृत्वैव, तवाऽङ्घ्रेश्छायामेवाऽऽश्रयेम। प्रार्थनायां लिङ्। भगवन्निति संबोधनं सर्वतापनिवृत्तिपूर्वकसर्वेष्टसिद्धिनिरूपणार्थम्। छायया वहिस्तापो गच्छति। अन्तस्तापनिवारणार्थमाह—सविद्यामिति। यथा सजलं छत्रं भवति। छाया प्राधान्यं भगवदभिप्रायप्राधान्यार्थम्। सूर्यादिवशात् कदाचिच्छाया चरणारविन्ददेशादन्यत्र पतति, तदाऽन्यत्र स्थितैरेवाऽऽश्रयः कर्त्तव्य इति। अङ्घ्र्यधस्तात्तु घर्म एव भवति। निकटे न स्थातव्यमिति भगवदिच्छायां निकटे न स्थातव्यमिति भावः। साम्प्रतं तथात्वात् वयमतो हेतोश्छायामेवाश्रयेम। विद्या उपासना, ज्ञानं वा। भगवद्गुणानुसन्धानेन वा, भगवत्परिचर्यया वा क्वचित्स्थातव्यमित्यर्थः। एवं साक्षाद्भगवत्संबन्धे भक्तिप्रपत्ती निरूपिते ॥ ३९ ॥ ❀ ❀ तथाऽनधिकारे परोक्षे गङ्गातीरे स्थित्वा, श्रुतितात्पर्यं विचार्य; भगवच्चरणानुसंधानं कुर्वाणेन स्थातव्यमित्याह—मार्गन्तीति। यद्यस्मादृषयो मन्त्रद्रष्टारः। ते मुखपद्मनीडैश्छन्दःसुपर्णैः ते पदं मार्गन्ति विचारयन्ति। वेदा हि गरुडप्रायाः पक्षिणः तेषां मूलस्थानं भगवतो मुखपद्ममेव। यथा पद्मे मकरन्दादिपानार्थमागन्तुका अपि पक्षिणस्तिष्ठन्ति। एतेषां तु तन्नीडमेव। ते हि तत्रैव लब्धजन्मानस्तत एवोद्गच्छन्ति। अन्यत्र चरन्तोऽपि नीडतात्पर्या एव ते। छन्दसां सुपर्णत्वं श्रुतिसिद्धमेव। 'छन्दांसि रथो मे भवत' इत्यत्र तेषामेव रथत्वम्, 'छन्दांसि सौपर्णेयाः' इति श्रुतेः। सुपर्णपदेन च गरुडरूपतया भगवत्समारूढा एव ते लोके प्रचरन्ति, यज्ञरूपं भगवन्तं लोके बोधयन्तीति। ऋषयो हि मन्त्रद्रष्टारो भगवन्मन्त्रं जानन्ति। एवंप्रकारेण गङ्गातीरे स्थितौ भगवान् स्वपदं प्रापयिष्यतीति। अत एव एकान्ते एकाकिभिरेव स्थीयत इत्यर्थः, बहूनां प्रापणाभावात्। यस्येति प्रसिद्धस्य ते। तीर्थपदः तीर्थानि पादे यस्य। प्रसिद्धत्वान्न सन्देहः। तीर्थपदत्वात् सर्वपापक्षयहेतुत्वमधिकारसिद्धये। तीर्थपदत्वमेवोपपादयति अघमर्षोदसरिद्वरायाः पदमिति। अघस्य

---

१. स्मृत्याद्यर्थम् प्र.। २. प्रथमश्लोके. प्र.। ३. तृतीये. प्र.। ४. तस्य ग.। ५. परिपानसहदानभेदेन द्विविधा. प्र.। ६. उचितामिति शेषः. प्र.। ७. हेतुद्वयं वक्तृगतं 'प्रकारद्वयेन' इत्यनेन संबध्यते. प्रकाशः.। ८. न्यासः. प्र.। ९. बाहिर्मुख्ये. प्र.। १०. नमने हेतुः. प्र.। ११. अन्यार्थमित्यस्यैव विवरणं सृष्ट्यर्थमिति. प्र.। १२. मूलस्थस्य 'आत्मन्' इत्यस्य विवरणं स्वाभाविकमिति. प्र.।

पापस्य मर्षो येन तादृशमुदमुदकं यस्याः, तादृशी या सरिद्वरा गङ्गा, तस्याः पदं स्थानमिति पदविशेषणम्। गङ्गातीरे तीरे गमने पदपर्यन्तं गच्छति। वेदानां च पुनस्तात्पर्ये विचार्यमाणे भगवत्पदं जानन्ति। जलेन पापनाशनमानुषङ्गिकफलत्वेनोक्तम्। चरणादन्यत्र गच्छन्त्यपि गङ्गा वेदवत्पुनस्तत्रैव प्रवेक्ष्यतीति वेदानां दृष्टान्तार्थे निरूपितम्। माहात्म्यं च यथा गङ्गायाः पदसंबन्धात् एवं वेदप्रामाण्यमपि भगवत्प्रामाण्यादेव। 'मन्त्रा[1]युर्वेदवच्च तत्प्रामाण्यमाप्तप्रामाण्यात्' इति स्मृतेः ॥ ४० ॥

## श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

एते देवा इत्यत्र। ज्ञानकर्मणोर्देवतेन्द्रियगोलकाधीनत्वात् प्रकृतदेवानां त्रितयस्याप्यसिद्धत्वात् स्तुतिः कथं सङ्गच्छत इत्याकाङ्क्षायां तदुपपादनं प्रतिजानते—एतेषामित्यादि। तत्र पूर्वं साङ्ख्याद्विलक्षणमेषां स्वरूपमाहुः—तत्त्वानीत्यादि। सामान्यकारणतेति। तेन सत्तासामान्यं धर्मान्तरं वा। तथा च यत्समाससाङ्ख्ये अष्टौ प्रकृतयः, षोडशविकारा इत्यारभ्य समाप्तौ एतत्परं याथातथ्यमित्युपसंहारादनारोपितरूपत्वेनैतेषां तत्त्वता रूढा बोधिता, साऽत्र नाऽभिप्रेता, किन्तु तस्य भावस्तत्त्वमिति यौगिक्यभिप्रेता, सा चैवंरूपा तु वैयाकरणप्रतिपन्नेत्यर्थः। नन्वेवं भगवद्भावरूपत्वे सच्चिदानन्दात्मकदेहादिकं सिद्धमेवेति काऽनुपपत्तिरित्यत आहुः—भावेत्यादि। तर्हि सच्चिदानन्दतिरोभावे कः प्रकार एतेषु शिष्ट इत्यत आहुः—यावदित्यादि। तादृशा इति। मूले देवा इत्युक्तत्वात् पुलिङ्गनिर्देशः। तथा च तत्त्वत्वजडत्वादिरूपसामान्यधर्मस्य मायात्वादिरूपविशेषधर्मस्य प्राकट्यमेतेषु क्रियत इति तावन्मात्रधर्माणो भवन्ति। किं बहुना, संदे'शोऽपि ( ? ) तेषु सत्ताख्यधर्मरूपेणान्तःप्रविष्ट इति तद्योगेनैते सन्तो न तु स्वरूपत इत्येवंरूपा भवन्तीत्यर्थः। तर्हि कथं देहवचनादिकं तत्राहुः—भगवत इत्यादि। प्रतिरूपतयेति। प्रतिनिधिरूपतया। कारणप्रतिरूपेति। कारणात्मकप्रतिरूपाणां मूलेन्द्रियाणाम्। तथा च तत्र यानि गोलकापन्नानि तान्यत्रेन्द्रियाणीत्यर्थः। एवमत्रेन्द्रियगोलकयोः सत्ता विचारिता। देवतासत्तां विचारयन्ति—अभिमानीत्यादि। नन्वभिमानिनां देवत्वे किं मानमित्यपेक्षायां धर्म एव मानमित्याहुः—अत एवेत्यादि। नाधिकबलत्वमिति। "कानीयसा एव देवाः" इति श्रुत्युक्तं न्यूनबलत्वम्। तथा चेदं देवत्वगमकमित्यर्थः। ननु श्रुतौ प्राजापत्यानुपक्रम्य पाठेनाऽत्र तदभावतस्तया वक्तुमशक्तत्वान्नेदं गमकमिति शङ्कायां तथात्वमुपपादयन्ति वेदे त्वित्यादि। तत्रेति। प्रजापतौ। तथा च तत्र तत्त्वाभावेऽपि चक्षुरादीनामुद्गानविचारे तेषामप्यभिमानिदेवतेन्द्रियगोलकान्यास्थेयानि। तत्र गोलकेन्द्रिययोः पूर्वोक्तरीत्या कल्पनां कृत्वा देवतास्थलेऽभिमानिन एव तथात्वेन कल्पनीयाः। अतो न्यायसाम्यात् तत्र सिद्धं न्यूनबलत्वमत्राऽपि कार्यकरणाशक्त्या व्यक्तीभवत्सुखेनाभिमानिषु देवत्वं गमयिष्यतीत्यर्थः। न्यायसाम्यं स्फुटीकुर्वन्ति—यथात्वादि। तेषां प्रयत्नत वेदघटितपात्रवत्सृष्टिरिति प्रजापत्यादीनां चतुर्णां प्रयत्ने जगदाकारप्रयोजक इत्यर्थः। ननु तेषु यद्यभिमानिनां जीवानामेव स्वदेहेन्द्रियनियामकत्वम्, तदा तद्वदस्मदादिदेहेष्वपि तैरेवेन्द्रियैरभिमानिना च कार्यसिद्धेः किं तेषां नियामकत्वकल्पनेनेत्यत आहुः आधिदैविकत्वादित्यादि। अस्मदिन्द्रियमूलभूतेन्द्रियात्मकदेवदेहाभिमानित्वात्तथोच्यत इत्यर्थः। ननु यदि तेषामेवं नियामकत्वम्, तदाऽस्मदिन्द्रियाभिमानित्ववद्देवान्तरसर्वेन्द्रियाभिमानित्वमपि स्यादित्यत आहुः—अन्यथेत्यादि। यद्येवं स्यात् तदा कनीयस्त्वज्यायस्त्वकृताः सौम्यत्वोच्छृङ्खलत्वादयो गुणदोषाः, सर्वेन्द्रियनियमनं च प्रत्येकं स्यात्। भगवदाज्ञा च सृष्टिकृतिविषयिणी प्रत्येकं स्यात्। सर्वेषु सर्वसामर्थ्येन प्रत्येकमण्डनिर्माणे शक्तत्वात् यतो नैवमतः स्वदेहमात्र एव तेषां तथात्वम्, अन्यत्र तु अनियतकार्यकर्तृत्वमेवेत्यर्थः। सिद्धमाहुः—अत इत्यादि। विसर्गे जीवेष्विति। पुरुषादुत्पन्नेषु ब्रह्माण्डस्य ब्रह्मादिदेवानां देहेषु। न काप्यनुपपत्तिरिति। तदिन्द्रियदेवतयोस्तेषामस्मदादीनां वैलक्षण्ये चाऽनुपपत्तिर्नेत्यर्थः।

एवं तत्त्वानां वचनादिकं विचार्य तत्कर्तृकस्तुतेस्तदनुप्रसङ्गेन ब्रह्मकृतर्षिकृतवक्ष्यमाणस्तुत्योश्च तात्पर्यं वदिष्यन्तः प्रस्तूयमानस्यार्थस्य प्रकृतोपयोगायाहुः—सृष्टौ त्वित्यादि। तुः सृष्टिसामर्थ्येऽपेक्षिते भक्त्यादिनिरूपणं किं प्रयोजनमिति शङ्कानिरासे। सृष्टौ भक्त्यादेः सकाशात् यन्मोक्षसाधकं तत्तत्त्वादिस्तोत्ररूपेण निरूप्यते। तु पुनः स्थितौ सर्वासु लीलासु तत् निर्धारत्रयं सृष्टिहेतुकमतस्तैस्तस्थितेः सृष्टेश्च मोक्षसाधकरूपनिरूपणाय भक्त्यादिकथनमित्यर्थः। रूपस्वरूपमाहुः—भगवदित्यादि। तथेति। मोक्षसाधकम्। तत्र गमकमाहुः साधकमित्यादि। भक्त्यादौ कामादिसाहित्यस्य दोषत्वादेवाऽग्रे कर्मादिनाश उच्यते। अतस्तद्रहितमेव तद्रूपं तथेत्यर्थः। भक्त्यादिकथनप्रयोजनमुक्त्वा श्लोकसङ्ख्यया निर्धार्य तत्स्वरूपमाहुः—कालेत्यादि। यतो ब्रह्मकल्पीयसृष्टिप्रकाराद्भिन्नप्रकारेणाऽत्र सृष्टिकरणं तच्च शुद्धया भक्त्या नैव भवेदतः सा कालप्रयुक्ता त्रयोदशविधा निर्धार्यत इत्यर्थः। आद्यानां चतुर्णामर्थमाहुः—भक्तिप्रपत्ती इत्यादि। आद्ययोश्छायेच्छाबोधनाद्वसन्तभावः; द्वितीययोः सरित्प्रकथनात् ग्रैष्मभावो बोध्यः।

---

१. मन्त्रायुर्वेदेति स्मृतिस्तु पतञ्जलेर्गौतमस्य वा सूत्रभूता बोध्या. प्रकाशः. ।

अग्रिमाणां चतुर्णामाहुः—राजस इत्यादि। पुरा प्रथमश्लोके। तदर्थं स्मृत्याद्यर्थं प्रार्थना। पश्चात्। तृतीये इतरनिन्दया शरणागतिसाधनम्, चतुर्थे ज्ञानवैकुण्ठप्राप्तिरूपं फलद्वयमित्यर्थः। अत्राद्योक्ता प्रार्थनाऽन्तिमोक्तं फलं च राजसत्वगमकम्। आद्ययोर्मेघवदागमननिकटवसन्तभावबोधकं ज्ञेयम्। तदग्रिमाणामा(?)दूरत्वकथनं वर्षाभावबोधकम्। अन्त्ययोः पदन्यास-विलासानुगमनकथनं शरद्भावबोधकं ज्ञेयम्। तदग्रिमाणामाहुः—तामस इत्यादि। अत्राद्ये ज्ञाननिन्दा तामसत्वबोधिका। अग्रिमेषु तु ज्ञानाभावः। अत्राद्ये बलस्याऽग्रे वियुक्तासामर्थ्यस्य कथनं हेमन्तभावस्य, ततोऽन्नादनगर्भाधानस्य कथनं शिशिरभावबोधकं ज्ञेयम्। त्रयोदशस्याहुः—मलवदित्यादि। द्विविधेति। परिपानसहदानभेदेन द्विविधा। अत्र प्रार्थनावाक्यस्या-न्यत्रान्वयः। संसर्पन्मलत्वबोधकम्। द्वैविध्यं चांहस्पतिसङ्ग्राहकम्। तस्य क्षयरूपत्वाच्च न सङ्ख्याधिक्यमिति ज्ञेयम्॥ ३७॥ ❀ ❀ नमामेत्यत्र। प्रत्यक्ष इति। उचितामिति शेषः। अत्रोक्तस्य पदार्थस्वरूपस्य स्थितिलीलारूपयोगात्। तत्र तत्र तद्बोधयितुं विवेचयन्ति—यत्रेत्यादि। एवं नमनादिस्वरूपेऽपि बोद्धव्यम्। सगुणत्वादित्यादिहेतुद्वयं वक्तृगतं प्रकारद्वयेनेत्यनेन संवद्ध्यते। निरूपयतीति। व्यासो निरूपयति। यतिशब्दोऽत्र योगरूढ इति बोधयितुमाहुः—भगवन्मार्गं इत्यादि। संसारदुःखमारं-भदशायामेवेति ज्ञापनायाहुः—बहिरित्यादि। बहिरिति। बाहिर्मुख्ये। हेतुरिति नमने हेतुः। येषामित्यादिफक्किकार्थो नवरत्ने "अज्ञानादथवा ज्ञानात्" इत्यत्र अनुसन्धेयः॥ ३८॥ ❀ ❀ धातरित्यत्र। अन्यार्थमित्यस्यैव विवरणम्—सत्यर्थमिति। मूलस्थस्य आत्मन्नित्यस्य विवरणम्—स्वाभाविकमिति। आत्मनि विद्यमानमित्यर्थः। अङ्घ्रिमाश्रयेमेत्यनुक्त्वा छायामाश्रयेमेति यदुक्तं तत्तात्पर्यमाहुः—छायाप्राधान्येत्याऽन्यभाव (?) इत्यन्तम्। साक्षात् सम्बन्ध इति। उचित इति शेषः॥ ३९॥ ❀ ❀ मार्गन्तीत्यत्र। पद्मपदतात्पर्यमाहुः—यथा पद्म इत्यादि। छन्दसां सुपर्णत्वनिरूपणं तत्त्वानामप्युपयोगीति ज्ञापनार्थम्। तेषां प्रजापतिस्थानापन्नत्वज्ञापनार्थं चाहुः—छन्दांसि मे रथ इत्यादि। श्रुतिस्तु तैत्तिरीयब्राह्मणे। छन्दांसि मे रथो भवतेति, सोऽब्रवात्प्रजापतिः युष्माभिरहमेतमध्वानमनुसञ्चाराणीति। तस्य गायत्री च जगती च पक्षावभूताम्, उष्णिक् च त्रिष्टुप् च अनुष्टुप् च पंक्तिश्च धुर्यौ बृहत्येवेद्धिरभवत्। स एव छन्दोरथमास्थाय, एतमध्वानमनुसमचरदिति। तथा च वेदे यथा छन्दसां प्रजापतिहित उपयोगस्तथाऽत्रैषां हित इति ज्ञापनायाऽत्र सुपर्णत्वकथनमित्यर्थः। रथत्वं तेषामामन्त्रणकृतं पाश्चात्त्यम्। नतु स्वाभाविकमित्यतस्तस्य तात्पर्यान्तरमाहुः—सुपर्णपदेनेत्यादि। मन्त्रायुर्वेदेति स्मृतिस्तु पतञ्जलेर्गौतमस्य वा सूत्रभूता बोध्या॥ ४०॥

## श्रीगिरिधरकृता बालप्रबोधिनी

ज्योतिषेत्युपलक्षणम्। नभआदिभिस्तद्गुणैः शब्दादिभिः स्वगुणेन रसेन चानुसंसृष्टं अन्वितं ब्रह्मणा भगवता वीक्षितं कालादियोगतश्च हेतुतो विकुर्वत् अम्भो गन्धगुणां महीं भूमिमाधात् असृजत्॥ ३५॥ ❀ ❀ सावधानतार्थं विदुरं सम्बो-धयति—भव्येति। भाव्यमिति पाठे तु भाव्यं कार्यमित्यर्थः। नभआदिभूतानां मध्ये यद्यदवरमवरं कार्यं तेषां परानुसंसर्गात् कारणान्वयात् यथासङ्ख्यं यथाक्रममुत्तरोत्तरमधिकान् गुणान् विदुः, तत्त्वज्ञा जानन्तीत्यर्थः। तथाहि—नभसः शब्द एक एव गुणः अन्यान्वयाभावात्, वायोस्तु द्वौ गुणौ आकाशान्वयाच्छब्दः स्वस्य स्पर्शश्च, तेजसस्त्रयो गुणाः आकाशवाय्वन्वयात् शब्दस्पर्शौ स्वस्य रूपं च, अम्भसश्चत्वारो गुणाः आकाशवायुतेजोन्वयात् शब्दस्पर्शरूपाणि स्वस्य रसश्च, पृथिव्याश्च पञ्च गुणाः आकाशवायुतेजोम्भोन्वयात् शब्दस्पर्शरूपरसाः स्वस्य गन्धश्चेति॥ ३६॥ ❀ ❀ एते महदाद्यभिमानिनो देवाः प्राञ्जलयः संयोजिताञ्जलयः सन्तो विभुं स्वांशिनं भगवन्तं प्रोचुस्तुष्टुवुरित्यन्वयः। किमर्थमित्यपेक्षायामाह—स्वक्रियानीशा इति, यतः स्वोचितक्रियायां ब्रह्माण्डरचनायामनीशा असमर्थाः, अतस्तत्र सामर्थ्यलाभायेत्यर्थः। असामर्थ्ये हेतुमाह—नानात्वादिति, समत्वेन परस्परासम्बन्धादित्यर्थः। भगवन्तमेव कुतस्तुष्टुवुरित्यपेक्षायां अंशत्वादित्याशयेनाह—कला विष्णोरिति। अंशत्वमेव स्पष्टयन् विशिनष्टि—कालेति। काललिङ्गं विकृतिः, मायालिङ्गं विक्षेपः, भगवदंशलिङ्गं चेतना, तानि विद्यन्ते येषु ते तथा॥ ३७॥ ❀ ❀ देवानां स्तुतिमेव दर्शयति, तत्र पूर्णकामत्वेन कस्यापि पदार्थस्य भगवत्युपयोगाभावात् नमोनम एतावत्सदुपशि-क्षितमिति वाक्याच्च प्रथमं प्रणमन्ति—नमामेति। सर्वस्वामित्वेन पूज्यत्वं सूचयन्तः सम्बोधयन्ति—देवेति। हे देव ते तव पदारविन्दं नमाम नमस्कुर्मः। किमर्थमित्यपेक्षायां स्वसन्तापनिवृत्त्यर्थमिति सूचयन्तश्चरणं विशिषन्ति—प्रपन्नेति, प्रपन्नानां शरणागतानां ये तापा आध्यात्मिकाधिदैविकाधिभौतिकानि दुःखानि तेषामुपशमे निरासे आतपत्रं छत्रमिव वर्तमानमित्यर्थः। तर्हि दुःखिनः सर्व एव कुतो न शरणमायान्तीत्याशङ्क्य विवेकाभावादिति सूचयन्त उक्तमेव स्पष्टयन्ति—यदिति। यस्य पदारविन्दस्य मूलं तलमेव केत आश्रयो येषां ते यतयो विवेकित्वेन मनोनियमने प्रयतमाना अञ्जसा अनायासेनैव उरु अधिकमपि जन्ममरणादिलक्षणस्य संसारस्य दुःखं बहिर्दूरत एव उत्क्षिपन्ति त्यजन्तीत्यर्थः। आतपत्रपदेन यथा छत्राधोभागे स्थिताः सूर्यसन्तापं न लभन्ते तथा भगवच्चरणारविन्दाश्रिता अपि संसारतापं न लभन्ते इति सूचितम्। न च ब्रह्माण्डोत्पत्तेः प्राक् संसारस्याविद्यमानत्वात् कथमेवमुक्तिः सङ्गच्छते इति शङ्कनीयम् "धाता यथापूर्वमकल्पयत्" इति शास्त्रसिद्धान्ततया त्रिकालज्ञत्वेनैवमुक्तेः सङ्गतत्वात्। एवमग्रेऽपि॥ ३८॥ ❀ ❀ व्यतिरेके दुःखं निवेदयन्तः स्वयं शरणं व्रजन्ति—ऋते इति

त्वमेव सर्वदुःखनिवारणे समर्थोऽसीति सूचयन्तः सम्बोधयन्ति—ईशेति। अस्मिन् भवे संसारे यत् ऋते यत्पदाम्बुजं विना तापत्रयेणाभिहता जीवा आत्मन् विद्यमानमपि शर्म स्वरूपसुखं न लभन्ते। अतोऽन्वयव्यतिरेकाभ्यां भवत्पदाम्बुजोपासनस्यैव तापत्रयनिरासपूर्वकसुखसाधनत्वाद्धेतोर्वयं तवाङ्घ्रिच्छायामाश्रयेमेत्यन्वयः। धातर्यदस्मिन्निति पाठे धातरिति सम्बोधनम्, यत् यस्मात्। ननु "तमेव विदित्वाऽतिमृत्युमेति" इति श्रुतेर्ज्ञानस्यैव सर्वदुःखनिवर्तकत्वनिश्चयात् कथं मदङ्घ्रिच्छायाश्रयणमात्रेण सर्वदुःखनिवृत्तिरित्याशङ्क्य ज्ञानमपि त्वदङ्घ्रिमाश्रितानामेव त्वत्त एव भवति नान्यथेत्याशयेनाह—सविद्यामिति। ज्ञानप्रदत्वे हेतुं सूचयन्तः सम्बोधयन्ति—भगवन्निति, ज्ञानादिगुणपरिपूर्णेत्यर्थः॥ ३९॥ ❀ ❀ अज्ञातस्याश्रयणासम्भवात्तज्ज्ञानमेव कथमित्यपेक्षायां ज्ञानप्रकारमाहुः—मार्गन्तीति। विविक्ते एकान्ते स्थिता ऋषयो मन्त्रद्रष्टारः छन्दस्सुपर्णैः वेदपक्षिभिर्यस्य शास्त्रप्रसिद्धस्य तव यत्पदं मार्गन्ति अन्वेषयन्ति तत्ते तव पदं वयं प्रपन्नाः शरणमागताः इत्यन्वयः। वेदैः कथमन्वेषणं सम्भवतीत्यपेक्षायामाहुः—ते मुखपद्मनीडैरिति, "तस्य ह वा एतस्य महतो भूतस्य निश्श्वसितमेतद्यदृग्वेदः" इति श्रुतेस्तव मुखपद्ममेव नीडं स्थानं येषां तैरित्यर्थः। यथा नीडे जातपक्षाः पक्षिणो नीडादुड्डीना इतस्ततः परिभ्रम्य पुनस्तत्रैव प्रविशन्ति तथा वेदा अपि त्वन्मुखान्निस्सृताः कर्माद्यनेकसाधनानि प्रतिपाद्य त्वय्येव पर्य्यवस्यन्तीति पक्षिभिर्नीडस्य ज्ञानवद्वेदैस्त्वत्पदस्य ज्ञानं सम्भवत्येवेति भावः। किमर्थं मम चरणमन्वेषयन्तीत्यपेक्षायां तीर्थाश्रयत्वेन तद्ध्यानात् सकलदुरितक्षयद्वारा परमपुरुषार्थत्वलाभायेत्याशयेनाहुः—तीर्थपद इति। तीर्थाश्रयत्वमेव चरणस्य स्पष्टयन्ति—अघमर्षेति। अघमर्षमघनाशकमुदमुदकं यासां सरितां तासु वरायाः सार्द्धकोटित्रयतीर्थाश्रयत्वेन श्रेष्ठायाः गङ्गायाः पदमुद्गमस्थानमित्यर्थः॥ ४०॥

### हिन्दी अनुवाद

तदनन्तर तेजसे युक्त जलने ब्रह्मका दृष्टिपात होनेपर काल, माया और चिदंशके योग से गन्धगुणमयी पृथ्वीको उत्पन्न किया॥ ३५॥ ❀ ❀ विदुरजी! इन आकाशादि भूतोंमेंसे जो-जो भूत पीछे-पीछे उत्पन्न हुए हैं, उनमें क्रमशः अपने पूर्व-पूर्व भूतोंके गुण भी अनुगत समझने चाहिये॥ ३६॥ ❀ ❀ ये महत्तत्त्वादिके अभिमानी विकार, विक्षेप और चेतनांशविशिष्ट देवगण श्रीभगवान्के ही अंश हैं किन्तु पृथक्-पृथक् रहनेके कारण जब वे विश्वरचनारूप अपने कार्य में सफल नहीं हुए, तब हाथ जोड़कर भगवान् से कहने लगे॥ ३७॥ ❀ ❀ देवताओंने कहा—देव! हम आपके चरणकमलोंकी वन्दना करते हैं। ये अपनी शरणमें आये हुए जीवोंका ताप दूर करनेके लिये छत्रके समान हैं तथा इनका आश्रय लेनेसे यतिजन अनन्त संसार-दुःखको सुगमतासे ही दूर फेंक देते हैं॥ ३८॥ ❀ ❀ जगत्कर्ता जगदीश्वर! इस संसारमें तापत्रयसे व्याकुल रहनेके कारण जीवोंको जरा भी शान्ति नहीं मिलती। इसलिये भगवन्! हम आपके चरणोंकी ज्ञानमयी छायाका आश्रय लेते हैं॥ ३९॥ ❀ ❀ मुनिजन एकान्त स्थानमें रहकर आपके मुखकमलका आश्रय लेनेवाले वेदमन्त्ररूप पक्षियोंके द्वारा जिनका अनुसन्धान करते रहते हैं तथा जो सम्पूर्ण पापनाशिनी नदियोंमें श्रेष्ठ श्रीगङ्गाजीके उद्गमस्थान हैं, आपके उन परम पावन पदपद्मोंका हम आश्रय लेते हैं॥ ४०॥

यच्छ्रद्धया श्रुतवत्या च भक्त्या संमृज्यमाने हृदयेऽवधाय।
ज्ञानेन वैराग्यबलेन धीरा व्रजेम[1] तत्तेऽङ्घ्रिसरोजपीठम्॥ ४१॥
विश्वस्य जन्मस्थितिसंयमार्थे कृतावतारस्य पदाम्बुजं ते।
व्रजेम सर्वे शरणं यदीश स्मृतं प्रयच्छत्यभयं स्वपुंसाम्॥ ४२॥
यत्सानुबन्धेऽसति देहगेहे ममाहमित्यूढदुराग्रहाणाम्।
पुंसां सुदूरं वसतोऽपि पुर्यां भजेम तत्ते भगवन् पदाब्जम्॥ ४३॥
तान् वै ह्यसद्वृत्तिभिरक्षिभिर्ये[2] पराहृतान्तर्मनसः परेश।
अथो न पश्यन्त्युरुगाय नूनं ये ते पदन्यासविलासलक्ष्म्याः॥ ४४॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका।

ननु विषयाकृष्टचित्तानां कुतस्तदन्वेषणं तत्राहुः। यच्छ्रद्धयेति। यद्धृदयेऽवधाय ध्यात्वा वैराग्यं बलं तस्य तेन ज्ञानेन धीरा भवन्ति। सरागे चित्ते ध्यानमेव कुतस्तत्राहुः श्रद्धया श्रवणपूर्विकया भक्त्या च संमृज्यमाने संशोध्यमाने॥ ४१॥ ❀ ❀

१. प्रा० पा०—व्रजन्ति। २. प्रा० पा०—तत्त्वा।

भक्तानुग्रहं स्मरंत आहुः। विश्वस्येति ॥ ४२ ॥ ॐ ॐ अंतर्यामितया नित्यं सन्निहितेऽनर्थकं व्रजनमित्याशंक्याहुः। यदिति। सानुबंधे सोपकरणे असति तुच्छे पूर्यां स्वदेहे एव वसतोऽपि यत्सुदूरं दुष्प्रापम् ॥ ४३ ॥ ॐ ॐ ननु यदि हृदिस्थस्यापि पदाब्जं केषांचित्सुदूरं तर्ह्यन्येषामपि तथैव स्यादविशेषादित्याशंक्याहुः। तानिति। असद्वृत्तिभिर्बहिर्मुखैरक्षिभिरिंद्रियैः पराहृतं दूरमपहृतमंतःस्थं मनो येषां ते। अथो अत एव ते नूनं तान्न पश्यंति। वै प्रसिद्धम्। कुतः पुनस्तेषां तत्संगः स्यात्। कान्। ते तव पदन्यासो गमनं तस्य विलासो विभ्रमस्तस्य लक्ष्मीः शोभा तस्या ये। त्वल्लीलाकथादिभिः शोभमानांस्त्वद्भक्तानित्यर्थः। पथ इति लक्ष्यानीति च पाठे त्वत्पदन्यासविलासो लक्ष्यो येषां तान् पथस्त्वन्मार्गभूतान् सतो मार्गान् वा श्रवणादीन्न पश्यतीत्यर्थः। यद्वा। ये एवंभूता भागवतास्ते तानुन्मत्तान्नूनं नैव पश्यंतीत्यन्वयः। सत्संगाभावेन हरिकथाश्रवणाभावाद्धृदि स्थितमपि तेषां सुदूरमिति भावः ॥ ४४ ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः।

पुनरत्राक्षिपति नन्विति। तदन्वेषणं मच्चरणाविंदान्वेषणम्। अवधायेति दधातेर्ल्यपीत्वाभावात्। उपसर्गवशाद्ध्यानार्थता चात्र। पुनराक्षिपति—सराग इति ॥ ४१ ॥ ॐ ॐ अभयप्रदाने सामर्थ्यं द्योतयन्त आहुरीशेति ॥ ४२ ॥ ॐ ॐ पुनराक्षिप्य समाधत्ते अंतर्यामीति। विरक्त्यैकलभ्यं त्वत्पदाब्जमिति भावः ॥ ४३ ॥ ॐ ॐ पुनरत्राप्याक्षिपति—नन्विति। इत्यर्थ इति विषयाविष्टचेतसां हरिभक्तदर्शनमपि दुर्लभं तत्संगस्य तु का कथेति भावः। अथो इत्यस्य स्थाने पथ इति लक्ष्म्या इत्यस्य स्थाने च लक्ष्यानिति लक्ष्यो दर्शनीयः लक्षणास्वीकारे गौरवं मत्वाह—मार्गान्वेति। इत्यर्थ इति। विषयाविष्टचेतसां कुतः श्रवणाद्यवकाश इति भावः। प्रथमांतं लक्ष्या इत्येवं पाठं मत्वाह—यद्वेति। ये एवंभूतास्त्वत्पदन्यासविलासो लक्ष्यो येषां तादृशा इत्यर्थः। उन्मत्तान्विषयहृतेंद्रियमानसान् इति भाव इति। "कथा हरिकथोदर्काःसतां स्युर्हि समागमे" इत्युक्तेः "हृदिस्थोऽप्यतिदूरस्थः कर्मविक्षिप्तचेतसाम्" इत्युक्तेश्चेदं तात्पर्यम्—ये तु सत्संगं हरिकथाश्रवणं च कुर्वंति तेषां हरिपदाब्जं सुन्दरं नेत्यर्थतः सिद्धमत्रेति ॥ ४४ ॥

## श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

बलं वर्द्धकम्। श्रद्धया आदरेण। भक्त्या साधनभक्त्या ॥ ४१ ॥ ॐ ॐ यत्पदाम्बुजं कर्तृ स्मृतं सत् स्वपुंसामभयं प्रयच्छति ॥ ४२ ॥ ॐ ॐ यत्पदाम्बुजं निकटस्थमपि सुदूरं भवति ॥ ४३ ॥ ॐ ॐ केषांचिदहं ममतावतां अन्येषां भक्तानामपि तथैव दूरं स्यात् अविशेषो हृदि स्थितत्वस्योभयत्र तुल्यत्वात् बहिर्मुखैः सापराधैरिति व्याख्येयं सामान्यतो वहिर्मुखेपु श्रीनारदादिकृपादर्शनात् अतः अपराधेन पराहृतान्तर्मनस्त्वात् तांस्त्वद्भक्तान्न पश्यन्ति ततो नानुसरंतीत्यर्थः। तेषां सापराधानां तत्सङ्गः। भक्तसङ्गः लक्ष्या इति च पाठे इत्येव पाठः न तु लक्ष्यानिति, यत्तच्छब्दयोरनन्वितत्वापत्तेः। लक्ष्यः प्राप्यः ननु दर्शनादिनाऽननुसरणेपि यादृच्छिकी महत्कृपा तेषु कुतो न जायते इत्याशङ्क्य पक्षान्तरं यद्वेति उन्मत्तान् भगवद्भक्तद्वेषिणः तथा च यादृच्छिक्यपि महत्कृपा सापराधान् विहाय बहिर्मुखसामान्ये प्रवर्त्तते न तु तादृशत इति राद्धान्तः फलितः ॥ ४४ ॥

## श्रीमद्वीरराघवव्याख्या

ननु कथं मार्गंति विषयप्रवणचित्तैः कथं वा मनसोऽसंगः संपादनीयः येन विविक्ते मार्गंतीत्युच्येत इत्याशंक्य त्वत्प्रसादानुगृहीतत्वद्भक्त्यैव सर्वं संपत्स्यते इत्याहुः यदिति। श्रद्धया श्रद्धायुक्तया श्रद्धानामास्तिक्यं स्वचिकीर्षितादाविति शेषः। श्रुतवत्याश्रुतिविहितपंचमहायज्ञादिरूपाऽसंगकर्मयोगयुक्तया भक्त्या उपासनया वैराग्यं शब्दादिष्वनासक्तिः तदेव बलं यस्य तेन ज्ञानेन प्रकृतिविविक्तात्मयाथात्म्यज्ञानेन ज्ञानकर्मयोगानुगृहीतभक्तियोगेन संमृज्यमाने शोध्यमाने हृदये अवधार्य धारणविषयं कृत्वा धीरा जितेन्द्रिया यदन्वेषयेति तत्तवांघ्रिसरोजपीठं शरणं व्रजेम अनेन मार्गणप्रकार उक्तः ॥ ४१ ॥ ॐ ॐ अथ भगवतः भक्तानुग्राहकत्वं स्मरंतः आहुः विश्वस्येति। हे ईश! यत्ते पदांबुजं स्वपुंसां स्वभक्तानामभयं शब्दादिभिरप्रतिहतं स्मृतं भावे क्तः ध्रुवानुस्मरणं यद्वाऽभयं न विद्यते भयं संसारो यस्मात्तथाभूतं स्मृतं प्रयच्छति ददाति निर्वर्त्तयतीत्यर्थः। तत्त्वत्पदांबुजं वयं सर्वे शरणं व्रजेम। कथंभूतस्य ते विश्वस्य जगतः सर्गस्थितिसंयमार्थे सृष्टिस्थितिसंहारार्थं कृतावतारस्य कृतब्रह्मरूपानुप्रवेशस्यावतारस्येदमेव हि स्वभक्तानुग्राहकत्वं यत्तापत्रयाभिहतिनिवर्त्तकनित्यनिरतिशयानंदसाधनभूतध्रुवानुस्मृतिनिर्वर्तकत्वं स्वभक्तानां स्मृतं प्रयच्छतीत्यनेनाभक्ताननुग्राहकत्वं सूचितम् ॥ ४२ ॥ ॐ ॐ तत्प्रतिपादयंतः शरणं व्रजंति यदिति। सानुबंधे अनुबध्यंते इत्यनुबंधाः पुत्रदारादयः पात्रवस्त्रादयः देहानुबंधिनो गृहानुबंधिनश्च तैः सहितेऽसति अचेतनपरिणामरूपे देहगेहे समाहारद्वंद्वे एकत्वं ममेदम्। देवोहं मनुष्योहम् इत्यूढः दुराग्रहः दुरभिमानो येषां पुंसां पुर्यां शरीरे हृदयगुहायां इत्यर्थः, वसतोपि वात्सल्यातिरेकात्पुरीमधीतिष्ठतोपि ते तव हे भगवन्! यत्पदांबुजं सुदूरमतिविप्रकृष्टं तत्पदांबुजं शरणं प्रजेमे-

त्यर्थः ॥ ४३ ॥ ❀ ❀ अहं ममाभिमानग्रस्तचित्तानां सत्संगतिरेव दुर्लभा, कुतः सत्संगतिशुश्रूषाचार्योपसत्तिप्रमाड्या भगवत्पदांबुजोपासननिर्वृतिः स्यादित्याहुः । तानिति हे परेश ! परेषां ब्रह्मादीनां ईश ! नियंतः ! असद्वृत्तिभिरचेतनपरिणाम-रूपशब्दादिप्रवणैरक्षिभिरिन्द्रियैः पराहृतं दूरमपकृष्टमन्तस्थं मनो येषां ते ये लोकास्तान्न पश्यंन्ति वै प्रसिद्धं केन पश्यन्ति इत्यत आहुः हे उरुगाय ! बहुगेय ! तव पदन्यासविलासलक्ष्म्याः पदयोर्यो न्यासः स्वात्मसमर्पणं तस्य विलासो विलसितं येषां ते शमादयो गुणास्तेषां लक्ष्मीः सपद्येषां ते भवत्पादारविंदात्मसमर्पणविलसितशमादिगुणसंपत्समृद्धा इत्यर्थः । लक्ष्म्येति तृतीयांतपाठे तयोपलक्षिता इत्यर्थः । अथोऽत एव न पश्यंति न वीक्षंते किमु तत्संगतिं न कुर्वंतीति । पथ इति पाठे भ्रष्टानि इत्यध्या-हर्त्तव्यं पथो मार्गाद् भ्रष्टान्न पश्यंतीत्यर्थः । लक्ष्मीनिति द्वितीयांतपाठे पथ इति पाठे च अपदन्यासविलासलक्ष्मीनिति पदच्छेदः । पदन्यासविलासलक्ष्मीरहिता न त एव पथो मार्गाद् भ्रष्टान् मार्गंति यत्ते इति पूर्वप्रस्तुता भगवदुपासकान् न पश्यंतीत्यर्थः । त्वां वेत्यपि पाठः । अस्मिन्पाठे ममाहमित्यूढदुराग्रहाणां पुंसां भगवत्पदांबुजं सुदूरमित्युक्तं तेषामप्युपासनाधिकृतानां संनिकृष्टं स्यादित्याशंकायामुपासनाधिकार एव तावद्दुर्लभ इत्याहुः । त्वामिति । अस्मिन्पाठे भ्रष्टा इति प्रथमान्ताध्याहारः ये असद्वृत्तिभिः पराहृतांतर्मनसोऽत एव सन्मार्गभ्रष्टा ये ते त्वां न पश्यन्ति नोपासते तर्हि के उपासत इत्यत आहुः ये इति । त्वत्पदन्यास-विलासलक्ष्म्यस्तु पश्यंतीत्यर्थः । लक्ष्म्या इति पंचम्यंतपाठे पथ इत्यस्य विशेषणं पदन्यासविलासलक्ष्मीरूपात्पथो भ्रष्टा न पश्यंति । अस्मिन्पाठे अथो इति पाठाभ्युपगमे लक्ष्म्याः भ्रष्टाः अथो अत एव न पश्यंतीत्यर्थः ॥ ४४ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

एतत्पदप्राप्तौ साधनमाहुः यच्छ्रद्धयेति । संमृज्यमाने सम्यक् शोध्यमाने अवधार्य संनिधाप्य वैराग्यमेव बलं यस्य स तथा तेन अंघ्रिसरोजाख्यं पीठम् ॥ ४१ ॥ ❀ ❀ हरेर्विक्रमो लोकोपकाराय न स्वार्थाय यदतः स्मरणमात्रेण प्रीतोऽस्मदभीष्टं करोतीति भावेन स्तुवीते विश्वस्येति । तव यत्पदांबुजं स्मृतं स्वपुंसामभयं प्रयच्छति सर्वे तच्छरणं व्रजेमेत्यन्वयः । कृतावतारस्य गृहीतपुरुषादिप्रादुर्भावस्य ॥ ४२ ॥ ❀ ❀ हरेः पदविरक्तयेकलभ्यमिति भावेन स्तुवंति यत्सानुबंध इति । सानुबंधेपुत्रादि-परिकरसहिते असत्यमंगले देहगेहे जातिभिन्ने देहेऽहमिति गेहे ममेदमिति चोढदुराग्रहाणां दुष्टज्ञानस्य चोढृणां पुर्यां देहे वसतोपि तव यत्पदांबुजं सुन्दरमत्यंतमगोचर हे भगवन् ! ते पदांबुजं भजेमेत्यन्वयः ॥ ४३ ॥ ❀ ❀ निकटवर्तिनो हरेर्दर्शनासंभवे किं कारणमिति तत्राह तं त्वामिति । यस्त्वमेवमुक्तमहिमा अथ तस्मात्ते । तत्त्वां नूनं निश्चयेन न पश्यंति इत्यन्वयः । असद्वृत्तिभिरक्षिभिरिंद्रियैः पराहृतं वहिष्कारितमंतःस्थितमनो येषां ते पराहृतांतर्मनसो यस्मात् अंतःस्थितं प्रत्यगात्मानं विषयीकर्तुं योग्यमिति सूचनायान्तरिति विशेषणं कीदृशं न्यासेन सकलकर्मणां परब्रह्मार्पणेन विलासो येषां ते न्यासविलासास्तेषां लक्ष्म्याः लक्षदर्शनांकनयोरिति धातोः दर्शनस्य पदं विषयं अनेन परमहंसाश्रमस्था एनं पश्यंतीत्युक्तम् । मुडागमोऽन्तीप्रज्ञानस्यातिशयं सूचयतः । पदयोर्न्यासो भुवि क्षेपविशेषः तस्य विलासलक्ष्म्याः पदमिति द्विरावृत्त्यान्वेतव्यम् । अनेन पदविषया स्तुतिरयुक्तेति शंका निरस्तेति ज्ञातव्यमिति वा ॥ ४४ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः ।

श्रद्धया श्रवणादरेण ॥ ४१ ॥ ❀ ❀ स्वपुंसामधीनमन्येषां स्मृतमभयं प्रयच्छति ॥ ४२ ॥ ❀ ❀ स्वतस्त्व-न्येषां निकटमपि सुदूरमित्याहुः यदिति ॥ ४३ ॥ ❀ ❀ तस्मात् येषु स्वपुंसां कृपा स्यात् तेषामेव तत्स्मरणविषयः स्यात् सा च कृपा न सर्वत्र स्यादित्याहुः । तदेवं यदत्र नोपलभ्यते सत्संगस्तत्राप्याधुनिकः प्राक्तनो वा पारम्परिको वानुमेय एव तत्र कृत-श्रीनारदादिदर्शनादेरपि देवतादेः श्रीनलकूबरादिवत्तादृशत्वप्राप्तिर्न श्रूयत इत्यत एवं विवेचनीयं यद्यपराधसद्भावो वर्तते पुरुषे तदा तद्दोषेण सत्सु निवारणानां साधारणमण्यादिदृष्टीनाञ्च तद्दोषशांत्यर्थं सत्सङ्गस्य भगवत्साम्मुख्यस्य कारणत्वेन तत्कृपा-साहाय्यमपेक्ष्यते निरपराधत्वे सति तत् सत्सङ्गेनैव । जातपरमोत्तमदृष्टीनां तु तेषु सतोऽवधानाभावेऽपि सत्सङ्गमात्रं तत्कारण-मिति । अतः सापराधानेवाधिकृत्योक्तं तानिति । ते तव पदन्यासविलासलक्ष्म्याः सम्बन्धिनो ये भक्ता इत्यर्थः । ते तान् नूनं प्रायो न पश्यन्ति न कृपादृष्टिविषयीकुर्वन्तीत्यर्थः । कान् असद्वृत्तिभिः सापराधचेष्टैरक्षिभिरिन्द्रियैः पराहृतान्तर्मनसः दूरीकृता-न्तर्मुखचित्तवृत्तयो वहिर्मुखा इत्येवं व्याख्यानमप्यत्रानुसन्धेयम् । अत्र साधारणासद्वृत्तित्वं न गृह्यते । सर्व्वस्य तत्कृपायाः प्राक् तथाभूतत्वात् । जनस्य कृष्णाद्विमुखस्य दैवादित्यादिकविषयं स्यादिति तस्मादनपराधसद्वृत्तौ तेषां कृपा प्रवर्त्तत एव कथञ्चिद-पराधाभावेन तदप्रवृत्तावपि सङ्गमात्रेणैव तेषां सम्मतिः स्यात् । यत्र तु सापराधेऽपि स्वैरतयैव कृपां कुर्व्वन्ति तस्यैव तन्मतिः स्यात् नान्यस्य नलकूबरादिवत् साधारणा देवतावच्चेति ॥ ४४ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

किञ्च तेभ्योऽपि केवलभक्तिमात्राश्रयिणः श्रेष्ठा इत्याहुः । यत्तव पदं श्रुतं गुरुमुखोपदिष्टं भजनवर्त्म वर्त्तते यस्यां तया भक्त्या सहृदय एवावधाय अनुभूय लब्धेन ज्ञानेन तन्माधुर्यास्वादरूपेण कीदृशेन वैराग्यस्य सर्व्वत्र वैतृष्ण्यस्य बलं यस्मात् तेन धीरा भवन्ति ।

अर्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेदिति न्यायेन पूर्वमिव वेदाद्यन्वेषणश्रमवन्तो न भवन्ति ॥ ४१ ॥ ❀ ❀ तादृश्या भक्तेः सुगमत्वार्थं तस्य भक्तानुग्रहं स्मरन्त आहुर्विश्वस्येति ॥ ४२ ॥ ❀ ❀ तदपि दुर्जीवैर्भक्तिर्दुर्लभ्येत्याहुः यदिति। पूर्य्यां मथुराद्वारकादौ प्रकटाप्रकटप्रकाशाभ्यां सदा वसतोऽपि देहेऽन्तर्यामिरूपेण वा ॥ ४३ ॥ ❀ ❀ ननु जगत्यस्मिन् इतस्ततश्चरतां साधूनां बहुत्वात्तेषां सङ्गं कृत्वा तत्प्रसादसुलभतां शुद्धां भक्तिं ते कथं न कुर्वन्तीति तत्राहुः तानिति। असद्वृत्तिभिर्बहिर्मुखैरिन्द्रियैः पराहृतं दूरमपहृतं अन्तःस्थं मनो येषां ते अथो अतएव तान् वै निश्चितन्न पश्यन्ति कुतस्तेषां तत्सङ्गः। तान् कान् ते तव पदन्यासो गमनं तस्य विलासो विभ्रमस्तस्य लक्ष्मीः सम्पत्तिस्तस्याः सम्बन्धिनो ये तान्त्वल्लीलाकथाविलासस्मरणकीर्त्तनादिभिः पूर्णान् परमकृतार्थांस्त्वद्भक्तानित्यर्थः। अथ इति पाठे त्वत्पदन्यासविलासो लक्ष्यो येषां ते। ये तान् पथः तन्मार्गभूतान् साधून् न पश्यन्तीत्यर्थः। यद्वा ये एवम्भूता भागवतास्ते तानुन्मत्तान् सापराधान्नैव पश्यन्तीत्यन्वयः ॥ ४४ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

अथ भगवत्पदशरणागतेरत्यादरणीयत्वं कैमुतिकन्यायेन वर्णयंतः पादपीठशरणं व्रजेमेत्याहुः। यदिति। भगवत्पादपद्मशरणागतिः सर्वपुरुषार्थदेति ज्ञानेन पुत्रकलत्राद्यासक्तिः संसारफलेतिवैराग्यरूपेण वलेन च संमृज्यमानं शोध्यमाने हृदये श्रद्धया श्रुतवत्या भगवद्गुणश्रवणसंवर्द्धितया भक्त्या च यदंघ्रिसरोजपीठम् अवधार्य धीरा भवंति तदंघ्रिसरोजपीठं व्रजेम शरणं गच्छामः ॥ ४१ ॥ ❀ ❀ भगवतः कृपालुतां द्योतयंतः श्रद्धातिशयेन पुनः पादपद्मं शरणं व्रजेमेत्याहुः विश्वस्येति ॥ ४२ ॥ ❀ ❀ बहिर्वृत्तीनां यत्सन्निहितमपि पदांबुजमतिदूरं भवति तैर्विस्मृतत्वात् तत्पदांबुजं वयं भजेमेत्याहुः यदिति। असति अनित्ये पुर्य्यां देहे अंतर्यामितया गेहे गुर्वादिरूपेण वसतोपि तत् पदांबुजं दूरं भवति तद् व्रजेम उभयत्र भजनीयतया सन्निहितं पश्याम इति भावः ॥ ४३ ॥ ❀ ❀ ननु तर्हि तेपि भवद्विधानां सतां संग न कुतो न मां सन्निहितं कुर्वंतीत्यत आहुः तानिति। ते तव पदन्यासो गमनं तस्य विलासो विभ्रमः तस्य लक्ष्मीः शोभा तस्याः ये भागिनः भवदीयास्तान् असति असत्ये देहगेहे च वृत्तयो येषां तैरक्षिभिरिंद्रियैः पराहृतं बहिर्मुखीकृतं मनो येषां ते नूनं निश्चितं वै प्रसिद्धं न पश्यंति तत्संगस्य तु का कथेति भावः ॥ ४४ ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

अत्र मार्गणकर्तारः प्रपन्ना एव भवन्ति, नाऽन्यैर्मार्गणं कर्तुं शक्यते। अन्ये पुनस्तत्राऽप्यशक्ताः केवलं ज्ञानमार्गेण चरणारविन्दमाश्रित्य तिष्ठन्तीत्याहुः—यच्छ्रद्धयेति। यस्मिन् भगवति श्रद्धा आस्तिक्यबुद्धिः, श्रुतवती च भक्तिः श्रवणादिना पोषिता। ज्ञानमार्गे श्रद्धाभक्ती अन्तःकरणशोधिके। चकारात् 'यथा यथाऽऽत्मा परिमृज्यतेऽसौ' इति कीर्त्तनरूपयाऽपि भक्त्या संमृज्यमाने सम्यक् शोध्यमाने हृदये अङ्घ्रिसरोजपीठमवधार्य निश्चित्य तेन निश्चयात्मकेन ज्ञानेन वैराग्येण बलं यस्य, तादृशेन धीरा भवन्ति। तादृशं तेऽङ्घ्रिसरोजपीठं व्रजेम प्राप्तुम। वयं ततोऽप्यनधिकारिणोऽतस्तद्धृदये स्थितं निर्द्धारितं वयं भजेम। श्रद्धाश्रवणादिना वैराग्यसहितात्मज्ञाने जाते विदितात्मतत्त्वो ब्रह्मभूतो भवति, तदाऽक्षरं भगवत्पादपीठं तत्राऽभिव्यक्तं भवति। तदा तदुपदेशात्, तद्धृदये वा प्रविश्य, तत्तत्स्वभावं वा प्राप्य, तच्छरणं गतानि तत्त्वानि। अतश्चतुर्थी कक्षा भक्तिमार्गे ह्येषा। सा द्विधा, स्वतो हृदये भजनम्, भक्ताश्रयणं वेति। ज्ञानिनां पादाभिव्यक्त्यभावात् पीठमित्युक्तम्। स्वस्वोपयोगिरूपनिरूपणाय अङ्घ्रिसरोजपदम्। धीरभवनमेव तत्र फलम्। वस्तुतः भगवान् भगवदाज्ञया वा कालादिः करोति, नाऽन्यथा वा। अतो भयहेत्वभावात् व्यर्थमेव प्राणी धैर्याभावात् क्लेशाननुभवति। अतः पूर्वोक्तपक्षाभावे धैर्यफलकोऽयमेव पक्षः समीचीनः। एवं सात्त्विकप्रकारे पञ्च पक्षा निरूपिताः ॥ ४१ ॥ ❀ ❀ राजसप्रकारेणाऽप्याह। तत्र प्रथमं सकामतया शरणागतिमाहुः—विश्वस्येति। यो भगवान् विश्वस्य सृष्ट्याद्यर्थमेवाऽवतीर्णः, अक्षररूपविशेषेण। 'प्रकृतिपुरुषश्चोभौ परमात्माऽभवत्पुरा' इति निबन्धोक्तप्रकारेण यो भगवानवतीर्णः, तस्य पदाम्बुजं शरणं व्रजेम। स ह्यस्मदनुगुणः। नन्ववतारिता एव भवन्तः सम्यक्प्रकारेण, किमतः परं शरणागत्या ? तत्राऽऽह—स्मृतिं प्रयच्छतीति। यद्यस्मात्कारणात् स्वपुंसां भक्तानां संबन्धि, अभयम्, न विद्यते भयं यस्मात्तादृशं स्वरूपं वा प्रयच्छति, स्मृतिं च प्रयच्छति। स्वकीयानामस्माकं वा तदयं प्रयच्छेदित्यवतारिता अपि वयं स्मृत्यभयहीनाश्चेत्, तदा सर्वं व्यर्थम्। भगवदीयानां वा स्मरणं भवेत्। भगवत्स्मृतिः पूर्वसिद्धस्वरूपस्मृतिः, प्रकृतोपयोगिकार्यस्मृतिर्वा। स्मृत्यभयदाता विश्वकर्ता भगवान्, तस्य चरणशरणगमने जन्मादौ सुखं भवतीति फलार्थं क्रियाव्यापृतस्य भक्तिः प्रथमा राजसी ॥ ४२ ॥ ❀ ❀ [1]द्वितीयामाह—यस्यानुबन्धेऽसतीति। जगत्कर्ता भगवान्, सर्वं सृष्ट्वा, सर्वत्र प्रविष्टः सर्वेषां हृदये प्रकाशते। तथापि स न प्रतीयते, दोषवशात्। तादृशस्यैव, तमदृष्ट्वैव, केवलं हृदये वर्तत इति ज्ञात्वा, तच्छरणगमनं द्वितीयम्। दोषनिराकरणार्थं वा दोषकीर्त्तनम्। तत्र दोषस्य त्रैविध्यमाह। सानुबन्धे पुत्रादिसहिते, देहे गेहे चाऽसति दुष्टे ममाहमिति दुष्टाग्रहः। तत्र

---

१. शरणगतिरूपां कक्षाम् प्रकाशः।

केवलाग्रहे यथा[१]कथञ्चिन्निर्वाहे, धर्मार्थम्, भगवद्भजनार्थं वा आग्रहे त्रैविध्यं भवति। देहगेहयोर्वा असत्त्वाभावे, अन्यतरासत्त्वे, उभयासत्त्वे च त्रैविध्यं भवति। अनु[२]वादो वा। नियमेन द्वयोरसत्त्वमेव। तत्र स्थिते रूढश्चाऽऽग्रहो भवतीति तादृशानां हृदये पदाब्जं सुदूरम्। यद्यपि भगवान् पुर्यामेव वसति, तथा तत्र चरणा[३]रविन्दौ न स्तः। केवलमन्तःकरणप्रेरणार्थं हस्तौ वा, इच्छामात्रं वा, प्रकटीकरोति। अतो येषामभिमानस्तेषु भक्तिर्नाऽस्तीति मुख्यः पक्षः। संसाराभिमानाभावेन केवलभगवदीयाभिमाने गौणः पा[४]क्षिको भगवानस्तीत्यर्थः। सर्वथाभिमानाभावे सर्वथाऽस्तीति सिद्धान्तः। तस्मात् प्रकृते तादृशप्रकारेण कचित्प्रकाशाप्रकाशौ कुर्वतो भगवतः पदाब्जं शरणं व्रजेमेति ॥ ४३ ॥ ❀ ❀ एतादृशा अपि यदि भगवद्भक्तानां सेवका भवेयुः, तदाऽपि तृतीया राजसी भक्तिर्भवेत्, यथा भक्तभक्ताः, तेऽपि भक्ताः भगवच्चरित्राभिज्ञाश्चेत्। नन्वयं सुगमः पक्षः किमिति नाऽऽश्रीयते ? तत्राऽऽह—तान्वै ह्यसद्वृत्तिभिरिति। तान् भगवद्भक्तान् ते न पश्यन्त्यपि, भजनं दूरे। तत्र हेतुः—असद्वृत्तिभिरक्षिभिः पराहृतान्तर्मनस इति। असत्स्वेव वृत्तयो येषाम्, तान्यासुराणीन्द्रियाणि। आसुराणि स्वभावतोऽसत्पदार्थानेव गृह्णन्ति, यथा मक्षिका अमेध्यं गृह्णाति, न तु चन्दनम्। अत एव तादृशैरक्षिभिरिन्द्रियैः पराहृतं वशीकृतमन्तःकरणं मनश्च येषाम्। 'इन्द्रियैर्विषयाकृष्टैः' इति न्यायेन इन्द्रियाणि विषयैराकृष्यन्ते, इन्द्रियैश्च मन आकृष्यते। मनसो रूपद्वयमस्ति, आन्तरं बाह्यं च। आन्तरं यदधीनं तद्वशो भवति पुरुषः। तदाह—पराहृतान्तर्मनस इति। तर्हि तेऽप्येके स्वतन्त्राः कुशलिन इति किं तेषामेतददर्शनेनेत्यत आह—परेशेति। परे ब्रह्मादयस्तेषामपीशेति संबोधनं तान्नाशयितुं भगवांस्तथा करोति ज्ञापयति। अथो अथ, अतो हेतोस्तान्न पश्यन्ति। पूर्वेण संबन्धः। ननु दर्शनाभावः कथमुच्यते ? दृष्ट्वाऽपि परं न भजन्तीत्येव मन्तव्यम्, तत्राऽऽह—उरुगायेति। उरुभिर्गीयत इति। यदि ते तान् पश्येयुः, तदा यथा भवान् सर्वैरेव गीयते, तथा तैरपि गीतः स्यात्। तदभावादेवं लक्ष्यते, नूनं तैस्ते न दृष्टा इति। तान् साधारण्यव्यावृत्त्यर्थं विशिनष्टि—ते पदन्यासविलासलक्ष्या इति। ते पदयोर्न्यासः, तत्र यो विलासः, तेन लक्ष्याः। तेषां लक्षणं भगवत्पादन्यासविलासः। ते तदैव ज्ञायन्ते, यदि भगवांस्तेषां स्थाने गमनार्थम्, तेषु स्वविलासख्यापनार्थं च विलासेन पदविन्यासं करोति। तेषां हृदये वा पदस्थापनार्थम्, विलासं प्रेमादिकं करोति, तदा ते ज्ञाता भवन्तीत्यर्थः। भगवत्पदसंबन्धादेव येषां महत्त्वम्, न प्रकारान्तरेण। अतस्तस्य लक्ष्यार्थस्य गुप्तत्वात् तान्न जानन्तीत्युक्तम्। विलासलक्ष्म्या इति पाठे विलासस्य या लक्ष्मीः शोभा तस्यास्ते। ते[५] विलासलक्ष्मीसंबन्धादेव प्रसिद्धा इति पूर्ववत्। अनेन तादृशभगवद्भक्तज्ञाने तद्द्वारा भगवद्भजनं तृतीयं राजसम्, तेषामेव ज्ञानं वा ॥ ४४ ॥

## श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

यस्यानुबन्ध इत्यत्र। द्वितीयामिति। शरणागतिरूपां कक्षाम्। प्रकारान्तरेण द्वितीयत्वं बोधयन्ति—दोषेत्यादि। दोषेति द्वितीयपक्षे। मूले आग्रहविषयस्य त्रिधोक्तत्वादुभयत्र दोषस्य कथनाच्च स्वरूपविषयभेदेन त्रैविध्यं द्विधाभिप्रेतम्, तत्र पूर्वं विवृण्वन्ति केवलेत्यादि। यथाकथञ्चिन्निर्वाह इति। यया कयाचित्वृत्त्या सर्वथा देहगेहनिर्वाहार्थम्। तथा च फलविचारेणैवमाग्रहस्वरूपकृतम्, तत्र इत्येकं त्रैविध्यं भवतीत्यर्थः। द्वितीयमाहुः—देहेत्यादि। कल्पनाक्लेश इत्यरुच्या पक्षान्तरमाहुः—अनुवादो वेत्यादि। आग्रहे स्वरूपदोषस्य नियमेन सिद्धत्वात् तस्यानुवाद एव असत्त्वं देहगेहयोरेवाभिप्रेतम्। तर्ह्यनुवादस्य किं प्रयोजनमत आहुः—तत्रेत्यादि। तथा च ऊढतैवानुवादप्रयोजनमित्यर्थः। चरणारविन्दाविति। चरणशब्दस्य पुंलिङ्गत्वम्, उपमितसमासे पूर्वपदार्थप्राधान्यञ्चाभिप्रेत्य पुंलिङ्गनिर्देशः। पूर्वोक्तपक्षद्वयसिद्धमर्थमाहुः—अतो येषामित्यादि ॥ ४३ ॥ ❀ ❀ तान् वा इत्यत्र। अन्तःपदस्य कृत्यमाहुः—मनसो रूपद्वयमित्यादि। विषयैरिन्द्रियाणामिन्द्रियैर्मनसश्चाकर्षः कामिनीकुचकुम्भदर्शनादर्शनादौ प्रत्यक्षेण शास्त्रेण च सिद्धः। तत्र मनसो यद्येकमेव रूपं स्यात्, तदा आकर्षकाले विषयान्तरज्ञानं न स्यात्। यौगपद्याभिमान एव तत्रेति न तत्काले विषयान्तरज्ञानमिति वाच्यम्, तथा सत्यैकाग्र्यदशायां यन्नानाविषयं ज्ञानं यच्च पुस्तकदर्शने चक्षुःसन्निकृष्टनानाक्षरविषयमुपेक्षाज्ञानम्, तन्न स्यात्। यच्च योगेन व्यापकात्मज्ञानं तदपि न स्यात्। तत्र वेगस्य प्रतिबद्धत्वात्। अतो रूपद्वयमेव युक्तमित्यर्थः ॥ ४४ ॥

## श्रीगिरिधरकृता बालप्रबोधिनी

न च तेषामाशामात्रं किन्त्विष्टं फलमपि भवत्येवेत्याह—यदिति। श्रद्धा चिकीर्षितत्वराविशेषस्तया श्रुतवत्या श्रवणपूर्विकया भक्त्या यथासम्भवकीर्त्तनस्मरणादिरूपया सम्मृज्यमाने संशोध्यमाने हृदये यत् पदाम्बुजमवधार्य ध्यात्वा वैराग्यं शब्दा-

---

१. यया कयाचित्वृत्त्या सर्वथा देहगेहनिर्वाहार्थम् प्र.। २. आग्रहे स्वरूपदोषस्य नियमेन सिद्धत्वात् तस्यानुवाद एव, असत्त्वं देहगेहयोरेवाऽभिप्रेतम् प्र.। ३. चरणशब्दस्य पुंलिङ्गत्वम्, उपमितिसमासे पूर्वपदार्थप्राधान्यं चाऽभिप्रेत्य पुंलिङ्गनिर्देशः प्र.। पुस्तकेषु तु प्रायः 'चरणारविन्दे' इत्युपलभ्यते )। ४. पाक्षिको वा क। ५. तेन ग।

दिविषयेष्वनासक्तिस्तदेव बलं यस्य तेन ज्ञानेन प्रकृतिकार्यातिरिक्तस्वरूपज्ञानेन धीराः धनपुत्रकलत्राद्यनुबन्धसहिते देहगेहादौ अहम्ममाभिमानरहिताः स्वरूपनिष्ठाः परमानन्दनिमग्ना भवन्ति, तत्ते तवाङ्घ्रिसरोजपीठं चरणकमलरूपाश्रयं व्रजेमेत्यन्वयः ॥ ४१ ॥ ❀ ❀ एवं परमपुरुषार्थप्रदत्वेऽपि ज्ञानमार्गेण दुर्लभत्वमाशङ्क्य भक्तिमार्गेण सुलभत्वं वदन्तः शरणं व्रजन्ति—विश्वस्येति । असमर्थानुग्रहस्याकिञ्चित्करत्वमाशङ्क्य सामर्थ्यं सूचयन्तः सम्बोधयन्ति—ईशेति । विश्वस्य जन्मस्थितिसंयमार्थे कृतावतारस्य ते तव यत्पदाम्बुजं स्मृतं सत् स्वपुंसां स्मरतां स्वभक्तानां अभयं सर्वभयरहितमात्मानमेव प्रयच्छति ददाति तद्वयं सर्वे शरणं व्रजेमेत्यन्वयः ॥ ४२ ॥ ❀ ❀ आसुरसम्पज्जातानां स्वभक्तिहीनानां तु हृदये एव वर्तमानमपि दुर्ज्ञेयमेव तद्भजनं फललाभश्च सुदूरत इति वदन्तः शरणं व्रजन्ति—यदिति । सानुबन्धे अनुबध्यते इत्यनुबन्धाः तत्र पुत्रदारादयो देहानुबन्धाः पर्यङ्कशय्यादयो गृहानुबन्धास्तैः सहिते असति दुःखहेतुतया दुष्टे देहांते ममेदं देवोऽहं मनुष्योऽहमित्यूढो निरूढो दुराग्रहो दुरभिमानो येषां तेषां पुंसां पुर्यां हृदयगुहायां अन्तर्यामितया नित्यं वसतोऽपि यच्चरणारविन्दसुदूरं विप्रकृष्टमिव भवति तत्ते पदाब्जं भजेमेत्यन्वयः । त्वल्लीला दुर्विज्ञेयेति सूचयन्तः सम्बोधयन्ति—हे भगवन्निति ॥ ४३ ॥ ❀ ❀ ननु भगवद्भक्तानां सङ्गतो देहाद्यासक्तानामपि सुज्ञेयत्वं स्यादित्याशङ्क्याहुः—तानिति । त्वत्सङ्कल्पितं कोऽपि नान्यथा कर्तुं शक्नोतीति सूचयन्तः सम्बोधयन्ति—परेशेति, परेषां ब्रह्मादीनां कालकर्मादीनामपि नियामकेत्यर्थः । अतएव बहुधा गीतोऽसीत्याशयेन सम्बोधनान्तरं उरुगायेति । यस्मात् ये असद्वृत्तिभिः असत्सु नरकादिहेतुषु शब्दादिषु वर्तनस्वभावैरक्षिभिरिन्द्रियैः पराहृतं दूरमाकृष्टमन्तर्मनो येषां ते तथाभूताः । अथो अतएव हेतोस्तान् ये ते तव पदयोर्न्यासः आत्मसमर्पणं तस्य यो विलासः प्रभावस्तेन या लक्ष्मीः ज्ञानवैराग्यानन्दानुभवादिरूपा सम्पत्तस्याः । सम्बन्धिन इति शेषः । ते नूनं न पश्यन्तीत्यन्वयः । 'उपेक्ष्यैः किं धनस्तम्भैरसद्भिरसदाश्रयैः' इत्यादिशास्त्रप्रमाणं सूचयन्ति—वा इति । लक्ष्यानिति पाठे तव पदन्यासविलासो लक्ष्यो येषां तान् भक्तान् ये असद्वृत्तिभिरक्षिभिः पराहृतान्तर्मनसस्तेन पश्यन्तीत्यन्वयः । अथो इत्यत्र पथ इति पाठे मार्गभूतान् श्रवणादींश्च न पश्यन्तीत्यन्वयः । अत्र पाठान्तराणि बहूनि सन्ति विस्तरभयेन तद्व्याख्यानाद्विरम्यते ॥ ४४ ॥

### हिन्दी अनुवाद

हम आपके चरणकमलोंकी उस चौकीका आश्रय ग्रहण करते हैं, जिसे भक्तजन श्रद्धा और श्रवणकीर्तनादिरूप भक्तिसे परिमार्जित अन्तःकरणमें धारण करके वैराग्यपुष्ट ज्ञानके द्वारा परम धीर हो जाते हैं ॥ ४१ ॥ ❀ ❀ ईश ! आप संसारकी उत्पत्ति, स्थिति और संहारके लिये ही अवतार लेते हैं; अतः हम सब आपके उन चरणकमलोंकी शरण लेते हैं, जो अपना स्मरण करनेवाले भक्तजनोंको अभय कर देते हैं ॥ ४२ ॥ ❀ ❀ जिन पुरुषोंका देह, गेह तथा उनसे सम्बन्ध रखनेवाले अन्य तुच्छ पदार्थोंमें अहंता, ममताका दृढ़ दुराग्रह है, उनके शरीरमें ( आपके ) रहनेपर भी जो अत्यन्तदूर हैं; उन्हीं आपके चरणारविन्दोंको हम भजते हैं ॥ ४३ ॥ ❀ ❀ परम यशस्वी परमेश्वर ! इन्द्रियोंके विषयाभिमुख रहनेके कारण जिनका मन सर्वदा बाहर ही भटका करता है, वे पामरलोग आपके विलासपूर्ण पादविन्यासकी शोभाके विशेषज्ञ भक्तजनोंका दर्शन नहीं कर पाते; इसीसे वे आपके चरणोंसे दूर रहते हैं ॥ ४४ ॥

**पानेन ते देव कथासुधायाः प्रवृद्धभक्त्या विशदाशया ये ।**
**वैराग्यसारं प्रतिलभ्य बोधं यथाञ्जसान्वीयुरकुण्ठधिष्ण्यम् ॥ ४५ ॥**
**तथापरे चात्मसमाधियोगबलेन जित्वा प्रकृतिं बलिष्ठाम् ।**
**त्वामेव धीराः पुरुषं विशन्ति तेषां श्रमः स्यान्न तु सेवया ते ॥ ४६ ॥**
**ततो वयं लोकसिसृक्षयाद्य त्वयानुसृष्टास्त्रिभिरात्मभिः स्म ।**
**सर्वे वियुक्ताः स्वविहारतन्त्रं न शक्नुमस्तत्प्रतिहर्तवे[१] ते ॥ ४७ ॥**
**यावद्बलिं तेऽज हराम काले यथा वयं चान्नमदाम यत्र ।**
**यथोभयेषां त इमे हि लोका बलिं हरन्तोऽन्नमदन्त्यनूहाः ॥ ४८ ॥**
**त्वं नः सुराणामसि सान्वयानां कूटस्थ आद्यः पुरुषः पुराणः ।**
**त्वं देव शक्त्यां गुणकर्मयोनौ रेतस्त्वजायां कविमादधेऽजः ॥ ४९ ॥**

---

१. प्रा. पा. हर्तुरते ।

**ततो वयं सत्प्रमुखा यदर्थे बभूविमात्मन् करवाम किं ते।**
**त्वं नः स्वचक्षुः परिदेहि शक्त्या देव क्रियार्थे यदनुग्रहा[1]णाम् ॥ ५० ॥**

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां तृतीयस्कंधे पञ्चमोऽध्यायः ॥ ५ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

एतदेव स्फुटयंति। पानेनेति द्वाभ्याम्। वैराग्यं सारो बलं यस्य बोधस्य तं लब्ध्वान्वीयुः प्राप्नुयुः। अकुंठधिष्ण्यं वैकुंठलोकम् ॥ ४५ ॥ ❀ ❀ आत्मनि समाधिर्मनः स्थैर्यं स एव योग उपायस्तस्य बलेन ज्ञानयोगतः श्रमेण मोक्षः तत्संगतस्त्वत्कथाश्रवणादिना त्वनायासेनैव अहंममताविष्टानां तु न कथंचिदिति भावः ॥ ४६ ॥ ❀ ❀ तदेवं स्तुत्वा प्रार्थयंते चतुर्भिः। तत्तस्मात् हे आद्य ते त्वदीया वयं यस्माल्लोकानां सिसृक्षया त्वयाऽनुसृष्टाः क्रमेणोत्पादिताः। त्रिभिरात्मभिः सत्त्वादिस्वभावैरत एव विरुद्धस्वभावत्वाद्वियुक्ताः संतो यदर्थं सृष्टास्तत्स्वविहारतंत्रं त्वत्क्रीडोपकरणं ते तुभ्यं प्रतिहर्तवे प्रतिहर्तुं समर्पयितुं न शक्नुमोऽतस्त्वं नः स्वचक्षुः परिदेहीति त्रयाणां श्लोकानां चतुर्थेनान्वयः ॥ ४७ ॥ ❀ ❀ असामर्थ्यमेव प्रपंचयितुं कार्यस्यातिवैचित्र्यमाहुः। भो अज काले तत्तदवसरे बलिं भोगं यावत्साकल्येन ते तुभ्यं हराम समर्पयाम यथा येन प्रकारेणान्नमदाम भक्षयानेत्यनेनान्नमात्रं चास्माकमैश्वर्येण तु भोगस्तवैवेत्युक्तम्। उभयेषां तव चास्माकं च यत्र स्थित्वा इमे जीवा अनूता अप्रत्यूहा निर्विघ्नाः। यद्वा अनूहा अवितर्का निःसंशया इत्यर्थः। तथा च श्रुतिः। "ता एनमब्रुवन्नायतनं नः प्रजानीहि यस्मिन् प्रतिष्ठिता अन्नमदाम" इति ॥ ४८ ॥ ❀ ❀ अवश्यं च त्वयाऽस्माकमेषां च कार्योपाधीनां जीवानां वृत्तिः परिकल्पनीया जनकत्वादित्याहुः। नोऽस्माकं सान्वयानां सकार्याणां यद्वा अन्वेतीत्यन्वयः। कारणं तत्सहितानां त्वमेवाद्यः कारकम्। अत्र हेतवः। कूटस्थोऽविक्रियः पुरुषोऽधिष्ठाता पुराणः पुरातनः। एतदुपपादयंति त्वमिति। हे देव अज एव त्वं गुणानां सत्त्वादीनां कर्मणां जन्मादीनां च योनौ कारणभूतायां शक्त्यां मायायां प्रथमं रेत आदधे निहितवानसीत्यर्थः। कीदृशम्। कविं सर्वज्ञं महत्तत्त्वरूपम् ॥ ४९ ॥ ❀ ❀ तथा हे आत्मन् देव सत्प्रमुखा महदादयो वयं तदर्थं बभूविम तत् किं ते कार्यं करवाम। सृष्टिमिति चेत्तत्राहुः। तर्हि नोऽस्माकं त्वं स्वचक्षुः स्वीयं ज्ञानं शक्त्या सह परिदेहि प्रयच्छ। यस्मात्त्वत्त एवानुग्रहो येषां ते यदनुग्रहास्तेषामस्माकं क्रियार्थे इयानेव एतावाननुग्रहो येषामित्येकं वा पदम्। त्वदीयज्ञानक्रियाशक्तिभ्यामेव वयं सृष्टौ क्षमा नान्यथेत्यर्थः ॥ ५० ॥

इति तृतीये टीकायां पञ्चमोऽध्यायः ॥ ५ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

एतदेव कथाश्रवणेन भगवज्ज्ञानोद्भवनमेव यथापदं परपद्यस्थतथापदेनान्वेति। स्तुतियोग्यतां द्योतयंतः प्राहुर्देवेति ॥४५॥ ❀ ❀ बलिष्ठां भगवच्छरणागतिं विना साधनशतैरपि जेतुमशक्यामित्यर्थः। "मामेव ये प्रपद्यंते मायामेतां तरन्ति ते" इत्यत्रोक्तैवकारात्—तेषां ज्ञानयोगिनां "क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम्" इति श्रीमुखोक्तेः। इति भाव इति। सेवानंदमनुभवतामानुषंगिको मोक्षः। श्रवणादिसाधनवतामतिक्लेशेन कथंचिन्मोक्ष उभयरहितानां न कथंचिदपीति तात्पर्यम् ॥ ४६ ॥ ❀ ❀ यस्माद्भवदाश्रयेणैव सर्वेषामुत्तमत्वं तत्तस्माद्धेतोः त्वमेवाद्योस्माकमतस्त्वमेव स्वार्थं प्रार्थयितुं योग्योसीत्याहाद्येति। अत एव त्रिभिरुत्पादितत्वादेव। प्रतिहर्त्तव इति आर्षत्वात्तुमर्थे "तुमर्थे सेसेनसेऽसेन्—" इत्यादिना छान्दसस्तवेन्प्रत्ययः। यतो वयमसमर्था अतो हेतोः तच्चक्षुस्तद्रचनाज्ञानम् ॥ ४७ ॥ ❀ ❀ "प्रत्यूहः प्रतितर्के च विघ्नशीघ्रविचारयोः" इति निरुक्तेः 'स्यादूहः क्षोदतर्कयोः' इति चोक्तेरूहशब्दस्य विघ्नवाचकत्वाभावादाह—यद्वेति। इत्यर्थ इति तर्कस्याक्षेपार्थकत्वादिति भावः। तत्त्वाभिमानिदेवताभिरीशः प्रार्थित इत्यत्र प्रमाणमाह--तथा चेति। तास्तत्त्वाभिमानिदेवता एनं परमेशम्। आयतनं स्थानं नोऽस्मभ्यं प्रजानीहि आज्ञापय यस्मिन्नायतने प्रतिष्ठिताः स्थिताः। स्पष्टमन्यच्छ्रुतिपदविवरणम् ॥ ४८ ॥ ❀ ❀ भगवतोत्रावश्यकतामाहुरवश्यमिति। अन्वयशब्दोत्र संतत्युपलक्षितकार्यवाचको प्रकृतेर्महदादिकार्यत्वाभावात्तद्ग्रहणं न संभवति तदर्थमाहुर्यद्वेति। कारणं प्रकृतिस्तस्याः सर्वत्रानुगतेः प्रकृतेरपि तदिच्छारूपत्वात्तस्या अपि कारणं त्वमेवेत्याहुः। अत्र सर्वकारणत्वे अविक्रियो निर्विकार एव चिन्तामणिरिव कारणम् अधिष्ठातुः प्रकृतिपतेस्तव सृष्टिसामर्थ्यमस्ति न तु स्त्र्यादिसमानामस्माकमिति भावः। ननु ममापि कश्चित्कारणमस्त्विति चेदाह—पुरातनः कारणशून्य इत्यर्थः। अन्यथानवस्थानात्। एतत्सर्वकारणत्वमज एव स्वयमजन्मैव इत्यर्थ इति। वीर्यधारकस्यैव कारणत्वमस्तीति भावः ॥ ४९ ॥ ❀ ❀ ततः प्रकृत्यां वीर्यनिक्षेपानंतरम्। अहं महान् प्रमुखे आदौ येषां ते मत्प्रमुखाः। सत्प्रमुखा इति पाठस्तु लेखकप्रमाद एवांधपरंपरया प्रतीयते तदर्थस्तु—स्वामि-

---

१. प्रा. पा. ग्रहेण।

चरणैर्महदादय इति कृतस्तेन मत्प्रमुखा इत्येव शोभनः पाठः स्वामिसंमत; तत्रैव हठे तु सति भगवति प्रकर्षेण मुखं येषां ते तथा त्वां निरीक्षमाणा इत्यर्थः । अंतर्यामित्वात्त्वं जानास्येवेत्याहुरात्मन्निति । प्रलयेऽपि द्योतमानत्वादाहुर्देवेति । यद्वा वरदानस्वभावत्वाद्देवेति । शक्त्या चिच्छक्त्या क्रियार्थे सर्जनक्रियानिमित्तम् । इयान् स्वीयशक्तिज्ञानदानरूपमात्र एव अर्थांतरे चमत्कृतिरेव हेतुरित्येकं पदमिति । इत्यर्थ इति । न हि जडानां चैतन्याश्रयमन्तरेण किंचित्कर्तुं शक्तिरस्तीति भावः ॥ ५० ॥

इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे तृतीयस्कन्धे पञ्चमोऽध्यायः ॥ ५ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

एतदेव हृदिस्थत्वावशेषेपि श्रवणादिना वैशिष्ट्यमेव ॥ ४५ ॥ ❀ ❀ अपरे मोक्षमात्रकामा तावन्मात्रपुरुषार्थेपि तेषां श्रमः स्यात् सेवया मोक्षानंदादपि परमानन्दमय्या । सालोकसार्ष्टिसामीप्यसारूप्यैकांतमप्युत । दीयमानं न गृह्णन्ति विना मत्सेवनं जनाः ॥ इत्यादेः ॥ ४६ ॥ ❀ ❀ यस्मात्त्वदाश्रयणमेव सर्वपुरुषार्थहेतुस्तत्तस्मात् अतएव सत्त्वादिस्वभावैः सृष्टत्वादेव । यदर्थं ब्रह्माण्डनिर्माणार्थम् ॥ ४७ ॥ ❀ ❀ अन्नं यत्किञ्चिदेव दत्तं स्वस्वोपजीव्यं पूर्वार्थेऽनूहशब्दस्य निर्विघ्नार्थे नेयार्थलक्षणेत्यस्वरसाद्यद्वेति तथा च अन्नप्रार्थने प्रमाणं श्रुतिः ता देवताः एनमीश्वरं अब्रुवन्प्रार्थयामासुः आयतनं स्थानं यस्मिन्स्थाने प्रतिष्ठिताः सम्यक् स्थिताः ॥ ४८ ॥ ❀ ❀ कार्य्योपाधीनां इन्द्रियाद्यधिष्ठातॄणामजानजानां अन्वयशब्दस्य कार्य्यैवाचकत्वमप्रसिद्धमतो यद्वेति । अत्र सर्वकारणत्वे एतत्पुराणपुरुषत्वे महत्तत्त्वरूपं तदाविष्टं समष्टिजीवमित्यर्थः अन्यथा । चित्तरूपस्य तस्य ज्ञानकरणत्वेन तत्कर्तृत्वाभावात्सर्वज्ञमिति व्याख्यानं नोपपद्यते ॥ ४९ ॥ ❀ ❀ ततो जीवाविष्टमायातः सत्प्रमुखा इत्येव पाठो न तु मत्प्रमुखा इति । तत्र स्वच्छत्वमविकारित्वं शांतत्वमितिचेतस इतिवक्ष्यमाणत्वान्महतस्सच्छब्दवाच्यत्वम् अत्र यथा पृथिव्याद्यधिष्ठातृरूपेण तत्र तत्र स्तुतिः श्रूयते तथा सर्वेषामपि महदाद्यभिमानिनां शरीरनिर्म्माणमीश्वरेण पुरैव कृतं तत्प्रार्थनयाऽन्येषां भविष्यतीति ज्ञेयम् ॥ ५० ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे दीपिकादीपिन्यां पञ्चमोऽध्यायः ॥ ५ ॥

### श्रीमद्वीरराघवव्याख्या

एवमनुग्राहकत्वाननुग्राहकत्वे उक्ते अथानुग्रहविषयेष्वपि भगवत्कथाश्रोतॄणां समाधिपरेभ्यः सौकर्यमाहुः द्वाभ्यां पानेनेति । हे देव ! ते कथासुधायाः अमृततुल्यकथायाः पानेन श्रवणेन प्रवृद्धभक्त्या प्रवृद्धप्रेमात्मकज्ञानेन विशदाशयाः निर्मलांतःकरणाः अनेनोपायोत्पत्तिप्रतिबंधकपुण्यपापनिवृत्तिरुक्ता भवति वैराग्यसारं वैराग्येण सारभूतं वैराग्यं नाम विमोकापरपर्यायं कामेष्वलालसत्वरूपं कामानभिष्वंगत्वं इदं च विवेकादीनां मप्युपलक्षणं विवेकादिसाधनसप्तकानुगृहीते बोध्यं तैलधारावदविच्छिन्नस्मृतिसंतानरूपं प्रत्यक्षतापन्नं प्रेमात्मकं ज्ञानं प्रतिलभ्यांजसा सुखेनाकुंठधिष्ण्यं कालसत्वादि गुणादिभिरप्रतिहतं वैकुंठाख्यं मुक्तप्राप्यं स्थानं यथान्वीयुः प्राप्नुयुः ॥ ४५ ॥ ❀ ❀ अथापरे चान्येप्यात्मसमाधियोगबलेनात्मनोऽतःकरणस्य यः समाधिः स्थैर्यं स एव योगः उपायस्तस्य बलेन । यद्वा आत्मनः परमात्मनः यः समाधिः परमात्मविषयकः समाधिः स एव योगस्तस्य बलेन निष्पादनेन परिपक्वभगवत्समाधिना निष्ठां दुस्तरां प्रकृतिं भगवन्मायां जित्वा तीर्त्वा धीरा जितेंद्रियाः पुरुषं परमपुरुषं त्वामेव विशंति प्राप्नुवंति तथापि तेषां श्रमः स्यात् अष्टांगयुक्तभक्तियोगनिष्ठानां श्रमः स्यात् एकैकस्यांगस्यैव दुःसंपाद्यत्वात् नतु सेवया कथाश्रवणादिरूपतत्सेवयोपलक्षितानां तु न श्रम इत्यर्थः ॥ ४६ ॥ ❀ ❀ तदेव स्तुत्वा अथ स्वाभिप्रायमाविष्कुर्वंतीत्याहुः तदित्यादिभिश्चतुर्भिः । तदस्माकं शरणागतत्वाद्धेतोः हे आद्य ! परमकारण ! ते वयं त्वत्संबंधिनो वयं लोकसिसृक्षया लोकान्स्रष्टुमिच्छया त्वया त्रिभिः सत्त्वादिभिर्गुणैः स्वे आत्मन्याधारभूते सृष्टाः आत्मभिः स्मेति पाठे आत्मभिः शरीरभूतैस्त्रिभिरित्यर्थः । अनुसृष्टाः महदाद्यनुक्रमेण सृष्टाः सर्वे वियुक्ताः परस्परमसंमिलितास्ते तुभ्यं स्वविहारतंत्रं स्वाधिकारनिर्वहणं प्रतिहर्तवे प्रत्यपकर्तुं त्वल्लीलोपकरणब्रह्माण्डरचनारूपप्रत्युपकारार्थं न शक्नुमः ॥ ४७ ॥ ❀ ❀ प्रतिहरणासामर्थ्यमेव प्रपंचयंति यावदिति । हे अज काले तत्तदवसरे ते तव बलिमाराधनं यथा हराम समर्पयाम करवामेति यावत् , वयं च भगवत्क्रीडोपकरणभूता वयमप्यन्नशब्दादिभोग्यं यथा अदामः अनुभवामः यथाच मे लोकाः स्रक्ष्यमाणा देवादयो लोका उभयेषां ज्ञानकर्मेंद्रियाणां बलिशब्दादीन् गंतव्यादींश्च विषयान् हरंतः उपस्थापयंतः अनूहाः निस्संशयाः अन्नमदंति सुखमनुभवंति तथा कर्तुं न शक्नुम इत्यर्थः । यावच्छब्दोवधारणे न शक्नुम यावन्न शक्नुम एवेत्यर्थः ॥ ४८ ॥ ❀ ❀ एवं ब्रह्मांडसृष्ट्यवात्मना सामर्थ्यमावेद्याथ तत्सामर्थ्यं प्रार्थयिष्यंतस्त्वमेव तत्प्रदानसमर्थ इत्याहुः । त्वन्न इति । सान्वयानां सकार्याणां सुराणां नः अस्माकं त्वमाद्यः कारणभूतोसि आद्यत्वेन विकाराश्रयत्वमाशंक्याहुः कूटस्थः निर्विकारः तर्ह्याद्यत्वमयुक्तमित्याशंक्योक्तं पुरुष इति पुरि शेते पुरुषः तत्तदंतरात्मतयावस्थितः नतु तद्वस्तुगत विकाराश्रय इत्यर्थः । तस्यापि कारणांतरमाशंक्योक्तं पुराण इति सर्वापेक्षया इत्येव पुराणः नतु त्वदपेक्षया किंचित्पुराणमस्तीत्यभिप्रायः एवंभूतोऽजस्त्वं हे देव ! गुणकर्मयोनौ शब्दादिगुणग्राह-

कज्ञानेन्द्रियाणां च कर्मेन्द्रियाणाञ्च योनौ कारणभूतायां शक्त्यां स्वापृथक्सिद्धविशेषणभूतायामजायां प्रकृतौ रेतः सृष्टिसामर्थ्यं कविं समष्टिपुरुषं ब्रह्माणं चादधे निहितवान् पुरुषेणात्मभूतेन वीर्यमाधत्त वीर्यवानिति पूर्वमुक्तत्वादिति ॥ ४९ ॥ ❀ ❀ तदिति तत्तस्मात्तवैव परमकारणत्वात्सत्प्रमुखाः समष्टिपुरुषप्रभृतयः ते वयं त्वच्छरीरभूता वयं यदर्थे यदर्थं बभूविम अभूम तत्किं ते कार्यं करवाम सृष्टिमिति चेत्तत्राहुः तर्हि नोऽस्मभ्यं हे देव ! त्वं क्रियार्थे सृष्टयर्थं स्वचक्षुः स्वाधिकारानुरूपं विज्ञानं शक्त्या सामर्थ्येन सह यदनुग्रहणमिति यस्यानुग्रहो येषां तेषामिति व्यधिकरणबहुव्रीहिः । यस्य तवानुग्रहभाजामस्माकं देहीत्यर्थः । यद्वाऽनुग्रहते य्नेन भवता इत्यनुग्रहः संसारिणां फलनिष्पत्तावनुग्राहकतयानुगृहीताः तेषां नः क्रियार्थे स्वस्वप्रवृत्तेः यच्चक्षुर्ज्ञानं तद्देहीत्यर्थः । अत्रेदं तत्त्वं पुरुषेणात्मभूतेन वीर्यमाधत्त वीर्यवान् रेतस्त्वजायां कविमादधेऽज इति परमात्मात्मकसमष्टिपुरुषसंसृष्टाया मायायाः महदाद्यारंभकत्वमवगम्यते तत्र महदादिपृथिव्यंताः अचेतनस्यैवावस्थाविशेषाः तत्राखंडिताया एव मायायाः प्रदेशभेदेन महद्रूपत्वेन परिणामः एवं महतोऽप्यखण्डिततत्प्रदेशभेदेनाहंकाररूपपरिणाम एवमहंकारादिष्वपि द्रष्टव्यं नतु कार्त्स्न्येन महदादीनामुत्तरोत्तरकार्यरूपपरिणामः । तथा सत्युत्तरोत्तरकार्यरूपेण कृत्स्नस्यापि महदादेः परिणतत्वान्महदादीनां पृथक्स्थित्यनुपपत्त्या पृथिव्यप्सु प्रलीयते इत्यारभ्य महानव्यक्ते लीयते इत्यंतेन लयश्रवणं विरुध्येत । अयमेव हि लयः यत्पूर्वपूर्वावस्थयावस्थितेन द्रव्येण तदेकदेशस्योत्तरोत्तरावस्थामापन्नस्य तदवस्थाप्रहाणेन संश्लेषः । एवं च पंचीकरणोपपत्तिः । अन्यथा पृथक्कृतत्त्वानामभावात्तदनुपपन्नं स्यात् । एवं च महत्त्वादहंकारत्वावकाशत्वादिपृथिवीत्वपर्यंतावस्थामापन्नस्य प्रधानद्रव्यस्य परमात्मात्मकसृष्टिपुरुषब्रह्मानुप्रवेशेन परमात्मशरीरत्वव्यपदेश उपपन्नः । कार्यावस्थकारणावस्थद्रव्यस्यैकत्वेन तत्रैवानुप्रवेशमात्रेण यस्य पृथिवी शरीरमित्यादीनां उपपत्तिः । नतु पृथिवीत्वाद्यवस्थास्वनुप्रवेश उपपन्नः । नचैवं यस्या व्यक्तं शरीरमित्येतावतैव महदादिपृथिव्यंतानां शरीरत्वसिद्धेः पृथक् यस्य पृथिवी शरीरं यस्यापः शरीरमिति पृथिव्यादीनां शरीरत्वकथनं व्यर्थमिति वाच्यं परस्परमवस्थानामवस्थावतोश्च भेदेप्यवस्थावद्द्रव्यानामेकत्वात्सर्वावस्थद्रव्यस्य परमात्मशरीरत्वमेव । ननु वैशेषिकमतरीत्या कार्यकारणयोर्भिन्नद्रव्यत्वेनाशरीरत्वमिति प्रतिपादनार्थत्वात् । न च महदादीनां केवलाचेतनपरिणामरूपत्वे विशिष्टोपादानत्वासिद्धिः, प्रकृतिपुरुषविशिष्टस्य परमात्मन उपादानत्वं हि विशिष्टोपादानत्वं विशेषाश्रयत्वं ह्युपादानत्वमिति वाच्यं विशिष्टोपादानत्वेपि त्रयाणामसांकर्येण कार्यत्वाभ्युपगमेन विरोधाभावात् अचेतनमचेतनं प्रति चेतनश्चेतनं प्रति ईश्वर ईश्वरं प्रति कारणं इत्यंगीक्रियते तत्राचेतनस्य कार्यता महदादिपृथिव्यंतावस्थाश्रयतारूपा स्वरूपान्यथाभावलक्षणा । चेतनस्य कार्यता तु संकुचितज्ञानस्य तद्विकासरूपा स्वभावान्यथाभावलक्षणा । सैवाग्रिमाध्याये प्रतिपादयिष्यते । तत्र हि अथ तस्याभितप्तस्य कति चायतनानीत्युपक्रम्य जीवसंघातसंश्लिष्टस्य समष्टिपुरुषस्य चतुर्मुखस्य वागादींद्रियेभ्यः व्यष्टिभूतानां देवादीनामिंद्रियोत्पत्तिं चातुर्वर्ण्योत्पत्तिं चाभिधाय एते वर्णाः स्वधर्मेण यजंति स्वगुरुं हरिं श्रद्धयात्मविशुद्धयर्थं यज्जाताः सहवृत्तिभिरिति प्रलयदशायां संकुचितज्ञानानामचेतनप्रायाणां जीवानां भगवदाराधनोपयुक्तकरणकलेवरोत्पत्तिद्वारा विज्ञानविकासरूपकार्यता ह्यभिधास्यते कार्यावस्थचेतनाचेतननियमनरूपाद्वारकावस्थाश्रयतारूपा चेतनाचेतनगतकार्यतानिर्वाहकत्वरूपा सद्वारकावस्थाश्रयता चेत्युभयविधावस्थाश्रयतेश्वरस्यानुप्रवेशे चेतनाचेतनसामानाधिकरण्यादिभिरस्मिन् शास्त्रे बहुधा प्रतिपाद्यते । अतोस्मिन्नध्यायेऽचेतनं न परिणामपरं परामात्रमभिहितमिति ॥ ५० ॥

इति श्रीमद्भागवतमहापुराणे तृतीयस्कंधे श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायां पञ्चमोऽध्यायः ॥ ५ ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

एवंविधस्य हरेरपरोक्षज्ञानसाधनोपासना द्विविधा ध्यानरूपा वेदांतशास्त्रश्रवणादिलक्षणा च । तत्र क्षिप्रप्रवृत्त्यर्थं प्रथमा क्लेशसाध्या द्वितीया सुखसाध्येति उभे विशिनष्टि पानेनेति । हे देव ! ते कथासुधायाः पानेन श्रवणादिलक्षणेन प्रवर्धमानया भक्त्या विशदाशया निर्मलांतःकरणाः वैराग्यसारं वैराग्यफलं बोधमपरोक्षज्ञानं प्रतिलभ्य प्राप्य अंजसा ऋजुमार्गेण वैकुंठादिस्थानं अपरिच्छिन्नस्वरूपं त्वा त्वां यथा ईयुः ॥ ४५ ॥ ❀ ❀ तथा परे येन्ये योगिनः यमनियमादियोगनिष्ठाः आत्मसमाधियोगबलेन परमात्मचित्तैकाग्र्यलक्षणध्यानसामर्थ्येन बलिष्ठानन्यसाधनाः येषां प्रकृतिं बंधकशक्त्यभिमानिनीं प्रसादाज्जित्वा धीरा धीषु रममाणा अपरोक्षज्ञानिनः पुरुषं पूर्णषड्गुणं त्वामेव विशंति तुः स्याद्भेदेऽवधारण इति वचनात् तत्र तेषां योगिनां श्रमः स्याद्यथा तथा ते तव श्रवणादिरूपया सेवया न तु नैव श्रमः स्यात्किंतु सुखमेवेत्यन्वयः । अत्र प्रकृतिजयो नाम तत्प्रसादैकलभ्यो नान्यः । तदुक्तं वायोश्च प्रकृतेर्विष्णोर्जयो भक्त्यैव नान्यथेति ॥ ४६ ॥ ❀ ❀ स्तुत्या प्रसन्नीकृत्य स्वाभीष्टं विज्ञापयंतीत्याह तत्ते वयमिति । यस्मात्त्वं लोकदयालुस्तस्मात्त्वया लोकसिसृक्षया त्रिभिरात्मभिः कालमायांशैर्विसृष्टा ये ते वयमद्यसर्वे वियुक्ता विश्लिष्टाः स्वविहारतंत्रं स्वस्य तव क्रीडोपकरणं यत् ब्रह्माण्डं तत्प्रतिकर्तुं न शक्नुम इत्यन्वयः ॥ ४७ ॥ ❀ ❀ ब्रह्मांडनिर्माणे न प्रयोजनमाहुरित्याह यावदिति । यावद्बलिं भक्त्या हराम तावत्पर्यंतं ब्रह्मांडं समुत्पाद्य तस्मिन् स्थित्वा त्वद्विषयज्ञानकर्मलक्षणं बलिमुपहारं समर्प्य तर्पयामः । यत्र ब्रह्मांडे स्थिता वयं काले काले यथान्नमदाम स्वविषयेषु व्यवहराम तथोभयेषामस्माकं युष्माकं च बलिं हरंतः समर्पयंतस्त इमेऽनीशाः अस्मत्प्रेरणामंतरेण प्रवृत्तावसमर्था लोका जनाः अन्नं ज्ञानकर्मलक्षण-

मदंति तादृशब्रह्मांडनिर्माणोपायं कुर्विति वाक्यशेष इत्यन्वयः । तादृशमंडं कर्तुं न शक्नुम इति पूर्वेण संबंध इति वा । अज ! विष्णो ! अजा विष्णुहरच्छागा इत्यभिधानम् ॥ ४८ ॥ ॐ ॐ किमिति मां प्रत्येतद्विज्ञापनमन्यस्य स्यादिति तत्रैव-मूचुरित्याह त्वं न इति । आद्यः आदेरुत्पत्तेः कर्ता पितृत्वात् त्वां विज्ञापयाम इति भावः । अस्मत्पदं विशिनष्टि सुराणामिति न केवलमस्माकमेव जनयिता किंत्वस्मत्संततीनामिति भावेनोक्तं सान्वयानामिति त्वं क इति पुराणः पुरुषः श्रीनारायणः पितु-रपि देहरूपेणाविकारदृष्टेस्त्वद्विकारा वयमिति शंका मा भूत् कूटस्थः विकारकूटेपु तिष्ठति न तु विकारवान् हरेः पितृस्थानीयत्वं स्पष्टयितुमाहुरित्याह । त्वं देवेति । हे देव त्वं कविरतिक्रांतदर्शी अजश्च देवदत्तवत् भवतो गर्भाधानादिकर्माण्यसंभावितानि तथापि भवान् शक्त्यां भार्यायां सत्त्वादिगुणानां कर्मणामदृष्टानां योनौ कारणभूतायामजायां जननधर्मरहितायां चिदचित्प्रकृते-रतो गर्भमादध इत्यन्वयः । तुशब्देनोभयेषां महान्विशेषोस्तीति सूचयति ॥ ४९ ॥ ॐ ॐ ततस्तस्याः प्रकृतेः । वयं सत्प्रमुखा-महत्तत्त्वमुखा बभूविम ततः किं तत्राह यदर्थं इति आत्मन् ! स्वामिन् ! यदर्थं यत्प्रयोजनाय बभूविम तदर्थं ते तव किं करवाम वियुक्ता अस्वतंत्रा यस्मात्स त्वं चक्षुर्ज्ञानमंडनिर्माणोपायविषयं परिदेहि कीदृशं तत्राहुः शक्ता इति । यस्य ज्ञानस्य ग्रहेण क्रियार्थे ब्रह्मांडनिर्माणाय शक्ताः स्यामेत्यन्वयः ॥ ५० ॥

इति श्रीभागवतमहापुराणे तृतीयस्कंधे श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्यां पञ्चमोऽध्यायः ॥ ५ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

तत्कथायां सत्यां तु परमफलप्राप्तिं क्रमादाहुः पानेनेति । विशदाशयाः प्रोज्झितकैतवाः सेवैकपुरुषार्थाः अकुण्ठधिष्ण्यं वैकुण्ठलो-कमिति टीका ॥ ४५ ॥ ॐ ॐ ये तु ज्ञानिसङ्गिनस्तेषां साधनसाध्ययोः कनिष्ठत्वमाह तथेति । अपरे मोक्षमात्रकामाः तन्मात्र-पुरुषार्थेऽपि तेषां श्रमः स्यात् ये तु सेवैकपुरुषार्थास्तेषां सेवया श्रमो न स्यात् सदैव सेवापरमानन्दमनुभवतामानुषङ्गिकतया मोक्षश्च स्यादित्यर्थः ॥ ४६ ॥ ॐ ॐ यस्मादेवं सर्व्वेषां भवदाश्रयेणैवोत्तमत्वं तत्तस्मात् ॥ ४७ ॥ ॐ ॐ तत्र निजकर्त्त-व्यसेवारूपाश्रयं निवेदयन्ति यावदिति । अन्नं यत्किञ्चिद्भगवदत्तं स्वस्वोपजीव्यम् ॥ ४८ ॥ ॐ ॐ कविं समष्टिजीवम् ॥ ४९ ॥ ॐ ॐ तत इति तत्रैषां पृथिवीन्यायेन तत्वाधिष्ठातृदेवानां भक्तत्वेन स्वयमेव पुरा शरीरनिर्म्माणमीश्वरेण अन्येषां तु तत् प्रार्थनयैव भविष्यतीति ज्ञेयम् ॥ ५० ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे पञ्चमोऽध्यायः ॥ ५ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

भक्ता यथा साधनदशामारभ्यैव परमसूखिनस्तथा ज्ञानिनः साधनदशामारभ्यैव परमदुःखिन इति भक्तिज्ञानयोरेताव-देवान्तरमित्याहुर्द्वाभ्यां पानेनेति । वैराग्यस्य सारो ब्रह्मसायुज्योपर्य्यपि बलं यस्मात्तथाभूतं बाधं प्रवृद्धभक्त्युत्थं भगवन्माधुय्यानुभवं प्राप्य अकुण्ठधिष्ण्यं वैकुण्ठलोकमिति स्वामिचरणाः ॥ ४५ ॥ ॐ ॐ आत्मनि समाधिर्मनःस्थैर्य्यं स एव योग उपाय-स्तस्य बलेन ज्ञानयोगत इत्यर्थः । यद्वा अष्टांगयोगतः त्वां पुरुषं विशन्ति त्वयि सायुज्यं प्राप्नुवन्तीत्यर्थः । किन्तु तेषां श्रमः स्यादिति तेषां भक्तिराहित्ये श्रेयःसृतिं भक्तिमुदस्य ते विभो क्लिश्यन्तीत्यादेः । पुरेह भूमन् बहवोऽपि योगिन इत्यादेश्च । भक्तिं विना वास्तवं ज्ञानमेव न स्यात् कुतो मुक्तिरिति ते परमदुःखिन एव यदुक्तं तेषामसौ क्लेशल एव शिष्यते नान्यद्यथा स्थूलतुषाव-घातिनामिति ज्ञानांगभक्तिसाहित्ये तु सायुज्यं प्राप्नुवन्त्येव किन्तु साधनदशायां चित्तैकाग्र्यार्थमुपायान्वेषणानुष्ठानादिषु श्रमः स्पष्ट एव साध्यदशायां त्वद्वशीकारकारणं प्रेमाणं प्राप्नुवद्भिस्त्वद्भक्तैः परित्यक्तस्य त्वत्प्रवेशस्य ग्रहणमेव निष्कर्षः । स च दुःखमेवेति भक्तानां मते तदापि ते दुःखिन एवेत्यर्थः । ननु परिचर्य्यादिभिर्भक्तानामपि श्रमोऽनुमीयते तत्राहुः नतु सेवया त इति । अत्र त एवानुभविनः प्रमाणं यथा श्रमिणोरपि स्त्रीपुरुषयोर्न श्रमः किन्तु श्रमाप्राप्त्यैव श्रमस्तथात्वद्भक्तानां प्रत्युत सेवया दैवादप्राप्त्यैव मनो दुःखरूपो महाश्रमः स्यादिति भावः । अत्र सेवया त्वां विशन्तीति न योजनीयं अन्वीयुरकुण्ठधिष्ण्यमिति । पूर्वोक्तेन विरोधात् नच कुण्ठं धिष्ण्यं यस्य तं त्वां अन्वीयुरिति तत्रापि व्याख्येयं विशेषणस्यापुष्टार्थत्वात् ॥ अन्वीयुरिति अनुगत्यर्थकपदोपन्यासस्यापि वैयर्थ्यात् ॥ ४६ ॥ ॐ ॐ तत् तस्मात् ते तवैव सेवका वयं सेवामप्राप्यैव क्लिश्याम इति भावः सेवाया अप्राप्तिं विवृण्वन्ति लोकानां सिसृक्षया त्वया अनुसृष्टाः क्रमेणोत्पादिताः स्म त्रिभिरात्मभिः सत्त्वादिस्वभावैरत एव विरुद्धस्वभावत्वात् मिथो वियुक्ताः सन्तः यदर्थं सृष्टास्तत् स्वविहारतन्त्रं त्वत्क्रीडोपकरणं समष्टि ते तुभ्यं प्रतिहर्त्तवे प्रतिहर्तुं समर्पयितुं न शक्नुमः ॥४७॥ ॐ ॐ तर्हि किं युष्मद्वाञ्छितं करवाणि तद्ब्रूथेत्यत आहुः हे अज ! काले समुचितसमये बलिं पूजोपहारं यावत् साकल्येन ते हराम देवमनुष्यादिविविधपुरसंकुलसमष्टिव्यष्ट्यात्मकप्रापञ्चिकत्वत्क्रीडोपकरणवृन्दं निर्म्माय तुभ्यं यथा समर्पयाम यथाच वयं त्वन्मायाशक्तिवृत्तयोऽन्नमदाम राज्ञा आदिष्टा गृहनिर्म्मातारो वर्द्धकयो यथा वेतनरूपं स्वस्वोदरपूरमन्नं प्राप्नुवन्तीत्यर्थः । यथाच इमे लोकादेवतिर्य्यगादयस्त्वज्जीवशक्तिवृत्तयस्तदधीनत्वात् त्वन्मायाशक्त्यधीनत्वाच्च ।

उभयेषां तव चास्माकञ्च बलिं हरन्तो विविधयानयोगज्ञानादिरूपमाराधनं कुर्व्वन्तोऽन्नमदन्ति स्वस्वकर्म्मफलं प्राप्नुवन्ति अनूहा अवितर्काः प्रभुरस्मभ्यं कर्म्मफलं दास्यति न दास्यति वेत्यभ्यूहशून्या इति एतदेवास्मद्वाञ्छितं सम्पादयेति भावः । तथाच श्रुतिः ता एनमब्रुवन् आयतनं नः प्रजानीहि यस्मिन् प्रतिष्ठिता अन्नमदामेति ॥ ४८ ॥ ❀ ❀ सेव्यसेवकलक्षणं सम्बन्धमुपपादयन्ति नोऽस्माकं सान्वयानां अन्वेतीत्यन्वयः । कारणं तत्सहितानां कूटस्थो निर्व्विकार एवाद्यश्चिन्तामणिरिव कारणं पुरुषोऽधिष्ठाता पुराणः पुरातनः आदिशून्य इत्यर्थः । यतस्त्वं हे देव ! शक्त्यां मायायां गुणानां सत्त्वादीनां कर्म्ममहदादिकं यत्र तथाभूतायां योनौ रेतः समष्टिजीवरूपं कविं विज्ञं आदधे अतोऽस्माकं जीवानाञ्च पितृत्वात्त्वमेव सेव्य इति भावः ॥ ४९ ॥ ❀ ❀ मत्प्रमुखा महदाद्या वयं हे आत्मन् ! किं ते करवाम सृष्टिमिति चेत् तत्राहुः तर्हि नोऽस्माकं त्वं स्वचक्षुः शक्त्या सह परिदेहि वैराजनिर्म्माणे ज्ञानं देहि शक्तिञ्च देहीत्यर्थः । त्वदीयज्ञानक्रियाशक्तिभ्यामेव वयं सृष्टौ क्षमा नान्यथा इति भावः हे देव ! अस्माकं क्रियारूपेऽर्थे इयानेवानुग्रहस्त्वया कर्त्तुमुचितः येषु तेषां त्वदादिष्टां सेवामेव सुखेन करवामेत्येतावदेवास्मद्वाञ्छितं नान्यदिति भावः । अत्र तत्त्वाधिष्ठातृदेवानां भक्तत्वात् स्वयमेव शरीरनिर्म्माणमीश्वरेण अन्येषान्तु तत्प्रार्थनैवेति सन्दर्भः ॥ ५० ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् । तृतीये पञ्चमोऽध्यायः संगतः संगतः सताम् ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः ॥

भगवदीया धन्या इत्याहुः पानेनेति । अकुंठं धिष्ण्यं यस्य तं निरावरणलोकेष्वकुंठं निरावरकत्वात् ॥ ४५ ॥ ❀ ❀ क्षेत्रज्ञोपासकास्तु परमानंदं विना सेवया नैवं विशंति किंतु पुरुषं देहस्थं जीवात्मानं विशंत्यतस्तेषां श्रम एव स्यात्परमानंदलाभाभावात् ॥ ४६ ॥ ❀ ❀ तदेवं तेषां भगवयदीभगवत्पराङ्मुखानामकृतार्थत्वं भगवदीयानां कृतार्थत्वं च निरूप्याथ प्रार्थयंते तदिति चतुर्भिः । हे आद्य ! सर्वकारण ! तेःत्वदीया वयं लोकान्स्रष्टुमिच्छया त्वया यतः त्रिभिः सत्वादिभिः आत्मभिः जीवात्मावरणहेतुभूतैः गुणावृताः जीवाः गुणमयं देहादिकमात्मानं मन्यंते तद्द्रष्ट्र्यात्मशब्देन गुणाःगृह्यंते अनुसृष्टाः अनुक्रमेणोत्पादिताः तत्ततो हेतोः विषमत्त्वात्सर्वे वियुक्ताः संतः यदर्थे सृष्टाः तत्स्वविहारतंत्रे त्वत्क्रीडोपकरणं ब्रह्मांडं ते तुभ्यं प्रतिहर्त्तवे संपाद्य प्रत्यर्पयितुं न शक्नुमः अतस्त्वं नः स्वचक्षुः परिदेहीति त्रयाणां चतुर्थेनान्वयः ॥ ४७ ॥ ❀ ❀ उभयेषां भवतोऽस्माकं च अनूहाः ऊहा तर्कास्तद्रहिताः ॥ ४८ ॥ ❀ ❀ सान्वयानां सकार्याणाम् आद्यः कारणं कूटस्थः निर्विकारस्वरूपः ननु कथं कारणस्य निर्विकारस्वरूपत्वमित्यत आह स्वशक्त्यामजायां प्रकृतौ गुणानां सत्वादीनां कर्मणां जन्मादीनां योनौ आश्रयभूतायां रेतः सृष्टिसामर्थ्यमादधे निहितवान् कविं जीवात्मानमनादिबद्धं चादधे सृष्ट्युन्मुखायां मायायां जीवमपि सृष्ट्युन्मुखं कृतवानित्यर्थः ॥ ४९ ॥ ❀ ❀ यत एवंभूतस्त्वं ततो हेतोः हे आत्मन् ! यदनुग्रहाणां यस्य भवत एव अनुग्रहो येषां तेषां नोस्माकं यदर्थे मत्प्रमुखाः महदादयो वयं बभूविम जाता तस्याः क्रियायाः सृष्टेः अर्थे स्वचक्षुः स्वसृष्टिविवेकं शक्त्या सामर्थ्येन सह परिदेहि अन्यद्वा ते किं करवाम तदाज्ञापयेति शेषः ॥ ५० ॥

इति श्रीमद्भागवतमहापुराणे तृतीयस्कंधे सिद्धान्तप्रदीपटीकायां पञ्चमोऽध्यायः ॥ ५ ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

चतुर्थमाह—पानेनेति । हे देव ! ते कथासुधायाः पानेन प्रवृद्धभक्त्या कृत्वा ये विशदाशयाः, ते वैराग्यसारं बोधं प्रतिलभ्य यथा अनायासेन ते अकुण्ठधिष्ण्यमीयुः, तथा परेऽपीयुरिति संबन्धः । एते तु राज[1]साद्राजसेषु निकृष्टाः, ये अन्तःकरणशुद्ध्यर्थमन्तःकरणतापत्रयनिवारणाय भगवत्कथां पीत्वा तेन प्रक्षालितान्तःकरणाः । प्रक्षालनार्थं च मध्ये भक्तिमपि कल्पयित्वा, तेनापि शुद्धान्तःकरणा एव । एवं साधनसाध्यभक्तिमन्तःकरणशुद्ध्यर्थमेव ये नियुञ्जते, ते कर्ममार्गा इव राजसप्रथमाः । शुद्धे चाऽन्तःकरणे वैराग्यमेव सारभूतं यस्य । येन ज्ञानेन विषयवैतृष्ण्यं भवति, तादृशं ज्ञानं प्राप्य । अञ्जसा सामस्त्येन ते अकुण्ठधिष्ण्यं कृत्रिमवैकुण्ठमीयुः । देवेति संबोधनात् विष्णुलोकं गच्छन्तीत्युक्तं भवति । ध्रुवस्थानं वा । अकुण्ठमिति न कदाचिदपि कुण्ठितम्, तत्र सर्वदा भोगः सिद्ध एव । अथवा, तेऽक्षरसायुज्यं प्राप्नुवन्ति ॥ ४५ ॥ ❀ ❀ तथा केवलज्ञानिनोऽपीत्याह—तथा परे चेति । फलतो भगवदीयत्वाद्भक्तत्वम् । परे अन्ये, इदानीं न भगवदीयाः । चकारात् भगवदीया अपि केचित् । स्वभावगुणानां बलिष्ठत्वादात्मपर्यवसायी आत्म[2]विषयको वा । 'यतो यतो निःसरति' इति प्रकारेण निरन्तरस्थितिरूपसमाधिपर्यन्तज्ञानेन पूर्वतामस[3]वासनां जित्वा, त्वामेव विशन्ति । परं पुरुषरूपम् । विराट्सायुज्यं प्राप्नुवन्तीत्यर्थः । एतदेव वा अकुण्ठधिष्ण्यम् । चतुर्विंशतिप्राकृतसंबन्धाद्विमुक्ताः पुरुषं प्रकृतिभर्तारं वा ईयुः । त्वामेवेति पुरुषान्तरव्युदासः । साधनभक्तापेक्षया फल[4]भक्ता हीना इत्याह—

१. ल्यब्लोपे पञ्चमी. प्र. । २. समाधिरिति शेषः प्र. । ३. प्रकृतिशब्दविवरणमिदम् प्र. । ४. फलदशायां भक्ताः प्र. ।

तेषां श्रमः स्यादिति । साधने भक्तेरप्रवेशात् ॥ ४६ ॥ ❀ ❀ एवं सर्वानुक्त्वा, तामसभेदान् स्वान् मन्यमानाः, आत्मन एव त्रिविधानाहुः—तत्ते वयमिति । तत्तस्मात्कारणात् , ते वयं त्वदीयास्तामसा वा, लोकसिसृक्षया त्वयाऽद्य सृष्टाः । त्रिभिरात्मभिरिति आत्मस्थाने स्थापितैस्त्रिभिर्गुणैरहङ्कारैर्वा । त्रिविधजीवैरित्येके । अस्मिन् पक्षे प्रत्येकं भेदत्रयम् । अनु पश्चात् सृष्टा इति परोक्षेण सृष्टा ज्ञानरहिता जाताः । अद्येति सृष्ट्यन्तरव्युदासः । अन्यदा तु 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च । खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी' इति भगवत एव साक्षात् सर्वं भवतीति तन्निवारणार्थमद्येत्युच्यते । अत एव त्रिभिरात्मभिरित्युक्तम् । अतः सर्वे वियुक्ताः । चकारादस्मत्सामग्र्यपि सर्वा भगवता त्रिविधा सृष्टा, अतोऽपि वयं वियुक्ताः । अत एव स्व'स्य, तव विहारतन्त्रं विहरणसामग्रीम् , न शक्नुमः । ते तुभ्यम् , प्रतिहर्तवे प्रतिहर्तुम् । 'तुमर्थे से से···' इत्यनेन तवेप्रत्ययः । तत् प्रतिहर्तुम् , यदर्थं वयं सृष्टाः तत्प्रयोजनं प्रतिहर्तुं दातुं समर्थयितुमिति यावत् । तत् किमित्याकाङ्क्षायाम् , तत प्रसिद्धं स्वविहारतन्त्रमिति संबद्ध्यते । तत्स्वविहारतन्त्रं प्रतिहर्तुं न शक्नुम इत्यर्थः । तामससमध्यमा एते । यदर्थं भगवता सृष्टास्ते सर्वे दुरात्मानः स्वस्वाभिमानेन नष्टा भगवत्कार्यमकृत्वाऽपि स्थिता इत्येतादृशा भक्तास्तामससमध्यमाः । भगवता भिन्नतया सृष्टा इति तेषां मध्यमत्वम् , अन्य'था अधमा एव स्युः ॥ ४७ ॥ ❀ ❀ तादृशा अपि वयं जाता इत्याहुः—यावद्बलिमिति । हे अज ( न जायते इति संबोधनम् ) ब्रह्माद्युत्कृष्ट, यावत्ते बलिं हराम, तावद्यथा वयमन्नमदाम, तथा त्वया कर्तव्यमित्यभिप्रायः । यावदिति प्रलयावसानता, न तु सृष्टिमात्रम् । काले स्वस्वावसरे । यथा वयं चाऽन्नमदाम, यत्र चाऽन्नमदाम, यथा वा उभयेषां तवाऽस्माकं च इमे सृष्टा लोकाः बलिं हरन्ति, निष्प्रत्यूहाः सन्तःस्वयमन्नमदन्ति, तथा चक्षुः परिदेहीत्यग्रेण संबन्धः । अत'एवैतेषां वैषम्यम् । केचन स्वार्थनिरपेक्षा भगवदर्थमेव कार्यं कर्तुमिच्छन्ति । केचित्स्वार्थापेक्षिणोऽपि भगवदर्थमेव कुर्वन्ति कार्यम् , भगवानेव पश्चाद्दास्यतीति । केचित्तु स्वस्य, स्वसेवकानां च, भगवतश्च कार्यं तुल्यतया कर्तुं वाञ्छन्ति, त एते ॥ ४८ ॥ ❀ ❀ ननु किमर्थमेवं प्रार्थ्यते ? प्रथमतोऽस्मदर्थं ब्रह्माण्डं कुरुत, पश्चात्स्वार्थमित्याशङ्क्याऽऽहुः—त्वं नः सुराणामिति । नोऽस्माकं सुराणां देवानां सान्वयानां सपरिकराणां त्वमेव आद्य उत्पादकः । यद्यपि वयमपि स्वकार्योत्पादकाः, तथापि वयं विकृताः, भवांस्तु कूटस्थोऽविकृतः । किञ्च, पुरुषो भवान् स्वतन्त्रः, वयं प्राकृता अस्वतन्त्राः । किञ्च, भवान् पुराणः पूर्वसर्ववृत्तान्ताभिज्ञः, वयं नूतना आधुनिकाः । अतस्त्वयैवाऽस्माकं सर्वं कर्त्तव्यम् । किञ्च, पुत्ररूपा वयं तव । अतस्त्वया प्रथमतो वयं पालनीया इत्याहुः—हे देव ! त्वं देवरूपायां शक्त्यां मायायाम् । गुणाः कर्माणि च योनिर्यस्याः । गुणकर्मात्मिका योनिः, गुणरूपाः कर्मात्मकाश्च ततो जायन्त इति । तस्यामजायां वर्कराद्युत्पादनार्थं रेत आदधे । अजाशब्दोऽत्र न यौगिकः, नाऽपि रूढः, किन्तु कल्प'नोपदेशः । 'कल्पनोपदेशाच्च मध्वादिवदविरोधः' इत्यधिकरणेनाऽयमर्थः समर्थितः । अन्यथाऽत्र मायाया उत्पत्तेरुक्तत्वात् योगो विरुध्येत । रूढिरप्याकृत्यभावात् । सृष्टौ कामः प्रधानमिति तन्निरूपणार्थमजशब्दकल्पनाऽत्र निरूपिता । कविं महत्तत्त्वम् । पूर्वावस्था रेतः, उत्तरावस्था कविरित्युभयोः साजात्याभावे कार्यमेकविधं न भवेदिति भगवतोऽप्यजत्वं निरूपितम् । अयमेव तामसहीनभावो भक्तेः, यद्भगवत एवं प्रकारेण निरूपणम् ॥ ४९ ॥ ❀ ❀ ततस्तत्सजातीया एव वयमुत्पन्ना इत्याह—ततो वयमिति । सत्प्रमुखाः सात्त्विकाहङ्कारप्रमुखाः । यस्य भगवतः कार्यार्थे बभूविमोत्पन्नाः । तर्ह्यन्यानुत्पादयिष्यामीत्याशङ्क्याऽऽह—हे आत्मन्निति । सर्वेषां त्वमात्मा । न हि कार्याणां स्वभावतः कश्चन गुणो दोषो वास्ति, त्वत्त एव जातत्वात्त्वद्रूपत्वाच्च । अतोऽन्यानप्युत्पाद्य तेषु यदि शक्तिं दास्यसि, तदा तेऽप्युपयुक्ता भविष्यन्ति । अतो लाघवादस्मभ्यमेव तत्सामर्थ्यं देयमिति भावः । नन्वनाज्ञाकारिणो भवन्तः, यतोऽप्रवृत्ता एव तूष्णीं स्थितास्तत्राऽऽह—करवाम किं त इति । ते तुभ्यं किं करवाम । आज्ञापनाभावात् , विशेषतोऽज्ञानाद्वा तूष्णीं स्थितिः । अतो वस्तुतो न दुष्टत्वम् । तर्हीदानीं ब्रह्माण्डनिर्माणं कुरुतेत्याशङ्क्याऽऽहुः—त्वन्न इति । नोऽस्माकं त्वमेव सर्वार्थे तत्र साधकं स्वचक्षुः परिदेहि, येन चक्षुषा वयं निष्पादिताः । तत्र क्रियाशक्तिरेवाऽस्मासु प्रतिष्ठिता, न ज्ञानशक्तिरिति । अतः स्वचक्षुः परिदेहि । परितो दानम् , सर्वेभ्यः क्रियाशक्त्या सह पुनर्देयम् । विशकलिततयोभयप्राप्तावपि न कार्यसिद्धिः । अतः स्वशक्त्या सह स्वचक्षुर्देहीति । ननूभयदानं सहदानं चाऽशक्यम् , उभयोरेकदा स्थित्यभावात् , एकं शब्दे अपरं क्रियायामित्याशङ्क्याऽऽह—हे देवेति । यद्यपि लौकिकन्यायेन, लौकिकेन वा, नैवं कर्तुं शक्यम् ; तथापि भवान् देवः; अतोऽलौकिकसामर्थ्यात् मिलितमपि दातुं शक्नोतीति । ननु नियमेन भवद्भ्य एव देयमिति कोऽयं निर्बन्धस्तत्राऽऽह—क्रियार्थे यदनुग्रहाणामिति । ब्रह्माण्डकरणार्थमेव यस्य भगवतोऽनुग्रहो येषाम् । येनाऽनुग्रहेण वयमुत्पादिताः, तेनैवाऽनुग्रहेण चक्षुः शक्त्या सह देयमित्यर्थः ॥ ५० ॥

इति श्रीभागवतसुबोधिन्यां श्रीलक्ष्मणभट्टात्मजश्रीवल्लभदीक्षितविरचितायां तृतीयस्कन्धे पञ्चमाध्यायविवरणम् ॥३॥

## श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

पानेनेत्यत्र । राजसादिति । ल्यब्लोपे पञ्चमी । तथापरे चेत्यत्र । अत्र ज्ञानिनां निरूपणात् कथं भक्तत्वमित्यत आहुः—

१. स्वकर्तृकम् प्र. । २. भगवत्स्रष्टृत्वाभावे प्रकाशः । ३. चक्षुरभावादेव प्र. । ४. सारूप्यकल्पनाप्रयुक्तगौणीप्रयुक्त इत्यर्थः प्र. । ५. अतस्त्वम् ख च ।

फलत इत्यादि। आत्मविषयको वेति। समाधिरिति शेषः। तामसवासनामिति। प्रकृतिशब्दविवरणमिदम्। फलभक्ता इति फलदशायां भक्ताः॥ ४५॥ ❀ ❀ तत्त इत्यत्र। स्वस्येति। स्वकर्तृकम्। अन्यथेति। भगवत्सृष्टत्वाभावे॥ ४७॥ ❀ ❀ यावदित्यत्र। अत एवेति। चक्षुरभावादेव॥ ४८॥ ❀ ❀ त्वन्न इत्यत्र। कल्पनोपदेश इति। सारूप्यकल्पनाप्रयुक्तगौणीप्रयुक्त इत्यर्थः। तदुपपादयन्ति अन्यथेत्यादि। स्फुटमग्रे। एवमत्र भगवत्कर्तृकसर्गे भूतोत्पत्तिर्निरूपिता।

इति श्रीगोस्वामिपुरुषोत्तमजीमहाराजकृत—तृतीयस्कन्धसुबोधिनीप्रकाशे पञ्चमाध्यायविवरणम्।

## श्रीगिरिधरकृता बालप्रबोधिनी

तदेवं भगवद्विमुखानां आसुरसम्पद्वतां न कथमपि कदापि संसारदुःखान्निस्तार इत्युक्तम्, इदानीं श्रवणादिभक्तिमार्गनिष्ठानां सुखेन भगवत्प्राप्तिः, समाध्यादिज्ञानमार्गनिष्ठानां तु क्लेशेन प्राप्तिरित्याह—पानेनेति। देवेति सम्बोधनेन लीलाया आनन्त्यं वैचित्र्यं च सूचयन्ति। ते तव कथासुधायाः अमृतवत्स्वादुविशिष्टायाः कथायाः पानेन श्रद्धया श्रवणद्वाराऽन्तःस्थापनेन प्रवृद्धया भक्त्या प्रेमात्मिकया ये विशदाशयाः निवृत्तपापरागादिदोषान्तःकरणास्ते वैराग्यं विषयवैतृष्ण्यमेव सारं बलं यस्य तं बोधं आत्मपरमात्मयाथार्थ्यज्ञानं प्रतिलभ्य यथा अञ्जसा श्रवणादिसाधनमारभ्य सुखेनैव अकुण्ठधिष्ण्यं कालादिप्रतिहतिरहितस्थानं त्वां वैकुण्ठं वा अन्वीयुः प्रापुः॥ ४५॥ ❀ ❀ तथाऽपरे च अन्येऽपि धीरा जितेन्द्रिया आत्मनोऽन्तःकरणस्य समाधिः स्थैर्यं स एव योग उपायस्तद्बलेन-यद्वा आत्मा परमात्मा तद्विषयको यः समाधिः चित्तसमाधानं स एव योगस्तस्य बलेन प्रभावेण-बलिष्ठां दुस्तरामपि प्रकृतिं मायां जित्वा तीर्त्वा परपुरुषं त्वामेव विशन्ति, परं तु तेषां श्रमः स्यात्, ते तव सेवया सेवादिभक्तिमार्गेण तु श्रमो न भवति॥ ४६॥ ❀ ❀ तदेवं स्तुत्वा प्रार्थयन्ते—तदिति। यस्मात् सेवादिभक्तिं विना न सुखेन पुरुषार्थसिद्धिस्तत्तस्मात्ते त्वदीयाः सेवका वयं त्वयैव लोकसिसृक्षयाऽद्य त्रिभिः सत्त्वादित्रिभिर्गुणैः आत्मभिरात्मांशैश्च सृष्टाः स्मेति प्रसिद्धमेतत्। अतस्त्रिगुणसृष्टत्वेन विरुद्धस्वभावत्वात् सर्वे वियुक्ताः परस्परममिलिताः सन्तो यदर्थं सृष्टास्तत्स्वविहारतन्त्रं त्वत्क्रीडोपकरणं ब्रह्माण्डं ते तुभ्यं प्रतिहर्त्तवे प्रतिहर्तुं समर्पयितुं न शक्नुमः। अतः 'त्वं नः स्वचक्षुः परिदेहि' इति त्रयाणां श्लोकानां चतुर्थेनान्वयः॥ ४७॥ ❀ ❀ ननु कथम्भूतं ज्ञानादिसामर्थ्यं भवतामपेक्षितमित्याकाङ्क्षामाशङ्क्य तन्निवेदयन्ति—यावदिति। अज हे सर्वेश्वरेति सम्बोधनेन तव न किञ्चिदशक्यमिति सूचयन्ति। यावत् यथा वयं काले तत्तत्पूजावसरे ते तुभ्यं बलिं पूजोपकरणं हराम समर्पयाम। यथा येन प्रकारेण च वयमप्यन्नमदाम भक्षयाम। यथा यत्र च स्थितास्ते इमे उत्पद्यमाना लोकाः प्राणिनः उभयेषां तव चास्माकं च बलिं हरन्तः समर्पयन्तः स्वयमप्यनूहा निर्विघ्ना अन्नमदन्ति भक्षयेयुस्तथा नः स्वचक्षुः[1] परिदेहीत्यन्वयः[2]॥ ४८॥ ❀ ❀ एवं च सर्वजीविका त्वयाऽवश्यं सम्पादनीया जनकत्वादित्याहुः—त्वमिति। सान्वयानां सकार्याणां सुराणां नोऽस्माकं त्वमेवाद्यः कारणभूतोऽसीत्यन्वयः। तत्र हेतुमाहुः—त्वमिति। गुणानां सत्त्वादीनां कर्मणां जन्मादीनां च योनौ कारणभूतायां स्वशक्तिरूपायां अजायां प्रकृतौ यतस्त्वमेव कविं विज्ञं महत्तत्त्वरूपं रेतो गर्भं आदधे निहितवानसीत्यर्थः। एवं कारणत्वे विकारित्वं स्यादित्याशङ्क्याहुः—कूटस्थ इति, अविक्रिय इत्यर्थः। एवं कारणत्वेऽपि तत्कारणान्तरं स्यादित्याशङ्क्याहुः—पुराण इति। चिरन्तनत्वेऽपि तत्कारणं कुतो नेत्याशङ्क्याहुः—अज इति। तत्रापि हेतुं सूचयन्तः सम्बोधयन्ति—देवेति॥ ४९॥ ❀ ❀ एवं सम्प्रार्थ्य सम्प्रार्थनमुपसंहरन्ति—तत इति। त्वदनुग्रहं विना वयं किमपि कर्तुं न समर्था इति सूचयन्तः सम्बोधयन्ति—आत्मन्निति। त्वं तु क्रीडयैव सर्वकरणे समर्थ इति सूचनाय सम्बोधनान्तरं देवेति। यस्मादेवं ततस्तस्मात् सत्प्रमुखा महदादयो वयं यदर्थं बभूविम जातास्तत्किं ते कार्यं करवाम? किमपि कर्तुं न शक्नुमः, अतस्त्वं नोऽस्माकं शक्त्या सह स्वचक्षुर्ज्ञानं परिदेहि प्रयच्छेत्यन्वयः। एवं त्वदनुग्रहेण वयं समर्थाः भविष्याम इत्याह—क्रियार्थे इति। क्रियार्थे ब्रह्माण्डरचनार्थं यस्मात्त्वत्त एवानुग्रहो येषां तेषामस्माकमित्यर्थः। क्रियार्थे इयान् एतावानेवानुग्रहो येषामस्माकमित्येकं पदं वा॥ ५०॥

इति श्रीवल्लभाचार्यवंश्यगोपालसूनुना॥ श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा॥ १॥
श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये॥ श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी॥ २॥
रचिता च तृतीयेऽत्र बन्धसर्गे तु पञ्चमः॥ विवृतो महदादीनां सर्गस्य विनिरूपकः॥ ३॥

## हिन्दी अनुवाद

देव! आपके कथामृतका पान करनेसे उमड़ी हुई भक्तिके कारण जिनका अन्तःकरण निर्मल हो गया है, वे लोग—वैराग्य ही जिसका सार है—ऐसा आत्मज्ञान प्राप्त करके अनायास ही आपके वैकुण्ठधामको चले जाते हैं॥ ४५॥ ❀ ❀

---

१. स्वचक्षुः स्वकीयं ज्ञानम्। २. तृतीयश्लोकेनेत्यर्थः।

दूसरे धीर पुरुष चित्तनिरोधरूप समाधिके बलसे आपकी बलवती मायाको जीतकर आपमें ही लीन तो हो जाते हैं, पर उन्हें श्रम बहुत होता है; किन्तु आपकी सेवाके मार्गमें कुछ भी कष्ट नहीं है ॥ ४६ ॥ ❀ ❀ आदिदेव ! आपने सृष्टि-रचनाकी इच्छासे हमें त्रिगुणमय रचा है। इसलिए विभिन्न स्वभाववाले होनेके कारण हम आपसमें मिल नहीं पाते और इसीसे आपकी क्रीडाके साधनरूप ब्रह्माण्डकी रचना करके उसे आपको समर्पण करनेमें असमर्थ हो रहे हैं ॥ ४७ ॥ ❀ ❀ अतः जन्मरहित भगवन् ! जिससे हम ब्रह्माण्ड रचकर आपको सब प्रकारके भोग समयपर समर्पण कर सकें और जहाँ स्थित होकर हम भी अपनी योग्यताके अनुसार अन्न ग्रहण कर सकें तथा ये सब जीव भी सब प्रकारकी विघ्नबाधाओंसे दूर रहकर हम और आप दोनोंको भोग समर्पण करते हुए अपना-अपना अन्न भक्षणकर सकें, ऐसा कोई उपाय कीजिए ॥ ४८ ॥ ❀ ❀ आप निर्विकार पुराणपुरुष ही अन्य कार्यवर्गके सहित हम देवताओंके आदि कारण हैं। देव ! पहले आप अजन्माहीने सत्त्वादि गुण और जन्मादि कर्मोंकी कारणरूपा मायाशक्तिमें चिदाभासरूप वीर्य स्थापित किया था ॥ ४९ ॥ ❀ ❀ परमात्मदेव ! महत्तत्त्वादिरूप हम देवगण जिस कार्यके लिए उत्पन्न हुए हैं, उसके सम्बन्धमें हम क्या करें ? देव ! हमपर आप ही अनुग्रह करनेवाले हैं। इसलिये ब्रह्माण्डरचनाके लिये आप हमें क्रियाशक्तिके सहित अपनी ज्ञानशक्ति भी प्रदान कीजिये ॥ ५० ॥

पाँचवाँ अध्याय समाप्त

# अथ षष्ठोऽध्यायः

## ऋषिरुवाच

इति तासां स्वशक्तीनां सतीनामसमेत्य सः । प्रसुप्त[1]लोकतन्त्राणां निशा[2]म्य गतिमीश्वरः ॥ १ ॥
कालसंज्ञां तदा देवीं बिभ्रच्छक्तिमुरुक्रमः । त्रयोविंशतितत्त्वानां गणं युगपदाविशत् ॥ २ ॥
सोऽनुप्रविष्टो भगवांश्चेष्टारूपेण तं गणम् । भिन्नं संयोजयामास सुप्तं कर्म प्रबोधयन् ॥ ३ ॥
प्रबुद्धकर्मा दैवेन त्रयोविंशतिको गणः । प्रेरितोऽज[3]नयत्स्वाभिर्मात्राभिरधिपूरुषम् ॥ ४ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

षष्ठे तैरीश्वराविष्टैः सृष्टिमाह विराट्तनोः । अधिदैवादिभेदं च तत्रैव भगवत्कृतम् ॥ १ ॥

स्वशक्तीनां महदादीनामसमेत्यामिलित्वा सतीनां स्थितानाम् । प्रसुप्तं लोकतंत्रं विश्वरचना यासाम् । यद्वा । प्रसुप्तजीवोपकरणानां गतिं स्थितिं दृष्ट्वा आविशदित्युत्तरेणान्वयः ॥ १ ॥ ❀ ❀ कालेन संज्ञा उद्बोधो यस्याः कालयति क्षोभयति स्वकार्याणीति वा कालसंज्ञा प्रकृतिस्तां शक्तिं प्रकृत्या सह प्रवेशात्त्रयोविंशतितत्त्वानामित्युक्तं अंतर्यामितया प्राविशत् ॥ २ ॥ ❀ ❀ चेष्टात्मेण क्रियाशक्त्या कर्म तेषां क्रियां जीवानामदृष्टं वा ॥ ३ ॥ ❀ ❀ प्रबुद्धं कर्म क्रियाशक्तिर्यस्य स त्रयोविंशतेर्गणः दैवेनेश्वरेण प्रेरितः । मात्राभिरंशैः अधिपूरुषं विराड्देहम् ॥ ४ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

तैर्महदादिभिः तत्रैव विराट्तनावेव ॥ ( १ ) ॥ जडासु रचनासामर्थ्यस्य चेतनधर्मस्यासत्त्वं मत्वाह—यद्वेति । जीवोपकरणानींद्रियादीनि ॥ १ ॥ ❀ ❀ कालयति मेलयति सर्वमिति कालो वृत्तिविशेषः स एव संज्ञा यस्यास्सा तथा । महदादीनामेव परस्परमिलनात्प्रकृतेश्च सर्वानुगतेस्त्रयोविंशतीत्युक्तमिति संदर्भः । कालेनैव महदाद्या विविधा संज्ञा यस्याः सा प्रथमं संहननकारिण्यां शक्त्यैव ततो वर्षसहस्रांतर्यमितयेत्यर्थः । महदहंकारौ पञ्च तन्मात्राणि पंचमहाभूतानि एकादशेंन्द्रियाणीति त्रयोविंशतिः युगपदित्यव्ययमेककाले प्रमाणं चात्र "तत्सृष्ट्वा तदेवानुप्राविशत्" इति श्रुतिः ॥ २ ॥ ❀ ❀ संदर्भस्तु चेष्टारूपेण कालाख्येन 'योयं कालस्तस्य ते व्यक्तबंधोश्चेष्टामाहुः' इत्युक्तेः तेषां तत्त्वानां क्रियां व्यापारं व्यापारस्यापि चेतनधर्मत्वात्तत्त्वेषु तदसंभवं मत्वाह—जीवानामदृष्टं वेति ॥ ३ ॥ ४ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

तैर्महदादिभिः कर्तृभिः तत्रैव विराज्येव इतीति युग्मकम् ॥ प्रसुप्तमनुद्भूतं विश्वरचना विश्वविषयिणीति कर्त्तव्यतेति चैतन्यप्राधान्येन व्याख्यातम् । उपाधिप्राधान्यविवक्षया व्याचष्टे यद्वेति । अस्वरस्तु पूर्वेऽर्थे प्रसुप्तशब्दस्य मुख्यार्थो विश्वरचनालक्षणक्रियायां न सम्भवतीति लक्षणागौरवमेवेति प्रसुप्तजीवोपकरणानां प्रसुप्तानां प्रलये लीनानां जीवानां भोगपरिच्छदरूपाणां तत्तदुभयार्थवाचकत्वं यथा विश्वप्रकाशे "तंत्रं कुटुम्बकृत्ये च कारणे च परिच्छदे । इतिकर्त्तव्यतायाञ्च" इति ॥ १ ॥ ❀ ❀ ❀ प्रकृत्या व्यापिकया सह ॥ २ ॥ ❀ ❀ क्रियाशक्त्या नियमनशक्त्या तेषां महदादीनां क्रियामिति कर्त्तव्यताम् ॥ ३ ॥ ❀ ❀ अंशैरिति । अंशरूपेण परिणामो न सर्वात्मनेति उपाधिप्राधान्यपक्षोऽपि मूलानुगृहीत इति ज्ञेयम् ॥ विराड्देहं ब्रह्माण्डस्थम् ॥ ४ ॥

### श्रीमद्वीरराघवव्याख्या

एवं निवेदितहार्दानां तत्त्वानामंतःप्रवेशेनाहितसृष्टिसामर्थ्यानां ब्रह्मांडसृष्टिः तत्र समष्टिपुरुषचतुर्मुखोत्पत्तिस्तत्समष्टींद्रियादिभ्यो व्यष्टींद्रियोत्पत्तिश्च कथ्यते षष्ठेनाध्यायेन । तत्र तावदसंहतानां परमात्मानुप्रवेशेन सृष्टिसामर्थ्यमाह इतीति त्रिभिः । ईश्वरो भगवान् इति उक्तरीत्या समेत्य मिलित्वा सतीनां वर्त्तमानानां स्वशक्तीनां यस्य पृथिवी शरीरं यस्यात्मा शरीरं यस्य

---

१. प्रा० पा०—प्रसुप्तो लो० । २. प्रा० पा०—निशम्य । ३. प्रा० पा०—प्रेरितो जनितस्त्वाभिर्मात्रा० ।

चक्षुः शरीरम् इत्यादिप्रकारेण शरीरभूतानां प्रसुप्तमनुद्बुद्धं लोकतंत्रं लोकरचनासामर्थ्यं यासां तासां समष्टिचेतनप्रमुखमहदादि-तत्त्वानां गतिं स्थितिं निशाम्य दृष्ट्वा गणमाविशदित्युत्तरेणान्वयः ॥ १ ॥ ❀ ❀ कालसंज्ञामिति । ततो निशामनानंतरं कालसंज्ञां कालाख्यां देवीं देवस्य स्वस्य संबंधिनीं शक्तिमपृथक्सिद्धविशेषणभूतां रूपांतरमित्यर्थः । बिभ्रदंतः प्रविश्य प्रशासनेन धारयन् त्रयोविंशतितत्त्वानां महदहंकारपंचभूतपंचतन्मात्रैकादशेन्द्रियरूपाणां तत्त्वानां गणं समूहं उरुक्रमो विस्तृतपादन्यासः त्रिविक्रमो भगवान् युगपदेकदा आवशिदनुप्रविष्टोऽभूत् ॥ २ ॥ ❀ ❀ स इति । स भगवांश्चेष्टारूपेण प्रेरणात्मकचेष्टोप-लक्षितः भिन्नमसंहतं तं गणं त्रयोविंशतितत्त्वगणं संयोजयामासेत्युक्तं चकारात् भूतानां पंचीकरणमिन्द्रियाणां भूतैराप्यायनं चोक्तं भवति । कथंभूतः सुप्तं कर्म तद्व्यापारं प्रबोधयन्नुद्बोधयन् ॥ ३ ॥ ❀ ❀ आहितसामर्थ्यस्य तत्त्वगणस्य ब्रह्मांडोत्पत्ति-द्वारा चतुर्मुखशरीरारंभकत्वं संग्रहेणाहैकेन प्रबुद्धकर्मेति दैवेन भगवत्संकल्पेन प्रबुद्धमुद्बुद्धं कर्म स्वव्यापारो यस्य स त्रयोविंशति-तत्त्वात्मको गणः प्रेरितः दैवेनेत्यनुषंगः स्वाभिर्मात्राभिरंशैरधिपुरुषं ब्रह्माणमजनयत् असृजत् ॥ ४ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

अस्मिन्नध्याये "तदनन्यत्वमारंभणशब्दादिभ्यः" १५ इत्यधिकरणार्थः प्रपंच्यत इत्यभिप्रेत्यादौ हरेस्तत्त्वेषु प्रवेशं वक्ति इतीति । उरुक्रमस्त्रयोवंशतितत्त्वानां गणं युगपदाविशदित्यन्वयः । आकाशादिपंचभूतानि शब्दादिपंचतन्मात्राः श्रोत्रादिदशेंद्रियाणि मनोमहदहंकार इति त्रयविंशतितत्त्वानि तदुक्तं "शब्दा नभआद्याश्च मनोयुक्तेन्द्रियाणि च । अहंकारो महांश्चैव त्रयोविंशतिको गण" इति । देवतेन्द्रियाणामेकत्वविवक्षया पृथङ्नोक्तं देवतेन्द्रिययोरैक्यान्न पृथग्गणनं तयोरिति प्रकृतिश्चतुर्विंशा तत्प्रवेशस्य पूर्वसिद्धत्वान्नोक्ता हरिराविशदिति पंचविंशत्वेन सूचितः । अत्रापि यदाजडांशस्वीकारस्तदा जीवः पंचविंशकः विष्णुः श्रिया सह षड्विंशकः सप्तविंशको वा "यदा जडांशस्वीकारो जीवस्तत्पंचविंशक" इत्यादेरिदं सर्वमुरुक्रमपदेन सूचितं प्रवेशकारणमाह इतीति । समेत्यासतीनामसमेतानां विश्लिष्टानां स्वशक्तीनां शक्यत्वात्स्वाधीनत्वाच्छक्तिशब्दवाच्यानां प्रसुप्तलोकतंत्राणामनावि-र्भूतलोकसृष्टिशक्तीनां प्रलीनलोकसृष्ट्युपकरणानां वा 'तनुते येन कार्यं तत्तंत्रं साधनमुच्यते । कारणानां स्वशक्तिर्वा प्रधानं साधनं यतः ।' इति तासामित्युक्तप्रकारां गिरं निशम्य "शक्यत्वाच्छक्तयोर्विष्णोर्महदाद्या रमा तथा" इति वचनात् शक्तिशब्दवाच्यत्वं महदादीनां युक्तं प्रवेशोऽपि रमया सहेति भावेनाह कालसंज्ञामिति । यदा प्रवेष्टुमैच्छत्तदा "त्रयोविंशतितत्त्वानि प्राविशद्रमया सह । कालाख्यया स्वयं विष्णुः शक्यत्वाच्छक्तिरूपया" इति वाक्यं मानं तत्र कारागृहप्रवेशवन्नायं प्रवेशः, किंतु स्वातंत्र्येणेति द्योतनायेश्वर इति ॥ १ ॥ २ ॥ ❀ ❀ निलये निलीन इव किमयं तूष्णीमास्ते किंचित्कर्माकार्षीदिति तत्राह सोऽनुप्रविष्ट इति "सर्वचेष्टकरूपेण स्वसामर्थ्येन केशवः । तानि भिन्नानि तत्त्वानि योजयामास चांशत" इति अनेन चास्यार्थो दर्शितः भिन्नं विश्लिष्टं प्रलये सुप्तं कर्माप्रतिबुद्धशक्तिकं सृष्टिनिमित्तमदृष्टं प्रबोधयन् कार्योन्मुखं कुर्वन् यद्यपीश्वरः स्वमनसैवांडं स्रष्टुं शक्तः, तथापि कर्त्रा पुरुषेण सोपकरणेन भाव्यमिति दर्शयितुं संश्लिष्टो गणः ॥ ३ ॥ ❀ ❀ किं कार्यं चकारेति तत्राह प्रबुद्धकर्मेति । प्रबुद्धमुन्मुखीकृतं कर्मादृष्टं यस्य सः प्रबुद्धकर्मा दैवेन हरिणा प्रविश्य प्रेरितः । त्रयोविंशतिको गणः स्वाभिर्मात्रा-भिरंशैः पुरुषस्य ब्रह्मणः शरीरत्वात्पुरुषशब्दवाच्यं ब्रह्मांडमजनयदित्यन्वयः । अधिपुरुषमिति पाठे अधिगतः पुरुषसूक्तवाच्यो यस्मिंस्तत्तथेत्यर्थः । "ईश्वरो दैवमुद्दिष्टं सर्वस्यापि प्रभुत्वत" इत्यतः पूर्वोक्तेश्वरो दैवशब्देन गृह्यते ॥ ४ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

कालयति सर्वं मेलयतीति कालः । कालो वृत्तिविशेषः । काल एवं संज्ञा यस्यास्ताम् । त्रयोविंशतितत्त्वानामिति । महदादीनामेव परस्परमेलनात् प्रकृतेस्तु सर्वानुगतेः ॥ १ ॥ २ ॥ ❀ ❀ चेष्टारूपेण पूर्वोक्तेन कालाख्येनैव कारणभूतेन । योऽयं कालस्तस्य तेऽव्यक्तबन्धो चेष्टामाहुरित्युक्तेः ॥ ३ ॥ ❀ ❀ अधिपूरुषं ब्रह्माण्डरूपं 'क्वाहं तमोमहदहंखचराग्नि-वार्भूरि'त्याद्युक्तेः ॥ ४ ॥ ५ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

षष्ठे विराड्भूत्तत्त्वैरन्तर्यामिप्रवेशतः । अधिभूतादिभेदश्च तस्य देहे प्रपञ्चितः ॥ १ ॥

स्वशक्तिकार्यत्वात् स्वशक्तीनां महदादीनां असमेत्य अमिलित्वा सतीनां स्थितानां प्रसुप्तं लोकतन्त्रं विश्वनिर्माणक्रिया यासां तासां गतिं दशां दृष्ट्वा ॥ १ ॥ ❀ ❀ कालेनैव संज्ञा महदाद्याः विविधा यस्याः सा कालसंज्ञा प्रकृतिः तां बिभ्रत् सन् आविशत् प्रथमं संहननकारिण्या शक्त्यैव ततो वर्षसहस्रान्ते अन्तर्यामितयेत्यर्थः । प्रकृत्या सह प्रवेशात्त्रयोविंशतीत्युक्तं महदहंकारौ पञ्चतन्मात्राणि पञ्चमहाभूतानि एकादशेन्द्रियाणीति त्रयोविंशतिः यदुक्तं । "मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृति-विकृतयः सप्त । षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुष ।" इति "तत् सृष्ट्वा तदेवानुप्राविशत् " इति श्रुतेः ॥ २ ॥ ❀ ❀ चेष्टारूपेण क्रियाशक्त्या कर्म तेषां क्रियां जीवानामदृष्टं वा ॥ ३ ॥ ❀ ❀ प्रबुद्धं कर्म क्रियाशक्तिर्यस्य सः । दैवेनेश्वरेण । मात्राभिरंशैः अधिपूरुषं विराड्देहम् ॥ ४ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

इत्थं कृतप्रार्थनेषु भगवत्प्रवेशं भगवदाविष्टेभ्यस्तत्त्वेभ्यो ब्रह्मांडोत्पत्तिं तत्र भगवत्कृतमधिभूतादिभेदमाह षष्ठेनाध्यायेन। प्रसुप्तलोकतंत्राणामप्रबुद्धलोकरचनासामर्थ्यानामित्येवासमेत्य अमिलित्वा सतीनां वर्त्तमानानां स्वशक्तीनां महदादीनां गतिं स्थितिं निशाम्य दृष्ट्वा कालेन संज्ञा उद्बोधो यस्यास्तां प्रकृतिं देवीं बिभ्रत् तया सह त्रयोविंशतितत्त्वानां महदहंकारपंचभूतपंचतन्मात्रैकादशेंद्रियाणां गणं समूहमाविशदिति द्वयोरन्वयः ॥ १ ॥ २ ॥ ❀ ❀ सुप्तमप्रबुद्धं कर्म लोकरचनाव्यापारं प्रबोधयन् चेष्टारूपेण प्रबोधनसंयोजनादिचेष्टारूपेणोपलक्षितः स भगवान् भिन्नं गणं संयोजयामास ॥ ३ ॥ ❀ ❀ प्रवुद्धकर्मा प्रवुद्धव्यापारः दैवेन भगवतः मात्राभिरंशैः अधिपूरुषं सावरणं विराड्देहम् ॥ ४ ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

एवं भगवतः सृष्टौ भूतोत्पत्तिर्निरूपिता। कालोत्पत्त्यर्थमधुना ब्रह्माण्डोत्पत्तिरुच्यते ॥ १ ॥
स्वशक्तिदानभोगौ तु विषयत्वार्थमुच्यते। विषयानन्त्यसिद्ध्यै हि माहात्म्यं विनिरूप्यते ॥ २ ॥
एवं भगवतो मात्राश्चतुर्द्धा विनिरूपितः। स्पर्शो भगवतो नाऽस्ति तद्भावाद्देहवद्भुजिः ॥ ३ ॥

एवं पूर्वाऽध्यायान्ते तत्त्वानां प्रार्थनमुक्तम्, तत्प्रार्थनमुपसंहरति—इतीति। एतावत्येव प्रार्थना। तासां गतिं निशाम्य निरीक्ष्य शक्तिं बिभ्रद्युगपदाविशदिति सम्बन्धः। तासु भगवत्प्रवेशो न युक्त इत्याशङ्क्याऽऽह—स्वशक्तीनामिति। तासामिति। स्त्रीत्वेन तासां विज्ञापनं न दोषाय, स्वस्यैव सामर्थ्यरूपत्वात्। तासां कृत्यभावे स्वसामर्थ्याभाव एव भवेत्। स्त्रीरूपाश्च ताः। भार्यासक्तं स्वयमेव करोति कारयति च। शक्तित्वादेव भिन्नतया स्थितिर्न दोषाय। न हि ता वाक्येन मिलन्ति, स्वेनैव तु मिलन्ति। पुरुषालिङ्गिता एव ता एकीभवन्ति, न स्वभावतः। समानप्रतिपत्तेर्न वैमनस्यम्। अत एव स्वभावतः, असमेत्य अमिलित्वा, सतीनां विद्यमानानाम्। किञ्च, स्वप्रवेशव्यतिरेकेण तासु विद्यमानमपि रजो न प्रकटीभवति। तदाह—प्रसुप्तलोकतन्त्राणामिति। प्रकर्षेण सुप्तानि लोकानां तन्त्राणि रचना यासु; तन्त्रं समूहो वा। प्रसुप्ता वा ये लोकाः। येषां जीवानां कर्म न प्रबुद्धं तदधीनास्ताः। प्राण्यदृष्टप्रेरिता एव ताः कार्याणि कुर्वन्ति। समष्टेर्गृहत्वेन व्यष्टीनामेव मुख्यत्वमिति पक्षः। पक्षद्वयमप्यत्र भगवतः पुरुषरूपद्वयसम्पत्त्यर्थं निरूप्यते। तदुक्तम्—असमेत्य सतीनां प्रसुप्तलोकतन्त्राणामिति। तासामन्योन्यमेलने ब्रह्माण्डोत्पत्तिः। कर्मप्रबोधने व्यष्टीनामुत्पत्तिः। एतत्सर्वं निशाम्य ज्ञात्वा अग्रे प्रकारभूतां गतिं च निशाम्य। [1]सर्वप्रकारकरणसामर्थ्यार्थमाह—ईश्वर इति ॥ १ ॥ ❀ ❀ एवं समर्थो[2] निश्चित्य यत्कृतवांस्तदाह—कालसंज्ञामिति। काल इति संज्ञा यस्याः। कालोऽप्येका भगवच्छक्तिः, अन्यथा पुरुषद्वयप्रवेशे शक्तिषु रसाभासः स्यात्। कालेन संज्ञा बोधो यस्याः सा, तां वा। मर्यादारूपा सा शक्तिः सृष्टिकाले प्रबुद्ध्यते, अन्यास्तु भगवता प्रबोध्यन्ते। तया सह भगवद्दर्शनेन तासां मात्सर्यं मा वा भवत्विति देवीमित्युक्तम्। सा हि देवतारूपा अतिसूक्ष्मा, तया विना कर्मप्रबोधो दुर्घटः। कर्म कालाधीनमेव, अत एव काले कर्मविधानम्। तस्या अप्रयोजकत्वं निराकरोति—शक्तिमिति। बिभ्रदिति प्रवेश्यरूपव्यावृत्त्यर्थमुक्तम्। तत्र भगवतोऽतिसामर्थ्यं वक्तुम्, तादृशसामर्थ्यं भगवतो वर्तत इति ज्ञापयति—उरुक्रम इति। अद्भुतचरित्रत्वमुरुक्रमे सिद्धम्, तेनैवाऽद्भुतचरित्रेण त्रयोविंशतितत्त्वानां गणं युगपदाविशत्। प्रकृतिपुरुषौ परित्यज्य शिष्टास्त्रयोविंशतिर्भवन्ति। युगपत्प्रवेशोऽद्भुतचरित्रम्। तत्त्रयोः सन्धिरिव नैकतरप्रवेशे कार्यसिद्धिः। गणप्रवेशो गणादेव कार्यमिति सूचयितुम्। अत्र प्रवेशो न जलादेरिव, किन्तु तेजस इवाऽयोगोलादावावेशः यथा गणकार्यं भगवत्कार्यं भवति, अन्यथा भगवच्चरित्रताऽस्य सर्गस्य न स्यात्। तदाह—आविशदिति ॥ २ ॥ ❀ ❀ ततः किमत आह—सोऽनुप्रविष्ट इति। यद्यपि ताभिः क्रियया सह ज्ञानमेव प्रार्थितम्, न सहप्रवेशः। तथापि भगवदेककार्यं न ताभिः सेत्स्यतीति भगवान् स्वयमेव प्रविष्टः। अतः परं प्रार्थितस्य प्रयोजनाभावान्न प्रार्थितं दत्तम्। ननु स्वभावत एव सर्ववस्तुषु वस्तुस्वरूपो भगवानस्ति, तथापि चेत्कार्यं न सिध्यति, किं प्रवेशेनाऽपि भवेत्? तत्राऽऽह—चेष्टारूपेणेति। चेष्टा प्रयत्नः। कार्योपयोगिज्ञानेच्छाप्रयत्नरूपेण, केवलप्रयत्नरूपेण वा तत्र प्रविष्टः। प्रविश्य पुनस्तं गणं भिन्नं संयोजयामास। सृष्टावेव कार्यजननसमर्थास्ते सृष्टाः, परं भिन्ना इति योजनमेव कर्तव्यम्। सम्यक् योजनं यथा कार्यमुपपद्यते। सङ्गे नीतायाः शक्तेः प्रयोजनमाह—सुप्तं कर्म प्रबोधयन्निति। प्राणिनां यत् सुप्तं कर्म, तत् कालशक्त्या प्रबोधयन्। प्रबोधनप्रवेशयोः समानकालत्वे उभयविधं कार्यमेकदा सिद्ध्यति। प्रबोधनस्य भिन्नहेतुकत्वान्न प्रधानक्रियासंवन्धः ॥ ३ ॥ ❀ ❀ ततो यज्जातं तदाह—प्रबुद्धकर्मा दैवेनेति। सुप्तैः सह करणमप्यशक्यम्। प्रबुद्धे साहाय्यमपि तेन सिद्ध्यति। दैवेनेति देवतारूपया शक्त्या। स्त्रिया प्रबोधे स्वार्थं भवेदिति नपुंसकनिर्देशः। तया सहितं भगवद्रूपं वा दैवशब्देनोच्यते। सर्वत्र कर्मप्रबोधार्थं पुनस्त्रयोविंशतिको गण इत्युक्तम्। पुनर्भगवत्कार्यान्तरमाह—प्रेरित इति। मेलनं प्रेरणं च भगवत्कार्यम्। भगवतः प्रवेशात्तस्य गणस्य व्यापकता जाता। ततो गणांशैरल्पैरेव ब्रह्माण्डनिर्माणं जातमित्याह—स्वाभिर्मात्राभिरिति। अधिरूपं ब्रह्माण्डम्। पुरुषमधि-

---

१. सर्वप्रकारेण सामर्थ्यमाह, ग। २. सर्वसमर्थो, घ।

पुरुषशरीरत्वात्। पुरुशब्दोऽप्यस्ति। पुरुपादप्यधिकं वा, आवरणानामति जननात्। भगवत्प्रेरणया गणेन कृतत्वात् भगवत्कृतमेव ॥ ४ ॥

**श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः**

अथ षष्ठाध्यायं विवरिषवोऽध्यायसङ्गतिं स्फुटीकर्तुं पूर्वाध्यायार्थमनुवदन्तो ब्रह्माण्डोत्पत्तिमुखेन मात्राप्रयोजनं सोपपत्तिकमाहुः—एवमित्यादि। एवं वेदोक्तभूतव्यष्टितया भगवद्धर्मत्वेन रूपेण भगवत्कर्तृकसृष्टौ भूतोत्पत्तिः पूर्वाध्याये निरूपिता। अधुना अस्मिन्नध्याये भोग्या मात्रा निरूपणीया इति भोगसाधकचेष्टारूपकालोत्पत्त्यर्थं तदाधारभूतब्रह्माण्डस्योत्पत्तिरुच्यते, तेनाऽवसरः सङ्गतिरित्यर्थः। ननु भवत्वेवम्, तथाप्येतेषु भोग्यत्वाद्भगवद्भोगस्यैव वक्तव्यत्वादेतेभ्यः शक्तिदानमेतेषां भोगश्च किमित्युच्यत इत्याकांक्षायामाहुः—स्वशक्तीत्यादि। ब्रह्माण्डोत्पत्तिर्योच्यते, सैतेषां भगवद्विषयत्वार्थमुच्यते। ब्रह्माण्डे चैतेऽवयवभूताः; अवयवद्वारा चाऽवयविनो भोगः; स च शक्तिं विना न भवतीति विषयत्वार्थमेवैतावुच्येते इत्यर्थः। अत्र गमकमाहुः—विषयेत्यादि। हि यतो हेतोरेतदर्थमेतन्माहात्म्यं लोकपालत्वरूपमुच्यते, ततो ज्ञायते विषयत्वार्थमेवैताविति। नन्वत्र ब्रह्माण्डं तु शरीरत्वाद्भोगायतनम्, तत्र चैतान्येव तत्त्वानि प्रविष्टानि, तेषामेव भोग्यत्वं मात्रात्वार्थं वक्तव्यम्, तदत्र कया विधयेत्याकांक्षायामाहुः—एवमित्यादि। एवं ब्रह्माण्डोत्पत्तिशक्तिदानभोगमाहात्म्यप्रकारेण चतुर्धा भगवतो मात्रा विनिरूपिताः। ब्रह्माण्डे पृथिवीप्राधान्याद्गन्धमात्रा, शक्तिदानेऽन्योन्यासादनस्य रसप्राधान्याद्रसमात्रा, भोगे रूपेण प्रवेशाद्रूपमात्रा, माहात्म्ये शब्दप्राधान्याच्छब्दमात्रेत्येवं विशेषेणोक्ता इत्येवंरूपेणैषां भोग्यत्वमित्यर्थः। ननु स्पर्शोऽत्र कुतो नोक्त इत्यत आहुः—स्पर्श इत्यादि। 'ये हि संस्पर्शजा भोगा दुःखयोनय एव ते' इति वाक्यात् स्पर्शस्य दुःखजनकत्वात् भगवतश्च तदभावाद् दुःखजनकस्पर्शो नास्तीत्यतो नोक्त इत्यर्थः। ननु द्वितीयस्कन्धे स्पर्शस्य प्रत्यासत्तित्वव्यवस्थापनात्तदभावे भोगान्तरस्य कथं सिद्धिरित्यत आहुः—तद्भावादित्यादि। तद्भावात्। भावो व्याप्तिः, तस्य भगवतो ब्रह्माण्डे व्याप्तेर्यथा तत् भागवतो देहस्तथा भुजिर्भोगोपि तद्द्व्याप्तेरेवेति न तत्र प्रत्यासत्तित्वेन तदपेक्षेत्यर्थः। विदुरमैत्रेयसंवादे तु हेतुहेतुमद्भावस्य स्फुटत्वात् सैव सङ्गतिरिति तां व्याख्यायावतरणमुखेन बोधयन्ति—एवमित्यादि।

न युक्त इति। प्राकृतत्वात् पुंरूपत्वाच्च न युक्तः। स्त्रीरूपा इति। पूर्वं स्वकार्ये पुंरूपत्वेपि अग्रिमकार्ये शक्त्यभावेन सुद्युम्नवत् स्त्रीरूपाः। भार्यासक्तमिति। भार्यायां स्थापितं कार्यम्। भिन्नतयेति। सपत्नीवदितरेतरविरुद्धया। पक्षद्वयमिति। समष्टिमुख्यत्वं व्यष्टिमुख्यत्वं चेति पक्षद्वयम् ॥ १ ॥ ❀ ❀ कालसंज्ञामित्यत्र। तप्तयोरित्यादि। तप्तयोः कपालयोर्यथा संधिः श्लेषो भवति, न त्वेकतरतापे; तथाऽत्रेत्यर्थः ॥ २ ॥ ❀ ❀ सोन्वित्यत्र। प्रार्थितस्येति। प्रार्थितस्य ज्ञानस्य। उभयविधमिति। समष्टिव्यष्टिरूपम्। प्रबोधनस्येत्यादि। कर्मप्रबोधनस्य कालाख्यचेष्टाहेतुकत्वान्न मूलक्रियया तस्य कार्यस्य सम्बन्धः। तथा चोभयविधमपि कार्यं कालेनैव भगवान् कृतवानित्यर्थः ॥ ३ ॥

**श्रीगिरिधरकृता बालप्रबोधिनी**

ईश्वरानुगृहीतैस्तैः षष्ठे तु महदादिभिः। अधिदैवादिभेदेन विराट्सर्गो निरूप्यते ॥ १ ॥

एवं निवेदिताभिप्रायाणां भगवदनुप्रवेशस्य सामर्थ्यलाभमाह—इतीति त्रिभिः। स ईश्वरो भगवानित्येवं उक्तप्रकारेणासमेत्य अमिलित्वा सतीनां वर्तमानानां स्वशक्तीनां तासां महदादीनां गतिं दशामसामर्थ्यं निशाम्य दृष्ट्वा तदा कालसंज्ञां कालाख्यां देवीं देवस्य स्वसम्बन्धिनीं शक्तिं बिभ्रत् धारयंस्त्रयोविंशतितत्त्वानां महदहंकारपञ्चमहाभूतपञ्चतन्मात्रैकादशेन्द्रियरूपाणां गणं समूहं युगपत् एकदैवाविशत् अनुप्रविष्टोऽभूदिति द्वयोरन्वयः। पूर्वकल्पसम्पादितमेव सर्वं सूक्ष्मरूपेण तत्रास्तीति न तद्रचनायां बह्वयास इति सूचयन्विशिनष्टि—प्रसुप्तेति, प्रसुप्तानि लोकतन्त्राणि प्राणिकर्माणि लोकरचना वा यासु तासामित्यर्थः। कथं बह्वीष्वेको युगपत्प्रविष्ट इत्याकाङ्क्षायामाह—उरुक्रम इति, अनन्तलील इत्यर्थः ॥ १ ॥ २ ॥ ❀ ❀ स भगवान् तत्रानुप्रविष्टः सन् चेष्टारूपेण कालाख्येन सुप्तं वासनात्मकेन स्थितं प्राणिकर्म प्रबोधयन् फलोन्मुखीकुर्वन् भिन्नं स्थितं तं गणं संयोजयामास यथोचितं परस्परं मिलितं चकारेत्यन्वयः ॥ ३ ॥ ❀ ❀ लब्धसामर्थ्यात् तत्त्वगणात् ब्रह्माण्डोत्पत्तिमाह—प्रबुद्धकर्मेति। दैवेन भगवता प्रबुद्धं कर्म प्राण्यदृष्टं यस्मिन्, यद्वा स व्यापारो यस्य तत्त्रयोविंशतितत्त्वात्मकं विराट्शरीरमजनयदित्यन्वयः ॥ ४ ॥

**हिन्दी अनुवाद**

**विराट् शरीरकी उत्पत्ति**

मैत्रेय ऋषिने कहा—सर्वशक्तिमान् भगवान्ने जब देखा कि आपसमें संगठित न होनेके कारण ये मेरी महत्त्व आदि शक्तियाँ विश्व-रचनाके कार्यमें असमर्थ हो रही हैं, तब वे कालशक्तिको स्वीकार करके एक साथ ही महत्तत्त्व,

---

१. स प्रबुद्धकर्मा त्रयोविंशतेर्गणः (महदाद्याः सप्त, षोडश विकाराश्चेति साङ्ख्योक्तः) दैवेनेश्वरेण प्रेरितः सन् स्वमात्राभिः अजनयदित्यर्थः।

अहङ्कार, पञ्चभूत, पञ्चतन्मात्रा और मनसहित ग्यारह इन्द्रियाँ—इन तेईस तत्त्वोंके समुदायमें प्रविष्ट हो गये ॥ १—२ ॥ ❀ ❀ उनमें प्रविष्ट होकर उन्होंने जीवोंके सोये हुए अदृष्टको जाग्रत् किया और परस्पर विलग हुए उस तत्त्वसमूहको अपनी क्रियाशक्तिके द्वारा आपसमें मिला दिया ॥ ३ ॥ ❀ ❀ इस प्रकार जब भगवान्‌ने अदृष्टको कार्योन्मुख किया, तब उस तेईस तत्त्वोंके समूहने भगवान्‌की प्रेरणासे अपने अंशोंद्वारा अधिपुरुष—विराट्‌को उत्पन्न किया ॥ ४ ॥

परेण विशता स्वस्मिन्मात्रया विश्वसृग्गणः। चुक्षोभान्योन्यमासाद्य यस्मिँल्लोकाश्चराचराः ॥ ५ ॥
हिरण्मयः स पुरुषः सहस्रपरिवत्सरान्। आ[1]ण्डकोश उवासाप्सु सर्वसत्त्वोपबृंहितः ॥ ६ ॥
स वै विश्वसृजां गर्भो देवकर्मात्मशक्तिमान्। विबभाजात्मनाऽऽत्मानमेकधा दशधा त्रिधा ॥ ७ ॥
एष ह्यशेषसत्त्वानामात्मांशः परमात्मनः। आद्योऽवतारो यत्रासौ भूतग्रामो विभाव्यते ॥ ८ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

जननमेवाह। परेणेश्वरेण। विश्वसृजां तत्त्वानां गणः मात्रया चुक्षोभ परिणतो न सर्वात्मना यस्मिँल्लोकाः स्थिताः ॥ ५ ॥ ❀ ❀ स पुरुषोऽधिपुरुष इत्युक्तः आंडकोशे ब्रह्मांडमध्ये सर्वैः सत्त्वैरनुशायिभिर्जीवैः सहितः ॥ ६ ॥ ❀ ❀ गर्भः कार्यरूपो विराट् देवशक्तिर्ज्ञानशक्तिस्तयैकधा। हृदयावच्छिन्नचैतन्यरूपेण कर्मशक्तिः क्रियाशक्तिस्तया दशधा। प्राणरूपेण प्राणादयः पंच। "नागः कूर्मश्च कृकलो देवदत्तो धनंजयः।" इत्येते पंचैवं वृत्तिभेदेन दशविधः प्राणः आत्मशक्तिर्भोक्तृशक्तिस्तयाऽध्यात्मादिभेदेन त्रिधाऽऽत्मानं विभक्तं कृतवान् ॥ ७ ॥ ❀ ❀ एवं विभागसामर्थ्याय तस्योत्कर्षमाह। एष हीति। अशेषसत्त्वानां प्राणिनामात्मा व्यष्टीनां तदंशत्वात् अंशो जीवः अवतारत्वोक्तिस्तस्मिन्नारायणाविर्भावाभिप्रायेण ॥ ८ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

महदादीनां सर्वात्मना परिणामे तत्र तत्र कार्याणां स्वस्वकारणे लयोक्तिरसंगता स्यादिति भावः। यद्वा। मात्रया पुरुषरूपेणांशेन स्वस्मिन्—तत्त्वगणे अन्योन्यमासाद्य प्रधानगणभावं प्राप्य चुक्षोभ ब्रह्मांडरूपे परिणतोऽभवत् यस्मिंस्तत्त्वगणे ॥ ५ ॥ ❀ ❀ हिरण्मयस्तेजोरूपः अप्सु परमेशगर्भजातोदकेषु य आंडकोशस्तत्रोवासेति ॥ ६ ॥ ❀ ❀ हृदयावच्छिन्नचैतन्यरूपेण जीवरूपेण प्राणः प्राक्क्रमणो नासाग्रवर्त्ती, अपानोऽवाक्क्रमणः पाय्वादिस्थानवर्त्ती, समानो भुक्तपीतान्नादिसमीकरणः शरीरमध्यवर्त्ती, उदान उत्क्रमणः कंठस्थानवर्त्ती, व्यानो विष्वक्क्रमणः सकलशरीरवर्त्ती, नाग उद्गारकरः, कूर्म उन्मीलनकरः, कृकलः क्षुत्करः, देवदत्तो जृंभाकरः, धनंजयः पोषणकर इति विवेकः ॥ ७ ॥ ❀ ❀ तस्य हिरण्मयपुरुषस्य। तस्मिन् विराजि। यत्र विराजि। असौ प्रत्यक्षसिद्धः। भूतानां देवतिर्यङ्मनुष्याणां समूहः विभाव्यते यतः सत्तां प्राप्य दृश्यत इत्यर्थः। योगिनो हि तदंतर्यामिणा सहैक्यभावनया तमपि पुरुषमवतारं विदुरिति ज्ञेयम् ॥ ८ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

यस्मिन् गणे ब्रह्मांडरूपेण परिणते सति स्थितास्तदाश्रिताः ॥ ५ ॥ ❀ ❀ स पुरुषः समष्टिपुरुषोपाधित्वात्पुरुषशब्दवाच्यो विराड्देहः अनुशायिभिः स्वस्वोपाधिविशिष्टैर्व्यष्टिजीवैः ॥ ६ ॥ ❀ ❀ विराट्तदभिमानित्वात्तदभिन्नः समष्टिजीवः हृदयावच्छिन्न चैतन्यरूपेण शुद्धक्षेत्रज्ञरूपेण भोक्तृशक्तिरहङ्कारोपहितचिदाभासः ॥ ७ ॥ ❀ ❀ तस्य समष्टिजीवस्य आत्माऽऽश्रयः वृक्षाणां वनवत् तदंशत्वात्समष्ट्यंशत्वात् तस्मिन्समष्टिरूपे जीवे ॥ ८ ॥

### श्रीमद्वीरराघवव्याख्या

कथमजनयदित्यपेक्षायां तदेव विवृणोति परेणेति। मात्रयांशभूतसंकल्परूपज्ञानेन स्वस्मिन् विशताऽनुप्रविष्टेन परेण भगवतोपलक्षितः हेतौ वा तृतीया विश्वसृड्गणः विश्वं सृजतीति विश्वसृड्गणः त्रयोविंशतितत्त्वजातं यस्मिन् गणे चराचराः स्थावरजंगमा लोकाः कार्यत्वेनावस्थिताः एवंभूतो गणः अन्योऽन्यं परस्परमासाद्य संहत्य चुक्षोभ परिणतोऽभूत्समष्टिपूरुषगर्भब्रह्मांडरूपेण परिणतोऽभूदित्यर्थः ॥ ५ ॥ ❀ ❀ हिरण्मय इतीत्यंडकोशविशेषणं स पुरुषः समष्टिपुरुषसहितः। यद्वा अप्सु वर्त्तमानेंडकोशे हिरण्मयः स्वर्णमयांडकोशावृतत्वाद्धिरण्मयः स प्रसिद्धः समष्टिपुरुषश्चतुर्मुखः देवादिसर्वसत्त्वैरुपबृंहितः युक्तः सहस्रपरिवत्सरान् यावदंडस्य परिपाकस्तावदुवास उषितवानित्यर्थः। अत्राप्सु उवासेत्यनेनांडकोशोत्पत्तेः पूर्वमपां स्थित्यवगमात् उदाप्लुतं विश्वमिदं तदासीदिति वक्ष्यमाणत्वाच्चावरणजलसृष्टिरंडोत्पत्तेः पूर्वमवगंतव्या। सर्वसत्त्वोपबृंहित इत्यनेन चतुर्मुखस्य समष्टिपुरुषत्वमावेदितम्। तेनावरणजले शयानस्य भगवतो नाभ्याः प्रसूतत्वाल्लब्धपद्मकोशरूपब्रह्मांडोत्पत्तिरर्थसिद्धा वेदितव्या।

---

[1] प्रा० पा०—अण्डकोश०।

स पञ्चकोशः सहसोदतिष्ठदिति वक्ष्यमाणैकार्थ्यात्। एवं तत्त्वानां समष्टिपुरुषशरीरारंभकत्वमुक्तं समष्टिपुरुषत्वं नाम भूतसंघातारब्धस्वसंश्लिष्टजीवसंघातमनःप्राणेंद्रियात्मकशरीरवत्त्वं न च पुत्रादिशरीरारंभकशरीरवत्त्वात्पित्रादीनां समष्टिपुरुषत्वशंका कार्या 'पंचम्यामाहुतावापः पुरुषवचसो भवंति' 'तदंतरप्रतिपत्तौ रंहति संपरिष्वक्तः प्रश्ननिरूपणाभ्याम्'। शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः। गृहीत्वैतानि संयाति वायुर्गंधानिवाशयात्॥ इत्यादिश्रुतिसूत्रस्मृत्यादिप्रामाण्येन मनआदींद्रियविश्लेषाभावेन पित्रादिशरीराणां तदारंभकत्वाभावात् तदिंद्रियाद्यधिष्ठानमात्रत्वात्॥ ६॥ ❀ ❀ एवं समष्टिपुरुषोत्पत्तिमभिधायाथास्मात्समष्टिपुरुषशरीराद्व्यष्टिशरीरेन्द्रियाणामुत्पत्तिं वक्ष्यंस्तावदस्य समष्टिपुरुषत्वं वदन् करणभोक्तृविषयरूपेण त्रिधा विभागं करणांशे एकादशधा विभागं स्वकर्तृकमाह स इति। विश्वसृजां महदादीनां गर्भः अपत्यरूपः दैवं भगवत्संकल्पः कर्मात्मशक्तिः कर्मरूपा आत्मनां जीवानां शक्तिः 'अविद्या कर्मसंज्ञाऽन्या तृतीया शक्तिरिष्यत' इत्युक्तेः तद्वानित्यर्थः। यद्वा दैवं भगवत्संकल्पः कर्म जीवानां कर्म आत्मानो जीवाः शक्तिः जीवसंघशरीरस्यारंभका चिच्छक्तिश्चास्य संतीति तद्वान् अनेन समष्टिपुरुषत्वमुक्तं एवम्भूतः स वै समष्टिआत्मना कर्त्रा आत्मानं प्रथमं त्रिधा करणं भोक्तृविषयरूपेण तत्रापि करणांशे एकधा दशधा मनः पर्यंतेंद्रियरूपेणैकादशधेत्यर्थः विबभाज विभक्तमकरोत्स्वसंश्लिष्टजीवसंघं भोक्तृत्वेन खेंद्रियैकदेशान् तद्भोग्यकरणत्वेनाकारेणाकरोदित्यर्थः॥ ७॥ ❀ ❀ अस्यैवंविधविभागसामर्थ्यमाह एष इति। एष ब्रह्माऽशेषसत्त्वानां समस्तव्यष्टिपदार्थानामात्मा आधारः तच्छरीरकपरमात्मदृष्ट्येदमुक्तं परमात्मनोंऽशः अपृथक्सिद्धविशेषणभूतः। नन्विदं सर्वजीवसाधारणमत आह आद्य इति। आद्यः अवतारः परमात्मन इत्यनुषंगः। परमात्मन आवेशावतारो बोध्यः "सृष्टिं ततः करिष्यामि त्वामाविश्य प्रजापते" इत्युक्तेः। यत्र परमात्मात्मके समष्टिपुरुषे परमात्मांशावतारभूतेऽसौ भूतग्रामः व्यष्टिपदार्थजातं विभाव्यते विविधमुत्पाद्यते अत ईदृश विभागसमर्थ इत्यर्थः॥ ८॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

एतदेव स्पष्टयति परेणेति। चुक्षोभ ब्रह्मांडाकारेण विकृतवान्यस्मिन्नंडे उत्पन्नः॥ ५॥ ❀ ❀ प्रथमक्षणे शरीरप्रवेशो हरेरनंतरं भोगिनश्चेतनस्येति दर्शयितुकामस्य हरेरंडप्रवेशमाचष्टे हिरण्मय इति। यस्य प्रेरणया तत्त्वगणोंऽडमजनयत् स हिरण्मयो ज्ञानानंदात्मककरचरणाद्यवयववान् पुरुषाख्यो हरिरांडकोशेंडकोशस्थाप्सु अंडकोशस्थोदके शेषपर्यंके सहस्रपरिवत्सरानुवासेत्यन्वयः। प्रलये सर्वचेतनानां परमचेतनेनैकीभाव इति शंकां निवारयति सर्वेति। सर्वसत्त्वैः सर्वजीवैरुपबृंहितो नत्वेकीभूतः। अनेन निर्देहानां चेतनानां प्रलयेऽवस्थानं कथमिति शंका निरस्ता, परमात्मन्यवस्थानोपपत्तेः॥६॥ ❀ ❀ सिसृक्षोर्हरेर्गर्भोदके बहुकालव्यापकेन निवासेन सृष्टिकथोपरतेति शंकां परीक्षितो हार्दां परिहरन्नंडांतर्वर्तिनो हरेर्विक्रमविशेषमाह स वा इति। यो गर्भोदके शेषपर्यंके शयानः स विश्वसृजां ब्रह्मांडं सृष्टवतां तत्त्वानां गर्भोन्तर्यामी दैवं ब्रह्मादिदैवतेष्वधिकं कर्म प्राण्यदृष्टं सुखदुःखभोगसाधनमात्मशक्तिः प्रकृतिः नित्यमेतैर्युक्तत्वाद्दैवकर्मात्मशक्तिमान् ब्रह्मणो विराडाख्यं शरीरं सृष्ट्वा तत्प्रविश्यात्मना परप्रेरणामंतरेण स्वेच्छयात्मानं तद्देहहृदयादिनियाकमत्वेन एकधादि विबभाज विभक्तवानित्यन्वयः। वा इत्यनेनोक्तार्थस्य ग्रंथांतरप्रसिद्धिद्योतकेन विश्वसृजां गर्भः कार्यात्मा आत्मानमंडरूपमेकधादिभेदेन विबभाजेत्येतदपव्याख्यानं प्रत्याख्याति स्वतोऽचेतनस्य कार्यकारणत्वशक्त्यदर्शनात् अप्रसिद्धत्वाच्चेति॥ ७॥ ❀ ❀ ननु विश्वसृजां गर्भ आंडकोश एव भवेदेष ह्यशेषसत्त्वानामात्मेति सर्वप्राण्याधारत्वेन परामर्शात्तदर्थं सृष्टत्वाच्चेति तत्राह एष हीति। नायमंडकोशस्य परामर्शः किंतु पुरुषेणात्मभूतेन वीर्यमाधत्त वीर्यवानिति यः पुरुषाख्यो हरिरभिहितः स एष परामृश्यते परमात्मनोंश इत्युक्तत्वादाद्योऽवतार इत्यवतारशब्देन विशेषितत्वाच्च नह्यंडकोशस्य हरेरवतारत्वनिर्देशः क्वचिद् दृष्टः श्रुतो वा। तथाचायमक्षरार्थः यो महदादितत्त्वानि सृष्ट्वा तेषामण्डसृष्टावस्वातंत्र्यं प्रकाश्यात्मानं तैःस्तावयित्वा तदनुग्रहाय सर्जकरूपेण रमया सह प्रविश्य संयोज्य क्षोभयित्वातदंशैरंडं सृष्ट्वा तत्प्रविश्य अप्सु सहस्रपरिवत्सरानुषित्वा तदंते ब्रह्मणो विराट्शरीरं सृष्ट्वा तद्देहेंद्रियादिनियामकत्वेनाविर्बभूव। एष ह्यशेषसत्त्वानामात्मा नियामकः परमात्मनः स्वरूपांश आद्योऽवतार एतादृशमहिमेति शेष इति। कोऽसाविति तात्पर्यात् श्रद्धातिशयजननार्थं पूर्वोक्तमेवाह यत्रेति। यत्र यस्मिन्नाद्यावतारे पुरुषनाम्नि भूतग्रामो भूतसमूहो विभाव्यते सत्तां प्राप्य दृश्यते स इत्यर्थः। हिशब्द "आद्योऽवतारो विष्णोस्तु पुरुषो नाम कीर्तित" इत्यादौ प्रसिद्धोऽयमर्थ इति दर्शयति॥ ८॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

हिरण्मयो ब्रह्माण्डस्तस्मिन् स्थितो हिरण्यगर्भः अप्सु इति पूर्वं जलेनान्तः पूर्णत्वात्॥ ६॥ ❀ ❀ स वै इति दैवकर्मात्मशक्तिमान् इत्यत्र दैवशक्त्या कर्मशक्त्या आत्मशक्त्या च युक्त इत्यर्थः॥ ७॥ ८॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

जननप्रकारमाह विश्वसृजां तत्त्वानां गणः स्वस्मिन् परेण परमेश्वरेण मात्रया अंशेन विशता सता अन्योऽन्यमासाद्य प्रधानगुणभावं प्राप्य चुक्षोभ गर्भरूपेण परिणतोऽभूत्॥ ५॥ ❀ ❀ स समष्टिविराट् हिरण्मयः चतुर्दशभुवनात्मक अण्डकोशे या आपः गर्भोदकानि तासु यद्वा अप्सु यो अण्डकोशस्तस्मिन् सर्वसत्त्वैरनुशायिभिर्जीवैरुपबृंहितो विस्तृतः॥६॥

❀ ❀ अथ तस्य मुखाद्यङ्गसिद्ध्यर्थं प्रथमं त्रिशक्तित्वमाह विश्वसृजां महदादीनां गर्भः कार्यरूपः दैवकर्मात्मशक्तिमान् जीवप्राणाध्यात्मादिशक्तियुक्तः आत्मनैवात्मानं विबभाज विभक्तं कृतवान् एकधा जीवशक्त्या त्रिधा आध्यात्मिकादिशक्त्या ॥ ७ ॥ ❀ ❀ परमात्मोपासकानां चित्तशुद्ध्यर्थं प्रथममयमेवोपास्य इत्याह एष हीति। अशेषसत्त्वानां प्राणिनामात्मा व्यष्टीनां तदंशत्वात् अंशो जीवः अवतार इति योगिनां तदन्तर्यामिणा सह तस्यैक्यभावनया भूतग्रामो देवमनुष्यादिसमूहः ॥ ८ ॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

स पुरुषः सप्तावराणांतर्गतः विराड्देहः आंडकोशे सप्तावरणमयः ब्रह्मांडमध्ये सर्वैः सत्त्वैरनुयायिभिर्जीवैः सहितः अप्सु गर्भोदकेषु उवास उषितवान् तस्य विराड्देहस्य प्राकृतत्वेऽपि तदंतः प्रविष्टस्य भगवतः पुरुषावतारस्य अप्राकृतदेहोऽपि हिरण्मय इति विशेषणेन सूच्यते इति बोध्यम् ॥ ५ ॥ ❀ ❀ सः विश्वसृजां महदादीनां गर्भः कार्यभूतो विराडाख्यः दैवं नियंता भगवान् कर्मभोगनिदानम् आत्मा समष्टिव्यष्टिजीवसमूहशक्तिः भगवद्दत्तं सामर्थ्यं ताः संत्यस्य स तथा आत्मना निमित्तभूतेन आत्मानमुपादानभूतं त्रिधा अध्यात्मादिभेदेन विबभाज एकधा हृदयरूपेण दशधा प्राणरूपेण ॥ ६ ॥ ❀ ❀ ननु अस्य त्रिधा कार्यं प्रति निमित्ताभिन्नोपादानत्वे किं बीजमत्राह एष इति। एष विश्वसृजां गर्भः परमात्मनः परमकारणस्य अंशः परमशक्तिपरिणामरूपत्वात्परमात्मकार्यभूत इत्यर्थः। यद्वा परमात्मांशभूतचतुर्मुखाख्यसमष्टिजीवशरीरत्वात्तद्वाचकांशशब्दवाच्यः आद्योऽवतारः आद्यस्य परमकारणस्य परमात्मनोऽवतारः परमात्मावतारस्य पुरुषस्य नियंतुर्वैराजस्य नियम्यभूतो विराडाख्यो देहः अतोऽवतारशब्दवाच्यः एवंप्रभावत्वादात्मानं त्रिधा विबभाजेति भावः। अत एवाशेषभूतानां व्यष्टिप्राणिनामात्मांशी अतएव यत्र असौ भूतग्रामः व्यष्टिप्राणिसमूहः विविधतया भाव्यते उत्पाद्यते ॥ ७ ॥ ❀ ❀ एकधा दशधा त्रिधेत्येतद्विवृणोति साध्यात्म इति। विराट् अध्यात्ममिंद्रियगणस्तत्सहितः अधिदैवं देवगणस्तत्सहितः अधिभूतमिंद्रियविषयशब्दादिकं तत्सहितः प्राणः वायुर्दशविधः प्राणापानसमानव्यानोदाननागकूर्मकृकलदेवदत्तधनंजयभेदात् तत्सहित इत्यर्थः ॥ ८ ॥

## श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

एवं ब्रह्माण्डसृष्टिमुक्त्वा द्वितीयपुरुषमुपपाद्य तृतीयमुपादयितुं तत्रैव पुनः कार्यमाह—परेण विशतेति। स्वस्मिन् विशतां परेण भगवता हेतुना कृत्वा विश्वसृड्गणश्चुक्षोभ। परं मात्रया, एकदेशेन अन्तःस्थितेन, अन्यथा ब्रह्माण्डभेदः स्यात्। अन्तःकार्यार्थमेव स्वस्मिन् विशतेत्युक्तम्, अन्यथा भगवत्प्रवेशेन क्षुब्धो जात इति वदेत्। अतः प्रवेशेनाऽक्षोभ एव। तदैकं ब्रह्माण्डं निष्पन्नम्। यदा पुनः स नियामकेन रूपेण, भिन्नरूपेण वा स एव गणः स्पृष्टः, तदा मध्ये सहस्रधा विदीर्णश्चुक्षोभ, अन्यथा व्यष्टिपुराणि न सृष्टानि भवेयुः। क्षोभफलमाह—अन्योन्यमासाद्येति। स हि विश्वसृजां गणः विश्वसृष्टिस्तस्य स्वतः कार्यम्। अत एकस्मिन्नपि व्यष्टौ सर्वतत्त्वानां कार्यसिद्ध्यर्थमन्योन्यमासाद्य चुक्षोभ। एकस्मिन्नपि द्वाविंशतितत्त्वानां प्रवेशः। एवं प्रस्तारे आनन्त्यं भवत्याकृत्यधिकरणन्यायेन। अतस्तदर्थमेवाऽन्योन्यासादनम्। ततो यज्जातं तदाह—यस्मिन्नन्योन्यासादनपूर्वकक्षोभयुक्ते गणे चराचरा एव लोकाः ॥ ५ ॥ ❀ ❀ एवं समष्टिव्यष्टिदेहानामुत्पत्तिमुक्त्वा तत्र सर्वत्र भगवत्प्रवेशार्थं जीवानामप्रवेशः, तत्त्वान्यपि भगवत्प्रवेशार्थं सर्वसामग्रीं सम्पादयन्ति स्थितानीत्याह—हिरण्मय इति। स हि ब्रह्माण्डात्मा हिरण्मयः सुवर्णात्मकः। पृथिव्यप्तेजसां समानांशतया अन्योन्याभिभवाभावेन यत्कार्यं तत्सुवर्णमित्युच्यते। जलाधिक्ये रौप्यम्, पृथिव्याधिक्ये त्वन्ये धातवः, द्वयोः कारणप्रवेशे मृण्मयानि। मृदस्तेजसाऽतितापे सिकताः, मध्यतापे पाषाणाः, अल्पतापे त्विष्टकाः। जीवसंबन्धेन स्थावरास्थिभेदाः काष्ठादयः। तत्र स विराट्पुरुषो हिरण्मयः, सुवर्णप्रतिमावत्। स एव पुरुषो देहरूपेण, पुरुषसहितो वा, सहस्रपरिवत्सरपर्यन्तं स्वयमण्डात्पृथग्भूत एव, नालिकेरफलवत्, तस्मिन्नेवाऽण्डकोशे अधस्तात्स्थितगर्भोदके, देहात् स्वत एव सृतोदके, स्वसृष्टे वा उदके, शयनं कृतवानित्याह—उवासाऽप्स्विति। व्यष्टीनामपि तदा शयनमेवेत्याह—सर्वसत्त्वोपबृंहित इति। सर्वाणि सत्त्वानि जीवदेहाः सदंशत्वात्सत्त्वानीत्युच्यन्ते। तैरुपबृंहितः संबद्धः। नारायणोदर एव सर्वाणि भूतानि स्थितानीत्यर्थः। अस्मिन् पक्षे न निरात्मकः कियत्कालं स्थितः, पूर्वमेव भगवत्प्रवेशात्। सृष्ट्वा प्रवेशपक्षे तु निरात्मकस्थितिः। अत एवाऽत्र स पुरुष इत्युक्तम्। अत्र तु सहस्रवर्षपर्यन्तमन्तःकार्यं न कृतवानिति केवलं सत्त्वैरुपबृंहितः कार्यप्रकारपर्यालोचनार्थं स्थितः ॥ ६ ॥ ❀ ❀ ततः कार्यं कृतवानित्याह—स वै विश्वसृजां गर्भ इति। विश्वसृजां तत्त्वानां गर्भो बालकः, अन्तःसामर्थ्यरूपो वा; त्रिविधकर्मात्मको जातः। चेष्टारूपस्य भगवतः प्रवेशात् कर्मशक्तियुक्तो जातः। कर्मप्रेरककालशक्तिप्रवेशात् दैवशक्तियुक्तो जातः। विश्वसृजां सहजसामर्थ्यात् अतस्त्रिविधशक्तिमानात्मानमेव विबभाज। केचनाऽऽत्माधीनाः कृतास्तेऽध्यात्मिकाः, केचन दैवाधीनास्ते आधिदैविकाः, कालाधीना इत्यर्थः; केचन क्रियाधीनास्ते आधिभौतिकाः। अतो भगवतः क्रियारूपस्य प्रवेशात् क्रियया भगवत्क्रिययाऽन्यकरणे तु स्पष्टो दोषः। तदाह—विबभाजेति। अतः परं तस्य कारणान्तरं नाऽपेक्षितमित्याह—आत्मनाऽऽत्मानमिति। तत्र त्रैविध्यमवान्तरभेदान् वदन्नाह—एकधेति। प्रथमभेदे सात्त्विके दैवे एक एव भेदः, द्वितीये राजसे दश भेदाः, तृतीये तामसे त्रयो भेदा इति ॥ ७ ॥ ❀ ❀ नन्वेतावद्भिरेव भेदैः कथं सर्वं कार्यं सेत्स्यतीत्याशङ्क्याऽह—एष हीति। अशेषसत्त्वानामात्मा। हि युक्तश्चायमर्थः। बीजं यादृशमेव

भवति तादृशमेव कार्यं भविष्यतीति, सर्वेषामात्मत्वात् स चेदेवं प्रकारेण त्रिरूपो जातः, तदा सर्वाण्येव सत्त्वानि तथा भविष्यन्तीति सर्वमेव कार्यं सेत्स्यति । किञ्च, किमनेनैकेन, एतादृशा भगवतः कोटिशः सन्त्यंशाः; अतो भगवताऽप्यनेके भेदाः सेत्स्यन्तीत्यभिप्रायेणाऽऽह–परमात्मनोंश इति । अयं गर्भः पुरुषोत्तमस्यांशः, कोट्यंशानामप्यंशः । परमयमानन्दांश इत्याह–आद्योऽवतार इति । चिदंशास्तु जीवाः । सर्वेषां ब्रह्माण्डान्तर्वर्त्यवताराणामयमाद्योवतारः । स ह्यक्षरात् परतो विद्यमानो भगवान् प्रथममस्मिन् विराजि उत्तीर्णः, पश्चान्मध्ये । इदमेवाऽवतरणम् । संबन्धश्च वह्निवदिति पूर्वमुक्तम् । अस्याऽवतारस्य स्वरूपात् प्रच्युतिः केनाऽप्यंशेन नाऽस्तीत्यभिप्रायेणाऽऽह–यत्राऽसौ भूतग्रामो विभाव्यत इति । प्रपञ्चाश्रयत्वमेव भगवत्त्वम्, अतो नारायणोऽयं प्रपञ्चाधारत्वाद्भगवानेव । असौ परिदृश्यमानो भूतग्रामो यस्मिन् पुरुषे विशेषेण भाव्यते, शबलतया तिष्ठतीत्यर्थः ॥ ८ ॥

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

परेणेत्यत्र । तृतीयमिति । व्यष्टिसमष्टिपुरुषाख्येषु जीवभेदेषु तृतीयम् । अन्यथेत्यादि । सर्वांशेन पृथक् क्षोभे तेषां नानात्वान्नानाब्रह्माण्डानि स्युरित्यर्थः । तदेति । स्वत एकदेशेन क्षोभे । आकृत्यधिकरणन्यायेनेति । इदमधिकरणं पूर्वतन्त्रे स्मृतिपादेऽस्ति । तत्र व्यक्तीनामानन्त्याद्वैलक्षण्याच्चैकत्र शब्दसंबन्ध इतरबोधो न भवतीत्यतः सर्वत्राऽविशिष्टायामेकस्यामाकृतौ संबन्धोऽङ्गीकृतः । स यथा आकृतिद्वारा सर्वव्यक्तिषु संबध्यते, तथाऽत्रैकैकस्मिन् द्वाविंशतिप्रवेश एकैकस्मिन् संबध्यमानं त्रयोविंशतितत्त्वमुक्तन्यायेनाऽनन्तव्यष्टिसंबद्धं भवतीत्यर्थः ॥ ५ ॥ ❀ ❀ हिरण्मय इत्यत्र । पृथिव्यस्तेजसामित्यादि । एतेन सुवर्णस्य तैजसत्वं न मूलाभिप्रेतम्, मूलेऽन्योन्यासादनोत्तरमुक्तत्वात् । द्वयोः कारणप्रवेशे इति । जलतेजसोः कारणत्वेन रूपेण कपालवत् प्रवेशे । इदमेव 'आत्मकत्वानुभूयस्त्वात्' इति सूत्रेणोक्तम् । तर्हि मृदः कुतो नाना भेदा इत्यत आहुः–मृद इत्यादि । अत्र स्थूलात् सूक्ष्मोत्पत्तेरतितापे पीलुपर्यन्ता, न तु तदुत्तरं पुनः संयोग इति मध्यमेषु पिठरपाक एवेति बोद्धव्यम् ॥ ६ ॥

### श्रीगिरिधरकृता बालप्रबोधिनी

कथमजनयदित्यपेक्षायां तज्जननप्रकारं दर्शयति—परेणेति । मात्रया अंशेन स्वस्मिन् विशता अनुप्रविष्टेन परेण भगवता हेतुना यस्मिंश्चराचराः स्थावरजङ्गमात्मका लोकाः कार्यत्वेनावस्थिताः स विश्वसृजां त्रयोविंशतितत्त्वानां गणः अन्योन्यं परस्परमासाद्य संहत्य मात्रया स्वांशेन चुक्षोभ ब्रह्माण्डात्मना परिणतोऽभूदित्यन्वयः । भगवतः सर्वांशेन प्रवेशे यत्र कोटिशोण्डराशय इति 'विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्' इत्यादि विरुद्धं स्यात्, महदादिगणस्यापि सर्वांशेन परिणामे तत्र तत्र कार्याणां स्वस्वकारणे लयोक्तिर्विरुद्धा स्यादिति मात्रयेत्यस्योभयत्रान्वयो बोध्यः ॥५॥ ❀ ❀ अप्सु वर्तमाने अण्डकोशे ब्रह्माण्डे हिरण्मयः स्वर्गमयाण्डकोशावृतत्वाद्धिरण्मयः स प्रसिद्धः समष्टिपुरुषः सर्वैर्देवतिर्यगादिभिः सत्त्वैः प्राणिभिरुपबृंहितः सहितः सहस्रपरिवत्सरान् सहस्रसंवत्सरपर्यन्तमुवासेत्यन्वयः । अत्राप्सूवासेत्यनेनाण्डकोशोत्पत्तेः पूर्वमपां स्थित्यवगमात् 'उदाप्लुतं विश्वमिदं तदासीत्' इति वक्ष्यमाणत्वाच्चावरणजलसृष्टिरण्डोत्पत्तेः पूर्वमवगन्तव्या ॥ ६ ॥ ❀ ❀ एवं समष्टिपुरुषोत्पत्तिमभिधाय ततो व्यष्टिशरीरेन्द्रियाद्युत्पत्तिं वक्ष्यंस्तद्विभागमाह—स इति । देवशक्तिर्भगवदंशश्चिच्छक्तिः, कर्मशक्तिः, क्रियाशक्तिः, कालः, आत्मशक्तिः, जीवरूपा शक्तिः, तद्वान् स वै प्रसिद्धः विश्वसृजां गर्भः कार्यरूपो विराट् आत्मना स्वयमेव आत्मानमेकधा दशधा त्रिधा विबभाज विभक्तं कृतवानित्यन्वयः ॥ ७ ॥ ❀ ❀ अस्यैवं विभागसामर्थ्ये हेतुमाह—एष इति । हि यस्मादेष विराट् अशेषसत्त्वानां सर्वव्यष्टिजीवानामात्मा समष्टिरूपत्वात् परमात्मनोंऽशः । अंशत्वेऽपि जीवसमत्वं वारयति—आद्य इति, परमात्मनो भगवतः आद्योऽवतारः । यत्र विराड्विग्रहेऽसौ भूतग्रामः स्थावरजङ्गमात्मकं विश्वं विभाव्यते दृश्यते इत्यर्थः ॥ ८ ॥

### हिन्दी अनुवाद

अर्थात् जब भगवान्‌ने अंशरूपसे अपने उस शरीरमें प्रवेश किया, तब वह विश्वरचना करनेवाला महत्तत्त्वादिका समुदाय एक—दूसरेसे मिलकर परिणामको प्राप्त हुआ । यह तत्त्वोंका परिणाम ही विराट् पुरुष है, जिसमें चराचर जगत् विद्यमान है ॥ ५ ॥ ❀ ❀ जलके भीतर जो अण्डरूप आश्रयस्थान था, उसमें वह हिरण्मय विराट् पुरुष सम्पूर्ण जीवोंको साथ लेकर एक हजार दिव्य वर्षोंतक रहा ॥ ६ ॥ ❀ ❀ वह विश्वरचना करनेवाले तत्त्वोंका गर्भ ( कार्य ) था तथा ज्ञान, क्रिया और आत्मशक्तिसे सम्पन्न था । इन शक्तियोंसे उसने स्वयं अपने क्रमशः एक ( हृदयरूप ), दस ( प्राणरूप ) और तीन ( आध्यात्मिक, आधिदैविक, आधिभौतिक ) विभाग किये ॥ ७ ॥ ❀ ❀ यह विराट् पुरुष ही प्रथम जीव होनेके कारण समस्त जीवोंका आत्मा, जीवरूप होनेके कारण परमात्माका अंश और प्रथम अभिव्यक्त होनेके कारण भगवान्‌का आदि अवतार है । यह सम्पूर्ण भूतसमुदाय इसीमें प्रकाशित होता है ॥ ८ ॥

साध्यात्मः साधिदैवश्च[1] साधिभूत इति त्रिधा। विराट् प्राणो दशविध एकधा हृदयेन च ॥ ९ ॥
स्मरन्[2] विश्वसृजामीशो विज्ञापितमधोक्षजः। विराजमतपत्स्वेन तेजसैषां विवृत्तये ॥ १० ॥
अथ तस्याभितप्तस्य कति चायतनानि ह। निरभिद्यन्त देवानां तानि मे गदतः शृणु ॥ ११ ॥
तस्याग्निरास्यं निर्भिन्नं लोकपालोऽविशत्पदम्। वाचा स्वांशेन वक्तव्यं ययासौ प्रतिपद्यते ॥ १२ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

पूर्वश्लोकार्थं विवृणोति। साध्यात्मः अध्यात्मानींद्रियाणि तत्सहितः विराडिति सर्वत्र ॥ ९ ॥ ❀ ❀ अध्यात्मादिभेदं प्रपंचयितुमाह। स्मरन्निति। विज्ञापितम् 'यावद्दलिं तेऽज हराम' इत्यादि स्वेन तेजसा चिच्छक्त्या अतपत् एवं करिष्यामीत्यालोचितवान्। "यस्य ज्ञानमयं तपः" इति श्रुतेः। विवृत्तये विविधवृत्तिलाभाय ॥ १० ॥ ❀ ❀ मे मत्तः शृणु ॥ ११ ॥ ❀ ❀ आयतनान्येवाह। यस्याग्निरित्यादिचतुर्दशभिः। आस्यं निर्भिन्नं पृथक् जातं पदं स्वस्थानं स्वांशेन स्वशक्त्या वाचा सहाविशत् असौ जीवः वक्तव्यं प्रतिपद्यते शब्दमुच्चारयतीत्यर्थः। सर्वत्र यन्निर्भिन्नं तदधिष्ठानम् अग्न्यादि प्रथमांतमधिदैवम्। वागादींद्रियं तृतीयांतमध्यात्मम्। प्रतिपत्तव्यमधिभूतम् ॥ १२ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

अधिदैवानींद्रियदेवताः अधिभूतानि अधिष्ठानानि विषयाश्च हृदयेन हृदयावच्छिन्नचैतन्येन जीवेनेति यावत्। प्राणः प्राणरूपः ॥ ९ ॥ ❀ ❀ अंतर्यामिरूपेण प्रविष्टस्येश्वरस्य कृत्यमाह यस्येश्वरस्य ज्ञानमयं ज्ञानस्वरूपमेव तप इति श्रुत्यर्थः। एषां महदादीनां "चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रम्" इत्यादिश्रुतेः। कारणानुग्रहेणैव कार्यशक्तिरुद्भवतीति भावः ॥ १० ॥ ❀ ❀ अथ भगवत्कृततत्त्वविज्ञप्तिस्मृत्युत्तरं तस्य समष्टिविराजः अभितप्तस्य परमेशप्रकाशितस्य आयतनानि आस्यादिस्थानानि निरभिद्यंत पृथगभवन् देवानामग्न्यादीनाम् ॥ ११ ॥ ❀ ❀ इत्यर्थ इति। शब्दोच्चारणस्यैव वक्तव्यप्रतिपादनत्वादिति भावः। सर्वत्र वाक्येषु प्रतिपत्तव्यं प्राप्तव्यं विषय इति यावत् ॥ १२ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

पूर्वश्लोकार्थं सवै विश्वसृजामित्यस्यार्थं ( हृदयेन ) हृदयाऽवच्छिन्नचैतन्यरूपेण ॥ ९ ॥ ❀ ❀ विश्वसृजां महदादीनां ज्ञानमयमालोचनात्मकम् ॥ १० ॥ ❀ ❀ ( अथ ) ईश्वरालोचनानन्तरं अभितप्तस्यालोचनविषयीभूतस्य। तस्य विराजः निरभिद्यन्त पृथक् पृथक् जातानि ॥ ११ ॥ ❀ ❀ स्वशक्त्या वह्निशक्त्या एवं परत्रापि इन्द्रियाणां स्वस्वदेवताशक्तिरूपत्वं व्याख्येयम् ॥ १२ ॥

### श्रीमद्वीरराघवव्याख्या

प्रस्तुतत्रिविधैकादशविधविभागावुपपादयन्समष्टिपुरुषत्वमेवोपपादयति साध्यात्म इति। विविधं राजते व्यक्तिरूपेण भातीति विराट्। यद्यपि विराट्शब्दोऽनिरुद्ध परः तथापीह समष्टिपुरुषाद्विभक्तव्यष्ट्युत्पत्तिप्रकरणाच्चतुर्मुखपरः। स ब्रह्मा साध्यात्मः अध्यात्मसहितः समष्टिरूपेण स्वशरीरांतर्गतभोक्तृवर्गसहितः आत्मनि देहे वर्त्तमानो जीवो ह्यध्यात्मशब्दोक्तः स चाविभक्तरूपः समष्ट्यवस्थः साधिभूतः भूतेषु वर्त्तमानशब्दादिविषयसहितः ब्रह्मशरीरारब्धभोग्यजातमविभक्तं साधिदैवः इन्द्रियसमष्टिसहितः आदित्यमंडलादिषु स्थानेषु वर्त्तमाना आदित्यादयो देवशब्दवाच्या तदधिष्ठेय इन्द्रियवर्ग इत्याधिदैवशब्दोक्तः समष्ट्यवस्थस्वशरीरांतर्गतभोक्तृभोग्यकरणग्रामवानित्यर्थः। अत्राधिदैवांशं विवृणोति प्राण इति। प्राणशब्द इन्द्रियपरः "तमुत्क्रामंतं सर्वे प्राणा अनुत्क्रामंति" इति श्रुतिप्रयोगात् दशविधः श्रोत्रादिरूपेणैकधा हृदयेन मनसा व्यष्टिशरीरेंद्रियादीनां ब्रह्मणाविभक्तत्वं वक्ष्यते ॥ ९ ॥ ❀ ❀ तत्तु न स्वातंत्र्येण कृतं किंतु भगवदनुप्रवेशादित्याह स्मरन्निति। ईशः नियन्ता अधोक्षजो भगवान् विश्वसृजां महदादितत्त्वानां विज्ञापितं "यावद्बलिं तेऽज हराम काले" इत्यादिना विज्ञापितं स्मरन्नेषामिंद्रियादीनां विवृद्धये व्यष्टिरूपेण विस्ताराय स्वेन स्वीयेन तेजसा ज्ञानेन विराजं ब्रह्माणमतपदालोचयत् तप आलोचने। अयं व्यष्टिशरीरेंद्रियविभागसामर्थ्यवान् यथा भवेत्तथा तमसंकल्पयदित्यर्थः ॥ १० ॥ ❀ ❀ व्यष्टिशरीरेंद्रियाणां ब्रह्मणः सकाशाद्विभागप्रतिपादनं प्रतिजानीते अथेति। अथालोचनानन्तरं अभितप्तस्य उक्तसंकल्पविषयस्य तस्य तस्माद् ब्रह्मण इत्यर्थः। नटस्य शृणोतीतिवदत्र पंचम्यर्थः संबंधसामान्यपरतया षष्ठ्या विवक्षितः। देवानां व्यष्टीन्द्रियाणां कति चायतनानि कतिपयानि स्थानानि निरभिद्यन्त उदभूवन् तानि स्थानानि गदतः मे मत्तः शृण्वाकर्णयेत्यर्थः ॥ ११ ॥ ❀ ❀ विभागमाह तस्येत्यादिभिश्चतुर्दशभिः। अत्र प्रतिश्लोकं प्रस्तुतः समष्टिपुरुषो भगवदात्मकश्चतुर्मुखस्तस्यास्येत्यादिषष्ठ्यन्तैः परामृश्यते। तस्य भगवदात्मकाच्चतुर्मुखान्निर्भिन्नं विभक्तमुत्प-

---

१. प्रा० पा०—स्तु। २. प्रा० पा०—रसान्।

न्नमिति यावत् व्यष्टिभूतजातस्यास्यं पदं स्थानं स्वांशेन स्वाधिष्ठेयभूतेन वाचा वागिंद्रियेण सहलोकपालोऽग्निराविशत्प्राविशत् । कथंभूतया वाचाऽसौ व्यष्टिजीवः यथा वाचा वक्तव्यमुच्चार्यं शब्दं प्रतिपद्यते उच्चारयतीत्यर्थः । समष्टिपुरुषाद्विभक्तोऽग्निस्त-स्मादेव विभक्तस्य व्यष्टिजीवस्य विभक्तमास्यं विभक्तेन वागिन्द्रियेण सह प्राविशदित्यर्थः । एवमग्रेऽप्यूह्यं सर्वत्रासाविति प्रथमांत-मध्या-त्मपदं वाचेत्यादि तृतीयां तमधिदैवसमर्पकं वक्तव्यमित्यादि प्रतिपत्तव्यं शब्दादिकमधिभूतसमर्पकं वेदितव्यम् ॥ १२ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

एकधेत्याद्युक्तं विवृणोति साध्यात्ममिति । क्रमोल्लंघनं प्राधान्यदर्शनाय अध्यात्मादित्रित्वस्य नित्यत्वात् द्वादशानींद्रि-याण्याहुरिति श्रुतेरिंद्रियाणां दशविधत्वस्य प्रायिकत्वात् हृदयस्य ज्ञानविवक्षयैकत्वादंतःकरणविवक्षया चातुर्विध्यात् अध्या-त्मसाहित्येन वर्त्तमानरूपमित्यादि योज्यम् विशेषेण राजनाद्विराट् प्रकृष्टचेष्टकत्वात्प्राणनामात्रह्मांतर्यामी ब्रह्म दशेंद्रियांतस्थत्वेन दश-विधः ब्रह्महृदयस्थरूपेणैकविधः । चशब्दस्त्वध्यात्मादिषु त्रिषु श्रोत्रादींद्रियेषु हृदये च प्रवेशसंभवाद्धरेः संख्याभेदः तत्सृष्ट्वा तदेवानुप्राविशदिति श्रुतिसिद्धत्वाद्युज्यत इति दर्शयति प्राणादिनागादिदशप्राणा अपि अध्यात्मादिभेदेन त्रिधा ज्ञातव्याः तदुक्तं "प्राणादिपंचकं चैव तथा नागादिपंचकम् । एवं तु दशधा प्राणा अध्यात्मादित्रिधाऽखिला" इति अधिभूतमपि द्विधा प्रधान-वायुत्वगादिभेदेन । "प्राणः प्रथमजो यस्तु प्रधानो वायुरीरितः । त्वगात्माद्यास्तु तत्पुत्रा द्विधाभूतमुदाहृतम्" इति वचनादिदं प्रसं-गादुक्तम् ॥ ९ ॥ ❀ ❀ इदानीं तत्त्वानामस्माकमायतननिर्माणशक्तिं देहीति यदुदितं तत्करणप्रकारमाह स्मरन्निति । अधोक्ष-जो विराजं ब्रह्मशरीरमंतर्यामिरूपेण प्रविश्य स्वेन तेजसा तत् वैराजाख्ये ब्रह्मशरीरमेषामग्न्यादिदेवानां यथा आयतनानि भवंति तथा विवृद्धयेऽतपदवकाशवदकरोदित्यन्वयः ॥ १० ॥ ❀ ❀ तापकार्यमाह अथेति । देवानां यान्यायतनानि तस्याभितप्तस्य शरीरस्य सकाशान्निरभिद्यंत विवृतानि । अथ गदतो मम सकाशात्तानि शृण्वित्यन्वयः कतिचेत्येकं पदं चशब्दश्चित्पर्यायः "हेत्य-नेन सोऽद्भ्य एव पुरुषं समुद्धृत्यामूर्च्छयत्तमभ्यतपत्तस्याभितप्तस्य मुखं निरभिद्यत" इत्यादि समाख्यां सूचयति ॥ ११ ॥ ❀ ❀ शरीरावयवेभ्यो मुखलक्षणावयवस्य प्राधान्यज्ञापनाय तदुत्पत्तिं तदभिमान्यभिमानोत्पत्तिं चाह तस्येति । तस्य ब्रह्मांतर्यामिणो विवक्षोर्हरेरास्ये मुखसंज्ञायतनं यन्निर्भिन्नं विकृते तत्पदं स्थानं लोकपालोऽग्निर्वाचा वागिंद्रियाख्यस्वांशेन सहाविशदित्यन्वयः । अग्निर्वाग्भूत्वा मुखं प्राविशदितिश्रुतिः यथा वाचा येन वागिंद्रियेण ब्रह्मशरीरवर्ती हरिर्वक्तव्यं वागिंद्रियाविषयं व्यवहाराख्यं प्रतिपद्येत विज्ञाय व्यवहरतीत्यन्वयः । उत्तरग्रंथा एवमेव व्याख्येयाः ॥ १२ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

अत्र देवस्य ईश्वरस्य जीवरूपा चिच्छक्तिः तया हृदयस्थया एकधा ॥ ९ ॥ ❀ ❀ ननु विराट् पुरुषस्येदृशी शक्तिश्चेदीश्वरप्रवेशेन किं तत्राह स्मरन्निति । अधोक्षजांशः पुरुषः । कारणानुग्रहेणैव कार्यशक्तिरुद्भवतीति भावः । अत एतदनन्तरमेव स वै विश्वसृजामित्याद्युक्तं ज्ञेयमतपत् स्वेन तेजसा प्रकाशयितुमिष्टवान् ॥ १०-१२ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

एकधा दशधा त्रिधेति पूर्वश्लोकोक्तं व्युत्क्रमेण विवृणोति साध्यात्मः साध्यात्मानीन्द्रियाणि तत्सहितः अधिदैवानी-न्द्रियाणां देवताः अधिभूतानि अधिष्ठानानि विषयाश्च "प्राणोपानः समानश्च उदानो व्यान एव च । नागः कूर्मश्च कृकरो देवदत्तो धनञ्जय" इति वृत्तिभेदेन दशविधः प्राण इति दशविधेनानेन विराडेव दशविध इत्यर्थः। तत्र प्राणः प्राक्क्रमणो नासाग्रवर्त्ती अपानोऽ-वाक्क्रमणः पाय्वादिस्थानवर्ती समानो भुक्तपीतान्नादिसमीकरणः शरीरमध्यवर्ती उदानः उत्क्रमणः कंठस्थानवर्त्ती व्यानो विष्व-क्क्रमणः सकलशरीरवर्त्ती नाग उद्गिरणकरः कूर्मः उन्मीलनकरः कृकरः क्षुधाकरः देवदत्तो जृम्भाकरः धनञ्जयः पोषणकरः हृद-येन हृदयावच्छिन्नेन चैतन्येन जीवेन ॥ ९ ॥ ❀ ❀ अध्यात्मादिभेदं प्रपञ्चयितुमन्तर्यामिरूपेण प्रविष्टस्येश्वरस्य किमपि कृत्यमाह स्मरन्निति । विज्ञापितं यावद्बलिं तेऽज हरामेत्यादि स्वेन तेजसा चिच्छक्त्या अतपत् प्रकाशयामास । एषां विश्वसृजां विवृ-त्तये विविधवृत्तिलाभाय । चक्षुश्चक्षुरुत श्रोत्रस्य श्रोत्रमित्यादि श्रुतेः कारणशक्तिरेव कार्येषूद्भवतीति भावः ॥ १० ॥ तस्य समष्टिविराजः अभितप्तस्य परमेश्वरेण प्रकाशितस्य आयतनानि स्थानभेदा निरभिद्यन्त पृथगभूवन् मे मत्तः ॥ ११ ॥ ❀ ❀ निर्भिन्नं पृथग् जातम् आस्यं पदं स्वस्थानं वाचा वागिन्द्रियेण सह अग्निरविशत् स्वांशेन स्वेनैकांशेन यया वाचैव असौ जीवः विराट् वक्तव्यं प्रतिपद्यते शब्दमुच्चारयतीत्यर्थः । एवं सर्वत्र यन्निर्भिन्नं द्वितीयान्तं तदधिभूतमधिष्ठानं यदग्न्यादि । प्रथमान्तं तदधिदैवम् । यद्वागादि तृतीयान्तं तदध्यात्मं यत् पुनर्द्वितीयान्तं क्वचित् षष्ठ्यन्तं तदधिभूतं विषयः ॥ १२ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

अथाध्यात्मादिविभागं स्वयं भगवानेव कृतवानिति सूचनपूर्वकं तद्विभागमाह स्मरन्नित्यादिषोडशभिः । आलोचनात्मकेन तेजसा अतपत् आलोचितवान् ॥ ९ ॥ ❀ ❀ अभितप्तस्यालोचितस्य मे मत्तः ॥ १० ॥ ❀ ❀ आस्यं निर्भिन्नं

पृथक् जातमुत्पन्नमित्यर्थः। पदं स्वस्थानं लोकपालः समष्टिव्यष्टिवागधिष्ठातृदेवता स्वांशेन स्वाधिष्ठेयेनेंद्रियेण वाचा सहाविशत् यया असौ समष्टिदेहाभिमानी जीवः वक्तव्यं शब्दाख्यं विषयं प्रतिपद्यते समष्टिदेहे समष्टिजीवो देहे व्यष्टिजीवश्चे ति विवेकः। परमात्मा तूपास्य एवेति द्योतयितुमसौ प्रतिपद्यते इत्युक्तम्। यन्निर्भिन्नं तदधिष्ठानम् अग्न्यादिप्रथमांतमधिदैवं वागादीन्द्रियं तृतीयांतमध्यात्मं वक्तव्यमधिभूतम्। असौशब्देनोक्तो जीवः सकलाचेतनभिन्नः अधोक्षजः सकलचेतनाचेतनविलक्षणस्वरूपः स्वतंत्रः कर्ता सर्वनियंता तत्रायमायतनादिविभागः स्वकीये समष्टिशरीरे भगवता स्वेनैव कृतस्तत्प्रकरणात् अधोक्षजो हरेर्विभोरित्याद्युक्तवक्ष्यमाणप्रयोगाच्च तदनुसारेणैव व्यष्टिशरीरादिरचना भगवद्वशवर्तिचतुर्मुखकृता सृजामि तन्नियुक्तोऽहमित्युक्तत्वात्॥ ११॥ ❀ ❀ हरेः वैराजस्य भगवतः तालु निर्भिन्नं तदालोचनेनैव स्वशरीरे विराजि ताल्वुत्पादितमित्यर्थः॥ १२॥ १३॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

पूर्वोक्तभेदान् गणयति—साध्यात्म इति। अन्यथाऽन्योऽन्यथा वर्णयेत्। त्रैविध्यं प्रथमतो निरूपयत्यस्य जगतः, तामसप्राधान्यात्। देहप्राधान्यादित्यर्थः। तत्रैकः साध्यात्मो भेदः। आत्मानमधिकृत्य यो वर्तते स आध्यात्मो देहः, तद्गतो वा आत्मा जीवः, भगवदंशो वा। तेन आध्यात्मेन सहितो विराड्देहांशः साध्यात्मो भवति। एवं साधिदैवः। देवा अन्तर्यामिदिगादयः, तानधिकृत्य यो वर्तते इन्द्रियवर्गः तदभिमानिनो जीवा भगवदंशा वा, ते अधिदेवाः; इन्द्रादयो वा। तैः सहितो विराड्देहांश उपरिभागः साधिदैवः। एवमधिभूतश्च। अत्र चकारोऽवान्तरभेदेषु आध्यात्मिकादिसंग्रहार्थः। साधिभूतो विराडधोभागः। इत्यमुना प्रकारेण त्रिधा। इदं हि गणशस्त्रैविध्यम्। दशविधमाह—विराट्प्राणो दशविध इति। विराजो यः प्राण आसन्यरूपः। षष्ठ्या संबन्धात् विराडासन्यावतार इत्युक्तम्। महत्तत्त्वस्यैव क्रियाशक्त्यंशः सूत्रात्मा, स एव विराट्। प्राणादयः पञ्च, तथा नागादयः। 'नागः कूर्मश्च कृकलो देवदत्तो धनंजयः' इति वाक्यात्। एतेषां देहे कार्यं नियतम्, 'कासश्छिक्का तथोद्गारो जृम्भा शोषस्तथैव च'। तस्यैकः प्रकारो हृदयेन। हृदयमिति वक्तव्ये तस्य करणत्वेन निर्देशस्तदवान्तरभेदनिरूपणार्थः, मनोबुद्धिरहङ्कारश्चित्तमिति। चकारात्तस्याऽधिभूतादिभेदाः संगृहीता इति। हृदयम, मनःप्रभृतयस्तद्देवाश्चेति॥ ९॥ ❀ ❀ एवं तस्य विराजस्तदन्तर्गतानां चैकप्रकारेण स्वरूपमुक्त्वा, स्वप्रवेशेनैव विश्वसृजां कार्यं विधाय, ज्ञानक्रियाशक्ती अदत्त्वा 'यथा वयं चाऽन्नमदाम यत्र' इति यद्विज्ञापितम्, तदपि चेन्न दद्यात् तत्त्वानां नाशः खेदो वा भवेदिति तेषां विज्ञापनां सत्यां कृतवानित्याह—स्मरन्विश्वसृजामिति। विश्वसृजामित्येनेन तेषां महत्त्वमुपकारश्च सूचितः। दाने हेतुः—विज्ञापितमिति। स्वार्थं तु न कृतवानित्याह—अधोक्षज इति। अधोऽक्षजं यस्मात्। यत्किञ्चिदिन्द्रियैरुत्पद्यते ज्ञानं क्रिया वा, तद्भगवन्तमप्राप्यैव परागेव निवर्त्तते। अतः स्वोपयोगाभावादुभयोपयोगे भक्तिविरोधाच्च तेषामेवोपकारं कृतवान्। किं कृतवानित्याकाङ्क्षायामाह—विराजमतपदिति। स हि सर्वसमर्थः। सिद्धेऽपि कार्ये तेषामुपयोगार्थं स्वतेजसा पुनस्तत्कार्यं संतप्तं कृतवान्। स्वतेजसा तप्तत्वान्न वृथा नाशप्रकारेण तस्य भङ्गः, किन्तु एषां तत्त्वानां विविधवृत्तये स्थानसिद्धये। यथा तेषां स्थित्यर्थं मध्ये छिद्राणि स्थानानि भवन्ति, तथा तापं कृतवानित्यर्थः॥ १०॥ ❀ ❀ तेषां छिद्राणां स्वोपयोगाभावात् भिन्नप्रक्रमेण निरूपयति—अथेति। तस्य विराजः। भगवत्तेजसा अभितस्तप्तस्य कति आयतनानि निरभिद्यन्त? तानि चेज्जानासि तदा न वक्तव्यम्, अथ न जानासि तदा वक्तव्यमित्यभिप्रायेण कतीत्युक्तम्। चकारात् जीवार्थं स्वार्थं च तत्रैवं प्रकाराः संगृहीताः। भेदेन नाशशङ्कां वारयति—आयतनानीति। भिन्नान्यपि गृहरूपाण्येव तत्त्वानां जातानीति। हेत्याश्चर्ये। देवानां स्थानत्वान्नाऽङ्गविकलत्वम्। तानि न जानासि चेन्मे गदतः शृणु। मे गदतः सतः। मया त्वदर्थमेवोच्यत इति न देवानां मर्मोद्घाटनेन दोषः स्यात्, किन्तु मया कीर्त्यते देवानां स्थानस्वरूपम्, त्वयाऽपि श्रोतव्यम्। आज्ञाभावे चौर्यं स्यादिति॥ ११॥ ❀ ❀ तान्यायतनानि निरूपयति—तस्याऽग्निरास्यमिति। तस्य विराजो निर्भिन्नमास्यं वक्त्रमग्निराविशत्। वाचि जायमानो भोगोऽग्नेर्भवति। लोकपाल इति विशेषणमग्नेस्तत्स्वरूपस्य विज्ञापनासिद्ध्यर्थम्। आग्नेयदिशि ये लोकास्तेषां पालकत्वं दत्तम्; आस्ये च स्थानं दत्तम्, तत् पदम्। तस्य लोकास्तु पाल्या रक्ष्या एव, भोगस्तु वाच्येव। वाचा स्वांशेनेति। वागिन्द्रियमग्नेराध्यात्मिकं रूपम्। आसङ्गदोषसहितोऽग्निर्वागित्युच्यते। [अत एवाऽग्नेः स्वांशभूता वाक्। अनेनाऽग्निरिज्यरूपो निवारितः किं तया देवतया वाचा वा[1]? [तत्राऽऽह—यया वाचा, असौ विराट्पुरुषः, वक्तव्यं वाग्व्यापारं, शब्दोच्चारणमिति यावत्, तद्देवताधिष्ठितेन्द्रियेण प्रतिपद्यते॥ १२॥

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

अथेत्यत्र। स्वार्थमिति। विराट्पुरुषार्थम्॥ ११॥ ❀ ❀ तस्येत्यत्र। विज्ञापनासिद्ध्यर्थमिति। लोका बलिं हरन्तीति विज्ञापनायाः फलसिद्ध्यर्थम्। रक्ष्या एवेति। न भोग्याः, नाऽप्याधारभूता इत्यर्थः। अत्र सर्वत्रैतद्बोध्यम्। 'यत्राऽन्नमदाम' इति विज्ञापनायाः फलमास्यादिकमायतनम्। 'यथान्नमदाम' इत्यस्याः फलं वागादिसाहित्येन। वागादयस्तेषां देवानां

---

१. वाशब्दो नास्ति, ग, घ।

स्त्रीभूताः। अन्नं तु जीवनात्मकं सर्वेषाम्, तच्च वाङ्निष्पाद्यत्वदशायामग्रे बोध्यम्। बलिहरणं तु वक्तव्यादिप्रतिपादनं विराडर्थम्, स्तुत्यादिकरणं भगवदर्थम्। लोकानां तु आग्नेयादिदिग्भागा देहाश्चाऽऽयतनानि। प्रकारस्तु सर्वदेवतेन्द्रिय गोलकसाहित्यम्। अन्नं तु तत्तद्देश्यं तदद्दृष्टादाप्तं च पूर्वोक्तमेव। बलिहरणं तु तत्तद्देवतानां भगवतश्च पूजादिकं बोध्यम्। आसंगदोषसहित इति। गोलकसंसर्गरूपेण दोषेण सहितः। आसञ्जनादेव शरीरमधिकृत्य वर्तमानत्वादाध्यात्मिकत्वम्। अनासक्तस्य देवतात्वम्। रजसत्वादासङ्गः, सात्त्विकत्वादनासङ्गः। वस्तुत उभयोराहंकारिकत्वादंशांशिभावः। तदाहुः—अत एवेत्यादि। स्वांशभूतेति। अभिमन्तव्यांशभूताः। तथा च, यो राजसो यस्य सात्त्विकस्याऽभिमन्तव्यत्वेन भगवता दत्तः, स तस्यांशः। अनेनेति। वागाभिमानित्वकथनेन॥ १२॥

### श्रीगिरिधरकृता बालप्रबोधिनी

एकधा दशधा त्रिधेत्युक्तमेव विभागं दर्शयति—साध्यात्म इति। आत्मानमधिकृत्य वर्त्तते इत्यध्यात्मानीन्द्रियाणि तत्सहितः साध्यात्मः, भूतान्यधिकृत्य वर्त्तते इत्यधिभूता व्यष्टिदेहास्तत्सहितः साधिभूतः, देवानामादित्यादीनां समूहोऽधिदैवस्तत्सहितः साधिदैवः, एवं विराट् त्रिधा जातः। 'प्राणोऽपानः समानश्च उदानो व्यान एव च। नागः कूर्मश्च कृकरो देवदत्तो धनञ्जयः' इति वृत्तिभेदेन विराट्प्राणो दशविधः। तत्र प्राणः प्राक्क्रमणो नासाग्रवर्त्ती, अपानोऽवाक्क्रमणः पाय्वादिस्थानवर्ती, समानो भुक्तपीतान्नादिसमीकरणः शरीरमध्यवर्त्ती, उदानः उत्क्रमणः कण्ठवर्ती मृत्युहेतुः, व्यानो विष्वक्क्रमणः सकलशरीरवर्ती हस्तपादाद्याकुञ्चनप्रसारणादिहेतुः। 'उद्गारे नाग आख्यातः कूर्म उन्मीलने स्थितः। कृकरः शोषणे ज्ञेयो देवदत्तो विजृम्भणे॥ न जहाति मृतं चापि सर्वव्यापी धनञ्जयः' इति प्राणादीनां स्थानं कार्यं च ज्ञेयम्। हृदयेनान्तःकरणेन चैकधा॥ ९॥ ❀ ❀ ईशः सर्वनियन्ता अधोक्षजः सर्वेन्द्रियव्यापाराविषयो भगवान् विश्वसृजां महदादीनां 'यावद्बलिं तेऽज हराम—' इत्यादिना विज्ञापितं स्मरन्नेषां विवृत्तये विविधवृत्तिलाभाय स्वेन तेजसा चिच्छक्त्या विराजमतपत्, एवं करिष्यामीत्यालोचितवानित्यर्थः। "यस्य ज्ञानमयं तपः" इति श्रुतेः॥ १०॥ ❀ ❀ अथालोचनानन्तरं अभितप्तस्यालोचितस्य तस्य विराजः शरीरे आदित्यादिदेवानां कति चायतनानि स्थानानि[1] निरभिद्यन्त तानि गदतो मे मत्तस्त्वं शृणु। हेत्याश्चर्ये॥ ११॥ ❀ ❀ तानि स्थानानि दर्शयन्नाध्यात्मिकादिविभागं प्रपञ्चयति—तस्येत्यादिचतुर्दशभिः। तस्य समष्टिव्यष्टिजीवस्य निर्भिन्नं विभक्तमास्यं पदं मुखरूपं स्थानं स्वांशेन स्वाधिष्ठेयभूतेन वाचा वागिन्द्रियेण सह लोकपालः आग्नेय्यां दिशि ये लोकास्तेषां पालकोऽग्निराविशत्। वाचा सह अग्निप्रवेशप्रयोजनमाह—वक्तव्यमिति, यया वाचाऽसौ जीवो वक्तव्यं प्रतिपद्यते शब्दमुच्चारयतीत्यर्थः। एवं सर्वत्र यन्निर्भिन्नं द्वितीयान्तं तदधिभूतमधिष्ठानम्। यदग्न्यादि प्रथमान्तं तदधिदैवम्। यद्वागादि तृतीयान्तं तदध्यात्मम्। यत्पुनर्द्वितीयान्तं कचिच्च षष्ठ्यन्तं प्रतिपत्तव्यं तदप्यधिभूतं विषयः॥ १२॥

### हिन्दी अनुवाद

यह अध्यात्म, अधिभूत और अधिदैवरूपसे तीन प्रकारका, प्राणरूपसे दस प्रकारका[2] और हृदयरूपसे एक प्रकारका है॥ ९॥ ❀ ❀ फिर विश्वकी रचना करनेवाले महत्तत्त्वादिके अधिपति श्रीभगवान्ने उनकी प्रार्थनाको स्मरण कर उनकी वृत्तियोंको जगानेके लये अपने चेतनरूप तेजसे उस विराट् पुरुषको प्रकाशित किया, उसे जगाया॥ १०॥ ❀ ❀ उसके जाग्रत् होते ही देवताओंके लिये कितने स्थान प्रगट हुए—यह मैं बतलाता हूँ, सुनो॥ ११॥ ❀ ❀ विराट् पुरुषके पहले मुख प्रकट हुआ; उसमें लोकपाल अग्नि अपने अंश वागिन्द्रियके समेत प्रविष्ट हो गया, जिससे यह जीव बोलता है॥ १२॥

**निर्भिन्नं तालु वरुणो लोकपालोऽविशद्धरेः। जिह्वयांशेन च रसं[3] ययासौ प्रतिपद्यते॥ १३॥**
**निर्भिन्ने अश्विनौ नासे विष्णोराविशतां पदम्। घ्राणेनांशेन गन्धस्य प्रतिपत्तिर्यतो भवेत्॥ १४॥**
**निर्भिन्ने अक्षिणी त्वष्टा लोकपालोऽविशद्विभोः। चक्षुषांशेन रूपाणां प्रतिपत्तिर्यतो भवेत्॥ १५॥**
**निर्भिन्नान्यस्य [4]चर्माणि लोकपालोऽनिलोऽविशत्। प्राणेनांशेन संस्पर्शं येनासौ प्रतिपद्यते॥ १६॥**

### श्रीधरस्वामिविरचिता भावार्थदीपिका

हरेः विराजः॥ १३॥ १४॥ ❀ ❀ त्वष्टा आदित्यः॥ १५॥ ❀ ❀ प्राणेनेति। प्राणवद्देहव्यापिना त्वगिंद्रियेणेत्यर्थः॥ १६॥

---

१. आयतनानि आस्यादीनीत्यन्यत्र। २. दस इन्द्रियोंसहित मन अध्यात्म है, इन्द्रियादिके विषय अधिभूत हैं, इन्द्रियाधिष्ठाता देव अधिदेव हैं तथा प्राण, अपान, उदान, समान, व्यान, नाग, कूर्म, कृकल, देवदत्त और धनञ्जय—ये दस प्राण हैं। ३. प्रा. पा. रसान्। ४. प्रा. पा. मर्माणि।

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः ।

हरेर्हरित्वेन ध्येयस्य विराज इत्यर्थः । एवमग्रे विष्ण्वादिपदेष्वपि ज्ञेयम् । यया वाचा ॥ १३ ॥ ❀ ❀ पदं स्थानम् उद्देश्यविधेयभावत्वान्नासे पदमिति योजना न दुष्टेति । विवेचितमन्यत्र । एवमग्रेऽपि यतो येन घ्राणेन ॥ १३ ॥ ❀ ❀ यतो येन चक्षुषा ॥ १५ ॥ ❀ ❀ चर्माणीति । चर्मोपलक्षिता त्वगित्यर्थस्तु द्वितीयस्कंधे उक्तः । परं त्वत्र चर्माणि त्वगिंद्रियाधिष्ठानानीति ज्ञेयम् ॥ १६ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या ।

हरिविष्णुशब्दौ विराड्रूपेणोपासनार्थं प्रतिपद्यतेऽनुभवति ॥ १३ ॥ ❀ ❀ अंशेन देवताशक्तिरूपेण घ्राणेन्द्रियेण सह ॥ १४ ॥ ❀ ❀ अंशेनादित्यशक्तिरूपेण चक्षुरिन्द्रियेण सह शुक्लनीलपीतादिरूपाणां यतश्चक्षुपः प्रतिपत्तिर्ज्ञानम् ॥ १५ ॥ ❀ ❀ अंशेन वायुशक्तिरूपेण प्राणेन त्वगिन्द्रियेण सह चर्माणि ;चर्म्मोपलक्षिता त्वगित्यर्थः । इति द्वितीयटीकात्रानुसन्धेया ॥ १६ ॥

### श्रीमद्वीरराघवव्याख्या

निर्भिन्नमिति । निर्भिन्नं पृथग्विभक्तं तालुस्थानं लोकपालो वरुणः अंशेन स्वाधिष्ठेयेन जिह्वया इन्द्रियेण सहाविशत् असौ व्यष्टिजीवः यया जिह्वया रसानम्लमधुरादिरसान् प्रतिपद्यते जानाति ॥ १३ ॥ ❀ ❀ निर्भिन्ने इति विष्णोर्विष्ण्वात्मकाद्ब्रह्मणो नासे निर्भिन्ने अश्विनावंशेन स्वाधिष्ठेयेन घ्राणेंद्रियेण गंधस्य सुगंधदुर्गंधादेः प्रतिपत्तिः ज्ञानं भवेत् ॥ १४ ॥ ❀ ❀ विभोर्ब्रह्मणः सकाशान्निर्भिन्ने अक्षिणी स्थाने लोकपालः त्वष्टा आदित्यः स्वाधिष्ठेयेन चक्षुरिंद्रियेण सहाविशन् रूपाणां नीलपीतादीनां प्रतिपत्तिर्यतः येन चक्षुषा भवेत् ॥ १५ ॥ ❀ ❀ निर्भिन्नानीति अस्य ब्रह्मणः निर्भिन्नानि चर्माणि लोकपालोऽनिलो वायुरंशेन प्राणेन त्वगिंद्रियेण प्राणवत्कृत्स्नदेहव्यापिनेत्यर्थः, अविशत् असौ व्यष्टिजीवः येन त्वगिंद्रियेण संस्पर्शं मृदुत्वकठिनत्वशैत्यौष्ण्यादिसंस्पर्शं प्रतिपद्यते ॥ १६ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

तालु जिह्वामूलम् असौ हरिः प्रतिपद्यते जानाति ॥ १३ ॥ ❀ ❀ नासे नासिके ॥ १४ ॥ १५ ॥ ❀ ❀ चर्माणि त्वगिंद्रियस्थानानि ॥ १६ ॥ १७ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

चर्म्माणीति चर्म्मोपलक्षिता त्वगित्यर्थः इति द्वितीयस्कन्धे टीकास्य वर्त्तते । प्राणेनेन्द्रियेणात्र तु त्वग्रूपेणेत्यर्थः ॥ १६ ॥ १७ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

हरेः हरित्वेन ध्येयस्य विराजः ॥ १३ ॥ ❀ ❀ यतो घ्राणात् ॥ १४ ॥ ❀ ❀ त्वष्टा सूर्यः ॥ १५ ॥ ❀ ❀ प्राणेनेति प्राणवद्देहव्यापिना त्वगिन्द्रियेणेत्यर्थः ॥ १६ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

त्वष्टा सूर्यः ॥ १५ ॥ ❀ ❀ अंशेन त्वगाख्येनेंद्रियेण सहानिलो वायुः चर्माणि अविशत् । प्राणेनोपलक्षितो बद्ध इत्यर्थः । असौ समष्टिव्यष्टिदेहाभिमानी जीवो येनेंद्रियेण संस्पर्शं लभते प्राणेनोपलक्षित इत्यनेनोपास्यभूतस्य समष्टिशरीरवतः वैराजस्य व्यष्टिशरीरवतोऽन्तर्यामिणः कर्मफलभूतसंस्पर्शादिनिरपेक्षत्वं सूच्यते ॥ १६ ॥ १७ ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

स्थानान्तरमाह—निर्भिन्नं तात्विति । तत्रैवाऽऽस्ये यो वक्त्रसंमित आकाशः, तत्रा[1]ग्निर्देवता, वागिन्द्रियम् । तत्रैव[2] पुनस्तालु लोके जिह्वापदवाच्यं गोलकं निर्भिन्नम् । तन्निर्भिन्नं तालु वरुणो देवता अविशत् । लोकपाल इति पूर्ववत् । विभोरिति विराजः । स हि विभोर्नानारसानुपस्ताप्य ग्राहयति । अतो वरुणस्य तत्र महाभोगः, प्रभोर्भोगस्थाने विद्यमानत्वात् । जिह्वयांशेनेति । जिह्वाऽपीन्द्रियं वरुणस्यांशः यया[3] जिह्वया असौ विराट् रसं प्रतिपद्यते ॥ १३ ॥ ❀ ❀ अन्यद्विवरद्वयमाह—विनिर्भिन्नेऽश्विनाविति । अश्विनीकुमारौ निर्भिन्ने नासापुटे पदमाविशताम् । नासापुटद्वयं गोलकम् । विष्णोर्विराजः । घ्राणमिन्द्रियम् । गन्धस्य प्रतिपत्तिर्गन्धज्ञानं घ्राणदेवताभ्यां हेतुभ्यां भगवतो भवति । सर्वत्र विवरं गोलकं देवतायाः स्थानम्, देवता इन्द्रियप्रेरिका,

---

१. तत्राप्यग्निः. ख. । २. तत्रैव च.ख. । ३. तया. ख. ग. घ. ।

इन्द्रियं च तस्यांशः, इन्द्रियदेवताभ्यां चाऽभिमानिनस्तद्विषयानुभव इति ॥ १४ ॥ ❀ ❀ इन्द्रियान्तरस्य चक्षुषो विषयं निरूपयति—निर्भिन्ने अक्षिणी इति । अक्षिणी गोलके । त्वष्टा सूर्यः । अभिमानिनो निर्देशश्चक्षुषः प्राथिकासुरत्वख्यापनाय । चक्षुरिन्द्रियम् ॥ १५ ॥ ❀ ❀ निर्भिन्नान्यस्य चर्माणीति । रोमकूपच्छिद्रानन्त्याद्बहुवचनम् । एषा त्वग्रूपा । त्वक्शब्देन चाऽग्रिमः सूक्ष्मोंशो निरूप्यते । तस्मादत्रेन्द्रियद्वयम् । यश्चर्मोपरि सूक्ष्मोंशः सा त्वक्, 'त्वक् चर्म' इति क्रमात् । तत्र चर्मण्यनिलो देवता, प्राण इन्द्रियं लोके त्वक्शब्दवाच्यम् । प्राणस्योपष्टम्भकत्वात् तच्छब्देनोच्यते ॥ १६ ॥

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

निर्भिन्नं तात्वित्यत्र । पूर्ववदिति । अग्नेराग्नेयदिग्लोकपालत्ववदस्य प्रतीचीदिक्पालत्वमित्यर्थः ॥ १३ ॥ ❀ ❀ विनिर्भिन्नेऽश्विनावित्यत्र । यद्यप्येतयोर्लोकपालत्वमत्र नोक्तम्, तथापि प्रायपाठसंदंशाद्विज्ञापनायाः सामुदायिकत्वाचोत्तर-दिग्लोकपालत्वं बोध्यम्, उदीच्याः शान्तत्वादेतयोर्भिषक्त्वेन दोषशामकत्वादिति । इदमेव सर्वनिर्णये 'अश्विनावुत्तरतः' इत्यनेनोक्तम् ॥१४॥ ❀ ❀ निर्भिन्ने अक्षिणी इत्यत्र । अभिमानिन इत्यादि । तनूकरणे असुराणां नाशकत्वेन तनूकरणेऽधिकृतत्त्वात्तक्षोधातोश्च तनूकरणार्थत्वात्त्वष्टृशब्दस्य तन्निष्पन्नत्वेन तथा बोध्यत इत्यर्थः । एतस्य प्राचीदिग्लोकपालपरिधिपरिधानबोधकश्रुतौ सिद्धम् ॥ १५ ॥ ❀ ❀ निर्भिन्नानीत्यत्र । द्वितीयस्कन्धे 'श्रोत्रं त्वग्घ्राणदृग्जिह्वावाग्दोर्मेढ्राङ्घ्रिपायवः ।' इति बाह्येषु दशेन्द्रियेषु त्वचो दर्शनादत्र चर्मपदेन किमुच्यत इत्याशङ्कानिरासायाहुः—एषा त्वग्रूपेति । एषा चर्मपदोक्ता देवता द्वितीयस्कन्धोक्त-त्वग्रूपेत्यर्थः । तस्य स्वरूपमाहुः—त्वक्शब्देनेत्यादितस्मादग्रपश्चाद्भागभेदादत्र त्वचि क्रमेण त्वक्चर्मात्मके द्विविधे गोलके, प्राणरोमाख्यमिन्द्रियद्वयमित्यर्थः । नन्वग्रे त्वचो निरूपणाद्विपरीतक्रमः कुतो नोच्यत इत्यत आहुः—त्वक्चर्मेति क्रमादिति । द्वितीयस्कन्धे 'त्वक्चर्ममांसरुधिरमेदोमज्जास्थिधातवः । भूम्यप्तेजोमयाः सप्त' इत्युपरि समादायैव क्रमकथनाद्विपरीतक्रमो नोच्यत इत्यर्थः । ननु त्वक्शब्दवाच्यस्य कुतः प्राणशब्देनोल्लेख इत्यत आहुः—प्राणस्येत्यादि । द्वितीयस्कन्धे 'प्राणो व्योमाम्बुवायुभिः' इत्यत्र सर्वदेहव्यापकत्वेनाऽऽप्यायकत्वेन वायुरूपत्वेन च त्रैविध्यस्योक्तत्वात्तस्य सर्वदेहव्यापित्वमनयोपष्टभ्यत इत्यतस्तथेत्यर्थः ॥ १६ ॥

### श्रीगिरिधरकृता बालप्रबोधिनी

हरेः हरितयोपास्यस्य विराजः निर्भिन्नं पृथग्विभक्तं तालु स्थानं लोकपालः पश्चिमदिक्पालको वरुणः अंशेन स्वाधिष्ठेयेन जिह्वया सहाविशत्, यया च जिह्वयाऽसौ जीवः मधुरादिरसं प्रतिपद्यते अनुभवति ॥ १३ ॥ ❀ ❀ विष्णोर्विराजो नासेऽधिष्ठानभूते निर्भिन्ने तत्पदं स्वस्थानमंशेन[1] स्वाधिष्ठेयेन घ्राणेनेन्द्रियेण सहाश्विनावाविशताम्, यतो येन घ्राणेन गन्धस्य सुगन्धदुर्गन्धादेः प्रतिपत्तिर्ज्ञानं भवेत् ॥ १४ ॥ ❀ ❀ विभोर्विराजः अक्षिणी स्थाने निर्भिन्ने लोकपालः त्वष्टा आदित्यः अंशेन स्वाधिष्ठेयेन चक्षुषेन्द्रियेण सहाविशत्, यतो येन चक्षुरिन्द्रियेण नीलपीतादिरूपाणां प्रतिपत्तिर्ज्ञानं भवेत् ॥ १५ ॥ ❀ ❀ अस्य विराजो निर्भिन्नानि चर्माणि लोकपालोऽनिलः पवनः स्वांशेन प्राणेन प्राणवत् कृत्स्नदेहव्यापिना त्वगिन्द्रियेण सहाविशत्, येन त्वगिन्द्रियेणासौ जीवः संस्पर्शं मृदुत्वकठिनत्वशैत्योष्णत्वादिज्ञानं प्रतिपद्यते ॥ १६ ॥

### हिन्दी अनुवाद

फिर विराट् पुरुषके तालु उत्पन्न हुआ; उसमें लोकपाल वरुण अपने अंश रसनेन्द्रियके सहित स्थित हुआ, जिससे जीव रस ग्रहण करता है ॥ १३ ॥ ❀ ❀ इसके पश्चात् उस विराट् पुरुषके नथुने प्रकट हुए; उनमें दोनों अश्विनीकुमार अपने अंश घ्राणेन्द्रियके सहित प्रविष्ट हुए, जिससे जीव गन्ध ग्रहण करता है ॥ १४ ॥ ❀ ❀ इसी प्रकार जब उस विराट् देहमें आँखें प्रकट हुईं तब उनमें अपने अंश नेत्रेन्द्रियके सहित—लोकपति सूर्यने प्रवेश किया, जिस नेत्रेन्द्रियसे पुरुषको विविध रूपोंका ज्ञान होता है ॥ १५ ॥ ❀ ❀ फिर उस विराट् विग्रहमें त्वचा उत्पन्न हुई । उसमें अपने अंश त्वगिन्द्रियके सहित वायु स्थित हुआ, जिस त्वगिन्द्रियसे जीव स्पर्शका अनुभव करता है ॥ १६ ॥

**कर्णावस्य विनिर्भिन्नौ धिष्ण्यं स्वं विविशुर्दिशः । श्रोत्रेणांशेन शब्दस्य सिद्धिं येन प्रपद्यते ॥ १७ ॥**
**त्वचमस्य विनिर्भिन्नां विविशुर्धिष्ण्यमोषधीः । अंशेन रोमभिः कण्डूं यैरसौ प्रतिपद्यते ॥ १८ ॥**
**मेढ्रं तस्य विनिर्भिन्नं स्वधिष्ण्यं क उपाविशत् । रेतसांशेन येनासावानन्दं प्रतिपद्यते ॥ १९ ॥**
**गुदं पुंसो विनिर्भिन्नं मित्रो लोकेश आविशत् । पायुनांशेन येनासौ विसर्गं प्रतिपद्यते ॥ २० ॥**

---

१. नासारूपम् ।

### श्रीधरस्वामिविरचिता भावार्थदीपिका

शब्दस्य सिद्धिं ज्ञानम् ॥ १७ ॥ ❀ ❀ त्वचं चर्म ओषधीरोषधयः त्वगिंद्रियस्यैव स्थानभेदेन विषयद्वयं कंडूः स्पर्शश्च । तत्र चायं नामभेदो देवताभेदश्चेति द्वितीयस्कंध एव व्याख्यातम् ॥ १८ ॥ ❀ ❀ कः प्रजापतिः ॥ १९ ॥ २० ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

अस्य विराजः येन श्रोत्रेण ॥ १७ ॥ ❀ ❀ तत्र त्वगिंद्रिये एकस्मिन्नपि स्पर्शग्राहके भेदद्वयमिदं लभ्यम् । बहिर्-धिष्ठानं चर्म इंद्रियं लोम देवता ओषध्यधिष्ठात्र्य इत्येको भेदः । अंतर्बहिरधिष्ठानं तु त्वक् इंद्रियमपि त्वक् देवता च वायुरित्यन्यो भेदः इति संदर्भः । चक्रवर्त्ती तु—तथा त्वच्यधिष्ठाने त्वक् रोमाणि चेंद्रियद्वयम् । ओषध्यो देवताः कंडूर्विषयः तत्र त्वगिंद्रिय-मनिलो देवता स्पर्शो विषय इत्याह ॥ १८ ॥ ❀ ❀ रेतसा रेतउपलक्षितेनोपस्थेनेत्यर्थः । "उपस्थो हि सर्वेषामानंदानां परमानंद इति श्रुतेः" येनोपस्थेन ॥ १९ ॥ ❀ ❀ विसर्गं मलोत्सर्गादि ॥ २० ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या ।

अंशेन शक्तिरूपेण श्रोत्रेन्द्रियेण सह ॥ १७ ॥ ❀ ❀ तत्र च विषयद्वये अंशः रोम त्वक् लक्षणइन्द्रियानामभेदः अंतर्बहिरधिष्ठानं त्वक् इन्द्रियमपि त्वक् वायुर्देवता अन्तर्बहिः स्पर्शो विषय इति चतुष्टयात्मको द्वितीयो भेद इति विवेकः ॥ १८ ॥ ❀ ❀ अंशेन प्रजापतेः संतानोत्पादकशक्तिरूपेणेन्द्रियेण सह ॥ १९ ॥ ❀ ❀ अंशेन मलविसर्जनशक्तिरूपेण पाय्विन्द्रियेण सह ॥ २० ॥ २१ ॥

### श्रीमद्वीरराघवव्याख्या

कर्णाविति । अस्य ब्रह्मणः विनिर्भिन्नौ कर्णौ स्वधिष्ण्यं स्वस्थानं दिशः देवताः श्रोत्रेणांशेन श्रोत्रेंद्रियेण सह विविशुः शब्दस्य सिद्धिं ज्ञानं येन श्रोत्रेण प्रपद्यते प्राप्नोति ॥ १७ ॥ ❀ ❀ त्वचमिति अस्य ब्रह्मणः विभिन्नां त्वचमोषधीरोषध्यः तदभिमानिदेवताः विभक्तिव्यत्यय आर्षः रोमभिरंशेन रोमरूपस्वाधिष्ठेनेंद्रियेण विविशुः प्राविशन् । असौ व्यष्टिजीवः यै रोमभिः कंडूं प्रतिपद्यते जानाति त्वगिंद्रियस्यैव स्थानभेदेन विषयद्वयं कंडूः स्पर्शश्च तत्रायं नामभेदेन देवताभेदश्चेति द्वितीय एव व्याख्यातम् ॥ १८ ॥ ❀ ❀ मेढ्रमिति तस्य ब्रह्मणः विनिर्भिन्नं मेढ्रमुपस्थेंद्रियस्थानं स्वधिष्ण्यं स्वस्थानं कः प्रजापतिः रेतसा अंशेन रेतो रूपस्वाधिष्ठेयेनेंद्रियेण उपाविशत् येन रेतसाऽसौ व्यष्टिजीवः आनंदं रतिसुखं जानाति ॥ १९ ॥ ❀ ❀ गुदमिति पुंसो ब्रह्मणः विनिर्भिन्नं गुदं पाय्विन्द्रियस्थानं लोकेशः मित्रः पायुनांशेन पार्य्विद्रियेण सहाविशत् येन पायुना विसर्गं पुरीषत्यागं प्रतिपद्यते करोति ॥ २० ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

औषधीरोषध्यभिमानिदेवताः अस्य हरेः रोमभिरंशेन ॥ १८ ॥ ❀ ❀ कः प्रजापतिः रेतसा गुह्येंद्रियेणानंदं मैथुनोत्थसुखम् ॥ १९ ॥ ❀ ❀ विसर्गं धातुमलोत्सर्जनादिक्रियाम् ॥ २० ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

त्वचमिति । एकस्मिन्नपि स्पर्शग्राहके भेदद्वयमिदं कल्प्यं वहिरधिष्ठानं चर्म्म इन्द्रियं लोमदेवताश्च ओषध्यधिष्ठात्र्य इत्येकः अन्तर्व्वहिरधिष्ठानं तु त्वक् इन्द्रियमपि त्वक् इन्द्रियमपि त्वक् देवता च वायुरित्यन्यो भेदः ॥ १८—२४ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

सिद्धिं ज्ञानम् ॥ १७ ॥ ❀ ❀ ओषधीरोषध्यः । अत्र त्वचाधिष्ठाने त्वक् रोमाणि चेन्द्रियद्वयं तत्र त्वगिन्द्रिये अनिलो देवता स्पर्शो विषयः । रोमेन्द्रिये ओषध्यो देवताः कण्डूर्विषयः ॥ १८ ॥ ❀ ❀ कः प्रजापतिः रेतसा रेतउप-लक्षितेन उपस्थेन इत्यर्थः ॥ १९ ॥ ❀ ❀ विसर्गं मलमूत्रोत्सर्गम् ॥ २० ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

त्वगिंद्रियस्यैव विषयांतरं तद्ग्रहणे सहायभूतं देवतांतरं चाह त्वचमिति । त्वचमुत्पन्नां चर्माणीत्यर्थः । ओषधीः ओषधयः विभक्तिव्यत्ययः आर्षः । द्वितीयस्कंधे महीरुहशब्देनोक्ताः देवताः अंशेन त्वगिंद्रियेण सह विविशुः । असौ जीवः समष्टि-व्यष्टिरूपः येनांशेन त्वगिंद्रियेण यैः रोमभिस्तदुपलक्षितैश्चर्मभिः धिष्ण्यभूतैः कंडूं प्रतिपद्यते जीवः महीरुहैः सहायभूतैर्देवैर्बहिः कंडूं वायुदेवेन सहायभूतेनांतर्बहिश्च स्पर्शं इत्येवं द्वितीयस्कंधेऽत्र च स्थानभेदाद्विषयभेदः देवभेदश्चबोध्यः ॥ १८ ॥ ❀ ❀ कः प्रजापतिः अंशेनोपस्थेंद्रियेण सह उपाविशत् येनांशेनोपस्थेनेंद्रियेण रेतसानंदमौपस्थ्यसुखं प्राप्नोति ॥ १९ ॥ २० ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनीव्याख्या

कर्णाविति। दिशो देवताः। श्रोत्रमिन्द्रियम्। शब्दस्य सिद्धिः शब्दज्ञानम्। कर्णौ गोलकम्॥ १७॥ ❀ ❀ त्वचमिति। त्वग्गोलकम्। ओषधीर्देवताः। लोमानीन्द्रियाणि। कण्डूस्त्वग्घर्षणसुखम्॥ १८॥ ❀ ❀ मेढ्रं गोलकम्। को देवता। रेत इन्द्रियम्। आनन्दः स्त्रीसम्भोगसुखम्॥ १९॥ ❀ ❀ गुदं गोलकम्। मित्रो देवता। पायुरिन्द्रियम्। विसर्गो मलत्यागः॥ २०॥

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः।

एवं चौषधीनां वाय्वंशत्वं रोम्णां त्वगंशत्वमिति तस्य गोलकद्वये रूपद्वयेन भोगः सिध्यति। ओषधीरोम्णोरतिरिक्तत्वं न वक्तुं शक्यम्, गणस्य त्रयोविंशतिकत्वेनैव सिद्धत्वादिति॥ १८॥ ❀ ❀ रेतसांशेनेत्यत्र। उपस्थशब्दवाच्यमिन्द्रियं रेतः शब्देन बोध्यम्॥ १९॥

### श्रीगिरिधरकृता बालप्रबोधिनी

अस्य विराजः कर्णौ निर्भिन्नौ तत्स्वं धिष्ण्यं स्वस्थानं स्वांशेन श्रोत्रेन्द्रियेण सह दिशो देवता विविशुः, येन श्रोत्रेण शब्दस्य सिद्धिं ज्ञानं प्रपद्यते प्राप्नोति॥ १७॥ ❀ ❀ अस्य विराजो विनिर्भिन्नां त्वचमंशेनेन्द्रियेण रोमभिः सह औषधीः ओषधयः विविशुः, यैः रोमभिरिन्द्रियैरसौ जीवः कण्डूं प्रतिपद्यते जानाति। त्वगिन्द्रियस्यैव स्थानभेदेन विषयद्वयं कण्डूः स्पर्शश्च। तत्र चायं नामभेदो देवताभेदश्च द्वितीयस्कन्धे एव व्याख्यातः॥ १८॥ ❀ ❀ तस्य विराजो विनिर्भिन्नं मेढ्रं स्वस्थानं कः प्रजापतिर्देवता स्वांशेन रेतसा रेतउपलक्षितोपस्थेन्द्रियेण सहोपाविशत्। येनोपस्थेन्द्रियेणासौ जीवः आनन्दं रतिसुखं प्रतिपद्यते प्राप्नोति॥ १९॥ ❀ ❀ पुंसा विराजो विनिर्भिन्नं गुदं स्थानमंशेन पायुना इन्द्रियेण सह लोकेशो मित्र आविशत्, येन पायुनाऽसौ जीवः विसर्गं पुरीषत्यागं प्रतिपद्यते करोति॥ २०॥

### हिन्दी अनुवाद

जब इसके कर्णछिद्र प्रकट हुए, तब उनमें अपने अंश श्रवणेन्द्रियके सहित दिशाओंने प्रवेश किया, जिस श्रवणेन्द्रियसे जीवको शब्दका ज्ञान होता है॥ १७॥ ❀ ❀ फिर विराट् शरीरमें चर्म उत्पन्न हुआ; उसमें अपने अंश रोमोंके सहित ओषधियाँ स्थित हुईं जिन रोमोंसे जीव खुजली आदिको अनुभव करता है॥ १८॥ ❀ ❀ अब उसके लिङ्ग उत्पन्न हुआ। अपने इस आश्रयमें प्रजापतिने अपने अंश वीर्यके सहित प्रवेश किया, जिससे जीव आनन्दका अनुभव करता है॥ १९॥ ❀ ❀ फिर विराट् पुरुषके गुदा प्रकट हुई; उसमें लोकपाल मित्रने अपने अंश पायु-इन्द्रियके सहित प्रवेश किया, इससे जीव मलत्याग करता है॥ २०॥

**हस्तावस्य विनिर्भिन्नाविन्द्रः स्वर्पतिराविशत्। वार्तयांशेन पुरुषो यया वृत्तिं प्रपद्यते॥ २१॥**
**पादावस्य विनिर्भिन्नौ लोकेशो विष्णुराविशत्। गत्या स्वांशेन पुरुषो यया प्राप्यं प्रपद्यते॥ २२॥**
**बुद्धिं चास्य विनिर्भिन्नां वागीशो धिष्ण्यमाविशत्। बोधेनांशेन बोद्धव्यप्रतिपत्तिर्यतो भवेत्॥ २३॥**
**हृदयं चास्य निर्भिन्नं चन्द्रमा धिष्ण्यमाविशत्। मनसांशेन येनासौ विक्रियां प्रतिपद्यते॥ २४॥**
**आत्मानं चास्य निर्भिन्नमभिमानोऽविशत्पदम्। कर्मणांशेन येनासौ कर्तव्यं प्रतिपद्यते॥ २५॥**

### श्रीधरस्वामिविरचिता भावार्थदीपिका

स्वः पतिः स्वर्गस्य पतिः। वार्तया क्रयविक्रयादिशक्त्या। वृत्तिं जीविकाम्॥ २१॥ ❀ ❀ गत्या पादेंद्रियेण॥ २२॥ २३॥ ❀ ❀ विक्रियां संकल्पादिरूपाम्॥ २४॥ ❀ ❀ आत्मानमहंकारम्। अभिमन्यतेऽनेनेत्यभिमानो रुद्रः कर्मणाऽहंवृत्त्या कर्त्तव्यमिति क्रियाम्॥ २५॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

'स्वर्पतिः' इति पाठेऽहरादित्वाद्रेफः॥ २१॥ ❀ ❀ गत्या गतिसाधनपादेंद्रियेण प्राप्यं प्राप्तव्यदेशम्॥ २२॥ ॥ २३॥ २४॥ ❀ ❀ अहंकारमहंकारास्पदं गोलकं हृदयैकदेशम्॥ २५॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनीव्याख्या

विष्णुस्तदाविष्टो देवविशेषः स्वांशेन विष्णोः शक्त्या गत्या इन्द्रियेण सह प्राप्यं गमनेन प्राप्तव्यं यज्ञीयद्रव्यं द्वितीय-सम्वादात् ॥ २२ ॥ ❀ ❀ अत्र बुद्धिं चास्य विनिर्भिन्नामिति पद्यं कचिद् दृश्यते तत्स्वाम्यसम्मतमेव बुद्धिचित्तयोरभेदेन निर्देश इति व्याख्यानात् तथापि पुस्तकेषु दृष्टत्वात्पृथगङ्कः क्रियते । वागीशो ब्रह्मा बोधेन सर्वव्यवहारहेतुव्यवसायेनांशेनेन्द्रियेण सह बोद्धव्यस्य ज्ञेयस्य व्यवह्रियमाणवस्तुनः प्रतिपत्तिर्ज्ञानम् ॥ २३ ॥ ❀ ❀ मनसा सुखाद्युपलब्धिसाधनेन्द्रियेण सह ॥ २४ ॥ ❀ ❀ अहंवृत्त्या अहमिति व्यापारेण ॥ २५ ॥

### श्रीमद्वीरराघवव्याख्या

हस्ताविति अस्य ब्रह्मणः विनिर्भिन्नौ हस्तौ करौ स्वर्पतिः स्वर्गस्य पतिरिंद्रःवार्तया कृष्यादिव्यापाररूपवृत्तिसाधनेनांशेन पाणींद्रियेणाविशत्पुरुषो व्यष्टिजीवः यया वृत्तिसाधनपाणींद्रियेण—वृत्तिं जीवनप्रकारं प्रतिप्रपद्यते प्राप्नोति अत्र हस्ताविंत्यनेनाक्षिणी इति द्विवचनेन च एषां श्लोकानां चतुर्मुखशरीराद्विभक्तव्यष्टिदेहविषय त्वं स्पष्टं ननु तस्यैव हस्ताद्युत्पत्तिपरत्वं चतुर्मुखस्य भुजचतुष्टयनेत्राष्टकसद्भावात् ॥ २१ ॥ ❀ ❀ पादाविति । अस्य विनिर्भिन्नौ पादौ चरणौ लोकेशो विष्णुर्गत्या गतिसाधने-नांशेन स्वाधिष्ठेयपादेंद्रियेण सहाविशत् यया गतिसाधनेन पादेन्द्रियेणासौ जीवः प्राप्यं गंतव्यं गमनेन प्रतिपद्यते प्राप्नोति ॥ २२ ॥ ❀ ❀ हृदयमिति अस्य निर्भिन्नं हृदयं कमलाकारं धिष्ण्यं स्थानं चंद्रमा मनसांशेनेन्द्रियेण सहाविशत् येन मनसाऽसौ जीवः विक्रियां विकल्पसंकल्परूपां प्रतिपद्यते । एकस्यैवांतःकरणस्य विक्रिया बोधाभिमानविवेकरूपवृत्तिभेदेन मनोबुद्ध्यहंकार-चित्तभेदस्य चंद्रवागीशरुद्रप्रजापतयोऽधिष्ठातारो बोध्याः । तत्र संकल्पविकल्पात्मकवृत्त्यवच्छिन्नस्वान्तःकरणभेदस्य चंद्रमसा-धिष्ठितस्य समष्टिपुरुषाद्विभागः ॥ २३ ॥ ❀ ❀ अथ बुद्ध्यादिविभागमाह बुद्धिमित्यादिना । ब्रह्मणः विनिर्भिन्नां बुद्धिं धिष्ण्यं स्थानं वागीशः ब्रह्मा बोधेन निश्चयात्मकज्ञानजननसामर्थ्येन सहाविशत् यतः बोधेन बोधव्यस्य निश्चेतव्यस्य प्रतिपत्तिर्ज्ञानं भवेत् ॥ २४ ॥ ❀ ❀ आत्मानमिति । आत्मानमहंकारमस्य ब्रह्मणः निर्भिन्नं पदं स्थानमभिमानः अभिमन्यतेऽनेनेत्यभिमानः अनात्मन्यात्माभिमानकृद्देवता रुद्रः सर्वात्मनोंऽतःकरणं गिरित्रं इति प्रागुक्तत्वात् कर्मणा देहाभिमानेनांशेनाविशत् येन कर्मणाऽसौ जीवः कर्तव्यमभिमानविषयं प्रतिपद्यतेऽभिमनुते ॥ २५ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली ।

"इंद्रो वृषात्मशक्रार्केषु" इत्यभिधानादिंद्रशब्दस्य पुरंदरादन्यविषयत्वनिरासाय स्वर्पतिरित्युक्तं वार्तया हस्तेंद्रियेणांशेन वृत्तिमादानाख्याम् ॥ २१ ॥ ❀ ❀ गत्या गतिसाधनपादेंद्रियेण ॥ २२ ॥ २३ ॥ ❀ ❀ हृदयं मनो निवासस्थानं मनसेंद्रियेण विक्रियां संकल्पविकल्परूपाम् ॥ २४ ॥ ❀ ❀ आत्मानमात्मनाडीविशेषमुत्पन्नं वाचस्पतिर्बृहस्पतिः बुद्ध्या स्वांशेनाविशत् यया बुद्ध्याऽसौ हरिनियतो ब्रह्मा निश्चयं प्राप्नोति "आत्मनाड्यां तथा बुद्धिस्तत्रस्थश्च बृहस्पतिम्" इति, इत्यत आत्म-शब्देनात्र नाड्येवोच्यते ॥ २५ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

आत्मानमहम्भावास्पदं कर्मणा अहम्भावेनेन्द्रियेण ॥ २५ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी ।

वार्त्तया क्रयविक्रयादिशक्त्येति वार्त्तां बलशिल्पादिशब्दवाच्यमध्यात्मं वृत्तिं जीविकाम् ॥ २१ ॥ २२ ॥ ❀ ❀ बुद्धिं बुद्ध्यास्पदं गोलकं हृदयैकदेशं । वागीशो ब्रह्मा बोधेन बुद्ध्या श्लोकोऽयमसर्वसम्मतः ॥ २३ ॥ ❀ ❀ विक्रियां सङ्कल्पादि-रूपाम् ॥ २४ ॥ ❀ ❀ आत्मानमहंकारास्पदं गोलकं हृदयैकदेशम् । अभिमन्यतेऽनेनेति अभिमानो रुद्रः । कर्मणाहंकारेण कर्त्तव्यं अभिमन्तव्यम् ॥ २५ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

यया आदानादिक्रिययाऽसौ जीवः वृत्तिं जीविकां प्रपद्यते तया वार्तयानुमेयेनांशेन पाणींद्रियेण सह स्वर्पतिः स्वर्गपतिरिंद्र आविशत् ॥ २१ ॥ ❀ ❀ यया प्राप्यं गन्तव्यं देशं प्रपद्यते तया गत्यानुमेयेन स्वांशेन स्वाधिष्ठेयेन पादेंद्रियेण सह आविशत् ॥ २२ ॥ ❀ ❀ अथैकस्यैवांतःकरणस्य बोधविक्रियाऽभिमानविवेकाख्याभिर्वृत्तिभिर्भेदेषु बुद्धिमनोऽहंकारचित्तेषु ब्रह्मणः प्रवेशमाह बुद्धिमिति चतुर्भिः यतः सहायभूताद्वागीशात् ॥ २३ ॥ ❀ ❀ हृदयं मनः येन मनसात्मिकायाः विक्रियायाः हेतुभूतेनांशेन स्वकरणेन असौ जीवः विक्रियां संकल्पादिरूपाम् ॥ २४ ॥ ❀ ❀ आत्मानमहंकारं अभिमन्यते अनेनेत्यभि-मानो रुद्रः कर्मणांशेन अहं देवो मनुष्यः ममेदमित्येव वचनादिकर्मकौशलेन कर्त्तव्यं देहगेहादौ क्रियमाणमहंतां ममतां च प्रतिपद्यते ॥ २५ ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

हस्तौ गोलकम्। इन्द्रो देवता। स्वर्पतिरिति लोकपालः। वार्ता कृतिः, करणसामर्थ्यम्, वलमिति यावत्, इन्द्रियम्। वृत्तिर्हस्तव्यापारः ॥ २१ ॥ ❀ ❀ पादौ गोलकम्। विष्णुर्देवता। गतिरिन्द्रियम्। प्राप्यं चरणकर्म, ग्रामादिसम्बन्ध इति यावत् ॥ २२ ॥ ❀ ❀ अन्तःकरणचतुष्टयस्य हृदयमेकं गोलकम्। तदेवांशभेदेन बुद्ध्यादिशब्देनोच्यते। बुद्धिर्गोलकम्। वागीशो ब्रह्मा देवता। बोध इन्द्रियम्। बोद्धव्यादेर्घटादेः प्रतिपत्तिर्ज्ञानमिन्द्रियव्यापारः ॥ २३ ॥ ❀ ❀ हृदयं गोलकम्। चन्द्रमा देवता। मन इन्द्रियम्। विक्रिया विविधक्रिया सङ्कल्पविकल्परूपा इन्द्रियव्यापारः ॥ २४ ॥ ❀ ❀ आत्मा अहङ्कारः, अन्तःकरणांशः। अभिमानो देवता। रुद्रात्मक इति केचित्। नूतनसृष्टित्वात्तच्छब्दवाच्या एव तथाविधास्ते। कर्म अभिमतिः, देहादावहंबुद्धिरिन्द्रियम्। कर्तव्यमहङ्कारकार्यम् ॥ २५ ॥

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

वार्त्तयांशेनेत्यत्र। वार्ताशब्दस्य वैश्यवृत्तौ वृत्तान्ते च प्रसिद्धत्वादत्र तदुभयमपि नाऽभिप्रेतम्, किन्तु 'तयोस्तु बलवानिन्द्रः' इति पूर्वमुक्तत्वादग्रे च 'हस्तादिन्द्रो बलेनैव' इति वक्ष्यमाणत्वाच्चाऽत्र प्रसिद्धपदसमभिव्याहारेण बलमेवाऽभिप्रेतमित्याशयेनाहुः—वार्ता कृतिरित्यादि। एवमत्र बाह्यानां दशेन्द्रियाणामेकादशस्थानेषु भोगादिकमुक्तम् ॥ २१ ॥ ❀ ❀ अतः परं महदहङ्कारमनसां वक्तव्यम्। अत्राऽनुक्तायामपि द्वितीयस्कन्धे समाधानप्रकरणे 'बुद्धिः प्राणस्तु तैजसः' इत्यहंकारभेदत्वेनोक्तयोर्बुद्धिप्राणयोर्वक्तव्यम्। तद्वक्तुं 'साध्यात्मः साधिभूतः' इति श्लोकोक्तत्रेधामहाविभागमध्ये 'एकधा हृदयेन च' इति चकारेणाऽधिभूतादिभेदसंग्रहपूर्वकं करणविभक्ताववान्तरभेदकथनपूर्वकं य एकधा विभागः प्रतिज्ञातस्तं विवृण्वन्ति—अन्तःकरणेत्यादि। तदेवेत्येव राजसी बुद्धिर्निवारिता। साऽग्रे 'बोधेनांशेन' इति बोधपदेनोच्यते ॥ २३ ॥ ❀ ❀ रुद्रात्मक इति केचिदिति। 'रुद्रोऽभिमत्या हृदयम्' इत्यग्रे वक्ष्यमाणत्वात् प्रकरणसाम्यात् केचिदाहुरित्यर्थः। तत्राऽस्वरसं बोधयन्ति—नूतनेत्यादि। तत्र 'चित्तेन हृदयं चैत्यः' इति वक्ष्यते, अत्र तु 'महान् धिष्ण्यमुपाविशत्। चित्तेनांशेन' इति देवताभेद उच्यते। अतोऽत्रापि तथाविधो भिन्न एव वक्तव्य इत्यर्थः। कर्मशब्दं 'रुद्रोऽभिमत्या' इति वाक्यानुसारेण विवृण्वन्ति—कर्माऽभिमतिरिति ॥ २५ ॥

### श्रीगिरिधरकृता बालप्रबोधिनी

अस्य विनिर्भिन्नौ हस्तौ स्वर्पतिः स्वर्गपतिरिन्द्रः वार्त्तया क्रयविक्रयशक्त्या अंशेनेन्द्रियेण सहाविशत् यथा शक्त्या पुरुषो जीवो वृत्तिं प्रपद्यते जीविकां सम्पादयति ॥ २१ ॥ ❀ ❀ अस्य विनिर्भिन्नौ पादौ स्वांशेन गत्या गत्याख्येन्द्रियेण सह लोकेशो विष्णुराविशत्, यया गत्याख्यया शक्त्या पुरुषः प्राप्यं देशान्तरं प्रपद्यते ॥ २२ ॥ ❀ ❀ अस्य विराजश्च विनिर्भिन्नां बुद्धिं धिष्ण्यं स्थानं बोधेन निश्चयात्मकज्ञानजननसामर्थ्येन सह वागीशः आविशत्, यतो येन बोधेन बोद्धव्यस्य प्रतिपत्तिर्निश्चयात्मकं ज्ञानं भवेत् ॥ २३ ॥ ❀ ❀ अस्य हृदयं कमलाकारं विर्भिन्नं तद्धिष्ण्यं स्थानं मनसा अंशेनेन्द्रियेण सह चन्द्रमा आविशत्, येन मनसा असौ जीवः विक्रियां सङ्कल्पविकल्परूपां प्रतिपद्यते प्राप्नोति ॥ २४ ॥ ❀ ❀ अस्य विराजः निर्भिन्नमात्मानमहङ्कारं पदं स्थानं कर्मणा देहाद्यहंवृत्त्या सह अभिमानः अभिमन्यतेऽनेनेत्यभिमानो रुद्र आविशत्, येन कर्मणाऽसौ जीवः कर्तव्यमभिमानविषयं देहादिकं प्रतिपद्य अहमिति मत्वा नानाविधं कर्म करोतीत्यर्थः ॥ २५ ॥

### हिन्दी अनुवाद

इसके पश्चात् उसके हाथ प्रकट हुए, उनमें अपनी ग्रहण-त्याग-रूपा शक्तिके सहित देवराज इन्द्रने प्रवेश किया, इस शक्तिसे जीव अपनी जीविका प्राप्त करता है ॥ २१ ॥ ❀ ❀ जब इसके चरण उत्पन्न हुए, तब इनमें अपनी शक्ति गतिके सहित लोकेश्वर विष्णुने प्रवेश किया—इस गतिशक्तिद्वारा जीव अपने गन्तव्य स्थानपर पहुँचता है ॥ २२ ॥ ❀ ❀ फिर इसके बुद्धि उत्पन्न हुई; अपने इस स्थानमें अपने अंश बुद्धिशक्तिके साथ वाक्पति ब्रह्माने प्रवेश किया; इस बुद्धिशक्तिसे जीव ज्ञातव्य विषयोंको जान सकता है ॥ २३ ॥ ❀ ❀ फिर इसमें हृदय प्रकट हुआ; उसमें अपने अंश मनके सहित चन्द्रमा स्थित हुआ। इस मनः शक्तिके द्वारा जीव संकल्प-विकल्पादिरूप विकारोंको प्राप्त होता है ॥ २४ ॥ ❀ ❀ तत्पश्चात् विराट् पुरुषमें अहङ्कार उत्पन्न हुआ, इस अपने आश्रयमें क्रियाशक्तिसहित अभिमान ( रुद्र ) ने प्रवेश किया। इससे जीव अपने कर्तव्यको स्वीकार करता है ॥ २५ ॥

**सत्त्वं चास्य विनिर्भिन्नं महान्धिष्ण्यमुपाविशत्। चित्तेनांशेन येनासौ विज्ञानं प्रतिपद्यते ॥ २६ ॥**
**शीर्ष्णोऽस्य द्यौर्धरा पद्भ्यां खं नाभेरुदपद्यत। गुणानां वृत्तयो येषु प्रतीयन्ते सुरादयः ॥ २७ ॥**

आत्यन्तिकेन सत्त्वेन दिवं देवाः प्रपेदिरे। धरां रजःस्वभावेन पणयो ये च ताननु ॥ २८ ॥
तार्तीयेन स्वभावेन भगवन्नाभिमाश्रिताः। उभयोरन्तरं व्योम ये रुद्रपार्षदां गणाः ॥ २९ ॥
मुखतोऽवर्तत ब्रह्म पुरुषस्य कुरूद्वह। यस्तून्मुखत्वाद्वर्णानां मुख्योऽभूद् ब्राह्मणो गुरुः ॥ ३० ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

सत्त्वमिति बुद्धिचित्तयोरभेदेन निर्देशः। महानिति ब्रह्मा। चित्तेन चेतनया ॥ २६ ॥ ❀ ❀ त्रिलोकोत्पत्तिमाह। शीर्ष्ण इति। वृत्तयः परिणामाः ॥ २७ ॥ ❀ ❀ एतदेव प्रपंचयति द्वाभ्याम्। आत्यंतिकेनोर्जितेन पणव्यवहारे पणंते यागादिना व्यवहरंतीति पणयो मनुष्यास्ताननु एतदुपकरणभूता ये गवादयस्तेऽपि धरां प्रपेदिरे ॥ २८ ॥ ❀ ❀ तृतीयं तमस्तदीयेन तामसेन उभयोर्द्यावापृथिव्योरंतरं मध्यं व्योमांतरिक्षं तदेव भगवतो नाभिस्तामाश्रिता रुद्रपार्षदां रुद्रस्य पार्षदां भूतादीनां गणाः ॥ २९ ॥ ❀ ❀ अवर्तत प्रवृत्तम्। ब्रह्म वेदः। यस्तून्मुखत्वान्मुखोद्भवत्वाद्वर्णानां मुख्यो मुख्य इव प्रथमो गुरुश्चाभूत् सोऽपि मुखतोऽवर्ततेत्यनुषंगः। अध्यापनादिना ब्राह्मणस्य वेदो वृत्तिः तया वृत्त्या सह ब्राह्मणो मुखतो जात त्यर्थः। एवमुत्तरत्र वर्णत्रयेऽपि ज्ञातव्यम् ॥ ३० ॥

### श्रीवंशीधरकृता भावार्थदीपकाप्रकाशः

सत्त्वं बुद्धिचित्तास्पदं हृदयैकदेशम्। महानिति। विष्णुब्रह्मणोरभेदनिर्देशः। चेतनया बुद्ध्या च विज्ञानमध्यवसायं विशिष्टज्ञानञ्च कचिदत्र 'बुद्धिं चास्ये' इत्यधिकश्लोकोप्यस्ति स च न स्वामिचरणसंमतः तैस्तस्याग्निरित्यादिचतुर्दशभिरिति प्रतीकलेखनादत्र सत्त्वं चास्येति व्याख्याने बुद्धिचित्तयोरभेदनिर्देशकथनाच्च ॥ २६ ॥ द्यौः स्वर्लोकः येषु द्यु प्रभृतिषु 'गुणानां वृत्तयस्तिस्रः सुरनृप्रमथादयः' इत्यादिपुराणात्। यद्वा। वृत्तयः सुखदुःखमोहात्मिकाः। सुखादय इति पाठसत्त्वे ज्ञेयाः आदिना गंधर्वादिग्रहः ॥ २७ ॥ ❀ ❀ एतदेव गुणपरिणामत्वमेव ॥ २८ ॥ २९ ॥ ❀ ❀ मुखमिव यथा शरीरोत्पत्तौ प्रथमं मुखमुत्पद्यते तथा वर्णोत्पत्तौ ब्राह्मणः। मुखशब्दोऽत्र शीर्षोपलक्षकः। गुरुश्च तत्त्वोपदेशात् तत्त्वज्ञानदानेनाविद्यानिगरणाच्च। गृ—शब्दनिगरयोरस्ति। एतेन "गिरति ह पाप्मानम्" इति श्रुत्युक्तगुरुशब्दार्थो ध्वनितः। ब्राह्मणेतरवर्णस्य गुरुत्वं चापास्तम्। वर्णानामित्युक्त्या वर्णसंकराणामुपदेशप्राप्तविद्यानधिकारश्च सूचित 'वर्णसंकरश्च ब्राह्मणेन शिष्यो न कार्यः' इत्यप्युक्तञ्च एतच्चाग्रे प्रपंचयिष्यामः प्रपञ्चितमप्याद्यपद्यव्याख्याशतके इत्यर्थ इति। वृत्त्यर्थं नैव शोकः कार्यः सा तु जन्मतोप्यग्रे प्रादुर्भवति सहैव वेति भावः ॥ ३० ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपनी व्याख्या

ब्रह्मेति ब्रह्मवासुदेवयोरभेदनिर्देशः। तदसम्मतपद्याभ्युपगमे महान् वासुदेवः क्षेत्रज्ञो वा विज्ञानमनुसंधानम् ॥ २६ ॥ ❀ ❀ अस्य विराजः शीर्ष्णः कारणांशात्सत्त्वप्रधानाच्छिरःस्थानीयात् द्यौः स्वर्लोकः एवं पद्भ्यां कारणांशाद्रजः-प्रधानात् पदस्थानीयाद्धरा भूर्लोकः नाभेः कारणांशात्तमः प्रधानान्नाभिस्थानीयात्खं भुवर्लोकः इति व्याख्येयम्। येषु लोकेषु ॥ ३० ॥ ❀ ❀ एतदेव सुरादीनां तत्तल्लोकस्थितत्वमेव तदुपकरणभूतानां मनुष्याणां व्यवहारः परिच्छदरूपः ॥ २८ ॥ २९ ॥ ❀ ❀ अनुषङ्गः अन्वितस्य क्रियापदस्य पुनस्सम्बन्धः मुखमिव प्रथम इति व्याख्यानात् मुखशब्दस्याद्यवाचकत्वमत्र नोपादीयते। तत्र प्रत्ययस्य वैयर्थ्यात् एवं वृत्त्या सहोत्पन्नत्वम् ॥ ३० ॥

### श्रीमद्वीरराघवव्याख्या

सत्त्वमिति अस्य ब्रह्मणो विनिर्भिन्नं सत्वं देहात्मविवेकज्ञानहेतुबुद्ध्याख्यमंतःकरणं बुद्धिचित्तयोरभेदेनायं निर्देशः धिष्ण्यं स्थानं महान् प्रजापतिः चित्तेनांशेन सम्यगर्थचिंतनरूपेण मनसोपाविशत् येन चित्तेनांशेनासौ जीवः विज्ञानं सम्यक्-चिकीर्षयितव्यार्थविषयं ज्ञानं प्रतिपद्यते लभते ॥ २६ ॥ ❀ ❀ एवं व्यष्टींद्रियविभागमुक्त्वाऽथ देवादीनां भोगस्थान-विभागमाह शीर्ष्ण इति। अस्य ब्रह्मणः शीर्ष्णः शिरसो द्यौः पद्भ्यां पादाभ्यां धरा भूमिः अस्य नाभेः खं अंतरिक्षलोकः उदपद्यत उद्भूत्, येषु द्युधराखेषु गुणानां सत्त्वरजस्तमसां वृत्तयः वृत्तिमंतः देवमनुष्यादयः वृत्तिशब्दोऽजहल्लक्षणया वृत्तिमत्परः प्रतीयन्ते दृश्यन्ते देवादय उत्पद्यंत इत्यन्वयः ॥ २७ ॥ ❀ ❀ गुणानां वृत्तय इत्येतदेव प्रपंचयति द्वाभ्यां आत्यतिकेनेति। आत्यन्तिकेन ऊर्जितेन औत्पत्तिकेनेत्यपि पाठः तदा नैसर्गिकेणेत्यर्थः। सत्त्वेन सत्त्वगुणेन उपलक्षिता देवाः दिवं सात्विककर्मानुष्ठाननिष्पादित-

---

१. प्रा० पा०—प्राणयोगेन चैव तत्। २. प्रा० पा०—भगवान्नाभिमाश्रितः। ३. प्राचीने पाठे श्लोकस्यास्य चतुर्थं पादं—'सरुद्राः हे पार्षदा गणाः।' इति

फलभोगानुरूपद्युलोकं प्रतिपेदिरे प्राप्ताः। पणयः पण व्यवहारे पणन्ते आयासादिनाव्यवहारेण जीवन्तीति पणयो मनुष्याः, ताननुसृत्य ये उपकरणभूता गवादयस्ते सर्वे रजःस्वभावेन उपलक्षिताः राजसकर्मफलभोगानुकूला धरां भूमिं प्रपेदिरे हेत्वर्थे तृतीया सात्त्विकादिस्वभावेन हेतुना द्युः पृथिव्यादीन् लोकान् देवादयः प्रपेदिरे इत्यर्थः॥ २८॥ ❀ ❀ तार्त्तीयेनेति तृतीयं तमः तदीयेन तार्त्तीयेन तमःस्वभावेन भगवन्नाभिं भगवतो वैराजधारणायां नभस्थलं नाभिसरो गृणन्ति, भूः पादौ यस्य नाभिर्वियदित्यादिभिर्नाभित्वेनानुसंधीयमानं यद्वा भगवान्नाभिं भगवतश्चतुर्मुखशरीरस्य भगवतः नाभिं नाभ्या आसीदंतरिक्षमिति श्रुतेः उपचारात्कार्य्ये कारणशब्दः उभयोर्द्यावापृथिव्योरंतरं मध्यस्थं व्योमांतरिक्षं रुद्रपार्षदां गणाः भूतप्रेतपिशाचाद्या आश्रिताः॥ २९॥ ❀ ❀ चातुर्वर्ण्योत्पत्तिमाह मुखत इति पुरुषस्य समष्टिपुरुषस्य मुखतः ब्रह्म यद्ब्राह्मणवृत्तिरध्ययनादि तन्मुखतोऽवर्त्तत प्रवृत्तं एतदेव हि ब्राह्मणानां ब्रह्ममुखोद्भूतत्वं नाम यत्तन्मुखव्यापारभूताध्यापनादिवृत्त्याश्रितत्वं एवं क्षत्रियादिष्वपि द्रष्टव्यम्। हे कुरूद्वह! विदुर! यद्यस्माद् ब्राह्मणः तन्मुखत्वात्तन्मुखोद्भवत्वात्तन्मुखोद्भूताध्यापनादिमुखव्यापारत्वाद्वर्णानां मुख्यः मुखमिव प्रधानः गुरुश्च अभूत्॥ ३०॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

महान् ब्रह्मा सत्त्वं सत्त्वनाडीविशेषं धिष्ण्यं स्वस्थानं चित्तेनाविशत् असौ ब्रह्मांतर्यामी ब्रह्मा च "शतं चैकास्य हृदयस्य नाड्य" इति श्रुतेः बहुत्वान्नाडीनां किमेते विशेष्योच्यंत इति चेदुच्यते ब्रह्मनाड्या अवांतरत्वज्ञापनाय एतयोर्मुख्याभिमानी ब्रह्मा चेति तदुक्तं "अहं सत्त्वमिति द्वेधा ब्रह्मनाड्या अवांतरम्। कर्तृनामा त्वहंकारस्त्वहं नाड्यां व्यवस्थितः। सत्त्वनाड्यां तथा चित्तमभिमानो हरस्तथा। अहं नाड्यां सत्त्वनाड्यां ब्रह्मा चैव व्यवस्थित" इति॥ २६॥ ❀ ❀ शीर्ष्णः शिरसः धरा भूभिः खमंतरिक्षं येषु प्राणिषु सत्त्वादिगुणानां वृत्तयः सुखकर्मप्रसादलक्षणाः स्वतो दृश्यंते तेषु लोकेषु सुरासुरादयो वसंतीति शेषः। आदिशब्देन मनुष्या रुद्रपार्षदगणा गृह्यंते॥ २७॥ ❀ ❀ एतदेव विवृणोति औत्पत्तिकेनेति। औत्पत्तिकेन स्वाभाविकेन सत्त्वेन स्वाभाविकसात्त्विकत्वात् पणयो हानोपादानव्यवहारं कुर्वंतो मनुष्याः ये च तान् पणीननु अनुगतास्तेऽपि॥ २८॥ ❀ ❀ तार्तीयेन तामसेन स्वभावेन भगवन्नाभिमंतरिक्षमाश्रिता रुद्रपार्षदगणाः उभयोर्द्यावापृथिव्योरंतरं मध्यं व्योमाश्रिता इति शेषः॥ २९॥ ❀ ❀ इदानीं वर्णोत्पत्तिं तदभिमान्युत्पत्तिं च वक्ति मुखत इति। पुरुषस्य ब्रह्मांतर्यामिणो मुखतो ब्रह्मजातिरवर्तत अत्र ब्रह्मशब्देन ब्राह्मणजातिः तदुत्पन्ना ब्राह्मणास्तज्जात्यभिमानिन उच्यंत इति ज्ञापनाय ब्रह्मेत्युक्तं उत्तरत्राप्येवमेवानुसंधेयं ब्रह्माभिमानी तु भृगुरजनि ब्रह्मणो मुखात् क्षत्राभिमानी तु मनुर्ब्रह्मबाह्वोरजायतेत्यादिवचनेनाश्रुतव्याख्येयमिति अपवादं निवारयति यत्र हरावुन्मुखत्वाद्ब्राह्मणस्त्रिवर्णानां मुख्यो गुरुरभवत्। तस्य पुरुषस्यैव तत्त्वोपदेशात् तत्त्वज्ञानदानेनाविद्यादिदोषनिगरणाच्च गुरुरित्यर्थः। गृशब्दे गृनिगरण इति धातुः॥ ३०॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

सत्त्वं चित्तास्पदं गोलकं चित्तेनेन्द्रियेण विज्ञानं सामान्यतो ज्ञेयम्, तच्च बुद्धेरप्युपलक्षणं क्वचित्तु पादावस्येत्येनन्तरं बुद्धिं चास्येत्यादिकमपि पद्यं पृथगस्ति॥२६॥ ❀ ❀ शीर्ष्ण इति अस्य विराजः शीर्ष्णो द्युलोककारणांशात्। एवमन्यत्रापि ज्ञेयं भुवर्लोकः॥ २७—३२॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

सत्त्वं चित्तास्पदं गोलकं हृदयैकदेशं महान् विष्णुः विज्ञानं चेतनाम्॥ २६॥ ❀ ❀ त्रिलोकोत्पत्तिमाह शीर्ष्णइति। वृत्तयः परिणामाः॥ २७॥ ❀ ❀ आत्यन्तिकेन ऊर्जितेन पणन्ते यागादिना व्यवहरन्तीति पणयो मनुष्याः पणव्यवहारे। ताननुवर्त्तन्ते ये तदुपकरणभूता गवादयस्तेऽपि धरां प्रपेदिरे॥ २८॥ ❀ ❀ तृतीयं तमस्तदीयेन तामसेनेत्यर्थः। ये रुद्रपार्षदा भूतादीनां गणास्ते भगवतो विराजो नाभिमाश्रिता इत्यन्वयः। नाभिरेव का तत्राह उभयोर्द्यावापृथिव्योरन्तरं मध्यं व्योम आकाशं भुवर्लोकम्॥ २९॥ ❀ ❀ चातुर्वर्ण्योत्पत्तिमाह ब्रह्म वेदः पुरुषस्य परमेश्वरेणैक्यात्तस्य मुखतोऽवर्त्तत अभूत् यस्तु उन्मुखत्वाद्वेदान्मुखत्वाद्धेतोर्वर्णानां मुख्यो गुरुश्चाभूद्ब्राह्मणः सोऽपि मुखतोऽवर्त्ततेत्यनुषंगः॥ ३०॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

सत्त्वं चित्तम् महान् क्षेत्रज्ञः चित्तेनांशेन चेतनया विज्ञानं विवेकम्॥ २६॥ ❀ ❀ भगवद्देहात्त्रिलोकोत्पत्तिमाह शीर्ष्ण इति। अस्य वैराजस्य भगवतः येषु द्युप्रभृतिषु गुणानां सत्त्वादीनां वृत्तयः प्रतीयंते॥ २७॥ ❀ ❀ गुणानां वृत्तय इत्यर्द्धश्लोकार्थं प्रपंचयत्यात्यंतिकेनेति द्वाभ्याम्। आत्यंतिकेनोर्जितेन पणंते यागादिना व्यवहरंतीति पणयो मनुष्यादयः ये च तान-

नुमनुष्योपकरणभूता गवादयः ते च धरां प्रपेदिरे ॥ २८ ॥ ❀ ❀ तार्त्तीयेन तामसेन उभयोर्द्यावापृथिव्योरंतरं मध्ये व्योम अन्तरिक्षं तदेव भगवन्नाभिमाश्रिताः ॥ २९ ॥ ❀ ❀ पुरुषस्य भगवतो मुखतो ब्रह्म वेदः ब्राह्मणवृत्तिहेतुरवर्तत जातम्। यस्तुन्मुखत्वात् मुखोद्भूतत्वात् वर्णानां मुख्यः अग्रगण्यः अत एव गुरुश्चाभूत्सोऽपि मुखतोऽवर्ततेत्यनुषंगः ॥ ३० ॥

## श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

सत्त्वं गोलकम्। महान् देवता। चित्तमिन्द्रियम्। विज्ञानं चेतना, इन्द्रियव्यापारः। एवं सात्त्विकाहङ्कारकार्ये मनसि महत्तत्वाहङ्कारयोर्बुद्धेश्चैक्यविवक्षया तेषामपीन्द्रियत्वं परिकल्प्य तत्र देवतादिभेद उक्तः ॥ २६ ॥ ❀ ❀ इदानीं मध्ये अवयवैर्लोकनिर्माणमाह—शीर्ष्णोऽस्येति। अस्य विराजः शीर्ष्णः सकाशात् द्यौरुदपद्यत। नाभेः खमन्तरिक्षमुदपद्यत। पद्भ्यामिति पञ्चमी। धरा पृथ्वी। विपरीतकथने प्रयोजनं वक्तव्यम्। ननु किमर्थमेतन्निरूपणम् ? विज्ञापिते हि संतापः कृतः, तत्त्वानां च भोगार्थं स्थाननिर्माणमुक्तम्, धरादिनिर्माणस्य कोपयोगः ? इत्याशङ्क्याऽऽह—गुणानामिति। पूर्वमहङ्कारस्य मायाया वा गुणा निरूपिताः। तेषां प्रत्येकवृत्ति स्थानं वक्तव्यम्। तदभिमानिदेवानां नियतभोगार्थं वृत्तयो विलासप्रकाराः। येषु द्यौरादिषु। ननु गुणानां का वृत्तयः ? विलासश्चेतनानां भवतीत्यशङ्क्याऽऽह—येषु प्रतीयन्ते सुरादय इति। येषु प्रतीयन्त इति पुनरनुषज्यते। सुरा देवाः। आदिशब्देन नरा भूतानि च ॥ २७ ॥ ❀ ❀ तदेव विभज्य स्पष्टयति—आत्यन्तिकेनेति। आत्यन्तिकं गुणान्तरास्पृष्टम्, सत्त्वाधिक्यं वा। देवाः पूर्वोक्ता अन्ये च। पूर्वमप्याधिदैविका निरूपिताः, अन्ये च त्रयस्त्रिंशत्। ते सर्वे अतिसात्त्विका इति सत्त्वविलासस्थानं दिवं प्रपेदिरे। विपरीतकथने हेतुं वदन् व्युत्क्रमेण निरूपयति—धरामिति। गुणक्रम एवाऽत्र क्रमः, नत्ववयवक्रमः। रजःस्वभावेन पणयो नरा धरां प्रतिपद्यन्ते। ते हि कर्मणा पणन्ते, कर्म दत्त्वा फलं गृह्णन्तीति। कर्मणैव व्यवहार इति पणयो नराः। तानु ये गवादयः, तेषां तामसत्त्वेऽपि नरोपकाराद्भूमिमेवाश्रिताः ॥ २८ ॥ ❀ ❀ तृतीयस्थाने हेतुमाह—तार्तीयेनेति। तार्तीयं तृतीयम्। प्रकृतेर्गुणत्वाय स्वभावेनेत्युक्तम्। भगवन्नाभिमन्तरिक्षम्। तामसस्य मध्ये निवेशने हेतुरुच्यते—उभयोरन्तरं व्योमेति। अन्तरिक्षं शून्यं तेषां स्थानम्। रुद्रा घातुका अनायतनाः। अतस्तृतीयत्वेऽपि मध्यस्थानस्य शून्यत्वात् रुद्रैस्तत्स्थानं गृहीतमिति। आधेयाधारयोर्बलिष्ठत्वेन अन्तरालमेव स्थानम्। तत्र स्थितान्निर्दिशति—ये रुद्रपार्षदा इति। रुद्रस्य पर्षदि सभायां योग्याः। कदाचित्तत्र रुद्रसभायां सनकादयो देवा वा आगच्छन्तीति तद्व्यावृत्त्यर्थं गणा इत्युक्तम्। ये महादेवस्य गणा भूत्वा पार्षदाः, ते मध्ये तिष्ठन्ति। एवं व्यष्टिसृष्टौ गुणैः स्थानभेदा निरूपिताः ॥ २९ ॥ ❀ ❀ गुणैरेव वर्णभेदा इति वर्णानवयवेभ्य उत्पन्नान्निरूपयति भजनार्थम्, मुखतोऽवर्त्ततेति चतुर्भिः—भगवतो मुखतो ब्रह्म देवतारूपम्, शुद्धसत्त्वपरिणामभूतम्, यदधिष्ठानात् ब्राह्मणा भवन्ति, तज्जातम्। अवर्ततेति। विद्यमानमेव मुखात्प्रकटीभूतम्। पुरुषस्य भगवतो नारायणस्य। कुरूद्वहेति विश्वासार्थम्, एतच्छ्रवणाधिकारार्थं वा। यस्तु वर्णानां मध्ये मुख्यो ब्रह्मोन्मुखत्वाद् ब्राह्मणोऽभूत्, गुरुश्चाऽभूत्। तुशब्देन स्वतो ब्राह्मणस्य मुखत्वं वारयति। ब्रह्मणि स्थितो ब्राह्मणः। 'तत्र भवः' वा 'तस्येदम्' इति वा अण्। उन्मुखोऽग्रे प्रवृत्तो मुख्यो वर्ण ऊर्ध्वमुखो भवति। ऊर्ध्वं मुखं यस्य। उपदेशाद्यर्थमाद्यस्योर्ध्वं मुखं भवति। ब्रह्माऽप्यूर्ध्वमुखम्, भगवन्मुखात् यत ऊर्ध्वं जातम्। ऊर्ध्वं मुखं येनेति। ब्रह्मोत्पत्त्यर्थमेव भगवतो मुखमूर्ध्वं जातमिति। अतः समष्टिव्यष्ट्योर्बीजाङ्कुरभावेनैक्यादुन्मुखत्वसाम्येन वर्णानां मध्ये मुख्यः, मुखे भवः प्रथमं जातश्च, ब्राह्मणो जातः। अत एव गुरुः। भगवानेव हि गुरुः, स हि मुखेनोपदिशति। तत उपदेशनार्थमेव ब्रह्म आधिभौतिकं निर्गतम्। आध्यात्मिकं ब्रह्म वेदः, आधिदैविकं त्वक्षरमिति। अतो भौतिकब्रह्माविर्भावादुन्मुखत्वसाम्येन तद्ब्रह्म वर्णाग्रे प्रविशतीति ब्राह्मण एव द्वितीयब्रह्मणो वेदस्याऽऽध्यात्मिकस्य तृतीयब्रह्मज्ञानार्थमुपदेष्टा भवतीति गुरुः ॥ ३० ॥

## श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

चेतनेति। सकलशरीरव्यापि चैतन्यम्। अत्र पूर्वापेक्षया वैलक्षण्यबोधनायाहुः—एवं सात्त्विकेत्यादि। तेषामिति। बोधाभिमतिचित्तानाम्। अत्रैतद्बोध्यम्। बहिरिन्द्रियेषु विज्ञापनकाले इन्द्रियाण्येव मुख्यानि, देवा गुणभूताः। अन्तरिन्द्रिये तु देवताद्वयं महदहंकाराख्यं मुख्यम्, बुद्धिस्तु तैजसस्य रूपान्तरम्। चन्द्रमास्त्वनुक्तो मनः सहभावाद्वैकारिकस्यैव कार्यम्। गोलकं तु स्थूलतया एकम्। तत्रैतेषां चेदैकमत्यं न भवेत्, तदा वासः कार्यकरणं च नोपपद्येतेति तदर्थमेवमत्रोक्तमित्यर्थः। एवं च वायोर्वायव्यलोकपालत्वम्, दिशां दक्षिणपालत्वम्, कस्याऽवान्तरपालत्वम्, मित्रस्य नैर्ऋतपालत्वम्, विष्णुचन्द्राभिमानब्रह्मणामधो मध्येशानोपरि पालकत्वं बोध्यम्। प्राणस्याऽपि तैजसभेदत्वान्मुख्यं हृदयमेव गोलकम्। तद्भेदानां तु 'हृदि प्राणो गुदेऽपानः' इत्याद्युक्तानि नानागोलकानि। एवमत्र त्रयोदशानां स्थानादिविभाग उक्तः। अतः पञ्च मात्राः पञ्च भूतानि चाऽवशिष्यन्ते। तत्र मात्राणां भोग्यत्वेनैवोत्पन्नत्वाद्भोगेनैव तेषां पोषः, यथा स्त्रीणाम्। भूतानां चाऽधिष्ठानत्वेनैवोत्पन्नत्वाद्वासेनैव तेषां पोषः, यथा गृहाणाम्। उष्यमाणान्येव गृहाणि तिष्ठन्ति, नोज्झटानीति। उक्तं च द्वितीयस्कन्धे 'आदित्सोरन्नपानानामासन् कुक्ष्यन्त्रनाडयः।

नद्यः समुद्राश्च तयोस्तुष्टिः पुष्टिस्तदाश्रये ॥' इति । वक्ष्यन्ते 'नाडीर्नद्यो लोहितेन' इति 'क्षुत्तृड्भ्यामुदरं सिन्धुः' इति चाम्भसो नदीलोहितभेदेन देवतेन्द्रियभावः, क्षुत्तृषोस्तेजोरूपयोरिन्द्रियत्वं जलात्मकस्य सिन्धोर्देवत्वं च । एवं पृथिव्याकाशवायूनामपि बोध्यम् ॥ २६ ॥ ❀ ❀ तदेतदभिप्रेत्याहुः—इदानीमित्यादि । अग्न्यादिमहदन्तानां विज्ञापितफलदानकथनानन्तरं मात्राभूतदेवानां तद्दानं वक्तुं तथाऽऽहेत्यर्थः । शीर्ष्ण इत्यत्र । वक्तव्यमिति । अग्रिमश्लोके वक्तव्यम् । एवं त्रिर्निर्गुणानां मात्राणां भूतानां व्यष्टिद्वारैव भोग्यत्वं उक्त इति ज्ञायते ॥ २७ ॥ ❀ ❀ मुखत इत्यत्र । मुखाज्जातस्य ब्रह्मणः स्वरूपं द्वितीयस्कन्धे उपपादितं स्मारयन्ति—देवतारूपमित्यादि । वारयतीति । अत्र ब्राह्मणस्य ब्राह्मणत्वे हेतुं वदन् 'ब्राह्मणोऽस्य मुखमासीत्' इत्यत्र श्रावितं मुखत्वं स्वतो न, किन्तु ब्रह्मणोन्मुखत्वकृतमेवेति निश्चाययतीत्यर्थः । तदुन्मुखत्वं योगेन त्रिधाऽऽहुः—ब्रह्मणीत्यादि । तत्राऽऽद्येन वृत्ततः; द्वितीयेन संस्कारतः, तृतीयेन जननमात्रादित्येवं त्रिद्वयेकसम्बन्धेन मुखमध्यजघन्यभावे प्रस्ताराद् ब्राह्मण्यमनेकधा भवतीति बोधितम् । एवमुन्मुखत्वस्य ब्राह्मणत्वे हेतुता व्याख्याता । गुरुत्वे हेतुतां व्याकुर्वन्ति—मुख्य इत्यादि । मुख्यत्वे तां व्याकुर्वन्ति—ब्रह्माऽपीत्यादि । ऊर्ध्वं जातमित्यादि । सर्वस्मादुपरि जातम् । तत्र हेतुं समासमुखेनाहुः—ऊर्ध्वं मुखं येनेति । एवं त्रिष्वपि हेतुत्वबोधनस्य फलमाहुः—अत इत्यादि । समष्टिव्यष्ट्योरिति । ब्रह्मब्राह्मणयोः ॥ ३० ॥

### श्रीगिरिधरकृता बालप्रबोधिनी

अस्य विराजः सत्त्वं चित्तं च निर्भिन्नं धिष्ण्यं स्थानं चित्तेनांशेन चेतनया सह महान् चैत्य उपाविशत्, येन चित्ते-[1]नांशेनासौ जीवः विज्ञानं चेतनां प्रतिपद्यते लभते ॥ २६ ॥ ❀ ❀ एवं व्यष्टीन्द्रियविभागमुक्त्वा अथ देवानां भोगस्थान-विभागमाह—शीर्ष्ण इति । अस्य विराजः शीर्ष्णः सकाशात् द्यौरुदपद्यत । पद्भ्यां पादाभ्यां धरा भूमिरुदपद्यत । नाभेः सकाशात् खमन्तरिक्षलोकमुदपद्यत । तेषां प्रयोजनमाह—गुणानामिति । वृत्तिपदमजहल्लक्षणया वृत्तिमत्परम् । येषु द्युधराख्येषु लोकेषु गुणानां सत्त्वरजस्तमसां वृत्तिमन्तो देवमनुष्यादयः प्रतीयन्ते उत्पद्यन्ते इत्यन्वयः ॥ २७ ॥ ❀ ❀ एतदेव प्रपञ्चयति—आत्यन्तिकेनेति द्वाभ्याम् । आत्यन्तिकेन ऊर्जितेन । औत्पत्तिकेनेति पाठे नैसर्गिकेणेत्यर्थः । सत्त्वेन स्वभावेन हेतुना देवाः दिवं सात्त्विककर्मानुष्ठाननिष्पादितफलभोगानुरूपं स्वर्गं प्रपेदिरे प्राप्ताः । पणयः—पण व्यवहारे—पणन्ते यज्ञादिना व्यवहरन्ति यज्ञादिकर्म समर्प्य तत्फलमिच्छन्तीति पणयो मनुष्यास्ताननुसृत्य ये वर्तन्ते तदुपकरणभूता गवादयस्ते च सर्वे रजस्स्वभावेन हेतुना धरां राजसकर्मफलभोगानुकूलां भूमिं प्रपेदिरे इत्यन्वयः ॥ २८ ॥ ❀ ❀ तार्तीयेन तृतीयं तमस्तदीयेन तामसेन स्वभावेन उभयोर्द्यावापृथिव्योरन्तरं मध्यस्थं व्योम अन्तरिक्षं तदेव भगवतो विराजो नाभिस्तां ये रुद्रस्य पार्षदानां भूतप्रेत-पिशाचादीनां गणास्ते आश्रिताः स्थिताः ॥ २९ ॥ ❀ ❀ एवं ततस्त्रिलोकोत्पत्तिमुक्त्वा चातुर्वर्ण्योत्पत्तिमाह—मुखत इति । श्रवणाधिकारं सूचयन् विदुरं सम्बोधयति—कुरुद्वहेति । ब्रह्म वेदः अध्यापनयाजनादिना ब्राह्मणस्य वृत्तिः पुरुषस्य विराजो मुखतोऽवर्त्तत प्रवृत्तम् । यस्तु उन्मुखत्वान्मुखोद्भवत्वात् वर्णानां मध्ये मुख्यः गुरुः सन्मार्गोपदेष्टा च ब्राह्मणः सोऽपि मुखतोऽभूत् ॥ ३० ॥

### हिन्दी अनुवाद

अब इसमें चित्त प्रकट हुआ । उसमें चित्तशक्तिके सहित महत्तत्त्व ( ब्रह्मा ) स्थित हुआ; इस चित्तशक्तिसे जीव विज्ञान ( चेतना ) को उपलब्ध करता है ॥ २६ ॥ ❀ ❀ इस विराट् पुरुषके सिरसे स्वर्गलोक, पैरोंसे पृथ्वी और नाभिसे अन्तरिक्ष ( आकाश ) उत्पन्न हुआ । इनमें क्रमशः सत्त्व, रज और तम—इन तीन गुणोंके परिणामरूप देवता, मनुष्य और प्रेतादि देखे जाते हैं ॥ २७ ॥ ❀ ❀ इनमें देवतालोग सत्त्वगुणकी अधिकताके कारण स्वर्गलोकमें, मनुष्य और उनके उपयोगी गौ आदि जीव रजोगुणकी प्रधानताके कारण पृथ्वीमें तथा तमोगुणी स्वभाववाले होनेसे रुद्रके पार्षदगण ( भूत, प्रेत आदि ) दोनोंके बीच में स्थित भगवान्के नाभिस्थानीय अन्तरिक्षलोकमें रहते हैं ॥ २८—२९ ॥ ❀ ❀ विदुरजी ! वेद और ब्राह्मण भगवान्के मुखसे प्रकट हुए । मुखसे प्रकट होनेके कारण ही ब्राह्मण सब वर्णोंमें श्रेष्ठ और सबका गुरु है ॥ ३० ॥

**बाहुभ्योऽवर्तत क्षत्रं क्षत्रियस्तदनुव्रतः । यो जातस्त्रायते वर्णान् पौरुषः कण्टकक्षतात् ॥ ३१ ॥**
**विशोऽवर्तन्त त[2]स्योर्वोर्लोकवृत्तिकरीर्विभोः । वैश्यस्तदुद्भवो वार्तां नृणां यः समवर्तयत् ॥ ३२ ॥**
**पद्भ्यां भगवतो जज्ञे शुश्रूषा धर्मसिद्धये । तस्यां जातः पुरा शूद्रो यद्वृत्त्या तुष्यते हरिः ॥ ३३ ॥**
**एते वर्णाः स्वधर्मेण यजन्ति स्वगुरुं हरिम् । श्रद्धयाऽऽत्मविशुद्ध्यर्थं यज्जाताः सह वृत्तिभिः ॥ ३४ ॥**
**एतत्क्षत्तर्भगवतो दैवकर्मात्मरूपिणः । कः श्रद्दध्यादुपाकर्तुं योगमायाबलोदयम् ॥ ३५ ॥**

---

१. चेतनया शक्त्या । २. प्रा० पा०—य० ।

### श्रीधरस्वामिविरचिता भावार्थदीपिका।

क्षत्रं पालनरूपा वृत्तिस्तत्क्षत्रमनुव्रतोऽनुसृतः क्षत्रियोऽपि बाहुभ्योऽवर्तत इत्यर्थः। तदनुव्रतत्वमेवाह। य इति। पौरुषः पुरुषस्य विष्णोरंशः कंटकाश्चोरादयस्तेभ्यो यत्क्षतमुपद्रवस्तस्मात्त्रायते रक्षति ॥ ३१ ॥ ❀ ❀ विशः कृष्यादिव्यवसायाः लोकस्य वृत्तिकरीर्जीविकाहेतवः। तस्य विभोरूर्वोः प्रवृत्ताः तदुद्भव ऊरुजो वार्तां जीविकां यः स्ववृत्त्या संपादितवान् ॥ ३२ ॥ ❀ ❀ तस्यां निमित्तभूतायां यस्य वृत्त्या हरिः स्वयमेव तुष्यते ॥ ३३ ॥ ❀ ❀ यद्यस्माज्जाता गुरुत्वाज्जनकत्वाद्वृत्तिप्रदत्वाच्च हरेराराधनं तेषां परो धर्म इत्यर्थः ॥ ३४ ॥ ❀ ❀ भो क्षत्तः। दैवकर्मात्मरूपिणः कालकर्मस्वभावशक्तिमतो भगवतो योगमायाबलेनोज्जृंभितमेतद्विराड्रूपमुपाकर्तुं साकल्येन निरूपयितुं कः श्रद्दध्यादिच्छेत्। इच्छाऽप्यशक्या निरूपणं तु दूरत इत्यर्थः ॥ ३५ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः।

इत्यर्थ इति। वृत्त्या सहैवजात इति भावः ॥ ३१ ॥ ❀ ❀ स्ववृत्त्या कृषिवाणिज्यादिरूपया "आजीवो जीविका वार्त्ता वृत्तिर्वर्त्तनजीवने" इति "स्त्रियां कृषिः पाशुपाल्यं वाणिज्यं चेति वृत्तयः" इत्यमरः ॥ ३२ ॥ ❀ ❀ यस्य शूद्रस्य वृत्त्या शुश्रूषया एतेन न केवलं स्वधर्मेणैव भगवत्तोषः 'त्यक्त्वा स्वधर्मं चरणांबुजं हरेः' इत्यादिना भक्तिसहितस्यैव तस्य तत्तोषहेतुत्वश्रवणात् ॥ ३३ ॥ ❀ ❀ इत्यर्थ इति। "मातापित्रोः सेवनं च तथैवान्नप्रदस्य च। सर्वकल्याणहेतुत्वात्परो धर्मोऽयमीरितः" इत्याद्युक्तेरिति भावः। आत्मविशुद्ध्यर्थमन्तःकरणनैर्मल्याय ॥ ३४ ॥ ❀ ❀ इत्यर्थ इति। 'भोजने यत्र संदेहो धनाशा तत्र कीदृशी' इति न्यायेन कैमुत्यमप्यत्र सूचितमिति भावः ॥ ३५ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

आवृत्त्यान्वयादित्यर्थ इत्युक्तम् ॥ ३१ ॥ ❀ ❀ वृत्तिकरीः वृत्तिकर्य्यः ॥ ३२ ॥ ❀ ❀ यस्य वृत्त्या ब्राह्मणवैष्णवसेवारूपया ब्राह्मणादिभिरपि कृतया हरिस्तुष्यतीति तद्वृत्तिमाहात्म्योपलक्षणेन सद्भक्तेरेव माहात्म्यं—विवक्षितम्। त्यक्त्वा स्वधर्ममित्यादिना केवलवर्णधर्मेण तत्तोषणानुपपत्तेः ॥ ३३ ॥ ❀ ❀ यजन्ति तस्मिंस्तदर्पणेन तमाराधयन्तीत्यर्थः ॥ ३४ ॥ ३५ ॥

### श्रीमद्वीरराघवव्याख्या

बाहुभ्य इति क्षत्रं क्षत्रियधर्मः पालनरूपा वृत्तिः तद्बाहुभ्योऽवर्तत तदनुव्रतः क्षत्रमनुव्रतः क्षत्रियश्च स्ववृत्तिद्वारा बाहुभ्योऽवर्त्तत यो ब्रह्मणो बाहुभ्यो जातः पौरुषः समष्टिपुरुषांशः क्षत्रियः कंटकक्षतात्कंटकवल्लोकोपद्रवकारिणः चोरादयः तेभ्यो जातं यत् क्षतमुपद्रवस्तस्माद्वर्णान् त्रायते रक्षति ॥ ३१ ॥ ❀ ❀ विश इति तस्य विभोः प्रभोः ब्रह्मणः ऊर्वोरपादानस्यैव शेषत्वविवक्षया षष्ठी, लोकवृत्तिकरीः क्रयविक्रयकृष्यादिलोकजीविकाहेतवः विभक्तिलिंगव्यत्ययावार्षौ विशः वैश्या अवर्त्तंत। तदुद्भवः ब्रह्मण उद्भूतः यो वैश्यः सन्नृणां वार्त्तामाजीविकां समवर्त्तयत्संपादितवान् ॥ ३२ ॥ ❀ ❀ पद्भ्यामिति। भगवतः भगवदात्मकस्य ब्रह्मणः पद्भ्यां शुश्रूषाधर्मसिद्धये स्वपूर्ववर्णशुश्रूषारूपधर्मसिद्ध्यर्थं जज्ञे। कथंभूता शुश्रूषा इत्यत आह तस्यामिति। यद्वृत्त्या यस्य शूद्रस्य वृत्त्या हरिस्तुष्यते तस्यां तादृशशुश्रूषावृत्तौ निमित्तभूतायां शूद्रो जातः। भगवत्तुष्ट्यापादकस्वपूर्ववर्णशुश्रूषावृत्तिनिमित्तकं शूद्रजन्मेत्यर्थः। अनेन स्ववृत्त्या भगवत्संतोषजननमेव परो धर्म इति सूचितम् ॥ ३३ ॥ ❀ ❀ तदेवोपपादयति एत इति। एते वर्णा ब्राह्मणादयश्चत्वारः वर्णाः स्वधर्मेण स्ववर्णोचितधर्मेण श्रद्धया आत्मविशुद्ध्यर्थमात्मनः अनादिपापवासनादूषितस्यांतःकरणस्य विशुद्ध्यर्थं स्वगुरुं स्वजनकं हरिं स्वाश्रितसंसारबंधहरं हरिं यजंति यजेयुरित्यर्थः। कथंभूतं हरिं यज्जाताः यद्यस्माच्चतुर्मुखशरीरकात्परमात्मनो हरेः सकाशाद् वृत्तिभिः सह जाताः तं हरिं यजंतीत्यर्थः ॥ ३४ ॥ ❀ ❀ एवं सृष्टिलीलां वर्णयित्वा पुनः प्रश्नावसरप्रदानायापारमहिम्नो भगवतः साकल्येन महिमानमुपवर्णयितुं न कोऽपि शक्त इति वदन्नुपसंहरति एतदिति। दैवकर्मात्मरूपिणः दैवं कालः देवनियाम्यत्वेन तत्संबंधित्वात् कर्मशब्देन जीवादृष्टस्य पृथगुपादानात् आत्मानः कालकर्मवश्या जीवाः देवादिरूपाणि शरीराण्यस्य संतीति दैवकर्मात्मरूपी तस्य भगवतः पूर्णषाड्गुण्यस्य योगमायाबलोदयं युज्यते इति योगा अधिष्ठेया सा चासौ माया तस्याबलं जननसामर्थ्यं तस्योदयः विभवो यस्मिंस्तदेवं तद्विश्वं हे क्षत्तः! विदुर! उपाकर्तुं साकल्येन व्याकर्तुं वर्णयितुमिति यावत्, कः पुमान् श्रद्दध्यात् श्रद्धां कुर्यात् न कोऽपीत्यर्थः ॥ ३५ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

तं ब्राह्मणमनुव्रतः। क्षत्रशब्दं निर्वक्ति य इति। कंटकाः शत्रवः "वेणौ द्रुमांगे रोमांचे क्षुद्रशत्रौ च कंटक" इति यादवः, क्षतात् त्रायत इति क्षत्रम् ॥३१॥ ❀ ❀ विशो वैश्यजातयः तदभिमानी वास्तुश्च वार्ताकृषिगोरक्षणादि जीवनम् "आजीवो जीविका वार्ता वृत्तिर्वर्तनजीवने। स्त्रियां कृषिः पाशुपाल्यं वाणिज्यं चेति वृत्तय" इत्यमरः। विष्णुब्रह्मवायुरुद्रेभ्यो जातत्वाद्विश इति बहु-

वचनम् । एते पूर्वं हरेर्जाता ब्राह्मणस्तदनंतरमित्यादेः विरिंचादिभ्यो जन्म चेत् यद्वृत्त्या तुष्यते हरिरेतत्कथं युक्तमिति चेन्न, तदंतस्थस्य हरेर्जातत्वात् तदंतस्थहरेर्जनिरिति वा ॥ ३२ ॥ ❀ ❀ शूद्रजात्यभिमानी कृतिः कृतिनामाशुश्रूपाकर्मसिद्धये शुश्रूषाख्यकर्मसाधनाय पुरादिसृष्टौ यस्य शुश्रूषाख्यया वृत्त्या ॥ ३३ ॥ ❀ ❀ एतेषां स्वस्ववर्णविहितकर्मैव श्रीहरियजनात्मकत्वेन तत्तुष्टिकरं नान्यदिति भावेनाह एत इति । तत्र हेतुमाह यज्जाता इति । स्वस्वविहितवृत्तिभिः सह विष्णोर्जाता यद्यस्मात्तस्मात् पितृत्वाद् गुरुत्वादिष्टदेवतात्वात्स्वामित्वाच्च आत्मविशुद्ध्यर्थमंतःकरणनैर्मल्याय ॥ ३४ ॥ ❀ ❀ एवंविधस्य हरेर्माहात्म्यं पुरुषायुपशतेनापि वर्णयितुं न कस्यापि शक्तिरित्याह एतदिति । भगवानेवमतीतानागतवर्तमानानंतब्रह्मांडानां निर्मातेति यतोऽतो दैवकर्मात्मरूपिणः देवेष्वधिकत्वाद्दैवं सर्वस्य मूलकारणत्वात्कर्मव्याप्तत्वादात्मा एवंविधं रूपं स्वभावोऽस्यास्तीति "रूपं शब्दे पशौ श्लोके ग्रंथावृत्तौ हितादिपु । सौंदर्ये च स्वभावे च" इति यादवः । तस्य भगवतो योगमायायाः स्वरूपमहिम्नो बलोदयशक्तिप्रसारकः पुमानुदाहर्तुं सदृष्टांतं वक्तुं श्रद्दध्यात् श्रद्धां कुर्यादनंतत्वादिति शेषः । "अधिकत्वाद्देवशब्दो दैवतेष्वधिको यतः । दैवं हरिः कर्ममूलं कृतिरित्येव भण्यते । व्याप्तत्वादात्मशब्दश्च श्रीपतित्वाच्च माधव" इति वचनादुक्त एवार्थो दैवं दिष्टं भागधेयमित्याद्यभिहितो न भवति ॥ ३५ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः ।

पद्भ्यामिति । यद्वृत्त्या शुश्रूषारूपया ब्राह्मणादिना सर्वेणापि स्वस्मिन् कृतया हरिरपि तुष्यतीति तद्वृत्तेर्महिमा दाशतः । इत्युक्त्या स्वधर्ममित्यादौ केवलेन स्वधर्मेण भगवत्तोषानंगीकारात् ॥ ३३ ॥ ❀ ❀ तत्र प्रथमजातैः सर्वैरेतैस्तु स्वस्वधर्मः हरियजनरूपतयैव भावित इति तदानीन्तनानां वैशिष्ट्यमभिप्रेत्याह एत इति । अत्र यदिति । विराजो हरिशक्तित एव तच्छक्तेः अतो हरिभजने एव तदभेदोक्तेस्तात्पर्यम् ॥ ३४ ॥ ❀ ❀ योगमायात्र विश्वसृष्ट्यादिशक्तिः ॥ ३५ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी ।

क्षत्रं पालनशक्तिः तदनुव्रतस्तन्मुखः क्षत्रियोऽपि बाहुभ्योऽवर्त्ततेत्यर्थः । कण्टकाश्चोरादयस्तेभ्यो यत् क्षतमुपद्रवस्तस्मात् त्रायते रक्षति यतः पौरुषः पुरुषस्यायं तदीयपालनशक्तिमत्त्वादित्यर्थः ॥ ३१ ॥ ❀ ❀ विशः कृष्यादिव्यवसाया ऊर्वोः ऊरुभ्यां लोकानां वृत्तिकरीर्जीविकाहेतवः वैश्योऽपि तदुद्भव ऊरुभवः वार्त्तां जीविकां यः स्ववृत्त्या समवर्त्तयत् सम्पादितवान् ॥ ३२ ॥ ❀ ❀ शुश्रूषा परिचर्या कर्मणो वर्णाश्रमधर्मस्य सिद्धये शुश्रूषां विना कर्ममात्रस्यैव सिद्धिर्न भवतीति सा शूद्रस्य वृत्तिर्भवन्त्यपि वस्तुतः सार्ववर्णिक्येवेति भावस्तस्यां विषये शूद्रो जातः पद्भ्यामिति शेषः । यद्वृत्त्या हरिस्तुष्यतीति वेदादिभ्योऽपि शुश्रूषाया उत्कर्षः सूचितः ॥ ३३ ॥ ❀ ❀ सह वृत्तिभिरिति हरियजने जीविकार्थं चिन्ता न कार्येति भावः ॥ ३४ ॥ दैवकर्मात्मानः कालकर्मस्वभावाः स्वीयशक्तित्वाद्रूपाणि तद्वतः योगमायाबलेन उदयो यस्य तदेतद्विश्वमुपाकर्तुं सामस्त्येन निरूपयितुं कः श्रद्दध्यात् इच्छेत् इच्छाप्यशक्या निरूपणं तु दूरत एवेति भावः ॥ ३५ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

क्षत्रं क्षत्रियवृत्तिहेतुः पुरुषस्य बाहुभ्योऽवर्तत तदनुव्रतः क्षत्रानुसृतः क्षत्रियोऽपि पौरुषः-पुरुषबाहुज इत्यर्थः । यः कंटकेभ्यश्चोरादिभ्यो यत् क्षतमुपद्रवस्तस्मात्त्रायते रक्षति ॥ ३१ ॥ ❀ ❀ लोकवृत्तिकरीः लोकस्य जीविकाहेतवः विशः कृष्यादिव्यवसायाः तस्य पुरुषस्योर्वोरवर्तंत तदुद्भवः पुरुषोद्भवः ॥ ३२ ॥ ❀ ❀ भगवतः पुरुषस्य विष्णोः पद्भ्यां शुश्रूषा जज्ञे तस्यां निमित्तभूतायां जातायां सत्यां धर्मसिद्धये त्रैवर्णिकपरिचर्यार्थं शूद्रोऽपि पद्भ्यां जज्ञे यस्य वृत्त्या हरिः स्वयं तुष्यति ॥ ३३ ॥ ३४ ॥ ❀ ❀ भो क्षत्तः विदुर ! दैवकर्मात्मरूपिण इति दैवादिशब्दवाच्यकालकर्मस्वभावरूपाणि प्रवर्तकतया संत्यस्येति स तथा तस्य योगमायाबलेनोज्जृंभितविराट्सृष्ट्यादि उपाकर्तुं कार्त्स्न्येन व्याकर्तुं वर्णयितुं कः श्रद्दध्यात् ? वर्णनेऽस्य तु का कथा वर्णनेच्छामात्रमपि कः कुर्यादित्यर्थः ॥ ३५ ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

द्वितीयवर्णोत्पत्तिमाह—बाहुभ्योऽवर्ततेति । क्षत्रं नाम भगवतो वीर्यं लोकरक्षात्मकं किञ्चित् , तद्बाहुभ्यो निर्वृत्तम् । अन्तःस्थितं सद्बहिर्निर्गतमित्यर्थः । वर्णानां मध्ये द्वितीयस्तदनुव्रतः । क्षत्रमनुव्रतं यस्य । यथा क्षत्रं रक्षार्थमेव प्रवृत्तम् , तथाऽयमपीति । सहजातत्वादेकोपादानकत्वाच्च । क्षत्रसेवकत्वात् 'क्षत्राद्घः' इति नियमधर्मवाचकत्वेन जातिवाचकत्व एव घप्रत्ययादनुवृत्तत्वार्थो निरुक्तः । तदेव विशदयति—यो जात इति । क्षतात्त्रायत इति क्षत्रियः, यो जात एव स्वव्यतिरिक्तान् त्रीन् वर्णान् कण्टकक्षतात् त्रायते । रोगात् त्राणव्युदासार्थं कण्टकादित्युक्तम् । कण्टका दैत्यांशाः । ते हि भूमेः कण्टकप्राया गतिप्रतिबन्धकाः, धर्मप्रतिबन्धका इति यावत् , अन्यथा मारकत्वात् विपरीतता स्यात् । अनेन कण्टकानां वर्णता निषिद्धा । क्षतादिति सम्भावनायाम् । पौरुषोऽयं क्षत्रियः । पुरुषाज्जातः पौरुषः । सामर्थ्यकथनायां पौरुष इत्युक्तम् ॥ ३१ ॥ ❀ ❀ तृतीयवर्णोत्पत्तिमाह—विशोऽवर्तन्तेति ।

विश इति सर्वेषामेव वर्णानां जीविकावृत्तय उक्ताः, कृष्यादयः। शिलोञ्छादीनामपि तन्मूलकत्वम्, देयमपि तत एवोत्पद्यत इति। तत्रोत्पादकं द्वयम्, कृषिर्गोरक्षा च। वाणिज्यकुसीदे वृद्धिप्रापके। यद्यपि धातुभिर्व्यवहारे वैश्यस्य न प्रयोजकत्वम्, तथापि न धातुभिर्जीवनं भवतीत्यन्नोत्पत्त्यर्थं रसोत्पत्त्यर्थं च कृषिगोरक्षयोरेव प्रयोजकत्वम्। कण्टकादेव रक्षा क्षत्रियस्य। तत एवोत्पन्नमुपदेशात् ब्राह्मणो लभते, रक्षातः क्षत्रियः। आरण्यानां मूलफलादीनां च यद्यपि जीवनोपयोगित्वम्, तथापि न सर्वेषां सर्वदा तदुपयोगः। तस्य भगवत ऊर्वोरूरुद्वयात् वार्ता उत्पन्नाः। तासां प्रयोजनमाह—लोकवृत्तिकरीरिति। लोकानां वृत्तिं जीविकां कुर्वन्तीति। नन्वमूर्तास्ताः; पदार्थानां च नियतत्वात्, हान्यादीनामपि दर्शनात्, कथं तासां सर्वनिर्वाहकत्वम्? अत आह—विभोरिति। स हि समर्थः, वृत्त्याश्रयणमात्रेणैव सर्वानपि दोषान् दूरीकृत्य तं जीवयत्येव। तासाममूर्तानामाधारार्थं ताभ्य एव निर्गतो वैश्यस्तृतीयो वर्णः। नृणां वार्ता जीविकां सम्यगवर्त्तयत्। य इति प्रसिद्धः। अथवा, वैश्यस्तदुद्भव इति भिन्नम्। य इत्यनुवादः। नृणामिति देवादिव्युदासः। अनेन साधारणा एव पुरुषास्तद्वृत्त्या जीवन्ति, न त्वधिगतपरमार्थाः। सम्यग्वर्तनं नाम अनायासेन नित्यनिर्वाहकत्वम्॥ ३२॥ ❀ ❀ चतुर्थोत्पत्तिमाह—पद्भ्यामिति। भगवतः सर्वात्मकस्य पदार्थचतुष्टयमभिप्रेतम्। ज्ञानम्, क्रिया रक्षारूपा, जीविका, सेवेति। ततो भगवतः पद्भ्यां शुश्रूषा नाम सेवारूपा काचित्। भगवद्भक्तिरूपा अन्तरङ्गा काचिच्छक्तिरुत्पन्ना। तस्याः प्रयोजनमाह—धर्मसिद्धय इति। धर्मः सेवयैव भवति, गुरुसेवा, देवतासेवा, अरण्यसेवा, आत्मसेवेति। किं वहुना, सर्व एव धर्माः पातिव्रत्यादयोऽपि सेवायामेव पर्यवसिताः। अतो धर्मसिद्ध्यर्थं सेवा गतिदात्री भगवद्गतिहेतोरुत्पन्ना। अनेन पूर्ववर्णानां पुरुषार्थान्तरहेतुत्वमर्थादुक्तम्। विशोऽर्थसाधकत्वम्, क्षत्रस्य कामसाधकत्वम्, ब्रह्मणो मोक्षसाधकत्वमिति। अत एव ब्राह्मण एव मुक्तिः, क्षत्रिये भोगः, वैश्येऽर्थः, धर्मः शूद्र इति। उत्तरस्य पूर्वहेतुत्वादुत्तरार्थमेव पूर्वग्रहणम्। अतो मोक्षार्थमेव धर्मादीनामन्यधर्माणां करणं ब्राह्मणस्य। तथा भोगार्थमेव क्षत्रियस्य धर्मादिकरणम्। तथा वैश्यस्य धनार्थमेव धर्मकरणम्। शूद्रस्य तु धर्मार्थमेव सेवाधर्मकरणम्। अतोऽयं महान्, अन्यार्थं 'धर्माकरणात्[1]। अत एव 'यद्वृत्त्या तुष्यते हरिः' इति। किञ्च, हरिः सर्वेषां दुःखहर्ता, सेवया च दुःखं गच्छति। अतः स्वकर्तव्यकरणादपि तुष्यति। तादृशसेवायां जातः शूद्रः, तन्निर्वाहार्थं वा। पुरा कल्पादौ। इदानीन्तनानां तु तदुद्भवत्वम्। शुश्रूषायां भव इति शकारोकारौ मिलितौ द्विरुक्तावेकशेषेण शू भवतः, सम्प्रत्ययश्च जडत्वेन दत्वमापद्यते, रेफस्य च परोक्षार्थं व्यत्ययः, 'अप्रत्ययात्' इति सन्नन्तादकारो भवति, स्त्रीत्वाभावान्न टाप्। अण्प्रत्ययो वा तद्धितः, वृद्ध्यभावः परोक्षार्थः। 'शुगस्य तदनादरश्रवणात् तदाद्रवणात्' इति तु योगेनाऽन्यथा शूद्रशब्दो निरुक्तः, स न जात्युपयोगी। तं वा निर्वचनं कालभेदेन स्थापयति—पुरा शूद्र इति। स हि यावत्पर्यन्तं सेवां न करोति, तावत्पर्यन्तं शुचैव द्रवति। तस्याऽर्थाद्यभावाद्धर्मोऽपि यदि न भवेच्छोको भवेदिति, तेन चाऽऽद्रवतीति, पुराऽयं शूद्रो भवति, पश्चात्तु वर्णमात्रम्। शोकाभावे हेतुः—यद्वृत्त्या तुष्यते हरिरिति। हरितोषात् सर्वमेव सिद्धं भवतीत्यर्थः॥ ३३॥ ❀ ❀ एवं वर्णानामुत्पत्तिमुक्त्वा भगवति तेषां विनियोगमाह—एते वर्णा इति। स्वधर्मेण वागादिव्यापारेण। स हि तेषां स्वधर्म औत्पत्तिकः। वाग्व्यापारेण भगवद्भजनं ब्राह्मणस्य, रक्षादिना भगवद्भजनं क्षत्रियस्य, सेवोपयोगिपदार्थसमर्पणेन वैश्यस्य, सेवया शूद्रस्येति तत्र सेवा प्रथमकक्षा सर्वसुलभा। यदि सर्वेऽपि भगवत्तोषमेव केवलं कामयन्ते, तदा सेवैव कर्त्तव्या। यदि स्वधर्मेण सेवितुमिच्छन्ति, तदा स्वधर्मसिद्ध्यर्थं सेवा कर्तव्या। तदा स्वधर्मस्य फलं वक्तुं तदुपयोगिभगवद्गुणानाह—स्वगुरुं हरिमिति। स्वधर्मेण स एवोपास्यः, यस्त्वावश्यको भवति। तत्र धर्मोपदेष्टृत्वात् भगवानेवोपास्यः। स हि स्वगुरुः, धर्मेण सहोत्पादनात्। यथार्थं ज्ञापयन् शब्दोच्चारयिता गुरुर्भवति, एवमेव भगवान् वृत्तिं स्वधर्मं प्रथमत उत्पाद्य पश्चात्तदर्थमात्मानमुत्पादयतीति। किञ्च, तथैव कृते अस्य दुःखाभावो भवतीति नियमात् तथा कर्ता हरिर्भवति। यजन्तीति सिद्धवन्निर्देशः। उत्पत्त्यैव धर्मप्रकारयोर्ज्ञातत्वात्, विलम्बाभावाच्च, अपर्यवसितत्वाच्च, सर्वदैव भगवद्भजने वर्तमानता। यजन्तीत्यनेन तत्प्रीतिजननप्रकारेण स्वधर्मः कर्तव्य इति सूचितम्। श्रद्धयेति हेतुः सर्वत्र। आत्मविशुद्धिरन्तःकरणशुद्धिः। सर्वत्राऽपाखण्डिनां नियतं फलम्। शुद्धे त्वन्तःकरणे सर्वत्राऽधिकारी भवति, पश्चात्सर्वं सुलभम्। ननु निरन्तरसेवायां कोऽयं निर्वन्धस्तत्राऽऽह—यद्यस्मात् स्ववृत्तिभिः सह जाताः। अभजने कालान्तरे अवृत्तीनुत्पादयिष्यतीति॥ ३४॥ ❀ ❀ एवं भगवतः समष्टिव्यष्टिरूपोत्पादनम्, सर्वदेवानां तत्रोपभोगः, स्वार्थं वर्णचतुष्टयोत्पादनम्, तेषां च भगवद्भजनप्रकार इति चतुष्टयमुक्त्वा उपसंहरति—एतत्क्षत्तर्भगवत इति। एतच्चतुष्टयमेवाऽस्माभिर्निरूपितं सूचनार्थम्। अधिकं तु स्वयमेव ज्ञातव्यमिति नैपुण्यार्थं संबोधनं क्षत्तरिति। एकस्य वीर्यस्यांशभूतायाः क्रियाशक्तेः कोट्यंशलेशो निरूपितः, अतिरिक्तो भगवान् पूर्ण एव। तदाह—भगवत इति। तत्राऽपि त्रितयसंयोगमाह—दैवकर्मात्मरूपेण इति। दैवं कालः, कर्म प्राणिनाम्, आत्मा स्वभावः, एतान्यपि स्वस्यैव रूपाणि। तानि रूपाणि वर्तन्ते यस्य। एकस्याऽपि रूपस्य यत्राऽऽनन्त्यम्, तत्र को वा तं चतूरूपमानन्त्यचतुष्टयात्मकं निरूपयेत्? किञ्च, योगमायाया बलस्योदयो यत्र, एतादृशं चरित्रम्। योगमाया हि क्षणमात्रेण कोटिब्रह्माण्डानि कर्तुं शक्नोति, तस्या अपि बलं भगवद्गुणैरेवेति। अथवा, योगमाया

---

१. धर्मकरणात्, क।

करणम्, योगमायया यो बलोदय इति। उपाकर्तुम्, यथा वेदा आरभ्यन्ते उपाकरणेन, समाप्यन्ते च उत्सर्गेण। तत्र भगवद्गुणानामपि मुख्यविद्यात्वात् तदुपाकरणं युक्तम्। समाप्तिर्दूरे, उपाकर्तुमपि कोऽपि न शक्नोति। उपाकरणमपि दूरे, करिष्यामीति प्रारम्भमपि कः कुर्यात्? अन्ततो गत्वा श्रद्धामपि कः कुर्यात्? अतो मया भगवतश्चतुर्मूर्तेरापाततो गुणाः कथिताः॥ ३५॥

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

बाहुभ्य इत्यत्र। क्षत्रियपदस्य यौगिकार्थं विचारयन्ति—सहेत्यादि। क्षत्रसेवके इदं हेतुद्वयम्। नियुक्त इति। निरूढ इतिवन्नितरां युक्तः। तदेवेति। आत्यन्तिकं योगमेव। शत्रानिति संभावनायामित्यत्र क्षतादिति पाठः प्रतिभाति॥ ३१॥ ❀ ❀ विश इत्यत्र। विशशब्दार्थमाहुः—विश इत्यादि। तथा च, जीविकारूपा या देवतास्ता विशशब्दस्यार्थज्ञा इत्यर्थः। तदुपपादयन्ति—शिलेत्यादि। तत इति। वैश्यात्। अमूर्ताभ्यः कथं मूर्तोत्पत्तिरित्यरुच्या पक्षान्तरमाहुः—अथवेत्यादि। अस्मिन् पक्षे 'तदुद्भवः' इत्यस्य पुरुषोद्भव इत्यर्थः॥ ३२॥ ❀ ❀ पद्भ्यामित्यत्र। सेवेति। कायिकव्यापाररूपा परिचर्या। अनेनेति। शूद्रवर्णस्य धर्मसाधनत्वकथनेन। उत्तरस्येत्यादि। उत्तरस्य पुरुषार्थस्य पूर्वपुरुषार्थहेतुत्वात् उत्तरस्य अर्थो निवृत्तिर्यस्मात्तादृशं पूर्वपुरुषार्थग्रहणम्, केवलं पूर्वार्थमादर इत्यर्थः। तद्विवृण्वन्ति—अत इत्यादि। अस्यां शूद्रपदनिरुक्तौ श्रुतिसूत्रविरोधमाशङ्क्य परिहरन्ति—शुगस्येत्यादि। तथा च प्रकरणभेदात्तदनङ्गीकारेऽपि न दोष इत्यर्थः। तत्सङ्ग्रहाय पक्षान्तरमाहुः—तं वेत्यादि॥ ३३॥

### श्रीगिरिधरकृता बालप्रबोधिनी

क्षत्रं क्षत्रियधर्मः पालनरूपा वृत्तिस्तस्य बाहुभ्योऽवर्त्तत क्षत्रियश्च तदनुव्रतस्तद्बाहुभ्यो जातः। तस्य पालकत्वमेव स्पष्टयति—य इति। यः क्षत्रियो जातः सन् कण्टकक्षतात् कण्टकाः कण्टकवद्धर्ममार्गप्रतिरोधका लोकोपद्रवकारिणश्चोरादयस्तेभ्यो जातं यत्क्षतमुपद्रवस्तस्मात् सर्ववर्णान् त्रायते रक्षति। रक्षायां सामर्थ्ये हेतुमाह—पौरुष इति। पुरुषस्य भगवतः पालनशक्तिविशेष इत्यर्थः॥ ३१॥ ❀ ❀ तस्य विभोर्भगवत ऊर्वोः ऊरुभ्यां विशः कृष्यादिव्यवसायाः लोकस्य वृत्तिकरीः-जीविकाहेतवः अवर्तन्त प्रवृत्ताः। वैश्यश्च तदुद्भव ऊरुभ्यां जातः। यो वैश्यः सर्वेषां नृणां वार्तां जीविकां स्ववृत्त्या समवर्तयत् सम्पादितवान्॥ ३२॥ ❀ ❀ भगवतो विराट्पुरुषस्य पद्भ्यां शुश्रूषा सेवा जज्ञे। तस्यां निमित्तभूतायां सेवायां सत्यां पुरा पूर्वमेव शूद्रोऽपि पद्भ्यामेव जातः। तत्प्रयोजनमाह—धर्मसिद्धये इति। शूद्रेण क्रियमाणया सेवयैवेतरेषां धर्मनिर्वाहो भवति तदर्थमित्यर्थः। तर्हि स वृत्तिर्निकृष्टेत्याशङ्क्याह—यदिति। यस्य वृत्त्या सेवारूपया हरिः स्वयमपि तुष्यते। अन्यसन्तोषे का वार्त्ता? तत्तदुपासनायाः सेवारूपत्वात् तस्याश्च सेव्यवशीकारहेतुत्वस्य प्रसिद्धत्वादित्यर्थः॥ ३३॥ ❀ ❀ एवं भगवतो वर्णोत्पत्तिमभिधाय तेषां भगवदाराधनेनैव सर्वपुरुषार्थसिद्धिः, अन्यथा कृतघ्नतादोषेणानर्थ एव स्यादिति सूचयन्नाह—एत इति। यत् यस्मात् हरेः सकाशात् वृत्तिभिः जीविकाभिः सह जाताः अत एते ब्राह्मणादयश्चत्वारो वर्णाः स्वधर्मेण स्ववर्णोचितधर्मेण श्रद्धया आत्मनः अनादिपापवासनादूषितस्यान्तःकरणस्य विशुद्ध्यर्थं तद्विशुद्ध्या द्वारभूतया धर्मार्थकाममोक्षाख्यस्वाधिकारानुरूपपुरुषार्थसिद्ध्यर्थं स्वगुरुं जनकत्वेन पालकत्वेन हितोपदेष्टृत्वेन च परमपूज्यं हरिं स्वाश्रितदुःखहरं भगवन्तं यजन्ति आराधयन्तीत्यन्वयः॥ ३४॥ ❀ ❀ एवं सृष्टिलीलां वर्णयित्वा पुनः प्रश्नावसरप्रदानाय अपारमहिम्नो भगवतः साकल्येन महिमानमुपवर्णयितुं न कोऽपि शक्नोतीति वदन्नुपसंहरति—एतदिति। सङ्क्षेपतः कथितं विस्तरतः स्वयं ज्ञेयमित्याशयेन सम्बोधयति—क्षत्त इति। दैवं देवनियम्यः कालः, कर्म अदृष्टम्, आत्मा स्वभावः, दैवादिरूपाणि शक्तितयाऽस्य सन्तीति दैवकर्मात्मरूपी तस्य भगवतो योगमायाबलोदयं युज्यते कार्यार्थं नियुज्यते इति योगा शक्तिः सा चासौ माया च तस्याः बलं सृष्ट्यादिसामर्थ्यं तस्योदयः प्राकट्यं यस्मिंस्तदेतद्भगवच्चरितमुपाकर्तुं साकल्येन वर्णयितुं कः श्रद्धां कुर्यात्, न कोऽपि। वर्णनश्रद्धाप्यशक्या, वर्णनं तु सुदूरत इत्यर्थः॥ ३५॥

### हिन्दी अनुवाद

उनकी भुजाओंसे क्षत्रियवृत्ति और उसका अवलम्बन करनेवाला क्षत्रिय वर्ण उत्पन्न हुआ, जो विराट् भगवान्का अंश होनेके कारण जन्म लेकर सब वर्णोंकी चोर आदिके उपद्रवोंसे रक्षा करता है॥ ३१॥ ❀ ❀ भगवान्की दोनों जाँघोंसे सब लोगोंका निर्वाह करनेवाली वैश्यवृत्ति उत्पन्न हुई और उन्हींसे वैश्य वर्णका भी प्रादुर्भाव हुआ। यह वर्ण अपनी वृत्तिसे सब जीवोंकी जीविका चलाता है॥ ३२॥ ❀ ❀ फिर सब धर्मों की सिद्धिके लिये भगवान्के चरणोंसे सेवावृत्ति प्रकट हुई और उन्हींसे पहले-पहल उस वृत्तिका अधिकारी शूद्रवर्ण भी प्रकट हुआ, जिसकी वृत्तिसे ही श्रीहरि प्रसन्न हो जाते

हैं* ॥ ३३ ॥ ❀ ❀ ये चारों वर्ण अपनी-अपनी वृत्तियोंके सहित जिनसे उत्पन्न हुए हैं, उन अपने गुरु श्रीहरिका अपने-अपने धर्मोंसे चित्तशुद्धिके लिये श्रद्धापूर्वक पूजन करते हैं ॥ ३४ ॥ ❀ ❀ विदुरजी ! यह विराट् पुरुष काल, कर्म और स्वभाव शक्तिसे युक्त भगवान् की योगमायाके प्रभावको प्रकट करनेवाला है। इसके स्वरूपका पूरा-पूरा वर्णन करनेका कौन साहस कर सकता है ॥ ३५ ॥

**अथापि कीर्तयाम्यङ्ग यथामति यथाश्रुतम्। कीर्तिं हरेः स्वां सत्कर्तुं गिरमन्याभिधासतीम् ॥ ३६ ॥**

**एकान्तलाभं वचसो नु पुंसां सुश्लोकमौलेर्गुणवादमाहुः।**
**श्रुतेश्च विद्वद्भिरुपाकृतायां कथासुधायामुपसम्प्रयोगम् ॥३७॥**

**आत्मनोऽवसितो वत्स महिमा कविनाऽऽदिना। संवत्सरसहस्रान्ते धिया योगविपक्वया ॥ ३८ ॥**

**अतो भगवतो माया मायिनामपि मोहिनी। यत्स्वयं चात्मवर्त्मात्मा न वेद किमुतापरे ॥ ३९ ॥**

**यतोऽप्राप्य न्यवर्तन्त वाचश्च मनसा सह। अहं चान्य इमे देवास्तस्मै भगवते नमः ॥ ४० ॥**

**इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां तृतीयस्कन्धे षष्ठोऽध्यायः ॥ ६ ॥**

### श्रीधरस्वामिविरचिता भावार्थदीपिका

अंग विदुर ! अथापि हरेः कीर्तिं कीर्तयामि। यथाश्रुतं गुरुमुखात्तदपि न सर्वात्मना किंतु यथामति स्वमत्यनुसारेण अन्याभिधा हरिव्यतिरिक्तार्थाभिधानं तयाऽसतीं मलिनां स्वीयां वाचं सत्कर्तुं पवित्रीकर्तुम् ॥ ३६ ॥ ❀ ❀ अज्ञात्वापि यथामति कीर्तने श्रवणे वाऽऽवश्यकं कैवल्यमित्याह। एकांततो लाभं नु निश्चितमाहुः। श्रुतेः श्रोत्रस्य उपाकृतायां निरूपितायाम्। उपसंप्रयोगं सन्निधावर्पणम् ॥ ३७ ॥ ❀ ❀ न चातीव ज्ञाने निर्बंधः कर्तव्यो ब्रह्मणोऽपि दुर्ज्ञेयत्वादित्याह। आत्मनो हरेर्महिमा योगविपक्वयाऽपि धिया संवत्सरसहस्रांतेऽपि आदिकविना ब्रह्मणाऽपि किमवसितः किं ज्ञातः इति काक्वा एतावानिति न ज्ञात एवेत्युक्तम् ॥ ३८ ॥ ❀ ❀ यद्यस्मात्स्वयमप्यात्मा हरिरात्मवर्त्म स्वमायागतिमेतावदिति न वेद अनंतत्वात् ॥ ३९ ॥ ❀ ❀ अतो दुर्ज्ञेयत्वात्केवलं नमस्करोति। यत इति। यस्य ज्ञानाय प्रवृत्ता वाचोऽपि मनसा सह तमप्राप्यैव न्यवर्तंत दुर्ज्ञेयत्वात्। न केवलं वाङ्मनसी अहमहंकारस्याधिष्ठाता रुद्रोऽपि इमे इंद्रियाधिष्ठातारो देवा अन्ये च ॥ ४० ॥

**इति श्रीमद्भागवते महापुराणे तृतीयस्कंधे टीकायां षष्ठोऽध्यायः।**

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

यद्यपि वर्णयितुमशक्या हरेः कीर्त्तिरथापि तथापीत्यर्थः। तदपि गुरुमुखश्रुतमपि। सर्वात्मना साकल्येन। हरिव्यतिरिक्तार्था देहगेहादिविषयास्तेषामभिधानम् ॥ ३६ ॥ ❀ ❀ यथाकथंचिदपि हरिकीर्त्तनादि शुभफलमेवेत्याह। अज्ञात्वापीति एकांततोऽव्यभिचारेण सुश्लोकाः पुण्यश्लोकास्तेषा मौलेश्चूडामणेः श्रीहरेः विद्वद्भिरित्यनेन पदपदार्थयथार्थबोधवद्भ्य एव कथा श्राव्याऽन्यतो नेति। अविद्वान्हि यथाश्रुतार्थकथनासमर्थत्वेन शास्त्रविप्लावकोस्ति तस्माच्छास्त्रमपि बिभेति। "बिभेत्यल्पश्रुताद्वेदो मामयं प्रहरिष्यति" इति महाभारतोक्तेः। पुराणेतिहासानामपि "इतिहासपुराणानि पंचमो वेद उच्यते" इत्युक्तिबलाद्वेदत्वमेवेति "सांगोपांगश्रुतिज्ञाद्वै पुराणं शृणुयाद् बुधः। न शास्त्रं घातयेत्प्रीत्या ब्रह्महा तेन जायते। सर्वदर्शनवेत्ता यो विप्रः शुद्धान्वयः सुधीः। विप्रादधीतशास्त्रश्च स्वाचारः कृष्णवल्लभः। स्वाकारः प्रियवादी च संगीतज्ञो गृहाश्रमः। सर्वांगपूर्णः कुशलः क्रोधलोभादिवर्जितः। इतिहासपुराणानां वक्ता कार्यो विमृश्य वै। अध्यापकः काव्यकर्त्ता शुद्धदेशोद्भवस्तथा॥ बहुधा शब्दशास्त्रज्ञः प्रीणाति तेन वै हरिः। व्यंगादेः श्रवणाद्धानिः सर्वथा जायते ध्रुवम्। वैष्णवाच्छृणुयाच्छास्त्रं शुकशास्त्रं विशेषतः। वैष्णवो द्विविधः प्रोक्तो बाह्याभ्यंतरभेदतः। बाह्यस्तु शंखचक्राद्यैर्वीतरागस्तु चांतरः। वीतो विष्णुः समाख्यातस्तद्भक्तो वीतरागकः। विः प्रोक्तो मुख्यतस्तार्क्ष्यस्तेनैति स यतः सदा। तेन वीत इति ख्यातो निष्ठाकर्त्तरि चात्र वै। विपूर्वादिणधातोर्वै गत्यर्थान्नात्र संशय" इति वारतांतविः। एतदभिप्रायेणैवाभियुक्तैरुक्तं "यद्यपि बहु नाधीषे तथाऽपि पठ पुत्र व्याकरणम्। स्वजनः श्वजनो मा भूत्सकलं शकलं सकृच्छकृत् ॥" इत्यलं प्रसक्तानुप्रसक्त्या ॥ ३७ ॥ ❀ ❀ ज्ञाने निर्बंधं वारयितुमाह।

---

* सब धर्मोंकी सिद्धिका मूल सेवा है, सेवा किये बिना कोई भी धर्म सिद्ध नहीं होता। अतः सब धर्मोंकी मूलभूत सेवा ही जिसका धर्म है, वह शूद्र सब वर्णोंमें महान् है। ब्राह्मणका धर्म मोक्षके लिये है, क्षत्रियका धर्म भोगके लिये है, वैश्यका धर्म अर्थके लिये है और शूद्रका धर्म धर्मके लिये है। इस प्रकार प्रथम तीन वर्णोंके धर्म अन्य पुरुषार्थोंके लिये हैं, किन्तु शूद्रका धर्म स्वपुरुषार्थके लिये है; अतः इसकी वृत्तिसे ही भगवान् प्रसन्न हो जाते हैं।

न चेति । काक्वाक्या उक्तार्थसाधनोक्त्या 'प्रतिषेधानुवादेनोक्तार्थसाधनोक्तिः काकूक्तिः' इति साहित्यार्णवोक्तेः ॥ ३८ ॥ ❀ ❀ अपरे ब्रह्माद्याः आत्मा परमेश्वरः ॥ ३९ ॥ ❀ ❀ यतः परमेशतः अन्ये कुबेरादयः ॥ ४० ॥

इति श्रीमद्भागवत भावार्थदीपिकाप्रकाशे तृतीयस्कन्धे षष्ठोऽध्यायः ।

श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

तथापि साकल्येन निरूपयितुमशक्यत्वेऽपि गिरं वागिंद्रियम् ॥ ३६ ॥ ❀ ❀ कैवल्यं निर्वाणसुखं शुद्धभक्तिर्वा ॥ ३७ ॥ ❀ ❀ आत्मन इति सार्द्धकं काकूक्त्या विस्मयेन ध्वनेर्विकारेण ॥ ३८ ॥ ❀ ❀ यत्स्वयञ्चेति सार्द्धकं अन्ये चेति चकारान्वयः ॥ ३९ ॥ ४० ॥

इति श्रीभागवते महापुराणे तृतीयस्कन्धे दीपिन्याख्यदीपिकाटीकायां षष्ठोऽध्यायः ॥ ६ ॥

श्रीमद्वीरराघवव्याख्या

ननु कस्याप्यशक्तौ कथं भवता वर्ण्येत इत्यत आह अथापीति, अथापि कात्स्न्येंन वर्णयितुं कस्याप्यशक्तावपि यथाश्रुतं गुरुमुखाच्छ्रुतमनतिक्रम्य तत्रापि यथामति यावत्स्वबुद्धिविषयमनतिक्रम्य हरेः कीर्त्तिं अंग हे विदुर ! कीर्त्तयामि न ह्यहं साकल्येन वर्णयामीति प्रतिज्ञातवानस्मीत्यभिप्रायः । तर्हि किमेकदेशवर्णनेन प्रयोजनमित्यत आह स्वां स्वकीयामन्याभिधा हरिव्यतिरिक्तार्थाभिधानं तयाऽसतीं दुष्टां गिरं वाचं सत्कर्तुं पवित्रीकर्तुमित्यर्थः ॥ ३६ ॥ ❀ ❀ एतदेवोपपादयति एकांतलाभमिति । सुश्लोकमौलेः श्लोकनीयप्रधानस्य भगवतो गुणवादं गुणकथनमेव पुंसां वचसः एकांतलाभं एकान्तफलमाहुः श्रुतिस्मृतीतिहासपुराणतज्ज्ञाः विद्वद्भिरुपाकृतायां उपवर्णितायां कथासुधायां उपसंप्रयोगं सन्निधौ अर्पणं संबंधमित्यर्थः । श्रुतेः श्रोत्रेन्द्रियस्य एकांतलाभमाहुरित्यर्थः ॥ ३७ ॥ ❀ ❀ न केवलमस्माभिरेव भगवन्महिमा कात्स्न्येंन दुर्ज्ञेयः किं तु ब्रह्मादिभिरपि ज्ञानाधिकैरित्याह आत्मन इति । हे वत्स ! विदुर ! आदिनाकविना चतुर्मुखेनात्मनो भगवतो महिमा बहुसंवत्सरांते योगविपक्वया धियाऽवसितः किमिति काका एतावानिति न ज्ञात एवेत्युक्तम्, यद्वा अवसितः अपरिच्छिन्नत्वेनेत्यध्याहारः ॥ ३८ ॥ ❀ ❀ न केवलमादिकविरेवापरिच्छिन्नत्वेन वेद किंतु भगवानपि स्वयं तथैवं वेदेत्याह अहो इति । भागवती भगवत्संबंधिनी माया आश्चर्यशक्तिर्मायिनामप्याश्चर्यशक्तिमतामपि मोहिन्याश्चर्यजनयित्री अहो इत्याश्चर्ये यद्यस्मादात्मवर्त्मात्मा आत्मवर्त्मनः स्वप्रापकमार्गभूतस्य वेदस्यात्मा वेदमूतः न वेद इयत्तया न वेद अपरे ब्रह्मादयः न विदुरिति किमुत किमु वक्तव्यमित्यर्थः ॥ ३९ ॥ ❀ ❀ ननु वाङ्मनसयोरतींद्रियार्थदर्शिनः ऋषयो देवाश्च जानीयुरेव सर्वेषामपि दुर्ज्ञेयत्वेऽनुपास्यत्वप्रसंगादित्यत आह यत इति । वाचो वेदवचांसि मनः योगपरिशुद्धं मनः तेन सहाहमतींद्रियार्थदर्शिनोऽस्मत्प्रभृतयः ऋषयः देवा ब्रह्मरुद्रादयश्चाप्राप्य कात्स्न्येंन यन्महिमानमनवगम्य यतो भगवतः न्यवर्तंत तस्मै भगवते नमः न हि कात्स्न्येंन वाङ्मनसादयो विदुः किंतु तन्महिमानमपरिच्छिन्नत्वेनैव विदुः । न चानुपास्यत्वप्रसंगः तत्स्वरूपगुणविभूतीनामपरिच्छिन्नत्वेनोपासनोपपत्तेः । अतएव न भगवतोऽपि कात्स्न्येंन स्वस्वरूपाद्यज्ञानेन सर्वज्ञताहानिः । अपरिच्छिन्नत्वेनैव ज्ञानस्य सर्वज्ञतानिर्वाहकत्वात् यत् वस्तु यथाविधं प्रमितं तस्य तद्याथात्म्यज्ञानं हि सर्वज्ञतापादकं न हि अपरिच्छिन्नस्य परिच्छिन्नतया ज्ञानं परिच्छिन्नस्य वाऽपरिच्छिन्नताज्ञानं सर्वज्ञत्वं निर्वोढुमलम् अतएव "यस्यामतं तस्य मतं मतं यस्य न वेद सः । अविज्ञातं विजानतां विज्ञातमविजानताम् ॥ यतो वाचो निवर्त्तंत अप्राप्य मनसा सह ।" आनंदं ब्रह्मणो विद्वानिति वेदनाविधिनिषेधयोरुपपत्तिः अपरिच्छिन्नत्वपरिच्छिन्नत्वाभ्यां तयोर्व्यवस्थितविषयत्वात् ॥ ४० ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कंधे मद्वीरराघवाचार्यकृतभागवतचंद्रचंद्रिकायां षष्ठोऽध्यायः ॥ ६ ॥

श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली ।

भगवन्माहात्म्यकथानुवर्णनसामर्थ्याभावेऽपि स्वप्रयोजनवशाद्वक्ष्यामीत्याह अथापीति । यद्यप्यानंत्याद्वक्तुं न शक्नोमि तथापि हरेरन्यस्याभिधानं यस्याः सा अन्याभिधा तां स्वां गिरं संस्कर्तुमन्यवार्तापरित्यागेन संस्कर्तुमित्यर्थः ॥ ३६ ॥ ❀ ❀ वागादींद्रियाणां जन्म लाभोऽयमेवेत्याह एकांतलाभ इति । पुंसो वचसो वागिंद्रियस्य सुश्लोकमौलेर्हरेर्गुणानुवादं गुणानामभिवंदनमेकांतलाभमव्यभिचरितपुरुषार्थफलमाहुः प्रेक्षावंत इति शेषः । श्रुतेः श्रवणेन्द्रियस्य च विद्वद्भिरुपाकृताया व्याख्यातायाः कथासुधायाः संप्रयोग एकांतचित्तत्वेन श्रवणमेकांतलाभः उतशब्दाच्चक्षुरादिग्रहणं कर्तव्यं "तमुस्तोतारः पूर्व्यं यथाविद यन्नामसकृच्छ्रवणात्पुल्कसोऽपि विमुच्यत" इत्यादिश्रुतिस्मृतयोऽप्यस्मिन्नर्थे प्रमाणम् ॥ ३७ ॥ ❀ ❀ नन्वादिकविना हरेर्महिम्नः समापितत्वादेष उदाहर्तुं कथं न शक्यते इति तत्राह आत्मन इति । आदिना कविना विरिंचेन संवत्सरसहस्रं योगेन शमदमाद्युपायेन विपकया परिपाकं प्राप्तया धिया सकलशास्त्रार्थावधारणशक्तिमत्या बुद्ध्या अवसित उपाश्रितः आत्मनः परमात्मनो महिमाऽवसितः परोक्षीकृत्य ज्ञातो यदतो भगवतो मायामहिमा मायिनां ज्ञानिनामपि मोहनी बुद्धिभ्रंशकरीति ॥ ३८ ॥ ❀ ❀ ब्रह्मणा ज्ञातत्वात्कथं मोहकरीत्याशंक्य तस्यापि साकल्येन ज्ञानं दुष्करमित्याशयेनाह यदिति । आत्मवर्त्मा परमात्मज्ञानोपदेशाचार्ये—

आत्मा ब्रह्मा स्वयमपि भगवतो मायां न वेदेति। यद्यस्मात्सर्वात्मनेति शेषः। अतोऽपरेऽस्मदादयो न विदुरिति किमुत "माया तु महिमा प्रोक्तः प्राचुर्ये तु-मयेड्यत इति गुणपूर्तेरात्मशब्दो ब्रह्मा हीनत्वतो हरः अहंशब्दस्तथाप्येतौ न जानीतो हरिं पर" मिति स्मृति अहं रुद्रः॥ ३९॥ ❀ ❀ नैतच्चित्रमिति भावेनाह यत इति। वाचोऽनंतवेदाऽभिमानिन्यः श्रियश्चानादिकालमारभ्य मनसा गुणगणान् ध्यायंत्यो वागिंद्रियेण निरंतरं वर्णयंत्यो गुणकथावसानमप्राप्य न शक्यमिति यतो निवर्तंते न तु अनंतगुणपूर्ण इति निश्चित्य नित्यपरिचितगुणकथने च नितरां वर्तंत इति अहं चाहंकाराभिमानिनो रुद्रगरुडशेषा अन्य इमे देवा इंद्रियाभिमानिनं इन्द्रादिदेवा यन्मायां न विदुरिति यतस्तस्मै भगवते नम इत्यन्वयः। वाच इति वहुवचनं श्रियो रूपानंत्याद्युज्यते श्रीर्यत्र रूपिण्यु-रुगायपादयोः करोति मानं बहुधा विभूतिभिरिति च अहं त्रिधेत्यहंशब्दस्याहंकारे प्रयुक्तत्वान्न मैत्रेयोऽत्रोच्यते अहीनत्वतो हरः "अहंशब्दस्तथाप्येतौ न जानीतो हरिं परम्।" इति च॥ ४०॥

इति श्रीभागवते महापुराणे तृतीयस्कंधे श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्यां षष्ठोऽध्यायः॥ ६॥

## श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः।

कीर्त्तिं तादृग्विराट्सृष्ट्यादिवर्णनरूपां गिरं वागिन्द्रियम्॥ ३६॥ ❀ ❀ एकान्तेति। कैवल्यसुखस्याप्यति-क्रमादिति भावः॥ ३७॥ ❀ ❀ आत्मन इति सार्द्धकं परमात्मनो महिमा अचिन्त्यैश्वर्य्यादिरूपः संवत्सरसहस्रान्ते योगविपकया धियैवावसितः अचिन्त्यशक्तित्वेनैव निश्चितः॥ ३८॥ ❀ ❀ अतो ये तु चिन्त्यत्वेनैव निश्चिन्वन्ति तेषा-मन्यान् प्रतिमायिनां मोहकारिणामपि भगवतो माया मोहिनी भवतीत्यर्थः। अतः कारणात् तन्माया मायिनामपि मोहिनीति सार्द्धेनान्वयः। भगवत इत्यत्र भागवतीति क्वचित् पाठः। अचिन्त्यत्वमेव दर्शयति यदिति सार्द्धकेन। यत् यस्मात् स्वयमपि आत्मा वर्त्मस्वरूपैश्वर्यं न वेद सार्वज्ञेनापि न परिच्छिनत्ति अनन्तत्वात् अतस्तस्मै नम एव केवलमित्यर्थः॥ ३९॥ ❀ ❀ तमेव विशिनष्टि यत इति निवर्त्तन्त इति क्वचित् पाठः॥ ४०॥

इति श्रीमद्भागवतमहापुराणे तृतीयस्कन्धे श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे षष्ठोऽध्यायः॥ ६॥

## श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी।

यथाश्रुतं गुरुमुखात् तत्रापि यथामति स्वबुद्ध्या यावद्गृहीतं तावदेव न तु यद्यदेव श्रुतमित्यर्थः। अन्याभिधा हरि-व्यतिरिक्ता कथा तया असतीं मलिनां स्वीयां वाचं सत्कर्त्तुं पवित्रीकर्त्तुम्॥ ३६॥ ❀ ❀ हरिकथामृताब्धेरपारत्वात् सामस्त्येन ज्ञानं न कस्याप्यतो यत्किञ्चिज्ज्ञाने एव तत्कीर्तनश्रवणाभ्यां लोकाः कृतार्थीभूय तं प्राप्नुवन्तीत्याह गुणवादं गुण-कीर्तनमेव एकान्ततो सारमाहुरन्यत् सर्वं वचसोपचयमेवेत्यर्थः। श्रुतेः श्रोत्रस्यापि उपाकृतायां कीर्त्तितायामुपसंप्रयोगं सन्निधा-पर्पणम्॥ ३७॥ ❀ ❀ न चातीव ज्ञाने निर्बन्धः कार्यो ब्रह्मणोऽपि दुर्ज्ञेयत्वादित्याह आत्मनो हरेर्महिमा योगविपकयापि संवत्सरसहस्रान्तेऽपि आदिकविना ब्रह्मणापि किमवसितः किं ज्ञात इति काक्वा एतावानिति न ज्ञात इत्यर्थः। यद्वा अवेत्य-स्यापि अकारलोपे नात्र ज्ञातः वसितः अवसित इति सिद्धेः। यद्वा संवत्सरसहस्रान्त एव महिमा ज्ञात इति अचिन्त्यत्वानन्तत्वाभ्यां दुर्ज्ञेयत्वेन निश्चीयते तदेव भगवन्महिम्नो ज्ञानं एतावदिदमित्थंकारेण ज्ञानं तज्ज्ञानमेवेति भावः। तथाच श्रुतिः "यस्यामतं तस्य मतं मतं यस्य न वेद स" इति॥ ३८॥ ❀ ❀ नन्वात्मतत्त्वं जानन्तोऽन्यानपि ज्ञापयन्तो दार्शनिका बहव एव दृश्यन्ते तत्राह अत इति। अतः कारणात् तन्माया मायिनां बोधयितव्येषु स्वशिष्येषु मायामेवार्पयतां तेषामपि मोहिनी निश्चये-नैव मोहिनी मुहुरपि संसारेषु पातयितुमिति भावः। यद् यतः स्वयमात्मा परमेश्वरोऽपि आत्मवर्त्म स्वस्वरूपं न वेद न जानाति अपरे वराकाः किमुत जानीयुः॥ ३९॥ ❀ ❀ अतो दुर्ज्ञेयत्वमेव स्थापयन् नमस्करोति अप्राप्य अन्तमलब्ध्वा यतः सका-शान्निवर्त्तन्ते वाचः समष्टिव्यष्टीनां सर्वेषामपि वागिन्द्रियाणि मनसा सहेति मनांसि च यद्वा ब्रह्मणो मुखान्निर्गताः सर्व्वे वेदा एव वाचः तस्यैव मनसा सह अहं अहंकाराधिष्ठाता रुद्रः इमे देवा बृहस्पत्यादयश्च यतो निवर्त्तन्ते कुतः अप्राप्य यन्नामरूपचरित्रा-दीनां सम्यङ्माधुर्य्यग्रहणासामर्थ्यात् अपाराणां तेषामन्तप्राप्त्यसामर्थ्याच्चेत्यर्थः। श्रुतिरप्याचष्टे यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सहेति। अत्रापादाननिर्देश एव वाङ्मनससंश्लेषप्रत्यायको निवृत्तिस्त्वनन्तत्वेन प्रमातुमशक्यत्वादिति ज्ञेयम्। सर्वथैव वागाद्यगम्यत्वं त्वात्मनो न व्याख्येयं वेदैश्च सर्वैरहमेव वेद्य इति मनसैवानुद्रष्टव्यं तदप्रमेयं ध्रुवं तद्विष्णोः परमं पदं सदा पश्यन्ति सूरय इत्यादिश्रुतिविरोधापत्तेः॥ ४०॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्। षष्ठोऽध्यायस्तृतीयेऽस्मिन् सङ्गतः सङ्गतः सताम्॥ ६॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः।

अथापि यथाश्रुतं तत्रापि यथामति हरेः कीर्तिं यशः हे अंग विदुर! कीर्तयामि तत्र स्वार्थमाह स्वामिति। अन्याभिधया हरिबहिर्मुखजनाभिधानेन असतीं भ्रष्टां स्वां स्वीयां वाचं सत्कर्तुं साध्वीं कर्तुम्॥ ३६॥ ❀ ❀ पुंसां वचसः एकांततः

अव्यभिचारतः लाभं गुणवादं नु निश्चितमाहुः श्रुतेः कर्णेन्द्रियस्य उपाकृतायां प्रवर्त्तितायां कथा एव सुधा तस्यां उपसंप्रयोगं सुग्राह्कतया योजनम् चकाराच्चक्षुरादीनां तल्लिंगदर्शनादौ उपसंप्रयोगमित्यूह्यम् ॥ ३७ ॥ ❀ ❀ ननु कः श्रद्दध्यादुपाकर्तुमित्यनेन यदि भगवद्यशस एव दुर्ज्ञेयत्वमुक्तं तर्हि सुतरां भगवतो दुर्ज्ञेयत्वमतोऽनिर्मोक्षप्रसंगः स्यादित्यत्र साधनेन भगवान् ज्ञेयएवेत्याह आत्मन इति ।आत्मनः परमात्मनः महिमा कविना योगविपक्कया ध्याननिष्पन्नया अवसितः ज्ञातः ॥ ३८ ॥ ❀ ❀ ननु भगवत्पुत्रोऽपि महता कालसाध्येन ध्यानेन ज्ञातवान् ततः पूर्वं न वेद तत्र कारणं किमत्राह अत इति । यत् यतः भगवतो माया मायिनामाश्चर्यशक्तिमतां ब्रह्मादीनामपि मोहिनी अतः स्वयं ध्याननैरपेक्ष्येण आत्मा भगवत्पुत्रोऽपि आत्मवर्त्म भगवद्वर्त्म न वेद अपरे न विदुरिति किमुत वक्तव्यम्। सर्वे जीवा भगवदंशभूता अपि तन्मायामोहितत्वात्तं न जानंति साधनसंपत्त्या तु जानंतीति फलितोऽर्थः ॥ ३९ ॥ ❀ ❀ एवं भगवतो ज्ञानविषयत्वमुपपाद्याथेयत्तया तु वागाद्यविषयत्वं भगवतो वदन्नमस्करोति यत इति ॥ ४० ॥

इति श्रीमद्भागवते महापुराणे तृतीये स्कन्धे सिद्धान्तप्रदीपे षष्ठाध्यायार्थप्रकाशः ॥ ६ ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

न चैतावताऽहं निवृत्तः, किन्तु गुणानामानन्त्यमेव तदाह—अद्याऽपि कीर्तयामीति। अङ्गेति कोमलसंबोधनमप्रतारणाय। अद्याऽपीति। यत आरभ्याऽहमुत्पन्नस्तत्प्रभृत्यद्याऽपि मरणपर्यन्तं कीर्तयाम्येव स्वधर्मत्वात्। परं सूक्ष्मजीवत्वान्मयि विशेषः यथामतीति मतिमनतिक्रम्य। यावज्जानामि तावदेव कथयामि, न तु जल्पयित्वा। तत्राऽपि यथाश्रुतम्, गुरोः सकाशात् श्रवणमनतिक्रम्य। अनेनाऽऽवृत्तिर्भगवद्गुणानामुक्ता। तत्र प्रयोजनमाह—कीर्तिं हरेरिति। नूतनश्रवणे सामर्थ्यमुपायश्च नाऽस्ति, प्रयोजनाभावश्च; आनन्त्यात् स्वधर्माभावाच्च। अतो यावत्कीर्तयितुं शक्यते तावदेव श्रोतव्यम्, इत्यल्पं श्रुत्वा तदेव कीर्तयामि तदाहैकवचनेन। हरेरिति तावतैव भगवान् दुःखं दूरीकरिष्यतीति। पुनः पुनः कीर्तनस्य तु प्रयोजनमस्ति। स्वां गिरं सत्कर्तुम्[१]। अन्यपदार्थानामभिधया कथनेनेयमसद्वाणी असती जाता। भगवता स्वार्थमेव वयमुत्पदिताः, वाणी च स्वांसमर्पितवान् स्वसेवार्थम्। तस्याः पतिर्भगवान्। भगवदर्थं स्वयं प्रेरकः। तथा च स्वतो वा, मत्प्रेरणया वा, अन्यमभिधाय वाणी व्यभिचारिणी जाता। तामिदानीं संस्करोमि, संस्कृता सा भगवति योजनीयेति। अतः संस्कारार्थं बहुधा कीर्तयामीत्यर्थः। अनेन यस्य यस्य साधनं भगवता स्वार्थे यद्दत्तम्, तदन्यत्रोपयोज्य तच्छुद्ध्यर्थं भगवति तत्पुनः पुनरुपयोज्यमिति ॥ ३६ ॥ ❀ ❀ एवमुपसंहृत्य सर्वेषां निर्द्धारितं जन्मफलमाह—एकान्तलाभमिति। अन्यानीन्द्रियाणि केवलं भगवदर्थं योजयितुमशक्यानि, देहार्थं तदुपयोगावश्यकत्वात्। दुष्टानि च न भगवति योजनीयानि। हस्तौ नियममङ्गलस्पर्शौ, तथा चक्षुषी; तथाऽन्यान्यपि देहनिर्वाहार्थमवश्यमन्यत्र योजनीयानि चेत् भगवदर्थे किञ्चिद्रक्षणीयम्; स्वतः शुद्धम्, शुद्धं कृत्वा वा। तदा द्वयं रक्षणीयम् वागिन्द्रियं श्रोत्रं च। अनयोर्न देहोपयोग आवश्यकः। तस्मादेते चेद्भगवत्कृपया स्वार्थं प्राप्ते भवतः, तदा भगवद्गुणा वक्तव्याः श्रोतव्याश्च। नाऽन्यद्वक्तव्यं श्रोतव्यमित्याह। वचसो वागिन्द्रियस्य। एकान्तलाभः एक एव भगवान् स्वार्थोऽन्तो यस्य। लाभो भगवत्प्राप्त्यैव समाप्यते। स को लाभ इत्याकाङ्क्षायामाह—सुश्लोकमौलेर्गुणवादमिति। सुष्ठु श्लोकाः कीर्तिप्रतिपादका भागवतादिरूपाः, तत्प्रतिपादिता कीर्तिर्वा मौलौ यस्य। अनेन तस्य कीर्तिर्मुकुटरूपा भवतीत्युक्तम्। तां चेदयं संस्कुर्यात् 'सर्वस्य मात्रस्य शिरः प्रधानम्' इति प्रधानमेव भूषितं भवेत्। तादृशस्य भगवतो गुणवादमुत्कर्षप्रतिपादकानां धर्माणां भावपूर्वकं निरूपणं लाभमाहुरिति संबन्धः। आहुरिति प्रमाणम्। न केवलं वचस एवायं लाभः, किन्तु अनु पश्चात् नु निश्चयेन वा, पुंसामपि लाभः। तदुपयोगार्थमन्येन्द्रियव्यापारात् स्वोपयोगेऽपि, स्वस्य तत्रोपयोगात्, कीर्त्तनद्वारा सर्वाण्येवेन्द्रियाणि स्वयं च सफलो भवति। श्रोत्रस्य चाऽयमेव लाभः चकारात्तदनुवर्त्तिनां पुंसामपि। विद्वद्भिरुपाकृतायां भगवत्कथायामारब्धायाम्। उपसंप्रयोगम्, समीपे सम्यक् प्रकर्षेण योगो यस्य, तादृशं श्रवणम्, अमृतकथाश्रवणमिति यावत्, तच्छ्रुतेर्लाभः। श्रोत्रस्य विशेष उच्यते—भगवत्कथैव श्रोतव्या; तत्राऽप्यमृतरूपा प्रेम्णा निरूपिता; तत्राऽपि विद्वद्भिरेव निरूपिता, अन्यथा अज्ञैरन्यथा निरूपणसम्भवात्। तेषां पदार्थानां वस्तुतो भगवदीयत्वाभावाद्भगवत्कथायां तच्छ्रवणे श्रोत्रस्य व्यभिचार एव भवेत्। अतो भगवदीयपदार्थश्रवणार्थं विद्वद्भिरेव निरूपितं श्रोतव्यम्। तैरप्यन्यार्थनिरूपणे प्रकृते तात्पर्याभावात्, तन्न श्रोतव्यम्। तदाह—उपाकृतायामिति। कथा संबद्धा वार्ता, सैव सुधारसजनिका मृत्युनिवर्तिका च। तदपि श्रवणं न दूरतः। अन्तःकरणशुद्धिद्वारा ज्ञानं भविष्यतीति द्रविडमण्डकन्यायो भगवद्गुणेषु न कर्तव्यः। सम्यक्त्वं च स्वपर्यवसानात्। प्रकर्षो विस्मारणराहित्यम्। यद्येवं शृणुयात्, तदा श्रोत्रं स्वयं च भगवदर्थं भवेत्, अन्यथा व्यर्थो भवेत्, कालार्थः काकार्थो वा ॥ ३७ ॥ ❀ ❀ नन्वल्पमेवोक्त्वा कथमुपसंहारः कृतः, कथं वा स्वार्थं निरूप्यते ? इत्युच्यते। भगवन्माहात्म्यं ज्ञातव्यम्, ततो भक्तिः, ततो भगवत्सायुज्यमिति। इमं क्रमं परित्यज्य वाक्शुद्ध्यर्थं गुणानुकीर्तनम्, इन्द्रियलाभार्थं च श्रवणकीर्तने, इति कथमेवमुच्यते ? इत्याशङ्क्याऽऽह—आत्मनोऽवसितो वसेति। आत्मनो भगवतो वासुदेवस्य महिमा, आदिकविना ब्रह्मणाऽपि संवत्सराणां सहस्रपर्यन्तं तपो योगं च

---

१. स्वाम् इति नास्ति ग. घ. च.।

कृत्वा, तत्परिपाके सति, संवत्सरसहस्रान्ते योगविपक्वयाऽपि बुद्धया अवसितः किम् ? अपि तु न ज्ञात एव । ब्रह्मणाऽपि, तपः कृत्वाऽपि, महताऽपि कालेन, महिमा चेन्न ज्ञातः; यस्य कथा अग्रे वक्तव्या; अन्यः को वा ज्ञास्यति । एतदर्थमेव तां कथां कथयिष्यामीति भावः । अत इन्द्रियलाभ एव । भगवद्गुणे कथिते, क्रमात्सर्वस्मिन्नपि संघाते स्वाधीने जाते, सुखेन साक्षाद्वैकुण्ठे भगवत्सेवा कर्तुं शक्यत इति मैत्रेयसिद्धान्तः । इमं पक्षं निराकृत्य योऽन्यथा वक्ष्यति, तमग्रे भ्रान्तत्वेन निराकरिष्यति । आत्मन इति वस्तुप्राप्त्यभावेन दुर्लभता निराकृता । आत्मत्वेनाऽपि प्रकाशमानस्य । किमित्यध्याहारेण वा, काकुस्वरकल्पनया वा, तथा वक्तव्यः । अथवा, ब्रह्मणैवाऽवसितः । तस्य साधनत्रयम्—प्रथमं भगवानात्मत्वेन प्रकटः, स्वयं चाऽऽदिकविर्वेदगर्भः । अनेन प्रमाणं प्रमेयं च तस्य सिद्धमित्युक्तम् । संवत्सरसहस्रान्ते इत्यादि साधनम् । तदा फलं युक्तमिति । तदापि वा न फलमिति चिन्त्यम् ॥ ३८ ॥ ❀ ❀ ब्रह्मणः कथा यथा तथास्तु, अन्ये तु महिम्नो ज्ञानार्थं ये यतन्ते, तद्द्वारा च भक्तिं प्रार्थयन्ते, ते केवलं भगवन्मायामोहिताः । ते यद्यपि अन्यान्मोहयितुं तथा वदन्ति, तथापि महती भगवन्माया तानपि व्यामोहयतीत्याह—अतो भगवत इति । अतः कारणात्, तस्मात्ते माहात्म्यं ज्ञातुं प्रवृत्ताः । इयमेव भगवन्माया, ते संसारं व्यामोहयित्वा मोक्षार्थं प्रवृत्ताः, तानपि व्यामोहयति । ननु भगवन्माहात्म्यज्ञानार्थं प्रवृत्ताः कथं व्यामुग्धा भवन्ति ? तत्राऽऽह—यत्स्वयमिति । अयमात्मा भगवान् स्वस्याऽपि मार्गं स्वयं न जानाति, किमुताऽपरे ? स हि यावत्करोति तावत्तस्य परोक्षे भवति । न हि कश्चिद्गन्ता दूरे गतः स्वातिक्रान्तं सर्वमेव मार्गं पश्यति, तथा सति न गत एव स्यात् । अतिनिपुणोऽपि पूर्वदिवसे यादृशं कुर्यात्तादृशं पुनः कर्तुं ज्ञातुं वा न जानाति । अतः प्रतिक्षणं नूतनानन्तब्रह्माण्डनिर्माणात् पूर्वं येन मार्गेण साम्प्रतं सृष्टिसमर्थो वर्तते, तं मार्गं स्वयमपि न जानातीति युक्तम् । अपरे पुनस्तत्प्रेर्याः, कचिद्ब्रह्माण्डोदुम्बरे मशकवत्स्थिताः, स्वगतिमेव न जानन्ति, कुतो भगवद्गतिम् ? उत्प्रेक्षा त्वप्रमाणम् । अथवा, भगवन्माहात्म्यज्ञानार्थं प्रवृत्तः कथं भगवन्मायया मोह्यते, अन्यथा सन्मार्गो व्यर्थः स्यात् । अन्यत्र तस्या मोहकत्वं सिद्धमेव । भगवन्माहात्म्यज्ञानार्थं प्रवृत्तावपि यदि मोहयेत्, तदा प्रमाणानि दत्ततिलाञ्जलीनि स्युरित्याशङ्क्य, 'स्वायोग्यमिच्छन् पुरुषः पतत्येव न संशयः ।' इति न्यायेन मायायाः को दोष इति वदन्, माहात्म्यज्ञानार्थं प्रवृत्तस्य स्वरूपमाह—यत्स्वयमिति । स्वयं जीव आत्माऽपि भूत्वा, कोऽहमादिकल्पे स्थितः ? कथमेतावत्पर्यन्तमागतम् ? इति स्वगतिं न वेद । सर्वज्ञा अपि जन्मत्रयं चतुष्टयं वा जानन्ति । अन्योन्यं ज्ञास्यन्तीति दूरकथा । शब्दात् ज्ञानमन्धपरम्परा[1]न्यायतुल्यमिति नाऽत्यन्तं प्रामाण्यम् । तस्मादस्मदुक्तमार्ग एव युक्तः । वस्तुतोऽयमेवार्थः, पूर्वं यद् व्याख्यातं तत्परमतात् । विद्यमानाज्ञानमसार्वज्ञमेव संपादयति । वेदे त्वसन्देहे सन्देहवचनं च, 'यदि वा न वेद' इति, 'को हि तद्वेद' इतिवत् । अतो यावत्किञ्चित् स्वकीर्तनोपयोगि तावदावर्तनीयमिति ॥ ३९ ॥ ❀ ❀ किञ्च, तदप्यशक्यम्, सापेक्षमिति । अतो नमनमेव कर्तव्यमित्याह—यतोऽप्राप्येति । वाक् मनश्च यं भगवन्तमप्राप्यैव, अर्वागेव, निवर्तते, अहङ्कारश्च देवः । अन्ये च इमे देवा इन्द्रियाधिष्ठातारस्तमप्राप्यैव निवृत्ताः । वाचोऽत्र वेदरूपाः । मनस्तेषामपि पूर्वरूपं भगवदीयम् । 'यतो वाचो निवर्तन्ते' इति श्रुतेरप्ययमेवाऽर्थः । तदनु अहङ्कारः । यस्तु श्रुतौ 'अहमित्येवात्मानं वेद भगवान् । सोऽहं नामाभवत्' इति । सोऽपि जगत्कर्ता स्वयमात्मानं न वेद । तेन वा जगन्निर्माणार्थे निरुपितानीमानि तत्त्वानि देवा न विदुः । तस्मान्माहात्म्यज्ञानं दुर्लभमिति तदर्थं प्रयासमकृत्वा, केवलं भगवते नमनं कर्तव्यम् । तदाह—तस्मै भगवते नम इति । यादृशोऽसि हरे ! कृष्ण ! तादृशाय नमो नमः । यादृशोऽसि हरे ! कृष्ण ! तादृशं मां हि पालय ॥ ४० ॥

इति श्रीभागवतसुबोधिन्यां श्रीलक्ष्मणभट्टात्मजश्रीवल्लभदीक्षितविरचितायां तृतीयस्कन्धे षष्ठाध्यायविवरणम् ।

## श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

अद्याऽपीत्यत्र । आनन्त्यादिति । एकस्याऽपि गुणस्याऽपरिच्छिन्नत्वात् । अयं नूतनश्रवणासामर्थ्ये हेतुः । स्वधर्माभावादिति । गुरुमुखात् श्रवणं स्वधर्मः, तच्च मतेः स्वल्पतया कर्तुं न शक्यते, शक्तितात्पर्यावधारणस्य श्रवणपदार्थत्वादिति । अतो मत्यभाव एव स्वधर्माभावः, स एव चोपायाभावे हेतुः । तदेतदाहुः—अत इत्यादि । एकवचनेनेति । कीर्तिमित्यनेन । प्रयोजनाभावे हेतुमाहुः—हरेरित्यादि ॥ ३६ ॥ ❀ ❀ एकान्तलाभमित्यत्र । द्रविडमण्डकन्याय इति । द्रविडदेशे गोधूमाभावान्मण्डका न भवन्ति, इति तद्देशीयास्तं भोक्तुं कर्तुं च न विदन्ति । मध्यदेशादावागतो द्रविडः, 'कथं मण्डका भोज्याः' इति पृष्टे केनचिदुपहसितः पदयोर्मध्यात् पृष्ठाच्च हस्तपरिवर्तनं विधाय पश्चाद्र्वं (?) मुखं कृत्वा भोज्या इति । एवं वृथाक्रम बोधको न्यायः ॥ ३७ ॥ ❀ ❀ आत्मन इत्यत्र । इन्द्रियलाभ इति । इन्द्रियाणामन्यकार्यजनितव्यभिचारनिवृत्त्या भगवदीयत्वम् । काकुरपि काल्पनिकीत्यरुच्या पक्षान्तरमाहुः—अथवेत्यादि ॥ ३८ ॥ ❀ ❀ अत इत्यत्र । ज्ञातुमिति । इयदिति ज्ञातुम् । भगवतः स्ववर्त्माज्ञाने कारणमाहुः—स हीत्यादि । इदमत्र वर्त्मपदबलाद्व्याख्यातम् । द्वितीयस्कन्धे तु 'यथा नभः स्वान्तम्' इत्यत्रान्तभावादेव ज्ञानाभाव उक्तः । तेनाऽत्रापि वर्त्मानन्त्यमेव ज्ञानाभाव एव हेतुरिति ज्ञानशक्तिकौण्ठ्यमित्यर्थः । तदेतदुक्तम्, तथा सति न गत एव स्यादित्यनेन । अत्र प्रकारानन्त्यस्याऽपि हेतुतामाहुः—अतिनिपुण इति । अस्मिन्नपि पक्षे उत्प्रेक्षेव समायातीत्यरुच्या पक्षान्तरमाहुः—अथवेत्यादि । अन्धपरम्परान्यायतुल्यमिति । परोक्षज्ञानत्वात्तत्तुल्यम् । युक्त इति जीवाज्ञानकौण्ठ्यपरत्वा-

---

१. प्रवृत्ताः ख ।

ह्युक्तः । एतदुपष्टम्भायाहुः—वस्तुत इत्यादि । परमतादिति । परमतमालम्ब्य । ननु शब्दे ज्ञानस्य तत्तुल्यत्वे महानानय इत्याशङ्कायामाहुः—वेदे त्वित्यादि । अत्र पूर्वश्रुतिर्वह्वृचा (वह्वृचा) नां भाववृत्तसूक्तस्था, द्वितीया तु तैत्तिरीयसंहितास्वष्टा (स्वष्टमा) ष्टकस्था । तत्र दिक्ष्वतीकाशान् करोति' इति विधाय प्रत्यक्षप्रशंसार्थं 'को हि तद्वेद यदमुष्मिन् लोकेऽस्ति वा न वा' इत्युक्तम् । तथा च, तत्र यथा न देवलोकासत्त्वे तात्पर्यम् । किन्तु प्रत्यक्षस्य प्रशंसायामिति नानयः, तथा भाववृत्तफलश्रुतावपि न सृष्टिकर्तुरज्ञाने तात्पर्यम्, किन्त्वन्येषां तदज्ञाने । इत्यन्येषां ज्ञानदौर्घट्यात्तदियत्तानां श्रमो न विधेय इति तात्पर्यान्नाऽनय इत्यर्थः ॥ ३९ ॥ ❀ ❀ यत इत्यत्र । तदपीत्यादि । तद् ज्ञानमपि गुरुसापेक्षत्वादशक्यमित्यर्थः । अप्राप्येति । इयानयमिति प्रकर्षेणाऽज्ञात्वा । अयमेवाऽर्थ इति । इयत्ताया अप्राप्तिरेवार्थः । तत्राऽहंकारस्याऽनुक्तत्वादेतस्य कथं तदर्थनिश्चायकत्वमित्यत आहुः—यस्त्वित्यादि । न वेदेति । इयानहमिति न वेद । तथा चेतरत्रानुवीक्षणस्योक्तत्वाद् ज्ञानशङ्का स्यादिति तन्निवृत्त्यर्थमेतदुक्तम् । तेन तत्राऽपि सर्वस्याऽऽत्माभिन्नत्वमेव विवक्षितम्, न तु स्वरूपेयत्तेत्यर्थः ॥ ४० ॥

इति श्रीगोस्वामिपुरुषोत्तमचरणजीमहाराजकृततृतीयस्कन्धसुबोधिनीप्रकाशे षष्ठाध्यायविवरणम् ॥

### श्रीगिरिधरकृता बालप्रबोधिनी

ननु यदि साकल्येन वर्णयितुं न शक्यते तदा किं तदर्द्धवर्णनेनेत्याशङ्क्याह—अथापीति । साकल्येन वर्णयितुमशक्तावपि अन्यस्य हरिव्यतिरिक्तस्य अभिधा अभिधानं तया असतीं दूषितां स्वां गिरं वाचं सत्कर्तुं यथाश्रुतं गुरुमुखाच्छ्रवणमनतिक्रम्य श्रुतमपि न, किन्तु यथामति स्वबुद्धिबलानुसारेण हरेः कीर्तिं कीर्तयामीत्यन्वयः । नात्र काचित् प्रतारणा क्रियतेऽङ्गवत्स्नेहविषयत्वादिति सूचयन्सम्बोधयति—हे अङ्गेति ॥ ३६ ॥ ❀ ❀ यतो भगवद्यशः-कीर्तनश्रवणादेः सर्वदोषनिवर्तकत्वं अत एव सुश्लोकाः पुण्ययशसो बलिप्रभृतयस्तेषां मौलेर्मौलिवत्प्रधानस्य भगवतो गुणवादं उत्कर्षज्ञापकानां कथनमेव पुंसां वचसः वागिन्द्रियस्य एकान्तलाभं परमफललाभं श्रुतिस्मृतीतिहासपुराणतज्ज्ञा आहुः तथा विद्वद्भिरुपाकृतायां उपवर्णितायां तत्कथासुधायां उपसम्प्रयोगं सन्निधौ समर्पणेन तच्छ्रवणमेव श्रुतेः श्रोत्रेन्द्रियस्य परमफललाभमाहुः । अन्यदपि लौकिकं तुच्छं फलमस्त्येव तद्व्युदासार्थं एकान्तेति विशेषणम् । नु इति निश्चितमेवैतन्नात्र सन्देहः कर्त्तव्य इत्यर्थः ॥ ३७ ॥ ❀ ❀ न केवलमस्माभिरेव भगवन्महिमा कार्त्स्न्येन दुर्ज्ञेयः, किन्तु ब्रह्मादिभिर्ज्ञानादिकैरपीत्याह—आत्मन इति । विदुरे स्वस्नेहं सूचयन् सम्बोधयति—वत्सेति । आदिना सर्वजनकेन कविना स्वयमेव सूक्ष्मदर्शिना ब्रह्मणा संवत्सरसहस्रान्ते तावत्तपस्समाध्यादियोगं कृत्वाऽपि तेन योगेन विपकया विशुद्धतया सूक्ष्मवस्तुग्रहणसमर्थयापि धिया किमा[1]मनः सर्वात्मकस्य भगवतो महिमा अवसितः एतावानिति साकल्येन किं ज्ञातः ? न ज्ञात एवेत्यर्थः ॥ ३८ ॥ ❀ ❀ यतो ब्राह्मणोऽपि दुर्ज्ञेयत्वमतो भगवतो माया आश्चर्यशक्तिः मायिनामाश्चर्यशक्तिमतामपि मोहिनी आश्चर्यकरी दुर्ज्ञेया । तत्र कैमुत्यन्यायमाह—यदिति । यत् यस्मात् आत्मा परमात्मा स्वयमप्यात्मवर्त्म स्वमायाविस्तारं न वेद न जानाति । अपरे ब्रह्मादयो न विदुरिति किमुत वक्तव्यमित्यर्थः । न चैवं भगवतः सर्वज्ञत्वहानिरिति शङ्कनीयं, तत्स्वरूपगुणविभूतीनामपरिच्छिन्नत्वेन तथा ज्ञानेनैव सर्वज्ञतानिर्वाहात् । यद्वस्तु यथाविधं तस्य तथाज्ञानमेव सर्वज्ञतापादकं न ह्यपरिच्छिन्नस्य परिच्छिन्नताज्ञानं परिच्छिन्नस्य वा अपरिच्छिन्नताज्ञानं सर्वज्ञत्वं निर्वोढुमलं, भ्रान्तित्वात् । अतएव "यस्यामतं तस्य मतं मतं यस्य न वेद सः । अविज्ञातं विजानतां विज्ञातमविजानताम्" इति श्रुतिरपि सङ्गच्छते ॥ ३९ ॥ ❀ ❀ एवं दुर्ज्ञेयत्वे वाङ्मनसागोचरत्वं हेतुं तत्र च "यतो वाचो निवर्तन्ते अप्राप्य मनसा सह"[2] इति श्रुतिसम्मतिं ज्ञानस्य सर्वथा दुर्लभत्वात्तन्निर्वन्धं विहाय भक्तिमार्गेण श्रवणवन्दनादिकमेव भगवदनुग्रहाय कर्तव्यमिति च सूचयन् स्वयं प्रणमति—यत इति । योगपरिशुद्धेन मनसा सह वाचो वेद वचांसि—अहं चेत्युपलक्षणम्—अतीन्द्रियार्थदर्शिनोऽस्मत्प्रभृतयः ऋषयश्च तथाऽन्येऽपीमे ब्रह्मरुद्रा य इन्द्रियाद्यधिष्ठातारः अप्राप्य साकल्येन स्वरूपगुणविभूत्यादिकमज्ञात्वैव यतो निवर्तन्ते तस्मै भगवते नम इत्यन्वयः ॥ ४० ॥

इति श्रीवल्लभाचार्यवंश्यगोपालसूनुना ॥ श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा ॥ १ ॥
श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये ॥ श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी ॥ २ ॥
रचिता च तृतीयेऽत्र वन्धसर्गनिरूपणे षष्ठोऽपि विवृतोऽध्यायो विराट्सर्गनिरूपकः ॥ ३ ॥

### हिन्दी अनुवाद

तथापि प्यारे विदुरजी ! अन्य व्यावहारिक चर्चाओंसे अपवित्र हुई अपनी वाणीको पवित्र करनेके लिये, जैसी मेरी बुद्धि है और जैसा मैंने गुरुमुखसे सुना है वैसा, श्री हरिका सुयश वर्णन करता हूँ ॥ ३६ ॥ ❀ ❀ महापुरुषोंका

---

१. श्रीधरस्वामिभिरेवमेव काकूक्तिमङ्गीकृत्य विवृतं दृश्यते । रामप्रतापैस्तु काकूक्तिराहित्येन ;'हरेर्महिमाऽऽदिकविनाऽवसितः' इति व्याख्यातम् । चिन्त्यमेतत्सुधीभिः ।

मत है कि पुण्यश्लोकशिरोमणि श्रीहरिके गुणोंका गान करना ही मनुष्यों की वाणीका तथा विद्वानोंके मुखसे भगवत्कथामृतका पान करना ही उनके कानोंका सबसे बड़ा लाभ है ।। ३७ ।। ❀ ❀ वत्स ! हम ही नहीं आदि कवि श्रीब्रह्माजीने एक हजार दिव्य वर्षोंतक अपनी योगपरिपक बुद्धिसे विचार किया; तो भी क्या वे भगवान्‌की अमित महिमाका पार पा सके ? ।। ३८ ।। ❀ ❀ अतः भगवान्‌की माया बड़े-बड़े मायावियोंको भी मोहित कर देनेवाली है। उसकी चक्करमें डालनेवाली चाल अनन्त है; अतएव स्वयं भगवान् भी उसकी थाह नहीं लगा सकते, फिर दूसरोंकी तो बात ही क्या है ।। ३९ ।। ❀ ❀ जहाँ न पहुँचकर मनके सहित वाणी भी लौट आती है तथा जिनका पार पानेमें अहङ्कारके अभिमानी रुद्र तथा अन्य इन्द्रियाधिष्ठाता देवता भी समर्थ नहीं हैं, उन श्रीभगवान्‌को हम नमस्कार करते हैं ।। ४० ।।

छठवाँ अध्याय समाप्त

# अथ सप्तमोऽध्यायः

श्रीशुक उवाच

एवं ब्रुवाणं मैत्रेयं द्वैपायनसुतो बुधः। प्रीणयन्निव भारत्या विदुरः प्रत्यभाषत ॥ १ ॥

विदुर उवाच

ब्रह्मन् कथं भगवतश्चिन्मात्रस्याविकारिणः। लीलया चापि युज्येरन्निर्गुणस्य गुणाः क्रियाः ॥ २ ॥
क्रीडायामुद्यमोऽर्भस्य कामश्चिक्रीडिषान्यतः। स्वतस्तृप्तस्य च कथं निवृत्तस्य सदान्यतः ॥ ३ ॥
अस्राक्षीद्भगवान् विश्वं गुणमय्याऽऽत्ममायया। तया संस्थापयत्येतद्भूयः प्रत्यपिधास्यति ॥ ४ ॥
देशतः कालतो योऽसावस्थातः स्वतोऽन्यतः। अविलुप्तावबोधात्मा स युज्येताजया कथम् ॥ ५ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

सप्तमे संशयच्छेदि प्रतिनंद्य मुनेर्वचः। पुनः क्षत्रा कृता नाना प्रश्नाः सम्यगुदीरिताः ॥ १ ॥

"अथ ते भगवल्लीला योगमायोपबृंहिताः" इत्यादिना मायागुणैर्लीलया भगवान् सृष्ट्यादि करोतीत्येवं ब्रुवाणं भारत्या प्रार्थनारूपया प्रीणयन्निवेत्यभिप्रायाज्ञानेनाक्षेपात् ॥ १ ॥ ❀ ❀ निर्विकारस्य क्रिया निर्गुणस्य च गुणाः कथं लीलयेत्युक्तिः प्रयोजनाभावं परिहरति न वस्तुविरोधमिति भावः ॥ २ ॥ ❀ ❀ अर्भकवल्लीलाऽपि न युज्यते वैषम्यादित्याह। उद्यमयति प्रवर्तयतीत्युद्यमः प्रवर्तकः। अर्भकस्य क्रीडायां प्रवृत्तिहेतुः कामोऽस्ति अन्यतस्तु वस्त्वंतरेण बालांतरप्रवर्तनेन वा तस्य क्रीडेच्छा भवति ईश्वरस्य तु स्वतस्तृप्तस्य कथं कामोऽन्यतः सदा निवृत्तस्य चासंगाद् द्वितीयस्य कथमन्यतश्चिक्रीडिषेत्यर्थः ॥ ३ ॥ ❀ ❀ यच्चोक्तम् "स्मरन् विश्वसृजामीशो विज्ञापितमधोऽक्षजः" इत्यादिनाऽविद्योपाधेर्जीवस्य भोगार्थमीश्वरः सृष्ट्यादि करोतीति तदप्याक्षेप्तुमनुवदति। अस्राक्षीदिति। गुणमयी आत्मनो जीवस्य कर्तृत्वभोक्तृत्वादिमोहोत्पादिका या माया तया सृष्टवान्। यदुक्तं प्रथमे। "यया संमोहितो जीव आत्मानं त्रिगुणात्मकम्। परोऽपि मनुतेऽनर्थं तत्कृतं चाभिपद्यते" इत्यादिना। अत्र च। "अतो भगवतो माया मायिनामपि मोहिनी" इति। संस्थापयति पालयति प्रत्यभिधास्यति प्रातिलोम्येन तिरोहितं करिष्यति। पाठांतरे प्रातिलोम्येनात्मन्यभितो धारयिष्यति ॥ ४ ॥ ❀ ❀ एतच्च जीवस्याविद्याश्रयत्वे घटते न तु तत्संभवतीत्याह। देशत इति। योऽसौ देशादिभिरविलुप्तावबोध आत्मा जीवः ब्रह्मस्वरूपत्वात् स कथमजयाऽविद्यया युज्येति। तत्र देशतो दीपप्रभाया इव लोपो नास्ति सर्वगतत्वात्। न कालतो विद्युत इव नित्यत्वात् नावस्थातः स्मृतिवदविक्रियत्वात्। न स्वतः स्वप्नवत्सत्यत्वात्। नान्यतो घटादिवदद्वितीयत्वात्। एवमेतैर्यस्य बोधो न लुप्यते स कथमजया युज्येत अजा चात्राविद्यैव, न माया, तस्या अवबोधेन विरोधाभावात् ॥ ५ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

संशयमच्छिददिति संशयच्छेदि णिनिरतीते ॥ १ ॥ ❀ ❀ इति भाव इति। लीलया कथंचित्क्रियागुणयोगसत्त्वेपि निर्गुणत्वाविकारित्वे तु गुणक्रियायोगस्तु कदापि न संभवति तेजस्तिमिरवदिति तात्पर्य्यम्। वस्तुतो लीलायामपि न कंटकेषु पादो दीयते प्रत्युत तेभ्यो ह्रियते इति चेद्बालवत्सा ज्ञेया ॥ २ ॥ ❀ ❀ ❀ तत्राह अर्भकवदिति। इत्यर्थ इति। "आप्तकामः सत्यकामः" इत्यादिश्रुतेः कामाभावात्तथा "एकमेवाद्वितीयं ब्रह्म" इति श्रुतेः "असंगो ह्ययं पुरुषः" इति श्रुतेश्चासंगाद्वितीयस्य सर्वदा तदन्यवस्त्वभावाच्च लीला न संगच्छते इति भावः ॥ ३ ॥ ❀ ❀ आक्षेपांतरं वक्तुमाह यच्चेत्यादि। तत् मायाया जीवमोहकत्वम्। अत्र चास्मिन्स्कंधे च पूर्वाध्याये पाठांतरे 'तया संस्थापयत्येतदात्मन्प्रत्यभिधास्यति' इति पाठे ॥ ४ ॥ ❀ ❀ एतच्च विश्वसृष्ट्यादि च। तदविद्याश्रयत्वम्। तत्रेति वाक्यालंकारे। दीपप्रभा हि क्वचिद्देशेऽस्ति क्वचिन्न, विद्युच्च कदाचिद्भवति कदाचिन्न, स्मृतिर्हि क्वचिदवस्थायामस्ति क्वचिन्नेति एवं स्वप्नेति घटाद्यपेक्षयाऽन्यो मुद्गरप्रहारादिरस्ति

---

१. प्रा० पा०—त्येव भू० । २. प्रा० पा०—प्रत्यभि० । एतद्व्याख्यानं भावार्थदीपिकानुसारि।

विरोधाभावं स्फुटयति मायासंपादितैव शास्त्रगुर्वादिरूपा ज्ञानसामग्री तया विना तदसंभवात्। यद्वा। मायाया ज्ञानविरोधित्वस्वीकारे 'मायिनं तु महेश्वरम्' इति श्रुतेस्तदुपहितेश्वरस्यापि तन्न सेत्स्यतीति भावः॥ ५॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या।

उदीरिता इत्यत्र शुकेनेति शेषः। आक्षेपात् मैत्रेयकृतसिद्धान्तस्य तिरस्कारात्॥ १॥ ❀ ❀ निर्विकारस्यावस्थांतरप्राप्तिरूपविकारशून्यस्य निर्गुणस्य प्राकृतगुणास्पृष्टस्य च यथाक्रमं क्रियाविकारोत्पादकाः गुणाः सत्त्वादयः कथं केन प्रकारेण युज्येरन्संगच्छन्ते। प्रयोजनाभावं प्रयोजनविरहं परिहरति दूरीकरोति यद्यपि यथा राज्ञः कन्दुकादिलीलां निष्प्रयोजना आप्तकामत्वात् किन्तु स्वोल्लासमयी तथा भगवतोऽपि सृष्ट्यादिलीलायां न किञ्चित्प्रयोजनं सृष्ट्यादिकं हरिर्नैष प्रयोजनमपेक्ष्य कुरुते केवलानन्दाद्यथा मत्तस्य नर्तनमिति स्मृते 'र्लोकवत्तु लीलाकैवल्यमिति न्यायाच्चेति प्रयोजनाभावस्सिद्धस्तथापि लीलयेत्युक्तिः क्रियागुणांगीकारे लीलैव प्रयोजनमिति सूचयतीत्यर्थः। व्यञ्जनार्थमाह न वस्तुविरोधं परिहरति प्रकाशाऽप्रकाशसामानाधिकरण्याऽभाववत् निर्विकारित्वनिर्गुणत्वयोः क्रियागुणाभ्यां सामानाधिकरण्याभावाद्विरोधस्तदवस्थ एवेत्यर्थः। एवं धर्मविरोधमुक्त्वा स्वरूपविरोधमाह चिन्मात्रस्येति। चिदेकरसस्य गुणतदासंगहेतुकक्रियासत्त्वे चिन्मात्रत्वं व्याहन्येतेति भावः। चिन्मात्रत्वेऽपि भगवत्त्वं भगवत्वस्यापि तन्मात्रत्वं सूचयति ततश्च चिन्मात्रत्वे तद्द्वयसंबन्धासम्भवे भगवत्त्वे तु तुच्छतद्द्वयसम्बन्धः सुतरां न सम्भवतीति द्विगुणीभूय प्रश्नः॥२॥ ❀ ❀ वैषम्यात् बालेश्वरयोः सकामत्वस्वतस्तृप्तत्वादिना विषमत्वात् उद्यम इत्यस्य व्याख्यानं प्रवृत्तिहेतुरिति चकारस्त्वर्थेऽपि व्याख्यातः आवृत्त्या व्याख्यानादित्यर्थ इत्युक्तम्॥ ३॥ ❀ ❀ आक्षेप्तुं पूर्वपक्षविपयीकर्तुं पाठान्तरे प्रत्यभिधास्यतीति पाठे। प्रातिलोम्येन सृष्टिप्रतिलोमतया॥ ४॥ ❀ ❀ एतच्च जीवभोगार्थं सृष्ट्यादिकरणश्च ततः अविद्याश्रयत्वं जीवस्य चिन्मात्रत्वेन ब्रह्मस्वरूपत्त्वात् दीपप्रभादयो व्यतिरेकदृष्टान्ताः अन्यतः मुद्गरादेः अद्वितीयत्वात् लोपकस्य द्वितीयस्यात्यंताभावात् एवं निरुक्तप्रकारेण एतैर्देशादिभिः अत्र अस्मिन् श्लोके तस्या मायायाः अवबोधेन विद्याख्यस्ववृत्तिविशेषेण सह वैष्णवमते स्वप्नवत् इत्यत्र शुक्तिरजतवदिति द्रष्टव्यम्। तन्मते स्वप्नस्य सत्यत्वात् "वैधर्म्याच्च नस्वप्नादिवदि"ति न्यायात्॥ ५॥

### श्रीमद्वीरराघवव्याख्या।

एवं प्रकृतिपुरुषकालनियंतृपरमेश्वराधिष्ठितात्प्रधानान्महदादिपृथिव्यंततत्त्वेषु सृष्टेषु तेषु स्वानुप्रवेशाहितसृष्टिसामर्थ्येषु चांडचतुर्मुखशरीरारंभद्वारा समष्टयवस्थयावस्थितेषु कथितेषु पुनस्तेभ्य एव व्यष्टिशरीरेंद्रियादिविभागे परमात्मात्मकचतुर्मुखकर्तृकेऽभिहिते पुनः क्षत्ता कांश्चित्प्रक्ष्यमाणः प्रथमं भगवतो जगदुपादानत्वप्रयुक्तदोषसंपर्कशंकापरिहारबुभुत्सया पप्रच्छेत्याह शुकः। एवमिति। द्वैपायनसुतः श्रीव्याससुतः बुधस्तत्त्वदर्शी विदुरः भारत्या स्वगिरा प्रीणयन्निव प्रीतिं जनयन्निवैवमुक्तप्रकारेण ब्रुवंतं कथयंतं मैत्रेयं प्रत्यभाषत॥ १॥ ❀ ❀ प्रथमं भगवतः स्रष्टृत्वमुपादानत्वं चाक्षिपति ब्रह्मन्निति द्वाभ्यां—हे ब्रह्मन्मैत्रेय! भगवतः पूर्णषाड्गुण्यस्य चिन्मात्रस्य ज्ञानैकरसस्य मात्रया कापि जडत्वव्यावृत्तिः अतएवाविकारिणः अपरिणामिनः अत एव निर्गुणस्य सत्त्वादिगुणरहितस्य गुणाः गुणकार्यभूताः क्लेशादयः क्रियापरिणामादयश्च लीलया वापि कथं युज्येरन्नित्यन्वयः। अयमभिप्रायः भगवतः सृष्ट्यादिकर्तृत्वं जगदाकारेण परिणामश्च लीलयैवेति वक्तव्यं नतु कर्मणा अपहतपाप्मेत्यादिश्रुतेः। एतदेव हि न प्रयोजनवत्त्वाधिकरणे "लोकवत्तु लीलाकैवल्यमि"त्यनेन सूत्रेण सिद्धांतितम्। एवं चैकस्यैव कर्तृत्वोपादानत्वयोर्लीलैकप्रयोजनयोरभ्युपगम्यमानयोर्निर्विकारिणो निर्गुणस्य परिणामादयः क्रिया गुणकार्यगर्भजन्मजरामरणक्लेशादयश्च दुर्वारा आपतिष्यंत्यतः कथं जगत्कारणत्वमिति अनेन प्रयोजनवत्त्वाधिकरणसिद्धांते दूषणमुक्तं भवति तत्र हि सप्तद्वीपवतीं मेदिनीमधितिष्ठतो महाराजस्य कंदुकाद्यारंभवत्पूर्णषाड्गुण्यमूर्तेरवाप्तसमस्तकामस्य स्वपरप्रयोजनरहितस्यापि भगवतः केवललीलैकप्रयोजनो जगद्व्यापार उपपन्न इति स्थापितं तत्र विषमोऽयं दृष्टांतः महाराजस्य षाड्गुण्यापूर्णत्वेनाऽनवाप्तसमस्तकामत्वात्सत्त्वादिगुणवश्यत्वाद्विकारित्वाद् ब्रह्मणस्तद्विपरीतत्वादुक्तदोषापातश्चेति॥ २॥ ❀ ❀ एवं दृष्टांतांतरमपि नोपपन्नमित्याह क्रीडायामिति। अर्भस्य बालकस्य क्रीडायामुद्यमः प्रयत्नः तद्धेतुभूतः कामः अन्यतः क्रीडोपकरणैः बालान्तरप्रवर्तनेन वा चिक्रीडिषा क्रीडेच्छा च स्यादीश्वरस्य तु स्वतस्तृप्तस्य स्वानुभवेनैव तृप्तस्य कथं कामः सदाऽन्यतः स्वव्यतिरिक्तस्वतंत्रक्रीडोपकरणक्रीडाप्रवर्तकपुरुषान्तरैश्च निवृत्तस्य विरहितस्य चिक्रीडिषा च कथं स्यादतोऽर्भकदृष्टान्तोऽनुपपन्न इति भावः॥ ३॥ ❀ ❀ नन्विदं दोषापादनमयुक्तं यदुपादानत्वपरिणामित्वक्लेशाद्याश्रयत्वमिति यः प्रकृतिपुरुषशरीरकस्य कारणत्वाभ्युपगमेन गुणक्रियाणां स्वशरीरभूतप्रकृतिपुरुषगतत्वादितीमां शंकां भगवान् क एवैष इति पूर्वार्द्धेन जानानः अमुष्य दुर्भगत्वमित्युत्तरार्द्धेन देशतः कालत इति श्लोके च दोषांतरापादनेन परिहरति अस्राक्षीदित्यादिना। गुणमय्या सत्वादिगुणप्रचुरया आत्मसंबंधिन्या मायया भगवान्विश्वमस्राक्षीत् तया माययोपलक्षितः एतद्विश्वं संस्थापयति सम्यक्स्थापयति प्रतिष्ठापयति पालयतीति यावत् पुनर्भूयः प्रत्यभिधास्यति प्रातिलोम्यनापि धारयति अपिधास्यति तिरोहितं करिष्यति अपिपूर्वो धाधातुस्तिराधाने वर्त्तते

स्वाधिष्ठेयां गुणमयीं मायां महदादिरूपेण परिणमय्य स्वयं गुणत्रययुक्तत्रिमूर्त्तिरूपेण सृष्ट्यादीन्करोति ॥ ४ ॥ ❀ ❀ अतः परिणामादयः स्वधिष्ठेयमायागता न स्वगता इति चेत्तत्राह देशत इति । योऽसौ परमात्मा दीपप्रभाया इव देशतः विद्युत इव कालतः स्मृतिरिवावस्थातः स्वप्नवत् स्वतः जीववदन्यतः कृत्यादिभिरविलुप्तावबोधात्मा विशेषेण लुप्तज्ञानरूपो न भवति सर्वगतत्वान्नित्यत्वादविक्रियत्वादनितरानुभाव्यत्वात्कालमात्रावसायित्वाभावात् कर्मवश्यत्वाभावादत ईदृशः स परमात्माऽजया मायया कथं युज्यते यदि येन केनापि देशादिना लुप्तावबोधो भवेत्तर्ह्यविद्यासंबन्धः समभविष्यदतस्तदभावात्कथमजया युज्येतेति शंकाभिप्रायः ॥ ५ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली ।

दुर्भगशरीरस्य स्वहरेर्देवदत्तस्येव माहात्म्यतिरोभावो दुःखभोगश्च नास्तीत्ययमर्थः । विदुरस्य च वक्ष्यमाणार्थप्रश्नग्रामश्चास्मिन्नध्याये निरूप्यते । तत्रादौ विदुरप्रश्नोपक्रमं वक्ति एवमिति । भरतस्य मुख्यप्राणस्य प्रियया वाचा ॥ १ ॥ ❀ ❀ कालवृत्त्यां तु मायायामित्यादिना निर्गुणोऽपि सत्त्वादिगुणैरुपादानकारणैर्जगत् सृष्ट्यादि करोति ईश्वर इत्युक्तं तत्र चोदयति विदुर इत्याह ब्रह्मन्निति । हे ब्रह्मन् ! शमदमादिगुणबृंहितचिन्मात्रस्य ज्ञानैकरसशरीरस्यात एव निर्गुणस्य सत्त्वादिगुणरहितस्यात एवाविकारिणो भगवत ऐश्वर्यादिगुणसमुद्रस्य हरेः सत्त्वादिगुणास्तन्निमित्तजगत्सृष्ट्यादिक्रियाश्च कथं युज्येरन्न कथमपि उक्तहेतोरित्यन्वयः । विकारिलीलार्थं घटत इति तत्राह लीलयेति । न हि कश्चिल्लीलया कंटकाग्रे पादं निक्षिपति अपि तु प्रत्युत दूरादेव परिहरति ऐश्वर्यादपि युज्यत इत्यतो वापीति निर निष्ठोनिरवद्य इति श्रुतेर्गर्हितत्वात् करोति चात इदं तत्त्वतो ब्रूहीति प्रश्नार्थः ॥२ ॥ ❀ ❀ लीलया वा न युज्यत इति तत्र किं बाधकमत्राह क्रीडया इति । क्रीडायामुत् क्रीडासंबंधिसुखमर्हस्यापूर्णसुखस्य यतो यस्मात्तस्मान्न घटत इति तत्र कैमुत्यमाह कामेति । यथेष्टं क्रीडितुमिच्छापि अन्यतोऽरतितस्तंद्रया संभवति अन्येन समेन पुरुषेण वा सह एतद्द्वयमप्याक्षिपति स्वत इति । शब्दादिविषयनिमित्ततृप्तिमंतरेण स्वभावेनैवालंबुद्धिगोचरानंदसमुद्रमग्नस्यात एव निर्वृत्तस्य रोमांचितगात्रस्यारत्यसंभवात् सचासावात्मा च सदात्मा तस्य "सदेव सौम्येदमग्र आसीदात्मा वा इदमेक एवाग्र आसीदेकमेवाद्वितीय" मित्यादिश्रुतेरसमत्वाच्च न पुरुषांतरेण सह क्रीडेच्छाया एवासंभवात् किमुत लीलासंभव इति सदा निर्वृत्तस्य आत्मन इति सदानिर्वृत्तस्य आत्मन इति भिन्नं वा पदं समस्तगुणपूर्णत्वेन लीलां प्राप्य प्रयोजनानवकाशादित्यर्थः । तुना प्रकारांतरं निवारयति ॥ ३ ॥ ❀ ❀ ननु हरेर्गुणैः सृष्ट्यादिक्रीडायां सत्यामियं चिंता सैव नास्ति निष्क्रियमिति श्रुतेरिति । तत्राह अस्राक्षीदिति । आत्ममायया स्वाधीनया प्रकृत्या भूयः पुनस्तया रजोरूपया अस्राक्षीत् सत्त्वरूपया संस्थापयति तमोरूपया तद्विश्वं प्रत्यभिधास्यति संहरिष्यतीत्यतो गुणक्रियासंसर्गदर्शनान्ममायं संशय इत्यर्थः ॥ ४ ॥ ❀ ❀ इतोऽपि संशयो दुरुत्साद इत्याह देशत इति । देशादिनिमित्तत्वेन स्वतोऽन्यतः परतोऽविलुप्तावबोधात्मा अविनष्टज्ञानस्वरूपो योऽसौ भगवान्सोऽजया प्रकृत्या कथं युज्यते युक्त्या गुणरूपप्रकृतिसंसर्गो न संभवति । दृश्यते तथा तुच्छेनाभ्यपिहितमिति श्रुतेः, अतः संदेह इत्यर्थः । अवस्थातो जाग्रदाद्यवस्थानिमित्तेन ॥ ५ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

इवेति वाक्यालंकारे ॥ १ ॥ ❀ ❀ अथ स्वाभाविकमायाशक्त्या परमेश्वरो विश्वसृष्ट्यादिकं करोति जीवश्च तत्र मुह्यतीत्युक्तं तत्र सन्देहं प्रश्नोत्तराभ्यां परिहरति ब्रह्मन्नित्यादिना । हे ब्रह्मन् ! कथं भगवतश्चिन्मात्रस्य स्वतः स्वरूपशक्त्या भगवतः श्रीमद्वैकुण्ठादिगततादृशैश्वर्यादियुक्तस्य अतएव निर्गुणस्य प्राकृतगुणास्पृष्टस्य तत एव चाविकारिणः तादृक्स्वरूपशक्तिविलासभूतानां क्रियाणामनन्तानामपि सदोदितवरानन्तविधप्रकाशे तस्मिन् नित्यसिद्धत्वात् तत्तत्क्रियाविर्भावकर्त्तुरिव न निर्विकारापत्तिरिति निर्विकारस्य कथं सत्त्वादयः प्राकृतगुणाः कथं वा तदासंगहेतुका स्थापनादयः क्रियाश्च युज्येरन् ततश्च चिन्मात्रवस्तुविरोधादेव ते च ताश्च न युज्यन्ते भगवत्त्वे तु स्वैरचेष्टयापि न युज्येरन्नित्याह लीलया वापीति । अत्राविकारित्वनिर्गुणत्वाभ्यां सह चिन्मात्रत्वं भगवत्त्वं चेत्युभयमपि स्वीकृत्यैव पूर्वपक्षिणा पृष्टम् । ततश्च तस्य चिन्मात्रस्वरूपस्य भवतु भगवत्त्वं तन्मात्रेऽस्माकं न संदेहः, किन्तु तस्य कथमितरगुणादिस्वीकारो युज्यत इत्येव पृच्छयते इति वाक्यार्थः । ततश्च चिन्मात्रत्वे भगवन्मात्रत्वे च तस्य तुच्छा गुणाः क्रियाश्च न सम्भवन्त्येवेति द्विगुणीभूयैव प्रश्नः ॥ २ ॥ ❀ ❀ लीलया वापि कथं युज्येरन्निति । विशदयति । क्रीडायामिति । अधिकारित्वादितत्तदुत्कर्षहीनस्यार्भकस्य चिक्रीडिषारूपः कामस्ताभ्यामन्यस्य क्रीडायामुद्यमे हेतुर्भवति । भगवतस्तु स्वेनात्मस्वरूपवैभवेन च तृप्तस्यात एवान्यतः सदा विवृत्तस्य च कथमसावन्यतः सम्भवेत् ॥ ३ ॥ ❀ ❀ न च तस्य ते गुणास्ताः क्रियाश्च न विद्यन्त इत्यपलपनीयं तथैव प्रसिद्धेरित्याह अस्राक्षीदिति । गुणमय्या त्रैगुण्यव्यञ्जिन्या आत्माश्रितया मायया संस्थापयति पालयति प्रत्यपिधास्यति प्रातिलोम्येन तिरोहितं करिष्यति ॥ ४ ॥ ❀ ❀ जीवस्य कथं मायामोहितत्वं घटेतेत्याक्षेपान्तरमाह देशत इति । योऽसौ देशादिभिरविलुप्तावबोधः आत्मा जीवः स कथमजया अविद्यया युज्यते तत्र देशव्यवधानतो देशगतदोषतो वा चक्षुःप्रकाश इव कालतो विद्युदिव अवस्थातः स्मृतिरिव स्वतः शुक्तिरजतमिव अन्यतः घटादिवस्त्विव न तस्यावबोधो लुप्यते अव्याहतस्वरूपभूतज्ञानाश्रयत्वादेवेत्यर्थः ॥ ५ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

सप्तमे भगवज्जीवगतान्यत्संशयच्छिदाः
भक्तिजिज्ञासयान्येऽपि क्षत्तुः प्रश्नाः प्रकीर्त्तिताः ॥

एवं सा वा एतस्य संद्रष्टुः शक्तिः सदसदात्मिका माया नाम महाभाग ययेदं निर्ममे विभुः । कालवृत्त्या तु मायायां गुणमय्यामधोक्षजः । पुरुषेणात्मभूतेन वीर्यमाधत्त वीर्यवानित्यादि ब्रुवाणं भारत्या ब्रह्मंस्त्वया संसारकूपादुद्धृत एवाहमिति मधुरया वाचा प्रीणयन् इवेति विदुरमनोगताक्षेपस्य सहसैव मैत्रेयेणावगतत्वान्मैत्रेयं प्रीणयितुमशक्नुवन्नित्यर्थः ॥ १ ॥ ❀ ❀ चिन्मात्रस्य गुणाः सत्त्वादयः क्रियाः सृष्ट्यादयश्च कथम् । अत्र चिद्रूपस्य चिन्मयस्येत्यादिकमप्रयुज्य चिन्मात्रस्येत्यवधारण-वाचिमात्रशब्दप्रयोगादचिद्गन्धस्यापि तत्र राहित्यं बोधितं ततश्च सा वा एतस्येत्यनेन सत्त्वादिगुणमय्या मायाया भगव-च्छक्तित्वेनोक्तत्वाच्छक्तेश्च स्वभिन्नत्वासम्भवात् वस्तुतो गुणास्तदीया एवेति तस्य चिन्मात्रत्वे कथं सत्वादिजड-गुणवत्त्वं सत्त्वादिजडगुणवत्त्वे च कथं चिन्मात्रत्वमित्याक्षेप एकः । तथा विकारो हि कालहेतुको गुणधर्म एवेति, तस्य तु चिन्मात्रत्वादेवाविकारित्वे कथं विकारव्यञ्जकक्रियावत्त्वं क्रियावत्त्वे च कथमविकारित्वमिति द्वितीयः । नन्वेवम-सम्भवन्तोऽपि गुणाः क्रियाश्च तस्य स्वैरलीलत्वात् सम्भवेयुस्तत्राह लीलया वेति । न हि लीलयेत्युक्त्या विरोधः परिहर्त्तुं शक्यते । तस्य तादृशलीलत्वे गुणवत्त्वस्य दुष्परिहरत्वादिति भावः । अत्र भगवत इति विशेष्यं भगवानेक आसेदमिति पूर्वोक्तेः । सेयं भगवतो मायेत्युपरिष्टादुक्तेश्च भगवतः कथम्भूतस्य चिन्मात्रस्य । न च भगवानेव चिन्मात्रो नतु भग इति वाच्यं यतो भगस्यापि भगवत्त्वमप्राकृतत्वञ्च विष्णुपुराणे दृष्टम् । यथा 'ज्ञानशक्तिबलैश्वर्य्यवीर्यतेजांस्यशेषतः । भगवच्छब्द-वाच्यानि विना हेयैर्गुणादिभिरि' त्यत एव देहदेहिविभागोऽत्र नेश्वरे विद्यते क्वचिदित्युक्तमत एव भगशब्दवाच्यानां षडैश्वर्य्याणा-मपि चिन्मात्रत्वमेव न तु सत्त्वादिगुणपरिणामत्वमिति भगवत्त्वं स्वरूपलक्षणमेव भगवत्वस्य मायिकत्त्वात् तटस्थलक्षणत्वमिति व्याचक्षाणा भ्रान्ता एव । इन्द्रस्य मायेयमिति इन्द्रो मायया वृषभो भवतीत्युक्ते इन्द्रस्य वृषरूपत्वमेव स्वमायाकृतं प्रतीयेत नत्वि-न्द्रत्वं यथा तथैव सेयं भगवतो मायेति भगवानेव मायया विश्वं भवतीत्युक्त्या भगवतो विश्वरूपत्वमेव मायिकं स्यान्नतु भगवत्त्वमिति युक्तेश्च ॥ २ ॥ ❀ ❀ किञ्च लीलयेत्युक्त्या विरोधपरिहारो मास्तु लीलैव तावदीश्वरे हेत्वभावान्न घटत इति सदृष्टान्तमाह क्रीडायामिति । उद्यमयति प्रवर्त्तयतीत्युद्यमः काम एवार्भकस्य स्वाभाविकः क्रीडायां प्रवृत्तिहेतुरस्ति । तथा अन्यतो बालान्तरप्रवर्त्तनेनापि चिक्रीडिषास्ति परमेश्वरस्य स्वात्मारामत्वात् कथं कामः ईश्वरान्तराभावात् । कथमन्यतश्चिक्रीडि-षेत्याह स्वतस्तृप्तस्येत्यादि अन्यतो निवृत्तस्य अन्यरहितस्य ॥ ३ ॥ ❀ ❀ नच तस्य ते गुणाः क्रियाश्च न सन्तीत्यपल-पनीयं तथैव प्रसिद्धेरित्याह अस्राक्षीदिति । प्रत्यपिधास्यति प्रातिलोम्येन तिरोहितं करिष्यति ॥ ४ ॥ ❀ ❀ जीवस्य च कथं मायामोहितत्वं घटेतेत्याक्षेपान्तरमाह देशत इति । योऽसौ नित्यज्ञानत्वात् देशादिभिरविलुप्तावबोध आत्मा जीवः स कथमजया अविद्यया युज्येत अजायोगेऽथस्तस्यावबोधलोपः कथं स्यादित्यर्थः । तत्र देशत ऊषरदेशत उप्तं बीजमिव कालतो विद्युदिव अवस्थातः स्मृतिरिव स्वतः स्वप्न इव अन्यतो घटादिरिव यस्य चिद्वस्तुत्वादवबोधो न लुप्तो भवितुमर्हति स कथमविद्यया विलुप्तविबोधः क्रियत इत्यर्थः ॥ ५ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

सप्तमे विदुरकृत आक्षेपस्तत्परिहारः पुनः विदुरकृताः प्रश्नाश्च निरूप्यन्ते एवमिति । अथ ते भगवल्लीलायोगमायोपबृंहिताः । विश्वस्थित्युद्भवांतार्था वर्णयाम्यनुपूर्वशः । भगवानेक आसेदमग्र आत्मात्मनां विभुः । स वा एष तदा द्रष्टाद्नापश्यद्दृश्यमेकराट् । मेने संतमिवात्मानं सुप्तशक्तिरसुप्तदृक् । सा वा एतस्य संद्रष्टुः शक्तिः सदसदात्मिका । माया नाम महाभाग ययेदं निर्ममे विभुरित्येवं ब्रुवाणं भारत्या प्रीणयन्निव प्रसन्नीकुर्वन्निव प्रत्यभाषत । इवशब्दः बहुभिर्विदुरगुणैः पूर्वमेव तत्प्रसन्नतां द्योतयति ॥ १ ॥ ❀ ❀ हे ब्रह्मन् ! चिन्मात्रस्याचिद्रूपा मात्राज्ञातृत्त्वशक्तिर्यस्य तस्य सर्वप्रवृत्तिनिमित्ताभिन्नस्य हेयगुणरहितस्य अविकारिणः अनया लीलयैव सुखी स्यामित्येवं विकारशून्यस्य उभयत्र हेतुगर्भं विशेषणं भगवतः स्वाभाविकषाड्गुण्यसिन्धोः लीलया हेतुभूतया लीलार्थ-मित्यर्थः । गुणाः विश्वकर्तृत्त्वादयः क्रिया विश्वसृष्ट्यादिव्यापाराश्च कथं युज्येरन् युक्ताः स्युरित्यर्थः ॥ २ ॥ ❀ ❀ ननु को दोष इत्यत्राह क्रीडायामिति । अर्भस्य बालस्य क्रीडायाम् उद्यमयति नियोजयतीति प्रवृत्तिनिमित्तं कामः अन्यतः बालांतरेण चिक्रीडिषा क्रीडेच्छा चास्ति स्वतस्तृप्तस्य पूर्णकामस्य अन्यतः सजातेर्विजातेश्च सदा निवृत्तस्य सजातीयविजातीयभेदशून्यस्य कामः चिक्रीडिषा च कथं स्यान्न कथमपीत्यर्थः । अथ ते भगवल्लीलेत्यादिना एक एव भगवान् लीलया विश्वसृष्ट्यादि करोतीति तव वाक्यं कथं घटेत ? लीलाप्रवृत्तिनिमित्तासंभवादित्याक्षेपः ॥ ३ ॥ ❀ ❀ स वा एतस्य संद्रष्टुः शक्तिः सदसदात्मिका । माया नाम महाभाग ययेदं निर्ममे विभुरित्यपि त्वद्वाक्यं ब्रह्मकारणवादे कथं घटतेत्याक्षिपति अस्राक्षीदिति द्वाभ्याम् ॥ ४ ॥ ❀ ❀ देशादिभिः

अविलुप्तावबोधः अनावृतज्ञानः आत्मा स्वरूपं यस्य सः अजया मायया विश्वसृष्ट्यादौ सहायभूतया कथं युज्येत मायाया अपि जगद्धेतुप्रसंगात् भगवतो जगत्कर्तृत्वस्य परायत्तत्वप्रसंगाच्च भगवानेक आसेदमित्येकत्वविरोधाच्च प्रधानं जगत्कारणं स्यादिति भावः ॥ ५ ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

हरेरिन्द्रियवर्गस्य मनसः सर्ग उच्यते। संकल्पेन विकल्पेन द्विधा 'तद्विनिरूप्यते ॥ १ ॥
संकल्पो निश्चयः प्रोक्तः स च सन्देहपूर्वकः। अन्यथा ज्ञानमेव स्यात् तदर्थं प्रथमो द्विधा ॥ २ ॥
विकल्पो विविधः पक्षस्ते प्रश्ना इह रूपिताः। अत्र सर्वाणि कार्याणि पृष्टानि भगवत्कृतिम्।
ज्ञातुम्, सा मनसा भाव्या पूर्वं चाऽपि कृतौ मनः ॥ ३ ॥

एवं पूर्वाध्यायान्ते 'उद्धृत्य पुष्पेभ्यः' इति प्रश्ने स्वबुद्ध्या यावदुद्धृतं तावन्निरूपितम्, तत्र 'यस्त्वयं चाऽऽत्मवत्स्मात्मा न वेद' इति वचनात् भगवतोऽलौकिकं सामर्थ्यं प्रायेणाऽस्याऽनभिप्रेतमिति, तदभिप्रायेण जीवे भगवति च सन्दिग्धमर्थद्वयं पृच्छति। तत्र प्रथमं भगवति सन्देहचतुष्टयम्, जीवे च द्वयं पृच्छति—ब्रह्मन्निति। करणादिव्यापारास्त्वया एकविधा निरूपिताः, ते च गुणातीता एवेति वक्तुं न शक्यन्ते। सगुणाश्चेत् कार्यकारणवैलक्षण्यम्। ब्रह्मन्निति संबोधनं ज्ञानस्य निश्चिततत्व एव ब्रह्मभावो भवतीति। तव निश्चितमेव, किन्तु बोधनार्थं पृच्छ्यत इत्यौद्धत्यसमाधानम्। कथमिति प्रकारे प्रश्नः। भगवतश्चिन्मात्रस्येति। भगवच्छब्दो न यौगिकः, किन्तु रूढ्या ब्रह्मपरः। तच्च चिन्मात्रमेवेति धर्मशक्तिविशेषस्वरूपाणामभावात्, वाच्यवाचकसंबन्धाद्यभावात्, अनिरूप्यत्वाच्च कथं तादृशस्य जगत्कर्तृत्वम्। कर्तृत्वादयश्च धर्मा विकृता विकारिणो भवन्ति। अतोऽविकारिणो भगवतः प्रयोजनसन्देहपूर्वपक्षाभावेऽपि, निर्गुणस्य गुणाः क्रियाः कथं भवन्तीति बीजसन्देहप्रश्नः। कार्यं हि बीजप्रयोजनाभ्यां विना न भवति। तत्र प्रयोजनं परमानन्दस्य जगति नाऽस्त्येव। 'लोकवत्तु लीला···' इति न्यायेन प्रयोजनाभावेऽपि लीलया करिष्यतीति चेल्लीलाऽपि न संभविष्यतीत्यग्रे वक्ष्यते। अस्तु वा लीला, तथापि जगतो बीजं न भगवान्, विलक्षणत्वात्। जगदचेतनं विकारि नानारूपं च, भगवांस्तु चिन्मात्रमविकारि च। किञ्च, जगत्सगुणम्, भगवान्निर्गुणः; अतः कार्यकारणवैलक्षण्यात् न भगवत्कार्यं जगत्। यद्यपि चिन्तामणेः सकाशात्तद्विलक्षणं सकलमेव कार्यमुत्पद्यते, तथापि पूर्वपक्षिणः पक्षे न चिन्तामणिमात्रात् कार्यमुत्पद्यते, अन्यथा सर्वदैवो'त्पद्येत। किन्तु कामयितुः सन्निधाने यथा यथा चिन्तोपपद्यते, घटाकारेण पटाकारेण च[३]; तथा तथा मणिसान्निध्यात् ते पदार्था मनसा भाविताः का[४]यकृता इव भवन्ति। इयमलौकिकी तस्य शक्तिः। भगवतस्तु द्वितीयसान्निध्याभावान्नाऽनेनाऽपि प्रकारेण कार्योत्पत्तिः सम्भाविता। तदाह—चिन्मात्रस्येति ॥ १ ॥ ❀ ❀ एवं बीजभावं दूषयित्वा फलभावापन्नां लीलां दूषयति—क्रीडायामिति। लीला नाम विलासेच्छा, कार्यव्यतिरेकेणैव कृतिमात्रम्। न तया कृत्या बहिः कार्यं जन्यते, जनितमपि कार्यं नाऽभिप्रेतम्; नाऽपि कर्तरि प्रयासं जनयति, किन्त्वन्तःकरणे पूर्णे आनन्दे तदुल्लासेन कार्यजननसदृशी क्रिया काचिदुत्पद्यते, यथा लोके राज्ञः। सा लीला। साऽपि नोपपद्यते। तत्र प्रयोजनाभावेऽपि हेतुरस्ति। स च हेतुर्लोकसिद्ध एव वक्तव्यः, लोकन्यायेन लीलानिरूपणात्। सा च लीला बाले प्रसिद्धा। बालस्याऽपि कामेनैव चिक्रीडिषा भवति, अन्यथा सर्वदैव क्रीडितुमिच्छा स्यात्। कामोऽपि सहेतुकः, अन्यथा सर्वदा स्यात्। तदाह—अर्भस्य क्रीडायामुद्यमः प्रथमतो भवति। स चाऽर्भस्य प्रथमं कामात्। तत्रैवं वाक्यरचना—प्रथमतोऽर्भस्य कामो वासनया, 'काममय एवाऽयं पुरुषः' इति श्रुतेः। तदनन्तरं चिक्रीडिषा क्रीडितुमिच्छा अन्यतश्च भवति; अन्यं बालकं निमित्तमाश्रित्य, एकस्य क्रीडाऽसम्भवात्। तदभावे कामेऽपि क्रीडेच्छा निवर्त्तेत इति। कामोऽत्र क्रीडाज्ञानम्। क्रीडायाः फलरूपत्वात् साधनरूपत्वाच्च कामप्रयत्नयोरेकविषयत्वम्। यत्र पुनः स्वर्गादौ साधनफलयोर्भेदः, तत्र कामः स्वर्गे, चिकीर्षा यागे। अतोऽत्र न पौनरुक्त्यम्। तदनन्तरं क्रीडायामुद्यमो भवति, क्रीडां कर्तुमुद्युक्तो भवतीत्यर्थः। केचित्तु, 'कामस्यैव विशेषणमुद्यमं वदन्ति। उद्यमयतीत्युद्यमः, काम एव पुरुषमुद्यमयति अन्यतश्चिक्रीडिषा भवति' इति। तच्चिन्त्यम्। एतादृशोऽपि पक्षो भगवति न सम्भवति। स्वतृप्तस्य कामो न सम्भवति। कामो ह्यपूर्णस्यैव, अन्यथा फले जातेऽपि कामः स्यात्। स्वस्यैव सर्वफलरूपत्वात् प्राप्तत्वाच्च तृप्तस्य कामाभावो लोकसिद्धः। प्रकारभेदेनैव कामतृप्तिश्चेदतृप्तो भगवान् स्यात्। ततश्च स्वार्थमेव कुर्यात्। एतादृशी तृप्तिरदूषणमिति चेत् स्वानन्दस्य परिच्छेदः स्यात्। तस्माद्युक्त्या कामो निरूपयितुमशक्य इति 'सोऽकामयत' इति श्रुतिरन्यपरा भवति। नित्यश्चेत् कामः स्यात्, सर्वदैव कार्यं भवेत्। कार्यपक्षे तु तज्जनकान्तराभावादनुपत्तिरापद्ये[४]त। कालादिना तदुद्बोधपक्षेऽपि भगवतः कालादिसंबन्धो भवेत्। स च नास्तीत्याह—निवृत्तस्य सदाऽन्यत इति। अन्यसंबन्धाभावस्तस्य सर्वदा; अतो बीजप्रयोजनाभावात् भगवतः कार्यपक्षोऽनुपपन्नः ॥ २ ॥ ❀ ❀ किञ्च, मायायां स्वीकृतायां यद्यपि पूर्वोक्तसर्वदूषणनिवृत्तिर्भवति, किन्तु तदेव

---

१. तद्वि ग. एवकारो न दृश्यते ख. ग. घ.। २. वा घ.। ३. कार्यकृताः क. घ. ङ.। ४. प्रत्यभिधास्यति ख. घ. च.।

स्वीकर्तुमशक्यम्, भगवतो मायासंबन्धस्य निरूपयितुमशक्यत्वात्। माया ह्यज्ञानात्मा, सा ज्ञानाभावे भवति। भगवतस्तु ज्ञानाभावो न सम्भवतीत्याह श्लोकद्वयेन—अस्राक्षीदिति। चित्संबन्धिनीमेव मायां मन्यमानस्यैष प्रश्नः। भगवानिदं विश्वं गुणमयाऽऽत्ममायया अस्राक्षीत्, तयैव च संस्थापयति, तयैव च भूयः प्रत्यापिधास्यति संहरिष्यति ॥ ३ ॥ ❀ ❀ एवं माययोत्पत्तिस्थितिप्रलया विश्वस्य भगवत्कृता इति पक्षमनूद्य, मायासंबन्ध एव तस्य न घटते, पूर्णज्ञानत्वादित्याह—देशत इति। ज्ञानस्य नाशः पञ्चधा सम्भवति। भगवांस्तु पञ्चप्रकारेणाऽप्यविलुप्तावबोधात्मा। न विलुप्तोऽवबोधो ज्ञानं यस्य, तादृशश्चासावात्मा च। बोध एवाऽऽत्मा वा। स कथमजया युज्यत? तत्र कस्यचिद्बोधो देशेन नश्यति, घटज्ञानं घटेन परिच्छिन्नं पटं न विषयीकरोतीति देशतस्तस्याऽभावः। कालतोऽपि ज्ञानस्य नाशः, कालान्तरे विस्मरणात्। अवस्थातोऽपि नाशः, स्वप्ने जाग्रदवस्थावस्तूनां ज्ञानाभावात्। स्वतोऽपि नाशः, उदासीनज्ञानानां संस्कारानाधायकत्वात्। अन्यतोऽपि नाशः, विरोधिगुणप्रादुर्भावात्। भगवतस्तु ज्ञानं पञ्चविधैरपि दोषैरसंबद्धम्। तत्र सर्वविषयकत्वान्न देशतः परिच्छिन्नम्, नित्यत्वान्न कालतः, भगवतोवस्थाभावान्नाऽवस्थातः, निर्विषयकत्वान्न स्वतः, भगवतो विरोधिगुणाभावान्नाऽन्यतः। अतोऽजया मायया प्रकृत्या वा न युज्येत। तस्मात्स्वतो वा, मायासंबन्धेन वा, भगवतो जगत्कर्तृत्वं नोपपद्यते। किञ्च, जीवोऽपि भगवानेव त्वया निरूपितः तथा सति तदर्थं जगत्सृष्टौ हिताकरणादिदोषः ॥ ४ ॥ ❀ ❀ भगवानिति। एक एव भगवान् सर्वक्षेत्रेषु सर्वदेहेषु अवस्थितः। सर्वदेहेष्ववस्थित एक एवेति वा। एतादृशस्य दुर्भगत्वं वा, जन्मभिः क्लेशो वा न भवेत्। अनुभवसिद्धत्वाच्च क्लेशस्य। अज्ञानतोऽङ्गीकारेऽपि स एव दोषः। पुनः पुनर्जन्मानि च श्रूयन्ते। तस्माद्भगवतो जीवभावोऽप्यनुपपन्नः, जगत्कर्तृत्वं चाऽनुपपन्नमिति ॥ ५ ॥

## श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

अथ सप्तमाध्यायं विवरिषवोऽवसररूपां सङ्गतिं स्मारयन्तोऽर्थमाहुः—हरेरित्याहि। तेन मनोद्वारा सर्वेन्द्रियनिरूपणमध्यायार्थः। ननु द्विधा तन्निरूपणस्य किं प्रयोजनमित्याकाङ्क्षायामाहुः—सङ्कल्प इत्यादि। अन्यथेति। सङ्कल्पस्य तादृशत्वाभावे। तथा च, यतस्तत् स्वरूपं 'यत्संकल्पविकल्पाभ्यां वर्तते कामसंभवः' इतिलक्षणकमुभयघटितम्, अतः प्रथमो मनोरूपपदार्थो द्विधा निरूप्यत इत्यर्थः। नन्वत्र प्रश्नकथनेन कथं विकल्पबोध इत्यत आहुः—विकल्प इत्यादि। एवं शास्त्ररीत्याऽर्थमुक्त्वा विदुरमैत्रेयसंवादे प्रश्नसङ्गतिं प्रदर्शयन्ति—अत्रेत्यादि। तथा चोपोद्घातः सङ्गतिरित्यर्थः।

'एवं ब्रुवाणम्' इति श्लोकः प्रायेण क्षेपक इति प्रतिभाति।

ब्रह्मन्नित्यत्र। अस्येति। मैत्रेयस्य। तदभिप्रायेणेति। मैत्रेयाभिप्रायेण। करणादिव्यापारा इत्यादि। वक्तव्यप्रतिपत्तिप्रभृतयस्ते व्यापाराः सर्वेऽपि देवतेन्द्रियगोलकसाध्यत्वेन लोकतुल्या निरूपिता इत्यर्थः। धर्मेत्यादि। धर्मोऽसत्त्वेनेव स्वमाननम्, शक्तिर्माया कालादिरूपा, विशेषो व्यावर्तको रूपादिः, स्वरूपं विग्रहः सन्निवेशस्तेषामभावात्। वाच्येत्यादि। द्रव्यजातिगुणक्रियासम्बन्धे हि शब्दस्य बोधनार्थं प्रवृत्तिः, ब्रह्मणि तु शब्दसम्बन्ध ( य ) घटकानां तेषामभावेन वाच्यवाचकयोरर्थशब्दयोः परस्परसम्बन्धस्य, आदिपदेनोच्चारणद्वारकस्याभावाद्धेतोः शब्दकर्तृत्वेनाऽप्यनिरूप्यत्वात्। बीजप्रयोजनाभ्यामिति। बीजं समवायि, प्रयोजनं कर्त्रभिप्रेतं फलम्, ताभ्यामित्यर्थः। मात्रस्येति एवं चाऽनेन पद्येन समवायित्वमलौकिकी कर्तृत्वशक्तिश्चाऽऽक्षिप्ता ज्ञेया ॥१॥ ❀ ❀ क्रीडायामित्यत्र। फलभावापन्नामिति। लीलयैव सृष्टिप्रकरणप्रयोजनमिति तद्भावापन्नाम्। कामस्याऽभिलाषात्मकत्वेनेच्छारूपत्वाच्चिक्रीडिषापदं पुनरुक्तं स्यादिति तन्निवृत्त्यर्थमाहुः—कामोऽत्रेत्यादि। अत्र श्रीधरमतमनुवदन्ति—केचिदित्यादि। तत्राऽस्वरसं बोधयन्ति—तच्चिन्त्यमिति। अभिध्योपदेशसूत्रे कामोऽभिध्यात्मको व्यासपादैरङ्गीकृतः। अभिध्या च—इदमेवं कार्यमित्यध्यवसायरूपं ज्ञानम्। तदत्र क्रीडाविषयकं व्याख्यातुमुचितम्। उद्यमशब्दश्च प्रलये रूढः। तदुभयं विहायैवं योगादरणं नोचितम्, व्यासाशयविरोधादित्यर्थः। एतादृशोऽपि पक्ष इति। अभिध्यारूपकामात्मकः पक्षः। काम इति। उक्तविधोपि कामः। फल इति। क्रीडारूपे फले। अन्यपरेति। जीवपरा, शबलपरा वा। कार्यपक्ष इति। जन्यकामपक्षे ॥ २ ॥ ❀ ❀ देशत इत्यत्र। विरोधिगुणप्रादुर्भावादिति। भिन्नविषयकेच्छाप्रलयादयः सुखदुःखादयो विरोधिगुणाः, तत्प्राकट्यात्। नित्यत्वेन सर्वविषयकत्वेन चाऽलोपसिद्धावपि यत् 'अवस्थातः' इत्यादिकं हेतुत्रयमुक्तम्, तत्स्वरूपपरिचायनार्थमित्याशयेनाहुः—भगवत इत्यादि। निर्विषयकत्वादिति। विषयस्य मायिकत्वाद्वस्तुतोऽभावेन तथात्वात्। विरोधिगुणाभावादिति। निर्गुणत्वेन नित्यसर्वविषयकत्वेन गुणाभावे च सति तदभावात्। एवं चतुर्भिर्भगवद्विषयकं सन्देहचतुष्टयमुक्तम्—निर्गुणत्वाद् गुणाः कथम्? अविकारित्वात् क्रियाः कथम्? स्वतस्तृप्तस्य कामोऽभिध्यारूपः कथम्? केवलस्य चिक्रीडिषा कथम्? चतुर्णां मूलं मायासम्बन्धश्चेत्, स एव कथमिति पञ्चधा पर्यवस्यति। षष्ठमाहुः—किञ्चेत्यादि ॥ ४ ॥ ❀ ❀ भगवानित्यत्र। स एवेति। अज्ञानसम्बन्ध एव ॥५॥

## श्रीगिरिधरकृता बालप्रबोधिनी।

सप्तमे तु मुनेस्तस्य प्रतिनन्द्य वचः सुधीः। विदुरः कृतवान्नानाप्रश्नानिति निरूप्यते ॥

'अथ ते भगवल्लीलायोगमायोपबृंहिताः' इत्यादिना मायागुणैर्लीलयैव भगवान् सृष्ट्यादि करोतीत्येवं ब्रुवाणं मैत्रेयं भारत्या प्रार्थनारूपया गिरा प्रीणयन् इव प्रीतिं जनयन्नेव विदुरः प्रत्यभाषतेत्यन्वयः। एवं प्रश्नेऽपि स एव समर्थ इति सूचयन्नाह—बुध

इति । तत्र हेतुमाह—द्वैपायनसुत इति, यतो व्यासपुत्र इत्यर्थः ॥ १ ॥ ❀ ❀ तद्वापणमेव दर्शयति—ब्रह्मन्निति षड्भिः। ब्रह्मन्निति सम्बोधनेन मया स्वानवबोधादेवैवं पृच्छ्यते, न तु बुद्ध्वाप्यभिमानादाक्षिप्य इति सर्वज्ञस्य तव विदितमेवातः कोपो न कार्य इति सूचयति । भगवतः निर्गुणस्य प्राकृत गुणरहितस्य गुणाः अविकारिणः जन्मादिविकाररहितस्य क्रियाः जन्माद्यश्च लीलयाऽपि कथं युज्येरन् ? विरोधात् । लीलयेत्युक्तिस्तु प्रयोजनाभावशङ्कां परिहरति, न वस्तुविरोधमिति भावः । अविकारित्वे निर्गुणत्वे च हेतुमाह–चिन्मात्रस्येति ॥२॥ ❀ ❀अर्भकवल्लीलाऽपि न युज्यते वैषम्यादित्याह–क्रीडायामिति। अर्भस्य बालस्य क्रीडायामुद्यमयति प्रवर्त्तयतीत्युद्यमः प्रवृत्तिहेतुः कामोऽस्ति, अन्यतो वस्त्वन्तरेण बालान्तरप्रवर्त्तनेन वा तस्य चिक्रीडिषा क्रीडेच्छा च भवति । अतः क्रीडा सभम्वति । भगवतस्तु स्वतः परमानन्दस्वरूपलाभादेव तृप्तस्य कामो न सम्भवति । तथा सदा निरन्तरमन्यतो निवृत्तस्यासङ्गाद्वितीयस्य चिक्रीडिषा च न सम्भवति । अतः कथं क्रीडा सम्भवेत् ? ॥३॥ ❀ ❀ एवं भगवद्विषयकं सन्दिग्धं पृष्ट्वा जीवविषयकमपि तत्प्रष्टुं 'अथ ते भगवल्लीलायोगमायोपबृंहिताः। विश्वस्थित्युद्भवान्तार्था वर्णयाम्यनुपूर्वशः' इत्युक्तमनुवदति—अस्राक्षीदिति । गुणमय्या सत्त्वादित्रिगुणप्रचुरया आत्ममायया स्वशक्त्या भगवान् विश्वमस्राक्षीत् सृष्टवान् । तयैवैतद्विश्वं संस्थापयति पालयति । तयैव भूयः पुनः प्रत्यपिधास्यति प्रातिलोम्येन तिरोहितं करिष्यति । प्रत्यभिधास्यतीति पाठे प्रातिलोम्येनात्मनि धारयिष्यतीत्यर्थः ॥ ४ ॥ ❀ ❀ एतत्सर्वं जीवस्याविद्यासम्बन्धेन घटेत, तदेव तु न सम्भवतीत्याह—देशत इति । योऽसौ देशादिभिरविलुप्तावबोध आत्मा जीवो ब्रह्मांशत्वात् स अजया अविद्यया कथं युज्येत ? इत्यन्वयः । तत्र देशतो दीपप्रभावल्लोपो नास्ति सर्वगतत्वात् , न कालतो विद्युत इव नित्यत्वात् , नावस्थातः स्मृतिवत् अविक्रियत्वात् , न स्वतः स्वप्नवत्सत्यत्वात् , नान्यतो घटादिवत् अद्वितीयत्वात् ॥ ५ ॥

### हिन्दी अनुवाद

### विदुरजीके प्रश्न

श्रीशुकदेवजी कहते हैं—मैत्रेयजीका यह भाषण सुनकर बुद्धिमान् व्यासनन्दन विदुरजीने उन्हें अपनी वाणीसे प्रसन्न करते हुए कहा ॥ १ ॥ ❀ ❀ विदुरजीने पूछा—ब्रह्मन् ! भगवान् तो शुद्ध-बोधस्वरूप, निर्विकार और निर्गुण हैं; उनके साथ लीलासे भी गुण और क्रियाका सम्बन्ध कैसे हो सकता है ? ॥ २ ॥ ❀ ❀ बालकमें तो कामना और दूसरोंके साथ खेलनेकी इच्छा रहती है, इसीसे वह खेलनेके लिये प्रयत्न करता है; किन्तु भगवान् तो स्वतः नित्यतृप्त—पूर्णकाम और सर्वदा असङ्ग हैं, वे क्रीडाके लिये भी क्यों सङ्कल्प करेंगे ॥ ३ ॥ ❀ ❀ भगवान्ने अपनी गुणमयी मायासे जगत्की रचना की है, उसीसे वे इसका पालन करते हैं और फिर उसीसे संहार भी करेंगे ॥४॥ ❀ ❀ जिनके ज्ञानका देश, काल अथवा अवस्थासे, अपने-आप या किसी दूसरे निमित्तसे भी कभी लोप नहीं होता, उनका मायाके साथ किस प्रकार संयोग हो सकता है ॥ ५ ॥

**भगवानेक एवैष सर्वक्षेत्रेष्ववस्थितः । अमुष्य दुर्भगत्वं वा क्लेशो वा कर्मभिः कुतः ॥ ६ ॥**
**एतस्मिन्मे मनो विद्वन् खिद्यतेऽज्ञानसङ्कटे । तन्नः पराणुद विभो कश्मलं मानसं महत् ॥ ७ ॥**

**श्रीशुक उवाच**

**स इत्थं चोदितः क्षत्त्रा तत्त्वजिज्ञासुना मुनिः । प्रत्याह भगवच्चित्तः स्मयन्निव गतस्मयः ॥ ८ ॥**

**मैत्रेय उवाच**

**सेयं भगवतो माया यन्नयेन विरुध्यते । ईश्वरस्य विमुक्तस्य कार्पण्यमुत बन्धनम् ॥ ९ ॥**
**'यदर्थेन विनामुष्य पुंस आत्मविपर्ययः । प्रतीयत उपद्रष्टुः स्वशिरश्छेदनादिकः ॥ १० ॥**

### श्रीधरस्वामिविरचिता भावार्थदीपिका ।

किंच ब्रह्मरूपत्वादेव जीवस्य संसारोऽपि न विद्यत इत्याक्षिपति । सर्वक्षेत्रेष्वस्थितो भोक्ताऽपि वस्तुतो भगवानेव चिद्रूपत्वेन तद्व्यतिरेकाभावात् । एवं च सत्यमुष्य जीवस्य दुर्भगत्वमानंदादिभ्रंशः कर्मभिर्हेभूतैः क्लेशो वा कुतः कर्मसंबंधाभावात् । अन्यथा ईश्वरस्यापि तत्प्रसंगः स्यादिति भावः ॥ ६ ॥ ❀ ❀ अज्ञानमेव संकटं दुर्गं तस्मिन् तन्मानसं कश्मलं मोहं पराणुदापाकुरु ॥ ७ ॥ ❀ ❀ चोदित आक्षिप्तः । स्मयन्निव प्रौढिमाविष्कुर्वन्निव । वस्तुतस्तु गतस्मयः ॥ ८ ॥ ❀ ❀ भगवतोऽचिंत्यशक्तेरीश्वरस्य सेयं माया नयेन तर्केण विरुद्ध्यत इति यत् तर्कविरोधमेवानुवदति । विमुक्तस्यैव पुंसोऽविद्यया बंधनं कार्पण्यं चेति ॥ ९ ॥ ❀ ❀ अत्रोदाहरणमाह । यद्यथा अर्थेन शिरश्छेदादिना विनाऽप्युपद्रष्टुः स्वप्नसाक्षिणो ममेदं शिरश्छिन्नमित्यात्मविपर्ययः केवलं मृषैव प्रतीयते तद्वत् ॥ १० ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः ।

आक्षेपांतरमाह किं चेति । "ब्रह्मैवायमात्मा" इति श्रुतेर्जीवस्यापि ब्रह्मत्वान्न संसारो घटत इति भोक्ता जीवोपि "कर्त्ता भोक्ताहमेवास्मि देहेस्मिन्भरतर्षभ" इति गीतोक्तेर्भगवानेवेति व्यतिरेको भेदः । 'नादत्ते कस्यचित्पापं न चैव सुकृतं विभुः'

---

२. प्रा॰ पा॰—यदर्थमात्मनाम्॰ ।

इत्युक्तेः कर्मसंबंधाभावात्। अन्यथा जीवस्य संसारस्वीकारे इति भाव इति चिद्रूपत्वाविशेषाज्जीववत्। "समानं वृक्षं परिषस्वजाते" इति श्रुतेः। समानाधिकरणत्वादीश्वरस्य संसारः कथं न भवेदिति तात्पर्यम्॥ ६॥ ७॥ ❀ ❀ प्रौढिराधिक्यं विस्मयं प्रकटयन्निवेत्यर्थः। अनुपदमेव गतस्मयोक्तेरिवोपादानम्। गतस्मयत्वे हेतुः भगवच्चित्त इति। अचिंत्यैश्वर्ये भगवति सर्वं संपद्यत इति ज्ञानवानित्यर्थः॥ ८॥ ❀ ❀ ईश्वरस्य कार्पण्यं विमुक्तस्य बंधनं चेति वदतो व्याघातत्वाद्विरोधः, परं तु मायाया अघटितघटनापटीयस्या नैतदयुक्तमिति॥ ९॥ ❀ ❀ अत्राविद्यमानप्रतीतौ अर्थेन सत्येन कारणेन वा मृषैवेति न हि स्वशिरश्छेदः स्वेनानुभवितुमेकाधिकरणे शक्यः। स्वस्य स्वस्कंधारोहणवत्तद्वन्मृषैव स्वरूपाज्ञानकृतं बंधनकार्पण्यादीत्यर्थः। अन्यगतमपि शिरश्छेदादिकं यथा स्वप्नमायया स्वस्मिन्नारोपयति तथात्मा ज्ञानगतं बंधकार्पण्यादिकं स्वस्मिन्नारोपयति भगवन्माययेति भावः॥१०॥

## श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

भगवानेव ब्रह्मैव एवं सति वस्तुतो ब्रह्मत्वे सति अन्यथा वस्तुतोऽनह्मत्वेऽपि दुर्भगत्वादिसत्त्वतत्प्रसंगः दुर्भगत्त्वादिप्रसंगः॥ ६॥ ७॥ ❀ ❀ प्रौढिमुत्तरदाने प्रागल्भ्यम्। गतस्मयः विगतगर्वः॥ ८॥ ❀ ❀ तर्केण विचारेण विरुद्ध्यते विचारातीता अतर्क्येत्यर्थः। पुंसो जीवस्य यद्यया मायथैव अविद्यया स्ववृत्त्या बंधनं गुणमयजालप्रवेशः कार्पण्यं स्वरूपज्ञानतिरोभावश्चासन्नपि प्रतीयते सेयं भगवतो मायेत्यन्वयः। अत्राचिन्त्यस्वरूपशक्तेर्भगवतो मायेत्युक्त्या स्वरूपशक्तेरंतरंगत्वाद्बहिरङ्गाया मायाया गुणैः सत्त्वादिभिस्तत्कार्यसृष्ट्यादिक्रियाभिश्च नासौ स्पृश्यते इति निर्गुणत्वं निर्विकारत्त्वं च न विरुद्धं नियामकतया गुणयोगः संकल्पमात्रणैव सृष्ट्यादिक्रियाभिश्च न विरुद्धा इति ब्रह्मन्कथं भगवत इत्यस्याप्युत्तरमनुसन्धेयम्॥ ९॥ ❀ ❀ अत्र असतोऽपि बंधादेः प्रतीतौ आत्मविपर्य्ययः॥ १०॥

## श्रीमद्वीरराघवव्याख्या

एवं जीवशरीरकत्वे तद्गतक्लेशाद्यनाश्रयत्वमर्द्धेनाशंक्य परिहरति भगवानिति। एष भगवानेकः सर्वक्षेत्रेषु समस्तशरीरेष्ववस्थितः जीवांतरात्मतयाऽवस्थितः अंतः प्रविष्टः शास्ता जनानां 'य आत्मनि तिष्ठन्नात्मनोंतर' इत्यादिश्रुतिः अतोऽदुःखी तं संसारित्वादयो गुणकार्यभूताः न परमात्मानं स्पृशंतीति चेत्तत्राह अमुष्येति। भगवतः दुर्भगत्वं कर्मभिः क्लेशो वा कुतः स्यादित्यर्थः। अयमभिप्रायः यदि परमात्मनः सर्वत्र व्याप्तिरुच्यते तर्हि जागरणस्वप्नसुषुप्तिमूर्च्छोत्क्रांतिषु जीवस्य तत्तत्स्थानप्रयुक्ता ये दोषास्ते तदंतर्यामिणः परस्य ब्रह्मणोऽपि संभवन्ति, न च परमात्मनोऽकर्मवश्यत्वेन दोषाभाव इति वाच्यम्, कर्मणां देहसंबंधापादनद्वारा क्लेशाद्यपुरुषार्थजनकत्वेन देहसंबंधस्याप्यपुरुषार्थत्वादन्यथा कर्मणामेवं दुःखादिजनकत्वेन देहसंबंधस्य प्रयोजनशून्यत्वापत्तिश्च परमात्मनः कर्मवश्यत्वाभावेऽपि सर्वक्षेत्रेष्ववस्थित इति देहसंबंधाभ्युपगमान्नानाविधाशुचिदेहसंबंधस्यैवापुरुषार्थत्वात् अत एव तन्नियमनार्थं स्वेच्छया तत्प्रवेशोऽप्यपुरुषार्थसंबंधोऽप्यवर्जनीयः पूयशोणितादिमज्जनं हि स्वेच्छाकारितमप्यपुरुषार्थ एवेति। अतो यद्यपि जगदेककारणं सर्वज्ञत्वादिकल्याणगुणाकरं च ब्रह्म तथापि यः पृथिव्यां तिष्ठन् य आत्मनि तिष्ठन्यो रेतसि तिष्ठन्नित्यादिवचनात्तत्र तत्रावस्थितस्य तत्संबंधरूपाऽपुरुषार्थाः संतीति प्रश्नमुपसंहरति एतस्मिन्निति। हे विद्वन्मैत्रेय! एतस्मिन्नज्ञानसंकटे इति पदच्छेदः, अज्ञानरूपसंकटे मे मनः खिद्यते तस्माद्धे विभो मैत्रेय! नः अस्माकं मानसं मनःसंबंधि महत्कश्मलं खेदं पराणुदापाकुरु॥ ७॥ ❀ ❀ एवमापृष्टो मैत्रेय आहेत्याह शुकः स इति। तत्त्वजिज्ञासुना क्षत्त्रा इत्थमुक्तरीत्या चोदित आपृष्टो मुनिर्मैत्रेयः भगवच्चित्तः भगवत्येव चित्तं यस्य स गतस्मयः तत्त्वदर्शित्वेन विगतस्मयः स्मयन्निव प्रश्नस्य सुपरिहरत्वादिति भावः। प्रत्याह प्रत्यभाषत॥ ८॥ ❀ ❀ यदुक्तं चेतनाचेतननियमनार्थं तदंतरात्मतया स्वेच्छयाप्यवस्थितस्य तत्संबंधप्रयुक्तपरिणामित्वदुःखित्वाद्यपुरुषार्थसंबंधोऽवर्जनीय इति नैतद्युक्तं ह्यचिद्वस्त्वपि स्वभावतोऽपुरुषार्थस्वरूपं कर्मवश्यानां तु कर्मस्वभावानुगुण्येन परमपुरुषसंकल्पादेकमेव वस्तु कालभेदेन पुरुषभेदेन च सुखाय दुःखाय च भवति। वस्तुस्वरूपप्रयुक्तत्वे तु ताद्रूप्ये सर्वं सर्वदा सर्वस्य सुखाय दुःखायैव वा स्यान्नचैवं दृश्यते, तथा चोक्तं "नरकस्वर्गसंज्ञे वै पापपुण्ये द्विजोत्तम। वस्त्वेकमेव दुःखाय सुखायेर्ष्यागमाय च। कोपाय च यतस्तस्माद्वस्तु वस्त्वात्मकं कुतः। तदेव प्रीतये भूत्वा पुनर्दुःखाय जायते। तदेव कोपाय यतः प्रसादाय च जायते। तस्माद् दुःखात्मकं नास्ति न च किंचित्सुखात्मकमि" ति अतो जीवस्य कर्मवश्यत्वात्तत्तत्कर्मानुगुण्येन तत्तद्वस्तुसंबंध एवापुरुषार्थः स्यात्, परस्य तु ब्रह्मणो निरस्तनिखिलदोषस्य समस्तकल्याणगुणाकरस्य स्वाधीनस्य विविधविचित्रस्वाभाविकशक्तिमतः अपुरुषार्थाश्रयचेतनाचेतनसंबंधस्तद्विचित्रनियमनरूपलीलारसायैव स्याज्जीवस्य त्वविद्यासंबंधोऽपुरुषार्थजननाय स्यादित्याह सेयमिति त्रिभिः। ईश्वरस्य कृपणत्वं मुक्तस्य बंधनं च येन हेतुना न विरुध्यते सेयं भगवतो माया आश्चर्यशक्तिः जीवत्वव्यापिनो भगवतो व्याप्यकृपणबद्धजीवगतदोषास्पर्शहेतुभूताश्चर्यशक्तियोगाद्व्याप्यवस्तुगतदोषास्पर्शकारिहेतोर्न विरोध इत्यर्थः। "परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रियाचे" ति श्रुतेः विविधविचित्रानंतशक्तियोगात्तत्तद्वस्त्ववस्थानप्रयुक्ततद्गतदोषास्पर्श उक्तः। अनेन ब्रह्मन्कथं भगवत इति कारणत्वाक्षेपोऽपि परिहृतः गुणक्रियाणां चेतनाचेतनद्वारकत्वेन ब्रह्मणस्तत्संस्पर्शाभावात्प्रकृतिपुरुषविशिष्टस्य

कारणत्वाभ्युपगमेन प्रकृतिपुरुषागतविकाराणां शुक्लकृष्णरक्ततंत्वारब्धपटे शौक्ल्यकार्ष्ण्यादीनां तत्तच्छुक्लादितंतुसंयुक्तप्रदेशैकांतस्थितिवत् शरीरगतबाल्ययौवनादीनामात्मन्यस्पर्शवच्च परमात्मनि प्रसक्तत्वाभावात् सर्वक्षेत्रेष्ववस्थितस्यापि तस्यात्मनो न क्षेत्रगतदोषसंस्पर्शः ॥ ९॥ ❀ ❀ जीवस्य तु स्वतोपहतपाप्मत्वादिविशिष्टत्वेऽपि तत्स्वरूपस्याविद्याकर्मवासनारुचिप्रकृतिसंबंधादिभिस्तिरोहितत्वेन तत्तद्देवादिदेहात्माभिमानेनापुरुषार्थसंबंधोऽवर्जनीय इति सदृष्टांतमाह यदर्थेनेति। यद्यतः अमुष्य कर्मवश्यस्य पुंसो जीवस्यार्थेन पुरुषार्थभूतेनात्मस्वरूपेण विना आत्मविपर्ययः देवमनुष्यत्वादिभावः तत्प्रयुक्तः स्वशिरश्छेदनादिकः स्वशरीरभूतदेवमनुष्यादिशिरश्छिन्ने ममेदं शिरश्छिन्नमिति शोकश्च उपद्रष्टुः देह आत्मतादात्म्येनानुसंदधानः प्रतीयतेऽनुभूयते सेयमपि भगवतो मायेत्यर्थः॥ १०॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

विदुरः प्रकारान्तरेण शंशय्यते इत्याह भगवानिति। नित्यनिरतिशयसकलैश्वर्यादियोगोऽस्ति हरेरित्याशयेनोक्तं भगवानिति। यथा देवदत्तस्य दुर्भगत्वमैश्वर्यादिराहित्यमविद्यास्मितारागद्वेषाभिनिवेशात्मकसंसारजन्यदुःखलक्षणः क्लेशो वा दृश्यते तथा दुर्भगसर्वक्षेत्रेषु सत्त्वादमुष्यापि तत्संसर्गः संभाव्यः स न युज्यते कुतो भगवत्त्वादतः संशय इत्यर्थः ॥ ६॥ ❀ ❀ युक्तिज्ञानपूर्वकत्वादयं संशयः स्वयमेव श्लथितो भवतीत्याशंक्य ज्ञानदार्ढ्याभावात् स्थाणुवदवस्थानात्त्वयैव निर्मूलनीय इति भावेनाह एतस्मिन्निति ज्ञानसंकटे ज्ञानसंबाधे निश्चितज्ञानाभाव इत्यर्थः, पराणुद निराकुरु "मूर्च्छा तु कश्मलं मोह" इत्यभिधानं संत आत्मनि अल्पं मतिदोषं महत्त्वे न भावयंतीत्याशयेन महदित्युक्तं नतु तत्त्वेन अत एव मानसं न तु बुद्धिसंस्थम् ॥७॥ ❀ ❀ शुकस्तस्य प्रश्नं परिहरतीत्याह स इति। गतस्मयो गताहंकारः स्मयन् मंदं हसन्निव ॥ ८॥ ❀ ❀ दुर्भगशरीरस्थस्यापि दुःखादिकर्दमास्पर्शो माहात्म्यातिशयादिति परिहरति सेयमिति। ईश्वरस्यैश्वर्यमूर्तेर्हरेः कार्पण्यं दैन्यं विमुक्तस्य नित्यमुक्तस्यापि बंधनं विरुध्यते प्रमाणतो युक्तितश्च विरुद्धमिति येन तेन तन्न्याय्यं न्यायोपेतमेव। कथं सेयं भगवतो माया अयं हि हरेर्महिमा यत्प्रमाणयुक्तिभ्यामुपपन्नं तत्परमार्थवस्तु यत्ताभ्यां दुर्घटं तथापि प्रतीयते शुक्तिरजतवत् सा मायेत्यनुभवसिद्धमित्यभिप्रेत्य प्रश्नं परिहरति सेयमिति। यन्नयेन न्यायेन विरुध्यते सा भगवतो माया अनिर्वाच्याऽविद्यालक्षणेति सर्वानुभवसिद्धत्वान्नापाकरणयोग्येति न्यायविरोधं दर्शयति ईश्वरस्येति। इत्येतद्भगवत इत्युक्त्यापहसितमिति ज्ञायते तथा हि समस्तैश्वर्यादिमतो भगवच्छब्दार्थत्वेन प्रमितत्वान्न तस्य कार्यकारणे मायापेक्षा अशक्ताहि सत्त्वादयो मायामपेक्षंते "अशक्ताः सत्यसृष्टौ हि मायासृष्टिं वितन्वते" इति च "कथं देहे परो देवो न लिप्येतेह बंधनैः। कथं न दुःखी स भवेद् दुःखी चेदीश्वरः कुत" इत्यादिश्रुतिविरुद्धत्वादुक्त एवार्थ इति प्राकृतदेहवत्त्वात् देवदत्तवन्मायायोगो घटत इतीयमाशंका अलुप्तबोधरूपत्वान्नासौ प्राकृतदेहवानिति वाक्यमवतारयता त्वयैव परिहृत अविलुप्तावबोधात्मेति अत एव मायासृष्ट्याद्यर्थं तद्योग इति च न युक्तं "यच्चिकेत सत्यमित्तन्न मोघ" मिति सत्यत्वावधारणात् एवमपि तदंगीकारे दानवमतप्रवेशः स्यात्तदुक्तं "न च सृष्ट्यादिकभ्रांतिर्भ्रांतिवादा हि दानवाः। अतो भ्रांत्यादिसंबंधो नास्य क्वचन युज्यत" इति ॥ ९॥ ❀ ❀ तर्हि कस्य भ्रांत्या संसार इत्याशंक्या प्रकृतिसंबंधात्तया जीवस्यैव संसार इतीममर्थं सदृष्टांतमाह यथेति। अमुष्य पुंसो जीवस्योपद्रष्टुः स्वप्नं पश्यतोऽर्थेन विना प्रयोजनादृते स्वप्ने स्वशिरश्छेदनादिक आत्मविपर्ययः आत्मनो देहस्य विपर्ययो दृष्टश्रुतवासनयाऽविद्यमान एव प्रतीयते। अत्रेदं तात्पर्यं अस्मिन् जन्मनि जन्मांतरे वा शिरश्छेदः स्कंधारोहणं वा दृष्टः श्रुतो वा सन्नप्येकाधिकरण्येन दर्शनभ्रांत्या दृश्यते तद्दर्शनं न च प्रयोजनवदत एवार्थेन विनेत्युक्तं न च तावता स्वप्नमिथ्यात्वमर्थक्रियाकारित्वात् "सूचकश्च हि श्रुतेराचक्षते च तद्विद" इति सूत्रात् निमित्तकारणे स्वेच्छानियतोपादानकारणभूतजीवमनोगतवासनाजन्यत्वाच्चेति वैदिकाधिकारविवक्षया पुंस इत्युक्तं स्वाधीनज्ञानाभावादुपद्रष्टुरिति ॥ १०॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

तत्रैव विरोधान्तरमाह भगवानेक एवेति। एष एक एव भगवान् परमात्मापि सर्व्वक्षेत्रेषु सर्व्वस्य जीवस्य क्षेत्रेषु देहेषु अवस्थितः। तत्र सति कथममुष्यैव भगवद्वदेव चिद्रूपत्वस्वरूपभूतज्ञानवत्त्वाव्यभिचारिणो जीवस्य दुर्भगत्वं स्वरूपभूतज्ञानादिलोपः कर्म्मभिः क्लेशश्च तस्य वा कुतो नास्ति न ह्येकस्मिन् जलादौ स्थितयोर्वस्तुतः कस्यचित् तत्संसर्गः कस्यचिन्नेति युज्यत इत्यर्थः॥ ६–८॥ ❀ ❀ तत्र केवलं चिन्मात्रत्त्वं जीवेऽपि न सम्भवतीति भगवत्त्वमेवांगीकृत्य श्रीमैत्रेय उवाच सेयमिति। यया विश्वसृष्ट्यादिकं भवति सेयं भगवतोऽचिन्त्यस्वरूपशक्तेर्मायाख्या शक्तिः यत् या नयेन तर्केण विरुद्ध्यते तर्कातीततया सेयमप्यचिन्त्येत्यर्थः। यद्यप्येवं द्वयोरप्यचिन्त्यत्त्वं तथापि भगवतो मायेत्यनेन व्यक्तत्वात् स्वरूपशक्तेरन्तरंगत्वाद्बहिरंगाया मायाया गुणैः सत्त्वादिभिस्तत्कार्य्यैः स्थापनादिभिश्च नासौ स्पृश्यत इत्यर्थः। तन्त्रेण चायमर्थः यत् यथा मायया येन भगवता

सह न विरुद्ध्यते नासौ विरोधविषयीक्रियत इति यत् या येन भगवता न विरुद्ध्यते न सर्व्वथा निर्विषयीक्रियत इति च एवमेव षष्ठे नवमाध्याये। दुरवबोध इव तवायं विहारयोगो यदशरणोऽशरीर इदमनवेक्षितास्मत्समवाय आत्मनैवाविक्रियमाणेन सगुणमगुणः सृजसि पासि हरसि इति गद्येन तस्य सगुणकर्तृत्वं विरुध्य पुनरथ तत्र भवान् किं देवदत्तवदिह गुणविसर्गपतितः पारतन्त्र्येण स्वकृतकुशलाकुशलफलमुपाददाति। अहोस्विदात्माराम उपशमशीलः समञ्जसदर्शन उदास्त इति ह वाव न विदाम इति गद्येनान्तर्यामितया गुणविसर्गपतितत्त्वेन जीववद्भोक्त्वयोगं सम्भाव्य नहि विरोध उभयं भगवत्यपरिमितगुणगण-ईश्वरेऽनवगाह्यमाहात्म्यार्व्वाचीनविकल्पवितर्कविचारप्रमाणाभासकुतर्कशास्त्रकलितान्तःकरणाशयदुरवग्रहवादिनां विवादानवसरे उपरतसमस्तमायामये केवल एवात्ममायामन्तर्द्धाय कोन्वर्थो दुर्घट इव भवति स्वरूपद्वयाभावादिति गद्येन तत्र तत्राबितर्क्यशक्तित्वमेव सिद्धान्ते योजितम्। तत्र स्वरूपशक्तेरवितर्क्यत्त्वं भगवतीत्यादिभिर्विशेषणैर्मायायाश्चात्ममायामित्यन्तेन दर्शितं तत्र स्वरूपद्वयाभावादिति तथाप्यचिंत्यशक्त्या तत्तत्कर्तृत्त्वं तदन्तःपातित्वञ्च न विद्यत इत्यर्थः। समविषममतीनामिति तु गद्यं तथाप्युच्चावचबुद्धीनां तथा-तथा स्फुरसीति प्रतिप्रत्यर्थं ज्ञेयं दुरवबोध इवेति प्राक्तनगद्ये त्वशरीर इति शरीरचेष्टां विना अशरण इति भूम्याद्याश्रयं विनेत्यर्थः। अथ तवेत्यादौ स्वकृतेति तस्यापि हेतुकर्तृत्वं योजनीयं तस्मादत्रापि स्वरूपशक्तेरेव प्राबल्यं दर्शितम् अत एव ऋतेऽर्थं यत् प्रतीयेतेत्यादौ मायाया आभासस्थानीयत्वं प्रदर्श्य तदस्पृश्यत्वमेव भगवतो दर्शितं त्वमाद्यः पुरुषः साक्षादित्यादौ मायां व्युदस्य चिच्छक्त्येत्यनेन च तथा ज्ञापितम्। माया परैत्यभिमुखे च विलज्जमानेत्यनेन च। तदेवं भगवति तद्विरोधं परिहृत्य जीवेऽप्यविद्यासम्बन्धमतर्क्यत्वेन दर्शिततया तन्माययैव समादधाति ईश्वरस्येति। यदित्यनेनैव सम्बध्यते अर्थवशादत्र च तृतीयया परिणम्यते यत् यथा ईश्वरस्य स्वरूपज्ञानादिभिः समर्थस्य अतएव विमुक्तस्य कार्पण्यं तत्तत्प्रकाशतिरोभावः तथा बन्धनं दर्शितगुणमयजालप्रवेशश्च भवतीति तदुक्तं तत्सङ्गभ्रंशितैश्वर्य्यमिति तदेवं सर्व्वमभिप्रेत्य श्रुतयोऽप्याहुः स यदजया त्वजामित्यादावपेतभग इति च अत्र मूलपद्ये भगवतो मायेत्यनेन भगवत्त्वं मायिकमित्यायातम् इन्द्रस्य मायेत्यत्र यथेन्द्रत्वम् एवं पूर्व्वत्रापि ज्ञेयम्॥ ९॥ ❀ ❀ पुनरपि जीवस्य वस्तुतः तत्तदवस्थत्वाभावेऽपि भगवन्माययैव तत्तत्प्रतीतिरिति सदृष्टान्तमुपपादयति यदर्थेन विनामुष्येति। यत् यस्या मायाया हेतोरर्थेन विनापि यद्यपि तस्य कालत्रयमपि सोऽर्थो नास्ति तथापि आत्मविपर्य्ययः आत्मविस्मृतिपूर्व्वकपराभिमानेनाहमेव तद्धर्म्मीत्येवं रूपो यः सोऽर्थः स्यात् तथाहि उपद्रष्टुर्जीवस्य तृतीयार्थे षष्ठी। स्वप्नावस्थायां जीवेन स्वशिरश्छेदनादिकोऽपि पश्येत् किन्तु भगवन्माययैवान्यत्र सिद्धं तद्रूपमर्थं तस्मिन्नारोपयति "मायामात्रन्तु कात्स्न्र्येनानभिव्यक्तस्वरूपत्वादि" ति न्यायेन॥ १०॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

न चायमन्यायोऽराजकद्वैराज्ययोरिव सम्भावनीयो यदजा निरपराधं जीवं पराभवेदित्याह सर्वेषामपि जीवानां क्षेत्रेषु देहेषु भगवानेष अवस्थितः अन्तर्यामिरूपेण स्वयमेव स्थितः न तु राजेव स्वराज्येषु स्वप्रतिनिधिपुरुषद्वारेत्यर्थः। एक एवेति द्वैराज्यशंकापि परिहृता अत एव तस्मिन् भगवति सर्वप्रतिपालके अत्रैव तिष्ठत्यपि अमुष्य जीवस्य दुर्भगत्वमानन्दादिभ्रंशो वा कर्मभिराविद्यकैः क्लेशो वा कुतः॥ ६॥ ❀ ❀ अज्ञानमेव सङ्कटं दुर्गं तस्मिन् कश्मलं मोहं पराणुद अपाकुरु न इत्यस्मदोद्वयोश्चेति बहुवचनम्॥ ७॥ ❀ ❀ मुनिर्भगवच्चित्त इति कथमत्र समाधास्य इति मननपरो भगवन्तं सस्मारेत्यर्थः। ततश्च सहसैवोपलब्धार्थः स्मयन्निव अहो दुःसमाधाना इमे आक्षेपा इति बहिर्विस्मयं प्राप्नुवन्तस्तु सुसमाधाना एवेमे इति विस्मयरहित एवेत्यर्थः॥ ८॥ ❀ ❀ सा प्रसिद्धेयं भगवतो अचिन्त्यैश्वर्यस्य माया यत् या नयेन तर्केण विरुद्धयते अतर्क्येत्यर्थः। स्वयमचिद्रूपापि चिन्मात्रस्य भगवत एव शक्तिरतस्तदीयाः सत्त्वादयोऽपि भगवत एव गुणा उच्यन्ते। तदपि भगवान् स्वरूपतो निर्गुण एव। यथा ज्योतिर्मात्रस्यापि सूर्यस्य मेघान्धकारहिमादयो ज्योतिःप्रतिकूला अपि तस्यैव भवन्ति। यथैव सूर्यात् प्रभवन्तीत्यनन्तरं यथा नभस्यभ्रतमःप्रकाशा इति चतुर्थे। प्राणादिभिः स्वविभवैरुपगूढमन्यो मन्यते सूर्यमिव मेघहिमोपरागैरिति। श्रीदशमेच श्रीनारदोक्तेदृष्टान्तेऽप्यत्रातर्क्यतैव। एवमेव स्वरूपतो निर्विकारस्यैव भगवतः शक्त्या माययैव विश्वसृष्ट्यादिक्रियाः। शक्तिशक्तिमतोरभेदात्। यदुक्तं भगवता प्रकृतिर्यस्योपादानमाधारः पुरुषः परः सतोऽभिव्यञ्जकः कालो ब्रह्म तत् त्रितयन्त्वहमिति। तदेवमीश्वरगतं संशयं हित्वा देशतः कालत इत्यादिनोक्तं जीवगतमपि संशयं छिनत्ति ईश्वरस्येति सार्द्धद्वयेन। ईश्वरस्य स्वरूपज्ञानानन्दाद्यनुभवसमर्थस्यापि जीवस्य दुर्भगत्वादिकार्पण्यं तथा विमुक्तस्यापि बन्धनं यत् सेयं माया मायावृत्तिरविद्या अविद्यानिबन्धनमेवैतद्द्वयमित्यर्थः। अयमर्थः अजया जीवस्य कथं ज्ञानलोप इति त्वयोच्यते स च ज्ञानलोपो यदि सत्यः स्यात्तदा सा अजा स्वशक्तिरपि भगवता दण्ड्या स्यात्, किंतु स नैव सत्यः यथा हृदिस्थितमपि रत्नपदकं विस्मृत्य जनेन नास्ति पदकमिति खिद्यते यथाचान्येन कृतमपि चौर्यं विभ्रांतिवशान्मयैव हृतमित्यभिमन्यते तदनन्तरञ्च राजकीयपुरुषदत्तं तत्फलं दुःखमपि भुज्यत एव तथैवानाद्यविद्यासङ्गवशात् जीवेन स्वज्ञानानन्दं विस्मृत्य देहाभिमानप्राप्तं देहधर्मं दुर्भगत्वादिकञ्च प्राप्य यदि क्लिश्यते तर्हि कस्मै दोषो देय इति अत्र तत्सङ्गभ्रंशितैश्वर्यं संसरन्तं कुभार्यवदित्यादिदृष्टेः किञ्चिदैश्वर्यसंभवात्तु जीवोऽपीश्वरशब्देनोक्तः। केचित् पुनरेवं व्याचक्षते देशतः कालत

इत्याद्यावविलुप्तावबोध आत्मा परमात्मा शुद्धचैतन्यरूपः स कथमविद्यया युज्यते परमतमाश्रित्य पूर्वपक्षिणः प्रश्नस्योत्तरमाह सेयमिति। इयमेव भगवतो माया भवेत् मायामोहितत्वं विना ईदृशः प्रश्नो न घटत इत्यर्थः। यद्यस्मात् नयेन नीत्या विरुद्ध्यते। नीतिविरोधमेवाह ईश्वरस्य परमात्मनोऽपि मायामोहितत्वेन जीवत्वे सति कार्पण्यं बन्धनञ्च। नह्येकमेव शुद्धचैतन्यं मायया मोहितं सदेव जीव इति तदैव अमोहितं सदेव परमात्मेति वक्तुं युज्यते नहि स्वमायया स्वयं मोहितश्चामोहितश्च युगपदेव कोऽपि भवतीति परम एवानयः। तस्मात् यैरेवं प्रच्छ्यते कष्टसृष्ट्या समाधीयते च त एव मायामोहिता ज्ञेया इति। वस्तुतस्तु परमात्मजीवात्मानौ सूर्यतत्किरणाविव जात्यैव मिथो विलक्षणौ चैतन्याचैतन्यकणौ भवत इति सिद्धान्तः। छायाकिरणौ यथा सूर्यत एव भवतः अथापि सूर्यतुल्यकणौ सूर्यात् भिद्येते भिद्येते च तथैव मायाशक्तिजीवशक्ती परमेश्वरादुद्भूते अप्यनादी अभिन्ने अपि स्वरूपतो भिन्ने एव। तथाच वैद्यके। पुंसोऽस्ति प्रकृतिर्नित्या प्रतिच्छायेव भास्वत इति। तथाच श्रुतिः यथाग्नेः क्षुद्रा विस्फुलिंगा व्युच्चरन्तीत्येवमेवात्मन इति जीवस्य शक्तित्वन्तु। अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम्। जीवभूतां महाबाहो ययेदं धार्यते जगदिति श्रीगीतासूक्तम् ॥ ९॥ ❀ ❀ तत्र भगवतः प्रष्ठस्थितया अनाद्यविद्यया तमःस्वरूपया अनादिवैमुख्यरूपभगवत्प्रष्ठस्थानां जीवानां ज्ञानं यल्लुप्यते तस्य न वस्तुत्वं कारणं नापि प्रयोजनं किमप्यस्ति। तमसः स्वभाव एवायं यत् क्षीणतेजस्विनस्तेजस्तेन लुप्यते इत्याह यदर्थेनेति। यत् यतः अर्थेन वस्तुना कारणेन प्रयोजनेन च विनैवामुष्य पुंसो जीवस्य आत्मविपर्ययो ज्ञानानन्दभ्रंशः प्रतीयते "अर्थो विषयार्थनयोर्धनकारणवस्तुषु। अभिधेये च शब्दानां निवृत्तौ च प्रयोजने।" इति मेदिनी। अत्र दृष्टान्तः द्रष्टुः स्वप्नसाक्षिणः उपसमीपे ममेदं शिरश्छिन्नमिति शिरसः सत्त्वेपि शिरसोऽभावः स्वप्नदशायां प्रतीयते तथैव वस्तुतो ज्ञानानन्दादिभ्रंशाभावेप्यविद्यादशायां तद्भ्रंशः प्रतीयते तमसापि तैजसस्य स्वर्णरूप्यादेस्तेजो न लुप्यते किन्तु आव्रियते मात्रं तथा बलवत्तेजसा पद्मरागादिना तमोऽपि लुप्यते यथा तथा भक्तजीवेनाविद्यापि भिद्यते इति ज्ञेयं द्वितीयव्याख्यायान्तु तस्मादीश्वरस्य पूर्णसच्चिदानन्दस्य परमात्मनः सर्वज्ञस्य सर्वव्यापकस्याविद्याबन्धाशङ्कापि दोष एव। स एवाविद्यया जीवात्मा स एवाविद्यापगमे परमात्मेति सिद्धान्तोऽपि बहिर्मुखतैव, किन्त्वीश्वरचैतन्याज्जात्यैव विलक्षणस्य चित्कणस्यासर्वज्ञस्य तदीयतटस्थशक्तेर्जीवस्यैवाविद्यया बन्धः। स चाप्यवस्तुभूत एवेत्याह यदर्थेनेति। पूर्ववदेव व्याख्या अमुष्य पुंसो जीवस्यैव नत्वन्यस्यास्मदनुभूतचरस्य परमात्मनो हरेरित्यर्थः॥ १०॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः।

आत्मात्मनां विभुरित्यनेन सर्वजीवांतरात्मत्वं भगवतो यत्त्वया दर्शितं तदपि कथं घटेत सवितृसंनिधौ तमोवत् तत्सन्निधौ दुर्भगत्वाद्ययोगप्रसंगादित्याक्षिपति भगवानिति अमुष्य जीवस्य दुर्भगत्वं देहोऽस्मीत्यादि कार्पण्यम् ॥ ६॥ ७॥ ❀ ❀ चोदितः आक्षिप्तः॥ ८॥ ❀ ❀ द्वितीयमाक्षेपं परिहरति सेयमिति। या विश्वसृष्टिकाले भगवता पुरस्क्रियते सा राज्ञः अश्व इव अतदात्मिकया न भवति, किं तु विमुक्तस्य सर्वप्राकृतदोषास्पृष्टस्य ईश्वरस्य सर्वनियंतुः भगवतः मायाशक्तिरस्ति न स्वतंत्रस्थितिप्रवृत्तिमती अब्रह्मात्मिका यत उक्तदूषणयोगः स्यादित्यर्थः। अतो नये तदात्मानं स्वयमकुरुतेति श्रुतिप्रोक्तं ब्रह्मैव जगदभिन्ननिमित्तोपादानकारणमिति सिद्धांते नैव विरुध्यते। अथ तृतीयमाक्षेपं परिहरति यत् यया मायया अनादिरूपया बंधनं देहोऽस्मि मरिष्यामीत्यादिकार्पण्यं चास्ति जीवस्येति शेषः, अतः भगवति संनिहितेऽपि अनादिमायाबद्धस्य जीवस्य दुर्भगत्वं क्लेशो वा कर्मभिः कुतः इति चाक्षेपः परिहृतः इति भावः॥ ९॥ ❀ ❀ अनादिमायाकृतं कार्पण्यं प्रपंचयति द्वाभ्याम्। यदिति यत् यया मायया अर्थेन आत्मनो देहभावं विनापि अमुष्य जीवस्य आत्मविपर्ययः देहोऽस्मि कृतोऽस्मि मरिष्यामीत्यादिविपर्ययः अनात्मज्ञस्य विपर्ययः प्रसिद्ध एवेत्याह उपद्रष्टुः मनुष्याकारमात्मानं विस्मृत्य स्वाप्नं परकीयं पश्वादिशरीरमात्मत्वेन पश्यमानस्य स्वशिरश्छेदनादिकं प्रतीयते॥ १०॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

एतस्मिन्नर्थे मे मनः खिद्यतीत्याह एतस्मिन्निति। ज्ञानसङ्कटे। ज्ञानस्य शाब्दस्य। युक्तिरूपविशालमार्गाभावात् ज्ञानस्य प्रसरणाशक्तेः, सङ्कटं युक्त्यभावः। अन्यथाज्ञानं वा सङ्कटम्। तत्र निर्द्धारार्थं प्रवृत्तं मनः प्रसरणाभावाद्युक्त्यभावेन खिद्यति। तं खेदं नोऽस्माकं हृदये वर्तमानं युक्तिभिः पराणुद। तिष्ठत्वेतदित्याशङ्क्याऽऽह—कश्मलं मानसं महदिति। इदं तु मनसो महत् कश्मलम्। तत्तु महद्भिर्दूरीकर्त्तव्यमेव, अन्यथा अग्रिमं पूर्वोक्तं च ज्ञानं दुष्टे मनसि न तिष्ठेत्। अतो निरूप्यमाणार्थबोधार्थमिदं पराणुदेत्यर्थः।

ऐश्वर्यं प्रथमे त्यक्तं द्वितीये वीर्यमेव च। यशःश्रियौ तथा द्वाभ्यां वैराग्यं ज्ञानमन्त्ययोः॥ १॥
स्वयुक्त्या भ्रमसम्पत्त्या भगवत्त्वं निराकृतम्। ततोऽत्र भगवद्वादः सर्गेऽपि विनिराकृतः॥ २॥
तस्मिन्निराकृते प्रश्नो न पूरित इति स्थितम्। अतस्तस्योत्तरं वाच्यं स्वोक्तार्थस्थापनाय हि॥ ३॥

स हि मैत्रेयः सर्वनिरपेक्षश्चित्तशुद्ध्यर्थं यथोक्तं गृहीत्वा, आवर्तनीयमित्युक्त्वा, पूर्वपक्षे कृते किमग्रे वदति नवेति सन्देहं वारयितुम्, शुको वदतीति पक्षं सहेतुकमुपपादयति—स इत्थमिति। भगवदीयत्वात् भगवदाज्ञासहकारित्वात् विदुरस्य प्रेरकत्वम्, मैत्रेयस्य कथनेच्छाजनकत्वम्, । क्षत्त्रेति स्वतोऽपि प्रेरकत्वम्, निपुणत्वात्। तत्राऽपि तत्त्वजिज्ञासुना। नोद्ग्रहणमात्रम्। अतस्तत्त्वजिज्ञासुं बोधयेदिति। किञ्च, मुनिरयं निर्द्धारितं जानाति, भाव्यर्थं च। भगवदाज्ञापरिपालनार्थमाक्षेपोऽपि समाधातव्य इति भगवच्चित्तः। भगवानेव तच्चित्ते निर्द्धारितं बोधयत्विति प्रार्थनार्थं वा। स्मयन्निवेति। किमेतैरेतावत्कालं भारतादौ बुद्धमिति हसन्निव। इवेति। भगवन्मायाया मोहकत्वात्। गतः स्मयो गर्वो यस्य। अतोऽयं गूढतया निरूपयिष्यति, अनधिकारेणाऽज्ञाने पुनः प्रश्ने वा तूष्णीं स्थातव्यमिति। निबन्ध एवाऽत्र समाधानं स्पष्टतया निरूपितम्।

गुणातीता सृष्टिकथा सर्वथा नोपपद्यते। कार्यकारणवैजात्याल्लोकहेतोरभावतः ॥ १ ॥
निरुपाधिकरूपे हि सन्देहद्वयमीरितम्। सोपाधित्वे परीहारस्तदेव न भवेदिति ॥ २ ॥
तृतीयो ब्रह्मणः सिद्धो जीवेऽप्येवमभेदतः। मायासंबन्धकार्ये हि परिहार्ये तयोः क्रमात् ॥ ३ ॥
प्रथमस्य परीहारः षष्ठ्या नित्यतयोदितः। भगवत्त्वाविरोधित्वं प्रकृत्यैव च सूचितम् ॥ ४ ॥
असमासात् प्रधानत्वं तेन नोपाधिसम्भवः। द्वितीयस्य परीहारे विरोधात् कार्यबाधनम् ॥ ५ ॥
विरोधमात्रमाहोस्वित् आद्ये सेयं दर्शितैतः। द्वितीये भूषणं तस्या विरोधो न तु दूषणम् ॥ ६ ॥
विरुद्धकार्यसंबन्धस्तत्कृतस्तेन वर्ण्यते। विरोधोऽपि प्रतीत्यैव न वस्तुनि यतो बृहत् ॥ ७ ॥

इति ॥ ७ ॥ ❀ ❀ अत्र पूर्वपक्षसमाधानं ब्रह्मवादे स्पष्टमेव 'दृश्यते तु...' इत्यधिकरणेन निरूपितम्। अविकृत एव भगवान् सर्वं करोति तादृशमेव भगवत्स्वरूपम्, श्रुतिप्रामाण्यात्; यादृशे अङ्गीक्रियमाणे सर्वसमाधानं भवति। तस्मात्तत्र न मायादिकल्पना। योऽनुपपत्तिपरिहारो मायया सोऽपि स्वरूपेणैव। एवं सति श्रौतार्थता भवति, अन्यथा त्वप्रामाणिकं स्यात्, स्वकपोलकल्पनात्। स पक्षोऽत्रैवर्णिकाय सर्वथा न वक्तव्य इति 'दैव्यो वै वर्णो ब्राह्मणः, आसुर्यः शूद्रः' इति श्रुतेः 'मायेत्यसुराः इति च। उपक्रमेऽपि—'अथ ते भगवल्लीला योगमायोपबृंहिताः, इति, प्रतिज्ञानादत्राऽपि माययैव समाधानमाह। सेयं भगवतो मायेति कार्यकारणवैजात्यं माययैव समाहितम्। क्षणमध्ये तया सर्वमन्यथैवाऽयथाभवेत्। तादृश्येव हि सा शक्तिः स्वीकर्तव्याऽन्यथा न सा ॥ १ ॥ क्रीडासृष्टिस्तथा ज्ञानं ज्ञानेऽप्यज्ञानसम्भवः। अभेदेऽपि यथा जीवस्तथा मायैव सा तथा ॥ २ ॥ इयं भगवतो माया सैव, याऽस्माभिर्जगत्कारणत्वेन निरूपिता। तव वाक्येऽपि सैव। अतो यदस्माभिर्निरूपितम्, तदेव त्वया तस्या विरुद्धधर्मनिरूपणेन निरूपितमिति नाऽत्र किञ्चित्समाधातव्यम्, यतः सा नयेन न्यायशास्त्रेण विरुद्ध्यते। स विरोधस्त्वयैव निरूपित इति नाऽस्माभिर्बोधनीयः, अस्यैव सिद्धान्तत्वात्। एतत्समाधानमुच्यमानं पूर्वपक्षेणैव मन्तव्यमिति भावः। विरोधमेव स्पष्टयति—ईश्वरस्येति। अयं जीव ईश्वर एव, 'तत्त्वमसि' 'अयमात्मा ब्रह्म' 'विज्ञानमयः' इति श्रुतेः। अत एवेश्वरस्य सर्वसमर्थस्य संसाराद्विमुक्तस्य कार्पण्यं दैन्यमनालोचितयाचकत्वं वा ऐश्वर्यविरुद्धम्। बन्धनं च विमुक्तविरोधि[1] ॥ ८ ॥ ❀ ❀ ननु कथमेवं मायायाः स्वरूपम्? तथा सति प्रमाणानामप्रामाण्यमेव युक्तं स्यात्, सन्मार्गश्च विरुद्ध्येतेति चेत्। सत्यम्, एवमेव। परं सा माया यथा गमिष्यति तथोपायं वक्ष्यामि। तस्या गमनमेव मुख्यं समामाधानमिति, तस्यां गतायां न कोऽपि विरोधः स्फुरिष्यतीति, अतो विरोधसमाधानार्थं न यत्नः कर्तव्यः, किन्तु मायानिराकरणार्थमेव प्रयत्नः कर्तव्यः। तस्यां गतायां भगवत्साक्षात्कारे सर्वेऽपि सन्देहा निवर्तन्त इति प्रकारान्तरेण ज्ञानमुपदिष्टं भवति, तदा स्वयमेव ब्रह्मवादं ज्ञास्यतीति। आसुरत्वे वा गते शूद्रत्वमपि गमिष्यतीति। तस्यां गतायाम्, स्वतो वा, बोधनीय इति भावः। मायादीनामेवंरूपतां निद्रादिदृष्टान्तेनाह—यदर्थेनेति। यद्यस्मात्कारणात् अमुष्य जीवस्य पुंसः, अर्थेन बन्धकादिना विनैव आत्मविपर्यय आत्मनोऽन्यथाभावः प्रतीयत एव। प्रतीतिमात्रम्, नतु वस्तुतोऽस्ति। यतोऽयमुप समीपे द्रष्टा, न त्वयं दृश्यः। व्यापकश्चाऽयं प्रत्यक्संवेद्यः, परिच्छिन्नं पराक् चान्यत्। यथा दर्पणे सन्निहिते तद्गतत्वेन विपरीततया मुखं दृश्यते, तथा मायासन्निधानेन आत्मा पराक् परिच्छिन्नश्च दृश्यते, इत्यन्यथादर्शने मायैव हेतुः। तत्र यथा स्वप्ने शिरश्छेदः प्रतीयते, न हि द्रष्टुः शिरश्छेदः सम्भवति, न वा द्रष्टुं शक्यते, चक्षुषस्तत्रैव विद्यमानत्वात्; प्रतीतिश्च वर्तते; विरुद्धश्चाऽयमर्थः; युक्तिश्च नास्ति; एवमत्राऽपीति भावः ॥ ९ ॥ ❀ ❀ ननु मायायामयमात्मा प्रविशतीत्यात्मधर्मा मायायां भवितुमर्हन्ति, न तु मायाधर्मा आत्मनि; आत्मनि मायायाः प्रवेशाभावात्, 'तमसः परस्तात्' इति श्रुतेः। तस्मान्मायाधर्मा बन्धादयः कथमात्मनीत्याशङ्क्याऽऽह—यथा जल इति। यद्यप्यात्मनि माया न प्रविशति, आत्मैव तु प्रविशति; तथापि प्रवेशानन्तरं तद्धर्मैः संबध्यते, न त्वप्रविष्टः। प्रवेशोऽपि प्रतीत्यैव। यथा चन्द्रमसो जले प्रतिबिम्बितस्य जलकम्पात्तत्कम्पः, न तु स्वभावतः; तथा असन्नपि धर्म आत्मनि मायासम्बन्धात् प्रतीयते। तदाह—दृश्यत इति। असत्त्वे हेतुः—द्रष्टुरिति। आत्मनिरूपितं वैलक्षण्यमाह—आत्मनो गुण इति। अनात्मनः प्रकृतेर्देहादेर्वा गुणो दृश्यतवादिः ॥ १० ॥

---

१. विमुक्ति ग.।

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

षट्सु श्लोकेषु सिद्धमर्थं कारिकाभिः सङ्गृह्णाहुः—ऐश्वर्यमित्यादि। अन्तिमे स्वस्य ज्ञानाभाव उक्तः, स च पूर्वश्लोकोदितादेकात्मवादात् ब्रह्मण्येव पर्यवस्यतीति ज्ञानाक्षेपः सिध्यति। स्फुटमन्यत्॥ ६॥ ❀ ❀ स इत्थमित्यस्याऽऽभासे शुकपदमुपपादयतीत्यनेन सम्बध्यते। एवं शुकोक्तिव्याख्यानेन मैत्रेयतात्पर्यं निरूप्य प्रश्नसमाधानयोर्दुरूहत्वात् तदर्थो निबन्धे निरूपित इति स्मारयन्तस्तत्रत्याभिरेव सप्तभिः कारिकाभिस्तमर्थमाहुः—गुणातीतादित्यादि। अनुपपत्तौ 'कार्यकारणवैजात्याल्लोकहेतोरभावतः' इति हेतुद्वयम्। कारणं निर्गुणम्, कार्यं सगुणमिति तयोर्वैलक्षण्यात्। लोकहेतुः कामोऽभिध्यारूपः—साऽप्यनाप्तकामस्यैव भवतीति ब्रह्मणि तदभावात्। इत्येवं यथायथमुपादानकर्तृत्वविरोधि। आद्यस्य—'ब्रह्म जगदुपादानम्; जगदात्मकत्वात्, जगत्पूर्वरूपत्वाद्वा; यद्यदुपादानं तत्तदात्मकम्, तत्पूर्वरूपं वा; यथा मृत् घटात्मिका घटपूर्वरूपं वा; तद्वत्' इति साधने, 'नोपादानम्, कार्यविलक्षणत्वात्, घटविलक्षणतन्तुवत्' इति पक्षोन्नायकत्वात्। द्वितीयस्य च 'ब्रह्म जगत्कर्तृ, तन्निरूपितक्रीडाकामत्वात्; यो यन्निरूपितक्रीडाकामः, स तत्कर्ता बालवत्' इति साधने, 'न तन्निरूपितक्रीडाकामम्, आप्तकामत्वात्, वृद्धवत्' इति हेतौ स्वरूपा(दि)सिद्धयुन्नायकत्वात्। सा गुणातीतात् सर्वथा नोपपद्यत इत्येवं निरुपाधिकरूपे सन्देहद्वयमीरितमित्यर्थः। ननु माऽस्तु गुणातीतस्योपादानत्वं कर्तृत्वं च। मायोपाधिके तु साजात्यस्य कामस्य च संभवात् सृष्ट्यनुपपत्तिपरिहारः सम्भवतीत्युक्तौ, तदेव सोपाधित्वमेव ब्रह्मणो न भवेदिति तृतीयसन्देहो ब्रह्मणः सिद्धः। तथा च, पूर्वोक्तानुमानयोः पक्षे ब्रह्मणि सोपाधित्वेनाऽविशेषितवैलक्षण्या (?) कामत्वस्य च निवृत्तौ प्रतिसाधनस्याऽपुनरुज्जीवनादुक्तहेतुक्तस्तृतीयोऽपि सन्देहो ब्रह्मविषयकोऽपरिहार्य इत्यर्थः। एवं श्लोकचतुष्टयसिद्धोऽर्थ उक्तः। अग्रिमश्लोकद्वयार्थं वदन्त एतदेव दूषणं ब्रह्मणो जीवभावेऽप्यतिदिशन्ति—जीवेऽप्येवमभेदत इति। तथा च, पूर्वोक्तानुमानेन सोपाधित्वे निवृत्तेऽनवकाशात् परिहारे दोषस्य क्रियमाणे, 'ब्रह्म नोपाधिसम्बद्धम्, पूर्णज्ञानत्वात्, यन्नैवं तन्नैवम्' इत्यनुमानेन विशेषणस्य बोधसाधनहेतूनामाश्रयासिद्धत्वेन, प्रतिसाधनस्य, 'शुद्धं ब्रह्म प्रकारान्तरानर्हम्, अनुपाधित्वात्' शुद्धवसनादिवत्' इत्यनुमानेन ब्रह्मणः प्रकारान्तरापत्तेरपि निवृत्तौ, 'जीवो दुर्भगः क्लिष्टो भवितुं नाऽर्हति, ब्रह्माभिन्नत्वात्; यद्यदविरुद्धधर्मकम्; महाकाशाभिन्नघटाकाशवत्' इत्यनुमानेन द्वितीयोपि जीवविषयकः सन्देहोऽपरिहार्य इत्यर्थः। एवं षण्णामर्थं निरूप्य प्रश्नक्रियाया आशयमाहुः—मायेत्यादि। हिर्हेतौ। य एवं ब्रह्मस्वरूपे जीवस्वरूपे च सन्देहः, अतो हेतोर्ब्रह्मणि मायासम्बन्धो जीवे तत्कार्यं चैते परिहार्ये इति प्रष्टुराशय इत्यर्थः। अतः परं सिद्धान्ताशयमाहुः—तयोरित्यादि। तयोः ब्रह्मविषयसन्देहयोर्मध्ये क्रमात् प्रथमस्योपादानत्वानुपपत्तिरूपस्य परिहारः 'सेयं भगवतो माया यन्नयेन विरुध्यते' इति षष्ठ्या सम्बन्धस्य नित्यतया उदित उक्त इत्यर्थः। ननु सम्बन्धनित्यत्वे गुणातीतत्वरूपभगवत्त्वहानिरिति कथमुक्तमित्याकाङ्क्षायामाहुः—भगवत्त्वेत्यादि। अत्र भगवत्पदेन गुणातीतत्वाविरोधित्वम्, प्रकृत्यस्तुत्यैव षष्ठ्या सम्बन्धः, असमासात् प्रधानत्वं सूचितम्। तथा च, यथा आकाशस्थसूर्यस्य दूरत एव नानावर्णदर्पणजलादिसम्बन्धः, तथा ब्रह्मणो मायासम्बन्धात्; 'शुद्धं ब्रह्म मायासम्बद्धस्वविलक्षणजगदुपादानम्, मायानुपहितत्वेऽपि दूरतो मायासम्बद्धत्वात्;। 'यद्यदनुपहितत्वेपि यत्सम्बद्धम्, तत् तत्संबद्धस्वविलक्षणकार्योपादानम्, नानावर्णदर्पणसम्बद्धकिरणनानाविधप्रकाशसूर्यवत्' इत्यनुमानेनाऽनुपहितत्वेपि सम्बन्धमात्रात् स्वविलक्षणकार्योपादानत्वे सिद्धे कार्यकारणवैजात्योन्नीतस्य कार्यविलक्षणत्वरूपस्य प्रतिपक्षहेतोः साधारण्येन साधकहेतोः(त्वोः) सत्प्रतिपक्षत्वनिवृत्तौ प्रथमस्य परिहारः सिद्धः, तेनैव हेतुना कृत्वा नोपाधिसम्भव इति तृतीयोऽपि परिहृत इत्यर्थः। तर्हि द्वितीयस्य ब्रह्मविषयकस्य कर्तृत्वसन्देहस्य, जीवविषयकस्य दुर्भगत्वादिसन्देहस्य च कः परिहार इत्याकाङ्क्षायां विकल्पमूले परिहारद्वयमुक्तमित्याशयेनाहुः—द्वितीयस्येत्यादि। द्वितीयस्य परिहारे क्रियमाणे विरोधादित्यादिनोक्तं विकल्पद्वयं लोके कर्तृत्वनिर्वाहकस्य कामस्य भावेन कर्तृत्वविरोधात्, कार्यबाधनं कर्तव्यमिति वा, कार्यस्य दृश्यमानत्वात्तस्य कर्तृपूर्वकत्वनियमेन, सिद्धे कर्तरि, तन्निर्वाहककामाभावयोः सहावस्थानविरोधमात्रं वेति। तत्राऽऽद्ये समाधानं सेयमिति पदद्वयेन। तस्याऽर्थो यतो दृशिरिति। कार्यदर्शनं यतो वर्तते, अतो नियमबलात् सिद्धे कर्तरि कामाभावेऽपि यथा कर्तृत्वसिद्धिस्तादृशीयम्। तथा च, पूर्वोक्तहेतोः स्वरूपासिद्धत्वेपि 'ब्रह्म जगन्निरूपितक्रीडाकामाभावेपि जगत्कर्तृ, मायानित्यसम्बन्धेन तत्क्रियावत्त्वात्; यत्संबन्धेन यत्क्रियावत् तत् तन्निरूपितक्रीडाकामाभावेऽपि तत्कर्तृ, अयःकान्तसम्बन्धेन भ्रमणकर्तृलोहवत्' इति हेत्वन्तरेण गुणातीतस्याऽनुपहितत्वेपि सम्बन्धमात्रात् कर्तृत्वे सिद्धे प्रथमविकल्परीत्या परिहारः। द्वितीये तु, अयं कर्तृत्वकामाभावयोः सहावस्थानविरोधस्तस्या भूषणम्, न तु दूषणम्, तत्स्वभावोत्कर्षबोधकत्वात्, तत्सामर्थ्यविशेषबोधकत्वाद्वा; 'यदेवं तदेवम् अयःकान्तसम्बन्धिलोहनिष्ठकर्तृत्वकामाभावविरोधवत्' इति द्वितीयविकल्परीत्या परिहारः। अयं मूले 'यन्नयेन विरुध्यते' इत्यनेनोक्तः, तयोः सहावस्थानस्य सार्वदिकत्वादिति। एतेनैव जीवविषयकोऽपि सन्देहः परिहृत इत्याहुः—विरुद्धेत्यादि। यतः सा विरुद्धकार्यकर्त्री, तेन हेतुना मायया विरुद्धकार्यसम्बन्धो जीवे, 'ईश्वरस्य विमुक्तस्य कार्पण्यमुत बन्धनम्' इति वर्ण्यते। तथा च 'भगवतो माया (याः) स्वसम्बन्धे तत्स्वरूपविरुद्धकार्यकर्त्री, मायात्वात्, छिन्नशिरस्कजीवननिष्कासितान्त्रस्वास्थ्यसम्पादकैन्द्रजालिकमायावत्, इत्यनुमानेन तस्या विरुद्धकार्यकर्तृत्वे साधिते; जीवो दुर्भगक्लिष्टो भवितुं नार्हति, ब्रह्माभिन्नत्वेन तद्धर्मकत्वात्; महाकाशभिन्नघटाका-

शवत्' इत्यनुमानस्याऽपि 'जीवस्तथा भवितुमर्हति, तादृशत्वेपि मायासम्बद्धत्वात्, ऐन्द्रजालिकवत्' इति प्रतिसाधनेन सत्प्रतिपक्षत्वात् कार्यासाधकत्वे जीवविषयकसन्देहस्याऽप्यनेनैव परिहार इत्यर्थः। नन्वस्त्वयं जीवविषयकसन्देहस्य परिहारः, तथापि यथा तत्रैन्द्रजालिकस्य न तत्क्लेशकृतक्लेशः, तथाऽत्र जीवस्याऽपि तदभावोऽपेक्षितः, स कुतो नेत्याकाङ्क्षायाम्, 'यदर्थेन विनाऽमुष्य' इत्यादीनां तात्पर्यमाहुः—विरोधोऽपीत्यादि यतो ब्रह्मदिति। यतो हेतोर्जीवोपि ब्रह्मैव। तथा च, तादृशस्वस्वरूपज्ञानाभावात् क्लेश इति तदभावाय 'स वै निवृत्तिधर्मेण' इत्यादिश्लोकत्रयं कर्तव्यमिति समाधानग्रन्थाशय इत्यर्थः ॥ ७॥ ❀ ❀ एवं द्वयोराशयं निरूप्य विशेषेण व्याकरिष्यन्तोऽत्राप्यन्ततो ब्रह्मपदस्यैव सिद्धत्वात् सिद्धान्तरीत्या मैत्रेयेण कुतो न समाहितमित्याकाङ्क्षायां तत्तात्पर्यं वदन्तोऽवतारयन्ति—अत्रेत्यादि। स्वरूपेणैवेति। ब्रह्मणोऽद्वितीयत्वेन मायाया अपि स्वरूपान्तःपातित्वात्, तेनैव। ननु मायाया अपि स्वरूपान्तःपातने को वा आग्रहः? इत्यत आहुः—एवं सतीत्यादि। तर्हि ब्रह्मवादेनैव कुतो न समाहितमित्यत आहुः—स इत्यादि। तया वैजात्यं कथं समाहितमित्याकाङ्क्षायां समाधनप्रकारमाहुः—क्षणेत्यादि। यथा वर्णदर्पणकिरणसम्बन्धे क्षणमात्रेण प्रकाशोऽन्यथा भवति, तथा भगवदंशानां मायासम्बन्धेन कार्यमप्यन्यथा भवति। यथा चाऽप्रत्यक्षमपि दर्पणं नानाविधप्रकाशरूपकार्यदर्शनबलात् तादृशं स्वीक्रियते, तथाऽत्र मायाऽपि कार्यदर्शनबलात् तादृक्स्वभावैव स्वीकार्या, अन्यथा सा कार्यविजातीयता नोपपद्येत। अतो दर्शनबलात् तादृश्या तया दूषणं समाहितमित्यर्थः। निबन्धे—कामाभावस्याऽपि 'भगवतो माया' इत्यनेनैव समाधानादत्र प्रकारान्तरेणाऽपि समाधानमाहुः। क्रीडासृष्टिरित्यादि। कामाभावेऽप्ययःकान्तसन्निधानेनाऽयोभ्रमणं यथा, अत्र कामाभावेऽपि तथाक्रीडासृष्टिः। तथा ज्ञानं 'स वा एष तदा द्रष्टा' इत्यनेन तथा। ज्ञाने अलुप्तदृक्त्वेन सिद्धेऽपि योऽज्ञानसम्भवः 'नाऽपश्यद् दृश्यमेकराट्' इत्यनेनोक्तः, सोऽपि तथा। किञ्च ब्रह्माभेदेऽपि यथा जीवो ब्रह्मविरुद्धधर्मा, तथा ब्रह्माभेदेऽपि सा मायैव तद्विरुद्धवती, तदुक्तम्—'सदसदात्मिका' इति। अतस्तस्याः स्वरूपस्वभावबलादेव सर्वमुपपद्यत इत्यर्थः। तदाहुः इयमित्यादि ॥ ८॥ ❀ ❀ यदर्थेनेत्यत्र। मायादीनामित्यत्राऽऽदिपदेन दुर्भगत्वादिसङ्ग्रहः ॥ ९॥

## श्रीगिरिधरकृता बालप्रबोधिनी।

किञ्च भगवद्रूपत्वादेव जीवस्य संसारोपि न घटते इत्याह—भगवानिति। सर्वक्षेत्रेषु सर्वशरीरेषु अवस्थित एष भोक्ताऽपि वस्तुतो भगवानेक एव, चिद्रूपेण तद्व्यतिरेकाभावात्। एवं सति अमुष्य जीवस्य दुर्भगत्वमानन्दादिभ्रंशः कर्मभिर्हेतुभूतैः क्लेशो वा कुतः?। तस्य कर्मसम्बन्धासम्भवादन्यथा तदन्तर्यामिणोऽपि तत्प्रसङ्गः स्यादिति भावः॥ ६॥ ❀ ❀ प्रश्नमुपसंहरति—एतस्मिन्निति। समाधाने त्वं समर्थोऽसीत्याशयेन सम्बोधयति—विभो इति। सामर्थ्ये हेतुं सूचयन् पुनः सम्बोधयति—विद्वन्निति। एतस्मिन्नज्ञानरूपे सङ्कटे दुर्गमे मे मम मनः खिद्यते, तन्मानसं कश्मलं खेदं नोऽस्माकं त्वं पराणुद अपाकुर्वित्यन्वयः। अवश्यमेव तदपाकरणीयं नोपेक्षायोग्यमिति सूचयन् विशिनष्टि—महदिति। न केवलं ममैवायं खेदः किन्त्वन्येषामपि बहूनामिति सूचयितुं न इति बहुवचनम्॥ ७॥ ❀ ❀ स मैत्रेय इत्थमुक्तप्रकारेण क्षत्त्रा विदुरेण चोदित आक्षेपपूर्वमापृष्टः स्मयन्निव अहो दुस्समाधाना इमे आक्षेपाः इत्याश्चर्यमाविष्कुर्वन् वस्तुतस्तु गतस्मय आश्चर्यरहित एव प्रत्याह उत्तरं दत्तवानित्यन्वयः। विदुरप्रश्नस्योत्तरं अवश्यं देयमित्याशयेन विशिनष्टि—तत्त्वजिज्ञासुनेति। मैत्रेयेणापि तदुत्तरदानमेव युक्तमित्याशयेन तं विशिनष्टि मुनिरिति। गतस्मयत्वे हेतुमाह—भगवच्चित्त इति। निरन्तरभगवत्स्मरणेन तत्कृपया समाधानस्फुरणादाश्चर्यरहित इत्याशयः॥ ८॥ ❀ ❀ मैत्रेयकृतं समाधानं दर्शयति—सेयमिति। नयेन अविकारिणः कथं क्रिया? निर्गुणस्य कथं गुणः? स्वतन्त्रस्यैकाकिनः कथं क्रीडा? अवबोधरूपस्य कथमविद्यासम्बन्धो भगवदंशत्वात्? ईश्वरस्यैश्वर्यानन्दादिमतः कथमानन्दादिभ्रंशेन कार्पण्यं दैन्यम्? विमुक्तस्य च कथं बन्धनम्? इत्यादि त्वदुक्ततर्केण यद्विरुध्यते सेयं भगवतो माया अचिन्त्यशक्तिरूपा इच्छाविशेष एव। तदिच्छां विना न किमपि घटते इत्यर्थः॥ ९॥ ❀ ❀ वस्तुतस्तु जीवस्यापि बन्धनक्लेशादिकं नास्त्येव भ्रान्तिकल्पितत्वादिति सदृष्टान्तमाह—यदिति। यत् यथा अर्थेन स्वशिरश्छेदादिना विनापि उपद्रष्टुः स्वप्नदर्शिनो ममेदं शिरश्छिन्नमित्यात्मविपर्ययः केवलं मृषैव प्रतीयते, तद्वत् अमुष्य पुंसो जीवस्यापि अन्तःकरणदेहेन्द्रियादिगताः सुखदुःखादयो धर्मास्तत्तदध्यासेन स्वस्मिन् प्रतीयन्ते इत्यर्थः॥ १०॥

## हिन्दी अनुवाद

एकमात्र ये भगवान् ही समस्त क्षेत्रोंमें उनके साक्षीरूपसे स्थित हैं, फिर इन्हें दुर्भाग्य या किसी प्रकारके कर्मजनित क्लेशकी प्राप्ति कैसे हो सकती है॥ ६॥ ❀ ❀ भगवन्! इस अज्ञानसङ्कटमें पड़कर मेरा मन बड़ा खिन्न हो रहा है, आप मेरे मनके इस महान् मोहको कृपा करके दूर कीजिये॥ ७॥ ❀ ❀ श्रीशुकदेवजी कहते हैं—तत्त्वजिज्ञासु विदुरजीकी यह प्रेरणा प्राप्तकर अहङ्कारहीन श्रीमैत्रेयजीने भगवान्‌का स्मरण करते हुए मुसकराते हुए कहा॥ ८॥ ❀ ❀ श्रीमैत्रेयजीने कहा—जो आत्मा सबका स्वामी और सर्वथा मुक्तस्वरूप है, वही दीनता और बन्धनको प्राप्त हो—यह बात युक्तिविरुद्ध अवश्य है; किन्तु वस्तुतः यही तो भगवान्‌की माया है॥ ९॥ ❀ ❀ जिस प्रकार स्वप्न देखनेवाले पुरुषको अपना सिर कटना

आदि व्यापार न होनेपर भी अज्ञानके कारण सत्यवत् भासते हैं, उसी प्रकार इस जीवको बन्धनादि न होते हुए भी अज्ञानवश भास रहे हैं ॥ १० ॥

यथा जले चन्द्रमसः कम्पादिस्तत्कृतो गुणः । दृश्यतेऽसन्नपि द्रष्टुरात्मनो नात्मनो गुणः ॥ ११ ॥
स वै निवृत्तिधर्मेण वासुदेवानुकम्पया । भगवद्भक्तियोगेन तिरोधत्ते शनैरिह ॥ १२ ॥
यदेन्द्रियोपरामोऽथ द्रष्ट्रात्मनि परे हरौ । विलीयन्ते तदा क्लेशाः संसुप्तस्येव कृत्स्नशः ॥ १३ ॥
अशेषसंक्लेशशमं विधत्ते गुणानुवादश्रवणं मुरारेः ।
कुतः पुनस्तच्चरणारविन्दपरागसेवारतिरात्मलब्धा ॥ १४ ॥

विदुर उवाच

संछिन्नः संशयो मह्यं तव सूक्तासिना विभो । उभयत्रापि भगवन्मनो मे सम्प्रधावति ॥ १५ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका ।

तर्हीश्वरस्यापि किं न प्रतीयेत तत्राह । यथा जले प्रतिबिंबितस्यैव चंद्रमसो जलोपाधिकृतः कंपादिधर्मो दृश्यते न त्वाकाशे स्थितस्य । तथाऽनात्मनो देहादेर्धर्मोऽसन्नपि तदभिमानिनो द्रष्टुरात्मनो जीवस्यैव नत्वीश्वरस्येत्यर्थः ॥ ११ ॥ ❀ ❀ तन्निवृत्त्युपायमाह । स वै अनात्मनो गुणो निवृत्तिधर्मेण वासुदेवस्यानुकंपा तया च तस्मिन्भक्तियोगस्तेन तिरोधत्तेऽदृश्यो भवति । शनैरित्यनेन साधनानुसारेणेत्युक्तम् ॥ १२ ॥ ❀ ❀ तर्हि सर्वानर्थनिवृत्तिः कदेत्यपेक्षायामाह । यदेन्द्रियाणामुपरामो नैश्चल्यं क्व द्रष्टर्यात्मन्यंतर्यामिरूपे । अथानंतरमेव । कृत्स्नक्लेशविलयमात्रे दृष्टांतः । संसुप्तस्येवेति । नतु पुनरुत्थाने ॥ १३ ॥ ❀ ❀ भक्तियोगेन क्लेशनिवृत्तिं दर्शयति । अशेषेति । गुणानामनुवादश्च श्रवणं च । आत्मनि मनसि लब्धा श्रवणकीर्तनापेक्षया सप्रेमध्याने किं पुनर्न्यायोक्तिः ॥ १४ ॥ ❀ ❀ उत्तरमभिनंदन्नात्मनः कृतार्थतामाविष्करोति । संछिन्न इति षड्भिः । चिद्रूपत्वाविशेषेऽपि कथमीश्वरस्य जगत्कर्तृत्वादि कथं वा जीवस्य संसार इति यः संशयो ममासीत्स तव सूक्तं सोपपत्तिकं वाक्यमेवासिः खड्गस्तेन संछिन्नः । अत इदानीं मे मन उभयत्रापीश्वरस्वातंत्र्ये जीवपारतंत्र्ये च संप्रधावति सम्यक्प्रविशति । एवं वाऽविलुप्तावबोधरूपस्यात्मनः कथमविद्यया बंधः कुतो वा तन्निवृत्तिरिति संशयः । उभयत्रेति बंधे मोक्षे चेत्यर्थः ॥ १५ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

अत्राक्षिपति तर्हीति । इत्यर्थ इति । ईश्वरस्य स्वरूपज्ञानसत्त्वात्सन्न प्रतीयत इति भावः । यथैकवृक्षारूढयोर्नृवानरयोरधः स्थितसिंहेन वानरदेहच्छाया हस्तेन ताडिता तामेवात्मानं मन्यमानो मूढो वानरः किलकिलेति स्वजातिशब्दं कृत्वाधः पपात तं च सिंहश्चखाद । पुनर्नृदेहच्छायामपि तथैव तताड, ना च विवेकी छायात आत्मानं भिन्नं मत्वा न पपात जहास च । सिंहः पुनः पुनस्ताडयित्वा नायं पतिष्यतीति ज्ञात्वा देशान्तरं जगाम । तथा चात्मदेहाभिमानेन मूढजीवस्यैव तत्प्रतीतिर्न त्वीशस्य सर्वज्ञस्येति ध्येयम् ॥ ११ ॥ ❀ ❀ निवृत्तिधर्मेण निष्कामकर्मणादृश्यो भवति नश्यतीत्यर्थः ॥ १२ ॥ ❀ ❀ द्रष्टुर्जीवस्य क्लेशाः स्वाप्नव्याघ्रदंतक्षतजादिरूपाः ॥ १३ ॥ ❀ ❀ अशेषाः संक्लेशाः क्लेशा यस्मिन्सोऽशेषसंक्लेशः संसारोऽज्ञानं वा तस्य शमं शांतिम् । संक्लेश इह समुपसर्गस्तु धात्वर्थपर एव 'कश्चित्तमनुवर्तते' 'इत्युक्तेः' कुतः पुनरित्यस्य किं पुनरित्यर्थः । किं पुनर्न्यायः कैमुत्यन्यायः ॥ १४ ॥ ❀ ❀ सोपपत्तिकं सयुक्तिकं युक्तिश्च 'यदर्थेन विना' इत्यादिबोधिता सर्वज्ञत्वाल्पज्ञत्वादिरूपा ज्ञेया अतः संछिन्नसंशयत्वात् । प्रकारान्तरमप्याह—संभवत्वात् एवं वेति । इत्यर्थ इति ।[1]ज्ञानाभावे बंधः सति च ज्ञाने मोक्ष इति तात्पर्यम् ॥ १५ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या ।

तदभिमानेन देहाद्यध्यासेन ॥ ११ ॥ ❀ ❀ निवृत्तिधर्मेण निष्कामभागवतधर्मेण भक्तियोगेन श्रवणादिना ॥ १२ ॥ ❀ ❀ नैश्चल्यं भावेन तदेकपरत्वम् ॥ १३ ॥ ❀ ❀ किं पुनर्न्यायः कैमुत्यं तथा च सप्रेमध्यानेन तद्वशीकरणमेव मुख्यं फलं अशेषसंक्लेशशमस्त्वानुषंगिक एवेति द्योतितम् ॥ १४ ॥ ❀ ❀ चिद्रूपत्वाविशेषेऽपि चिन्मात्रत्वलक्षणेश्वरजीवयोस्तुल्यत्वेपि सोपपत्तिकं सयुक्तिकं वाक्यं सेयं भगवत इत्यादिकम् ईश्वरस्य चिच्छक्त्या वशीकृतमायत्वाज्जगत्कर्तृत्वादिकं सर्वज्ञत्वादिगुणमयमेवेति न तत्र दोषसंशयः । जीवस्य त्वीशबहिर्मुखत्वेन मायया वशीकृतत्वात् संसारोऽपि युक्त एवेति न संसारसंशय इत्यर्थः । स वै निवृत्तिधर्मेणेत्यादिना संसारनिवृत्तेरपि प्रोक्तत्वात्तदनुमोदनमपि संग्रहीतुं एवं वेति ॥ १५ ॥

---

१. प्रा० पा०—किं वा ।

## श्रीमद्वीरराघवव्याख्या

एतदेव दृष्टांतेनोपपादयति यथेति । यथा जले चंद्रमसः स्वतश्चंद्रस्य असन्नपि कृतः जलाद्युपाधिकृतः कंपादिश्चलनादिरूपो गुणः दृश्यते एवमात्मनोऽसन्नप्यविद्यमानोऽपि अनात्मनो देहस्य गुणः उपद्रष्टुर्देहस्यात्मतादात्म्यमभिमन्यमानस्वदृश्यकर्मवश्यस्य जीवस्यानाद्यविद्यासंबंधेन स्वरूपाप्रतीतिर्देहात्मभ्रांतिस्तया च शोकमोहादयः परमार्थतस्तु नदेहगतैर्धर्मैः स्पृश्यते इत्यभिप्रायः । परमात्मनस्त्वविद्ययाऽतिरोहितस्वरूपस्य प्रकृतिपुरुषयोर्नियंतुः नाविद्यातत्कार्यप्रसंग इत्यर्थः । एतदेव "भुक्तभोगा-परित्यक्ता दृष्टदोषा च नित्यशः । नेश्वरस्याशुभं धत्ते स्वे महिम्नि स्थितस्य चे"त्युक्तं जीवेशयोरुभयोरपि प्रकृतिसंबंधोऽविशिष्टः । इयां स्तु विशेषः प्रकृतिरेकस्य स्ववश्यस्याशुभं धत्ते अन्यस्य तु स्वनियंतुर्लीलोपकरणाय भवति तथा च श्रुतिः "अस्मान्मायी सृजते विश्वमेतत्तस्मिंश्चान्यो मायया संनिरुद्धः । मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वर" मिति माया प्रकृतिः मायीश्वरः । अत्र यथार्थेन विनाऽमुष्येत्यपि पाठः तत्रायमर्थः परमात्मनः व्याप्य चिदचिद्गतदोषास्पर्शे दृष्टांतमाह यथेति । यथाऽमुष्य जीवस्याऽर्थेन विना पुरुषार्थभूतस्वस्वरूपेण विना आत्मस्वरूपाप्रतीतिदशायामित्यर्थः । आत्मविपर्ययः आत्मनः जीवस्य विपर्ययः देहाकारः प्रतीयते उपद्रष्टुस्तस्यैव देहतादात्म्यमभिमन्यमानस्य शिरश्छेदादिकोऽपुरुषार्थश्च प्रतीयते पुरुषार्थश्च प्रतीयते पुरुषार्थभूतस्वात्मप्रतीतिदशायां तु न विपर्ययः शिरश्छेदादिको वा प्रतीयते तस्य देहविलक्षणत्वात्तस्य देहात्मबुद्धेः भ्रांतित्वात् देहातिरिक्तत्वसिद्धिः । एवं जीवस्यापि परमात्मशरीरत्वात् तस्य न तद्गतदोषस्पर्श इत्यर्थः । दृष्टांतांतरमाह यथेति । यथा चंद्रमसो जलाद्युपाधिवशात्प्रतीयमानः कंपादिर्न परमार्थतोऽस्ति किं तु भ्रांत्या तथा द्रष्टुः सर्वज्ञस्यात्मनः परमात्मनः अनात्मनः अपरमात्मनः गुणः अपरमात्मभूतचेतनाचेतनगतो धर्मः असन्नपि भ्रांत्या प्रतीयते परमात्मनः चेतनाचेतनगतदोषसंस्पर्शकामूलभूता बुद्धिभ्रांतिस्तथेत्यर्थः ॥ ११ ॥ ❀ ❀ न केवलं भगवतस्तद्धेयाकरजीवांतरात्मतयाऽवस्थितस्य दोषस्पर्शाभावरूपः कल्याणगुण एव प्रतिपादितः, किंतु तस्य जीवगतहेयनिवर्तकत्वं चेत्याह स वा इति स । वै हेयगुणः कर्मयोगानुगृहीतभगवद्भक्तिजन्यभगवत्कृपया तिरोधत्ते इत्यर्थः । यद्भक्त्या हेयनिवृत्तिस्तस्य हेयप्रत्यनीकत्वमर्थसिद्धम् ॥ १२ ॥ ❀ ❀ कियत्पर्यंतभक्त्या हेयनिवृत्तिरित्यत आह यदेति । यदा अर्थान् शब्दादीन् प्रति इंद्रियोपरतिरिन्द्रियनिवृत्तिः तदा परे प्रकृतिपुरुषविलक्षणे हरावाश्रितबंधहारिणि आत्मनि परमात्मनि पूर्वोक्तभक्त्या दृष्टे साक्षात्कृते सति दृष्टे आत्मनीति पदच्छेदः अयादेशे लोपे चार्षो गुणः कृत्स्नशः क्लेशाः विलीयंत इत्यर्थः । "तस्मिन् दृष्टे परावर" इति श्रुतिः तेषामस्थिरत्वे दृष्टांतमाह संसुप्तस्येवेति । नहि संसुप्तस्य कात्स्र्न्येन दुःखनिवृत्तिः तस्यैव जाग्रतः पुनः क्लेशाश्रयत्वात् । दृष्ट्वात्मनीत्यपि पाठः तदा अर्थान् दृष्ट्वा इंद्रियोपरतिः इंद्रयाणामविकृतिर्यथा तथा परहरावात्मनि जीवे स्थिते सति क्लेशविलय इत्यर्थः । अथ द्रष्टात्मनीत्यपि पाठः तदा सर्वज्ञे आत्मनि हरौ इंद्रियाणामुपरामो नैश्चल्यं यदा अथानंतरं प्रत्यक्षतापन्नात्मिका ध्रुवानुस्मृतिर्भवति तदा कात्स्र्न्येन क्लेशविलय इत्यर्थः ॥ १३ ॥ ❀ ❀ साक्षात्कारपर्य्यंतभगवद्भक्तेः कैमुत्यन्यायेन क्लेशनिवर्तकत्वमाह अशेषेति । हरेर्गुणानुवादश्रवणं अनुवादः अनुवर्णनं श्रवणं चेत्येतदुभयमेवाऽशेषक्लेशशमं विधत्ते करोति किं वा पुनः किं पुनः आत्मलब्धा मनसा लब्धा तस्य भगवतः चरणारविंदयोर्यः परागः तस्य सेवारतिः तैलधारावदविच्छिन्नस्मृतिसंततिरिति यावत्, अशेषक्लेशशमं विधत्त इति वक्तव्यमित्यर्थः ॥ १४ ॥ ❀ ❀ स्वाभिप्रेतमाविष्कुर्वन्नुत्तरमभिनंदति विदुरः संछिन्न इति । संशयः ईश्वरस्य कारणत्वविषयकः संशयः हे विभो ! मैत्रेय ! मह्यं तव त्वदीयेन सूक्तासिना सूक्तं सोपपत्तिकं वाक्यं तदेवासिः खड्गः तेन मदुपदेश्येन त्वयाभिहितवाक्यखड्गेन संछिन्नः अपितु उभयत्र गुणानुवादश्रवणे चरणारविंदपरागसेवायां च मे मनः संप्रधावति प्रवणं भवति । अनेन स्वाभिप्रेतमाविष्कृतम् ॥ १५ ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

यथा च जले चंद्रप्रतिबिंबस्य तत्कृतो जलचलनादिकृतः कंपादिर्जलगुणोऽसन्नपि द्रष्टुः पश्यतः पुरुषस्य दृश्यते एवमेवात्मनो जीवस्यातत्त्वज्ञानादीशेच्छया अनात्मनो देहस्य जननमरणादिगुणो जातोऽहं मृतोऽहं कर्ताहमित्यादि प्रतीयते, अतः स्वतो द्रष्टुर्ज्ञानादिरूपस्य जीवस्येशेच्छया तत्स्वातंत्र्यस्वपारतंत्र्याद्यज्ञानाज्जातया भ्रांत्या संसारस्तस्माद्यथा जपाकुसुमसंपर्ककृतं स्फटिकलौहित्यं प्रकृतिसंबंधकृतः संसारः एवं नानिर्वाच्याविद्याजन्यत्वेन भ्रांतिः तदुक्तं "भ्रांत्या जीवस्य संसार" इति स्वप्नस्य वासनाजन्यत्वेनानास्पष्टत्वात्तद्दृष्टांतेन संसारस्य सत्यत्वं दुष्प्रतिपादमिति द्वितीयदृष्टांतकथनम् ॥ ११ ॥ ❀ ❀ ननु संसारस्य सत्यत्वे निवृत्त्यभावेन कदापि मोक्षो न स्यादिति तत्राह स वा इति । इह जीवे दृश्यमानः भगवद्भक्तियोगेन जातया वासुदेवानुकंपया यस्य प्रसादादिति श्रुतेः तिरोधत्ते विलीयते वा इत्यनेन ईशज्ञानाद्विलीयत इति मानं दर्शयति यथा गरुडध्यानाद्विषनाश इति सत्यस्यापि नाशो घटत इत्यस्मिन्नर्थे वा ईशस्वातंत्र्याज्ञानादुत्पन्नकर्तृत्वाभिमानलक्षणभ्रांतिविलय ईशज्ञानाद्युज्यते भ्रांतिर्हि देहाभिमतिरीशज्ञानाद्विनश्यतीति च । बहूनां जन्मनामंत इति वचनाच्छनैरिति ॥ १२ ॥ ❀ ❀ सर्वनामसंज्ञाभावात्पर इति सर्वोत्तमे हरौ संसारकारणदुरितदूरीकरणसमर्थे भगवति दृष्टात्मनि अपरोक्षीकृतस्वरूपे सति यदेंद्रियाणां विष्णुसमीपरमणाख्यपुरुषार्थो मुक्तिस्तदा सर्वे क्लेशा विलीयंते संसुप्तस्य सम्यक् सुप्तस्य जीवस्य सुप्त्यवस्थायां कृत्स्नशः क्लेशा यथा विलीयंते

तथेत्यर्थः ॥ १३ ॥ ❀ ❀ क्लेशनिवृत्तौ कैमुत्यन्यायप्रदर्शनव्याजेन सुगमोपायं दर्शयति अशेषेति। गुणानामनुवादयुक्तश्रवणं यद्वा गुणानामनुवादो येषु ते गुणानुवादा भागवतादयस्तेषां श्रवणमेवाशेषसंक्लेशविनाशं करोति किं पुनर्व्याख्यानमिति सिद्धत्वात्पृथक् नोक्तं आत्मनि लब्धा तस्या मुरारेश्चरणारविंदपरागसेवया रतिः क्लेशशमं विधत्ते इति किं वा किं वक्तव्यं पुनरिति संदेहं निवारयति "पुनरप्रथमे प्रश्ने व्यावृत्ताववधारण" इति वचनात्। अनेन श्रवणमननव्याख्यानोपासनानामुत्तरोत्तरप्राबल्यमुपायांतराभावश्चेति दर्शितम् ॥ १४ ॥ ❀ ❀ विदुरो मैत्रेयस्य विश्ववक्तव्यत्वे तात्पर्यं जनयितुमुक्तार्थे वक्तव्यांशो नास्तीत्याह संछिन्न इति। सूक्तमेवासिः खड्गः तेनात्रसंशयपदेनान्यथाज्ञानं ग्राह्यमन्यथोभयत्रेत्युत्तरार्धमनुपपन्नं स्यादज्ञानं वा शीङ् स्वप्न इति धातुजत्वात् "स्वप्नस्त्वज्ञानशब्दोक्तो विपरीतमथापि चे"ति वचनात् दुर्भगदेहस्थस्यापि हरेस्तद्गतदुःखादिभोगः संभाव्यत इति अन्यथाज्ञानं निरस्तमित्यर्थः। मह्यं ममेति व्यत्यासः चिरकालस्थायी न स्यादित्याशयेनोक्तं नन्वन्यथाज्ञानस्य छिन्नत्वात्किमुत्तरग्रंथेनेति तत्राह उभयत्रेति। उभयत्र देहाद्यहंममतादौ हरौ चान्यथाज्ञाननाशादिदमदो वेति संदेहो जायते इति भावः। अपिशब्दः समुच्चयार्थः ॥ १५ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

अतएव शुद्धस्यापि सतो जीवस्यौपाधिकेनैव रूपेणोपाधिधर्म्मापत्तिरिति दृष्टान्तान्तरेणोपपादयति यथा जले इति। यथा जले प्रतिबिम्बितस्यैव चन्द्रमसोऽयं जलोपाधिकृतकम्पादिधर्म्मो दृश्यते न त्वाकाशे स्थितस्य तद्वदनात्मनः प्रकृतिरूपोपाधेर्धर्म्म आत्मनः शुद्धस्यासन्नपि मायया अहमेव सोऽयमित्यावेशात् मायोपाधितादात्म्यापन्नस्याहंकारभावस्य प्रतिबिम्बस्थानीयस्य तस्य द्रष्टुराध्यात्मिकाद्यवस्थस्यैव यद्यपि स्यात्, शुद्धेऽसौ तदभेदाभिमानेन तं पश्यतीति तस्यैव स्यादित्यर्थः। तथापि तदुक्तमेकादशे श्रीभगवता "नृत्यतो गायतः पश्यन् तथैवानुकरोति तान्। एवं बुद्धिगुणान् पश्यन्ननीहोऽप्यनुकार्य्यत" इति तथैवोक्तं शुद्धो विचष्टे ह्यविशुद्धकर्त्तुरिति विशब्दस्य चात्र तदावेश एव तात्पर्य्यं तस्मात् भगवतोऽचिन्त्यस्वरूपान्तरंगमहाप्रबलशक्तित्वाद्बहिरंगया प्रबलयाप्यचिन्त्ययापि मायया न सृष्टिः। जीवस्य तु तया सृष्टिरिति सिद्धान्तितम् ॥ ११ ॥ ❀ ❀ स वै इति निवृत्तिधर्मेण निष्कामस्वभावेन भक्तियोगेन या वासुदेवानुकम्पा तया शनैस्तदनुकम्पातारतम्येन तिरोधत्ते ॥ १२ ॥ १३ ॥ अशेषेति। अत्र ब्रह्मन्नित्यादिद्वये प्रथमप्रश्नाभिप्रायोऽयं तत्त्वदेवताप्रार्थनं भवता यद्व्यञ्जितं भक्तिवशतामयलीलाया भगवान् सृष्ट्यादौ प्रवर्तत इति तदप्यघटमानं वस्तुविरोधात् स्वभावविरोधाच्चेति। देशत इत्यादिद्वये तु तत्प्रस्तावत्वेन प्रश्नान्तरं ज्ञेयम्। अथोत्तरम्। उपदेष्टव्यावशिष्टविज्ञानरूपचतुःश्लोकी द्वितीयश्लोकार्थानुसारेणैव। तत्र सेयमित्यत्र भगवत इत्यनेनाचिन्त्यशक्तित्वमेव सिद्धान्तः। अत्र भक्त्याख्यशक्तेरपि तादृशसामर्थ्यं व्यञ्जितम्। यतः पुनश्च स वै निवृत्तिधर्म्मेणेत्यादिभिः ससाधनं रहस्यमुपदिष्टं यत्रैव कुतः पुनरत्यन्तिमार्द्धे कैमुत्येन तत्सेवारतेः फलमशेषसंक्लेशशमनमात्रं न भवति किन्तु पूर्व्वोक्तरीत्या श्रीभगवद्वशीकरणमेवेति च द्योतितम् ॥ १४ ॥ ❀ ❀ अत एवाह संछिन्न इति। उभयत्र ईश्वरे जीवे च। यद्वा। ज्ञानविज्ञानरूपे ज्ञाने प्रेमणि तत्साधनरूपायां भक्तौ चेत्यर्थः। संप्रधावति सम्यक् प्रविशति ॥ १५ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

ननु ज्ञानानन्दाद्यावरणं जीवस्य भवतु नाम। रागद्वेषशोकमोहकामादयो धर्म्मास्तेन कुतो लब्धास्तत्राह यथेति। अनात्मनोऽन्तःकरणस्यैव गुणः शोकमोहादिः द्रष्टुरात्मनो जीवस्यासन् तत्र न सम्भवन्नपि दृश्यते तत्र लिङ्गदेहाध्यासात् प्रतीयत इत्यर्थः। उपाधिधर्म्मस्योपहितवर्त्तित्वेन प्रतीतौ दृष्टान्तः। यथा जले इति तत्कृतः जलोपाधिकृतः कम्पादिश्चन्द्रस्य प्रतीयते वस्तुतस्तु न स चन्द्रस्य किन्तु जलस्यैवायमर्थः। जले यश्चन्द्रो दृश्यते स हि चन्द्रमण्डलस्य किरणपुञ्ज एव न तु चन्द्रः। तथाहि चन्द्रसूर्य्यादिकिरणः जलस्थलवृक्षभित्तिपाषाणादिषु प्रसर्पन्नपि तेषु मध्ये यत् स्वच्छं तत्र लोकैः स प्रतिबिम्बतयोच्यते। चन्द्रो हि मुखनासिकाहस्तपादादिभूषणवाहनादिपरिकरविशिष्टत्वेनैव तत्रत्यैर्जनैरनुभूयते स हि भगवद्दृष्टान्तः। स एव स्वस्वरूपभूतकिरणपुञ्जव्याप्तस्तु किञ्चिदन्तिकस्थैः किञ्चिद्दूरस्थैश्चाकिञ्चिद्विशेषत्वेन निर्विशेषत्वेन चानुभूयमानः क्रमेण परमात्मदृष्टान्तो ब्रह्मदृष्टान्तश्च ज्ञेयः तद्बहिर्भूतकिरणपुञ्जस्तु मण्डलाकारसमष्टिजीवदृष्टान्तः तत्प्रतिबिम्बो यो जले दृश्यते स प्रतिबिम्बत्वेन प्रतीयते मात्रं न तु वस्तुतः प्रतिबिम्बस्तत्र जलेऽपि किरणपुञ्जस्य सत्यस्यैव दृश्यमानत्वादतः स एव जलोपाधिवर्त्ती जलधर्म्मैः कम्पादिभिर्यथान्वितस्तथैवान्तःकरणधर्म्मैः शोकमोहादिभिरन्वितो जीवस्तदध्यासात् तदितस्ततः प्रसृमराः किरणास्तु व्यष्टिजीवदृष्टान्ता ज्ञेया इति ॥ ११ ॥ ❀ ❀ तर्हि जीवस्य कथं निस्तारस्तत्राह स अनात्मनो गुणः निवृत्तिधर्म्मेण निवृत्तिधर्म्मजन्येन भक्तिमिश्रज्ञानेनेत्यर्थः। तथा स्वभक्तद्वारया वासुदेवानुकम्पया उद्भूतेन भगवद्भक्तियोगेन तिरोधत्ते। तन्निवृत्त्युपायो हि ज्ञानं वा भक्तिर्वा भवेदिति वाक्यार्थः। शनैरिति साधनानुसारेणानर्थनिवृत्तितारतम्येनेत्यर्थः ॥ १२ ॥ ❀ ❀ तर्हि सर्वानर्थनिवृत्तिः कदेत्यपेक्षायामाह यदेति तत्र। ज्ञानमते इन्द्रियाणां मनोवृत्तीनामुपरामो लयः। सुषुप्तिव्यावृत्त्यर्थमाह द्रष्टुरात्मन्यन्तर्यामिणि परब्रह्मणि हरौ भगवति वा ज्ञानांगभूतया भक्त्या

अनुभूयमाने सतीति शेषः। कृत्स्नक्लेशविलयमात्रे दृष्टान्तः संसुप्तस्य सुषुप्तिं प्राप्तस्य यथा धनपुत्रादिनाशदुःखानि जायंते अथ भक्तिमते। हरौ स्वसौन्दर्यादिभिर्मनोहारिणि यदा इन्द्रियाणां चक्षुःश्रोत्रादीनामुपरामो नैश्चल्ये भगवत्सम्बन्धिसौंदर्यसौस्वर्यसौरभ्यसौकुमार्यमाधुर्यवैदग्ध्येष्वेव चक्षुःश्रोत्रघ्राणत्वग्जिह्वामनांसि सर्वथा निमज्जन्ति। न पुनः प्राकृतरूपशब्दाद्यास्वादं जिघृक्षन्ति। हरौ कथम्भूते द्रष्टात्मनि द्रष्टृस्वरूपे स्वीयभक्तं कृपाकटाक्षविषयं कुर्वतीत्यर्थः'। परे परमेश्वरे प्रकृतेः परत्रेति वा। क्लेशाभावमात्रं दृष्टांतः संसुप्तस्य नतु सुप्तोत्थितस्येत्यर्थः। तस्य यथा स्वप्नदृष्टाः स्वशिरश्छेदनादिक्लेशा लीयंत इति ॥ १३ ॥ ❀ ❀ नन्वविद्योपरमार्थमुक्तयोर्ज्ञानभक्तियोगयोर्मध्ये कतरस्य श्रैष्ठ्यं तत्र भक्तिरेव श्रेष्ठेत्याह अशेषेति। किं वेति किं पुनरित्यर्थः। सेवायां रतिरत्यासक्तिरित्यर्थः, आत्मलब्धा स्वेनैव स्वस्मिन् वा प्राप्तेति रतेः स्वप्रकाशत्वमाजन्यत्वं व्यञ्जितं साधनभक्तिरेवाविद्यामुपशमयति किं पुनस्तत्साध्या रतिरिति। रतेर्मुख्यं फलमविद्योपशमो न भवति किन्तु भगवद्वशीकार इति भावः॥ १४॥ ❀ ❀ मह्यं मम मां बोधयितुं तव तत् सूक्तं तदेवासिस्तेन उभयत्र ईश्वरे जीवे च संप्रधावति सविवेकं प्रविशति॥ १५॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

अन्यगुणोऽन्यसंबंधित्वेन प्रतीयते इति सदृष्टांतमाह यथेति। जले सतः चंद्रमसः चंद्रप्रतिबिंबस्य तत्कृतः तस्मिन् जले कृतः वाय्वादिजानतः अर्थात् जलगुणः कंपादिः प्रतीयते नतु प्रतिबिंबस्यैव कंपादिर्गुणः स्वाभाविकः एवं अनात्मनः देहादेः कृशत्वादिगुण द्रष्टरि देहादिसाक्षिणि आत्मनि असन् अपि अविद्यमानोऽपि द्रष्टुरेव आत्मज्ञत्वेन प्रतीयते इत्यर्थः॥ ११॥ ❀ ❀ आत्मविपर्ययस्य निवृत्तिहेतुमाह स इति द्वाभ्याम्॥ १२॥ १३॥ ❀ ❀ विश्वसृष्ट्यादिलीलायां निमित्तं नास्ति अतः सा कथं घटेतेति प्रथमाक्षेपसमाधानं वदन् पराभक्तेः संसारनिवर्त्तकत्वं कैमुतिकन्यायेनोपपादयति अशेष इति। हरेः गुणानां विश्वसृष्ट्यादिलीलानां योऽनुवादः अनुवर्णनं तच्छ्रवणं हरिगुणानुवादश्रवणरूपा भक्तिरित्यर्थः, अशेषाः संक्लेशा यस्मिन् स संसारस्तच्छमं विधत्ते। अनेन विश्वसृष्ट्यादिलीलानिमित्तं दर्शितं जीवानामनुग्रहार्थं विश्वसृष्ट्यादिकं भगवान्करोतीत्यर्थः। आत्मनि हृदि लब्धा ध्यानरूपा ध्रुवात् स्मृतिरूपा हरिचरणारविंदयोर्यः परागस्तत्सेवारतिः अशेषसंक्लेशशमं विधत्ते इति कुतः पुनर्वक्तव्यम्॥ १४॥ ❀ ❀ सूक्तासिना सोपपत्तिवाक्यरूपेण खड्गेन निर्निमित्ता लीला कथं घटेत इत्यादिसंशयः संछिन्नः। किंच भगवत्सन्निधौ सतोऽपि जीवस्य तन्मायया बंधपूर्वकः आत्मविपर्ययः तद्भजनेन तन्निवृत्तिरित्युभयत्र॥ १५॥

## श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

अतो मायायां प्रतीत्या सम्बन्धात्, तत्सम्बन्धाभावार्थमुपायमाह—स वै निवृत्तिधर्मेणेति। स मायासम्बन्धो धर्मत्रयेण निवर्तते। यथा त्रिदोषे पुरुषो म्रियते, तथा धर्मत्रयसम्बन्धे तस्मिन्नेव शरीरे मायासम्बन्धो गच्छति प्रतीत्यात्मा। तान् धर्मानाह—निवृत्तिधर्मेणेत्यादिपदैः। तत्र प्रथमं निवृत्तिधर्माः। कर्तव्याः, न निवृत्तिमात्रम्। तथा सति भगवत्कृपा न स्यात्। विधानेन परित्यागः पुनस्त्यक्त्वा परिग्रहः। एकाकित्वं तीर्थसेवा मौनं कृष्णानुचिन्तनम्। कालादि प्राप्तदुःखस्य सहनं चाऽप्रतिक्रिया। दयासन्तोषात्मजया मुख्या धर्मा निवृत्तितः। ततो भगवदनुकम्पा, सत्त्वाकारान्तःकरणे स्फुरितस्य भगवतः कृपावलोकनम्। ततो भगवद्विषयकत्वाद्भक्तेः साधनरूपत्वम्। योग इति निरन्तरकृतिः। निरन्तरश्रवणादिकं भगवत्कृपाव्यतिरेकेण न भवतीति भगवद्भक्तियोगः पश्चादुक्तः। एवं त्रिभिर्गुणैर्मायासम्बन्धः शनैरस्मिन्नेव जन्मनि तिरोधत्ते। शनैरिति साधनबलानुसारेण॥ ११॥ ❀ ❀ सहसा सर्वक्लेशनाशार्थमुपायमाह—यदेन्द्रियोपरामोऽथेति। यदैव सर्वेषामिन्द्रियाणां स्वत एव स्वविषयेभ्यो निवृत्तिः, अथ तदा भिन्नप्रकारेण आत्मनि द्रष्टा भवति, द्रष्टृत्वेन आत्मा स्फुरति; प्रकृत्यादिनियामकत्वं च स्फुरति, स्वस्य हरित्वं च तदा विलीयन्ते सर्वे क्लेशा अविद्यादयः। ते पञ्चमस्कन्धे वक्तव्या भवाटव्याम्। निवृत्तेरसम्भावितत्वनिराकरणाय दृष्टान्तमाह—संसुप्तस्येति। संसुप्तस्य[1] आत्मना सहैक्यं प्राप्तस्य। 'यथा स्त्रिया संपरिष्वक्त एवमेवायं शारीर[2] आत्मा प्राज्ञेनाऽऽत्मना संपरिष्वक्तः शेते' इति श्रुतेः। यदेति वचनात् नाऽस्य साधनस्य सिद्धिकालो नियतः॥ १२॥ ❀ ❀ अतो नियतं हेतुमाह—अशेषसंक्लेशशमं विधत्त इति। भगवतो माहात्म्यज्ञापकं धर्मानुकीर्त्तनपूर्वकं श्रवणमशेषसंक्लेशशमं विधत्ते। गुणानुवादश्रवणस्य संक्लेशशमस्य च कार्यकारणभावः कारणविद्यमानदशायामेव। तेन यावत्संक्लेशनाशं गुणानुवादश्रवणं कर्तव्यम्। अतो नैकेन श्रवणेन सर्वसंक्लेशाभावो जात इति विरोधो न मन्तव्यः, परं नियतकारणत्वमत्रोच्यते। मुरारेरिति विघ्नाभावस्तत्र स्वतः सिद्धः। यदा श्रवणमेवैतद्विधत्ते, तत्र भगवच्चरणारविन्दरतिर्विधत्त इति किं वक्तव्यम्। तदाह—कुत इति। किं पुनरिति वक्तव्ये कुत इति वचनम्, रतिसाधकश्रवणदशायामेव क्लेशा निवृत्ता इति रतिः कुतो निवर्त्तयिष्यतीति ज्ञापितम्। चरणरविन्देति भक्तिमार्गानुसारः। चरणारविन्दस्य परागाः पूर्वं

---

१. सुपुप्तस्य ख. ग. घ. च.। २. शारीरात्मा क. ख. ग.।

निरूपिता गङ्गायां भगवदीयशरीरे च सन्तीति तत्र सेवायां रतिः। पराग एव वा मथुरादिस्थितः सेव्य इति। [1]'चरणसेवा-मकरन्दः। भजनानन्दः स्वतः पुरुषार्थरूपः; तत्संबन्धिनी सेवा; तस्यां रतिः प्रीतिः। साऽप्यात्मनैव लब्धा, अकस्मात्प्राप्ता आत्मनि वा लब्धा। स्वतः पुरुषार्थसेवायां स्वभावतो या रुचिः सा सर्वमेव क्लेशं दूरीकरोतीति। एवं साधनत्रयमुपदिष्टं कर्ममार्गानुसारेण, ज्ञानमार्गानुसारेण भक्तिमार्गानुसारेण च॥ १३॥ ❀ ❀ एवं मायापगम एव सर्वसन्देहनिवृत्तिरिति मैत्रेयोक्तं श्रुत्वा, साधनं भगवद्रतिं साधनवाक्येन स्मृत्वा, तस्यामुद्गतायां स्वत एव संशयो गत इति, तदुक्तं फलं जातमिति, स्वहृदये जातसंशयाभावस्तस्याऽग्रेऽनुवदति—संछिन्न इति। अन्यथा सन्देहाभावस्य गुरुशास्त्रप्रतिपाद्यता न स्यात्। मह्यं मदर्थं प्रयुक्तो यस्तव सूक्तासिरुत्तमवाक्यखड्गः, तेन संशयश्छिन्नः, न तु युक्त्या मोचितः। वचनं च खड्गरूपम्, साधन प्रदर्शनरूपत्वात्। अतः परं च युक्तिर्न वक्तव्या। भगवन्मायां शम्बलत्वेन स्वीकृत्य, तया सह यत्रैव बुद्धिः प्रेर्यते, तत्रैव बुद्धिरप्रतिता गच्छति, धनुषि योजितः शर इव। तदाह—उभयत्रापीति। भगवतः स्वातन्त्र्ये जीवपारतन्त्र्ये वा, जगतो बीजप्रयोजनयोर्वा, ज्ञानमायासंबन्धयोर्वा, संशयश्छिन्न इति उभयत्राऽपि मे मनः सम्यक् प्रधावति। भगवन्निति संबोधनं स्वस्मिंस्तादृशज्ञानजननसामर्थ्यबोधाय। प्रकर्षेण धावनं युक्त्यपेक्षारहितं निष्प्रत्यूहम्। सम्यक्त्वं च प्रयासाभावः॥ १४॥ ❀ ❀ न केवलं पूर्वप्रश्नेष्वेव मम सन्देहो गतः, किन्त्वन्यत्र सर्वत्रैव कार्यसन्देहो गत इत्याह—साध्वेतदिति। एतन्मायानिरूपणवचनं यद्भवता व्याहृतम्, तत्साध्वेव व्याहृतम्। विद्वन्निति तवाऽत्राऽनुभवोऽस्तीति विज्ञापितम्, न तु शास्त्रदृष्टिमात्रेण। किंनिरूपितमित्याकाङ्क्षायामाह—आत्ममायायनं हरेरिति। हरेः संबन्धिनो य आत्मानो जीवाः, तेषां या माया व्यामोहिका पूर्वं चतुःश्लोक्यां निरूपिता, तस्या मायाया अयनं स्थानं विषयाकारो ब्रह्म, जडत्वेन आत्मानात्मत्वे यत् स्फुरति, तदपार्थमेव स्फुरति। मायैव वा अयनं यस्येति। मायाकृतो योऽन्तरासर्गः स तु अपार्थमेवाऽऽभाति। वस्तु दूरीकृत्य निर्विषयकमेव ज्ञानं मायावृतं यत्किंचिद्विषयत्वेन भाति। तर्हि सर्वदैव भायात्? ततश्चाऽनिर्मोक्षप्रसङ्ग इत्याशङ्क्याऽऽह—निर्मूलमिति। मायातिरिक्तमूलाभावात्, अन्तराभानात्, तत्स्पर्शे ब्रह्मावभानात्तदैव गच्छतीति निर्मूलत्वम्। एवमेव हि शुक्तिकायां रजतप्रतीतिरन्तरा भासते, तत्स्पर्शे च निवर्त्तत इति। अयमेवाऽर्थो मन्त्रेऽपि निरूपितः, 'न तं विदाथ य इदं[2] जजानाऽन्यद्युष्माकमन्तरं बभूव' इति। जगत्, भगवान्, कर्तृत्वं च श्रुतिसिद्धं सत्यमेव। सृष्टस्य ब्रह्मस्वरूपस्य जगतस्तथात्वप्रतीतौ व्यामोहिकया मायया मध्ये अन्यथैव प्रत्याय्यते। अविकृतं कार्यम्, कारणम्, कृतिश्च। युष्माकमिति वचनान्न सर्वेषामयमनुभवः। यत्पुनः प्रमेयाध्याये अविरोधे विलक्षणत्वं समर्थितं पूर्वपक्षे; 'न विलक्षणत्वात्...' इति 'अस्य तथात्वं च शब्दात्' इति। 'विज्ञानं चाऽविज्ञानं च' इति। तत्सिद्धान्ते वादिबुद्धिमनुसृत्य ब्रह्मवादस्य वक्तुमयुक्तत्वात् परोक्षतया 'दृश्यते तु' इत्यनेन परिहृतम्। विलक्षणं दृश्यते, न तु वस्तुत इत्यर्थः। श्रुतिस्तु पूर्वकाण्ड इव लोकसिद्धमनुवदति तत्ज्ञानार्थम्, यथा 'दहरं वै सा पराभ्याम् इति' लौकिकदेहा[3]नुवादः। अत एव 'सत्यं चाऽनृतं च सत्यमभवत्' इत्युभयथा प्रतीयमानं सत्यमेव वस्तुतो जातमिति बोधयति। तदप्येतस्य भगवद्ध्यानात् तथा स्फुरितमिति तस्याऽनुवादः। मध्यस्थमात्रानुवादो वा, मायावादिवत्। किञ्च, विश्वस्य यन्मूलं तद्बहिर्विषयेषु नास्ति भगवतो मायातीतत्वात्; किन्तु बुद्धेः सकाशादुद्गता मध्य एव [4]स्फुरति। तस्मादस्मिन् शास्त्रे उभावेव सुखिनौ अज्ञानसङ्कटरहितौ॥ १५॥

## श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

भगवत्पदतात्पर्यमाहुः—भगवदित्यादि। तथा च, रूपान्तरभक्तेस्तथात्वव्युदासाय भगवदित्यर्थः॥ १२॥ ❀ ❀ अशेषेत्यत्र। कारणविद्यमानदशायामिति तथा च, सर्वक्लेशनाशभगवच्छ्रवणयोर्दाहवह्निवत् कार्यकारणभावः, न तु घटदण्डवदित्यर्थः। अत इति। क्लेशबाहुल्येन नाशबाहुल्यस्याऽऽवश्यकत्वात्। अमानने हेतुमाहुः—परमित्यादि। तत्र सेवायामिति। गङ्गायां भगवदीये च सेवायाम्॥ १३॥ ❀ ❀ संछिन्न इत्यत्र। अन्यथेति। रतिफलकत्वाभावे॥ १४॥ ❀ ❀ साध्वेतदित्यत्र। निर्विषयकमिति। सत्सम्प्रयोगेऽपि विषयाग्राहकं प्रमेयाश्रयमिदं ज्ञानमिति तत्स्थलं मायावृतमिति मायाश्रितमित्यर्थः। अन्यथैव प्रत्याय्यत इति। विषयतारूपं विकृतं जगत्कृत्वा ब्रह्मरूपे जगति जडमोहात्मकत्वं तुच्छत्वं प्रत्याय्यते, आत्मरूपेऽनात्मत्वं च प्रत्याय्यत इत्यर्थः। ननु जडत्वादिप्रत्ययस्य सार्वजनीनत्वेन भ्रमत्वस्याऽशक्यवचनत्वात् कथमस्य निर्मूलत्वमित्याकाङ्क्षायामेतस्याऽसार्वजनीनत्वमेव श्रुतिसिद्धमित्याहुः—युष्माकमित्यादि। ननु भेदवादिभिः सांख्यादिभिरपि 'विज्ञानं चाऽविज्ञानं च' इति श्रुतिबलाज्जगद्ब्रह्मवैलक्षण्यं प्रतिपाद्यते, तच्च तत्त्वसूत्रेष्वनूद्यत इति कथं कार्यस्याऽविकृतत्वं निश्चेयमित्यत आहुः—यदित्यादि। सूत्रार्थस्तु—अस्य जगतो विलक्षणत्वादचेतनत्वाच्चेतनमस्योपादानं न युक्तम्, लोके कार्यकारणयोः सालक्षण्यस्य घटपटादिषु दर्शनात्, युक्तिबाधितस्याऽप्यस्य वेदेनाऽपि वक्तुमयुक्तत्वात्, वचने च प्रतारकवाक्यवदप्रामाण्यप्रसङ्गात्। ननु युक्तेः प्रत्यक्षमूलत्वात् भ्रमत्वस्याऽपि दर्शनादियं युक्तिर्नाऽस्माभिरङ्गीकार्येत्यतो हेत्वन्तरमाहुः—अस्य तथात्वं च शब्दादिति। अस्येति पदं देहलीदीपवदुभयत्र सम्बध्यते। चोऽवधारणे। तथात्वं चेतनत्वं चेतनविलक्षणत्वं 'विज्ञानं चाऽविज्ञानं च' इति शब्दादेव

१. चरणरसो वा ग, च, चरणरसो वा ख.। २. इमा.। ३. देहानुवादः क. देशानुवादः ख.। ४. स्फुरन्ति क, ग.।

सिद्धम्, अतो न चेतनं जगदुपादानमिति। सिद्धान्तसूत्रार्थमाहुः—विलक्षणमित्यादि। चेतनविलक्षणं जगत् तत्स्पर्शरहितानामन्तरासृष्टिपर्यवसितमतीनां मायादोषेण दृश्यते, न तु विलक्षणमित्यर्थः। नन्वग्रे बाधाभावाद्दर्शनस्य प्रामाण्ये वैलक्षण्यस्याऽपि प्रमितत्वान्न बाधत इत्यत आहुः—त्विति। तुः शङ्कानिरासे। प्रमितमपि वैलक्षण्यं न चेतनस्योपादानताविघटकम्, कार्यकारणवैलक्षण्यस्याऽपि लोके दृष्टत्वात्। चेतनात् पुरुषदेहादचेतनस्य केशनखादेः, अचेतनाद्गोमयादेर्वृश्चिकानां चोत्पत्तिदर्शनात्। न च तत्राऽचेतनाद्देहादेरचेतनानामेव केशादीनां वृश्चिकादिदेहानामुत्पत्तिरिति न वैलक्षण्यमिति वाच्यम्। तथा सति ब्रह्मणः सदंशाज्जगतः सत उत्पत्तिरिति तुल्यत्वात्, कार्यकारणयोः सर्वांशसालक्षण्यस्य लोकेऽप्यदर्शनात्, घटादौ पिण्डत्वादेरभावात्। अथ येन धर्मेण कारणं वस्त्वन्तराद् व्यावर्तते, तेन धर्मेण सादृश्यं विवक्षितमितीतरवैलक्षण्यं न दोषायेत्युच्यते। तदसङ्गतम्। देहगोमयादीनां देहत्वगोमयत्वादिनैवेतरवस्तुव्यावृत्तत्वेन केशवृश्चिकदेहादिषु' तदभावेन तत्सादृश्यस्याऽप्यभावात्। अतो विलक्षणत्वस्यहेतोः प्रमितत्वेपि साधारणत्वात् न तेन ब्रह्मकारणताविघटनमिति। वस्तुतस्तु यत्त्वया चेतनवैलक्षण्यं दृश्यते, तद्भ्रान्तिरेवेत्यर्थः। ननु यदि चेतनवैलक्षण्यं प्रपञ्चे न स्यात्, 'विज्ञानं चाऽविज्ञानं च' इति श्रुतिः किमिति विभजतीत्यत आहुः—श्रुतिस्त्वित्यादि। तज्ज्ञानार्थमिति। सदंशाज्जडानाम्, चिदंशाज्जीवानामित्यादिज्ञानार्थम्। दृष्टान्तं व्याकुर्वते—यथेत्यादि। श्रुतिस्तु (तदाहुः) 'या चैत्ररेकस्याह्न उपसीदन्ति। दहरं वै सा पराभ्यां देहाभ्यां दुह (?) इति तैत्तिरीयाणां सप्तमाष्टकप्रथमप्रपाठकतृतीयानुवाकस्था (?) अत एवेति। यतः प्रतीतवैलक्षण्येऽपि कारणत्वं ब्रह्मण एवाऽभिप्रेतम् एतस्येति। विदुरस्य। प्रकरणानुरोधेन पक्षान्तरमाहुः—मध्यस्थेत्यादि। उद्गतेति। मायारूपा विषयता उद्गता॥ १५॥

**श्रीगिरिधरकृता बालप्रबोधिनी**

तर्ह्येवं विपर्ययो भगवतोऽपि कुतो नेत्याशंक्य दृष्टान्तेन तन्निराकरोति—यथेति। यथा जले प्रतिबिम्बितस्यैव चन्द्रमसस्तत्कृतो जलोपाधिकृतः कम्पादिर्गुणः धर्मो दृश्यते, नत्वाकाशे स्थितस्य चन्द्रस्य, तथा अनात्मनो देहेन्द्रियादेर्गुणः सुखदुःखादिधर्मः आत्मन्यसन्नविद्यमानोऽपि द्रष्टुरात्मनो देहाद्यभिमानिनो जीवस्यैव भवितुमर्हति, न तु भगवत इत्यर्थः॥ ११॥ ❀ ❀ नन्वेवं चेत्तर्हि तस्य विपर्ययस्य निवृत्तिः कथमित्यपेक्षायामाह—स वा इति। वै निश्चितमेतन्नात्र सन्देहः। निवृत्तिधर्मेण भगवदर्पितकर्मानुष्ठानेन वासुदेवस्य चित्ताधिष्ठातुर्भगवतोऽनुकम्पा कृपा भवति, तया च भगवति श्रवणकीर्तनप्रभृतिपरमप्रेमपर्यन्तो भक्तियोगो भवति, तेन स देहाद्यध्यासजनितः आत्मविपर्ययः शनैस्तिरोधत्ते। धर्मादितारतम्येन कालतारतम्यं ज्ञेयमतः कालविलम्बेऽप्युद्वेगो न कार्य इति शनैरित्यनेन सूचितम्। 'बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते। अनेकजन्मसंसिद्धस्ततो याति परां गतिम्' इत्यादिशास्त्रे इयमेव रीतिरित्याह—इहेति॥ १२॥ ❀ ❀ का वा परमा भक्तिर्यया सर्वक्लेशविनाश इत्यपेक्षायामाह—यदेति। अथ श्रवणादिसाधनभक्त्यनन्तरं यदा इन्द्रियाणां चक्षुश्श्रोत्रघ्राणत्वग्जिह्वामनसामुपरामो हरौ भक्तक्लेशहरणस्वभावे भगवति भवति प्राकृतसौन्दर्यादिभ्यः परावृत्तानां भगवत्सौन्दर्यसौस्वर्यसौरभ्यसौकुमार्यवैदग्ध्यादिषु निश्चलता भवति तदा कृत्स्नशः सर्वे समूला अविद्यास्मितारागद्वेषाभिनिवेशात्मकाः क्लेशा विलीयन्ते इत्यन्वयः। भगवत्सम्बन्धे सर्वक्लेशनिवृत्तिर्नासम्भाविता प्रतिदिनमनुभूयमानत्वादित्याशयेन दृष्टान्तमाह—संसुप्तस्येवेति, परमात्मना सहैक्यं प्राप्तस्येवेत्यर्थः। "यथा स्त्रिया सम्परिष्वक्त एवमेवायं शारीर आत्मा प्राज्ञेनात्मना सम्परिष्वक्तः शेते" इति श्रुतेः। परन्तु संसुप्तस्य पुनरुत्थाने क्लेशा भवन्ति, भक्तस्य तु पुनः कदापि ते न भवन्तीति विशेषः। भक्तदुःखहरणशीलत्वेऽपि सामर्थ्यं विना किं स्यादित्याशङ्क्य सामर्थ्यमाह—परे इति, सर्वोत्कृष्ट इत्यर्थः। तत्र हेतुमाह—द्रष्ट्रात्मनीति, सर्वसाक्षिणि सर्वान्तर्यामिणि चेत्यर्थः॥ १३॥ ❀ ❀ उक्तमेव कैमुत्यन्यायेन द्रढयति—अशेषेति। मुरारेर्मुरदैत्यविनाशकस्य श्रीकृष्णस्य गुणानुवादश्रवणं गुणानामनुवादः अनुकीर्त्तनं श्रवणं चेत्येतदुभयमेव अशेषसंक्लेशानां शमं विधत्ते विनाशं करोति। यद्येवं तर्हि आत्मनि अन्तःकरणे लब्धा जाता तस्य भगवतश्चरणारविन्दयोः परागः मकरन्दः परमानन्दरूपस्तस्य सेवायां रतिः प्रीतिः अशेषसंक्लेशशमं विधत्ते इति कुतः पुनः किं पुनर्वक्तव्यम्? इत्यन्वयः॥ १४॥ ❀ ❀ उत्तरमभिनन्दन्नात्मनः कृतार्थतामाविष्करोति—सच्छिन्न इति षड्भिः। गुरोस्तव प्रभावादेव मम सन्देहो निवृत्तो न मम बुद्धिबलादित्याशयेन सम्बोधयति—विभो इति। चिन्मात्रस्य कथं जगत्कर्तृत्वं कथं वा निर्गुणस्य गुणसम्बन्धः कथं वा भगवतः स्वातन्त्र्यं जीवस्य च पारतन्त्र्यमित्यादिपूर्वोक्तो यो मह्यं मम संशय आसीत् स तव सूक्तं सोपपत्तिकं वाक्यमेवासिः खड्गस्तेन सञ्छिन्नः सम्यक् निवृत्तः। अत इदानीं मे मन उभयत्रापि भगवतः स्वातन्त्र्ये जीवस्य पारतन्त्र्ये च सम्प्रधावति प्र-सम्यक् निस्सन्दिग्धं प्रवर्त्तते॥ १५॥

**हिन्दी अनुवाद**

यदि यह कहा जाय कि फिर ईश्वरमें इनकी प्रतीति क्यों नहीं होती, तो इसका उत्तर यह है कि जिस प्रकार जलमें होनेवाली कम्प आदि क्रिया जलमें दीखनेवाले चन्द्रमाके प्रतिबिम्बमें न होनेपर भी भासती है, आकाशस्थ चन्द्रमामें नहीं, उसी प्रकार देहाभिमानी जीवमें ही देहके मिथ्या धर्मोंकी प्रतीति होती है, परमात्मामें नहीं॥ ११॥ ❀ ❀ निष्काम-

---

केशवृश्चिकदेहादिति तद्भावेन. पु.।

भावसे धर्मोंका आचरण करनेपर भगवत्कृपासे प्राप्त हुए भक्ति-योगके द्वारा यह प्रतीति धीरे-धीरे निवृत्त हो जाती है ॥ १२ ॥ ❀ ❀ जिस समय समस्त इन्द्रियाँ विषयोंसे हटकर साक्षी परमात्मा श्रीहरिमें निश्चलभावसे स्थित हो जाती हैं, उस समय गाढ़ निद्रामें सोये हुए मनुष्यके समान जीवके राग-द्वेषादि सारे क्लेश सर्वथा नष्ट हो जाते हैं ॥ १३ ॥ ❀ ❀ श्रीकृष्णके गुणोंका वर्णन एवं श्रवण अशेष दुःखराशिको शान्त कर देता है; फिर यदि हमारे हृदयमें उनके चरणकमलकी रजके सेवनका प्रेम जग पड़े, तब तो कहना ही क्या है ? ॥ १४ ॥ ❀ ❀ विदुरजीने कहा—भगवन् ! आपके युक्तियुक्त वचनोंकी तलवारसे मेरे सन्देह छिन्न-भिन्न हो गये हैं। अब मेरा चित्त भगवान्‌की स्वतन्त्रता और जीवकी परतन्त्रता—दोनों ही विषयोंमें खूब प्रवेश कर रहा है ॥ १५ ॥

**साध्वेतद् व्याहृतं विद्वन्नात्ममायायनं हरेः। आभात्यपार्थं निर्मूलं विश्वमूलं न [1]यद्बहिः ॥ १६ ॥**
**यश्च मूढतमो लोके यश्च बुद्धेः परं गतः। तावुभौ सुखमेधेते क्लिश्यत्यन्तरितो जनः ॥ १७ ॥**
**अर्थाभावं विनिश्चित्य प्रतीत[2]स्यापि नात्मनः। तां चापि युष्मच्चरणसेवयाहं पराणुदे ॥ १८ ॥**
**यत्सेवया भगवतः कूटस्थस्य मधुद्विषः। रतिरासो भवेत्तीव्रः पादयोर्व्यसनार्दनः ॥ १९ ॥**
**दुरापा ह्यल्पतपसः सेवा वैकुण्ठवर्त्मसु। यत्रोपगीयते नित्यं देवदेवो जनार्दनः ॥ २० ॥**

### श्रीधरस्वामिविरचिता भावार्थदीपिका

यस्मात्त्वया साधु व्याहृतं किं तत् हरेः शक्तिर्या आत्ममाया जीवविषया माया तदयनं तदाश्रयमेतद्दुर्भगत्वादिकं भातीति। यद्यस्मात्स्वशिरश्छेदादिवदपार्थमवस्तुभूतं निर्मूलं मूलशून्यं च। यस्मादस्य मूलं विश्वस्य मूलं स्वाज्ञानं बहिर्विना नास्ति ॥ १६ ॥ ❀ ❀ अल्पज्ञत्वात्पूर्वं मम संशयो जात इत्याह। यश्चेति। मूढतमो देहाद्यासक्तो यश्च बुद्धेः प्रकृतेः परमीश्वरं प्राप्तस्तौ सुखं यथा भवति तथा एधेते जीवत इत्यर्थः। संशयक्लेशाभावात्। यस्तु दुःखानुसंधानेन प्रपंचं जिहासति स्वानंदसंवेदनाभावाद्धातुं न शक्नोति। स तु क्लिश्यतीत्यर्थः ॥ १७ ॥ ❀ ❀ इदानीं तु कृतार्थोऽस्मि यतस्त्वया संशयश्छिन्नः केवलं बाधितानुवृत्तिरेवावशिष्टा साऽपि युष्मत्प्रसादान्निवर्तिष्यत इत्याह। नात्मनः अनात्मनः प्रपंचस्य प्रतीतस्याप्यर्थाभावमर्थोऽत्र नास्ति किंतु प्रतीतिमात्रमिति युष्मच्चरणसेवया विनिश्चित्य तां प्रतीतिमप्यहं पराणुदेऽपनेष्यामीत्यर्थः ॥ १८ ॥ ❀ ❀ मधुद्विषः पादयोः रतिरासः प्रेमोत्सवस्तीव्रो दुर्वारः स्वाभाविकः व्यसनं संसारमर्दयति नाशयतीति तथा ॥ १९ ॥ ❀ ❀ अहो दुर्लभं प्राप्तं मयेत्याह। दुरापा दुर्लभा वैकुंठस्य विष्णोस्तल्लोकस्य वा वर्त्मसु मार्गभूतेषु महत्सु यत्र येषु महत्सेवया हरिकथाश्रवणं ततो हरौ प्रेम तेन च देहाद्यनुसंधानमपि निवर्तत इति तात्पर्यम् ॥ २० ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

स्वाज्ञानं विनेति स्वाज्ञानमेव। विश्वमूलमित्यर्थः ॥ १६ ॥ ❀ ❀ 'यश्च मूढतमोऽतीव, यो बुद्धेः परतस्तु सः' इति श्रीगीतोक्तेः। इत्यर्थ इति। वर्द्धनमत्र जीवनमेवानेकार्थत्वादिति भावः। अंतरितपदार्थमाह। यस्त्विति। इत्यर्थ इति। निश्चय-दार्ढ्याभावात्क्लेशमेवानुभवतीति भावः ॥ १७ ॥ ❀ ❀ इत्यर्थ इति श्रीमदाराधनबलेन मोक्षोऽपि न दुर्लभः किमु प्रपंचप्रतीत्यभाव इति भावः ॥ १८ ॥ ❀ ❀ नारायणांघ्रिसरोजसेवा संसारव्यथावारकत्वात्पुरुषार्थोपयोगिनी स्यात्किम-स्मच्चरणसेवयेति चेदाह—येषां हरिस्वरूपद्रष्टॄणां युष्माकं सेवया मधुद्विषः लोकहितकर्तुः कूटस्थस्य निर्विकारस्य ॥ १९ ॥ ❀ ❀ स्वात्मभाग्यं श्लाघयन्नाह—दुरापेति ॥ २० ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

यदर्थेन विनेत्यप्यनुवदन् संशयच्छेदहेतुवाक्यमाह साध्विति। यस्माद्धेतोः तत् साधु व्याख्यानं जीवमायाजीवव्यामो-हिनी तदाश्रयं तद्धेतुकं यस्मान्मायिकत्वात् बहिरित्यस्य व्याख्यानं विनेति टीकायां क्वचित्पाठव्यत्ययस्तु लेखकभ्रमात् ॥ १६ ॥ ❀ ❀ संशयक्लेशाभावात् मूर्खस्य संशयाभावात्परं गतस्य च क्लेशाभावादित्यर्थः। अंतरितपदस्य विवृतत्वादित्यर्थ इत्युक्तम् ॥ १७ ॥ ❀ ❀ बाधितानुवृत्तिः बाधितस्य मिथ्यात्वेन ज्ञातस्यानुवृत्तिः प्रतीतिर्यथाद्विचन्द्रज्ञानं बाधितमपि नेत्रदोषादनु-वर्त्ततेमात्रं तथा प्रपंचस्य प्रतीतिमात्रमेवावशिष्टमित्यर्थः। अत्र प्रपंचे अर्थः परमार्थसत्यत्वं नास्ति "वर्त्तमानसामीप्ये वर्त्तमानवद्वेति" इत्युक्तम् ॥ १८ ॥ ❀ ❀ वैष्णवचरणसेवाया आनुषङ्गिकं फलमुक्त्वा मुख्यफलमाह यत्सेवयेति। येषां युष्माकं पूर्वपद्ये

---

१. प्रा० प० त०। २. प्रा० प० तश्चा०।

प्रस्तुतत्वात् "साधुचन्द्रमसि पुरष्करैः . कृतं मीलितं यदभिरामताधिके" इतिवदुत्तरवाक्यस्थयच्छब्दस्य तच्छब्दाकांक्षा नास्ति। कूटस्थस्य निर्विकारस्य यद्वा कूटमन्नकूटमिति ख्यातं श्रीगोवर्द्धनाद्रिशृङ्गं तद्वर्त्तिनो मधुद्विषः श्रीकृष्णस्य रतिरासः तादृशप्रीत्या रासलीलासाक्षात्कारो भवेदित्यर्थं तीव्रो दुर्वारः नित्य इत्यर्थः रासलीलाया नृत्यप्रधानत्वात् नृत्यस्य च गतिप्रधानत्वात्पादयोर्व्यसनं दुःखम् अन्यव्यापारपरतां वाऽर्द्दयति नाशयतीति तथा ॥ १९ ॥ ❀ ❀ देहाद्यनुसंधानमप्रीत्यत्रापिना प्रेम्ण एव परमपुरुषार्थत्वं देहानुसंधाननिवृत्तेस्त्वानुषङ्गिकत्वं व्यज्यते एवं तात्पर्य्यार्थेन शुष्कं ज्ञानमनादृतम् ॥ २० ॥

## श्रीमद्वीरराघवव्याख्या

उत्तरमेव प्रपंचयन्नभिनंदति साध्विति। आत्मा जीवः माया प्रकृतिः उभयमेवायनं हरेस्तस्य वासस्थानमित्येतत् साधु त्वया व्याहृतं इत्यर्थः। पूर्वं हि शरीरगतच्छेदनादेरात्मन्यस्पर्शं दृष्टांतीकृत्य हि शरीरभूतचिदचिद्गतदोषाभावः परमात्मनि चत्सुष्टूक्तः अतस्तस्य भगवतः चिदचिद्व्याप्तिः पूर्वार्द्धेनानूदीकृता कथं चेतनाचेतन तस्यायतनं नहीदं जगत्तदात्मकत्वेन प्रतीयते इत्यत्राह यद्भातीति। विश्वमूलं विश्वकारणं यद्दर्शनं तद्बहिः यस्य जगतः बहिर्न अन्तः प्रविष्टं तदिदं जगन्निर्मूलं मूलभूतपरब्रह्मरहितं अतदात्मकं भातीति तत्तदिदमपार्थमर्थशून्यं निर्विषयं भ्रांतिरूपमिति यावत्। अनेनात्रह्मात्मकत्वप्रतिभासो मिथ्यारूप इत्युक्तम् ॥ १६ ॥ ❀ ❀ एवं देहात्मप्रतीतिर्भ्रांतिरूपेति वक्ष्यन्नब्रह्मात्मकस्वतंत्रात्मभ्रमदेहात्मभ्रमवतां क्लेशित्वमाह य इति। यश्च लोके मूढतमः यश्च बुद्धेः परं विलक्षणं ब्रह्मात्मकस्वात्मानं गतः कर्त्तरि क्तः अवगतवान् तावुभौ मूढतमात्मस्वरूपाभिज्ञौ सुखमेधेते वर्द्धेते मूढतमस्यापि मौढ्यमेव किंचित्सुखजनकमित्यभिप्रायः। इदं चांतरितस्य सर्वथा क्लेशित्वाभिप्रायकं अंतरितः न मूढतमः नापि बुद्धेः परं गतः किंतु संशयात्मा जनः क्लिश्यति ॥ १७ ॥ ❀ ❀ देहात्मप्रतीतेर्भ्रांतित्वं वदंस्तन्निवर्त्तने मूलकारणमाह अर्थाभावमिति। प्रतीतस्यापि आत्मतादात्म्यं न प्रतीयमानस्यापि नात्मनः अनात्मनः देहस्य निषेधार्थको नशब्दः अर्थाभावमात्मत्वाभावं विनिश्चित्य तां अपि देहात्मप्रतीतिमपि युष्मच्चरणसेवया सत्सेवाप्रणाड्येत्यर्थः। अहं पराणुदेऽपाकरोमीत्यर्थः ॥१८॥ ❀ ❀ सत्सेवाया एव प्रथमकारणत्वमाह यत्सेवयेति। यत्सेवया येषां सतां सेवया कूटस्थस्य निर्विकारस्य मधुद्विषः भगवतः पादयोस्तीव्रः विघ्नानुपहतः व्यसनार्द्दनतापत्रयनिवर्त्तकः रतिरासः रतेरुल्लासः अनुरागोल्लासः भवेत् ॥ १९ ॥ ❀ ❀ सत्सेवापि बहुतपसोपलभ्येति व्यतिरेकमुखेनाह दुरापेति। अल्पतपसः तपोहीनस्य वैकुंठवर्त्मसु वैकुंठप्रापकेषु भागवतेषु सेवा दुरापा हि दुर्लभा हीत्यर्थः। कथंभूतेषु यत्र वैकुंठवर्त्मसु देवदेवः ब्रह्मादीनामपि देवः जनार्द्दन उपगीयते अनेन सत्सेवायाः श्रवणादिप्रणाड्यैव भक्त्युत्पादकत्वमिति सूचितम् ॥ २० ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

अस्मद्वचननैशित्याभावात् संशयः किं नेत्याह साध्विति। हे विद्वन्! ब्रह्मसाक्षात्कारयोग्यज्ञानवन्! हरेरात्ममायायनं स्वरूपसामर्थ्याश्रयमयं हि भगवन्महिमेति यद्व्याहृतं त्वयोक्तं तत्साधुसंशयनिरासनैशित्योचितं आत्मेत्यनेन मायाशब्दस्येंद्रजालाभिधेयत्वं दूरोत्सारितं यद्यप्येवं तथाप्यपार्थं प्रयोजनशून्यं अत एव निर्मूलं पूर्वादृष्टमंतरेण कारणांतरशून्यदेहात्मत्वादिमनस्याभाति विश्वमूलं ब्रह्म च मम ज्ञानाद्बहिर्न भवति यद्यस्मात्तस्मादंतरित उभयभ्रष्ट इवास्मीति शेषः ॥ १६ ॥ ❀ ❀ एतदेव स्पष्टयति यश्चेति। लोके ब्रह्मणा सृष्टे जने यो मूढतमः अत्यंतज्ञानविवेकशून्यः यश्च बुद्धेः प्रकृतेः परं ब्रह्म गतः तावुभौ मत्तवत्सुप्तवत्सुखमेधेते अंतरितस्तयोर्मध्यवर्ती जनः स्वप्नदर्शिवत्क्लिश्यति क्लेशं प्राप्नोति तथाहमपि क्लिश्यामीत्यर्थः ॥ १७ ॥ ❀ ❀ त्वमंतरितजनेष्वेकश्चेत् संशयानुपगमेन मुक्तो न स्याः "तत्त्वसंशययुक्ता ये सर्वे ते निरयोपगा" इति वचनादित्याशंक्य स्थाणुर्वा पुरुषो वेति संदिहानो यथाप्तवाक्याद्वक्रकोटरादिदर्शनाद्वा संशयप्रतीतिं पराहृत्य स्थाणुरेवायं न पुरुष इति निश्चयज्ञानं प्रतिपद्यते तथाहमपि युष्मच्चरणसेवाप्रसन्नयुष्मदुपदेशादनात्मनो देहस्य संबंधिनोऽहंममतादेः मोहात्मत्वेन प्रतीतस्यापि अर्थाभावं जीवस्वरूपपर्यालोचनया प्रयोजनाभावं निश्चित्य चोभयविषयां तां प्रतीतिं निरस्य पुरुषार्थोपयोगिज्ञानं लभत इत्यभिप्रायवानाह अर्थाभावमिति। द्वितीयापि शब्देन सेवायाः प्राधान्यं वक्ति चशब्दः संशयनिरासनिश्चयज्ञानलब्ध्योः समुच्चये वर्तते। पराणुद इत्यनेन नियतपरस्मैपदेनान्यथा प्रयुक्तेन विद्यमानमपि अनुभवमन्यथा वदति विदुर इति सूच्यते। न च शूद्रयोनौ जातस्य यथार्थज्ञानमेव नास्तीति वाच्यं "द्रोणद्रौणिकृपाः पार्थो भीष्मो विदुरसंजयौ। ये चान्ये तत्र देवांशाः सम्यक् तत्त्वापरोक्षिण" इति वचनात्सम्यक्तत्त्वापरोक्षत्वात् तर्ह्यनृतभाषित्वमापन्नमिति चेन्न पृष्टमेव वक्तव्यं नापृष्टमिति। अपृष्टार्थप्रवचनोपरमार्थत्वेन गुणत्वात् आत्मनस्तु गुणाभावं वदतो न त्वसत्यता अ❀पृष्टस्य दमार्थं च गुणायैव भवत्यपीति वचनात् ॥ १८ ॥ ❀ ❀ श्रीनारायणचरणारविंदनिषेवा संसारव्यथानिरासकत्वेन पुरुषार्थोपयोगिनी स्यात् किमस्मच्चरणसेवा करिष्यतीति शंका मा भूदित्याह यत्सेवयेति। येषां हरिस्वरूपद्रष्टृणां युष्माकं सेवया भगवतः पादयोः तीव्रः पटुतरो रतिरासो रतिरूपा क्रीडारतिलक्षणो रागो वा भवेदित्यन्वयः। मधुद्विष इत्यनेन हरेर्बहिरेवावस्थानं प्रतीयते तन्निरासार्थं कूटस्थस्येति चेतनाचेतनराशिनियामकत्वेन तदंतस्थस्य क्रोधादि-

विकारबाह्यस्य वा ॥ १९ ॥ ❀ ❀ पूर्वसंचितपुण्यैरेव भवादृशानां महतां सेवा लभ्या नान्यैरित्याह दुरापेति । वैकुण्ठस्य वर्त्म ज्ञानोपदेशमार्गो येषां तेषु महत्सु सेवा हिशब्दे एवार्थे दुष्प्रापत्वे निमित्तमाह यत्रेति । यत्र येषां भवादृशानां परिसरे भगवद्बहिर्मुखानां जनार्दनप्रसंगो दुःसह इति यस्मादतस्तत्कथाप्रसंजकेषु सत्सु दुःसहत्वेन सेवा दुरापेत्यर्थः । जनो जननमुपलक्षणं मरणं चार्दयति नाशयतीति जनार्दनः । अर्दहिंसा गत्योरिति धातुः ॥ २० ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

संशयच्छेदने हेतुरवधारितार्थमेवानुवदति साध्विति । पञ्चभिः । हरेरात्माधीनमायाया अयनमचिन्त्या गतिरित्येतत् साध्वेव व्याख्यातं यद्यस्माद्वहिर्विना अपार्थमवस्तुभूतं मूलशून्यञ्च विश्वमूलं तदध्यासहेतुभूतमज्ञानं जीवानामपि नास्तीति ॥ १६ ॥ ❀ ❀ मूढतमः सारासारविवेकरहितः सुखमेधेते संशयक्लेशरहितौ भवतः अन्तरितः संशयितः ॥ १७ ॥ १८ ॥ ❀ ❀ प्रपञ्चप्रतीतिपराणोदनमात्रं कियत् यतः यत्सेवयेति व्यसनार्दन इत्यानुषङ्गिक एवासौ यस्य गुण इत्यर्थः ॥ १९ ॥ २० ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

ननु मम सूक्तं त्वया कीदृशमवधारितं तत्राह हे ब्रह्मन् ! साधु यथा स्यात् तथा त्वया व्याहृतम् । किं तत् ? हरेर्वहिरंगा शक्तिर्या आत्ममाया तदाश्रयमेव एतत् । भगवतो निर्गुणस्यापि गुणवत्त्वं तैर्गुणैः सृष्ट्यादिकर्तृत्वञ्चाभाति अपार्थं निष्प्रयोजनं तस्यात्मारामत्वात् । निर्मूलं निष्कारणं तस्य प्रयोजनान्तराभावादतर्क्यमेवेतीश्वरगतं त्वया व्याहृतम् । तथा एतज्जीवस्याऽविद्याबन्धनं तदुत्थदुर्भगत्वादिकं चात्ममायायनमेव । निष्प्रयोजनं निष्कारणमवस्तु चेति जीवगतं च व्याहृतमिति । तन्त्रेणेयं विदुरोक्तिः । किञ्च यद्वहिः यामात्ममायां विना विश्वस्य मूलं कारणं नास्तीति विश्वस्रष्टृत्वं न भगवतः सगुणत्वं सक्रियत्वञ्च न स्वरूपसिद्धमिति भावः ॥ १६ ॥ ❀ ❀ अल्पज्ञत्वादेतावद्दिनपर्यन्तमहं सांशयिकदुःखनिमग्न एवासमित्याह । मूढतमः पशुरेव विषयासक्तबुद्धेः प्रकृतेः परमीश्वरं प्राप्तः । तौ सुखं यथास्यादेवमेधेते । संशयक्लेशाभावात् विषयानंदेश्वरानन्दाभ्यां वर्द्धेते । यस्तु दुःखानुसन्धानेन प्रपञ्चं जिहासति भगवद्भक्त्यलाभाद्धातुञ्च न शक्नोति स त्वन्तरितो मध्यवर्त्ती आनन्दद्वयाभावेन संशयसिन्धुनिमग्नः क्लिश्यति ॥ १७ ॥ ❀ ❀ किञ्च संप्रत्यपि मम क्लेशशेषो वर्त्तत इत्याह । आत्मनो जीवस्य अर्थाभावं वास्तवदुर्भगत्वाद्यभावं त्वन्मुखोदितसिद्धांतेन विनिश्चित्यापि न प्रतीतस्याप्यर्थाभावस्य तामप्रतीतिमहं पराणुदेऽपनेष्यामि ॥ १८ ॥ ❀ ❀ भगवज्जनसेवायाः किमशक्यमित्याह यदिति । भगवतः कूटस्थस्य भगवत्त्वेनैव सर्वकालव्यापिनः "एकरूपतया तु यः । कालव्यापी स कूटस्थ" इत्यमरः । मधुसूदनस्य मधोरिव भक्तसंसारस्य नाशयितुः पादयो रत्या भावभक्त्या रासो विभावादिसंयोगोत्थः शान्तदास्यादिरससमूहः तीव्रः स्वमाधुर्येण प्राकृताप्राकृतः । सर्वमाधुर्योपमर्द्दी तेनाप्रतीतिपरत्वनोदनमिदं कियन्मात्रमिति भावः ॥ १९ ॥ ❀ ❀ किञ्च । सेयं महत्सेवैवातिदुर्ल्लभेत्याह अल्पतपस इति । लोकरीत्योक्तिर्महत्सेवायास्तत्कृपैकलभ्यत्वेन तपःफलत्वाभावात् वैकुण्ठस्य वर्त्मभूतेषु तद्भक्तेषु नित्यं साधनसाध्यावस्थायाम् ॥ २० ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

हे विद्वन् त्वया साधु व्याहृतं सम्यगुक्तं तदेवाह एतत् आत्मनां जीवानां मायायनं मायारूपं स्थानं मायाख्यतच्छक्तिपरिणामभूतं हरेरेव हरिकर्तृकमेव कथंभूतं विश्वमूलं विश्वानि सर्वाणि श्रुतिस्मृत्यादीनि मूलानि प्रमाणानि यस्मिन् तत् यच्च बहिः श्रुत्यादिबाह्यं अब्रह्मात्मकप्रधानादिकारणवादिमतं तन्न यतो निर्मूलमतोऽपार्थमाभाति मुमुक्षुणा दूरतो हेयमिति भावः ॥१६॥१७॥ ❀ ❀ आत्मविपर्ययशब्देनोक्तो देहात्माहंकारः मायया जात इत्यवधार्य तन्निःशेषनिवृत्तिर्युष्मच्चरणसेवया भविष्यतीत्याह अर्थाभावमिति । नात्मनः अनात्मनः देहादेः प्रतीतस्य आत्मत्वेन प्रतीतस्यापि अर्थाभावं आत्मत्वाभावं युष्मच्चरणसेवया विनिश्चित्य तां प्रतीतिमपि पराणुदे अपनेष्यामीत्यन्वयः ॥ १८ ॥ ❀ ❀ रतिरासः भक्त्युत्सवः व्यसनं सर्वव्यसनहेतुं जन्ममरणप्रवाहमर्दयति नाशयतीति तथा ॥ १९ ॥ ❀ ❀ वैकुण्ठस्य वर्त्मसु प्रापकेषु महत्सु ॥ २० ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनीव्याख्या

तौ निर्दिशति—यश्च मूढतम इति । यस्तु ज्ञानार्थं सर्वथा न प्रवृत्तः, स लोकन्यायेन वर्तमानो यायापगमार्थमेव यत्नं कुर्वन् , भगवत्कृपया तदपगमे पश्चात्सर्वमेव निःसंदिग्धं जानाति । अथवा, सद्गुरुणा कृत्वा भगवत्कृपया सहितो '[1]व्यामोहितां बुद्धिं त्यक्त्वा, बुद्धेः परं गतः स्वरूपे स्थितः, पूर्वमेव निवृत्तानर्थत्वात् सुखमवतिष्ठते । अन्तरितो मध्ये स्थितस्तु अल्पज्ञानाल्पभक्तिर्निर्द्धाराभावात् , एकतरज्ञानाश्रयाभावाच्च नौकाद्वयारूढवत् क्लिश्यति । लौकिकमूढपक्षे उभयोः समानसुखकथनं विरुद्धमापद्येत, न वा मूढानां सुखमस्ति ॥ १६ ॥ ❀ ❀ एवं शास्त्रार्थं निरूप्य, स्वस्य किञ्चिज्जातं किञ्चिच्च नेति तदुभयमनुवदति—अर्थाभावमिति । शास्त्रतः प्रतीयमानस्याऽर्थस्वरूपं नास्तीति सूचितम् । 'आत्मैवेदं सर्वम्' इति श्रुतेरनात्मनोऽर्थाभावः

---

१. व्यामोहिकाम् क. ।

सिद्धः। अतः परं प्रतीतिरस्ति, विषयबाधा निवृत्ता; तामपि प्रतीतिं युष्मच्चरणसेवया गुरुचरणसेवया अहं पराणुदे। यद्यपि स्वभावतो गुरुर्नोपदिशति, तथापि सेवायां क्रियमाणायां तद्धर्मेण तदुपदेशेन वा तत्स्पर्शो भविष्यतीति तामप्यपनुदे दूरीकरिष्यामि, ज्ञानमार्गानुसारेणैवाऽर्थस्य निवृत्तत्वात्; अन्यथा भगवच्चरणसेवयैव तां दूरीकुर्यात्। अहमिति स्वाधिकारः, तथैव भगवदाज्ञापनात्; अन्यथा भक्तिमार्गानुसारेणैव दूरीकुर्यात्। अधिकारश्च पुनः प्राप्तव्यः॥ १७॥ ॐ ॐ किञ्च, भगवन्मार्गेऽपि गुरुसेवा भक्त्युपयोगिनी। तदाह—यत्सेवया भगवत इति। मार्गत्रयाविरोधाय भगवतो विशेषणत्रयम्, अन्यथा गुरुसेवाभावे मार्गान्तरविरोधे न भवति भक्तिः स्यात्। तत्र भगवत इति भक्तिमार्गानुसारी भगवान्, कूटस्थस्येति ज्ञानमार्गानुसारी, मधुद्विष इति दैत्यद्वेषी। सर्वेषामेव सुमनसाम्, देवानां पुष्पाणां वा, मधु गृहीत्वा, स्वमुखेन तद्वमित्वा, निष्पादितं मधु भवति; तथा बलं गृहीत्वा, दैत्यैः स्वभावं तत्र संपाद्य, सर्वधर्मप्रतिपक्षतया ब्रह्मघातको निर्मितो मधुः। कैटभस्तु ज्ञानांशबाधकः, अत एव कपिलेन 'कैटभार्दनः' इत्युक्तम्। तादृशस्य भगवतः। रतिरासो भवेत् रतिविलासो भवेत्। विलासपदेन चरणस्य वशीकरणं सूचितम्। रतीनां वा बहुविधानां सर्वेन्द्रियविषयाणां रासो रससमूहः। पादयोरिति अवताराभिप्रायेण। लौकिकोऽपि व्यामोहो गच्छतीति—तीव्र इति। शीघ्रमेव तलं स्पर्शयति। अवान्तरखेदास्तु तस्याऽऽनुषङ्गिका इत्याह—व्यसनार्दन इति। व्यसनानि लौकिकानि विचित्राण्यर्दयतीति तस्य विशेषणम्। अतो व्यसननिवृत्ती रासस्यानुषङ्गिकी। अतो मार्गद्वयसाधकत्वात् गुरुसेवा सर्वेषामेव हितकरी॥ १८॥ ॐ ॐ तर्हि कथं न सर्वे कुर्वन्तीत्याशङ्क्याऽऽह—दुरापेति। अल्पं तपो येषाम्, तेषां वैकुण्ठवर्त्मसु सेवा दुरापा—दुःखेन प्राप्तुं शक्या। दुर्लभत्वायैकवचनम्। भगवद्भक्तानां माहात्म्यप्रतिपादनाय वैकुण्ठवर्त्मस्वित्युक्तम्। वैकुण्ठस्य मार्गभूतेषु। व्यापिवैकुण्ठस्य भगवतो वा। तन्मार्गे गतस्तत्र गच्छतीति तेषां वैकुण्ठमार्गत्वं स्थापयति—यत्रोपगीयते नित्यमिति। यत्र भगवद्भक्तेषु भगवान्नित्यमेवोपगीयते। अनेन क्रमात्तत्र गमनं सूचितम्। भगवद्गुणाः पुष्पाणां गन्धा इव भगवन्मार्गे समायान्ति; अत एव तेषामुपगानम्, हृदये स्थितानां तत्रैवोल्लसितानां गानम्। उल्लासाधिक्येन मार्गनैकट्यम्। नित्यमुल्लासाद्वायुनेव श्रुत्या दूरे नयनं निराकृतम्। किञ्च, स हि देवानां देवो देवोपरि वर्तते। अतो देवमार्गापेक्षया यज्ञापेक्षयाऽप्ययं मार्गः समीचीनः। किञ्च, जनार्दनोऽयम्, जनामर्दयतीति ज्ञानकार्यकर्ता। अतोऽचेतननिवर्त्तकापेक्षया ज्ञानमार्गापेक्षयाऽपि भगवद्गुणगातॄणां सेवनमुत्तममित्यर्थः॥ १९॥ ॐ ॐ एवं पूर्वपक्षसिद्धान्तपक्षौ निरूप्याऽन्यान् विशेषान् ज्ञातुं पृच्छति—सृष्ट्वाऽग्रे महदादीनीति। तत्राऽऽदौ श्लोकद्वयेन सार्द्धेन साधिकेन पूर्वोक्तमनुवदति, अन्यथोक्तार्थविस्मरणादग्रे न वक्तव्यं स्यात्। निर्द्धारितं चाऽल्पेनोच्यते। महदादीनि त्रयोविंशतितत्त्वानि। तेषां विकारास्त्ववान्तरभेदाः, सात्त्विकादिविभेदा आध्यात्मिकादिभेदा वा। आनुपूर्व्येण च तेषां सृष्टिः। तेभ्यो विराज उद्धरणं च पुरुषस्य सारांशत्वाय। तमनु प्रविशति। अर्थान्निरूपितमनुवादेन स्पष्टितम्। तत्प्रवेशव्यतिरेकेण ब्रह्माण्डमध्यकार्याणि न भवेयुः। विभुरिति सामर्थ्यरूपेण॥ २०॥

## श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

अर्थाभावमित्यत्र। शाश्वत इत्यादि। लोकदृष्ट्या प्रतीयमानस्याऽर्थस्वरूपं नाऽस्तीति शाश्वतः सूचितमित्यन्वयः। अर्थाभाव इति। अर्थत्वाभावः। तथैवेति। गुरुद्वारैवाऽधिकारप्राप्तेराज्ञापनादित्यर्थः॥ १७॥ ॐ ॐ यत्सेवयेत्यत्र। विशेषणत्रयमिति। भगवत्पदस्य योगरूढत्वेन योगांशे तस्य विशेषणरूपत्वात्तथेत्यर्थः॥ १८॥ ॐ ॐ दुरापेत्यत्र। नित्यपदतात्पर्यमाहुः—अनेनेत्यादि॥ १९॥

## श्रीगिरिधरकृता बालप्रबोधिनी

त्वमेव ज्ञानित्वादेवं समाधातुं शक्त इति सूचयन् सम्बोधयति—विद्वन्निति। आत्मनो भगवदंशस्यापि जीवस्य या माया व्यामोहिका[1] अविद्या तदयनं तदाश्रितं अतएव निर्मूलं देहाद्यात्माध्यासमूलम्, अतएवापार्थं अवस्तुभूतमेव एतत् सुखदुःखादिकमाभाति। यत् यस्मात् विश्वस्य मूलं कारणं हरेः सकाशाद्बहिरन्यन्न भवत्येतत्त्वया साधु सत्यमेव व्याहृतं कथितमित्यन्वयः॥ १६॥ ॐ ॐ अल्पज्ञत्वादेवाहं संशयक्लेशमनुभूतवानिति सूचयँल्लोकव्यवस्थामाह—यश्चेति। लोके संसारे यश्च जनो मूढतमो देहाद्यध्यासेन विषयाविष्टचित्तः यश्च बुद्धेः प्रकृतेः परं भगवन्तं गतः प्राप्तः तौ सुखं यथा भवति तथा एधेते जीवेते इत्यर्थः। संशयक्लेशाभावात् यस्त्वन्तरितस्तन्मध्यस्थः अल्पज्ञः दुःखानुसन्धानेन प्रपञ्चं जिहासति स्वानन्दानुभवाभावाद्धातुं च न शक्नोति स नानाविधसंशयेन क्लिश्यतीत्यर्थः॥ १७॥ ॐ ॐ इदानीं भ्रमनिवृत्तावपि बाधितानुवृत्तिर्वर्त्तते साऽपि युष्मत्प्रसादान्निवर्तिष्यते इत्याह—अर्थेति। आत्मनि प्रतीतस्यापि नात्मनः अनात्मनो देहेन्द्रियान्तःकरणादेरर्थस्य गुणस्य जन्ममरणसुखदुःखादेरभावं त्वद्वचनाद्विनिश्चित्य युष्मच्चरणसेवया तां प्रतीतिं चाप्यहं पराणुदे अपनेष्यामीत्यर्थः॥ १८॥ ॐ ॐ अस्मत्सेवामात्रेण कथमध्यासनिवृत्तिरित्याशङ्क्य भगवद्भक्तिद्वारेत्याह—यत्सेवयेति। येषां युष्माकं भक्तानां सेवया भगवतः पादयोः तीव्रः

---

१. यामोहिकाम् क.।

विघ्नानुपहतः व्यसनार्दनः तापत्रयनिवर्तकः रतिरासः प्रेमोल्लासो भवेदित्यन्वयः। ननु कथं भगवच्चरणप्रेममात्रेण संसारदुःखनिवृत्तिरित्याशङ्क्य तस्यासुरादिसर्वदोषनिवर्त्तकत्वादित्याशयेनाह—मधुद्विष इति, मधुसूदनस्येत्यर्थः। एवं तस्य विकारित्वं स्यादित्याशङ्क्याह—कूटस्थस्येति, निर्विकारस्येत्यर्थः ॥ १९ ॥ ❀ ❀ हीति प्रसिद्धमेतत्। अल्पं तपो यस्य तस्य पुंसो वैकुण्ठवर्त्मसु व्यापि वैकुण्ठस्य भगवतो वा प्राप्तिमार्गभूतेषु भवत्सु सेवा दुरापा दुर्लभा। ननु तत्सेवया भक्तिरपि कथं स्यादित्याकाङ्क्षायां तत्कथाश्रवणादिद्वारेत्याशयेनाह। तत्र येषु भक्तेषु देवानां ब्रह्मादीनामपि देवो भगवान्नित्यं निरन्तरमुपगीयते। तद्भक्तेः संसारदुःखनिवर्तकत्वे तस्य देवदेवत्वे च हेतुं सूचयन्नाह—जनार्दन इति। जनामविद्यामर्दयति निवर्तयतीति तथा मोक्षप्रद इत्यर्थः ॥ २० ॥

## हिन्दी-अनुवाद

विद्वन्! आपने यह बात बहुत ठीक कही कि जीवको जो क्लेशादिकी प्रतीति हो रही है, उसका आधार केवल भगवान्‌की माया ही है। वह क्लेश मिथ्या एवं निर्मूल ही है; क्योंकि इस विश्वका मूल कारण ही मायाके अतिरिक्त और कुछ नहीं है ॥ १६ ॥ ❀ ❀ इस संसारमें दो ही प्रकारके लोग सुखी है—या तो जो अत्यन्त मूढ़ (अज्ञानग्रस्त) हैं, या जो बुद्धि आदिसे अतीत श्रीभगवान्‌को प्राप्त कर चुके हैं। बीचकी श्रेणीके संशयापन्न लोग तो दुःख ही भोगते रहते हैं ॥ १७ ॥ ❀ ❀ भगवन्! आपकी कृपासे मुझे यह निश्चय हो गया कि ये अनात्म पदार्थ वस्तुतः हैं नहीं, केवल प्रतीत ही होते हैं! अब मैं आपके चरणोंकी सेवाके प्रभावसे उस प्रतीतिको भी हटा दूँगा ॥ १८ ॥ ❀ ❀ इन श्रीचरणोंकी सेवासे नित्यसिद्ध भगवान् श्रीमधुसूदनके चरणकमलोंमें उत्कट प्रेम और आनन्दकी वृद्धि होती है, जो आवागमनकी यन्त्रणाका नाश कर देती है ॥ १९ ॥ ❀ ❀ महात्मालोग भगवत्प्राप्तिके साक्षात् मार्ग ही होते हैं, उनके यहाँ सर्वदा देवदेव श्रीहरिके गुणोंका गान होता रहता है; अल्पपुण्य पुरुषको उनकी सेवाका अवसर मिलना अत्यन्त कठिन है ॥२०॥

**सृष्ट्वाग्रे महदादीनि सविकाराण्यनुक्रमात्। तेभ्यो विराजमुद्धृत्य तमनु प्राविशद्विभुः ॥ २१ ॥**
**यमाहुराद्यं पुरुषं सहस्राङ्घ्र्यूरुबाहुकम्। यत्र विश्व इमे लोकाः सविकासं समासते ॥ २२ ॥**
**यस्मिन् दशविधः प्राणः सेन्द्रियार्थेन्द्रियस्त्रिवृत्। त्वयेरितो यतो वर्णास्तद्विभूतीर्वदस्व नः ॥ २३ ॥**
**यत्र पुत्रैश्च पौत्रैश्च नप्तृभिः सह गोत्रजैः। प्रजा विचित्राकृतय आसन् याभिरिदं ततम् ॥ २४ ॥**
**प्रजापतीनां स पतिश्चक्लृपे कान् प्रजापतीन्। सर्गांश्चैवानुसर्गांश्च मनून्मन्वन्तराधिपान् ॥ २५ ॥**

## श्रीधरस्वामिविरचिता भावार्थदीपिका।

अर्थांतरं प्रष्टुं तदुक्तमनुवदति त्रिभिः। सृष्ट्वेति। विकारैरिंद्रियादिभिः सहितानि उद्धृत्य तदंशैर्विराजं सृष्ट्वा ॥ २१ ॥ ❀ ❀ प्रविष्टस्य स्वरूपमाह। यमिति। विराजं विशिनष्टि। यत्रेति। ते इमे विश्वे सर्वे लोकाः सविकाशमसंकोचेन ॥ २२ ॥ ❀ ❀ प्राणादयः पंच नागादयः पंचेत्येवं दशविधः इंद्रियाणि च अर्थाश्च। इंद्रियाणि चेति पुनरुक्तिस्तद्देवता लक्षणार्था तत्सहितः सर्वोपबृंहकत्वात्प्राणस्य तत्साहित्यम्। एवं त्रिविधः प्राणस्त्वयेरितः उक्तः तस्य विभूतीर्ब्रह्माद्या विसर्गशब्दवाच्याः ॥ २३ ॥ ❀ ❀ यत्र यासु इदं विश्वं ततं व्याप्तम् ॥ २४ ॥ ❀ ❀ एवमेतत्पुरा पृष्टो मैत्रेयो भगवान्किल इति परीक्षित्प्रश्नोत्तरतया विदुरमैत्रेयसंवादः प्रस्तावितोऽतस्तानेव विदुरेण कृतान्प्रश्नानाह यावत्समाप्ति। प्रजापतीनां पतिर्ब्रह्मादीनां वर्णयेति वक्ष्यमाणेनान्वयः। चक्लृपेऽकल्पयत् सर्गान्नवविधाननुसर्गांस्तद्भेदान् ॥ २५ ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

तेभ्यो महदादिभ्यः तं विराजं विभुरिति मुख्यप्रवेशाभावमाह ॥ २१ ॥ ❀ ❀ यत्र पुरुषे ॥ २२ ॥ ❀ ❀ सर्वोपबृंहकत्वात्प्राणस्य सर्वेषां वर्द्धकत्वात्तत्साहित्यं प्राणसाहित्यम्। एवं त्रिवृत् इंद्रियेन्द्रियार्थेन्द्रियदेवतारूपेण त्रिविधः यतः पुरुषात्। वर्णा ब्राह्मणाद्याः। "ब्राह्मणोऽस्य मुखमासीत्" इत्यादिश्रुतेः। 'विसर्गः पौरुषः स्मृतः' इत्युक्तेः पौरुषः पुरुषाद्ब्रह्मादिरूपेण जातः ॥ २३ ॥ ❀ ❀ यासु विभूतिषु निमित्तभूतासु नप्ता दौहित्रः 'पौत्रः' विचित्राकृतयः परस्परव्यावृत्तलक्षणोपेताकाराः ॥ २४ ॥ ❀ ❀ तद्भेदान् नवसर्गावांतरभेदान् ॥ २५ ॥

## श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

अर्थान्तरं पूर्वश्रुतलीलाशेषं तदुक्तं मैत्रेयोक्तं तेभ्यो महदादिभ्यः तदंशैर्महदाद्यंशैः अनुसृष्ट्यनंतरं तं विराजम् ॥ २१ ॥ ❀ ❀ यं कारणार्णवे गर्भोदके च शयानं यत्र विराड्रूपे ॥ २२ ॥ ❀ ❀ यतः पुरुषात् तस्य पुरुषस्य ॥ २३ ॥ ❀ ❀ यासु विभूतिषु याभिः प्रजाभिः ॥ २४ ॥ ❀ ❀ तद्भेदान् तद्विशेषान् ॥ २५ ॥

## श्रीमद्वीरराघवव्याख्या

अर्थांतरान्प्रष्टुकामस्तदुक्तमनुवदति सृष्ट्वेति। विकारैरिंद्रियादिभिः सहितानि सविकाराणि महदादीन्यग्रे व्यष्टिसृष्टेः पूर्वं सृष्ट्वा तेभ्यो महदादिभ्यः विराजं व्यष्टिरूपैर्विविधं राजतीति विराट् ब्रह्मा तमुद्धृत्य अंडसृष्टिद्वारोत्पाद्य विभुर्भगवान् तं विराजमनुप्राविशत् ॥ २१ ॥ ❀ ❀ कथंभूतो विभुः यं पुरुषशब्दवाच्यमाद्यं सर्वकारणकारणं सहस्रांघ्र्यूरुबाहुकमाहुः "सहस्रशीर्षा पुरुष" इत्याद्याः श्रुतयः सोऽनुप्राविशदित्यन्वयः। यद्वा तद्विभूतीर्वदस्व न इत्यनेनान्वयः तमेव विशिनष्टि यत्रेति। यत्र चतुर्मुखशरीरके विश्वे इमे सर्वलोका व्यष्टिलोकाः सविकाशमसंकोचेन समासते तिष्ठंति ॥ २२ ॥ ❀ ❀ यस्मिन्निति दशविधः प्राणापानादयः पंचनागकूर्मकृकलदेवदत्तधनंजयाः पंचापि प्राणा इंद्रियार्थाः शब्दादयः इंद्रियाणि ज्ञानकर्मोभयात्मकानि तत्सहितो यस्त्रिवृत्त्रिगुणात्मकः प्राणः यस्मिन्वैराजे समस्ते यतश्च वैराजात्त्वयेरितास्त्वदुक्ताः वर्णा ब्राह्मणादयो अभूवन् तद्विभूतीस्तस्य वैराजस्य विभूतीः प्राधान्येन नियाम्यवर्गान्नोऽस्मभ्यं वदस्व वर्णय ॥ २३ ॥ ❀ ❀ द्वितीयेऽष्टमेऽध्याये यदधातुमतो ब्रह्मन्नित्यादिना राजकृतप्रश्नानां केषांचिदुत्तराण्यभिधायावशिष्टानामुत्तराण्यभिधातुं विदुरमैत्रेयसंवादः प्रस्तावितः एवमेतत्पुरा पृष्ट इत्यादिना। इदानीं तेषामेव प्रश्नानामुत्तरविवक्षया अत एव विदुरकृतप्रश्ना इत्याह यावदध्यायसमाप्ति यत्रेति। यत्र ब्रह्मांडे पुत्रादिभिः सह प्रजाः विचित्राकृतयः नानाविधदेहाः आसन् याभिरिदं ब्रह्माडं ततं व्याप्तम् ॥ २४ ॥ ❀ ❀ प्रजापतीनां मरीच्यादीनां पतिः स ब्रह्मा कान्प्रजापतिश्चक्लृपे सृष्टवान् तदेतत्सर्वं वर्णयेत्युपरितनेनान्वयः। समष्टिपुरुषो नवप्रजापतिसृष्टिद्वारा तत्पुत्रादिभिरिदं ब्रह्मांडमापूरितं यथाकरोत्तत्प्रकारं वर्णयेत्यर्थः, तथा सर्गान्वक्ष्यमाणान् नवविधप्राकृतसर्गाननुसर्गांश्चतुर्मुखसर्गात्पश्चात्यसर्गान्मनून्स्वायंभुवादींश्चतुर्दशमनून्मन्वन्तरेषु येऽधिपास्तान् ॥ २५ ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

विदुरो विशेषं श्रोतुमनुवदति सृष्ट्वेति। अग्रे जगदादौ षोडशविकारास्तैः सहितानि तेभ्यो महदादिभ्योऽडं सृष्ट्वांडांतर्वर्तिविराजं ब्रह्माणमुद्धृत्य सृष्ट्वा तं ब्रह्माणमनुप्राविशत् तत्त्वप्रवेशानन्तरं ब्रह्मप्रवेश इति ज्ञापनायान्विति। विभुर्व्याप्तः ॥ २१ ॥ ❀ ❀ नन्वंतर्बहिर्व्याप्तस्य परिच्छिन्नयोग्यः प्रवेशः कथमित्याशङ्क्य तत्तद्वस्तुपरिमितरूपग्रहणेन सुकर इति भावेनाह यमाहुरिति। यत्र यस्मिन्पुरुषे इमे पातालादयः ॥ २२ ॥ ❀ ❀ यस्मिन्ब्रह्मांतर्यामिणि पुरुष "प्राणापानौ तथा व्यानस्तथोदानसमानकौ। नागः कूर्मोऽथ कृकलदेवदत्तधनंजया" इति दशविधः सेंद्रियार्थेन्द्रिय इंद्रियार्थैः शब्दादिभिश्चक्षुरादीन्द्रियैश्च सहितः त्रिवृदोजःसहोबलरूपो वर्तत इति शेषः। श्रुतमनूद्य वक्तव्यांशं प्रार्थयते त्वयेरिता इति। त्वया ये ब्राह्मणादिवर्णा यतो ब्रह्मांतर्यामिणः सृष्टा ईरिताः तद्विभूतीस्तेषां वर्णानां तस्य ब्रह्मांतर्यामिणश्च विभूतीर्नोऽस्माकं वदस्व यथा ज्ञातुं शक्यंते तथा ब्रूहीत्यन्वयः। "भासनोपसंभाषाज्ञानयत्नविमत्युपमंत्रणेषु वद" इत्यात्मनेपदम् ॥ २३ ॥ ❀ ❀ यत्र येषु वर्णेषु जातैर्नप्तृभिः पुत्रपौत्रैर्विचित्राकृतयः परस्परव्यावृत्तलक्षणोपेताकाराः विभुर्ब्रह्मा विराजं ब्रह्मांडं जलादुद्धृत्यावकाशवत् कृत्वानुप्राविशदिति प्रतीतार्थं परित्यज्याप्रतीतार्थांगीकारे किं नियामकं सृष्टिश्च ब्रह्मण इति प्रसिद्धेरिति चेन्न "ब्रह्माणं प्राविशद्विष्णुः सहस्राक्षः सहस्रपात्। अनुप्रविश्य ब्रह्माणं प्राणं दशविधं तथा। इंद्रियाणींद्रियार्थांश्च वर्णांश्चैवासृजद्धरिः॥" इति प्रमाणद्वयेन नियतत्वादन्नरूढेर्दुर्बलत्वाच्च ॥ २४–२५ ॥

## श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

तदेवं कृतकृत्य उल्लासेन पूर्वश्रुतलीलावशेषं पृच्छति सृष्ट्वेति ॥ २१ ॥ ❀ ❀ यं कारणार्णवे गर्भोदके च शायिनम् ॥ २२ ॥ ❀ ❀ तत्र तदुक्तमप्यनुवदति यस्मिन् विराड्रूपे ॥ २३ ॥ ❀ ❀ यत्र इति नप्तृभिर्दौहित्रैः ॥ २४—२८ ॥

## श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

तदेवं कृतकृत्य उल्लासेन पूर्वश्रुतलीलावशेषं प्रष्टुं तदुक्तमनुवदति सृष्ट्वेति ॥ २१ ॥ ❀ ❀ यं कारणार्णवशायिनं विश्वे सर्व्वे समासते तद्रोमविलेष्वेव सर्व्वब्रह्माण्डानां सत्त्वात् ॥ २२ ॥ ❀ ❀ किञ्च। यस्मिन् समष्टिविराजि इन्द्रियार्था विषया इन्द्रियाणि च तैः सहितः। त्रिवृत् सहओजोबलत्वेन त्रिविधः। यतः एव वर्णा यद्विशेषा एव विप्राद्याः। अथ तस्य परमेश्वरस्य विभूतीः प्रजापत्याद्याः ॥ २३ ॥ ❀ ❀ यत्र यासु विभूतिषु नप्तृभिः दौहित्रैः ॥ २४ ॥ ❀ ❀ द्वितीयस्कन्धे परीक्षिता पृष्टानेवार्थानैकजातीयहृदयत्वात् विदुरोऽपि पृच्छति यावदध्यायसमाप्ति-प्रजापतीनां पतिर्ब्रह्मा सर्गान् दशविधान् अनुसर्गान् तद्भेदान् ॥ २५ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः।

अथ महदादिस्रष्टारमृषिमुखाच्छ्रुतं भगवंतमनुवर्णयन् तस्य विभूतीर्वदेति प्रार्थयते सृष्ट्वेति त्रिभिः। विभुः विकारैरिंद्रियादिभिः सहितानि सविकाराणि महदादीन्यग्रे सृष्ट्वा तेभ्यः विराजं सावरणं स्वदेहमुद्धृत्य सृष्ट्वा तमनुप्राविशत् "तत्सृष्ट्वा तदेवानुप्राविशदि"ति श्रुतेः॥ २१॥ ❀ ❀ यं विभुं आद्यं पुरुषं महत्स्रष्टारं सहस्रांघ्र्यूरुबाहुकं सहस्रशीर्षा पुरुष इत्याद्याः श्रुतयः आहुः। यत्र यस्मिन्नुभयदेहयुक्ते विश्वे सर्वे लोकाः सविकाशमसंकोचेन सम्यगासते॥ २२॥ ❀ ❀ इद्रियार्थैः इंद्रियैश्च सहितः सर्वोपबृंहकत्वात् त्रिवृत् त्रिगुणकार्यैः दशविधः प्राणादयः पंचनागादयः उपप्राणाः पंचैवं दशविधः प्राणाः यत्र समासते इत्यन्वयः। त्वयेरितः वर्णितः यतो वर्णाज्जाताः तस्य विभोर्विभूतीः ब्रह्माद्याः नोऽस्मभ्यं वदस्व॥ २३॥ ❀ ❀ यत्र यासु विभूतिषु याभिः प्रजाभिः इदं विश्वं ततं व्याप्तम्॥ २४॥ ❀ ❀ एवमेतत्पुरा पृष्टो मैत्रेयो भगवान्किलेति परीक्षित्प्रश्नोत्तरतया विदुरमैत्रेयाख्यायिकाः प्रस्ताविता अतस्तानेव विदुरकृतान्प्रश्नानाह आअध्यायपरिसमाप्तेः। प्रजापतीनां पतिः सः प्रसिद्धो ब्रह्मा कान् प्रजापतीन् चक्लृपे सृष्टवान्। एतत्सर्वं वर्णयेति वक्ष्यमाणेनान्वयः॥ २५॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

भगवत्सहितस्य विराजो नाम—आद्यं पुरुषमिति। अस्मदाद्यपेक्षया आद्यत्वम्। सहस्राङ्घ्र्यूरुबाहुकमिति। यद्यपि प्रचरद्रूपेण[1] पूर्वाध्याये नास्ति, तथापि पुरुषस्य तथारूपत्वात् तद्धर्मत्वेनाऽनुवादः। स्वस्य सविशेषं[2] परिज्ञानार्थं भगवत्कृपया वा धर्मान्तरस्फुरणम्, तदपि गुरूक्तत्वेनैव ज्ञापयितुमनुवादः क्रियते। यत्र च पुनः पुरुषे, इमे विश्वे लोकाः सर्वे प्राणिनः सविकाशमतिविशालभूमौ सुखमासते॥ २१॥ ❀ ❀ किञ्च, यस्मिन् पुरुषे दशविधः प्राणो निरूपितः। इन्द्रियाणि इन्द्रियार्थाश्च निरूपिताः, इन्द्रियाणामिन्द्रियार्थानां प्राणानां च त्रैविध्यं निरूपितम्, यतो वर्णा अपि त्वया निरूपिताः। एवमनूद्य विशेषं पृच्छति। इदं भगवच्चरित्रं भगवद्रूपं च तदैव स्यात्, यद्यस्य विभूतिर्भवेत्। भगवतोऽसाधारणगुणेषु विभूतिरप्येका। कथापक्षेऽप्यग्रे वक्ष्यमाणानां ब्रह्मादीनां न विसर्गत्वं विवक्षितम्, किन्तु विभूतित्वमेव। तेन सविभूतिः सर्गो निरूपितो भवति। विसर्गस्तु धर्माद्युक्तोऽग्रे वक्ष्यते। व्यष्टिष्वपि समष्टिव्यष्टिभेदः परिकल्प्यते। तत्र ब्रह्मा समष्टिः, प्रजा व्यष्टयः॥ २२॥ ❀ ❀ प्रजानां कर्तृत्वं कदाचिन्न भविष्यतीति तदर्थं प्रथमतस्ताः पृच्छति—यत्रेति। सर्वत्र चत्वारो भेदा विभूत्यर्थं वक्तव्याः। नप्तारः प्रपौत्राः, कन्यापुत्रा वा। पुत्रशब्दे पुत्र्या एकवद्भावः, पौत्रे च पौत्र्याः; एतदुभयं नप्ता सूचयति। गोत्रजा दूरज्ञातयः॥ २३॥ ❀ ❀ प्रजापतीनामिति। सर्गाः कारणपदार्थानामुत्पत्तयः। अनुसर्गाः कार्याणाम्। मनवश्चतुर्दश। मन्वन्तराणि षड्विधानि॥ २४॥ एतेषामिति। एतेषां मनूनाम्। वंशानुचरितम्, तत्रोत्पन्नानां वंशवृद्धिहेतुचरित्रम्। चकारादन्यान्यपि चरित्राणि। भूमेरुपरि स्वर्गादयो लोकाः कियन्तः? अधश्च कियन्तः? इति। आसत इति स्थिरा औत्पत्तिकाः। मित्रात्मजेति बहुप्रश्नेऽपि क्षोभाभावः सूचितः॥ २५॥

### श्रीगिरिधरकृता बालप्रबोधिनी

एवं स्वशङ्कितसमाधानमभिनन्द्य पुनरर्थान्तरं प्रष्टुकामो यत्त्वयोक्तं तन्मयाऽवधारितमतोऽहं श्रवणाधिकारीति मत्प्रश्नोत्तरं देयमिति द्योतयंस्तदुक्तमनुवदति—सृष्ट्वेति त्रिभिः। विभुर्व्यापको भगवान् विकारैरिन्द्रियादिभिः सहितानीति। सविकाराणि महदादीनि अग्रे सृष्टेः पूर्वमनुक्रमात् सृष्ट्वा तेभ्यो महदादिभ्यो विराजमुद्धृत्य उत्पाद्य तं विराजमनुप्राविशदित्यन्वयः॥ २१॥ ❀ ❀ प्रविष्टस्य स्वरूपमाह—यमिति। यं प्रविष्टमाद्यं सर्वकारणकारणं पुरुषं सहस्राङ्घ्र्यूरुबाहुकं श्रुतय आहुः तद्विभूतीर्वदस्व नः इति तृतीयेनान्वयः। तथाच श्रुतिः—"सहस्रशीर्षा पुरुषः" इत्याद्या। विराजं विशिनष्टि—यत्रेति। यत्र विराजि इमे दृश्यमानाः विश्वे सर्वे चतुर्दश लोकाः सजीवाः सविकाशमसङ्कोचेन समासते यथासुखं तिष्ठन्तीत्यर्थः॥ २२॥ ❀ ❀ यस्मिन्विराजि प्राणादयः पञ्च नागादयश्च पञ्चेत्येवं दशविधः प्राणः, इन्द्रियाणि च अर्थाश्च शब्दादयो विषयाः-इन्द्रियाणि चेति पुनरुक्तिस्तद्देवतोपलक्षणार्था—तत्सहितस्त्रिवृत् त्रिगुणात्मकः सर्वोऽपि प्रपञ्चस्त्वयेरितो वर्णितः। तथा यत एव वर्णा ब्राह्मणादयो जाता इति त्वयेरितं तस्य वैराजः विभूतीर्विसर्गशब्दवाच्या ब्रह्मादिरूपा नोऽस्मभ्यं वदस्व वर्णयेत्यन्वयः॥ २३॥ यत्र यासु विभूतिषु पुत्रादिभिः सह विचित्राकृतयः नानाविधदेहाः प्रजाः आसन्, याभिरिदं विश्वं ततं व्याप्तं ताः वदस्वेति पूर्वेणैवान्वयः॥ २४॥ ❀ ❀ 'एवमेतत्पुरा पृष्टो मैत्रेयो भगवान् किल' इति राजप्रश्नोत्तरतया विदुरमैत्रेयसंवादः प्रस्तावितः। अतस्तानेव विदुरेण कृतान् प्रश्नान् दर्शयति—प्रजापतीनामित्यादि यावदध्यायसमाप्ति। स प्रसिद्धः प्रजापतीनां पतिर्ब्रह्मा कान् प्रजापत्यादीन् चक्लृपेऽकल्पयत् तद्वर्णयेति द्वितीयेनान्वयः। एवमग्रेऽपि। कानित्यस्यापि द्वितीयान्तेन यथोचितं सम्बन्धः।

---

१. प्रचरद्रूपे, ख. ग. घ. ङ. च। २. विषय, क। ३. तत्र ख. घ. च।

तत्र वक्ष्यमाणरीत्यैवं विवरणम्—प्रजापतीन् मरीच्यादीन्, सर्गान् प्राकृतसर्गान्नवविधान्, अनुसर्गांस्तद्भेदान्, मनून्स्वायम्भुवादीन्, तत्तन्मन्वन्तरपालकान् राज्ञश्च ॥ २५ ॥

### हिन्दी अनुवाद

भगवन्! आपने कहा कि सृष्टिके प्रारम्भमें भगवान्ने क्रमशः महदादि तत्त्व और उनके विकारोंको रचकर फिर उनके अंशोंसे विराट्को उत्पन्न किया और इसके पश्चात् वे स्वयं उनमें प्रविष्ट हो गये ॥ २१ ॥ ❀ ❀ उन विराट्के हजारों पैर, जाँघें और बाहें हैं, उन्हींको वेद आदिपुरुष कहते हैं; उन्हींमें ये सब लोक विस्तृतरूपसे स्थित हैं ॥ २२ ॥ ❀ ❀ उन्हींमें इन्द्रिय, विषय और इन्द्रियाभिमानी देवताओंके सहित दस प्रकारके प्राणोंका—जो इन्द्रियबल, मनोबल और शारीरिक बलरूपसे तीन प्रकारके हैं—आपने वर्णन किया है और उन्हींसे ब्राह्मणादि वर्ण भी उत्पन्न हुए हैं। अब आप मुझे उनकी ब्रह्मादि विभूतियोंका वर्णन सुनाइये—जिनसे पुत्र, पौत्र, नाती और कुटुम्बियोंके सहित तरह-तरहकी प्रजा उत्पन्न हुई और उससे यह सारा ब्रह्माण्ड भर गया ॥ २३-२४ ॥ ❀ ❀ वह विराट् ब्रह्मादि प्रजापतियोंका भी प्रभु है। उसने किन-किन प्रजापतियोंको उत्पन्न किया तथा सर्ग, अनुसर्ग और मन्वन्तरोंके अधिपति मनुओंकी भी किस क्रमसे रचना की? ॥ २५ ॥

**एतेषामपि वंशांश्च वंशानुचरितानि च। उपर्यधश्च ये लोका भूमेर्मित्रात्मजासते ॥ २६ ॥**
**तेषां संस्थां प्रमाणं च भूर्लोकस्य च वर्णय।**
**तिर्यङ्मानुषदेवानां सरीसृपपतत्त्रिणाम्। वद नः सर्गसव्यूहं गार्भस्वेदद्विजोद्भिदाम् ॥ २७ ॥**
**गुणावतारैर्विश्वस्य सर्गस्थित्यप्ययाश्रयम्। सृजतः श्रीनिवासस्य व्याचक्ष्वोदारविक्रमम् ॥ २८ ॥**
**वर्णाश्रमविभागांश्च रूपशीलस्वभावतः। ऋषीणां जन्मकर्मादि देवस्य च विकर्षणम् ॥ २९ ॥**
**यज्ञस्य च वितानानि योगस्य च पथः प्रभो। नैष्कर्म्यस्य च सांख्यस्य तन्त्रं वा भगवत्स्मृतम् ॥ ३० ॥**

### श्रीधरस्वामिविरचिता भावार्थदीपिका।

हे मित्राया आत्मज ॥ २६ ॥ ❀ ❀ संस्थां संनिवेशं सर्गाणां संव्यूहं संविभागम्। गार्भस्वेदद्विजोद्भिदां गार्भा जरायुजाः स्वेदाच्च द्वाभ्यां च जाताः स्वेदद्विजा उद्भिदश्च तेषाम् ॥ २७ ॥ ❀ ❀ सर्गादीनाश्रयं च सृजतः ॥ २८ ॥ ❀ ❀ रूपं लिंगं शीलमाचारः स्वभावः शमादिस्ततो विकर्षणं विभागम् ॥ २९ ॥ ❀ ❀ वितानानि विस्तारान् नैष्कर्म्यस्य च ज्ञानस्य तदुपायस्य च सांख्यस्य पथो मार्गान् तंत्रं चेत्यर्थः ॥ ३० ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः।

एतेषां मन्वादीनां वंशान्संतानान् ॥ २६ ॥ ❀ ❀ तेषां लोकानां द्वाभ्यां स्वेदांडाभ्यां च जाताः स्वेदजा अंडजाश्च यद्वा स्वेदात् द्वाभ्यां मात्रंडाभ्यां च जाता द्विजाः पक्षिणः क्वचित्तु 'गार्भैः स्वेदांडजोद्भिदाम्' इति पाठः। स्वेदश्चांडश्च स्वेदांडौ ताभ्यां जातौ स्वेदांडजौ भूमिमुद्भिद्य जाता उद्भिदः वृक्षाद्याः तिर्यगादिविशेषणं तिर्यगादीत्यादिकार्यमन्यथा पुनरुक्तिः स्यात्। सरीसृपाः सहस्रपद्यादयः ॥ २७ ॥ ❀ ❀ गुणावतारैर्ब्रह्मविष्णुरुद्रैः श्रीनिवासस्येति वाक्ये "सद्भावेतौ नित्ययुक्तौ" इति श्रुत्यर्थस्सूचितः। उदरविक्रमं महच्चरितम् "उदारो दातृमहतोः" इत्यमरः ॥ २८ ॥ २९ ॥ ❀ ❀ सांख्यस्य वेदांतस्य। इत्यर्थ इति। वाशब्दोत्र चार्थे इति भावः। भगवता नारदेन कृतं पंचरात्रम् ॥ ३० ॥

### श्रीराधारमणदासगोस्वामिविरचितादीपिनी व्याख्या

एतेषामिति सार्धकम्। तेषां लोकानाम् ॥ २६ ॥ २७ ॥ ❀ ❀ आश्रयञ्च तेषां सर्गस्थित्यप्ययानां कारणं प्रजापतिमनुसर्गादिरूपं च सृजतः ॥ २८ ॥ ❀ ❀ वर्णाश्रम इति सप्तकम्। लिङ्गं पुस्तकखड्गतुलाधारणनम्रत्वादि चिह्नम् तत्तद्रूपादिवर्णनपूर्वकमित्यर्थः ॥ २९ ॥ ❀ ❀ तदुपास्यज्ञानसाधनस्य। सांख्यस्यात्मानात्मविवेकशास्त्रस्य भगवत्स्मृतं पंचरात्रं वेति चार्थे ॥ ३० ॥

---

१. प्रा० पा०—स्थित्युद्भवा०। २. प्रा० पा०—कर्माणि देवस्य।

### श्रीमद्वीरराघवव्याख्या

एतेषां मन्वंतराधिपानां ये वंशास्तान् वंश्यानां वंशजानामनुचरितानि हे मित्रात्मज मैत्रेय! भूमेरुपर्युपरिष्टादधोऽधस्ताच्च ये लोका आसते तांश्च तेषां लोकानां संस्थामवयवविन्यासं प्रमाणं परिमाणं च वर्णय कथयेत्यर्थः॥ २६॥ ❀ ❀ तिर्यगिति तिरश्चां पक्ष्यादीनां मानुषाणां देवानां सरीसृपाणां सर्पादीनां पतत्रिणां च गार्भाणां जरायुजानां स्वेदानां स्वेदजानामंडजानामुद्भिजां च सर्गसंव्यूहं सर्गविकल्पनं नोऽस्मभ्यं वद कथय॥ २७॥॥ ❀ ❀ गुणावतारै रजआदिगुणप्रधानैरावेशावतारैर्ब्रह्मादिभिः सृजतो जगद्व्यापारं कुर्वतः श्रीनिवासस्योदारविक्रमं उदारव्यापारमाचक्ष्व। कथंभूतमुदारविक्रमं विश्वस्य सर्गस्थित्यप्ययाश्रयं सर्गस्थितिसंहाराणामाश्रयं हेतुभूतं सर्गादयः आश्रयो विषयो यस्य तमिति वा॥ २८॥ ❀ ❀ तथारूपशीलस्वभावतः रूपं लिंगं शीलमाचारः स्वभावः शमादिः तृतीयार्थे तसिः। रूपादिभिः सह वर्णाश्रमविभागांश्च वर्णादीनां परस्परविविक्तस्वरूपं चाख्याहीत्युत्तरेणान्वयः। एवमग्रेपि। द्वितीयांतानां तेनैवान्वयः वेदस्य विकर्षणं व्यासं विभागमिति यावत्॥ २९॥ ❀ ❀ यज्ञस्य वितानानि विस्तरांश्च योगस्यानभिसंहितकर्मयोगस्य पथः मार्गान् नैष्कर्म्यस्य प्रवृत्तिधर्मत्यागस्य सांख्यस्य ज्ञानयोगस्य च वितानानि वेदेति वा। यद्वा ज्ञानयोगादीनां प्रतिपादकं यद्भगवता स्मृतं तंत्रं सात्त्वतं तंत्रम्॥ ३०॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

आसते तिष्ठन्ति संस्थां व्यवस्थाम्॥ २६॥ ❀ ❀ सरीसृपाः सर्पादयः सहस्रपादादयो वा सर्गसंव्यूहं सृष्टिविस्तारं गर्भजस्वेदजोद्भिजमिति वा पाठः। अस्मिन्पक्षे पुनरुक्तिर्नास्ति॥ २७॥ ❀ ❀ ब्रह्मांतर्यामिणो विभूतीर्वदस्वेति उक्तं विशेषतः प्रार्थयते गुणावतारैरिति। सर्गस्थित्यप्ययात्मनो विश्वस्य जगतोर्थे सृजतः आत्मानमिति शेषः। ज्ञानादिगुणयुक्तावतारैः सत्त्वादिगुणनिमित्तावतारैर्वा❀ "यदा यदाहि धर्मस्य ग्लानिर्भवति भारत। अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम्" इत्यादेर्वीर्यादिगुणप्रकाशैर्वा श्रीनिवासस्योदारविक्रमं प्रख्यातचरितं व्याचक्ष्वेत्यन्वयः। "उदारो महति ख्यात" इत्यभिधानम्। सर्वस्मादिदं श्रीहरिचरितं विस्तृत्य वदेत्यतो व्याचक्ष्वेति श्रिया सह निवासोऽस्तीति श्रीनिवासोऽस्यास्तीति श्रीनिवासस्तस्य अनेन "द्वावेतौ नित्यमुक्तावि"ति श्रुतिः सूच्यते श्रीर्निवसत्यस्मिन्निति वा। अकर्तरि च कारके संज्ञायाम् इति घञ्॥ २८॥ ❀ ❀ रूपतः शीलतः स्वभावतः विकर्षणं विभागं यज्ञस्य वितानानि विस्तारान् योगस्याष्टांगयोगस्य पथो मार्गान्॥ २९॥ ❀ ❀ नैष्कर्म्यस्य सांख्यस्य मोक्षसाधनज्ञानस्य स्मृतं प्रणीतं तंत्रं शास्त्रं पाखंडपथवैषम्यं पाखंडमार्गोत्पत्तिविशेषं "गुणानां विषमावस्था संभवः परिकीर्तितः। साम्यं तु प्रलयो ज्ञेय इति तत्त्वविदो विदु"रिति वचनात् यद्वा पाखंडस्य पापलिंगस्य धर्मस्य सकाशाद् बुद्धिवैषम्यं प्रतिलोमनिवेशनं ब्राह्मणादिकन्यकानां क्षत्रियादिविवाहलक्षणम्॥ ३०॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

सर्गादीन् तेषामप्याश्रयं प्रजापत्यादिरूपञ्च सृजतः कुर्वतः॥ १९॥ ❀ ❀ वर्णाश्रम इति सप्तकम्। भगवत्स्मृतं तन्त्रं पञ्चरात्राख्यम्। प्रतिलोम्नां सूतादीनां निवेशनं संस्थापनम्॥ ३०—३६॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

हे मित्राया आत्मज!॥ २६॥ ❀ ❀ संस्थां सन्निवेशं संव्यूहं संविभागम। गार्भा जरायुजा मनुष्यादयः। स्वेदात् अण्डाच्च द्वाभ्याञ्च जाताः। स्वेदजाः कृमिदंशाद्याः द्विजाः पक्षिणः उद्भिदस्तरुगुल्माद्यास्तेषाम्॥ २७॥ ❀ ❀ सर्गादीनामाश्रयञ्च सृजतः॥ २८॥ ❀ ❀ रूपं लिङ्गं शीलमाचारः स्वभावः शमादिस्तैर्विकर्षणं विभागम्॥ २९॥ ❀ ❀ वितानानि विस्तारान् योगस्याष्टाङ्गस्य पथो मार्गान्। नैष्कर्म्यस्य ज्ञानस्य तदुपायस्य सांख्यस्य च मार्गान्। भगवत्स्मृतं तन्त्रं नारदपञ्चरात्रम्। चार्थे वाकारः॥ ३०॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

हे मित्रात्मज!॥ २६॥ ❀ ❀ संस्थां निवेशं सर्गसंव्यूहं सर्गविभागम्॥ २७॥ ❀ ❀ विश्वस्य विश्वं सृजतः श्रीनिवासस्य विक्रमं व्याचक्ष्व कथंभूतं सर्गादयः आश्रयो विषयो यस्य तम्॥ २८॥ ❀ ❀ रुपशीलविभागतः तृतीयार्थे तसिः रूपेण लिंगेन शीलेनाचारेण स्वभावेन शमादिना वर्णाश्रमविभागान्। एतदाख्याहीत्यग्रिमेणान्वयः। विकर्षणं विभागम्॥ २९॥ ❀ ❀ यज्ञस्य कर्मकांडस्य वितानानि विस्तारान् योगस्य पथः ध्यानयोगस्य मार्गान्। तथा नैष्कर्म्यज्ञानस्य पथः सांख्यस्य विष्णववतारकपिलकृतस्य शास्त्रस्य पथः॥ ३०॥

## श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

तेषामिति। तेषां लोकानां संस्थां मर्यादाम्, केषु लोकेषु के व्यवहारा इति। प्रमाणं परिमाणम्। चकारात्तत्रत्यानामपि व्यवस्थाम्, उपर्यधोलोकानामेव पृष्टत्वात्। प्रधानभूतं भूर्लोकं पृच्छति—भूर्लोकस्येति। भूर्लोकस्य संस्थां प्रमाणं चेत्यर्थः। चकारादवान्तरभेदानाम्। जीवानां योनिभेदान् पृच्छति—तिर्यगिति। तिर्यङ्मानुषदेवास्तामसराजससात्त्विकाः। सरीसृपमृगपक्षिणोऽपि द्वितीयकक्षायां तामसादयः। तेषां सर्गाणां सम्यग्व्यूहः समूहः, के कियन्तः कुत उत्पन्ना इति। चतुर्विधा अपि भूतभेदा वक्तव्या इत्याह—गार्भेति। गर्भे भवा गार्भा जरायुजाः, जरायुशब्देन वा गर्भ उच्यते। स्वेदजा मशकादयः, अण्डजाः पतङ्गादयः, उद्भिज्जा वृक्षादयः। स्वेदजादीनां स्वेदत्वं मन्यमानः स्वेदादिशब्दैरेव तज्जान् पृच्छति॥ २६॥ ❀ ❀ गुणावतारैरिति। ब्रह्मविष्णुमहेश्वरैर्विश्वस्य सर्गं उत्पत्तिः, स्थितिः, अप्ययो नाशः। उत्पत्त्यादीनामाश्रयम्, कृतिं भावं वा। ब्रह्माण्डरूपमाधारमिति केचित्। सृजतः श्रीनिवासस्येति। मूलकारणं विष्णुरुक्तः। श्रीनिवासस्येति ब्रह्मानन्दपूर्ण उक्तः। तस्योदारविक्रमा अवतारचरित्राणि। प्रकीर्णकानामेतेषां प्रश्नानां भगवद्विभूतिभेदार्थं कीर्त्तनम्। वर्णानां विभागश्चतुर्द्धा, आश्रमाणां च। अष्टानामपि रूपशीलस्वभावा भिन्नतया वक्तव्याः। रूपमाकृतिः, शीलमाचारः, स्वभावोऽन्तःकरणधर्मः। ऋषीणां भृग्वादीनाम्। जन्म उत्पत्तिप्रकारः, कर्म मन्त्रद्रष्टृत्वादि। वेदस्य विकर्षणं शाखाभेदेन विभागः॥ २७॥ २८॥ ❀ ❀ यज्ञस्य सप्तदशस्य वितानानि संस्थाभेदाः। चकारात् क्रतुसत्राणाम्। योगस्य पथः योगमार्गान् चकाराद्ज्ञानानाम्। प्रभो! इति संबोधनं ज्ञानार्थम्। नैष्कर्म्यं निवृत्तिमार्गः। साङ्ख्यस्य तन्त्रं साङ्ख्यशास्त्रम्। भागवततन्त्रं वैष्णवशास्त्रम्। स्मृतमिति स्मृतिष्विदमेव प्रमाणमिति सूचितम्॥ २९॥ ❀ ❀ सर्वेष्वपि शास्त्रेषु पाखण्डपथवैषम्यं पाखण्डमार्गवैषम्यं वक्तव्यम्। प्रतिलोमानां चण्डालादीनां निवेशनं शास्त्रोपयोगमुत्पत्तिं वा। जीवस्य गतयः संसरणप्रकाराः, स्वरूपतः प्रकारतश्च, गुणतः कर्मतश्च, वक्तव्याः॥ ३०॥

## श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

यज्ञस्येत्यत्र। सप्तदशस्येति। 'आश्रावयेति चतुरक्षरम्, अस्तु श्रौषडिति चतुरक्षरम्, यजेति द्व्यक्षरम्, ये यजामह इति पञ्चाक्षरम्, द्व्यक्षरो वषट्कारः; एष वै सप्तदशः' इत्युक्तस्य तावदक्षरसाध्यस्य। स्मृतिष्वित्यादि। तन्त्ररूपासु स्मृतिषु सर्वांशेनेदं प्रमाणमिति सूचितमित्यर्थः॥ २९॥

इति श्रीतृतीयस्कन्धसुबोधिनीप्रकाशे सप्तमाध्यायविवरणम्।

## श्रीगिरिधरकृता बालप्रबोधिनी

मित्रातनयत्वात्तव मादृशेषु मैत्र्येव युक्तेति सूचयन् सम्बोधयति—मित्रात्मजेति। एतेषां मन्वन्तराधिपानामपि ये वंशास्तांश्च वंश्यानामनुचरितानि च, भूमेरुपरिष्टात् अधस्ताच्च ये लोका आसते तांश्च, तेषां लोकानां संस्थामवयवविन्यासं प्रमाणं परिमाणं भूर्लोकस्य संस्थां परिमाणं च वर्णय कथयेत्यन्वयः॥ २६॥ ❀ ❀ तिरश्चां पश्वादीनां मानुषाणां देवानां सरीसृपाणां सर्पादीनां पतत्रिणां पक्षिणां गार्भाणां जरायुजानां स्वेदजानां मत्कुणादीनां द्विजानामण्डजानामुद्भिदां तरुगुल्मादीनां सर्गसंव्यूहं सर्गविभागं नोऽस्मभ्यं वद कथयेत्यन्वयः। गार्भस्वेदद्विजोद्भिदामिति गार्भा जरायुजाः स्वेदजाश्च द्वाभ्यां योन्यण्डाभ्यां जाताः स्वेदद्विजाश्च उद्भिदश्च तेषामिति समासो बोध्यः॥ २७॥ ❀ ❀ रजआदिगुणावतारैर्ब्रह्मविष्णुरुद्रादिस्वरूपैर्विश्वस्य सर्गादीन् तदाश्रयमाधारं च सृजतः श्रीनिवासस्य लक्ष्मीपतेर्भगवत उदारं श्रोतृवक्तृजनानां सर्वपुरुषार्थहेतुभूतं विक्रमं पराक्रमं व्याचक्ष्व वर्णयेत्यन्वयः॥ २८॥ ❀ ❀ रूपं लिङ्गं शीलमाचारः स्वभावः शमादिः ततः त्रैवर्णानामाश्रमाणां च विभागान् परस्परविभक्तानि रूपाणि आख्याहीति सप्तमेनान्वयः। एवमग्रेऽपि द्वितीयान्तानां तेनैवान्वयः। ऋषीणां जन्मादि, वेदस्य विकर्षणं विभागं च॥ २९॥ ❀ ❀ यज्ञस्य वितानानि विस्तारान्। योगस्याष्टाङ्गस्य च पथो मार्गान्। सर्वं वक्तुं समर्थोऽसीति सूचयन्सम्बोधयति—प्रभो इति। नैष्कर्म्यस्य प्रवृत्तिधर्मत्यागस्य। साङ्ख्यस्य साङ्ख्यशास्त्रस्य च मार्गान्। वाकारश्चकारार्थकः। भगवता स्मृतं तन्त्रं भागवतं च॥ ३०॥

## हिन्दी अनुवाद

मैत्रेयजी! उन मनुओंके वंश और वंशधर राजाओंके चरित्रोंका, पृथ्वीके ऊपर और नीचेके लोकों तथा भूर्लोकके विस्तार और स्थितिका भी वर्णन कीजिये। तथा यह भी बताइये कि तिर्यक्, मनुष्य, देवता, सरीसृप (सर्पादि रेंगनेवाले जन्तु) और पक्षी तथा जरायुज, स्वेदज, अण्डज और उद्भिज्ज—ये चार प्रकारके प्राणी किस प्रकार उत्पन्न हुए॥ २६-२७॥ ❀ ❀ श्रीहरिने सृष्टि करते समय जगत्की उत्पत्ति, स्थिति और संहारके लिये अपने गुणावतार ब्रह्मा, विष्णु और महादेवरूपसे जो कल्याणकारी लीलाएँ कीं, उनका भी वर्णन कीजिये॥ २८॥ ❀ ❀ वेष, आचरण और स्वभावके अनुसार वर्णाश्रमका विभाग, ऋषियोंके जन्म-कर्मादि, वेदोंका विभाग, यज्ञोंके विस्तार योगका मार्ग, ज्ञानमार्ग और उसका साधन सांख्यमार्ग तथा भगवान्के कहे हुए नारदपाञ्चरात्र आदि तन्त्रशास्त्र॥ २९-३०॥

पाखण्डपथवैषम्यं प्रतिलोमनिवेशनम् । जीवस्य गतयो याश्च यावतीर्गुणकर्मजाः ॥ ३१ ॥
धर्मार्थकाममोक्षाणां निमित्तान्यविरोधतः । वार्ताया दण्डनीतेश्च श्रुतस्य च विधिं पृथक् ॥ ३२ ॥
श्राद्धस्य च विधिं ब्रह्मन् पितृणां सर्गमेव च । ग्रहनक्षत्रताराणां कालावयवसंस्थितिम् ॥ ३३ ॥
दानस्य तपसो वापि यच्चेष्टापूर्तयोः फलम् । प्रवासस्थस्य यो धर्मो यश्च पुंस उतापदि ॥ ३४ ॥
येन वा भगवांस्तुष्येद्धर्मयोनिर्जनार्दनः । सम्प्रसीदति वा येषामेतदाख्याहि चानघ ॥ ३५ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

पाखंडानां पंथाः प्रवृत्तिस्तदेव वैषम्यम् ॥ ३१ ॥ ❀ ❀ निमित्तान्युपायान् परस्पराविरोधेन ॥ ३२ ॥ ❀ ❀ ग्रहादीनां कालचक्रे संस्थितिम् ॥ ३३ ॥ ३४ ॥ ❀ ❀ येन मार्गेण संतुष्येत् । येषामिति यादृशानाम् ॥ ३५ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

यद्वा पाखंडस्याधर्मलिंगस्य सकाशाद्यद् बुद्धिवैषम्यम् । प्रातिलोम्येनोत्पत्तिवैपरीत्येन सर्वेषां ब्रह्मणि निवेशनं प्रवेशो लय इत्यर्थः । यद्वा । ब्राह्मणादिकन्यकानां क्षत्रियादिविवाहलक्षणं प्रातिलोम्यनिवेशनम् । या यादृशीः यावतीर्यावत्संख्याकाः सत्त्वादिगुणनिमित्तकर्मजाताः ॥ ३१ ॥ ❀ ❀ वार्त्ताया वाणिज्यादेः दंडनीतेरर्थशास्त्रोक्तराजधर्मस्य श्रुतस्य श्रुत्युक्तस्य विधिं प्रकारम् ॥ ३२ ॥ ❀ ❀ तारा ध्रुवाद्याः कालावयवानां परमाण्वादिकालावयवानाम् ॥ ३३ ॥ ❀ ❀ पुंस इति मनुष्यमात्रस्य ॥ ३४ ॥ ❀ ❀ मेऽनघेति पाठे मे मह्यम् । धर्मस्य योनिः कारणं लोकसंग्राहकत्वेन कर्त्ता जनार्दन इति सकामभक्तान्कामान्याचयन्शुद्धभक्तान्प्रेमोत्थानुतापेन पीडयंश्च येषां वेति क्रमेण तत्प्रसादस्य साधनं किं तत्राधिकारिणश्च कीदृशा इति कथयेत्यर्थः ॥ ३५ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

प्रतिलोमाः सूतवैदेहकादयस्तेषां निवेशनं प्रवृत्तिं गतयो गतीः यावतीः यत्संख्याकाः ॥ ३१ ॥ ❀ ❀ वार्त्तायाः कृष्यादिचतुर्विधायाः श्रुतस्य शास्त्रश्रवणस्य विधिं प्रकारम् ॥ ३२ ॥ ३३ ॥ ३४ ॥ ❀ ❀ एकमिति सामान्ये नपुंसकम् । तं मार्गं प्रसादहेतुमधिकारिविशेषणञ्चेत्यर्थः ॥ ३५ ३६ ॥

### श्रीमद्वीरराघवव्याख्या

पाखंडानां वैदिकबहिःकृतानां पंथाः प्रवृत्तिः तस्या वैषम्यं प्रतिलोमनिवेशनं वर्णप्रतिलोमजानां प्रतिकल्पनं जीवस्य सत्त्वादिगुणकर्मजा या गतयः फलानि ताश्च ॥ ३१ ॥ ❀ ❀ धर्मादीनामविरोधतः परस्पराविरोधेन निमित्तान्युपायान् वार्त्तायाः कृष्यादिव्यापारस्य दंडनीतेश्च दंड उपकारिलोकशिक्षा तद्विषयाया नीतेः न्यायस्य श्रुतस्य श्रुतिविहितस्य संध्योपासनादेश्च पृथक् प्रविभक्तं विधिम् ॥ ३२ ॥ ❀ ❀ हे ब्रह्मन्मैत्रेय ! पितृणामर्यमादीनां सर्गं ग्रहाः सूर्यादयो नवग्रहाः नक्षत्राण्यश्विन्यादीनि तारास्तदितरताराः तेषां कालावयवसंस्थितिं कालावयवतावच्छेदकतया स्थितिम् ॥ ३३ ॥ ❀ ❀ दानस्य तपसः कृच्छ्रचांद्रायणादेः इष्टापूर्त्तयोः श्रौतस्मार्त्तकर्मणोश्च यत्फलं तदपि प्रवासस्थस्य देशान्तरगतस्य योऽनुष्ठेयो धर्मः तम् उतापि च पुंसः आपदि विपदि यश्चानुष्ठेयो धर्मस्तं च ॥ ३४ ॥ ❀ ❀ धर्मप्रवर्त्तको जनार्दनः जनानामंतरात्मा भगवान्येन मार्गेण तुष्येत् येषां यादृशानां संप्रसीदति तदेतत्सर्वं मे मह्यमाख्याहि कथय हे अनघ मैत्रेय ! ॥ ३५ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

यावतीर्यावत्यः तावतीरिति शेषः सत्त्वादिगुणकर्मभ्यो जाताः निमित्तानि साधनानि अविरोधतः परस्पराविरोधेन ॥३१॥ ❀ ❀ वार्ताया वाणिज्यादेः दंडनीतेरर्थशास्त्रोक्तस्य राजधर्मस्य श्रुतस्य श्रुत्युक्तस्य विधिं प्रकारम् ॥ ३२ ॥ ❀ ❀ ग्रहाः सूर्यादयः नक्षत्राण्यश्विन्यादीनि तारा ध्रुवादयः कालावयवानां परमाण्वादीनां संस्थितिः इष्टं यागादि पूर्तं तडागखननादि ॥ ३३ ॥ ❀ ❀ धर्मात् पुण्यात् योनिराविर्भावलक्षणोत्पत्तिर्यस्य स तथा धर्मस्य योनिः कारणं लोकसंग्राहकत्वेन कर्तेत्यर्थः ॥ ३४—३५ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

पाखण्डपथात् पाखण्डमार्गतो हेतोर्यद्वैषम्यं प्रतिलोम्नां सूतादीनां निवेशनं संस्थानम् ॥ ३१ ॥ ❀ ❀ निमित्तान्युपायान् परस्पराविरोधेन वार्त्तायाः कृषिवाणिज्यादिशास्त्रस्य । दण्डनीतेरर्थशास्त्रस्य श्रुतस्य वेदशास्त्रस्य ॥ ३२ ॥ ❀ ❀ काला-

वयवे दिनरात्रिमासवर्षादौ संस्थितिं स्थितिम् ॥३३॥ ❀ ❀ एवं परावरेषां भगवन् व्रतानि श्रुतानीत्युक्तेर्व्यासमुखात् ज्ञातानामप्येषां ज्ञेयवस्तुमात्र एव नैरपेक्ष्यार्थं पुनर्मैत्रेयमुखादपि जिज्ञासां समाप्येदानीं स्वाभीष्टं विधित्सितं पृच्छति येनेति। वा शब्दस्त्वर्थे धर्म्माणां सर्व्वेषां योनिः कारणं जनार्द्दनः। सकामभक्तान् कामान् याचयन्नपीत्यर्थः। यद्वा। शुद्धभक्तान् प्रेमोत्थेनानुतापेन पीडयन् येषां वेति क्रमेण तत्प्रसादस्य साधनं किम्। तत्राधिकारिणश्च कीदृशास्तन्मे कथयेत्यर्थः॥ ३४॥ ❀ ❀ स्वाभीष्टमपि प्रष्टव्यमहं न जानाम्यतस्तत्र भवन्त एव कृपया कथयन्त्वित्याह अनुव्रतानामिति। चतुर्थ्यर्थे षष्ठ्यर्थः॥ ३५॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

पांखंडानां वेदबाह्यानामुपधर्माणां पंथाः प्रवृत्तिस्तदेव वैषम्यम्॥ ३१॥ ❀ ❀ निमित्तान्युपायान्॥ ३२॥ ग्रहादीनां कालावयवके कालचक्रे संस्थितिम्॥ ३३॥ ३४॥ ३५॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

चतुर्विधपुरुषार्थानामन्थाविरोधतो निमित्तानि च वक्तव्यानि। वार्त्ताया जीविकाया अधिकारिभेदेन नव प्रकारा वक्तव्याः। एवं दण्डनीतेश्च राजधर्माणां विधिः प्रकारो वक्तव्यः। श्रुतस्य वेदाध्ययनस्य। चकारादङ्गानाम्, अर्थज्ञानस्य वा। पृथगधिकारिभेदेन[1] ॥ ३१॥ ❀ ❀ श्राद्धस्य विधिः[2] प्रकारो वक्तव्यः। पितॄणामपि सर्गो वक्तव्यः। ग्रहनक्षत्रताराणां बुधाद्यश्विन्याद्यन्यनक्षत्राणाम्। कालावयवे ज्योतिश्चक्रे सम्यक् स्थितिर्वक्तव्या॥ ३२॥ ❀ ❀ दानादीनां फलं वक्तव्यम्, विधानं च। वापीत्यनादरे, य एव भेदास्तवाऽभिप्रेतास्त एव वक्तव्या इति। इष्टं यागाद्यग्निसाध्यम्। खातादि मृज्जलसाध्यं पूर्त्तम्। प्रवासस्थस्य परदेशगतस्य यो धर्म इति, पूर्वोक्तो वा संकोच इति। पुंस आपदि यो धर्मः॥ ३३॥ ❀ ❀ येन वा प्रकारेण भगवांस्तुष्येत्, धर्मकर्ता ज्ञानदश्च। तोषस्तस्य स्वभावतः परितोषः। प्रसीदतीति वरदानाद्यर्थं सन्तोषेणाऽभिमुखो भवति। येषां वा अधिकारिणां भगवान् संतुष्यतीति वक्तव्यम्। अनघेति संबोधनं भगवदभिप्रायज्ञानार्थम्॥ ३४॥ ❀ ❀ अपृष्टमपि वक्तव्यमित्याह—अनुव्रतानामिति। न हि गुह्यं बालाः प्रष्टुं जानन्ति। अनु व्रतं येषाम्, गुरोरिच्छानुवर्तिनाम्। शिष्याणां शेषभावं प्राप्तानाम्, ज्ञानार्थिनां वा। पुत्राणां चेति दृष्टान्तार्थम्। द्विजोत्तमेति संबोधनम्, तव पित्रादिभिर्यथा भवान् शिक्षितः, एवं मां शिक्षयेति ज्ञापनार्थम्। अनापृष्टमपि ब्रूयुरिति वचने[3] सदाचारः प्रमाणम्। तदपि न बलात्, किन्तु दयया। तदाह—दीनवत्सला इति॥ ३५॥

### श्रीगिरिधरकृता बालप्रबोधिनी

पाखण्डो वेदविरुद्धः पन्थाः प्रवृत्तिः तदेव वैषम्यं कथं जातम्? प्रतिलोमानां चाण्डालादीनां निवेशनं वर्णेषु प्रवेश उत्पत्तिः कथम्। जीवस्य सत्त्वादिगुणप्रयुक्तकर्मजा गतयः कर्मफलानि, यावतीः यावत्सङ्ख्याकाः याश्च यादृश्यश्च॥ ३१॥ ❀ ❀ अविरोधतः परस्पराविरोधेन धर्मादीनां चतुर्विधपुरुषार्थानां निमित्तानि उपायान्। वार्तायाः कृष्यादिव्यापारस्य, दण्डनीतेश्च दण्डः अपकारिजनशिक्षा तद्विषयाया नीतेर्न्यायस्य च, श्रुतस्य श्रुतिविहितस्य वेदाध्ययनसन्ध्योपासनादेश्च पृथक् प्रविभक्तं विधिं प्रकारम्॥ ३२॥ ❀ ❀ हे ब्रह्मन्निति सम्बोधनं बहुप्रश्नेऽप्यनुद्वेगाय। श्राद्धस्य च विधिं प्रकारम्। पितॄणामर्यमादीनां च सर्गम्। ग्रहाः सूर्यादयो नव, नक्षत्राणि अश्विन्यादीनि सप्तविंशतिः, तारास्तदितरताराः, तेषां कालावयवे ज्योतिश्चक्रे संस्थितिं सम्यक् स्थानभेदेन स्थितिप्रकारं च॥ ३३॥ ❀ ❀ गवादिदानस्य, तपसः कृच्छ्रचान्द्रायणादेश्च, इष्टं यज्ञादि, पूर्तं 'वापीकूपतडागादि देवतायतनानि च॥ अन्नप्रदानमारामः पूर्तमित्यभिधीयते' इति स्मृत्युक्तम्, तयोश्च यत्फलम्। प्रवासस्थस्य देशान्तरगतस्य योऽनुष्ठेयो धर्मः। उत अपि। यश्चापि पुंसः आपदि विपद्यनुष्ठेयो धर्मः॥ ३४॥ ❀ ❀ येन वा धर्मेण भगवांस्तुष्येदिति भगवत्तोषहेतुधर्मप्रश्नः। येषां वा भगवान् प्रसीदतीति भगवत्कृपापात्रलक्षणः प्रश्नः। धर्मेण भगवत्सन्तोषे हेतुं सूचयन् विशिनष्टि—धर्मयोनिरिति, धर्मप्रवर्तक इत्यर्थः। भगवतः प्रसादेऽपि किं स्यादित्याकाङ्क्षायां संसारदुःखनिवृत्तिरेवेत्याशयेन विशिनष्टि—जनार्दन इति, जनां संसारजननीमविद्यां अर्दयति निवर्त्तयतीति तथेत्यर्थः। निर्दोषस्यैवैतत्स्फुरति तादृशश्च त्वमिति सूचयन्सम्बोधयति—अनघेति। तदेतत्सर्वं मे मह्यमाख्याहि कथय॥ ३५॥

### हिन्दी अनुवाद

विभिन्न पाखण्डमार्गोंके प्रचारसे होनेवाली विषमता, नीचवर्णके पुरुषसे उच्चवर्णकी स्त्रीमें होनेवाली संतानोंके प्रकार तथा भिन्न-भिन्न गुण और कर्मोंके कारण जीवकी जैसी और जितनी गतियाँ होती हैं, वे सब हमें सुनाइये॥ ३१॥ ❀ ❀ ब्रह्मन्! धर्म, अर्थ, काम और मोक्षकी प्राप्तिके परस्पर अविरोधी साधनोंका, वाणिज्य, दण्डनीति और शास्त्र-

---

१. अग्रे 'शास्त्रस्याऽपि प्रकारो वक्तव्यः' इति क. ख. घ. च। २. श्राद्धस्याऽपि ख. ग. ङ. च। ३. चानघ. क। ४. वचनेन. क।

श्रवणकी विधियोंका, श्राद्धकी विधिका, पितृगणोंकी सृष्टिका तथा कालचक्रमें ग्रह, नक्षत्र और तारागणकी स्थितिका भी अलग-अलग वर्णन कीजिये ॥ ३२-३३ ॥ ❀ ❀ दान, तप तथा इष्ट और पूर्त कर्मोंका क्या फल है ? प्रवास और आपत्तिके समय मनुष्यका क्या धर्म होता है ? ॥ ३४ ॥ ❀ ❀ निष्पाप मैत्रेयजी ! धर्मके मूल कारण श्रीजनार्दन भगवान् किस आचरणसे सन्तुष्ट होते हैं और किनपर अनुग्रह करते हैं, यह वर्णन कीजिये ॥ ३५ ॥

अनुव्रतानां शिष्याणां पुत्राणां च द्विजोत्तम । अनापृष्टमपि ब्रूयुर्गुरवो दीनवत्सलाः ॥ ३६ ॥
तत्त्वानां भगवंस्तेषां कतिधा प्रतिसंक्रमः । तत्रेमं क उपासीरन् क उ स्विदनुशेरते ॥ ३७ ॥
पुरुषस्य च संस्थानं स्वरूपं वा परस्य च । ज्ञानं च नैगमं यत्तद्गुरुशिष्यप्रयोजनम् ॥ ३८ ॥
निमित्तानि च तस्येह प्रोक्तान्यनघ सूरिभिः । स्वतो ज्ञानं कुतः पुंसां भक्तिर्वैराग्यमेव वा ॥ ३९ ॥
एतान्मे पृच्छतः प्रश्नान् हरेः कर्मविवित्सया । ब्रूहि मेऽज्ञस्य मित्रत्वादजया नष्टचक्षुषः ॥ ४० ॥
सर्वे वेदाश्च यज्ञाश्च तपो दानानि चानघ । जीवाभयप्रदानस्य न कुर्वीरन् कलामपि ॥ ४१ ॥

### श्रीशुक उवाच

स इत्थमापृष्टपुराणकल्पः कुरुप्रधानेन मुनिप्रधानः ।
प्रवृद्धहर्षो भगवत्कथायां सञ्चोदितस्तं प्रहसन्निवाह ॥ ४२ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां तृतीयस्कंधे सप्तमोऽध्यायः ॥ ७ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

अनापृष्टमप्यपृष्टमपि यद्योग्यं तद्वक्तव्यमिति भावः ॥ ३६ ॥ ❀ ❀ प्रतिसंक्रमः प्रलयः तत्र प्रलये इमं परमेश्वरं शयानं राजानमिव चामरग्राहिणः के वानुशेरते शयानमनुस्वपंति ॥ ३७ ॥ ❀ ❀ पुरुषस्य संस्थानं जीवस्य तत्त्वं परमेश्वरस्य स्वरूपं येनांशेन तयोरैक्यं तथा ज्ञानं च नैगममौपनिषदम् ॥ ३८ ॥ ❀ ❀ यानि सूरिभिः प्रोक्तानि तस्य ज्ञानस्य साधनानि च ब्रूहि । गुरुं विनैतन्न भवतीति स्वत इति ॥ ३९ ॥ ❀ ❀ मे प्रश्नान्मे मित्रत्वात्स्निग्धत्वादित्यन्वयभेदान्न मेपदस्य पौनरुक्त्यम् ॥ ४० ॥ ❀ ❀ तत्त्वोपदेशेन जीवाभयप्रदानस्य ॥ ४१ ॥ ❀ ❀ पुराणे कल्पते प्रकाशते इति पुराणकल्पो-बुभुत्सितार्थः आपृष्टः पुराणकल्पोऽयं स मुनिप्रधानः ॥ ४२ ॥

इति तृ० टी० सप्तमः ॥ ७ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः ।

इति भाव इति । स्वाभीष्टमहं न जानाम्यतस्तत्र भवन्तः कृपया कथयंत्वित्याशयः । तदेवाह । अनुव्रतानामिति । चतुर्थ्यर्थे षष्ठी । द्विजोत्तमेति । ब्राह्मणा ह्यतीव दयाप्रकृतयो भवंतीत्याह ॥ ३६ ॥ ❀ ❀ क उपासीरन्नित्यनेन तत्पार्षदानां नित्यत्वमभिप्रेतं तदुक्तं काशीखंडे "न च्यवंते हि यद्भक्ता महत्यां प्रलयापदि । अतोऽच्युतोऽखिले लोके स एकः सर्वगोऽव्ययः" इति ॥ ३७ ॥ ❀ ❀ तयोर्जीवेशयोः गुरुशिष्यौ प्रयोजनं हेतुभूतौ यस्य तत्तथा 'प्रयोजनं कार्यहेत्वोः' इति हैममेदिन्यौ । यद्वा । गुरुशिष्ययोर्व्याख्यानश्रवणाभ्यां प्रयोजनं निश्चायकत्वं निश्चयवत्त्वलक्षणम् । यद्वा । गुरुशिष्यौ । प्रयोजयतीति तथा । यद्वा । पुरुषस्योपासकस्य परस्योपास्यस्य च संस्थानं सम्यक्स्थितिं तत्त्वं वा । नैगममिति । स्वरूपविशेषणं वेदोक्तमित्यर्थः । यद्गुरुशिष्ययोः प्रयोजनं मत्तः शिष्योऽयं जानातु गुरुतोऽहं भक्तिज्ञानादि जानीयामित्येवंलक्षणं तस्य निमित्तानि सत्संगादीनि ॥ ३८ ॥ ❀ ❀ सूरिभिः शास्त्रतात्पर्यज्ञैः । अनघेति व्यसनांतररहितत्वात्त्वं कथनयोग्योसीत्याह । स्वयत्नेनैव तत्संपादयेति चेत्तत्राह—गुरुं विनेति ॥ ३९ ॥ ❀ ❀ नन्वेतावंतो नानाविधाः प्रश्नाः कुतः कृतास्तत्राह—हरेरिति । कर्मपरिचर्यादिकं तस्य विवित्सया प्राप्तीच्छयैवैतान्प्रश्नान् ब्रूहि सर्वजिज्ञासितसिद्धौ सत्यामेव भगवत्परिचर्यायां मनोनिरपेक्षमेकाग्रं भवति । मनस ऐकाग्र्ये सत्येव तत्प्राप्तिरिति भावः । किञ्च 'आपत्सु मित्रं जानीयात्' इत्युक्तेस्त्वं मित्रपुत्रत्वान्मित्रमेवासि सर्वजगतामिति भावः । मित्रत्वाद् ब्रूहीति । ननु तव का विपदत आह—नष्टचक्षुष इति । नष्टज्ञानस्येत्यर्थः । यद्वाऽजया रात्रितमोरूपया नष्ट-नेत्रशक्तेर्यथा मित्रः सूर्यः प्रत्युपकारकस्तथा ममाज्ञस्य ज्ञानप्रकाशेन त्वमपि मित्रमसीति भावः ॥ ४० ॥ ❀ ❀ न केवलं

ममैवोद्धारो भवदुपदेशेनापि तु तवापि महत्पुण्यावाप्तिर्भविष्यतीत्याह—सर्वे इति । वेदा वेदपाठाः तपः कृच्छ्रादि । दानानि तुलापुरुषप्रभृतीनि । न भयं येन तदभयं ज्ञानं तस्य प्रदानमभयप्रदानं जीवेभ्योऽभयप्रदानं जीवाभयप्रदानं भयमत्र संसृतिरूपं ज्ञेयं तन्निवृत्तिस्तु भगवन्नामोच्चारणादिभिर्भवत्येव स्वतः किं पुनर्महदुपदिष्टैरिति "आपन्नः संसृतिं घोरां यन्नाम विवशो गृणन् । ततः सद्यो विमुच्येत यद्बिभेति भयं स्वयम्" इत्युक्तेः । कलां षोडशभागं तथा च ज्ञानभक्त्याद्युपदेशजन्यपुण्यस्य वेदपाठादयोंऽशेनापि तुल्या न भवंतीति भावः ॥ ४१ ॥ ❀ ❀ यद्वा पुराणेषु पुराणतात्पर्येषु कल्पते व्याख्याने समर्थो भवतीति पुराणकल्पः आपृष्टश्चासौ पुराणकल्पश्चेति तथा । यद्वा । पुराणस्य पंचमवेदाख्यस्य कल्पः प्रश्नविकल्पः पुराणकल्प आपृष्टः पुराणकल्पो यस्मात्स आपृष्टपुराणकल्पो मैत्रेयः तं विदुरम् । इवेनाहो सर्वज्ञोऽप्ययं मोक्षाद्धर्मावतारत्वाल्लोकसंग्रहार्थम् "आचार्यवान्पुरुषो वेद" इति श्रुत्युक्तमार्गबोधनार्थमेवैतान्प्रश्नान्कृतवानित्युक्तम् । ननु बालवद्बहुकथाप्रश्ना एव कृता इत्यज्ञशंकामपानुदन्नाह—भगवत्कथायामिति ॥ ४२ ॥

इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे तृतीयस्कन्धे सप्तमोऽध्यायः ॥ ७ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

चामरग्राहिण इति पार्षदानां नित्यत्वमभिप्रेतं तदुक्तं काशीखण्डे "न च्यवन्तेऽपि यद्भक्ता महत्यां प्रलयापदि । अतोऽच्युतोखिले लोके स एकः सर्वगोऽव्ययः ॥ इति स्वपन्ति लीनास्तिष्ठन्ति ॥ ३७ ॥ ❀ ❀ पुरुषस्येति सार्द्धकम् तत्त्वं यथावत्स्वरूपं येन चिदंशेन साधनानि शमादीनि ज्ञानमित्यर्धकम् यत्तद्ज्ञानादिकम् ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ तं प्रति ॥ ४२ ॥

इति श्रीमद्भागवते तृतीयस्कन्धे दीपिन्याख्यदीपिकाटिप्पण्यां सप्तमोऽध्यायः ॥ ७ ॥

### श्रीमद्वीरराघवव्याख्या

तस्यांतरा पृष्टप्रतिवचनौत्सुक्यमापादयन्नन्यदपि पृच्छति । अनुव्रतानामित्यादिना हे द्विजोत्तम ! मैत्रेय ! अनुव्रतानां सेवमानानां शिष्याणां पुत्राणां चाऽनापृष्टमपि ब्रूयुः । चो हेतौ यतो गुरवो दीनवत्सला दीनजनेषु वात्सल्यवंतः पुत्राणामिति दृष्टांतार्थं यथा पुत्रेभ्योऽपृष्टमपि ब्रूयुस्तथा शिष्येभ्योऽपीत्यर्थः । अपृष्टोऽपि रहस्यार्थः कश्चिदस्ति चेत्सोऽपि वक्तव्य इत्यर्थः ॥ ३६ ॥ ❀ ❀ हे भगवन्मैत्रेय ! तत्त्वानां पृथिव्यादीनां प्रतिसंक्रमः प्रलयः कतिधा कतिप्रकारः किं पृथिव्यादीनि सर्वाणि संहृत्य स्वपरमकारणे लीयंते उतोत्तरोत्तरेषां पूर्वपूर्वस्मिन् लयः उतोभयविधोऽपीत्यादिसंशयानां प्रवृत्तेः कतिधेत्युक्तिः तत्र प्रलये इमं परमात्मानं के उपासीरन्ननुपसंहृताः सेवंते मुक्ता इत्यर्थः । क उस्विल्के वाऽनुशेरते उपसंह्रियंते इत्यर्थः ॥ ३७ ॥ ❀ ❀ पुरुषस्य जीवस्य संस्थानं स्वासाधारणप्रकारं स्वरूपं धर्म्मिस्वरूपं च तथा परस्य परमात्मनः संस्थानं स्वरूपं ज्ञानं च नैगमं शास्त्रजन्यं च कथंभूतं यद्गुरुशिष्ययोः प्रयोजनं प्रयोजनभूतं ज्ञानम् ॥ ३८ ॥ ❀ ❀ तस्य ज्ञानस्य निमित्तानि साधनानि यानि सूरिभिः प्रोक्तानि तानि च हे अनघ ! ब्रूहीत्यर्थः । गुरूपदेशमन्तरेण सर्वमेतन्न संपत्स्यत इत्याह । स्वतः इति स्वतो गुरूपदेशमन्तरा पुंसां ज्ञानं शास्त्रजन्यं ज्ञानं ततो भक्तिः वैराग्यञ्च कुतः स्यात् ॥ ३८ ॥ ❀ ❀ ज्ञानभक्तिवैराग्यादेर्गुरूपदेशमन्तेरणासंपत्तेर्हरेः कर्मविवित्सया भगवद्विचेष्टितबुभुत्सयैतान्प्रश्नान्प्रश्नविषयानर्थान्पृच्छतः अजया प्रकृत्या नष्टचक्षुषः हृतज्ञानस्यात एवांधस्य मे मह्यं ब्रूहीत्यन्वयभेदान्न मेपदस्य पौनरुक्त्यम् ॥ ४० ॥ ❀ ❀ भवभयभीतस्य तत्त्वोपदेशेनाभयप्रदानान्नोत्तमो धर्मोस्तीत्याह सर्व इति । वेदाः वेदाध्ययनाध्यापनार्थज्ञानानि वेदशब्देन विवक्षितानि । यज्ञादयो वेदार्थानुष्ठानरूपाः यज्ञाः पञ्चमहायज्ञादयः तपोऽनशनादि ज्ञानमुपासनं एतानि सर्वाणि जीवाभयप्रदानस्य जीवस्य संसारनिवृत्त्युपायोपदेशरूपाभयप्रदानधर्मस्य कलामपि मात्रामपि न कुर्वीरन् ॥ ४१ ॥ ❀ ❀ विदुरकृतप्रश्नानुपसंहरंस्तेषामुत्तरप्रदानाय मैत्रेयः प्रारभते इत्याह श्रीशुकः स इति । इत्थं पूर्वोक्तप्रकारेण आपृष्टः पुराणकल्पः कल्प्यत इति कल्पः पुराणार्थः मंत्रकल्प इतिवद्रहस्यप्रकाशकतया कल्प इत्युक्तं आपृष्टः आसमंतात्पृष्टः पुराणकल्पो यस्य सः मुनिप्रधानः मुनिश्रेष्ठो मैत्रेयः कुरुप्रधानेन विदुरेण भगवत्कथायां संचोदितः अत एव प्रवृद्धहर्षः उत्कटहर्षः प्रहसन्निव प्रश्नानां सुंदरत्वात्सुखेनोत्तरयितुं शक्यत्वाच्च हसन्निव तं प्रत्याहेत्यर्थः । अत्रेदं ज्ञेयं तावद्राजप्रश्नानां विदुरप्रश्नानां चैकरूप्यं प्रतीयते उभयत्रोभयेषां प्रत्यभिज्ञानात् अप्रत्याभिज्ञातास्तूपलक्षणतया युक्ताः । अत्रैषां केषांचित्प्रश्नानां मैत्रेयोक्तान्येवोत्तराणि तृतीयतुरीयाभ्यां स्कन्धाभ्यामाह वैयासकिः अन्येषान्तु स्वयमेव तत्तदाख्यानप्रवर्त्तनेनोपरितनैः स्कन्धैराचचक्षे मैत्रेयस्य कार्त्स्न्येन प्रश्नानामुत्तरानभिधानं तु विदुरस्य महात्मनो भगवद्धर्मप्रवर्त्तकस्योत्तरितप्रश्नैरेव बुभुत्सायाः शान्तत्वादुपपद्यत इति अलमतिविस्तरेण ॥ ४२ ॥

इति श्रीमद्भागवतमहापुराणे तृतीयस्कंधे श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिकायां सप्तमोऽध्यायः ॥ ७ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

प्रतिसंक्रमः प्रलयः ॥ ३६ ॥ ❀ ❀ तत्र प्रलये यमं हरिं उना हृत्तापं सूचयति। प्रश्नप्रवचनपर्यंतं सोऽस्तीति "उ तापेऽव्ययमीशाने" इति यादवः। चेत्यस्मिन्नर्थे वा पुरुषस्यावतारसंस्थानं परस्य परमात्मनः स्वरूपं अवतारेष्वपि निजावतारः क इत्यर्थः। यद्वा पुरुषस्य जीवस्य एकत्वादिविषयं परस्य मुक्तस्य स्वरूपं "मुक्तिर्हित्वान्यथा रूपं स्वरूपेण व्यवस्थिति" रिति-वक्ष्यति ॥ ३७ ॥ ❀ ❀ गुरुशिष्ययोः प्रयोजनं व्याख्यानश्रवणाभ्यां नैशित्यनिश्चयलक्षणं यद्वा गुरुशिष्यौ प्रयोजयतीति वा नैगमं वेदांतजन्यं ज्ञानं इह शास्त्रे तस्य ज्ञानस्योपायनिमित्तानि साधनानि तान्यपि ॥ ३८ ॥ ❀ ❀ पुंसां स्वतः साधनानि विना ज्ञानं कुतो भवेत् भक्तिर्वैराग्यं वा कुतः स्यातामिति शेषः ॥ ३९ ॥ ❀ ❀ कर्मविवित्सया वेत्तुमिच्छया पृच्छत इति शेषः, वक्तव्यत्वे निमित्तमाह मित्रत्वादिति। "आपत्सु मित्रं जानीया" दिति वचनात् का तव आपदिति तत्राह अजयेति। प्रकृत्या पुरुषस्यांधत्वाधिकापन्नास्तीत्यर्थः। अंधकारेण नष्टचक्षुःशक्तेः पुंसो यथा मित्रः सूर्यः प्रयोजकः तथा त्वमपीति भावेनोक्तं मित्रत्वा-दिति ॥ ४० ॥ ❀ ❀ त्वदभीष्टत्वे कुत एतदेव वक्तव्यमन्यत्किं न स्यादत्राह सर्वे इति। जीवाभयहेतुज्ञानप्रदानस्य कलां षोडशांशं अपिना वेदादिज्ञातृप्रयोक्तृपुरुषमंतरेण सूचयति ॥ ४१ ॥ ❀ ❀ शुकप्रश्नेन मैत्रेयेण पृष्टमेवोक्तमन्यद्वेति परीक्षितो हार्दां शंकां परिहरति स इत्थमिति। प्रश्नाख्यपुराणविषयः कल्पः विकल्पः "कल्पो न्याये सुरद्रुमे। विकल्पे चे" ति यादवः बालकथाप्रश्नवद्वृद्धो कथैव सारभूता न भगवत्कथा पृष्टेति मंदाशंकां परिहरति भगवत्कथायामिति। अनेन सर्वेऽपि प्रश्ना भगवत्कथाविषया इति सूचितं भवति ॥ ४२ ॥

इति श्रीभागवतमहापुराणे तृतीयस्कंधे श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्यां सप्तमोऽध्यायः ॥ ७ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

तत्त्वानामिति। तत्र तेषु प्रलयेषु प्रकृतिपर्य्यन्तेषु। अनेन पार्षदानां नित्यत्वमेवाभिप्रेतम्। तदुक्तं काशीखण्डे। "न च्यवन्ते हि यद्भक्ता महत्यां प्रलयापदि। अतोऽच्युतोऽखिले लोके स एकः सर्व्वगोऽव्यय" इति अनुशेरते लीनास्तिष्ठन्ति ॥ ३७ ॥ ❀ ❀ पुरुषस्येति सार्द्धकम्। पुरुषस्य प्रकृत्यादिद्रष्टुः संस्थानं सहस्रशीर्षेत्यादिरूपं ततः परस्य श्रीभगवतश्च ज्ञानं विचाररूपम् स्वत इत्यर्द्धकम् ॥ ३९ ॥ ४० ॥ ❀ ❀ जीवानामितस्ततो भीतानां किमुत संसारभीतानामभयप्रदानस्येत्यर्थः ॥ ४१ ॥ ❀ ❀ आपृष्टः पुराणकल्पो यत्र सः ॥ ४२ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे सप्तमोऽध्यायः ॥ ७ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

साधनभक्तिं पृष्ट्वा साध्यभक्तेर्नित्यत्वे विप्रतिपत्तिं निरस्यन् प्रलयं पृच्छति तत्त्वानामिति। प्रतिसंक्रमः प्रलयः। तत्र प्रलये इमे परमेश्वरं शयानं राजानमिव चामरग्राहिणः के उपासीरन् के वा अनुशेरते शयानमनुस्वपन्तीति श्रीस्वामिचरणास्तेन भगवत्पार्षदानां तद्भक्तेस्तल्लोकस्य च नित्यत्वमभिप्रेतम्। अत एव न च्यवन्ते च यद्भक्ता महत्यां प्रलयापदीति प्रसिद्धं काशीखण्ड-वचनम् ॥ ३६ ॥ ३७ ॥ ❀ ❀ उपासकस्य पुरुषस्य संस्थानं सम्यक्प्रकारेण कीदृशी स्थितिस्तत्त्वं वा तथा उपास्यस्य परस्य परमेश्वरस्य च स्वरूपम्। तथा उपासनायाश्च ज्ञानं नैगमं निगमोक्तं यद्गुरुशिष्ययोः प्रयोजनं मत्तः सकाशात् शिष्योऽयं जानातु गुरुतः सकाशादहं भक्तिं जानीयामित्येतल्लक्षणम्। तस्य निमित्तानि सत्सङ्गादीनि ॥ ३८ ॥ ❀ ❀ अनघसूरिभिर्निरपराध-विज्ञभक्तैः गुरुं विनैतन्न भवतीत्याह स्वत इति ॥ ३९ ॥ ❀ ❀ ननु तर्हि नानाविधाः प्रश्ना एतावन्तः कथं कृतास्तत्राह। हरेः कर्म्म परिचर्य्यादिकं तस्य विवित्सया प्राप्तीच्छया एव एतान्मम प्रश्नान् ब्रूहि सर्व्वजिज्ञासितसिद्धौ सत्यामेव भगवत्परिचर्य्यायां मनोऽन्यनिरपेक्षमेकाग्रं भवति मनस ऐकाग्र्ये सत्येव तत्प्राप्तिरिति भावः। मे मह्यं मामुद्धर्त्तुमिति मे पदस्य पौनरुक्त्यं न शङ्क्यम्। मित्रत्वादिति। मित्रायाः पुत्रस्त्वमपि मित्रमेव ;सर्व्वजगतामिति भावः ॥ ४० ॥ ❀ ❀ न केवलमिदं मदुद्धारार्थमेव अपितु भवतोऽपि पुण्ययशोलाभार्थमित्याह सर्व्वे इति ॥ ४१ ॥ ❀ ❀ पुराणेषु पुराणतात्पर्य्येषु कल्पते व्याख्यानसमर्थो भवतीति पुराणकल्पः। आपृष्टश्चासौ पुराणकल्पश्चेति सः। प्रहसन्निवेति वस्तुतस्तु हर्षोत्थस्मितविशिष्ट इत्यर्थः ॥ ४२ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्। तृतीये सप्तमोऽध्यायः संगतः संगतः सताम् ॥७॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

शिष्याणां शिष्येभ्यः पुत्राणां पुत्रेभ्यः अनापृष्टमपि ब्रूयुः यतो दीनवत्सलाः अनेन यत्प्रष्टुं मम शक्तिर्न तदपि हितं चेन्मह्यं ब्रूहीति सूचितम् ॥ ३६ ॥ ❀ ❀ तत्त्वानां प्राकृतानां प्रतिसंक्रमः कतिधा कतिप्रकारः तत्र प्रलये सति एवं भगवन्तं क उपासीरन् मुक्ता संतः सेवंते के स्वित् के वा अनुशेरते उपसंह्रियंते इत्यर्थः ॥ ३७ ॥ ❀ ❀ पुरुषस्य जीवस्य परस्य

परमेश्वरस्य च संस्थानं परिमाणं स्वरूपं च गुरुशिष्ययोः प्रयोजनभूतं नैगममौपनिषदमात्मपरमात्मविषयकं ज्ञानं तस्य ज्ञानस्य निमित्तानि साधनानि च ब्रूहि ॥ ३८ ॥ ❀ ❀ ज्ञानं ततो भक्तिः ततो वैराग्यं स्वतः कुतः स्यात् किं तु गुरूपदेशत एव स्यादतः हरेः कर्मविवित्सया पृच्छतः मे प्रश्नान् प्रष्टव्यान् अर्थान् मे मित्रत्वात् हितकारित्वात् ब्रूहि ॥ ३९ ॥ ४० ॥ ४१ ॥ ❀ ❀ पुराणे कल्पते प्रकाशते इति पुराणकल्पो बुभुत्सितोर्थः आपृष्टः पुराणकल्पोऽयं स तथा मुनिषु प्रधानः ॥ ४२ ॥

इति श्रीमद्भागवतमहापुराणे सिद्धान्तप्रदीपे तृतीयस्कंधे सप्तमाध्यायार्थप्रकाशः ॥ १ ॥

## श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

प्रलयं भिन्नतया पृच्छति तत्त्वानामेषां कतिधा प्रतिसंक्रमः प्रलयः ? चतुर्विधादिभेदाः शास्त्रेषु बहुधा सिद्धा इति। किञ्च, तत्र प्रलये भगवन्तं के उपासीरन् ? के वा अनुशेरते लीना भवन्ति ? ॥ ३६ ॥ ❀ ❀ जीवदेहतत्त्वानां मध्ये पुरुषस्य विराजः। चकारादन्येषाम्। संस्थानम्, नाशः स्वरूपं च वक्तव्यम्। चकारात् संस्थानविशेषोऽपि। एते त्रयोऽपि भेदाः—अपरस्य च, व्यष्टीनां च; ज्ञानं च वक्तव्यम्। चकाराद्वैराग्यं च। नैगमं वेदोक्तम्। गुरुशिष्याणां च आवश्यकत्वे प्रयोजनं वक्तव्यम् ॥ ३७ ॥ ❀ ❀ निमित्तानि[1] च वक्तव्यानि। तस्य वक्तव्यानि। इह अस्मिन् देहे, एवंप्रकारे वा। चकाराद्बाधकानि च। सूरिभिः प्रोक्तानीति परम्परया सिद्धानि। अन्येषां तु पाक्षिकत्वम्। गुर्वाद्यभावे स्वतो वा ज्ञानं कथं भवति ? स उपायो वक्तव्यः। तथा स्वतो भक्तिर्वैराग्यं च ॥ ३८ ॥ ❀ ❀ नन्वेते पदार्था अनुपयुक्ताः किमिति पृच्छ्यन्त इत्याशङ्क्याऽऽह—एतान्म इति। एतान् प्रश्नान् मे मह्यं ब्रूहि। वचने हेतुः—हरेः कर्मविधित्सया पृच्छतः। भगवतः कर्माणि मनसा विधातव्यानि चिन्तनीयानि; विशेषेण धातव्यानि वा—हृदये स्थापनीयानि। मेऽज्ञस्य मित्रत्वादिति भिन्नं वाक्यम्। त्वं यद्यपि सर्वेषां मित्रम्, तथापि त्वन्मैत्री तेषां नोपयुज्यत इति मे मदर्थमेव मित्रं भवेत्याह। अजया नष्टचक्षुषो मेऽज्ञस्य मित्रत्वात् ब्रूहीति संबन्धः। मोहिन्या मायया मम ज्ञानं नष्टमिति दैन्यम् ॥ ३९ ॥ ❀ ❀ सर्वदानापेक्षया ज्ञानदानमुत्तममिति वक्तुम्, ज्ञानेन जीवस्य भयं गच्छतीति फलतो ज्ञानं स्तौति—सर्वे वेदा इति। सर्वे वेदा अधीता अध्यापिताश्च, यज्ञाः कृताः कारिताश्च। तपोदानानि। चकारात् यमनियमादीनि। अनघेति संबोधनं वाच्यार्थसंमत्यर्थम्। जीवाभयदानस्य ज्ञानस्य कलयाऽपि यत्फलं भवति, तत्सर्वेऽपि मिलित्वा कर्तुं न शक्नुवन्तीत्यर्थः ॥ ४० ॥ ❀ ❀ एवमनेकविधप्रश्ने मैत्रेयस्योत्तरदानार्थं सम्मतिरस्ति नवेति सन्देहे, सर्वेषां प्रश्नानां भगवच्चरित्रपरत्वं वर्तत इति महानेव हर्षस्तस्य जात इत्याह—स इत्थमिति। आ समन्तात् पृष्टः पुराणकल्पो येन। पुराणं कल्पयतीत्येतेषामुत्तरार्थे एकं पुराणं वक्तव्यम्, न तु कथामात्रेण प्रकरणमात्रेण वैतेषामुत्तराणि निरूपितानि भवन्तीत्यर्थः। वक्तृश्रोत्रोरुत्कर्षमाह—कुरुप्रधानेन मुनिप्रधानः संचोदित इति। प्रवृद्धहर्षो भगवत्कथाया वक्तव्यत्वात्। तदेवाऽऽह—भगवत्कथायामिति। सम्यक्प्रेरणं सपरिकरप्रश्नात्। प्रहसन्निवेति मुखप्रसादः। पुराणकथनप्रसङ्गप्राप्त्या वा अभिनन्दनपूर्वकमाहेत्यर्थः। एवं भगवतः सङ्कल्पविकल्पात्मकं मनो निरूपितम् ॥ ४१-४२ ॥

इति श्रीभागवतसुबोधिन्यां श्रीलक्ष्मणभट्टात्मजश्रीवल्लभदीक्षितविरचितायां तृतीयस्कन्धे सप्तमाध्यायविवरणम्।

## श्रीगिरिधरकृता बालप्रबोधिनी

अनापृष्टमपि मद्योग्यं वक्तव्यमित्याशयेन तत्र सदाचारमाह—अनुव्रतानामिति। द्विजोत्तमेति सम्बोधनेन लौकिकालौकिकः सर्वोऽपि व्यवहारस्तत्र विदित एव अतस्तवाग्रे किं बहु वक्तव्यमिति सूचयति। गुरुपदं पित्रुपलक्षणम्। शिष्याणां पुत्राणां चानापृष्टमपि गुरवः पितरश्च ब्रूयुरित्यन्वयः। तत्र हेतुमाह—दीनवत्सला इति, दीनेषु कृपावन्त इत्यर्थः। ननु शिष्यादीनां कथं दीनत्वं ज्ञायते इत्याशङ्क्याज्ञानुवर्तित्वेनेत्याशयेन शिष्यान् पुत्रांश्च विशिनष्टि—अनुव्रतानामिति ॥ ३६ ॥ ❀ ❀ भगवन् हे सर्वज्ञ तेषां तत्त्वानां पृथिव्यादीनां प्रतिसङ्क्रमः कतिधा कतिप्रकारकः ? तत्र प्रलये एनं भगवन्तं क उपासीरन्, अनुपसंहृताः सन्तश्चामरव्यजनादिना प्रसुप्तं राजानमिव सेवन्ते ? के उस्वित् के वापि अनुशेरते शयानं भगवन्तं अनुस्वपन्ति ? इत्यर्थः ॥ ३७ ॥ ❀ ❀ पुरुषस्य जीवस्य संस्थानं तत्त्वम्। परस्य परमेश्वरस्य। यत्प्रसिद्धं गुरुशिष्ययोः प्रयोजनं नैगमं निगमजन्यं ज्ञानं तच्च ॥ ३८ ॥ ❀ ❀ हे अनघेति सम्बोधनेन विप्रलिप्सादिदोषरहितत्वात् भवानेव मय्यनुग्रहं कर्त्तुमर्हतीति सूचयति। तस्य ज्ञानस्य च यानि निमित्तानि साधनानि सूरिभिर्विद्वद्भिः प्रोक्तानि तानि च। स्वत एव ज्ञानादिकं भविष्यति किं तत्प्रश्नेनेत्याशङ्क्याह—स्वत इति। स्वतो गुरूपदेशमन्तरेण पुंसां ज्ञानं वैदिकं भगवद्भक्तिर्विषयवैराग्यं च कुतः स्यादित्यन्वयः ॥ ३९ ॥ ❀ ❀ हरेः कर्मणां विवित्सया वेत्तुमिच्छया एतान् प्रश्नान् प्रश्नविषयान् पृच्छतो मे उत्तरं ब्रूहीत्यन्वयः। तत्र हेतुमाह—अज्ञस्य मे मित्रत्वादिति। अज्ञत्वमेव स्पष्टयति—अजया अविद्यया नष्टचक्षुषः नष्टविज्ञानस्येत्यर्थः। एवमन्वयभेदान्न मे इत्य-

---

१. 'निमित्तानीति' इति क्वचित्।

स्य पौनरुक्त्यम् ॥ ४० ॥ ❀ ❀ एवं बुभुत्सितानर्थान् पृष्ट्वाऽवश्यमुत्तरं वक्तव्यमिति यतो न केवलं ममैवोपकारः किन्तु भवतोऽपीति सूचयन् भवभयभीतस्य तत्त्वोपदेशेन अभयप्रदानान्नोत्तमोऽन्यो धर्मोऽस्तीत्याह—सर्वे इति। तवाप्येतत्सम्मतमिति सूचयन् सम्बोधयति—अनघेति। सर्वे वेदाः अधीताः अध्यापिताश्च तथा सर्वे यज्ञाः कृताः कारिताश्च तपोऽनशनादिरूपं दानानि च एतानि सर्वाण्यपि तत्त्वोपदेशेन जीवाभयप्रदानस्य कलां लेशमपि न कुर्वीरन्, तल्लेशेनापि यत्फलं भवति तत्कर्तुं न शक्नुवन्तीत्यर्थः ॥ ४१ ॥ ❀ ❀ एवमनेकविधप्रश्ने मैत्रेयस्योत्तरदानार्थं सम्मतिरस्ति न वेत्यपेक्षायां सर्वेषां प्रश्नानां भगवच्चरित्रपरत्वाच्छ्रोतृवक्त्रोरुत्तमत्वाच्च महता हर्षेणोत्तरं दत्तवानित्याह—स इति। पुराणे कल्पते प्रकाशते इति पुराणकल्पो बुभुत्सितोऽर्थः आपृष्टः पुराणकल्पोयं स मुनिप्रधानो मुनिश्रेष्ठो मैत्रेय इत्थं पूर्वोक्तप्रकारेण कुरुप्रधानेन विदुरेण भगवत्कथायां सञ्चोदितः सम्यक् प्रार्थनया प्रवर्त्तितः अतएव प्रवृद्धो हर्षो यस्य सः, अतएव प्रहसन्नेव तं विदुरं प्रत्याह उत्तरं दत्तवानित्यन्वयः। इवशब्द एवकारार्थः ॥ ४२ ॥

**इति श्रीवल्लभाचार्यवंश्यगोपालसूनुना ॥ श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा ॥ १॥**
**श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये ॥ श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी ॥ २ ॥**
**रचिता च तृतीयेऽत्र बन्धसर्गनिरूपणे ॥ सप्तमो विवृतः क्षत्तुर्नानाप्रश्ननिरूपकः ॥ ३ ॥**

## हिन्दी अनुवाद

द्विजवर! दीनवत्सल गुरुजन अपने अनुगत शिष्यों और पुत्रोंको विना पूछे भी उनके हितकी बात बतला दिया करते हैं ॥ ३६ ॥ ❀ ❀ भगवन्! उन महदादि तत्त्वोंका प्रलय कितने प्रकारका है? तथा जब भगवान् योगनिद्रामें शयन करते हैं तब उनमेंसे कौन-कौन तत्त्व उनकी सेवा करते हैं और कौन उनमें लीन हो जाते हैं? ॥ ३७ ॥ ❀ ❀ जीवका तत्त्व परमेश्वरका स्वरूप, उपनिषत्-प्रतिपादित ज्ञान तथा गुरु और शिष्यका पारस्परिक प्रयोजन क्या है? ॥ ३८ ॥ ❀ ❀ पवित्रात्मन्! विद्वानोंने उस ज्ञानकी प्राप्तिके क्या-क्या उपाय बतलाये हैं? क्योंकि मनुष्योंको ज्ञान, भक्ति अथवा वैराग्यकी प्राप्ति अपने आप तो हो नहीं सकती ॥ ३९ ॥ ❀ ❀ ब्रह्मन्! माया-मोहके कारण मेरी विचार-दृष्टि नष्ट हो गयी है। मैं अज्ञ हूँ, आप मेरे परम सुहृद् हैं; अतः श्रीहरिलीलाका ज्ञान प्राप्त करनेकी इच्छासे मैंने जो प्रश्न किये हैं, उनका उत्तर मुझे दीजिये ॥ ४० ॥ ❀ ❀ पुण्यमय मैत्रेयजी! भगवत्तत्त्वके उपदेशद्वारा जीवको जन्म-मृत्युसे छुड़ाकर उसे अभय कर देनेमें जो पुण्य होता है, समस्त वेदोंके अध्ययन, यज्ञ, तपस्या और दानादिसे होनेवाला पुण्य उस पुण्यके सोलहवें अंशके बराबर भी नहीं हो सकता ॥ ४१ ॥ ❀ ❀ श्रीशुकदेवजी कहते हैं—राजन्! जब कुरुश्रेष्ठ विदुरजीने मुनिवर मैत्रेयजीसे इस प्रकार पुराणविषयक प्रश्न किये, तब भगवच्चर्चाके लिये प्रेरित किये जानेके कारण वे बड़े प्रसन्न हुए और मुसकराकर उनसे कहने लगे ॥ ४२ ॥

**सातवाँ अध्याय समाप्त**

# अथाष्टमोऽध्यायः

### मैत्रेय उवाच

सत्सेवनीयो बत पूरुवंशो यल्लोकपालो भगवत्प्रधानः ।
बभूविथेहाजितकीर्तिमालां पदे पदे नूतनयस्यभीक्ष्णम् ॥ १ ॥
सोऽहं नृणां क्षुल्लसुखाय दुःखं महद्गतानां विरमाय तस्य ।
प्रवर्तये भागवतं पुराणं यदाह साक्षाद्भगवानृषिभ्यः ॥ २ ॥
आसीनमुर्व्यां भगवन्तमाद्यं सङ्कर्षणं देवमकुण्ठसत्त्वम् ।
विवित्सवस्तत्त्वमतः परस्य कुमारमुख्या मुनयोऽन्वपृच्छन् ॥ ३ ॥
स्वमेव धिष्ण्यं बहु मानयन्तं यं वासुदेवाभिधमामनन्ति ।
प्रत्यग्धृताक्षाम्बुजकोशमीषदुन्मीलयन्तं विबुधोदयाय ॥ ४ ॥
स्वर्धुन्युदार्द्रैः स्वजटाकलापैरुपस्पृशन्तश्चरणोपधानम् ।
पद्मं यदर्चन्त्यहिराजकन्याः सप्रेमनानाबलिभिर्वरार्थाः ॥ ५ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

अष्टमे समभूद्ब्रह्मा नाभेस्तु जलशायिनः । तमजानन् जले विभ्यत्तपसाऽतोषयद्विभुम् ॥ १ ॥

श्रोतारमभिनंदति । सतां सेवितुं योग्यः । बत अहो यद्यस्मादिहास्मिन्वंशे लोकपालो धर्मराजस्त्वं बभूविथ जातोऽसि । कथंभूतः । भगवानेव प्रधानभूतो यस्य सः । अत्र हेतुः अजितेति । प्रतिक्षणं नूतनयसि नवीनां करोषि ॥ १ ॥ ❀ ❀ अल्पसुखाय महद्दुःखं प्राप्तानां तस्य दुःखस्य विरमाय प्रवर्तये प्रारभे ॥ २ ॥ ❀ ❀ कोऽसौ भगवान् केभ्यश्च ऋषिभ्य आह कथं च त्वया प्राप्तमित्यपेक्षायामाह । आसीनमिति सप्तभिः । उर्व्यां पातालतले अकुंठसत्त्वमप्रतिहतज्ञानम् । अतः संकर्पणात्परस्य श्रीवासुदेवस्य ॥ ३ ॥ ❀ ❀ तमेव विशिनष्टि । स्वमेव धिष्ण्यं स्वीयमाश्रयं वासुदेवसंज्ञं परमानंदरूपं ध्यानपथेऽनुभूय बहु मानयंतं सर्वोत्कर्षेण पूजयंतम् । प्रत्यग्धृतमंतर्मुखीकृतं नेत्रांबुजमुकुलं किंचिदुन्मीलयंतं कृपावलोकनेन सनत्कुमारादीनामभ्युदयार्थम् ॥ ४ ॥ ❀ ❀ मुनीनां विशेषणं सार्धेन स्वर्धुन्युदकेनार्द्रैरिति श्रीभागवतश्रवणार्थं सत्यलोकात्पातालं प्रत्यवतरंतो निरंतरं गंगामध्यत एवावतीर्णा इति भावः । चरणावुपधीयेते यस्मिन्पद्मे तदुपस्पृशंतो नमंतः । कथंभूतं तदाह । यत्पद्मं प्रेमसहितं यथा भवत्येवं नानोपहारैः पूजयंति वरार्थाः पतिकामाः ॥ ५ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

तं जलशायिनम् ॥ १ ॥ अत्र भगवत्प्रधानत्वे ॥ १ ॥ २ ॥ ❀ ❀ त्रिलोकीविवक्षयोर्वीशब्देन कथंचित्पातालस्यापि ग्रहणं भवत्येव, पातालसप्तकसहितभूमेर्भूर्लोकवाच्यत्वात् तच्च 'भूर्लोकः कल्पितः पद्भ्याम्' इत्यत्र स्वामिचरणैर्व्याख्यातम् । पातालस्य तलेऽधस्तात् तथैव पञ्चमस्कंधे व्याख्यातत्वात् । उर्वीपदेन पातालार्थग्रहेऽपि तलबोधस्तु सामीपिकाधारसप्तम्यैवेति । मुनयः सनत्कुमारादयः ॥ ३ ॥ ❀ ❀ तमेव संकर्षणमेव । "आधार आश्रयो धिष्ण्यं निधानं चापि कथ्यते" इति तीर्थः ॥ ४ ॥ ❀ ❀ इति भाव इति । मार्गांतरेण गमने कस्यचित्संगाद्विलंबो भवेदतः प्रवाहमार्गेणागता इत्याशयः ॥ ५ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या ।

प्रधानभूतो मुख्यसेव्यरूप; अत्र भगवत्प्रधानत्वे ॥ १ ॥ ❀ ❀ य इत्थं त्वया पृष्टः सोऽहमित्यन्वयः यत्पुराणं ऋषिभ्यस्सनकादिभ्यः ॥ २ ॥ ❀ ❀ आसीनमिति चतुष्कम् । संकर्षणात्परस्येत्युक्त्या मूल एवांशांशिभावो विवक्षित इति

---

१, प्रा० पा०—तुभ्यम् ।

सर्वावताराऽवतारिसाम्यं व्याचक्षाणा भ्रान्ता ज्ञेयाः ॥ ३ ॥ ❀ ❀ तमेव संकर्षणमेव आश्रयमंशिनं पूजयन्तमिति तत्रापि सेव्यसेवकभावो विवक्षितः अभ्युदयार्थं ब्रह्मानन्दतोऽपि परमानन्दप्रेमोत्कर्षार्थम् ॥ ४ ॥ ❀ ❀ स्वर्धुनीति सार्द्धकम् । अस्य संकर्षणस्य कृतानि चरितानि ॥ ५ ॥

### श्रीमद्वीरराघवव्याख्या

एवं भगवत्कथायां क्षत्त्रा प्रवर्त्तितो मैत्रेयः तत्कृतप्रश्नानां उत्तराण्यभिधास्यमानः प्रथमं भगवन्नाभेः ब्रह्मण उत्पत्तिं भगवन्तमजानतस्तस्यैव जले विभ्यतस्तपसा भगवत्तोषणं चाष्टमेनाध्यायेनाह । तत्र भगवत्कथायां प्रवर्त्तयितारं श्रोतारं क्षत्तारमभिनन्दति सत्सेवनीय इति । बताहो पूरुषवंशः सत्सेवनीयः सद्भिः सम्माननीयः यद्यस्माद्भगवत्प्रधानः भगवानेव प्राप्यतयोपायतया च प्रधानो यस्य सः लोकपालः धर्म्मराजांशभूतत्वाद्विदुरो लोकपाल इत्युच्यते एवम्भूतस्त्वम् इह पूरुवंशे बभूविथ उत्पन्नोऽभूः अतः सत्सेवनीय इत्यर्थः । भगवत्प्राधान्यमेव विशदयति अजितः परमपुरुषः तस्य कीर्त्तीनां यशसां या माला पंक्तिस्तां पदे पुनः पुनरभीक्ष्णं भृशं नूतनयसि नवां करोषि ॥ १ ॥ ❀ ❀ एवमभिनंद्य त्वत्कृतप्रश्नान्न केवलमस्मद्बुद्धिगोचरैरेवोत्तरयाम्यपितु सत्संप्रदायादागतश्रीभागवताख्यानेनैवेत्याह साऽहमिति । स भवता पृष्टः अहं सदाचार्यश्रीपाराशरकृपया परावरतत्त्वदर्शी भगवत्कृतप्रश्नोत्तरविवक्षया भागवताख्यं पुराणं प्रवर्त्तये प्रवर्तनाफलमाह । क्षुल्लसुखायाल्पसुखायाल्पसुखसंपादनार्थं महदधिकं दुःखं गतानां प्राप्तानां लोकानां तस्य महतो दुःखस्य विरमाय नाशाय अनेन लोकोज्जिजीविषयैवायं सम्वादः प्रवृत्त इत्युपगम्यते उभयोरपि बहुज्ञत्वेन प्रष्टव्यवक्तव्यांतराभावात् कथंभूतं पुराणं यद्भागवतं पुराणं भगवान्संकर्षणः ऋषिभ्यः सनकादिभ्यः साक्षादाह तथाभूतमित्यर्थः । द्वेधा हि भागवतसम्प्रदायः एकं हि भागवतं भगवंतमारभ्य चतुर्म्मुखनारदकृष्णद्वैपायनपर्यंतं चतुःश्लोकीरूपेण प्रवृत्तं तदेव व्यासेन विवृतं दशलक्षणं श्रीशुकेनाधीतं राज्ञे उपदिष्टमष्टादशसहस्रात्मकम् । अपरंतु भागवतं संकर्षणमारभ्य सनत्कुमारसांख्यायनपराशरमैत्रेयपर्यंतपरंपरया चतुःश्लोकीरूपेणैव प्रवृत्तं मैत्रेयेण विवृतं विदुरायोपदिष्टं च तदेव द्वैपायनः स्कन्धद्वयात्मना विस्तरिष्यमाणेऽतर्भाव्य द्वादशस्कंधात्मकं पुराणं चक्र इति बोध्यम् ॥ २ ॥ ❀ ❀ अस्य सांकर्षणभागवतस्य संकर्षणप्रभृतिस्वपर्यंतसत्संप्रदायप्रवृत्तिमभिधास्यमानः सनकादीनां विधिवत्संकर्षणोपसत्तिमाह चतुर्भिः । आसीनमिति । उर्व्यां पातालतले आसीनं उपविष्टं भगवंतमाद्यमकुण्ठसत्त्वं रजस्तमोभ्यामप्रतिहतं सत्त्वं यस्य तं शुद्धसत्त्वमयं दिव्यमङ्गलविग्रहविशिष्टमित्यर्थः । एवम्भूतं संकर्षणं देवं कुमारमुख्याः सनत्कुमारप्रभृतयः चत्वारो मुनयः अन्वपृच्छन्विधिवदुपसंगम्यानुपृष्टवंतः कथंभूता मुनयः अतः चेतनाचेतनात्मकजगतः परस्य विलक्षणस्य परमात्मनस्तत्त्वं याथात्म्यं विवित्सवः वेत्तुमिच्छवः ॥ ३ ॥ ❀ ❀ तमेव संकर्षणं विशिनष्टि स्वमिति । यं वासुदेवाभिधं वासुदेवशब्दवाच्यमामनंति तं स्वधिष्ण्यं स्वावासभूतं स्वकारणं भगवंतं इत्यर्थः । बहुमानयंतं सर्वोत्कर्षेण पूजयंतं प्रत्यग्धृताक्षांबुजकोशं प्रत्यगात्मन्यभिमुखेन निमित्तेन धृतं मुकुलितं यन्नेत्राम्बुजकोशं तद्विबुधोदयाय विदुषामभ्युदयायेषदल्पं उन्मीलयंतमन्वपृच्छन्निति पूर्वेणान्वयः ॥ ४ ॥ ❀ ❀ मुनीन् विशिनष्टि सार्द्धेन स्वर्धुनीति । स्वर्धुन्या गंगाया उदकेनार्द्रैः स्वजटाकलापैः श्रीभागवतश्रवणार्थं सत्यलोकात्पातालमवतरन्तो निरंतरं गंगामध्यत एवावतीर्णा इति तत्स्नानेनार्द्रा जटाकलापा इति भावः, एवंम्भूतैर्जटाकलापैश्चरणोपधानं चरणावुपधीयेतेऽस्मिन्पद्म इति तच्चरणोपधानं पादपीठमुपस्पृशन्तः नमस्कुर्वंतः सन्तः कथंभूतं चरणोपधानं यत्पद्ममहिराजकन्या अहिराजस्य संकर्षणस्य कन्याः वरार्थाः पतिकामाः सप्रेम प्रेमसहितं यथा भवति तथा नानाबलिभिर्नानोपहारैरर्चंति तथाभूतमित्यर्थः ॥ ५ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

अस्मिन्नध्याये सर्वजीवोत्तमहिरण्यगर्भसृष्ट्यभिधानेन हरेः सर्वोत्तमोत्तमत्वमाहात्म्यमवधृतमतस्तज्ज्ञानमवश्यमापाद्यं मुमुक्षुभिरिति निरूप्यते । तत्रादौ प्रश्नान् परिहरिष्यन् तं विदुरं मानयन् स्वस्य पुराणावगतिप्रकारं कथयति सत्सेवनीय इति । बतानुकम्पायां यद्यस्मिन्पूरोर्वंशे भगवानेव प्रधानः सर्वोत्तमो यस्य स तथा लोकपालस्त्वं लिटा लोकविडम्बनार्थं गर्भवासानुभवं परोक्षयति । भगवत्प्रधानत्वं प्रकाशयति इहेति । इह लोकेऽजितस्य हरेः कीर्त्तिं पुष्पमालां नूतनयसि नवां करोषि यस्मात्तस्मादित्यध्याहार्यौ ॥ १ ॥ ❀ ❀ अधुना प्रश्नप्रतिवचनं प्रतिजानीते सोऽहमिति । योऽहं कृष्णेन तव ज्ञानोपदेशायादिष्टो यश्च मम ज्ञानमुपादिशेति त्वया प्रार्थितः सोऽहं क्षुल्लसुखायाल्पसुखाय । महद्दुःखं गतानां नृणां दुःखस्य विरामाय निर्मूलनाय । साक्षात्संकर्षणो भगवान्सनत्कुमारादिभ्यः ऋषिभ्यो यदाह तद्भागवतं पुराणं त्वत्प्रश्नपरिहारत्वेन प्रवर्तय इत्यन्वयः ॥ २ ॥ ❀ ❀ सूचितमाप्तिमूलत्वं प्रपञ्चयति आसीनमुर्व्यामिति । उर्व्यां पाताले त्रिलोकीविवक्षया भूमिपदेन पातालाभिधेयत्वं युक्तमतः संकर्षणात्परस्य हरेस्तत्त्वं विवित्सवो ज्ञातुकामाः कुमारमुख्या मुनयः । उर्व्या पाताले विस्तृतायां भूम्यामासीनमाद्यं सनकादिभ्यः पूर्वजातं देवं श्रीहरिस्तुत्यामेव प्रकाशमानं अकुण्ठसत्त्वमप्रतिबद्धज्ञानशक्तिं न कुण्ठो यस्य तदकुण्ठं अकुण्ठसत्त्वं वैष्णवस्वभावो यस्य सोऽकुण्ठसत्त्वस्तमिति वा संकर्षणं भगवन्तमन्वपृच्छन्नित्यन्वयः ॥ ३ ॥ ❀ ❀ भगवदुपास्तिमन्तरेणान्यो व्यापारोऽस्य नास्तीति तादृशैर्विशेषणैस्तं विशिनष्टि स्वमेवेति । प्रेक्षावन्तो यं वासुदेवाभिधमामनन्ति तं स्वं सदानन्तरूपं

स्वतन्त्रं वा धिष्ण्यं स्थानमाधारं भगवन्तमेव बहु मानयन् भक्त्योपासमानं पुनरपि कीदृशं प्रत्यगात्मनि स्वान्तर्यामिणि धृतमाहितमक्षाख्यमम्बुजकोशं विबुधानामुदयाय ईषन्दुमीलयन्तं विकसितं कुर्वाणं अनेन "संप्रेक्ष्य नासिकाग्रं स्वं दिशश्चानवलोकय"न्निति वचनादवनतजनानुग्रहायोन्मीलनमन्यदा न युक्तमित्युपास्तावित्थम्भावो दर्शितः। "आधारः आश्रयो धिष्ण्यं निधानं चाभिधीयत" इति वचनात्। "धिष्ण्यौ शुक्रानिलौ धिष्ण्यमृक्षे स्थाने बले गृह" इत्युक्तं शुक्रादिकं न ग्राह्यमनुपयोगात्। वासुदेवाभिधमित्युक्तत्वाच्च ॥ ४ ॥ ❀ ❀ पथिकस्यार्थप्रश्नवन्नायं प्रश्नोऽवश्यं ज्ञातव्यत्वेनेति बहुमानं वक्ति स्वर्धुन्युदार्द्रैरिति। सप्रेमेति क्रियाविशेषणम्। अहिराजकन्याः नानावलिभिर्बहुविधपूजासाधनैर्यत्पद्ममर्चयन्ति। वरार्हा वरप्राप्तियोग्याः इत्यनेनोत्तमभर्त्तृप्राप्तये पूजेति सूच्यते। स्वर्धुन्या भागीरथ्या उदस्य उदकस्यारा स्नानलक्षणा प्राप्तिर्येषां ते स्वर्धुन्युदारास्तैः ऋगताविति धातोर्घञ्प्रत्ययेनार इति रूपं। यद्वा स्वर्धुन्या अवगाहेन उदारैर्महद्भिः। उदारो दातृमहतोरित्यभिधानम्। एवंविधैः स्वजटाकलापैस्तस्य संकर्षणस्य चरणयोरुपधानं पीठायमानं तत्पद्ममुपस्पृशन्तः यावत्प्रसादं स्पृष्ट्वा नमन्त इत्यर्थः ॥ ५ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

एवं द्वितीयस्कन्धान्ते पाद्मं कल्पमथो शृण्विति यदुक्तं तदवतारणार्थं चतुःश्लोकीमहिमगर्भितमेतावन्तं ग्रन्थमुक्त्वा तमेवाह सोऽहमित्यादिना। भागवतं सङ्कर्षणादिवर्त्तितं तद्भागवतविशेषमित्यर्थः ॥ १ ॥ २ ॥ ❀ ❀ आसीनमिति चतुष्कम्। किरीटेति सङ्कर्षणमित्यस्य विशेषणम् ॥ ३—१० ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

अष्टमे श्रीहरेर्नाभिपद्मोद्भूतश्चतुर्मुखः। अन्वेषणाद्विरम्याप्तसमाधिस्तमवैक्षत ॥ ० ॥

भो विदुर! तां चापि युष्मच्चरणसेवयाहं पराणुद इत्यादिना स्वतो ज्ञानं कुतः पुंसामित्यादिना च त्वं मत्सङ्गं प्रार्थयसे। मन्मते तु साक्षात्तव सङ्गः परमदुर्लभः केन महासुकृतिचूडामणिनालभ्यताम्। त्वत्प्रसङ्गानुप्रसङ्गवत्यपि जने सेव्यमाने हरौ भक्तिः स्यादिति विदुरं स्तुवन्नभिनन्दति। बत अहो तयास्सज्जन्मार्थमङ्गीकृतः। पुरुवंशोऽपि सतां सेवितुं योग्यः कृतः। यद्यत्र त्वं बभूविथ जातोऽसि कथम्भूतः ब्रह्मपरमात्मभगवत्सु मतभेदेनोपास्यस्वरूपेषु त्रिषु मध्ये भगवानेव प्रधानभूतो यस्य सः। इह भगवदुपासकेष्वपि मध्ये अजितकीर्त्तिमालामभीक्ष्णं प्रतिक्षणमेव पदे पदे प्रति सुप्तिङन्तमेव प्रतिवाक्यमेव प्रतिश्लोकमेव प्रतिप्रकरणमेव नूतनयसि कीर्त्तिमालामिमां स्वरसनासूच्या केवलं ग्रथ्नास्येव। त्वं पुनरेनामिति स्निग्धानुरागिस्वकर्णमनःसम्पुटान्तर्निधाय नित्यं नवीनीकरोषीति त्वन्माहात्म्यमनिर्वाच्यमेवेति भावः ॥ १ ॥ ❀ ❀ त्वत्सर्वप्रश्नोत्तराणि श्रीभागवते पुराण एवोपलभ्यन्त इति तद्भागवतविशेषमेव त्वां श्रावयामीत्याह। सः प्रसिद्धः पराशर-शिष्योऽहं क्षुल्लसुखाय तुच्छविषयसुखार्थं दुःखं नरकादि। तस्य दुःखस्य। "एतेन सुखाय कर्म्माणि करोति लोक" इत्यत्र "यदत्र युक्तं भगवान् वदेन्न" इति त्वदादिमे प्रश्नेऽप्येतदेव युक्तमुत्तरं भवतीत्युक्तम् ॥ २ ॥ ❀ ❀ कोऽसौ भगवान् केभ्य ऋषिभ्य आह कथं त्वया प्राप्तमित्यपेक्षायामाह आसीनमिति सप्तभिः। अकुण्ठसत्त्वं शुद्धसत्त्वस्वरूपम् अप्रतिहतज्ञानं वा। अतः सङ्कर्षणात् परस्य श्रीवासुदेवस्य ॥ ३ ॥ ❀ ❀ तमेव विशिनष्टि। स्वयमेव धिष्ण्यं श्रीयमाश्रयतत्त्वं बहुमानयन्तं सर्व्वोत्कर्षेण पूजयन्तं तदेव किं तत्राह यदिति। प्रत्यग्धृतमन्तर्म्मुखीकृतमिति तद्वासुदेवस्वरूपानन्दानुभवार्थमित्यर्थः। तदपि ईषदिति विबुधानां सनत्कुमारादीनामभ्युदयार्थम् ॥ ४ ॥ ❀ ❀ मुनीन् विशिनष्टि सार्द्धेन स्वर्धुन्युदार्द्रैरिति। श्रीभागवतश्रवणार्थं सत्यलोकात् पातालं प्रत्यवतरन्तो निरन्तरं गङ्गामध्यत एवावतीर्णा इति भावः। उपधानं उपबर्हम्। वरार्थाः पतिकामाः ॥ ५ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

इत्थं स्वबुभुत्सितार्थप्रवचने विदुरेण प्रवर्त्तितो मुनिस्तत्कृतप्रश्नोत्तराण्यभिधास्यमानस्तावद्भगवद्विभूतेर्ब्रह्मणः उत्पत्तिं ब्रह्मकृतं भगवत्स्तोत्रं चानुवदत्यष्टमाध्याये। तत्रादौ श्रोतारमभिनन्दति सत्सेवनीय इति। पुरुवंशः सतां सेवनीयः माननीयः बत अहो यत् सतः इह पूरुवंशः भगवान् प्रधान उपास्यो यस्य सः लोकपालः धर्मः त्वं बभूविथ जातोऽसि भगवत्प्रधानत्वे हेतुमाह। पदे पदे पुनः पुनः अभीक्ष्णं भृशम्। अजितस्य विष्णोः कीर्त्तिमालां नूतनयसि नवीनां करोषि ॥ १ ॥ ❀ ❀ विदुर! त्वं कृतार्थस्तथापि त्वद्द्वारा क्षुल्लसुखाय अल्पसुखाय महद्दुःखं गतानां नृणां तस्य दुःखस्य विरमाय निवृत्तये। यत्पुराणं भगवान् संकर्षणः ऋषिभ्यः कुमारमुख्येभ्य आह तत्पुराणं भागवताख्यमहं प्रवर्त्तये ॥ २ ॥ ❀ ❀ अतः संकर्षणात् जगतो वा परस्य वासुदेवस्य तत्त्वं स्वरूपं गुणादियाथात्म्यं विवित्सवः वेत्तुमिच्छवः कुमाराः सनकादयः मुख्या येषु ते। कुमाराणां नित्यतया आगतज्ञाना इति। वैष्णवे नित्यसिद्धज्ञानवत्त्वोक्तेर्विवित्सव इति छत्रिन्यायेनोक्तम्। कुमारमुख्याः सनकादयश्चत्वारः, इति व्याख्यातव्संगता, तेषु मुख्यामुख्यव्यवहाराभावात्। उर्व्यां पातालतले। आसीनमुपविष्टम्। अकुण्ठसत्त्वं निरावरणज्ञानम् ॥ ३ ॥ ❀ ❀ संकर्षणं विशिनष्टि। यं वासुदेवाभिधमामनन्ति तं स्वयमेव धिष्ण्यं स्वीयमेवाश्रयं ध्यानपथेनानुभूय बहुमान-

यन्तं सर्वोत्कृष्टत्वेन पूजयन्तं प्रत्यग्धृतमन्तर्मुखीकृतमक्षाम्बुजकोशं नयनाब्जमुकुलं येन तं विबुधानां विदुषामभ्युदयायेपदुन्मील-यन्तम्॥ ४॥ ❀ ❀ कुमारमुख्यान् विशिनष्टि सार्द्धेन। तज्ज्ञाः संकर्षणकृतज्ञाः अस्य संकर्षणस्य कृतानि प्रेम्णा स्खलन्ति पदानि यस्मिन् तेन वचसा मुहुर्गृणन्त्यः गायन्त्यः वरार्थाः पतिकामा विष्णुपदप्राप्तिकामाः वा अहिराजानां कन्याः यत्पद्मं सप्रेम प्रेमसहितं यथा भवति तथा बलिभिर्नानोपहारैः अर्चन्ति पूजयंति तच्चरणोपधानं चरणावुपधीयेते यस्मिन् एतादृशं पद्मं सत्य-लोकाद्गंगामध्यतः पातालावतरणवशात् स्वर्धुदन्युदार्द्रैर्जटाकलापैरुपस्पृशंतः नमंतः॥ ५॥

## श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

अष्टमे भगवद्बुद्धिर्यादृशी साऽत्र वर्ण्यते। आधाराधेयरूपाणां तदीयानां तथोद्गमः॥ १॥
षड्विधा भगवद्बुद्धिः, स्वरूपे रतिरूपिणी। जगद्विषयिणी चैव कृतियुक्तेति वै त्रिधा॥ २॥
हरेरेव, तथाऽन्यापि भगवद्विषया त्रिधा। लौकिकोपायजनिता प्रथमा सा द्विधा पुनः॥ ३॥
तर्कक्रियाविभेदेन द्वितीया वैदिकी स्मृता। साक्षात्कारस्तृतीयस्तु षट्सु सर्वं प्रतिष्ठितम्॥ ४॥
सामान्यतो ग्रन्थरूपा भगवद्बुद्धिरीर्यते। सर्गोपयोगिनी, यस्मात्तामसादुद्गता हि सा॥ ५॥

अनेकधा भागवतप्रवृत्तिरुपयुज्यते। दशलीलायुताः सर्वाः कल्पभेदैर्व्यवस्थिताः॥
भगवद्बुद्धिरेषेति सैव लीलाद्वये तता॥ ६॥

एवं पूर्वाध्याये भगवच्चरित्रज्ञानार्थं बहवः प्रश्नाः कृताः। तत्र भगवत्क्रियाज्ञानार्थं महानस्योद्यम इति तं प्रोत्साहयितुं स्तौति—सत्सेवनीय इति। बतेति हर्षे। सद्भिर्महद्भिरपि पूरुवंशः सेव्यः, उत्पत्त्यर्थं स्थानार्थं ज्ञानार्थं च। यद्यस्मादस्मिन् वंशे उत्पन्नो लोकपालो यमोऽपि भगवद्धर्मविरोधिधर्मयुक्तोऽपि भगवत्प्रधानो जातः। भगवानेव प्रधानं यस्य, तादृशस्त्वं बभूविथ। यतोऽ-जितकीर्तिमालां पदे-पदे क्षणे-क्षणे नूतनयसि। अभीक्ष्णं सर्वदा। सन्तो हि स्वभावजयार्थं महान्तं यत्नं कुर्वन्ति। तच्चेत् पूर्वं संब-न्धमात्रेण भवति, तदा प्रयत्नान्तरं परित्यज्य सद्भिः पूरुवंश एव सेव्यो भवति। बतेति अत्या[1]श्चर्यदर्शनात् प्रमेयबलाधिक्यख्याप-नार्थम्। अधिकारे हि सर्वथा भगवद्बुद्धिर्नश्यति, सुतरां लोकपालाधिकारे। यदप्युक्तं 'द्वादशैते विजानीमः' इति, तद्दण्डपरिवर्जना-र्थमधिकारिणा ज्ञातव्यमिति ज्ञायते, न तु भक्तिमार्गानुसारेण। तत्राऽपि प्रकृते विशेषं वक्तुं बभूविथेति मध्यमपुरुषः प्रयुक्तः, तेन यमोऽतिक्रूरः सर्वघातक इति सूचितम्। तादृशस्याऽपि यदि भगवत्परत्वम्, तद्वंशसंबन्धात्। सोऽपि संबन्ध आभिमानिक एव, अविवाहितायां व्यासादुत्पत्तेः। अजितेति न केनापि जित इति भगवदुत्कर्षस्तस्य हृदये रोचत इति ज्ञापितम्। तेन सर्वथा मात्सर्याभावः सूचितः। कीर्तिरिति। यमः कर्मप्रधानो न प्रसिद्धिमात्रं मन्यते। साऽप्यस्य हृदये समागतेति ज्ञापितम्। किञ्च, मालेति कण्ठभूषणम्। कीर्तिं कण्ठे स्थापितवानिति भक्तेभ्योऽप्याधिक्यम्। नूतनकरणेनाऽतिसामर्थ्यम्। पदे-पदे नूतनकरणं प्रेम्णा। एवं माहात्म्यज्ञानपूर्वकसुदृढस्नेहोऽस्य वर्तत इति सूचितम्। अभीक्ष्णमित्यनेन प्रेम्णोऽकुण्ठत्वं सर्वतोधिकत्वम्॥ १॥ ❀ ❀ एवं सर्वदोषनिवृत्तिपूर्वकभगवद्विषयकसर्वगुणा उत्पन्ना इति महानयं वंशः, पाण्डवादीनां भक्तानां स्वस्य च अवज्ञागर्वाभावार्थं तथा निरूपितः। इदानीं सर्वे प्रश्ना विशकलिततया पृष्टाः भगवच्चरित्रज्ञापका न भवन्तीति तथाविधत्वज्ञापनार्थमपृष्टकथनार्थं च पुराणमेव मूलतः किञ्चित्कथयिष्यामीत्याह—सोऽहमिति। त्वया ये पूर्वं प्रश्नाः कृताः 'सुखाय कर्माणि करोति लोकः' इत्या-दिना, तेऽप्यनेन परिहृता भविष्यन्तीति। तत्र प्रथमं प्रश्नं फलत्वेन निर्दिशन्नाह—नृणां क्षुल्लसुखाय महद्दुःखं गतानां तद्विरमायेति। अनेन पृष्टानां सर्वेषामेव पदार्थानां भगवत्कर्मपरत्वं सामान्यतो निरूपितम्। स्वभावतः कर्मणामल्पसुखेच्छया कृतानां महद्दुः-खजनकत्वम्। तान्येव च कर्माणि भगवत्संबद्धानि चेत्, भगवदीयत्वेन कृतानि दुःखाभावपूर्वकमहत्सुखफलानि भवन्तीति। [2]अत्र श्रवणे भवानेवाऽधिकारीति तुभ्यमुक्तम्। भागवतमिति भगवता हि प्रतिपादिताः स्वकृताः स्वफला एव। परम्परायामपि भगवदुक्तपदार्थानां दोषसंबन्धाभावाय, वक्तुः श्रोतुः स्वरूपतोऽवस्थातश्च परमां शुद्धिं निरूपयितुं शुद्धपरम्परामाह—यदाह साक्षाद्भगवानृषिभ्य इति। यद्भागवतं भगवता न परम्परयोक्तम्, किन्तु साक्षादेव। भगवत्त्वं वा साक्षात्। भगवत्कृपया जातभगवत्त्वव्युदासार्थम् ऋषिभ्य इति। ज्ञाननिष्ठा ऋषयः परमपात्रत्वेन निरूपिताः। येषां बुद्धौ मन्त्राः स्वतः स्फुरन्ति, सा बुद्धिरुक्तैव भवति॥ २॥ ❀ ❀ भगवानपि न क्रीडां कुर्वन्, लक्ष्मीसहितो वा, भागवतमुक्तवान्, किन्तु आत्मध्या-नारूढ एकाग्रचित्तस्तथोक्तवानिति भगवन्तमुपदेष्टारं वर्णयति—आसीनमुर्व्यामिति। आसीनमिति क्रियान्तराभावेन लौकिकरीत्याऽपि वैजा[3]त्याभावः सूचितः। उर्व्यामिति भूमौ स्थित्या यज्ञियत्वं सूचितम्, अन्यथा भगवान् कथं भूमावासीत्। इयमुर्वी नोद्धृता,

---

१. अन्यार्थं. घ.। २. अत्र च ख.। ३. वैयग्र्याभावः. क. ख. ग. ङ. च.।

किन्तु मूलभूतैव; यतः पातालाधोविद्यमानत्वं स्थानलक्षणाभिर्नागकन्यापूजनया च निरूप्यते। आद्यमिति पित्रादिजन्मदोषः परिहृतः। संकर्षणमिति भगवतश्चतुर्मूर्त्तेर्या मूर्तिः संहारकर्त्री, सा निरूपयतीत्युक्तम्। तेन भगवता पदार्थनिरूपणे दृष्टान्तार्थमपि यद्यन्ये पदार्था निर्दिष्टा भवन्ति, तेऽपि संकर्षणं प्राप्य दग्धपूर्वावस्था भगवदीया एव नूतना भवन्तीति सूचितम्। तामसत्वेन समागतं दूषणं परिहरति– देवमिति। ननु देवानामपि नानाविधत्वात् तामसत्वमपरिहृतमेव। अत आह—अकुण्ठसत्त्वमिति। न कुण्ठं कुण्ठितं सत्त्वं सत्त्वगुणोऽक्षरात्मकं वा, आसनत्वेन यस्य। स तु गुणत एव तामसः, संहारकर्तृत्वात्; तदपि प्रलयकाले। इदानीं तु देवः सर्वोपास्य एव। संकर्षणत्वं च द्रष्टृदृश्ययोः सम्यक् कर्षणात्, अतः स एव संसारं प्रयच्छतीत्याद्यत्वम्। तेन भजनावश्यकत्वं पितृत्वादुपदेष्टृत्वं च संगच्छते। इदं तु ज्ञानिन एव जानन्तीति श्रोतृत्वं सनकादीनाम्। मोक्षार्थमपि अयमेव सेव्यः, सम्यक्कर्षणं तत एव यतो निवर्तते। अस्य च रूपमग्रे निरूपयिष्यते। ननु सनकादीनां ज्ञानस्य विद्यमानत्वात् संकर्षणस्थाने किमर्थं गता इत्याह—विवित्सव इति। अतः संकर्षणात्परस्य वासुदेवस्य तत्त्वं स्वरूपं विवित्सवो ज्ञातुमिच्छवः कुमारमुख्याः सनकादयः। सनत्कुमारो मुख्यो येषाम्। मुनय इति संकर्षण एव जानाति, तमनन्तरो वासुदेवं ज्ञातुं नाऽन्य इति ज्ञानयुक्ताः। अन्विति ब्रह्मणा स एव प्रष्टव्य इत्युक्ते तमन्वपृच्छन्। यद्यपि ब्रह्मा जानाति, तथापि स भक्तिमार्गप्रधानः सनकादींस्तथा न मन्यते, अतः संकर्षणमपि ज्ञानप्रधानं मन्यमानस्तस्थाऽऽह॥३॥ ❀ ❀ स संकर्षणः अभिमानाधिदैवत्वात् न तमभिमानो व्याप्नोत्यतः स्वस्याऽपि परं वासुदेवं ध्यायन्नेव सर्वदा तिष्ठति। यदा वा ध्यायति, तदा ते गता इति तस्य ध्यानावस्थां निरूपयति—स्वमेव धिष्ण्यमिति। धिष्ण्यं स्थानमाश्रयम्, न त्वासनम्। वासुदेवाख्यं तं बहु मानयन्तम्। तस्य ध्याने क्रियमाणे ध्याता स्वयं ध्येयं बहुमानयत्येव। तस्य ध्येयस्य स्वरूपमाह—यं ध्येयत्वेन निरूपितं लोका वासुदेवेति वदन्ति। यो ध्येयत्वेन निरुपितस्तमित्यर्थः। वासुदेव इत्यभिधा यस्य। वस्तुतस्तु, स्वस्यैवाऽऽश्रयभूत आत्मा, लोकाः परं शब्दान्तरेण व्यपदिशन्ति। ननु ध्यानारूढो बहिःसंवेदनाभावात् कथमुपदेष्टा भवतीत्यत आह—प्रत्यग्धृतेति। प्रत्यगात्मस्वरूपे धृतमक्षि येन। 'कश्चिद्धीरः प्रत्यगात्मानमैक्षताऽऽवृत्तचक्षुः' इति श्रुतेः। यद्यप्यन्तर्नीतं तेन चक्षुः, तथापि भगवान् कमलनयन इति तदम्बुजं जलाद् बहिर्दृश्यत एव, तथा भगवानपि ध्यानारूढोऽपि बहिः पश्यतीति ज्ञातव्यम्। किञ्च, तदक्षिकमलस्य कोशरूपम्। कोशो हि मुकुलितपत्रात्मको भवति, तथाऽयमपि निमीलिताक्षः। तथापि विबुधानामागतानां सनकादीनामुदयाय अभ्युदयाय, तानभ्युदितान् कर्तुम्, ईषद्विकचय्य पश्यन्तम्। कोशे हि अर्द्धविकासः संभवति॥४॥ ❀ ❀ तेऽपि बाह्यतोऽपि शुद्धा भूत्वा समागता इत्याह—स्वर्धुन्युदार्द्रैरिति। अथवा, भगवदीयशरीरसिद्ध्यर्थं स्वर्धुन्युदार्द्रैरिति। यावद्गङ्गाजलेनाऽऽर्द्रं शरीरं तिष्ठति, तावद्दैत्याक्रमणं न भवतीति पाताले दैत्याधिक्यात् तत्स्पर्शाभावार्थमार्द्रा इव जटाः कृताः, न शोषिताश्च। गङ्गाद्वारमार्गेण गता इति केचित्। तथा सति ते सर्वार्द्रा एव वक्तव्याः। 'योगेश्वराणां गतिमाहुः' इति न्यायेन येन केनाऽपि मार्गेण ते गन्तुं शक्ताः, स्वर्धुनीपदे लक्षणा च स्यात्। अस्तु वा तथैव अतिपावित्र्यार्थम् जटा। असंस्कृतकेशास्तेषां कलापैः समूहैः संकर्षणचरणोपधानं पीठमुपस्पृशन्तोऽपृच्छन्निति संबन्धः। पूर्वं कृतनमस्कारा अपि वासुदेवस्वरूपज्ञानार्थं पुनः साष्टाङ्गनमस्कारं कृतवन्त इत्यर्थः। ननु स्वार्द्रजटाकलापैः तदुपस्पर्शे को हेतुस्तत्राऽऽह—पद्मं यदर्चन्तीति। अहिराजकन्याः वासुकिकन्याः, सप्रेम यथा भवति तथा, वरार्थाः सत्यो नानाबलिभिर्नानापूजाप्रकारैर्यत्पद्ममर्चन्ति। तेषां स्पर्शादोषायेति केचित्, गङ्गापेक्षयापि तच्चरणस्यैव प्रकृष्टत्वात्। किन्तु तदुपस्पर्शने इष्टकामना सिद्ध्यतीति तदुपस्पर्शने हेतुरर्चन्तीति। महतामपि फलदातेति स्वेष्टसिद्धिः सूचिता। कन्यात्वादेव न विकारान्तरसम्भावना, कामितान्तरकथनात् न काम्यत्वम्। अतः सर्वप्रकारेण निर्दुष्टं सर्वकामनापूरकं भगवन्तं तमेव ध्यायंस्तत्स्वरूपं सम्यग्वक्ष्यतीति सूचितम्॥ ५॥

## श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

अथाऽष्टमाध्यायं विवरिपवो मैत्रेयोक्तावुत्तरत्वरूपायाः सङ्गतेः स्फुटत्वेन, निबन्धे विचारितत्वेन च तामनुक्त्वा, शास्त्रीयामेवाऽवसररूपां सङ्गतिं स्मारयितुमध्यायार्थमाहुः—अष्टम इत्यादि। 'बुद्धिर्विज्ञानरूपिणी' इति वाक्याद्विशिष्टज्ञानसमानाकारत्वं तस्याः स्वरूपलक्षणम्; 'ज्ञानशक्तिः' इति वाक्याज्ज्ञानजनकत्वं च तस्याः कार्यलक्षणमिति सा यादृशी सर्गलीलायां विवक्षिता साऽत्राऽष्टमेऽध्याये विशिष्टज्ञानरूपकार्यनिरूपणेन वर्ण्यते। तस्य ज्ञानस्य विषयाव्यभिचाराय तदीयानामाधाराधेयरूपाणां विषयाणामुद्गमः प्राकट्यं चोपवर्ण्यत इत्यर्थः। समुदायार्थमुक्त्वाऽवयवार्थमाहुः—षड्विधेत्यादि। अत्र 'कृतक्षणः स्वात्मरतावनूहः' इत्यनेनोक्ता प्रथमा विधा; 'लोकानपीतान् ददृशे स्वदेहे' इति द्वितीया; 'तस्याऽर्थसूक्ष्म·····' इत्यादिभिरुक्ता तृतीया; एवं त्रिधा भगवन्निष्ठा। तथाऽन्या त्रिधा भगवद्विषया—तत्र 'तस्यां स च' इत्यनेनोक्ता प्रथमा; ततः 'क एष' इत्यादिश्लोकैरुक्ता द्विप्रकारा पञ्चमी। ततः 'अपश्यताऽपश्यत यन्न पूर्वकम्' इत्यादिरुक्ता षष्ठी। एषा यद्यपि चतुर्मुखस्य, तथापि 'तस्मिन् स्वयं वेदमयो विधाता' इति कथनात् साऽपि हरेरेव। तथा च पूर्वोक्तत्रिविधबुद्धेः सारभूतस्तदाधिदैविको ब्रह्माऽपि बुद्धावेवान्तर्भवतीति

---

१. पूजया. ख. च. । २. विकच इव. क. ख. घ. ङ. च. छ. ।

तद्बुद्धिरपि भगवद्बुद्धिरेवेति षट्सु जगत्प्रतिष्ठितमित्यर्थः। नन्वेषां तु 'उदाप्लुतं विश्वम्' इत्यारभ्योच्यते, न तु पूर्वम्। अतस्तेषां किंनिरूपकत्वमित्यत आहुः—सामान्यत इत्यादि। ग्रन्थरूपेति। श्रीभागवतपुराणरूपा। तामसादिति। संकर्षणात्। तथा च तेषामपि बुद्धिनिरूपकत्वमेवेति सर्वोऽप्यध्यायस्तथेत्यर्थः। ननु भगवत्प्रोक्तत्वं भागवतलक्षणम्, तच्च संकर्षणोक्तत्वे विरुध्यते। किञ्च, सङ्कर्षणः प्रलायक इति तत उद्गतायाः कथं सर्गोपयोगित्वमित्याकाङ्क्षायामाहुः—अनेकधेत्यादि। कदाचित् स्वतः, कदाचित् केनचिद्द्वारेणेत्येवमनेकधा कथने सर्गादिकरणे च प्रवृत्तिरतो भागवतत्वं सर्गोपयोगित्वं चोपपद्यत इत्यर्थः। तासां प्रवृत्तीनामापाततोऽन्यथा प्रतीयमानत्वेऽपि भगवदीयत्वे गमकमाहुः—दशेत्यादि। एतेन महापुराणान्तरोक्ता अपि संगृहीता ज्ञेयाः। ब्रह्मबुद्धेरग्रेऽप्युपयोगायाऽऽहुः—भगवदित्यादि। लीलाद्वय इति। द्विविधायां सर्गलीलायाम्।

सत्सेवनीय इत्यत्र। अभीक्ष्णं सर्वदेति। पदे-पद इति वीप्सया पौनःपुन्यस्य प्राप्तत्वात् पुनरुक्तिपरिहारायैवं व्याख्यातम्। प्रमेयबलाधिक्यमेव स्फुटीकुर्वन्ति—अधिकार इत्यादि। साधीति। प्रसिद्धिरपि। भक्तेभ्योऽप्याधिक्यमिति। भक्ता ह्यन्तरेव स्थापयन्त्ययं तु बहिरपीत्यतस्तथेत्यर्थः॥ १॥ ❀ ❀ सोऽहमित्यत्र। इदानीमित्यस्य पुराणमित्यनेनाऽप्यन्वयः। भगवत्कर्मपरत्वमिति। भगवत्कर्मोपयोगित्वम्। तद्व्युत्पादयन्ति—स्वभावत इत्यादि॥ २॥ ❀ ❀ आसीनमित्यत्र। वैजात्याभाव इति। उपदेष्टृधर्मविजातीयं वैयग्र्यमिति तदभावः। वैयग्र्याभाव इति पाठो वा। मूलभूतेति। अण्डात्मिका। स्थानलक्षणाभिरिति। 'किरीटसाहस्र....' इत्यनेनोक्ताभिः फणाभिः। सूचितमिति। तेनास्थितिकालेपि दोषनाशकत्वेन प्रलायकत्वं सूचितमित्यर्थः।

अक्षरात्मकमिति। सदंशरूपम्। सङ्कर्षणपदस्य यौगिकत्वे नामत्वं न स्यादिति योगस्य सार्वदिकत्वं तदर्थं स्फुटीकुर्वन्ति—सङ्कर्षणत्वमित्यादि। तथा चैवं सर्वस्य स्वरूपावस्थात्वबहिर्निर्गमनयोः सम्पादनेन प्रवृत्तत्वात्तथात्वं सार्वदिकमतो नामेत्यर्थः। तेन सिद्धमाहुः—अत इत्यादि। अग्र इति। पञ्चमस्कन्धे तथा न मन्यत इति। अधिकारिणो न मन्यते॥ ३॥ ❀ ❀ स्वमेवेत्यत्र। स सङ्कर्षण इत्यस्य वासुदेवं ध्यायन्नित्यादिनाऽन्वयः॥ ४॥ ❀ ❀ स्वर्धुनीत्यत्र। केचिदिति। श्रीधरस्वामिनः। सर्वार्द्रा इत्यादि। तथा च जटापदवैयर्थ्यमित्यर्थः। येन केनापीति। तथा च गमकाभाव इत्यर्थः। अजहत्स्वार्थाया अदुष्टत्वान्मार्गत्वस्याऽपि शक्यवचनत्वाज्जटापदसार्थक्यस्याऽप्यतिपावित्र्यार्थतया कथञ्चित् साधयितुं शक्यत्वात् तमपि पक्षमङ्गीकुर्वन्ति—अस्तु वेत्यादि। तेषामिति। अहिजातीयानाम्, सामान्ये नपुंसकम्, अस्वरसे बीजमाहुः—गङ्गेत्यादि॥ ५॥

## श्रीगिरिधरकृता बालप्रबोधिनी

नाभिकमलजातेन ब्रह्मणा जलशायिना। अष्टमे तपसा पृष्टो भगवान्विनिरूप्यते॥ १॥

एवं भगवत्कथायां विदुरेण प्रवर्तितो मैत्रेयस्तत्कृतप्रश्नानामुत्तराण्यभिधास्यमानः प्रथमं तं प्रवर्तयितारमभिनन्दति—सत्सेवनीय इति। बतेति हर्षे आश्चर्ये वा। पूरुवंशः सत्सेवनीयः सद्भिरुत्तमैरपि सेवितुं योग्यः। यत् यस्मात् इह पूरुवंशे लोकपालः यम एव भगवानेव प्राप्यतया उपायतया च प्रधानो यस्य तथाभूषणभूतस्त्वं बभूविथ जातोऽसि। भगवत्प्राधान्यमेव विशदयति—अजितेति। अजितः कालकर्माविद्यादिनियन्ता भगवान् तस्य कीर्तीनां यशसां मालां हृदयकण्ठभूषणभूतां पङ्क्तिं पदे पदे क्षणे क्षणे अभीक्ष्णं पुनः पुनर्नूतनयसि प्रश्नेन नवीनां करोषीत्यर्थः॥ १॥ ❀ ❀ एवं विदुरं तत्प्रश्नं चाभिनन्द्य त्वत्कृतसर्वप्रश्नोत्तराणां सत्सम्प्रदायागते श्रीभागवतपुराणे एवोपलम्भात्तद्व्याख्यानेनैव तानुत्तरयामीत्याशयेनाह—स इति। स त्वया पृष्टोऽहं भागवतं पुराणं प्रवर्त्तये वर्णयामि। अनेनैव 'सुखाय कर्माणि करोति लोकः' इति स्वप्रश्नस्योत्तरं ज्ञेयमिति सूचयन् प्रवर्त्तनप्रयोजनमाह—नृणामिति। क्षुल्लसुखाय अल्पसुखार्थं दुष्कर्माणि कृत्वा तैर्महद् दुःखं गतानां प्राप्तानां नृणां तस्य दुःखस्य विरमाय निवृत्तये इत्यर्थः। तत्राप्रामाण्यशङ्कां निराकुर्वन् भगवता प्रोक्तं भागवतमिति नामनिरुक्तिंच सूचयन् विशिनष्टि—यदिति। यत्पुराणं साक्षादेव भगवानृषिभ्य आहेत्यन्वयः॥ २॥ ❀ ❀ कोऽसौ भगवान् केभ्यश्च आह त्वया च कथं प्राप्तमित्यपेक्षायामाह—आसीनमिति सप्तभिः। उर्व्यां पातालभूमौ आसीनमुपविष्टं भगवन्तं भगवतोंऽशावतारं सङ्कर्षणं अतः सङ्कर्षणात्परस्य वासुदेवस्य तत्त्वं याथात्म्यं विवित्सवो वेत्तुमिच्छवः कुमारो मुख्यो येषां ते सनत्कुमारसनकसनन्दनसनातनाख्या मुनयोऽन्वपृच्छन् विधिवदुपसङ्गम्य पृष्टवन्तः। प्रश्नयोग्यत्वमाह—आद्यमिति। अकुण्ठसत्त्वमिति अप्रतिहतज्ञानमित्यर्थः। अतएव देवं देदीप्यमानमित्यर्थः॥ ३॥ ❀ ❀ तमेव सङ्कर्षणं विशिनष्टि—स्वमिति। यं वासुदेवाभिधं वासुदेवशब्दवाच्यमामनन्ति ऋषयो वर्णयन्ति तं स्वं धिष्ण्यमाश्रयं भगवन्तं बहु मानयन्तं ध्याने सर्वोत्कर्षेण पूजयन्तम्। ननु ध्याननिष्ठस्य कथमुपदेष्टृत्वमित्याशङ्क्याह—प्रत्यगिति। प्रत्यगात्मनि वासुदेवे धृतं नेत्राम्बुजमुकुलं विबुधानां सनत्कुमारादीनामुदयाय तत्त्वोपदेशेन परमपुरुषार्थलाभाय ईषत् किञ्चिदुन्मीलयन्तमन्वपृच्छन्नित्यन्वयः॥ ४॥ ❀ ❀ मुनीन् विशिनष्टि सार्द्धेन—स्वर्धुन्युदार्द्रैरिति। श्रीभागतश्रवणार्थं सत्यलोकात्पातालमवरन्तो दैत्यसम्बन्धादिदोषनिरासाय गङ्गास्नानं कृत्वैव तत्र गच्छन्तीति स्वर्धुन्यां गङ्गाया उदैरुदकैरार्द्रैः स्वजटाकलापैः सङ्कर्षणस्य चरणौ उपधीयेते यस्मिंस्तच्चरणोपधानं पद्मं स्पृशन्तः नमस्कुर्वन्तोऽन्वपृच्छन्नित्यन्वयः।

तत्पद्मस्यापि मनोरथपूरकत्वं सूचयन्विशिनष्टि—पद्ममिति । वरार्थाः पतिकामाः सत्योऽहिराजकन्याः सप्रेम यथा भवति तथा नानाविधैर्बलिभिः पूजासाधनैर्यत्पद्ममर्चन्ति तत्स्पृशन्त इत्यन्वयः ॥ ५ ॥

### हिन्दी अनुवाद

#### ब्रह्माजीकी उत्पत्ति

श्रीमैत्रेयजीने कहा—विदुरजी ! आप भगवद्भक्तोंमें प्रधान लोकपाल यमराज ही हैं; आपके पूरुवंशमें जन्म लेनेके कारण वह वंश साधुपुरुषोंके लिये भी सेव्य हो गया है । धन्य हैं ! आप निरन्तर पद-पदपर श्रीहरिकी कीर्तिमयी मालाको नित्य नूतन बना रहे हैं ॥ १ ॥ ❀ ❀ अब मैं, क्षुद्र विषय-सुखकी कामनासे महान् दुःखको मोल लेनेवाले पुरुषोंकी दुःखनिवृत्तिके लिये, श्रीमद्भागवतपुराण प्रारम्भ करता हूँ—जिसे स्वयं श्रीसङ्कर्षणभगवान्ने सनकादि ऋषियोंको सुनाया था ॥ २ ॥ ❀ ❀ अखण्ड ज्ञानसम्पन्न आदिदेव भगवान् सङ्कर्षण पाताललोकमें विराजमान थे । सनत्कुमार आदि ऋषियोंने परम पुरुषोत्तम ब्रह्मका तत्त्व जाननेके लिये उनसे प्रश्न किया ॥ ३ ॥ ❀ ❀ उस समय शेषजी अपने आश्रयस्वरूप उन परमात्माकी मानसिक पूजा कर रहे थे, जिनका वेद वासुदेवके नामसे निरूपण करते हैं । उनके कमलकोश-सरीखे नेत्र बंद थे । प्रश्न करनेपर सनत्कुमारादि ज्ञानीजनोंके आनन्दके लिये उन्होंने अधखुले नेत्रोंसे देखा ॥ ४ ॥ ❀ ❀ सनत्कुमार आदि ऋषियोंने मन्दाकिनीके जलसे भीगे अपने जटासमूहसे उनके चरणोंकी चौकीके रूपमें स्थित कमलका स्पर्श किया, जिसकी नागराजकुमारियाँ अभिलषित वरकी प्राप्तिके लिये प्रेमपूर्वक अनेकों उपहारसामग्रियोंसे पूजा करती हैं ॥ ५ ॥

मुहुर्गृणन्तो वचसानुरागस्खलत्पदेनास्य कृतानि तज्ज्ञः ।
किरीटसाहस्रमणिप्रवेकप्रद्योतितोद्दामफणासहस्रम् ॥ ६ ॥
प्रोक्तं किलैतद्भगवत्तमेन निवृत्तिधर्माभिरताय तेन ।
सनत्कुमाराय स चाह पृष्टः सांख्यायनायाङ्ग धृतव्रताय ॥ ७ ॥
सांख्यायनः पारमहंस्यमुख्यो विवक्षमाणो भगवद्विभूतीः ।
जगाद सोऽस्मद्गुरवेऽन्विताय पराशरायाथ बृहस्पतेश्च ॥ ८ ॥
प्रोवाच मह्यं स दयालुरुक्तो मुनिः पुलस्त्येन पुराणमाद्यम् ।
सोऽहं तवैतत्कथयामि वत्स श्रद्धालवे नित्यमनुव्रताय ॥ ९ ॥
उ[१]दाप्लुतं विश्वमिदं तदाऽऽसीद् यन्निद्रया मीलितदृङ् न्यमीलयत् ।
अहीन्द्रतल्पेऽधिशयान एकः कृतक्षणः स्वात्मर[२]तौ निरीहः ॥ १० ॥
सोऽन्तःशरीरेऽर्पितभूतसूक्ष्मः कालात्मिकां शक्तिमुदीरयाणः ।
उवास तस्मिन् सलिले पदे स्वे यथानलो दारुणि रुद्धवीर्यः ॥ ११ ॥
चतुर्युगानां च सहस्रमप्सु स्वपन् स्वयोदीरितया स्वशक्त्या ।
का[३]लाख्ययाऽऽसादितकर्मतन्त्रो लोकानपीतान्ददृशे स्वदेहे ॥ १२ ॥
तस्यार्थसूक्ष्माभिनिविष्टदृष्टेरन्तर्गतोऽर्थो रजसा तनीयान् ।
गुणेन कालानुगतेन विद्धः सूष्यंस्तदाभिद्यत नाभिदेशात् ॥ १३ ॥
स पद्मकोशः सहसोदतिष्ठत् कालेन कर्मप्रतिबोधनेन ।
स्वरोचिषा तत्सलिलं विशालं विद्योतयन्नर्क इवात्मयोनिः ॥ १४ ॥
तल्लोकपद्मं स[४] उ एव विष्णुः प्रावीविशत्सर्वगुणावभासम् ।
तस्मिन् स्वयं वेदमयो विधाता स्वयम्भुवं यं स्म वदन्ति सोऽभूत् ॥ १५ ॥

---

१. प्रा. पा०—उदप्लुतं । २. प्रा. पा०—रतावनीहः । ३. प्रा. पा०—कालात्ययोत्पादित० । ४. प्रा. पा—स्वकमेव धिष्ण्यं प्रावी० ।

तस्यां स चाम्भोरुहकर्णिकायामवस्थितो लोकमपश्यमानः।
परिक्रमन् व्योम्नि विवृत्तनेत्रश्चत्वारि लेभेऽनुदिशं मुखानि ॥ १६ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

कृतानि कर्माणि गृणंतः। केन अनुरागेण स्खलंति पदानि यस्मिंस्तेन वचसा। तानि जानंतीति तज्ज्ञाः। सहस्रमेव साहस्रं किरीटानां साहस्रे ये मणिप्रवेका रत्नोत्तमास्तैः प्रद्योतितमुद्दामफणानां सहस्रं यस्य तम्। अपृच्छन्निति पूर्वेणान्वयः ॥ ६ ॥ ❀ ❀ तेन संकर्षणेन सनत्कुमाराय प्रोक्तम् ॥ ७ ॥ ❀ ❀ पारमहंस्ये धर्मे मुख्यः विवक्षमाण इत्यात्मनेपदं ब्रूञादेशस्य वचेरुभयपदित्वात्। अन्विताय अनुगताय ॥ ८ ॥ ❀ ❀ पुलस्त्येनोक्त इत्यत्रैवमाख्यायिका। पितरं राक्षसभक्षितं श्रुत्वा पराशरो राक्षससत्रे प्रवृत्तो वसिष्ठवचनान्निवृत्तस्ततः पुलस्त्येन स्वसंततिरक्षणात्तुष्टेन वरो दत्तः पुराणप्रवक्ता भविष्यसीति ॥ ९ ॥ ❀ ❀ तदेवं संकर्षणात्संप्रदायप्रवृत्तिं प्रदर्श्य विभूतिकथनाय पद्मोद्भवं वक्तुमाह। उदाप्लुतमेकार्णवोदकनिमग्नं यद्यदासीत्तदा अमीलितदृगतिरोहितचिच्छक्तिरेव श्रीनारायणो नेत्रे निमीलितवानित्यर्थः। मायाविनोदं परित्यज्य स्वात्मरतौ स्वरूपानंद एव कृतोत्सवः अत एव निरीहो निष्क्रियः सन् ॥ १० ॥ ❀ ❀ कालशक्तेः प्रेरणं पुनः सृष्ट्यवसरे प्रबोधनार्थम्। स्वे पदेऽधिष्ठाने। वह्निर्वृत्त्यभावे दृष्टांतः। यथाऽनल इति ॥ ११ ॥ ❀ ❀ स्वया चिच्छक्त्या सह वर्तमान एव योगनिद्रया स्वपन्पूर्वमेव प्रबोधनार्थं नियुक्तया स्वकालशक्त्याऽऽसादितं प्रापितं कर्मतंत्रं क्रियाकलापो यस्य सः। अपीतान् लीनान् ददर्श ॥ १२ ॥ ❀ ❀ लोकसृष्ट्यर्थमर्थसूक्ष्मेऽभिनिविष्टा दृष्टिर्यस्य। कालानुसारिणा रजोगुणेन विद्धः संक्षोभितः संस्तनीयानतिसूक्ष्मोऽर्थः। सूष्यन् प्रसोष्यन्नुद्भविष्यन् नाभिदेशादुद्भूत इत्यर्थः ॥ १३ ॥ ❀ ❀ स तनीयानर्थः पद्मकोशः सन्नुदतिष्ठत्। कर्माणि जीवादृष्टानि प्रतिबोधयति यः कालस्तेन आत्मा श्रीविष्णुर्योनिर्यस्य ॥ १४ ॥ ❀ ❀ तल्लोकात्मकं पद्मं सर्वान् गुणान् जीवभोग्यानर्थानवभासयतीति तथा तद्यस्माज्जातं स एव विष्णुः। उ इति संबोधने। प्राविविशत्प्रकर्षेणालुप्तशक्तिरेवांतर्यामितया प्रविवेश। तस्मिन्विष्णुनाधिष्ठिते पद्मे विधाता ब्रह्माऽभूत्। कथंभूतं स्वयमेव वेदमयो नत्वध्ययनेन प्राप्तवेदः। कोऽसौ अदृष्टपितृत्वेन यं स्वयंभुवं वदंति स प्राक्कल्पांते नारायणेन सह निद्रयैकीभूत आसीत् तस्मिंश्च प्रबुद्धे तत एव पाद्मे कल्पे पद्मद्वारेणाभिव्यक्तिं प्राप्त इत्यर्थः ॥ १५ ॥ ❀ ❀ स च तस्मिन्कल्पे चतुर्मुखोऽभूदित्याह। तस्यामिति परिक्रमंस्तत्रस्थ एव ग्रीवां चालयँल्लोकनिरीक्षणार्थं निवृत्ते विचलिते नेत्रे यस्य ॥ १६ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

"मुख्यवर्यवरेण्याश्च प्रवेकानुत्तमोत्तमाः" इत्यमरः। उद्दाममुत्कृष्टम् ॥ ६ ॥ ❀ ❀ किल प्रसिद्धम् एतद्भागवतं भगवत्तमेन भगवत्सूत्यादिज्ञानवत्सु श्रेष्ठेन यद्वा। भगवानेव भगवत्तमः स्वार्थे तमप्। यद्वा। भगवंतं वासुदेवं तम्यति कांक्षतीति भगवत्तमस्तेन 'तमु कांक्षायाम्' ततो। 'स्वमेव धिष्ण्यं बहुमानयंतम्' इत्याद्युक्तेः। स च सनत्कुमारः। पृष्टः सन् 'नापृष्टः कस्यचिद् ब्रूयात्' इति स्मृतेः। निवृत्तिधर्माभिरतत्वादिपुराणश्रवणाधिकारप्रतिपादनायोक्तम् ॥ ७ ॥ ❀ ❀ बृहस्पतेर्बृहस्पतये च ॥ ८ ॥ ❀ ❀ उक्तो दत्तवरः। पितरं शक्तिं राक्षसेन कल्माषपादेन भक्षितम् ॥ ९ ॥ ❀ ❀ इत्यर्थ इति। योगनिद्रामुपाश्रितवानिति भावः। अहींद्रतल्पे शेषशय्यायाम् "अधिशीङ्स्थासां कर्म" इत्याधारस्य कर्मत्वाभावस्त्वार्षः ॥ १० ॥ ❀ ❀ स नारायणः अधिष्ठानेऽयने 'अयनं तस्य ताः पूर्वं तेन नारायणः स्मृतः' इति स्मृतेः। रुद्धवीर्यः प्रतिष्टब्धदाहकत्वशक्तिः। अनलोऽग्निः ॥ ११ ॥ १२ ❀ ❀ तस्य जलशायिनः। अर्थसूक्ष्मे भूतसूक्ष्मवर्गे सर्वजनलिंगदेहोत्थापनरूपे वा अर्थः भूतसूक्ष्मवर्गः इत्यर्थः इति। सूक्ष्मोर्थ एव कंजरूपेणाविर्बभूवेति भावः ॥ १३ ॥ ❀ ❀ तदेवाह—स इति ॥ १४ ॥ ❀ ❀ इत्यर्थ इति। ब्राह्मकल्पजात एव ब्रह्मा पाद्मकल्पे कमलद्वारा प्रादुरभूदिति भावः ॥ १५ ॥ ❀ ❀ स च ब्रह्मा तस्मिन्पाद्मे कल्पे अनुदिशं प्रतिदिशम् ॥ १६ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनीव्याख्या

किरीतेत्यर्द्धकम् ❀ ॥ ( ४ ) —४ ॥ ६ ॥ ❀ ❀ भगवत्तमेनेति अन्यावताराणां सङ्कर्षणांशत्वमभिप्रेतम्। स च सनत्कुमारः धृतव्रताय श्रीभागवतश्रवणार्थं धृतब्रह्मचर्य्यादिनियमाय ॥ ४ ॥ ७ ॥ ❀ ❀ पारमहंस्ये परमहंसाः प्राप्तात्मतत्त्वास्तेषां सम्बन्धिनि धर्म्मे प्रत्यङ्निष्ठारूपे यद्यपि परिभाषणार्थो वचिः परस्मैपदमिति विवक्षन्नित्येव साधुस्तथापि ब्रुञादेशरूपस्य वचेरुभयपदित्वाद्विवक्षमाण इत्यात्मनेपदमित्यर्थः। अनुगताय शिष्याय बृहस्पतेश्च बृहस्पतयेऽपि जगादेति योजनीयम् ॥ ५ ॥ ॥८॥ ❀ ❀ मुनिः पराशरः आद्यं सर्वपुराणमुख्यं पितरं शक्तिं स पराशरादधीतभागवतोऽहं तव तुभ्यमेतच्छ्रीमद्भागवतं पुराणम् ॥६, ९॥ ❀ ❀ यदा निद्रया नेत्रे न्यमीलयत्तदा इदं विश्वं त्रैलोक्यम् उदप्लुतमासीदित्यन्वयः। अतएव स्वरूपानन्दे कृतोत्सवत्वादेव ॥ ७ ॥ १० ॥ ❀ ❀ भूतसूक्ष्माण्यत्र विलीनपार्थिवांशतन्मात्रसहितानि त्रैलोक्यगतजीवानां लिङ्गशरीराणि यान्येव

समष्टिलिङ्गशरीरमित्युच्यते त्रिलोकाद्बहिर्जलादीनां विद्यमानत्वात् अनलपक्षे वीर्यं दहनशक्तिः भगवत्पक्षे सृष्टिशक्तिः ॥ ८ ॥ ११ ॥ ❀ ❀ प्रापितम् उद्वोढुं भगवद्दृष्टिगोचरतां नीतं क्रियाकलापो जीवकर्मसमूहः लोकान् स त्रैलोक्यजनान् ॥ ९ ॥ १२ ॥ ❀ ❀ अर्थसूक्ष्मोऽत्र त्रैलोक्यगतजीवानां लिङ्गशरीरसमूहः तनीयान् अर्थोऽपि स एव प्रसोष्यन् स्वकार्य्यं जनयिष्यन् अतएवोद्भविष्यन् स्वकार्य्यद्वारा स्वं वर्द्धयिष्यन्निति व्याख्यातम् ॥ १० ॥ १३॥ ❀ ❀ पद्मकोपस्सन् इति नारायणनाभिकमलादयमन्य एव ज्ञेयः प्रकृतसूक्ष्मलिङ्गशरीरात्मकत्वात् योनिर्निर्मित्तं अतएवार्क इवेत्युक्तम् ॥ ११ ॥ १४॥ ❀ ❀ स एव गर्भोदशाय्येव प्रतिकल्पं ब्रह्मसृष्टयसम्भवात् प्राक्कल्पान्त इत्यादिसाध्याहारं व्याख्यानमत एव इत्यर्थ इत्युक्तम् ॥ १२ ॥ १३ ॥ ॥ १५ ॥ १६ ॥

### श्रीमद्वीरराघवव्याख्या

अस्य भगवतः कृतानि कर्माणि तज्ज्ञाः तानि जानन्तीति तद्विचेष्टिताभिज्ञाः अनुरागेण प्रेमातिशयेन स्खलन्ति पदानि यस्मिंस्तेन वचसा मुहुर्गृणन्तः गायन्तः मुनयः किरीटानां मुकुटानां सहस्रमेव साहस्रं तस्मिन्मणिप्रवेकाः मण्युत्तमाः तैः प्रद्योतितमुद्दामफणानामुदारफणानां सहस्रं यस्य तं संकर्षणमन्वपृच्छन्निति पूर्वेणान्वयः ॥ ६ ॥ ❀ ❀ एवं विधिवदाचार्य्योपसत्तिमभिधायोपसन्नेभ्यस्तेभ्यः श्रीभागवतमुपदिदेशेति वदंस्तदर्वाचीनामप्याचार्यपारम्परीमाह प्रोक्तमिति। निवृत्तिधर्माभिरताय मोक्षधर्मेष्वासक्ताय सनत्कुमाराय भगवत्तमेन तेन संकर्षणेन तद्भागवतं प्रोक्तं किल सनत्कुमारायेत्येकत्वं संघाभिप्रायकं स च सनत्कुमारः पृष्टः विधिवदुपसत्त्या पृष्टः सांख्यायनेनेति शेषः। धृतव्रताय धृतानि व्रतानि शिष्यधर्मा येन तस्मै ॥ ७ ॥ ❀ ❀ पारमहंस्ये धर्मे मुख्यः प्रधानः सांख्यायनः भगवद्विभूतीर्विवक्षमाणः वक्तुमिच्छुः ब्रुवादेशस्य वचेरुभयपदित्वाद्विवक्षमाण इत्यात्मनेपदं अन्वितायानुगतायानुवर्त्तमानायेति यावत् अस्मद्गुरवे पराशरायाऽथ बृहस्पतेश्च उवाच ॥ ८ ॥ ❀ ❀ दयालुः स मुनिः पराशरः पुलस्त्येनोक्तः त्वं परदेवतापरमार्थ्यज्ञानवान् पुराणकर्ता च भवेति दत्तवरः एवं ह्याख्यायिका पितरं राक्षसभक्षितं श्रुत्वा पराशरो राक्षससत्रे प्रवृत्तः वसिष्ठवचनान्निवृत्तः ततः पुलस्त्येन स्वसंततिरक्षणात्तुष्टेन वरो दत्तः "पुराणसंहिताकर्त्ता भवान् वत्स! भविष्यति। देवतापारमार्थ्यं च यथावद्वेत्स्यते भवानिति एवंभूतः दयालुः पराशरः मह्यं पुराणं प्रोवाच सोऽहं श्रीपराशरेणोपदिष्टश्रीभागवतपुराणोऽहं हे वत्स! विदुर! श्रद्धालवे नित्यमनुव्रताय च तव तुभ्यं नित्यमिति पूर्वपरान्वयि तवेति विभक्तिव्यत्यय आर्षः एतच्छ्रीभागवतं कथयामि ॥ ९ ॥ ❀ ❀ एवं संकर्षणात् संप्रदायप्रवृत्तिं प्रदर्श्य प्रस्तुतप्रश्नानामुत्तराणि विवक्षुः पूर्वोक्तामेव महदादिपृथिव्यन्ततत्त्वसृष्टिमुपजीव्य ब्रह्माण्डरूपपद्मोत्पत्तिं वक्ष्यन्नन्तरा जगद्व्यापाराधिकृतानिरुद्धरुपिभगवदवस्थितिप्रकारमाह उदाप्लुतमिति द्वाभ्याम्। यद्यदाऽहीन्द्रतल्पे शेषशय्यायामधिशयान एक असहायः कृतक्षणः तत्कालिकजगद्व्यापारादुपरतत्वेन लब्धयोगनिद्रावसरः स्वात्मरतौ स्वात्मानुभवसुखेऽहीनः पूर्णः अनीह इत्यपि पाठः तदा स्वात्मरतौ कृतक्षणः अनीहः निष्क्रियः निद्रया स्वात्मानुभवरूपयोगनिद्रया न्यमीलयत् लोचन इति शेषः। तदेदं विश्वं चेतनाचेतनात्मकं जगदुदावरणोदकेनाप्लुतं व्याप्तमित्यर्थः। अन्यथा ब्रह्माण्डरूपपद्मोत्पत्तेर्वक्ष्यमाणत्वायोगात् इदमुदाप्लुतमिति नैतत्कालिकावस्थयावस्थितस्योदाप्लुतत्वमुच्यते तत्कारणभूतजातस्यावरणजलसृष्टिद्वारा स्वकार्योदकव्याप्तिरुच्यते आवरणजलपर्यन्तं सृष्ट्वा तस्मिन्नावरणजले शयितवानित्युक्तं भवति ॥ १० ॥ ❀ ❀ पुनस्तमेव विशिनष्टि स इति। अन्तःशरीरे शरीरान्तः अर्पितभूतसूक्ष्मः अर्पितानि निहितानि भूतसूक्ष्माणि येन सः दिव्यविग्रहस्य भोक्तृकरणविषयनिरूपकशक्तित्रयाश्रयत्वाकारणत्वानां तदन्तर्गतत्वं युक्तं कालात्मिकां शक्तिं स्वपृथक्सिद्धविशेषणभूतं कालं उदीरयाणः प्रेरयन्कालशक्तिप्रेरणं पुनः सृष्ट्यवसरे प्रबोधनार्थं स्वे स्वकीये पदे स्थाने सलिले विष्णोरायतनं हि स्मर्यते उवास उषितवान् बहिर्व्यापाराभावे दृष्टान्तः यथानल इति। दारुणि काष्ठेऽनलोऽग्निः रुद्धवीर्यः निरुद्धप्रकाशत्वपिङ्गलत्वदाहकत्वादिस्वभावोऽवतिष्ठते एवं सोऽपि स्वेच्छयैवानाविष्कृतस्रष्टृत्वादिसामर्थ्य आस्त इत्यर्थः ॥ ११ ॥ ❀ ❀ एवमन्तरावस्थितिमभिधाय तस्य ब्रह्माण्डसृष्ट्यौन्मुख्यमाह चतुरिति। सहस्रशब्दोऽनंतवाची अनेककालमित्यर्थः। चतुर्युगानां कृतादीनां सहस्रमप्सु स्वपन्नत एवासादितलोके तन्त्रः असंपादितलोकरचनः स्वयोगेरितया स्वसंकल्पप्रेरितया स्वशक्त्या स्वापृथक्सिद्धविशेषणभूतया कालरूपशक्त्या हेतुभूतया तयोपलक्षित इति वानिपीतानर्पितान् लोकान्स्वदेहे ददृशे लोककारणभूतान् भूतसूक्ष्मरूपानर्थान् दृष्टवानित्यर्थः। स्वदेह इत्यस्य दिव्यविग्रहाश्रये नत्वधिष्ठिते प्रधाने इत्यर्थः "श्रीवत्ससंस्थानधर्ममनेन च सूत्रितं प्रधान, मिति हि पराशरवचनं देहशब्दस्य दिव्यमङ्गलविग्रहपरत्वमपि तत्वं सद्वारकं देहशब्दः प्रधानपरो वा "यस्याव्यक्तं शरीर, मिति हि श्रुतिः अत्र चतुर्युगानां सहस्रं स्वपत इत्युक्त्या नाभिदेशात्स पद्मकाशः सहसोदतिष्ठदित्यभिधानेन "क्रमेण त्वविवृद्धं तज्जलबुद्बुदवत्स, मिति वचनार्थः स्मारितो भवति अण्डसृष्टौ प्रारब्धायां गृहगोपुरादिनिर्माणेष्विव विलम्बो नेति हि तस्यार्थः ॥ १२ ॥ ❀ ❀ अथ ब्रह्माण्डोत्पत्तिमाह द्वाभ्यां तस्येति। अर्थसूक्ष्माभिनिविष्टदृष्टे भूतसूक्ष्मेषु प्रवर्त्तकसंकल्परूपज्ञानस्य तस्य भगवतोऽन्तर्गतः देहान्तर्गतः तनीयान्सूक्ष्मतरः अर्थः भूतसूक्ष्मवर्गकालानुगतेन कालवशादुन्मिषितेन रजसा गुणेन विद्धः स्पृष्टः सूत्यन्प्रसोष्यन्नुद्भविष्यन् नाभिदेशान्निरभिद्यत उदभूदित्यर्थः। रजसा उद्धतरजसा

भूतसूक्ष्मजातं जगत्पद्मरूपेण परिणतमित्यर्थः । रजःशब्देन पद्मरागसमाधिश्च सूच्यते ॥१३॥ ❀ ❀ कथंभूतो निरभिद्यत इत्यत आह सः तनीयानर्थः आत्मयोनिः आत्मा योनिः कारणं यस्य स आत्मयोनिः परमात्मसृष्टः पद्मकोशः लोकात्मकपद्मरूपः कर्म जीवादृष्टं तत्प्रतिबोध्यतेऽनेनेति तथा कालेन सहसा न क्रमेणेत्यर्थः । उदतिष्ठत् कथंभूतः पद्मकोशः स्वरोचिषा विशालं तत्सलिलमावर्णजलं सूर्य इव विद्योतयन् ॥ १४ ॥ ❀ ❀ अथ भगवन्नाभिदेशादुत्पन्नब्रह्माण्डरूपपद्मकोशे चतुर्मुखोत्पत्तिमुत्पन्नस्य तस्य व्यापारं च वक्ष्यंस्तस्य तदधिष्ठितपद्मस्य च भगवतात्मकत्वमाह अर्द्धेन तदिति । उ इति संबोधने विस्मये वा सर्वगुणावभासं जीवोपभोग्यानर्थावभासयतीति तथा तल्लोकपद्मं स एव यस्माज्जातं स एव विष्णुः प्रावीविशदन्तर्यामितया प्रविष्टोऽभूत् । निवृत्तप्रेरणाद्विशेर्णिच् धिष्ण्यमिति पाठान्तरं तदा सर्वे गुणा स्रष्टृत्वौपायिका गुणाः तैरवभास्यते इति तथाभूतं स्वात्मकं जीवविशेषं लोकपद्मरूपं धिष्ण्यं प्रावीविशत्प्रविष्टमकरोन्नाभिसरसिजे स्थापयामासेत्यर्थः । कोऽसौ स्वात्मको जीवविशेष इत्यपेक्षायां तद्विशदयंस्तस्य तत्रोत्पत्तिमाह तस्मिन्निति । यं स्वयम्भुवं प्रवदन्ति स वेदमयो वेदप्रचुरः विधाता स्रष्टा तस्मिन्पद्मेऽभूदुत्पन्नः उदाप्लुतमित्यादयः श्लोका अवान्तरप्रलयपरा वा वर्णनीयाः तदानीमर्थः सुगमः तथाहि पूर्वं सर्गांश्चैवानुसर्गांश्चेति चतुर्मुखात्पूर्वोत्तरसृष्ट्याः "पृष्टत्वात्तत्र भगवानेक आसेदमग्र आत्मात्मनां विभु" रित्यादि महाप्रलयकथनपूर्वकं चतुर्मुखात्प्राक्तनसर्गस्य कथितत्वात् तपजीव्येदानीमवान्तरप्रलयकथनपूर्वकमवान्तरसर्गः चतुर्मुखपाश्चात्यः दैनन्दिनः कथ्यते तत्र दैनन्दिनसर्गाणां तत्प्रलयानां च बहुत्वात्तत्कथनस्य तच्छ्रवणस्य चाशक्यत्वात्पूर्वपरार्धान्तिमं पाद्माख्यं कल्पमेतत्कल्पापेक्षया सन्निहितत्वात्कथयितुं प्रलयपूर्वकत्वात् सृष्टेः सृष्टिप्रकरणेषु 'सदेव सौम्येदमग्र आसी, दित्यादिप्रलयकथनपूर्वकमेव सृष्टिकथनाच्च प्रथमं पाद्मकल्पात्प्राक्तनं प्रलयमाह उदाप्लुतमिति । 'निशायामनुवृत्तायां, निर्मुक्तशशिभास्कर, मित्यारभ्य प्लावयन्त्युत्कटाटोपचण्डवातेरितोर्मय' इत्यन्तं वक्ष्यमाणरीत्या विश्वं त्रिलोकात्मकं जगदुदाप्लुतमासीदित्यर्थः । अन्यत्पूर्ववत् एवं प्रलयमभिधाय सर्गं वक्तुमारभते तस्येत्यादिना । प्राक्कल्पान्ते धाता भगवतो योगनिद्रायां त्रिलोक्या सह भगवति तिरोहितः तस्मिंश्च प्रबुद्धे तत एव पाद्मे कल्पे पद्मद्वारेणाभिव्यक्तिं प्राप्त इति कथयितुं पद्मोद्भवमाह तयेति द्वाभ्याम् । धिष्ण्यं प्रावीविशत्स्वस्थानप्रविष्टमकरोन्नाभिसरसि स्थापयामासेत्यर्थः । अन्यत्पूर्ववत् ॥१५॥ ❀ ❀ अस्य चतुर्मुखाख्यजीवविशेषस्य कर्मणा संकुचितज्ञानस्य भगवदुपासनयैवाविर्भूतज्ञानक्रियाशक्तेर्लोककर्तृत्वं न स्वत इति वक्तुं तस्य प्रथमं मोहनमाह तस्यामित्यादिना द्वाभ्याम् । स च स्वयंभूः । तस्यां जगत्पद्मकर्णिकायामवस्थितस्तिष्ठन् लोकं प्रपंचमपश्यमानः तद्दर्शनार्थं व्योम्नि विवृत्ते नेत्रे यस्य सः परिक्रमन्कमलमध्ये चतुर्दिक्षु परिभ्रमन् चत्वारि मुखानि लेभे प्राप्तवान् ॥ १६ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली ।

नमस्कारस्याष्टाङ्गविशिष्टत्वं सूचयतीत्याह मुहुर्गृणन्त इति । अस्य शेषस्य कृतानि कर्माणि अनुरागेण भक्त्या स्खलितपदानि यस्मिंस्तत्तथोक्तं तेन वचसा तज्ज्ञानप्रकारं कर्मप्रकारं च जानन्त इत्यर्थः, देवाः किरीटाद्यलंकारवन्तः श्रूयन्ते कोऽस्यालंकारो येन देवमित्युक्तिः सार्था स्यादिति तं विशिनष्टि किरीटेति । सहस्रमेव साहस्रं किरीटानां सहस्रे प्रत्युप्तानां मणीनां प्रवेकैः श्रेष्ठैः प्रद्योतितं प्रकाशितमुद्दाममुत्कृष्टं च फणानां सहस्रं यस्य स तथोक्तस्तम् ॥ ६ ॥ ❀ ❀ तेन सङ्कर्षणेन सनत्कुमाराय प्रोक्तं इदं पुराणं त्वत्प्रश्नपरिहारत्वेन वक्ष्यामीत्येतावता पूर्णत्वात् सांख्यायनायेत्यादिकथनेन किं प्रयोजनमित्याशङ्क्य पुराणाध्येतृगुरुपरम्पराकथनं श्रोतॄणामतिशयवुद्ध्या तच्छ्रवणादौ क्षिप्रं निरन्तरं प्रवृत्तिः स्यादिति महाप्रयोजनमस्तीति सूचयन्नाह । प्रोक्तमित्यादिना । निवृत्तिधर्माभिरतत्वादिकं पुराणश्रवणाद्यधिकारसंपत्त्यर्थमुच्यत इति ज्ञातव्यम् ॥ ७ ॥ ८ ॥ ९ ॥ ❀ ❀ तदेवं शुकः पाद्मकल्पमिमं शृण्वित्युक्तं पाद्मं कल्पं मैत्रेयेण विदुरप्रश्नपरिहाररूपत्वेन कथयति उदाप्लुतमिति । अनीहोऽक्लिष्टकारी अनः प्राणोऽस्यास्तीति अनो प्राणी तदर्थमीहा चेष्टावतारादिचरितं यस्य सोऽनीहः उपरतसर्गादिव्यापारो वा स्वात्मनि रतौ कृतक्षणौ लब्धावसरः अहीन्द्रस्यानन्तस्य तल्पे भोगाख्यशय्यायामधिशयानो यद्यदा मीलितदृक् विनिद्रोऽपि निद्रामीलितलोचनो न्यमीलयत् योगनिद्रामुद्रितनेत्रः अभूत् तदेदं विश्वं उदाप्लुतं उदे जले प्लुतं गतं मग्नं कल्पप्रलये जलशायिश्रीनारायणोदरगतमासीदित्यर्थः ॥ १० ॥ ❀ ❀ तदोदरीकृतलोकयात्रो हरिः किं चकारेति तत्राह । सोऽन्तरिति । यथाऽनलो दारुणि काष्ठे रुद्धवीर्यः प्रतिबद्धदाहकत्वशक्तिर्वसति तथा हरिरपि शरीरान्तर्हृदयाकाशेऽर्पितानि स्थूलकार्यदेहस्य लीनत्वाद्भूतानां सूक्ष्माणि रूपाणि यस्य स तथा यद्वा शब्दादितन्मात्रारूपाणि एतदात्मकत्वात्सर्वस्येति चराचरात्मकं सर्वं गृह्यते कालाख्मिकां प्रलयकालमात्राख्यां शक्तिं यद्वा प्रलयकालाभिमानिनीं शक्तिं भार्यां सुखे प्रेरयन् स्वे पदे स्वस्थाने सलिले उवासेत्यन्वयः । उदीर्याणः उदीर्यमाण इति शानचा स्वात्मनीति सूचयति ॥ ११ ॥ ❀ ❀ स्वप्नावधिमाह । चतुर्युगानामिति । चशब्देनोवासेति पदमनुकर्षति चतुर्युगानां सहस्रमिति संख्यातं कालं स्वपन्नप्स्वूवासेति तत उत्तरकाले का क्रियाभूदिति तत्राह तयेति । सृष्टिसंहारशक्त्योरेकत्वद्योतनाय तयेति । परामृष्टं सृष्टिकालाख्ययोदीरितया प्रेरितया स्वशक्त्याऽऽसादितकर्मतन्त्रः सृष्ट्यर्थमुपस्थापितजगत्सर्गादृष्टाख्यसाधनः नित्यज्ञानगोचरत्वादिमान् लोकान् स्वदेहे हृदयाकाशे ददृशे । अपिशब्दात्त्रिविधानपश्यदिति ग्राह्यं दृष्टा सिसृक्षुरभूदिति वा । अपीतानित्यपि पाठः ॥ १२ ॥ ❀ ❀ सिसृक्षोस्तस्मादादौ किमभूद्येन तद्विशेषणोपादानं प्रयोजकं स्यादिति

तत्राह। तस्येति। यदा सिसृक्षुरभूत्तदार्था गर्भोदकलक्षणः तस्य हरेर्नाभिदेशादभिद्यत नाभिदेशं भित्त्वा प्राकाशतेत्यन्वयः। हरेः स्वातन्त्र्यद्योतनार्थं भावप्रयोगः हरेः सृज्येष्वशेषविशेषज्ञानमस्ति न केवलं कुलालवद्युक्तिज्ञानमेवेति भावेनाह आत्मेति। आत्मनि स्थितेषु सूक्ष्मेषु योगिप्रत्यक्षविषयेषु आकाशादिभूतेषु इन्द्रियेषु जीवेषु वाऽभिनिविष्टा सम्यक् विषयीकृता दृष्टिरपरोक्षज्ञानं यस्य स तथा तस्य घटकारणादिवत् बाह्यार्थो नेत्याह अन्तर्गत इति। अनेनाव्भूतस्योदरे सत्त्वमुक्तं भवति, इतोऽपि बाह्योदकं नेत्याह। तनीयानिति परमाणुत्वं प्राप्तः गर्भोदकस्य प्रागेव सत्त्वात् किमिति कार्यानुत्पत्तिरिति तत्राह रजसेति। रजसा गुणेन विद्धोऽनुस्यूतः रजसोऽपि सत्त्वात् किमिति ततः पूर्वमनुत्पत्तिरित्यतः कालेति सृष्टिकालशक्त्या अनुत्पन्न इति भावः। अनेनेश्वरस्येच्छा मुख्यं कारणमित्युक्तं भवति वासमन्तरेण कथमुत्पत्तिर्घटत इत्यत उक्तं शुष्यन्निति। शुष्यन् घनीभवन् वायुनेति शेषः उदकं वायुना शुष्यद्भिन्नपद्ममभूद्धरेरिति॥ १३॥ ❀ ❀ उक्तकारणानां बहुत्वात् किमस्य मुख्यं कारणं यस्य स आत्मयोनिः कर्मणाऽदृष्टेन प्रतिबोधितेन फलदानाय प्रेरितेन कालेनेरित इति शेषः। उदतिष्ठत् यथा चतुर्दशभुवनं स्यात्तथा प्रवृद्धोऽभूदित्यर्थः॥ १४॥ ❀ ❀ चेतनसंबन्धमन्तरेणाचेतनस्य पद्मस्य सूर्यवत् प्रकाशकत्वं कथं मण्यादीनामीश्वरेच्छया तेजःपरमाणूनां प्राचुर्येण संयोगसंभवात् कथंचिद्युज्यते अस्य तु रजसेति पार्थिवपरमाणुभ्य उत्पत्तिकथनात् तेषां तादृशशक्त्यदर्शन अतः .कारणान्तरेण भाव्यम्, तत्किं तत्राह तल्लोकेति। यस्मात् पद्ममभूत् स एव विष्णुस्तल्लोकविभागकारणं पद्मं प्राविशत् यथा सूर्यवत् प्रकाशकत्वमाहात्म्यं स्यात्तथाविष्टवान् उकारेण रूपान्तरेण प्रवेशं सूचयति एवकारेणाणुमात्रमपि भेदो नास्तीति निर्धारयति भेददर्शनेन संतापलक्षणं दुःखं स्यादित्यर्थवाची वोकारः "उ तापेऽव्ययमीशाने" इति यादवः। विष्णोरेव प्रकाशकत्वं न पद्मस्य तस्य पृथिव्यात्मकत्वादिति भावेनाह सर्वेति। सर्वेषां शब्दादिगुणानामवभासः प्रतीतिर्यस्यां पृथिव्यां सा सर्वगुणावभासा तदात्मकत्वात् पद्ममपि गुणावभासमित्युच्यते तदुक्तं "तस्यासनविधानार्थं पृथिवी पद्ममुच्यत" इति तत्प्रवेशप्रयोजनमाह तस्मिन्निति। तस्मिन्पद्मे सन्निविष्टात् स्वयं प्रधानात्सर्वोत्तमाद्धरेः स विधाताऽभूदित्यन्वयः। प्रधानवाचकस्त्वेकस्त्वनन्यः केवलः स्वयमिति अतः स्वयंशब्दस्य प्रधानवाचित्वेऽपि विष्णोर्जातत्वं कथमवगतमितीयं शङ्का "पद्मसंस्थाद्धरेस्तत्र ब्रह्माजनि चतुर्मुख" इत्यनेन परिहर्तव्येति। ननु विधातेति क इति तत्राह स्वयंभुवमिति। अनेनाजत्वमपि व्याख्यातम्। आद् विष्णोर्जात इति पद्मे स्वयं संभूत इति च प्रत्युक्तम्। उक्तप्रमाणादन्यथा जनिकर्तुः प्रकृतिरिति सूत्रविरोधश्च सर्वस्याग्रे हरेर्जातश्चतुर्मुख इति निश्चेतुं तस्य नामान्तरं ध्वनयति वेदमय इति। मयगताविति धातोर्वेदेन गम्य इति वेदमयः लक्ष्मीनारायणावन्तरेण वेदप्रतिपाद्येषु प्रधानत्वाद्वा "हिरण्यगर्भः समवर्त्तताग्रे भूतस्ये"ति श्रुतिः "यो ब्रह्माणं विदधाति पूर्व"मिति च पद्मभूतत्वमपि पद्मस्थितविष्णुभूतत्वमेवार्थ इत्यङ्गीकर्तव्यम्॥ १५॥ ❀ ❀ नन्वत्र जातः स्वयंभूर्विष्णुः स्यात्स्वभूरिति प्रसिद्धेर्न ब्रह्मा विष्णोः पद्मप्रवेशाच्चेति तत्राह तस्यामिति। लोकं पृथिव्यादिकं स्वेतरं जनं वाऽपश्यमानः विवृत्तनेत्रः पर्यस्तलोचनः अत्र जातो ब्रह्मैव भवेत्तस्य चतुर्मुखत्वोक्तेः॥ १६॥

## श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

अथ विभूतिकथनाय तदेव पुराणं प्रवर्त्तयति। उदाप्लुतमित्यादिना विश्वमत्र लोकत्रयं सोऽन्तरिति। भूतसूक्ष्म इत्यत्र। विलीनपार्थिवांशतन्मात्रसहितानि त्रैलोक्यगतजीवानां लिङ्गशरीराण्येव ज्ञेयानि। यान्येव समष्टिलिङ्गशरीरमित्युच्यते त्रिलोकाद्बहिर्जलादीनां विद्यमानत्वात्। तेषामन्तःशरीरेऽर्पणार्थमेव कालात्मिकामित्यादिजलस्तम्भनशक्त्या जलाभ्यन्तरे शयितत्वाद्बहिःस्थितानां महर्लोकादिवासिनां दृष्ट्यविषयत्वात् तस्माद्युगान्तश्वसनावघूर्णजलोर्म्मिचक्रात्सलिलाद्विरूढम्। अपाश्रितः कञ्जमिति वक्ष्यमाणाच्चानलदृष्टान्तः संगमनीयः॥ ११॥ ❀ ❀ स्वप्नानन्तरं च आसादितं जीवेषु संयोजितं कर्म्मतन्त्रं येन सः॥ १२॥ ❀ ❀ सूक्ष्यन् स्वकार्य्यं जनयिष्यन् अभिद्यत उद्भूतः प्रवृद्ध इत्यर्थः॥ १३॥ ❀ ❀ पद्मकोषोऽयं नारायणनाभिकमलादन्य एव जातः प्राकृतार्थमयत्वात्॥ १४॥ ❀ ❀ तल्लोकेति। स गर्भोदकशाय्येव विष्णुरूपः सन्॥ १५॥ ❀ ❀ तत्रैव परिक्रमन् भ्रमन् विवृत्तनेत्रः श्वसन् युगपत् चतुर्दिशो दर्शनोत्कण्ठया चत्वारि मुखानि लेभे॥ १६॥

## श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी।

कृतानि कर्म्माणि गृणन्तः केन अनुरागेण स्खलन्ति पदानि यस्मिन् तेन वचसा तानि जानन्तीति तज्ज्ञा इति स्वामिचरणाः। कृतानि लीलाः सहस्रमेव साहस्रं तत्र मणिप्रवेकैः रत्नमुख्यैः। "मुख्यवर्य्यवरेण्याश्च प्रवेकानुत्तमोत्तमा" इत्यमरः। अपृच्छन्निति पूर्व्वेणैवान्वयः॥ ६॥ ❀ ❀ तेन सङ्कर्षणेन सनत्कुमाराय भगवत्तमेनेति स्वार्थे तमप्। यद्वा जगदुत्पत्त्यादिज्ञानवत्सु श्रेष्ठेन॥ ७॥ ❀ ❀ बृहस्पतेर्बृहस्पतये॥ ८॥ ❀ ❀ स पराशरः पुलस्त्येनोक्त इत्यत्रेयं कथा पितरं राक्षसभक्षितं श्रुत्वा पराशरो राक्षससत्रे प्रवृत्तो वशिष्ठवचनान्निवृत्तस्ततः पुलस्त्येन स्वसन्ततिरक्षणात्तुष्टेन वरो दत्तः पुराणप्रवक्ता भवेति॥ ९॥ ❀ ❀ तं देवं श्रीभागवतस्य संकर्षणात् संप्रदायप्रवृत्तिं प्रदर्श्य तत्कथामारभते। उदाप्लुतं एकार्णवोदक-

निमग्नमेव तदा आसीत् । कदा यद्यदा नैमित्तिकप्रलये अमीलितदृक् अतिरोहितचिच्छक्तिरेव गर्भोदकशायी श्रीनारायणो नेत्रे निमीलितवानित्यर्थः । तल्पे इत्यार्षं स्वात्मभिः स्वरूपशक्तिभिः सह रतौ रमणे कृतोत्सवः । निरीहः त्यक्तमायाविनोदः ॥ १० ॥ ❀ ❀ ननु त्रैलोक्यगतानां जीवानां तदा का वार्त्तेत्यत आह अन्तःशरीरे स्वशरीरमध्य एव अर्पितानि भूतसूक्ष्माणि त्रैलोक्यगतदेवमनुष्यादिसूक्ष्मशरीराणि येन सः । केन प्रकारेणेत्यत आह कालाख्यिकां कालरूपां स्वशक्तिमुदीरयन् प्रेरयन् तदिच्छावशात् प्रलयारम्भकालेनैव त्रिलोकस्थानां सर्व्वेषां स्थूलशरीराणि ध्वंसयित्वा लिङ्गशरीराणि भगवदन्तःशरीरे अर्पितानि यान्येव समष्टिलिङ्गशरीरमाहुरित्यर्थः । एवम्भूतः स स्वे पदे पातालतले स्वस्थाने सलिले एकार्णवोदकप्लुतेऽपि जलस्तम्भनशक्त्या उवास । ततश्च महर्लोकादिवासिनां दृष्टयविषयत्वे तस्य दृष्टान्तः यथानल इति ॥ ११ ॥ ❀ ❀ एवं कियन्तं कालं स विशश्रामेत्याह चतुरिति । स्वया चिच्छक्त्या जाग्रत्या सह जाग्रदपि स्वपन् मायाशक्त्या शयितया सह शयान एवेत्यर्थः । ततश्च प्रलयावसानसमये स्वशक्त्या कालाख्यया आसादितं भोगायर्थं संयोजितं स्वान्तःस्थितजीवेषु प्रतिस्वं कर्मतंत्रं येन सः । ततश्च लोकानपि ब्रह्मादिस्थावरान्तानपि तनीयान् सूक्ष्मरूपेण स्वस्मिन् प्राप्तान् ददृशे स्वशरीरान्निष्क्रमयितुमिति भावः ॥ १२ ॥ ❀ ❀ उक्तपोषन्यायेनाह तस्य नारायणस्य अर्थसूक्ष्मेषु सर्वजीवलिङ्गदेहेषु अभिनिविष्टा निष्कासनेच्छया प्रविष्टा दृष्टिर्यस्य तस्य अन्तर्गत एवार्थः । प्राकृतपदार्थविशेषः तनीयानतिसूक्ष्मोऽपि कालानुसारिणा रजसा गुणेन विद्धः संक्षोभितस्ततश्च सूष्यन् प्रसोष्यन् नाभिदेशादुदभिद्यत ऊर्ध्वमुपससर्प ॥ १३ ॥ ❀ ❀ स चार्थः कालेन पद्मकोषः सन्नुदतिष्ठन् प्रलयमहार्णवजलादप्यूर्ध्वप्रदेशे तस्थौ, कर्माणि जीवादृष्टानि प्रतिबोधयतीति तेन आत्मा श्रीविष्णुर्योनिर्यस्य सः अर्क इवेति स्वप्रभयैव स व्यकर्षदिति तत्प्रकाशनार्थमर्कान्तरापेक्षा नास्तीति भावः ॥ १४ ॥ ❀ ❀ ततश्च तल्लोकपद्मं लोकात्मकं वैराजमित्यर्थः । उ इति सम्बोधने । स एव प्रलयारम्भे यस्योदरमेव वैराजः सूक्ष्मरूपेण प्राविशत् प्रलयान्ते च ततः पद्मरूपेणाविर्भूतः वैराजः स एव गर्भोदशायी विष्णुः प्रावीविशत् स्वार्थे णिच् अन्तर्यामित्वेन प्रविवेश । पद्मं कीदृशं सर्वेषां गुणानां गुणकार्याणां जीवभोग्यानां स्वर्गनरकादीनां अवभासः प्रकाशो यत्र तत् तस्मिन् पद्मे विधाता ब्रह्मा अभूत् । कोऽसौ अदृष्टपितृकत्वेन यं स्वयम्भुवं वदन्ति सः । प्राक्कल्पान्ते नारायणेन सह निद्रया एकीभूत आसीत् । तस्मिन् प्रबुद्धे तत एव पद्मद्वारेणाभिव्यक्त इत्यर्थः । अत्र स्थूलो वैराजः सूक्ष्मो हिरण्यगर्भः सृष्ट्यादिकर्त्ता चतुर्मुख इति ब्रह्मण एव त्रैरूप्यं ज्ञेयम् ॥ १५ ॥ ❀ ❀ परिक्रमन् तत्रस्थ एव लोकनिरीक्षणार्थं ग्रीवां चालयन् युगपदेव दिक्चतुष्टये व्योम्नि निर्जनत्वादाकाशमात्रे निवृत्तनेत्रः निक्षिप्तदृष्टिः अनुदिशं चतुर्दिक्षु चत्वारि मुखानि लेभे ॥ १६ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः ।

सहस्रमेव साहस्रं किरीटानां साहस्रे ये मणिप्रवेकाः मण्युत्तमाः तैः प्रद्योतितम् उद्दामानां श्रेष्ठानां फणानां सहस्रं यस्य तमप्रच्छन्निति पूर्वेणान्वयः ॥ ६ ॥ ❀ ❀ तेन पातालतलगतेन सनत्कुमाराय एतद्भागवताख्यं शास्त्रं प्रोक्तं वर्णितं वर्णनप्रयोजनं वक्तुं सनत्कुमारं विशिनष्टि । निवृत्तिधर्माभिरताय मोक्षधर्मप्रवर्तकाय । तदुक्तं मोक्षधर्मे

> सनः सनत्सुजातश्च सनकः स सनन्दनः । सनत्कुमारः कपिलः सप्तमश्च सनातनः ॥ १ ॥
> सप्तैते मानसाः प्रोक्ता ऋषयो ब्रह्मणः सुताः । स्वयमागतविज्ञाना निवृत्तिधर्ममास्थिताः ॥ २ ॥
> एते योगविदां मुख्याः सांख्यज्ञानविशारदाः । आचार्या धर्मशास्त्रेषु मोक्षधर्मप्रवर्तकाः ॥ ३ ॥

इति वैष्णवे च भृग्वाद्युत्पत्तिमुक्त्वा "सनन्दनादयो ये च पूर्वं सृष्टास्तु वेधसा । नैते लोकेषु सज्जन्ते निरपेक्षाः प्रजासु ते ॥ सर्वे ते चागतज्ञानाः वीतरागा विमत्सराः । आचार्या मोक्षधर्मस्य मोक्षशास्त्रप्रवर्तकाः" इति । अत्रापि प्राक्कल्पसंप्लवविनष्टमिहात्मतत्त्वं सम्यग्जगाद मुनयो यदचक्षतात्मन्नित्युक्तम् । ननु पातालतले शेषः कश्यपपुत्रोऽप्यस्ति तस्यापि अनन्तसंकर्षणादिसंज्ञाः संति स किं सनत्कुमाराय मोक्षप्रयोजनकमिदं प्रोक्तवानित्यत्राह भगवत्तमेनेति । शेषोऽपि भगवान् संकर्षणांशत्वात् तस्याप्यंशी साक्षात्संकर्षणः भगवत्तमः अनयोर्भेदः दशमस्कन्धे स्फुटतरः "वासुदेवकलानन्तः सहस्रवदनः स्वराट् । अग्रतो भविता देवः" इति संकर्षणं भगवन्तमभिधाय तस्य गोकुले वासं प्रतिपाद्य पुनः शेषोऽन्वगाद्वारि निवारयन् फणैरिति भगवान् शेष उक्तः । स च पुनः यस्यैकांशेन विधृता जगती जगतः पतेरित्यनेन भगवत्तमसंकर्षणांशत्वेनोक्तः तस्य कश्यपपुत्रस्य स्वपितृपितामहपूज्यं सनत्कुमारं प्रति श्रीमद्भागवतवर्णनेऽधिकाराभावात् सामर्थ्याभावाच्च तदंशिना साक्षात्संकर्षणेनेत्यर्थः । स च सनत्कुमारः सांख्यायनाय आह ॥ ७ ॥ ❀ ❀ पारमहंस्ये परमहंसानां धर्मे मुख्यः प्रधानः विवक्षमाणः वक्तुमिच्छुः अन्विताय अनुगताय ॥ ८ ॥ ❀ ❀ स दयालुः पराशरः पुलस्त्येन पुराणाचार्यो भविष्यतीत्युक्तः आद्यं सनातनं पुराणं श्रीमद्भागवताभिधं मह्यं प्रोवाच एतत्पुराणं तव कथयामि । पुलस्त्येनोक्त इत्यत्राख्यायिका पराशरः राक्षसेन भक्षितं शक्तिसंज्ञकं पितरं श्रुत्वा राक्षससत्रे प्रवृत्तः पितामहस्य वसिष्ठस्य वाक्येन राक्षससत्रान्निवृत्तस्ततः पुलस्त्येन स्वसंततिरक्षणात्तुष्टेन पराशराय वरो दत्तः पुराणप्रवक्ता भविष्यतीति ॥ ९ ॥ ❀ ❀ एवं संकर्षणात्सनत्कुमारेणानीयेह प्रवर्तितं श्रीमद्भागवतं पुराणं पराशरान्मया लब्धमित्युक्तमथ श्रीमद्भागवतबलेनैव प्रस्तुतप्रश्नानां प्रत्युत्तराणि विवक्षुः प्रथमं पद्मोत्पत्तिं दर्शयति उदाप्लुतमित्यादिना । यत् यदा भगवान् मह-

दादीन् सृष्ट्वा तैर्ब्रह्माण्डं विधाय तत्र ब्रह्माण्डान्तर्गतजले गर्भोदसंज्ञके अहीन्द्रतल्पे निरीहः त्यक्तलोकव्यापारः आत्मरतौ सत्याम-धिशयानो न्यमीलयत् नेत्रे निमीलितवान्। कथंभूतः अमीलितदृक् अतिरोहितज्ञानदृष्टिः तदा स्वाधारनारायणद्वारा इदं पद्माकारेणो-त्पन्नतया वक्ष्यमाणं भुवनत्रयमुदोदकेन प्लुतं निमग्नमासीदित्यन्वयः। चतुर्मुखो यन्नाभ्यात्पद्माज्जातस्तस्मिन्नारायणे प्रविश्य प्रत्यहं स्वपिति पुनरुत्थाय त्रिलोकीं सृजति स नारायणः ब्रह्माण्डान्तर्जले अन्तः स तस्मिन्सलिले आस्तेऽनन्तासनो हरिरिति वक्ष्यमाणत्वात् तदन्तर्गतं लोकत्रयं पद्मात्मना स्थितमभूत् 'लोकानपीतान् ददृशे स्वदेहे' इति वक्ष्यमाणत्वात् अतो युक्तमुक्तमुदाप्लुतमिति तथा चैकादशे "मया संचोदिता भावाः सर्वे संहत्यकारिणः। अण्डमुत्पादयामासुर्ममायतनमुत्तमम्। तस्मिन्नहं समभवमण्डे सलिल-संस्थितौ। मम नाभ्यामभूत्पद्मं विश्वाख्यं तत्र चात्मभूः॥" इति॥ १०॥ ❀ ❀ स भगवाननन्तः शरीरे अर्पितानि निहितानि भूतसूक्ष्माणि लोकपद्मरूपेण सृज्यमानानि भोक्तृभोग्यरूपाणि येन सः कालात्मिकां शक्तिमुदीरयाणः कालरूपां स्वीयां शक्तिं प्रेरयन् तदुदीरणं पुनः सृष्ट्यवसरे प्रबोधनार्थं सलिले यत्स्वीयं पदं स्थानं तस्मिन् वहिर्व्यापाराभावे दृष्टान्तः दारुणि यथा रुद्धं वीर्यं दाहकत्वादि यस्य सः॥ ११॥ ❀ ❀ स्वया स्वेच्छया स्वपन् स्वशक्त्या कालाख्यया पूर्वमेव प्रबोधनार्थमुदारितयोपलक्षितः आसादितं संपादितं कर्मतन्त्रं क्रियाकलापो येन सः अपीतान् लीनान् ददृशे॥ १२॥ ❀ ❀ अर्थसूक्ष्मे उत्पादनीये पद्मेऽ-भिनिविष्टा दृष्टिर्यस्य तस्य अन्तर्गतः तनीयान् सूक्ष्मतरः कालानुगतेन कालप्रबोधितेन रजसा गुणेन विद्धः संक्षोभितः सन् सूष्यन् प्रसोष्यन् उद्भविष्यन् नाभिदेशात्तदा अभिद्यत निरभिद्यत॥ १३॥ ❀ ❀ स तनीयानर्थः पद्मकोशः सन् कर्म जीवादृष्टं बोध्यतेऽनेनेति तथा तेन उदतिष्ठत् ;कथंभूतः आत्मा परमात्मा योनिर्हेतुर्यस्य सः॥ १४॥ ❀ ❀ सर्वान् गुणान् जीवानां भोग्यानर्थानवभासयतीति तथा तत् लोकपद्मं स एव पद्मनाभः प्राविविशत्। उ इति संबोधने तस्मिन् अन्तर्यामितया विष्णु-नाधिष्ठिते पद्मे स्वयं प्रथमं केवल एव वेदमयः वेदप्रचुरः "यो ब्रह्माणं विदधाति पूर्वं तस्मै वेदांश्च प्रहिणोती"ति श्रुतेः भगवदुप-देशेन लब्धवेद इत्यर्थः, अभूत् जातः। कोऽसावदृष्टपितृकत्वेन यं स्वयंभुवं वदन्ति यो भगवतैव पूर्वकल्पे मनसा वेदोपदेशतः शिक्षितः वेदप्रचुरः शब्दब्रह्माख्यः चतुर्युगसहस्रपरिमिते भगवच्छयनकाले तत्र शयानः शयनकालसमाप्तौ तस्मिन्प्रबुद्धे तत एव पाद्मे कल्पे पद्मद्वारेणाभिव्यक्तिं प्राप्तः। तथोक्तं मोक्षधर्मे "ब्राह्मे रात्रिक्षये प्राप्ते तस्य ह्यमिततेजसः। प्रसादात्प्रादुरभवत्पद्मं पद्म-रुहेक्षण॥ तत्र ब्रह्मा समभव" दिति। आदौ ब्रह्मकल्पस्तत्र महदादिसृष्टिपूर्वकब्रह्माण्डरचनाशब्दब्रह्मोत्पादनादिलीला तद्रात्रिक्षये पद्मकल्पस्तदान्तरालिककल्पान्तराङ्गीकारे आन्तरालिके पाद्मब्रह्मकृतसृष्ट्यभावप्रसङ्गः। अतः कचिन्नामान्तराण्यनयोरेवेति दिक्॥ १५॥ ❀ ❀ यः ब्रह्मकल्पे वेदमयः स ब्रह्मा पद्मकल्पे चतुर्मुखो जात इत्याह तस्यामिति॥ १६॥

## श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

तेषां सङ्कर्षणज्ञानपर्यन्तं ज्ञानं सिद्धमिति ज्ञापयितुं वासुदेवज्ञानस्याऽत्यभीष्टत्वं विज्ञापयितुं ते स्तुवन्तीत्याह—मुहुर्गृणन्त इति। भक्त्युद्रेकान्मुहुर्गृणनम्। ज्ञाननिष्ठानां मनसा गृणनं सम्भवतीति प्रेमोल्लासख्यापनार्थं वचसेत्युक्तम्। ततोऽप्याधिक्याय स्खलत्पदेनेति। 'यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ। तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः॥' इति वाक्यात् वासुदेव इवाऽस्मिन्नपि प्रेमाऽऽह। अनुरागेण स्खलन्ति पदानि यस्मिन् इति। कविवन्नूतनकल्पनया स्तोत्रं वारयति—अस्य कृतानीति। अस्य सङ्कर्षणस्य कृतानि चरित्राणि तत्प्रतिपादकवचसा गृणन्त इति संबन्धः। नूतनपरिचयं व्यावर्तयन् सङ्कर्षणैकतानतां तेषामाह—तज्ज्ञा इति। सङ्कर्षणस्य कृतं जानन्तीति तथा। अन्यस्मै पूर्वोक्तलक्षणरहिताय भागवतं न वक्तव्यमिति। तदोक्तम्। तस्य संकर्ष-णस्याऽवतार इव रूपान्तरेण स्थितिं वारयत्यानुषङ्गिकदोषाभावाय—किरीटसाहस्रेति। किरीटानां यत्साहस्रं सहस्रसमूहः, तत्र ये मणिप्रवेका मण्युत्तमास्तैः प्रद्योतिता य उद्दामाः फणाः, तेषां सहस्रं यस्य। किरीटानामनादरार्थे साहस्रपदप्रयोगः, तेन नित्यनूतनानि किरीटानि भवन्तीति ज्ञापितम्। मण्युत्तमैः प्रद्योतितत्वेन सहस्रफणदर्शनं स्पष्टं ज्ञापितम्। अनेन दर्शनेनाऽपि भयं निवारितम्। गुणातीतत्वज्ञापनाय—उद्दामेति, प्रलयसाधकत्वात् कालान्तरे तेषां दाम्नेव सङ्कोचः सम्भवति, तदपि निषिध्यते। तथाकरणं तत्रत्यानां स्त्र्यादीनां नैकस्याभावाय। फणाशब्दो विकसितफणवाची, फणानामासहस्रमभिव्याप्य यस्येति वा॥ ६॥ ❀ ❀ एवं श्रोतृवक्तृस्वरूपं निरूप्य प्रस्तुतमाह—प्रोक्तं किलैतदिति। ननु स्ववक्ष्यमाणस्य भागवतस्य माहात्म्यज्ञापनार्थं किमित्येतावदुच्यत इत्याशङ्क्याऽऽह—किलेति। भगवत्तमेनेति निरुपाधिकभगवत्त्वं व्यावर्त्तयति, अन्येभ्यश्चोत्कर्षं चाऽऽह। अनेन तेनाऽपि वासुदेवाद् ज्ञातमिति ज्ञापितम्। अस्य श्रवणेऽधिकारमाह—निवृत्तिधर्माभिरतायेति। निवृत्तिधर्मे पारमहंस्यधर्मे अभिरतिर्यस्य। तेन पूर्वोक्तेन सहस्रफणरूपेणैव उपदेशं कृतवानिति ज्ञापनार्थं पुनर्निर्देशः कृतः। सनत्कुमारायेति दुर्लभाधिकारित्वेन सनत्कुमार एवोपदिष्टः, अन्ये त्वानुषङ्गिकाः। तत्र हेतुः 'निवृत्तिधर्माभिरताय' इति पूर्वमुक्तः। ततः परम्परामाह—स चाऽऽहेति। सांख्यायनाय स उक्तवान्। योगनिष्ठः सनत्कुमारः सांख्यनिष्ठायोक्तवान्। सांख्ये व्यवहारोऽन्यथा भातीति तदर्थमाह—धृतव्रतायेति। धृतानि व्रतानि येन।

---

१. स्वार्थम्. घ.।

अङ्गेति संबोधनं तथाऽधिकार एव सिद्धयतीति विदुरस्याऽपि तथात्वाय ॥ ७ ॥ ॐ ॐ सांख्यायनस्तु पराशरं भक्तं मत्वा तस्मै प्रसङ्गादुक्तवानिति स्वगुरोराधिक्यकथनार्थमाह—सांख्यायन इति । स हि पारमहंस्यधर्मे मुख्यः । परमहंसानां श्रवणकीर्त्तनमावश्यकम् । अतो भगवद्विभूतीर्विवक्षमाणो वक्तुमिच्छन्, अन्विताय मिलितायऽस्मद्गुरवे पराशराय जगाद । अन्वितो योग्यो वा । अथ भिन्नप्रक्रमेण । बृहस्पतेः स्थाने गत्वा तस्मै चोक्तवान् । बृहस्पतेरत्र निरूपणं देवलोके भागवतप्रचारार्थम् । ब्रह्मा सनकादयश्च उपरितनलोकेषु सन्त्येव; ध्रुवपर्यन्तं बृहस्पतिः, भूमौ पराशरः, पाताले संकर्षण एवाऽस्ति, अतश्चतुर्दशसु भुवनेषु भगवच्चरित्रं भागवतं व्याप्तमस्तीत्युक्तम् ॥ ८ ॥ ॐ ॐ पराशराद्भूमौ प्रचारमाह—प्रोवाचेति । मह्यं मैत्रेयाय । दयालुरिति स्वस्य तथाऽधिकाराभाव उक्तः । मुनिरिति अग्रे प्रचरणज्ञानम् । स इति प्रसिद्धः पराशरः, यः सप्तवार्षिकोऽपि मार्कण्डेयापेक्षयाऽपि वयसा वृद्धो, गर्भे च वेदाध्येता, पूर्णज्ञानः । पुलस्त्येनोक्तः पुराणं वक्तव्यमित्याज्ञप्तः । "पराशरः स्वपितरं शक्तिं राक्षसभक्षितं श्रुत्वा राक्षससत्रे सर्वाण्येव रक्षांसि हतवान्, अतः स्ववंशरक्षार्थं पुलस्त्यः समागत्य राक्षससत्रनिवृत्त्यर्थं प्रार्थयत् । ततो निवृत्ताय पराशराय वरो दत्तः 'पुराणाचार्यो भव' इति । अन्यथा अनधिकृतः पुराणं वक्तुं न शक्नुयात् । तत उक्तं पुलस्त्येनोक्त इति । आद्यं भागवतम्, पुराणप्रवृत्तौ प्रथमोत्पन्नाय ब्रह्मणे भगवता प्रथमत एवोक्तम् । विष्णुपुराणं तु भगवत्संबद्धप्रमेयमेव, व्यासे शाखाभेदवत् । विष्णुपुराणे मैत्रेयपराशरकथा[1] निरूपिता, तद्व्यावृत्त्यर्थमाद्यमित्युक्तम्, अन्यथा विष्णुपुराणे नेयं परम्परा निरूपिता । सोऽहं गुरुकृपानुगृहीतस्तव श्रोतृसंबन्धित्वेन एतद्भागवतं कथयामि । वर्तमानसामीप्ये वर्तमानप्रयोगः । वत्सेति स्नेहः कथने हेतुः । भगवदाज्ञा तु तावन्मात्र एव । मर्यादारक्षार्थमधिकारे विशेषणद्वयमाह—श्रद्धालवे नित्यमनुव्रतायेति । श्रद्धा मुख्याधिकारः, नित्यं चाऽनुव्रतत्वम् इच्छानुरूपनिरन्तरसेवा । अन्तर्बहिरधिकारहेतू श्रद्धासेवे ॥ ९ ॥ ॐ ॐ एवं परम्परां प्रतिज्ञां चोक्त्वा पुराणमारभते उदप्लुतमिति । पुराणं हि दशलीलायुक्तम्, तत्रादौ सर्गो वक्तव्यः । स च भागवतत्वात् भगवत्कृतः । तत्र तत्पृष्टानामर्थानां ब्रह्मकल्पेऽभावात् कल्पान्तरानुसारेण वक्तव्यम् । यद्भगवतैव कृतम्, तच्चरित्रं पद्मकल्पे वर्त्तत इति तन्निरूपणार्थं पूर्वकल्पस्य प्रलयानन्तरस्थितिमनुवदति, उदकेन प्लुतं सर्वमेव विश्वमासीदिति । बहुविधा हि प्रलयाः । तामसेषु कल्पेषु तामसानि भूतानि दह्यन्तेऽग्रिमसृष्ट्यर्थम्, राजसेषु तु प्रलयजलेन निमग्नानि भवन्ति, सात्त्विकेषु तु स्थिता एव पदार्था एकदेशेन निवृत्ता अवशिष्यन्त एव, यद्यग्रेऽपि सात्त्विक एव कल्पो भवति तत्र पद्मकल्पात् पूर्वकल्पो राजस उदप्लुतमित्युक्तम् । इदं विश्वं पूर्वमुदप्लुतमासीत् । इदमिति सर्वदा विश्वमेकविधमेवेति वृक्षवत् प्रवाहानादित्वं निरूपितम् । तदेति पूर्वप्रलये । तस्य प्रलयस्य निमित्तमाह—यन्निद्रयेति । यद्यदा निद्रया भगवच्छक्त्याऽलुप्तज्ञानशक्तिरेवाऽमीलितदृक् न्यमीलयत् अक्षिनिमीलनं कृतवान्, निमीलिताक्षो जागर्त्तीत्यर्थः । नन्वेवं स्थितौ को गुण इत्याशङ्कयाऽऽह—स्वात्मरतौ कृतक्षण इति । 'कदाचिद्रमते स्वस्मिन् प्रपञ्चेऽपि क्वचित्सुखम् ।' इति सृष्टिप्रलयैककरणे निमित्तमुक्तम् । आत्मरतावात्मनि क्रीडायां स्वरूपानन्दरमणे । स्वरूपानन्दः पूर्णानन्दः, अक्षरानन्दस्तु लक्ष्मीरूपः पूर्वं निरूपितः । स च भगवान् व्यापिवैकुण्ठेऽपि कदाचिल्लक्ष्म्या सह क्रीडति, कदाचित्स्वानन्दमेवाऽनुभवति । बीजधर्म एव सर्वत्र कार्यपरम्परायामातृणस्तम्बपर्यन्तम्; तथाप्यंशकार्येषु यादृशमेव बही रमणं तादृशमेवान्तारमणम् । क्रिया बहीरमणेऽभिवृद्धिकरी, ज्ञानं त्वन्तः; अन्योन्यबाधकत्वं च । सर्वेहोपरतिरेवाऽऽत्मानन्दानुभवेऽङ्गम् । तदाह—निरीह इति सर्वचेष्टारहितः । यथा पुरुषत्वे तुल्येऽपि रङ्कमहाराजयोर्बहिर्भोगातिशयस्तथाऽऽत्मन्यपीति । यावदेवाऽऽत्मत्वेन जानाति, तावदेवाऽऽत्मसुखं वर्द्धते । यथा-यथा परिच्छिनत्ति, तथा तथाऽल्पो भवति । इदमेव भगवान् सृष्टिप्रलयाभ्यां बोधयति एक इति । तत्सुखमखण्डमेकेनैवाऽनुभूयते । क्रियायां प्रयत्नव्यावृत्त्यर्थमधिशयानो जातः । तल्पकृतपीडानिवृत्त्यर्थमहीन्द्रतल्पे शेषपर्यङ्के । स हि भगवच्छ्वासोत्थवायुपानेन प्रतिक्षणं तुङ्गः कोमलश्च भवति, अत एव बहुकालं शयानो भवति ॥ १० ॥ ॐ ॐ तर्ह्यग्रे सृष्टिर्न स्यात् इत्याशङ्कयाऽऽह—सोऽन्तरिति । शरीरं त्वानन्दमयमिति पूर्वं निरूपितम्, सदानन्दमयं वा । सच्चिदानन्दरूपमिति वस्तुस्थितिः । पुरुषस्य सद्बाह्यम्; मध्ये ज्ञानम्, आनन्दस्त्वन्तः; स्त्रियास्तु विपरीतम्, तस्याः सत्येव रतिर्नत्वानन्दे कदाचिदपि । अन्तः साङ्ख्ययोगज्ञानाधिकार एव तस्याः, बहिर्भक्तेश्च । पुरुषस्य तु विपरीतम् । आनन्दानुभवस्तस्यान्तर एव युक्तो न बाह्ये; भेदकरणप्रसङ्गात्, आनन्दस्य स्वस्थानत्यागाच्च । न तादृशानन्दोऽनुभवयोग्यः । भगवत्यपि तथा, बीजत्वात् । स हि भावत्रिषु परिवर्त्तत इति सच्चिदानन्देषु नैकधैव स्थितिः, अन्यथा तादृग्रूपवैयर्थ्यापत्तेः । अनुस्यूतस्तु तदात्मक एव नित्यसिद्धः । अतः सति रमणेऽक्षरानन्दं पृथक्कृत्य लक्ष्म्या सह रमते, चिति रमणे सदानन्दौ तस्याऽन्तर्बहिर्निधाय बाह्याभ्यन्तरभेदेन रमते । तत्र प्रपञ्चो वेदाश्च रमणसाधनम् । स्वकृतप्रपञ्चेऽप्येतदुभयं करोति, ते कल्पप्रलया इत्युच्यन्ते । तत्राऽधिकारिणः कालस्य नियामकत्वात्, भगवदेकसम्भोगसम्पादकत्वाच्च, अंशानां भोगो मा भवत्विति तद्विषयानन्तः प्रवेश्य शेते । तदाह—अन्तःशरीरेऽर्पितानि भूतसूक्ष्माणि येनेति । चिदंशान् सर्वानेव यथायथं स्थापयित्वा स्वात्मानुभवं करोतीति । तेषामतिक्रमनिवृत्त्यर्थं कालात्मिकां शक्तिं संहारिकामुदीरयाणः, अलीनां कुर्वाणः प्रेरयमाणः । तस्मिन् सलिले स्वे पदे नारायणस्य स्थानभूते । तस्मिन् पूर्वोक्ते उवास स्थितः । अय-

१. संकथा. ख. ग. ङ. च. संवादकथा घ. ।

मंशः पूर्वोक्ताद्विशेषः। अवान्तरकल्पत्वादल्पप्रयत्नव्यापारान्नामनिर्वर्तकत्वाच्च सलिलानुग्रहः। अतोऽस्मदादिः स्वसच्चिदानन्दांशेषु रमणे शीघ्रं परमपुरुषार्थपर्यवसानाभावात् कारणे सति रतिं कुर्वीत। ननु बहिःस्थितानां पदार्थानामन्तःस्थापितत्वात् कालस्य च विद्यमानत्वात् सर्वं जगद्बहिरागच्छेत्। तत्राऽऽह—यथाऽनलो दारुणि रुद्धवीर्य इति। कारणे तादृशं रूपमस्तीति ज्ञापयितुं कार्ये तादृशं रूपं दृष्टान्तीकृतम्। यथा तस्य दाहकशक्तिर्निरुद्धा, तथा कालादीनामपि स्वस्याऽपि शक्तिर्निरुद्धा ॥ ११ ॥ ❀ ❀ एवं कियत्कालं स्थित इत्याह—चतुर्युगानामिति। चतुर्युगानां स्वरूपमग्रे निरूपणीयम्। तेषां सहस्रावृत्तौ ब्रह्मणो दिनं भवति, तावत्येव निशेति तावत्कालं शयनम्। चकारात्सन्ध्यांशयोर्ग्रहणम्, अन्यथासङ्ख्यानिवृत्त्यर्थं च। कालशक्त्याः पर्वद्वयस्य विद्यमानत्वात् प्रथमपर्वाऽतिक्रम्य, यदैव सा द्वितीये पर्वणि समायाति, तदैवानन्दतिरोधानार्थं ज्ञानशक्तिमुद्भावयति। अतिक्रमणज्ञापनार्थं वा। अत एवाऽस्मिन् कल्पे जीवद्वारैव भोगः। अतो भगवान् स्वपन्नेव स्वकीयया प्रामाणिकया स्वेनैवोदीरितया स्वेच्छारूपया स्वशक्त्या, न तु भिन्नतया स्थितकालेन। कदाचिद्भगवदिच्छया सोऽप्यन्तः प्रविश्य तथा कुर्यात्, ततश्च तस्याऽनियतत्वात् कालातिक्रमो भवेत्। कालाधीनसृष्टिश्चेयं न भवेत्, शक्त्यन्तराणामप्युद्बोधप्रसङ्गात्। अतो भगवदिच्छानुसारेण स्वशक्त्यैव कालाख्यया आसादितमुपस्थापितं लोकानां तन्त्रं करणसाधनं यस्य। चित्यागमनमात्रेणैव विषयं करणसाधनं चोपस्थापितवतीत्यर्थः। तदा अपीतान् अमुक्तान् लोकान् जनान् स्वदेहे ददृशे। वासनया विषये संबद्धान्, स्वांशेन भगवति चिति प्रविष्टान्, स्वस्मिन् विद्यमानमंशं तत्र प्रवेशयितुं ददृशे। तदा सदंशमध्ये सर्वोऽपि चिदंशः पिण्डीभूतः ॥ १२ ॥ ❀ ❀ तस्योद्गममाह—तस्याऽर्थेति। तस्य भगवतोऽर्थसूक्ष्मे जीवानामुपभोग्यरूपेऽभिनिविष्टदृष्टेः सतस्तस्याऽन्तर्गतोऽर्थश्चिज्जडात्मकोऽभूत्, तदा तनीयान् सूक्ष्मरूपो जातः। अरूपस्य सूक्ष्मरूपं महान् विशेषः। तदपि रजोगुणेनैव, न तु भगवता; अन्यथा पुरुष इव भगवद्रूपता स्यात्। तदनन्तरं ततस्तेनैव रजसा कालानुगतेन विद्धः सन् सूष्यन् प्रसवं प्राप्नुवन् तदा नाभिदेशात् अभिद्यत। नाभिदेशं भित्त्वा न निर्गतः, किन्तु अतिसूक्ष्मत्वात्, आकाशशरीरत्वाच्च, तस्माद्देशात् सजीवपदार्थत्वात् प्रसवप्रकारेण निर्गत इत्यर्थः ॥ १३ ॥ ❀ ❀ निर्गतस्य स्वरूपमाह—स पद्मकोश इति। नारायणस्तु जलात्मक इति जलकार्यैपूत्तमः पद्मकोश एव तत उदस्थित्। सह सेति विकासमन्तरेणैव। तदा तस्मिन् बहिः स्थितः कालः कर्म च प्राणिनां संबद्धम्। कोशोत्पत्त्या प्रबुद्धं कर्म बहिः स्थितं कालमन्तः प्रवेशितवदिति कालेनैव केवलेन अग्रिमकार्यं कृतवानित्याह—कालेनेति। स्वरोचिषा स्वस्य तेजोरूपेण। कालस्य त्रिरूपत्वात् प्रकाशकं रूपं तस्य गृहीतम्। विशालमेव तत्सलिलं विद्योतयन्नेव। जननप्रकाशनयोर्विलम्बाभावादर्क इति तथा सामर्थ्याय। आत्मा भगवानेव योनिः कारणं यस्य, स उदतिष्ठत्—इति संबन्धः ॥ १४ ॥ ❀ ❀ सहसा निर्गतत्वात् तद्विकासार्थं स एव भगवांस्तत्र प्रविष्ट इत्याह—तल्लोकपद्ममिति। कारणप्रवेशनव्यतिरेकेण पुरातनस्य निःसारस्य कार्योपयोगो न भविष्यतीति नारायणप्रवेशः। उ इति कोमलसंबोधने। पूर्वं नारायणोऽपि तत्र प्रवेशात् विष्णुर्जातः। विष्णुर्व्याप्नाविति वा। पूर्वमेव तत्र स्थितस्तत्राभिव्यक्तो जात इत्यर्थः। तत्र हेतुः—सर्वगुणानामवभासो यत्र। भगवद्गुणानां सर्वेषामभिव्यञ्जककार्यरूपाभिव्यक्तिस्थानत्वात् भगवत्सहिता एव सर्वे गुणा भासन्तामित्येतदर्थं भगवत्प्रवेश इत्यर्थः। अयं पद्मकल्पे विशेषः। तत्र सर्वे जीवा एकीभूताः समष्ट्यात्मकाः सन्त एकरूपेण प्रादुर्भूता इत्याह—तस्मिन्स्वयमिति। स्वयं भगवान्, अत्र चितो भेदाभावात्। तत्राप्युभयक्रीडार्थं वेदमयो विधातेत्युक्तम्। वेदमयत्वात् आत्मरमणम्, विधातृत्वात् बहीरमणमिति। तस्योद्गतस्य नामाऽऽह—स्वयम्भुवमिति। तत्रत्या लोकास्तस्य पितरमदृष्ट्वा स्वयमेव ब्रह्मा जात इति स्वयम्भुवमाहुः, एवं लोकैः स्वयम्भूत्वेन निरुक्तोऽभूत् ॥ १५ ॥ ❀ ❀ ततो यज्जातं तदाह—तस्यामिति। पूर्वोक्तकमल एव स्वयमपि पूर्वोक्त एव, भगवत्प्रवेशेन विकसिते कमले कर्णिकायामवस्थितः स्वातिरिक्तं लोकमपश्यमानः। जनात्मकाः स्वस्मिन्नेव लोकात्मकास्तु कमले; तदुभयविमर्शाभावाल्लोकादर्शनम्। ततोऽन्यथा दर्शनं कृतवानित्याह—परिक्रमन्निति। परित आक्रमन् शिरः प्रसारयन्। व्योम्नीत्युपरिभागे। पूर्वमेव पिण्डस्योत्पन्नत्वात् विवृत्तनेत्रः प्रसारितनयनो भूत्वा यमेव भागं न पश्यति, तत्रैव लोको भविष्यतीति बुद्ध्या सर्वत्र मुखेच्छायां सर्वगुणावभासस्य प्रतिष्ठितत्वादनुदिशं चत्वारि मुखानि लेभे। तदा चतुर्मुखो ब्रह्मा जात इत्यर्थः ॥ १६ ॥

## श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः।

मुहुरित्यत्र। वाक्यादिति। श्वेताश्वतरोपनिषद्वाक्यात्। तदोक्तमिति। तस्मिन् समये तज्ज्ञातृत्वमुक्तमित्यर्थः ॥ ६ ॥ ❀ ❀ प्रोक्तमित्यत्र ( दुर्लभाधिकारित्वे नेति ) क्लिशेतीति। तथा च न श्रद्धाजाड्येनेदं स्तोत्रमात्रम्, किन्तु वास्तवमेव माहात्म्यमित्यर्थः। दुर्लभाधिकारित्वे नेति। छान्दोग्ये तस्य ज्ञानपूर्णताया उक्तत्वात्तथात्वेन ॥ ७ ॥ ❀ ❀ प्रोवाचेत्यत्र। प्रार्थयदिति। विशिष्टद्वारा साक्षाद्द्वारा पुराणान्तरे प्रार्थयत्। व्यास इति। वेदविभागे। विष्णुपुराणस्यैतच्छाखाभेदत्वे किं गमकमित्यपेक्षायामाहुः—अन्यथेत्यादि। एतस्यैव विवरणं नेयं परम्परा निरूपितेति। तथा चैतत्परम्पराया अभावात् प्रमेयाभेदाच्च शाखान्तरन्यायेन तस्य पुराणान्तरत्वमित्यर्थः। तावन्मात्र इति। यावदितः पूर्वमुक्तं तावन्मात्रे ॥ ९ ॥ ❀ ❀ उदप्लुतमित्यत्र। पुराणमारभत इति। अत्र शुकाशयस्त्वेवं बोध्यः। द्वितीयस्कन्धस्याऽष्टमाध्याये 'आसीद्यदुदरात्पद्मम्' इत्यादिना हिरण्यगर्भजनकस्य सर्वात्मकत्वादिकं

यदाक्षिप्तम्, तन्नवमे चतुःश्लोकीप्रसङ्गेन समाहितम्। तत्र ब्रह्मकल्पमुक्तम्। ततो नवमसमाप्तौ 'यदुताऽहं त्वया पृष्टो वैराजात्पुरुषादिदम्। यथासीत्तदुपाख्यास्ये प्रश्नानन्यांश्च कृत्स्नशः' इति प्रतिज्ञाय दशमे महापुराणीयानि दशलक्षणान्युक्त्वा वैराजात्पुरुषात् सृष्टिकथने ब्रह्मकल्पस्य विकल्प उपक्षिप्तः, तेन सामान्यतः सर्वे प्रश्ना उत्तरिताः, तथापि विशेषतो न समाहिता इति तथा समाधातुं दशमान्ते 'पाद्मं कल्पमथो शृणु' इति प्रतिज्ञाय तृतीयस्कन्धारम्भे 'एवमेतत्पुरा पृष्टः' इत्यनेन विदुरमैत्रेयसंवादमुपक्षिप्याऽऽद्यं पुराणं तन्मुखेन वक्तुमारब्धम्। तेन ते प्रश्ना एवं युक्तिपूर्वकमाप्तसम्मतिपूर्वकं पद्मकल्पीयसृष्टयुक्ताः समाहिता भविष्यन्तीति तदिदं प्रपञ्चयन्ति—पुराणमित्यादि। पुराणमारभत इति। पुराणमिति महापुराणम्। अनुवादप्रयोजनमाहुः—बहुविधा इत्यादि। तत्र पूर्वं 'स चापि यत्र' इत्यनेनावस्थासाम्येन जीवतौल्यादीश्वरत्वं यदाक्षिप्तम्, तदत्र प्रथमं विशेषतः समाधेयम्, तदर्थं प्रथमं भगवत्सुषुप्तेर्जीवसुषुप्तितो वैलक्षण्यमत्र बोधयतीत्याशयेनाहुः—तस्येत्यादि। तथा च 'सुषुप्तिकाले सकले विलीने तमोभिभूतः सुखरूपमेति' इति श्रुतेर्जीवस्य तदानीं तमसाऽभिभवः, इह तु नेत्येकं वैलक्षण्यम्। स्वात्मरतावित्यादि। तथा च स्व[1]प्रतिष्ठितत्रैव गुण इत्यर्थः। अत्र कृतक्षण इत्यस्य कृतेच्छ इत्यर्थबोधयानाऽऽहुः—कदाचिदित्यादि। आत्मनीत्यादि। 'सता सौम्य! तदा सम्पन्नो भवति' इति श्रुतेर्जीवस्य सत्सम्पत्त्या तदानीं सुखम्, न तु स्वतः; तदपि न पूर्णमनित्यं च। इह तु स्वतः पूर्णं चेत्यपरं वैलक्षण्यम्। एवं ब्रह्माण्डान्तरेव भविष्यति, न तु मूलधाम्न्यपीति शङ्कानिवृत्त्यर्थमाहुः—अक्षरेत्यादि। 'निरस्तसाम्यातिशयेन' इत्यादिवाक्यैस्तथेत्यर्थः। एवं वैलक्षण्यं बोधयित्वा प्रतीयमानावस्थासाम्ये हेतुमाहुः—बीजेत्यादि। तर्ह्येतदंशे किं वैलक्षण्यमित्याकाङ्क्षायां तद्दृष्टान्तेन तत् स्फुटीकर्तुं तान् धर्मानाहुः—तथापीत्यादि। तथा चाऽत्रापि महत्त्वकृतं वैलक्षण्यमित्यर्थः। प्रयोजनतोऽप्याहुः—इदमित्यादि। ननु भवत्वेवम्, तथापि निद्राया अबाधकत्वे शयनस्य किं प्रयोजनमत आहुः—क्रियायामित्यादि। परिकरतोऽपि वैलक्षण्यं बोधयन्ति—स हीत्यादि। एतेन शेषस्य वेदात्मकत्वेऽपि युक्तिरुक्ता॥ १०॥ ❀ ❀

सोऽन्तरित्यत्र। तर्हीत्यादि। एवमात्मरतत्वेन निर्विघ्नमहासुखानुभवेऽग्रे सृष्टिप्रयोजनाभावात् सा न स्यादित्याशङ्क्य, स्वापकारणं तत्परिकरं प्रकारं प्रयोजनं चाऽऽहेत्यर्थः। अत्र मूले 'सः' इत्यनेन पूर्वश्लोकोक्तस्य शयानस्य परामर्शात्तस्य चेच्छाविशिष्टस्यैव सृष्ट्यादिकर्तृत्वादिच्छाविशेषोऽर्थबलादेव रमणकारणत्वेन लभ्यत इत्यतः स इतिपदं न व्याख्यातम्। तत्र कारणीभूताया इच्छायाः प्रकारं बोधयितुमन्यानि पदानि व्याकरिष्यन्ते। 'आनन्दरूपममृतं यद्विभाति' इति श्रुत्या भगवतः केवलानन्दघनत्वेन तत्र बाह्याभ्यन्तरभावाभावात् किं तत्रान्तःशरीरमित्याकाङ्क्षायां तद्वक्तुं पूर्वं स्वरूपस्थितिमाहुः—शरीरमित्यादि। पूर्वमिति ब्रह्मकल्पे। सदानन्दमयं तद्विकल्पे वस्तुस्थितिरिति। 'सत्यं ज्ञानमनन्तं ब्रह्म' इति स्वरूपलक्षणात्तथा। तथा च यदा यथेच्छति तदा तथा प्रकटीभवतीति तस्येच्छयैव सदादीनामन्तर्भावो बोधयितुम्, सृष्टौ 'स आत्मानमेव द्वेधाऽपातयत्ततः पतिश्च पत्नी चाभवताम्' इति श्रुत्या शरीरद्वैविध्यात् प्रकृते च योगमायोपबृंहितलीलानां वाच्यत्वाद्योगमायायाः स्त्रीत्वाच्च शरीरद्वयेऽपि सच्चिदानन्दस्थितिव्यवस्थामाहुः—पुरुषस्येत्यादि। पञ्चकोशविचारं श्रुत्वा पुरुषदेहे तथैव सिद्धत्वात्। स्त्री[2]देहे सामान्यतस्तथा प्राप्तावपि 'विलोक्यैकान्तभूतानि' इति वाक्ये पुंमतिहरणार्थमेव स्त्रीकरणस्मरणात्, मतिहरणस्य प्रीतिं विना अभावात्, प्रियत्वस्य चाऽऽनन्दधर्मत्वेन तदात्मकत्वात् स्त्रिया विपरीतधर्मत्वमित्यर्थः। तेन रतावपि वैपरीत्यमाहुः—तस्या इत्यादि। सत्येव रतिरिति। स्त्रियाः सदंशोऽन्तरिति तस्मिन्नेव रतिः। तस्यामान्तरधर्मत्वेन तत्रैव तदुत्पत्तेरिति। कदाचिदिति कस्यामपि बुद्ध्यवस्थायाम्। तथा च पुरुषस्य जाग्रति स्त्रीशरीरीया[3]नन्दे बहीरतिः। सुषुप्तौ सत्सम्पत्त्याऽन्तरानन्दे रतिः स्वप्नेऽपि बा[4]ह्यत्वाभिमानादानन्द एव। स्त्रियास्तु जाग्रति स्वप्ने च पुंश[5]रीरीये सति। सुषुप्तौ च प्राज्ञे सतीत्यर्थः। एवं ब[6]न्धावस्थाव्यवस्थामुक्त्वा मुक्त्यवस्थायामप्यनुभववैजात्याय साधनव्यवस्थामाहुः—अन्तः साङ्ख्येत्यादि। एतत्प्रयोजनमग्रेऽत्रैव वक्तव्यम्। एवं व्यवस्थामुक्त्वा स्वरतेरुत्कर्षायाहुः—आनन्देत्यादि। पुरुषस्य ह्यानन्द आन्तरो रतिश्च तस्यैव धर्म इति रतेस्तत्सम्बन्धे उभयोरान्तरत्वेनैकाधिकरण्यादानन्दानुभवो भूयान् भवतीति तत्रैव युक्त इत्यर्थः। ननु बाह्येऽपि तदनुभवस्य तुल्यत्वेन तत्र कुतो न युक्त इत्यत आहुः—न बाह्य इत्यादि। इत्यानन्दयोर्धर्मधर्मिभावेन रतेर्बहिरानयने आनन्दविवरणप्रसङ्गात्, आनन्दस्याऽप्यानयने स्वस्थानत्यागाच्च न युक्त इत्यर्थः। अत्रानुभवं प्रमाणयन्ति—नेत्यादि। तद् 'यथा प्रियया संपरिष्वक्तो न बाह्यं वेद नान्तरमिति। तत्र स्थितो न कञ्चन कामं कामयते, न कञ्चन स्वप्नं पश्यति' इति श्रुत्या यादृश आनन्दोऽन्तरुक्तस्तादृशानन्दो न बहिरनुभवयोग्य इति प्रत्यक्षत एव सिद्धमित्यर्थः। एवं स्वरतेरुत्कर्षं साधयित्वा सालक्षण्याय प्रकृतेऽतिदिशन्ति—भगवतीत्यादि। तदा च यथा पुरुषे सच्चिदानन्दानां बाह्याभ्यन्तरभावः, यथा च स्वरतिरुत्कृष्टा, तथा भगवत्यपीत्यर्थः। एवं स्वरतिबीजमुक्त्वा तत्त्यागमाहुः—स हीत्यादि। हि यतो हेतोः स भावो रमणकर्तृत्वरूपस्त्रिष्ववस्थाविशेषेषु परिवर्तत इति हेतोः सच्चिदानन्देष्वेकत्र न रतेः स्थितिः, किन्तु यत्रैव कर्तू रतीच्छा तत्रैव स्थितिरितीच्छाविशेष एव तत्त्यागबीजमित्यर्थः। अत्र गमकमाहुः—अन्यथेत्यादि। तथा च, यदि कर्तृत्वपरिवर्त्तनेच्छा न स्यात्, तदा निद्राया ज्ञानाभिभावकत्वान्न शयीत। यस्मादेवं तस्माज्जाग्रति सतः स्वप्ने चितः, सुषुप्तावानन्दस्य रमण-

१. सप्रतिष्ठितैव. पा.। २. स्त्रीदेहसामान्यतः. पा.। ३. स्त्रीशरीरयानन्दे. पा.। ४. बाह्यत्वाभिनादानन्द एव. पा.। ५. पुंशरीरेये. पा.। ६. विधावस्था. पा.।

कर्तृत्वमिति रतेरपि परिवृत्तिरिति भावः। नन्वेवं सति रमणकर्तृभावस्तस्मिन्न नित्यः स्यादिति लीला अप्यनित्याः स्युरित्यत आहुः--अनुस्यूत इत्यादि । तदात्मक इति । आनन्दात्मकः । तथात्वपरिवर्तनेऽपि नित्य इति लीला अपि स्वरूपतः प्रवाहतश्च नित्या इत्यर्थः। तत्र सिद्धं परिकरं जीववैलक्षण्यायाऽऽहुः--अत इत्यादि । सति रमण इति । जाग्रद्रमणे । चिति रमण इति । स्वाप्ने रमणे । तस्याऽन्तर्बहिर्निधायेति । चिदंशस्यान्तर्बहिः सदानन्दनिधानेन तां स्त्रियमिव कृत्वा । अनेन तदानीं योगमायया सह रमणमुक्तम् । तत्रेति । चिति रमणे । वेदा इति । निःश्वसितरूपाः । एवं सामान्यतः सर्गप्रलय व्यवस्थोक्ता । स्वकृतप्रपञ्चे तु विशेषमाहुः—स्वकृतेत्यादि । एतदुभयमिति । वेदप्रपञ्चाभ्यामन्तर्बहीरमणम् । तद्वक्ष्यति 'वेदमयो विधाता' इति । त इति । द्विधा रमणोपयुक्ताः पदार्थाः। एवं दिनमध्यव्यवस्थामुखेनैकः परिकर उक्तः। परिकरान्तर-माहुः—तत्रेत्यादि । भोग इति । सुखदुःखानुभवः। तथा चांशानां तुल्यसुखातिदुःखदर्शन उद्वेगात्सुष्वापो न स्यादिति तदर्थं विषयाणामन्तःस्थापनं स्वात्मरतिपरिकर इत्यर्थः। परिकरान्तरमाहुः—चिदंशानित्यादि । ययायथमिति । ये यद्देशादुत्पन्नास्तांस्तद्देशे । अतिक्रमनिवृत्त्यर्थमिति । तेषां विषयराहित्येन भोगाभावाद्भगवद्भोगदर्शने तेषां वासनया क्षोभेऽतिक्रमः स्यादिति तन्निवृत्त्यर्थम् । अयमंश इत्यादि । काले प्रेरणात्मकोंशः पूर्वश्लोकोक्तान्निरीहत्वाद्विलक्षणस्तेनेतरः सर्वोऽपि तुल्य इत्यर्थः। नामनिर्वर्तकत्वादिति । नारायण-नामनिर्वचनोपयुक्तत्वात् । एवं [1]परिकरे प्रकार उक्तः । प्रयोजनमाहुः—अत इत्यादि । अस्मदादिरिति । पुंशरीरः स्त्रीशरीरश्च यथाधिकार-मन्तर्बहिः साधनैः रतिं कुर्वीतेति शिक्षार्थं प्रकारः सूचितः, जीवसुखार्थं च स्वाप इत्यर्थः। तादृशमिति । शक्तिनिरोधकम् । शेषमुक्ता नार्थम् । एवं सुष्वापस्योत्तरावस्थोक्ता । तेनाऽपि जीववैलक्षण्यं बोधितम् । जीवस्याऽवस्था कालकृता परस्थानभूतपुरीतन्नाडीसम्बन्धेन, अत्र त्विच्छया कालं प्रेरयतः स्वस्थानभूतजलसम्बन्धेनेति । एवं द्वाभ्यां द्विविधा सुषुप्तिरुक्ता ॥ ११ ॥ ❀ ❀ चतुर्युगेत्यत्र । सन्ध्यांशयोरिति । सन्ध्यारूपयोरंशयोः । अन्यथासंख्यानिवृत्त्यर्थमिति । 'ब्राह्मसंवत्सरशतादेकाहः शैव उच्यते । शैववर्षशताकं निमिषं वैष्णवं विदुः' इति मात्स्याद्युक्तसंख्यानिवृत्त्यर्थम् । प्रथमपर्वेति । अर्धरात्रम् । द्वितीयपक्षे गमकमाहुः—अत एवेत्यादि । ज्ञानशक्त्युद्भा-वनादेव । अंशमिति । सदंशम् । अनेन श्लोकेन स्वप्नावस्थोक्ता । अत्रापि स्वदेहे सतामेव सच्चिदंशानां स्वनोदित-कालोपस्थापितानां दर्शनम्, जीवस्य तु कालकर्माधीनस्य मायिकानां भगवदभेदेन दर्शनमिति भेदः॥ १२ ॥ ❀ ❀ तस्याऽर्थेत्यत्र । अत्र जागरस्य पूर्वावस्थोच्यते—तस्येत्यादि । तस्य भगवतोऽन्तर्गतः पिण्डीभूतः सदंशोऽर्थरूपोऽभूत् । अर्थ इत्यस्य विवरणं चिज्जडात्मक इति विकुर्वाणो जात इत्यर्थः। सूक्ष्मरूप इति । अङ्कुरपूर्वावस्थारूपः। तस्य स्वरूपमाहुः--अरूपस्येति । तादृशरूपस्य सदंशस्य । महान् विशेष इति । महत्तत्त्वात्मकपृथिवीरूपः भिरवेति । विभज्य ॥ १३ ॥ ❀ ❀ स पद्मेत्यत्र । त्रिरूपत्वादिति । उपादानत्वेन तेजोबन्नात्मकत्वात् ॥ १४ ॥ ❀ ❀ तदित्यत्र । तत्र प्रवेशादिति । विशतीति विष्णुरिति निरुक्त्येत्यर्थः। इयं निरुक्तिः शैवपुराणस्थेत्यतो निरुक्त्यन्तरमाहुः--विष्णुरित्यादि । विशेष इति ब्रह्मकल्पे प्राक्सिद्धमेव सर्वात्मकत्वम्, तद्विकल्पेषु वीर्यद्वारा, अत्र त्वेवमिति ब्रह्मकल्पाद्विशेष इत्यर्थः। एतेन नानाप्रकारैः सर्वात्मकत्वमिति राज्ञे बोधितम् । चितो भेदाभावा-दिति । आनन्देन सहाविभागाबाधात् । ब्रह्मविष्णुमहेशानामस्मिन् कल्पे चैतन्यभेदाभावादिति वाऽर्थः। वेदमयेत्यादि अनेन स्वकृतप्रपञ्चेत्यादिनोक्तं निर्णीतं ज्ञेयम् ॥ १५ ॥

## श्रीगिरिधरकृता बालप्रबोधिनी

तानि सङ्कर्षणकर्माणि जानन्तीति तज्ज्ञा मुनयोऽस्य सङ्कर्षणस्य कृतानि कर्माणि अनुरागेण प्रेमातिशयेन स्खलन्ति पदानि यस्मिंस्तेन वचसा मुहुः पुनः पुनर्गृणन्तो गायन्तः सन्तः किरीटानां मुकुटानां सहस्रमेव साहस्रं तस्मिन् मणिप्रवेकाः मण्युत्तमास्तैः प्रद्योतितमुद्दामफणानां सहस्रं यस्य तं सङ्कर्षणमन्वपृच्छन्नित्यन्वयः॥ ६ ॥ ❀ ❀ एवं श्रोतृवक्तृस्वरूपं निरूप्य श्रीभागवत-प्रवृत्तिमाह—प्रोक्तमिति । किलेति प्रसिद्धमेतत् । एतत् श्रीभागवतं तेन भगवत्तमेन सङ्कर्षणेन सनत्कुमाराय प्रोक्तम् । अधिका-रिण्येवैतत्सफलं भवत्यतोऽधिकारिणे एव देयमिति सूचयंस्तस्याधिकारिगुणवैशिष्ट्यमाह—निवृत्तिधर्माभिरतायेति, मोक्षधर्मेष्वा-सक्तायेत्यर्थः। सनत्कुमारायेत्येकवचनं सङ्घाताभिप्रायकम्, पूर्वं कुमारमुख्या इति बहुत्वोक्तेः। अङ्गेति सम्बोधनं स्नेहसूचकम् । स च सनत्कुमारः सांख्यायनेन पृष्टः सन्तस्मै आह–तस्याप्यधिकारित्वमाह–धृतव्रतायेति, धृतानि व्रतानि शिष्यधर्मा येन तस्मा इत्यर्थः ॥ ७ ॥ ❀ ❀ पारमहंस्ये धर्मे मुख्यः साङ्ख्यायनो भगवद्विभूतीर्विवक्षमाणः वक्तुमिच्छुः अस्मद्गुरवे पराशराय अथ बृहस्पतेः बृहस्पतये च एतज्जगादेत्यन्वयः। तस्याप्यधिकारित्वमाह—अन्वितायेति, शिष्यगुणसम्पन्नायेत्यर्थः॥८॥ ❀ ❀ पुलस्त्येनोक्तो दत्तवरः स पराशर आद्यं मुख्यमेतत्पुराणं मह्यं प्रोवाचेत्यन्वयः। तत्रैवं ह्याख्यायिका—शक्तिनामानं स्वपितरं राक्षसभक्षितं श्रुत्वा क्रुद्धः पराशरः सर्वराक्षसविनाशाय राक्षससत्रे प्रवृत्तः, तदा स्वसन्ततिरक्षार्थं पुलस्त्यः समागत्य सत्रनिवृत्तिं प्रार्थयत्, तदा सत्रान्नि-वृत्ताय तस्मै 'पुराणसंहिताकर्ता भवान् वत्स भविष्यति । देवतापारमार्थ्यं च यथावद्वेत्स्यते भवान्' इति तेन वरो दत्त इति । 'धर्मः क्षरति कीर्तनात्' इति शास्त्रमर्यादया स्वगुणाः स्वमुखेन न वक्तव्या इति स्वगुणानाच्छदयन्ममैतल्लाभे तदयैव कारणमिति

---

१. परिकरो. पा. ।

सूचयन्नाह—दयालुरिति । तर्ह्यनधिकारिणे दययाऽपि कथनं सम्भवतीत्याशङ्कयाह—मुनिरिति । एतद्द्वारैवास्य भूलोके प्रवृत्तिर्भविष्यतीति जानन्नित्यर्थः । प्रतारणाभावं सूचयन्सम्बोधयति—वत्सेति । स उपदिष्टपुराणोऽहं तव तुभ्यमेतत्पुराणं कथयामि । तव चात्राधिकारोऽस्तीति सूचयन् विशेषणद्वयमाह—श्रद्धालवे नित्यमनुव्रताय चेति ॥ ९ ॥ ॐ ॐ एवं पाताले सङ्कर्षणात् भूमौ पराशरात् स्वर्गे बृहस्पतेः तदुपरि सनत्कुमारादिभ्यः सर्वत्र श्रीभागवतसम्प्रदायप्रवृत्तिं प्रदर्श्य प्रस्तुतप्रश्नानामुत्तराणि विवक्षुः पूर्वोक्तामेव महदादिपृथिव्यन्ततत्त्वसृष्टिमुपजीव्य ब्रह्माण्डरूपपद्मोत्पत्तिं वक्ष्यंस्तत्पूर्वं प्रलयावस्थामाह—उदाप्लुतमिति । यत् यदा नैमित्तिकप्रलये अहीन्द्रतल्पे शेषरूपशय्यायामेकः असहायः शयानो नारायणो निद्रया नेत्रे न्यमीलयत् निमीलितवांस्तदा इदं विश्वमुदाप्लुतमेकार्णवोदके निमग्नमासीदित्यन्वयः । तर्हि किं तस्यापि तमोरूपा निद्राऽस्तीत्याशङ्कयाह—अमीलितदृगिति । अतिरोहितचिच्छक्तिरेव निद्रानुकरणं कृतवानित्यर्थः । किमर्थमित्यपेक्षायामाह—स्वात्मरताविति । स्वरूपानन्दरमणे कृतक्षणः सम्पादितावसरः अतएव निरीहः त्यक्तसृष्ट्यादिविनोद इत्यर्थः ॥ १० ॥ ॐ ॐ ननु त्रैलोक्यगतानां जीवानां का वार्तेत्याशङ्कयाह—स इति । स श्रीनारायणः अन्तश्शरीरे शरीरमध्ये एव अर्पितानि विहितानि भूतसूक्ष्माणि त्रैलोक्यगतदेवमनुष्यादिसूक्ष्मशरीराणि येन सः कालात्मिकां स्वशक्तिमुदीरयाणः पुनः सृष्टिसमये प्रबोधनार्थं प्रेरयन् स्वे स्वकीये पदे स्थाने तस्मिन् सलिले निरुद्धवीर्यः सन्नुवासेत्यन्वयः । तत्र दृष्टान्तमाह—यथेति । अनलोऽग्निर्यथा दारुणि काष्ठे रुद्धवीर्यः निरुद्धप्रकाशकत्वदाहकत्वादिस्वभाव एव तिष्ठति तथा सोऽपि स्वेच्छया निरुद्धसृष्ट्यादिसामर्थ्य आसेत्यर्थः ॥ ११ ॥ ॐ ॐ एवं चतुर्युगानां चकारात्सन्ध्यांशसहितानां सहस्रं ब्रह्मणो निशापर्यन्ते स्वया चिच्छक्त्या सहाप्सु स्वपन् उदीरितया प्रेरितया कालाख्यया स्वशक्त्या आसादितकर्मतन्त्रः उद्बोधितक्रियाकलापः स्वदेहे एव अपीतान् ददृशे ददर्शेत्यन्वयः ॥ १२ ॥ ॐ ॐ अथ ततो लोकोत्पत्तिमाह—तस्येति । लोकसृष्ट्यर्थमर्थसूक्ष्मे भूतसूक्ष्मे अभिनिविष्टदृष्टेः प्रवर्तकसङ्कल्परूपज्ञानस्य तस्य भगवतोऽन्तर्गतस्तनीयान् सूक्ष्मतरः अर्थः भूतसूक्ष्मवर्गः कालानुगतेन कालवशादुद्बुद्धेन रजसा गुणेन विद्धः सङ्क्षोभितस्तदा सूष्यन् प्रसवं प्राप्नुवन् तस्य नाभिदेशात् अभिद्यत नाभिं भित्त्वा निर्गत इत्यर्थः ॥ १३ ॥ ॐ ॐ तस्य स्वरूपमाह—स इति । सः अर्थसूक्ष्मः आत्मा परामात्मा श्रीनारायणः योनिः कारणं यस्य तथाभूतः पद्मकोशः सन् स्वरोचिषा स्वतेजसा तत् प्रलयकालिकं विशालं सलिलमर्क इव विद्योतयन् कर्म जीवादृष्टं प्रतिबोध्यते येनेति तथाभूतेन कालेन सहसा झटित्येव उदतिष्ठत् जलादप्युपरिगत इत्यन्वयः ॥ १४ ॥ ॐ ॐ सोऽपि भगवत्प्रवेशेनैव सर्वलोकप्रकाशको जात इत्याह—तदिति । भगवल्लीलाया आश्चर्यं सूचयति—उ इति । सर्वान् गुणान् जीवोपभोग्यार्थान् अवभासयतीति तथाभूतं तल्लोकात्मकं पद्मं स एव यस्माज्जातं स एव विष्णुः प्रावीविशत् प्रकर्षेण अन्तर्यामितया प्रविष्टोऽभूत् । तस्मिन् भगवत्प्रविष्टे पद्मे स्वयं वेदमयः स्वत एव न त्वध्यापनाद्वेदप्रचुरो विधाता जगत्स्रष्टा ब्रह्माऽभूत् । तं विशिनष्टि—अदृष्टपितृत्वेन यं स्वयम्भुवं लोका वदन्ति स्म । स इति प्राक्कल्पान्ते नारायणेन सह निद्रयैकीभूत आसीत् तस्मिंश्च प्रबुद्धे तत एव पाद्मे कल्पे पद्मद्वारेणाभिव्यक्तिं प्राप्त इत्यर्थः ॥ १५ ॥ ॐ ॐ स च स्वयम्भूः तस्याम्भोरुहकर्णिकायां अवस्थित एव लोकमपश्यमानः तद्दर्शनार्थं व्योम्नि विवृत्तनेत्रः प्रक्षिप्तदृष्टिः परिक्रमन् चतसृषु दिक्षु ग्रीवां चालयन् अनुदिशं चत्वारि मुखानि लेभे इत्यन्वयः ॥ १६ ॥

## हिन्दी अनुवाद

सनत्कुमारादि उनकी लीलाके मर्मज्ञ हैं । उन्होंने बार-बार प्रेमगद्गद वाणीसे उनकी लीलाका गान किया । उस समय शेषभगवान्‌के उठे हुए सहस्रों फण किरीटोंकी सहस्र-सहस्र श्रेष्ठ मणियोंकी छिटकती हुई रश्मियोंसे जगमगा रहे थे ॥ ६ ॥ ॐ ॐ भगवान् सङ्कर्षणने निवृत्तिपरायण सनत्कुमारजीको यह भागवत सुनाया था—ऐसा प्रसिद्ध है । सनत्कुमारजीने फिर इसे परम व्रतशील सांख्यायन मुनिको, उनके प्रश्न करनेपर सुनाया ॥ ७ ॥ ॐ ॐ परमहंसोंमें प्रधान श्रीसांख्यायनजीको जब भगवान्‌की विभूतियोंका वर्णन करनेकी इच्छा हुई, तब उन्होंने इसे अपने अनुगत शिष्य, हमारे गुरु श्रीपराशरजीको और बृहस्पतिजीको सुनाया ॥ ८ ॥ ॐ ॐ इसके पश्चात् परम दयालु पराशरजीने पुलस्त्य मुनिके कहनेसे वह आदिपुराण मुझसे कहा । वत्स ! श्रद्धालु और सदा अनुगत देखकर अब वही पुराण मैं तुम्हें सुनाता हूँ ॥ ९ ॥ ॐ ॐ सृष्टिके पूर्व यह सम्पूर्ण विश्व जलमें डूबा हुआ था । उस समय एकमात्र श्रीनारायणदेव शेषशय्यापर पौढ़े हुए थे । वे अपनी ज्ञानशक्तिको अक्षुण्ण रखते हुए ही योगनिद्राका आश्रय ले, अपने नेत्र मूँदे हुए थे । सृष्टिकर्मसे अवकाश लेकर आत्मानन्दमें मग्न थे । उनमें किसी भी क्रियाका उन्मेष नहीं था ॥ १० ॥ ॐ ॐ जिस प्रकार अग्नि अपनी दाहिका आदि शक्तियोंको छिपाये हुए काष्ठमें व्याप्त रहता है, उसी प्रकार श्रीभगवान्‌ने सम्पूर्ण प्राणियोंके सूक्ष्म शरीरोंको अपने शरीरमें लीन करके अपने आधारभूत उस जलमें शयन किया, उन्हें सृष्टिकाल आनेपर पुनः जगानेके लिये केवल कालशक्तिको जाग्रत् रक्खा ॥ ११ ॥ ॐ ॐ इस प्रकार अपनी स्वरूपभूता चिच्छक्तिके साथ एक सहस्र चतुर्युगपर्यन्त जलमें शयन करनेके अनन्तर जब उन्हींके द्वारा नियुक्त उनकी कालशक्तिने उन्हें जीवोंके कर्मोंकी प्रवृत्तिके लिये प्रेरित किया, तब उन्होंने अपने शरीरमें लीन हुए अनन्त लोक देखे

॥ १२ ॥ ❀ ❀ जिस समय भगवान्की दृष्टि अपनेमें निहित लिङ्गशरीरादि सूक्ष्मतत्त्वपर पड़ी, तब वह कालाश्रित रजोगुणसे क्षुभित होकर सृष्टिरचनाके निमित्त उनके नाभिदेशसे बाहर निकला ॥ १३ ॥ ❀ ❀ कर्मशक्तिको जाग्रत् करनेवाले कालके द्वारा विष्णुभगवान्की नाभिसे प्रकट हुआ वह सूक्ष्मतत्त्व कमलकोशके रूपमें सहसा ऊपर उठा और उसने सूर्यके समान अपने तेजसे उस अपार जलराशिको देदीप्यमान कर दिया ॥ १४ ॥ ❀ ❀ सम्पूर्ण गुणोंको प्रकाशित करनेवाले उस सर्वलोकमय कमलमें वे विष्णुभगवान् ही अन्तर्यामीरूपसे प्रविष्ट हो गये । तब उसमेंसे बिना पढ़ाये ही स्वयं सम्पूर्ण वेदोंको जाननेवाले साक्षात् वेदमूर्ति श्रीब्रह्माजी प्रकट हुए, जिन्हें लोग स्वयम्भू कहते हैं ॥ १५ ॥ ❀ ❀ उस कमलकी कर्णिका ( गद्दी ) में बैठे हुए ब्रह्माजीको जब कोई लोक दिखायी नहीं दिया, तब वे आँखें फाड़कर आकाशमें चारों ओर गर्दन घुमाकर देखने लगे, इससे उनके चारों दिशाओंमें चार मुख हो गये ॥ १६ ॥

तस्माद्युगान्तश्वसनावघूर्णजलोर्मिचक्रात्सलिलाद्विरूढम् ।
उपाश्रितः कञ्जमु लोकतत्त्वं नात्मानमद्धाविददादिदेवः ॥ १७ ॥
क एष योऽसावहमब्जपृष्ठ एतत्कुतो वाब्जमनन्यदप्सु ।
अस्ति ह्यधस्तादिह किञ्चनैतदधिष्ठितं यत्र सता नु भाव्यम् ॥ १८ ॥
स इत्थमुद्वीक्ष्य तदब्जनालनाडीभिरन्तर्जलमाविवेश ।
नार्वाग्गतस्तत्खरनालनालनाभिं विचिन्वंस्तदविन्दताजः ॥ १९ ॥
तमस्यपारे विदुरात्मसर्गं विचिन्वतोऽभूत्सुमहांस्त्रिणेमिः ।
यो देहभाजां भयमीरयाणः परिक्षिणोत्यायुरजस्य हेतिः ॥ २० ॥
ततो निवृत्तोऽप्रतिलब्धकामः स्वधिष्ण्यमासाद्य पुनः स देवः ।
शनैर्जितश्वासनिवृत्तचित्तो न्यषीददारूढसमाधियोगः ॥ २१ ॥
कालेन सोऽजः पुरुषायुषाभिप्रवृत्तयोगेन विरूढबोधः ।
स्वयं तदन्तर्हृदयेऽवभातमपश्यतापश्यत यन्न पूर्वम् ॥ २२ ॥
मृणालगौरायतशेषभोगपर्यङ्क एकं पुरुषं शयानम् ।
फणातपत्रायुतमूर्धरत्नद्युभिर्हतध्वान्तयुगान्ततोये ॥ २३ ॥
प्रेक्षां क्षिपन्तं हरितोपलाद्रेः सन्ध्याभ्रनीवेरुरुरुक्ममूर्ध्नः ।
रत्नोदधारौषधिसौमनस्यवनस्रजो वेणुभुजाङ्घ्रिपाङ्घ्रेः ॥ २४ ॥
आयामतो विस्तरतः स्वमानदेहेन लोकत्रयसंग्रहेण ।
विचित्रदिव्याभरणांशुकानां कृतश्रियापाश्रितवेषदेहम् ॥ २५ ॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

तस्य च श्रीनारायणोपासनयैवाविर्भूतज्ञानक्रियाशक्तेर्लोककर्तृकत्वं न स्वत इति वक्तुं प्रथमं तस्य विमोहमाह । तस्मात्सलिलाद्विरूढमुद्गतं कंजमुपाश्रितोऽपि साकल्येन तत्कंजं लोकतत्त्वं चात्मानं च साक्षान्न ज्ञातवान् । उ इति विस्मये । कथंभूतात् । युगांतश्वसनः प्रलयवायुस्तेनावघूर्णं तत्र तत्र प्रकंपितं यज्जलं तस्मात्सर्वत ऊर्मिचक्रं यस्मिन् ॥ १७ ॥ ❀ ❀ अविदुषस्तस्य वितर्कमाह । योऽसावहमब्जपृष्ठे एप कः अनन्यदेकमेवैतदब्जं कुतो वा जातं यत्रैतदधिष्ठितं तेनाधस्तात्सता वर्तमानेन नु निश्चितं भाव्यं स इत्थमुद्वीक्ष्येत्युत्तरेणान्वयः । तथा च श्रुतिः । "सोऽपश्यत्पुष्करपर्णे तिष्ठन् सोऽमन्यत अस्ति वैतद्यस्मिन्निदमधितिष्ठति" इति ॥ १८ ॥ ❀ ❀ तस्य च बहिर्मुखप्रवृत्त्या महताऽपि कालेन तदप्राप्तिमाह । स इति द्वाभ्याम् । तस्याब्जस्य यन्नालं तस्य नाडीभिरंतश्छिद्रैः तस्य खरनालस्य पद्मस्य यन्नालं तस्य नाभिमधिष्ठानं विचिन्वन्नर्वाग्गतोऽपि तत्तदा नाविंदत ॥ १९ ॥ ❀ ❀ हे विदुर आत्मसर्गं स्वकारणं त्रिणेमिः कालः अजस्य विष्णोर्हेतिः सुदर्शनरूपं शस्त्रं देहभाजां नराणां भयमुत्पाद-

१. प्रा० पा०—नालीभि० । २. प्रा० पा०—खरनालनाभिं स वै विचि० । ३. प्रा० पा०—श्रितदेहवेषम् ।

यन्निति संवत्सरशतमतिक्रांतमित्युक्तं भवति ॥ २० ॥ ❀ ❀ अंतर्मुखतया तु भगवंतं दृष्टवानित्याह द्वाभ्याम्। ततोऽन्वेषणान्निवृत्तः न प्रतिलब्धः कामो मनोरथो येन। स्वधिष्ण्यं पद्मम्। जितेन श्वासेन निवृत्तं संयतं चित्तं यस्य। अत एवारूढ आश्रितः समाधियोगो येन तथाभूतः सन्न्यपीददुपविवेश ॥ २१ ॥ ❀ ❀ पुरुषायुषा संवत्सरशतेन कालेनाभिप्रवृत्तः सुनिष्पन्नो योगस्तेन विरूढ उत्पन्नो बोधो यस्य यत्पूर्वं विचिन्वन्नपि नापश्यत्तत्स्वयमेवांतर्हृदयेऽवभातमपश्यत् ॥ २२ ॥ ❀ ❀ यदपश्यत्तद्वर्णयति। मृणालेति नवभिः। नवस्वप्यपश्यदित्यस्यैवानुषंगः। मृणालवद्गौरश्चासावायतश्च यः शेषस्तस्य भोगो देहः स एव पर्यंकस्तस्मिन्। कुत्र स्थिते पर्यंके। फणातपत्रैरायुताः सर्वतो युक्ता ये मूर्धानस्तेषां रत्नानि किरीटस्थानि तेषां द्युभिः प्रभाभिर्हतध्वांते युगांततोये ॥ २३ ॥ ❀ ❀ कथंभूतं पुरुषम्। हरितोपलाद्रेर्मरकतशिलामयपर्वतस्य प्रेक्षां शोभां क्षिपंतं स्वलावण्यातिशयेन तिरस्कुर्वंतं संध्याभ्रं नीवीपरिधानं यस्य तस्य शोभां पीतांबरेण क्षिपंतं उरुरुक्ममूर्ध्नोऽनेकस्वर्णशिखरस्य तस्य स्वकिरीटैः रत्नानि च उदधाराश्च ओषधयश्च सौमनस्यानि च पुष्पसमूहाः सुमनस एव वा तेषां वनस्रजो वनमाला यस्य। वेणव एव भुजा यस्यांघ्रिपा एवांघ्रयो यस्य स चासौ स च तस्य। अयमर्थः। यदि तस्मिन्माला इव स्थिता रत्नादयो भवंति वेणवश्च भुजा इव वृक्षाश्च पादा इव तर्हि तस्य शोभां स्वीयरत्नमुक्तातुलसीपुष्पदामभिर्भुजैरंघ्रिभिश्च क्षिपंतमिति ॥ २४ ॥ ❀ ❀ किंच। आयामतो दैर्घ्येण विस्तरतश्च स्वमानदेहेन मीयतेऽनेनेति मानमुपमा शोभनश्चासावमानो निरुपमो देहस्तेन। यद्वा। सुष्ठु अमानोऽपरिच्छिन्नस्तेन। यद्वा ताभ्यां स्वानुरूपप्रमाणेन अतएव लोकत्रयं संगृह्यते यस्मिंस्तथा विचित्राणि नानाविधानि दिव्यान्यपूर्वाणि चाभरणान्यंशुकानि च तेषां कृताऽऽसमंताच्छ्रीः शोभा येन तेन देहेन विशिष्टम्। एवं स्वत एवातिरम्यत्वेऽप्यपाश्रितवेषः स्वीकृतालंकारो देहो यस्य तमपश्यत्। यद्वा। केन प्रेक्षां क्षिपंतमित्यपेक्षायामेवंभूतेन देहेनेति संबंधः ॥ २५ ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः ।

कंजं पद्मम् चक्रं मंडलम् ॥ १७ ॥ ❀ ❀ ब्रह्मवितर्के प्रमाणमाह—तथा चेति। स ब्रह्मा पुष्करपर्णे कमलपत्रे यस्मिन्नधिकरणे एतत्पद्ममधिष्ठितमिति श्रुतिपदार्थः ॥ १८ ॥ ❀ ❀ तस्य ब्रह्मणः तदप्राप्तिरधिष्ठानाप्राप्तिः। नालं दंडः 'नालं न नापद्मदंडं' इति कोशात्। 'नाडी नाली सकुहरेऽम्ब्वादिनिर्गमनीवृति' इति कोशांतरात्। "नाभिर्मुख्यनृपे चक्रमध्यक्षत्रिययोः पुमान्। द्वयोः प्राणिप्रतीके स्यात्स्त्रियां कस्तूरिकामदे। आधारेऽपि कचिन्नाभिर्मध्यभागेपि युज्यते" इति धरण्यादयः। अर्वाक् समीपं तत्पद्माधिष्ठानं तदान्वेषणावसरे ॥ १९ ॥ ❀ ❀ विचिन्वतो मृगयतः तमसि स्वरूपाच्छादकमायालक्षणांधकारे अपारे भगवत्प्रसादं विना पारयितुमशक्ये "शतायुर्वै पुरुषः" इति श्रुत्यपेक्षया स्वामिचरणैः संवत्सरशतमिति व्याख्यातम् ॥ २० ॥ ❀ ❀ मनोरथः पद्माधिष्ठानावाप्तिलक्षणः अत एव संयतचित्तत्वादेव स देवो ब्रह्मा ॥ २१ ॥ ❀ ❀ संवत्सरशतेति। सामान्यत उक्तं भूयस्त्वं तप आतिष्ठेति भगवद्वाक्योत्तरं "विरिञ्चोपि ततश्चक्रे दिव्यं वर्षशतं तपः" इत्यग्रे वक्ष्यमाणत्वात्तत्रापि दिव्यप्रमाणकमेव तज्ज्ञेयमिति। यत्तु 'दिव्यं सहस्राब्दममोघदर्शनः' इति द्वितीयस्कंध उक्तं तद्ब्राह्मकल्पापेक्षमेतच्च पाद्मकल्पपरमिति न विरोधः। योगः समाधिः। विचिन्वन्नपि नालमार्गेण मृगयन्नपि ॥ २२ ॥ ❀ ❀ मृणालं बिसम् ॥ २३ ॥ ❀ ❀ 'प्रेक्षा धीक्षणशोभासु नृत्येपि कचिदुच्यते' इति। स्वलावण्यातिशयेन निजसौंदर्याधिक्येन स्वार्थिक—ण्यत्पक्षमाश्रित्याह—सुमनस एवेति। एतेन स्वीयरत्नमालामुक्तामालातुलसीमालापुष्पमालाभिस्सह मालामात्रत्वोक्तेः। अत्राशयमाह—अयमर्थ इति ॥ २४ ॥ ❀ ❀ अन्यदाह—किं चेति। 'अतसीकुसुमोपमेयकान्तिः' इत्याद्युक्तेरनुपमत्वासंभवादाह—यद्वेति। अपरिच्छिन्नदेहस्य भूषणादिधारणासंभवं मत्वा पुनराह—यद्वेति। ताभ्यां दैर्घ्यविस्ताराभ्यां स्वस्येश्वरस्यानुरूपेण योग्येन प्रमाणेन "अल्पस्य ह्यल्पदेहः स्यान्महांश्च स महेशितुः" इत्याद्युक्तेः। अत एव स्वानुरूपप्रमाणदेहत्वादेव। विशिष्टमिति पदाध्याहारापेक्षया द्वयोः संबंधे लाघवं मत्वाह—यद्वेति ॥ २५ ॥

## श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या ।

तस्य ब्रह्मणः विमोहं लोकतत्त्वाद्यज्ञानं लोकतत्त्वं च तत्तल्लिङ्गशरीरसहितं त्रैलोक्यस्वरूपं साक्षात्प्रत्यक्षतस्तत्तद्विशेषपूर्वकमित्यर्थः। सामान्यसलिलशब्देन पौनरुक्त्यमाशङ्क्य तत्र तत्रेत्यध्याहृतम्। तत्र वातावर्त्तस्थले प्रकम्पितं यद्विशेषजलं तस्मात्सर्वतः परितः तरङ्गसमूहो यत्र सामान्यसलिले तस्मात्सलिलाद्विरूढम् ॥ १७ ॥ ❀ ❀ क एष इति युग्मकं वितर्कं संशयोत्थं विचारं तेनाधिष्ठानविशेषेण पुष्करपर्णे पद्मपत्रे तिष्ठत्तिष्ठन् स ब्रह्माऽब्जमपश्यत्। दृष्ट्वा च सोऽमन्यत वितर्कितवान् वितर्कमेवाहास्तीति एतत्पद्माधिष्ठानमस्ति यस्मिन्नधिष्ठाने इदं पद्ममधितिष्ठतीति तस्य च ब्रह्मणः तदप्राप्तिम् अधिष्ठानालाभं तदान्वेषणकाले ॥ १८ ॥ १९ ॥ ❀ ❀ संवत्सरशतमिति "संवत्सरशतं नृणां परमायुर्निरूपितमि"त्युक्तेः ॥ २० ॥ ❀ ❀

अन्तर्मुखतया बहिरिन्द्रियनिग्रहेण तदेकध्यानपरतया समाधिरत्र विशेषज्ञानाभावात् सामान्याकारे स्वकारणे वृत्तिनिरोधः ॥ २१ ॥ ❀ ❀ संवत्सरशतेनेति । वर्त्तमानकलियुगापेक्षया ॥ २२ ॥ ❀ ❀ मृणालेति नवकम् । तत्र "बहुवाक्यैकवाक्यत्वे गर्भेऽङ्काबिन्दुमस्तका" इति परिभाषातः टीकाक्रमलाभायादित एव द्विबिन्दुमस्तका अङ्काः कर्त्तव्याः अवान्तरवाक्यैकवाक्यसमाप्तौ तु अङ्कद्वयं नवसंख्योनविंशतिसंख्यारूपं पृथक् पृथक् लेख्यमेवमन्यत्रापि ज्ञेयम् । पर्य्यङ्क इति तोय इति च व्यधिकरणसप्तम्यौ ॥ २३ ॥ ❀ ❀ लावण्यकान्त्या चाकचिक्यं लावण्यातिशयादयो धर्म्माः आक्षेपलभ्याः सुमनस एव वेति स्वार्थे ष्यञ् तेषां रत्नादीनां एतादृशमरकताद्रेरप्रसिद्धत्वादभूतोपमां बोधयितुं समासेन व्याचष्टे अयमर्थ इति तस्मिन् मरकताद्रौ ॥ २४ ॥ ❀ ❀ मीयते ज्ञायतेऽनेन सादृश्येन किन्तु मानशब्दस्योपमार्थेऽप्रसिद्धत्वाद्यद्वेति । अत्रापि पदच्छेदगौरवम् । अपरिच्छिन्नत्वमात्रविवक्षणे आयामविस्तरशब्दौ चाधिकाविति पुनर्यद्वेति । ताभ्यां स्वानुरूपप्रमाणत्वं यथाशोभं तत्तत्परिमाणवत्त्वं अतएवायामविस्तरवत्त्वादेव संगृह्यते संक्षिप्य निवेश्यते भूषणानां वैयर्थ्यव्युदासाय स्वीकृतेति व्याख्यातम् "अङ्गैरेवाभरणपटलीभूषिता दोग्धिभूषा" मिति न्यायात् पूर्वार्थे विशेषणे तृतीयाभ्युपगमाद्विशिष्टमित्यध्याहृतम् । किन्तु समुदिताद्रितिरस्कारे करणस्याव्याख्यानाद्यद्वेति ॥ २५ ॥

## श्रीमद्वीरराघवव्याख्या

तस्मात्ततः युगान्ते प्रलयान्ते यः श्वसनः पवनस्तेनावघूर्णं भ्रमत् यन्महोर्मीणामत्युच्चतरङ्गाणां चक्रं तद्यस्य तस्मात्सलिलाद्विरूढं कञ्जं जगत्पद्मं उपाश्रितः अधिष्ठितः आदिदेवश्चतुर्मुखः लोकतत्त्वं लोकात्मकपद्मतत्त्वमात्मानं चाद्धा तत्त्वेन न वेद ॥ १७ ॥ ❀ ❀ अवेदनमेव प्रपञ्चयति क इति । अब्जपृष्ठे कमलकर्णिकायां स्थितो योसावहमित्येप कः अनन्यद्द्वितीयम् । एतदब्जमप्सु कुतो वा जातम् एवमब्जस्य तस्य तर्कमाह अस्तीति । अत्राधिष्ठाने एतत्पद्ममधिष्ठितं तदधिष्ठानभूतं किञ्चन वस्तु अधस्तादस्ति हि यस्मात्तस्तैवानुभाव्यं विद्यमानाधिष्ठानेनैवाधिष्ठेयेन पद्मेन भवितव्यम् । अधिष्ठानाभावेऽधिष्ठेयस्य पद्मस्यासंभवादित्यर्थः ॥ १८ ॥ ❀ ❀ स इति । स ब्रह्मा इत्थम् उक्तप्रकारेणोद्वीक्ष्य प्रतर्क्यतदब्जनालनाडीभिस्तल्लोकपद्मनालच्छिद्रैरन्तर्जलं जलस्यान्तः प्रविवेश प्रविष्टश्च अजः ब्रह्मा खरं कठिनं नालं यस्य तस्य पद्मस्य नाभिमधिष्ठानं विचिन्वन्नन्वेष्यन्नर्वाग्गतोऽपि तदा तदधिष्ठानं नाविन्दत न लेभे ॥ १९ ॥ ❀ ❀ तमसीति । हे विदुर ! अपारे तमसि तमोवद्रूपदर्शनप्रतिबंधके जलं आत्मसर्गं सृज्यतेऽनेनेति कर्त्तुरेव करणत्वविवक्षायां वा अधिकरणे वा घञ् आत्मकारणमित्यर्थः । विचिन्वतः सतः त्रिणेमिः न्यूनाधिकसमदिवसरूपनेमित्रययुक्तः महान्दीर्घः स कालः आत्मभूसम्वत्सरशतमतिक्रान्तमित्यर्थः । कथंभूतोऽसौ त्रिणेमिः यः अजस्य भगवतः हेतिः कालचक्रं सुदर्शनरूपं शस्त्रं देहभाजां देहधारिणां भयमीरयन्नुत्पादयन्नायुः परिक्षिणोति ॥ २० ॥ ❀ ❀ एवं लोकपद्माधिष्ठानभूतः परमात्मा नान्वेषणादवगतः किं तूपासनयैवेत्याह तत इति द्वाभ्याम् । स देवः ब्रह्माऽप्रतिलब्धकामः न प्रतिलब्धः कामः अधिष्ठानदर्शनरूपमनोरथः येन सः ततोऽन्वेषणात्प्रतिनिवृत्य पुनः स्वधिष्ण्यं कमलकर्णिकामासाद्य शनैः जिताः श्वासाः प्राणा निवृत्तं विषयविमुखं कृतं चित्तञ्च येन सः अत एव आरूढसमाधियोग आरूढ आश्रितः समाधिरेव योगो येन तथाभूतः सन् न्यषीदत् उपविष्टवान् ॥ २१ ॥ ❀ ❀ कालेनेति । सोऽजः ब्रह्मा पुरुषायुषा कालेन शतसंवत्सरपर्य्यन्तकालेनाभिप्रवृत्तो यो योगः समाधियोगस्तेन विरूढ उत्पन्नो बोधो यस्य सः यत्पूर्वं विचिन्वन् जलेनापश्यत् तत् स्वयमेवान्तर्हृदयेऽवभातमपश्यत् ॥ २२ ॥ ❀ ❀ तद्वर्णयति मृणालेत्यादिनवभिः । नवस्वप्यस्तौदित्यस्यैवानुषङ्गः । मृणालवत्पद्मतन्तुवद्गौरश्चासावायतश्च यः शेषस्य भोगः स एव पर्यङ्कः तस्मिन् शयानम् एकं पुरुषमपश्यत् । कुत्र स्थिते पर्यङ्के फणा एवातपत्राणि तैरायताः सर्वतो युक्ता ये मूर्द्धानः तेषां रत्नानि किरीटस्थानि तेषां द्युतिभिः प्रभाभिः हतं निरस्तं ध्वान्तमन्धकारं यस्मिंस्तस्मिन्युगान्ततोये स्थित इत्यर्थः ॥ २३ ॥ ❀ ❀ कथंभूतं पुरुषं हरितोपलाद्रेर्मरकतशिलामयपर्वतस्य प्रेक्षां शोभां क्षिपन्तं स्वलावण्यातिशयेन तिरस्कुर्वन्तं कथंभूतस्य हरितोपलाद्रेः सन्ध्याभ्रमेव नीविः परिधानं यस्य तस्य सन्ध्याभ्रस्य शोभां पीताम्बरेण क्षिपन्तमित्यर्थः । उरुरुक्ममूर्ध्नः भूयिष्ठकनकशृङ्गस्य किरीटैः कनकशृङ्गशोभां क्षिपन्तमित्यर्थः । रत्नानि च उदकधाराश्च ओषधयः पुष्पज्योतींषि च सौमनस्यानि पुष्पाणि सुमनसां समूहा एव वा तेषां वनस्रजो वनमालाश्च यस्य तस्य वेणव एव भुजा अङ्घ्रिपा वृक्षा एवाङ्घ्रयः पादा यस्य तस्य स्वीयरत्नतुलसीमुक्ता पुष्पदामभिः भुजैरङ्घ्रिभिश्च हरितोपलाद्रेः रत्नादीनङ्घ्रिपान् तान् क्षिपन्तमिवेत्यर्थः । यदि मरकताद्रेः रत्नादयो वनमाला इव वेणवो भुजा इव वृक्षाश्च पादा इव वर्तेरंस्तर्हि तस्य शोभां स्वीयरत्नादिभिः क्षिपन्तमिवेत्ययभूतोपमेयम् ॥ २४ ॥ ❀ ❀ किंचाऽऽयामतः दैर्घ्येण विस्तरतः विस्तरेण च स्वमानदेहेन स्वानुरूपप्रमाणदेहेनात एव लोकत्रयसंग्रहेण लोकत्रयं संगृह्यतेऽनेनास्मिन्निति वा लोकत्रयसंग्रहस्तेन चित्राण्यद्भुतानि दिव्यान्यमानुषाण्याभरणान्यंशुकानि च येषां तेषां तृतीयार्थे षष्ठी, तैः कृता संपादिता श्रीः शोभा यस्य तेनेति देहविशेषणं यद्वा आभरणांशुकैः कृता या श्रीः तया लोकत्रयसंग्राहकस्वमानदेहेन चोपाश्रितः वेषदेहः उपाश्रितः स्फीतः वेषो यस्य स उपाश्रितवेषः एवंभूतो देहो यस्य तमिति बहुव्रीहिगर्भो बहुव्रीहिः ॥ २५ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली ।

इतोऽपि ब्रह्मैवोच्यत इत्याह तस्मादिति । युगान्तश्वसनः प्रलयवायुः तेनावघूर्णं क्षुब्धं महतीनामूर्मीणां चक्रं मण्डलं यस्मिंस्तत्तथा तस्मात् सलिलाद्विरूढमुत्पन्नं लोकतन्त्रं पृथिव्यादिलोकनिर्माणकारणं कञ्जं पद्मम् उ एव आदौ उत्पन्नो देव आदिदेवः आत्मानं स्वं परमात्मानं चाद्धा प्रत्यक्षं नाविदत् न ज्ञातवान् । अनेन विष्णुः स्वयं ब्रह्मा समभूदित्याशङ्का परिहृता, तस्याज्ञानासम्भवात् "अद्धा प्रत्यक्षसत्ययो" रिति यादवः ॥ १७ ॥ ❀ ❀ ब्रह्मणः संशयप्रकारं दर्शयति क एष इति । योऽसावब्जपृष्टे निषण्णः एषोऽहम् कः अप्स्वनन्यत्प्रधानमेतदब्जं कुत उत्पन्नं कारणाभावे च पद्मलक्षणकार्यस्याप्यसम्भवात् केनचित्कारणेन भवितव्यमिति युक्त्या निरचिनोद् ब्रह्मेत्याह अस्तीति । हि शब्दोऽवधारणार्थः, इह जले अधोदेशे किञ्चन पृथव्यादिविलक्षणं कारणं वस्तु अस्ति हि एव ! एतत्पद्मं यत्राधिष्ठितं तत्कारणं पृथिव्याद्यन्यतमं न स्यात्तेषामनुत्पन्नत्वात् अतो ब्रह्मैव मूलकारणमिति परिशिष्टमाह सतेति । सता ब्रह्मणाऽनुभाव्यमनुभवसिद्धत्वेनाङ्गीकार्यमित्यर्थः । स ब्रह्माऽचिन्तयत्कुतो नु पद्मं ब्रह्मणः स्यादिति श्रुतेः कुतो नु पद्ममिति सन्दिह्य ब्रह्मण उत्पन्नं स्यादिति निश्चितवानित्यर्थः । अनेन चतुर्मुखस्याज्ञानं क्षणिकं जीववन्न स्वरूपसम्बद्धं दुर्बलदृग्भिः कल्प्यमानं मध्यंदिनार्कक्षोभवदिति ज्ञायते ॥ १८ ॥ ❀ ❀ युक्त्या ज्ञातपद्मकारणो ब्रह्मा पुनः किमकार्षीदिति तत्राह स इत्थमिति । इत्थं परिशिष्टप्रमाणेन उद् ब्रह्म तस्योदिति नामेति श्रुतेः, वीक्ष्यालोच्य तस्याब्जस्य नालस्य दण्डस्य नालीभिः नाडीभिः सुषिरैः ततश्च किं तत्राह नेति । खरनालस्य पद्मस्य नालसम्बन्धिनीर्नालीर्विचिन्वन्नन्विच्छन् मार्गमाण इत्यर्थः, तत्कारणं नाविन्दत चक्षुर्विषयं न लब्धवान् ॥ १९ ॥ ❀ ❀ भगवत्प्रसादमन्तरेण पुरुषायुषेणापि तद्दर्शनं दुःशकं तादृग्माहात्म्योपेतत्वादिति तत्कालस्यानेकसंख्यया विशिष्टत्वमाह तमसीति । अपारेऽनवसाने तमसि स्वरूपाच्छादकमायालक्षणान्धकारे आत्मनः सर्गो यस्मात्स आत्मसर्गः तं स्वकारणं तिस्रो नेमयश्चातुर्मास्यलक्षणा यस्य स त्रिनेमिः अजस्य विष्णोर्हेतिश्चक्राख्यः ॥ २० ॥ ❀ ❀ एतद्दर्शनमपि न स्वप्रयत्नेन साध्यं किं तु तत्प्रसादेनैव तत्प्रसादश्च तत्समाधियोगेनेति तं करवाणीति तदुपास्तिप्रकारं कथयति तत इति । अप्रतिलब्धः अदृष्टः काष्ठोत्कर्षो ब्रह्मलक्षणो येन स तथा अदृष्टस्वकारणब्रह्मरूप इत्यर्थः, ततो निर्मार्गणात् स्वधिष्ण्यं पद्ममास्थायारुह्य शनैः प्राणं कुम्भके निरुध्य जितश्वासो भूत्वा विषयेभ्यो निवृत्तचित्तः सन् आरूढसमाधियोगः असम्प्रज्ञातचित्तैकाग्र्यलक्षणध्यानः पद्मकर्णिकायां चैलाजिनलक्षणायां न्यषीदत् स्वनासाग्रावलोकनोऽतिष्ठदित्यन्वयः । पुनः शश्वन्निरन्तरमित्यर्थः ॥ २१ ॥ ❀ ❀ योगफलमाह कालेनेति । पुरुषायुषा शतवर्षावधिना कालेन तत्कारणमपश्यतेत्यन्वयः । उपासनाजनितज्ञानफलमिदं दर्शनमिति भावेनाह अभिप्रवृद्धेति । अनुदिनं चन्द्रोदयेन समृद्धसमुद्रवत्प्रवृद्धयोगेन प्रकर्षेण समृद्धेन ध्यानापरपर्यायोपासनया विरूढबोधः समुत्पन्नापरोक्षज्ञानः तदपि स्वप्रसादेनेति भावेनाह अन्तर्हृदय इति । अवभातं प्रकाशितं स्वयं प्रधानं अनेन तस्मिन्स्वयमित्युक्तत्वात् ब्रह्मोत्पादकमेवापश्यन्नान्यदिति सिध्यति अवभातमिति विशेषणं विशिनष्टि अपश्यतेति पूर्वं पद्मनालनिर्मार्गणसमये यन्नापश्यत्तदिति शेषः । आत्मनेपदप्रयोगेण ममेयमेवेष्टदेवता नान्येति ध्वनयति ॥ २२ ॥ ❀ ❀ कीदृशं हरिमपश्यदित्याशङ्क्य नवभिः श्लोकैस्तं विशिनष्टि मृणालेति । फणानां सहस्राणामयुतेषु अविमिश्रितेषु अन्योऽन्यसम्पर्करहितेषु मूर्धसु औत्पत्तिकानां रत्नानां द्युभिर्द्युतिभिर्हतं नष्टं ध्वान्तं यस्य तद्धतध्वान्तं तच्च युगान्ततोयं तस्मिन् कल्पप्रलयजलस्थिते मृणालगौरायतशेषभोगपर्यङ्के शयानं शेषस्यानन्तस्य नागस्य भोगो देहः शेषभोगः "अहेः शरीरम् भोगः स्यादि" त्यभिधानम् । मृणालवद्गौरश्चायतश्च मृणालगौरायतः स चासौ शेषभोगश्च मृणालगौरायतशेषभोगः स एव पर्यङ्कः शयनीयं तस्मिन् पुरुषं पुरुषाकारं एकं केवलमप्राकृतमित्यर्थः ॥ २३ ॥ ❀ ❀ ध्यानसौकर्याय नीलपर्वतसाधर्म्येण वर्णयति प्रेक्षामिति । हरितोपलाद्रेर्नीलपर्वतस्य प्रेक्षां दर्शनीयकान्तिं क्षिपन्तं निराकुर्वन्तं कीदृशस्य नीलगिरेः सन्ध्याभ्रनीवेः सन्ध्याकालीनाभ्रमेव नीविर्वस्त्रं यस्य स तथा तस्य उरूणि बहूनि रुक्माणि सुवर्णानि मूर्ध्नि शृङ्गे यस्य स तथा तस्य रत्नैरुदधिस्तस्य रत्नाकरस्येत्यर्थः, ओषधयः सौमनस्यानि सुमनसां समूह एव वनस्रक् वनमाला यस्य स तथा तस्य वेणव एव भुजा यस्य अङ्घ्रिपा वृक्षा एवाङ्घ्रियस्य स तथा तस्य । अनेन हरिरपि नीलद्युतिदेहः पीताम्बरधरः सुवर्णकिरीटालङ्कृतमूर्धा कौस्तुभरत्नकन्धरः वनमालाचितो दीर्घदोर्दण्डमण्डितः प्रणतार्तिहारिश्रीपादपद्म इत्युत्प्रेक्षितं भवति । सन्ध्याभ्रवन्नीविर्यस्येत्यादिव्याख्यानं प्रेक्षां क्षिपन्तमित्यनेनानन्वितं स्यात् ॥ २४ ॥ ❀ ❀ लोकत्रयं संगृह्णातीति लोकत्रयसंग्रहस्तेनाऽऽयामतो विस्तरतः दैर्घ्यपरिमण्डलाभ्यां समानेन न्यग्रोधपरिमण्डलत्वादिलक्षणवता देहेन विचित्रदिव्याभरणाद्यानां कृतश्रिया पूर्णश्रिया उपाश्रितः समाश्रितः दिव्य औत्पत्तिको वेषः सौन्दर्यं यस्य स तथा तम् । यद्वा आभरणादीनां कृतश्रिया उपगम्याश्रितः सेवितो दिव्यवेषो यस्य स तथा तमिति ॥ २५ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः ।

सलिलाद्विरूढमिति । श्रीनारायणशयनावकाशस्योपर्य्यपि अनावृतत्वात् ॥ १७ ॥ ❀ ❀ क एष इति युग्मकम् ॥ १८ ॥ १९ ॥ २० ॥ ❀ ❀ आरूढसमाधियोग इति यत् किमपि सर्व्वकारणं वस्तु स्यात्तन्मय्याविर्भवत्वित्याशापूर्व्विका सामान्याकारेणैव तदनन्यवृत्तिता समाधियोगोऽत्र ज्ञेयः, विशेषाकाराज्ञानात् ॥ २१ ॥ ❀ ❀ पुरुषायुषा वर्षशते-

नेति श्रीमैत्रेयो वर्त्तमानकलियुगापेक्षया प्राहेति ज्ञेयम्। वस्तुतस्तूत्तरग्रन्थे भूयस्त्वं तप आतिष्ठेत्यादिश्रीभगवद्वाक्यानन्तरं दशमाध्याये विरिञ्चोऽपि तथा चक्रे दिव्यं वर्षशतं तप इत्युक्त्या एतदेव ज्ञेयम्। यत्तु द्वितीये दिव्यं सहस्राब्दमित्याद्युक्तं तत् ब्राह्मकल्पगतं ज्ञेयम्॥ २२—२५॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

भगवद्दत्तयैव शक्त्या ब्रह्मणः सृष्ट्यादिशक्तिर्न स्वत इति लोकेषु ज्ञापयितुं पूर्वाभ्यस्तसृष्ट्यादिशिल्पस्यापि ब्रह्मणो विमोहनमाह तस्मात् सलिलात् विरूढमुद्गतं कञ्जमुपाश्रितः सन् उ इति विस्मये लोकानां तत्त्वमात्मतत्त्वञ्च न विवेद। सलिलात् कथम्भूतात् युगान्तेत्यादि। युगान्तश्वसनः प्रलयवायुः॥ १७॥ ❀ ❀ अविदुषस्तस्य तर्कमाह योऽसावहमब्ज-पृष्ठ एष कः कुतः कस्माद्वा उत्थितमेतदब्जम् अनन्यदेकमेव। किञ्च हि निश्चितम् इह अधस्तात् किञ्चन वस्तु अस्ति यत्र एतत् पद्ममधिष्ठितम् अतएव सता सुधिया मया अनुभाव्यं तदनुभवितुमर्हम्। सन् "सन् सुधीः कोविदो बुध" इत्यमरः॥ १८॥ ❀ ❀ स इत्थमुद्वीक्ष्येत्युत्तरेणान्वयः तथाच श्रुतिः। सोऽपश्यत् पुष्करपर्णे तिष्ठन् सोऽमन्यत अस्ति वैतद्यस्मिन्निदमधि-तिष्ठतीति भगवदिच्छां विना साभिमानपुरुषप्रयत्नो वैफल्यायैव स्यादिति प्रदर्शयन्नाह स इति। नालीभिर्नाडीछिद्रैः तस्य खरनालस्य पद्मस्य यन्नालं तस्य नाभिमधिष्ठानं श्रीनारायणनाभिपद्मम्. अर्वाग्गतोऽपि तन्निकटगतोऽपि न अविन्दत न प्राप भक्त्या विना तत्प्राप्तेर्दुर्घटत्वादिति भावः॥ १९॥ ❀ ❀ आत्मसर्गं स्वकारणं त्रिनेमिः कालः। यः कालः देहभाजां नराणां भयं मृत्युसन्निधिम् ईरयन् कथयन् आयुः परिक्षिणोतीति सम्वत्सरशतात्मक इत्यर्थः। अजस्य विष्णोर्हेतिः सुदर्शन-शस्त्रांशस्वरूपः॥ २०॥ ❀ ❀ त्यक्तस्वाभिमानस्य तस्य तदिच्छया तद्ध्यानेन तत्प्राप्तिमाह ततः। अन्वेषणात् स्वधिष्ण्यं पद्मं निवृत्तचित्तः संयतमनाः। न्यषीदत् उपविवेश। समाधिर्भगवद्ध्यानोत्थं चित्तैकाग्र्यम्॥ २१॥ ❀ ❀ पुरुषायुषा सम्वत्सरशतात्मककालेनेति मैत्रेयो वर्तमानकलियुगापेक्षया प्राहेति ज्ञेयम्। अभिप्रवृत्तयोगेन पाकदशाप्राप्तभगवद्ध्यानेन। ध्यानेन स्म नो दर्शितं त उपासकानामित्युपरिष्टादुक्तेः। यत् स्वास्पदकमलाधिष्ठानं पूर्वं विचिन्वन्नपि नापश्यत् तत्स्वयमेवान्त-र्हृदयेऽवभातमपश्यत्॥ २२॥ ❀ ❀ तदेव वस्तु वर्णयति नवभिः। फणा एव आतपत्रायुतानि तेषु मूर्द्धरत्नानां शिरः-स्थमणीनां द्युभिः कान्तिभिर्हतध्वान्ते प्रलयजले॥ २३॥ ❀ ❀ हरितोपलाद्रेर्मरकतशिलामयपर्वतस्य प्रेक्षामुत्प्रेक्षां क्षिपन्तं किमयं मरकतमणिमयः पर्वत इति वा उत्प्रेक्षा तामपि स्वलावण्यातिशयेन तिरस्कुर्वन्तं निरुपममित्यर्थः। कथम्भूतस्य सन्ध्याभ्राणि नीवीव नितम्बे तस्य तस्योत्प्रेक्षां स्वीयपीताम्बरेण क्षिपन्तमित्यर्थः। उरुरुक्माणि किरीटानीव मूर्द्धसु शिखरेषु यस्य तस्येति स्वीयकिरीटैः रत्नानां उदधाराणाम् ओषधीनां सौमनस्यानां पुष्पसमूहानां वनस्रजो वनमाला यस्येति स्वीयरत्नमाला मुक्तामालातुलसीमालापुष्पमालाभिः वनस्रक्शब्देन मालामात्रोक्तेः। यद्वा रत्नादिभिर्वनस्रग् यस्येत्युभयत्रैकैव वनमाला व्याख्येया "पत्रपुष्पमयी माला वनमाला पदावधी" ति वनमालालक्षणे रत्नमुक्तादेरप्युपलक्षणं ज्ञेयम्। उपरिस्था वेणवो भुजा इव अधस्था अङ्घ्रिपाः अङ्घ्रय इव यस्य तस्येति स्वीयभुजपादैः॥ २४॥ ❀ ❀ किञ्च। आयामतो दैर्घ्येण विस्तरतो विस्तारेण च स्वमानः स्वानुरूपप्रमाणो यो देहस्तेन विशिष्टं स्र्रूपेण सुष्ठु अमानोऽपरिच्छिन्नस्तेन अपरिच्छेदमेव स्पष्टयति लोकत्रयसंग्रहेण त्रैलोक्यव्यापिना विचित्राणि दिव्यान्यलौकिकानि आभरणान्यंशुकानि च तेषामपि कृता श्रीः शोभा येन तेन। तथा अपाश्रितवेषदा ईहा इच्छा यस्य तम्। यदैव यं यं वेषमिच्छति तदैव सत्यसंकल्पत्वात्तं प्राप्नोतीत्यर्थः॥ २५॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

भगवत्कृपां विना वेदमयस्य चतुराननस्यापि तत्त्वज्ञानं न भवति कुतोऽन्यस्येति द्योतयितुमाह तस्मादिति। विरूढं विविक्ततया स्थितमपि कञ्जमपाश्रितः अधिष्ठितोऽपि उ वितर्के तथापि लोकानां प्रत्यहं सृज्यमानत्वेन वक्ष्यमाणानां तत्त्वं मूलं कञ्जं तथात्मानं च नाविदत्॥ १७॥ ❀ ❀ तदानीं किं कृतवानित्याकाङ्क्षायां स वितर्क्य कमलनाल-च्छिद्रे भगवन्तं द्रष्टुं प्राविशदित्याह क इति द्वाभ्याम्। अनन्यदेकमब्जं वा कुतः कुत एतदब्जमधिष्ठितं तेन अधस्तात्सता वर्तमानेन निश्चितं भाव्यं भवितव्यं स इत्थमुद्वीक्ष्येत्यग्रिमेण संबन्धः॥ १८॥ ❀ ❀ बहिर्वृत्त्यापि भगवत्स्वरूपगुणाद्यन-भिज्ञोऽपि भगवन्तं मृगयन् भगवत्प्राप्त्युपायं प्राप्नोत्येवेति चतुर्मुखवृत्तान्तेन दर्शयति स इत्थमित्यादिना। इत्थमुक्तप्रका-रेणोद्वीक्ष्य वितर्क्य तदब्जनालस्य नाडीभिरन्तश्छिद्रैः अन्तर्जलं जलमध्ये आविवेश। खरनालस्य पद्मस्य नाभिमधिष्ठानं विचि-न्वन् अन्वेषयन् अर्वाग्गतोऽप्यजो ब्रह्मा तदधिष्ठानं नाविन्दत न लेभे। अनेन "सापश्यत्पुष्करपर्णे तिष्ठन् सोऽमन्यत अस्ति वैतत् यस्मिन्निदमधिष्ठित" मिति श्रुतिरुपबृंहिता॥ १९॥ ❀ ❀ आत्मा सृज्यते पुत्रपौत्रादिरूपेण विस्तार्यते अस्मिन्नित्या-त्मसर्गः सृज्यमानविसर्गाधिकरणभूतो विष्णुस्तम् अधिकरणे घञ् विचिन्वतः सतः त्रिनेमिः त्रिचातुर्मास्यानि नेमयो यस्य सः अजस्य विष्णोर्हेतिः चक्रं संवत्सराख्यः कालः सुमहानभूत् संवत्सरशतावृत्त्या दीर्घोऽभूदित्यर्थः॥ २०॥ ❀ ❀ जितश्वा-सश्चासौ निवृत्तचित्तश्च आरूढः आश्रितः समाधियोगो येन सः धिष्ण्यं पद्ममासाद्य प्राप्य न्यषीदत् उपविवेश॥ २१॥

❀ ❀ स अजो ब्रह्मा पुरुषायुषा संवत्सरशतेन कालेन अभिवृत्तेन सिद्धेन योगेन भगवति मनोनियमनेन विरूढोऽधिगतो बोधो यस्य सः यदन्वेषणवेलायां नापश्यत् तत्स्वयमेवान्तर्हृदि अवभातमाविर्भूतमपश्यत् ॥ २२ ॥ ❀ ❀ तदेवाह मृणालेति नवभिः । नवस्वप्यपश्यदित्यस्यान्वयः । फणा एवातपत्राणि तैरेव आसर्वतो युता मूर्द्धानः तद्रत्नद्युभिः तत्किरीटकान्तिभिः हतमपगतं ध्वान्तं यस्मिन् , युगान्ततोये मृणालवत् पद्मतन्तुवत् गौरश्चासावायतश्च यः शेषः तद्भोगो देहः एव पर्यङ्कस्तस्मिन् ॥ २३ ॥ ❀ ❀ हरितोपलाद्रेः नीलशिलामयाचलस्य प्रकर्षेण दर्शनीया प्रेक्षा शोभा तां नीलवर्णादिना क्षिपन्तमधःकुर्वन्तं संध्याभ्रं नीवी परिधानं यस्य तस्य शोभां पीतपटेन क्षिपन्तमित्यर्थः । उरुरुक्ममूर्ध्नः उरवः बहवो रुक्ममूर्द्धानः कनकशृङ्गाणि यस्य तस्य कनकमयैः किरीटैः रत्नानि च उद्धाराश्च ओषधयश्च सौमनस्यानि च सुमनसां पुष्पाणां मण्डलानि तान्येव रत्नादिसौमनस्यान्तानि वनस्रजो वनमाला यस्य, वेणव एव भुजा यस्य, अङ्घ्रिपा एव अङ्घ्रयो यस्य, स चासौ स च तस्य । अयमर्थः यदि तस्मिन् स्रज इव स्थितानि रत्नोद्धारौषधिसौमनस्यानि स्युः वेणवा भुजा इव पादपाश्च अङ्घ्रय इव स्युः तदा तस्य शोभां स्वीयरत्नमुक्तातुलसीपुष्पमालाभिः भुजैरङ्घ्रिभिश्च क्षिपन्तमित्यभूतोपमा दर्शिता ॥ २४ ॥ ❀ ❀ आयामतो दैर्ध्येण विस्तरतो विस्तारेण च स्वमानदेहेन सुष्ठु अमानः प्रत्यक्षादिमानाग्राह्यस्तेन "न प्रत्यक्षं नानुमान" मिति श्रुतेः । लोकत्रयं संगृह्यते अनेन अस्मिन् वा स तथा तेन विचित्राणि अद्भुतानि दिव्यान्यलौकिकानि चाभरणानि अंशुकानि च तेषां तृतीयार्थे षष्ठी, तैः कृता श्रीः शोभा येन देहेन हरितोपलाद्रेः प्रेक्षां क्षिपन्तमित्यनेन संबन्धः । यत उपाश्रितवेषः उद्धारादिवत् स्वीकृतमौक्तिकादिवेषो देहो यस्य हरितोपलाद्रिप्रेक्षाक्षपणश्यामशोभायुक्तो यः तमपश्यदित्यन्वयः ॥ २५ ॥

## श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

एवं मुखचतुष्टयेनाऽपि सर्वा एव दिशः पश्यन् यदा लोकान् न दृष्टवांस्तदा भयं चिन्ता च जातेत्यभिप्रायेणाऽऽह—तस्मादिति । युगान्ते यः श्वसनो वायुस्तेनाऽवघूर्णितं यज्जलम् , तत उत्पन्ना ये ऊर्मयः, तेषां चक्रं यस्मिन्; तादृशात्सलिलाद्विशेषेण रूढं कमलमपाश्रित इति भयकारणम् । सलिलमत्र नित्यम् , जलं कृत्रिमम् । वायुना च जलमेव दोलायितम् , अतस्तस्य चक्रं सलिले वर्तत इति न पौनरुक्त्यम् । विरूढमिति नित्यसलिलादुत्पन्नत्वान्न मज्जनम् , नापि नालभङ्गः । अपाश्रित इत्यस्थिरासनः, अत एव कमलविचारे आत्मविचारे वा बुद्धिर्न प्रसृता । लोकानां तन्त्रं देहादिसर्वसामग्री यत्र, एतादृशं कमलमात्मा च; उभयमप्यद्धा साक्षादादिदेवोऽपि भूत्वा पूर्वज्ञानादिसम्पन्नोऽपि नाऽविदत न ज्ञातवान् ॥ १७ ॥ ❀ ❀ तदा पूर्ववासनया तत्र जिज्ञासोत्पन्नेत्याह—क एष इति । 'योऽहमेष कः ?' जिज्ञासायामात्मविचारे प्रवृत्त इति पूर्वं विचारप्रारम्भे यो विचारकत्वेन प्रतिभातः, स एव विचारदशायां भिन्नतया प्रतीत इत्येष इत्युक्तम् । स्वस्य स्वरूपाज्ञानात् क इति प्रश्नः[1] । यत्र चाऽब्जपृष्ठे अहमेतद्वा कुतो जातमिति । ननु जले कमलं भवत्येव, किमाश्चर्यमित्यत आह—अनन्यदिति । अप्स्विति बहुजलसंबन्धः, तादृशे च कमलं न [2]भवति । किञ्च, अधस्तादेतन्निर्मूलं न भवति । अतो यत्रैतदधिष्ठितमधिष्ठाय स्थितं तेन सता भाव्यम् , असतोऽधिष्ठानाभावात् । अतोऽस्य कमलस्याधस्तात्किञ्चिदस्ति । किंचनेति किञ्चिदर्थे । एतत्कमलमधिष्ठितं यत्र । एवमनुमानेन नैयायिकवदेतावज्ज्ञानं जातम् । ततस्तेन ज्ञानेन तर्कसहकृतेन पदार्थं विनिश्चित्य, 'पुरुषोऽहम् , मम च जननाधारात्मकं कमलम् , न केवलमचेतनादुत्पत्तिमर्हतीति कश्चिन्मत्पिता वर्त्तते, अधस्तात्तमन्वेषयिष्यामि' इति निश्चित्य, सूक्ष्मं रूपं कृत्वा, तस्याब्जस्य नाडीरन्ध्रेषु प्रविष्टोऽन्तर्जलमाविवेश । तथाप्यधोभागं न प्राप्तवानित्याह—नाऽर्वाग्गत इति । तस्य खरनालस्य कमलस्य यन्नालम् , तेन तन्मूलभूतां नाभिं विचिन्वन्नपि, तत् तदा अजोऽपि ब्रह्माऽपि सन्नाविन्दत । अथवा, तन्नालमेवाविन्दत, यतोऽयमजः बहिर्मुखः ॥ १८ ॥ १९ ॥ ❀ ❀ ततो[3] यज्जातं तदाह—तमस्यपार इति । विदुरेति संबोधनं महतामप्यज्ञानमिति सूचयति । अपारे तमसीत्यालोकाभावात् दूरादज्ञानम् । आत्मसर्गं स्वपितरं विचिन्वतो महान् कालो जात इत्याह—त्रिणेमिरिति । चक्रत्वात्तस्य परावृत्तिः शीघ्रमेव भवति । शीतातपवर्षाकाला नेमयो यस्य सः । कियान् कालो जात इत्याकाङ्क्षायामाह—यो देहभाजामिति । शतसंवत्सरात्मकः स कालः, 'शतायुर्वै पुरुषः' इति श्रुतेः । शतवर्षानन्तरं देहभाजामवश्यं भयं भवति, तस्य कालस्य मरणजनकत्वात् । तत्र हेतुमाह—अजस्याप्यायुर्हेतिः कालचक्रं यतः परिक्षिणोति; तस्याऽन्येषां देहभाजां भयजनने कः सन्देह इत्यर्थः ॥ २० ॥ ❀ ❀ अतः स्वस्याऽपि वृथा मरणमाशङ्क्य ततो निवृत्त इत्याह—तत इति । अप्रतिलब्धकाम एव ततो निवृत्त्य पुनः स्वधिष्ण्यमास्थाय ज्ञानसहितो भूत्वा देवो जातः । ततः शनैर्जितश्वासेन निवृत्तचित्तो भूत्वा न्यषीदत, स्थिरतया उपविष्टः । तत आरूढः समाधिपर्यन्तं योगो येन । योगेन चित्तैकाग्र्यं विधाय तमेवार्थमचिन्तयदित्यर्थः ॥ २१ ॥ ❀ ❀ एतादृशो योगोऽपि बहुकालं कृत इत्याह—कालेनेति । पुरुषायुषाऽभिप्रवृद्धो योगो यस्मिन् , तेन कालेन विरूढबोधो जातः । विशेषेण रूढः स्थिरो बोधो यस्य । तदा स्वयमेव भगवन्तमपश्यदित्याह—स्वयमिति । पूर्वं प्रयत्नेनाऽपि न दृष्टः, इदानीं चित्ते शुद्धे भगवान्

---

१. प्रयोगः, क । २. संभवति, क । ३. तदा, क ।

स्वयमेव मायाजवनिकां दूरीकृत्य ब्रह्मणो हृदये भातः। पूर्वं मानसपरिकल्पितमूर्तिवैलक्षण्यमाह—यन्न पूर्वम्। कदाचिदपि नाऽपश्यत्। यद्यपि हृदये ब्रह्मकल्पे भगवान् दृष्टो वैकुण्ठस्थितः; प्रतिकल्पं च पश्यति, अन्यथा सृष्टिसामर्थ्यं न भवेत्, तथापि नैवंविधः कदापि दृष्टः। न हि स्वमनसि भाते भगवति तन्नाभिकमले स्वयं स्थातुमर्हति, न वा नालेऽधस्ताद्विद्यमानेऽच्छिन्ननालोऽन्तः प्रविशति, न वा कदाचित्स्वस्यान्तर्हृदये प्रसन्नो भूत्वा समागतः शेषे शेते। अतो 'यन्न पूर्वं कदाचिदपि दृष्टम्' इति यदुक्तं तद्युक्तमेव॥ २२॥ ॐ ॐ अपूर्वं रूपं तदनुवर्णयति सृष्ट्युपयोगित्वान्नवभिः।

अवस्थामुपमानं च स्वरूपं च त्रिभिः क्रमात्। शास्त्रप्रत्यक्षभेदेन फलसाधनमेव च॥ १॥
सर्वतत्त्वाश्रयेणाऽपि सर्वसौन्दर्यमेव च। एवं षड्गुणमाहात्म्यमेकरूपेण वर्णितम्॥ २॥
पुनर्गुणानां प्राधान्यादुपमारूपतत्त्वभिः। तस्य ब्रह्मत्वसंसिद्ध्यै तज्ज्ञाने सर्वबोधनम्।
ततो युक्तं यदेवात्र तदन्त्येन निरूप्यते॥ ३॥

तत्र भगवन्तं प्रथममवस्थावत्त्वेन दृष्टमनुवर्णयति—मृणालेति। मृणालवद्गौर आयतो यः शेषभोगः शेषस्य शरीरम्, तदेव पर्यङ्कः, तस्मिन्नेक एव पुरुषः शेते। महदेतदाश्चर्यं यत्सर्पशय्यायां शेत इति। किञ्च, फणातपत्राणां यदयुतमसेलनम्, तत्सहितो यो मूर्द्धा, तत्र यानि रत्नानि, तेषां द्युभिर्हतं ध्वान्तं यत्र। एतादृशे युगान्ततोये प्रलयसमुद्रे शेषपर्यङ्के। तस्यैव शेषस्य ये फणास्त एव विकसिताः सन्त आतपत्रप्राया भवन्ति। ते च पुनः कमलपत्रवत् न पौर्वापर्येण मिलिताः। तत्र फणस्याऽधोभागे देवतात्वसिद्धये सर्वत्रैव मूर्द्धा वर्तते, फणास्तु शोभार्थाः। ते वा मूर्द्धानोऽयुताः तत्र सर्वत्रैव मण्युत्तमाः सन्ति, तैरेव तत्रत्योऽन्धकारः सर्व एव गच्छति, अतः स्पष्टो भगवान् दृश्यते। ब्रह्मणो हि बुद्धिर्बहिः प्रकटा, न त्वन्तः, अतो भगवानपि बहिरेव प्रकटो बुद्धिनिरूपकत्वादध्यास[१]स्य। भगवतोऽलौकिकप्रभावाज्ज्ञानाद्भगवत्तेजसा नान्धकारनिवृत्तिः, किन्तु प्रमाणतो ज्ञानात् शेषशिरोमणिभिरेव॥ २३॥ ॐ ॐ तस्य बुद्धौ लोकवत् प्रतिभातमिति लौकिकोपमा भगवति '[२]वर्ण्यते प्रेक्षामिति। 'कीदृशं ददर्श' इति सर्वत्राऽऽकाङ्क्षा। हरितोपलाद्रेः प्रेक्षां क्षिपन्तम्। हरिन्मणिपर्वतः कश्चित् क्षीरसमुद्रे वर्तते, तथा शेषपर्यङ्के भगवान्। अत एव शेषस्य मृणालतुल्यता; शैत्यचिक्कणकान्तीनां शुक्लरूपाश्रितानां तत्रैव सत्त्वात् प्रेक्षा दृष्टिः। तुल्यो हि तुल्यविषयिकां दृष्टिं दूरीकरोति, न तु भगवत्त्वेन। तत्र वक्तव्यं सर्वप्रेक्षामेव क्षिपतीति। हरितोपलानामद्रिः। ननु युक्तमेव तत्प्रेक्षाक्षेपणम्; अनलङ्कृतः सः, भगवान् अलङ्कृत इति। तत्राऽऽह—सन्ध्याभ्रनीवेरिति। सन्ध्याकालीनान्यभ्राणि मेघाः पीतरक्तास्ते नीवी कटिवस्त्रं पीताम्बरं यस्य। उरूणि रुक्माणि सुवर्णानि मुकुटरूपाणि मूर्द्धसु यस्य। किञ्च रत्नानि पद्मरागादीनि, उदधारा जलप्रवाहाः, ओषध्यो वनस्थाः रात्रौ तेजस्व्यः, सौमनस्यं सुमनसां समूहः, वनानि च; तेषां माला यस्य। पञ्चवर्णा हि भगवन्माला, यथेन्द्रधनुषो मध्ये वर्णा भवन्ति। रत्नानामेका माला आरक्ता रत्नमालेव; उदधाराणां माला मुक्ताहार इव; ओषधीनां माला अलौकिकदिव्यरत्नकान्तिमालेव, दीपसदृशमणिमालेव वा; पुष्पमाला पुष्पमालेव; वनमाला तुलसीमालेव किञ्च, वेणव एव भुजाः, अङ्घ्रिपा एव अङ्घ्रयो यस्य; वेणुभुजश्चासावङ्घ्रिपाङ्घ्रिश्च॥ २४॥ ॐ ॐ स्वरूपमाह—आयामत इति। आयामो दैर्घ्यम्। विस्तारो विशालता। लोकत्रयाणां संग्रहो यत्र, एतादृशं स्वस्य शरीरस्य मानम्। यावता विस्तारेण दैर्घ्येण च परिकल्पमाने लोकत्रयं तत्र तिष्ठति, तादृशेन देहेन उपलक्षितं भगवन्तमित्यर्थः। किञ्च, विचित्राणि दिव्यानि आभरणान्यंशुकानि च यस्य। तेषां संबन्धिन्या तैरेव कृतया श्रिया अपाश्रितः—सर्वत्र तेजःपुञ्जवत्परिवर्तमानो वेष आकृतिविशेषो यस्य। तादृशो देहो यस्येति। भगवतो रूपं सच्चिदानन्दरूपमिति ज्ञापकं त्रैलोक्याश्रयत्वम्। आभरणादिभिः क्रियमाणा शोभा भगवद्वेषमेवाश्रयते, न त्वाभरणैर्भगवद्वेषे शोभा भवति। आभरणानामाभरणत्वं च भगवद्धर्मः॥ २५॥

## श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

कालेनेत्यत्र। तद्युक्तमेवेति। अनेन दर्शनविषयस्याऽ- पूर्वताविवरणेनैश्वर्यसन्देहस्य तस्यामवस्थायां वारणाज्जीववैलक्षण्यं तदापि बोधितम्॥ २२॥ ॐ ॐ मृणालेत्यत्र। कारिकाभिरे- कादशानां तात्पर्यमाहुः—अवस्थेत्यादि। चतुर्थपञ्चमयोराहुः—शास्त्रेत्यादि। शास्त्रेण भजतां फलसाधने एकेन, प्रत्यक्षेण भजतां ते अपरेणेत्यर्थः। सप्तमादित्रयस्याहुः—पुनरित्यादि। गुणानामिति। उत्थितावस्थाधर्माणाम्। तत्त्वभिरिति। ऐसाभावश्छान्दसः। दशमस्याहुः—तस्येत्यादि। तस्य दृष्टस्य स्वरूपस्य ब्रह्मज्ञापनार्थं सर्वबोधनम्, 'यस्मिन् विदिते सर्वमिदं विदितं भवति' इति श्रुतेः। सर्वबोधजनकं तज्ज्ञानं निरूप्यत इत्यर्थः। एकादशस्याहुः—तत इत्यादि। अन्त्येनेति। एकादशेन श्लोकेन॥ विवृतौ। ननु पूर्वं हृदये च भातमित्युक्तम्, इदानीं समुद्रे किमित्युच्यत इत्याकाङ्क्षायामाहुः ब्रह्मण इत्यादि॥ २३॥ ॐ ॐ प्रेक्षामित्यत्र सर्वत्रेति नवस्वपि श्लोकेषु। ननु भगवत्त्वेन न क्षिपतीत्यत्र किं गमकमित्याङ्काक्षायामाहुः—तत्रेत्यादि। भगवत्त्वेन प्रेक्षाक्षेपे विवक्षितेन 'न तत्समः' इति श्रुतेस्तथा वक्तव्यं स्यात्, तच्च

१. अध्यायस्य. क. ख. ग. घ, ङ.। २. प्रतिवर्ण्यते. ग. च.

नोक्तमतस्तदेव गमकमित्यर्थः । तत्राऽहेति । तादृशाकाङ्क्षायां पर्वतस्याऽप्यलङ्कृतत्वमाह ॥ २४ ॥ ❀ ❀ आयामत इत्यत्र । नन्वत्र ब्रह्मत्वबोधनाय विशेषणानां कथनाद्विचित्रदिव्येति विशेषणस्य किं प्रयोजनमित्याकाङ्क्षायामाहुः—आभरणानामित्यादि ॥२५॥

### श्रीगिरिधरकृता बालप्रबोधिनी

तस्यापि श्रीनारायणोपासनेनैव आविर्भूतशक्तेर्लोककर्तृत्वं न स्वत इति वक्तुं प्रथमं तस्य मोहमाह—तस्मादिति । युगान्ते प्रलये यः श्वसनो वायुस्तेनावघूर्णितं यज्जलं तत उत्पन्ना ये ऊर्मयस्तेषां चक्रं समूहो यस्मिन् तादृशात् सलिलाद्विशेषेण रूढं कञ्जं कमलम् उपाश्रितः अधिष्ठित आदिदेवोऽपि ब्रह्मा लोकतत्त्वं लोकात्मकपद्मतत्त्वमात्मानं चाद्धा तत्त्वेन नाविदन्न ज्ञातवानित्यन्वयः । उ इति विस्मये ॥ १७ ॥ ❀ ❀ अवेदनमेव प्रपञ्चयति—क इति । अब्जपृष्ठे कमलकर्णिकायां स्थितो योऽसावहमित्येष कः ? अनन्यत् अद्वितीयमेतदब्जमप्सु ;कुतो वा जातम् ? अतो यत्राधिष्ठाने एतत्पद्ममधिष्ठितं तदधिष्ठानभूतं किञ्चन वस्तु अधस्तादस्ति । हि यस्मात् सता भाव्यं विद्यमानाधिष्ठानेनैवाधिष्ठेयेन भवितव्यम्, अधिष्ठानाभावेधिष्ठेयस्यासम्भवादित्यर्थः । नु निश्चितमेतत् ॥ १८ ॥ ❀ ❀ स अजो ब्रह्मा इत्थमुद्वीक्ष्य विचार्य तस्याब्जस्य नालनाडीभिर्नालच्छिद्रैः अन्तर्जलं जलस्य मध्ये आविवेश । एवं खरनालस्य कमलस्य यन्नालं तस्य नाभिमधिष्ठानं नाविन्दत लेभे ॥ १९ ॥ ❀ ❀ हे विदुर अपारे तमसि अन्धकारे आत्मसर्गमात्मस्रष्टारं विचिन्वतस्तस्य महान् त्रिणेमिः चतुर्मासत्रयं नेमिर्यस्य स कालोऽभूत् । महानिति क्रियानित्यपेक्षायां संवत्सरशतात्मक इत्याशयेनाह—य इति । यो भयमीरयाणः उत्पादयन् देहभाजां प्राणिनामायुः परिक्षिणोति क्षयं नयति । कुत एवंकरणे तत्सामर्थ्यमित्यपेक्षायामाह—अजस्य हेतिः अजस्य भगवतो हेतिः जगद्विनाशे शस्त्रविशेष इत्यर्थः ॥ २० ॥ ❀ ❀ एवं तस्य बहिर्मुखप्रवृत्त्या महताऽपि कालेन भगवदप्राप्तिं प्रदर्श्य अन्तर्मुखतया तु स भगवन्तं दृष्टवानित्याह द्वाभ्याम्—तत इति । स देवो ब्रह्मा अप्रतिलब्धकामः अप्राप्ताधिष्ठानदर्शनरूपमनोरथ एव ततोऽन्वेषणात् निवृत्तः पुनः स्वधिष्ण्यं कमलकर्णिकारूपस्थमासाद्य शनैः जिताः श्वासाः प्राणाः निवृत्तं विषयविमुखीकृतं चित्तं येन सः आरूढः आश्रितः समाधिपर्यन्तो योगो येन तथाभूतः सन्न्यषीदत् उपविवेशेत्यन्वयः । अत्र समाधिपदेन यत्किमपि कारणं वस्तु स्यात्तदाविर्भवत्वित्येकतानरूपा चिन्ता ज्ञेया, विशेषाकाराज्ञानात् ॥ २१ ॥ ❀ ❀ पुरुषायुषा संवत्सरशतात्मकेन कालेन अभिप्रवृत्तः सुनिष्पन्नो यो योगस्तेन विरूढ उपपन्नो बोधो दिव्यदर्शनसामर्थ्यं यस्य सोऽजो ब्रह्मा यत्पूर्वं विचिन्वन्नपि नापश्यत् तत्स्वकारणं भगवत्स्वरूपं स्वयमेवान्तर्हृदयेऽवभातमपश्यदित्यन्वयः ॥ २२ ॥ ❀ ❀ यदपश्यत्तद्वर्णयति—मृणालेति नवभिः । नवस्वप्यपश्यदित्यस्यैवानुषङ्गः । मृणालवत् पद्मतन्तुवत् गौरश्चासावायतश्च यः शेषस्य भोगो देहः स एव पर्यङ्कः तस्मिन् शयानमेकं पुरुषमपश्यत् । स पर्यङ्कः कुत्र स्थित इत्यपेक्षायामाह—फणेति । फणा एवातपत्राणि तैरायुताः सर्वतो युक्ताः ये मूर्द्धानस्तेषां रत्नानि किरीटस्थानि तेषां द्युभिः प्रभाभिर्हतं निरस्तं ध्वान्तमन्धकारं यस्मिन् तस्मिन् युगान्ततोये स्थित इत्यर्थः ॥ २३ ॥ ❀ ❀ हरितोपलाद्रेः मकरतशिलामयपर्वतस्य प्रेक्षां शोभां क्षिपन्तं स्वलावण्यातिशयेन तिरस्कुर्वन्तम् । कस्य पदार्थस्य केन शोभातिरस्कार इत्यपेक्षायामाह—सन्ध्येति । सन्ध्याभ्रं नीविः परिधानं यस्य तस्य सन्ध्याभ्रस्य शोभां पीताम्बरेण क्षिपन्तमित्यर्थः । उरुरुक्ममूर्ध्नः भूयिष्ठकनकशृङ्गस्येति कनककिरीटेन कनकशृङ्गशोभां क्षिपन्तमित्यर्थः । रत्नानामुदकधाराणामोषधीनां सौमनस्यानां पुष्पसमूहानां च वन्यानां स्रजो माला यस्य तस्येति । तत्र रत्नमालायाः स्वरत्नमालया, उदकधारामालायाः स्वमुक्तामालया, ओषधीमालायाः स्वतुलसीमालया, तत्पुष्पमालायाः स्ववनमालया शोभातिरस्कारो ज्ञेयः । तथा उपरिस्थिता वेणव एव भुजा अधस्थिता अङ्घ्रिपा वृक्षा एव अङ्घ्रयः पादा यस्य तस्य, स्वभुजैरङ्घ्रिभिश्च शोभां क्षिपन्तमित्यर्थः ॥ २४ ॥ ❀ ❀ आयामो दैर्घ्यं विस्तारो विशालता ताभ्यां स्वमानेन स्वानुरूपप्रमाणेन देहेन तत्स्वरूपशोभां क्षिपन्तमित्यन्वयः । तदपि स्वानुरूपम् । प्रमाणं कियदित्यपेक्षायामाह—लोकेति । लोकत्रयं सावकाशं सङ्गृह्यते यस्मिंस्तथाभूतेनेत्यर्थः । पूर्वसूचितामेव आभरणादिशोभां स्पष्टयन् विशिनष्टि—विचित्रेति । विचित्राणि नानाविधानि दिव्यान्यपूर्वाणि च यान्याभरणानि अंशुकानि वस्त्राणि च येषां कृता आ समन्तात् श्रीः शोभा येन तेन देहेनेत्यर्थः । एतादृशस्वरूपधारणे बह्वायाससम्भवात् तत्कथं धृतवानित्यपेक्षायां सङ्कल्पमात्रेणैवेत्याह—अपाश्रितवेषदेहमिति । अपाश्रितं चिन्तितं वेषं ददातीत्यपाश्रितवेषदा ईहा इच्छा यस्य तमपश्यदित्यन्वयः ॥ २५ ॥

### हिन्दी अनुवाद

उस सयम प्रलयकालीन पवनके थपेड़ोंसे उछलती हुई जलकी तरङ्गमालाओंके कारण उस जलराशिसे ऊपर उठे हुए कमलपर विराजमान आदिदेव ब्रह्माजीको अपना तथा उस लोकतत्त्वरूप कमलका कुछ भी रहस्य न जान पड़ा ॥ १७ ॥ ❀ ❀ वे सोचने लगे, 'इस कमलकी कर्णिकापर बैठा हुआ मैं कौन हूँ ? यह कमल भी बिना किसी अन्य आधारके जलमें कहाँसे उत्पन्न हो गया ? इसके नीचे अवश्य कोई ऐसी वस्तु होनी चाहिये, जिसके आधारपर यह स्थित है' ॥ १८ ॥ ❀ ❀ ऐसा सोचकर वे उस कमलकी नालके सूक्ष्म छिद्रोंमें होकर उस जलमें घुसे । किन्तु उस नालके आधारको

खोजते-खोजते नाभिदेशके समीप पहुँच जानेपर भी वे उसे पा न सके ॥ १९ ॥ ❀ ❀ विदुरजी ! उस अपार अन्धकारमें अपने उत्पत्ति-स्थानको खोजते-खोजते ब्रह्माजीको बहुत काल बीत गया । यह काल ही भगवान्‌का चक्र है, जो प्राणियोंको भयभीत ( करता हुआ उनकी आयुको क्षीण ) करता रहता है ॥ २० ॥ ❀ ❀ अन्तमें विफलमनोरथ हो वे वहाँसे लौट आये और पुनः अपने आधारभूत कमलपर बैठकर धीरे-धीरे प्राणवायुको जीतकर चित्तको निःसङ्कल्प किया और समाधिमें स्थित हो गये ॥ २१ ॥ ❀ ❀ इस प्रकार पुरुषकी पूर्ण आयु के बराबर कालतक ( अर्थात् दिव्य सौ वर्षतक ) अच्छी तरह योगाभ्यास करनेपर ब्रह्माजीको ज्ञान प्राप्त हुआ; तब उन्होंने अपने उस अधिष्ठानको, जिसे वे पहले खोजनेपर भी नहीं देख पाये थे, अपने ही अन्तःकरणमें प्रकाशित होते देखा ॥ २२ ॥ ❀ ❀ उन्होंने देखा कि उस प्रलयकालीन जलमें शेषजीके कमलनालसदृश गौर और विशाल विग्रहकी शय्यापर पुरुषोत्तम भगवान् अकेले ही लेटे हुए हैं । शेषजीके दस हजार फण छत्रके समान फैले हुए हैं । उनके मस्तकोंपर किरीट शोभायमान हैं, उनमें जो मणियाँ जड़ी हुई हैं, उनकी कान्तिसे चारों ओरका अन्धकार दूर हो गया है ॥ २३ ॥ ❀ ❀ वे अपने श्याम शरीरकी आभासे मरकतमणिके पर्वतकी शोभाको लज्जित कर रहे हैं । उनकी कमरका पीतपट पर्वतके प्रान्तदेशमें छाये हुए सायङ्कालके पीले-पीले चमकीले मेघोंकी आभाको मलिन कर रहा है, सिरपर सुशोभित सुवर्णमुकुट सुवर्णमय शिखरोंका मान मर्दन कर रहा है । उनकी वनमाला पर्वतके रत्न, जलप्रपात, ओषधि और पुष्पोंकी शोभाको परास्त कर रही है तथा उनके भुजदण्ड वेणुदण्डका और चरण वृक्षोंका तिरस्कार करते हैं ॥ २४ ॥ ❀ ❀ उनका वह श्रीविग्रह अपने परिमाणसे लंबाई-चौड़ाईमें त्रिलोकीका संग्रह किये हुए है । वह अपनी शोभासे विचित्र एवं दिव्य वस्त्राभूषणोंकी शोभाको सुशोभित करनेवाला होनेपर भी पीताम्बर आदि अपनी वेष-भूषासे सुसज्जित है ॥ २५ ॥

पुंसां स्वकामाय विविक्तमार्गैरभ्यर्चतां कामदुघाङ्घ्रिपद्मम् ।
प्रदर्शयन्तं कृपया नखेन्दुमयूखभिन्नाङ्गुलिचारुपत्रम् ॥ २६ ॥
मुखेन लोकार्तिहरस्मितेन परिस्फुरत्कुण्डलमण्डितेन ।
शोणायितेनाधरबिम्बभासा प्रत्यर्हयन्तं सुनसेन सुभ्र्वा ॥ २७ ॥
कदम्बकिञ्जल्कपिशङ्गवाससा[1] स्वलंकृतं मेखलया नितम्बे ।
हारेण चानन्तधनेन वत्स श्रीवत्सवक्षःस्थलवल्लभेन ॥ २८ ॥
परार्ध्यकेयूरमणिप्रवेकपर्यस्तदोर्दण्डसहस्रशाखम् ।
अव्यक्तमूलं भुवनाङ्घ्रिपेन्द्रमहीन्द्रभोगैरधिवीतवल्शम् ॥ २९ ॥
चराचरौको भगवन्महीध्रमहीन्द्रबन्धुं सलिलोपगूढम् ।
किरीटसाहस्रहिरण्यशृङ्गमाविर्भवत्कौस्तुभरत्नगर्भम् ॥ ३० ॥
निवीतमाम्नायमधुव्रतश्रिया स्वकीर्तिमय्या वनमालया हरिम् ।
सूर्येन्दुवाय्वग्न्यगमं त्रिधामभिः परिक्रमत्प्राधनिकैर्दुरासदम् ॥ ३१ ॥
तर्ह्येव तन्नाभिसरःसरोजमात्मानमम्भः[2] श्वसनं वियच्च ।
ददर्श देवो जगतो विधाता नातः परं लोकविसर्गदृष्टिः ॥ ३२ ॥
स कर्मबीजं रजसोपरक्तः प्रजाः सिसृक्षन्नियदेव दृष्ट्वा ।
अस्तौद्विसर्गाभिमुखस्तमीड्यमव्यक्तवर्त्मन्यभिवेशितात्मा ॥ ३३ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां तृतीयस्कन्धेऽष्टमोऽध्यायः

श्रीधरस्वामिविरचिता भावार्थदीपिका ।

स्वाभिलषितफलाय विविक्तैः शुद्धैर्वेदोक्तैर्मार्गैरभ्यर्चतां पुंसां कामदुघमंघ्रिपद्मं प्रदर्शयंतं किंचिदुन्नमय्य समर्पयंतम् । नखा इव इंदवस्तेषां मयूखा रश्मयस्तैर्भिन्नाः संभिन्ना अंगुलय एव चारूणि पत्राणि यस्य तत् ॥ २६ ॥ ❀ ❀ लोकार्तिहरं

१. प्रा० पा०—सुपीतवाससा । २. प्रा० पा०—सरोरुह० ।

स्मितं यस्मिंस्तेन परिस्फुरद्भ्यां कुंडलाभ्यां मंडितेन अधरबिंबदीप्त्या शोणवदाचरितेन शोभननासायुक्तेन सुभ्रुवा शोभनया भ्रुवा च प्रत्यर्हयंतं पूजकान्प्रतिपूजयंतं संमानयंतम् ॥ २७ ॥ ❀ ❀ कदंबकिंजल्कवत्पिशंगं यद्वासस्तेन मेखलया च नितंबे स्वलंकृतम्। हे वत्स श्रीवत्सयुक्तं यद्वक्षःस्थलं तस्य वल्लभेन वक्षस्यनर्घेण हारेण स्वलंकृतमित्यर्थः ॥ २८ ॥ ❀ ❀ महाचंदनवृक्षरूपकेण निरूपयितुं तं विशिनष्टि। परार्ध्यानि श्रेष्ठानि केयूराण्यंगदानि मणिप्रवेकाश्च मण्युत्तमास्तैः पर्यस्ता व्याप्ता दोर्दंडा एव सहस्र-मनंताः शाखा यस्य। चंदनवृक्षोऽपि केयूरादितुल्यैः फलपुष्पादिभिर्व्याप्तशाखो भवति। अव्यक्तं प्रधानं मूलमधो भागो यस्य। यद्वा। अव्यक्तं ब्रह्म मूलं यस्य ब्रह्माभिव्यक्तिरूपत्वात् वृक्षस्यापि मूलं न व्यक्तम्। भुवनात्मकमंत्रिपेंद्रम्। अहींद्रस्यानंतस्य भोगैः फणैर्देहावयवैर्वाऽधिवीताः संवेष्टिताः स्पृष्टा वलशाः स्कंधा यस्य। 'वनस्पते शतवल्शो विरोह' इति श्रुतेः। सोऽपि सर्पैर्वे-ष्टितो भवति ॥ २९ ॥ ❀ ❀ प्रेक्षां क्षिपंतमित्यत्रैव पर्वतरूपेण निरूपितमपि विशेषणांतरैः पुनर्निरूपयति। भगवानेव महीध्रस्तम्। चराचराणामोकः स्थानं सोऽपि तथा अहींद्रस्य बंधुं सोप्यहींद्राणां बंधुः। सलिलेनोपगूढमावृतं पर्वतोऽपि मैनाका-दिस्तथा। किरीटसाहस्रमेव हिरण्यशृंगाणि यस्य सोऽपि मेर्वादिस्तथा यथा। पर्वतस्य गर्भे कचिद्रत्नमाविर्भवति तथाविर्भव-त्स्पष्टं दृश्यमानं कौस्तुभरत्नं गर्भे मूर्तिमध्ये यस्य तत् ॥ ३० ॥ ❀ ❀ किंच। वनमालया निवीतं कंठलंबिन्या व्याप्तम्। आम्नाया वेदा एव मधुव्रतास्तैः श्रीर्यस्यास्तया। हरिमिति पर्वतादिरूपमपश्यत् हरिरसाविति ज्ञातवानित्यर्थः। सूर्यादिभिरगमम-गम्यं स्वव्यापारैराकलयितुमशक्यमित्यर्थः। किंच। त्रिष्वपि लोकेषु धाम स्फूर्तिर्येषां तै रक्षणार्थं परिक्रमद्भिः परितो धावद्भिः प्राधनिकैः प्रधनं संग्रामस्तत्प्रयोजनैः सुदर्शनादिभिर्हेतुभूतैर्दुरासदं दुष्प्रापम् ॥ ३१ ॥ ❀ ❀ यदैव हरिमपश्यत्तर्ह्येव तदैव लोकविसर्गदृष्टिः संस्तस्य नाभिसरसि सरोजं श्वसनं प्रलयवायुं वियदाकाशं च ददर्श ॥ ३२ ॥ ❀ ❀ कर्मबीजं लोकसृष्टेः कारणम्। रजसोपरक्तो रजोगुणयुक्तः अतः प्रजाः स्रष्टुमिच्छन्नियदेव नाभिसरोजादिपंचकमेव विसर्गेऽप्यभिमुखो दत्तचित्तः स्तुत्यंतं भगवंतमस्तौत्। कथंभूतः अव्यक्तवर्त्मनि भगवति निवेशितचित्तः ॥ ३३ ॥

इति तृतीये टीकायामष्टमोऽध्यायः ॥ ८ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

'संभेदः स्फुटने संगे' इति मेदिनी। भिन्नपदस्य संभिन्नार्थताकथनमत्रोपसर्गस्य धात्वर्थद्योतकत्वाभिप्रायेणैव न हि केवलोपसर्गस्य वाचकतास्तीत्यन्यत् ॥ २६ ॥ ❀ ❀ सुभ्रुवेत्युवङ्भाव आर्षः ॥ २७ ॥ ❀ ❀ इत्यर्थ इति। बहुमूल्य-हारालंकृतोरस्कमिति भावः ॥ २८ ॥ ❀ ❀ 'प्रधाने व्यक्तमव्यक्तो ब्रह्मण्यस्पष्टमूर्खयोः' इति यादवोक्तिमाश्रित्याह—यद्वेति। शास्त्रविद्भिरपि न व्यज्यत इदमित्थन्तया कथ्यते मूलं यस्य तत्तथा सर्वमूलत्वेन मूलांतररहितं यद्वाऽव्यक्तस्य प्रकृतेर्मूलं कारणं "तस्मादव्यक्तमुत्पन्नं त्रिगुणं द्विजसत्तम" इति भारतोक्तेः। यद्वा 'अव्यक्तोयमचिंत्योयम्' इत्याद्युक्तेः। स्वयं भगवान्मूलं यस्य तत्तथा। वल्शशब्दस्य स्कंधवाचकत्वे श्रुतिं प्रमाणयति "शतवल्शोनं तस्कंधो विरोहो वृक्षः" इति श्रुतिपदार्थः। सोऽपि चंदनवृक्षोऽपि। 'भोगिवेष्टनमार्गेषु' इति महाकव्युक्तेः ॥ २९ ॥ ❀ ❀ सिंहावलोकनन्यायेन पुनराह—प्रेक्षामित्यादिना सोपि पर्वतोपि तथा चराचरवासस्थानम्। सोऽपि पर्वतोपि। तथा समुद्रजलगुप्तः सोपि मेर्वादिरादिना कैलासग्रहः तथा स्वर्णादिशृंगवान् तथा पर्वतवत् ॥ ३० ॥ ❀ ❀ पुनः पर्वतपार्थक्येन वर्णयति। किं चेति। 'निवीतं कंठलंबितम्' इत्यमरः। आम्नायंतेऽभीक्ष्णं वर्ण्यंते धर्मादयो यत्र यद्वा। आम्नायंतेऽभ्यस्यन्ते कल्याणार्थिभिरनिशमित्याम्नायाः। इत्यर्थ इति। यथा मणिप्रभायां मणिबुद्ध्या यावन्मणिं लभते तथा विसंवादिभ्रमन्यायेन पर्वतबुद्ध्यापि हरिं पश्यन्हरिमेव लब्धवानिति भावः। "दीपप्रभामणिभ्रांतिर्विसंवादिभ्रमस्मृतः। मणिप्रभामणिभ्रांतिः संवादिभ्रम उच्यते ॥" इति विद्यारण्योक्तेः। इत्यर्थ इति। "न तद्भासयते सूर्यो न चंद्रो न च पावकः" इति स्मृतेः। "न तत्र सूर्यो भाति" इत्यादिश्रुतेश्च। भक्तिं विना प्राप्तुमशक्यत्वमाह किं चेति। रक्षणार्थमभक्तजनासुरादीनां तत्रागमननिषेधार्थमिति सर्वरक्षकस्य "स्ववीर्यगुप्ता हि मनोः प्रसूतिः" इति न्यायेन रक्षकांतरासंभवात् ॥ ३१ ॥ ❀ ❀ जलादिभूतत्रयमात्मानं सरोजं चेति पञ्चकमेव ददर्श न पृथिव्यादीत्यर्थः ॥ ३२ ॥ ❀ ❀ स ब्रह्मा अतो रजोगुणोपयुक्तत्वात् दत्तचित्तः कथमहं विसर्गं कुर्यामिति भावयन् प्रभुमेव शरणं व्रजामीति विसर्गाभि-निवेशं परित्यज्य भगवन्तमेवास्तौदित्यर्थः ॥ ३३ ॥

इति श्रीमद्भागवते भावार्थदीपिकाप्रकाशे तृतीयस्कन्धेऽष्टमोऽध्यायः ॥ ८ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

सम्भिन्नाः संयुक्ताः (४) ॥ २६ ॥ ❀ ❀ मुखविशेषणत्वे सुभ्रुणेति स्यादिति पृथगेव चकारोऽध्याहृतः (५) ॥ २७ ॥ ❀ ❀ वक्षसीत्यध्याहारादावृत्त्या च व्याख्यानादित्यर्थोक्तिः (६) ॥ २८ ॥ ❀ ❀ रूपकेण द्वयोस्तादात्म्येन तं भगवन्तं प्रधानस्य तन्नियम्यत्वेन तदधोभागत्वं कारणत्वेन मूलस्थानीयत्वं भगवतोऽप्रकृतत्वादित्यरुचौ यद्वेति ब्रह्मणो निर्विकल्पक-

ज्ञानमात्रत्वेन विशेष्यत्वान्मूलस्थानीयत्वं यतो निर्विकल्पकसाक्षात्कृतेः प्राथमिकत्वात् सविकल्पकभगवतो ब्रह्माभिव्यक्तिरूपत्वम् अङ्घ्रिपेन्द्रं वृक्षश्रेष्ठं श्रुतौ शतवल्शा शतस्कन्धी विरोहिता उत्पन्ना (७)॥ २९॥ ❀ ❀ विशेषणान्तरैश्चराचरौकस्त्वादिभिः सोऽपि पर्वतोऽपि (८)॥ ३०॥ ❀ ❀ स्वव्यापारैरातपादिभिः आकलयितुमभिभवितुम् आर्थिकार्थत्वादित्यर्थोक्तिः (९)॥ ३१॥ ❀ ❀ अतः पञ्चकात्परं सृष्ट्युपकरणम् ॥ ३२॥ ❀ ❀ अतः उपरक्तत्वात् विसर्गे दत्तचित्तोऽपि निवेशितचित्तस्सन्नस्तौदित्यन्वयः॥ ३३॥

इति श्रीभागवते महापुराणे तृतीयस्कन्धे दीपिन्याख्यदीपिकाटिप्पण्याम् अष्टमोऽध्यायः॥ ८॥

## श्रीमद्वीरराघवव्याख्या

पुंसामिति। स्वकामाय स्वाभिलषितफलाय विविक्तमार्गैरसङ्कीर्णैर्वर्णाश्रमादिधर्मैरभ्यर्चतामाराधयतां पुंसां कामान् समीहितफलानि दोग्धीति कामदुघं यदङ्घ्रिपद्मं तत्कृपया प्रदर्शयन्तं पुरुषमपश्यत्। कथंभूतमङ्घ्रिपद्मं नखा एवेन्दवः तेषां मयूखैः किरणैः भिन्नाः संभिन्ना व्याप्ता इत्यर्थः। ते चाङ्गुलय एव चारूणि सुन्दराणि पत्राणि यस्य तत्॥ २६॥ ❀ ❀ मुखेनेति। लोकानाम् उपासकानामार्त्तिहरं दुःखहरं स्मितं यस्मिंस्तेन परिस्फुरद्भ्यां कुंडलाभ्यां मण्डितेनाधरबिंबदीप्त्या शोणायितेन शोणवदाचरितेन सुनसा शोभननासिकायुक्तेन सुभ्रुवा सुभ्रुवा चाननेन प्रत्यर्हयन्तमुपासकान् संमानयन्तम् ॥ २७॥ ❀ ❀ किञ्च कदम्बकिञ्जल्कवत्पिशङ्गवर्णेन वाससा मेखलया च नितम्बेष्वलङ्कृतं हे वत्स! हे विदुर! अनन्तधनेन बहुमूल्येन श्रीवत्सयुक्तं यद्वक्षःस्थलं तस्य वल्लभेन सुन्दरतरभूषणभूषितेन हारेण च स्वलंकृतम्॥ २८॥ ❀ ❀ पुनश्च चन्दनवृक्षरूपेण निरूपयितुं तं विशिनष्टि। पराध्यानि केयूराण्यङ्गदानि मणिप्रवेकाः मण्युत्तमास्तैः पर्यस्ता व्याप्ता ये दोर्दण्डा भुजदण्डा एव सहस्रमनन्ताः शाखा तस्य तं वृक्षोऽपि केयूरादितुल्यैः फलपुष्पादिभिर्व्याप्तशाखो भवति। अव्यक्तं ब्रह्ममूलं यस्य तं ब्रह्माभिव्यक्तिरूपत्वात् वृक्षस्यापि मूलमव्यक्तं भुवनाङ्घ्रिपेन्द्रं भुवनकारणमङ्घ्रिपेन्द्रं वृक्षश्रेष्ठम् अहीन्द्रस्यानन्तस्य भोगैः फणैर्देहावयवैर्वा अभिवीताः संवेष्टिताः वल्शाः स्कन्धा यस्य तम्। वृक्षोऽपि हि सर्पवेष्टितो भवति॥ २९॥ ❀ ❀ प्रेक्षां क्षिपन्तमित्यत्रैव पर्वतरूपेण रूपितमपि विशेषणान्तरैः पुना रूपयति चराचरेत्यादिना। भगवानेव महीध्रः पर्वतस्तं कथंभूतं चराचराणामोकः स्थानं पर्वतोऽपि तथा अहीन्द्रस्य शेषस्य बन्धुं पर्वतोऽप्यहीन्द्राणां बन्धुः सलिलोपगूढं जलेनावृतं पर्वतोऽपि मैनाकादिस्तथा। किरीटानां साहस्रमेव हिरण्यशृङ्गाणि यस्य तं मेर्वादिस्तथा। आविर्भवत्स्पष्टं दृश्यमानं कौस्तुभरत्नं गर्भे मूर्त्तिमध्ये यस्य तम्। पर्वतस्यापि हि गर्भे क्वचिद्रत्नमाविर्भवति॥ ३०॥ ❀ ❀ किञ्च वनमालया निवीतं कण्ठबिम्बव्याप्तं कथंभूतया वनमालया आम्नायमधुव्रतश्रिया आम्नाया वेदास्त एव मधुव्रता भ्रमरास्तैः श्रीर्यस्यास्तया स्वकीर्त्तिमय्यास्वकीर्त्तिप्रचुरया स्वकीर्त्तिज्ञायद्भिर्वेदरूपैर्भ्रमरैराहितशोभयेत्यर्थः। सूर्येन्दुवाय्वग्न्यगमं सूर्यादिभिरगममगम्यं स्वव्यापारैराकलयितुमशक्यमित्यर्थः। सूर्येन्दुताराग्न्यगममित्यपि पाठः तदा सूर्यादिभिरप्रकाश्यमित्यर्थः, तथा च श्रुतिः "न यत्र सूर्यो भाति न चन्द्रतारकम्" इत्यादिका। त्रिधामभिः त्रिषु लोकेषु धाम स्फूर्त्तिर्येषां तैः रक्षणार्थं परिक्रमद्भिः प्राधनिकैः प्रधनकः संग्रामस्तत्प्रयोजनकैः सुदर्शनादिहेतिभिर्दुरासदं दुष्प्रापम्॥ ३१॥ ❀ ❀ तर्हीति। यदैव हरिमपश्यत्तर्ह्येव तदैव लोकविसर्गदृष्टिः लोकसृष्टयर्थं ज्ञानं यस्य सः जगतां व्यष्टीनां कर्त्ता स्रष्टा देवः ब्रह्मा तस्य भगवतः नाभिसरसि सरोजं श्वसनं प्रलयकालवायुं तात्कालिकमम्भ आत्मानं स्वात्मानं च ददर्श। ततः सरोजादिभ्यः परमन्यत् सृष्टिप्रकारादिकं न ददर्शेत्यर्थः॥ ३२॥ ❀ ❀ अथालब्धजगत्सृष्टिज्ञानस्तल्लब्धये भगवन्तं तुष्टावेत्याह स इति। स ब्रह्मा रजसा रजोगुणेन उपरक्तः युक्तः अतएव प्रजाः सिसृक्षन् स्रष्टुमिच्छन् इयदेव नाभिसरोजादिपञ्चकमेव विसर्गाभिमुखः विसर्गे अभिमुख उन्मुखः सिसृक्षन् विसर्गाभिमुख इत्याभ्यामिच्छाप्रयत्नावुक्ताविति न पौनरुक्त्यम्। अव्यक्तवर्त्मन्यनभिव्यक्तगतौ पुरुषोत्तमेऽधिवेशितः आत्मा चित्तं यस्य स ईड्यं स्तुत्यं कर्मबीजं क्रियत इति कर्म जगत् "यस्य चैतत्कर्मेति" श्रुतेः तस्य बीजं कारणं भगवन्तमस्तौत् स्तुतवान्॥ ३३॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कंधे मद्वीरराघवाचार्यकृतभागवतचंद्रचंद्रिकायां अष्टमोऽध्यायः॥ ८॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

कामं दोग्धीति कामदुघं तच्चाङ्घ्रिपद्मं पुंसां प्रदर्शयन्तमित्यन्वयः। नन्वेवं तर्हि किमिति सर्वे पुरुषार्थभाजो नाभूवन्निति तत्राह। स्वकामायेति विचिर्पृथग्भाव इति धातोर्विविक्तैर्वैदिकादिभेदेन पृथक्कृतैर्मार्गैरभ्यर्चतां यथाभिमुखो भवति तथार्चनं कुर्वतां नखा एवेन्दवस्तेषां मयूखा रश्मयस्तैर्भिन्ना इतरेतरविलक्षणा अङ्गुलयस्ता एव चारूणि पत्राणि यस्याङ्घ्रिपद्मस्य तथा तत्' अज्ञजनबुद्ध्यारोहार्थम् एवमुक्तं स्वत इतरपद्मविलक्षणमिदमङ्घ्रिपद्ममित्यर्थः॥ २६॥ ❀ ❀ मुखेन प्रत्यर्हयन्तं शरणागतजनान् सम्मानयन्तमिव स्थितमिति शेषः, लोकार्तिहरस्मितेनेत्यादिना मुखं विशिनष्टि। अधरबिम्बभासा

शोणायितेन रक्तवद्वर्तमानेन सुनसेन शोभमाननासिकेन सुशोभना भ्रूर्यस्य तत्सुभ्रु तेन सुभ्रुा। नपुंसकश्च सुधालुशब्दवदयं शब्दः ॥ २७ ॥ ❀ ❀ किञ्जल्कः केसरः कदम्बेति तत्पुष्पं मेखला काञ्ची अनन्तधनेनेति हारस्यानर्घ्यत्वं वक्ति हे वत्स विदुर! श्रीवत्सलक्षणस्य वक्षःस्थलस्य वल्लभेन प्रियेण ॥ २८ ॥ ❀ ❀ अधुना वृक्षसाधर्म्येण हरिं वर्णयति परार्ध्येति। परार्ध्यैरनर्घैः केयूरैः मणीनां प्रवेकाः श्रेष्ठाः येषु तैः कङ्कणैश्च पर्यस्तं परितो न्यस्तमलंकृतं दोर्दण्डसहस्रमेव शाखा यस्य स तथोक्तस्तं अव्यक्तं प्रधानं त्रिगुणं मूले पादे यस्य स तथा तं प्रकृतेः कारणं वा "तस्मादव्यक्तमुत्पन्नं त्रिगुणं द्विजसत्तमे" ति वचनात् अविज्ञाताधः-प्रदेशमिति वा "प्रधाने व्यक्तमव्यक्तो ब्रह्मण्यस्पष्टमूर्खयो" रिति यादवः। भुवनेषु विद्यमानानामङ्घ्रिपाणामिन्द्रं यद्वा चतुर्दश-भुवनाख्याङ्घ्रिपाणामिन्द्रं श्रेष्ठम्। अहीन्द्रस्य शेषस्य भोगैः शरीरविशेषैरधिवीतवल्कं सम्वीतत्वचम्। उभयत्र सममिदम् ॥ २९ ॥ ❀ ❀ पुनरपि पर्वतसाधर्म्येण वर्णयति चराचरौक इति। भगवन्महीध्रं श्रीनारायणाख्यपर्वतमपश्यदित्यन्वयः। चराचरस्य जगत ओको मन्दिरम् "ओकसीमन्दिराश्रया" विति च, प्रलयसलिलेन किरीटानां सहस्राण्येव हिरण्यश्रृङ्गाणि यस्य स तथा तं कण्ठे आविर्भवत्कौस्तुभरत्नगर्भं प्रकाशमानकौस्तुभं कुस्तुभात्समुद्राज्जातं तन्नाम रत्नं गर्भं आभरणं यस्य स तथा तम् "गर्भोपचारके तुन्दे नेपथ्ये प्रसिते पिचे"त्यभिधानम् ॥ ३० ॥ ❀ ❀ आम्नाया एव मधुव्रता भृङ्गास्तेषामाश्रयया स्वरूप-कीर्तिमय्या वनमालया निवीतं संवीतं कण्ठ इति शेषः, इयन्तं कालं अमुक्तं शवलं ब्रह्म ब्रह्मा ददर्श न नित्यमुक्तं निर्गुणमिति तत्राह सूर्येति। त्रिधाम्नो विष्णोरगम्यच्छद्भिर्नित्यं तत्समीप एव तिष्ठद्भिर्मुक्तैः सूर्येन्दुवाय्वग्निभिर्वृतः। अत्र व्यत्यासादादिशब्दप्रक्षेपो ज्ञातव्यः। सूर्येन्दुवाय्वग्न्यादिभिरित्याचार्यवचनाच्च परिक्रमद्भिः प्रदक्षिणं कुर्वद्भिः प्राधनिकैः प्राधनस्य हरेर्भृत्यैः पुरपालकैश्च वृतमिति शेषः। तदुक्तं "मुक्तं वाय्वादिभिर्विष्णुं वृतं ब्रह्मा ददर्श हे"त्यादिविशिष्टवचनाच्च, दुरासदमित्यनेनापि मुक्तैर्निषेवितं विष्णुमपश्यदिति गम्यते ॥ ३१ ॥ ❀ ❀ अनेनैतच्च लब्धमित्याह तर्हीति। यदैवंविधं हरिमपश्यत्तर्हि तदैव नाभिसरसि उत्पन्ने सरोजे स्थितमात्मानं स्वम्। ब्रह्मणो लोकविसर्गदृष्टिः लोकेन ज्ञानेन विशिष्टमुक्तस्वभावो येषां सूर्यादीनां लोकविसर्गास्तेषां दर्शनं लोके विसर्गाः सृष्टिरहिता लयोदकवाय्वादय एव तेषां दर्शनमभूदतः एतद्दर्शनात्परमन्यद्दर्शनं नाभूत्। मुक्तसूर्यादिकं प्रलयजलादिकमेव ब्रह्मा ददर्श परं न ददर्शेत्युक्तं भवति। यद्वा लोकस्य ज्ञानस्य विसर्गस्य सृष्ट्यादिव्यापारशून्यस्य निर्गुणस्य दृष्टिरतः परं न भवति इदमेव निर्गुणदर्शनमिति भावः ॥ ३२ ॥ ❀ ❀ यदर्थमहं हरिणा सृष्टस्तत्कर्तुं तदनुग्रहमन्तरेण न शक्नोम्यतः स्तुत्या तं प्रसाद्य तत्कटाक्षैधितज्ञानवीर्योऽभीष्टं कार्यं शुश्रूषालक्षणं करोमीति भावेन तं स्तौतीत्याह स्वकर्मबीज-मिति। स ब्रह्मा तमीशमस्तौदस्तौषीदित्यन्वयः। कीदृशं स्वकर्मबीजं सृष्टौ स्वनिमित्तकारणादृष्टस्य व्यञ्जकं कीदृशो ब्रह्मा रजसा गुणेन उपरक्तः। उपरागफलमाह प्रजा इति। सृष्टिसाधनमियदम्भआदिकं दृष्ट्वा विसर्गाभिमुखः विविधसृष्ट्यभिमुखः अव्यक्त-वर्त्मनि ब्रह्मलक्षणमार्गे अभिनिवेशितात्मा निर्विषयात् निविष्टमनाः ॥ ३३ ॥

इति श्रीभागवते महापुराणे तृतीयस्कंधे श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्यां अष्टमोऽध्यायः ॥ ८ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

अव्यक्तमूलमिति। न व्यज्यते शास्त्रविद्भिर्न कथ्यते मूलं यस्य तं सर्वमूलत्वेन मूलान्तररहितमित्यर्थः। अव्यक्तः स्वयं भगवांस्तन्मूलमिति वा भुवनरूपाणामङ्घ्रिपाणामिन्द्रम् ईश्वरम् ॥ २९—३१ ॥ ❀ ❀ तर्हीति। अतः परं सृष्ट्युपकरणम् ॥ ३२ ॥ ❀ ❀ स इति। रजसा युक्तः सन् प्रजाः स्रष्टुमिच्छत् इयत् नाभिसरोजादिपञ्चकमेव लोकसृष्टेः कारणं दृष्ट्वा विसर्गे दत्तचित्तोऽपि अव्यक्तिवर्त्मनि भगवति निवेशितचित्तः सन्नस्तौदित्यर्थः ॥ ३३ ॥

इति श्रीमद्भागवतमहापुराणे तृतीयस्कन्धे श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे अष्टमोऽध्यायः

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

स्वकामाय स्वाभिलषितफलाय। यद्वा स्वं भगवानेव कामस्तस्मै भगवन्तमेव प्राप्तुमित्यर्थः। स्वस्य भगवतः कामाय सेवाभिर्भगवन्तं सुखयितुमिति वा। विविक्तैर्ज्ञानकर्माद्यमिश्रत्वेन शुद्धैर्मार्गैर्वैधरागादिभिर्दास्यसख्यादिभावमार्गैर्वा काम-दुघं सेवोपयोगिमनोरथपूरकमङ्घ्रिपद्मं सहस्रपादपद्मानां मध्य एव एकं किञ्चिदुन्नमय्य प्रदर्शयन्तं तत्र पादपद्ममित्युत्तरश्लोके मुखेनेत्येकवचनलिङ्गेन भङ्ग्यात्रैव प्रस्तावे पुंसामित्यादिश्लोकत्रय्या श्रीकृष्णावतारदर्शनमेव ब्रह्मणे दर्शितं "तदुहोवाच ब्राह्मणो-ऽसावनवरतं मे ध्यातः स्तुतः परार्द्धान्ते सोऽबुध्यत गोपवेशो मे पुरस्तात् आविर्बभूवेति" गोपालतापनीश्रुतेर्ब्रह्मसंहिता-कथा। दृष्टेश्चेति। तस्यैव मदनगोपालस्वरूपस्य त्रिभङ्गमूर्तेर्व्यत्यस्तपादस्य दक्षिणचरणपद्मोन्नमनदृष्टेरिति केचिदाहुः। नखेन्दु-मयूखैरेव भिन्नाः संभिन्ना अङ्गुलय एव चारूणि पत्राणि यस्य तदिति। पद्मस्यास्य चन्द्ररश्मिविकसितत्वादद्भुतत्व-मुक्तम् ॥ २६ ॥ ❀ ❀ प्रत्यर्हयन्तं पूजकांस्तान् प्रतिपूजयन्तं भोगापवर्गादेस्तैर्भक्तैरस्वीकारात्तेनैव तत्सेवाऋणं परिशोधय-

न्तमिवेत्यर्थः। आर्त्तिर्दुःखमात्रं तद्दर्शनौत्कण्ठ्यपीडा वा सुभ्वा शोभनया भ्रुवा एकया रमयैव रहस्यभावप्रकाशिकयेति प्रत्यर्हणीया अपि भक्तविशेषा एव सूचिताः॥ २७॥ ❀ ❀ वत्स हे विदुर! श्रीवत्सयुक्तं यद्वक्षःस्थलं तस्य वल्लभेन हारेण॥ २८॥ ❀ ❀ स्वयशःसौरभसुवासितसर्वविश्वत्वात् महाचन्दनवृक्षरूपकेण निरूपयितुं तं विशिनष्टि। पर्यस्ता विष्वग्व्यापिनो दोर्दण्डा एव सहस्रमनन्ताः शाखा यस्य तम्। अव्यक्तव्यञ्जनयापि कैरपि नोक्तं मूलमनादित्वात् यस्य तम्। यदुक्तं "स आत्मा स्वाश्रयाश्रय" इति। वृक्षपक्षे स्पष्टम्। भुवनानि चतुर्दश अङ्घ्रिणा एकेनैव पाति रक्षति स चासाविन्द्र ऐश्वर्यवांश्चेत्येकपादविभूतिपतिमित्यर्थः। पक्षे भुवनेषु मध्ये ये अङ्घ्रिपास्तेषामिन्द्रस्त्वानन्तस्य भोगैः फणैः देहावयवैर्वा अधिवीताः स्पृष्टा वल्शाः स्कन्धा यस्य तं "शतवल्शो विरोह" इति श्रुतेः। पक्षे बहुसर्पवेष्टितस्कन्धशाखादिकम्॥ २९॥ ❀ ❀ चन्दनवृक्षरूपकेण निरूप्य स्वस्य आश्रयोऽपि स्वयमेवेति दर्शयितुं चन्दनपर्वतरूपकेणापि निरूपयति। भगवानेव महीध्रो मलयगिरिस्तं चराचराणामोक आस्पदमहीन्द्रोऽनन्तोऽहीन्द्राः सर्पाधिपाश्च। सलिलेन गर्भोदेन क्षीरोदेन च आलिङ्गितं किरीटसहस्रमेव हिरण्यवर्णानि शृङ्गाणि यस्य तं मलयस्य स्वर्णवर्णशृङ्गत्वात्। कौस्तुभरत्नं गर्भे मूर्त्तिमध्ये यस्य तं मलयस्य पर्वतत्वेन रत्नखनिमत्त्वात्॥ ३०॥ ❀ ❀ निवीतं युक्तम्। हरिमिति पर्वतादिरूपं पश्यन् हरिरसाविति ज्ञातवानित्यर्थः। सूर्यादिभिरगमं स्वव्यापारैराकलयितुमशक्यमित्यर्थः। त्रिधामभिः सच्चिदानन्दस्वरूपैः रक्षणार्थं परिक्रामद्भिः परितो धावद्भिः प्राधनिकैः प्रधनं संग्रामस्तेन दीव्यद्भिः सुदर्शनादिभिर्जयविजयादिपार्षदैर्वा हेतुभूतैर्दुरासदमन्यैर्दुष्प्रापम्॥ ३१॥ ❀ ❀ तर्ह्येव तन्नाभिसरसि सरोजं सरोजे चात्मानमात्मनश्चतुर्दिक्षु अम्भःश्वसनं वियच्चेति भूतत्रिकं ददर्श। नातः परं पृथिव्यादिलोकानां विविधे सर्गे दृष्टिश्चिकीर्षा यस्य सः॥ ३२॥ ❀ ❀ कर्मबीजं लोकसृष्टेः कारणम्। इयदेव सरोजादिपञ्चकमेव विसर्गाभिमुखः विसर्गं कथमहं कुर्यामिति भावयन् प्रभुमेवाहं शरणं यामीति विसर्गाभिनिवेशं परित्यज्य अव्यक्तवर्त्मनि श्रीभगवति अभिनिवेशित आत्मा मनो यस्य सः॥ ३३॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्। तृतीयस्याष्टमोऽध्यायः सङ्गतः सङ्गतः सताम्॥ १॥

श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः।

नखा एव इन्दवः तेषां मयूखैः रश्मिभिः भिन्नाः संभिन्नाः अङ्गुलय एव चारूणि पत्राणि यस्य तदङ्घ्रिपद्मं कामदुघाङ्घ्रिपद्मं कामपूरकचरणकमलं प्रदर्शयन्तम्॥ २६॥ ❀ ❀ लोकानामुपासकानाम् आर्तिहरं दुःखहरं स्मितं यस्मिन् तेन परिस्फुरद्भ्यां कुण्डलाभ्यां मण्डितेनालंकृतेन अधरमेव बिम्ब बिम्बफलं तस्य भासा दीप्त्या शोणायितेन शोणवदाचरितेन सुनसा शोभमननासिकायुक्तेन सुभ्रुा शोभमानभ्रूयुक्तेन मुखेन प्रत्यर्हयन्तमुपासकान् संमानयन्तम्॥ २७॥ ❀ ❀ कदम्बकिञ्जल्कवत् पिशङ्गेन पीतेन वाससा मेखलया च नितम्बे स्वलंकृतं सुष्ठु अलंकृतं हे वत्स विदुर! अनन्तधनेन अनर्घ्येण श्रीवत्सयुक्तस्य वक्षःस्थलस्य वल्लभेन हारेण च वक्षसि स्वलंकृतम्॥ २८॥ ❀ ❀ पर्वतरूपेण भगवद्विग्रहं निरूप्याथ वृक्षराजरूपेण विग्रहं निरूपयितुं भगवन्तं विशिनष्टि परार्ध्येति। परार्ध्यानि श्रेष्ठानि अमौल्यानीत्यर्थः, केयूराण्यङ्गदानि मणिप्रवेकाः मण्युत्तमास्तैः पर्यस्ताः परिवृताः दोर्दण्डाः भुजदण्डा एव सहस्रमनन्ताः शाखा यस्य तम्। अव्यक्तं स्वस्वरूपलक्षणं मूलं यस्य तं विग्रहस्य स्वरूपाश्रयत्वात् भुवनात्मकमङ्घ्रिपेन्द्रं वृक्षराजं अहीन्द्रस्य संकर्षणस्य भोगैः शरीरावयवे अधिवीताः संवेष्टिताः वल्शाः स्कंधा यस्य तम्॥ २९॥ ❀ ❀ पर्वतरूपेण निरूपितं पुनर्विशिनष्टि चराचरौक इति। चराचराणामोकः वासस्थानं भगवानेव महीध्रस्तम् अहीन्द्रस्य बन्धुं सलिलेनोपगूढं मैनाकादिवदावृतं किरीटसाहस्रमेव हिरण्यशृङ्गाणि यस्य तम् आविर्भवत् स्पष्टं दृश्यमानं कौस्तुभरत्नं गर्भे मध्ये कण्ठे यस्य तम्॥ ३०॥ ❀ ❀ पर्वतवत् वृक्षराजवच्च प्रथममपश्यत् हरिरसाविति ज्ञातवानित्याशयेनाह निवीतमिति। अम्नायाः वेदा एव मधुव्रताः भ्रमराः तैः श्रीः शोभा यस्यास्तया स्वकीर्तिमय्या वनमालया निवीतं कण्ठलम्बिन्या व्याप्तं सूर्य्यादिभिरगम्यमुपमानत्वेन तस्मिन् अतिप्रकाशत्वादिगुणयुक्ते सूर्य्यादयो नान्विता भवन्तीत्यर्थः। त्रिधामभिः त्रिषु कालेषु धाम मूर्तिर्येषां तैर्नित्यशरीरिभिः परिचर्य्यार्थं परिक्रमद्भिः प्रदक्षिणां कुर्वद्भिः प्रधनं भगवत्पराङ्मुखैः सह सङ्ग्रामस्तत्प्रयोजकैः श्रीमत्सुदर्शनादिभिः हेतुभूतैः दुरासदं हरिपराङ्मुखैरसुराद्यैः दुष्प्रापम्॥ ३१॥ ❀ ❀ यद्विज्ञानेन सर्वं विज्ञातं भवतीति श्रुत्युपबृंहणायाह तर्ह्येवेति। लोकविसर्गदृष्टिरपि तर्ह्येव भगवद्दर्शनवेलायामेव तन्नाभिसरः सरोजादि ददर्श। परन्तु अतो भगवतः परं भिन्नमतदात्मकं किमपि न ददर्शेत्यर्थः॥ ३२॥ ❀ ❀ किंच सः रजसा रजोगुणेनोपरक्तो युक्तः ब्रह्मा प्रजाः सिसृक्षन् स्रष्टुमिच्छन् कर्मणः सृष्टिक्रियायाः बीजं कारणं तस्मिन् क्रियमाणे परमाश्रयमियदेव वक्ष्यमाणं स्तोत्रमेव दृष्ट्वा अतो विसर्गे अभिमुखोऽपि अव्यक्तवर्त्मनि भगवत्यभिनिवेशितः आत्मा चित्तं येन स तथाभूतः सन् तमेवास्तौदित्यन्वयः॥ ३३॥

इति श्रीमद्भागवते महापुराणे तृतीये स्कन्धे सिद्धान्तप्रदीपे अष्टमाध्यायार्थप्रकाशः॥ ८॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

परोक्षतया मार्गानुसारेण भजतां फलदानं स्वोपयोगाभावात् ब्रह्मधर्म एवेति तमाह—

पुंसामिति । स्वकामाय [1]स्वाभिलाषसिद्ध्यर्थम् । विविक्तमार्गैरन्योन्यश्लेषरहितैः, लोकातीतैर्वा, एकान्तप्रकारैर्वा, ये अभ्यर्चन्ति, तेषां कामदुघं यदङ्घ्रिपद्मम्, तत् तेषामर्थे प्रदर्शयन्तम् । पुनः कथम्भूतमङ्घ्रिपद्ममित्याकाङ्क्षायामाह—नखेन्दुमयूखभिन्नाङ्गुलिचारुपत्रमिति । नखान्येवेन्दवस्तेषां मयूखैर्भिन्नाः सर्वदेहविलक्षणा या अङ्गुलयस्ता एव चारूणि पत्राणि यस्य । स्वभावतः पादपद्मं विकसितम् । नखानामिन्दुत्वेन पत्राणि प्रत्येकं सङ्कुचितानि परित इन्दुरक्षार्थम्, न त्वग्रतः । कमलपत्राणि चन्द्रकिरणैः सङ्कुचितानि भवन्ति, तिर्यक् संकुचितानि च । तेनालौकिकत्वाद्धृदयान्धकारमलौकिकमपि नाशयति । चरणस्य पद्मतायां हेतुरप्युक्तो भवति । सर्वदेहवैलक्षण्याद्भक्तिमार्गः सर्वेभ्य उत्तम इत्युक्तं भवति । भक्तिरेव स्वतन्त्रफलेति स्वयं फलमदत्त्वा तेषां कामनापूर्तये दुःखाभावाय च तदुपास्यं चरणमेव प्रदर्शयति ॥ २६ ॥ ❀ ❀ एवं मार्गेण भजतां फलमुक्त्वा प्रत्यक्षेण भजतां फलमाह—मुखेनेति । मुखेन प्रत्यर्हयन्तम्, ये पूजां कुर्वन्ति तान् प्रतिपूजयन्तम्, 'ये यथा मां प्रपद्यन्ते' इति वाक्यात् । ननु ते स्वकीयेन सर्वस्वेनापि भगवन्तं पूजयन्ति, भगवांस्तु कथं तान् पूजयतीत्याशङ्क्य, भगवति षड् गुणाः सन्ति तैर्युक्तेन मुखेन तान् पूजयति, तेषु मुखधर्मान् सर्वानेव योजयति । तत्र मुखे षड् धर्मान् षड्भिर्विशेषणैः संपादयति लोकार्तिहरस्मितेनेत्यादिभिः । भगवतो मुखस्य गुणद्वयं सर्वोपकारि, चतुष्टयं भक्तानामेव । लोकानामार्तिं हरतीति तादृशं स्मितं यत्र । स्मितं मन्दहासः 'हासो जनोन्मादकरी च माया' । भगवान् सृष्टिलीलाकर्ता ब्रह्माण्डस्थितजीवान् स्वेच्छया सर्वथा विनियोक्ष्यति । तत्र ते प्रमाणबलमाश्रित्याऽन्यथाकर्तुं यतन्ते, तदा व्यामोहयति, वृथाक्लेशं प्राप्स्यन्तीति । अतस्तेषां क्लेशाभावायैव हासः, मन्दत्वं च सर्वथा व्यामुग्धा उत्पथप्रवृत्ताः पारलौकिकदुःखं प्राप्स्यन्तीति । लोकशब्देन सज्जीवाः । किञ्च, परिस्फुरत्कुण्डलमण्डितेनेति । परितः स्फुरन्ती ये कुण्डले, ताभ्यां मण्डितेन । साङ्ख्ययोगौ कुण्डले, तयोः परितः स्फुरणमैहिकामुष्मिककार्यसिद्धये । तेन वैदिकमार्गेणाऽपि यः क्लेशः, स योगेन निवार्यते; साङ्ख्येन स्वरूपानन्दमनुभाव्यते । एतद्वा विपरीतम्, उभयमुभयत्र वा । अतोऽनिष्टनिवारकेष्टप्रतिपादनपूर्वकं प्रतिपूजनं करोतीत्युक्तम् । इदं भक्तानां नाऽतीवपुरुषार्थरूपम् । शोणायितेनेति । शोण ईषद्गौरः पीताम्बरतुल्यः । अनेन तेभ्यो भक्तिं प्रयच्छतीत्युक्तम् । किञ्च, अधरबिम्बभासा । अधरबिम्बस्य भाः कान्तिर्यत्र । अधरो लोभात्मकः, तत्र यद्बिम्बं बिम्बसदृशमित्यर्थवशात् शब्दबलेन भगवत्स्वरूपम्, तल्लोभे स्थापितं भगवद्भक्तेभ्यः प्रयच्छतीति प्रति पूजनसाधने तत्कान्तिस्तत्साक्षात्कारः समायाति । एवं भक्तिं दत्त्वा सर्वदुर्लभं तेभ्यः स्वरूपं प्रदर्शयतीत्युक्तम् । किञ्च, सुनसेन सुभ्रुवेति । शोभने नासिके यस्मिन्, शोभने भ्रुवौ यस्मिन् इति । अश्विनीकुमारौ नासिके, भ्रूः कालः; रोगकालयोर्निवृत्तिं करोतीत्यर्थः । एवं प्रत्यक्षभजने सर्वपुरुषार्थदाता निरूपितः ॥ २७ ॥ ❀ ❀ सर्वतत्त्वाश्रयेणाऽपि भगवतः सर्वसौन्दर्यं निरूपयति—कदम्बेति । कदम्बस्य यथा किञ्जल्काः, तथा[2] ते रेखाकारा मुक्तायुक्ताश्च पीताम्बरे प्रतीयन्ते । तेन सर्वतत्त्वैर्मुक्तैः सहितया भक्त्या भगवानाच्छन्न इति भगवति गोप्यं रूपमुक्तम् । तेनैव तत्र शोभा, न तु रूपेण । अत एव पीताम्बरेण सुष्ठ्वलङ्कृतम् । तच्च छन्दोमयम्, तेनाच्छादनं स्पष्टमेव । किञ्च, मेखलया नितम्बे स्वलङ्कृतमिति । मेखला भूमौ भगवत्कीर्तिर्भगवद्गुणानुवर्णनम्, गुणमयी च सा । तया भगवत्कार्यकरणात् कार्यार्थमपि भगवान्नाऽन्वेष्टव्यः । एवं क्वचिद्भगवद्रूपमप्रत्यक्षमपि सर्वसौन्दर्यमित्युक्त्वा प्रकटं ततोऽपीत्याह—हारेणेति । हारः सर्वरत्नानाम् । अत एवाऽनन्तधनेन । वत्सरूपश्चिह्नरूपो योऽयं श्रीवत्सो दक्षिणावर्त्तरोमरेखा, तद्युक्तं यद्वक्षः, तदेव स्थलं सर्वसौन्दर्याणामाश्रयभूतम्; सर्वेषां भूतानां वः, आश्रयभूतं वा[3] । तत्र वल्लभेन तेन च स्वलङ्कृतम् । नवभिर्गुणैरेकदेशस्थितैर्हाराणां वा समूहेन, मुक्तजीववृन्देन भृग्वादिसमूहेन । अनन्त एव धनं यस्य । अधिकारानन्तरमेव तेषां स्वरूपप्राप्तिः । अनन्तः कालः । श्रीवत्सस्य चिह्नत्वं लक्षणतया ज्ञापकम्, तेन ब्रह्मता निरूपिता । श्रीवत्सस्य यद्यपि चिह्नत्वं स्वभाव एव । तथापि प्रियत्वाय तथोक्तिः, नाम्नि तु श्रियाः प्रियत्वं प्रतीयते । ततोऽपि हारस्य प्रियत्वं ख्यापयितुम्—वल्लभेति । एवमुभयविधैरपि तत्त्वैर्भगवत्सौन्दर्यं निरूपितम् ॥ २८ ॥ ❀ ❀ पुनर्भगवन्तं सर्वपुरुषार्थोपयोगित्वेन सर्वाश्रयणीयत्वेन च निरूपयति । तत्र भगवन्तं कल्पवृक्षत्वेन वर्णयति—परार्घ्येति । परार्घ्या अमूल्याः केयूरे ये मणिप्रवेकाः, तैः पर्यस्ता ये दोर्दण्डाः तैः कृत्वा सहस्रं शाखा यस्य । पूर्वं तदेव रूपं शयानमुपलभ्य, पुनः परिदृश्यमाने तामवस्थां परित्यज्य, रूपान्तरेण प्रदर्शितवान् । 'वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम्' इति श्रुतेस्तादृशं रूपं ब्रह्मत्वज्ञापनाय प्रदर्शितमिति तदनुवर्ण्यते । वृक्षत्वेऽप्यलौकिकोऽयं वृक्षः । केयूरं कङ्कणोपरि हस्ताभरणम्, तेनाऽलङ्कृता[4] हस्ताः । तत्रत्यानां मणीनां प्राधान्येन कीर्तनम्, तत्तेजः सर्वमेव हस्तं व्याप्नोतीति । शतवल्शाः सर्वे वृक्षा इति तद्व्यावृत्त्यर्थं सहस्रशाखमित्युक्तम् । अनेन प्रमाणात्मकता च निरूपिता । उत्थितोऽयं भगवान्, न तु शयानः; वृक्षतुल्यत्वात् ।

---

१. स्वाभिलषित...क । २. तथेति क. ख. घ. ङ. च. । ३. वेति नास्ति ग । ४. एवेत्यधिकम् क. घ. । ५. सर्वेषु लिखितपुस्तकेषु तु 'शतवल्शिाः' इत्येव पाठ उपलभ्यते । एवमग्रेऽपि ।

पर्यस्ता इति नानाविधकार्यकर्तृत्वम् । अतोऽस्य सृष्टावुपयोगः । बाहूनां दण्डत्वं मर्यादारूपत्वान्नियामकख्यापनार्थम् । अत्राऽऽभरणानि कर्माणि, तेषां प्रवेको नित्योत्कृष्टत्वममूल्यता च; स्वत एव ध्यानप्राप्तत्वात्, अन्यथा दानप्राप्त्यपेक्षया क्रयप्राप्तमुत्तममेव । एवं तस्य बाहूनां शाखात्वेन वृक्षत्वं निरूप्य मूलतो वृक्षत्वं निरूपयति—अव्यक्तमूलमिति । इतोऽप्यग्रेऽन्वेषणं न कर्त्तव्यम्, यतस्तस्य मूलमव्यक्तम्, अनाविर्भूत एवाऽऽविर्भूत इति । प्रकृतिं केचिदाहुः । तदाप्यव्यक्तस्य मूलमिति व्याख्येयम्, अतः परं नेत्यर्थः । भुवनाङ्घ्रिपेन्द्रमिति । अङ्घ्रिपाणामिन्द्रो वृक्षश्रेष्ठः । भुवनान्येव अङ्घ्रिपेन्द्रः अत एव प्रत्यब्दं कल्पा भिन्ना भवन्ति । इयमुत्तरकाण्डे मर्यादा । अव्यक्तमूलमिति प्रमाणम्, द्वितीयं प्रमेयम्, तृतीयं फलमिति—कल्पवृक्षत्वम्, जगत्कर्तृत्वम्, दुर्ज्ञेयत्वं च निरूपितम् । अहीन्द्रभोगैः शेषफणैरधिवीतो वल्शो यस्य चन्दनवृक्षे सर्पास्तिष्ठन्ति, तथाऽत्रापि; शाखास्कन्धेष्वेव, न तु ब्रह्मणि ॥ २९ ॥ ॐ ॐ एवमुत्थितं भगवन्तं निरूप्य उपविष्टं निरूपयति—चराचरौक इति । उपविष्टेषु पर्वतः स्थिरः, स च स्थावरजङ्गमानामाश्रयो भवति । भगवानेव महीध्रः । भूमिधारणसाम्याच्च अहीन्द्रस्य बन्धुः, अहीन्द्र एव वा बन्धुर्बन्धनरूपो यस्य मन्दरस्य । सलिलेन सामुद्रेण उपगूढो भवति मैनाकादिः । एवमुपविष्टे भगवति चतूरूपता निरूपिता । सर्वाश्रयो जीवनहेतुः, सर्वोद्धारकः संसारात्; अलौकिकभक्तिरसपाययिता; भीतानां शरणभूतश्च, सुसेव्यो वा । किञ्च, उपरिभागे शिखरोपरिस्थितसुवर्णैः किरीटयुक्त इव । किरीटानां साहस्रूपाणि हिरण्यशृङ्गाणि यस्य । आविर्भवत् कौस्तुभरत्नं गर्भे यस्य । मध्योपरिभागौ वर्णितौ, महाराजत्वाय रत्ननिधित्वाय च ऐश्वर्यं लक्ष्मीश्च वर्णिता ॥ ३० ॥ एवं बहिःस्थाने शयानमुत्थितमुपविष्टमुक्त्वा, मार्गत्रयरूपाणि च निरूप्य, अन्तःस्थितं रूपं निरूपयन् मूलरूपं निरूपयति—निवीतमिति । तथा तथा दर्शनात्तथा तथा निरूपणम् । आम्नायमधुव्रतश्रिया स्वकीर्तिमय्या वनमालयानिवीतम् । मूलभूतं भगवतः पुरुषरूपं निवीतमिति मनुष्यधर्मत्वान्निवीतं कण्ठलम्बितम् । आम्नाय आवर्त्यमानो वेदः । त एव मधुव्रतास्तेषां श्रीर्यत्र । ते नीलास्तामसा इव; स्वकीर्तिः शुक्ला सात्त्विकी वा; "आपादलम्बिनी माला वनमाला प्रकीर्तिता । तुलसीपुष्परचिता नवरत्नैर्विराजिता" रूपेण राजसीव । मायैषा प्रवाहहेतुः । कीर्तिमयीति भक्तिहेतुर्मर्यादाहेतुश्चाऽऽद्या, मर्यादापुष्ट्योर्धर्मत्वं प्रवाहाश्रयत्वात् । मूलमेतादृशमिति ज्ञाते तदन्तरङ्गै र्भजनं सेत्स्यतीति । नैते तस्य सहजा धर्माः, किन्तु प्रमाणबलकल्पिता एव, सहजं तु सर्वेषां दुःखहर्तृत्वम् । तदाहरिमिति । सङ्घाते स्थितस्य तत्रागमनार्थं हेतुरूपमाह—सूर्येन्दुवाय्वग्न्यगममिति । एते सूर्यादयः कर्णिकायामावरणभूताः, एतैर्विद्यमाने भगवत्प्राप्तिर्न भवतीति दिनरात्रिव्यवस्थया कालातिक्रमार्थम् । अवस्थात्रयेण योगेन कर्मणा वा भगवान्न प्राप्यत इति । तथा तत्त्वैरपि साङ्ख्येन । तदाह—परिक्रमत्प्राधनिकैर्दुरासदम् । परितः क्रमन्तीति तेषामप्यावरणत्वं निरूपितम् । प्रधने उपयुक्तानि प्राधनिकानि चक्रादीनि, तैर्दुरासदम् । कालातिक्रमो ज्ञानेन, अवस्थातिक्रमश्च, योगेन वाय्वतिक्रमः; कर्मणा चाऽग्न्यतिक्रमः, पृथिवीजलातिक्रमस्तूक्त एव ज्ञानभक्तिभ्याम्; तत्त्वातिक्रमस्तु साङ्ख्येन, एवं पञ्चपर्वया विद्यया सर्वातिक्रमः । एतैरेवाऽप्राप्तिरित्येके । तदा पञ्चाऽप्येतानि त्यक्तव्यानि, स्वरूपे गत्वा भगवान् पश्चात्प्राप्तव्यः ॥ ३१ ॥ ॐ ॐ एवं भगवति ज्ञातेऽन्यत्सर्वं स्वत एव ज्ञातमित्याह—तर्ह्येवेति । तस्मिन्नेव क्षणे, तस्य नाभौ सरोवररूपे, उद्गतं सरोजं पद्मम्, तत्र स्थितमात्मानम्, बहिः स्थितमम्भः श्वसनं च, वियदाकाशञ्च पृथिवी पद्ममेव, तेजो भगवानेव स्वस्मिन्विद्यमानः । तदा पञ्च भूतानि दृष्टानि तान्यपि स्वदेह एव । एवं सर्वं दृष्ट्वा जगतो विधाता जातः, अतः परं ब्रह्मभूतो न जात इत्यर्थः । उभयोरप्येतद्रूपं हेतुभूतम्, यतोऽयं लोकविसर्गे दृष्टिर्यस्य तादृशः ॥ ३२ ॥ ॐ ॐ ततः किं कृतवानित्याह—स कर्मबीजमिति । कर्मबीजमियदेव दृष्ट्वा अस्तौदिति संबन्धः । कर्मणि कार्ये जगत्करणे एतदेव बीजम्; भगवान्, पञ्चमहाभूतानि च, षण्णां वापे जगद्भवति । ननु चेतननिर्माणेच्छया प्रवृत्त इति न बीजमात्रेण कार्यम्, किन्तु रजोगुणभूतो जात इत्यर्थः । इयदेव दृष्ट्वेति । क्रियाज्ञानं तस्य न जातम्, न हि रजोबीजाभ्यामेव किञ्चिद्भवति । वपनं कर्षणं पूर्वाङ्गम् । अव्यक्ततया विकृतं वर्द्धनं जीवदानं च यावन्न ज्ञायते, तावत्कार्यं न सेत्स्यतीति चत्वारोऽर्थाः प्रार्थनीयाः, तद्दाने च स्तोत्रं हेतुभूतमित्यस्तौत् । मोक्षार्थतां व्यावर्तयति । विसर्गाभिमुख इति । भगवता स विसर्गसंमुखः कृतः, विसर्गमेव करिष्यामीत्यध्यवसाययुक्तः । अत एव तम्, येनैवाऽयमेवं कृत इति । तर्हि स्तोत्रं किमर्थमित्याशङ्क्याऽऽह—ईड्यमिति । स सर्वैः स्तुत्यः, स्तोत्रानन्तरं प्रसन्नो जात एव प्रार्थनीयः । नन्वन्यत्स्वयं जानातु, वेदाश्च साधनोपदेष्टारः सन्ति, किं भगवतेत्याशङ्क्याऽऽह—अव्यक्तवर्त्मन्यभिवेशितात्मेति । अव्यक्तमार्ग एव अभिनिवेशितान्तःकरणः । न हि कुम्भकारवत् स्पष्टतया जगत्कर्तृत्वमिच्छति, किन्तु योनौ बीजं स्थापयित्वा तत्र सर्वं कर्तुं वाञ्छति । नह्येतद्भगवत्कृपाव्यतिरेकेण सम्भवति । चित्तं च तत्रैव प्रविष्टम्, न प्रकारान्तरेण कर्तुं वाञ्छतीत्यर्थः ॥ ३३ ॥

इति श्रीभागवतसुबोधिन्यां श्रीलक्ष्मणभट्टात्मजश्रीवल्लभदीक्षितविरचितायां तृतीयस्कन्धे अष्टमाध्यायविवरणम् ॥

श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

मुखेनेत्यत्र । बिम्बपदस्य तात्पर्यमाहुः—शब्दबलेनेत्यादि । अत्र परोक्षवादः सर्वत्रेति लक्षणा न दोषाय । तथा च, यथा सूर्यादिस्वरूपमेव बिम्बपदेनोच्यते, तथाऽत्र भगवत्स्वरूपमिति न लक्षणाऽपीत्यर्थः ॥ २७ ॥ ॐ ॐ कदम्बेत्यत्र । ततोऽपीति सौन्दर्य-

१. महाभूतानि क. । २. कर्मबीजमियमेव इति पुस्तकेषु पाठः ।

युक्तमिति शेषः । नविभुगुंणैरिति । हारीयैर्नवभिः सूत्रैः । तथोक्तिरिति । सत्सत्त्वोक्तिः । उभयविधैरिति । वैदिकैर्भक्तिमार्गीयैश्चेत्यर्थः । ।।२८।। ❀ ❀ पराध्यैंत्यत्र । रूपान्तरेणेति । उत्थितेनोपविष्टेन वा रूपेण । अत एवेति । अस्मादेव पुरुषात् । तृतीयमिति । अहीन्द्रेत्यादि-विशेषणोक्तम् । अत्र शाखादिप्रमाणभूतशेषसम्बन्धात् फलत्वं बोध्यम् । दुर्ज्ञेयत्वमिति । प्रतिकल्पं नानाविधब्रह्माण्डवृक्षकरणात् तेन रूपेणाऽपि दुर्ज्ञेयत्वमित्यर्थः ।।२९।। ❀ ❀ चराचरेत्यत्र । जीवनहेतुरिति । अन्नादिदानेन जीवयिता । सर्वोद्धारक इति । वाराहावतार-वदपि सर्वोद्धारयिता, सर्वेषां वा तथा । भीतानां शरणभूतः समुद्रो भवति, न तु यदुपगूढ इत्यतः पक्षान्तरमाहुः—सुसेव्यो वेति । किरीटसाहस्रेत्यनेन । 'सहस्रशीर्षा पुरुषः' इतिश्रुत्युक्तं रूपं बोधितम् । ऐश्वर्येत्यादिकथनेन पूर्वविशेषणेषु यथायथं यशोवीर्यवैराग्यज्ञानानि सर्वाश्रय इत्यादिना व्याख्यातानि ज्ञेयानि ।।३०।। ❀ ❀ निर्वातमित्यत्र । निरूप्येति । 'पुंसां किलैकान्त...' इति श्लोकद्वये निरूप्य । अत्र नानाप्रकारेण यन्निरूपणं तत्तात्पर्यमाहुः—तथा तथेत्यादि । तथा च, पूर्वं जगदुपानत्वादिना, इदानीं च मूलरूपत्वेन दर्शनात्तथा निरूपणमित्यर्थः । पुरुषरूपमिति । मनुष्याकारम् । तत्र गमकमाहुः—निवीतमित्यादि । एषेति । मालारूपता । मूलमेतादृशमित्यादि । वनमालास्वरूपं त्रिविधप्रवाहजनकमिति ज्ञाते, तदन्तः प्रवाहान्तः, अङ्गैर्मर्यादापुष्टिधर्मैर्भजनं सेत्स्यतीति हेतोस्तादृश्यत्रोक्तेत्यर्थः । एते इति । निवीतत्वान्ताः । सङ्घाते स्थितस्य तत्रागमनार्थमिति । सङ्घाते स्थितस्य जीवस्य भगवत्प्रवेशार्थम् । कालातिक्रमार्थमिति । कालाक्षेपार्थम्, आवरणभूता इति सम्बन्धः । अत्र सूर्ये दिनरात्रिपक्षान्तरमाहुः । चतुर्णां कथनस्य प्रयोजनमाहुः—अवस्थे-त्यादि । प्राधानिकपक्षे आकारलोपस्य छान्दसताया आश्रयणीयत्वात् पक्षान्तरमाहुः—प्रधन इत्यादि । उक्त एव ज्ञानभक्तिभ्यामिति । ज्ञानभक्त्योः कथनमुखेनैवोक्त इत्यर्थः । एक इति । इदं टीकाकारान्तरमतम्, न श्रीधरस्य ।। ३१ ।। ❀ ❀ तर्हीत्यत्र । उभयो-रिति । सर्वदर्शनब्रह्मभावाभावयोः ।। ३२ ।। ❀ ❀ मैत्रेयोक्तावस्मिन्नध्याये 'पुरुषस्य च संस्थानम्' इत्यस्योत्तरं दत्तं ज्ञेयम् । अग्रिमाध्याये तु 'स्वरूपं वा परस्य च' इत्यादिपादोनश्लोकेन यत् पृष्टम्, तस्योत्तरं ज्ञेयम् ।। ३३ ।।

श्रीतृतीयस्कन्धसुबोधिनीप्रकाशे अष्टमाध्यायविवरणं समाप्तम् ।

## श्रीगिरिधरकृता बालप्रबोधिनी ।

स्वकामाय स्वाभिलषितफलाय, यद्वा स्वो भगवानेव कामस्तस्मै भगवत्प्राप्त्यर्थं विविक्तैः शुद्धैः हिंसादिदोषरहितैः भक्तिमार्गैरभ्यर्चतामात्मानं पूजयतां पुंसां कामदुघं मनोरथपूरकं अङ्घ्रिपद्मं प्रदर्शयन्तमपश्यदित्यन्वयः । अभ्यर्चतामिति पूजाम-पेक्ष्य फलप्रदानं प्रतीतं तद्वारयति—कृपयेति । पूजास्वीकारः फलप्रदानं च कृपयैव न कामनयाऽऽप्तकामत्वादिति भावः । अङ्घ्रेः कथं पद्मत्वमित्यपेक्षायां तदुपपादयन् विशिनष्टि—नखेति । नखा एव इन्दवस्तेषां मयूखा रश्मयस्तैर्भिन्ना भिन्नतया प्रकाशिता अङ्गुलय एव चारूणि पत्राणि यस्य तदित्यर्थः ।। २६ ।। ❀ ❀ स्वमुखेन प्रत्यर्हयन्तं पूजकान् प्रति पूजयन्तं सम्मानयन्तम-पश्यदित्यन्वयः । मुखेन कथं प्रतिपूजनं सम्भवतीत्यपेक्षायामाह—लोकेति । लोकानां भक्तजनानामार्तिहरं तापत्रयनिवर्तकं स्मितं यस्मिंस्तेनेत्यर्थः । न केवलं तापत्रयनिवर्तनेनैव सम्माननं किन्तु स्वमुखारविन्ददर्शनजनितपरमानन्ददानेनापीत्याशयेन मुखं विशिनष्टि—परिस्फुरद्भ्यां कुण्डलाभ्यां मण्डितेन । अधरबिम्बस्य बिम्बफलवदतिरक्तस्याधरस्य भासा दीप्त्या शोणायितेन रक्त-वदाचरितेनेत्यर्थः । सुनसेन शोभननासायुक्तेन सुभ्रुवा शोभने भ्रुवौ यस्मिंस्तेन ।। २७ ।। ❀ ❀ समग्रमेव भगवत्स्वरूपं पश्यतां आनन्दजनकमित्याशयेन विशिनष्टि—कदम्बेति । कदम्बस्य किञ्जल्काः केशरास्तद्वत् पिशङ्गवर्णेन वाससा पीताम्बरेण मेखलया रत्नजडितसुवर्णमयेन कटिसूत्रेण च नितम्बे सुष्ठु अलङ्कृतम् । तत्र प्रीतिं सूचयन् सम्बोधयति—वत्सेति । श्रीवत्सो नाम दक्षिणावर्तरोमरेखाविशेषस्तद्युक्तं यद्वक्षःस्थलं तस्य वल्लभेन प्रियेण अनन्तधनेन बहुमूल्येन हारेण च स्वलङ्कृतमपश्यदित्यन्वयः ।।२८।। ❀ ❀ पुनश्च भगवन्तं चन्दनवृक्षरूपेण निरूपयन् विशिनष्टि—परार्ध्येति परार्ध्याः अमूल्याः केयूरेषु अङ्गदेषु प्रवेका मण्युत्तमास्तैः पर्यस्ता व्याप्ता दोर्दण्डा भुजदण्डा एव सहस्रमनन्ताः शाखा यस्य तम् । चन्दनवृक्षोऽपि मण्यादितुल्यैः फलपुष्पा-दिभिर्व्याप्तशाखो भवति । अव्यक्तं ब्रह्म मूलं यस्य ब्रह्माभिव्यक्तिरूपत्वात्, चन्दनवृक्षस्यापि मूलमव्यक्तं भवति । अहीन्द्रस्य शेषस्य भोगैर्देहावयवैः फणैर्वा अधिवीताः संवेष्टिता वल्शाः स्कन्धा यस्य तम्, "वनस्पते शतवल्श—" इति श्रुतेर्वल्शशब्दः स्कन्धवाची । चन्दनवृक्षोऽपि सर्पैः संवेष्टितो भवति, लोकत्रयसङ्ग्रहेणेत्युक्तत्वात् । एवम्भूतं त्रिभुवनात्मकमङ्घ्रिपेन्द्रं वृक्षश्रेष्ठं भगवन्तमपश्यदित्यन्वयः ।। २९ ।। ❀ ❀ 'प्रेक्षां क्षिपन्तम्' इत्यत्र पर्वतरूपेण निरूपितमपि विशेषणान्तरैः पुनस्तद्रूपेण निरूपयति—चराचरेति । भगवानेव महीध्रः पर्वतस्तमपश्यदित्यन्वयः । पर्वतत्वमुपपादयन् विशिनष्टि—चराचराणां स्थावरजङ्ग-मानामोकः स्थानम्, पर्वतोऽपि तथा भवति । अहीन्द्रस्य शेषस्य बन्धुं मित्रम्, पर्वतोऽप्यहीन्द्राणां बन्धुर्भवति । सलिलेनोपगूढ-मावृतम्, पर्वतोऽपि मैनाकादिस्तथा । किरीटानां साहस्रमेव हिरण्यशृङ्गाणि यस्य तम्, पर्वतोऽपि मेर्वादिस्तथा । आविर्भवत्स्पष्टं दृश्यमानं कौस्तुभरत्नं गर्भे मूर्तिमध्ये यस्य तम्, पर्वतस्यापि हि गर्भे क्वचिद्रत्नमाविर्भवति ।। ३० ।। ❀ ❀ एवं पर्वतादि-रूपं पश्यंस्तं पुरुषरूपमपश्यदित्याह—निवीतमिति । आम्नाया वेदास्ते एव मधुव्रता भ्रमरास्तैः श्रीः यस्यास्तया स्वकीर्तिमय्या स्वकीर्तिप्रचुरया स्वकीर्तिं गायद्भिर्वेदरूपैर्भ्रमरैराहितशोभया वनमालया 'तुलसीपुष्परचिता नवरत्नैर्विराजिता । आपादलम्बिनी

माला वनमाला प्रकीर्तिता' इत्युक्तलक्षणया निवीतं कण्ठलम्बिन्या व्याप्तं सूर्यादिभिः अगममगम्यं स्वव्यापारैराकलयितुं अशक्यं त्रिषु लोकेष्वपि धाम स्फूर्तिर्येषां तैः परिक्रमद्भिः रक्षार्थं परितो धावद्भिः प्राधनिकैः प्रधनं सङ्ग्रामस्तत्प्रयोजनकैः सुदर्शनादिभिः शस्त्रैर्हेतुभूतैर्दुरासदं दुःप्रापं हरिमपश्यदित्यन्वयः ॥ ३१ ॥ ❀ ❀ यदैव भगवन्तमपश्यत् तर्हि तदैव स देवो ब्रह्मा तस्य भगवतो नाभिसरसि सरोजं कमलं तत्रात्मानं अम्भो जलं श्वसनं प्रलयवायुं वियद् आकाशं च ददर्शेत्यन्वयः। अतो नाभिसरोजादिभ्यः पञ्चभ्यः परं अन्यत्किञ्चिदपि वस्तु न ददर्शेत्यन्वयः। भगवते तावत्प्रदर्शने हेतुमाह—लोकेति। लोकानां विसर्गे सर्जने दृष्टिः सङ्कल्पो यस्य सः। तथा सङ्कल्पेऽपि हेतुं सूचयन्नाह—जगत इति, जगतो विधाता सृष्ट्यर्थं जात इत्यर्थः ॥ ३२ ॥ ❀ ❀ स ब्रह्मा प्रजाः सिसृक्षन् स्रष्टुमिच्छन्नियदेव नाभिसरोजादिपञ्चकं भगवन्तं च दृष्ट्वा तं भगवन्तमस्तौदित्यन्वयः। किमर्थमस्तौदित्याकाङ्क्षायां सृष्ट्यर्थमिति सूचयन् विशिनष्टि—विसर्गाभिमुख इति, प्रजाविसर्गे दत्तचित्त इत्यर्थः। तत्र हेतुमाह—रजसेति, रजोगुणेन उपरक्तो व्याप्त इत्यर्थः। सृष्ट्यर्थं तमेव कथं अस्तौदित्याकाङ्क्षायामाह—ईड्यमिति, सृष्ट्याद्यर्थस्तुतियोग्यमित्यर्थः। तत्र हेतुमाह—कर्मबीजमिति, क्रियते इति कर्म जगत्तस्य बीजं कारणमित्यर्थः। 'द्रव्यं कर्म च कालश्च स्वभावो जीव एव च। यदनुग्रहतः सन्ति न सन्ति यदुपेक्षया' इत्युक्तसिद्धान्तेन तदनुग्रहं विना सृष्ट्यादिकरणस्य अशक्यत्वादित्याशयः। ननु सृष्टौ दत्तचित्तेन कथं स्तुतिः कथं वा तस्मिन् भगवत्प्रसादः सम्भवतीत्याशङ्क्याह—अव्यक्तेति। भगवदनुग्रहेणैव सर्वं कार्यं सेत्स्यति नान्यथेति निश्चयेन अव्यक्तं वर्त्म मार्गो यस्य तस्मिन् भगवत्येवाभिवेशितः स्थिरीकृत आत्मा अन्तःकरणं येन तथाभूतः सन्नित्यर्थः ॥ ३३ ॥

इति श्रीवल्लभाचार्यवंश्यगोपालसूनुना ॥ श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा ॥ १ ॥
श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये ॥ श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी ॥ २ ॥
रचिता च तृतीयेऽत्र बन्धसर्गनिरूपणे । अष्टमो विवृतो दृष्टहरिरूपनिरूपकः ॥ ३ ॥

## हिन्दी अनुवाद

अपनी-अपनी अभिलाषाकी पूर्तिके लिये भिन्न-भिन्न मार्गोंसे पूजा करनेवाले भक्तजनोंको कृपापूर्वक अपने भक्तवाञ्छाकल्पतरु चरणकमलोंका दर्शन दे रहे हैं, जिनके सुन्दर अंगुलिदल नखचन्द्रकी चन्द्रिकासे अलग-अलग स्पष्ट चमकते रहते हैं ॥ २६ ॥ ❀ ❀ सुन्दर नासिका, अनुग्रहवर्षी भौंहें, कानोंमें झिलमिलाते हुए कुण्डलोंकी शोभा, बिम्बफलके समान लाल-लाल अधरोंकी कान्ति एवं लोकार्तिहारी मुसकानसे युक्त मुखारविन्दके द्वारा वे अपने उपासकोंका सम्मान—अभिनन्दन कर रहे हैं ॥ २७ ॥ ❀ ❀ वत्स! उनके नितम्बदेशमें कदम्बकुसुमकी केसरके समान पीतवस्त्र और सुवर्णमयी मेखला सुशोभित है तथा वक्षःस्थलमें अमूल्य हार और सुनहरी रेखावाले श्रीवत्सचिह्नकी अपूर्व शोभा हो रही है ॥ २८ ॥ ❀ ❀ वे अव्यक्तमूल चन्दनवृक्षके समान हैं। महामूल्य केयूर और उत्तम-उत्तम मणियोंसे सुशोभित उनके विशाल भुजदण्ड ही मानो उसकी सहस्रों शाखाएँ हैं और चन्दनके वृक्षोंमें जैसे बड़े-बड़े साँप लिपटे रहते हैं, उसी प्रकार उनके कंधोंको शेषजीके फणोंने लपेट रक्खा है ॥ २९ ॥ ❀ ❀ वे नागराज अनन्तके बन्धु श्रीनारायण ऐसे जान पड़ते हैं, मानों कोई जलसे घिरे हुए पर्वतराज ही हों। पर्वतपर जैसे अनेकों जीव रहते हैं, उसी प्रकार वे सम्पूर्ण चराचरके आश्रय हैं; शेषजीके फणोंपर जो सहस्रों मुकुट हैं वे ही मानो उस पर्वतके सुवर्णमण्डित शिखर हैं तथा वक्षःस्थलमें विराजमान कौस्तुभमणि उसके गर्भसे प्रकट हुआ रत्न है ॥ ३० ॥ ❀ ❀ प्रभुके गलेमें वेदरूप भौंरोंसे गुञ्जायमान अपनी कीर्तिमयी वनमाला विराज रही है; सूर्य, चन्द्र, वायु और अग्नि आदि देवताओंकी भी आपतक पहुँच नहीं तथा त्रिभुवनमें बेरोक-टोक विचरण करनेवाले सुदर्शनचक्रादि आयुध भी प्रभुके आसपास ही घूमते रहते हैं, उनके लिये भी आप अत्यन्त दुर्लभ हैं ॥ ३१ ॥ ❀ ❀ तब विश्वरचनाकी इच्छावाले लोकविधाता ब्रह्माजीने भगवानके नाभिसरोवरसे प्रकट हुआ वह कमल, जल, आकाश, वायु और अपना शरीर—केवल ये पाँच ही पदार्थ देखे, उनके सिवा और कुछ उन्हें दिखायी न दिया ॥ ३२ ॥ ❀ ❀ रजोगुणसे व्याप्त ब्रह्माजी प्रजाकी रचना करना चाहते थे। जब उन्होंने सृष्टिके कारणरूप केवल ये पाँच ही पदार्थ देखे, तब लोकरचनाके लिये उत्सुक होनेके कारण वे अचिन्त्यगति श्रीहरिमें चित्त लगाकर उन परमपूजनीय प्रभुकी स्तुति करने लगे ॥ ३३ ॥

**आठवाँ अध्याय समाप्त**

# अथ नवमोऽध्यायः

ब्रह्मोवाच

ज्ञातोऽसि मेऽद्य सुचिरान्ननु देहभाजां न ज्ञायते भगवतो गतिरित्यवद्यम् ।
नान्यत्त्वदस्ति भगवन्नपि तन्न शुद्धं मायागुणव्यतिकराद्यदुरुर्विभासि ॥ १ ॥
रूपं यदेतदवबोधरसोदयेन शश्वन्निवृत्ततमसः सदनुग्रहाय ।
आदौ गृहीतमवतारशतैकबीजं यन्नाभिपद्मभवनादहमाविरासम् ॥ २ ॥
नातः परं परम यद्भवतः स्वरूपमानन्दमात्रमविकल्पमविद्धवर्चः ।
पश्यामि विश्वसृजमेकमविश्वमात्मन् भूतेन्द्रियात्मकमदस्त उपाश्रितोऽस्मि ॥ ३ ॥
तद्वा इदं भुवनमङ्गल मङ्गलाय ध्याने स्म नो दर्शितं त उपासकानाम् ।
तस्मै नमो भगवतेऽनुविधेम तुभ्यं योऽनादृतो नरकभाग्भिरसत्प्रसङ्गैः ॥ ४ ॥
ये तु त्वदीयचरणाम्बुजकोशगन्धं जिघ्रन्ति कर्णविवरैः श्रुतिवातनीतम् ।
भक्त्या गृहीतचरणः परया च तेषां नापैषि नाथ हृदयाम्बुरुहात्स्वपुंसाम् ॥ ५ ॥
तावद्भयं द्रविणगेहसुहृन्निमित्तं शोकः स्पृहा परिभवो विपुलश्च लोभः ।
तावन्ममेत्यसदवग्रह आर्तिमूलं यावन्न तेऽङ्घ्रिमभयं प्रवृणीत लोकः ॥ ६ ॥
दैवेन ते हतधियो भवतः प्रसङ्गात्सर्वाशुभोपशमनाद्विमुखेन्द्रिया ये ।
कुर्वन्ति कामसुखलेशलवाय दीना लोभाभिभूतमनसोऽकुशलानि शश्वत् ॥ ७ ॥

श्रीधरस्वामिविरचिता भावार्थदीपिका

नवमे तपसा तुष्टं दृष्ट्वा नारायणं त्वजः । अस्तौदेकार्णवे सीदँल्लोकसर्गचिकीर्षया ॥ १ ॥

भगवज्ज्ञानेनात्मनः कृतार्थतामाविष्कुर्वन्नज्ञांश्च शोचन्नाह । ज्ञातोऽसीति । सुचिराद्बहुकालोपासनेनाद्य मे मया ज्ञातोऽसि । नन्वहो देहभाजामेतदवद्यं दोषः । किं तत् । यद्भगवतस्तव गतिस्तत्त्वं न ज्ञायत इति । यतस्त्वमेव ज्ञातुं योग्यः सत्यत्वान्नान्यदसत्यत्वादित्याह । त्वत्त्वत्तोऽन्यन्नास्ति यद्यप्यस्तीति प्रतिभाति तदपि शुद्धं सत्त्वं न भवति । कथमसतः प्रतीतिस्तत्राह । यद्यतो मायागुणक्षोभात्त्वमेवोरुर्बहुरूपो विभासि ॥ १ ॥ ❀ ❀ ननु त्वमपि सम्यक् न जानासि यत्त्वया दृष्टं रूपमेतदपि गुणात्मकमेव निर्गुणं ब्रह्म वै तु सत्यं तत्राह । रूपमिति द्वाभ्याम् । अवबोधरसोदयेन चिच्छक्त्याविर्भावेन शश्वत्सदा निवृत्तं तमो यस्मात्तस्य तव यदेतद्रूपं त्वयैव स्वातन्त्र्येण सतामुपासकानामनुग्रहाय गृहीतमाविष्कृतमवतारशतस्य शुद्धसत्त्वात्मकस्य यदेकं बीजं मूलं तत्प्रदर्शनार्थं गुणावतारबीजत्वं दर्शयति । यन्नाभीति ॥ २ ॥ ❀ ❀ हे परम अविद्धवर्चोऽनावृतप्रकाशं अतोऽविकल्पं निर्भेदम् अत एवानंदमात्रम् एवंभूतं यद्भवतः स्वरूपं तदतो रूपात्परं भिन्नं न पश्यामि किंत्विदमेव तत् । अतः कारणात्ते तवादः इदं रूपमुपाश्रितोऽस्मि योग्यत्वादपीत्याह । एकमुपास्येषु मुख्यं यतो विश्वसृजं विश्वं सृजतीत्यत एवाविश्वं विश्वस्मादन्यत् । किंच । भूतेन्द्रियात्मकं भूतानामिंद्रियाणां चात्मानं कारणमित्यर्थः ॥ ३ ॥ ❀ ❀ नन्वेवमपि सोपाधिकमेतदर्वाचीनमेवेत्याशंक्याह । तद्वै तदेवेदं हे भुवनमंगल यतस्ते त्वया नोऽस्माकमुपासकानां मंगलाय ध्याने दर्शितम् । न ह्यव्यक्तवर्त्माभिनिवेशितचित्तानामस्माकं सोपाधिकदर्शनं युक्तमिति भावः । अतस्तुभ्यं नमोऽनुविधेमानुवृत्त्या करवाम । तर्हि किमिति केचिन्मां नाद्रियंते तत्राह । योऽनादृत इति । असत्प्रसंगैर्निरीश्वरकुतर्कनिष्ठैः ॥ ४ ॥ ❀ ❀ आदरेण तु त्वां भजंतः कृतार्था इत्याह । ये त्विति । श्रुतिर्वेदः स एव वातस्तेन नीतं प्रापितं नापैषि नापयासि ये त्वत्कथाश्रवणमत्यादरेण कुर्वंति तेषां हृदि नित्यं प्रकाशसे इत्यर्थः ॥ ५ ॥ ❀ ❀ ततः किमत आह । तावदिति । द्रविणादौ विद्यमाने भयं गते शोकः पुनश्च स्पृहा

---

१. प्रा० पा०—तत्त्वशुद्धं । २. प्रा० पा०—स्तमुपा० । ३. प्रा० पा०—द्रविणदेह० । ४. प्रा० पा०—सर्वासुलो प० ।

ततः परिभवस्तथाऽपि विपुलो लोभस्तृष्णा पुनः कथंचित्प्राप्ते ममेत्यसदाग्रहः। आर्तिमूलं भयशोकादेः कारणं न प्रवृणीत नाश्रयेत्। त्वत्पादाश्रयमात्रेण भयादिनिवृत्तिः किं पुनस्त्वत्प्रकाशे सतीति भावः॥ ६॥ ❀ ❀ ये निष्कामा अपि संतस्त्वां नाद्रियंते ते नरकभाज इत्युक्तं ये तु त्वत्कथाश्रवणादिविमुखाः संतः काम्यकर्मपरास्तेऽतिमंदा इत्याह। दैवेन ते हतधियो नष्टमतयः प्रसंगाच्छ्रवणकीर्तनादिरूपात्सर्वदुःखनिवर्तकाद्विमुखानींद्रियाणि येषाम्। अकुशलान्यक्षेमकराणि काम्यकर्माणि॥ ७॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

सीदन्सृष्टिनिर्माणशक्त्यलाभेनाकुलीभवन्॥ (१)॥ तदवद्यं किम् बहुरूपो विभासीति 'न हि सत्यस्य नानात्वम्' इत्युक्तेः। 'नानात्वभ्रम आत्मन्' इत्युक्तेश्च॥ १॥ ❀ ❀ अत्राक्षिपति—नन्विति॥ २॥ ❀ ❀ अतोऽनावृतप्रकाशत्वात्। अत एव निर्भेदत्वादेव 'भेदो दुःखस्य मूलं हि' इति वचनात्। एवंभूतमनावृतप्रकाशाभेदानंदमात्रं यत्स्वरूपम्। अतोऽस्माद्रूपात्। इदमेवास्मज्ज्ञातमेव तत्सच्चिदानंदरूपम्। यतो हेतोरिदं मज्ज्ञातमेव तत्—योग्यत्वाद्ध्यातुमर्हत्वादप्येतद्रूपमेवाहमुपाश्रितोस्मीति। यतो हेतोर्विश्वस्रष्टा हि घटात्कुलालवद्भिन्न एव भवतीत्याह—अत एवेति। विश्वसृक्त्वादेव न केवलं विश्वसृगेव किं तु विश्वसृजामवांतरकारणानामपि कारणमित्याह—किं चेति। इत्यर्थ इति ब्रह्मण एव तव सर्वकारणत्वं न तु भूतादीनामिति भावः। मा परो यस्मात्स परमः सर्वावधिभूतोसीत्याह परमेति॥ ३॥ ❀ ❀ पुनराक्षिपति—नन्विति। कारणकारणत्वेपि कारणत्वोपाधिना पुनरप्यर्वाचीनमेव शुद्धस्वरूपं योगिजनोपास्यं तु परमस्तीति चेदाह—तन्निरुपाधिस्वरूपमेतदेव लोकमंगलार्थं प्रकटितमित्याह—हे भुवनमंगलेति। इति भाव इति "ये यथा मां प्रपद्यंते तांस्तथैव भजाम्यहम्" इति गीतोक्तेः। "यद्यद्धिया त उरुगाय विभावयंति तत्तद्वपुः प्रणयसे सदनुग्रहाय" इति वक्ष्यमाणत्वाच्चेत्याशयः। यतो भक्तमंगलार्थमाविर्भूतोसि अतो हेतोः यद्यहमीदृशस्तर्हि सर्वे मां किमिति न भजंतीत्याक्षेपपूर्वकं समाधत्ते तर्हीत्यादिना निरीश्वरसांख्यमीमांसकास्तेपु निष्ठा स्थितिर्येषां तैः॥ ४॥ ❀ ❀ श्रुतिः श्रवणं वा त्वदीयचरणांबुजकोशस्य क्षीराब्ध्यादिस्थितमूलरूपाख्यपद्मकुलस्य गंधं हृदि व्यक्तरूपं जिघ्रंति अपरोक्षीकृत्यानुभवंति "हृदि व्यक्तं तु यद्रूपं हरेर्गंधः स उच्यते। उत्तमानां हि पादेन सर्वरूपं च कथ्यते" इति तीर्थोक्तेः। चरणः पादपर्यायः। अयमर्थः सम्यक् प्रतीयतेऽन्यथा कर्णानां घ्राणनासंभवेन विषयविषयिसंबंधाभावाद्विरोधः स्यात्। यद्वा। गंधशब्दस्य यशसि जिघ्रंतीत्यस्य शृण्वंतीत्यस्यार्थे लक्षणा कार्येति आदरेण शृण्वंति यथा कर्णच्छिद्रद्वारभूतैः श्रुतिवातेन प्रापितं गंधमित्यर्थः। इत्यर्थ इति कथाश्रवणसमोन्यः प्रकारो भगवज्ज्ञानस्य नास्तीति भावः॥ ५॥ ❀ ❀ ततो नित्यं हृदि प्रकाशात्। किं स्यादतोत्र भयं राजचौरव्यसनादितः स्पृहा पुनर्मे धनं कथं स्यादितीच्छा। ततः स्पृहातः 'याचञ्जनादप्रतिलब्धमानम्' इत्याद्युक्तेः। तथापि सत्यपि पराभवे असदाग्रहो वृथा हठः मम त्वस्यैव भयशोकादेः कारणत्वादित्यर्थः। आर्त्तिमूलमित्याविष्टलिंगत्वात्। षंढत्वम्। इति भावः इति। "तावद्रागादयः स्तेनास्तावत्कारागृहं गृहम्। तावन्मोहोंघ्रिनिगडो यावत्कृष्ण न ते जनाः" इति लोकेशोक्तेरित्याशयः॥ ६॥ ❀ ❀ सकामनिष्कामजनानां भवत्सेवनमेव क्षेमहेतुरित्यभिप्रायेण स्वामिचरणा वदंति ये निष्कामा इति। दैवेन जन्मांतरसंवादिताकुशलकर्मणा अक्षेमकराणि चौर्यव्यभिचारादीनि। लोभेन जैह्वशैश्नादिभोगाभिलाषेणाभिभूतं शास्त्रीयमार्गतश्च्यावितं मनो येषां ते तथा॥ ७॥

## श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

तुष्टं तुष्टतया हृद्याविर्भूतं सीदन् लोकतत्त्वाज्ञानात्खिद्यत् ज्ञानेन साक्षात्कारेण ज्ञातोऽसि मया याथार्थ्येनानुभूतोऽसि। नन्वज्ञाने का हानिस्तत्राह नन्विति। दोष इति भगवद्वैमुख्यस्य सर्वानर्थमूलत्वात् अन्यत्स्वतन्त्रसत्ताकं वस्तु नास्त्येवेति ज्ञेयं कुतोऽसत्त्वान्मिथ्यात्वात् यतो हेतोः मायागुणक्षोभाद्दोषात् तिमिरदोषे द्विचन्द्रवदधिष्ठानस्वरूपस्त्वमेव बहुरूपः विविधजगद्रूपः प्रतीयसे॥ १॥ ❀ ❀ रूपमिति युग्मकम्। रूपमीश्वररूपं गुणात्मकं कर्तृत्वादिगुणमयमेव एतत् कृपया भवतैव संदर्शितं चिद्घनश्रीविग्रहात्मकं रूपं स्वातन्त्र्येणेत्यध्याहृतैवकारार्थः। तत्र च मानं "येनाप्नोति परां भूमिं पदगुप्ताभिधेयता। तदव्ययमुपादेयं पदव्याख्याविशारदै" रिति। नित्ये धाम्नि पूर्वं सदैवोपासकानां मनस्याविष्कृतं शुद्धसत्त्वात्मकस्य प्राकृतसत्त्वं हि न कदाचिच्छुद्धम् "अन्योऽन्यमिथुनास्सर्वे" इत्युक्तेः तस्माद्यथाऽगोचरस्य गोचरत्वे हेतुः प्रकृतिजं सत्त्वं तथाऽप्राकृतस्य सत्त्वस्यापि सर्वप्रकाशकत्वेन तल्लक्षणाक्रान्तत्वात् सत्त्वशब्दव्यपदेश्यत्वं सम्विद्रूपत्वाच्च शुद्धत्वं तदात्मकस्य तत्प्रदर्शनार्थं बीजत्वज्ञापनार्थं निर्भेदं समानासमानजातीयभेदशून्यमतोरूपाच्छ्रीविग्रहलक्षणात् इदमेव श्रीविग्रहलक्षणं वस्त्वेव तद्ब्रह्म न तु ब्रह्मैवोपहितं श्रीविग्रह इति। तदुक्तं हरिवंशेऽर्ज्जुनं प्रति भगवता "यत्परं परमं ब्रह्म सर्वं विभजते जगत्। ममैव तद्घनं तेजो ज्ञातुमर्हसि भारते" ति। अतः ब्रह्माभिन्नत्वात् रूपं श्रीविग्रहं योग्यत्वादाश्रयणार्हत्वात् अतः स्रष्टत्वात् विश्वस्मात्सृज्यात् आत्मानं मूलस्वरूपं कार्यं हि कारणात्मकमिति कारणमिति व्याख्यातम्॥ २॥ ३॥ ❀ ❀ एवमपि ब्रह्माभिन्नत्वेऽपि सोपाधिकमिति हेतुगर्भं विशेषणं सृष्ट्यादिकर्तृत्वेन मायोपाधिसहितत्वात् एतच्छ्रीविग्रहतत्त्वमर्वाचीनमागन्तुकमेव। इदं श्रीविग्रहरूपं तदेव निरु-

पाधि ब्रह्मैव यतोऽव्यक्तं चक्षुराद्यगोचरं वर्त्म ज्ञानमार्गो यस्य तस्मिन्भगवति अभिनिवेशितमेकाग्रीकृतं चित्तं येषां निरुपाध्युपासकभक्तेषु वञ्चनाया अयुक्तत्वात् निरुपाधिकमेवेदमित्यर्थः । निरीश्वरकुतर्कनिष्ठैः ईश्वरोऽप्यज्ञानकल्पित इति कुतर्कनिष्ठैः ॥ ४ ॥ ❀ ❀ तु शब्देनात्रैव परमसंमतत्वं स्थापितम् ॥ ५ ॥ ❀ ❀ ततः प्रकाशात् तथापि परिभवेऽपि प्रकाशप्रयोजनस्य वाच्यार्थेऽनभिव्यक्तेर्व्यङ्ग्यार्थमाह त्वत्पादेति । तथा च भयादिनिवृत्तिः प्रकाशस्यानुषङ्गिकं प्रयोजनं मुख्यं तु प्रेमैव ज्ञेयम् ॥ ६ ॥ ❀ ❀ दैवेन दुरदृष्टेन ॥ ७ ॥

## श्रीमद्वीरराघवव्याख्या

अथ स्तुतिप्रकारं तथा प्रसन्नस्य भगवतोऽनुग्रहविशेषं चाह नवमेन । तत्र कृत्स्नस्य चिदचिदात्मकस्य प्रपञ्चस्य च भगवच्छरीरत्वेन ज्ञातवतः स्वस्य कृतार्थतामाविष्कुर्वन्नीदृशज्ञानविधुरान्निन्दन्नब्रह्मात्मकवस्त्वन्तराभावमुपपादयति ज्ञातोऽसीति । ननु हे भगवन्! सुचिराद् बहुकालोपार्जितात्तपस इति शेषः । मे मयाऽद्याधुना ज्ञातोऽसि यथाऽवस्थितत्वेन दृष्टोऽसि कार्यावस्थकारणावस्थकृत्स्नचिदचिदन्तर्यामित्वस्वेच्छोपात्ताप्राकृतपञ्चोपनिषन्मयदिव्यमङ्गलविग्रहविशिष्टत्वसर्वज्ञत्वसर्वशक्तित्वसत्यसङ्कल्पत्वाश्रितवात्सल्यैकजलधित्वाद्याकारविशिष्टत्वेन सत्यज्ञानानन्दस्वरूपत्वमत्र विवक्षितं तस्मै नमो भगवते भुवनद्रुमाय तिर्यङ्मनुष्यविबुधादिषु नातः परं परमेत्यादिना ह्येतदेव प्रपञ्चयिष्यति ईदृशज्ञानविधुरान्निन्दति । भगवतः षाड्गुण्यपूर्णस्य तव गतिः स्वरूपं न ज्ञायते इति यदेतदेव देहभाजां कर्मायत्तप्रकृतिपरिणामरूपशरीरभाजां क्षेत्रज्ञानामवद्यं दोषः अब्भक्षो वायुभक्ष इत्यादिवद्भगवत एवेत्यवधारणं विवक्षितमात्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते इदं सर्वं विज्ञातं भवति येनाश्रुतं श्रुतं भवति स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठामिति च भगवद्ज्ञानेनैव कृत्स्नस्य ज्ञातत्वश्रवणात् अब्रह्मात्मकस्य स्वतन्त्रवस्तुनोऽभावात्तमेव विदित्वातिमृत्युमेतीति ब्रह्मज्ञानस्यैव मृत्युतरणोपायत्वश्रवणाच्च भगवानेव ज्ञातव्य इति तज्ज्ञानविधुरा दुष्टा इत्यभिप्रायः । एतदेवोपपादयति नान्यदिति । हे भगवन्! पूर्णषाड्गुण्यमूर्ते त्वत्त्वतः अन्यदत्वदात्मकं नास्ति सर्वस्य त्वदात्मकत्वात्त्वज्ज्ञानेनैव सर्वस्य ज्ञातत्वात् ज्ञातव्यान्तराभावात्त्वमेव ज्ञातव्य इत्यभिप्रायः । ननु स्वतन्त्रत्वेनैव देवमनुष्यत्वादिवस्तुप्रतीतेस्त्वदन्यन्नास्तीति कथमुच्यतेऽत आह—अपि स्वतन्त्रत्वेन प्रतीतमपि तदेवादि वस्तु न शुद्धं नाबाधितमत्राब्रह्मात्मकस्वतन्त्रबुद्धिर्भ्रान्त्यैवेत्यर्थः । कुत एतदित्यत आह मायेति । यत् यतः मायायाः प्रकृतेर्गुणानां व्यतिकराद्वैषम्यात् परिणामादित्यर्थः । त्वमेव उरुर्बहुधा विभासि प्रकाशसे एकः सन् बहुधा विभासि बहु स्यां प्रजायेय तत्सृष्ट्वा तदेवानुप्राविशत्तदनुप्रविश्य सच्च त्यच्चाभवदिति प्रक्रम्य सत्यं चानृतं च सत्यमभवदिति श्रुत्युक्तरीत्या स्वयमपरिच्छिन्नज्ञानानन्दस्वभावोऽत्यन्तसूक्ष्मतया संकल्प्य स्वलीलोपकरणचिदचिद्वस्तुशरीरतया तन्मयः परमात्मा विचित्रानन्तक्रीडनकोपादित्सया स्वशरीरभूतप्रकृतिपुरुषसमष्टिपरम्परया महाभूतपर्यन्तमात्मानं तत्तच्छरीरकं परिणमय्य तन्मयः पुनः सत्त्यच्छब्दवाच्यविचित्रचिदचिन्मिश्रदेवादिस्थावरान्तजगद्रूपो भवसीत्यर्थः । ब्रह्मणि जगद्रूपतया विक्रियमाणेऽपि तत्प्रकारभूताश्चिदंशगताः सर्वे विकाराः तत्प्रकारभूतक्षेत्रज्ञगताश्चापुरुषार्थाः ब्रह्म तु निरस्तनिखिलदोषगन्धमपरिच्छिन्नज्ञानानन्दमेकस्वरूपमेवाभवदिति विवेकः । एवं कृत्स्नचिदचिदन्तरात्मनो भगवत एव ज्ञानस्य मुक्तिसाधनत्वं "तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्य" इति श्रुतं तस्य सर्वं ब्रह्मात्मकत्वेनोपासीनस्येत्यर्थः । तथा च श्रुत्यन्तरं "सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीते" ति ॥ १ ॥ ❀ ❀ अथ "जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः । त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन" इति भगवदवतारहस्यज्ञानस्यापि मोक्षसाधनत्वस्मरणात् अवतारयाथात्म्यमपि शोधयति रूपमिति । अवबोधरसोदयस्यावबोधरूपस्य रसस्योदयः स्वाभाविकाविर्भावो यस्येति बहुव्रीहिः । निरुपाधिकनित्याविर्भूताऽपरिच्छिन्नानन्दरूपज्ञानवत इत्यर्थः । अतएव शश्वन्निवृत्ततमसः शश्वत्सदा निवृत्ततमोऽज्ञानं यस्मात्तस्य अनेन विशेषणद्वयेन त्रिविधचेतनाचेतनव्यावृत्तिः आद्येनाचेतनव्यावृत्तिर्द्वितीयेन चेतनव्यावृत्तिः । बद्धानामनिवृत्ततमत्वान्मुक्तानामपि संसारदशायां तमः सम्बन्धाच्छश्वन्निवृत्ततमस्त्वाभावात् नित्यानां तथात्वस्य परसङ्कल्पायत्तत्वेन सोपाधिकत्वात् एवंभूतस्वरूपं तव यद्रूपं विग्रहः कथंभूतमवतारशतैकबीजमवतारशतानामेकबीजं मूलं तदेव प्रदर्शयति यस्य परिगृहीतैवंविधरूपस्य तव नाभिपद्ममेव भवनं गृहं तस्मादहं तवावेशावताररूपोऽहं "सृष्टिं ततः करिष्यामि त्वामाविश्य प्रजापते" इति चतुर्मुखस्य भगवदावेशावताररूपत्वप्रसिद्धेः एतद्रूपमादौ सर्गादौ सदनुग्रहाय सत्स्वनुग्रहाय साधूनां परित्राणायेत्यर्थः । गृहीतमाविष्कृतं ननु जीववत्कर्मायत्तसुखदुःखोपभोगाय गृहीतमित्यर्थः । तथा च श्रुतिस्मृती "अजायमानो बहुधा विजायते । अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि स" न्नित्यादिके ॥ २ ॥ ❀ ❀ एवं चिदचिद्विलक्षणत्वेन शोधितस्वरूपस्य जीवशरीरविलक्षणत्वेन शोधितरूपस्य चोभयोरेवोपास्यत्वं वदन् पुनरन्यैरपि धर्मैः स्वरूपरूपे विशिनष्टि नात इति । हे परम! परो मा न विद्यते यस्मात्स परमः तस्य सम्बुद्धिः भवतः तव यत्स्वरूपं कथंभूतमानन्दमात्रं मात्रचा दुःखसम्भेदनिरासः अविकल्पं जातिगुणादिरहितम् आभ्यां चिदचिद्व्यावृत्तिः अविद्धवर्चः अविद्धमप्रतिहतं वर्चः सङ्कल्परूपं ज्ञानं यस्य तदेवं भूतं स्वरूपं यच्चाविश्वं विश्वविलक्षणं विश्वसृजं विश्वस्य कारणं भूतेन्द्रियात्मकं पञ्चोपनिषन्मन्त्रप्रतिपाद्याप्राकृतभूतेन्द्रियात्मकं रूपं चेति यदतः

अस्मात् परं विलक्षणं स्वरूपं रूपं च न पश्यामि । अतः अदः एतदुभयमेव आत्मन् हे परमात्मन् ! उपाश्रितोऽस्मि सम्यगनुवृत्त्या शरणं गतोऽस्मि ॥ ३ ॥ ❀ ❀ पुनरुक्ताकारविशिष्टस्य भगवतो भक्त्येकलभ्यत्वं वदंस्तमेव नमस्करोति तद्वेति । हे भुवनमङ्गल ! विश्वस्य मङ्गलरूप ! यतस्त्वया उपासकानां नोऽस्माकं ध्यानेन मङ्गलायास्मदभ्युदयाय यद्वा वेदान्तेषु प्रसिद्धम् इदं रूपं दर्शितं तस्मै ईदृशस्वरूपरूपगुणविभूतिमते भगवते पूर्णषाड्गुण्यमूर्तये तुभ्यं नमोऽनुविधेम नमस्कुर्महे यस्त्वमसत्प्रसङ्गैरसत्सु शब्दादिषु प्रकृष्टः सङ्गो येषां तैरत एव नरकभाग्भिर्देहिभिर्नादृतः नाभाजीति ॥ ४ ॥ ❀ ❀ आदरेण त्वामभजन्तो नरकभाजस्त्वामादरेण भजन्तस्तु कृतार्था इत्याह ये त्विति । श्रुतिः श्रवणं तदेव वातः पवनः तेन नीतं प्रापितं त्वदीयचरणाम्बुजकोशस्य गन्धं कर्णविवरैर्ये जिघ्रन्ति येषां च परयाऽव्यभिचारिण्या भक्त्या गृहीतौ चरणौ यस्य स तथाभूतो भवान् भवति तेषां स्वपुंसां स्वभक्तानां हृदयाम्बुरुहाद्धृदयकमलात् हे नाथ ! नापैषि नापसरसि ये त्वत्कथाश्रवणमत्यादरेण कुर्वन्ति त एकान्तभक्त्या त्वां प्रपन्नास्तेषां हृदि भवान्नित्यं संनिहितो भवतीत्यर्थः ॥ ५ ॥ ❀ ❀ भवतु मत्सान्निध्यमेतावता कथं तेषां कृतार्थतेत्यत आह तावदिति । ते तवाभयं न विद्यते भयं यस्मात्तदभयं संसृतिनिवर्तकमङ्घ्रिं लोको यावन्न प्रवृणीत निरतिशयप्रियत्वेन नोपासीत तावदेव भयादय इत्यन्वयः । आगामिदुःखदर्शनजं ज्ञानं भयं तच्च द्रविणगेहसुहृन्निमित्तं द्रविणं धनं सुहृन्मित्रं भाविद्रविणादिविपत्तिनिमित्तदुःखविषयं ज्ञानं भयमित्यर्थः । शोकः अतीतपुत्रमरणादिस्मरणविषयं ज्ञानं शोकस्तादात्विकप्रतिकूलविषयं वा ज्ञानं स्पृहाऽनुकूलविषयेष्विच्छा परिभवस्तिरस्कारः विपुलः विस्तृतः लोभः तृष्णा असदवग्रहः अनात्मभूते शरीरेऽवग्रह आत्मत्वाभिमानः अयं चोक्तानां भयादिरूपाणामार्तीनां मूलं कारणमेते सर्वे तावत्कात्स्न्येंन तावद्भवच्चरणारविन्दप्रवणावधि अनुवर्त्तन्त इत्यर्थः । त्वच्चरणवरणेन तु सांसारिकभयादिनिवृत्त्याऽऽविर्भूतापहतपाप्मत्वादिगुणाष्टकविशिष्टः कृतार्थो भवतीत्यभिप्रायः ॥ ६ ॥ ❀ ❀ एवं भगवतो भक्त्यैकलभ्यत्वमभिधाय योऽनादृतो नरकभाग्भिरसत्प्रसंगैरिति प्रस्तुतान्विषयलालसान्निन्दंस्तानेव शोचति दैवेनेति द्वाभ्याम् । सर्वाशुभोपशमनात्सर्वाण्यशुभानि भयशोकादीनि उपशाम्यन्तेऽनेनेति तथाभूताद्भगवतस्तव प्रसंगाद्दर्शनश्रवणादिरूपाद्विमुखानीन्द्रियाणि चक्षुःश्रोत्रादीनि येषां ते अकुशलान्यक्षेमकराणि कर्माणि शश्वन्निरन्तरं कामसुखानि शब्दादिविषयसुखानि तेषां लवाय लोभेन तृष्णातिशयेनाभिभूतं मनो येषां ते । अत एव दीनाः क्षुद्राः कुर्वन्ति ते दैवेन हताः प्रतिहता धियो येषां ते तथोक्ताः मन्दभाग्या इत्यर्थः ॥ ७ ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

ब्राह्मणः स्तुतिप्रकारोऽस्माकमपि श्रवणागोचरः किमिति मनसः शङ्का मा भूदिति भावेन तत्स्तुतिप्रकारं कथयति ज्ञातोऽसीत्यादिना । नन्वित्यवधारणार्थोऽनुनयार्थो वा, मे ननु मम सुचिरात्तपआद्यनुनयेन अद्य ज्ञातोऽसि नन्वेवं मे अव्यक्तस्वभावस्य ज्ञानं कथं घटत इति तत्राह देहभाजामिति । भगवतो गतिः स्वरूपं देहभाजामनुनयेन न ज्ञायते इति यत्तदवद्यं दुष्टमतोऽव्यक्तस्वभावोऽपि भक्त्यादिसाधनसामग्र्या ज्ञायत एवेत्यर्थः । ननु तर्हि कस्मात्सर्वे पुरुषार्थभाजः किं नाभवन्नित्यस्येदमेवोत्तरं तव गतिर्न ज्ञायते इत्यत्रावद्यं पापं कारणं नन्वित्यर्थः । देहभाजामिति । स्वस्वामिसंबन्धज्ञापनाय षष्ठी स्वस्वामिभावज्ञानाभावात् न ज्ञायत इति भावः । ननु स्वव्यतिरिक्तवस्तुनोऽसत्त्वान्न ज्ञायत इति किं न स्यादत्राह नेति । त्वदन्यद्वस्तु अस्ति स्वतो नास्ति त्वदधीनसत्ताकत्वात् द्रव्यं मर्म च कालश्चेत्यादेस्तर्हि तेन ज्ञायेतेति तत्राह तदिति । तुशब्दो भेदेऽवधारणे वा त्वत्तो भिन्नं तज्जगदशुद्धं सदोषमेवातः सदोषत्वान्निर्दोषो भवान्न ज्ञायत इत्यर्थः । त्वदन्यस्य सदोषत्वं भवतो निर्दोषत्वं च कथमत्राह मायेति । मायायाः प्रकृतेः सत्त्वादिगुणानां व्यतिकराद्विकाराज्जातेषु महदादितत्त्वेषु अन्तर्यामिरूपैरवतारैश्च उरुर्बहुत्वसंख्याविशिष्टो विभासीति यत्तस्मादितरत् सर्वं सदोषं त्वं निर्दोष इत्यतो विभासीत्युक्तमत्र यत्त्वं नानात्वं तदपि स्थानभेदादसदेव भाति 'एकोऽपि स्थाननानात्वान्नानेव हरिरीर्यते । सर्वान्तर्यामिणस्तस्य न भेदो विद्यते क्वचि" दिति वचनात् ॥ १ ॥ ❀ ❀ इतोऽपि वाङ्मनसागोचरं भवतः स्वरूपमित्येतदवद्यमित्याह रूपमित्यादिश्लोकद्वयेन । अवबोधरसोदयेन अपरोक्षज्ञानरससमुद्रेकेण शश्वन्निवृत्ततमसः नित्यनिरस्तप्रकृतिगुणासक्तेः तव यदेतदवतारशतैकबीजं मत्स्याद्यवतारशतानां व्यञ्जकं रूपमादौ गृहीतमनादि अतएव नेदानीं गृहीतं "यत्तद्दिव्यं हरेरूपं क्षीरसागरमध्यगम्" इत्यतः क्षीरसमुद्रशायि यन्नाभिपद्मभवनाद्यन्नाभिकमलाख्यगृहादहमाविरासं जातोऽस्मि "अनादिनित्याद्व्यक्तात्तस्माज्जज्ञे चतुर्मुख" इति वचनात् ॥ २ ॥ ❀ ❀ हे परम ! यदानन्दमात्रं सज्ज्ञानानन्दैकरसमत एवाऽविकारं षड्विकाररहितमतएवाविद्धवर्चः अप्रतिहतार्चीरूपं भवतः स्वरूपं पश्यामि अतः परं निर्गुणं नास्तीति पश्यामि सज्ज्ञानानन्दैकमात्रं "न ततः परमं क्वचि" दिति वचनाच्च यच्च विश्वसृजं विश्वस्य स्रष्टृ एकं स्रष्ट्रन्तररहितमविश्वं प्रपञ्चविलक्षणमाद्यं सर्वस्यादिभूतमुपजीव्य वा भूतेन्द्रियाणामात्मकं व्यापकं यच्चाप्नोतीत्यादेः ते तवादोरूपमुपाश्रितोऽस्मीत्यतो न ज्ञायते वाङ्मनसागोचरत्वादित्येतदवद्यमवस्तु अभद्रं मतमत्युत्तमाधिकार्यपेक्षयोक्तं न देवदत्ताद्यधमापेक्षयेति तत्त्वम् । अनेन प्रकृतिगुणविकृतपदार्थेषु तिष्ठतो हरेरज्ञानादि कथं न स्यात् कथं वोदासीनस्याद्वितीयस्य रूपान्तरग्रहणं कथं वा विकारि सृज्यं सृजतो विकाराभाव इत्येतच्छङ्कात्रयमुन्मूलितमुक्तयुक्तेरिति भावः । अद इत्यनेन दूरस्थवस्तुवाचिना "पूर्णमदः पूर्णमिदम्" इति श्रुतेः जगद्व्यापिरूपेण स्वदृग्विषयरूपस्य

एकत्वं ध्वनयति ॥ ३ ॥ ❀ ❀ न केवलं मयैव ज्ञातोऽसि त्वत्प्रसादेनान्यैरपि ज्ञायमानत्वान्न ज्ञायत इत्यवग्रमिति भावेनाह यद्वा इति। ध्यानात्मनो ज्ञानरूपस्य तत्तद्ध्यानानुगुणरूपस्य वा ते तवोपासकानां यदि दर्शितं तादृग्रूपविशिष्टायानुविधेम कुर्मः। तर्हि दुर्ज्ञेया हि हरेर्गतिरित्यादेः कोऽभिप्राय इति तत्राह य इति। असत्सु विषयेषु प्रकर्षेण सङ्गो येषां ते तथा तैः इदानीमभावेऽपि जन्मान्तरेऽपि सत्संगत्या सद्गतिः स्यात्तत्राह निरयेति। अय गताविति धातोः अयनं गमनं निरस्तं यस्मात्स निरयोनिर्गमशून्यमन्धतम इत्यर्थः। तत् भजन्तीति निरयभाजस्तैरन्धंतमःप्राप्तियोग्यैरित्यर्थः। यैश्चानादृतः सादरं नार्चितस्तैर्दुर्ज्ञेय इति शेषः। तस्मै नमः वा इत्यनेन साधनसामग्र्या दर्शनं भवत्येवेति सूचयति ॥ ४ ॥ ❀ ❀ बलिसमये यक्षप्रत्यक्षवद्धरेः प्रत्यक्षत्वं न साक्षादतो न ज्ञायत इति तत्राह ये त्विति। उपासकत्रैविध्यसूचकस्तुशब्दः तत्र येऽन्त उपासका महान्तो गुरुमुखेभ्यः श्रुतिवातनीतमुपनिषदुक्तप्रकारेण श्रवणाख्यवायुना कर्णविवरैः प्रापितं त्वदीयचरणाम्बुजकोशस्य क्षीराब्ध्यादिस्थितमूलरूपाख्यपद्ममुकुलस्य गन्धं हृदि व्यक्तरूपं जिघ्रन्ति अपरोक्षीकृत्यानुभवन्ति "हृदि व्यक्तं तु यद्रूपं हरेर्गन्धः स उच्यत" इति "उत्तमानां तु पादेन सर्वं रूपं तु कथ्यत" इति वचनाच्च चरणः पाद इति पर्यायः "गन्धगन्धवतोर्यस्मान्न भेदः कचनेष्यत" इति वचनात् गन्धो लेशो विनिर्दिष्ट इति भेदशंकापि न कार्येत्यर्थः। हे नाथ! तेषां स्वपुंसां हृदयाम्बुरुहान्नापैपि नापसरसि न तिरोभवसि। तत्र निमित्तमाह भक्त्येति। भक्तिलक्षणदृढपाशेन गृहीतचरणः प्रबद्धपाद इत्यर्थः। अनेन भगवद्वशीकरणे भक्तिरेव प्रधानमित्युक्तं भवति ॥ ५ ॥ ❀ ❀ द्रविणादिनिमित्तभयं यावत् तावन्न ज्ञायत इति मतं निर्मूलमिति भावेनाह तावदिति ॥ ६ ॥ ❀ ❀ कस्मात्तर्हि न ज्ञायत इत्याग्रहो न निवर्तत इत्याशङ्कय भवदनुग्रहापात्रत्वादित्याशयेनाह दैवेनेति। अन्धंतमःप्राप्तिपर्यन्तं शश्वदकुशलकरणान्न ज्ञायत इत्याग्रहो न निवर्तत इति भावः। दैवेन सर्वोत्तमेन हरिणा विमुखवागादीन्द्रियाः सुखलेशलवायाल्पादल्पसुखाय लुभगार्ध्ये इति धातोर्लोभो गार्ध्यमभिलाषस्तेनाभिभूतं मनो येषां ते तथा यद्वा सद्व्ययानीच्छुत्वं तेन ॥ ७ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

ज्ञातोऽसीति अज्ञाने का हानिस्तत्राह देहेति। गतिः स्वरूपतच्छक्त्यादिरूपा परमा स्थितिः। ननु तादृशमद्गतेरन्यच्च प्रतीयते तत्राह। तादृशात् त्वत् त्वत्तोऽन्यत्तत्त्वं नास्तीति यद्वा अस्ति तदपि न शुद्धं किन्तु त्वमेव शुद्धं तत्त्वमित्यर्थः तत्रोभयत्रापि हेतुर्मायेति। अनन्तवैभवमय्या अन्तरङ्गया शक्त्या स्वतः शुद्ध एव त्वं जगद्रूपेण यदुरुर्विभासि तत् खलु बहिरङ्गाया मायाख्यायाः प्रधानरूपायाः स्वीयद्रव्यशक्तेर्गुणानां व्यतिकरात् परिणामादेव भासीति न तत्र शुद्धत्वमिति भावः ॥ १ ॥ ❀ ❀ रूपमिति युग्मकम्। आदौ गुणावतारादीनामग्रतः। गृहीतमुपात्तं सतामाभिमुख्येनानीतं प्रकटितमित्यर्थः, अविश्वमिति वक्ष्यमाणात् सृज्यत्वे विश्रान्तर्भावापातात् अवबोधरसोदयेन नित्यनिवृत्तसर्वप्रकृतिगुणस्य जीववत् तद्ग्रहणायोगात्। काहं तमोमहदहमित्यादिष्विव तमो ह्यत्र प्रकृतिः अवबोधस्य सर्वतश्छेदकत्वात् तत्रावतारशतैकबीजत्वे स्वानुभवेन दिग्दर्शनमाह यन्नाभीति। सृष्टेः प्रथमत्वादात्मनस्तथोक्तिः ॥ २ ॥ ❀ ❀ यत् खल्वतः परं भवतः स्वरूपं पूर्णभगवदादिरूपं तत्तु न पश्यामि किन्तवदो रूपमुपाश्रितोऽस्मि। तत् स्वरूपं विशिनष्टि। आनन्दमात्र आनन्दो ब्रह्मेत्युक्तम्। ब्रह्म च मात्रा निर्विशेषचिद्रूपोंऽशो यस्य। न विद्यते विविधः कल्पः सृष्ट्यादिकल्पना यत्र। भगवदादिरूपस्थस्य महावैकुण्ठस्थितस्य सृष्ट्यादिकर्मण्युदासीनत्वात् पुरुषस्यैव तत्र प्रवृत्तत्वात् तदुक्तं "कालवृत्त्या तु मायाया" मित्यादि विष्णोस्तु त्रीणि रूपाणीत्यादि च। अविद्धं मायया न भिन्नं वर्चस्तेजः शक्तिर्यस्य तादृशं अदो रूपं विशिनष्टि विश्वसृजमित्यादिना। भूतानामिन्द्रियाणाञ्च आत्मा प्रधानाख्यं स्वरूपं यत्र यदाश्रित्यैव विश्वकारणं प्रधानमपि प्रवर्त्तत इत्यर्थः ॥ ३ ॥ ❀ ❀ ननु तर्ह्यदो रूपं प्रकृतिगुणविशिष्टं नेत्याह तद्वा इदमिति। तदेवेदमित्यर्थः। बहुमूर्त्त्येकमूर्त्तिकमित्यत्राक्रूरोक्तन्यायेन भिन्नत्वेनाविर्भूतत्वेऽपि तस्मादभिन्नत्वात् प्रधानेनाश्रितत्वेऽपि धाम्ना स्वेन सदा निरस्तकुहकमिति न्यायेन तदनासक्तत्वात्, तर्हि कथं भवता दृश्यते तत्राह ध्यान इति। अस्माकं ध्यानलक्षणायां भक्तावेव स्वातन्त्र्येण दर्शितत्वात् तर्ह्येतद्रूपविशेषदर्शने किं कारणं तत्राह उपासकानाम्। सृष्टिकामनया तादृशोपासनाकर्तॄणां स्वस्य सकामत्वेऽपि तादृशतदुपकारानुसन्धानेन प्रत्युपकारासामर्थ्यात् केवलं नमति तस्मा इति। तदेवं स्वेषां सकामत्वेऽपि कृपाकरत्वं तस्य दर्शयित्वा तद्बहिर्मुखान्निन्दति य इति। असन्तोऽत्र तत्तदज्ञानकल्पितमतिकुतर्केण मन्वाना उच्यन्ते ॥ ४ ॥ ❀ ❀ तदेव स्थापयन् ये तु शुद्धभक्तास्तेषां त्वच्चरणारविन्दमेव पुरुषार्थः स्यात् यतस्त्वमपि तांस्तथा मन्यस इत्याह ये त्विति। तुशब्देनात्रैव परमसम्मतत्वं स्थापितं नापैषि नापगन्तुमिच्छसीत्यर्थः। अत्र परमसाधनं च त्वदीयेत्यादिनेति ॥ ५ ॥ ❀ ❀ ननु द्रविणादिनिमित्ते भयादौ सति कथमेतादृशमन्माधुर्यासक्तिः स्यात्तत्राह तावदिति। न प्रवृणीत शरणमात्रत्वेन नाश्रयेत ॥ ६—८ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

गर्भोदशायिनं स्वान्तर्यामिणं नवमे विधिः। स्तुत्वा तस्य कृपावृष्ट्या सामर्थ्यं प्राप सृष्टये ॥ १ ॥

भगवत्कृपालब्धं तदीयसाक्षात्कारैककारणं भगवज्ज्ञानमेव भवेदिति प्रदर्शयन्नाह ज्ञातोऽसीति। मे मया अद्य त्वं ज्ञातोऽसि सुचिरात् बहुकालं त्वदीयध्यानं कुर्वतापीत्यर्थः। ईदृशसौन्दर्यस्य तव मया कदाप्यध्यानात् ध्यानदशायां भगवन्तमहं

ज्ञात्वैव ध्यायामीति हन्त हन्त वृथैव ज्ञानाभिमानः कृतः। तथा ध्यातरूप एव प्रभुर्मे दर्शनं ददात्वित्याशंसापि वृथैव कृतेति ध्वनिः। यत ईदृशसौन्दर्यस्य लेशोऽपि महामरकतनीलोत्पलनवनीरदादिषु नास्तीति तथारूपतया त्वं ध्यातोऽपीदृशरूपतया प्रत्यक्षोऽभूरिति तव कृपाया माहात्म्यमनिर्वाच्यमित्यनुध्वनिः। स्वयं तन्माधुर्यास्वादमनुभूय तदननुभविनोऽपरान् शोचति। देहभाजां प्राणिनाम् इत्येवावद्यं दोषः किन्तत् भगवतस्तव गतिस्तत्त्वं न ज्ञायते ईदृशसौन्दर्यमाधुर्यादिकं नानुभूयते। देहभाजामिति देहधारणस्य त्वद्भजनमेव फलं यस्मादेवैतादृशं स्वरूपमनुभवितुं शक्यत इति भावः। ननु विचित्रे जगत्यन्यदपि किमीदृशमिति मधुरमनुभवनीयं वस्तु नास्ति यतोऽस्याज्ञाने देहिनामवद्यं ब्रवीषीति तत्राह। त्वत्तोऽन्यन्नास्ति यत् किल ज्ञानार्थमुपादेयमित्यर्थः। भगवन्निति भगवत्ता त्वन्यत्र नास्त्येवेति भगशब्दवाच्यनिखिलाप्राकृतसौन्दर्यकीर्त्यादीनि विना नैव नेत्रकर्णादिभोग्यं वस्त्वस्तीति भावः। ननु सर्वेन्द्रियभोग्यं स्वर्गसुखमेवास्ति तत्राह। अपि तन्न शुद्धमिति तदपि नश्वरत्वादिभिरनित्यं परिणामविरसं परिमितमतिनिकृष्टमपि न शुद्धमपवित्रं कामिकाकसङ्घास्वाद्यं न तु निष्किञ्चनहंसपरिषद्दृश्यमपीत्यर्थः। किञ्च तच्चापि त्वन्मायाशक्तिकार्यत्वान्न त्वत्तोऽन्यदित्याह। मायागुणानां व्यतिकरात् परिणामादुरुः स्वर्गपारमेष्ठ्यसार्वभौमादिरूपः॥ १॥ ॐ ॐ नन्विदमपि मदीयं रूपमद्यतनमेव अद्यतनत्वे चानित्यमेवात्र अद्य ज्ञातोऽसीति त्वदुक्तिरेव प्रमाणमिति परिहासमाशङ्क्याह रूपमिति। अवबोधरसः स्वरूपभूता चिच्छक्तिस्तदुदयेन हेतुना। शश्वत् सदातनमेव निवृत्तं तमो माया यस्मात् तस्य तव। अत्र शश्वदित्युक्ते गृहीतमाविष्कृतमिति स्वामिचरणाः, गृहीतमाभिमुख्येनानीतमिति सन्दर्भः। गृहीता मायया गुणा इतिवदभेदेऽपि भेदबुद्ध्येत्येके। अवबोधरसेन कर्त्रा गृहीतमित्यपरे॥ २॥ ॐ ॐ ननु निर्विशेषं ब्रह्मैव सर्वादिमं केचिद्व्याचक्षते न तु सविशेषमेतदिति तत्राह नात इति। हे परम! यद्भवतः स्वरूपमविकल्पं निर्विशेषम् आनन्दमात्रं ब्रह्म। तत् अतो रूपात् परं न पश्यामि किन्त्विदमेव तन्नतु तदेवेदमित्यर्थः। हे अविद्धवर्चः! अविद्धं कालदेशाद्यपरिच्छिन्नं वर्चस्तेजो यस्येति सर्वव्यापकं तत्तेज एव तद्ब्रह्मेति भावः। यदुक्तं हरिवंशे अर्ज्जुनं प्रति भगवता "यत्परं परमं ब्रह्म सर्वं विभजते जगत्। ममैव तद्घनं तेजो ज्ञातुमर्हसि भारतेति"। ननूभयोरैक्येऽपि त्वं कुत्र रज्यसीति तत्राह विश्वं सृजति। इगुपधत्वात् कः। विश्वसृजः ते तव रूपमेकमुपाश्रितोऽस्मि। ननु त्वमपि ब्रह्मा विश्वं सृजसीति तत्राह अविश्वं विश्वस्मादन्यत् चिन्मयमित्यर्थः, अहन्तु विश्वमेव यतो भूतेन्द्रियात्मभिर्देहेन्द्रियमनोभिः कं सुखं यत्तेनैव मदो गर्वो यस्येति स्वस्य प्राकृतत्वमुक्तम्॥ ३॥ ॐ ॐ ननु निर्विशेषं स्वरूपं किमिति नाश्रयसि तत्राह तत् प्रसिद्धमिदं सविशेषं स्वरूपं वै निश्चितं चतुर्दशभुवनस्थजनानां सर्वेषामपि यानि मङ्गलानि धर्मार्थकाममोक्षास्तेषामपि मङ्गलाय कल्याणार्थं एतद्रूपोपासने सत्येव धर्मादयः कुशलिनः सार्थका भवन्त्यन्यथा व्यर्था भवन्तीत्यर्थः। निर्विशेषस्वरूपन्त्वेवं न भवतीति भावः। तथा नोऽस्माकमपि। ध्याने इदमेव दर्शितं नतु तदिति। ततः कृपालुत्वाधिक्यमपि। तस्मात् तस्मै सविशेषस्वरूपाय चिन्मयगुणसमुद्राय तुभ्यं नम एव केवलं विधेम करवाम। परिचर्यां पुनः कामहं कर्तुं शक्नोमीति भावः। नन्विदं रूपं न सच्चिदानन्दमयं किन्तु मायामयमिति ब्रुवाणाः केचिन्मां वस्तुतो नाद्रियन्ते तत्राह योऽनादृत इति। नरकभाग्भिरिति ते नरक एव निपतिष्यन्तीत्यर्थः। असन्निमथ्यैवेदं सर्वमिति प्रसङ्गवद्भिरसाधुसङ्गिभिरिति वा॥ ४॥ ॐ ॐ शास्त्रेषु निर्विशेषस्वरूपोपासका ज्ञानिन उच्यन्ते सविशेषस्वरूपोपासकास्तु भक्तास्तेषामुभयेषां मध्ये भक्ता एव कृतार्थाः प्रियाश्चेत्याह द्वाभ्याम्। ये त्विति श्रुतिर्वेदः श्रवणभक्तिर्वा वातस्तेन नीतं प्रापितं ततश्च ये चरणाम्बुजसौरभ्यलोभिनो भृङ्गा इव चरणाम्बुजमेव परमपुरुषार्थत्वेन गृह्णन्तीत्याह। भक्त्या परया प्रेमलक्षणया। नापैषीति ते तथा तव चरणाम्बुज एव लोभिनस्तन्न त्यजन्ति तथा त्वमपि तेषां प्रेममाधुर्यवति हृदयाम्बुज एव लोभी तन्न त्यजसीति परस्परवशीकारः सूचितः॥ ५॥ ॐ ॐ ननु तेऽपि स्त्रीपुत्रद्रविणादिमन्तश्चेत् संसारिण एवेति तत्र नहि नहीति स्वरसनादंशमाह तावदिति। द्रविणाद्यासक्तिहेतुकं भयं संसार इत्यर्थः। तस्यैव प्रपञ्चः शोक इत्यादिः। तावदेव यावत्तवाङ्घ्रिं प्रभुत्वादिभावेन न प्रवृणीत प्रकर्षेण वरणे सति त्वय्यासक्त्या द्रविणाद्यासक्तिर्निवर्त्तत इति भावः। यदि च द्रविणादावसक्तोऽपि कश्चिद्भक्तो भवेत्तदापि नैव चिन्तेत्याह ममेत्यसदाग्रहस्तावदेवार्त्तिमूलं संसारकारणं यावदिति तवाङ्घ्रेः सेव्यत्वेन वरणमात्र एव द्रविणासक्त्यादेरुत्खातदंष्ट्रोरगदंशस्येव नार्त्तिमूलत्वमित्यग्रे च वक्ष्यते। 'तावद्रागादयस्स्तेना इत्यत्र यावत् कृष्ण न ते जना इति तावच्छब्दस्य द्विपाठबलाद्व्याख्यातम्। एवञ्च येतु त्वदीयेत्यनेन रतिमन्तः तावद्भयमित्यर्थेनानर्थनिवृत्तिमन्तः तावन्ममेत्यर्थेनानिवृत्तानर्थास्त्रिविधा अपि भक्ता न संसारिण इत्युक्तम्॥ ६॥ ॐ ॐ नन्वेवं चेत् सर्व एव सुधियो भूत्वा मच्चरणमाश्रयिष्यन्ते तर्हि के संसारिणो भविष्यन्ति तत्राह दैवेन त्वदपराधोत्थदुरदृष्टेन अकुशलानि काम्यानि निषिद्धानि च कर्माणि ॥ ७॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

नवमे स्तोत्रं तेन प्रसन्नस्य भगवतोऽनुग्रहं चाह तत्रादौ मनसैव भगवदुपदिष्टवेदबलेन वेदार्थभूतं जगद्धेतुं भगवन्तं स्तुवन् वेदविरुद्धान् पक्षान्निन्दति ज्ञातोऽसीति। यत् यस्त्वम् "यतो वा इमानि भूतानि जायन्ते" इति श्रुतिप्रसिद्धो जगद्धेतुः सर्वज्ञः सर्वशक्तिः मायायाः स्वशक्तेः गुणानां व्यतिकरात् क्षोभात् महदादिस्तम्बान्तरूपैः उरुर्विभासि "अद्वैतः द्वैतोऽसि एकः सन् बहुधा

विचचार" इत्यादिश्रुतिरत्रानुसंधेया । स त्वं मे मया सुचिरात्सुचिरकालोपासनेन ज्ञातोऽसि । एवं ये न जानन्ति तान्निन्दति ननु अहो भगवन् ! देहभाजां नानाजगत्कारणवादिनामित्यवद्यं दोषः तदाह । भगवतः षाड्गुण्यपूर्णस्य सर्वात्मनः गतिर्न ज्ञायते किन्तु "कालः स्वभावो नियतिर्यदृच्छा भूतानि योनिः पुरुषः इति चिन्त्य" मिति श्रुतिः । प्रोक्तानि नानाकारणानि स्वस्वमनीषया मन्यन्ते तत्तन्मतं न शुद्धम् । यतः त्वत् त्वत्तः अन्यत् पृथक् किमपि नास्ति सर्वेषां कालादिपदार्थानां त्वदात्मकत्वात् । अत एव सिद्धान्तपक्ष-विवक्षया श्रुत्याप्युक्तं पुरुष इति चिन्त्यमिति ॥ १ ॥ ॐ ॐ एवमात्मनो ज्ञानवत्त्वमुक्त्वा अथ भगवद्रूपं वर्णयन् त्वत्पुत्रोऽहं शरणं व्रजामीत्याह रूपमिति द्वाभ्याम् । अवबोधरसोदयेन स्वासाधारणज्ञानरसप्रकाशेन शश्वन्निवृत्तितमसः सर्वदा स्वभावत एव निवृत्ततम उपलक्षितं दोषमात्रं यस्मात् यस्य तव यदेतद्रूपं त्वयैव गृहीतमाविष्कृतम् ॥ २ ॥ ॐ ॐ हे परम ! हे आत्मन् ! आनन्दमात्रम् अविकल्पम् निर्भ्रमं यतः अनावृतप्रकाशं भूतेन्द्रियात्मकं भूतानां ब्रह्मादिस्तम्बपर्यन्तानां प्राणिनां तदिन्द्रियाणां च कारणं यतो विश्वसृजं सर्वस्रष्टृ तथापि अविश्वं सर्वविलक्षणमेकं निःसमानातिशयम् एवंभूतं यद्भवतः स्वरूपम् अतः परं श्रेष्ठं न पश्यामि । अतः अदः इदमुपाश्रितोऽस्मि ॥ ३ ॥ ॐ ॐ भगवतः कृपालुतां भक्तानां भगवत्कृपापात्रतामभक्तानां नरकपात्रतां च दर्शयन् भगवन्तं प्रणमति तस्मै इति । हे भुवनमङ्गल ! उपासकानां नोऽस्माकं मङ्गलाय ते त्वया तत्स्वरूपं दर्शितम्, धन्या वयमिति भावः ॥ ४ ॥ ॐ ॐ भगवत्कथाश्रवणादिना भगवदाश्रयणे जीवानां कृतार्थतामाह ये त्विति ॥ ५ ॥ ॐ ॐ भगव-दनाश्रयणे जीवानामकृतार्थतामाह तावदिति पञ्चभिः । न प्रवृणीत न‌ाश्रयेत् ॥ ६ ॥ ७ ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

जीवसर्गे भूतसृष्टौ ब्रह्मज्ञानं तदुच्यते । पञ्चविंशतितत्त्वानां स्वरूपस्य च बोधतः ॥ १ ॥
अतोऽत्र नवमेऽध्याये स्तुतिसंप्रार्थने पुरा । ततः सर्वोपदेशश्च भगवत्कृत ईर्यते ॥ २ ॥
ज्ञानमार्गस्य निर्द्धारः स्तोत्रेऽस्मिन् क्रियते स्फुटः । विषयः, साधनं, रूपं बाधाभावस्तथैव च ॥
प्रकीर्णकं च स्तोत्रेऽस्मिन् ज्ञानार्थं विनिरूप्यते ॥ ३ ॥

पूर्वाध्यायान्ते 'ददर्श' इति यदुक्तम्, तद्भगवत्स्वरूपं सृष्टौ कुत्रोपयुज्यत इति निरूपणीयम् । यदीदं ब्रह्म भवेत्, तदा मूलकारणत्वेनोपयुज्येत[1] । कर्ता च न भवति, स्वस्य तत्र विनियोगात् । अतः प्रथममयमेव भगवान् ब्रह्मेति । ब्रह्मज्ञानस्य जगत्कारणत्वात् ज्ञाननिरूपणार्थम्, स्वस्य जात एव साक्षात्कारो ज्ञानमिति निरूपयति—ज्ञातोऽसीति । हे भगवन् ! अद्यैव मे मया त्वं ज्ञातः, परं सुचिरात् । महताऽपि कालेन ज्ञात एवं जन्मसाफल्यम्, नाऽन्यथेत्यज्ञानं निन्दति—नन्विति । अत्रोभयत्र भगवानेव संमतिहेतुः । नन्विति कोमलसंबोधनम् । देहभाजां भगवतो गतिर्न ज्ञायत इवि महदवद्यं महान् दोषः, 'नैतमृषिं विदित्वा नगरं प्रविशेत्' इति श्रुतिनिषेधात् । भगवांस्तु केनचित् प्रकारेण ज्ञायत एव, गतिः परं न ज्ञायते; स केन प्रकारेण, कदा, कुत्र, कथम्, केन गच्छतीति । एतस्यां ज्ञातायां ज्ञातव्यं नाऽवशिष्यते । ननु गतिमात्रज्ञाने कथं कृतार्थता ? विवक्षित-स्वरूपाज्ञानादित्याशङ्क्याऽऽह—नाऽन्यत्त्वदस्तीति । त्वत्तोऽन्यन्नास्त्येव, यज्ज्ञातव्यं स्यात्; त्वमेव परं तथा भवसि, अतस्तव गतिर्ज्ञातव्या । भगवन्निति संबोधनम् । तव षड्धर्मेषु त्वमिव सर्वं प्रतिष्ठितमिति ज्ञापितम् । ननु मध्ये मायया बुद्धिभ्रामिकयाऽन्यत्क्रियत इति निरूपितम्, तत्कथमुच्यते[2] नाऽन्यदिति । तत्राऽऽह—अपि तन्न शुद्धमिति । मुख्यज्ञाने ब्रह्मवादे तन्नाऽस्त्येव, तथापि दैवब्रह्मवादे तद्भवेत् । तत्र भगवच्छक्तेर्माहात्म्यनिरूपणार्थं 'न तं विदाथ' इत्यादिमन्त्रेषु सूचितम्, तन्न मुख्यब्रह्मवादो भवति । न च 'इन्द्रो मायाभिः पुरुरूप ईयते' इति, माध्यन्दिने सवने माहेन्द्रग्रहे महेन्द्रस्तोत्रपरत्वात् इन्द्रस्यैव मायास्ताः शक्तयः, अन्यथा बहुवचनं नोपपद्येत । उपनिषत्सु च तत्कीर्तनं सर्वसामर्थ्यं भगवत एवेति ज्ञापनार्थम् । इन्द्रेणाऽपि यत् क्रियते तद्भगवत्कृतमेवेति । देवताब्रह्मवादसंग्रहार्थमित्येके । तस्माद्वेदे नाऽस्त्येव मायया सृष्टिः । स्वप्नातिरिक्त इति केचित् । तथापि भागवतसिद्धान्तेऽपि यद्यन्तरा माया कल्पयति, तन्न शुद्धम्, भ्रमस्य दोषस्य जनकत्वात् । नन्वेकस्य कथमनेकता ? न हि कारणे एकत्वविरोधादनेकसङ्ख्या संभवति । तत्राऽऽह—मायागुण-व्यतिकरादिति । मायागुणानां सत्त्वरजस्तमोगुणानां व्यतिकरादन्योन्यसंबन्धात् ते परिच्छिन्नाः सन्तो, गृहा इव आतपे, नानात्वं संपादयन्ति, तदा त्वमुरुर्विभासि । अतस्त्वयि ज्ञाते न किञ्चिज्ज्ञातव्यम् ॥ १ ॥ ॐ ॐ ननु ब्रह्मणि ज्ञाते न किञ्चिज्ज्ञात-व्यमिति युक्तम्, न तु ज्ञात इत्याशङ्क्य त्वमेव ब्रह्मेति प्रमाणतर्काभ्यामुपपादयति श्लोकत्रयेण । तत्र प्रमाणं द्वयेन, प्रकृतसमर्थ-नार्थमतिरिक्तनिराकरणार्थं च; तत्र प्रकृतं समर्थ्यते—रूपं यदेतदिति । यदेतत्त्वया रूपं गृहीतम्, तद्ब्रह्मैव, यतोऽवबोधरसोदयेन तज्जातम् । केवलानुभवेन, तत्रापि परमरूपेण निर्विषयेण, तत्रापि तस्योदयेन । सच्चिदानन्दरूपताऽप्युक्ता भवति । नन्वज्ञानमपि स्थास्यति देहग्रहणहेतुभूतम् । तत्राऽऽह—शश्वन्निवृत्ततमस इति । शश्वत्सर्वदा निवृत्तं तमो यस्य तस्य तवैतद्रूपम् । 'अवबोधरसोदयेन' 'निवृतमसः' इति ज्ञानाज्ञानाभावयोः कार्यकारणभावमाहुः, तन्निवृत्त्यर्थं शश्वदित्युक्तम् । (न हि) नित्यानिवृत्तानर्थस्य

---

१. उच्येत ख. ग. घ. ङ. च. । २. भवति क. ग. ।

हेतुरपेक्ष्यते। साधननित्यत्वेनैवं तथात्वमिति चेन्न, कादाचित्कत्वेनैव साध्यसाधनभावस्य व्याप्तत्वात्। नन्वेवं ग्रहणे किं निमित्तं तत्राऽऽह—सदनुग्रहायेति। अनेनाऽपि ब्रह्मातिरिक्तता निषिद्धा, न हि सतामब्रह्मणा किञ्चित्कार्यं सिद्ध्यति। किञ्च, आदौ गृहीतमेतद्रूपम्। आदौ शुद्धं ब्रह्मैवाऽस्ति, न ततोऽतिरिक्तं कारणं किञ्चित्, ब्रह्मैव तथा प्रादुर्भूतमित्यर्थः। किञ्च, अवतारशतैक-बीजमिति। अवताराणां शतस्यैतदेवैकं बीजम्, अस्यैवांशा अन्येऽवतारा इति। अवताराश्च ब्रह्मरूपा इत्यग्रे वक्ष्यते, उक्ताश्च। अस्य कारणं ब्रह्म, कार्यं च मध्ये इदमेव कथं न ब्रह्म भवेत्? किञ्च, 'जगत्कारणं ब्रह्म' इतिब्रह्मलक्षणम्, तदत्रैव दृश्यत इत्याह—यन्नाभि-पद्मभवनादहमाविरासमिति। भवनशब्देन पद्मस्य विशालता निरूपिता। अहमिति सगुणकर्ता। आविरासमिति ममाप्यलौकिकं जन्म। अतः सर्वप्रकारेणेदं ब्रह्मैव॥ २॥ ❀ ❀ ब्रह्मान्तरपक्षं निराकरोति—नाऽतः परमिति। अतः परमस्माद्रूपात् परं भिन्नमेतद्रूपनि-यामकं वा भवतः स्वरूपं न। 'आनन्दशरीरं ब्रह्म' इति श्रुतेर्ब्रह्मण आनन्दरूपम्, तदेवैतत्; नत्वितोऽन्यदानन्दमात्रादिगुणकं रूपमस्ति। आनन्दस्तत्रोपादानमन्यच्च सहकारि भविष्यतीत्याशङ्क्य निवारयति। तर्हि तदेव विकृतं भविष्यति? तत्राऽऽह—अ[1]विकल्पम्। तर्हि तिरोहिततेजो भविष्यति। तत्राऽऽह—अविद्धवर्च इति। न विद्धं वर्चः केनापि यस्य। अतिरिक्ताभावे प्रमाणमाह—पश्यामीति। ब्रह्मणोऽनुभवः प्रमाणम्। अस्य ब्रह्मत्वे तु सर्व एव ब्रह्मधर्माः सन्ति। तानाह—विश्वसृजमेकमविश्वमिति। विश्वकर्तृ ब्रह्म, 'यतो वा इमानि' इति श्रुतेः। एकं ब्रह्म, 'एकमेवाद्वितीयम्' इति श्रुतेः। अविश्वं ब्रह्म, विश्वस्माद् व्यतिरिक्तम्, 'योऽस्मात्परस्माच्च परः' इति श्रुतेः। एवं ब्रह्मधर्माणां बहूनां विद्यमानत्वाद् ब्रह्मैवेदम्। आत्मन्निति संबोधनम्। ब्रह्मादिभिरात्मत्वेनोपास्य इति केचित्। 'अयमात्मा ब्रह्म विज्ञानमयः' इति श्रुतेरनात्मत्वे ब्रह्मत्वं न स्यादिति। नन्वत्र चक्षुःश्रोत्रादीनां प्रतीयमानत्वादिन्द्रियवत्त्वेन कथं ब्रह्मत्वमत आह—भूतेन्द्रियात्मकमिति। भूतानामिन्द्रियाणामात्माऽयम्, 'चक्षुषश्चक्षुः श्रोत्रस्य श्रोत्रम्' इत्यादिश्रुतेः। भूतेन्द्रि-याणामात्मत्वाद् भूतेन्द्रियत्वेन ज्ञायते, न तु तत्र भूतेन्द्रियाणि सन्तीत्यर्थः। नन्वप्रत्यक्षं ब्रह्म? तत्राऽऽह—अद इति। इदं प्रतीयमानमपि त्वदिच्छया प्रतीतत्वात् अद एव, परोक्षमेवेत्यर्थः। ते अद उपाश्रितोऽस्मीति संबन्धः। पश्यामीति भिन्नं वाक्यम्, अतो भवतस्त इति न पौनरुक्त्यम्॥३॥ ❀ ❀ तर्कमाह। तद्वा इदमिति। हे भुवनमङ्गल! त्रैलोक्यस्यैव मङ्गलरूप, तदेवेदम्। वै निश्चयेन। तत्र हेतुः—नो ध्याने मङ्गलाय दर्शितम्। किमतः? त उपासकानामिति। वयं ब्रह्मसाक्षात्कारार्थे ध्यानं कृतवन्तः, यतस्ते उपासकाः। न हि परब्रह्मोपासकाः परब्रह्मव्यतिरेकेणाऽन्यद्ध्यायन्ति, न वा तादृशानां कल्पनार्थं भगवानन्यत्प्रदर्शयति, न हि तादृशानामन्येन पुरुषार्थो भवति, तस्मात्कारणात् युक्त्याऽपीदं ब्रह्मैव। एवं तस्य ब्रह्मत्वं विनिश्चित्य तन्नमस्करोति—तस्मै नम इति। तद्रूपं भगवानेवेति भगवत इत्युक्तम्। नमनमात्रमुदासीनेनाऽपि क्रियत इति स्वस्य मुख्यसेवकत्वख्यापनाय तुभ्यमनुविधेमेत्याह। त्वत्प्राप्त्यर्थमनुविधानं कुर्म इत्यर्थः। नमोऽनुविधेमेति पक्षे छान्दसत्वादुपपदविभक्तिरेव बलीयसी, नमस्कुर्मो नृसिंहायेतिवत्। नन्वेवं सति वादिनः कथमत्र सन्देहं कुर्वन्ति, कथं वा न भजन्ते? इत्यत आह—योऽनादृत इति। येषां नरकपातोऽवश्यम्भावी दैत्यानाम्, तैरयं नाऽऽदृतः। नन्वनादरणमात्रेण कथं नरकपातः? निषिद्धाचरणाभावादित्यत आह—असत्प्रसङ्गैरिति। असद्भिः सह प्रकृष्टाः सङ्गास्तैः। न हि स्वभावत एव कश्चिद्भगवन्तं न मन्यते, आत्मत्वादानन्दमूर्तित्वाच्च, किन्तु असतां सङ्गेन बुद्धिरन्यथा जाता, अतस्तत्संसर्गिदोषात् सोऽपि पञ्चमो महापातकी। स चेद्भगवन्तं मन्येत, पूर्वपुण्यवशात्, अन्यथा वा, तदा नरको न भवेत्। अतो नरकस्याऽवश्यम्भावात् तादृशैर्भगवान्नाऽऽदृतः॥ ४॥ ❀ ❀ एवं प्रमाणतर्काभ्यामिदमेव ब्रह्मस्वरूपमित्यवधृत्य, एतत्साक्षात्कार एव ब्रह्मसाक्षात्कार इति, 'भक्त्या मामभिजानाति' इति वाक्यात्, तत्साक्षात्कारार्थं भक्तिमाह। साधनमुखतयाऽपि ब्रह्मत्वं साधयति—ये त्विति। तुशब्देन चरणोपासनारहितान् पुरुषार्थविमुखान् व्यावर्तयति। ये त्वदीयचरणाम्बुजकोशगन्धं कर्णविवरैर्जिघ्रन्ति तेषां हृदयात् त्वं नाऽपैषीति संबन्धः। तत्र हेतुः—भक्त्या गृहीतचरण इति। त्वदीयानां चरणेषु भगवत इव रेणवो न सन्ति[2], किन्तु स्वभक्तरक्षकत्वात् कोशत्वम्, तद्धर्मो गन्धश्च वर्तते। त्वदीयमेव वा चरणाम्बुजम्। भगवदीयत्वसम्पादक-शरीरहेतुभूतानि संस्कृतानि भूतानि चेत्ते प्राप्नुयुस्तदाऽस्मिन् जन्मनि त्वदीया एव भवेयुः। अथेदानीं तादृशशरीराभावेऽपि शरीरान्तरेऽपि श्रुत्यादिपर्यालोचनया माहात्म्ये ज्ञाते भक्तिर्भवति। तत्रेन्द्रियाणां भगवदीयविषयग्रहणार्थमन्यथात्वं जायते। गन्धो हि चित्तक्षोभकः, अन्तः प्रवेशसमर्थत्वात्; शब्दस्तु न तथा। ततः श्रवणेऽपि गन्धानुभवत्वमुच्यते, अन्तः प्रविश्य क्षोभार्थम्। भगवदीयानां पदार्थानां सर्वधर्मवत्त्वम्, श्रुतीनां च गन्धवाहकत्वम्, ईषत्स्पर्शात्। अत्र यशोवाची गन्धशब्दः, पुण्यस्य कर्मणो गन्ध इव। भगवन्माहात्म्यश्रोतॄणां श्रवणं देवतारूपमिति गन्धोऽप्यस्ति। एवं माहात्म्यप्रतिपादनार्थमेवं कथा। कर्णविवरैरिति तूष्णीम्भूतानां गुणानां प्रवेशः। घ्राणेनैव भक्तिः प्रेमलक्षणा, चकारात्साधनरूपा च। तदा ते स्वपुमांसो भवन्ति। तदा हृदयाद्भगवान्नापगच्छति, तदा नियतः साक्षात्कारः प्रवेशश्च भवतीत्यर्थः। इदं ब्रह्मण एव कार्यं नाऽन्यस्येति कार्यद्वारापि ब्रह्मत्वं समर्थितम्॥ ५॥ ❀ ❀ धर्मान्तरेणापि समर्थयते—तावद्भयमिति। 'अभयं वै जनक! प्राप्तोऽसि' इति श्रुतेर्ब्रह्म-प्राप्त्यनन्तरमेवाऽभयमिति, भगवदीयत्वेनाऽभयत्वं निरूपयन्, ब्रह्मत्वं निरूपयति। यावत्ते अभयमङ्घ्रिं लोको न वृणीत, तावद्भयमिति संबन्धः। न विद्यते भयं यस्मादिति। उभयथाऽपि तस्मान्न भयमात्मत्वात्, 'द्वितीयाद्वै भयं भवति' इति श्रुतेः। अन्यदपि भयं

१. अविकृतम् क. ख. ग. घ. ङ.। २. इतीत्यधिकम्, क. घ. च।

निवर्तते, समर्थत्वात्। तत्सामर्थ्यमलौकिकमिति भयविशेषान्निर्दिशति—द्रविणनिमित्तं मुख्यं भयम्, सर्वस्यैव तदाकांक्षितत्वात्; ततो देहनिमित्तम्, 'देहो गमिष्यति' इति; ततः पुत्रादिनिमित्तम्। भार्यापुत्रौ देहत्वेन वा गृहीत्वा पश्चादन्ये सुहृदो गृहीताः। विद्यमाने भयम्, गते शोकः। देहैकदेशो वा देहत्वेन ग्राह्यः, अन्यथा शोको न स्यात्। पुत्रादिर्वा। गेह इति पाठे स्पष्टमेव। पुनः प्राप्तव्यमिति स्पृहा; ततो जनानुधावने तैरेव परिभवः; अथ दैवगत्या कथञ्चित् प्राप्तौ विपुलो लोभः। तावदिति सर्वत्र संबन्धः। किञ्च, अहं ममेति देहादावसदवग्रहो मिथ्याग्रहस्तावदेव। इदमप्येकं ब्रह्मत्वसाधकम्, ब्रह्मात्मभाव एव तन्निवृत्तेः। असदवग्रहस्य लौकिकप्रतीत्या सुखहेतुत्वमाशङ्क्य तस्य दुःखहेतुत्वमाह—आर्तिमूलमिति। मूलमिति नियतलिङ्गम्। 'तद्विष्णोः परमं पदम्' इति श्रुतेर्भगवत्पदमेव ब्रह्म, अतो न ब्रह्मज्ञानेन व्यभिचारः। वृणीतेति, यथा कन्या वरं वृणीते, स्वेष्टपूरकत्वेऽपि स्वयमेव तदीया भवति, न तु स स्वकीयः। लोक इति विशिष्टाधिकारी॥ ६॥ ❀ ❀ नन्वेवं सति सर्वे कथं न भजन्त इत्याशङ्क्य, पूर्वं रूपविशेषेण असत्प्रसङ्गैरिति परिहृत्याऽपि, पुनः सामान्यतः परिहरति—दैवेनेति। ते दैवेन प्राचीनकर्मणैव हता धीर्येषाम्; भवतः प्रसङ्गाद्ये विमुखेन्द्रियाः। विषयस्य सर्वोत्तमत्वेऽपि, प्रमातुः सर्वेष्टदातृत्वेऽपि ये न भजन्ते, तत्रेन्द्रियबुद्ध्योरेव ग्राहकप्रेरकयोर्दोषोऽवसीयते अग्रहणे। तत्र प्रेरिका बुद्धिर्दैवेन हता। दैवं तस्या एव बुद्धेराधिदैविकं भगवदिच्छारूपमिति केचित्। प्रवाहनियामकस्य कर्मण एव तथात्वमिति ब्रह्मवादे। अधिकृतः कालः स्वाधिकारे पतितं तं जीवं भगवत्प्रसङ्गेनाऽन्यथा मा भवत्विति तद्बुद्धिं नाशयति। काल एवेत्यपरे। पक्षत्रयेऽपि तेषां स्वतो दोषाभावः। पूर्वं तु तेषां दोष उक्तः। इमं हेतुत्वेन निर्दिश्याऽग्रे स्वदयामुपपाद्य, तेषु भगवत्कृपां प्रार्थयिष्यत्यर्थात्। प्रसङ्गो वार्ता। प्रासङ्गिकीं कथां सर्वेऽपि बह्वीं शृण्वन्ति। ततोऽपि विमुखाः। अन्यकथायां भगवत्कथाप्रसङ्गाच्चेत्समायाति, ततो गच्छन्ति; निद्राणा वा, अन्यचित्ता वा भवन्तीत्यर्थः। तेषां बुद्धेर्दैवहतत्वोपपादनार्थं भगवत्प्रसङ्गस्य गुणानाह—सर्वाशुभोपशमनादिति। ते खलु अन्यप्रसङ्गाद्बह्वेव पापं कृतवन्तः, प्रसङ्गात्तत्सर्वं गच्छेत्; प्रारब्धकर्मणोऽप्यशुभं जायमानमुपशाम्यति, अविद्या चाऽऽत्मनि विद्यमाना महाग्रावार्द्रकाष्ठमिव आत्मन्येव शान्ता भवति। इन्द्रियपदात्तेषां निर्दुष्टत्व इन्द्रियाणामपि संमुखीभावो न स्वाभाविकः। तस्मादेते प्रवाहपतिताः कामलोभव्याप्ता इत्याह—कुर्वन्तीति। कामितस्य सुखस्य लेशस्य लवार्थं दीनाः सन्तोऽकुशलानि कुर्वन्ति। पञ्चेन्द्रियाणामुपभोग्यं कामसुखं पूर्णम्, तस्य लेश एकेन्द्रियसुखम्, तस्य लवोऽल्पल्पो भागः[1] क्षणमात्रभोग्यः। यथा कामिनीप्रसादार्थं भूयानेवाऽनर्थः क्रियते। ननु सुखार्थं तथाकरणं युक्तमित्याशङ्क्याऽऽह—दीना इति। दैन्यं भोक्तृविशेषणम्। अतो दैन्ये विद्यमाने भोगे स्वातन्त्र्याभावात्, तस्मिन्नपि क्षणे दुःखं सिद्धमिति न भोगः सिद्ध्यति। ननु तथाप्यभिमानिको भोगः सिद्ध्येत्। तत्राऽऽह—लोभाभिभूतमनस इति। लोभेन मनसोऽभिभवात् वृथैव द्रव्यं व्ययितमिति पश्चात्तापान्नाऽभिमानिकत्वसिद्धिः। अकुशलपदेन, न विद्यते कुशलं यस्मादिति योगेन, विद्यमानमपि कुशलं गच्छतीति सूचितम्॥ ७॥

## श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

अथ नवमाध्यायं विवरिषवः पूर्वप्रकरणसमाप्तिम्, द्वितीयस्याऽऽरम्भम्, तयोः पूर्वापरभावबीजम्, सङ्गतिं च स्फुटीकुर्वन्तोऽध्यायार्थमाहुः—जीवसर्ग इत्यादि। जीवसर्गे। जीवार्थे सर्गे इदानीं भूतसृष्टौ वक्तव्यायां पञ्चविंशतितत्त्वानां भगवत्स्वरूपस्य च बोधकं यद् ब्रह्मज्ञानम्, तत् भूतजन्यत्वेनोच्यते। तथा च, समष्टिज्ञानाभावे व्यष्टिज्ञानं दुर्घटम्, अतः पूर्वमुपजीव्यत्वात् पुरुषप्रकरणम्, तत उपजीवकत्वाज्जीवप्रकरणमुपजीव्योपजीवकभावश्च सङ्गतिरित्यर्थः। अत्र गमकमाहुः—अत इत्यादि। एवं शास्त्रसङ्गतिमुक्त्वा विदुरमैत्रेयसंवादसङ्गतिमाहुः—ज्ञानमार्गेति सार्द्धेन। विषयः, ज्ञानस्य सप्तभिः; साधनं तस्य षड्भिः; रूपं भगवदीयमष्टाभिः; बाधाभावश्चतुर्भिः; प्रकीर्णकं तदुपयोगि, तदपि तेष्वेव चतुर्षु; एवं शेषशेषिभावः सङ्गतिरित्यर्थः। ज्ञातोऽसीत्यत्र। स्वस्येति। चतुर्मुखस्य। जगत्कारणत्वादिति। उपादानगोचरापरोक्षज्ञानत्वेन रूपेण तथात्वात्। गत्यज्ञानस्य महादोषत्वे श्रुतिं प्रमाणयन्ति—नैतमित्यादि। इयं श्रुतिर्हि तैत्तिरीयाणामारण्यके 'चयने पवित्रमन्तः परिवाजमासत' इत्यनुवाकेऽस्ति। तत्र च 'अन्धो मणिमविन्दत्' इत्यादिषु महता प्रपञ्चेन भगवतो गतिमेव प्रतिपाद्य, ततोऽनेन नगरप्रवेशो निषिध्यते। श्रुत्यर्थस्तु—एतमृषिं पूर्वोक्तविवेकप्रतिपादकमन्त्रसङ्घप्रतिपाद्यं परमार्थतत्त्वं विदित्वाऽवगत्य नगरं शरीरं न प्रविशेत्, देहात्मभ्रमं न कुर्यादिति। इदं च ब्राह्मणभूतं वाक्यमिति सायणीय उक्तम्। तथा च गतिवेदनेन कैवल्यस्य सम्भवात् तदज्ञानेनैव तदभाव इति स एव महान् दोष इत्यर्थः। गतिशब्दोऽत्र क्रियाप्रकारवाची। ज्ञापितमिति। अनेन ससम्बोधनेन ज्ञापितम्। तदिति। मायया अन्यकरणम्, विषयतारूपजगत्करणमिति यावत् देवब्रह्मवाद इति। 'देवात्मशक्तिं स्वगुणैर्निगूढाम्' इत्यादिश्वेताश्वतरमन्त्रोक्ते नृसिंहोत्तरतापनीयाद्युक्ते च वादे। सूचितमिति। अन्यकरणं सूचितम्। श्रुत्यन्तरस्य तन्निरूपकत्वमाशङ्क्य तस्याऽर्थमाहुः—न चेत्यादि। उपनिषत्स्विति। बृहदारण्यके मधुब्राह्मणेऽन्यत्र। निबन्धे शास्त्रार्थप्रकरणीयावरणभङ्गे

---

१. भोगः क. ग. ङ।

एतन्मन्त्रार्थो मधुब्राह्मणार्थविचारपूर्वकं सम्यगुपपादित इति नाऽत्रोच्यते। एक इति। उपनिषद्व्याख्यातारः, एवं केचिदित्यनेनाऽपि त एव बोध्याः। नास्तीति। तात्पर्यगोचरः नास्ति। तदिति। तन्मतम्। अत इति। तवैव सर्वरूपत्वात्॥ १॥ ❀ ❀ रूपमित्यत्र। प्रमाणमिति। अनुमानरूपं प्रत्यक्षरूपं च। सच्चिदानन्दरूपतेति। अस्मिन् पक्षे उदयपदेन सद्रूपता बोध्या। श्रीधरमत आहुः—अवबोधेत्यादि। आहुरिति। केचिदाहुः। तस्य व्याख्येयविरुद्धत्वं बोधयन्ति—तदित्यादि। तथा च, शश्वत्पदविरुद्धं तद्व्याख्यानमित्यर्थः। 'नहि' इति पाठाभावे अपेक्ष्यत इत्यत्र काकुर्बोध्या। कादाचित्केत्यादि। 'यत्साध्यं तत् कादाचित्कम्, घटादि; यन्नैवं तन्नैवम्, यथा तत्तन्मतप्रतिपन्नं नित्यवस्तु' इति व्याप्तिर्बोध्या। अनेनेति। सदनुग्रहजनकत्वेन। एवं चाऽस्मिन् श्लोके ब्रह्मत्वसाधकाः षड् हेतवो बोध्याः। प्रयोगस्तु—'एतत् ब्रह्मणा दृष्टं रूपं ब्रह्मैव, अभिव्यक्तसच्चिदानन्दरूपत्वात्, नित्यनिवृत्ताज्ञानकत्वात्, सदनुग्रहजनकत्वात्, आदावाविर्भूतत्वात्, अविकृतकार्यकरणत्वात्, जगज्जनकत्वात्, यन्नैवं तन्नैवम्' इति। एवमत्राऽनुमानरूपं प्रमाणं बोधितम्॥

नाऽत इत्यत्र। ननु नञैवेतरनिषेधसम्भवात् मात्रपदस्य किं प्रयोजनमित्याकाङ्क्षायामाहुः—आनन्दस्तत्रेत्यादि। निवारयतीति। मात्रपदेन निवारयति। विद्धमिति। आवृतम्। आत्मपदव्याख्याने मतान्तरमुक्त्वा श्रुत्या आत्मशब्दार्थं वदन्तस्तद्दूषयन्ति—अयमित्यादि। तथा च, मतान्तरीयव्याख्याने पूर्वश्लोकसाधितं तस्य रूपस्य ब्रह्मत्वं विरुद्ध्येतेत्यर्थः। अस्मिन् पक्षे यद्यपि प्रत्यक्षमेव प्रमाणत्वेनोक्तम्, शब्दविरोधेनाऽत्राऽनुमानमपि सिध्यति। तेन आनन्दमात्रत्वात्, अविकृतत्वात्, अ[1]नावृततेजस्त्वात्, भूतेन्द्रियरहितत्वात्, 'अविज्ञातं विजानाति'-श्रुत्युक्तधर्मकत्वादिति पञ्चहेतवो व्यतिरेकव्याप्तिश्च बोध्या॥ २॥ ❀ ❀ तद्वेत्यत्र। अनुविधानं कुर्म इति। अनु त्वां लक्षीकृत्य नमो विदध्म इत्यर्थः। अत्र हि नहीत्यादिना तर्कत्रयं व्याख्यातम्। तेषामेवं प्रयोगः—'इदं रूपं यदि परं ब्रह्म न स्यात्, तदुपासका अन्यदेव ध्यायेरन्; यद्यन्यद्ध्यायेरन्, अन्यदेव ध्यानगोचरः स्यात्; यतो नैवमतो नैवम्' इत्येकः। 'यदि परं ब्रह्म न स्यात्, अन्यदेव प्रदर्शयेत्; यदि कल्पनार्थमन्यत् प्रदर्शयेत् 'यमेव' इति श्रुतिः 'विवृणुते तनुं स्वाम्' इति न वेदयेत्; यतो नैवमतो नैवम्, इत्यपरः। 'यदि परं ब्रह्म न स्यात्' तादृशोपासकानां पुरुषार्थरूपं न स्यात्; यदि तथा न स्यात्, नोपासीरन्; यतो नैवमतो नैवम्, इति तृतीयो बोध्यः॥ ४॥ ❀ ❀ ये त्वित्यत्र। भक्तिमाहेति। मुख्यभक्तिव्यतिरिक्तानां तामाहेत्यर्थः। अत्र चरणाब्जपरागादिकमनुक्त्वा यदेवमुक्तं तत्तात्पर्यमाहुः—त्वदीयानामित्यादि। न सन्तीति। सन्तोऽपि भगवदीयत्वसम्पादकशरीरभूता न सन्ति। भगवच्चरणस्यैवाऽत्र विवक्षितत्वपक्षे परागाद्यनुक्तिबीजमाहुः—भगवदीयत्वेत्यादि। तथा चाऽधिकाराभावादप्राप्तिरेव तदनुक्तिबीजमित्यर्थः। तादृशां भक्तिप्राप्तौ हेतुं व्युत्पादयन्ति—अथेत्यादि। तत्रेति। भक्तौ। अन्यथात्वमिति। पूर्वविलक्षणसामर्थ्यवत्त्वम्। तद्विशदीकर्तुं जिघ्रन्तीतिपदतात्पर्यमाहुः—गन्धो हीत्यादि। तत इति। अत्राऽन्तःक्षोभकत्वात्। ननु शब्दस्य तादृक्कार्यजनकत्वं न क्वापि दृष्टमिति तद्ग्रहणे कथं तथात्वमित्यत आहुः—अन्तरित्यादि। पदार्थानामिति। श्रवणादीनाम्। अत्र फक्किकाद्वयेऽपि उच्यत इति क्रियान्वयो बोध्य ईषत्स्पर्शादिति। यत्किञ्चिन्माहात्म्यबोधकत्वात्। अत्र गन्धपदार्थः को वेत्यपेक्षायामाहुः—अत्रेत्यादि। तथा च, श्रुतौ तथाऽङ्गीकारादत्र परोक्षतया तथा कथनं न दोषायेत्यर्थः। किमत्र पारोक्ष्यमित्यपेक्षायामाहुः—भगवदित्यादि। 'सर्वं सर्वमयम्' इति श्रुतेस्तथेति प्राकट्यमात्रं विशेष इति वस्तु, न लक्षणाऽपीत्यर्थः। अनया भङ्ग्या कथनस्य तात्पर्यमाहुः—एवमित्यादि। घ्राणेनेति। जिघ्रन्तीतिपदोक्तेन। प्रकृत एतन्निरूपणप्रयोजनमाहुः—इदमित्यादि। इदमिति। भक्त्या ग्राह्यत्वम्॥ ५॥ ❀ ❀ तावदित्यत्र। इदमपीति। सर्वक्लेशनाशनमपि। नन्वेवं सर्वक्लेशक्षयो ब्रह्मज्ञानादपि जायत इति व्यतिरेकव्यभिचारात् यावत्तावत्पदबोधितो हेतुहेतुमद्भावः कथं संगच्छत इत्यत आहुः—तदित्यादि। 'सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्' इति काठकश्रुतौ यदुक्तम्, तदेवाऽक्षरं ब्रह्माऽत्राऽङ्घ्रिपदेन भगवच्चरणत्वेनोच्यत इति न व्यभिचारो नामभेदादित्यर्थः। विशिष्टाधिकारीति। एवं ज्ञात्वा शरणमुपगतः, न तु यथाकथञ्चिदित्यर्थः॥ ६॥ ❀ ❀ दैवेनेत्यत्र। रूपविशेषेणेति। असत्संसर्गित्वेन। प्रमातुरिति। प्रमात्रे, सम्बन्धमात्रविवक्षया षष्ठी भगवत्कथा प्रसङ्गादित्यत्र भगवत्कथेति भिन्नं पदम्। प्रसङ्गादिति। कथादिप्रसङ्गादिति। न स्वाभाविक इति। किन्तु 'पराञ्चि खानि' इति श्रुतेः कृतकः॥ ७॥

### श्रीगिरिधरकृता बालप्रबोधिनी।

तस्य सा परितुष्टस्य हरेर्ब्रह्मकृता स्तुतिः। प्रार्थना वरदानं च नवमे विनिरूप्यते॥ १॥

ब्रह्मकृतां स्तुतिमेव दर्शयति एकविंशतिभिः, तत्र दृष्टभगवत्स्वरूपस्यात्मनः कृतार्थतां आविष्कुर्वन् तद्विज्ञानविधुरान्निन्दति—ज्ञात इति। सुचिरात् बहुकालोपार्जिततपसः मे मया अद्य इदानीं त्वं ज्ञातोसि दृष्टोसि। नन्विति निश्चये। भगवत ऐश्वर्यादिषड्गुणपूर्वस्य तव गतिस्तत्त्वं न ज्ञायते इति देहभाजां प्राणिनामवद्यं महान् दोष एवेत्यर्थः। त्वमेव हि ज्ञातुं योग्य इति

---

१. अनावृते तेजस्त्वात्. पा.।

सूचयन् सम्बोधयति—भगवन्निति । तत्र हेतुमाह—नेति । यतः त्वत् त्वत्तोऽन्यत् किमपि वस्तु नास्तीत्यन्वयः । "सर्वं खल्विदं ब्रह्म" इति श्रुतेः सर्वोपादानत्वादिति भावः । नन्वस्य प्रतीयमानत्वात् कथमेतन्नास्तीत्याशङ्कयाह—अपीति । यदपि प्रतीयते तत् यद्यपि त्वदुपादानकत्वात्त्वत्तो भिन्नं न भवति तथापि न शुद्धं ज्ञानोपासनायोग्यं न भवतीत्यर्थः । तत्र हेतुमाह—मायेति, यत् यस्मात् मायायाः प्रकृतेर्गुणानां सत्त्वरजस्तमसां व्यतिकरात् परस्परं मिलितत्वादेव मनुष्यादिरूपेण परिणामात्तत्र प्रविष्टस्त्वमेवो-रुर्बहुरूपो विभासि प्रकाशसे । न चैवं स्तुतिसमये सृष्टेरभावात् कथमेवमुक्तिः सङ्गच्छते इति शङ्कनीयं, भगवत्कृपया भूतभविष्य-ज्ज्ञानस्य जातत्वेन सिद्धवत्कृत्वैवन्निर्देशसम्भवात् ॥ १ ॥ ❀ ❀ इदानीं केचिद्भगवद्विग्रहस्यापि प्राकृतत्वं मन्यन्ते तन्मतं निराकुर्वंस्तस्य सच्चिदानन्दात्मकत्वमाह—रूपमिति द्वाभ्याम् । यदेतन्मया दृश्यमानं भवतः स्वरूपं यच्च श्रुत्या प्रतिपादितमानन्द-मात्रं भवतः स्वरूपं तदेकमेव, भिन्नं न भवति, अतस्ते तव अद इदं रूपं उपाश्रितोऽस्मि स्वाश्रयतया गृहीतवानस्मीति द्वयोरन्वयः । अभिन्नत्वे स्वानुभवं प्रमाणयति—नेति । अतो दृश्यमानस्वरूपानन्दात्मकं स्वरूपं परं भिन्नमुत्कृष्टं वा न पश्यामीत्यन्वयः । अप्राकृतत्वे हेतुमाह—अवबोधेति । अवबोधरसोदयेन चिच्छक्त्याविर्भावेन शश्वत् सर्वदा निवृत्तं तमः अविद्या यस्मात्तस्य तव रूपम् । एतद्रूपग्रहणप्रयोजनमाह—सदिति । सतां स्वोपासकानामनुग्रहाय उपासनाद्वारा तत्फलदानाय त्वया स्वातन्त्र्येणादौ प्रथमतो गृहीतमित्यन्वयः । ननु मूर्त्यन्तरोपासनाऽपि दृश्यते एव, तत्कथमनेनैव रूपेणानुग्रह इत्याशङ्कयाह—अवतारशतैकबीज-मिति । अन्येऽपि सर्वेऽस्यैवावतारा अतो न विरोधः । अवतारबीजत्वमपि प्रत्यक्षमेवेत्याह—यदिति । यस्य तव नाभिपद्मरूप-भवनादहं आविरासं प्रकटो जात इत्यर्थः । भेदादर्शने हेतुं सूचयन् विशिनष्टि—अविकल्पमिति, जातिव्यक्त्यादिविकल्पशून्य-मित्यर्थः । अविद्धवर्च इति, अविद्धमनावृतं वर्चः चैतन्यं यस्य तदित्यर्थः । अविश्वमिति, विश्वविलक्षणमित्यर्थः । विश्वसृजमिति, विश्वस्य निमित्तकारणमित्यर्थः । तद्युपादानमन्यत्स्यादित्याशङ्कयोपादानत्वमप्याह—भूतेति, भूतानामिन्द्रियाणां चात्मानमित्यर्थः । सर्वकारणत्वमेकस्यैव कथं सम्भवतीत्यपेक्षायां तत्र हेतुं सूचयन् सम्बोधयति—परमेति, परा अचिन्त्यप्रभावा मा माया इच्छापर-पर्याया शक्तिरूपा यस्य तथाभूता । तत्रापि हेतुं सूचयन् पुनः सम्बोधयति—आत्मन्निति । हे परमात्मन्नित्यर्थः ॥ २ ॥ ३ ॥ ❀ ❀ नहि सर्वथा समर्थस्य परमकृपालोस्तव अस्माकमुपासकानां स्वैकशरणानां प्राकृतस्वरूपप्रदर्शनेन प्रतारणमुचितं, इतोपि सच्चिदानन्दात्मकमेवेदमपि स्वरूपमिति वदन्नमस्करोति—तद्वा इति । हे भुवनमङ्गल विश्वस्य मङ्गलरूप यतस्ते त्वया उपासकानां नोऽस्माकं मङ्गलाय अभ्युदयाय तद्वै तद्वेदान्तप्रसिद्धं सच्चिदानन्दात्मकमेवेदं रूपं ध्याने दर्शितं, स्म इति हेतोस्तव प्रत्युपकारे असमर्थास्तस्मै परमकृपालवे तुभ्यं नमोऽनुविधेम निरन्तरं नमस्कुर्महीत्यन्वयः । कथं प्रत्युपकारेऽसामर्थ्यमित्याकाङ्क्षायामैश्वर्यादि-परिपूर्णत्वेन निरपेक्षत्वादित्याशयेन विशिनष्टि—भगवते इति । एवं चेत्तर्हि केचित्कुतो न भजन्तीत्यपेक्षायामाह—य इति, येषां नरकपातोऽवश्यम्भावी तैर्नरकभाग्भिर्यो भवान्नादृत इत्यन्वयः, तेषां नरकभाक्त्वमपि कथमित्यपेक्षायामाह—असत्प्रसङ्गैरिति, असत्सु नरकहेतुषु निषिद्धशब्दादिविषयेषु प्रकृष्टः सङ्गो येषां तैरित्यर्थः । यद्वा असद्भिर्दुष्टैर्भगवद्विमुखैर्विषयासक्तैः सह प्रकृष्टः सङ्गो येषां तैरित्यर्थः । यद्वा इदमपि भगवद्रूपमसदिति प्रकृष्टः सङ्गः अभिनिवेशो येषां तैरित्यर्थः ॥ ४ ॥ ❀ ❀ एवं भगवन्त-मनादृत्य विषयासक्तानां नरकभाक्त्वमुक्त्वाऽऽदरेण तं भजतां तु कृतार्थत्वमाह—ये त्विति । तुशब्देन चरणोपासनारहितान् सर्वपुरुषार्थविमुखान् पूर्वोक्तान् व्यावर्तयति । श्रुतयो वेदपुराणादिसद्ग्रन्थास्ते एव वातः पवनस्तेन नीतं प्रापितं त्वदीयचरणाम्बुज-कोशस्य गन्धं प्रभावं ये तु कर्णविवरैर्जिघ्रन्ति आदरेण शृण्वन्ति तेषां स्वपुंसां स्वभक्तानां हृदयाम्बुरुहात्त्वं नापैषि नापगच्छसी-त्यन्वयः । तत्र हेतुमाह—भक्त्येति, परया श्रवणेन प्रवृद्धया तेषां भक्त्या गृहीतचरण इत्यन्वयः । चकारो यथा ते तव चरणाम्बुजं न त्यजन्ति तथा त्वमपि तेषां हृदयं न त्यजसीति दृष्टान्तसूचनार्थः । तवाप्येतद्युक्तमेव स्वामित्वादित्याशयेन सम्बोधयति—नाथेति ॥ ५ ॥ ❀ ❀ भवत्वेवं तेन किं फलमित्यपेक्षायां सर्वसन्तापनिवृत्तिरेवेत्याशयेनाह—तावदिति । लोकः प्राणी यावत्ते तवाङ्घ्रिं न प्रवृणीत स्वाश्रयत्वेन नोपासीत तावदेव द्रविणादिनिमित्ता भयादयो भवन्ति, तदनन्तरं च सर्वे निवर्तन्ते । द्रविणं धनम् , गेहं प्रसिद्धम् । देहेति पाठान्तरम् । सुहृदः स्त्रीपुत्रमित्रादयः, तन्निमित्तं तेषां विनाशचिन्तया भयं भवति, विनाशे च शोकः सन्तापो भवति, तदनन्तरं स्पृहा तत्सम्पादनेच्छा भवति, ततस्तत्साधने प्रवृत्तौ परेभ्यः परिभवः तिरस्कारो भवति, यथाकथञ्चित्तत्प्राप्तावपि पुनर्विपुलो महान् लोभस्ततोऽधिकोऽभिलाषश्च भवति, ततश्च कथञ्चित्तत्प्राप्ते पुनरार्तिमूलं भयादिदुःख-कारणं ममेत्यसन् भ्रान्तिरूपः अवग्रहः अभिनिवेशो भवति । तावदित्यस्य द्विरुक्तिः सर्वत्रान्वयसूचनार्था । कथमेवं चरणशरण-मात्रेण सर्वभयनिवृत्तिरित्याकाङ्क्षायामाह—अभयमिति, न भयं विद्यते भक्तानां यस्मात्तं सर्वभयनिवर्तकमित्यर्थः ॥ ६ ॥ ❀ ❀ एवं भगवद्भक्तानां कृतार्थत्वमभिधाय 'यो नादृतो नरकभाग्भिरसत्प्रसङ्गैः' इति यदुक्तं तत्स्पष्टयंस्तद्विमुखान्निन्दति—दैवेनेति । सर्वाशुभोपशमनात् सर्वाणि अशुभानि भयशोकादीनि तन्मूलानि कर्माणि वा उपशाम्यन्तेऽनेनेति तथाभूताद्भवतस्तव प्रसङ्गात् श्रवणकीर्त्तनदर्शनसेवादिरूपात् विमुखानीन्द्रियाणि श्रोत्रवाक्चक्षुरादीनि येषां तथाभूताः सन्तो ये कामसुखानि शब्दादि-विषयभोगजन्यसुखानि तेषां लेशः स्वल्पो भागस्तस्यापि लवः स्वल्पो भागस्तदर्थं शश्वत् निरन्तरं अकुशलानि न कुशलं येभ्यस्तथा-भूतानि पापानि कुर्वन्ति ते दैवेन प्रारब्धबलवद्दुरदृष्टेन हता अभिभूता भ्रामिता धीर्येषां ते तथा मन्दभाग्यतया मन्दमतय

एवेत्यन्वयः । कुत एवं तत्र हेतुमाह—दीना इति, यतः पापाचरणेन ते हीना नरकादिदुःखभागिनो भवन्तीत्यर्थः । ननु कथं परमपुरुषार्थहेतुं विहाय अनर्थहेतुनिष्ठा भवन्तीत्याकाङ्क्षायामाह—लोभेति, लोभेन तृष्णातिशयेनाभिभूतं विवेकरहितं मनो येषां तथाभूता इत्यर्थः ॥ ७ ॥

## हिन्दी अनुवाद

### ब्रह्माजीद्वारा भगवान्‌की स्तुति

ब्रह्माजीने कहा—प्रभो ! आज बहुत समयके बाद मैं आपको जान सका हूँ । अहो ! कैसे दुर्भाग्यकी बात है कि देहधारी जीव आपके स्वरूपको नहीं जान पाते । भगवन्! आपके सिवा और कोई वस्तु नहीं है । जो वस्तु प्रतीत होती है, वह भी स्वरूपतः सत्य नहीं है । क्योंकि मायाके गुणोंके क्षुभित होनेके कारण केवल आप ही अनेकों रूपोंमें प्रतीत हो रहे हैं ॥ १ ॥ ❀ ❀ देव! आपकी चित् शक्तिके प्रकाशित रहनेके कारण अज्ञान आपसे सदा ही दूर रहता है । आपका यह रूप, जिसके नाभि-कमलसे मैं प्रकट हुआ हूँ, सैकड़ों अवतारोंका मूल कारण है । इसे अपने सत्पुरुषोंपर कृपा करनेके लिये ही पहले-पहल प्रकट किया है ॥ २ ॥ ❀ ❀ परमात्मन् ! आपका जो आनन्दमात्र, भेदरहित, अखण्ड तेजोमय स्वरूप है, उसे मैं इससे भिन्न नहीं समझता । इसलिये मैंने विश्वकी रचना करनेवाले होनेपर भी विश्वातीत आपके इस अद्वितीय रूपकी ही शरण ली है । यही सम्पूर्ण भूत और इन्द्रियोंका भी अधिष्ठान है ॥ ३ ॥ ❀ ❀ हे विश्वकल्याणमय ! मैं आपका उपासक हूँ, आपने मेरे हित के लिये ही मुझे ध्यानमें अपना यह रूप दिखलाया है । जो पापात्मा विषयासक्त जीव हैं, वे ही इसका अनादर करते हैं । मैं तो आपको इसी रूपमें बार-बार नमस्कार करता हूँ ॥ ४ ॥ ❀ ❀ मेरे स्वामी ! जो लोग वेदरूप वायुसे लायी हुई आपके चरणरूप कमलकोशकी गन्धको अपने कर्णपुटोंसे ग्रहण करते हैं उन अपने भक्तजनोंके हृदय-कमलसे आप कभी दूर नहीं होते; क्योंकि वे पराभक्तिरूप डोरीसे आपके पादपद्मोंको बाँध लेते हैं ॥ ५ ॥ ❀ ❀ जबतक पुरुष आपके अभयप्रद चरणारविन्दोंका आश्रय नहीं लेता; तभीतक उसे धन, घर और बन्धुजनोंके कारण प्राप्त होनेवाले भय, शोक, लालसा, दीनता और अत्यन्त लोभ आदि सताते हैं और तभीतक उसे मैं मेरेपनका दुराग्रह रहता है, जो दुःखका एकमात्र कारण है ॥ ६ ॥ ❀ ❀ जो लोग सब प्रकारके अमङ्गलोंको नष्ट करनेवाले आपके श्रवण-कीर्तनादि प्रसङ्गोंसे इन्द्रियोंको हटाकर लेशमात्र विषय-सुखके लिये दीन और मन-ही-मन लालायित होकर निरन्तर दुष्कर्मोंमें लगे रहते हैं, उन बेचारोंकी बुद्धि दैवने हर ली है ॥ ७ ॥

**क्षुत्तृट्त्रिधातुभिरिमा मुहुरर्द्यमानाः शीतोष्णवातवर्षैरितरेतराच्च ।**
**कामाग्निनाच्युत रुषा च सुदुर्भरेण सम्पश्यतो मन उरुक्रम सीदते मे ॥ ८ ॥**
**यावत्पृथक्त्वमिदमात्मन इन्द्रियार्थ मायाबलं भगवतो जन ईश पश्येत् ।**
**तावन्न संसृतिरसौ प्रतिसंक्रमेत व्यर्थापि दुःखनिवहं वहति क्रियार्था ॥ ९ ॥**
**अह्न्यापृतार्तकरणा निशि निःशयाना नानामनोरथधिया क्षणभग्ननिद्राः ।**
**दैवाहतार्थरचना ऋषयोऽपि देव युष्मत्प्रसङ्गविमुखा इह संसरन्ति ॥ १० ॥**
**त्वं भावयोगपरिभावितहृत्सरोज आस्से श्रुतेक्षितपथो ननु नाथ पुंसाम् ।**
**यद्यद्धिया त उरुगाय विभावयन्ति तत्तद्वपुः प्रणयसे सदनुग्रहाय ॥ ११ ॥**
**नातिप्रसीदति तथोपचितोपचारैराराधितः सुरगणैर्हृदि बद्धकामैः ।**
**यत्सर्वभूतदययासदलभ्ययैको नानाजनेष्ववहितः सुहृदन्तरात्मा ॥ १२ ॥**

### श्रीधरस्वामिविरचिता भावार्थदीपिका

अकुशलत्वमेव दर्शयति । क्षुच्च तृट् च त्रिधातवश्च वातपित्तश्लेष्माणस्तैः इमाः प्रजाः सुदुर्भरेण दुःसहेन कामाग्निनाऽच्युतया रुषाऽविच्छिन्नक्रोधेन च पीड्यमानाः संपश्यतो मे मनः सीदति ॥ ८ ॥ ❀ ❀ नन्वेवंभूतायाः संसृतेरपरमार्थत्वात्किमर्थं विषादः क्रियते तत्राह । यावदिति । आत्मन इदं पृथक्त्वं देहादिभावं भगवतस्तवेंद्रियार्थरूपा या माया तया बलमाधिक्यं यस्य तत् । न प्रतिसंक्रमेत् नोपरमेत् । दुःखसमूहं प्रापयतीति क्रियाणामर्थः फलं यस्यां सा । त्वदिदमिति पाठे इदं

---

१. प्रा० पा०—पृथक्स्थितमिदं मन इन्द्रियार्थं मा० । २. प्रा० पा०—व्यर्थातिदुःख० । ३. प्रा० पा०—तदनुग्रहाय ।

देहादि त्वत्त्वत्तः पृथक् पश्येद्यावत्तावदसौ व्यर्थापि नोपरमेत् ॥ ९ ॥ ❀ ❀ भवत्वेवमविवेकिनां विवेकिनस्तु मुक्ता एवेति किं तेषां भक्त्या कृत्यमत आह । अह्नि आपृतानि व्यापृतानि च तानि आर्तानि क्लिष्टानि करणानींद्रियाणि येषां रात्रौ विषय-सुखलवोऽपि नास्ति यतो निशि निःशयानाः स्वप्नदर्शनेन च क्षणे क्षणे भग्ननिद्रा दैवेनाहताः सर्वतः प्रतिहता अर्थरचना अर्थो-र्थोद्यमा येषाम् ॥ १० ॥ ❀ ❀ तदेवमभक्तानां संसारान्निवृत्तिमुक्त्वा भक्तानां तन्निवृत्तिमाह । त्वमिति । भक्तियोगेन शोधिते हृत्सरोजे आस्से तिष्ठसि । श्रुतेन श्रवणेनेक्षितः पंथा यस्य । किञ्च । श्रवणं विनापि त्वद्भक्ता मनसा यद्यत्तव वपू रूपं स्वेच्छया ध्यायंति तत्तत्प्रणयसे प्रकटयसि । सतां भक्तानामनुग्रहाय ॥ ११ ॥ ❀ ❀ भक्तानां च निष्कामानां त्वमतिसुलभो नेतरेषा-मित्याह । नेति । उपचितैरूर्जितैरुपचारैः पुष्पोपहारादिभिः । यद्यथा असतामभक्तानामलभ्यया सर्वभूतदयया । प्रसादे हेतुः एक इत्यादि ॥ १२ ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

कामक्रोधाभ्यां क्षुत्तृट्त्रिधातुभिराध्यात्मिकैः । शीतोष्णवातवर्षैराधिदैविकैः । इतरेतरादन्योन्यं स्त्रीपुत्रादित इत्याधि-भौतिकैः संपश्यत इति कल्पांतरानुभूतापेक्षं तदा प्रजाया अभावादिति ज्ञेयम् । सीदति अहो कथमेषां निस्तारो भवेदिति खिद्यत इत्यर्थः ॥ ८ ॥ ❀ ❀ आक्षिपति—नन्विति । एवंभूतायास्तापत्रयपीडनादिरूपायाः आत्मनो जीवस्य इंद्रियार्थरूपा विषय-रूपा 'गोचरा इंद्रियार्थाश्च' इत्यमरः । क्रियाणां कर्मणाम् ॥ ९ ॥ ❀ ❀ प्रकारांतरेणाक्षिपति—भवत्विति । कृत्यं करणीयं संदर्भस्तु स्वभावाद्युष्मद्भजनविमुखाः संसरति किं बहुना तत्तन्मार्गसिद्धा मुनयोऽपि युष्मत्प्रसंगविमुखाश्चेदिह जगति तद्वदेव संसरंति अथवा मुनयोऽपि त्वद्विमुखाश्चेत्त र्हें संसरंत्येव किंभूता 'अह्न्यापृते' इत्यादि । "आरुह्य कृच्छ्रेण परं पदं ततः पतंत्यतो नादृतयुष्मदंघ्रयः" इत्युक्तेः । अत एव श्रीयमुनाभ्रात्राप्युक्तं "धर्मं तु साक्षाद्भगवत्प्रणीतं न वै विदुरृषयो नापि देवाः । न सिद्धमुख्या असुरा मनुष्याः कुतो नु विद्याधरचारणाद्याः ॥ स्वयंभूर्नारदः शंभुः कुमारः कपिलो मनुः । प्रह्लादो जनको भीष्मो बलिर्वैयासकिर्वयम् ॥ द्वादशैते विजानीमो धर्मं भागवतं भटाः । गुह्यं विशुद्धं दुर्बोधं यं ज्ञात्वाऽमृतमश्नुते । एतावानेव लोकेस्मि-न्पुंसां धर्मः परः स्मृतः" इत्यादि । एते धर्मप्रवर्तका विजानीम इव न तु स्वस्मृत्यादिषु प्रायेणोपदिशाम इत्यर्थः । यतो गुह्यमप्रकाश्यं दुर्बोधमन्यैस्तथा ग्रहीतुमशकयं च गुह्यत्वे हेतुः 'यं ज्ञात्वाऽमृतमश्नुते' इति । अत एव वक्ष्यते च "प्रायेण वेद तदिदं न महाज-नोऽयम्" इत्यादि महाजनो द्वादशभ्यस्तदनुगृहीतसंप्रदायिभ्योऽन्यो महागुणयुक्तोपीत्यर्थः । तस्मात्साधूक्तमह्न्यापृतार्त्तेत्यादि ॥ १० ॥ ❀ ❀ भक्तियोगोऽत्र प्रेमापरिभावितत्वं योग्यतामापादितत्वं श्रुतेन भगवत्प्रतिपादकवैदिकशास्त्रश्रवणेन तर्हि मद्रूपविशेषावि-र्भावे किं कारणं तत्राह—धिया श्रुतलब्धेन बुद्धिविशेषेण न त्वीश्वरोहं कथमेवं तेषां वशः स्यां तत्राह—सदनुग्रहायेति । सत्सु तेष्वनुग्रह एव तव वशत्वे कारणं नान्यदिति भावः । ननु श्रुतमात्रेण तेषां मम बहूनां रूपाणां कथं स्यात्तदभावे च कथमेकतर-निष्ठा स्यात्तत्राह—हे उरुगायेति । वेदेन त्वमुरुधैव गीयस इति स्वस्वमत्यनुसारेण तेषां सा स्यादिति भावः । भावयोगेन परि-भावित संचितेति संबुद्धिर्वा ॥ ११ ॥ ❀ ❀ भवानिति शेषः । सकामानां स्वार्थपरत्वात्सर्वभूतदया तेषां नास्ति निष्कामानां परार्थपरत्वात्सर्वभूतदया स्वाभाविक्येवातस्तत्र तवातिप्रसादो भवति अतिप्रसादत्वे हेतुः एक एव भगवान् नानाजनेष्ववहितः कृतावधानः यतः सुहृत् मद्भक्तकृपया एते विस्तरंत्विति तेषां हितैषी नन्वेवं चेदहमेव स्वयं कृपया तान् कथं नोद्धरामीति चेदाह—अंतरात्मा त्वं स्वभक्ताय यशोदानार्थं जगदुद्धारिणीं स्वकृपाभक्तिं तेषु निधाय सर्वत्रांतर्यामिस्वरूपेण स्वयमौदास्यमेवावलंबस इत्यर्थः । न चैवं सर्वमुक्तिप्रसंग इति च वाच्यं सर्वभूतदययेत्यत्र छत्रिणो गच्छंतीतिवत्सर्वशब्दस्य प्राचुर्य्यमात्रार्थपरत्वेनाभिधानात् । भगवद्भक्तकृपाया अपि प्रायः खल्वसार्वत्रिकत्वादर्शनात् । यद्वा । भक्तेन सर्वभूतेष्वेव दया कार्य्यैव तदपि न सर्वमुक्तिर्द्रष्टव्या न हि सर्वत्रैवोप्तान्यपि बीजान्यूषरक्षारादिभूमिष्वपि प्ररोहंतीति नारदादीनामपि दक्षादिषु कृपायाः फलवत्त्वादृष्टेः ॥ १२ ॥

## श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या ।

सीदति हन्त हन्त कथमासां निस्तारो भवितेत्यवसीदति ॥ ८ ॥ ❀ ❀ एवंभूतायाः क्षुधादिभिः पीडारूपायाः अपरमार्थत्वात्प्रातीतिकत्वेन मिथ्यारूपत्वाद् आत्मनो जीवस्य ब्रह्मभावात्पृथक्त्वं देहादिभावम् अध्यासेन देहेन्द्रियादितादात्म्यं तथा च विज्ञानेन यावद् भ्रमनिवृत्तिर्नस्यान्न तावत्संसृतेरुपरम इति विषाद इति भावः ॥ ९ ॥ ❀ ❀ अविवेकिनां देहात्म-विवेकशून्यानाम् एवं संसृतेरनुपरमो भवतु इति हेतोः तेषां विवेकिन ऋषयो विवेकिनोऽपि चेद्युष्मत्प्रसङ्गविमुखास्तर्हि अह्न्या-पृतार्त्तेत्यादिस्वभावाः सन्तः संसरन्ति जन्ममरणादिक्लेशमनुभवन्ति । एवञ्च कर्मिमूढज्ञानिभेदेन त्रिविधा अपि जीवा भगवद्वि-मुखाः संसरन्त्येवेति क्रमेण दैवेन त इत्यनेन क्षुत्तृडित्यनेन अह्न्यापृतेत्यनेन च निर्दिष्टम् ॥ १० ॥ ❀ ❀ श्रवणं वेदवैदिक-विचारश्रवणं विनापि अकुटिलहृदयास्त्वद्भक्ताः यद्यदिति सामान्योक्त्या रूपाणामचिन्त्यानन्तत्वमभिव्यञ्जितम् अत एव पूर्वं सदेव प्राकट्यमिति व्याख्यातं सदनुग्रहायेति सत्सु अनुग्रह एव तव प्राकट्यस्य प्रयोजनमसुरनिग्रहादिकं त्वानुषङ्गिकमिति व्यञ्जितम्

"मुहूर्तेनैव संहर्तुं शक्तो यद्यपि दानवान्। मद्भक्तानां विनोदार्थं करोमि विविधाः क्रियाः। परित्राणाय साधूनामि" त्यादिप्रामाण्यात्॥ ११॥ ❀ ❀ इतरेषां सकामानां न सुलभस्तेषां स्वार्थपरत्वेनान्यत्र दयाऽभावान् नेतीति भवानिति शेषः, प्रियत्वे प्रसन्नत्वे तस्मात् भवत्प्रीत्यर्थं सर्वभूतदयामयी भक्तिः कर्त्तव्येति भावः॥ १२॥

## श्रीमद्वीरराघवव्याख्या

क्षुत्तृडित्यादि। क्षुद् शनाया तृट् पिपासा इमे शोकमोहजरामृत्यूनामप्युपलक्षणं क्षुधादिषड्‌र्मिभिस्त्रिधातवः वातपित्तश्लेष्माणः तैश्च तथा शीतादिभिः इतरेतरैः परस्परैश्च कामाग्निना काम एवाग्निस्तेन कथंभूतेन सुदुर्भरेणाच्युतरूपा चाविच्युतक्रोधेन अच्युतेति संबोधनं वा। एतैर्मुहुः पुनः पुनरर्द्यमानाः प्रजाः संपश्यतो मे मनः हे उरुक्रम! सीदते क्लिश्यति॥ ८॥ ❀ ❀ असदवग्रह आर्तिमूलमिति देहात्मभ्रमस्यार्तिमूलत्वमुक्तमुपपादयति यावदिति द्वाभ्यां भगवतस्तव मायायाः बलं बलकारितं इद्रियार्थे बाह्येन्द्रियविषयभूते पृथक्त्वं देवमनुष्यादिदेहगतपृथक्त्वं आत्मनः आत्मसंबन्धितया जनः यावत् पश्येत् हे ईश तावदसौ संसृतिः न प्रतिसंक्रमेत न निवर्तेत। न केवलमनिवृत्तिरेव किंतु क्रियार्था क्रियाऽर्थः प्रयोजनं यस्याः सा क्रियार्था संसृतिः व्यर्था परमपुरुषार्थशून्यापि दुःखनिवहं दुःखसमूहं वहति प्रापयति अहंकारमूला संसृतिरुत्तरोत्तरकर्मान्तरहेतुस्तस्मान्मोक्षविरोधिनी दुःखवहा चेत्यर्थः॥ ९॥ ❀ ❀ अह्नीति। अह्न्याप्रृतार्थकरणा अहनि व्याप्रृतान्यर्थकरणानि शब्दादिविषयेन्द्रियाणि येषान्ते आर्तेति पाठे व्याप्रृतान्यार्त्तानि दुःखितानि करणानि येषां ते इत्यर्थः। निशि रात्रौ निःशयानाः नितरां शयाना निवृत्तबाह्येन्द्रियव्यापाराः विषयसुखलवोऽपि नास्तीत्यभिप्रायः, नानाभूतेषु मनोरथेषु धिया स्वप्नदर्शनेनेत्यर्थः। क्षणे क्षणे भग्ना निद्रा येषां ते दैवाहतार्थरचनाः दैवेनाहता वितथीकृताः अर्थरचनाः प्रयोजनविषयव्यापारा येषां ते ऋषयोऽपि त्वद्भक्तिरहिताश्चेदेवंविधा भूत्वा संसरन्तीत्यर्थः॥ १०॥ ❀ ❀ एवं देहात्ममानिनां भगवद्भक्तिविधुराणां संसृत्यनिवृत्त्यभिधाने भक्त्येकलभ्यत्वमेव सुदृढयन् निष्कामेषु उपासकेषु भगवत्सौलभ्यमाह त्वमिति द्वाभ्याम्। हे नाथ! पुंसां स्वभक्तानां भावयोगो भक्तियोगः तेन परिभाविते शोधिते हृत्सरोजे हृदयकमले श्रुतेक्षितपथः श्रुतं शास्त्रजन्यं ज्ञानमीक्षितं विवेकादिजन्यमुपासनात्मकम् ईक्षितमिति भावे क्तः श्रुतेक्षिते पन्थाः उपायो यस्य प्राप्तो स श्रुतेक्षितपथः शास्त्रदर्शितमार्गः एवंभूतस्त्वम् आस्से तिष्ठसि। हे उरुगाय! ते स्वपुमांसः धिया तव ते यद्यद्वपुः ध्यायन्ति तद्वपुः सत्स्वनुग्रहाय प्रणयसे प्रकटयसे यादृशविग्रहविशिष्टं त्वां विशेषतो भावयन्ति तादृशविग्रहविशिष्टो भवसीत्यर्थः। अनेन सौलभ्यमुक्तम्॥ ११॥ ❀ ❀ निष्कामानामेव भवान्सुलभ इत्याह नेति। सुरगणैरनुकूलजनैः "विष्णुभक्तिपरो दैवो विपरीतस्तथासुर" इति वचनात् कथंभूतैः हृदि बद्धकामैः प्रसक्तकामैः सकामाऽपि भगवद्भक्तिरासुरप्रकृतीनां न संभवतीत्यभिप्रायः। एवंभूतैः सुरगणैः कर्तृभिः उपचितोपचारैः पुष्कलोपचारैराराधितो भवान्नातिप्रसीदति नात्यन्तं प्रसन्नो भवसि निरतिशयमोक्षसुखप्रदो न भवसीत्यर्थः। कुत इत्यत आह। यद्यस्मादसदलभ्यया असद्भिर्देहमात्मतयाऽनुसंदधद्भिर्लब्धुमशक्यया सर्वभूतदयया सर्वेषु भूतेष्वात्मतयाऽवस्थिते सति त्वयि कस्मिन्नपि भूते कृतो द्रोहस्त्वय्येव कृतो भवतीति बुद्ध्या सर्वेषु भूतेषु क्रियमाणया स्वार्थनिरपेक्षपरदुःखनिराचिकीर्षापरपर्यायया दयया भवान्प्रसीदति सर्वभूतानामीश्वरशरीरत्वानुसंधानपराणामेव सुलभ इति भावः। शरीरात्मभावमेवोपपादयति नानाजनेषु समस्तजनेषु अवहितः स्थितः कथमवस्थितः अन्तरात्मा जीवान्तःप्रवेशनेऽपि तद्गतदोषैरस्पृष्टः प्रशासितृत्वेन धारकत्वेन च स्थितः। अत एव सुहृत्कामनापूर्वकयज्ञादिकर्मणाऽपि सर्वभूतदया त्वत्प्रसादहेतुरित्यर्थः॥ १२॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

त्वयि ज्ञाते सर्वमिदं ज्ञायते "अविज्ञातं विज्ञात" मिति श्रुतेः अतस्तव गतिर्न ज्ञायत इत्यत्यन्तसाहसमिति सूचनाय ब्रह्मा दुर्ज्ञानफलभोगिप्रजानुकम्पाव्याजेन सज्ज्ञानोत्पत्तौ प्रथमं वैराग्यमेव साधनीयं बुभूषुणेति भावेनाह क्षुत्तृडिति। क्षुधा तृषा त्रिभिर्धातुभिर्वातादिभिराध्यात्मिकैरिमाः प्रजाः शीतोष्णवातवर्षैराधिदैविकैः इतरेतरादन्योऽन्यनिमित्तादाधिभौतिकैः सुदुर्भरेण कामाग्निना सुदुर्भरया रुषा च॥ ८॥ ❀ ❀ त्रिविधो जीवसंघो मुक्तियोग्यः संसारयोग्यस्तमोयोग्य इति तत्र भगवतो गतिर्न ज्ञायत इत्यादिरूपा मुक्तियोग्यानां संसृतिः कदा निवर्तत इति तत्राह यावदिति। चशब्दोऽनुक्तसमुच्चयार्थोऽवधारणार्थो वा। यावद्यदा आत्मनः स्वस्य भगवतः सकाशादिन्द्रियार्थम् इन्द्रियविषयभोगार्थममुक्तियोग्यो जनो ध्यायामि पश्यामि शृणोमीत्यादिपृथक्त्वं विभागलक्षणं मायाबलं भगवदिच्छाबलं भगवदिच्छया प्रणीतं चेष्टितमित्यर्थः। बल प्राणन इति धातोः पश्येत् चशब्दान्मुक्तावपि "ध्याये मंस्ये तथा पश्ये श्रृणोमीति विभक्तता। जीवस्य तु हरेरिच्छाबलादिन्द्रियभुक्तय" इत्यतो नानिर्वाच्यलक्षणो भेदः पृथक्त्वं पश्येदिति दृग्विषयत्वेन ज्ञेयत्वोक्तेर्हरेरिच्छैव माया नानिर्वाच्याविद्या। तदुक्तम्।

ज्ञेयत्वं ❀ दुर्घटस्यापि घटनाधिकशक्तिता। अभेद ईश्वरेणापि सृष्ट्यादावन्तरङ्गता॥
उच्येत यस्याः सा माया हरेरिच्छाथवा बलम्॥

इति ननु तर्हि मायाशब्दवाच्ययोर्लक्ष्मीबंधकशक्त्योर्विभागज्ञानं कथमचेतनप्रकृतेश्चेति प्रसक्ता शङ्का।

भगवत्तन्त्रता यस्यास्तद्भार्यात्वं सुरूपता। उच्येत माया सा तु श्रीर्दोषयुक्ता जडा स्मृता॥
परिणामिनी च यस्यास्तु दोषाश्चेतनता तथा। शैवली नाम सा माया जगद्बन्धात्मिका सदा॥

इत्यनेन परिहर्तव्या इत्यभिप्रायेणाचार्यैः शेषोदाहरणं कृतं तावत्तदा व्यर्थापि आत्यन्तिकप्रयोजनशून्यापि धर्मादिक्रियार्था दुःखनिवहं दुःखपरंपरां वहन्ती संसृतिः प्रतिसंक्रमेत नाशं गच्छत्येवेत्यन्वयः। अघटितघटकशक्तिरस्तीति द्योतनाय ईशेति संबोधनम् एतदभिप्रायेणोक्तं "ज्ञेयत्वं दुर्घटस्यापि घटनाधिकशक्तिते"ति॥ ९॥ ❀ ❀ नित्यसंसारिणां संसरणप्रकारं निरूपयति अध्याहृतेति। अध्याहृतार्थानि आकृष्टशब्दादिविषयाणि करणानीन्द्रियाणि येषां ते तथाऽन्योऽन्याकर्षणत्वज्ञापनायैवमुक्तं तत्र निमित्तमाह निशीति। अज्ञानं तु निशा प्रोक्ता दिवा ज्ञानमुदीर्यते।

इति वचनान्निश्यज्ञाने नितरां शयानाः परमतत्त्वाज्ञानं कारणमित्यर्थः। नानामनोरथधिय इति। हेतुगर्भविशेषणं तस्मात्प्रतिक्षणं भङ्गयुक्तनिद्राः निद्रातुमप्यवसरो नास्तीत्यर्थः, नित्यलुप्तकर्मानुष्ठानत्वेन दैवादनुदितप्रसादाद्धतार्थरचनाः विनाशितार्थाभीष्टवस्तुचमत्कारा ऋषयोऽपि ऋषिकुलप्रसूता अपि अत्र सर्वत्र स्पष्टं निमित्तमाह युष्मदिति। इह जीवलोके स्वर्गे नरके च॥ १०॥ ❀ ❀ पृथक्त्वं मायाबलं पश्येदिति यदपरोक्षज्ञानमुक्तं तदुत्पत्तावित्थंभूतसाधनमाह त्वद्भावेति। पुंसां नाथ! पुरुषोत्तम! सतो लोकमान्यात् श्रेष्ठादार्यात् च श्रुतेन शास्त्रश्रवणेन ईक्षितो दर्शितः पंथा विष्णुभक्त्यादिलक्षणो येषां ते तथोक्ताः। अत एव त्वद्भावयोगेन त्वद्विषयेण च भक्तियोगेन भावितमधिवासितं हृत्सरोजमन्तः कमलं येषां ते तथोक्ता मन इत्युपलक्षणं वेदान्तादिसच्छास्त्रश्रवणसंजातत्वद्भक्तियोगेन निर्मलीकृतेन्द्रियग्रामा ये मुक्तियोग्या जनाः हे उरुगाय विष्णो! ते पुरुषास्तव यद्यद्वपुर्नन्वनुमतं यथा यथा स्वस्वयोग्यज्ञानानन्दादिगुणत्वेनानुज्ञातं धिया विभावयन्ति तदनुग्रहाय तेषामनुग्रहाय तत्तद्वपुस्तादृशं शुभाकारं प्रणयसे व्यक्तीकरणेन स्निग्धं करिष्यसीत्यन्वयः। नन्वित्यनेनैतिह्यवाचिना।

यादृशो भावितस्त्वीशस्तादृशो जीव आभवेत्।
तं यथा यथोपासते सोऽपि तदेव भवति॥

इति वाक्यद्वयं प्रमाणयति एतदुक्तं भवति सद्गुरुमुखात्सच्छास्त्रश्रवणेतरविरक्तिद्वारा हरौ भक्तिस्तया स्वयोग्यगुणोपसंहारलक्षणोपासना तयास्य हरेरपरोक्षज्ञानं तेन पृथक्त्वस्य मायाबलविषयत्वं तस्माद्धरेः प्रसादस्तेन न ज्ञायते भगवतोगतिरित्यादिलक्षणा दुष्टजनसंगसंजाता संसृतिर्निवर्तत इति॥ ११॥ ❀ ❀ धिया यद्यद्विभावयन्तीत्यत्र सकामैरेवोपास्यत इत्यन्यथा प्रतीयते सा मुक्तिपरिपन्थिनीति सा न कर्तव्येति भावेनाह नेति। हृदीत्युभयत्रान्वेतव्यं सर्वभूतदयायाः कर्तव्यत्वे हेतुर्नानाजनेष्ववहित इति। दुर्भगशरीरस्थत्वेऽप्यणुमात्रं दुःखमस्य नास्तीत्यत्र हेतुरन्तरात्मेति। अन्तःस्थितापि रतिरूप इत्यर्थः। अतएव सुहृदनिमित्तबन्धुः एवंविधो यस्त्वमसद्भिरसुरप्रकृतिभिरलभ्यया लब्धुमशक्यया सर्वभूतदयया सुरगणैर्हृद्याराधितो यथातिप्रसीदसि स त्वं तथा हृदि बद्धकामैर्जनैरुपचितोपचारैराराधितो नातिप्रसीदसि। मन्त्रगुरुदेवताशक्त्या त्वन्नियतया किंचित्फलदानाभिमुखोऽपि नात्यन्तिकमुक्तिफलदत्वेन प्रसन्नो भवसीत्यतोऽतीत्युक्तम्।

आराधितो यो ब्रह्माद्यैर्भक्तिज्ञानदयादिभिः। किं तस्य कामुकजनैः कृतया परिचर्यया॥
इति वचनादुक्त एवार्थः इतरेषां सेवानुगुणफलदत्वेऽपि त्वमेक एवंविधस्वभाव इत्येक इति॥ १२॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

तत्र त्वत्तः स्वातन्त्र्याभिमानेनैव जीवानां स्यादित्यभिप्रेत्याह यावदिति। भगवतः सकाशात् आत्मनः पृथक्त्वं स्वातन्त्र्यं यावत् पश्येत्॥ ९॥ ❀ ❀ अतएव तत्तन्मार्गसिद्धमुनीनामप्यनादर इत्याह अह्वयापृतार्त्तकरणा इत्यादि। स्वभावात् युष्मद्भजनविमुखाः संसारिणो भवन्ति। किम्बहुना तत्तन्मार्गसिद्धा मुनयोऽपि युष्मत्प्रसङ्गविमुखाश्चेदिह जगति तद्वदेव संसरन्ति। अथवा मुनयोऽपि त्वद्विमुखाश्चेत्तर्हि संसरन्त्येव। कथंभूताः सन्तः संसरन्ति तत्राह अह्वयापृतेत्यादि। आरुह्य कृच्छ्रेणपरं पदमित्यादेः। अत उक्तं श्रीयमेन

धर्मन्तु साक्षाद्भगवत्प्रणीतं न वै विदुर्ऋषयो नापि देवाः। न सिद्धमुख्या असुरा मनुष्याः कुतो नु विद्याधरचारणादयः॥

स्वयम्भूर्नारदः शम्भुः कुमारः कपिलो मनुः। प्रह्लादो जनको भीष्मो बलिर्वैयासकिर्वयम् ॥
द्वादशैते विजानीमो धर्म्मं भागवतं भटाः। गुह्यं विशुद्धं दुर्ब्बोधं यं ज्ञात्वामृतमश्नुते ॥

एतावानेव लोकेऽस्मिन् पुंसां धर्म्मः परः स्मृतः ॥

इत्यादि। एते धर्म्मप्रवर्त्तकाः विजानीम एव न तु स्वस्मृत्यादिषु प्रायेणोपदिशाम इत्यर्थः। यतो गुह्यम् अप्रकाश्यम्। दुर्ब्बोधं अन्यैस्तथा ग्रहीतुमशक्यं च। गुह्यत्वे हेतुः यं ज्ञात्वामृतमश्नुत इति। अतएव वक्ष्यते च। प्रायेण वेद तदिदं न महाजनोऽयमित्यादि महाजनो द्वादशेभ्यस्तदनुगृहीतसम्प्रदायिभ्यश्चान्यो महागुणयुक्तोऽपीत्यर्थः। तस्मात् साधूक्तमह्नथापृतार्त्तेत्यादि। अत्र विशेषो भक्तिसन्दर्भे द्रष्टव्यः ॥१०॥ ❀ ❀ भक्तानां तु त्वं वश एवेत्यपरं किं वक्तव्यमित्याह त्वमिति। भक्तियोगोऽत्र प्रेमा। परिभावितत्वं योग्यतामापादितत्वं श्रुतं भगवत्प्रतिपादकवेदवैदिकशास्त्रविचारश्रवणम्। तर्हि मद्रूपविशेषाविर्भावे किं कारणं तत्राह यद्यदिति धिया श्रुतेनैव लब्धेन बुद्धिविशेषेण। ते पूर्व्वोक्ताः श्रुतेक्षिततत्पथाः पुमांसो यद्यद्विभावयन्ति तत्तद्वपुः प्रणयसे प्रकर्षेण तत्समीपे नयसि प्रकटयसीत्यर्थः। ननु ईश्वरोऽहं कथमेवं तेषां वशः स्यां तत्राह सदनुग्रहाय। सत्सु तेषु अनुग्रह एव वशत्वे कारणं नान्यदिति भावः। ननु श्रुतमात्रेण मम कथं बहूनां रूपाणां ज्ञानं स्यात् तदभावे च कथमेकतरनिष्ठा स्यात् तत्राह हे उरुगायेति। वेदेन त्वमुरुधैव गीयस इति। स्वस्वमत्यनुसारेण सा स्यादिति भावः॥ ११॥ ❀ ❀ नातीति भवानिति शेषः। ततश्च। यत् यथा सर्व्वभूतदयया साधारणैरपि जनैराराधितो भवानतिप्रसीदति। तथा बहुभिरुपचारैः सुरगणैरप्याराधितो नातिप्रसीदति। कुतस्तत्राह एक एव भवान्नानाजनेषु सुहृच्चान्तरात्मा च साधारणश्चेति। सुरगणैः कथम्भूतैः हृदिबद्धकामत्वात् तत्र तत्र स्पर्द्धासूयायुक्तैरित्यर्थः। तस्माद्भवत्प्रीत्यर्थं सर्व्वभूतदयामग्र्येव भक्तिः कर्त्तव्येति भावः॥ १२॥

## श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

ये चान्ये पश्वादितुल्याः स्वीयहिताहितं किमपि न जानन्ति तांस्तु शोचाम्येवेत्याह। क्षुच्च तृट् च त्रिधातवः वातपित्तश्लेष्माणस्तैरिमाः प्रजाः इतरेतराच्च स्वपुत्रकलत्रादिष्वपि परस्परतोऽर्द्यमानाः कामाग्निना अच्युतया अनवच्छिन्नया रुषा सुदुर्भरेति द्वयोरेव विशेषणम् अर्द्यमानाः प्रजाः पश्यतो मम मनः सीदति। हन्त हन्त कथमासां निस्तारो भवितेत्यवसीदति॥ ८॥ ❀ ❀ नन्वेवम्भूतायाः संसृतेरवस्तुभूतत्वादनया कथमवसीदसीति तत्राह यावदिति। यावदात्मनो जीवस्य इदं पृथक्त्वं देहादिभावं पश्येत् अनुभवेत्। भगवत इन्द्रियार्थरूपाया मायाया बलं यत्र तत् तावत् संसृतिर्व्यर्थाप्यवस्तुभूतापि न प्रतिसंक्रमेत नोपरमेत्। दुःखनिवहं प्रापयन्ती यतः क्रियाणां कर्मणामर्थः फलं यतः सा॥ ९॥ ❀ ❀ नचाज्ञानकल्पितायाः संसृतेर्ज्ञानेनैवोपराम इति वाच्यं यतो ज्ञानिनोऽपि भक्तिरहिताः संसरन्तीत्याह अह्नयेति। युष्मत्प्रसङ्गविमुखा ऋषयो ज्ञानिनोऽपि एवम्भूताः सन्तः संसरन्तीत्यन्वयः। मुनय इति च पाठः। कथंभूताः अह्नि आपृतानि नानाव्यापारयुक्तानि आर्त्तानि च करणानीन्द्रियाणि येषां तथा भूताः दैवेन आहता अर्थरचना भोग्यवस्तुप्रतिपादनानि येषां ते। एवञ्च दैवेन त इत्यनेन कर्मिणः क्षुत्तृडित्यादिना मूढाः अह्नयापृतत्यनेन ज्ञानिन इति त्रिविधाः संसारिण उक्ताः॥ १०॥ ❀ ❀ भक्तास्तु ज्ञानं विनापि संसारं निस्तरन्तीति किं वक्तव्यं यतो भक्त्या त्वामप्यधीनीकुर्वन्तीत्याह भक्तियोगेन परि सर्व्वतोभावेन भाविते वासिते "भावितं वासितं त्रिषु" इत्यमरः। यद्वा हे भक्तियोगपरिभावित! भक्तियोगेनैव परि सर्व्वतोभावेन भावितः प्रकटीकृतो भवतेर्ण्यन्तान्निष्ठया भक्तियोग एव त्वत्प्रकटीभवनस्य प्रयोजकः स्यादित्यर्थः। अतएव तेषां हृत्सरोजे आस्से उपविश्य तिष्ठसि न ततो निःसरसि नापैषि नाथेति पूर्व्वोक्तेः। आदौ गुरुमुखात् श्रुतः पश्चाद्दीक्षितः साक्षात् कृतश्च पन्था यस्य सः। येन पथा त्वं हृत्सरोजमायातोऽसि तं पन्थानं साधनभक्तिप्रकारं त एव सुष्ठु परिचिन्वन्तीति ध्वनिः। अतो यस्य त्वत्प्राप्तीच्छा वर्त्तते स तत एव पन्थानं परिचिनोत्वित्यनुध्वनिः। किञ्च श्रवणं विनापि त्वद्भक्ता मनसा यद्यद्वपुः रूपं स्वेच्छया ध्यायन्ति तत्तत् प्रणयसे प्रकटयसीति स्वामिचरणाः। यद्वा ते साधकभक्ताः स्वस्वभावानुरूपं यद्यद्धिया भावयन्ति तत्तदेव वपुस्तेषां सिद्धदेहं प्रणयसे प्रकर्षेण तान् प्रापयसि। अहो ते स्वभक्तपारवश्यमिति भावः॥ ११॥ ❀ ❀ तेष्वपि निष्कामभक्तानामेवातिश्रैष्ठ्यं नतु सकामानामित्याह नातिप्रसीदति भवानिति शेषः। सकामानां स्वार्थपरत्वादेव सर्व्वभूतेषु दयाया अभावमेवातिप्रसादाभावे हेतुं व्यञ्जयन् निष्कामानान्तु परार्थपरत्वात् सर्व्वभूतदया साहजिकीत्यतिप्रसादोऽपि साहजिक इत्याह यद्यथा सर्व्वभूतदयया अतिप्रसीदति। असतामलभ्यया दयया अतिप्रसादे हेतुः एक एव भवान् नानाजनेष्ववहितः कृतावधानः यतः सुहृत् मद्भक्तकृपया भक्तिप्राप्त्या एते निस्तरन्तु इति तेषां हितैषी। नन्वेवञ्चेदहमेव स्वयं कृपया तान् कथं नोद्धरामि तत्राह अन्तरात्मा त्वं स्वभक्त एवैतत् यशोदानार्थं जगदुद्धारिणीं स्वकृपाशक्तिं तेषु निधाय सर्व्वत्रान्तर्यामिस्वरूपेण स्वयमौदास्यमेवावलम्बसे इत्यर्थः। एवञ्च सुहृदन्तरात्मेति पदाभ्यां क्रमेण नैर्घृण्यवैषम्यदोषौ परमेश्वरस्य पराहतौ भक्तवात्सल्यञ्च द्योतितम्। नचैवं सर्वमुक्तिप्रसङ्ग इति वाच्यं सर्वभूतदययेत्यत्र छत्रिणो गच्छन्तीतिवत् सर्व्वशब्दस्य प्राचुर्य्यमात्रार्थपरत्वेनाभिधानात् भगवद्भक्तकृपाया अपि प्रायः खल्वसार्व्वत्रिकत्वदर्शनात्। यद्वा भक्तेन

सर्व्वभूतेष्वेव दया कार्य्यैव तदापि न सर्व्वमुक्तिर्द्रष्टव्या । नहि सर्व्वत्रैवोप्तान्यपि बीजान्युपरक्षारादिभूमिष्वपि प्ररोहन्तीति नारदादीनामपि दक्षादिषु कृपायाः फलवत्त्वादृष्टेः ॥ १२ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

क्षुच्च तृट् च त्रिधातवश्च वातपित्तश्लेष्माणः तैः इमाः प्रजाः ॥ ८ ॥ ❀ ❀ भगवतः इन्द्रियार्थरूपा या माया तथा बलं यस्य तत् त्वन्मायाकारितम् आत्मनः पृथक्त्वं देहादिभावं यावत्पश्यति तावदसौ क्रियाकर्मप्रवाहः अर्थः प्रयोजनं यस्याः सा संसृतिः जन्ममरणप्रवाहलक्षणा व्यर्था परमार्थशून्या अपि जन्ममरणस्य आत्मन्यघटमानत्वात् निश्चितं दुःखनिवहं क्षुत्तृडादिदुःखसमूहं वहति प्रापयति ॥ ९ ॥ ❀ ❀ ज्ञानिनोऽपि त्वय्यभक्ताश्चेत्तदा तेऽपि दुःखभागिन एवेत्याह अह्नीति । अह्नि आपृतानि व्यापृतानि च तानि च तान्यार्त्तानि करणानीन्द्रियाणि येषां ते क्षणे क्षणे भग्ना निद्रा येषां ते दैवेन आहताः अर्थरचना येषां ते ॥ १० ॥ ❀ ❀ पुनर्भक्तानां कृतार्थतामाह त्वमिति । त्वमिति । भावयोगेन भक्तियोगेन भाविते शोधिते पुंसां भक्तानां हृत्सरोजे आस्से तिष्ठसि । श्रुतेन तत्स्वरूपगुणादिश्रवणेन ईक्षितः दृष्टः पन्थाः यस्य सः भगवतो भक्तवश्यतामाह ते सन्तः यद्यद्वपुः रूपं धिया विभावयन्ति ध्यायन्ति तत्तद्वपुः रूपं सतां भक्तानामनुग्रहाय त्वं ननु अहो प्रणयसे प्रकटयसि ॥ ११ ॥ ❀ ❀ भक्तेष्वपि निष्कामा भक्ता भगवतोऽतिप्रिया इत्याह नातीति । एकः सर्वात्मा नानाजनेषु स्वात्मकेषु अन्तर्यामितयाऽवहितः संस्थितः तेषु भगवदात्मकेषु भगवदधिष्ठितेषु भगवद्दृष्ट्या निष्कामाः सन्तः त एव दयां कुर्वन्ति नतु असन्तोऽतोऽसदलभ्यया सर्वभूतदयया निष्कामभक्तकर्तृकया प्रसीदति यत् यथा तथा हृदिबद्धकामैः इतरस्य तु का कथा सुरगणैः देवसमूहैः कर्तृभिः उपचितैरूर्जितैरुपचारैराराधितोऽपि कृतघ्नत्वात्प्रसन्नोऽपि नातिप्रसीदति अत्यन्ततः प्रसन्नो न भवतीत्यर्थः ॥ १२ ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

तादृशेषु कृपां प्रार्थयितुं स्वस्य दयामाह—क्षुत्तृडिति । इमाः प्रजा अस्वतन्त्रा मत्सृज्यत्वेनोपस्थिताः, तासां स्वरूपं सम्यक् पश्यतः, हे उरुक्रम मे मनः सीदते । परदुःखं दृष्ट्वा दुःखितं भवतीत्यर्थः । संबोधनेन तन्निवारणसामर्थ्यं सूचितम् । इयमेव प्रार्थना । द्वादशविधः पुरुषो द्वादशधा रोगैर्व्याप्तः, न केनाऽप्यंशेन सुखी भवति । तान् द्वादशदोषाननिवार्यानाह—क्षुधादिपदैः । क्षुत्तृषोरसह्यत्वं स्वानुभवसिद्धम् । त्रिधातवो वातपित्तश्लेष्माणः, तेऽपि तथा । मुहुरर्द्यमाना इति बहुधा कृतप्रतीकारा अपि । शीतादयोऽपि चत्वारस्तथा । अन्योन्यतोऽपि क्लेशः । इतरेतरादिशब्दा निपाताः, अतो नैकशेषः, नाऽपि सर्वनामता । चकारात्तत्संबन्धिशस्त्रादिभिरपि । कामस्याऽनलत्वेनाऽग्नित्वम् । अग्निना स्वरूपनाश एव भविष्यतीत्याशङ्क्य अच्युतेति संबोधनं स्वरूपरक्षार्थम् । अच्युतो रोष इति केचित् । न कदाचिदपि च्युतो भवति यो रोषः । चकाराल्लोभादिभिः । सुदुर्भरेणेति क्षणमात्रमपि तत्सहनमशक्यम्, सर्वदा प्रतीकारश्चाऽशक्यः; अतो दुःखित्वम् । सीदत इति अर्थस्याऽलौकिकत्वादात्मनेपदं छान्दसम् ॥ ८ ॥ ❀ ❀ तर्हि ज्ञानोपदेशेन ताः प्रजाः कथं न कृतार्थाः क्रियन्ते ? तत्राऽऽह—यावदिति । यावदात्मनः पृथक्त्वं पश्येत्, तावदुपदिष्टेऽपि ज्ञाने संसृतिर्न प्रतिसंक्रमेत । यावदित्यवधिरुक्तः । मध्ये दुःखनिवृत्त्यर्थं प्रार्थना । आत्मनः पृथक्त्वं निरूपयति—इदमिति । यावदिदमिति मन्यते यत्किञ्चित्, तावत् पृथक्त्वम् । अस्याऽवधिर्भगवत्सायुज्यमेव । ब्रह्मभावोऽपि स एव । अन्यस्तु पक्षो देहग्रहणाग्रहणाभ्यां सर्वथाऽनुपपन्नः । इदम् आत्मभेदकत्वं निरूपयति—इन्द्रियार्थमायाबलमिति । भगवत इन्द्रियार्थरूपाया मायाया बलं यत्र । अन्तरोत्पन्नाः पदार्था मायिका एव, इन्द्रियाणामेवाऽर्थे निष्पादिताः । भगवत इवेन्द्रियाणि यदा लोकहितार्थं प्रवृत्तान्यहङ्कारेण, तदा भगवदाज्ञया भगवन्मायया स्वरूपभूताः पदार्था निष्पादिताः, अतो विशेषणमपि भगवदीयमिति सविशेषणे भगवत्संबन्ध उक्तः । सा ह्यधिष्ठानज्ञाने निवर्तते, परं तद्यथा न भवति, तथा बुद्धिशास्त्रादिव्यामोहेन महदेव बलं करोति । तस्या बलस्येदमेव निदर्शनम्—यदीदं[1] प्रतीयते, तदाऽस्ति बलमिति । भगवदीयत्वात् भगवत्कृपयैव निवर्तत इति ज्ञापितम् । दर्शने हेतुः—जन इति । यदा जायते—शरीरं गृह्णाति—तदेदं पश्यतीति नियम एव । ननु किमिति जायते ? तत्राऽऽह—ईशेति । यदा भगवत ईशोऽहमितीच्छा, तदा ईशितव्यस्याऽपेक्षणात् जननमित्यर्थः । संसृतिः संसरणम्, बहुधा देहत्यागग्रहणे । असाविति परिदृश्यमाना । प्रतिसंक्रमो विपरीतप्रवाहः । स भगवत्सायुज्यं प्रापयिष्यति, 'अन्ने प्रलीयते मर्त्यः' इत्यादिना । स तावन्न भवति । ननु संसृतेः किं मूलम्, किं वा प्रयोजनम्, कथं वा न प्रतिसंक्रमते ? तत्राऽऽह—संसृतेः कर्म मूलम् । तदाह—क्रियार्थेति । प्रयोजनं तु नाऽस्त्येव । तदाह—व्यर्थापीति । विः कालः, स वा अर्थः । कालार्था संसृतिर्मध्ये दुःखनिवहं वहती दुःखप्रवाहसिद्ध्यर्थमेव स्थिता, कुतोऽपि न निवर्तते । अतो बीजप्रयोजनावान्तरप्रयोजनानां विद्यमानत्वात् कदापि न निवर्तत इत्यर्थः

---

१. यदिदम् ख. घ. ङ. च ।

॥ ९ ॥ ❀ ❀ ननु ब्रह्मात्मभावेऽधिकारिणो गुरुकृपया, वाक्यसहकृतमनसा भाते, कथमिदं न निवर्तते ? सर्वत्रैवाऽहं-बुद्धेर्गतत्वात्[1], 'आत्मैवेदं सर्वं ब्रह्मवेदं सर्वम्' इति । तत्राऽऽह—अह्न्यापृतार्तकरणा इति । ये पूर्वजन्मनि ऋषयो ब्रह्मात्मभाव-चिन्तनपराः—तथाचिन्तनेनैव प्राप्तदेहावसानाः—तेऽपि युष्मत्प्रसादविमुखा इहैव संसरन्ति । संसारेऽपि तेषां विशेषः—अह्नि दिवसे आपृतानि ध्यापृतानि, अत एवाऽऽर्तानि करणानीन्द्रियाणि येषाम् । निशि रात्रौ च नितरां शयाना महामोहग्रस्ता भवन्ति । एवं व्यर्थकालाः । निद्रया जनितमानुषङ्गिकं सुखमपि नास्तीत्याह—क्षणभग्ननिद्रा इति । क्षणमात्रेणैव भग्ना निद्रा येषाम् । भङ्गे हेतुः—नानामनोरथधियेति । नाना मनोरथविषयिणी या बुद्धिः मनोरथानुसारेण स्वप्नं पश्यति, तस्मिन् स्वप्ने भयादिदर्शना-दिष्टवियोगाद्वा स्वाप्निकस्याऽस्थिरत्वात् व्याकुलस्य निद्राभङ्गः स्पष्टः । दैवेनैव आहता अर्थरचना येषाम्, तेषां क्रियाऽपि व्यर्थेति सूचितम् । यदि ते भोगार्थं गृहादिकमपि कुर्वन्ति, तदपि कालेन व्यर्थं नश्यतीत्यर्थः । ऋषयो मन्त्रद्रष्टारः । भगवांस्तादृशेभ्यः प्रसन्नो भूत्वा, सत्यादिलोकेष्विह वा, किञ्चित्प्रसादं प्रयच्छति, स्वोक्तनिवृत्तिमार्गकरणात् । तदा नेदमस्माकमपेक्षितमिति यदि ततो विमुखाः, तदेह संसरन्ति[2] । ते हि बाला वाक्यार्थमेव विचारयन्ति, न तस्योपपत्त्यादिकम्, कथमस्य जीवस्य ब्रह्मभावो भवतीति । वाक्यानां तात्पर्याज्ञानात् । अत्र ब्रह्माण्डे तेषामानन्दांशः प्रकटो न भवत्येव, सर्वार्थे मायाजवनिकायाः प्रसारितत्वात् । तथा भगवत्सायुज्यमपि; भगवत्प्राकट्याभावात्, ज्ञानमार्गस्य भगवतो वश्यत्वापादकत्वाभावात् । याऽपि सद्योमुक्तिरुक्ता, 'इहैव समवनीयन्ते प्राणाः' 'ब्रह्मैव सन् ब्रह्माऽप्येति' । तदपि स्वतन्त्रभक्त्या भगवत्सायुज्ये । अत एव वेदव्यासः सकलवेदार्थाभिज्ञो ज्ञानफलत्वेन सद्योमुक्तिं नोक्तवान्, किन्तु ब्रह्मविदोऽर्चिरादिमार्गेण ब्रह्मलोके स्थितिरेव फलत्वेनोक्ता, अपुनरावृत्तिश्च । तदेव फलं भगवद्दत्तम् । तदनङ्गीकारे मनसा योगेन वा संसृतिरेव भवति, अतो ब्रह्मभावनायामपि न संसारनिवृत्तिः ॥ १० ॥ ❀ ❀ नन्वेवं सति भक्तानामपि संसारो न निवर्तेत; उत्तमानामपि विष्णुलोकप्राप्तिः, कृत्रिमवैकुण्ठगमनं वा भवेत्; मायाजवनिकायाः सिद्धत्वात् । योगेन[3] ब्रह्माण्डभेदस्तु फलप्रकारोऽयं निरूपितः, न तु तत्राधिकारी कश्चित्संभवति । ब्रह्मणा सह तु ब्रह्माण्डनाशे । तस्मान्मुख्यभक्तिमार्गोऽपि न शीघ्रं पुरुषार्थसाधन इत्याशङ्क्याऽऽह—त्वं भावयोगेति । भावः प्रेमलक्षणा भक्तिः, 'रतिर्देवादविषयिणी भावः' इति समुदायार्थत्वात् । प्रीतिस्तु माहात्म्यज्ञानादेव । स एव योगो विहित उपायरूपो भवति । अन्यस्त्वनुपायः कामादिना जातः । तत्र प्रमेयबलमिति वक्ष्यते । प्रमाणबले त्वेषैव व्यवस्था; अतो भावयोगेन परिभावितं—परितः शोधितम्—भगवद्विषयकमाहात्म्यज्ञानपूर्वकस्नेहो यदि हृदये सहजो धर्मो भवति, तदा तद्धृदयं सरोजं भवति । प्रेमजले तदेवोद्गतं भवदासनौपयिकं कमलं भवति । तस्य च निदर्शनम्, यदि वैषयिकाः केऽपि न स्फुरन्ति । तदपि चेत्प्रेम्णा पूर्ववत्पुनर्भावितं भवति, तदा भगवांस्तत्र तिष्ठति । श्रुतेन गुणश्रवणेन, श्रवणसहितेन्द्रियेण वा, ईक्षितो मार्गो येन । यदैव श्रवणं रिक्तं भविष्यति, तदा भगवता निर्गमनार्थं मार्गो दृष्ट एव । नन्विति कोमलसंबोधनं निश्चयार्थम् । नाथेति युक्तिः । भगवांस्तेषां पतिः, स तु भार्यागृहे तिष्ठत्येव । परमेतावान् विशेषः, पुंसामयं पतिः । ननु तेषां ब्रह्मसायुज्ये आक्षिप्ते, हृदये भगवत्स्थितिः कुत्रोपयुज्यते ? तत्राऽऽह—यद्धियेति । हे उरुगाय, उरुभिर्गीयत इत्यनेकप्रकारेण निरूपितानन्तमूर्ते ! ते तव यद्यद्रूपं भक्ता विभावयन्ति, तत्तद्वपुर्ब्रह्मरूपम्, वैकुण्ठरूपम्, अवताररूपं वा; तदेव प्रकटीकरोषि । तत्र हेतुः—सदनुग्रहायेति । संश्चासावनुग्रहश्च । ज्ञानिष्वनुग्रहमात्रम्, अत्र सन्ननुग्रहोऽबाधितोऽनुग्रहः तदाऽत्रैव भगवति सायुज्यादिकं सर्वमेवोपपद्यते भक्तेच्छानुसारेण ॥ ११ ॥ ❀ ❀ एवं ज्ञानभक्तिमार्गौ निरूप्य साधननिरूपणे भक्तिसाधनापेक्षया ज्ञानमार्गसाधनं भगवत्तोषहेतुरुत्तममित्याह—नाऽतिप्रसीदतीति । साधनभक्तौ देवा मुख्याधिकारिणः, दिव्यानि च पुष्पादीनि साधनानि, तैर्न प्रसीदति । प्रसन्नोऽपि, तेभ्यः कामितं फलं प्रयच्छन्नपि, अत्यन्तं न प्रसीदति । तत्र हेतुः—हृदि बद्धकामैरिति । प्रसादस्तु, यदि भगवांस्तद्धृदये समागत्य तिष्ठति, तांश्च स्वकीयान् मन्यते, तदा भवति । तत्र तेंहृदये भगवत्स्थाने काम एव बलाद्बद्धो वर्त्तते । सहजश्चेत्कामो भवेदन्ततो भगवानपि दूरीकुर्यात् । स च बद्धः कामः कस्य-चिन्नाशं कृत्वा निवर्त्तते, बद्धो हि स्वकीयं सर्वस्वं प्रयच्छति । अतो दैत्यानां वधेच्छया पूजितो भगवान् दैत्यवधं कृत्वाऽपि न प्रसन्नो भवति । तत्र हेतुः—नानाजनेष्ववहितः सुहृदन्तरात्मेति । तर्हि केन प्रसीदतीत्याशङ्क्याऽऽह—यत्सर्वभूतदययेति । यद्यथा सर्वभूतदयया भगवान् परितुष्यति । सर्वभूतेषु साधारणी दया, न तु विशिष्टा; अशक्यत्वात् । स्वचित्ते तेषां हितभावनम्, भगवत्कृपाप्रार्थना, अनिषिद्धो वा दैहिकः; यदेवैकं कार्यं सर्वेषामेव हितं भवति तद्भगवत्तोषहेतुः । तर्हि सर्वे तदेव कथं न कुर्वन्ति, सुलभत्वाच्चेत्याशङ्क्याऽऽह—असदलभ्ययेति । इयं सर्वभूतदया असतामलभ्यैव, न कदाचिदपि तेषां हृदये दयोत्पद्यत इत्यर्थः । एतदेवाऽसल्लक्षणम् । उभयत्र हेतुत्रयम् । यतोऽयं भगवान् नानाजनेषु सात्त्विकादिनानाभेदभिन्नेषु अवहितः सावधानो भूत्वा तत्र स्थितः । स भगवांश्चेत् कचिदेव तिष्ठेत्तदा कचित्पूजया संतुष्टो भवेत् कचिदपराधे कचित्पूजायां तु न संतुष्यति । नहि पादे ताडितः शिरसि पूजितस्तुष्यति । किञ्च, अयं सर्वेषां सुहृत्, अतः कचिदपराधेऽपि न संतुष्यति । किञ्च, अन्तरात्मा चाऽयम् । अन्तःकरण-कृतैरेव पूजासाधनैः संतुष्यति, न बहिःकरणैः । अतो येनैव प्रकारेण भगवान् परितुष्यति, तदेव साधनम्; अन्यत्तु परम्परया । अपरितोषहेतुस्त्वसाधनमेवेति निश्चयः ॥ १२ ॥

१. गतत्वादिति नास्ति ख. ग. ङ. च । २. संचरन्ति ख. ग. घ. च । ३. योगे, ग ।

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

यावदित्यत्र। स एवेति। सायुज्यविशेष एव। नन्वेकजीववादे देहग्रहणाग्रहणे एव पृथक्त्वज्ञानस्य पूर्वोक्तावधी इति कथं सायुज्यस्यैवाऽवधित्वमित्यत आहुः—अन्य इत्यादि। सर्वथानुपपन्न इति। उत्क्रान्तिचरणविचारे जीवनानात्वस्य सिद्धत्वाच्छ्रुतिसूत्रादिविरोधादनुपपन्न इत्यर्थः। निष्पादनप्रयोजन[1]माहुः—भगवत इत्यादि। भगवत इवेति। भगवत्सम्ब(न्धी)न्धिनीव। अतो विशेषणमपि भगवदीयमितीति। भगवदाज्ञप्तत्वात् इन्द्रियार्थत्वरूपं मायाविशेषणमपि भगवदीयमतो हेतोरित्यर्थः। एवं कथनस्य प्रयोजनमाहुः—भगवदीयत्वादित्यादि॥ ९॥ ❀ ❀ अह्नीत्यत्र। अधिकारिण इति षष्ठी। ननु ऋषीणां कुत ईदृशी दशेत्यपेक्षायामाहुः—भगवानित्यादि। अयमर्थो मूले कस्मात्पदात् सिध्यतीत्यपेक्षायामृषिपदविचारादेव सिध्यतीत्याशयेनाऽऽहुः—ते हीत्यादि। ननु वाक्यार्थविचाराणां भगवत्सायुज्याद्यभावे सद्योमुक्तिबोधकश्रुतिविरोध इत्यत आहुः—याऽपीत्यादि। अत्र गमकमाहुः—अत एवेत्यादि। तदेवेति। क्रममुक्तावचान्तरफलभूतं प्रसादपदेनाऽत्र परामृश्यत इत्यर्थः॥ १०॥ ❀ ❀ त्वमित्यत्र विष्णुलोकप्राप्तिरिति। सत्त्वाभिमानलोकप्राप्तिः। ब्रह्मणा सहेति। मुक्तिरिति शेषः। तत्रेति। कामादिजनितस्याऽप्युपायत्वे। वक्ष्यत इति। हेतुत्वेन वक्ष्यते। शोधितमित्यस्य तद्धृदयमित्यनेन सम्बन्धः। श्रवणसहितेन्द्रियेणेति। श्रवणसहितमनसा, श्रोत्रेण वा। ११॥ ❀ ❀ नाऽतिप्रसीदतीत्यत्र। यदात्मकनिषिद्धं दैहिकं धर्मं स्फुटीकुर्वन्ति—यदेवैकमित्यादि। उभयत्रेति। संतोषेऽसंतोषे च॥ १२॥

### श्रीगिरिधरकृता बालप्रबोधिनी

तेषां दुःखमेव स्पष्टयन् स्वजन्यत्वात् तद्दुःखदर्शनेन स्वखेदमाह—क्षुदिति। क्षुत् अशनाया, तृट् पिपासा, इमे शोकमोहजरामृत्यूनामप्युपलक्षणम्। एवं क्षुदादिषडूर्मयः त्रिधातवः वातपित्तश्लेष्माणस्तैः, तथा शीतादिभिः इतरेतरात् भार्यापुत्रादिसम्बन्धिषु परस्पराच्च काम एव अग्निवद्दुःपूरत्वेनाग्निस्तेन सुदुर्भरेण दुस्सहेन अच्युतरुषा चाविच्छन्नक्रोधेन च मुहुः पुनःपुनरर्द्यमानाः पीड्यमानाः इमाः प्रजाः सम्पश्यतो मे मनः सीदते इत्यन्वयः। आत्मनेपदमार्षं, क्लिश्यतीत्यर्थः। एतन्निराकरणे त्वमेव समर्थोऽसि अनन्तप्रभावत्वादिति सूचयन् सम्बोधयति—उरुक्रमेति॥ ८॥ ❀ ❀ ननु क्षुत्तृषौ प्राणस्य धर्माविति ताभ्यां प्राणस्य वातपित्तादिभिर्देहस्य कामक्रोधादिभिरन्तःकरणस्य पीडा सम्भवति तत्कथमात्मनः पीडेत्युच्यते इत्याशङ्क्य देहादावात्माध्यासादित्याशयेनाह—यावदिति। भगवतस्तव इन्द्रियाणि अर्थाः आकाशादिपदार्थास्तद्रूपेण परिणता या माया प्रकृतिरूपा तस्या बलं यस्मिन् तदिदं पृथक्त्वं देहेन्द्रियान्तःकरणादिभावमात्मनः स्वस्य यावज्जनः पश्येत्तावत् व्यर्थापि देहाद्यध्यासद्वारा आत्मन्यध्यस्ताऽप्यसौ जन्ममरणादिलक्षणा संसृतिर्न प्रतिसङ्क्रमेत न निवर्त्तते किन्तु दुःखनिवहं आत्मनो दुःखसमूहं वहती प्रापयती सत्येवं तिष्ठतीत्यन्वयः। ननु दुःखसुखादिवैलक्षण्ये को हेतुरन्यथा सर्वसाम्यं स्यादित्याशङ्क्य स्वस्वकृततत्कर्मैवेत्याशयेनाह—क्रियार्थेति। तत्तत्क्रियाणामर्थः फलं यस्यां सा तथेत्यर्थः। मायाधीशत्वात्तन्निवारणेन संसृतिनिवारणे त्वमेव समर्थोऽसीति सूचयन् सम्बोधयति—ईशेति। त्वदिदमिति पाठे यावदिदमिन्द्रियार्थमायावलं विश्वं ततः पृथक् पश्येत्तावदसौ संसृतिर्नोपरमेतेत्यन्वयः। अन्यत्समानम्॥ ९॥ ❀ ❀ ननु शास्त्रसंस्काररहितानामेवमध्यासेन संसृतिर्भवतु शास्त्रिणां तु सा कथं स्यादित्याशङ्क्याह—अह्नीति। तव क्रीडाया अद्भुतत्वं किं वक्तव्यमित्याशयेन सम्बोधयति—देवेति। युष्मत्प्रसङ्गात् श्रवणकीर्तनादेः सकाशाद्विमुखा ऋषयो मन्त्रद्रष्टारः शास्त्रिणोऽपि इह जगति संसरन्ति जन्ममरणादिदुःखान्यनुभवन्तीत्यन्वयः। तेषां दुःखानुभवमेव प्रपञ्चयति–अह्नि दिवसे आप्तानि अतएव आर्तानि पीडितानि करणानि इन्द्रियाणि येषां ते। एवमिति तेषां फलप्राप्तिर्नास्तीत्याह–दैवेन प्रारब्धकर्मणा आहता सर्वतः प्रतिहता अर्थरचना अर्थार्थोद्यमा येषां ते। तेषां रात्रौ निद्रासुखमपि नास्तीत्याह–निशि रात्रौ निश्शयाना अपि नानामनोरथविषयिण्या धिया स्वप्नदर्शनेन क्षणे क्षणे भग्ना निद्रा येषां तथा भवन्ति॥ १०॥ ❀ ❀ तदेवं 'यो नादृतो नरकभाग्भिः' इत्युक्तमभक्तानां संसारदुःखं प्रपञ्च्य इदानीं 'ये तु त्वदीयचरणाम्बुजकोशगन्धं' इत्युक्तं भगवत्सौलभ्येन भक्तानां परमानन्दप्राप्त्या कृतार्थत्वं स्पष्टयति—त्वमिति। त्वं स्वामी चेदनुग्रहं न कुर्यास्तदा को वा तत्कुर्यादिति सूचयन्सम्बोधयति—नाथेति। पुंसां स्वभक्तानां भावो भक्तिरेव योग उपायस्तेन परिभाविते संशोधिते हृत्सरोजे हृदयकमले त्वमास्से तिष्ठसि। नन्विति निश्चयेन, ततः कदापि नापसरसीत्यर्थः। तैर्भक्तियोग एव कथं जात इत्यपेक्षायामाह–श्रुतेति, श्रुतेन श्रवणेनेक्षितो ज्ञातः पन्थाः प्राप्तिमार्गो यस्य स इत्यर्थः। एवं हृदयकमले निवासेऽपि किमित्यपेक्षायामाह—यद्यदिति। ते त्वद्भक्ता यद्यद्वपुर्धिया विभावयन्ति ध्यायन्ति सदनुग्रहाय सतां तेषां स्वभक्तानामनुग्रहाय परमानन्ददानाय त्वं तत्तदेव वपुः प्रणयसे प्रकटयसीत्यर्थः। तेषां तद्वपुर्ज्ञानमेव कथमित्यपेक्षायां शास्त्रेऽनन्तरूपेण गीतत्वात्ततस्तज्ज्ञानमित्याशयेन सम्बोधयति—उरुगायेति॥ ११॥ ❀ ❀ एवं भक्तानां भगवत्कृपापात्रत्वमुक्तं तत्रापि सकामभक्तेभ्यो निष्कामेषु भक्तेषु विशेषमाह—नेति। यत् यथा सर्वभूतेषु या दया स्वप्रयोजननिरपेक्षतद्दुःखनिराकरणेच्छा तया भवानतिप्रसीदति तथा हृदि बद्धकामैः सुरगणैः कर्तृभिः

---

१. प्रयोजनमित्याहुः पा. प्रयोजनमिममाहुः पा.

उपचितैः पुष्कलैरुपचारैः साधनैराराधितो न प्रसीदतीत्यन्वयः । सकामानामपि तत्तत्कामितफलप्रदानं कुर्वन्नपि निष्कामाणामिवात्मप्रदो न भवतीति सूचयन्नाह—अतीति । तर्हि महाफलत्वात्सर्वे सर्वत्र दयामेव कुतो न कुर्वन्तीत्यपेक्षायामाह–असदलभ्ययेति, असद्भिः सकामैर्लब्धुमशक्ययेत्यर्थः । अप्रसादे हेतुमाह–सुहृदिति, नहि सर्वमित्रभूतो द्वेषिषु प्रसन्नो भवितुमर्हः । सर्वान्तरात्मत्वे हेतुमाह–सकामानां च द्वेषित्वस्यावश्यम्भावित्वादिति भावः । अप्रसादे हेत्वन्तरमाह–अन्तरात्मेति । नहि सर्वान्तरात्मा कुत्रचित्पूजायां कुत्रचिद् द्वेषे च प्रसन्नो भवितुमर्हतीति भावः । नानेति, नानाजनेष्ववहितः प्रविष्ट एक इत्यन्वयः ॥ १२ ॥

### हिन्दी अनुवाद

अच्युत ! उरुक्रम ! इस प्रजाको भूख-प्यास, वात, पित्त, कफ, सर्दी-गर्मी, हवा और वर्षासे, परस्पर एक-दूसरेसे तथा कामाग्नि और दुःसह क्रोधसे बार-बार कष्ट उठाते देखकर मेरा मन बड़ा खिन्न होता है ॥ ८ ॥ ❀ ❀ स्वामिन् ! जबतक मनुष्य इन्द्रिय और विषयरूपी मायाके प्रभावसे आपसे अपनेको भिन्न देखता है, तबतक उसके लिये इस संसारचक्रकी निवृत्ति नहीं होती । यद्यपि यह मिथ्या है, तथापि कर्मफल-भोगका क्षेत्र होनेके कारण उसे नाना प्रकारके दुःखोंमें डालता रहता है ॥ ९ ॥ ❀ ❀ देव ! औरोंकी तो बात ही क्या—जो साक्षात् मुनि हैं, वे भी यदि आपके कथाप्रसङ्गसे विमुख रहते हैं तो उन्हें संसारमें फँसना पड़ता है । वे दिनमें अनेक प्रकारके व्यापारोंके कारण विक्षिप्तचित्त रहते हैं, रात्रिमें निद्रामें अचेत पड़े रहते हैं; उस समय भी तरह-तरहके मनोरथोंके कारण क्षण-क्षणमें उनकी नींद टूटती रहती है तथा दैववश उनकी अर्थसिद्धिके सब उद्योग भी विफल होते रहते हैं ॥ १० ॥ ❀ ❀ नाथ ! आपका मार्ग केवल गुण-श्रवणसे ही जाना जाता है । आप निश्चय ही मनुष्योंके भक्तियोगके द्वारा परिशुद्ध हुए हृदयकमलमें निवास करते हैं । पुण्यश्लोक प्रभो ! आपके भक्तजन जिस-जिस भावनासे आपका चिन्तन करते हैं, उन साधु पुरुषोंपर अनुग्रह करनेके लिये आप वही-वही रूप धारण कर लेते हैं ॥ ११ ॥ ❀ ❀ भगवन् ! आप एक हैं तथा सम्पूर्ण प्राणियोंके अन्तःकरणोंमें स्थित उनके परम हितकारी अन्तरात्मा हैं । इसलिये यदि देवतालोग भी हृदयमें तरह-तरहकी कामनाएँ रखकर भाँति-भाँतिकी विपुल सामग्रियोंसे आपका पूजन करते हैं, तो उससे आप उतने प्रसन्न नहीं होते जितने सब प्राणियोंपर दया करनेसे होते हैं । किन्तु वह सर्वभूतदया असत् पुरुषोंको अत्यन्त दुर्लभ है ॥ १२ ॥

**पुंसामतो त्रिविधकर्मभिरध्वराद्यैर्दानेन चोग्रतपसा व्रतचर्यया च ।**
**आराधनं भगवतस्तव सत्क्रियार्थो धर्मोऽर्पितः कर्हिचिद्‌ध्रियते न यत्र ॥ १३ ॥**
**शश्वत्स्वरूपमहसैव निपीतभेदमोहाय बोधधिषणाय[1] नमः परस्मै ।**
**विश्वोद्भवस्थितिलयेषु निमित्तलीलारासाय ते नम इदं चकृमेश्वराय ॥ १४ ॥**
**यस्यावतारगुणकर्मविडम्बनानि नामानि येऽसुविगमे विवशा गृणन्ति ।**
**ते नैकजन्मशमलं[2] सहसैव हित्वा संयान्त्यपावृतमृतं तमजं प्रपद्ये ॥ १५ ॥**
**यो वा अहं च गिरिशश्च विभुः स्वयं च स्थित्युद्भवप्रलयहेतव आत्ममूलम् ।**
**भित्त्वा त्रिपाद्ववृध एक उरुप्ररोहस्तस्मै नमो भगवते भुवनद्रुमाय ॥ १६ ॥**

### श्रीधरस्वामिविरचिता भावार्थदीपिका ।

यतः सकामानां भवान्नातिप्रसीदत्यतः कामप्राप्तिः क्रियाणामुत्तमं फलं न भवति, किंतु त्वत्प्रीणनमेव । कामसंयोगस्त्ववांतरफलेन प्ररोचनार्थमित्याह । पुंसामिति । भगवतस्तवाराधनमेव संश्चासौ क्रियार्थश्च श्रेष्ठं क्रियाफलम् । श्रेष्ठत्वे हेतुः । यत्र त्वय्यर्पितो धर्मो न कदाचिद् ध्रियते न नश्यति कामार्थस्तु धर्मः कामं दत्त्वा नश्यतीत्यर्थः ॥ १३ ॥ ❀ ❀ अतस्त्वामेव वयं नता इत्याह । शश्वत्सर्वदा स्वरूपचैतन्येनैव निरस्तभेदभ्रमाय पुनश्चाबोध एव धिषणा विद्याशक्तिर्यस्य यद्वा बोध एव धिषणम् आश्रयः, अत एव परस्मै । अत्र हेतुः । विश्वोद्भवादिनिमित्तं या माया तस्या लीला विलासस्तथा रासः क्रीडा यस्य ते तुभ्यमिदं नमो नमनं चकृम कृतवंतो वयम् ॥ १४ ॥ ❀ ❀ नामग्रहणमात्रतः कैवल्यप्रदत्वेनैश्वर्यं व्यंजयन्नमस्करोति । यस्येति । अवतारादीनां विडंबनमनुकरणमस्ति येषु तत्रावतारविडंबनानि देवकीनंदन इत्यादीनि गुणविडंबनानि सर्वज्ञो भक्तवत्सल इत्यादीनि कर्मविडंबनानि गोवर्धनोद्धरणः कंसारातिरित्यादीनि । असुविगमेऽपि विवशा अपि गृणंत्युच्चारयंति केवलं शमलं पापम् अपावृतं

---

१, बोधविषयाय । २, प्रा० पा०—जन्मजमलं ।

निरस्तावरणम् ऋतं ब्रह्म प्राप्नुवंति ॥ १५ ॥ ❀ ❀ तत्र गुणावतारकर्माणि दर्शयन्प्रणमति । यो वै एकस्त्रिपात्त्रयो ब्रह्मादयः पादाः स्कंधा यस्य प्रत्येकं च उरवः प्ररोहाः शाखोपशाखा मरीच्यादिमन्वादिरूपा यस्य तथाभूतः सन्ववृधे । तस्मै भुवनाकाराय द्रुमाय नमः । किं कृत्वा ववृधे आत्मा स्वयमेव मूलमधिष्ठानं यस्य तत्प्रधानं भित्त्वा गुणत्रयरूपेण विभज्य त्रिपात्त्वमेवाह । अहं ब्रह्मा गिरीशश्च स्वयं विभुर्विष्णुश्चेति स्थित्युद्भवप्रलयहेतवो ये वयं एवं त्रिपाद्भूत्वा यो ववृध इत्यर्थः ॥ १६ ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

भक्तौ यतो निष्कामाः श्रेष्ठा अतः केवलं भक्त्यशक्तावपि प्रधानीभूता लौकिकवैदिककर्मार्पणरूपापि भक्तिर्निष्कामैव कार्येत्याह—विविधकर्मभिर्लौकिकैर्वैदिकैरध्वराद्यैश्च त्वदर्पितैराराधनं "यत्करोषि यदश्नासि" इति भगवता शिक्षितमित्यर्थः । अत्र प्रधानीभूतायां भक्तौ लौकिकवैदिकनिखिलकर्मार्पणं गुणीभूतायां वैदिकस्यैव न तु लौकिकस्य केवलायां लौकिकस्य कथाश्रवणकीर्त्तनादेश्चार्पितस्यैव कारणमिति भेदो द्रष्टव्यः । ह्रतेः कर्मकर्त्तरि प्रयोगो ह्रियत इति । इत्यर्थ इति विनाशिधर्मसेवने न किमपि सिध्यतीति भावः ॥ १३ ॥ ❀ ❀ यतस्त्वदर्पितधर्मो न ह्रियतेऽतो हेतोः स्वरूपचैतन्येनैवागस्त्येनेव निपीतो भेदे मोहसमुद्रो जीवादिभिः सह तव भेदो न संभवतीति भ्रमो येनेति विश्वनाथगोस्वामिनौ । तीर्थश्च स्वरूपज्ञानेनैव "तद्ब्रह्मावेदहं ब्रह्मास्मि" इति श्रुतेर्निपीतभेदमोहाय सम्यङ्निरस्तेशापूर्णतादिषड्विधभेदमोहाय "ईशस्यापूर्णताज्ञानं विष्णोरन्यस्य चेशता । भेदस्तस्यावतारेषु जीवस्येशत्वमेव च ॥ तथा जीवत्वमीशस्य जडाभेदस्तयोरपि । भेदमोह इति प्रोक्तः स सदा न हरेः क्वचित् ॥ अन्येषां तत्प्रसादेन शनैर्याति सतामपि" इति तन्मतग्रंथोक्तेः । विद्याशक्तिर्बुद्धिः, धिषणाशब्दस्य लिंगांतरेऽर्थांतरमाश्रित्याह यद्वेति । धिषणो जीव 'आधारे धिषणा धियि योषिति' इति कोशात् । अत एव बोधाश्रयत्वादेव अत्र परत्वे क्रीडाऽवलोकनद्वारा ज्ञेया । यद्वा निमित्तेति संबुद्धिः हे कारणरूप ! लीलया रासो गोपीजनसंगतो लास्यविशेषो यस्य तस्मै "परार्द्धांते सोऽबुध्यत गोपवेशो मे पुरस्तदाविर्बभूव" इति श्रुतेः । कामदुघांघ्रिपद्मं प्रदर्शयंतम्" इति पूर्वोक्तेश्च । सविशेषस्वरूपेष्वपि श्रीकृष्णस्यैव परमपूर्णत्वात्परमाश्रयत्वं ज्ञापितम् । प्राचीनपुण्यराशेरिदानीमपि भगवद्दर्शनं प्राप्तमिति सूचयितुं चक्रमेति लिट्प्रयोगः ॥ १४ ॥ ❀ ❀ आदिना यशोनंदनादिग्रहः । द्वितीयादिना दीनबंध्वादिग्रहः । तृतीयादिना सेतुकारीत्यादिग्रहः । असुविगमे प्राणोत्क्रमणसमये एतेनोपास्योपासनागंधाभावेपि पंगुतुल्येभ्योऽपि स्वपददानात्त्वत्समकृपालुताऽन्यत्र नास्तीति ध्वनितम् । यद्वा अवतारादिसदृशानि तत्तुल्यशक्तीनीति भावः । यद्वाऽवतारादीनां विडंबनं नटादिष्वनुकरणमपि यैस्तानि । यद्वा अवतारादिविडंबनानि स्वभ्रातृपुत्रादिजीवविशेषवाचकत्वादवतारााद्यनुकरणानीत्यर्थः । तत्र कृष्णोऽयं रामोऽयं नारायणोयमित्यादीन्यवतारविडंबनातिदयालुर्दीनबंधुर्दामोदर इत्यादीनि गुणविडंबनानि गोविंदो गिरिधरो मधुसूदन इत्यादीनि कर्मविडंबनानि अजामिलादय इव केवलमुच्चारयंति न तु ध्यायंति । ऋतं सच्चिदानंदं भगवंतमेव "आत्मतत्त्वविशुद्ध्यर्थं यदाह भगवानृतम् । दर्शयन्ब्रह्मणे रूपम्" इत्यत्र तथैव व्याख्यानात् ॥ १५ ॥ ❀ ❀ तत्राधुना गुणावतारा ब्रह्मादयः । इत्यर्थ इति । 'य एक एव रूपंरूपं प्रतिरूपो बभूव' इत्यादिश्रुतेर्बहुरूपो भूत्वा जगदाकारतां प्राप तस्मै नम इति भावः । अत्र विभुर्विष्णुः । स्वयं चेति । विष्णौ स्वयंपदप्रयोगाद्ब्रह्मगिरिशयोरिव विष्णोर्गुणनिबंधनः स्वतो भेदो नास्तीति द्योतितम् । यद्वा येऽहमादयः य एवात्मनः स्वस्यापि मूलं कारणं तथा य एव भित्त्वा स्वशक्तिकृतं भेदं प्राप्य त्रिपात् प्रथमं त्रिलोकरूपस्तत उरुप्ररोहश्चतुर्दशलोकरूपस्तस्मै भुवनाकाराय द्रुमाय सर्वव्यापिने नम इति विश्वरूपत्वमुक्तम् ॥ १६ ॥

## श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

प्रीणनमेवाराधनमेवोत्तमं फलं कामसंयोगः स्वर्गकामो यजेतेत्यादिमनोरथसंबन्धः । अवान्तरफलेन गौणफलेन प्ररोचनार्थं खण्डलड्डुकादिभिः बालस्येव प्रलोभनार्थमेव धर्मो यागादिः न नश्यति किन्त्वाराधनरूपेण परिणमतीत्यर्थः ॥ १३ ॥ ❀ ❀ अतस्त्वत्प्रीतेः परमपुरुषार्थत्वात् स्वरूपचैतन्येनैव स्वरूपभूतज्ञानेनैव निरस्तस्सजातीयविजातीयभेदभ्रमो यस्मिंस्तथा भूताय अन्यत्र विद्याशक्तिः प्राकृतसत्त्वात्मिका भगवति तु बोधश्चिच्छक्तिरेव विद्याशक्तिर्यस्य पूर्वार्थे बोधधिषणाशब्दयोस्सपर्य्यायत्वेन पौनरुक्त्यप्रतीतिरतो यद्वेति । तथा स्वरूपभूतो बोधो ज्ञानशक्तिस्तस्याश्रयाय अत एव चिच्छक्त्याश्रयत्वादेव मायातः परस्मै तदनभिभूताय तदुक्तं श्रीमदर्जुनेन 'मायां व्युदस्य चिच्छक्त्या कैवल्ये स्थित आत्मनी'ति । अत्र परत्वे विलासः सृष्ट्यादिक्रियोत्पादकरजआदिवृत्तिविशेषः, तया लीलया तया च नमनादिभक्त्यैव त्वत्प्रीतिर्नान्यथेत्यर्थः ॥ १४ ॥ ❀ ❀ आदिना यशोदानन्दनेत्यादि गुणविडम्बनेष्वादिना दयालुर्दीनबन्धुर्दामोदर इत्यादीनि पुनरादिना गोविन्दमधुसूदनादिग्रहः असुविगमेऽपीत्यपिना तदानींतनमात्रत्वेऽपि अशुद्धवर्णत्वेऽपि तथा सामर्थ्यं व्यञ्जितम् । विवशा अपि 'वशः कान्तावि'त्यमरसिंहात् तदिच्छारहिता अपि अजामिलादिवत्केनचित्कारणान्तरेणापीत्यर्थः । अत एव केवलमुच्चारयन्ति न तु तदर्थमाधुर्य्यादिग्रहः ॥ १५ ॥ ❀ ❀ तत्र तेषु कर्मसु मध्ये एवं भूत्वेत्यध्याहारयोजनागौरवादित्यर्थ इत्युक्तम् ॥ १६ ॥

## श्रीमद्वीरराघवव्याख्या

यतोऽभिसंहितफलैरुपचारैर्नातिप्रसन्नः अत एव सत्कर्मणामीश्वराराधनवेषेणानुष्ठानं कार्यमित्याह पुंसामिति । अतोऽभिसंहितफलानां कर्मणामीश्वराप्रसत्तिहेतुत्वात् सर्वात्मकब्रह्मोपासनस्यैव तत्प्रसादहेतुत्वाच्च हेतोः पुंसां भगवन्तमाराधयितॄणां संबन्धिभिरध्वराद्यैर्यज्ञादिभिः नानाविधश्रौतस्मार्तकर्मभिर्दानादयः प्रदर्शनार्थाः तपःकृच्छ्रचान्द्रायणादिव्रतचर्या व्रतानुष्ठानमेभिर्भगवतस्तव यदाराधनं तत्सत्क्रियार्थः सत्क्रियाणां सत्कर्मणामर्थः प्रयोजनं त्वदाराधनैकप्रयोजनवेषेण सर्वाणि कर्माण्यनुष्ठेयानीत्यर्थः । एवंविधकर्मानुष्ठानस्याक्षयिष्णुफलसाधनत्वमाह । धर्मः यज्ञादिरूपः यत्र यस्मिंस्त्वय्यर्पितः त्वत्सत्कारैकप्रयोजनः नतु स्वर्गादिफलद इति बुद्ध्या त्वय्यर्पितः कर्हिचित्कदाचित्कथंचिदपि न म्रियते न विनश्यति भगवदुपासनद्वारा नित्यपुरुषार्थहेतुर्भवतीत्यर्थः । तथा च गीतं भगवता "नेहाभिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते । स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात्" इति ॥ १३ ॥ ❀ ❀ एवमनभिसंहितफलकर्मयोगस्य भगवदाराधनरूपस्याक्षयफलसाधनत्वमभिधाय तस्यैव प्रकृतिविविक्तात्मयाथात्म्यज्ञानपूर्वकानुष्ठेयत्वमुभयोरपि भगवदुपासनाङ्गत्वमुपासनस्य कारणविषयत्वं चाभिप्रयन्नमस्करोति शश्वदिति । शश्वत्सदा स्वरूपमहसैव प्रकृतिविविक्तात्मस्वरूपयाथात्म्यज्ञानेनैव भेदः देवमनुष्यादिभेदः मोहः देहात्मभ्रमादिनिमित्तमज्ञानम् , आदिशब्देन तत्प्रयुक्तशोकादयो विवक्षिताः, निरस्ता भेदादयो येषां योगिनां तेषु योऽवबोधः स्वस्वरूपविषयकं ज्ञानं धिषणा भगवदुपासनात्मिका बुद्धिः, एते स्वप्राप्त्युपायभूते यस्य तस्मै प्रकृतिविविक्तात्मस्वरूपयाथात्म्यज्ञाननिरस्तभेदमोहप्रभृतिसांसारिकधर्मयोग्युपद्दतज्ञानयोगकर्मयोगाङ्गकोपासनाविषयभूतायेत्यर्थः । यद्वा चतुर्थ्यन्तपाठे स्वरूपाविर्भावेन स्वस्मिन्नसंस्पृष्टदेवमनुष्यादिभेदरूपमोहाय अन्तरात्मतयावस्थितस्याप्यनात्मगतदोषास्पृष्टायेत्यर्थः । अत एव परस्मै प्रकृतिपुरुषविलक्षणाय तत्र हेतुः विश्वस्य जगतः स्थितिलयेषु निमित्तभूता या लीला क्रीडा तस्या रागो रसो यस्य तस्मै ईश्वराय नियन्त्रे प्रकृतिपुरुषयोरसंभावितस्वलीलैकप्रयोजनजगद्व्यापारायेत्यर्थः । अनेन प्रकृतिपुरुषविलक्षणतन्नियन्तृजगत्कारणविषयकोपासनमेव मुक्तिसाधनमित्यभिप्रेतम् । एवंभूताय ते तुभ्यं नमश्चकृमहे नमः करवाम ॥ १४ ॥ ❀ ❀ ननु परिपूर्णस्यावाप्तसमस्तकामस्य लीलार्थमपि जगद्व्यापारो नोपपद्यत इत्याशङ्क्य भवभयाभितप्तसांसारिकजीवानुजिघृक्षया संघटते इत्यभिप्रयंस्तदवतारगुणकर्मणामनुवचनस्य तत्प्राप्त्युपायतामाविष्कुर्वञ्छरणं व्रजति यस्येति । यस्य तवावतारगुणकर्मणां विडम्बनान्यनुकरणानि देवकीनन्दन दाशरथे सर्वज्ञ भक्तवत्सल गोवर्द्धनधर कंसारे रावणान्तक इत्यादीन्यसुविगमे प्राणोत्क्रमणकाले विवशाः परवशाः अपि ये गृणन्त्युच्चारयन्ति तेऽनेकजन्मार्जितं शमलं पुण्यपापरूपं सहसा अचिरेण हित्वा विधूयापावृतं निरस्तावरणम् ऋतं ब्रह्म संयान्ति प्राप्नुवन्ति तमजं कर्मायत्तोत्पत्त्यादिरहितं त्वां शरणमुपायं प्रपद्येऽध्यवस्यामि । अनेन भक्त्याऽसुविगमानुस्मरणादीनां तत्प्रसत्तिमात्रहेतुत्वम् उपायत्वं तु भगवत एवेत्यभिप्रेतम् । तथा च श्रूयते "अमृतस्यैष सेतु" रिति सेतुः प्रापकः स्वकीयावतारगुणकर्मप्रतिपादकनामाद्यनुस्मरणादिना निस्तरेयुरित्यनुजिघृक्षयैव भगवतो जगद्व्यापार इति भावः ॥ १५ ॥ ❀ ❀ भवतु भगवद्गुणकीर्तनादेस्तत्प्राप्त्युपायत्वमथापि सृष्ट्यादिव्यापाराणां चतुर्मुखादिकर्तृकत्वश्रवणात्कथं विश्वोद्भवस्थितिलयेषु निमित्तलीलारसायेत्युक्तमत आह य इति । प्रथममेकः अविभक्तनामरूपः स्थित्युद्भवप्रलयानां हेतवः कर्त्तारः स्वयं विभुर्भगवानहं ब्रह्मा गिरीशो रुद्रश्च यो वै भगवानेवेत्यर्थः हिरण्यगर्भरुद्रतन्मध्यवर्त्यवताररूपवानित्यर्थः । स्वयमित्यनेन स्थितिं स्वावताररूपेण सृष्टिसंहारौ ब्रह्मरुद्राख्यजीवान्तःप्रवेशेन करोतीति द्योतितं सृष्टिं ततः करिष्यामीति स्मरणात् । स्थित्युद्भवप्रलयहेतवे इति चतुर्थ्यन्तं वा भावप्रधानो निर्देशः स्थित्यादिकर्तृत्वाय हिरण्यगर्भरुद्रस्वावतारतया भूत्वेत्यर्थः आत्ममूलमात्मैव मूलं यस्य तदात्ममूलमकार्यमित्यर्थः एवंभूतां हि त्रिपाद्विभूतिं हित्वाऽतीत्य भित्त्वेत्यपि पाठेऽयमेवार्थः। यद्वा स्थित्यादिहेतुभूतस्वावतारादिरूपेण त्रिस्कन्धः आत्ममूलं प्रधानं भित्त्वा महदादिसमष्टिप्रभृतिव्यष्टिपर्यन्तं परिणमय्य उरुप्ररोहः देवतिर्यङ्मनुष्यस्थावरादिरूपाः शाखोपशाखाः पत्रपुष्पफलादयो यस्य स एवंभूतो यः प्रववृधे तस्मै भुवनद्रुमाय भुवनाकारद्रुमाय भगवते नमः । हिरण्यगर्भादिरूपेण सृष्ट्यादिव्यापारस्त्वयैव क्रियत इत्यभिप्रायः ॥ १६ ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

न केवलं निष्कामतया कृतं भगवत्प्रसादजनकं किंतु भगवदर्पणसहितमित्याह पुंसामिति । पुरुषैर्यत्र येषु यज्ञादिषु सत्क्रियार्थस्तव पूजाप्रयोजनाद्दष्टाख्यो धर्मो यत्र यस्मिन् त्वय्यर्पितो न क्रियते तेषां पुंसामध्वराद्यैः क्रियमाणं भगवदाराधनं प्रसादजनकं न भवतीत्यन्वयः ॥ १३ ॥ ❀ ❀ हरेस्तत्त्वाज्ञानादुत्पन्नो यो न ज्ञायते गतिरित्यादिरूपः संसारस्तन्निवर्तकोपास्तौ तादृग्गुणोपसंहारः कर्तव्य इत्याह शश्वदिति । देवदत्तवदेकदापि भेदमोहोऽस्तीत्यन्यथा प्रतीतिनिरासाय शश्वदिति परोपदेशमन्तरेण स्वरूपज्ञानेनैव "तद्ब्रह्मावेद् अहं ब्रह्मास्मी"ति श्रुतेर्निपीतभेदमोहाय सम्यक् निरस्तेशापूर्णतादिषड्विधभेदमोहाय :—

> ईशस्यापूर्णताज्ञानं विष्णोरन्यस्य चेशता । भेदस्तस्यावतारेषु जीवस्येशत्वमेव च ॥
> तथा जीवत्वमीशस्य जडाभेदस्तयोरपि । भेदमोह इति प्रोक्तः स सदा न हरेः क्वचित् ॥
> अन्येषां तत्प्रसादेन शनैर्याति सतामपि ॥

इत्यादिवचनात्स्वतो मोहाभावेऽपि प्राकृतबुद्ध्या स स्यादिति तत्राह बोधेति । अप्राकृतज्ञानरूपबुद्धये नन्वेतज्जीवस्याप्यस्तीत्यत उक्तं परस्मा इति । स्वनियतकालप्रकृतित्वेन ततो विलक्षणत्वेन दूरीकृततदुपद्रवत्वेन जीवस्य तद्वशत्वात्कर्मवशत्वात्तन्मग्नत्वात् अलौकिकं तद्वस्तु लक्षणमन्तरेण ज्ञातुमशक्यमिति मन्वानो जगत्कर्तृत्वादिलक्षणविशिष्टत्वेन नमति विश्वेति । निमित्तभूता लीला शृङ्गारचेष्टा तस्या आरामाय क्रीडावनाय ते तुभ्यम् एवंविधलक्षणवतः किंनामेत्यत उक्तम् ईश्वरायेति । प्राक्कालीनजन्मप्रचितपुण्यराशेरिदानीमपि भगवद्दर्शनं प्राप्तमिति सूचयितुं चक्रमेति लिट्प्रयोगः ॥ १४ ॥ ❀ ❀ भगवतोऽवताराणां गतिरपि न ज्ञायत इत्येतदपि मतं दुष्टं यतो मूलस्वरूपवदवताराणामपि मुक्त्यादिदानसामर्थ्यं दृश्यते तस्मादिति भावेनाह यस्येति । यथा हराववतारभेदमोहो नास्तीति तथा तत्प्रसादात्तदीयेष्वपि नास्तीति द्योतयन्निति वा स्तौति यस्येति । असुविगमे प्राणप्रयाणकाले विवशा भक्तिविवशाः अनेन पूर्वाभ्यासपाटवं दर्शयति—

ये भक्त्या विवशा विष्णोर्नाममात्रैकजल्पकाः । तेऽपि मुक्तिं व्रजन्त्याशु किमुत ध्यायिनः सदा ॥

इति कैमुत्यन्यायसिद्धत्वाद्बलवत्प्रतिबन्धकात्तत्काले मुक्त्यभावेऽपि कालान्तरे निश्चितेति सहसेति अपावृतं स्वाच्छादकमायावरणरहितं सृष्टिप्रलयादिषु विकाराराहित्यादृतं ऋतत्वे हेतुरजमिति ॥ १५ ॥ ❀ ❀ सृष्टिप्रलयहेत्वोर्भवतः शिवस्य च जाग्रतोः सतोर्हरेर्विश्वोद्भवादिलीलारामत्वं कथमिति तटस्थशङ्कां परिहर्तुमाह यो वा इति । चशब्दाः समुच्चयार्थाः अनन्तासनवैकुण्ठक्षीराब्धिस्थो हरिस्त्रिपादिति एको हरिरात्मा नारायणो मूलं कारणं येषां ते आत्ममूलाः । यो वा विभुः स्वयं विष्णुर्यो वा अहं मदन्तर्यामी ब्रह्माख्यो यश्च गिरिशाख्यः शिवान्तर्यामी स्थित्युद्भवप्रलयहेतवो भूत्वाऽवतीर्य सृज्यपदार्थानां नानाविधत्वात्तेषु अन्तर्यामित्वेनोरुप्ररोहो बहुरूपो ववृधे तस्मै भुवनद्रुमाय नम इत्यन्वयः । वृक्षसाधर्म्यकथनेन विकारित्वमुक्तमिति विभ्यच्चतुर्मुखो भगवत इत्याह नायं लोकद्रुमवद्विकारी किंतु ऐश्वर्यादिगुणविग्रह इति तस्माद्बुद्ध्यवताराय तथोक्तमिति भावः । वा इत्यनेन

ब्रह्मादिभावो विष्णोस्तु तन्नियामकता भवेत् । मत्स्यादितास्वभावस्तु नान्यथा क्वचिदिष्यते ॥

इति प्रमाणसिद्धिं सूचयता मत्स्यादिवदेतौ न साक्षात्स्वरूपे इति ज्ञापितम् ॥ १६ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

आस्तां तावत् पूजादौ निष्कामत्वं विविधकर्म्मादावपि तदेवोत्तममित्याह पुंसामिति । आराधनं प्रीणनम् । न म्रियते सदा त्वत्प्रीतिं ददद्देव तिष्ठतीत्यर्थः ॥ १३ ॥ ❀ ❀ शश्वदिति । स्वरूपमहसा स्वरूपशक्त्या तद्वैलक्षण्येनैव निपीतो दूरीकृतो जीवादिभिः सह तव भेदे मोहस्तैः सह भेदो न सम्भवतीति भ्रमो येन त्वया तस्मै । तद्वैलक्षण्येन तेभ्यो भिन्नतया निश्चितायेत्यर्थः । अत एव बोधधिषणाय न तु जीववत् कदाचिदबोधेनापि युक्तायेत्यर्थः ॥ १४ ॥ ❀ ❀ यस्यावतारेति । असुविगमेऽपीति । तदानीन्तनतन्मात्रत्वमशुद्धवर्णत्वञ्च व्यञ्जितम् । विवशा इति । तदिच्छां विना केनचित् काराणान्तरेणापीत्यर्थः । वशः कान्ताविस्यमरः । तादृशशक्तित्वे हेतुमाह अवतारेति । अवतारादिसदृशानि तत्तुल्यशक्तीनीत्यर्थः । तत्रावतारविडम्बनानि नृसिंहेत्यादीनि गुणविडम्बनानि भक्तवत्सलेत्यादीनि । कर्मविडम्बनानि गोवर्द्धनधरेत्यादीनि । ऋतं सच्चिदानन्दरूपं श्रीभगवन्तमेव । 'आत्मतत्त्वविशुद्ध्यर्थं यदाह भगवान् ऋतम् । ब्रह्मणे दर्शयन् रूपमि'त्युक्तेः ॥ १५ ॥ १६ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

भक्तौ यतो निष्कामाः श्रेष्ठाः अतः केवलभक्त्यशक्तावपि प्रधानीभूतालौकिकवैदिककर्म्मार्पणरूपापि भक्तिर्निष्कामैव कार्य्येत्याह पुंसामिति । विविधकर्म्मभिर्लौकिकैः अध्वराद्यैर्वैदिकैश्च त्वदर्पितैराराधनं यत् करोषि यदश्नासीत्यादिना भगवता शिक्षितमित्यर्थः । अत्र प्रधानीभूतायां भक्तौ लौकिकवैदिकनिखिलकर्म्मार्पणं गुणीभूतायां वैदिकस्यैव नतु लौकिकस्य केवलायां लौकिकस्य तथा श्रवणकीर्त्तनादेश्च अर्पितस्यैव कारणमिति भेदो द्रष्टव्यः । सत्क्रियार्थस्तदेव सत्कर्म्मणां फलं कुतः ? यत्र त्वय्यर्पितो धर्म्मः कर्हिचिदपि न म्रियते न नश्यति किन्त्वाराधनरूपेण परिणमति । कामार्थस्तु धर्म्मः कामं दत्त्वा नश्यतीत्यर्थः ॥ १३ ॥ ❀ ❀ एवमुपासनां द्विविधां भक्तानां निरूप्य पूर्वोक्तलक्षणं ज्ञानिभक्तयोरुपास्यं स्वरूपद्वयं प्रणमति सर्व्वदा स्वरूपचैतन्येनैव अगस्त्येनेव निपीतो भेदे मोहसमुद्रो यतस्तस्मै बोधस्य स्वरूपानुभवस्य हेतुर्धिषणा बुद्धिर्यतस्तस्मै निर्विशेषस्वरूपाय नमश्चक्रम करवाम तथा विश्वोद्भवादिनिमित्तं या माया तस्मिन्नपि लीलया अवलोकनरूपया रासः सम्भोगो यस्य तस्मै सविशेषरूपाय । यद्वा हे निमित्त कारणरूप ! लीलया रासो गोपीजनसङ्गतो लास्यविशेषो यस्य तस्मै । परार्द्धान्ते सोऽबुद्ध्यत गोपवेशो मे पुरस्तादाविर्बभूवेति श्रुतेः । कामदुघाङ्घ्रिपद्मं प्रदर्शयन्तमिति पूर्वोक्तेश्च सविशेषस्वरूपेष्वपि मध्ये श्रीकृष्णस्वरूपस्यैव परमपरिपूर्णत्वात् परमाश्रयत्वं ज्ञापितम् ॥ १४ ॥ ❀ ❀ उक्तलक्षणोपास्योपासनाज्ञानगन्धमपि विना नामाभासमात्रत एव पशुतुल्येभ्योऽपि

जनेभ्यः स्वपददायित्वेन परमकृपैश्वर्य्यमाचक्षाणः सविशेषरूप एव स्वप्रपत्तिं विज्ञापयति यस्येति । अवतारादिसदृशानि तत्तुल्यशक्तीनीति सन्दर्भः । यद्वा अवतारादीनां विडम्बनं नटादिष्वनुकरणमपि यैस्तानि । यद्वा । अवतारादि विडम्बनानि स्वभ्रातृपुत्रादिजीवविशेषवाचकत्वादवताराद्यननुरूपाणीत्यर्थः । तत्र कृष्णोऽयं रामोऽयं नारायणोऽयमित्यादीन्यवतारविडम्बनानि दयालुः दीनबन्धुर्दामोदर इत्यादीनि गुणविडम्बनानि । गोविन्दो गिरिधरो मधुसूदन इत्यादीनि कर्म्मविडम्बनानि नामानि ये जना अजामिलादय इव प्राणविगमे विवशा अपि गृणन्ति केवलमुच्चारयन्ति शमलं पापम् अपावृतं निरस्तावरणम् ऋतं सच्चिदान्दस्वरूपं भगवन्तम् । आत्मतत्त्वविशुद्धयर्थं यदाह भगवानृतम् । ब्रह्मणो दर्शयन् रूपमित्यत्र तथैव व्याख्यानात् ॥ १५ ॥

न केवलमहमेक एव प्रपद्ये अपि तु महदादीनां सर्व्वेषामेव त्वत्त उद्भूतत्वात् त्वत्प्रपत्तिरुचितैवेत्यभिव्यञ्जयन् नमस्यति । यो वै एकः त्रिपात् त्रयो ब्रह्मादयः पादाः स्कन्धा यस्य उरवो मरीच्यादिमन्वादयः प्ररोहाः शाखोपशाखा यस्य तथा भूतः सन् ववृधे । किं कृत्वा आत्ममूलम् आत्मकारणकं प्रधानं भित्त्वा गुणत्रयरूपेण विभज्य त्रिपात्त्वमेवाह अहमित्यादयः स्थित्यादिहेतव इति यथासम्भवनिर्द्देशः । अत्र विभुर्विष्णुः स्वयञ्चेति विष्णौ स्वयं पदप्रयोगात् ब्रह्मगिरिशयोरिव विष्णोर्नास्ति गुणनिबन्धनः स्वतो भेद इति ज्ञापितम् । यद्वा य एव अहमादयः य एव आत्मनः स्वस्यापि मूलं कारणम् तथा य एव भित्त्वा स्वशक्तिकृतं भेदं प्राप्य त्रिपात् प्रथमं त्रिलोकरूपः तत उरुप्ररोहः चतुर्द्दशलोकरूपः तस्मै भुवनाकाराय द्रुमाय नम इति विश्वरूपत्वमुक्तम् ॥ १६ ॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

सकामभजनमपि भगवन्तमत्यन्ततो नहि प्रसन्नं करोति यदि तर्हि सकामकर्म तं न प्रसन्नं करोतीति किमुत वाच्यमतः सर्वक्रिया भगवदाराधनार्थं कर्तव्येत्याह पुंसामिति । यतः सकामभजनेनापि भगवान्नातिप्रसीदति अतः पुंसां विविधकर्मभिः दानादिभिश्च भगवतस्तवाराधनमेव संश्रासौ क्रियार्थश्च श्रेष्ठं क्रियाफलं यत्र त्वयि अर्पितो धर्मः कर्हिचिदपि न ह्रियते न विनश्यति अक्षयफलो भवतीत्यर्थः ॥ १३ ॥ ॐ ॐ यदर्पितं कर्माक्षयफलं भवत्येवं भगवन्तं पुनः नमस्यन् तत्स्वरूपगुणादिवर्णनेन स्तौति शश्वदित्याद्यष्टभिः । शश्वत् सर्वदा स्वरूपमहसैव सर्वात्मस्वरूपप्रकाशेनैव निरस्तभेदभ्रमाय अपगतभेदसंशयाय अतदात्मकपदार्थाभावात् बोधधिषणाय बोध एव धिषणा स्वात्मकसर्वपदार्थविवेकवती ज्ञातृत्वलक्षणा शक्तिर्यस्य तस्मै विश्वोद्भवादिषु निमित्तानि प्रकृत्याद्याः शक्तयः तासां लीलया विलासेन रासः क्रीडा यस्य तस्मै नमः नमनं चक्रम कृतवन्तो वयम् ॥ १४ ॥ ॐ ॐ अवतारादीनां विडम्बनमनुकरणमस्ति येषु तानि नामानि असुविगमे प्राणप्रयाणकालेऽपि ये गृणन्त्युच्चारयन्ति ते सहसैव शीघ्रमेव अनेकजन्मशमलं बहुजन्मार्जितं पापं तथा पुण्यं हित्वा अपावृतं निरावरणम् ऋतं ब्रह्म संयान्ति । अवतारादिविडम्बनानि प्रथमे द्वितीये च स्कन्धे दर्शितानि तत्र अवतारविडम्बनं कुमार इत्यादीनि गुणविडम्बनानि अखण्डब्रह्मचर्यवान् इत्यादीनि कर्मविडम्बनानि विनष्टज्ञान ! प्रवर्तक इत्यादीनि ॥ १५ ॥ ॐ ॐ यो वै एकः अविस्तारितचिदचिच्छक्तिः आत्मा स्वयं मूलं यस्य प्रधानस्य तत्प्रधानं भित्त्वा रजआदिरूपेण विभज्य स्वयं विभुः सत्त्वनियन्ता अहं रजोयुक्तः गिरिशस्तमोयुक्तः एवं स्थित्यादिहेतवः त्रयः पादाः स्कन्धाः यस्य स त्रिस्कन्धः उरुप्ररोहः बहवो मरीच्यादयः प्ररोहाः शाखोपशाखादयो यस्य सः तथाभूतः सन् ववृधे तस्मै भुवनद्रुमाय नमः ॥ १६ ॥

## श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

एतदेव वदन् पूर्वोक्तनिरूपणमुपसंहरति—पुंसामिति । अतो हेतोः पुंसामयमेव सत्क्रियार्थो, यद्भगवतस्तवाराधनम् । विविधकर्मभिर्लौकिकैर्वैदिकैः । अध्वराद्यैर्यागपूर्त्तादिभिः । देवताप्रीतिहेतूनि निरूपितानि । दानेनेति, मनुष्यप्रीतिहेतुः उग्रतपः स्वस्यैव प्रीतिहेतुर्देहस्य वा; व्रतचर्या अन्तःकरणस्य । एवं लौकिकालौकिकभेदेन सर्वाण्येव कर्माणि तवाराधनरूपाणि, तद्धेतवो वा भवन्ति, तदा सत्क्रियार्थो भवति, विहितक्रियाणां फलरूपं भवति । ननु धर्मः स्वतन्त्रं फलम्; पुरुषार्थत्वात्, अभ्युदयनिःश्रेयसहेतुत्वाद्वा । तत्कथमुच्यते सर्वैर्भगवदाराधनं चेत्तदा फलमिति । तत्राऽऽह—धर्मोऽर्पित इति । यत्र भगवत्यर्पितः समर्पितो धर्मः, कदाचिदपि न द्रियते न विदीर्णो भवति । फलार्थं कृतो धर्मः; स्वतन्त्रो वा । 'धर्मः क्षरति कीर्तनात्' 'हन्ति पुण्यं पुराकृतम्' 'अब्दपुण्यं विनश्यति' इत्यादिवाक्यैस्तस्य नाशः श्रूयते । तेन चेद्भगवानाराधितो भवति, तदा भगवत्कार्ये निरूपितो भगवत्संबन्धेन नित्यतां प्राप्तोऽक्षयफलदानार्थं तस्यापेक्षितत्वात् कदापि न द्रियते ॥ १३ ॥ ॐ ॐ एवं सर्वशास्त्रार्थं निरूप्य भगवन्तं नमस्यति षड्भिः—शश्वदिति । भगवतो नमस्यरूपाणि षट् भवन्ति, अस्मात् ब्रह्मणः पूर्वतराणि । तत्रैतदेवैकं रूपम्, शेषशायी नारायणः, पुरुषो द्वितीयः, सर्वतत्त्वसहितः प्रकृतिभर्ता पुरुषस्तृतीयः, कालश्चतुर्थः, यज्ञः पञ्चमः, पुरुषोत्तमः षष्ठः । तत्रैत[1]द्धृदये परिदृश्यमानं तदावश्यकधर्मकीर्तनेन नमस्यति । कदाचिदिदं शयानं रूपं मोहात्मकं भवेदित्याशङ्क्य, तस्य मोहाद्यभावं निरूपयति । अथ-

---

१. तत्रैतम् ग तत्रैनम् ख. घ. ङ. च.,।

वैतदक्षररूपम् । शयानं तु श्लोकद्वयेनाऽग्रे वक्ष्यति । शश्वत्सर्वदा स्वरूपमहसैव निरन्तरं स्फुरता स्वप्रकाशेनैव नितरां पीतौ भेद-मोहौ येन । द्वयमेव जीवत्वसाधकम्, भेदो मोहश्च । भिन्नश्च जीवो भवति, मुग्धश्च । अतो जीववैलक्षण्यं दोषाभावेन । गुणेन वैलक्षण्यमाह—बोधधिषणायेति । बोध एव धिषणा बुद्धिर्यस्य । जीवानां तु जडरूपा बुद्धिः । अत एव परस्मै सर्वनि-यामकाय । नियामकत्वमत्र नमने हेतुः । एवं स्वरूपमुक्त्वा कार्यमाह—विश्वस्य उद्भवस्थितिलयेषु निमित्तायमाना या लीला, तया रासः क्रीडा यस्य; तस्यां वा रससमूहो यस्य । सोऽक्षरात्मको भवानेव नाऽन्य इति वदन् नमस्यति—ते इदं नमश्चक्रमेति । नमस्कारं साष्टाङ्गं कुर्वन्निदमा निर्दिशति इदमिति । चक्रमेति स्वान्तर्गतैः सर्वैरेव जीवैः सहितो नमस्करोमीति ज्ञापयति । शिक्षार्थं चैतन्नमनमिति ज्ञापयितुमाह—ईश्वरायेति । स एव सर्वसमर्थः, अन्यथा तत्कृपाव्यतिरेकेण जीवस्तत्कार्यं कथं कुर्यात् ? ॥ १४ ॥ ❀ ❀ पुरुषं नमस्यन् पुरुषावतारान् सर्वानेव नमस्यति । अथवा, पूर्वश्लोके सामान्यभगवद्रूपकीर्तनेन नमनम्, विशेषास्तु षट् । तत्र प्रथममवताराः पुरुषादयः, ते जाता इति कस्यचिद्भ्रमो भवेत्, तन्निवृत्त्यर्थं तस्य दोषान् परिहरन्नमस्यति—यस्येति । अवतारा गुणाः कर्माणि च विडम्बयन्ति अनुकुर्वन्तीति, देवकीनन्दन ! दयालो ! गोवर्द्धनोद्धरण-धीर ! इति यानि नामानि, ये प्राणिनोऽसुविगमे प्राणोत्क्रमणस[1]मये विवशा अपि भूत्वा गृणन्ति ते पूर्वोपार्जितानेकशमलमपि तत्क्षणमेव हित्वा, अपावृतमुद्घाटितकपाटम्, ऋतं ब्र[2]ह्मरूपं संयान्ति । एवं सर्वेषां सर्वपुरुषार्थहेतुकर्तारं नमामीत्याह—तमिति । अजमिति जन्माभावः । तमिति गुणकर्माभावः । सजातीयाः सजातीयं मन्यन्ते, अत उत्पन्नानां सगुणानां कर्मकर्तॄणां स्वसदृश एव रोचत इति तादृशानि जन्मगुणकर्माणि प्रदर्श्य तान्मोचयति न तु तस्य तादृशं जन्म गुणाः कर्माणि वा; अतो निर्दोष-पूर्णगुणविग्रहं तं प्रपद्ये शरणं ग[3]च्छामीति नमनप्रपत्त्योरेकार्थता ॥ १५ ॥ ❀ ❀ एवं पुरुषं नत्वा सर्वतत्त्वसहितं प्रथम-पुरुषं नमस्यति—यो वा अहमिति । यो भगवान् त्रिपाद्ववृधे, तस्मै भुवनद्रुमाय नम इति संबन्धः । पादत्रयमाह—अहं ब्रह्मा, चकारा-त्तपःप्रभृतयः; गिरिशो महादेवः, चकाराद्धर्मादयः; विभुः समर्थः; स्वयं पालको विष्णुः । एतेषां कार्यमाह—स्थित्युद्भवप्रलय-हेतव इति । एते त्रयः । वै निश्चयेन । यः पुरुष एव त्रिपादात्मनो मूलं प्रकृतिं भित्त्वा ववृधे, महदादिरूपेण मरीच्यादिरूपेण वा । उरवोऽधिकाः[4] प्ररोहा यस्य । अधश्चोर्द्ध्वं तस्य प्ररोहाः । अधो ब्रह्माण्डमध्ये पृथिव्यादयः, कश्यपादयश्च; उपर्यावर-णानि । एवं भुवनद्रुमात्मकः सर्वशब्दवाच्यो भगवान् कल्पवृक्षः तस्मै नमः ॥ १६ ॥

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

पुंसामित्यत्र । तद्धेतव इति । आराधनहेतवः ॥ १३ ॥ ❀ ❀ शश्वदित्यत्र । अस्माद्ब्रह्मण इति । चतुर्मुखात्, प्रस्तुतत्वात् । शयानरूपमादौ निरूप्यते इत्यङ्गीकृत्य लक्षणबलात् पक्षान्तरमाहुः—अथवेत्यादि । अत्र शयानस्य द्वैरूप्ये पञ्चैव रूपाणीत्यपि ॥ १४ ॥ ❀ ❀ यस्येत्यत्र । पूर्वश्लोके 'परस्मै' इतिपदस्य असङ्गोदासीन एक इत्यर्थं स्वीकृत्य पक्षान्तरमाहुः—अथवेत्यादि । अस्मिन् पक्षे रूपबोधकाः सप्त श्लोकाः । सर्वपुरुषार्थहेतुकर्तारमिति । पुरुषार्थहेतुभूतानि यानि गुणकर्माणि, तत्कर्तारम् । गुणकर्माभाव इति । तद्रूपेण स्वयमेव प्रकटमिति विडम्बनमात्रत्वात् तदभाव इत्यर्थः । तदेव व्युत्पादयन्ति सजातीया इत्यादि ॥१५॥ ❀ ❀ यो वा इत्यत्र । पुरुषं नत्वेति । अक्षरात्मकं द्वितीयपुरुषं नत्वा । पालको विष्णुरिति । अत्रापि मूले 'स्वयं च' इति चकारो धर्मादिसङ्ग्राहको ज्ञेयः ॥ १६ ॥

### श्रीगिरिधरकृता बालप्रबोधिनी

यतः सकामानां भवान्नातिप्रसीदति अतोऽध्वराद्यैः यज्ञादिभिः विविधैर्लौकिकैश्च कर्मभिर्दानेन चोग्रतपसा कृच्छ्रचान्द्रा-यणादिना व्रतचर्यया एकादश्यादिव्रतानुष्ठानेन च भगवतस्तव आराधनमेव पुंसां सत्क्रियार्थः संश्चासौ क्रियार्थश्च उत्तमं क्रियाफल-मित्यन्वयः । उत्तमत्वे हेतुमाह—धर्म इति । धर्मः लौकिकालौकिकक्रियारूपो यत्र यस्मिंस्त्वय्यर्पितस्त्वत्प्रसादैकप्रयोजनबुद्ध्याऽ-नुष्ठितः कर्हिचित् कदाचिदपि न ह्रियते न विनश्यति धर्मार्थकाममोक्षाख्यचतुर्विधपुरुषार्थपर्यवसायी भवति, कामनयाऽनुष्ठितस्तु तत्तत्कामितमात्रं फलमेव दत्त्वा विनश्यतीत्यर्थः । यथोक्तं भगवता—'यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् । यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम् ॥ नेहाभिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते । स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात्' इति ॥ १३ ॥ ❀ ❀ एवं सर्वशास्त्रसिद्धान्तनिरूपणपूर्वकं भगवन्तं स्तुत्वाऽस्मिन् परमानन्दस्वरूपे पूजादरे किञ्चित्करत्वं निश्चित्य नमस्क-रोति—शश्वदिति षड्भिः । परस्मै पुरुषोत्तमाय ते तुभ्यमिदं नमो नमः पुनः पुनर्नमनं चक्रम करवामेत्यन्वयः । पुरुषोत्तमत्वमेवो-पपादयति—शश्वदिति । शश्वत्स्वरूपमहसा निरन्तरं स्फुरता स्वरूपचैतन्येनैव नितरां पीतौ निरस्तौ भेदमोहौ यस्य तस्मै, जीवबन्धस्य स्वस्माद्भिन्नत्वबुद्धिः प्राकृतदेहेन्द्रियादिनिष्ठात्माध्यासश्च नास्ति तस्मा इत्यर्थः । बोधश्चैतन्यमेव धिषणा बुद्धिर्यस्य तस्मै । जीवानां

---

१. समय एव. क. २. ब्रह्मस्वरूपम्. ख. ग. च. ३. गच्छामि वा. ख. गच्छामि. ग. च. ४. अधिकप्ररोहाः. क. ख. घ. च. अधिकम्. ग. ।

तु बुद्धिर्जडरूपा 'बुद्धिः प्राणश्च तैजसौ' इति वाक्यात्। एवं स्वरूपं प्रणम्य विश्वकारणतया प्रणमति—विश्वेति। विश्वस्योद्भवस्थितिलयेषु निमित्तं या प्रकृतिस्तस्या लीला विलासस्तत्तद्रूपेण परिणामस्तया रासः क्रीडा यस्य तस्मै। ननु प्रकृतिपरिणामेन कथं तस्य क्रीडा सिद्ध्यतीत्यत आह—ईश्वरायेति। प्रकृतिप्रवर्त्तकत्वात्तद्द्वारा क्रीडा सिद्ध्यतीति भावः॥ १४॥ ❀ ❀ नन्वाप्तसमस्तकामस्य भगवतो लीलया किं प्रयोजनमित्याशङ्क्य स्वप्रयोजनाभावेऽपि परप्रयोजनं सम्भवतीति तद्दर्शयंस्तच्छरणं व्रजति—यस्येति। यस्य अवतारादीनां विडम्बनमनुकरणमस्ति येषु तानि नामानि असुविगमे प्राणोत्क्रमणसमये अतएव विवशाः स्ववशरहिता अपि ये गृणन्ति केवलमुच्चारयन्ति तेऽनेकजन्मोपार्जितं शमलं पापं सहसा अनायासेनैव हित्वा विधूय अपावृतं निरस्तावरणं ऋतं सत्यं भगवन्तं यान्ति प्राप्नुवन्ति, तमजं जन्मादिविकाररहितं अहं प्रपद्ये शरणं व्रजामीत्यन्वयः। तत्र अवतारविडम्बनानि देवकीनन्दनो दाशरथिरित्यादीनि, गुणविडम्बनानि सर्वज्ञो भक्तवत्सल इत्यादीनि, कर्मविडम्बनानि गोवर्द्धनोद्धरणः कंसारिरित्यादीनि॥ १५॥ ❀ ❀ ननु सृष्ट्यादिव्यापाराणां चतुर्मुखादिकर्तृकत्वश्रवणात् कथं 'विश्वोद्भवस्थितिलयेषु निमित्तलीलारासाय' इत्युक्तमित्याशङ्कां निराकुर्वन् प्रणमति—यो वा इति। वा इत्यवधारणे। यः प्रथममेक एव तत आत्मा स्वयमेव मूलमधिष्ठाने कारणं वा यस्य तत्प्रधानं भित्त्वा गुणत्रयरूपेण विभज्य अहं ब्रह्मा च गिरिशो महादेवश्च स्वयं विभुर्विष्णुश्चेत्येते त्रयः पादाः स्कन्धा यस्य स त्रिपाद्भूत्वा तत उरवो बहवः प्ररोहाः शाखोपशाखा मरीच्यादिमन्वादिरूपाश्च यस्य स उरुप्ररोहः सन् ववृधे तस्मै भुवनाकाराय द्रुमाय नम इत्यन्वयः। ननु युष्माकं कथं त्रिपात्त्वमित्यपेक्षायां विश्वोद्भवादिहेतुत्वादित्याह—स्थित्युद्भवप्रलयहेतव इति। कथमेवं भवने समर्थ इत्यपेक्षायामचिन्त्यैश्वर्यादिमत्त्वादित्याशयेनाह—भगवत इति॥ १६॥

### हिन्दी अनुवाद

जो कर्म आपको अर्पण कर दिया जाता है, उसका कभी नाश नहीं होता—वह अक्षय हो जाता है। अतः नाना प्रकारके कर्म—यज्ञ, दान, कठिन तपस्या और व्रतादिके द्वारा आपकी प्रसन्नता प्राप्त करना ही मनुष्यका सबसे बड़ा कर्मफल है; क्योंकि आपकी प्रसन्नता होनेपर ऐसा कौन फल है जो सुलभ नहीं हो जाता॥ १३॥ ❀ ❀ आप सर्वदा अपने स्वरूपके प्रकाशसे ही प्राणियोंके भेद-भ्रमरूप अन्धकारका नाश करते रहते हैं तथा ज्ञानके अधिष्ठान साक्षात् परमपुरुष हैं; मैं आपको नमस्कार करता हूँ। संसारकी उत्पत्ति, स्थिति और संसारके निमित्तसे जो मायाकी लीला होती है, वह आप का ही खेल है; अतः आप परमेश्वरको मैं बार-बार नमस्कार करता हूँ॥१४॥ ❀ ❀ जो लोग प्राणत्याग करते समय आपके अवतार, गुण और कर्मोंको सूचित करनेवाले देवकीनन्दन, जनार्दन, कंसनिकन्दन आदि नामोंका विवश होकर भी उच्चारण करते हैं, वे अनेकों जन्मोंके पापोंसे तत्काल छूटकर मायादि आवरणोंसे रहित ब्रह्मपद प्राप्त करते हैं। आप नित्य अजन्मा हैं, मैं आपकी शरण लेता हूँ॥ १५॥ ❀ ❀ भगवन्! इस विश्ववृक्षके रूपमें आप ही विराजमान हैं। आप ही अपनी मूलप्रकृतिको स्वीकार करके जगत्‌की उत्पत्ति, स्थिति और प्रलयके लिये मेरे, अपने और महादेवजीके रूपमें तीन प्रधान शाखाओंमें विभक्त हुए हैं और फिर प्रजापति एवं मनु आदि शाखा-प्रशाखाओंके रूपमें फैलकर बहुत विस्तृत हो गये हैं। मैं आपको नमस्कार करता हूँ॥ १६॥

**लोको विकर्मनिरतः कुशले प्रमत्तः कर्मण्ययं[1] त्वदुदिते भवदर्चने स्वे।**
**यस्तावदस्य बलवानिह जीविताशां सद्यश्छिनत्त्यनिमिषाय नमोऽस्तु तस्मै॥ १७॥**
**यस्माद्बिभेम्यहमपि द्विपरार्धधिष्ण्यमध्यासितः सकललोकनमस्कृतं यत्।**
**तेपे तपो बहुसवो[2]ऽवरुरुत्समानस्तस्मै नमो भगवतेऽधिमखाय तुभ्यम्॥ १८॥**
**तिर्यङ्मनुष्यविबुधादिषु जीवयोनिष्वात्मेच्छयाऽऽत्मकृतसेतुपरीप्सया यः।**
**रेमे निरस्तरतिरप्यवरुद्धदेहस्तस्मै नमो भगवते पुरुषोत्तमाय॥ १९॥**
**योऽविद्ययानुपहतोऽपि दशार्धवृत्त्या निद्रामुवाह जठरीकृतलोकयात्रः।**
**अन्तर्जलेऽहिकशिपुस्पर्शानु[3]कूलां भीमोर्मिमालिनि जनस्य सुखं विवृण्वन्॥ २०॥**

### श्रीधरस्वामिविरचिता भावार्थदीपिका

एवं गुणावतारकर्मविडंबनमुक्त्वा तस्यैव तत्कालाख्यं रूपं तत्कर्म च दर्शयन्प्रणमति। इति द्वाभ्याम्। विकर्मनिरतो विरुद्धकर्मनिष्ठः। कुशले हिते स्वे आत्मीये त्वदुदिते त्वयैव साक्षादुक्ते भवदर्चनरूपे कर्मणि उक्तं हि गीतासु "यत्करोषि

---

१. प्रा० पा०—ण्यपि। २. प्रा० पा०—सवो विरु०। ३. प्रा० पा०—नुयोगाद्।

यदश्नासि यज्जुहोषि ददासि यत्। यत्तपस्यसि कौंतेय तत्कुरुष्व मदर्पणम्" इति। तस्मिन् प्रमत्तो दत्तचित्तो यावद्वर्तते ताव-दस्य लोकस्य अनिमिषाय कालाय ॥ १७ ॥ ❀ ❀ आस्तां तावल्लोकस्य कथा यस्मात्कालाख्यात्त्वत्तो यद्द्विपरार्धावस्थायि धिष्ण्यं स्थानं तदारूढोऽपि बिभेमि भीतश्च संस्त्वामेवावरुरुत्समानः प्राप्तुमिच्छंस्तपस्तप्तवान्। कथंभूतः। बहुसवो बहवः सवा यागाः संवत्सरा वा यस्य बहून् यागान्कृत्वाऽपि बहून्संवत्सरान् वा तपस्तप्तवानित्यर्थः। अधिमखाय मखाधि-ष्ठात्रे ॥ १८ ॥ ❀ ❀ इदानीं तत्तत्कालभाविलीलावतारकर्माणि दर्शयन्नाह। तिर्यगादिषु स्वेच्छया स्वीकृतमूर्तिः सन् स्वकृतधर्ममर्यादापालनेच्छया रेमे वस्तुतः स्वानंदानुभवेनैव निरस्तविषयसुखोऽपि यः अत एव पुरुषोत्तमः तत्तदुपाधिधर्मासंस्पर्शात्। तदुक्तं गीतासु "यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः ॥ अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः" इति ॥ १९ ॥ ❀ ❀ इदानीं दृश्यमानामेव मूर्तिं प्रणमति। योऽविद्ययेति द्वाभ्याम्। दशार्धाः पंच वृत्तयो यस्यास्तयाऽविद्यया निद्राहेतुभूतयाऽनुपहतोऽपि योगनिद्रामुवाह तस्मै ते नम इत्युत्तरेणान्वयः। जठरीकृतोदरे प्रविलापिता लोकस्थितिर्येन अहिरेव कशिपुः शय्या तस्याः स्पर्शोऽनुकूलो यस्यास्तां निद्राम्। भीमानामूर्मीणां माला विद्यते यस्मिन्न-तर्जले निद्राणस्याविवेकिनो जनस्य निद्रासुखमीदृगिति विवृण्वन् प्रदर्शयन्नुपहंसन्निित्यर्थः। अत एवांतर्जलादिविशेषणानि यद्वा पूर्वकल्पे श्रांतस्य जनस्य विश्रामसुखं विवृण्वन् स्फारयन्। तदा तु परोपकाराय स्वयं दुःसहमपि दुःखं सोढव्यमिति द्योतनार्थं विशेषणानि ॥ २० ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

तस्यैव गुणावतारधर्तुरेव तत्प्रसिद्धं विरुद्धकर्मभक्तिरहितकर्म यः कालरूपः। यद्वा 'स्वकर्मणा तमभ्यर्च्य' इत्युक्तेः। 'ज्ञानिनो ज्ञानयज्ञेन यजंति ज्ञानविग्रहम्' इत्युक्तेश्च कर्मज्ञानयोगाभ्यामपि तदर्चनमेव स्यादिति केचिद्व्याचक्षते तत्राह— तदुदिते त्वयैव साक्षान्मदर्चनमिदमेवेत्युक्तेः। 'ये वै भगवता प्रोक्ता उपाया ह्यात्मलब्धये' इत्येकादशे वक्ष्यमाणत्वात्। 'पंचरात्रस्य कृत्स्नस्य वक्ता तु भगवान्स्वयम्' इति मोक्षधर्माच्च तदेवं त्वद्भक्तलोकेभ्योन्यत्रैव कालस्याधिकार इति द्योतितम्। अभक्तलोकस्य तु जीवितस्याप्याशां छिनत्ति किमुत भोगाशामित्यर्थः। कालाधिकारो निरर्थकायुःक्षपणरूपो वा ज्ञेयस्तदुक्तम् "आयुर्हरति वै पुंसामुद्यन्नस्तं च यन्नसौ। तस्य ते यत्क्षणो नीत उत्तमश्लोकवार्तया" इति द्वितीयस्कंधे तीर्थस्तु अपराधमं-तरेण जीविताशाच्छेदनमतीव साहसमिति न मन्तव्यमेतदभिप्रेत्याह—विकर्मेति। विहिताकरणादिनात्महत्यादिदोषापत्तेरतोऽधि-कोपराधो नास्तीत्यतो न वैषम्यनैर्घृण्ये हरेरित्याह ॥ १७ ॥ ❀ ❀ "सवो यज्ञे च संधाने काले च परमात्मनि" इति निरुक्तिः। अत्र च कालभीतोहं तद्वशीकरणार्थं यज्ञैर्यजनेन कालो मे वशीभविष्यतीति प्रवृत्तोपि प्रत्युत कालेनैवाहं वशी-कृतोऽतस्त्वच्छुद्धभक्तिं विना "त्वत्पादाब्जं प्राप्य यदृच्छयाद्य स्वस्थः शेते मृत्युरस्मादपैति" इत्युक्तेः। कालजयो नास्तीत्यद्य ज्ञात्वा शुद्धभक्तिमेवाहं करवाणीति ध्वनिः ॥ १८ ॥ ❀ ❀ आदिनार्षादिग्रहः। विश्वनाथस्तु "पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति। तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः" इति स्वकृतमर्यादापालनाय स्वभक्तोपनीतस्रक्चंदनशय्याद्युपभोगेष्वात्मारामोपि रेमे। 'नाहमात्मानमाशासे मद्भक्तैः साधुभिर्विना" इत्यात्मारामत्वे पूर्णकाम इव रेम इति भावः। यद्वात्मकृतसेतोः स्वभक्तकृत-मर्यादायाः परि सर्वतो भावेनेप्सया प्राप्तीच्छया श्रीयशोदया दाम्नैवान्यैरपि भक्तैः प्रणयरसनयाऽवरुद्धदेहः। अतः सर्वोत्क-र्षात् महत्स्रष्ट्रांतर्यामिपुरुषेभ्योप्युत्तमायेति कृष्णावतार एव तात्पर्यम्। अत एव त्यक्तविषयसुखत्वादेव तत्पुरुषोत्तमत्वम्। श्लोकार्थस्तु "द्वाविमौ लोके क्षरश्चाक्षर एव च। क्षरः सर्वाणि भूतानि कूटस्थोक्षर उच्यते" इत्यस्मात्पूर्वमुक्तम्। वाक्यमादायैव भवतीत्यतो द्वावेव विवृणोति। इमौ द्वौ पृथग्राशीकृतौ पुरुषौ पुरुषोपाधित्वेन पुरुषशब्दव्यपदेश्यौ लोके संसारे तौ कावित्याह क्षरोऽक्षरश्च क्षरतीति. क्षरो विनाशी कार्यराशिरेकः पुरुषः। न क्षरतीत्यक्षरो विनाशरहितः क्षराख्यस्य पुरुषस्योत्पत्तिबीजं भगवतो मायाशक्तिर्द्वितीयः पुरुषः। तौ पुरुषौ स्वयमेव व्याचष्टे भगवान्, क्षरः सर्वाणि भूतानि समस्तं कार्यजातमित्यर्थः। कूटस्थः कूटो यथार्थवस्त्वाच्छादनेनायथार्थवस्तुप्रकाशनं वंचनं मायेत्यर्थांतरं तेनावरण-विक्षेपशक्तिद्वयरूपेण स्थितः। कूटस्थोऽभगवन्मायाशक्तिरूपः कारणोपाधिः संसारबीजत्वेनानंत्यादक्षर उच्यते। द्वितीयं श्रीस्वामिचरणलिखितं व्याचष्टे। यस्माद्धेतोः। क्षरं कार्यत्वेन विनाशिनं मायामयं संसारवृक्षमश्वत्थाख्यमतीतोऽतिक्रांतोहं परमेश्वरः अक्षरादपि मायाख्यात् 'अव्याकृतादक्षरात्परतः परः' इति पंचम्यंताक्षरपदेन श्रुत्या प्रतिपादितात्संसारवृक्षबीज-भूतात्सर्वकारणादपि चोत्तम उत्कृष्टतमः। अतः क्षराक्षराभ्यां पुरुषोपाधिभ्यामभ्यासेन पुरुषपदव्यपदेश्याभ्यामुत्तमत्वादस्मि भवामि 'लोके वेदे च प्रख्यातः पुरुषोत्तमः' इति। 'स उत्तमः पुरुषः' इति श्रुतेर्वेदे उदाहृतः लोके च कविकाव्यादौ "हरिर्यथैकः पुरुषोत्तमो मतः" इत्यादि प्रसिद्धमेव ॥ १९ ॥ ❀ ❀ इत्यर्थ इति। अहो क्षणिकसुखार्थमयं लोको वृथैव शय्यादिसंपादने क्लिश्यति 'सत्यां क्षितौ किं कशिपोः प्रयासैः' इत्युक्तन्यायेनाहं यावत्कल्पमपि शयिष्ये तदपीत्थं न सामग्रीसंपादने प्रयत इत्युपह-सन्निति भावः। क्वचित् 'उपदिशन्' इति पाठोस्ति स सुबोध एव अत एव निद्रासुखवशगत्वादेव प्राकृतजनोपि जलमध्यकोमल-

शय्याशायी सुखमाप्नोतीत्येतदर्थमतलादिविशेषणानीति तदा प्राकृतजनाभावे उपदेशादेरसंभवं मत्वाह—यद्वेति । दुस्साहसत्वं च जलमध्ये तथापि प्रलये जनांतराभावे पुनरपि भयदोर्मिमति समुद्रे तदपि सर्वलोकभयंकरसर्पशय्यायां शयनं महादुःखमेव तदंगीकरणं त्वतीवार्द्रचेतसं परमोपकारिणं विना न घटते । यद्वा । निद्रालुर्देशकालवस्तुभयान्न गणयति । यथाहं प्रलयकालेपि जनमात्रभयदे समुद्रेपि सर्पशयाग्यामपि निर्भय एव शये सुखेन तथान्योपि निद्रालुरिति द्योतयन्निति भावः ॥ २० ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

तत्कर्म च कालकर्म विरुद्धकर्म भगवद्बहिर्मुखं कर्म एवं टीकायां तदर्पितस्य कर्ममात्रस्य तदर्चनरूपत्वं विवक्षितं श्रीगीतोदाहरणानुरोधात् तेन पञ्चरात्रोक्तार्चने कैमुत्यमभिप्रेतम् "पञ्चरात्रस्य कृत्स्नस्य वक्ता तु भगवान्स्वय" मिति मोक्षधर्म्मोक्तस्यापि साक्षात्तदुक्तत्वात् ॥ १७ ॥ ❀ ❀ बहुसव इति विशेषणस्याऽपुष्टार्थत्वमाशङ्क्य दण्डी प्रैषानन्वाहेत्यत्र दण्डित्वविशेषणस्य यथा विधेयत्वं तथाऽस्यापि विधेयत्वं व्याचष्टे बहून् यागानिति अत एव इत्यर्थ इत्युक्तम् ॥ १८ ॥ ❀ ❀ तत्तत्काले प्रातिस्विकोचिताऽवसरे भवितुं शीलं येषां तथाभूता ये लीलार्थमवतारा वाराहादयस्तेषां कर्माणि अत एव निरस्तविषयसुखत्वेऽपि स्वीकृतमूर्तित्वादेव तत् उपाधिधर्माऽसंस्पर्शेन पुरुषोत्तमत्वम् । आत्मकृतेत्यत्र स्वकृतेत्यपि क्वचित् पाठः ॥ १९ ॥ ❀ ❀ दृश्यमानां प्रद्युम्नाख्यां सोऽयं हिरण्यगर्भस्य प्रद्युम्नत्वे नियामक इति भागवतामृतात् पञ्चवृत्तयः अविद्याऽस्मितारागद्वेषाऽभिनिवेशरूपाः । निद्रां बहिर्वृत्त्यभावसाम्यात् लीलारूपाम् । अनुकूलः सुखदत्वेन जनकः ईदृक्सर्पोर्मिजलादिभयस्थानेऽपि प्रसरणशीलं तथादर्शनस्योपहासे लक्षणात इत्यर्थ इत्युक्तम् । अत एवोपहासस्य विवक्षितत्वादेव विशेषणानि तत्राहिकशिपुस्पर्शेति समानाधिकरणं विशेषणम् । अन्तर्जल इति व्यधिकरणं भीमोर्मिमालिनीति तु विशेषणस्य विशेषणमिति विवेचनीयम् । सृष्टेः पूर्वमविवेकिजनस्याभावात् तदुपहासोऽनुपपन्न इत्यरुचौ यद्वेति श्रान्तस्य जन्ममरणादिभिः खिन्नस्य विशेषणानि पूर्वोक्तान्येव ॥ २० ॥

### श्रीमद्वीरराघवव्याख्या

एवं "मूर्ध्वमूलमधः शाख" मित्यादिना निरूपितवृक्षं भगवन्तमाकारान्तरेण वृक्षरूपं नमस्कृत्य तस्य भक्तानुग्राहकत्वमेवाह लोक इति । यो भगवान् त्वदुदिते वेदात्मिकया वाचा त्वया गदिते भगवदाराधनरूपे स्वे स्ववर्णाश्रमोचिते कुशले क्षेमंकरे कर्मणि योऽयं लोकः अप्रमत्तः प्रमादरहितः अविकर्मनिरतः विकर्म असत् कर्म अतन्निरतश्च भवति तस्य लोकस्य जीविताशां संसारश्रद्धां सद्यः अचिरेण छिनत्ति । कुतः बलवान् सर्वशक्तित्वादित्यर्थः, तस्मै सर्वशक्तये अनिमिषाय वैराग्योत्पादनावसरापेक्षाय भगवते तुभ्यं नमोऽस्तु स्तात् । अनभिसंहितफलस्ववर्णाश्रमोचितधर्मैराराधयतां सांसारिकधर्मश्रद्धां विधुन्वन्वैराग्योत्पादनेनानुगृह्णातीत्यर्थः । यद्वा विकर्मनिरतः प्रमत्त इत्येवच्छेदः अत्र व्यतिरेकमुखेन भक्तानुग्राहकत्वमाह विकर्मसु स्वरूपाननुबन्धिषु अहंममाभिमानगर्भेषु वैषयिकसुखसाधनेषु त्वदाराधनरूपे तु कर्मणि यो लोकः प्रमत्तः तस्याभक्तलोकस्य जीविताशां जीवनेच्छां कालशरीरको यो भगवान् छिनत्ति तस्मै अनिमिषाय कालरूपिणे नमः । अनेन भक्तानुग्राहकत्वमर्थसिद्धं स्वानुरूपभगवदाराधनरूपकर्मभिराराधितो भगवानुपासकानां निवृत्तये निरतिशयमोक्षाख्यफलं प्रयच्छतीत्युक्तम् ॥ १७ ॥ ❀ ❀ इममेवार्थं स्वदृष्टान्तेन द्रढयन्नमस्करोति यस्मादिति । यद्द्विपरार्धधिष्ण्यं द्विपरार्धकालस्थायिस्थानं सत्याख्यलोकं कथंभूतं सकललोकनमस्कृतं सकलैरर्वाचीनलोकैर्नमस्कृतं संमानितमध्यासित आरूढोऽप्यहं यस्मात्कालशरीरकात्त्वत्तः बिभेमि "भीषास्माद्वातः पवत" इत्युक्तरीत्या त्वदधीनः स्वाधिकारेऽप्रमत्तोऽहमपीदमपि धिष्ण्यं द्विपरार्धावसाने विनंक्ष्यतीति बिभेमि भीतः सन् यं त्वामेवावरुरुत्समानः अवरोद्धुमिच्छन् प्रेप्सुरित्यर्थः बहुसवः बहवः सवास्त्वदाराधनरूपा यागा यस्य सः एवंभूतस्तपस्तेपे करोमि, पाकं पचतीतिवन्निर्देशः तस्मै भगवतेऽधिमखाय मखाराध्याय मखफलप्रदात्रे च नमः "अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च ।" इति गीतत्वात् । विसखायेति पाठान्तरं तदा त्वसहायायेत्यर्थः ॥ १८ ॥ ❀ ❀ एवं नमः परस्मा इत्यादिना परत्वभक्तानुग्राहकत्वादिविशिष्टं भगवन्तं नमस्कृत्य परत्वप्रयुक्तोपास्यत्वनिर्वाहकसौशील्यसौलभ्यगुणविशिष्टं नमस्करोति तिर्यगित्यादिना । सौशील्यं हि महतो मन्दैः सह नीरन्ध्रेण संश्लेषस्वभाववत्त्वं सौलभ्यं नाम स्वतो वाङ्मनसागोचरस्य सकलमनुजनयनविषयतां गतत्वम्, एतद्द्वयं सूपास्यत्वापादकमवतारकथनेनोपपादयति तिर्यगादिषु जीवयोनिष्वात्मेच्छया आत्मीयसंकल्पेनैव न तु कर्मणेत्यर्थः । अवरुद्धदेहः स्वीकृतमूर्तिः रेमे किमर्थम् आत्मकृतसेतुपरिप्लवाय स्वकृतमर्यादानां परिप्लवाय उन्मज्जनाय रक्षणायेत्यर्थः । परीप्सयेति पाठे अध्ययनेन वसतीतिवद्धेत्वर्थे तृतीया, परीप्सा रिरक्षा तदर्थमित्यर्थः । स्वयं कथंभूतोऽपि निरस्तरतिरपि निरतिशयानन्दस्वस्वरूपानुभवेनैव कदाचिदप्यस्पृष्टवैषयिकसुखोऽपि रेमे तिर्यगादिसजातीयचेष्टितानि कुर्वन् रेमे, तिर्यक्ष्ववतारा मत्स्यकूर्मवराहहंसादयः मनुष्येषु रामकृष्णादयः विबुधेषु वामनादयः एवं स्वसंकल्पेनैव स्वस्वभावमजहदेव तत्तद्योनिष्ववतीर्य तत्सजातीयदिव्यचेष्टितानि कुर्वन्नक्रूरोद्धवमालाकारगुहशबरीप्रमुखान् अनवधिकदयासौहार्दगर्भानुरागभावावलोकनामृतदानेनाप्याययन् सकलमनुष्यनयनविषयतां प्राप्नोपीत्यभिप्रायः । एवंभूताय भगवते पुरुषोत्तमाय त्रिविधचेतनाचेतनविलक्षणाय ते नमः ॥ १९ ॥

❀ ❀ एवं स्वरूपगुणविभूतिविशिष्टं भगवन्तं नमस्कृत्याथ स्वमनीषितं विजिज्ञापयिषुस्तात्कालिकं परिदृश्यमानमनिरुद्धरूपं प्रस्तुवन्नमस्करोति द्वाभ्यां योऽविद्ययेति । दशार्धाः पञ्चवृत्तयो यस्यास्तया तामिस्रान्धतामिस्रमोहमहामोहतमोरूपाः पञ्चाविद्यावृत्तयः, वृक्षगुल्मलतावीरुत्तृणगताः पञ्चपर्वाज्ञानवृत्तयः तमोमोहादय इति केचित्, जाग्रत्स्वप्नसुषुप्तिमूर्च्छामरणेष्वज्ञानवृत्तय इति केचित्, एवंभूतयाऽविद्यया निद्राहेतुभूतयाऽनुपहतोऽप्यनभिभूतोऽपि योगनिद्रामुवाह प्राप्तवान् तस्मै नम इत्युत्तरेणान्वयः । कथंभूत उवाह जठरीकृतलोकयात्रः उदरनिवेशितजगद्वृत्तान्तः, अहिरनन्त एव कशिपुः शय्या तया स्पर्शोऽनुकूलो यस्यास्तां निद्रां भीमानामूर्मीणां माला विद्यन्ते यस्मिन्नन्तर्जले निद्राणस्य जनस्याविवेकिनो जनस्य निद्रासुखमीदृगिति विवृण्वन्प्रदर्शयन्निवेत्यर्थः ॥ २० ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली ।

शतं वर्षसहस्राणां जीवामि तदनन्तरे पुण्यं संचिनोमि किमिदानीं तत्करणमिति मत्वा भगवदुपासनादिसत्कर्मण्यालस्यं न कर्तव्यमिति भावेन कालान्तर्यामिणं भगवन्तं नमति लोक इति । तावत्तदा बलवान्योऽस्य जनस्येह जीविताशां सद्यः कालक्षेपमन्तरेण छिनत्ति अपराधमन्तरेण जीविताशाछेदनं साहसमिति न मन्तव्यमित्यत उक्तं विकर्मेति । विहिताकरणादिना आत्महत्यादिदोषापत्तेरतोऽधिकोपराधोऽस्तीत्यतो न वैष्यम्यनैर्घृण्ये हरेरिति भावः । स्वे स्वविहिते तस्मै अनिमिषाय नित्यज्ञाननेत्रेण नित्यं पश्यते कालान्तर्यामिणे नित्यं तुभ्यं नम इत्यन्वयः ।

नित्यज्ञानदृशा नित्यं लवकालमपीश्वरः । पश्येत्तात्कालिकं चैव तस्मादनिमिषो हरिः ॥

इत्यादेर्न मात्रमत्र ग्राह्यं कालान्तर्यामिणो निमिषत्वं नित्यं लवादिकालनिरीक्षणात् । तत्रोक्तम् "कालस्यानिमिषत्वं च लवादेर्नित्यवीक्षणात् ।" इति । इतरस्य तच्छब्दवाच्यत्वं तन्नियतत्वात् ॥ १७ ॥ ❀ ❀ क्लृप्तकालोऽहमपि यस्माद्बिभेमि तस्मात्कालान्तर्यामिहरिप्रसादोऽवश्यं संपादनीयः पुण्यनिचयं संपादयिषुभिरिति भावेन कालान्तर्यामिणं विशिनष्टि यस्मादिति । धिष्ण्यमध्यासित इति सप्तम्यर्थे द्वितीया द्विपरार्धं धिष्ण्यं ब्रह्मशतवर्षकालावस्थायिस्थानं सत्याख्यं स्वस्य भीतिश्चानेन ज्ञातयेत्याशयेनाह तेप इति । मुक्तावानन्दवृद्धिकरं बहुतपः पूर्णज्ञानं चावरुरुत्समानः प्राप्तुमिच्छन् तपस्तेपे गुणोपसंहाररूपामुपास्तिमकरवमित्यर्थः । स्वक्रियमाणे कर्मणि सहायान्तरानपेक्षणाद्विगतः सखा यस्य स तथा तस्मै ॥ १८ ॥ ❀ ❀ तिर्यगादिजीवयोनिषु विज्ञानविलोपहेतुष्ववतरन्नित्योदितज्ञानानन्दत्वेनानन्यसाध्यं विक्रमं कुर्वन् क्रीडतीति यत्तेनैव तत्त्वज्ञानं सुलभं पुंसामतोऽपि न ज्ञायते गतिरित्यहो दुराग्रहो दुष्टानामिति भावेन श्रीहरिं स्तौति तिर्यगिति । आत्मेच्छया प्रयोजनमाह आत्मेति । परीप्सया पालनेच्छया तिर्यगादिजीवयोनिष्वप्यनिरस्तरतिः अन्यत्र नित्यरतिरपितु किमु, अत्र हेतुगर्भविशेषणमाह उपलब्धकाष्ठ इति । नित्यानन्दानुभवलोपे हि दुःखानुभवः संभाव्यते नान्यथा नित्यानुभूतानन्दोत्कर्षत्वादित्यर्थः ॥ १९ ॥ ❀ ❀ हरेः श्रमोद्रेकोत्थनिद्रादिदर्शनात्तद्रतिदुरवबोधेति तत्राह य इति । दशार्धेन पञ्चसंख्यया वृत्तिः यस्याः सा तथा तया पञ्चपर्ववत्येत्यर्थः एवंविधाविद्ययानुपहतोऽबाधितोऽपीत्यनेन एकमेव ब्रह्मविद्यया संसरतीति विद्यया मुच्यते इति मतम् । दूरादुत्सादितं भीमा भयंकर्य उर्मीणां माला अस्य सन्तीति भीमोर्मिमाली तस्मिन्नन्तर्जले अहिकशिपुस्पर्शानुकूलमिति क्रियाविशेषणम् अहिः शेष एव कशिपुरुत्तरवस्त्रास्तृतशय्या तस्य स्पर्शानुकूलं स्पर्शसुखानुगुणं यथा भवति तथा । न स्वार्थेयं निद्रा किंतु परार्थेत्याशेयनाह जनस्येति । अनेनापि निद्रामुद्रितनेत्रत्वमेव न सर्वेन्द्रियोपरमत्वमुक्तं भवति ॥ २० ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

विकर्म्म भगवद्बहिर्मुखं कर्म्म । अर्च्चनं पञ्चरात्राद्युक्तं पञ्चरात्रस्य कृत्स्नस्य वक्ता तु भगवान् स्वयमिति मोक्षधर्म्मात् ॥ १७ ॥ १८ ॥ ❀ ❀ निरस्ता विषया जीवगोचरा अर्थाः प्राकृता यस्मात् । आत्मेच्छया भक्तपिपालयिषया अवरुद्धदेहः प्रकटितमूर्तिः ॥ १९ ॥ ❀ ❀ तस्यावतारिणः पुरुषोत्तमस्यैव दृष्टां लीलामनुमोदते य इति । जनस्य यन्निद्रासुखं तदेव लीलया स्वस्मिन् प्रकटयन् तत्रान्यदुर्गमास्पदत्वं सुखस्पर्शशय्यत्वं च तत्सौकर्य्यहेतुमाह अन्तर्जल इत्यादिना ॥ २० ॥ २२ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

विश्वरूपत्वमुक्तमथ विश्वनियन्तृकालरूपत्वेन प्रणमति । लोको मनुष्यादिः कुशले कर्म्मणि प्रमत्तः अकृतावधानः । कुशलं कर्म्मैव किं तत्राह भगवदर्च्चने "ननु स्वधर्म्मेण तमभ्यर्च्ये" त्युक्तेः "ज्ञानिनो ज्ञानयज्ञेन यजन्ति ज्ञानविग्रह" मित्युक्तेश्च कर्म्मज्ञानयोगाभ्यामपि भगवदर्च्चनमेव स्यादिति केचिद्व्याचक्षते तत्राह त्वदुदिते । त्वयैव मदर्च्चनमिदमेवेति साक्षादुक्ते "ये वै भगवता प्रोक्ता उपाया आत्मलब्धये" इत्येकादशात् । "पञ्चरात्रस्य कृत्स्नस्य वक्ता तु भगवान् स्वयम् ।" इति मोक्षधर्म्माच्च स्वे स्वीये स्वकर्त्तव्य इत्यर्थः । तदेवं त्वद्भक्तलोकेभ्योऽन्येष्वेव कालस्याधिकार इति द्योतितम् । अस्य अभक्तलोकस्य जीवितस्याप्याशां किमुत भोगादिवाञ्छामित्यर्थः । अनिमिषाय कालाय ॥ १७ ॥ ❀ ❀ उक्तस्य कालबलवत्त्वस्य सीमामाह । यस्मात् कालात्

अहं ब्रह्मा द्विपरार्द्धावस्थायि धिष्ण्यं स्थानं सत्यलोकम्। अध्यासितोऽपि बिभेमि तथा अवरुरुत् समानः अवरोद्धुं यं कालं वशीकर्तुमिच्छन् बहुसवः बहवः सवा यज्ञा यस्य तथाभूतः सन् तपश्च अहं तेपे। तदपि बिभेमीत्यर्थः। ननु कालवशीकारार्थं बहुयज्ञप्रवृत्तौ तव कदा का युक्तिरासीत्तत्राह अधिमखाय मखानामधिष्ठात्रे तुभ्यं नमः। मखानामधिष्ठातुस्तव मखैरेव यजनेन कालो मे वशीभवत्विति बुद्धयेत्यर्थः। प्रत्युत कालेनैवाहं वशीकृतः संप्रत्यपि बिभेम्यतस्तव शुद्धभक्तिं विना कालो न जेयो भवतीत्याद्यज्ञाततत्त्वोऽतः परं शुद्धामेव भक्तिं करवाणीति ध्वनिः॥ १८॥ ❀ ❀ तदेव भगवद्रूपत्वेन तन्नियन्तृ कालरूपत्वेन च प्रणम्येदानीं परमोपास्यसच्चिदानन्दस्वरूपत्वेन प्रणमति। तिर्य्यगादिषु स्वेच्छयैव अवतीर्ण इति शेषः। स्वकृतसेतुपरीप्सया रेमे आत्मारामत्वात् त्यक्तविषयसुखोऽपि। "पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति। तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः" इति स्वकृतमर्य्यादापालनाय स्वभक्तोपनीतस्रक्चन्दनगन्धपुष्पशय्याद्युपभोग्येष्वेव रेमे "नाहमात्मानमाशासे मद्भक्तैः साधुभिर्विना" इत्यात्मारामत्वेऽप्यपूर्णकाम इवेति भावः। स्रगादीनां प्राकृतविषयत्वेऽपि भगवदर्थविनियुक्तत्वे सति तत्क्षण एवाप्राकृतत्वं स्यादित्येकादशे व्यक्तीभविष्यति अवरुद्धदेहः भागुरिमते अवेत्यकारलोपे विभुत्वादनावृतदेहः सच्चिदानन्दशरीर एवेत्यर्थः। यद्वा आत्मकृतसेतोः स्वभक्तवश्यत्वरूपमर्य्यादायाः परि सर्वतोभावेनेप्सया प्राप्तीच्छया श्रीयशोदया दाम्नेवान्यैरपि भक्तैः प्रणयरशनया अवरुद्धदेहः अतः सर्व्वोत्कर्षात् महत्स्रष्ट्राद्यन्तर्य्यामिपुरुषेभ्योऽप्युत्तमायेति कृष्णावतार एव तात्पर्य्यं तदुक्तम् 'यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः। अतोऽस्मि वेदे लोके च प्रथितः पुरुषोत्तमः' इति॥ १९॥ ❀ ❀ इदानीं दृश्यमानां निजोपास्यां मूर्तिं प्रणमति द्वाभ्याम्। दर्शार्द्धाः पञ्च वृत्तयो यस्यास्तया अविद्यया निद्राहेतुभूतया अनभिभूतोऽपि निद्रामुवाह तस्मादियन्ते स्वरूपशक्तिमय्येव निद्रेति भावः। जठरीकृता उदरे प्रविलापिता लोकयात्रा लोकपरम्परा यस्य सः। अहिरेव कशिपुः शय्या तस्य स्पर्शोऽनुकूलो यस्यास्ताम्। भीमोर्म्मिमालिनि प्रलयसमुद्रे जनस्य प्राकृतलोकस्य। जलमध्यस्थकोमलशय्याशायिनः सुखं भवतीति विवृण्वन् लोकवल्लील एव त्वं भवसीति भावः। यद्वा प्रलयकालेऽपि जनमात्रभयदे समुद्रेऽपि सर्पशय्यायामपि सुखेन त्वं निद्रासीति सर्व्वकाल-सर्व्व-देशसर्व्वसङ्ग-निर्भयस्त्वमेव नान्य इति भावः। सुखं विवृण्वन्निति कालदेशसङ्गतोभययुक्तोऽपि निद्रालुर्हि जनः सुखमेव निद्रातीति॥ २०॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः।

त्वदुदिते—

यत्करोषि यदश्नासि यज्जुहोसि ददासि यत्। यत्तपस्यसि कौन्तेय! तत्कुरुष्व मदर्पणम्॥

इत्यादिना त्वदुक्ते कुशले कर्मणि प्रमत्तः अनिमिषाय कालात्मने॥ १७॥ ❀ ❀ द्विपरार्द्धधिष्ण्यं द्विपरार्द्धकालस्थायि स्थानम् अध्यासितोऽप्यहं यस्माद्बिभेमि तस्मै अधिमखाय मखाधिष्ठात्रे नमः। कथंभूतः सकललोकनमस्कृतं यद्धाम वैकुण्ठादि तत् अवरुरुत्समानः आरोढुमिच्छन् बहुसवः बहवः सवाः तपोऽनुष्ठानकालावयवा यस्य स तथाभूतः सन् तपः तप्तवान्। तदुक्तं द्रोणपर्वणि भूरिश्रवसं प्रति भगवता 'ये लोका मम विमला ब्रह्माद्यैरपि सुरवृषभैरपीष्यमाणाः। तान् क्षिप्रं व्रज सततग्निहोत्रयाजिन्! मत्तुल्यो भव गरुडोत्तमाङ्गयान' इति॥ १८॥ ❀ ❀ स्वात्मेच्छया स्वात्मनः संकल्पेन अवरुद्धदेहः स्वीकृतमूर्तिः निरस्तरतिः आनन्दैकराशित्वात् निरस्तविषयसुखोऽपि तिर्यगादिषु जीवयोग्यासु जातिषु मत्स्यादिरूपेण रेमे यः तस्मै नमः॥ १९॥ ❀ ❀ दृश्यमानं रूपं प्रणमति य इति द्वाभ्याम्। दशार्धाः पञ्च तामिस्रान्धतामिस्रमोहमहामोहतमोरूपाः वृत्तयो यस्याः तया अविद्यया निद्राहेतुभूतया अनुपहतोऽस्पृष्टोऽपि यः अन्तर्जले जलमध्ये निद्रामुवाह तस्मै ते नमः इत्यग्रिमेणान्वयः। कथंभूतः जठरीकृतलोकयात्रः उदरनिवेशितलोकत्रयस्थितिः कथंभूते अन्तर्जले भीमोर्मिमालिनि भीमा भयंकराः या उर्मयः तासां मालाः विद्यन्ते यस्मिन् तस्मिन् कथंभूतां निद्राम् अहिरेव कशिपुः शय्या तस्याः स्पर्शः अनुकूलो यस्यास्ताम् किं कुर्वन्नुवाह जयस्य ध्यातुः सुखं विवृण्वन् प्रकटयन्॥ २०॥

## श्रीमद्वल्लभाचार्यविरचिता सुबोधिनीव्याख्या

कालात्मकं नमस्यति लोको विकर्मनिरत इति। विकर्म निन्दितं कर्म, तत्र निरतः स्थितः, तदेकप्रवण इत्यर्थः। कुशले धर्मे प्रमत्तोऽसावधानः। सुतरां त्वदुदिते कर्मणि, 'मन्मना भव मद्भक्तः' इत्यादौ। भवदर्चने तव पूजारूपे, स्वे स्वधर्मरूपे सर्वथा प्रमत्तः। तस्य यो जीविताशामपि छिनत्ति। तावदिति नरकादर्वाक्। पश्चान्नरकमपि प्रयच्छतीत्यर्थः। इहेति नैकस्त्ये। भगवदपराधं कृत्वा यो महानपि भवति, तमपि मारयतीत्येतदर्थमाह—बलवानिति। तथोपायं करोति, यो जीवन्नेव जीविताशां त्यजति। एवमलौकिककालात्मने नमः॥१७॥ ❀ ❀ यज्ञरूपं नमस्यति—यस्मादिति। कालो द्विविधः, यज्ञादिप्रवर्तको यज्ञात्मा, लौकिकश्च। तत्र लौकिकः पूर्वमुक्तः, यज्ञात्मक इदानीमुच्यते 'स्वधर्मनिष्ठः शतजन्मभिः पुमान् विरञ्चितामेति ततः परं हि माम्' इति वाक्यात्, येनैव

१. स्थिरः ख. ग. इदं नास्ति ङ. च.।

यज्ञात्मकेन सहस्राश्वमेधरूपेण ब्रह्मपदे अहं निवेशितः, इदानीमपि बहुभिर्यागैस्तपोभिश्च तमेवाऽऽरोढुमिच्छामि, तत्सायुज्यमेव वाञ्छामि । एवं यद्यपि ममाऽभीष्टकर्ता, तथापि तस्मादहं बिभेमि मारयिष्यतीति । यद्यपि द्विपरार्द्धधिष्ण्यमास्थितः । द्वे परार्द्धे तस्याऽऽसनस्य स्थितौ कालपरिच्छेदके । यस्याऽऽसनस्यापि नियतकालत्वम्, अहमपि नियतकालस्तादृशः; तथापीश्वरगतिर्ज्ञातु-मशक्येति बिभेम्येव । यद्यपि ममाऽऽसनस्य महत्त्वं, सर्वलोकनमस्कृतत्वात्; तथापि महानिति न त्यक्ष्यतीति भयम् । स्वभावत एवाऽहं बहुसवो बहुयज्ञकर्ता, तथापि तपस्तेपे । एवमतिदुर्धर्षाय मखाधिष्ठातृदेवाय तुभ्यं नम इति ॥ १८ ॥ ❁ ❁ पुरुषोत्तमं नमस्यति—तिर्यगिति । तिर्यङ्मनुष्यविबुधास्तामसराजससात्त्विका देहाः, तदादयोऽन्येऽपि त्रिविधाः । जीवयोनिषु जीवस्योत्पत्तिस्थानेषु । आत्मेच्छया स्वेच्छयैव, अवरुद्धदेहः सन्, स्वीकृतलीलाविग्रहो भूत्वा, आत्मकृतसेतुपरीप्सया स्वकृतमर्यादारक्षार्थम्, यो रेमे । मनुष्यादीन् स्वतुल्यान् विधाय स्वकृतधर्मरक्षार्थमेव कृष्णरूपो भूत्वा, तिर्यगादिषु कुत्रचिदपि निरस्तरतिरपि रेमे, एतादृशाय । अक्षरादप्युत्तमः, लोकप्रतीत्या बोधनार्थमेवं देहग्रहणकथा । अवरुद्धा निरुद्धा वा देहा येन । इच्छापि नास्ति, देहोऽपि नास्ति, तथापि स्वरूपानन्दभूत एव रेमे ॥ १९ ॥ ❁ ❁ नारायणं नमस्यति, कारणकार्यावस्था[1]रूपद्वयनिरूपणेन श्लोकद्वयेन—योऽविद्ययेति । यो दशार्द्धवृत्त्या पञ्चवृत्त्या अविद्यया अनुपहतोऽपि निद्रामुवाह । न हि कश्चित्स्वात्मविस्मरणव्यतिरेकेण निद्रितुमर्हति । पञ्चवृत्त्येति वक्तव्ये दशार्द्धवृत्त्येति वचनं विद्याविद्ययोः समभागार्थम् । यथा विद्यया अनुपकृतोऽपि जागर्ति, एवमविद्यया अनुपहतोऽपि निद्रामुवाहेति विद्याविद्याकार्यं भगवति नास्ति, किन्तु तत्सदृशी लीला वर्तत इति ज्ञापनार्थम् । किञ्च, जठरीकृता लोकयात्रा येन । सर्वानेव लोकान् स्वोदरे निवेश्य शेते, यथा लोकस्य स्वप्नस्तथाऽस्मिन्निदानीं लोकाः । अयमेव स्वप्नकर्ता निद्रासहितः ! अतः स्वप्ने कार्यं कुर्वन्नपि मायिकमेव कार्यं करोति । यदीदानीमपि निद्रित एव कार्यं करिष्यति, तदा अग्रे उत्पत्स्यमानमपि कार्यमसदेव स्यात्, मूलस्य तथात्वात्, निर्बीजफलवृक्षवत् । किञ्च, अन्तर्जले भीमोर्मिमालिनि अहिकशिपुस्पर्शानुकूलां निद्रामुवाह । न हि कश्चिज्जलमध्ये शेते, तत्रापि सर्पभोगे शयनं तामस्यवस्था । जलमध्ये शयनं सर्वथाऽनु[2]पपन्नम्, व्याकुलाधिकरणशयनमतिश्रमसूचकम् सर्पे च शयनं मृत्युहेतूनप्यविगणय्य शयनसूचकम् । एवं शयनं किमर्थं करोतीत्याशङ्क्याऽऽह—जनस्यसुखं विवृण्वन्निति । जनस्य जायमानस्यैवमवस्था चेत्तदा सुखं भवतीति लोके विवृण्वन् ज्ञापयन् । अत एवमेव स्थिते यदि सृष्टिर्भवेत्, तदोत्पन्नानां मोक्षादिवार्ता न भवेदित्येतदवस्थापरिहा[3]रं प्रार्थयिष्यन्निमामवस्थामेवं वर्णितवान् ॥ २० ॥

**अस्मिन् पर्याये सुबोधिनीप्रकाशव्याख्या नास्ति ।**

**श्रीगिरिधरकृता बालप्रबोधिनी**

एवं जगत्सृष्ट्यादिहेतुत्वमुक्त्वा कालरूपेण सर्वसंहर्तृत्वं वदन्नमस्करोति—लोक इति द्वाभ्याम् । अयं लोकः प्राणिमात्रं विकर्मनिरतः पापाचारनिष्ठः कुशले सुखहेतुभूते हिते कर्मणि प्रमत्तः अनवहितो वर्त्तते यस्तावत् प्रथमत इहास्मिन्नेव जन्मनि सद्यः अविलम्बेन सहसैव अस्य लोकस्य जीविताशामेव छिनत्ति भोगसुखवार्त्ता तु दूरतस्तस्मै अनिमिषाय निमेषरहिताय सावधानाय कालरूपाय नमोऽस्त्वित्यन्वयः । तावदित्यनेन पश्चान्नरकादिदुःखमपि प्रयच्छतीति सूचितम् । तच्चिन्तितमन्यथाकर्त्तुं न कोऽपि शक्नोतीति सूचयन्नाह—बलवानिति । कुशलं कर्मैव किमित्यपेक्षायामाह—त्वदुदिते इति । स्वे स्वकीये त्वयोदिते साक्षादुक्ते भवदर्चनरूपे कर्मणि । यथोक्तं गीतासु—'यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् । यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम् ॥ मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु । मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे ॥ सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज । अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः' इति ॥ १७ ॥ ❁ ❁ आस्तां तावदन्यलोकस्य कथा, सकलैर्लोकैरर्वाचीनैर्नमस्कृतं बहुमतं यत् द्विपरार्द्धावस्थायि धिष्ण्यं स्थानं तत् अध्यासितः आरूढोऽप्यहं यस्मात्कालरूपात्त्वत्तो बिभेमि भीतश्च संस्त्वामेवावरुरुत्समानः प्राप्तुमिच्छन् तपस्तेपे कृतवान् । कथम्भूतः बहुसवः बहवः सवा यागा यस्य सः, बहून् यागान् कृत्वाऽपि बहून् संवत्सरांस्तपः कृतवानित्यर्थः । तस्मै तुभ्यं भगवते नमः । ननु कालरूपाद्भीतश्चेद्यज्ञादि किमिति कृतवानित्यपेक्षायां यतो यज्ञादिभिराराध्यस्तत्फलदाता च त्वमेवेत्याशयेनाह—अधिमखायेति । तेप इत्यत्र धात्वर्थो न विवक्षितः ॥ १८ ॥ ❁ ❁ एवं कालरूपाद्भयमुक्त्वा भाविलीलावतारांस्तत्कृतोपकारांश्च स्मरन् प्रणमति—तिर्यगिति । यस्तु निरस्तरतिरपि स्वरूपानन्दानुभवेनैव निरस्तविषयसुखापेक्षोऽपि आत्मना स्वेन कृताः सेतवस्तत्तन्मर्यादामार्गास्तत्परीप्सया पालनेच्छया आत्मेच्छया स्वसङ्कल्पमात्रेणैव जीवयोनिषु तिर्यगादिषु अवरुद्धदेहः स्वीकृतमूर्तिः सन् रेमे तस्मै पुरुषोत्तमाय कालकर्मविद्यादिपारवश्यरहिताय भगवते नम इत्यन्वयः । तत्र तिर्यक्षु मत्स्यकूर्मवराहहंसादयः, मनुष्येषु रामकृष्णपरशुरामादयः, विबुधेषु वामनादयः, आदिपदेन श्रीहयग्रीवमोहिन्यादयोऽवतारा ज्ञेयाः ॥ १९ ॥ ❁ ❁ इदानीं दृष्टरूपस्य श्रीनारायणस्य प्रभावं वर्णयंस्तं प्रणमति—य इति द्वाभ्याम् । यो दशार्धाः पञ्च वृत्तयो यस्यास्तया अविद्यया निद्राहेतुभूतया अनुपहतोऽपि निद्रामुवाह स्वेच्छया निद्रितानुकरणं कृतवांस्तस्मै ते

---

१. कारणकार्यावस्थरूप ग. । २. अनुपपत्तिः क. घ. च. । ३. परित्यागम् ग. ।

तुभ्यं नम इत्युत्तरेणान्वयः। नन्वविद्ययाऽनभिभूतस्य किमर्थो निद्रास्वीकार इत्याकाङ्क्षायामाह—जनस्येति। पूर्वकल्पे श्रान्तस्य जनस्य विश्रामसुखं विवृण्वन् स्फोरयन्नित्यर्थः। तस्य निद्राङ्गीकारेपि जनस्य सुखं कथं स्यादित्यपेक्षायामाह—जठरीति, जठरीकृताः उदरे प्रविलापिता लोकयात्राः सर्वे लोका येन स इत्यर्थः। दयालुभिः परोपकारार्थं दुस्सहमपि दुःखं सोढव्यमिति द्योतयन्निद्रां विशिनष्टि—अन्तरिति। भीमानामूर्मीणां माला विद्यन्ते यस्मिंस्तस्मिन्नन्तर्जले जलमध्ये अहिरेव कशिपुः शय्या तस्याः स्पर्शानुकूलो यस्यास्तामित्यर्थः। अत्र पञ्चवृत्त्येति वचनं विद्याविद्ययोः कार्यं भगवति नास्ति किन्तु स्वेच्छयैव तत्तल्लीलां करोतीति सूचितम्। तत्र विद्यापर्वाणि—'वैराग्यं साङ्ख्यं योगं च तपो भक्तिश्च केशवे। पञ्चपर्वेति विद्येयं यया विद्वान् हरिं विशेत्' इति वचनाज्ज्ञेयानि। अविद्यापर्वाणि तु तामिस्रान्धतामिस्रमोहमहामोहतमोमोहरूपाणि वक्ष्यमाणानि॥ २०॥

## हिन्दी अनुवाद

भगवन्! आपने अपनी आराधनाको ही लोकोंके लिये कल्याणकारी स्वधर्म बताया है, किन्तु वे इस ओरसे उदासीन रहकर सर्वदा विपरीत ( निषिद्ध ) कर्मोंमें लगे रहते हैं। ऐसी प्रमादकी अवस्थामें पड़े हुए इन जीवोंकी जीवन-आशाको जो सदा सावधान रहकर बड़ी शीघ्रतासे काटता रहता है, वह बलवान् काल भी आपका ही रूप है; मैं उसे नमस्कार करता हूँ॥ १७॥ ❀ ❀ यद्यपि मैं सत्यलोकका अधिष्ठाता हूँ, जो दो परार्द्धपर्यन्त रहनेवाला और समस्त लोकोंका वन्दनीय है तो भी आपके उस कालरूपसे डरता रहता हूँ। उससे बचने और आपको प्राप्त करनेके लिये ही मैंने बहुत समयतक तपस्या की है। आप ही अधियज्ञरूपसे मेरी इस तपस्याके साक्षी हैं, मैं आपको नमस्कार करता हूँ॥ १८॥ ❀ ❀ आप पूर्णकाम हैं, आपको किसी विषयसुखकी इच्छा नहीं है; तो भी आपने अपनी बनायी हुई धर्ममर्यादाकी रक्षाके लिये पशु-पक्षी, मनुष्य और देवता आदि जीवयोनियोंमें अपनी ही इच्छासे शरीर धारण कर अनेकों लीलाएँ की हैं,। ऐसे आप पुरुषोत्तम भगवान्‌को मेरा नमस्कार है॥ १९॥ ❀ ❀ प्रभो! आप अविद्या, अस्मिता, राग, द्वेष और अभिनिवेश—पाँचोंमेंसे किसीके भी अधीन नहीं है, तथापि इस समय जो सारे संसारको अपने उदरमें लीनकर भयङ्कर तरङ्गमालाओंसे विक्षुब्ध प्रलयकालीन जलमें अनन्तविग्रहकी कोमल शय्यापर शयन कर रहे हैं, वह पूर्वकल्पकी कर्मपरम्परासे श्रमित हुए जीवोंको विश्राम देनेके लिये ही है॥ २०॥

यन्नाभिपद्मभवनादहमासमीड्य लोकत्रयोपकरणो यदनुग्रहेण।
तस्मै नमस्त उदरस्थभवाय योगनिद्रावसानविकसन्नलिनेक्षणाय॥ २१॥
सोऽयं समस्तजगतां सुहृदेक आत्मा सत्त्वेन यन्मृडयते भगवान् भगेन।
तेनैव मे दृशमनुस्पृशताद्यथाहं स्रक्ष्यामि पूर्ववदिदं प्रणतप्रियोऽसौ[1]॥ २२॥
एष प्रपन्नवरदो रमयाऽऽत्मशक्त्या यद्यत्करिष्यति गृहीतगुणावतारः[2]।
तस्मिन् स्वविक्रममिदं[3] सृजतोऽपि चेतो युञ्जीत कर्मशमलं च यथा विजह्याम्॥ २३॥
नाभिह्रदादिह सतोऽम्भसि यस्य पुंसो विज्ञानशक्तिरहमासमनन्तशक्तेः।
रूपं विचित्रमिदमस्य विवृण्वतो मे मा रीरिषीष्ट निगमस्य गिरां विसर्गः॥ २४॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

किं च। यस्य नाभिपद्ममेव भवनं तस्मात्। लोकत्रयमुपकरणं यस्य यद्वा लोकत्रयस्य सृष्ट्यादिद्वारेणोपकरोतीति तथा तादृशोऽहं यदनुग्रहेणासम्। उदरे स्थितो भवः संसारप्रपंचो यस्य। योगनिद्रावसाने किंचिद्विकसन्नलिनवदीक्षणं यस्य॥ २१॥ ❀ ❀ एवं स्तुत्वा प्रार्थयते। सोऽयमिति चतुर्भिः। यद्येन सत्त्वेन ज्ञानेन भगेनैश्वर्येण च मृडयते सुखयति विश्वं दृशं प्रज्ञामनुस्पृशताद्योजयतु यथाऽहं स्रष्टुं क्षमो भविष्यामि यतः प्रणतप्रियोऽसावहं च प्रणतो न चान्यः प्रार्थनीयोऽस्ति यतो भगवान् स एव समस्तजगतां सुहृत् यतोऽसावेकोऽनुस्यूत आत्मांतर्यामी॥ २२॥ ❀ ❀ आत्मशक्त्या रमया सह यद्यत्कर्म करिष्यति स्वविक्रमं स्वस्य विष्णोरेव विक्रमः प्रभावो यस्मिंस्तदिदं विश्वं तदाज्ञया सृजतोऽपि मे चेतः स एव युंजीत प्रवर्तयतु कर्मासक्तिं तत्कृतं शमलं च वैषम्यादिपापं यथा विजह्यां त्यक्ष्यामि॥ २३॥ ❀ ❀ अंभसि सतो यस्य नाभिह्रदादिहासम्। विज्ञाने शक्तिर्यस्य महत्तत्त्वात्मकस्य चित्तस्य तदभिमानी अस्य रूपमिदं विस्तारयतो मे निगमस्यावयवभूतानां गिरां विसर्ग उच्चारणं मारीरिषीष्ट "हलांतं ब्रह्मवर्चसम्" इति न्यायेन मा लुप्यतामित्यर्थः॥ २४॥

---

१. प्रा० पा०—प्रियोऽस्मि। २. प्रा० पा०—गुणेषु गुणा०। ३. प्रा० पा०—मिमं।

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

अन्यदुत्कर्षमाह—किञ्चेति। यस्य भगवतः भवनमुत्पत्तिक्षेत्रम्। आसमभवम्। सर्वलोकस्रष्टुर्ममाप्युत्पादकत्वात्त्वमेव स्तुत्यर्हो नान्य इत्याह—ईड्ये ति। उपकरणमाज्ञाकारि कृतिर्वा सामग्री वा मद्बोधने लोकत्रयरचनयैव रचकत्वेन मद्बोधो भवति "उपकरणमस्त्युपकारे सामग्र्यां वशवर्त्तिनि रचने" इति निरुक्तिः। 'अप्रसिद्धेः प्रसिद्धिर्हि बलीयसी' इति न्यायमाश्रित्य सर्वप्रसिद्धार्थमाह—यद्वेति। यद्वा भवो रुद्रो ज्ञेयः। एतेन रुद्रस्य संहारकत्वं तु गौणमेव "निमित्तं परमीशस्य विश्वसर्गनिरोधयोः। हिरण्यगर्भश्शर्वश्च" इत्युक्तेः॥ २१॥ ॐ ॐ योजयतु तज्ज्ञानं ददात्विति यावत्। 'स्पर्शनं प्रतिपादनम्' इत्यमरः। असौ मे प्रत्यक्षतां प्राप्तः। सुहृत्पालकः। आत्मा निरुपाधिप्रेमास्पदम्॥ २२॥ ॐ ॐ गृहीता गुणा वात्सल्यादयस्तद्युक्ताः अवतारा येन सः। तत्कृतं कर्मासक्तिकृतम्। तस्मिन्कर्मणि धरोद्धारादिलक्षणे। एतेन सृष्टौ मे चेतो मा मज्जतु किन्तु तल्लीलायामेवेत्युक्तम्। तथा लीलास्मरणादिनैव पापहानिर्नान्यथेति च॥ २३॥ ॐ ॐ किञ्च भगवतस्तवैश्वर्यसिंधोः कणमात्रेप्यस्मिन्मे प्रवेशो वेदाभ्यासप्रसादादेव 'वेदश्चक्षुस्तवेश्वर' इत्युक्तेः। संप्रति सृष्ट्यर्थं विविधव्यापारासक्तस्य मे वेदविस्मृतिर्मा भवतु। यद्वाऽस्पृश्याभक्ष्यापेयाग्राह्यादिवस्तुरूपमिदं सृजतो वेदोच्चारणाद्यधिकारो मा नश्यत्विति प्रार्थयते नाभीति। निगमस्य वेदराशेरवयवभूतानामृग्यजुःसामाथर्वरूपाणां विशेषेण सर्गोऽध्ययनाध्यापनादिसंबंधः। रिष् हिंसायामित्यस्य यङ्लुगंतात्कर्मकर्त्तरि छांदसं रीरिषीष्टेति। श्रीमद्भागवतस्य 'पुराणं ब्रह्मसंमितम्' इत्युक्तेर्वेदरूपत्वादत्र प्रायश्छांदसप्रयोगोल्लेख एव श्रीव्यासदेवेन कृत इति ध्येयम्। केचित्तु 'काणादं पाणिनीयं च सर्वशास्त्रोपकारकम्' इत्युक्तेः। पाणिनीयशास्त्रादनिष्पन्नप्रयोगं नाद्रियंते। किञ्च छांदसत्वाश्रयणमपि सत्रान्नग्रहणवत्पाणिनीयशास्त्राज्ञानमूलकमेवेति चाहुस्तथा च रीरिषीष्टेति प्रयोगस्याप्यपाणिनीयत्वेनाप्रमाणमाहुस्ते चेत्थं बोध्याः "विरुद्धः पाणिनिमतात्प्रयोगोऽसंगतः स्फुटः। तल्लोके न पुराणादौ यतस्ते वेदरूपिणः" इत्युक्तेः "यान्युज्जहार भगवान्व्यासो व्याकरणार्णवात्। तानि किं पदरत्नानि संति पाणिनिगोष्पदे" इति टीकांतरोक्तेश्च भगवता व्यासेन श्रीशिवप्रणीतव्याकरणार्णवग्रंथादुद्धृत्यैव बहवः प्रयोगा लिखिता न ते पाणिनिग्रंथे सिध्यंतीति। अत एवोक्तमभियुक्तैः 'समुद्रवद्व्याकरणं महेश्वरे तत्कुंभतोयोपमितं बृहस्पतौ। तद्भागलेशः सततं पुरंदरे कुशाग्रबिन्दुप्रमितं च पाणिनौ" इति। हलांतं हलग्रहणेन कर्षणमत्र हलशब्देनोक्तं तदेवांतोऽवसानो यस्य तद्धलांतं ब्रह्मवर्चसं ब्राह्मणत्वमित्यर्थ इति। 'ऊर्ध्ववस्त्रादधोवस्त्राद्धूमपानात्तथैव च। षड्भिर्विप्राः प्रणश्यंति हालाहलहलाहलैः" इति वात्स्योक्तेरिति भावः। ऊर्ध्ववस्त्रं यच्छिरोदेशेन धार्यते। तद् अधोवस्त्रं यत् पादद्वारा धार्यते। तत् धूमपानं गुडादिमिश्रितताम्रकूटौषधिपत्रवटिकोतोरीत्यादियंत्रोत्थधूमस्य मुखद्वारोदरे प्रवेशनम्। हाला मद्यं हलं लांगलम्। हलाहलं तु स्थावरविषविशेषो यद्भक्षणेन झटित्येव शरीराननुसंधानपूर्वकं प्राणवियोगः स्यात्तदित्यर्थः। एतैर्विप्राः प्रणश्यंति ब्राह्मणत्वच्युताः संतः श्रौतस्मार्त्तकर्मानधिकारिणो दानायोग्याश्च संतीत्यर्थः॥ २४॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

उपकरणं नियम्यत्वेन भोगसाधनं पूर्वार्थे लोकत्रयस्य तदानीमजातत्वादुपकरणत्वमनुपपन्नमतो यद्वेति सृष्ट्यादीत्यादिना स्वस्वविहितकर्मणि प्रवर्त्तनमुपकरोति धर्मादिपुरुषार्थं जनयति नन्द्यादिविहितः कर्त्तरि ल्युप्रत्ययः॥ २१॥ ॐ ॐ सोऽयं लोकवेदप्रसिद्धः यदित्यव्ययं येनेत्यर्थः। ज्ञानेन एवमिदं धर्मादिपुरुषार्थं प्रापणीयमिति जगद्विषयकेण ऐश्वर्य्येण शुभकर्मणि प्रवर्त्तनरूपेण नियन्तृत्वेन तेनैव सत्त्वेन भगेन चैव यथा ज्ञानैश्वर्य्ययोजनप्रकारेणैव एकोऽनुस्यूत एकत्वेन व्यापकस्सन्नन्तर्य्यामी अतस्सर्वसुहृत्॥ २२॥ ॐ ॐ प्रवर्त्तयतु सृष्टाविति शेषः। गृहीतगुणावतारः गृहीता गुणा भक्तवात्सल्यादयो येषु तादृशा अवतारा मत्स्यकूर्मादयो यस्येति व्याख्येयं त्रिदेव्या अप्रकृतत्वात्॥ २३॥ ॐ ॐ विज्ञाने अनुसंधाने 'त्रिभिर्नश्यति विप्रत्वं हलहालाहलाहलैरि'त्युक्तेः हलग्रहणेनान्तो नाशो यस्य तद्ब्रह्मवर्चसं ब्रह्मतेजः इति न्यायेन मारीरिषीष्टेति रिष् हिंसायामित्यस्य यङ्लुगन्तलुङि कर्मकर्त्तरि छान्दसं रूपमत इत्यर्थ इत्युक्तम्॥ २४॥

### श्रीमद्वीरराघवव्याख्या

किं च यस्य नाभिपद्ममेव भवनं तस्माल्लोकत्रयोपकरणः लोकत्रयमुपकरणं यस्य स लोकत्रयोपकरणः त्रैलोक्यपतिरित्यर्थः। एवंभूतोऽहं यदनुग्रहेण यस्य भगवतोऽनुग्रहेण आसमाविरभवं तस्मै उदरस्थभवाय उदरस्थः भवः कार्यवर्गो यस्य तस्मै योगनिद्रावसाने विकसन्नलिनवदीक्षणं यस्य तस्मै नम इत्यर्थः॥ २१॥ ॐ ॐ एवं स्तुत्वा मनीषितानि प्रार्थयते सोऽयमित्यादिभिश्चतुर्भिः। समस्तजगतां चेतनाचेतनानामात्मा अत एव सुहृत् सोऽयं भगवान् येन सत्त्वेन ज्ञानेन शुद्धसत्त्वमयविग्रहेण वा भगेनैश्वर्येण च विश्वं मृडयते सुखयति तेनैवैश्वर्येण मे दृशं प्रज्ञामनुस्पृशतात् योजयतात् दत्तादिति यावत्, यथा इदं विश्वं पूर्वकल्पवत्स्रक्ष्यामि सृष्टिक्षमौपयिकीं प्रज्ञामनुस्पृशतादित्यर्थः। प्रार्थनाया नैष्फल्यशङ्कां वारयति असौ समस्तसुहृत्सर्वान्तर्यामी भगवान् प्रणतेषु प्रियः निरतिशयप्रीतियुक्तः। "प्रियो हि ज्ञानिनोऽत्यर्थमहं सच मम प्रिय" इति गीतत्वात् प्रणतप्रियत्वात्प्रणतार्थितार्थपरिदानदीक्षित इत्यभिप्रायः॥ २२॥ ॐ ॐ ननु विश्वसृष्ट्यर्थमेव सृष्टस्त्वं स्वबन्धकरीं, विश्वसृष्ट्युपयुक्तां प्रज्ञां

प्रार्थयितुं नार्हसीत्याशङ्कां निराकुर्वन्नन्यदपि प्रार्थयते एष इति। एष भगवान् प्रपन्नवरदः आत्मशक्त्या आत्मनः स्वस्यापृथक्सिद्धविशेषणभूतया लक्ष्म्या साकं गृहीता अपरित्यक्ताः गुणाः स्वाभाविकसर्वज्ञत्वापहतपाप्मत्वादयः ज्ञानशक्त्यादयश्च गुणा येषु तथाभूता अवतारा यस्य सः यद्यत्करिष्यति यद्यद्देवमनुष्यतिर्यगादिसजातीयचेष्टितं करोति तस्मिन्कर्मणि मे चेतः चित्तं युञ्जीत, तत्तदवतारगुणकर्मानुभवयुक्तं स्यात्। कथंभूतस्यापि मे स्वविक्रमं स्वस्य तव विक्रमः प्रभावो यस्मिंस्तदिदं विश्वं सृजतोऽपि तवाज्ञया त्वद्विभूतिभूतमिदं विश्वं सृजतोऽपि मे चेतः त्वद्गुणकर्मानुभवयुक्तं यथा भवेत्तथानुगृह्णात्वित्यर्थः। किं गुणकर्मानुभवासक्तिप्रार्थनेनेति शङ्कानिरासायाह यथा च दुरितनिवर्तकगुणकर्मानुभवासक्त्या कर्मशमलं संसृतिहेतुभूतमनादिपुण्यपापरूपमालिन्यं विजह्यां त्यजेयं भवदनुग्रहेण त्वदवतारगुणकर्माण्यनुभवंस्त्वद्विभूतिभूतं जगत्त्वत्कैङ्कर्यवेषेण सृजतो मे त्वत्कैङ्कर्यप्रार्थना युक्तैवेति भावः॥ २३॥ ❀ ❀ एवं सृष्ट्यौपयिकीं प्रज्ञां मनसस्तदवतारगुणकर्मासक्तिं च संप्रार्थ्याथ तत्स्वरूपरूपगुणविभूतिप्रतिपादकवेदराशयविस्मरणं प्रार्थयते नाभिह्रदादिति। इहाम्भसि अस्मिन्नुदके सतः शयानस्य यस्यानन्तशक्तेरपरिच्छिन्नज्ञानबलक्रियाशक्तेः पुंसस्तव नाभिह्रदाद्विज्ञानशक्तिर्विज्ञानं शक्तिरपृथक्सिद्धविशेषणं यस्य सः ज्ञानगुणकोऽहमासं जातः। अस्य भगवतस्तव विचित्रमद्भुतं रूपं शरीरम् इदं चिदचिदात्मकं जगद्विस्तारयतो निगमस्य वेदस्य गिरां वेदावयवभूतानां वाचां विसर्गः प्रसरः उच्चारणमिति यावत् मा रीरिपीष्ट मा क्षीणः स्यात् तथानु गृह्णात्वित्यर्थः॥ २४॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली।

पितृनमस्कारोऽपि पुत्रेणावश्यं कार्य इत्याशयेन तं नमति यन्नाभीति। यदनुग्रहेणेत्युभयत्रान्वयः अहं यदनुग्रहेण यन्नाभिपद्मभवनादासं यदनुग्रहेण लोकत्रयोपकरणश्चासमिति लोकत्रयसृष्टौ सहकारीत्यनेन मुख्यसृष्टौ मुख्यस्रष्टा स एवेत्युक्तं भवति। शिवोऽपि भवदाज्ञानियत इति भावेनाह उदरस्थेति। उदरे तिष्ठतीत्युदरस्थः उदरस्थो भवो रुद्रो यस्य स तथा तस्मै अनेन सर्वसंहर्तृत्वमपि रुद्रकृतमप्युपचारमात्रं मुख्यं तु हरेरित्युक्तं भवति रुद्रस्यापि संहर्ता किमुत जगत इति वा ब्रह्मरुद्रौ नारायणात्मानाविति भ्रान्तिरपहस्तितेति च ज्ञातव्यम्। योगनिद्रावसाने विकसन्नलिनेक्षणायेत्युक्तिर्नित्यविकसन्नलिनेक्षणस्य कादाचित्कविकासोक्तिरज्ञजनदृष्टमपेक्ष्योक्ता अतो भगवतो गतिर्न ज्ञायत इति मतमवद्यात्मकत्वाद् बुभूषुभिर्न ग्राह्यमिति सिद्धम् ॥ २१॥ ❀ ❀ अधुना स्वाभीष्टं प्रार्थयत इत्याह सोऽयमिति। स इति ज्ञातोऽसीत्युक्तः परामृश्यते। सुहृत्त्वादेकत्वात् सुहृदन्तररहितत्वादात्मत्वादुत्कृष्टत्वादिमं वरं प्रार्थय इति भावः। "आत्मशब्दस्य मुख्यार्थो विष्णुरेकः सनातनः। संदोहदेहमनसो बुद्धिर्जीवाः स्वयं तथा। ब्रह्माप्यमुख्यः क्रमश उत्कर्षोऽप्यात्मता भवेत्।" इति वचनान्मुख्यार्थो विष्णुरेव। तस्यैव ग्राह्यत्वात् यद्येन भगेन ऐश्वर्यादिरूपेण सत्त्वेनात्मभावेन पराक्रमेण वा मृडयते रक्षति विश्वमिति शेषः। स्पृश दान इति धातोः अनुस्पृशतात् ददातु। दशं विशिनष्टि यथेति। एवं प्रयच्छतः प्रतिदानमिदमेवेति भावेनाह प्रणतेति। अनेनेश्वरस्य स्वतस्तृप्तस्य तर्पकान्तरानपेक्षां सूचयति॥ २२॥ ❀ ❀ उक्तमेवार्थं विशेषणान्तरप्रक्षेपेण प्रार्थयते एष इति। आत्मशक्त्या स्वभार्यया स्वसामर्थ्येन वा "स्वसामर्थ्यात्सकर्माणि रमया सह केशवः। कुरुते स्वयमेवैष कानिचित्पुरुषोत्तम" इति वचनात् यद्यत् यं यं विक्रमं तस्मिन्स्वविक्रमे स्वव्यापारे वीर्यलक्षणे जगत्सर्जनव्यापारमग्नस्यापि मे चेतः स्मृतिकारणं ज्ञानं युञ्जीत अपुष्टं पुष्टं कृषीष्ट। इयदेव नालमित्याह कर्मेति। ज्ञानप्रतिबन्धकं पापात्मदैत्यादिसृष्टिपापकर्मणा प्राप्तं शमलं यथा येन जहामि तादृशमिति शेषः। सत्त्वादिगुणाधीने ज्ञानाज्ञाने किमनेन स्यातामित्यत उक्तं गृहीतेति। स्वनियतसत्त्वादिगुणप्रकाशः हयग्रीवादिप्रसादप्राप्यं ज्ञानमस्मात्कथं स्यादित्यतो वेत्युक्तं गृहीतेति। स्वप्रकाशितज्ञानादिगुणहयग्रीवाद्यवतारः एतत्प्रार्थनया रूपान्तरप्राप्यफलमपि स्यादित्यर्थः ॥ २३॥ ❀ ❀ वैदिकप्रतिपाद्यवस्तुनो ज्ञानविशेषो वेदार्थतात्पर्यज्ञानानान्तरीयक इति तद्विषयकज्ञानमपि न विनष्टं स्यादिति प्रार्थयते नाभिह्रदादिति। इह अम्भसि सतोऽस्य हरेः रूपं प्रतिमास्थानीयं निगमस्य संबन्धिनीनां गिरां वाचां विसर्गो विशिष्टनिश्चयो विष्णुरेव सर्वोत्तम इत्यादिलक्षणो मा रीरिषीष्ट क्षीणो नष्टो मा भूदित्यर्थः॥ २४॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

एष इति। रमयेति। रमाख्यया स्वरूपशक्त्या न तु मायाशक्त्या हेतुना गृहीतगुणावतारः गृहीता गुणा भक्तवात्सल्यादयो येषु तादृशा अवतारा यस्य सः। स्वविक्रममिति। त्वद्विक्रममयत्वमेव विश्वं स्यात् ततस्त्वच्छक्त्यैव मया तत्कर्तुं शक्यं ततस्तथा तत्प्रार्थनञ्च मम युक्तमेवेति भावः॥ २३॥ ❀ ❀ इदं महापातकात्मकपर्यन्तं सृजतो मम वेदोच्चारणरूपं ब्रह्मतेजो मा लुप्यताम्। यथा साधारणब्राह्मणानां हेलया ब्रह्मतेज इत्यर्थः। मारीरिषीष्टेति रिष् हिंसायामित्यस्य यङ्लुगन्तलिङि कर्म्मकर्त्तरि-रूपं छान्दसम्॥ २४-२८॥

---

* मध्यदेहः।

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

आसम् अभूवं लोकत्रयमेव उपकरणमाज्ञाकारि यस्य सः । यद्वा । सृष्ट्यादिद्वारालोकत्रयस्योपकारी उदरे स्थितो भवः संसारप्रपञ्चो यस्य तस्मै । योगनिद्रावसाने सम्प्रति रात्र्यन्त इव विकसन्नलिनमिव ईक्षणं यस्य तस्मै तेन । हे मत्प्रभो कृपापारावार ! जागृहि जागृहि किङ्करोऽहं मङ्गलारार्तिकं करवाणीति भावः ॥ २१ ॥ ❀ ❀ एवं स्तुत्वा प्रार्थयते सोऽयमिति चतुर्भिः । समस्तजगतां प्राकृताप्राकृतानां सुहृत् पालकः आत्मा निरुपाधिप्रेमास्पदं एवम्भूतस्यान्यस्याभावादेकः यद्यस्मात् सत्त्वेन गुणेन पालनलक्षणेन समस्तजगन्त्येव प्राकृतानि मृडयते सुखयति भगेन स्वीयषडैश्वर्य्येण अपाकृतवान् भक्तजनानपि मृडयते यस्मात् तेनैव सत्त्वेन किञ्चिन्मात्रेण भगेन च मे मम दृशं प्रज्ञां प्राकृतीं भक्तिमत्त्वादंशेनाप्राकृतीञ्च अनुस्पृशतु पालयतु यथाहं स्रक्ष्यामि । प्राकृतान् मरीच्यादीन् स्रष्टुं अप्राकृतान् नारदादींश्चाविर्भावयितुं ज्ञास्यामि यतोऽसौ प्रभुः प्रणतिमात्रे कृतेऽपि प्रियः ॥ २२ ॥ ❀ ❀ पुनश्च रजोगुणमय्या सृष्टेर्बिभ्यत् स्वीयभक्तेरभ्युदयं प्रार्थयते । एष भवान् प्रपन्नाय मह्यं एतद्वरदोऽस्त्वित्यर्थः । रमया स्वरूपभूतया न तु माययेत्यर्थः । अतो गृहीतगुणा धृतस्वरूपशक्त्युत्थभक्तवात्सल्यादिगुणा अवतारा यस्य सः । तस्मिन् धरोद्धरणादौ कर्म्मणि मम चेतो युञ्जीत प्रवर्त्तयतु । मम कथम्भूतस्य स्वविक्रमं स्वस्य स्वप्रभोर्विक्रमः प्रभावो यस्मिन् तदिदं विश्वं सृजतोऽपि तेन सृष्टौ मम चेतो नासज्जतु किन्तु तल्लीलाकथायामेवेत्यर्थः । कर्म्मशमलं सृष्ट्युत्थं वैषम्यादिपापं त्यक्ष्यामि ॥ २३ ॥ ❀ ❀ किञ्च भगवतस्तवैश्वर्य्यसिन्धोः कणमात्रेऽप्यस्मिन् मम यत् प्रवेशस्तत् खलु वेदाभ्यासप्रसादादेव यदुक्तं वेदश्चक्षुस्तवेश्वरेति । सम्प्रति तु सृष्ट्यर्थकविविधव्यापारवत्त्वेनानध्यवसायात् तस्य वेदस्य विस्मृतिर्मे सम्भविष्यति सा मा भूदिति प्रार्थयते नाभीति । यस्याम्भसि सतः पुंसस्तव नाभिह्रदादहमासं विज्ञानशक्तिः विज्ञानमयपुरुषः समष्टिजीवरूपः बुद्धितत्त्वाधिष्ठाता वा अस्य परमेश्वरस्य रूपमिदं विश्वं विस्तारयतो मम निगमस्य अवयवभूतानां गिरां विसर्गः ऋगादिभेदप्रपञ्चः मा रीरिषीष्ट मातिशयेन लुप्यतां मा मायया विस्मृतो भवत्वित्यर्थः । रिप् हिंसायामित्यस्य यङ्लुगन्तलिङि कर्म्मकर्तरि रूपं छान्दसम् ॥ २४ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

यत् यस्य नाभिपद्ममेव भवनं तस्मात् लोकत्रयस्य प्रत्यहं सृष्टिद्वारेणोपकरोतीति लोकत्रयोपकरणोऽहमासमुदरे स्थितः तद्वारेण जायमानो भवः शिवो यस्य युज्यते इति योगः । संकल्पस्तेन या निद्रा तदवसाने विकसन्नलिने इव ईक्षणं यस्य तस्मै ॥२१॥ ❀ ❀ अथ प्रार्थयते सोऽयमिति चतुर्भिः । समस्तानि अनेककोटिब्रह्माण्डरूपाणि जगन्ति तेषां य एक एव सुहृदात्मा च समस्तानि जगन्ति येन मृडयते सुखयति सोऽयं तैनैव सत्त्वेन मम दृशं प्रज्ञाम् अनुस्पृशतात् योजयतु यथाहम् इदं पूर्ववत् स्रष्टुं क्षमो भविष्यामि । यतोऽसौ प्रणतानां प्रियः प्रणता वा प्रिया यस्य सः ॥ २२ ॥ ❀ ❀ गृहीतगुणाः कृतज्ञाः अवतारा यस्य स एव भगवान् आत्मशक्त्या रमया सह यत् यत् चरित्रं करिष्यति तस्मिन् तत्र तत्र मे मम प्रणतस्य स्वविक्रमं विष्णोरेव विक्रमः प्रभावो यस्मिन् तदिदं विश्वं सृजतोऽपि कर्मासक्तस्यापि चेतः चित्तं युञ्जीत स एव प्रवर्तयतु यथा कर्मशमलं कर्मकृतं वैषम्यादिपापं जह्यां त्यक्ष्यामि ॥ २३ ॥ ❀ ❀ किंच कर्मासक्त्या भगवत्स्वरूपगुणादिज्ञानदार्ढ्यार्थैः वेदान्तपाठः मा लुप्यतामित्याह नाभिह्रदादिति । यस्य पुंसः भगवतः अम्भसि सतः "विज्ञानं यज्ञं तनुते" इति श्रुतेर्विज्ञानरूपा शक्तिः जीवविशेषशक्तिरहं नाभिह्रदात् इहासं तस्यैव विचित्रं रूपमिदं विश्वं तदाज्ञया विवृण्डवतः स्वाधिकारानुसारेण विस्तारयतो मे नियमस्य अवयवभूतानां गिरां विसर्गः उच्चारणं मा रीरिषीष्ट मा क्षीणः स्यादित्यर्थः ॥ २४ ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

सृष्ट्यादौ तस्य कार्यावस्थामाह—यन्नाभिपद्मभवनादिति । यस्य नाभिपद्मभवनादहं ब्रह्मा आसम् , तस्मै नम इति संबन्धः । ननु पितृत्वात् नमनमेव कर्तव्यम् , स्तुत्या किमित्याशङ्क्याऽऽह—हे ईड्येति । स्तुत्यो यः, तं स्तुत्वैव किञ्चित्कर्तव्यम् । लोकत्रयमुपकरणं यस्य, यथा पुरुषस्य घटपटादयः । एतादृशत्वं तत्कृपयैव जातमित्याह—यदनुग्रहेणेति । यदनुग्रहेण लोकत्रयोपकरण इति संबन्धः । तस्मै ते तुभ्यं नमः । नमने प्रयोजनमाह—उदरस्थभवायेति । विश्वमेव तदुदरे स्थितम् , तच्चेत् प्रयच्छेत् तदा सृष्टिर्भवेदिति । तर्हि निद्रिताय नमस्कारोऽनुचित इत्याशङ्क्याऽऽह—योगनिद्रावसानविकसन्नलिनेक्षणायेति । योगनिद्राया अवसाने विकसन्नलिनवदीक्षणे यस्य । योगनिद्रा काचिच्छक्तिः, यथा सृष्टिः । उभे भगिन्यौ तुल्यकाले । सा भगवति प्रलयकाले । आदिक्षणे तस्याः प्रथमोंऽशः संबध्यते, प्रलयान्ते त्वन्तिमोंऽशः । इदमेव तस्याऽवसानम् । अतो निद्रावसानक्षणोऽयमतो नमनमुचितमित्यर्थः । एवं नत्वा स्वाभीष्टान् पदार्थान् प्रार्थयते—यन्नाभिपद्मभवनादिति चतुर्भिः ॥ २१ ॥ ❀ ❀ सृष्ट्यर्थं भगवतोत्पादित इति नाऽन्यत्र तस्याऽधिकारः; सृष्टौ च पदा[१]र्थज्ञानमपेक्ष्यते; ज्ञानबुद्धिसंयोगोऽन्यथा कर्तुमेव न शक्यते । ज्ञात्वा च

---

१. पदार्थमपेक्षते. ख. ग. घ. ङ. च. ।

कर्तव्यम्, चित्तस्य भगवच्चरित्रपरता चाऽऽवश्यकी, भगवदुपयोगिसृष्टिकरणात्। वेदाविस्मरणं चाऽपेक्ष्यते, तथा सति पातकिकृतं कार्यं पुरुषार्थोपयोगि न स्यात्। सन्तोषपूर्वकं विषाददूरीकरणं चाऽपेक्ष्यते, कार्योपयोगाय। अतो वरचतुष्टयप्रार्थना। तत्र प्रथमं सृष्टिसामर्थ्यस्य पूर्वं विद्यमानत्वेऽपि, बुद्धेरुद्वेगात्तदस्फूर्तिर्विषमकरणं च स्यात्, अतो भगवतो ज्ञानसंबन्धं प्रार्थयते—सोऽयमिति। सोऽयं भगवान् येन सत्त्वेन जगन्मृडयते, तेनैव मे दृशमनुस्पृशतादिति संबन्धः। सर्वेषां हितकारित्वात्, औदासीन्याभावात्, आवश्यकत्वाच्च भगवतो ज्ञानं सृष्टावपेक्षितम्। तदर्थं विशेषणत्रयमाह—समस्तजगतां सुहृत्, एकः, आत्मेति। एकत्वात्सर्वत्र तुल्य एकस्वभाव इत्यर्थः। आत्मत्वादावश्यकः। सत्त्वेनेति ज्ञानसुखकारणभूतसत्त्वगुणेन यद्यस्मात्कारणात् मृडयते सुखयति, यदिति प्रसिद्धं वा। जगत्कर्मणः स्पष्टत्वादवचनं वा। भगेनेति तत्सत्त्वं भगात्मकमैश्वर्यादिषड्गुणरूपम्। तेन मे दृशमनुस्पृशतादिति षड्गुणा ऐश्वर्यादयः प्रार्थिता भवन्ति। ततः किमत आह—यथाऽहं स्रक्ष्यामि पूर्ववदिति। उद्वेगाज्ञानवैषम्याणि यदा गमिष्यन्ति, तदा पूर्ववदेव करिष्यामि। नन्वेतावत्कथं दास्यतीत्याशङ्क्याऽऽह—प्रणतप्रियोऽसाविति। असौ प्रणतप्रियः, प्रणतः प्रियो यस्येति। प्रियाय हि सर्वमेव दीयते। असावेवैतादृशो नाऽन्य इत्यर्थः॥ २२॥ ❀ ❀ चित्तस्य भगवच्चरित्रपरतां प्रार्थयते—एष प्रपन्नवरद इति। यदि चित्तं भगवच्चरित्रपरं न स्यात्तदाऽहङ्कर्तृत्वाद्गर्वः स्यात्, प्रमादाद्विपमकृतिजनितदोषो[1] नाशश्च। चरित्रं सत्त्वांशेन कृतम्, चित्सहितेन वा विशिष्टेन वा भेदेन, तादृशमानन्दं न जनयति। अतो ब्रह्मानन्दरूपया रमया लक्ष्म्या, भेदाभावाय आत्मशक्त्या, प्रपन्नानां वरदानार्थं यद्यत्करिष्यति। तत्राऽपि स्वाधिकारानुसारेण ग्रहणार्थम्—गृहीतगुणावतारः। गृहीता गुणावतारा येन। गुणानां धर्माणामवताराः पूर्वमुक्ताः, 'यत्रोद्यतः' इत्यादिना। अथवा, गुणा भगवदीयाः सर्वे पुरुषस्थिता अभिव्यक्ता जाताः, ते गुणावताराः; तानादाय यद्यत्करिष्यतीति बहव एव पदार्था भगवदीया भवन्ति कालकर्मस्वभावकृतातिरिक्ताः। सामान्यतोऽधिकृतत्वात् तत्राप्यहमेव कर्ता। अतस्तस्मिंस्तव चरित्रे इदं तव पराक्रमरूपं जगद्भगवदीयं सृजतोऽपि मे यथा युञ्जीत, त्वच्चरित्र एव चित्तं सर्वदा युक्तं भवेत्। यद्यपि कालादिकृतसृष्टौ चरित्रपरता चित्ते युक्ता, गर्वाभावार्थं भगवत्स्मरणार्थं च: भगवदीयसृष्टौ तु नोपयुज्यते, पूर्वोक्तदोषासम्भवादित्याशङ्क्य, अत्रापि दोषद्वयं सम्भवतीति तन्निराकरणार्थं चरित्रपरता युक्तैव। अत्र सृ[2]ज्यानां भगवदीयत्वादणुमात्रेणाऽपि भगवदिच्छावैपरीत्येन कृतिर्भवेत्, तदा भगवद्द्रोहः स्यात्, सृज्यानां चाऽऽक्रोशः। तदुभयनिराकरणार्थं स्वविक्रममिदं सृजतोऽपि चेतो युञ्जीत। किञ्च, कर्मणा जायते सर्वथा शमलम्, सृज्यानां सर्वथा हिताकरणात्। तच्च शमलं यथा विजह्याम्॥ २३॥ ❀ ❀ वेदविस्मरणं यथा न स्यात्, रूपसृष्टेर्नामाधीनत्वात् कर्मबोधनार्थं च वेदोऽपेक्ष्यत इत्याह—नाभिह्रदादिति। इहाऽम्भसि सतो यस्य पुंसो नाभिह्रदात् अहमासम्, तस्यैवाऽनन्तशक्तेर्विचित्रं रूपं विवृण्वतो मे गिरां विसर्गो वेदो मा रीरिषीष्ट नाशं माऽपगच्छतु। इह सत इत्यग्रे तिरोभावात् प्रश्नानुपपत्तिः। त्वत्त एवोत्पन्नत्वात् अन्योऽप्र[3]ष्टः। विज्ञानशक्तित्वाद्विस्मरणानौचित्यम्। विचित्रं रूपमिति विस्मरणे हेतुः। नाभिह्रदादित्यन्वेषणक्लेशसूचनम्। अनन्तशक्तेरित्यविस्मरणदानसामर्थ्यम्। अहमिति यत्कृपया एतावत्त्वम्, सा कृपा ह्यग्रेऽपि निर्वाह्ये ति सूचितम्। अस्य रूपमिति वचनात् 'हलान्तं ब्रह्मवर्चसम्' इति न्यायेन वेद[4]स्फुरणहेतुधर्मनाशः सूचितः। चकाराद्भगवदपराध[5]श्च। विशेषेण परित्यागः सवासनम्, न प्रायश्चित्तवत्। 'रिष हिंसायाम्' इति धातोः सन्नन्ताल्लङ्, ( अ[6]डभावश्च माङ्योगात्) 'ऋ गतौ' इत्यस्याऽऽशीर्लिङि रीङादेशे कृते वा रूपम्। सर्वथा छान्दसाश्रयणं केनाऽप्यंशेन 'अभ्यस्तयोः' इति ह्रस्वेऽपि छान्दस ईकारादेशे 'झलो झलि' इति षलोपः। विविधः सर्गो वेदे, ब्रह्मणः सर्वमेव वाक्यं वेदरूपमिति वा। निगमस्य वेदस्य गिरामिति देव[7]ताशब्दान्तरव्यावृत्त्यर्थमुक्तम्। मा वेदो विस्मृतो भवत्विति वक्तव्ये, यत् प्रकारान्तरेण कथनम्। वरेण स्मरणमात्रव्यावृत्त्यर्थम्, यथाऽन्यदीयमपि स्मरति। अत एव मा लुप्यतामिति प्रश्नः॥ २४॥

## श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः।

यन्नाभीत्यत्र। भगिन्यौ तुल्यकाले इति। समानस्वभावे समानसंख्याङ्ककाले सेवां कुर्वाणे॥ २१॥ ❀ ❀ सोऽयमित्यत्र। यं यं पदार्थसमुदायमपेक्षते, तं तं स्फुटीकुर्वन्तः क्रमेणाऽऽहुः—ज्ञानेत्यादिना। ज्ञानबुद्धिसंयोग इति। ज्ञानं भगवदीयं सत्त्वात्मकम्, तस्य बुद्धिसंयोगो जडरूपिण्यां स्वबुद्धौ सङ्क्रामणम्। भगवदीयसर्वपदार्थानां भगवत्स्वरूपस्य च परिस्फूर्तिरिति यावत्। जगत्कर्मण इति। जगतः कर्मकारकभूतस्य॥ २२॥ ❀ ❀ नाभिह्रदादित्यत्र। अस्य रूपमिति वचनादिति। 'अस्य रूपं विवृण्वतः' इति वचनात्। अत्र मूले अस्य प्रपञ्चस्याऽऽकारं विवृण्वतो विशेषेणाऽङ्गीकुर्वत इत्यर्थो बोध्यः। विचित्रमित्यत्र 'च चित्रम्' इति पाठमङ्गीकृत्याऽऽहुः—चकारादित्यादि। तद्रूपाङ्गीकारेण सिद्धं दोषमाहुः—विशेषेणेत्यादि। सवासनगिरां त्यागो जात इति दोषोऽभूदित्यर्थः। प्रश्न इत्यत्र 'प्रार्थना' इति पाठः प्रतिभाति॥ २४॥

---

१. दोषा. ग.। २. सृज्यादीनाम् क.। ३. अन्याप्रश्नः क.। ४. वेदास्फुरण. क.। ५. भगवदपराधं च. क.।
६. [ ] एतच्चिह्नान्तर्गतः पाठोऽत्र नास्ति किन्तु केनाप्यंशेनेत्येतदनन्तरमस्ति क. ख. घ. ङ. च.। ७. वदता क.।

श्रीगिरिधरकृता बालप्रबोधिनी

मम स्तुतियोग्यश्च त्वं पितृत्वादिति सूचयन् सम्बोधयति—ईड्येति । पितृत्वमेव स्पष्टयति—यदिति । यस्य नाभिपद्ममेव भवनं तस्मात् लोकत्रयमुपकरणं भोगसाधनं यस्य । यद्वा लोकत्रयस्य सृष्ट्यादिद्वारा उपकरोतीति तथाभूतोऽहं यदनुग्रहेणाऽऽसं तस्मै ते तुभ्यं नम इत्यन्वयः । ननु मदनुग्रहेणैवम्भूतस्त्वं कथं जात इत्याकाङ्क्षायामाह—उदरस्थेति, उदरे स्थितो भवः प्रपञ्चो यस्य तस्मै । एवम्भूतस्य तव अनुग्रहं विना कथं सृष्टिसामर्थ्यं स्यादिति भावः । तथापि विश्वमुदरे निवेश्य प्रसुप्तस्यैवं नमस्कारेऽपि किं स्यादित्याशङ्क्याह—योगेति । योगा इच्छा तयैव या निद्रा तस्या अवसाने अन्ते सृष्ट्यारम्भसमये विकसन्नलिनवत् कृपापूरणतया सन्तापहरमीक्षणं यस्य तस्मै ॥ २१ ॥ ❀ ❀ एवं स्तुत्वा स्वाभीष्टान् पदार्थान् प्रार्थयते—सोऽयमिति चतुर्भिः । यः पूर्वं सकरुणत्वेन सर्वपूज्यत्वेन सर्वफलप्रदत्वेन चोक्तः सोऽयं भगवान् यत् येन सत्त्वेन सत्त्वकार्येण ज्ञानेन भगेन ऐश्वर्यादिगुणेन च जगन्मृडयते सुखयति तेनैव ज्ञानैश्वर्यादिना मे मम दृशं प्रज्ञामनुग्रशतात् योजयत्वित्यन्वयः । भगवान् जगत्किमर्थं सुखयतीत्यपेक्षायां हितकारित्वादित्याह—समस्तजगतां सुहृदिति । तत्र हेतुमाह—आत्मेति, सर्वात्मत्वादित्यर्थः । तत्रापि हेतुमाह—एक इति, एकत्वादित्यर्थः । किमर्थमेतत्प्रार्थयते इत्यपेक्षायामाह—यथेति । यथा ज्ञानादिना इदं विश्वं पूर्ववत् पूर्वकल्पविश्ववत् अहं स्रक्ष्यामि स्रष्टुं क्षमो भविष्यामीत्यर्थः । सर्वसुहृत्त्वेऽपि तव प्रज्ञां कथं स्वच्छां करिष्यतीत्यपेक्षायामाह—प्रणतप्रियोऽसाविति । यतोऽसौ भगवान् प्रणताः शरणमागताः प्रिया यस्य तथाविधः, अहं च प्रणतः अतस्तत्करिष्यतीति भावः ॥ २२ ॥ ❀ ❀ एवं सृष्टिसामर्थ्यं सम्प्रार्थ्य सृष्टिकरणे पापमाशङ्क्य तत्परिहारोपायं प्रार्थयते-एष इति । आत्मशक्त्या रमया लक्ष्म्या सह गृहीतगुणावतारः गृहीताः सर्वज्ञत्वापहतपाप्मत्वादिगुणसहिता अवतारा येन सः यद्यत् देवतिर्यङ्मनुष्यादिचेष्टितं करिष्यति तस्मिन् कर्मणि मे चेतः चित्तमेष भगवानेव युञ्जीत प्रवर्तयतु । एतत्प्रार्थनस्य किं प्रयोजनमित्यत आह—कर्मेति । यथा येनाहं कर्मशमलं उत्तमाधमादिसृष्टिनिमित्तं पापं जह्यां त्यक्ष्यामीत्यर्थः । ननु गुणावतारे किं प्रयोजनमित्याशङ्क्याह—प्रपन्नवरद इति । प्रपन्नाः शरणमागता ये देवमनुष्यादयस्तेभ्यो वरान् ददातीति तथा स इत्यर्थः । तत्तद्भक्तमनोरथपूरणार्थं अवतारग्रहणमिति भावः । ममापि दोषनिवृत्त्युपायसम्पादनं तवोचितमेवेत्याशयेनाह—स्वविक्रममिति । स्वस्य तस्यैव भगवतो विक्रमः प्रभावो यस्मिन् तथाभूतमिदं विश्वं सृजतोऽपीत्यर्थः ॥ २३ ॥ ❀ ❀ एवं महति कार्ये प्रवृत्तौ वेदविस्मरणमाशङ्क्य तन्मा भूदिति प्रार्थयते—नाभीति । इह अस्मिन्नम्भसि सतः शयानस्य यस्य पुंसो नाभिह्रदात् कमलद्वारात् अहमासं अतस्तस्यास्येदं विश्वात्मकं रूपं विवृण्वतो विस्तारयतो मे मम निगमस्य वेदस्य अवयवभूतानां गिरां विसर्ग उच्चारणं मा रीरिषीष्ट तस्यैवानुग्रहेण हीनांतं ब्रह्मवर्चसमिति भावेन मा लुप्यतामित्यन्वयः । तल्लोपश्चावश्यं सम्भवति कार्यस्य विचित्रत्वादित्याशयेनाह—विचित्रमिति । अनुग्रहपात्रे मयि पुनरप्यनुग्रह एव युक्त इत्याशयेनात्मानं विशिनष्टि-विज्ञानशक्तिरिति, विज्ञाने शक्तिर्यस्य सः, महत्तत्त्वात्मकस्य चित्तस्याभिमानीत्यर्थः । ननु कथं तस्याम्भसि शयनं विश्वरूपत्वं वेदप्रवर्तकत्वं चेत्याशङ्क्याह—अनन्तशक्तेरिति ॥ २४ ॥

हिन्दी अनुवाद

आपके नाभिकमलरूप भवनसे मेरा जन्म हुआ है । यह सम्पूर्ण विश्व आपके उदरमें समाया हुआ है । आपकी कृपासे ही मैं त्रिलोकीकी रचनारूप उपकारमें प्रवृत्त हुआ हूँ । इस समय योगनिद्राका अन्त हो जानेके कारण आपके नेत्र-कमल विकसित हो रहे हैं, आपको मेरा नमस्कार है ॥ २१ ॥ ❀ ❀ आप सम्पूर्ण जगत्के एकमात्र सुहृद् और आत्मा हैं तथा शरणागतोंपर कृपा करनेवाले हैं । अतः अपने जिस ज्ञान और ऐश्वर्यसे आप विश्वको आनन्दित करते हैं, उसीसे मेरी बुद्धिको भी युक्त करें—जिससे मैं पूर्वकल्पके समान इस समय भी जगत्की रचना कर सकूँ ॥ २२ ॥ ❀ ❀ आप भक्तवाञ्छाकल्पतरु हैं । अपनी शक्ति लक्ष्मीजीके सहित अनेकों गुणावतार लेकर आप जो-जो अद्भुत कर्म करेंगे, मेरा यह जगत्की रचना करनेका उद्यम भी उन्हींमेंसे एक है । अतः इसे रचते समय आप मेरे चित्तको प्रेरित करें—शक्ति प्रदान करें, जिससे मैं सृष्टिरचनाविषयक अभिमानरूप मलसे दूर रह सकूँ ॥ २३ ॥ ❀ ❀ प्रभो ! इस प्रलयकालीन जलमें शयन करते हुए आप अनन्तशक्ति परमपुरुषके नाभि-कमल-से मेरा प्रादुर्भाव हुआ है और मैं हूँ भी आपकी ही विज्ञानशक्ति; अतः इस जगत्के विचित्र रूपका विस्तार करते समय आपकी कृपासे मेरी वेदरूप वाणीका उच्चारण लुप्त न हो ॥ २४ ॥

**सोऽसावदभ्रकरुणो भगवान् वि[१]वृद्धप्रेमस्मितेन नयनाम्बुरुहं विजृम्भन् ।**
**उत्थाय विश्वविजयाय च नो विषादं माध्व्या गिरापनयतात्पुरुषः पुराणः ॥ २५ ॥**

**मैत्रेय उवाच**

**स्वसम्भवं नि[२]शाम्यैवं तपोविद्यासमाधिभिः । यावन्मनोवचः स्तुत्वा विरराम स खिन्नवत् ॥ २६ ॥**

---

१. प्रा० पा० वान् प्रवृ० । २. प्रा० पा०—निश० ।

अथाभिप्रेत[1]मन्वीक्ष्य ब्रह्मणो मधुसूदनः । विषण्णचेतसं तेन कल्पव्यतिकराम्भसा ॥ २७ ॥
लोकसंस्थानविज्ञान आत्मनः परिखिद्यतः । तमाहागाधया वाचा कश्मलं शमयन्निव ॥ २८ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका ।

विवृद्धप्रेम्णा स्मितेन विजृंभयन् विश्वस्य विजयायोद्भवाय । चकारादस्मदनुग्रहाय चोत्थाय ॥ २५ ॥ ❀ ❀ स्वस्य संभवो यस्मात्तम् । तपः शारीरं विद्या उपासना समाधिरैकाग्र्यं तैर्निशाम्य दृष्ट्वा यथाशक्ति स्तुत्वा श्रांतवद्विरराम ॥ २६ ॥ ❀ ❀ आत्मनो लोकसंस्थानविज्ञाने परिखिद्यतो ब्रह्मणोभिप्रेतमालक्ष्य तमाहेति द्वयोरन्वयः । तेन प्रलयोदकेन विषण्णचेतसम् ॥ २७ ॥ ❀ ❀ कश्मलं मोहम् । वेति समस्तमोहशमनं दर्शयति ॥ २८ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः ।

अदभ्रकरुणो दयासमुद्रः । विजृंभयन्नुन्मीलयन् प्रकाशयन्निति यावत् । विश्वविजयाय सृष्ट्यादिषु पराभवाभावाय । माध्व्या विश्वसृजेति निदेशमय्या अपनयतात् दूरीकरोतु । 'विषादश्चेतसो भंगः' इति हैमः ॥ २५ ॥ ❀ ❀ शारीरं शरीरसाध्यं कृच्छ्रादि । 'आचार्यचैत्यवपुषा स्वगतिं व्यनक्ति' इति रीत्याकस्मिकस्फूर्तिप्राप्तमंत्रोपासना समाधिश्चित्तैकाग्र्येण ध्यानं "ज्ञानोपासनयोर्विद्या सरस्वत्यां धियि गिरि" इति कोशात् ॥ २६ ॥ ❀ ❀ अथ ब्रह्मस्तुतिश्रवणानंतरम् । कल्पस्य व्यतिकरो ध्वंसो यत्र स कल्पव्यतिकरः प्रलयः । "अथ व्यतिकरः पुंसि व्यसनव्यतिसंगयोः" इति मेदिनी । व्यसनं चेह ध्वंसः । यद्वा 'संवर्त्तः प्रलयः कल्पः' इत्यमरः । तत्र व्यतिकर आगंतुकजलसंयोगस्तेन लोकानां देवतिर्यगादीनां संस्थानं समुचितस्वभावतया निर्माणं स्थावरादिपरिपाटी तद्विज्ञाने । इवात्र निश्चये तेन सर्वाज्ञानोपशमनं दर्शितम् ॥ २७ ॥ २८ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या ।

सोऽसौ जलशायित्वेन प्रसिद्धः श्रीनारायणः ॥ २५ ॥ ❀ ❀ भगवद्गुणानामनन्तत्वात् श्रान्तत्वं तथाप्युत्कण्ठाया अनिवृत्तेर्वत्प्रत्ययः ॥ २६ ॥ ❀ ❀ अथेति युग्मकम् । अथ स्तुत्यनन्तरम् । अभिप्रेतं सृष्टीच्छाभिप्रायं भावे निष्ठा आत्मनो लोकसंस्थानविज्ञाने स्वकर्तृकलोकरचनाविज्ञाने दुहितृगमनादिविकर्मप्रवृत्तेः समस्तेति इव शब्देन व्याख्यातम् ॥ २२ ॥ २८ ॥

### श्रीमद्वीरराघवव्याख्या

अथाभिमुख्येन तत्संभाषणं प्रार्थितस्य सर्वस्य निदानभूतं प्रार्थयते स इति । अदभ्रकरुणः अनल्पकृपः पुराणः पुरुषः सोऽसौ भगवान् विवृद्धप्रेमस्मितेन विवृद्धः प्रेमा यस्मिन् तथाभूतेन स्मितेन नयनाम्बुरुहं विजृम्भन्नुल्लासयन् विकाशयन्निति यावत्, विश्वस्य विजयाय उद्भवाय चकारादस्मदनुग्रहाय चोत्थाय माध्व्या मधुरया गिरा नः विषादं खेदमपनयतान्निराकुर्यात् ॥२५॥ ❀ ❀ स्तुतिमुपसंहरति स्वसंभवमिति । स्वस्य संभवो यस्मात्तं भगवन्तं तपोविद्यासमाधिभिः कर्मज्ञानभक्तिभिर्निशाम्य दृष्ट्वा एवमुक्तप्रकारेण यथाशक्ति स्तुत्वा न तु साकल्येनेत्यर्थः । "इषुक्षयान्निवर्तन्ते नान्तरिक्षक्षितिक्षयात् । मतिक्षयान्निवर्तन्ते न गोविन्दगुणक्षयात् ॥" इति वचनात् खिन्नवच्छ्रान्तवद्विरराम ॥ २६ ॥ ❀ ❀ आत्मनः स्वस्य लोकसंस्थानविषये परिखिद्यतः कल्पव्यतिकराम्भसा विषण्णचेतसः ब्रह्मणो हिरण्यगर्भस्याभिप्रेतमन्वीक्ष्य मधुसूदनस्तं ब्रह्माणमगाधया गम्भीरया वाचा कश्मलं मोहं शमयन्निवाह उवाचेति द्वयोरन्वयः ॥ २७ ॥ २८ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

अनुग्रहमात्रेणाभिप्रायसिद्धावपि संलापेनाधिकविश्वासो भवतीति सृष्टिविषादापनयनप्रार्थनव्याजेन संलापमभिप्रैति सोऽसाविति । योऽसौ मया वर्णितगुणोऽदभ्रकरुणः पूर्णदयासमुद्रः स पुराणपुरुषो भगवान् विश्वविजयाय शेषपर्यङ्कादुत्थाय विवृद्धप्रेमस्मितेन पूर्णस्नेहप्रसरप्रादुर्भूतमन्दहासेन सह नयनाम्बुरुहं विजृम्भयन्नुन्मीलयन् माध्व्या मदिरावद्रोमाञ्चं जनयन्त्या गिरा नो मनो विषादं भयमपनयतादित्यन्वयः । हे वेदगर्भ । भयं माभूत् सर्गोद्यमं कुर्वित्यादिवचनेन प्रीतिभावहेदित्यर्थः ॥ २५ ॥ ❀ ❀ हरिगुणानन्त्यात्प्राज्ञेन विरिञ्चेन यावदायुः स्तुतो हरिः किमिति मन्दाशङ्कां परिहरति मैत्रेय इति । स्वसंभवं स्वजनकम् । विद्या मन्त्रलक्षणा निष्ठा स्तुतेरुपरमो गुणानामानन्त्यादप्रतिभानात् स्वाभीष्टसिद्धेरित्यनेकविधो दृष्टोऽत्र तु प्रथमपक्ष एवेति भावेनाह यावदिति । खिन्नवदलंबुद्धिरहितवत् इत्यनेन पुनरपि स्तोतुमिच्छां सूचयति ॥ २६ ॥ तर्ह्यनया स्वाभीष्टं न सेत्स्यतीति तत्राह अथेति । कल्पव्यतिकरः प्रलयस्तदम्भसा ॥ २७ ॥ ❀ ❀ आत्मनः स्वस्य लोकानां संस्थानस्यावयवशो विन्यासविशेषस्य विज्ञाने परिखिद्यतोऽलंबुद्धिमकुर्वतस्तस्य ब्रह्मणोऽभिप्रेतमालक्ष्य लक्षणतो ज्ञात्वा कश्मलं ज्ञानसंकटम् ॥ २८ ॥

### अस्मिन्पर्याये क्रमसन्दर्भव्याख्या नास्ति

---

1. प्रा० पा०—प्रेत्य० ।

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

किञ्च। प्रभोः कृपाकटाक्षकृपानिदेशाभ्यामेव दासस्य निःसंशय आनन्दो भवेदिति तावेव प्रार्थयते सोऽसाविति। विजृम्भन् विजृम्भयन् नोऽस्माकं विश्वस्मिन् सर्व्वत्रैव विजयाय सृष्ट्यादिषु पराभवाभावाय चकारात् पूर्वोक्तवाञ्छितसिद्धये च। माध्व्या माधुर्य्यमय्या विश्वं सृजेति निदेशमय्या गिरा ॥ २५ ॥ ❀ ❀ स्वस्य सम्भवो यस्मात्तं तपः शारीरम्। विद्या आचार्य्यचैत्यवपुषा स्वगतिं व्यनक्तीति रीत्या आकस्मिकस्फूर्त्तिप्राप्ततन्मन्त्रोपासना। समाधिश्चित्तैकाग्र्येण ध्यानं तैर्निशाम्य दृष्ट्वा यथाशक्ति स्तुत्वा कृपाकटाक्षस्यानुपलम्भात् खिन्न इव विरराम ॥ २६ ॥ ❀ ❀ कल्पव्यतिकराम्भसा प्रलयकालमिलिता-गन्तुकजलेन हेतुना विषण्णचेतसः तथा आत्मनः स्वस्य लोकानां देवतिर्य्यगादीनां संस्थानं समुचितस्वभावतया निर्माणस्थापनादि-परिपाटी तद्विज्ञाने खिद्यतो ब्रह्मणोऽभिप्रेतमन्वीक्ष्य ज्ञात्वा तमाहेत्यन्वयः। कश्मलं मोहं शमयन्निवेति ॥ २७ ॥ २८ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

अदभ्रा अनल्पा करुणा यस्य सः नयनाम्बुरुहं विजृम्भन् विजृम्भयन् उल्लासयन् विश्वविजयाय चकारादस्मदेतुमद्याय उत्थाय विवृद्धः प्रेमा यस्मिन् तेन स्मितेन माध्व्या गिरा च नोऽस्माकं विषादं वैमनस्यम् अपनयतात् ॥ २५ ॥ ❀ ❀ स ब्रह्मा स्वस्य संभवो यस्मात्तं नारायणं तप आदिभिः निशाम्य दृष्ट्वा यावन्मनोवचः मनोवाक्शक्त्यनुसारेण स्तुत्वा खिन्नवत् विरराम ॥ २६ ॥ ❀ ❀ आत्मनो लोकसंस्थानविज्ञाने परिखिद्यतो ब्रह्मणोऽभिप्रेतमालक्ष्य कल्पे कल्पान्ते यो व्यतिकरः लोकत्रयनाशस्तदम्भसा विषण्णं चेतो यस्य स तथा तं ब्रह्माणं मधुसूदन आहेति युग्मान्वयः ॥ २७ ॥ २८ ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

संतोषपूर्वकं विषाददूरीकरणं प्रार्थयते—सोऽसाविति। असौ उत्थाय मे विषादं माध्व्या गिरा अपनयतादिति संबन्धः। प्रार्थितदानसामर्थ्यनिरूपणार्थं स इति पूर्वोक्तनिर्देशः। अदभ्रा करुणा यस्य, दयैव प्रार्थितदाने हेतुः। भगवानिति प्रार्थनीयत्वम्। विवृद्धप्रेमस्मितेन। भक्तक्लेशस्मरणेन भक्ते विवृद्धा भगवतः प्रीतिर्भवति। क्लेशाभावार्थं शास्त्राग्रह[1]व्यावृत्तये किञ्चिन्मोहनमपि करोति। तदा भगवतो ज्ञानशक्तिः रूक्षत्वाभावाय अम्बुनि शीतले विषयसुखे संयुक्तेति जीवोऽपि विषयसुखस्पृष्टो भवति। तदाह—नयनमेवाऽम्बुरुहमिति। तस्य विजृम्भो विशिष्टो विकाशः। ज्ञानशक्तिरतिविलासिता सर्ववस्तुयाथात्म्यं बोधयन्ती क्लेशं सर्वथैव दूरीकरोति। विशिष्टश्च विकाशः कार्येपि तथोद्गमपरः। उत्थिता जगत्सृष्टिरनलसा भवतीत्युत्थायेत्युक्तम्। विश्वविजयाय चेति। विश्वस्मिन् विजयः स्वाभावादिव्युदासेन स्वाभिप्रेतविधित्सा, तत् विश्वस्मिन्नेव चकाराद्विश्वस्य स्वानुगुणतायै। नो विषादं पूर्वोक्तमस्मद्विषादम्। न इति स्वान्तस्थितभूतसहिताभिप्रायम्। माध्व्या गिरेति स्नेहप्रतिपादकेन वचनेन ईश्वराज्ञायाः कठिनत्व-शङ्कयोक्तम्। ;पुराणः पुरुषः इति पितामहत्वेन समत्वाय। नयनाम्बुरुहविजृम्भणं विश्वविजयरूपेष्टसिद्धौ विषादनिराकरणे च हेतुः, वाणी च। परमेकं कर्तृप्रविष्टमलौकिकद्वारा तदुभयकर्तृ, एकं तु लौकिकद्वारा। एतत्सर्वं कार्याभिनिविष्टः करिष्यति नवेति संदिह्य पुरुषोत्तमभावं तत्र निरूपयति—पुराण इति ॥ २५ ॥ ❀ ❀ स्वार्थं सर्वं प्रार्थितमिति ब्रह्मकल्पवद्भक्तिप्रह्वीभावात्, बहुकालभोगेन मध्येऽपराधसम्भवाद् गुणत्रयस्य व्यवधायकं बोधयन् चिरकालेनोत्तरं दत्तवानित्याह—त्रिभिः—स्वसंभवमिति। यावज्ज्ञानं ब्रह्मणो भगवद्विषयकं जातम्; तपसा, उपासनया, समाधिपर्यन्तयोगेन च। स्वसंभवं स्वपितरम्। एवं पूर्वोक्तप्रकारेण निशाम्य ज्ञात्वा। स्वस्य यावन्मनःसामर्थ्यं तावत् कल्पयित्वा, यावद्वाचा वक्तुं शक्यं तावत् स्तुत्वा, तूष्णीं स्थिते भगवतीत्यन-वसरोऽयं वेति संदिह्य स्वयमपि तूष्णीं स्थितः। भगवन्तं प्रसन्नवदनं दृष्ट्वा पूर्वखेदस्याऽप्यनुवृत्तत्वात् खिन्नवदित्युक्तम्। यथा यथा स्तूयते तथा तथा [2]ज्ञात इति ज्ञानमप्यन्ते निरूपितम् ॥ २६ ॥ ❀ ❀ मध्ये भगवद्विचारोऽपि कालविलम्बहेतुर्जात इत्याह—अथेति। आनन्तर्यं कालविलम्बात्। अभिप्रेतं स्वसमानज्ञानैश्वर्यं प्रार्थयत इति अन्वीक्षणं निश्चयः, तस्मिन् दत्ते वा कालान्तरे अपकारो न भवेदित्यन्वीक्षा। ब्रह्मण इत्यधिकारित्वम्, तेन तथा प्रार्थनायामपि नाऽपराधः मधुसूदन इति तद्धिताचरणं भगवतः स्वाभाविकम्। यथा अनिष्टं निवर्तयति तथेष्टं संपादयतीत्यर्थः। विषण्णचेतसमिति दया। अधिकारित्वात्, तस्य शक्यत्वाच्च साधनो-पदेश एव। तेनेति पूर्वोक्तेन भगवद्रहितेन। भगवदीयत्वे तु तस्योद्वेगो न स्यात्, भगवदीयकार्ये चानुगुण्यं स्यात्। अभगवदीय-त्वार्थमाह—कल्पव्यतिकराम्भसेति। कल्पस्य व्यतिकरो नाशः, तत्साधकेनाऽम्भसा। तस्मादग्रिमभगवच्चरित्रं तस्य दुःखनिवारकम-पीत्येतदुक्तम् ॥ २७ ॥ ❀ ❀ स्वार्थं चैतद् दुःखम्। भगवत्कार्यार्थं तु यद् दुःखं तत्साक्षादेव निवारयतीत्याह—लोकसंस्थान-विज्ञान इति। लोकानां सम्यक् स्थानं यथोपयोगं देहादौ स्थितिः, तद्विषयकज्ञानार्थं परिखिद्यतः परितः खेदं प्राप्नुवतो ब्रह्मणः। आत्मन एव हेतोः, ज्ञायत एव साधनेन साध्यमिति। साधनमकृत्वैव साध्यप्रेप्सुः खिन्नो भवत्येव। तपोऽपि शीघ्रमेव निवर्तित-मिति भगवतो विलम्बः। तदर्थमेव शयान एव भगवानाविर्भूतः। स तु तदकृत्वैव उत्तालो भूत्वा, स्तोत्रं प्रार्थनां च कृत्वा, तूष्णीं

---

१. शास्त्रार्थग्रह क घ। २. शयते ग।

स्थितः । एतादृशमपि तं भगवानाह । अगाधा वाणी भगवतः, अभिप्रायाज्ञानात् । कश्मलमुभयविधम्, शमयन्निवेति साधनोपदेशात् ॥ २८ ॥

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

सोऽसावित्यत्र । कार्येऽपि तथोद्गमपर इति । व्यष्टिवर्गेऽपि ज्ञानोद्गमपरः । विश्वस्मिन्नेवेति । सर्वेष्वेव । परमेकमित्यादि । एकं नयनाम्बुरुहविजृम्भणम् । कर्तृप्रविष्टम्, चतुर्मुखे समागतम्, भयकर्तृ उभयोरिष्टप्राप्त्यनिष्टनिवृत्त्योः कर्त्रित्यर्थः । एकं त्विति । वाणी तु ॥ २५ ॥ ❀ ❀ स्वसंभवमित्यत्र । निरूपितमिति । 'निशाम्य' इति पदेन निरूपितम् ॥ २६ ॥ ❀ ❀ लोकेत्यत्र । तदकृत्वेति । तपः अकृत्वा ॥ २८ ॥

### श्रीगिरिधरकृता बालप्रबोधिनी

एवं प्रार्थनेऽपि भगवद्भाषणं विना सन्तोषमलभमानस्तद्वचनेन स्वसन्तोषं प्रार्थयते—स इति । स मम कारणभूतोऽसौ भगवान् विवृद्धः प्रेमा यस्मिंस्तथाभूतेन स्मितेन नयनाम्बुरुहं विजृम्भन् उल्लासयन् - विकाशयन्निति यावत्, विश्वस्य विजयाय उद्भवाय, चकारादस्मदनुग्रहाय च, उत्थाय माध्व्या मधुरया गिरा नोऽस्माकं विषादं वैचित्त्यमपनयतात् निराकुर्यादित्यन्वयः । त्वां विना नान्यो मम विषादं दूरीकर्तुं समर्थ इत्याशयेनाह—पुरुषः पुराण इति । उचितं च तवैतदित्याशयेनाह—अदभ्रकरुण इति, कृपासिन्धुरित्यर्थः ॥ २५ ॥ ❀ ❀ स्तुतिमुपसंहरति—स्वसम्भवमिति । स्वस्य सम्भवो जन्म यस्मात्तं भगवन्तं तपः शारीरं सन्तापसहनं विद्या भक्तिः समाधिस्तस्मिन् मनस ऐकाग्र्यं तैरेवं पूर्वोक्तप्रकारेण निशाम्य दृष्ट्वा यावन्मनोवचः स्वमनोवचनशक्त्यनुसारेण स्तुत्वा च स ब्रह्मा विरराम तूष्णीं बभूवेत्यन्वयः । तत्र दृष्टान्तमाह—खिन्नवदिति । यथा पुरुषो व्यापारं कुर्वंस्तदवसानमप्राप्य श्रान्तः सन् खिन्नो भवति तथा स्तुवन् भगवद्गुणानां अवसानमप्राप्य श्रान्तः खिन्नो जात इत्यर्थः ॥ २६ ॥ ❀ ❀ ब्रह्मणोऽभिप्रेतमभिप्रायं अन्वीक्ष्य ज्ञात्वा अथ तूष्णीम्भावानन्तरमेव तस्य कश्मलं विषादं शमयन्निव दूरीकुर्वन्निव अगाधता गम्भीरार्थया वाचा तं ब्रह्माणं मधुसूदन आहेति द्वयोरन्वयः । ब्रह्मविषाददूरीकरणं भगवत आवश्यकं तत्र हेतुं सूचयन् ब्रह्माणं विशिनष्टि—विषण्णचेतसमिति । तेन भयङ्करतया प्रसिद्धेन कल्पं व्यतिकरोति विनाशयतीति । कल्पव्यतिकरं तच्च तदम्भश्च तेन विषण्णं चेतो यस्य तमित्यर्थः । आत्मनः स्वस्य हेतोर्लोकसंस्थानं लोकरचनां तद्विज्ञानविषये परिखिद्यतस्तदलभमानस्येत्यर्थः ॥ २७ ॥ २८ ॥

### हिन्दी अनुवाद

आप अपार करुणामय पुराणपुरुष हैं । आप परम प्रेममयी मुसकानके सहित अपने नेत्रकमल खोलिये और शेषशय्यासे उठकर विश्वके उद्भवके लिये अपनी सुमधुर वाणीसे मेरा विषाद दूर कीजिये ॥ २५ ॥ ❀ ❀ श्रीमैत्रेयजी कहते हैं—विदुर ! इस प्रकार तप, विद्या और समाधिके द्वारा अपने उत्पत्तिस्थान श्रीभगवान्को देखकर तथा अपने मन और वाणी शक्तिके अनुसार उनकी स्तुति कर ब्रह्माजी थकेसे होकर मौन हो गये ॥ २६ ॥ ❀ ❀ श्रीमधुसूदन भगवान्ने देखा कि ब्रह्माजी इस प्रलयजलराशिसे बहुत घबराये हुए हैं तथा लोकरचनाके विषयमें कोई निश्चित विचार न होनेके कारण उनका चित्त बहुत खिन्न है । तब उनके अभिप्रायको जानकर वे अपनी गम्भीर वाणीसे उनका खेद शान्त करते हुए कहने लगे ॥ २७-२८ ॥

## श्रीभगवानुवाच

**मा वेदगर्भ गास्तन्द्रीं सर्ग उद्यममावह । तन्मयाऽऽपादितं ह्यग्रे यन्मां प्रार्थयते भवान् ॥ २९ ॥**
**भूयस्त्वं तप आतिष्ठ विद्यां चैव मदाश्रयाम् । ताभ्यामन्तर्हृदि ब्रह्मन् लोकान्द्रक्ष्यस्यपावृतान् ॥ ३० ॥**
**तत आत्मनि लोके च भक्तियुक्तः समाहितः । द्रष्टासि मां ततं ब्रह्मन्मयि लोकांस्त्वमात्मनः ॥ ३१ ॥**
**यदा तु सर्वभूतेषु दारुष्वग्निमिव स्थितम् । [1]प्रतिचक्षीत मां लोको ज[2]ह्यात्तर्ह्येव कश्मलम् ॥ ३२ ॥**

### श्रीधरस्वामिविरचिता भावार्थदीपिका

हे वेदगर्भ ! तंद्रीं विषादकृतमालस्यं मा गाः । तेनैव मे दृशमनुस्पृशतादित्यादि यत्प्रार्थयते तदग्रे पूर्वमेव संपादितम् ॥ २९ ॥ ❀ ❀ तर्हि कथमहं न जानामीत्यत आह । भूय इति ॥ ३० ॥ ❀ ❀ भक्तियुक्तः समाहितश्च सन्नात्मनि स्वस्मिँल्लोके च मां ततं व्याप्य स्थितं द्रष्टाऽसि द्रक्ष्यसि आत्मनो जीवांश्च ॥ ३१ ॥ ❀ ❀ सर्वत्र मद्दर्शने मोहो निवर्तेत इत्याह । यदा त्विति । प्रतिचक्षीत पश्येत् ॥ ३२ ॥

---

१. प्रा० पा०—प्रवि० । २. प्रा० पा०—जह्यां त०

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

यद्वा। तंद्रीमज्ञानं वेदगर्भेति सर्वज्ञस्य तवाज्ञानं नोचितमिति भावः। ननु सृष्टौ स्वसामर्थ्ये संशयितोस्मीति चेत्तत्राह—सर्ग इति। उद्यमो निष्फलो भविष्यतीति मा शंकिष्ठा इत्याह—तन्मयेति। पूर्वमेव तपेति द्व्यक्षरद्विरावृत्त्या कथनेन संपादितम्। तत्प्रार्थनमपि न स्वाधीनं किं तु मत्प्रेरणयैवेतीममर्थं हिना सूचयति॥ २९॥ ❀ ❀ अत्राक्षिपति तर्हीति। नन्वेतत्कालीनोद्यमेन किं स्याद्ये मया भूरादयो लोकाः स्रज्यास्ते एव न दृश्यंत इति चेदाह—भूय इति। तपः प्राणायामादीति संदर्भः। चितैकाग्र्यमिति चक्रवर्ती। आलोचनमिति तीर्थः। विद्यां निष्ठां भक्तिलक्षणाम्। "तप आलोचनं प्रोक्तं विद्या निष्ठा प्रकीर्त्तिता" इति तदुक्तेः। ततः किमत्राह—ताभ्यामिति। अंतर्हृदि हृदय एव वहिष्ठानपि लोकान्भूरादीन् तत्रस्थांश्च मनुष्यादीन् अपावृतान् जलावरणशून्यानेव द्रक्ष्यति। ततश्च मयैव यथास्थिततया दर्शयिष्यमाणांस्तान्स्वहृदय एव दृष्ट्वा आदर्शदर्शी लेखक इव सुखेनैव वहिः स्थितान्द्रक्ष्यतीति भावः॥ ३०॥ ❀ ❀ सृष्ट्यावेशवशत्वेपि त्वामहं न विस्मरेयमिति यत्प्रार्थितं तत्राह—तत इति। सृष्टिसमयेपि भक्तियुक्तः समाहितश्च आत्मनि स्वमनसि वहिर्लोके च मां द्रष्टासि तथा मयि लोकान्भूरादीन् आत्मनो जीवांश्च मृद्भक्षणदशायां यशोदेव द्रष्टासि। यद्वा कृष्णावतारे वत्सवत्सपाद्याकारैर्व्यापकं मां मयि लोकान् ब्रह्मांडानि आत्मनश्चतुर्भुजमूर्त्तीः यद्वाऽऽत्मनः स्वान्बहून्परमेष्ठिनो द्रक्ष्यसीत्यर्थः॥ ३१॥ ❀ ❀ कर्मशमलं च यथा विजह्यामिति यत्प्रार्थितं तत्खल्वेतादृश्यां दशायां संभवेदित्याह—यदेति॥ ३२॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

विपादकृतं सृष्ट्यसामर्थ्यप्रयुक्तम्॥ २९॥ ❀ ❀ तपः प्राणायामादि विद्या मन्त्रोपासना ताभ्यां तपोविद्याभ्यां लोकान् भुवनानि जनांश्च॥ ३०॥ ❀ ❀ ततस्तपोविद्याभ्यां लोकदर्शनानन्तरं समाहितश्च सन् भक्तियुक्तत्वात्। स्थिरचित्तश्च सन् लोके भुवने मयि सर्वाधारे लोकान् भुवनानि॥ ३१॥ ❀ ❀ पश्येद्भक्त्येति शेषः॥ ३२॥

### श्रीमद्वीरराघवव्याख्या

वचनमेवाह मेति। हे वेदगर्भ ब्रह्मन्! तन्द्रीं विषादकृतपारवश्यं मा गाः मा प्राप्नुहि, किं तु सर्गे सृष्टौ उद्यमं प्रयत्नमावह कुरु। भवान् यत्तेनैव मे दृशमनुस्पृशतादित्यादिना प्रार्थयते तदग्रे पूर्वमेव मया आपादितं संपादितम्॥ २९॥ ❀ ❀ तर्हि कथमहं सृष्टेः प्रकारं न जानामीत्यत आह। भूय इति। भूयः पुनः तपः कर्मयोगं मदाश्रयां मद्विषयां च विद्यामुपासनां तन्त्रेण ज्ञानयोगोऽपि विद्याशब्देन विवक्षितः आतिष्ठ कुरुताभ्यां तपोविद्याभ्यामन्तर्हृदि हृदयकमलमध्ये हे ब्रह्मन्! अपावृतान् लोकान् यथावद् द्रक्ष्यसि॥ ३०॥ ❀ ❀ ततः यथावल्लोकदर्शनानन्तरं मद्भक्तियुक्तः समाहितचित्तस्त्वमात्मनि स्वस्मिन् लोके च सर्वस्मिंश्चेतनाचेतनात्मके जगति च ततं व्याप्तं मां मय्यात्मनीति सामानाधिकरण्यम् आत्मन इति पाठे आत्मनो जीवानित्यर्थः। यद्वा आत्मनो मम लोकान् शरीरभूताँल्लोकान्। यद्वा आत्मनः मत्तः प्रसूतान् लोकान् मयि यथा द्रक्ष्यसि द्रष्टुमर्हसीत्यर्थः। सर्वचेतनाचेतनान्तर्यामिणं धारकं मां मद्व्याप्यान् धार्यान् लोकांश्च परं पश्यसीत्यर्थः। सर्वात्मकब्रह्मसाक्षात्कारेण मोहो निवर्तत इत्यभिप्रायः॥ ३१॥ ❀ ❀ इदमेव कृत्स्नचिदचिद्विलक्षणत्वेन तदन्तर्यामितया चोपासनं कर्मशमलं च यथा विजह्यामित्यर्थितमुक्त्युपायोऽपीत्याह। यदात्विति। दारुष्वग्निमिव सर्वभूतेषु स्थितं मां लोकः यदा तु प्रतिचक्षीत पश्येत् दारुष्वग्निमिवेति दृष्टान्तसामर्थ्याद्विलक्षणाकारयोगोऽभिप्रेतः कौटिल्यदैर्घ्यादिधर्मो हि दारुगतो न त्वग्निगतः एवं कृत्स्नचिदन्तरात्मतयावस्थिते परमात्मनि चेतनाचेतनागतकर्मवश्यत्वसृज्यत्वपाल्यत्वनियाम्यत्वशेषत्वशरीरत्वादयो न संगच्छन्त इत्यभिप्रायः। तर्ह्येव प्रकृतिपुरुषविलक्षणतया तदन्तरात्मतया च दर्शनानन्तरमेव कश्मलं दुःखं मोहं वा जह्यात्॥ ३२॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

तन्द्रीं लोकसंस्थानविज्ञानविषयं परिखेदं मा गाः भवान्यल्लोकसंस्थानविज्ञानं प्रार्थयते तन्मया पूर्वमेव तप इति द्व्यक्षरकथनेन चोदितं तत्प्रार्थनमपि न स्वाधीनं किंतु मत्प्रेरणयैवेतीममर्थं हिना सूचयति॥ २९॥ ❀ ❀ नैतावतालमित्याह भूयश्चेति। 'तप आलोचनं प्रोक्तं विद्या निष्ठा प्रकीर्तिता।' इति वचनात्तपआलोचनगुणोपसंहारलक्षणं ध्यानं विद्यां निष्ठां भक्तिलक्षणां ततः किं स्यादिति तत्राह ताभ्यामिति॥ ३०॥ ❀ ❀ लोकदर्शनमेव विशिनष्टि तत इति। भक्तियुक्तः समाहितः एकाग्रचित्तस्त्वं ततः स्वेन योगेन ध्यानेनात्मनि देहमध्ये हृदि ततं सर्वगुणपूर्णं मां द्रष्टासि आत्मनि त्वयि स्थिते मयि लोकान्द्रष्टासीत्यन्वयः। 'देहे देहे हरिस्तस्मिन्सर्वे लोकाः प्रतिष्ठिताः। अङ्गुष्ठमात्रेऽपि परे परशक्तिर्यतो विभुः॥' इति वचनात् हृद्यन्तर्लोकदर्शनं युक्तमिति भावः॥ ३१॥ ❀ ❀ लोकसंस्थानविज्ञानयोगमुपदिष्याधुना ब्रह्मणः सर्वेषां गुरुत्वात्तदुपदिष्टज्ञानस्य मुक्तिसाधनत्वाल्लोकोपकारकं तज्ज्ञानप्रकारमुपदिशति यदा त्विति। तुशब्दो ज्ञानविशेषसूचकः। लोको योग्यो जनो दारुष्वग्निमिव निःसंगतया सर्वभूतेषु स्थितं तुशब्दात्सर्वभूतेषु स्थितेऽङ्गुष्ठमात्रे मय्यपि लोकान्यदा प्रतिचक्षीत प्रतिदेहं पश्येत् तर्हि तदानीमेव कश्मलं जीवेश्वराभेददर्शननिमित्तदुःखं जह्याज्जहाति। 'देहे देहे हरिस्तस्मिन्न'त्येतदत्राप्युदाहर्तव्यम्॥ ३२॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

भूय इति। तपःप्राणायामादि ॥ ३० ॥ ३२ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी।

समस्तमोहोपशमनं दर्शयति। तन्द्रीमज्ञानं मा गाः वेदगर्भेति न हि सर्व्ववेदविज्ञस्याज्ञानमुचितमिति भावः। ननु स्वस्य सृष्टिसामर्थ्ये संशयानोऽस्मि तत्राह। सर्गे इति। उद्यमो निष्फलो भावीत्यपि मा शङ्किष्ठा इत्याह। तन्मयेति। तेनैव मे दृशमनुस्पृशतादिति यन्मां प्रार्थयते ॥ २९ ॥ ❀ ❀ नन्विदानीमुद्यमेन किं भविष्यति ये मया स्रज्यास्ते भूरादयो लोका एव न दृश्यन्ते इत्यत आह। भूय इति। तपश्चित्तैकाग्र्यं विद्यामन्त्रोपासनाम् अन्तर्हृदि हृदय एव बहिःस्थितानपि लोकान् भूरादीन् तत्रस्थान् मनुष्यादींश्च अपावृतान् जलावरणशून्यान् द्रक्ष्यसि। ततश्च मयैव यथास्थिततया दर्शयिष्यमाणांस्तान् स्वहृदय एव दृष्ट्वा आदर्शदर्शी लेखक इव सुखेनैव बहिः स्रक्ष्यसीति भावः ॥ ३० ॥ ❀ ❀ सृष्ट्यावेशवशत्वेऽपि त्वामहं न विस्मरेयमिति यत् प्रार्थितं तत्राह—ततः सृष्टिसमयेऽपि भक्तियुक्तः समाहितश्च सन् आत्मनि स्वमनसि बहिर्लोके च मां द्रष्टासि। तथा मयि लोकान् भूरादीन् आत्मनो जीवांश्च मृद्भक्षणलीलायां यशोदेव द्रष्टासि। यद्वा ततं कृष्णावतारे वत्सवत्सपाद्याकारैर्व्यापकं मां मयि लोकान् ब्रह्माण्डानि आत्मनश्चतुर्भुजमूर्तीः। यद्वा आत्मनः स्वानि बहून् परमेष्ठिनः द्रक्ष्यसि ॥ ३१ ॥ ❀ ❀ कर्म्मेशमलञ्च यथा विजह्यामिति यत् प्रार्थितं तत् खल्वेतादृश्यां दशायां सम्भवेदित्याह। यदात्विति। प्रतिचक्षीत पश्येत्। कश्मलं मोहम् ॥ ३२ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

तन्द्रामालस्यम्। मा गाः मा प्राप्नुहि ॥ २९ ॥ ३० ॥ ❀ ❀ ततस्तदनन्तरं भक्तितस्त्वम्। आत्मनि स्वस्मिन् लोके च मा ततं व्याप्तं द्रष्टासि द्रक्ष्यसि। आत्मनः स्वस्य स्थितिमिति शेषः, आत्मनः आत्मानं चेति वा ॥ ३१ ॥ ❀ ❀ प्रतिचक्षीत पश्येत् ॥ ३२ ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

तत्र प्रथमं ज्ञानवुद्धिसंयोगे उत्तरमाह—मा वेदेति दशभिः। वाक्यैरेव चतुर्थोत्तरं भवति, द्वितीयं तु वरदानादेव, तृतीये त्वल्पः प्रयासः, अतः सपरिकरं प्रथममेवोत्पादयति—

आलस्याभावतपसी भगवज्ज्ञानसाधने। सर्वत्राऽन्वीक्षणं चैव ज्ञानेनैव मलक्षतिः ॥ १ ॥
चरित्रपरता हेतुर्मलाभावे विचारितः। स ज्ञानेनैव संसिद्धो ह्यतस्तत्फलमीर्यते ॥ २ ॥
सुखे हेतुश्च तज्ज्ञानं स्वसंबन्धविशेषणात्। गर्वाभावे[1] वरदानान्नाऽन्यश्चेति निरूपितम् ॥ ३ ॥
स्वाभाविकस्य दोषस्य निवृत्तिश्चाप्यनुग्रहात्। मत्स्वरूपस्य विज्ञानं जातमेव तदेव तत् ॥४॥
मया तथैव च कृतमाविष्कारः स्तुतौ कृतः। ममैवाऽनुग्रहात्सर्वमित्येषा ह्युपसंहृतिः ॥ ५ ॥
द्वितीयस्योत्तरं वेदैश्चतुर्थोऽप्युक्त एव हि। भवेदिति कृतं स्तोत्रं चरित्रं भक्तिहेतुकम् ॥ ६ ॥
नाऽन्यत्र विनियोक्तव्यं भक्तिर्नित्या न साधनम्। वेदाविस्मरणे हेतुर्देह एव कृतः पुरा।
तदाहैकेन तेनैते कला श्लोका निरूपिताः ॥ ७ ॥

तत्र प्रथममालस्याभावमाह—हे वेदगर्भ तन्द्रीं मा गाः आलस्यं मा कुर्वित्यर्थः। सर्गे उद्यमं चाऽऽवह सर्गकरणार्थमुद्युक्तो भव। चकारात्साधने मतिः कर्त्तव्या। साधनमेव न जानामीति चेत्तत्राऽऽह—तन्मयाऽऽपादितमिति। यन्मां त्वं साधनं प्रार्थयसे, तन्मया पूर्वमेवाऽऽपादितम्। हि युक्तोऽयमर्थः, अन्यथैतावद्दूरे साधनपरम्परा न भवेत्, अतः साधनस्य सिद्धत्वादालस्यं त्यक्तव्यमिति भावः ॥ २९ ॥ ❀ ❀ ज्ञानार्थं च तपः कुर्वित्याह—भूयस्त्वमिति। यथा पूर्वं तपः कृतम्, तथैव ततोऽपि भूयस्तपः कर्त्तव्यम्। पुनःपदादिपरित्यागेन भूयःपदप्रयोगेण अर्थद्वयमभिप्रेतमिति ज्ञायते। तपसि आस्था कर्त्तव्या, विद्या मदुपासनायै कर्त्तव्या। सा चोपासना मद्विषयैव। ताभ्यामुपासनातपोभ्यां हृदयमध्य एव अपावृतान् लोकान् द्रक्ष्यसि। ब्रह्मन्निति संबोधनं तदधिकारद्योतनार्थम्। न हि ब्रह्मभावव्यतिरेकेण कश्चित्तस्मिन् लोकान् द्रष्टुमर्हति। अपावृतान् मदीयान्, अन्ये तु त्रिविधा जीवाः कालादिभिरावृता एव भवन्ति। सर्वेषामेव जीवानामपावृतत्वे तु त्रैविध्यं न स्यादिति केचित्। परमार्थतो वा अपावृताः सर्व एव ॥ ३० ॥ ❀ ❀ ततो भवानात्मानं प्रजावदन्तरतमान् लोकांश्च दृष्ट्वा आत्मत्वेन ज्ञानात् स्वस्मिन् लोके च भक्तिर्भविष्यति। स्नेहांशोऽस्त्येव, माहात्म्यस्य दृष्टत्वात्। स्नेहो माहात्म्यं च मिलितं भक्तिर्भवति। लोके च अपावृतत्वदर्शनान्माहात्म्यज्ञानम्, स्वान्तरत्वात्स्नेहः, एवमुभयत्र भक्तियुक्तः। तत्रैको दोषः सम्भवति, भगवतस्तुल्यता। तदभावार्थं समाहितो भवेत्। एतदुभयात्मज्ञानं भक्तिश्च न

---

१. गर्वाभावो० ख. ग. घ. ङ.।

स्वतन्त्रा, किन्तु भगवज्ज्ञानार्थमिति, तज्ज्ञानं कदा भविष्यतीति सावधानः । तदा मां द्रक्ष्यसि । स्वमध्ये लोकान् लोकमध्ये च मामिति, यत्रैव भक्तिस्तन्मध्ये स्थिताः प्रकाशन्ते । अतः तत्त्वमस्याद्यपि बोधनं स्वरूपे ब्रह्मणि भक्त्यर्थम् । ततः स्वस्मिन्नेव स्थितं भगवन्तं द्रक्ष्यसीति । ननु स्वस्मिन् लोके च भक्तौ कथं भगवत्साक्षात्कारः ? तत्राऽऽह—ततमिति । सर्वत्र व्याप्तम् । पुनर्ब्रह्मन्निति संबोधनं प्रकृतोपयोग्यधिकारसूचकम् । तदा मयि भक्तिरस्त्येव । तदा तानेव मद्गतानपि द्रक्ष्यसीत्याह—आत्मसम्बन्धिनि मयि लोकानिति ॥ ३१ ॥ ❀ ❀ नन्वेवं ज्ञानस्य किं प्रयोजनमित्याशङ्क्य खण्डशो ज्ञानप्रयोजनान्याह । तत्र लोके विततं भगवज्ज्ञानं सर्वदोषनिवर्तकम्, भगवदधिष्ठानत्वेनैव सर्वस्य ज्ञातत्वान्न कोऽप्यग्रे दोषः संभवति । 'यो मामजमनादिं च' इति वाक्यात् भगवज्ज्ञाने सर्वपापक्षयः सिद्धः । अतो विततज्ञानं यादृशमपेक्ष्यते कश्मलनिरसने, तादृशं रूपमाह—यदा त्विति । सर्वभूतेषु यथा दारुष्वग्निस्तथा चेदात्मानं विततं पश्यति, न त्वाकाशवत् । स हि लोकैरावृतस्तदपगममात्रेण प्रकाशते, न तु मथनेनाऽग्निरिव । घर्षणेन चाऽयमभिव्यक्तो भवति । तथा योगेन, निरन्तरभावनया वा, मनसाऽऽत्मघर्षणेन बहिरार्द्रतानिराकरणार्थं तपसा च तदभिव्यक्तं भवति, स्थितं प्रथमत एव । सर्वेष्वपि दारुष्वेकस्मिन्नपि सर्वावयवे निर्गतोऽग्निस्तुल्य एव । एकश्च सः, भेदकप्रमाणाभावात् । एवं सर्वत्र विचारं कृत्वा योगेन भगवन्तं पश्यति । प्रतिचक्षणं परीक्ष्य दर्शनम् । तदैव सर्वेषां लोकानां सर्वकश्मलनिरसनं भवति । अतो लोकेऽप्ययमर्थः सिद्ध इति तव कश्मलनिरसने कः सन्देह इत्यर्थः । तर्ह्येवेति मध्ये कश्मलनिरसनं बाधितम् ॥ ३२ ॥

## श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

मा वेदगर्भेत्यत्र । नन्वत्रोत्तरे पञ्चदशश्लोका इति कथं दशभिरित्युच्यत इत्याकाङ्क्षायामाहुः—वाक्यैरित्यादि । चतुर्थोत्तरमिति । विषाददूरीकरणस्योत्तरम् । द्वितीयमिति । चित्तस्य भगवच्चरित्रपरत्वम् । तृतीय इति । वेदाविस्मरणे । प्रथममिति । ज्ञानवुद्धिसंयोगम् । अतो दशोक्ता इत्यर्थः । पञ्चदशानामप्यर्थं कारिकाभिर्विचारयन्ति । तत्र प्रथमया चतुर्णामर्थ उक्तः । तत्र सर्गसाधने आलस्याभावोपदेशः प्रथमार्थः, भगवज्ज्ञानार्थं तपस उपदेशो द्वितीयार्थः, सर्वत्राऽन्वीक्षणं सर्वत्र युक्त्या परीक्ष्य भगवदीक्षणं तृतीयस्याऽर्थः, भगवदीक्षणेन मलक्षतिश्चतुर्थस्येति । पञ्चमस्याहुः—चरित्रेत्यादि । चरित्रपरताहेतुर्दर्शनप्रकारविशेषः । स मलाभावे सति भगवता विचारितः । हि यतो हेतोः, स मलाभावः ज्ञानेन सम्यक् प्रकारेण सिद्धः । अतो हेतोर्ज्ञानफलं स्वाराज्यं पञ्चम ईर्यते । तथा च तदपि ज्ञानवुद्धिसंयोगस्यैव परिकर इत्यर्थः । षष्ठस्याहुः—सुखे हेतुरित्यादि । तत् पूर्वोक्तं मलनिवर्तकं ज्ञानमेव । चोऽवधारणे । स्वसम्बन्धविशेषणात् । भगवत्संवन्धविशेषणात् । सुखे हेतुः सुखजनकम् । तत्र हेतुः—ब्रह्मकल्पे गर्वाभावार्थं वरदानात् । स वर इदानीमप्यनुवर्तमानो नाऽन्यथा न कुण्ठित इति निरूपितम्—अनुग्रहस्य वर्षीयस्त्वकथनेन बोधितमित्यर्थः । सप्तमस्याऽऽहुः—स्वाभाविकस्येत्यादि । स्वाभाविको दोषो रजोगुणः । अष्टमस्याऽऽहुः—मदित्यादि । तदेव तदिति । बुद्धौ संयोजनार्थं यत् ज्ञानं त्वया प्रार्थितम्, तदेव यत्तव जातम्, तन्मया संयोजितमित्यर्थः । तत्र गमकं नवमे उक्तमित्याहुः—मयेत्यादि । दशमस्याहुः—ममेत्यादि । इत्येषा ह्युपसंहृतिरिति । एष ज्ञानवुद्धिसंक्रान्त्युपसंहारः । अग्रिमाणां चतुर्णामाहुः—द्वितीयस्येत्यादि । उक्त इति । आश्वासनस्य सर्वेष्वेवोक्तत्वादुक्त एव भवेदित्यर्थः । कथं भवेदित्याकाङ्क्षायां प्रकारत्वेन चतुर्णां तात्पर्यमाहुः—कृतमित्यादि । एतावद्दूर इति । दर्शनपर्यन्तम् ॥ २९ ॥ ❀ ❀ भूय इत्यत्र । तदधिकारद्योतनार्थमिति । ब्रह्मभावाधिकारद्योतनार्थम् । केचिदिति । इदं न श्रीधरमतम् ॥ ३० ॥ ❀ ❀ तत इत्यादि । इत आरभ्याऽग्रिमश्लोकव्याख्यानम् । ननु लोकानां स्वावयवत्वज्ञानेन तेषु स्नेहसत्त्वेऽपि माहात्म्यास्फुरणात्तत्र कथं भक्तिरित्याकाङ्क्षायामाहुः—लोके चेत्यादि । समाहिततत्त्वस्वरूपमाहुः—एतदित्यादि । प्रकाशन्ते इति । लोकाः प्रकाशन्ते । एतस्य वाक्यस्य 'तत्त्वमस्या'—दिवाक्योपबृंहणत्वायाऽऽहुः—अत इत्यादि ॥ ३१ ॥ ❀ ❀ यदा त्वित्यत्र । खण्डश इत्यादि । नानाविधानि यानि सखण्डब्रह्मज्ञानानि, तेषां फलं श्लोकद्वयेनाऽऽहेत्यर्थः । स हीति । आकाशो हि । अयमिति । आत्मा । तदिति । ब्रह्म । एकस्मिन्नित्यादि । एकस्मिन्नपि निर्गतोऽग्निः सर्वावयवे तुल्य इति योजना ॥ ३२ ॥

## श्रीगिरिधरकृता बालप्रबोधिनी

भगवद्वचनमेव दर्शयति, मेति पञ्चदशभिः—वेदगर्भेति । वेदान् सञ्चारयतीति हे वेदगर्भ तन्द्रां विषादकृतमालस्यं मा गाः मा प्राप्नुहि, किन्तु सर्गे सृष्टौ उद्यमं प्रयत्नं आवह कुरु । ननु तत्राहं असमर्थ एव ज्ञानादिकं प्रार्थितवान्, असमर्थस्य चोद्यमो निष्फल एव स्यादित्याशङ्क्याह—तदिति । 'तेनैव मे दृशमनुस्पृशतात्' इत्यादि यद्भवान्मां प्रार्थयते तद्धि मयाऽग्रे पूर्वमेव आपादितं सम्पादितमित्यर्थः ॥ २९ ॥ ❀ ❀ तर्हि कथमहं न जानामीत्यपेक्षायां तत्रोपायमाह—भूय इति । तपः अनशनादि मदाश्रयां मद्विषयां विद्यामुपासनां चैव त्वं भूयः पुनरातिष्ठ कुरु । नान्येन साधनेन तव कार्यं सेत्स्यतीत्येवकारेण सूचितम् । ताभ्यां तपो-

---

१. द्वाविंशः श्लोकोऽयम् ।

विद्याभ्यां अन्तर्हृदि हृदयकमलमध्ये अनावृतान् आवरणशून्यान् लोकान् देवमनुष्यादिसहितान् भूरादीन् द्रक्ष्यसीत्यन्वयः। अत्र तवाधिकारोऽस्तीति सूचयन् सम्बोधयति—ब्रह्मन्निति ॥ ३० ॥ ❀ ❀ ततो यथावल्लोकदर्शनानन्तरमेव त्वं मद्भक्तियुक्तः समाहितः एकाग्रचित्तश्च सन् आत्मनि स्वस्मिंल्लोके च चेतनात्मके जगति ततं व्याप्तं मां द्रक्ष्यसि, मयि च लोकान् आत्मनो जीवांश्च द्रक्ष्यसीत्यन्वयः। स्नेहेनोक्ताभिप्रायमेव सूचयन् पुनः सम्बोधयति—ब्रह्मन्निति ॥ ३१ ॥ ❀ ❀ यच्च त्वया प्रार्थितं 'कश्मलमलं च यथा विजह्यां' इति तदप्येवं मद्दर्शनेनैव भविष्यतीत्याशयेनाह—यदा त्विति। तुशब्दोऽवधारणे। लोको जनः यदैव सर्वभूतेषु चेतनाचेतनात्मकेष्ववस्थितं मां प्रतिचक्षीत परिपश्येत्तर्ह्येव कश्मलं पापं जह्यात् त्यजेदित्यन्वयः। पापादौ प्रवृत्तेर्मदधीनत्वभावनया तत्राहङ्काराभावात् पापादिस्पर्शो नैव भवतीति भावः। ननु भगवान् सर्वत्रास्ति चेत्तर्हि सर्वैः कुतो न दृश्यते इत्याशङ्क्य दृष्टान्तमाह—अग्निमिवेति। यथाऽग्निः सर्वत्र स्थितोऽपि निर्मन्थनाद्युपायेनैवाविर्भवति तथा भगवान् सर्वत्र स्थितोऽपि तपोभक्त्यादिनैवाविर्भवतीत्यर्थः ॥ ३२ ॥

## हिन्दी अनुवाद

श्रीभगवान्ने कहा—वेदगर्भ! तुम विषादके वशीभूत हो आलस्य न करो, सृष्टिरचनाके उद्यममें तत्पर हो जाओ। तुम मुझसे जो कुछ चाहते हो, उसे तो मैं पहले ही कर चुका हूँ ॥ २९ ॥ ❀ ❀ तुम एक बार फिर तप करो और भागवत ज्ञानका अनुष्ठान करो। उनके द्वारा तुम सब लोकोंको स्पष्टतया अपने अन्तःकरणमें देखोगे ॥ ३० ॥ ❀ ❀ फिर भक्तियुक्त और समाहितचित्त होकर तुम सम्पूर्ण लोक और अपनेमें मुझको व्याप्त देखोगे तथा मुझमें सम्पूर्ण लोक और अपने आपको देखोगे ॥ ३१ ॥ ❀ ❀ जिस समय जीव काष्ठमें व्याप्त अग्निके समान समस्त भूतोंमें मुझे ही स्थित देखता है, उसी समय वह अपने अज्ञानरूप मलसे मुक्त हो जाता है ॥ ३२ ॥

**यदा रहितमात्मानं भूतेन्द्रियगुणाशयैः[1]। स्वरूपेण मयोपेतं पश्यन्स्वाराज्यमृच्छति ॥ ३३ ॥**
**नानाकर्मवितानेन प्रजा बह्वीः सिसृक्षतः। नात्मावसीदत्यस्मिंस्ते वर्षीयान्[2]मदनुग्रहः ॥ ३४ ॥**
**ऋषिमाद्यं न बध्नाति पापीयांस्त्वां रजोगुणः। यन्मनो मयि निर्बद्धं प्रजाः संसृजतोऽपि ते ॥ ३५ ॥**
**ज्ञातोऽहं भवता त्वद्य दुर्विज्ञेयोऽपि देहिनाम्। यन्मां त्वं मन्यसे युक्तं भूतेन्द्रियगुणात्मभिः ॥ ३६ ॥**

## श्रीधरस्वामिविरचिता भावार्थदीपिका

तदा च मिथ्याज्ञाननिवृत्तौ मुच्यत इत्याह। यदेति। भूतादिभिर्विरहितमात्मानं जीवं शुद्धत्वं पदार्थस्वरूपेण स्वस्यात्मभूतेन मया तत्पदार्थेनोपेतमेकीभूतं पश्यन्भवति तदा स्वाराज्यं मोक्षं प्राप्नोति ॥ ३३ ॥ ❀ ❀ यतो वर्षीयान् वृद्धतरः अत्यधिकोऽस्तीत्यर्थः ॥ ३४ ॥ ❀ ❀ अनुग्रहमेवाह। ऋषिमिति चतुर्भिः। यद्यतस्ते मनो मयि निर्बद्धम् ॥ ३५ ॥ ❀ ❀ यद्यस्माद्भूतैरिंद्रियैर्गुणैः सत्त्वादिभिरात्मनाऽहंकारेण चायुक्तं मन्यसे ॥ ३६ ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

कस्यां दशायां त्वां प्राप्नुयादित्यपेक्षायामाह—यदात्मानं स्वं भूतादिभी रहितं स्वरूपेण न तु स्वीयं जीवात्मत्वं परित्यज्येत्यर्थः। मया सेव्येन परमेश्वरेण सह उप समीप एव इतं सेवार्थं प्राप्तं पश्यन्भवति तदा स्वेन स्वीयेन प्रभुणा सह राजत इति स्वराट् दासस्तस्य भावः कर्म वा दास्यमृच्छति प्राप्नोति। केचित्तु निर्विशेषसविशेषस्वरूपयोरेव स्तुतौ प्रक्रांतत्वात्तदुपासकानां ज्ञानिनां भक्तानां च तंत्रेणैव चरमदशाव्यंजकतया पद्यमिदं व्याचक्षते ज्ञानिपक्षस्तु स्वामिचरणैरेव व्याख्यातः। द्वितीयमाह—भक्तः शांतादिपञ्चविधोपि स्वरूपेण शांतश्चिद्रूपत्वेन। दास्ये दास्यरूपत्वेन सख्ये सख्येनैव। पित्रादिर्वात्सल्येन। प्रिया प्रेम्णैव उपेतं युक्तमात्मानं स्वं तथा मयापि पञ्चविधभावविषयेण सह साक्षात्परब्रह्मणा प्रभुणा। सख्या पुत्रादिना कांतेन चोपेतमिति यथायथमेवार्थः। स्वाराज्यं स्वेन चिद्घनाकारेण स्वीयेन प्रभुणा सख्या पुत्रादिना कांतेन च सह राजत इति तस्य भावमृच्छति प्राप्नोति ॥ ३३ ॥ ❀ ❀ इत्यर्थ इति। अतिशयार्थे वृद्धशब्दस्य वर्षादेशत्वेनायमर्थोस्तीति भावः। अस्मिन्सिसृक्षासमयेपि ते आत्मा चित्तं यन्नावसीदति मोहं न प्राप्नोति स एव वर्षीयान्मदनुग्रह इत्यन्वयः। विश्वनाथस्तु तदेवं ज्ञानभक्तिरसत्वमुपदिश्य त्वयि ममानुग्रहो न केवलमद्यतन एव अपि तु सार्वकालिक एवेत्याह—नानेति ॥ ३४ ॥ ❀ ❀ त्वं रजोगुणान्माभैषीरिति सांत्वयन्नाह—ऋषिमिति। द्वितीयस्कंधेपि "एतन्मतं समातिष्ठ परमेण समाधिना। भवान्कल्पविकल्पेषु न विमुह्यति कर्हिचित्" इति। अतो "न भारती मेंग मृषोपलक्ष्यते" इत्यादिकमपि स्वयमुक्तम्। यत्तत्तस्यान्यावेशः क्वचित् श्रूयते स खलु न स्थिरः स्यादिति

---

१. प्रा. पा.—गुणाश्रयैः। २. प्रा. पा०—वरीयान्

तदाभास एव ज्ञेयः । यत्तु दशमस्कंधेऽस्य मोहः श्रूयते स तु न रजसा किन्तु भगवदैश्वर्यविशेषदर्शनेन तद्विशेषदर्शनेच्छया च 'अंभोजन्मजनिः' इत्यादेस्तत्रैव श्रवणात् । एवमेकादशे च हंसस्वरूपेण सनकादिषु ज्ञानकथनात्स्वमहिमप्रकाशनायैव ब्रह्मज्ञानावरणं ज्ञेयम् ॥ ३५ ॥ ❀ ❀ यद्यस्मात् मां साकारमपि भूतादिभिरयुक्तं भूतादिभ्यः पृथग्भूतं तत्साक्षिणमित्यर्थः । "रूपं यदेतदवबोधरसोदयेन" इत्यादि ब्रुवाणस्त्वं मन्यसे तस्मान्ममायमाकारो न भूतानि पृथिव्यादीनि नापींद्रियाणि तैजसानि नापि गुणमाया नाप्यात्मा जीवः, किन्तु साक्षाद् ब्रह्मैव त्वं जानासीत्यर्थः । तेन मद्रूपस्य सच्चिदानन्दत्वमायात्वयोर्मननमेव यज्ज्ञानाज्ञानयोर्लिंगमिति भगवदभिप्रायोवगाह्यः ॥ ३६ ॥

## श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

तदा च मद्दर्शनकाले मिथ्या ज्ञानमनात्मनि आत्मप्रत्ययः स्वस्य शुद्धत्वं पदार्थस्य आत्मभूतेन मूलस्वरूपेण एकीभूतं चिदंशेनाभिन्नीभूतम् ॥ ३३ ॥ ❀ ❀ सृष्टेर्बीजरूपाणां नानाकर्मणां वितानेन विस्तारानुसारेण बह्वीः जरायुजादिचतुर्विधाः आत्मा चित्तमस्मिन् विविधसृष्टिकर्मणि नावसीदति न खिन्नो भविष्यति । तत्र हेतुः यतो हेतोः अस्तीति क्रियाध्याहारादित्यर्थ इत्युक्तम् ॥ ३४ ॥ ❀ ❀ न बध्नातीत्यनुग्रहेऽपि दशमेऽस्य मोहो मञ्जुमहिमदर्शनार्थं श्रीभगवदिच्छयैव न तु बहिरङ्गमायया‌न्यथापराधेन ज्ञानलोपे स्वकृतस्तवे तद्भूरिभाग्यमित्यादिकं नावक्ष्यदिति ज्ञेयं यद्यतस्ते मनोमयि निर्बद्धम् ॥ ३५ ॥ ❀ ❀ ज्ञातोऽहमिति तु ज्ञातोऽसीत्यादिब्रह्मवाक्यपञ्चकानुमोदनेन श्रीविग्रहस्य परतत्त्वात्मकसिद्धान्ताभ्युपगमपरमयुक्तं जीववत्प्राकृतैस्तैरहितं मन्यसे इति स्वरूपात्मकैस्तुतैर्युक्तमेव मन्यसेऽतो ज्ञातोऽहमित्यर्थः ॥ ३६ ॥

## श्रीमद्वीरराघवव्याख्या

एवं सर्वात्मकब्रह्मोपासनस्य मुक्तिसाधनत्वमभिधाय ब्रह्मशरीरतया प्रकृतिविलक्षणतया च स्वात्मोपासनमपि तत्साधनमित्याह यदेति । भूतानि पृथिव्यादीनि इन्द्रियाणि ज्ञानकर्मोभयेन्द्रियाणि आशयो वासनाऽन्तःकरणं वा एतैर्विरहितं तत्संबन्धे सति तदभावसंभवांशेभ्यो विलक्षणमित्यर्थः । स्वरूपेण सत्यं ज्ञानमनन्तम्, इति श्रुत्युक्तः स्वरूपेण मया आत्मना धारकेण उपेतं व्याप्तमात्मीयं धार्यमात्मानं जीवात्मनः पश्यन्नुदासीनः स्वाराज्यकर्मवश्यत्वमृच्छति प्राप्नोतीत्यर्थः ॥ ३३ ॥ ❀ ❀ नन्वस्तु सर्वात्मकब्रह्मोपासनब्रह्मशरीरभूतस्वात्मोपासनयोर्मुक्तिसाधनत्वमेवमपि कथं सृष्टिरूपव्यापारान्तरासक्तस्य सर्वात्मकब्रह्मानुसंधानं स्यादिति शोचन्तमनुगृह्णाति नानेत्यादिना । नानाकर्मणां जीवसंबन्ध्यनादिपुण्यपापरूपकर्मणां वितानेन विस्तारेणानादितत्कर्मवासनानुसारेण बह्वीर्बहुविधाः विचित्रा इत्यर्थः, प्रजाः देवतिर्यङ्मनुष्यस्थावरादिरूपाः सिसृक्षतः ते तवात्मा चित्तं नावसीदति न मोहं प्राप्नोति, किंतु मत्स्वरूपरूपगुणविभूत्यनुसंधानासक्तमेव भवति कुत एतदत आह । मदनुग्रहः वर्षीयान् बलवत्तर इत्यर्थः । व्यासंगान्तरासक्तस्यापि त्वच्चेतो मत्स्वरूपगुणविभूत्यनुसंधानासक्तमेव स्यादित्यनुगृह्णामीत्यर्थः । अनेन तस्मिन्स्वविक्रममिदं सृजतोऽपि चेतो युञ्जीतेति तेनैव विज्ञापितमनुगृहीतं भवति ॥ ३४ ॥ ❀ ❀ अनुग्रहस्य वर्षीयस्त्वमेव दर्शयति । ऋषिमिति । आद्यमादौ भवमाद्यमृषिं मत्स्वरूपरूपगुणविभूतिप्रतिपादककृत्स्नवेदराशिद्रष्टारं त्वां पापीयान् बन्धकः रजोगुणः न बध्नाति न संसारयति । कुतः यस्मान्मदनुग्रहात्प्रजाः संसृजतोऽपि ते मनो मयि निर्बद्धं नितरामासक्तम् ॥ ३५ ॥ ❀ ❀ एवमनुग्रहस्य वर्षीयस्त्वं प्रदर्श्य मत्स्वरूपादिविषयकं ज्ञानं मद्विषयकस्तवनं चेत्येतत्सर्वं मदनुग्रहादेव संपन्नमित्याह । ज्ञातोऽहमिति देहासक्तानामभक्तानामित्यर्थः । दुर्विज्ञेयोऽपि दुःखेनापि ज्ञातुमशक्योऽप्यहमद्याधुना भवता ज्ञातः यथावत्स्वरूपरूपगुणविभूतिविशिष्टत्वेन ज्ञातः । मया ज्ञात इति कथं ज्ञायत इत्यत आह । यद्यस्मात्त्वं भूतेन्द्रियगुणात्मभिः भूतानि पृथिव्यादीनि गुणाः सत्त्वादयः आत्मा मनः प्राकृतैर्भूतादिभिरयुक्तम्मां मन्यसे सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरस इत्यादि । श्रुत्युक्तरीत्याऽप्राकृतशुद्धसत्त्वपञ्चोपनिषन्मयभूतेन्द्रियादियुक्तं मन्यस इत्यर्थः । रूपं यदेतदवबोधरसोदयेनेत्यादिना तथैव प्रतिपादनात् । यद्वा युक्तमित्येव छेदः, आत्मानो जीवा भूतादिभिरचेतनैरात्मभिश्चेतनैश्च विशिष्टं मां मन्यसे मच्छेषतया मच्छरीरतया मत्सृज्यपाल्यसंहार्यतया च चेतनाचेतनविशिष्टं मां सर्वज्ञत्वसत्यसंकल्पत्वसत्यकामत्वप्रकृतिपुरुषविलक्षणत्वाद्यनन्ताकारविशिष्टं मन्यस इत्यर्थः ॥ ३६ ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

नैतावतापि पूर्यत इति पूर्वोपदिष्टज्ञानमुपचिनोति । यदेति । यदात्मानं भूतेन्द्रियगुणाशयै रहितं पश्यति तदा स्वाराज्यमृच्छतीत्यन्वयः । किन्तु विशेषोऽप्यस्तीत्याह । स्वरूपेणेति । स्वरूपेण मयोपेतं हृदिस्थितं जीवस्वरूपं पश्यन् मुक्तो भवति । अयं भावः यदात्मानं स्वरूपं जीवसंज्ञं भूतेन्द्रियादिरहितं देहादिष्वात्मभावं त्यक्त्वा हृदिस्थिते जीवरूपे आत्मभावं दृष्ट्वा हृदि स्थितेन स्वरूपेण स्वबिम्बरूपेण मयोपेतं समीपे स्थितं मम पादाब्जसेवकत्वेन वर्तमानं पश्यति तदा स्वरूपानन्दानुभवमुपैतीति । तदुक्तम् । "त्यक्त्वा देहाद्यात्मभावं जीवरूपे हृदिस्थिते । दृष्ट्वात्मभावं ते चापि हरिपादाब्जसंस्थितम् ॥ यदा पश्यत्यापरोक्ष्यात्तदा मुक्तिं व्रजत्यसावि"ति ॥ ३३ ॥ ❀ ❀ इदानीं तस्मिन्स्वविक्रम इति प्रार्थितं तद्दानप्रकारमाह । नानेति । अस्मिन्सृष्टिकर्मणि

नानाविधादृष्टाख्यकर्मणां विपाकेन फलदानोन्मुखेन कालेन बह्वीः प्रजाः सिसृक्षतस्ते तवात्मा बुद्धिर्नावसीदति न नश्यति। तत्र निमित्तमाह। वर्षीयानिति वर्षीयान्बहुसंवत्सरकालसंपन्नः मदनुग्रहोऽस्तीति यत्तस्मादिति शेषः। वर्षीयान् ज्यायानिति वा॥ ३४॥ एतदेव स्पष्टयति। ऋषिमिति। 'ऋषिस्त्रिकालदर्शी स्यादि'ति वचनात् ज्ञानित्वादाद्यमादौ भवं त्वां प्रथमोत्पन्नत्वेन तव श्रेष्ठत्वात् हेत्वन्तरमाह। यन्मन इति। प्रजाः संसृजतस्ते तवात्मा बुद्धिर्नावसीदति वेति अन्यव्यापारग्रस्तस्यान्यत्र मनोनिधानं दुष्करम्, तथापि मत्कृतमतिरितरान्प्रति पापीयानपि रजोगुणस्त्वां न बध्नातीत्यर्थः॥ ३५॥ ❀ ❀ मनोनिबन्धनफलमाह। ज्ञात इति। यथास्थितवस्तुज्ञानमेव मत्प्रसादजनकं तत्त्वास्तीत्याह। यन्मामिति। त्वं भूतेन्द्रियगुणात्मभिः भूतेन्द्रियत्रिगुणमनोबुद्धिभिर्नियामकतया युक्तं मां मन्यसे, न तु तदात्मकत्वेनेति यत्तस्माद्यथार्थज्ञानित्वादित्यर्थः। "भूतेन्द्रियमनोबुद्धित्रिगुणादिषु सर्वशः। युक्तं नियामकतया पश्यञ्जानाति केशवम्॥" इति वचनात्। भूतेन्द्रियनियामकतया तद्युक्तज्ञानमेव ज्ञानमिति भावः॥ ३६॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

यदेति भूतादिभिर्विरहितम् आत्मानं जीवं स्वरूपेण तस्य जीवशक्तेराश्रयभूतेन शक्तिमता मया उपेतं युक्तं स्वराज्यं साष्टर्यादिकम्॥ ३३॥ ३४॥ ❀ ❀ ऋषिमिति। द्वितीयस्कन्धे पूर्वमेवमुक्तम् "एतन्मतं समातिष्ठ परमेण समाधिना। भवान् कल्पविकल्पेषु न विमुह्यति कर्हिचिदि"ति। अतो 'न भारतीमेऽङ्ग मृषोपलक्ष्यत' इत्यादिकमपि स्वयमुक्तम्। यस्तु तस्यान्यावेशः क्वचित् श्रूयते स खलु न स्थिरः स्यादिति तदाभास एव ज्ञेयः। अस्तु दशमस्कन्धेऽस्य मोहः श्रूयते स तु न रजसा किन्तु भगवदैश्वर्य्यविशेषदर्शनेन तद्विशेषदर्शनेच्छया च। अम्भोजन्मजनिरित्यादेस्तत्रैव श्रवणात्। एवमेकादशे च हंसरूपेण सनकादिषु ज्ञानकथनात् स्वमहिमप्रकाशनाय ब्रह्मज्ञानवरणं ज्ञेयम्॥ ३५॥ ❀ ❀ ज्ञातोऽहमिति यदुक्तं तत्तु ज्ञातोऽसीत्यादिब्रह्मोक्तपद्यपञ्चकानुसारेण ज्ञेयम्॥ ३६॥ ३७॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी।

कस्यां दशायां त्वां प्राप्नुयादित्यपेक्षायामाह। यदा आत्मानं स्वं भूतादिभी रहितं देहद्वयाभिमानरहितं स्वरूपेणैव नतु स्वीयेनेत्यर्थः। मया सेव्येन परमेश्वरेण सह उप समीप एव इतं सेवार्थं प्राप्तं पश्यन् भवति तदा स्वेन स्वीयेन प्रभुणा सह राजत इति स्वराट् दासस्तस्य भावः कर्म्म वा दास्यम् ऋच्छति प्राप्नोति। केचित् पुनर्निर्व्विशेषसविशेषस्वरूपयोर्द्वयोरेव स्तुतौ प्रक्रान्तत्वात् तदुपासकानां ज्ञानिनां भक्तानाञ्च तन्त्रेणैव चरमदशाव्यञ्जकतया पद्यमिदं व्याचक्षते। तथाहि ज्ञानी आत्मानं शुद्धत्वं पदार्थस्वरूपेण मया तत्पदार्थेन उपेतमेकीभूतं पश्यन् यदा भवति तदा स्वाराज्यं मोक्षं प्राप्नोति। तथा भक्तः शान्तादिपञ्चविधोऽपि स्वरूपेण शान्तश्चिद्रूपत्वेन दासो दास्यरूपत्वेन सखा सख्येनैव पित्रादिर्वात्सल्येन प्रिया प्रेम्णैव उपेतं युक्तमात्मानं स्वं तथा मयापि पञ्चविधभावविषयेण सह साक्षात्परब्रह्मणा प्रभुणा सख्या पुत्रादिना कान्तेन च सह राजत इति तस्य भावस्तत्त्वम् ऋच्छति प्राप्नोति॥ ३३॥ ❀ ❀ तदेवं ज्ञानभक्तिरसतत्त्वमुपदिश्य त्वयि ममानुग्रहो न केवलमद्यतन एव अपि तु सार्व्वकालिक एवेत्याह। नानेति। वर्षीयान् ज्यायान्॥ ३४॥ ❀ ❀ त्वं रजोगुणान्मा भैषीरित्याह। ऋषिमिति। दशमस्कन्धेऽस्य विक्षेपो न रजसा किन्तु मञ्जुमहिमदर्शनसौभाग्यादृष्टवशादेवेति तत्रैव व्याख्यास्यते॥ ३५॥ ❀ ❀ यत् यस्मात् मां साकारमपि भूतादिभिरयुक्तं रूपं यदेतदवबोधरसोदयेनेत्यादि ब्रुवाणस्त्वं मन्यसे तस्मान्ममायमाकारो न भूतानि पृथिव्यादीनि नापीन्द्रियाणि तैजसानि। नापि गुणमाया नाप्यात्मा जीवः, किन्तु साक्षाद्ब्रह्मैव त्वं जानासीत्यर्थः। तेन मद्रूपस्य सच्चिदानन्दत्वमायात्वयोर्मननमेव मज्ज्ञानाज्ञानयोर्लिङ्गमिति भगवदभिप्रायोऽवगाह्यः॥ ३६॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः।

यदा भूतादिभिर्द्दश्यैः आत्मानं द्रष्टारं विरहितं मया वांशिनोपेतं च पश्यन् भवति तदा स्वाराज्यं स्वरूपयाथात्म्यसुखमृच्छति प्राप्नोति॥ ३३॥ ❀ ❀ वर्षीयान् वृद्धतरः बहुविवेकवान् इत्यर्थः॥ ३४॥ ३५॥ ❀ ❀ भूतादिभिरयुक्तमप्राकृतविग्रहत्वात् आत्मनान्तःकरणेन॥ ३६॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

अन्यद्यज्ज्ञानद्वयमस्ति, स्वस्य ब्रह्मत्वेन ज्ञानम्, स्वस्मिन् प्रजाज्ञानं च। भगवति प्रजाज्ञानं सर्वेषामेवाऽस्तीति न तदत्र निर्दिश्यते, अन्ययोः फलं स्वाराज्यम्। तदाह—यदा रहितमिति। भूतेन्द्रियगुणाशयैः रहितमात्मानं स्वरूपेण चिद्रूपेण औडुलौमिमतवत् मयोपेतमात्मानं पश्यन्, स्वाराज्यं स्वरूपानन्दानुभवम्, स्वस्मिन् विद्यमानेषु वा आधिपत्यम्, प्राप्नोति॥ ३३॥ ❀ ❀ स्वस्मिन् विद्यमानान् लोकान् पुत्रानिव चेत्स्रक्ष्यसि, तदा त्वद्धृदये न कोऽपि दोष आलस्यादिरुद्गमिष्यतीत्याह—नानाकर्मवितानेनेति। यथा बहुकार्यैकर्ता बहूनि काष्ठादीनि प्रसार्य यथोपयोगं सर्वं करोति, तथा देवतिर्यङ्मनुष्यादिभावजनकं कर्म

प्रसार्य यथायोग्यं चेत्प्रजाः स्रक्ष्यसि, तदा कर्मानुसारेण करणात् ते आत्मा अन्तःकरणं नावसीदति न खिन्नं भविष्यति । इदं ज्ञानमात्रेण न भविष्यतीति सहकार्यान्तरमाह—अस्मिन् कार्ये ते तुभ्यं वर्षीयानेव ममाऽनुग्रहो वर्तत इत्यर्थः ॥ ३४ ॥ ❀ ❀ तस्याऽनुग्रहस्य स्वरूपं वदन् तत्कार्यमपि विशदयति—ऋषिमाद्यमिति । आद्यमृषिं ब्रह्माणं त्वां पापीयान् रजोगुणो गर्वजनकः, उत्पत्त्यादिविक्षेपकर्ता वा, न बध्नातीत्यनुग्रहः । तत्र हेतुः—यद्यस्मात्कारणात् तत्र मयि मनो निर्वद्धम् । भगवति निर्वद्धं मनः, गुणातीते शुद्धसत्त्वे वा, रजसा व्याप्तं न भवति । कर्म निर्दिशति—प्रजाः संसृजत इति । सम्यगभिप्रायपूर्वकं प्रजाः सृजतो मनो रजोगुणव्याप्तं भवत्येव, कर्मस्वभावात् । कूपाद्बहिः स्थितस्य स्थिरस्य कूपे लम्बमानः पादः कदाचिदपि न पतति, तथा मयि निर्वद्धं मनः कदाचिदपि रजोव्याप्तं न भवतीत्यर्थः ॥ ३५ ॥ ❀ ❀ ननु एतत् ज्ञाने भवति, मम तु यत् त्वद्विषयकं ज्ञानं जातम्, तत् प्रतीकज्ञानमाहोस्वित् स्वरूपज्ञानमिति संदेहे निराकरणार्थमाह—ज्ञातोऽहमिति । तुशब्दः पक्षं व्यावर्तयति । अद्येति पूर्वज्ञानं व्यावर्तयति । पूर्वं हि बहिः स्थितं भगवन्तं ज्ञात्वा क्रियया प्राप्तव्य इति ज्ञातवान्, तदद्येति व्यावर्त्यते । अन्तःस्थितो भगवान्, तपसा भक्त्या च आविर्भूतं भगवन्तं दृष्ट्वा, विचारपूर्वकं यत् ज्ञातवान्, एतज्ज्ञानम् । तदाह—ज्ञातोऽहमिति । ननु किमाश्चर्यम्, बहव एव ब्रह्मविदस्त्वां जानन्ति । तत्राऽऽह—दुर्विज्ञेय इति । देहिनामहं दुर्विज्ञेय एव । देहाभिमानिनः स्वदेहं पश्यन्तो मामपि पश्यन्तः कदाचिदपि न मां ब्रह्मत्वेन ज्ञातुं शक्ष्यन्ति । न ह्यन्तः कामे स्थिते कामिनीस्पर्शः कामोद्बोधको न भवति, तदभावे तु कामिन्यपि पुरुषान्तरवत्प्रतिभाति । एवं भगवानपि सच्चिदानन्दविग्रहः, प्राकृते विग्रहे विद्यमाने, तदभिमानवता अन्यत्र विनियोगात् नाऽऽत्मत्वेन दृश्यते । स्वविनियोगाद्भगवन्तमपि परं देहिनमेव मन्यन्ते, अतो देहिनां दुर्विज्ञेयः । किञ्च, यस्मात्कारणात् त्वमेव पूर्वं मां भूतेन्द्रियगुणात्मभिर्युक्तं मन्यसे । भूतानि पृथिव्यादीनि देहारम्भकाणि, इन्द्रियाण्युभयविधानि, गुणा विषयाः, आत्मा अन्तःकरणचतुष्टयम् । सर्वैरेव तत्त्वांशैर्युक्तम्, अन्यथा बहिरन्वेषणं न संभवति ॥ ३६ ॥

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

यदा रहितमित्यत्र । पश्यन्निति । भवतीति शेषः ॥ ३३ ॥ ❀ ❀ नानेत्यत्र । वर्तते इति । ब्रह्मकल्पीयवरादिदानमप्यनुवर्तते ॥ ३४ ॥ ❀ ❀ ऋषिमित्यत्र । कर्म निर्दिशतीति । रजोव्याप्तिजनकं कर्म निर्दिशतीत्यर्थः ॥ ३५ ॥ ❀ ❀ ज्ञात इत्यत्र । नन्वेतदिति । ननु रजसा अबन्धनम् । एतदिति भिन्नं पदम् । प्रतीकज्ञानमिति । अतस्मिन् तदिति ज्ञानं प्रतीकज्ञानम् । प्रतीपज्ञानमिति पाठेऽप्ययमेवार्थः फलति । पक्षमिति । प्रतीकपक्षम् । अन्यत्र विनियोगादिति । देहादिसुखाद्यर्थं विनियोगात् ॥ ३६ ॥

### श्रीगिरिधरकृता बालप्रबोधिनी

एवं जीवात्मपरमात्मभेदेनोपासकानामपि सर्वदोषसंस्पर्शित्वमुक्त्वा तदभेदं पश्यतां तु मोक्षमेवाह—यदेति । भूतानि पृथिव्यादीनि इन्द्रियाणि च आशयोऽन्तःकरणं च एतैर्विरहितमेभ्यो विलक्षणं भिन्नमात्मानं स्वरूपभूतेन मयोपेतमेकीभूतं यदा पश्यन् भवति तदा देहाद्यात्माध्यासनिवृत्त्या स्वाराज्यं स्वेनैव राजत इति अकर्मवश्यत्वं स्वातन्त्र्यमृच्छति प्राप्नोतीत्यर्थः ॥ ३३ ॥ ❀ ❀ ननु को वा वेदैवं तपआदिप्रनाड्या ममैवं दर्शनं भविष्यति न वेति चेत्, तपआदिना मम दर्शनं मदनुग्रहादेव जातमतोऽग्रेऽपि मदनुग्रहात् सर्वं सेत्स्यतीत्याह—नानाकर्मेति । नानाकर्मणां जीवसम्बन्ध्यनादिपुण्यपापरूपाणां वितानेन विस्तारेण वासनानुसारेण बह्वीः बहुविधाः विचित्राः प्रजाः देवमनुष्यस्थावरादिरूपाः सिसृक्षतः स्रष्टुमिच्छतः व्यासङ्गान्तरासक्तचित्तस्यापि ते तव आत्मा चित्तमस्मिन् समयेऽपि यन्नावसीदति मोहं न प्राप्नोति स एष वर्षीयान् महत्तरो मदनुग्रह इत्यन्वयः ॥ ३४ ॥ ❀ ❀ एतदेव विशदयति—ऋषिमिति चतुर्भिः । आदौ भवमाद्यं ऋषिं मत्स्वरूपगुणभूतिप्रतिपादककृत्स्नवेदराशिद्रष्टारं त्वां पापीयान् विक्षेपादिना बन्धकोऽपि रजोगुणो न बध्नाति विक्षेपादिकं न करोतीति मदनुग्रह इत्यनुषङ्गेण सम्बन्धः । न बध्नातीति कुतो ज्ञायते इत्यत आह—यदिति । यत् यस्मात् प्रजाः संसृजतोऽपि ते तव मनो मयि निर्बद्धमत्यासक्तमित्यन्वयः ॥ ३५ ॥ ❀ ❀ एतदपि कथं ज्ञातमित्यपेक्षायामाह—ज्ञात इति । हि यस्मादहं देहिनां दुर्ज्ञेयोऽपि भवता त्वद्य ज्ञातोऽस्मीत्यन्वयः । तुशब्दः पूर्वमज्ञातत्वं सूचयति । ज्ञातत्वमपि कथमित्यपेक्षायामाह—यदिति । यत् यस्मात् भूतानीन्द्रियाणि गुणाः प्राकृताः सत्त्वादयः आत्माऽन्तःकरणं तैर्युक्तं रहितं आनन्दमात्रकरचरणादिमन्तं मां त्वं मन्यसे इत्यन्वयः । 'रूपं यदेतदवबोधरसोदयेन' इत्यादिना तथैव प्रतिपादनादिति भावः ॥ ३६ ॥

### हिन्दी अनुवाद

जब वह अपनेको भूत, इन्द्रिय, गुण और अन्तःकरणसे रहित तथा स्वरूपतः मुझसे अभिन्न देखता है, तब मोक्षपद प्राप्त कर लेता है ॥ ३३ ॥ ❀ ❀ ब्रह्माजी! नाना प्रकारके कर्मसंस्कारोंके अनुसार अनेक प्रकारकी जीवसृष्टिको रचनेकी इच्छा होनेपर भी तुम्हारा चित्त मोहित नहीं होता, यह मेरी अतिशय कृपाका ही फल है ॥ ३४ ॥ ❀ ❀ तुम सबसे पहले मन्त्रद्रष्टा हो। प्रजा उत्पन्न करते समय भी तुम्हारा मन मुझमें ही लगा रहता है, इसीसे पापमय रजोगुण तुमको बाँध

नहीं पाता ॥ ३५ ॥ ❀ ❀ तुम मुझे भूत, इन्द्रिय, गुण और अन्तःकरणसे रहित समझते हो; इससे जान पड़ता है कि यद्यपि देहधारी जीवोंको मेरा ज्ञान होना बहुत कठिन है, तथापि तुमने मुझे जान लिया है ॥ ३६ ॥

**तुभ्यं मद्विचिकित्सायामात्मा मे[1] दर्शितोऽबहिः । नालेन सलिले मूलं पुष्करस्य विचिन्वतः ॥ ३७ ॥**
**यच्चकर्थाङ्ग मत्स्तोत्रं मत्कथाभ्युदयाङ्कितम् । यद्वा तपसि ते निष्ठा स एष मदनुग्रहः ॥ ३८ ॥**
**प्रीतोऽहमस्तु भद्रं ते लोकानां विजयेच्छया । यदस्तौषीर्गुणमयं निर्गुणं मानुवर्णयन् ॥ ३९ ॥**
**य एतेन पुमान्नित्यं स्तुत्वा स्तोत्रेण मां भजेत् । तस्याशु सम्प्रसीदेयं सर्वकामवरेश्वरः ॥ ४० ॥**

### श्रीधरस्वामिविरचिता भावार्थदीपिका

तुभ्यं तव नालेन मार्गेण पुष्करस्य मूलमधिष्ठानं सलिले विचिन्वता मयि विचिकित्सायां भवितव्यमस्याश्रयेण न च दृश्यते ततोऽस्ति नास्तीति संदेहे सत्यात्मा स्वरूपं मे मयाऽबहिरंतर्हृदि दर्शितः ॥ ३७ ॥ ❀ ❀ अंग हे ब्रह्मन् ! चकर्थ कृतवानसि मत्कथैवाभ्युदयस्तेनांकितं स एष बंधाभावो मयि मनोनिर्बंधो मज्ज्ञानं मद्रूपस्य हृदि दर्शनं मत्स्तुतिस्तपोनिष्ठा चेति यदेष सर्वोऽपि मदनुग्रहः ॥ ३८ ॥ ❀ ❀ गुणमयत्वेन प्रतीयमानमपि निर्गुणमेवानुवर्णयन् ॥ ३९ ॥ ❀ ❀ तव प्रीत इति किं वक्तव्यमित्याह । य इति ॥ ४० ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः ।

यतो मद्रूपस्य मदिच्छयैवातर्क्यया दृश्यत्वं न तु वस्तुतो नेत्रादींद्रियग्राह्यत्वमित्यत्र त्वमेव प्रमाणमित्याह—तुभ्यं त्वां कृतार्थीकर्तुं आत्मा श्रीविग्रहः । यद्वा बहिरपि दर्शितं "गोपवेशो मे पुरस्तादाविर्बभूव" इति श्रुतेः आत्मदर्शनस्य देयत्वात्क्रियाग्रहणमपि कर्त्तव्यमिति संप्रदाने वा चतुर्थी । अत्र तपसः समाधेश्चानुल्लेखात्तावपि वस्तुतो दर्शनस्य न हेतू, किंतु मदिच्छैवेति रहस्यं सिद्धान्तमपि ब्रह्माणं ज्ञापयामासेति ज्ञेयम् ॥ ३७ ॥ ❀ ❀ अतस्तव मत्स्तवादयोऽपि मदनुग्रहेणैवाभूवन्निति यच्चेति ॥ ३८ ॥ ❀ ❀ किं मत्कृपोत्थयैव भक्त्या पुनरहं प्रीणामीत्यद्भुतां मत्परिपाटीं पश्येत्याह—प्रीत इति । मत्सृज्यमाना लोका जयवंतः संत्वितीच्छया गुणमयं कल्याणगुणसमुद्रं साकारं मां निर्गुणं प्राकृतसत्त्वादिगुणरहितं प्रीतोहमतस्तेषां भद्रमस्तु ये तु गुणमयं मां श्रीनारायणं सत्त्वादिगुणत्वेनैव स्तुवंति न तु निर्गुणत्वेन तेषु न तु प्रीतोस्मीति न तेषां भद्रमस्तीति भावः ॥ ३९ ॥ ❀ ❀ तस्य नित्यं स्तुवतः ॥ ४० ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

तुभ्यं तव मद्विचिकित्सायां मद्विषयके संदेहे सति तत्प्रकारकं तदभावप्रकारकं ज्ञानं सन्देहः वं व्याचष्टे । भवितव्यमिति अस्य पुष्करस्य आश्रयेणाधारेण आश्रयश्च मया न दृश्यते ततो दर्शनाभावात् ॥ ३७ ॥ ❀ ❀ स एष इत्यनेन ऋषिमित्यादिश्लोकचतुष्टयार्थं संगृह्य व्याचष्टे बन्धाभाव इति । न बध्नातीति बन्धाभावः । यन्मन इति । मयि मनो निर्बद्धम् । ज्ञातोऽहमिति । मज्ज्ञानं तुभ्यमिति हृदि दर्शनम् । यच्चकर्थेति मत्स्तुतिः यद्वा तपसीति तपोनिष्ठा इति यत्षट्कं स एष सर्वोऽपि षट्प्रकारः । विधेयपरामर्शेन स एष इति पुंस्त्वम् ॥ ३८ ॥ ❀ ❀ गुणमयत्वेन प्राकृतगुणमयत्वेनाज्ञैः प्रतीयमानमपि निर्गुणम् । प्राकृतगुणरहितमप्राकृतस्वरूपभूतगुणप्रचुरमेवानुवर्णयन् ॥ ३९ ॥ ४० ॥

### श्रीमद्वीरराघवव्याख्या

किंच मद्विचिकित्सायाम् अस्ति ह्यधस्तादिह किंचनैतदधिष्ठितं यत्र सतानुभाव्यमित्येवंरूपायां मद्विषयायां विचारणायां निमित्तभूतायां सलिले पुष्करस्य मूलमधिष्ठानं नालेन मार्गेण विचिन्वतेऽन्वेषते तुभ्यं मे मया आत्मा विग्रहः बहिर्दर्शितः ॥ ३७ ॥ ❀ ❀ किं च अङ्ग हे ब्रह्मन् ! मत्कथाभ्युदयाङ्कितं मत्कथैवाभ्युदयः तेनाङ्कितं मत्स्तोत्रं मद्विषयकं स्तोत्रं चकर्थ कृतवानसीति यत्, यद्वा यच्च ते तव तपसि निष्ठा चेति यदेतत्सर्वं स एष मदनुग्रहः ॥ ३८ ॥ ❀ ❀ सर्वस्य मदनुग्रहकारितत्वात् तुभ्यमहं प्रसन्न इत्याह । प्रीतोऽहमिति । यद्गुणमयं कल्याणगुणप्रचुरं निर्गुणं हेयगुणरहितं मा माम् अनुवर्णयन् त्वं लोकानां विजयेच्छया सर्गेच्छयाऽस्तौषीः स्तुतवान् अतोऽहं प्रीतोऽस्मि निरतिशयप्रीतियुक्तोऽस्मि ते तुभ्यं भद्रमस्त्वित्यर्थः ॥ ३९ ॥ ❀ ❀ तव प्रीत इति किं वक्तव्यमित्याह । य इति । एतेन भवत्कृतेन स्तोत्रेण पुमान्नरः नित्यं स्तुत्वा मां भजेत्तस्य पुंसोऽप्याशु अहं सर्वेषां काम्यमानानां वराणाम् ईश्वरः दाता संप्रसीदेयं प्रसन्नो भवामि । तव प्रसन्न इति किमु वक्तव्यमित्याशयः ॥ ४० ॥

---

१. प्रा० पा०—संदर्शि० ।

**श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली**

इतः पूर्वं स्वरूपानाविष्करणमपि तवानुग्रहविशेषार्थमित्याशयेनाह। तुभ्यमिति। प्रलयसलिले पुष्करस्य पद्मस्य नालेन नालनाडीद्वारा पुष्करस्य मूलं कारणं मां विचिन्वतस्तव मद्विचिकित्सायां मद्दिदृक्षाजिज्ञासायामात्मा सच्चिदानन्दलक्षणस्तुभ्यं त्वदर्थं बहिर्दृग्विषयत्वेन दर्शितः॥ ३७॥ ❀ ❀ त्वत्कथातपोनिष्ठबलात्त्वं प्रत्यक्षोभूर्नतु स्वत इति दर्पो मा भूदिति भावेनाह। यच्चकर्थेति। कथ वाक्यप्रबन्ध इति धातोः स्तोत्रलक्षणो वाक्यप्रबन्धः कथा, तस्याः सम्यगुदय उत्कर्षस्तेनाङ्कितं युक्तम्। वागिन्द्रिय-व्यापारस्य मदनुग्रहमन्तरेणानुपपत्तेस्तेन शुभविषया प्रवृत्तिरभूत्तव। स एव मदनुग्रह इत्युच्यते 'यो वाचि तिष्ठन्यो मनसि तिष्ठन्नि'त्यादेः॥ ३८॥ ❀ ❀ कथापि स्तोत्रलक्षणा न प्रहेलिका बालप्रियेति भावेनोक्तं स्फुटयति। प्रीत इति। लोकानां सृष्टिविजयेच्छया गुणमयसार्वज्ञ्यादिगुणपूर्णं निर्गुणं सत्त्वादिगुणरहितं मामनुवर्णयन्नस्तौषीरिति यत्तेनाहं प्रीतोऽस्मि ते भद्रं कल्याण-मस्तु इत्यन्वयः। 'सार्वज्ञ्यादिगुणैर्युक्तं सत्त्वादिगुणवर्जितम्। यो जानाति हरिस्तस्य प्रीतो भवति केशवः॥' इतीदं प्रमाणं गुणोत्कर्षज्ञानमेव प्रीतिजनकं न निर्गुणज्ञानमिति भावेनोदाहृतम्॥ ३९॥ ❀ ❀ त्वत्कृतस्तोत्रेण मां भजमानो यस्तस्मै प्रसन्नोऽभीष्टं ददामि किमु तुभ्यमित्यभिप्रेत्याह। य एतेनेति। "आधिकारिकदेवानां स्वाधिकाराभिकामनम्। भवति प्रीतये विष्णोर्भक्त्यादेरपि यत्सदे॥" इत्यनेन सृष्टिस्वाधिकारकामेन ब्रह्मणा कृतमिदं स्तोत्रं कथं हरिप्रीतिजनकं स्यादितीदं चोद्यं निर्मूलनीयम्। अतएव सर्वकामवरेश्वर-इत्युक्तं सर्वकामितवराणामीश्वर इत्यर्थः॥ ४०॥

**श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः।**

यच्चेति। तिर्य्यङ्मनुष्यत्वेऽप्येवंरूपं मत्कथामात्रमभ्युदयस्तत्रापि तदङ्कितं स्तोत्रमिति वैशिष्टयम्। स एष इति। तदेतत् सर्व्वं मदनुग्रहरूपमित्यर्थः॥ ३८॥ ❀ ❀ प्रीतोऽहमिति। केचित् प्राकृतगुणयुक्तत्वेन स्तुवन्ति। केचित्तु तद्रहितत्वेन। गुणमयम् अप्राकृतानन्तगुणविशिष्टं त्वं तु तद्रहितं प्राकृतगुणप्रचुरं च प्रतिपाद्य मामस्तौषी-रित्यर्थः॥ ३९॥ ४०॥

**श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी।**

यतो मद्रूपस्य मदिच्छयैवातर्क्यया दृश्यत्वं न तु वस्तुतो नेत्रादीन्द्रियग्राह्यत्वमित्यत्र त्वमेव प्रमाणमित्याह। तुभ्यं त्वां कृतार्थीकर्त्तुमात्मा श्रीविग्रहो मे मया अबहिरन्तर्हृदि। यद्वा बहिरपि दर्शितः 'गोपवेशो' मे पुरस्तादाविर्बभूवेति श्रुतेः। आत्मदर्शनस्य देयत्वात् क्रियाग्रहणमपि कर्त्तव्यमिति संप्रदाने चतुर्थी वा। कदा पुष्करस्य मूलं विचिन्वतस्तव मयि विषये विचिकित्सायामस्याधिष्ठानमस्ति नास्ति वेति सन्देहे सतीत्यर्थः, अत्र तपसः समाधेश्चानुल्लेखात्तावपि मद्दर्शनस्य वस्तुतो न हेतू किन्तु मदिच्छैवेति रहस्यं सिद्धान्तमपि ब्रह्माणं ज्ञापयामासेति ज्ञेयम्॥ ३७॥ ❀ ❀ अतस्तव मत्स्तवादयोऽपि मत्कर्त्तृकानुग्रहेणैवाभूवन्नित्याह। यच्चकर्थ अकरोः तत्सर्व्वं स प्रसिद्ध एष प्रत्यक्षो मदनुग्रह इति एतस्यैव कार्य्यं तत्तत्प्रतीहीत्यर्थः॥ ३८॥ ❀ ❀ किञ्च। मत्कृपोत्थयैव भक्त्या पुनरहमतीव प्रीणामीत्यद्भुतां मत्परिपाटीं पश्येत्याह। प्रीत इति। लोकानां विजयेच्छया मत्सृज्यमाना लोका जययुक्ता भवन्त्वितीच्छया गुणमयं कल्याणसमुद्रं साकारं मां निर्गुणं प्राकृतसत्त्वादि-गुणरहितम् अनुवर्णयन् यदस्तौषीः प्रीतोऽहमतस्तेषां भद्रमस्तु ये तु गुणमयं मां श्रीनारायणं सत्त्वादिगुणवत्त्वेनैव स्तुवन्ति न तु निर्गुणत्वेन तेषु न प्रीतोऽस्मीति न तेषां भद्रमस्त्विति भावः॥ ३९॥ ❀ ❀ त्वयि प्रीत इति किं वक्तव्यमित्याह। य इति॥ ४०॥

**श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः**

मद्विचिकित्सायामस्ति ह्यधस्तादिह किंचनेत्येवंभूतायां मद्विषयायां विचारणायां हेतुभूतायां नालेन नालगतच्छिद्रमार्गेण पुष्करस्य मूलं विचिन्वतोऽन्वेषयतः तुभ्यं तव मया आत्मा अबहिः अन्तर्हृदि दर्शितः॥ ३७॥ ❀ ❀ मत्कथारूपेणाभ्युद-येनाङ्कितम्॥ ३८॥ ❀ ❀ गुणमयं कल्याणगुणराशिम्। निर्गुणं प्राकृतगुणरहितम्॥ ३९॥ ४०॥

**श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या**

अत एव मया तुभ्यं मत्स्वरूपं न प्रदर्शितमित्याह—तुभ्यमिति। मद्विचिकित्सायां मत्स्वरूपज्ञानेच्छायां मे आत्मा मया बहिर्न प्रदर्शितः, अन्यथा तवोत्पन्नमन्यथाज्ञानं त्वद्बुद्ध्या संवादि जातमिति तव स्वरूपज्ञानमेव न स्यात्। अतोऽन्तर्बहिःस्थितोऽप्यहं तव तथा ज्ञानं मा भवत्विति बहिः स्वात्मानं न प्रदर्शितवान्। न च वक्तव्यम्, मया न भ्रान्तमिति; अन्यथा जले अन्वेष-णार्थं न गच्छेः। तदाह—नालेनेति। नालद्वारा सलिलस्य मध्ये पुष्करस्य मूलं विचिन्वतस्ते तुभ्यमिति संबन्धः॥ ३७॥ ❀ ❀ तर्हीदानीं मया ज्ञातमिति किं प्रमाणम्? तत्राऽऽह—यच्चकर्थाऽङ्गेति। यद्यस्मात्कारणात् हे अङ्ग मत्स्तोत्रं चकर्थ। ननु स्तोत्रमात्रेण

कथं स्वरूपज्ञानम् ? तत्राऽऽह—मत्कथाभ्युदयाङ्कितमिति। मम कथा, अभ्युदयश्चोभाभ्यामङ्कितम्। स्तोत्रेण भवता स्वज्ञानं सर्वं प्रकटितम्। तत्स्तोत्रं मत्कथया संबद्धम्, मदीयैव वार्त्ता तत्र कथिता। मत्कथेति वचनादन्यकथा तस्मिन् समारोप्य न कथितेति सूचितम्, किन्तु या कथा सा मदीयैव। विशेषतोऽपि तव ज्ञानं जातम्, यतो मदभ्युदयेनाऽपि अङ्कितम्। अभ्युदयो नाम सर्वोत्तमरूपं चरित्रम्। ननु कथं पूर्वं मम ज्ञानं न जातम्, पश्चाद्वा जातमिति। तत्राऽऽह—यद्वा तपसि ते निष्ठेति। यद्वेति-वचनात् पूर्वार्द्धं पुनरप्यनुषज्जते। यत्त्वया एतादृशं स्तोत्रं कृतम्, यद्वा ते तपस्येवं निष्ठा, एष सर्वोऽपि ममाऽनुग्रह एव। अतः पूर्वमनुग्रहाभावाददर्शनं पश्चादनुग्रहाद्दर्शनमिति। न तु तपसा दर्शनम्, तपस्त्वनुग्रहसूचकम्॥ ३८॥ ❀ ❀ एवं तस्य ज्ञानवुद्धिसंयोगः पूर्वं जात एवेत्युक्त्वा तदुपपादितम्। इदानीं चित्तस्य भगवच्चरित्रपरता या प्रार्थिता, तत्राऽऽह—प्रीतोऽह-मिति चतुर्भिः—चित्ते भगवच्चरित्रपरं तदैव भवति, यदि भगवान् प्रीतो भवति। प्रीतः केन जायत इति सन्दिग्धम्। तत्र भगवानाह—अस्त्विति। भगवांश्चेच्छुभाशंसनं करोति, तदा प्रीतो भवति। शुभाशंसनं परमेष्ठः करोति। अतः सर्वथा आराधितः परमेष्ठश्चेद्भवति, तदाकृत्या प्रीत्यनुसारेण व्यापारे क्रियमाणेऽपि तस्य कालादिवशात् केनाऽप्यंशेन तदानुगुण्यं चेन्न भवेत्, ततोऽपि भजने, पुनरेवं करणे, पुनर्भजने, अशक्यमिव भगवान् मन्यमानः सत्यवाक् सत्यसङ्कल्पस्तस्येष्टमाशंसते। तदा तस्य सत्यवाक्त्वात् सर्वप्रतिबन्धकनिवृत्त्या भगवत्प्रसादौपयिकमेव तस्य सर्वं सिद्ध्यति, तदा प्रसन्नो भवतीति ना[1]ऽन्योन्याश्रयः। ते भद्रमस्त्विति योजनायामपि अयमेवाऽर्थोऽपेक्ष्यते। अनुवादे तु अस्त्विति प्रार्थना नोपपद्येत। प्राप्तकालेऽपि लोटोऽनुवाद एव स्यात्। अतस्ते भद्रमेव, त्वद्बुद्धेश्चरित्रपरता भविष्यतीत्यर्थः, लोकानां स्वाधीनकरणं त्वदभिलषितं सेत्स्यतीति। ननु चरित्रपरतैव ममाऽभीष्टा, न तु लोकानां विजय इति चेत्तत्राऽऽह—यदस्तौषीरिति। यदि लोकविजयेच्छा न स्यात्, तदैतावत्स्तोत्रं न कृतं स्यात्, एवं प्रकारेण च न कृतं स्यात्। गुणमयमनन्तगुणपरिपूर्णम्। निर्गुणं सत्त्वादिभिः प्राकृतैर्गुणैरतीतम्। निर्दोषपूर्ण-गुणविग्रहप्रकारेण मामनुवर्णयन् यदस्तौषीः, अतो ज्ञायते साभिलाषस्तादृशेषु गुणेष्विति॥ ३९॥ ❀ ❀ तर्हि स्तोत्रमात्रेण कथमेतावत्फलं भविष्यति ? न हि स्वाभिलषितकीर्तनमात्रेण अभिलषितं प्राप्यते। तत्राऽऽह—य एतेनेति। अनेन स्तोत्रेण यद्यन्योऽपि स्तोत्रं कुर्यात्, तस्याऽप्यहं प्रसन्नः; किमुत तुभ्यम्। एतेन स्तोत्रेण पुमान् स्वतन्त्रः नित्यं नियमेन मां भजेत्। भगवत्परिचर्यायां पूजायां वेदं स्तोत्रं स्वयं कुर्वन्निवाऽर्थानुसन्धानपूर्वकं, त्वमिव, यः स्तूयात्; स्तुत्वा च परिचर्यां कुर्यात्; तस्य शीघ्रमहं प्रसन्नो भवामि। स्तोत्रं न परिचर्याङ्गम्। प्रसादः परिचर्याफलम्, शैघ्र्यं स्तोत्रफलम्। कालकृतदोषनिवर्तकमिति फलितम्। तेन किं भवेदित्याशङ्क्याऽऽह—सर्वकामवरेश्वर इति। सर्वे ये कामवरा अभिलषितपदार्थसिद्धयः, तेषामीश्वर इत्यतो मयि प्रसन्ने सर्वे कामास्तस्य स्वतः सिद्धा इत्यर्थः॥ ४०॥

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

प्रीत इत्यत्र। ननु आशंसनेन प्रीतिः, प्रीत्या चा (?) मित्यारभ्य नाऽन्योन्याश्रय इत्यन्तम्। प्रसन्नो भवतीति। कृतकार्यत्वात् स्वत एव प्रसन्नो भवति। तथा चाऽनुग्रहेणाऽऽराधनम्, तेनेष्टत्वम्, इष्टत्वेन शुभाशंसनम्, तेन प्रीतिरिति नाऽन्योन्याश्रय इत्यर्थः। ननु योजनान्तरे दोष इत्यत आहुः—त इत्यादि। अ[2]यमेवार्थोऽपेक्ष्यत इति। चित्तस्य चरित्रपरतारूपवरस्य प्रार्थितत्वात्तदा (द्वा) नव्याख्यानस्याऽत्रावश्यकत्वात्तस्य च प्रीत्येकसाध्यत्वेन वदाशंसाया एवावश्यकत्वादुक्त एवार्थोऽपेक्ष्यतेऽतोऽनावश्यकत्वमेव दोष इत्यर्थः। ननु 'प्रैषानुवाद (?)' इतिसूत्रे चकारेण लोटोऽप्यनुवृत्तिरस्तीति प्रकृते भद्रानुवाद एव लोडर्थोऽस्तु, नाऽऽशंसेत्यत आहुः—अनुवाद इत्यादि। प्रार्थनेति। चरित्रपरताप्रार्थना। तर्हि प्राप्तकाल एव लोडस्त्विति चेत्तत्राहुः—प्राप्तेत्यादि। तथा च भद्रस्यैव प्राप्तकालत्वं वक्तव्यम्, तत्तु भगवद्दर्शनादिना प्रत्यक्षत एव सिद्धमिति कस्यचिद्विषयस्याऽभावाल्लोटोऽनर्थक एवानुवादः स्यादित्यर्थः। सिद्धमाहुः—अतस्ते भद्रमेवेत्यादि। तथा चाऽऽनुपूर्वीमनुरुध्यैवं व्याख्याने अयमेवाऽर्थः सिध्यतीत्यर्थः॥ ३९॥

### श्रीगिरिधरकृता बालप्रबोधिनी

मद्विचिकित्सायां भवितव्यमस्याश्रयणेन च तद् दृश्यते ततोऽस्ति नास्तीति मद्विषये सन्देहे सति नालेन मार्गेण पुष्करस्य मूलमधिष्ठानं सलिले विचिन्वतः अन्वेषयतः तुभ्यं तव मे मया आत्मा स्वरूपं अवहिरन्तर्हृदि दर्शितः॥ ३७॥ ❀ ❀ न च मन्तव्यं स्वतपःप्रभावेण मया दृष्ट इति तत्र प्रवृत्तिरपि मदनुग्रहादेवेत्याह—यदिति। सृष्ट्यादिरूपे स्वकार्ये तत्परत्वात्स्वभक्तत्वाच्च तत्र स्वस्नेहं सूचयन् सम्बोधयति—अङ्गेति। मत्कथायामभ्युदयः प्रभावस्तेनाङ्कितं मत्स्तोत्रं यच्चकर्थ कृतवानसि यद्वा यच्च ते तव तपसि निष्ठा स्थितिर्जाता स एष सर्वोऽपि मदनुग्रह इत्यन्वयः॥ ३८॥ ❀ ❀ लोकानां विजयेच्छया पालनेच्छया गुणमयं कल्याणगुणमयं कल्याणगुणप्रचुरमपि मा मां निर्गुणं प्राकृतहेयगुणरहितं अनुवर्णयन् यत् यस्मात् अस्तौषीः स्तुतवानसि अतोऽहं त्वयि प्रीतोऽस्मीत्यन्वयः। प्रीत्यतिशयं द्योतयन्नाशिषं ददाति—ते तव भद्रं कल्याणमस्त्विति॥ ३९॥

---

१. नाऽत्राऽन्योन्याश्रयः ख. ग. घ. ङ.। २. अयमर्थो. पा.।

❀ ❀ प्रीतौ कैमुत्यन्यायमाह—य इति । एतेन भवत्कृतेन स्तोत्रेण यः पुमान् नित्यं मां स्तुत्वा भजेत् पूजयेत् तस्याप्यहमाशु शीघ्रं प्रसीदेयं प्रसन्नो भवामि, तव प्रीत इति किमु वक्तव्यमित्यन्वयः । तव प्रीतौ च किं फलमित्यपेक्षायां तत्तत्कामनानुसारेण सर्वमेवेत्याशयेनाह—सर्वकामवरेश्वर इति, सर्वेषां काम्यमानानां वराणामीश्वरो दातेत्यर्थः ॥ ४० ॥

### हिन्दी अनुवाद

'मेरा आश्रय कोई है या नहीं' इस सन्देहसे तुम कमलनालके द्वारा जलमें उसका मूल खोज रहे थे, सो मैंने तुम्हें अपना यह स्वरूप अन्तःकरणमें ही दिखलाया है ॥ ३७ ॥ ❀ ❀ प्यारे ब्रह्माजी ! तुमने जो मेरी कथाओंके वैभवसे युक्त मेरी स्तुति की है और तपस्यामें जो तुम्हारी निष्ठा है, वह भी मेरी ही कृपाका फल है ॥ ३८ ॥ ❀ ❀ लोक-रचनाकी इच्छासे तुमने सगुण प्रतीत होनेपर भी जो निर्गुणरूपसे मेरा वर्णन करते हुए स्तुति की है, उससे मैं बहुत प्रसन्न हूँ ; तुम्हारा कल्याण हो ॥ ३९ ॥ ❀ ❀ मैं समस्त कामनाओं और मनोरथोंको पूर्ण करनेमे समर्थ हूँ । जो पुरुष नित्यप्रति इस स्तोत्रद्वारा स्तुति करके मेरा भजन करेगा, उसपर मैं शीघ्र ही प्रसन्न हो जाऊँगा ॥ ४० ॥

**पूर्तेन तपसा यज्ञैर्दानैर्योगसमाधिना । राद्धं निःश्रेयसं पुंसां मत्प्रीतिस्तत्त्वविन्मतम्[1] ॥ ४१ ॥**
**अहमात्माऽऽत्मनां धातः प्रेष्ठः सन् प्रेयसामपि । अतो मयि रतिं कुर्याद्देहादिर्यत्कृते प्रियः ॥ ४२ ॥**
**सर्ववेदमयेनेदमात्मनाऽऽत्माऽऽत्मयोनिना । प्रजाः सृज यथापूर्वं याश्च [2]मय्यनुशेरते ॥ ४३ ॥**

### मैत्रेय उवाच

**तस्मा एवं जगत्स्रष्ट्रे प्रधानपुरुषेश्वरः । व्यज्येदं स्वेन रूपेण कञ्जनाभस्तिरोदधे ॥ ४४ ॥**

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां तृतीयस्कंधे नवमोऽध्यायः ॥ ९ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

न च मत्प्रीतेरप्यधिकं किंचिदस्तीत्याह । पूर्तादिभी राद्धं सिद्धं यन्निःश्रेयसं फलं तन्मत्प्रीतिरेवेति तत्त्वविदां मतम् ॥ ४१ ॥ ❀ ❀ अत्र हेतुमाह । अहमिति । आत्मनाहंकारोपाधीनां जीवानामात्मा अतः प्रेयसामतिप्रियाणामपि मध्ये प्रेष्ठः प्रियतमः सन्निरवद्यः । यत्कृते यदर्थम् ॥ ४२ ॥ ❀ ❀ अतस्त्वं कृतार्थ एव तथाऽपि मत्प्रियार्थं सृष्टिं कुर्वित्याह । सर्वेति । आत्मा त्वमिदं त्रैलोक्यं या मय्यनुशेरते ताः प्रजाश्च सृज । केनात्मनैवान्यनिरपेक्षेण तत्र ज्ञापकापेक्षाऽभावमाह । सर्ववेदमयेनेति । आत्माहं योनिः कारणं यस्येति ज्ञानक्रिया शक्त्यतिशयं सूचयति । यथापूर्वमिति । तवात्राभ्यासोऽप्यस्तीत्युक्तम् । मय्यनुशेरत इति स्थितानामभिव्यक्तिमात्रमेव कर्तव्यमित्ययायासत्वमुक्तम् ॥ ४३ ॥ ❀ ❀ इदं सृज्यं व्यज्य प्रकाश्य पद्मनाभः श्रीनारायणरूपेण तिरोदधेऽदृश्योऽभवत् ॥ ४४ ॥

इति तृ० टी० नवमोऽध्यायः ॥ ९ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः ।

न च मत्प्रीतेरभ्यधिकं किञ्चिदस्तीत्याह—पूर्तेति । मत्प्रीतिं विना राद्धं निःश्रेयसमनिःश्रेयसमेवेति हेतोर्मत्प्रीत्यर्थमेव ते पूर्तादिकं कुर्वंतीति भावः । ते मां प्रीणंतं कर्तुमिच्छंति न तु मां स्वप्रीतेर्विषयं चिकीर्षंति । अतस्तया सात्त्विक्या भक्त्या तान्प्रत्यहं प्रीतस्तेभ्यो मोक्षं ददामीति भावः ॥ ४१ ॥ ❀ ❀ निर्गुणभक्तिमतां तु प्रीतेरहं विषय इति व्यंजयन्सर्वेषां वस्तुतः प्रीतेरहमेव विषयो भवितुं योग्य इत्यतः स्वस्मिन्प्रीतिं विधत्ते अहमिति । आत्मनां जीवानामहमात्मा परमात्मा यत्कृते देहादिः प्रिय इति कलत्रपुत्रादिषु प्रीतिर्देहसंबंधेन देहे प्रीतिर्जीवात्मसंबंधेन जीवात्मनि प्रीतिस्तु परमात्मसंबंधेन परमात्मनि प्रीतिः स्वाभाविकी जीवात्मादिषु त्वौपचारिकीति तेषु क्रमेण प्रियत्वह्रासः । ननु मयि रतिं कुर्यादित्यस्य वाक्यस्य कथं विधित्वं रतेः प्राप्तत्वादेव तदुक्तं 'विधिरत्यंतमप्राप्तौ' इति, अत्रोच्यते मायायाः खल्वधिकारो जीवात्मपर्यंत एव, न तु ततोपि परत्र परमात्मनीति मायाबंधपतितानां मनुष्यादीनां मायिकेष्वेव वस्तुष्वनुभवोस्ति जीवस्याप्यारोपितं मायिकत्वमस्तीति तत्रापि परमात्मनि स्वाभाविक्याः प्रीतेर्वर्त्तमानत्वेप्यनुभवाभावादज्ञातस्वबहुवित्तस्य वणिजो दारिद्र्यमिव प्रीत्यभाव इति प्रीतिं विधत्ते शास्त्रमिति । किञ्च वस्तुतः प्रेष्ठोपि परमात्मा ज्ञानिभिस्साक्षादनुभूतोपि रत्या विना प्रेमास्पदं न भवत्यतो भक्तानामेव स प्रेष्ठो भवति न तु ज्ञानिनां यथा शीताद्यार्त्तिहरे चक्षुःप्रकाशसुखदेपि सूर्ये साक्षादनुभूतेपि कोपि यन्नानुरज्यति तत्र ममत्वाभाव एव हेतुः, सूर्यश्च

---

१. प्रा० पा०—मता । २. प्रा० पा०—मामनु० ।

तत्तत्सुखप्रदोपि तेपूदास्त एव। एवं ज्ञानिजनाः खल्वज्ञानतमोहंतरि स्वानुभवसुखप्रदेपि ब्रह्मणि ममत्वाभावान्नानुरज्यंति। ब्रह्मापि स्वन्निर्विशेषमेवानुभावयंस्तेषूदास्त एव। यदा च सूर्यभक्तो जनश्चक्षुष्मानंधो वा भक्त्या संभावितं सूर्यमिहैव करचरणादिमंतं सहाश्वरथसारथ्यादिकं पश्यति तं स प्रेमवशं करोति। तथैव मुक्तो बद्धो वा जीवो भक्त्यैव परमात्मानं सविशेषमनुभवंस्तत्रानुरज्यति तं च स प्रेमवशं करोतीत्यतः परमात्मनः सर्वतः प्रेष्ठत्वं भक्तानां केवलया प्रधानीभूतया वा भक्त्यैव न तु ज्ञानिनां गुणीभूतया भक्त्येत्यत उक्तं स्वयं परमात्मनैव 'अतो मयि रतिं कुर्यात्' इति विवेचनीयम्। यद्वा उक्तयुक्तेरेव हेतोर्मयि रतिं कुर्यात्। यस्या रतेः कृते देहादावप्रीतिमतोपि विवेकिनो देहादिः प्रियो भवति देहेंद्रियादिभिरेव परिचर्याकीर्त्तनादिभिर्भक्तिसिद्धिरिति नैव ते मोक्षाकांक्षिणः स्युरिति भावः। स्वामिचरणोक्तं व्याख्यास्यामः। अत्र तत्त्वविन्मते अतो जीवानामात्मत्वात् निरवद्यो निरुपाधिप्रेमास्पदम्। त्वं तु मत्कृपाकटाक्षेण सर्वधारणसमर्थोसीत्याह—धातरिति॥ ४२॥ ❀ ❀ यतस्त्वं मयि प्रेमवानतो हेतोः तत्र रचनाप्रकारे, चक्रवर्ती तु मारीरिषीष्टेति यत्प्रार्थितं तत्राह सर्ववेदमयेनेति। त्वं तु 'वेदो नारायणः साक्षात्' इत्युक्तेर्वेदरूपात् मत्तः प्रादुर्भूतत्वाद्वेदस्वरूप एव यः पिता स सुतः साक्षात् 'स एष भगवान् द्रोणः प्रजारूपेण वर्त्तते' इत्युक्तन्यायेन तव वेदस्मरणं सर्वदैव स्थास्यति स्वरूपत्यागायोगादिति भावः॥ ४३॥ ❀ ❀ अत्र ब्राह्मे कल्पे अहमेवासमेवाग्र इत्यादिचतुःश्लोकीभागवतमिव पाद्मे कल्पे यदा तु सर्वलोकेष्विति यदा रहितमिति पूर्त्तेनेति अहमात्मात्मनामिति चतुःश्लोकीभागवतमिदं भगवानुपदिदेशेति केचिदाहुः॥ ४४॥

**इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे तृतीयस्कन्धे नवमोऽध्यायः॥ ९॥**

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या।

मत्प्रीतिरेव न स्वर्गादि न च शुष्कज्ञानम्॥ ४१॥ ❀ ❀ अत्र स्वप्रीतेः परमफलत्वे अतः आत्मात्मत्वात् रतिं प्रीतिम्॥ ४२॥ ❀ ❀ अतः मम प्रीतत्वात् तत्र अपेक्षाभावमध्ये अत्र सृष्टौ॥ ४३॥ ४४॥

**इति श्रीमद्भागवते तृतीयस्कन्धे दीपिकादीपिने नवमोऽध्यायः॥ ९॥**

### श्रीमद्वीरराघवव्याख्या

मत्प्रीतेरधिकमन्यच्छ्रेयो नास्तीत्याह। पूर्त्तेति। पूर्तं स्मार्त्तं पूर्त्तादिभिः राद्धं सिद्धं निःश्रेयसफलं राज्यमिति पाठे राज्यानि निःश्रेयसं च मत्प्रीतिः यज्ञादिजन्यमत्प्रीतिनिबन्धनौ भोगमोक्षावित्यर्थः, इति तत्त्वविदां मतं भवति॥ ४१॥ ❀ ❀ एतदेव सहेतुकमुपपादयति। अहमिति! हे धातः ब्रह्मन्! आत्मनां जीवानामहमात्मा अन्तः प्रविश्य प्रशासनेन धारकः। अत एव प्रेयसामपि प्रीतिविषयाणामपि मध्ये प्रेष्ठः निरतिशयप्रीतिविषयः सन् स्थितः यत्संबन्धसंबन्धात्सर्वं प्रियवदाभाति तस्य प्रियतमत्वं कैमुत्यन्यायसिद्धम्, अतः आत्मत्वात्प्रेष्ठत्वाच्च मय्येव रतिं भक्तिं कुर्यात्। प्रियः प्रियत्वेन परिगृहीतो देहादिरपि यत्कृते यदर्थं त्वर्थं प्रियः भवति मद्भक्तिरेव जन्मनो लाभ इत्यर्थः॥ ४२॥ ❀ ❀ मदनुग्रहविषयतया कृतार्थस्त्वं मदाज्ञारूपजगत्सर्गं कुर्वित्याह। सर्ववेदमयेनेति। आत्मात्मयोनिना आत्मनां जीवानामात्मा परमात्मा यस्य योनिः कारणं तेन मद्दत्तेनेत्यर्थः, सर्ववेदमयेन मदुपदिष्टसर्ववेदप्रचुरेण आत्मना ज्ञानेन आत्मशब्दो हि मतिवाची मद्दत्तज्ञानेनेत्यर्थः, इदं जगत् तदन्तर्गताः प्रजाः देवादीन् यथापूर्वं पूर्वकल्पवत् सृज, कथमवस्थिताः प्रजाः याश्च या हि प्रजाः मय्यनुशेरते उपसंहृतास्तिष्ठन्ति ताः सृजेत्यर्थः॥ ४३॥ ❀ ❀ भगवद्ब्रह्मसंवादमुपसंहरति। तस्मै इति। प्रधानपुरुषेश्वरः प्रकृतिपुरुषयोर्नियन्ता कञ्जनाभः जगदात्मकं पद्मं नाभौ यस्य स एवंभूतो भगवान् तस्मै जगत्स्रष्ट्रे ब्रह्मणे इदं जगन्निर्माणप्रकारादिकं व्यज्य ज्ञापयित्वा स्वेन रूपेण तिरोदधे स्वकीयदिव्यमङ्गलविग्रहं तिरोहितमकरोदित्यर्थः॥ ४४॥

**इति श्रीमद्भागवतमहापुराणे तृतीयस्कंधे श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिकायां नवमोऽध्यायः॥ ९॥**

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली।

मत्प्रीतेरेव सर्वपुरुषार्थोत्तमत्वं नान्यस्येत्याह। पूर्तेनेत्यादिना। तुलापुरुषादिहिरण्यदानैः पुंसां मत्प्रीतिः निःश्रेयसं राज्यं रञ्जनीयं तत्त्वविन्मतं तत्त्वज्ञानिभिर्मतं रञ्जनीयमित्यनेन मोक्षेऽपि रञ्जनीया मत्प्रीतिरेवेति ध्वनयति तदुक्तम् 'मुक्तस्यापि हरेः प्रीतिः सर्वतोऽप्यनुराजते।' इति॥ ४१॥ ❀ ❀ मुक्तावपि मत्प्रीतिरेव रञ्जनीयेत्युक्तं तत्र मुख्यसाधनं भक्तिरेवेत्याह। अहमिति। हे धातश्चतुर्मुख! अहमात्मनां सर्वजीवानामात्मा अन्तर्यामित्वेनानन्दादिनिर्माताऽत एव प्रेयसामतिशयेन प्रियाणां स्वात्मादीनामपि सन्नभ्यर्हितः प्रेष्ठः प्रियतमः सर्वस्मात्प्रिया देहादेस्तव प्रेष्ठत्वं कथमित्यत उक्तं देहादिरिति। देहादिर्यस्य स्वात्मनः कृतेऽर्थे प्रियः अस्य स्वात्मनो देहादिः प्रियः स्यादिति मयैवापादितत्वादिति यद्यतः स्वात्मादिभ्यः प्रियतमत्वान्मयि रतिं भक्तिं भवान् कुर्यादित्यन्वयः "सर्वतोऽपि प्रियो ह्यात्मा तस्यापि प्रियतां हरिः। आपादयति यत्तस्मा-

त्वात्मनोऽपि प्रियो हरिः ॥" इति च ॥ ४२ ॥ ❀ ❀ सृष्टावेवाधिकृतत्वात् ब्रह्मणः सृष्टिकामनं न दोषहेतुः किंतु हरेः प्रीतिहेतुस्तदाज्ञाकारित्वादिति सूचितं तदिदानीं स्पष्टमाह। सर्वेति। सर्ववेदमयेन 'प्रजापते नत्वदेतान्यन्यो विश्वा जातानि परिता बभूवे" त्याद्यखिलवेदप्रतिपाद्येनात्मनो मत्तो योगः संबन्धोऽस्यास्तीति आत्मयोगी तेन मत्तो जातेनात्मना देहेनात्मा ब्रह्मा त्वं या मय्यनुशेरते ता इमाः प्रजा यथापूर्वं यथा पूर्वकल्पे सृष्टास्तथा सृजेत्यन्वयः। त्वदन्यस्यानधिकृतत्वात्त्वमेवैतत्कुर्वित्यवधारणार्थे च शब्दो रुद्राद्युपसंग्रहार्थो वा ॥ ४३ ॥ ❀ ❀ एवंविधमहिम्नो ब्रह्मणोऽप्यदृश्योऽभून्नारायण इति माहात्म्यातिशयप्रकटनाय हरेस्तिरोधानं कथयति। तस्मा इति। प्रधानपुरुषयोः प्रकृतिब्रह्मणोरीश्वरः यद्ब्रह्मणो मनसि सन्निहितमिदं व्यज्य व्यक्तीकृत्य ॥ ४४ ॥

इति श्रीभागवतमहापुराणे तृतीयस्कंधे विजयध्वजटीकायां नवमोऽध्यायः ॥ ९ ॥

## श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः।

तदेवं भक्तविषयकस्वप्रीतिं स्तुत्वा स्वविषयिकामपि भक्तप्रीतिं स्तौति। पूर्तेनेति। पूर्तादीना परम्परया साक्षाद्वा या मयि प्रीतिः सैव राद्धं सुविचारसिद्धं निःश्रेयसं फलम्। यतस्तदेव तत्त्वविन्मतमिति ॥ ४१ ॥ ❀ ❀ तथैव साधयति। अहमात्मेति। आत्मनां शुद्धजीवानामपि अतो निरुपाधिनिरवधिप्रियतमस्य प्रसादरूपा प्रीतिरेव प्रार्थनीयेति भावः ॥ ४२—४३ ॥ ❀ ❀ स्वेन कञ्जनाभाकारेणैव रूपेणेदं व्यज्य तिरोदधे ॥ ४४ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भस्य नवमोऽध्यायः ॥ ९ ॥

## श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

न च मत्प्रीतेरभ्यधिकं किञ्चिदस्तीत्याह पूर्तादिभिः। राद्धं साधितं यन्निःश्रेयसं फलं तत् तत्त्वविदां मतं मत्प्रीतिरेव। मत्प्रीतिं विना राद्धं निःश्रेयसमनिःश्रेयसमेवेत्यतस्तत्त्वविदो मत्प्रीत्यर्थमेव पूर्तादिकं कुर्व्वन्तीति ते मां प्रीणन्तमेव कर्त्तुमिच्छन्ति। न तु मां स्वप्रीतेर्विषयं चिकीर्षन्त्यतस्तया सात्त्विक्या भक्त्या तान् प्रत्यहं प्रीतस्तेभ्यो मोक्षं ददामीति भावः ॥ ४१ ॥ ❀ ❀ निर्गुणभक्तिमतान्तु प्रीतेरहं विषय इति व्यञ्जयन् सर्व्वेषामपि जीवानां वस्तुतः प्रीतेरहमेव विषयीभवितुं योग्य इत्यतः स्वस्मिन् प्रीतिं विधत्ते अहमिति। आत्मनां जीवानामहमात्मा परमात्मा यत्कृते देहादिः प्रिय इति कलत्रपुत्रादिषु प्रीतिर्देहसम्बन्धेन देहे प्रीतिर्जीवात्मसम्बन्धेन जीवात्मनि प्रीतिः परमात्मसम्बन्धेनेति परमात्मन्येव प्रीतिः स्वाभाविकी जीवात्मादिष्वौपचारिकीति तेषु क्रमेण प्रियत्वह्रासः। ननु तर्हि मयि रतिं कुर्य्यादित्यस्य वाक्यस्य कथं विधित्वं रतेः प्राप्तत्वादेव। यदुक्तं विधिरत्यन्तमप्राप्तौ इति। उच्यते। मायायाः खल्वधिकारो जीवात्मपर्य्यन्त एव न तु ततोऽपि परत्र परमात्मनीति मायाबन्धपतितानां मनुष्यादीनां मायिकेष्वेव वस्तुष्वनुभवः प्रवर्त्तते। जीवस्याप्यारोपितं मायिकत्वं वर्त्तत इति तत्रापि परमात्मनि तु स्वाभाविक्याः प्रीतेर्वर्त्तमानत्वेऽप्यनुभवाभावादज्ञातस्वबहुवित्तस्य वणिजो दारिद्र्यमिव तत्र प्रीत्यभाव इति प्रीतिं विधत्ते शास्त्रमिति। किञ्च। वस्तुतः प्रेष्ठोऽपि परमात्मा ज्ञानिभिः साक्षादनुभूतोऽपि रत्या विना प्रेमास्पदं न भवत्यतो भक्तानामेव सन् सर्व्वदेशकालवर्ती स प्रेष्ठो भवति नतु ज्ञानिनां यथा शीताद्यार्त्तिहरे चक्षुःप्रकाशसुखप्रदेऽपि सूर्ये साक्षादनुभूतेऽपि केऽपि यत् नानुरज्यन्ति तत्र ममत्वाभाव एव हेतुः। सूर्य्यश्च तत्सुखप्रदोपि तेषूदास्त एव। एवं ज्ञानिजनाः खल्वज्ञानतमोहन्तरि सानुभवसुखप्रदेपि ब्रह्मणि ममत्वाभावान्नानुरज्यन्ति। ब्रह्मापि स्वं निर्विशेषमेवानुभावयत्तेषूदास्त एव। यदा च सूर्यभक्तो जनश्चक्षुष्मानन्धो वा भक्त्या संतापितं सूर्यमिहैव करचरणादिमन्तं महाश्वरथसारथ्यादिकं पश्यति तं स प्रेमवशञ्च करोति। तथैव मुक्तो बद्धो वा जीवो भक्त्यैव परमात्मानं सविशेषमनुभवंस्तत्रानुरज्यति तञ्च सप्रेमवशं करोतीत्यतः परमात्मनः सर्व्वतः प्रेष्ठत्वं भक्तानां केवलया प्रधानीभूतया वा भक्त्यैव। न तु ज्ञानिनां गुणीभूतया भक्त्येत्यत उक्तं स्वयं परमात्मनैव 'अतो मयि रतिं कुर्य्यादि'ति विवेचनीयम्। यद्वा। अत उक्तयुक्तेरेव हेतोर्मयि रतिं कुर्य्यात्। यस्या रतेः कृते देहादावप्रीतिमतोऽपि विवेकिनो देहादिः प्रियो भवति देहेन्द्रियादिभिरेव परिचर्य्याकीर्तनादिभक्तिसिद्धिरिति नैव ते मोक्षाकाङ्क्षिणः स्युरिति भावः ॥ ४२ ॥ ❀ ❀ मा रीरिषीष्ट निगमस्येति यत् प्रार्थितं तत्राह। सर्व्ववेदमयेनेति वेदस्त्वया न विस्मर्त्तव्य इति भावः। इदमात्मना अनेनैव देहेन प्रजाः सृज आत्मनामात्मा अहमेव योनिः कारणं यस्येति तेन यथापूर्वमिति पूर्व्वपूर्व्वदिनसृष्टिं स्मारयति मय्यनुशेरत इति। स्थितानामभिव्यक्तिमात्रं कर्त्तव्यमित्यनायासत्वमुक्तं चकाराद्भक्तिञ्च कुरु ॥ ४३ ॥ ❀ ❀ इदं सृज्यं जगत् व्यज्य प्रकाश्य स्वेन श्रीनारायणरूपेण अत्र ब्राह्मकल्पे अहमेवासमेवाग्रे इत्यादि चतुःश्लोकीभागवतमिव पाद्मे कल्पे यदा तु सर्व्वलोकेष्विति यदा रहितमिति पूर्तेनेति अहमात्मात्मनामिति चतुःश्लोकीभागवतमिदं भगवानुपदिदेशेति केचिदाहुः ॥ ४४ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्। तृतीये नवमोऽध्यायः सङ्गतः सङ्गतः सताम् ॥९॥

श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

पूर्तादिभिः राद्धं सिद्धं निःश्रेयसं कल्याणं तन्मत्प्रीतिरेवेति तत्त्वविदां मतम् "किमलभ्यं भगवति प्रसन्ने श्रीनिकेतने" इत्यादिवाक्यान्यत्रानुसंधेयानि ॥ ४१ ॥ ❀ ❀ आत्मनां जीवानाम्। आत्मा आश्रयः सन् प्रेयसां प्रेष्ठोऽहमतो मयि रतिं कुर्यात् देहादिः यत्कृते यदाराधनार्थम् प्रियस्तस्मिन् ॥ ४२ ॥ ❀ ❀ आत्मना अन्यनिरपेक्षेण इदं त्रैलोक्यं या मयि अनुशेरते ताः प्रजाश्च यथापूर्वं सृजनन्यनिरपेक्षः अदृष्टपूर्वप्रजश्च कथमेवं करिष्यामीत्यत आह। आत्मनामात्माऽहं योनिर्यस्य तेन सर्ववेदमयेनेति ॥ ४३ ॥ ❀ ❀ इदं पूर्वोक्तं वाक्यं व्यपदिश्य ॥ ४४ ॥

इति श्रीमद्भागवतमहापुराणे सिद्धान्तप्रदीपे तृतीयस्कंधे नवमाऽध्यायार्थप्रकाशः ॥ ९ ॥

श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

ननु किं परम्परया ? स्तोत्रेण कामा एव फलिता भवन्तीति कुतो नोच्यते ? तत्राऽऽह—पूर्तेनेति। पूर्तं खातादि, तपः कृच्छ्रादि, यज्ञा अग्निष्टोमादयः साधनत्वेन कृताः, दानानि तुलापुरुषादीनि, योगा आत्मसंयमादयः, समाधिश्चित्तैकाग्र्यम्। एवं बाह्यधर्मेण केवलं भोगनिरोधेन क्रियाभावरूपशरीरेण, वैदिककायवाङ्मनःकृतेन, लोकोपकाररूपेण इन्द्रियान्तःकरणनिरोधेन च सर्वप्रकारेणाऽपि धर्मेण यत्फलं सिध्यति। नितरां च श्रेयोरूपं मोक्षरूपमपि। तत्र विचारे क्रियमाणे किं फलमिति, तदेव फलं यत्फलमेव, न साधनम्, नाऽप्यफलम्। तत्र मोक्षस्याऽपि सर्वाभिलषितत्वाभावात् वैषयिकसुखनिवर्त्तकत्वेन न तत्फलमेव। यथा वैषयिकाणां गाथा—'अपि वृन्दावने शून्ये शृगालत्वं स इच्छति। न तु निर्विषयं मोक्षं कदाचिदपि गौतम!' इति। अतः सर्वसाधारणमेकं निर्णेतव्यम्, यत्सर्वेषामेव सर्वफलरूपं भवति। तत्र सतामयं निर्द्धारः—मत्प्रीतिरिति। तस्या एव तथात्वात्। ते हि खलु तत्त्वविदः सर्ववस्तूनां याथात्म्यं जानन्ति, अतस्तेषां संमतम् ॥ ४१ ॥ ❀ ❀ ननु बहूनां प्रीतिहेतूनामुक्तत्वान्मुख्यं तव प्रीतिसाधनं किमित्याकाङ्क्षायाम्, स्वयं हेतुपूर्वकं जीवसम्मत्यर्थमाह—अहमात्मेति। सर्वेषामात्मनामहमात्मा। यथा सर्वस्यैव गङ्गाजलस्य गङ्गा, यथा वा सर्वस्या अपि मृदः पृथिवी स्थूला, यथा वा पत्रशाखादीनां वृक्षः; एवमहं सर्वेषामात्मनामात्मा। धातरिति सावधानतया करणार्थं संबोधनम्। नन्वात्मस्वनिरूपणे किं फलम्? तव तु तदात्मत्वे हानिरेव पूर्णत्वात्, तेषां च क्लिष्टत्वात्। तेषामपि नोपकारः, स्वत एव दुःखितत्वात्। यद्वस्तुतो न भवति हितकर्तृ, स्वयं चेतनरूपम्, स्वतन्त्रपुरुषार्थम्, सत् तत्किं ज्ञानं भवेत्? यथा लोके स्वतोऽदाता ज्ञातोऽपि न दाता भवति। तस्मादनुवादार्थ एव सर्वोऽपि भगवद्वाद इत्याशङ्कयाऽऽह—प्रेष्ठः सन् प्रेयसामिति। प्रेयसामप्यहं प्रियः, अतः प्रीतिविषयत्वात् मयि रतिं कुर्यात्। देहादौ च रतिं न कुर्यात्, देहादिस्त्वात्मसंबन्धात्प्रियः। करोम्येवाऽहं सर्वमेव हितम्, परं मयि स्नेहाभावात् जीवास्तत्सुखं न गृह्णन्ति। अतो यदि मयि रतिं कुर्यात्, तदा स्नेहात् गृह्णीयात्, पश्चात् कृतार्थ एव भवेत्। ज्ञानमप्येतदर्थमेव, मत्कृतं गृह्णीयादिति। भिन्नतयाऽपि भजने भजनफलत्वेन गृह्णीयात्। तत् तस्याऽज्ञानात्। तद्विचारेणेष्टमपि मद्विचारेण न भवतीति नोच्यते। ज्ञानापेक्षयापि प्रीत्या शीघ्रं गृह्णातीति प्रीतिरेवोच्यते। तेभ्यः स्वकीयं सर्वमेव दीयत इति स्वातन्त्र्यमपि दत्तमिति कुर्यादिति बोध्यते। अतः प्रीत्यादिकमपि प्ररोचनार्थमेवोच्यते, वस्तुतस्तु मयि रतिमेव कुर्यात्, मत्कृतग्रहणार्थम्। प्रीतस्त्वहं सर्वदा स्वभावतः; अग्रहणादप्रीत एव, यथा स्वयमात्मानमेवाऽऽक्रोशति। तन्निवृत्त्यर्थं रतिरुच्यमाना नित्यप्रीतिपरत्वेनोच्यते। अनयैव भगवच्चरित्रपरता भवति। भगवत्कृतमेव चरित्रम् ॥ ४२ ॥ ❀ ❀ एवं द्वितीयं प्रश्नमुपपाद्य वेदादिविस्मरणलक्षणं तृतीयमुपपादयति—सर्ववेदमयेनेति। अयं तव देहो वेदमय एव, तेन देहाविरोधेन देहेनैव करणेन सर्वं कुरु। तावतैव वेदाः स्थास्यन्तीति भावः। ननु केवलवेदरूपस्य कथं करणत्वम्? न हि देहमात्रं करणम्, किन्तु प्रयत्नाविष्टम्। अतः स्वप्रयत्नमन्यत्र व्यापारयित्वा करणत्वेन दण्डादिर्व्यपदिश्यते, वस्तुतस्त्वात्मैव करणम्। तत्राऽऽह—आत्मनेति। आत्मसहितेन देहेन एकभावापन्नेनोभयेन। आत्मा त्वम्। अनेन मद्दत्तमपि सामर्थ्यं तत्रैव दत्तमिति सर्वं त्वया कर्तुं शक्यमित्युक्तम्। ननु जीवा यथा आत्मानस्तथा अहमपीति, कथं मम सामर्थ्यं भवेत्तत्राऽऽह—आत्मयोनिनेति। आत्मा योनिः कारणं यस्य। मदुत्पन्नत्वात् तव सर्वसामर्थ्यं सिद्धमिति भावः। अतो यथापूर्वं प्रजाः सृज। याश्च प्रजा मय्यनुशेरत इति भगवदीयानामपि सृष्ट्याज्ञा। एवं चतुर्विधा अपि जीवास्त्वया स्रष्टव्या इति। एतावदुपदिश्य भगवानन्तर्हित इत्याह—तस्मा इति। जगत्स्रष्टृत्वादेव तस्मै नाधिकं किञ्चिद्देयम्। ननु तत्साधनानि चेत्तदनुगुणानि न भवेयुः, तदा किं कर्त्तव्यमित्याशङ्कयाऽऽह—प्रधानपुरुषेश्वर इति। प्रधानं पुरुषश्च, तयोरीश्वरः। भगवदाज्ञया तावपि ससामग्रीकौ तदनुगुणौ भवतः। तावताऽपि तस्याऽज्ञानमाशङ्क्य एकवारं सर्वमेव जगत्प्रदर्शयामास, एवं कुर्विति ज्ञापनार्थम्। तदाह—व्यज्येदमिति। इदं जगत् प्रकटं कृत्वा। स्वेनैव रूपेणाऽभिव्यक्तिकरणे न हेत्वन्तरमुत्पत्त्यादिकमपेक्ष्यते, किन्तु स्वस्मिन्नेव शरीरे विद्यमानं जगत् साधारणं प्रकाशितवान्। स्वेनरूपेणेत्यग्रेऽपि संबध्यते, न तु तद्रूपं स्थापयित्वा गतः, किन्तु तेनैव रूपेण तिरोहितवान्। कञ्जनाभ इति तदतिरोधाने जगत्कर्तुं न शक्यत इति सूचितम्, न हि कश्चिद्भगवदीयो भगवत उपरि सृष्टिं कर्तुं शक्नोतीति ॥ ४४ ॥

इति श्रीभागवतसुबोधिन्यां श्रीलक्ष्मणभट्टात्मजश्रीवल्लभदीक्षितविरचितायां तृतीयस्कन्धे नवमाध्यायविवरणम्।

**श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः**

पूर्तेनेत्यत्र, एवमित्यादिभिस्तृतीयान्तैः पूर्तादीनां स्वरूपं विवृतं ज्ञेयम्। विचारे क्रियमाणे किं फलमितीति। किं फलमिति विचारे क्रियमाण इति योजना॥ ४१॥ ❀ ❀ अहमित्यत्र। यथा गङ्गेत्यादिदृष्टान्तत्रयेण जीवपरमात्मनोरवयवावयविभावेनांशांशित्वम्, न तु प्रकारान्तरेणेति बोधितम्। करणार्थमिति। इतिकरणार्थम्। अनुवादार्थ इति। कर्मणा जायमानस्याऽनुवादार्थः। मयि रतिं कुर्यादिति। तथा च, रतिविधानार्थो भगवद्वादो नाऽनुवादार्थ इत्यर्थः। ननु हितकरणाभावे कथं प्रियत्वमित्याकाङ्क्षायामाहुः—करोमीत्यादि। न गृह्णन्तीति। विरुद्धत्वभ्रमान्नाऽऽद्रियन्ते, प्रत्युत द्विषन्ति। ननु कृतार्थत्वं ज्ञानादपि भवतीति किं रत्येत्यत आहुः—ज्ञानमित्यादि। एतदर्थमिति। एतस्यैव विवरणं मत्कृतमित्यादि। रतेरत्र विधेयत्वमुक्तमिति फलाकाङ्क्षायामिदमुक्तम्। नन्वात्मत्वेन ज्ञाने रतिरेव फलमिति कथमेवमुच्यत इत्याकाङ्क्षायामाहुः—भिन्नत्वेत्यादि। तदिति। अत्र ग्रहणम्। तर्हि तद्ग्रहणमत्र फलत्वेन कुत उच्यत इत्यत आहुः—तद्विचारेणेत्यादि। उच्यत इति। विधेयत्वेन इष्टतयोच्यते। तेभ्य इति। प्रियेभ्यः। इति बोध्यते इति। अनेन कर्त्रर्थप्रयोगेणाऽर्थाद्बोध्यते॥ ४२॥ ❀ ❀ तस्मा इत्यत्र। अभिव्यक्तिकरणे नेति। अत्र नेति भिन्नं पदं बोध्यम्॥ ४४॥

विशेषप्रश्नोत्तरविचारे अयमध्यायो जीवतुल्यतापरिहारमुखेनेश्वरत्वसाधनस्यैव विशेष इति बोध्यम्।

**इति श्रीतृतीयस्कन्धसुबोधिनीप्रकाशे नवमाध्यायविवरणं समाप्तम्।**

**श्रीगिरिधरकृता बालप्रबोधिनी**

यद्यपि मयि प्रीते न किञ्चिदपि फलं दुर्लभं तथापि फलान्तरं विहाय मत्प्रीत्यर्थमेव साधनजातमनुष्ठेयं न फलार्थं तस्य नश्वरत्वादित्यत्र महतां सम्मतिमाह—पूर्तेनेति। पूर्तेन कूपारामादिनिर्माणेन, तपसा कृच्छ्रादिना, यज्ञैरग्निष्टोमादिभिः, दानैस्तुलापुरुषादिभिः, योगैः आत्मसंयमनादिभिः, समाधिना चित्तैकाग्र्येण च राद्धं सिद्धं यत्पुंसां निःश्रेयसं फलं तन्मत्प्रीतिरेवेति तत्त्वविदां मतं सम्मतमित्यन्वयः॥ ४१॥ ❀ ❀ ननु "आत्मनस्तु कामाय सर्वं प्रियं भवति" इति श्रुतेः स्वात्मप्रियत्वस्य लोकप्रसिद्धेश्च कथं त्वयि निरतिशयप्रीतिः सम्भवतीत्याशङ्क्याह—अहमिति। तवाप्येतत्सम्मतमित्याशयेन सम्बोधयति—धातरिति। प्रेयसामतिप्रियाणामपि मध्ये प्रेष्ठः प्रियतमः सन्नहं स्थितः। तत्र हेतुमाह—आत्मनां सर्वजीवानामात्मेति। तं विशिनष्टि—देहादिरिति। यत्कृते यस्यार्थं देहादिः प्रियो भवति स आत्माऽहमित्यन्वयः। अतः परमपुरुषार्थतया रतिसम्भवात् मयि रतिं कुर्यात्॥ ४२॥ ❀ ❀ एवं ब्रह्मणो विषादनिराकरणपूर्वकं परितोषं कृत्वा तं सृष्टिं कर्तुमाज्ञापयति—सर्वेति। आत्मना अन्यनिरपेक्षेण—आत्मशब्दोऽन्तःकरणं देहं च वदति तेन—आत्मा त्वं यथापूर्वं पूर्वकल्पे यथावस्थितं यथेदं त्रैलोक्यं प्रजाश्च सृजेत्यन्वयः। मद्दत्तं सामर्थ्यमपि त्वय्यस्तीति सूचयन्नाह—आत्मयोनिनेति। आत्मा अहं योनिः कारणं यस्य तेन। यत्त्वया प्रार्थितं निगमस्य गिरां विसर्गो मा लुप्यतामिति तदपि मया सम्पादितमिति सूचयन्नाह, तत्र ज्ञापकापेक्षाभावमाह—सर्ववेदमयेनेति। यथापूर्वमित्यनेन तवात्राभ्यासोऽप्यस्तीति सूचितम्। न चात्र तवायासो भविष्यति मयि स्थितानामभिव्यक्तिमात्रस्यैव कर्तव्यत्वादित्याशयेनाह—याश्चेति। या हि प्रजा मय्यनुशेरते उपसंहृतास्तिष्ठन्तीत्यर्थः॥ ४३॥ ❀ ❀ ब्रह्मभगवत्संवादमुपसंहरति—तस्मा इति। प्रधानपुरुषो योगीश्वरो नियन्ता भगवांस्तस्मै ब्रह्मणे एवमुक्तप्रकारेण इदं जगन्निर्माणप्रकारादिकं व्यज्य ज्ञापयित्वा स्वेन प्रदर्शितेन नारायणरूपेण तिरोदधे तत्स्वरूपं तिरोहितमकरोदित्यर्थः। तत्कृपयैव ब्रह्मणो विश्वनिर्माणसामर्थ्यं जातमिति सूचयंस्तं विशिनष्टि—जगत्स्रष्ट्रे इति। भवताऽपि सोऽवश्यमेवोपदेष्टव्यः स्वनाभिकमलोद्भूतत्वेन पुत्रत्वादिति सूचयन्भगवन्तं विशिनष्टि—कञ्जनाभ इति। कञ्जं त्रिलोकात्मकं पद्मं नाभौ यस्य स इत्यर्थः॥ ४४॥

**इति श्रीवल्लभाचार्यवंश्यगोपालसूनुना॥ श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा॥ १॥**
**श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये॥ श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी॥ २॥**
**रचिता च तृतीयेऽत्र बन्धसर्गनिरूपणे॥ विवृतो नवमोऽध्यायः स्तुत्यादिविनिरूपकः॥ ३॥**

**हिन्दी अनुवाद**

तत्त्ववेत्ताओंका मत है कि पूर्त तप, यज्ञ, दान, योग और समाधि आदि साधनोंसे प्राप्त होनेवाला जो परम कल्याणमय फल है, वह मेरी प्रसन्नता ही है॥ ४१॥ ❀ ❀ विधाता! मैं आत्माओंका भी आत्मा और स्त्री-पुत्रादि प्रियोंका भी प्रिय हूँ। देहादि भी मेरे ही लिये प्रिय हैं। अतः मुझसे ही प्रेम करना चाहिये॥ ४२॥ ❀ ❀ ब्रह्माजी! त्रिलोकीको तथा जो प्रजा इस समय मुझमें लीन है, उसे तुम पूर्वकल्पके समान मुझसे उत्पन्न हुए अपने सर्ववेदमय स्वरूपसे स्वयं ही रचो॥ ४३॥ ❀ ❀ श्रीमैत्रेयजी कहते हैं—प्रकृति और पुरुषके स्वामी कमलनाभ भगवान् सृष्टिकर्ता ब्रह्माजीको इस प्रकार जगत्‌की अभिव्यक्ति करवाकर अपने उस नारायणरूपसे अदृश्य हो गये॥ ४४॥

**नवम अध्याय समाप्त**

# अथ दशमोऽध्यायः

## विदुर उवाच

अन्तर्हिते भगवति ब्रह्मा लोकपितामहः । प्रजाः ससर्ज कतिधा दैहिकीर्मानसीर्विभुः ॥ १ ॥
ये च मे भगवन् पृष्टास्त्वय्यर्था बहुवित्तम । तान् वदस्वानुपूर्व्येण छिन्धि नः सर्वसंशयान् ॥ २ ॥

## सूत उवाच

एवं सञ्चोदितस्तेन क्षत्त्रा कौषारवो मुनिः । प्रीतः प्रत्याह तान् प्रश्नान् हृदिस्थानथ भार्गव ॥ ३ ॥

## मैत्रेय उवाच

विरिञ्चोऽपि तथा चक्रे दिव्यं वर्षशतं तपः । आत्मन्यात्मानमावेश्य यदाह भगवानजः ॥ ४ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

दशमे कालसंप्रश्नं प्रतिवक्तुं तदुद्भवः । प्राकृतादिविभागेन सर्गस्तु दशधोच्यते ॥ १ ॥

मे मया वदस्व वद भासयस्वेति वा ॥ १ ॥, २ ॥ ❀ ❀ संचोदितः प्रार्थितः । हृदिस्थानेवाह । न तु ते प्रश्नास्तेन न विस्मृता इत्यर्थः ॥ ३ ॥ ❀ ❀ आत्मनि श्रीनारायणे आत्मानं मन आवेश्य ॥ ४ ॥

### श्रीवंशीधरकृतो भावार्थदीपकाप्रकाशः

तस्मात्कालादुद्भवतीति तदुद्भवः ॥ १ ॥ ❀ ❀ आर्षकल्पने गौरवादाह भासयस्वेति । "भासनोपसंभाषाज्ञान-यत्नविमत्युपमंत्रणेषु वदः" इत्यात्मनेपदम् । बहुविदोपि तज्जानंति किं वक्तव्यं बहुवित्तमो भवाञ्जानातीत्याह–बहुवित्तमेति ॥ २ ॥ ❀ ❀ सूत उवाच । एवमित्यादिका संगतिः स्वयमेव सूतेन क्रियते न श्रीशुककृतानूद्यत इति बोधयति । मैत्रेय उवाचेत्यादिकं तु श्रीशुकवाक्यानुकरणम् । श्रीशुक उवाचेति भारतेति च पाठौ न सर्वसंमतौ इत्यर्थ इति मुनित्वादेव सर्वपदार्थज्ञानं सर्वदा तिष्ठत्यृषिष्विति भावः । भार्गवेति ज्ञाने सामर्थ्यमाह ॥ ३ ॥ ❀ ❀ 'भूयस्त्वं तप आतिष्ठ' इति यथा नारायणेनोक्तं तथेत्यर्थः । क्वचिद्यदाहेति पाठः । तत्रापि यद्यथेत्यर्थः । यद्वा तथेत्युक्तेर्यथेति बोध्यं यत्तपोऽजो नारायण आहेति ॥ ४ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

तदुद्भवः कालजन्यः आदिना वैकृततद्रूपसमुच्चयपरिग्रहः ॥ १ ॥ ❀ ❀ भासयस्व प्रकाशय । अर्थेऽस्मिन्नात्मनेपद-मस्त्येव ॥ २ ॥ ❀ ❀ एवमिति शुकवाक्यं सूतेनानूद्यते इति सङ्गतिर्नानुपपन्ना क्वचिच्छुक उवाच भार्गवेत्यत्र भारतेति च पाठः ॥ ३ ॥ ❀ ❀ यद्यथा भूयस्त्वं तप आतिष्ठेति भगवानाह तथैव विरिञ्चोऽपि तपश्चक्र इत्यन्वयः ॥ ४ ॥

### श्रीमद्वीरराघवव्याख्या

एवं भगवन्नाभिकमलसमुद्भूतचतुर्मुखकृतस्तुतिप्रकारे स्तुतिप्रीतभगवदनुग्रहे च चतुर्मुखविषयेऽभिहिते "यत्र विश्व इमे लोकाः सविकाशं समासत" इत्यादिना कृतप्रश्नोत्तरयोः क्रमस्त्वविवक्षितः । भगवति षाड्गुण्यपूर्णे ब्रह्माणमनुगृह्यान्तर्धानं गते सति लोकानां पितामहः ब्रह्मा चतुर्मुखः प्रभुर्वशीकृतेन्द्रियः व्यष्टीनां प्रभुः स्वामीति वा दैहिकीर्देहजाः मानसीः संकल्पजाश्च प्रजाः कतिधा ससर्ज सृष्टवान् ॥ १ ॥ ❀ ❀ ये चेति हे भगवन्मैत्रेय ! मे मया ये चान्ये पृष्टाः तान् संशयविषयान् पृष्टान् प्रश्नानानुपूर्व्येणैकैकशः नतु प्रश्नक्रमानुसारेण उत्तरेषु तस्यादर्शनात् अद्धा तत्त्वेन वदस्व उत्तरय कथयेति वा हे ब्रह्मविदग्रेसर ! नोऽस्माकं सर्वसंशयान् छिन्धि 'छिद्यन्ते सर्वसंशयाः' इति श्रुतत्वात् स्वपरसंशयच्छेदनं ब्रह्मविदस्तव युक्तमित्यभिप्रायेण ब्रह्म-वित्तमेत्युक्तम् ॥ २ ॥ ❀ ❀ एवमुक्तप्रकारेण तेन क्षत्त्रा विदुरेण संचोदितः उत्तरदाने प्रवर्तितः कौषारवः मैत्रेयः मुनिः प्रीतः निरतिशयप्रीतिरूपभगवद्भक्तिजनकप्रश्नविशेषेण स्वयं निरतिशयप्रीतियुक्तः हे भारत राजन् ! हृदिस्थान् तान्प्रश्नान्प्रत्याह प्रत्यभाषत उत्तरयामासेत्यर्थः । हृदिस्थानित्यनेन भूतप्रश्नास्तेनाविस्मृता इत्यभिप्रायः ॥ ३ ॥ ❀ ❀ एवमापृष्टो मैत्रेयः स्तुतिप्रीतभगवद-

नुगृहीतचतुर्मुखस्य नाभिकञ्जस्थस्य तादात्विकं कर्म संग्रहेणाह विरञ्चोऽपीत्यादिषड्भिः । भगवान् षाड्गुण्यपूर्णः अजः जन्मक्षयादि-विकारशून्यः यदाह तथा विरञ्चोऽपि ब्रह्माप्यात्मनि परमात्मन्यात्मानं मनः आवेश्य स्थिरीकृत्य दिव्यं देवमानमितं वर्षशतं वत्सरशतं तपश्चक्रे चकार ॥ ४ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

अस्मिन्नध्याये नवविधसृष्टिकथनेन निरतिशयमहिमा हरेरुच्यते ।तत्र शुको मैत्रेयं प्रति विदुरः पृच्छतीति परीक्षितमाह । अन्तर्हित इति । दैहिकीर्मानसीरिति देहमनोभ्यां सृष्टा ॥ १ ॥ २ ॥ ❀ ❀ हृदिस्थान् विदुरस्येति शेषः ॥ ३ ॥ ❀ ❀ भूयश्च तप आतिष्ठेति हरिणा यदुक्तं तदाज्ञाकरणप्रकारमाह । विरिञ्चोऽपीति । आत्मनि परमेश्वरे आत्मानं मन आवेश्य निधाय ॥ ४ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

सूत उवाचेति एवमित्यादिका सङ्गतिः स्वयमेव सूतेन क्रियते न श्रीशुककृतानूद्यत इति बोधयति । मैत्रेय उवाचेत्यादिकं तु श्रीशुकवाक्यानुकरणम् । शुक उवाचेति भारतेति च पाठौ न बहुसम्मतौ ॥ १—४ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

कालस्य लक्षणं सामान्यतो दशम उच्यते । सर्गो दशविधश्चातः प्राकृतादिविभेदवान् ॥ १ ॥

वदस्व त्वं सर्व्वथा जानासीत्यतो वदेत्यर्थः ॥ १ ॥ २ ॥ ❀ ❀ भार्गवेत्यादिना ज्ञाने सामर्थ्यं द्योतितम् । हृदि-स्थानिति न ते प्रश्नास्तेन विस्मृता इत्यर्थः ॥ ३ ॥ ❀ ❀ आत्मनि श्रीनारायणे आत्मानं मनः ॥ ४ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

एवं ब्रह्मोत्पत्त्यादिकं श्रुत्वा ब्रह्मकृतां प्रजोत्पत्तिं पूर्वकृतस्वप्रश्नोत्तरं च श्रोतुं विदुरः पृच्छति । अन्तर्हित इति ॥ १ ॥ २ ॥ ❀ ❀ संचोदितः प्रेरितः प्रार्थित इत्यर्थः ॥ ३ ॥ ❀ ❀ आत्मनि श्रीनारायणे आत्मानं मनः ॥ ४ ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

जगतो भूतसर्गस्तु ब्रह्मा सोऽत्र निरूपितः । भगवत्कृपया युक्तस्तादृशाऽस्य निदानता ॥ १ ॥
मात्राणि सर्वरूपाणि दश सृज्यान्यतोऽत्र वै । दशमे विनिरूप्यन्ते मात्रात्वं चापि कालतः ॥ २ ॥
कालेनैव गृहीतास्ते भोग्याः, भोक्ताऽन्यथा तु सः ।भूतानामत्र संबन्धो रूपणार्थं[1] कृतिः पुरा ।
ब्रह्मणा निर्मिता, प्राह, द्वयं मात्रेति रूप्यते ॥ ३ ॥

प्रथमतो ब्रह्मनिर्मितमात्रानिरूपणार्थम्, भगवदाज्ञया ब्रह्मा कथं कृतवानिति भगवत्सेवकधर्मज्ञानार्थम्, विदुरः स्वय-मुल्लासेन पृच्छति—अन्तर्हिते भगवतीति । भगवति धर्मिण्यन्तर्हिते तद्धर्माणामप्यन्तर्भाव आवश्यक इति, ब्रह्मणा कथं जगत्स्रष्टुं शक्यत इति प्रश्नः । लोकपितामहत्वात् जनकस्याऽपि जनकत्वात् तज्जनितकार्यदर्शनेन स प्रपञ्चो जात एवेति सन्देहः । उत्पादने करणद्वयम्, देहो मनश्च । वाक् तु वैदिकसृष्टौ प्रविशति, अतः करणद्वयमेव । कतिधा प्रजाः ससर्जेति । प्रकारभेदे भगवदीयं ज्ञानमपेक्ष्यत इति तथोक्तम् । ननु देहेनैव करणमुचितम्, अतो मानस्यः कथं पृच्छ्यन्ते ? तत्राऽऽह—विभुरिति । सर्वप्रकारेण करणसमर्थः ॥ १ ॥ ❀ ❀ अग्रे निरूप्यमाणस्याऽपि जगतो भगवदीयत्वबोधार्थं पूर्वोक्तानपि प्रश्नान् स्मारयति—ये च मे भगवन्पृष्टा इति । भगवन्निति संबोधनमविस्मरणे हेतुः । त्वयीति त्वत्समीपे । अर्था इति । ते प्रश्नाः प्रयोजनरूपाः, अतः सर्वथा ज्ञातव्याः । बहुवित्तमेति संबोधनमुत्तरदाने हेतुः । तेषामानुपूर्व्येण कथनप्रार्थनं स्वबुद्ध्या ग्रहणार्थम् । उत्तरं च यथा निःसंदिग्धं भवति तथा वक्तव्यम् । तदाह—छिन्धि नः सर्वसंशयानिति । न त्वयं पृथक्प्रश्नः ॥ २ ॥ ❀ ❀ पृष्टं द्वयमपि आदरेणाऽऽहे-त्याह—एवं संचोदित इति । प्रीतः प्रत्याहेति प्रथमप्रश्नोत्तरम् । पूर्वोक्तान् प्रश्नांस्तु अविस्मृतान् हृदिस्थानेव । अथेति भिन्नक्रमेण न तु प्रथमप्रश्नशेषतया । भार्गवेति संबोधनं भगवच्छेषतया सर्वनिरूपणमिति ज्ञा[2]नार्थम् । बहुधा व्याख्यातानि तु पदानि पुनर्न व्याख्यायन्ते विशेषार्थाभावे ॥ ३ ॥ ❀ ❀ तत्र प्रथमप्रश्ने अन्तर्हितोऽपि भगवान्, स्वकीयान् षड्गुणान् ब्रह्मणि स्थापयित्वा गत इति, ब्रह्मकृतानर्थान् षड्भिः श्लोकैराह । तत्राऽपि निर्दुष्टेन कर्त्तव्यमिति दोषाभावार्थं श्लोकत्रयम् । तपो ज्ञानं कृतिश्चैव दोषाभावश्च वर्ण्यते । आलोचनं कृतिश्चं तदुपपादनमेव च ॥ १ ॥ प्रथमं भगवदाज्ञा यथा जाता, तथा ब्रह्मा कृतवानिति धर्ममाह—विरञ्चोऽपीति । भगवानन्तर्हितः । विरञ्च्योऽपि तथा भूत्वा, तत्रान्तर्हितः सन्, यथा भगवदाज्ञा जाता तथा कृतवान् । अन्तस्तथातिरोधानाभावे बहिर्जगत्कर्तृत्वं न सम्भवतीति, तदुक्तमपीति । दिव्यं वर्षशतमिति संध्यांशे कृतयुगस्य चतुर्थो भागो

---

१. सम्बन्धरूपणार्थं ख. ग. घ. । २ ज्ञापनार्थम् क ।

निरुपितः, पूर्वं च चतुर्थः, तपसि अन्वेषणे च। चतुर्थे भागे तु सर्वपदार्थनिर्माणं भविष्यति। तत उत्पन्नेषु सर्वेषु युगप्रवृत्तिः। एतत्सर्वं सूचयितुं दिव्यं वर्षशतमित्युक्तवान्। केवलं तपोधर्मो भगवदीयो न भवतीति तपसि विशेषमाह—आत्मन्यात्मानमावेश्येति। भगवत्यन्तःकरणमावेश्य तपःकरणं भगवदुक्तमित्येव कृतवान्। तदाह—यदाह भगवानज इति ॥ ४ ॥

## श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

अथ दशमाध्यायं विवरिषवोऽत्रावसररूपां सङ्गतिं स्फुटीकर्तुं पूर्वाध्यायमनुवदन्ति—जगत इत्यादि। ननु पूर्वं स्तुतिप्रसादयोर्भूतत्वमुक्तम्, ततो ब्रह्मज्ञानस्य भूतत्वमुक्तम्, किञ्च, पूर्वं ब्रह्मणः पुरुषबुद्धिरूपत्वम्, इदानीं च भूतरूपत्वमुच्यत इति परस्परविरुद्धं कथमेतत् सङ्गच्छते? इत्याकाङ्क्षायां तत्समाधानायाहुः—सोऽत्र निरूपितः भगवत्कृपया युक्त इति तथा च 'सविशेषणे हि·····' इति न्यायेन भूतत्वं कृपायां पर्यवस्यति। सा च प्रसादरूपाऽपि स्तुत्याऽभिव्यक्तेति पूर्वं तयोस्तथात्वमुक्तम्। कृपा च 'व्यज्येदम्' इति कथनादन्ततो ज्ञाने पर्यवस्यति। तेन पूर्वाध्याये तथोक्तम्। ज्ञानं च न केवलं भूतत्वायाऽलम्, किन्तु आधारसहितमिति दैहिकमानससृष्टिभ्यामवगम्यते। तथा सति कृपायुक्तो ब्रह्मैव भूतत्वेन पर्यवस्यतीति तेषामत्रान्तर्भावादत्र तथोक्तम्। बुद्धिरूपत्वं तु तदाधिदैविकत्वादिति पूर्वोत्तरविरोधाभावात् सर्वं सङ्गतमेवेत्यर्थः। एतमर्थं स्फुटमाहुः—तादृशाऽस्य निदानतेति। अस्य ब्रह्मणो निदानता कार्यजातं प्रति आदिकारणता तादृशा उक्तप्रकारकरूपकृता, न तु केवलेन केनापि रूपेणेत्यर्थः। यद्वा, बुद्धिरूपत्वमनेन बोध्यते। अतो न किमप्यनुपपन्नमित्यर्थः। प्रकृतार्थमाहुः—मात्राणीत्यादि। यतोऽस्य निदानता कृपाज्ञानादियोगेन, अतोऽत्र दशमे नानारूपवन्ति दशसृज्यानि निरूप्यन्त इति। तथा च कार्यतागर्भोऽवसरः सङ्गतिरित्यर्थः। ननु मात्रानिरूपणे कालकथनस्य किं प्रयोजनमित्याकाङ्क्षायामाहुः—मात्रात्वमित्यादि। तत्कथमित्याकाङ्क्षायामाहुः कालेनेत्यादि। सृज्याः कालेन गृहीताः परिच्छिन्ना एव सन्तो भोग्याः, अन्यथा तु अपरिच्छिन्नत्वे तु स सृज्यवर्गो ब्रह्माभिन्नत्वाद्भोक्ता। तथा च भोग्यत्वं मात्रात्वमिति तस्य कालकृतत्वात् ततो मात्रात्वमिति तदर्थं कालनिरूपणमित्यर्थः। अत्रैवंभावस्य विवक्षितत्वे गमकमाहुः—भूतानामित्यादि। अत्र सृज्यवर्गे रूपणार्थं समज्ञानार्थं ब्रह्मणा पुरा प्रथममेव भूतानां सम्बन्धः कृत (तिः) निर्मिता। स्वरूपेणाकृतिरिति पाठे भूतसम्बन्धरूपा आकृतिर्देहविन्यासरूपा निर्मिता। प्राह। मैत्रेयोऽपि मात्रासर्गे वक्तव्ये 'तन्मात्रो द्रव्यशक्तिमान्' इति मात्रद्रव्यजनकशक्तिमत्त्वं चेति द्वयं प्राह। तादृशशक्तिमत्त्वं च भोक्तृत्वं विनाऽनुपपन्नमतो भोक्तृत्वं चेति समुदितं द्वयं मात्रेति रूप्यते। तथा च 'भूतसर्गस्तृतीयस्तु' इत्यर्धश्लोकस्तद्गमक इत्यर्थः। एवमध्यायार्थं निरूप्याऽत्र विदुरप्रश्नोपक्षेपप्रयोजनं वदन्तो व्याख्यातुमारभन्ते—प्रथमत इत्यादि। तथा च, भगवच्चरित्रादिश्रवणेन भक्तानामप्युत्साहो भवतीत्येतज्ज्ञापनं प्रयोजनमित्यर्थः। एतेनोपोद्घातप्रसङ्गावेतस्य सङ्गती अपि बोधिते। विदुरमैत्रेयसंवादे तु 'पश्चादप्येतदीदृशम्' इत्यन्तं विशेषप्रश्नद्वयस्योत्तरम्, तदग्रे तु 'वद नः सर्गसंव्यूहम्' इत्यस्य 'कतिधा प्रतिसङ्क्रमः' इत्यस्य च विशेषतः प्रश्नस्य प्रयोजनं तू[1]क्तमेव। इति प्रश्न इति। इति हेतोः प्रश्न इत्यर्थः। सन्देह इति। प्रकारविषयः सन्देहः। तथा कार्यदर्शनं कारणधर्मतिरोभावश्चेत्युभयमत्र सन्देहबीजमित्यर्थः ॥ १ ॥ ❀ ❀ विरञ्च इत्यत्र। तत्र (प्रथम) प्रश्न इति। प्रथमदैहिकीनां सृष्टिप्रश्ने। कारिकायाम्। कृतिदोषाभावौ तृतीयश्लोकस्याऽर्थः। भगवानन्तर्हित इति। यथाऽन्तर्हितः। अपिशब्दार्थमाहुः—अन्तरित्यादि। तथावस्थातिरोधानादिति प्रस्तुतावस्थातिरोधानात् ॥ ४ ॥

## श्रीगिरिधरकृता बालप्रबोधिनी

कालप्रश्नोत्तरं वक्तुं प्राकृतादिविभागतः। सर्गस्तु दशधा त्वत्र दशमे विनिरूप्यते ॥ १ ॥

भगवत्यन्तर्हिते सति ब्रह्मा दैहिकीर्देहजाः मानसीः सङ्कल्पजाश्च प्रजाः कतिधा ससर्जेत्यन्वयः। तत्प्रकार एव जिज्ञासितस्तस्य सर्जने तु न सन्देहो भगवत्कृपायाः समर्थत्वादित्याशयेनाह—विभुरिति। प्रसिद्धश्च तस्य सर्गः पितामहत्वेन व्यवह्रियमाणत्वादित्याशयेनाह—लोकपितामह इति ॥ १ ॥ ❀ ❀ स्वकृतप्रश्नोत्तरशुश्रूषयाऽऽह—ये चेति। त्वयि त्वदग्रे ये च मे मयाऽर्थाः संशयविषयाः पदार्थाः पृष्टास्तान् प्रश्नान् आनुपूर्व्येण एकैकशः वदस्व उत्तरय तदुत्तरं कथयेत्यन्वयः। तेन नोऽस्माकं सर्वसंशयान् छिन्धि निवर्त्तय। न च ते प्रश्नास्त्वया विस्मृताः भगवदनुग्रहेण सर्वज्ञत्वादित्याशयेन सम्बोधयति—भगवन्निति। न केवलं ममैवैवं संशयाः सन्ति किन्तु बहूनामन्येषामपीति सूचयितुं न इति बहुवचनम्। सर्वज्ञानां श्रेष्ठस्य तव सर्वसंशयनिवारणमुचितमेवेति सूचयन् सम्बोधयति—बहुवित्तमेति ॥२॥ ❀ ❀ हे भार्गवेति सम्बोधनं सावधानतार्थम्। तेन क्षत्त्रा विदुरेण एवमुक्तप्रकारेण सञ्चोदितः उत्तरदाने प्रवर्तितः कौषारवो मैत्रेयः प्रीतः संस्तान् विदुरकृतान् प्रश्नान् प्रत्याह—तदुत्तरं दत्तवानित्यर्थः। प्रीतौ हेतुमाह—हृदिस्थानिति। प्रश्नविस्मरणे तदुत्तरदाने क्लेशः स्यात्तस्यानुसरणस्य विद्यमानत्वात्प्रीतः सन्नुत्तरं

---

१. तूपक्रमे. पा.।

दत्तवानिति भावः। अविस्मरणे हेतुमाह—मुनिरिति, मननशीलत्वादित्यर्थः॥ ३॥ ❀ ❀ मैत्रेयदत्तमुत्तरमेव दर्शयति—विरिञ्चोऽपीत्यादिना। यत् यथा भगवानाह 'भूयस्त्वं तप आतिष्ठ विद्यां चैव मदाश्रयाम्' इत्युक्तवान् विरिञ्चो ब्रह्मापि तथैवात्मनि परमात्मनि तस्मिन्नात्मानं मन आवेश्य स्थिरीकृत्य दिव्यं देवमानमितं वर्षशतं संवत्सरशतपर्यन्तं तपश्चक्रे इत्यन्वयः। औपचारिकभगवत्त्वं वारयति—अज इति, जन्मक्षयादिविकारशून्यः, श्रीनारायण इत्यर्थः॥ ४॥

### हिन्दी अनुवाद

विदुरजीने कहा—मुनिवर! भगवान् नारायणके अन्तर्धान हो जानेपर सम्पूर्ण लोकोंके पिता पितामह ब्रह्माजीने अपने देह और मनसे कितने प्रकारकी सृष्टि उत्पन्न की?॥ १॥ ❀ ❀ भगवन्! इनके सिवा मैंने आपसे और जो-जो बातें पूछी हैं, उन सबका भी क्रमशः वर्णन कीजिये और मेरे सब संशयोंको दूर कीजिये; क्योंकि आप सभी बहुज्ञोंमें श्रेष्ठ हैं॥ २॥ ❀ ❀ सूतजी कहते हैं—शौनकजी! विदुरजीके इस प्रकार पूछने पर मुनिवर मैत्रेयजी बड़े प्रसन्न हुए और अपने हृदयमें स्थित उन प्रश्नोंका इस प्रकार उत्तर देने लगे॥ ३॥ ❀ ❀ श्रीमैत्रेयजीने कहा—अजन्मा भगवान् श्रीहरिने जैसा कहा था, ब्रह्माजीने भी उसी प्रकार चित्तको अपने आत्मा श्रीनारायणमें लगाकर सौ दिव्य वर्षोंतक तप किया॥ ४॥

**तद्विलोक्याब्जसम्भूतो वायुना यदधिष्ठितः। पद्ममम्भश्च तत्कालकृतवीर्येण कम्पितम्॥ ५॥**
**तपसा ह्येधमानेन विद्यया चात्मसंस्थया। विवृद्धविज्ञानबलो न्यपाद् वायुं सहाम्भसा॥ ६॥**
**तद्विलोक्य वियद्व्यापि पुष्करं यदधिष्ठितम्। अनेन लोकान् प्राग्लीनान् कल्पितास्मीत्यचिन्तयत्॥ ७॥**
**पद्मकोशं तदाऽऽविश्य भगवत्कर्मचोदितः। एकं व्यभाङ्क्षीदुरुधा त्रिधा भाव्यं द्विसप्तधा॥ ८॥**

### श्रीधरस्वामिविरचिता भावार्थदीपिका।

अब्जसंभूतो ब्रह्मा यदधिष्ठाय स्थितः कर्तरि क्तः, तत्पद्ममंभश्च विलोक्य। कथंभूतं पद्ममंभश्च तेन प्रलयकालेन कृतं वीर्यं यस्य तेन वायुना कंपितं न्यपादित्युत्तरेणान्वयः॥ ५॥ ❀ ❀ विवृद्धं विज्ञानं बलं च यस्य न्यपात्सर्वं पीतवान्॥ ६॥ ❀ ❀ पुष्करं पद्मं प्राग्लीनाँस्त्रीँल्लोकान् कल्पिताऽस्मि स्रक्ष्यामि॥ ७॥ ❀ ❀ भगवता स्वयं करणीये कर्मणि चोदितो नियुक्तः संस्तदा पद्मकोशं प्रविश्य तमेकमेव त्रिधा लोकत्रयरूपेण व्यभांक्षीद्विभाज। एकेन कमलमुकुलेन कथं लोकत्रयसृष्टिरित्यसंभावनां वारयितुं तस्य विशालतामाह। द्विसप्तधा चतुर्दशलोकरूपेण उरुधा ततोऽपि बहुप्रकारेण भाव्यं भावयितुं योग्यमतो न तेन त्रिलोकीकरणं चित्रमित्यर्थः॥ ८॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः।

यत्पद्मम्॥ ५॥ ❀ ❀ आत्मसंस्थया चित्तगतया विद्ययोपासनया यावत्प्रमाणं प्रलयेंभो वायुश्चावर्द्धत तावन्न्यपादित्यर्थः॥ ६॥ ❀ ❀ स्वेनाधिष्ठितं यद्वियद्व्यापि व्योमवन्महत्परिमाणं पद्मं तद्विलोक्येति योज्यम्। प्रजाः सृजेति हरिणोपदिष्टो ब्रह्मा वाय्वादिपानरूपे संहारे कथं प्रवृत्त इति चेत्तत्र सर्वविरोधित्वात्तत्पानं कृतं सर्वविरोधित्वं च सर्वदेशव्यापकत्वेन प्रजासर्गार्थस्थाननिरोधादेवावसेयमिति॥ ७॥ ❀ ❀ कर्मणि प्रजासृष्टिलक्षणे ततोपि चतुर्दशलोकतोपि बहुप्रकारेण सूर्यचंद्रादिलोकरचनारूपेण यतो भगवदिच्छया बहुधा भवनयोग्यमतो हेतोः इत्यर्थ इति। अनंतसरिदधिकरणार्णवतो यथा बहुधा कुल्याकल्पनं नानर्हं तथा तस्य पद्मस्याप्युरुधाभवनयोग्ये त्रिलोकीकरणं नाद्भुतमिति भावः॥ ८॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या।

तदिति युग्मकम्। यदधिष्ठाय यत्पद्ममधिष्ठानं कृत्वा आत्मसंस्थया श्रीनारायणविषयया विद्यया उपासनया तपसा प्राणायमनादिना विज्ञानं सृष्टिविषयकं बलमपि तद्विषया क्रियाशक्तिः सर्वं प्रलये यावद्वृद्धम्॥ ५॥ ६॥ ❀ ❀ वियद्व्यापि विशालम् अनेन पद्मेन॥ ७॥ ❀ ❀ कर्मणि लोकसृष्टौ तदा सृष्टिकाले तं पद्मं तस्य पद्मस्य ततोऽपि चतुर्दशलोकतोऽपि अत उरुधा भाव्यत्वात् तेन पद्मेन॥ ८॥

### श्रीमद्वीरराघवव्याख्या।

तदित्यादिश्लोकद्वयमेकान्वयम्। अब्जसंभूतो ब्रह्मा यदधिष्ठितः यत्पद्ममधिष्ठाय स्थितः कर्त्तरि क्तः तत्पद्ममम्भश्च विलोक्य कथंभूतं पद्ममम्भश्च तत्कालकृतवीर्येण तेन प्रलयकालेन कृतवीर्य्येण उत्पन्नव्यापारेण वायुना कम्पितं तत्पद्ममम्भश्च एधमानेन उत्तरोत्तरप्रवृद्धेन तपसा कर्मयोगेन। विलोक्यात्मसंस्थया परमात्मविषयया विद्ययोपासनया च प्रवृद्धं विज्ञानं विविधसृष्टिविषयज्ञानमेव बलं यस्य तथाभूतः अम्भसा सह वायुं न्यपात् पीतवानित्यर्थः॥ ५॥ ६॥ ❀ ❀ सवाय्वम्भसः

पानानन्तरं कर्माह । तदिति । यदधिष्ठितः यत्पद्ममधिष्ठाय स्थितः तद्वियद्व्याप्यन्तरिक्षव्याप्यत्युन्नतमित्यभिप्रायः । पुष्करं पद्मं विलोक्यानेन पुष्करेण प्राग्लीनान् पूर्वकल्पान्ते लीनाल्लोकान् कल्पितास्मि स्रक्ष्यामीत्यचिन्तयच्चिन्तितवान् ॥ ७ ॥ ❀ ❀ पद्मकोशमिति । भगवत्कर्मचोदितः भगवता स्वयं करणीये कर्मणि चोदितो नियुक्तः सन् तत्पद्मकोशमाविश्याधिष्ठाय तमेवैकं पद्मकोशं व्यभांक्षीद्विबभाज उरुधा बहुधा विभागमेव विवृण्वन्नेकेन कमलमुकुलेन कथं त्रिलोकीसृष्टिरित्यसंभावनां निवारयितुं तस्य विशालतामाह, भाव्यं चतुर्दशलोकात्मना भवितुं योग्यमतोऽनेन त्रिलोकीकरणं न चित्रमित्यर्थः । त्रिधा देवादिभोक्तृरूपेण शब्दादिभोग्यरूपेण ज्ञानकर्मेन्द्रियात्मककरणरूपेणेत्येवं त्रिधा व्यभांक्षीदित्यर्थः ॥ ८ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

यदात्मनाधिष्ठितं तत्पद्मं तत्कालकृतवीर्येण प्रलयकालकृतपराक्रमेण तीव्रेणेत्यर्थः वायुना कम्पितमम्भश्च कम्पितं विलोक्य ॥ ५ ॥ ❀ ❀ मूलोन्मूलनन्यायेन अम्भसा सह वायुं न्यपादित्यन्वयः । 'निपानमुदपानं स्यादापानं पानगोष्ठिका' इति हलायुधः ॥ ६ ॥ ❀ ❀ हरिणा स्रष्टुमुपदिष्टो ब्रह्मा संहर्तुमुपक्रमते किमिदं हन्तेत्याशङ्क्य सर्वविरोधित्वात्तयोः पानं युक्तमिति भावेनाह । तद्विलोक्येति । वियद्व्यापि आकाशवन्महत्परिमाणोपेतम् ॥ ७ ॥ ❀ ❀ एकेन पद्मेन त्रित्वादिसंख्याविशिष्टलोकरचनं कथमिति तत्राह । पद्मकोशमिति । यदाचिन्तयत्तदैव चतुर्दशभुवननिर्माणनिमित्तेन कर्मणा दृष्टेन चोदितः कर्मणा विषयभूतेन हरिणा प्रेरितो भगवान् ज्ञानवैराग्यादिगुणशाली पद्मकोशमाविश्य एकत्वसंख्याविशिष्टमुरुधा बहुत्वसंख्याविशिष्टत्वेन व्यभांक्षीद्विभक्तवान् किमनन्तसंख्याविशिष्टमकरोन्नेत्याह । त्रिधेति । भूम्यन्तरिक्षस्वर्गात्मना त्रिधा भाव्यं कृत्वा तत्त्रयं पुनः द्विःसप्तधा चतुर्दशभुवनात्मना विभक्तवानिति शेषः ॥ ८ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

तदिति युग्मकं न्यपादिति यावत् प्रलये वर्द्धते स्म तावदिति भावः ॥ ५—८ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

अब्जसंभूतो ब्रह्मा यत् पद्ममधिष्ठितः इति कर्त्तरि क्तः, तदेव पद्ममम्भश्च वायुना कम्पितं वीक्ष्य न्यपादित्युत्तरेणान्वयः । वायुना कथम्भूतेन तत्कालेन प्रलयसमयेन कृतं वीर्य्यं यस्य तेन ॥ ५ ॥ ❀ ❀ न्यपात् नाशयामासेत्यर्थः । प्रलयकाले यावत्प्रमाणमम्भो वायुश्चावर्द्धत तावत्प्रमाणमेवेति ज्ञेयम् ॥ ६ ॥ ❀ ❀ ततश्च पुष्करं पद्मं वियद्व्यापि सत्यलोकपर्यन्तमुच्छ्रितं कल्पितास्मि स्रक्ष्यामि ॥ ७ ॥ ❀ ❀ ततश्च आविश्य प्रविश्य भगवता कर्म्मणि जगत्सर्गे नियुक्तः तमेकमेवं त्रिधा लोकत्रयरूपेण व्यभाङ्क्षीत् विबभाज । एकेन कमलकोषेण कथं लोकत्रयसृष्टिरित्यसम्भावनां वारयितुं तस्य विशालतामाह । द्विसप्तधा चतुर्दशलोकरूपेण उरुधा ततोऽपि बहुप्रकारेण भाव्यं भावयितुं योग्यमतो न तेन त्रिलोकीकरणं चित्रमिति स्वामिचरणाः । प्रथमं स नालेन कमलकोषेण त्रिधा ततश्चतुर्द्दशधा ततः सूर्य्यचन्द्रादिलोकभेदेन उरुधा व्यभाङ्क्षीत् । कीदृशं भाव्यं ध्येयं वैराजोपासकैरित्यन्ये ॥ ८ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

यदधिष्ठाय स्थितः कर्तरि क्तः तत्पद्ममम्भश्च विलोक्य सहाम्भसा वायुं न्यपादित्युत्तरेणान्वयः ॥ ५ ॥ ❀ ❀ आत्मसंस्थया परमात्मविषयया विवृद्धं विज्ञानं बलं च यस्य सः । न्यपात्सर्वं पीतवान् ॥ ६ ॥ ❀ ❀ लोकान् कल्पितास्मि स्थापयिष्यामि ॥ ७ ॥ ❀ ❀ भगवता स्वयं करणीये कर्मणि नियुक्तः सन् पद्मकोशमाविश्य तमेकमेव त्रिधा लोकत्रयरूपेण व्यभांक्षीत् विबभाज 'सोऽसृजत्तपसा युक्तो रजसा मदनुग्रहात् । लोकान् सपालान् विश्वात्मा भूर्भुवः स्वरिति त्रिधे'ति एकादशे वक्ष्यमाणात् एष दैनन्दिनः सर्गो ब्राह्मस्त्रैलोक्यवर्तन इति अत्रैव वक्ष्यमाणत्वाच्च । एकेन कममुकुलेन लोकत्रयसृष्ट्यसंभावनां निराकर्तुमाह द्विसप्तधा ततोऽपि उरुधा बहुधा भाव्यं भावयितुं योग्यम् अतस्त्रिधा विभागेऽसंभावना न कार्येति भावः ॥ ८ ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

ततो यज्जातं तदाह—तद्विलोक्येति । तपसा तस्य ज्ञानं जातम्, तज्ज्ञानविषयमाह—अब्जसंभूतो ब्रह्मा यदधिष्ठितः यत्पद्ममधिष्ठाय स्थितः, तत्पद्मं दृष्टवान् तस्य विलोकनं विशेषप्रकारेण, अतस्तद्गतं सर्वमेव ज्ञातवानित्यर्थः । तत्कालकृतवीर्येण वायुना पद्ममम्भश्च कम्पितम् । वायुना कम्पितत्वज्ञानम्, वायोश्च प्रलयकालीनत्वम् । दैत्यांशित्वेन वायोः परिज्ञानम्, तस्मिन्ननुपसंहृते कार्यं कारणं च न स्वस्थं भवेत् । कालेनाऽपि दैत्येभ्यो बलं दीयते ॥ ५ ॥ ❀ ❀ तपसेति । एधमानेन तपसा विद्यया च विवृद्धं विज्ञानस्य बलं यस्य, तादृशोऽम्भसा सह वायुं पीतवान् । ननूपासना पूर्वमेव निवृत्तेति कथमस्य ज्ञानबलजनकत्वम् ? तत्राऽऽह—आत्मसंस्थयेति । अन्तःकरणे सा नित्यतया स्थिता । मनसा ब्रह्मा नित्यमेव भगवत्परिचर्यां करोतीत्युक्तम् ॥ ६ ॥ ❀ ❀ एवं दोषाभावं निरूप्य भयकम्पादिहेतौ वायावम्भसि च निवृत्ते, ततो यत्कृतवान्, तदाह श्लोकत्रयेण । तत्र प्रथमं पूर्वज्ञानं तस्य

प्रवुद्धमित्याह—तद्विलोक्येति । यत् स्वेनाऽधिष्ठितं पुष्करं वियद्व्याप्यपि विलोक्य, प्राक् पूर्वदिवसे, अनेनैव प्रकारेण अनेनैव च पद्मेन लोकान् कल्पितास्मि कल्पयितास्मीत्यचिन्तयत् । कल्पितास्मीति लुट् । अत्र चिन्तनं विमर्शः । ब्रह्मणः शतवर्षे शतं कल्पा भवन्तीति कल्प्यते[1] । 'प्रत्यब्दं वृक्षवत् कल्पाः' इति वृक्षसाम्यात् तस्य वर्षान्तर एवाऽन्यथात्वं स्पष्टम् । तेनैकैकः कल्पः संवत्सराहोरात्रसङ्ख्यापरिमितः । मध्ये त्वतिसूक्ष्मभेद आकलयितुं न शक्यत इति न नामान्तरापादकत्वम् । तथा सति पद्मकल्पा अपि षट्युत्तरशतत्रयपरिमिता भवन्ति । तदा पूर्वकल्पेऽपि पद्मेनैव जगन्निर्माणं कृतमिति 'अनेन लोकान् प्राग्लीनान्' इति विमर्शः संगच्छते ॥ ७ ॥ ❀ ❀ तदा पूर्ववदेव कृतवानित्याह—पद्मकोशमिति । तदा ज्ञानानन्तरम् । तदेव पद्मकोशमाविश्य एकं पद्मकोशमुरुधा व्यभाङ्क्षीत् । ननु भगवन्नाभिकमलं कथमेवं भङ्क्तुमर्हतीत्याशङ्क्याऽऽह–भगवत्कर्मचोदित इति । भगवदीयसृष्टौ भगवत एकं कर्माऽत्र संक्रान्तमस्ति, तेन प्रेरितः । तदा भगवत्कर्मणा प्रेरितभगवत्कर्मरूपत्वात् न तस्याऽपराधः क्वापि । ततस्य खण्डानाह–एकं व्यभाङ्क्षीदुरुधेति । एकमेव उरुधा व्यभाङ्क्षीत्, अवान्तरलोकभेदेन सहस्रशः खण्डान् कृतवान् । जातिभेदेन विभागे क्रियामाणे सत्त्वादिभिः कृत्वा त्रिधैव भाव्यम् । प्रसिद्धलोकव्यवहारेण भेदे क्रियमाणे द्विसप्तधा अभाङ्क्षीत्, चतुर्दशलोकभेदेन विभागं कृतवान् ॥ ८ ॥

### अस्मिन्पर्याये सुबोधिनीप्रकाशव्याख्या नास्ति

### श्रीगिरिधरकृता बालप्रबोधिनी ।

अब्जसम्भूतो ब्रह्मा यदधिष्ठितः यत् पद्ममधिष्ठाय स्थितः—कर्तरि क्तः—तत्पद्ममम्भश्च तत्कालेन प्रलयकालेन कृतं वीर्यं बलं यस्य तेन वायुना कम्पितं विलोक्य अम्भसा सह वायुं न्यपात् पीतवानिति द्वयोरन्वयः । तत्सामर्थ्ये हेतुमाह—तपसेति । हि यतः एधमानेन उत्तरोत्तरप्रवृद्धेन तपसा अनशनादिना आत्मसंस्थया परमात्मविषयया विद्यया उपासनया च विवृद्धं विज्ञानमेव बलं यस्य सः ॥ ५ ॥ ६ ॥ ❀ ❀ यदधिष्ठितस्तद्वियद्व्याप्यपि अत्युन्नतं पुष्करं कमलं विलोक्य अनेन कमलेन प्राक् पूर्वकल्पान्ते लीनान् लोकान् कल्पितास्मि स्रक्ष्यामीत्यचिन्तयदित्यन्वयः ॥ ७ ॥ ❀ ❀ तदा पद्मकोशमाविश्य तदेकमेव त्रिधा लोकत्रयरूपेण व्यभांक्षीत् विभक्तं कृतवान् । विभागकरणे हेतुमाह—भगवदिति, भगवता स्वयं करणीये कर्मणि चोदितः प्रवर्तित इत्यर्थः । नन्वेकेन कमलमुकुलेन कथं लोकत्रयसृष्टिः सम्भवतीत्यसम्भावनां वारयितुं तस्य विशालतामाह—द्विसप्तधा चतुर्दशलोकरूपेण उरुधा ततोऽपि बहुप्रकारेण भाव्यं भावयितुं योग्यम् । अतो न तेन त्रिलोकीकरणमसम्भावितमिति भावः ॥ ८ ॥

### हिन्दी अनुवाद

ब्रह्माजीने देखा कि प्रलयकालीन प्रबल वायुके झकोरोंसे, जिससे वे उत्पन्न हुए हैं तथा जिसपर वे बैठे हुए हैं, वह कमल तथा जल काँप रहे हैं ॥ ५ ॥ ❀ ❀ प्रबल तपस्या एवं हृदयमें स्थित आत्मज्ञानसे उनका विज्ञान-बल बढ़ गया और उन्होंने जल के साथ वायुको पी लिया ॥ ६ ॥ ❀ ❀ फिर जिसपर स्वयं बैठे हुए थे, उस आकाशव्यापी कमलको देखकर उन्होंने विचार किया कि 'पूर्वकल्पमें लीन हुए लोगोंको मैं इसीसे रचूँगा' ॥ ७ ॥ ❀ ❀ तब भगवान्के द्वारा सृष्टिकार्यमें नियुक्त ब्रह्माजीने उस कमलकोशमें प्रवेश किया और उस एकके ही भूः, भुवः, स्वः—ये तीन भाग किये, यद्यपि वह कमल इतना बड़ा था कि उसके चौदह भुवन या इससे भी अधिक लोकोंके रूपमें विभाग किये जा सकते थे ॥ ८ ॥

**एतावाञ्जीवलोकस्य संस्थाभेदः समाहृतः[2] । धर्मस्य ह्यनिमित्तस्य विपाकः परमेष्ठ्यसौ ॥ ९ ॥**

**विदुर उवाच**

**यदात्थ बहुरूपस्य हरेरद्भुतकर्मणः । कालाख्यं लक्षणं ब्रह्मन् यथा वर्णय नः प्रभो ॥ १० ॥**

**मैत्रेय उवाच**

**गुणव्यतिकराकारो निर्विशेषोऽप्रतिष्ठितः[3] । पुरुषस्तदुपादानमात्मानं लीलयासृजत् ॥ ११ ॥**

**विश्वं वै ब्रह्मतन्मात्रं संस्थितं विष्णुमायया । ईश्वरेण परिच्छिन्नं कालेनाव्यक्तमूर्तिना ॥ १२ ॥**

### श्रीधरस्वामिविरचिता भावार्थदीपिका

त्रिलोकीरूपेणैव विभागे हेतुमाह । एतावांस्त्रिलोकीरूपो जीवलोकस्य जीवानां भोगस्थानस्य प्रत्यहं सृज्यस्य संस्थाभेदो रचनाविशेष उक्तः । ननु परमेष्ठिनोऽपि जीवत्वाविशेषाद् ब्रह्मलोकस्यापि किमिति प्रत्यहं सृष्टिर्न भवति तत्राह । हि यस्मादनिमित्तस्य निष्कामस्य धर्मस्य विपाकः फलरूपोऽसौ उपलक्षणमेतत् सत्यलोकस्य महत्प्रभृतिलोकानां तद्वासिनां च त्रैलोक्यस्य

---

१ कथ्यते क । २. प्रा० पा०—हितः । ३. प्रा० पा०—अप्रमाणतः ।

काम्यकर्मफलत्वात्प्रतिकल्पमुत्पत्तिविनाशौ भवतः। महःप्रभृतीनामुपासनासमुचितनिष्कामधर्मफलत्वाद्द्विपरार्धपर्यंतं न नाशः। तत्रस्थानां च ततः परं प्रायेण मुक्तिरिति भावः ॥ ९ ॥ ❀ ❀ कालभेदेन लोकसृष्टिभेदं श्रुत्वा तमेव कालं जिज्ञासुः पृच्छति। यत्कालाख्यं लक्षणं स्वरूपमात्थ अब्रवीः कथं कालः कल्पते किं वा तस्य सूक्ष्मं स्थूलं च रूपमिति यथावद्वर्णयेत्यर्थः ॥ १० ॥ ❀ ❀ तत्र सामान्यतः कालस्य स्वरूपमत्रोच्यते उत्तराध्याये तु विशेषतः गुणानां व्यतिकरो महदादिपरिणामस्तेनैवाक्रियते यः स काल इति शेषः। वक्ष्यते चैकादशे। "गुणव्यतिकरः कालः स्वभावः सूत्रमेव च" इति। स्वतस्तु निर्विशेषः अप्रतिष्ठितः काप्यपर्यवसितः आद्यंतशून्य इत्यर्थः। एतदेव दर्शयितुमीश्वरः सृष्ट्यादि तेन निमित्तभूतेन करोतीत्याह। पुरुष इति उपादीयते निमित्ततया स्वीक्रियत इत्युपादानम्। स काल उपादानं निमित्तं यस्मिंस्तमात्मानमेव विश्वरूपेणासृजत्। स्वव्यतिरेकेण सृज्यस्याभावात् एतच्च वस्तुकथनमात्रम्। कालेन निमित्तेन चासृजदित्येतावदेव विवक्षितम् ॥ ११ ॥ ❀ ❀ स्वव्यतिरिक्तस्य सृज्याभावं दर्शयन् कालस्य सृष्टिनिमित्ततां दर्शयति। विश्वमिति। विष्णुमायया संस्थितं संहृतं ब्रह्म तन्मात्रं सद्विश्वं ईश्वरेण कर्त्रा कालेन निमित्तेन परिच्छिन्नं पृथक् प्रकाशितम्। अव्यक्ता मूर्तिः स्वरूपं यस्येति स्वतो निर्विशेषता दर्शिता ॥ १२ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

ब्रह्मणो जीवत्वसंभावनयाक्षिपति नन्विति। धर्मस्य तपोविद्यादेः विपाकः परकाष्ठाप्राप्तो मूर्त्तः परिणामः तपोबलेन न किमप्यशक्यं भवतीति भावः। इति भाव इति। प्रायेणेत्युक्तेर्निर्गुणनिष्ठानामेवेति बोध्यम्। भेददर्शिनां तु पुनर्जन्मादि श्रूयते "आद्यः स्थिरचराणां यो वेदगर्भः सहर्षिभिः। कर्तृत्वात्सगुणं ब्रह्म पुरुषं पुरुषर्षभम् ॥ स संसृत्य पुनः काले कालेनेश्वरमूर्त्तिना। जाते गुणव्यतिकरे यथापूर्वं प्रजायते" इति श्रीकपिलोक्तेः। असावित्यनेन ब्रह्मांतरव्यवच्छेदः ॥ ९ ॥ ❀ ❀ कालभेदेन ब्राह्मपाद्मादिकल्परूपकालभेदेन इत्यर्थ इति। कालस्यारूपित्वेन तत्सौक्ष्म्यस्थौल्यादि ज्ञातुमशक्यमतस्तत्स्वरूपं वर्णयेति भावः। प्रभो इति। योगित्वान्मैत्रेयस्य कालस्वरूपवर्णनसामर्थ्यं द्योतयतीति हे सर्ववर्णनसमर्थेत्यर्थः ॥ १० ॥ ❀ ❀ तत्राधुना अत्रास्मिन्नध्याये उत्तरत्राग्रिमे। स्वतः स्वभावतो निजरूपेण निर्गतो विशेषो भेदो यस्मात्स तथा। उपाधिकृतभेदं विना काले भेदो नास्ति भूतादिव्यवहारस्तत्रौपाधिक एव पर्वतादिवत्। तथाहि यथा इमे पर्वता दाशरथिकाले तस्थुः कलिकाले स्थास्यंतीदानींतनराजकाले तिष्ठंतीत्यत्र यथा पर्वतेषु भूतत्वादिकं नास्ति तथा कालेपीति भावः। न पर्यवसितिरवसानं यस्य सोऽपर्यवसितः। इत्यर्थ इति। नहि कालस्य कश्चिदुत्पादको नाशकश्चेति भावः। एतदेव आद्यंतशून्यत्वमेव यद्वात्मानमात्मशक्तिकार्यत्वादात्मशब्दवाच्यं विश्वमसृजदित्यर्थः। एतच्च आत्मनो विश्वरूपत्वेन संपादनं यत् तत् वस्तुनो विश्वस्वरूपस्य कथनमात्रं न तु पृष्टोत्तरत्वेन विवक्षितम्। तत्तु कालेनेत्यादिमात्रमेवेति ध्येयम् ॥ ११ ॥ ❀ ❀ व्यक्तस्यैव घटादेर्विशेषो दृश्यते लोके न त्वव्यक्तस्य कालादेरुपाधिं विनेत्यर्थः ॥ १२ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

प्रत्यहं ब्रह्मण इति शेषः। असौ परमेष्ठी एतत्परमेष्ठिपदं तत्रस्थानां महर्लोकादिस्थानां ततः द्विपरार्धात्परमभक्तत्वे पुनस्संसारात्प्रायेणेत्युक्तम् ॥ ९ ॥ ❀ ❀ कालभेदेनेति। कल्पकालेन त्रिलोकीसृष्टिं द्विपरार्द्धेन च चतुर्दशलोकसृष्टिं तमेव सृष्टिहेतुं कल्प्यते केन लक्षणेनानुमीयते ॥ १० ॥ ❀ ❀ तत्र सामान्यविशेषस्वरूपयोर्मध्ये अत्राऽस्मिन्नध्याये महदादिपरिणामः तत्पौर्वापर्य्यानुसन्धानमित्यर्थः। आक्रियते आकारभेदैर्लक्ष्यते निर्विशेषः निराकारः एतदेव अप्रतिष्ठितत्वमेव तेन कालेन एतच्च आत्मनो विश्वरूपत्वं च वस्तुकथनमात्रं विश्वस्य तत्कार्य्यत्वात्तदभिन्नत्वमिति सिद्धान्तकथनमात्रं न तु विदुरपृष्टं कालस्य निमित्तत्वेन वर्णनमेव विवक्षितं तस्यैव पृष्टत्वादित्यर्थः ॥ ११ ॥ ❀ ❀ ब्रह्मतन्मात्रं सत् कार्यं हि स्वाविर्भावात्पूर्वं कारणमात्रात्मकं यथा घटादि पृथिव्यात्मकं तथा ब्रह्मलक्षणकारणमात्रात्मकं सदित्यर्थः। अव्यक्ता चक्षुराद्यगोचरा निर्विशेषता निराकारता ॥ १२ ॥

### श्रीमद्वीरराघवव्याख्या

कृत्स्नं जगदेतत्कालान्तर्भूतमित्याह। एतावानिति। जीवलोकस्य कार्यवर्गस्य संस्थाभेदः संनिवेशविशेषः एतावान् विभक्तभोक्तृभोगोपकरणभोगस्थानान्तर्गतप्रपञ्चात्मकः पद्मकोशः उक्त इत्यर्थः। ननु परमेष्ठिनः तत्स्थानस्य च कार्यवर्गान्तर्गतत्वात्प्रत्यहं सृष्टिः त्रिलोकीवत्किं न स्यादित्याशङ्कां निरस्यति। अनिमित्तस्य निष्कामस्य धर्मस्यासौ परमेष्ठी विपाकः फलभूतः परमेष्ठीति परमेष्ठिलोकोऽप्युच्यते, तेन तस्याधिष्ठितत्वात्। यद्वा भावप्रधानो निर्देशः परमेष्ठित्वमित्यर्थः। नन्वनिमित्तधर्मस्य मुक्तिरेव फलं ननु परमेष्ठित्वं तल्लोकप्राप्तिर्वा तमैवं "ते ब्रह्मलोके तु परान्तकाले परामृतात् परिमुच्यंति सर्वे ब्रह्मणा सह ते सर्वे संप्राप्ते प्रति संचरे" इति ब्रह्मणस्तत्रत्यानां च द्विपरार्द्धावसाने प्रायशो मुक्त्यभिधानात् ॥ ९ ॥ ❀ ❀ एवं जगन्निर्माणप्रकारे संग्रहेणाभिहिते विदुरस्तत्कालकृतवीर्येण कम्पितमिति प्रलयेऽपि कालसद्भावाभिधानेन नित्यत्वापातप्रतीतेस्तन्नित्यत्वजिज्ञासया तत्स्वरूपं पृच्छति। यदिति। चिदचिदात्मकप्रपञ्चरूपस्याद्भुतकर्मणः अचिन्त्यव्यापारस्य हरेः संबन्धि यत्कालाख्यं लक्षणं रूपमात्थ उक्तवान् तत्काल-

कृतवीर्येण कम्पितम् इत्यनादित्वेन कथितवांस्तत्कालाख्यं भगवच्छरीरं हे ब्रह्मन्नोऽस्मभ्यं यथावद्वर्णय हे प्रभो ! वर्णयितुं त्वं समर्थ इत्यभिप्रायः । किं कालः कल्प्य उताकल्प्यः किं वा तस्य स्थूलं सूक्ष्मं च रूपमित्यादि यथावद्वर्णयेत्यभिप्रायः ॥ १० ॥ ❀ ❀ एवमापृष्टो मुनिः कालस्वरूपं वक्तुं तावत्कालकाल्यवस्तुसृष्टिमनुवदति । गुणेत्यादिना यावदध्यायसमाप्ति । तत्र प्रथमं परमात्मन एव कर्तृत्वं कारणत्वं कार्यतां चाह । गुणव्यतिकर इति गुणैर्व्यतिकरः परिणामो यस्य तद्गुणव्यतिकरं प्रधानं तदाकारो रूपं शरीरं यस्य स तथोक्तः निर्विशेषः पृथिव्यादिरहितः अप्रतिष्ठितः कारणान्तररहित इत्यर्थः । कार्याणां हि कारणे प्रतिष्ठा प्रलयस्तदभावात्कारणान्तरराहित्यं फलितमेवंविधपरमपुरुषः तदुपादानम् उपादानभूतं यस्येति बहुव्रीहिः उपादानभूतेन तेन प्रधानेन विशिष्टमात्मानं जगद्रूपेणासृजदित्यर्थः । अत्र गुणव्यतिकराकारः निमित्तत्वं तदुपादानमात्मानमित्यनेन प्रकृतिपुरुषकालविशिष्टत्वाकारेणोपादानत्वं चोक्तं भवति तथा च श्रूयते तदात्मानं स्वयमकुरुतेति सूत्रितं च "साक्षाच्चोभयाम्नानात् ॥ १।४।२५ ॥" इति ॥ ११ ॥ ❀ ❀ एकस्यैव ब्रह्मणश्चिदचिद्विशिष्टस्यावस्थाभेदेन कार्यकारणभावं प्रतिपादयन् सृष्टेः प्रागवस्थानमाह । विश्वमिति । विश्वं ब्रह्मेत्यनेन "सर्वं खल्विदं ब्रह्मे"ति श्रुतिः स्मारिता । अत्र च सामानाधिकरण्येन निर्देशः कार्यकारणभावनिबन्धन इति भाष्ये प्रपंचितः । एवं च विश्वं विश्वाकारं ब्रह्म तन्मात्रं प्रकृत्यवस्थामात्रविशिष्टं संस्थितं संहृतं नतु महदाद्यवस्थाविशिष्टं विष्णुमायया भगवत्संकल्पेन यत्कार्यावस्थायां स्थूलचिदचिद्विशिष्टं ब्रह्म विश्वाकारं तत्संहारविषयस्वकीयसंकल्पेन प्रकृतित्वावस्थामात्रावशेषितत्वेनोपसंहृतमित्यर्थः । एकस्यैव मृद्द्रव्यस्य कालभेदेन पिण्डत्वघटत्वाद्यवस्थाद्वययोगेन कार्यकारणभाववदेकस्यैव ब्रह्मणश्चिदचिद्विशिष्टस्य स्थौल्यसौक्ष्म्यावस्थाभ्यां कार्यकारणभाव उपपन्नः तन्निबन्धन एव मृदयं घट इत्यादिवत्सामानाधिकरण्यनिर्देश इत्यभिप्रायः । प्रलयेऽपि कालसाचिव्यमाह । ईश्वरेणेति । कालेन विना सृष्ट्याद्ययोगात्तस्येश्वरत्वमीश्वरशरीरत्वाद्वा तस्येश्वरत्वव्यपदेशः कालस्येश्वरशरीरत्व "एतस्याक्षरस्य प्रशासने गार्गि मुहूर्तान्यर्धमासा मासा ऋतवः संवत्सरा विधृतास्तिष्ठन्ती"त्यादिश्रवणात् यावत्सत्त्वं स्वशक्यनियन्तव्यस्वभावत्वमेव हि शरीरत्वमत एव शरीरशरीरिस्वभावेन सामानाधिकरण्यनिर्देशा उपपन्नाः । अव्यक्तमूर्तिना प्रत्यक्षेण न व्यज्यत इत्यव्यक्तं मूर्तिः रूपं यस्य तेनानुमेयेन कालेन परिच्छिन्नं प्रलयदशायां सूक्ष्मचिदचिद्विशिष्टं कालपरिच्छिन्नं सदेव स्थितमित्यर्थः ॥ १२ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

न्यूनातिरेकसंख्यां निषेधयति । एतावानिति । जीवानां लोकस्यावस्थानस्य संस्थाभेदो व्यवस्थाविभागः समासतः संक्षेपतो मया तव कथित इति शेषः । इदमपि न स्वशक्त्याकृतमित्याह । धर्मस्येति । परमेष्ठिनो ब्रह्मणोऽनिमित्तस्य 'अनिषेधे पुमान् विष्णावि'त्यभिधानादतः परमात्मा निमित्तं यस्य सोऽनिमित्तस्तस्य ब्रह्मार्पणबुद्ध्या कृतस्येत्यर्थः । धर्मस्य कृतस्य विपाको विशिष्टफलमिति विद्धीति शेषः अ इति ब्रह्मेति श्रुतेः निर्निमित्तो नार्थः, तपआदीनां भगवद्विषयत्वोक्तेः ॥ ९ ॥ ❀ ❀ श्रुतहरिमहिमा विदुरः कथान्तरप्रसंगेन मैत्रेयो भगवत्कथां समापयतीति भीत्या मैत्रेयं पृच्छति । यदिति । बहुरूपस्यानन्तरूपस्य हरेः कालाख्यलक्षणं स्वरूपं यथा यथावत् । "लक्षणं लक्ष्यमाणात्मा च स्वरूपमिति कथ्यत" इत्यभिधानान्नान्योऽर्थः किंतु स्वरूपमेव ॥ १० ॥ ❀ ❀ कालस्य सर्वप्रवर्तकत्वेन प्रधानत्वात् सूचीकटाहन्यायेन तत्स्वरूपं वक्ष्यन् मैत्रेय आदौ जगत्सृष्ट्याद्यर्थं गुणत्रयोपादानकर्तृभगवद्रूपत्रयप्रादुर्भावप्रकारं वक्ति । गुणेति । प्रलये गुणानां द्रव्यत्वेन स्थितो गुणानां व्यतिकरं विकारविशेषं सम्यक्करोतीति गुणव्यतिकराकारः कर्मण्यण् प्रत्ययः पुरुषः पूर्णषड्गुणः । अतएव निर्विशेषः निर्विकारः अधिकान्तररहितो वा । अतएवाप्रतिष्ठितः अन्यत्रेति शेषः । स भगवान् कस्मिन् प्रतिष्ठित इति स्वे महिम्नीति श्रुतेः तस्य गुणव्यतिकरस्योपादानं स्वीकारो येन स तथा तं गुणव्यतिकरोपादानकर्तारमित्यर्थः । त्रिरूपत्वेनात्मानं लीलयाऽसृजत् आविरभावयत् ॥११॥ ❀ ❀ स्वार्थाभावेऽप्यन्यस्य किं तत्राह । विश्वमिति । सृष्ट्याद्यर्थत्वेन तस्य पुरुषस्य ब्रह्मविष्णुरीश्वर इति त्रीणि रूपाण्यात्मना सृष्टानीत्यनेनोच्यते । तथाहि विश्वं ब्रह्मतन्मात्रं वै ब्रह्माणं सृष्ट्वा चतुर्मुखत्वेन तं प्रविश्य सृष्टिबृंहणाद्ब्रह्मनाम्ना तेन विष्णुना मितं त्रातं चेति तथोक्तं विष्णुनाम्नो हरेर्मायया सामर्थ्येन संस्थितं व्यवस्थापितं स्वस्वाधिकार इति शेषः, अत्र यदीश्वराख्यं संहर्तृरूपं तत्कालाख्यं तेन रुद्रं सृष्ट्वा पञ्चमुखत्वेन तं प्रविश्य कालेन संहर्त्रा व्यक्तमूर्तिना चक्षुराद्यगम्यस्वरूपेण हरिणा परिच्छिन्नं संहृतमित्यन्वयः । चतुर्मुखं सृष्ट्वा तं प्रविश्य स्वयं चतुर्मुखो ब्रह्मनामा हरिः सृष्टये रजोगुणमुपादत्ते अन्यप्रवेशमन्तरेण स्वयं विष्णुनामा रक्षार्थं सत्वमुपादत्ते पञ्चमुखमीशानं सृष्ट्वा पञ्चमुखस्तं प्रविश्येश्वरनामा हरिः संहारार्थं तमोगुणमुपाददातीति तात्पर्यार्थोऽपि । वा इत्यनेन श्रुतिप्रसिद्धिद्योतकेन ज्ञायते अथ त्रयी वाव प्रकृतिः सत्त्वं रजस्तम इति तां नारायणः पर्यपश्यत्सनन्यप्रतिष्ठस्तं वा एनमाहुः पुरुष इति पूर्णो ह्येष भवति स त्रेधा बभूवैषां गुणानामुपादानाय विष्णुर्वाव सत्त्वस्य रजसो ब्रह्मेशो नाम तमसः स आविवेश ब्रह्मा ब्रह्माणं चतुर्मुखमीश ईशानं पञ्चमुखं यो वाव ईश ईशानमाविवेश तं काल इत्याचक्षते इति सौकरायणश्रुतिः ॥ १२ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

एतावान् द्विसप्तधा पर्यन्तः श्रीब्रह्मातु सर्वतो विशिष्टत्वात् तत्स्रष्टेत्याह । धर्मस्येति । अनिमित्तस्य स्वभावेनैव क्रियमाणस्य न तु गृहस्थवत् तत्तत्सङ्कल्पेनापीत्यर्थः । विपाकः पराकाष्ठाप्राप्तपरिणामः । असाविति । ब्रह्मान्तरं व्यवच्छिनत्ति ।

ब्रह्मणोऽपि भयं मत्त इत्याद्युक्तेः ॥ ९ ॥ ❀ ❀ एवमिति यदुक्तं तदेव विवृणोति। स काल इति। अत्र टीकायां परमाणुदेशं परिक्रामतीत्यत्र मध्यकालमाचष्टे यत्तल्लक्षणं ज्ञापकं गुणव्यतिकरेण क्रियारूपं तत्परिणामादि पौर्व्यापर्य्यानुसन्धानेनाक्रियते आकारभेदैर्लक्ष्यते यः स काल इत्यर्थः। विष्णोरीश्वरस्य मायया सृष्टयादिशक्त्या सह लीनं ब्रह्मणि विष्णावेव तादात्म्योपपन्नं सत् ईश्वरेण तत्प्रभावरूपेण कालेन परिच्छिन्नं पृथक् कृतमित्यर्थः ॥ १०—१२ ॥

अस्मिन्पर्याये सारार्थदर्शिनी न।

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

जीवलोकस्य जीवानां भोगस्थानभेदः रचनाविशेषः एतावान् लोकत्रयरचनालक्षणः तत्र लोकत्रयस्य प्रत्यहं सृष्टिर्नतु महरादिलोकचतुष्टयस्य तच्च प्रायः निष्कामकर्मिणां वासस्थानमित्याशयेनाह। असौ परमेष्ठी उपलक्षणमेतन्महरादिसत्यलोकांतप्रपञ्चस्य अनिमित्तस्य निष्कामस्य धर्मस्य नियामकः फलम् हि शब्दादिदं बोध्यं प्रायः निष्कामकर्मकर्त्तारो महरादिषु गच्छन्ति तत्र ये परब्रह्मोपासकाः तान् लोकान् विहाय ब्रह्माण्डं भित्त्वा मुक्ता भवन्ति ये केवलश्रमकर्मकर्त्तारः केवलैर्निष्कामकर्मभिर्मुक्त्यसंभवात् तैः कर्मभिः विशुद्धान्तःकरणाः परब्रह्मोपासनां तत्र बहुकालं कुर्वन्ति तत्सिद्धौ ब्रह्माण्डं भित्त्वा ब्रह्मणा सह द्विपरार्द्धान्ते मुक्ता भवन्ति। अन्ये सर्वे तेषु लोकेषु गत्वापि भोगान्ते पतन्ति अतस्तेषां लोकानां प्रत्यहं सृष्टिर्न भवति द्विपरार्द्धस्थायित्वादिति ॥ ९ ॥ ❀ ❀ तत्कालकृतवीर्येणेति। लोकत्रयपूर्ववर्त्तिवायुवीर्यवृद्धिनिमित्तं कालं श्रुत्वा तमेव कालं जिज्ञासुर्विदुरः पृच्छति। यदात्थेति। हरेः कालाख्यं लक्षणं शक्तिमद्धरिरूपज्ञापकं कालनामकं शक्तिभूतं तत्त्वम् कालकृतवीर्येणेत्यनेन आत्थ उक्तवान् तत् नोऽस्मभ्यं वर्णयेत्यन्वयः ॥ १० ॥ ❀ ❀ तत्र विशेषतस्त्वग्रिमेऽध्याये कालो वर्ण्यते सामान्यतस्तं विश्वसृष्ट्यादिनिमित्ततया दर्शयति। गुणव्यतिकराकार इत्यादिना। गुणानां व्यतिकरो यस्मात्तत्प्रधानमाकारः द्वितीयस्कन्धोक्तरीत्या स्थूलं सूक्ष्मं च रूपं यस्य सः पुरुषः परमेश्वरः निर्विशेषः प्राकृतदोषास्पृष्टः अप्रतिष्ठितः सर्वाधारत्वे सति आधाररहितः स्वाश्रयः आत्मानं विश्वमसृजत विश्वाकारं कृतवान् कथंभूतमात्मानं तदुपादानं तस्य सृज्यमानस्य विश्वस्योपादानम् ॥ ११ ॥ ❀ ❀ ननु तर्हि विश्वस्य पुरुषावस्थाविशेषत्वादुपादेयत्वमेव किमर्थो विश्वव्यतिरिक्तपुरुषप्राप्त्युपाय इत्यत आह। विश्वं सर्वं कार्यजातं ब्रह्मपर्यन्तं तन्मात्रं तदात्मकं विष्णुमायया तच्छक्त्यासंस्थितं तच्छक्तिपरिणामजमित्यर्थः। यद्यप्येवंभूतं तथापि तेनैव अव्यक्तमूर्त्तिना कालनियन्त्रा ईश्वरेण कर्त्रा कालेन सृष्टिसंहारनिमित्तेन परिच्छिन्नमनित्यमित्यर्थः। अतो विश्वमनित्यत्वादनुपादेयमेव अनेन कालो नित्य इत्यर्थोऽपि ज्ञापितः ॥ १२ ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

ननु सर्वेषामेव लोकानां जीवाधिष्ठानानां क्रियमाणत्वात् कथं चतुर्दशलोकेष्वेव कोटिशो जीवसङ्घाः स्थास्यन्तीत्याशङ्कयाऽऽह एतावाञ्जीवेति। जीवानां स्थानभूतस्य लोकस्य संस्थया सम्यङ्मर्यादया भेदो विभाग एतावानेव चतुर्दशधैव। त्रिविधा एव हि सर्वे जीवाः। मध्ये त्रयो राजसाः, अहङ्कारस्य त्रिविधत्वात्। तामसाः सप्त, पञ्चमहाभूतानि मात्राः कार्यं चेति। चत्वारः सात्त्विकाः, अन्तःकरणस्य चतुर्विधत्वात्। अत्रैव हि सर्वे जीवाः समाहिता भवन्ति। सम्यगाहिताः। स्थानविभेदेन सम्यक् स्थापितो भेदः। नन्वेवं कथं सामर्थ्यं ब्रह्मणः? भगवदाज्ञायामपि स्वतः सामर्थ्यस्याऽपेक्षितत्वादित्याशङ्कयाऽऽह-धर्मस्य ह्यनिमित्तस्येति। अनिमित्तस्य निष्कामस्य धर्मस्य दशशताश्वमेधस्य शतजन्मसाधितस्य विपाकः फलमयं परमेष्ठी। बहुजन्मसाधितधर्मफलत्वात् ब्रह्मणस्तथाकरणं युक्तमित्यर्थः। एवमाधारभूतं जगल्लोकानां मात्रात्वेन निरूपितम् ॥ ९ ॥ ❀ ❀ आधेयभूतस्य लोकत्वात् मात्रात्वं न भविष्यतीत्याशङ्कय, कालवशात् जीवस्यापि विषयत्वमिति कालप्रस्तावना। भगवत उत्पत्त्यादिकर्तृत्वं श्रुतवतः कालविभेदेन, कालमेव सर्वहेतुं मन्यमानस्य, काले जिज्ञासा। तदा पृच्छति विदुरः—यदात्थेति। बहुरूपस्य हरेरद्भुतकर्मणो लक्षणं यदात्थ, तद्यथावद्वर्णयेति संबन्धः। कालो हि भगवतोलक्षणमसाधारणो धर्मः। जगत्कर्तृत्वं नाम जगत उत्पत्तिकाल इत्यर्थः। तल्लक्षणसहितो य आत्मा स भगवान्। अत एव बहिरपि भगवान् गरुडध्वजः। भगवतोऽतिसूक्ष्मत्वात् लक्षणमप्यतिसूक्ष्मं दुर्ज्ञेयम्। कलयतीति कालः, कलनं वा। सर्वस्यापि वस्तुन आकलनं ग्रहणं ज्ञानं वा भगद्धर्मो भवत्येव। अत एव काल इत्याख्या यस्य लक्षणस्य, कलनं न साधारणम्, अद्भुतकर्मत्वात्। यथा आकलने जाते भगवानद्भुतं कर्म करोति, यथा वा आकलय्य एकः सन् बहुधा भवति, यथा वा आकलय्य सर्वेषां दुःखं स्वयं दूरीकरोति; मार्गत्रयं वा प्रकाशयति; तादृशस्य लक्षणभूतस्य कालस्य स्वरूपमवश्यं ज्ञातव्यम्। अतोऽस्माकं तज्ज्ञानार्थं त्वं वर्णय, समर्थत्वात्। तदाह—प्रभो इति ॥ १० ॥ ❀ ❀ एवं कालस्याऽवश्यं निरूपणीयत्वे असाधारणधर्मत्वात् कालं लक्षयति—गुणव्यतिकराकार इति। कालो ह्यमूर्तो धर्मः; अत एव न प्रत्यक्षः, किन्तु कार्यवशादनुमेयः। अतस्तस्य लक्षणं नेदमित्थंतया वक्तुं शक्यम्। कालस्तदैव लक्षणं भवेत्, यदि धर्मिणो धर्मेभ्यः कार्याच्च विलक्षणः स्यात्। तदैवाऽसाधारण्यं भवेत्। तत्र त्रितयवैलक्षण्यार्थं लक्षणे विशेषणत्रयम्। तत्र प्रथमं गुणव्यतिकराकरः कालः। गुणानां व्यतिकरोऽन्योन्यसंश्लेष आकारो यस्य। अमूर्त्तत्वात् कार्यद्वारैव लक्षणम्, कार्यं पुनः

प्रकृतेर्गुणसाम्यावस्थारूपायाः। येन भगवद्गुणेन गुणानां व्यतिकरो भवति—प्रथमतः सत्त्वादिरूपेण विभिन्ना भवन्ति, ततः क्षुब्धा अन्योन्यं च मिलिता भवन्ति—स गुणः काल इत्यर्थः। इदमेव च भगवत आकलनम्। क्रियाशक्तिरूपः प्रथमो गुणो मुख्यः, योऽग्रे प्रकटो जातः। तत्र क्रियाशक्तिभेदा अन्येऽपि सन्ति, तेषां विशेषनामानि वर्तन्ते। 'स ऐक्षत' इतीक्षा, 'सोऽकामयत' इति कामः। तथा तस्य लोकप्रसिद्धकार्यधर्मवत्त्वेन कार्याधेयतया न विशेषणं सिद्धम्। तथा मनोधर्मा इच्छाकामादयः, तथा न कस्यचित्कालो धर्मः। परं सर्वाधारत्वेनैव प्रतीयत इहेदानीमित्यादिशब्दैः। अतोऽयं निर्विशेषः। कस्यचिद्धर्मत्वे तत्र प्रतीयेत, घटे काल इति, भूमौ काल इति। प्रतीयते त्विह घट इति, तस्मात्सर्वविशेषरहितो गुणक्षोभहेतुः काल इति लक्षणम्। किञ्च, बहव एव धर्मा आकाशादीनां व्यावर्तका विशेषाः स्वतो विशेषरहिता भगवद्धर्माः सन्ति, अन्यथा नित्यानां परमाणूनामतीन्द्रियाणां व्यावृत्तिर्न स्यात्। तद्व्यावृत्त्यर्थमाह—अप्रतिष्ठित इति। प्रतिष्ठा समाप्तिः पर्यवसानम्, तद्रहित इत्यर्थः। विशेषास्तु प्रतिष्ठिताः, अन्यथा परमाणूनां परिच्छेदो न स्यात्। अतोऽसंस्थितोऽप्रतिष्ठितः कालः। सर्व एव पदार्थः संतिष्ठते, कालस्तु न संतिष्ठते। एवं कालस्य लक्षणमुक्त्वा, स गुणो भगवता किमर्थं गृहीत इति जिज्ञासायाम्, तस्य प्रासङ्गिकं कार्यं गुणक्षोभरूपम्, जगदाधारत्वं वा, तस्य मुख्यप्रयोजनं न भवतीति मुख्यं प्रयोजनमाह—पुरुषस्तदुपादानमिति। पुरुषो भगवान् कारणरूपः, स स्वगुणानेव कर्तृत्वादिभावापन्नान् कृत्वा जगत्करोति। तत्र कर्तृत्वं स्वरूपधर्म एव भवति, क्रियाशक्तिस्तस्य निर्वाहिका। समवायिकारणं तु किं भवेत्? अविकृतैव सा भवति। सर्वत्र साक्षात्कार्येषु अविकृतमेव समवायिकारणं भवति, यथा घटे मृद्रूपा पृथ्वी। सा खननादिना परिच्छिन्ना कर्तृक्रियया व्याप्ता उपादानत्वमापद्यते, एवं भगवानपि आत्मानं सृजति कालमुपादानं कृत्वा। एकैव पृथिवी कुलालचक्रचीवरदण्डमृद्रूपा स्वधर्मैरेव स्वयं घटरूपा भवति। तत्राऽन्ये सर्वे धर्माः कुलालादयो जीवसंबन्धं प्राप्यैव कर्तृत्वादिभावमापद्यन्ते। कुलालशरीरे देवदत्तो जीवः, दण्डे स्थावरः, चीवरेऽपि कार्पासः स्थावर एव, चक्रेऽपि पर्वतः, विकारे तु विकार एव। एवं सर्वत्र। तस्माद्यस्मिन्नंशे न कोऽपि विकारः प्रविशति, (स) कर्तृधर्मव्यतिरिक्तो भगवद्धर्मः कालः। 'स आत्मानं स्वयमकुरुत' इति श्रुतेः। लीलयेति विशेषप्रयोजनाभावः। तदुपादानमतिसमीचीनं कर्तुः प्रयासाजनकमिति॥ ११॥ ❀ ❀ नन्वेतस्य कालस्य भगवतः काऽपेक्षा? उपादानं स्वरूपं प्रकृतिर्वा भवतु। तत्राऽऽह—विश्वं वै ब्रह्म तन्मात्रमिति। विश्वं कार्यम्, ब्रह्म तन्मात्रं यस्य। यथा महाभूतेषु शब्दादीनां तन्मात्रता, सूक्ष्मावस्थारूपत्वात्। एवं विश्वस्याऽपि ब्रह्मैव सूक्ष्मावस्थारूपम्। पूर्वावस्था ब्रह्म, उत्तरावस्था जगदिति। तस्योपसंहारस्तिरोभावे विष्णोर्भगवतो मायया। विष्णू रक्षकः, उपसंहर्त्री तस्यैव माया। सम्यक् स्थितं वा विष्णुमायया। अलौकिकसामर्थ्येन स्थितमुपसंहृतं च भवतीत्यर्थः। तत्र कश्चित्परिच्छेदकोऽपेक्ष्यते, अन्यथा एकस्मिन्नपि कार्ये कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा भवेत् तस्माद्भगवत एव कश्चिद्धर्मोऽस्त्यसाधारणरूपः, येनोत्पद्य[1]मानं कार्यं परिच्छिन्नं भवति। तदेकं भगवतो रूपमित्याह—ईश्वरेण परिच्छिन्नमिति। ऐश्वर्यमपि गुणः, तत्रैव भगवता स्थापितः। अन्यथाकरणसामर्थ्यं हि तस्य। अत एव कलयतीति कालः। तस्य च[2] रूपमव्यक्त एव तिष्ठति। अतः परिच्छेदार्थं कालोऽपेक्ष्यत इत्यर्थः॥ १२॥

## श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

एतावानित्यत्र। जीवानामित्यादि। एतेन लोकानां चतुर्दशत्वे तत्प्रकारेषु चोपपत्तिविवरणेन 'पुरुषावयवैर्लोकाः' इत्यनेन लोककल्पनायाः काल्पनिकतया पुरुषावयवत्वं पातालादीनामसङ्गतमिति यदाक्षिप्तम्, तत्समाहितं ज्ञेयम्। विभागस्य गुणविभागार्थत्वेन त्रिविधजीवस्थितिसंख्यार्थत्वेन प्रतिकल्पं क्रियमाणतया लोककल्पनाः, तन्मूलतया पुरुषावयवत्वाबाधकत्वादिति। एतेषां श्लोकानां निर्गलितमर्थमाहुः—एवमित्यादि। मात्रात्वेनेति। सूक्ष्मरूपत्वेन॥ ९॥ ❀ ❀ यदात्थेत्यत्र। राज्ञा काललक्षणस्याऽपृष्टत्वात् शुकोक्तौ कालप्रस्तावनायाः किं प्रयोजनमित्याकाङ्क्षायां तत्तात्पर्यमाहुः—आधेयेत्यादि। सृज्यवर्गस्य भोक्तृत्वाद्भोग्यत्वाभावेन मात्रात्वं नोपपद्यत इत्याशङ्क्य, कालतो देहसम्बन्धाज्जीवस्याऽपि भोग्यत्वमिति तेषां मात्रात्वाय कालप्रस्तावनेत्यर्थः। एतेन शास्त्रसङ्गत्यर्थमियं प्रस्तावनेति सैवाऽस्याः प्रयोजनम्, न राजप्रश्नपूर्तिरिति बोधितम्। विदुरप्रश्ने बीजमाहुः—भगवत इत्यादि। कालविभेदेनोत्पत्त्यादिकर्तृत्वं श्रुतवत इत्यन्वयः। तल्लक्षणसहित इति। कालाख्यलक्षणसहितः। कालयतीति काल इति। कलवली (?) कामधेनू। तथा च कलयत्युपादत्त इत्यर्थः। तस्य कलनमिति। भगवत्कृतं कलनम्। यथा आकालन इत्यादिना अद्भुतकर्मणः, बहुरूपस्य, हरेरिति पदत्रयमेवं क्रमेण व्याख्यातं ज्ञेयम्। मार्गत्रयमित्यादि। अस्मिन् पक्षे मूलोक्तक्रमेण कर्मज्ञानभक्तिप्रकाशत्वं बोध्यम्। तादृशस्येति। उक्तरूपस्य भगवतः॥ १०॥ ❀ ❀ गुणव्यतीत्यत्र। तदैवेति। उक्तत्रितयवैलक्षण्य एव। व्यतिकरस्वरूपमाहुः—प्रथम (त) इत्यादि। तथा च गुणाः कार्पासतन्तव इव प्रकृतेः पृथग्भूय पुनरन्योन्यमिलिताः पटावस्थामिव प्राप्नुवन्ति, सा गुणावस्था व्यतिकरः। स येन जायते स काल इत्यर्थः। इदमिति। गुणमेलकम्। तस्य मुख्यत्वे हेतुमाहुः—योऽग्र इत्यादि। निर्विशेषपदं व्याकुर्वन्ति—तस्येति। कालस्य। कार्यधर्मवत्त्वेनेति। कार्यधर्मतुल्यत्वेन। अत्र वतिर्नतु मतुप्, एतदेव स्फुटीकुर्वन्ति—यथेत्यादि। अत इति। अव्याकृततया कार्यधर्मतुल्यत्वाभावेन, सर्वाधारतया कार्याधेयत्वाभावेन

१. उत्पाद्यमानं क. घ.। २. स्वरूपमव्यक्तमेव तिष्ठति ग.।

चोभयविधविशेषणरहितत्वात्। एवं निर्विशेषपदं व्याख्याय पदद्वयसिद्धं लक्षणमाहुः—तस्मादित्यादि। अत्र भगवतो विशेषाणां च वारणाय गुणव्योभहेतुरिति, भगवदिच्छादीनां वारणाय सर्वविशेषरहित इति ज्ञेयम्। नन्वेवं लक्षणसिद्धौ तृतीयविशेषणस्य किं प्रयोजनमित्याकाङ्क्षायां तद्व्याकुर्वन्ति—किञ्चेत्यादि सन्तिष्ठत इत्यन्तम्। तथा च, कालगतविशेषस्योभयधर्मवत्त्वेन लक्षणदूषकत्वात्तद्व्यावृत्त्यर्थं तदित्यर्थः। एतेन कार्यस्याऽपि व्यावृत्तिः। सेति क्रियाशक्तिः। तथा च, यथा रस एव जिह्वा भगवतः क्रियाशक्तिरेव जगतः समवायिकारणं भवतीत्यर्थः। नन्वविकृतायां कथं तथात्वमित्यपेक्षायामाहुः—सा खननादिनेत्यादि। उपादानं कृत्वेति। स्वक्रियापरिच्छिन्नं स्वक्रियाव्याप्तं च कृत्वा। एकस्यैव कथमुपादानत्वं निमित्तत्वम्, कार्यकारणयोश्च कथमैक्यमित्याकाङ्क्षायामंशभेदेन तत्साधयितुं तद्दृष्टान्तमाहुः—एकैवेत्यादि। विकार एवेति। कार्यकारणयोरभेदादाकृतिविशेष एव रूपः। तथा च यथाऽत्र मूलविचारे एकस्याः पृथिव्या एवांशभेदेन धर्मभेदात्कर्तृकरणकार्यभावः, तथा ब्रह्मणोऽपीत्यर्थः। तेन सिद्धं स्वरूपं कालस्याऽऽहुः—तस्मादित्यादि। तत्र प्रमाणमेव गमकमाहुः—स आत्मानमित्यादि। अस्यां श्रुतौ कर्तृकर्मक्रियाः प्रतीयन्ते, तत्र कर्तृत्वं भगवन्निष्ठम्, कर्मत्वं जगन्निष्ठम्, अतस्तद्धर्मद्वयरहितः, 'अकुरुत' इतिपदोक्तक्रियारूपो यः सिद्धयति, स काल इत्यर्थः। तेनेच्छया परिच्छिद्यमाना याऽनेन व्याप्यमाना बाह्या भगवतश्चेष्टारूपा क्रिया (सा) काल इति फलति। एवं च उप आदीयतेऽनेनेत्युपादानम्, तस्योपादानं तदुपादानमित्यपि मूलार्थो वोध्यः॥ ११॥ ❀ ❀ विश्वमित्यत्र। तत्रेति। भगवद्रूपे जगति। तदिति। परिच्छेदकम्। कलयतीति। एकमपि वस्तु परिच्छेदेन भिनत्ति। ननु परिच्छेदकस्य कथमुपादनत्वमित्याकाङ्क्षायामाहुः—तस्येत्यादि॥ १२॥

## श्रीगिरिधरकृता बालप्रबोधिनी

त्रिलोकीरूपेणैव विभागे हेतुमाह—एतावानिति। जीवलोकस्य जीवानां भोगस्थानस्य प्रत्यहं सृज्यस्य संस्थाभेदो रचनाविशेष एतावान् त्रिलोकीरूप एव समाहृतः शास्त्रे महद्भिः कथित इत्यन्वयः। ननु ब्रह्मणोऽपि जीवत्वाविशेषात्तल्लोकस्यापि किमिति प्रत्यहं सृष्टिर्न भवति तत्राह—धर्मस्येति। हि यस्मादनिमित्तस्य निष्कामस्य धर्मस्य दशशताश्वमेधस्य शतजन्मसाधितस्य विपाकः फलरूपोऽसौ परमेष्ठी ब्रह्मा। उपलक्षणमेतत् सत्यलोकस्य महःप्रभृतिलोकानां तद्वासिनां च। त्रैलोक्यस्य काम्यकर्मफलत्वात् प्रतिकल्पमुत्पत्तिविनाशौ भवतः, महःप्रभृतीनां तूपासनासमुचितनिष्कामकर्मफलत्वात्तद्द्विपरार्धपर्यन्तं न नाशः, 'त्रिलोक्यां दह्यमानायां' इत्यादिना चैतत्स्फुटीभविष्यति, तत्रस्थानां च 'ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसञ्चरे॥ परस्यान्ते कृतात्मानं प्रविशन्ति परं पदम्' इति वाक्यात्ततः परं प्रायेण मुक्तिरेवेति ज्ञेयम्। यद्वा ब्रह्मण एवंकरणे कथं सामर्थ्यं भगवदनुग्रहेणेति चेत्, तदनुग्रहेऽपि को हेतुर्येनैवं सामर्थ्यमधिकारश्च दत्त इत्यपेक्षायामाह—धर्मस्येति॥ ९॥ ❀ ❀ 'कालाख्ययासादितलोकतन्त्रः, गुणेन कालानुगतेन, कालेन सोऽन्तः पुरुषायुषा, तत्कालकृतवीर्येण' इत्यादिभिर्जगत्सृष्टिप्रलयादिकं पुरुषप्रयत्नादिकं च सर्वं कालेनैव सिद्धयतीति श्रुत्वा विस्मितस्तद्विशेषं जिज्ञासुर्विदुरः पृच्छति—यदिति। तवैतत्कथने सामर्थ्यमस्त्यतः पृच्छामीति सूचयन् सम्बोधयति—प्रभो इति। तत्रापि सर्वज्ञत्वं हेतुं सूचयन् पुनः सम्बोधयति—ब्रह्मन्निति। हरेर्भक्तानां संसारदुःखहरणशीलस्य भगवतो यत्कालाख्यं लक्षणं स्वरूपं तत्र तत्र त्वमात्थ अब्रवीस्तत् नोऽस्मान्प्रति यथा कथं कालः कल्प्यते किं वा तस्य सूक्ष्मं स्थूलं च रूपमिति यथावद्वर्णयेत्यन्वयः। कालस्य भगवत्स्वरूपत्वे हेतुमाह—बहुरूपस्येति, सर्वरूपस्येत्यर्थः। तत्र हेतुमाह—अद्भुतमाश्चर्यकरं जगज्जन्मादिकर्म यस्य तस्येत्यर्थः॥ १०॥ ❀ ❀ एवं पृष्टो मैत्रेयो विशेषतः कालस्वरूपमुत्तराध्याये वक्ष्यति, सामान्यतस्त्वत्राह—गुणेति। गुणानां सत्त्वादीनां व्यतिकरात् साम्यावस्था-त्यागात् आकारः स्वरूपज्ञानं यस्य स गुणवैषम्यहेतुः काल इति शेषः। अप्रत्यक्षत्वात्कार्यानुमेय इति भावः। अप्रत्यक्षत्वे हेतुमाह—निर्विशेष इति, मूर्तत्वादिप्रत्यक्षहेतुभिर्विशेषरहित इत्यर्थः। अतएवाप्रतिष्ठितः प्रतिष्ठापर्यवसानं तद्रहितः, आद्यन्तशून्य इत्यर्थः। अतएव सृष्ट्यादिनिमित्तत्वमपि तस्य घटते इत्याशयेनाह—पुरुष इति। उपादीयते निमित्ततया स्वीक्रियते इत्युपादानं स काल उपादानं निमित्तं यस्मिंस्तथाभूतमात्मानमेवेश्वरो भगवान् लीलयाऽनायासेनैव विश्वरूपेणासृजत् व्यतिरेकेण सृज्यस्याभावात्। एतच्च वस्तुकथनमात्रं कालेन निमित्तेनासृजदित्येतावदेव विवक्षितम्। एतच्चोक्तं द्वितीये—'कालाद्गुणव्यतिकरः परिणामः स्वभावतः। कर्मणो जन्म महतः पुरुषाधिष्ठितादभूत्॥" इति॥ ११॥ ❀ ❀ स्वव्यतिरिक्तस्य सृज्यस्याभावं दर्शयन् कालस्य सृष्टिनिमित्तमाह—विश्वमिति। विष्णुमायया भगवत्सङ्कल्पेन संस्थितं संहृतमतो ब्रह्मतन्मात्रमेव सद्विश्वमीश्वरेण कर्त्रा कालेन च निमित्तेन परिच्छिन्नं पृथक् प्रकाशितम्। तस्य निर्विशेषतां स्पष्टयन् विशिनष्टि—अव्यक्ता मूर्तिः स्वरूपं यस्य तेनेति॥ १२॥

## हिन्दी अनुवाद

जीवोंके भोगस्थानके रूपमें इन्हीं तीन लोकोंका शास्त्रोंमें वर्णन हुआ है, जो निष्काम कर्म करनेवाले हैं, उन्हें महः, तपः, जनः और सत्यलोकरूप ब्रह्मलोककी प्राप्ति होती है॥ ९॥ ❀ ❀ विदुरजीने कहा—ब्रह्मन्! आपने अद्भुतकर्मा

१. लोकानाम्।

विश्वरूप श्रीहरिकी जिस काल नामक शक्तिकी बात कही थी, प्रभो! उसका कृपया विस्तारपूर्वक वर्णन कीजिये ॥ १० ॥ ❀ ❀ श्रीमैत्रेयजीने कहा—विषयोंका रूपान्तर ( बदलना ) ही कालका आकार है। स्वयं तो वह निर्विशेष, अनादि और अनन्त है। उसीको निमित्त बनाकर भगवान् खेल-खेलमें अपने आपको ही सृष्टिके रूपमें प्रकट कर देते हैं ॥ ११ ॥ ❀ ❀ पहले यह सारा विश्व भगवान्‌की मायासे लीन होकर ब्रह्मरूपसे स्थित था। उसीको अव्यक्तमूर्ति कालके द्वारा भगवान्‌ने पुनः पृथक्‌रूपसे प्रकट किया है ॥ १२ ॥

**यथेदानीं तथाग्रे च पश्चादप्येतदीदृशम्। सर्गो नवविधस्तस्य प्राकृतो वैकृतस्तु यः ॥ १३ ॥**
**कालद्रव्यगुणैरस्य त्रिविधः प्रतिसंक्रमः। आद्यस्तु महतः सर्गो गुणवैषम्यमात्मनः ॥ १४ ॥**
**द्वितीयस्त्वहमो यत्र द्रव्यज्ञानक्रियोदयः। भूतसर्गस्तृतीयस्तु तन्मात्रो द्रव्यशक्तिमान् ॥ १५ ॥**
**चतुर्थ ऐन्द्रियः सर्गो यस्तु ज्ञानक्रियात्मकः। वैकारिको देवसर्गः पञ्चमो यन्मयं मनः ॥ १६ ॥**

### श्रीधरस्वामिविरचिता भावार्थदीपिका।

अप्रतिष्ठितत्वं दर्शयितुं तत्कार्यविश्वप्रवाहस्याप्रतिष्ठामाह। यथेदानीमस्ति तथाऽग्रे पूर्वमप्यासीत्पश्चादपि भविष्यति। एवं सामान्यतः कालं निरूप्य विशेषतो निरूपयिष्यन्तन्निमित्तस्य सर्गस्य पूर्वोक्तानेव भेदाननुवदति सर्व इति। यस्तु प्राकृतो वैकृतश्च स दशमः ॥ १३ ॥ ❀ ❀ तन्निमित्तमेव त्रिविधं प्रलयमाह। कालेनैव केवलेन नित्यः प्रलयः। द्रव्येण संकर्षणाग्न्यादिना नैमित्तिकः। गुणैः स्वस्वकार्यं ग्रसद्भिः प्राकृतिकः तानेव सर्गान् प्रपंचयति आद्य इत्यादिना यावदध्यायसमाप्ति। महतो लक्षणमात्मनो हरेः सकाशाद् गुणानां वैषम्यमिति ॥ १४ ॥ ❀ ❀ अहमोऽहंकारस्य तस्य लक्षणम्। यत्रेति। द्रव्यादयो वक्ष्यमाणास्त्रयः सर्गाः तृतीयस्तन्मात्रो भूतसर्गः भूतसूक्ष्मसर्गः इत्यर्थः। द्रव्यशक्तिमान्महाभूतोत्पादकः ॥ १५ ॥ ❀ ❀ ज्ञानकर्मेन्द्रियात्मकश्चतुर्थः। पंचमो वैकारिकः इन्द्रियाधिष्ठातारो देवा मनश्च ॥ १६ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

तत्कार्यं कालकार्यम्। तन्निमित्तस्य कालनिमित्तकस्य पूर्वोक्तान्पंचमाध्यायोक्तान् महदादिसर्गान्। दशम इति शेषः। प्राकृतवैकृतोभयात्मकः कौमार इत्यर्थः ॥ १३ ॥ ❀ ❀ तन्निमित्तं कालनिमित्तकमेव। आदिना वृष्ट्यभावादिग्रहः ॥ १४ ॥ ❀ ❀ इत्यर्थ इति द्रव्यशक्तिमानित्यग्रिमोक्तेरिति भावः। तेषां भूतानां मात्राः सूक्ष्मावस्था यस्मिन्स तन्मात्रः। तुशब्दः पादपूरणे। 'तुहिचस्मह्वैपादपूरणे' इत्यमरः ॥ १५ ॥ ❀ ❀ चतुर्थस्तैजसाहंकारकार्य इत्यर्थः। वैकारिकः सात्त्विकाहंकारकार्यरूपं मनोपि पंचमसर्गांतर्भूतमेवेत्यर्थः। एते पंच सर्गाः प्राधानिका उक्ताः ॥ १६ ॥

### श्रीराधारमणदासगोस्वामिचरणविरचिता दीपिनी व्याख्या

यथेत्यर्धकम्। कालस्याप्रतिष्ठितत्वमाद्यन्तशून्यत्वं दर्शयितुं तत्कार्य्यमिति। कालकार्य्यस्य विश्वप्रवाहस्य विश्वपरम्पराया अपि आद्यन्तशून्यतामाह। पूर्वं प्रलयस्यादौ पश्चात् उत्तरप्रलयान्ते ईदृशं पञ्चमहाभूतसप्तसमुद्रात्मकमेव भविष्यति, न तु षष्ठमहाभूतादि रूपं, कल्पितत्वे कदाचित्तथात्वमपि प्रसज्येतेत्यतोऽस्य न मिथ्यात्वं किन्तु नश्वरत्वमेवेत्यर्थः। तथा क्वचिन्मिथ्यात्ववर्णनं स्वतन्त्रसत्तानिषेधवैराग्यादिपरत्वेनोपसर्जनमेव नतु मुख्यमिति व्यञ्जितं तन्निमित्तस्य कालनिमित्तकस्य पूर्वोक्तान् पञ्चमाध्यायोक्तान्महदादिलक्षणान् भेदान् विशेषान् तत्र केचित्प्राकृता ईश्वरसृष्टाः केचिच्च वैकृता ब्रह्मसृष्टाः स तु दशमः य उभयात्मको वक्ष्यमाणः तन्निमित्तं कालकारणम् ॥ १३ ॥ ❀ ❀ तान्नवविधान् वैषम्यं प्रथमवैषम्यस्य विकार इति महतो लक्षणं यत्र द्वितीयसर्गे द्रव्यमधिभूतं ज्ञानमधिदैवं क्रियाऽध्यात्मं तेषामुत्पादकत्वमहङ्कारस्य लक्षणम् ॥ १४ ॥ ❀ ❀ तन्मात्रस्तेषां महाभूतानां मात्रा सूक्ष्मावस्था यस्मिन्भूतसूक्ष्मसर्गे तथा च विश्वप्रकाशः मात्रा इत्यारभ्याल्पे च परिच्छद इति अत्र प्रतिपत्तिगौरवादित्यर्थं इत्युक्तम् ॥ १५ ॥ ❀ ❀ यन्मयं सात्त्विकाहंकारकार्य्यस्वरूपं द्वितीयस्तुशब्दः पादपूरणे 'तु हि च स्मह्वै पादपूरण' इत्यमरः ॥ १६ ॥

### श्रीमद्वीरराघवव्याख्या

सृष्टिसंहारदशासु सर्वत्र कालस्यानुगतिमाहार्धेन यथेति। इदानीं सृष्टिदशायां यथा सर्वं कालपरिच्छिन्नं तथाग्रे सृष्टेः प्राक्प्रलये पश्चादपि भाविप्रलयसृष्ट्योरपि एतत् जगदीदृशं कालपरिच्छिन्नमेवेत्यर्थः। न च कालपरिच्छिन्नत्वेनानित्यत्वं शङ्क्यम् अवस्थानां कालपरिच्छिन्नत्वेऽप्यवस्थावतो द्रव्यस्य नित्यत्वात् तथा च वैष्णवं वचः "तदेतदक्षयं नित्यं जगन्मुनिवराखिलम् आविर्भाव-

---

१. प्रा० पा०—यन्मनोमयः।

तिरोभावजन्मनाशविकल्पव" दिति । एवं सर्वस्यापि परिच्छेदकः काल इति सामान्यतः कालरूपमप्युक्तं भवति ॥ १३ ॥ ❀ ❀ एवं कालकाल्यवस्तुसृष्टिमनूद्य अथ तत्सर्गभेदान्प्रलयभेदांश्च कालादीननुवदति । सर्ग इत्यादिना दशैते विदुरेत्यन्तेन । तस्य कालकाल्यस्य वस्तुनः प्राकृतो वैकृतश्च यः उभयात्मकः सर्गः स नवविधः । आद्यो महत्सर्गः द्वितीयस्त्वहंकारसर्गः भूतवर्गस्तृतीयः इन्द्रियसर्गश्चतुर्थः मनःसर्गः पञ्चमः अण्डसर्गः षष्ठः एते षट्सर्गाः प्राकृताः । तस्थुषां सर्गः सप्तमः तिरश्चामष्टमः सर्गः नृणां सर्गो नवमः । एते त्रयो वैकृताः मिलित्वा नवविध इत्यर्थः । अथ प्रलयान् विभजति कालेत्यर्द्धेन । अस्य कालकाल्यस्य प्रतिसंक्रमः प्रलयः कालद्रव्यगुणैस्त्रिविधः कालेनास्मिन्कालेऽस्य मृतिरिति नियतेन कालेन प्रलयो नित्यप्रलयाख्यः कालिक एकः द्रव्येण संकर्षणमुखाग्न्यादिना प्रलयो नैमित्तिकप्रलयाख्यः द्रव्यप्रलयो द्वितीयः गुणैः सत्त्वादिभिः साम्यावस्थैर्जातः प्राकृतप्रलयाख्यस्तृतीयः ॥ १४ ॥ ❀ ❀ नवविधानेव सर्गान्प्रपञ्चयति । आद्य इत्यादिना अर्वाक्स्रोतस्तु नवम इत्यन्तेन । आत्मनः कार्योन्मुखप्रकृतिपुरुषशरीरकात्परमात्मनः सकाशाद् गुणवैषम्यकृतो महत्तत्वस्य सर्गः स आद्यः वैषम्यापन्नगुणत्रयात्मकप्रकृतिविकारविशेषो महत्सर्गः प्रथम इत्यर्थः । अहमः अहंकारस्य द्रव्यज्ञानक्रियादयः द्रव्यं भूतपञ्चकं ज्ञानक्रियाशब्दाभ्यां ज्ञानकर्मेन्द्रियोक्तिः आदिशब्दात् मनस्तन्मात्राणि चोक्तानि । एते यत्र यस्मादहमः उत्पन्नास्तस्याहमः सर्गो द्वितीय इत्यर्थः ॥ १५ ॥ ❀ ❀ भूतसर्गस्तृतीयस्तदेवोपपादयति । तन्मात्रद्रव्यशक्तिमानिति । तन्मात्राणि शब्दादीनि पञ्चद्रव्याणि आकाशादीनि पञ्च एतान्येव शक्तयोऽस्य सन्तीति तद्वान् तन्मात्रद्रव्याणां भगवच्छरीरत्वाच्छक्तिशब्देनोक्तिः । यथा "परस्य ब्रह्मणः शक्तिस्तथेदमखिलं जगत् । यस्य पृथिवी शरीर" मित्यादितद्वत् तन्वंशशक्त्यादिशब्दाः पर्याया इति पुरस्तादेवोक्तम् अत्र मतुप्प्रत्ययेनावगतसंबन्धसामान्यं विषयविषयिभावरूपसंबन्धविशेषे पर्यवसन्नं यथा गामानयेत्युक्ते गोशब्दस्य विवक्षितप्रकृतगोव्यक्तिविशेषपर्यवसानम् , तथा चायमर्थः भगवच्छरीरभूततन्मात्रद्रव्यविषयकः सर्गस्तृतीय इति । तन्मात्रो द्रव्यशक्तिमानिति पाठे तु तृतीयो भूतसर्गो द्विविधः तन्मात्रः शब्दादितन्मात्रसर्गः द्रव्यशक्तिमान् द्रव्यशक्तिविषयश्चेति समासव्यासरूपेण व्याख्येयं ज्ञानकर्मक्रियात्मकः ज्ञानकर्मेन्द्रियविषयः यस्त्विन्द्रियसर्गः स चतुर्थ इत्यर्थः । वैकारिकः सत्त्वोद्रिक्तः दैवसर्गः इन्द्रियाभिमानिदिग्वातादिदेवसर्गो यः स पञ्चमः, यन्मयं मनः यद्वैकारिकाहंकारकार्यं मनः तद्वैकारिकाहंकारोद्रिक्तो दैवसर्गः पञ्चम इत्यर्थः । यद्यपीन्द्रियाभिमानिदेवतानां सर्गस्याण्डसृष्ट्यनन्तरं चतुर्मुखकर्तृकत्वेन न वैकारिकाहंकारसर्गान्तर्भावः, अत एव वैकृतास्त्रय एवैते देवसर्गश्च सत्तम ।' इति देवसर्गस्य वैकृतत्वं वक्ष्यते तथापीन्द्रियप्रसंगाद्वाद्वस्थतया तेषां कथनं ननु वैकारिकत्वविवक्षया । सर्वेषामिन्द्रियाणां वैकारिकाहंकारादेव उत्पत्तेर्दिगादिदेवताधिष्ठेयश्रोत्रादीन्द्रियोत्पत्त्यभिप्रायेण वा देवसर्ग इत्युक्तं, ननु सर्वेन्द्रियाणां वैकारिकत्वे कथं चतुर्थस्त्वैन्द्रियसर्गः यस्तु ज्ञानक्रियात्मकः इति पञ्चमसर्गानन्तर्भावेन चतुर्थसर्गत्वकथनमिति चेन्न अन्तरिन्द्रियत्वबाह्येन्द्रियत्वरूपवैधर्म्येण मनः सर्वेन्द्रियवर्गसर्गयोः पृथग्गणनात् । न चैतावतेन्द्रियाणामवैकारिकत्वशङ्का कार्या, तैजसस्य वैकारिकभूतादेरनुग्राहकत्वेन स्वत इन्द्रियोत्पादकत्वस्य द्वितीये निरस्तत्वात् ॥ १६ ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

तदुपादानं सोऽव्यक्तलक्षणो बोध उपादानं कार्याधिकरणं यस्य स तथा तं तदुपादनमात्मानमेव चेतना । चेतनस्वरूपेणासृजदात्मानमसृजदित्युक्तत्वादाकाशादेरविद्यमानस्यैवोत्पत्तिर्नैतत्सारं यतो विश्वमाकाशादिब्रह्मतन्मात्रं प्रलयकाले बभूव, तत्कथं संस्थितं प्रलीनं नष्टमिति यावत् । विष्णुमायया व्याप्तस्य ब्रह्मणो मायया व्यक्तलक्षणया ईश्वरेण परिच्छिन्नं विषयीकृतं कालेन कलनात्मकेन ज्ञानस्वरूपेण साक्षिणाऽव्यक्तमूर्तिना चक्षुराद्यगम्यस्वरूपेणेति त्रैकालिकासत्त्वेन व्याख्यानमयुक्तं प्रपञ्चत्रैकालिकाबाध्यत्वस्यानुमानसिद्धत्वादित्याह । तथेति । यथेदानीं सृष्टिकाले अर्थक्रियाकारित्वात्सत्यत्वमनुभूयते तथाग्रे सृष्टेः पूर्वं प्रलये पश्चादुत्तरत्राप्येतज्जगदीदृशं सत्यमित्यनुमातव्यं यथेदानीं कारणरूपेण सच्चैतन्यं दृश्यमाकाशादिकार्यमुपलभ्यते तथा अग्रे लयकाले च कारणरूपेण सच्चैतन्यं दृश्यमिति चानुमातव्यमिति त्रैकालिकासत्त्वेऽयं दृष्टान्त इति चेन्न, अस्मदुक्तस्य प्रमाणानुकूल्यादन्यस्यानानुकूल्यादनर्थहेतुत्वाच्च । तदुक्तं "सृष्टिश्च प्रलयश्चैव संसारो मुक्तिरेव च । देवर्षिप्रभृतयो लोका लोका भूरादयस्तथा । अनाद्यनन्तकालीनाः सर्वदैकप्रकारतः । जगत्प्रवाहः सत्योऽयं नैव मिथ्या कथंचन । ये त्वेतदन्यथा ब्रूयुः सर्वहंतार एव त" इत्यादिप्रवाहरूपेण सत्यस्य विश्वस्य सर्गस्य नवविधत्वाच्च सत्यत्वं सिद्धं नहीन्द्रजालवन्मिथ्याभूतस्य नियतसंख्याविषयत्वमनेकविधत्वात्तस्येति भावेनाह । सर्ग इति । तस्य विश्वस्य 'विधा विधौ प्रकारः स्यादि'त्यभिधानं प्रकृतिविकृतत्वाच्च नानिर्वाच्यमायाकृतमित्याह । प्राकृत इति । यः सर्गः प्राकृतो वैकृतश्चेत्यन्वयः । "अव्यक्ताद्याः पृथिव्यन्ताः सर्गाः प्रकृतयः स्मृताः । तदुपादानकः सर्गः प्राकृतः परिपठ्यते । अण्डन्तु विकृतं ज्ञेयं तज्जो वैकृत उच्यत" इति वचनात् अण्डाद्बहिः सर्गः प्राकृतः विकृताण्डान्तस्थः सर्गो वैकृत इति ज्ञातव्यम् । चशब्देन मायामयस्य परिणामादर्शनं लिङ्गमिति सूचयति, स्वरूपादप्रच्युतादन्यथा स्फुरणं मायेत्यङ्गीकारात् ॥ १३ ॥ ❀ ❀ प्रतिपन्नोपाधौ सत्त्वप्रतिषेधवद्बाधाभावाच्च सत्य इति भावेनाह । कालेति । अस्य विश्वस्य प्रतिसंक्रमः प्रलयाख्यो नाशः कालद्रव्यगुणनिमित्तभेदेन त्रिविधो ज्ञेयः । शतवर्षादिसंख्याज्ञातः कालतः घटादिर्मुसलादिना द्रव्यतः प्रवृद्धेन सत्त्वेन तामसज्ञान-

मुल्बणेन तमसा सात्त्विकं सुखं कचिदुद्रिक्तेन रजसा सात्त्विकतामसयोरपि कचित्सत्त्वेन राजसतामसयोरपीत्यादिको विलयो गुणतः । "रजस्तमश्चाभिभूय सत्त्वं भवतीत्युदाहृतं तामसस्य पदार्थस्य सत्त्वं हि लयकारणम् । सात्त्विकस्य तमश्चैव तयोरपि रजः-कचित् । गुणतोऽयं लयः प्रोक्तो द्रव्यतस्तु विरोधिना । कालतः कालसंख्याको लयः सर्वस्य वस्तुन" इति वचनाच्च विश्वस्य त्रैकालिकासत्त्वलक्षणो बाधो नोपपन्न इति तत्र प्राकृतवैकृतयोर्मध्ये प्राकृतसर्गमाह । आद्य इति । आत्मनः परमात्मनः सकाशाद् गुण-वैषम्यनामको महतश्चतुर्मुखदेहस्य तदभिमन्यमानमहत्तत्वस्य च प्राकृतेष्वाद्यः सर्ग उच्यते । अत्रेदमाकूतं तमोगुणाद्रजोगुणो द्विगुणः रजोगुणात्सत्त्वगुणो द्विगुणः एवं प्रकृतिजानां गुणानां परिमाणं स्यात्तत्र त्रिगुणेषु सत्त्वगुणः केवलो रजस्तमोभ्यामविमिश्रः रजो-गुणस्तु त्रिविधः। तथाहि मूलं रजसि रजोगुणाच्छताधिकः सत्त्वगुणः, रजःशतांशस्तमोगुण इति रजोराशिः मूलतमोगुणोऽपि त्रिविधो-मूलतमसि तमोगुणाद्दशगुणाधिकः सत्त्वगुणः रजस्तमस एकादशधा विभक्तादेकांशसंमितमेवं गुणानां निजस्थितिः । तत्र प्रलये मूलरज एकादशधा विभक्तं दशांशेन शुद्धसत्त्वेन मिश्रितं भवति, एकांशेन मूलतमस्यपि मिश्रितं स्यादेतां गुणानां साम्यावस्थामाहुः । तत्र यदा मूलसत्त्वेन संगतं दशांशं तद्रजः सर्वं तन्मूलतमसा सह संगतं संयुक्तं भवति तदा महत्तत्त्वं समुत्पन्नमाहुः । तत्केवलसत्त्व-गुणमुच्यते प्रलये मूलसत्त्वेन संगतं मूलरजः मूलतमसि संगतं मूलरजः मूलरजसि स्वाभाविकं रज इति रजांस्येव त्रिभागा एकां-शस्तम इति चतुर्भागाः । एषां संयोगेनोत्पन्नवैषम्यनामकं महत्तत्त्वं ब्रह्मणो रूपमिति । तदुक्तम् —

तमसो रजस्तु द्विगुणं रजसः सत्त्वमेव च । परिमाणत एवं स्युस्त्रयः प्रकृतिजा गुणाः ॥
तत्र सत्त्वं केवलं स्याद्रजस्यपि शताधिकम् । सत्त्वं रजःशतांशस्तु तमस्तत्र प्रकीर्तितम् ॥
तमस्यपि तथा सत्त्वं तमसस्तु दशोत्तरम् । तद्दशांशेन तु रजोमूलजं यद्रजस्तु तत् ॥
विलये दशांशतः सत्त्व एकांशेन तमस्यपि । मिश्रितं भवति ह्येतां साम्यावस्थां विदुर्बुधाः ॥
यदा तु तद्रजः सर्वं तमसा सह सङ्गतम् । तदा त्वाहुर्महत्तत्वं तच्चतुर्भागसंभवम् ॥
तत्र त्रिभागो रजस एकांशस्तमसस्तथा । तदाहुर्ब्रह्मणो रूपं गुणवैषम्यनामकम् ॥
तदेवं केवलं सत्त्वमितरापेक्षया भवेत् । श्रीर्मूलसत्त्वं विज्ञेया भूर्मूलं रज उच्यते ॥
मूलं तमस्तथा दुर्गा महालक्ष्मीस्त्रिमूलिका । गुणेभ्यो गुणमूलाच्च योऽतीतः स जनार्दनः ॥

इति ॥ १४ ॥ ❀ ❀ द्वितीयसर्गमाह । द्वितीय इति । द्वितीयोऽहंकारस्य सर्गः । तत्राहंकारसर्गे द्रव्याणि वियदादि-भूतानि ज्ञानक्रिया ज्ञानेन्द्रियाणि कर्मेन्द्रियाणि आदिशब्दगृहीता मनइन्द्रियाभिमानिदेवाश्च जायन्त इति शेषः भूतादीनां सर्ग-क्रमेण तृतीयादित्वेनाह । भूतसर्ग इति । भूतानामाकाशादीनां सर्गस्तन्मात्रद्रव्यशक्तिमान् तन्मात्राः शब्दादयः । आकाशादीनां शब्दादिस्वरूपत्वात्तन्मात्रशक्तिमान् द्रवणशक्तिमत्वाद्द्रव्यशक्तिमान् अहंकारत्वेऽपि गुणवैषम्यमस्तीति ज्ञातव्यं तथाहि मूले रजसि यद्रजोमूले तमसि यत्तम एतदात्मकं महत्तत्वं ब्रह्मणो रूपमेकादशधा विभज्य दशांशाः सत्त्वं स्युः एकांशो रजः रज एकादशधा विभज्यैकांशस्तमस्तस्मात्तमस उत्पन्नोऽहंकारस्तदभिमन्यमानमहंकारतत्त्वं चेति महतोऽहंकारसर्गः । सोऽहंकारोऽपि त्रिविधः, तस्मिन्नहंकारेऽपि दशांशाः सत्त्वमेकांशो रजस्तद्रज एकादशधा विभज्यैकांशस्तमस्तमोंऽशात्तामसाहंकारः रजोंऽशात्तैजसाहंकारः सत्त्वांशाद्वैकारिकाहंकार इति । तत्रापि तामासाद्भूतसर्गः तैजसादिन्द्रियसर्गः वैकारिकाद्देवसर्गः ।

यद्रजो मूलरजसि मूले तमसि यद्रजः । तमश्च मूले तमसि महत्तत्त्वं तदात्मकम् ॥
दशांशास्तत्र सत्त्वं स्युरेकांशो रज एवतु । तद्दशांशं तमो ज्ञेयमहंकारस्तदात्मकः ॥
स रुद्रस्तामसो ज्ञेयो विरञ्च्यापेक्षयैव तु । इतरापेक्षया सत्त्वं सत्त्वाद्यास्तद्वयस्य तु ॥
तत्तमोंऽशात्सात्त्विकांशो मनआद्याः प्रकीर्त्तिताः । रजसोंऽशास्त्विन्द्रियाणि तमसोंशाश्च खादयः ॥

इति वचनादिदं तात्पर्यमवगम्यते ॥ १५ ॥ ❀ ❀ ज्ञानक्रियात्मको ज्ञानेन्द्रियकर्मेन्द्रियात्मकः पञ्चमो वैकारि-काहंकाराद्वैकारिकनामादेव सर्गः इन्द्रियप्रेरकत्वेनातिविकारित्वाद्वैकारिकनामवत्त्वं तेषां यस्माद्वैकारिकाहंकारादुत्पन्नत्वान्मनश्च यन्मयमित्युच्यते ।

भूतानि द्रव्यशक्तीनि भूतेषु द्रवणं यतः । तथा तन्मात्रशक्तीनि शब्दाद्यात्मकता यतः ॥
क्रियाशक्तीनि वागाद्यानीन्द्रियाणीतराणि च । ज्ञानशक्तीनि मनसा देवाश्च ज्ञानशक्तयः ॥
एतेषां मूलभूतत्वादहंकारस्त्रिशक्तिमान् । मानुषापेक्षया देवाः सात्त्विकाः परिकीर्तिताः ॥
तत्रापि सात्त्विकाः प्रोक्तास्सात्विका यास्तु देवताः । तत्रापि सात्त्विको रुद्रस्तत्रापि तु चतुर्मुखः ॥
अविकारौ ब्रह्मरुद्रौ देहभेदादिसंभवे । विकारवन्त इन्द्राद्यास्तस्माद्वैकारिका मताः ॥
त एतेन्द्रियरूपेण यतस्स्वतिविकारिणः । ज्ञानमात्रगुणोद्रिक्तास्तस्मात्तैजसनामकाः ॥

अविकारित्वयोग्यत्वं निवृत्तं हीन्द्रियेषु तु । वैकारिकत्वनामापि ततस्तेषां न विद्यते ॥
यथा विप्रकुले मूर्खो मूर्खं इत्यभिधीयते । विद्यायोग्यत्वतः शूद्रो न मूर्खो मूर्ख एव सन् ॥
तामसानीह भूतानि किञ्चिद्व्यवहितत्वतः । ज्ञानस्य सुष्ठु ज्ञत्वेऽपि पूर्णज्ञानो हरिः स्वयम् ॥
इति वचनात् तुशब्दचतुष्टयसूचित एषां विशेषो ज्ञातव्यः ॥ १६ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

यथेत्यर्धकम् । ईदृशं पूर्वोक्तप्रकारेण प्रलयाद्यात्मकं सर्ग इति प्राकृतो वैकृतस्त्विवति । तत्र केचित् प्राकृता ईश्वरसृष्टाः केचिच्च वैकृता ब्रह्मसृष्टा इत्यर्थः । उभयात्मकस्तु वक्ष्यते ॥ १३ ॥ ❀ ❀ आद्यस्त्वित्यत्र यत्रेति पूर्व्वेणापि सम्बध्यते । यत्र महतः सर्गे आत्मनो जीवस्य गुणवैषम्यं भवतीति यद्यपि पद्मकल्पेऽस्मिन् पूर्व्वसिद्धत्वान्महदादीनां सर्गो नास्ति तथापि तदुद्देशः सूक्ष्मसूक्ष्मक्रमबोधार्थ एव ॥ १४ ॥ ❀ ❀ तन्मात्रः तेषां भूतानां मात्रा सूक्ष्मावस्था यस्मिन् सः ॥ १५ ॥ ❀ ❀ यस्त्विवति तुशब्दः पादपूरणे । 'तु-हि-च-स्म-हे-वै-पादपूरण' इत्यमरः ॥ १६ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

नन्वाद्यन्तयोरसत्त्वादसदेव विश्वमित्यतोऽसत्यस्य विश्वस्य किं परिच्छिन्नत्वाद्युक्त्येति चेन्मैवं वाच्यमित्याह । यथेति । अग्रे पूर्वं महाप्रलयस्यादावपि एतद्विश्वमासीदेव । पश्चादुत्तरप्रलयान्तेऽपि भविष्यत्येवेत्यतोऽस्य न मिथ्याभूतत्वं किन्तु नश्वरत्वमेवेति भावः ॥ १३ ॥ ❀ ❀ एवं सामान्यतः कालं निरूप्योत्तराध्याये विशेषतो निरूपयिष्यन् तन्निमित्तं सर्गं विस्तरेणोक्तं वक्ष्यमाणञ्च सुखबोधार्थं संक्षेपतो दशविधत्वेन संकलयति । सर्ग इति । यस्तु प्राकृतो वैकृतश्च स दशम इति शेषः । तन्निमित्तमेव त्रिविधं प्रलयमाह कालेनैव केवलेन नित्यः प्रलयः द्रव्येण संकर्षणाग्न्यादिना नैमित्तकः । गुणैः स्वस्वकार्य्यं ग्रसद्भिः प्राकृतिकः ॥ १४ ॥ ❀ ❀ तानेव सर्गान् विवृणोति । आद्य इत्यादिना यावदध्यायसमाप्ति । महतो लक्षणं आत्मनः परमेश्वरात् सकाशात् गुणानां वैषम्यं प्रथममहमोऽहंकारस्य तस्य लक्षणं यत्रेति । द्रव्याणि भूतानि ज्ञानानि ज्ञानेन्द्रियाणि देवता मनश्च क्रिया कर्म्मेन्द्रियाणि । तेषामुदयो यतः सः ॥ १५ ॥ ❀ ❀ भूतसर्गः तन्मात्रः तन्मात्रात्मकः द्रव्येषु महाभूतेषु शक्तिमान् तत्प्रकाशनसमर्थश्चेत्यर्थः । ज्ञानकर्म्मेन्द्रियाणामात्मा स्वरूपं यतः ॥ १६ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

ननु विश्वस्यानित्यत्वे सृष्टेः पूर्वं प्रलयतः पश्चाच्च विश्वाभाव एव किमित्यत आह । यथेति । यथेदानीं भावरूपं तथा चाग्रे सृष्टेः पूर्वं पश्चात्प्रलयानन्तरमीदृशं भावरूपमेव । कार्य्यावस्थाया एवानित्यत्वं कारणरूपेण तु नित्यमेव । तथोक्तं वैष्णवैः "तदेतदक्षयं नित्यं जगन्मुनिखराखिलम् । आविर्भावतिरोभावौ जन्मनाशविकल्पवत्" इति ॥

एवं विश्वसृष्ट्यादिनिमित्ततया कालं सामान्यतो निरूप्य । विशेषतस्तं निरूपयिष्यन् कालपरिच्छिन्नस्य सर्गस्य पूर्वोक्तानेव भेदाननुवदति । सर्ग इत्यादिना । षड्विधः प्राकृतः त्रिविधो वैकृतः इत्येवं नवविधः यस्तु प्राकृतो वैकृतः स दशम इत्यर्थः ॥ १३ ॥ ❀ ❀ सृष्टिप्रसङ्गात्कालनिमित्तं त्रिविधं प्रलयमाह । काल इति । कालेन नित्यः प्रलयः द्रव्येण सङ्कर्षणाग्न्यादिना नैमित्तिकः गुणैः सत्त्वादिभिः स्वकार्यं ग्रसद्भिः प्राकृतिकः । दश सर्गान्प्रपञ्चयति । आद्य इत्यादिना । 'दशैते विदुराख्याताः सर्गास्ते विश्वसृक्कृताः' इत्यन्तेन । आत्मनो हरेः सकाशात् गुणानां स्वशक्तिगुणानां वैषम्यं नाम महतः सर्गः ॥ १४ ॥ ❀ ❀ यत्र यस्मात् द्रव्यादीनां वक्ष्यमाणानां त्रिविधसर्गाणामुदयः तस्याहमः अहङ्कारस्य सर्गः तृतीयस्तु भूतसर्गः कथंभूतः तन्मात्रः शब्दादितन्मात्रप्रधानः द्रव्यशक्तिमान् आकाशादिमहाभूतान्येव शक्तयः शब्दादितन्मात्रकार्य्याणि यस्य सन्ति स तथा ॥ १५ ॥ ❀ ❀ ज्ञानेन्द्रियकर्मेन्द्रियात्मकश्चतुर्थः वैकारिकः सात्त्विकाहंकाराज्जातो यन्मयं मनः स मनःसहित इन्द्रियाधिष्ठातृदैवसर्गः पञ्चमः ॥ १६ ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

तस्योपादानत्वं कार्ये प्रदर्शयति—यथेदानीमिति । कालस्य नित्यत्वात् तदुपादानकं जगन्नित्यमेव, परं यथोपादानत्वमुपदिश्यते । भूतादिव्यपदेशाः कालकृताः । कालो हि निरन्तरं वर्तमानो जलप्रवाहवत् पूर्वपूर्वमुत्तरो बाधते । तदा तदाधारेण जातविकारं जगत् भूतत्वेन व्यपदिश्यते । वर्तमानोऽपि काल एव । देशापेक्षाभावात् नाऽऽपेक्षिकं वर्तमानत्वम् । जलादौ तु देशापेक्षाया विद्यमानत्वात् आपेक्षिकैव वर्तमानता भवति । अतो यादृशः कालः, तादृशं जगत् । कालाधीने त्वेषैव व्यवस्था । अवान्तरकालानां मूलभूतः कालो नियामको जीवानामात्मा भगवानिव । अतः स्वभावतस्तुल्यत्वादवान्तरभेदो विवक्षयोच्यते । इदानीं यथा जगत्, अग्रेऽपि तथैव भविष्यति, पश्चादप्येतदीदृशमेव । अतोऽस्य जगतः कालनियामकत्वान्न मायिकत्वम् । तस्मात्कात्स्न्र्येनाऽभिव्यक्तस्वरूपत्वात् ब्रह्मरूपं जगत् ॥ १३ ॥ ❀ ❀ एवं कालोपादानत्वं जगतो निरूप्य, कालस्याऽऽधि-

दैविकं स्वरूपमुक्त्वा, आधिभौतिकं स्वरूपं निरूपयति—सर्गो नवविध इत्यादिना यावदध्यायपरिसमाप्ति। आध्यात्मिकभेदानग्रिमाध्याये वक्ष्यति। तावता साधारणानां मात्रेन्द्रियाणां काल एव नियामकः। तेषां बुद्धिस्तु वेदात् ब्रह्मादिभिश्च, अतो भगवदधीनास्ते भगवदाज्ञया संसारे प्रवृत्ताः। भगवान् भगवदाज्ञा च तेषां मूलम्, महाभूतवत्। विषयेन्द्रियाणि तु कालाधीनान्येव कालरूपाणि। ता मात्रास्त्रिविधा इत्याध्यात्मिकानाधिभौतिकांश्च निर्दिशति—सर्गो नवविध इति। प्राकृत आधिभौतिकः षड्विधः। वैकृत आध्यात्मिकस्त्रिविधः। उभये नवविधाः। तुशब्दो वैकृते भेदान्तरमस्तीति ज्ञापकः। वैकृतोऽप्याध्यात्मिकात् वैकृतात् भिन्न आधिदैविकः। अत एव यः प्रसिद्धः। उत्पत्तिर्नवविधा, त्रिविधानामपि गुणानामुत्पादकत्वात्। प्रतिसंक्रमस्तु त्रिविधः, तामसानामेव नियामकत्वात्। तत्राऽधिकारिणस्त्रयः, कालो द्रव्यं गुणाश्चेति। कालेन पदार्थाः प्रकृतौ प्राप्यन्ते। द्रव्यैर्वायुदण्डादिभिर्गुणैर्विरोधिभिर्विरुद्धा गुणाः प्रादुर्भूताः। कर्मणा विहितप्रकारेण देवादिभावे प्राप्ते मानुषादिभावा निवर्तन्त इति सत्त्वादिभिरेव पूर्वस्य प्रलयः। नियतस्तु कालकृतः प्रलयः, अनियतावितरौ॥ १४॥ ❀ ❀ सर्गाणां नवविधत्वमुपपादयति—

> आद्यस्त्विति। सर्गा अत्र विभेदेन कालतः क्रियया तथा। अतस्तत्त्वेऽपि षड्भेदाः पारम्पर्यं न दूषणम्॥ १॥
> महत्त्वेन प्रकारेण जगत्सर्वं तथोद्गतम्। अतो जगत एवाऽत्र सर्गो हेतुर्महान् पुनः॥ २॥
> भूतमात्रेन्द्रियधियां जन्म सर्ग उदाहृतः। तच्चतुष्टयमत्राऽस्ति तेन सर्गत्वमस्य हि॥ ३॥

तुशब्दः पक्षं व्यावर्तयति। महत्तत्त्वस्य न केवलं जन्ममात्रम्, किन्तु महतो जन्म सर्गः, तत्राप्याद्यः सर्गान्तरापेक्षया। अयं सर्गः सर्वोपकारी। महत्त्वात् बुद्धिरुक्ता। तस्य महत्तत्त्वस्य योनेः सकाशादुद्गम इव सर्गोऽत्र न विवक्षितः, किन्त्वात्महेतुको गुणानां विषमो भावः। तत्र सत्त्वं धीनिमित्तम्, भगवतो धीनिमित्तत्वे सत्त्वं मनोनिमित्तम्, विषमा राजसाः, भूतानि तामसानि। वैषम्याभावे[1] तु स्थित्यादिहेतुत्वम्। आत्मनः सकाशात् गुणानां वैषम्यम्—एतदेव महत्तत्त्वसर्ग इत्यर्थः। द्वितीयमाह—द्वितीयस्त्विति। अत्राऽपि जन्ममात्रं व्यावर्त्यते। अहमोऽहङ्कारस्य सर्गो द्वितीयः। अत्राऽपि चतुर्विधत्वमाह। यथा सर्गे गुणवैषम्यमपेक्षितम्, एवं द्रव्यज्ञानक्रियाणामप्युदयोऽपेक्षितः। द्रव्यमधिभूतम्, ज्ञानमधिदैवम्, क्रिया आध्यात्मिकी। आद्यो भावो वैषम्यम्, द्वितीयो भावस्त्रैविध्यम्, यत्रेत्यधिकरणम्, कारणरूपं महत्तत्वं बुद्धिः॥ १५॥ ❀ ❀ तृतीयमाह—भूतसर्ग इति। अत्राऽपि तुशब्दः पूर्ववत्। यथा क्षोभापेक्षा, यथा वा ज्ञानक्रियाविषयाणाम्, तथा परिणामहेतुरूपस्याऽपि। तत्र रूपं भोक्तृभोग्यभावापन्नं वक्तव्यमिति भोग्यं तन्मात्रत्वेन विवक्ष्यते, भोक्ता शरीरसाधकभूतत्वेन। तदुभयमाह—तन्मात्रो द्रव्यशक्तिमानिति। तन्मात्रः पञ्चतन्मात्रारूपः। द्रव्यशक्तिः परिणामः, तत्सहितस्तृतीयसर्ग इत्यर्थः। एवं त्रिभिः सर्गैः कार्यं निष्पद्यते, त्रिभिश्च ज्ञायते। तत्र प्रथमं चतुर्थ ऐन्द्रियः सर्ग इन्द्रियसंबन्धी सर्गः। इन्द्रियाणां स्वरूपोत्पत्तिर्न सर्गः, किन्तु कार्योपयोगित्वेन। अतोऽनुवादे तुशब्दः। कार्ये भिन्नतयोत्पत्तिव्यावृत्त्यर्थं सर्गः पूर्वत्रैव योजितः। यस्त्वित्यनुवादः स्वरूपकार्ययोर्भेदनिरूपणार्थः। ज्ञानात्मकः क्रियात्मकश्च, उभयं हीन्द्रियकार्यम्। क्रियात्मकत्वेन भूतानीन्द्रियाणि चोक्तानि, ज्ञानात्मकत्वेन तन्मात्राणि धियश्चोक्ताः॥ १६॥

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

प्रदर्शयतीति। अन्वयेन प्रदर्शयति। उपदेशं व्युत्पादयति—भूतादीत्यादि। पूर्वपूर्वमिति। पूर्वपूर्वमुपाधिम्; तथा च, बाधनेन कृत्वा पूर्वं उपाधिभूतत्वेन व्यपदिश्यत इत्यर्थः। तदेत्यादि। तदाधारेणेति। पूर्वकालोपाध्याधारेण। तथा च, कालगतं भूतत्वं तदाधेये जगति व्यपदिश्यते, यथा पृथिवीगत आकारो घटे, तथेत्यर्थः। एवं भावित्वमपि। ननु वर्तमानं जगति प्रतीयते, अतो नैवमित्यत आहुः—वर्तमानोऽपीत्यादि। जलादाविति। जलादावाधारान्तर उपदिष्टे। तथा च, वर्तमानं जगदित्युक्त्वा आधारान्तरनैरपेक्ष्येण वर्तमानकालाधारं जगदिति। प्रत्ययादाधारत्वेन प्रतीयमानो यः, स वर्तमानपदार्थोऽपि काल एवेति तद्गतमेव वर्तमानत्वमित्यर्थः। तेन सिद्धमाहुः—अतो यादृश इत्यादि। तथा च, कालधर्मस्य भूतत्वादेर्जगति दर्शनेन कालान्वयात् कालस्योपादानत्वमित्यर्थः। ननु कालोपाधीनां जगत्त्वं काल[2]स्य वा आद्ये भूतत्वादीनां तद्धर्मत्वेपि जगद्धर्मत्वम्, द्वितीये तु नित्यत्वात् बाधाभावेन भूतत्वाद्ययोग इति कालस्योपादानत्वं दुर्घटमित्यत आहुः—अवान्तरेत्यादि। विवक्षयेति। अंशांशिभावविवक्षया। तथा च, कालत्वेऽप्येवं नियम्यत्वाद्भूतत्वादियोगेनोपादानत्वं न दुर्घटमित्यर्थः। एतेन ब्रह्मतन्मात्रत्वमपि जगतः सिद्धमित्याहुः—इदानीमित्यादि। अत इति। सदैकरूपत्वात्। कालनियामकत्वादिति। व्यवहारविषयताद्वारा तन्नियामकत्वात्। सिद्धमाहुः—तस्मादित्यादि। सदैकरूपत्वात् कालनियामकत्वाच्च कात्स्न्येनाऽभिव्यक्तस्वरूपत्वात्तथेत्यर्थः। एतेन 'मात्रात्वं चापि कालतः' इति पादोनया कारिकया यदुक्तं तत्साधितम्॥ १३॥ ❀ ❀ सर्ग इत्यादीनामाभासे। अध्यायद्वयेन कालनिरूपणे बीजमाहुः—तावतेत्यादि। साधारणानामिति। व्यष्टिसम्बन्धिनाम्। तथा च, कालस्योभयनियामकत्वबोधनायाऽध्यायद्वयेन निरूपणमित्यर्थः।

---

१. वैषम्यादिभावे क. घ.। २. अधिकमेतत्। ३. कालं पा.।

मूलमिति। तन्मात्रारूपम्। गुणानां प्रलायकत्वमुपपादयन्ति—कर्मणेत्यादि। अत्र गुणानां तामसत्वं देहरूपत्वात्; द्रव्यस्य तु स्फुटमेव; कालस्य तु गुणानुरोधाद्बोध्यम्॥ १४॥ ❀ ❀ आद्य इत्यत्र। कारिकासु। प्राकृतसर्गस्य कुतः षड्विधत्वमित्याकाङ्क्षायामाहुः—सर्गा इत्यादि। अत्रेति। प्राकृतसर्गे। तत्त्वेऽपीति। प्राकृतत्वेपि। न चैवं सति कालक्रिययोर्विद्यमानत्वाद्युगपदेव षडपि स्युरित्यत आहु—पारम्पर्यं न दूषणमिति। श्रुतावपि सर्वसमर्थब्रह्मणः साक्षात् सृष्टिवत् क्रमसृष्टेरपि कथनादिच्छाविशेषस्यैव नियामकत्वात्तन्न दूषणमित्यर्थः। ननु भवत्वेवम्, तथापि प्रथमं महत एव कुतः सर्ग इत्याकाङ्क्षायामाहुः—महत्त्वेनेत्यादि। स्फुटोऽर्थः। उत्पत्त्यादिशब्दानुक्तौ बीजमाहुः—भूतेत्यादि। पक्षं व्यावर्तयतीति। पूर्वोक्तानुवादपक्षं व्यावर्तयति। पूर्वस्माद्भेदं बोधयितुं तदेव व्याकुर्वन्ति—महत्तत्वस्येत्यादि। बुद्धिरूक्तेति। बुद्धिरूपतोक्ता। अत्र न विवक्षित इति। 'वीर्यमाधत्त' 'साऽसूत महत्तत्वं हिरण्मयम्' इतिवदकथनादस्मिन् कल्पे तथा न विवक्षितः। वैषम्यप्रकारमाहुः—तत्रेत्यादि। मनोनिमित्तमिति। उपलक्षणमेतत्, इन्द्रियनिमित्तमित्यर्थः। स्थित्यादिहेतुत्वमिति। गुणानामिति शेषः॥ १५॥ ❀ ❀ आहेति। सर्गशब्दानुषङ्गेण मैत्रेय आह। तस्य सर्गस्य स्वरूपं कारणं चाऽऽहुः—भूतसर्ग इत्यादि। पूर्ववदिति। जन्ममात्रत्वव्यावृत्त्यर्थः। यथेति। निमित्तभेदं विना कार्यकारणयोर्वैजात्याभावात्तदर्थं यथेत्यर्थः। तच्चेति। परिणामहेतुभूतम्। द्रव्यशक्तिरिति। द्रव्यात्मिका शक्तिर्द्रव्यशक्तिरित्यर्थः। तथा मूले भूतसर्गो नाम भूतरूपपरिणामसहितो मात्रासर्गो भूतसर्ग इत्यर्थो भवति। द्वैरूप्यबोधनप्रयोजनमाहुः—एवमित्यादि। तथा च माध्यमिकस्याऽस्य द्वैरूप्यकथनेनैकैकस्य त्रिकस्य तथात्वबोधनं प्रयोजनमित्यर्थः। तत्रेति। ज्ञापकत्रिकसर्गे। कार्योपयोगित्वेनेति। उत्पत्तिरिति शेषः। अत्र गमकमाहुः—अत इत्यादि। अत इति। कार्यजननानुकूल्यस्याऽपि विवक्षितत्वात्। सर्गपदं पुरोवादे यदुक्तम्, तस्याऽऽशयमाहुः—कार्ये इत्यादि। भिन्नतयेति। भूतमात्रादिघटितशरीरवत्त्वेनाऽभेदनिरूपणार्थं इति स्वरूपं भूतादिघटितम्, तच्च कार्याकरणदशायां केवलमिति स्वरूपवैलक्षण्यनिरूपणार्थः। ज्ञानेत्यादि। अनेन तत्कार्यकरणे बीजमुक्तम्, तत्तदात्मकत्वात्तत्र जनक इति। अत्र प्रयोजनान्तरमपि संगृह्यत इत्याहुः—क्रियेत्यादि॥ १६॥

## श्रीगिरिधरकृता बालप्रबोधिनी।

अप्रतिष्ठितत्वं दृढीकुर्वंस्तत्कार्यस्य विश्वप्रवाहस्याप्रतिष्ठामाह—यथेति। एतद्विश्वं यथेदानीं दृश्यते अग्रे प्रलयात्पूर्वमपि तथैवासीत्, पश्चाद्भाविप्रलयानन्तरमपीदृशमेव भविष्यतीत्यन्वयः। एवं सामान्यतः कालं निरूप्य विशेषतस्तं निरूपयिष्यंस्तन्निमित्तस्य पूर्वोक्तानेव भेदाननुवदति—सर्ग इति। प्राकृतः षड्विधः वैकृतश्च त्रिविध एवं सर्गो नवविधः। यस्तु प्राकृतो वैकृतश्च स उभयात्मको द*शम इत्यर्थः। तन्निमित्तमेव त्रिविधं प्रलयमाह—कालेति। अस्य कालकाल्यस्य प्रपञ्चस्य प्रतिसंक्रमः प्रलयः कालद्रव्यगुणैस्त्रिविध इत्यन्वयः। कालेन नित्यप्रलयः, द्रव्येण सङ्कर्षणाग्न्यादिना नैमित्तिकः प्रलयः, गुणैः स्वस्वकार्यं ग्रसद्भिः प्राकृतिकः प्रलयः॥ १३॥ ❀ ❀ तानेव सर्गान् प्रपञ्चयति—आद्य इत्यादिना। आत्मनः परमात्मनः सकाशाद् गुणवैषम्यं वैषम्यापन्नगुणत्रयात्मकप्रकृतिविकारविशेषो यो महतो महत्तत्त्वस्य सर्गः स आद्यः प्रथम इत्यर्थः। अहमः अहङ्कारस्य तु सर्गो द्वितीयः। तस्य लक्षणमाह—यत्रेति। द्रव्याणि पृथ्व्यादीनि, ज्ञानानि ज्ञानेन्द्रियाणि देवता मनश्च, क्रियाः कर्मेन्द्रियाणि च तेषामुदय उत्पत्तिर्यत्र यस्मादित्यन्वयः॥ १४॥ ❀ ❀ तन्मात्रः शब्दादिपञ्चतन्मात्रारूपो भूतसर्गः भूतसूक्ष्मसर्गस्तु तृतीय इत्यन्वयः। तं विशिनष्टि—द्रव्यशक्तिमानिति, पृथ्व्यादिपञ्चमहाभूतोत्पादक इत्यर्थः। यस्तु ज्ञानक्रियात्मकः ज्ञानकर्महेतुभूत ऐन्द्रियः इन्द्रियाणां सर्गः स चतुर्थः॥ १५॥ ❀ ❀ वैकारिकः सात्त्विकाहङ्कारकार्यभूतो देवसर्ग इन्द्रियाभिमानिदेवानां दिग्वातादीनां यः सर्गः स पञ्चमः सर्गः। यन्मयं मन इति, यस्य सात्त्विकाहङ्कारस्य कार्यमनःसर्गोऽपि पञ्चमेऽन्तर्भूत इति भावः। अबुद्धिर्जीवानामावरणं विक्षेपश्च तां करोतीत्यबुद्धिकृत्तस्य तमसः तामिस्रादिपञ्चपर्वाविद्याया यस्तु सर्गः स तु षष्ठ इत्यन्वयः। तथा च भगवदनुग्रहादयं सर्गो विनिर्जित इति सूचयन् सम्बोधयति—प्रभो इति॥ १६॥

## हिन्दी अनुवाद

यह जगत् जैसा अब है वैसा ही पहले था और भविष्यमें भी वैसा ही रहेगा। इसकी सृष्टि नौ प्रकारकी होती है, यथा प्राकृत वैकृत भेदसे एक दसवीं सृष्टि और भी है॥ १३॥ ❀ ❀ और इसका प्रलयकाल, द्रव्य तथा गुणोंके द्वारा तीन प्रकारसे होता है। (अब पहले मैं दस प्रकारकी सृष्टिका वर्णन करता हूँ।) पहली सृष्टि महत्तत्त्वकी है। भगवान्की प्रेरणासे सत्त्वादि गुणोंमें विषमता होना ही इसका स्वरूप है॥१४॥ ❀ ❀ दूसरी सृष्टि अहङ्कारकी है, जिससे पृथ्वी आदि पञ्चभूत एवं ज्ञानेन्द्रिय और कर्मेन्द्रियोंकी उत्पत्ति होती है। तीसरी सृष्टि भूतसर्ग है, जिसमें पञ्चमहाभूतोंको उत्पन्न करनेवाला तन्मात्रवर्ग रहता है॥ १५॥ ❀ ❀ चौथी सृष्टि इन्द्रियोंकी है, यह ज्ञान और क्रियाशक्तिसे सम्पन्न होती है। पाँचवीं सृष्टि सात्त्विक अहङ्कारसे उत्पन्न हुए इन्द्रियाधिष्ठाता देवताओंकी है, मन भी इसी सृष्टिके अन्तर्गत है॥ १६॥

---

*कौमाराख्य इत्यर्थः।

षष्ठस्तु [1]तमसः सर्गो यस्त्वबुद्धिकृतः प्रभो । षडिमे प्राकृताः सर्गा वैकृतानपि मे शृणु ॥१७॥
रजोभाजो भगवतो [2]लीलेयं हरिमेधसः । सप्तमो मुख्यसर्गस्तु षड्विधस्तस्थुषां चयः ॥१८॥
वनस्पत्योषधिलतात्वक्सारा वीरुधो द्रुमाः । उत्स्रोतसस्तमःप्राया अन्तःस्पर्शा विशेषिणः ॥१९॥
तिरश्चामष्टमः सर्गः सोऽष्टाविंशद्विधो मतः । अविदो भूरितमसो घ्राणज्ञा हृद्य[3]वेदिनः ॥२०॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका ।

षष्ठस्तु तमसः पंचपर्वाऽविद्यायाः अबुद्धिर्जीवानामावरणं विक्षेपश्च तां करोतीत्यबुद्धिकृत्तस्य मे मत्तः शृणु ॥ १७ ॥ अनुद्वेगेन श्रोतव्यतामाह । यद्विषया मेधा संसारं हरति तस्य हरेर्लीला । यद्वा इयमिति तमआदिसर्गरूपा रजोभाज इति ब्रह्मरूपस्ये-त्यर्थः । अस्मिन्पक्षे अबुद्धिकृत इति प्रथमांतम् । अनवधानकृत इत्यर्थः । मुखमिव प्रथमं कृतो मुख्यः सर्गः । तस्थुषां स्थावरा-णाम् ॥ १८ ॥ ❀ ❀ षड्विधत्वमेवाह । ये पुष्पं विना फलंति ते वनस्पतयः ओषधयः फलपाकांताः तथा आरोहणापेक्षाः त्वक्सारा वेण्वादयः लता एव काठिन्येनारोहणानपेक्षा वीरुधः ये पुष्पैः फलंति ते द्रुमाः तेषां साधारणं लक्षणमाह । ऊर्ध्वं स्रोत आहारसंचारो येषाम् । तमःप्राया अव्यक्तचैतन्याः अंतःस्पर्शाः स्पर्शमेव जानंति नान्यत् तदप्यंतरेव न बहिः । विशेषिणो व्यवस्थितपरिणामाद्यनेकभेदवंतः ॥१९॥ ❀ ❀ तिर्यक्स्रोतसां सर्गमाह । तिरश्चामिति । स चाष्टाविंशतिधः तिरश्चां लक्षणं अविदः श्वस्तनादिज्ञानशून्याः भूरितमसः आहारादिज्ञानमात्रनिष्ठाः घ्राणेनैवेष्टमर्थं जानंति हृदि अवेदिनो दीर्घानुसंधानशून्याः । तथा च श्रुतिः "अथेतरेषां पशूनामशनायापिपासे एवाभिविज्ञानं न विज्ञातं वदंति न विज्ञातं पश्यंति न विदुः श्वस्तनं न लोका-लोकौ" इति ॥ २० ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

आविद्यकसर्गमाह—तुर्भिन्नोपक्रमे । "तमोमोहो महामोहस्तामिस्रो ह्यंधसंज्ञकः । अविद्या पञ्चपर्वेयं प्रादुर्भूता महात्मना" इति वैष्णवे । यद्वा । प्रभोः परमेश्वरस्य । शक्तिरबुद्धिर्जीवमोहिनी याऽविद्यानाम्नी तया कृत इत्यर्थः । अविद्यावश-वर्तित्वाभावबोधनाय संबुद्धिर्वा । राजानं विदुरं वा । मुनिकृतेति । अत्राशयमाह—प्रधानमविद्या विद्या चेति मायायास्तिस्रो वृत्तयः । तत्र प्राधान्येन महदादिपृथिव्यंतानि तत्त्वानि सत्यान्येव सृष्टानि यैरेव समष्टिव्यष्टिरूपा जीवस्य स्थूलाः सूक्ष्माश्चोपाधयोऽ-भवन् । द्वितीययाऽविद्यया जीवं मोहयंत्या जीवसंबद्धमविद्याऽस्मितारागद्वेषाभिनिवेशात्मकं पंचविधं तमोऽज्ञानमसत्यमेव सृष्टम् । एवं सत्यमिथ्यात्मकं जगदिदं प्रधानाऽविद्यामेव सृष्टं तृतीयया विद्यया तु पंचविधाज्ञाननिवर्तकं ज्ञानं सृष्टं तच्चाग्रे विवृत्य व्याख्या-स्यते । प्रकृतेर्मायाशक्तेः सकाशाज्जाता इमे प्राकृताः षट् । विकृतिरसमष्टिविराट् ब्रह्मा तस्माज्जातान् वक्ष्यमाणानपि ॥ १७ ॥ ❀ ❀ ननु हरेर्लीला वर्णनीया कुतः प्रकृतासंगता सृष्टिर्वर्णितेति चेदाह—लीलेयमिति इयमिति । सामान्यतः सर्गरूपा ननु न हि सात्त्विकस्य हरेयमविद्या सर्गादिरूपा लीला नोपयुक्तेति चेदाह—यद्वेति । इत्यर्थ इति रज उपाधिकब्रह्मणो हिरण्यगर्भस्येति भावः । अस्मिन्पक्षे ब्रह्मपक्षे इत्यर्थ इति । 'प्रमादोऽनवधानता'इत्यमरः । रजसः प्रमादजनकत्वं तु प्रसिद्धमेव । तच्च श्रीदशमे स एव वक्ष्यति "अतः क्षमस्वाच्युत मे रजोभुवो ह्यजानतस्त्वत्पृथगीशमानिनः । अजावलेपांधतमोंधचक्षुषः" इति । अत्र पक्षे हरिमेधस इत्यस्य हरौ मेधा यस्य हरिर्मेधा यस्येति वार्थः । यद्वा हरिरिव सूर्याग्निवन्मेधा यस्य जाज्वल्यमानबुद्धेरित्यर्थः । 'वह्निसूर्यौ हरी चंद्रः' इति कोशांतरात् । यथा प्रथमं शरीरोत्पत्तौ मुखमुत्पद्यते तद्वदित्यर्थः । यद्वा । सर्वथा स्वार्थराहित्येन परोपकारित्वान्मुख्यत्वं तच्च श्रीकृष्ण एव वक्ष्यति "अहो एषां वरं जन्म सर्वप्राण्युपजीवनम् । सुजनस्येव येषां वै विमुखा यांति नार्थिनः"—इत्यादिना दशमे । चयः समूहः "चयः समूहे प्राकारमूलबंधे समाहृतौ" इति मेदिनी । कस्मिंश्चित्कल्पे प्रलयोदशायिनो मुखतो जलबिंदुपतना-दामर्दकी वृक्षोभूत्ततो ब्रह्माणमसृजद्धरिर्ब्रह्मा च देवासुरमनुष्यांस्तत एव सर्वस्थावरांश्चासृजत्ते सर्वे ब्रह्माणं पप्रच्छुः किमिदं स चाहायमादिप्ररोहः सर्वेषां नो धात्री नाम वृक्ष इति विष्णुपुराणीयफाल्गुनसितैकादशीमाहात्म्ये उक्तम् । वाक्यानि तु विस्तार-भियेह नोक्तानीति मुख्यत्वं स्थावरचयस्य ॥ १८ ॥ ❀ ❀ वनस्पतयोऽश्वत्थादयः । ओषधयो व्रीह्यादयः । लता नागवल्ल्या-दयः, त्वच्येव सारो बलं येषां ते तथा । आदिना नडादिग्रहः । वीरुधः कूष्मांडादयः द्रुमा आम्रादयः तेषां षण्णामेव साधारणं सर्वगतम् । प्रायःशब्दः कल्पवृक्षादिव्यावृत्त्यर्थः । यद्वा भारते वृक्षाणामपि सर्वज्ञानमस्तीति 'तस्मात्पश्यंति पादपाः" इत्याद्युक्तेः । वायुवृक्षसंवादश्रवणाच्च प्रायःपदम् । एतच्चाज्ञानप्रचुरा इति तीर्थकृतव्याख्यापेक्षम् । स्वामिचरणैस्तु अव्यक्तचैतन्या इति व्याख्या-तम् । वस्तुतश्चैतन्यं ज्ञानमेवेति नान्यत्स्पर्शेतरन्न जानंतीति भारतवाक्यविरोधादत्र स्पर्शपदं ज्ञानपरतया व्याख्येयं तथा चांतर्ज्ञाना

---

१. प्रा० पा०—तामसः । २. प्रा० पा०—लीमेयं । ३. प्रा० पा०—वकश्ये० ।

इत्यर्थः। परिणामादीत्यत्रादिना वृद्धिह्रासादिग्रहः ॥ १९ ॥ ❀ ❀ अष्टाविंशद्विध इह तकारेकारलोपस्त्वार्षः। क्वचिदष्टाविंशतिधा मत इत्यपि पाठः। तिरश्चां दीर्घानुसंधानशून्यत्वे प्रमाणमाह—तथा चेति। इतरेषां मनुष्येतराणां श्वस्तनमागामिदिनकृत्यं लोकालोकौ प्रकाशांधकारौ स्वर्गनरकौ वेति श्रुतिपदार्थः। यद्वा भूरितमसो बहुरूपः हृद्यं स्वप्रियं वस्तु विंदंति भोजनशयनाद्यर्थं गृह्णंतीति तथा ॥ २० ॥

## श्री राधारमणदासगोस्वामिविरचिता दीपिनीव्याख्या।

प्राकृताः "प्रकृतिश्च प्रतिज्ञा दृष्टान्तानुपरोधात्" १।४।२३। इति न्यायात्प्रकृतिस्सर्वोपादानमीश्वरस्तस्माज्जाता विकृतिः समष्टिविराड् ब्रह्मा तस्माज्जातान् भगवत्पक्षे रजोभाजस्सांनिध्येन तदुपकारकस्य पूर्वार्थे संनिकृष्टपरामर्शकस्येदंशब्दस्य व्यवहितपरामर्शकत्वं न संभवतीत्यरुचौ यद्वेति तमआदीत्यादिना वक्ष्यमाणमुख्यसर्गादीनां परिग्रहः। ब्रह्मरूपस्य एतत्पक्षे हरौ मेधा यस्येति ॥ १७ ॥ १८ ॥ ❀ ❀ सप्तम इति सार्धकम्। परिणामादीत्यादिना फलपुष्पादिपरिग्रहः ॥ १९ ॥ ❀ ❀ इतरेषां मनुष्यव्यतिरिक्तानामिति मनुष्यस्य तत्तज्ज्ञानसत्वेष्वभक्तत्वे पशुत्वं व्यञ्जयति विज्ञातमयमसाविति विचारितमर्थं अशनायापिपास इति द्वन्द्वैकवद्भावः। लोकालोकौ प्रकाशाप्रकाशौ स्वर्गनरकौ वा ॥ २० ॥

## श्रीमद्वीरराघवव्याख्या

षष्ठस्त्विति। तामसः तमःशब्देन प्रकृतिमण्डलात्मकमण्डमुच्यते "आदित्यवर्णन्तमसः परस्तादि"त्यादौ तमःशब्देन प्रकृतिमण्डलाभिधानात् तद्विषयः सर्गस्तामसः षष्ठः। तमेव विशिनष्टि अबुद्धिकृतः प्रभोरिति। प्रभोश्चतुर्मुखस्याबुद्धिकृतः तदन्तर्यामिपरमात्मसंकल्पकृत इत्यर्थः। तामसस्याबुद्धिकृतत्वकथनं पूर्वेषामप्युपलक्षणम्। षण्णामपि चतुर्मुखसृष्टेः प्राक्तनत्वेन चतुर्मुखबुद्धिपूर्वकत्वाभावात् षष्ठस्तु तमसः सर्गः इति पठित्वा बुद्धिर्जीवानामावरणं विक्षेपश्च तां करोतीत्यबुद्धिकृत्तस्य तमसः पञ्चपर्वणो यः सर्गः षष्ठ इत्यर्थवर्णनं त्वयुक्तम्, विष्णुपुराणे स्थावरादिसृष्टेः चतुर्मुखाबुद्धिकृतत्वदर्शनेन इहापि तदैकार्थ्यस्य न्याय्यत्वाच्चतुर्मुखाबुद्धिकृतत्वमेवेष्टव्यम्। ननु स्थावरादिव्यष्टेरबुद्धिपूर्वकत्वमुक्तं श्रीविष्णुपुराणे, इह प्राकृतानां षण्णामेवाबुद्धिकृतत्वं कथमुक्तमिति चेदुच्यते साधका मनुष्या इति। तद्व्यतिरिक्तानां सृष्टिरबुद्धिपूर्विकेति भगवत्पराशरस्याभिप्रायः। स्थावरतिरश्चां यज्ञोपकरणत्वाद्देवानां कर्माराध्यत्वाच्च मनुष्यवद्यज्ञौपयिकत्वमस्तीति स्थावरादिसृष्टिरपि बुद्धिपूर्विकेति भगवतो द्वैपायनस्याभिप्रायः, अतो न विरोधः। ननु चतुर्मुखसृष्टेष्वेव स्थावरेषु तद्बुद्धिकृतत्वं च परस्परविरुद्धमुभयं कथमुपपद्यत इति चेद्यज्ञानुपयुक्तस्थावराभिप्रायकत्वात्पाराशर्योक्तेः प्राकृतयज्ञानुपयुक्तैः चतुर्मुखस्य सिसृक्षाया अभावेऽपि तदन्तर्यामिपरमात्मसंकल्पादेव तत्सृष्ट्युपपत्तेः। प्राकृतसर्गान्निगमयन्वैकृतसर्गविभागमवतारयति। इमे षट् प्राकृताः सर्गाः अनुक्रमिता इति शेषः मे मत्तः वैकृतानपि सर्गाननुक्रमिष्यमाणान् शृणु ॥ १७ ॥ ❀ ❀ नन्वचिन्त्यविविधचित्ररचनया ब्रह्मणः श्रमः स्यादित्याशङ्क्य मुनिराह। रजोभाज इति। चतुर्मुखशरीरकत्वाद्रजोभाजः रजउद्रिक्तस्य भगवतो हरिमेधसः मेधया बुद्ध्या हरति सांसारिकक्लेशमिति हरिमेधाः यद्विषयकबुद्धिः संसारक्लेशान् हरति स हरिमेधा इत्युच्यते। तस्य हरेरियं सृष्टिलीला न तु तस्यां क्लेश इत्यर्थः। वैकृतसर्गाननुक्रमिष्यन् तेषां स्थावरसर्गस्य पूर्वानुक्रांतप्राकृतसर्गापेक्षया सप्तमत्वमाह। सप्तम इति। तस्थुषां स्थावराणां यो मुख्यः सर्गः सप्तमः स च पुनः षड्विध इत्यर्थः। तस्य मुख्यत्वं मुखमिव प्रथमं कृतत्वादवगन्तव्यम् ॥ १८ ॥ ❀ ❀ स्थावराणां षड्विधत्वमेवाह वनस्पतीत्यादि। अपुष्पाः फलिनो वनस्पतयः, ओषधयः फलपाकान्ताः, लता आरोहणापेक्षाः, त्वक्साराः कदलीवेण्वादयः, वीरुधः गुल्मरूपाः, द्रुमाः पुष्पफलाः तेषां साधारणं लक्षणमाह। उत्स्रोतस इति उत्क्रान्ताः स्रोतसः गतेराहाराद्वा गतिशून्या आहारशून्या वा तमःप्राया अव्यक्तचैतन्या अन्तःस्पर्शाविशेषिण इत्येकं पदमन्तःस्पर्शाः शीतोष्णादिसुखदुःखदाः स्पर्शा येषां तेऽविशेषिणश्च बाह्यविशेषानभिज्ञाश्च। अन्तर्गतानेव स्पर्शान् जानन्ति नतु बाह्यानित्यर्थः ॥ १९ ॥ ❀ ❀ तिर्यक्सर्गस्याष्टमत्वं कथयन्पुनस्तस्याष्टाविंशद्विधत्वमाह। तिरश्चामिति। तिरश्चां तिर्यग्गच्छतां यः सोऽष्टमः स च पुनरष्टाविंशद्विधो मतः ज्ञातः। तेषां साधारणं लक्षणमाह। अविद इति। ह्यस्तनाद्यतनश्वस्तनानादिज्ञानशून्याः भूरितमसः केवलाहारनिद्रामैथुनभयमात्रनिष्ठाः घ्राणज्ञाः घ्राणेनैवेष्टमर्थं जानन्तीति घ्राणज्ञाः। गन्धेन गावः पश्यन्तीतिवत् हृद्यवेदिनः हृद्गतसुखाद्यनभिज्ञाः दीर्घानुसन्धानरहिता इति भावः। तथा च श्रुतिः अथापरेषां पशूनामशनायापिपासे एव जानन्ति वदन्ति न विज्ञानं पश्यन्ति न विदुः श्वस्तनं लोकालोकाविति ॥ २० ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

तमसोऽविद्यायाः तुशब्द एवार्थे अः विष्णुस्तस्मिन् बुद्धिरबुद्धिस्तत्पूर्वमेव कृतः सदा विष्णुबुद्धित्वेऽपि तमःसंसर्गेण स्वबुद्धिर्भ्रष्टा भवति इति भीत्या विशेषतस्तद्बुद्ध्यैवेत्युक्तम्। सर्वदा तद्बुद्धिद्योतनायैवेति। यो भूतानां तामसोंशस्तस्मादंशादविद्या ब्रह्मणोत्पादिता इति द्योतनाय तुशब्दः। तदुक्तम्

अबुद्धिपूर्वमिव तु ब्रह्मणो हरिबुद्धितः । तामसानां तु भूतानां सहस्रं सत्त्वभागिनाम् ॥
शतांशरजसामेकतमसां सर्ववेदिनाम् । केवलस्तामसो योंशः सोऽविद्या पञ्चपर्विका ॥
जातानि कृष्णा तद्देहा दैत्यरक्षःपिशाचकाः ।

इति ।

अबुद्धिपूर्वकस्तस्य प्रादुर्भूतस्तमोमयः । तमो मोहो महामोहस्तामिस्रो ह्यन्धसंज्ञितः ॥
अविद्या पञ्चपर्वैषा प्रादुर्भूता महात्मनः ।

इति श्रीविष्णुपुराणे,

पञ्चपर्वा त्वविद्या तु भूतेभ्यो हरिणा पुरा । मद्धृता ब्रह्मणि क्षिप्ता सा पुनस्तेन निःसृता ।
तत्सष्टत्वज्ञापनाय तस्मात्सा तामसा मता ।

इति च मया इमे षट् प्राकृताः सर्गास्तव कथिता इति शेषः । प्राकृतसर्गकथनानन्तरमन्यः असङ्गो मा भूदिति परीक्षिद्वाक्यस्यानवकाशं वक्ति वैकृतानिति ॥ १७ ॥ ❀ ❀ प्राकृतवैकृतसर्गकथनश्रवणेन किं फलमित्याशङ्क्य भगवल्लीलात्वाच्छ्रवणेन मुक्तिरेव फलमिति भावेनाह । रजोभाज इति । सृष्ट्यर्थं रजोगुणप्रवर्तकस्य हरिवत्सूर्याग्निवन्मेधा यस्य स तथा तस्य जाज्वल्यमानबुद्धेरित्यर्थः, भगवता नारायणस्येयं सृष्टिर्लीला न स्वार्थपरा योग्यजनमुक्त्यर्थेत्यर्थः, विरिञ्चिविषयत्वे हरौ मेधा यस्य स तथा तस्य अनेनाबुद्धिकृत इति पदं विवृतं विरिञ्चस्यापि श्रीनारायणानुग्रहेण सृष्टिरियं न श्रमजननी किन्तु लीलारूपेत्यनेनाप्यबुद्धिकृतत्वाच्छ्रमकरीत्यन्यथा प्रतीतिर्निरस्ता । सृष्ट्यादावेते गुणा हरेरेव मुख्याः । तदुक्तम्

एते गुणा हरेः सम्यक् स्वातन्त्र्यविषयाः सदा । इति । यस्तस्थुषां स्थावराणां मुख्यः सर्गः स सप्तमः ।
स च षड्विधः

'स्थास्नुभिर्नियमान्मुख्या स्थितेर्गतिरवाप्यते ।' प्रायः परोपकर्तृत्वात्तेषां मुख्यस्रोतस्त्वम् । इति मुख्यस्रोतस्त्वं स्थावराणां युक्तम् ॥ १८ ॥ ❀ ❀ षड्विधमाह । वनस्पतीति । 'फलन्ति ये विना पुष्पैस्तान्वदन्ति वनस्पतीन् ।' इत्यतः पनसादयो वनस्पतयः, ओषधयः फलपाकान्ताः व्रीह्यादयः, लताः पराश्रयबलाः, त्वक्सारा वेण्वादयः, वीरुधः काण्डरुहाणि गुल्मानि, द्रुमाश्चूतादयः प्रमाणवचनेन यन्मुख्यस्रोतस इत्युक्तं तदेवोत्स्रोतस इति कथ्यते । उत्स्रोतस इत्यस्यार्थ ऊर्ध्वस्रोतस इति किं न स्यान्न स्याद्संभवात् तथाहि ऊर्ध्वगन्तारो देवा मोक्षैकभागित्वात् । तदुक्तम्—

नियमादूर्ध्वगन्तारो देवा मोक्षैकभागिनः । ऊर्ध्वस्रोतस इत्येवं तस्मात्ते परिकीर्तिता ।
इति तर्हि देवानामयमर्थः कथं संपत्स्यते ? उच्यते, उन्नतमत्वमूर्ध्वत्वं तदेवोच्छब्दस्यापीति । तदुक्तम्
ऊर्ध्व इत्येव यस्तून्नतम एवाभिधीयते । ऊर्ध्वस्रोतस एतस्माद्देवा एव न तत्परः ।

इति स्थावराणामेतच्छब्दवाच्यत्वमुचं वर्धमानेषु मुख्यत्वात् । तदुक्तम् 'उच्छब्द उन्नमात्रेऽपि तस्मात्स्थास्नुषु भण्यते ।' इति अनेन मुख्यशब्दस्यार्थान्तरं दर्शितम् । तत्स्वभावमाह तमःप्राया इति । तमःप्राया अज्ञानप्रचुराः कल्पवृक्षादिव्यावृत्त्यर्थं प्रायःशब्दः, अन्तःस्पर्शाः स्पर्शने सत्यन्तर्ज्ञानवन्तः, विशोषिणः छेदने सति सपदि शोषवन्तः ॥ १९ ॥ ❀ ❀ तिरश्चां तिर्यक्स्रोतसाम् ।

नाधो नोर्ध्वं तिरश्चां च पुनस्तत्रैव यज्जनिः । यज्ञोपयोगं च सतामुपकारं विनापि वा ।
तिर्यक्स्रोतस इत्येव प्रोच्यन्ते ज्ञानिभिस्ततः ।

इति अनेन तिरश्चां तिर्यक्स्रोतस्त्वं विवृतमिति ज्ञातव्यम् । तिरश्चां लक्षणमाह । अविद इति । अविदः कार्याकार्यविशेषज्ञानशून्याः । भूरितमसः शरीरमात्रेऽहंममाभिमानवन्तः । यद्वा आहारनिद्राव्यतिरिक्तविषये ज्ञानरहिताः । घ्राणेनैव जानन्ति इति घ्राणज्ञाः । हृद्येव वेदो ज्ञानं येषां ते तथोक्ताः । इदमुभयेषां तस्थुषां तिरश्चां समं लक्षणम् , तदुक्तम्

तिरश्चीनाः स्थावराश्च अन्तःस्पर्शा इतीरिताः । यत्प्रत्यक्षानुमानाभ्यां हृद्यं ज्ञानं न शास्त्रतः ॥

इति यदप्रयत्नात् हृदयंगमं तदेव जानन्ति न शास्त्रयुक्तिभ्यामित्यर्थः । अष्टाविंशद्विधत्वं प्रतिज्ञायाधिकोक्तिर्विशेषतो यज्ञेषूपकृतत्वाभिप्रायेण । यो यस्य सदृशः स तत्रान्तर्गत इति ज्ञापनं चेति न दुष्यति । तदुक्तम्

अष्टाविंशद्विशेषेण यज्ञेषूपकृतं यतः । तिरश्चां तावदेतस्माद्गण्यते शास्त्रवेदिभिः ।
इति अष्टाविंशत्प्रधानास्तु तिरश्चां यास्तु जातयः । यो यस्य सदृशस्त्वन्यः स तत्रान्तर्गतो भवेत् ।
जलजान्तर्गताः सर्पाः कीटाद्या याश्च जातयः । तेषां जलप्रधानत्वाच्छरीरस्य तु सर्वशः इति च ॥ २० ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः।

रजोभाजः सन्निधौ न स्वयं तदुपकारकस्य ब्रह्मरूपेण तु तदुपाधिकस्येत्यर्थः। टीकायां तम आदीति। आदिपदेन मुख्य-सर्गप्रभृतित्वं ग्राह्यम्। अनवधानकृत इति हरेरेव ध्यानस्वातन्त्र्यात् ब्रह्मणस्तु तद्व्यभिचारादित्यर्थः॥ १८॥ ❀ ❀ सप्तम इति सार्द्धकम्॥ १९—२०॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

वैकारिकः सात्त्विकाहङ्कारसम्बन्धी। देवानामिन्द्रियाधिष्ठातॄणां सर्गः। यन्मयं मनः मनसोऽपि सर्गः पञ्चम इत्यर्थः। एते पञ्चसर्गाः प्राधानिका उक्ताः। आविद्यकं सर्गमाह। षष्ठस्त्विति। तुर्भिन्नोपक्रमे, तमसोऽज्ञानस्य सर्गः षष्ठः प्रभोः परमेश्वरस्य शक्तिरबुद्धिर्जीवमोहिनी या अविद्या नाम्नी तया कृतः। अयमर्थः प्रधानमविद्या विद्येति मायायास्तिस्रो वृत्तयः। तत्र प्रधानेन महदादि पृथिव्यन्तानि तत्त्वानि सत्यान्येव सृष्टानि, यैरेव समष्टिव्यष्टिरूपाः जीवस्य स्थूलास्तथा सूक्ष्माश्चोपाधयोऽभवन्। द्वितीयया अविद्यया तु जीवं मोहयन्त्या जीवसंबन्धमविद्यास्मिता रागद्वेषाभिनिवेशात्मकं तमः पञ्चविधमज्ञानमसत्यमेव सृष्टम्। एवं सत्यमिथ्यात्मकं जगदिदं प्रधानाविद्याभ्यां सृष्टम्। तृतीयया विद्यया तु पञ्चविधाज्ञाननिवर्त्तकं ज्ञानं सृष्टम्। तच्चाग्रे विवृत्य व्याख्यास्यते॥ १७॥ ❀ ❀ प्रकृतेर्मायाशक्तेः सकाशाज्जाता इति प्राकृता इमे षट् विकृतिः समष्टिविराड् ब्रह्मा तस्माज्जातान् वक्ष्यमाणानपि मे मत्तः वैकृतानित्येतद्विवृणोति रजोभाजो ब्रह्मरूपस्य हरिर्मेधायां यस्य तस्य॥ १८॥ ❀ ❀ स्थावरजङ्गमात्मकस्य जगतः स्थावराणां प्राथम्यात् मुखे प्रथमे भवो मुख्यः यस्तस्थुषां स्थावराणां पुष्पं विना फलवन्तो वनस्पतयः। ओषधयः फलपाकान्ताः। लता आरोहणापेक्षाः। त्वक्सारा वेण्वादयः। लता एव काठिन्येनारोहणानपेक्षा वीरुधः। पुष्पैरेव फलन्ताः। द्रुमाः तेषां साधारणलक्षणमाह ऊर्ध्वं स्रोत आहारसञ्चारो येषां ते तमःप्राया अव्यक्तचैतन्या अन्तःस्पर्शा अन्तश्छेद एव व्यथानुभविनः। विशेषिणः अव्यवस्थितपरिणामाद्यनेकभेदवन्तः॥ १९॥ ❀ ❀ तिरश्चां तिर्यक्स्रोतसाम्। अविदः श्वस्तनादिज्ञानशून्याः। भूरितमसः आहारादिमात्रनिष्ठाः। घ्राणज्ञाः घ्राणेनैवेष्टमर्थं जानन्ति; हृदि अवेदिनः दीर्घानुसन्धानशून्या अल्पपरामर्शाः। तथाच श्रुतिः 'अथेतरषां पशूनां अशनायापिपासे एवाभिज्ञानं वदन्ति। न विज्ञापितं पश्यन्ति न विदुः श्वस्तनं न लोकालोकाविति। भूरितमसो बहुरुषः। घ्राणेनैव जानन्ति हृद्यं प्रति स्वप्रियं वस्त्वेव विन्दन्ति भोजनशयनाद्यर्थं गृह्णन्ति॥ २०॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

अबुद्धिकृतः अबुद्धिं संसारप्रावण्यहेतुमज्ञानं करोतीत्यबुद्धिकृत् तस्य तमसः प्रकृतेः कार्यभूताया ब्रह्माण्डस्येत्यर्थः। सर्गः षष्ठः। केचित्तु वक्ष्यमाणांधतामिस्रादिसर्गं षष्ठमाहुस्तच्चिन्त्यम्, तस्यात्त्वनाद्यज्ञानविमोहितसृज्यमानजीवस्वभावसूचकत्वेन वैकृतसर्गेऽन्तर्भावात्॥ १७॥ ❀ ❀ यद्विषया मेधा संसारं हरति तस्य हरेर्विष्णोः कथंभूतस्य रजोभाजः रजोगुणयुक्तचतुर्मुखान्तर्यामिण इत्यर्थः, चतुर्मुखादिभिरपि स्थावरादिसृष्ट्यादिकं यद्यत्कृतं तदपि भगवल्लीलैवेति भावस्तदाह तस्थुषां स्थावराणां यः सर्गः स सप्तमः, कथंभूतः मुखमिव मुख्यः प्रथमं कृत इत्यर्थः। स च षड्विधः॥ १८॥ ❀ ❀ षड्विधत्वं दर्शयति। वनस्पतीति। पुष्पं विना फलिनो वनस्पतयः, फलपाकान्ताः ओषधयः, आरोहणसापेक्षा लताः, वेण्वादयः त्वक्साराः, लता एवारोहणानपेक्षाः किंचित्काठिन्ययुक्ता वीरुधः। पुष्पफलाः द्रुमाः। तेषां साधारणं लक्षणं दर्शयति ऊर्ध्वं स्रोतः आहारसंचारो येषां ते तमःप्रायाः गूढचैतन्याः अन्तःस्पर्शाः स्पर्शमेव जानंति तदप्यंतरेव विशेषिणः विशेषाः अनेकावान्तरभेदाः सन्ति येषां ते॥ १९॥ ❀ ❀ तिरश्चां तिर्यग्गच्छताम् अष्टमः स अष्टाविंशद्विधः तेषां साधारणं लक्षणमाह। अविदः श्वस्तनाद्यतनादिज्ञानरहिताः भूरितमसः आहारादिमात्रनिष्ठाः घ्राणज्ञाः घ्राणेन प्रियाप्रियं किंचिज्जानन्ति हृद्यवेदिनः हृदि कार्याकार्यविवेकरहिताः। तथाच श्रुतिः 'अथेतरेषां पशूनामशनायापिपासे एवाधिविज्ञानं न विज्ञातं वदन्ति न विज्ञातं पश्यन्ति न विदुः श्वस्तनं न लोकालोकावि'ति॥ २०॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

पञ्चममाह—वैकारिक इति। वैकारिकः सात्त्विको देवानां सर्गः। अत्र देवानां सर्गे स्वरूपत उत्पत्तिः। अतीन्द्रियत्वेन अव्यवहार्यत्वेन च द्वैविध्याभावान्न पक्षव्यावृत्तिः। यथा ज्ञानेन्द्रियाण्यपेक्ष्यन्ते क्रियायां च, तथैव देवताप्रेरणम्, तदभावे ग्रहणानुपत्तेः। वैकारिकत्वेन त्रिरूपता, देवत्वाद् बुद्धिरूपत्वम्। नन्वेतेषां देवानां किं कार्यम्? प्रेरणं त्वन्तर्यामिजीवाभ्यामेवोपपद्यत इत्याशङ्क्याऽह—यन्मयं मन इति। पञ्चमसर्गप्रचुरं मनः। यथेन्द्रियाणां सद्भावेऽपि मनोव्यतिरेकेण न ज्ञानक्रियोदयः, 'नाश्रौषमं मनाः' इत्याद्यभिलापात्। न हि सजातीयनियमनव्यतिरेकेण केवलं चेतनेन, राज्ञेव, सर्वथा नियमनं कर्तुं शक्यते। अतः सामान्यतो मनो यथा नियामकम्, तथेन्द्रियदेवता अपि। वैकारिकत्वेन चैक्यम्। वैकारिकत्वं पूर्वरूपम्, प्रेरकत्वमुत्तररूपमिति। षष्ठमाह—

षष्ठस्त्विति। इन्द्रियग्राह्यत्वं भगवतो न संभवतीत्यन्तरा निष्पत्तिरूपामविद्यां मन्यते। सा केवलं तामसी। अविद्याप्रकृतिमायानां मध्ये, प्रथमायाः प्राकृतविषयत्वात्, प्राकृतैः सा वा, तत्कार्यं वा, गृह्यते। अतो ग्रहणार्थं तामसः षष्ठः सर्गो विषयः। तामसत्वमात्रेण विषयत्वे भूतसर्गोऽपि तथा स्यात्, अतस्तद्व्यावृत्त्यर्थं य इत्यनूद्य तुशब्दः। अबुद्धिकृतोऽज्ञानकृत। नन्वज्ञानेन शुक्तिकारजतवत् मिथ्याभूतमेव किञ्चिदुत्पद्यते, तस्य कथं सर्गत्वम्? सृज्याभावात् इत्याशङ्क्याऽऽह—विभोरिति। समर्थस्य। स ह्यज्ञानप्रकारेणाऽपि सदभिव्यक्तिं कर्तुं शक्नोति, अतोऽस्य गृह्यमाणविषयस्य अविद्याकृतत्वेऽपि सर्गत्वम्॥ १७॥ ** एवमाधिभौतिकप्रकारेण निरूपितान् षट् सर्गानुपसंहरति—षडिमे प्राकृताः सर्गा इति। एवं विभागं चेन्न कुर्यात् सप्तमादिप्रयोगान् सर्वेऽप्येकविधा भवेयुः। एवं प्राकृतानुपसंहृत्य वैकृतेषु सावधानतया भेदा ज्ञातव्याः—वैकृतानपीति। प्राकृतकार्यं वैकृतं प्राकृते निरूपिते निरूपितं भवतीति वैकृतानां न भेदो न स्वरूपं वा सिद्ध्येत्। अतो मे शृण्वित्याह। मत्त एवैते भेदाः श्रोतुं योग्याः, न त्वन्यो जानातीति भावः। अतो व्यासङ्गव्युदासार्थं शृण्वित्युक्तम्। नन्वेते प्राकृतवैकृता लौकिकाः, भगवद्भक्तैः कथं श्रोतव्या इत्याशङ्क्याह—रजोभाजो भगवत इति। यदा भगवान् रजोगुणमुत्पत्त्यर्थम्, क्षेत्रज्ञो वा कामार्थं भजते, तदैवं लीलां करोति। अतो भगवल्लीलात्वात् श्रोतव्या एव सर्गाः। ननु न सर्वा भगवल्लीला श्रोतव्या, 'यावनर्थ उदपाने…' इति न्यायेन स्वोपयोगिन्येव लीला सेव्येत्याशङ्क्याऽऽह—हरिमेधस इति। हरिः सर्वदुःखहर्त्री मेधा यस्य। भगवद्विषयिणी या काचिन्मतिः, सैव सर्वदुःखहर्त्री, तस्माद्या कापि भगवल्लीला श्रोतव्यैव। किञ्च, नियता विषयबुद्धिर्भगवत्संबन्धित्वेनाऽत्र बोध्यते। अतो लीलान्तरापेक्षया मात्रारूपा लीलाः कालसंबन्धित्वात्सहजनाशिकाः, तद्दोषनिवृत्त्यर्थं चाऽवश्यं भगवदीयत्वेन ज्ञातव्याः। एतदेवाऽभिसन्धाय मेधःपदम्। यथा मेधाशब्दो बुद्धिवचनः, एवं 'मेधस्' शब्दोऽप्यसप्रत्ययान्तः॥ १८॥ ** तस्माच्छ्रोतव्यमित्युपपाद्य वैकृतेषु प्रथममुपपादयति—सप्तम इति। वैकृतेषु, मुखे भवो मुख्यः। अन्नं प्रथमतः सृज्यमन्नादास्तदनन्तरम्। अन्यथा बाधकं स्वग्रे वक्ष्यते प्रक्रियान्तरे॥ १॥ अतो मुखे भवो भक्ष्यत्वेनैव परिकल्पितः, सर्वजीवनोपयोगी प्राथम्येनोपकल्पितः। मनसा सह कर्मेन्द्रियाणां षड्विधत्वादाद्यः षड्विधः। ते यथा भक्ष्यमाणा अपि नाऽपसरन्ति, ततस्तस्थुषां य इत्युक्तम्। स्थावराणामेव यः षड्विधः सर्गः, स एवाऽत्र ग्राह्य इति यच्छब्देन निर्दिष्टः, न तु जङ्गमत्वेन जातः स्थावरमापद्यमानः, तस्य भगवल्लीलात्वाभावात्। चकारात्तेऽपि शास्त्रतो निरूपिताः परिगृहीताः दुग्धादयो वा चकारेण परिगृहीताः। वनस्पतयोऽश्वत्थादयः। प्रथमतो वनस्पतीनां ग्रहणम्, पालने विष्णोः प्राधान्याद्वैष्णवत्वेन, 'वैष्णवा वै वनस्पतयः' इति श्रुतेः। पुष्परहिताः सफला वनस्पतयः, रजोरहिताः सफला वैष्णवाः। ओषध्यो व्रीहियवादयः फलपाकान्ताः, ते हि मुख्यमन्नं भवन्ति। लताः कूष्माण्डादयः, मेदोरूपा व्यञ्जनात्मकाः। त्वक्सारा वेणवः, अन्नस्थित्यात्मकाः; वेणुयवा अन्नम्, वेणवश्च बहूपयोगिनः। वीरुधः सोमादयः, तृणादयश्च। तेषामप्युभयरूपत्वम्। द्रुमाः सफलपुष्पा आम्रादयः। एतैः षड्विधैरद्यमानैरत्तारः सुप्रतिष्ठिता भवन्ति॥ १९॥ ** नन्वेतेषां षड्विधानां केन धर्मेणैकसर्गत्वमित्याशङ्क्य तान् धर्मान्निर्दिशति—उत्स्रोतस इति। एते हि सर्गरूपा भूतादिभावरूपा वक्तव्याः। तेऽपि चतुर्भिर्विशेषणैर्निरूप्यन्ते। ऊर्ध्वं स्रोत आहारसंचारो येषाम्, तेषां भक्षितं जलादिकमूर्द्ध्वमेव गच्छति। अनेन भूतत्वं निरूपितम्, विपरीतं वा। बुद्धिर्हि क्रिया बोध्या, ते पादपा इति तेषां बुद्धिर्निरूपिता। तमःप्राया इति ज्ञानाभावः, अज्ञानं तत्रैव पर्यवसितम्। प्रायःपदव्यावर्त्यार्थं वदन् विषयत्वं निरूपयति—अन्तःस्पर्शा इति। अन्तः स्पर्शमात्रं गृह्णन्ति, न त्वन्यविषयकं ज्ञानमस्तीत्यर्थः। यत्तु भारते वृक्षाणां सर्वेन्द्रियत्वं साधितम्, सर्वज्ञानं च; तदधिष्ठातृदेवतापरम्, अभिमानिनां तु स्पर्श एव। अविशेषिणश्च हस्तवितस्त्यादिपरिमाणे नियमरहिताः, विशेषसंज्ञारहिता वा॥ २०॥

## श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

वैकारिक इत्यत्र। तुशब्दस्य पूर्वमग्रे चोक्तत्वादत्र तदनुक्तितात्पर्यमाहुः—अतीन्द्रियेत्यादि। द्वैविध्याभावादिति। कार्यजननार्थं स्वरूपवैलक्षण्यस्याऽनपेक्षितत्वेन तद्द्वैविध्याभावात्। ननु देवसर्गस्य किं प्रयोजनमित्याकांक्षायामाहुः—यथेत्यादि। कर्मेन्द्रियैः कर्मकरणेऽपि तदनुग्राहकत्वेन यथा ज्ञानेन्द्रियाणि क्रियायामपेक्ष्यन्ते, तथा ज्ञानेन्द्रियैर्ज्ञानजननेऽप्यनुग्राहकत्वेन देवताप्रेरणमपेक्षितसमानन्यायेन क्रियायामप्यपेक्षितमित्यर्थः। अत्र सर्वत्वप्रयोजकत्वं रूपमाहुः—वैकारिकेत्यादि। त्रिरूपतेति। भूतमात्रेन्द्रियरूपता। किं कार्यमिति। किं प्रयोजनम्। ननु 'यन्मयं मनः' इत्यस्य देवसर्गप्रयोजनोपपादकतया कथनेन मनसः सर्गोऽनुक्त एव स्यादित्याशङ्कानिरासायाहुः—वैकारिकत्वे नैक्यमित्यादि। तथा चैवं मनसो देवतासाम्याद्वैकारिक इति विशेषणबलात्तस्यापि संग्रह इति नाऽनुक्तिरित्यर्थः। सर्गत्वमिति। भगवत्सामर्थ्यादेव सर्गत्वम्, न तु स्वरूपबलादित्यर्थः। अत्राऽस्य प्राकृतसर्गस्य आवरणतत्त्वत्वं मध्यतत्त्वत्वं महाभूतन्यायेन बोध्यम्॥ १७॥ ** सप्तम इत्यत्र। तेऽपीति। जङ्गमत्वेऽपि स्थावरत्वमापद्यमानाः। परिगृहीता इति। मुख्यसर्गत्वेन परिगृहीताः। बर्हिषदुपाख्याने हिंस्रयज्ञस्य जघन्यत्वकथनात् पक्षान्तरं श्रौतमाहुः—दुग्धादीत्यादि। उभयरूपत्वमिति। अन्नरूपत्वमन्नस्थापकरूपत्वं च॥ १९॥

## श्रीगिरधरकृता बालप्रबोधिनी

उक्तान् प्राकृतसर्गान् निगमयन्[१] वैकृतसर्गश्रवणे सावधानीकरोति—षडिति । इमे षट् प्राकृताः भगवदिच्छावशात् प्रकृतित एवोत्पन्नाः सर्गाः, वर्णिता इति शेषः । वैकृतान् विकृतिसमष्ट्यात्मको ब्रह्मा तत्कृतानपि सर्गान् मे मत्तस्त्वं शृणु । अवश्यं चेदं श्रोतव्यमित्याशयेनाह—रज इति । रजोभाजः सृष्ट्याद्यर्थं गृहीतरजोगुणस्य भगवतः इयं सर्गरूपा लीलेत्यन्वयः । एतच्छ्रवणे किं फलमित्यत आह—हरिमेधस इति, हरति संसारक्लेशमिति हरिस्तथाभूता मेधा यस्य यद्विषया स हरिमेधास्तस्येत्यर्थः । संसारदुःखनिवृत्तिरेव फलमिति भावः ॥ १७ ॥ ❀ ❀ तान् वैकृतान् सर्गान् दर्शयन् प्रथमतो भक्ष्यसर्गमाह—सप्तम इति । तस्थुषां स्थावराणां यो मुख्यसर्गः स सप्तमोऽवान्तरभेदेन षड्विधश्चेत्यन्वयः । तस्य मुख्यत्वं च मुखमिव प्रथमतः कृतत्वात्, मुखे भवो मुख्यो भक्ष्यत्वाद्वाऽवगन्तव्यम् । षड्विधत्वमेव दर्शयति-वनस्पतीत्यादिना । ये पुष्पं विनापि फलन्ति ते वनस्पतयः वटपिप्पलादयः । फलपाकान्ताः ओषधयः यवव्रीह्यादयः । आरोहणापेक्षा लताः कूष्माण्डादयः । त्वक्साराः कठिनत्वचो वेण्वादयः । लता एव काठिण्येनारोहणानपेक्षा वीरुधः । ये पुष्पैः फलन्ति ते द्रुमा आम्रादयः ॥ १८ ॥ ❀ ❀ नन्वेतेषां षड्विधानां केन धर्मेण एकसर्गत्वमित्यपेक्षायां तेषां साधारणधर्मानाह—उत्स्रोतस इति । ऊर्ध्वं स्रोत आहारसञ्चारो येषां ते तथा । तमःप्रायाः अव्यक्तचैतन्याः । अन्तःस्पर्शाः स्पर्शमेवान्तर्जानन्ति न तु वक्तुं शक्नुवन्तीत्यर्थः । विशेषिण इति, अव्यवस्थितपरिणामाद्यनेकभेदवन्त इत्यर्थः । एवं भोग्यसर्गं निरूप्य भोक्तृसर्गं निरूपयन् तिर्यक्स्रोतसां सर्गमाह—तिरश्चामिति । तिरश्चां तिर्यग्गच्छतां यः सर्गः सोऽष्टमः, स च पुनरष्टाविंशद्विधो मतः सम्मत इत्यन्वयः ॥ १९ ॥ ❀ ❀ तेषां साधारणधर्मानाह-अविद इति । ह्यस्तनाद्यतनश्वस्तनादिज्ञानशून्याः भूरितमसः अज्ञानबहुलाः क्रोधाधिकाः केवलाहारनिद्रामैथुनभयादिमात्रनिष्ठाः घ्राणज्ञाः घ्राणेनैवेष्टमर्थं जानन्तीत्यर्थः । हृद्यवेदिनः सुखदुःखादिदीर्घानुसन्धानरहिताः । तथाच श्रुतिः-"अथेतरेषां पशूनामशनायापिपासे एवाभिविज्ञानं न विज्ञातं वदन्ति न विज्ञातं पश्यन्ति न विदुः श्वस्तनं न लोकालोकौ" इति । अष्टाविंशतिभेदानाह-गौरिति । गवादय उष्ट्रान्ता द्विशफा इमे नव पशवः । कृष्णः कृष्णमृगः, गवयो गोसदृशः, रुरुर्बहुशृङ्गो मृगः ॥ २० ॥

## हिन्दी अनुवाद

छठी सृष्टि अविद्याकी है । इसमें तामिस्र, अन्धतामिस्र तम, मोह और महामोह—ये पाँच गाँठें हैं । यह जीवोंकी बुद्धिका आवरण और विक्षेप करनेवाली है । ये छः प्राकृत सृष्टियाँ हैं, अब वैकृत सृष्टियोंका भी विवरण सुनो ॥ १७ ॥ ❀ ❀ जो भगवान् अपना चिन्तन करनेवालोंके समस्त दुःखोंको हर लेते हैं, यह सारी लीला उन्हीं श्रीहरिकी है । वे ही ब्रह्माके रूपमें रजोगुणको स्वीकार करके जगत्‌की रचना करते हैं । छः प्रकारकी प्राकृत सृष्टियोंके बाद सातवीं प्रधान वैकृत सृष्टि इन छः प्रकारके स्थावर वृक्षोंकी होती है ॥ १८ ॥ ❀ ❀ वनस्पति[१], ओषधि[२], लता[३], त्वक्सार[४], वीरुध[५] और द्रुम[६] । इनका संचार नीचे ( जड़ ) से ऊपरकी ओर होता है, इनमें प्रायः ज्ञानशक्ति प्रकट नहीं रहती, ये भीतर-ही-भीतर केवल स्पर्शका अनुभव करते हैं तथा इनमेंसे प्रत्येकमें कोई विशेष गुण रहता है ॥ १९ ॥ ❀ ❀ आठवीं सृष्टि तिर्यग्योनियों ( पशु-पक्षियों ) की है । वह अट्ठाईस प्रकारकी मानी जाती है । इन्हें कालका ज्ञान नहीं होता, तमोगुणकी अधिकताके कारण ये केवल खाना-पीना, मैथुन करना, सोना आदि ही जानते हैं, इन्हें सूँघनेमात्रसे वस्तुओंका ज्ञान हो जाता है । इनके हृदयमें विचारशक्ति या दूरदर्शिता नहीं होता ॥ २० ॥

**गौरजो महिषः कृष्णः सूकरो गवयो रुरुः । द्विशफाः पशवश्चेमे अविरुष्ट्रश्च सत्तम ॥ २१ ॥**
**खरोऽश्वोऽश्वतरो गौरः शरभश्चमरी तथा । एते चैकशफाः क्षत्तः शृणु पञ्चनखान् पशून् ॥ २२ ॥**
**श्वा शृगालो वृको व्याघ्रो मार्जारः शशशल्लकौ । सिंहः कपिर्गजः कूर्मो गोधा च मकरादयः ॥ २३ ॥**
**कङ्कगृध्रवटश्येनभासभल्लूकबर्हिणः[२] । हं सारसचक्राह्वकाकोलूकादयः खगाः ॥ २४ ॥**

## श्रीधरस्वामिविरचिता भावार्थदीपिका

अष्टाविंशतिभेदानेवाह । गवादयः उष्ट्रांता द्विशफा द्विखुरा नव ॥ २१ ॥ ❀ ❀ खरादयः एकशफाः षट् ॥ २२ ॥ ❀ ❀ श्वादयो गोधांताः पंचनखा द्वादश एवमेते भूचराः सप्तविंशतिः । मकरादयो जलचराः ॥ २३ ॥ ❀ ❀ कंकादयः

---

१. निश्चाययन्नित्यर्थः । १. जो विना मौर आये ही फलते हैं, जैसे गूलर, बड़, पीपल आदि । २. जो फलोंके पक जानेपर नष्ट हो जाते हैं, जैसे धान, गेहूँ, चना आदि । ३. जो किसीका आश्रय लेकर बढ़ते हैं, जैसे ब्राह्मी, गिलोय आदि । ४. जिनकी छाल बहुत कठोर होती है, जैसे बाँस आदि । ५. जो लता पृथ्वीपर ही फैलती है, किन्तु कठोर होनेसे ऊपरकी ओर नहीं चढ़ती—जैसे खरबूजा, तरबूजा आदि । ६. जिनमें पहले फूल आकर फिर उन फूलोंके स्थानमें ही फल लगते हैं, जैसे आम, जामुन, आदि । २. प्रा० पा०—वकश्ये० ।

खगा अभूचरत्वेनैकीकृत्यगृहीताः, तदेवमष्टाविंशतिभेदा भवंति । तेषु कृष्णरुरुगौरा मृगविशेषाः अन्येषामपि तिर्यक्प्राणिनां यथायथमेतेष्वेवांतर्भावः ॥ २४ ॥

### वंशीधरकृतो भावार्थदीपिकाप्रकाशः

अजो मेषः कृष्णरुरुगवया मृगविशेषाः अविरेर्डिका ॥ २१ ॥ ❀ ❀ अश्वतरः खराद्वड्यां जातः । गौरोऽश्वतर्यामश्वाज्जातो मृगविशेषो वा शरभः सिंहविरोधी पदाष्टकवान्वन्यो जीवः चमरी गोसदृशो दीर्घपृष्ठो बहुश्वेतरोमपुच्छो मृगविशेषः ॥ २२ ॥ ❀ ❀ वृकश्चित्रको व्याघ्रस्य पृथग्ग्रहणात् । गोधा भूखननशीला गोह इति ख्याता । कूर्मो जलचरत्वेनाष्टाविंशतिष्वंतर्भूतोपि पंचनखत्वप्रदर्शनार्थं पृथगुक्ताः । मकरादयः, इह्यादिना नक्रपाठीनादिग्रहः ॥ २३ ॥ ❀ ❀ आदिना गरुडादिग्रहः । तेष्वष्टाविंशतिभेदेषु अन्येषां सर्पादीनामेतेष्वेवाष्टाविंशतिष्वेव । यथांडजत्वेन सर्पा अपि खगेष्वंतर्भवंतीति भावः । एवमन्तत्रापि बोध्यम् ॥ २४॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

गौरज इति चतुष्कम् । एकैकोऽयम् । बहूनामुपलक्षणरूपो ज्ञेयः ॥ २१ ॥ २४ ॥

### श्रीमद्वीरराघवव्याख्या

अष्टाविंशतिभेदानाह । गौरिति । गवादय उष्ट्रान्ताः द्विशफाः द्विनखाः नवैव सन्तीत्यर्थः । हे सत्तम विदुर ! ॥ २१ ॥ ❀ ❀ खरादयश्चमर्यन्ता एकशफाः षट् ॥ २२ ॥ ❀ ❀ श्वादयो गोधान्ताः पञ्चनखाः द्वादश मिलिता भूचराः सप्तविंशतिः, मकरादयो जलचराः ॥ २३ ॥ ❀ ❀ कंकादयः खगाः भूचरभेदेनैकीकृत्य गृहीताः एवमष्टाविंशतिभेदाः मकरादिषु स्वजातिविशेषभिन्नेष्वप्यभूचरत्वेनैकाकारत्वं बोध्यं गवादिषु पठितौ रुरुगौरौ मृगविशेषौ छत्रिन्यायेन पशवश्चैते इति निर्देशः । एवमन्यत्रापि द्रष्टव्यम् ॥ २४ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

गवादिगोधान्तैः षड्विंशत्कूर्ममकारादिभिः सप्तविंशकङ्कादिभिरष्टाविंशत्तदुक्तम् "गौरजो महिषः कृष्णः शूकरो गवयो रुरुः । अव्युष्ट्रौ च खरश्चैव चमरी श्वश्रृगालकौ ॥ वृको व्याघ्रश्च मार्जारो हरिश्च शशशल्यकौ । कपिर्गजश्च गोधाद्या जलजाः पक्षिणस्तथा" इति ॥ २१ ॥ २२ ॥ ❀ ❀ तत्र कूर्मो जलजत्वेनाष्टाविंशत्स्वन्तर्भूतोऽपि पञ्चनखत्वप्रदर्शनार्थं पृथगुक्तः ।

तत्तदाकारसंयुक्तान् सृज्यान् स्रष्टारमेव च । यः सदा संस्मरेद्योगी न स भूयोभिजायते ।

इति वचनात् प्रसिद्धानामपि द्विशफादीनां स्मरणार्थं च कुत्रचित् । अप्रसिद्धज्ञापनार्थं द्विधा शास्त्रवचः स्मृतमिति च । 'उलूको नृत्तपक्षी च स भल्लूकश्च कथ्यत' इत्यभिधानम् ॥ २३ ॥ २४ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

गौरज इति चतुष्कम् । एकैकोऽयं बहूनामुपलक्षणरूपो ज्ञेयः-२१ ॥ २४ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

गवादय उष्ट्रान्ता द्विशफा द्विखुरा नव । अविर्मेषः खरादयश्चमर्य्यन्ता एकशफाः षट् ॥ २१ ॥ २२ ॥ ❀ ❀ श्वादयो गोधान्ताः पञ्चनखा द्वादश । एवमेते स्थलचराः सप्तविंशतिः । मकरादयो जलचराः । कङ्कादयः स्थलचराः हंसादयः पुनर्जलचराः काकादयः पुनः स्थलचरा इति एते मकरादय एकविधत्वेनैव व्यपदिष्टाः । तदेवमष्टाविंशतिभेदा गवादयस्तेषु । रुरुकृष्णगौरा मृगविशेषाः । अन्येषामपि तिर्य्यक्प्राणिनां यथायथमेष्वन्तर्भावः ॥ २३ ॥ २४ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

अष्टाविंशतिभेदान् दर्शयति । गौरिति । गवादयः अविरुष्ट्रश्च द्विशफाः द्विखुराः ॥ २१ ॥ २२ ॥ ❀ ❀ श्वादयः गोधान्ताः एते सप्तविंशतिभूचराः मकरादयः जलचराः ॥ २३ ॥ ❀ ❀ तथा कङ्कादयः खेचराः अभूचरत्वेनैकीकृत्य गृहीताः पञ्चनखाः । तदेवमष्टाविंशतिभेदा भवन्ति अन्येषां तिरश्चां प्राणिनां यथायथमेतेष्वेवान्तर्भावः ॥ २४ ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

एवं सप्तमं निरूप्य अष्टमं निरूपयति—तिरश्चामिति । तिर्यगाहारसंचारो येषाम्, ते तिर्यञ्चः । तिर्यक् अञ्चतीति गोभिर्भक्षितं तिर्यग्भागेनैव गच्छतीति । तेषां सर्गोऽष्टमः, अन्नस्य भक्षकोपयोगित्वात् । सोऽष्टाविंशद्विधः, तत्त्वानां तथात्वात्, तत्त्वैरेव भक्षितस्य प्रार्थितत्वात् । यद्यपि बहवो भेदाः सन्ति, तथापि भेदकप्राधान्यादष्टाविंशद्विध एव मतः । अन्येषामत्रैवाऽन्तर्भावो

वक्ष्यते, वैकृतत्वं वा निराकरिष्यते । एतेषामपि पूर्ववच्चतुर्द्धा लक्षणमाह–अविद इति । वेदनं वित्, स्वस्य कर्त्तव्याकर्त्तव्यानुसन्धानम्, पारलौकिकज्ञानं वा, तद्रहिता अविदः । भूरि अधिकं तमो येषाम्, अतस्तमसा अभिभूताः सत्सङ्गे जातेऽपि न ज्ञानयुक्ताः । ये तु देवपशवो वैकुण्ठादिस्थिता वृक्षा वा ते कालाधिभूता न भवन्तीति न तैर्लक्षणाव्याप्तिः । तेषां सर्वेन्द्रियसद्भावेऽपि घ्राणेनैव विशेषतः पदार्थान् जानन्ति, चक्षुरादिभिस्तु न निर्द्धारः, तमोभूयस्त्वात् । हृद्यवेदिन इति । पूर्वानुभूतस्मृतिशून्याश्चिन्तारहिता वा, वेदनं वेद इति । अज्ञानं तेषां भूतस्थानम्, मोहो विषयः, इन्द्रियाणि घ्राणमात्रपर्यवसितानि, बुद्धिस्त्वनुभवरूपैव ॥२१॥ ❀ ❀ ते त्रिविधाः । सात्त्विका द्विशफाः प्रोक्ता राजसास्तु चतुःशफाः । तामसा इतरे प्रोक्ता गुणानां हीनता परा ॥ १ ॥ ❀ ❀ नव द्विशफा गवादयः । कृष्णः कृष्णमृगः, गवयो गोसदृशः, रुरुर्बहुशृङ्गमृगः । एते द्विशफाः । एते पुनर्यज्ञपशवः । तिर्यक्शब्दवाच्या द्विशफाः पशवश्च । यत्र पशवो निर्दिश्यन्ते तत्रैते ग्राह्याः । अविर्मेष उष्ट्रश्च । सत्तमेति संबोधनं पशुगणनायां भगवत्कृतसृष्टावन्यथाज्ञाननिवारणार्थम् ॥ २२ ❀ ❀ षडेकशफाः खरादयः । गौरो गौरमृग आरण्यः । शरभोऽष्टापदः । चमरी गोसदृशो मृगः । चकारात् अन्येऽप्यप्रसिद्धा आरण्याः । ग्राम्यचमरीणां द्विशफत्वम्, ता न भगवत्सृष्टाः । क्षत्तरिति संबोधनं नैपुण्यार्थम् । एत एव बहुविधा विश्वामित्रादिभिर्योगबलेन सृष्टा भवन्ति । तद्व्यावृत्त्यर्थं शृण्विति निर्देशनं पञ्चनखेषु बहुसन्देहसूचकम् । पञ्चनखा मनुष्या अपि, तद्व्यावृत्त्यर्थं पशूनित्युक्तवान् । मनुष्याणामपि यद्यपि पशुत्वं श्रुतिसिद्धम्, तथापि विवक्षितं न भवतीति तद्व्युदासः ॥ २३ ॥ ❀ ❀ त्रयोदश श्वादयः । तत्र मकरादयः सर्वे अभूचरा एकविधा अण्डजाः । कूर्मो जलचरोऽप्यण्डजत्वाभावात् पृथग्गणितः । मकरादय इति । आदिशब्देन सर्पादयोऽपि परिगृहीताः, अण्डजत्वसाम्यात् ॥ २४ ॥

**श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः**

तिरश्चामित्यत्र । अन्येषामिति । अनुक्तानां खगमूषकादीनाम् ॥ २१ ॥

**श्रीगिरिधरकृता बालप्रबोधिनी**

अविर्मेषः । भगवत्सृष्टत्वादेष्वपि दयैव कार्या न क्रूरतेति । तु त्वया ज्ञायते एवेति सूचयन् सम्बोधयति—सत्तमेति । खरादयश्चमर्यन्ता एकशफाः षट् ॥ २१ ॥ ❀ ❀ हे क्षत्तरिति सम्बोधनं सावधानतार्थम् । पञ्चनखा मनुष्या अपि भवन्ति तद्व्यावृत्त्यर्थमाह—पशूनिति । श्वादयो गोधान्ताः पञ्चनखा द्वादश । एते सर्वे मिलिता भूचराः सप्तविंशतिः ॥ २२ ॥ ❀ ❀ मकरादयो जलचराः कङ्कादयः खगाश्चाभूचरत्वेनैकीकृत्य गृहीताः । एवमष्टाविंशतिभेदा भवन्ति । ये चान्ये तिर्यञ्चो जीवा दृश्यन्ते तेषामप्येतेष्वेव यथायथमन्तर्भावो ज्ञेयः ॥ २३ ॥ ❀ ❀ क्षत्तः हे विदुर अर्वाक् अधः स्रोतः आहारसञ्चारो यस्य सोऽर्वाक्स्रोताः । ह्रस्वत्वमार्षम् । एकविधो योऽयमेकप्रकारको नृणां सर्गः स तु नवम इत्यन्वयः ॥ २४ ॥

**हिन्दी अनुवाद**

साधुश्रेष्ठ ! इन तिर्यकोंमें गौ, बकरा, भैंसा, कृष्ण-मृग, सूअर, नीलगाय, रुरु नामका मृग, भेड़ और ऊँट—ये द्विशफ ( दो खुरोंवाले ) पशु कहलाते हैं ॥ २१ ॥ ❀ ❀ गधा, घोड़ा, खच्चर, गौरमृग, शरभ और चमरी—ये एकशफ ( एक खुरवाले ) हैं । अब पाँच नखवाले पशु-पक्षियोंके नाम सुनो ॥ २२ ॥ ❀ ❀ कुत्ता, गीदड़, भेड़िया, बाघ, बिलाव, खरगोश, साही, सिंह, बंदर, हाथी, कछुआ, गोह और मगर आदि ( पशु ) हैं ॥ २३ ॥ ❀ ❀ कंक ( बगुला ), गिद्ध, बटेर, बाज, भास, भल्लूक, मोर, हंस, सारस, चकवा, कौआ और उल्लू आदि उड़नेवाले जीव पक्षी कहलाते हैं ॥ २४ ॥

**अर्वाक्स्रोतस्तु नवमः क्षत्तरेकविधो नृणाम् । रजोऽधिकाः कर्मपरा दुःखे च सुखमानिनः ॥ २५ ॥**
**वैकृतास्त्रय एवैते[1] देवसर्गश्च सत्तम । वैकारिकस्तु यः प्रोक्तः कौमारस्तूभयात्मकः ॥ २६ ॥**
**देवसर्गश्चाष्टविधो विबुधाः पितरोऽसुराः । गन्धर्वाप्सरसः सिद्धा यक्षरक्षांसि चारणाः ॥ २७ ॥**
**भूतप्रेतपिशाचाश्च विद्याध्राः किन्नरादयः । दशैते विदुराख्याताः सर्गास्ते विश्वसृक्कृताः ॥ २८ ॥**
**अतः परं प्रवक्ष्यामि वंशान्मन्वन्तराणि च । एवं रजःप्लुतः स्रष्टा कल्पादिष्वात्मभूर्हरिः ।**
**सृजत्यमोघसङ्कल्प आत्मैवात्मानमात्मना ॥ २९ ॥**
**[ गुणव्यत्यय एतस्मिन् मायाविरचादधीशितुः । न पौर्वापर्यमिच्छन्ति सृष्टे नद्यां यथा भ्रमे ॥ ३० ॥**
**देवासुरादयो नामरूपाभ्यां ये प्रकीर्तिताः । अस्मिन् कल्पे त एवासन् क्षत्तर्मन्वन्तरान्तरे ॥ ३१ ॥ ]**

**इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां तृतीयस्कन्धे दशमोऽध्यायः ॥**

१. प्रा० पा०—एते वै ।

### श्रीधरस्वामिविरचिता भावार्थदीपिका

अथ आहारसंचारो यस्य सोऽर्वाक्स्रोताः ह्रस्वत्वमार्षम् । नृणां लक्षणं रजोऽधिकं येषु ते ॥ २५ ॥ ❀ ❀ एते त्रयो वैकृता एव न कौमारवदुभयात्मकाः देवसर्गश्च वैकृत इत्यनुषंगः । वैकारिकस्तु देवसर्गः प्राकृतेषु पूर्वमेव प्रोक्तः अयं तु ततो न्यूनत्वाद्वैकृतो देवसर्गत्वात्तदंतर्भूतश्च । सनत्कुमारादीनां सर्गस्तु प्राकृतो वैकृतश्च देवत्वेन मनुष्यत्वेन च सृज्य इत्यर्थः ॥ २६ ॥ ❀ ❀ वैकृतश्च देवसर्गोऽष्टविधः तत्र विबुधादयस्त्रयो भेदाः गंधर्वाप्सरस एकः यक्षरक्षांस्येकः ॥ २७ ॥ ❀ ❀ भूतप्रेतपिशाचा एकः सिद्धचारणविद्याधरा एकः किन्नरादयः एकः आदिशब्दात्किंपुरुषाश्वमुखादयः । एतद्विंशेऽध्याये स्पष्टं भविष्यति ॥ २८ ॥ २९ ॥ ३० ॥

इति श्री० भा० तृ० टी० दशमोऽध्यायः ॥

### वंशीधरकृतो भावार्थदीपिकाप्रकाशः

तुशब्दादन्येपि भेदाः संति "एकपादादिभेदैश्च दशभेदाश्च मानवाः" इति गरुडोक्तेः । ते च द्वीपांतरीयमनुष्या असुराद्या वा इति ध्येयम् । रजः राजसं गृहकोशादि संपादनमधिकं येषाम् । कर्मपराः "न हि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत्" इति गीतोक्तेः । दुःखे दुःखरूपे व्यवहारे सुखबुद्धयः ॥ २५ ॥ ❀ ❀ वैकारिकः सात्त्विकाहंकारकार्यरूपो देवसर्ग इंद्रियाधिष्ठातृदेवसर्गः । अयं तु देवसर्गस्ततः प्राकृतसर्गात् न्यूनत्वं त्वस्य प्रकृतिकार्यकार्यत्वाज्ज्ञेयम् । तदंतर्भूतश्च देवसर्गत्वाद्देवसर्गत्वेन तुल्यत्वात् । इत्यर्थ इति । "भगवद्ध्यानपूतेन मनसान्यांस्ततोऽसृजत्" इत्यग्रे वक्ष्यमाणत्वाद्भगवद्ध्यानजन्यत्वेन भगवज्जन्यत्वाच्च प्राकृतो वैकृतश्चेति भावः ॥ २६ ॥ २७ ॥ ❀ ❀ विश्वसृग्हरिर्ब्रह्मा च तेन कृताः प्रकटिताः ॥ २८ ॥ ❀ ❀ अतः दशविधसर्गवर्णनोत्तरं रजसा प्लुतो व्याप्तः । कल्पादिष्विहादिना युगादिग्रहः ॥ २९ ॥ ❀ ❀ अमोघसंकल्पः संकल्पेनैव स्रष्टुं समर्थः । स्वेनैव साधनेन स्वमेव स्वयमेव स्वतंत्रो रचयति न तु कारकांतरापेक्षीत्यर्थः । "कर्त्ता कर्म च करणं स्वयमेव सदा हरिः" इति तीर्थोक्तेः ॥ ३० ॥

इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे तृतीयस्कन्धे दशमोऽध्यायः ॥ १ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

नृणां लक्षणे उत्तरार्धे ते च नरा रजोऽधिका इत्यादि योजनीयम् ॥ २५ ॥ ❀ ❀ एते मुख्यतिर्यगर्वाक्सर्गास्त्रयो वैकृता ब्रह्मकृताः देवसर्गश्चेन्द्रादिलोकपालरूपः वैकारिकस्सात्त्विकाहङ्कारकार्य्यरूप इन्द्रियाधिष्ठातृदेवतागणसर्गस्तु प्राकृतेषु ईश्वरकृतसर्गेषु पूर्वमेवोक्तः । अयं लोकपालेन्द्रादिसर्गस्तत आधिदैविकसर्गात् न्यूनत्वान्निकृष्टत्वात् देवत्वमात्रसामान्येन प्राकृतान्तर्भूतश्च देवत्वेन आवेशावतारत्वेन ईश्वरकृतत्वात्प्राकृतः ब्रह्मणो मनस आविर्भूतत्वेन तत्सृज्यान्तःपातविवक्षया मनुष्यत्वेन च वैकृत इत्यर्थः ॥ २६ ॥ ❀ ❀ देवसर्ग इति सार्द्धकमत्र विबुधादीनां त्रयाणां पृथक् पृथक् करणेन विशेषसृष्टिकथनात् त्रयो भेदा इति व्याख्यातं गंधर्वाप्सरसामेकयैव कांत्या तत्र तत्कथनात् एकत्वं भूतादीनामेकेन तंद्रिणा तत्र तत्कथनादेकत्वं सिद्धचारणविद्याधराणां पृथक् पृथक् एकैकत्वेन । निर्देशेपि विंशाध्याये एकयैव तिरोधानशक्त्या सृष्टिकथनात् चरणानां चोपलक्षितत्वात् सिद्धचारणविद्याधरा एक इति व्याख्यातं किन्नरकिंपुरुषादीनां तु एकेनैव प्रतिबिंबेन सृष्टिकथनादेकत्वमन्यथा तत्तत्पदप्रयुक्तसंख्यास्वीकारे दशसंख्याकत्वेनाष्टविधत्वानुपपत्तिः स्यात् । अतएव एतद्विंशेऽध्याये स्पष्टं भविष्यतीत्युक्तमेतदेव सर्गाभिधानं स्पष्टं विवृतम् ॥ २७ ॥ ❀ ❀ विश्वसृक् हरिर्ब्रह्मा च ॥ २८ ॥ २९ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कंधे दीपिकादीपने दशमोऽध्यायः ॥ १० ॥

### श्रीमद्वीरराघवव्याख्या

अथ नवमं सर्गमाह । अर्वागिति । अर्वाक्स्रोतः गतिराहारो वा यस्य सः अर्वाक्स्रोतः ह्रस्वत्वमार्षं, हे क्षत्तः ! नृणामर्वाक्स्रोतो यः सर्गः स एकविधः नतु खरादीनामिव नानाविधः स नवमः सर्गः अर्वाक्स्रोत इति क्रियाविशेषणं वाऽर्वाक्स्रोतो यथा भवति तथा यो नृणां सर्ग इति नृणां साधारणं लक्षणमाह । रजोऽधिका इति । रजःप्रचुरा अतएव कर्मपराः ॥ २५ ॥ ❀ ❀ त्रय एते वैकृता एव नतु कौमारवदुभयात्मका इत्यर्थः । देवसर्ग इत्यादि प्रोक्त इत्यन्तमेकान्वयं प्राकृतेषु यो देवसर्गप्रसंगाद्वैकारिको ऽभिहितः स च वैकृतान्तर्भूत एवेत्यर्थः । हे सत्तम विदुर ! विकृतदेवसर्गान्तर्भूतकौमारसर्गस्योभयात्मकत्वमाह । कौमारस्त्विति । वैकृतसर्गान्तर्भूतकौमारसर्गस्य प्राकृतत्वं कथमिति चेत्कुमाराणामादावेव ब्रह्मणा सृष्टत्वात्प्राकृतान्तर्भावः कुमारेष्वन्तर्भूतो नीललोहितस्तु सनकादिभिः सह सृष्टोऽपि प्रतिकल्पं सृज्यते ततस्तस्य वैकृतत्वमित्युभयात्मक इत्यभिप्रायात् ॥ २६ ॥ ❀ ❀ देवसर्गस्याष्टविधत्वं प्रतिजानन् तद्भेदानाह । देवसर्ग इति सार्द्धेन । विबुधाः पितरश्चैककोटिकर्माराध्यत्वात् असुरा एककोटिः

गन्धर्वाश्चैककोटिः सिद्धा एकः यक्षरक्षांस्येकः चारणा एकः भूतप्रेतपिशाचा एकः किन्नरादय इत्यादिशब्देनाश्वमुखकिंपुरुषादयश्च किन्नरा आदयो येषां ते विद्याधरा एककोटिः एवमष्टविधत्वमित्यर्थः ॥ २७ ॥ ❀ ❀ अनुक्रान्तान् सर्गान्निगमयति । दशेति । सर्गो नवविध इत्युपक्रमे कथितमवान्तरविधाभिप्रायेण दशेत्युपसंहार इत्यविरोधः । हे विदुर ! विश्वसृजा चतुर्मुखरूपेण केवलेन स्वात्मना च कृता एते दशसर्गास्ते तुभ्यमाख्याताः कथिताः 'सर्गांश्चैवानुसर्गांश्च मंनून्मन्वन्तराणि चे'ति चतुर्मुखसृष्टेः पूर्वापरेषु पृष्टेषु सर्गेषु कथितेष्वनन्तरसृष्टेषु मनून्मन्वन्तराणि चेति चतुर्मुखसृष्टपूर्वापरेषु पृष्टेषु सर्गेषु कथितेष्वनन्तरसृष्टेषु मनुमन्वन्तरेषूत्तरश्रवणे त्वरा न कार्या, संगतिविशेषेण तान्यपि कथयिष्यामीत्याह । अतः परमिति । अतः सर्ववस्तुपरिच्छेदककालरूपकथनानन्तरं मनून् मन्वन्तराणि च प्रवक्ष्यामि ॥ २८ ॥ ❀ ❀ पुरुषस्तदुपादानमात्मानं लीलयासृजदित्युपक्रान्तमेकस्यैव ब्रह्मणः उपादानत्वं निमित्तत्वं चोपसंहरति । एवमिति । कल्पादिषु स्रष्टा आत्मभूर्हरिश्चतुर्मुखशरीरको हरिः रजोवृतश्चतुर्मुखद्वारा रजउद्रेकः अमोघसंकल्पः सत्यसंकल्प इदं सार्वज्ञत्वसर्वशक्तित्वादेरुपलक्षणमात्मात्मनैव सृजति अमोघसंकल्प इत्यनेन लोकपरिदृष्टनिमित्तो-पादानमृत्कुलालभेदन्यायस्यात्रानवकाश उक्तः कुलालस्यासर्वशक्तित्वान्नोपादानत्वं मृदस्त्वज्ञत्वान्न निमित्तत्वम् । इह त्वस्मिन्नेवोभयोः प्रतिपन्नत्वान्न कर्त्रन्तरकर्मान्तरकरणानामपेक्षेति भावः ॥ २९ ॥ ❀ ❀ उक्तनवविधसर्गाणां मध्ये अण्डसृष्टेर्युगपत्त्वत्वा-काशादीनामिव क्रमेणेत्याह । गुणव्यत्यय इति । गुणव्यतिकरात्मके एतस्मिन्नण्डे पौर्वापर्यं नेच्छति महदादितत्त्वे ब्रह्माण्डसृष्टेर्युगपदित्यर्थः । तत्कुतः अधीशितुरधीशस्य स्रष्टुः परमात्मनो मायावित्वात् आश्चर्यशक्त्युपेतत्वादण्डसृष्टेर्युगपदेवेत्यर्थः । नत्वाकाशादिष्वपि यौगपद्यं शङ्क्यमाकाशाद्वायुर्वायोरग्निरित्यादिविरोधात् । युगपदुत्पत्तौ दृष्टान्तमाह । नेति । भ्रमशब्द आवर्त-बुद्बुदादिपरः नद्यां भ्रमत आवर्तबुद्बुदादेर्यथा युगपदेवोत्पत्तिस्तथेत्यर्थः ॥ ३० ॥ ❀ ❀ ननु प्रतिकल्पस्थानामेव जीवाना-मिन्द्रत्वाद्यैश्वर्यभाजां पुनः पुनः कल्पान्तरेऽनुवृत्तिरिति संशयं निराकुर्वन्नाह । देवासुरादय इति । हे क्षत्तः ! नामरूपाभ्यामिन्द्रादि-नाम्ना सहस्राक्षत्वादिरूपेणास्मिन्कल्पे ये सुरादयः प्रकीर्तिताः त एव मन्वन्तरान्तरे आसन्नित्यर्थः । यद्वा य इदानीन्देवासुरादयः त एव मन्वन्तरान्तरे नामान्तररूपान्तराभ्यामुपलक्षिता आसन्नित्यर्थः । अन्यथा प्रतिमन्वन्तरं पृथक्करणपराशरवचनविरोधात् । अनेन श्लोकेनेन्द्राद्यैश्वर्यवतामादित्वं पुनरावृत्तिश्च ज्ञाप्यते ॥ ३१ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धटीकायां श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायां दशमोऽध्यायः ॥ १० ॥

### श्रीमद्विजयध्वतीर्थकृता पदरत्नावली ।

नवमः सर्गोऽर्वाक्स्रोतो नाम केषां नृणां विषयः तुशब्दादेकविधोऽपि द्विविधः । असुराद्या मानुषा इति मानुषाणां स्वभावमाह रजोऽधिका इति । भौतिकरजोंऽशजातत्वाद्रजोनिष्ठाः । तदुक्तं 'यद्रजो भौतिकं तेन मानुषाणां सदा जनिः । तमोगूढेन रजसा त्वितरस्यानुचारिणाम् ॥" इति अनेन भूरितमस इति पदं विवृतं रजोनिष्ठत्वादेव कर्मपराः 'नहि कश्चित्क्षणमपि जातु तिष्ठत्य-कर्मकृदि'ति वचनात् किञ्च रजोनिष्ठास्तमोनिष्ठा द्वेधार्वाक्स्रोतसः स्मृताः । असुराद्यास्तमोनिष्ठा मानुषास्तु रजोधिकाः ॥ इति वचनाच्च मानुषलक्षणमुक्त्वा असुरादिलक्षणमाह दुःखे चेति । चशब्द एवार्थे दुःख एव सुखमानिनः । अनेन सर्वार्थेषु विपरीतज्ञानित्वमासुर-लक्षणमुक्तं भवति । सर्वार्थान् विपरीतांश्च बुद्धिः सा पार्थ तामसी । इति वचनात् सुखे सुखैकभावास्तु देवा नैवन्तु दानवा इति चशब्दान्मानुषा उभयात्मका इति ज्ञातव्यं तर्हि अर्वाक्स्रोतस्त्वं मानुषाणां कथमिति चेत् शुभप्रयत्नमन्ते रणाधोगमनात् तदुक्तम् ।

प्रायोऽधोगमनं यस्मात्प्रयत्नेन विना भवेत् । अर्वाक्स्रोतस इत्येव मानुषाः परिकीर्तिताः ॥ इति,
तिरश्चां स्थावराणां च बुद्धिपूर्वप्रवर्तिनाम् । असुराणां रक्षसां च पिशाचानां तथैव च ॥
अर्वाक्स्रोतस्त्वमुद्दिष्टं नियमादसुरादिनाम् ।

इति वचनात् तिर्यगादिसाधारणमपि असुरादीनामर्वाक्स्रोतस्त्वं नियतमिति ज्ञातव्यम् ॥ २५ ॥ ❀ ❀ सत्तम सत्सु श्रेष्ठ ! एते त्रयस्तस्थुपस्तिर्यङ्मानुषविषया एव वैकृता अण्डान्तरसर्गा उक्ता इति शेषः । 'एव साम्येऽवधारण' इत्यभिधानादेव शब्दस्य साम्यार्थमाह देवसर्गः प्राकृतो वैकृतश्चेत्यर्थः । तदेव विशदयति वैकारिकश्चेति । यो वैकारिको देवसर्गः प्राकृतत्वेन प्रोक्तः स कौमारश्चेत्युभयात्मकः प्राकृतो वैकृतश्चेति कौ भूमौ मा मानं निर्माणं तस्यारः प्राप्तिर्यस्य स तथोक्तः । अंडाद्बहिर्जातानां पुनरण्डान्तर्भूमौ जन्म कौमार इत्युच्यत इत्यर्थः । मा निर्माण इति धातुः कुमारंतीति कौमारा ❀ देवानामंडजोद्भवाः । वैकारिकाणां जननात्प्राकृतो वैकृतश्च सः ।

वैकारिकेष्वेवान्येषामीषद्भोगित्वहेतुतः । उभयात्मकत्वेनैव प्रोच्यंते स गुणा अपि ॥

इति वचनात् ॥ २६ ॥ ❀ ❀ देवसर्गं विभजति देवसर्गश्चेति । चशब्देन संख्याविशेषं केषांचिदन्तर्भावं सूचयति तदुक्तम् ।

प्रोक्ता अष्टविधा देवा विबुधाः सर्व एव तु। पितॄणां शतमेवात्र असुरास्त्रिंशदेव तु॥
गंधर्वाप्सरसां चैव द्विशतं परिकीर्तितम्। सप्ततिर्यक्षरक्षःसु त्रिंशच्चारणजातिषु॥
शतं सिद्धास्तथान्यासु सप्ततिः सर्वजातिषु। ऊर्ध्वस्रोतस एवैते अन्येऽर्वाक्स्रोतसः स्मृताः॥
वैकारिकेषु देवेषु एते वैमुख्यभोगिनः। अभोगिनस्तदन्ये तु देवा एते ततः स्मृताः॥
सर्वज्ञास्तैः सहाराध्या भक्तास्तेष्वंतरेषु च। नृत्तगानादिकर्तारो वाहनादिकृतस्तथा॥
सिद्धिसिद्धेति वक्तारश्चाराश्चैषां कचित् कचित्। सेवाकरा इति ह्येतैर्भेदैरष्टविधा मताः॥
अन्ये च ये तु सर्वज्ञा विबुधास्ते प्रकीर्तिताः। तथान्ये कर्मभिस्तैस्तैरष्टभेदान्तरं गताः॥इति।

अडांतर्भूमौ जायमानानां देवानां भूतगतगुणत्रयादुत्पत्तिर्योग्यता। भेदेनानेकविधा तदुक्तम्

भौतिकेन तु सत्त्वेन गूढं ब्रह्मण आंकजम्। रूपं तत्रापि तु तमः शतांशेन प्रकीर्तितम्॥
तज्जो रुद्रस्तस्त्वेवमिंद्रादीनां पुनर्जनिः। गूहितम भूतरजसा तत्सत्त्वं मानुषा यदा॥
देवां एवं गुणास्त्वेते सर्वं व्याप्य व्यवस्थिताः। गुणातीतं च यद्रूपं ब्रह्मादीनां सुखात्मकम्॥
चिद्रूपं तस्य सत्त्वस्यैवोत्कर्षो यत्र विद्यते। तत्रोत्कृष्टं तमो यत्र हीनं तत्तु स्वभावतः॥
उपगूहने तु नैवास्ति विशेषो नित्यचिन्मये। प्रकृतेर्गुणरूपायां मूलिकायाश्च न क्वचित्॥
विशेषः परमे तत्त्वे वासुदेवे कुतः पुनरिति।

देवानां शापादिदोषाद्भूमौ जननेऽपि भूतगुणस्वभावेन देवत्वमासुरत्वं ज्ञायते। तदुक्तम्

यदि देवादयो दोषाज्जायेरन्मानुषादिषु। तथापि देवा विज्ञेया आसुराद्यास्तथा ध्रुवम्॥

इति प्रकृतमुपसंहरति दशेति। देवसर्गस्य प्राकृतवैकृतभेदेनोक्तसर्गाणां दशत्वं युज्यते॥२७॥२८॥ ❀ ❀ मूलसृष्टिर्हरिणैवास्तु मन्वंतरेष्ववान्तरसृष्टिरन्यैरिति शंका मा भूदित्याशयेनाह। एवमिति। आत्मभूरजो हरिरात्मना स्वेच्छया कल्पादिष्वात्मैव स्वयमेव स्वतंत्रो भूत्वा प्रकृत्युपादानेन देवादिदेहान् सृष्ट्वा तन्नियंतृतयात्मानं सृजति प्रादुर्बभूव बहुरूपत्वेनेति शेषः। कीदृशो हरिरेवमुक्तप्रकारेण स्रष्टा अनेन विरिंचादीनां स्रष्टृत्वं द्वारमात्रमुक्तं भवति। कथं स्रष्टेत्यत उक्तं रजःप्लुत इति रजआदिगुणानां मध्यवर्तित्वाद्रजोगुणप्लुतो न तु गुणाधीनत्वादभिमानाच्च देवदत्तवद्धरिरिंद्राद्यन्यतमः किं नस्यादित्यत उक्तमात्मभूरिति। कामो नेत्याह। स्रष्टेति। तर्हि विरिंचः किमित्यत उक्तं हरिरिति। रजोगुणेन द्रवीभूतोरजःप्लुत इति प्रसिद्धार्थं परित्यज्याप्रसिद्धार्थकल्पने किं प्रमाणमित्यत आचार्यैरिदं मानमुदाहृतम्

गुणाप्लुतो हरिर्नित्यं गुणानां मध्यगो यतः। अनहंवेदनात्तस्य गुणासंस्पर्श एव इति॥
सृष्ट्वा देवादिदेहान्स आत्मानं बहुधाकरोत्। तन्नियंतृतयात्मानं प्रकृतिं देहभेदतः॥
इति वचनं स्वबहुत्वे प्रमाणम्। एकत्वेऽस्य कर्तृकर्मादिभावः कथमितीदं चोद्यम्।
कर्ता च करणं चैव कर्म चैव स्वयं हरिः। आत्मनो बहुधाभावे प्रकृतेस्तु स्वतंत्रता॥

इति वाचा परिहर्तव्यम्। एतदभिप्रायेणामोघसंकल्प इत्युक्तम्॥२९॥ ❀ ❀ तर्हि कथं सृष्टिः प्रथमेत्याशङ्क्य तन्नियमो नास्तीति सदृष्टान्तमाह। गुणेति। एतस्मिन् गुणव्यत्यये गुणव्यतिकरे पौर्वापर्यं पूर्वापरीभावं नेच्छन्ति विपश्चित इति शेषः। कुतः अधीशितुरखंडैश्वर्यस्य हरेर्मायावत्त्वात् इच्छानियतत्वात् नद्या भ्रमंत्याः पुनः पुनरावर्तमानाया भ्रमेरावर्तस्येव॥ ३०॥ ❀ ❀ एतत्कल्पसृष्टेभ्योन्यस्मिन्कल्पेऽन्ये सृज्यन्ते इति भ्रान्तिं निवारयति। देवेति। इन्द्रादिनाम्ना सहस्राक्षशुक्लादिरूपेण च॥ ३१॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे विजयध्वजतीर्थकृतपदरत्नावलीटीकायां दशमोऽध्यायः॥ १०॥

श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

यस्तु वैकारिकस्तत्त्वदेवतारूपः स तु प्रोक्तः प्राकृतत्वान्न तु वैकृतोऽत्र प्रोच्यते इत्यर्थः। कौमारस्तु उभयात्मक इति तेषां ब्रह्मणो मनस्याविर्भूतमात्रत्वात् तत् सृज्यान्तःपातविवक्षया॥ २६॥ ❀ ❀ देवसर्ग इति सार्द्धकम्॥ २७—२९॥

इति श्रीमद्भागवते तृतीयस्कन्धे श्रीजीवगोस्वामिकृतक्रमसन्दर्भस्य टीकायां दशमोऽध्यायः॥ १०॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

अर्व्वागध आहारसञ्चारो यस्य सोऽर्व्वाक्स्रोतः । ह्रस्वत्वमार्षम् । नृणां लक्षणं रज इत्यादि ॥ २५ ॥ ❀ ❀ एते त्रयो वैकृता एव । देवसर्गश्च वैकृतः प्राकृतश्च । क इत्यपेक्षायामाह यस्तु वैकारिकः वैकारिकाहङ्कारभवानां देवानां सर्गः प्राकृतेषु प्रोक्तः पुनस्तेषामेव ब्रह्मसृष्टत्वाद्वैकृतश्च । तथा कौमारः सनत्कुमारः, सनत्कुमारादीनां सर्गस्तु उभयात्मक इति तेषां भगवद्ध्यान-पूतेन मनसान्यांस्ततोऽसृजदित्यग्रिमोक्तेर्भगवद्ध्यानजन्यत्वेन भगवज्जन्यत्वाच्च प्राकृतो वैकृतश्चेत्यर्थः ॥ २६ ॥ ❀ ❀ वैकृतस्तु देवसर्गोऽष्टभेदः तत्र विबुधादयस्त्रयो भेदाः गन्धर्वाप्सरस एकः यक्षरक्षांस्येकः भूतप्रेतपिशाचा एकः सिद्धचारणविद्याधरा एकः किन्नरादय एक इत्यष्टौ भेदाः । आदिशब्दात् किंपुरुषादयः । विश्वसृक् परमेश्वरो ब्रह्मा च ॥ २७—२८ ॥ ❀ ❀ हरिरेवात्मभूः सन्नित्यन्वयः ॥ २९ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् । तृतीये दशमोऽध्यायः सङ्गतः सङ्गतः सताम् ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

अर्वाक् अधः स्रोतः आहारसंचारो यस्य स तथा । ह्रस्वत्वमार्षम् , नृणां साधारणं लक्षणं दर्शयति रजोऽधिकं येषु ते ॥ २५ ॥ ❀ ❀ एते त्रयो वैकृताः देवसर्गश्च वैकृत इत्यन्वयः । अयमर्थः अष्टौ प्रागुक्ताः नवमः अर्वाक्स्रोतस्तदुपलक्षितस्य देवसर्गस्यापि तत्रैवान्तर्भावो विशेषतोऽभिमतस्तथापि तत्र नृणां रजआधिक्यं लक्षणं प्रतिपाद्य देवानामर्वाक्स्रोतस्त्वेपि नृभिन्नं लक्षणं द्योतयितुं वैकृतेषु सामान्यतो निर्देशः । अतो देवानां नवमसर्गे अन्तर्भावः, तेषां चतुर्मुखसृज्यत्वादिति । ये तु वैकारिकादुत्पन्ना देवास्तेषां सर्गो वैकारिकः वैकारिको देवसर्गः पञ्चमः इत्यनेनोक्तः तेषाम् । लिङ्गशरीरान्तर्गतेन्द्रियाधिष्ठातृणां च स्वसृज्यत्वाभावात् । एवं नव सर्गानुक्त्वा दशमं सर्गमाह । कौमारस्तूभयात्मक इति । उभययोगात् दशम इत्यर्थः । सिद्धशिरोमणीनां कुमाराणां ज्ञान-भक्तिसंप्रदायप्रवर्त्तकानां चतुर्मुखकृतसर्गे प्रादुर्भावात् कौमारः सर्गः वैकृतः सर्वेषु कल्पेषु ज्ञानभक्तिसंप्रदायप्रवर्त्तकत्वेनानुवर्त्तमानानां तेषां प्रत्यहं प्रादुर्भावाभावाच्चिरस्थायित्वेन चिरस्थायिषु प्राकृतेषु गणनात्प्राकृतश्चेत्येवमुभयात्मक इत्यर्थः । यत्तु देवत्वेन मनुष्यत्वेन च सृज्यते इत्यर्थ इति तदयुक्तं कुमाराणां भगवदवताराणामिहान्यत्र च मनुष्यत्वस्यादृष्टत्वादश्रुतत्वाच्च ॥२६॥ ❀ ❀ नवमसर्गान्तर्गतः वैकृतदेवसर्गोऽष्टविधः तत्र विबुधाः पितरश्चेत्येकभेदः असुरा इत्येकः गन्धर्वाप्सरस इत्येकः सिद्धा इत्येकः यक्षरक्षांस्येकः ॥ २७ ॥ ❀ ❀ भूतप्रेतपिशाचा इत्येकः चारणा विद्याधरा इत्येकः, किंनरा आदिशब्दात् किंपुरुषादयइत्येकः, इत्येवमष्टविधत्वमित्यर्थः । विश्व-सृक् सर्वकारणकारणः भगवान् तेन साक्षाच्चतुर्मुखद्वारा च कृताः इत्यर्थः ॥२८ ॥२९॥ ❀ ❀ तदेवाह । एवमिति । हरिः परमेश्वरः आत्मा सर्वात्मा स्रष्टा विश्वकारणभूतः सत्यसंकल्पः संकल्पमात्रेण सर्वं कर्तुं समर्थः आत्मानमेव सृजति कार्यावस्थया स्थापयति तत्र सर्वं साक्षाद्रूपेण किंञ्चिच्च स्वांशद्वारेण सृजतीति द्योतयितुं विशिनष्टि । रजःप्लुतः चतुर्मुखरूप इत्यर्थः ॥ ३० ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे सिद्धान्तप्रदीपे दशमाध्यायार्थप्रकाशः ॥ १० ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनीव्याख्या

तत्राऽपि प्रधानभूतान्निर्दिशति—कङ्केति । भल्लूकोऽपि पक्षिविशेषः, न तु ऋक्षः विश्वामित्रसृष्टं केचिदाहुः, पद्मकल्पे तदभावो वा । आदिशब्देन सूक्ष्मा अपि सर्वे परिगृहीताः ॥ २५ ॥ ❀ ❀ एवं भोग्यभोक्तॄन् निर्दिश्य तदुभयनियामकान्नि-र्दिशति—अर्वाक्स्रोत इति । तुशब्दोऽत्र पूर्ववज्जननं व्यावर्तयति । अर्वागेव स्रोत आहारसञ्चारो यस्य, स नृणां सर्ग एकविध एव । सर्वे पञ्चनखाः, जलचरा अपि तथा । एकपादा जलचराश्च तस्मिन् कल्पे न सन्तीति वा । तेषां पूर्ववल्लक्षणमाह—रजोऽधिका इति । रजोगुण एव तेषामधिकः, न सात्त्विकाः, नाऽपि तामसा इति । ये पुनर्भगवदीयास्ते गुणातीता देवा एव, न नराः, ब्रह्मसृष्टा वा न भवन्ति, पद्मकल्पे वा तदभावः । भूतस्थानीयं रजः । सर्वदा कर्मपराः कुर्वन्त एव तिष्ठन्ति । ज्ञानेन्द्रियाणि तेषां गौणानि, अनेन विषयेन्द्रियनिरूपणम् । दुःखे च सुखमानिन इति । बुद्धिः । चकारात्सुखे, दुःखसाधने च । एवमाधिभौतिकादिभेदेन स्थावरजङ्गमा मनुष्याश्च निरूपितास्त्रय एव ॥ २६ ॥ ❀ ❀ अन्ये स्थानरूपभिन्ना अपि न सर्गत्वं प्राप्नुवन्ति । तदाह—वैकृतास्त्रय एवैत इति । देवसर्गश्च सत्तमेति । मनुष्या एव पुण्यपरिपाकवशात् देवा भवन्तीति केचित् । अतो नवैव सर्गाः, गुणानां भेदान्तरा-सम्भवात् । उत्पत्त्या नवविधोऽप्युपपत्त्योपसंहाराच्च दशविधः, अतश्चकारः—देवसर्गश्चेति । सत्तमेति संबोधनं देवानां फलरूप-त्वज्ञापनार्थम् । स देवसर्गो द्विविधः, एको वैकारिकः सात्त्विकः, अपरो वैकारिको विकाराज्जातः, स दशमः । तत्र प्रथमे

निर्णयमाह–वैकारिक इति। तुशब्दोऽस्माद्वैकारिकाद्भेदमाह। यः सात्त्विको वैकारिकः, स प्रोक्तः पञ्चमः। कौमारस्तु देवोऽपि भवति, मनुष्योऽपि भवतीति उभयनिरूपणेनैव निरूपितः, अतः पृथक्तया, स न वक्तव्य इति तुशब्दः॥ २७॥ ❀ ❀ देवसर्गस्त्वेकविधोऽप्यवान्तरभेदेनाऽष्टविधः। तान् गणयति—विबुधा देवा इन्द्रादय एके। पितरोऽसुरा एके। गन्धर्वाप्सरस एके। सिद्धा एके। यक्षरक्षांस्येके। चारणा अपि यक्षेष्वेवेति केचित्॥ २८॥ ❀ ❀ भूतप्रेतपिशाचा एके। विद्याधरा इति केचित्। किन्नराः किंपुरुषादयः। एवं सर्वानुपपाद्य उपसंहरति–दशैते विदुराऽऽख्याता इति। संबोधनं स्नेहसूचकम्, तेनाऽन्यथाकथनं व्यावर्तितम्। विश्वसृजा ब्रह्मणा कृता एते सर्गाः॥ २९॥ ❀ ❀ एतावदुक्त्वा तूष्णीं स्थिते पूर्ववत् पुनः प्रक्ष्यतीति वक्तव्यान्तरं निर्दिशति—अतः परं प्रवक्ष्यामीति। अनुपदं न। एतच्छेषनिरूपणानन्तरं कालान्तरे प्रवक्ष्यामीत्यर्थः। अवशिष्टं रूपद्वयमस्ति, इन्द्रियाणि बुद्धिश्चेति। तदुभयं निर्दिशति–वंशान्मन्वन्तराणि चेति। वंश इन्द्रियरूपः, चकारात्तत्संबन्धिनोऽपि तत्त्वेनैव वक्तव्याः प्रतिज्ञाताः। नन्वेवं भगवान् अनेकविधान् किमर्थं कदा वा करोतीत्याशङ्कयाऽऽह–एवं रजःप्लुत इति। रजसा व्याप्तो भगवान् सृष्टौ प्रवृत्तः, सर्वेष्वेव कल्पादिषु आत्मनः सकाशात् स्वयमेवाऽऽविर्भूतः। सर्वेषां दुःखनिवारणार्थममोघसंकल्पमात्रेण कर्तृकर्मकरणरूपः स्वयमेव सृजति। ब्रह्माऽपि रजःप्लुतो भगवानेवेत्युक्तं भवति। कल्पादिष्विति बहुवचनं सतत्त्वानि ब्रह्माण्डानि बहुधा सृजतीति ज्ञापयति। रजोऽपि स्वयमेवेति स्वस्यैव करणत्वम्। तथा कर्मकालादयोऽपि स्वयमेव। जगदपि स्वयमेवेति स्वस्यैव कर्मत्वम्। पुरुषादयोऽपि स्वयमेवेति स्वस्यैव कर्तृत्वम्। तस्मात्सर्वं हरिरिति सिद्धम्॥ ३०॥

इति श्रीभागवतसुबोधिन्यां श्रीलक्ष्मणभट्टात्मजश्रीवल्लभदीक्षितविरचितायां तृतीयस्कन्धे दशमाध्यायविवरणम्।

## श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

कङ्केत्यस्याऽऽभासे। तत्रापीति। अण्डजेष्वपि॥ २५॥ ❀ ❀ ❀ सिद्धान्तमाहुः–उत्पत्त्येत्यादि। उपपत्त्येति। सत्त्ववृत्तित्वसाधारण्यरूपयोपपत्त्या। असुरादौ सांकर्यमित्यरुच्या हेत्वन्तरमाहुः–उपसंहाराच्चेति॥ २७॥ ❀ ❀ अतःपरमित्यत्र। अवशिष्टमिति। सर्गसंव्यूहप्रश्नेऽवशिष्टम्।

इति श्रीतृतीयस्कन्धसुबोधिनीप्रकाशे दशमाध्यायविवरणं समाप्तम्।

## श्रीगिरिधरकृता बालप्रबोधिनी

तस्य साधारणधर्मानाह—रजोगुणोऽधिको येषु ते तथाभूताः। अतो रजसो विक्षेपात्मकत्वात्तेऽपि कर्मपराः निरन्तरं कर्म कुर्वन्त एव तिष्ठन्ति। दुःखे च सुखमानिनः। चकाराद् दुःखसाधने सुखसाधनत्वाभिमानवन्त इति ज्ञेयम्। एते स्थावरादित्रयः सर्गा वैकृता एव, न तूभयात्मकाः। एवं रजोधिकेऽपि सर्गे भगवद्भक्तत्वात्त्वं श्रेष्ठ इत्याशयेन सम्बोधयति—सत्तमेति। देवसर्गश्च वैकृत इत्यनुषङ्गः॥ २५॥ ❀ ❀ तस्य च यस्तु वैकारिकः सात्त्विको देवसर्गः पूर्वं प्राकृतेषु प्रोक्तस्तस्यैव पुनर्ब्रह्मण आविर्भावान्न पृथक्तया गणनेति शेषेणान्वयः। कौमारः सनत्कुमारादीनां सर्गस्तु उभयात्मकः 'भगवद्ध्यानपूतेन मनसाऽन्यांस्ततोऽसृजत्' इत्यग्रिमोक्तेर्भगवद्ध्यानजन्यत्वेन भगवज्जन्यत्वात् प्राकृतत्वं ब्रह्मजन्यत्वाच्च वैकृतत्वम्। देवत्वेन मनुष्यत्वेन चोभयात्मकत्वं सप्तमः सर्गः। स च देवसर्गोऽष्टविधः। तदेवाष्टविधत्वं दर्शयति—विबुधादयस्त्रयः॥ २६॥ ❀ ❀ गन्धर्वाप्सरस एकः, यक्षरक्षांस्येकः, भूतप्रेतपिशाचा एकः, सिद्धचारणविद्याधरा एकः, किन्नरादय एकः। आदिशब्दात् किम्पुरुषाश्वमुखादयः। एतच्च विंशेऽध्याये स्पष्टं भविष्यति॥ २७॥ ❀ ❀ अनुक्रान्तान् सर्गान्निगमयति—दशेति। विदुरेति सम्बोधनेन स्नेहं सूचयन् अन्यथाकथनशङ्कां निवर्तयति। विश्वसृजा भगवता कृता एते दशविधाः सर्गास्ते तुभ्यं मया आख्याता वर्णिताः। कालस्वरूपमुक्त्वा तूष्णीं स्थिते पूर्ववत्पुनः किञ्चिदर्थान्तरं प्रक्ष्यतीत्याशङ्क्य प्रश्नमध्यगतमेव वक्तव्यान्तरकथनं प्रतिजानीते—अत इति। अतः परं कालस्वरूपनिरूपणानन्तरं वंशान् मन्वादीन् मन्वन्तराणि च प्रवक्ष्यामीत्यन्वयः॥ २८॥ ❀ ❀ 'पुरुषस्तदुपादानमात्मानं लीलया सृजत्' ( श्लो० ११ ) इत्युपक्रान्तमेकस्यैव भगवत उपादानत्वं निमित्तत्वं चोपसंहरति—एवमिति। एवमुक्तप्रकारेण हरिरेव रजःप्लुतः स्वेच्छया स्वीकृतरजोगुणः कल्पादौ आत्मभूः आत्मनः सकाशाद्भवतीति तथा चतुर्मुखरूपः स्रष्टा सन्नात्मा स्वयमेव आत्मना स्वरूपभूतेन कालप्रधानपुरुषादिरूपसाधनेन आत्मानमेवोपादानभूतं विश्वरूपेण सृजतीत्यन्वयः। आदिपदेन स्थितिसंहारयोर्ग्रहणम्। सत्त्वेन विष्णुरूपः सन्पाति, तमसा रुद्ररूपः सन् संहरति च। ननु कथमेकस्यैवोपादानत्वं निमित्तत्वं च सम्भवति कुलालादिषु तथादर्शनादित्याशङ्क्याह—अमोघसङ्कल्प इति, सत्यसङ्कल्प इत्यर्थः। कुलालादेरसर्वशक्तित्वेनोपादानत्वं, मृदस्त्वज्ञत्वान्न निमित्तत्वं, भगवतस्तु सत्यसङ्कल्पत्वात्सर्वं सङ्गच्छत इति भावः॥ २९॥

इति श्रीवल्लभाचार्यवंश्यगोपालसूनुना। श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा॥ १॥
श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये। श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी॥ २॥
रचिता च तृतीयेऽत्र बन्धसर्गनिरूपणे। दशमो विवृतोऽध्यायः सर्गभेदनिरूपकः॥ ३॥

---

१ नेदं श्लोकद्वयं लिखितपुस्तकेषूपलभ्यते।

## हिन्दी अनुवाद

विदुरजी ! नवीं सृष्टि मनुष्योंकी है । यह एक ही प्रकारकी है । इसके आहारका प्रवाह ऊपर ( मुँह ) से नीचेकी ओर होता है । मनुष्य रजोगुणप्रधान, कर्मपरायण और दुःखरूप विषयोंमें ही सुख माननेवाले होते हैं ॥ २५ ॥ ❀ ❀ स्थावर, पशु-पक्षी और मनुष्य—ये तीनों प्रकारकी सृष्टियाँ तथा आगे कहा जानेवाला देवसर्ग वैकृत सृष्टि हैं तथा जो महत्तत्त्वादिरूप वैकारिक देवसर्ग है, उसकी गणना पहले प्राकृत सृष्टिमें की जा चुकी है । इनके अतिरिक्त सनत्कुमार आदि ऋषियोंका जो कौमारसर्ग है, वह प्राकृत-वैकृत दोनों प्रकारका है ॥ २६ ॥ ❀ ❀ देवता, पितर, असुर, गन्धर्व, अप्सरा, यक्ष-राक्षस, सिद्धचारण, विद्याधर, भूत-प्रेत-पिशाच और किन्नर-किम्पुरुष अश्वमुख आदि भेदसे देवसृष्टि आठ प्रकारकी है। विदुरजी ! इस प्रकार जगत्कर्त्ता श्रीब्रह्माजीकी रची हुई यह दस प्रकारकी सृष्टि मैंने तुमसे कही ॥ २७-२८ ॥ ❀ ❀ अब आगे मैं वंश और मन्वन्तरादिका वर्णन करूँगा । इस प्रकार सृष्टि करनेवाले सत्यसङ्कल्प रजोगुणसे व्याप्त होकर स्वयं ही जगत्के रूपमें अपनी भगवान् हरि ही ब्रह्माके रूपसे प्रत्येक कल्पके आदिमें ही रचना करते हैं ॥ २९ ॥

दशम अध्याय समाप्त

# अथैकादशोऽध्यायः

## मैत्रेय उवाच

**चरमः सद्विशेषाणामनेकोऽसंयुतः सदा। परमाणुः स विज्ञेयो नृणामैक्यभ्रमो यतः॥ १॥**
**सत एव पदार्थस्य स्वरूपावस्थितस्य यत्। कैवल्यं परममहानविशेषो निरन्तरः॥ २॥**
**एवं कालोऽप्यनुमितः सौक्ष्म्ये[1] स्थौल्ये स सत्तम। संस्थानभुक्त्या भगवानव्यक्तो व्यक्तभुग्विभुः॥ ३॥**
**स कालः परमाणुर्वै यो भुङ्क्ते परमाणुताम्। सतोऽविशेषभुग्यस्तु स[2] कालः परमो महान्॥ ४॥**

### श्रीधरस्वामिविरचिता भावार्थदीपिका

तत एकादशे कालपरमाण्वादिलक्षणैः। युगमन्वंतरादिभ्यः कल्पमानादि वर्ण्यते॥ १॥

तदेवं सामान्यतः कालस्योपलक्षणभूतं गुणव्यतिकरं दशविधं निरूप्येदानीं तस्यैव विशेषणं निरूपयितुं तत्परिच्छेद्यं वस्तु लक्षयति द्वाभ्याम्। सतः कार्यस्य विशेषाणामंशानां यश्चरमोंऽत्यो यस्यांशो नास्ति अनेकः कार्यावस्थामप्राप्तः असंयुतः समुदायावस्थां चाप्राप्तः। अत एव सदा कार्यसमुदायावस्थयोरपगमेऽप्यस्ति स परमाणुर्विज्ञेयः। किं तत्र प्रमाणमत आह यतो येभ्यः समुदितेभ्यो नृणां व्यवहर्तॄणामैक्यभ्रमोऽवयविबुद्धिः तथा च पंचमेऽवयविनिराकरणे वक्ष्यति। येषां समूहेन कृतो विशेष इति। कार्यानुपपत्त्या कल्प्यत इति भावः॥ १॥ ❀ ❀ सूक्ष्ममुक्त्वा स्थूलमाह। सत एवेति। यस्य चरमोंऽशः परमाणुस्तस्यैव सतः कार्यमात्रस्य स्वरूपावस्थितस्य परिणामांतरमप्राप्तस्य यत्कैवल्यमैक्यं स परममहान्। पुंस्त्वं तु परमाणुप्रतियोगित्वात्। ननु नानाविशेषवान्परस्परं भिन्नश्च सर्वः पदार्थः कथमैक्यं तस्य तत्राह। अविशेषो विशेषविवक्षारहितो निरंतरो भेदविवक्षारहितश्च सर्वोऽपि प्रपंचः परममहानित्यर्थः॥ २॥ ❀ ❀ यथा सूक्ष्मः स्थूलश्चायं पदार्थः एवं कालोऽप्यनुमितः चकारान्मध्यमावस्था गृह्यते संस्थानं परमाण्वाद्यवस्था तस्य भुक्तिर्व्याप्तिस्तया भगवानिति हरेः शक्तिः स्वतो व्यक्तोऽव्यक्तं भुंक्ते व्याप्नोति परिच्छिनत्तीति तथा विभुरुत्पत्त्यादिषु दक्षः॥ ३॥ ❀ ❀ एतदेव प्रपंचयति। स इत्यादिना। सतः प्रपंचस्य परमाणुतां परमाण्ववस्थां यो भुंक्ते स कालः परमाणुः। तस्यैव विशेषं साकल्यं यो भुंक्ते स परममहान्। अयमर्थः ग्रहर्क्षताराचक्रस्थ इत्यादिना यत्सूर्यपर्यटनं वक्ष्यते तत्र सूर्यो यावता परमाणुदेशमतिक्रामति तावान्कालः परमाणुः यावता च द्वादशराश्यात्मकं सर्वं भुवनकोशमतिक्रामति स परममहान् संवत्सरात्मकः कालः तस्यैवावृत्त्या युगमन्वंतरादिक्रमेण द्विपरार्धान्तत्वमिति। तथा च पंचमे सूर्यगत्यैव कालादिविभागं वक्ष्यति॥ ४॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

ततः सृष्टिवर्णनानंतरं युगमन्वंतरादिभ्य इति तृतीयार्थे पंचमी, युगमन्वंतरादिभिरित्यर्थः। आदिना ब्रह्मदिनादिग्रहः। मानादीत्यत्रादिना भगवत्स्वरूपादिग्रहः॥ (१)

तस्यैव कालस्यैव तत्परिच्छेद्यं कालपरिच्छेद्यम्। अत एव कार्यावस्थासमुदायावस्थाप्राप्तत्वादेव। तत्र परमाणौ। समुदितेभ्यः संयुतेभ्यः। कार्याणां द्व्यणुकत्रसरेण्वादीनामनुपपत्त्या परमाणुं विनाऽसिद्ध्या स कल्प्यतेऽनुमीयते। इति भाव इति। द्व्यणुकं सावयवं कार्यत्वात् घटवदित्यनुमाने द्व्यणुकावयवः परमाणुरेव तस्याप्यवयवित्वकल्पनेऽनवस्था स्यादतः स एव चरमोंश इति तात्पर्यम्॥ १॥ ❀ ❀ परमाणुः प्रतियोगी निरूपको यस्य स परमाणुप्रतियोगी तस्य भावस्तत्त्वं तस्मात्। परमाणुमपेक्ष्यैव परममहत्त्वमस्त्यतः परमाणुरेव तत्प्रतियोगीति। अत्राक्षिपति—नन्विति। इत्यर्थः इति। नानाविशेषा यथैकस्यैव घटपदार्थस्य घटांतरापेक्षया भेदश्च तथा सर्वप्रपंचश्च पदार्थमात्रस्यैकीकरणाद्विशेषविवक्षारहितो भवति। प्रपंचान्तरस्य विलक्षणस्याभावाद्भेदविवक्षारहितो भवतीति भावः॥ २॥ ❀ ❀ मध्यमावस्था स्थूलसूक्ष्मांतरालावस्था भगवच्छक्तित्वात्कालोऽपि भगवानेव, शक्तिशक्तिमतोरभेदोपचारात्। कालस्य भगवच्छक्तित्वं 'कालशक्त्या तु मायायाम्' इत्यत्र काले शक्तिशब्दप्रयोगाद्बोध्यम्। स्वतः स्वरूपेण विशेषेण भातीति विभुः दक्षो निपुणः "विभुः प्रभौ सर्वगते दक्षानंतस्वरूपयोः" इति कोशात्॥ ३॥ ❀ ❀ एतदेव कालानुमननमेव उक्तमर्थं स्फोटयति—अयमर्थ इति। भुवनकोशं भूगोलं द्वादशराशिमितार्कभोग्यकाललंघ्य-

---

१. प्रा० पा०—सूक्ष्मे स्थूले च। २. प्रा० पा०—कालः सः।

त्वाद्भूगोलस्यापि द्वादशराश्यात्मकत्वमुक्तम्। तस्यैव संवत्सरादिरूपकालस्यैव। पंचमे पंचमस्कंधे 'यदा चैन्द्र्याः प्रचलतः' इत्यादिना ॥ ४ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

परमाण्वादिलक्षणैः परमाण्वाद्युपाधिभिः युगमन्वतरादिभ्यः युगादिमानमारभ्य कल्पमानादिकल्पस्य ब्रह्मदिनस्य मानं चतुर्युगसहस्रात्मकं चतुर्दशमन्वन्तररूपम्। आदिना प्रलयवैराग्यकालपरिच्छेदरहितत्त्वपरिग्रहः। आदिना संध्यासंध्यांशपरिग्रहः। गुणव्यतिकरं गुणक्षोभमयं सर्गं तस्यैव कालस्यैव विशेषं परमाण्वाद्यवस्थाभेदं तत्परिच्छेद्यं कालव्याप्यं कार्यावस्थां द्व्यणुकाद्यवस्थां समुदायावस्थां कार्य्यावस्थाहेतुभूतां संयोगेन समूहावस्थाम्। अत एव अवस्थाद्वयमप्राप्तत्वादेव तत्र परमाणौ समुदितेभ्यस्संयुक्तेभ्यः। अवयविबुद्धिः पृथगारब्धोऽवयवीति भ्रमज्ञानं भवति वस्तुतस्तु समूहमात्रं न तत्र कश्चन अवयवीत्यर्थः। तथा च पञ्चमेन गतिसामान्यम्। कार्य्यानुपपत्त्या कार्य्यस्यावयविनोऽवयवमन्तरासिद्ध्या अर्थापत्त्यानुमीयते पञ्चमानुसारेणावयविनो निराकरणे स्वरूपासिद्धो हेतुरिति भ्रमपदं व्याख्यातम् ॥ १ ॥ ❀ ❀ परिणामान्तरमप्राप्तस्य कार्य्यसमुदायावस्थाविनाशरूपपरिणाममप्राप्तस्य परमाणुप्रतियोगित्वात् परमाणुशब्दप्रतिस्पर्द्धित्वात् जात्याभिन्नत्वेऽपि व्यक्त्या नानाविशेषवान् गवादिपदार्थः जात्यापि परस्परं भेदवान् गवाश्वादिपदार्थः विशेषविवक्षा व्यक्तिभेदकृतभेदविवक्षा भेदविवक्षा जातिभेदकृतभेदविवक्षा तत्तद्रहितत्वेन सर्वोऽपि प्रपञ्च इत्यार्थिकत्वादित्यर्थोक्तिः। सौक्ष्म्ये सूक्ष्मोपाधौ परमाणौ स्थौल्ये स्थूलोपाधौ सर्वप्रपञ्चे कालपरिच्छेद्ये तत्परिच्छेदकतया कालोऽप्यनुमितः। तथा च प्रयोगः परमाण्वादिपदार्थः कालपरिच्छेद्यः सूर्य्यात्मककालातिक्राम्यत्वात् तत्तद्देशवत् व्यतिरेके आत्मवच्चेति ॥ २ ॥ ३ ॥ ❀ ❀ एतदेव कालस्य सूक्ष्मस्थूलत्वमेव भुङ्क्ते व्याप्नोति तस्यैव प्रपञ्चस्य साकल्यं सर्वप्रपञ्चमित्यर्थः। कालस्य तत्तद्भोक्तृत्वं सूर्य्यरूपेणेति व्याचष्टे। अयमर्थ इति। तत्र सूर्य्यपर्य्यटने यावता कालेन। तस्यैव संवत्सरस्यैव ॥ ४ ॥

### श्रीमद्वीरराघवव्याख्या

एवं कालकल्पसृष्टिमुक्त्वा कालस्वरूपं स्थौल्यसौक्ष्म्यरूपं प्रकर्षापकर्षकाष्ठे निरूपयति। चरम इति श्लोकद्वयेन। ननु कालपरिच्छेद्यवस्तुनः प्रकर्षापकर्षनिरूपणं किमर्थमप्रकृतत्वादिति चेन्न, कालो ह्यत्र परमाण्वादिसम्वत्सरान्तः स्थूलसूक्ष्मरूपः सूर्यगत्या लक्ष्यते। यत्र सूर्यो यावत्परमाणुमतिक्रामति तावत्परमाणुः यावता च द्वादशराश्यात्मकं भुवनकोशमतिक्रामति स परममहान्संवत्सरात्मकः। एवं च सूर्यगतिविषयदेशप्रकर्षापकर्षनिरूपणमन्तरेण सूर्यगमनकालप्रकर्षापकर्षनिरूपणायोगात् युक्तं तावत्कालकाल्यस्य वस्तुनः निरतिशयस्थौल्यसौक्ष्म्यनिरूपणं तत्र प्रथमं कालपरिच्छेद्यस्य निरतिशयसौक्ष्म्यरूपापकर्षकाष्ठामाह चरम इत्येकेन। केचिदिमं श्लोकं वैशेषिकोक्तपरमाणुसद्भावपरमाहुः। तदयुक्तम्। वेदोपबृंहणपरे प्रबन्धे परमाणुसद्भावाभ्युपगमासंभवात् परमाण्वादिसंवत्सरावसानेनेति वक्ष्यमाणत्वाच्च सद्विशेषाणां सतः कार्यस्य विशेषाणामंशानां यश्चरमोऽन्त्योंऽशः अत्यल्पः यस्य पुनरंशो नास्ति स इत्यर्थः। तमेव विशिनष्टि अनेकः कार्यावस्थामप्राप्तः असंयुतः समुदायावस्थां चाप्राप्तः अतएव सदा कार्यसमुदायावस्थयोरपगमेऽप्यस्ति स परमाणुर्विज्ञेयः। नृणां यतः कालापकर्षादैक्यभ्रमः ईदृशं सूक्ष्मं विभागमज्ञात्वाऽनेकेषु कालांशेष्वेकः काल इति भ्रमन्तीत्यर्थः ॥ १ ॥ ❀ ❀ एवमपकर्षकाष्ठा अभिहिता अथ प्रकर्षकाष्ठामाह। सत इति। यस्य कार्यस्य चरमोंऽशः परमाणुस्तस्यैव सतः कार्यावस्थयावस्थितस्य स्वरूपावस्थितस्य विकारान्तररहितस्य पदार्थस्य यत्कैवल्यं केवलं स्वरूपं स एव परममहान्निरतिशयप्रकर्षः। तमेव विशिनष्टि। अविशेषः पुनः प्रकर्षान्तररहितः स्वसमवेतागृहीतभेदावयवः ॥ २ ॥ ❀ ❀ कालपरिच्छेद्ये स्वपदार्थे उपपादिते प्रकार्षापकर्षकाष्ठे अप्यतिदिशति एवमिति द्वाभ्याम्। एवं परिच्छेद्यप्रकर्षापकर्षकाष्ठावत्कालोपि सौक्ष्म्ये परमाण्वादिरूपप्रकर्षे च संस्थानभुक्त्यावच्छेद्यार्थगतावस्थाविशेषसंयोगलक्षणया, यद्वा स्वावच्छेदकाणुत्वाद्यवस्थारूपसंस्थानविशेषसंयोगलक्षणया भुक्त्यानुमितः। कथंभूतः भगवान् भगवदात्मकः स्वयमव्यक्तः व्यक्तभुग् विभुः व्यक्तवस्तुपरिणामहेतुः ॥ ३ ॥ ❀ ❀ अतिदिष्टामेवापकर्षकाष्ठामुपपादयति स इत्यर्धेन। परमाणुतामत्यल्पतां यः कालः भुङ्क्ते अनुभवति स कालः परमाणुर्ज्ञेयः। प्रकर्षकाष्ठामाह सत इत्यर्धेन। सतः निरतिशयसूक्ष्मावस्थयावस्थितस्य स्वस्य यो विशेषः निरतिशयस्थूलसंवत्सरात्मकत्वं विशेषणं तं भजतीति विशेषभुग्यः स परममहान्निरतिशयप्रकर्ष इत्यर्थः। संवत्सरात्मकत्वमेव हि कालस्थौल्यं द्विपरार्धत्वं तस्यैव संवत्सरस्य युगमन्वन्तरानुक्रमेण भवतीति न तस्य स्थौल्यम् ॥ ४ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली।

हरेरुभयानन्त्यज्ञानं मोक्षैकफलमित्ययमर्थोऽस्मिन्नध्याये निरूप्यते। तत्र कालाख्यं लक्षणं ब्रह्मन्निति विदुरप्रश्नं परिहरिष्यन् परमाणुकालज्ञानाय द्रव्यपरमाणुपरिमाणमाह। चरम इति। तुशब्द एवार्थे, एकस्यार्थे यो विशेषाणां पार्थिवादिपदार्थानां चरमोऽन्त्यो विशेषः तर्हि निरवयवः किन्नेत्याह अनेकेति। यश्चानेकैरवयवैरासमंतात्सम्यक् युतः अनेकावयवत्वे चरम इति

विशिष्योक्तिः कथमित्यतस्तुशब्देन विशिनष्टि देवलोके स्थिता मनुष्या विशेषेण सौक्ष्म्येण * दर्शने यस्यांशांशित्वविशेषं द्रष्टुं न शक्ताः स एव चरमो विशेष इत्याचक्षते प्रेक्षावन्तः । काणादादीनां यतो यस्मादेवैक्यभ्रमः यतः परमाणुर्नास्ति स पदार्थः परमाणुरिति भ्रान्तिः । तेषां भ्रान्तिज्ञानं युक्तमिति दर्शयितुं नृणामित्युक्तं नाम्ना परमाणुर्विज्ञेय इत्यर्थः ।

मनुष्या देवलोकेऽपि विशेषेणैव दर्शने । अंशांशित्वविशेषं तु यस्य द्रष्टुं न शक्नुयुः ॥
चरमो विशेष इति तं मुनयो ब्रूयुरञ्जसा । परमाणुः स विज्ञेयः काणादाद्या निरंशिनम् ॥
अनन्तांशयुतत्वेऽपि यं ब्रूयुर्भ्रान्तिदर्शनात् । ततोऽपि परमाणुत्वं तदंशानां तु यद्यपि ॥
अनन्तत्वाद्विवेकार्थं यस्योक्ता परमाणुता । इति ।

**श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली ।**

वचनात् अस्यैव परमाणुत्वं नान्यस्येति ज्ञायते अत एव विज्ञेय इति ॥ १ ॥ * * अणुपरिमाणं निरूप्य महत्परिमाणं दर्शयति । सत इति । सतः परब्रह्मण एव यत्कैवल्यं यः केवलभावः स परममहानित्यन्वयः कालतो देशतो गुणतश्चानन्तत्वं सतः परब्रह्मण एव मुख्यमित्यर्थः । सन् घट इत्यादौ सच्छब्दवृत्तिदर्शनादित्यतः पदार्थस्येति सदित्यनुवर्तते सत्पदमुख्याभिधेयस्य 'मुख्याभिधेयस्त्वर्थः स्याद्वाच्यमन्यच्च भण्यते । अमुख्येष्वर्थशब्दस्तु नीचोपरिहितो भवेत् ॥' इति वचनात् मुख्यस्योपपत्तावमुख्यस्वीकारायोगात् अणुतरवस्तुनि स्थितस्य सत्पदमुख्याभिधेयस्य तत्परिणामत्वेन भाव्यं यद्देवसमः प्लुषिणेत्यादौ दर्शनादित्यतः स्वरूपावस्थितस्येति स्वरूपमेवावष्टभ्य स्थितस्य 'स्वे महिम्नी'ति श्रुतिः, जगदावरकस्य वासुदेवाख्यस्य हरेर्जगत्प्रविष्टरूपात् किञ्चिन्महत्त्वात्स्वरूपावस्थितत्वाच्च तद्व्यावृत्तिः कथमित्यतः कैवल्यमिति । जगदावरणव्यापारोदासीनतया स्थितं तादृशरूपाणामनेकत्वात्कथं निर्णय इत्यतोऽविशेष इति तादृग्रूपविशेषरहितः सर्वगतस्यापि प्रादेशमात्रतया स्थितत्वेन विशेषवत्त्वात्कथमविशेष इत्यतो निरंतर इति प्रादेशमात्रादिविशेषरहितः । एतदुक्तं भवति परब्रह्मणः यः केवलभावोऽण्डान्तः प्रविष्टं तदावरकं तस्यैव परमपुरुषादिरूपांतरतदेकदेशप्रादेशमात्रादिविशेषं च विना यत्सर्वगतं स्वरूपं तदेव परममहानित्युच्यते ।

कालकोटिविहीनत्वं कालानन्त्यं विदुर्बुधाः ।
देशकोटिविहीनत्वं देशानन्त्यं तथैव च । गुणानामप्रमेयत्वं वस्त्वानन्त्यं विदो विदुः ।
आनन्त्यं त्रिविधं नित्यं हरेर्नान्यस्य केनचित् । तस्य सर्वस्वरूपेष्वप्यानन्त्यं तु त्रिलक्षणम् ॥
तथापि देशतस्तस्य परिच्छेदोऽपि विद्यते । परिच्छेदस्तथा व्याप्तिरेकरूपेऽपि युज्यते ॥
तस्याचिन्त्याद्भुतैश्वर्याद्व्यवहारार्थमेव च । गुणतः कालतश्चैव परिच्छेदो न कुत्रचित् ॥
व्याप्तत्वं देशतोऽप्यस्ति पूर्वरूपेषु यद्यपि । न च भेदः क्वचित्तेषामणुमात्रोऽपि विद्यते ॥
तथापि विद्यतेऽणुत्वं तस्मादैश्वर्ययोगतः । तस्माद्बुद्ध्यवतारार्थमव्याप्तत्वं च भण्यते ॥
यत्तस्य व्यापकं रूपं परं नारायणाभिधम् । शून्यं ब्रह्मेति यत्प्राहुर्द्वितीयं स्रष्टृयत्ततः ॥
परमं पुरुषो नाम मितं तद्देशतो विभोः । तृतीयं वासुदेवाख्यं जगदावरकं मितम् ॥
देशतो जगदाविष्टं तुरीयं विष्णुनामकम् ।

इति वचनेन मंदमतीनां शङ्कोपद्रवाः परिहृता इति ज्ञातव्यम् । किंच सर्वगतस्यापि ब्रह्मरूपस्य कालादिरूपया प्रकृत्या समव्याप्तावपि दार्ष्टान्तिकेऽन्तर्भावात् तदन्यस्मिन्ननवस्थानात्स्वरूपावस्थितस्येत्युक्तम् ।

देव्या कालादिरूपिण्या स्थितं ब्रह्मापि सर्वगम् ।
उच्यतेऽनन्यगं यस्मादात्मवत्सा हरेर्विभोः । महदादिगतं यत्तु तदन्यगतमुच्यते ॥ इति च

उक्तमर्थं दार्ष्टान्तिके करोति । एवमिति । सौक्ष्म्ये परमाणुत्वे स्थौल्ये परममहत्त्वे वर्त्तमानकालोऽप्येवमनुमितः कलामुहूर्ता इत्यादिशास्त्रेण साक्षिप्रत्यक्षानुगृहीतव्याप्तिमल्लिंगज्ञानवता जनेनानुमितः ज्ञात इत्यन्वयः । 'अनुमेति द्वयं प्राहुर्यथाज्ञानं च लिङ्गजमि'त्यभिधानादर्थद्वयं सेत्स्यति ।

यावन्तं देवलोकस्थो मानुषस्त्ववधारयेत् । महाप्राज्ञो देवयूकः स कालः परमाणुकः ॥
सर्गाद्यैरनवच्छिन्नस्तदनन्तर इत्यपि । तथैव परमाण्वादिविशेषात्मापि नो भवेत् ॥

पूर्वापरादिभेदेन स कालः परमो महान् । इति शास्त्रवचनं चात्र प्रमाणं यज्ञादिकर्मणा प्रीतदेवताप्रसादेन प्राप्तैश्वर्यो मानवो देवयूक इति । न केवलमुभयविधः कालोऽनुमितः, किं तु तदन्तर्यामी तदाख्यो हरिरपि अनुमित इत्यभिप्रेत्याह संस्थानमुक्त्येति ।

* तस्य चरमत्वं नाम प्रमाणोक्तरीत्या देवलोकस्थमनुष्याणां विशेषाकारेण प्रत्यक्षत्वप्रयोजकमहत्त्वाभावे रूपं वैलक्षिकमिति दर्शयितुं तु शब्दः ।

विभुर्व्याप्तो भगवान् संस्थानभुक्त्या संस्थानयोः परमाणुत्वेन परममहत्त्वेन व्यवच्छिन्नयोः स्थित्या तदन्तर्यामित्वेनाव्यक्तोऽदृश्यः परमाणुः परममहानित्यनुमित इत्यन्वयः। तत्र स्थित्वा किं करोतीत्यत उक्तं व्यक्तभुगिति। व्यक्तं तत्कालवृत्तिजगत्सृजति पाति संहरतीति व्यक्तभुगिति। यद्वा स्वसमानधर्मवत्त्वादव्यक्तं प्रकृतिरूपं सृष्ट्यादौ प्रवर्तयतीति, अत्र विशेषस्तु।

देशतः कालतश्चैव वस्तुतश्च त्रिधा हरेः। यथानन्त्यं न चान्यस्य प्रकृतेर्देशकालतः॥
तथा शब्दस्य कालस्य देशानन्त्यं च कालतः। कालशब्दात्मिका सैव तथापि तु सदा हरेः॥
नास्याः सामर्थ्यलेशोऽपि ज्ञानानन्दगुणेष्वपि। ज्ञेयस्तदवरो वायुः शेषवींद्रहरास्ततः॥

अवरास्तत इन्द्राद्या गुणैः सर्वैर्न संशयः॥ इति वचनादवगंतव्यः। किंच कालांतर्यामिणः परमाण्वादिनामवाच्यत्वं तत्तद्विशेषभोक्तृत्वात्तदुक्तम् 'अण्वादिकालसंस्थानभोक्तृत्वात्परमेश्वरः। अण्वादिनामवाच्योऽसौ कालश्चेत्यभिधीयते॥' इति॥ ३॥ ❀ ❀ सामान्यत उक्तं विशिनष्टि। स काल इति। यः कालः कालांतर्यामी हरिश्च परमाणुतां चरमस्तु विशेषाणामित्याद्युक्तलक्षणवत्तां भुंक्ते स कालः हरिश्च परमाणुर्वै इति परमाणुनाम्ना वाच्य इत्युक्तस्मृतिप्रसिद्धमित्यर्थः। सतो ब्रह्मणोऽविशेषं स्वरूपं स्वरूपावस्थितकैवल्याद्यविशेषं निरंतरलक्षणं परममहद्रूपं यः कालः कालांतर्यामी च भुंक्ते स कालः कालांतर्यामिब्रह्मरूपं परममहानिति नाम्ना वाच्यं तस्य कालांतर्यामिणोऽपि त्रिधा परिच्छेदाभावात्। तदुक्तं 'सर्वत्र सर्वभोक्तापि विशेषादेव भोक्तृवत्। स्थितो हरिरचिंत्यात्मा निजैश्वर्यादजो विभुः॥' इति अनेन सत एव पदार्थस्येत्यादिना यानि विशेषणानि परममहतो ब्रह्मणः कथितानि तानि महत्कालान्तर्यामिणोऽपि सन्तीत्युक्तं भवति। तथाहि यः सच्छब्दस्य मुख्यार्थः परमाण्वादिकालान्तर्यामिस्वरूपव्यावृत्तस्तथा मन्वतरादिकालान्तर्यामिस्वरूपव्यावृत्तस्ततोऽपि स्थूलपरार्धपरादिकालान्तर्यामिस्वरूपव्यावृत्तो यश्चाखण्डतत्त्वेऽपि तदेकदेशाद्यवतारभेदव्यावृत्तत्वेन परममहद्रूपभोक्ता स परममहानिति यावता कालेन परमाणुपरममहतोरुत्पत्तिप्रलयौ स्यातां तौ कालौ परमाणुपरममहान्तावित्ययमर्थः प्रमाणशून्यत्वादुपेक्षणीयः॥ ४॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

एवमिति यदुक्तं तदेव विवृणोति स काल इति। अत्र टीकायां परमाणुदेशमतिक्रामतीत्यत्र मध्यमवीथीमयज्योतिश्चक्रगत्येति ज्ञेयं सर्व्वं भुवनकोषमतिक्रामतीत्यत्र तु खगत्येति ज्ञेयम्। यो भुङ्क्ते परमाणुतामित्यत्र च सूर्य्यरूपेण परमाणुदेशातिक्रामितामित्येवार्थः। वक्ष्यते च तस्य कालस्य सूर्य्येणाभेदः। यः सृज्यशक्तिमुरुधेत्यनेन। यद्वा। परमाणुतां तत्पदार्थवत् परमसूक्ष्मावस्थतां यो भुङ्क्ते व्याप्नोति स कालः परमाणुः॥ १॥ ❀ ❀ सतः प्रपञ्चस्याविशेषभुक् सृष्ट्यादिसंहारपर्यन्तं सर्व्वमेव व्याप्नोति यः स कालः परममहान् द्विपरार्धरूप इत्यर्थः। तथाच वक्ष्यते कालोऽयं परमाण्वादिद्विपरार्द्धान्त इति॥ २—४॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

एकादशे पुनः कालो विशेषेणापि लक्ष्यते। मासवर्षयुगादीनां प्रमाणं ज्ञायते यतः॥

प्रथममात्यन्तिकं सूक्ष्मकालं स्वरूपतो लक्षयितुमशक्नुवंस्तत्परिच्छेद्यं वस्तु लक्षयति। सतः कार्य्यस्य पृथिव्यादेर्विशेषाणामंशानां यश्चरमः यस्यांशो न सम्भवति। ननु चरम इत्येकवचनात् स किमेक एव न किन्त्वनेकः। अत्र सूक्ष्मकालज्ञानार्थं तेषां बहुत्वेऽपि एकस्यैवोपयोगितेत्येकवचनप्रयोगः। ननु तर्हि स स्वैर्मिलितोऽमिलितो वा अत्रोपादीयत इत्यत आह असंयुतः परमाणुर्विज्ञेय एव न तु दृश्यत इत्यर्थः। ननु तर्हि तस्य सत्त्वे किं प्रमाणं तत्राह। यतः येभ्यः समुदितेभ्यः नृणामैक्यमिति भ्रमो भवति। सूर्य्यरश्मियुक्ते गवाक्षरन्ध्रे ये भ्रमन्तोऽतिसूक्ष्माः पार्थिवकणा दृश्यन्ते तेष्वयमेकोऽयमेकोऽतिसूक्ष्म एक एव कण इति बुद्धिर्भवतीत्यर्थः। तस्य षष्ठोंऽश एव परमाणुः सत्वदृश्य एवेत्यर्थः। नृणामित्युक्त्या त्रसरेणुप्रमाणदेहानां कीटविशेषाणां केषाञ्चित् सोऽपि दृश्य एवेति व्यज्यते॥ १॥ ❀ ❀ आत्यन्तिकं सूक्ष्ममुक्त्वा आत्यन्तिकं स्थूलमप्याह। यस्य परमोंऽशः परमाणुस्तस्यैव सतः कार्य्यमात्रस्य स्वरूपावस्थितस्य प्रलयपरिणामप्राग्भूतस्य यत् कैवल्यमैक्यं स परममहान्। पुंस्त्वं तु परमाणुप्रतियोगित्वात्। ननु नानाविशेषवान् परस्परं भिन्नश्च सर्वपदार्थः, कथमैक्यं तस्य तत्राह अविशेषः विशेषविवक्षारहितः निरन्तरः भेदविवक्षारहितश्च। सर्व्वोऽपि प्रपञ्चः परममहानित्यर्थः॥ २॥ ❀ ❀ यथा सूक्ष्मः स्थूलश्चायं पदार्थः। एवं कालोऽप्यनुमितः ज्ञातः केन प्रकारेण संस्थानं परमाणुपरममहतोः स्वरूपं तस्य भुक्त्या व्याप्त्या भगवच्छक्तित्वाद् भगवान् स्वतोऽव्यक्तः व्यक्तं सर्व्वप्रपञ्चं भुङ्क्ते परिच्छिनत्तीति तथा विभुरत एव व्यापकः उत्पत्त्यादिषु दक्षो वा॥ ३॥ ❀ ❀ संस्थानभुक्त्येत्यस्यार्थं विवृणोति। सतः कार्य्यस्य परमाणुतां परमाणुस्वरूपं यः कालो भुङ्क्ते सूर्य्यरूपेणातिक्राम्यति स परमाणुः ग्रहर्क्षेति वक्ष्यमाणवाक्यदृष्ट्या यावता कालेन सूर्य्यः परमाणुदेशमतिक्रामति तावान् कालः परमाणुरित्यर्थः। स च तस्यैव अविशेषं सर्व्वमेव प्रपञ्चं भुङ्क्ते वत्सरयुगाद्यावृत्त्या सूर्य्यरूपी यः कालः स परममहान् सृष्टिमारभ्य प्रपञ्चस्य संहारपर्यन्तं यावान् कालः तावान् सर्व्व एव परममहानित्यर्थः। तत्र परमाण्वणुत्रस-

रेणूनां कार्य्यांशानाञ्च कालांशानां संज्ञाप्रमाणे तुल्ये एव तथा परममहतः कार्य्यस्य कालस्य च संज्ञैव तुल्या। तन्मध्यस्थानां संज्ञाप्रमाणयोर्भिन्नत्वमिति ज्ञेयम्॥ ४॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

एकादशे परमाण्वादिलक्षणः कालो वर्ण्यते तत्र यावता सूर्यः परमाणुलक्षणं प्रदेशमतिक्रामति तावान् कालः परमाणुर्यावद्द्वादशराश्यात्मकं भुवनमतिक्रामति तावान्कालः परममहान् संवत्सरात्मक इत्येवं परमाण्वादिकालं निरूपयितुं तावत्परमाण्वादिकालपरिच्छेदकं सूक्ष्मं स्थूलं च पदार्थमाह चरम इति द्वाभ्याम्। सतः ब्रह्मणः ब्रह्मात्मककार्यस्येत्यर्थः। विशेषाणामंशानां चरमः अन्त्योंऽशः चरमत्वं विवृणोति। अनेक इति। प्रथममेकं द्विधा विभज्य तत्राप्येकं द्विधा विभज्येत्येवमनेकतां नीत इत्यर्थः। नन्वेवं प्रकारेण तु स्वपूर्वपूर्वापेक्षया सर्वेषां चरमत्वसिद्धिरित्यत आह। असंयुत इति। यस्य द्वैधीभावः कर्तुमशक्यः सर्वेषां चरम इत्यर्थः स पदार्थः परमाणुर्विज्ञेयः स च सदा सत्यः सन्मूलत्वात् यतः येभ्यः परमाणुभ्यः नृणां तार्किकादीनामैक्यभ्रमो भवति। अखण्डानां परमाणूनां नाशासंभवात् ते नित्याः तदैक्यं विश्वमिति॥ १॥ ❀ ❀ अल्पकालपरिच्छेदकं सूक्ष्मं पदार्थमुक्त्वा बृहत्कालपरिच्छेदकं स्थूलं पदार्थमाह। सत एवेति। यस्य चरमोंऽशः परमाणुः तस्यैव सतः कार्यस्य स्वरूपावस्थितस्य उक्तप्रकारेणोत्तरोत्तरद्वैविध्येनाऽविभक्तस्य यत्कैवल्यमेकत्वं तदेव परममहान् पदार्थः। कैवल्यं विवृणोति अविशेषो विशेषविवक्षारहितः अत एव निरन्तरः केवलः॥ २॥ ❀ ❀ यथा परमाणुः परममहान् परिच्छेदकः पदार्थः एवं सौक्ष्म्ये। अल्पत्वे स्थौल्ये बृहत्त्वे चकारात् मध्यमभावे संस्थानभुक्त्या परमाण्वादिव्याप्त्या कालोऽप्यनुमितः कथंभूतः भगवान् विश्वसृष्ट्यादिनिमित्तत्वलक्षणः विभुः प्रभावो विद्यते यस्य सः विभुः व्यापकः अव्यक्तः अदृश्यः॥ ३॥ ❀ ❀ एतदेव विवृणोति। स इत्यादिना। सतः कार्यस्य परमाणुतामुक्तप्रकारां यो भुङ्क्ते स परमाणुः सूर्यपर्यटनकालः परमाणुः सत एव अविशेषमैक्यं यो भुङ्क्ते स द्वादशराश्यात्मकभुवनकोशसूर्यपर्यटनकालः संवत्सरात्मकः परममहानित्यर्थः। संवत्सरस्यैवावृत्त्या युगमन्वन्तरादिक्रमेण द्विपरार्द्धत्वम्॥ ४॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

एकादशे तु कालस्य सर्वेषामिन्द्रियाणि यत्। आध्यात्मिकं तु यद्रूपं त्रेधा तद्विनिरूप्यते॥ १॥
सर्वो हि भगवान् कालस्तदर्थमुपचर्यते। धर्मप्रयुक्तो यः कालः स हि ब्रह्माणमेयिवान्॥ २॥
सूर्यात्मकस्तु यः कालः सर्वेषां सोऽपि च त्रिधा। कायप्रवेशाप्रवेशादर्शनादर्शनात्तथा॥ ३॥
भचक्रस्थानभागाभ्यामत्राऽप्युच्चावचं सदा॥ ४॥

एवं पूर्वाध्याये कालस्य स्वरूपं कार्यं चोक्त्वा, तस्याऽवान्तरभेदान्निरूपयति। सूर्यगत्या तु तद्भेदाः सूर्यस्तस्याऽऽधिदैविकम्। आध्यात्मिकं तु तद्भेदाः क्वचिदिच्छाऽपि भेदिका। १। पृथिवी च जलं तेजो देवास्तु पितृमानुषाः। उपाधित्रितयं प्राहुस्ततः कालस्त्रिधा मतः। २। प्रथमं मनुष्याणामहोरात्रं निर्णेतुं पार्थिवे लोके पृथिवीव्यवधानाव्यवधानाभ्यां सूर्यदर्शनादर्शनकृतं कालस्य दिनरात्रिरूपत्वमिति निरूपयितुम्, पार्थिवैरेव परमाण्वादिभिः कालभेदानाह। तत्रोपाधिभूतस्य परमाणोर्लक्षणमाह—चरम इति। सतः कार्यस्य घटादेः, विशेषाणामवयवानां मध्ये यश्चरमः, यस्य पुनरवयवो नाऽस्ति, अतिसूक्ष्मत्वात् विभाजकाघातं न सहते, स चरमः। सोऽपि सजातीयैः समुदायावस्थां न प्राप्तः। तदाह—अनेक इति। कार्यावस्थां च न प्राप्तः—असंयुत इति। सदेति। कदाचित्संयोगं प्राप्तो भवत्येवेति लक्षणमसंभव्येव स्यात्। अनेकत्वं च नैकसङ्ख्याभावः, यत्र तिष्ठति तत्र तत्सजातीया बहव एव तिष्ठन्तीत्यनेकत्वम्। भौतिकत्वे सति नित्यो गतिमान् परमाणुरिति परमाणुलक्षणे क्रियमाणे परमाणुभ्यः कार्योत्पत्तिरिति मतं स्यात्। सिद्धान्ते तु स्थूलादेव सूक्ष्मोत्पत्तिः, स्वसमानावयवस्थूलांशः कार्यजनक इति। यदनेकावयवैर्योजनं पटादौ, तत्कार्पासादेः स्थूलस्यैव दीर्घावस्थां प्राप्तस्य आकृतिविशेषसंपादनार्थं खण्डशो योजनम्। समुदायस्य चैवोपादानत्वम्। एवं कुण्डलप्रतिमादावपि तावत्समुदायस्यैवोपादानत्वम्, अन्यथा अनेकं कार्यं स्यात्। एकस्यैकमेवोपादानमिति निश्चयः। कार्यस्य पाञ्चभौतिकत्वात् जलादयः संयुक्ता भवन्तीति तेऽपि ततः पृथग्भूता परमाणुत्वमापद्येरन्। भगवांश्च सर्वत्रोपादानमिति चरमत्वं च तस्योपपद्यत इति तद्व्यावृत्त्यर्थमनेक इति। स त्वेक एव। असम्भवव्यावृत्त्यर्थमेव सदा। परमाणुर्विज्ञेयः, विशेषेण तत्र ज्ञानमपि विधीयते। कुयुक्त्या सोऽन्यथा न मन्तव्य इत्यर्थः। तस्य परमाणोः स्वरूपमुक्त्वा कार्यमाह—नृणामैक्यभ्रमो यत इति। नृणां जीवानाम्, यैः परमाणुभिः कृत्वा, आत्मना सह देहस्यैक्यभ्रमो भवति। ऐक्यभ्रमहेतवः परमाणव एव। ते ह्यतिसूक्ष्मा धर्माधर्माभ्यां संस्कृता जीवे संबध्यन्ते, तदा देहभावमापद्यन्ते। अत एव ते दुष्टाः कालस्योपाधिभूताः। तत्संबन्धे जीवस्य नाश एव।

अत एव तेषां भ्रमजनकत्वम्। पुञ्जात्पुञ्जोत्पत्तिपक्षमाश्रित्य भ्रमात्केचिदाहुः। तत्सोढव्यम्। एतदर्थमेव कालवयवत्वेन निरूपणमिति भ्रमपदप्रयोगः। मनस्तु परमाणुपरिमाणमेव, न तु परमाणुः। परमाणवस्तु चतुर्विधा एव, अन्यथा पञ्चविधाः परमाणवः स्युः। कार्यं च ततः स्यात्, परमाणुत्वात्। अतो नित्यगतिमत्त्वं न लक्षणम्। 'तदेजति तन्नैजति' इति श्रुत्या नित्यो भगवान् परमाणुः स्यात्। भौतिकत्वं च तेषां साधनीयम्। स्मृतिश्च श्रुत्या बाधितेति वैशेषिकादीनां लक्षणं बाधितमेव। प्रकृते चाऽनुपयोगः॥ १॥ ❀ ❀ एवं परमाणुलक्षणमुक्त्वा परममहतो लक्षणमाह—सत एवेति। सतः कार्यमात्रस्य संपूर्णस्य ब्रह्माण्डस्य, स्वरूपावस्थितस्य, न तु प्राकट्येनाऽवस्थितस्य, कैवल्यमेकता, तत्परममहानिति लक्ष्यम्। पृथिवीमात्रं परममहानिति पक्षं निषेधति—अविशेष इति। नास्त्ययं पृथिवी जलमिति वा विशेषः, विशेषबुद्ध्यविषयः निरन्तरो भेदशून्यश्च। सत एवेति स्वाप्निकव्युदासः। पदार्थस्येति वेदव्युदासः। स्वरूपावस्थित इति कार्यव्युदासः। ब्रह्माण्डस्थितो भगवान् परममहानित्युक्तं भवति। सर्वोऽपि पदार्थः सर्वत्र नैकबुद्ध्यारुढो विशेषकल्पनाशून्यः प्रमात्रपेक्षभेदशून्योऽपि। यावान् सूर्येण प्रकाश्यते, स सर्वो मिलितः परममहान्॥ २॥ एवं पूर्वोत्तरावधी निरूप्य उपहितं कालं लक्षयति—एवं कालोऽप्यनुमित इति। यथा परमाणुपरममहान्तौ अनुमितौ, कार्यचरमविशेषेण कार्यसमुदायेन च, एवं कालोऽपि तद्भोक्ता तादृशपरिच्छेदकर्ता अनुमेयः, सौक्ष्म्ये स्थौल्ये च सत्तमेति संबोधनमनुमानज्ञा[१]नार्थम्। ननु कालस्य असङ्गस्य भगवत इव कथं पदार्थसंबन्धः, कथं वाऽनुमानम्? अन्यथा भगवतोऽप्यनुमानं स्यात्। तत्राऽऽह—संस्थानभुक्त्येति। संस्थानं तदवस्था, परमाणुत्वं परममहत्त्वमिति। भगवतो वस्तुस्वरूपत्वेन तुल्यत्वेऽपि यः संस्थानविशेषः, तस्य च यो योगः, स कालकृत एवेति कार्यसौक्ष्म्यस्थौल्यात् कालस्य सौक्ष्म्यं च। नन्वेवं कथं करोति स्वरूपस्याऽन्यथात्वम्, तस्य च भोगम्, ततो भोगम्? इत्याशङ्क्याऽऽह—भगवानिति। एवं सामर्थ्यरूपो भगवान्। यथा केचन तादृशीं मायामपि, विद्यां वा, कल्पयन्ति, अस्मिन् शास्त्रे स कालः। तर्हि एवं सर्वपदार्थभोक्तारं कथं सर्वे न पश्यन्तीत्याशङ्क्याऽऽह—अव्यक्त इति। तस्य कालस्य ग्रासनिवृत्तिपरिज्ञानार्थं कार्यमाह—व्यक्तभुगिति। ननु स्वयमव्यक्तो व्यक्तं कथं भुङ्क्ते? तत्राऽऽह—विभुरिति। सर्वप्रकारेण भोक्तुं शक्त इत्यर्थः॥ ३॥ ❀ ❀ अनुमितं कालं शब्दत आह—स काल इति। यः परमाणुतां भुङ्क्ते परमाणुं व्याप्नोति, ततः स्वस्याऽपि परमाणुत्वमनुभवति, स परमाणुः काल इत्यर्थः। एवं सतो विशेषभुग्यः, सन्मात्रस्यैव विशेषतां यो भुङ्क्ते, तद्भोगेन स्वयं वा विशेषत्वं प्राप्नोति, स परममहान् कालः। तुशब्दो महत्तत्वस्याऽऽयुः परिच्छिनत्ति॥ ४॥

## श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

अथैकादशाध्यायं व्याख्यातुं सङ्गतिं स्मारयन्तस्तस्याऽर्थं सङ्गृह्णन्ति—एकादशे त्वित्यादि। तुः सङ्गतिशङ्कानिरासे, विशेषावधारणे वा। कालस्य यत्सर्वेषामिन्द्रियाणि नरादिब्रह्मान्तानां स्वस्वदेहजीवनासक्तिजनने मारकतयेन्द्रियात्मकमायुःशब्दवाच्यं रूपम्, तु पुनः, यदाध्यात्मिकं ब्रह्मायुः परिच्छेदकम्, तत् त्रेधाः; परपरार्धकल्पाख्यप्रकारत्रयेण विशेषपूर्वकं निरूप्यते। तेन शास्त्रविचारेऽवसरः सङ्गतिः। प्रश्नविचारे तु राज्ञा 'यावान् कल्पो विकल्पो वा' इति सार्द्धश्लोकेन प्रश्ने, शुकेन 'परिमाणं च कालस्य कल्पलक्षणविग्रहम्। यथा पुरस्ताद्व्याख्यास्ये पाद्मं कल्पमथो शृणु।' इति प्रतिज्ञानात् पद्मकल्पकथनो(त्त)रमवसरः। मैत्रेयोक्तौ तु 'कालावयवसंस्थितिम्' इति प्रश्नस्य सर्गशेषत्वेनोत्तरमिति प्रसङ्गः सङ्गतिरित्यर्थः। नन्वत्राऽऽयूरूपस्य कालस्यैवमिन्द्रियत्वे किं गमकमित्यत आहुः—सर्वो हीत्यादि। यतः सर्वो ब्रह्मायूरूपः, तदर्थमक्षरापरिच्छेदार्थं तन्निमेषतया उपचर्यते, स्वरूपतस्तु भगवान्; अतः परिच्छिन्नस्याऽऽयूरूपस्येन्द्रियत्वे उपचारोक्तिरेव गमकमित्यर्थः। ननु कालस्य कथं ब्रह्मायुःपरिच्छेदके-(कते)त्यत आहुः—धर्मेत्यादि। धर्मप्रयुक्त इति। गतिरूपेण धर्मेणाऽत्यन्तं युक्तः। इदं 'कालगत्योपलक्षितैः' इत्यत्र स्फुटीभविष्यति। तथा च गत्या परिच्छेदकत्वे(ते)त्यर्थः। गतिं स्फुटीकर्तुमाहुः—सूर्येत्यादि। सर्वेषामिति। देवपितृमनुष्याणाम्। कार्यप्रवेशाप्रवेशादिति। कार्यं जलम्। तद्भेदा इति आध्यात्मिककालभेदाः। तस्येति आध्यात्मिकस्य। तेन 'सूर्यस्तस्याऽधिभौतिकम्' इति निबन्धे यदुक्तम्, तन्मूलभूतकालापेक्षयेति न विरोधः। क्वचिदिति। उपरितनलोके, प्रलयादिषु च। इच्छेति। भगवदिच्छा। अपिशब्दाद्ब्रह्मण आयुःखण्डाः।

चरम इत्यत्र। श्रीधरीये—'अनेकः कार्यावस्थामप्राप्तः, असंयुतः समुदायावस्थां चाऽप्राप्तः, अत एव सदा' इति व्याख्यातम्। एतन्मते सदापदमवस्थाद्वयराहित्येन वर्तमानतामात्रबोधकम्। तत्र दोषं बोधयितुं प्रकारान्तरेण व्याकुर्वन्ति—सोऽपीत्यादि। सजातीयपदमाकाशपरमाणुसंयोगस्य सर्वदा सत्त्वादसम्भववारणाय। सदापदप्रयोजनमाहुः—कदाचिदित्यादि। कदाचिदिति। कार्यावस्थायाम्। तथा च, सदापद (स्य) उभयत्राऽन्वये मूले सजातीयपदाभावादाकाशसंयोगस्य सर्वदा सत्त्वेन लक्षणमसम्भवग्रस्तं स्यात्। कार्यावस्थानिषेधमात्रे त्वाकाशसंयोगेऽप्यनेकत्वस्याऽबाधादनेकपदेनैव सजातीयसंयोगावस्थावारणेऽपि सार्थक्यम्, अतस्तद्व्याख्यानमसङ्गतमित्यर्थः। नन्वेकपदेन कथं समुदायावस्थानिषेध इत्याकाङ्क्षायामाहुः—अनेकत्वं चेत्यादि। यत्रेति। तथा चैवं वारणमित्यर्थः। ननु सदा कार्यावस्थानिषेधस्य किं प्रयोजनमत आहुः—भौतिकेत्यादि। तथा च, पूर्वाध्याये कालस्योपादानत्वप्रतिपादनेन तस्य च परममहत्त्वेन स्थूलात्सूक्ष्मोत्पत्तिरङ्गीकृता, श्रुतौ च 'असतः सद्येतत्क्षुः' (?) इति विभागादङ्गीकृता।

१. ज्ञापनार्थम्. क. घ.।

परमाणुभ्यः कार्योत्पत्त्यङ्गीकारे तदुभयं विरुध्येतेति तदभावः प्रयोजनमित्यर्थः। ननु सूक्ष्मात्स्थूलोत्पत्तौ स्पर्शवत्त्वेनाऽऽरम्भकतेति कारणतानुगमः, स्थूलात्सूक्ष्मोत्पत्तौ तु कालप्रकृत्यादिषु यदभावेनाऽन्येषु च तत्सत्त्वेन कारणतानिर्वाहरूपस्याऽननुगमाद्गौरवप्रसङ्ग इत्यत आहुः स्वसमानेत्यादि। स्वं कार्यम्, तत्समानास्तज्जननयोग्या येऽवयवाः, तद्रूपो यः स्थूलांशः, स कार्यजनकः। तथा च, जन्यभावत्वावच्छिन्नं प्रति स्वयोग्यावयवस्थूलांशत्वेनाऽनुगता कारणता। सा च स्वशब्देन प्रत्यक्षादिगोचरं प्रतिनियतं घटादिरूपं परामृशतां तत्राऽप्युपयुज्यते। तद्रीत्या कारणतानुगमाङ्गीकारे तु स्पर्शवत्त्वस्य साधारणत्वेन घटादिकं प्रति मृदादिरूपेण प्रतिनियता अन्यापि कल्पनीयेति कल्पनाद्वयेन तवैव गौरवप्रसङ्गो नाऽस्माकमित्यर्थः। ननु स्थूलादेकस्मात्सूक्ष्मोत्पत्तिः प्रत्यक्षविरुद्धा, पटादौ सूक्ष्मैरनेकैरेव तन्त्वादिभिः पटाद्युत्पत्तिदर्शनादित्यत आहुः—यदित्यादि। योजनं संयोगद्वारा एकीकरणम्। खण्डशो योजनमवयवपुञ्जीकरणम्। तथा च, तत्राऽपि स्थूलांशसमुदायस्यैव कारणत्वात्, यन्त्रास्थितोत्तारणेन, तदपेक्षया न्यूनस्य समानस्य वा पटोत्पत्तिः, न तु तत्सूक्ष्मात् स्थूलस्य, नापि बहुभ्य इति न प्रत्यक्षविरोध इत्यर्थः। इमं प्रकारमन्यत्राऽप्यतिदिशन्ति एवमित्यादि। तावत्समुदायस्येति। सुवर्णमण्यादिसमुदायस्य। तथा च न क्वापि कारणताव्यभिचार इत्यर्थः। ननु समुदायस्थले बहूनां न कारणता, किन्तु समुदायस्यैवेत्यत्र किं गमकमित्यत आहुः—अन्यथेत्यादि। तव मते कारणगुणानां कार्यगुणारम्भकत्वनियमात् कारणगतैकत्वैः प्रत्येकमेकत्वारम्भे कार्येऽनेकैकत्वप्रतीतिः, अनारम्भेऽपि तद्गतैकत्वानामेव प्रतीतिरापद्येतेत्युभयथाऽपि कार्यं स्वनिष्ठैकत्वशून्यमेव स्यात्। अतस्तादृशस्थले कार्ये एकत्वप्रतीतिरेव समुदायस्य कारणतागमिकेत्यर्थः। एवं च व्यासज्यवृत्तिकारणतायां बहूनां कारणता, समुदायपक्षे त्वेकत्र पर्यवसितेति लाघवमपि बोध्यम्। एवं जरायुजेषु बीजरजोंशसमुदायस्यैवोपादानता। मान्धात्रादावपि पुंसवनजलादिकमेव रजः स्थापनीयम्। एतेनैवाऽण्डजोद्भिज्जा अपि व्याख्याताः। स्वेदजा अपि स्थूलांशादेव स्वेदात् सूक्ष्मा उत्पद्यन्ते, वृद्धिस्तु पश्चादाहारादिना। तदेतत् सर्वं हृदिकृत्याहुः—एकस्येत्यादि। ननु तर्हि परमाणुपुञ्जादेव कार्योत्पत्तिरस्तु। तस्य सदा असंयुतत्वेन कार्यावस्थानङ्गीकारे किं बीजमत आहुः—कार्यस्येत्यादि। संयोगादुत्पत्तौ हि विभागान्नाशः। कारणवस्थयाऽवस्थानं च प्रत्यक्षसिद्धम्। अतो यदि परमाणुपुञ्जादुत्पत्तिः कार्यस्य स्यात्, तदा नाशदशायां कार्यं तथा स्यात्। तत्तु न दृश्यते, न वा श्रूयते। अतः प्रमाणानुरोध एव तदनङ्गीकारे बीजमित्यर्थः। एवमसंयुतत्वं परीक्ष्य अनेकत्वं परीक्षन्ते—भगवानित्यादि। सदापदं तु परीक्षितमेवेत्याहुः—असम्भवेत्यादि। एवं लक्षणं विचार्य, विज्ञेयत्वप्रयोजनं विचारयन्ति—विशेषेणेत्यादि। कुयुक्त्येति। नैयायिकादिप्रसिद्धतया तन्नित्यत्वसंयुक्तत्वादिसाधिकया। ननु परमाणुभ्यः कार्यानङ्गीकारे तेषां प्रयोजनान्तराभावात्तदुपगमवैयर्थ्यमित्यत आहुः—तस्येत्यादि। ऐक्यभ्रम इति। देहाध्यासः। तेषां तादृशभ्रमहेतुत्वमुपपादयन्ति—ते हीत्यादि। 'स्त्रियः प्रविष्ट उदरं पुंसो रेतःकणाश्रयः।' इति वाक्याद्यदा जीवो गर्भे प्रविशति तदा, अन्यदा वा, स्वस्य पित्रादेश्च धर्माधर्माभ्यां संस्कृतास्तेऽपि तत्राऽऽहारादिभिः प्रविश्य जीवे स्वरूपेण सम्बध्यन्ते, रजस्वलमिव तं कुर्वन्ति; तदा जीवा देहमापद्यन्ते, देहमध्यस्यन्ति; तेन तेषां तथात्वमित्यर्थः। अत एवेति। देहाध्यासापादकत्वादेव। नाश इति। स्वरूपाद्यज्ञानेन मोक्षप्रतिबन्धः। अत एवेति। धर्माधर्मसंस्कारेण दुष्टत्वादेव। श्रीधरीये—'ऐक्यभ्रमः—अवयविबुद्धिः, 'येषां समूहेन कृतो विशेषः' इति पञ्चमस्कन्धवाक्यात्' इति व्याख्यातम्। तदनुवदन्ति–पुञ्जादित्यादि। भ्रमात् केचिदाहुरिति। राशाववयविभ्रमात् ऐक्यभ्रमजनकत्वं केचिदाहुरित्यर्थः। तद्दूषयन्ति–तत्सोढव्यमिति। मूलवाक्योपन्यासात् तदनुकरणीयम्। अयमर्थः। मूले हि 'एवं निरुक्तं क्षितिशब्दवृत्तमसन्निधानात् परमाणवो ये। अविद्यया मनसा कल्पितास्ते येषां समूहेन कृतो विशेषः॥ (५–१२–९)' इति यदुक्तम्, तत् रहूगणेनोपालम्भे जडेन स्वस्य भाराभावं बोधयितुम्। भारः कस्येति जिज्ञासायाम् 'अयं जनो नाम चलन् पृथिव्यां यः पार्थिवः (५–१२–५)' इत्यनेन चलनक्रियाप्रयुक्तः पार्थिवे जनव्यवहारः, नो चेत् पाषाणतुल्यतेति बोधयित्वा, ततः प्रत्येकमवयवानुपर्युपरिष्टान्निरूप्य, तेषामुत्पत्तिनाशौ क्षितिनिष्ठाविति क्षितेरेव संस्थानविशेषात् तत्तद्व्यवहारकारणत्वमिति निरूप्य 'एवं निरुक्तम्' (५–१२–९) इति श्लोकेन पुञ्जात्पुञ्जोत्पत्तिराश्रितेत्यवयविभ्रमजनकत्वं यद्यप्यापातत आयाति, 'पीवेति राशौ न विदां प्रवादः (५–१०–९)' इति कथनात्, तथापि तत्र तस्य न तात्पर्यम्, परमाणूनामप्यविद्याकल्पिततोक्त्या भ्रमविषयत्वाङ्गीकारेण विशेषभ्रमस्याऽत्र विवक्षितत्वात्। किन्तु स्वस्याऽध्यासाभावेन भाराभावे तात्पर्याद्देहाध्यासस्यैव भ्रमत्वं विवक्षितमिति सिध्यति। तदाहुः—एतदर्थमित्यादि। कालो हि नित्ये प्रपञ्चे भूतत्वादिभिः स्वकृतैर्धर्मैरनैश्वरत्वभ्रमं जनयतीति भ्रमजनकः। अतस्तेषामुक्तभ्रमजननयोग्यत्वज्ञापनायैव भ्रमपदप्रयोगः, न तु तेषामवयविभ्रमजनकत्वज्ञापनाय, सदा असंयुतत्वकथनेन तद्व्याख्यानेऽपि समूहावस्थानाङ्गीकारादिति। अतो भ्रान्तत्वेनोपेक्ष्यतया सोढव्यमिति भावः। ननु परमाणुभ्यः कार्योत्पत्त्यनङ्गीकारे मानसप्रजासृष्टिर्बाधिता स्यात्, तस्याऽपि परमाणुत्वात्। न च कारणताननुगमः, स्पर्शवत्त्वमनादृत्य मूर्तत्वेनैव तदङ्गीकारादित्यत आहुः—मन इत्यादि। मनसो या सृष्टिः, सा चिन्तामण्यादिभ्य इव सामर्थ्यविशेषात्, न तु सजातीयसंयोगेन; अतो न दूषणमित्यर्थः। ननु किमत्र गमकमित्यत आहुः—परमाणव इत्यादि। स्यादिति। सजातीयसंयोगेन स्यात्। तथा (च) भौतिकत्वाभावः; कारणताप्रकारवैलक्षण्यं च मनसि परमाणुभेदगमकमित्यर्थः। ननु माऽस्तु ततः कार्यम्, तथापि तल्लक्षणानङ्गीकारे किं बीजमत आहुः—अत इत्यादि। अत इति।

मनसि व्यभिचारात्। दूषणान्तरमाहुः—तदेजतीत्यादि। तथा चेदं दूषणद्वयमनङ्गीकारबीजमित्यर्थः। ननु भौतिकत्वे सतीति विशेषणान्नेमौ दोषावित्यत आहुः—भौतिकत्वमित्यादि। तथा च वैशेषिकमते सृष्ट्यादौ नित्यानां परमाणूनामेव तत्त्वेन तदतिरिक्तभूताभावात् केनचित् सम्बन्धेन तेषु भौतिकत्वं साधनीयम्। तच्च भूतत्वेन बाधितं सन्दिग्धं वा। अतस्तत्सिद्ध्यभावात् विशेषणमेवाऽसङ्गतमिति दूरनिरस्तस्तेन दोषाभाव इत्यर्थः। ननु कणादस्मृतिरूपाच्छब्दादेव तत्सिद्धिरित्यत आहुः—स्मृतिरित्यादि। श्रुत्येति। 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च। खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी।' इत्यादिरूपया। हेत्वन्तरमप्याहुः—प्रकृत इत्यादि। प्रकृत इति। कालज्ञाने॥ १॥ ❀ ❀ सत एवेत्यत्र। प्राकट्येनेति। लोकादिरूपेण परिणामेन। एकतेति। एकत्वसङ्ख्या। अयमिति। परममहान्। सत एवेत्यादि। स्वाप्निकस्याऽपि जात्याकृतिव्यक्तिरूपत्वाभिमानेन पदार्थत्वादन्यानधिष्ठितेन, स्वरूपावस्थितत्वाच्च तत्राऽतिव्याप्तिवारणाय सत्पदमित्यर्थः। पदार्थस्येत्यादि। वेदस्याऽपि भगवदात्मकत्वेन स्वरूपावस्थितत्वात् सत्त्वाच्च तत्राऽतिव्याप्तिरिति तद्वारणाय पदार्थपदम्, वेदस्य पदत्वेन पदार्थत्वाभावाद्वारणमित्यर्थः। स्वरूपावस्थितस्येत्यादि। प्रापञ्चिकपदार्थे सत्त्वपदार्थत्वयोर्विद्यमानत्वेऽपि स्वकारणाधिष्ठितत्वेन स्वरूपावस्थितत्वात् सत्त्वाच्च तद्वारणमित्यर्थः। ननु ब्रह्माण्डस्याऽपि कार्यत्वेन स्वरूपावस्थितत्वाभावात् लक्षणम (यम) सम्भवीत्यत आहुः—ब्रह्माण्डेत्यादि। तथा च, 'यः पृथिव्यां तिष्ठन् यः पृथिवीमन्तरः' इति, 'महतो महीयान्' इति श्रुत्युक्तो भगवानेव परममहान्। तन्निष्ठैकत्वस्यैव परममहत्त्वेन, तस्य चाऽन्यत्राभावेनेदं तस्यैव लक्षणम्, न ब्रह्माण्डस्य। एतज्ज्ञापनायैव 'अविशेषो निरन्तरः' इति स्वरूपबोधकं पदद्वयमुक्तम्, अन्यथा न वदेत्, प्रयोजनाभावादित्यर्थः। तथा च, वस्तुतः परमाणुत्वस्याऽपि ब्रह्मण्येव पर्यवसानबोधनायाऽत्रैवं बोधितमिति भावः। नन्वस्य प्रकृते कथमुपयोग इत्याकाङ्क्षायामग्रिमस्वारस्येनाऽस्य तात्पर्यमाहुः—सर्वोऽपीत्यादि। अत्र शून्योऽपीत्यन्तं व्याख्येयवाक्यस्थपद्यतात्पर्यविवरणम्, भगवल्लीलात्वबोधनायाऽऽहुः; 'अथ ते भगवल्लीलाः' इत्येव प्रतिज्ञानात्। तथा च 'सर्वं सर्वमयम्' इति श्रुत्या सर्वोऽपि सन् पदार्थः सर्वत्र, तथापि स्वरूपेऽवस्थितत्वान्नैकबुद्ध्यारूढः, अविशेषत्वाद्विशेषकल्पनाशून्यः, निरन्तरत्वात् प्रमात्रपेक्षभेदशून्य इति वस्तुस्थितिः। एवं वस्तुस्थितौ सत्यामप्यग्रिमस्वारस्येन यावत्स्थितावच्छिन्नः सूर्यप्रकाशः परममहत्त्वेन ग्राह्य इत्यर्थः। एतेन श्रीधरीयस्याऽसङ्गतत्वमर्थादेव बोधितं ज्ञेयम्॥ २॥ ❀ ❀ एवं काल इत्यत्र। यथेत्यादि। यद्यप्येतौ नाऽस्मदाद्यध्यक्षौ, तथापि यदध्यक्षौ, तेऽस्मानेताभ्यां हेतुभ्यां बोधयन्तीति यथा (व···) तावनुमेयौ, तथा तादृशः कालोपि तत्परिच्छेदकत्वेनाऽनुमेय इत्यर्थः। तदवस्थेति। सूर्यगन्तव्यदेशावस्था। एतस्यैव विवरणं परमाणुत्वमित्यादि। सौक्ष्म्यं स्थौल्यं चेति। अनुमेयमित्यर्थः। ततो भोगमिति। आध्यात्मिककालद्वारा भोगम्। भगवानिति। तथा च, 'यस्य ब्रह्म च क्षत्रं च' इति श्रुत्युक्तत्वादत्तृत्वात् करोतीत्यर्थः। एतेन चेतनत्वं बोधितम्। ग्रासनिवृत्तिपरिज्ञानार्थमिति। यं न ग्रसति, तत्वपरिज्ञानार्थम्। तथा चाऽव्यक्तं न ग्रसतीत्यर्थः॥ ३॥

### श्रीगिरिधरकृता बालप्रबोधिनी

**एकादशे विशेषेण परमाण्वादिलक्षणैः। सूक्ष्मस्थूलादिभेदेन कालरूपं निरूप्यते॥ १॥**

तदेवं पूर्वाध्याये सामान्यतः कालस्योपलक्षणभूतं गुणकार्यं दशविधं सर्गं निरूप्येदानीं तस्यैव सूक्ष्मस्थूलादिविशेषं निरूपयितुं तत्परिच्छेद्यवस्तुनः सूक्ष्मत्वस्थूलत्वे निरूपयति—चरम इति द्वयेन। सतः कार्यमात्रस्य विशेषाणामंशानां यश्चरमः अन्त्यः यस्यांशो नास्ति, अनेकः कार्यावस्थामप्राप्तः—तेषां बहुलेऽप्यत्र सूक्ष्मकालज्ञानार्थमेकस्यैवोपयोगित्वादेकवचनप्रयोगः—असंयुतः समुदायावस्थां चाप्राप्तः अत एव सदा कार्यसमुदायावस्थयोरपगमेऽपि यो वर्तते स परमाणुर्विज्ञेयः। किं तत्र प्रमाणमत आह—नृणामिति। यतो येभ्यः समुदितेभ्यो नृणां व्यवहर्तॄणामैक्यभ्रमः अवयविबुद्धिर्भवति। तथा च पञ्चमेऽवयविनिराकरणे वक्ष्यति—'येषां समूहेन कृतो विशेषः' इति। कार्यानुपपत्त्या कल्प्यते इति भावः॥ १॥ ❀ ❀ एवं सूक्ष्ममुक्त्वा स्थूलमाह—सत एवेति। यस्य चरमोंऽशः परमाणुस्तस्यैव सतः कार्यमात्रस्य पदार्थस्य स्वरूपावस्थितस्य प्रलयमप्राप्तस्य यत्कैवल्यमैक्यं स परममहानित्यन्वयः। ननु जातिव्यक्त्यादिनानाविशेषवतः परस्परं भिन्नस्य च सर्वस्य पदार्थस्य कथमैक्यमत आह—अविशेष इति, विशेषविवक्षारहितः। निरन्तर इति, भेदविवक्षारहितश्च। सर्वोऽपि प्रपञ्चः परममहानित्यर्थः॥ २॥ ❀ ❀ एवं कालपरिच्छेद्यगतं सूक्ष्मत्वं च निरूप्य तत्कालेऽप्यतिदिशति—एवमिति। त्वमेतद्बोधे समर्थोऽसीति सूचयन् सम्बोधयति—सत्तमेति। यथा सूक्ष्मस्थूलश्चायं पदार्थो निरूपित एवं संस्थानभुक्त्या संस्थानं परमाण्वाद्यवस्था तस्य भुक्तिर्व्याप्तिस्तया सौक्ष्म्ये स्थौल्ये च कालोऽप्यनुमितो भवति। चकारान्मध्यमावस्था गृह्यते। अनुमाने हेतुं सूचयन्विशिनष्टि—अव्यक्त इति, यतो प्रत्यक्ष इत्यर्थः। भवतु सूक्ष्मत्वस्थूलत्वाद्यनुमानं पश्चात्प्रथमतस्तत्सत्त्वे एव किं प्रमाणमित्यत आह—व्यक्तभुगिति। स कालोऽधुना नागतो यत्रैवं भविष्यतीत्यादिव्यवहारस्य प्रसिद्धत्वात् व्यक्तं विश्वं भुङ्क्ते व्याप्नोत्युत्पत्तिविनाशादिहेतुतया परिच्छिनत्तीति तथेत्यर्थः। तत्र हेतुमाह—विभुरिति, समर्थ इत्यर्थः। तत्रापि हेतुमाह—भगवानिति। भगवदवतारेषु गणितस्तच्छक्तिविशेष इत्यर्थः॥ ३॥ ❀ ❀ उक्तमेव स्पष्टयति—स इत्यादिना। सतः प्रपञ्चस्य परमा-

णुतां परमाण्वावस्थां यो भुङ्क्ते सः कालः परमाणुकालः। यस्तु सतो विशेषं साकल्यं भुङ्क्ते स परममहान्संज्ञकः कालः। अत्र सन्देहो नास्तीत्याशयेनाह—वा इति। अत्रायमर्थः—'ग्रहर्क्षताराचक्रस्थः' [ श्लो. १३ ] इत्यादिना सूर्यगत्यैव कालादिविभागस्य वक्ष्यमाणत्वात् सूर्यो यावता परमाणुदेशमतिक्रामति तावान् कालः परमाणुकालः, यावता च द्वादशराश्यात्मकं सर्वं भुवनकोशं अतिक्रामति स कालः परमो महान् संवत्सरात्मकः, तस्यैवावृत्त्या तु युगमन्वन्तरादिक्रमेण द्विपरार्द्धान्तत्वमिति ॥ ४ ॥

### हिन्दी अनुवाद

### मन्वन्तरादि कालविभागका वर्णन

श्रीमैत्रेयजी कहते हैं—विदुरजी ! पृथ्वी आदि कार्यवर्गका जो सूक्ष्मतम अंश है—जिसका और विभाग नहीं हो सकता, तथा जो कार्यरूपको प्राप्त नहीं हुआ है और जिसका अन्य परमाणुओंके साथ संयोग भी नहीं हुआ है; उसे परमाणु कहते हैं। इन अनेक परमाणुओंके परस्पर मिलनेसे ही मनुष्योंको भ्रमवश उनके समुदायरूप एक अवयवीकी प्रतीति होती है ॥ १ ॥ ❀ ❀ यह परमाणु जिसका सूक्ष्मतम अंश है, अपने सामान्य स्वरूपमें स्थित उस पृथ्वी आदि कार्योंकी एकता ( समुदाय अथवा समग्ररूप ) का नाम परम महान् है। इस समय उसमें न तो प्रलयादि अवस्थाभेदकी स्फूर्ति होती है, न नवीन-प्राचीन आदि कालभेदका भान होता है और न घट-पटादि वस्तुभेदकी ही कल्पना होती है ॥ २ ॥ ❀ ❀ साधुश्रेष्ठ ! इस प्रकार यह वस्तुके सूक्ष्मतम और महत्तम स्वरूपका विचार हुआ। इसीके सादृश्यसे परमाणु आदि अवस्थाओंमें व्याप्त होकर व्यक्त पदार्थोंको भोगनेवाले सृष्टि आदिमें समर्थ, अव्यक्तस्वरूप भगवान् कालकी भी सूक्ष्मता और स्थूलताका अनुमान किया जा सकता है ॥ ३ ॥ ❀ ❀ जो काल प्रपञ्चकी परमाणु-जैसी सूक्ष्म अवस्थामें व्याप्त रहता है, वह अत्यन्त सूक्ष्म है, और जो सृष्टिसे लेकर प्रलयपर्यन्त उसकी सभी अवस्थाओंका भोग करता है, वह परम महान् है ॥ ४ ॥

**[1]अणुर्द्वौ परमाणू स्यात्त्रसरेणुस्त्रयः स्मृतः । [2]जालार्करश्म्यवगतः खमेवानुपतन्न[3]गात् ॥ ५ ॥**
**त्रसरेणुत्रिकं भुङ्क्ते यः कालः स त्रुटिः स्मृतः । शतभागस्तु वेधः स्यात्तैस्त्रिभिस्तु लवः स्मृतः ॥ ६ ॥**
**निमेषस्त्रिलवो ज्ञेय आम्नातस्ते त्रयः क्षणः । क्षणान् पञ्च विदुः काष्ठां लघु ता दश पञ्च च ॥ ७ ॥**
**लघूनि वै समाम्नाता दश पञ्च च नाडिका । ते द्वे मुहूर्तः प्रहरः षड्यामः सप्त वा नृणाम् ॥ ८ ॥**

### श्रीधरस्वामिविरचिता भावार्थदीपिका

इदानीं द्व्यणुकादिलक्षणपूर्वकं मध्यमकालावस्थां कथयति। द्वौ परमाणू अणुः स्यात् त्रयोऽणवस्त्रसरेणुः स तु प्रत्यक्ष इत्याह। जालार्केति। गवाक्षप्रविष्टेष्वर्करश्मिष्ववगतः कोसौ योऽतिलघुत्वेन खमेवानुपतन्नगाद्गतः। पाठांतरे खमेवानुपतन्नवगतो न तु गां पृथ्वीम् ॥ ५ ॥ ❀ ❀ शतं भागास्त्रुटिरूपा यस्मिन् स वेधस्तैर्वेधैः ॥ ६ ॥ ❀ ❀ ते निमेषास्त्रयः क्षण इत्याम्नातः काष्ठाः पंचदश एकं लघु ॥ ७ ॥ ❀ ❀ नाडिकाः षट् सप्त वा प्रहर स एव यामो दिनस्य रात्रेश्चतुर्थो भागः। ह्रासे षट् वृद्धौ सप्त संध्यांशमुहूर्तद्वयं विनेति ज्ञातव्यम्। तत्राप्यनियमार्थो वाशब्दः। प्रत्यहं तद्भेदानां गणयितुमशक्यत्वात् ॥ ८ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

स तु त्रसरेणुस्तु पाठांतरे "खमेवानुपतन्न गाम्" इति पाठे त्रसरेणोः प्रत्यक्षत्वोक्त्याणुपरमाण्वोरप्रत्यक्षत्वं स्वत एवायातं प्राकृतमनुष्याणां योगिनां तु तावपि प्रत्यक्षाविति ज्ञेयम्। तथा च "जालांतरगते भानौ यत्सूक्ष्मं दृश्यते रजः। तस्य षष्ठस्तु यो भागः परमाणुः स उच्यते" इत्युक्तेरवगतयोरप्यणुपरमाण्वोः स्वरूपं स्फोटयति। तथाहि अत्राणुपरमाण्वोः सत्त्वे किं प्रमाणमिति चेत्त्रसरेणुरेव कथम् अवयवानां स्थौल्यप्रचुरत्वे विनाऽवयवी दृश्यो न भवतीति सर्वत्र नियमः। अत्र त्रसरेणोरवयविनस्त्रयः स्थूला अणवोऽवयवाः कल्प्या न तु परमाणवस्तेषां स्थौल्याभावात्। स्थौल्यमनेकवस्तुघटितत्वमित्यणोः स्थौल्यं परमाणुं विना न संभवतीति परमाणुसिद्धिः। त्रसरेणोर्दृश्यत्वमवयवस्थौल्यं विना न संभवतीत्यणुसिद्धिः। तथाणोः स्थौल्यार्थं परमाणोर्द्वित्वमेव कल्प्यते न तु त्रित्वं चतुष्कादिकैः च 'प्रथमोपस्थितेस्तं[4]त्रत्वात्' इति न्यायात्। यथा 'कपिंजलानालभेत' इत्यत्र प्राचुर्य्यार्थमन्यैरपि प्रथमोपस्थितत्रित्वमेवांगीक्रियते तथात्रापीति ज्ञेयम् ॥ ५ ॥ ❀ ❀ त्रिभिस्त्रसरेणुभिस्त्रुटिरित्यर्थः। "सूच्या भिन्ने पद्मपत्रे त्रुटिरित्यभिधीयते" इति सूर्यसिद्धांतोक्तेः। यावता कालेन पद्मपुष्पपत्रं भिद्यते तावान् कालस्त्रुटिरित्यर्थः। त्रुटिशतेन वेधः स्यादित्यर्थः

---

१. प्रा० पा०—अणू द्वौ द्व्यणुकः प्रोक्तः त्र०। २. प्रा० पा०—जालाक्षार्करश्मिगतः। ३. प्रा० पा०—पतन्न गाम्। श्रीधरस्वामिभिरुल्लेखितमिदम्। ४. तंत्रं प्रधानम्।

॥ ६ ॥ ❀ ❀ त्रयो लवा यस्मिन्स त्रिलवः ॥ ७ ॥ ❀ ❀ नाडिका दंडः 'घटीदंडश्च नाडिका' इति कोशात्। ह्रासे दिनरात्र्योर्ह्रस्वत्वे चतुर्विंशादिघटीपरिमाणवत्त्वे वृद्धावष्टाविंशादिपरिमाणवत्त्वे। संध्याशमुहूर्त्तद्वयं मुहूर्त्तमेकं प्रातर्मुहूर्त्तमेकं सायं च परित्यज्य यामगणना कार्या तत्रापि मुहूर्त्तद्वयत्यागेपि। सप्तषण्नाडिकात्मकप्रहरस्य नियमो न किन्तु कदाचिन्न्यूनः कदाचिदधिकश्च स भवति, कदा भवतीति चेत्तत्राह—तद्भेदानां प्रत्यहं गणनमशक्यमेवेत्युत्तरमाहेति भावः ॥ ८ ॥

## श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

अणुद्व्यणुकपदार्थस्तथा तत्परिच्छेदकः कालश्च एवं तत्पदार्थः तत्तत्कालयोर्दृष्टान्तदार्ष्टान्तिकतया एकनामतया च सामान्यवर्णनमस्मिन्पद्ये व्याख्येयं त्रयोऽणवस्त्र्यणुकानि त्रीणि नगामिति पाठान्तरे अवगतो ज्ञातः ॥ ५ ॥ ❀ ❀ त्रसरेणुत्रिकदेशं भुङ्क्ते व्याप्नोति तल्लक्षणं यथा सूर्य्यसिद्धान्ते 'सूच्या भिन्ने पद्मपत्रे त्रुटिरि'त्यभिधीयत इति। एकस्मिन्पद्मपत्रे सूच्या भिन्ने विद्धे सति यावान्कालस्स त्रुटिसञ्ज्ञक इत्यर्थः। भागाः कालाङ्गाः ॥ ६ ॥ ❀ ❀ इतिशब्दाध्याहारात् क्षण इत्येकवचनान्त एव पाठः ॥ ७ ॥ ❀ ❀ तत्रापि मुहूर्त्तद्वयपरित्यागे तद्भेदानां पलविपलप्रयुक्तानां प्रहरभेदानाम् ॥ ८ ॥

## श्रीमद्वीरराघवव्याख्या

एवमपकर्षप्रकर्षावुपपाद्य अवान्तरकालविशेषावच्छेदकावस्थाः प्रतिपादयति। अणुर्द्वावित्यादिना। द्वौ तावृतुः षडयनं दक्षिणं चोत्तरं दिवीत्यन्तेन अणुरित्यादिना न वैशेषिकप्रक्रियोक्तिः, किंतु तैस्तथाभ्युपगतवस्तुपरिभाषितानां शब्दानां कालावयवेषु प्रयोगस्तं परमाण्वादिना संवत्सरावसानेनेति वेति वक्ष्यति द्वाभ्यां परमाणुभ्यामणुरित्येकः कालः स्यादित्यर्थः। त्रिभिरणुभिस्त्रसरेणुरित्येकः कालः स्यात् त्रसरेणुसंज्ञकात् कालात् पूर्वोक्तानां कालानामत्यन्तसूक्ष्मतदवच्छेदककथनस्याशक्यत्वात्त्रसरेणुसंज्ञककालस्यावच्छेदकमाह। जालार्केति। जालार्करन्ध्रनिष्क्रान्तादित्यरश्मिषु दृष्टः खमाकाशमेवानुपतन्नगाद्गतः न भूमिमनुपतन् पांसुर्यः स त्रसरेणुः काल इत्यन्वयः। अवच्छेद्यस्य कालस्यावच्छेद्यपांसुपदार्थस्य चोपचारात्सामानाधिकरण्यं जालार्करश्म्यवगतपांसोरीषत्स्पन्दनावच्छिन्नः कालः त्रसरेणुसंज्ञ इत्यर्थः ॥ ५ ॥ ❀ ❀ त्रसरेणुसंज्ञककालांशत्रिकं भुङ्क्ते प्राप्नोति यः कालः स त्रुटिरित्यर्थः। त्रसरेणुकालत्रयं त्रुटिरित्युक्तं भवति सा त्रुटिः वेधाख्यस्य कालस्य शतभागः शतगुणः कालः एकपत्रवेधावच्छिन्नः त्रिभिस्तैर्वेधैर्लव एकः कालः स्मृतः इत्यर्थः ॥ ६ ॥ ❀ ❀ लवत्रयनिमेष इत्याह। निमेष इति। शतभागस्तु वेध इति श्रुतशतशब्दोऽनेकवाची तथा सति "निमेषशतभागस्य सहस्रांशः क्षणी नृप! तस्याप्ययुतभागांशैर्भवत्युपचयो नृणाम्" इति शौनकवचनैकार्थ्यं स्यात् ईदृशकालविभागः कथमवगम्यत इति चेत् एकक्षणे विद्युदादिलोकादयो अनेकयोजनं व्याप्नुवन्ति। एकक्षणे आदित्यरथस्यानेकयोजनगतिश्च स्मर्यते तत्रैकयोजनेऽपि प्रदेशे समुदिताः केशाः सर्षपाश्च न शक्याः संख्यातुं ततश्च केशादिवत्परिमितदेशव्याप्त्यवच्छिन्नाः कालावयवा एकक्षणवत्प्रतिपन्ना अथ संख्येयाः सन्तीत्युपपन्नमेव ते त्रयो निमेषाः एकः क्षणः स्यात्। पञ्चक्षणान् काष्ठां विदुः, काष्ठाः पञ्चदश एका लघुता लघुताख्य एककालः ॥७॥ ❀ ❀ पञ्चदशलघूनि एका नाडिका समाम्नाता द्वे ते नाडिके एको मूहूर्तः षट् नाडिका सप्त वा प्रहरः, स एव यामो दिनस्य रात्रेश्च चतुर्थो भागः। ह्रासे षट् वृद्धौ सन्ध्या मुहूर्तद्वयं विनेति ज्ञातव्यं तत्राप्यनियमार्थो वाशब्दः नृणामित्यनेन मनुष्यमानमुक्तम् ॥ ८ ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

इदानीं परमाणुपरममहतोरन्तरालकालावयवानां संख्यायोगेन नामान्याह। अणुर्द्वाविति। द्वौ परमाणू मिलितौ द्व्यणुकनामकालः स्यात्। उत्तरत्राप्येवमेव ज्ञातव्यानि त्रयो द्व्यणुका मिलितास्त्रसरेणुस्त्र्यणुकः कालः सोऽयमयोगिप्रत्यक्षसिद्ध इत्याह जालेति। जालं गवाक्षं तत्र वर्तमानार्करश्मिनावगतः खमेवानुपतन्नगात् दृष्टिविषयं प्राप्य गत इत्यर्थः। अत्र सर्वत्र तत्तत्कालावयवान्तर्यामित्वेन तत्तच्छब्दवाच्यत्वेन तत्तत्कालवर्तिद्रव्यप्रवर्तकत्वेन स्थितं सच्चिदानन्दलक्षणमनन्तसंज्ञं स्वरूपमनुभवतीति ज्ञातव्यमत एव सर्वत्र सर्वभोक्तेत्युक्तम् ॥ ५ ॥ ❀ ❀ तासां तिसृणां त्रुटीनां भागो भजनं यस्य स तत्त्रिभागः तिसृस्त्रुट्यो वेधः इत्युक्तं भवति ॥ ६ ॥ ❀ ❀ निमेषा अङ्गुलिस्फोटेन ज्ञेयाः ताः काष्ठाः पञ्चदशलघु ॥ ७ ॥ ❀ ❀ पञ्चदशलघूनि नाडिका, ते द्वे नाडिके मुहूर्तं विदुः षण्नाडिकाः प्रहरः सप्तनाडिका यामः सूर्यगतिलक्षितराशिभेदादूनातिरेकाद्वेति विकल्पः ॥ ८ ॥

## श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

अणुर्द्वाविति पद्यं पदार्थकालयोः सामान्यवचनं दृष्टान्तदार्ष्टान्तिकभावनैकनामत्वेन च ॥ ५-७ ॥ ❀ ❀ षट् सप्तेति। वाशब्दस्तत्र सर्व्वमेवान्तरं समुच्चिनोति ॥ ८-११ ॥

## श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

द्वौ परमाणू अणुः स्यात्। त्रयोऽणवस्त्रसरेणुः स तु प्रत्यक्ष इत्याह। जालार्केति गवाक्षप्रविष्टेष्वर्करश्मिषु खमेवातिलाघवेन अनुपतन् अवगतश्चक्षुषा ज्ञातः न तु गां पृथ्वीमगादिति पाठे तथाभूतश्चलतीत्यर्थः। अत्राणुपरमाण्वोः सत्त्वे किं ज्ञापक-

मिति चेत् त्रसरेणुरेव । तथाहि अवयवानां स्थौल्यप्रचुरत्वे विना अवयवी दृश्यो न भवतीति सर्व्वत्र नियमः । अत्र त्रसरेणोरवयविनः त्रयः स्थूला अणवः एवावयवाः कल्प्या न तु परमाणवस्तेषां स्थौल्याभावात् स्थौल्यमनेकवस्तुघटितत्वमित्यणोः स्थौल्यं परमाणुं विना न सम्भवेदिति परमाणुसिद्धिः । त्रसरेणोर्द्दृश्यत्वमवयवस्थौल्यं विना न सम्भवेदित्यणुसिद्धिः । तथा अणोः स्थौल्यार्थं परमाणोर्द्वित्वमेव कल्प्यते न तु त्रित्वचतुष्ट्वादिकं प्रथमोपस्थितेस्तन्त्रत्वादिति न्यायात् । यथा 'कपिंजलानालभेत' तथा प्राचुर्य्यार्थमणोरपि त्रित्वमेव कल्प्यते तथा युक्तेरिति । त्रसरेणुत्रिकमिति;त्रिभिस्त्रसरेणुभिः त्रुटिः । सूच्या भिन्ने पद्मपत्रे त्रुटिरित्यभिधीयते इति सूर्य्यसिद्धान्तः । यावता कालेन पद्मपुष्पपत्रं भिद्यते तावान् कालः त्रुटिरित्यर्थः ॥ ५ ॥ ❀ ❀ शतं भागाः त्रुटिरूपा यस्मिन् स वेधः इत्यर्थः । तैस्त्रिभिर्लवः ॥ ६ ॥ ❀ ❀ ते निमेषाः आम्नाताः कथिताः ताः काष्ठाः ॥ ७ ॥ ❀ ❀ नाडिका दण्डः ते द्वे नाडिके । षट् सप्त वा नाडिकाः प्रहरः स एव यामोऽपि । दिनस्य रात्रेश्च चतुर्थभागः । ह्रासे षट् वृद्धिप्रवृत्तौ सप्त । सन्ध्याद्वयघटिकां विनेति ज्ञेयम् । तत्राप्यनियमे वाशब्दः । प्रत्यहं तद्भेदानां गणयितुमशक्यत्वात् ॥ ८ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

अथावान्तरकालपरिच्छेदका एवादिपदार्थलक्षणपूर्वकमवान्तरकालानाह । अणुरित्यादिना । द्वौ परमाणू अणुः स्यात् त्रयः अणवस्त्रसरेणुः स प्रत्यक्ष इत्याह । जालार्करश्म्यवगतः खमेवानुपतन्नगादिति ॥ ५ ॥ ❀ ❀ शतं त्रुटिशतं भागा यस्मिन् सः वेधः । तैर्वेधैः ॥ ६ ॥ ❀ ❀ ताः काष्ठाः पंचदश लघु ॥ ७ ॥ ❀ ❀ ते नाडिके द्वे मुहूर्तः नाडिकाः षट् सप्त वा प्रहरः स एव यामः । अयमर्थः सन्ध्या सध्यांशमुहूर्तद्वयं विना दिनस्य रात्रेश्च ह्रासे तुर्य्यांशभागः षड् नाडिकात्मकः वृद्धौ सप्तनाडिकात्मकः याम इति एतदपि स्थूलदृष्ट्योक्तं नियमासंभवात् ॥ ८ ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

एवमाद्यन्तकालं निरूप्य मध्यकालं निरूपयति—अणुर्द्वौ परमाणू स्यादिति । येन मार्गेण सूर्यरथचक्रं गच्छति, तस्मिन्मार्गे परमाणुदेशं यावता कालेनाऽतिक्रामति स परमाणुकालः । यावता परमाणुद्वयदेशमतिक्रामति सोऽणुकालः । एवमग्रेऽपि । यावता कालेन सर्वमेव नभोवलयं द्वादशराश्यात्मकमतिक्रामति स परममहान् संवत्सरात्मकः । अणुत्रयेण त्रसरेणुः । स्मृत इति तत्र प्रमाणं महतां स्मरणम् । स तु प्रत्यक्ष इत्याह—जालार्करश्म्यवगत इति । गवाक्षमार्गेणाऽन्तःप्रविष्टसूर्यरश्मिषु अवगतो भवति । अवगतेर्व्यञ्जकद्वयमाह—खमेवानुऽपतन्न गामिति । न ते त्रसरेणवो भूमौ पतन्ति, किन्तु तस्मिन्नेव रश्मौ आकाशं आकाशं प्रत्युड्डीयमाना गच्छन्ति । एकवचनमवान्तरभेदव्युदासार्थम् ॥ ५ ॥ ❀ ❀ त्रसरेणविति त्रसरेणुत्रितयस्य यावान् कालः, स त्रुटिसंज्ञको भवति । स एव त्रुटिः शतभागो वेधः, शतांशो भागः । शतशब्दोऽत्र नाऽपरिमितवाचीत्याह—तुशब्दः । शतं त्रुटय एको वेध इत्यर्थः । वेधत्रयं लवः । निमेषस्त्रिलवः । निमेषत्रयं क्षणः । पञ्च क्षणाः काष्ठा । पञ्चदश काष्ठा लघु । पञ्चदशलघूनि नाडिका । नाडिकाद्वयं मुहूर्त्तः । नाडिकाषट्कं प्रहरः, सप्त वा । नृणां मनुष्याणाम् । यन्नाडिका घटिकापेक्षया स्थूला, तेन कथमपि वृद्धा रात्रिर्दिनं वा, तस्य चतुर्थो भागः सप्तनाड्यात्मकः, ह्रासे तु षण्नाड्यात्मकः । एवमहोरात्रे द्विपञ्चाशन्नाडिका भवन्ति । षष्टिनाडिका एवंप्रकारेणाऽत्र गणिताः । ये तु सन्ध्याद्वयपरित्यागेनाऽऽहुः, तैः 'यामाश्चत्वारश्चत्वारः' इति वाक्यमनुसन्धेयम् । अथ यदि प्रातःसन्ध्या दिवसे, सायंसन्ध्या रात्राविति; घटिकाचतुष्टयं न गणितमिति । तथा गणनायां प्रयोजनाभावात् । सन्ध्यासन्ध्यांशव्यतिरेकेण मध्ये धर्मार्थमिति चेत्? एवमप्यायुर्निरूपकत्वेन तत्त्यागे प्रयोजनाभावात् । तत्र धर्मकरणे आयुर्वर्द्धत इति चेत्? अन्यदा धर्मकरणे आयुर्वृद्धिर्न स्यात् । 'उद्यन्तमस्तयन्तसौ' इति विरोधश्च । न च नृणामिति वाक्यात् पूर्वसन्ध्याकालो देवानाम्, पश्चात्तनोऽसुराणामिति । एवमप्यायुःपरिमाणार्थं न गणितव्यम्[1] । धर्मार्थमेव तथाकथनं न युक्तम् । किञ्च, यदि वक्ष्यमाणं प्रमाणं साम्प्रतं नाडीपरिमाणमेव स्यात्, तदैवं कल्पनमुचितम्, वर्द्धते त्विदं परिमाणम् ॥ ६ ॥ ७ ॥ ८ ॥

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः ।

अणुरित्यत्र । संवत्सरात्मक इति । मानुषसंवत्सरात्मकः । 'अणुर्द्वौ' 'त्रसरेणुस्त्रयः' इत्यादौ न द्वित्रियोगः, 'सदा असंयुतः' इत्यनेन तन्निवारणात्, किन्तु तावद्विभाजकाघातसहिष्णुत्वे (म) नाऽविभक्तत्वं बोध्यम् ॥ ५ ॥ ❀ ❀ ते द्वे मुहूर्त इत्यत्र । ये त्वित्यादिना श्रीधरव्याख्यानमनूद्य तत्राऽस्वरसमाहुः—तैरित्यादि । अनुसन्धेयमिति । तथा गणनायां 'चत्वारो या (मा) मुहूर्तद्वयं चाऽह्नी' इति वाक्यं स्यात्, न तु तावन्मात्रम्, अतस्तैरनुसन्धेयमित्यर्थः । एवमपीत्यादि । धर्मार्थत्वेपि 'संवत्सरशतं नृणां परमायुर्निरूपितम्' इत्यग्रे वाक्यादस्या गणनायास्तादर्थ्यात्तन्निरूपकत्वेन घटिकाचतुष्टयत्यागे आयुःपरि-

---

१. संगन्तव्यम्. घ. गन्तव्यम्. ख. ग. ङ. च. ।

माणं न भवेदिति तत्त्यागे प्रयोजनाभावादित्यर्थः । तत्रेति । दिनरात्र्योः अन्यदेति सन्ध्याद्वये । दूषणान्तरमाहुः—उद्यन्नित्यादि । तथा चाऽस्मिन् वाक्ये सन्ध्यां गृहीत्वैवाऽऽयुर्हरणोक्तेः सन्ध्ययोरप्यायुर्मानान्तरगतत्वमवधार्यते, तयोरनन्तरगतत्वे तूक्तवाक्यविरोध इत्यर्थः । उक्तपक्षान्तराभ्युपगमेऽपि नोक्तदूषणोद्धार इत्याहुः—एवमित्यादि । वक्ष्यमाणवाक्यविरोधेन पूर्वोक्तकल्पनस्याऽसङ्गतत्वमाहुः—किञ्चेत्यादि ॥ ६ ॥ ७ ॥ ८ ॥

### श्रीगिरिधरकृता बालप्रबोधिनी

इदानीं द्व्यणुकादिलक्षणपूर्वकं मध्यमकालावस्थां निरूपयति—अणुरिति । द्वौ परमाणू अणुः स्यात्, द्वाभ्यां परमाणुभ्यामेकः अणुः स्यात्, तं यावता सूर्योऽतिक्रामति सोऽणुकालः स्यादित्यर्थः । त्रयोऽणव एकस्त्रसरेणुः स्मृतः वृद्धैः कथितः, त्रिभिरणुभिरेकस्त्रसरेणु र्भजति, तं यावता सूर्योऽतिक्रामति स त्रसरेणुकालः स्मृत इत्यर्थः । परमाण्वणू न प्रत्यक्षावतिसूक्ष्मत्वात्त्रसरेणुस्तु प्रत्यक्ष इत्याहुः—जालार्केति । गवाक्षगतजालरन्ध्रप्रविष्टेषु अर्करश्मिषु सूर्यकिरणेषु अवगतो दृष्टः सन् योऽसौ अतिलघुत्वेन खमाकाशमेवानुपतन् अगात् गतो भवति स त्रसरेणुरित्यर्थः । 'न गाम्' इति पाठे तु खमेव अनुपतन्नवगतो भवति, गां पृथ्वीं पतंस्तु नावगतो भवतीत्यर्थः ॥ ५ ॥ ❀ ❀ त्रसरेणुत्रिकं यः भुङ्क्ते यावता सूर्योऽतिक्रामति स कालः त्रुटिः स्मृतः त्रुटिसंज्ञया कथितः । शतं भागाः त्रुटिरूपा यस्मिन् स तथाभूत एको वेधाख्यः कालः, स्यादित्यर्थः । त्रिभिस्तैर्वेधैस्त्वेको लवः स्मृतः ॥ ६ ॥ ❀ ❀ त्रिलवो निमेषो ज्ञेयः । ते निमेषास्त्रयः क्षण इत्याम्नातः । पञ्च क्षणान् काष्ठां विदुः । ताश्च काष्ठाः पञ्चदश एकं लघु भवति ॥ ७ ॥ ❀ ❀ पञ्चदश लघूनि चैका नाडिका समाम्नाता । द्वे ते नाडिके एको मुहूर्तो भवति । षट् सप्त वा नाडिकाः नृणां मनुष्याणां प्रहरो भवति । स एव यामो दिनस्य रात्रेश्च चतुर्थो भागः, ह्रासे षट् वृद्धौ सप्त सन्ध्यांशमुहूर्तद्वयं विनेति ज्ञातव्यम्, तत्राप्यनियमार्थोऽव्ययशब्दः प्रत्यहं [१]तद्भेदानां दर्शयितुमशक्यत्वात् नृणामित्यनेन मनुष्यमानमुक्तम् ॥ ८ ॥

### हिन्दी अनुवाद

दो परमाणु मिलकर एक 'अणु' होता है और तीन अणुओंके मिलनेसे एक 'त्रसरेणु' होता है, जो झरोखेमेंसे होकर आयी हुई सूर्यकी किरणोंके प्रकाशमें आकाशमें उड़ता देखा जाता है ॥ ५ ॥ ❀ ❀ ऐसे तीन त्रसरेणुओंको पार करनेमें सूर्यको जितना समय लगता है, उसे 'त्रुटि' कहते हैं । इससे सौगुना काल 'वेध' कहलाता है और तीन वेधका एक 'लव' होता है ॥ ६ ॥ ❀ ❀ तीन लवको एक 'निमेष' और तीन निमेषको एक 'क्षण' कहते हैं । पाँच क्षणकी एक 'काष्ठा' होती है और पंद्रह काष्ठाका एक 'लघु' ॥ ७ ॥ ❀ ❀ पंद्रह लघुकी एक 'नाडिका' ( दण्ड ) कही जाती है, दो नाडिकाका एक 'मुहूर्त' होता है और दिनके घटने-बढ़नेके अनुसार ( दिन एवं रात्रिकी दोनों सन्धियोंके दो मुहूर्त्तोंको छोड़कर ) छः या सात नाडिकाका एक 'प्रहर' होता है । यह 'याम' कहलाता है, जो मनुष्यके दिन या रातका चौथा भाग होता है ॥ ८ ॥

**द्वादशार्धपलोन्मानं चतुर्भिश्चतुरङ्गु[२]लैः । स्वर्णमाषैः कृतच्छिद्रं यावत्प्रस्थजलप्लुतम् ॥ ९ ॥**
**यामाश्चत्वारश्चत्वारो मर्त्यानामहनी उभे । पक्षः पञ्चदशाहानि शुक्लः कृष्णश्च मानद ॥ १० ॥**
**तयोः समुच्चयो मासः पितॄणां तदहर्निशम् । द्वौ ता[३]वृतुः षडयनं दक्षिणं चोत्तरं दिवि ॥ ११ ॥**
**अयने चा[४]हनी प्राहुर्वत्सरो द्वादश स्मृतः । संवत्सरशतं नृणां परमायुर्निरूपितम् ॥ १२ ॥**

### श्रीधरस्वामिविरचिता भावार्थदीपिका

नाडिकाया उन्मानमाह । उन्मीयतेऽनेनेत्युन्मानं पात्रम् षट्पलताम्रविरचितम् । पंचगुंजो माषस्तैश्चतुरंगुलायामशलाकारूपेण विरचितैः कृतमूलच्छिद्रं तेन छिद्रेण यावत्प्रस्थपरिमितं जलं प्रविशति तेन प्लुतं निमग्नं भवति तावान् कालो नाडिका । अत्र पलच्छिद्रयोराधिक्ये शीघ्रं निमज्जेदल्पत्वे च विलंबेनेति पलशलाकयोर्नियमः ॥ ९ ॥ ❀ ❀ अहनी अहोरात्रः ॥ १० ॥ ❀ ❀ षण्मासा अयनं दिवीत्यस्योत्तरेणान्वयः ॥ ११ ॥ ❀ ❀ दिवीति देवानामहोरात्रे प्राहुः द्वादश मासाः ॥ १२ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

नाडिकाया घट्याः रजतादिशलाकया छिद्रपुष्टिः स्यादिति सुवर्णस्यापि नियम एवेति ज्ञेयम् । प्रस्थप्रमाणमप्युक्तं शार्ङ्गधरेण "गुंजाः पञ्चाद्यमाषकः, ते षोडशाक्षः कर्षोऽस्त्री पलं कर्षचतुष्टयम् । शरावोष्टपलं तद्वत्तद्द्वयं प्रस्थ उच्यते" इति ॥ ९ ॥ ❀ ❀

१. क—ख—पाठस्तु भेदानां प्रदर्शयितुमिति । २. प्रा० पा०—चतुरङ्गुलम् । ३. प्रा० पा०—तौ ऋतुः । ४. प्रा० पा०—अयने अहनी ।

अहश्च रात्रिश्चाहनी "नपुंसकमनपुंसकेन—" इत्येकशेषः। मानं शिष्टोक्तं वस्तुपरिमाणं द्यते पालयति धर्मावतारत्वाद्धर्मपालकत्वाद्वेति मानदस्तत्संबुद्धौ तथा श्रीमैत्रेयशुकदेवयोर्विदुरपरीक्षितौ प्रति संबुद्धिरियमिति ॥ १० ॥ ❀ ❀ तयोः शुक्लकृष्णयोः पक्षयोः समुच्चय ऐक्यं तदिति विधेयापेक्षं क्लीबत्वम्। "कृष्णपक्षस्त्वहस्तेषां शुक्लपक्षस्तु शर्वरी। कृष्णपक्षे त्वहःश्राद्धं पितॄणां वर्त्तते नृप" इति हरिवंशे। 'रात्रौ श्राद्धं न कुर्वीत' इति निषेधाच्च शुक्लपक्षस्य रात्रित्वे पितृशयनकालत्वात्स्वाभाविकश्राद्धं कृष्णपक्ष एव कार्यमित्युक्तमनेनोक्तम्। तौ मासौ ऋतवश्च षडेव ते च "हेमंतः शिशिरश्चैव वसंतो ग्रीष्म एव च। वर्षा शरच्च ऋतवो मार्गाद्या द्विद्विमासकाः" इति ज्योतिःशास्त्रे ॥ ११ ॥ ❀ ❀ दिवि देवलोके अयने दक्षिणोत्तरसंज्ञे "देवानां तदहोरात्रं दिवा चैवोत्तरायणम्। शुभाशुभे तत्र कार्ये स्याद्रात्रिर्दक्षिणायनम्" इति शुभाशुभे कर्मणी तत्र तयोरुत्तरदक्षिणायनयोः कर्त्तव्ये इत्यर्थः। "मानुषेण तु मानेन यो वै संवत्सरः स्मृतः। देवानां तदहोरात्रम्" इति हरिवंशे। परमायुरिति। अल्पायुर्मध्यमायुः परमायुश्चेति त्रिधा ज्योतिःशास्त्रे नृणामायुरुक्तम्। आत्रिंशतमल्पायुराषष्टिमध्यमायुस्ततः परमायुरिति मतभेदेनाल्पाधिक्यकथनमपि "शतायुर्वै पुरुषः" इति श्रुत्या विरुद्धं न ज्ञेयम्। अत्रशतपदं न स्वार्थपरमानंत्ये तात्पर्यात्। वस्तुतस्त्वायुतोऽल्पाधिक्यं पापपुण्यापेक्षमेव पापेन क्षीयते पुण्येन वर्द्धते च पापं शास्त्रविरुद्धदिवामैथुनादि पुण्यं तद्विहितं रात्रिमैथुनादि। तदुक्तं श्रुत्या "प्राणं वा एते प्रस्कंदंति ये दिवा रत्या संयुज्यंते ब्रह्मचर्यमेव तद्यद्रात्रौ रत्या संयुज्यन्ते" इति प्रश्नोपनिषदि। एवमन्यत्राप्यूह्यम् ॥ १२ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

उन्मानं मानज्ञानसाधनं पलमत्र पकटङ्कम् प्रस्थमत्र पक्पञ्चविंशतिटङ्कपरिमितसेटकं तत्परिमितं जलं यावता कालेन तस्मिन्पात्रे प्रविशति तेन च जलप्रवेशेन तत्पात्रं निमज्जति तावान् कालो नाडिकेत्यर्थः। रजतादिशलाकया तुच्छिद्रवृद्धिः स्यादिति स्वर्णनियमोऽपि कृतः ॥ ९ ॥ ❀ ❀ अहनी इति लिङ्गसमवायन्यायेन द्विवचनमत एवाहोरात्र इति व्याख्यातम्। मानदेति कालश्रवणाऽवधानार्थं सम्बोधनम् ॥ १० ॥ ❀ ❀ तदिति नित्यं यत्कर्म समय इतिवत् विधेयपरामर्शकम्। तत्र कृष्णपक्षो दिनं शुक्लपक्षो रात्रिस्तत्र तत्कर्मनिषेधात् कर्कटादिषड्राशिषु सूर्य्यसंक्रमे षण्मासा दक्षिणायनम्। मकरादिषड्राशिषु तत्संक्रमे षण्मासा उत्तरायणम्। तदुक्तं रामदैवज्ञेन सौम्ययाम्यायनं मकरकर्कटयोर्निरुक्तमिति ॥ ११ ॥ ❀ ❀ दिवि चाध्नेऽहोरात्रे प्राहुस्तत्रोत्तरायणं दिनं दक्षिणायनन्तु रात्रिरिति ज्ञेयम् ॥ १२ ॥

### श्रीमद्वीरराघवव्याख्या

प्रत्यहं तद्भेदानां गणयितुमशक्यत्वान्नाडिकामानं ज्ञापयितुं प्रस्थलक्षणमाह। द्वादशार्धेति। द्वादशार्द्धपलोन्मानमुन्मीयतेऽनेन इत्युन्मानं पात्रं तच्च द्वादशपलं द्वादशपलपरिमितताम्ररचितं षट्पलताम्ररचितमित्येके, पञ्चगुञ्जो माषः तैश्चतुरङ्गुलायामशलाकारूपेण रचितैः कृतमूलच्छिद्रं तेन छिद्रेण प्रस्थपरिच्छिन्नजलभरेण योग्यत्वात्प्रस्थशब्दवाच्यं पात्रं जले प्लुतं स्थापितं यावता कालेन निमज्जति सा नाडिकेत्यर्थः। माषचतुष्टयमितस्वर्णकृतचतुरङ्गुलसूच्या कृतच्छिद्रमर्धाधिकद्वादशपलपरिमितं प्रस्थपरिमितजलभरेणैव निमज्जत्पात्रप्रस्थं तन्निमज्जनावच्छिन्नः कालः नाडिकेति समुदायार्थः। अत्र पलच्छिद्रयोराधिक्ये शीघ्रं निमज्जेदल्पत्वे च विलंबेनेति पलशलाकयोर्नियमः ॥ ९ ॥ ❀ ❀ चत्वारश्चत्वारः अष्टावित्यर्थः अष्टौ यामाः मर्त्यानामुभे अहनी अहोरात्रः पञ्चदशाहान्यहोरात्रात्मकान्यहानि शुक्लः कृष्णश्च पक्षः पुनः पञ्चदशाहानि कृष्णः पक्ष इत्यर्थः ॥ १० ॥ ❀ ❀ हे मानद! विदुर अनयोः शुक्लकृष्णयोः पक्षयोः समुच्चयः समुदाय एको मासः नृणामित्यनुषङ्गः पितॄणां विशेषमाह। पितॄणामिति। स पूर्वोक्तो मासः पितॄणामहर्निशमहोरात्रः यत्तदोरनियमेनोद्देश्यविधेयान्यतरलिंगत्वात्तदिति नपुंसकनिर्देशः। तौ पूर्वोक्तौ मासौ नृणामृतुः षण्मासास्त्वयनमित्युच्यते तच्चायनं दक्षिणोत्तरभेदेन द्विविधं षण्मासा दक्षिणायनं पुनः षण्मासा उत्तरायणम् ॥ ११ ॥ ❀ ❀ देवानां विशेषमाह अयने दक्षिणोत्तरायणे दिवि स्वर्गेऽहनी प्राहुः देवानामहर्निशमित्यर्थः। द्वादश पूर्वोक्ताः नृणां मासाः द्वादशवत्सरः स्मृतः। प्रसङ्गान्नृणामायुःपरिमाणमप्याह संवत्सरशतमिति। स्पष्टोऽर्थः नृणामित्युपलक्षणमन्येषामपि स्वस्वमानेन शतसंवत्सरमायुर्भवतीत्यर्थः ॥ १२ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली।

नाडिकावधिं वक्तुं तत्पात्रलक्षणमाह। द्वादशेति। द्वादशार्धैः षड्भिः पलैः कृतमुन्मानमुत्कृष्टमानं यस्य तत् द्वादशार्धपलोन्मानं चतुर्भिश्चतुरङ्गुलैः चतुरङ्गुलदीर्घैः स्वर्णमाषैः कृतच्छिद्रं कृतद्वारमेवं रचितं नाडीपात्रं यावत्प्रस्थं जलं पिबेत्तावता कालेन प्रस्थजले स्थापितं तज्जलं पीत्वा निमज्जति सा नाडिकेत्यन्वयः। इदमुक्तं भवति चतसृभिः काकिणिकाभिः कृतो विंशांशः तैश्चतुर्भिर्युतो माषश्चतुरङ्गुलदीर्घे माषचतुष्टये कृते सति यावान्परिणाहः स्यात्तावता तत्कृतद्वारचतुष्टयेन षट्पलरूपं नाडीपात्रमतिरैत्य-

कलङ्कमान्द्यादिदोषवर्जितं निर्मलं समोष्णं नित्यं सूर्यरश्मिषु तप्तं प्रवाहगतं वसन्तकालीनप्रयागगतं वा जलं पिबति स कालो नाडिकेत्युच्यते। तदुक्तम्

"काकिणिकाचतुष्कं च विंशांशेत्यभिधीयते। कृष्णलेत्थपितं ब्रूयुस्तैश्चतुर्भिस्तु माषकः॥
चतुरङ्गुलदीर्घे तु कृते माषचतुष्टये। यावान्स्यात्परिणाहेन तावद्द्वारं विधीयते॥
प्रस्थस्य नाडीपात्रस्य षट्पलस्य शुभे जले। भाराधिक्येनोदकेन क्षिप्रं पूर्तिर्भविष्यति॥
अतिशैत्यकलङ्के च माद्येनैव तु पूरणम्। तस्माद्वसन्तकाले च प्रयागस्योदकेन च॥
नाडीशुद्धिः परीक्षा स्यादन्यथा नैव संभवेदिति। निर्मलेन समोष्णेन नित्यं सूर्यांशुवारिणा॥

प्रवाहगेन कार्या स्यात्कालशुद्धिः सदैवत्वि"ति च॥ ९॥ ❀ ❀ उभे अहनी अहोरात्रे अहनीत्युक्तेऽह्नो द्वित्वं रात्रिर्न सिध्यतीत्यत उभे इति यत्रोभयोः स शब्दः स्यात्तत्तद्द्विवचनेष्वु इत्यभिधानात्॥ १०॥ ❀ ❀ उत्तरलिङ्गापेक्षया तदित्युक्तं स मनुष्यमासः पितॄणामहोरात्रे तौ द्वौ मासावृतुः षट् ऋतवो दक्षिणायनमुत्तरायणमिति संज्ञिताः॥ ११॥ ❀ ❀ दिवि स्वर्गे देवानां द्वे अयने अहनी अहोरात्रे रात्रिक्रियाभवाद्रात्रिरप्यहःशब्देनोच्यत इत्यहनी इत्युक्तं मानुषद्वादशमासा वत्सरः॥ १२॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

ग्रहर्क्षेति सूर्य्यगतिमात्रकथनं नतु कालावसानतात्पर्य्यकं संवत्सरस्य परममहत्त्वायोगात्॥ १२—१५॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

नाडिकाया उन्मानमाह। उन्मीयतेऽनेनेत्युन्मानं षट्पलताम्ररचितं पात्रं चतुःषष्ट्या माषैः पलं भवति। पञ्चगुञ्जा माषः तैश्चतुर्भिश्चतुरङ्गुलायामशलाकारूपेण रचितैः कृतमूलच्छिद्रं तेन छिद्रेण यावत्प्रस्थपरिमितं जलं प्रविशति तेन च प्लुतं निमग्नं भवति तावान् कालो नाडिका। अत्र पलच्छिद्रयोराधिक्ये शीघ्रं निमज्जेत् अल्पत्वे च विलम्बेनेति पलशलाकयोर्नियमस्तत्रापि रजतादिशलाकया छिद्रपुष्टिः स्यादिति स्वर्णस्यापि नियमः॥ ९॥ ❀ ❀ अहनी अहोरात्रौ॥ १०॥ ❀ ❀ ते अयने दिवि देवानामहनी अहोरात्रौ द्वादश॥ ११॥ ❀ ❀ मासा वत्सरः॥ १२॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः।

द्वादशार्द्धपलोन्मानं षट्पलपरिमितताम्रमयं उन्मीयतेऽनेनेत्युन्मानं पात्रं चतुरङ्गुलैश्चतुरङ्गुलायामसूचीरूपेण विरचितैः चतुर्भिः स्वर्णमाषैः कृतच्छिद्रं विरचितमूलच्छिद्रं तेन च्छिद्रेण यावत्प्रस्थजलं प्लुतं भवति तावान्कालो नाडिका॥ ९॥ ❀ ❀ चत्वारश्चत्वारः अष्टौ यामाः उभे अहनी अहोरात्रे॥ १०॥ ❀ ❀ द्वौ मासौ ऋतुः षण्मासाः अयनं दिवीत्युत्तरेण सम्बध्यते॥ ११॥ ❀ ❀ दिवि देवलोके अयने अहनी प्राहुः। द्वादश मासाः वत्सरः स्मृतः॥ १२॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

तदर्थं मानमाह—द्वादशार्धपलोन्मानमिति। द्वादशार्धं षट्। उभयज्ञाने न्यूनाधिकभावो बुध्यत इति तुल्यज्ञानार्थं द्वादशार्धता उक्ता। पलं सुवर्णाश्चत्वारः। सुवर्णं षोडशमाषम्। पञ्चगुञ्जापरिमितो माषः। गुञ्जा च त्रियवा। द्वादशार्धपलेन ताम्रेण पात्रं विधाय, स्वर्णशलाकाचतुष्टयेन मिलितेन मध्ये छिद्रं कर्त्तव्यम्। ते च स्वर्णमाषाश्चतुरङ्गुलाः, चतुस्त्रिंशत्तिलानां चतुर्गुणदीर्घाः। तदाह—स्वर्णमाषैश्चतुर्भिश्चतुरङ्गुलैरिति। यावत्प्रस्थं जलं तत्र माति, तावति प्रविष्टे प्लुतं भवति॥ ९॥ ❀ ❀ एवं नाडिकापरिमाणमुक्त्वा तत ऊर्ध्वं कालपरिमाणमाह—यामाश्चत्वार इति। चत्वारो यामा अहः, पुनश्चत्वारो यामा रात्रिरिति ज्ञापयितुं द्विरुक्तिः। अहनी रात्रिन्दिवम्। उभे इति आवृत्तिव्युदासार्थम्। एवमुभयं मिलित्वा एकमहः। पञ्चदशाहानि पक्षः। स पक्षो द्विविधः, शुक्लः कृष्णश्चेति। रात्रिमुखे चन्द्रदर्शनयुक्तः शुक्लः, रात्रिमुखे एतद्द्वीपे चन्द्राभायुक्तः कृष्णः। मानदेति संबोधनं श्रुत्वैव वचनान्यवगच्छतीति गुरोर्मानदाता। पञ्चदशाहानीति कलाभिप्रायम्॥ १०॥ ❀ ❀ तयोः समुच्चय इति। तयोः समुच्चयो मेलनं मासः। स उभयविधो भवतीति द्वयमप्यस्याऽभिप्रेतम्। पितॄणां तदहर्निशमिति। चन्द्रस्य पञ्चदशकलासु यदा प्रविशति, तदा रात्रिः, चन्द्रेण व्यवधानात्। यदा ततोऽपगच्छति तदा दिनम्। पितरो हि जलकृतमेव व्यवधानं सूर्यस्य मन्यन्ते, न तु पृथिवीकृतम्। यथाऽस्माकं चन्द्रे विद्यमानेऽविद्यमाने वा सूर्योदयास्तमयाभ्यामेव रात्रिदिनव्यवस्था; तथा तेषां सूर्यस्थितिरप्रयोजिका चन्द्रकलासु प्रवेशनिर्गमावेव प्रयोजकौ। प्रवेश एव कलोत्पत्तिः, निर्गम एव कलाक्षयः। निर्गमो दिनमित्यमावास्यायामहर्दिनं तेषां भोजनकालो भवति, पौर्णमास्यां तु तृप्ताः शेरत इति तेषां दिनरात्रिव्यवस्था। एवं मासद्वयमृतुः, षण्मासास्त्वयनम्, द्वादश-

मासाः संवत्सरः इति अयनद्वयं वत्सरः। तयोर्नाम दक्षिणं चोत्तरमिति। दक्षिणायनमुत्तरायणं चेत्यर्थः। तदयनद्वयं दिवि स्वर्गे अहनी प्राहुः। दक्षिणायनं रात्रिः, उत्तरायणमहः। स्वर्गस्थास्तेजःकृतमेव व्यवधानं सूर्यस्य मन्यन्ते, न चन्द्रकृतम्, नाऽपि पृथिवीकृतम्। तत्र नक्षत्राणि तेजःशब्देनोच्यन्ते। तत्रोत्तराषाढ उत्तरायणदिवसस्याऽरुणोदयः। तस्य पादे उपयुक्ते सूर्योदयो भवति, तदा मकरः। पुनर्वसुपादत्रयपर्यन्तं दिनम्। एतानि नक्षत्राणि मालाकारेण वर्तन्तेऽन्योन्यसम्मुखानि। तेषु परभागे पूर्वभागे वा स्थिता अर्द्धं पश्यन्त्यर्द्धं न। यथा द्विगुणे वस्त्रे चित्रार्द्धमेवैकत्र स्थिताः पश्यन्ति, तथा देवानामपि पुनर्वसुपादमारभ्य उत्तराषाढापर्यन्तं नक्षत्राणि व्यवधायकानि। सर्वाण्येतान्युपरिमुखानि मालारूपेण च वर्तन्ते। अतो दक्षिणायननक्षत्राणि यदा सूर्यसहितानि भवन्ति, तदोभयनक्षत्राण्यप्यधोमुखानि भवन्तीति सूर्यस्तैर्न दृश्यत एव। प्राहुरिति प्रमाणम्। द्वादशमासा वत्सरः। अत्रापि स्मृत इति प्रमाणम्। संवत्सरशतं तु नृणां परमायुः, अवृद्धिक्षये। एकेन संवत्सरेण एकमायुः कालेनोपभुक्तं भवति, 'शतायुर्वै पुरुषः' इति श्रुतेः। धर्मे तु क्रियमाणे कालेनाऽऽयुर्भोगः प्रतिबध्यते, तदा शतसंवत्सरादप्यधिकं जीवति। पापे तु क्रियमाणे पापमप्यायुरुप-भुङ्क्ते, कालोऽपि; तच्चेत्पापं कालसमानं भवति। उत्कृष्टं चेत् भूयस आयुषः क्षयः। उत्कृष्टपापे बहुजन्मजनके बीजपातक्षण-मारभ्य पञ्चविंशतिवर्षपर्यन्तं नानाविधा योनयः प्राप्यन्ते, न तेन शतायुःश्रुतिभङ्गः। निरूपितमिति प्रमाणम्॥ १२॥

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

यामा इत्यत्र। कलाभिप्रायमिति। गणितेन तिथिह्रासवृद्धौ पञ्चदशाहपक्षस्य बाधमाशङ्क्य तत्समाधानायेदमुक्तम्। तथा च, सूर्यस्य पृथ्वीकृतव्यधानादिनाऽऽधिक्येन्यूनभावेपि कलाविचारेण सर्वदा ऐकरूप्येण पञ्चदशाहानीत्यर्थः।॥ १०॥ ❀ ❀ तयोः समुच्चय इत्यर्थः। स उभयविध इत्यादि। 'अमावास्या हि मासान् संपश्यन्ती' पौर्णमास्या हि मासान् संपश्यन्तीं' इति श्रुतेः। शुक्लादिकृष्णादिभेदेनोभयविधोऽत्र नाऽभिप्रेतः, किन्तु पञ्चमस्कन्धे सूर्यं प्रक्रम्य 'द्वादश मासान् भुङ्क्ते राशिसंज्ञान्, संवत्सराव-यवान्, मासः पक्षद्वयम्, दिवा नक्तं चेति सपादर्क्षद्वयमुपदिशन्ति' इत्यनेन पक्षद्वयं मासश्चान्द्रमानेन, तदेव पक्षद्वयं पितॄणां दिवानक्तं च। सौरविचारेण तु सपादर्क्षद्वयं मास इत्युक्तम्। अग्रे चन्द्रं प्रक्रम्य 'आपूर्यमाणाभिश्च कलाभिरमराणामप-क्षीयमाणाभिश्च कलाभिः पितॄणामहोरात्राणि पूर्वापरपक्षाभ्यां वितन्वानः' इति कथनात् सूर्यकृतश्चन्द्रकृतश्च मासोऽङ्गीकृतः, तेनो-भयविधः स भवतीत्येतद्द्वयं पितॄणां कृतां पैत्रामहोरात्रां (?) पञ्चदशाहपक्षाङ्गीकारेण, देवानामहोरात्रं सूर्यकृतायनाङ्गीकारेण वदतो मैत्रेयस्याऽभिप्रेतमित्यर्थः। युगपदुभ (या) हो (रा) त्र व्यवस्थां विचारयन्ति—चन्द्रस्येत्यादि। प्रविशतीति। 'अद्भ्यो वा एष ईदेति, पुनरपः प्रविशति' इति श्रुतेर्जलात्मिकासु तासु सूर्यः प्रविशति। ननूपरिष्टा (स्थान) नां तेषां पृथिव्या अपि व्यवधानसम्भवात् कथमेवमित्याकाङ्क्षायामुपपादयन्ति—पितरो हीत्यादि। जलकृतमिति। 'चन्द्रमा वा अपामायतनम्' इति श्रुतेर्जलमयत्वात्तत्कृतम्। इतीति। मूले शुक्लकृष्णसमुच्चयरूपचान्द्रमासस्य पित्र्याहोरात्रत्वेन कथनान्नान्यत्यर्थः। अत्रैवं भाति। सिद्धान्तशिरोमणौ भास्कराचार्यैः 'विधूर्ध्वभागे पितरो वसन्तः स्वाधः सुधादीधितिमामनन्ति। पश्यन्ति तेऽर्कं निजमस्तकोर्ध्वे दर्शे यतोऽस्माद्विदलं हि तेषाम्। भार्द्धान्तरत्वान्न विधोरधःस्थं तस्मान्निशीथः खलु पौर्णमास्याम्। कृष्णे रविः पक्षदलेऽभ्युदेति शुक्लेऽस्तमेत्यर्थत एव सिद्धम्'। इति पितृलोकं चन्द्रकक्षात उपर्यङ्गीकृत्य सूर्याचन्द्रमसोरैकराश्येऽमावास्यायां मध्याह्नः। भं राशिचक्रं द्वादशराश्यात्मकम्, तदर्धं षड्राश्यात्मकम्, तावदन्तरत्वान्नीचस्थे चन्द्रे सति तेन व्यवहितं सूर्यं न पश्यति। सर्वनिशीथस्तदा भवति। यदा चन्द्रोऽग्रे निःसरति तदा नीचैः खण्डितं पश्यन्तीति सूर्यसत्त्वेऽपि रात्रिः। यदा नवराश्यन्तरं तदा सूर्यस्तल्लोकस-मानदेशे समायाति' तदा दिनोदयः, एवं सायमपि। तदत्राप्यभिप्रेतम्। पञ्चमस्कन्धीयगोलादस्य भिन्नत्वे चन्द्रस्थितेरपि नीचैः सत्त्वेन सर्वमुपपन्नम्। एतावान् परं विशेषः। तैरन्तरायमात्रमङ्गीकृतेऽत्र [?) तु किरणद्वारा तत्र स्थितिरिति। अयने चाऽहनी इत्यत्र। तेजःकृतमिति। यथा प्राच्यां दिशि प्रातर्दावाग्नौ प्रज्वलति प्रतीचीस्थेन प्राङ्मुखेनाऽपि सूर्योदयो नोपलभ्यते' दूरस्थ-सूर्यस्य निकटेनाऽऽग्नेयतेजसा व्यवधानात्, तद्वदित्यर्थः। मन्यन्त इति। रात्रिव्यवस्थापकत्वेन मन्यन्ते। उक्तं प्रकारं नक्षत्रस्थि-तिप्रकारबोधनेनोपपादयन्ति—एतानीत्यादि। यथेत्यादि। पश्चाद्भागस्थिता अग्रभागम्, अग्रस्थिताश्च पश्चाद्भागमित्यर्थः। व्यवधाय-कानीति। सूर्यव्यवधायकानि। उपरिमुखानीति। रहोघटीवन्नोपरिमुखानि, किन्तु वृक्षवत्। अधोमुखानीति। नीचैः स्थितानि। अत्रेदं प्रतिभाति। 'देवगृहा वै नक्षत्राणि' इति श्रुत्या नक्षत्राणां देवगृहत्वमुक्तम्। तानि च शिशुमारे स्थिराण्यपि तद्भ्रमणेन भ्रमन्ति दृश्यन्त इति तद्वासिनो देवा अपि तथा। अत एव पञ्चमस्कन्धे ध्रुवक्षितिप्रशंसायाम् 'यत्र ह महाभागवतो ध्रुव औत्तान-पादिरग्निनेन्द्रेण प्रजापतिना कश्यपेन धर्मेण च समकालयुग्भिः सबहुमानं दक्षिणतः क्रियमाणः' इत्युक्तम्। तत्रोत्तरायणन-क्षत्रेषु देवानां स्थितिरिति तत्र सूर्यस्थितौ नैकट्यान्नीचैः सूर्यो दृश्यते, सूर्यकक्षाया नक्षत्रकक्षातो नीचैर्विद्यमानत्वात्। दक्षिणायन-नक्षत्रेषु सूर्यस्थितौ तूभयविधनक्षत्रेभ्यो नीचैःस्थोऽतिदूरः सूर्यो न दृश्यत एव। दिवसे तु प्रात्यहिकशिशुमारभ्रमणचन्द्रभ्रमणयो-र्वशाद्यद्यपि मेघेष्विव किञ्चित् किञ्चित् कालं पिधीयते, तथापि तं व्यवधानं ते रात्रिव्यवस्थापकतया न मन्यन्ते, सूर्यनैकट्येन प्रकाशस्य विद्यमानत्वादिति। इदं च पुराणमतीयदैवाहोरात्रविभागस्य युक्तिरहितेनाज्ञानमात्रतां ये मन्वते ज्योतिर्विदः; तन्मत-

निराकरणार्थं निरूपितमिति । ननु कृतादिष्वधिकायुःस्मरणादिदानीमपि क्वचिद्दर्शनाच्च कथं संवत्सरशतस्य परमायुष्ट्वम्, येन श्रुत्यविरोध इत्यतस्तदुपपादयन्ति—एकेनेत्यादि । कालेनाऽऽयुर्भोगः प्रतिबध्यत इति । कालेन क्रियमाण आयुर्भोगो धर्मेण प्रतिबध्यते ॥ ११ ॥ १२ ॥

### श्रीगिरिधरकृता बालप्रबोधिनी

नाडिकाया उन्मानमाह—द्वादशार्धेति । त्रियवा गुंजा, पञ्चगुञ्जापरिमितो मापः, षोडशमाषपरिमित एकः सुवर्ण, चत्वारः सुवर्णा एकं पलं, द्वादशार्द्धं षट् उन्मीयतेऽनेनेत्युन्मानं पात्रं, षट्पलताम्रविनिर्मितं प्रस्थप्रमितजलपूर्तियोग्यं पात्रं चतुर्भिः स्वर्णमाषैश्चतुरङ्गुलायामशलाकारूपेण रचितैः कृतं मूलच्छिद्रं तेन च्छिद्रेण यावत्प्रस्थपरिमितं जलं प्रविशति तेन च प्लुतं जले निमग्नं भवति तावान् कालो नाडिका । अत्र पलच्छिद्रयोराधिक्ये शीघ्रं निमज्जेत् अल्पत्वे च विलम्बेन निमज्जेदिति पलशलाकयोर्नियमः, तत्रापि रजतादिशलाकया च्छिद्रपुष्टिः स्यादिति सुवर्णस्य नियमो बोध्यः ॥९॥ ❀ ❀ चत्वारश्चत्वारः अष्टौ यामा मर्त्यानां मनुष्याणामहनी अहोरात्रौ, चत्वारो यामा अहः चत्वारश्च यामा रात्रिरित्यर्थः । आवृत्तिशङ्कानिरासार्थमाह—उभेति । एवमुभयं मिलित्वैकमहः । तानि पञ्चदशाहानि पक्षो भवति, स द्विविधः शुक्लः कृष्णश्चेति । तत्र यस्मिन् चन्द्रकलावृद्धिः स शुक्लः, यत्र च चन्द्रकलाह्रासः स कृष्ण इति । स्वानुगुणतया स्नेहं सूचयन् सम्बोधयति—मानदेति ॥१०॥ ❀ ❀ तयोः शुक्लपक्षकृष्णपक्षयोः समुच्चयः समुदायः एको मासः, नृणामित्यनुषङ्गः । पितृणां विशेषमाह—पितृणामिति । तत्पूर्वोक्तो मासः पितृणामहर्निशमहोरात्रः, तत्र कृष्णपक्षः अहः शुक्लपक्षो रात्रिः । तौ पूर्वोक्तौ द्वौ मासौ नृणामृतुः । षण्मासा अयनं, तच्च द्विविधं दक्षिणमुत्तरं च दिवीत्यस्योत्तरेणान्वयः ॥ ११ ॥ ❀ ❀ दिवि स्वर्गे अयने दक्षिणायनोत्तरायणे अहनी, देवानामहर्निशं प्राहुरित्यर्थः । उत्तरायणमहः, दक्षिणायनं रात्रिः । द्वादश मासा नृणां संवत्सरः स्मृतः । प्रसङ्गादायुः परिमाणमाह—संवत्सरशतमिति । नृणामिति पितृदेवादीनामप्युपलक्षणम् । स्वस्वमानेन संवत्सरशतं परमुत्कृष्टं सम्पूर्णमायुर्निरूपितं "शतायुर्वै पुरुषः" इति श्रुत्या प्रतिपादितमित्यर्थः । न च तर्हि कथं तन्मध्य एव मरणं ततोऽग्रे जीवनं च दृश्यते श्रूयते चेति शङ्कनीयम्, दुराचारिणामायुःक्षयात् मध्ये मरणम् । अतएव परमिति विशेषणं शुभाचारात् 'यावदधिकारमवस्थितिराधिकारिकाणाम्' इति न्यायेनाधिकारित्वाच्च ततोऽधिकमपि जीवनं भवतीति तत्तत्प्रकरणादवसेयम् ॥ १२ ॥

### हिन्दी अनुवाद

छः पल ताँबेका एक ऐसा बरतन बनाया जाय जिसमें एक प्रस्थ जल आ सके और चार मासे सोनेकी चार अङ्गुल लंबी सलाई बनवाकर उसके द्वारा उस बरतनके पेंदेमें छेद करके उसे जलमें छोड़ दिया जाय । जितने समयमें एक प्रस्थ जल उस बरतनमें भर जाय, वह बरतन जलमें डूब जाय, उतने समयको एक 'नाडिका' कहते हैं ॥ ९ ॥ ❀ ❀ विदुरजी ! चार-चार पहरके मनुष्यके 'दिन' और 'रात' होते हैं और पन्द्रह दिन-रातका एक पक्ष होता है, जो शुक्ल और कृष्ण भेदसे दो प्रकारका माना गया है ॥ १० ॥ ❀ ❀ इन दोनों पक्षोंको मिलाकर एक 'मास' होता है, जो पितरोंका एक दिन-रात एक 'ऋतु' और छः मासका एक 'अयन' होता है । अयन उत्तरायण और 'दक्षिणायन' भेदसे दो प्रकारका है ॥११॥ ❀ ❀ ये दोनों अयन मिलकर देवताओंके एक दिन-रात होते हैं तथा मनुष्यलोकमें ये 'वर्ष' या बारह मास कहे जाते हैं । ऐसे सौ वर्षकी मनुष्यकी परम आयु बतायी गयी है ॥ १२ ॥

**ग्रहर्क्षताराचक्रस्थः परमाण्वादिना जगत् । संवत्सरावसानेन पर्येत्यनिमिषो विभुः ॥ १३ ॥**
**संवत्सरः परिवत्सर इडावत्सर एव च । अनुवत्सरो वत्सरश्च विदुरैवं प्रभाष्यते ॥ १४ ॥**
**यः सृज्यशक्तिमुरुधोच्छ्वसयन् स्वशक्त्या पुंसोऽभ्रमाय दिवि धावति भूतभेदः ।**
**कालाख्यया गुणमयं क्रतुभिर्वितन्वंस्तस्मै बलिं हरत वत्सरपञ्चकाय ॥ १५ ॥**

## विदुर उवाच

**पितृदेवमनुष्याणामायुः परमिदं स्मृतम्[1] । परेषां गतिमाचक्ष्व ये स्युः कल्पाद् बहिर्विदः ॥ १६ ॥**

### श्रीधरस्वामिविरचिता भावार्थदीपिका

अनेन क्रमेणासौ सूर्यो नित्यमायुः क्षपयतीत्याह । ग्रहाश्चंद्रादयः ऋक्षाण्यश्विन्यादीनि तारा अन्यानि नक्षत्राणि तदुपलक्षितं यत्कालचक्रं तत्र स्थितोऽनिमिषः कालात्मा विभुरीश्वरः सूर्यो जगद्द्वादशराश्यात्कं भुवनकोशं पर्येति पर्यटति ॥ १३ ॥

---

१. प्रा० पा० श्रुतम् ।

❀ ❀ संवत्सरादिभेदश्च सौरबार्हस्पत्यसावनचांद्रनाक्षत्रमासभेदेन द्रष्टव्यः। केचित्पुनरेवमाहुः। यदा शुक्लपक्षप्रतिपदि संक्रांतिर्भवति तदा सौरचांद्रमासयोर्युगपदुपक्रमो भवति स संवत्सरः ततः सौरमानेन वर्षे षड् दिनानि वर्धंते चांद्रमानेन वर्षे षट् दिनानि ह्रसंतीति द्वादशदिनव्यवधानादुभयोरग्रपश्चाद्भावो भवति। एवं व्यवधानतारतम्येन पंच वर्षाणि गच्छंति तन्मध्ये द्वौ मलमासौ भवतः पुनः षष्ठः संवत्सरो भवतीति ॥ १४ ॥ ❀ ❀ एवंभूतः कालात्मा नित्यमप्रमत्तैः पूजनीय इत्याह। य इति। सृज्यं कार्यमंकुरादि तद्विषयां बीजादीनां शक्तिं कालरूपया स्वशक्त्या बहुधोच्छ्वसयन् कार्याभिमुखीं कुर्वन् दिव्यंतरिक्षे धावति। कोऽसौ भूतभेदो महाभूतविशेषस्तेजोमंडलरूपी सूर्यः। किमर्थं धावति। पुंसः पुरुषस्याश्रमाय श्रमो मोहस्तन्निवृत्तये आयुरादिव्ययेन विषयासक्तिं निवर्तयन्नित्यर्थः। सकामानां तु गुणमयं स्वर्गादिफलं क्रतुभिर्विस्तारयन् तस्मै संवत्सरपंचकप्रवर्तकाय पूजां कुरुत ॥ १५ ॥ ❀ ❀ इदं स्वस्वमानेन वर्षशतं गणितमायुर्मानं प्रत्यहं कल्प्यते सृज्यत इति कल्पस्त्रैलोक्यं तस्माद्वाह्यतः। विदो ज्ञानिनः ॥ १६ ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

तारा ध्रुवादयः। अश्विन्यादिभिन्नान्यनक्षत्राभावात्। स्वामिचरणैरप्यृक्षसाहचर्यात्तारार्थकनक्षत्रशब्देन ध्रुवादय एवाभिप्रेता इति ध्येयम् ॥ १३ ॥ ❀ ❀ सौरबार्हस्पत्येति। "दर्शावधिं मासमुशंति चांद्रं सौरं तथा भास्करराशिचारात्। त्रिंशद्दिनं सावनसंज्ञमाहुर्नाक्षत्रमिंदोर्भगणभ्रमाच्च" इति ज्योतिःशास्त्रे मासभेदा उक्ताः। संवत्सर इति सौरगत्या। परिवत्सर इति बार्हस्पत्यगत्याऽनुवत्सर इति चांद्रगत्या। नक्षत्राणां ताराणां च स्वतोगत्यभावाच्चक्रगतिरेव गतिस्तत्रापि नक्षत्राणां सप्तविंशतिदिनमानैर्द्वादशमासैर्वत्सर इति ताराणां संख्याभावात्त्रिंशद्दिनघटितैः सावनसंज्ञैर्मासैरिडावत्सर इति विवेक इति मतांतरमाह— केचिदित्यादिना युगपदुपक्रम एककालावच्छेदेन प्रारंभः, यस्मिन्वर्षे सौरचांद्रयोर्मासोस्समकाले प्रवृत्तिस्स वर्षः। संवत्सरस्तदग्रिमः परिवत्सर इडावत्सरस्तदग्रिमोऽनुवत्सरस्तदग्रिमो वत्सर इति। ततः पुनरित्थमेव संवत्सरादिप्रवृत्तिरिति ज्ञेयम्। किञ्च "शकाब्दात्पञ्चभिः शेषे समाद्यादिषु वत्सराः। संपरीदानुपूर्वाश्च तथोदापूर्वकाः स्मृताः॥ माने गुरोरगभिदः परिवत्सराणां षष्टिः स्मृता मुनिवरैः प्रभवादिकानाम्। स्यादेकवत्सरमितिर्गुरुमध्यमैकराशेस्तु भोगमितिरेव सदा तथाहि ॥ प्रभवो विभवः शुक्लः प्रमोदोऽथ प्रजापतिः। अंगिराः श्रीमुखो भावो युवा धातेश्वराभिधौ ॥ बहुधान्यः प्रमाथी च विक्रमो वृषसंज्ञकः। चित्रभानुः सुभानुश्च तारणः पार्थिवो व्ययः ॥ सर्वजित्सर्वधारी च विरोधो विकृतस्तथा। खरनन्दनसंज्ञौ च विजयो जयमन्मथौ ॥ दुर्मुखो हेमलंबश्च विलंबोऽथ विकारिकः। शर्वरीप्लवशुभकृच्छोभनाख्यास्ततः परः ॥ क्रोधो विश्वावसुस्तस्मात्पराभवप्लवंगकौ। कीलकः सौम्यसाधारणाख्यौ तस्माद्विरोधकृत् ॥ परिधावी प्रमाथी चानन्दो राक्षस एव च। अनलः पिंगलः कालयुक्तः सिद्धार्थरौद्रकौ ॥ दुर्मतिर्दुन्दुभिश्चैव रुधिरोद्गारिरक्तदृक् ॥ क्रोधनः क्षयकृच्चैषा षष्टिर्हि प्रभवादिका ॥" अथैतदानयनम्। "शकेन्द्रकालः पृथगाकृति २२ घ्नः शशांकनंदाश्वियुगैः ४२९१ समेतः। शराद्रिवस्विन्दु १८७५ हृतः स लब्धः षष्ट्या प्रशेषे प्रभवादयोऽब्दाः"। इष्टशकं द्विधा विन्यस्यैकत्र द्वाविंशतिगुणं कृत्वा ४२९१ युतं कृत्वा १८७५ विभज्य लब्धेनापरत्र स्थापितं शकं संयोज्य षष्ट्याप्तं गतवर्षवृंदं भवति प्रभवादितो गणनीयमिति सिद्धान्तोक्तेः। दिनानां वृद्धिह्रासौ सूर्यसिद्धांतादितोऽवसेयौ। पंचांगपत्रिकायां तौ प्रत्यक्षदृश्यौ, उभयोश्चांद्रसौरमासयोश्चंद्रसूर्ययोर्वा तारतम्यं न्यूनाधिक्यभावः। तन्मध्ये पञ्चवर्षाणां मध्ये। मलमासावसंक्रांतिकमासौ "संक्रान्तिरहितो मासो मलमासः प्रकीर्त्तितः" इत्युक्तेः ॥ १४ ॥ ❀ ❀ तत्तद्वर्षविहितधर्मादिसिद्ध्यर्थमेव वत्सरादिनिरूपणं कृतमतस्तत्प्रवर्त्तकः सूर्यरूपो हरिः सर्वदाऽर्चनीय इत्याह। एवंभूतो ग्रहर्क्षादिगत्याऽखिलजगत्परिक्रमकः अप्रमत्तैः सावधानैः। इत्यर्थ इति। सूर्य इति भावः। इत्यर्थ इति। स्वोदयातादिनायं रविरस्माकमायुः। क्षिणोत्यतः सावधानैर्भाव्यमिति बोधयन्निति भावः। वत्सरादिविहितकर्मकालज्ञापनया क्रतुभिरनुष्ठेयैः 'बलिः पूजोपहारयोः' इति विश्वः। बलिमर्घ्यादिपूजोपहारम्। हरत प्रापयत कुरुतेति यावत्। 'हरणं प्रापणं स्तेयं नाशनं च' इत्युक्तेर्ह्यत्र प्रापणेस्तीति ॥ १५ ॥ ❀ ❀ पूर्वं 'संवत्सरशतं नृणाम्' इति निर्द्धारितत्वात्पितॄणां देवानाञ्चाधिकायुःप्राप्तेराह—इदमिति। कल्पात्त्रैलोक्यात्परेषां परत्र महर्लोकादिषु स्थितानां सनकादिप्रभृतीनां गतिं दशां 'गतिः स्त्री मार्गदशयोः' इति मेदिनी। दशाया आयुरवयवत्वाल्लक्षितलक्षणया गतिमायुरित्यर्थः। स्युर्जीवंतीत्यर्थः। प्राणधारणानुकूलव्यापारस्यैव सत्तापदार्थत्वादिति ॥ १६ ॥

## श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या।

परमाणुरादिर्यस्य संवत्सरश्चावसानं यस्य तेन कालेन ॥ १३ ॥ ❀ ❀ तत्र सूर्य्यसंक्रान्तिरूपो मासस्सौरस्तन्मानेन द्वादशमासाः संवत्सरः यावता बृहस्पतिरेकस्मिन् राशौ चरति तस्य द्वादशो भागः बार्हस्पत्यमासस्तन्मानेन द्वादश मासाः परिवत्सरः कुषीदवृत्त्या व्यवह्रियमाणस्त्रिंशद्दिनात्मको मासः सावनसंज्ञकस्तन्मानेन द्वादशमासाः इडावत्सरः दर्शावधिर्मासश्चन्द्रस्तन्मानेन द्वादशमासा अनुवत्सरः इन्दोस्सप्तविंशतिनक्षत्रभ्रमणात्मको मासो नाक्षत्रमासस्तन्मानेन द्वादशमासा

वत्सर इति वत्सरपञ्चकम् । तदुक्तं ज्योतिषरत्नमालायाम् 'दर्शावधिं मासमुशन्ति चान्द्रं सौरं तथा भास्करराशिचारात् । त्रिंशद्दिने सावनसंज्ञमाहुर्नाक्षत्रमिन्दोर्भगणभ्रमाच्च ॥' इति । ततः युगपन्मासारम्भात् उभयोः सूर्य्यचन्द्रयोः व्यवधानतारतम्येनेति प्रथमवत्सरे द्वादशदिनव्यवधानं द्वितीये चतुर्विंशतिदिनव्यवधानम् । तृतीये षट्त्रिंशद्दिनव्यवधानम् चतुर्थेऽष्टचत्वारिंशद्दिनव्यवधानम् । एवं व्यवधानपञ्चकप्रयुक्ता संवत्सरादिपञ्चसंज्ञा इति पक्षान्तरं व्याख्यातम् । तन्मध्ये वत्सरपञ्चकमध्ये ॥ १४ ॥ ❀ ❀ बीजादीनां कारणानां शक्तिं कार्य्यसूक्ष्मावस्थामङ्कुरादेः सूक्ष्मस्थूलादिविशेषस्य प्रतिव्यक्तिभेदात् बहुधेत्युक्तं बहिरिन्द्रियग्राह्यविशेषगुणवत्त्वं महाभूतत्वम् ॥ १५ ॥ ❀ ❀ स्वस्वमानेन यथास्वं पूर्वोक्तकालगणनात्मकेन परेषां ब्रह्मसनकादीनां गतिं स्थितिमायुरित्यर्थः ॥ १६ ॥

## श्रीमद्वीरराघवव्याख्या

अनेन क्रमेण सूर्यो नित्यमायुः क्षिपतीत्याह । ग्रहर्क्षेति । अनिमिषः नित्यजागरूकः विभुः सूर्यः ग्रहर्क्षताराचक्रस्थः ग्रहाश्चन्दादयः ऋक्षाण्यश्विन्यादीनि तारा अन्यानि नक्षत्राणि तदुपलक्षितं यत्कालचक्रं तत्स्थितः जगद्द्वादशराश्यात्मकं भुवनकोशं परमाण्वादिना संवत्सरान्तेन कालेन पर्येति पर्यटति ॥ १३ ॥ ❀ ❀ उक्तस्यैतत्सर्वात्मककालचक्रस्य सूर्यादिगतिभेदेन नामभेदमाह । संवत्सर इत्येकेन । आदित्यगत्या संवत्सरः त्रिंशद्दिवसैर्मासैरादित्यगतिविशेषादिडावत्सरः । चान्द्रनक्षत्रगतिभ्यामनुवत्सरवत्सरावित्येवं प्रभाष्यते कथ्यते ॥ १४ ॥ ❀ ❀ एवं सूक्ष्मत्वेन स्थूलत्वेन च सर्वस्यावच्छेदकत्वेन च स्वरूपं निरूप्य उक्तविधकालशरीरकस्याकालयस्य सूर्य्यात्मनः परमात्मनः उपासनं काल्यत्वमिच्छद्भिः कर्तव्यमित्याह । य इति । भूतानि भिनत्तीति भूतभेदः भूतविकारकृत्परमात्मा कालाख्यया स्वशक्त्या स्वतन्त्वा सृज्यानां कर्मशक्तीः परिणमयन् पुंसो जीवस्याभ्रमाय भ्रमो मोहस्तन्निवृत्तये तत्तत्कालानुष्ठेयधर्मविषयं मोहं निवर्तयितुमित्यर्थः, क्रतुभिः साध्यं यद्गुणमयं सत्त्वादिगुणभेदेन त्रिगुणात्मकं फलं विचिन्वन्विस्तारयन् दिव्यन्तरिक्षे धावति सूर्यान्तर्वर्त्ती भूत्वा पर्यटति तस्मै सूर्यशरीरकाय वत्सरपञ्चकात्मने बलिं हरत पूजां कुरुत ॥ १५ ॥ ❀ ❀ एवं कालस्वरूपे आयुःपरिमाणे कालस्य नियन्तुः सूर्यान्तरस्योपासने च कर्तव्येऽभिहितेऽपि नृणान्तदहर्निशं दिवि अयनेऽहनी प्राहुः । 'संवत्सरशतं नृणां परमायुर्निरूपितमि'ति । त्रैलोक्यान्तर्वर्तिनामेव पितृदेवमनुष्याणामायुःपरिमाणं कथितं त्रैलोक्याद्बहिः स्थितानां तु कियदायुःपरिमाणमिति बुभुत्सुः कथां पृच्छति विदुरः पितृदेवमनुष्याणां परमायुरिदं स्वस्वमानेन वर्षशतं स्मृतं परेषां गतिमायुर्मानमाचक्ष्व ते के इत्यत आह । कल्पात्कल्पावस्थात्रैलोक्याद्बहिर्ये स्युः सन्तीति विदुः तेषामित्यर्थः । विद इति पाठान्तरं तत्र कल्पाद्बहिर्भूता ये ज्ञानिनस्तेषामित्यर्थः ॥ १६ ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

सूर्यादिनवग्रहाणामश्विन्यादिनक्षत्राणां ध्रुवादितारकाणां चक्रस्थो मंडलस्थप्राणिनां पुण्यपापकर्मदर्शनादनिशं मिषणाद्गमनाद्वा विकसनाद्वा मिष गतौ विकासे चानिमिषो विभुः परमाण्वादिसंवत्सरावसानेन कालेन पर्येति जगदिति शेषः ।

सर्वदा दर्शनात्तस्य निमिषत्वं विदुर्बुधाः । सततं गमनाद्वापि कालस्थस्य महात्मनः ॥

इति अनेनापि मुख्यतः कालशब्दवाच्यो हरिरिति सिद्धम् ॥ १३ ॥ ❀ ❀ तत्तत्संज्ञकालस्थत्वेन तन्नियन्तृत्वेन तत्तन्नामवानित्याह संवत्सर इति । सौरद्वादशमासाः सङ्क्रमणावसानास्तेषु द्वादशसु मासेषु स्थितः संवत्सरः । द्वादशराशिषु बृहस्पतेरावृत्त्या यः कालः तस्य द्वादशमे भागे यस्तिष्ठति स परिवत्सराख्यः । सप्तविंशन्नक्षत्राणि तद्द्वादशमासेषु स्थित इडावत्सरानामा । तिथीनां द्वादशावर्तो यो द्वादशमासरूपस्तत्र स्थितो हरिरनुवत्सरः । अह्नां षष्ट्युत्तरशतत्रयात्मकद्वादशमासेषु स्थितो हरिर्वत्सरनामा कालान्तर्यामी हरिरेवंरूपो भाष्यत इत्यन्वयः तदुक्तम् ।

इडावत्सरनामासौ नक्षत्रद्वादशे स्थितः । तिथीनां द्वादशावर्ते यो हरिः सोऽनुवत्सरः ॥
वत्सरो यः स्थितस्त्वह्नां षष्ट्युत्तरशतत्रये । गुर्वावर्तद्वादशांशे यः स्थितः परिवत्सरः ॥
सौरद्वादशमासेषु यत्स्थः संवत्सरो हरिः । एवं स कालनामापि कालस्थः परमेश्वरः ॥

इति स्मृतिसिद्धत्वादिदं ग्राह्यम् ॥ १४ ॥ ❀ ❀ वत्सरादिनामकरणप्रयोजनमाह । य इति । यः कालान्तर्यामी हरिः क्रतुभिः स्वप्रज्ञाभिः स्वेच्छानुरूपाभिः कालाख्यया स्वशक्त्या प्रकृत्या गुणमयीं सत्त्वादिगुणविकाररूपां सृज्यशक्तिं स्रष्टव्यपदार्थविषयां प्रकृतिमुरुधोच्छ्रसयन् जृम्भयन् पदार्थान् वितन्वन् विस्तारयन् पुंसोऽभ्रमायाज्ञाननिवृत्तये भूतानां भेदो ज्येष्ठयकानिष्ठ्यविवेकज्ञानं यस्मात्स तथोक्तः —

भूतानां ज्यैष्ठ्यकानिष्ठ्यज्ञप्त्यै यज्ञादिवृत्तये । बोधयन् सृज्यशक्तिं च कालस्थो वर्तते हरिः इति च ।

दिवि व्योम्नि धावति सूर्यस्थो भूत्वा वेगेन गच्छति तस्मै वत्सरपञ्चकाय सम्वत्सरादिपञ्चकान्तर्यामिणे बलिं हरत कुरुतेत्यन्वयः । अनेकार्थत्वाद्धातूनाम् ॥ १५ ॥ ❀ ❀ विदुर उक्तार्थमनूद्य वक्तव्यार्थं विज्ञापयति पितृदेवेति । ये विदो ज्ञानिनः कल्पात् लोकत्रयात् बहिर्महर्लोकादिषु वर्तमानाः स्युस्तेषां परेषामुत्तमानां गतिं स्थितिमाचक्ष्वेत्यन्वयः ॥ १६ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

पित्रादीनामायुरिदमिति । तदेतद्यथास्वं पूर्वोक्तकालगणनात्मकमित्यर्थः । शतन्तु नृणामेव । पूर्व्वं नृणां पितृणां देवानाञ्च कालसंख्यानमुक्त्वा सम्वत्सरशतं नृणां परमायुर्निरूपितमिति निर्द्धारितत्वात् । इन्द्रादीनां मन्वन्तरस्थायिनामधिकपरिमाणप्राप्तेश्च परेषां ब्रह्मसनकादीनां कल्पाद्ब्रह्मदिनाद्बहिर्ये स्युः जीवन्ति ॥ १६ ॥ १७ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी ।

तच्च नृणामायुरुदयास्तमयाभ्यां सूर्य्यो हरतीत्याह । ग्रहाश्चन्द्रादयः ऋक्षाण्यश्विन्यादीनि तारा अन्यानि नक्षत्राणि तेषां चक्रे मण्डले तिष्ठतीति ज्योतिश्चक्रस्थ इत्यर्थः । अनिमिषः कालस्वरूपः विभुरीश्वरांशः पर्य्येति परिक्राम्यति ॥ १३ ॥ ❀ ❀ ग्रहर्क्षतारा-चक्रस्थ इत्युक्तमतः सूर्य्यगतग्रहादीनामपि गत्या वर्षस्य नाभभेदानाह । सम्वत्सर इति । सौरगत्या परिवत्सर इति । बार्हस्पत्यगत्या अनुवत्सर इति । चान्द्रगत्या वत्सर इति । ऋक्षताराणां स्वतो गत्यभावात् चक्रगतिरेव गतिरिति तत्रापि ऋक्षाणां सप्तविंशतिदिनमानै-र्मासैर्द्वादशभिर्वत्सर इति । ताराणां संख्याभावात् त्रिंशद्दिनप्रमाणैः सावनैर्मासैरिडावत्सर इति ज्ञेयम् ॥ १४ ॥ ❀ ❀ किमर्थ-मिदं वत्सरभेदकल्पनमिति चेत् तत्तद्वर्षविहितधर्म्मादिसिद्ध्यर्थमित्याह । य इति । सृज्यानामुद्भिज्जादीनां शक्तिमङ्कुरादौ सामर्थ्यं स्वशक्त्या कालरूपया उरुधा उच्छ्वसयन् प्रकाशयन् दिवि अन्तरिक्षे धावति कोऽसौ भूतभेदः महाभूतविशेषस्तेजोमण्डलरूपी सूर्य्यः । किमर्थं धावति पुंसः पुरुषस्य अभ्रमाय दिङ्मोहादिनिवृत्तये सकामानां गुणमयं स्वर्गादिफलं संवत्सरादिविहितकर्म्म-कालज्ञापनाय क्रतुभिरनुष्ठेयैः तस्मात्तस्मै वत्सरपञ्चकप्रवर्त्तकाय बलिमर्घ्यादिपूजोपहारं दत्त । हे धार्मिकलोकाः ॥ १५ ॥ ❀ ❀ इह स्वस्वमानेन वर्षशतं ये विदो विद्वांसः कल्पाद्दैनन्दिनाद्बहिः परत्रापि तिष्ठन्ति तेषां सनकादीनां भृग्वादीनाञ्च गतिमायुः ॥ १६ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

परमाण्वादिसंवत्सरान्ताः कालभेदाः सूर्यपर्यटनकृता इत्याह । ग्रहेति । ग्रहाश्चन्द्रादय ऋक्षाण्यश्विन्यादीनि तारा अन्यानि ऋक्षाणि तदुपलक्षितकालचक्रस्थः अनिमिषः अनिद्रः विभुः महाप्रभः भास्करः जगत् द्वादशराश्यात्मकं भुवनकोशं परमाण्वादिना संवत्सरान्तेन कालेन पर्य्येति ॥ १३ ॥ ❀ ❀ प्रसंगात्संवत्सरभेदानाह । संवत्सर इति । हे विदुर । संवत्सरः सौरः परिवत्सरः बार्हस्पत्यः इडावत्सरः सावनः अनुवत्सरः चान्द्रः वत्सरः नाक्षत्रः इत्येवं प्रभाष्यते सूर्यादिगतिविशेषात् कथ्यते ॥ १४ ॥ ❀ ❀ प्रसंगात् सूर्यान्तर्याम्युपासनामाह । यः भूतानि भिनत्ति इदं स्थावरमिदं जङ्गममित्येव तत्तद्रूपेण पृथक् पृथक् प्रकाशयतीति भूतभेदः भगवान् सूर्यान्तरात्मा यः दिवि अन्तरिक्षे धावति तस्मै वत्सरपञ्चकप्रवर्तकाय बलिं हरत पूजां कुरुत किं कुर्वन्धावति कालाख्यया स्वशक्त्या सृज्यानामुद्भिज्जादीनां शक्तिमुरुधा उच्छ्वसयन् कार्य्याभिमुखीं कुर्वन् कस्मै प्रयोजनाय च धावति पुंसो मुमुक्षोः अभ्रमाय मोक्षाय बुभुक्षोस्तु गुणमयं स्वर्गादिफलं क्रतुभिर्विस्तारयन् ॥ १५ ॥ ❀ ❀ कल्पं कल्पस्थायित्रैलोक्यं तस्माद्बहिर्बाह्यतो विदो ज्ञानिनः तेषां गतिमायुर्मानमाचक्ष्व ॥ १६ ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

एवं कालं निरूप्य उपसंहरति—ग्रहर्क्षताराचक्रस्थ इति । ग्रहा बुधादयः, ऋक्षाण्यश्विन्यादीनि, तारा अन्याः, तेषां चक्रं भचक्रम् । तत्र विद्यमानः सूर्यः, तत्रस्थपरमाणुदेशमारभ्य संवत्सरावसानपर्यन्तम्, पर्येति पुनः पुनर्मण्डलाकारेण परिभ्रमति । अनिमिषः परग्रसने सावधानः । विभुः समर्थः । जगत्पर्येति उपभुङ्क्ते ॥ १३ ॥ ❀ ❀ तस्य संवत्सरात्मकस्य केनचिन्निमित्तेन पञ्च नामानि सन्ति । तान्युपासनार्थमाह—संवत्सर इति । मासाः पञ्चविधाः संवत्सरसमाप्तिसूचकाः । 'द्वादश मासाः संवत्सरः' 'त्रयोदश मासाः संवत्सरः' इति ब्राह्मणम् । त्रयोदश मासाः संवत्सर इति नाक्षत्रे नियतम्, चान्द्रे कादाचित्कम् । द्वादश मासाः संवत्सर इति सौरे नियतम्, चान्द्रे कादाचित्कम् । बार्हस्पत्ये तु प्रभवादयस्ते नियताः । वैष्णवोऽपि नियतः । सावनस्तु न नियतः, प्रतिदिनपर्यवसायित्वात् । अतः संवत्सरप्रयुक्त्या प्रभवादिनामसिद्ध्यर्थं बार्हस्पत्यमानमप्यपेक्ष्यते । व्रतादिसिद्ध्यर्थमेका-दश्यादिरपि मासो वैष्णवः, अन्यथा भगवतः शयनं रात्रौ भागद्वयेन स्यात् । सावनस्तु व्यवहारसिद्धः, न श्रुतिपदवीमारोढुमर्हति ।

अतः पञ्चैव संवत्सराः। तत्र चान्द्रः संवत्सरः, परिवत्सरो वैष्णवः, इडावत्सरः सौरः, अनुवत्सरो नाक्षत्रः, वत्सरो दैवः। विदुरेति संबोधनं स्नेहेन परिज्ञानार्थम्। यद्यप्येक एव कालः सर्वेषाम्, न संवत्सरभेदेन आवृत्त्या; तथापि नामान्येव पञ्चेत्येवं परिभाष्यत इत्युक्तम्। केचित्तु षष्टिसंवत्सरा मासत्वेन परिवृत्ता द्वादशधा परिवर्तमानाः पञ्चवत्सरात्मका भवन्तीत्याहुः। प्रभवादिबहुधान्यान्ताः संवत्सरशब्दवाच्याः, प्रमाथ्यादयो द्वादश द्वादशोत्तरशब्दवाच्या इति। तत्र मासादीनां नियामकत्वाभावाच्चिन्त्यम् ॥ १४ ॥ ❁ ❁ एवं कालस्य भेदत्रयमुपपाद्य तत्रोपासनमाह फलार्थम्—

यः सृज्येति। कालस्य प्रयोजनं वदन् भजनमुपपादयितुं माहात्म्यमाह—यः सृज्येषु अङ्कुरादिषु, बीजादिस्थितां शक्तिमुरुधोच्छ्वसयन्, पत्रकाण्डादिभेदेन बीजसामर्थ्यं प्रकटयन्, स्वस्य शक्त्या किरणादिस्थितसामर्थ्येन, प्रतिक्षणं प्रकारभेदजनकेन, बीजशक्तिं प्रकटीकुर्वन्; पुंसोऽधिकारिणोऽभ्रमाय वैराग्यार्थं दिवि स्वर्गे धावति परिभ्रमति। धावतीत्यनेन क्षणमात्रमपि पारलौकिकयत्नं विना न स्थातव्यमिति ज्ञापयति। ननु धावनेन कथमेवं भवतीत्याशङ्क्याऽऽह—भूतभेद इति। भूतानां भेदो यत्र। स हि कालः सर्वाणि भूतानि भिनत्ति, अतः स्वस्याऽपि भेदशङ्कया वैराग्यजनकत्वम्। स्वशक्त्येत्यत्र 'यदादित्यगतं तेजः' इति वाक्यात् भगवच्छक्तिर्भविष्यतीत्याशङ्क्य तन्निवृत्त्यर्थमाह—कालाख्ययेति। कलयत्याकलयतीति काल आख्या यस्य। तत्र प्रकाशकत्वेनैव भगवत्तेजः प्रविष्टमिति कालद्वारैवेयं भगवच्छक्तिः। एवं साधने सामर्थ्यमुपपाद्य फले सामर्थ्यमुपपादयति—गुणमयं क्रतुभिर्वितन्वन्निति। गुणमयमानन्दमयं स्वर्गादि। 'आनन्दादयः प्रधानस्य' इति न्यायात् आनन्दादय एव गुणा; तन्मयाः स्वर्गादयः। क्रतवोऽपि कालभेदा एव, अतः क्रतुभिः स्वर्गादिकं वितन्वन्। न ह्यधिष्ठातृव्यतिरेकेण यागादयः प्रकटीभवितुमर्हन्ति, स्वर्गो वा प्रकटीभवितुमर्हति। सोऽपि भगवदंशश्चेतनः, 'देवेभ्यो वै स्वर्गो लोकस्तिरोभवत्' इत्यत्र निर्णीतः। एवं फलसाधकः प्रवर्तको भगवान् वत्सरपञ्चकप्रवर्तकः, तादृशाय कालात्मने सूर्याय बलिं हरत, तदुपार्जितान्नभोक्तारस्तपदुपार्जितस्वर्गभोक्तारश्च, अन्यथा कृतघ्नता स्यात्, भोगश्च न सिद्ध्येत्। येनैवोपायेन भोगः सिद्ध्यति कालो वा न ग्रसति, स च प्रीतो भवेत्तथोपायः कर्तव्यः। अहरहरुपासनं कर्तव्यमिति सिद्धम् ॥ १५ ॥ ❁ ❁ एवं त्रिविधकालं निरूप्य, तूष्णींभावे, आयुःप्रतिपादकत्वेन तदुपपादितं निरूप्य विशेषं प्रष्टुमाह—पितृदेवमनुष्याणामिति। आयुरायुःपरिमाणम्। परं पर्यवसितम्। परेषां कल्पवासिनाम्। ये कल्पान्तरेऽप्युत्पन्नाः कल्पसमाप्तावपि अनुवर्तन्ते, तेषां गतिं दिनरात्रिव्यवस्थाम्, तत्र तेषां कृतिं वा आचक्ष्व। केचन कल्पान्तमेव तिष्ठन्ति, तेषां कल्पस्यैवाऽऽयुष्ट्वम्। ततोऽपि ये कल्पाद्बहिर्जीवन्ति, जीवने हेतुः—विद इति। ज्ञानिन एव च बहुकल्पजीविनः ॥ १६ ॥

## श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

संवत्सर इत्यत्र। संवत्सरादिनाम्नां निमित्तं विचारयन्ति—मासाः पञ्चविधा इत्यादि। प्रभवादय इति। संवत्सराः, न तु मासाः इत्यर्थः। व्रतादिसिद्ध्यर्थमिति। चातुर्मास्यव्रतादिसिद्ध्यर्थम्। एकादश्यादिर्वैष्णवो मासः सावनातिरिक्त इत्यत्र गमकमाहुः—अन्यथेत्यादि। आषाढशुक्लैकादश्यां मैत्राद्यपादे भगवच्छयनमुक्तम्। कार्तिकशुक्लैकादश्यां रेवत्यन्त्यपादे प्रबोधश्च। तेन मासाश्चत्वारो भवन्ति तत्र नाक्षत्रग्रहणे पञ्चदिनाधिकपञ्चमासा भवन्तीति माससङ्ख्याविरोधः। सौरचान्द्रग्रहणे तिथिविरोधः। बार्हस्पत्यस्त्वसम्बद्धः। अतः परं सावनोऽवशिष्यते। स तु 'इनोदयद्वयान्तरं तदर्कसावनं दिनम्' इतिलक्षण[1]को यद्दिनमारभ्य प्रवृत्तस्तत्त्रिंशे निवर्तते, यथा बुधे प्रवृत्तस्त्रिंशद्दिवसे गुरौ निवर्तते। अतस्तद्ग्रहणेऽत्र क्रियमाणे तिथिर्विरुध्येत। 'प्रसुप्तं बोधयेद्रात्रौ' विधानाच्छयनमपि रात्रौ स्यात्। एवं सावनस्याऽश्रौतत्वसाधनेन सावनमादाय श्रीधरकृता संवत्सरव्यवस्था निरस्ता। दैव इति। बार्हस्पत्यः। प्रतितिथिकृतो मासाग्निहोत्रमासिकश्राद्धाद्युपयुक्तो वा दैवः। ज्योतिर्विदां मतमाहुः–केचिदित्यादि। तस्य पक्षस्याऽनभिप्रेतत्वमाहुः–तत्रेत्यादि। श्रीधरीये तु–'यदा शुक्लपक्षप्रतिपदि सङ्क्रान्तिर्भवति, तदा सौरचान्द्रमासयोर्युगपदुपक्रमो भवति, स संवत्सरः। सौरमानेन षट् दिनानि वर्धन्ते, चान्द्रमानेन षट् ह्रसन्ति। एवं द्वादशदिनव्यवधानादुभयोरप्रपश्चाद्भावो भवति। एवं व्यवधानतारतम्येन पञ्च वर्षाणि गच्छन्ति, तन्मध्ये द्वौ मलमासौ भवतः। तेषु परि ( वीर ) वत्सरादिनामता, ततः पुनः षष्ठे संवत्सरत्वम्, इति कस्यचिन्मतमुक्तम्। तत्राऽप्युक्त एव दोषो बोध्यः ॥ १४ ॥ ❁ ❁ यः सृज्येत्यत्र। भेदत्रयमिति। मानुषदैवपितृभेदेन प्रकारत्रयम् ॥ १५ ॥ ❁ ❁ पितृदेवेत्यत्र। निरूप्य विशेषमित्येकं पदम्। मूले इदंपदस्य संवत्सरगणनागणितमित्यर्थः। तत्रेति कल्पात्मकेऽहोरात्रे ॥ १६ ॥

## श्रीगिरिधरकृता बालप्रबोधिनी

अनेन क्रमेण सूर्यो विषयाविष्टचित्तानामायुर्वृथैव क्षपयतीत्याह—ग्रहेति। ग्रहाश्चन्द्रादयः, ऋक्षाण्यश्विन्यादीनि, तारा अन्यानि च नक्षत्राणि, तदुपलक्षितं यत्कालचक्रं तत्र स्थितः अनिमिषः निमेषमात्रमपि स्थितिशून्यः सावधानः विभुः भगवद्-

---

१. कोऽयं दिन पा.।

त्तत्तदधिकारेण समर्थः कालव्यवस्थापकः सूर्यः परमाण्वादिना समस्तमपि जगत् द्वादशराश्यात्मकं भुवनकोशं संवत्सरपर्यन्तेन कालेन पर्येति, परिक्रामतीत्यर्थः॥ १३॥ ❀ ❀ उक्तस्यैव संवत्सरस्य सूर्यादिगतिभेदेन नामभेदमाह—संवत्सर इति। आदित्यगत्या संवत्सरः, बृहस्पतिगत्या परिवत्सरः, त्रिंशद्दिवसपरिमितमासैरिडावत्सरः, नक्षत्रगत्या वत्सरः। केचित्पुनरेवमाहुः—यदा शुक्लपक्षप्रतिपदि संक्रान्तिर्भवति तदा सौरचान्द्रमासयोर्युगपदुपक्रमो भवति स संवत्सरः, ततः सौरमानेन वर्षे षट् दिनानि वर्धन्ते चान्द्रमानेन च वर्षे षट् दिनानि ह्रसन्तीति द्वादशदिनव्यवधानादुभयोश्चन्द्रसूर्ययोरग्रपश्चाद्भावो भवति, एवं व्यवधानतारतम्येन पञ्च वर्षाणि यथाक्रमेणोक्तनामानि गच्छन्ति, तन्मध्ये च द्वौ मलमासौ भवतस्ततः पुनः षष्ठः संवत्सराख्यो भवति। हे विदुरेति सम्बोधनं स्नेहसूचकम्। एकोऽपि संवत्सर एवं निमित्तभेदात् पञ्चधा प्रभाष्यते इति॥ १४॥ ❀ ❀ एवं कालस्वरूपं निरूप्य तत्प्रवर्तकस्य भगवत आराधनं विषयासक्तिं विहाय कालग्रासनिरासाय कर्तव्यमित्याह—य इति। यः भूतानि भिनत्तीति भूतभेदः भूतविकारकृत् परमात्मा दिवि अन्तरिक्षे धावति सूर्यं प्रवर्तयन् पर्यटति तस्मै वत्सरपञ्चकाय वत्सरपञ्चकप्रवर्तकाय बलिं हरत पूजां कुरुतेत्यन्वयः। किमर्थं धावतीत्याकाङ्क्षायामैहिकामुष्मिकफलसिद्ध्यर्थमित्यभिप्रेत्यैहिकफलं दर्शयति—कालाख्यया स्वशक्त्या सृज्यं कार्यमङ्कुरादि तद्विषयां बीजादीनां शक्तिं उरुधा बहुप्रकारां उद्बोधयन्, कार्याभिमुखीकुर्वन्नित्यर्थः। परलोकसाधका अपि द्विविधाः निष्कामाः सकामाश्च। तत्र निष्कामजनस्य फलमाह—पुंस इति। पुंसः पुरुषस्य अभ्रमाय आयुरादिक्षयप्रदर्शनेन विषयासक्तिनिवृत्तिपूर्वकमोक्षसाधनप्रवृत्त्यर्थमित्यर्थः। सकामानां फलमाह—गुणमयमिति। यज्ञादिविहिततत्तत्कालस्य सूर्याधीनत्वात् तत्कालसम्पादनेन तत्तत्कालानुष्ठितैः क्रतुभिर्गुणमयं सत्त्वादिगुणप्रधानं स्वर्गादिसुखं वितन्वन्, विस्तारयन्नित्यर्थः। एवं सर्वथोपकारिणः पूजाभावे कृतघ्नता स्यादिति भावः॥ १५॥ ❀ ❀ इदं स्वस्वमानेन वर्षशतं पित्रादीनां परमायुः स्मृतं त्वया कथितम्, प्रत्यहं कल्प्यते सृजते इति कल्पस्त्रैलोक्यं तस्माद्बहिर्वर्तमाना ये विदो ज्ञानिनः स्युः सन्ति तेषां परेषामुत्कृष्टानां गतिमायुर्मानमाचक्ष्व कथयेत्यन्वयः॥ १६॥

### हिन्दी अनुवाद

चन्द्रमा आदि ग्रह, अश्विनी आदि नक्षत्र और समस्त तारामण्डलके अधिष्ठाता कालस्वरूप भगवान् सूर्य परमाणुसे लेकर संवत्सरपर्यन्त कालमें द्वादश राशिरूप सम्पूर्ण भुवनकोशकी निरन्तर परिक्रमा किया करते हैं॥ १३॥ ❀ ❀ सूर्य, बृहस्पति, सवन, चन्द्रमा और नक्षत्रसम्बन्धी महीनोंके भेदसे यह वर्ष ही संवत्सर, परिवत्सर, इडावत्सर, अनुवत्सर और वत्सर कहा जाता है॥ १४॥ ❀ ❀ विदुरजी! इन पाँच प्रकारके वर्षोंकी प्रवृत्ति करनेवाले भगवान् सूर्यकी तुम उपहारादि समर्पण करके पूजा करो। ये सूर्यदेव पञ्चभूतोंमेंसे तेजःस्वरूप हैं और अपनी कालशक्तिसे बीजादि पदार्थोंकी अङ्कुर उत्पन्न करनेकी शक्तिको अनेक प्रकारसे कार्योन्मुख करते हैं। ये पुरुषोंकी मोहनिवृत्तिके लिये उनकी आयुका क्षय करते हुए आकाशमें विचरते रहते हैं तथा ये ही सकाम-पुरुषोंको यज्ञादि कर्मोंसे प्राप्त होनेवाले स्वर्गादि मङ्गलमय फलोंका विस्तार करते हैं॥ १५॥ ❀ ❀ विदुरजीने कहा—मुनिवर! आपने देवता, पितर और मनुष्योंकी परमायुका वर्णन तो किया। अब जो सनकादि ज्ञानी मुनिजन त्रिलोकीसे बाहर कल्पसे भी अधिक कालतक रहनेवाले हैं, उनकी भी आयुका वर्णन कीजिये॥ १६॥

**भगवान् वेद कालस्य गतिं भगवतो ननु। विश्वं विचक्षते धीरा योगराद्धेन चक्षुषा॥१७॥**

### मैत्रेय उवाच

**कृतं त्रेता द्वापरं च कलिश्चेति चतुर्युगम्। दिव्यैर्द्वादशभिर्वर्षैः सावधानं निरूपितम्॥१८॥**
**चत्वारि त्रीणि द्वे चैकं कृतादिषु यथाक्रमम्। संख्यातानि सहस्राणि द्विगुणानि शतानि च॥१९॥**
**संध्यांशयोरन्तरेण यः कालः शतसंख्ययोः। तमेवाहुर्युगं तज्ज्ञा यत्र धर्मो विधीयते॥२०॥**

### श्रीधरस्वामिविरचिता भावार्थदीपिका

योगराद्धेन योगसिद्धेन॥ १७॥ ❀ ❀ द्वादशभिर्वर्षसहस्रैरित्युत्तरश्लोकसामर्थ्याज्ज्ञातव्यम्। अवधीयत इत्यवधानं संध्या चांशश्च तत्सहितम्॥ १८॥ ❀ ❀ कृतयुगे चत्वारि सहस्राणि संध्यासंध्यांशयोश्चत्वारि चत्वारीत्यष्टौ शतानि च एवं त्रेतादिष्वपि योज्यम्॥ १९॥ ❀ ❀ युगस्यादौ संध्या अंतेंऽशः तयोः। उक्तानि शतानि संख्या ययोस्तयोरंतरेण मध्ये युगम्। तस्य विशेषमाह। यत्रेति। गवालंभादिधर्मविशेषो यत्र विधीयत इत्यर्थः। साधारणधर्मस्तु संध्यांशयोरप्यस्त्येव॥ २०॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

ननु ममात्रत्यस्य तत्रत्यायुर्ज्ञानं कथं संभवेदिति चेद्योगिनां सर्वज्ञानवत्त्वात्त्वं सर्वं जानासीत्याह—भगवानिति। भगवान्भवान्। चक्षुषा ज्ञानेन धीरा ज्ञानिनः ॥१७॥ ❀ ❀ कल्पबहिर्भूता हि भृग्वादयो ब्रह्मतुल्यायुष एवेति ब्रह्मण आयुर्वक्तुं प्रथमं युगादिमानमाह—कृतमिति। मनुष्याणां षष्ट्यधिकत्रिशतै ३६० वर्षैर्देवानां वर्षैस्तैर्द्वादशभिस्सहस्रैस्तेषां चतुर्युगं तच्च मनुष्याणां विंशतिसहस्राधिकं त्रिचत्वारिंशल्लक्षगणितं ४३००००० वर्षसंख्याकं भवति तावदेव सत्यादिचतुर्युगमष्टाविंशतिसहस्राधिकसप्तदशलक्षवर्षैर्मानुषेण प्रमाणेन सत्यम्। षण्णवतिसहस्राधिकद्वादशलक्षवर्षैस्त्रेता। चतुःषष्टिसहस्राधिकाष्टलक्षवर्षैर्द्वापरं द्वात्रिंशत्सहस्राधिकचतुर्लक्षवर्षैः कलिर्भवतीति तदुक्तं सनत्कुमारसंहितायाम्। "लक्षाणां सप्तदशकमष्टाविंशसहस्रकम्। कृतमानं ततस्त्रेतामानं द्वादशलक्षकम्॥ सहस्राणां षण्णवतिर्द्वापरस्याष्टलक्षकम्। चतुःषष्टिः सहस्राणां कलेर्लक्षचतुष्टयम्॥ द्वात्रिंशत्सहस्राणि नृमानेन चतुर्युगम्॥" तत्र सत्यम् १७२८०००, त्रेता १२९६०००, द्वापरम् ८६४०००, कलिः ४३२०००, एवं देवानां युगसहस्रद्वयं ब्रह्मणोऽहोरात्रतस्स च मनुष्याणां पद्माष्टकं चतुःषष्टिकोट्याधिकम्॥ ८००००६४००००००० इति॥ १८॥ ❀ ❀ एवमिति त्रेतायास्त्रीणि सहस्राणि प्रमाणम्। षट्शतानि संध्यासंध्यांशौ द्वापरस्य द्वे सहस्रे प्रमाणम्। चत्वारि शतानि संध्यासंध्यांशौ एवं कलेः सहस्रमेकं प्रमाणं द्वे शते संध्यासंध्यांशाविति विवेकः॥ १९॥ ❀ ❀ संध्यासंध्यांशयोरंतर्यं इति पाठः प्रायः प्राक्तनबहुपुस्तकेष्वस्ति तदर्थस्तु अतर्मध्यवर्त्ती यः काल इति विश्वनाथेन कृतः। तस्य युगस्य यत्र येषु। इत्यर्थ इति। यस्य युगस्य योऽसाधारणो धर्मो गवालंभादिरादिना पलपैतृकादि। ग्रहः स विधीयते इति भावः। तदुक्तम् "अश्वालंभं गवालंभं संन्यासं पलपैतृकम्। देवराच्च सुतोत्पत्तिं कलौ पञ्च विवर्जयेत्" इति निर्णयसिंधौ। यत्तु देवलेन "यावद्वर्णविभागोस्ति यावद्गंगा महीतले। अग्निहोत्रं च संन्यासं तावत्कुर्यात्कलौ युगे" इत्युक्तं तदतीव विरक्तपरमन्यथा वांताशित्वापत्तेर्नारकी स्यादिति ध्येयं सुधीभिः। "संन्यासी नरकं याति त्र्येषणासंयुतो यदि। त्रिवासनो महाघोरे कुंभीपाके वसेच्चिरम्" इत्याद्युक्तेः। यद्वा। यत्र येषु युगेषु ध्यानयज्ञपरिचर्याकीर्त्तनात्मको धर्मविशेषः "कृते यद्ध्यायतो विष्णुं त्रेतायां यजतो मखैः। द्वापरे परिचर्यायां कलौ तद्धरिकीर्त्तनात्" इत्युक्तन्यायेन साधारणधर्मस्तु गुणकृतः। किञ्च यस्य युगस्य यो धर्मः स एव तत्संध्यासंध्यांशयोरप्यस्त्येवेत्यपि ज्ञेयम्॥ २०॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

भगवतस्सर्वसंहारसमर्थस्य गतिं तत्तद्विशेषस्वरूपं भगवान् सर्वज्ञो भवान् वेद तत्र हेतुर्विश्वमिति॥ १७॥ ❀ ❀ अवधीयते युगस्याद्यावधिः क्रियत इति अवधानं संध्या तथान्तावधिः क्रियते इत्यवधानं सन्ध्यांशश्च तत्सहितम्॥ १८॥ ❀ ❀ चत्वारि सहस्राणीत्यादिसंख्या देववर्षप्रमाणेन, मनुष्याणां षष्ट्यधिकत्रिंशवर्षैर्देवानामेकवर्षमेवं देवानां द्वादशवर्षसहस्रैस्तेषामेव चतुर्युगम्। मनुष्याणान्तु विंशतिसहस्राधिकत्रिचत्वारिंशल्लक्षवर्षैश्चतुर्युगं भवति। तत्राष्टाविंशसहस्राधिकसप्तदशलक्षवर्षैः सत्यं षण्णवतिसहस्राधिकद्वादशलक्षैस्त्रेता चतुःषष्टिसहस्राधिकचतुर्लक्षैः कलिरिति ज्ञेयम्। तत्र देवानां चतुर्युगसहस्रद्वयं ब्रह्मणोऽहोरात्रः। तत्र च मनुष्याणां चतुःषष्टिकोट्यधिकं पद्माष्टकं भवतीत्यपि॥ १९॥ ❀ ❀ संध्यासंध्यांशयोरन्तरित्येव पाठष्टीकाकृतां संमतः न तु संध्यांशयोरन्तरेणेति तस्य मध्यभागस्य युगशब्दवाच्यस्य विशेषं व्यावर्तकं धर्मविशेषं यत्र मध्यभागे एव विधीयते न तु संध्यासंध्यांशयोरिति संकुचितवृत्तेरङ्गीकारादित्यर्थ इत्युक्तम्। साधारणधर्म्मो वर्णाश्रमाचारलक्षणस्तु तत्राप्यस्तीति तत्र हेतुव्याख्यानम्॥ २०॥

### श्रीमद्वीरराघवव्याख्या

अहं न जानामीति मावोच इत्याह। भगवानिति। भगवदात्मकस्य गतिं भाविनीमपि गतिं वेद जानाति ननु हे मैत्रेय! निश्चये वा कथमहं जानीयामित्यत आह। धीरा भवादृशा ज्ञानिनः योगराद्धेन योगसिद्धेन चक्षुषा विश्वं जगद् विचक्षते पश्यन्ति योगिप्रत्यक्षाविषयं न किंचिदस्तीत्यर्थः॥ १७॥ ❀ ❀ एवमापृष्टो मुनिस्त्रैलोक्याद्बहिरवस्थितानामाचतुर्मुखात्सर्वेषु युगसाहस्रं दिनपरिमाणम्। एवंविधषष्ट्युत्तरत्रिशतदिनात्मकवर्षशतमायुः परिमाणमिति कथयितुं तावद्युगपरिमाणं युगांशसन्ध्यापरिमाणं युगस्वरूपं युगेषु धर्मानुवृत्तितारतम्यं चाह चतुर्भिः। तत्र द्वाभ्यां युगपरिमाणमाह। कृतमिति। कृतादिचतुर्युगं सावधानमवधीयत इत्यवधानं सन्ध्या चांशश्च तत्सहितं चतुर्युगं दिव्यैर्देवमानमितिद्वादशसहस्रैर्वर्षैर्निरूपितम्॥ १८॥ ❀ ❀ अपि च कृतादिषु यथाक्रमं चत्वारि त्रीणि द्वे चेति सहस्राणि संख्यातानि एतानि तु द्विगुणानि संख्यातानीत्यर्थः। अयमर्थः तावत्कृतयुगस्य देवमानेन चत्वारि सहस्राणि सन्ध्यासंध्यांशयोश्च चत्वारि चत्वारि शतानि इत्यष्टौ शतान्यष्टशतोत्तरचतुःसहस्रवत्सराः। ससन्ध्यांशस्य कृतयुगस्य परिमाणं त्रेतायाः। षट्शतोत्तरसाहस्रवर्षपरिमितिः द्वापरस्य तु सन्ध्यांशस्य चतुःशतोत्तरद्विसहस्रवर्षाणि। कलेस्तु ससन्ध्यांशस्य द्विशतोत्तरैकसहस्रवर्षपरिमितिः युगस्यादौ सन्ध्या

युगान्ते सन्ध्यांशः सहस्राणामुपरि उक्तानि शतानि क्रमेण तत्सन्ध्यांशयोः परिमाणमित्यवगन्तव्यम् ॥ १९ ॥ ❀ ❀ ननु ससन्ध्यांशस्यैव युगत्वमुत ताभ्यामन्तरेण मध्यस्यैवेति संशयं निराकुर्वन् चतुर्युगेषु तत्तद्वर्णाश्रमधर्माणामवश्यकर्तव्यत्वमाह । सन्ध्यांशयोरिति । शतसंख्ययोः शतानि संख्या ययोः सन्ध्यासन्ध्यांशयोरन्तरेण मध्ये यः कालः तमेव कालं युगमिति युगज्ञाः आहुरित्यर्थः । यत्र युगे धर्मः नित्यनैमित्तिककाम्यकर्मभेदेन त्रिविधोऽपि धर्मो विधीयते कर्तव्यत्वेन बोध्यते इत्यर्थः ॥ २० ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

मैत्रेयस्य वक्तव्यार्थे ज्ञानपाटवमस्तीत्याह । भगवानिति । कालस्य कालान्तर्यामिणो भगवतो गतिं गमनं वर्तनं वेद । ननु कुतः धीरा धीषु रममाणा ज्ञानिनो योगराद्धेनाष्टाङ्गयोगसिद्धेन चक्षुषा विश्वं विचक्षते भवानपि तेष्वेक इति यत्तस्मादिति शेषः ॥ १७ ॥ ❀ ❀ महर्लोकादिस्थितानामायुर्वक्ष्यन् कृतादिचतुर्युगतत्संध्याकालपरिमाणं वक्ति । कृतमिति । दिव्यैर्देवानां विद्यमानैः ॥ १८ ॥ ❀ ❀ एतदेव विवेचयति चत्वारीति । एवं कृतादिषु दशसहस्राणि एकैकह्रासक्रमेण संख्यातानि द्विगुणानि शतानि अवशिष्टद्विसहस्रगतशतानि कृतादिपूर्वापरसंध्यारूपाणि कलियुगपूर्वापरसंध्यामारभ्य द्विगुणानि ज्ञेयानि । तथाहि कलियुगपूर्वापरसंध्ये शतं द्वापरपूर्वापरसंध्ये द्विशतं त्रेतायुगपूर्वापरसंध्ये त्रिशतं कृतयुगपूर्वापरसंध्ये चतुःशतमेवं विंशच्छतानां युगेभ्यो द्विगुणित्वम् ॥ १९ ॥ ❀ ❀ एवं तर्हि कृतादियुगत्वं कस्य कालस्येति तत्राह । संध्येति । शतसंख्ययोः संध्यासंध्यांशयोरन्तस्थो यः कालो यत्र तत्र तत्तद्युगधर्मो विधीयते तमेव युगज्ञा युगमानमाहुः । कृतादिषु संध्याकालाः पूर्वापरकोटिसंबद्धदूरस्थाः कालविशेषाः संध्यांशाख्या इति ॥ २० ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः ।

कृतमित्यादीनामयमर्थः मनुष्याणां षष्ट्यधिकत्रिशतपरिमितैर्वर्षैः ( ३६० ) देवानां वर्षं तैर्द्वादशभिः सहस्रैस्तेषां चतुर्युगं तच्च मनुष्याणां विंशतिसहस्राधिकत्रिचत्वारिंशल्लक्षगणितं ( ४३२०००० ) वर्षसंख्याकं भवति । तावदेव सत्यादिचतुर्युगम् । यतः सत्यं ( १७२८००० ) त्रेता ( १२९६००० ) द्वापरः ( ८६४००० ) कलिः ( ४३२००० ) इति एवं देवानां युगसहस्रद्वयं ब्रह्मणोऽहोरात्रः । तच्च मनुष्याणां पञ्चाष्टकं चतुःषष्टिकोट्यधिक ( ८०००००६४००००००० ) मिति ॥ १८ ॥ १९ ॥ ❀ ❀ सन्ध्यासन्ध्यांशयोरन्तरित्यत्र सन्ध्यांसन्ध्यांशयोरन्त इति ॥ २०-२३ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी ।

भगवान् भवान् योगराद्धेन योगसिद्धेन ॥ १७ ॥ ❀ ❀ कल्पवहिरायुषो हि भृग्वादयो ब्रह्मतुल्यायुष एव भवन्तीति ब्रह्मण आयुर्वक्तुं युगादीनामानमाह । कृतमिति । वर्षैर्वर्षसहस्रैः । अवधीयत इत्यवधानं सन्ध्यासन्ध्यांशश्च तत्सहितम् ॥ १८ ॥ यथाक्रममिति । कृतयुगे चत्वारि सहस्राणि । सन्ध्यासन्ध्यांशयोश्चत्वारि चत्वारि शतानीत्यष्टौ शतानि एवं त्रेतादिष्वपि योज्यम् ॥ १९ ॥ ❀ ❀ युगस्यादौ सन्ध्या अन्ते सन्ध्यांशस्तयोः कथम्भूतयोः । उक्तानि शतानि संख्या ययोस्तयोरन्तर्मध्यवर्त्ती यः कालस्तं युगमाहुः । यत्र धर्म्म इति ध्यानयज्ञपरिचर्य्याकीर्त्तनात्मको धर्मविशेषः साधारणधर्म्मस्तु गुणभूतः । सन्ध्यासन्ध्यांशयोरप्यस्त्येव । किञ्च युगस्य युगस्य यो धर्म्मः स एव तत्सन्ध्यासन्ध्यांशयोरपि प्रधानीभूत इति ज्ञेयम् । मनुष्याणां षष्ट्यधिकत्रिशतवर्षैश्चतुर्युगं एवं मनुष्याणां विंशतिसहस्राधिकत्रिचत्वारिंशल्लक्षवर्षैश्चतुर्युगं शास्त्रेषु युगशब्देनोच्यते । तत्राष्टाविंशसहस्राधिकसप्तदशलक्षैर्वर्षैः सत्यम् । षण्णवतिसहस्राधिकद्वादशलक्षैस्त्रेता । चतुःषष्टिसहस्राधिकाष्टलक्षैर्द्वापरः । द्वात्रिंशत्सहस्राधिकचतुर्लक्षैः कलिः ॥ २० ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

ननु हे मैत्रेय ! योगरोद्धेन ध्यानयोगसिद्धेन ॥ १७ ॥ ❀ ❀ त्रैलोक्याद्बहिःस्थानामाचतुर्मुखात्सर्वेषां चतुर्युगसाहस्रं दिनपरिमाणं षष्ट्युत्तरशतत्रयदिनात्मकसम्वत्सरशतमायुरित्युत्तरं वक्तुं चतुर्युगपरिमाणं धर्मतारतम्यञ्चाह । कृतमिति चतुर्भिः । द्वादशभिर्द्वादशहस्रैः अवधीयते इत्यवधानं सन्ध्यासंध्यांशश्च तत्सहितं निरूपितमृषिभिः ॥ १८ ॥ ❀ ❀ सहस्राणि युगपरिमाणं शतानि सन्ध्यासन्ध्यांशपरिमाणम् ॥ १९ ॥ ❀ ❀ शतसंख्ययोः सन्ध्यांशयोः अन्तरेण मध्ये यः कालः सहस्रसङ्ख्यः तं युगमाहुः । कृतयुगस्यादौ चतुःशतवर्षपरिमिता सन्ध्या, तस्यान्ते चतुःशतवर्षपरिमितः सन्ध्यांशः, तन्मध्ये चतुःसहस्रवर्षपरिमितं कृतयुगमाहुः । एवं त्रेतादिष्वपि विभागः यद्यपि सामान्यतः सन्ध्यासन्ध्यांशयोरपि धर्मोऽस्त्येव तथापि प्राधान्यतः यत्र युगे धर्मः तारतम्यतो विधीयते ॥ २० ॥

## श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

तत्र कथनार्थं मैत्रेयस्य ज्ञानमुपपादयति—भगवानिति । भवान् भगवान्, भगवत्कृपया तथात्वात्, भगवति श्रद्धावत्त्वाच्च । अत एव भगवतः कालस्य गतिं वेद । स हि स्वात्मानं वेदेति । किञ्च, धीराः संसारखेदसहिष्णवो योगसिद्धाः, विश्वं सर्वमेव योगसिद्धेन चक्षुषा विचक्षते । अतो योगजधर्मेण ज्ञानेन च विचक्षते । चक्षुषेति निःसन्दिग्धार्थम् । योगसिद्धत्वात् न भ्रमजनकत्वम् ॥ १७ ॥ ❀ ❀ यथा क्षणादिभिर्दिनगणना, तथा युगैस्तेषां दिनगणनेति कृतादीनां स्वरूपमाह—कृतमिति । कालविशेषस्य नाम किञ्चित् । कृतमिति । तस्मिन्काले कालेन यत्कर्तव्यम्, तत्प्रतीकारो वा; तत्कृतमेव । तस्मिन् युगे उत्पन्नानां न किञ्चित्कर्तव्यमवशिष्यते । त्रेता नाम तृतीयांशकर्तव्यता, द्वापरमंशद्वयकर्तव्यता, कलिः कलहः, सर्वमेव विवादास्पदम्, न किञ्चिन्निर्द्धारितमित्यर्थः । अत एव श्रुतौ "ये वै चत्वारः स्तोमाः कृतं तत्' 'अथ ये पञ्च कलिः सः' इति स्तोमानां पञ्चपक्षो निन्दितः । त्रिवृत्, पञ्चदशः, सप्तदशः, एकविंश इति चत्वार एव स्तोमाः, चत्वारो वर्णाः; त[1] एवोत्पादिताः, अतस्तेषु न कोऽपि विवादः । पञ्चस्तोमपक्षस्तु निन्दितः कलिपदेन । षट्स्तोमपक्षस्त्वनिन्दितः 'यस्य त्रिणवमन्तर्यान्ति' इत्यादिना निरूपितः । अतो निन्दितपर्यायः कलिः । तेषां कल्पवासिनां यस्मिन् काले सर्वमेव कर्तुं शक्यते, सफलं च भवति, स कालोऽमृतघटिकारूपः कृतशब्देनोच्यते । यस्तु निन्दितो विषघटिकात्मकः स कलिः, यत्र कलह एव, न त्वर्थपर्यवसानम् । एतच्चतुष्टयं मिलित्वा चतुर्युगमित्युच्यते । तेषां कालमाह—दिव्यैरिति । द्वादशभिर्वर्षैरिति । सहस्रैरित्युक्तं भवत्यर्थात् । दिव्या हि वर्षा नाल्पसङ्ख्यया गणयितुं योग्याः । सहस्रसङ्ख्या परमकाष्ठा, अतः सहस्रसङ्ख्या प्राप्यते । दिव्यपदेनैव शतसङ्ख्याऽपि प्राप्येत, तथापि 'सन्दिग्धेषु वाक्यशेषात्' इति न्यायेन 'सङ्ख्यातानि सहस्राणि' इत्यग्रिमवाक्यात् सहस्रसङ्ख्यैव प्राप्यते । द्वादशभिर्दिव्यसहस्रवर्षैः सावधानं चतुर्युगं निरूपितं भवति । अवधानं व्यवधानम् । सन्धौ भवा सन्ध्या, व्यवधानानन्तरं यज्जायते सा सन्ध्या । सन्ध्यांशोऽल्पकरणम्, यथा घण्टानादेऽनुरणनम् । तन्मध्ये युगम् ॥ १८ ॥ ❀ ❀ संध्यासन्ध्यांशौ युगेन सम्बद्धावित्युभयसम्बन्धाद्युगत्वं समुदाययोगशक्तिभ्यामवसीयते । तेषामवान्तरकालानाह—चत्वारीति । चत्वारि सहस्राणि कृतयुगम्, त्रीणि त्रेता, द्वे द्वापरम्, एकं कलिरिति यथाक्रमं सहस्राणि सङ्ख्यातानि । युगदशमांशः सन्ध्या, तावानेवांशः । अतस्तावन्ति शतानि प्रत्येकम्, समुदायेन द्विगुणानि । चकारादतिरिक्तोऽपि कश्चन कालो लभ्यते, यदि भगवत्कार्यं किञ्चिद्व्यवधानं भवेत् ॥ १९ ॥ ❀ ❀ सर्वस्य युगत्वमाशङ्क्य तन्निराकरणाय मध्यकाल एव युगशब्देनोच्यत इत्याह—सन्ध्यांशयोरिति । सन्ध्या अंशश्च, तयोरन्तरेण यः कालः । शतसङ्ख्ययोरिति सन्ध्यांशयोरपि कालविशेषत्वमेव, न तु देवतात्वम् । तमेव कालं युगमाहुः । तज्ज्ञा इति प्रमाणम् । नन्वनन्तस्य कालस्य स्वतः परिच्छेदरहितस्य केनोपाधिनाकृतत्वमित्याशङ्क्य तमुपाधिमाह—यत्र धर्मो विधीयत इति । यत्र कालविशेषे धर्मो विधीयते, नाऽनूद्यते । सन्ध्यायां पूर्वधर्मस्य भवति लोपः, तदा युगप्रवृत्तौ ऋषिभिः पारम्पर्यज्ञानाभावादपूर्वो धर्मो विधीयते । स तु युगसमाप्तिपर्यन्तं विधिः प्राणिनः प्रवर्तयन्ननुवर्तते,अतो युगशब्दवाच्यो भवति, धर्मोपाधिकत्वात् ॥ २० ॥

## श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

कृतमित्यत्र । कालेन यत्कृतमिति । कालहेतुकं यत्कर्म, तदनश्वरमित्यर्थः । [2]कर्तव्यतेति । कार्यशेषः । प्रश्नानुरोधेनेदं निरूपणम्, न सर्वसाधारणमित्याशयेनाऽऽहुः—तेषामित्यादि । अर्थात् कथमुक्तं भवतीत्याकाङ्क्षायामाहुः—दिव्या हीत्यादि । अत इति । काष्ठातः [3]प्राप्यत इति । दिव्यपदेन मानुषपित्र्ययोर्निवृत्त्या प्राप्यते ॥ १८ ॥ ❀ ❀ चत्वारीत्यत्र । समुदाययोगशक्तिभ्यामिति । योगशब्दरूढ्या सन्ध्येत्यादिनोक्तेन योगेन चेत्यर्थः । तेषामिति । युगानाम् । तावानेवांश इति । सन्ध्यातिरिक्तो दशमांश एवांशपदवाच्यः, तथा च, युगारम्भस्य पूर्वकालः सन्ध्यापदवाच्यः, युगसमाप्तेरनन्तरस्त्वंशपदवाच्य इत्यर्थः । यदीत्यादि । यथा माण्डव्योपाख्याने पतिव्रताप्रतिबद्धः सूर्यः सप्तदिनपर्यन्तं नोदियाय, तादृशव्यवधानरूप इत्यर्थः ॥ १९ ॥ ❀ ❀ सन्ध्यांशयोरित्यत्र । श्रुतिप्रणिहितस्य धर्मस्य विद्यमानत्वाद्विधानोक्तिः कथं सङ्गच्छत इत्याहुः—सन्ध्येत्यादि । बहुकालव्यवधानेन युगप्रवृत्तौ प्रथमपर्यायस्य कृतयुगसम्बन्धिपुरुषाभावेन पारम्पर्यं भाविपुरुषैर्न ज्ञायत इति तदभावात् बहुकालजीविभिस्तैर्ऋषिभिर्धर्मो ज्ञाप्यत इत्यतोऽपूर्वत्वाद्विधानोक्तिसङ्गतिरित्यर्थः । भवतीति । कालो भवति ॥ २० ॥

## श्रीगिरिधरकृता बालप्रबोधिनी

ननु तदहं न जानामीत्याशङ्क्याह—भगवानिति । 'यो यच्छ्रद्धः स एव सः' इति सिद्धान्तेन भगवद्भक्तत्वेन भगवानेव अतो भगवतो भगवद्रूपस्य कालस्य गतिं स्वरूपं ननु निश्चितं वेद जानात्येव । तत्र कैमुत्यन्यायं दर्शयति—विश्वमिति । धीरा

---

१. तत ए०. ग. २. कर्त्तव्येति. पा. ३. प्राप्येति. पा.

विषयेभ्यः परावर्तितेन्द्रिया योगनिष्ठाः योगराद्धेन योगसिद्धेन चक्षुषा अलौकिकसामर्थ्येन विश्वं सर्वमप्यतीन्द्रियं वस्तु विचक्षते पश्यन्ति, किं पुनर्भवान् पश्यतीति वक्तव्यमित्यन्वयः ॥ १७ ॥ ❀ ❀ एवं सत्कारपूर्वकं पृष्टो मैत्रेयस्तदायुर्मानकथनस्य युगमानकथनाधीनत्वात् प्रथमं तन्मानमाह—कृतमिति द्वयेन। अवधीयते व्यवधीयतेऽनेनेत्यवधानं सन्ध्या अंशश्च तत्सहितं कृतादिचतुर्युगं दिव्यैर्देवमानमितैर्द्वादशभिः द्वादशसहस्रैर्वर्षैर्निरूपितमित्यन्वयः॥ १८ ॥ ❀ ❀ तत्र कृतादियुगेषु यथाक्रमं चत्वारि त्रीणि द्वे चैकं सहस्राणि तथा ततो द्विगुणानि शतानि चाख्यातानीत्यन्वयः। तत्र कृतयुगे चत्वारि सहस्राणि सन्ध्याशयोश्चत्वारि चत्वारीत्यष्टौ शतानि च, त्रेतायां त्रीणि सहस्राणि सन्ध्यांशयोस्त्रीणि त्रीणि शतानि च षट्शतानि, द्वापरे द्वे सहस्रे सन्ध्यांशयोर्द्वे द्वे शते च चतुश्शतानि, कलियुगे, एकं सहस्रं सन्ध्यांशयोश्च द्विशतं चेति ज्ञेयम् ॥ १९ ॥ ❀ ❀ सर्वस्यैव कालस्य युगत्वमाशङ्क्याह——सन्ध्यांशयोरिति। शतसङ्ख्ययोः उक्तानि शतानि सङ्ख्या ययोस्तयोः युगस्यादौ सन्ध्या अन्तेऽशस्तयोरन्तरेण मध्ये यः कालस्तमेव कालं तज्ज्ञा युगलक्षणाभिज्ञा युगं प्राहुरित्यन्वयः। यत्र युगे गवालम्भादिरूपो विशेषधर्मो विधीयते। सामान्यधर्मः श्रवणकीर्तनादिरूपस्तु सन्ध्यांशयोरप्यस्त्येवेति भावः ॥ २० ॥

### हिन्दी अनुवाद

आप भगवान् कालकी गति भलीभाँति जानते हैं; क्योंकि ज्ञानीलोग अपनी योगसिद्ध दिव्य दृष्टिसे सारे संसारको देख लेते हैं ॥ १७ ॥ ❀ ❀ श्रीमैत्रेयजीने कहा—विदुरजी! सत्ययुग, त्रेता, द्वापर और कलि—ये चार युग अपनी सन्ध्या और सन्ध्यांशोंके सहित देवताओंके बारह सहस्र वर्षतक रहते हैं, ऐसा बतलाया गया है ॥ १८ ॥ ❀ ❀ इन सत्यादि चारो युगोंमें क्रमशः चार, तीन, दो और एक सहस्र दिव्य वर्ष होते हैं। उससे दुगुने सौ वर्ष उनकी सन्ध्या और सन्ध्यांशोंमें होते हैं[1] ॥ १९ ॥ ❀ ❀ युगकी आदिमें सन्ध्या होती है और अन्तमें सन्ध्यांश। इनकी वर्ष-गणना सैकड़ोंकी संख्यामें बतलायी गयी है। इनके बीचका जो काल होता है, उसीको कालवेत्ताओंने युग कहा है। प्रत्येक युगमें एक विशेष धर्मका विधान पाया जाता है ॥ २० ॥

धर्मश्चतुष्पान्मनुजान् कृते समनुवर्तते। स एवान्येष्वधर्मेण व्येति पादेन वर्धता ॥ २१ ॥
त्रिलोक्या युगसाहस्रं बहिराब्रह्मणो दिनम्। तावत्येव निशा तात यन्निमीलति विश्वसृक्[2] ॥ २२ ॥
निशावसान आरब्धो लोककल्पोऽनु वर्तते। यावद्दिनं भगवतो मनून् भुञ्जंश्चतुर्दश ॥ २३ ॥
स्वं स्वं कालं मनुर्भुङ्क्ते साधिकां ह्येकसप्ततिम्। मन्वन्तरेषु मनवस्तद्वंश्या ऋषयः सुराः ॥
भवन्ति चैव[4] युगपत्सुरेशाश्चानु ये च तान् ॥ २४ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

चतुष्पात्संपूर्णस्त्रेतादिषु पादेन पादेन व्येति ह्रसति पादेन पादेन वर्धमानेनाधर्मेण हेतुना। एतच्च स्वरूपकथनमात्रं वैराग्यार्थं न तु धर्मसंकोचनार्थम् ॥ २१ ॥ ❀ ❀ त्रिलोक्या बहिर्महर्लोकप्रभृति ब्रह्मलोकमभिव्याप्य चतुर्युगसहस्रमेकं दिनम्। यद्यस्यां विश्वसृक् ब्रह्मा निमीलति स्वपिति ॥ २२ ॥ ❀ ❀ तत्र दिनस्थितिमाह निशाऽवसान इत्यादिसार्धैश्चतुर्भिः। चतुर्दश मनून् भुंजन् पालयन् व्याप्नुवन्नित्यर्थः ॥ २३ ॥ ❀ ❀ किंचिदधिकां युगानामेकसप्ततिम्। मनुवंश्याः पृथ्वीपालकाः क्रमेण भवंति सप्तर्षिप्रभृतयस्तु युगपत्समकालमेव भवंति। सुरेशा इंद्राःताननुवर्तंते ये गंधर्वादयस्तेऽपि ॥ २४ ॥

### श्रीवंशीधरकृतो भावार्थदीपकाप्रकाशः

"तपः शौचं दया सत्यमिति पादाः प्रकीर्तिताः" इत्युक्तपादचतुष्टयसंबद्धो धर्मः मनुजानुद्दिश्येति शेषः। यथा पादेन पादेन ह्रसति तथा प्रथमस्कंधे निरूपयिष्यति च द्वादशस्कंधे एतच्च धर्मह्रासादिस्वरूपस्य कथनमात्रं धर्मह्रासं दृष्ट्वाऽहो प्रतिदिनं धर्मः क्षीयते किमत्र स्थित्येति प्रपंचजिहासार्थमेव न तु धर्मसंकोचार्थं धर्मसंकोचस्तु कृते यथोक्तं कार्यं त्रेतायां पादोनमर्द्धं द्वापरे पादं कलौ कुर्यादित्येतदर्थं नेति ज्ञेयम्। स्वरूपकथनमात्रमित्यत्र कथनमत्रेति पाठः समीचीनो भातीति ॥ २१ ॥

---

१. अर्थात् सत्ययुगमें ४००० दिव्य वर्ष युगके और ८०० सन्ध्या एवं सन्ध्यांशके—इस प्रकार ४८०० वर्ष होते हैं। इसी प्रकार त्रेतामें ३६००, द्वापरमें २४०० और कलियुगमें १२०० दिव्यवर्ष होते हैं। मनुष्योंका एक वर्ष देवताओंका एक दिन होता है, अतः देवताओंका एक वर्ष मनुष्योंके ३६० वर्षके बराबर हुआ। इस प्रकार मानवीय मानसे कलियुगमें ४३२००० वर्ष हुए तथा इससे दुगुने द्वापरमें, तिगुने त्रेतामें और चौगुने सत्ययुगमें होते हैं। २. प्रा० पा०—द्दक्। ३. प्रा० पा०—वर्धते। ४. प्रा० पा०—चैके।

❀ ❀ 'ये स्युः कल्पाद्बहिर्विदः' इत्यस्योत्तरमाह—त्रिलोक्या इति । स्वपिति तदैव स्वपंतं गर्भोदशायिनमनुस्वपिति तथा च चतुःषष्टिकोट्यधिकाष्टपद्मसंख्याकमनुष्यप्रमाणवर्षैरहोरात्रो ब्रह्मणो भवतीति सिद्धम् ॥ २२ ॥ ❀ ❀ तत्राहोरात्रयोर्मध्ये मनून्मन्वन्तराणि । इत्यर्थ इति । भगवतो ब्रह्मणो यावद्दिनं तावच्चतुर्दशमन्वंतराणि व्याप्नुवँल्लोकानां मनुष्याणां कल्पो भवतीति भावः । ब्रह्मणो दिनकल्पेन गर्भोदशायिनोपि दिनकल्पना ज्ञेया । तस्यापि तदंते योगनिद्रास्वीकारात् ॥ २३ ॥ ❀ ❀ साधिकामित्युक्तेः तत्राधिकभागस्य शतोत्तरपंचसहस्रवर्षाणि द्विचत्वारिंशत्संवत्सराधिकानि दशमासा अष्टौ दिवसाश्चत्वारो यामाश्चतस्रो नाडिकाश्चतस्रः कला अष्टौ काष्ठाः किञ्चिदधिकाः सार्द्धाष्टनिमेषा इति विवेकः । तान् इंद्रान् मनुभुक्तिर्हि देवमानेन द्विपञ्चाशत्सहस्राधिकाष्टलक्षाणि वर्षाणि भवंति । मनुष्यमानेन तु त्रिंशत्कोट्यः सप्तषष्टिलक्षाणि भवंति । तथोक्तं विष्णुपुराणे "त्रिंशत्कोट्यश्च संपूर्णाः संख्याताः संख्यया द्विज । सप्त षष्टिस्तथान्यानि नियुतानि महामुने ॥ विंशतिश्च सहस्राणि कालोयमधिकं विना । मन्वंतरस्य संख्येयं मानुषैर्वत्सरैर्द्विज ॥" इति । हरिवंशे तु मनूनामहोरात्रादिर्विलक्षणतयैवोक्तस्तथाहि "दिव्यमब्दं दशगुणमहोरात्रं मनोः स्मृतम् । अहोरात्रं दशगुणं मानवः पक्ष उच्यते ॥ पक्षो दशगुणो मासो मासैर्द्वादशभिर्गुणैः । ऋतुर्मनुनां संप्रोक्तः प्राज्ञैस्तत्त्वार्थकोविदैः ॥ ऋतुत्रयेण त्वयनं तद्द्वयेनैव वत्सरः" इति द्वासप्ततिसहस्राणि दिव्याब्दा एकं मनोर्वर्षं स्यादिति भावः ॥ २४ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

एतच्च प्रतियुगधर्मवृद्धिपूर्वकं धर्मह्रसनं युगानां स्वभावकथनमात्रमहो प्रतियुगं धर्महानिर्भवति अलंविषयैरिति वैराग्यार्थं न तु युगस्वरूपमादाय धर्मसङ्कोचो विधेय इत्यर्थः ॥ २१ ॥ ❀ ❀ स्वपन्तं गर्भोदशायिनमनु तत्राविश्य स्वपिति । "ततोऽवतीर्य्य विश्वात्मा देहमाविश्य चक्रिणः । अवाप वैष्णवीं निद्रामेकीभूयाथ विष्णुने"ति कूर्मोक्तेः ॥ २२ ॥ ❀ ❀ आरब्धः कृतः लोककल्पो लोकरचना अनुवर्त्तते अनुक्रमेण यथापूर्वं भवति किं पर्य्यन्तं यावद्ब्रह्मणो दिनं भुञ्जन्निति लोककल्पस्य विशेषणं भोगस्य जडक्रियायामसंभवात् व्याप्नुवन्नित्यार्थिकोऽर्थः ॥ २३ ॥ ❀ ❀ स्वं स्वयमित्यर्द्धकं तत्र देवमानेन द्विपञ्चाशत्सहस्राधिकानि अष्टलक्षाणि वर्षाणि भवन्ति मनुष्यमानेन त्रिंशत्कोट्यः सप्तषष्टिर्लक्षाणि विंशतिसहस्राणि । तथोक्तं श्रीविष्णुपुराणे "त्रिंशत्कोट्यस्तु सम्पूर्णास्सङ्ख्याताः सङ्ख्यया द्विज । सप्तषष्टिस्तथान्यानि नियुतानि महामुने ! विंशतिश्च सहस्राणि कालोऽयमधिकं विना ॥ मन्वन्तरस्य सङ्ख्येयं मानुषैर्वत्सरैर्द्विजेति ॥ २४ ॥

### श्रीमद्वीरराघवव्याख्या

कृते चतुष्पदो धर्मस्यानुवृत्तिं त्रेतादिषु तत्संकोचं चाह । धर्म इति । कृते युगे मनुष्यान् चतुष्पात् धर्मोऽनुवर्ततेऽन्येषु त्रेतादिषु एकेन पादेन वर्द्धताऽधर्मेण हेतुना धर्मः व्येत्यपगच्छतीत्यर्थः ॥ २१ ॥ ❀ ❀ अथ त्रैलोक्याद्बहिःष्ठानां दिनपरिमाणमाह । त्रैलोक्याद्बहिःस्थितानामाब्रह्मणः ब्रह्मपर्यन्तानां सर्वेषां युगसाहस्रं दिनमहरित्यर्थः । हे तात विदुर ! तावती रात्रिः दिनपरिमितयुगसहस्रमिता रात्रिः यद्यस्यां रात्रौ विश्वसृग्ब्रह्मा निमीलति स्वपिति ॥ २२ ॥ ❀ ❀ बहिःष्ठानामहोरात्रगतानां स्थितिमाह । निशावसान इत्यादिना । अन्तः सलिल एतस्मिन्नित्यन्तेन । निशाया रात्रेरवसानेऽत्यये निशायामपगतायामित्यर्थः, आरब्धो यो लोककल्पः कल्पादभिन्नो लोक यद्वा कल्पनं कल्पः सर्ग इत्यर्थः । लोकसर्गः चतुर्दशमनून् भुञ्जन् परिच्छिन्दन् भगवतो ब्रह्मणो यावद्दिनमनुवर्तत इत्यर्थः ॥ २३ ॥ ❀ ❀ मन्वायुःपरिमाणमाह । स्वं स्वमिति । साधिकां किंचिदधिकां युगानामेकसप्ततिं स्वं स्वं कालं मनुर्भुङ्क्तेऽनुभवतीत्यर्थः ॥ २४ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

कृतादिषु यो धर्मो विधीयते स किमवयवो वर्तत इति तद्वृत्तिप्रकारं वक्ति । धर्म इति । तपः सत्यं दया शौचमिति चतुष्पान्मनुजानुद्दिश्येति शेषः, अन्येषु त्रेतादिषु स्वनामानुसारेण तपोविरोधिना वर्धता वर्धमानेनाधर्मेण व्येति ह्रसति क्रमेणेति योज्यम् ॥ २१ ॥ ❀ ❀ तत्र ये स्युः कल्पाद्बहिर्विद इति प्रश्नपरिहारमारभते । त्रैलोक्यादिति । त्रैलोक्याद्बहिराब्रह्मणो ब्रह्मपर्यन्तं तल्लोकपर्यन्तमित्यर्थः । तावत्पर्यन्तं वर्तमानं चतुर्युगसहस्रं ब्रह्मण एकं दिनमाहुः । तावत्येव चतुर्युगसहस्री तस्य निशा । यद्यस्यां निशायां विश्वसृक् ब्रह्मा निमीलति निद्रामुद्रितलोचनो भवति ॥ २२ ॥ ❀ ❀ चतुर्युगसहस्ररूपनिशावसाने पुनर्ब्रह्मणोऽर्थायारब्धो लोककल्पः लोकानां जनानां तथा भूरादिलोकानां कल्पः सृष्ट्यादिलक्षणस्तावदनुवर्तते यावद्भगवतो ब्रह्मणश्चतुर्दशमनून् भुञ्जानं दिनं स्यादिति शेषः । दिनस्य भोक्तृत्वं नामोपचारमात्रं तत्र यज्ञादिमूर्त्यावतीर्णस्य हरेर्मुख्यभोक्तृत्वमित्येतज्ज्ञापनाय भुञ्जन्निति लिङ्गव्यत्ययः ॥ २३ ॥ ❀ ❀ मनूनां भोज्यमन्वन्तरकालमाह । स्वं स्वमिति । साधिकैकसप्ततिर्मनोः काल इत्यन्वयः । सार्धाष्टदशलक्षवर्षाधिकैकसप्ततिचतुर्युगावसानं मनुकाल इत्यर्थः । तदुक्तम्—

युगैकसप्ततेरूर्ध्वं सार्धाष्टादशलक्षकम् । वत्सराणां मनोर्भुक्तिः सहस्रं चतुरुत्तरम् ॥
शतानां प्रलयश्चैव पञ्चोत्तरमथापि च । आद्येषु षट्सु प्रथमे द्विसहस्रं प्रकीर्तितम् ।
वत्सराणां मनोरन्तेन्द्रादीनां भवेदिति ॥

मन्वन्तरेष्वधिकृतमन्वादीनाह । मन्वन्तरेष्विति । तद्वंश्याः मनुवंशभवा राजानः सुरेशा इन्द्रादयः ये च तानतु इन्द्रादीननुचरन्तो गन्धर्वाद्याः एते सर्वे युगपदेककाल एव भवन्तीत्यन्वयः ॥ २४ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

स्वं स्वमित्यर्द्धकम् ॥ २४ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

चतुष्पात् पूर्णः मनुजाननु लक्ष्यीकृत्य अन्येषु त्रेतादिषु अधर्म्मेण पादेन पादेन वर्द्धता वर्द्धमानेन हेतुना व्येति पादेन पादेन ह्रसति ॥ २१ ॥ ❀ ❀ त्रिलोक्या बहिर्महर्लोकप्रभृति-ब्रह्मलोकमभिव्याप्य चतुर्युगसहस्रमेकं दिनं यद्यस्यां विश्वसृग्ब्रह्मा निमीलति । तदैव स्वपन्तं गर्भोदशायिनमनुस्वपिति एवं युगसहस्रद्वयं ब्रह्मणोऽहोरात्रः । तत्र मनुष्याणां चतुःषष्टिकोट्यधिकाष्टपञ्चवर्षाणि भवन्ति ॥ २२ ॥ ❀ ❀ तत्र दिनस्थितिमाह । निशावसान इति । चतुर्द्दशमनून् मन्वन्तराणि भुञ्जन् व्याप्नुवन् लोकानां कल्पः ॥ २३ ॥ ❀ ❀ मनुः स्वायम्भुवादिः किञ्चिदधिकां चतुर्युगानामेकसप्ततिं कालं व्याप्य तत्र देवमानेन द्विपञ्चाशत्सहस्राधिकान्यष्टलक्षाणि वर्षाणि भवन्ति । मनुष्यमानेन तु त्रिंशत्कोट्यः सप्तषष्टिलक्षाणि विंशतिः सहस्राणीति । तथोक्तं विष्णुपुराणे—

त्रिंशत्कोट्यस्तु सम्पूर्णाः संख्याताः संख्यया द्विज । सप्तषष्टिस्तथान्यानि नियुतानि महामुने ॥
विंशतिश्च सहस्राणि कालोऽयमधिकं विना । मन्वन्तरस्य संख्येयं मानुषैर्वत्सरैर्द्विज इति ॥ २४ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

धर्मतारतम्यमेवाह । धर्म इति । त्रेतादिषु पादेनैकेन व्येति ह्रसति ॥ २१ ॥ ❀ ❀ बहिर्महर्लोकादिसत्यलोकान्तेषु युगसाहस्रं "चतुर्युगसहस्रं च ब्रह्मणो दिनमुच्यत" इति द्वादशस्कन्धे वक्ष्यमाणात् चतुर्युगसहस्रमेकं दिनं यद्यस्यां निमीलति स्वपिति ॥ २२ ॥ ❀ ❀ निशायाः अवसाने अन्ते आरब्धः कृतः लोककल्पः त्रिलोकीसर्गः चतुर्दशमनून् भुञ्जन् पालयन् व्याप्नुवन् भगवतश्चतुराननस्य यावद्दिनं तावत् अनुवर्तते ॥ २३ ॥ ❀ ❀ चतुर्युगानां किंचिदधिकामेकसप्ततिं स्वं स्वं कालं मनुरेकैकं भुङ्क्ते तेषां वंश्याः भूपाः सुरेशा इन्द्राः तान् ये अनु तदनुवर्तिनो गन्धर्वादयश्च युगपत् भवन्ति भूपानां तु स्वस्वसंततिद्वारा यौगपद्यमित्यर्थः ॥ २४ ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

नन्ववान्तरभेदः किन्निबन्धन इत्याशङ्क्याऽऽह—धर्मश्चतुष्पादिति । धर्मावान्तरभेद एव युगावान्तरभेदहेतुः । तमाह—चतुष्पाद्धर्मः कृते मनुजान् समनुवर्तते । कालेनैव प्रेरितो धर्मो मनुजाननुवर्तते । तत्रापि मनुजा एव हेतवः । चत्वारो वर्णाः कृत एव । त्रेतायां ब्राह्मणाभावः, द्वापरे क्षत्रियाभावः, कलौ शूद्र एव । अतश्चतुष्पाद्धर्मो मनुजान् समनुवर्तते । स एव धर्मोऽन्येषु युगेषु पादेन व्येति, पादेन वर्द्धताऽधर्मेण कृत्वा अनेन त्यक्तधर्मो वर्णोऽधर्मेण व्याप्रियत इत्युक्तम् ॥ २१ ॥ ❀ ❀ एवं युगानां स्वरूपमुक्त्वा तैर्दिनव्यवस्थामाह—त्रिलोक्या इति । त्रिलोक्या बहिर्ब्रह्मलोकपर्यन्तं युगानां साहस्रं सहस्रसङ्ख्यासमुदायो दिनम्, महर्लोकमारभ्योपरितनेषु लोकेष्वेतावद्दिनमित्यर्थः । आ ब्रह्मण इति वचनं पातालादिव्युदासार्थम्, तत्र दिनरात्रिव्यवस्थैव नाऽस्ति । यावद्दिनं तावत्येव निशा । युगाद्यभावे ब्रह्मण आयुःखण्डाः एव नियामकाः, भगवदिच्छा वा । तत्र निमित्तान्तरमाह—यन्निमीलति विश्वसृगिति । यस्मिन् काले विश्वसृक् ब्रह्मा भगवान्, ब्रह्मोदरो वा भगवान् शेते । निद्राभावान्निमीलनमेव तस्य । निमीलनमेव योगनिद्रा । तातेति संबोधनमप्रतारकत्वज्ञापनाय ॥ २२ ॥ ❀ ❀ यथा युगप्रवृत्तिर्दिनख्यापिका, तथा शयनप्रवृत्ती रात्रिख्यापिकेति नियामकान्तरमाह, प्रतियुगं सृष्टिव्यावृत्त्यर्थम्—निशावसान इति । रात्र्यवसाने अरुणोदये भगवता प्रारब्धो लोककल्पो यावद्दिनं दिवसावसानपर्यन्तमनुवर्तते । प्रवाहरूपेण लोकाः कल्प्यन्ते उत्पाद्यन्ते अनया परम्परया, अस्यां वा; तत् पारम्पर्यं लोककल्पः । तच्च दिनं भगवतः । ब्रह्मविदामपि, भगवत्त्वात् । तत्र धर्मप्रवृत्तेर्हेतुमाह—मनून् भुङ्क्ते चतुर्दश । अयं लोककल्पश्चतुर्दश मनून् भुङ्क्ते, अनुभवति । धर्मपालकत्वेन गृह्णातीत्यर्थः ॥ २३ ॥ ❀ ❀ मनूनां धर्म[1]परिपालनरूपं वक्तुं तत्परिच्छिन्नं कालमाह स्वं स्वं कालमिति । एकसप्ततिचतुर्युगानि च सार्धैकपञ्चाशद्दिव्य-

---

१. धर्मपालन. ख. ग.

वर्षाधिकं मन्वन्तरम् । मन्वन्तरशब्दो रूढः षडङ्गधर्मसाधनपरः, न तु मनोरन्तरं तेनोपभुज्यमानः कालः, तथा सति मनुपुत्रादीनामुपभोगकालोऽन्यः स्यात् । नापि सर्वस्याऽपि वंशस्य वाचको मनुशब्दः, प्रियव्रतपुत्रेषु उत्तमतामसरैवतेषु भिन्नं मन्वन्तरं न स्यात् । 'स एव स्वान्तरं निन्ये' इति तु प्रक्रियान्तरत्वात् नाऽन्यैर्मन्वन्तरैर्विरोधः । अतो मन्वन्तरशब्दो रूढ एव । 'मन्वन्तराणि सद्धर्मः' इति वाक्याच्च षण्णां समुदायो मन्वन्तरम् । तानाह—मन्वन्तरेष्विति । सर्वेष्वेव मन्वन्तरेषु मनुः, मनुपुत्राः, ऋषयः, देवाः, इन्द्रः, अंशावतारश्च; एते युगपदेव भवन्ति । सपुत्र एव मनुरधिकारेऽभिषिच्यते । सुरेशाश्चेन्द्राः । आद्यन्तयोर्बहुवचनं समुदायाभिप्रायेण । अंशावतरस्तु युगपन्न जायत इति पञ्चैवोक्ताः ॥ २४ ॥

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

धर्मश्चतुष्पादित्यत्र । अवान्तरभेद इति । कृतादिभेदः—इत्युक्तमिति । इति हेतोः, त्रेतादिषु ब्राह्मणाद्यभावकथनेनाऽब्राह्मणत्वादिकमुक्तमित्यर्थः ॥ २१ ॥ ❀ ❀ निशावसान इत्यत्र । ब्रह्मविदामपि भगवत्त्वादिति । तेषामपि तदेव दिनमित्यर्थाद्बोध्यम् । इदं च 'ये स्युः कल्पाद्बहिर्विदः' इत्यस्योत्तरत्वेनोक्तम् ॥ २३ ॥ ❀ ❀ मन्वन्तरेष्वित्यत्र । 'मन्वन्तराणि सद्धर्मः' इत्यत्र धर्मस्य मन्वन्तरत्वमुक्तम् । तद्विमर्शे 'मन्वन्तरं मनुर्देवाः' इत्यत्र षट्सु प्रकारेषूक्तम् , अत्र तु मनुभोग्यकाल उक्तमिति किंवा मन्वन्तरपदे प्रवृत्तिनिमित्तं योगो वेत्याकाङ्क्षायामाहुः—मन्वन्तरशब्द इत्यादि । प्रक्रियान्तरत्वादिति । भगवत्कृपाप्रकरणत्वात् । ननु मनुपुत्राणां पाश्चात्त्यत्वात् कथं मनुना यौगपद (द्य) मित्यत आहुः—सपुत्र इत्यादि । तथा चाऽधिकारैक्याद्यौगपद्यमित्यर्थः । अंशावतारानुक्त्या न्यूनत्वमिति तत्परिहारायाहुः—अंशावतार इत्यादि ॥ २४ ॥

### श्रीगिरिधरकृता बालप्रबोधिनी

कृतादिषु धर्मस्वरूपमाह—धर्म इति । कृते कृतयुगे चतुष्पात् सम्पूर्णो धर्मो मनुजान् अनुवर्तते । स एष धर्मः अन्येषु त्रेतादिषु एकैकेन पादेन वर्धता वर्धमानेनाधर्मेण हेतुना व्येति एकैकपादेन ह्रसतीत्यर्थः । एतच्च वैराग्यार्थं धर्मप्रयत्नाधिक्यार्थं वा स्वरूपकथनमात्रं, न तु धर्मसङ्कोचार्थम् ॥ २१ ॥ ❀ ❀ एवं युगानां स्वरूपमुक्त्वा तैर्दिनव्यवस्थामाह—त्रिलोक्या इति । त्रिलोक्याः बहिः स्थितानां महर्लोकप्रभृतीनां आब्रह्मणः ब्रह्मलोकपर्यन्तानां युगसाहस्रं चतुर्युगानां सहस्रसङ्ख्यासमुदाय एकदिनं भवति । तातेति सम्बोधनं स्नेहेनाऽप्रतारकत्वसूचनार्थम् । तावती चतुर्युगसहस्रपरिमितैव तेषां रात्रिर्भवति । यत् यस्यां रात्रौ विश्वसृक् ब्रह्मा निमीलति स्वपिति ॥ २२ ॥ ❀ ❀ तदा च प्रलयो भवति पुनश्च निशाया अवसाने अन्ते सति आरब्धो लोकस्य कल्पः सर्गः चतुर्दश मनून् भुञ्जन् परिच्छिन्दन् व्याप्नुवन् यावद्भगवतो ब्रह्मणो दिनं तावदनुवर्तते इत्यन्वयः । मन्वायुःपरिमाणमाह—स्वमिति । साधिकां किञ्चिदधिकां चतुर्युगानामेकसप्ततिं स्वं स्वं कालं मनुर्भुङ्क्ते अनुभवति, तावत्कालं राज्यं करोतीत्यर्थः । अत्र सन्देहो न कर्तव्योऽधिकारित्वादिति सूचयन्नाह—हीति ॥ २३ ॥ ❀ ❀ मन्वादिषण्णां समुदायो मन्वन्तरशब्दवाच्य इत्याशयेन षट्कं दर्शयति—मन्वन्तरेष्विति । यद्वा मनूनामन्तराणि यतस्तानि मन्वन्तराणि पूर्वपूर्वमनुमारभ्य उत्तरोत्तरमनुपर्यन्तो मध्यकालः तेषु मनवः स्वायम्भुवादयः, तद्वंश्याः पृथिवीपालका राजानः, सप्तर्षयः, सुराः देवाः, सुरेशा इन्द्राः तानिन्द्रान् येऽनु वर्तन्ते ते च गन्धर्वादयः, चकाराद्भगवदंशावताराश्च । तत्र राजानोऽवताराश्च । क्रमेण भवन्ति, मन्वादयस्तु युगपत्समकालमेव भवन्तीति ॥ २४ ॥

### हिन्दी अनुवाद

सत्ययुगके मनुष्योंमें धर्म अपने चारों चरणोंसे रहता है; फिर अन्य युगोंमें अकर्मकी वृद्धि होनेसे उसका एक-एक चरण क्षीण होता जाता है ॥ २१ ॥ ❀ ❀ प्यारे विदुरजी ! त्रिलोकीसे बाहर महर्लोकसे ब्रह्मलोकपर्यन्त यहाँकी एक सहस्र चतुर्युगीका एक दिन होता है । और इतनी ही बड़ी रात्रि होती है, जिसमें जगत्कर्ता ब्रह्माजी शयन करते हैं ॥ २२ ॥ ❀ ❀ उस रात्रिका अन्त होनेपर इस लोकका कल्प आरम्भ होता है; उसका क्रम जबतक ब्रह्माजीका दिन रहता है, तबतक चलता रहता है ! उस एक कल्पमें चौदह मनु हो जाते हैं ॥ २३ ॥ ❀ ❀ प्रत्येक मनु इकहत्तर चतुर्युगोंसे कुछ अधिक काल ( ७१ ६/१४ चतुर्युगी ) तक अपना अधिकार भोगता है । प्रत्येक मन्वन्तरमें भिन्न-भिन्न मनुवंशी राजालोग, सप्तर्षि, देवगण, इन्द्र और उनके अनुयायी गन्धर्वादि साथ-साथ ही अपना अधिकार भोगते हैं ॥ २४ ॥

**एष दैनन्दिनः सर्गो ब्राह्मस्त्रैलोक्यवर्तनः । तिर्यङ्नृपितृदेवानां सम्भवो यत्र कर्मभिः ॥ २५ ॥**
**मन्वन्तरेषु भगवान् बिभ्रत्सत्त्वं स्वमूर्तिभिः । मन्वादिभिरिदं विश्वमवत्युदितपौरुषः ॥ २६ ॥**
**तमोमात्रामुपादाय प्रतिसंरुद्धविक्रमः । कालेनानुगताशेष आस्ते तूष्णीं दिनात्यये ॥ २७ ॥**
**तमेवान्वपिधीयन्ते लोका भूरादयस्त्रयः । निशायामनु[1]वृत्तायां निर्मुक्तशशिभास्करम् ॥ २८ ॥**

---

१. प्रा० पा०—मथ वृत्ता० ।

## श्रीधरस्वामिविरचिता भावार्थदीपिका

त्रैलोक्यं वर्तयतीति तथा ॥ २५ ॥ ❀ ❀ स्वमूर्तिभिर्मन्वंतरावतारैर्मन्वादिभिर्द्वारभूतैराविष्कृतपुरुषकारः सन्विश्वं रक्षति ॥ २६ ॥ ❀ ❀ रात्रिगतां स्थितिमाह पंचभिः। तमसो मात्रा लेशम्। प्रतिसंरुद्धः प्रत्याहृतो विक्रमो येन। अनुगत-मनुप्रविष्टमशेषं यस्मिन् ॥ २७ ॥ ❀ ❀ तदेव स्पष्टयति। तमेवेति। अन्वपिधीयंत इति कर्मकर्तरि प्रयोगः। तिरोहिता भवं-तीत्यर्थः। कथम्? निर्मुक्तो रहितः शशी भास्करश्च यथा भवति तथा ॥ २८ ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

ब्राह्मो ब्रह्मकृतः वर्तयति साधयति यत्र दैनंदिनसर्गे दिने दिने भवतीति दैनंदिनः। अणि पूर्वपदस्य मुम् ॥ २५, २६ ॥ ❀ ❀ त्रैलोक्यमात्रसंहारार्थं तमोलेशस्यैवोपादानं युक्तं कालाग्निरुद्रसंकर्षणादिरूपेणोपादाय स्वीकृत्य विक्रमो भूर्भुवः स्वर्लो-करूपो येन स तथा। 'विक्रमो भूर्भुवः स्वश्च' इति द्वितीयस्कंधोक्तेः। अशेषं त्रैलोक्यस्थजीववृन्दादि। तूष्णीमास्ते त्यक्तमायि-कलीलाविनोद इत्यर्थः। दिनात्यये दिनांतप्रलये ॥ २७ ॥ ❀ ❀ तदेव दिनांतलक्षणप्रलयस्वरूपमेव। इत्यर्थ इति। "अपि-धानतिरोधानपिधानाच्छादनानि च" इत्यमरोक्तेः। स्वयमेव लीयंत इति भावः। तिरोधानप्रकारं पृच्छति कथमिति। अनुवृत्तायां प्राप्तायां सत्याम् ॥ २८ ॥

## श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या।

मनुवंशानां तज्जन्यत्वेन। नियतपश्चाद्भावित्वाद्युगपत्त्वं न सम्भवतीति क्रमेणेति। अध्याहृत्य व्याख्यातम्। वर्त्तयति विषयीकरोति यत्र दैनंदिनसर्गे ॥ २५ ॥ ❀ ❀ मन्वन्तरावतारैः विशुद्धसत्त्वमयैः प्राकृतं सत्त्वमपि सान्निध्येन पुष्णन् ॥ २६ ॥ ❀ ❀ प्रवृत्तिमर्य्यादां तमसः प्रलयहेतोः लेशं कालाग्निरुद्ररूपेण स्वीकृत्य अशेषं त्रैलोक्यस्थजीववृन्दम् ॥ २७ ॥ ॥ २७ ॥ ❀ ❀ तदेव अनुगताशेषत्वमेव तमेव स्वपन्तं गर्भोदशायिनमेवानु अनुवृत्तायां प्रवृत्तायां सत्यां रहितो नष्टः यत्र तिरोधाने तद्यथा भवति तथेत्यर्थः ॥ २८ ॥

## श्रीमद्वीरराघवव्याख्या।

मन्वंतरगणानां स्थितिमाह। मन्वन्तरेष्विति। मनूनामन्तराणि मन्वन्तराणि पूर्वपूर्वमनुमारभ्य उत्तरोत्तरमनुपर्यन्ता मध्यकालास्तेषु मनवः मनुवंश्याः पृथिवीपालका राजानः ऋषयः सुराश्च सुरेशाः इन्द्रादयः ताननुवर्तन्ते ये ते सर्वे युगपत्प्र-भवन्ति त्रिलोकीं परिपालयन्तीत्यर्थः। अथैवं त्रैलोक्यबहिष्ठमानमिति तद्दिनकालावधिं स्वसर्गस्य दैनंदिनसर्गत्वं वदन्मन्वादिभिर्द्वार-भूतैर्भगवानेव विश्वमवति न तु मन्वादयः स्वयमवितार इत्याह। एष इति। ब्राह्मश्चतुर्मुखकर्तृकः एष दैनंदिनः दिनं दिनं क्रिय-माणो यः सर्गः स एष दैनंदिनसर्गः कथंभूतः त्रैलोक्यवर्तनः वर्द्धन इति पाठान्तरं तत्र त्रैलोक्यं वर्द्धयति तथा तत्र यस्मिन् दैनंदिने सर्गे तिरश्चां नृणां पितॄणां देवानां कर्मभिः पुण्यपापरूपैः संभवः उत्पत्तिर्भवति ॥ २५ ॥ ❀ ❀ मन्वन्तरेषु भगवान् स्व-मूर्तिभिः सत्त्वं शुद्धं सत्त्वं विशुद्धसत्त्वमयमूर्तिं बिभ्राण इत्यर्थः। उदितपौरुषः आविष्कृतपुरुषकारः सन्मन्वादिभिर्द्वारभूतैरिदं विश्वमवति। अतो न भगवतो रक्षकत्वविहतिरित्यभिप्रायः ॥ २६ ॥ ❀ ❀ एवं दिनगतां स्थितिमभिधायाथ रात्रिगतां स्थिति-माख्यातुमुपक्रमते। तमोमात्रामिति। तमोमात्रां लेशमुपादाय स्वीकृतोद्रिक्ततमस्क इत्यर्थः। प्रतिसंरुद्धः निवृत्तः क्रमो व्यापारो यस्य सः कालेनानुगतमनुप्रविष्टमशेषं यस्य सः कालोऽप्येनमनुसरतीत्यर्थः। ब्रह्मदिनात्यये दिनान्ते तूष्णीमास्ते उपविशति ॥ २७ ॥ ❀ ❀ अनुगताशेषत्वमेव विशदयति। तमेवेति। तमेवानुगतं कालमेवानुपश्चाद्भूरादयः त्रयो लोका अपिधीयन्ते तिरोहिता भवन्तीत्यर्थः। कथमपिधीयन्ते इत्यत आह। निशायामनुवृत्तायां प्रवर्तमानायां सत्यां निर्मुक्तः शशी चन्द्रः भास्करश्च यथा भवति तथा तौ विनैव पिधीयन्ते नश्यन्तीत्यर्थः ॥ २८ ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

ब्राह्मो ब्रह्मकृतः दैनन्दिनो ब्रह्मणो दिने क्रियमाणः त्रैलोक्यं वर्तयतीति त्रैलोक्यवर्तनः यत्र यस्मिन् दैनन्दिनसर्गे तिर्य-गादीनां सम्भव उत्पत्तिः ॥ २५ ॥ ❀ ❀ मन्वादयो जगत्पालनादि कुर्वन्तीति यत्तद्भगवदनुगृहीतमेवेत्याह। मन्वन्तरेष्विति। सत्त्वं सत्त्वगुणमुदितपौरुषो नित्योदितपराक्रमः ॥ २६ ॥ ❀ ❀ जगत्पालनमेव भगवन्नियतं न प्रलय इति मन्दाशङ्कां निवा-रयति। तमोमात्रामिति। दिनात्यये ब्रह्मदिनापगमे रात्रिसमये भगवांस्तमोमात्रां स्वनियततमोगुणप्रर्वतककालसंकर्षणरुद्रादिरूप-मुपादाय प्रतिसंरुद्धविक्रमः कालेन कालनाम्ना ब्रह्मणानुगतः कल्पप्रलयोदके शेषे अनन्तभोगपर्यङ्के तूष्णीं निवृत्तजगद्व्यापार आस्ते शेत इत्यर्थः "ब्रह्मणा कालनाम्ना तु सहशेते हरिर्निशि" इति वचनात्कालेनेति न प्रलयकालोऽत्र विवक्षितस्तस्य दिनात्यय इत्यनेन गतार्थत्वात् ॥ २७ ॥ ❀ ❀ देवदत्तस्वापविलक्षणो भगवत्स्वापः कुतोऽस्मिंश्चराचराणामनवशेषं विनाशादित्या-शयेन तल्लयप्रकारं वक्ति। तमेवेति। लोके निर्मुक्तशशिभास्करे सति ब्रह्मणि च शयान इव हरिं प्रविष्टे सति तन्निशायामनु-

वृत्तायां सत्यां भूरादतो लोकास्तं ब्रह्माणमनु विलीयन्ते अनुविधीयन्त इति पाठे शयानं हरिमनुविधीयन्ते ब्रह्मणा सह सुप्ताः क्रियन्त इत्यर्थः ॥ २८ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

युगपदिति स्वस्वमन्वन्तर इत्यर्थः ॥ २५—२९ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

मनुवंशः पृथ्वीपालकः क्रमेण भवति सप्तर्षिप्रभृतयस्तु युगपत् समकालमेव भवन्ति। सुरेशा इन्द्रास्ताननुवर्तन्ते ये गन्धर्व्वादयस्तेऽपि त्रैलोक्ये वर्त्तन्ते इति सः त्रैलोक्यसृष्टिरित्यर्थः ॥ २५ ॥ ❀ ❀ स्वमूर्तिभिरवतारैः उदितपौरुषः आविष्कृतपुरुषकारः ॥ २६ ॥ ❀ ❀ रात्रिगतां स्थितिमाह। तमसो मात्रां त्रैलोक्यमात्रसंहारार्थं लेशं कालाग्निरुद्ररूपेण स्वीकृत्य संहारं प्रति संरुद्धो वह्न्यादिभिरावृतो विक्रमो भूरादिलोकत्रयं येन सः विक्रमो भूर्भुवः स्वरिति पूर्व्वोक्तेः। ततश्चानुगतमनुविष्टमशेषं त्रैलोक्यस्थजीववृन्दं यत्र सः तूष्णीं त्यक्तमायिकलीलाविनोद इत्यर्थः ॥ २७ ॥ ❀ ❀ ततश्च मनुलक्ष्यीकृत्य अपीधीयन्ते कर्म्मकर्त्तरि स्वयमेव तिरोहिता भवंतीत्यर्थः। निर्म्मुक्तः रहितः शशी भास्करश्च यथा स्यात्तथा ॥ २८ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

दैनन्दिनः दिनं दिनं क्रियमाणः ब्राह्मश्चतुर्मुखकृतः त्रैलोक्यं वर्तयतीति स तथा ॥ २५ ॥ ❀ ❀ स्वमूर्तिभिः मन्वन्तरावतारैः सत्त्वं स्वातन्त्र्यमुद्दिष्टमिति वचनात् सत्त्वं स्वातन्त्र्यं बिभ्रत् बिभ्राणः मन्वादिभिर्निमित्तभूतैर्भगवानेव विश्वमवति ॥ २६ ॥ ❀ ❀ तमसो मात्रां लेशमुपादाय प्रतिसंरुद्धः प्रत्याहृतः विक्रमो येन सः अनुगतमनुप्रविष्टमशेषं यस्मिन् सः दिनात्यये तूष्णीमास्ते ब्रह्मेति शेषः ॥ २७ ॥ ❀ ❀ निर्मुक्तः रहितः शशी भास्करश्च यथा भवति तथा लोकाः अपिधीयन्ते तिरोहिता भवन्ति ॥ २८ ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

उक्तानि मन्वन्तराणि यदर्थम्, तमुपसंहरति—एष दैनन्दिन इति। दिने दिने जायमानो दैनन्दिनः। संवत्सरात्मकः कल्पो भिन्नः, अयं तु दैनन्दिनः। अस्य विशेषमाह—त्रैलोक्यवर्तन इति। त्रैलोक्यं वर्त्तयत्यावर्तयतीति। देवतिर्यङ्मनुष्याणां पुनः पुनर्जन्मेति कृत्वा त्रैलोक्यवर्तनत्वम्। तदेवाऽऽह—तिर्यङ्नृपितृदेवानामिति। नृपितर एके, जीवन्मृतभेदेन विवक्षया। दैनन्दिने पुनः पुनरुत्पत्तौ कर्मणो नियामकत्वम् ॥ २५ ॥ ❀ ❀ एवं दिनमुपसंहृत्य तत्र नियामके धर्मे कः प्रवर्त्तक इत्याकाङ्क्षायां धर्मस्य भगवानेव प्रवर्तक इत्याह—मन्वन्तरेष्विति। सर्वेष्वेव मन्वन्तरेषु स्वस्य शुद्धं सत्त्वं बिभ्रत् भगवान्, स्वस्य मूर्तिभिर्ज्ञानकर्मयोगादिप्रवर्तकैरवतारैर्मन्वादिभिः सहितैरिदं विश्वमिति। उदितं पौरुषं यस्य। यद्यपि स्वयमेव धर्मं पालयन् जगत्पालयति, तथापि स्वस्यैव पौरुषस्य एते अंशाः, मन्वादयोऽवताराश्च ॥ २६ ॥ ❀ ❀ एवं दैनन्दिनसृष्टिमुपपाद्य तत्रत्यं प्रलयमुपपादयति—तमोमात्रामुपादायेति। तमसो मात्रा सत्त्वरजःसंबन्धरहिता, केवलं तम इत्यर्थः। तामुपादाय प्रतिसंरुद्धो विक्रमो यस्य। तमसा विक्रमे प्रतिसंहृते विक्रयद्वारा विक्रमकार्यमपि जगत् कालेन कृत्वा भगवत्येवाऽनुगतं भवति। तदाह—कालेनेति। सर्वमेवाऽनुगतं भवति। अशेषपदेन शेषव्यत्तिरिक्तं जगदिति योगात्सूचितम्। तदा भगवान् कार्योन्मुखतां परित्यज्य तूष्णीमास्ते। दिनात्यये सन्ध्याकाले। भगवत्तूष्णीम्भावे प्रवाहस्तम्भकाभावात् कालेन प्रेरिता भूरादयो लोका अन्वपिधीयन्ते, अव्यक्ते प्रविशन्ति। तदा तेषु अव्यक्ते लीनेषु, निर्मुक्तशशिभास्करं यथा भवति तथा निशायामनुवृत्तायां सम्यक् प्रवृत्तायाम् ॥ २७ ॥ २८ ॥

२५ श्लोकात् ३८ श्लोकावधि सुबोधिनीप्रकाशव्याख्या नास्ति

### श्रीगिरिधरकृता बालप्रबोधिनी

ब्राह्मश्चतुर्मुखकर्तृकः दैनन्दिनः दिनं दिनं क्रियमाणो यः सर्गः स एष त्रैलोक्यवर्त्तनः त्रैलोक्यस्य वर्तनमुत्पत्तिर्यस्मिंस्तथाभूतः। एतदेव स्पष्टयति—तिर्यगिति। यत्र यस्मिन् दैनन्दिने सर्गे तिरश्चां नृणां पितॄणां देवानां च कर्मभिः स्वोपार्जितपुण्यपापरूपैस्तदनुरूपः सम्भव उत्पत्तिर्भवति ॥ २५ ॥ ❀ ❀ चकारसूचिभगवदवतारप्रयोजनमाह—मन्वन्तरेष्विति। प्रतिमन्वन्तरेषु स्वमूर्तिभिः सत्त्वं शुद्धसत्त्वं बिभ्रत् शुद्धसत्त्वमयमूर्तिं बिभ्राणो भगवान् उदितपौरुषः आविष्कृतपुरुषकारः स मन्वादिभिः सहेदं विश्वमवति रक्षतीत्यन्वयः ॥ २६ ॥ ❀ ❀ एवं दिनगतां स्थितिमभिधाय अथ रात्रिगतां स्थितिमभिधातुमुपक्रमते—तमोमात्रामिति। तमसो मात्रां लेशमुपादाय स्वीकृत्य उद्रिक्ततमस्कः अत एव प्रतिसंरुद्धः निवृत्तो विक्रमो व्यापारो यस्य सः। तदा कालोऽपि तदनुसरणमेव करोतीत्याशयेनाह—कालेनानुगतमनुप्रविष्टं अशेषं त्रैलोक्यं यस्मिन् स ब्रह्मा दिनात्यये दिनान्ते तूष्णीमास्ते शेते ॥ २७ ॥ ❀ ❀ एतदेव विशदयति—तमेवेति। निर्मुक्तः निवृत्तः शशी चन्द्रः भास्करः

सूर्यश्च यथा भवति तथा निशायामनुवृत्तायां सत्यां तमेवानु तत्कालानन्तरमेव भूर्भुवस्स्वरात्मकास्त्रयो लोका अपिधीयन्ते लीयन्ते इत्यन्वयः ॥ २८ ॥

## हिन्दी अनुवाद

यह ब्रह्माजीकी प्रतिदिनकी सृष्टि है, जिसमे तीनों लोकोंकी रचना होती है। उसमें अपने-अपने कर्मानुसार पशु-पक्षी, मनुष्य, पितर और देवताओंकी उत्पत्ति होती है ॥ २५ ॥ ❀ ❀ इन मन्वन्तरोंमें भगवान् सत्त्वगुणका आश्रय ले अपनी मनु आदि मूर्तियोंके द्वारा पौरुष प्रकट करते हुए इस विश्वका पालन करते हैं ॥ २६ ॥ ❀ ❀ कालक्रमसे जब ब्रह्माजीका दिन बीत जाता है, तब वे तमोगुणके सम्पर्कको स्वीकार कर अपने सृष्टिरचनारूप पौरुषको स्थगित करके निश्चेष्टभावसे स्थित हो जाते हैं ॥ २७ ॥ ❀ ❀ उस समय सारा विश्व उन्हींमें लीन हो जाता है। सूर्य और चन्द्रमादिसे रहित वह प्रलयरात्रि आती है, तब वे भूः, भुवः, स्वः—तीनों लोक उन्हींमें ब्रह्माजीके शरीरमें छिप जाते हैं ॥ २८ ॥

**त्रिलोक्यां दह्यमानायां शक्त्या सङ्कर्षणाग्निना। यान्त्यूष्मणा महर्लोकाज्जनं भृग्वादयोऽर्दिताः ॥ २९ ॥**
**तावत्त्रिभुवनं सद्यः कल्पान्तैधितसिन्धवः। प्लावयन्त्युत्कटाटोपचण्डवातेरितोर्मयः ॥ ३० ॥**
**अन्तः स तस्मिन् सलिल आस्तेऽनन्तासनो हरिः। योगनिद्रानिमीलाक्षः स्तूयमानो जनालयैः ॥ ३१ ॥**
**एवंविधैरहोरात्रैः कालगत्योपलक्षितैः। अप[१]क्षितमिवास्यापि परमायुर्वयःशतम् ॥ ३२ ॥**

## श्रीधरस्वामिविरचिता भावार्थदीपिका

भगवच्छक्तिरूपो यः संकर्षणमुखाग्निस्तेनोष्मणार्दिताः संतो जनलोकं यांति ॥ २९ ॥ ❀ ❀ कल्पांतेनैधिताः सिंधवः समुद्राः। उत्कट आटोपः क्षोभो येषां ते च ते चंडवातैरीरितोर्मयश्च ॥ ३० ॥ ❀ ❀ जनलोके आलयो येषां महर्लोकगतानामन्येषां च तैः ॥ ३१ ॥ ❀ ❀ वैराग्यार्थमाह। एवंविधैरहोरात्रैर्वर्षशतं सर्वेषां प्राणिनामायुषः परमधिकमस्य ब्रह्मणो यदायुस्तदप्यपक्षितमिव क्षीणमिवेति लोकोक्तिः गतप्रायमित्यर्थः ॥ ३२ ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः।

दाहोऽत्र शतवर्षपर्यन्तो ज्ञेयः। ऊष्मणा तापेन ॥ २९ ॥ ❀ ❀ "चंडो दैत्येऽम्लवृक्षे च तीक्ष्णे कोपे यमानुगे" इति निरुक्तिः। चंडवातैस्तीक्ष्णपवनैः ॥ ३० ॥ ❀ ❀ योग एव निद्रा तया निम्ीले निमीलिते अक्षिणी यस्य स तथा। तीर्थस्तु 'योगनिद्रामीलिताक्षः' इति पपाठ, स च सुबोध इति। अन्येषां स्वतस्तत्रत्यानाम् ॥ ३१ ॥ ❀ ❀ मूले आयुषः परमं परमायुरिति विग्रहः कार्यः। "वयो वर्षेविवाल्यादियौवनेषु नपुंसकम्" इति निरुक्तिः। इत्यर्थ इति। अहो सर्वाधिकद्वि-परार्द्धायुषो ब्रह्मणोपि यदि कालभयं "यस्माद्बिभेम्यहमपि द्विपरार्द्धधिष्ण्ये" इत्युक्तेस्तदा का वार्त्ताऽत्यल्पायुषः पुंसोऽतो हरि-भक्तिवैराग्यादौ यतितव्यमवश्यमिति भावः ॥ ३२ ॥

## श्रीराधारमणदासगोस्वामिचरणविरचिता दीपिनी व्याख्या

दाहस्तु शतवर्षपर्य्यन्तो ज्ञेयः ॥ २९ ॥ ❀ ❀ ते च ते इति विशेषणयोः कर्मधारयः शीतोष्णं जलमितिवत् ॥ ३० ॥ अन्येषां च सदा तत्रत्यानाम् ॥ ३१ ॥ ❀ ❀ वैराग्यार्थमिति। अहो एतादृशपरमायुरपि ब्रह्मा यस्माद्बिभेम्यहमित्युक्त्वा विरज्य निरन्तरं श्रीभगवन्तमुपास्ते कियदायुषो वराकाः मनुष्याः केन साहसेन विषयमुपभुञ्जानास्तं न भजन्तीति भवति वैराग्यं प्रयोजनं कालवर्णनस्येत्यर्थः ॥ ३२ ॥

## श्रीमद्वीरराघवव्याख्या

पुनस्तमेवापिधानप्रकारमाह। त्रिलोक्यामिति द्वाभ्याम्। शक्त्या भगवच्छक्तिरूपेण सङ्कर्षणाग्निना संकर्षणमुखोद्भूतरुद्र-गणाग्निना त्रिलोक्यां दह्यमानायां सत्यां तस्यां तस्याग्नेरूष्मणाऽर्दिताः महर्लोकवासिनो भृग्वादयः तस्माल्लोकाज्जनलोकं यान्ति ॥ २९ ॥ ❀ ❀ तावत्तदा संकर्षणाग्निना दग्धं त्रिभुवनं कल्पान्ते एधिताः प्रवृद्धाः सिन्धवः उत्कट आटोपः क्षोभः येषां ते च ते चण्डवातेरितोर्मयश्च सद्यः प्लावयन्ति संप्लावयन्ति ॥ ३० ॥ ❀ ❀ एवं त्रिलोक्यपिधानमभिधाय तस्मिन्प्रलयाम्भसि भगवतोऽवस्थानमाह। तस्मिन् सलिले अन्तर्मध्येऽनन्तः शेष एवासनं यस्य स हरिः योगः स्वानुभवरूपः स एव निद्रा तया मीलि-ते अक्षिणी यस्य स जनालयैर्जनलोक आलयो येषां तैः स्तूयमानः आस्ते ॥ ३१ ॥ ❀ ❀ एवं त्रैलोक्यबहिष्ठानामायुःपरिमाण-मभिधाय "एते वै निरयास्तात स्थानस्य परमात्मन" इत्युक्तरीत्या ब्रह्मभुवनान्तानां हेयत्वमाख्यातुं ब्रह्मायुषोऽप्यपक्षयमाह। कालस्य

---

१. प्रा० पा०—अपे०।

गत्या परमाण्वादिसम्वत्सरान्तरूपगत्योपलक्षितैः एवंविधैः पूर्वोक्तपरिमाणैः परं प्राणिनामायुषः परमधिकं वयः शतं स्वमानेन सम्वत्सरशतात्मकं यदायुस्तदपि अपक्षितमिवापक्षीणमिवेत्यर्थः । इव शब्देन किंचिदायुरपक्षीणं किंचिदवशिष्टमिति सूच्यते ।। ३२ ।।

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

तमेव लयं स्पष्टयति । त्रिलोक्यामिति । संकर्षणमुखनिर्गताग्निना शक्त्या ज्वालनया भृग्वादयो महर्लोकनिवासिनः तस्मान्महर्लोकाज्जनलोकं यदा यान्ति ।। २९ ।। ❀ ❀ तावत्तदा विषसिन्धवः संकर्षणमुखविषसंमिश्राः सप्त सिन्धवः उत्कट आटोपो यस्य स तथा अत एव चण्डः उत्कटाटोपश्चासौ चण्डश्चोत्कटाटोपचंडस्तादृशेन वातेनेरिता उन्नमिता ऊर्मयो येषु तथोक्ताः । आटोपः कोलाहलः ।। ३० ।। ❀ ❀ कल्पप्रलयोदके हरेः स्थितिप्रकारं वक्ति । अन्तरिति । अनन्तासन इत्यनेन हरेः स्वापः प्रलयार्थमुपचर्यते न तु तात्त्विक इत्युपगम्यते ।। ३१ ।। ❀ ❀ एवंविधाहोरात्रवर्णनेन किं प्रयोजनमत्राह । एवमिति । अस्य ब्रह्मणोऽप्येवं विधैरहोरात्रैर्वयःशतं परमायुस्तथापि पुनरपेक्षितमिवेत्यन्वयः, कीदृशैः कालनाम्नः सूर्यान्तर्यामिणो हरेर्गत्योपलक्षणं मनुष्यकालस्य तु दर्शनमिति विवेकः । अस्येति न परमात्मन उच्यते "नायुर्मानं भगवतः कस्मिन् रूपेऽपि विद्यते । अनादित्वादमध्यत्वादनन्तत्वाच्च सोऽव्ययः इति वचनेन हरेः कल्पितायुर्निषेधाद्बहिराब्रह्मणो दिनमिति तस्य प्रस्तुतत्वाच्च ।। ३२ ।।

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

उत्कटाटोपैश्चण्डवातैरीरिता उर्म्मयो येषां ते ।। ३१-३३ ।।

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

केन प्रकारेण इत्यपेक्षायामाह । त्रिलोक्यामिति ।। २९ ।। ❀ ❀ सद्य इति त्रिलोक्यां दग्धायां सत्यामविलम्बेनैवेत्यर्थः । दाहस्तु शतवर्षपर्यन्तो ज्ञेयः उत्कट आटोपः क्षोभो येषां ते च ते चण्डवातेरिततरङ्गाश्चेति ते ।। ३० ।। ❀ ❀ योगाख्या विमलादीनां चिच्छक्तिवृत्तीनां पञ्चमी सैव तदानीं निद्रारूपा तया मुदितनेत्रः । जनालयैर्जनलोकनिवासिभिर्मुनिभिः ।। ३१ ।। ❀ ❀ अस्य ब्रह्मणोऽप्यायुरपक्षितमपक्षीणं गतप्रायमेवेति यस्माद्बिभेम्यहमित्युक्त्या कालाद्बिभ्यता ब्रह्मणापि विषयभोगेभ्यो विरज्य निरन्तरमेव भगवानुपास्यते मनुष्याः कियदायुषः केन साहसेन विषयमुपभुञ्जानास्तं न भजन्तीति भक्तिवैराग्ययोः प्रयत्न आवश्यक इति कालनिरूपणप्रयोजनमुक्तम् ।। ३२ ।।

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

सङ्कर्षणाग्निरूपया भगवच्छक्त्या ।। २९ ।। ❀ ❀ उत्कटः असह्यः आटोपः क्षोभो येषां ते च ते चण्डवातैरीरितोर्मयश्च ते तथा कल्पान्तेनैधिताः सम्वर्धिताः सिंधवः त्रिभुवनं सद्यः प्लावयन्ति ।। ३० ।। ❀ ❀ यः हरिः सलिले आस्ते तस्मिन् सः प्रस्तुतः ब्रह्मापि अन्तर्मध्ये आस्ते निद्रां प्राप्नोति कल्पान्ते "इदमादाय शयानेऽम्भस्युदन्वतः । शिशयिषोरनुप्राणं विविशेऽन्तरहं प्रभो" रित्युक्तत्वात् कौर्मेपि "ततोऽवतीर्य विश्वात्मा देहमाविश्यचक्रिणः।अवाप वैष्णवीं निद्रामेकीभूयाथ विष्णुना ।।" इति ।। ३१ ।। ❀ ❀ अस्य चतुर्मुखस्य कालगत्या परमाण्वादिसम्वत्सरान्तकालस्य गमनेनोपलक्षितैः एवंविधैरुक्तप्रकारैः अहोरात्रैः परं सर्वप्राण्यायुषः अधिकं वयःशतं स्वमानेन सम्वत्सरशतात्मकं यदायुस्तदपि अपक्षितमिव अपक्षीणमिव गतप्रायमित्यर्थः ।। ३२ ।। ३३ ।। ३४ ।।

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

तदनन्तरं त्रिलोक्यां सङ्कर्षणाग्निना दह्यमानायामूष्मणा पीडिता महर्लोके स्थिता भृग्वादयो महर्लोकं परित्यज्य जनलोकं यान्तीति संबन्धः । अत्राऽयं क्रमः । यदा भगवान् शिशयिषुर्भवति, तदा तमो गृह्णाति, पश्चाच्च शेते । एतावानेव व्यापारः । अन्यत्सर्वं स्वयमेव भवति । विक्रमोपसंहारश्च तमोग्रहणादालस्येन । ततो रक्षकाभावात् कालस्य भक्षकत्वात् स्वयमेव जगल्लीयते । कालस्याऽत्र न भक्षकत्वम्, किन्तु भयजनकत्वाल्लये निमित्तत्वम् । जगति स्वस्मिन् प्रविष्टेऽपि भगवान्न परिपालनार्थं यत्नं करोति, किन्तु तूष्णीमेव तिष्ठति । तस्य तूष्णींभावमनु भुवनात्मका भूरादय उज्जटग्रामभित्तय इव तिरोहिता भवन्ति । तदा आधारभूतानां लोकानामभावात् ज्योतिश्चक्रं ध्रुवाद्विगलितं पतति । तदा मुख्यौ शशिभास्करौ कीलाद्विगलितौ निर्मुक्तौ भवतः । तदाऽन्धकारे प्रवृत्ते रात्रिः सुतरां प्रवृत्ता भवति । तदा सङ्कर्षणमुखादुत्थितोऽनलस्त्रिलोकीं दहति । जना अभिमानिन्यो देवताश्च पूर्वमेव गताः, शिष्टमचेतनमग्निर्दहति । मृदादीन् कथमग्निर्दहेदित्याशङ्क्य सोऽग्निः शक्तिरूप इत्युक्तम् । तस्याऽग्नेः प्राकृतवैलक्षण्याय माहात्म्यमाह—भृग्वादयः पीडिता भवन्ति ।। २९ ।। ❀ ❀ तदनन्तरं भगवदृशा घना वर्षन्तीत्याह—तावदिति । तावत्सिन्धवः कल्पान्तेन कालेन एधिताः मेघद्वारा वडवानलशान्तिद्वारा वा सिन्धवस्त्रिभुवनं प्लावयन्ति । उत्कटो योऽयमाटोपः, तत्सहितो योऽयं चण्डो वातः, तेन जनिता ऊर्मयो येषु ।। ३० ।। ❀ ❀ तदा तस्मिन् सलिले शेषापरनामाऽनन्तः, अन्तः-

स्थितसर्वलोकानां दुःखहर्ता, योगनिद्रया निमीलिताक्षः । योगनिद्रया कृत्वा निमीलनं निमीलः, तद्युक्ते अक्षिणी यस्य । जनालयैर्भृग्वादिभिः स्तूयमानः, हिन्दोलायां गायकैर्गीयमान इव, निमीलिताक्ष आस्ते; शेत इत्यर्थः । एवं ब्रह्मणो रात्रिदिनव्यवस्था निरूपिता ॥ ३१ ॥ ❀ ❀ तदनन्तरं तादृशेनाऽहोरात्रेण ब्रह्मण आयुराह—एवंविधैरिति । ननु द्वितीयदिवसस्य कथं प्रवृत्तिः ? कर्मसूर्यगत्यादीनामभावात्, इत्याशङ्क्याऽऽह—कालगत्योपलक्षितैरिति । कालप्रवाहस्य विद्यमानत्वात् 'निर्विशेषं न सामान्यम्' इति न्यायेन सामान्येनोपलक्षिता विशेषा भवन्तीति पुनरहोरात्रप्रवृत्तिः । एवमहोरात्रावृत्त्या पक्षमासवर्षावृत्तिः । तदा ब्रह्मणो वर्षशतं भवति । तावद्भिरपि वर्षैर्ब्रह्मण आयुरपक्षितमिव भवति । तस्याऽपि ममायुर्वर्द्धिति न बुद्धिः, किन्तु अन्यदपि चेद्भवेत्तदा समीचीनं भवेदितीच्छैव तिष्ठति ॥ ३२ ॥

### श्रीगिरिधरकृता बालप्रबोधिनी ।

तद्विलयप्रकारमेव दर्शयन् सिद्धानां स्थितिमाह—त्रिलोक्यामिति । शक्त्या भगवच्छक्तिरूपेण सङ्कर्षणमुखोद्भूतरुद्रगणाग्निना त्रिलोक्यां दह्यमानायां सत्यां तस्याग्नेः ऊष्मणा अर्दिताः पीडिता महर्लोकवासिनो भृग्वादयस्तस्माल्लोकाज्जनलोकं यान्तीत्यन्वयः ॥ २९ ॥ ❀ ❀ उत्कटः आटोपः क्षोभो येषां ते च ते चण्डवातेरितोर्मयश्च तथाभूताः कल्पान्तेन कालेन एधिताः प्रवृद्धाः सिन्धवः तावत्तदा सङ्कर्षणाग्निना दग्धं त्रिभुवनं सद्यः प्लावयन्तीत्यन्वयः ॥ ३० ॥ ❀ ❀ एवं प्रलयमभिधाय तत्र भगवतः शयनमाह—अन्तरिति । तस्मिन् सलिले अन्तः मध्ये अनन्तः शेष एव आसनं शय्या यस्य स प्रसिद्धो हरिः जनस्य मुखं विवृण्वन्नित्युक्तत्वात् सर्वजनदुःखहर्ता श्रीनारायणः योगः स्वानुभवरूपः स एव निद्रा तया निमीले मीलिते अक्षिणी यस्य सः जनालयैः जनलोकः आलयः स्थानं येषां तैः सनकादिभिः स्तूयमान आस्ते शयनमनुकरोतीत्यर्थः ॥ ३१ ॥ ❀ ❀ न च प्रमत्तस्य विषयासक्तस्य बहुकालजीवनमात्रेऽपि कृतार्थता भवति, किन्तु विषयविमुखस्य भगवद्भजनपरस्याल्पजीवनेनापि सा भवतीति विषयाद्विरज्य भगवद्भजनं कर्तव्यमित्याशयेन ब्रह्मायुषः क्षयमाह—एवमिति । कालस्य गत्या परमाण्वादिरूपया उपलक्षितैः एवंविधैश्चतुर्युगद्विसहस्रपरिमितैः अहोरात्रैः वयःशतं संवत्सरशतं परं प्राण्यन्तरायुरपेक्षया अत्यधिकमप्यस्य ब्रह्मण आयुरपक्षितमुपक्षीणमिवेत्यन्वयः ॥ ३२ ॥

### हिन्दी अनुवाद

उस अवसरपर तीनों लोक शेषजीके मुखसे निकली हुई अग्निरूप भगवान्‌की शक्तिसे जलने लगते हैं । इसलिये उसके तापसे व्याकुल होकर भृगु आदि मुनीश्वरगण महर्लोकसे जनलोकको चले जाते हैं ॥ २९ ॥ ❀ ❀ इतनेमें ही सातों समुद्र प्रलयकालके प्रचण्ड पवनसे उमड़कर अपनी उछलती हुई उत्ताल तरङ्गोंसे त्रिलोकीको डुबो देते हैं ॥ ३० ॥ ❀ ❀ तब उस जलके भीतर भगवान् शेषशायी योगनिद्रासे नेत्र मूँदकर शयन करते हैं । उस समय जनलोकनिवासी मुनिगण उनकी स्तुति किया करते हैं ॥ ३१ ॥ ❀ ❀ इस प्रकार कालकी गतिसे एक-एक सहस्र चतुर्युगके रूपमें प्रतीत होनेवाले दिन-रात के हेर-फेरसे ब्रह्माजीकी सौ वर्षकी परमायु भी बीती हुई-सी दिखायी देती है ॥ ३२ ॥

**यदर्धमायुषस्तस्य परार्धमभिधीयते । पूर्वः परार्धोऽपक्रान्तो ह्यपरोऽद्य प्रवर्तते ॥ ३३ ॥**
**पूर्वस्यादौ परार्धस्य ब्राह्मो नाम महानभूत् । कल्पो यत्राभवद्ब्रह्मा शब्दब्रह्मेति यं विदुः ॥ ३४ ॥**
**तस्यैव चान्ते कल्पोऽभूद् यं पाद्ममभिचक्षते । यद्धरेर्नाभिसरस आसील्लोकसरोरुहम् ॥ ३५ ॥**
**अयं तु कथितः कल्पो द्वितीयस्या[१]पि भारत । वाराह इति विख्यातो यत्रासीत्सूकरो हरिः ॥ ३६ ॥**

### श्रीधरस्वामिविरचिता भावार्थदीपिका ।

तदेवाह । यदिति ॥ ३३ ॥ ❀ ❀ पूर्वस्य परार्धस्यादाविति त्रिभिर्वस्तुकथनमात्रम् ॥ ३४ ॥ ❀ ❀ पाद्मत्वे हेतुः । यदिति ॥ ३५ ॥ ❀ ❀ अयं तु द्वितीयस्यादौ कथितः ॥ ३६ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

तदेव गतप्रायत्वमेव अपक्रांतोऽतीतः परार्द्धज्ञानार्थमादितः संख्यामनुवदति ग्रंथांतरात् । "एकं दश शतं चैव सहस्रमयुतं तथा । लक्षं च नियुतं चैव कोटिरर्बुदमेव च ॥ वृन्दं खर्वो निखर्वश्च शंखः पद्मश्च सागरः । अंत्यं मध्यं परार्द्धश्च दशवृद्ध्या यथाक्रमम् ॥" इति गणितरत्नाकरे । अपरो द्वितीयः अद्यास्मिन्कल्पे ॥ ३३ ॥ ❀ ❀ वस्तुनः कल्पस्य कथनमात्रम् । प्रभासखंडोक्तैः श्वेतवाराहादिभिः पितृकल्पांतैः त्रिंशत्कल्पैरेव शुक्लप्रतिपदाद्यमावस्यान्तानि त्रिंशद्दिनानि तेषामेव

१. प्रा. पा. स्याद्यनन्तरः ।

कल्पानां तिथिवारादिवत्पुनः पुनरावृत्त्या मासा मासैर्द्वादशभिर्वर्षम्। पंचाशता वर्षैरेकं परार्द्धं तत्र पूर्वस्य प्रथमस्यादौ ब्राह्म इति श्वेतवाराह एव ब्रह्मजन्मतिथित्वात्। ब्राह्मशब्देनोच्यते सा तिथिश्च चैत्रशुक्लप्रतिपदेव ज्योतिःशास्त्रोक्ता ज्ञेया "तिथीशा वह्निकौ गौरी" इत्यादिना तु तिथीश्वराः कथ्यंते न तु यत्तिथौ यस्य देवस्य जन्म स तस्य तिथेरीश्वर इति नियमः अत्र विहितस्तथादर्शनाभावाद्देवजन्मतिथयस्तु भिन्ना एव ज्योतिःशास्त्रे वर्णितास्तत्र ब्रह्मजन्मतिथिश्चैत्रशुक्लप्रतिपदुक्ता। वाक्यानि तु विस्तरभियेह न लिखितानीति। यत्र ब्राह्मकल्पे। यं ब्रह्माणं शब्दब्रह्म शब्दानां वेदशब्दानामाविर्भावको ब्रह्मा शब्दब्रह्म तदग्रे वक्ष्यते "शब्दब्रह्मात्मनस्तात" इत्यादिना द्वादशेऽध्याये स्कंधे च ॥ ३४ ॥ ❀ ❀ तस्यैव ब्राह्मकल्पस्यैव कल्पः पितृकल्पः तत्कल्पस्यैवांतिमं पितृकल्पमेव पाद्मत्वे हेतुः यदिति। तेन सर्वेष्वेव कल्पेषु लोकात्मकं पद्मं न संभवति किन्तु क्वापि कापीति ज्ञेयम् ॥ ३५ ॥ ❀ ❀ अयं तु संप्रति वर्त्तमानस्य द्वितीयपरार्द्धस्य एकपंचाशत्तमवर्षस्य प्रथमदिवस इत्यर्थः। अत्र 'पाद्मं कल्पमथो शृणु' इत्युपक्रांतायाम् 'उदाप्लुतं विश्वम्' इत्यादिपाद्मकल्पकथायामेकार्णवोदके एकस्य पद्मस्यैव श्रवणात्तत्रैकस्य ब्रह्मण एवोद्भवाद् 'विलोक्य तत्रान्यदपश्यमान' इत्याद्युक्तेर्महाकल्पायुषां सनकादीनाञ्च तत्रानुपलंभात्। केचित्प्रथमपरार्द्धांते महर्जनस्तपःसत्यानां द्विपरार्द्धांतपर्यंतस्थायिनामनष्टानामपि जलाप्लवनं तथा तत्रत्यानां सर्वेषामेव कल्पायुषां ब्रह्मसाहित्येनैव श्रीनारायणे प्रवेशमाख्याय प्रथमपरार्द्धसमाप्तौ द्वितीयपरार्द्धस्यादिमं श्वेतवाराहमेव पाद्ममाहुः। द्वादशाध्याये च सनकादिमरीच्यादीनां ब्राह्मकल्प इव ब्रह्मत एवाविर्भावं वक्ष्यते। स च तत्र ब्राह्मकल्पकथैवेति वाच्यं पाद्मकल्पकथायाः प्रक्रांतत्वात्। तस्मात् 'तस्यैव चांते' इत्यत्रांतेऽवसाने समाप्तावित्यर्थ इति। अयं त्विति। तुरेवार्थे अयमेव पाद्म एव वाराह इति ख्यातः, तत्र हेतुः यत्रासीदिति। द्वितीयस्यापीत्यपिकारेण प्रथमपरार्द्धस्यादिमो ब्राह्मः कल्पोऽपि पाद्म उच्यते इति व्याचक्षते ॥ ३६ ॥

## श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

तदेव गतप्रायत्वमेव अद्य अस्मिन् कल्पे ॥ ३३ ॥ ❀ ❀ त्रिभिः श्लोकैर्वस्तुनः ज्योतिःशास्त्रानुसारेण शुक्लप्रतिपत्तुल्यजन्मतिथिलक्षणब्राह्मकल्पस्य तथा पञ्चाशत्तमवर्षान्त्यदिनलक्षणपाद्मकल्पस्य तथा द्वितीयपरार्द्धादिमैकपञ्चाशत्तमवर्षस्य प्रथमदिवसलक्षणश्वेतवाराहकल्पस्य च वस्तुत्रयस्य कथनमात्रं न तु कल्पनाक्रमेण परिगणनमित्यर्थः ॥ ३४ ॥ ❀ ❀ तस्यैव पूर्वपरार्द्धस्यैव यद्यस्मात् यस्मिन्कल्पे च ॥ ३५ ॥ ❀ ❀ यथा पूर्वपरार्द्धस्यादौ ब्राह्मकल्पस्तथा द्वितीयपरार्द्धस्याप्यादौ अयन्तु वर्त्तमानः कल्पो निर्दिष्टः तस्य संज्ञामाह। वाराहत्वे हेतुः यत्रेति ॥ ३६ ॥

## श्रीमद्वीरराघवव्याख्या

अनन्तो हरिरक्षरतन्मात्रस्यात्र कियदायुषः कियदवशिष्टमित्यत्राह। यदिति। तस्य ब्रह्मणो यदायुस्तन्मानेन सम्वत्सरशतात्मकस्य तस्यायुषः अर्द्धं परार्द्धमिति कथ्यते तस्य द्विपरार्द्धात्मकस्यायुषः पूर्वः परार्द्धोऽपक्रान्तः अपगतः। अपर उत्तरपरार्द्धः अद्याधुना प्रवर्त्तते इत्यर्थः ॥ ३३ ॥ ❀ ❀ पूर्वोत्तरयोः परार्धयोः प्रतिदिनकल्पानामभेदोऽस्ति नेतीति संशयं निराकुर्वन् कल्पनां बहुत्वात्पूर्वपरार्द्धस्याद्यन्तयोः कल्पयोरुत्तरपरार्धात्परकल्पस्य चान्वर्थानि नामान्याह। पूर्वस्येत्यादिभिस्त्रिभिः श्लोकैः। पूर्वस्य परार्द्धस्यादौ ब्राह्मो नाम ब्राह्माख्यमहाकल्पः अभूत्। नाम्नोऽन्वर्थतां वदन्महत्त्वं चाह यत्र पूर्वपरार्द्धाद्यकल्पे ब्रह्मा अभवदिदमेवान्वर्थतानिमित्तं कोऽसौ ब्रह्मा यत्सम्बन्धात्कल्पस्य ब्राह्मत्वमत आह। यं शब्दब्रह्मेति वेदमयमिति विदुः। इदमेव हि महत्त्वे निमित्तं यस्य परब्रह्मतदुपासनतदाराधनप्रकाशकवेदमयब्रह्मणो यत्रोत्पत्तिरिति ॥ ३४ ॥ ❀ ❀ तस्यैव च पूर्वपरार्द्धस्यान्ते यं कल्पं ब्राह्ममित्याचक्षते मनीषिण इति स कल्पोऽभूत् तस्य पद्माख्यात्वनिमित्तमाह। यत् यत्र कल्पे हरेर्भगवतोऽनिरुद्धस्य नाभिरेव सरस्तस्माल्लोकसरोरुहं भुवनकोशात्मकं कमलमासीदुदपद्यत ॥ ३५ ॥ ❀ ❀ द्वितीयस्यापि द्वितीयपरार्द्धस्याप्ययं कल्पः कथितः कोऽसौ इत्यत आह। वाराह इति विख्यातः प्रसिद्धः अन्वर्थताया निमित्तमाह। यत्र यस्मिन् कल्पे हरिः शूकररूपेणासीत् ॥ ३६ ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

ब्रह्मण आयुरधुनैव तावद्गतमिति ज्ञापयितुं तदायुर्विभजति यदर्धमिति ॥ ३३ ॥ ❀ ❀ यत्र यस्मिन् कल्पे स ब्रह्मा सर्वस्मात्प्रथममभवत् पाद्मादिकल्पेषु पद्माद्युत्पत्त्यनन्तरं ब्रह्मोत्पत्तेर्यं ब्राह्मं ब्रह्माणं वा शब्दब्रह्मेति वेदवेद्यमिति विदुर्ज्ञानिन इति शेषः ॥ ३४ ॥ ❀ ❀ प्रथमपरार्धावसाने कल्पमाह। तस्यैवेति। यद्यस्मिन्कल्पे ॥ ३५ ॥ ❀ ❀ द्वितीयपरार्थस्याद्यकल्पमाह। अयमिति। द्वितीयपरार्धस्यायं वाराह इति विख्यातः प्रथमः कल्पः ॥ ३६ ॥

## श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः।

यदर्द्धमिति अद्य अस्मिन् ॥ ३४—३७ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

तदायुर्द्विधा विभक्तमाह। यदिति ॥ ३३ ॥ ❀ ❀ पूर्व्वस्येति। प्रभासखण्डोक्तेः श्वेतवाराहादिभिः पितृकल्पान्तैस्त्रिंशत्कल्पैरेव शुक्लप्रतिपदाद्यमावास्यान्तानि त्रिंशद्दिनानि तेषामेव कल्पानां पुनः पुनरावृत्त्या मासाः मासैर्द्वादशभिर्वर्षं पञ्चाशता वर्षैरेकं परार्द्धम्। तत्र पूर्व्वस्य प्रथमस्य आदौ ब्राह्म इति श्वेतवाराह एव ब्रह्मजन्मतिथित्वात् ब्राह्मशब्देनोच्यते। सा तिथिश्च चैत्रशुक्लप्रतिपदेव ज्योतिःशास्त्रोक्त्या ज्ञेया ॥ ३४ ॥ ❀ ❀ कल्पः पितृकल्पः यं परार्द्धस्यैवान्तिमं पितृकल्पमेव पाद्मं वदन्ति पाद्मत्वे हेतुः। यदिति। तेन सर्व्वेष्वेव कल्पेषु लोकात्मकं पद्मं न भवति किन्तु कापि काप्येवेत्यर्थः ॥ ३५ ॥ ❀ ❀ अयन्तु सम्प्रति वर्त्तमानद्वितीयस्य परार्द्धस्य एकपञ्चाशत्तमवर्षस्य प्रथमदिवस इत्यर्थः। अत्र पाद्मं कल्पमतो शृण्वित्युपक्रान्ताया-मुदाप्लुतं विश्वमित्यादिपाद्मकल्पकथायामेकार्णवोदके एकस्य पद्मस्यैव श्रवणात् तत्रैकस्य ब्रह्मण एवोद्भवाद्विलोक्य तत्रान्यदपश्यान इत्याद्युक्तर्महाकल्पायुषां सनकादीनाञ्च तत्रानुपलम्भात् केचित् प्रथमपरार्द्धान्ते महर्जनस्तपःसत्यानां द्विपरार्धान्तपर्य्यन्ते स्थायिनाम-नष्टानामपि जलाप्लवनं तथा तत्रत्यानां सर्व्वेषामेव कल्पायुषां ब्रह्मसाहित्येनैव श्रीनारायणे प्रवेशमाख्याय प्रथमपरार्द्धसमाप्तौ द्वितीय-परार्द्धस्यादिमं श्वेतवाराहमेव पाद्ममाहुः। द्वादशाध्याये च सनकादिमरीच्यादीनां ब्राह्मकल्प इव ब्रह्मत एवाविर्भावश्च वक्ष्यते। न च तत्र ब्राह्मकल्पकथैवेति वाच्यं पाद्मकल्पकथायाः प्रकान्तत्वात् तस्मात्तस्यैव चान्त इत्यत्र अन्ते अवसाने समाप्ताविल्यर्थ इति। अयन्त्विति तुरेवार्थे अयमेव पाद्म एव वाराह इति ख्यातः। तत्र हेतुर्यत्रासीदिति द्वितीयस्यापीत्यपिकारेरेण प्रथमपरार्द्ध-स्यादिमो ब्राह्मः कल्पोऽपि पाद्म उच्यत इति व्याचक्षते ॥ ३६ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

यं पाद्ममभिचक्षते च तस्य पूर्वपरार्द्धस्यान्ते कल्पद्वयावृत्त्या कल्पोऽभूत् ॥ ३५ ॥ ❀ ❀ द्वितीयस्य परार्द्धस्य आदौ कथितः वाराह इति नामान्तरेण विख्यातः वस्तुतस्तु ब्रह्मकल्पः ॥ ३६ ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

इदानीं तस्मिन्नायुषि स्थूलान् कल्पान् निरूपयितुं तस्याऽऽयुषो विभागमाह—यदर्धमायुषस्तस्येति। तस्य ब्रह्मण आयुषो यदर्धम्, तत्परार्धमित्यभिधीयते। ब्रह्मायुषः परशब्दवाच्यत्वात् परस्यार्धमिति। तत्र पूर्वपरार्द्धस्य आद्यन्तौ ज्ञापयितुं पूर्वस्य समाप्तिमाह—पूर्वः परार्धोऽपक्रान्त इति। अद्येदानीमपरः प्रवर्तत इति। ब्रह्मणोऽप्यायुर्गतप्रायमिति सूचयन्। वैराग्यमुपदिष्टम्, साधारणानामिन्द्रियाध्यासत्वात् ॥ ३३ ॥ ❀ ❀ तत्र मुख्यकल्पानां मध्ये आद्यो ब्राह्मकल्प इत्याह—पूर्वस्येति। तस्य कल्पस्य ब्राह्मत्वमुपपादयति। स तु महान् कल्प आसीत्, संवत्सरात्मको न तु दैनन्दिनः। यत्र कल्पे ब्रह्मा स्वयमभूत्, उत्पन्न इत्यर्थः। तस्मिन् कल्पे भगवानेव ब्रह्मेति, तस्य सर्वकल्पेषु साधारण्यं मन्यमानः, कल्पप्रयोजकं ब्रह्मणो रूपमाह—शब्दब्रह्मेति यं विदुरिति। तस्मिन् कल्पे शब्दब्रह्मणः सकाशादेव सर्वोत्पत्तिः। यस्य शब्दब्रह्मणः स्वरूपं बुद्धयध्याये अग्रे वक्ष्यते ॥३४॥ ❀ ❀ तस्याऽन्तिमवर्ष-कल्पमाह—तस्यैव चाऽन्त इति यं पाद्ममभिचक्षत इति स पद्मकल्पः पूर्वमुक्तः। तस्य पद्मकल्पत्वनिमित्तमाह—यद्धरेर्नाभिसरस इति। पद्मेन कल्पत[1] इति व्युत्पत्त्या तस्य पद्मकल्पत्वसिद्धेः पद्मोद्भव एव वक्तव्यः, तदर्थं—नाभिसरोरुहमित्युक्तम् ॥ ३५ ॥ ❀ ❀ द्वितीयपरार्धस्य आद्यं संवत्सरकल्पमाह—अयं तु कथितः कल्प इति। तुशब्दो दैनन्दिनं व्यावर्तयति। वाराह इति आद्यस्याऽऽद्यो ब्राह्मो वेदात्मकः, द्वितीयस्याऽऽद्यः शब्दार्थात्मको वाराह इति लोके विख्यातः। तस्य वाराहत्वमुपपादयति—यत्राऽऽसीदिति। वाराहः सूकरः। हरिरिति ब्रह्मादीनां दुःखनिवारणं तथाऽवतारे हेतुः तत्राऽऽदिवराहकल्पः प्रथमः, वाराहो द्वितीयः, तृतीयः श्वेतवाराहः। सोऽयं वर्तमानः ॥ ३६ ॥

### श्रीगिरिधरकृता बालप्रबोधिनी

इवशब्दसूचितमेवार्थं स्पष्टयति—यदिति। तस्य ब्रह्मण आयुषो यदर्धं तत्परार्धमित्यभिधीयते कथ्यते. तत्र द्विपरार्धा-त्मकस्यायुषः पूर्वः परार्धोऽपक्रान्तः अपगतः अपरः उत्तरपरार्धो हि अद्य प्रवर्तते इत्यन्वयः ॥ ३३ ॥ ❀ ❀ ब्रह्मण आयुषो मध्ये प्रतिदिनं कल्पा भवन्ति तेषां सर्वेषां निरूपणमशक्यमतः कांश्चिन्निरूपयति—पूर्वस्येति त्रिभिः। पूर्वस्य परार्धस्यादौ ब्राह्मो नाम महाकल्पः अभूदित्यन्वयः। तस्य महाकल्पत्वे ब्राह्मनामत्वे च हेतुं दर्शयन्नाह—कांश्चिन्निरूपयति—पूर्वस्येति त्रिभिः। पूर्वस्य परार्धस्यादौ ब्राह्मो नाम महाकल्पः अभूदित्यन्वयः। तस्य महाकल्पत्वे ब्राह्मनामत्वे च हेतुं दर्शयन्नाह—यत्रेति। यं शब्दब्रह्म वेद-मयमिति विदुः, स ब्रह्मा यत्र कल्पेऽभूत् उत्पन्न इत्यर्थः ॥ ३४ ॥ ❀ ❀ तस्यैव पूर्वपरार्धस्य चान्ते यं पाद्मं अभिचक्षते मनीषिणः कथयन्ति स कल्पोऽभूत्। तस्य पाद्मनामत्वे हेतुमाह—यदिति। यत् यत्र कल्पे हरेर्भगवतो नारायणस्य नाभिरेव सरस्तस्मात् लोकसरोरुहं त्रिभुवनात्मकं कमलमासीत् उदपद्यतेत्यर्थः ॥ ३५ ॥ ❀ ❀ हे भारत अयं तु कल्पो द्वितीयस्यापि

---

१. कल्प ख, ग, च।

परार्धस्यादौ कथितः। कोऽसावित्यपेक्षायामाह—वाराह इति, विख्यातः प्रसिद्ध इति। तस्यैवं नामत्वे हेतुमाह—यत्रेति। यत्रास्मिन् कल्पे हरिः स्वयमेव सूकर आसीत्॥ ३६॥

### हिन्दी अनुवाद

ब्रह्माजीकी आयुके आधे भागको परार्ध कहते हैं। अबतक पहला परार्ध तो बीत चुका है, दूसरा चल रहा है॥ ३३॥ ❀ ❀ पूर्व परार्धके आरम्भमें ब्राह्म नामक महान् कल्प हुआ था। उसीमें ब्रह्माजीकी उत्पत्ति हुई थी। पण्डितजन इन्हें शब्द-ब्रह्म कहते हैं॥ ३४॥ ❀ ❀ उसी परार्धके अन्तमें जो कल्प हुआ था, उसे पाद्मकल्प कहते हैं। इसमें भगवान्के नाभि-सरोवरसे सर्वलोकमय कमल प्रकट हुआ था॥ ३५॥ ❀ ❀ विदुरजी! इस समय जो कल्प चल रहा है, वह दूसरे परार्धका आरम्भ बतलाया जाता है। यह वाराहकल्प नामसे विख्यात है, इसमें भगवान्ने सूकररूप धारण किया था॥३६॥

**कालोऽयं द्विपरार्धाख्यो निमेष उपचर्यते। अव्याकृतस्यानन्तस्य अनादेर्जगदात्मनः॥ ३७॥**
**कालोऽयं परमाण्वादिर्द्विपरार्धान्त ईश्वरः। नैवेशितुं प्रभुर्भूम्न ईश्वरो धाममानिनाम्॥ ३८॥**
**विकारैः सहितो युक्तैर्विशेषादिभिरावृतः। आण्डकोशो[1] बहिरयं पञ्चाशत्कोटिविस्तृतः॥ ३९॥**

### श्रीधरस्वामिविरचिता भावार्थदीपिका।

तदेवं कालेन निमित्तेन सृज्यानामायुःपरिमाणमुक्त्वा कालपरिच्छेदरहितं तत्त्वमाह। कालोऽयमिति पंचभिः। उपचर्यते केवलं न त्वनेनापि क्रमेणायुर्गणनं तस्येत्याह। अव्याकृतस्य कार्योपाधिशून्यस्यात एवानंतस्यानादेश्च जगदात्मनो जगत्कारणस्य॥ ३७॥ ❀ ❀ तत्परिच्छेदे कालस्यासामर्थ्यादित्याह। कालोऽयमीश्वरः समर्थोऽपि भूम्नः परिपूर्णस्येशितुं नैव प्रभुः समर्थः। यतो धाममानिनां देहगेहाभिमानिनामेवेश्वरः॥ ३८॥ ❀ ❀ भूम्नः इत्युक्तं तत्प्रपंचयन्नाह। विकारैः षोडशभिर्युक्तैरष्टप्रकृतिसंयुक्तैः सहितस्तदारब्ध इत्यर्थः। अयमांडकोशो यत्र प्रविष्टः परमाणुवल्लक्ष्यत इत्युत्तरेणान्वयः। कीदृशः अंतः पंचाशत्कोटियोजनविस्तृतो बहिश्च विशेषादिभिः पृथिव्यादिभिः सप्तभिरावृतः॥ ३९॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः।

केचिदत्रावतरणिकामेवमाहुस्तथाहि तदेवं सूक्ष्मं स्थूलं च कालमुक्त्वात्यंतिकं स्थूलं परममहांतं द्विपरार्द्धसंज्ञं कालमाह। यद्यपि कालस्य पर्यवसानासंभवस्तथापि शास्त्रे स एवात्यंतिकस्थूलत्वेन व्यवह्रियते सोऽपि जगदात्मनः परमात्मनो निमेषः। निमेषादिक्रमेण तस्याप्यायुर्गण्यते किमिति चेन्नहि नहीति। सरसनादंशमाह—उपचर्यते क्वचिन्निमेष इति। "तस्यैकनिश्वसितकालमथावलंब्य जीवंति लोमविलजा जगदंडनाथाः" इति ब्रह्मसंहितादौ क्वचिन्निश्वास इत्युपचारमात्रं न तु वस्तुतो निमेषोस्तीत्यर्थः। यतोऽव्याकृतस्य कालकृतविकाररहितस्य अत एव कालकृतविकाररहितत्वादेव अनादेरनंतस्य च। कालपरिच्छेदातीतस्येत्यर्थः। तत्र हेतुः जगदात्मनः कालादिसर्वजगत्कारणस्य॥ ३७॥ ❀ ❀ व्यंजितमेवार्थं पुनः स्पष्टयति तत्परिच्छेदेत्यादि। तस्य परमात्मनः परिच्छेदे ईशितुं वशीकर्त्तुम्॥ ३८॥ ❀ ❀ तद्भूमत्वं सर्वजगत्परिच्छेदकत्वमिति यावत् षोडशभिरेकादशेंद्रियपञ्चभूतरूपैः प्रकृतिमहदहंकारपञ्चतन्मात्रारूपा अष्टौ प्रकृतयः। "महदाद्याः प्रकृतिविकृतयः सप्त" इति न्यायेन स्वं कार्यं प्रति महदादीनामपि प्रकृतित्वमननात्। इत्यर्थ इति। चतुर्विंशतितत्त्वोत्पादित इति भावः॥ ३९, ४०॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपनीव्याख्या

उपचर्य्यते लौकिकसदृशतया निरूप्यते अनेनापि द्विपरार्द्धस्यापि निमेषत्वानिरूपेण क्रमेण अत एव उपाधिशून्यत्वादेव जगत्कारणस्य कारणार्णवशायिनः॥ ३७॥ ❀ ❀ आयुर्गणनाभावे हेतुस्तस्येति परिच्छेदे व्यापने नाशन इति यावत् देहाभिमानिनां सत्यलोकाद्यधिकारिणाम्॥ ३८॥ ❀ ❀ ततः भूमत्वं प्रकृतिसंयुक्तैः मूलप्रकृतिमहदहङ्कारपञ्चतन्मात्रारूपाष्टप्रकृतिसहितैरेकादशेन्द्रियपञ्चमहाभूतरूपैः षोडशविकारैर्ब्रह्माण्डकारणैस्सहितस्तथा च तै रचित इति फलितोऽर्थः। प्रकृतितत्वं तत्त्वान्तरारम्भकत्वं तदनारम्भकत्वं विकारत्वं महाभूतानां शरीरादिजनकत्वेऽपि तेषां तत्त्वान्तरत्वाभावान्न प्रकृतित्वमिति ज्ञेयम्। तदुक्तं कृष्णाचार्यैः। मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयस्सप्त षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुष इति पृथिव्यादिभिः पृथिव्यादीनामविकृतैरंशैरावणसंज्ञैस्सप्तभिरावृतः॥ ३९॥

---

१. प्रा० पा०—अण्ड०।

### श्रीमद्वीरराघवव्याख्या

ननु चतुर्मुखपर्यन्तानां कालकाल्यत्वमुक्तं तद्वत्परमात्मनोऽपि किं कालकाल्यत्वमस्तीत्याशङ्कय नेत्याह । काल इत्यादिना । द्विपरार्द्धाख्योऽयं कालः अनादेर्भगवतो निमेष इवाभातीत्यर्थः । निमेष इत्युक्ते कालपरिच्छिन्नत्वं स्यादित्याशङ्कय उपचर्यत इत्युक्तम् । अनादित्वात् न तस्य कालकाल्यत्वमित्यभिप्रायेणानादेरित्युक्तम् । अनादेरपि हिरण्यगर्भादिक्षेत्रज्ञस्य कालपरिच्छिन्नता त्वयाभिहिता तद्वत्परस्यापि सा स्यादित्यत आह । अव्याकृतस्य । प्राकृतनामरूपरहितस्य हिरण्यगर्भादीनां प्राकृतनामरूपभाक्त्वेनादिमत्त्वमित्यभिप्रायः । कथं तस्य नामरूपभाक्त्वस्यावर्जनीयत्वादित्यत उक्तं जगदात्मन आत्मतयानामरूपनिर्वोढृत्वेनोपादानत्वेऽपि स्वतो नामरूपभाक्त्वाभावात् ॥ ३७॥ ❀ ❀ काल इति । परमाण्वादिर्द्विपरार्धान्तोऽयं कालात्मा य ईश्वरः ईश्वरशरीरत्वेन तन्नियामकः कालः अन्येषां धाममानिनामुल्बणं मन्यमानानां ब्रह्मरुद्रादीनामीश्वरः प्रभुरपि ईशितुः स्वेशितुर्भूम्नः त्रिविधपरिच्छेदरहितस्य भगवतो न प्रभुः न समर्थ इत्यर्थः ॥ ३८ ॥ ❀ ❀ प्रभुत्वमेवाह । विकारैरिति त्रिभिः । शब्दादिविषयाः वागादिव्यापाराः पञ्च प्राणादिवायुवृत्तयः पञ्च एको मनोविकारः संकल्पादिः एतैः षोडषभिर्विकारैर्युक्तः विशेषादिभिः पृथ्व्यादिभिः पृथिव्यप्तेजोवाय्वाकाशाहंकारमहत्प्रभृतिभिः कथंभूतैः विशेषादिदशोत्तरादिभिर्दशोत्तराधिकैर्दशगुणमुत्तरोत्तरमधिकैर्बहिरावृतः पञ्चाशत्कोटिविस्तृतोऽयमण्डकोशः ॥ ३९ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

हरेः कालमितायुर्मानं नास्तीति ध्वनितमिदानीं स्पष्टयति काल इति । निमेषस्त्रिलव इत्युपचर्यते न तु परमार्थः हरेरिति शेषः । तस्य निमेषास्तित्वे तद्धर्मत्वे कालाभिभूतत्वमायातमिति मन्दाशङ्कां प्रत्याह अव्याकृतस्येति । यः परमाण्वादिर्द्विपरार्धान्तस्त्वेरितः कथितः यश्च धाम्नां लोकानां मानिनां ममाहमित्यभिमानवतां ब्रह्मादीनां प्रभुरन्यथा कर्तेश्वरः स कालो भूम्नो देशतः कालतो गुणतश्च पूर्णस्य नैवेष्टे नैवेश्वरो न प्रभुर्नान्यथा कर्त्तुं समर्थश्चेति यस्मात्तस्मादज्ञबोधनाय निमेष इत्युक्तमत एवोपचर्यत इत्युक्तम् । भूमत्वमुपपादयति अव्याकृतस्येत्यादिना । अव्याकृतस्य निमेषादिविकाररहितस्य परिच्छिन्नत्वेन विकारसंभवः स्यादित्यत उक्तमनन्तस्येति । देशाद्यन्तत्रयरहितस्य आकाशे नीलिमोदेतीति श्रुतेरनन्तस्याप्याकाशस्येव जनिमत्त्वं किं न स्यादत उक्तमनादेरिति कारणशून्यस्य विचित्रजगत्सु एकं किं कारणं न स्यादत उक्तं जगदात्मन इति जगत्स्वामिनः हीत्यनेनादित्वादमध्यत्वादनन्तत्वादिति हेतुत्रयं स्मृत्युक्तं सूचितम् । अत्र कालशब्देन बहूनामभिधेयत्वेऽपि सर्वसंहर्त्री श्रीदुर्गैवाभिधीयते । तस्या एव ब्रह्मादिप्रभुत्वादन्यथा चेतनसन्निधानरहितस्य पाषाणादेरपि प्रभुत्वं स्यान्न चेदं क्वापि दृष्टमित्यभिप्रायेणाचार्यैः "यमः कालो मानुषाणां तस्य कालः सुदर्शनः । तस्यापि रुद्रस्तत्कालो ब्रह्मा दुर्गापि तस्य तु" इत्याद्युदाहृतम् ॥ ३७ ॥ ३८ ॥ ❀ ❀ प्रकारान्तरेण भगवन्माहात्म्यं कथयति विकारैरिति । अन्तर्दशेन्द्रियपञ्चभूतमनआख्यैः षोडशविकारैर्युक्तः दशेन्द्रियाणि च अनोभूतान्यण्डगतानि तु विकारा इति वचनात् । बहिर्द्विगुणया विशेषनाम्न्या पृथिव्या वृतः ततः परत आदिशब्दगृहीतैः दशोत्तरैः अप्तेजोवाय्वाकाशाहंकारमहत्तत्वप्रकृतिभिः पृथिव्या सहाष्टप्रकृतिसंज्ञागतैरावृतः "पृथ्वीविशेष इत्याहुः शब्दादीनां बहुत्वतः । सा सूक्ष्मत्वाद्वृणोत्यण्डं द्विगुणा तु दशोत्तरा । अबादयः प्रकृत्यन्ता अष्टप्रकृतयः स्मृता" इति च कियत्संख्याविस्तार इत्यत उक्तं पञ्चाशदिति एवंविधोऽण्डकोशोऽयं यत्र हरौ प्रविष्टः परमाणुवल्लक्ष्यते तस्मिन्नण्डकोशेऽन्तर्गताश्चान्ये च कोटिशो हरेः शरीररूपा अण्डराशयो लक्ष्यन्ते ॥ ३९ ॥ ४० ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः ।

तदेवं ब्रह्मणो दिनकल्पनेन गर्भोदशायिनो दिनकल्पना ज्ञेया । तस्यापि तदन्ते योगनिद्रास्वीकारात् । कारणार्णवशायिनः कालकल्पनन्त्वेवमित्याह । कालोऽयमिति । 'यस्यैकनिश्वसितकालमथावलम्ब्य जीवन्ति लोमबिलजा जगदण्डनाथाः।' इति ब्रह्मसंहितातः ॥ ३७ ॥ ❀ ❀ धाममानिनां सत्यलोकाद्यधिकारमानिनाम् ॥ ३८ ॥ ❀ ❀ विकारैरिति युग्मकम् । विकारा एकादशेन्द्रियपञ्चमहाभूतरूपाः प्रकृतयः प्रकृतिमहदहङ्कारपञ्चतन्मात्रारूपाः महदाद्याः—प्रकृतिविकृतयः सप्तेति न्यायेन स्वस्वकार्यं प्रति महदादीनामपि प्रकृतित्वमननात् ॥ ३९ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

तदेव सूक्ष्मं स्थूलं कालमुक्त्वेदानीमात्यन्तिकं स्थूलं परममहान्तं कालमाह । द्विपरार्द्धसंज्ञः कालस्य पर्य्यवसानासम्भवेऽप्यात्यन्तिकस्थूलत्वेन स एव शास्त्रे व्यवह्रियते सोऽपि जगदात्मनः परमेश्वरस्य निमेषः । नन्वेवं निमेषादिक्रमेण तस्यापि किमायुर्गण्यते तत्र न हि नहीति सरसनादंशमाह उपचर्य्यते क्वचिन्निमेष इति । 'यस्यैकनिश्वसितकालमथावलम्ब्य जीवन्ति लोमबिलजा जगदण्डनाथाः' इति ब्रह्मसंहितादौ क्वचिन्निश्वास इत्युपचारमात्रं न तु वस्तुतो निमेषोऽपीत्यर्थः । यतोऽव्याकृतस्य कालकृतविकाररहितस्य तत्र हेतुरनन्तस्यानादेः कालपरिच्छेदातीतस्येत्यर्थः । यतो जगदात्मनः कालादिसर्वजगत्कारणस्य ॥ ३७ ॥

❀ ❀ व्यञ्जितमेवार्थं पुनः स्पष्टयति । कालोऽयमिति । भूम्नः परमेश्वरस्य धाममानिनां सत्यलोकाद्यधिकारिणाम् ॥ ३८ ॥ ❀ ❀ जगदात्मन इत्यनेन व्यञ्जितं सर्व्वजगत्परिच्छेदकत्वं तस्याह । विकारैः षोडशभिर्युक्तैः अष्टप्रकृतियुक्तैः सहितस्तदारब्ध इत्यर्थः । अयमण्डकोशो यत्र प्रविष्टः परमाणुवल्लक्ष्यते इत्युत्तरेणान्वयः । कीदृशः बहिर्विशेषादिभिः पृथिव्यादिभिः सप्तभिरावृतः कीदृशैः अण्डकोशप्रमाणाद्दशगुण उत्तरोऽधिको येषु तैः । न केवलमयमेक एव अपि त्वन्येऽपि लक्ष्यन्ते ॥ ३९ ॥ ४० ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

स्वरूपतः जीवानां किमुत परमेश्वरस्य कालातीतत्वमेव तथापि मनुष्यादिचतुर्मुखान्तजीवानां लोकदेहादिकं कालग्रस्तमित्युक्तमथ कालातीतदेहादियुक्तं तत्त्वमाह । कालोऽयमिति पञ्चभिः । अव्याकृतस्य नित्यविग्रहादियुक्तस्य निमेषः उपचर्यते, न तु आयुरवयवतयोच्यते कलामुहूर्तादिमयश्च कालो न यद्विभूतेः परिणामहेतुरिति पुराणान्तराच्च ॥ ३७ ॥ ❀ ❀ धाममानिनां मनुष्यादिचतुर्मुखपर्यन्तानां देहाद्यभिमानिनाम् ईश्वरः देहगेहादिपरिच्छेदकोऽपि ईशितुः सर्वनियन्तुः भूम्नः अपरिच्छिन्न देहादिमतः नैव प्रभुः यतः अयं काल ईश्वरः तच्छक्तित्वात्तदनतिरिक्तस्थितप्रकृतिक इत्यर्थः ॥ ३८ ॥ ❀ ❀ विकारैः षोडशभिर्युक्तैरष्टप्रकृतिसंयुक्तैः सहितः चतुर्विंशतिप्राकृतपदार्थमय इत्यर्थः । अन्तर्मध्ये पञ्चाशत्कोटियोजनपरिमाणात् द्वितीयस्कन्धे निर्णीतात्पृथिव्यावरणात् दशगुण उत्तरोत्तरोऽधिको येषु तैः विशेषादिभिः पृथिव्यादिभिः सप्तभिर्बहिरावृतः एवंभूत आण्डकोशः यत्र प्रविष्टः परमाणुवल्लक्ष्यत इति द्वयोरन्वयः ॥ ३९ ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

एवं ब्रह्मण आयुर्निरूप्य अक्षरस्याऽप्यायुर्वक्तव्यमित्याकांक्षायामाह—कालोऽयमिति । अयं द्विपरार्धाख्यः कालोऽक्षरायुषो निमेषो भवति । अयं निमेष उन्मेषनिमेषात्मकः । तेनाऽपि प्रकारेण गणना नोचिता, परिच्छेदासम्भवात् । सर्वथा ह्यपरिच्छिन्नं ह्यक्षरं ब्रह्म । अत आह—उपचर्यत इति । ब्रह्मायुर्निमेष उपचारादेवोक्तः, न तु वस्तुतः । तत्र हेतुमाह—अव्याकृतस्येति । न केनाऽपि व्याकरणमाविर्भावो यस्य । आविर्भावतिरोभावयोर्मध्यवर्ती काल आयुरित्युच्यते । तत्राऽऽविर्भावाभावे तिरोभावोऽपि नास्तीति तस्याऽऽयुरेव नास्ति, कस्य गणना स्यात् ? किञ्च, परिच्छिन्ने हि गणना । तदाह—अनन्तस्येत्यन्तरहितस्य । तस्मादुत्तरावध्यभावात् न कालगणना । आरम्भोऽपि नास्तीत्याह—अनादेरिति । अनादित्वं निरूपयति—जगदात्मन इति । जगतामात्मा, येऽपि परिच्छेदकाः कालादयस्तेषामप्ययमात्मा । नाऽऽत्मनः; यथा देहस्यैवाऽऽयुः; तथा अस्याक्षरस्य जगतामात्मानो देहस्थानीयाः, अतो देहस्थानीयानामपि नित्यत्वान्नाऽक्षरस्याऽऽयुः केनाऽपि प्रकारेण सिद्ध्यति ॥ ३७ ॥ ❀ ❀ किञ्च—अयं कालः परमाण्वादिद्विपरार्द्धान्तः, मनुष्यायुःपरिच्छेदकं सूक्ष्मोपाधिमारभ्य ब्रह्मणः परमायुश्छेदकपर्यन्तम् । कालः सर्वेषां धाममानिनां देहाभिमानिनामीश्वरोऽपि सन् , नियन्तापि सन् , भूम्नोऽक्षरस्य प्रभुर्न भवति । तत्राऽपि ईशितुं प्रभुर्न भवति । भगवन्तमीशितव्यं कर्तुं न समर्थो भवेदित्यर्थः । ईश्वरो धाममानिनामिति भिन्नं वाक्यम् , तेनेश्वरपदे न पौनरुक्त्यम् । पुनरीश्वरग्रहणं तस्यैश्वर्यं स्थापयितुम् , अन्यथा मूले अनीश्वरः सर्वत्राऽनीश्वरः स्यात् ॥ ३८ ॥ ❀ ❀ एवं कालपरिच्छेदाभावमुक्त्वा स्वरूपमाह—विकारैरिति । विकारैः षोडशविकारैः, एकादशेन्द्रियाणि पञ्च तन्मात्राश्च । आवरणे महाभूतानां विनियोगान्महाभूतानि वा । उत्पत्तौ तन्मात्राणां प्राधान्यात् । युक्तैर्मिलितैः । अयुक्तैर्विशेषादिभिः पृथिव्यादिभिरावृतोऽयमाण्डकोशः । बहिरावृतस्य मध्ये स्वरूपं पञ्चाशत्कोटिविस्तृतम् , बहिरेव वा पञ्चाशत्कोटिविस्तृतः । अयं गोलः पञ्चमस्कन्धोक्ततिर्यग्गोलादन्यः । स एव वोर्द्ध्वगोलः, ज्योतिःशास्त्रे गोलषट्कस्य प्रसिद्धत्वात् । पद्मकल्पे पञ्चाशत्कोटिविस्तृतं कमलम् , वाराहे भूम्येव तावती; अतो नाना[1]प्रकारनिरूपणं न दोषाय, नाऽप्यन्योन्यविरुद्धम् ॥ ३९ ॥

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

विकारैरित्यत्र । भूतानां विकारत्वेन विशेषतन्मात्राणामाधिक्यात् कथं षोडशत्वमित्यत आहुः—उत्पत्तावित्यादि । तथा च प्राधान्येनाविवक्षितत्वात् प्रधानानां षोडशत्वमित्यर्थः । गोल(क)षट्कस्येति । भूगोलखगोलदृग्गोलनक्षत्रगोलावरणगोलाण्डगोलाख्यस्येत्यर्थः । अथाऽत्रैतद्बोध्यम् । अवान्तरेषु दैनन्दिनकल्पेषु भृग्वादीनां ज्ञानिनामवस्थानादाहुरिति प्रमाणस्य नाऽव्यवस्था । महाकल्पे वर्षात्मकेऽप्यण्डस्य सत्त्वात् पुरुषेन्द्रियाणां सत्त्वेनेन्द्रादीनामपि सत्त्वाद्ब्राह्मादीनामपि नाऽव्यवस्था । दिशोऽपि देवतारूपा एव विवक्षिताः।, न तु सूर्यविभाज्या इति कर्णस्याप्यवस्था। एवमायुषो नियतत्वेऽनियतत्वे वा आयुर्वेदस्य सुखार्थत्वेन तत्प्रवर्तकतया देवतारूपयोरश्विनोः सत्त्वान्नानिरूप्यत्वमिति नाशे(से) अपि व्यवस्थिते । एवं गन्धाग्निद्युसूर्यप्रभृतयोऽपि बोध्याः । पक्ष्माण्यपि तथेति नेश्वरविग्रहे अव्यवस्था, शङ्का निवर्त्तितेति ॥ ३९ ॥

इति श्रीतृतीयस्कन्धसुबोधिनीप्रकाशे एकादशाध्यायविवरणं सम्पूर्णम् ।

---

१. प्रकारेण, ग ।

### श्रीगिरिधरकृता बालप्रबोधिनी

एवं चतुर्मुखपर्यन्तानामायुरुक्तं तर्हि तत्परस्याक्षरब्रह्मणोऽपि तद्वक्तव्यमित्यपेक्षायामाह—काल इति। द्विपरार्धाख्योऽयं कालोऽव्याकृतस्य अक्षरब्रह्मणो निमेष उपचर्यते। केवलं, न त्वनेनापि क्रमेणायुर्गणनमिति भावः। तत्र हेतुमाह—जगदात्मन इति नहि सर्वात्मनः काल आयुर्भवितुमर्हतीति भावः। अनन्तस्येति विनाशशून्यस्येत्यर्थः॥ ३७॥ ❀ ❀ उक्तमेव स्पष्टयति—कालोऽयमिति। परमाण्वादिद्विपरार्धान्तोऽयं काल ईश्वरोऽतिसमर्थोऽपि भूम्नः परिपूर्णस्य ब्रह्मणः ईशितुं नियन्तुं नैव प्रभुर्नैव शक्नोति। तत्र हेतुमाह—ईश्वर इति। यतो धाममानिनां देहगेहाद्यभिमानवतामेव ईश्वरो विनाशे समर्थः, ब्रह्मणस्तथाऽभिमानाभावात्तत्र कथं प्रभवेदिति भावः॥ ३८॥ ❀ ❀ भूमत्वमेव प्रपञ्चयति—विकारैरिति त्रिभिः। विकारैः पञ्चमहाभूतैकादशेन्द्रियरूपैः षोडशभिर्युक्तैः प्रकृतिमहदहङ्कारशब्दादिपञ्चतन्मात्रारूपाष्टप्रकृतिशब्दवाच्यमिलितैः सहित आरब्धोऽयमाण्डकोशो यत्र प्रविष्टः परमाणुवल्लक्ष्यते इत्युत्तरेणान्वयः। तस्य विशालत्वं दर्शयति—अन्तः पञ्चाशत्कोटियोजनविस्तृतः वहिश्च विशेषादिभिः पृथ्व्यादिभिर्दशगुणोत्तरोत्तराधिकैः सप्तभिरावृत इति। एवंविधाश्चान्येऽपि कोटिशोऽण्डराशयो यत्र अन्तर्गताः प्रविष्टाः परमाणुवद् दृश्यन्ते॥ ३९॥ ४०॥

### हिन्दी अनुवाद

यह दो परार्धका काल अव्यक्त, अनन्त, अनादि, विश्वात्मा श्रीहरिका एक निमेष माना जाता है॥ ३७॥ ❀ ❀ यह परमाणुसे लेकर द्विपरार्धपर्यन्त फैला हुआ काल सर्वसमर्थ होनेपर भी सर्वात्मा श्रीहरिपर किसी प्रकारकी प्रभुता नहीं रखता। यह तो देहादिमें अभिमान रखनेवाले जीवोंका ही शासन करनेमें समर्थ है॥ ३८॥ ❀ ❀ प्रकृति, महत्तत्त्व, अहङ्कार और पञ्चतन्मात्र—इन आठ प्रकृतियोंके सहित दस इन्द्रियाँ, मन और पञ्चभूत—इन सोलह विकारोंसे मिलकर बना हुआ यह ब्रह्माण्डकोष भीतरसे पचास करोड़ योजन विस्तारवाला है॥ ३९॥

**दशोत्तराधिकैर्यत्र प्रविष्टः परमाणुवत्। लक्ष्यतेऽन्तर्गताश्चान्ये कोटिशो ह्यण्डराशयः॥ ४०॥**

**तदाहुरक्षरं ब्रह्म सर्वकारणकारणम्। विष्णोर्धाम परं साक्षात्पुरुषस्य महात्मनः॥ ४१॥**

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां तृतीयस्कन्धे एकादशोऽध्यायः॥ ११॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

कीदृशैः आंडकोशप्रमाणाद्दशगुणमुत्तरोत्तरोऽधिको येषु तैः न केवलमयमेक एवापि त्वन्येऽपि अंतर्गताः परमाणुवल्लक्ष्यंते॥ ४०॥ ❀ ❀ सर्वेषां कारणानां कारणं विष्णोः धाम स्वरूपम्॥ ४१॥

इति श्रीभागवते तृतीयस्कंधे टीकायामेकादशोऽध्यायः॥ ११॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

यद्यपि पूर्वोक्तरीत्या महापुरुषोऽपि न कालाधीनस्तथाप्याविर्भावतिरोभावलीलत्वात्तस्याक्षरशब्दवाच्यत्वं नास्ति, किं तु तस्य परं स्वरूपं स्वयं भगवानेव नित्याविर्भावत्वात्तद्वाच्य इत्याह तदाहुरिति। महात्मनो विष्णोर्महाविष्णवाख्यस्य साक्षात् यत् परं धाम स्वतःसिद्धं परमांशिस्वरूपं तत्त्वं तदेवाक्षरं नित्याविर्भावं ब्रह्म परिपूर्णं भगवंतमाहुः। यतः सर्वकारणस्य पुरुषस्यापि कारणमिति। स च श्रीकृष्ण एव श्रीदशमे "काहं तमोमहदहंखचराग्निवार्भूसंवेष्टिताण्डघटसप्तवितस्तिकायः। क्वेदृग्विधाविगणितांडपराणुचर्यावाताध्वरोमविवरस्य च ते महित्वम्" इति ब्रह्मोक्तेः "नारायणोंगं नरभूजलायनात्" इत्यादि तदुक्तेश्च॥४१॥

इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे तृतीयस्कन्धे एकादशोऽध्यायः॥ ११॥

### श्री राधारमणदासगोस्वामिविरचिता दीपिनीव्याख्या।

विष्णोः कारणार्णवशायिनः स्वरूपं स्वरूपतो देहः, षष्ठी चेयं राहोः शिर इतिवदभेदे। 'गृहदेहत्विट्प्रभावा धामानी'त्यमरः॥ ४१॥

इति श्रीभागवते महापुराणे तृतीयस्कन्धे श्रीराधारमणगोस्वामिविरचितायां दीपिकाटिप्पण्याम् एकादशोऽध्यायः॥ ११॥

### श्रीमद्वीरराघवव्याख्या

यत्र मूलप्रकृतौ प्रविष्टः परमाणुर्दृश्यते एवंविधाश्चान्येऽण्डराशयः कोटिशः प्रविष्टाः परमाणुवद् दृश्यन्ते॥ ४०॥ ❀ ❀ तत्सर्वेषां कारणानां महदादीनामपि कारणं मूलं प्रधानं महात्मनः पुरुषस्य विष्णोर्धामशरीरमाहुरित्यन्वयः "यस्याव्यक्तं शरीरम्" इति श्रुतेः। एवमचिन्त्यविविधविभवमूलप्रकृतिशरीरकस्य परमात्मनः कथं कालः प्रभुः स्यादित्यभिप्रायः॥ ४१॥

इति श्रीमद्भागवतमहापुराणे तृतीयस्कंधे श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायां एकादशोऽध्यायः॥ ११॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

परमाणुपरममहच्छब्दवाच्यः पदार्थः साक्षान्नारायण एव न पार्थिवाद्यन्यतम इत्याह । यमिति । यमण्डाधारं भगवन्तमक्षरं ब्रह्म सर्वकारणानां ब्रह्मादीनामपि कारणमाहुः तस्य महात्मनो महत्परिमाणोपेतस्य साक्षात्पुरुषस्यात्यन्ताणुशरीरेषु सरणाद्वर्तमानात्पुरुषनाम्नो विष्णोरयमाण्डकोशः परं धाम केवलं गृहवद्वर्तते । हिशब्देन तदन्तर्गता अण्डराशयोऽपि गृहवद्वर्तमानाः एकमेवाण्डबहुत्वेन प्रत्येकं रोमकूपगतत्वादनन्तमित्यादिविशेषस्मृतिप्रसिद्धिं सूचयति तदुक्तमन्तर्गताः शरीराणि 'शरीराणां बहुत्वेन अतीतानागतैस्तथा । अस्यैव देवकार्येषु प्रति प्रति च दर्शनात् ॥ विष्णुसामर्थ्यतोऽण्डानां बहुत्वं नान्यथा भवेत्' इति 'एकमण्डं बहुत्वेन प्रत्येकं रोमकूपगम् । ब्रह्मापश्यत्तथात्मानं हरेस्तेषु पृथक् पृथग् इति च । अतोऽतीतानागतवर्तमानानन्तब्रह्मादिपरमभागवतैरनवरतागणिताचिन्त्यमहिमत्वादायुर्मानहीनत्वात्तस्य देशकालगुणानन्त्यज्ञानस्यानन्तकालीनतत्सामीप्यादिनिर्वाणमुख्यसाधनत्वात्तस्मिन्निरतिशयभक्त्या तज्ज्ञानं सर्वथा संपाद्यं मुमुक्षुणेति भावः ॥ ४१ ॥

इति श्रीभागवतमहापुराणे तृतीयस्कंधे विजयध्वजतीर्थकृतपदरत्नावल्याम् एकादशोऽध्यायः ॥ ११ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

अन्ये च लक्ष्यन्ते इति जलाद्यावरणन्तु पूर्वोक्तयुक्त्यैवमेव सर्व्वेषामवगन्तव्यम् ॥ ४० ॥ ❀ ❀ यद्यपि पूर्वोक्तरीत्या महापुरुषोऽपि कालाधीनो न भवत्येव । तथाप्याविर्भावतिरोभावलीलत्वादक्षरशब्दवाच्यो न भवति । किन्तु तस्य परमस्वरूपं स्वयं भगवानेव नित्याविर्भावत्वात् तद्वाच्य इत्याह तदाहुरिति । महात्मनो विष्णोर्महाविष्णवाख्यस्य साक्षाद्यत् परं धाम स्वतः सिद्धं परमांशिरूपतत्त्वं तदेवाक्षरं नित्याविर्भावं ब्रह्म परिपूर्णं भगवत्त्वमाहुः । यतः सर्व्वकारणस्य पुरुषस्यापि कारणमिति ॥ ४१ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भटीकायाम् एकादशोऽध्यायः ॥ ११ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

विष्णोः कारणार्णवशायिनो धाम देहः । 'गृहदेहत्विट्प्रभावा धामानी'त्यमरः ॥ ४१ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् । एकादश तृतीयस्य सङ्गतः सङ्गतः सताम् ॥ ११ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

न केवलमयमेव किंत्वन्येऽपि लक्ष्यन्ते इत्याह । अन्ये कोटिशोऽण्डराशय इति ॥ ४० ॥ ❀ ❀ तद्ब्रह्म बृहत्स्वरूपगुणशक्त्या सर्वेषां कारणानां प्रकृत्यादीनां कारणं स्थितिप्रवृत्त्यादिमूलम् । तन्नित्यस्थानमाह । विष्णोर्ब्रह्मणः महात्मनः साक्षात्पुरुषस्य धाम स्थानमपि परं पूर्णमेव "योऽस्याध्यक्षः स परमे व्योमन्" इति श्रुतेः ॥ ४१ ॥

इति श्रीमद्भागवतमहापुराणे तृतीयस्कंधे श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपटीकायाम् एकादशाऽध्यायार्थप्रकाशः ॥ ११ ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

तस्य ब्रह्माण्डस्य प्रकृते निरूप्यमाणस्य देशावच्छेदकत्वाभावाय स्थूलतामाह—दशोत्तराधिकैरिति । अण्डात्परतः पृथिवी पञ्चाशत्कोटिदशगुणा । विशेषादिभिरित्यजहत्स्वार्थबहुव्रीहिः । गोल एव वा पृथिवी, जलादय एव दशगुणा इति केचित् । तदा तैरावरकैर्दृष्टैर्घटमध्ये प्रविष्टः परमाणुरिव लक्ष्यते । तैः सहितो वा रोमकूपे प्रविष्टः परमाणुरिव दृश्यते । तस्य च कूपस्य मध्ये अन्येऽप्येतादृशा अण्डकोशाः कोटिशो लक्ष्यन्ते ॥ ४० ॥ ❀ ❀ एवमनन्तब्रह्माण्डावृतरोमकूपो भगवानक्षरशब्देनोच्यत इत्याह—तदाहुरिति । अक्षरस्य च ब्रह्मत्वं समन्वये स्थापितम् , 'अक्षरमम्बरान्तधृतेः' 'सा च प्रशासनात्' इत्यधिकरणे । सर्वकारणानां पुरुषादीनामपि यतः कारणम् । तदेवाऽक्षरं मायाफलरूपेण द्विधा यदा समभवत् , तत्रैको भागः पुरुषः, अपरा च प्रकृतिः, अतः कारणकारणम् । तादृशमपि तदक्षरं पुरुषोत्तमस्य परब्रह्मणो धाम भवति, देहस्थानीयं गृहस्थानीयं वा । यथा जगदात्मानोऽक्षरस्य देहस्थानीयाः, तथा अक्षरमपि भगवतः । अनेन भगवत आयुः परिमाणादिशङ्कैव निवारिता । ततोऽप्यन्यद्भगवतो धाम भविष्यतीत्याशङ्क्याऽऽह—परमिति । यथाऽस्मदादीनां प्राणान्तःकरणव्यवहितानामेव देहः स्थानं भवति, न तथाऽक्षरं भगवतः, किन्तु साक्षात् । मूलभूतस्य साकारत्वायाऽऽह—पुरुषस्येति । उत्कर्षमपकर्षहेतुं च श्रुत्वा संदिहानं प्रत्याह—महात्मन इति । महांश्चाऽसावात्मेति । आत्मभूतः पुरुषो व्यापक इत्यर्थः । समुदायेनाऽपि महानुभावः, सर्वभवनसमर्थ इत्यर्थः ॥ ४१ ॥

इति श्रीभागवतसुबोधिन्यां श्रीलक्ष्मणभट्टात्मजश्रीवल्लभदीक्षितविरचितायां तृतीयस्कन्धे एकादशाध्यायविवरणम् ।

श्रीगिरिधरकृता बालप्रबोधिनी ।

तत्सर्वेषां कारणानां प्रधानादीनामपि कारणमक्षरं ब्रह्म विष्णोः परं सर्वत उत्कृष्टं धाम आहुरित्यन्वयः। विष्णुं विशिनष्टि—साक्षात्पुरुषस्येति, पुरुषोत्तमस्येत्यर्थः। तत्र हेतुमाह—महात्मन इति। यदपेक्षयाऽन्यत्र महत्त्वं नास्तीत्यर्थः ॥ ४१ ॥

इति श्रीवल्लभाचार्यवंश्यगोपालसूनुना ॥ श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा ॥ १ ॥
श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये ॥ श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी ॥ २ ॥
रचिता च तृतीयेऽत्र बन्धसर्गनिरूपणे ॥ एकादशो गतो वृत्तिं कालरूपनिरूपकः ॥ ३ ॥

हिन्दी अनुवाद

तथा इसमें बाहर चारों ओर उत्तरोत्तर दस-दस गुने सात आवरण हैं। उन सबके सहित यह जिसमें परमाणुके समान पड़ा हुआ दीखता है और जिसमें ऐसी करोड़ों ब्रह्माण्डराशियाँ हैं, वह इन प्रधानादि समस्त कारणोंका कारण अक्षर ब्रह्म कहलाता है और यही पुराणपुरुष परमात्मा श्रीविष्णुभगवान्‌का श्रेष्ठ धाम ( स्वरूप ) है ॥ ४० ॥ ४१ ॥

एकादश अध्याय समाप्त

# अथ द्वादशोऽध्यायः

## मैत्रेय उवाच

इति ते वर्णितः क्षत्तः कालाख्यः परमात्मनः। महिमा वेदगर्भोऽथ यथास्राक्षीन्निबोध मे ॥ १ ॥
ससर्जाग्रेऽन्धतामिस्रमथ तामिस्रमादिकृत्। महामोहं च मोहं च तमश्चाज्ञानवृत्तयः ॥ २ ॥
दृष्ट्वा पापीयसीं सृष्टिं नात्मानं बह्वमन्यत। भगवद्ध्यानपूतेन मनसान्यां ततोऽसृजत् ॥ ३ ॥
सनकं च सनन्दं च सनातनमथात्मभूः। सनत्कुमारं च मुनीन्निष्क्रियानूर्ध्वरेतसः ॥ ४ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका।

द्वादशे तु कुमारादिमनःसर्गासमेधनात् ॥ कायद्वैधेन यौनस्तु मनुसर्गोऽनुवर्ण्यते ॥ १ ॥

अग्र इति ब्रह्मा स्वसृष्टौ प्रथममविद्यावृत्तीः ससर्ज तत्र तमो नाम स्वरूपाप्रकाशः मोहो देहाद्यहंबुद्धिः महामोहो भोगेच्छा तामिस्रं तत्प्रतिघाते क्रोधः अंधतामिस्रं तन्नाशेऽहमेव मृतोऽस्मीति बुद्धिः। तदेवोक्तं वैष्णवे। "तमोऽविवेको मोहः स्यादंतःकरणविभ्रमः। महामोहस्तु विज्ञेयो ग्राम्यभोगसुखैषणा ॥ मरणं ह्यंधतामिस्रं तामिस्रः क्रोध उच्यते। अविद्या पंचपर्वैषा प्रादुर्भूता महात्मनः" इति ॥ पातंजलेऽप्येत एवोक्ताः "अविद्यास्मितारागद्वेषाभिनिवेशाः पंच क्लेशाः" इति। श्रीविष्णुस्वामिप्रोक्ता वा अज्ञानविपर्यासभेदभयशोकाः। तदुक्तम् "स्वादृगुत्थविपर्यास" इत्यादि ॥ २ ॥ ❀ ❀ न बह्वमन्यत नाभ्यनन्दत् ॥ ३ ॥ ❀ ❀ यद्यपि प्रतिकल्पं सनकादिसृष्टिर्नास्ति तथापि ब्राह्मसर्गत्वादिहोच्यते। वस्तुतस्तु मुख्यसर्गादय एव प्रतिकल्पं भवंति सनकादयस्तु ब्राह्मकल्पसृष्टा एवानुवर्तंते ॥ ४ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः।

असमेधननवृद्धिः। कायस्य ब्रह्मशरीरस्य द्वैधेन द्विधामवनेन योनौ योनिसंभवः ॥ (१) ॥ ते तुभ्यं महिमा प्रभावः अथ दशविधसर्गारंभे तथा मे मत्तः निबोध शृणुः ॥ १ ॥ अविद्यावृत्तयः पूर्वसिद्धा एव अथ सृष्ट्यारंभे ब्रह्मत आविर्बभूवुरित्याह। अग्रे ब्राह्मकल्पे या अज्ञानवृत्तयस्ताः ससर्ज प्रकटयामास तत्र तासु तत्प्रतिघाते भोगेच्छाप्रतिघाते। तन्नाशे भोगनाशे। स्पष्टमन्यत्। तदविद्यासर्जनं विष्णुपुराणे महात्मनो ब्राह्मणः। पातंजले योगशास्त्रे एते तमआदय एव नामांतरैरुक्ताः वस्तुतस्त्वविद्याया आवरणविक्षेपावेव द्वौ धर्मौ तावेवाविद्याऽस्मिताशब्दाभ्यामज्ञानविपर्यासशब्दाभ्यां चोच्येते। रागद्वेषाभिनिवेशास्त्वंतःकरणधर्मा अपि विक्षेपांशप्राधान्याद्विक्षेपप्रपंचतयैवोच्यंत इति। सूत्रार्थस्तु सूत्रैरेव कृतस्तथा हि "अनित्याशुचिदुःखानात्मसु नित्यशुचिदुखात्मख्यातिरविद्या १" सा मुख्या बंधहेतुः यथा "अमरा देवा" इति श्रुत्वाऽनित्येषु नित्यत्वभ्रांत्या देवत्वार्थं कर्म कृत्वा बध्यंते। एवमशुचौ स्त्रीकाये 'स्त्रियो मेध्यास्तु सर्वतः' इति श्रुत्वा तत्र शुचित्वभ्रांत्या वध्यंते। तथा परिणामदुःखे भोगे सुखत्वभ्रांत्या बध्यंते। अनात्मनि बुद्ध्यादावात्मत्वख्यात्यापि वध्यंते। एवं चतुर्विधैवाविद्या बंधमूलमित्यर्थः ॥ १ ॥ ❀ ❀ "दृग्दर्शनशक्त्योरेकात्मतेवास्मिता२" दृक्शक्तिः पुरुषो दर्शनशक्तिर्बुद्धिः शक्तिशब्दो योग्यतार्थकः भोक्तृभोग्ययोरत्यंतविविक्तयोर्दृग्दृश्ययोरविद्याकृता एकात्मता तादात्म्यमिव शब्देनाहमस्मीति भ्रांतिकृतत्वं तादात्म्यस्य द्योतयति साऽस्मितेत्यर्थः ॥ २ ॥ ❀ ❀ "सुखानुशयी रागः ३" अस्मिताकार्यं रागं निरूपयति सुखानुभवे सति स्मृत्या तज्जातीयसुखांतरे तत्साधने वा तृष्णा स रागः सुखमनुशेते विषयीकरोतीति सुखानुशयीत्यर्थः ॥ ३ ॥ ❀ ❀ "दुःखानुशयी द्वेषः ४" दुःखानुभवितुः स्मृत्या दुःखतत्साधनयोर्यः क्रोधः स द्वेष इत्यर्थः ॥ ४ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

कायद्वैधेन ब्रह्मणः स्त्रीपुरुषरूपदेहविभागेन मूले महिमा प्रभावः 'प्रभावं पौरुषं प्राहुः कालमेके यतो भयमि ति वक्ष्यमाणत्वात् अथ कालवर्णनानन्तरं यथाऽस्राक्षीत्तं प्रकारं मे मत्तस्त्वं शृणु ॥ १ ॥ ❀ ❀ तत्र पञ्चाविद्यावृत्तिषु मध्ये तत्प्रतिघाते भोगप्रतिबन्धे तन्नाशे भोगध्वंसे तदेव तमआदीनामीदृशलक्षणमेव विभ्रमो देहात्मबुद्धिः। एते एवाविद्यावृत्तिरूपाः क्लेशाः तत्रास्मिताहङ्कारस्य सूक्ष्मावस्था लक्षणतः किंचिद्भेदमालक्ष्य तत्पञ्चकमुक्तं वेत्युक्तं स्वादृक् स्वरूपाज्ञानं समग्रपद्यं प्रथम-

टीकायां द्रष्टव्यम् ॥ २ ॥ ❀ ❀ दृष्ट्वेति युग्मकम् । यद्यपि प्रतिकल्पं सनकादिसृष्टिर्नास्ति किन्तु रात्रौ शयिष्यमाणे ब्रह्मणि तेषां प्रवेशः पुनः सृष्टावाविर्भावः तथापि ब्राह्मकल्पसृष्टिकथनादिह सृष्टिप्रकरणे मैत्रेयेण सनकादिसृष्टिरुच्यते तथोक्तमभिज्ञैः 'आविर्भूयादिमे कल्पे ब्राह्म एव चतुस्सनः । नारदश्चानुवर्त्तेते कल्पेषु सकलेष्वपी'ति यथा पञ्चपर्वाऽविद्या तथा विद्यापि सांख्ययोगवैराग्यतपोभक्तिलक्षणवृत्तिभेदेन पञ्चपर्वा । तत्र यथाक्रमं सांख्यादिरूपतया चतुर्णां सनकादीनामाविर्भावः शुद्धभक्तिरूपेण तु श्रीनारदस्येति ज्ञेयम् ॥ ३ ॥ ❀ ❀ तत्सृष्टिकरणमनिच्छायां हेतुर्मोक्षधर्माण इति । ननु मन्वादीनामपि मोक्षधर्मित्वे सृष्टिहेतुत्वं श्रूयते तत्राह । वासुदेवपरायणा इति तथाच देवर्षिभूतापृनृणां पितॄणामित्यादिप्रामाण्यात् न तत्र तदधिकार इति भावः ॥ ४ ॥

## श्रीमद्वीरराघवव्याख्या

एवं कालसर्गं सप्रपञ्चमभिधाय प्रकृतमनुसर्गमेव विशेषेण प्रतिपिपादयिषुस्तमेवानुसर्गकथनं वृत्तकथनपूर्वकं प्रतिजानीते । इतीति । हे क्षत्तः । परमात्मनः कालाख्यो महिमा ते तुभ्यमित्युक्तप्रकारेण वर्णितः अथानन्तरं वेदगर्भः ब्रह्मा यथाऽस्राक्षीत्तत्प्रकारं वर्ण्यमानं मे मत्तः निबोध शृणु ॥ १ ॥ ❀ ❀ प्रथममज्ञानपञ्चपर्वसृष्टिमाह । ससर्जेति । अग्रे व्यष्टिसृष्ट्यादावादिकृद् ब्रह्माऽन्धतामिस्रादीनि ससर्ज एता अज्ञानवृत्तयः इह वृक्षगुल्मलतावीरुत्तृणगतपञ्चपर्वा ज्ञानवृत्तयः तमोमोहादय इति केचित् जाग्रत्स्वप्नसुषुप्तिमूर्च्छामरणेष्वज्ञानवृत्तय इत्यपरे पातञ्जलोक्ता अविद्यास्मितारागद्वेषाभिनिवेशा इत्यन्ये तथैवोक्तं वैष्णवे तमोऽविवेको मोहः स्यादन्तःकरणविभ्रमः । महामोहस्तु विज्ञेयो ग्राम्यभोगसुखैषणा । मरणं ह्यन्धतामिस्रस्तामिस्रः क्रोधः उच्यते । अविद्या पञ्चपर्वैषा प्रादुर्भूता महात्मनः ॥ इति तमः स्वरूपाप्रकाशकः (१) मोहो देहादिष्वहंबुद्धिः (२) महामोहो विषयभोगेच्छा (३) तामिस्रस्तत्प्रतिरोधे क्रोधः (४) अन्धतामिस्रस्तन्नाशेऽहमेव विनष्टोऽस्मीति बुद्धिः उत्पथग्राहिणश्चेत्यज्ञाने ज्ञानमानिनः अहंकृता अहंमाना अवेदिनः इति विशेषेण उक्तज्ञानवृत्तय इति केचित् अवेदिनः स्वरूपानभिज्ञाः अहंकृता देहेऽहंबुद्धिमन्तः अहंमानाः स्वतन्त्राभिमानवन्तः अन्यत्स्फुटम् ॥ २ ॥ ❀ ❀ पापीयसीनामज्ञानवृत्तीनां निरयसाधनत्वेन पापीयस्त्वात्तत्सृष्टेः पापीयस्त्वं सृष्टिं दृष्ट्वा आत्मानं पापीयः स्रष्टारं स्वात्मानं न बहुमन्यत न समीचीनममन्यतेत्यर्थः । तत आत्मनोऽबहुमानानन्तरं भगवतो ध्यानेन पूतं यन्मनस्तेनान्यानसृजत् ॥ ३ ॥ ❀ ❀ तानाह । सनकं चेति । आत्मभूर्ब्रह्मा सनकादीन् मुनीन् शुभाश्रयसंशीलनपरान् निष्क्रियान्निवृत्तिधर्मपरायणानूर्ध्वरेतसः जितेन्द्रियानसृजत् ॥ ४ ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

अत्र हरेरानन्त्यज्ञानं यथा प्रीतिजनकत्वेन मुक्तिसाधनं तथा ब्रह्मादितारतम्यज्ञानं चेत्येतदर्थं सृष्टिप्रकारः कथ्यते । तत्राविद्याया हेयेषु प्राथम्यात्तत्सृष्टिं वक्तुं वृत्तमनूद्य वक्तव्यार्थं प्रतिजानीते इतीति ॥ १ ॥ ❀ ❀ आदिकृद् ब्रह्मा अग्रे तमः ससर्जेत्यन्वयः । अथ मोहादिकमत्रैकवचनं न यथातारतम्येन सृष्टिरिति ज्ञापनायेति ज्ञातव्यम् । क्रमस्तु

तमस्तु शार्वरं प्रोक्तं मोहश्चैव विपर्ययः । तदाग्रहो महामोहस्तामिस्रः क्रोध उच्यते ॥
मरणं त्वन्धतामिस्रमविद्या पञ्चपर्विका ।

इत्युक्त एव 'तमोऽज्ञानं विपर्यासो मोहोऽन्ये तु तदाग्रहा' इति वचनात् एषां मूलकारणमाह । अज्ञानेति । अज्ञानाद् वृत्तिर्येषां ते तथा ॥ २ ॥ ❀ ❀ अविद्या हेयेत्याशयेनाह । दृष्ट्वेति । ततस्तर्हि सृष्टिर्निवृत्ता किं नेत्याह भगवद्ध्यानेति । अनेन सर्वप्रायश्चित्तरूपोपायः भगवद्ध्यानमिति सूचितम् ॥ ३ ॥ ❀ ❀ आत्मभूर्ब्रह्मा वसिष्ठादिव्यावृत्त्यर्थं निष्क्रियानिति परमहंसान् ॥ ४ ॥

## श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

दृष्ट्वेति युग्मकम् । असृजत् ब्राह्मकल्पसृष्टानेव तान् त्रैलोक्यसृष्टौ तत्र प्रकटयामासेत्यर्थः ॥ १—४ ॥

## श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

सनकादिमरीच्यादिधर्म्माधर्म्मादिसृग्विधिः । द्वादशे सर्गवृद्ध्यर्थं मिथुनं देहतोऽसृजत् ॥

महिमा प्रभावः ॥ १ ॥ ❀ ❀ अविद्यावृत्तयः पूर्व्वसिद्धा एव सृष्ट्यारम्भे ब्रह्मतः सकाशात् तमआदिरूपेणाविर्ब्भूवुरित्याह । ससर्जेति । तत्र तमो नाम जीवस्य स्वरूपाप्रकाशः, मोहो देहादावहन्तारोपः, महामोहो भोक्तव्यविषयेषु ममत्वारोपः । तामिस्रः भोगप्रतिघाते सत्यन्तःकरणधर्म्मस्य क्रोधस्य स्वीकारः । ततश्चान्धतामिस्रः क्रोधतन्मयीभावरूपा मूर्च्छैव मरणम् । एते जीवस्यासन्तोऽप्यविद्यासृष्टाः । यथोक्तं वैष्णवे "तमोऽविवेको मोहः स्यादन्तःकरणविभ्रमः । महामोहस्तु विज्ञेयो ग्राम्यभोगसुखैषणा ॥ मरणं ह्यन्धतामिस्रं तामिस्रः क्रोध उच्यते । अविद्या पञ्चपर्व्वैषा प्रादुर्भूता महात्मन" इति पातञ्जलेऽप्येत एवोक्ताः अविद्यास्मितारागद्वेषाभिनिवेशाः । श्रीविष्णुस्वामिप्रोक्ता अज्ञानविपर्य्यासभेदभयशोकाः वस्तुतस्त्वविद्याया आवरणविक्षेपावेव

द्वौ धर्म्मौ तावेव अविद्यासिताशब्दाभ्यामज्ञानविपर्य्यासशब्दाभ्याञ्चोच्येते । रागद्वेषाभिनिवेशास्त्वन्तःकरणधर्म्मा अपि विक्षेपांशप्राधान्याद्विक्षेपप्रपञ्चतयैवोच्यन्ते इति ज्ञेयम् ॥ २ ॥ ❀ ❀ अविद्याया निवर्तिका विद्यैवेति ज्ञापयितुं विद्यावृत्तयोऽपि तस्मादेव सनकादिरूपेणाविर्बभूवुरित्याह दृष्ट्वेत्यादिना ॥ ३ ॥ ❀ ❀ महाकल्पायुषां ब्रह्मादीनां जीवतामेव प्रथमपरार्द्धान्ते परमेश्वरे प्रवेशात् पाद्मे कल्पे यथा ब्रह्मा पद्मादुदपद्यत तथा ब्रह्मापि सनकादीन् पुनरुत्पादयामासेत्याह । सनकञ्चेति । सांख्ययोगवैराग्यतपांसीति चत्वार्य्येव विद्यायाश्चतस्रो वृत्तयस्तासामेव सनकादिचतुष्टयरूपेणाविर्भावः । किञ्च भक्त्या विना विद्याया वैफल्यात्तद्वृत्तिषु तपआदिष्वपि भक्तिर्गुणीभूता सती तिष्ठेदिति सनकादयोऽपि भक्तिमन्त एव द्रष्टाः । मुख्यभक्तेराविर्भावस्तु नारदरूपेणाग्रे वक्ष्यते ॥ ४ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

उक्तानुवादपूर्वकं पुनश्चतुराननकृतां सृष्टिं वक्तुं प्रतिजानीते इतीति ॥ १ ॥ ❀ ❀ आदिकृत् ब्रह्मा अग्रे अन्धतामिस्रादीन् ससर्ज्ज । अज्ञानवृत्तयः अज्ञानस्यानादित्वादविवेकस्य वृत्तयः, तत्र तमो नाम आत्मानात्मपरमात्मस्वरूपाद्यविवेकः, मोहो योग्यायोग्ययोर्वैपरीत्येन मनसः प्रवृत्तिः, महामोहो ग्राम्यभोगेच्छा, तामिस्रः तत्प्रतिघाते क्रोधः, अन्धतामिस्रः तन्नाशेऽहमेव मृत इति । बुद्धिः तथोक्तं वैष्णवे "तमोऽविवेको मोहः स्यादन्तःकरणविभ्रमः । महामोहस्तु विज्ञेयो ग्राम्यभोगसुखैषणा । मरणं ह्यन्धतामिस्रस्तामिस्रः क्रोध उच्यते । अविद्या पञ्चपर्वैषा प्रादुर्भूता महात्मन" इति ॥ २ ॥ ❀ ❀ आत्मानं तादृशसृष्टिकर्तारं स्वात्मानं न बहु अमन्यत न समीचीनममन्यत तदनन्तरं भगवद्ध्यानपूतेनेत्यनेन भगवन्तं तमेव पुत्रत्वेन प्रार्थयामासेति गम्यते नैष्ठिकान् प्रवृत्तिधर्मवर्जितान् यद्यपि प्रतिकल्पं सनकादिसृष्टिर्नास्ति तथा ब्राह्मसर्गत्वादत्रोच्यते वस्तुतस्तु प्रतिकल्पं मुख्यसर्गादयो भवन्ति सनकादयस्तु ब्रह्मकल्पाविर्भूता एवानुवर्तन्ते ॥ ३ ॥ ४ ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

साधारणानां बुद्धिर्या द्वादशे सा निरूप्यते । अष्टधा सा सर्गरूपा श्रेष्ठा चोत्तरतः परा ॥ १ ॥
तामिस्रादिप्रकारेण प्रथमा प्राकृती मतिः । ज्ञाननिष्ठा द्वितीया स्यात् सदोषा सा प्रकीर्तिता ॥ २ ॥
दोषोऽप्यत्र हरेः सङ्गात्, ज्ञानादप्यधिका मता । यथा हरस्ततः श्रेष्ठा कृष्णस्याऽज्ञानुपालिनी ॥ ३ ॥
सदोषा साऽपि, तस्यास्तु दोषे न प्रविशेद्धरिः । ततो हीनैव सा, मध्ये लोके व्यामोहिका परा ॥ ४ ॥
ततो वेदे विनिष्णाता तदर्थे कर्मणि स्थिता । ततः श्रेष्ठा वेद एव योगोपासनया युता ॥ ५ ॥
सर्वतोऽप्युत्तमा या तु क्रीडेच्छापूरिका हरेः । एवमष्टविधा बुद्धिः सर्वेषां सर्गयोगिनी ॥ ६ ॥

एवं कालकृतं निरूप्य, ब्रह्मकृतं जगदष्टधा निरूपयिष्यन्, पूर्वोक्तमुपसंहरति तच्छेपत्वाभावाय—इति ते वर्णित इति । यथा ब्रह्मा भगवतो गुणावतारः, एवं कालोऽपि भगवतो महिमा गुणविशेषः । तत्र लोकप्रसिद्धिर्गौणी, वस्तुयाथात्म्यमेव मुख्यमिति ज्ञापयितुं कालाख्य इत्युक्तम् । अक्षरादेर्धर्मत्वं वारयति—परमात्मन इति । पुरुषोत्तमस्य । अथ भिन्नप्रकारेण कालसृष्टदशधासृष्टेः । वेदगर्भ इति वैलक्षण्ये हेतुः ।

वेदानुसारिणी सृष्टिर्ब्रह्मणैव विनिर्मिता । कालानुसारिणी कालात् पुष्ट्या सा भगवत्कृता ॥ १ ॥

तत्राऽपि सृष्टिप्रकारः कठिन इति भिन्नप्रकारत्वाद्विवेकार्थं सावधानतया श्रोतव्यमित्याह—निबोधेति ॥ १ ॥ ❀ ❀ तत्र प्रथमं पञ्चपर्वाविद्याधिष्ठातृदेवतानां सृष्टिमाह—ससर्जाऽग्र इति । तत्राऽपि जातिहीना तामसी वृत्तिः, तदधिष्ठातृदेवता वा; सा प्रथमा । तामाह—ससर्जाऽग्रे इति । अन्धतामिस्रमग्रे ससर्ज ।

विषयः पुरुषश्चेति ज्ञाने कोटिद्वयं मतम् । पुरुषे बोधकं चक्षुः, विषये व्यापिका प्रभा । अग्रे तदुभयाभावस्तेनाऽन्धत्वं तमस्तथा ॥१॥

तदनन्तरं तामिस्रम्, विषयेष्वेव मोहो, न तु स्वात्मनि । आदिकृदिति प्रथमत एव जगत्कर्ता । स चेदेवं न सृजेत्तदा जगदेव न स्यात् ।

आत्मानं वस्तुरूपं च यदि जानाति सर्वथा । अत्युत्कटश्चेत्कामः स्यात्तदा सृष्टिर्न चाऽन्यथा । न तच्छक्यं ब्रह्मणः स्याद्धरेरेव तथा भवेत् ॥१॥

तदनन्तरं महामोहः, वस्तुयाथात्म्यं पश्यन्नपि तस्मिन् विषये स्वात्मैक्यबुद्धिः, यथा देहोऽहमिति । मोहस्तु ममेति । तमस्त्वज्ञानम्, कोऽहमिति न वेद । पञ्चाऽप्येता अज्ञानस्यैव वृत्तयः । अज्ञानं भगवच्छक्तिर्मायाकार्यमिहोच्यते । चतुर्मुखे प्रविष्टा सा पञ्चधा निर्गता बहिः ॥ २ ॥ ❀ ❀ ताः पञ्चविधा अपि देवताः सृष्टा दृष्ट्वा जगत्कर्तृत्वेन ता न विनियुक्ताः, किन्तु मयाऽप्येतत्साधु न कृतमिति स्वात्मानमेव निन्दितवानित्याह—दृष्ट्वा पापीयसीमिति । पापेनैवैतादृशी सृष्टिरुत्पद्यते । ततो भगवद्ध्यानमपराधीनवृत्त्यर्थं कृतवान् । तदपि ध्यानं तावज्जातम्, यावता मनः सर्वदा शुद्धं भवेत्, यथाऽग्रे सृज्यमानेषु पूर्वसृष्टिर्न

प्रविशति। तदाह—भगवद्ध्यानपूतेनेति। अन्यान् पूर्वस्माद्विलक्षणान्॥ ३॥ ❀ ❀ एते चत्वारो जाताः। अनेनैते कृतयुगस्थानीयाः, पूर्वे कलिस्थानीया इति। अथाऽऽत्मभूरिति। तेषामपि चतुर्णां मध्ये सनत्कुमारो महान्, भगवत्पौत्रः। अस्य सृष्टौ भगवत्पौत्रभावो मुख्य इत्यात्मभूरित्युक्तम्। आत्मा भगवान्। सर्वेषां गुणत्रयमाह—मुनीन निष्क्रियानूर्ध्वरेतस इति। तेषां कर्तव्यत्वेन मननमेवैकं सिद्धम्। उत्तरकाण्डार्थ एव तेषां कर्तव्यः, न पूर्वकाण्डार्थ इत्याह—निष्क्रियानिति। वेदमधीत्य, वेदार्थं बुद्ध्वाऽपि, बहिरध्यासशून्या मानसप्रधानाः। केवलमनसैव यत्सिध्यति, तदेव कुर्वन्तीत्यर्थः। ननु सृष्टिमपि कुतो न मनसा कुर्वन्ति ? तत्राऽऽह—ऊर्ध्वरेतस इति। न मनसाऽपि रेतोद्वारे सृष्टिः। परं तद्रेतो मानसम्, तदप्यूर्ध्वं भगवद्गामि, न त्वधो हीनजनकम्॥ ४॥

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

अथ द्वादशाध्यायं विवरिषवः सङ्गतिबोधनायाहुः—साधारणानामित्यादि। तथा चाऽवसरः शास्त्रसङ्गतिरित्यर्थः। प्रश्नविचारे तु शुकोक्तौ 'यस्मिन् कर्मसमावायः (२-८-१४)' इति श्लोकस्योत्तरम्, मैत्रेयोक्तौ तु विभूतिप्रश्नस्योत्तरमिति तद्बोधयितुं विभागमुखेनाऽऽहुः—अष्टधेत्यादि। अत्र ब्रह्मकृतत्वं सर्गरूपत्वं चोभयोर्यथायथमुत्तरम्। तस्मात् परा अतिरिक्ता, शास्त्रसङ्गतिसम्पादकत्वात् श्रेष्ठा च। तत्र द्वितीयं निबन्धे स्फुटम्। अतस्तत्सङ्गतिरर्थादेवावगन्तव्येत्यर्थः। अत्र बुद्धयः सदेवता उत्पन्ना इति बोधनाय तासां स्वरूपमाहुः—तामित्रेत्यादि। ज्ञाननिष्ठेति। सनकादिसृष्टिराज्ञाभङ्गकरणेन सदोषेति तद्देवताका साहङ्कारा या ज्ञाननिष्ठा, सा द्वितीया बुद्धिः। एवमग्रेऽपि ज्ञातव्यम्। अत्र ब्रह्मणि। ज्ञानादप्यधिका बुद्धिस्तृतीया मता, यथा हरः। तेन हरदेवताका भगवत्सेवाद्यभिमानरूपा तृतीया। ततस्तदनन्तरं कृष्णस्याऽऽज्ञानुपालिनो दशप्रजापत्यादिदेवताका चतुर्थी। सापि सदोषा। तस्यास्तु दोषे कामरूपे हरिर्न प्रविशेत्, अर्थाद्धृदि। ततो हीनैव सा। तथा चाऽऽशिषो हृदि सङ्कल्प्य भगवदाज्ञानुपालिनी नानाप्रकारा बुद्धिश्चतुर्थीत्यर्थः। परा पञ्चमी लोकव्यामोहिका। मध्ये लौकिकगद्यपद्यादिसरस्वतीविषया तद्देवताका पञ्चमीत्यर्थः। ततो वेदे विनिष्णाता वेदाभ्यासपरा वेददेवताका षष्ठी। ततः श्रेष्ठा वेदार्थभूते स्थिता तत्तत्कर्मदेवताका सप्तमी। तस्याः स्वरूपमाहुः—वेद एवेत्यादि। योगेन उपासनया च युता वेदार्थविषयेति। या तु हरेः क्रीडेच्छापूरिका मनुदेवताका सा सर्वतोऽप्युत्तमा उत्तरावधिरूपा अष्टमी। एवमनेन देवतोत्पत्तिरूपेण सर्वेषां व्यष्टीनामस्मदादीनां सर्गयोगिनी 'तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च' इति श्रुतेर्भूतमात्रेन्द्रियधीजन्मोपयोगिनी समष्टिरूपेणाऽष्टविधा बुद्धिरुत्पन्नेत्यर्थः। एवमध्यायार्थं संगृह्य व्याकुर्वते—एवमित्यादि।

एतेन भगवल्लीलात्वं विभूतिरूपत्वं चोक्तवक्ष्यमाणयोः सूचयतीत्याशयेनाऽऽहुः—यथेत्यादि। ननु लोके कालो द्रव्यत्वेन प्रसिद्धः कथंगुण इत्यत आहुः—तत्रेत्यादि। पुष्ट्या सा भगवत्कृतेति। सा उभयविधाऽपि पुष्ट्या अनुग्रहेण भगवत्कृता। तथा च, परम्परालीलारूपेत्यर्थः॥ १॥ ❀ ❀ ससर्जेत्यत्र। जातिहीनेति। अभावरूपत्वाज्जातिहीना निकृष्टस्वभावा चेत्यर्थः। प्रायपाठमालम्ब्य पक्षान्तरमाहुः—देवता वेति। अन्धतामिस्रयोगप्रयोजकं रूपमाहुः—विषय इत्यादिसार्धेन। तत्र वैष्णवे 'तमोऽविवेको मोहः स्यादन्तःकरणविभ्रमः। महामोहस्तु विज्ञेयो ग्राम्यभोगसुखैषणा॥ मरणं ह्यन्धतामिस्रं तामिस्रं क्रोध उच्यते।' इत्युक्तम्। पातञ्जलदर्शने च—'अविद्याऽस्मितारागद्वेषाभिनिवेशाः पञ्च क्लेशाः' इत्युक्तम्। तदेव व्यासपादैस्तामिस्रादिशब्दप्रयोगेण विवृतम्। विष्णुस्वामिना तु—'स्वादृगुत्थविपर्यासभवभेदजभीशुचः। यन्मायया जुषन्नास्ते तमिमं नृहरिं भजे' इति श्लोके अज्ञानविपर्यासभेदभयशोका उक्ताः। अत्र तु वैष्णवात् क्रमभेदः। कारिकार्थस्तु—ज्ञाने। लौकिके विषये। पुरुषश्चेति। प्रमेयप्रमातृभेदेन कोटिद्वयं मतम्। तत्रापि पुरुषे बोधकं करणभूतं चक्षुरपेक्षितम्। विषये व्यापिका स्वसंयोगेन सहकारिणी प्रभा आलोकरूपाऽपेक्षिता। अग्रे तयोः करणसहकारिणोरभावात्तेनाऽभावेन पुरुषेऽन्धत्वं विषये तमस्तथा। अभावप्रकारेणेदं द्वयमन्धन्तमःशब्दप्रयोजकमित्यर्थः। तथा च करणालोकाभावे भावहेतुका यावद्ग्राह्यविषयज्ञानाभावाकारा वृत्तिरन्धन्तम इति योगतस्तत्स्वरूपं सिध्यति। इयं वैष्णवे अविवेकपदेनोक्ता। (?) तमस्त्वेन। तामिस्रत्वं विषयमोहस्य कथमित्यतस्तद्विवृण्वन्तस्तत्कर(णा)वश्यकत्वे हेतुमाहुः—आत्मानमित्यादि। तथा च, स्वस्वरूपविषयस्वरूपयाथात्म्यज्ञाने सत्यपि या तदुभययाथात्म्यमात्राय एकाऽप्युत्कटकामाकारा वृत्तिः सा तामिस्रमित्यर्थः। ननु भगवानिव चेत् कुर्यात् कुतो न स्यात्? तत्राहुः—नेत्यादि। एता इति। आवरणविक्षेपरूपाः। अमित्रशब्दवदज्ञानपदं ज्ञानविरुद्धतत्सदृशभावपदार्थवाचकमित्यभिप्रेत्य तत्स्वरूपमाहुः—अज्ञानमित्यादि। तथा च, आवरणविक्षेपशक्त्यात्मिका अविद्यापरनामिका 'विद्याविद्ये मम तनू विद्ध्युद्धव! शरीरिणाम्। मोक्षबन्धकरी आद्ये मायया मे विनिर्मिते॥' इति वाक्यसिद्धा सा तथेत्यर्थः॥ २॥

### श्रीगिरिधरकृता बालप्रबोधिनी

सर्गस्तु सनकादीनां ब्रह्मणश्च मनोस्तथा। मनःकायविभेदेन द्वादशे विनिरूप्यते॥ १॥

कृतं कालस्वरूपवर्णनमुपसंहरन् सृष्ट्यंतरं कथयंस्तच्छ्रवणे सावधानीकरोति—इतीति। स्नेहेन सम्बोधयति—क्षत्तरिति। परमात्मनः कालाख्यो महिमा प्रभावविशेषस्ते तुभ्यमिति उक्तप्रकारेण वर्णितः। अथानन्तरं वेदगर्भो ब्रह्मा यथा प्रजा अस्राक्षीत्तत्प्रकारं कथ्यमानं मे मत्तस्त्वं निबोध सावधानतया शृणु॥ १॥ ❀ ❀ ससर्जेति आदिकृत्प्रजास्रष्टा ब्रह्मा अग्रे स्वसृष्टौ प्रथममन्धतामिस्रादिरूपाः पञ्चाज्ञानवृत्तयः अविद्याया वृत्तीः ससर्जेत्यन्वयः। तत्र तमो नाम स्वरूपाप्रकाशः, मोहो देहेन्द्रियान्तःकरणप्राणाद्यहम्बुद्धिः, महामोहो विषयभोगेच्छा, तामिस्रं तत्प्रतिघाते क्रोधः, अन्धतामिस्रं विषयविनाशेऽहमेव मृत इति बुद्धिः। तदेवोक्तं वैष्णवे 'तमो विवेको मोहः स्यादन्तःकरणविभ्रमः। महामोहस्तु विज्ञेयो ग्राम्यभोगसुखैषणा॥ मरणं त्वन्धतामिस्रं तामिस्रः क्रोध उच्यते। अविद्या पञ्चपर्वैषा प्रादुर्भूता महात्मनः' इति। पातञ्जलेप्येता एवोक्ता अविद्याऽस्मितारागद्वेषाभिनिवेशाः पञ्च क्लेशा' इति। श्रीविष्णुस्वामिप्रोक्ता वा अज्ञानविपर्यासभेदभयशोकाः। तदुक्तं 'स्यादृगुत्थविपर्यासभवभेदजभीशुचः' इत्यादि॥ २॥ ❀ ❀ अज्ञानवृत्तीनां निरयसाधनत्वेन पापीयस्त्वात् तत्सर्गस्य च स्वनिष्ठदोषनिबन्धनत्वाच्च तासां पापीयसीं सृष्टिं दृष्ट्वा तत्स्रष्टारमात्मानं बहु समीचीनं नामन्यत, ततस्तदनन्तरं। स्वदोषनिवृत्त्यर्थं कृतं यद्भगवतो ध्यानं तेन पूतेन विशुद्धेन मनसा अन्यानसृजदित्यन्वयः॥ ३॥ ❀ ❀ तानेव दर्शयति—सनकं चेति। आत्मभूर्ब्रह्मा अथानन्तरं सनकादीनसृजदित्यन्वयः। प्रतिकल्पं मुख्यसर्गादय एव भवन्ति, सनकादयस्तु प्रथमकल्पे सृष्टा एवानुवर्तन्ते इति ज्ञेयम्। भगवद्ध्यानोत्पन्नत्वात्तेऽत्युत्तमा जाता इत्याशयेन तान्विशिनष्टि—मुनीनिति, मननशीलान् विवेकिन इत्यर्थः। निष्क्रियानिति, धर्मार्थकामरूपत्रिवर्गसाधनव्यापाररहितानित्यर्थः। ऊर्ध्वरेतस इति, निर्जितेन्द्रियानित्यर्थः॥ ४॥

### हिन्दी अनुवाद

श्रीमैत्रेयजीने कहा—विदुरजी! यहाँतक मैंने आपको भगवान्‌की कालरूप महिमा सुनायी। अब जिस प्रकार ब्रह्माजीने जगत्‌की रचना की, वह सुनिये॥ १॥ ❀ ❀ सबसे पहले उन्होंने अज्ञानकी पाँच वृत्तियाँ—तम (अविद्या), मोह (अस्मिता), महामोह (राग), तामिस्र (द्वेष) और अन्धतामिस्र (अभिनिवेश) रचीं॥ २॥ ❀ ❀ किन्तु इस अत्यन्त पापमयी सृष्टिको देखकर उन्हें प्रसन्नता नहीं हुई। तब उन्होंने अपने मनको भगवान्‌के ध्यानसे पवित्र कर उससे दूसरी सृष्टि रची॥ ३॥ ❀ ❀ इस बार ब्रह्माजीने सनक, सनन्दन, सनातन और सनत्कुमार—ये चार निवृत्तिपरायण ऊर्ध्वरेता मुनि उत्पन्न किये॥ ४॥

**तान् बभाषे स्वभूः पुत्रान् प्रजाः सृजत पुत्रकाः। तन्नैच्छन्मोक्षधर्माणो वासुदेवपरायणाः॥ ५॥**
**सोऽवध्यातः सुतैरेवं प्रत्याख्यातानुशासनैः। क्रोधं दुर्विषहं जातं नियन्तुमुपचक्रमे॥ ६॥**
**धिया निगृह्यमाणोऽपि भ्रुवोर्मध्यात्प्रजापतेः। सद्योऽजायत तन्मन्युः[1] कुमारो नीललोहितः॥ ७॥**
**स वै रुरोद देवानां पूर्वजो भगवान् भवः। नामानि कुरु मे धातः स्थानानि च जगद्गुरो॥ ८॥**

### श्रीधरस्वामिविरचिता भावार्थदीपिका

स्वभूर्ब्रह्मा॥ ५॥ ❀ ❀ अवध्यातोऽवज्ञातः। प्रत्याख्यातमनंगीकृतमनुशासनं यैः॥ ६॥ ❀ ❀ स चासौ मन्युश्च तन्मन्युः॥ ७॥ ८॥ ९॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

"स्वरसवाही विदुषोपि तथा रूढोऽभिनिवेशः ५" मूर्खस्य विदुषो वा जंतुमात्रस्य यो मरणत्रासः सोभिनिवेशः यथा मूर्खस्याहं सदा भूयासमिति रूढत्रासस्तथा विदुषोऽपि दृश्यते यतः स्वरसवाही सः पूर्वजन्मसुकृतमरणदुःखानुभवजन्यवासनासंघः स्वरसस्तेन वहति प्रवहतीति स्वरसवाही। दृश्यते हि जातमात्रबालस्य मरणाद्भयं तच्च मरणस्मरणं विना नोपपद्यत इत्यर्थः॥ ५॥ ❀ ❀ तदुक्तं प्रथमस्कंधे आदिना भवभेदजभीशुचः "यन्मायया जुषन्नास्ते तं नृसिंहमहं भजे" इति पादत्रयग्रहः॥ २॥ अविद्यानिवर्त्तिका विद्यैवेति द्योतयितुं विद्यावृत्तयोऽपि तस्मादेव सनकादिरूपेण प्रादुर्बभूवुरित्याह—दृष्ट्वेति। ततोऽज्ञानवृत्त्युत्पत्तेरुत्तरं नाभ्यनंददुत्कृष्टं नामन्यत॥ ३॥ ब्राह्मसर्गत्वाद्ब्रह्मसंबंधिसर्गत्वात्। इह पाद्मे महाकल्पायुषां जीवतामेव ब्रह्मादीनां परमेश्वरे प्रवेशात्। पाद्मे कल्पे यथा ब्रह्मा पद्मादुदपद्यत तथा ब्रह्मापि सनकादीनुत्पादयामासेत्यभिप्रेत्यैव श्रीस्वामिनोक्तं यद्यपीत्यादि। अतः परं ब्राह्मसर्गत्वादिति सांख्ययोगवैराग्यतपांसीति चत्वार्येव विद्यायाश्चतस्रो वृत्तयस्तासामेव सनकादिचतुष्टयरूपेणाविर्भावः। किं च भक्त्या विना विद्याया वैफल्यात्तद्वृत्तिषु तपआदिष्वपि भक्तिर्गुणभूता सती तिष्ठेदिति सनकादयोऽपि भक्तिमंत एव सृष्टाः। मुख्यभक्तेराविर्भावं तु नारदरूपेणाग्रे वक्ष्यते॥ ४॥ तान् सनकादीन्। स्वशब्देनात्मा गृह्यते तेनात्म-

---

१. प्रा० पा०—तन्मन्योः।

भूरित्यर्थः। आत्मा च परमेश्वर एव "तत्त्वमसि" इत्यादेः। तत् प्रश्नोत्पादनम्। अनिच्छायां हेतुः मोक्षधर्माण इति ननु प्रजापतयोपि मोक्षधर्माणो दृश्यंते तत्राह वासुदेवेति। "देवर्षिभूताप्तनृणां पितॄणां न किंकरो नायमृणी च राजन्। सर्वात्मना यः शरणं शरण्यं गतो मुकुंदं परिहृत्य कर्त्रम्" इत्युक्तेः। ज्ञानयोगः खल्वाविद्यककर्मयोगनिरासक एवेति द्योतितम्॥ ५॥ स ब्रह्मा सुतैः सनकाद्यैः नियंतुं निरोद्धुम्॥ ६॥ ❀ ❀ अविद्याया निवर्त्तिका यथा विद्या तथा विद्याया अपि निवर्त्तिका क्वचिदविद्या स्यादिति दर्शयितुं विद्योदयवत्यपि ब्रह्मणि अविद्यावृत्तिमुख्यस्य तामिस्राभिधानस्य क्रोधस्य रुद्ररूपेणाविर्भावमाह धियेति। तस्य प्रजापतेर्मन्युरिति "मन्युर्दैन्ये युधि क्रुधि" इति कोशात्। निगृह्यमाणो निरुध्यमानः। सद्यो नियमनात्पूर्वक्षणमेव क्रोधसमये भ्रुकुटी नीलशिरा नेत्रं च लोहितं स्यादित्यतो नीललोहित इति 'कारणगुणाः कार्ये समवयंति' इति न्यायात्। अनेन 'सद्यो जातो नीललोहित' इति श्रौतं नाम द्वयं निरुक्तं "सद्योजातं प्रपद्यामि शंकरं लीललोहितम्" इति श्रुतेः॥ ७॥ ❀ ❀ लोके बालस्वभावप्रवर्त्तनाय तस्य तं वक्ति—स वा इति। देवानामिंद्रादीनाम्। धातः पितः। न केवलं मम किं तु सर्वस्येत्याह जगद्गुरो इति। एतेन नामस्थानयोः करणे पितुरेवाधिकार इति ध्वनितम्॥ ८॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

स ब्रह्मा एवं निवृत्ताधिकारतया॥ ६॥ ❀ ❀ तन्मन्युः जातक्रोधः॥ ७॥ ❀ ❀ देवानां देवेभ्यः स कुमारः॥ ८॥

### श्रीमद्वीरराघवव्याख्या

स्वभूर्ब्रह्मा तान् सनकादीन् पुत्रान् बभाषे। भाषणमेवाह हे पुत्रकाः प्रजाः सृजत इति। ते सनकादयः मोक्षधर्माणः निवृत्तिधर्मनिष्ठाः वासुदेवः परमयनं प्राप्यं प्रापकमाधारश्च येषां ते तथोक्ताः सन्तो नैच्छन् पित्रानुज्ञावां सृष्टिं कर्तुं नैच्छन्नित्यर्थः॥ ५॥ ❀ ❀ सः ब्रह्मा प्रत्याख्यातमनङ्गीकृतमनुशासनमाज्ञा यैस्तैः सुतैरेवमवध्यातः अवज्ञातः दुर्विषहं दुस्सहं जातमुत्पन्नं क्रोधं नियन्तुमुपचक्रमे उपक्रान्तवान्॥ ६॥ ❀ ❀ धिया बुद्ध्या निगृह्यमाणोऽपि विष्टभ्यमानोऽपि तन्मन्युः स चासौ मन्युः क्रोधः प्रजापतेर्ब्रह्मणः भ्रुवोर्मध्यान्नीललोहितः कुमारः अजायत निगृह्यमाणोऽप्यनिगृहीतो भ्रूमध्यमागत्य तस्मान्नीललोहितकुमाररूपेणाजायतेत्यर्थः॥ ७॥ ❀ ❀ कोऽसौ नीललोहितः कुमारो यो जातः भ्रुवोर्मध्याज्जातश्च किमकरोदित्यत आह। स वा इत्यादिना। एवमात्मभुवा आदिष्टः परिक्रम्य गिरां पतिमित्यन्तेन देवानां पूर्वजो भगवान् भवः सदाशिवः स च जातो रुरोद रोदनप्रकारमेवाह। नामानीति॥ ८॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

ऊर्ध्वरेतस इत्यनेनैव स्वाज्ञाविमुखा एत इति जानन्नपि ब्रह्मा सृष्ट्यन्तरकरणाशयो वक्ति। तानिति। स्वो विष्णुस्तस्मादुद्भूतवानिति स्वभूस्तत्सृष्टिकर्म मोक्षधर्माणो निवृत्तिमार्गस्थाः॥ ५॥ ❀ ❀ कथमवज्ञात इत्यत उक्तं प्रत्याख्यातेति। निरस्तमनुशासनमाज्ञाकरणं यैस्ते तथा तैः चुक्रोधेति शेषः क्षणिकोऽयं कोपश्चतुर्मुखस्य न दीर्घकालीन इति भावेनाह। क्रोधमिति॥ ६॥ ❀ ❀ प्रजापतेर्ब्रह्मणः स चासौ मन्युः क्रोधः तन्मन्युः सद्यो नियमनात्पूर्वक्षणमेव क्रोधसमये भ्रुकुटी नीलशिरा नेत्रं रोहितं स्यादित्यतो नीललोहत इति कारणगुणाः कार्ये समवयन्तीति न्यायात् अनेन सद्यो जातो नीललोहित इति नामद्वयं निरुक्तम्॥ ७॥ ❀ ❀ लोके बालस्वभावप्रवर्तनाय तस्य तं वक्ति। स वा इति। इन्द्रादिदेवानां पूर्वजः॥ ८॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

तानिति अनिच्छायां हेतुर्मोक्षधर्माण इति। ननु प्रजापतीनामपि मोक्षधर्मित्वं दृश्यते तत्राह। वासुदेवपरायणाः। देवर्षिभूताप्तनृणां पितॄणामित्यादिभ्यः॥ ५—८॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

तन्नैच्छन्निति ज्ञानयोगः खल्वाविद्यककर्म्मयोगनिरासक एव स्यादिति द्योतितम्॥ ५॥ ❀ ❀ अवध्यातोऽवज्ञातः नियन्तुमुपचक्रम इति ब्रह्मणो राजसस्वभावत्वं व्यक्तम्। एवं तमआदि सनकाद्योः सृष्ट्यौ तासससात्त्विकभावोदयौ तस्य पूर्वं ज्ञेयौ॥ ६॥ ❀ ❀ अविद्याया निवर्त्तिका यथा विद्या विद्याया अपि क्वचिन्निवर्तिका अविद्या स्यादिति दर्शयितुं विद्योदयवत्यपि ब्रह्मणि अविद्यावृत्तिमुख्यस्य तामिस्राभिधानस्य क्रोधस्य रुद्ररूपेणाविर्भावमाह। धियेति। तन्मन्युः तस्य प्रजापतेर्मन्युः स चासौ मन्युश्चेति वा नीललोहित इति क्रोधोऽपि तद्वर्ण एव॥ ७॥ ❀ ❀ तल्लीलामाह। स वा इति॥ ८—१०॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

प्रत्याख्यातमुपेक्षितमनुशासनं यैः एतावतैवावध्यातः अवज्ञातः ॥ ६ ॥ ❀ ❀ स चासौ मन्युश्च तन्मन्युः सद्यः कुमारः अजायत ॥ ७ ॥ ८ ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

आपाततः पुत्रानुत्तमान् दृष्ट्वा लोके ख्यातपौरुषः पुत्रानाह—तान् बभाषे इति । प्रजाः सृजतेति । अत्र ब्रह्मणो नाऽज्ञानम्, किन्तु भगवदुपयोगिसृष्टिमेव मनसा कुर्वन्त्विति सृजतेति नियोगः, अन्यथा तस्मात्क्रोधान्महादेवो नोत्पद्येत स्वभूरिति पदं तु न भगवदाज्ञापनपर्यन्तं स्थितः, किन्तु स्वयमेवाज्ञापितवानित्यत्रोपक्षीणम् । पुत्रका इति संबोधनमाज्ञाया अवश्यकर्तृत्वाय । स्वार्थे कप्रत्ययः सन्देहाभावाय । अत एव तदाज्ञाकरणे भागवत्कार्यस्याऽकृतत्वात् भगवद्द्वारि क्रोधोद्गमः । तदाह—तन्नैच्छन्निति । ननु भगवदीयमपि कार्यं कुतो नैच्छन् ? तत्राऽऽह—मोक्षधर्माण इति । मोक्षे ये धर्मा निवृत्तिमार्गसिद्धाः । अथवा, मोक्ष एव धर्मो येषाम् ते मोक्षार्थमेव धर्मान् कुर्वन्ति । ननु भगवत्कार्यकरणमपि मोक्षहेतुः, तत्कुतो न कृतवन्तः ? तत्राऽऽह—वासुदेवपरायणा इति । वासुदेवो ज्ञानं दत्त्वा मोक्षदाता, न तस्य कार्यं सृष्ट्यादिकमप्यपेक्ष्यते । तादृशस्य न कैवल्याख्यो मोक्षः फलम्, किन्तु भगवत्संतोषः । अत एव तत् ब्रह्मणो वाक्यं नैच्छन्, इच्छामेव न कृतवन्तः, न तु 'न करिष्यामः' इति वचनमपि ॥ ५ ॥ ❀ ❀ अत एव तूष्णीम्भावे, पूर्वमविद्यासृष्ट्या खिन्नः, तच्छान्त्यर्थमेते सृष्टाः, तेऽपि चेदनुपयुक्तास्तदा बोधो जातः स च नाऽल्पः, कार्यव्यापाराविष्टत्वात्—अभिमानं कार्यं च नाशयतीति दुर्विषहः । ततः क्रोधोत्पत्त्यनन्तरं मध्ये भगवदिच्छाविषयिणी बुद्धिर्जाता । कोऽभिप्रायो भगवतः ? कथमेते सृष्टिं न कुर्वन्तीति ? । पश्चाज्ज्ञातो भगवदभिप्रायः । तामससृष्ट्यनन्तरमेते सृष्टा आसुरीमेव सृष्टिं भगवदुपयोगिनीं करिष्यन्ति, मानुषभावाश्चैतेऽहन्ताधिकारिण इत्यभिप्रायं ज्ञात्वा क्रोधं नियन्तुमुपक्रमं कृतवान् ॥ ६ ॥ ❀ ❀ तदोत्पन्नः क्रोधो भगवदभीष्टकार्ये भगवदंशानुप्रवेशात् तस्मिन्कार्ये आधिदैविको जात इत्याह—धिया निगृह्यमाण इति । मनसो व्यापारद्वयम्, क्रिया ज्ञानं च । तत्र ज्ञानेन नियमनं कृतम्, न क्रियया । अनिवर्तितत्वात्, स्वस्मिंश्चाऽप्रभवादुभयरक्षार्थम्, भ्रूमध्ये भगवदाज्ञाचक्रस्थानत्वात्, भगवदाज्ञाकारी भगवदंशस्तद्द्वारा निर्गत इत्याह—भ्रुवोर्मध्यादिति । सद्य इति तत्क्षणम्, क्षणान्तरे क्रिययाऽपि नियमनं स्यात् । मन्युरिति क्रोध एव । नीललोहित इति कर्बुरवर्णः । क्रोधस्याऽऽरक्तो वर्णः, भगवतो नीलः; उभयमेकीभूतं नीललोहितं भवति । कुत्सितो मारो यस्येति स्वाभाविकसृष्ट्युपयोगिकन्दर्पनाशकः । दैतेयकन्दर्पजनकश्च ॥ ७ ॥ ❀ ❀ ततस्तस्य नामनिरुक्त्यर्थं लीलया बहिः, अन्तस्तु दुःखितान् सर्वानेव दृष्ट्वा, रोदनं कृतवानित्याह—स वै रुरोदेति । स तु देवानां मध्ये पूर्वजः । यावन्तो ह्याधिदैविका जाता इत्यर्थः । स तु भगवान्, न जीवांशः । भव इति स एव भवति सर्वत्र, न ह्यहङ्कारव्यतिरेकेण कश्चिज्जायते, नाऽप्यलिङ्गः; अतो जनने हेतुभूतो भवो भवति । उपादानं हरिः, रजो ब्रह्मेति । अतोंशद्वयं सूक्ष्मम्, उपष्टम्भकाः सर्वे वैष्णवाः । अतस्त्रिमूर्तिर्देहः । रोदनकारणे पृष्टे उत्तरमाह—नामानीति । नामानि स्थानानि । जगत्कर्तृत्वात्स्थानजननम्, जगद्गुरुत्वात् नामकरणम् । नामव्यतिरेकेण अव्यक्ततया भोगः प्रसज्येत, ततो नामप्रार्थना ॥ ८ ॥

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

तानित्यत्र । अत्रेति । सनकाद्याज्ञापने । ननु स्वभूपदाद् ब्रह्ममहिम्नैव महादेवमाहात्म्यस्य शक्यवचनतया तदुत्पत्तिर्न ज्ञानस्य ज्ञापिकेति शङ्कायामाहुः—स्वभूरित्यादि । तथा च, तत्पदं 'बभाषे' इत्यस्य समभिव्याहारादहंकारबोधन एवोपक्षीणमिति न महादेवमाहात्म्यपर्यन्तबोधनक्षममतस्तथेत्यर्थः । भगवद्द्वारीति । वरणायां भ्रूमध्य इति यावत् ॥ ५ ॥ ❀ ❀ अत एव तूष्णीमित्यादि । सोऽवध्यात इत्यस्याऽऽभासोऽयम् । अत एवेति अवध्यानादेव । अभिमानं कार्यं चेति । पुत्रत्वाभिमानं तच्छरीरं च ॥ ६ ॥ ❀ ❀ धियेत्यत्र । उभयरक्षार्थमिति । नियमनस्योत्पत्तेश्च रक्षार्थम् ॥ ७ ॥ ❀ ❀ स वै रुरोदेत्यत्र । कार्यमात्रे त्त(भ)वस्य व्यापकतया वर्त्तमानत्वमुपपादयन्ति—न हीत्यादि ॥ ८ ॥

### श्रीगिरिधरकृता बालप्रबोधिनी

स्वभूर्ब्रह्मा तान् स्वपुत्रान् बभाषे । तद्भाषणमेव दर्शयति—हे पुत्रकाः प्रजाः सृजतेति । ते च तत् पित्राज्ञप्तं प्रजासर्जनं नैच्छन् । तत्र हेतुमाह—मोक्षधर्माण इति, मोक्षोपयोगिनी धर्मे निष्ठा येषां ते इत्यर्थः । कोऽसौ धर्म इत्यपेक्षायामाह—वासुदेवपरायणा इति, भगवदेकशरणा इत्यर्थः ॥ ५ ॥ ❀ ❀ स ब्रह्मा प्रत्याख्यातमनङ्गीकृतं अनुशासनमाज्ञा यैस्तैः सुतैरेवं सृष्ट्याज्ञाप्रत्याख्यानेन अवध्यातः अवज्ञातः अतएव दुर्विषहं सोढुमशक्यं जातं क्रोधं नियन्तुं निगृहीतुं उपचक्रमे प्रयत्नं कृतवानित्यर्थः ॥ ६ ॥ ❀ ❀ धिया बुद्ध्या निगृह्यमाणोऽवष्टभ्यमानोऽपि सद्यः तन्मन्युः स चासौ मन्युश्च क्रोधः प्रजापतेर्ब्रह्मणो भ्रुवोर्मध्यान्नीललोहितवर्णः कुमारः सन्नजायतेत्यन्वयः ॥ ७ ॥ ❀ ❀ कोऽसौ कुमारो जातश्च सन् किमकरोदित्यपेक्षायामाह—स इति । स वै देवानां पूर्वजः तेभ्यः पूर्वं जातः भगवान् ऐश्वर्यादिसम्पन्नो भवो रुद्रः रुरोद । तदा च किमर्थं रोदिषीति ब्रह्मणा

पृष्ठ आह—नामानीति। धातरिति जगद्गुरो इति च सम्बोधनद्वयेन मम पितृत्वात् जगत्स्रष्टृत्वेन समर्थत्वाच त्वमेव प्रार्थनायोग्यः मत्प्रार्थितसम्पादनं तवोचितमेवेति सूचयति। मे मम नामानि स्थानानि च कुर्वित्यन्वयः॥ ८॥

### हिन्दी अनुवाद

अपने इन पुत्रोंसे ब्रह्माजीने कहा, 'पुत्रो! तुमलोग सृष्टि उत्पन्न करो।' किंतु वे जन्मसे ही मोक्षमार्ग (निवृत्तिमार्ग) का अनुसरण करनेवाले और भगवान्‌के ध्यानमें तत्पर थे; इसलिये उन्होंने ऐसा करना नहीं चाहा॥ ५॥ ❀ ❀ जब ब्रह्माजीने देखा कि मेरी आज्ञा न मानकर ये मेरे पुत्र मेरा तिरस्कार कर रहे हैं, तब उन्हें असह्य क्रोध हुआ। उन्होंने उसे रोकनेका प्रयत्न किया॥ ६॥ ❀ ❀ किन्तु बुद्धि द्वारा उनके बहुत रोकनेपर भी वह क्रोध तत्काल प्रजापतिकी भौंहोंके बीचमेंसे एक नील-लोहित (नीले और लाल रंगके) बालकके रूपमें प्रकट हो गया॥ ७॥ ❀ ❀ वे देवताओंके पूर्वज भगवान् भव (रुद्र) रो-रोकर कहने लगे—'जगत्पिता! विधाता! मेरे नाम और रहनेके स्थान बतलाइये'॥ ८॥

**इति तस्य वचः पाद्मो भगवान् परिपालयन्। अभ्यधाद् भद्रया वाचा मा रोदीस्तत्करोमि ते॥ ९॥**
**यदरोदीः सुरश्रेष्ठ सोद्वेग इव बालकः। ततस्त्वामभिधास्यन्ति नाम्ना रुद्र इति प्रजाः॥ १०॥**
**हृदिन्द्रियाण्यसुर्व्योम वायुरग्निर्जलं मही। सूर्यश्चन्द्रस्तपश्चैव स्थानान्यग्रे कृतानि मे[1]॥ ११॥**
**मन्युर्मनुर्महिनसो[2] महाञ्छिव ऋतध्वजः। उग्ररेता[3] भवः कालो वामदेवो धृतव्रतः॥ १२॥**

### श्रीधरस्वामिविरचिता भावार्थदीपिका

बालक इव॥ १०॥ ❀ ❀ अग्रे पूर्वमेव मे मया कृतानि॥ ११॥ १२॥ १३॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

इति पूर्वोक्तं पाद्मः पद्मजः। भद्रया स्निग्धया। तत् नामादि॥ ९॥ ❀ ❀ यद्यतः। सुरश्रेष्ठेति सर्वदेवपूर्वजत्वात्॥ १०॥ ❀ ❀ हृदीति। हृदादीनामहंकाराधिष्ठातृरुद्रस्य तत्तत्स्थानौचित्यात्। क्रोधपक्षे तु हृत्तु क्रोधस्य जन्मस्थानमेव स तत्र प्रवृद्धो नेत्रपाणिपादेंद्रियेष्वपि तिष्ठति तत्तद्व्यापारसूच्यः तथैवासुषु प्राणेष्वपि नासाश्वा साधिक्यसूच्यस्तथा बहिराकाशस्य प्रचंडघोरसिंहादिशब्दैर्वाय्वग्निजलानां शोषकत्वदाहकत्वप्लावकत्वैर्मह्याः स्वविकारैर्मुद्गरादिभिस्तथा तेषां संघातैः सिंहव्याघ्रसर्पादिभिः सूर्यचंद्रयोस्तापहिमाभ्यां मारकत्वमस्तीति तेष्वपि क्रोधस्तिष्ठति तप इत्युपलक्षकं सांख्ययोगवैराग्यानामपि तेषामपि भक्तिपाल्यत्वाभावे क्रोधस्थानत्वं दृष्टं 'तपोदीपितमन्यवः' इत्यादिवाक्यैरत एवोक्तम् "आरुह्य कृच्छ्रेण परं पदं ततः पतंत्यतोऽनादृतयुष्मदंघ्रयः" इति॥ ११॥ ❀ ❀ ननु नामानीति नामबहुत्वस्य प्रार्थितत्वात्कथं रुद्र इत्येकमेव नाम कृतमिति चेदाह—मन्युरिति। महिनस इति। 'महेशान' इत्यपि पाठः कचित्। क्रतुध्वज इत्यत्र ऋतुध्वज इति च। उग्रमसह्यं रेतः कुमारलक्षणं यस्येति। तीर्थस्तु—ऊर्ध्वरेता इति पपाठ तच्च श्रुतिसिद्धं "चकार ऊर्ध्वरेतं विरूपाक्षम्" इति श्रुतेः। मरुरेता इति च पठित्वा "मरुरग्निः कृष्णवर्त्मा शुचिर्वह्निरुषर्बुधः" इति यादवकोशादग्निवीर्य इति व्याचख्यौ॥ १२॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

तत् नामस्थानम्॥ ९॥ ❀ ❀ यद्यस्मात्॥ १०॥ ❀ ❀ हृदादीनामहङ्कारकार्य्यत्वात् तदधिष्ठातुस्तस्य तत्तत्स्थानत्वम्। क्रोधपक्षेऽपि हृदादिषु तस्य स्थितिरेव आकाशस्यापि घोरशब्दगुणद्वारा मारकत्वम्। अग्निजलयोः प्रलयहेतुत्वं मह्या मुद्गरादिरूपेण मारकत्वं सूर्य्यचन्द्रयोस्तापहिमाभ्यां मारकत्वं तपोदीपितमन्यव इत्युक्तेस्तपस्यपि मन्युरिति विवेचनीयम्॥ ११॥ ❀ ❀ महेशान इत्येव पाठः न तु महिनस इति अनर्थकत्वात्॥ १२—१४॥

### श्रीमद्वीरराघवव्याख्या

मा रोदीः रोदनं मा कुरु ते तव त्वदुक्तं करोमीति॥ ९॥ ❀ ❀ नामकरणमेवाह। यदिति। हे सुरश्रेष्ठ! सोद्वेगः भयसहितो बालक इव यद्यस्मात्त्वमरोदीः रोदनमकार्षीः ततः रोदनान्निमित्ताद्रुद्र इति नाम्ना प्रजाः त्वामभिधास्यन्त्यभिवक्ष्यन्तीत्यर्थः॥ १०॥ ❀ ❀ स्थानकरणमाह। हृदीत्यादिना अहंकाराधिदेवतात्वेन रुद्रस्य हृत्स्थत्वं न त्वन्तरात्मतया। असुः प्राणः रुद्रादीनि स्थानान्यग्रे पूर्वमेव मे ते तवार्थे मया कृतानि॥ ११॥ ❀ ❀ एकादशस्थानस्थस्य पुनः स्थानभेदानाह। मन्युरिति॥ १२॥

---

१. प्रा० पा०—ते। २. प्रा० पा०—मनुर्महान्सोमो महान्। ३. प्रा० पा०—ऊर्ध्वरेता।

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली ।

पाद्मो ब्रह्मा मा रोदीरिति पदम् ॥ ९ ॥ ❀ ❀ प्रधानं नामाह । यदिति ॥ १० ॥ ❀ ❀ हृन्मनः ॥ ११ ॥ ❀ ❀ नामानीति नामबाहुल्यस्य प्रार्थितत्वात्कथं रुद्रेत्येकनामकरणमिति तत्राह मन्युरिति । मरुरेताः ।

'मरुरग्निः कृष्णवर्त्मा शुचिर्वह्नि रुषर्बुधः । धूमध्वजश्चित्रभानुर्दहनो हव्यवाहनः ॥'

इत्यभिधानात् वह्निवीर्य इत्यर्थः । ऊर्ध्वरेतस्त्वादिव्रतधारणाद्धृतव्रत 'ऊर्ध्वरेतं विरूपाक्षं शंकरं नीललोहितमि'ति श्रुतिः ॥ १२ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

हृदीति । हृदादीनामहङ्कारकार्य्यत्वादहङ्करा।धिष्ठात् रुद्रस्य तत्तत्स्थानौचित्यात् । क्रोधपक्षे तु हृत् क्रोधस्य जन्मस्थानमेव स तत्र प्रवृद्धो नेत्रपाणिपादेन्द्रियेष्वपि तिष्ठति तत्तद्व्यापारसूच्यः । तथैवासुषु प्राणेष्वपि नासाश्वासाधिक्यसूच्यः । तथैवासुषु प्राणेष्वपि नासाश्वासाधिक्यसूच्यः । तथा वहिराकाशस्य प्रचण्डघोरसिंहादिशब्दैर्वाय्वग्निजलानां शोषकत्वदाहकत्वप्लावकत्वैः मह्याः स्वविकारैर्मुद्गरादिभिस्तथा तेषां सङ्घातैः सिंहव्याघ्रसर्पादिभिः सूर्य्यचन्द्रयोस्तापहिमाभ्यां मारकत्वमस्तीति तेष्वपि क्रोधस्तिष्ठति । तप इत्युपलक्षणं सांख्ययोगवैराग्याणामपि तेषामपि भक्तिपाल्यत्वाभावे क्रोधस्थानत्वं दृष्टं तपोदीपितमन्यच इत्यादिवाक्यैरत एवोक्तम् 'आरुह्य कृच्छ्रेण परं पदं ततः पतन्त्यधोऽनादृतयुष्मदङ्घ्रयः' इति ॥ ११ ॥ ❀ ❀ मनुरित्यादीन्येका दशरुद्राणां नामानि ॥ १२ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

मे मया ॥ १०—१२ ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

तावतैव संतुष्टो ब्रह्मा अधिकमपि कृतवानित्याह—इतीति । तस्य वाक्यपरिपालनं कुर्वन् नामानि कृतवान् । अभिप्रायस्तु अव्यक्ततयैव भोगः कर्तव्य इति । बालकरोदने भद्रया वाचा सान्त्वनं भवतीति सान्त्वयन्नाह—अभ्यधादिति । मा रोदीरिति निषेधः । त्वदभीप्सितमेव सेत्स्यतीति तत्करोमि त इति गूढोऽभिप्रायः । दास्यामि च भार्याः, ततस्तान् सर्वान् स्वयमेवोत्पाद्य स्वसमानान् करिष्यसीति । अत एव भार्यादानम् । प्रार्थितं द्वयम्, अभीष्टं चैकमिति न प्रार्थिताधिकदानम् ॥ ९ ॥ ❀ ❀ स्वभावतो गुप्तत्वात् क्रिययैव त्वन्नामेत्याह—यदरोदीरिति । यद्यस्मात्कारणात् त्वमरोदीः, अतो रुद्रः । 'यदरोदीत्तद्रुद्रस्य रुद्रत्वम्' इति श्रुतेः । 'रक्' प्रत्ययोऽत्र औणादिकः कर्त्तरि । सुरश्रेष्ठेति संबोधनान्न गणरुद्रत्वम्, ते हिं सुरा एव, न श्रेष्ठाः । ननु प्रार्थनायां कृतायामपि यथा प्रार्थक इति नाम न कृतम्, तथा रुद्रेत्यपि न कर्तव्यमित्याशङ्क्याऽऽह—सोद्वेग इवेति । उद्वेगसहितः सोद्वेगः । चित्तव्याकुलता उद्वेगः, रोदने कायवाङ्मनोव्यापारः सम्पन्नः, तेन नामजनकत्वम् । अश्रुविमोकः कायिकः, शब्दो वाचनिकः, उद्वेगो मानस इति । यद्यप्यभिप्रायोऽन्यस्तथाप्यनुकरणं तादृशमिति लोके तथैव नाम । तदाह—इवेति । अहं सर्वात्मक इति मद्गोपनार्थं कृतं रूपं सर्वजगत्प्रसिद्धं भवत्विति, रुद्र इति नाम्ना सर्वे लोका अभिधास्यन्ति, त्वत्क्रियाकरणेन अभिनयेन चाऽभिधानं प्राप्तम् । तथा च सति पुनरप्रकट एव स्यादत आह—नाम्नेति ॥ १० ॥ ❀ ❀ तस्य स्थानान्येकादश निर्दिशति नामसाम्यात्—हृदिन्द्रियाणीति । हृत् हृदयम्; इन्द्रियाणि च; असुः प्राणः; व्योम आकाशः; तपः कृच्छ्रादि । जीवानां मध्ये त्रितयम्, वह्निर्महाभूतानि, अहोरात्रप्रकाशकौ वह्निः, अन्तस्तप इति । प्रकाशकमुपादानं करणं च [1]हरासनम् । नामानि भार्याः सिद्ध्यर्थं रुद्राणां गणभेदतः । १ । मन्युरिति नामानि । [2]महिनस इत्येके ।

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

यदरोदीरित्यत्र । ननु यदि रोदनाभिप्रायोऽन्यः, तदा नामादिप्रार्थनस्य किं प्रयोजनमत आहुः—अहमित्यादि । तथा च, स्वस्वरूपगोपनमेव प्रयोजनमित्यर्थः । तथा च सतीत्यादि । अभिनयेन नाम्नि सति स्वरूपतोऽप्रकट इति त्वदभिमतसिद्धिरेव भविष्यतीत्यर्थः ॥ १० ॥ ❀ ❀ हृदित्यत्र । कारिकायाम् । त्रस्तपःसमुच्चायकः । सिद्ध्यर्थमिति । सृष्टिकार्यसिद्ध्यर्थम् । तेन गणरुद्राणां मूलरुद्रव्यूहत्वं बोधितम्, अत एव पञ्चमस्कन्धे 'साङ्कर्षणो नाम रुद्र एकादशव्यूहः' इत्युक्तम् ॥ ११-१२ ॥

---

१. हृदासनम्. क. २. महेशान इत्येकः. घ. महिनस इत्येकः, ख.

### श्रीगिरिधरकृता बालप्रबोधिनी

तस्य रुद्रस्येत्येवम्भूतं वचः परिपालयन् अङ्गीकुर्वन् भगवान् पाद्मो ब्रह्मा भद्रया तत्सान्त्वनपरया वाचा अभ्यधात् उक्तवान् । तां वाचमेव दर्शयति—मा रोदीः रोदनं मा कुरु, ते तव तत् उक्तं करोमीति ॥ ९ ॥ ❀ ❀ नामकरणमेवाह—यदिति । हे सुरश्रेष्ठ सोद्वेगः भयसहितो बालक इव यत् यस्मात्त्वमरोदीः रोदनं कृतवान् ततस्तस्मात् रोदननिमित्तात् रुद्र इति नाम्ना प्रजास्त्वामभिधास्यन्ति वक्ष्यन्ति ॥ १० ॥ ❀ ❀ स्थानकरणमाह—हृदित्यादिना । हृदादीनि ते तव स्थानानि अग्रे त्वत्प्रार्थनातः पूर्वमेव मया कृतानीत्यन्वयः । अहङ्कारादिदेवतात्वेन रुद्रस्य हृत्स्थत्वं, न तु अन्तर्यामितयेति ज्ञेयम् । असुः प्राणः । व्योम आकाशः ॥ ११ ॥ ❀ ❀ एकादशनामभेदानाह—मन्युरिति ॥ १२ ॥

### हिन्दी अनुवाद

तब कमलयोनि भगवान् ब्रह्माने उस बालककी प्रार्थना पूर्ण करनेके लिए मधुर वाणीमें कहा, 'रोओ मत, मैं अभी तुम्हारी इच्छा पूरी करता हूँ ॥ ९ ॥ ❀ ❀ देवश्रेष्ठ ! तुम जन्म लेते ही बालकके समान फूट-फूटकर रोने लगे, इसलिए प्रजा तुम्हें 'रुद्र' नामसे पुकारेगी ॥ १० ॥ ❀ ❀ तुम्हारे रहनेके लिये मैंने पहलेसे ही हृदय, इन्द्रिय, प्राण, आकाश, वायु, अग्नि, जल, पृथ्वी, सूर्य, चन्द्रमा और तप—ये स्थान रच दिये हैं ॥ ११ ॥ ❀ ❀ तुम्हारे नाम मन्यु, मनु, महिनस, महान् , शिव, ऋतध्वज, उग्ररेता, भव, काल, वामदेव और धृतव्रत होंगे ॥ १२ ॥

**[1]धीर्वृत्तिरुशनोमा च नियुत्सर्पिरिलाम्बिका । इरावती सुधा दीक्षा रुद्राण्यो रुद्र ते स्त्रियः ॥ १३ ॥**
**गृहाणैतानि नामानि स्थानानि च सयोषणः । एभिः सृज प्रजा बह्वीः प्रजानामसि यत्पतिः ॥ १४ ॥**
**इत्यादिष्टः स गुरुणा भगवान्नीललोहितः । सत्त्वाकृतिस्वभावेन ससर्जात्मसमाः प्रजाः ॥ १५ ॥**
**रुद्राणां रुद्रसृष्टानां समन्ताद् ग्रसतां जगत् । निशाम्यासंख्यशो यूथान् प्रजापतिरशङ्कत ॥ १६ ॥**

### श्रीधरस्वामिविरचिता भावार्थदीपिका

सयोषणः सस्त्रीकः । एभिः स्थानैर्नामभिश्च युक्तः प्रजाः सृज ॥ १४ ॥ ❀ ❀ सत्त्वं बलम् , आकृतिर्नीललोहितता, स्वभावस्तीव्रता तेन ॥ १५ ॥ ❀ ❀ रुद्राणां यूथानि दृष्ट्वाऽशंकत तत्राशंकां प्राप्तः ॥ १६ ॥ १७ ॥

### वंशीधरकृतो भावार्थदीपिकाप्रकाशः

हे रुद्र एता रुद्राण्यस्ते स्त्रियः संति ॥ १३ ॥ ❀ ❀ तीर्थस्तु—सपोषण इति पठित्वा पुष्णात्यनया गार्हस्थधर्ममिति पोषणा भार्येति व्याचष्ट ॥ १४ ॥ ❀ ❀ गुरुणा पित्रा ब्रह्मणा ॥ १५ ॥ ❀ ❀ यूथानिति पुंस्त्वमार्षम् ॥ १६ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

आत्मसमाः तुल्यबलादिमतीः ॥ १५ ॥ ❀ ❀ असंख्यशोऽसंख्यान् ॥ १६ ॥

### श्रीमद्वीरराघवव्याख्या

धीःप्रभृतयः रुद्राण्यः ता एकादश हे रुद्र ते स्त्रियः पत्न्यः ॥ १३ ॥ ❀ ❀ सयोषणः सस्त्रीक एतानि नामानि स्थानानि च गृहाण एभिः स्थानैर्नामभिश्च युक्तः त्वमाभिः स्त्रीभिः सह बह्वीः प्रजा सृज यत्प्रजासर्गात्त्वमपि प्रजानाम्पतिरसि भवसि ॥ १४ ॥ ❀ ❀ गुरुणा पित्रा भगवानुत्पत्तिप्रलयादिज्ञानवान्नीललोहितः कुमार इति उक्तप्रकारेणादिष्ट आज्ञापितः सत्त्वाकृतिस्वभावेव सत्त्वमाकृतिर्यस्य तेन सात्त्विकेन स्वभावेनात्मना प्रजाः ससर्ज ॥ १५ ॥ ❀ ❀ रुद्रेण नीललोहितकुमारेण सृष्टानां रुद्राणां कथंभूतानां जगद्विश्वं समन्ताद् ग्रसतां यूथान् संघान् असंख्यशः निशाम्य दृष्ट्वा प्रजापतिरशंकतशशङ्कतत्यभिप्रायः ॥ १६ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

रुद्राण्यो रुद्रभार्यास्ते तुभ्यं दत्ता इति शेषः ॥ १३ ॥ ❀ ❀ सपोषणमिति क्रियाविशेषणं पुष्णात्यनया गार्हस्थ्यधर्ममिति पोषणा भार्या प्रजानां पतिरसि यद्यस्मात्तस्मात् प्रजाभवे तत्पतित्वमपि गच्छतीति ॥ १४ ॥ ❀ ❀ गुरुणा ब्रह्मणा सत्त्वाकृतिर्वीर्याकृतिः सत्त्वं बलमाकृतिर्मूर्तिः स्वभावेनोग्रत्वादिगुणैरात्मसमाः ॥ १५—१७ ॥

---

१. प्रा० पा०—धीवृत्तिरसरोमा च निजसर्पि० ।

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

धीरित्यादीन्येकादश तच्छक्तीनां नामानि ॥ १३ ॥ ❀ ❀ सयोषणः सस्त्रीकः । एभिः स्थानैर्नामभिश्च युक्तः सन् प्रजाः सृज ॥ १४ ॥ ❀ ❀ सत्त्वं बलमाकृतिर्नीललोहितता स्वभावस्तीव्रता ॥ १५ ॥ ❀ ❀ रुद्रसृष्टानां रुद्राणां यूथानि दृष्ट्वेत्यन्वयः ॥ १६ ॥ १७ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

एतानि मया दत्तानि स्थानानि चकारात्कलत्राणि गृहाण । सयोषणः सस्त्रीकः एभिः स्थानैर्नामभिश्च युतः प्रजाः सृज ॥ १३—१४ ॥ ❀ ❀ गुरुणा पित्रा आदिष्टः आज्ञप्तः सत्त्वेन बलेन आकृत्या नीललोहिततया स्वभावेनोग्रत्वेन हेतुना आत्मसभाः प्रजाः ससर्ज ॥ १५ ॥ ❀ ❀ निशाम्य दृष्ट्वा अशङ्कत त्रासं प्राप्तः ॥ १६ ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनीव्याख्या

ध्याद्याः स्त्रियः । धीवृत्तिरसहोमा चेति वा पाठः । रुद्राण्य इति तव सहजाः स्त्रिय एताः । नाम्नां ग्रहणं रूपद्वारा भवतीत्येकादशभावग्रहणम् ; एकादशरूप[1]ग्रहणं वा विधीयते । सयोषणः सभार्यः । सयोषण इति छान्दसः । आभिः कृत्वा बह्वीः प्रजाः सृज, यस्मात्त्वं प्रजापतिः, प्रजासृष्टावधिकारितया आविर्भूतः ॥ १३ ॥ १४ ॥ ❀ ❀ स्वाभिलषितमेव ब्रह्मणोक्तमिति तथैव कृतवानित्याह—इत्यादिष्टः इति । स्त्रीभिः सह तथाकरणं नाऽभिलषितमिति ज्ञापयति । गुरुणेति । 'आज्ञा गुरूणां ह्यविचारणीया' इति । भगवानिति तादृशानामेव उत्पादनसामर्थ्यं सूचयति । नीललोहित इति रुद्रस्याऽसाधारणः शब्दः । सत्त्वाकृतिस्वभावेनेति । सत्त्वं बलम्, आकृतिर्नीललोहितत्वम् स्वभावस्तामसः । एवं त्रिभिः कृत्वा आत्मसमाः प्रजाः ससर्ज ॥ १५ ॥ ❀ ❀ ततः किं जातमित्यत आह—रुद्राणामिति । रुद्र एक एव मारणोपयोग्युत्पादने नियुक्तः, स्वकार्यप्रतिबन्धं ज्ञात्वा स्वकार्येण मारणं कृतवान् । तदा कार्याणां बहुत्वात्कालेन सृष्टाः सर्वा एव सृष्ट्यस्तैर्भक्ष्यन्ते सर्वानेवाऽऽत्मप्रवेशनेन मुक्तान् कुर्वन्ति, अचेतनानपि भूरादीन् परितो ग्रसन्ति । एवं रुद्रसृष्टानां रुद्राणां समन्ताज्जगद् ग्रसतामसंख्यशो यूथान् ज्ञात्वा, प्रजापतिः स्वात्मानमपि भक्षयिष्यन्तीति शङ्कां कृतवान् ॥ १६ ॥

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

रुद्राणामित्यत्र । कालेन सृष्टा इत्यादि । ब्रह्मकृतानां तदानीमनुत्पन्नत्वाद्दशमाध्यायोक्तानामेव तदानीं सत्त्वादेवमुक्तम् ॥१६॥

### श्रीगिरिधरकृता बालप्रबोधिनी

हे रुद्र धीप्रभृतय एकादश ते तव स्त्रियः पत्न्योऽपि भविष्यन्ति ॥ १३ ॥ ❀ ❀ सयोषणः सस्त्रीकः एतानि नामानि स्थानानि च गृहाण । एभिः स्थानैर्नामभिश्च युक्तस्त्वं बह्वीः प्रजाः सृज । यत् यस्मात्त्वं प्रजानां पतिरसि, प्रजासृष्टावधिकृतोऽसीत्यर्थः ॥ १४ ॥ ❀ ❀ गुरुणा पूज्येन पित्रा स भगवान् उत्पत्तिप्रलयादिज्ञानवान् समर्थो नीललोहितो रुद्र इति उक्तप्रकारेणादिष्ट आज्ञापितः सन् सत्त्वं बलं आकृतिः नीललोहितता स्वभावस्तीव्रता च तेन आत्मसमाः स्वेन समानाः प्रजाः ससर्जेत्यन्वयः ॥ १५ ॥ ❀ ❀ रुद्रेण सृष्टानां रुद्राणां भयङ्करस्वरूपाणामत एव समन्तात् सर्वतो जगत् ग्रसतां सङ्ख्यशः असङ्ख्यातान् यूथान्सङ्घान् निशाम्य दृष्ट्वा प्रजापतिर्ब्रह्मा अशङ्कत, एते त्वन्यसृष्टा अपि प्रजाः ग्रसिष्यन्तीति शङ्कामवापेत्यर्थः ॥ १६ ॥

### हिन्दी अनुवाद

तथा धी, वृत्ति, उशना, उमा, नियुत्, सर्पि, इला, अम्बिका इरावती, सुधा और दीक्षा—ये ग्यारह रुद्राणियाँ तुम्हारी पत्नियाँ होंगी ॥ १३ ॥ ❀ ❀ तुम उपर्युक्त नाम, स्थान और स्त्रियोंको स्वीकार करो और इनके द्वारा बहुत-सी प्रजा उत्पन्न करो; क्योंकि तुम प्रजापति हो ॥ १४ ॥ ❀ ❀ लोकपिता ब्रह्माजीसे ऐसी आज्ञा पाकर भगवान् नीललोहित बल, आकार और स्वभावमें अपने-ही-जैसी प्रजा उत्पन्न करने लगे ॥ १५ ॥ ❀ ❀ भगवान् रुद्रके द्वारा उत्पन्न हुआ उन रुद्रोंको असंख्य यूथ बनाकर सारे संसारको भक्षण करते देख ब्रह्माजीको बड़ी शङ्का हुई ॥ १६ ॥

**अलं प्रजाभिः सृष्टाभिरीदृशीभिः सुरोत्तम । मया सह दहन्तीभिर्दिशश्चक्षुर्भिरुल्बणैः ॥ १७ ॥**
**तप आतिष्ठ भद्रं ते सर्वभूतसुखावहम् । तपसैव यथापूर्वं स्रष्टा विश्वमिदं भवान् ॥ १८ ॥**
**तपसैव परं ज्योतिर्भगवन्तमधोक्षजम् । सर्वभूतगुहावासमञ्जसा विन्दते पुमान् ॥ १९ ॥**

---

[1] रूपं ग्रहणं, क.

### मैत्रेय उवाच

एवमात्मभुवाऽऽदिष्टः परिक्रम्य गिरां पतिम् । बाढमित्यमुमामन्त्र्य विवेश तपसे वनम् ॥ २० ॥
अथाभिध्यायतः सर्गं दश पुत्राः प्रजज्ञिरे । भगवच्छक्तियुक्तस्य लोकसन्तानहेतवः ॥ २१ ॥
मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः । भृगुर्वसिष्ठो दक्षश्च दशमस्तत्र नारदः ॥ २२ ॥
उत्सङ्गान्नारदो जज्ञे दक्षोऽङ्गुष्ठात्स्वयम्भुवः । प्राणाद्वसिष्ठः सञ्जातो भृगुस्त्वचि करात्क्रतुः ॥ २३ ॥
पुलहो नाभितो जज्ञे पुलस्त्यः कर्णयोर्ऋषिः । अङ्गिरा मुखतोऽक्ष्णोऽत्रिर्मरीचिर्मनसोऽभवत् ॥ २४ ॥

#### श्रीधरस्वामिविरचिता भावार्थदीपिका

स्रष्टा स्रक्ष्यति ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥

#### वंशीधरकृतो भावार्थदीपिकाप्रकाशः

उल्बणैर्भयंकरैः ॥ १७ ॥ ❀ ❀ केचित्तु सृष्टिस्थितिसमये रुद्रस्य लीला न भद्रायेति तपसि प्रवर्त्तना यथापूर्वं स्रष्टेति विपरीतलक्षणया यथापूर्वं कल्पांते विश्वं समहरस्तथा इत ऊर्ध्वमपि संहर्त्तासीत्यर्थः । कचित्कल्पे शिवोऽपि ब्रह्मेव प्रजाः ससर्जेति केचित् । 'सृजाम सर्वे यदनुग्रहादिदम्' इति वक्ष्यत्यपि पंचमस्कंधे शिव एव—"सृजामि तपसा विश्वं ग्रसामि तपसा पुनः । बिभर्मि तपसा विश्वं वीर्यं मे दुश्चरं तपः" इत्युक्तवता भगवतापि शिवस्यैक्यं स्वेन मत्वैवेदमुक्तमित्यपरे ॥ १८ ॥ ❀ ❀ किं च । "यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः" इति न्यायेन त्वत्तस्तपः शिक्षित्वान्योऽपि निस्तरिष्यतीत्याह—तपसैवेति । तप एव भगवत्साक्षात्कारहेतुरित्युक्तमनेन ॥ १९ ॥ ❀ ❀ गिरां वेदवाचां पतिम्पालकम् । हरिं परिक्रम्य ध्यात्वा मनसा अमुं ब्रह्माणमामंत्र्य पृष्ट्वा वनमत्र जलं ज्ञेयं वृक्षसमूहस्य तदानीमसंभवात् । तदुक्तं वाराहे "रुद्र प्रजाः सृजस्वेति ब्रह्मणा नोदितो मुहुः । असमर्थ इति प्रोच्य जले रुद्रो न्यमज्यत ॥ तपसोऽर्थे तपोहीनः कथं स्रक्ष्याम्यहं प्रजाः" इति । 'जीवनं भुवनं वनम्' इत्यमरः ॥ २० ॥ ❀ ❀ तपस्तप्त्वा रुद्र एव सृष्टिशेषं करिष्यतीति मत्वा ब्रह्मणा किं तूष्णीं स्थितमिति चेदाह—अथेति । अथ तपोर्थे रुद्राज्ञापनानंतरं भगवतो हरे रजोमिश्रसत्त्वशक्त्या युक्तस्य ब्रह्मणः अंगेभ्य इति शेषः ॥ २१ ॥ ❀ ❀ तन्नामकथनव्याजेन कर्मयोगस्यापि मरीच्यादिरूपेणाविर्भावमाह मरीचिरिति । ज्ञानवैराग्यतपोयोगकर्मणां साफल्यं भक्त्यैव तथा स्वयमपि निरपेक्षतयैव भक्तिः सर्वफलदात्री स्वयं फलरूपा चेति सर्वांते नारदरूपेण भक्तेराविर्भावमाह । तत्र तेषु पुत्रेषु दशम इति ॥ २२ ॥ ❀ ❀ उत्संगात्प्रकृतिस्थानात् । उत्कृष्टसंगात्साधुसंगाद्वा । 'आपो नारा इति प्रोक्ताः' इत्याद्युक्तेर्नरपदेन परमेश्वर उच्यते नरस्येदं नारं भगवद्दास्यसख्यादिकं ददातीति नारदो भक्तियोगः । त्वचि त्वचः ॥ २३ ॥ ❀ ❀ कर्णयोः कर्णाभ्याम् ॥ २४ ॥

#### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या ।

ईदृशीभिरुग्राभिः अलं सृष्टेरुपयोगो नास्ति प्रत्युत विनाशकत्वात् ॥ १७ ॥ ❀ ❀ तर्हि अनुकूला सृष्टिः कथं स्यादिति चेत्तत्राह । तप इति । तप आलोचन इत्यस्मात्तपोऽत्र भगवद्ध्यानम् ॥ १८ ॥ ❀ ❀ पुमानिति ध्यानोपलक्षितभक्तौ सर्वस्याधिकारित्वं सूचितम् "सर्वेषां मदुपासनम्" इति भगवद्वचनात् ॥ १९ ॥ ❀ ❀ बाढं तथैव करिष्यामीत्यमुं ब्रह्माणमामन्त्र्य पृष्ट्वा आज्ञां गृहीत्वेत्यर्थः । तपसे तपः कर्त्तुम् ॥ २० ॥ ❀ ❀ अथ शिवस्य तपसि प्रस्थापनानन्तरम् । अभिध्यायतः सृष्टिं बाहुल्येन चिन्तयतस्ततः भगवच्छक्तिः सृष्टिवृद्धिकरी क्रिया शक्तिः तया विशिष्टस्य ॥ २१ ॥ ❀ ❀ तत्र पुत्रेषु मध्ये ॥ २२ ॥ ❀ ❀ त्वचि त्वचः ॥ २३ ॥ ❀ ❀ कर्णयोः कर्णाभ्याम् ॥ २४ ॥

#### श्रीमद्वीरराघवव्याख्या

तदेवाह । अलमिति त्रिभिः । हे सुरोत्तम रुद्र ! ईदृशीभिः स्वतुल्याभिः सृष्टाभिः उल्बणैश्चक्षुभिर्मया सह दिशो दहन्तीभिः प्रजाभिरलं मा सृज त्यजेत्यर्थः ॥ १७ ॥ ❀ ❀ अतस्तप आतिष्ठ चर ते भद्रमस्तु तपः कथंभूतं सर्वेषां भूतानां सुखमावहतीति तथोक्तं तपः प्रशंसति तपसेति सार्धेन । भवान् त्वं विश्वं यथापूर्वं तपसैव स्रष्टा स्रक्ष्यसीत्यर्थः ॥ १८ ॥ ❀ ❀ तपसैव पुमानञ्जसा सुखेन भगवन्तं विन्दते प्राप्नोति कथंभूतमधोक्षजमधः कृतेन्द्रियव्यापारं निरस्तप्राकृतेन्द्रियव्यापारमित्यर्थः ।

---

१. प्राचीन प्रतिमें २१वें श्लोकके उत्तरार्ध 'भगवच्छक्तियुक्तस्य…' से लेकर २४वें श्लोकके उत्तरार्धमें 'अङ्गिरामुख' तकका अंश नहीं है । इसके अतिरिक्त २५वें श्लोकका 'दक्षिणतो' शब्द और २६वें श्लोकका 'भ्रुवः' शब्द नहीं हैं । जान पड़ता है, खण्डित हो गये हैं, या लिखनेमें छूट गये हैं ।

सर्वभूतगुणावासं सर्वेषां भूतानां गुणानां कल्याणगुणानां वासमाश्रयं अत्राधोक्षजशब्देनाप्राकृतेन्द्रियादितद्व्यापारतद्विषयसंपत्तिः सूच्यते। तथाहि श्रूयते "सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरस" इत्यनेन भोग्यतातिशयः सूच्यते। गुणशब्देन प्राप्यत्वौपयिकाः ज्ञानशक्त्यादयः कल्याणगुणा विवक्षिताः। भगवच्छब्देन प्राप्यविशेषनिर्देशः। भूतावासशब्देन तदुपासनस्य स्वरूपानुगुणत्वं व्यज्यते ॥ १९ ॥ ❀ ❀ एवमादिष्टो रुद्रः किमकरोदित्यत्राह। एवमिति। आत्मभुवा ब्रह्मणा एवमुक्तप्रकारेणादिष्टः गिरां पतिं ब्रह्माणं परिक्रम्य प्रदक्षिणीकृत्य अमुं गिरां पतिं बाढमोमित्यामन्त्र्य भगवदाज्ञामङ्गीकरोमीत्युक्त्वा इत्यर्थः, तपसे तपश्चर्तुं वनमरण्यं विवेश प्रविष्टवान् ॥ २० ॥ ❀ ❀ अथ रुद्राज्ञापनानन्तरं. पुनःसर्गं ध्यायतश्चिन्तयतः पुत्रा दश प्रजज्ञिरे जाताः। ध्यायतः कथम्भूतस्य भगवच्छक्तियुक्तस्य भगवतो या शक्तिर्लोकरचनासामर्थ्यं तेन युक्तस्य। पुत्रान् विशिनष्टि लोकसन्तानहेतवः लोकसन्ततिवृद्धिकराः ॥ २१ ॥ ❀ ❀ के ते दश पुत्राः क कस्माज्जाता इत्यत्राह। मरीचिरित्यादित्रिभिः ॥ २२ ॥ ❀ ❀ भृगुस्त्वचि त्वचश्चर्मणो भृगुर्जात इत्यर्थः। कराद्धस्तात् ॥ २३ ॥ ❀ ❀ नाभितः नाभेः कर्णयोः कर्णाभ्यां पुलस्त्य ऋषिर्जातः मुखतः मुखादक्ष्णः नेत्रादत्रिर्जातः ॥ २४ ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

प्रवृत्तं कर्म निवार्य पुनः किं व्यधत्तेति तत्राह। तप इति। तपो बहुविधं तत्रेदं कीदृशमत्राह। सर्वेति भगवद्गुणस्मरणलक्षणं तप आलोचन इति धातोः सृष्टावनुपयुक्तेनानेन किमिति मा भूच्छङ्केति वक्ति तपसेति। भवांस्तपसैव यथापूर्वं तथेदं विश्वं स्रष्टा संभविष्यतीत्यन्वयः ॥ १८ ॥ ❀ ❀ निर्विषयेणानेन किमिति तत्राह। तपसेति। स्वविषयेण तपसोपलब्धस्य हरेः प्रसादेन लब्धज्ञानो भवान् स्रष्टा भविष्यतीति भावः। सूर्यादिज्योतिर्वैलक्षण्यात्परं तर्हि निराकारं किं नेत्याह भगवन्तमिति। ऐश्वर्यादिगुणशालिनं तर्हि किं न दृश्यत इत्यत उक्तमधोक्षजमिति अबाह्येन्द्रियज्ञानविषयं तर्हि शशशृङ्गतुल्यमित्यत उक्तं सर्वेति। नन्विदं जीववदतत्त्वं किं नेत्याह। अञ्जसेति। इदमेव तत्त्वं नान्यदित्यर्थः। 'अञ्जसा त्वरिते तत्त्वेऽप्याहहाऽद्भुतखेदयोरि'ति यादवः। तत्त्वेऽप्यद्धाञ्जसाद्वयमित्यमरश्च ॥ १९ ॥ ❀ ❀ सत्त्वाकृतिस्वाभावेनेत्युक्तसत्त्वस्वभावोऽस्य स्पष्टः गुर्वाज्ञाकरणादिति भावेनाह। एवमिति। वनं जलम् ॥ २० ॥ ❀ ❀ तपस्तप्त्वा रुद्र एव सृष्टिशेषं करिष्यतीति मत्वा ब्रह्मणा तूष्णीं स्थितं किं तत्राह अथेति। भगवतो हरे रजोमिश्रसत्त्वशक्त्या युक्तस्य चतुर्मुखस्य अङ्गेभ्य इति शेषः ॥ २१ ॥ ❀ ❀ किन्नामानस्त इति चोद्यानवकाशायाह मरीचिरित्यादिना ॥ २२ ॥ ❀ ❀ कस्मात्कस्मादङ्गादेषां जन्मेति तत्राह। उत्सङ्गादिति उत्सङ्गादूरोः केवलतत्त्वनिर्णायकेऽस्मिञ्छास्त्रेऽयथातारतम्यसृष्टिकथनं दुष्टजनमोहनाय। तस्यापि शास्त्रतात्पर्यार्थत्वात् महतां प्रियत्वाच्च सृष्टेश्च बहुविधत्वात् तत्सृज्यानां च बहुरूपत्वादतो निर्णायकग्रन्थान्तरानुसारेणास्य तात्पर्यमवगन्तव्यं तदुक्तम्।

"कालतो बलतश्चैव ज्ञानानन्दादिकैरपि। सर्वैर्गुणैर्विष्णुरेव श्रेष्ठस्तदवरा रमा ॥
अनन्तांशेन कालात्तु समा तस्याश्चतुर्मुखाः। अवरो बहुलांशेन तत्समो वायुरुच्यते ॥
नियमाद्वायुरेवैको ब्रह्मत्वं याति नापरः। तस्मात्समानता मुक्तौ वायुत्वे किंचिदूनता ॥
दशवर्षं तु तत्पश्चाज्जननं तत्स्त्रियोरपि। आनन्दादिस्तद्दशांशः कालः संवत्सरात्परः ॥
यावात्पश्चाज्जनिस्तावत्पूर्वं देहक्षयो भवेत्। ब्रह्मवाय्वोस्तु ये देव्यौ तद्दशांशः सुखादिकः ॥
शेषस्य गरुडस्यापि कालो दिव्यसहस्रकः। शेषरुद्रौ ब्रह्मवायू यथा तद्वत्परस्परम् ॥
तद्देव्यस्तद्दशांशाः स्युस्ततस्त्विन्द्रादयो मताः। एवं मुक्तौ च पूर्वं च नान्यथा क्वचिदिष्यते ॥
अन्यथोक्तिर्यत्र च स्यात्तन्मोहार्थं भविष्यति। पूर्वापरविपर्यासो बहुरूपत्वहेतुतः ॥

इति वचनात्

इन्द्राद्याः सनकाद्याश्च दक्षाद्या येऽपि चापरे। ऋषयो मनवो देवास्तद्वंश्या ये च केचन ॥
उमाया अवराः सर्वे गुणैः सर्वैरसंशयः। तत्समो न भविष्यो वा न भूतोऽद्यतनेऽपि वा ॥
ऋते हरिब्रह्मवायुशेषवीन्द्रान् सभार्यकान्। शंकरं चेति वेत्तव्यमन्यन्मोहार्थमुच्यते ॥

इत्यन्यत्रापि ॥ २३ ॥ २४ ॥

## श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी।

तप आतिष्ठेति सृष्टिस्थितिसमये रुद्रस्य लीला न भद्रायेति तपसि प्रवर्त्तना यथापूर्वं स्रष्टेति विपरीतलक्षणम्। यथापूर्वं कल्पान्ते विश्वं समहरस्तथा इत ऊर्ध्वमपि संहर्त्तासीत्यर्थः। क्वचित् कल्पे शिवोऽपि ब्रह्मेव प्रजाः ससर्ज्जेत्येके। "सृजामि तपसा विश्वं ग्रसामि तपसा पुनः। बिभर्मि तपसा विश्वं वीर्य्यं मे दुस्तरं तप" इत्युक्तवता भगवता शिवस्य ऐक्यादिदमुक्त-

मित्यपरे। "यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः।" इति न्यायेन त्वत्तस्तपः शिक्षित्वा सांसारिको लोकोऽपि निस्तरिष्यतीत्याह तपसैवेति। कर्म्मयोगस्यापि मरीच्यादिरूपेणाविर्भावमाह॥ १८॥ ❀ ❀ ॥ १९॥ २०॥ २१॥ ❀ ❀ मरीचिरिति। ज्ञानवैराग्यतपोयोगकर्म्मणां साफल्यं उक्त्यैव तथा स्वयमपि निरपेक्षतयैव भक्तिः सर्वफलदात्री स्वयंफलरूपा चेति सर्व्वान्ते भक्तिर्नारदरूपेणाविर्भावमाह—दशम इति॥ २२॥ ❀ ❀ उत्सङ्गात् प्रीतिस्थानात् श्लेषेण उत्कृष्टात् सङ्गात् साधुसङ्गादित्यर्थः। "आपो नारा इति प्रोक्ताः" इत्यादिदृष्टेर्नरशब्देन परमेश्वर उच्यते नरस्येदमित्यर्थे तस्येदमित्यणा नारं भगवद्दास्यसख्यादिकं ददातीति नारदो भक्तियोगः॥ २३॥ २४॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः।

स्रष्टा स्रक्ष्यति॥ १८॥ १९॥ २०॥ २१॥ २२॥ २३॥ २४॥ २५॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनीव्याख्या

('अलं प्रजाभिः' इत्यादीनि वाक्यानि 'एवमात्मभुवा' इत्यत्र सम्बध्यन्ते।) आत्मभक्षणशङ्कया प्रजापतिराह—अलं प्रजाभिरिति। ईदृशीभिः प्रजाभिरलम्, अतः परमेतादृश्यः प्रजा न स्रष्टव्या इत्यर्थः। सुरोत्तमेति जीवभावमाह। देवोत्तमो भूत्वा देहभावेन सृष्टिकरणं न युक्तमिति भावः। तासां को दोष इत्याशङ्क्य. दोषमाह—मया सह दहन्तीभिरिति। दश दिशो दहन्ति। नापि दाहे तासामग्न्यपेक्षा, किन्तु चक्षुर्भिरेव। उल्बणैरिति क्रूरत्वेन भयजनकैः। अनेन साम्मुख्याभावेऽपि अन्यस्यापि तद्दर्शने भयेनाऽपि मरणं सूचयति॥ १७॥ ❀ ❀ तर्हि किं कर्तव्यमित्याकांक्षायामाह—तप आतिष्ठेति। तपसि क्रियमाणेऽपि न तव खेदो भविष्यतीत्याह—भद्रं त इति। सर्वभूतसुखावहमिति। तपोऽपि सृष्टिवल्लोकोपद्रवहेतुभूतं न कर्तव्यम्, किन्तु सर्वेषां भूतानां सुखमेव आवहति तादृशं सात्त्विकं कर्तव्यमित्यर्थः। ततः किं स्यादत आह—तपसैव यथापूर्वमिति। पूर्वं तामसकल्पे शिवः प्रजाजनकः। ताः प्रजास्तामस्यो भवन्ति, परं लोकानुसारिण्यः। तादृश्योऽपि प्रजा अस्मिन् कल्पे उपयुज्यन्त इति तथोक्तम्॥ १८॥ ❀ ❀ किञ्च, माऽस्तु प्रजासर्गः; तथापि सात्त्विके तपसि क्रियमाणे भगवान् परितुष्यतीत्याह—तपसैवेति। ब्रह्म हि स्वानुभवप्रकारेण शास्त्रार्थं निरूपयति—परं ज्योतिरिति। ज्योतिषामपि प्रकाशकम्, अतस्तस्मिन् दृष्टे सर्ववस्तुयाथात्म्यं स्फुरति, स हि सर्वथा सर्ववस्तुयाथात्म्यप्रकाशकः। भगवन्तमिति न ततोऽन्यज्ज्ञातव्यमस्तीति ज्ञापितम्। अधोक्षजमिति साधनान्तरं निराकृतम्। सर्वभूतगुहावासमिति सुलभत्वमावश्यकत्वं दुर्ज्ञेयत्वं च। एतादृशस्य प्राप्तिस्तपसा भवतीति। तपसो माहात्म्यम्। अञ्जसा अनायासेन। पुमानिति दोषराशित्वम्॥ १९॥ ❀ ❀ एवं ब्रह्मणा उपदेशे कृते रुद्रो यत्कृतवांस्तदाह—एवमिति। आत्मभुवा ब्रह्मणा। गिरां पतिमिति गुरुम्। प्रमाणं बाढमिति। अतः परं ममाऽपि संमतमिति भावः, तथास्त्वित्यर्थः। अमुं ब्रह्माणम्। तपःकरणार्थं तपोवनं प्रविवेशेत्यर्थः। एवमाधिभौतिकाध्यात्मिकाधिदैविकसृष्टयस्तामस्यो निरूपिताः॥ २०॥ ❀ ❀ अथ राजस्यः प्रकारान्तरेण सृष्टयः कृताः, सा निरूपयितुमुपक्रमते—अथाऽभिध्यायत इति। पूर्वं कर्तृत्वाभिमानेन सृष्टौ प्रवृत्तः। अहङ्कारस्य त्रैविध्यात्त्रिविधा सृष्टिरुत्पन्ना। तामसी पञ्चपर्वा, ततोऽहङ्कारे भगवद्ध्याने शुद्धे चित्ते राजसी सृष्टिः; तदुभयनिर्वाहार्थं सात्त्विकी चेति। इदानीं सृष्टिमेव ध्यायति, कथमियं सृष्टिर्भवतीति। तदा[1] सृष्टेर्भगवद्रूपत्वात् दशविधा सा सृष्टिरुत्पन्नेति निरूप्यते। नव त्रिगुणाः, एको गुणातीत उद्देशे पश्चान्निरूप्यते, विमर्शे प्रथमम्। तेषां चिन्तापरिहारकत्वेन दुःखनिवारकत्वात्पुत्रत्वम्। ननु ध्यानमात्रेण कथमेते पुत्रा उत्पन्नाः? तत्राऽऽह—भगवच्छक्तियुक्तस्येति। या भगवतः सृज्या शक्तिः, सैव पुत्रत्वेन प्रकटीभूतेत्यर्थः। स्रष्टृशक्तिर्वा। तदा तयैव शक्त्या ते उत्पादिताः। भगवच्छक्त्या उत्पादिते यो विशेषस्तमाह—लोकसंतानहेतव इति। लोकस्य जनस्याऽऽसंसारमनुवृत्तिः[2] कल्पान्तपर्यन्तं संततिप्रवाहः[3]। न हि प्रवाहो भगवच्छक्तिव्यतिरेकेणाऽन्येन कर्तुं शक्यते॥ २१॥ ❀ ❀ तानुद्देशतो गणयति—मरीचिरिति। आद्यास्त्रयः सात्त्विकाः, मध्यमास्तामसाः, भृग्वादयस्त्रयो राजसाः। दशमस्तत्रेति भिन्नतया निरूपणं गुणातीतत्वख्यापनार्थम्॥ २२॥ ❀ ❀ अवयवेभ्यस्तेषामुत्पत्तिमाह—उत्सङ्गादिति। प्रीतिविषयत्वेनोत्सङ्गान्नारद उत्पादितो लाल्यमानः, भगवदीयत्वादङ्गुष्ठाद्दक्षः, स्वसमानत्वाय। स्वयंभुव इति। तस्याऽपि ब्रह्मण इवाऽभिमानः। अन्ये यथायथमुत्पन्ना बाह्याभ्यन्तरभेदेन। ज्ञाननिष्ठास्त्वान्तराः, मध्यस्था राजसाः, बाह्यास्तामसा इति। प्राणाद्दशविधाद्वसिष्ठः। सम्यग्जात इति अन्तपर्यन्तमुत्तमा[4] एव तद्वंश्या निरूपिताः। भृगुर्बाह्यः, क्रतुरपि, पुलहोऽपि। पुलस्त्यस्योभयवंशजनकत्वात्कर्णयोरित्युक्तम्। ऋषिरिति वेदसहभावात् दैत्यत्वव्यावृत्त्यर्थम्, अन्यथा मधुकैटभाविव कश्चिज्जायेत। अङ्गिरा वक्त्रमध्यात्। अक्षिमध्यादत्रिः, तस्याऽप्युभयरूपसृष्टिजनकत्वम्। ज्ञानिनो योगिनो योगिनः पुत्ररूपाश्च। मनसो द्वैरूप्यम्, मरीचेरप्युभयसृष्टिजनकत्वात् 'तयोरापूरितं जगत्' इति वाक्यात्॥ २३॥ २४॥

---

१. तत्सृष्टेः, क. घ। २. सन्तानम्, क. ख. घ. संसारं ङ. च। ३. सन्ततिः प्रवाहः, क। ४. आन्तपर्यन्तम्, ख. घ. ङ।

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

एवमात्मभुवेत्यत्र । एवमाधिभौतिकेत्यादि । आधिभौतिका रुद्रसृष्टा रुद्राः, आध्यात्मिका गणरुद्राः, आधिदैविको नीलरुद्रो ज्ञातव्यः ॥ २० ॥ ❀ ❀ अथेत्यत्र । राजसी सृष्टिरिति । सनकादिसृष्टिः, मनुष्यभावाद्राजसी । सात्त्विकीति । रुद्रः । देवरूपत्वात् सात्त्विकीत्यर्थः ॥ २१ ॥

### श्रीगिरिधरकृता बालप्रबोधिनी

एवमाशङ्क्याह—अलमिति त्रिभिः । देवश्रेष्ठस्य तवैवम्भूतप्रजोत्पादनमनुचितमिति सूचयन् सम्बोधयति—सुरोत्तमेति । ईदृशीभिः सृष्टाभिः प्रजाभिरलम्, अतः परं एतादृश्यः प्रजाः न स्रष्टव्या इत्यर्थः । तासां को दोष इत्यपेक्षायां इद्वक्शब्दार्थमाह—मयेति । उल्बणैः क्रूरैश्चक्षुर्भिर्मया सह दश दिशो दहन्तीभिः ॥ १७ ॥ ❀ ❀ तर्हि मया किं कर्तव्यमित्यपेक्षायामाह—तप इति । त्वं तपः आतिष्ठ आचर । तेन किमित्यत आह—ते तव भद्रं भविष्यति । किं तद्भद्रमित्यपेक्षायामाह—तपसेति । इदं विश्वं यथापूर्वं पूर्ववत् तपसैव भवान् स्रष्टा स्रक्ष्यति । एतदपि कुत इत्यत आह—सर्वेति । सर्वेषां भूतानां प्राणिनां सुखमावहतीति तथा तत् ॥ १८ ॥ ❀ ❀ किम्बहुना तपसैव पुमान् अञ्जसा साक्षात् भगवन्तं, विन्दते प्राप्नोतीत्यन्वयः । ननु तल्लाभे किमाश्चर्यमित्याशङ्क्याह—अधोक्षजमिति । अधः अक्षजमिन्द्रियजन्यं ज्ञानं यस्मात्तमित्यर्थः । तत्रापि हेतुमाह—सर्वेति । सर्वेषां भूतानां गुहायां अन्तःकरणे आवसतीति तथा तमित्यर्थः । तर्हि तत्सत्त्वे किं प्रमाणमित्यत आह—परञ्ज्योतिरिति । ज्योतिषां सूर्यचन्द्रादीनामपि स्वतेजःप्रदत्वेन प्रकाशकमित्यर्थः । नहि सर्वप्रकाशके प्रमाणान्तरापेक्षा किन्त्वज्ञाननिवृत्तिमात्रमेवापेक्ष्यते सा च तपउपासनादिनैव भवतीति भावः ॥ १९ ॥ ❀ ❀ एवं ब्रह्मणाऽऽज्ञप्तो रुद्रः किं कृतवानित्यपेक्षायामाह—एवमिति । आत्मभुवा भगवत उत्पन्नेन ब्रह्मणा एवमुक्तप्रकारेणादिष्टो रुद्रो गिरां वाचां पतिं ब्रह्माणं परिक्रम्य प्रदक्षिणीकृत्य अमुं ब्रह्माणं बाढमित्यामन्त्र्य भवदाज्ञामङ्गीकृत्य तथैव करोमीत्युक्त्वा तपसे तपः कर्तुं वनं विवेशेत्यन्वयः ॥ २० ॥ ❀ ❀ अथ रुद्रगमनानन्तरं पुनः सर्गं ध्यायतः सर्गः कथं वृद्धो भवेदिति चिन्तयतो ब्रह्मणो लोकसन्तानहेतवः लोकसृष्टिप्रवृत्तिहेतुभूता दश पुत्राः प्रजज्ञिरे इत्यन्वयः । कथं तस्य तथाभूताः पुत्रा ध्यानमात्रेण जाता इत्यपेक्षायामाह—भगवच्छक्तियुक्तस्येति, भगवता या स्वशक्तिः लोकरचनासामर्थ्यरूपा दत्ता तद्युक्तस्येत्यर्थः ॥ २१ ॥ ❀ ❀ के ते पुत्रा इत्यपेक्षायामाह—मरीचिरिति ॥ २२ ॥ ❀ ❀ तेषामुत्पत्तिस्थानानि दर्शयति—उत्सङ्गादिति । त्वचि त्वचः सकाशात् । करात् हस्तात् ॥ २३ ॥ ❀ ❀ कर्णयोः कर्णाभ्याम् । अक्ष्णोर्नेत्रात् ॥ २४ ॥

### हिन्दी अनुवाद

तब उन्होंने रुद्र से कहा 'सुरश्रेष्ठ ! तुम्हारी प्रजा तो अपनी भयङ्कर दृष्टिसे मुझे और सारी दिशाओंको भस्म किये डालती है; अतः ऐसी सृष्टि और न रचो ॥ १७ ॥ ❀ ❀ तुम्हारा कल्याण हो, अब तक समस्त प्राणियोंको सुख देनेके लिये तप करो । फिर उस तप के प्रभावसे ही तुम पूर्ववत् इस संसार की रचना करना ॥ १८ ॥ ❀ ❀ पुरुष तपके द्वारा ही इन्द्रियातीत सर्वान्तर्यामी, ज्योतिःस्वरूप श्रीहरिको सुगमतासे प्राप्त कर सकता है' ॥ १९ ॥ ❀ ❀ श्रीमैत्रेयजी कहते हैं—जब ब्रह्माजीने ऐसी आज्ञा दी, तब रुद्र ने 'बहुत अच्छा' कहकर उसे शिरोधार्य किया और फिर उनकी अनुमति लेकर तथा उनकी परिक्रमा करके वे तपस्या करनेके लिये वनको चले गये ॥ २० ॥ ❀ ❀ इसके पश्चात् जब भगवान्की शक्तिसे सम्पन्न ब्रह्माजीने सृष्टिके लिये सङ्कल्प किया, तब उनके दस पुत्र और उत्पन्न हुए । उनसे लोककी बहुत वृद्धि हुई ॥ २१ ॥ ❀ ❀ उनके नाम मरीचि, अत्रि, अङ्गिरा, पुलस्त्य, पुलह, क्रतु, भृगु, वसिष्ठ, दक्ष और दसवें नारद थे ॥ २२ ॥ ❀ ❀ इनमें नारदजी प्रजापति ब्रह्माजीकी गोदसे, दक्ष अंगूठेसे, वसिष्ठ प्राणसे, भृगु त्वचासे, क्रतु हाथसे, पुलह नाभिसे, पुलस्त्य ऋषि कानोंसे, अङ्गिरा मुखसे, अत्रि नेत्रोंसे और मरीचि मनसे उत्पन्न हुए ॥ २३–२४ ॥

**धर्मः स्तनाद्दक्षिणतो यत्र नारायणः स्वयम् । अधर्मः पृष्ठतो यस्मान्मृत्युर्लोकभयङ्करः ॥ २५ ॥**
**हृदि कामो भ्रुवः क्रोधो लोभश्चाधरदच्छदात् । आस्याद्वाक्सिन्धवो मेढ्रान्निर्ऋतिः पायोरघाश्रयः ॥ २६ ॥**
**छायायाः कर्दमो जज्ञे देवहूत्याः पतिः प्रभुः । मनसो देहतश्चेदं जज्ञे विश्वकृतो जगत् ॥ २७ ॥**
**वाचं दुहितरं तन्वीं स्वयम्भूर्हरतीं मनः । अकामां चकमे क्षत्तः सकाम इति नः श्रुतम् ॥ २८ ॥**

### श्रीधरस्वामिविरचिता भावार्थदीपिका

अधरदच्छदादधरोष्ठात् ॥ २६ ॥ २७ ॥ ❀ ❀ देहांतरेण कृतंसर्गं वक्तुं तद्देहत्यागे कारणमाह । वाचमित्यादिना ॥ २८ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

भक्तियोगस्य कर्मयोगस्य च विहितस्यानुष्ठानाननुष्ठानाभ्यां धर्मोऽधर्मश्च भवतीति धर्मोत्पत्तिमाह—धर्मः स्तनादिति। सर्वोत्कृष्टस्थानस्य हृदयस्याप्युत्तमप्रदेशादतिप्रियाद्धर्मस्यैव विहितस्याकरणे निषिद्धस्य करणेऽधर्मो भवतीत्यधर्मस्याप्युत्पत्तिमाह—अधर्म इति। पृष्ठतोऽपकृष्टस्थानादनतिप्रियात्। यस्मादधर्मात् मृत्युर्देहवियोगकर्तृ देवता। यत्रेति पञ्चम्यर्थे त्रल्। तेन यस्माद्धर्मात्स्वयं नारायणः कृष्ण इत्यर्थः। "कृष्णो नारायणः स्वयम्" इति तंत्रात् ॥ २५ ॥ ❀ ❀ अधर्मः कथं स्यादिति तत्प्रवर्त्तकानां कामादीनामुत्पत्तिमाह—हृदीति। हृदि मनसि 'स्वान्तं हृन्मानसं मनः' इत्यमरः। मनसः पुरुषानधीनत्वात्तत्प्रभवस्य कामस्योन्मूलनं दुःशकमिति द्योतयति। क्रोधादीनामपि मनस एवोत्पन्नानां भ्रूप्रभृति प्राकट्यस्थानमेवेति ध्येयम्। कामक्रोधादिमत्त्वेपि शास्त्रज्ञानमयं पांडित्यं भवत्येवेति दर्शयितुं सरस्वत्या उत्पत्तिमाह—आस्यादिति। पायोर्गुदेंद्रियात्। निर्ऋतिर्नरकाधिष्ठातृदेवविशेषो दक्षिणपश्चिमांतरालविदिगधिष्ठातृदेवो वा। अघानां दुःखानां पापानां रक्षसां वाश्रयः स्वामी ॥ २६ ॥ ❀ ❀ सदा राजसतामसस्वभाववतामपि कदाचित्किंचित्सात्त्विकभावोदयः स्यादिति दर्शयितुमाह-छायायाः कांते 'छाया कांतिर्द्युतिश्छविः' इत्यमरादेः। प्रभुर्योगबलसमर्थः ॥ २७ ॥ ❀ ❀ किं चात्र भगवन्महत्त्वविद्भिरसुरजनमोहनस्यापि शास्त्रविषयत्वात्तदवश्यं कार्यमिति नियममवेक्षमाणस्य ब्रह्मणः कामिजनविडंबनमाह—वक्ति परबोधकवाक्यमिति वाक् मानुषी तां "जिह्वायां च सरस्वत्यां नार्यां वाचि च वाग्ध्वनिः" इति निरुक्तेः। दुह्यते प्रार्थ्यते नरैरिति दुहिता तां 'दुहिरर्दने' अर्दनं प्रार्थनं पीडनं च। 'सुतानार्योरथ गवि दुहिता प्रोच्यते बुधैः' इति। आर्षत्वाद् दुहेः प्रपूरणार्थस्येटि रूपं वा, तथा च शृंगाररसदोग्ध्रीं तन्वीं सूक्ष्मांगीम् अकामामकुत्सिताम्। कामयते सर्वमिति कामाऽसाध्वी तद्भिन्नाऽकामेति सकामः कामार्त्तः सन् इति नो वार्त्तामात्रं श्रुतं हे क्षत्तः न तु तथ्यमित्यर्थः। तथात्वे 'न मे हृषीकाणि पतंत्यसत्पथे' इति तदुक्तिर्विरुद्धा स्यात्सा च तदीयभार्यैवं "इतीरेशेऽतर्क्ये" इत्यत्र तथैव वक्ष्यमाणत्वात्पाद्मेपि स्वराशब्देन सरस्वत्येवोक्ता। सावित्र्यास्तत्र पृथगुक्तेरतस्तयोः परस्परशापाद्यपि तत्र श्रूयते। सप्तशतीस्तोत्रपाठनिर्णये नागोजिभट्टेनोक्तं ब्रह्मणः सरस्वती विष्णोर्लक्ष्मी रुद्रस्य गौरी पत्नीत्यौसर्गिकीरीति। "स्वरया सह संभूय विरिंचोऽण्डमजीजनत्" इति प्राधानिकरहस्योक्तेश्च। "प्रजापतिः स्वां दुहितरमगमत्" इति श्रुतिरप्येवमेव व्याख्येया। विश्वनाथस्तु-अतिविदुषामतिविवेकिनामपि कामजयो न भवेदतः कन्याभगिन्यादिभिरपि सह रहसि न वसेदिति बोधयितुमाह—वाचमिति। इति नः श्रुतमित्यनेन तद्वक्तुमनर्हमपि तज्जयज्ञानार्थमपराधाद्बिभ्यदेवादोषदृगेव ब्रवीमीति द्योतितम्। दोषदृष्ट्या तु मरीचिपुत्राणामिवाधःपातः स्यादिति भीषणा च ज्ञेया। तथा नः श्रुतमित्येतत्कल्पभवानां केषांचिद् दृष्टमप्येतन्न भवेदिति प्रसंगात्पूर्वकल्पगतमेवैतत्कर्म संप्रत्युक्तमिति भावः। चतुश्लोकीभागवतोपदेशप्राप्त्यनंतरमेतदघटमानात्। यदुक्तं भगवता "एतन्मतं समातिष्ठ परमेण समाधिना। भवान्कल्पविकल्पेषु न विमुह्यति कर्हिचित्" इति व्याचख्यौ ॥२८॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपनी व्याख्या

यत्र धर्मे यस्मादधर्मात् ॥ २५ ॥ ❀ ❀ हृदि हृदः आस्यान्मुखान्तर्वर्तिच्छिद्रात् ॥ २६ ॥ ❀ ❀ विश्वकृतो ब्रह्मणः ॥ २८ ॥ ❀ ❀ तद्देहत्यागे व्यभिचारिदेहत्यागे नः श्रुतमित्युक्त्या दर्शनाभावात्पूर्वकल्पवृत्तमिदं न तु सांप्रतिककल्पीयमिति सूचितम्। अन्यथा चतुःश्लोक्युपदेशानन्तरं तादृशविकर्मणि प्रवृत्त्यनुपपत्तिः "भवान् कल्पविकल्पेषु न विमुह्यति कर्हिचित्" भगवद्वाक्यात्" कथनं चेदं वेदान्तमुखानां भीषणार्थं वेदबर्हिर्मुखानां तु ब्रह्मवत्प्रवृत्त्या वेदावज्ञया वा नाशनार्थं चेति ज्ञेयम् ॥२८॥

### श्रीमद्वीरराघवव्याख्या

धर्म इति। पुनः सर्गं ध्यायत इत्यनुषङ्गः दक्षिणस्तनात् धर्मो जातः कथम्भूतः यत्र धर्मे नारायणः स्वयं स्थितः तदधितिष्ठता इत्यर्थः। धर्मस्य प्रभुरच्युत इति वचनात् पृष्ठतः जज्ञे कथम्भूतः यस्माद्यत्राधर्मे लोकभयंकरो मृत्युस्तिष्ठति मृत्युरधर्मदेवतेत्यर्थः ॥ २५ ॥ ❀ ❀ हृदि हृदयात्कामः भ्रुवोर्भ्रूमध्यात् क्रोधः अधरदच्छदादरोष्ठाल्लोभः आस्यान्मुखतः वाक् वागधिष्ठात्री देवता मेढ्रात्सिन्धवः पायोर्गुदात् अघाश्रयः पापाश्रयः पापाधिष्ठाता निर्ऋतिः ॥ २६ ॥ ❀ ❀ छायायाः देहच्छायायाः कर्दमः कथम्भूतः देवहूत्याः स्वायंभुवमनुकन्यायाः पतिः प्रभुः जितेन्द्रियः अवान्तरकथां प्रस्तोतुमुपसंहरति। मनस इति। मनसो देहतश्च एवमुक्तरीत्या विश्वकृतः ब्रह्मणः सकाशाज्जगज्जज्ञे ॥ २७ ॥ ❀ ❀ वाक्प्रसङ्गादवान्तरकथां प्रस्तौति। वाचमित्यादिना। ता दिशौः जगृहुरित्यन्तेन ग्रन्थेन स्वयम्भूर्ब्रह्मा स्वदुहितरं तन्वं स्त्रीरूपां मनश्चित्तं हरन्ती स्वयमकामयमानां वाचं वागधिष्ठायिनीं देवतां स्वयं सकामः चकमे ऐच्छदिति नोऽस्माभिः श्रुतम् ॥ २८ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

अत्र यस्य धर्मस्य गृहे नारायणः स्वयं हरिर्नरनारायणकृष्णनाम्ना जात इति शेषः यस्मादधर्मान्मृत्युर्देहवियोगलक्षणः ॥ २५ ॥ ❀ ❀ उत्पत्त्यनन्तरमपि स्वकारणमुक्त्वा न तिष्ठतीति हृदीति अधरदच्छदादधरोष्ठात् वाङ्मानुषी पायोर्गोलकात्

अघाश्रयः दुःखाद्यभिमानी ॥ २६ ॥ ❀ ❀ शरीरच्छायायाः कर्दमोऽप्यन्योऽस्तीति देवहूत्याः पतिरिति संक्षिप्य फलितमाह । मनस इति ॥ २७ ॥ ❀ ❀ भगवन्महत्त्वविद्भिर्महद्भिरसुरजनमोहनं कर्तव्यमिति नियममवेक्षमाणस्य ब्रह्मणः कामिजनविडम्बनप्रकारमाह । वाचमिति दुहितरं शृङ्गाररसदोग्ध्रीं तन्वीं सुन्दरीं अकामामकुत्सितां वाचं मानुषीं नोऽस्माकं श्रुतं वार्तामात्रं न तु तथ्यमित्यर्थः ॥ २८ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

वाचं दुहितरमित्यादिकथनं वेदान्तर्म्मुखानां भीषणार्थं तद्वहिर्म्मुखानां तद्दृष्टान्ततया तथा प्रवृत्त्या तदवज्ञया बालशासनार्थञ्च ॥ २८—३८ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

भक्तियोगस्य च विहितस्यानुष्ठाने परमो धर्म्मश्च भवतीति धर्म्मोत्पत्तिमाह । धर्म्म इति । स्तनादिति सर्वोत्कृष्टस्थानस्य हृदयस्याप्युत्तमप्रदेशादतिप्रियात् धर्म्मस्यैव विहितस्याकरणे निषिद्धस्य च करणे अधर्म्म इत्यधर्म्मस्याप्युत्पत्तिमाह । अधर्म्म इति । पृष्ठत इत्यपकृष्टस्थानादनतिप्रियात् ॥ २५ ॥ ❀ ❀ अधर्म्मः कथं स्यादिति तत्प्रवर्त्तकानां कामादीनामुत्पत्तिमाह । हृदि मनसीति मनसः पुरुषानधीनत्वात्तत्रस्थस्य कामस्योन्मूलनं दुःशकमिति द्योतयति । क्रोधादीनामपि मनस एवोत्पन्नानां भ्रूप्रभृतिप्राकट्यस्थानमेव ज्ञेयम् । कामक्रोधादिमत्त्वेऽपि शास्त्रज्ञानमयं पातित्यं शस्त्रवेदिनि दर्शयितुं तदैव सरस्वत्या उत्पत्तिमाह । आस्यादिति ॥ २६ ॥ ❀ ❀ सदा तामसराजसभाववतामपि कदाचिद् किञ्चित् सात्त्विकभावोदयः स्यादिति दर्शयितुमाह । छायायाः कान्तेः ॥ २ ॥ ❀ ❀ अतिविदुषामतिविवेकिनामपि कामजयो न भवेदतः कन्याभगिन्यादिभिः सह रहसि न वसेदिति ज्ञापयितुमाह । वाचमिति । इति नः श्रुतमित्यनेनैतद्वक्तुमनर्हमपि तज्ज्ञानार्थमपराधाद्भिभ्यद्दोषदृगेत्र ब्रवीमीति द्योतितम् । दोषदृष्टौ तु मरीचिपुत्राणामिवाधः पातः स्यादिति भीषणा च ज्ञेया । तथा नः श्रुतमित्येतत्कल्पभवानां केषाञ्चिद्दृष्टमप्येतन्न भवेदिति प्रसङ्गतोऽतिपूर्व्वकल्पगतमेवैतत् कर्म्म सम्प्रत्युक्तमिति भावः । चतुःश्लोकीभागवतोपदेशप्राप्त्यनन्तरमेतद्घटनात् । यदुक्तं भगवता । "एतन्मतं समातिष्ठ परमेण समाधिना । भगवान् कल्पविकल्पेषु न विमुह्यति कर्हिचित्" इति ॥२८॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

अघाश्रयः पापाश्रयः ॥ २५ ॥ २६ ॥ ॥ २७ ❀ ❀ सकामः सृष्टिवृद्धिसंकल्पवान् ॥ २८ ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

एवं दशपुत्रान्निरूप्य तेष्वधिष्ठितरूपेण नवाऽन्यान् सगुणानुत्पादितवानित्याह । तत्राऽग्रपश्चाद्भेदेन धर्माधर्मौ । तयोश्च कार्यं, मुक्तिः संसार इति । धर्माधर्मौ निरूपयति—धर्मः स्तनादिति । यत्र धर्मे नारायण आविर्भूतः, स दक्षिणस्तनात् । स्वभावतो हृदयाद्धर्मः, । तत्र प्रवृत्तिस्वभावो वामाद्धृदयात्, ज्ञानात्मा भगवदात्मकस्तु दक्षिणस्तनात् । स्वयमित्यात्मत्वान्मोक्षरूपत्वम् । अधर्मे वैलक्षण्याभावात्सामान्यतः पृष्ठत इत्युक्तम् । तत्राऽऽविर्भूतो भगवदंशको नाशको मृत्युः । लोकभयंकर इति तस्याऽवान्तरकार्यम् । अनेन भयहेतुरेवाऽधर्म इति भयेनाऽधर्मपरिज्ञानम् ॥ २५ ॥ ❀ ❀ षडन्ये—हृदि काम इत्यादि । कामक्रोधलोभाः, वाक्समुद्रनिर्ऋतयश्च । तत्र निर्ऋतिः पाप्यपाश्रयः । स विसर्गात्मा न स्थिरस्वभावः, अतस्तस्याऽऽश्रयाभावः । कामादयः सृष्टिप्रलयात्मकाः, मर्यादात्मकास्तु वाक्समुद्रनिर्ऋतयः ॥ २६ ॥ ❀ ❀ छायाया अपि प्रतिसृष्टिरूपत्वात् पुष्ट्युपयोगिसृष्टिजनकत्वम्, अतोऽग्रिमप्रकरणे वक्ष्यते । स्वप्नश्छाया तमश्चैव मायाऽविद्या भ्रमस्तथा । तिरोभूतेन हरिणा सृज्यन्ते प्रतिसर्गजाः ॥ १ ॥ कर्दमस्य प्रसिद्धिरत एव भार्यया, तत्र स्त्रियाः प्राधान्यम् । तपो भगवदाराधनं च तत्र स्त्र्यर्थमेव, स्त्रियाश्च मुक्तिः, प्रकरणं च स्त्रियाः । एतत्सूचयितुमाह—देवहूत्याः पतिरिति । देवानां हूतिर्यया । यथा यजिर्देवमार्गे तथा स्त्री दैत्यपक्षके । प्रभुरिति । दैवसृष्टावुत्पन्नत्वात् पश्चात्स्वातन्त्र्यम्, तां त्यक्ष्यतीत्यर्थः । एवं सृष्टिमुक्त्वोपसंहरति—मनस इति । चकाराच्छायातोऽपि । विश्वकृदिति पश्चात्पूर्ववदभिमान उत्पन्न इत्यर्थः । कारणदशायां योऽभिमानः, तदपेक्षया कार्यान्तरमभिमानोऽनर्थहेतुरिति ॥ २७ ॥ ❀ ❀ अस्याः सृष्टेः प्रतिच्छायारूपां सृष्टिमन्यां निरूपयितुमुपाख्यानान्तरमारभते—

वाचं दुहितरमिति । अविद्या प्रथमं सृष्टा अभिमानस्तथोद्गतः । सृष्टौ च सर्वे पुरुषाः, वागेका स्त्री सरस्वती ॥ १ ॥
लौकिकी साऽत्र विज्ञेया, सा वेदेऽपि तिरोहिता । तिरोधानप्रवृत्त्यर्थं चरित्रमिदमुच्यते ॥ २ ॥
सत्यसृष्टौ प्रवेशे हि तिरोभूता न सा भवेत् । यज्ञात्मकोऽयं ब्रह्माऽत्र, सृष्ट्याधिक्येच्छया पुनः ॥ ३ ॥
लौकिकीमपि वाणीं स गृह्णामीति मनो दधे । ततो लौकिकभूयिष्ठं जगज्जायेत निश्चितम् ॥ ४ ॥

तन्नैच्छन् वैदिकाः सृष्टाः, त्यागो भेदेन[1] रूपितः। दैत्यसृष्टौ, ततः सर्वे यज्ञा वेदाश्च लौकिकाः॥ ५॥
'न तं विदाथ' वाक्येन ते निन्द्यन्ते सदा श्रुतौ। लौकिकी लौकिकेष्वेव सकामा, न तु वैदिके॥ ६॥
उत्तमस्य तु हीनत्वं जायते शीघ्रमेव हि। नाऽधमस्योत्तमत्वं हि कदाचिदपि जायते॥ ७॥
दयासृष्टिर्द्वितीयेति दुहितृत्वं न चाऽन्यथा। अधर्मोऽप्ययमेवाऽत्र हीनकार्येषु या रतिः।
भ्रातॄणां च विवाहोऽग्रे सृष्टिभेदे निरूप्यते॥ ८॥

वाचं सरस्वतीं लौकिकीम्। तन्वीं कोमलाङ्गीं सुन्दरीम्। गद्यपद्याभिरूपा हि लौकिक्येव सरस्वती। स्वयंभूरिति कुलादिमर्यादाभावः सूचितः। मनो हरन्तीमिति कामनायां हेतुः। अहङ्काराविष्टत्वान्मनसस्तदधीनत्वम्॥ २८॥

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

धर्म इत्यत्र। यतो ? नारायण इति कार्यकथनम्। 'हृदयं यस्य धर्मः' इति वाक्यं विचार्य विभजन्ते—स्वभावत इत्यादि॥ २५॥ ❀ ❀ छायाया इत्यत्र। प्रतिसृष्टिरूपत्वादित्यनेन देहासम्बन्ध ? भांवाद्रजःसम्बन्धस्तत्र स्वल्प इति पुष्ट्युपयोगिसृष्टिजनने हेतुः प्रतिभाति। प्रतिसर्गान्तरे एवंरूपत्वं वारयितुं संगृह्णन्ति—स्वप्न इत्यादि। प्रतिसर्गे जायन्त इति प्रतिसर्गजाः। अत एवेति। भूतत्वेन सृष्टत्वादेव। देवहूतिपदनिरुक्तिप्रयोजनमाहुः—यथेत्यादि। तथा च, दैत्यपक्षत्ववारणाय पदनिरुक्तिरित्यर्थः, एतेन पदकथनप्रयोजनमेव सूचितम्॥ २६॥ ❀ ❀ वाचमित्यत्र। अन्यामिति। नीहाररूपाम्। एतस्योपाख्यानस्य प्रयोजनं बोधयितुं सार्धाष्टभिस्तात्पर्यमाहुः—अविद्येत्यादि। लौकिकीति। नूतनगद्यपद्याद्यधिष्ठात्री। सा अत्रोपाख्याने सृष्टा विशेषेण ज्ञेया। सा भेदे 'सारस्वतीं मेधीमालभेत' इत्यादिरूपेऽपि तिरोहिता, 'य ईश्वरो वाचो वदितोः सन्वाचं न वदेत्' इति यागाधिकारिस्वरूपकथनेना ( न ) वस्थायिनी बोधिता। अतस्तस्या गद्यपद्यरूपलौकिकवाचश्चिरकालानवस्थित्यादिरूपतिरोधानप्रवृत्त्यर्थमिदं चरित्रमुच्यते। ननु साऽत्र प्रतिसृष्टिरूपा लौकिक्येवेत्यत्र किं गमकमत आहुः—सत्येत्यादि। तिरोभूतेति 'रोहिद्भूताम्.....' इत्यनेन तिरोभावस्य कापिलेये वक्ष्यमाणत्वात्तिरोभूता। एतेन तत्कर्तुरपि तत्र ऋक्षरूपत्वकथनात् तादृशत्वं बोध्यमिति ज्ञापितम्। ननु भवतु सा, तथापि ब्रह्मणः कथमेवं मन इत्यत आहुः—यज्ञेत्यादि। तर्हि प्रतिबोधनं यदृषिभिः कृतम्, तत्कुत इत्यत आहुः—तत इत्यादि। तथा च निर्मर्यादजगदकरणार्थं बोध इत्यर्थः। त्यागप्रकारतात्पर्यमाहुः—त्याग इत्यादि। यतो भेदेन प्रकारान्तरेण तद्भावत्याग उक्तः, ततो हेतोर्दैत्यसृष्टौ तथेत्यर्थः। तेन तेषां लज्जामात्रेणाऽधर्मत्यागो यज्ञादिकरणं च सूचितम्। बलिप्रभृतयस्त्वावेशिनो न सहजा इत्यदोषः। दैत्यपक्षीययज्ञादेर्लौकिकत्वे गमकमाहुः—न तमित्यादि। अकामत्वव्रीडितत्वयोस्तात्पर्यमाहुः—लौकिकीत्यादिसार्धेन। तथा चैतत् त्रयं ज्ञापयितुमिदं द्वयमुक्तमित्यर्थः। ननु मात्स्ये शतरूपा प्रजापतेरुत्पन्ना सा मुक्ता, ततः स्वायंभुवमनोरुत्पत्तिरुक्ता, शतरूपायाश्च प्रजापत्यविनाभाव उक्तः, दोषश्च निवारितः। अत्र तु वाचो दुहितृत्वमुक्तम्, न तु मात्स्यवदिति कुतो विशेष इत्यत आहुः—दयेत्यादि। यथेयं वाग्लौकिकी, तथा, दयासृष्टिजैनमतीयदयासृष्टिः, द्वितीया इतो भिन्ना लौकिकीति ज्ञापनाय अस्या वाचो दुहितृत्वम् 'दयाया भगिनी मूर्तिः' इति वाक्यादन्येषां भगिनीत्वेन दयारूपत्वाय, च पुनः, अन्यथा प्रकारान्तरेण, वास्तवरूपेण न, ब्रह्मणो वागीशत्वस्य प्रागेवोक्तत्वात्। तदेतत् स्फुटीकुर्वन्ति—अधर्मोऽपीत्यादि। तथा चाऽस्याः स्वरूपमन्यत्, अतोऽत्राऽधर्मत्वम्, मात्स्योक्तायास्तु रूपं भिन्नमतो न तत्र दोष इत्यर्थः। एतेन बुद्धावतारे या वेदयज्ञादिनिन्दा भगवता कृता, सापि लौकिकवेदादिविषया। या च भूतदया स्थापिता, साप्येतादृशी, 'वेदैर्विमोहयति यज्ञकृतोऽतदर्हान्' इति वाक्यात्। अतस्तत्रापि 'यदा यदा हि धर्मस्य ग्लानिः' इति वाक्यस्य न विरोध इति ज्ञापितम्। अयमेवाऽधर्मोऽत्र नाऽन्यविध इत्यत्र गमकमाहुः—भ्रातॄणां चेत्यादि। अन्यथा कर्दमपुत्रीणां मरीच्यादिभ्यो दानमपि नाऽऽज्ञापयेत्। अतः सृष्टिभेदेन दोषाभावेऽपि लौकिकसंजिघृक्षारूप एवाऽत्राऽधर्मः नान्य इति न कोऽपि कापि सन्देह इत्यर्थः। एवमुपाख्यानतात्पर्यं संगृह्य व्याख्यातुमारभन्ते—वाचमित्यादि। तदधीनत्वमिति। कामाधीनत्वम्।

### श्रीगिरिधरकृता बालप्रबोधिनी

पुनश्च सर्गं ध्यायत इत्यनुषङ्गः। दक्षिणतः स्तनात् धर्मो जातः, यत्र यस्माद्धर्मात् स्वयं श्रीनारायणो जातः। पृष्ठतस्त्वधर्मो जातः, यस्मात् अधर्मात् लोकभयङ्करो मृत्युर्जातः॥ २५॥ ❀ ❀ हृदि हृदयात् कामः जज्ञे इति सर्वत्र सम्बन्धः। भ्रुवो भ्रूभ्यां क्रोधः। अधरदच्छदात् अधरोष्ठात् लोभः। आस्यात् मुखात् वाक् वागधिष्ठात्री देवता। मेढ्रात् सिन्धवः। पायोर्गुदात् अघाश्रयः पापप्रवर्तकः निर्ऋतिः राक्षसः॥ २६॥ ❀ ❀ देहच्छायायाः कर्दमो जज्ञे। तद्गृहे भगवदवतारं सूचयन्विशिनष्टि—देवहूत्याः कपिलमातुः पतिरिति। भगवदवतारे हेतुं सूचयन्नाह—प्रभुरिति, तपोभक्त्यादिभिः समर्थः।

---

१. भेदे निरूपितः, क।

कथान्तरं प्रस्तोतुमुपसंहरति—मनस इति। एवं विश्वकृतो ब्रह्मणो मनसो देहतश्चेदं जगज्जज्ञे इत्यन्वयः ॥ २७ ॥ ❀ ❀ देहान्तरेण कृतसर्गं वक्तुं तद्देहत्यागे कारणमाह—वाचमित्यादिना। स्वयम्भूर्ब्रह्मा सकामः सन् स्वदुहितरं वाचं अकामामकामयमानामपि चकमे कामितवानिति नोऽस्माभिः श्रुतमित्यन्वयः। महदपराधस्यावक्तव्यत्वं सूचयन्ननवधारितमिवाह—नः श्रुतमिति। तर्हि कथं वदसीत्यपेक्षायां तव स्नेहवशादित्याशयेन सम्बोधयति—क्षत्तरिति। किमित्यकामां कामितवानित्यपेक्षायामाह—मनो हरतीमिति। तदपि कथं तत्राह—तन्वीमिति, अतिसुन्दरीमित्यर्थः ॥ २८ ॥

### हिन्दी अनुवाद

फिर उनके दायें स्तनसे धर्म उत्पन्न हुआ, जिसकी पत्नी मूर्तिसे स्वयं नारायण अवतीर्ण हुए तथा उनकी पीठसे अधर्मका जन्म हुआ और उससे संसारको भयभीत करनेवाला मृत्यु उत्पन्न हुआ ॥ २५ ॥ ❀ ❀ इसी प्रकार ब्रह्माजीके हृदयसे काम, भौंहोंसे क्रोध, नीचे के होठसे लोभ, मुखसे वाणीकी अधिष्ठात्री देवी सरस्वती, लिङ्ग से समुद्र, गुदासे पापका निवासस्थान ( राक्षसों का अधिपति ) निर्ऋति ॥ २६ ॥ ❀ ❀ छायासे देहहूतिके पति भगवान् कर्दमजी उत्पन्न हुए। इस तरह यह सारा जगत् जगत्कर्ता ब्रह्माके शरीर और मनसे उत्पन्न हुआ ॥ २७ ॥ ❀ ❀ विदुरजी! भगवान ब्रह्माकी कन्या सरस्वती बड़ी ही सुकुमारी और मनोहर थी। हमने सुना है—एक बार उसे देखकर ब्रह्माजी काममोहित हो गये थे, यद्यपि वह स्वयं वासनाहीन थी ॥ २८ ॥

तमधर्मे कृतमतिं विलोक्य पितरं सुताः। मरीचिमुख्या मुनयो विश्रम्भात्प्रत्यबोधयन् ॥ २९ ॥
नैतत्पूर्वैः कृतं त्वद्य न करिष्यन्ति [1]चापरे। यत्त्वं दुहितरं गच्छेरनिगृह्याङ्गजं [2]प्रभुः ॥ ३० ॥
तेजीयसामपि ह्येतन्न सुश्लोक्यं जगद्गुरो। यद्वृत्तमनुतिष्ठन् वै लोकः क्षेमाय कल्पते ॥ ३१ ॥
तस्मै नमो भगवते य इदं स्वेन रोचिषा। आत्मस्थं व्यञ्जयामास स धर्मं पातुमर्हति ॥ ३२ ॥
स इत्थं गृणतः पुत्रान् पुरो दृष्ट्वा प्रजापतीन्। प्रजापतिपतिस्त[3]न्वं तत्याज व्रीडितस्तदा।
तां दिशो जगृहुर्घोरां नीहारं यद्विदुस्तमः ॥ ३३ ॥
कदाचिद् [4]ध्यायतः स्रष्टुर्वेदा आसंश्चतुर्मुखात्। कथं स्रक्ष्याम्यहं लोकान् समवेतान् यथा पुरा ॥ ३४ ॥
चातुर्होत्रं कर्मतन्त्रमुपवेदनयैः सह। धर्मस्य पादाश्चत्वारस्तथैवाश्रमवृत्तयः ॥ ३५ ॥

### विदुर उवाच

स वै विश्वसृजामीशो वेदादीन् मुखतोऽसृजत्। यद् यद् येनासृजद् देवस्तन्मे ब्रूहि तपोधन ॥ ३६ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

तत्त्वतो ये पूर्वे ब्रह्मादयोऽन्ये वा तैरेतन्न कृतम् अपरे त्वत्तोऽर्वाचीनास्तेऽपि न करिष्यंति। अंगजं कामम् ॥ ३० ॥ ❀ ❀ तेजीयसामतितेजस्विनामपि सुश्लोक्यं सत्कीर्तिदं न भवति। येषां तेजीयसां वृत्तम् ॥ ३१ ॥ ३२ ॥ ❀ ❀ तन्वं तनुम् ॥ ३३ ॥ कथं स्रक्ष्यामीत्यभिध्यायतः स्रष्टुर्ब्रह्मणश्चतुःसंख्यायुक्तान्मुखात् समवेतान्सुसंगतान्। यथा पुरा प्राक्कल्पे ॥ ३४ ॥ ❀ ❀ चातुर्होत्रं होत्रादीनां चतुर्णां कर्म कर्मतंत्रं यज्ञविस्तारः उपवेदैर्न्यायैश्च सह आश्रमास्तद्वृत्तयश्चासन् ॥ ३५ ॥ ❀ ❀ मुखतो मुखेभ्यः ॥ ३६ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

अधर्मे कृतमतिं पुत्रादिसमक्षं निजस्त्र्यनुगमनमप्यधर्म एवेति भावः। विस्रंभात् जन्यजनकसंबंधोत्थसख्यात् न तु पापदर्शनोत्थकोपादित्यर्थः। यद्वा। महतां विकर्मापि नापकारकमिति विश्वसात् "विस्रंभः केलिकलहे विश्वासे प्रणयेऽपि च" इति मेदिनी। एतेन मरीच्यादीनां वस्तुतोऽपराधाभाव एवोक्तः ॥ २९ ॥ ❀ ❀ पूर्वैस्त्वत्प्राक्तनैर्ब्रह्मभिः। अपरे त्वदुत्तरकालीनाः एतत्पुत्रादिसमक्षं स्त्र्यनुगमनं दुहितरं भार्यां यथाश्रुतार्थस्त्वासुरजनानां शास्त्राप्रवृत्त्यर्थमेव अन्यथा "भवान्कल्प-

१. प्रा० पा०—ये परे। २. प्रा० पा०—ह्यात्मजां प्रभो। ३. प्रा० पा०—तन्वीं। ४. प्रा० पा०—दिष्टया तन्मे।

विकल्पेषु न विमुह्यति कर्हिचित्" इति भगवदुक्तिव्याकोपस्स्यादिति भावः। प्रभुर्निरोद्धुं समर्थः॥ ३०॥ ❀ ❀ नन्वेकस्यैवैतादृक्कर्माकीर्त्तिकरं न बहूनामिति चेदाह—तेजीयसामिति। बहुभिरनुष्ठितमपि सुरापानादि यथा निंद्यमेव तथेदमपीति। एतेन "तेजीयसां न दोषाय वह्नेः सर्वभुजो यथा" इत्युक्तेर्दोषाभावेऽपि निंदा भवेदेवेत्युक्तम्। जगद्गुरो इति। यत्किञ्चिल्लोकगुरोरेतन्न शोभते, किमुत जगद्गुरोरिति कैमुत्यमाह। "अस्वर्ग्यं लोकविद्विष्टं धर्म्यमप्याचरेन्न हि" इत्युक्तेर्लोकविद्विष्टधर्मोपेतकर्मणोऽपि निषेधो यदि किमुताधर्मोपेतकर्मण इति कैमुत्यांतरं चोक्तम्॥ ३१॥ ❀ ❀ एवं प्रबोधितोपि ब्रह्मा यदा न प्राबुध्यत तदा भगवत्कृपां विना कामशातिरशक्येति सिद्धांतमपेक्ष्य ते मुनयो भगवंतमेव प्रार्थयामासुरित्याह—तस्मा इति। इदं विश्वम्॥ ३२॥ स ब्रह्मा पुरोग्रे। महापातकस्य प्राणांतमेव प्रायश्चित्तं मुख्यमिति ज्ञापयितुं तनुं तत्याजेत्युक्तम्। किं च द्विपरार्द्धमध्ये तस्य तनुत्यागासंभवात् 'द्विपरार्द्धपरायुषः' इत्युक्तेर्भावत्याग एव तनुत्याग इति ध्येयं सुधीभिः। व्रीडितो लज्जितः तां तनुं घोरां दृष्टिनिरोधकत्वादंधकारसदृशत्वेन भयदां किं तदित्यपेक्षायामाह—यन्नीहारं भूमाकारं तम इति लोका विदुः॥ ३३॥ ❀ ❀ ब्रह्मणः 'तेजीयसां न दोषाय' इत्यत्रोक्तं तेजीयस्त्वं दर्शयति कदाचिदिति। यथा पुराहमसृजं तथा स्रक्ष्यामीति चिंतयतः वेदेषु सर्वसृष्टिप्रकारः स्थित एवानेनायं सर्वं स्रक्ष्यतीति भगवता तन्मुखाद्वेदाविर्भावः कारित इति॥ ३४॥ ❀ ❀ होता उद्गाता अध्वर्युर्ब्रह्मेति चत्वारो होतारस्तेषां चतुर्णां न्यायैरुपोद्घातग्रंथस्तर्कसांख्यपातंजलादिमतविधायकैः सूत्रैस्सहेत्यर्थः। ब्रह्मणैव सृष्ट्वा गौतमादिभ्यस्संक्षेपत उपदिष्टानि तैस्तानि विस्तारितान्यतस्तत्तन्नाम्ना प्रसिद्धिं गतानीति भावः॥ ३५॥ ❀ ❀ तपोधनेति। तपोजन्यज्ञानबलेन सर्वं वक्तुं समर्थोसीत्याह—यद्यद्वस्तु येन येनास्येन यद्यदिति द्विरुक्त्याग्रेपि द्विरुक्तिरेव ज्ञेयेति॥३६॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

विश्रम्भात् शिष्टोऽयमस्मत्पिता धर्मवाक्यं मानयिष्यत्येवेति विश्वासात् "यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जन" इत्यादिन्यायात् अनुप्रवृत्तलोकानिष्टवारणार्थं प्रबोधयामासुः॥ २९॥ ❀ ❀ पूर्वे पूर्वे द्विपरार्द्धगताः ब्रह्मादयो देवाः अन्ये मनुष्या वा एतद्दुहितृगमनं प्रभुरपि॥ ३०॥ ❀ ❀ एतद्विकर्म॥ ३१॥ ❀ ❀ श्रीनारायणं प्रति प्रार्थनञ्चेदं तत्कृपां विना कामो दुर्निरोध इत्यभिप्रायात्॥ ३२॥ ❀ ❀ महापातकस्य प्राणत्याग एव प्रायश्चित्तमिति बोधनार्थं तनुं तत्याज। अत्र तनुशब्देन भाव एव व्याख्येयः द्विपरार्द्धान्तस्तत्त्यागाऽसम्भवात्॥ ३३॥ ❀ ❀ तां त्यक्तां तनुं यद्यां विद्वांस नीहारतमोरूपत्वेन वर्णयन्ति सुसङ्गतान् यथावत्सन्निवेशान् सर्ववेदमयेनेदमिति श्रीभगवदुक्तेः वेदशब्देभ्य एवादौ ससृजे स प्रजापतिरिति वचनाच्चादौ सृष्ट्युपयोगिवेदाविर्भावकथनम्॥ ३४॥ ❀ ❀ होतृशब्दस्योपलक्षणत्वात् होत्रादीनामिति व्याख्यातम्। आदिना होत्रध्वर्य्युब्रह्मणामृत्विजां परिग्रहकर्मेति अण्प्रत्ययस्यार्थः न्यायैरान्वीक्षिक्यादिभिर्वक्ष्यमाणैः॥ ३५॥ ❀ ❀ यद्यद्वेदादिकं येन येनेत्यावर्तनीयम्॥ ३६॥

### श्रीमद्वीरराघवव्याख्या

अधर्मे दुहितृकामनारूपे प्रत्यवायात्मके कर्मणि कृतोत्पन्ना मतिर्यस्य तं पितरं ब्रह्माणं विलोक्य मरीचिप्रभृतयः पुत्राः मुनयः विस्रम्भात्पितरि विश्वासाधिक्यात्पितरं प्रत्यबोधयन् ज्ञापितवन्तः॥ २९॥ ❀ ❀ अवबोधनप्रकारमेवाह। नैतदिति। पूर्वैरेतन्न कृतमद्य तु न कुर्वन्ति अपरे भाविनो लोकाः न करिष्यन्ति किन्तदित्यत आह। स्वयंप्रभुः धर्ममर्यादापालनसमर्थस्त्वमङ्गजं काममनिगृह्य स्वां दुहितरं गच्छेरिति यत्॥ ३०॥ ❀ ❀ तेजीयसामस्माकमेतन्न प्रत्यवायकरमत आह। तेजीयसामिति हे जगद्गुरो! जगन्मर्यादापालक! तेजीयसां तेजिष्ठानामप्येतन्न सुश्लोक्यं न श्लाघ्यं कुतः हि यस्मात्तेषां श्रेष्ठानामाचरितं वृत्तमनुतिष्ठन् लोकः जनः क्षेमाय कुशलाय कल्पते तथा च गीयते।

यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः। स यत्प्रमाणं कुरुते लोकस्तदनु वर्त्तते॥ ३१॥

एवं पितरं प्रबोध्य तमेतस्मादधर्मान्निवर्तयितुं भगवानेव समर्थः नान्य उपायोऽस्तीति तस्मै नमस्कुर्वन्तस्तस्मै विज्ञापयामासुरित्याह। तस्मा इति। तस्मै भगवते नमः यो भगवानात्मस्थमात्मनामरूपविभागानर्हसूक्ष्मदशापत्त्या स्थितं चेतनाचेतनात्मकमिदं जगत् स्वेन रोचिषा संकल्परूपज्ञानेन व्यञ्जयामास विभक्तनामरूपापन्नत्वेन व्यक्तमकरोत्। सकृज्जगत्कारणभूतः परमात्मा अधर्मान्निवृत्तिरूपं धर्मं पातुं रक्षितुमर्हति॥ ३२॥ ❀ ❀ एवमुक्तवत्सु पुत्रेषु पिता किमकरोदित्यत आह स इति। इत्थमुक्तरीत्या पुरः अग्रे गृणतः भाषमाणान् प्रजापतीन् पुत्रान् दृष्ट्वा प्रजापतीनां मरीच्यादीनां पतिः ब्रह्मा व्रीडितः लज्जितः तदा तन्वं तनुं तत्याज त्यक्तवान्॥ ३३॥ ❀ ❀ तां त्यक्तां घोरां तनुं दिशः जगृहुः गृहीतवत्यः। कुत एतद् ज्ञायते इत्यत्राह। यत्त्यक्तां तनुमेव तमो नीहारं विदुः जानीयुः। अत्र तनुत्यागो नाम कामुकत्वभावत्याग एव। तद्ग्रहणं नाम तद्भावग्रहणमेव। तनुशब्देन निर्देशस्तु तनुवद्विशेषणतया वेदितव्यम्। तनुत्यागानन्तरं ब्रह्मा किमकरोदित्यत्राह। कदाचिदिति। समवेतान् संगतात् लोकान् यथा पुरा पूर्वकल्पवत् कथमहं स्रक्ष्यामीति कदाचिद् ध्यायतः स्रष्टुः चतुर्मुखाच्चतुर्मुखेभ्यः वेदा ऋगादय आसन्नाविर्भूताः॥ ३४॥ ❀ ❀ चातुर्होत्रं चतुर्णां होतॄणां कर्मतन्त्रं यज्ञविस्तारः

उपवेदा आयुर्वेदादयः ते च न्यायाश्च तैः सह धर्मस्य चत्वारः पादाः तपः सत्यं दया शौचमिति प्रथमस्कन्धोक्ताः पादाः आश्रमास्तद् वृत्तयश्चासन्निति पूर्वेणान्वयः ॥ ३५ ॥ ❀ ❀ एवं सामान्येन वेदादीनां सर्गेऽभिहिते तेषां मध्ये कस्य कस्मान्मुखादुत्पत्तिरिति विवित्सया पृच्छति विदुरः । स वा इति । विश्वसृजां प्रजापतीनां पतिः स ब्रह्मा वेदादीनसृजदिति ज्ञातमस्माभिः इदं तु न ज्ञायते देवः ब्रह्मा येन यद्यदसृजदिति हे तपोधन मैत्रेय ! तत्सत्यं ब्रूहि वद ॥ ३६ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

भगवदुपासनया तेन तत्र नित्यसन्निहितमनस्कत्वाददुष्टमनसः स्वयंभुवो दुष्टजनमोहनरीतिमाह । तमिति ॥ २९ ॥ ❀ ❀ कथमब्रुवन्निति तत्राह । नेति योऽङ्गजं काममनिगृह्य स्वां दुहितरं गच्छेत्तस्य एतत्कर्म पूर्वैस्त्वदन्यैर्न कृतं ये अपरे पश्चात्तनास्तेऽपि न करिष्यन्तीत्यन्वयः ॥ ३० ॥ ❀ ❀ ननु पामरस्येदं दुष्करमग्निवत् दुष्कर्मेन्धनभस्मीकरण-समर्थस्य न मद्विधस्येति तत्राह । तेजीयसामिति बहुवचनं बहुभिरनुष्ठितमपि सुरापानं यथाऽन्याय्यं तथापीति हिशब्देन लोक-सिद्धिं सूचयति इतोऽप्यनुपपन्नमित्याह । यद्वृत्तमिति अनेन जगद्गुरुत्वेनैतत्करणेनेतरेषामनर्थः स्यादिति ध्वनितम् ॥ ३१ ॥ ❀ ❀ क्रोधभीत्या सान्त्वयन्तो नमन्तीत्याशयेनाह । तस्मा इति । संलापेन प्रार्थयमाना इति भावेनाह । य इति । स्वेन स्वयं प्रतिभासमानेन रोचिषा ज्ञानेनात्मस्थः परमात्मस्थमिदं विश्वं व्यञ्जयामास स ब्रह्मा स्वसृष्टं धर्मं पातुमर्हतीत्यन्वयः ॥ ३२ ॥ ❀ ❀ त्यागात्यागौ त्वितरप्रार्थनया महतां स्वभाव इति भावेनाह स इत्थमिति । अद्यापि सहस्थितत्वान्नेयं निजा सरस्वती किन्त्वन्यैव त्यक्ता सा केति मन्दाशङ्का "यां तत्याज विभुर्ब्रह्मा मानुषी वाक् तु सा स्मृता । सरस्वतीं निजां भार्यां देवीं वाचं तु तां विदुः" इति वाक्येन परिहर्तव्या ॥ ३३ ॥ ❀ ❀ दिश इति । दिक्स्था जना लक्ष्यन्ते अन्यथा मानुषीति विशेष्योक्तिः व्यर्था स्यात् तथा च यद्यस्या उत्पन्नं नीहाराख्यं तमो विदुरित्यर्थः । वेदादितदभिमानिनीनां सृष्टिरुर्वरितेति सुप्तप्रतिबुद्ध इव तत्सृष्टिं कथयति । कदाचिदिति । चतुर्मुखादिति चतुर्भ्यो मुखेभ्य इत्यर्थः ॥ ३४ ॥ ❀ ❀ चातुर्होत्रकर्मादिकमपि भगव-द्ध्यानपूर्वकं सृष्टत्वाद्ग्राह्यमिति भावेनाह । कथमिति । कर्मणा समवेतानुपपन्नांल्लोकान् कथं स्रक्ष्यामि द्रक्ष्यामीति ध्यायतो ब्रह्मणो वाचा कर्मतन्त्रं कर्मशास्त्रं समुत्पन्नं उपवेदस्मृतिलक्षणैर्नवैरुपोद्घातग्रन्थैः सह । अत्र विशेषस्तु

अभिमानिनः शब्दतश्च ब्रह्मा वेदान् ससर्ज ह । यज्ञादींश्चक्लृपे वाचा तथा सर्वाभिमानिनः ।
इतिहासपुराणे तु श्रुत्वा हरिमुखात्स्वयम् । भारतादीन् विना पश्चाद्धरिणान्यैश्च निर्मितान् ॥

इत्यनेन ज्ञातव्यः । आश्रमवृत्तयः तदाचाराश्च ॥ ३५ ॥ ❀ ❀ विदुरः स्वयं विभागं जानन्नपि लोकहितार्थं विविच्य वक्तव्यमिति पृच्छतीत्याह । विदुर इति ॥ ३६ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

विस्रम्भात् जन्यजनकसम्बन्धोत्थसख्यात् न तु पापदर्शनोत्थकोपादित्यर्थः । यद्वा महतां विकर्म्मापि नापकारकमिति विश्वासात् केवलमनुप्रवृत्तलोकाशङ्कयैव प्रबोधयामासुरिति मरीच्यादीनामपराधाभावो द्योतितः ॥ २९ ॥ ❀ ❀ पूर्व्वैः पूर्व्वकल्पगतैर्लोकैः । त्वत्तः पूर्व्वे ये ब्रह्मादयस्तैर्वा अङ्गजं कामम् ॥ ३० ॥ ❀ ❀ सुश्लोक्यं सत्कीर्त्यर्हं वृत्तं चरित्रम् ॥ ३१ ॥ ❀ ❀ एवं प्रबोधितोऽपि ब्रह्मा यदा न प्राबुद्ध्यत तदा भगवत्कृपां विना कामः प्रकारान्तरेण नोपशाम्येदिति सिद्धान्तमनु-स्मृत्य ते मुनयो भगवन्तमेव प्रापद्यन्तेत्याह । तस्मा इति ॥ ३२ ॥ ❀ ❀ ❀ तन्वं तनुं तत्याजेति महापातकस्य प्राणान्त-मेव प्रायश्चित्तं मुख्यमिति ज्ञापयामास । द्विपरार्द्धमध्ये तस्य तनुत्यागासम्भवाद्भावत्याग एव तनुत्यागत्वेनोक्तः ॥ ३३ ॥ ❀ ❀ दिश इति ता एव तमसा अद्याप्याव्रियन्ते ॥ ३४ ॥ ❀ ❀ 'तेजीयसां न दोषाय वह्नेः सर्व्वभुजो यथे'त्यादिवचनात् स्वकन्यानुगामिनोऽपि ब्रह्मणो मालिन्यं नाशङ्कनीयमिति वक्तुं ब्रह्मणस्तेजस्वित्वमाह । कदाचिदित्यादिना नाशक्त्युपबृंहितमित्यन्तेन ग्रन्थेन । यथा आसन्निति वेदेषु सृष्टिप्रकारः सर्व्व एव वर्त्तत इति तद्दृष्ट्या सुखेन सृजेति भगवदाज्ञावशादिति भावः ॥ ३५ ॥ ❀ ❀ होता उद्गाता अध्वर्युर्ब्रह्मेति चतुर्णां होतॄणां कर्म चातुर्होत्रं कर्म्मतन्त्रं यज्ञविस्तारः उपवेदैर्न्यैश्च सह । आश्रमास्तद्-वृत्तयश्चासन् ॥ ३६ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

विस्रम्भात् न्याय्यवाक्यं स्वीकरिष्यत्येवेति विश्वासात् प्रत्यबोधयन् ज्ञापितवन्तः ॥ २९ ॥ ❀ ❀ त्वत् त्वत्तः पूर्वे ये ब्रह्मादयस्तैरेतत् न कृतम् । ये चापरे भविष्यास्ते न करिष्यन्ति अङ्गजं मनोजम् ॥ ३० ॥ ❀ ❀ सुश्लोक्यं यशस्करं यत् येषां तेजीयसां वृत्तं चेष्टितम् ॥ ३१ ॥ ❀ ❀ एवं पितरं संप्रार्थ्य सर्वप्रेरकं भगवन्तं नतिपूर्वकं प्रार्थयन्ते तस्मै इति ॥ ३२ ॥ ❀ ❀ तदा भगवत्प्रार्थनावेलायां तन्वं तनुम् ॥ ३३ ॥ ❀ ❀ यथा पूर्वकल्पे तथा समवेतान् सुसंग-

तान् लोकान् कथं स्रक्ष्यामि इति ध्यायतः चतुर्मुखात् चत्वारि मुखानि यस्य तस्मात् तन्मुखेभ्य इत्यर्थः। वेदाः आसन्॥ ३४॥ ❀ ❀ चातुर्होत्रं चतुर्णां होत्रादीनां कर्म कर्मतन्त्रं षोडश्यादिकर्मतन्त्रम्। उपवेदाः आयुर्वेदादयः नयाः आन्वीक्षिक्यादिशास्त्राणि ते च ते च तैः सह तपआदयः धर्मस्य पादाः आश्रमाश्च तद्वृत्तयश्च आसन्निति पूर्वेणान्वयः॥ ३५॥ ❀ ❀ मुखतः मुख्येभ्यः॥ ३६॥

## श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

तमधर्म इति। पितरं ब्रह्माणम्। सुताः। मरीचिर्मुख्यो येषाम्। मुनय इति मननेन साक्षादधर्महेतुत्वमस्याः सृष्टेर्नाऽस्तीति ज्ञातवन्तः। विश्रम्भात् विश्वासाद्धा[1]र्ष्ट्येन। प्रत्यबोधयन्निति। यथा ब्रह्मणा पूर्वमेते बोधिताः, तमेव बोधं ब्रह्माणं प्रति बोधितवन्तः। वाचि प्रवृत्तिर्न कर्तव्या, शिष्टैः पूर्वजैरकृतत्वादपकीर्तिजनकत्वाज्जगन्नाशहेतुत्वाच्च॥ २९॥ ❀ ❀ तत्र प्रथमं हेतुं साधयति—नैतत्पूर्वैः कृतमिति। अत्र जगति, एतदेतादृशं कर्म, पूर्वैः सृष्ट्यादिप्रवर्तकैः कदापि पूर्वं न कृतम्, नन्वेतादृश एवाऽऽचारोऽतः परं प्रवर्तनीय इत्याशङ्क्याऽऽहुः—न करिष्यन्ति चापर इति। तस्मादयमनाचारः। तं त्वमेव करोषीत्याह—यत्त्वमिति। गच्छेरिति अभीष्टे लिङ्। यत्त्वं स्वेच्छया तां गच्छसीत्यर्थः। ननु मनस्तया हृतम्, तां तज्जः कामो हरति, मम को दोष इति चेत्तत्राऽऽह—अनिगृह्याऽङ्गजमिति। अङ्गजः कामः स्वकीयः, स एव निगृह्यो न तु प्रवर्तनीयः, तथा सत्यधर्मः स्यादिति भावः। प्रभो इति संबोधनं तथा सामर्थ्यं सूचयति। अनेनाऽधर्मजनकत्वमपि सूचितम्॥ ३०॥ ❀ ❀ द्वितीयं हेतुं विशदयति—तेजीयसामिति। स्वतन्त्रेणैवैतत्कर्तुं शक्यम्, न परतन्त्रेण। न हि तेजस्वित्वमात्रेण स्वातन्त्र्यं भवति, यमादिदण्डः परं निवार्यते; तथाप्यपकीर्तिर्भवत्येव, ततोऽपि तेजस्वित्वेऽपि कीर्तिर्न भवत्येव। तदाह—न सुश्लोक्यमिति। किञ्च, त्वं जगद्गुरुः सर्वोपदेष्टा, त्वद्वाक्याज्ज्ञानमन्यस्य। तत्र वाक्ये जनकं ज्ञानं तव स्वाभाविकं चेन्न भवेत्, काव्यवदप्रामाण्यमेव स्यात्; उत्प्रेक्षाजनितत्वात्। सत्यज्ञानस्य जनकत्वे, एवं तवाऽऽचारो न स्यादिति। किञ्च। यथा त्वद्वाक्यं प्रमाणं तथा तवाऽऽचारोऽपि। ततस्त्वदाचारानुसारेण प्रवर्तमाना अधर्मेण नष्टा एव भवेयुः। अतस्तेषामपि रक्षार्थं नैवं कर्तव्यमित्याह—यद्वृत्तमिति। वरदानवत् क्षेमदानेऽपि सर्वदानं निर्वहेदिति। यथा त एव क्षेमे स्वमेव समर्था भवन्ति, तथोपायः कर्तव्यः॥ ३१॥ ❀ ❀ एवं स्वतः सामर्थ्यतश्च न कर्तव्यमिति ब्रह्माणं बोधयित्वा, भगवत्प्रेरणया क्रियत इत्याशङ्क्य भगवन्तं प्रार्थयन्ते—तस्मै नम इति। यद्यन्तर्यामी भगवान् प्रेरयेत्, तदैवाऽयं निवर्तेत। तेनापि प्रेरणमवश्यं कर्तव्यम्। इदं हि जगद्भगवता स्वस्मिन् स्थितं प्रकाशितम्। तदपि तेजसा, न तु तमसा दैत्यवत्। तस्य स्थितिर्धर्मेणैव, तस्याऽधर्मेण नाश एव। तथा सति 'उत्पतन्नेव यो हतः' इतिवदुत्पन्नमात्रमेव जगन्नष्टं भवेत्, ततोऽनुत्पाद एव श्रेष्ठः स्यात्। अथ यदि सत्यसङ्कल्पो जगत् कृतार्थतायै कृतवान्, तदा स एव जगत्कर्ता धर्ममपि पातुमर्हति॥ ३२॥ ❀ ❀ एवं प्रकारत्रयेण ब्रह्माणं स्तुत्वा, क्रियया अपि प्रतिबन्धका इव पुरः स्थिताः। ततो वाचा क्रियया च रुद्धो मानसभावस्तेन त्यक्त इत्याह—स इत्थमिति। गृणत इति निवृत्तिपर्यन्तं स्तोत्रं कृतवन्त इत्यर्थः। सृष्टौ चिन्ता न कर्तव्येति ज्ञापयितुमाह—प्रजापतीनिति। प्रजापतिपतिरिति तेषामपि पालनमावश्यकम्। तन्वमिति तनोः सकाशाज्जातं रूपम्। लज्जया निवृत्तिर्लोक इति सूचयितुं व्रीडित इत्युक्तम्। सा त्यक्ता तनुः प्रतिसर्गरूपत्वात् नीहाररूपा जाता, तां दिशः श्रोत्राभिमानिन्यो देवता गृहीतवत्यः। वाग्बोधिकास्ताः सर्वत्र वाचा सह तां योजयिष्यन्ति, अत एव 'न तं विदाथ' इति श्रुतिः। अत एव श्रुत्यर्थविदस्तामेव तनुं नीहारमिति विदुः॥ ३३॥ ❀ ❀ एवं सृष्टिप्रसङ्गेन प्रतिसृष्टिमुक्त्वा, राजसे भेदद्वयं निरूप्य, सात्त्विके भेदत्रयं निरूपयति—कदाचिदित्यादि यावदध्यायसमाप्ति।

आध्यात्मिकास्तु श्रुतयःशब्दब्रह्म तु दैविकम्। धर्मप्रवर्तकाः सर्वे भूतानि स्मरणात्पुनः॥ १॥

तत्र प्रथममाध्यात्मिकान् वेदान् जगज्जननार्थं ध्यानेन दृष्टवान्, तदा ते सृष्ट्यर्थं भगवदिच्छया प्रकटीभूताः। तदाह—कदाचिदिति स्रष्टुर्विधातुः। ध्यायत इति प्रथमतो ध्याने प्रकटीभूताः, पश्चान्मुखात्। कदाचिदिति न सर्वकल्पेषु वेदोद्गमः। कथं स्रक्ष्यामीति ब्रह्मणश्चिन्ता वेदोद्गमे हेतुः। ध्यानमेवाऽऽह—कथं स्रक्ष्यामीति। समवेतान् मिलितान्। मिलितानां विवेचनमसाधारणलक्षणैरेव भवति। यथा स्थाण्वादयः पुरुषादिभ्यो वक्रकोटरादिभिर्विविच्यन्ते, तथा श्रुत्युक्तलक्षणैः समवेता विविच्यन्त इति वेदोद्गमः॥ ३४॥ ❀ ❀ वेदार्थमपि चिन्तया अङ्गादिभिः सहोत्पादितवानित्याह—चातुर्होत्रमिति। चत्वारो होतारो यत्र। ब्रह्मा होताऽध्वर्युरुद्गाता एते चत्वारो होमसाधनम्, अनुज्ञाशस्त्रहोमस्तोत्रैस्तत्कर्म चातुर्होत्रम्। तन्त्रमिति विस्तारः। उपवेदा आयुर्वेदादयः। नया नीतिशास्त्राणि, पुराणन्यायमीमांसाधर्मशास्त्राणि वा। धर्मस्य चत्वारः पादाः, सत्यं तपो दया दानमिति। आश्रमाणां ब्रह्मचर्यादीनां प्रत्येकं चतस्रो वृत्तयः। चतुर्मुखादासन्निति सर्वत्राऽनुषङ्गः,॥ ३५॥ ❀ ❀ प्रमादाद्वेदनिर्गमने नियमेनेष्टं न सिद्ध्यतीत्यवश्यं ब्रह्म[2]णैव, हृदये प्रकटा वेदाः, मुखेन निर्मिता इति वक्तव्यम्। तत्रापि पूर्वादिक्रमेणाऽन्येन वा वेदाः सृष्टा इति

---

१. कार्त्स्न्येन. क. ङ. च.। २. ब्रह्मण. एव. क.।

वक्तव्यम् । तथा सति वेदादीनां क्रमः सिद्ध्येत्, अन्यथा कर्मापेक्षया क्रमकल्पनायां यजुर्वेदः प्रथमो भवेत्, प्रधानपरे वा ब्रह्मणो वेदोऽथर्वाङ्गिरसात्मकः प्रथमः स्यात् । अतः क्रमाध्ययनमन्यथा स्यात् । तथोपवेदादीनाम् । अतो विदुरः क्रमं पृच्छति—स वैविश्वसृजामीश इति । मुखतोऽसृजदित्यन्तमनुवादः । तत्र हेतुरुक्तः । यद्यदिति प्रश्नविषयः । देवत्वात्तत्प्रतिपादनत्वाच्छ्रुतेः स्वार्थं तत्सर्ग इति प्रयोजनं दोषाभावश्च निरूपितौ । स्वात्मानं प्रति तदुपदेशाभावमाशङ्क्याऽऽह—मे इति । तपोधनेति संबोधनं जन्मकर्मादिपरिज्ञापकम्, ततः सर्वज्ञत्वान्मां प्रत्यपि वक्ष्यतीति ॥ ३६ ॥

## श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

तेजीयसामित्यत्र । तत्र वाक्ये इत्यस्य अप्रामाण्यमित्यनेनाऽन्वयः ॥ ३१ ॥ ❀ ❀ तां दिश इत्यत्र । दिग्भिर्नीहारग्रहणस्य तात्पर्यमाहुः—वाग्बोधिका इत्यादि । तामिति । अधर्मबुद्धिम् ॥ ३३ ॥ ❀ ❀ कदाचिदित्यत्र । राजस इत्यादि । 'अथाऽभिध्यायत' इत्यादिना उक्ते राजसे सर्गे सर्गप्रतिसर्गाभ्यां भेदद्वयं निरूप्य 'कदाचित्' इत्यादिना वक्ष्यमाणे सात्त्विके सर्गे आध्यात्मिकादिभेदत्रयं निरूपयतीत्यर्थः । भूतानि स्मरणात्पुनरिति । धर्मप्रवर्तका ऋषयः पुनर्वेदार्थस्मरणादाधिभौतिकवेदरूपा इत्यर्थः ॥ ३४ ॥ ❀ ❀ स वा इत्यत्र । प्रधानपरे वेत्यादि । तादृशे क्रमे ब्रह्मग ऋत्विजः प्राधान्यात्तद्वेदः प्रथमः स्यादित्यर्थः । तत्र हेतुरुक्त इति । प्रश्नविषये प्रष्टव्यांशे हेतुत्वेनोक्त इत्यर्थः । तत्प्रतिपादनत्वात् श्रुतेः स्वार्थमिति । श्रुतेर्देवप्रतिपादकत्वात् देवार्थम् । दोषाभाव इति । विदुरस्याऽपि देवत्वात्तं प्रति कथने दोषाभाव इत्यर्थः ॥ ३६ ॥

## श्रीगिरिधरकृता बालप्रबोधिनी

अधर्मे दुहितृसम्भोगरूपे प्रत्यवायजनके कुकर्मणि कृता मतिर्येन तं पितरं विलोक्य मरीचिप्रभृतयः पुत्रा विश्रम्भात् पितृत्वादस्मदुक्तं श्रोष्यति करिष्यति चेति विश्वासात् प्रत्यबोधयन् विज्ञापितवन्त इत्यन्वयः । ननु पुत्राः कथं पितृप्रबोधे समर्था इत्याशङ्क्याह—मुनय इति ॥ २९ ॥ ❀ ❀ अवबोधनप्रकारमेवाह—नैतदिति । त्वत् त्वत्तो ये पूर्वे ब्रह्मादयस्तैरेतन्न कृतं, ये चापरे अग्रे भाविनस्तेऽप्येतन्न करिष्यन्ति । किं तदित्यत आह—यदिति । अङ्गजं काममनिगृह्य तद्वशीभूतस्त्वं स्वां दुहितरं गच्छेरिति यत् । एतच्च धर्ममर्यादारक्षकस्य समर्थस्य तव नोचितमिति सूचयन्तः सम्बोधयन्ति—प्रभो इति ॥ ३० ॥ ❀ ❀ ननु तेजीयसामस्माकं नैतत्प्रत्यवायकरमित्याशङ्क्याहुः—तेजीयसामिति । अतितेजस्विनां युष्माकं प्रत्यवायाजनकमप्येतत् दुहितृगमनं सुश्लोक्यं सत्कीर्तिकरं न भवति । किन्त्वपकीर्तिकरमेव भवतीति सूचयन्ति—हीति । एतच्च धर्मप्रवर्तकस्य तवानुचितमेवेति सूचयन्तः सम्बोधयन्ति—जगद्गुरो इति । अनुचितत्वमेव स्पष्टयन्ति—यदिति । येषां युष्माकं श्रेष्ठानां वृत्तमाचारमनुतिष्ठन् लोकः प्राणिमात्रः क्षेमाय पुरुषार्थलाभाय कल्पते समर्थो भवति । अत्र च—'यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः । स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते' इत्यादिवाक्यं प्रमाणं सूचयन्ति—वा इति । एवम्भूतानां युष्माकमेवं दुराचरनिष्ठत्वे युष्मदनुवर्ती सर्वोऽपि जनो दुराचारित्वेन सर्वपुरुषार्थाद् भ्रष्टो नरकाद्यधिकारी च स्यादिति भावः ॥ ३१ ॥ ❀ ❀ एवं ब्रह्माणं प्रबोध्य तथापि तस्य ततोऽधर्माचारान्निवृत्तिमदृष्ट्वा जगत्कर्ता धर्मप्रवर्तकोऽन्तर्यामी भगवानेवैनं निवर्तयितुं समर्थ इति निश्चित्य तं नमस्यन्तः प्रार्थयन्ति—तस्मा इति । यः आत्मस्थमात्मनि स्थितं अविभक्तनामरूपमिदं विश्वं स्वेन रोचिषा स्वकीयेन सङ्कल्पात्मकज्ञानेन व्यञ्जयामास विभक्तनामरूपापन्नत्वेन व्यक्तमकरोत् स जगत्स्वामी धर्मं पातुमधर्मान्निवर्तनेन रक्षितुमर्हति, तस्मै परमोपकारिणे भगवते ऐश्वर्यादिपूर्णाय केवलं नम इत्यन्वयः । तत्र प्रत्युपकारस्याशक्यत्वादिति भावः ॥ ३२ ॥ ❀ ❀ एवं सम्प्रार्थितेनान्तर्यामिणा प्रेरितो ब्रह्मा यत्कृतवांस्तदाह—स इति । इत्थमुक्तप्रकारेण पुरः अग्रे गृणतः भाषमाणान् स्वपुत्रान् दृष्ट्वा स प्रजापतिपतिर्ब्रह्मा व्रीडितः कुकर्मप्रवृत्त्या लज्जितः सन् तदा तन्वं तनुं तत्याजेत्यन्वयः । पुत्राणामग्रे तस्य कथं लज्जेत्याशङ्क्य तेषां महत्त्वमाह—प्रजापतीनिति । तां त्यक्तां तनुं दिशो जगृहुः । लज्जया तनुत्यागे हेतुमाह—घोरामिति, कुकर्मप्रवृत्तिहेतुतया निन्द्यामित्यर्थः । दिशां ग्रहणे प्रमाणमाह—यत् यां त्यक्तां तनुमेव नीहारं तमो विदुः, नीहाररूपेण व्यवहरन्तीत्यर्थः ॥ ३३ ॥ ❀ ❀ तनुत्यागानन्तरं तन्वन्तरेण कृतां सृष्टिमाह—कदाचिदिति । समवेतान् सुसङ्गतान् लोकान् यथा पुरा पूर्वकल्पवदहं कथं स्रक्ष्यामीति कदाचिद्ध्यायतः स्रष्टुर्ब्रह्मणश्चतुस्सङ्ख्यायुक्तात् मुखात् ऋगादयश्चत्वारो वेदा आसन् आविर्भूताः ॥ ३४ ॥ ❀ ❀ चातुर्होत्रं चतुर्णां होता उद्गाता अध्वर्युर्ब्रह्मेति चतुर्णां होतॄणां कर्म कर्मतन्त्रं यज्ञादिविस्तारः उपवेदाः आयुर्वेदादयः नयाः नीतिशास्त्राणि पुराणन्यायमीमांसाधर्मशास्त्राणि च तैः सह धर्मस्य चत्वारः 'सत्यं तपो दया दानं' इत्युक्ताः पादा आश्रमाणां ब्रह्मचर्यादीनां प्रत्येकं चतस्रो वृत्तयश्च तथैव चतुर्मुखादासन्निति पूर्वेणान्वयः ॥ ३५ ॥ ❀ ❀ एवं सामान्येन वेदादीनां सर्गेऽभिहिते तेषां मध्ये कस्य कस्मान्मुखादुत्पत्तिरिति विवित्सया पृच्छति—स वा इति । विश्वसृजां प्रजापतीनामीशः स्वामी स वै प्रसिद्धो ब्रह्मा वेदादीन् मुखतोऽसृजदिति त्वत्तः श्रुतमिति शेषः । स देवो येन यद्यदसृजत् तन्मे मह्यं ब्रूहीत्यन्वयः । तवाज्ञातं तु किञ्चिन्नास्तीति सूचयन् सम्बोधयति—तपोधनेति ॥ ३६ ॥

### हिन्दी अनुवाद

उन्हें ऐसा अधर्ममय सङ्कल्प करते देख, उनके पुत्र मरीचि आदि ऋषियोंने उन्हें विश्वासपूर्वक समझाया—॥ २९ ॥ ❀ ❀ 'पिताजी ! आप समर्थ हैं, फिर भी अपने मनमें उत्पन्न हुए कामके वेगको न रोककर पुत्रीगमन-जैसा दुस्तर पाप करनेका सङ्कल्प कर रहे हैं । ऐसा तो आपसे पूर्ववर्ती किसी भी ब्रह्माने नहीं किया और न आगे ही कोई करेगा ॥ ३० ॥ ❀ ❀ जगद्गुरो ! आप-जैसे तेजस्वी पुरुषोंको भी ऐसा काम शोभा नहीं देता; क्योंकि आपलोगोंके आचरणोंका अनुसरण करनेसे ही तो संसारका कल्याण होता है ॥ ३१ ॥ ❀ ❀ जिन श्रीभगवान्‌ने अपने स्वरूपमें स्थित इस जगत्‌को अपने ही तेजसे प्रकट किया है, उन्हें नमस्कार है । इस समय वे ही धर्मकी रक्षा कर सकते हैं' ॥ ३२ ॥ ❀ ❀ अपने पुत्र मरीचि आदि प्रजापतियोंको अपने सामने इस प्रकार कहते देख प्रजापतियोंके पति ब्रह्माजी बड़े लज्जित हुए और उन्होंने उस शरीरको उसी समय छोड़ दिया । तब उस घोर शरीरको दिशाओंने ले लिया । वही कुहरा हुआ, जिसे अन्धकार भी कहते हैं ॥ ३३ ॥ ❀ ❀ एक बार ब्रह्माजी यह सोच रहे थे कि 'मैं पहलेकी तरह सुव्यवस्थित रूपसे सब लोकोंकी रचना किस प्रकार करूँ ?' इसी समय उनके चार मुखोंसे चार वेद प्रकट हुए ॥ ३४ ॥ ❀ ❀ इनके सिवा उपवेद, न्यायशास्त्र, होता, उद्गाता, अध्वर्यु और ब्रह्मा—इन चार ऋत्विजोंके कर्म, यज्ञोंका विस्तार, धर्मके चार चरण और चारों आश्रम तथा उनकी वृत्तियाँ—ये सब भी ब्रह्माजीके मुखोंसे ही उत्पन्न हुए ॥ ३५ ॥ ❀ ❀ विदुरजीने पूछा—तपोधन ! विश्वरचयिताओंके स्वामी श्रीब्रह्माजीने जब अपने मुखोंसे इन वेदादिको रचा, तो उन्होंने अपने किस मुखसे कौन वस्तु उत्पन्न की—यह आप कृपा करके मुझे बतलाइये ॥ ३६ ॥

## मैत्रेय उवाच

**ऋग्यजुःसामाथर्वाख्यान् वेदान् पूर्वादिभिर्मुखैः । शास्त्रमिज्यां स्तुतिस्तोमं प्रायश्चित्तं व्यधात्क्रमात् ॥३७॥**
**आयुर्वेदं धनुर्वेदं गान्धर्वं वेदमात्मनः । स्थापत्यं चासृजद् वेदं क्रमात्पूर्वादिभिर्मुखैः ॥ ३८ ॥**
**इतिहासपुराणानि पञ्चमं वेदमीश्वरः । सर्वेभ्य एव वक्त्रेभ्यः ससृजे सर्वदर्शनः ॥ ३९ ॥**
**षोडश्युक्थौ पूर्ववक्त्रात्पुरीष्यग्निष्टुतावथ । आप्तोर्यामातिरात्रौ च वाजपेयं सगोसवम् ॥ ४० ॥**
**विद्या दानं तपः सत्यं धर्मस्येति पदानि च । आश्रमांश्च यथासंख्यमसृजत्सह वृत्तिभिः ॥ ४१ ॥**
**सावित्रं प्राजापत्यं च ब्राह्मं चाथ बृहत्तथा । वार्तासञ्चयशालीनशिलोञ्छ इति वै गृहे ॥ ४२ ॥**
**वैखानसा बालखिल्यौदुम्बराः फेनपा वने । न्या[२]से कुटीचकः पूर्वं बह्वोदो हंसनिष्क्रियौ ॥ ४३ ॥**
**आन्वीक्षिकी त्रयी वार्ता दण्डनीतिस्तथैव च । एवं व्याहृतयश्चासन् प्रणवो ह्यस्य दह्[३]तः ॥ ४४ ॥**

### श्रीधरस्वामिविरचिता भावार्थदीपिका

चातुर्होत्रसृष्टिक्रममाह । शस्त्रमप्रगीतमंत्रस्तोत्रं होतुः कर्म इज्यामध्वर्योः कर्म स्तुतिस्तोमं स्तुतिः संगीतं स्तोमं तदर्थमृक्समुदायं त्रिवृत्स्तोमो भवतीत्यादिविहितमुद्गातृप्रयोज्यम् । प्रायश्चित्तं ब्राह्मम् ॥ ३७ ॥ ❀ ❀ उपवेदक्रममाह । आयुर्वेदमिति । आत्मनो मुखैः स्थापत्यं विश्वकर्मशास्त्रम् ॥ ३८ ॥ ३९ ॥ ❀ ❀ कर्मतंत्रक्रममाह । षोडश्युक्थाविति । पुरीषी चयनम् । अग्निष्टुदग्निष्टोमः ॥ ४० ॥ ❀ ❀ विद्येति शौचम् । "क्षेत्रज्ञस्येश्वरज्ञानाद्विशुद्धिः परमा मता" इति स्मृतेः दानमिति दया । "भूताभयप्रदानस्य कलां नार्हंति षोडशीम्" इति वचनात् । एवं च । सत्यमिति "तपः शौचं दया सत्यमिति पादाः कृते कृताः" इति प्रथमस्कंधोक्तेरविरोधः ॥४१॥ ❀ ❀ ब्रह्मचर्याद्याश्रमेष्वेकैकस्य चातुर्विध्यमाह । सावित्रं ब्रह्मचर्यमुपनयनादारभ्य गायत्रीमधीयानस्य त्रिरात्रं प्राजापत्यं व्रतान्याचरतः संवत्सरं ब्राह्मं वेदग्रहणांतं बृहन्नैष्ठिकं वार्ता अनिषिद्धकृष्यादिवृत्तिः सञ्चयो याजनादिवृत्तिः शालीनं अयाचितवृत्तिः शिलोञ्छः पतितकणिशकणवृत्तिः । एकवचनमार्षम् । इत्येता गृहे वृत्तय इति । यद्वा शिलोंछ इति द्वंद्वैक्ये सप्तमी एवं वृत्तिभेदे सति गृहे स्थिता भवंतीत्यर्थः ॥ ४२ ॥ ❀ ❀ वने स्थिताश्चत्वारः तत्र वैखानसा अकृष्टपच्यवृत्तयः, बालखिल्या नवेऽन्ने लब्धे पूर्वसंचितान्नत्यागिनः, औदुंबराः प्रातरुत्थाय यां दिशं प्रथमं पश्यंति तत आहृतैः फलादिभिर्जीवंतः, फेनपाः स्वयं पतितैः फलादिभिर्जीवंतः, कुटीचकः स्वाश्रमकर्मप्रधानः, बह्वोदः कर्मोपसर्जनीकृत्य ज्ञानप्रधानः, हंसो ज्ञानाभ्यासनिष्ठः, निष्क्रियः प्राप्ततत्त्वः, एते च सर्वे यथोत्तरं श्रेष्ठाः ॥ ४३ ॥ ❀ ❀ न्यायादीनां पूर्वादिक्रमेणोत्पत्तिमाह । आन्वीक्षिकीति आन्वीक्षिक्याद्या मोक्षधर्मकामार्थविद्या भूर्भुवरिति व्यस्तास्तिस्रः समस्ता चतुर्थी । यथाहाश्वलायनः । एवं व्याहृतयः प्रोक्ता व्यस्ता समस्ता इति । यद्वा मह इति चतुर्थी । तथा च श्रुतिः । "भूर्भुवः सुवरिति वा एतास्तिस्रो व्याहृतयस्तासामुह स्मैतां चतुर्थीमाह । वाचमस्य प्रवेदयते मह" इति । दह्रतः हृदयाकाशात् ॥ ४४ ॥

---

१. प्रा० पा० षोडशोक्षः पूर्व० । २. प्रा० पा०—न्यासी । ३. प्रा० पा०—दक्षतः ।

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

अप्रगीतमिति नाममंत्रात्मकं स्तोत्रम्। इज्या यजनम्। यद्वा। क्रियमाणकर्म पुरतः क्रियमाणस्तुतिविशेषः। स्तोमः अन्यदा क्रियमाणा स्तुतिरिति। आदिनाऽन्येऽपि मंत्रा ज्ञेयाः। उद्गात्रा प्रयोज्यं पाठ्यमित्यर्थः। त्राह्मं ब्रह्मणः कर्म क्रमात्पूर्वादिमुखक्रमेण पूर्वमुखादृग्वेदं दक्षिणमुखाद्यजुर्वेदमेवमग्रेऽपि ज्ञेयम्। वेदादीनित्यनादिनोपवेदादिग्रहः॥ ३७॥ ❀ ❀ आयुर्वेदं चिकित्साशास्त्रं तच्चाष्टस्थानात्मकं सूत्रशारीरैन्द्रियचिकित्सानिदानकल्पप्रसिद्धिभेदात्। स्वरूपं च सूत्रादीनां तत एवावसेयम्। धनुर्वेदं शस्त्रशास्त्रं यद्यपि धनुःशब्दश्चापे रूढस्तथापि चतुर्विधायुधेषु वर्त्तते तच्चतुर्विधं मुक्तममुक्तं मुक्तामुक्तं मंत्रमुक्तं च। तत्र मुक्तं चक्रादि अमुक्तं खड्गादि मुक्तामुक्तं शल्यावांतरभेदादि मंत्रमुक्तं शरादि। तत्र मंत्रमुक्तमस्त्रमन्यत्सर्वं शस्त्रमिति। गांधर्वं—गीतनृत्यवाद्यप्रकारबोधकं शास्त्रं तल्लक्षणं तु "यदुक्तं ब्रह्मणः स्थानं ब्रह्मग्रंथिश्च यो मतः। तन्मध्ये संस्थितः प्राणः प्राणाद्वह्निसमुद्भवः॥ वह्निमारुतसंयोगान्नादः समुपजायते। न नादेन विना गीतं न नादेन विना स्वरः॥ न नादेन विना नृत्यं तस्मान्नादात्मकं जगत्॥ पवनाज्जायते नादो नादतः स्वरसंभवः। स्वरात्संजायते रागः स रागो जनरंजकः॥५॥ पदस्य स्वरसंघातस्तालेनानुमितस्तथा। प्रयुक्तश्चावधानेन गांधर्वमभिधीयते॥ सप्त स्वरास्त्रयो ग्रामा मूर्छनाश्चैकविंशतिः। द्वाविंशतिश्च श्रुतय एतेभ्यो रागसंभवः॥ षड्जर्षभकगांधारमध्यपंचमधैवताः। निषादश्चेत्यमी सप्त तंत्रीकंठोत्थिताः स्वराः॥ षड्जादयः स्वराः सप्त ग्रामौ तु षड्जमध्यमौ। केचिद् गांधारमप्याहुः स तु नेहास्ति भूतले॥ चतुर्दशैव श्रुतयस्तावन्मानाश्च मूर्च्छनाः। गीयंते मानवैर्भूमावन्यास्तु त्रिदशालये॥ स्वयं यो राजते नादः स स्वरः परिकीर्त्तितः। स्वरैश्च निखिलं व्याप्तं तद्विज्ञेयं पृथक्पृथक्॥ उच्चैर्निषादगांधारौ नीचैरृषभधैवतौ। शेषास्तु स्वरिता ज्ञेया षड्जमध्यमपञ्चमाः॥ षड्जं वदेन्मयूरो हि ऋषभं चातको वदेत्। अजा वदति गांधारं क्रौंचो वदति मध्यमम्॥ पुष्पसाधारणे काले कोकिलः पञ्चमं वदेत्। दर्दुरो धैवतं चैव निषादञ्च वदेद्गजः॥ हास्यशृङ्गारयोः कार्यौ स्वरौ पंचममध्यमौ। षड्जर्षभौ तथा ज्ञेयौ वीररौद्राद्भुते रसे॥ गांधारश्च निषादश्च कर्त्तव्यौ करुणारसे। धैवतश्चैव कर्त्तव्यो बीभत्से च भयानके॥ चतुःश्रुतिस्त्रिश्रुतिश्च द्विश्रुतिश्च चतुःश्रुतिः चतुःश्रुतिस्त्रिश्रुतिश्च द्विश्रुतिश्चेति ते स्वराः॥ रागास्तु भैरवः पञ्चमो नाटो मल्लारो गौडमालवः। देशाख्यश्चेति षड्रागाः प्रोच्यंते रागवित्तमैः॥ वंगपालो गुणकारी मध्यमादिर्वसंतकः। धन्याश्रीश्चेति पंचैते रागा भैरवसंश्रयाः॥ ललिता गुर्जरी देशी वराटी रामकृत्तथा। मता रागार्णवे रागाः पञ्चैते पञ्चमाश्रयाः॥ नटनारायणः पूर्वं गांधारः सालगस्तथा। ततः केदारकर्णाटौ पञ्चैते नाटसंश्रयाः॥ मेघमल्लारिका मालकौशिकः प्रतिमंजरी। आसावरी च पञ्चैते रागा मल्लारसंश्रयाः॥ हिंदोलस्त्रिगुणाधाली गौडी कोलाहलस्तथा। पञ्चैते गौडनामानं रागमाश्रित्य संस्थिताः॥ भौपाली हरिपालश्च कामोदी धोरणिस्तथा। वेलीवली च पञ्चैते रागा देशाख्यसंश्रयाः॥ अन्येऽपि बहवो रागा जाता देशविशेषतः। मारुप्रभृतयो लोके ते च भद्रेशिकास्मृताः॥ न रागाणां न तालानामंतः कुत्रापि विद्यते। संतोषाय शिवस्यैते ज्ञेया बुधजनैः स्मृताः॥" इत्यलम्पल्लवितेन। किञ्चिद्दशमस्कंधेप्येतदुपयोगि वर्णयिष्यामः। विश्वकर्मशास्त्रं हर्म्यादिनिर्माणकाष्ठविकारकल्पनास्वर्णादिभूषणरीतिकांस्यादिपात्रलोहकारककृत्यकुलालकर्मचित्रनिर्माणलेखनादिकर्मणां प्रकारबोधकं शास्त्रमित्यर्थः॥ ३८॥ ❀ ❀ ईश्वरः समर्थः सर्वदर्शनः सर्वज्ञः सर्वेभ्यो मुखेभ्यः सर्ववेदविवरणरूपत्वात्सर्वमुखनिस्सृतवेदानां व्याख्यानं सर्वमुखैरेव कर्तुमुचितमित्यर्थः॥ ३९॥ ❀ ❀ षोडश्यादयो यज्ञविशेषसंज्ञाः तत्त्वं चैषां कल्पतोऽवसेयम्। गोसवेन सहितं सगोसवम्। क्रमात्पूर्वादिमुखेभ्यो द्वयोर्द्वयोराविर्भावो ज्ञेयः॥ ४०॥ ❀ ❀ विद्याशब्दस्य शौचार्थत्वे याज्ञवल्क्यस्मृतिं प्रमाणयति—क्षेत्रज्ञेति। क्षेत्रज्ञो जीव ईश्वरः। परमात्मा तयोस्तत्त्वमस्यादिमहावाक्यविचारोत्थाहं ब्रह्मास्मीति ज्ञानात्। परमायतः पुनर्गर्भवासादेरशुचित्वापादकस्य समूलोन्मूलिनीति स्मृत्यर्थः। दानदयाशब्दयोरेकार्थत्वं जीवाभयप्रदानस्यैव दयापदार्थत्वात्। तदुक्तं 'भूताभय—' इति। इत्थं व्याख्याने पूर्वोक्तविरोधाभावमाह—एवं चेति। यथासंख्यं ब्रह्मचर्यादिक्रमेण वृत्तिभिर्भिक्षाकृष्यादिभिः सह॥ ४१॥ ❀ ❀ यथासंख्यमित्यनेनाश्रमचतुष्टयभेदोपि विवक्षितस्तत्र ब्रह्मचर्य्यावांतरभेदमाह—सावित्रमिति। त्रिरात्रमिति स्वामी। तीर्थस्तु—गुरुकुले द्वादशवर्षपर्यंताध्ययनं सावित्रमाह—व्रतानि ब्रह्मचारिविहितानि कृच्छ्रादीनि गुरुसेवादीनि वा। तीर्थस्तु—एकभार्यर्तुगमनं प्राजापत्यमाह—ब्राह्मं यावद्विवाहं वेदाध्ययनं नैष्ठिकं यावज्जीवं यथोक्तधर्माचरणपूर्वकं स्त्रीसंगादित्यागरूपमेव। ब्रह्मचारिधर्मास्तु सप्तमैकादशस्कंधतोऽवसेयाः। अनिषिद्धकृषिस्तु सपत्रशाखाचालिताष्टगवकृष्टक्षेत्र नीलीतिलादिव्यतिरिक्तशुद्धधान्योत्पादनं प्रपंचस्त्वस्य सप्तमस्कंधे भविष्यतीति। आदिनाऽनिषिद्धवाणिज्यग्रहस्तदपि तत्रैव प्रपंचयिष्यामः। याजनादीत्यत्रादिनाध्यापनादिग्रहः। कणिशो धान्यवल्यादिशिलोंछा इति बहुवचनांतौचित्ये एकत्वमार्षमित्यर्थः। आर्यस्यागतिकगतित्वं मत्वाह। यद्वेति। इत्यर्थं इति—एता एव गृहस्थस्य वृत्तयः ब्राह्मणस्यैव प्रधानत्वात्तद्वृत्तिकथनमत्रान्येषां सप्तमादौ वक्ष्यति। केचित्तु "वार्त्ता यायावरं ज्ञेयमैकाहित्वमसंचयः। शालीनं वत्सरान्नं च स्वामित्यक्तं शिलोंछनम्" इत्याहुः। यायावरं भैक्ष्यचर्याविशेषः। ऐकाहिकं तत्र दिनार्जितव्रीह्यादेस्तत्तद्दिन एव व्ययः। शालीनं सकुटुंबस्य संवत्सरभोजनयोग्यं कुसूलादिस्थापितान्नम्। स्वामित्यक्तं छेदनाद्यवशिष्टं व्रीहिवल्यादि तेन वर्त्तनमित्यर्थः॥ ४२॥ ❀ ❀ वानप्रस्थभेदमाह—तत्र चतुर्षु अकृष्टपच्यं हलानाकृष्टभूम्युद्भूतमन्नादि तेन वृत्तिर्येषां ते यथा आहृतैरानीतैः। तीर्थस्तु "वैखा-

नसा मूलभक्षाः फलभक्षा उदुंबराः। वालखिल्याः सर्वभक्षाः फेनपा वत्सफेनपाः" इति व्याचष्ट। वत्समुखगलितपयःफेनपानेन जीवंत इत्यर्थः। एवं न्यासे संन्यासे चत्वारो भेदाः कुटीचक इति यस्तु यात्राद्यशक्त एकस्मिन्नेव तीर्थे वसन्प्रत्यहं द्वादशसहस्रप्रणवं जपन् यथोक्तकाले भैक्ष्यमाहरन् कुट्यां पर्णशालायां चकास्ति ब्रह्मध्यानेन स कुटीचकः। स्वामिचरणैरप्ययमेवार्थ उक्तः। स्वाश्रमकर्मेति। यस्तु तीर्थयात्रासु शक्तो ग्रामे एकरात्रं नगरे त्रिरात्रं तीर्थे सप्तरात्रं वसंस्त्रिकालस्नायी माधुकरीं वृत्तिमाश्रितो निजाश्रमधर्मरतः प्रणवमनुस्मरन्दंडादिकं परिगृह्य तीर्थात्तीर्थांतरं व्रजति बहून्युदकानि तीर्थजलानि यस्य स बहूदकः। स्वामिचरणैरप्ययमर्थ एव सर्वत्रानासक्त्या प्रणवार्थस्मरणेन च ध्वनितः। कर्मोपसर्जनीत्यादिना उपसर्जनीकृत्य गुणीकृत्य। तृतीयमाह—यस्तु यथा जातस्तथा रूपधरो निर्द्वंद्वो निष्परिग्रहो ब्रह्मध्याननिष्ठश्चतुर्थभूमिकारूढो भवति स हंसः। तथैव स्वामिचरणैरप्युक्तं ज्ञानाभ्यासनिष्ठ इति। यस्तु दंडकौपीनविधिनिषेधहीनः सप्तमभूमिकारूढो ध्यातृध्येयविभागरहितो ब्रह्मानंदे लीनवृत्तित्वाच्छरीरमपि नानुसंधत्ते स परमहंसः। एतदुक्तानुरोधेनैव स्वामिनोक्तः प्राप्ततत्त्व इति सप्तभूमिकास्तु नित्यानित्यवस्तुविवेकादिपुरःसराः। फलपर्यवसायिनी मोक्षेच्छाख्या प्रथमा १, ततो गुरुवाक्यतो वेदांतविचारः श्रवणमननात्मको द्वितीया विचारणाख्या २, ततो निदिध्यासनाभ्यासेन मनस एकाग्रतया सूक्ष्मवस्तुग्रहणयोग्यत्वं तनुमानसाख्या तृतीया ३, ततो वेदांतवाक्यान्निर्विकल्पको ब्रह्मात्मैक्यसाक्षात्काररूपश्चतुर्थी सत्त्वापत्याख्या ४, सविकल्पकसमाध्यभ्यासेन निरुद्धे मनसि या निर्विकल्पकसमाध्यवस्था संसक्त्याख्या पंचमी ५, तत्तदभ्यासपरिपाकेन चिरकालावस्थायिनी या सा पदार्थाभाविनी षष्ठी ६, गूढसुषुप्तिश्च सर्वदान्यैः परिपोष्यमाणः सच्चिदानंदे कनिष्ठो यदा तिष्ठति तदा तुर्यगाख्या सप्तमीति सप्तज्ञानभूमिकाः॥ ४३॥ ❀ ❀ व्यस्ता भिन्नाः व्याहृतिचतुष्के प्रमाणमाह यथाहेति। आश्वलायनऋषिर्वेदव्याख्याकर्ता चतुर्थ्या व्याहृतेर्वैलक्षण्याभावादर्थांतरमाह--यद्वेति। मह इत्यस्याश्चतुर्थीत्वे श्रुतिं प्रमाणयति तथा चेति। तासां तिसृणां मध्ये चतुर्थीमेतां वक्ष्यमाणां महेति वितर्केऽव्ययम्, चमस्य ऋषिरित्याप्रवेदयते स्म वक्ति स्मेति किं महं इति। यद्वा। मह इत्येतामाप्रवेदयते स्मेति संबंधः। 'सुखर्म खम्' इत्यमरः॥ ४४॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

चातुर्होत्रस्य होत्रादीनां चतुर्णान्तत्तत्कर्मविशेषस्य सृष्टिक्रममाह। प्रसङ्गे सतीत्यादि। अप्रगीतैः स्वरानुपूर्वीरहितैः न तु प्रयोगसमवेतार्थस्मारकैः स्तौति शंसतीत्यादिश्रुत्या स्तुतिरूपस्वार्थपरैः तथाक्तं सूत्रकृद्भिः "स्तुतशस्त्रयोस्तु संस्कारो याज्यावदेवताभिधानत्वात्" अयमर्थः ननु स्तोत्रशस्त्रयोस्तुतित्वेनैक्यात्कथं भेदनिर्देशस्तत्राह स्तुतेति स्तोत्रशस्त्रयोः प्रगीताप्रगीतमन्त्रयोः स्तौति शंसतीति श्रुत्या स्तुतिप्रधानयोः अदृष्टार्थत्वेन संस्कारत्वम्। अप्रधानदेवतासंबन्धमात्राभिधायित्वात् अग्निर्मूर्द्धेत्यादियाज्यामन्त्रवत्। विशेषजिज्ञासा चेद्भाष्यं दृश्यम्। मन्त्रैः आज्यैः स्तुवेत इत्यादिमन्त्रसाध्यम्। इज्यां देवतोद्देशेन द्रव्यत्यागरूपां संप्रगीतं स्वरानुपूर्वीसहितं स्तोत्रं। स्तुतिः। तदर्थं स्तोत्रार्थं त्रिवृत् नवसंख्यासंयुक्तस्तोम ऋक्समुदाय उद्गातृप्रयोज्यो भवति उद्गाता तं प्रयुञ्ज्यादित्यादिब्राह्मणवाक्येन विहितम्॥ ३७॥ ❀ ❀ स्थापत्यं स्थपतेः कर्म॥ ३८॥ ❀ ❀ इतिहासेति युग्मकम्। तेषां सर्ववेदविवरणरूपत्वात्सर्वेभ्य इति॥ ३९—४१॥ ❀ ❀ सावित्रादिचतुर्विधं ब्रह्मचर्यं पूर्वादिमुखैर्यथासंख्यमसृजत्। शिलोञ्छा इति बहुवचने वक्तव्ये एकवचनमार्षम्। यद्यपि ऊकालोऽज्झस्वदीर्घप्लुत इति वत्सर्वोऽपि द्वन्द्वो विभाषयैकवद्भवतीति न्यायादेकवचनमितरेतरद्वन्द्वेऽपि संभवति, तथापि लोके तथा प्रयोगबाहुल्याभावाद्यद्वेति। गृहे स्थिताश्चतुर्विधा गृहस्था भवन्ति वृत्तीनां चातुर्विध्यात् स्थिता भवन्तीत्यध्याहारादित्यर्थोक्तिः॥ ४२॥ ❀ ❀ वने स्थिता वानप्रस्थाः तत्र तेषु वानप्रस्थेषु मध्ये न्यासे संन्यासधर्मे स्थिताश्चत्वारस्संन्यासिनो भवन्ति एते च प्रत्येकं चतुर्विधा गृहस्थादयः॥ ४३॥ ❀ ❀ व्यस्ता ॐ भूः ॐ भुवः ॐ स्वरितिविभक्ताः समस्ता ॐ भूर्भुवः स्वरिति मिलिता चतुर्थी व्याहृतिः। आश्वलायनवाक्यशेषश्चायं सांख्यायनप्रोक्तो ज्ञेयः समस्ताभिश्चतुर्थी प्रतीयेतैतस्याश्चोदनायामेवमनामादेशे सर्वेषु भूतकर्मसु पुरस्ताच्चोपरिष्टाच्चैताभिरेव जुहुयादिति। मतान्तरप्रकारेण संख्यापूर्तिं वक्तुं यद्वेति। तासां व्याहृतीनां मध्ये मह इत्येतां चतुर्थीं व्याहृतिं महाचमसोऽपत्यमृषिः माहाचमस्यः प्रवेदयते उपदिशति स्म। उरत्वर्थे ह स्फुटम्॥ ४४॥

### श्रीमद्वीरराघवव्याख्या

एवमापृष्टो मुनिः क्रमेण पूर्वादिभ्यो मुखेभ्यः ऋगादीनसृजदित्याह। ऋगित्यादि। पूर्वादिभ्यो मुखेभ्यः चातुर्होत्रक्रममाह। शस्त्रमिति शस्त्रमप्रगीतमन्त्रस्तोत्रं तत् होत्रा कर्त्तव्यत्वेन होत्रमित्युच्यते आध्वर्यवं स्तुतिः स्तोमस्तुतिः संगीतरूपं स्तोमं तदर्थमृक् समुदायं त्रिवृत्स्तोमो भवतीत्यादिविहितं तदुद्गात्रप्रयोज्यत्वेनौद्गात्रमित्युच्यते स्तुतये स्तोममिति चतुर्थीसमासः प्रायश्चित्तं ब्रह्मणा प्रयोज्यम्। एतानि चत्वारि क्रमादिति पूर्वादिमुखेभ्यो व्यधादसृजत्॥ ३७॥ ❀ ❀ उपवेदक्रममाह। आयुर्वेदमिति स्थापत्यं शिल्पिकर्म॥ ३८॥ ❀ ❀ इतिहासाश्च पुराणादि च तेषां समाहारः पञ्चमं वेदाख्यमितिहासपुराणानि सर्वदर्शनः सर्वज्ञः ईश्वरो ब्रह्मा सर्वेभ्यो मुखेभ्यः ससृजे॥ ३९॥ ❀ ❀ कर्मतन्त्रक्रममाह। षोडश्युक्थौ इति। षोडश्युक्थशब्दौ षोडश्युक्थनामकसंस्थानविशिष्टकर्मपरौ पुरीषीचयनः अग्निष्टुदग्निष्टोमः आप्तोर्यामश्चातिरात्रश्च तौ कर्मविशेषौ गोसवेन

सहितं सगोसवं वाजपेयं षोडश्युक्थौ पूर्ववक्त्रात्पुरीष्यग्निष्टुतौ दक्षिणमुखादाप्तोर्यामातिरात्रौ पश्चिममुखाद्गोसववाजपेयौ उत्तरतः असृजदित्यर्थः॥ ४०॥ ❀ ❀ धर्मस्य पादानामाश्रमाणां च क्रममाह। विद्येति। विद्यादानादीनि धर्मस्य चत्वारि पदानि ब्रह्मचर्यादयः चत्वारः आश्रमाश्च यथासंख्यं वृत्तिभिः सह पूर्वादिभ्यो मुखेभ्यः असृजत्। ननु तपः सत्यं दया शौचमिति प्रथमस्कन्धे दयाशौचयोः पादत्वं कीर्तितम्। अत्र तु विद्यादानयोरिति विरोधः। मैवम्। दयाशौचयोर्विद्यादानकार्यत्वात्कारणशब्दः कार्ये उपचर्य तथोक्तमित्यविरोधात्। शौचं ह्यवरज्ञानकार्यम्" क्षेत्रज्ञस्येश्वरज्ञानाद्विशुद्धिः परमा मता" इति स्मृतेः एवं "भूताभयप्रदानस्य कलां नार्हन्ति षोडशीम्" इति पूर्वोक्तरीत्या दययैव भूताभयप्रदानमतो न विरोधः॥ ४१॥ ❀ ❀ कास्ता वृत्तयो या आश्रमैः सह जाता इत्यपेक्षायां वृत्तीर्वदंस्तासामवान्तरभेदांश्चाह द्वाभ्याम्। सावित्रं ब्रह्मचर्यं स्त्रीसंगविरहादिरूपम्। उपनयनादारभ्य गायत्रीमधीयानस्य त्रिरात्रं प्राज्ञाय संव्रतान्याचरतः संवत्सरान्तं ब्राह्मं वेदैर्गृहीतं बृहन्नैष्ठिकम्। एता ब्रह्मचर्याश्रमवृत्तयः वार्ता अनिषिद्धकृष्यादिवृत्तिः संचयो यावज्जीवनं वृत्तिः शालीनमयाचितवृत्तिः शिलं कणिकायर्जनम्, उञ्छः कणश आदानम्। उभयमेका वृत्तिः एकवचनमार्षं समाहारद्वन्द्वे तु पुंस्त्वमार्षं वेदितव्यम्। एता गृहे महाश्रमे वृत्तय इत्यर्थः॥ ४२॥ ❀ ❀ चतुर्विधा वनस्था इत्याह। वैखानसा अकृष्टपच्याशिनः। वालखिल्या लब्धे नवान्ने पुराणत्यागिनः। उदुंबराः प्रातरुत्थाय यां दिशं प्रथमं पश्यन्ति तत आहृतैः फलादिभिः जीवन्तः। फेनपाः स्वयं जीर्णाशिनः वने वनवासिनः इत्यर्थः। तुर्याश्रमाणामपि चातुर्विध्यमाह। न्यास इति कुटीचकः स्वाश्रमधर्मप्रधानः बह्वोदः कर्मोपसर्जनीकृत्य ज्ञानप्रधानः। हंसो ज्ञानाभ्यासनिष्ठः निष्क्रियः। परमहंसः प्राप्ततत्त्वः प्रवृत्तिधर्महानत्वान्निष्क्रिय इत्युक्तं न तु निवृत्तिधर्मनिवृत्तिरप्यनेनोच्यते विद्याङ्गत्वेन तस्यावश्यमनुवर्तनीयत्वात्। न्यासे एते संन्यासाश्रमे स्थिताः॥ ४३॥ ❀ ❀ नयादीनां पूर्वोत्पत्तिक्रमेणोत्पत्तिमाह। आन्वीक्षिकी आत्मानात्मविवेकविद्या मोक्षफला त्रयी कर्मविद्या स्वर्गादिफला वार्त्ता कृष्यादिरूपा जीवनफला दण्डनीतिरर्थपरा। अथ व्याहृतीनां क्रममाह एवमिति एवं पूर्वादिमुखक्रमेणैव व्याहृतयश्चासन्नित्यर्थः। भूर्भुवः सुवरिति व्यस्तास्तिस्रो व्याहृतयः समस्ता चतुर्थी व्याहृतिः तथाहाश्वलायनः। "एवं व्याहृतयः प्रोक्ता व्यस्ताः समस्ता" इति यद्वा मह इति चतुर्थी व्याहृतिः तथा च श्रुतिः "भूर्भुवः सुवरित्येतास्तिस्रो व्याहृतयस्तासामुह स्मै तां चतुर्थीमादाचमस्यः प्रवेदयते मह इति" श्रुतेश्चतुर्थी मह इति व्याहृतिः। एवं मुखोत्पन्नानां पूर्वादिमुखक्रममभिधायान्येभ्योऽप्यङ्गेभ्यः अन्येषामुत्पत्तिमाह प्रणव इत्यादिना। हृद्गतः हृदयाकाशात्प्रणव आस॥ ४४॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली।

मैत्रेयोऽपि लोकहिताय विस्तरतो विदुरप्रश्नं परिहरतीत्याह ऋग्यजुरिति। पूर्वदक्षिणपश्चिमोत्तरदिग्भेदभिन्नैः शस्त्रं मंत्रम्। ऋग्वेदगतमिज्यां मंत्रं याजुषं स्तुतिस्तोममंत्रौ सामवेदगौ स्तोमः क्रियमाणकर्मपुरतःक्रियमाणस्तुतिविशेषः अन्यदाक्रियमाणा स्तुतिः प्रायश्चित्तमाथर्वणं व्यधात् विभागं कृतवान्। वेदानां पूर्वमेवोद्धृतत्वात्॥ ३७॥ ❀ ❀ आयुर्वेदं बाहढं धनुर्वेदमायुधविद्यां गान्धर्वं भरतशास्त्रं स्थापत्यं तक्षशास्त्रम्॥ ३८॥ ❀ ❀ इतिहाससहितं पुराणं शब्दत एव रचनं न त्वर्थतः तस्य वैदिकत्वात् वेदस्य व्यक्तिमात्रमेव करणं न च जनवादिनो वाक्यस्याविषयकत्वेनाप्रामाण्यं तस्य स्वाभिमान्युत्पत्त्या चरितार्थत्वात्। अभिमानिनः शब्दतश्च "ब्रह्मा वेदान् ससर्ज ह" इत्यादेः सर्वदर्शनः सर्वज्ञः। अनेन ब्रह्मोक्तस्याप्तिमूलत्वं दर्शितं सर्वाणि दर्शनानि यस्मादुत्पन्नानि स तथोक्त इति वा॥ ३९॥ ❀ ❀ षोडश्यादयो यज्ञविशेषाः तद्भेदः कल्पतो बोद्धव्यः। अथ पुरीष्याग्निष्टुतादिकं द्वयं द्वयं च दक्षिणादिवक्त्रेभ्य उत्पन्नम्॥ ४०॥ ❀ ❀ तपआदिधर्मपादानामपि वक्त्रचतुष्ट्याज्जन्मेति ज्ञातव्यं यथासंख्यं ब्रह्मचर्याद्याश्रमांश्च पूर्वादिवक्त्रेभ्यः ससर्ज भैक्ष्यचर्यादिवृत्तिभिः सह॥ ४१॥ ❀ ❀ यथासंख्यमित्यनेनाश्रमचतुष्टयावान्तरभेदोऽपि विवक्षितस्तत्र ब्रह्मचर्याश्रमावान्तरभेदमाह। सावित्रमिति। गुरुकुले ब्रह्मचारिणो द्वादशवर्षपर्यन्तमध्ययनकर्म सावित्रं प्राजापत्यं ब्रह्मचर्यमेकभार्यर्तुगमनं "प्राजापत्यं ब्रह्मचर्यमेकभार्यर्तुगामिता" इति वचनात् ब्राह्मं ब्रह्मचर्यं यावद्विवाहमध्ययनं बृहन्नाम ब्रह्मचर्यं यावज्जीवं नैष्ठिकं गृहे गृहस्थाश्रमेपीत्येवं चातुर्विध्यं वार्ता यायावरं भैक्ष्यचर्यविशेषः असंचय एकाहित्वं तत्तद्दिनार्जितव्रीह्यादेस्तद्दिन एव व्ययः। शालीनं तु वत्सरपर्यन्तं स्ववृत्तिहेतोः कुसूलमञ्जूषादिषु व्रीहिधान्यादिग्रहणं शिलोञ्छस्तु व्रीहिसस्यक्षेत्रेषु गलितव्रीह्यादिना देहत्राणवर्तनं "वार्ता यायावरं ज्ञेयमेकाहित्वमसंचय" इति॥ ४२॥ ❀ ❀ वने वानप्रस्थाश्रमे वैखानसा मूलभक्षाः फलभक्षाः उदुम्बरा बालखिल्याः सर्वभक्षा फेनपाः वत्सफेनपा इत्यनेन व्याख्यातोऽयं श्लोकः। वत्समुखगलितपयःफेनपानेन जीवन्तः न्यासे यत्याश्रमे पूर्वं कुटीचकः कुट्यां स्वगृह एव पुत्रादिदत्तान्नादिना चकते तृप्यति अलंबुद्धिमाप्नोतीति चक तृप्ताविति धातुः। द्वितीयो बहूदः सवनत्रयस्नानं विना त्वकाले तीर्थजलदर्शने तत्र स्नानं कुर्वंस्त्रिदण्डी तृतीयचतुर्थौ हंस एकदण्डी यज्ञोपवीती च निष्क्रिय एकदण्डी हिंसादिक्रियारहितः परमहंसः॥ ४३॥ ❀ ❀ आन्वीक्षिकी वेदानुसारिणी तन्त्रविद्या त्रयी त्रयो वेदाः वार्ता वाणिज्यादि दण्डनीतिः राजधर्म एते यथा ब्रह्मणो वक्त्रचतुष्टयादासन्। एवं भूरादिव्याहृतयश्च अजस्य मुखचतुष्टयादिभिः व्यक्ताः प्रणवेन सह तद्वक्त्रस्यास्पदगताश्चेत्यन्वयः। त्रय्या सहपाठान्न शिवप्रोक्तान्वीक्षिकी तस्या वेदबहिष्काराद्विष्णुप्रोक्तेयम्। तदुक्तम्

आन्वीक्षिकी तन्त्रविद्या सा च वेदानुसारिणी। विष्णुप्रोक्ता शिवाद्युक्ता ज्ञेया वेदबहिष्कृता ॥
दण्डनीती राजधर्मस्त्रयी वेदाः प्रकीर्तिता । इति ।

अन्वीक्षिक्या त्रय्या च ब्राह्मणानां जीवनम्। दण्डनीत्या राज्ञां वार्तया वैश्यादीनामित्येतत् द्योतयितुं च पुनस्त्रयीग्रहणम्।

वार्तावाणिज्यकादिः स्यादेताभिर्यत्तु जीवनम्। तदान्वीक्षिक्यादिनाम ब्रह्मणा निर्मितं पुरा इति च ।

यद्वा प्रणवेन सहास्पदं ब्रह्मगतास्तत्प्रतिपादकत्वेन तदेकविषयत्वं प्राप्ता इत्यर्थः। प्रणवेनेति तृतीयया प्रणवस्याप्राधान्यं न श्रद्धेयं तस्य पूर्ववक्त्रजत्वात्तदुक्तं "प्रणवः पूर्ववक्त्रेण भूराद्याश्च मुखत्रयात्। प्रदक्षिणमवर्तन्त वेदाश्चैवाश्रमास्तथा" इति। तस्मात् प्रणवं मुखीकृत्य ब्रह्मप्राप्ता इत्येवमर्थं तृतीयेति ॥ ४४ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

इतिहासेति युग्मकम्। इतिहासेत्यादिकं प्रथमस्कन्धे विवृतमस्ति ॥ ३९—४१॥ ❀ ❀ सावित्रमित्यादयो ब्रह्मचर्य्यभेदाः वार्त्तेति। सर्व्वेऽपि द्वन्द्वो विभाषयैकवद्भवतीति न्यायात् ऊकालोऽज्झस्वदीर्घप्लुत इतिवत् ॥ ४२—४७ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

मुखतो मुखेभ्यः चातुर्होत्रस्य सृष्टिमाह। शस्त्रमप्रगीतमन्त्रस्तोत्रं हौत्रं होतुः कर्म्म। इज्यामध्वर्य्योः कर्म्म स्तुतिस्तोमं स्तुतिः सङ्गीतं स्तोत्रं स्तोमं तदर्थमृक्समुदायं त्रिवृत्स्तोमो भवतीत्यादिविहितमुद्गातुः कर्म्म। प्रायश्चित्तं ब्रह्मणः कर्म्म ॥ ३७ ॥ ❀ ❀ उपवेदानां सृष्टिमाह। आयुरिति। स्थापत्यं स्थपतेः कर्म्म विश्वकर्म्मशास्त्रम् ॥ ३८ ॥ ❀ ❀ सर्व्वेभ्य इति। सर्व्ववेदविवरणरूपत्वात्तेषाम् ॥ ३९ ॥ ❀ ❀ कर्म्मतन्त्रसृष्टिमाह। षोडश्युक्थाविति ॥ पुरीषीचयनमग्निष्टुत् अग्निष्टोमः एतौ दक्षिणवक्त्रादित्येवं क्रमः सर्व्वत्र द्रष्टव्यः ॥ ४० ॥ ❀ ❀ विद्यते। शौचं "क्षेत्रज्ञस्येश्वरज्ञानाद्विशुद्धिः परमा मता" इति स्मृतेः दानमिति दया "भूताभयप्रदानस्य कलां नार्हन्ति षोडशीम्" इति वचनात् एवं "तपः शौचं दया सत्यमिति पादाः कृते कृताः इति" प्रथमस्कन्धोक्तेरविरोधः ॥ ४१ ॥ ❀ ❀ उपनयनादारभ्य गायत्रीमधीयानस्य त्रिरात्रं व्याप्य ब्रह्मचर्य्यं सावित्रम्। व्रतान्यचरतः सम्वत्सरपर्य्यन्तं प्राजापत्यं वेदग्रहणपर्यन्तं ब्राह्मं मरणपर्यन्तं बृहदिति चतुर्विधं ब्रह्मचर्य्यम्। वार्त्ता अनिषिद्धकृष्यादिवृत्तिः। सञ्चयो याजनादिवृत्तिः। शालीनमयाचितवृत्तिः शिलोञ्छनं पतितकणिशकणवृत्तिः। शिलोञ्छ इति द्वन्द्वैक्यम्। ऊकालोऽज्झस्वदीर्घप्लुत इतिवत्। गृहे इति जीविकाचातुर्व्विध्यात् गार्हस्थ्यमपि चतुर्व्विधमित्यर्थः ॥ ४२ ॥ ❀ ❀ वैखानसा अकृष्टपच्यवृत्तयः। वालखिल्या नवेऽन्ने लब्धे पूर्व्वसञ्चितान्नत्यागिनः। औदुम्बराः प्रातरुत्थाय यां दिशं प्रथमं पश्यन्ति तत आहृतैः फलादिभिर्जीवन्तः। फेनपाः स्वयं पतितैः फलादिभिर्जीवन्तः। वने इति वृत्तिभेदेन नामभेदाद्वानप्रस्थाश्रमोऽपि चतुर्विधः। न्यासे इति संन्यासोऽपि चतुर्विधः। तत्र कुटीचकः स्वाश्रमकर्म्मप्रधानः। बह्वोदः कर्म्मोपसर्जनीकृत्य ज्ञानप्रधानः। हंसो ज्ञानाभ्यासनिष्ठः। परमहंसः निष्क्रियः प्राप्ततत्त्वः इति यथोत्तरं श्रेष्ठाः ॥ ४३॥❀ ❀ न्यायादीनां पूर्व्वादिवक्त्रक्रमेणोत्पत्तिमाह। आन्वीक्षिक्याद्या मोक्षधर्म्मकामार्थविद्याः। भूर्भुवः स्वरिति व्यस्तास्त्रास्तिस्रः समस्ता चतुर्थीत्येवं चतस्रो व्याहृतयः। यथाहाश्वलायनः। "एवं व्यहृतयः प्रोक्ता व्यस्ताः समस्ता अपि"। यद्वा मह इति चतुर्थी तथाच श्रुतिः 'भूर्भुवः स्वरिति वा एतास्तिस्रो व्याहृतयस्तासामुहस्मै तां चतुर्थीमाहाचमस्यः प्रवेदयते मह इती'ति। हृत्खतः हृदयाकाशात् दह्रत इति पाठे स एवार्थः ॥ ४४ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

वेदोत्पत्तिक्रममाह। ऋगिति। चातुर्होत्रोत्पत्तिक्रमं दर्शयति। शस्त्रमिति। शस्त्रमप्रगीतमन्त्रस्तोत्रं हौत्रं होतुः कर्म इज्यामध्वर्योः कर्म स्तुतिस्तोमं स्तुतिः सङ्गीतं स्तोत्रं स्तोमं तदर्थमृक्समुदायमुद्गातृप्रयोज्यं प्रायश्चित्तं ब्राह्मं क्रमात्पूर्वादिभिर्मुखैः व्यधात् असृजत् ॥ ३७ ॥ ❀ ❀ उपवेदक्रमं दर्शयति। आयुरिति। स्थापत्यं विश्वकर्मशास्त्रम् ॥ ३८ ॥ ३९ ॥ ❀ ❀ कर्मतन्त्रक्रमं दर्शयति। षोडशीति। पुरीषीचयम् अग्निष्टुत् अग्निष्टोमः ॥ ४० ॥ ❀ ❀ धर्मपादानामाश्रमाणां च क्रमं दर्शयति। विद्येति। तपः शौचं "तपः शौचं दया सत्यमिति पादाः प्रकीर्तिता" इति प्रथमस्कन्धाविरोधसिद्धयेऽत्र विद्याशब्दः शौचपरः "क्षेत्रज्ञस्येश्वरज्ञानाद्विशुद्धिः परमा मता" इति वचनात् दानशब्दो दयापरः" भूताभयप्रदानस्य कलां नार्हन्ति षोडशीम्" इति वचनात् ॥ ४१ ॥ ❀ ❀ आश्रमाणां वृत्त्युत्पत्तिक्रममाह। सावित्रमिति द्वाभ्याम्। तत्र ब्रह्माचर्याश्रमवृत्तीर्दर्शयति सावित्रं ब्रह्मचर्यमुपनयनादारभ्य गायत्रीमधीयानस्य त्रिरात्रं प्राजापत्यं व्रतान्याचरतः साम्वत्सरं ब्राह्मं वेदग्रहणान्तं बृहन्नैष्ठिकम्। अथ गृहाश्रमवृत्तीराह। वार्ता अनिषिद्धकृष्यादिवृत्तिः संचयो याजनादिवृत्तिः शालीनमयाचितवृत्तिः शिलोञ्छ इत्यत्र द्वन्द्वैक्यं पुंस्त्वमार्षम् इति एता गृहे गृहाश्रमे ॥ ४२ ॥ ❀ ❀ वैखानसाः अकृष्टपच्यवृत्तयः वालखिल्या नवेऽन्नाद्ये लब्धे पुराणत्यागिनः औदुम्बराः प्रातरुत्थाय यां दिशं विलोकयन्ति तदाहृतफलादिवृत्तयः। फेनपाः स्वतः पतितफलादिवृत्तयः एते चत्वारः वने स्थिताः। न्यासे तुर्य्याश्रमे स्थिताः अपि चत्वारः तत्र कुटीचकः स्वाश्रमधर्मप्रधानः बह्वोदो ज्ञानप्रधानः हंसः ज्ञानाभ्यासप्रधानः

निष्क्रयः ध्यानप्रधानः ॥ ४३ ॥ ❀ ❀ नयादीनां पूर्वादिमुखक्रमत उत्पत्तिं दर्शयति। आन्विक्षिकी मोक्षविद्या त्रयी धर्मविद्या वार्ता कामविद्या दण्डनीतिः अर्थविद्या एवं पूर्वादिमुखक्रमेण व्याहृतयश्चासन् तत्र भूर्भुवः स्वरिति व्यस्तास्तिस्रः समस्ता चतुर्थी तथाहाश्वलायनः "एवं व्याहृतयः प्रोक्ता व्यस्ताः समस्ता" इति। यद्वा मह इति चतुर्थी तथा च श्रुतिः 'भूर्भुवः स्वरित्येतास्तिस्रो व्याहृतयः तासामुहस्मै तां चतुर्थीमाहाचमस्यः प्रवेदयते मह इतीति । प्रणवस्तु हृत्खतः हृदयाकाशतः आसीत् ॥ ४४ ॥

## श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

वेदानां क्रमं मुखक्रमं चाऽऽह—देवता[1], द्रव्यसंबन्धः, देवतास्तोत्रम्, यागाभ्यनुज्ञा चेति यागानामर्थतः क्रमः। पूर्वादिमुखक्रमस्तु पाठार्थमुपयुज्यते। तेषां चतुर्णां विनियोगमाह—शस्त्रमिति। शस्त्रं होतुः; इज्या यजिरध्वर्योः, यजुर्वेदकृत्यम्, स्तुतिर्देवताया उद्गातुः; सामवेदकृत्यम्। प्रायश्चित्तं ब्रह्मण इति, 'प्रायश्चित्ते ब्रह्माणम्' इत्याश्वलायनसूत्रात्, एवं सप्रयोजनान् वेदान् पूर्वादिमुखैः सृष्टवानित्यर्थः ॥ ३७ ॥ ❀ ❀ वेदोपयोगिपदार्थान् वक्तुं पुराणानि सृष्टवानित्याह—इतिहासपुराणानीति। सर्वोपयोगित्वान्नाऽत्र क्रमो विवक्षितः, अतः सर्वेभ्य एव वक्त्रेभ्यो निर्ममे। सर्वदर्शन इति सर्वेषामेव वर्णानामवर्णानां स्त्रीशूद्रद्विज-बन्धूनामुपयोगं पश्यन् पुराणं सृष्टवान्। चिन्त्यमेतत् ॥ ३८ ॥ ❀ ❀ चातुर्होत्रादीनामप्युद्देशात् तेषामप्युत्पत्तिक्रममाह—षोडश्युक्थाविति। 'अप्यग्निष्टोमे राजन्यस्य गृह्णीयात्' इति श्रुतेः 'न वै षोडशी नाम यज्ञोऽस्ति' इति च सर्वोपयोगित्वात् षोडशी प्रथमतो गृहीतः। तथोभयस्यापि सर्वोपयोगित्वम्। तावुभौ पूर्ववक्त्रात् ससृजे। अग्निष्टुदग्निष्टोमः, पुरीष्या अग्नयश्चयनात्मकाः, पुरीषमस्यास्तीति पुरीषी, पुरीषी च अग्निष्टुच्च पुरीष्यग्निष्टुतौ, स समासान्तः ( ? )। आप्तोर्यामोऽतिरात्रस्यैव भूमा, सविशेषोऽ-तिरात्र इत्यर्थः। वाजपेयोऽपि स्वतन्त्रो महाफलः। गोसवश्च गोसत्रम्। तयोरपि सहभावः ॥ ३९ ॥ ❀ ❀ धर्मस्यैते चत्वारः पादा विद्यादय इति—विद्या ज्ञानम्। दानं तुलापुरुषादि। तपः कृच्छ्रादि। सत्यं सत्यभाषणम्। पदानीति पदशब्दः। चकाराद-न्येऽपि धर्मपादा भगवद्रूपत्वाद्धर्मस्य सन्तीति ज्ञापितम्। आश्रमांश्चाऽसृजत्सह वृत्तिभिरिति। वृत्तिचतुष्टयसहित एकाश्रम एकस्मान्मुखा-ज्जात इति ज्ञापितम् ॥४०॥ ❀ ❀ तत्र ब्रह्मचारिणो वृत्तिचतुष्टयमाह—सावित्र्यमिति। सावित्र्यमुपनीतस्य गायत्रीशिक्षाकालो मौनादि-सहितस्त्रिरात्रात्मकः। ततः संवत्सरपर्यन्तं प्राजापत्यं वेदव्रतात्मकम्। ब्राह्मण्यं[1] वेदग्रहणात्मकम्। बृहन्नैष्ठिकम्। गृहस्थस्य वृत्तिचतुष्टय-माह—वार्तेति। वार्ता कृष्यादिचतुष्टयम्। संचयोऽध्यापनादिना प्राप्तधनस्य संग्रहः। शालीनमल्पधान्ययाचनम्; यायावर इत्यर्थः। शिलोञ्छ इति। शिला खले धान्यानां हस्तेनैकैकश उद्धारः; उञ्छनं गृहस्थानां गृहे कण्डनादिस्थाने पतितधान्यादीनां ग्रहणम् ॥ ४१ ॥ ❀ ❀ वनस्थानां वृत्तिचतुष्टयमाह—वैखानसा इति। विखनसा ब्रह्मणा यानि भगवद्भजनादीनि वैखानससूत्रे उपदिष्टानि, वने स्थित्वा, तत्कर्मकर्तारो वैखानसाः दैवादागतवृत्तिजीविनः। बालखिल्यास्तपस्विनः पञ्चाग्न्यादिसाधकाः सूर्यपकान्नभक्षका वनस्था वन्यान्नाश्च। औदुम्बरा नखलोमादिस्थापका मलधारिणो वृक्षफलोपजीविनश्च। नियतारण्याः फेनपाः, वायुजलभक्षाः। तपोवनादिवासः पूर्व-सिद्धोऽनुवर्तत एवेति। न्यासिनां वृत्तिचतुष्टयमाह—न्यास इति। न्यासे संन्यासे, कुटीचरः पूर्वं निरूप्यः। पञ्चसप्तत्यूर्द्ध्वं संन्यासे आयुर्भागक्रमेणाऽऽश्रमचतुष्टयपक्षे नित्यसंन्यासो भवति। तत्र ब्राह्मण्यम्, वयः पूर्वाश्रमानन्तर्यं च प्रयोजकम्, न ज्ञानादि। षट्-त्रिंशदाब्दिकं ब्रह्मचर्यमिति वेदाध्ययनकालपक्षोऽपि विकल्प्यते। 'चतुर्थमायुषो भागमुषित्वाऽऽद्यं गुरौ द्विजः। द्वितीयमायुषो भागं कृतदारो गृहे वसेत्।' इति मनुवाक्यात्प्रत्येकसमुदायपक्षौ निर्णीतौ। तत्र समुदायपक्षो नित्यः। आश्रमचतुष्टयमपि क्रमेण ब्राह्मणेन कर्तव्यमिति तदेवाऽत्र ब्रह्मणा निष्पादितमित्युच्यते। प्रत्येकपक्षः काम्यः। केचिदधिकारभेदेनाऽऽहुः—साधारणानां चतुष्टयमिति। ऊर्ध्वरेतसां भक्तानां ब्रह्मचर्यं नैष्ठिकम्, एक एवाऽऽश्रमस्तेषाम्। तथा सर्वथा वैराग्यरहितस्योत्कटकामस्य गार्हस्थ्यमेव उपकुर्वाणो भूत्वा यथाशक्ति वेदानधीत्य, विहितप्रकारेण कृतदारो भूत्वा, यावज्जीवमग्निहोत्रं जुहुयात्। किं बहुना, शरीरसंस्थापर्यन्तं धृताग्निहोत्रमपि तस्य विहितम्। अत एवाऽऽपस्तम्बकारेण सर्वे आश्रमास्तुल्या निरूपिताः, सर्वत्रैवाऽव्यग्रः सिद्ध्यतीति। प्रजानिन्दावाक्यानि चोर्ध्वरेतसां प्रशंसापराणि योजितानि, अन्यथा श्रुतीनामन्योन्यविरोधः स्यात्। एकदेशेनाऽपि श्रुतीनां बाधो ब्राह्मणानां न कर्तव्यः। तथा वानप्रस्थे यथाशक्ति ब्रह्मचर्येण वेदाध्ययनं विधाय देहपातपर्यन्तं वने वासं तपश्च कुर्यात्। न्यासेऽपि पूर्वजन्मनि आयुर्भागक्रमेण कृतन्यासः प्राप्तज्ञानश्च दृढवैराग्यो निरन्तरमात्मचिन्तकः, भगवत्प्रेमा-भावात् सतां गृहे पुनरुत्पद्यते। तस्योत्पत्तिसंबन्धात्पूर्वज्ञानं तिरोहितमिव भवति; तदोत्तरत्र जन्मन्युपनीतः। वेदाध्ययने क्रियमाणे, पूर्वज्ञानमुद्बुद्धं भवति तदा 'यदहरेव विरजेत्तदहरेव प्रव्रजेत्' इति श्रुत्यर्थः कर्तव्यो भवति। तदा देहपा-तपर्यन्तं स एवाऽऽश्रमः परिपालनीयो भवति, अन्यथा पतितः स्यात्। ततोऽप्युपनयनात्पूर्वमेव पूर्वज्ञानवैराग्याणामुद्बोधेऽनाश्रमी भवति, यथा सनकादिः शुकादिर्वा। स वेदे निन्दितो भगवच्छास्त्रे च। अत एव ब्रह्मणः सनकादिषु क्रोधः। ब्रह्मपुत्रा अपि भूत्वा मानुषभावमापन्नाः, ततोऽपि दैत्यत्वम्। प्रह्लादरूपा जाताः, तत्रापि क्लेशः। शुकस्तु इमं बाधकमवगत्य पूर्वजन्मनि ज्ञाना-

१. देवतां, द्रव्यसंबन्धं, देवतास्तोत्रम्, यागाभ्यनुज्ञां चेति ख. ग. घ. ङ. च। १. ब्राह्मम् ग.।

दिसिद्धावपि रूपद्वयं विधायैकेन रूपेण 'ब्रह्मचर्ये वेदानधीत्य, गार्हस्थ्ये पुत्रानुत्पाद्य, पुनरैक्यं प्राप्तः, देहपातपर्यन्तं भगवत्परो जातः। सोऽत्र मर्यादायां वैदिकमार्गे न गण्यते। तत्र य आयुर्भागक्रमेण चतुष्टयं करोति, स वनवासानन्तरं पत्रादिनिर्मितकुट्यां पुत्रादिभिरेव परिपाल्यमान आत्मचिन्तकः कुटीचरो भवति। वनस्थो भूत्वा पुत्राद्यपेक्षां परित्यज्य स्वतन्त्रतया यदि संन्यासं कुर्यात्, तदा स बह्वोदो भवेत्। कचित्तीर्थविशेषे सर्वनिरपेक्षस्तीर्थवासी भवेत्। तत्र वने पक्षद्वयम्—यदि सभार्यः साग्निर्वनं गच्छेत्, तदाऽग्रे पुत्रेषु भार्यां स्थापयित्वा स्वयं कुटीचरो भवेत्; यदि पूर्वमेव भार्यादित्यक्तो भवेद्वनवासार्थमेव, तदा तावत्तपः कृत्वा अग्रे संन्यस्य बहूदको भवेत्। यदि ब्रह्मचर्यानन्तरमेव पूर्वोक्तप्रकारेण ज्ञानादिसंपन्नो भवेत्, तदा संन्यासे हंसो भवेत्। सर्वत्र तीर्थेषु एकरात्रविधिना निरपेक्षः परिभ्रमेत्। तस्य मौनानीहानिलायामा दण्डा नित्याः। ततोऽपि पूर्वजन्मन्येव सिद्धज्ञानादिर्हंसो भूत्वा यो म्रियते, स उत्तरत्र योगभ्रष्टो महतां गृहे उत्पन्नः प्राप्तद्विजातिसंस्कारो जडभरतवत्तिष्ठेत्, स निष्क्रियः। तस्य तु मुक्तमाच्छादनं न लिङ्गं प्रकटम्, तस्यैव ऋषभवच्चर्या। तस्य लोकसंबन्धे पातित्यम्, यथैवाऽलौकिकः। तस्य सिद्धिः, स सर्वोत्तमः। तस्य धर्मं न हीनः कुर्यात्। तस्मादधिकारव्यवस्थयैव वृत्तिचतुष्टयमाहुः—यद्युत्तमं कर्तुं न शक्नुयात्, तदा प्रथमोऽपि प्रथमं कुटीचरो भूत्वा क्रमेण निष्क्रियो भवेदिति सिद्धान्तः। तथा पूर्वाश्रमेष्वपि पूर्वमुत्तमां गतिं व्रजेत्; आश्रमान्तरेषु वा उत्तमां गतिं व्रजेदिति ॥ ४२ ॥ ❀ ❀ एवमाश्रमान्निरूप्य 'उपवेदनयैः सह' इति निरूपणात् नीतिभेदान्निरूपयति—आन्वीक्षिकीति। अन्वीक्षणमन्वीक्षा, तत्संबन्धिनी नीतिर्मर्यादा, आन्वीक्षिकीत्युच्यते। एषा नीतिर्ब्राह्मणानामेव, तत्राप्याश्रमश्रेष्ठानाम्। त्रयी वेदत्रयी, वेदानुसारव्यवहारः कर्तव्यः, यज्ञाः कर्तव्याः, याजनादि च वृत्तिः। क्षत्रियाणां मुख्यैषा वृत्तिः। वार्ता चतुर्विधा, कृषिगोरक्षवाणिज्यकुसीदात्मिका, वैश्यानां मुख्या। दण्डनीतिर्दण्डप्रकारः, दण्डनार्थं वा नीतिः। यद्यप्ययं राजधर्मः, तथापि शूद्रेष्वेव दण्डः सर्वथा कर्तुं शक्यत इति तेषु प्रतिष्ठित[१]ः। एवं चतुर्द्धा नीतिः। यद्यप्यान्वीक्षिकी आत्मविद्या; त्रयी च वेदत्रयम्, यज्ञाश्च तदर्थाः; ते पुनर्नीतिमध्ये न वक्तव्याः; तथापि तेषां लौकिकेऽपि ब्राह्मणादीनां परमहंसादीनां वा अन्वीक्षणादिरेव कर्तव्यः, न तु सर्वथा लौकिक इत्येतदर्थं नीतिशास्त्रेऽपि तयोरुपनिबन्धनम्। तथैव चेति पूर्ववत्, पूर्वादिमुखैरेवोत्पन्ना इत्यर्थः। एवं सात्त्विकबुद्धावाध्यात्मिकत्वेन वेदाद्युत्पत्तिमुक्त्वा, आधिदैविकं शब्दब्रह्मस्वरूपं निरूपयितुं प्रथमतो व्याहृतीनामुत्पत्तिमाह एवं व्याहृतय इति। यद्यपि वेद एव गायत्री, व्याहृतयः, प्रणवश्च निरूपिताः। समष्टिव्यष्टिभेदेन चतुष्टयम्। सप्तव्याहृतिपक्षेऽपि अष्टमस्त्वथाणां समष्टिः। चकारादग्रे प्रणवोऽपि। तस्य चतुर्विधत्वाभावात् केवलं स हृत्तौ हृदयादेव प्रकटीभूतः। अत एव ब्रह्मणा न प्रणव उच्चारित[२]ः, किन्तु—

'ॐकारश्चाऽथशब्दश्च द्वावेतौ ब्रह्मणः पुरा। कण्ठं भित्त्वा विनिर्यातौ तेन माङ्गलिकावुभौ'

इति वाक्यात् प्रणवः स्वयमेव निर्गतः ॥ ४३ ॥ ❀ ❀ लोमभ्यश्चर्मभ्य उष्णिगासीत्। एतानि सप्तच्छन्दांसि न्यूनाधिकभावमापन्नानि। तत्रोत्पत्त्युपपत्तिभ्यां गायत्री बृहती च श्रेष्ठे। तत्र चतुर्विंशत्यक्षरा गायत्री, अष्टाविंशत्यक्षरा उष्णिक्, द्वात्रिंशदक्षरा अनुष्टुप्, षट्त्रिंशदक्षरा बृहती, चत्वारिंशदक्षरा पंक्तिः, चतुश्चत्वारिंशदक्षरा त्रिष्टुप्, अष्टाचत्वारिंशदक्षरा जगती। तत्र गायत्री त्रिपदा, अन्याश्चतुष्पदाः। तत्र उष्णिक् सप्ताक्षरपादा भवति, अतः प्रथमं निर्दिष्टा। अथवा, उत्पत्त्याऽत्र विचारः कर्तव्यः। तत्र ब्रह्मणः शरीरे धातूनां स्थूलसूक्ष्मभेदेन छन्दसां स्थूलसूक्ष्मभेदौ। क्रमश्चोत्पत्तौ धातुक्रमेणैव। उत्पत्तिविचारे सोमाहरणाद्गायत्री प्रतिष्ठिता। उपपत्तिविचारे अल्पाक्षरापि बृहती सर्वेभ्यश्छन्दोभ्यो महत्त्वात् बृहतीति नाम प्राप्तवती, 'स बृहतीमेवास्पृशत्' इत्यादिश्रुतौ बृहत्या माहात्म्यप्रतिपादनात्। प्राणतस्तस्या उत्पत्तिरुच्यते, सर्वोपरि च। अस्थ्नां बाहुल्याज्जगत्या उत्पत्तिः। तदपेक्षया मांसस्य हीनत्वात् ततस्त्रिष्टुबुत्पत्तिः। ततो मज्जा हीनेति ततो हीनायाः पङ्क्तेरुत्पत्तिः। मध्ये बृहती निरूपितैव। स्नुतः स्नायुतोऽनुष्टुबुत्पत्तिः। त्वगपेक्षया चर्मणामाधिक्याल्लोम्नां स्पष्टमेवाऽऽधिक्यदर्शनात् बहिः स्थितत्वेन उष्णिक् प्रथमतो निरूपिता। मज्जापेक्षयापि प्राणानामन्तः स्थितत्वात् पश्चान्निरूपणम् ॥ ४४ ॥

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

इतिहासेत्यत्र। चिन्त्यमेतदिति। सर्वदर्शनपदतात्पर्यमिदम् ॥ ३८ ॥ ❀ ❀ षोडशीत्यत्र। षोडशिनः प्रथमत उक्तौ हेतुः सर्वोपयोगित्वमिति बोधयितुं प्रमाणमाहुः—अपीत्यादि। ननु यज्ञविशेषत्वस्य हेतुत्वे किं बोधकमित्याशङ्कायां श्रुत्यन्तरमाहुः—न वा इत्यादि। तथा च, यज्ञविशेषत्वे प्रथमत उक्तौ प्रथमसंस्थारूपमग्निष्टोममेव वदेत्। 'एतेनेष्टा' इति श्रुतौ तस्यैव प्राथम्यात्। अतः सर्वोपयोगित्वमेव तथेत्यर्थः। इदं श्रुतिद्वयं तैत्तिरीयाणां षष्ठाष्टकसमाप्त्यनुवाके 'प्रजापतिर्देवेभ्यो यज्ञान्' इत्यत्राऽस्ति। तत्र च षोडशपदनिरुक्तिपूर्वकं सर्वोपयोगित्वं स्फुटमस्तीति ततोऽवगन्तव्यम् ॥ ३९ ॥ ❀ ❀ विद्येत्यत्र। श्रीधरीये—'विद्येति शौचम्, 'क्षेत्रज्ञस्येश्वरज्ञानाद्विशुद्धिः परमा मता' इति स्मृतेः। दानं दया, 'भूताभयप्रदानस्य कलां नार्हन्ति षोडशीम्' इति वचनात्। एवं च 'तपः शोचं दया सत्यमिति पादाः कृते कृताः' इति प्रथमस्कन्धोक्तेरविरोधः' इति व्याख्यातम्। तत्सङ्ग्रहार्थमाहुः—चकारादित्यादि। आश्रमानित्यत्र। वृत्तिचतुष्टयमिति। वर्तनप्रकारचतुष्टयं च। श्रीधरीये 'शालीनमयाचितवृत्तिः' इति व्याख्यातम्, 'शिलो-

१. ब्रह्मचर्येण क.। २. प्रतिष्ठिता क. ख. ग. ङ.। ३. उत्पादितः क.।

ञ्छनं कणिशकणवृत्तिः' इति च ॥ ४० ॥ ❀ ❀ वैखानसा इत्यत्र। श्रीधरीये 'वैखानसा अकृष्टपच्यवृत्तयः। बालखिल्या नवान्ने लब्धे पूर्वसञ्चितान्नत्यागिनः। औदुम्बराः प्रातरुत्थाय यां दिशं प्रथमं पश्यन्ति, तत आहृतैः फलादिभिर्जीविनः। फेनपाः 'स्वयं पतितैः फलादि भिर्जीविनः' इति व्याख्यातम्। न्यास इत्यत्र। ननु 'यदहरेव विरजेत्तदहरेव प्रव्रजेत्' इति श्रुतेर्जाते वैराग्ये संन्या ( सा ) द्धंसादिरूपतैव तत्रेति वृत्तिचतुष्टयं कथमित्याकाङ्क्षायां कुटीचरस्य पूर्वं निरूप्यत्वे हेतुमाहुः—पञ्चेत्यादि। ज्ञानादीत्यादिपदेन वैराग्यसंग्रहः तथा च नित्यपक्षे वैराग्यज्ञानादेरङ्गत्वाभावात् स्वाश्रमकर्मप्रजानस्य कुटीचरस्य युक्ता पूर्वं निरूप्यतेत्यर्थः। ननु'षट्त्रिंशदाब्दिकमिति वा' ब्रह्मचर्यस्य बहुकालमुक्तत्वादाश्रमक्रमपक्षो न युक्त इत्यत आहुः—षडित्यादि। तथा च, 'यद्वैकिञ्च' इति श्रुतेर्मनोरत्यादरणीयत्वेनाऽऽश्रमक्रमपक्षेऽस्यैव मुख्यत्वात् पक्षान्तरप्रायिकत्वेन युक्तं तस्य पूर्वनिरूप्यत्वमित्यर्थः। ननु प्रायिकत्वे तस्य पक्षस्याऽनावश्यकतायां श्रुतिव्याकोप इत्यत आहुः—प्रत्येकेत्यादि। निर्णीताविति। नित्यकाम्यभेदेन निर्णीतौ। तथा च, व्यवस्थाभेदेन वार्थक्यन्न श्रुतिव्याकोप इत्यर्थः। तमेव निर्णयं स्फुटीकुर्वन्ति—तत्रेत्यादिकाम्य इत्यन्तम्। प्रत्येकपत्त इति। यावज्जीवं यथोचितमेकाश्रमपक्षः। व्यवस्थायां मतान्तरमाहुः—केचिदित्यादि। इदं च न श्रीधरमतम्। कुटीचरः स्वाश्रमकर्मप्रधानः, बह्वोदः कर्मोपसर्जनीकृत्वा ( ? ) ज्ञानप्रधानः, हंसो ज्ञानाभ्यासनिष्ठः, निष्क्रियः प्राप्ततत्त्वः। एते च सर्वे यथोत्तरं श्रेष्ठा भवन्तीत्येतावन्मात्रव्याख्यानात् ( ? ) अतोऽन्येषामृषीणामेव तन्मतं बोध्यम्। तन्मतव्यवस्थां प्रदर्शयन्ति—साधारणानामित्यादि। साधारणानामिति। पूर्णैकैकाधिकाररहितानाम्। असाधारणं तत्तदधिकारं स्फुटीकुर्वन्ति—ऊर्ध्वेत्यादि। नैष्ठिकगृहस्थाधिकारं स्फुटीकुर्वन्ति—तथेत्यादि। अत एवेति। प्रत्येकपक्षस्याऽपि साधकत्वाय। आपस्तम्बकारेणेति। आपस्तम्बाख्येन स्मृतिकारेण। प्रजानिन्दावाक्यानीति। 'न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः' इति; 'तद्धैक आहुऋर्षयः कावषेयाः—किं प्रजया करिष्यामो येषां नाऽयमात्मा नाऽयं लोक' इत्यादीनि। अन्यथेति। एवमेकाश्रमपक्षानङ्गीकारे। तथा च, सर्वथा वैराग्यराहित्ये नैष्ठिकगार्हस्थ्यपक्ष इत्यर्थः। नैष्ठिकवानप्रस्थपक्षं स्फुटीकुर्वन्ति—तथा वानप्रस्थ इत्यादि। नैष्ठिकसंन्यासपक्षमाहुः—न्यास इत्यादि। अत्रैव पक्षान्तरमाहुः—ततोऽपीत्यादि। स इति। अनाश्रमिपक्षः। प्रह्लादरूपा जाता इति। पुराणान्तरस्थमिदं प्रमेयम्। तत्रापीति। प्रह्लादरूपत्वेऽपि। रूपद्वयं विधायेति। इदमपि पुराणान्तरं ज्ञेयम्। न गण्यत इति। शुकेतरस्य तथा सामर्थ्याभावान्न गण्यते। एवं नित्यकाम्यपक्षद्वयमुपपाद्य प्रकृते कुटीचरादिस्वरूपं व्याकुर्वन्ति—तत्रेत्यादि। आत्मचिन्तक इति। 'अयं हि परमो धर्मो यद्योगेनाऽऽत्मदर्शनम्' इति वाक्यादाश्रमधर्मभूतात्मचिन्तनपरः। तीर्थवासी भवेदिति। तीर्थस्य जलप्रधानत्वेन बह्वोदपदयोगसामञ्जस्यात्तथा भवेदित्यर्थः। दण्डा नित्या इति। तेन हंसस्त्रिदण्डी इत्यर्थः। परमहंसाधिकारमाहुः— ततोऽपीत्यादि। मुक्तमिति। पथि स्थितं चीरादि। तस्य सिद्धिरिति। तथैव तस्य सिद्धिः। न हीनः कुर्यादिति। तेनेदानीन्तनाः परमहंसा आश्रमविडम्बका धर्मध्वजा एवेति बोधितम्। आहुरिति। प्रामाणिका आहुः। उत्तममिति। 'चतुर्थाश्रमं व्रजेत्' ॥ ४२ ॥ ❀ ❀ एवमाश्रमान्निरूप्य 'उपवेदनयैः सह' इति निरूपणात् नीतिभेदान्निरूपयति आन्वीक्षिकीत्यत्र। अन्वीत्तणमिति मननम्। एवे ( षे ) ति। द्रव्ययज्ञकरणरूपा। तदर्था इति। आत्मविद्यार्थाः। एवं व्याहृतय इत्यत्र। व्याहृत्युत्पत्तौ तासां मकरा (प्रकार) भेदं वदन्ति। समष्टीत्यादि। भूर्भुवः सुवरिति व्यस्तास्तिस्रो व्यष्टिः, समस्ताः समष्टिः; इत्येवं पूर्वादिमुखैरुच्चारणाच्चतुष्टयमित्यर्थः। 'एवं व्याहृतयः प्रोक्ता व्यस्ताः समस्ताः' इत्याश्वलायनवाक्यात्। श्रीधरीये तु 'भूर्भुवः सुवरिति वा एतास्तिस्रो व्याहृतयः, तासामुह स्मै तां चतुर्थीमस्य प्रवेदयते मह इति' तैत्तिरीयोपनिषदुक्तोऽपि प्रकारश्चतुर्थत्वस्योक्तः, तमपि संगृह्णन्ति—सप्तेत्यादि। तथा च, तैत्तिरीयोक्तामष्टमं च पूर्वादिमुखैः प्रकटितवानित्यर्थः। चतुर्विधत्वाभावादिति। अमात्र (?) पक्षे तथात्वादित्यर्थः ॥ ४३ ॥ ❀ ❀ तस्येत्यत्र। न्यूनाधिकभावमिति। अक्षरकृतं महि (म) कृतं च न्यूनाधिकभावम्। चतुष्पदा इति। यद्यपि पङ्क्तिः (?) पदोच्यते, तथापि निरुक्ते पङ्क्तिः पञ्चपदा त्रिष्टुप् स्तोभत्युत्तरपदा। यत्रिरस्तोभत्तत्रिष्टुभस्त्रिष्टुप्त्वमिति विज्ञायते इति ब्राह्मणोपन्यासेन पञ्चमपदस्य स्तोभमात्रत्वाच्चतुष्पदा। गायत्री तु गृहस्थानां त्रिपदाऽपि संन्यासिनां चतुष्पदेति बृहदारण्यके सिद्धम्। तस्मात् सर्वाश्चतुष्पदा इत्यर्थः। सप्ताक्षरपादेति। सर्वापेक्षा (क्ष) या स्वल्पा। सोमाहरणादिति। 'तृतीयस्यामितो दिवं सोम आसीत्तं गायत्र्याहरत्' इति श्रुतेस्तथेत्यर्थः। अल्पाक्षरेति। पङ्क्त्याद्यपेक्षयाऽल्पाक्षरा। जगत्या इत्यादि। जगत्यां बह्वक्षरत्वम्, त्रिष्टुभि पङ्क्तावनुष्टुभि च ततो न्यूनाक्षरत्वं हेतुर्यथायथं बोध्यः। न चाऽक्षरविचार उष्णिहोऽधिकापि गायत्री पादविचारे न्यूनेति सा पूर्वं कुतो नोक्तेत्यत आहुः—त्वगित्यादि। प्रथमत इति। गायत्र्याः पूर्वम् ॥ ४४ ॥

### श्रीगिरिधरकृता बालप्रबोधिनी

एवं विदुरेण पृष्टा मैत्रेयस्तत्क्रममाह—ऋगिति। पूर्वादिभिर्मुखैः ऋगादीन् क्रमाद्व्यधादसृजदित्यन्वयः। चातुर्होत्रसृष्टिक्रममाह—शस्त्रमिति। शस्त्रमप्रगीतमन्त्रस्तोत्रं होतुः कर्म। इज्यामध्वर्योः कर्म। स्तुतिस्तोमं स्तुतिः सङ्गीतं, स्तोमं स्तुत्यर्थमेव समुदायम्, स्तुतये स्तोममिति समासः। "त्रिवृत् स्तोमो भवति" इत्यादिविहितमुद्गातृप्रयोज्यं कर्म। प्रायश्चित्तं ब्रह्मणा प्रयोज्यं कर्म। एतान्यपि चत्वारि क्रमात् पूर्वादिभिर्मुखैर्व्यधादित्यन्वयः ॥ ३७ ॥ ❀ ❀ उपवेदक्रममाह—आयुर्वेदमिति। आयुर्वेदं

वैद्यशास्त्रं, धनुर्वेदं युद्धशास्त्रं, गान्धर्ववेदं गानशास्त्रं, स्थापत्यवेदं विश्वकर्मशास्त्रं, एवं चतुरो वेदान् आत्मनः पूर्वादिभिर्मुखैरसृजदित्यन्वयः ॥ ३८ ॥ ❀ ❀ इतिहासपुराणानि सर्वेभ्य एव वक्त्रेभ्यो मुखेभ्यः ससृजे । तत्र हेतुमाह—पञ्चमं वेदमिति । वेदानां पूर्वादिमुखक्रमेण सृष्टत्वादितिहासपुराणानां च सर्ववेदविवृतिरूपत्वात् तानि सर्वेभ्यो मुखेभ्यः ससृजे इत्यर्थः । तत्सर्जनप्रयोजनं सूचयन्नाह—सर्वदर्शन इति 'स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरा' इत्युक्तेः स्त्र्यादीनां वेदेऽधिकाराभावात्तेषामुद्धारः कथं स्यादिति सर्वेषु दर्शनं दृष्टिर्यस्य सख्याद्युपकारं पश्यन्नितिहासपुराणानि ससृजे इत्यर्थः । एवं दर्शने तत्सर्जनसामर्थ्ये च हेतुं सूचयन्नाह—ईश्वर इति । ईश्वरश्चेदेवं न पश्येन्न कुर्यात्तर्हि कः कुर्यादिति भावः ॥ ३९ ॥ ❀ ❀ कर्मतन्त्रक्रममाह—षोडश्युक्थौ पूर्वमुखात्, पुरीषी चयनं अग्निष्टुत् अग्निष्टोमः तौ दक्षिणमुखात्, आप्तोर्यामश्चातिरात्रश्च यौ पश्चिममुखात्, गोसवेन सहितं सगोसवं वाजपेयमुत्तरमुखादसृजदित्यन्वयः ॥ ४० ॥ ❀ ❀ विद्यादीनि चत्वारि धर्मस्य पदानि आश्रमांश्च चतुरो ब्रह्मचर्यादीन्, यथासङ्ख्यं वृत्तिभिः सह पूर्वादिभ्यो मुखेभ्योऽसृजदित्यन्वयः । ननु 'तपः सत्यं दया शौचं' इति प्रथमस्कन्धे दयाशौचयोः पादत्वं कीर्तितं अत्र तु विद्यादानयोरिति विरोध इति चेत्, न, शौचं हीश्वरज्ञानरूपविद्याकार्यं 'क्षेत्रज्ञस्येश्वरज्ञानाद्विशुद्धिः परमा मता' इति स्मृतेः । अतः कारणशब्दः कार्ये उपचर्य प्रथमे तथोक्तं, तथा 'भूताभयप्रदानस्य कलां नार्हन्ति' इति वाक्याद्भूताभयप्रदानमेव दयादानशब्दाभ्यामुभयत्रोक्तमिति विरोधाभावात् ॥ ४१ ॥ ❀ ❀ के वा ते आश्रमा इत्यपेक्षायां तान् दर्शयंस्तेषामवान्तरभेदांश्चाह—सावित्रमिति द्वाभ्याम् । तत्र ब्रह्मचर्यं चतुर्विधमाह—सावित्रमुपनयनादारभ्य गायत्रीमधीयानस्य त्रिरात्रं, प्राजापत्यं व्रतान्याचरतः संवत्सरान्तं, ब्राह्मं वेदग्रहणान्तं, बृहत् नैष्ठिकं मरणपर्यन्तमित्यर्थः । गृहस्थस्य वृत्तिचतुष्टयमाह—वार्तेति । वार्ता 'कृषिगोरक्षवाणिज्यं कुसीदं तुर्यमुच्यते । वार्ता चतुर्विधा' इति वाक्यात् अनिषिद्धा कृष्यादिवृत्तिः, सञ्चयः अध्यापनयाजनादिना प्राप्तधनस्य सङ्ग्रहः, शालीनमयाचितवृत्तिः, शीलं हट्टादिपतितधान्यादानम्, उञ्छः क्षेत्रे स्वामित्यक्तानां धान्यानामादानं तदुभयमेका वृत्तिः । एकवचनमार्षम् । समाहारद्वन्द्वे तु पुंस्त्वमार्षम् । एता गृहस्थाश्रमवृत्तय इत्यर्थः । अत्रैतास्वेव वृत्तिषु तत्तद्वर्णानुसारेणापि वृत्तिविभागस्तत्तत्प्रकरणात् ज्ञेयः ॥ ४२ ॥ ❀ ❀ चतुर्विधान् वनस्थानाह—वैखानसा इति । वैखानसाः अकृष्टपच्याशिनः, वालखिल्या लब्धे नवेऽनाद्ये पुराणत्यागिनः, औदुम्बराः प्रातरुत्थाय यां दिशं प्रथमं पश्यन्ति तत आहृतैः फलादिभिर्जीवन्तः, फेनपाः स्वयम्पतितैः फलादिभिर्जीवन्तः, वने एवंविधा वनवासिनो भवन्तीत्यर्थः । सन्न्यासिनामपि चातुर्विध्यमाह—न्यासे इति । कुटीचकः स्वाश्रमधर्मप्रधानः । 'कुटीचरः' इति पाठान्तरम् । बह्वोदः कर्मोपसर्जनीकृत्य ज्ञानप्रधानः, हंसो ज्ञानाभ्यासनिष्ठः, निष्क्रियः परमहंसः प्राप्ततत्त्वेन प्रवृत्तिधर्मं हित्वा निष्क्रियत्वं, न्यासे सन्न्यासाश्रमे पूर्वं प्रथमं 'कुटीचको भवति' इत्युक्त्या तत्राप्युत्तरोत्तरस्य श्रेष्ठत्वाद्यथाधिकारं पूर्वपूर्ववत् उत्तरोत्तरग्रहणं कर्तव्यमिति सूचितम् ॥ ४३ ॥ ❀ ❀ नयैः सहेत्युक्तं तेषामुत्पत्तिक्रममाह—आन्वीक्षिकीति । आन्वीक्षिकी आत्मज्ञानरूपा विद्या मोक्षफला, पूर्वं तु विद्यादानमित्यत्र शुद्धिहेतुत्वेनोक्ताऽतो न द्विरुक्तिः । त्रयी कर्मविद्या स्वर्गादिफला । वार्ता कृष्यादिरूपा जीवनफला । दण्डनीती राजनीतिरर्थफला तथैव चेति पूर्ववत्पूर्वादिमुखैरेवोत्पन्ना इत्यर्थः । एवं यत्र क्रमो नोक्तः तत्राप्ययं क्रमो ज्ञेयश्चतुस्सङ्ख्यासाम्यात् । एवमाश्रमाद्युत्पत्तिं प्रदर्श्य ब्रह्मणो यच्छब्दब्रह्मत्वमुक्तं तदेव स्पष्टयंस्ततो व्याहृत्यादीनामुत्पत्तिं दर्शयति—एवमिति । एवं पूर्वादिमुखक्रमेणैव चतस्रो व्याहृतयश्चासन्नित्यर्थः भूर्भुवस्सुवरिति व्याहृतयः, समस्ताः चतुर्थी व्याहृतिः, यथा आश्वलायनः "एवं व्याहृतयः प्रोक्ता व्यस्ता समस्ताः" इति यद्वा "भूर्भुवः स्वरित्येतास्तिस्रो व्याहृतयस्तासामु ह स्मैतां चतुर्थीमाह चमस्यः प्रवेदयते महः इति" श्रुतेश्चतुर्थी मह इति व्याहृतिरिति ज्ञेयम् । एवं मुखोत्पन्नानां मुखक्रममभिधायान्येषामुत्पत्तिमाह—प्रणव इत्यादिना । हि प्रसिद्धः प्रणवोऽस्य ब्रह्मणो हृत्खतः हृदयाकाशादासेत्यर्थः ॥ ४४ ॥

## हिन्दी अनुवाद

श्रीमैत्रेयजीने कहा—विदुरजी ! ब्रह्माने अपने पूर्व, दक्षिण, पश्चिम और उत्तरके मुखसे क्रमशः ऋक्, यजुः, साम और अथर्ववेदोंको रचा तथा इसी क्रमसे शस्त्र ( होताका कर्म ), इज्या ( अध्वर्युका कर्म ), स्तुतिस्तोम ( उद्गाताका कर्म ) और प्रायश्चित्त ( ब्रह्माका कर्म )—इन चारोंकी रचना की ॥ ३७ ॥ ❀ ❀ इसी प्रकार आयुर्वेद ( चिकित्साशास्त्र ), धनुर्वेद ( शस्त्रविद्या ), गान्धर्ववेद ( सङ्गीतशास्त्र ) और स्थापत्यवेद ( शिल्पविद्या )—इन चार उपवेदोंको भी क्रमशः उन पूर्वादि मुखोंसे ही उत्पन्न किया ॥ ३८ ॥ ❀ ❀ फिर सर्वदर्शी भगवान् ब्रह्माने अपने चारों मुखोंसे इतिहास-पुराणरूप पाँचवाँ वेद बनाया ॥ ३९ ॥ ❀ ❀ इसी क्रमसे षोडशी और उक्थ, चयन और अग्निष्टोम, आप्तोर्याम और अतिरात्र तथा वाजपेय और गोसव—ये दो-दो याग भी उनके पूर्वादि मुखोंसे ही उत्पन्न हुए ॥ ४० ॥ ❀ ❀ विद्या, दान, तप और सत्य—ये धर्मके चार पाद और वृत्तियोंके सहित चार आश्रम भी इसी क्रमसे प्रकट हुए ॥ ४१ ॥ ❀ ❀ सावित्र[1], प्राजापत्य[2], ब्राह्म[3] और

---

१. उपनयन-संस्कारके पश्चात् गायत्रीका अध्ययन करनेके लिए धारण किया जानेवाला तीन दिनका ब्रह्मचर्यव्रत । २. एक वर्षका ब्रह्मचर्यव्रत । ३. वेदाध्ययनकी समाप्तितक रहनेवाला ब्रह्मचर्यव्रत ।

बृहत्'—ये चार वृत्तियाँ ब्रह्मचारीकी हैं तथा वार्ता, सञ्चय, शालीन, और शिलोञ्छ—ये चार वृत्तियाँ गृहस्थकी हैं ॥४२॥ ❀ ❀ इसी प्रकार वृत्तिभेदसे वैखानस, वालखिल्य, औदुम्बर और फेनप—ये चार भेद वानप्रस्थोंके तथा कुटीचक, बहूदक, हंस और निष्क्रिय ( परमहंस )—ये चार भेद संन्यासियोंके हैं ॥ ४३ ॥ ❀ ❀ इसी क्रमसे आन्वीक्षिकी, त्रयी, वार्ता, और दण्डनीति—ये चार विद्याएँ तथा चार व्याहृतियाँ भी ब्रह्माजीके चार मुखोंसे ही उत्पन्न हुईं तथा उनके हृदयाकाशसे ॐकार प्रकट हुआ ॥ ४४ ॥

**तस्योष्णिगासील्लोमभ्यो गायत्री च त्वचो विभोः । त्रिष्टुम्मांसात्स्नुतोऽनुष्टुब्जगत्यस्थ्नः प्रजापतेः ॥४५॥**
**मज्जायाः पङ्क्तिरुत्पन्ना बृहती प्राणतोऽभवत् । स्पर्शस्तस्याभवज्जीवः स्वरो देह उदाहृतः ॥४६॥**
**ऊष्माणमिन्द्रियाण्याहुरन्तःस्था बलमात्मनः । स्वराः सप्त विहारेण भवन्ति स्म प्रजापतेः ॥४७॥**
**शब्दब्रह्मात्मनस्तस्य व्यक्ताव्यक्तात्मनः परः । ब्रह्मावभाति विततो नानाशक्त्युपबृंहितः ॥४८॥**

### श्रीधरस्वामिविरचिता भावार्थदीपिका

स्नुतः स्नायुतः । "अनुष्टुप् स्नावानि" इति श्रुतेः ॥ ४५ ॥ ❀ ❀ महाकल्पे ब्रह्मा शब्दरूपोऽभवदित्युक्तं तदेव दर्शयन् वर्णानामुत्पत्तिमाह । स्पर्श इति सार्धेन । स्पर्शः कादिवर्गपंचकम् । स्वरोऽकारादिः ॥ ४६ ॥ ❀ ❀ ऊष्माणं शषसहचतुष्कम् । अंतस्था यरलवाः । सप्तस्वराः षड्जादयः । विहारेण क्रीडया ॥ ४७ ॥ ❀ ❀ अत एव शब्दतनुत्वाद्ब्रह्मणः परमेश्वरो नित्यं प्रकाशत इत्याह । व्यक्ता वैखरी अव्यक्तः प्रणवः तदात्मनस्तस्य ब्रह्मणः परः परमेश्वरः अवभाति । कीदृशः । ब्रह्मपरिपूर्णः तत्राव्यक्तात्मनो ब्रह्मरूपो विततोऽवभाति व्यक्तात्मनो नानाशक्त्युपबृंहित इन्द्रादिरूपोऽवभाति ॥ ४८ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

तस्य ब्रह्मणः स्नायुतः सर्वांगव्यापिनाडीमंडलात् । स्नुतोऽनुष्टुबुत्पत्तौ श्रुतिमाह अनुष्टुबिति । स्नुतो भवतीति स्नावान् आर्षत्वान्मतुपि वृद्धिरिति श्रुतिपदार्थः । गायत्री षडक्षरा छंदोजातिः उष्णिक् सप्ताक्षरा अनुष्टुबष्टाक्षरा त्रिष्टुप् एकादशाक्षरा जगती द्वादशाक्षरा अनुष्टुप् श्रुतिरुपलक्षणभूतान्यासामुष्णिगादिश्रुतीनां लोकेऽनुष्टुभोतिप्रसिद्धत्वात्तत्रैव सोक्तेति ॥ ४५ ॥ ❀ ❀ मज्जास्थ्यन्तर्गतस्नेहविशेषः । पंक्तिर्दशाक्षरा छंदोजातिर्बृहती नवाक्षरा प्राणतः प्राणादिपंचकात् । शब्दरूपः शब्दात्मकदेहः महाकल्पे यावद्ब्रह्मस्थितिस्तावत्पर्यन्तं सर्वदेत्यर्थ इत्युक्तं श्रुतौ तदेव श्रुत्युक्तशब्दरूपत्वमेव । केचित्तु महाकल्पे 'ब्रह्मा शब्दरूपोऽभवत्' इदमेव वाक्यं श्रुतिमाहुः । क आदिर्यस्य चटतपवर्णचतुष्टयस्य तत्कादिवर्गाणां पंचकं वर्गपंचकं कादि च तद्वर्गपंचकं कादिवर्गपंचकम् । वर्गसंज्ञा तु कुचुटुतुपुवर्ग इति व्याकरणे विहिता ज्ञेया । सूत्रेपि कादिस्थोकारः पञ्चवर्णग्रहणार्थ एव तस्यैव योग्यत्वात्तदुक्तं भर्तृहरिणा "अकारात्पञ्चमो वर्णस्तमाहुः पंचकग्रहम् । उकारस्तत्र विख्यातो नान्यो भवितुमर्हति ॥" इति । अन्यथा कचटतपा वर्ग इति ब्रूयादित्यलम् । अकारादिः षोडशसंख्याको मातृकोक्तः ॥ ४६ ॥ ४७ ॥ ❀ ❀ अत एव सर्ववर्णाद्युद्भवस्थानत्वादेव । तत्रोभयरूपयोर्मध्ये । अव्यक्तात्मनः प्रणवरूपस्य ब्रह्मणः स्वरूपत्वात्प्रणवस्य विस्तारेण भानमुचितमेव तत्र प्रणवशब्दवाच्यं 'ब्रह्माहमस्मि' इत्येवं रूपमेवेति । व्यक्तात्मनो वैखरीरूपस्य वर्णसमुदायरूपत्वाद्वैखर्यास्तत्रत्यतत्तद्वर्णवाच्यतत्तदिंद्रादिदेवरूपेणाभातीत्यर्थः । एतेन प्रणववैखरीरूपाद्वेदाद्ब्रह्मणः परमेश्वर एवोपास्यत्वेन ज्ञेयत्वेन च प्रतीयते न त्वन्यदिति । स च स्वरूपत एकोपि परमात्मा शक्त्या नानात्मको जात इत्येवं रूपेति भावः ॥ ४८ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

स्नावान् स्नायुजन्यः ॥ ४५ ॥ ❀ ❀ एतदेव शब्दरूपत्वम् । अत्र स्पर्शाद्यनुवादेन जीवत्वादिविधेयं वर्णोत्पत्तिपक्षे वैपरीत्यं ज्ञेयं कार्य्यकारणयोरभेदनिर्देशात् ॥ ४६ ॥ ४७ ॥ ❀ ❀ अत एव वर्णोत्पादकत्वादेव तत्र व्यक्ताव्यक्तात्मनोर्मध्ये विततो व्यापकः ॥ ४८ ॥

---

१. आयुपर्यन्त रहनेवाला ब्रह्मचर्यव्रत । २. कृषि आदि शास्त्रविहित वृत्तियाँ । ३. यागादि कराना । ४. अयाचित वृत्ति । ५. खेत कट जानेपर पृथ्वीपर पड़े हुए तथा अनाजकी मंडीमें गिरे हुए दानोंको बीनकर निर्वाह करना । ६. बिना जोती-बोई भूमिसे उत्पन्न हुए पदार्थोंसे निर्वाह करनेवाले । ७. नवीन अन्न मिलनेपर पहला सञ्चय करके रक्खा हुआ अन्न दान कर देनेवाले । ८. प्रातःकाल उठनेपर जिस दिशाकी ओर मुख हो, उसी ओरसे फलादि लाकर निर्वाह करनेवाले । ९. अपने-आप झड़े हुए फलादि खाकर रहनेवाले । १०. कुटी बनाकर एक जगह रहने और आश्रमके धर्मका पूरा पालन करनेवाले । ११. कर्मकी ओर गौणदृष्टि रखकर ज्ञानको ही प्रधान माननेवाले । १२. ज्ञानाभ्यासी । १३. ज्ञानी जीवन्मुक्त । १४. मोक्ष प्राप्त करानेवाली आत्मविद्या । १५. स्वर्गादिफल देनेवाली कर्मविद्या । १६. खेती व्यापारादि-सम्बन्धी विद्या । १७. राजनीति । १८. भूः, भुवः, स्वः—ये तीन और चौथी इन तीनोंको मिलाकर, इस प्रकार चार व्याहृतियाँ आश्वलायनने अपने गृह्यसूत्रोंमें बतलायी हैं—'एवं व्याहृतयः प्रोक्ता व्यस्ताः समस्ताः ।' अथवा भूः, भुवः, स्वः और महः—ये चार व्याहृतियाँ, जैसा कि श्रुति कहती है—'भूर्भुवः सुवरिति वा एतास्तिस्रो व्याहृतयस्तासामु ह स्मैतां चतुर्थीमाह । वाचमस्य प्रवेदयते महः' इत्यादि ।

### श्रीमद्वीरराघवव्याख्या

ब्रह्मणः लोमभ्यः उष्णिगाख्यं छन्दः आसीत् अक्षराणां नियमादिः विभोर्ब्रह्मणः त्वचः गायत्रीछन्दः मांसात्त्रिष्टुप्-छन्दः स्नुतः स्नायोरनुष्टुप् छंदः प्रजापतेर्ब्रह्मणः अस्थ्नः जगतीछंद आसीत् ॥ ४५ ॥ ❀ ❀ मज्जायाः पङ्क्तिरुत्पन्ना प्राणतः बृहतीच्छन्दोऽभवत् ब्रह्मणः जीवः स्पर्शः कारणे कार्य्योपचारः एवमग्रेऽपि देहः स्वरः देहात्स्वर उत्पन्नः इन्द्रियाणीन्द्रियेभ्य ऊष्माणः आत्मनो ब्रह्मणः बलमन्तःस्थाः तस्मात्ते उत्पन्ना इत्यर्थः । कादयो मावसानाः स्पर्शाः स्वराः शषसहा ऊष्माणः यरलवा अन्तस्था इति वैयाकणोक्तरीत्या स्पर्शादयः शब्दाः प्रयुक्ताः प्रजापतेर्विहारेण क्रीडया सप्तस्वराः षड्जर्षभगान्धारमध्यमपञ्चम-धैवतनिषादा भवन्ति स्माभवन्नित्यर्थः ॥ ४६ ॥ ४७ ॥ ❀ ❀ एवं वर्णानामुत्पत्तिमभिधायाथ तस्मादेतद्ब्रह्म नामरूपमन्नं च जायत इति श्रुत्युक्तरीत्या शब्दार्थरूपप्रपञ्चात्मके ब्रह्मणि अर्थरूपस्य ब्रह्मणो वेदादिरूपेण यथा विततत्वमेवं ब्रह्मण उत्पन्नाकारादि-वर्णसंघातात्मकशब्दब्रह्मणोऽपि विततत्वमस्तीत्याह शब्देत्यादिना । शब्दात्मकं ब्रह्म आत्मा शरीरं यस्य तस्माच्छब्दब्रह्माभिव्यक्ति-स्थानस्य तच्छरीरत्वाच्छब्दब्रह्मापि तच्छरीरमेवेत्यभिप्रायेण शब्दब्रह्मात्मनः इति शब्दात्मकं ब्रह्मशरीरं यस्य तस्माच्छब्दस्याभि-व्यक्तिरित्युक्तं व्यक्ताव्यक्तात्मनः चतुर्मुखशरीरेऽपि चतुर्विंशतितत्त्वसम्भवाद्व्यक्ताव्यक्तत्वम् । एवम्भूताच्चतुर्मुखात् हे तात ! परः अर्थात्मकादन्यः ब्रह्मा शब्दात्मकः ब्रह्माऽपि विततः श्रुतिस्मृतीतिहासादिरूपेण प्रकृतिप्रत्ययपदवाक्यादिरूपेण षड्भाषारूपेण च विस्तृतः नानाशक्त्युपबृंहितः । अत्र शक्तिशब्देनार्थोपमानसामर्थ्यरूपाभिधालक्षणागौण्यादिरूपा वृत्तय उच्यन्ते । नानाशक्तिभिरभि-धादिभिरुपबृंहितः ॥ ४८ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली ।

तस्य ब्रह्मणो रोमादिभ्यः सप्तच्छन्दसां सर्गप्रकारमाह । तस्येति । अत्र क्रमव्यत्ययस्तस्योष्णिग्लोमानीत्यादिश्रुत्यनु-सारात्कारणानुगुण्याच्च ॥ ४५ ॥ ❀ ❀ पञ्चाशद्वर्णानामपि ब्रह्मणोऽभिव्यक्तिप्रकारमाह । स्पर्शा इति । कादयो मावसानाः स्पर्शास्तस्य ब्रह्मणो जीवाच्चैतन्यादभवन्नभिव्यक्ता आसन् । वर्णानां नित्यत्वादभिव्यक्तिरेव स्वरोऽकारादिर्देहः देहादुदाहृत उद्धृतः शषसहा ऊष्माणः श्रोत्रादीन्द्रियाणि इन्द्रियेभ्य उत्पन्ना इत्याहुः यरलवा अन्तस्था आत्मनो ब्रह्मणो बलं बलादभिव्यक्ताः । अत्र सामानाधिकरण्यवचनम् "यस्माद्यज्जायते चाङ्गात्तत्तदङ्गाभिधं भवेदिति वचनाद्युक्तं प्रथमा पञ्चम्यर्थे । अकुहविसर्जनीयानां कण्ठ इत्यादिस्थानभेदवत् ग्रन्थान्तरे स्थानभेदसंभवे कथमत्रोक्तम् । एवं स्थानमिति निर्णय इतीदं चोद्यं "स्पर्शास्तस्याभवन् जीवात्स्वरा देहात् प्रजज्ञिरे । ऊष्माण इन्द्रियेभ्यश्च अन्तस्था बलतो विभोरि" त्यनेन परिहर्तव्यम् ॥ ४६ ॥ ❀ ❀ "निषादर्षभगान्धार-षड्जमध्यमधैवताः । पञ्चमश्चेत्यमी सप्त तन्त्रीकण्ठोत्थिताः स्वराः ॥" इति सप्तस्वराः प्रजापतेर्विहारेण शरीरसञ्चरणविशेषेण भवन्ति स्म अभवन्नित्यन्वयः । स्वराणां सप्तविशेषत्वात्तत्सामग्रीमतस्तदुत्पादनसामर्थ्यं स्यात्तदस्य कथमिति तत्राह शब्देति "शब्द-ब्रह्मात्मको ब्रह्मा सर्वशब्दाभिधो यतः । ऋते नारायणादीनि नाम्नां स विषयो यत" इति वचनान्नारायणादिनाम्नां व्यतिरेकेण सर्ववेदादिशब्दराशेर्विषयत्वात्तदुत्पादनसामर्थ्यमस्तीत्यर्थः । नित्यवर्णात्मकवेदानां नित्यत्वेन व्याप्तत्वात्परिच्छिन्नस्य ब्रह्मणस्त-द्विषयत्वं कथमत्राह । व्यक्तेति । "व्यक्तं ब्रह्माण्डमुद्दिष्टमव्यक्तं महदादि च । तद्व्यापकत्वाद्ब्रह्मा तु व्यक्ताव्यक्तात्मकः स्मृतः" इत्यतो व्याप्तिमत्त्वात्तद्विषयत्वं युक्तमुक्तादन्यत्रापि व्याप्तिशक्तिमत्त्वात्प्रभोरित्युक्तम् ॥ ४७ ॥ ❀ ❀ देहात्तदवयवेभ्यो ब्रह्मणः सृष्टिमुक्त्वाधुना प्रकारान्तरेण तस्मात्सृष्टिं वक्ति । ब्रह्मेति ब्रह्मा ततः पूर्वस्मादपरां स्त्रीपुरुषीकरणशक्तिमुपादाय सर्गाय मनो दध इत्यन्वयः । परतन्त्रस्य ब्रह्मणः स्वाधीना सृष्टिः कथमत उक्तमनुभावेति । अनुभावेन परब्रह्मणा विततः तस्यानुग्रहामृतेन पूर्ण इत्यर्थः । ब्रह्मानुभाववितत इत्येकं वा पदं परब्रह्मणः प्रभावेण विततः हरेरनुकूलेन भावेन सत्तया विततोऽधिकृतो विशेषसन्निधानवा-निति वा । अत एव नानाशक्त्युपबृंहितः नानाविधसृष्टिसामर्थ्यपूर्णः ॥ ४८ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

शब्द ब्रह्मेति । व्यक्ताव्यक्तौ वैखरीप्रणवौ । तत्तदात्मकात् सर्व्वस्मादपि वेदान्तस्य परमेश्वर एवाभाति स एव च ब्रह्म परिपूर्णरूपः । तत्र हेतुः स्वरूपतोऽविततः शक्तिश्च नानेति ॥ ४८—५६ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

छन्दसामुत्पत्तिमाह । तस्येति । स्नुतः स्नायुतः सर्वाङ्गाच्छादकनाडीत इत्यर्थः । अनुष्टुप्स्नावान् इति श्रुतेः ॥ ४५ ॥ ❀ ❀ वर्णानामुत्पत्तिमाह स्पर्श इति सार्द्धेन । कादिवर्गपञ्चकं स्पर्शः स्वरः अकारादिः । ऊष्माणः शषसहचतुष्कम् । अन्तस्थाः यरलवाः सप्तस्वरा षड्जादयः । विहारेण क्रीडया ॥ ४६ ॥ ४७ ॥ ❀ ❀ परमेश्वरस्फूर्त्यैव ब्रह्मणस्तेजस्वित्वमधिकमित्याह । शब्दब्रह्मवेदस्तन्मय एव आत्मा देहो यस्य तस्य । यतो व्यक्ता वैखरी अव्यक्तः प्रणवस्तदात्मनस्तस्य ब्रह्मण उपास्यत्वेन परः परमे-

श्वर आभाति । सम्यक् स्फुरति । य एव निर्विशेषशुद्धज्ञानगम्यत्वेन ब्रह्म सविशेषशुद्धज्ञानगम्यत्वेन नानाशक्त्युपबृंहितो भगवानित्यतस्तस्य कन्यानुगमनजन्यमालिन्यं नास्तीति साधितम् ॥ ४८ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः ।

स्तुतः स्तायुतः ॥ ४५ ॥ ❀ ❀ ब्रह्मकल्पे ब्रह्मा शब्दब्रह्मरूपोऽभवदित्युक्तं तदेव दर्शयन् वर्णानामुत्पत्तिमाह स्पर्श इति सार्द्धेन । तस्य ब्रह्मणः स्पर्शः कादिमावसानः वर्णसमूहः जीवः ततः कादयो वर्णा जाता इति भावः । एवमग्रेऽपि स्वरः अकारादिः ऊष्माणं शषसहेति वर्णचतुष्कम् । अन्तस्थाः यरलवाः स्वराः षड्जादयः विहारेण क्रीडया ॥ ४६ ॥ ४७ ॥ ❀ ❀ तस्योभयब्रह्मवेत्तृत्वमाह । शब्दब्रह्मात्मनः ब्रह्मकल्पे शब्दब्रह्मरूपिणः अव्यक्तदेहस्येत्यर्थः । पुनः पद्मकल्पे चतुर्मुखरूपव्यक्तदेहयोगात् व्यक्ताव्यक्तात्मन इति विशेषणम् । एवंभूतस्योभयशरीरिणस्तस्य ब्रह्मण नानाशक्त्युपबृंहितः अत एव विततः अनेकब्रह्माण्डात्मककार्यात्मना स्थितः परः परब्रह्मपदवाच्यः परमात्मा प्रतिपाद्यः ब्रह्मतत्प्रतिपादकं शब्दब्रह्म च भाति प्रकाशते इत्यर्थः । प्रजापति उभे ब्रह्मण सम्यग्जानाति अतः नानादेहधारणे नानाप्रजासर्जने च तस्य नास्ति प्रयास इति भावः ॥ ४८ ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

एवं सामग्रीं विनिरूप्य शब्दब्रह्मणो देहं विनिरूपयति—स्पर्शस्तस्याऽभवदिति सार्द्धेन—स्पर्शाः पञ्चविंशतिः, ते सर्वे एकीभूताः शब्दब्रह्मणो जीवोऽभिमानी, योऽहमिति मन्यते । स्वरा अकारादयः षोडश, स देहः । उदाहृत इति प्रमाणम् । शषसहा ऊष्माणः, ते चत्वार इन्द्रियाणि । आहुरित्यपि प्रमाणम् । अन्तस्था यरलवाः, तस्य देहस्य बलम् । एवं चतुर्मूर्तेः स्वरूपमुक्तम् । बाह्यक्रियामुदात्तादिरूपां वदन् विहारेण तेषामुत्पत्तिमप्याह कार्यकारणयोरभेदत्वाय—स्वराः सप्तविहारेणेति । स्वराः षड्जादयः सप्त । विहारेण गतिलीलया । प्रजापतेरिति । शब्दब्रह्मणोऽस्य चाऽभेदो निरूपितः ॥ ४५ ॥ ❀ ❀ शब्दब्रह्मभावत्वेन वा जगज्जनकत्वम्, तदेवोपपादयन्नुपसंहरति—शब्दब्रह्मात्मन इति । ननु शब्दब्रह्मणः कथं जगज्जनकत्वम्, शब्दार्थयोर्द्वैरूप्यात्, ब्रह्मणैव अर्थात्मकस्य जगत उत्पादितत्वात् । तत्राऽऽह—विभाति ब्रह्मेति । अर्थात्मकं जगदुत्पादितमपि, नामव्यतिरेकेण न प्रकाशत इति विभातीत्युक्तम् । इदं सर्वं जगत् विततं ब्रह्मैव विभाति । बृहत्त्वात् बृंहणत्वाच्च ब्रह्मणः । बृहत्त्वाद्विततम्, बृंहणत्वान्नानाशक्त्युपबृंहितम् । शब्दब्रह्मव्यतिरेकेण परब्रह्मणः प्रकाशनं न भवति । शब्दब्रह्मणैव परब्रह्म प्रकाश्यते स्वप्रकाशमपि । स्वप्रकाशत्वमपि तस्य वेदेनैवोक्तम् । 'अनुपलब्धे तत् प्रमाणम्' इति न्यायात् । 'पराञ्चि खानि' इत्यादिवाक्यादनुपलब्धत्वम् । स्वप्रकाशमपि सौरं तेजः दिवाभीतेन न दृश्यते । न च व्यवधानं किञ्चिदपेक्ष्यते, इन्द्रियाणामेवाऽग्राहकत्वात् । नह्याकाशग्रहणे, चक्षुषा रसाग्रहणे वा, व्यवधायकमस्ति । यद्यपि 'अन्यद्युष्माकमन्तरं बभूव' इति व्यवधानमुक्तम्, तदपि स्वप्रकाशस्य सर्वात्मकस्य मनसि चक्षुषि च घटे प्रकाशमानस्य व्यवधायकं न भवति । अथ यदि संयुक्तेऽपि तद् व्यवधायकमिति मन्यते, तदा चक्षुषामग्रहणमेव श्रौतमस्तु, किं व्यवधानेन । 'अन्यद्युष्माकम्' इति तु भोगेच्छादिकं जातमेव निन्दार्थमनूद्यते, न तु भित्त्यादिवत् व्यवधायकम् । यदपि मायिकं पूर्वमुक्तम्, तदप्यग्रहणादेव । हेतुत्वेन व्यपदेशोऽपि आत्मव्यतिरिक्तस्य सृष्टिपक्षे उपयुज्यते, सृष्टिभेदानां निरूपणात् । अतः शब्देनैव ब्रह्मणो भानम् । 'यतो वाचो निवर्तन्ते' इति तु इन्द्रियरूपा वाक्, लौकिकश्च शब्दः, लौकिकं च मनः, अन्यथा 'तन्त्वौपनिषदं पुरुषं पृच्छामि' 'मनसैवैतदाप्तव्यम्' इति विरुद्धमापद्येत । माहात्म्यार्थं वा द्वयम् । उभयमपि शब्दब्रह्मण एव ज्ञायते । एतदेवाऽभिसन्धायाऽऽह—व्यक्ताव्यक्तात्मन इति । तस्य शब्दब्रह्मणो हृदयं क्वचिद्व्यक्तम्, क्वचिदव्यक्तम्, अन्यथा ब्रह्म स्पष्टतया ज्ञातं स्यात् । तथात्वे भगवत एव नियामकत्वम् । तदाह—परमिति । तत्र हेतुर्नानाशक्त्युपबृंहितमिति । अनेकाः शक्तयो भगवति वर्त्तन्त इति तत्तदनुरोधेन तथा तथा वचनम्, अन्यथा तासां गुप्तशक्तीनां प्रकाशो न स्यात् । अतः प्रकाशनिषेधं न वदति, किन्तु गुप्तानां स्वरूपमाह । अतो ब्रह्मप्रकाशार्थं प्रवृत्तं शब्दब्रह्म तत्कार्यमपि प्रकाशयतीति । क्रियया प्रकाश्यते ब्रह्मणा, ज्ञानेन प्रकाश्यते वेदेनेति ॥ ४६ ॥ ❀ ❀ एवमाधिदैविकसृष्टिमुक्त्वा सात्त्विकीमाधिभौतिकीं सृष्टिमाह—ततोऽपरामुपादायेति । अपरां तनुमुपादाय अन्यादृशीं सृष्टिं कर्तुं मनो दधे । नन्वेतावतैव मरीच्यादिद्वारा सृष्टिर्भविष्यतीति किं प्रकारान्तरसृष्ट्येत्याशङ्क्याऽऽह—ऋषीणामिति । यद्यपि भूरिवीर्याणि येषाम् । न हि मदपेक्षया ते वीर्यवन्तः, उत्पादिता वा पञ्चधाः, तैः किम् ? तावता सर्गस्य विस्तारस्तु न भविष्यत्येव, प्रकारस्याऽनुत्पादितत्वात् । अतः प्रकारकरणार्थं शरीरान्तरेण कार्यं कर्तुं मनो दध इत्यर्थः ॥ ४७ ॥ ❀ ❀ 'अशक्ये हरिरेवाऽस्ति' इति न्यायमाश्रित्य पूर्वं तपस्यल्पीयसि कृते प्रसन्नोऽपि भगवान् पुनस्तप आदिष्टवान् । तथाऽत्रापि, यद्यपि प्रकारः कर्त्तव्य इति निश्चितम्, तथापि कः प्रकारः कर्त्तव्य इति भूयश्चिन्तयामासेत्याह ज्ञात्वेति । यस्मिन् स्वरूपे चिन्तिते उपायः कर्तव्य इति ज्ञातम्, पुनस्तदेव हृदये चिन्तयामास । कौरवेति । आपाततो न कार्यान्निवृत्तिः कर्तव्या, किन्त्वादेहपातपर्यन्तं कार्यं कर्तव्यमिति; यथा कुरुणा कृतमितीममर्थं ज्ञापयति । तस्य चिन्तामेवाऽऽह—अहो इति । कृतोऽपि प्रकारः भगवदानुगुण्याभावे न सेत्स्यति, अन्यथा उत्पादितैरेव सर्वैः सर्वकरणे जगत्पूरितमेव स्यात् । अहमेक एव यथा कृतवान्, तथा एतेऽपि मरीच्यादयो

बीजरूपाः कुर्युः, तदैतावता सर्वमेव पूरितं भवेत्, अतः किञ्चिदस्ति प्रतिबन्धकम्। तच्चिन्तनेन ज्ञात्वा आश्चर्येणाऽऽह—अद्भुतमिति। य एव भगवान् सृष्ट्यर्थमाज्ञापितवात्, स एव प्रतिबध्नातीति। न च सहकार्यभावः शङ्कनीय इत्याह—व्यापृतस्याऽपि नित्यदेति। सर्वदा व्यापृतस्याऽपि मे प्रजाः हि निश्चयेन, नैधन्ते वृद्धिं न प्राप्नुवन्ति। अतो दृष्टस्य प्रतिबन्धकस्याऽभावात् दैवमेव विघातकम्॥ ४८॥

## श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः।

शब्देत्यत्र। द्वैरूप्यादिति। वैजात्यात्। उत्पादितत्वादिति। सिद्धत्वादिति। तथा च, स्वस्य वैजात्यमुपादानत्वबाधकम्, कार्यस्याऽन्यथासिद्धत्वं च निमित्तत्वबाधकम्; अतः कथं तस्य जनकत्वमित्यर्थः। उभयदोषसमाधानपूर्वकं शब्दब्रह्मणः कर्तृत्वमुपपादयन्ति—अर्थेत्यादि। तथा च, 'विश्वं वै ब्रह्मतन्मात्रम्' इति पूर्वमुक्तत्वेनाऽत्रत्यायाः प्रक्रियायाः श्रौतसमानाधिकरणत्वादस्यां प्रकाशनस्यैव जननपदार्थत्वात्, तस्य च रूपनामभेदेन द्वैविध्यात्, यथा रूपेण प्रकाशनं प्रजापत्यात्मना, तथा नाम्ना प्रकाशनं वेदात्मनेति विभानकर्तृत्वमुखेन तस्याऽपि जगज्जनकत्वमुक्तमित्यर्थः। ननु प्रकाशकत्वेनैव जनकत्वमत्र विवक्षितमित्यत्र किं गमकमित्यत आहुः—इदमित्यादि। तथा च, विततत्वविविधशक्तियुक्तत्वरूपब्रह्मवत्तयाऽस्य ब्रह्मत्वेनाऽपि प्रकाशनं क्रियते, न तु नाममात्रेण; अतस्तथैव विवक्षितमित्यर्थः। ननु रूपेणेव नाम्नाऽप्येवं प्रकाशनं ब्रह्मणाऽपि सम्भवतीति किं शब्दब्रह्मात्मकतयेत्यत आहुः—शब्दब्रह्मेत्यादि। ननु शब्दब्रह्मणो नाम्ना जगत्प्रकाशकत्वमेव युक्तम्, न तु परब्रह्मप्रकाशकत्वमपि, तस्य स्वप्रकाशकत्वादित्यत आहुः—स्वप्रकाशत्वमित्यादि। ननु तावता ब्रह्मधर्मप्रकाशत्वमेव वेदस्य सिद्धम्, न तु धर्मिप्रकाशकत्वमपीत्यत आहुः—अनुपलब्ध इत्यादि। तथा (च) जैमिनिना औत्पत्तिकसूत्रे वेदात्मकस्य शब्दस्य अनुपलब्धेऽर्थे प्रामाण्यमुक्तम्। यदि ब्रह्म स्वत एवोपलब्धं स्यात्तद्बोधकवेदस्य प्रामाण्यमेव हीयेत, अतो धर्मिप्रकाशकत्वमपि तस्य मन्तव्यमित्यर्थः। ननु स्वप्रकाशकत्वश्रुतिविरोधे जैमिनीयस्य 'गुणे त्वन्यायकल्पना' इति न्यायेन धर्ममात्रबोधश्रुतिपरत्वं कल्पनीयम्, न तु धर्मिपरत्वमित्याकाङ्क्षायामाहुः—पराञ्चीत्यादि। तथा च, तदपि श्रुत्यनुरोध्येवेत्यन्यथाकल्पनं न युक्तमित्यर्थः। ननु एवमनुपलब्धत्वे स्वप्रकाशत्वहानिस्तद्बोधकश्रुतिविरोधश्चेत्यत आहुः—स्वप्रकाशमित्यादि। अपेक्ष्यत इति। अदर्शनार्थमपेक्ष्यते। तथा चाऽस्मान् प्रत्यप्रकाशत्वेऽपि तस्य स्वप्रकाशत्वहान्यभावान्न श्रुतिविरोध इत्यर्थः। दिवाभीतानां दिवा तिमिरोपजननादस्ति व्यवधानमित्या (दि) शङ्कयोदाहरणान्तरमाहुः—न हीत्यादि। आकाशस्याऽपि प्रमेयबलाद् ग्रहाणां कारे (?)···उदाहरणसङ्गतिमाशङ्क्य ततोऽप्यन्यदाहुः—रसाग्रहण इति। तथा च, व्यवधानाभावेऽपि ग्राहकासामर्थ्यादप्रकाशनमेतेषु प्रकाशमानस्याऽपि दृष्टम्, अत उभयमपि समञ्जसमित्यर्थः। ननु 'न तं विदाथ' इति मन्त्रानुरोधेन व्यवधानादेवाऽग्रहणमुररीकार्यम्, तावताऽपि स्वप्रकाशत्वानुपल (ब्ध) त्वयोः सिद्धेः। अतः प्रकाशनाय व्यवधानाभावार्थमेव यतनीयम्, न तु शब्दब्रह्मप्रकाशनं करिष्यतीति, इति तूष्णीं स्थेयम्। अतः किं तस्य प्रकाश (क) त्वसाधनेनेत्यत आहुः—यदपीत्यादि। तदपीति। वाक्योक्तं व्यवधानमपि। तथा च, तस्मिन् मन्त्रे 'य इमा जजान' इति लिङ्गाज्जगत्कर्तृरूपस्यैव तद्व्यवधायकं न तूपादानरूपस्याऽपि; अतस्तद्ग्रहणाय शब्दब्रह्मणः प्रकाशकत्वसाधनमावश्यकमित्यर्थः। ननु तस्याऽस्य च वस्तुतो भेदाभावादत्रापि व्यवधायकं तदस्तु, तथा सति व्यर्थस्तत्साधनप्रयास इत्यत आहुः—अथेत्यादि। संयुक्त इति। चक्षुरादिसंयुक्ते। अग्रहणमिति। 'पराञ्चि खानि' इत्युक्तमग्रहणम्। तथा चाऽत्रापि व्यवधानाङ्गीकारे व्यवधानाग्रहणयोर्बाधकयोरुभयत्राऽऽपाते नाऽन्यतरवैयर्थ्यमतस्तदभावायोक्तव्यवस्थैवाऽऽदरणीयेत्यर्थः। ननु 'पराञ्चि' इति मन्त्रेऽप्यन्तरात्मेति पदादिन्द्रियाणां प्रत्यग्ग्रहणासामर्थ्यमेव बोध्यते, न तु संयुक्तग्रहणासामर्थ्यमिति न व्यवस्था वक्तुं शक्येत्यत आहुः—अन्यदित्यादि। इति तु 'ससर्जाऽग्रे' इत्यत्र जातं जीवाज्ञानभेदरूपं भोगेच्छादिकमन्यत्र सिद्धं निन्दार्थमनूद्यते, 'बभूव' इति पदात्, न तु भित्त्यादिवद्व्यवधायकत्वेन विधीयते। अतस्तस्याऽपीन्द्रियसामर्थ्यकौण्ठ्य एवोपक्षयाद्व्यर्थं व्यवधायकत्वकल्पनमित्यर्थः। नन्वेवं सति सप्तमाध्याय एतच्छ्रुतिविचारे मायिकं सृष्ट्यन्तरं व्यवधायकं यदुक्तम्, तस्य कथं सङ्गतिरित्याकाङ्क्षायामाहुः—यदपीत्यादि। अग्रहणादेवेति। व्यवधायकमिति शेषः। तथा च, पार्थक्येन व्यवधायकत्वाकल्पनात्सामर्थ्यकौण्ठ्य एवोपक्षयात्तुवादकत्वादेव सङ्गतिरित्यर्थः। ननु 'बभूव' इतिवत् 'व्यतृणात्' इति भूतार्थप्रयोगस्योभयत्रापि तौल्याद्व्यवधायकस्येवेन्द्रियपराक्त्वस्याऽप्यनुवाद एवेति हेतुता कस्याऽपि न स्यात्, तथा सति यदिति हेतुत्वेन यो व्यपदेशः स विरुध्येते (ति) चेत् तत्राहुः—हेतुत्वेनेत्यादि। उपयुज्यत इति। सामर्थ्याभाव एवोपयुज्यते। तथा च, पृथग्घेतुत्वपक्षेऽन्यतरवैयर्थ्यात् परस्परोपकारकत्वमुभयोर्वक्तव्यम्। तत्रापि सूक्ष्मेक्षिकायां व्यवधानं प्रत्यसामर्थ्यस्य नोपकारकत्वम्, अपि त्वसामर्थ्यं प्रत्येव तस्योपकारकत्वम्। अत आत्मसृष्टिपक्षे अग्रहणादेवाऽज्ञानम्, व्यतिरिक्तसृष्टिपक्षे तु तदप्येतदुपकारकमित्युभयथाऽपि शब्दब्रह्मणैव तन्निवृत्तिरित्यर्थः। सिद्धमाहुः—अत इत्यादि। शब्दब्रह्मणः परप्रकाशकत्वे 'यतो वाचः' इत्यस्य वाक्यस्य विरोध इत्यत आहुः—यत इत्यादि तथा च, तत्राऽर्थस्य भिन्नत्वान्न विरोध इत्यर्थः। अस्मिन् पक्षे 'शब्दोऽपि बोधकनिषेधतयाऽऽत्ममूलमर्थोक्तमाह' इति वाक्यविरोध (क) इत्यरुच्या पक्षान्तरमाहुः—माहात्म्यार्थं वा द्वयमिति। तथा च, वेदेनाऽपि स्वसामर्थ्यानुसारेण बोध्यते, न त्विदमित्थमिति कार्त्स्न्येन

बोधयितुं शक्यत इति माहात्म्यबोधनार्थं विरुद्धधर्माश्रयत्वरूपमाहात्म्यबोधनार्थं च विरुद्धं वाक्यद्वयमिति न तस्याऽपि विरोध त ( था ) त्त्व इति । व्यक्ताव्यक्तहृदयत्वे । स्फुटमग्रिमम् ॥ ४६ ॥

इति श्रीतृतीयस्कन्धसुबोधिनीप्रकाशे द्वादशाध्यायविवरणं सम्पूर्णम् ।

### श्रीगिरिधरकृता बालप्रबोधिनी

विभोः सर्वोत्पादनक्षमस्य तस्य प्रजापतेर्ब्रह्मणो लोमभ्योऽष्टाविंशत्यक्षरमुष्णिगाख्यं छन्दोविशेष आसीदित्यन्वयः । आसीदित्यस्यैवाग्रेऽपि सर्वत्र सम्बन्धः । त्वचः सकाशात् चतुर्विंशत्यक्षरं गायत्र्याख्यमासीत् । मांसात् चतुश्चत्वारिंशदक्षरं त्रिष्टुबाख्यम् । स्नुतः स्नायोः द्वात्रिंशदक्षरमनुष्टुबाख्यम् अस्थ्नः अष्टाचत्वारिंशदक्षरं जगत्याख्यम् ॥ ४५ ॥ ❀ ❀ मज्जायाः चत्वारिंशदक्षरा पङ्क्तिरुत्पन्ना । प्राणतः षट्त्रिंशदक्षरं बृहत्याख्यमभवत् । तस्य ब्रह्मणो जीवो जीवात् स्पर्शः कादिमान्तवर्गपञ्चकम् । देहः देहात् स्वरः अकारादिरुदाहृत उत्पन्नत्वेन कथितः ॥ ४६ ॥ ❀ ❀ आत्मनः ब्रह्मणः इन्द्रियाणि इन्द्रियेभ्यः उष्माणः श-ष-स-हा उत्पन्ना इत्याहुस्तत्त्वज्ञाः । बलं बलात् अन्तस्थाः य-र-ल-वा उत्पन्नाः । तथा प्रजापतेर्ब्रह्मणो विहारेण क्रीडया षड्जर्षभगान्धारमध्यमपञ्चमधैवतनिषादाख्याः सप्त स्वरा भवन्ति स्म, अभवन्नित्यर्थः ॥ ४७ ॥ ❀ ❀ शब्दतनुत्वादेव ब्रह्मणः परमेश्वरो नित्यं प्रकाशते इत्याह—शब्देति । शब्दात्मकं ब्रह्म आत्मा स्वरूपं यस्य तस्य परः परमेश्वरो विततः परिपूर्णोऽवभातीत्यन्वयः । ताततेति सम्बोधनं विश्वासार्थम् । शब्दब्रह्मात्मकत्वमेव स्पष्टयति—व्यक्ता वैखरी अव्यक्तः प्रणवस्तदात्मन इति । सगुणनिर्गुणभेदेन परमेश्वरमेव विशिनष्टि—ब्रह्मेति, निर्गुणमक्षरं ब्रह्मेत्यर्थः । नानाशक्त्युपबृंहित इति, ऐश्वर्यादिनानाशक्तियुक्तः सगुण इत्यर्थः । यद्वा शब्दब्रह्माङ्गीकारः कुत इत्यपेक्षायामाह—शब्देति । पञ्चमी शब्दब्रह्मात्मकत्वादेव परमेश्वरो विततेवाभाति, अन्यत्समानम् ॥ ४८ ॥

### हिन्दी अनुवाद

उनके रोमोंसे उष्णिक्, त्वचासे गायत्री, मांससे त्रिष्टुप्, स्नायुसे, अनुष्टुप्, अस्थियोंसे जगती, मज्जासे पङ्क्ति और प्राणोंसे बृहती छन्द उत्पन्न हुआ । ऐसे ही उनका जीव स्पर्शवर्ण ( कवर्गादि पञ्चवर्ग ) और देह स्वरवर्ण ( अकारादि ) कहलाया ॥ ४५-४६ ॥ ❀ ❀ उनकी इन्द्रियोंको उष्मवर्ण ( श ष स ह ) और बलको अन्तःस्थ ( य र ल व ) कहते हैं, तथा उनकी क्रीडासे निषाद, ऋषभ, गान्धार, षड्ज, मध्यम, धैवत और पञ्चम—ये सात स्वर हुए ॥ ४७ ॥ ❀ ❀ हे तात ! ब्रह्माजी शब्द ब्रह्मस्वरूप हैं । वे वैखरीरूपसे व्यक्त और ओङ्काररूपसे अव्यक्त हैं । तथा उनसे परे जो सर्वत्र परिपूर्ण परब्रह्म है, वही अनेकों प्रकारकी शक्तियोंसे विकसित होकर इन्द्रादि रूपोंमें भास रहा है ॥ ४८ ॥

**ततोऽपरामुपादाय स सर्गाय मनो दधे । ऋषीणां भूरिवीर्याणामपि सर्गमविस्तृतम् ॥ ४९ ॥**
**ज्ञात्वा तद्धृदये भूयश्चिन्तयामास कौरव । अहो अद्भुतमेतन्मे व्यापृतस्यापि नित्यदा ॥ ५० ॥**
**न ह्येधन्ते प्रजा नूनं दैवमत्र विघातकम् । एवं युक्तकृतस्तस्य दैवं चावेक्षतस्तदा ॥ ५१ ॥**
**कस्य रूपमभूद् द्वेधा यत्कायमभिचक्षते । ताभ्यां रूपविभागाभ्यां मिथुनं समपद्यत ॥ ५२ ॥**

### श्रीधरस्वामिविरचिता भावार्थदीपिका

या पूर्वं विसृष्टा सती नीहारं ततोऽभवत् ततोऽपरामनिषिद्धकामासक्तां तनुम् । शब्दब्रह्मतनुस्तु सदाऽस्त्येव । तन्वंतरग्रहणे कारणमाह । ऋषीणामित्यादिना ॥ ४९ ॥ ५० ॥ ❀ ❀ युक्तकृतः यथोचितं कुर्वतः ॥ ५१ ॥ ❀ ❀ अत एव कस्य ब्रह्मण इदं द्विधाभूतमित्याश्चर्यात्कायमद्याप्यभिचक्षते ॥ ५२ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

ततस्तस्याः । ननु तेन पूर्वं सृष्टा मरीच्यादय एव बहुतराः प्रजाः सृजंति तत्र तत्प्रयत्नेनालमिति चेत्तत्राह—ऋषीणामिति । तपोयोगाद्याविष्टचेतस्त्वात्ततः सृष्टिवृद्धिर्न जातेति भावः ॥ ४९ ॥ ❀ ❀ तद्वृद्धये सर्गवृद्धये । कौरवेति । शुद्धवंशोद्भूतत्वात्तुभ्यमेतदाख्यानं ब्रवीमीत्यभिप्राया संबुद्धिः । व्यापृतस्य प्रयतमानस्यापि ॥ ५० ॥ ❀ ❀ अत्र प्रजाया अवृद्धौ दैवं जीवादृष्टम् ॥ ५१ ॥ ❀ ❀ यतो द्विधा भूतमत एव अत्र प्रमाणं च । "स इममेवात्मानं द्विधाऽपातयत्ततः पतिश्च पत्नी चाभवतां तस्मादिदमर्द्धयुगलमिव स्व" इति श्रुतेः । कसंबंधित्वात्कायमिति कशब्दाण्ण्यप्रत्यये 'लोपाद् वृद्धिर्बलीयसी'

इति न्यायेन लोपं बाधित्वा वृद्धौ सत्यां रूपसिद्धेः। तदेव स्फुटयति रूपस्य देहस्य विभागाभ्यां "रूपं देहे स्वभावे च सौंदर्यप-शुवृंदयोः"। इति कोशात्। मिथुनं श्मश्रुयुक्तमेकं कुचद्वययुक्तमेकमेवं द्वंद्वमभूत्॥ ५२॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

तद्वृद्धये सर्गवितानार्थम्॥ ४९॥ ❀ ❀ व्यापृतस्य सृष्ट्युद्यमकरान्वितस्यापि एतत् प्रजाविवर्द्धनम् अत्र सृष्टिवृद्धौ दैवमीश्वराख्यम्॥५०॥ ❀ ❀ कस्य ब्रह्मणो रूपं शरीरमत एव द्वेधाभूतस्य कायत्वादेव इदं शरीरमद्यापीति यद्यपि द्विधाभूत-ब्रह्मशरीरमेव कस्येदं कायमिति व्युत्पत्त्या कायशब्दवाच्यं तथापि आश्चर्य्यत्वात् तज्जन्यत्वे न च नरादिशरीरमपि अद्यापि कायत्वेन शब्दविदो वर्णयन्तीत्यर्थः। नडादित्वात्फक् नलोपश्छान्दसः ततः कायमिति साधु॥ ५१॥ ❀ ❀ ताभ्यामित्य-र्द्धकम्॥ ५२॥

### श्रीमद्वीरराघवव्याख्या

ततः वर्णस्वरसर्गानन्तरं किमकरोदित्यत्राह तत इत्यर्द्धेन। ततः शब्दब्रह्मात्मकतन्वाः अपरां तनुमुपादाय स्वीकृत्य सृष्ट्यर्थं मनो दधे मनसाचिन्तयदित्यर्थः। केयमपरा तनुः कीदृशी वा चिन्तेत्यपेक्षायामाह। ऋषीणामित्यादिना। स्त्री यासीदित्य-न्तेन। प्रपञ्चयति। तावच्चिन्ताप्रकारमाह। ऋषीणामिति। भूरिवीर्य्यं प्रजननसामर्थ्यं येषां तेषामृषीणामपि सर्गविस्तृतं ज्ञात्वा दृष्ट्वा तद्वृद्धये सर्गवृद्धये भूयश्चिन्तयामास॥ ४९॥ ५०॥ ❀ ❀ किमित्यत आह। नहीति। नित्यदा सर्वदा व्यापृतस्यापि प्रजासर्गे व्यापारं कुर्वतोऽपि मे मम सकाशात्प्रजा न ह्येधन्ते न वर्धन्ते एतदद्भुतमहो आश्चर्यं खलु अत्र प्रजावृद्धौ दैवं विघातकं प्रतिबन्धकं नूनं निश्चयः एवं युक्तकृतः उचितचिन्तनरूपं युक्तं कुर्वतः दैवं दैवानुकूल्यं चापेक्षतः अपेक्षमाणस्य कस्य ब्रह्मणो रूपं द्विधाऽभूत् प्राक्तने रूपे सत्येव द्वितीयं रूपमभूत्प्राक्तनेन सह द्वे रूपे भवत इत्यभिप्रेत्य। द्विधाभूदित्युक्तम्। इदं रूपस्य द्विधाभवनं न देवासुरादिसृष्टौ प्रभावत्वलोलुपत्वादिभावग्रहणवद्भावग्रहणं किन्तु तस्य शरीरमेव द्विधाभूतमित्यावेदयितुं रूपं विशिनष्टि। यत्कायमिति। यद्रूपं कायं शरीरमभिचक्षते व्याहरन्ति ताभ्यां रूपस्य विभागाभ्यां विभक्ताभ्यां रूपाभ्यामित्यर्थः मिथुनं स्त्री पुंसात्मकं द्वन्द्वमभूदित्यर्थः। तत्र मिथुने यः पुमान् स मनुः स्वायंभुवः स्वायंभुवमन्वाख्यः स्वराट् सार्वभौमोऽभूत्॥ ५१॥ ५२॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

हरेरनुकूलेन केन प्रकारेणापरां सृष्टिं चिन्तयतीत्याह। ऋषीणामिति। यत्र "पश्चात्तनः श्रेष्ठस्तत्र सिंहावलोकनम्" इति वचनात् पश्चादुत्पत्स्यमानस्य मनोः श्रैष्ठ्यादत्र सिंहावलोकनं कृतमित्यर्थः। मरीच्यादिऋषीणां सकाशादपि तत्तस्मादविस्तृतत्वादेव अनेन महतापि पुरुषेण करिष्यमाणं कार्यमालोच्य कर्तव्यं न सहसेति निदर्शितम्॥ ४९॥ ५०॥ ❀ ❀ चिन्तनविधां दर्शयति। अहो इति। सृष्टौ व्यापृतस्य कुतस्तत्राह न हीति। चिन्तया निश्चितमाह। दैवमिति। दैवानुग्रहोऽस्ति चेत् सृष्टिः पूर्यत इति निरचिनोदित्यर्थः॥ ५१॥ ❀ ❀ फलितमाह। एवमिति। युक्तमतो ध्यानवतः दैवानुग्रहमप्यपेक्षमाणस्य कस्य ब्रह्मणो रूपं द्विधाऽभूत् यद्रूपं केन ब्रह्मणा प्राप्तत्वात् कायनामाभिचक्षते निरुक्तज्ञा इति शेषः॥ ५२॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी।

या पूर्वं विसृष्टा सती नीहारं तमोऽभवत् ततोऽपरामनिषिद्धकामासक्तां तनुं शब्दब्रह्म तनुस्तु सदा अस्त्येव। ननु तेन पूर्व्वसृष्टा मरीच्यादय एव वहुतराः प्रजा सृजन्तीति सर्गे तस्यालं पुनः प्रयत्नेनेत्यत आह। ऋषीणामिति॥ ४९॥ ५०॥ ❀ ❀ युक्तकृतः यथोचितं कुर्व्वतः दैवं स्वीयदिष्टमेवावेक्षमाणस्य कस्य ब्रह्मणः रूपमेकमेव द्विधा एकं श्मश्रुयुक्तमपरं कुचद्वययुक्ता-मिति द्विविधमभूत्। यदुभयमपि कायं कसम्बन्धित्वात् कायशब्दवाच्यं नडादित्वात् फक् नलोपश्छान्दसः॥ ५१–५३॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

ततः या पूर्वं विसृष्टा सती नीहारं तमोऽभवत् ततोऽपरामन्यां तनुमुपादाय गृहीत्वेत्यर्थः॥ ४९॥ ५०॥ ❀ ❀ युक्तकृतः सयुक्तचिन्तनं कृतवतः यत्पुनरुपादानं कायमभिचक्षते तद्रूपं द्वेधा अभूत्॥ ५१–५३॥

### श्रीमद्वल्लभाचार्यविरचिता सुवोधिनी व्याख्या

एवं निश्चित्य भगवदाज्ञां युक्तप्रकारेण कुर्वन् स्थितो भगवच्चिन्तनमेव कृतवान्। तदा तस्यैवं प्रकारेण युक्तकृतः, कदा भगवान् प्रसन्नो भविष्यतीति दैवं चाऽवेक्षतः, तस्याऽशक्तिं ज्ञात्वा, भगवानेव कस्य ब्रह्मणः, रूपं द्विधा कृतवान्। तदा तस्य रूपं

द्वेधा अभूत। तदा तच्छकलद्वयं कायमभिचक्षते लोकाः। का इयम्, कोऽयमिति वक्तव्ये, एकस्य विशेष्यम्, अपरस्य विशेषणं लोपयित्वा द्वयमेकीकर्तुं कायमित्याहुः। अनेन स्त्री स्वतो विशेष्यरहिता, पुरुषश्च विशेषणरहितः। अत उभयं मिलितं कायशब्द-वाच्यं भवति॥ ४९॥ ❀ ❀ ततः किं जातमित्यत आह—ताभ्यामिति। रूपस्य विभागाभ्यां शकलाभ्यां ताभ्यामिति भगवत्कृताभ्याम्, अन्यथा कार्यनाशे शकलाभ्यां न किञ्चिदुत्पद्येत। अतो भगवत्कृताभ्यां शकलाभ्यामेकं मिथुनं समपद्यत। मिथुनमेकं कार्यम्, अन्यथा पुरुषोऽर्द्धखण्ड एव, 'अर्द्धंवृगलम्' इति श्रुतेः। समपद्यतेति। भगवत्कृतमनायासेनैव जातमिति, ततोऽप्यग्रे कार्यं भविष्यतीति ज्ञापितम्। तद्वृगलद्वयं नाम्ना निर्दिशति यस्त्विति। तयोर्मध्ये यः पुमान् स मनुः, मननाज्जात इति। या सृष्टिप्रकाररूपा, सा स्त्री। शतरूपेत्याख्या नाम यस्याः सा आसीदिति। मनुशब्दो यौगिक इति स्वायंभुव इत्युक्तम्। स्वराडिति भगवदंशाज्जायत इति ज्ञापयति ऐश्वर्यादिगुणवत्त्वात्। अतस्तेनापि सृष्टिः सेत्स्यतीति भावः शतानि रूपाणि यस्या इति नित्यनूतनत्वेन मनोभोगाधिक्यं सृष्ट्याधिक्यं च सूच्यते। महिषी सर्वकामदोग्ध्री। निरूपणसमये। भगवदीयत्वेन भगवति प्रविष्टत्वात्, यत्र यत्र भगवांस्तत्र तत्र स इति, अस्येत्युक्तम्। इममेवाऽर्थं ज्ञापयति—महात्मन इति। महान् भगवान् आत्मा यस्य। तस्य मिथुनस्य बीजत्वं ख्यापयति—तदेति। मिथुनं मिथुनीभावः स एव धर्म उपायः तदा आनन्दे निविष्टाः प्रजा एधाम्बभूविरे। इममेवार्थम् 'आनन्दाद्धयेव खल्विमानि भूतानि जायन्ते' इति हिशब्दः सूचयति। अत्रापि हिशब्दस्तमेवार्थमाह। स्वत एव एधाम्बभूविरे, नाऽऽज्ञादिकमपि तत्राऽपेक्षितम्॥ ५०॥ ५१॥ ❀ ❀ एवं मैथुनस्य प्रकारत्वमुपपाद्य प्रथमे तं प्रकारं योजयति—स चाऽपीति। स बीजभूतोऽपि, चकाराद्भगवानपि। अतस्तत्पुत्रयोर्द्विरूपत्वम्। मनुप्राधान्ये उत्तानपान्मुख्यः, स विसर्गोपयोगी। भगवत्प्राधान्ये प्रियव्रतः, स स्थानोपयोगी। कन्या चैका। भगवदीया द्वितीया, अतस्तस्याः प्राधान्यम्, परं सर्गोपयोगित्वादत्रैव कथनम्। तृतीया कन्या स्त्रीप्रार्थनया। एवं समुदायेन पञ्चाऽपत्यानि। शतरूपायामिति तस्या अधिकरणत्वमेव, न तु जनकत्वम्। तेन पञ्चाऽपत्यान्यपि न प्राकृतानीति ज्ञापितं प्रियव्रतोत्तानपादौ 'पुत्रौ। पुरुषैः सह स्त्रीणां नाम न ग्राह्यमिति तिस्रः कन्या इत्युक्तम्। भारतेति मोहाभावाय। स्त्रीप्रसङ्गोऽपि मोहहेतुः। तासां नामानि निर्दिशति—आकूतिरिति इतिशब्दो नामान्तरव्युदासार्थः। सत्तमेति पुनः संबोधनं पूर्ववत् पुरुषसंबन्धकथनात्॥ ५२॥

### श्रीगिरिधरकृता बालप्रबोधिनी

ततो ब्रह्मा किं कृतवानित्यपेक्षायामाह—तत इति। वेदादिसर्गानन्तरं स ब्रह्मा अपरां तनुमुपादाय सर्गाय मनो दधे॥ ४९॥ ❀ ❀ ननु महाप्रभावाणां मरीच्यादीनां जातत्वेन तैरेव सृष्टिविस्तारस्य सम्भवात्किं पुनर्ब्रह्मणः प्रयत्नेनेत्याह—ऋषीणामिति। कौरव हे विदुर भूरि वीर्यं प्रजननसामर्थ्यं येषां तथाभूतानामपि ऋषीणां मरीच्यादीनां सर्गमविस्तृतं ज्ञात्वा तस्य सर्गस्य वृद्धये भूयश्चिन्तयामासेत्यन्वयः॥ ५०॥ ❀ ❀ चिन्तामेव दर्शयति—अहो इति। नित्यदा सर्वदा व्यापृतस्य प्रजावृद्धये व्यापारं कुर्वतोऽपि मे मम प्रजा न ह्येधन्ते न वर्धन्ते, एतदहो अद्भुतमत्याश्चर्यं, अतो नूनं निश्चितमत्र प्रजावृद्धौ दैवं प्रारब्धं दुरदृष्टमेव विघातकं प्रतिबन्धकमित्यन्वयः॥ ५१॥ ❀ ❀ एवं युक्तकृत उचितं प्रयत्नं कुर्वतो दैवं चावेक्षतः कदा भगवान् प्रसन्नो भवेद्यत्प्रसादाद्दुरदृष्टनिवृत्त्या सर्गवृद्धिः स्यादिति भगवत्प्रसादमवेक्षमाणस्य कस्य ब्रह्मणोऽयं देह इति व्युत्पत्त्या कायमभिचक्षते लोका व्याहरन्तीत्यर्थः॥ ५२॥

### हिन्दी अनुवाद

विदुरजी! ब्रह्माजीने पहला कामासक्त शरीर—जिससे कुहरा बना था-छोड़नेके बाद दूसरा शरीर धारण करके विश्वविस्तारका विचार किया, वे देख चुके थे कि मरीचि आदि महान् शक्तिशाली ऋषियोंसे भी सृष्टिका विस्तार अधिक नहीं हुआ, अतः वे मन-ही-मन पुनः चिन्ता करने लगे-'अहो! बड़ा आश्चर्य है, मेरे निरन्तर प्रयत्न करनेपर भी प्रजाकी वृद्धि नहीं हो रही है। मालूम होता है, इसमें दैव ही कुछ विघ्न डाल रहा है। जिस समय यथोचित क्रिया करनेवाले श्रीब्रह्माजी इस प्रकार दैवके विषयमें विचार कर रहे थे, उसी समय अकस्मात् उनके शरीरके दो भाग हो गये। 'क' ब्रह्माजीका नाम है, उन्हींसे विभक्त होनेके कारण शरीरको 'काय' कहते हैं। उन दोनों विभागोंसे एक स्त्री-पुरुषका जोड़ा प्रकट हुआ॥ ४९–५२॥

**यस्तु तत्र पुमान् सोऽभून्मनुः स्वायम्भुवः स्वराट्। स्त्रीया[२]ऽऽसीच्छतरूपाख्या महिष्यस्य[३]महात्मनः॥५३॥**
**तदा मिथुनधर्मेण प्रजा ह्ये[४]धाम्बभूविरे। स चापि शतरूपायां पञ्चापत्यान्यजीजनत्॥ ५४॥**
**प्रियव्रतोत्तानपादौ तिस्रः कन्याश्च भारत। आकूतिर्देवहूतिश्च प्रसूतिरिति सत्तम॥ ५५॥**
**आकूतिं रुचये प्रादात्कर्दमाय तु मध्यमाम्। दक्षायादात्प्रसूतिं च यत आपूरितं जगत्॥ ५६॥**

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां तृतीयस्कन्धे द्वादशोऽध्यायः॥

---

१. पुरुषौ क.। २. प्रा० पा० वासी। ३. प्रा० पा० महिष्यथ। ४. ह्येवं बभूविरे।

### श्रीधरस्वामिविरचिता भावार्थदीपिका

मिथुनं स्त्री पुंसौ या स्त्री साऽस्य महिष्यासीत् ॥ ५३ ॥ ❀ ❀ एधांबभूविरे वृद्धिं प्राप्ताः । तदेवाह । स चापीति सः मनुः ॥ ५४ ॥ ५५ ॥ ❀ ❀ यतः यासां संततिभिः ॥ ५६ ॥

इति तृतीये टीकायां द्वादशोऽध्यायः ॥ १२ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

तत्र मिथुने स्वराट् चक्रवर्ती अस्य स्वायंभुवस्य ॥ ५३ ॥ तदा तत्प्रभृति मिथुनयोः स्त्रीपुंसयोर्धर्मेण सुरतेन । तदेव प्रजावर्द्धनमेव । कन्याया अपि दौहित्रद्वारा नरकपातनिरोधकत्वादपत्यत्वमित्याह—पंचापत्यानीति ॥ ५४ ॥ ❀ ❀ प्रियं व्रतं भगवदुपासनालक्षणं यस्य स प्रियव्रतः । पद्यते स्वर्गमनेनेति पादः संततिः उत्तान उत्कृष्टविस्तारवान्पादः संततिर्ध्रुवरूपो यस्य स तथा । यद्वा । उद्गतस्तानो याभ्यां तावुत्तानौ ह्रस्वौ पादौ यस्य स तथा "ह्रस्वौ पादौ महासौख्यसंपत्संतानदायकौ" इत्यंगशास्त्रात् । भारतेति श्रवणार्हतामाह । आसमंतात्कूयते कथ्यते प्रदानकाले जामाता यस्याः साऽऽकूतिः । "अस्यां यो जायते पुत्रः स मे पुत्रो भविष्यति" इत्युक्तेः । देवेन विष्णुना हूयते दीयते तत्त्वज्ञानमस्या इति देवहूतिः । यद्वा देवेन ब्रह्मणा हूयते बोध्यते या सा तथा "एष मानवि ते गर्भं प्रविष्टः कैटभार्दनः" इत्युक्तेः । प्रकृष्टा सूतिः संततिर्यस्याः सा प्रसूतिः । रुचये ब्रह्मपुत्राय "मानसश्च रुचिर्नाम विज्ञेयो ब्रह्मणः सुतः" इति वायुपुराणे नवमाध्यायोक्तेः ॥ ५५ ॥ ❀ ❀ मध्यमां देवहूतिम् । यतो याभिः ॥ ५६ ॥

इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे तृतीयस्कन्धे द्वादशोऽध्यायः ॥ १२ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या ।

तत्र स्त्रीपुरुषभागयोर्मध्ये ॥ ५३ ॥ ❀ ❀ तदेत्यर्द्धकम् ॥ ५४ ॥ ❀ ❀ तदेव बर्द्धनमेवाह । स चापीति सार्द्धकम् ॥ ५५ ॥ ❀ ❀ पूरितं व्याप्तम् ॥ ५६ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कंधे श्रीराधारमणदासगोस्वामिविरचितायां दीपिकाटिप्पण्यां द्वादशोऽध्यायः ॥ १२ ॥

### श्रीमद्वीरराघवव्याख्या

या स्त्री साऽस्य महात्मनः महाबुद्धेः स्वायंभुवमनोः महिषी भार्या शतरूपाख्याऽभूत् ततः प्रभृति किमासीज्जातश्च मनुः किमकरोदित्यत्राह । तदेत्यादि । यावदध्यायपरिसमाप्ति तदा मनुशतरूपाप्रादुर्भावप्रभृतिकाले मैथुनधर्मेण प्रजा एधाम्बभूविरे अवर्द्धन्तेत्यर्थः ॥ ५३ ॥ ❀ ❀ स चापि स्वायंभुवो मनुरपि शतरूपायां स्वभार्यायामपत्यानि पञ्चाजीजनज्जनयामास अपत्यशब्दस्य साधारणत्वात् तत्र स्त्रीपुंविभागमाह । प्रियव्रतेति । प्रियव्रतोत्तानपादौ पुत्रौ आकूतिर्देवहूतिः प्रसूत्याख्यास्तिस्रः कन्याश्चाजीजनदिति पूर्वेणान्वयः ॥ ५४ ॥ ५५ ॥ ❀ ❀ रुचये रुच्याख्याय मुनये प्रथमामाकूतिं कर्दमाय मध्यमां देवहूतिं दक्षाय प्रसूतिमदाद्दत्तवान् यतः याभ्यः आकूत्यादिभ्यः उत्पन्नाभिः प्रजाभिः कृत्स्नं जगदापूरितं बहुसन्तानकराः कन्या इत्यर्थः ॥ ५६ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कंधे श्रीमद्वीरराघवाचार्यकृतभागवतचंद्रचंद्रिकाटीकायां द्वादशोऽध्यायः ॥१२॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

अस्य मनोरयं योगो विभूतिकर इत्याह । तदिति । तदा तन्मिथुनसृष्टिकालमारभ्य ॥ ५३ ॥ ❀ ❀ अनेन मनुना कान्यपत्यान्युत्पादितानीति तत्राह । स चेति । तन्नामान्याह । प्रियव्रतेत्यादिना यतः कन्यात्रयात् ॥ ५४–५६ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्यां द्वादशोऽध्यायः ॥ १२ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

सच स्वायम्भुवः यतः यासां सन्ततिभिः ॥ ५४–५६ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् । तृतीये द्वादशोऽध्यायः सङ्गतः सङ्गतः सताम् ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

एधांबभूविरे अवर्द्धन्त । प्रजावृद्धिं दर्शयति स चापीत्यादिना ॥ ४५ ॥ ५५ ॥ ❀ ❀ यतः याभिः कन्याभिः इदं जगदापूरितं सर्वतः पूर्णीकृतमित्यर्थः ॥ ५६ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपटीकायां द्वादशाध्यायार्थप्रकाशः ॥ १२ ॥

**श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या**

तासां विनियोगमाह—आकूतिमिति। रुचिर्ब्रह्मपुत्रः कल्पान्तरोत्पन्नः। कर्दमाय त्विति तुशब्दः स्वापत्यतां वारयति। कर्दमोऽपि च्छायया जातः, छायायां काल एवोत्पादको भगवद्रूपः। अतो नाऽधर्मसंबन्धः केनाप्यंशेन। मध्यमामिति महत्या नाम पुनः पुनर्न ग्राह्यमिति सूचयति। प्रसूतिरिति नाम्ना स्त्रीप्राधान्यादुत्पन्ना देयैवेति। गुणान्तराभावेऽपि चातुर्यमेव दक्षेऽस्ति। अङ्गुष्ठाज्जात इति भगवज्जातत्वम्, 'अङ्गुष्ठमात्रः पुरुषोऽङ्गुष्ठं च समाश्रितः' इति श्रुतेः। अतः प्रसूतिं दक्षायाऽदादिति। प्रसूतिं चाऽदादिति चकारसंबन्धः, न तु दक्षाय प्रसूतिं चेति। ततो यज्जातं तदाह—यत आपूरितं जगदिति। महाभूतानां विस्तारेण यथा जगत् पूर्यते तथा पञ्चभिरेव जगत्पूरितमिति ॥ ५३ ॥

इति श्रीभागवतसुबोधिन्यां श्रीलक्ष्मणभट्टात्मजश्रीवल्लभदीक्षितविरचितायां तृतीयस्कन्धे द्वादशाध्यायविवरणम्।

**श्रीगिरिधरकृता बालप्रबोधिनी**

ताभ्यां रूपविभागाभ्यां विभक्ताभ्यां रूपाभ्यां मिथुनं स्त्रीपुरुषात्मकं द्वन्द्वं समपद्यत अभूत्। तत्र मिथुने यस्तु पुमान् स स्वायम्भुवाख्यः स्वराट् सार्वभौमो मनुरभूदित्यन्वयः ॥ ५३ ॥ ❀ ❀ या च स्त्री सा शतरूपाख्याऽस्य महात्मनः महाबुद्धेः स्वायम्भुवमनोर्महिषी भार्या आसीत्। तदाप्रभृति मिथुनधर्मेण प्रजा एधाम्बभूविरे अवर्द्धन्तेत्यर्थः ॥ ५४ ॥ ❀ ❀ कथमित्यपेक्षायां तत्प्रकारं दर्शयति—स इति स स्वायम्भुवो मनुरपि शतरूपायां पञ्चापत्यानि अजीजनत्। अपत्यशब्दस्य साधारणत्वात् कानि तानीत्यपेक्षायां तत्र विभागमाह—प्रियव्रतेति। प्रियव्रतोत्तानपादौ द्वौ पुत्रौ, आकूतिर्देवहूतिः प्रसूतिश्चेति तिस्रः कन्याश्चेत्यन्वयः। कन्यानामश्रवणेन मोहं मा गा इति सूचयन् श्रेष्ठत्वेन सम्बोधयति—सत्तमेति। तत्र च श्रेष्ठकुलोत्पन्नत्वं हेतुं सूचयन् सम्बोधयति—भारतेति ॥ ५५ ॥ ❀ ❀ ताः कन्याः कस्मै दत्ता इत्यपेक्षायामाह—आकूतिं रुचये रुच्याख्याय ब्रह्मपुत्राय मुनये प्रादात्, मध्यमां देवहूतिं तु कर्दमाय प्रादात्, प्रसूतिं च दक्षाय ब्रह्मपुत्राय प्रादात्। यतः याभ्यः आकूत्यादिभ्यः उत्पन्नाभिः प्रजाभिः कृत्स्नं जगदापूरितम्। एवं बहुसंतानकरा जाता इत्यर्थः ॥ ५६ ॥

इति श्रीवल्लभाचार्यवंश्यगोपालसूनुना। श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा ॥ १ ॥
श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये। श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी ॥ २ ॥
रचिता च तृतीयेऽत्र वन्धसर्गे तु द्वादशः। विवृतः सनकादीनां सर्गस्य विनिरूपकः ॥ ३ ॥

**हिन्दी अनुवाद**

उनमें जो पुरुष था, वह सार्वभौम सम्राट् स्वायम्भुव मनु हुए और जो स्त्री थी, वह उनकी महारानी शतरूपा हुईं ॥ ५३ ॥ ❀ ❀ तबसे मिथुनधर्म (स्त्री-पुरुष-सम्भोग) से प्रजाकी वृद्धि होने लगी। महाराज स्वायम्भुव मनुने शतरूपासे पाँच सन्तानें उत्पन्न कीं ॥ ५४ ॥ ❀ ❀ साधुशिरोमणि विदुरजी! उनमें प्रियव्रत और उत्तानपाद—दो पुत्र थे तथा आकूति, देवहूति और प्रसूति—तीन कन्याएँ थीं ॥ ५५ ॥ ❀ ❀ मनुजीने आकूतिका विवाह रुचि प्रजापतिसे किया, मझली कन्या देवहूति कर्दमजीको दी और प्रसूति दक्ष प्रजापतिको। इन तीनों कन्याओंकी सन्ततिसे सारा संसार भर गया ॥ ५६ ॥

**द्वादश अध्याय समाप्त**

# अथ त्रयोदशोऽध्यायः

**श्रीशुक उवाच**

निशम्य वाचं वदतो मुनेः पुण्यतमां नृप। भूयः पप्रच्छ कौरव्यो वासुदेवकथादृतः ॥ १ ॥

**विदुर उवाच**

स वै स्वायम्भुवः सम्राट् प्रियः पुत्रः स्वयम्भुवः। प्रतिलभ्य प्रियां पत्नीं किं चकार ततो मुने ॥ २॥
चरितं तस्य राजर्षेरादिराजस्य सत्तम। ब्रूहि मे श्रद्दधानाय[1] विष्वक्सेनाश्रयो ह्यसौ ॥ ३ ॥
श्रुतस्य पुंसां सुचिरश्रमस्य[2] नन्वञ्जसा सूरिभिरीडितोऽर्थः।
यत्तद्गुणानुश्रवणं मुकुन्दपादारविन्दं हृदयेषु येषाम् ॥ ४ ॥

**श्रीधरस्वामिविरचिता भावार्थदीपिका**

त्रयोदशे सिसृक्षायां मनोराकस्मिकाप्लुताम्। धरामुद्धर्तुमुद्भूतात्क्रोडाद्दैत्यानुसूदनम्॥

स्वयंभुवः पुत्रस्तद्देहांशत्वात् सः॥ २॥ ❀ ❀ विष्वक्सेनो हरिरेवाश्रयो यस्य सः॥ ३॥ ❀ ❀ अतस्तस्य चरितं श्रोतव्यमित्याह। सुचिरं श्रमो यस्मिंस्तस्य पुंसां श्रुतस्यांजसा मुख्यत्वेनायमेवार्थ ईडितः स्तुतः। ननु मुकुंदपादारविंदं येषां हृदयेष्वस्ति तेषां भागवतानां गुणानुश्रवणम्॥ ४॥

**श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः**

आकस्मिकाप्लुतां विनैव मज्जनकारणं बुडिताम्। क्रोडाद्वराहात्। "क्रोडः शनौ शूकरे ना न पुमानंकरक्षसोः" इति मेदिनी (॥१॥) कौरव्यो विदुरः आदृतिरस्यास्तीत्यादृतः सादरः अर्श आदित्वादच्। वासुदेवकथायामादृतस्तथा। यद्वा कथयैव कर्त्र्याऽऽदृतः मन्माधुर्यमेतत्कर्तृकास्वादात्सार्थकं भवत्वित्यादृतः। यद्वा कथायां श्रोतृभिर्वक्तृभिश्चादृत इत्यर्थः॥१॥ स्वयंभुवो ब्रह्मणः पुत्रस्य स्वभावतः प्रियत्वेपि पुनः प्रियपदोपादानं तस्य साक्षात्स्वदेहभागत्वादतिप्रियत्वबोधनार्थम्। मुने इति त्रिकालदर्शितामाह॥ २॥ तस्य स्वायंभुवो राज्ञामादिराजो राजदंतादिवत्समासः। यद्वादिश्चासौ राजा चेत्यादिराजः। हि यतोऽसौ स्वायंभुवः विष्वक्सेनाश्रयोस्तीति स्वायंभुवकथाया विष्वक्सेनकथाऽविनाभूतत्वात्तत्कथायां विष्वक्सेनकथैव श्रुता स्यादिति भावः। विष्वक् चतुर्दशभुवनेषु सेना भक्तलक्षणा यस्येति तथा॥ ३॥ ❀ ❀ यतोऽसौ विष्वक्सेनाश्रयोऽतो हेतोः तस्य मनोः श्रुतस्य गुरुमुखादधीतशास्त्रादेः अर्थो मुख्यप्रयोजनं स च क इत्यपेक्षायामाह ननु निश्चयेन विष्णुभक्तजनकथाश्रवणं विना विदुषामपि विद्या निष्फलेति भावः॥ ४॥

**श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या**

आकस्मिकेति कारणमन्तरैव निमग्नां सूदनं नाशनम् आदृतिरस्यास्तीत्यादृतः कथायां सादर इत्यर्थः। अर्श आदित्वादच्। कथाया अमूर्त्तत्वात् तत्कर्तृकादरासम्भवादरोपमार्थं व्याख्यान्तरं हेयम्॥ १॥ ❀ ❀ ततः पत्नीलाभानन्तरं हे मुने! सर्वज्ञ!॥ २॥ ❀ ❀ हि यतः हरिरेवेत्यन्ययोगव्यवच्छेदकावधारणेनैकान्तिकत्वम्॥ ३॥ ❀ ❀ अतः विष्वक्सेनाश्रयत्वात् श्रुतस्य शास्त्रश्रवणस्य भावे निष्ठा गुणानुश्रवणमिति यत् अयमेवेति योजनीयम्॥ ४॥

**श्रीमद्वीरराघवव्याख्या**

एवमतीताध्यायान्ते सहजानेर्मनोर्जन्मनि तच्चरित्रं च संग्रहेणाभिहितं स्वायंभुवः स्वराट् महात्मन इति विशेषणसूचिततच्चरितविस्तरविवित्सया विदुरः पृच्छतीत्याह शुकः। निशम्येति। वदतः गदतो मुनेर्मैत्रेयस्य पुण्यतमां वाचं निशम्य श्रुत्वा हे नृप! राजन्! कौरव्यो विदुरः वासुदेवकथायामादृतः कर्त्तरि क्तः आदरेण युक्तः भूयः पुनः पप्रच्छ पृष्टवान्॥ १॥ ❀ ❀ विदुरप्रश्नप्रकारमेवाह। स वा इति त्रिभिः। स्वयंभुवः ब्रह्मणः प्रियः पुत्राणां मध्ये प्रियः निरतिशयप्रीतिविषय इति भावः, सम्राट् सार्वभौमः स स्वायम्भुवो मनुः प्रियां पत्नीं शतरूपां प्रतिलभ्य लब्ध्वा ततः किमकरोत् हे मुने मैत्रेय!॥ २॥ ❀ ❀ प्रकृतमनुसर्गं विहाय किमिति मनुचरितं पृच्छसीत्याशङ्कां निराकुर्वन्। पृच्छति। चरितमिति हे सत्तम! अधिराजस्य तस्य

१. प्रा० पा०—श्रद्दधानस्य। २. प्रा० पा०—चिरं श्र०।

राजर्षेर्मनोश्चरितं श्रद्दधानाय मह्यं ब्रूहि कथय हि यस्मादसौ मनुः विष्वक्सेनाश्रयः विष्वक्सेनो हरिरेवाश्रयो यस्य स तथोक्तः। भगवद्भक्तत्वाच्चरित्रमवश्यं श्रोतव्यमिति तच्चरित्रं प्रष्टव्यमेवेति भावः ॥ ३ ॥ ❋ ❋ नन्वेवं तर्हि साक्षाद्भगवच्चरित्रमेव प्रष्टव्यं किं भगवतचरितानुप्रश्नेनेत्याशङ्क्याह । श्रुतस्येति । सुचिरश्रमस्य सुचिरं श्रमो यस्मिंस्तस्य चिरकालश्रमार्जितस्य पुंसां श्रुतस्याध्ययनस्यार्थः प्रयोजनं सूरिभिर्विद्वद्भिरयमेवेतीडितः स्तुतः किं तत् यत्सूरिभिरीडितमित्यत्राह । येषां हृदयेषु मुकुन्दपादारविन्दमुपास्यते तेषां भागवतानां गुणानां श्रवणमिति यत्तदित्यर्थः । भगवद्गुणवद्भागवतगुणा अपि श्रोतव्या एवेत्यभिप्रायः ॥ ४ ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

अस्मिन्नध्याये हरेरवतारकथाश्रवणादिना साक्षात्पुरुषार्थः स्यादिति निरूप्यते । श्रीशुकः परीक्षितं पुनरपि विदुरप्रश्नप्रकारं वक्ति । निशम्येति ॥ १ ॥ ❋ ❋ स्वधर्माचारैः स्वपतिं स्वर्गं नयतीति पत्नी तां प्रतिलभ्य तत इत्यनेन व्यापारान्तरं निषेधति ॥ २ ॥ ❋ ❋ कोऽसौ वैदुरिकः प्रश्न इत्यत्राह । चरितमिति । मे मह्यं वक्तव्यत्वे हेतुमाह । विष्वक्सेनेति । विष्वक् सर्वत्र सेना ज्ञानलक्षणा यस्य तथोक्तः ॥ ३ ॥ ❋ ❋ विष्वक्सेनचरितं तद्भक्तचरितं चेति द्वयमेव पुरुषार्थान्तरङ्गत्वेन मुमुक्षुणा श्रोतव्यं सूरिभिरीडितत्वादित्याह श्रुतस्येति । सुचिरं श्रम आयासोऽस्य स तथा तस्य पुंसां श्रुतस्य वेदाद्यर्थश्रवणस्य अञ्जसा तत्त्वेन सूरिभिरीडितार्थोऽयं ननु इदं फलं हि यत्तस्य हरेर्गुणानुवादश्रवणं येषां हृदयेषु मुकुन्दस्य पादारविन्दं लसतीति शेषः तेषां पुंसां चरितश्रवणं वा ज्ञानिभिरभिष्टुतोऽर्थ इति यस्मात्तस्मात् स्वायंभुवमनोर्विष्वक्सेनकथाविनाभूतत्वात्कथां ब्रूहीति भावः ॥ ४ ॥

## श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः ।

आदृतिरस्यास्तीत्यादृतः सादर इत्यर्थः । अर्श आदित्वादच् ॥ १—४

## श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी ।

त्रयोदशे मनोर्वाचा ध्यायतो ब्रह्मणो नसः । उद्धृय गां गतः क्रोडो गामुद्दध्रे द्विजैः स्तुतः ॥

आदृतिरस्यास्तीत्यर्शआद्यच् । आदृतः सादर इत्यर्थः । यद्वा कथयैव कर्त्र्या मामसौ विदुरः शृणोतु । मन्माधुर्य्यमेतत्कतृकास्वादात् सार्थकं भवत्वित्यादृतः । यद्वा कथायामादृतः वक्तृभिः श्रोतृभिश्चेत्यर्थात् ॥ १—३ ॥ ❋ ❋ वैष्णवकथाश्रवणं विना विदुषामपि विद्या विफला भवतीत्याह । सुचिरं श्रमो यस्मिन् तस्य गुरुमुखात् श्रुतस्य शास्त्राद्यध्ययनस्येत्यर्थः अयमेवार्थः प्रयोजनम् । ईडितः स्तुतः तदन्यस्तु निन्दित इत्यर्थः । स च कः येषां येषां हृदयेषु कृष्णपादपद्मं वर्त्तते तेषां तेषां गुणानुश्रवणकीर्त्तनादीत्यर्थः ॥ ४ ॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

त्रयोदशे स्वायंभुवचरितवर्णनप्रसंगाद्वाराहचरितमुच्यते । वासुदेवकथायामादृतः कर्तरि क्तः ॥ १ ॥ २ ॥ ❋ ❋ विष्वक्सेनाश्रयः मुकुन्दाश्रयः ॥ ३ ॥ ❋ ❋ मुकुन्दाश्रयजनगुणानुवादश्रवणं पुरुषाणां महच्छ्रमसाध्यशास्त्रश्रवणस्य प्रयोजनमित्याह । श्रुतस्येति सुचिरं श्रमो यस्मिन् तस्य पुंसां श्रुतस्य अयमेवार्थः प्रयोजनं सूरिभिस्तत्त्वदर्शिभिरीडितः स्तुतः । ननु अहो येषां येषां हृदयेषु मुकुन्दपादारविन्दं ध्येयत्वेन वर्त्तते तेषां तेषां गुणानुवादश्रवणम् ॥ ४ ॥

## श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

एवं द्वादशधा सर्गस्त्रिविधो ह्युपपादितः । तस्य कारणरूपं हि यादृशं तदिहोच्यते ॥ १ ॥
सर्ववेदार्थरूपो हि वराह इति विश्रुतः । स एव कारणं सृष्टौ वैदिक्यामिति निश्चयः ॥ २ ॥
अन्यथा प्राकृती सृष्टिः, स्वप्नतुल्यैव सा भवेत् । अतो वैदिकसृष्टित्वज्ञापनाय वराहता ॥ ३ ॥
भूमिस्तु देवयजनं रोमभिर्वर्हिषो भवः । पात्राणि सर्वावयवैस्तेन यज्ञस्त्रयोदशे ॥ ४ ॥
सृष्ट्यर्थं, तस्य भवनमित्यर्थं, संगतिस्तथा । ब्रह्मणा सह संवादो मनोः कल्पान्तरे पुनः ॥ ५ ॥
रसातलान्तपर्यन्तं पृथिवी पूर्वमुद्धृता । पञ्चाङ्गुल्या पञ्च लोका ह्युद्धृता अतलादयः ॥ ६ ॥
यज्ञभूमित्वसिद्ध्यर्थं पुष्करे प्रथनं ततः । एषा स्थितिः पूर्वकल्पे, रसातलगता ततः ॥ ७ ॥
प्रजापतेरुद्धृतत्वान्निराधारा जलं विशेत् । वराहकल्पे प्रथमे सर्वोत्पत्तिर्विनिश्चिता ॥ ८ ॥
ततस्तद्भेदकल्पेषु नष्टोत्पत्तिर्न सर्वतः । प्रक्रियान्तरभावेन ततः सृष्टिरिहोच्यते ॥ ९ ॥
हिरण्याक्षादिदैत्यानां रसातलगता स्थितिः । अपेक्षितानामर्थानां भिन्नकल्पेऽपि संभवे ॥ १० ॥
लीलाकथनसिद्ध्यर्थमेकरूपेण वर्ण्यते । अतो नाऽत्र विरोधोऽस्ति केनाऽप्यंशेन निश्चितम् ॥ ११ ॥

एवं पूर्वाध्यायान्ते सृष्टिनिरूपणार्थं मनुरुक्तः। तस्य कथं सृष्टिहेतुत्वमिति विचारः कर्तव्यः।
यद्याधिदैविको देवस्तदर्थं संभविष्यति। कामादयश्चेत्प्रबलास्तस्मात्सृष्टिस्तदा भवेत्॥ १॥
तत्रापि कामजनितो दोषश्चेन्न भविष्यति। अतो द्वितीयसृष्ट्यर्थमुपोद्घातद्वयं स्मृतम्॥ २॥
प्रथमेऽप्यत्र भावेन बीजमेतद्द्वयं मतम्। कारणाद्वितयं लोके भगवान् जीव एव च॥ ३॥

अतो मनोः सृष्टिहेतुत्वसिद्ध्यर्थं सर्गद्वयमध्ये तस्य स्वरूपं निरूप्यते। इदं चरित्रं भगवदीयमिति ज्ञापयितुं स्वस्य दोषपरिहाराय विदुरमुखेन निर्णयं वदन् तत्प्रसङ्गमेव निरूपयति—निशम्येति। वदतो मुनेर्वाचं निशम्य। मुनिर्मननेन यद्बाधितम्, भगवदाज्ञया प्रकटीकरणार्थमागतम्, तदेव वदतीति तद्विस्तारस्तेनावश्यं कर्तव्य इत्यभिप्रेत्य भूयः पप्रच्छ। किञ्च, पुण्यतमां वाचं स्वाधिकारप्रवृत्तिक्रियारूपाम्। नृपेति संबोधनं राज्ञः, कथाश्रवणं राज्ञां सुखकरमिति ज्ञापकम्। विदुरस्य कौरव्येति विशेषणं दृढकर्तृत्वख्यापकम्। वासुदेवकथादृत इति प्रसङ्गादपि वासुदेवकथां 'कथयिष्यतीति, राजचरित्रप्रश्नः, न तु राजभावेन॥ १॥ ❀ ❀ तस्य कार्यं चरित्रं च श्रोतव्यत्वं च रूप्यते श्लोकत्रयेण, तत्र प्रथमं तस्य पूर्वस्थितिमनूद्य कार्यं पृच्छति—स चेति। द्विरूपत्वं ज्ञातमिति ख्यापनार्थं चकारः। स्वायंभुवः सम्राडिति उभयानुवादः। अत एव स्वयंभुवः पुत्रो भगवदीय इति। तस्यैव प्रियश्च। पूर्वं स्वायंभुवत्वमनूद्य तस्य भगवदीयत्वं विहितम्, तेन भगवदीयत्वं मुख्यम्। अतश्चरित्रश्रवणे हेतुत्वेन प्रथममुक्तः, पश्चात्सृष्टिहेतुत्वार्थं भगवदीयत्वमनूद्य ब्रह्मणः पुत्रत्वं विधीयते। अतो न पौनरुक्त्यम्। प्रियां पत्नीमित्यत्रापि द्विरूपता। भगवदीयत्वात् प्रियात्वम्, पतनात्पत्नीत्वमिति। प्रतिलम्भः पुनःप्राप्तिः, कल्पान्तरेपि तद्भावेनैव प्राप्तत्वात्। उभयं मिलित्वा किं चकारेति प्रश्नः। ननु मेलनमेव सुखात्मकमिति न किञ्चित्करिष्यतीत्याशङ्क्य तत इत्युक्तम् मुने इति संबोधनं तस्य परिज्ञानार्थम्। कथं स सृष्टिं कृतवानिति प्रश्नः॥ २॥ ❀ ❀ चरित्रं पृच्छति चरितमिति। तस्येति भगवदीयत्वं चरित्रश्रवणे हेतुः—राजर्षेरिति धर्महेतुत्वम्। सत्तमेति मिथुनवार्तया क्षोभाभावात् चरित्रं वक्तव्यमेवेति निर्द्धारितम्। कथने हेतुः—श्रद्दधानायेति श्रद्धायां हेतुः—विष्वक्सेनाश्रय इति। तत्रापि हेतुः असाविति। भगवत उत्पन्न एव भगवदाश्रयो भवति, आश्रित एव भगवदीयचरित्रे श्रद्दधानो भवति॥ ३॥ ❀ ❀ भगवदीयानामपि चरित्रं श्रोतव्यम्। निराश्रयं चरित्रं स्वस्याश्रयत्वं न संपादयति, ततो न स्थिरं भवेत्। अतो महता कष्टेन श्रुतमपि भगवच्चरित्रमस्थिरत्वान्न फलपर्यवसायीति भगवदीयानां चरित्रं श्रोतव्यम्। एतदेवाऽऽह—श्रुतस्येति। नन्विति कोमलसंबोधनेन अनुभवोऽत्र प्रमाणमिति सूचितम्। श्रुतस्य भगवद्गुणानां श्रवणस्य, अग्रे वक्ष्यमाण एव अर्थः प्रयोजनं भवतीति सूरिभिरीडितः। अध्ययनादिना बुद्धिवैशद्यहेतुना यः कश्चन पदार्थः श्रुतस्तस्य वा फलमभिमवार्त्ताविशदा बुद्धिर्भगवद्गुणानां स्थित्यर्थे। पुष्कलापि बुद्धिरनेकगुणानां ग्रहणार्थे। महता श्रमेण श्रवणस्य ग्राहकत्वमपि भगवदर्थमेव। भगवदीया गुणाः श्रुताः स्थिराः फलपर्यवसायिनो मृग्यन्ते। तत्र स्थैर्यं भगवदीयचरित्रहेतुकमिति प्रथमतः श्रुतं चरित्रं स्वस्थित्यर्थं भगवदीयचरित्रश्रवणे रुचिमुत्पादयति, अतो भगवच्चरित्रस्याऽपि भगवदीयचरित्रश्रवणं फलम्। सुष्ठु चिरं श्रमो यस्मिन्। अञ्जसा सामस्त्येन। सूरयो हि साधनमेव स्तुवन्ति, न फलम्; साधनाधीनत्वात्। तमर्थमाह—तत्तद्गुणानुश्रवणमिति। येन येन गुणेन भगवद्भक्तसंबन्धिना भगवच्चरणारविन्दं तेषां हृदये तिष्ठति, स तदीयो गुणो भगवच्चरणारविन्दस्थापकः श्रवणस्य फलम्। पूर्वश्रवणस्य तत्तद्गुणानुश्रवणं फलमिति सजातीयत्वान्न विरोधः। भगवदीया एव गुणा भक्तेषु स्थितास्तथा भवन्तीति न विरोधः। फलमुखेन गुणानां निरूपणात् न गुणान्तरोद्भावनेन दूषणं शङ्कनीयम्। तस्माद्भगवच्चरणारविन्दस्थापका गुणाः श्रोत[२]व्या इति मनोश्चरित्रस्य श्रोतव्यत्वम्। अनेन प्रियत्वादिकमपि तस्य सूचितम्॥ ४॥

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

अथ त्रयोदशाध्यायं विवरिषवः सङ्गतिं वक्तुं पूर्वेषामर्थमनुवदन्तः प्रस्तुताध्यायार्थमाहुः—एवमित्यादि। तथा च, हेतुताऽत्र सङ्गतिरित्यर्थः। ननु वराहरूपस्य कथं सर्गकारणतेत्यत आहुः—सर्वेत्यादि। तथा च, सर्ववेदार्थरूपत्वेन कारणतेत्यर्थः। नन्वेवंरूपेण कुतः कारणतेत्यत आहुः—अन्यथेत्यादि। अन्यथेति। यद्युपादानत्वेन रूपेण भगवान् सर्ववेदार्थरूपो न प्रविशेत्। प्राकृतीति हेतुगर्भं विशेषणम्। ननु वराहस्य कथं सर्ववेदार्थरूपतेत्यत आहुः—भूमिरित्यादि। तथा च, यज्ञरूपत्वाद्वेदार्थरूपतेत्यर्थः। ननु भवत्वेवम्, तथापि वराहप्राकट्यकथनस्य किं प्रयोजनमित्यत आहुः—सृष्ट्यर्थमित्यादि। सृष्ट्यर्थमिति। यज्ञोत्पत्त्यर्थम्। तथा च, यदि वराहरूपेण भगवान्न प्रकटो भवेत्, तदा यज्ञप्रवृत्तिर्न स्यात्, अत इत्यर्थमेतदर्थं तस्य भवनम्, यतः सङ्गतिः कार्येण कार्यस्य सम्बन्धस्तथा अन्तःप्रवेशरूपः। अत इदं प्राकट्यप्रयोजनमित्यर्थः। नन्वस्त्वेवं शास्त्रसङ्गतिः, तथा कथासंदर्भस्तु न सङ्गच्छते। तथा हि, एकादशाध्यायान्ते 'पूर्वः परार्धोऽपक्रान्तो द्वितीयोऽद्य प्रवर्तते।' इत्यत्र अद्येति पदात् द्वितीयपरार्धस्य प्रथमदिवसोऽयं महाकल्प इति ज्ञायते। स च वराहकल्पात्मा, 'अयं तु कल्पः' इत्यत्र तथा कथनात्। अत्र च चतुर्दशलोकसृष्टिर्वक्तव्या, सा तु

१. करिष्यति ग.। २. ध्यातव्या क. घ.।

नोक्ता; 'एवं व्यभाङ्क्षीदुरुधा ' इति तु पद्मकल्पीयम्; अतो द्वादशाध्यायीया सृष्टिः किमाधारा? अथ तदर्थापत्त्या आधाराः कल्प्याः, तदा तेषां विद्यमानत्वाद्भूमज्जनबोधको मनुब्रह्मसंवादोऽनुपपन्नः। किञ्च, हिरण्याक्षयुद्धमपि तथा। स हि मनुपुत्रीवंशे उत्पन्नः। मनुस्त्विदानीमाज्ञया अपत्यान्युत्पादयिष्यतीति तदायुत्पत्तेरेवाऽभावेन युद्धस्य दूरनिरस्तत्वात्। इत्याशङ्काद्वयं निराकुर्वन्ति—ब्रह्मणेत्यादि। पूर्वकल्पे उत्पन्नस्य तस्यां पञ्चाऽपत्यान्युत्पाद्य, स्वाधिकारं सर्वं निर्वर्त्य, रात्रौ सत्यलोके स्थितस्य सभार्यस्य सापत्यस्य मनो पुनः कल्पान्तरे प्रातर्ब्रह्मणा संवादः, द्वितीयकल्पे त्वच्छुश्रूषा किं पूर्ववदेव कार्या, उताऽन्यथेत्याशयेन विज्ञापनम्, ब्रह्मणश्च पूर्ववदेवेत्याज्ञापनमित्येतद्रूपः, श्रुतार्थापत्त्यैव प्रमातव्य इत्यर्थः। न चाऽपत्योत्पादनाज्ञाविरोध इति वाच्यम्, 'सदृशान्यात्मनो गुणैः' इत्यपत्यविशेषणेनोत्तमादिभिस्त्रिभिर्मन्वन्तराधिपैस्तत्सिद्ध्या विरोधाभावात्। मार्कण्डेयरौचस्य (?) तिरिक्तस्य कण्ठत उक्तत्वेन तद्वदेव तस्मिन्कल्पेऽपि मन्वन्तरान्तरस्याऽर्थापत्त्यैव शक्यकल्पनत्वादिति। अर्थापत्त्यैव पूर्वकल्पीयलोकादिव्यवस्था सिध्यतीति तां व्युत्पादयन्ति—रसातलेत्यादिपदोनाभ्याम्। अत्र पञ्चलोकोद्धारः पुराणान्तरात् श्रुत्यन्तराद्वा बोध्यः। पुष्करपर्णे प्रथमं तु तैत्तिरीये श्रावितम्। 'स वराहो रूपं कृत्वोपन्न(?)मज्जत्। तत्पुष्करपर्णेऽप्रथयत्। यदप्रथयत्, तत्पृथिव्यै पृथिवीत्वम्' इति। कल्परात्रिव्यवस्थामाहुः—रसातलेत्यादि। ततस्तस्य कल्पस्य प्रलये, प्रजापतेः—प्रजापतिना यस्य पर्णे प्रथिता, तेन पुष्करेण पूर्वकल्पे लोककरणे-तत्सारस्योद्धृतत्वात्, तस्य निसारत्वेन स्थापनाशक्त्या, निराधारा सती जलं विशेत्। हेतुमति लिङ्। अविशदित्यर्थात्। तेन यत् सिद्धं तदाहुः—वराहेत्यादि। तथा च 'प्लाव्यमाना रसां गता' इति वाक्यार्थापत्त्या सर्वोत्पत्तिर्विशेषेण निश्चिता। ततस्तदनन्तरं तद्भेदकल्पेषु तदीयावान्तरकल्पेष्वेव मुच्यत इत्यादि। अत्रैवमर्थः सम्पद्यते—पद्मकल्पलये सर्वनाशे जाते, वराहकल्पारम्भे, पातालम्, रसातलम्, सत्यलोकं च सारवता कमलपर्णेन निर्माय, शीर्णकमलांशजातां मृदं पञ्चाङ्गुलिभिरुद्धृत्य, तया अतलादीन्निर्माय, शिष्टां च मृदं यज्ञभूमित्वार्थं वराहरूपेण पुष्करपर्णे प्रथयित्वा स्वयं सत्यलोकस्थितोऽन्यान् स्वरादिलोकान् कृत्वा, ततोऽविद्यादिमन्वन्तरान् गृहीत्वा तत्र सुप्तः। तदा तस्य कल्पस्य प्रलये मनुकश्यपादीनां यथायोग्यमुपरिस्थितिः, दित्यादीनां रसायाम्, अन्येषां तु नाशः। तत आदिवराहकल्पीयरात्रिनिवृत्तौ वराहकल्पप्रातःकालभूमिमज्जनाज्ञानादाज्ञापनम्, मनुषु स्वायम्भुवाधिकारस्यैव प्राथम्यमिति नियमस्य 'चाक्षुषोदधिसंप्लवे' इत्य(त्र)निरस्तत्वेन मनोस्तु सायं समागमान्मज्जनज्ञानमस्तीति तद्विज्ञापनम्, ततश्चिन्ता, आदिवराहप्राकट्यम्, ततो रसाया भूम्यानयने तत्र वर्तमानेन हिरण्याक्षेण युद्धमिति विरोधो न कोऽपि। एवं भिन्नकल्पीयानामेकभावेन कथनं पुराणत्वात्, 'श्रुतौ स्मृतौ पुराणे च कालत्रयमुदीर्यते। भूतं भव्यं भवच्चैव संशयं मा वृथा कृथाः' इत्युमां प्रति काशीखण्डे शिववाक्यात्। तस्याऽत्र कथने प्रयोजनमाहुः—अपेक्षितानामित्यादिसार्धेन। एवं मैत्रेयोक्तं संगमय्य शुकोक्तौ मनुकथासंगतिमाहुः—एवमित्यादि। विचारश्चिन्तोपोद्घातरूपा। तस्याऽऽकारमाहुः—यदीया (त्या) द्वित्रयेण। द्वयमिति। भगवत्प्रादुर्भावो निर्दोषकामादिप्राबल्यं चेति द्वयम्। तत्रापि द्वितीये हेतुद्वयम्। भगवत्प्रादुर्भावे सेवार्थं सेवकावश्यकत्वम्, फलतः कर्मादिनाशस्य सेवकोत्पत्त्यानुकूल्यं चेति। अत्रेति। सर्गे। भावेनेति। कारणत्वेन। तदेव स्फुटीकुर्वन्ति—कारणेत्यादि। अत इति। भगवत्प्रादुर्भावानुकूलत्वाज्जीवत्वाच्च। निशम्येत्यत्र। इदमिति। मिथुनीभावरूपम्। स्वाधिकारेति। राज्याधिकारेत्यर्थः॥ १॥ ❀ ❀ श्रुतस्येत्यत्र। श्रोतव्यत्वं व्युत्पादयन्ति—भगवदीयानामित्यादि। तत्र क्तप्रत्ययस्य भावे कर्मणि चाऽनुशिष्टत्वाच्छ्रुतपदेन श्रवणं तद्विषयश्चोच्यत इति द्वयं क्रमेणाऽऽहुः श्रुतस्येत्यादि अध्ययनेत्यादि च। कथमीडित इत्याकाङ्क्षायां श्रुतस्येत्यादिपदार्थविचारेण प्रकारमाहुः—अग्रिमेत्यादि। अग्रिमवार्ताविशदेति। अध्ययनस्थानापन्ना या प्राथमिकी भगवद्वार्ता, तया निर्मला। श्रुतपदस्य वेदाद्यध्ययनवाचकत्वमङ्गीकृत्य तज्जनितवुद्धेः फलमाहुः—पुष्कलाऽपीत्यादि। पुष्कलेति। अध्ययनादिना प्रौढा। श्रमस्य सप्रयोजनस्याऽपि प्रयोजनमाहुः—महतेत्यादि। ग्राहकत्वमिति। शब्दनिश्चयजनकत्वम्। नन्वेवं सर्वैः प्रकारैः श्रुतादीनां भगवदर्थत्वे भगवदीयानां चरित्रस्य कथं श्रोतव्यतेत्यत आहुः—भगवदीयेत्यादि फलमित्यन्तम्। तथा चाऽतः श्रोतव्यतेत्यर्थः। तादृशस्य तस्य साधनस्योत्कर्षं व्युत्पादयन्ति—येनेत्यादि। तदीय इति। भगवदीयनिष्ठः। श्रवणस्येति। तच्चरित्रश्रवणस्येति। भगवद्गुणश्रवणस्याऽसजातीयत्वं स्फुटीकुर्वन्ति—भगवदीया इत्यादि॥ ४॥

### श्रीगिरिधरकृता बालप्रबोधिनी

भूमेरुद्धरणार्थाय दैत्यहत्यै त्रयोदशे। भगवतो वराहस्य प्रादुर्भावो निरूप्यते॥ १॥

एवं वदतो मुनेः मैत्रेयस्य पुण्यतमां भगवद्भक्तचरित्रवर्णनपरतया श्रोतृवक्त्रोः पुण्यजनिकां वाचं निशम्य श्रुत्वा हे नृप कौरव्यो विदुरो भूयः पप्रच्छेत्यन्वयः। प्रश्ने हेतुमाह—वासुदेवस्य कथायामादृत आदरयुक्त इति॥ १॥ ❀ ❀ विदुरप्रश्नमेव दर्शयति—स वा इति त्रिभिः। मुने इति सम्बोधनेन सर्वज्ञत्वेन तवाविदितं किञ्चिन्नास्तीति सूचयति। स्वयम्भुवः ब्रह्मणः प्रियः पुत्रः सम्राट् सार्वभौमः स वै प्रसिद्धः स्वायम्भुवो मनुः प्रियां पत्नीं शतरूपां प्रतिलभ्य लब्ध्वा ततः तदनन्तरं किं चकारेत्यन्वयः॥ २॥ ❀ ❀ हे सत्तम तस्य आदिराजस्य चरितं श्रद्दधानाय श्रोतुं श्रद्धावते मे मह्यं ब्रूहीत्यन्वयः। प्रकृतं मनुसर्गं विहाय किमिति मनुचरितश्रवणे श्रद्धा जातेत्यपेक्षायामाह—राजर्षेरिति, राजत्वेऽप्यृषिवद्वर्तमानस्येत्यर्थः। ऋषित्वे

हेतुमाह—विष्वक्सेनेति । हि यस्मात् विष्वक् सर्वतः सेना आज्ञा यस्य स तथाभूतो भगवानेवाश्रयो यस्य तथाभूतोऽसौ अत एतादृशस्य चरितमवश्यं श्रोतव्यमिति भावः ॥ ३ ॥ ❀ ❀ कुतस्तस्यावश्यश्रोतव्यतेत्यपेक्षायां सर्वशास्त्रश्रवणफलरूपत्वादित्याह—श्रुतस्येति । सुचिरं बहुकालं श्रमो यस्मिंस्तस्य श्रुतस्य अध्ययनादेरर्थः प्रयोजनं फलमञ्जसा मुख्यतया पुंसां ननु निश्रयेन अयमेव सूरिभिर्विद्वद्भिरीडितः स्तुतिपूर्वकं प्रतिपादित इत्यन्वयः । किं तदित्यपेक्षायामाह—यत्तदिति । येषां हृदयेषु मुकुन्दस्य मुक्तिदातुः पादारविन्दं ध्येयतया वर्त्तते तेषां तत्तद्गुणानामनुश्रवणमित्यन्वयः ॥ ४ ॥

### हिन्दी अनुवाद

### वाराह अवतारकी कथा

श्रीशुकदेवजीने कहा—राजन्! मुनिवर मैत्रेयजीके मुखसे यह परम पुण्यमयी कथा सुनकर श्रीविदुरजीने फिर पूछा, क्योंकि भगवान्की लीलाकथामें इनका अत्यन्त अनुराग हो गया था ॥ १ ॥ ❀ ❀ विदुरजीने कहा—मुने! स्वयम्भू ब्रह्माजीके प्रिय पुत्र महाराज स्वायम्भुव मनुने अपनी प्रिय पत्नी शतरूपाको पाकर फिर क्या किया? ॥ २ ॥ ❀ ❀ आप साधुशिरोमणि हैं। आप मुझे आदिराज राजर्षि स्वायम्भुव मनुका पवित्र चरित्र सुनाइये। वे श्रीविष्णुभगवान्के शरणापन्न थे, इसलिये उनका चरित्र सुननेमें मेरी बहुत श्रद्धा है ॥ ३ ॥ ❀ ❀ जिनके हृदयमें श्रीमुकुन्दके चरणाविन्द विराजमान हैं, उन भक्तजनोंके गुणोंको श्रवण करना ही मनुष्योंके बहुत दिनोंतक किये हुए शास्त्राभ्यासके श्रमका मुख्य फल है, ऐसा विद्वानोंका श्रेष्ठ मत है ॥ ४ ॥

### श्रीशुक उवाच

**इति ब्रुवाणं विदुरं विनीतं सहस्रशीर्ष्णश्चरणोपधानम् ।**
**प्रहृष्टरोमा भगवत्कथायां प्रणीयमानो मुनिरभ्यचष्ट ॥ ५ ॥**

### मैत्रेय उवाच

**यदा स्वभार्यया साकं जातः स्वायम्भुवो मनुः । प्राञ्जलिः प्रणतश्चेदं वेदगर्भमभाषत ॥ ६ ॥**
**त्वमेकः सर्वभूतानां जन्मकृद् वृत्तिदः[१] पिता । अथापि नः प्रजानां ते शुश्रूषा केन वा भवेत् ॥ ७ ॥**
**तद्विधेहि नमस्तुभ्यं कर्मस्वीड्यात्मशक्तिषु । यत्कृत्वेह यशो विष्वगमुत्र च भवेद्गतिः ॥ ८ ॥**

### श्रीधरस्वामिविरचिता भावार्थदीपिका

सहस्रशीर्षा श्रीकृष्णस्तस्य चरणावुपधीयेते यस्मिन्। श्रीकृष्णः प्रीत्या यस्योत्संगे चरणौ प्रसारयतीत्यर्थः। तमभ्यचष्ट अभ्यभाषत। मुनिर्मैत्रेयः प्रणीयमानस्तेन प्रवर्त्यमानः ॥ ५ ॥ ❀ ❀ वेदगर्भं ब्रह्माणम् ॥ ६ ॥ ❀ ❀ त्वमेवैकः पिता सर्वेषां यतो जन्मकृत् वृत्तिदः पोषकश्च त्वमेव अतस्तव यद्यप्यन्यापेक्षा नास्त्यथाप्यस्माकं ते शुश्रूषा केन कर्मणा भवेत्तद्विधेहीत्युत्तरेणान्वयः ॥ ७ ॥ ❀ ❀ हे ईड्य आत्मशक्तिष्वस्मच्छक्येषु कर्मसु मध्ये केन कर्मणा भवेत्तद्विधेहीदं कर्तव्यमिति कथय। यत्कृत्वा यस्मिन् कृते सति। विष्वक् सर्वतः। अमुत्र परलोके ॥ ८ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

सहस्राणामनंतसंख्याकप्रादुर्भावानां शीर्ष्णः श्रेष्ठतमस्य श्रीकृष्णस्येत्यर्थः। विदुरशंकापनोदार्थं विदुरगृहे श्रीकृष्णः सहस्रशीर्षाऽभूदिति। तत्र च भोजनं कृत्वा विदुरोत्संगे चरणौ कृत्वा सुष्वापेति महाभारतादवसेयम्। इत्यर्थ इति। अतिप्रियत्वबोधनार्थं तदुत्संगे पादौ प्रसारितवानिति भावः। मुनिर्मैत्रेयः ॥ ५ ॥ ❀ ❀ इदं वक्ष्यमाणं वचः ॥ ६ ॥ ❀ ❀ अतो जन्मवृत्तिकृत्त्वात् ॥ ७ ॥ ❀ ❀ ममेति शेषः। गतिः स्वर्गादिरूपा। तदकरणे पुत्रस्येह निंदा परत्र नरकादिश्च भवेदित्यर्थः। अत एव। "सर्वार्थसंभवो देहो जनितः पोषितो यतः। तयोर्न याति निर्वेशं पित्रोर्मर्त्यः शतायुषा" इति। श्रीकृष्णबलदेवौ वक्ष्यतो दशमे ॥ ८ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या।

सहस्रशीर्षा श्रीकृष्णः महाभारते विदुरगृहे भुक्त्वा सहस्रशीर्षा सन् तदुत्सङ्गे चरणौ निधाय सुष्वापेति प्रसिद्धेः उपधीयेते प्रसार्य्येते ॥ ५ ॥ ६ ॥ ❀ ❀ त्वमेक इति युग्मकम्। अतः जन्मकृत्त्वादेः ॥ ७ ॥ ❀ ❀ गतिः श्रीभगवत्प्राप्तिः ॥ ८ ॥

---

१. प्रा० पा०—वृद्धिदः।

## श्रीमद्वीरराघवव्याख्या।

एवं वैदुरिकप्रश्नमाश्रुत्य मुनिरभ्यभाषतेत्याह शुकः। इतीति। उक्तप्रकारेण ब्रुवाणं पृच्छन्तं विनीतं विनयादिसंयुतं सहस्रशीर्ष्णः परमपुरुषस्य "सहस्रशीर्षा पुरुष" इति श्रुतेः चरणौ उपधीयेतेऽस्मिन्निति चरणोपधानं भगवत्पादपीठं भगवत्प्रियोऽसौ विदुरः अतस्तस्य शिरस उपरि भगवान् स्वपादौ प्रसारयतीत्यर्थः। एवंभूतं विदुरं प्रति मुनिर्मैत्रेयोऽभ्यचष्टाभ्यभाषत कथंभूतः भगवत्कथायां प्रणीयमानः प्रवर्त्यमानः अतएव प्रहृष्टानि उदञ्चितानि रोमाणि यस्य स तथोक्तः॥ ५॥ ❀ ❀ अभिभाषणप्रकारमेवाह। यदेत्यादिना। यदा स्वभार्यया शतरूपया सहायं स्वायंभुवो मनुरुत्पन्नः तदायं मनुः प्रणतः नम्रो भूत्वा साञ्जलिरेनं वेदगर्भं ब्रह्माणं प्रत्यभाषत॥ ६॥ ❀ ❀ त्वमिति। सर्वेषां भूतानां त्वमेक एव पिता जन्मकृद्वृत्तिदः पोषकश्च अतो यद्यप्यन्यापेक्षा नास्ति तथाप्यस्माकं ते शुश्रूषा परिचर्या केन कर्मणा भवेत्तद्विधेहीत्युरेणान्वयः॥ ७॥ ❀ ❀ तदिति। हे ईड्य! स्तुत्य! आत्मशक्तिषु मच्छक्तिविषयेषु कर्मसु मध्ये केन कर्मणा ते परिचर्या भवेदित्यनुषङ्गः इदं कर्त्तव्यमिति कथयेति भावः। यत् कर्म कृत्वा इहास्मिन् लोके विष्वक् सर्वतः यशो भवेदत्रामुत्र परलोके गतिश्च भवेदिति॥ ८॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

श्रीशुकः परीक्षिते विदुरप्रश्नप्रकारं वक्तीति। वक्ति सूतः शौनकादिभ्य इत्याह। इति ब्रुवाणमिति। सहस्रशीर्ष्णोर्हरेश्चरणोपधानं पादपीठायितं भगवत्कथायां प्रणीयमानः प्रेर्यमाणः अभ्याचष्टाहेत्यन्वयः विदुरमिति शेषः॥ ५॥ ❀ ❀ संभाषणानन्तरमन्यकथाप्रसङ्गो नास्तीति भावेनाह। यदेति। नायमञ्जलिर्दाम्भिक इति भावेनोक्तं प्रणत इति॥ ६॥ ❀ ❀ ननु किमियं भाषा गुह्याद्यन्यतमा सांकेतिकी वा न द्वितीयः अप्रस्तुतत्वादसंभवाच्च प्रथमा च समाधिरेवेति भावेनाह। त्वमेक इति। अथ जन्मकृत्त्वाद् वृत्तिदत्वात्पितृत्वाच्च पोष्यैः शुश्रूषा कर्तव्या सा केन येन कर्मणा स्यादित्यर्थः। अपिशब्देन कार्याकरणे पातकं सूचयति॥ ७॥ ❀ ❀ तदिति। तत्कर्म इतोऽपि भवच्छुश्रूषा कर्तव्येत्याह। कर्मस्विति। आत्मशक्तिषु स्वकेषु नित्यनैमित्तिकेषु कर्मस्विज्या पूजा तत्कर्म विशिनष्टि। यत्कृत्वेति। इह लोके सर्वत्र यशोऽमुत्र परलोके गतिः सुखप्राप्तिलक्षणा स्यात्तादृशमिति शेषः॥ ८॥

## श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

सहस्राणामनन्तसंख्यानां शीर्ष्णः श्रेष्ठरूपस्य श्रीकृष्णस्य चरणोपधानमिति महाभारते श्रीभगवतस्तद्गृहभोजने प्रसिद्धम्। शीर्षस्य 'शीर्षंश्छन्दसी'ति भगवान् पाणिनिः॥ ५—७॥ ❀ ❀ यत् कृत्वेत्यत्र स्थितस्येत्यध्याहार्य्यम्॥ ८॥

## श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

सहस्रशीर्षा विदुरशङ्कानिवृत्त्यर्थं तद्गृहे धृतसहस्रशीर्षविग्रहः श्रीकृष्णस्तस्य चरणयोरुपधानमुपबर्हरूपं महाभारते विदुरगृहे भोजने भगवांस्तदुत्सङ्गे चरणौ निधाय सुष्वापेति प्रसिद्धेः। प्रणीयमानः तेन प्रवर्त्यमानः॥ ५॥ ६॥ ❀ ❀ हे ईड्य आत्मशक्तिषु अस्मच्छक्येषु कर्म्मसु मध्ये केन कर्म्मणा ते शुश्रूषा भवेत्तद्विधेहि आज्ञापयेत्यर्थः, यत् कृत्वा स्थितस्य ममेत्यध्याहार्य्यम्॥ ७॥ ८॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

प्रणीयमानः विदुरेण प्रवर्त्यमानः मुनिः सहशीर्ष्णः श्रीकृष्णस्य चरणावुपधीयेते यस्मिन् स्नेहातिशयात् भगवान् यदङ्के चरणौ प्रसारयति तं विदुरमभ्यचष्ट अभ्यभाषत॥ ५॥ ६॥ ❀ ❀ नोऽस्माकं प्रजानां ते शुश्रूषा आत्मशक्तिषु अस्मच्छक्येषु कर्मसु मध्ये केन कर्मणा भवेत् तद्विधेहि कथयेति द्वयोरन्वयः॥ ७॥ ८॥

## श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

एवं भगवच्चरित्रपरं श्रोतारमुपलभ्य संतुष्टो मैत्रेय इत्याह—इति ब्रुवाणमिति। विदुरमिति भगवदाज्ञापनविषयत्वं बोधयति। विनीतमिति स्वतोऽपि कथने हेतुत्वम्। सहस्रशीर्ष्णश्चरणोपधानमिति शास्त्रार्थतोऽपि तदाज्ञापरिपालनं कर्तव्यमिति महत्त्वम्। यथा भगवच्चरणस्थापका गुणाः, तथा विदुर इति। कृष्णः साक्षाद्भगवान्, अतः सहस्रशीर्षेत्युच्यते, तस्य चरणोपधानं विदुरः। चरण उपधीयते अस्मिन्निति। यदा भगवान् पादं प्रसारयति, तदा विदुरोत्सङ्गे प्रसारयतीति। अत एव विदुरे आवश्यकगुणत्रयस्य विद्यमानत्वाद्भगवत्कथाया वचनावश्यकत्वं ज्ञात्वा प्रहृष्टरोमा जातः। यतो भगवत्कथायां प्रकर्षेण नीयमानः, स्वभावतो मुनिः, अभितोऽचष्ट हेतुपूर्वकं सर्वमुक्तवान्। विपरीतं भगवच्चरित्रम्, यद्विदुरसङ्गादुत्तरोत्तरं मैत्रेयो भक्तो जायत इति। यथा तद्गतं ज्ञानमत्र संक्रमते, तथा विदुरभक्तिरपीतरत्र। अतः प्रहृष्टरोमा॥ ५॥ ❀ ❀ ब्रह्मप्रार्थनया सृष्टिं करिष्यतीति कथनार्थं ब्रह्मप्रसङ्गमाह—यदेति। स्वभार्यया साकमिति अनिषिद्धप्रजोत्पादनसामग्रीसहितः। मनुरिति स्वभावतो धर्मपरत्वम्। स्वायंभुव

इति अन्यथा अनिष्कृतः स्यात्, तेन सृष्ट्यर्थमेवोत्पादनात्। विज्ञापनार्थं प्राञ्जलिः, प्रणतश्च मनोवाग्भ्याम्। कायवाङ्मनोभिर्नम्रता सूचिता। इदं वक्ष्यमाणम्। स्रष्टुर्ज्ञानवत्त्वमाह—वेदगर्भमिति ॥ ६ ॥ ॐ ॐ विज्ञापनामाह। त्वमेक इति द्वाभ्याम्। पुत्रस्य कार्यद्वितयं, पितृशुश्रूषणं पुरः। तदाज्ञाकरणं चेति द्वयं संदिग्धमत्र हि ॥ अतोऽत्र प्रथमं पृच्छति—यद्यपि तव शुश्रूषापेक्षा नास्ति, त्वयैव सर्वे सर्वभावेनोत्पाद्यन्ते पाल्यन्ते च। अतोऽस्माभिस्त्वदुत्पन्नैः, त्वया च परिपालितैः, का शुश्रूषा तव भविष्यति? तथापि अस्माकं स्वनिष्कृत्यर्थं पितृशुश्रूषणं कर्तव्यमिति शुश्रूषणं वक्तव्यम्। शुश्रूषणं च तदेव; येन सेव्यस्य सुखं भवति, परितुष्यति च। तदज्ञातमस्माकमिति प्रश्नः। निरपेक्षतायां हेतुत्रयम्—सर्वभूतानां जन्मदातृत्वम्, वृत्तिदातृत्वम्, असहायशूरत्वं च। तत्राऽसहायशूरत्वं जन्मादेरपि प्रयोजकमिति प्रथममाह—त्वमेक इति। त्वमेवैकः समर्थः सर्वत्र, किं सेवया। किञ्च, त्वमेवैकः सर्वभूतानां जन्मकृदुत्पादकः। वृत्तिर्जीविका, तां प्रयच्छतीति वृत्तिदः, अतो न सेवापेक्षा। किञ्च, पिता भवान्, सर्वभूतानामेव। स्नेहोऽनेन निरूप्यते, प्रतिबन्धकः सेवायाम्। अथापि प्रयोजनाभावे प्रतिबन्धके च विद्यमाने, नः प्रजानामुद्धारार्थे ते शुश्रूषा केन वा भवेत्? तत्कथयेत्यार्थिकोऽर्थः ॥ ७ ॥ ॐ ॐ किञ्च, आज्ञापनं च कर्तव्यम्, परं यत्र कार्येऽस्माकं शक्तिरित्याह—तद्विधेहीति। ननु सेवाकार्ययोः स्पष्टयोः कथमज्ञानम्? तत्राऽऽह—नमस्तुभ्यमिति। एतावदस्माभिः कार्ये सेवायां च ज्ञातम्, यत्त्वं नमस्य इति। नमनातिरिक्तमशक्यमप्रयोजकं च, तथापि यदि प्रयोजकत्वेन ज्ञायते, शक्यं वा भवेत्, तद्वक्तव्यमित्यभिप्रायेणाऽऽह—कर्मस्विति। स्तोत्रमपि सर्वैरेव स्तुतस्य अशक्यमेव। तदाह—ईड्येतिसंबोधनेन। आत्मशक्तिषु। आत्मनः सामर्थ्यं येषु, स्वशक्येष्वित्यर्थः। तत्रापि यो भवति धर्मजनकः, यो वाऽप्यपकीर्त्यजनकः, लोकवेदाविरुद्ध इत्यर्थः। विष्वग्यश इति एकदेशेऽपि यथा नाऽपकीर्तिजनकत्वम्, यथा देशविशेषे निषिद्धकरणम्। अमुत्र चेति परलोकेऽपि यशो गतिश्च ॥ ८ ॥

अस्मिन् पर्याये सुबोधिनीप्रकाशो नास्ति।

### श्रीगिरिधरकृता बालप्रबोधिनी

इत्येवमुक्तप्रकारेण ब्रुवाणं पृच्छन्तं विदुरं प्रति मुनिः मैत्रेयः अभ्यचष्ट अभ्यभाषतेत्यन्वयः। विदुरप्रश्नोत्तरदाने तस्य महान् हर्षो जात इत्याह—प्रहृष्टरोमेति। प्रहृष्टानि उदञ्चितानि रोमाणि यस्य स तथोक्तः। हर्षे हेतुमाह—भगवदिति। यतस्तेन प्रश्नद्वारा भगवत्कथायां प्रणीयमानः प्रवर्त्यमान इत्यर्थः। उत्तरदाने विदुरस्याधिकारित्वं हेतुमाह—विनीतमिति, विनयादिश्रोतृगुणसम्पन्नमित्यर्थः। भगवद्भक्तत्वात्तदुपदेशार्थं भगवता ज्ञापनाच्च तत्प्रश्नोत्तरमवश्यं वक्तव्यमित्याशयेन तं विशिनष्टि—सहस्रेति। सहस्रशीर्षा श्रीकृष्णस्तस्य चरणावुपधीयेते यस्मिंस्तम्, श्रीकृष्णः कृपया यस्योत्सङ्गे चरणौ प्रसारयति तमित्यर्थः ॥ ५ ॥ ॐ ॐ मैत्रेयभाषणमेवाह—यदेति। यदा स्वभार्यया शतरूपया साकं सह स्वायम्भुवो मनुर्जातस्तदा वेदगर्भं ब्रह्माणं प्रणतः प्राञ्जलिश्च सन् इदं वक्ष्यमाणमभाषतेत्यन्वयः। स्वायम्भुव इत्यनेन पुत्रत्वात्तस्य स्वपितृप्रार्थनमुचितम्, वेदगर्भमित्यनेन ब्रह्मणोऽपि प्रार्थनायोग्यता, प्राञ्जलिः प्रणतश्चेत्यनेन कायवाङ्मनोनम्रता च सूचिता ज्ञेया ॥ ६ ॥ ॐ ॐ मनुभाषणं दर्शयति—त्वमिति। यतः सर्वभूतानां त्वमेक एव पिता, तत्र हेतुः—जन्मकृत् उत्पादकः वृत्तिदः पोषकश्च। अतो यद्यपि तवान्यापेक्षा नास्ति अथापि तथापि नोऽस्माकं प्रजानां ते तव शुश्रूषा परिचर्या केन वा कर्मणा भवेत्तद्विधेहीत्युत्तरेणान्वयः ॥ ७ ॥ ॐ ॐ तत्रापि यदि किञ्चिदशक्यमाज्ञापयेत्तदाप्यवज्ञापकीर्त्यादिदोषः स्यादित्याशङ्क्याह—आत्मशक्तिष्विति। अस्मच्छक्येषु कर्मसु मध्ये केन कर्मणा ते शुश्रूषा भवेत्तद्विधेहि इदं कर्तव्यमिति कथयेत्यन्वयः। अस्मत्प्रार्थना त्वयाऽवश्यं पूरणीयेति सूचयन् प्रणमति—नमस्तुभ्यमिति। तत्र महत्त्वं हेतुं सूचयन् सम्बोधयति—ईड्येति। तत्रापि यदि किञ्चिदनुचितमाज्ञापयेत्तदाऽपयशः स्यादित्याशङ्क्याह—यदिति। यत्कर्म कृत्वा यस्मिन् कर्मणि कृते सति इह अस्मिँल्लोके विष्वक् सर्वतो यशो भवेदित्यर्थः। तथापि यदि किञ्चिच्छास्त्रविरुद्धमाज्ञापयेत्तदा परलोके दुर्गतिः स्यादित्याशङ्क्याह—अमुत्रेति। यस्मिन् कृते परलोकेऽपि सुगतिर्भवेदित्यर्थः ॥ ८ ॥

### हिन्दी अनुवाद

श्रीशुकदेवजी कहते हैं—राजन्! विदुरजी सहस्रशीर्षा भगवान् श्रीहरिके चरणाश्रित भक्त थे। उन्होंने जब विनयपूर्वक भगवान्‌की कथाके लिये प्रेरणा की, तब मुनिवर मैत्रेयका रोम-रोम खिल उठा। उन्होंने कहा ॥ ५ ॥ ॐ ॐ ॐ श्रीमैत्रेयजी बोले—जब अपनी भार्या शतरूपाके साथ स्वायम्भुव मनुका जन्म हुआ, तब उन्होंने बड़ी नम्रतासे हाथ जोड़कर श्रीब्रह्माजीसे कहा—॥ ६ ॥ ॐ ॐ 'भगवन्! एकमात्र आप ही समस्त जीवोंके जन्मदाता और जीविका प्रदान करनेवाले पिता हैं। तथापि हम आपकी सन्तान ऐसा कौन-सा कर्म करें जिससे आपकी सेवा बन सके? ॥ ७ ॥ ॐ ॐ पूज्यपाद! हम आपको नमस्कार करते हैं। आप हमसे हो सकने योग्य किसी ऐसे कार्यके लिए हमें आज्ञा दीजिये, जिससे इस लोकमें हमारी सर्वत्र कीर्ति हो और परलोकमें सद्गति प्राप्त हो सके ॥ ८ ॥

### ब्रह्मोवाच

प्रीतस्तुभ्यमहं तात स्वस्तिस्ताद्वां क्षितीश्वर । यन्निर्व्यलीकेन हृदा शाधि मेत्यात्मनार्पितम् ॥ ९ ॥
एतावत्यात्मजैर्वीर[1] कार्या ह्यपचितिर्गुरौ । शक्त्याप्रमत्तैर्गृह्येत सादरं गतमत्सरैः ॥ १० ॥
स त्वमस्यामपत्यानि सदृशान्यात्मनो गुणैः । उत्पाद्य शास धर्मेण गां यज्ञैः पुरुषं यज ॥ ११ ॥
परं शुश्रूषणं मह्यं स्यात्प्रजारक्षया नृप । भगवांस्ते प्रजाभर्तुर्हृषीकेशोऽनुतुष्यति ॥ १२ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

वां युवाभ्यां स्वस्ति भद्रं स्तात् भूयात् । यद्यतो मा मां शाध्यनुशिक्षयेति आत्मना स्वयमेवार्पितं निवेदितमतः प्रीतोऽस्मि ॥ ९ ॥ ❀ ❀ अपचितिः पूजा गृह्येत आज्ञेति शेषः । सनकादयो न कुर्वंति वयं किमिति करिष्याम इत्येवंभूतो गतो मत्सरो येभ्यः ॥ १० ॥ ❀ ❀ गां शास शाधि पालयेत्यर्थः । पुरुषं हरिम् ॥ ११ ॥ ❀ ❀ प्रजापालकस्य ते तुष्टो भविष्यति ॥ १२ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः ।

क्षितीश्वरेत्यामंत्रणेन तव वासार्थं भुव उद्धारो भविष्यतीति सूचितम् । स्वयमेव परप्रेरणां विनैव । विशेष्यपदानुक्त्याऽहंतास्पदममतास्पदादिकं सर्वमेव निवेदितमित्यर्थः । निर्व्यलीकेन निष्कपटेन ॥ ९ ॥ ❀ ❀ "भवेदपचितिः पूजा व्ययनिष्कृतिहानिषु" इति मेदिनी ॥ १० ॥ ❀ ❀ गां भुवम् । 'भूमौ पशौ च गोशब्दः' इत्यनेकार्थमंजर्युक्तेः । इत्यर्थ इति । पालनस्यैव शासनपदार्थत्वादिति भावः ॥ ११ ॥ ❀ ❀ मह्यं मम नृपेति रक्षाधिकारसूचनायोक्तम् ॥ १२ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपनी व्याख्या

युवाभ्यामित्यत्रोद्देशश्चतुर्थ्यर्थः ॥ ९ ॥ ❀ ❀ शक्त्या स्वशक्त्यनुसारेण सादरं यथा स्यात्तथा ॥ १० ॥ ❀ ❀ स गृहीताज्ञस्त्वमात्मनः स्वस्य पृथिव्याः शिक्षणसम्भवात्पालने लक्षणात् इत्यर्थोक्तिः ॥ ११ ॥ ❀ ❀ नु निश्चितम् ॥ १२ ॥

### श्रीमद्वीरराघवव्याख्या

एवं मनुना पृष्टो ब्रह्माह । प्रीत इति । हे तात ! तुभ्यमहं प्रीतः हे क्षितीश्वर ! वां युवाभ्यां स्वस्ति स्ताद् भूयात् कुत एतत्तत्राह । यद्यस्मान्निर्व्यलीकेन निर्दुष्टेन हृदा मनसा मा मां शाध्यनुशिक्षयेत्यात्मना स्वयमेवार्पितमावेदितम् ॥ ९ ॥ ❀ ❀ हे वीर ! गुरौ पितर्यात्मजैः पुत्रैरेतावत्यपचितिः पूजा कर्तव्या कियतीत्यत्राह । शक्त्येति । अप्रमत्तैर्निर्मत्सरैः शक्त्या शक्त्यनुरूपेण सादरं गृह्येत आज्ञेति शेषः । यथाशक्ति पितुराज्ञा ग्राह्येत्येतावती पितरि शुश्रूषेत्यर्थः ॥ १० ॥ ❀ ❀ तर्हि का वा पितुस्तवाज्ञा या मया कर्तव्या बोध्यते तत्राह । सत्वमिति । स मच्छरीरादुत्पन्नस्त्वमस्यां स्वमहिष्यामात्मनस्तव गुणैः सदृशान्यपत्यानि उत्पाद्य गां भूमिं धर्मेण शास अनुशिष्टयज्ञैः पुरुषं परमपुरुषं यजाराधय ॥ ११ ॥ ❀ ❀ इदमेव मह्यं परं शुश्रूषणं स्यादनेनावयो भगवानपि तुष्यतीत्याह । परमिति । हे नृप ! प्रजारक्षया भगवान् हृषीकेशो विष्णुः प्रजाभर्तुस्ते प्रजाभर्त्रे तुभ्यमित्यर्थः । प्रजारक्षयेति वान्वयः अनुतुष्यति सन्तुष्टो भवति ॥ १२ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

सच्छिष्ये सद्गुरुणा एवमनुग्रहः कर्तव्य इति भावं ध्वनयन् ब्रह्मा वक्ति । प्रीत इति । तद्यस्माच्छाधि शिक्षयस्व आत्मना परप्रेरणामन्तरेण ॥ ९ ॥ ❀ ❀ इयमेका गुरोः क्रियमाणा पूजेत्याह । एतावतीति । अपचितिः पूजा एतावतीति केयमित्यत्राह । शक्त्येति । अथ गुरुनियोगानन्तरमेव शक्त्या शासनमाज्ञा गृह्येतेति यत्सेयमित्यर्थः ॥ १० ॥ ❀ ❀ आज्ञामाह । स त्वमिति । अस्यां शतरूपायाम् ॥ ११ ॥ ❀ ❀ केन वेत्यस्य प्रश्नं परिहरति । परमिति । अनेनाज्ञाग्रहणमेकमितरत्प्रजापालनमिति द्वयं शुश्रूषणमुक्तं भवति पुरुषस्य पुरुषार्थाय श्रीनारायणप्रसाद एव ततः प्रजापालेन किं तत्राह भगवानिति ॥ १२ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

मत्सरोऽन्यशुभद्वेषः । स चात्रैकाकितया गुर्वाज्ञाकर्तृषु सजातीयेपु सम्भवतीति गतमत्सरैरित्युक्तम् ॥ ९--१२ ॥

---

१. प्रा. पा. त्मजैर्वीरैः ।

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

तुभ्यं प्रीत इति पत्ये शेते इतिवत् सम्प्रदानम्। अतो वां युवाभ्यां स्त्रीपुंसाभ्यामेव स्वस्ति स्तात् यद्यतः मा मां शाधि अनुशिक्षय इति आत्मना स्वयमेवार्पितं विशेष्यपदानुक्त्या अहन्तास्पदममतास्पदादिकं सर्व्वमेव निवेदितमित्यर्थः॥ ९॥ ❀ ❀ ❀ अपचितिः सेवा गृह्येत आज्ञेति शेषः। सनकादयो न कुर्वन्ति वयं किमित्याज्ञां कुर्म्म इत्येवम्भूतो गतो मत्सरो येभ्य इति तैः॥ १०॥ ❀ ❀ गां पृथ्वीं शास शाधि पालयेत्यर्थः॥११॥ ❀ ❀ मह्यं मम मां प्रीणयितुमिति वा॥१२॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

वां युवयोः मा मां शाधि अनुशिक्षयेति स्वयं निवेदितम्। अतः प्रसन्नोऽस्मि॥ ९॥ ❀ ❀ अपचितिः पूजा एतावत्येव कार्या कियतीत्याकाङ्क्षायामाह अप्रमत्तैः सावधानैः सादरं यथा भवति तथा यथाशक्ति गृह्येत गुर्वाज्ञेति शेषः॥ १०॥ ❀ ❀ पुरुषं सर्वयज्ञभोक्तारम्॥ ११॥ १२॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

[1]तत्र ब्रह्मा एकं कृतमेवेत्याह—प्रीत इति द्वाभ्याम्—शुश्रूषा सफला भवति। फलेन ज्ञायते शुश्रूषा जातेति, अतस्तत्फलमेव निर्दिशति। प्रीतिरपि महती, यतः सफला। तस्याः फलमाह—स्वस्ति स्ताद्वामिति। युवयोः कल्याणं भवतु। संसारप्रवृ[2]त्तिरूपत्वात् कार्यस्य बन्धशङ्कायामेवमुक्तम्। क्षितीश्वरेत्यपरमपि फलं संबोधनेन निर्दिष्टम्, भूम्यैश्वर्यं भवत्विति। ननु शुश्रूषा काऽस्माभिः कृता, कथं वा संतोष इत्याङ्क्याऽऽह-यन्निर्व्यलीकेन हृदेति। निष्कपटेन हृदयेन मामाज्ञापयेति यदात्मना सह सर्वस्वनिवेदनम्, तदेव शुश्रूषणम्। तद्दुर्योधनवत्कापट्येनापि भवतीति निर्व्यलीकेन हृदेत्युक्तम्। आत्मनेति सहार्थे तृतीया। अनेनैहिकं पारलौकिकमपि आत्मगामि सर्वं निवेदितमिति ज्ञापितम्। एतदेवाऽऽत्मसमर्पणं नाम। न ततोऽन्यत् प्रभोः शुश्रूषणमस्ति॥ ९॥ ❀ ❀ अन्यदपि ततो भविष्यतीत्याशङ्क्य परिहरति—एतावत्यात्मजैरिति। एतावत्येव शुश्रूषा आत्मजैः कर्तव्या; यो यत् यतः प्राप्तवान्, तदेव तस्मै निवेद्यमिति। पितरि पुत्रकैरिति प्राप्तमेवोपपादयति। गुरावपचितिरित्यपि पाठे, गुरूपदिष्टस्य पदार्थस्य सिद्ध्यर्थं निस्तार्यमेव निवेदयेत्। स हि आत्मात्मीयनिस्तारार्थमुपदिशति। तदस्याऽशक्यमिति तस्मै निवेदनीयम्, स हि स्वात्मानमुद्धरतीति। उपदेशसार्थकत्वेनैव तस्याऽपचितिः, अन्यथा तस्य सेवाधीनत्वं स्यात्। अत उभयेषां कार्यार्थमात्मसमर्पणमेवाऽपचितिः सेवा, प्रत्युपकार इति यावत्। आत्मसमर्पणस्य निदर्शनमाह—शक्त्याऽप्रमत्तैरिति। स्वशक्त्यनुसारेण सावधानैस्तद्वाक्यं सादरं गृह्येत। 'मृदमानय' इत्युक्ते स्वशक्त्यनुसारेण आदरपूर्वकं मृदानयनमात्मसमर्पणस्य निदर्शनम्। अयुक्तकारणेऽपि स्वोत्कर्षार्थं मामयुक्तं कारयतीति तस्योत्कर्षासहनरहितैः॥ १०॥ ❀ ❀ एवं सेवामुपपाद्य कर्तव्यमाज्ञापयति—स त्वमिति। मत्पुत्रत्वे सति यत्कर्तव्यं तत्कृतमेव, यद्भगवदीयत्वेन कर्तव्यं तदुचितमिति ज्ञापयितुं स इत्युक्तम्। अस्यामित्यपि तथैव। अत एव आत्मनः सदृशैर्गुणैरपत्यान्युत्पादयेत्याज्ञा प्रथमा, एतदनन्तरं धर्मेण गां शास परिपालयेति द्वितीया, यज्ञैः पुरुषं भगवन्तं यजेति तृतीया। तत्र द्वयं भगवत्प्रीतिहेतुभूतमित्यवधृतम्, पृथिवीपालनस्य क्षत्रियधर्मत्वात्, यज्ञानां वैदिकधर्मत्वात्। श्रौतस्मार्ताश्च धर्माः स्वधर्मः, अतः स्वधर्मेण भगवदाराधने कृते भगवान् वेदगर्भे भगवांश्च परितुष्यतीत्यविवादम्॥ ११॥ ❀ ❀ प्रजोत्पादने तु भवान्, भगवान् वा, परितुष्यतीत्यत्र न किञ्चित्प्रमाणमस्तीत्याशङ्कयाऽऽह—परं शुश्रूषणमिति। पुत्रेण हि पितुः शुश्रूषा कर्तव्या। तत् प्रजारक्षयैव मम परं शुश्रूषणं भवति, मत्कर्त्तव्यकरणात्। 'भगवत्कर्तव्यकरणं भगवच्छुश्रूषणं परम्' इति पूर्वमेवोचाम। तस्मान्मया प्रजोत्पादनीया पालनीया, सा त्वयैव क्रियत इति परं मम शुश्रूषणम्। अनेन भगवांश्च परितुष्यतीत्याह—भगवांस्ते प्रजाभर्तुरिति। प्रजाभर्तुः प्रजारक्षकस्य ते भगवान् परितुष्यति, प्रजारक्षाया अपि धर्मत्वात्। किञ्च, हृषीकेश इति प्रजोत्पादने प्रजारक्षायां च सर्वेन्द्रियाणामुपभोगाद् इन्द्रियाधिष्ठाता हृषीकेशो भगवान् परितुष्यति॥ १२॥

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

एतावतीत्यत्र। निस्तार्यमिति। शिष्यदेहात्मानम् (?)। ननु शिष्येण गुरौ स्वात्मानिवेदनं किमर्थं कर्तव्यम्? पितृपुत्रवदपचितेरत्र वक्तुमशक्यत्वात्, इत्याकाङ्क्षायां सोपपत्तिकं तदाहुः-सहीत्यादि। हि यतो हेतोः, स गुरुरात्मात्मीययोः शिष्यतत्सम्बन्धिनोर्निस्तारार्थमुपदिशति, भगवदाज्ञप्तं वदति। तत् आत्मात्मीयनिस्तरणमस्य शिष्यस्याऽशक्यं कृत्यासाध्यमित्यस्माद्धेतोस्तस्मै गुरवे निवेदनीयम्, स्वात्मात्मीयादिकमर्पणीयम्। तत्र हेतुः-स हि स्वात्मानमुद्धरतीति। तथा च, स्वोद्धारकृत्यर्थं गुरावात्मसमर्पणमित्यर्थः। ननु तावता कथं तस्य सेवात्वसिद्धिरित्यत आहुः-उपदेशेत्यादि। गुरुणा हि शिष्योद्धारायोपदिश्यते, उद्धारौन्मुख्यं च गुर्वाज्ञानुसारित्वे, अनुसारित्वं चोक्तरीत्या समर्पणे कृत इति समर्पणेन सर्वं गुरोरेव परिकरीभूतं भवतीति गुरुः स्वमुद्धरन् स्वपरिकरमप्युद्धरतीत्युपदेशः सार्थको भवतीति तेनैव तस्य सेवात्वसिद्धिरित्यर्थः। ननूपदेशेन सेवायोग्यता, सेवया चोद्धार इत्यङ्गी-

---

१. तथापि. ग.। २. वृत्ति. ग.।

कारे को दोष इत्यत आहुः—अन्यथेत्यादि। तस्येति। उद्धारस्य। तथा चोपदेशस्योद्धारफलकत्वहानिरेव दोष इत्यर्थः। सिद्धमाहुः—अत इत्यादि। तथा च, प्रत्युपकारत्वेन सेवाया अपचितित्वमित्यर्थः। एतेनात्मनिवेदितानिवेदितकृतयोः सेवयोः स्वरूपमेव व्यक्तीकृतम् ॥१०॥

### श्रीगिरिधरकृता बालप्रबोधिनी

एवं मनुना प्रार्थितो ब्रह्माऽऽह—प्रीत इति। हे तात तुभ्यमहं प्रीतः अतो वां युवाभ्यां स्त्रीपुरुषाभ्यां स्वस्ति स्यात् कल्याणं भूयात्। सार्वभौम्ये तु न सन्देह इति सूचयन् सम्बोधयति—क्षितीश्वरेति। प्रीतौ हेतुमाह—यदिति। यत् यस्मात् निर्व्यलीकेन निष्कपटेन हृदा मां शाधि शिक्षयेति आत्मना स्वयमेव त्वयाऽर्पितं वेदितमित्यर्थः ॥ ९ ॥ ❀ ❀ इतोऽप्यन्यत्किञ्चिन्महच्छुश्रूषणमस्तीति मा शङ्किष्ठा इत्याह—एतावतीति। त्वं सर्वपुरुषार्थसम्पादने समर्थोऽसीति सूचयन् सम्बोधयति—वीरेति। गुरावित्युपलक्षणं 'जनकश्चोपनेता च यश्च विद्यां प्रयच्छति। अन्नदाताऽभयत्राता पञ्चैते पितरः स्मृताः' इति वाक्यात् जनकादौ पूज्ये आत्मजैः पुत्रादिभिरेतावत्येवापचितिः पूजा सेवा कार्येत्यन्वयः। कियतीत्यपेक्षायामाह—शक्तेति। अप्रमत्तैः सावधानैः गतमत्सरैः अयुक्तमाज्ञापयतीति दोषदर्शनरहितैः शक्त्या शक्त्यनुसारेण गुरोराज्ञा सादरं यथा स्यात् तथा गृह्येतेत्यन्वयः ॥ १० ॥ ❀ ❀ तर्हि का वा तवाज्ञा या मया कर्तव्येत्यपेक्षायामाह—स इति। स मदाज्ञापेक्षकस्त्वमस्यां स्वभार्यायामात्मनस्तव गुणैः कृत्वा सदृशानि अपत्यानि उत्पाद्य धर्मेण धर्मशास्त्रानुसारेण गां भूमिं शास भूमिस्थां प्रजां शिक्षय पालय। यज्ञैः यज्ञादिभिः स्वधर्मानुष्ठानैः पुरुषं परमपुरुषं भगवन्तं यज आराधयेत्यर्थः ॥ ११ ॥ ❀ ❀ तवापि प्रजारक्षणमसाधारणो धर्म इति सूचयन् सम्बोधयति—नृपेति। एवं प्रजारक्षया मह्यं ममापि परं शुश्रूषणं स्यात्। प्रजाभर्तुः प्रजारक्षकस्य ते तव हृषीकाणामिन्द्रियाणामीशो नियन्ता भगवानप्यनुतुष्यति तुष्टो भविष्यतीत्यन्वयः ॥ १२ ॥

### हिन्दी अनुवाद

श्रीब्रह्माजीने कहा—तात! पृथ्वीपते! तुम दोनोंका कल्याण हो, मैं तुमसे बहुत प्रसन्न हूँ, क्योंकि तुमने निष्कपट भावसे 'मुझे आज्ञा दीजिये' यों कहकर मुझे आत्मसमर्पण किया है ॥ ९ ॥ ❀ ❀ वीर! पुत्रोंको अपने पिताकी इसी रूपमें पूजा करनी चाहिये। उन्हें उचित है कि दूसरोंके प्रति ईर्ष्याका भाव न रखकर जहाँतक बने, उनकी आज्ञाका आदरपूर्वक सावधानीसे पालन करें ॥ १० ॥ ❀ ❀ तुम अपनी इस भार्यासे अपने ही समान गुणवती सन्तति उत्पन्न करके धर्मपूर्वक पृथ्वीका पालन करो और यज्ञोंद्वारा श्रीहरिकी आराधना करो ॥ ११ ॥ ❀ ❀ राजन्! प्रजापालनसे मेरी बड़ी सेवा होगी और तुम्हें प्रजाका पालन करते देखकर भगवान् श्रीहरि भी तुमसे प्रसन्न होंगे ॥ १२ ॥

**येषां न तुष्टो भगवान् यज्ञलिङ्गो जनार्दनः। तेषां श्रमो ह्यपार्थाय यदात्मा नादृतः स्वयम् ॥ १३ ॥**

### मनुरुवाच

**आदेशेऽहं भगवतो वर्तेयामीवसूदन। स्थानं त्विहानुजानीहि प्रजानां मम च प्रभो ॥ १४ ॥**

**यदोकः सर्वसत्त्वानां मही मग्ना महाम्भसि। अस्या उद्धरणे यत्नो देव देव्या विधीयताम् ॥ १५ ॥**

### मैत्रेय उवाच

**परमेष्ठी त्वपां मध्ये तथा सन्नामवेक्ष्य गाम्। कथमेनां समुन्नेष्य इति दध्यौ धिया चिरम् ॥ १६ ॥**

### श्रीधरस्वामिविरचिता भावार्थदीपिका

यज्ञलिंगो यज्ञमूर्तिः। अपगतोऽर्थो यस्मात् केवलं श्रमायैवेत्यर्थः। यद्यस्मादात्मैव स्वयं नादृतः तस्मिन्नतुष्टे स्वार्थस्यैवासिद्धेः सर्वात्मत्वात्तस्य ॥ १३ ॥ ❀ ❀ वर्तेय वर्तिष्ये। अमीवसूदन पापनाशन। अनुजानीह्यत्र स्थातव्यमित्यनुज्ञां देहि ॥ १४ ॥ ❀ ❀ महीति चेदत आह। यदोकः स्थानं सा मही। हे देव। अस्या देव्याः ॥ १५ ॥ ❀ ❀ पूर्वं पाने कृतेऽपि पुनरकांड एवोद्भूतानामपां मध्ये सन्नामवसन्नां निमग्नाम्। समुन्नेष्ये उद्धरिष्यामि ॥ १६ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

यद्वा। यज्ञैर्यजनैरर्चनश्रवणकीर्त्तनाद्यैरेव लिंग्यते ज्ञायत इति परमात्मानादरे स्वस्यैवानादृतत्वात्। "यद्यज्जनो भगवते विदधीत मानं तच्चात्मने प्रतिमुखस्य यथा मुखश्रीः" इत्युक्तेः ॥ १३ ॥ ❀ ❀ 'अमीवं पापरोगयोः' इति हलधरः। अत्र

---

१. प्रा० पा०—वर्तेयमरिसूदन।

स्यातव्यमित्थमनुज्ञां देहीति । तथा च प्रजाः सृजेत्याज्ञप्तो मनुः प्रजाः ससर्ज यदा धराप्लावेन सर्गविघ्नो जातस्तदागत्योवाचेति ज्ञेयम् । तात्कालिकतदुक्तिस्वीकारे मनुकन्यादेवहूतिसुतायां मरीचेर्जातात्कश्यपाज्जातस्य दैत्यस्य धरोद्धारे वराहकृतसंहारो न घटेतेति ॥ १४ ॥ ❀ ❀ ननु पूर्वपूर्वकल्पे मनवः सप्रजाः कुत्रासन्निति त्वं शास्त्रज्ञत्वाज्जानासि न वेति चेत्सत्यं जानाम्येवेत्याह—यदोक इति । यदोक इत्यादिकं पाद्मप्रसंगे ब्राह्मकथासूचनवत् वर्तमानकल्पजश्वेतवाराहकथासूचनं ज्ञेयम् । यत्रैव स्वायंभुवप्रसंगे प्राचेतसदक्षदौहित्रहिरण्याक्षवधरूपा चाक्षुषकथापि भविष्यति । अत्र तु श्यामतयाऽविर्भूत इति वक्ष्यति 'तमालनीलम्' इति महांभसि गर्भोदके । अस्या मह्याः ॥ १५ ॥ ❀ ❀ अकांडेऽनवसरे ॥ १६ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

यस्मात्केवलश्रमादिति विशेष्याध्याहारादित्यर्थोक्तिः स्वार्थस्य स्वप्रयोजनस्यैवासिद्धेरात्मैवानादृतः तस्य भगवतः सर्वात्मत्वात्परमात्मानादरेण स्वत एवात्मानादराच्चात्मा नादृत इति हेतुद्वयम् ॥ १३ ॥ ❀ ❀ इह जगति तुस्तावदित्यर्थे । प्रजानां स्रक्ष्यमाणानां स्रष्टुर्मम च ॥ १४ ॥ ❀ ❀ महाम्भसि गर्भोदके ॥ १५ ॥ ❀ ❀ अकाण्डे प्रलयावसरे तथा प्रलयकालवत् ॥ १६ ॥

### श्रीमद्वीरराघवव्याख्या

किं भगवत्सन्तोषेणेत्यत्राह । येषामिति । यज्ञलिङ्गो यज्ञमूर्तिः सनातनो भगवान् येषां न तुष्टः तेषां श्रमः अपार्थाय निष्प्रयोजनाय भवतीत्यर्थः । यद्यतः आत्मा भगवान् स्वयं नादृतः उपेक्षित इति यावत् ॥ १३ ॥ ❀ ❀ एवमुक्तो मनुः किमुवाचेत्यत्राह । आदेश इति । अमीवसूदन ! पापनाशन ! भगवतस्तवादेशे आज्ञायां वर्तेय किन्तु हे प्रभो ! प्रजानां मम च इहास्मिन् लोके स्थानं निवासस्थानमनुजानीह्यनुज्ञापय प्रदर्शयेत्यर्थः ॥ १४ ॥ ❀ ❀ ननु मही एव सर्वभूतानां स्थानं कथमुच्यते स्थानमनुजानीहीति तत्राह । यदिति । सर्वसत्त्वानां सर्वभूतानां यदोकः स्थानं स्थानभूता मही भूमिः महाम्भसि महति जले मग्ना अन्तर्गता आसीदिति तस्या देव्या भूमेरुद्धरणे यत्नः हे देव ! विधीयतां क्रियताम् ॥ १५ ॥ ❀ ❀ एवमुक्तो ब्रह्मा किमकरोदित्यत्राह । परमेष्ठी ब्रह्मा तदापां मध्ये आसन्नां निमग्नां गामवेक्ष्य ज्ञात्वा एनां भूमिमहं कथं समुन्नेष्ये उद्धरिष्यामीति धिया चिरन्दध्यौ चिन्तयामास ॥ १६ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

बाधकमाह । येषामिति । यज्ञो लिङ्गं ज्ञापको यस्य स तथा श्रमः इदं नः श्रेयःसाधनमित्यनुष्ठानाद्यायासः आत्मा परमात्मा ॥ १३ ॥ ❀ ❀ ब्रह्मणा प्रजापालनायोपदिष्टो मनुस्तदाज्ञामादाय ब्रह्माणं प्रार्थयते । आदेशेऽहमिति । कामाद्यरिसूदन । अनुजानीहि अनुज्ञापयादिशेत्यर्थः ॥ १४ ॥ ❀ ❀ भूम्याख्ये स्थाने स्थितिं विधाय प्रजापालनं कर्तव्यमित्याज्ञां तावदाशङ्क्य परिहरति । यदोक इति । सर्वसत्त्वानां पिपीलिकादिसर्वप्राणिनां यदोक आवासस्थानं सा मही महाम्भसि प्रलयजले मग्नाभूत् हे देव ! अस्या देव्या भूमेरुद्धरणे यत्नः क्रियतामित्यन्वयः ॥ १५ ॥ ❀ ❀ पूर्वमेव भूमेरभावं जानन्नपि ब्रह्मा प्रार्थनापूर्वकं कृतमेवोपकृतं स्यादिति मन्वानो भूमेरुद्धारमालोचयतीत्याह । परमेष्ठीति । यथोन्नेतुमशक्या तथा सन्नां मग्नाम् ॥१६॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः ।

अपार्थाय अपार्थत्वायेत्यर्थः । यदात्मा नादृतः स्वयमिति परमात्मानादरेण स्वत एवात्मानादरात् ॥ १२ ॥ १४ ॥ ❀ ❀ यदोक इत्यादिकं पाद्मप्रसङ्गे ब्रह्मकथासूचनवद्वर्त्तमानकल्पजश्वेतवराहकथासूचनं ज्ञेयम् । यत्रैव स्वायम्भुवप्रसङ्गे प्राचेतसदक्षदौहित्रहिरण्याक्षवधरूपा चाक्षुषकथापि भविष्यति । अत्र तु श्यामतयाविर्भूत इति तमालनीलं इति वक्ष्यति । महाम्भसि गर्भोदके ॥ १५ ॥ १६ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

यज्ञैर्यजनैः अर्चनश्रवणकीर्त्तनाद्यैरेव लिङ्ग्यते ज्ञायते इति सः यद्यस्मादात्मैव नादृतः परमात्मानादरेण स्वत एवात्मानादरात् तस्मिन्नतुष्टे स्वार्थस्यैवासिद्धेः ॥ १३ ॥ ❀ ❀ वर्त्तेय वर्त्तिष्ये स्थानं वसतिस्थलं अनुजानीहि परामृश । अमीवसूदन ! हे पापनाशन ! ॥ १४ ॥ ❀ ❀ ननु पूर्व्वपूर्व्वकल्पे मनवः कुत्र सप्रजा आसन्निति शास्त्रज्ञत्वात् त्वं जानासि न वेति चेत् जानाम्येवेत्याह । यदोक इति ॥ १५ ॥ १६ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

यज्ञलिङ्गः यज्ञमूर्तिः आत्मा सर्वेषामाश्रयः यतो यैर्नादृतः अतः तेषां श्रमः कर्मज्ञानादिसाधनानुष्ठानम् । अपगतोऽर्थः यस्मात्तस्मै निष्फलत्वायेत्यर्थः ॥ १३ ॥ ❀ ❀ हे अमीवसूदन ! स्थानमनुजानीहि इदं तव स्थानमिति अनुज्ञापय ॥ १४ ॥ ❀ ❀ हे देव ॥ १५ ॥ ❀ ❀ गां महीम् ॥ १६ ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

ननु प्रजानां स्वस्य चेन्द्रियभोगस्य प्रवृत्तिरूपत्वात्, प्रवृत्तेः संसारहेतुत्वाच्च, तुष्टोऽपि भगवान् सांसारिकमेव फलं दास्यतीति मुक्त्यसाधकत्वात् किं प्रजयेत्याशङ्क्य परिहरति येषां न तुष्टो भगवानिति । स हि हृषीकेशः सर्गलीलायां जातेषु सर्गानुकूलकृत्यैव परितुष्यति, विपरीतान्न तुष्यति । तदतोषे तु सर्वनाशः, यतो भगवान् । तस्मिन्नतुष्टे ऐश्वर्यादिवत् ज्ञानादिकमपि न सिद्ध्येत्, अतो मोक्षोऽपि दूरे । किञ्च यज्ञलिङ्गो भगवान्, यज्ञा लिङ्गानि यस्य । भगवदपरितोषे यज्ञफलमपि न स्यात्, तदा 'नाऽयं लोकेऽस्त्ययज्ञस्य' इत्यैहिकामुष्मिकफलासिद्धिः । किञ्च, जनार्दनो भगवान्, जनामविद्यामर्दयतीति, तेनाऽविद्यानाशोऽपि न भवेत् । अतो मोक्षो नाऽस्ति । एवं ज्ञानाभावः, क्रममुक्तौ लोकाभावः, अविद्यानाशाभावात् मुक्त्यभावश्चेति तेषां परलोकार्थम्, मुक्त्यर्थं वा, श्रमोऽपार्थः । व्यर्थः । तत्रोपपत्तिरुक्तैव । ननु धर्मस्य कृतत्वात् कथं वैयर्थ्यम् ? उपपत्तिविचाराभावेऽपि उत्पत्तिविचारेण फलं भविष्यतीत्याशङ्क्याऽऽह—यदात्मा नादृतः स्वयमिति । न हि कृतघ्ने धर्मोऽस्ति, आत्मानात्मनोर्विरोधे आत्मा बलीयान्, अन्तरङ्गबहिरङ्गन्यायेनापि, मुख्यगौणन्यायेनाऽपि, सर्वस्यात्मार्थत्वात् 'अर्थद्रव्यविरोधेऽर्थो बलीयान्, इति न्यायेनाऽपि आत्मानादरे न देहादिभिर्धर्मैः सिद्ध्यति । यथा विक्षिप्तेन्द्रियस्य न शारीरो धर्मः फलाय, नाप्यैन्द्रियो धर्मो विक्षिप्ते मनसि; तथा भगवद्विमुखस्य न कोऽपि धर्मः सिध्यति । यदि देहाद्यनुरोधेन, लोकानुरोधेन वा, देहादिलोकानां बाधकत्वाद्वा, भगवदादरं न कुर्यात्, तदा तेषामेव दोषो भवेत् । भगवांश्च तानेव दण्डयेत्, यदि स्वयमेवात्मा नादृतः । स्वयमित्यव्ययम् । स्वत एव यदि भगवन्तं न मन्येत, तस्य सर्वनाशो भवेदिति संग्रहः ॥ १३ ॥ ❀ ❀ मनुना एतत्प्रार्थनं सत्यलोके कृतम्, सत्यस्थश्च ब्रह्मा तथाऽऽज्ञां दत्तवान् । सोऽप्यविचारयन् भूमेर्मज्जनं न जानाति, अज्ञात्वैव पृथिवीपरिपालनादिकं कुर्वित्युक्तवान् । तदा पृथिवीमज्जनं ज्ञापयति—आदेशेऽहं भगवत इति । अहं तु भगवतो भवत आदेशे आज्ञायामेव वर्तेय तिष्ठामि । हे अमीवसूदन पापनाशक । अमीवं पापम्, तन्नाशक । परं प्रजार्थं मदर्थं च, इह सत्यलोके, स्थानमनुजानीहि आज्ञापय, देहीत्यर्थः । यतः प्रजानां मम च भवानेव रक्षको रक्षणसमर्थः । तदाह—प्रभो इति ॥ १४ ॥ ❀ ❀ पृथिवी तु मग्नेत्याह—यदोक इति । सर्वसत्त्वानां यदोकः स्थानम्, सा मही महाम्भसि प्रलयोदके ( च ) मग्ना । तस्या उद्धरणे यत्नो वा विधीयताम् । देवेति संबोधनात्सत्यलोकस्थानदानापेक्षयापि भूम्युद्धारयत्न एव मुख्यः, यतो भूमिर्देवयजनम् । यज्ञाश्च कर्तुं शक्याः । किञ्च, देव्याः पृथिव्याः । सा पृथिवी त्वयैवोत्पादिता, आदिवराहकल्पे ब्रह्मणैवोद्धृत्य पुष्करपर्णे प्रथितत्वात् । तस्मात्सत्यादौ वा स्थानं देयम्, भूम्युद्धारयत्नो वा कर्तव्यः । उभयोर्मध्ये भूम्युद्धारयत्न एव विशिष्टः, अत एव न वाशब्दः । अत्र श्लोकत्रयं विगीतमस्ति 'इत्याकर्ण्य इति मैत्रेयवचनम्, ब्रह्मणो वचनद्वयम् 'पीतं मया जलम्, सरीसृपः' इति च ॥ १५ ॥ ❀ ❀ एवं मनुवचनं श्रुत्वा तद्वचनपरीक्षणार्थं ज्ञानदृष्ट्या भूमिं दृष्टवान् । तदा खिन्नां तां दृष्ट्वा ब्रह्मा यत्कृतवान्, तदाह—परमेष्ठी त्विति । स्वातन्त्र्यपारतन्त्र्याभ्यां स्वतो युक्तिविचारणम् । भगवत्येव भारस्य स्थापनं चिन्तितं स्थिरम् । १ । तत्र प्रथमं पूर्ववत्साम[1]र्थ्येन तस्या उद्धारे यत्नं कृतवान् । तत्र हेतुः—परमेष्ठीति । परमे सर्वोत्कृष्टे आसने तिष्ठतीति । तुशब्दः सत्यादौ स्थानदानपक्षं निवारयति । अपां मध्ये तथा सन्नामिति । पूर्वमपि तस्यास्तथावस्था स्मृता । पूर्वं तु पुष्करपर्णे उपविष्टः, नालस्याऽऽधारस्य विद्यमानत्वात्, भगवदाश्रयत्वाच्च नालस्य, तत्र रसातलपर्यन्तादानीय पुष्करपर्णे प्रथितवान् । इदानीं तु सत्यलोके स्थितः कथं तामुन्नेष्य इति, क्व वा स्थापय इति भवति चिन्ता । पूर्वं परमेष्ठित्वादिसिद्ध्यर्थं चिन्तायां क्रियमाणायां साधनभूता यज्ञादयः पदार्था मनस्याविर्भवन्ति[2], तथा प्रकृतेऽपि भविष्यतीति कालकृतदोषपरिहाराय चिरं दध्यौ । तत्रापि विवेकवत्या बुद्ध्या, यथा सर्वथा साधनं स्फुरत्येव ॥ १६ ॥

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

येषामित्यत्र । पदत्रयस्याऽर्थमुक्त्वा श्रमवैयर्थ्ये तस्य हेतुतां स्फुटीकुर्वन्ति—एवमित्यादि । उक्तैवेति । पदत्रयार्थविवरणेनोक्तैव ॥ १३ ॥

### श्रीगिरिधरकृता बालप्रबोधिनी

भगवत्सन्तोषेण किमित्यत आह—येषामिति । येषां भगवान्न तुष्टस्तेषां सर्वोऽपि साधनानुष्ठानश्रमः अपार्थाय निष्फलायैव भवतीत्यन्वयः । हिशब्दोऽवधारणार्थः । कुत इत्यपेक्षायामाह—यदिति । यत् यस्मात् स्वयमात्मा नादृतः सर्वात्मकभगवदनादरेणात्मनोऽप्यनादरः स्वयमेव कृत इत्यर्थः । ननु भगवदनादरे कथं फलहानिरित्याशङ्क्य धर्मादिचतुर्विधफलदातृत्वाशयेन भगवन्तं विशिनष्टि—यज्ञलिङ्ग इति, यज्ञमूर्तिरित्यर्थः । अनेन धर्मार्थकामरूपविविधफलदातृत्वमुक्तम् । मोक्षदातृत्वमप्याह—जनार्दन इति । जनामविद्यामर्दयति निवर्तयतीति तथोक्तः ॥ १३ ॥ ❀ ❀ एवमुक्तो मनुराह—आदेशे इति । भगवतस्तव आदेशे प्रजासर्गाद्याज्ञायामहं वर्तेय परन्तु इह अस्मिन् कार्ये स्थानमपेक्षितं तत्तु न दृश्यते । अतः प्रजानां मम च निवासस्थान-

---

१. स्वसाभर्थ्येन ख. । २. आविर्भवन्ति स्भ ।

मनुजानीहि प्रदर्शयेत्यन्वयः। स्थानप्रदाने त्वमेव समर्थोऽसीति सूचयन्सम्बोधयति—हे प्रभो इति। यदि किञ्चित्पापं प्रतिबन्धकं तदापि त्वं तन्निवर्तने समर्थोऽसीत्याशयेन पुनः पुनः सम्बोधयति—अमीवसूदनेति, हे पापनाशनेत्यर्थः ॥ १४॥ ❀ ❀ ननु भूमिरेव सर्वभूतानां स्थानमस्तीति चेत्तत्राह—यदिति। सर्वसत्त्वानां सर्वप्राणिनां यत् ओको निवासस्थानं मही सा तु महाम्भसि महति जले निमग्ना अन्तर्गताऽस्ति, अतोऽस्या देव्या भूमेरुद्धरणे यत्नो विधीयताम्। एतस्या उद्धारेऽपीदानीं त्वमेव समर्थो दृश्यसे इति सूचयन् सम्बोधयति—देवेति ॥ १५॥ ❀ ❀ एवमुक्तो ब्रह्मा किमकरोदित्यपेक्षायामाह—परमेष्ठीति। परमेष्ठी तु ब्रह्मापि यथा मनुनोक्तं तथा अपां मध्ये आसन्नां निमग्नां गामवेक्ष्य ज्ञानदृष्ट्या दृष्ट्वा एनां भूमिमहं कथं समुन्नेष्ये उद्धरिष्यामीति धिया चिरं दध्यौ चिन्तयामासेत्यन्वयः॥ १६॥

### हिन्दी अनुवाद

जिनपर यज्ञमूर्ति जनार्दन भगवान् प्रसन्न नहीं होते; उनका सारा श्रम व्यर्थ ही होता है; क्योंकि वे तो एक प्रकारसे अपने आत्माका ही अनादर करते हैं॥ १३॥ मनुजीने कहा—पापका नाश करनेवाले पिताजी! मैं आपकी आज्ञाका पालन अवश्य करूँगा, किन्तु आप इस जगत्में मेरे और मेरी भावी प्रजाके रहनेके लिए स्थान बतलाइये॥ १४॥ ❀ ❀ देव! सब जीवोंका निवासस्थान पृथ्वी इस समय प्रलयके जलमें डूबी हुई है। आप इस देवीके उद्धारका प्रयत्न कीजिये॥ १५॥ ❀ ❀ श्रीमैत्रेयजीने कहा—पृथ्वीको इस प्रकार अथाह जलमें डूबी देखकर ब्रह्माजी बहुत देरतक मनमें यह सोचते रहे कि "इसे कैसे निकालूँ" ॥ १६॥

**सृजतो मे क्षितिर्वार्भिः प्लाव्यमाना रसां गता। अथात्र किमनुष्ठेयमस्माभिः सर्गयोजितैः॥**
**यस्याहं हृदयादासं स ईशो विदधातु मे॥ १७॥**
**इत्यभिध्यायतो नासाविवरात्सहसानघ। वराहतोको निरगादङ्गुष्ठपरिमाणकः॥ १८॥**
**तस्याभिपश्यतः खस्थः क्षणेन किल भारत। गजमात्रः प्रववृधे तदद्भुतमभून्महत्॥ १९॥**
**मरीचिप्रमुखैर्विप्रैः कुमारैर्मनुना सह। दृष्ट्वा तत्सौकरं रूपं तर्कयामास चित्रधा॥ २०॥**

### श्रीधरस्वामिविरचिता भावार्थदीपिका।

चिंतामेवाह। सृजतः सतः। वार्भिरद्भिः रसां रसातलम्। ईश्वरेण सर्गे नियुक्तैः मेऽनुष्ठेयं स एव विदधातु संपादयतु ॥ १७॥ ❀ ❀ वराहतोकः सूक्ष्मो वराहः॥ १८॥ ❀ ❀ खस्थ आकाशे स्थितः सन्॥ १९॥ ❀ ❀ चित्रधा अनेकधा॥ २०॥ २१॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः।

प्लाव्यमाना चंचलीक्रियमाणा। रसातलं रसातलोपलक्षितं गर्भोदं गतेत्यर्थः। रसातलस्य भूविवरत्वात्तत्र भुवो मज्जनानुपपत्तेः॥ १७॥ ❀ ❀ 'तोकं पुत्राल्पयोरपि' इति कोशात्। निरगादित्युक्तेर्न पुत्रत्वादिव्यवहारस्तत्त्वे तु प्रसूताभवदित्यादि ब्रूयादिति भावः। परिमाणत इति। प्रथमार्थे तसिः वराहचरितस्य सर्वाघहारित्वेन तदाकर्णनेच्छुं नृपमाहानघेति॥ १८॥ ❀ ❀ तस्य ब्रह्मणः तत्तस्य वर्द्धनम्॥ १९॥ ❀ ❀ तर्कयामास विचारयामास॥ २०॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

रसातलं तदवकाशदेशपर्य्यन्तं गर्भोदे मग्नेत्यर्थः। अन्यथा रसातलस्य भूविवरत्वेन तत्र भुवो मज्जनानुपपत्तेः। अथाऽतः यस्येत्यर्द्धकम्। हृदयान्नाभिसरोजात्संकल्पमात्राद्वा मे अनुष्ठेयं कर्त्तव्यं सर्गम्। अनुष्ठेयमित्यध्याहारात् "कर्त्तव्यं करुणासिन्धुस्तीर्थकीर्तिरधोक्षज" इत्यर्द्धं केनाप्यागन्तुकं कल्पितमिति निश्चीयते॥ १७॥ ❀ ❀ अङ्गुष्ठाग्रप्रमाणतस्तावन्मात्रमङ्गीकृत्येत्यर्थः। ब्रह्मनासात उत्पन्नत्वेऽपि न ब्रह्मपुत्रत्वव्यवहारः तादृशशुद्धभावाभावात्किन्तु वराहतोकत्वव्यवहार एव अङ्गुष्ठपरिमाणक इति काचित्कपाठस्तु अङ्गुष्ठशिरोमात्र इति वक्ष्यमाणत्वादङ्गुष्ठप्रमाण इति तद्व्याख्यानाच्च हेयः॥ १८॥ ❀ ❀ गजमात्रस्तद्वत्परिमाणकः वर्द्धनम्॥ १९॥ ❀ ❀ तर्कयामास ब्रह्मा विचारितवान्॥ २०॥

---

३. प्राचीने पाठे 'सृजतो मे' अतः श्लोकात्पूर्वं—पीतं मया जलं सर्वं पृथिवी चापि वेशिता। प्रजा देवासुरपितॄन् मनुष्यशुपक्षिणः॥ सरीसृपा नगा नागा भूतान्युच्चावचानि च—अयं सार्धैकश्लोकोऽधिकः।

### श्रीमद्वीरराघवव्याख्या

चिन्तामेव प्रपञ्चयति । पीतमिति । सर्वं कृत्स्नं जलं प्रालयिकं जलं मया पीतं ततः पृथिवी च निवेशिता स्थापिता देवासुरादीन्प्रजाः मे मम सृजतः सतः वार्भिः जलैः प्लाव्यमाना मज्जमाना रसा रसातलं गता प्राप्ता । अथानन्तरं सर्गे योजितैः प्रयुक्तैरस्माभिः किमनुष्ठेयं किं विधेयं यस्य भगवतो हृदयात्सङ्कल्पादहमासमुद्भूवं स ईशो मे भगवान् विदधातु अनुष्ठेयं सम्पादयतु चिन्तां निगमयन्वराहावतारं प्रस्तौति । इतीति । इत्युक्तरीत्याभिध्यायतः चिन्तयतो ब्रह्मणो नासाविवरान्नासिकाविवराद्वराहतोकः वराहपोतः अङ्गुष्ठपरिमाणतः । प्रातिपदिकार्थे तसिः । निरगान्निर्गतोऽभूत् । हेऽनघ ! विदुर ! न चानेन चतुर्मुख एव वराहरूपोऽभवदिति शङ्क्यं 'तर्कयामास चित्रधा' किमेतत्सौकरव्याजं सत्त्वं दिव्यमिति चतुर्मुखेनाप्यज्ञायमानतया विचारितत्वोक्तेः ॥ १८ ॥ ❀ ❀ तस्य ब्रह्मणः अभिपश्यतः सतः सूक्ष्मो वराहः खस्थ आकाशे स्थितः सन् क्षणेन गजमात्रः गजपरिमाणः प्रववृधे तदुत्पत्तिराकाशारोहणे वृद्धिश्चेति एतत्पश्यतामाश्चर्यमिवाभूत् इवशब्देन पश्यतामेवाश्चर्यं न तु भगवतो वराहस्येति सूचितम् ❀ ❀ ततो मरीचिप्रभृतिभिः पुत्रैः कुमारैः सनकादिभिः मनुना सह तत्सौकरं वाराहं रूपं दृष्ट्वा ब्रह्मा चित्रधा तर्कयामास ॥२०॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

मज्जने निमित्तमाह । पीतमिति । यावता पीतेन जलस्योद्रेकः शाम्यति तावत्सर्वमित्युच्यते. न तु निःशेषत्वेन । अन्यथा वार्भिः प्लाव्यमानेत्यसंगतं स्यात् निवेशिता निवेशनीकृता वार्भिर्जलैः प्लाव्यमाना चञ्चलीक्रियमाणा लयं गता मग्ना प्रजानां भारेणेति शेषः । सृजतः सतः अत्रास्यामवस्थायाम् ॥ १७ ॥ ❀ ❀ इदमेवानुष्ठेयमित्याह । यस्येति । सत्यसंकल्पस्य हरेर्भक्तत्वात् ब्रह्मापि सत्यसंकल्प इति इममर्थं ध्वनयन् हरेः प्रादुर्भावप्रकारमाह । इतीति । नासाविवरान्नासाविलात्सहसा सद्यो निरूपितत्वेन वराहतोको वराहशिशुः ॥ १८ ॥ ❀ ❀ तस्य ब्रह्मणः खस्थ आकाशे स्थितः ॥ १९ ॥ ❀ ❀ कुमारैः सनकादिभिः ॥ २० ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

रसां गतेति । तदवकाशपर्य्यन्तं मग्नेत्यर्थः । रसाया अपि महीविवरत्वात् यस्येत्यर्द्धकम् । हृदयादासं सङ्कल्पमात्रात् ॥ १७ ॥ ❀ ❀ वराहतोको निरगादिति । तादृशभावाभावान्न पुत्रत्वादिव्यवहार इति ज्ञापितम् । अङ्गुष्ठपरिमाणक इति क्वचित् किन्तु स्वामिभिरग्रे अङ्गुष्ठाग्रप्रमाण इत्येव लिखिष्यते ॥ १८—२१ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

रसां रसातलोपलक्षितं गर्भोदमित्यर्थः । रसातलस्य भूविवरत्वात्तत्र भुवो मज्जनानुपपत्तेः विदधात्विति अनुष्ठेयमित्यस्य पूर्वेस्यानुषङ्गः ॥ १७ ॥ ❀ ❀ वराहतोकः सूक्ष्मो वराहः ॥ १८ ॥ ❀ ❀ गजमात्रः हस्तिशरीरपरिमितः ॥ १९—२१ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

ननु अपाद्वायुं सहाम्भसेति पूर्वोक्तेः जलपाने कृते पुनर्मही कुत्रासेत्यत आह । सृजतः पुनः प्रयोजनविशेषार्थं जलानि मुञ्चतः सत इत्यर्थः । वार्भिर्जलैः रसां रसातलं विदधातु सम्पादयतु ॥ १७ ॥ ❀ ❀ वराहतोकः वराहबालक इत्यर्थः ॥१८—२१॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

तथाप्यस्फुरणे स्वातन्त्र्यं परित्यज्य भगवदधीनतया भगवत्कृपया साधनं स्फुरिष्यतीति सोपालम्भमिव तस्य चिन्तामाह—सृजत इति । पूर्वं स्थापिताऽपि इयं भूमिर्भारेण पुनर्निमग्ना । भारे हेतुः—मे अक्षिभिरिन्द्रियैः, वाग्भिश्च सृजतः सतः । अक्षिभिर्वाग्भिरिति स्त्रीपुरुषाविव निर्दिष्टौ । तथाभावसर्गे दैत्यांशा एव प्रायेणोत्पन्ना इति तेषां भारहेतुत्वं पूर्वमुक्तम् , वक्ष्यते च । अत एव प्लाव्यमाना जले निमग्ना रसातलं गता, तदवध्युद्धृतत्वात् । अथ तदनन्तरम् , अत्र एतादृशेऽर्थे, अस्माभिः किं कर्तव्यम् । न च तूष्णीं स्थातुं शक्यते सर्गयोजितैः, सर्गकरणमेव ह्यस्मदादीनां प्रयोजनम् ॥ १७ ॥ ❀ ❀ एवं पारतन्त्र्येणाऽपि विचारे क्रियमाणे यदोपायो न स्फुरितः, तदा भगवत्येव भारं दत्तवान् । भारदाने हेतुमाह—यस्याहमिति । यस्य हृदयात् , विचारपूर्वकं यस्मादहं जातः । सर्गार्थमेनमुत्पादयामि, अनेन कार्यं सेत्स्यतीति प्रथममेव विचार्य ब्रह्मा सर्गे नियोजितः । ततो ज्ञायते—इदमपि कार्यं मम चेदशक्यम् , तदा भगवानेव करिष्यति, यत इदमपि पूर्वमेव विचारितवान्—अयमसमर्थः, इदमप्यहमेव करिष्यामि । यत ईशः, समर्थेन हि कर्तव्यम् , न तु सेवकेनैवेति नियमः । उभयोः सामर्थ्ये सेवकेनैव कर्त्तव्यम् । अत्र तु स एव ईश इति मे कर्तव्यं विदधातु । नन्वशक्तोऽपि लोके सेवक एव करोति, न प्रभुः शक्तोऽपि । तत्राऽऽह—करुणासिन्धुरिति । सेवकस्याऽतिकष्टेन कार्यं सिद्ध्यति, स्वस्य त्वनायासेन । तदा करुणावान् स्वयमेव करोति, परदुःखेन दुःखितत्वात् । ननु करुणावानपि ऐश्वर्यगुणयोगात् अशक्तैः सेवकैरेव कार्यं कारयति, अन्यथेशत्वं न स्यात् । तत्राऽऽह—तीर्थकीर्तिरिति । करुणासिन्धुत्वेन परिहारे सिद्धेऽपि दृष्टान्तार्थमिदं विशेषणम् । तीर्थरूपा कीर्तिर्यस्येति । तीर्थं हि सर्वेषां पापं दूरीकरोति,

तत्पापं तीर्थे एव तिष्ठति। एवं जानन्नपि भगवान् स्वस्य कीर्तिं तीर्थरूपां कृतवान् अतो यथैतत्करोति, तथा स्वयमेव भूम्युद्धारमपि करिष्यतीति भावः। किञ्च, अधोक्षजो भगवान्, अधः अक्षजं ज्ञानं यस्मात्। इन्द्रियातीतोऽपि सर्वेषां सर्वेन्द्रियहितं करोति, ज्ञानरूपो भूत्वा मोक्षं प्रयच्छतीति। अथवा, व्यवहारातीतत्वेन लोकानामुद्धारार्थं कीर्तिमेव तथा कृतवानिति तथा करणे अधोक्षजत्वं हेतुः॥ १८॥ ❀ ❀ अयं पक्षः फलपर्यवसायी जात इत्याहुः—इत्यभिध्यायत इति। इति अमुना प्रकारेण अभितो ध्यायतः। स एवैतत्कार्यं करिष्यतीति निर्द्धार्य, तथैव चित्तं दृढं विधाय भावयन्, तथैव क्षणे क्षणे कदा भगवान् केन रूपेण करिष्यतीति अभितो ध्यानं करोति। तदा कार्याविष्टचित्तेन यज्ञरूपे भगवति ध्या¹ते कृतः स्थानाभावात् आध्यात्मिकं रूपमप्रकटमेव कृत्वा आधिदैविकेन रूपेण प्रकटो जातः। क्रियापि तत्र प्रविष्टेत्याधिदैविकत्वम्। इतः पूर्वं तु आध्यात्मिक एव यज्ञः। स त्रेधा संपद्यते—यजमाननिष्ठप्रयत्नेन, वैदिकज्ञानेन, ध्यानारूढस्वरूपेण च। स त्रिविधोऽपि एकीभूतो भगवान् वराहः। तस्य क्रिययैव यजमानस्य क्रिया, स्वरूपं तु तदेव सर्वयज्ञात्मकं साधिकरणम्। श्रुतिस्तत्रैवान्तर्भूतेति ज्ञापयितुं ब्रह्मणः श्वासमार्गात् निर्गतः, 'निःश्वसितमस्य वेदाः' इति श्रुतेः। वरानाहरतीति वराहः, सर्वकामप्रदः, स चासौ तोकश्च। तोको बालकः। आध्यात्मिकादिरूपेषु प्रबुद्धस्यैव फलसाधकत्वम्, एकदेशत्वात्। अत्र तु लोकोऽपि फलसाधकः, सफलत्वात्। सहसेति ध्यानांशव्यावृत्त्यर्थम्, अन्यथा एकेनाप्यंशेन आध्यात्मिकता स्यात्। अनघेति संबोधनं विश्वासार्थम्, न हि केनाप्यंशेन स पापो विश्वासमेति। तस्य रूपस्य कालसारेश्वररूपत्वज्ञापनाय उत्पत्तौ अङ्गुष्ठपर्वमात्रप्रमाणेन वहिर्निर्गतः। 'अङ्गुष्ठमात्रः पुरुषो अङ्गुष्ठं च समाश्रितः' 'ईशः सर्वस्य जगतः' 'प्रभुः प्रीणाति विश्वभुक्' इति श्रुतेरङ्गुष्ठमात्रप्रमाणस्यैव विश्वभोक्तृत्वमीशत्वं चोच्यते। यज्ञरूपस्यैव विश्वभोक्तृत्वम्। तस्यैव हि सर्वमन्नं सर्वे पशवः। अङ्गुष्ठशब्दः सर्वत्राऽङ्गुष्ठशिरोवाची॥ १९॥ ❀ ❀ एवमाधिदैविकस्योत्पत्तितः स्वरूपमुक्तम्। कृ²तितः स्वरूपं वक्तुं भगवत्त्वज्ञापनाय कालादेः परिच्छेदकत्वाभावाय तस्यैव सूक्ष्मस्य स्थूलतां निरूपयति—तस्याऽभिपश्यत इति। तस्य ब्रह्मणोऽभितः सर्वतः पश्यतः सतः रूपान्तरग्रहणे लोके जवनिकाऽपेक्ष्यते। अत्र तु पश्यत एव पूर्वमङ्गुष्ठमात्रोऽपि पश्चाद्गजमात्रं जातः। तिरोभावशङ्कानिवारणार्थं खस्थः क्षणेनेत्युक्तम्। आकाशस्थितत्वान्नाऽऽवरणम्। वृद्धौ लौकिकस्य कालस्याऽभावान्नानावरणेन तस्यैव वृद्धिः। किलेति प्रसिद्धेः, नात्र प्रमाणं वक्तव्यमित्यर्थः। भारतेति विश्वासार्थम्। एवं माहात्म्यज्ञानपूर्वकं श्रोतृदोषं परिहृत्य स्थूलं रूपमाह—गजमात्रं प्रववृधे इति। गजो हस्ती, तन्मात्रमिति षष्टिहायनरूपम्। वैष्णवशास्त्रप्रसिद्धगजो वा गजेन्द्रः। मात्रपदमनिर्द्धारणासूचकम्, अन्यथा द्वितीयक्षणे ततोऽपि तावन्मात्रवृद्धः स्यात्। तथा च, क्षणस्येन्द्रियार्थसंयोग एवोपक्षीणत्वात् क्षणेनेति वचनं व्यर्थं स्यात्। प्रकर्षेण ववृधे। प्रकर्षः सर्वावयवेषु यथायोग्यवृद्धिः, अत एव तदद्भुतमभूत्। यत्रैव पश्यतां युक्त्यस्फुरणं कार्यदर्शनं च तदेवाऽद्भुतम्। महदिति कार्यदर्शनमपि संदिग्धम्। न हि समुद्रः सान्तो द्रष्टुं शक्यते, तथा भगवच्छरीरमित्यर्थः॥ २०॥

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

इत्यभिध्यायत इत्यत्र। क्रियाऽपि तत्र प्रविष्टेति। क्रियायां प्रविष्टः क्रियावान् आध्यात्मिकः पूर्वकाण्डः, अत्र तु क्रियैव क्रियावती (ति) प्रविष्टेत्यर्थः। इतः पूर्वमिति। वराहावतारात् पूर्वम्। साधिकरणमिति। सदेवयजनम्। कालसारेति। कालाधिदैविकेत्यर्थः॥ १९॥ ❀ ❀ तस्येत्यत्र तिरोभावशङ्कैव कथमित्याकांक्षायामावरणनिवारणमुखेन तां स्फुटीकुर्वन्ति—आकाशेत्यादि। यथा चतुरङ्गुलाऽपि कर्कटी वल्लीविलग्ना भूमिष्ठा एकरात्रेण पञ्चहस्ता दशहस्ता च पोषकद्रव्यकृतपूर्वरूपाद्यावरणेन तिरोहितपूर्वपरिमाणा भवति, तथाऽत्राकाशस्थत्वान्नावरणं शक्यवचनमिति ज्ञापनाय खस्थ इत्युक्तमित्यर्थः। यथाऽत्र 'कश्चित् सामुद्रः पक्षी भाषायां कुंकणे प्रसिद्धो वासलीतिनामा व्योम्न्येवाऽत्युच्चप्रदेशेऽण्डं ददाति। तच्चाऽण्डं निराधारं पतत्पतदेव कालेन वृद्धं पक्वं विदीर्णं च भवति, तज्जातश्च पुनरुड्डीय गच्छति, न भूमिष्ठान् स्पृशति' इति कुंकणदेशे प्रसिद्धम्, तद्वदप्यत्र न वक्तुं शक्यमिति ज्ञापनाय क्षणेनेत्युक्तमित्याशयेनाहुः—वृद्धावित्यादि। अनिर्द्धारणासूचकमिति। कालहेतुत्वानिर्धारणायाः सूचकम्। तत्रेत्युक्तिः (?) अन्यथेत्यादि॥ २०॥

### श्रीगिरिधरकृता बालप्रबोधिनी।

चिन्तामेव दर्शयति—अत्र कचित्पुस्तके 'पीतं मया जलं सर्वं पृथिवी न निवेशिता' इति श्लोकार्धमधिकमस्ति। मे मम देवासुरादीन् प्रजाः सृजतोऽपि सतः वार्भिर्जलैः प्लाव्यमाना क्षितिः रसां रसातलं गता। अथानन्तरमिदानीं अस्माभिः किमनुष्ठेयं किं कर्तव्यम्? न च तूष्णीमेव स्थातुं शक्यं भगवता सर्गकरणे नियुक्तत्वात्, तथात्वे च स्वाम्याज्ञोल्लङ्घनेन सेवकस्य मम महानपराधः स्यादित्याशयेनाह—सर्गयोजितैरिति॥ १७॥ ❀ ❀ एवं चिरं चिन्तनेऽपि तदुपायमप्रतिलभ्य भगवन्तमेव प्रार्थयति—यस्येति। "अङ्गादङ्गात्सम्भवसि हृदयादभिजायसे॥ तस्मात्पुत्रेति नामासि" इति श्रुतेर्यस्य हृदयादहं पुत्रतया

---

१. ध्यानं कृते क. ख. छ. ङ. २. कृतितः क.

जातोऽस्मि स एवेशः सर्वथा सर्वकरणे समर्थो भगवान् यन्मे मया कर्तव्यं तद्विदधातु सम्पादयत्वित्यन्वयः। ननु लोके समर्थोऽपि सेवकेनैव कार्यं कारयति असमर्थोऽपि सेवक एव करोति न स्वामीति स एव कथं करिष्यतीत्याशङ्क्याह—करुणासिन्धुरिति। मम सङ्कटदर्शनाक्षमया स्वयमेव करिष्यतीति भावः। करुणासमुद्रत्वे ज्ञापकमाह—तीर्थकीर्तिरिति। एवमलौकिककरुणायै च तस्य पवित्रा कीर्तिः सर्वत्र प्रसृतेति भावः। सोऽत्र कुत्रास्ति यस्तव प्रार्थनां श्रोष्यतीत्यपेक्षायामाह—अधोक्षज इति। अधः अक्षजं ज्ञानं यस्मात्स तथा, सर्वान्तरात्मेत्यर्थः॥ १८॥ ❀ ❀ इत्येवमभिध्यायतो ब्रह्मणो नासाविवरात् सहसाऽकस्मात् अङ्गुष्ठ-परिमाणकः अङ्गुष्ठशिरोमात्रप्रमाणको वराहतोकः सूक्ष्मो वराहो निरगात्। अचिन्त्यशक्तेर्भगवतो लीलायां निर्दोषस्यैव विश्वासो भवति तादृशश्च त्वमिति सूचयन् सम्बोधयति—अनघेति॥ १९॥ ❀ ❀ हे भारत तस्य ब्रह्मणः अभिपश्यत एव सतः खस्थ आकाशे स्थित एव सूक्ष्मो वराहः क्षणेनैव गजमात्रः प्रववृधे गजपरिमाणो जातः। तत् पश्यत एव क्षणमात्रेणैव वर्धनं महदद्भुत-मत्याश्चर्यजनकमभूत्॥ २०॥

### हिन्दी अनुवाद

जिस समय मैं लोकरचनामें लगा हुआ था, उस समय पृथ्वी जलमें डूब जानेसे रसातलको चली गयी। हमलोग सृष्टिकार्यमें नियुक्त हैं, अतः इसके लिये हमें क्या करना चाहिये! अब तो जिनके सङ्कल्पमात्रसे मेरा जन्म हुआ है, वे सर्वशक्तिमान् श्रीहरि ही मेरा यह काम पूरा करें"॥ १७॥ ❀ ❀ निष्पाप विदुरजी! ब्रह्माजी इस प्रकार विचार कर ही रहे थे कि उनके नासाछिद्रसे अकस्मात् अँगूठेके बराबर आकारका एक वराह शिशु निकला॥ १८॥ ❀ ❀ भारत, बड़े आश्चर्यकी बात तो यही हुई कि आकाशमें खड़ा हुआ वह वराह-शिशु ब्रह्माजीके देखते-ही-देखते बड़ा होकर क्षणभरमें हाथीके बराबर हो गया॥ १९॥ ❀ ❀ उस विशाल वराह-मूर्तिको देखकर मरीचि आदि मुनिजन, सनकादि और स्वायम्भुव मनुके सहित श्रीब्रह्माजी तरह-तरहके विचार करने लगे—॥ २०॥

**किमेतत्सौकरव्याजं सत्त्वं दिव्यमवस्थितम्। अहो बताश्चर्यमिदं नासाया मे विनिःसृतम्॥ २१॥**
**दृष्टोऽङ्गुष्ठशिरोमात्रः क्षणाद्गण्डशिलासमः। अपि स्विद्भगवानेष यज्ञो मे खेदयन्मनः॥ २२॥**
**इति मीमांसतस्तस्य ब्रह्मणः सह सूनुभिः। भगवान् यज्ञपुरुषो जगर्जागेन्द्रसन्निभः॥ २३॥**
**ब्रह्माणं हर्षयामास हरिस्तांश्च द्विजोत्तमान्। स्वगर्जितेन ककुभः प्रतिस्वनयता विभुः॥ २४॥**

### श्रीधरस्वामिविरचिता भावार्थदीपिका

पूर्वमंगुष्ठाग्रप्रमाणो दृष्टः। गंडशिला स्थूलपाषाणस्तत्समः। यज्ञो विष्णुः। निजरूपतिरोधानेन मे मनः खेदयन्॥ २२॥ ❀ ❀ इति मीमांसमानस्य सतः। जगर्जागर्जत्। 'गिरींद्रतुल्यः॥ २३॥ ❀ ❀ गर्जनप्रयोजनमाह। ब्रह्माणमिति॥ २४॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

सूकर एव सौकरस्तस्य व्याजोऽपदेशो यस्येति तत्सौकरव्याजं सत्त्वं जीवः। "सत्त्वं जीवे गुणे धैर्ये' इति धरणिः॥ २१॥ ❀ ❀ "गलिताः स्थूलपाषाणा गंडशैला इति स्मृताः" इति। "यज्ञो वै विष्णुः" इति श्रुतेः॥ २२॥ ❀ ❀ अगेंद्रो महागिरिर्वा नीलपर्वतः। सूनुभिर्मरीच्यादिभिः॥ २३॥ ❀ ❀ प्रतिस्वनयता प्रतिध्वनिमतीः कुर्वता॥२४॥

### श्री राधारमणदासगोस्वामिविरचिता दीपिनीव्याख्या।

शूकरव्याजं आकारेण शूकरसदृशं सत्त्वं प्राणिविशेषः 'सत्त्वं गुणे पिशाचादौ बलेपि द्रव्यभावयोरि'ति मेदिनी॥ २१॥ ❀ ❀ निजरूपं चतुर्भुजं तस्य तिरोधानेनादृष्टरूपाविर्भावनेन च संशयैर्मनः खेदयन्॥ २२॥ ❀ ❀ गर्जनस्य मैत्रेयकथ-नात्पूर्वं चिरमतीतत्वादगर्ज्जदिति लकारव्यत्ययो व्याख्यातः॥ २३॥ ❀ ❀ प्रतिस्वनयता प्रतिध्वनिमतीः कुर्वता॥ २४॥

### श्रीमद्वीरराघवव्याख्या

तर्कमेव प्रपञ्चयति। किमिति द्वाभ्याम्। दिवि भवं दिव्यं परमव्योमनिलयं शुद्धसत्त्वमयं परब्रह्मसत्त्वं सूकरः व्याजं सूकरः व्याजः छद्मवेषो यस्य स तदेवमवस्थितं किंशब्दो विचारद्योतकः मे मम नासाया इदं वराहरूपं विनिःसृतं विनिर्गतमहो बताश्चर्ये॥ २१॥ ❀ ❀ अङ्गुष्ठस्य शिरः उर्ध्वं पर्व तदेव मात्राप्रमाणं यस्य सः प्रथमं दृष्टः पश्चात् क्षणेन गण्डशिलासमः स्थूलपाषाणमात्रो दृष्टः यज्ञो विष्णुः यज्ञो वै विष्णुरिति श्रुतेः मे मनः खेदयति निजरूपतिरोधानेन मोहयन्नेष भगवानपि स्विदेष वराहमूर्तिर्भगवानपिस्वित् अपिस्विच्छब्दः सम्भावनायां भगवान् स्यादित्यर्थः॥ २२॥ ❀ ❀ तर्कमुपसंहरन् वाराहतनोर्भग-वतश्चरित्रं संग्रहेणाह इतीत्यादिना यावदध्यायसमाप्ति। इत्युक्तरीत्या सूनुभिर्मन्वादिभिः सह तस्य ब्रह्मणः मीमांसतः तर्कयतः

सतः अगेन्द्रसन्निभः गिरीन्द्रसदृशो भगवान् यज्ञपुरुषः जगर्जागर्जत् ॥ २३ ॥ ❀ ❀ ब्रह्माणमिति । विभुर्हरिर्वराहः ककुभः दिशः प्रतिस्वनयता प्रतिध्वनियुक्ताः कुर्वता स्वगर्जितेन ब्रह्माणं तांश्च द्विजोत्तमान् मरीच्यादीन् हर्षयामास ॥ २४ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

सौकरं सूकरस्य विद्यमानं तर्कयामास मीमांसितवान् मीमांसाप्रकारं वक्ति किमेतदिति । अहो इत्यनेन निकटवर्तिनो मुनीनुन्मुखीकरोति बत खेदयन् ॥ २१ ॥ ❀ ❀ किं बहुनेदं महाश्चर्यम् । अङ्गुष्ठशिरोमात्रः अङ्गुष्ठाग्रपरिमाणः "गलिताः स्थूलपाषाणा गण्डशैला इति स्मृतः" एष वराहो मे मनः खेदयन् यज्ञो भगवानपिस्वित् ॥ २२ ॥ ❀ ❀ ब्रह्मणः सहसोत्पन्नाज्ञाननिरासप्रकारमाह । इतीति । मीमांसतो मीमांसमानस्य सतः मरीच्यादिसूनुभिः ॥ २३ ॥ ❀ ❀ गर्जितफलमाह । ब्रह्माणमिति । प्रतिस्वनयता प्रतिध्वनिमतीः कुर्वता गर्जितेन ॥ २४ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

खेदयन् अदृष्टरूपाविर्भावेन संशयैर्मनः क्षोभयन् ॥ २२ ॥ ❀ ❀ जगर्ज्ज तदनुमतिं कुर्वन् हुङ्कृतवानिव । अगेन्द्रो महान् गिरिः ॥ २३ ॥ ❀ ❀ स्वेन असाधारणेन गर्जितेन ॥ २४ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

यज्ञः प्रथममन्वन्तरावतारः । खेदयन् अदृष्टरूपाविर्भावेण संशयैर्मनः क्षोभयन् ॥ २२—२३ ॥ ❀ ❀ ककुभो दिशः प्रतिस्वनयता प्रतिध्वनिमतीः कुर्वता ॥ २४ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

गण्डशिलासमः स्थूलपाषाणतुल्यः ॥ २२ ॥ इत्येवं चिन्तयतः सतः ॥ २३ ॥ २४ ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

तदा तेषां वस्तुनिर्द्धारार्थं विमर्शो जात इत्याह—मरीचिप्रमुखैरिति । मरीचिरेव प्रमुखो मुख्यो येषां ब्राह्मणानाम् । त्रिविधास्तत्र ब्रह्मणः पुत्राः, ब्राह्मणाः, क्षत्रियाः, कुमाराश्च । कुमाराः सनकादयोऽनुपनीताः । अष्टमे वर्षे ह्युपनयनम् , ते तु पञ्चवर्षा भगवदस्मरणक्षणैः; तावता कालेन पञ्चवर्षाणामेव निष्पादितत्वात् , देहोपभोक्तृकालस्यैव कर्मनियामकत्वात् । विशेषेण प्रान्ति पूरयन्तीति विप्रा ब्राह्मणा एव । मनुः क्षत्रियः । एवं मार्गत्रयस्थितैः सर्वैः सह । चित्रधा विचित्रप्रकारेण । 'सङ्ख्याया विधार्थे धा' इत्यत्र योगविभागाच्चित्रधेति सिद्ध्यति । तत्सौकरं रूपमिति । लोके निन्दितरूपत्वाद्यथा मलान्मधुकैटभादेरुत्पत्तिः, तथाऽस्यापि भवेद्वराहस्य । दैत्योऽपि वराहः श्रुतिसिद्धः, 'वराहोऽयं वाममोषः' इति श्रुतेः ।' 'पशूनां वा एष मन्युर्यद्वराहः' इति क्रोधावतारो वा भवेत् । एवमनेकप्रकारेण तर्कितवन्तः । तर्को नाम प्रत्यक्षतो दृष्टस्य पदार्थस्य निर्वाहिकोपपत्तिः, यस्मिन्पदार्थे कल्प्यमाने दृष्टोऽर्थ उपपद्यते । तत्र प्रकृते कोऽपि पक्षो न निर्द्धारित इति चित्रधेत्युक्तम् ॥ २१ ॥ ❀ ❀ यदा लोकवेदानुसारी तर्कः पदार्थनिर्द्धारणे अशक्तः, तदा अलौकिकप्रकारेण पदार्थमुत्प्रेक्षन्ते—किमेतदिति । सूकर इति व्याजमात्रम् ; दिव्यमेवैतत्सत्त्वम्, न प्राकृतम् । दिव्य[1]त्वं निरूपयति—अहो इत्याश्चर्ये बतेति खेदे । तेजःप्रागल्भ्यादेः परिदृश्यमानत्वादस्मदाद्यपेक्षयाऽप्यलौकिकतेजस्त्वात् किञ्चित्कारणभूतं तत्त्व[2]मेव परं तस्य सूकररूपताऽत्याश्चर्ये हेतुः । खेदस्तु महतो विरूपत्वात् । आश्चर्यान्तरमाह—आश्चर्यमिदमिति । कालकर्मस्वभाववशेन महतोऽपि हीनभावः संभवति, तथापीदमत्याश्चर्यम् , यन्ममैव नासापुटान्निःसृतम् । न हि पुरुषात्सूकरा उत्पद्यन्ते, तत्राऽपि नासिकायाः अनेन योनिरपि विजातीया नास्तीत्युक्तम् ॥ २२ ॥ ❀ ❀ आश्चर्यान्तरमाह—दृष्ट इति । अङ्गुष्ठस्य शिर उत्तमं पर्व, तावन्मात्रा प्रमाणं यस्य । दृष्ट इति । प्रथमदर्शनम् । नासाद्वारस्य तावन्मात्रत्वादुपपत्त्योक्तम्, ब्रह्मणो ज्ञानस्य कालाद्यतीन्द्रियविषयत्वाद्वा । अत एव क्षणादित्युक्तम् । ब्रह्मवाक्यत्वान्न लौकिकन्यायेनाऽल्पः कालो लक्ष्यते । पर्वताच्च्युताः स्थूलाः पाषाणाः गण्डशिलाः, तैरुपमीयत इति पुरुषगुरुत्वादिभिरुच्यते । अचेतनदृष्टान्तः स्वस्य पर्वतत्वेन वज्रेण पक्षच्छेद इव खेदसूचकत्वात् । आश्चर्यखेदौ वा क्रमेण निरूपितौ । एवमलौकिकप्रकारेणाऽपि पदार्थे तर्क्यमाणे निर्द्धारो न भवति । बीजमेव हि तर्केण निर्द्धारितम्, न प्रयोजनम् । न हि दिव्यस्याऽपि सत्त्वस्य प्रकृते प्रयोजनमस्ति । भूम्युद्धारार्थं भगवान् ध्यातः, अत एव स एव भूम्युद्धारार्थमेवंरूपेण प्रकट इति सम्भावना । ननु पुरुषोत्तमस्य किं लोकवेदनिन्दितरूपेण प्राकट्ये कारणमित्याशङ्क्य, स्वखेदजनकत्वमेव कारणमुत्प्रेक्षते—मे खेदयन् मन इति । अपीति सम्भावनायाम् । स्विदिति निश्चये । पूर्वं बहवः पक्षा उत्प्रेक्षिताः, तत्रायं निर्द्धारितः पक्षः । अतो भगवान् परमेश्वर एवाऽयम् । तस्याऽनन्तरूपेषु यज्ञश्चाऽयं भवितुमर्हति, प्रकृतोपयो-

---

१. दिव्यसत्त्वम् . घ. । २. सत्त्वमेव परं. ग. ।

गित्वात्। कालमनुरूपत्वेन दैत्यत्वं च संभाव्यते रूपेण; अन्यथा दैत्यवधो न स्यात्, मर्यादायां क्रूरेणैव क्रूरहननात्। इयं यज्ञरूपा भूमिर्वराहेणैव संरक्ष्यते। तत्र दैत्यानां यज्ञाधिकरणं वेदिर्दैत्यवधं कृत्वा यदानीयते, तदा देवानां पूर्णो यज्ञो भवति। ब्रह्मणा हि सर्वेभ्यो यज्ञा दत्ताः साधिकरणाः, तेषां च वाममोषो वराहः। हननं तु विपक्षे सति। अतस्तादृशरूपमवश्यकर्तव्यमापतितमिति, ब्रह्माणमुपालभमान इव, यज्ञ एव वराहरूपं कृतवान्। अन्यस्य बीजप्रयोजनोपपादकत्वं न सम्भवति॥ २३॥ ❀ ❀ अयमपि पक्षः कार्ये निर्व्यूढे फलतो निर्द्धारितो भविष्यतीति फलनिष्पत्तिपर्यन्तं ब्रह्मणो विचार एव जात इत्याह—इतीति। सूनुभिर्मरीच्यादिभिः सह ब्रह्मणो विचारं कुर्वत एव सतः, शीघ्रं विचारान्तरानुत्पत्तये, तेषां हृदयं ज्ञात्वा भगवान् यज्ञपुरुषो जगर्ज। पूर्वं गण्डशैलसमानोऽपि पुनस्तथा 'वृद्धया मेरुसदृशो जातः। भगवानिति ऐश्वर्यादेः प्रकटितत्वान्न हेत्वस्फूर्तिः। यज्ञांशे वराहरूपता, अधिष्ठातृरूपत्वे तु पुरुषत्वम्, तेनाऽर्धपुरुषो वराहः। अनेन ब्रह्माणं प्रति स्वस्य पुरुषरूपमपि प्रदर्शितमिति खेदोऽपि निराकृतप्रायः। यथा समेघः पर्वतो गर्जति, एवं भगवानेक एव गर्जतीत्यर्थः। संशब्दार्थश्चाऽयम्॥ २४॥

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

मरीचीत्यत्र। कुमाराणां ब्राह्मणेभ्यः पृथगुल्लेखस्य तात्पर्यमाहुः—अष्टमेत्यादि। कुमारत्वस्य वेदं तात्पर्यम्। 'वराहोऽयं वाममोषः' इति श्रुतिस्तु तैत्तिरीयसंहितापष्ठाष्टकद्वितीयप्रपाठकचतुर्थानुवाकस्था। वाममोष इति तस्य योगरूढं नाम, वामं देवानां वित्तं मुष्णातीति। तस्य च दैत्यत्वं 'सप्तानां गिरीणां परस्ताद्वित्तं वेद्यमसुराणां बिभर्ति तं जहि' इति श्रौताल्लिङ्गादेवाऽवसीयते॥ २१॥ ❀ ❀ दृष्ट इत्यत्र। अन्तःस्था (?) ङ्गुष्ठमात्रस्य दर्शनं योगिश्रेष्ठानामेवेत्याशयेनाहुः—ब्रह्मण इत्यादि। बीजमिति। दिव्यत्वम्। तेषा-मित्यादि। असुराणामपि वाममोषो वित्तवेद्यो वराहोऽस्य धारकत्वाद्वेदिरूपयज्ञभूमिधारक इत्यर्थः। ननु तर्हि तद्वधो भगवता कुतो न कृत इत्यत आहुः—हननमित्यादि। अत इति। इदानीं विपक्षसद्भावात्॥ २३॥ ❀ ❀ इतीत्यत्र। निर्व्यूढ इति। जाते। निर्व्यूह इति पाठे, निःशरीरे स्वरूपतोऽनिर्धार्यमाणे इत्यर्थः॥ २४॥

### श्रीगिरिधरकृता बालप्रबोधिनी

ततो मरीचिप्रभृतिभिर्विप्रैः कुमारैः सनकादिभिर्मनुना च सह ब्रह्मा तत्सौकरं वाराहं रूपं दृष्ट्वा चित्रधा बहुधा तर्कयामास॥ २१॥ ❀ ❀ तर्कमेव दर्शयति—दिव्यमलौकिकं सौकरव्याजं सूकरस्य व्याजश्छद्म वेषो यस्य तदेतत्सत्त्वं प्राणि किं ममाग्रेऽवस्थितम्?। अद्भुतदर्शनात् स्वखेदं सूचयति—बतेति। अहो इत्यतिशयार्थे। अत्याश्चर्यमिदम्!। किं तदित्यत आह—मे मम नासायाः सकाशाद्विनिस्सृतमिति॥ २२॥ ❀ ❀ तस्य दिव्यत्वं कथमित्यपेक्षायामाह—अङ्गुष्ठेति। अङ्गुष्ठस्य शिरः ऊर्ध्वपर्व तदेव मात्रा प्रमाणं यस्य तथाभूतः प्रथमं दृष्टः, पश्चात् क्षणेन गण्डशिलासमः स्थूलपाषाणसदृशो जातः! अपिस्विदिति सम्भावनायाम्। अत एवमेव सम्भवति एष वराहमूर्तिर्भगवान् यज्ञो विष्णुरेव मे मनः खेदयन् निजस्वरूपतिरोधानेन मोहयन् वर्तते इति॥ २३॥ ❀ ❀ तर्कमुपसंहरन् वाराहतनोर्भगवतश्चरितं संग्रहेणाह—यावदध्यायसमाप्ति। इत्येवं सूनुभिः स्वपुत्रैः सह तस्य ब्रह्मणो मीमांसतस्तर्कयतः सतः यज्ञपुरुषो भगवान् विष्णुर्जगर्ज। तद्गर्जनेन महान् शब्दो जात इति सूचयितुं विशिनष्टि—अगेन्द्रसन्निभ इति, गिरीन्द्रसदृश इत्यर्थः॥ २४॥

### हिन्दी अनुवाद

अहो! सूकरके रूपमें आज यह कौन दिव्य प्राणी यहाँ प्रकट हुआ है! कैसा आश्चर्य! यह अभी-अभी मेरी नाकसे निकला था॥ २१॥ ❀ ❀ पहले तो यह अँगूठेके पोरुएके बराबर दिखायी देता था, किन्तु एक क्षणमें ही बड़ी भारी शिलाके समान हो गया। अवश्य ही यज्ञमूर्ति भगवान् हमलोगों के मनको मोहित कर रहे हैं॥ २२॥ ❀ ❀ ब्रह्माजी और उनके पुत्र इस प्रकार सोच ही रहे थे कि भगवान् यज्ञपुरुष पर्वताकार होकर गरजने लगे॥२३॥ ❀ ❀ सर्वशक्तिमान् श्रीहरिने अपनी गर्जनासे दिशाओंको प्रतिध्वनित करके ब्रह्मा और श्रेष्ठ ब्राह्मणोंको हर्षसे भर दिया॥ २४॥

**निशम्य ते घर्घरितं स्वखेदक्षयिष्णु मायामयसूकरस्य।**
**जनस्तपःसत्यनिवासिनस्ते त्रिभिः पवित्रैर्मुनयोऽगृणन् स्म॥ २५॥**
**तेषां सतां वेदवितानमूर्तिर्ब्रह्मावधार्यात्मगुणानुवादम्।**
**विनद्य भूयो विबुधोदयाय गजेन्द्रलीलो जलमाविवेश॥ २६॥**

---

१. वृद्धयावृत्या. ख. ग.।

उत्क्षिप्तवालः खचरः कठोरः सटा विधुन्वन् खररोमशत्वक् ।
खुराहताभ्रः सित¹दंष्ट्र ईक्षाज्योतिर्बभासे भगवान्महीध्रः ॥ २७ ॥
घ्राणेन पृथ्व्याः पदवीं विजिघ्रन् क्रोडापदेशः स्वयमध्वराङ्गः ।
करालदंष्ट्रोऽप्यकरालदृग्भ्यामुद्वीक्ष्य विप्रान् गृणतोऽविशत्कम् ॥ २८ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

घर्घरितं तज्जात्यनुकरणध्वनिम् । अनिश्चयेन यः स्वखेदस्तस्य क्षयिष्णु नाशकम् । ते इति पुनरुक्तिः प्रसिद्धिख्यापनार्था । त्रिभिः पवित्रैर्ऋग्यजुःसाममंत्रैरगृणन्नस्तुवन् ॥ २५ ॥ ❀ ❀ वेदैर्वितन्यते स्तूयते मूर्तिर्यस्य सः अत एवात्मनो गुणाननुवदति तथा तत्तेषां ब्रह्म उच्चारितं वेदमवधार्य ज्ञात्वा ॥ २६ ॥ ❀ ❀ कथंभूतः सन्नाविवेशेत्यपेक्षायामाह । द्वाभ्याम् । उच्चैः क्षिप्तो वालः पुच्छं येन । खचर आकाशचारी । कठोरः कठिनः । सटाः स्कंधवालान् खराणि तीक्ष्णानि रोमाणि यस्याः सा त्वग्यस्य । खुरैराहतान्यभ्राणि येन । सितदंष्ट्रोऽतिशुक्लदंष्ट्रः ईक्षा निरीक्षणमेव ज्योतिरालोको यस्य । तदा प्रकाशांतराभावात् बभासेऽशोभत महीध्रः पृथिव्या उद्धर्ता ॥ २७ ॥ ❀ ❀ क्रोडापदेशो वराहच्छद्मा अतः स्वयमध्वरांगोऽपि पशुरिव घ्राणेन विजिघ्रन् गृणतः स्तोतॄन्विप्रानुद्वीक्ष्योर्ध्वं वीक्ष्य कं जलमाविशत् ॥ २८ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

मायामयः कृपामयो ज्ञानमयो वा मायाया अविद्याया आमयो रोगो यस्मादिति वा स चासौ सूकरस्तस्य ॥ २५ ॥ ❀ ❀ यद्वा वेदानां भगवन्निःश्वासरूपत्वात् भगवन्निःश्वासस्यैव लीलया ब्रह्मनासाप्रविष्टस्य सूकररूपत्वेनाविर्भावः । वस्तुतो ब्रह्मापि विष्णुरेव "तल्लोकपद्मं स उ एव विष्णुः प्रावीविशत्सर्वगुणावभासम्" इत्युक्तेस्तन्निःश्वासोऽपि विष्णुनिःश्वास एवेत्यर्थः । अत एव वेदस्तुतमूर्त्तित्वादेव ॥ २६ ॥ २७ ॥ ❀ ❀ वराहच्छद्मेति । "स्तनापदेशं फलयुग्ममेव धत्ते मुहुः कांचनवल्लरीव" इतिवदपह्नुत्यलंकारेण क्रोडापदेशस्यैव वास्तवत्वं प्रत्याय्यते "प्रकृतं यन्निषिध्यान्यत्साध्यते स्यादपह्नुतिः" इति लक्षणात् ॥ २८ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

मायामयस्य कृपाप्रचुरस्य ज्ञानस्वरूपस्य वा किम्वा मायाया अविद्याया अपि आमयो रोगो यस्मात्स तथा ते प्रक्रान्ता पुनस्ते प्रसिद्धाः ॥ २५ ॥ ❀ ❀ अत एव वेदवितानमूर्त्तित्वादेव ॥ २६ ॥ ❀ ❀ सन्ति यस्यामिति पूरणीयमन्यथाशप्रत्ययार्थो न व्यज्येत तदा सृष्टेः पूर्वम् ॥ २७ ॥ ❀ ❀ या तु प्रकृतस्यान्यथाकृतिः सा त्वपह्नुतिरितिलक्षणात् स्तनापदेशं फलयुग्ममेव धत्ते मृदुः काञ्चनवल्लिरेषा'इतिवदपह्नुत्यलङ्कारोऽयं तेन क्रोडत्वस्य वास्तवत्वम् ॥ २८ ॥

### श्रीमद्वीरराघवव्याख्या

निशम्येति । मायामयसूकरस्याश्चर्यप्रचुरसूकरतनोर्घर्घरितं तज्जातीयानुकाररूपघर्घरितध्वनिं निशम्य ते जनस्तपःसत्यलोकनिवासिनः जनस्तप इत्यत्र सुडागम आर्षः मुनयः कथंभूतं घुर्घुरितं स्वखेदक्षयिष्णु स्वेषां सम्बन्धिनां यः खेदः तं क्षपयति तच्छीलं आत्मीयदुःखनिरसनस्वभावं ते मुनयः पवित्रैस्त्रिभिः ऋग्यजुःसामसूक्तैरगृणन् स्मास्तुवन् खलु ते इति पुनरुक्तिः प्रसिद्धिख्यापनाय ॥ २५ ॥ ❀ ❀ तेषामिति । वेदवितानमूर्तिः वेदैर्वितन्यत इति वेदवितानः यज्ञः स एव मूर्तिर्यस्य स भगवान् तेषां सतां मरीच्यादीनामात्मनो ये गुणाः कल्याणगुणाः ताननुवदतीति तद्ब्रह्म वेदमवधार्य श्रुत्वा भूयः पुनः विनद्य घर्घरितं कृत्वा विबुधानां ब्रह्मादीनामुदयाय श्रेयसे जलमाविवेश कथंभूतः गजेन्द्रस्येव लीला यस्य सः ॥ २६ ॥ ❀ ❀ पुनः कथम्भूतो विवेशेत्यपेक्षायामाह । उत्क्षिप्त इति द्वाभ्याम् । वराहं विशिनष्टि । उत्क्षिप्तः वालः पुच्छं येन सहः खचरः आकाशचारी कठोरः कठिनः सटाः कन्धरास्थाः केसरास्तान् विधुन्वन् खराणि रोमाणि यस्यां सा त्वग्यस्य सः खुरैराहतान्यभ्राणि येन सः सिते दंष्ट्रे यस्य सः ईक्षा निरीक्षणमेव ज्योतिरालोको यस्य सः प्रकाशमाननेत्र इत्यर्थः । महीध्रः मह्या उद्धर्ता भगवान् बभासे ॥ २७ ॥ ❀ ❀ किञ्च घ्राणेनेति । क्रोडापदेशः वराहच्छद्माऽतः स्वयमध्वराङ्गोऽपि पशुरिवाघ्राणेन पृथ्व्याः पदवीं विजिघ्रन्न त्वेषयन्निवेत्यर्थः । कराले पङ्क्तिले दंष्ट्रे यस्य तथाभूतोऽप्यकरालदृग्भ्यां सौम्यदृष्टिभ्यां गृणतः । स्तोतॄन्विप्रानुद्वीक्ष्य ऊर्ध्वं वीक्ष्य कं समुद्रजलमविशत् ॥ २८ ॥

---

१. प्रा॰ पा॰—सितशृङ्ग ।

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

अयं हरिरिति ज्ञात्वा एतैः किमकारीति तत्राह । निशम्येति । मायामयसूकरस्येच्छामयवराहस्य स्वखेदक्षयिष्णु स्वखेद-विनाशकरं घर्घरितं सूकराणां नादविशेषं श्रुत्वा जनादिलोकनिवासिनो मुनयस्त्रिभिः पवित्रैर्निर्दोषवेदैस्तं यज्ञपुरुषमगृणन्नित्यन्वयः स्मेत्यनेन गुणानुपूर्वकस्तुतिं सूचयति । जनस्तप इति छन्दोभङ्गभयाद्वेदानुकारित्वाद्वा विसर्गान्तम् ॥ २५ ॥ ❀ ❀ स्तुति-स्तत्प्रसादजननी समभूदिति भावेनाह । तेषामिति । वेदानां वितानेन विस्तरेण प्रतिपादिता मूर्तिर्यस्य स तथा । यद्वा वेद एव वितानमुल्लोचमुपरिपतदवकरनिवारणवस्त्रं यस्याः सा वेदविताना तादृशी मूर्तिर्यस्य स तथा यज्ञवितानमूर्तिरिति पाठे यज्ञविस्तारेषु गृहीतमूर्तिरित्यर्थः । आत्मनो ज्ञानानन्दादिगुणानामनुवादो यस्मिंस्तत्तथा ब्रह्मस्तुतिलक्षणं वेदमवधार्य ननद ननाद भूय इत्युभयत्र सम्बध्यते जलं प्रलयजलम् ॥ २६ ॥ ❀ ❀ तत्तद्योनिजानां तत्तत्क्रियायां तत्तद्भावोऽनिवार्य इति जलप्रवेशे तद्भावं वक्ति । उत्क्षिप्तेति ! स भगवान् महीध्रः नारायणाख्यः पर्वतः कं प्रलयजलमविशदित्यन्वयः तं विशिनष्टि । उत्क्षिप्तवाल उद्‌धृतपुच्छः अन्यत्रोन्नतकपोलः "वालं तु कपिलं वक्रं ह्रीवेरं दीर्घरोमकम्" इत्यभिधानात् ह्रीवेरं वा खे आकाशे चरतीति खचरः उभयत्र समानं कठोराः परिदृढाः सटाः बहलकेसरान् धुन्वन् कम्पयन् अन्यत्र सटा लताविशेषाः खरा परुषा रोमवतीत्वग्यस्य स तथोक्तः । अन्यत्र रोमशः पिचुमन्दः । खरा पिचुमन्दस्य त्वग्यस्मिन् स तथा खुरैराहतमभ्रं येनासौ खुराहताभ्रः संताडितमेघः । अन्यत्र खुरैः शृङ्गैः सितशृङ्गो धवलदंष्ट्रः अन्यत्र स्पष्टम् । ईक्षाया नेत्रस्य ज्योतिस्तारा कनीनिका तया विभासो विभासनं दीप्तिर्यस्य स तथोक्तः यद्वा दर्शनाख्याग्निज्वालया शोभमानः ॥ २७ ॥ ❀ ❀ घ्राणेनेन्द्रियेण विजिघ्रन् गन्धोपादानं कुर्वन् क्रोडापदेशो देवकार्य-निमित्तेन वराहः नतु साक्षाद्वराहः किन्तु स्वयं स्वतोऽध्वराङ्गो यज्ञमूर्तिः श्रीनारायणः पूर्वत्र पर्वतोपमत्वेन दंष्ट्रोक्तिरत्र तु अशान्त-त्वद्योतनायेति न पुनरुक्तिः अध्वरस्य अङ्गानि कुशादीनि साधनानि यस्मिन् सोऽध्वराङ्ग इति वा । "अपदेशो लक्षणे स्यान्निमित्त-व्याजयोरपि" इति यादवः ॥ २८ ॥

## श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

मायात्र कृपैव ॥ २५ ॥ २६ ॥ ❀ ❀ खराणि रोमाणि सन्ति यस्याः सा त्वक् यस्य ॥ २७ ॥ ❀ ❀ क्रीडा-पदेशः प्राकृतक्रोडव्याजः । स्वयं तु अध्वराङ्गत्वादप्राकृतक्रोडाकृतिरित्यर्थः । स्वभावोऽपि क्रोडस्येव दर्शित इत्याह । घ्राणेनेति । आकृत्या अन्येषामुग्रोऽपि कृपादृष्ट्या भक्तानां परमसुकोमल इत्याह । करालेति ॥ २८–३० ॥

## श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

मायामयस्य कृपामयस्य ज्ञानमयस्येति वा मायाया अविद्याया अपि आमयो रोगो यस्मात् यस्येति वा घर्घरितं तज्जात्यनुकरणध्वनिं स्वेषां तदनिश्चयेन पृथिव्या अनुवालम्भेन वा यः खेदस्तस्य क्षयिष्णु नाशकं ते ब्रह्मादयोऽगृणन् अस्तुवन् तथा ते प्रसिद्धा जनादिवासिनो भृग्वादयो मुनयस्त्रिभिः पवित्रैः ऋग्यजुःसाममन्त्रैरस्तुवन्निति ते इत्यस्य द्विःपाठाद्व्याख्येयम् ॥ २५ ॥ ❀ ❀ वेदवितानरूपा सर्व्ववेदमयी न तु प्राकृती मूर्तिर्यस्य सः । वेदानां भगवन्निःश्वासरूपत्वात् भगवन्निश्वासस्यैव लीलया ब्रह्मनासाप्रविष्टस्य शूकररूपत्वं ज्ञेयम् । अतस्तेषां मुनीनामात्मगुणानुवादं तन्मुनिकर्तृकमात्मगुणानुकथनमेव ब्रह्म वेदमव-धार्य्य ज्ञात्वा ॥ २६ ॥ ❀ ❀ जलं प्रविशतस्तस्य ध्यानमाह । उच्चैः क्षिप्तो वालः पुच्छं येन सः । खचर इति ब्रह्मलोकादाकाश-मार्गेणैव त्रिलोक्यामवततारेत्यर्थः । खररोमयुक्ता त्वग् यस्य सः । ईक्षैव ज्योतिषी चन्द्रसूर्य्याविव यस्य सः । महीध्रः पृथिव्या उद्धर्त्ता पर्व्वततुल्यो वा ॥ २७ ॥ ❀ ❀ तस्य लीलामाह । घ्राणेनेति । अध्वराङ्गः स्वयं वेद एव क्रोडापदेशो वाराहच्छद्मेति । 'स्तना-पदेशं फलयुग्ममेव धत्त मृदुः काञ्चनवल्लिरिवे' तिवदपह्नुत्यलङ्कारेण कोडत्वस्यैव वास्तवत्वं प्रत्याय्यते । "प्रकृतं यन्निषिध्यान्यत् स्थाप्यते सा त्वपह्नुतिः" इति लक्षणात् । कं जलम् ॥ २८ ॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः ।

जन इत्यत्र सुडागम आर्षः, ते जनतपःसत्यनिवासिनः मायामयशूकरस्य मायात्राद्भुतरूपा भगवदिच्छा तन्मयवराहस्य स्वखेदस्य क्षयिष्णु नाशकं घुर्घुरितं तज्जात्यनुकरणध्वनिं निशम्य मुनयः आनन्दातिशयेन मननपरा बभूवुरित्यर्थः । पुनस्ते त्रिभिः ऋग्यजुःसाममन्त्रैः अगृणन् अस्तुवन् ॥ २५ ॥ ❀ ❀ तेषां जनादिनिवासिनां ब्रह्म वेदमवधार्य ज्ञात्वा वेदेन वितन्यते स्वरूपगुणादिविस्तारवर्णनपूर्वकं स्तूयते मूर्तिर्यस्य सः ॥ २६ ॥ ❀ ❀ उत्क्षिप्तो वालः पुच्छो येन सः कठोरः कठिनः सुरासुरैरजेयः । सटाः स्कन्धस्थान् बालान् खराणि रोमाणि यस्यां सा त्वक् यस्य सः खुरैराहतान्य-भ्राणि येन ईक्षा निरीक्षणमेव ज्योतिर्यस्य तदानीं प्रकाशान्तराभावात् बभासे अशोभत ॥ २७ ॥ ❀ ❀ गृणतः स्तोतॄन् कं जलम् ॥ २८ ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

अत एव ब्रह्मणो हर्षो जात इत्याह—ब्रह्माणमिति । हरिरिति तथात्वं स्वभावः । तानिति मीमांसकान् । ब्रह्मणो द्विरूपो हर्षः, तेषामेकरूप इति भिन्नतया निर्देशः । हर्षणे हेतुः—द्विजोत्तमानिति । यज्ञत्वात्तेषां हर्षः । चौर्यनिराकारणार्थं तथा गर्जनं कृतवान्, यथा सर्वत्र दिक्षु प्रतिध्वनिर्जातः । तदाह—ककुभः प्रतिस्वनयता स्वगर्जितेनेति । ननु किमित्येवं कृतवान् तत्राऽऽह—विभुरिति ॥ २५ ॥ ❀ ❀ हृष्टानां कार्यमाह—निशम्येति । घर्घरितमिति तज्जात्यनुकरणशब्दः, भाषायां गृहवाची । सर्वेषामेव गृहं संपादयिष्यामीति, गृहोपरि वा गृहम्; शरीरं गृहं चेति वा । अत एव स्वखेदक्षयिष्णु । सर्वेषां भूमावेव प्रतिष्ठा, जनादिष्वपि भूमेरेवाऽन्नसिद्धिः । संबन्धिनामुद्धारार्थं वा, अधिकारिणां खेदनिवृत्त्यर्थं वा, स्वमीमांसितस्याऽङ्गीकारेण वा । ननु पश्वनुकरणेन कथं खेदनिराकरणम्, तत्राऽऽह—मायामयसुकरस्येति । दैत्यान् व्यामोहयितुं मायया तथारूपं कृतवान् । मायामयत्वमतिवञ्चनाप्रदर्शकत्वम्, वेदे हि कर्ममार्गे अत्यन्तभ्रमजनकत्वात् । आलम्भने पथे चैव यज्ञरूपे तथोद्गमे । उपाख्यानेषु सर्वेषु भ्रमो वै जायते श्रुतौ ॥ १ ॥ अधिदैविकरूपेऽपि मोहकत्वं तथा मुरे । यथा स्वस्मिन्नीचबुद्धिःततोऽपि भगवत्स्युत ॥ २ ॥ सूकर इति 'षूप्रसवे' इति प्रसवकर्त्ता । वेदा उत्पादिताः सर्वे मुक्त्यर्थं हीनभावताम् । धारयिष्यन्ति समलास्ततः सूकर उच्यते ॥ ३ ॥ जनस्तपः सत्यनिवासिन इति त्रिविधा अपि सात्त्विका उक्ताः, तैरेव स लोकः प्राप्यत इति । त्रिभिः पवित्रैर्वेदत्रयेण मार्जनीयैः, पवमानादिभिर्वा । एतेषां तु कथा भगवत्प्रसिद्ध्यर्थम् । मननाज्ज्ञानदार्ढ्यम् । स्मेति लौकिकी प्रसिद्धिः ॥ २६ ॥ ❀ ❀ एवं सर्वान्ज्ञापयित्वा यदर्थमवतीर्णस्तत्कृतवानित्याह—तेषामिति । तेषां स्तोत्रकर्तॄणाम् । ब्रह्म वेदम्, भगवतो यज्ञस्य गुणानुवादनरूपम् । अवधार्य निश्चित्य । वेदोक्तो यज्ञवितानो मूर्तिर्यस्य, वेदविताना वा मूर्तौ यस्य । भगवतोऽनन्तरूपत्वादनन्तशाखात्वम् । सतामिति तथाकरणे ज्ञाने च हेतुः । विनन्द्य । विनन्दनमभिनन्दनम्, भूयोऽभिनन्दनं प्रत्येकम् । ब्रह्मवद्भगवानपि दैत्यादीनामप्युपकारं करिष्यतीत्याशङ्क्याऽऽह—विबुधोदयायेति । देवानामेवाऽभ्युदयो न दैत्यानामिति । ननु भगवान् सर्वगश्च; तत्पाताल एवाऽऽविर्भूतः कथं न भूमिमाहृतवान् । तत्राऽऽह—गजेन्द्रलील इति । गजेन्द्रस्य लीलेव लीला यस्य । कथमत्र गजेन्द्रो जले प्रविष्टः क्रीडितवानिति तां क्रीडामनुकर्तुम्, गजेन्द्रस्य वा भक्तत्वख्यापनाय । स हि भगवल्लीलामेव कृतवानिति । एका भगवतो लीला नानाकार्यप्रवर्तिका । भक्तानां सर्वसौख्यार्थं लीलां चक्रे तथाविधाम् ॥ १ ॥ ॥ २७ ॥ ❀ ❀ तदानीन्तनां भगवन्मूर्तिं लीलासहितां वर्णयति—उत्क्षिप्तवाल इति द्वाभ्यां स्वरूपक्रियावर्णनभेदेन । ऊर्ध्वं क्षिप्तो वालः पुच्छं येन । पुच्छं तस्य दीक्षात्मकम्, दीर्घं कृशहेतुश्च । स एव यज्ञे उन्नतहेतुरिति ज्ञापयितुम् । खचर आकाशचरः, स हि सर्वेषु यज्ञियपदार्थेषु आविष्ट इवाऽसंलग्न एव तिष्ठतीति । अनेन यज्ञः पशुषु प्रतिष्ठितः क्रियामय इति ज्ञापयितुम् ( ? ) मलकार्यत्वात् कठोरः कठिनो निष्ठुरात्मको मन्युरूपत्वात् । खरा रोमशा त्वग्यस्य । परुषा हिंसादिजननात्, रोमशा वर्हिषो भूयस्त्वात् । त्वगुपरितनो भागः आकृतिस्तु लोकप्रसिद्धयैव तादृशी । खुरैराहतान्यभ्राणि येन । भगवतः पादचतुष्टयं स्तोमरूपं मिलितं सत् सवनद्वयात्मकं भवति । तत्रैव पशवः सोमश्च सर्वो वृष्टिकार्यरूपो हन्यते, सवनाभ्यामेव सर्वजननात् कृतं मेघैरिति । यैर्मेघैर्जलं पूरितम्, तेऽवश्यं दूरीकर्तव्याः, अन्यथा तेषु पृथिवीस्थापने पृथिव्या अस्थिरता स्यात् । जलमेघयोर्मध्ये स्थापनेऽपि मेघैः प्लावनं स्यात् । खुरैरेवाहतत्वादन्यत्र स्थितास्तत्र वृष्टिं करिष्यन्तीति मेघानां न सर्वथा नाशः । सिता दंष्ट्रा यस्य । वीक्षैव ज्योतिर्यस्य । स्थापनशोषणार्थं दंष्ट्रावीक्षयोः कीर्तनम्, मृत्योरतिक्रमार्थं [1]कृपावलोकनार्थं च । अतो भूमावेव मृत्योरतिक्रमो भगवत्कृपा[2] चेति विज्ञापितम् । वभास इति सर्वप्रमाणेन स्तुतः । महीध्र इति पृथिव्युद्धारेण सर्वोपकारणात् सर्वैः स्तूयमानत्वम् । सर्वे हि महीध्रा लोकप्रसिद्धाः पर्वताः, अयं तु भगवान्महीध्रः । ऐश्वर्यादिगुणयुक्तोऽपि भारं वहतीति दयालुत्वम् ॥ २८ ॥

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

ब्रह्माणमित्यत्र । द्विरूप इति । स्वसाहाय्यकरणकृतो यज्ञत्वज्ञानपूर्वकदर्शनकृतश्चेति द्विरूपः ॥ २५ ॥ ❀ ❀ निशम्येत्यत्र । गृहोपरीति । भगवतो गृहं जलम्, तदुपरीत्यर्थः ॥ २६ ॥ ❀ ❀ उत्क्षिप्तेत्यत्र । अनेनेति । रूपेण ॥ २८ ॥

### श्रीगिरिधरकृता बालप्रबोधिनी ।

गर्जनस्य किं प्रयोजनमित्यपेक्षायां ब्रह्मादीनां स्वावतारनिश्चयजननद्वारा कार्यनिश्चयेन शोकनिवृत्त्या हर्षार्थमित्याह—ब्रह्माणमिति । विभुः विष्णुः ककुभः दिशः प्रतिस्वनयता प्रतिध्वनयता स्वगर्जितेन ब्रह्माणं तान् मरीच्यादीन् द्विजोत्तमांश्च हर्षयामासेत्यन्वयः ॥ २५ ॥ ❀ ❀ ते च हृष्टा भगवन्तमस्तुवन्नित्याह—निशम्येति । मायामयसूकरस्य स्वेच्छया स्वीकृतसूकररूपस्य भगवतो घर्घरितं सूकरजातीयानुकरणध्वनिं निशम्य श्रुत्वा ते पूर्वोक्ता ब्रह्मादयो ये चान्ये जनस्तपस्सत्यलोकनिवासिनस्ते च मुनयस्तं भगवन्तं पवित्रैस्त्रिभिः ऋग्यजुस्सामसूक्तैः अगृणन् स्म प्रसिद्धतया अस्तुवन् स्तुतिहेतुर्हर्षे । हेतुत्वेन तच्छब्दं

---

१. क्रिया. क. घ. । २. क्रिया. घ. ।

विशिनष्टि—स्वखेदक्षयिष्ण्वति, भूम्युद्धारचिन्तया वाराहस्वरूपानिश्रयेन च यः स्वखेदस्तं क्षपयितुं शीलं स्वभावो यस्य तदित्यर्थः। जनस्तप इत्यत्र सकार आर्षः ॥ २६ ॥ ❀ ❀ एवं सर्वान्स्वरूपं ज्ञापयित्वा यदर्थमवतीर्णस्तत्कृतवानित्याह—तेषामिति । वेदवितानमूर्तिः वेदैर्वितन्यते इति वेदवितानो यज्ञः स एव मूर्तिर्यस्य स भगवान् तेषां ब्रह्मादीनां सतां स्वभक्तानां आत्मनो ये गुणा भक्तवात्सल्यसार्वज्ञत्वादयः ताननुवदतीति तद्ब्रह्म वेदमवधार्य श्रुत्वा विबुधानां तेषां ब्रह्मादीनामुदयाय पृथ्व्युद्धारेण दैत्यवधेन च श्रेयोलाभाय भूयः पुनर्विनद्य नादं कृत्वा जलमाविवेशेत्यन्वयः। एवं तर्हि तस्य महान् श्रमो जातः स्यादित्याशङ्कयाह—गजेन्द्रलील इति, गजेन्द्रवल्लीला यस्य स इत्यर्थः ॥ २७ ॥ ❀ ❀ कथम्भूतः सन् जलमाविवेशेत्यपेक्षायां तत्स्वरूपमनुवर्णयति—उत्क्षिप्त इति द्वाभ्याम् । उच्चैः क्षिप्तः वालः पुच्छं येन सः, खचर आकाशचारी, कठोरः कठिनाङ्गः, सटाः कन्धरस्थाः केशास्तान् विधुन्वन् कम्पयन्, खराणि कर्कशानि रोमाणि यस्यां सा त्वक् यस्य सः, खुरैराहतानि इतस्ततश्चालितानि अभ्राणि येन सः, सिते अतिशुक्ले दंष्ट्रे यस्य सः, ईक्षा निरीक्षणमेव ज्योतिरालोको यस्य सः, प्रकाशमाननेत्र इत्यर्थः। एवम्भूतो महीध्रः पृथिव्या उद्धर्ता भगवान् बभासे अशोभत ॥ २८ ॥

## हिन्दी अनुवाद

अपना खेद दूर करनेवाली मायामय वराह भगवान्की घुरघुराहटको सुनकर वे जनलोक, तपलोक और सत्यलोकनिवासी मुनिगण तीनों वेदोंके परम पवित्र मन्त्रोंसे उनकी स्तुति करने लगे ॥ २५ ॥ ❀ ❀ भगवान्के स्वरूपका वेदोंमें विस्तारसे वर्णन किया गया है, अतः उन मुनीश्वरोंने जो स्तुति की, उसे वेदरूप मानकर भगवान् बड़े प्रसन्न हुए और एक बार फिर गरजकर देवताओंके हितके लिये गजराजकी-सी लीला करते हुए जलमें घुस गये ॥ २६ ॥ ❀ ❀ पहले वे सूकररूप भगवान् पूँछ उठाकर बड़े वेगसे आकाशमें उछलते और अपनी गर्दनके बालोंको फटकारकर खुरोंके आघातसे बादलोंको छितराने लगे। उनका शरीर बड़ा कठोर था, त्वचापर कड़े-कड़े बाल थे, दाढ़ें सफेद थीं और नेत्रोंसे तेज निकल रहा था, उस समय उनकी बड़ी शोभा हो रही थी ॥ २७ ॥ ❀ ❀ भगवान् स्वयं यज्ञपुरुष हैं तथापि सूकररूप धारण करनेके कारण अपनी नाकसे सूँघसूँघकर पृथ्वीका पता लगा रहे थे। उनकी दाढ़ें बड़ी कठोर थीं। इस प्रकार यद्यपि वे बड़े क्रूर जान पड़ते थे, तथापि अपनी स्तुति करनेवाले मरीचि आदि मुनियोंकी ओर बड़ी सौम्य दृष्टिसे निहारते हुए उन्होंने जलमें प्रवेश किया ॥ २८ ॥

**स वज्रकूटाङ्गनिपातवेगविशीर्णकुक्षिः स्तनयन्नुदन्वान् ।**
**उत्सृष्टदीर्घोर्मि[1]भुजैरिवार्तश्चुक्रोश यज्ञेश्वर पाहि मेति ॥ २९ ॥**
**खुरैः क्षुरप्रैर्दरयंस्तदाऽऽप उत्पारपारं त्रिप[2]रू रसायाम् ।**
**ददर्श गां तत्र सुषुप्सुरग्रे यां जीवधानीं स्वयमभ्यधत्त ॥ ३० ॥**
**स्वदंष्ट्रयोद्धृत्य महीं निम[3]ग्नां स उत्थितः संरुरुचे रसायाः ।**
**तत्रापि दैत्यं गदयाऽऽपतन्तं सु[4]नाभसन्दीपिततीव्रमन्युः ॥ ३१ ॥**
**जघान रुन्धानमसह्यविक्रमं स लीलयेभं मृगराडिवाम्भसि ।**
**तद्रक्तपङ्काङ्कितगण्डतुण्डो यथा गजेन्द्रो जगतीं विभिन्दन् ॥ ३२ ॥**

## श्रीधरस्वामिविरचिता भावार्थदीपिका ।

तदानींतनसमुद्रध्वनिमुत्प्रेक्षते। स उदन्वान्समुद्र आर्त एव स्तनयन् शब्दं कुर्वन्भो यज्ञेश्वर मा मां पाहि मामवेत्यवं चुक्रोश। आर्तसादृश्यमाह। उत्सृष्टाः प्रसारिता दीर्घा ऊर्मय एव भुजास्तैर्विशिष्टः। आर्तत्वे हेतुः। वज्रकूटो वज्रमयः पर्वतस्तद्वदङ्गं यद्भगवतस्तस्य निपातवेगेन विशीर्णा कुक्षिर्यस्य ॥ २९ ॥ ❀ ❀ तदा रसायां रसातले गां पृथ्वीं ददर्श। कः त्रिपरुत्त्रीणि परूंषि सवनात्मकानि पर्वाणि यस्य। यज्ञमूर्तिरित्यर्थः। किं कुर्वन्। क्षुरप्रा आयताग्राः शरास्तत्सदृशैः खुरैरपो दरयन्। कथम्, उत्पारपारं उत्पाराणां पारशून्यानामप्यपां पारमवसानं यथा भवति तथा विदारयन्। कथंभूतः? अग्रे प्रलयसमये तत्र तास्वप्सु सुषुप्सुः शिशयिषुः सन् जीवा धीयंते यस्यां सर्वजीवाधारभूतां यां स्वयमभ्यधत्ताभिमुख्येन दधार। जठरे धृतवानित्यर्थः। अनेन तदुद्धरणेऽनायासं द्योतयति ॥ ३० ॥ ❀ ❀ रसायाः सकाशादुत्थितः संरुरुचे सम्यगशोभत। तत्राप्यंभसि गदामुद्यम्यागच्छंतं रुंधानं प्रतिघ्नंतम् असह्यः सहनानर्हो विक्रमो यस्य तं दैत्यम्। सुनाभं चक्रं तद्वत्संदीपित-

---

१. प्रा० पा०—मिकरै० । २. प्रा० पा० नृपते । ३. प्रा० प्रा० विमग्नां । ४. प्रा० पा०—सन्नादसंदी० ।

स्तीव्रो मन्युर्यस्य। यद्वा। मयि विद्यमाने किमिति परिभवं सहस इति सुनाभेन संदीपितस्तीव्रमन्युः स भगवान् सिंहो गजमिव लीलया जघानेत्युत्तरेणान्वयः॥ ३१॥ ❀ ❀ गजेंद्रो जगतीं क्रीडया विदारयन् गैरिकया यथा अरुणगंडतुंडो भवति तथा। तस्य रक्तमेव पंकस्तेनांकितौ गंडौ तुंडं च यस्य सः॥ ३२॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः।

आर्त्तो यथा करौ प्रसार्य क्रोशति तद्वदित्यर्थः॥ २९॥ ❀ ❀ तदा समुद्रप्रार्थनावसरे। रसातले तदुपलक्षिते गर्भोदके अतलादीनां सप्तानामेव भूविवरत्वेन पृथिवीत्वाद्रसातले तस्याः स्थित्यसंभवात्। तदुक्तं विष्णुधर्मे "पातालमूलेश्वरभोगसंहतौ विन्यस्य पादौ पृथिवीञ्च बिभ्रतः। यस्योपमानं न बभूव सोच्युतो ममास्तु मांगल्यविवृद्धये हरिः" इति। वक्ष्यत्यपि 'सलिले स्वखुराक्रांते' इत्यर्थ इति। प्रलयकाले सर्वस्योदरे ग्रहणादिति भावः। यद्वा। वेदरूपेण जलादुद्धृतवानित्यर्थः। यद्वाऽग्रे जलोपरि यां स्वयमभ्यधत्त स्थापितवानित्यर्थः। अनेनोदरप्रवेशकथनेन॥ ३०॥ ❀ ❀ चक्रस्य सत्यग्न्यादावुपमानमनुचितं मत्वाह--यद्वेति। मयि सुदर्शनाख्ये सर्वदलनसमर्थे। कचित्तु तत्रादिदैत्यमिति पाठः॥ ३१॥ ❀ ❀ रुंधानं रोद्धुं चतुर्दिक्षु भ्रमंतं गजेंद्रः त्रिकूटपर्वतस्थः सिंहशरभादीनामपि हंता जगतीं तत्रत्यां भूमिं यथा तथेति वराहोपमा। "जगती जगतिच्छन्दोविशेषेपि क्षितावपि" इत्यमरः। तुण्डं मुखाग्रम्॥ ३२॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

उत्प्रेक्षेत आर्त्तध्वनित्वेन सम्भवति स भगवता प्रवेशेन स्वीकृतः॥ २९॥ ❀ ❀ तदेत्यध्याहृतम्। तदा विदारणकाले इत्यर्थः। प्रान्ति उच्चदेशं निम्नत्वेन पूरयन्ति इतिप्राः क्षुराश्च ते प्राश्च क्षुरप्रास्तथाचायताग्राः शरा इति व्याख्यातम् "क्षुरस्स्याच्छेदनद्रव्य" इति विश्वः। अनेन जठरधारणेन स्वदंष्ट्रयेत्यर्धकम्॥ ३०॥ ❀ ❀ तत्रापीति सार्द्धकम्। तत्रापीत्यपिशब्दः जलस्य युद्धानर्हस्थानत्वं व्यञ्जयति। पूर्वार्थे चक्रस्य मूर्त्तस्यामूर्त्तमन्यूपमानत्वं तत्कार्य्यनेत्रारुण्यादिद्वारा न साक्षादित्यस्वरसाद्यद्वेति॥ ३१-३३॥

### श्रीमद्वीरराघवव्याख्या

तदानींतनं समुद्रध्वनिमुत्प्रेक्षेत स इति। स उदन्वान् समुद्रः वज्रपर्वतः तद्वदङ्गं यस्य भगवतस्तस्य निपातवेगेन विशीर्णो विलुण्ठिता कुक्षिर्यस्य सः अत एवार्त इव स्तनयन् शब्दं कुर्वन् भो यज्ञेश्वर! मां पाहि मा भिन्धीत्येवं चुक्रोश आर्तसादृश्यमाह। उत्सृष्टाः प्रसारिताः दीर्घा ऊर्मय एव भुजास्तैर्विशिष्टः॥ २९॥ ❀ ❀ जलप्रविष्टो भगवान् किमकरोदित्यत्राह। खुरैरिति। त्रिपरुः त्रीणि परूंषि सवनात्मकानि पर्वाणि यस्य सः। यद्वा त्रीणि परूंषि रेखा ककुत्स्थले यस्य सः उत्पारपार उत्पारश्चासौ पारश्च उत्पारः उद्वेल इव पारमतिक्रान्तः पारः संसारात्पारयिता चेत्यर्थः। उत्पारपारमिति द्वितीयान्तोऽपि पाठः तदा उत्पारपारं दरयन्निति क्रियाविशेषणत्वेन योज्यम्। उत्पाराणां पारशून्यानामपां पारमवसानं यथा भवति तथाऽपः जलानि खुरैस्तदा दरयन्विदलयन्विलोडयन् कथंभूतैः खुरैः क्षुरप्रायैः रसायां रसातले गां भूमिं ददर्श कथं भूतानामग्रे प्रलयसमये तत्र तास्वप्सु सुषुप्सुः शिशयिषुः सन् जीवधानीं जीवा धीयन्ते स्यां तां प्राण्याश्रयभूतां यां गां स्वयमभ्यधत्ताभिमुख्येन दधार जठरे धृदवांस्तामित्यर्थः॥ ३०॥ ❀ ❀ येन स्वदंष्ट्रया विलग्ना मही उद्धृता स भगवान् रसायाः सकाशादुत्थितः संरुरुचे तत्राप्यम्भसि गदया आपतन्तं गदामुद्यम्यागच्छन्तं रुन्धानं प्रतिघ्नन्तमसह्यः विक्रमो यस्य तमादिदैत्यं हिरण्याक्षं सुनाभेन सन्दीपितः उज्ज्वलः स चासौ तीव्रमन्युश्च भगवान् मृगराट् सिंह इभमिव गजमिव लीलया जघान हतवान् यथा गजेन्द्रः जगतीं व प्रविभिन्दन्नरुणगण्डतुण्डो भवति तद्वत्तस्य रक्तमेव पङ्कस्तेनाङ्कितौ गण्डौ तुडञ्च यस्य स जघानेति पूर्वेणान्वयः॥ ३१॥ ३२॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

जलप्रवेशसमये समुद्रेण स्तुतिरेवाकारि न त्वाक्रोश इत्याशयेनाह। सवज्रेति। स उदन्वान्समुद्रो हे यज्ञेश्वर! मां पाहीति भावेन चुक्रोशाजुहावोन्ननादेत्यर्थः। रक्षाप्रार्थनायां कः क्लेशः प्राप्त इत्यत उक्तं वज्रकूटवदयोघनवद्वरिम्णोपेतस्याङ्गस्य निपातवेगेन विशीर्णोऽतिनिष्पिष्टः कुक्षिर्यस्य स तथा अत एवोदरवेदनया स्तनयन् शब्दं कुर्वन् आर्त इव उत्सृष्टा ऊर्ध्वं गता अत एव दीर्घा ऊर्मय एव करास्तैः उदरादिवेदनार्तः पुरुषो यथा शिरसि करं निधाय आक्रोशति तथेति लौकिकार्थः। अध्यात्मस्तु स्तुतिरेव कृतेत्यर्थः॥ २९॥ ❀ ❀ खरतरतरणिकिरणपरितप्तलोकवराहवन्न हरेर्जलप्रवेशः किन्तु यद्दर्शनार्थं प्रावेशि तद्दर्शनमनेन कृतमित्याह। खुरैरिति। उत्पारवारेति क्रियाविशेषणं पारे तीरान्तरे स्थितं जलं वा यथोद्गतं भवति तथा क्षुरप्रैः क्षुरसाधर्म्यं पूरयन्तीति क्षुरवन्निशितैरित्यर्थः। यदा स्वर्धचन्द्रैः "अर्धचन्द्रः क्षुरप्रः स्यात्" इति यादवः, खुरैस्तस्य समुद्रस्यापो दरयन् त्रिभिर्वेदैर्वियत इति त्रिवरुः त्रिषु युगेषु अवतारं वृणोतीति वा गुरुशब्दवत्प्रक्रिया 'ढ्रलोपे पूर्वस्य दीर्घोऽण'इति दीर्घः। अग्रे सर्वा विलाप्य सुषुप्सुर्निद्रां कर्तुकामः स हरिर्यां जीवधानीं सर्वप्राण्याधारभूतामभ्यधत्त जलस्योपरि निहितवान् तां गां तत्र रसायां पाताले ददर्शेत्यन्वयः।

"वरुः सुगलरेखा स्याद्वराहस्य च विस्तृता" इत्यभिधानाद्वलित्रयाङ्कितगलो वा पारं वृणोतीति पारवारः कर्मण्यणित्यण् प्रत्ययः । पश्वादिप्राणिजातन्तद्यथोद्गतं स्यात्तथेति वा ॥ ३० ॥ ❀ ❀ भगवता महीं दृष्ट्वा किमकारीति तत्राह । स्वदंष्ट्रयेति । विलग्नां रसातले बन्दीगृहवत् स्थितां महीं स्वदंष्ट्रयोद्धृत्य रसाया उत्थितः स आदिवराहः संरुरुहे उपर्यारुरोह । रसालयैरसुरैः स्वभूतभूम्युन्नयनसमये निद्रितं किं तत्राह । तत्रापीति । स हरिस्तत्र भूम्युद्धरणसमयेऽपि स्वं रुन्धानं गदया पतन्तं दैत्यमादिहिरण्याक्षं दंष्ट्रया जघानेत्यन्वयः । कीदृशः सुनाभवच्चक्रवत् सन्दीपिततीव्रमन्युः प्रज्वलितात्युग्रकोपोऽत एवासह्यविक्रमः मृगराट् सिंह इभं गजं यथा तथा अम्भसीत्यनेन रसातलात् किंचिदूर्ध्वमागत्येति सूचयति तस्य दीप्तिविशेषमाह । तद्रक्तेति । यथा जगतीं तटभूमिं विभिन्दन् तिर्यग्दन्तप्रहारेण प्रोल्लिखन् तत्पङ्काङ्किततुण्डगण्डो भवति तथा दंष्ट्रया हिरण्याक्षं हत्वा तस्य रक्तपङ्केनाङ्किततुण्डगण्ड उच्चकाश इति शेषः । अनेन विशेषणेन हिरण्याक्षौ द्वौ तत्रैको दंष्ट्रया हत इतरस्त्वन्येनायुधेनेति ज्ञायते "ब्रह्मजस्तु हिरण्याक्षः प्रथमं दंष्ट्रया हतः । स एव पार्षदाविष्टो द्वितीयः कर्णताडनात् । पूर्वं लयोदके मग्नां द्वितीयं तेन मज्जिताम् । भुवमुद्धरते वासौ हरिणा क्रोडमूर्तिना" इत्यवगन्तव्यः । अत्रैवोत्तरग्रन्थे विदुरप्रश्नं परिजिहीर्षुणा हरिणा हिरण्याक्ष एक एव व्यत्यस्योच्यते तद्दुष्टमोहनार्थमविविच्य कथनं देवानां प्रियार्थं चेति तदुक्तं "व्यत्यासेनापि चोच्यन्ते अविवेकेन कुत्रचित् । दुष्टानां मोहनार्थाय तत्र तत्र कथा क्वचित् ॥" इति अविवेको नाम नवकुरहरेर्ज्ञानं "सर्वज्ञस्य कुतो ज्ञानं व्यासस्योदारकर्मणः" इति वचनात् ॥ ३१ ॥ ३२ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

स्वदंष्ट्रयेत्यर्द्धकम् । अत्र विष्णुधर्म्मे विशेषश्च "पातालमूलेश्वरभोगसंहतौ विन्यस्य पादौ पृथिवीञ्च बिभ्रतः । यस्योपमानं न बभूव सोऽच्युतो ममास्तु माङ्गल्यविवृद्धये हरिः ॥" इति अत्र तु सलिले स्वखुराक्रान्त इति वक्ष्यति ॥ ३१ ॥ ❀ ❀ तत्रापीति सार्द्धकं तादृशसंप्लवाम्भस्यपीत्यर्थः । अपिरत्र विस्मये । संप्लवादिसाधारण्ये नैवाभेदोक्तिरियम् । वस्तुतस्तु चाक्षुषान्तरसंप्लवे एवायं प्रसङ्गः । अत एव स्वायम्भुवादिसंप्लवे त्रिलोकीगतानामनुत्पत्तेर्महर्लोकस्थानाञ्च पालनाय जनस्तपःसत्यनिवासिभिरेव स्तुतं चाक्षुषसंप्लवान्तहिरण्याक्षदिग्विजये तु सर्गिणां स्थितिश्चिरन्तन्येव स्पष्टा । अथवा तत्रैव वराहावतारेऽपीति कदाचिदपीत्यर्थः । मृगराडादिदृष्टान्तस्तत्पराक्रमाद्यनुभवसोपानमात्रम् ॥ ३२ ॥ ३३ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

तदानीन्तनं समुद्रध्वनिमुत्प्रेक्षते वज्रकूटो वज्रमयः पर्वतः तद्वदङ्गं यद्भगवतस्तस्य निपातवेगेन विशीर्णा कुक्षिर्यस्य सः । उदन्वान् स्वप्राणत्यागशङ्कयेवार्त्तश्चुक्रोश । उत्सृष्टाः प्रसारिता दीर्घा ऊर्म्मय एव भुजास्तैः हे यज्ञेश्वर मा मां पाहीति चुक्रोश ॥ २९ ॥ ❀ ❀ क्षुरप्रैरस्त्रविशेषैरिव खुरैस्तदा अपो जलानि दरयन् उत्पाराणां पारशून्यानामप्यपां पारमवसानं यथा स्यात्तथा दरयन् त्रीणि परूंषि सवनात्मकानि पर्व्वाणि यस्य यज्ञमूर्त्तिरित्यर्थः । रसायां रसातलोपलक्षिते पाताल्तले गर्भोदे इत्यर्थः । अतलादीनां सप्तानामेव भूविवरत्वेन पृथिवीत्वात् रसातले तस्याः स्थित्यसम्भवात् । यदुक्तं विष्णुधर्म्मे 'पातालमूलेश्वरभोगसंहतौ विन्यस्य पादौ पृथिवीञ्च बिभ्रतः । यस्योपमानं न बभूव सोऽच्युतो ममास्तु माङ्गल्यविवृद्धये हरिः ॥' इति अत्रापि सलिले स्वखुराक्रान्त इति वक्ष्यति गां पृथ्वीं ददर्श । तत्र गर्भोदे सुषुप्सुः शिशयिषुरग्रे दैनन्दिनप्रलये भवतीत्यन्वयः । यां पृथ्वीं जीवधानीं जीवा धीयन्तेऽस्यामिति जीवधानीमभ्यधत्त स्वयमेव वेदरूपेणोक्तवानित्यर्थः ॥ ३० ॥ ❀ ❀ तत्रापि तादृशसंप्लवाम्भसीत्यपिर्विस्मये दैत्यं हिरण्याक्षं जघान आदिदैत्यमिति च पाठः । कीदृशं गदया सह आपतन्तं स कीदृशः सुनाभेन चक्रेण सन्दीपितः । मयि वर्त्तमानेऽपि त्वां प्रत्ययं गदामुद्यच्छतीत्युद्दीप्तीकृतो मन्युर्यस्य सः । रुन्धानं रोद्धुं चतुर्दिक्षु भ्रमन्तं घ्नन्तं श्रीवराहमुपमिमीते । गजेन्द्रस्त्रिकूटपर्व्वतस्थः सिंहसरभादीनामपि हन्ता जगतीं तत्रत्यां पृथिवीं क्रीडया विदारयन् गैरिकया अरुणगण्डतुण्डो भवति तथा । "जगती जगति च्छन्दोविशेषेऽपि क्षितावपि" इत्यमरः ॥ ३१ ॥ ३२ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

स्तनयन् ध्वनिं कुर्वन् मा मां पाहीति चुक्रोश ॥ २९ ॥ ❀ ❀ त्रीणि परूंषि सवनात्मकानि पर्वाणि यस्य स यज्ञमूर्तिः उत्पाराणां विपुलानामप्यपां पारमवसानं यथा भवति तथा क्षुरप्रा आयताग्राः खुराः तादृशैः दरयन् विलोडयन् रसाया रसातले गां महीं ददर्श । कथंभूताम् अग्रे प्रलयसमये तत्र तास्वप्सु शिशयिषुः सन् जीवा धीयन्ते यस्यां तामेवंभूतामभ्यधत्त उदरे आभिमुख्येन दधार ॥ ३० ॥ ❀ ❀ रसायाः सकाशात् उत्थितः सम्यगशोभत ॥ ३१ ॥ ❀ ❀ तत्रापि दैत्यमित्यनेन भाविदैत्यसमकालोऽपि "चाक्षुषे त्वन्तरे प्राप्ते प्राक्सर्गे कालविद्रुते । यः ससर्ज प्रजा इष्टाः स दक्षो दैवनोदित" इति वक्ष्यमाणेन सर्गविनाशेन सूचितां महीं जले निमग्नामुद्धर्तुं जातस्य वराहस्य चरितमेकीकृत्य प्रकृतवराहचरित्रमत्र वर्ण्यते इति गम्यते । सुनाभेन श्रीसुदर्शनेन दीपितश्चासौ तीव्रमन्युश्च गजेन्द्रो जगतीं क्रीडया विभिन्दन् गैरिकया यथा अरुणगण्डतुण्डो भवति तद्वत् तद्रक्तपङ्केन रुधिरयुक्तमांसेन अङ्कितौ गण्डौ तुण्डं च यस्य सः ॥ ३२ ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

एवं रूपं वर्णयित्वा क्रियां वर्णयति—घ्राणेनेति । पृथ्व्याः पदवीं घ्राणेन विजिघ्रन् । सा हि गन्धवती, गन्ध एव तस्या व्यावर्तकः । येन मार्गेण पृथ्वी गता, स एव मार्गस्तस्य गमने साधीयान्, तत्र हि जलं विरलम् । विशेषतो घ्राणं क्रोडापदेश इति वराहरूपलीला व्याजार्थमेव । सर्वज्ञोऽपि गृहीतावतारो देहानुसारेणैव चेष्टां करोतीति घ्राणेनैव पृथिवीमार्गज्ञानम् । क्रोडनस्य विचारात्मकस्य मीमांसशास्त्रस्य व्यपदेशमात्रमत्र, यत्कर्मप्राधान्यमिति देवताया एव प्राधान्यात् तामेवोपपादयति—स्वयमध्वराङ्ग इति । अध्वरा अङ्गानि यस्य, सर्वयज्ञात्मक इत्यर्थः । अध्वनि रवो यस्येत्यध्वरः सर्वत्रैव मार्गे अस्यैव शब्दः । न हि यज्ञव्यतिरेकेण कश्चिन्मार्गोऽस्ति, अन्ये खण्डिताः तादृशानामप्यप्रामाण्यार्थमङ्गपदम् । यद्यप्ययं पशूनां घातकत्वेन प्रसिद्धः, तथाप्यग्रे ज्ञानप्रद इति सर्वोपास्य इति ज्ञापयितुमाह—करालदंष्ट्रोऽप्यकरालदृग्भ्यामिति । विप्रानुद्वीक्ष्येति । सर्वेषां हि सर्वथा हितकर्तृषु भगवतो ज्ञानं कृपा चेति गृणत इति ज्ञानकृपयोर्भक्तिर्हेतुरित्युक्तम् । कं जलमाविशत् भक्तान् ज्ञानसंपन्नान् कृत्वा अन्येषामुद्धारार्थं स्वयं सुख इव जले प्रविष्टः ॥ २९ ॥ ❀ ❀ मध्ये जलस्य सापराधत्वात् दण्डं कृतवानित्याह—स वज्रेति । यस्मिन् जले भगवानाविष्टः, येन च पृथिवी मज्जिता, स उदन्वान् वज्रकूटवत् वज्रसमूहवदतिकठिनं यत् जाज्वल्यमानमङ्गम् । न हि वज्रातिरिक्तस्य तेजो जले तिष्ठत्यधिकं वा जायते । स हि मेघान् जलं त्याजयति । तादृशाः सर्वे यद्येकत्र भवन्ति तदा समुद्रादपि जलं त्याजयन्ति । ते पुनः कपटेन चेदागच्छेयुः स्वरूपमेव नाशयेयुः । तद्रूपश्चाऽयं भगवान् । तादृशाऽङ्गस्य यो निपातः । वज्रपात एव न कोऽपि जीवति, तत्राऽपि समूहः तत्रापि कापट्यम्, तत्रापि तदङ्गमेव यस्य । तस्याऽपि पातोऽनवधानदशायामुपरिपतनम् । पतनेऽपि महान् वेगः, यथा बाणो भित्त्वा गच्छति । तेन कृत्वा विशीर्णा कुक्षिर्यस्य । अनेन कुक्षेः कुक्षिर्निवार्यते, अन्यथा स्वकुक्षिरेव न पूर्येत । उदन्वानिति जलवत्त्वं तत्कुक्षावेव तिष्ठति, अतः कुक्षिभङ्गे नातः परं बलवृद्धिरिति सूचितम् । तथात्वं जातमिति ज्ञापयितुं तत्कार्यमाह—उत्सृष्टेति । उर्ध्वं सृष्टाः प्रसारिता दीर्घा ऊर्मय एव भुजाः, तैरुपलक्षितः । आर्त्त इवेति पातेऽप्यानन्दमयः पततीति स्त्रीभुजबन्धनवत् सुखमेव भवतीत्यार्त्त इवेत्युक्तम् । सर्वजलशोषे स्वरूपमेव नश्यति, कुक्षिविदारे वृद्ध्यभावः । तदा वर्षाशोषणाभ्यां समता भवति, तदकरणे भूमेः स्थापनमेव न भवेत् । चुक्रोशेति स्पष्टमेव । तस्मिन् देवतारूपे समुद्रे दैत्यानामाधारभूते दण्ड उचित एव । तथापि देवतात्वात् सर्वदेवताभोजकं भगवन्तं प्रार्थयते—यज्ञेश्वर पाहि मेति । समुद्रस्याऽपि देवतात्वम्, 'समुद्राय स्वाहा ' इति ' समुद्रियाभ्यः स्वाहा' इति श्रुतेः । यज्ञेश्वरेतिसंबोधनं स्वसंबन्धज्ञापनार्थम् । दैत्यानां हननेऽपि मां पालयेति ॥३०॥ ❀ ❀ एवं समुद्रदण्डने कृत्वा, पुनर्यथा मज्जनं न करोति तथा शिक्षां दत्त्वा, स्वयं भूम्युद्धारार्थं प्रवृत्त इत्याह—खुरैः क्षुरप्रैरिति । तीक्ष्णैः खुरैस्तदापो दरयन् विदारयन् । उद्गतः पारो यस्य, तस्याऽपि पारो यथा भवति तथा । त्रिपरुर्यज्ञवराहः । त्रीणि पर्वाणि यस्य । पादद्वयं द्वयमेकैकं पर्व, मुखं चैकम् ; तथैवं सोमस्य प्रवृत्तेः । 'पद्भ्यां द्वे सवने समगृणान्मुखेनैकम्' इति श्रुतेः । 'द्वौ स्तोमौ प्रातः सवनं वहतः' इत्यादि श्रुत्या प्रातः सवनस्य द्विरूपत्वम् । मुखमपि द्विरूपमोष्ठाभ्याम् । रसायां स्थितां मां ददर्श । ततस्तामुद्धृतवानिति वदंस्तत्र हेतुमाह—तत्र सुषुप्सुरग्र इति । तत्र पृथिव्यामविकृतायाम्[2] । पृथिव्यधिष्ठातृदेवता भगवतः शय्या भवतीति । भार्या तु सिद्धैव । अग्रे उद्धारानन्तरम् । भूमिमुद्धृत्य तस्मिन् शयनं करिष्यामीति प्रलये भगवान् शेषे शयनं कृतवान् । सृष्टौ पुनः सर्वेषु पुरेषु शयनं करोतीति, पुरुषशब्दव्युत्पत्तेः, सर्वपुरनिर्माणार्थं भूमिमुद्धरिष्यतीत्यर्थः । ननु भूमिः किमिति बहूनि शरीराणि करिष्यतीत्याशङ्क्याह—यां जीवधानीमिति । या पृथिवी सर्वेषां जीवानामाधारभूता, सा हि सर्वेषां देहान् संपादयति । अतः स्वयमभ्यधत्त, तदुद्धारे सर्व एव जीवा उद्धृता एव भवन्तीति ॥ ३१ ॥ ❀ ❀ एवं तां गृहीत्वा निर्गच्छन्तमनुवर्णयति—स्वदंष्ट्रयेति । दैत्यानामतिबलत्वाद्भूमेरानयनप्रतिबन्धमाशङ्क्य स्वदंष्ट्रयेत्युक्तम् । न हि यमगृहीतः केनचिन्मोचयितुं शक्यते, तत्राप्याधिदैविकयमेन, अन्यथा तद्रक्षकास्तत्र विघ्नं कुर्युः । दंष्ट्राया एकत्वं महत्त्वख्यापनाय[3] । उदस्थत्येति वचनं नीयमानायाः पृथिव्या देवतासम्बन्धकरणख्यापनार्थम् । नितरां मग्नामिति भूमेः सहजासुरत्वं निराकृतम् । निराधारस्याऽधस्ताद्गतिः, उपरिगतिरपि पक्षिणामिव सम्भवति, न तूत्थानम्, तत्रापि स भारः । अतस्तां गृहीत्वा सम्यगुत्थितः सम्यक् रुरुचे । समिति चोरुरूपेण समागतोऽपि भाराक्रान्तो न रोचते । भूम्या सह स्त्रियेवाऽन्तः संतोषेण, बहिः शोभया च, रोचनं संशब्दार्थः । तत्रापि रसाया उत्थितो लोके न रोचते, अयं तु रसातलात् । अनेन पञ्चखण्डा पृथिव्युद्धृतेति ज्ञापितम् । स्वदंष्ट्रापदद्वयेन आध्यात्मिकाधिभौतिकयोर्दैत्ययोर्निराकरणमुक्तम् । आधिदैविकस्य निराकरणमाह— तत्राऽऽदिदैत्यमिति । आदित्वमाधिदैविकत्वेन । आदौ वा दैत्यत्वं प्राप्तम् । गदया पतन्तमिति शूरत्वं भगवदीयत्वमतिप्रतिबन्धकत्वं च सूचितम् । सुनाभेन सुदर्शनेन संदीपितस्तीव्रो मन्युर्यस्य । सुदर्शनेन मन्युजननं गदादीनां प्रतिघातसूचकम् । गदादीन्यस्त्राणि तद्युद्धे प्रतिहतानि । पश्चाद् गृहीतं सुदर्शनं विचारयति—यद्यक्रोधेन भगवान्मां क्षिपेत्, तदा गदादिरिवाऽहमपि व्यर्थः स्याम् ; अतो भगवतः क्रोध उत्पादनीय इति तदीया ब्रह्मद्रोहादयः भगवते स्मारिताः; तदा क्रोधेन सुदर्शनं प्रक्षिप्तवानिति सम्यग्दीपनं फलपर्यवसायि । तीव्रत्वं फले विलम्बाभावाय ॥ ३२ ॥

---

१. मुखे क. घ. । २. अविकृता पृ···क. घ. । ३. ज्ञापनाय. ख. ङ. ।

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

घ्राणेनेत्यत्र । सुख इवेति । कशब्दसूचितोऽयमर्थः ॥ २९ ॥ ❀ ❀ स वज्रेत्यत्र । स हीति । वज्रो हि । कूटपद-सूचितमर्थमाहुः—ते पुनरित्यादि । कुक्षेरिति समुद्रो हि भगवतः कुक्षिस्तस्येत्यर्थः । न पूर्येतेति । मन्युरूपत्वात् स्वस्य तत्पूरणार्थं हिंसा-प्रधानमेव कर्म स्यादिति भावः । कुक्षिविदारणस्य प्रस्तुतं प्रयोजनमाहुः—सर्वेत्यादि ॥ ३० ॥ ❀ ❀ खुरैरित्यत्र । 'द्वौ स्तोमौ' इति श्रुतिः सप्तमाष्टकेऽस्ति । 'द्वौ स्तोमौ' प्रातः सवनं वहतो यथाप्राणश्चापानश्च; द्वौ मध्यंदिनसवनं यथा चक्षुश्च श्रोत्रम् द्वौ तृतीयसवनं, यथा वाक् च प्रतिष्ठा च । पुरुषसंमितो वा एष यज्ञो स्थूरिः'इति ॥ ३१ ॥

### श्रीगिरिधरकृता बालप्रबोधिनी

कराले भयङ्करे दंष्ट्रे यस्य तथाभूतोऽप्यकरालदृग्भ्यां कृपायुक्तनेत्राभ्यां गृणतः स्तोतॄन् विप्रान् उद्वीक्ष्य सम्यग्दृष्ट्वा घ्राणेन गन्धवत्याः पृथ्व्याः पदवीं विजिघ्रन् अन्वेषयन् कं जलमाविशदित्यन्वयः । घ्राणेन पृथ्व्यन्वेषणे हेतुमाह—क्रोडापदेशे इति, वाराहच्छद्मे त्यर्थः । यथा वराहरूपमङ्गीकृतवांस्तद्वत् जातीयानुकरणमपि कृतवानिति भावः । वस्तुतस्तु स्वयमध्वराङ्गः अध्वराः यज्ञाः अङ्गानि यस्य तथाभूत इत्यर्थः ॥ २९ ॥ ❀ ❀ तदानीन्तनं समुद्रध्वनिमुत्प्रेक्षते—स इति । यस्मिन् भगवान् प्रविष्टः स उदन्वान् समुद्र आर्त इव स्तनयन् शब्दं कुर्वन् भो यज्ञेश्वर मा मां पाहि रक्षेति चुक्रोशेत्यन्वयः । आर्तसादृश्यमाह—उत्सृष्टेति । उत्सृष्टाः प्रसारिताः दीर्घा ऊर्मय एव भुजास्तैर्विशिष्टः । आर्तत्वे हेतुमाह—वज्रेति । वज्रकूटो वज्रपर्वतस्तद्वदङ्गं यस्य तस्य भगवतो निपातवेगेन विशीर्णा कुक्षिर्यस्य सः ॥ ३० ॥ ❀ ❀ जलं प्रविष्टो भगवान् किमकरोदित्यत्राह—खुरैरिति । त्रीणि परूंषि सवनात्मकानि पर्वाणि यस्य स त्रिपरुः यज्ञमूर्तिर्भगवान् क्षुरप्रैः क्षुरप्रा आयताग्राः क्षुरास्तत्सदृशैः खुरैरपो दरयन् विदारयंस्तदा तत्र रसायां रसातले गां पृथ्वीं ददर्शेत्यन्वयः । नन्वपाराणामम्भसां कथं विदारणं सम्भवतीत्याकाङ्क्षायां अचिन्त्यमहिम्ना भगवता सर्वसम्भवादित्याशयेनाह—उत्पारपारमिति । उत्पाराणां पारशून्यानामप्यपां पारमवसानं यथा भवति तथा विदारयन्नित्यर्थः । तत्र भूम्युद्धारे आयासाधिक्यमाशङ्क्य तत्रायासाभावं सूचयन्नाह—सुषुप्सुरिति, अग्रे प्रलयसमये तत्र तास्वप्सु सुषुप्सुः शिशयिषुः सन् यां भूमिं स्वयंमभ्यधत्त आभिमुख्येन दधार जठरे धृतवानित्यर्थः । तदा जठरे धारणे इदानीं तदुद्धारे च हेतुं सूचयन् विशिनष्टि—जीवधानीमिति । जीवा धीयन्ते यस्यां तां सर्वजीवाधारभूतामित्यर्थः ॥ ३१ ॥ ❀ ❀ जले निमग्नां महीं स्वदंष्ट्रयोद्धृत्य रसाया रसातलात् उत्थितः ऊर्ध्वमागच्छन्स भगवान् संरुरुचे अत्यशोभत । रसाया इत्यनेन ... तलसुतलतलातलमहातलाख्याः षड्भूखण्डा मग्ना जले निमग्नाश्च तत उद्धृत्य भगवता स्वस्वस्थाने स्थापिताश्चेत्यर्थो-अन्यथा रसातलपदाभ्यासोऽसङ्गतः स्यात्, मध्येऽतलादीनां प्रतिबन्धकत्वात् । एवं भूम्युद्धारलीलायामपि दैत्यवधलीलामाह—तत्रेति सार्द्धेन । तत्राम्भसि गदयाऽऽपतन्तं गदामुद्यम्य आगच्छन्तमादिदैत्यं हिरण्याक्षं स भगवान् जघानेत्युत्तरेणान्वयः । तत्रापीति पाठान्तरम् । वधे हेतुमाह—रुन्धानमिति । चतुर्दिक्षु प्रतिभ्रमणेन प्रतिबध्नन्तमित्यर्थः । देवादीनामुपद्रवकर्तृत्वादपि तद्वधं कृतवानित्याशयेनाह—असह्यविक्रममिति । तथापि परमदयालोस्तस्य क्रोधासम्भवात् कथं तं विना तद्वधः सम्भवतीत्याशङ्क्याह—सुनाभेति । सुनाभेन सुदर्शनचक्रेण सन्दीपितः मयि विद्यमाने किमिति परिभवं सहसे इत्युक्त्या प्रकटितः तीव्रो मन्युः क्रोधो यस्य सः । तत्र तस्यायासमाशङ्क्याह—लीलयेति, अनायासेनैवेत्यर्थः । तत्र दृष्टान्तमाह—इभं मृगराडिवेति, मृगराट् सिंहो यथा इभं गजं हन्ति तथेत्यर्थः । सदृष्टान्तं तस्य शोभान्तरमाह—तदिति । गजेन्द्रो जगतीं पर्वतप्रान्तभूमिं विभिन्दन् क्रीडया विदारयन् गैरिकायां यथा अरुणगण्डतुण्डो भवति तथा तस्य रक्तमेव पङ्कस्तेनाङ्कितौ गण्डौ तुण्डं मुखं च यस्य तथाभूतो भगवान् जात इत्यर्थः ॥ ३२ ॥ ३३ ॥

### हिन्दी अनुवाद

जिस समय उनका वज्रमय पर्वतके समान कठोर कलेवर जलमे गिरा, तब उसके वेगसे मानो समुद्रका पेट फट गया और उसमें बादलोंकी गड़गड़ाहटके समान बड़ा भीषण शब्द हुआ । उस समय ऐसा जान पड़ता था मानो अपनी उत्ताल तरङ्गरूप भुजाओंको उठाकर वह बड़े आर्त्तस्वरसे 'हे यज्ञेश्वर ! मेरी रक्षा करो' इस प्रकार पुकार रहा है ॥ २९ ॥ ❀ ❀ तब भगवान् यज्ञमूर्ति अपने बाणके समान पैने खुरोंसे जलको चीरते हुए उस अपार जलराशिके उस पार पहुँचे । वहाँ रसातलमें उन्होंने समस्त जीवोंकी आश्रयभूता पृथ्वीको देखा, जिसे कल्पान्तमें शयन करनेके लिये उद्यत श्रीहरिने स्वयं अपने ही उदरमें लीन कर लिया था ॥ ३० ॥ ❀ ❀ फिर वे जलमें डूबी हुई पृथ्वीको अपनी दाढ़ोंपर लेकर रसातलसे ऊपर आये । उस समय उनकी बड़ी शोभा हो रही थी । जलसे बाहर आते समय उनके मार्गमें विघ्न डालनेके लिये महापराक्रमी हिरण्याक्षने जलके भीतर ही उनपर गदासे आक्रमण किया । इससे उनका क्रोध चक्रके समान तीक्ष्ण हो गया और उन्होंने उसे लीलासे ही इस प्रकार मार डाला, जैसे सिंह हाथीको मार डालता है । उस समय उसके रक्तसे थूथनी तथा कनपटी सन जानेके कारण वे ऐसे जान पड़ते थे मानो कोई गजराज लाल मिट्टीके टीलेमें टक्कर मारकर आया हो ॥ ३१–३२ ॥

तमालनीलं सितदन्तकोट्या क्ष्मामुत्क्षिपन्तं गजलीलयाङ्ग ।
प्रज्ञाय बद्धाञ्जलयोऽनुवाकैर्विरिञ्चिमुख्या उपतस्थुरीशम् ॥ ३३ ॥

ऋषय ऊचुः

जितं जितं तेऽजित यज्ञभावन त्रयीं तनुं स्वां परिधुन्वते नमः ।
यद्रोम[1]गर्तेषु निलिल्युरध्वरास्तस्मै नमः कारणसूकराय ते[2] ॥ ३४ ॥
रूपं तवैतन्ननु दुष्कृतात्मनां [3]दुर्दर्शनं देव यदध्वरात्मकम् ।
छन्दांसि यस्य त्वचि बर्हिरोमस्वाज्यं दृशि त्वङ्घ्रिषु चातुर्होत्रम् ॥ ३५ ॥
स्रुक्तुण्ड आसीत्स्रुव ईश नासयोरिडोदरे चमसाः कर्णरन्ध्रे ।
प्रा[4]शित्रमास्ये ग्रसने ग्रहास्तु ते यच्चर्वणं ते भगवन्नग्निहोत्रम् ॥ ३६ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका ।

प्रज्ञायालक्ष्य । अनुवाको वैदिकं सूक्तं तत्सदृशैर्वाक्यैस्तुष्टुवुः ॥ ३३ ॥ ❀ ❀ भो अजित ते त्वया जितं जितमिति संभ्रमे वीप्सा । यज्ञैर्भाव्यते आक्रियत इति तथा । त्रयीं वेदमयीम् । निलिल्युर्लीनप्रायाः । कारणं पृथिव्युद्धरणं तेन सूकराय ॥ ३४ ॥ ❀ ❀ यज्ञात्मतां प्रपंचयंतः स्तुवंति । रूपमित्यादिचतुर्भिः छंदांसि गायत्र्यादीनि । यज्ञांगभूतच्छंदआद्यनुवादेन भगवदवयवता विधीयते बर्हिःशब्दे दीर्घाभाव आर्षः । दृशि चक्षुषि चातुर्होत्रं होत्रादिकर्मचतुष्टयम् अंघ्रिषु ॥ ३५ ॥ ❀ ❀ स्रुक् जुहूस्तुण्डे मुखाग्रे । स्रुवो नासिकयोः । इडा भक्षणपात्री । चमसा ग्रहाश्च सोमपात्राणि । प्राशित्रं ब्रह्मभागपात्रम् । ग्रस्यतेऽनेनेति ग्रसनं मुखांतर्वर्तिच्छिद्रम् । चर्वणं भक्षणम् ॥ ३६ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः ।

किं च । अत्र श्वेतवाराहकल्पे स्वायंभुवमन्वंतरारंभे ब्रह्मनासात एव श्वेतवाराह आविर्भूय केवलं पृथ्वीमुद्धृत्यैवांतरधात्ततः षष्ठे चाक्षुषमन्वंतरे पुनराकस्मिकप्रलये जलादेवाविर्भूय नीलो वाराहः पृथ्वीमुद्धरन् हिरण्याक्षं जघानेति वाराहद्वयलीलामेकीकृत्यैव मैत्रेयः प्राह स्मेति भागवतामृतकारिकाभ्योऽवगंतव्यम् । ताश्च यथा—"द्विधाऽविरासीत्कल्पेऽस्मिन्नादौ स्वायंभुवांतरे । घ्राणाद्विधेर्धरोद्धृत्यै चाक्षुषीये तु नीरतः ॥ हिरण्याक्षं धरोद्धारे निहंतुं दंष्ट्रिपुंगवः । चतुष्पाच्छ्रीवराहोऽसौ नृवराहः कचिन्मतः ॥ कदाचिज्जलदश्यामः कदाचिच्चंद्रपांडुरः । यज्ञमूर्तिः स्वविष्टोयं वर्णद्वययुतः स्मृतः ॥ दक्षात्प्राचेतसात्सृष्टिः श्रूयते चाक्षुषांतरे । स्वतस्तत्रैव जन्मास्य हिरण्याक्षस्य युज्यते ॥ उत्तानपादवंश्यानां तनयस्य प्रचेतसाम् । दक्षस्यैव दितिः पुत्री हिरण्याक्षो दितेः सुतः ॥ कल्पारंभे तदा नास्ति सुतोत्पत्तिर्मनोरपि । कासौ प्राचेतसो दक्षः क दितिः क दितेः सुतः ॥ अतः कालद्वयोद्भूतं श्रीवराहस्य चेष्टितम् । एकत्रैवाह मैत्रेयः क्षत्तुः प्रश्नानुसारतः ॥ मध्ये मन्वंतरस्यैव मुनेः शापान्मनुं प्रति । प्रलयोऽसौ बभूवेति पुराणे कचिदीर्य्यते ॥ अयमाकस्मिको जातश्चाक्षुषस्यांतरे मनोः । प्रलयः पद्मनाभस्य लीलयेति तु कुत्रचित्" इति विश्वनाथः । विजयध्वजस्तु हिरण्याक्षौ द्वावित्युक्त्वा कारकद्वयमाह । "ब्रह्मजस्तु हिरण्याक्षः प्रथमं दंष्ट्रया हतः । स एव पार्षदाविष्टो द्वितीयः कर्णताडनात् ॥ पूर्वं लयोदके मग्नां द्वितीयं तेन मज्जिताम् । भुवमुद्धरते वासौ हरिणा क्रोडमूर्त्तिना" इति । अविविच्य कथनं तु दुष्टमोहार्थं देवप्रियार्थं वेति ज्ञेयम् । "व्यत्यासेनापि चोच्यंते त्वविविच्यैव कुत्रचित् । दुष्टानां मोहनार्थाय देवानां च प्रियाय वै ॥ यत्र तत्र कथाः काश्चिद्व्यासे साक्षाद्धरेस्तनौ । भ्रांतिर्न युज्यते तेन ज्ञात्वैवेत्थं प्रवर्णितम्" इत्यलम् । तमालस्तापिच्छस्तद्वन्नीलं श्यामवपुषम् । संप्लवादिसाधारण्येनैवेयं मन्वंतरद्वयकथाया अभेदोक्तिरिति । वस्तुतस्तु—चाक्षुषांतरसंप्लव एवायं प्रसंग इति संदर्भः ॥ ३३ ॥ ❀ ❀ यद्वा । यज्ञान्भावयत्युत्पादयतीति तथा हे सर्वयज्ञकारणेत्यर्थः । हे अजित जयजयेत्यर्थो जितं जितमित्यस्य । कारणेति संबुद्धिर्वा ॥ ३४ ॥ ३५ ॥ ❀ ❀ जुहूः पालाशमयी । स्रुवः खादिरः । 'चर्वणं चूर्णनं दंतैः' इति यादवः ॥ ३६ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

आक्रियतेऽभिव्यज्यते । कारणं परं ब्रह्म तत्स्वरूपाय शूकराय ॥ ३४ ॥ ❀ ❀ यज्ञात्मतां यज्ञभावनेति सम्बोधनोक्तां दुष्कृतात्मनां भक्त्यभावान्मलिनचित्तानां एतच्छ्रीवराहात्मकं छन्द आद्यनुवादेनेति तत्र छन्दआदीनि ज्ञातत्वादनुवाद-

---

१. प्रा० पा०—मकूपेषु । २. प्राचीने पाठे 'ते' नास्ति । ३. प्रा० पा०—न रोचते देव । ४. प्रा० पा०—पोशित्र० ।

रूपाणि भगवदवयवतात्वज्ञातत्वाद्विधीयते "अनुवादमनुक्त्वैव न विधेयमुदीरयेत्" इति नियमात् छन्दांसि त्वचि त्वग्रूपत्वेन ध्येयानीत्यादिवचनव्यक्तिः सर्वत्र कर्तव्येत्यर्थः ॥ ३५ ॥ ❀ ❀ सोमश्चम्पतेत्यादि भक्ष्यते तत्र तानि सोमपात्राणि चमसाः अदनार्थस्य चमेरौणादिकोऽधिकरणसाधनः प्रत्ययः "प्रैतुहोतुश्चमसः प्रोद्गातॄणां चमस" इति श्रुतेः उद्गातृचमसमेकं श्रुतिसंयोगादिन्यायाच्च समाख्यैव तस्य सोमभक्षणपात्रत्वं न वचनात् । तथा सोमो गृह्यते येषु तानि सोमपात्राणि ग्रहाः यद्ग्रहान् स्थापयतीति-वचनात् अत्रापि समाख्यैव ॥ ३६ ॥

## श्रीमद्वीरराघवव्याख्या

तमालवन्नीलं सितदन्तकोट्या दंष्ट्राग्रेण क्ष्मां महीमजस्येव लीलयोत्क्षिपन्तम् ईशं भगवन्तं प्रज्ञायालक्ष्याङ्ग हे विदुर ! विरञ्चिप्रभृतयो बद्धाञ्जलयः सन्तः अनुवाको वेदसूक्तं तत्सदृशैर्वाक्यैरुपतस्थुः समीपे स्थित्वाभिदधुस्तुष्टुवुरित्यर्थः ॥ ३३ ॥ ❀ ❀ उपस्थानप्रकारमेवाह । जितमित्यादिना । हेऽजित ! ते त्वया जितं सर्वोत्कर्षेण वर्तितं जितं जितमिति संभ्रमाद्वीप्सा हे यज्ञभावन ! यज्ञैर्भाव्यते संभाव्यते सैव भा इति तत्सम्बुद्धिः यज्ञाराध्येत्यर्थः । यद्वा यज्ञान् भावयति वर्तयतीति तथा यज्ञाधिपते इत्यर्थः । यद्वा यज्ञैर्विभाव्यतेऽवयवत्वेनोपास्यत इति तथेति यावत् अतएव ह्युत्तरत्रयज्ञावयवान् छन्दआदीनवयवत्वेन कल्पयित्वा स्तुतिर्व्यज्यते त्रयीं वेदत्रयीविहितयज्ञमयत्वेनोपासनात्तदाराध्यत्वाद्वा त्रयीमयत्वं तन्वां ज्ञेयम् , स्वां स्वकीयां तनुं परिधुन्वते परितः सर्वतः कम्पते तुभ्यं नमः । बहुषु कल्याणगुणेषु सत्सु किं विशेषेण तनुपरिधूननमेव प्रथमं स्तूयत इत्यत्राह । यद्रोमेति । यद्यस्यां तन्वां रोमाणि तेषां गर्तेषु रन्ध्रेष्वब्धयः समुद्रा निलिल्युर्लीना बभूवुरत इदमत्याश्चर्यमिति तदेव प्रथमं स्तूयत इति भावः । अतएव कारणसूकराय जगत्कारणभूतायाप्राकृतसूकररूपिणे यद्वा कारणात् क्षित्युद्धारणनिमितात्सूकररूपधारिणे इत्यर्थः । न हि प्राकृतसूकरस्येत्थं सामर्थ्यं दृष्टमित्यभिप्रायः । एवंभूताय तस्मै नमः ॥ ३४ ॥ ❀ ❀ रूपस्याप्राकृतत्वं तदनुक्तयज्ञभावनत्वमेव प्रपञ्चयति । रूपमिति चतुर्भिः । हे देव ! यदध्वरात्मकं तव रूपं तद्दुष्कृतात्मनां दुष्कृतमघं तेन मलिन आत्मा मनो येपामयोगिनां दुर्दर्शनं दर्शनाविषयं प्राकृते हि रूपं प्राकृतमनोग्राह्यम् इदं तु रूपं "दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः" इत्यादि श्रुत्युक्तविधया योगशुद्धमनोग्राह्यत्वादप्राकृतमित्यर्थः । नन्वयोगिभिरपि तादात्विकैर्भगवतो विभवरूपे दृश्यत एव कथमेतदुच्यते । दुष्कृतात्मनां दुर्दर्शमिति उच्यते । न ह्ययोगिनो भगवतो विभवरूपमप्राकृतं पञ्चोपनिषन्मयं स्वेच्छयैवोपात्तमिति यथावज्जानंति किन्तु तिर्यगादिसजातीयं प्राकृतमित्येव जानन्ति । अतो न विरोधः अत्र यज्ञाङ्गानां छन्दआदीनां भगवदवयवत्वेनानुसंधानरूपदृष्ट्या उपासनविधानार्थं पूर्वोक्तयज्ञभावनत्वं यदध्वरात्मकत्वम् इत्यनूद्यते इदं छन्दआदीनां भगवत्त्वगादित्वरूपणं दृष्ट्युपासनं नाम-ब्रह्ममनो ब्रह्मेत्यादिवत् नहि कालत्रयवर्तिनो छन्दआदीनां यज्ञानां संघातस्य तात्कालिकभगवद्वराहतनुत्वसंभवः सर्वशरीरकत्वात् । यज्ञावयवानामपि तदङ्गत्वकथनं सम्भवति तथापि प्राकृतानां यज्ञावयवावां तच्छरीरकत्वेऽपि प्रत्येकमेव यज्ञावयवानां तच्छरीर-त्वात्तेपान्तच्छरीरावयवत्वकीर्तनमनुपपन्नमेव तस्माद् दृष्ट्युपासनावधानमेवेति मन्तव्यभूतश्छन्दांसि त्वचि बर्हिरोमसु इत्यादि, क्वचिद्व्यतिरेकनिर्देशः क्वचिदग्निहोत्रं चर्वणमुपसदः शिरोधर इत्यभेदनिर्देशश्चोपपन्नः यस्य तव त्वचि छन्दांसि गायत्रीत्रिष्टुबादीनि यज्ञाङ्गानि छन्दांस्यासन्नित्यपकृष्टक्रियापदविपरिणामेनान्वयः । रोमसु बर्हिः कुशः बर्हि रोमस्वित्यत्रार्षत्वात् ढ्रलोप इति दीर्घाभावः दृशि दृष्टौ आज्यमङ्घ्रिषु:, चतुर्होत्रं चातुर्होतृशब्दवाच्यमन्त्रभेद्यं कर्म ॥ ३५ ॥ ❀ ❀ स्रुक् जुहूः तुण्डे मुखाग्रे आसीत् स्रुच इतरदर्वीनासिकयोरासीदित्यनुषङ्गः एवमुत्तरत्रापि इडा हविर्भक्षणपात्रमुदरे चमसाः सोमपात्राणि च तत्र चमसाः कर्णरन्ध्रे आसन्प्राशित्रं ब्रह्मभागपात्रं आस्ये मुख आसीद् ग्रहः ग्रसने ग्रस्यन्तेऽनेनेति ग्रसनं मुखान्तवर्तिच्छिद्रं तस्मिन्नासन् हे भगवन् ! यदग्निहोत्रमग्निहोत्रनामकं कर्म तत्ते तव चर्वणं भक्षणमासीत् ॥ ३६ ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली ।

अयं हरिरेव न लोकवराह इति ज्ञापनाय विरिञ्चिप्रमुखानां देवानामुपपत्तिविधिं वक्ति । तमालेति । उत्क्षिपन्तमुद्धरन्तम् । अनुवाकैरियत्सङ्ख्यां विशिष्टैर्वेदवाक्यैः ॥ ३३ ॥ ❀ ❀ उपस्थाय किं कृतं तत्राह । जितं जितमिति । त्रयीं तनुं त्रिवेदप्रतिपाद्यां मूर्तिं परिधून्वते रोमजलत्यागाय कम्पमानाय निलिल्युर्निलीनाः ते तुभ्यम् ॥ ३४ ॥ ❀ ❀ अनेन विष्णुरयं न लोकवराह इत्यस्य किमायातमिति तत्राह । रूपमिति । दुष्कृतात्मनामिति विशेषणेन सुकृतात्मनां सुदर्शनमिति ध्वनितमत इदमेवास्य परब्रह्मत्वे मानं सूचितमध्वरात्मकं यज्ञसाधनप्रसूतिकारणमनेनापि न केवलं भूम्युद्धरणाय किन्तु सकलयज्ञसाधनप्रसूतये इदं रूपमिति सूचितं यद्वा यज्ञाख्यपरमात्मरूपं "यज्ञो विष्णुर्देवता" इति श्रुतेः । अनेन ब्रह्मत्वं स्पष्टमुक्तं भवति अयमात्मा ब्रह्मेति च अस्य यज्ञात्मकत्वं स्पष्टयति छन्दांसीत्यादिना । सप्तच्छन्दांसीत्यादयो यस्य तव त्वगादिषु वर्तन्ते तुभ्यं नम इत्यन्वयः । बर्हिर्दर्भः दृशि चक्षुपि चतुर्भिर्होतृभिः क्रियमाणं कर्म चातुर्होत्रम् ॥ ३५ ॥ ❀ ❀ इडा यज्ञपात्रं चमसश्चतुष्कोणसंनिवंशो यज्ञपात्रं

प्राशित्रं यज्ञपात्रं पुरोडाशादिर्वा द्वादश सोमग्रहाः रसने जिह्वायां क्रियायाश्च चर्वणं दन्तैश्चर्वणं "चर्वणं चूर्णनं दन्तैः" इति यादवः ॥३६॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

कारणं परं ब्रह्म तत्स्वरूपाय शूकराय ॥ ३४ ॥ ❀ ❀ अतस्तदाश्रयैव सर्व्वा यज्ञप्रक्रियेत्याह । रूपमित्यादि-चतुर्भिः ॥ ३५—४० ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी ।

अत्र श्वेतवाराहकल्पे स्वायम्भुवमन्वन्तरारम्भे ब्रह्मनासात एव श्वेतवराह आविर्भूय केवलं पृथ्वीमुद्धृत्यैवान्तरधात्ततः षष्ठे चाक्षुषमन्वन्तरे पुनराकस्मिके प्रलये जलादेराविर्भूय नीलो वराहः पृथ्वीमुद्धरन् हिरण्याक्षं जघानेति वराहद्वयलीलामेकी-कृत्यैवात्र मैत्रेयः प्राह स्मेति श्रीभगवतामृतकारिकाभ्योऽवगन्तव्यम् । ताश्च यथा

द्विधाविरासीत् कल्पेऽस्मिन्नाद्ये स्वायम्भुवान्तरे । घ्राणाद्विधेर्धरोद्धृत्यै चाक्षुषीये तु नीरतः ॥
हिरण्याक्षं धरोद्धारे निहन्तुं दंष्ट्रिपुङ्गवः । चतुष्पात् श्रीवराहोऽसौ नृवराहः कचिन्मतः ॥
कदाचिज्जलदश्यामः कदाचिच्चन्द्रपाण्डुरः । यज्ञमूर्त्तिः स्थविष्ठोऽयं वर्णद्वययुतः स्मृतः ॥
दक्षात् प्राचेतसात् सृष्टिः श्रूयते चाक्षुषान्तरे । स्वतस्तत्रैव जन्मास्य हिरणाक्षस्य युज्यते ॥
उत्तानपादवंश्यानां तनयस्य प्रचेतसाम् । दक्षस्यैव दितिः पुत्री हिरण्याक्षो दितेः सुतः ॥
कल्पारम्भे तदा नास्ति सुतोत्पत्तिर्मनोरपि । कासौ प्राचेतसो दक्षः क दितिः क दितेः सुतः ॥
अतः कालद्वयोद्भूतं श्रीवराहस्य चेष्टितम् । एकत्रैवाह मैत्रेयः क्षत्तुः प्रश्नानुसारतः ॥
मध्ये मन्वन्तरस्यैव मुनेः शापान्मनुं प्रति । प्रलयोऽसौ बभूवेति पुराणे कचिदीर्य्यते ॥
अयमाकस्मिको जातश्चाक्षुषेऽप्यन्तरे मनोः । प्रलयः पद्मनाभस्य लीलयेति तु कुत्रचित् ॥

इति अनुवाको वैदिकं सूक्तं तत्सदृशैर्वाक्यैस्तुष्टुवुः ॥ ३३ ॥ ❀ ❀ ते त्वया जितम् । हे अजित ! जय जयेत्यर्थः । यज्ञान् भावयसि हे सर्व्वयज्ञकारणेत्यर्थः । त्रयीं वेदमयीं हे सर्व्वजगत्कारण ! ॥ ३४ ॥ ❀ ❀ यज्ञात्मतां प्रपञ्चयन्तः स्तुवन्ति । रूपमित्यादिचतुर्भिः । त्वचि छन्दांसीत्यादौ छन्दआदीनां तव त्वगादय एव कारणमित्यर्थो ज्ञेयः । बर्हिःशब्दे दीर्घाभाव आर्षः, चातुर्होत्रं होत्रादिकर्म्मचतुष्टयम् ॥ ३५ ॥ ❀ ❀ स्रुक् जुहूः तुण्डे मुखाग्रे स्रुवो नासिकयोः । इडा भक्षणपात्रं चमसा ग्रहाश्च सोमपात्राणि । प्राशित्रं ब्रह्मभागपात्रं ग्रस्यतेऽनेनेति ग्रसनं मुखान्तर्व्वर्त्तिच्छिद्रं चर्व्वणं भक्षणम् ॥ ३६ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

अनुवाको वैदिकं सूक्तं तत्तुल्यैर्वाक्यैः उपतस्थुस्तुष्टुवुः ॥ ३३ ॥ ❀ ❀ ते त्वया जितं जितमुत्कर्षेण वर्तितं संभ्रमे वीप्सा । हे अजित ! यज्ञैर्भाव्यते आक्रियते यज्ञरूपेणोपास्यते इति फलितोऽर्थः । तत्सम्बोधने हे यज्ञभावन ! त्रयीं वेदत्रयमयीं निलिल्युर्लीनप्रायाः कारणेन भूम्युद्धरणेन शूकराय ॥ ३४ ॥ ❀ ❀ यज्ञात्मतां दर्शयन्तः स्तुवन्ति । रूपमित्यादिचतुर्भिः । हे देव ! यज्ञवराहरूपं दुष्कृतात्मनां दुर्दर्शनं दर्शनानर्हमप्राकृतं तदेव ननु अहो एतदध्वरात्मकमध्वररूपं यज्ञाकारमुपासकानामु-पकारार्थं प्रकाशितमित्यर्थः । तत्र छन्दांसि गायत्र्यादीनि त्वचि बर्हिःशब्दे दीर्घाभाव आर्षः । आज्यं दृशि चक्षुषि चातुर्होत्रं होत्रादिकर्मचतुष्टयमङ्घ्रिषु ॥ ३५ ॥ ❀ ❀ स्रुक् जुहूः तुण्डे मुखाग्रे स्रुवः इतरदर्वी नासिकयोः आसीत् इडा । भक्षणपात्रं चमसा ग्रहाश्च सोमपात्राणि प्राशित्रं ब्रह्मभागपात्रं तत्र चमसाः कर्णरन्ध्रे आसन् प्राशित्रमास्ये मुखे आसीत् ग्रहाः ग्रसने ग्रस्यते अनेनेति आस्यान्तरच्छिद्रे चर्वणं भक्षणं तु अग्निहोत्रम् ॥ ३६ ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

अत एव जघान । क्रोधेन हननात् पुनरुत्पत्तिः । ननु दोषगुणयोर्विद्यमानत्वात् कथमेकान्ततो वध एव कृत इत्या-शङ्क्याऽऽह—रुन्धानमिति । स हि गतिप्रतिबन्धको न भवेद्यदि, तदा न हतोऽपि स्यात् । प्रतिबन्धकत्वादवश्यं हत इत्यर्थः । नन्वचिन्त्यशक्तिर्भगवांस्तत्र तिरोहितो भवेत्, तं वा वञ्चयेत्; हननमेव कुतः कृतवानित्याशङ्क्याऽऽह—असह्यविक्रममिति । न सह्यो विक्रमो यस्य । ननु तथाप्यपराधान्तरे मारणीयः, न तु स्वापराधे, 'वधानुकल्पः स्वद्रोहः' इति भगवच्छास्त्रात् । तत्राऽऽह—स इति ।

स दैत्यवधार्थमेव वराहरूपं गृहीतवान्, अन्यथा क्रिया[1]न्तरेणेच्छया वा भूमिं जलोपरि स्थापयेत्। ननु कल्पान्तरव्यवस्थयेव भूमिमन्यत्र स्थापयित्वा पश्चान्मारयेदित्याशङ्क्याऽऽह—लीलयेति। ननु पूर्वभक्तिमेव तस्योररीकृत्य, तं भक्तं विधाय, कृतार्थमेव कथं न कृतवान् ? सर्वसमर्थत्वातः इत्याशङ्क्योभयोस्तादृशरूपग्रहणं संवृत्तं वध्यघातकभावापन्नम्, अतो हतवानित्याह दृष्टान्तेन—इभं मृगराडिवेति। अनेन शाश्वतिको विरोधः सूचितः। दृष्टान्तेन प्राप्तं भक्षणदोषं परिहरति—अम्भसीति। उभावपि स्थलचरौ; जले मारणं स्वरक्षार्थमेव, न भक्षणार्थमिति लोके तदपि प्रदर्शितमित्याह—तद्रक्तपङ्काङ्कितगण्डतुण्ड इति। अनेन स बलादग्रे समागम्य भूमिं धृतवानिति लक्ष्यते, अन्यथा तदुदरं न विदारयेत्। अत एव कल्पान्तरे विदारणं नोक्तम्। तस्य हिरण्याक्षस्योदरभेदेन यद्रक्तं स्नुतम्, तदेव किञ्चित्कालं स्थितं पङ्कप्रायं जातम्; तेन अङ्कितं गण्डपर्यन्तं तुण्डं यस्य। तस्योदरे बहुदूरे मुखं गतम्, यथाऽन्तर्गतं तस्य जीवतत्त्वं स्वमुखे समायाति, अन्यथा भगवतो भगवदीयानां च द्रोहेण तस्य नरकपातः स्यात्, नीचयोनिर्वा भवेत्। अतो भगवांस्तं स्वस्मिन्नेव स्थापितवान्। इममर्थं दृष्टान्तेन स्पष्टयति—यथा गजेन्द्र इति। स हि कमलादीनां कन्दमात्मसात्करोति। इन्द्रपदं दूरेऽपि विद्यमानं मूलं सप्ररोहमुत्पाटयतीति ज्ञापयति। जगतीमिति। यस्यां पृथिव्याम्। जङ्गमदेहा जायन्ते, तादृशपृथ्वीभेदनेन स्वाभिलषितस्वजातीयदेहोत्पादकपृथिव्यवयवसहितकन्दं भक्षयति। एतत्परिज्ञानार्थमपीन्द्रपदम्। एवं भगवानपि हिरण्याक्षस्य जीवम्, तदिन्द्रियवर्गम्, तस्याग्रिमदेहोत्पादकावयवसहितं विद्यमानदेहसंबन्धिनं दूरीकृत्य, आत्मसात् कृतवानित्यर्थः। इतरनिराकरणपूर्वकस्वग्रहणमेव विशेषभेदनम्॥ ३३॥ ❀ ❀ एवं दैत्यानां त्रिविधानामपि निराकरणमुक्त्वा भूम्युद्धारमुपसंहरति—तमालेति। ईशमुपतस्थुरिति संबन्धः। तैरेवेशत्वं प्रत्यक्षतो दृष्टम्। अयं यज्ञपुरुष इति प्राज्ञाय। बद्धाञ्जलय इति यज्ञारम्भे नमस्काराञ्जलिर्विहित इति, 'भुवनमसि' इत्यत्र तथोक्तत्वात् यज्ञारम्भे च प्रातरनुवाक उच्यते। प्रकृते कालस्य नियामकत्वभावादनुवाक इत्येवोक्तम्। सर्वैः क्रियमाणानामनुवाकानां यागभेदेनाऽपि बहुत्वात् बहुवचनम्। आधिदैविकत्वाय विरिञ्चिमुख्या इति। तस्य यज्ञत्वमीशत्वं च साधयति—तमालनीलां क्ष्मां सितदन्तकोट्या उत्क्षिपन्तमिति। तमालैर्नीला, तमालवद्वा नीला। तमालास्तमोवन्नीलवृक्षाः। सृष्टावज्ञानं भयं च हेतुः। तमस्त्वज्ञानभूतम्, वनं वृक्षरूपं भयहेतुः। नीलोऽपि गुणः शृङ्गारवद्रसजनकः। त्रितययोगे सर्गो रसालो भवति। सर्गोत्पादनसामर्थ्यख्यापनाय क्षमाधर्मयोगात् क्ष्मेत्युच्यते। अस्याः सजीवत्वनिराकरणार्थं दन्तकोटिसंबन्धः। देहाऽविशीर्णत्वाय सितत्वम्। दंष्ट्राऽपि स्वस्य प्रियत्वज्ञापनाय दन्तत्वेनोक्ता। कोटिपदेन भगवतो माहात्म्यम्। सर्वेषामेवेशानां भूमौ स्नेहातिशयख्यापनाय सङ्ख्यावाचकपदप्रयोगः। उत्क्षेपणमुत्तोलनम्, अनेन भूमिः स्वरसान्नागतेति ज्ञापितम्। कोट्या भूमिस्पर्शनेन वेदिरिव स्पर्येनोद्धृता निरूपिता। ऐश्वर्यं स्पष्टमेव। गजलीलयेत्यनेनापि ऐश्वर्यम्, यज्ञत्वम्, भक्तकृपालुत्वं च पूर्वोक्तमुपसंहृतम्। अङ्गेति कोमलसंबोधनं परिज्ञानार्थम्॥ ३४॥ ❀ ❀ द्वादशार्कसमैः श्लोकैः कर्मनिर्णय उच्यते। ब्रह्मादीद्विविधं कर्म रूप्यते ॥ १ ॥ उभयोर्भगवत्त्वाय षड्भिः षड्भिर्गुणास्तथा। प्रमाणेन प्रमेयेन निर्णयो द्विविधो यतः। तत्र प्रमाणरूपं हि षड्भिरादौ निरूप्यते ॥ २.॥ ब्रह्मादीनां देवतात्वेऽपि यज्ञे ऋषीणामेव प्रयोजकत्वात् 'ऋषय ऊचुः' इत्याह। प्रथमतो यज्ञस्य सर्वोत्कृष्टत्वं प्रामाणिकत्वं च वदन् नमस्यति—जितं जितमिति। ते जितमेव जितम्। यज्ञार्थं शत्रुहननं वेदे निरूप्यते, न केवलं शत्रुजयः; हननस्य दोषजनकत्वात्। अतो यज्ञार्थं शत्रुजयात् त्वयैव जितम्। किञ्च, कालेन सर्वे जिताः। कालमुखमपि भङ्क्त्वा तद्भक्षितां पृथिवीमानीतवानसीति त्वयैव जितम्। प्रलये कालग्रस्तान्वा उत्पादयतीति 'सोऽपि सावधारणः' इति ते जितमेव जितमित्युक्तम्। कदाचित्कस्यचिज्जयादिक्रिया उत्कृष्टा बह्वर्थसाधिका च भवति काकतालीयन्यायेन। नैतावता जयनिर्द्धार इत्याशङ्क्याऽऽह—हे अजितेति। न कदाऽपि केनापि जित इति। एतादृशजयस्तस्य सर्वदेत्यर्थः। यज्ञैः सर्वे पदार्था भाव्यन्ते उत्पाद्यन्ते, अयं तु यज्ञान् भावयति। अतोऽपि जयनिर्द्धारः। एवं स्तुत्वा नमन्ति—त्रयीं तनुं परिधुन्वते नम इति। 'रूपविशेषे नमकं न कर्त्तव्यम्' इति निषेधोऽत्र न घटते, अस्यैव वेदरूपत्वात्। अथर्वाङ्गिरसां मुख्यतया ब्रह्मप्रतिपादकत्वाद् ब्रह्मोपयोगित्वेन त्रयीशेषत्वेन ज्ञानशेषत्वमेव मन्यमानाः, प्रमाणाप्राधान्येन शास्त्रनिरूपकाः कर्मणि वेदत्रयमेव निर्द्धारितवन्तः। अतो वराहरूपं त्रयीमयमेव, वेदानामपि तस्मिन् शरीरे प्रवेशस्योक्तत्वात्। तस्य च परितः कम्पनं वेदानां विक्षेपार्थम्, अन्यथा त्रय्याश्चतुर्थशेषत्वे वेदानां यज्ञे तात्पर्यं न स्यात्, तथा सति सर्वमुक्तिरेव स्यात्। परितो धूनने न हीनभावमपि, प्रमाणस्य दृढकार्याजनकत्वात् प्रापयतीति भयादपि नमनम्, सृष्टिसाधकत्वादपि। अनेन स्वार्थं वेदभ्रामणं न कारणीयमिति प्रार्थना सूचिता। ननु भवतां वेदभ्रामणे किं स्यात् ? योगेन यज्ञान् दृष्ट्वा, दर्शनानुसारेण तान् विधाय, कृतार्था भविष्यन्ति भवन्त इत्याशङ्क्य, परिधूनने यज्ञदर्शनमेव न भविष्यतीत्यत्र हेतुं वदन्तो नमस्यन्ति—यद्रोमगर्तेष्विति। यस्य भगवतो रोमोद्गमस्थाने ये कूपाः, ते विशाला गर्ता इत्युच्यन्ते। तेषु सर्वे यज्ञा निलीनाः। स हि जलादुद्गत उपरिनिविष्टान् वेदान् विधूननेन दूरीकरिष्यतीति ज्ञात्वा स्वस्याऽपि दूरीकरणशङ्कया श्रुत्या सम्बद्धा रोमगर्तेषु निलीनाः। तत्र रोमावलम्बनमस्तीति। रोम्णां बर्हिष्ट्वात् यज्ञानां चलनेन स्कन्द[2]नदोषोऽपि न भवति। 'अस्कन्नं हि तत् यद्बर्हिषि स्कन्दति' इति श्रुतेः। अतः सर्ववेदानां यज्ञानां च कारणभूतः। उभयप्र-

---

१. रूपान्तरेण. ख. क्रियान्तररूपेण. क ङ। २. स्कन्न ख. ङ. च.।

सवकर्ता देहो यस्य, तादृशायान्यत्कर्तुमशक्ता नमनं कुर्वन्तीत्यर्थः । 'कारणसूकराय ते' इत्यपि वा पाठे तुल्योऽर्थः ॥ ३५ ॥ ❀ ❀ एवं पुरुषोत्तमत्वम्, वेदयज्ञरूपताम्, स्वस्वामित्वं च निरूप्य तदुपपादयन्तोऽतज्ज्ञान् निन्दन्ति—रूपमिति । तवैतद्रूपं निश्चयेन दुष्कृतात्मनां पापसंस्कृतभूम्यवयवनिष्पादितदेहानां द्रष्टुमप्ययोग्यम्, यथा दिवाभीतस्य सूर्यरूपम् । ज्ञानभजनादिकं तु दूरे । नैतावता कर्ममार्गे काचित् क्षतिः । तत्र हेतुद्वयमाह—हे देव यदध्वरात्मकमिति । देवाः पापेभ्यस्तिरोहिता भवन्ति । धर्मश्च यज्ञः, अधर्मे न प्रकाशते । अंशान्तरं तु वराहे नास्ति, यतस्तद्रूपमध्वरात्मकमेव । एवं दुष्टदुर्ज्ञेयत्वमुक्त्वा वेदत्वमादावुपपादयन्ति—छन्दांसि यस्य त्वचीति । छन्दांसि गायत्र्यादीनि सप्त, अनन्तानि वा तानि त्वचि अन्तर्बहिर्व्याप्तायाम् । अनेन तत्र सर्ववेदनिवेशनमुक्तम् । अर्थरूपाणि वा । छन्दसामपि विनियोगात् तदाऽध्वरात्मकतैव निरूप्यते । त्रयी तु तत्रौत्पत्तिकसंबन्धयुक्ता । बर्हिरोमसु । यज्ञियाः पदार्थाः पुरुषावयवैरुत्पादिताः । तदधिष्ठातृदेवतारूपे वराहे निवेश्यन्ते तदा सदैवाभान्तीति । रोम्णां च बर्हिरुत्पादकत्वं वक्तव्यम् । अतो बर्हिरधिष्ठातृरोम्णां विधूननेन पतितानां कुशकाशमयबर्हिष्ट्वम् । आज्यं दृशि । आध्यात्मिकं रूपमाज्यम्, आधिदैविकं चक्षुः । अत एव चक्षुषा आज्याभिधारणम् । चक्षुषः सत्यत्वमाज्यस्य प्रजापतित्वं च तत्त्वख्यापकम् । तुशब्दः पक्षान्तरं व्यावर्त्तयति । 'वसन्तो ऽस्यासीदाज्यम्' इति । 'सरसमहवसन्ताय प्रायक्षत्' इति श्रुतेर्वरप्राप्तमेव वसन्तादे राज्यादिरूपत्वम् । तदत्र नोपयुज्यते । अङ्घ्रिषु चरणेषु चातुर्होत्रं चतुर्होतृवर्गः ॥ ३६ ॥

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

जयानेत्यत्र । इन्द्रपदमिति परमैश्वर्यबोधकमिन्द्रपदम् ॥ ३३ ॥ ❀ ❀ जितमित्यत्र । कारिकासु । द्विविधमिति । प्रमाणानुरोधिप्रमेयरूपं स्वतन्त्रप्रमेयरूपं च । द्विधा निरूपणप्रयोजनमाहुः—प्रमाणेनेत्यादि । द्वेधा निर्णयार्थः । . विवृतौ । सर्वोऽपीत्यादि । 'सर्वोपि वाक्यात्मपदसमूहः सावधारणः' इति न्यायादित्यर्थः । वेदरूपत्वादिति । त्रय्यात्मकत्वात् । चतुष्टय्यात्मकत्वं कुतो नोक्तमित्यत आहुः—अथर्वेत्यादि । ब्रह्मोपयोगित्वेनेति । त्रह्मिष्ठो ब्रह्मा भवतीति श्रुतेस्तदुपयोगित्वेन ॥ ३५ ॥ ❀ ❀ रूपमित्यत्र । सर्ववेदनिवेशन(?)पूर्वश्लोक एवोक्तत्वात् पुनस्तथा व्याख्यानं पुनरुक्तिमावहतीत्यरुच्या पक्षान्तरमाहुः—अर्थरूपाणीति । गायत्र्याद्यभिमानिदेवतारूपाणि । अर्थरूपाणां तेषामनुग्राह्यत्वे युक्तिमाहुः—छंदसामित्यादि । 'गायत्रो वा अग्निर्गायत्रं छन्दः' इत्यादावर्थरूपाया देवताया एव छन्दोक्षरसङ्ख्यापूर्वकं विनियोगात्, 'छन्दांसि मे रथो भवत' इत्यत्रापि तेषां साक्षादेव विनियोगाद्वा, तदेत्यर्थः । नन्वध्वरात्मकत्वे पूर्वश्लोकोक्तत्रयीरूपताविरोध इत्यत आहुः—त्रयी त्वित्यादि । तथा चौत्पत्तिकसूत्रे तथा निर्णीतत्वेनाऽविनाभावान्न त्रयीरूपताविरोध इत्यर्थः । तत्त्वख्यापकमिति । आधिदैविकत्वख्यापक (त्व)म् । पक्षान्तरमेव स्फुटीकुर्वन्ति—वसन्तो अस्येत्यादि ॥ ३६ ॥

### श्रीगिरिधरकृता बालप्रबोधिनी

हे अङ्गेति सम्बोधनं स्नेहसूचकम् । तमालवन्नीलं गजलीलयाऽनायासेनैव सितया दन्तकोट्या दंष्ट्राग्रेण क्ष्मां महीमुत् ऊर्ध्वं क्षिपन्तमुद्धरन्तमीशं प्रज्ञाय आलक्ष्य विरिञ्चिमुख्या ब्रह्मादय ऋषयो बद्धाञ्जलयः सन्तः अनुवाको वैदिकं सूक्तं तत्सदृशैर्वाक्यैरुपतस्थुः तुष्टुवुरित्यन्वयः ॥ ३४ ॥ ❀ ❀ उपस्थानमेव दर्शयति—जितं जितमिति । सर्वदैव तव जयोऽस्ति न कदापि पराजय इति द्योतयन्तः सम्बोधयति अजितेति । ते त्वया इदानीमपि जितम् । सम्भ्रमाद्वीप्सा । सर्वदा जये हेतुं सूचयन्तः सम्बोधयन्ति—यज्ञभावनेति, यज्ञैर्भाव्यते इति तथा यज्ञाराध्येत्यर्थः । यद्वा यज्ञान् भावयति निर्वर्तयतीति तथा यज्ञाधिपते इत्यर्थः । यद्वा यज्ञैर्विभाव्यते यज्ञावयवत्वेनोपास्यते इति तथा । परिपूर्णानन्दस्य परमोपकारिणस्तवोपकारे वयं न समर्था इति द्योतयन्तो नमन्ति—त्रयीं ऋगादिवेदत्रयप्रचुरां स्वां स्वकीयां तनुं परिधुन्वते सर्वतः कम्पयते तुभ्यं नमः । एवं वेदमयत्वेन नमस्कृत्य यज्ञमयत्वेन प्रणमन्ति—यद्रोमेति । यस्य रोमगर्त्तेषु अध्वरा यज्ञा निलिल्युः लीना बभूवुस्तस्मै जगत्कारणभूतसूकराय ते तुभ्यं नमः ॥ ३५ ॥ ❀ ❀ एवं वेदरूपं यज्ञरूपं च भगवन्तं नमस्कृत्य तत्त्वमेव स्पष्टयन्ति—रूपमिति चतुर्भिः । अहो आश्चर्यरूपा तव क्रीडेति सूचयन्तः सम्बोधयन्ति—देवेति । यदध्वरात्मकं तवैतद्रूपं तत् दुष्कृतात्मनां दुष्कृतं पापं तद्युक्त आत्माऽन्तःकरणं येषां तेषां दुर्दर्शनं दर्शनायोग्यमित्यन्वयः । नन्विति निश्चये । तद्रूपमेव विशिनष्टि—यस्य त्वचि छन्दांसि गायत्र्यादीनि आसन् । यस्य रोमसु बर्हिर्बर्हिषः कुशा आसन् । एकवचनं जात्यभिप्रायेण, रेफलोपेऽपि दीर्घाभाव आर्षः । यस्य दृशि नेत्रे आज्यं घृतमासीत् । यस्याङ्घ्रिषु चरणेषु चातुर्होत्रं चतुर्होतृवर्गः होत्रादिकर्मचतुष्टयं वा आसीत् ॥ ३६ ॥

### हिन्दी अनुवाद

तात ! जैसे गजराज अपने दाँतोंपर कमल-पुष्प धारण कर ले, उसी प्रकार अपने सफेद दाँतोंकी नोकपर पृथ्वीको धारण कर जलसे बाहर निकले हुए, तमालके समान नीलवर्ण वराहभगवान्‌को देखकर ब्रह्मा, मरीचि आदिको निश्चय हो

गया कि ये भगवान् ही हैं। तब वे हाथ जोड़कर वेदवाक्योंसे उनकी स्तुति करने लगे ॥ ३३ ॥ ❀ ❀ ऋषियोंने कहा—भगवान् अजित ! आपकी जय हो, जय हो। यज्ञपते ! आप अपने वेदत्रयीरूपविग्रहको फटकार रहे हैं; आपको नमस्कार है। आपके रोमकूपोंमें सम्पूर्ण यज्ञ लीन हैं। आपने पृथ्वीका उद्धार करनेके लिये ही यह सूकररूप धारण किया है, आपको नमस्कार है ॥ ३४ ॥ ❀ ❀ देव ! दुराचारियोंको आपके इस शरीरका दर्शन होना अत्यन्त कठिन है; क्योंकि यह यज्ञरूप है। इसकी त्वचामें गायत्री आदि छन्द, रोमावलीमें कुश, नेत्रोंमें घृत तथा चारों चरणोंमें होता, अध्वर्यु, उद्गाता और ब्रह्मा—इन चारों ऋत्विजोंके कर्म हैं ॥ ३५ ॥ ❀ ❀ ईश ! आपकी थूथनी ( मुखके अग्रभाग ) में स्रुक् है, नासिका-छिद्रोंमें स्रुवा है, उदरमें इडा ( यज्ञीय भक्षणपात्र ) है, कानोंमें चमस है, मुखमें प्राशित्र ( ब्रह्मभागपात्र ) है और कण्ठछिद्रमें ग्रह ( सोमपात्र ) हैं। भगवन् ! आपका जो चबाना है, वही अग्निहोत्र है ॥ ३६ ॥

दीक्षानु[1]जन्मोपसदः शिरोधरं त्वं प्रायणीयोदयनीयदंष्ट्रः।
जिह्वा प्रव[2]र्ग्यस्तव शीर्षकं क्रतोः सभ्यावसथ्यं चितयोऽस[3]वो हि ते ॥ ३७ ॥
सोम[4]स्तु रेतः सवनान्यवस्थितिः संस्थाविभेदास्तव देव धातवः।
सत्राणि सर्वाणि शरीरसन्धिस्त्वं सर्वयज्ञक्रतुरिष्टिबन्धनः ॥ ३८ ॥
नमो नमस्तेऽखिलमन्त्रदेवताद्रव्याय सर्वक्रतवे क्रियात्मने।
वैराग्यभक्त्यात्मजयानुभावितज्ञानाय विद्यागुरवे नमो नमः ॥ ३९ ॥
दंष्ट्राग्रकोट्या भगवंस्त्वया धृता विराजते भूधर भूः सभूधरा।
यथा वनान्निःसरतो दता धृता मतङ्गजेन्द्रस्य सपत्रपद्मिनी ॥ ४० ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

दीक्षा दीक्षणीयेष्टिः। अनुजन्म वारं वारमभिव्यक्तिः। उपसदस्तिस्र इष्टयः। शिरोधरं ग्रीवा प्रायणीया दीक्षाऽनंतरेष्टिः। उदयनीयं समाप्तीष्टिः ते एव दंष्ट्रे यस्य प्रवर्ग्यो महावीरः प्रत्युपसदं पूर्वं क्रियते। सभ्यो होमरहितोग्निः। आवसथ्याः तयोर्द्वंद्वैक्यम्। तत्तव क्रतुरूपस्य शीर्षं शिरः चितय इष्टकाचयनानि पंचासवः प्राणाः ॥ ३७ ॥ ❀ ❀ सोमो लताविशेषस्तव वीर्यं प्रातः सवनादीन्यवस्थितिरासनं बाल्याद्यवस्था वा। अग्निष्टोमोऽत्यग्निष्टोम उक्थः षोडशी वाजपेयोऽतिरात्र आप्तोर्याम इति सप्तसंस्था विभेदास्त्वङ्मांसादिसप्तधातवः। सत्राणि द्वादशाहादीनि बहुयागसंघातरूपाणि असोमाः यज्ञाः ससोमाः क्रतवस्तद्रूपस्त्वम्। इष्टिर्यजनमनुष्ठानं तदेव बंधनं यस्य सः ॥ ३८ ॥ ❀ ❀ पूर्वोक्तमेव सपरिकरं कीर्तयंतः प्रणमंति। नमो नम इति। अखिलमंत्रादिरूपाय क्रियात्मने सामान्यव्यापाररूपाय। किं च। वैराग्ययुक्तकर्मसाध्या सत्त्वशुद्धिस्ततो भक्तिस्तत आत्मजयश्चित्तस्थैर्यं तेनानुभावितं साक्षात्कृतं यज्ज्ञानं तस्मै। एवंभूतज्ञानप्रदाय गुरवे च ॥ ३९ ॥ ❀ ❀ हे भूधर। सभूधरा सपर्वता। वनादुदकान्निर्गच्छतो गजेंद्रस्य। दता दंतेन ॥ ४० ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

महावीरः संतप्तघृतपूर्णे क्षीरप्रक्षारणम् ॥ ३७ ॥ ❀ ❀ आदिना मज्जास्थ्यादिग्रहः। आदिनाष्टादशाहादिग्रहः। सोमोऽमृतवल्लीरसः। बंधनं संधिसंधानम् ॥ ३८ ॥ ❀ ❀ यद्यप्येवं त्वं लीलया सर्वकर्मप्रवर्त्तकत्वेन सर्वकर्मकारणमूर्त्तिरसि तदपि कर्मफलस्पृहारहितया भक्त्यैव तवानुभवो भवेदित्याहुः। वैराग्यं दृष्टादृष्टकर्मफलस्पृहाराहित्यं तद्युक्ता या भक्तिस्तयैवात्मनो मनसो जयस्तेनानुभावितं ज्ञानं स्वविषयकं येन तस्मै। अत एव विद्यागुरवे "ददामि बुद्धियोगं तं येन मामुपयांति ते" इति त्वदुक्तेस्त्वत्प्रापकं ज्ञानं त्वमेव दातुमर्हसीति भावः ॥ ३९ ॥ ❀ ❀ अहो पृथिव्या भाग्यं यां त्वं धत्से इति तां वर्णयति दंष्ट्रेति। सपत्रपद्मिनीति। तस्याः कोरककुड्मलादिभिरुच्चनीचपर्वता उपमिताः ॥ ४० ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या।

उपसदस्तत्संज्ञका यामविशेषाः महावीरो गरुडयागः ॥ ३७ ॥ ❀ ❀ सोमः सोमयागः रेतो वीर्य्यमवस्थीयतेऽत्रेत्यवस्थितिरासनं भावे क्तिन्प्रत्ययप्रसिद्धेः। बाल्याद्यवस्था वेति पक्षान्तरम्। संस्थाविभेदाः ज्योतिष्टोमादिसंज्ञकसप्तयज्ञरचनाप्रकाराः।

---

१. प्रा० पा०—भुजन्योप०। २. प्रा० पा०—प्रवस्यास्तव। ३. प्रा० पा०—अवरं ते। ४. प्रा० पा०—सोमश्च।

असोमा सोमद्रव्याहुतिरहिताः। बन्धनं तद्दृढीकरणसाधनम् ॥ ३८ ॥ ❀ ❀ उक्तकर्मेति वेदविहितकर्मनिष्पाद्या अत्र "वासुदेवे भगवति भक्तियोगः प्रयोजितः। जनयत्याशु वैराग्यम्" इत्यनुसारेण शुद्धभक्तिजवैराग्ये व्याख्याते प्रकृतयज्ञपरिकरता न स्यादग्रिमभक्तिपदं चासंबद्धार्थं स्यादिति मुख्यार्थानुपपत्त्या कार्य्यकारणभावसम्बन्धेन तत्पदस्य तत्कारणसत्त्वशुद्धौ लक्षणा। प्रयोजनञ्च भगवदर्पितनिष्कामकर्म वैराग्यं न व्यभिचरतीति तथा व्याख्यातम्। ततो वैराग्यात् ज्ञानं "भक्त्या मामभिजानाति" इत्युक्तम् ॥ ३९ ॥ ❀ ❀ अत्र कान्तात्वेन भुवः पद्मिनीसादृश्यं पर्वतानां भुवोऽवयवत्वेन पत्रसादृश्यम् ॥ ४० ॥

### श्रीमद्वीरराघवव्याख्या

दीक्षा दीक्षणीयेष्टिः तवानुजन्म वारं वारमभिव्यक्तिः उपसदः उपसदाख्याः इष्टयः तव शिरोधरं ग्रीवा प्रायणीय आरम्भेष्टिः उदयनीयः अवसानेष्टिः प्रायणीयोदयनीये दंष्ट्रे यस्य वीरः प्रवर्ग्यः महावीरः जिह्वा आसीत् सभ्यो होमरहितोऽग्निः आवसथ्य औपासनाग्निः तयोर्द्वन्द्वैक्यं ते क्रतोः क्रतुरूपस्य तव शीर्षकं शिरः चितय इष्टकाबन्धनविशेषाः ते तवासवः प्राणाः ॥ ३७ ॥ ❀ ❀ सोमस्तव रेतः सवनानि प्रातः सवनादीनि तवावस्थितिरवस्थानं बाल्याद्यवस्था वा संस्थाविभेदा अग्निष्टोमोऽत्यग्निष्टोम उक्थः षोडशी वाजपेयातिरात्रौ आप्तोर्याम इति सप्त तव देहधातवः त्वङ्मांसादिसप्त धातवः सत्राणि बहुयजमानकानि कर्माणि सर्वाणि ते तव शरीरसन्धयः त्वं सर्वयज्ञक्रतुरसोमा यज्ञाः ससोमाः क्रतवः तद्रूपस्त्वमित्यर्थः यद्वा। यज्ञरूपः क्रतुः क्रतुशब्दो यज्ञमात्रपरः उपासनेष्वपि क्रतुशब्दप्रयोगः ततश्च यज्ञरूपः क्रतुरनुष्ठेयं कर्म यस्याराधनं सर्वयज्ञक्रतुस्त्वमित्यर्थः। इष्टिर्याजमानमनुष्ठानं तदेव बन्धनं मध्यकायप्रदेशो यस्य स त्वमित्यर्थः ॥ ३८ ॥ ❀ ❀ एवं भागद्वयात्मकवेदपूर्वभागविहितयज्ञतदङ्गानि स्तुत्यत्वेन प्रकृतभगवद्वराहतन्वत्वयवत्वेन रूपयित्वाद्य भगवतो भागद्वयात्मकवेदतदुपबृंहणरूपस्मृतिवेद्यताप्रतिपिपादयिषया पूर्वभागोदितयज्ञतदवयवानां भगवच्छरीरतां तदाराधनरूपतामुत्तरभागोदितन्यासोपासनानां च तत्प्रसादहेतुत्वेन तस्यापि भागस्य भगवत्परतां च वदन्तो नमस्कुर्वन्ति। नमो नम इति। ते तुभ्यं नमो नमः आदराद् द्विरुक्तिः। यद्वा पूर्वभागवेद्यत्वतदुपबृंहणवेद्यत्वरूपगुणमेव विशिष्टाकारभेदात्तदपेक्ष्या नमसो द्विरुक्तिः। कथंभूताय ते क्रियात्मने क्रिया आत्मा शरीरं यस्य तस्मै यद्वा क्रियाया आत्मा तस्मै इत्यर्थः। अनेन स्मार्तदानादीनां क्रियात्मत्वमुक्तं सर्वक्रतवे सर्वक्रतुशरीरायेत्यर्थः। अनेन श्रौतयज्ञात्मत्वमुक्तम्। यज्ञसाधनानामपि तदात्मकत्वमुच्यते। अखिलमन्त्रदेवताद्रव्यायेति। मन्त्रा द्रव्यदेवताप्रकाशकानि वेदवाक्यानि देवता उद्देश्यविशेषा इन्द्रादयो द्रव्याणि आज्यदधिपयःसोमादीनि अखिलानि मन्त्रदेवताद्रव्याणि यस्य तस्मै अखिलमन्त्रादिशरीरायेत्यर्थः। तत्तन्मन्त्रप्रकाशिततद्द्रव्यदेवतानिष्पाद्ययागहोमादिक्रियाबोधकपूर्वभागशरीरवाचकशब्दस्य शरीरिपर्यन्तत्वन्यायेन भगवत्परत्वमुक्तं भवति। यज्ञानां भगवच्छरीरत्वं बृहदारण्यके माध्यन्दिनपाठे "यस्यात्मा शरीरम्" इत्यारभ्य यस्य यज्ञाः शरीरमिति श्रुतं गुणक्रियाणामपि शरीरत्वमाश्रयद्वारोपपन्नमित्यन्यदेतत्। एवं पूर्वभागस्य भगवत्परत्वमुक्तम् अथोत्तरभागस्य तत्परत्वं वक्तुं तं विशिनष्टि। वैराग्येति। वैराग्यं शब्दादिविषयेष्वनासक्तिः भक्तिः श्रवणकीर्तनस्मरणार्चनवन्दनादिरूपा साधनभक्तिः आत्मजयोऽन्तःकरणजयः एतैरनुभावितं निष्पादितं ज्ञानं ध्रुवानुस्मृतिरूपं ज्ञानं यस्य तस्मै अन्यपदार्थप्रधानबहुव्रीहिबललभ्यसम्बन्धसामान्यस्य प्रसादयितृत्वप्रासादनीयत्वरूपविशेषे पर्यवसानं ततश्च वैराग्यादिनिष्पाद्यध्रुवानुस्मृत्यात्मकं ज्ञानं यत्प्रसादहेतुस्तस्मै इत्यर्थः। अत्र वैराग्यशब्देन विवेकादिसाधनसप्तकान्तर्भूतविमोक उच्यते भक्तिशब्देन क्रिया आत्मजयशब्देनानुद्धर्षः। इयं च केषांचिदुक्तिरन्येषामप्युपलक्षणार्था। एवं चानेन विवेकादिसाधनसप्तकान् निष्पाद्य भगवत्प्रसादहेतुभूतध्रुवानुस्मृतिबोधकस्योत्तरभागस्य भगवत्परत्वसिद्धिः। विद्यागुरव इत्यनेन न्यासविद्याप्रतिपादकोत्तरभागैकदेशतदुपबृंहणानामपि तत्परत्वमुक्तम्। विद्यागुरवे न्यासविद्याप्रवर्तिन इत्यर्थः। न्यासे विद्याप्रवर्तितत्वं भगवद्वराहाद्यवताराणां रामकृष्णवराहाणां वाराहपुराणश्रीरामायणश्रीभगवद्गीतादिषु प्रसिद्धम्। अत्रापि गुणभेदविशिष्टाकारभेदान्नमसो द्विरुक्तिः ॥ ३९ ॥ ❀ ❀ एवं भागद्वयात्मकवेदवेद्यं भगवन्तं नमस्कृत्य अथ स्वाभीष्टं विज्ञापयिष्यन्तः प्रकृतवराहावतारचरित्रं तदवतारसौष्ठवञ्च विज्ञापयन्ति द्वाभ्याम्। दंष्ट्राग्रेति। हे भगवन्! त्वया कर्त्रा दंष्ट्राग्रकोट्या करणेन सभूधरा सपर्वता भूर्मही धृता सती विराजते भूधर भूधर्तः तत्र दृष्टान्तः यथा वनाज्जलान्निःसरतः निर्गच्छतः मतङ्गजेन्द्रस्य गजश्रेष्ठस्य दता दन्तेन धृता पङ्कयुक्तपद्मिनी विराजते तथेत्यर्थः। अभूतोपमेयं नहि क्वचिदपि पद्मिनी गजदन्तेनोद्धृता दृष्टा ॥ ४० ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली।

आत्मजन्म तव जननं दीक्षा व्रतसंग्रहः उपसदः उपसन्नामानो यज्ञविशेषाः उपसत्तिविशेषा वा शिरोधोग्रीवात्वं प्रायणीयोदयनीयदंष्ट्रः यस्य दंष्ट्रयोरुपक्रमावसानकर्मणी इष्टी प्रायणीयोदयनीयसंज्ञे वर्तेते स तथोक्तः। क्रतुः सङ्कल्पः। क्रतोरिति पाठे क्रतोः सत्यसङ्कल्पस्य सर्वक्रत्वाधारस्य वा तव शीर्षकं शिरः सभ्यावसथ्यौ अग्निचितयः सप्तक्रतवस्तवासवः प्राणा जन्मभूमयः

चितय इतीष्टका बन्धनविशेषा वा ॥ ३७ ॥ ❀ ❀ सोमो लता प्रातरादित्रीणि सवनानि अवस्थितिर्निश्चलत्वेन गतिनिवर्तनं संस्थाविभेदा अग्निष्टोमादयः सप्त अग्निष्टोमादयः संस्थाभेदाः सप्तास्य तंतव इति यादवश्च त्वगादिसप्तदेहधातवः। अत्र श्लोकद्वये सप्तसु प्रथमेति सूत्रात् प्रथमायाः सप्तमीत्वं युक्तं त्वचीत्यादिसप्तमीप्रयोगाच्च सर्वाणि सत्राणि बहुभिः संभूय कर्तव्यानि दीर्घकालीनानि यज्ञविशेषकर्माणि किम्बहुनोक्तेनेत्युपसंहरति। त्वं सर्वेति। एकाहिकद्व्याहिकादिसर्वयज्ञस्थापकेच्छावान् इष्टिबन्धनः तव देहबन्धने संहनने इष्टिः प्रतिपत्तिश्थ्यादिषु क्रियमाणकर्मविशेषो वर्तत इत्यर्थः ॥ ३८ ॥ ❀ ❀ उक्तानुक्तविशेषणानि समुच्चीय विशिंषन्ति। अखिलेत्यादिना। सत्ताप्रदत्वेन मन्त्रादिषु सन्निहितत्वादखिलमन्त्रदेवताद्रव्याय सर्वे क्रतवः सङ्कल्पा यस्माद्भवन्ति स सर्वक्रतुः तस्मै क्रियात्मने कर्मकारयितृत्वेन तद्व्याप्ताय आत्मजयात्मनस्तव प्रसादाज्जातया वैराग्यजृम्भितभक्त्यानुभावितं स्वस्वयोग्यतानुसारेण समुत्पादितं स्वविषयं ज्ञानं येन स तथा तस्मै वेदादिपरविद्यागुरवे ॥ ३९ ॥ ❀ ❀ पूर्वमनाथत्वेन विलग्नामित्यनेन स्त्रीणां मध्यवत्कृशत्वं ध्वनितमधुना सनाथत्वेन पर्वताद्यवयवष्टाभूमिर्विराजते। इति स्तुवन्तीत्याह। दंष्ट्राग्रकोट्येति दता दन्तेन मत्तगजेन्द्रस्य सपत्रपद्मिनी सपत्रा विसिनी "नलिन्यां तु बिसिनी पद्मिनी मुखा" इत्यमरः अनेन हरेर्धरणीधरेति नामसार्थकमिति सूचितम् ॥ ४० ॥

## श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

दीक्षा दीक्षणीयेष्टिः अनुजन्म वारम्वारमभिव्यक्तिः। उपसदस्तिस्र इष्टयः शिरोधरं ग्रीवा प्रायणीया दीक्षानन्तरेष्टिः। उदयनीया समाप्तीष्टिः ते एव दंष्ट्रे यस्य प्रवर्ग्यो महावीरः प्रत्युपसदः पूर्व्वं क्रियते। सभ्यो होमरहितोऽग्निः आवसथ्य औपासनाग्निः। तयोर्द्वन्द्वैक्यं तत्तव क्रतुरूपस्य शीर्षं शिरः। चितय इष्टकाचयनानि पञ्च असवः प्राणाः ॥ ३७ ॥ ❀ ❀ सवनानि प्रातरादिकर्म्मकालाः। अवस्थितिरासनम्। संस्थाविभेदा अग्निष्टोमोऽग्निष्टोमः उक्थः पोडशी वाजपेयोऽतिरात्रं आप्तोर्याम इति सप्तधातवस्त्वङ्मांसादयः। सत्राणि द्वादशाहादीनि बहुयागसङ्घातरूपाणि। यज्ञाः असोमाः क्रतवः ससोमास्तद्रूपस्त्वम्। इष्टिर्यजनं यज्ञाङ्गभूता त्वद्भक्तिः सैव बन्धनं यस्य सः ॥ ३८ ॥ ❀ ❀ उक्तार्थं समासेन स्तुवानाः प्रणमन्ति। नमो नम इति। क्रियात्मने यज्ञादिव्यापाररूपाय। यद्यप्येवं त्वं लीलया कर्म्ममार्गप्रवर्त्तकत्वेन सर्व्वकारणमूर्त्तिरसि। तदपि कर्म्मफलस्पृहारहितया भक्त्यैव तवानुभवो भवेदित्याहुः। वैराग्यं स्पृहाराहित्यं तद्युक्ता या भक्तिस्तयैवात्मनो मनसो जयस्तेनानुभावितं साक्षात्कृतं ज्ञानं स्वविषयकं येन तस्मै। अत एव विद्यागुरवे। "ददामि बुद्धियोगन्तं येन मामुपयान्ति ते" इति त्वदुक्तेस्त्वत्प्रापकं ज्ञानं त्वमेव दातुमर्हसीति भावः ॥ ३९ ॥ ❀ ❀ अहो पृथिव्या भाग्यं यां त्वं धत्से इति तां वर्णयति दंष्ट्रेति। हे भूधर! सभूधरा सपर्व्वता। वनात् जलात्। सपत्रपद्मिनीति तस्याः कोरककुड्मलादिभिरुचनीचपर्व्वता उपमिता ॥ ४० ॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

किञ्च दीक्षा दीक्षणीयेष्टिः तव अनुजन्म पुनःपुनरभिव्यक्तिः उपसदस्तिस्रः इष्टयः तव शिरोधरं प्रायणीया आरम्भेष्टिः उदयनीया अन्त्येष्टिः ते दंष्ट्रे यस्य सः प्रवर्ग्यो महावीरः तव जिह्वाभ्यो होमरहितोऽग्निः आवसथ्यः औपासनाग्निः तयोर्द्वन्द्वैक्यं तव क्रतुरूपस्य शीर्षकं शिरः चितयः इष्टकाचयनानि पञ्च असवः प्राणाः ॥ ३७ ॥ ❀ ❀ सोमस्तु तव रेतः सवनानि प्रातःसवनादीनि अवस्थितयः बाल्याद्यवस्थाः अग्निष्टोमोऽत्यग्निष्टोम उक्थः पोडशी वाजपेयोऽतिरात्र आप्तोर्य्याम इति सप्तसंस्थाविभेदाः तव त्वङ्मांसादिसप्तदेहधातवः सत्राणि बहुयजमानकानि कर्माणि तव शरीरसन्धिः असोमा यज्ञाः क्रतवश्च यस्मिन् स तथैवं भूतस्त्वमसि इष्टिर्यजनमनुष्ठानं तदेव बन्धनं यस्य सः ॥ ३८ ॥ ❀ ❀ ते नमो नमः आदरार्था द्विरुक्तिः अखिलानि मन्त्रादीनि यस्मात्तस्मै सर्वमन्त्रादिप्रवर्तकाय सर्वे क्रतवो यस्मात् सर्ववैदिकक्रियाप्रवर्तकाय क्रियायाः लौकिक्याः आत्मा आश्रयः प्रवर्तकस्तस्मै अन्तःकरणशोधककर्ममार्गप्रवर्तकायेत्यर्थः। अतएव गुरवे अतएव स्ववर्णाश्रमकर्मानुष्ठानशुद्धान्तःकरणमुमुक्षुसम्पादितैः वैराग्यभक्त्यात्मजयैः विषयवैराग्यहरिकथाश्रवणादिहरिभक्तिमनोनैश्चल्यैः अनुभावितं निष्पादितं ज्ञानं यस्य तस्मै नमः ॥ ३९ ॥ ❀ ❀ हे भूधर! वनादुदकात् दता दन्तेन ॥ ४० ॥

## श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

एवं द्रव्यर्त्विजां निवेशनमुक्त्वा, पात्राणां निवेशनं वराहावयवेषु सफलमाह—स्रुक् तुण्ड इति। स्रुगिति [1]जात्यपेक्षया एकवचनम्, जुह्वभिप्रायेण वा, तुण्डे मुखे आसीत्। स्रुव इति जात्यपेक्षया एकवचनम्। स्रुवौ, अग्निहोत्रदर्शपौर्णमासयोर्भेदेन

१. जात्याख्यायाम्. ग.।

स्रुवविधानात्। इडापात्रमुदरे। अस्य भगवतः सर्वत्र यागे 'सर्वत्र तत्तत्पात्रेषु, सान्निध्यसामर्थ्यार्थमीशेति संबोधनम्। इडाभागस्योदरप्रवेशसाम्येन आकृतिसाम्येन च उदरे इडापात्रस्य निवेशनम्। चमसाः सोमपानपात्राणि कर्णरन्ध्र इति आधिदैविके चमसे यशः स्थापितम्। तदाध्यात्मिकपरव्याख्याने प्राणत्वेन निरूपितम्, तथापि यशोरूपमिति तत्कर्णे पेयमिति कर्णरन्ध्रे चमसानां निवेशनम्। प्राशित्रं ब्रह्मपात्रम्, तदास्ये मुखविवरे। ब्रह्मभागस्य दन्तास्पर्शनेन गिलनविधानात्। ग्रसने गिलनात्मके कर्मणि जिह्वामूले वा सर्वे ग्रहाः, ऐन्द्रवाय्वादिपात्राणि। तुशब्देन पात्राणां निवृत्तिरुच्यते, वाक्यमध्ये तुशब्दस्य विद्यमानत्वात्। ग्रसनस्य क्रियारूपत्वात् ग्रहा अपि सोमा एवाऽत्र ग्राह्याः, तत्पानं वा। यस्य ते भगवतश्चर्वणक्रियैवाऽग्निहोत्रं कर्म। 'अग्निहोत्रफला वेदाः' इति सर्वेषामेव यज्ञानामग्निहोत्रानुप्रवेशात् चर्वणत्वम्॥ ३७॥ ❀ ❀ क्रियाणां साधिकरणानां भगवति निवेशनमाह—दीक्षानुजन्मेति। भगवान् वराह इदानीमवतीर्णः। पुनर्यजमानरूपेणाऽवतरति प्रतियज्ञम्। 'यज्ञो यजमानः' इति, 'गर्भो वा एष यद्दीक्षितः' इति च, 'क्रीते सोमे पूर्णतेजा जायत एव' इति च श्रुतेः। दीक्षासंस्कारो दीक्षाख्यदेवताया यजमाने स्थापनम्, तदिष्ट्या क्षौरादिना च सिद्ध्यति। उपसदो ग्रीवा, स एव शिरोधरशब्देनोच्यते शिरो बिभर्तीति व्युत्पत्त्या, 'ग्रीवा उपसदः' इति श्रुतेः। प्रायणीयोदनीये इष्टी। उपसदादौ सोमक्रयात् पूर्वं सोमान्ते च क्रियेत्युभयोरेकं द्रव्यमेका च देवता, एकं च पात्रमिति कालसंज्ञाभेदात् कर्मभेदः। ग्रहाणां मुखमध्ये स्थानात्प्रायणीयोदयनीययोः पार्श्वयोः स्थानमुचितमेव। उभयोर्दंष्ट्रात्वं दिक्परिज्ञापकत्वेन सर्वो हि मृत्युभिर्हतो दिशः परिजानाति, अन्यथा भवाटवीन्यायेन रजस्वलाक्षो दिशो न जानाति। मृत्युनैव हि दिशः परिज्ञाप्यन्ते। जिह्वा प्रवर्ग्य इति प्रवर्ग्यपात्रमेव शिरः, कर्मचाऽऽध्यात्मिकम्। आहुत्यनन्तरं या ज्वाला, सा आकृतिसाम्याज्जिह्वा स एव पुनः प्रवर्ग्यस्तव क्रतुरूपस्य शीर्षकं शिरः। एवं क्रियानिवेशनमुक्त्वा तदधिकरणनिवेशनमाह—सभ्यावसथ्यं चितयोऽसवो हि त इति। सभ्यावसथ्ययोरिष्टाकाचयनभावात् पृथङ्निर्देशः। शालामुखीये धिष्ण्येषु चयनं स्पष्टमेव, दर्शपूर्णमासादिष्वपि चयनविधानात्। अग्निहोत्रे दर्शपूर्णमासयोः पशुबन्धे चातुर्मास्येषु' इति श्रुतेः। दक्षिणाग्निप्राजहितयोरपि चयनत्वम्। शामित्रं तु प्राजहितमाहवनीयो वा। निर्मन्थपक्षस्त्वनुकल्पः। असवः प्राणाः। नव वै पुरुषे प्राणाः। धिष्ण्यान्यपि नव। गार्हपत्यो दशमः॥ ३८॥ ❀ ❀ नामधेयानां विनियोगमाह—सोमस्त्विति। सोमः सोमयागः। 'सोमेन यजेत' इत्यत्र मत्वर्थस्याऽऽश्रयणात्, ओषधिपक्षेऽपि देवतात्वात्, सर्गजनकत्वेन रेतस्त्वम्। ग्रहाणां सोमत्वे अविकृतः सोमो रेतस्त्वेन वक्तव्यः। सवनानि त्रीणि। अवस्थितिः जाग्रत्स्वप्नसुषुप्तयः। संस्था अग्निष्टोमादयाश्रयः, पञ्च, सप्त वा। तेषां सर्व एव विभेदाः तव देहधातवः। चर्म मांसमस्थि चेति त्रयः, त्वङ्मांसस्नाय्वस्थि मज्जेति पञ्च, सप्तपक्षे चर्मरुधिरयोरनुप्रवेशः, चतुष्पक्षे त्रयो रुधिरं च। सर्वथा देहधातव एव सर्वे संस्थाभेदाः। सत्राण्येकाहादीनि सहस्रसमान्तानि सर्वाण्यवान्तरभेदयुक्तान्यपि शरीरस्थाऽस्थ्नां संयोगस्थानानि, तान्येव सन्धिशब्देनोच्यन्ते। सर्वयज्ञाः क्रतवश्च त्वमेव। यज्ञाः [2]सप्तदश, क्रतवो द्वादशाहादयोऽश्वमेधान्ताश्चयनसहिताः। इष्टयो दर्शपूर्णमासादयः। बन्धनानि नसाः॥ ३९॥ ❀ ❀ एवं सर्वनिवेशनमुक्त्वा यज्ञरूपमुपसंहरन् नमस्यति—नमो नमस्त इति। आदरे वीप्सा, स्वभोगस्य च तत्फलत्वात्। अस्य रूपान्तरत्वव्यावृत्त्यर्थं त इति। अखिला मन्त्रा, इषेत्वादयः, वस्वादयो देवताः, द्रव्याणि व्रीह्यादीनि। देवतोद्देशेन द्रव्यं मन्त्रेण देवतायै समर्प्यत इत्यलौकिको यागो मन्त्रदेवताद्रव्यात्मको भवति। पुरुषप्रयत्नस्तु लौकिकः, अभिनयरूपत्वात् स न यागः, प्रत्यक्षसिद्धत्वात्। शर्वक्रतवे सर्वयागभेदरूपाय। क्रियात्मने। अभिनयोऽपि यागाविर्भावहेतुरिति क्रियाप्यतीन्द्रिया कैश्चि[3]दाश्रिता, वस्तुतस्तु तत्रैवाऽन्तर्भूता मन्त्राधिकरणिका [4]यजमानाविष्टभगवन्निष्ठा। एवं सर्वत्र क्रियारूपत्वेन स्वर्गादिसाधकत्वेन रूपेण नमस्कारं कृत्वा ब्रह्ममीमांसानुसारेण वेदार्थरूपोऽप्ययमेवेत्याह—वैराग्येति। वैराग्यं विषयवैतृष्ण्यम्। भक्तिर्भगवति श्रवणादिः, स्नेहो वा। आत्मजयोऽन्तःकरणजयः। त्रयमप्यन्तःकरणशोधकम्। अत एव तैरनुभावितं यज्ज्ञानं ब्रह्मात्मानुभवः, तद्रूपाय। विद्या उपनिषत् वाक्यार्थज्ञानरूपा, तज्जनको गुरुः। उत्तरकाण्डे त्वेतावत्येव सामग्री षड्गुणा भगवद्रूपा। पुनर्नमनं काण्डभेदात्॥ ४०॥

## श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

❀ स्रुक् तुण्ड इत्यत्र। इडापात्रमिति। यत्र हुतशेषं पुरोडाशं निधाय स्वं स्वं भागमृत्विजो विभजन्ति, तत्पात्रम्। आधिदैविके चमस इत्यादि। 'तत् अर्वाग्बिलश्च सदूर्ध्वबुध्नस्तस्मिन् यशो निहितं विश्वरूपम्। तस्यासत ऋषयः सप्त तीरे वागष्टमी ब्रह्मणा संविदाना' इति मन्त्रस्य आध्यात्मिकपरव्याख्याने 'प्राणा वै यशः' इति श्रुत्या प्राणत्वेन निरूपितमित्यर्थः॥ ३७॥ ❀ ❀ दीक्षेत्यत्र। साधिकरणानामिति। अग्निसहितानाम्। दीक्षाया जन्मत्वाय प्रमाणान्याहुः—यज्ञ इत्यादि। उपसदस्तिस्रः। क्रतौ प्रवर्ग्यस्य पात्ररूपत्वेऽपि कर्माधिकरणत्वेन कर्मणि प्रवेश इति ज्ञापनायाहुः—कर्म चेत्यादि। तस्मिन् पात्र ( त्रे ) दुग्धहोमरूपं यत्कर्म तदपि शिर इत्यर्थः। तस्य जिह्वात्वं साधयन्ति—आहुतीत्यादि। सभ्यावसथ्ययोरिति। सभ्यो होमरहितोऽग्निः, आवसथ्य

---

१. एतन्नास्ति. ग. सर्व. ङ.। २. सप्तदशादयः. क. ख. घ.। ३. दीप्सिता. ग.। ४. यजमानाद्याविष्ट. ख. ग.।

औपासनाग्निः; तयोः । नव वा इति । एतेन पञ्चप्राणपक्षोऽत्र न संगृहीत इति ज्ञापितम् ॥ ३८ ॥ ❀ ❀ सोम इत्यत्र । सोमयाग इति सिद्धान्ते सोमशब्दो यज्ञनामधेयम् । 'यद्यग्निष्टोमः सोमः पुरस्तात् स्यादुक्थ्यं कुर्वीत, यद्युक्थ्यं (?) स्यादतिरात्रं कुर्वीत, यज्ञक्रतुभिरेवाऽस्य देवता वृङ्क्ते' यज्ञक्रतुभिरेवाऽस्य देवता वृङ्क्ते' इत्यत्र सोमपदस्याऽग्रिमादिसामानाधिकरण्यात्, कुर्वीतेति क्रियालिङ्गात्, यज्ञक्रतुभिरित्युपसंहाराच्च, अत्राऽपि सवनादिनाम्नामेव प्रायपाठे द्रव्यादेर्निवेशायोगाच्च । आधुनिकमते तु तत्र मत्वर्थे लक्षणाऽऽश्रीयते, तदा सोमपदं द्रव्यवाचकमिति तस्मिन् पक्षे कथं सोमस्य रेतस्त्वमित्यत आहुः—सोमेनेत्यादि । पक्षान्तरमाहुः—ग्रहाणामित्यादि । तेषां ग्रसने निवेशस्योक्तत्वादत्र तथा वक्तव्य इत्यर्थः । सप्तदश (श) इति । आश्रावयादिसप्तद-शाक्षरनिर्वर्त्याः । केचित्तु 'असोमा यज्ञाः क्रतवः' इत्याहुः ॥ ३९ ॥ ❀ ❀ नमो नम इत्यत्र । प्रत्यक्षसिद्धत्वादिति । चोदना-लक्षणस्याऽप्रत्यक्षस्यैव धर्मत्वेन प्रत्यक्षसिद्धस्याऽतथात्वात् स न योग इत्यर्थः । आश्रितेति । यज्ञत्वेनाऽऽश्रिता । तत्रेति । क्रिया-वति हरौ ॥ ४० ॥

इति श्रीतृतीयस्कन्धसुबोधिनीप्रकाशे त्रयोदशाध्यायविवरणं सम्पूर्णम् ।

### श्रीगिरिधरकृता बालप्रबोधिनी

स्रुक् जुहुः तुण्डे मुखाग्रे आसीत्, स्रुवः नासयोर्नासिकयोरासीत् । तवैवं बहुरूपभवनसामर्थ्यमस्तीति सूचयन्तः सम्बोधयन्ति—ईशेति । इडा हविर्भक्षणपात्रमुदरे आसीत् कर्णरन्ध्रे चमसाः सोमपात्राण्यासन् । प्राशित्रमास्ये ब्रह्मभागपात्रमास्ये मुखे आसीत् । ग्रहाः ऐन्द्रवादिपात्राणि ते तव ग्रसने ग्रस्यतेऽनेनेति ग्रसनं मुखान्तर्वर्ति च्छिद्रं तस्मिन्नासन् । तव वैभवसाकल्येन केन वर्णयितुं शक्यमिति सूचयन्तः सम्बोधयन्ति—भगवन्निति । यदग्निहोत्रमग्निहोत्रनामकं कर्म ते तव चर्वणं भक्षणम् ॥ ३७ ॥ ❀ ❀ दीक्षा दीक्षणीयेष्टिस्तवानुजन्म वारंवारमभिव्यक्तिः । उपसदः उपसदाख्यास्तिस्र इष्टयस्तव शिरोधरं ग्रीवा । प्रायणीया दीक्षानन्तरशरभेष्टिः उदयनीया अवसानेष्टिः ते एव दंष्ट्रे यस्य तथाभूतस्त्वम् । प्रवर्ग्यो महावीरः प्रत्युपसदं पूर्वं क्रियते स तव जिह्वा । सभ्यो होमरहितोऽग्निः आवसथ्य औपासनाग्निस्तयोर्द्वन्द्वैक्यं तत् क्रतोः क्रतुस्वरूपस्य ते तव शीर्षकं शिरः । चितयः इष्टकाचयनानि ते तव असवः पञ्चप्राणाः । हिशब्देन वेदप्रमाणं सूचयन्ति ॥ ३८ ॥ ❀ ❀ सोम औषधिविशेषस्तु तव रेतः । सवनानि प्रातस्सवनादीनि तव अवस्थितिः अवस्थानं, बाल्याद्यवस्था वा जाग्रदाद्यवस्था वा । संस्थाविभेदाः अग्निष्टोमोऽत्यग्निष्टोम उक्थः षोडशी वाजपेयोऽतिरात्र आप्तोर्याम इति सप्त संस्थाविभेदास्तव देहधातवः त्वङ्मांसस्नाय्वस्थिमज्जामेदोरुधिररूपाः सप्त धातवः । सत्राणि एकाहादिसहस्रसमान्तानि सर्वाण्यवान्तरभेदयुक्तानि तव शरीरस्य सन्धिः सन्धयः । त्वं सर्वयज्ञक्रतुरिति, असोमाः यज्ञाः ससोमाः क्रतवस्तद्रूपस्त्वमित्यर्थः । इष्टिर्यजनमनुष्ठानं बन्धनं यस्य तथाभूतस्त्वम् ॥ ३९ ॥ ❀ ❀ एवमुक्तं यज्ञरूपमुपसंहरन् वेदपूर्वकाण्डप्रतिपाद्यं भगवन्तं नमस्कुर्वन्ति—नमो नम इति । क्रियात्मने ते तुभ्यं नमो नमः । आदरे वीप्सा । क्रियात्मत्वमेव स्पष्टयन्ति—सर्वक्रतव इति । क्रतुस्वरूपमेव दर्शयन्ति—अखिलमन्त्रदेवताद्रव्यायेति । मन्त्राः द्रव्यदेवताप्रका-शकानि वेदवाक्यानि देवता उद्देश्यविशेषा इन्द्रादयः द्रव्याणि आज्यदधिपयस्सोमादीनि अखिलानि मन्त्रदेवताद्रव्याणि तस्मिंस्तस्मा इत्यर्थः । एवं पूर्वकाण्डप्रतिपाद्यं नमस्कृत्योत्तरकाण्डप्रतिपाद्यं नमस्कुर्वन्ति—वैराग्येति । वैराग्यं विषयवैतृष्ण्यं तद्युक्तया भक्त्या श्रवणकीर्तनादिपर स्नेहरूपोपायः आत्मजयोऽन्तःकरणस्थैर्यं तेनानुभावितं साक्षात्कृतं यत् ज्ञानं तस्मै नमो नमः । एवं क्रमप्राप्तं ज्ञानमपि त्वदनुग्रहेणैव भवति नान्यथेत्ययेनाहुः—विद्यागुरवे इति ॥ ४० ॥

### हिन्दी अनुवाद

बार-बार अवतार लेना यज्ञस्वरूप आपकी दीक्षणीय इष्टि है, गरदन उपसद ( तीन इष्टियाँ ) हैं; दोनों दाढ़ें प्रायणीय ( दीक्षाके बादकी इष्टि ) और उदयनीय ( यज्ञसमाप्तिकी इष्टि ) हैं, जिह्वा प्रवर्ग्य ( प्रत्येक उपसदके पूर्व किया जानेवाला महावीर नामक कर्म ) है, सिर सभ्य ( होमरहित अग्नि ) और आवसथ्य ( औपासनाग्नि ) है तथा प्राण चिति ( इष्टकाचयन ) हैं ॥ ३७ ॥ ❀ ❀ देव ! आपका वीर्य सोम है; आसन ( बैठना ) प्रातःसवनादि तीन सवन हैं; सातों धातु अग्निष्टोम, अत्यग्निष्टोम, उक्थ, षोडशी, वाजपेय, अतिरात्र और आप्तोर्याम नामकी सात संस्थाएँ हैं तथा शरीरकी सन्धियाँ ( जोड़ ) सम्पूर्ण सत्र हैं । इस प्रकार आप सम्पूर्ण यज्ञ ( सोमरहित याग ) और क्रतु ( सोमसहित याग ) रूप हैं । यज्ञानुष्ठानरूप इष्टियाँ आपके अङ्गोंको मिलाये रखनेवाली मांसपेशियाँ हैं ॥ ३८ ॥ ❀ ❀ समस्त मन्त्र, देवता, द्रव्य, यज्ञ और कर्म आपके ही स्वरूप हैं; आपको नमस्कार है । वैराग्य, भक्ति और मनकी एकाग्रतासे जिस ज्ञानका अनुभव होता है, वह आपका स्वरूप ही है तथा आप ही सबके विद्यागुरु हैं; आपको पुनः-पुनः प्रणाम है ॥ ३९ ॥ ❀ ❀ पृथ्वीको धारण करनेवाले भगवान् ! आपकी दाढ़ोंकी नोकपर रक्खी हुई यह पर्वतादि-मण्डित पृथ्वी ऐसी सुशोभित हो रही है, जैसे वनमेंसे निकलकर बाहर आये हुए किसी गजराजके दाँतोंपर पत्रयुक्त कमलिनी रक्खी हो ॥ ४० ॥

त्रयीमयं रूपमिदं च सौकरं भूमण्डलेनाथ दता धृतेन ते ।
चकास्ति शृङ्गोढघनेन भूयसा कुलाचलेन्द्रस्य यथैव विभ्रमः ॥ ४१ ॥
संस्थापयैनां जगतां सतस्थुषां लोकाय पत्नीमसि मातरं पिता ।
विधेम चास्यै नमसा सह त्वया यस्यां स्वतेजोऽग्निं[1]मिवारणावधाः ॥ ४२ ॥
कः श्रद्दधीतान्यतमस्तव प्रभो रसां गताया भुव उद्विबर्हणम् ।
न विस्मयोऽसौ त्वयि विश्वविस्मये यो माययेदं ससृजेऽतिविस्मयम् ॥ ४३ ॥
विधुन्वता वेदमयं निजं वपुर्जनस्तपःसत्यनिवासिनो वयम् ।
सटाशिखोद्धूतशिवाम्बुबिन्दुभिर्विमृज्यमाना भृशमीश पाविताः ॥ ४४ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

त्वया धृता भूर्विराजत इत्युक्तमिदानीं भूमंडलेन त्वद्रूपं विराजत इत्याहुः। त्रयीति। अथेत्यर्थांतरे। ते इदं रूपं दंतेन धृतं यद्भूमंडलं तेन चकास्ति शोभते। शृंगेणोढो धृतो यो घनस्तेन भूयसाऽतिमहता। विभ्रमो विलासः ॥ ४१ ॥ ❀ ❀ लोकाय वासस्थानार्थम्। ते पत्नीं सस्थावराणां जगतां मातरम्। यतस्त्वं पिताऽसि एवं सति तत्र स्थिताः संतस्त्वया पित्रा सहास्यै मात्रे नमसा विधेम नमनं करिष्यामः। नमस्कारेण परिचरेमेति वा। स्वतेजोधारणशक्तिं याज्ञिका मंत्रतोऽग्निमरणाविवाधाः निहितवानसि ॥ ४२ ॥ ❀ ❀ इदं च त्वयाऽतिदुष्करं कृतमित्याहुः। क इति। हे प्रभो तव त्वया कृतं भुव उद्विबर्हण-मुद्धरणं त्वदन्यः कः श्रद्दधीत स्पृहयेत अध्यवस्येदित्यर्थः। त्वयि पुनरसौ विस्मयो न भवति यतो विश्वे सर्वे विस्मया यस्मिन्। कुतः। यो भवान् अतिविस्मयमत्यद्भुतमिदं विश्वं क्रियाविशेषणं वा। ससृजे सृष्टवान् ॥ ४३ ॥ ❀ ❀ विस्मयं दर्शयंतः प्रार्थयंते। विधुन्वतेति द्वाभ्याम्—सटानां शिखाभिरग्रैरुद्धूता उच्छलिता ये शिवा अंबुबिंदवस्तैः सिच्यमाना वयं पवित्रीकृताः ॥ ४४ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

कुलाचलानां मलयादीनामिंद्रो महापर्वतस्तस्य यथा विलासः शोभातिशय इति। "महेंद्रो मलयः सह्यः शुक्तिमानृक्ष-वांस्तथा। विंध्यश्च पारियात्रश्च सप्तैते कुलपर्वताः" इति भारते ॥ ४१ ॥ ❀ ❀ किं युष्माकमभीप्सितं तद्ब्रह्मेति चेत्तत्राहुः—संस्थापयेति। एवं सति त्वयि पितरि सति ॥ ४२ ॥ ❀ ❀ उद्विबर्हणमुद्धरणम्। इत्यर्थ इति। प्रभुत्वात्त्वय्ये-वैतद्घटेत नान्यत्रेति भावः। विश्वस्मिंस्तु विस्मयो न संभवति तस्य जडत्वादत आह—क्रियाविशेषणं वेति ॥ ४३ ॥ ❀ ❀ शिवा मंगलरूपा अत्यंतपवित्राः। ईशेति सर्वसमर्थः ॥ ४४ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

अर्थान्तरे भगवद्रूपस्य विराजमानत्वरूपेऽर्थे पूर्वस्माद्विलक्षणे विलासोऽत्र शोभा त्रयीमयं पूर्ववर्णितयज्ञात्मकमपि ॥ ४१ ॥ ❀ ❀ एवं सति संस्थापने सति तत्र भुवि ॥ ४२ ॥ ❀ ❀ अध्यवस्येत् स्वस्मिंस्तदुद्धारणयोग्यतां सम्भावयेत् असौ भुव उद्धरणलक्षणः ॥ ४३ ॥ ❀ ❀ विधुन्वता कम्पयता त्वया ॥ ४४ ॥

### श्रीमद्वीरराघवव्याख्या

त्रयीमयमिति। हे नाथ! दता दन्तेन धृतेन भूमण्डलेन ते तवेदं त्रयीमयमवयवत्वेन रूपितवेदविहितकर्मप्रचुरमेवेदं सूकररूपं चकास्ति शोभते। अत्र दृष्टान्तः भूयसा विपुलेन शृङ्गोढघनेन शृङ्गेणोढो यो घनो मेघस्तेन कुलाचलेन्द्रस्य कुलाचलपर्वत-श्रेष्ठस्य विभ्रमो विलासो यथा तद्वदित्यर्थः ॥४१॥ ❀ ❀ स्वाभिप्रेतं विज्ञापयन्तो नमस्कुर्वन्ति सतस्थुषां सस्थावराणां जगतां जङ्गमानां लोकाय स्थापनार्थं तव पत्नीं जगतां मातरमेनां भूमिं संस्थापय प्रतिष्ठापय। एवं यतस्त्वं जगतां पितासि पालको जनकश्चासि। एवं सति तत्र स्थिताः सन्तो वयं त्वया पित्रा सहास्यै मात्रे नमसा विधेम नमस्करिष्यामः नमस्कारेण परिचरेमेति। स्वतेजोधारणशक्तिं याज्ञिका मन्त्रतोऽग्निमरणाविव मन्थनकाष्ठे इव यस्यां भूमावधाः निहितवानसि ॥ ४२ ॥ ❀ ❀ एवं स्वाभिप्रेतं विज्ञाप्य स्वकृतार्थतामाविष्करिष्यन्तः तस्य भगवतोऽनन्त्याचिन्त्यविचित्रशक्तेस्तव कर्मेतरैरचिन्त्यमित्याहुः। क इति। हे प्रभो! अन्यतम

---

१. प्रा० पा०—ग्निरिवा०।

इतरः प्राकृतः कः पुरुषस्तव रसातलं प्रतिगताया भुव उद्विबर्हणमुद्धरणं श्रद्धीत इदमिति चिन्तयितुमुत्सहेत आश्चर्यत्वेन न कोऽपि निर्वक्तुं प्रभवेदित्यर्थः। त्वयि पुनरसौ विस्मयो न भवति यतो विश्वविस्मयः विश्वे सर्वे विस्मया यस्मिन् विश्वस्य विस्मयो वा यस्मिन् स विश्वविस्मयः, एवंभूतो यो भगवान् स्वस्य मायया आश्चर्यशक्त्यातिविस्मयमत्याश्चर्यमिदं जगत्ससृजे सृष्टवान्। अचिन्त्यविविधविचित्रसंनिवेशं जगत् सृजतस्तवेदं भुव उद्विबर्हणं किं तदाश्चर्यकरमिति भावः॥ ४३॥ ❀ ❀ स्वकृतार्थतामाविष्कुर्वन्ति। विधुन्वतेति। हे ईश! वेदमयं निजं वपुः शरीरं विधुन्वता कम्पयता त्वया कर्त्रा सटानां शिखाभिरग्रैरुद्भूता उच्चलिताः ते च ते शिवाम्बुविन्दवः तैः करणैर्विमृज्यमाना। जनस्तपःसत्यनिवासिनो वयं पाविताः पवित्रीकृताः कृतार्था अभूमेति भावः॥ ४४॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

इतरसंयोगेनेतरेषां विराजनं हरेस्त्वात्मनैवेति भावेन स्तुवन्तीत्याह। त्रयीमयमिति। भूमण्डलं धृतेन दता चकास्ति विराजते चकासृदीप्ताविति धातुरदादिः। शृङ्गेणोढेन घनेन विभ्रमः कान्तिविशेषः॥ ४१॥ ❀ ❀ ब्रह्माद्यभीष्टं जानतोऽप्येनां किङ्करोमीति हरेः प्रश्नात्प्रागेनं स्वाभीष्टं विज्ञापयन्तीत्याह। संस्थापयेति। जगतां जङ्गमानां तस्थुषां स्थावराणां मातरं तव पत्नीमेनां संस्थापय जलस्योपरीति शेषः, कीदृशस्त्वं पितासि सर्वस्येति शेषः। यद्वा त्वं जगतां पितासि तस्थुषां मातरमेनामितित्वत्कृतोपकारप्रत्युपकारमन्यमपश्यन्तो वयमिमं नमस्कारं कुर्म इति विज्ञापयन्तीत्याह। विधेमेति। उभयोर्मातृत्वं पितृत्वं च तस्मादिति व्यञ्जयन्तो विशिंषन्तीत्याह। यस्यामिति। अनेन भूमेर्माहात्म्यं च सूचितम्। अरणिरग्निमन्थनदारुविशेषः॥ ४२॥ ❀ ❀ त्वदन्येनेदं कर्म निरूपयितुमशक्यं किं पुनः करणमितिविज्ञापयन्तीत्याह। क इति। उद्विबर्हणमुद्धरणमिदमस्माकमेवाश्चर्यं न तवेति श्रावयन्तीत्याह। नेति। इतोऽप्यधिकविस्मयोऽस्तीति विज्ञापयन्तीत्याह। य इति। अतिविस्मयोऽतिशयितविस्मयः॥ ४३॥ ❀ ❀ वाचा तव गुणगणानां सङ्कीर्तनेन मनसा संस्मरणेन अन्तः शुद्धाः बहिस्तव सटाग्रसमुद्भूतशुद्धजलबिन्दुभिः पाविता वयमिति विज्ञापयन्तीत्याह। विधुन्वतेति। तृतीया षष्ठ्यर्थे विधुन्वतस्तव, यद्वा विधुन्वता त्वया पाविताः तत्कथमित्यतो विशिंषन्ति। सटेति त्वया पाविता इति यत्सटाग्रशिवाम्बुबिन्दुभिरिति॥ ४४॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

तत एव त्रयीमयमपि भूमण्डलस्थानीयेन शृङ्गोढघनेन कुलाचलेन्द्रस्य यथैव विभ्रमेण तव रूपं चकास्तीत्यर्थः॥ ४१-४४

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी।

यथा त्वया स्वामिना धृता भूः शोभते तथा भुवापि स्वभक्तया धृतस्त्वं शोभस इत्याहुः। त्रयीति। कुलाचलेन्द्रस्य महापर्वतस्य शृङ्गेण ऊढो धृतो यो घनो मेघस्तेन विभ्रमः शोभा यथा॥ ४१॥ ❀ ❀ किं युष्माकमभीप्सितं तद् ब्रूतेति चेदत आहुः। संस्थापयेति। लोकाय वासस्थानार्थं ते पत्नीं जगतां मातरं यतस्त्वं पितासि। अतस्त्वया पित्रा सह अस्यै मात्रे नमसा विधेम नमस्कारं करवाम स्वतेजः धारणशक्तिं त्वमधा धृतवानसि। अरणौ अग्निं याज्ञिका यथा धारयन्ति तथा॥ ४२॥ ❀ ❀ तवेमां लीलामन्यैर्दुष्करां वयं गायाम इत्याहुः। क इति। हे विभो! भुव उद्विबर्हणं तव त्वत्कर्तृकं त्वत्तोऽन्यतमः कः श्रद्धीत कर्तुं स्पृहयेत् अध्यवस्येदित्यर्थः॥ ४३॥ ❀ ❀ पृथिव्युद्धरणं त्वयि न विस्मयो विस्मयः पुनरयमेव यत्तन्मिषेण महार्णवे निपतता वस्तुतस्त्वस्मास्वेव कृपापरवशेन त्वया स्वाङ्गक्षालनामृतैरूर्ध्वोर्ध्वं प्रापितैर्वयमृषयः कृतार्थीकृता इत्याहुः विधुन्वतेति॥ ४४॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

त्रयीमयं वेदत्रयीप्रोक्तं कर्म प्रचुरत्वेन प्रतीतम्। इदं रूपं दता धृतेन भूमण्डलेन चकास्ति शोभते भूयसा महता शृङ्गोढेन शिखरधृतेन घनेन यथा कुलाचलस्य गिरेर्विभ्रमो विलासस्तद्वत्॥ ४१॥ ❀ ❀ जगतां पितासि अतः यस्यां स्वतेजोधारणशक्तिं याज्ञिको मन्त्रेण अरणावग्निमिव अधा निहितवानसि तां जगतां मातरं स्वपत्नीमेनां लोकाय वासस्थानार्थं संस्थापयेत्यन्वयः॥ ४२॥ ❀ ❀ अन्येषामपि दुष्करमपीदं भूद्धरणं त्वया त्वतिसुकरतया कृतमित्याहुः। क इति। तव त्वयाकृतं भुवः उद्विबर्हणमुद्धरणम् अन्यतमः त्वदन्यः कः श्रद्धीत स्पृहयेत्। त्वयि तु असौ एक एव विस्मय आश्चर्यं नास्ति यतो विश्वे सर्वे विस्मया आश्चर्याणि यस्मिन् तदाहुः यः अतिविस्मयमत्याश्चर्यमिदं विचित्रं विश्वं स्वस्य मायया शक्त्या ससृजे उपलक्षणमिदं पालनादेः॥ ४३॥ ❀ ❀ वयन्तु भवता पवित्रीकृता इत्याहुः। विधुन्वतेति। वेदमयं वेदप्रधानं वेदैकप्रधानमित्यर्थः। निजं स्वासाधारणं वपुः शरीरं विधुन्वता कम्पयता सटानां शिखाभिरग्रैः उद्धूतैः उच्चलिताः ये शिवाः अम्बुबिन्दवः तैर्विमृज्यमानाः प्रोक्ष्यमाणाः भृशमत्यर्थं पाविता पवित्रीकृताः॥ ४४॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

एवं षड्भिर्योगरूपत्वं निरूप्य आधिदैविकं रूपं प्रकृतोपयोगि निरूपयति षड्भिः—दंष्ट्राग्रकोट्येति। दंष्ट्राया अग्रम्, तस्य कोटिरेकदेशः। माहात्म्यार्थमेवमुक्तम्। ऊर्ध्वं धारणात्तथैव भवति। तादृश्याः क्रियाया असंभावितत्वमाशङ्क्य भगवन्निति संबोधयति। तत्रापि भगवत्प्रयत्न एव व्याप्रत इत्याह—त्वया धृतेति। अन्यधृतायाः, तत्रापि दंष्ट्राग्रभिन्नाया अशोभामाशङ्क्या-ऽऽह—विराजत इति। भूधरेति संबोधनं योगस्य दर्शनान्माहात्म्यार्थम्। इतरभूधरसाम्याभावाय सभूधरेत्युक्तम्। सपर्वता भूमिर्धृ-तेत्यर्थः। सपर्वता भूमिर्निम्नोन्नता शोभारहितेव भवति। विशेषशोभायां हेतुमाह—यथा वनादिति। वनाज्जलात्, स्थलकमलिनीं गृहीत्वा वनादेव वा। अवनात् रक्षणाद्वा हेतोर्निःसरतो मत्तगजेन्द्रस्य दन्तेन धृता पत्रसहिता पद्मिनी कमलिनी। भगवदर्थ-मुद्धृता गजेन्द्रेण कमलिनी शोभत इत्यविवादम्। तथा यज्ञार्थं यज्ञेन समुद्धृता भूमिः सर्वपुरुषार्थसाधिकेति, भर्तृसहितेति, भर्तृपूजितेति वा, ऊद्ध्वं निर्गच्छन्ती वा, कैलासशिखरे मेघवत् विराजत एव। प्राकृतवनादपि निःसरता गजेन धृता (भूमिः) शुभ्राधिकरणा, आश्चर्येण लोकैर्दृश्यमाना, चित्ररूपमध्यगतेव विराजते। आकृतिः प्रकृतेऽपि तुल्या॥ ४१॥ ❀ ❀ एवं भगवत्संवन्धात् भूमेः सौन्दर्यातिशयमुक्त्वा, भगवतस्तादर्थ्यदोषपरिहाराय तथा कृत्वा, भगवतो रूपातिशयमाह—त्रयीमयमिति। सौकरमपीदं रूपं वेदत्रयात्मकत्वेन स्वरूपतो महदपि, विराजमानमपि, दता धृतेन भूमण्डलेन भिन्नप्रक्रमेणाऽधिकं चकास्ति। वेदादिभानेनाऽलौकिकं रूपमाहात्म्यम्, न तु लौकिकम्। इदं तु दन्ताग्रे भूमण्डलस्थापनेन लोकप्रसिद्धत्वाद् अलौकिकापे-क्षयाऽप्यधिकम्। यथा तुरगाद्यपेक्षयाऽपि चित्रादिस्थितास्तुरगादयोऽतिशोभायुक्ता भवन्ति, तथा वर्णान्तरभावमापन्ना वर्णान्त-रेण धृता वर्णान्तरस्य शोभाजनिका भवन्ति। इममेवार्थं वर्णकृतं शोभातिशयं दृष्टान्तेन स्पष्टयति—शृङ्गोढघनेनेति। श्वेतशृङ्गे आरूढेन नीलमेघेन स्थूलेन यथा मेरुः शोभते। तत्राऽपि त्रयाणामन्योन्यस्नेहेन सचेतनत्वे विलासो भवति। तदा दृश्यमा-नरूपमिव तद्भवतीत्यभूतोपमा। विभ्रमशब्देनोच्यते॥ ४२॥ ❀ ❀ एवं दम्पत्योरन्यतरसंवन्धेनाऽन्यतरशोभामुक्त्वा, तयोः पितृत्वं, स्थापयन्तः स्वार्थं भूस्थापनं प्रार्थयन्ति—संस्थापयेति। एनां जगतां स्थावरसहितानामुद्भवाय, सर्वेषां मातरं तव पत्नीं पितृत्वात् सम्यक् स्थापय। यथा पुत्राणामर्थे भार्यां स्थापयित्वा गृहस्थो देशान्तरं गच्छति, तथा त्वयाऽपि विधेयम्, यतस्त्वं पिताऽसि। अनेन प्रत्युपकारमनपेक्ष्यैव त्वयेयं स्थापनीया, इयं च तथैव परिपालयत्विति निरूपितम्। तथाप्यस्माभिः स्वानृण्याय पूर्णकामयोर्युवयोर्नमस्कारातिरिक्तं कर्तव्यं न भवतीति त्वया सह अस्यै नमसा विधेम। नमः आ समन्तात् विधे-मेत्यर्थः। नमसेत्यव्ययम्, कर्तव्यनिर्देशो वा। नमस्कारपुरःसरं पूजां करिष्याम इत्यर्थः। अथवा, अस्यै अस्याः प्रियार्थं नमसा सह त्वया सह च विधेम। भक्तिं यज्ञादिकं च कुर्वाणा आज्ञाकारिणो भविष्याम इत्यर्थः। किञ्च, इयं स्थापनीयैव, यत इयं गर्भिणी। भगवदाकृतिविशेषान् भक्तिसाधकान् प्रसविष्यतीत्यभिप्रायेणाऽऽह—यस्यां स्वतेज इति। मार्गद्वयप्रवर्त्तको भवान्, यथा अश्वत्थे त्रयीमयमग्निं यज्ञसिद्ध्यर्थमधाः, एवमस्यामपि स्वतेजः, स्वस्य पुरुषोत्तमाकृतिम्, पुरुषाकृतिं वा भूमौ स्थापितवान्॥ ४३॥ ❀ ❀ इमां प्रार्थनामुक्त्वा कर्तव्यान्तरं नाऽवशिष्यत इत्यभिप्रायेण तस्य पूर्वकृतमेव चरित्रम-नुवदन्तः स्तुवन्ति—कः श्रद्दधीतेति। अन्यतमस्त्वत्तोऽन्यो भूत्वा महानपि भुव उद्विबर्हणमुद्वाहम्, वहनम्, उद्धरणं वा, अन्यै-रुच्यमानमपि श्रद्धां कुर्यात्। त्वन्माहात्म्यमवाङ्मनसगोचरं दृष्ट्वाऽप्युक्तं न विश्वासं जनयति। स्वस्य माहात्म्यमेतादृशकार्या-सक्तिं च मत्वा, असम्भावनया उपाख्यानानां मिथ्यात्वं परिकल्प्य, न कदाचिदनीदृशं जगदिति मन्यन्ते। तद्वाक्येनान्येऽपि च भ्रान्ता भवन्ति। यत्राऽन्यकरणमपि न मन्यन्ते, तत्र स्वकरणं दूरे। तव त्वेतदाश्चर्यहेतुरपि नेत्याह—न विस्मयोऽसाविति। असावुद्धारस्त्वयि न विस्मयः, आश्चर्यं न भवति, तव वा गर्वहेतुर्न भवति। तत्र हेतुः—विश्वविस्मय इति। विश्वमेव तव विस्मयरूपम्। यथा रेतोरूपाज्जलान्मयूरादिः पुरुषादिर्वा जायते, बीजाद्वटादिर्वा। किञ्च, विश्वमेव विस्मयमाश्चर्यं यस्मि-न्निति भवत्येवेदं माहात्म्यसूचकम्। इतोऽप्यन्यन्महन्माहात्म्यं तदाह—यो माययेदमिति। इदमेव जगत्, मायया स्वप्नादौ प्रति-पुरुषं भिन्नप्रकारेण, एकस्मिन्नपि पुरुषे क्षणादन्यथारूपं च, ससृज इति। सृजव इति पाठे 'यो भवान्' इति। तत्राप्यतिवि-स्मयम्, पर्वताग्रे समुद्रः, दिवसे नक्षत्राणि, स्वशिरश्छेदादिर्वा; स्वयं तेनैव रूपेण पश्यतीति॥ ४४॥

### श्रीगिरिधरकृता बालप्रबोधिनी

एवं भगवन्तं नमस्कृत्य तत्सम्बन्धेन जातां भूमिशोभां निवेदयन्ति—दंष्ट्रेति। दंष्ट्राग्रकोट्या साधनेन त्वया कर्त्रा सभूधरा भूधरैः पर्वतैः सहिता भूर्मही धृता सती विराजते इत्यन्वयः। त्वमेवैनां धर्तुं समर्थोऽसि नान्य इत्याशयेन सम्बोधयन्ति—भूधरेति। तत्र हेतुं सूचयन्तः पुनः सम्बोधयन्ति—भगवन्निति। तत्र दृष्टान्तमाहुः—यथेति। यथा वनात् जलात् निस्सरतो निर्गच्छतो मतङ्गजेन्द्रस्य मत्तगजश्रेष्ठस्य दता दन्तेन धृता पत्रयुक्ता पद्मिनी विराजते तथेत्यर्थः॥ ४१॥ ❀ ❀ तव सम्बन्धेन यथा भूर्विराजते तथा भूसम्बन्धेन तव रूपमपि विराजते इत्याह—त्रयीमयमिति। अथेत्यर्थान्तरे। दता दन्तेन धृतेन भूमण्डलेन ते तवेदं सौकरं रूपं च चकास्ति शोभते इत्यन्वयः। सौकरत्वेनापकृष्टत्वमाशङ्क्याहुः त्रयीमयमिति। तत्र दृष्टान्तमाहुः—भूयसा

विपुलेन शृङ्गेणोढः धृतो यो घनो मेघस्तेन कुलाचलेन्द्रस्य पर्वतश्रेष्ठस्य यथैव विभ्रमो भूमिस्थापनं प्रार्थयन्तः नमस्कुर्वन्ति—संस्थापयेति । सतस्थुषां स्थावरसहितानां जगतां जङ्गमानां लोकाय निवासस्थानार्थं तव पत्नीं जगतां मातरमेनां भूमिं संस्थापय । यतस्त्वं जगतां पिताऽसि । तथाच सति तत्र स्थिताः सन्तो वयं त्वया सहास्यै मात्रे नमसा विधेम नमनं करिष्यामः यद्वा 'नमः आ इति च्छेदः, नमः आ सर्वतः करिष्यामः । यद्वा नमसेति तृतीया, नमसा सह विधेम अर्थात्पूजां करिष्याम इत्यर्थः । ननु स्वयं जलोपरि स्थिता कथं युष्माकमाधारः स्यात्तावत्तत्रास्याः स्थितिरेव दुर्लभेत्याशङ्क्य तत्राधारयोग्यत्वमुपपादयन्तो मातृत्वमुपपादयन्ति—यस्यामिति । यस्यां भूमौ त्वं स्वतेजः धारणशक्तिं अधाः निहितवानसीत्यर्थः । तत्र दृष्टान्तमाहुः—अग्निमिवारणाविति, याज्ञिका अरणौ काष्ठे यथा मन्त्रतोऽग्निं धारयन्ति तथेत्यर्थः ॥ ४३ ॥ ❀ ❀ एवं स्वाभिप्रेतं भूमिस्थापनं सम्प्रार्थ्य स्वकृतार्थतामाविष्करिष्यन्तोऽनन्ताचिन्त्यविविधशक्तेस्तवैतत्कर्मेतरैरचिन्त्यमित्याहुः—क इति । हे प्रभो हे स्वामिन् ! तव त्वया कृतं रसां रसातलं गताया भुव उद्बिबर्हणमुद्धरणं अन्यतमः त्वत्तो व्यतिरिक्तः कः श्रद्धीत कर्तुं श्रद्धां कुर्यादित्यर्थः । यद्वा अन्यतमः त्वद्विवेकिनो भिन्नः कः श्रद्धीत श्रुत्वाऽपि विश्वासं कः कुर्यादित्यर्थः । परन्त्वसौ भूम्युद्धारस्त्वयि न विस्मयोऽसम्भावित आश्चर्यजनको न भवति । तत्र हेतुमाहुः—विश्वविस्मय इति । विश्वे सर्वे विस्मया यस्मिंस्तस्मिन्नित्यर्थः । एतदेव स्पष्टयन्ति—य इति । यो भवान् मायया अचिन्त्यशक्त्या अतिविस्मयमत्याश्चर्यमिदं रेतोरूपजैर्विशेषबीजसाम्येऽपि ततो नानाविधपशुपक्षिमनुष्यादिविश्वं ससृजे इत्यर्थः ॥ ४४ ॥

### हिन्दी अनुवाद

आपके दाँतोंपर रक्खे हुए भूमण्डलके सहित आपका यह वेदमय वराहविग्रह ऐसा सुशोभित हो रहा है जैसे शिखरोंपर छायी हुई मेघमालासे कुलपर्वतकी शोभा होती है ॥ ४१ ॥ ❀ ❀ नाथ ! चराचर जीवोंके सुखपूर्वक रहनेके लिये आप अपनी पत्नी इन जगन्माता पृथ्वीको जलपर स्थापित कीजिये । आप जगत्के पिता हैं और अरणिमें अग्निस्थापनके समान आपने इसमें धारण शक्तिरूप अपना तेज स्थापित किया है । हम आपको और इस पृथ्वीमाताको प्रणाम करते हैं ॥ ४२ ॥ ❀ ❀ प्रभो ! रसातलमें डूबी हुई इस पृथ्वीको निकालनेका साहस आपके सिवा और कौन कर सकता था । किन्तु आप तो सम्पूर्ण आश्चर्योंके आश्रय हैं, आपके लिये यह कोई आश्चर्यकी बात नहीं है । आपने ही तो अपनी मायासे इस आश्चर्यमय विश्वकी रचना की है ॥ ४३ ॥ ❀ ❀ जब आप अपने वेदमय विग्रहको हिलाते हैं, तब हमारे ऊपर आपकी गरदनके बालोंसे झरती हुई शीतल जलकी बूँदें गिरती हैं । ईश ! उनसे भीगकर हम जनलोक, तपलोक और सत्यलोकमें रहनेवाले मुनिजन सर्वथा पवित्र हो जाते हैं ॥ ४४ ॥

**स वै बत भ्रष्टमतिस्तवैष ते यः कर्मणां पारमपारकर्मणः ।**
**यद्योगमायागुणयोगमोहितं विश्वं समस्तं भगवन् विधेहि शम् ॥ ४५ ॥**

### मैत्रेय उवाच

**इत्युपस्थीयमानस्तैर्मुनिभिर्ब्रह्मवादिभिः । सलिले स्वखुराक्रान्त उपाधत्तावितावनिम् ॥ ४६ ॥**
**स इत्थं भगवानुर्वीं विष्वक्सेनः प्रजापतिः । रसाया लीलयोन्नीतामप्सु न्यस्य ययौ हरिः ॥ ४७ ॥**
**य एवमेतां हरिमेधसो हरेः कथां सुभद्रां कथनीयमायिनः ।**
**शृण्वीत भक्त्या श्रवयेत वोशतीं जनार्दनोऽस्याशु हृदि प्रसीदति ॥ ४८ ॥**

### श्रीधरस्वामिविरचिता भावार्थदीपिका

तव अपारकर्मणः कर्मणां पारं य एष तेऽवलोकयति ज्ञातुमिच्छतीत्यर्थः । यस्य तव योगमाया यो गुणैः सह योगस्तेन मोहितम् । अतो विश्वस्य शं मंगलं विधेहि यथा त्वामचिंत्यानंतशक्तिं ज्ञात्वा भजेत्तथाऽनुगृहाणेत्यर्थः ॥ ४५ ॥ ❀ ❀ उपस्थीयमानः स्तूयमानः । स्वखुराक्रांत इति जलेऽपि धारणशक्त्याधानं दर्शयति । अविता रक्षकः ॥ ४६ ॥ ४७ ॥ ❀ ❀ कथनीयानि मायीनि मायावंति चरित्राणि यस्य । श्रवयेति श्रावयेत् ह्रस्वत्वमार्षम् । उशतीं कमनीयाम् । हृदि प्रसीदति स्वमनसि संतुष्यतीत्यर्थः ॥ ४८ ॥

---

१. अस्मिन्पक्षे सकारविसर्गलोपाभावश्च आर्षः । २. प्रा० पा०—र्दनस्तस्य हृदि ।

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

इत्यर्थ इति । 'इष-गतौ' भौवादिकः गत्यर्थानां ज्ञानार्थत्वेन ज्ञानेच्छापि तदर्थ इति भावः । ननु मायामोहितो जीवो मा जानातु मायातीतो मद्भक्तो नारदादिस्तु जानात्येवेति तत्राह—यस्य तव योगमाया चिच्छक्तिवृत्तिभेदः गुणयोगो गुणमेलनरूपा विद्या च ताभ्यां मोहितश्च को जानातीत्यर्थः । यतः सर्वो मोहितोऽतो हेतोः । इत्यर्थ इति । येऽप्राकृतास्त्वद्भक्तास्ते योगमायया त्वन्माधुर्येषु निमज्ज्य मोह्यंते "ज्ञानिनामपि चेतांसि देवी भगवती हि सा । बलादाकृष्य मोहाय महामाया प्रयच्छति" इत्युक्तेः । ये च प्राकृतास्ते मायया विषयसुखेषु निमज्ज्य मुह्यंते इति । अतस्त्वदनुग्रहेणैव मिथ्याज्ञाननिवृत्त्या कल्याणं भवतीति भावः ॥ ४५ ॥ ४६ ॥ ❀ ❀ ततो हरिः किं चकारेति चेत्तत्राह—स इति । अप्सु जलेषु स्वशक्त्या स्थापयित्वा स्वलोकमिति शेषः अंतर्दधे वा ॥ ४७ ॥ ❀ ❀ हरति भक्तसंसारं नाशयतीति हरिः "कृदिकारादक्तिनः" इति वा ङीष् । हरति मेधा बुद्धिर्येनेति हरिमेधास्तस्य । यद्वा । हरति निजजनक्लेशमिति हरिः । मेधति हिनस्ति दुष्टदैत्यान् भक्तैर्युनक्ति वेति मेधाः "मेधृ-संगमहिंसयोः" इत्यसुन्प्रत्ययः । हरिश्चासौ मेधाश्चेति तथा । पुनरुक्तिभयात् न ह्रियते प्राप्यते भक्तिं विनेत्यहरिस्तस्य भक्तियोग-गम्यस्येत्यर्थः । इत्यर्थ इति । जनार्दनः सर्वजनप्रार्थ्योऽप्यस्य वक्तुश्श्रोतुश्चोपरि स्वयं स्वचित्ते निजचरितश्रवणादिना तुष्यतीति भावः ॥ ४८ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

एषत इति भौवादिकस्य एषृ गतावित्यस्य ऋकारानुबन्धस्य रूपं ततो गत्यर्थत्वाद् जानातीत्यर्थत्वेन अवलोकयतीति व्याख्यातं तस्य चासम्भवत्वाद् ज्ञातुमिच्छतीति स्वसमवायिसमवेतत्वसम्बन्धेन लाक्षणिकोऽर्थः । अत एव इत्यर्थ इत्युक्तम् ॥ ४५ ॥ ❀ ❀ धारणशक्त्या स्थापनशक्त्या आधानं स्थापनम् ॥ ४६ ॥ ❀ ❀ स्वलोकं ययौ जगाम लोकमित्यग्रे वक्ष्यमाणत्वात् ॥ ४७ ॥ ❀ ❀ मायावन्ति प्रभाववन्ति हृदि स्वमनसीति स्वशब्दाध्याहारादित्यर्थ इत्युक्तम् ॥ ४८ ॥

### श्रीमद्वीरराघवव्याख्या

एवं कृतार्थतां विज्ञाप्याथ प्रकृतं भगवत्कर्मणोऽचिन्त्यत्वं व्यतिरेकमुखेन वदन्तः तस्य भगवतोऽनुग्रहं प्रार्थयन्ते । स वा इति । अपारकर्मणः जगत्सृष्ट्याद्यनन्तव्यापारस्य तव कर्मणां पारमवधिं यः ईषते कांक्षति ज्ञातुमिच्छतीत्यर्थः । स वै भ्रष्टमतिः अपाराणां कर्मणां पारं जिज्ञासुः बुद्धिहीन इत्यर्थः । हे भगवन्! यस्य तव योगमायाः त्वत्सम्बन्धिनी विचित्रसर्गकारिणी शक्ति-स्तस्य ये गुणाः सत्त्वादयस्तेषां योगेन सम्बन्धेन मोहितं समस्तं विश्वं शं सुखं विशिष्टं सुखं यथा भवति तथेति क्रियाविशेषणं वा विधेहि कुरु ॥ ४५ ॥ ❀ ❀ एवं स्तुतः प्रार्थितो भगवान् किन्ततोऽकरोदित्यत्राह । इतीति । तैर्ब्रह्मवादिभिः वेदतुल्यवाक्यानि भाषयद्भिर्मुनिभिर्मरीच्यादिभिरित्युक्तप्रकारेण उपस्थीयमानः समीपस्थैः स्तूयमानः अविता रक्षिता भगवान् स्वखुराक्रान्ते सलिले ऽवनिं भूमिमुपाधत्तोपस्थापयामासेत्यर्थः । स्वखुराक्रान्त इत्यनेन विग्रहस्यात्युन्नतत्वं सूच्यते ॥ ४६ ॥ ❀ ❀ वराहावतार-काण्डमुपसंहरति । स इति । प्रजापतिः प्रजानां संरक्षकः भगवान् पूर्णषाड्गुण्यः विष्वक्सेनः स वराहः हरिर्लीलया क्रीडया रसायाः सकाशादुद्धृतामानीतामुर्वीं भूमिमप्सु न्यस्य प्रतिष्ठाप्य यथावन्तर्दधे इत्यर्थः ॥ ४७ ॥ ❀ ❀ एतत्कथाश्रवणफलमाह । य इति । वर्णनीयाश्चर्यशक्तिमतः हरिमेधसः यद्विषया मेधा हरति संसारं तस्य हरेः भगवतो वराहस्य सुभद्रां सुमङ्गलामुशतीं कमनीयां पवित्रां कथामेवमुक्तप्रकारेण यः पुरुषः शृण्वीत शृणुयाच्छ्रावयेत वा तस्य हृदि जनार्दनः आशु प्रसीदति ॥ ४८ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

वराहस्य गण्डशिलाद्युपमत्वेन परिच्छिन्नत्वात्कर्मणोऽपि तथात्वान्नायं विष्णुरित्याशङ्क्य तथा मन्वानो भ्रष्टमतिरित्याह । स वा इति । यः पुरुषोऽपारकर्मणोऽनन्तविक्रमस्य तव कर्मणां भूम्युद्धरणादिलक्षणानां पारमन्तमेषते सम्यगिच्छति स भ्रष्टमतिर्वा इत्यनेन नरकपातं लक्षयति । नोऽस्माकं तादृशज्ञानेन दुःखोदर्को मा भूत्किंतु सुखोदर्क एव स्यादिति प्रार्थयन्त इत्याह । त्वद्योगेति । तवबंधकशक्त्या भ्रष्टमनस्कत्वेन विस्रंसतां गलिततत्त्वज्ञानानां नः शं सुखसाधनज्ञानसाध्यं लोकं विधेहीत्यन्वयः ॥ ४५ ॥ ❀ ❀ भक्तवत्सलोऽहमिति भावयंस्तदुक्तं करोति हरिरित्याह । प्रत्युपस्थीयमान इति ॥ ४६ ॥ ❀ ❀ हरिस्ततः परं किं चकारेति तत्राह । स इत्थमिति । प्रजापतिः प्रजापालनशीलः उन्नीतामुद्धृताम् ॥ ४७ ॥ ❀ ❀ अस्य वराहस्य विक्रमस्य पुरुषार्थैकहेतुत्वादयं हरिरेवेति तच्छ्रवणादिफलमाह । य इति । हरिमेधसः संसारसंहारिबुद्धेः कथनीयमायिनः कथनयोग्यसाम-र्थ्यस्य उशतीमभीष्टदोग्ध्रीम् ॥ ४८ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

स वै इति । एष ते इति भौवादिकस्य एषृ गतावित्यस्य ऋकारानुबद्धस्य रूपम् । ततो गत्यर्थत्वाज् जानात्यर्थत्वेन अवलो-कयतीति व्याख्यातम् । तस्य चासम्भवाद् ज्ञातुमिच्छतीत्येवार्थः ॥ ४५ ॥ ४६ ॥ ❀ ❀ ययौ स्वलोकमिति शेषः ॥ ४७ ॥

❀ ❀ एवं हिरण्याक्षमित्यादि वक्ष्यति हरिमेधसः लोकदुःखहरसङ्कल्पस्य कथनीया प्रशस्या मा माया कृपा तद्युक्तस्य । प्रशस्यत्वमेवाह । शृण्वीतेति ॥ ४८ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

एवं त्वल्लीलां कति वर्णयामो वयं सर्व्ववेदविदोऽपि त्वल्लीलासिन्धोः कणमपि सामस्त्येन न विद्मः के पुनरन्ये वराका इत्याहुः । स वै इति । यस्तव कर्म्मणां पारम् एषते जानाति जानामीत्यभिमन्यत इत्यर्थः । एषृ गतौ भौवादिकः । ननु मायामोहितो जीवो न जानातु नाम मायातीतो मद्भक्तो नारदादिर्जानात्येवेति तत्राहुः । यस्य तव योगमाया चिच्छक्तिवृत्तिभेदः गुणयोगो गुणमेलनरूपोऽविद्या च ताभ्यां मोहितं समस्तमप्राकृतं प्राकृतञ्च विश्वं तत्र ये अप्राकृता स्त्वद्भक्तास्ते योगमायया तन्माधुर्य्येषु निमज्ज्य मोह्यन्ते । ये च त्वदन्ये प्राकृता जीवास्ते मायया वैषयिकसुखदुःखेषु निमज्ज्य मोह्यन्ते इति कस्ते कर्म्मणां पारं ज्ञास्यतीत्यर्थः । अतः शं विधेहि यथा जानीम इति मिथ्याभिमानो न भवेदिति भावः ॥ ४५ ॥ ❀ ❀ उपस्थीयमानः स्तुत्या परिचर्य्यमाणः सलिले सलिलोपरि स्वखुराक्रान्ते इति जलेऽपि धारणशक्त्याधानं दर्शयति अविता रक्षकः । ययौ स्वलोकमिति शेषः । अन्तर्दधे इति वा ॥ ४६ ॥ ४७ ॥ ❀ ❀ हरन्ती भक्तसंसारं नाशयन्ती मेधा बुद्धिर्यस्मिन् तस्य कथनीया वर्णनीया माया मायाशक्तिः कृपा वा स्वरूपशक्तिर्वा तत्त्वतः श्रवयेत उशतीं कमनीयाम् ॥ ४८ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

एवं यथाशक्ति स्तुत्वाथ भगवद्गुणानामियत्तानवच्छिन्नत्वं वदन्तः प्रार्थयन्ते हे भगवन् ! पारमवधिमियत्तां एषते ज्ञातुमिच्छति यः स भ्रष्टमतिः यत् विश्वं तव योगमायागुणानां योगेन सम्बन्धेन मोहितं त्वत्पराङ्मुखं तत्प्रति शं मङ्गलं त्वत्प्रावण्यं विधेहि सम्पादय ॥ ४५ ॥ ❀ ❀ अविता रक्षकः उपस्थीयमानः स्तूयमानः स्वखुराक्रान्ते सलिले महीम् ॥ ४६ ॥ ४७ ॥ ❀ ❀ अस्य हरेः कथनीया वर्णनीया माया कृपा अस्यास्तीति स तथा तस्योशतीङ्कमनीयां यः कथां श्रवयेद् ह्रस्वत्वमार्षं श्रावयेत् शृण्वीत शृणुयात् वा तं प्रति हृदि स्वमनसि आशु प्रसीदति सन्तुष्यति ॥ ४८ ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

ननु तथापि भवद्भ्यो ज्ञानं मोक्षो वा देयः, तदर्थमधिकारो वा सम्पादनीयः । तत्कथमेतावतैव विरमणमित्याशङ्क्याऽऽहुः—विधुन्वत इति । इदं वेदात्मकं वपुः जलादुद्गतं विधुन्वतस्तव सतः प्रसङ्गादेव वयं जनस्तपःसत्यनिवासिनस्त्वत्सटाशिखो[1]द्धूतशिवाम्बुबिन्दुभिः, पुनः पुनरागतैर्विशेषेण मृज्यमाना घर्षणपूर्वकं प्रक्षाल्यमाना अत्यर्थमन्तर्बहिः पाविताः । अतिपवित्रैर्ज्ञानादिकं प्राप्यत एव । मुखे मन्त्रं पठन् हस्तेन मार्जनाद्यौ लोकः किल पावितो भवति । तत्र वेदमयेनैव शरीरेण वेदार्थरूपेण बर्हिपा कण्ठोद्गतेन पवमानेन बर्हिर्मुष्ट्याकृतिरूपेण । तत्रापि तवाऽऽलोडनेन कल्याणरूपाम्बुभिर्मार्जने किं वक्तव्यमित्यर्थः । त्रिविधानां ग्रहणमेकविधाधिकारसिद्ध्यर्थम् ॥ ४५ ॥ ❀ ❀ एवं भगवन्तं स्तुत्वा, स्तोत्रमुपसंहरिष्यन्तः, स्वल्पं स्तुतमिति स्वस्य दोषं परिहरन्ति—स वै बतेति । तव गुणानुवर्णनरूपे स्तोत्रे अल्पं बह्विति विभागो व्यर्थः, त्वद्गुणानामानन्त्यात् । स्वबुद्ध्यनुसारेण तु स्तुतमेव यस्तु पुनः सर्वाण्येव भगवच्चरित्राणि कथयिष्यामीति प्रारभते, स निश्चयेन भ्रष्टमतिः । भ्रष्टस्त्वमर्यादो भवतीति बतेति खेदे । भगवद्गुणेषु चित्तं प्रसारयन्नपि भ्रष्टबुद्धिर्जात इति तस्य बुद्धिभ्रंशमेवाऽऽह—अपारकर्मणः कर्मणां पारं य ईषते, भगवतः सर्वानेव गुणान् कथयिष्यामीति, तदेयं बुद्धिः समीचीना भवेत् , यदि कर्मणामन्तो भवेत् । जातानामप्यन्तो नाऽस्ति, जनिष्यमाणानां चेति वक्तुमपारकर्मण इत्युक्तम् । तत्रापि ये सर्वज्ञा वेदाः, अन्ये वा भगवद्भावं प्राप्ताः, ते वदन्तु नाम, ये पुनर्मायया मोहिताः ते कुतो वदेयुः ? विश्वस्मिन् सर्व एव च मोहिताः । तदाह—यद्योगमायेति । यद्यस्मात्कारणात् समस्तमेव विश्वं योगमायायाः सत्त्वादिगुणैर्मोहितम् । सा हि जगत्कर्त्री स्वकार्यसिद्ध्यर्थं मोहयत्येव, अतो मायामोहिताः स्वरूपमेव न जानन्ति, कुतो भगवद्गुणान् । अतः सर्वानेव त्वं पालयेत्याहुः—भगवन्निविधेहि शमिति । पूर्ववाक्यं दयाजनकम् ॥ ४६ ॥ ❀ ❀ तेषां स्तोत्रं सफलं जातमित्याह—इत्युपस्थीयमान इति । इतीति समाप्तिः, प्रकारवाची वा । तैर्मुनिभिरेवमुपस्थीयमान उपस्थानविद्यया स्तूयमानः । ब्रह्मवादिनां वचनमन्यथा मा भवत्विति, स्वखुराक्रान्ते सलिले अवनिमुपाधत्त स्थापितवान् । यतोऽयमविता, सर्वेषां रक्षकः । खुराक्रान्त इति जले मर्यादां भयं च सूचयति, भगवत्खुराक्रान्तत्वात् । तावज्जलं देवतारूपं जातमिति भूमेरतः परं न काऽपि चिन्ता ॥ ४७ ॥ ❀ ❀ एवं भगवच्चरित्रमुक्त्वोपसंहरति—स इत्थमिति । इत्थममुना (?) प्रकारेण रसायाः सकाशात् उर्वीमुद्धृत्य अप्सु न्यस्य ययाविति संबन्धः । एकाकिना कथमुद्धृता ? कथं वा स्थापितेति शङ्काव्युदासार्थमाह—विष्वक्सेन इति । विष्वक् परितः सेना यस्य, तस्य भगवतः सर्वत्र सर्वकार्यकरणार्थं महत्येव सेना वर्तते । स्थापने हेतुः—प्रजापतिरिति । गमने हेतुः—हरिरिति । ईश्वरसान्निध्यं प्रजानां स्वाच्छन्द्यप्रतिबन्धकम् ॥ ४८ ॥

---

१. शिखोद्धूत ग. ।

### श्रीगिरिधरकृता बालप्रबोधिनी

स्वकृतार्थतामाविष्कुर्वन्ति—विधुन्वतेति। निजं वपुः शरीरं विधुन्वता कम्पयता त्वया सटानां स्कन्धबालानां शिखाभिरग्रैरुद्भूता उज्ज्वलिता ये शिवाः सर्वदोषनिवर्तकाः अम्बुबिन्दवस्तैर्विमृश्यमाना अभिषिच्यमानाः विशेषेण शोध्यमाना वा जनस्तपस्सत्यलोकनिवासिनो वयमद्य भृशमत्यन्तं पाविताः पवित्रीकृताः, धर्मादिचतुर्विधपुरुषार्थयोग्याः कृता इत्यर्थः। सटाशिखाम्बुबिन्दुस्पर्शमात्रेण कथमेवं योग्यतेत्याशङ्क्याहुः—वेदमयमिति। तत्रापि हेतुं सूचयन्तः सम्बोधयन्ति—ईशेति ॥ ४५॥ ❀ ❀ एवं स्वबुद्ध्यनुसारेण स्तुत्वा तत्र स्तुतौ स्वल्पत्वमाशङ्क्य स्वमन्दमतित्वं परिहरन्तो भगवतोऽनुग्रहं प्रार्थयन्ते—स वा इति। इत्यवधारणे। बतेति अतिशयार्थो यस्तव कर्मणां पारमवधिमेषते ज्ञातुं वर्णयितुं वा इच्छति सोऽतिभ्रष्टमतिरेवेत्यन्वयः। कुत इत्यपेक्षायामन्ताभावेनान्तपरिज्ञानाय प्रवृत्तस्योद्वेगैकफलत्वादित्याशयेनाहुः—अपारकर्मण इति। अन्तज्ञानाभावे हेत्वन्तरमप्याहुः—यद्योगमायेति। समस्तमेव विश्वं यस्य तत्र योगमायायाः अचिन्त्यशक्तेर्गुणैः सह योगेन सम्बन्धेन मोहितं भवतीत्यन्वयः। अतोऽस्माकं शं सुखं विधेहि कुर्विति। तवानुग्रहं विना नोऽस्माकं न निर्वाहस्तवाप्येतद्देवोचितमिति सूचयन्तः सम्बोधयन्ति—भगवन्निति ॥ ४६॥ ❀ ❀ एवं स्तुतः प्रार्थितश्च भगवांस्ततः किमकरोदित्यपेक्षायामाह—इतीति। तैर्ब्रह्मवादिभिः वेदतुल्यवाक्यानि भाषमाणैर्मुनिभिः मरीच्यादिभिः इत्येवमुक्तप्रकारेण उपस्थीयमानः स्तूयमानः अविता रक्षिता भगवान् स्वखुराक्रान्ते स्वखुरैर्विलोडिते सलिले अवनिं भूमिमुपाधत्त स्थापयामासेत्यन्वयः। स्वखुराक्रान्त इत्यनेन सलिलेऽपि धारणशक्त्याधानं सूचयति, येन पुनर्जले न निमज्जेत् ॥ ४७॥ ❀ ❀ वराहावतारकथामुपसंहरति—स इति। स वराह इत्थमुक्तप्रकारेण रसाया रसातलात् लीलया अनायासेन उन्नीतामुद्धृतां उर्वीमप्सु न्यस्य प्रतिष्ठाप्य ययौ अन्तर्दधे इत्यन्वयः। आयासाभावे हेतुत्वेन तत्प्रभावमाह—विष्वक्सेन इति। विष्वक्सर्वतः सेना आशा प्रभावो वा यस्य सः। तत्र हेतुमाह—भगवानिति, ऐश्वर्यवीर्यादिगुणपूर्ण इत्यर्थः। तथाभूतस्यापि भूम्युद्धारे हेतुमाह—हरिरिति, दुःखहरणशील इत्यर्थः। तत्रापि हेतुमाह-प्रजापतिरिति, प्रजापालकत्वादित्यर्थः ॥ ४८॥

### हिन्दी अनुवाद

जो पुरुष आपके कर्मोंका पार पाना चाहता है, अवश्य ही उसकी बुद्धि नष्ट हो गयी है; क्योंकि आपके कर्मोंका कोई पार ही नहीं है। आपकी ही योगमायाके सत्त्वादि गुणोंसे यह सारा जगत् मोहित हो रहा है। भगवन्! आप इसका कल्याण कीजिये ॥ ४५॥ ❀ ❀ श्रीमैत्रेयजी कहते हैं—विदुरजी! उन ब्रह्मवादी मुनियोंके इस प्रकार स्तुति करनेपर सबकी रक्षा करनेवाले वराह भगवान्ने अपने खुरोंसे जलको स्तम्भितकर उसपर पृथ्वीको स्थापित कर दिया ॥ ४६॥ ❀ ❀ इस प्रकार रसातलसे लीलापूर्वक लायी हुई पृथ्वीको जलपर रखकर वे विष्वक्सेन प्रजापति भगवान् श्रीहरि अन्तर्धान हो गये ॥ ४७॥ ❀ ❀ विदुरजी! भगवान्के लीलामय चरित्र अत्यन्त कीर्तनीय हैं और उनमें लगी हुई बुद्धि सब प्रकारसे पाप-तापोंको दूर कर देती है। जो पुरुष उसकी इस मङ्गलमयी मञ्जुल कथाको भक्तिभावसे सुनता या सुनाता है, उसके प्रति भक्तवत्सल भगवान् अन्तस्तलसे बहुत शीघ्र प्रसन्न हो जाते हैं ॥ ४८॥

**तस्मिन् प्रसन्ने सकलाशिषां प्रभौ किं दुर्लभं ताभिरलं लवात्मभिः।**
**अनन्यदृष्ट्या भजतां गुहाशयः स्वयं विधत्ते स्वगतिं परः पराम् ॥ ४९॥**
**को नाम लोके पुरुषार्थसारवित् पुराकथानां भगवत्कथासुधाम्।**
**आपीय कर्णाञ्जलिभिर्भवापहामहो विरज्येत विना नरेतरम् ॥ ५०॥**

**इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां तृतीयस्कन्धे व[1]राहप्रादुर्भावानुवर्णने त्रयोदशोऽध्यायः ॥ १३॥**

### श्रीधरस्वामिविरचिता भावार्थदीपिका

आशिषो यद्यपि सुलभास्तथापि न प्रार्थनीया इत्याह। ताभिराशीर्भिरलम्। लवात्मभिस्तुच्छाभिः। न च तदा भजनस्य वैफल्यं शंकनीयमित्याह। भगवद्भजनव्यतिरेकेण फलांतरदृष्टिं विना भजतां स्वपदप्राप्तिं स्वयमेव विधत्ते। गुहाशयत्वादहैतुकीं भक्तिं जानन् ॥ ४९॥ ❀ ❀ अतः को नाम पुराकथानां पूर्ववृत्तानां मध्ये। कथंचिदापीय विरज्येत विरमेत्। नरेतरं पशुं विना ॥ ५०॥

**इति श्रीमद्भागवते तृतीयस्कंधे टीकायां त्रयोदशोऽध्यायः ॥ १३॥**

---

१. प्रा० पा०—प्राचीने पाठे। वराहप्रादुर्भावानुवर्णने।

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

तस्मिन् जनार्दने ॥ ४९ ॥ ❀ ❀ यो विरज्येत स पशुरेवेत्यर्थः ॥ ५० ॥

इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे तृतीयस्कन्धे त्रयोदशोऽध्यायः ॥ १३ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या ।

आशिषो यदा न प्रार्थनीयास्तदा भगवद्भजनमेव मुख्यं "कथा हरिकथोदर्का" इत्युक्तेस्तद्विना या स्वर्गादिफलान्तरदृष्टिस्तां विनां तां हित्वेत्यर्थः । स्वगतिं स्वस्फूर्त्यात्मकं ज्ञानम् ॥ ४९ ॥ ❀ ❀ अतः कथायाः परमफलत्वात् ॥ ५० ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कंधे श्रीराधारमणदासगोस्वामिविरचितायां दीपिकाटिप्पण्यां त्रयोदशोऽध्यायः ॥ १३ ॥

### श्रीमद्वीरराघवव्याख्या

किन्तत्प्रसादेनेत्यत आह । तस्मिन्निति । सकलाशिषां सर्वपुरुषार्थानां प्रभौ दातरि तस्मिन् भगवति प्रसन्ने सति दुर्लभं दुर्लभ्यं किमस्ति किमपि नास्तीत्यर्थः । अतो लवात्मभिः तुच्छाभिः ताभिराशीर्भिरलं यद्यपि सुलभास्तथापि न प्रार्थनीया इति भावः । न चैतावता तत्त्वभजनस्य विफलत्वं शङ्कनीयमित्याह । अनन्यदृष्ट्या एकान्तभक्त्या स्वात्मशरीरकबुद्ध्येत्यर्थः । भजतां नितरां गुहाशयः हृदयकुहरे निविष्टः परः परमपुरुषः स्वयं परां निरतिशयां स्वगतिं स्वं प्राप्तिं विधत्ते सम्पादयति ॥ ४९ ॥ ❀ ❀ अतो निरतिशयपुरुषार्थसाधनभूतां कर्णरसायनां पवित्रां कथां शृण्वन्नरेतरं विना को नाम तृप्येदित्याह । क इति पुरुषार्थानां धर्मादीनां सारं वेत्तीति तथाधर्मस्य ह्यापवर्ग्यस्य नार्थोऽर्थायोपकल्पत इति । प्रथमस्कन्धोक्तरीत्या पुरुषार्थसाराभिज्ञः को नाम पुराकथानां पूर्ववृत्तान्तानां मध्ये भगवत्कथैव सुधा तां कर्णविवाञ्जलयः तैरापीय समन्तात् पीत्वा किम्भूतां भगवत्कथासुधाम्भवापहां संसारनिवर्तिनीं नरेतरं पशुं विना कः विरज्येत न कोऽपि विरक्तो भवेदित्यर्थः । अहो इति । भगवच्चरित्रस्याश्चर्यद्योतकमव्ययम् ॥ ५० ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धटीकायां श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायां त्रयोदशोऽध्यायः ॥१३॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

तत्प्रसादफलमाह । तस्मिन्निति । लवात्मभिर्लवकालरूपाभिः पश्चान्नश्वरीभिस्ताभिः स्वर्गाद्याशीर्भिः प्रसादोऽपि गाथावच्छ्रवणादिना न स्यादिति ध्वनयन्नाह । अनन्यभक्त्येति ॥ ४९ ॥ ❀ ❀ ननु किञ्चित्कालं हरिकथां निषेव्य पश्चान्मुञ्चन्तो दृश्यन्ते तत्र सारत्वं कथमित्याशङ्कन्ते पशुकल्पा इत्याह । को नामेति । नामशब्दः कुत्सने को नामकः कुत्सितः, पुराशब्दः पुराणे निकटातीते आनन्तर्ये च वर्त्तते पुराणकथानां निकटातीतकथानामनागतकथानां च मध्ये सारभूतां तामिति शेषः । "प्रबन्धे निकटातीते पुराणे नागते पुरा" इति यादवः । सु पूजिते मोक्षे धत्ते सुसुखं धापयतीति वा सुधा डुधाञ् धारणपोषणयोर्घेट् पान इति धातुः, भवापहां संसारविनाशनीं भद्रावहां च पपौ शशाविति प्राच्या इति सूत्रात्पकारस्य वकारः भवो भद्र इति यादवः नरेतरम्पशुम् ॥ ५० ॥

इति श्रीभागवतमहापुराणे तृतीयस्कंधे विजयध्वजतीर्थकृतपदरत्नावल्यां त्रयोदशोऽध्यायः ॥ १३ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

सर्व्वफलदेऽपि तत्प्रसादे परमफलमाह । तस्मिन्निति । स्वगतिं स्वस्फूर्तिरूपं ज्ञानम् ॥ ४९ ॥ ❀ ❀ ततश्च सा कथैव तैः पीयूषधारेव त्यक्तुमशक्या भवतीति व्यतिरेकेणाह । क इति ॥ ५० ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भस्य त्रयोदशोऽध्यायः ॥ १३ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

किं वस्तु दुर्लभमपि तु सर्व्वमेव सुलभं तदपि ताभिराशीर्भिरलं लवात्मभिः क्षुद्राभिस्तुच्छाभिरित्यर्थः । न च तदा भजनस्य वैफल्यं शङ्कनीयमित्याह । अनन्यदृष्ट्या भगवद्भजनव्यतिरेकेण फलान्तरदृष्टिं विना भजतां स्वयमेव विधत्ते गुहाशयत्वादहैतुकीं भक्तिं जानन्निति स्वामिचरणानां व्याख्या ॥ ४९ ॥ ❀ ❀ भक्तिरेव सर्व्वपुरुषार्थमहाफलमिति जानन्नेव सारज्ञ उच्यते । भक्तिः पुरुषार्थसाधनमेव न तु स्वतः फलरूपेति व्याचक्षाणस्तु पशुरेवेत्याह । को नामेति । पुरा कथानां पूर्व्ववृत्तानां

मध्ये भवापहां संसारध्वंसिनीम्। अहो आश्चर्यं नरेतरं पशुं विना को विरज्येत यो विरज्येत स पशुरेवेति तेन 'औत्कण्ठ्यबाष्पकलया मुहुरर्द्यमानस्तच्चापि चित्तबडिशं शनकैर्वियुङ्क्ते' इति वक्ष्यमाणलक्षणस्य योगिनः पशुत्वं व्यञ्जितम्॥ ५०॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्। तृतीये त्रयोदशोऽध्यायः सङ्गतः सङ्गतः सताम्॥ १३॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

आशिषां संपदाम्प्रभौ दातरि प्रसन्ने सति यद्यपि किन्दुर्लभं तथापि ताभिः आशीर्भिर्लवात्मभिः क्षणभङ्गुराभिः किं न किमपि प्राकृताः सम्पदः ततो न प्रार्थ्या इति भावः। निष्कामानां स्वानन्यभक्तानां तु स्वयमेव पराङ्गतिं विधत्ते सम्पादयति॥ ४९॥

इति श्रीमद्भागवतमहापुराणे तृतीयस्कंधे श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे त्रयोदशाऽध्यायार्थप्रकाशः॥ १३॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

प्रकरणं समाप्तमिति सूचयितुमेतच्छ्रवणस्य फलमाह त्रिभिः—य एवमेतामिति। य एतां पूर्वोक्तां भगवतः सृष्टिरूपां लीलां शृण्वीत वा, तयोर्भगवान् प्रसीदतीति फलम्। ननु दुःखनिवृत्तिः कथं न फलत्वेनोच्यत इत्याशंक्याऽऽह—हरिमेधसो हरेरिति। भगवद्विषयिणी स्वकीयैव बुद्धिः सर्वं दुःखं हरति, भगवानपि हरति स्वतन्त्रतया अस्मृतोऽपि। एवं सति दुःखनिवृत्तिः स्वतः सिद्धा कथं फलत्वेन वक्तव्येत्यर्थः। ननु स्वर्गादिः कथं नोच्यते? तत्राऽऽह—सुभद्रामिति। सर्वेभ्यः स्वर्गादिभ्योऽपि कथैव सुभद्रा, अतिकल्याणरूपा। पूर्णानन्दरूपेति यावत्। ननु कथमुच्यते सर्वत्र फलत्वेन स्वर्गादिः? तत्राऽऽह—कथनीयमायिन इति। कथनीया माया अस्याऽस्तीति। सर्वेषां वाचि माया वर्तत इति यथासुखं वदन्तीत्यर्थः। विहितत्वात् श्रवणकीर्तनेन धर्मो भवतीति, तस्याऽभ्युदयनिःश्रेयसहेतुत्वं सिद्धमिति, तन्निराकरणार्थं श्रवणकीर्तनयोर्भक्तित्वख्यापनाय मध्ये भक्त्येति पदम्। भक्त्या प्रेम्णा। अत एव क्रियाद्वयमपि च्छान्दसम्, शृणुयात् श्रावयेदित्यर्थः। प्रत्येकं हेतुत्वज्ञापनार्थं वाशब्दः। श्रवणं तु स्वरूपसौन्दर्यादेव भविष्यतीत्यर्थः। तदाह—उशतीमिति। उशतीं कमनीयाम्। अविद्यानाशकस्तस्य हृदय एव प्रसन्नो भवति॥ ४९॥ ❋ तस्मिन्प्रसन्न इति। तस्य प्रसाद एव दुर्लभः, प्रसन्ने न किञ्चिद् दुर्लभम्। तत्र हेतुः—सकलाशिषां प्रभाविति। ऐहिकामुष्मिकमोक्षाणां प्रभुः स्वामी, नियन्ता। अनेन सर्वमेव तस्य भगवति प्रसन्ने सिद्धमेवेति ज्ञापितम्। ननु भगवद्भक्तानामपि सर्वविषयाभावो दृश्यते, तत् कस्य हेतोस्तत्राऽऽह—ताभिर्लवात्मभिरलमिति। क्षणमात्रं सुखाभावजनकैर्विपर्यैरलम्। तर्हि कदाचिदुत्पन्ना विषयेच्छा भक्तानामपूरिता स्यादित्याशङ्कयाऽऽह—अनन्यदृष्टये ति। गुहाशयस्तेषां हृदयाभिप्रायवित्, स्वयमेव गतिं वैकुण्ठाख्यां विधत्ते। पर इति पुरुषोत्तमः। परमिति स्वसदृशं करोतीत्यर्थः। यथा स्वस्य भोगे न काऽपि न्यूनता, तथा तस्याऽपीति भावः। परमनन्यदृष्ट्या भजनं कर्तव्यम्, भगवदर्थमेव भगवान् सेव्यः॥ ५०॥ ❋ ❋ नन्वेवं सति महाफलं भगवत्कथाश्रवणं यथा निर्वहति, तथोपायो वक्तव्य इति चेत्तत्राऽऽह—को नाम लोक इति। नाऽत्रोपायो वक्तव्यः, कथासौन्दर्यमेव सहजं तत्र हेतुः। ये भगवत्कथारसिकास्ते प्रवर्तन्त एव, ये वृषभास्ते उपेक्षणीया एव। अथ प्रवृत्ताः कियत्कालानन्तरं कथां परित्यज्य रसान्तरे प्रविष्टा भविष्यन्तीति, तेषां रसान्तरव्यावृत्त्यर्थमुपायो वक्तव्य इति चेत्, तादृशो नाऽस्तीति निरूपयति—को नाम प्रसिद्धः। कोऽपि लोके माहात्म्यमज्ञात्वाऽपि, स्वतन्त्रो भूत्वा, पुरुषार्थानां सारासारविभागविदपि भूत्वा, पुरा कथानां पूर्ववृत्तान्तानां मध्ये भगवत्कथासुधां निपीय प्रसङ्गादपि भगवत्कथां श्रुत्वा, तस्या माधुर्यं मृत्युनिवर्त्तकत्वं च ज्ञात्वा। तत्रापि भगवत्कथावक्तुर्मुखान्निःसृतां कथां परितः शृण्वन् अक्षरमात्राऽभिप्रायमप्यत्यजन् विरज्येत, को वा अलमिति मन्येत? ब्रह्मसायुज्यमप्राप्तः। यतः इयं कथा भवापहा। ननु विरक्ता अपि लोके दृश्यन्ते तत्राऽऽह—अहो इत्याश्चर्यमेतत्। अत्र को हेतुरिति जिज्ञासायां स्वतः स्फुरितं हेतुमाह—विनेति। स प्रायेण नर एव न भवति, वानरो वा अन्यो वेत्यर्थः॥ ५१॥

इति श्रीभागवतसुबोधिन्यां श्रीलक्ष्मणभट्टात्मजश्रीवल्लभदीक्षितविरचितायां तृतीयस्कन्धे त्रयोदशाध्यायविवरणम्।

### श्रीगिरिधरकृता बालप्रबोधिनी

एतत्कथाश्रवणफलमाह—य इति। य एवमुक्तप्रकारामेतां हरेः कथां भक्त्या शृण्वीत शृणुयात् श्रवयेत श्रावयेद्वा तस्यास्य श्रोतुर्हृदि स्थितो जनार्दनः अविद्यानिवर्तको भगवान् आशु प्रसीदतीत्यन्वयः। भगवत्प्रसादे हेतुत्वेन परम्परया कथैव सर्वपुरुषार्थहेतुरित्याशयेनाह—सुभद्रामिति, मङ्गलरूपामित्यर्थः। श्रोतॄणां शृण्वतामेव परमानन्दजनकत्वमाह—उशतीमिति, कमनीयामित्यर्थः। पुरुषार्थहेतुत्वं कथायाः कथमित्यपेक्षायां भगवन्तं विशिनष्टि—हरिमेधस इति, हरति दुःखं यद्विषया मेधा स हरिमेधास्तस्येत्यर्थः। कमनीयत्वेऽपि हेतुं सूचयन् विशिनष्टि कथनीयमायिन इति, कथनीया माया लीला अस्य सन्तीति

कथनीयमायी तस्येत्यर्थः। श्रवणकीर्तनयोः प्रत्येकं भगवत्प्रसादहेतुत्वज्ञापनार्थं वाशब्दः॥ ४९॥ ॐ ॐ भगवत्प्रसादे किं फलमित्यपेक्षायामाह—तस्मिन्निति। तस्मिन् भगवति प्रसन्ने सति धर्मार्थकाममोक्षाख्यफलेषु किं दुर्लभं तथापि धर्मादय आशिषो न प्रार्थनीया इत्याह—ताभिरिति, लवात्मभिः तुच्छाभिस्ताभिराशीर्भिरलम्। तर्हि प्रार्थनां विना किमपि फलं न स्यात् तथाच तद्भजनं विफलं स्यादित्याशङ्क्याह—अनन्येति। फलदृष्टिराहित्येन भजतां प्रार्थनां विनाऽपि स्वयमेव परः परमेश्वरः परां सर्वोत्तमां स्वगतिं स्वप्राप्तिं विधत्ते सम्पादयति। न च स भजनं कथं जानातीति शङ्कनीयं हृदयकुहर एव स्थितत्वादित्याह—गुहाशय इति॥ ५०॥ ॐ ॐ यतः सर्वपुरुषार्थसाधनभूतमनोज्ञा सुलभा च अतः पुराकथानां पूर्ववृत्तान्तानां मध्ये भगवत्कथैव सुधा तां कर्णावेवाञ्जलयस्तैरापीय आ सर्वतस्तन्माधुर्यादिगुणाननुभूय लोके को नाम विरज्येत ततो विरक्तो भवेदित्यन्वयः। ननु बहवस्ततो विरक्ता दृश्यन्ते इत्याशङ्क्याह—पुरुषार्थसारविदिति, धर्मादिचतुर्विधपुरुषार्थस्य सारं कारणं भगवत्प्रसादः स च कथाश्रवणादिना भवतीति यो वेत्ति स इत्यर्थः। ये कथातो विरक्तास्ते एतत्कुतो न जानन्तीत्यपेक्षायामनेकजन्मानुष्ठितनिषिद्धकर्मदोषभ्रंशितबुद्धित्वेन पशुतुल्यत्वादित्याशयेनाह—विना नरेतरमिति, नरेतरं पशुं विनेत्यर्थः। कथायाः कथं सुधात्वमित्यपेक्षायां जन्ममरणादिदुःखनिवर्तकत्वगुणसाम्यादित्याह—भवापहामिति, भवः संसारस्तमपहन्तीति तथा तामित्यर्थः। सुधा लोके स्थितस्यैव चिरकालजीवित्वमात्रमेव सम्पादयति, कथा तु संसारादुद्धृत्य भगवदनुभवानन्दमपि प्रापयतीति ततोऽस्या महानुत्कर्ष इति द्योतयन्नाह—अहो इति॥ ५१॥

इति श्रीवल्लभाचार्यवंश्यगोपालसूनुना॥ श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा॥ १॥
श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये॥ श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी॥ २॥
रचिता च तृतीयेऽत्र बन्धसर्गनिरूपणे॥ त्रयोदशो गतो वृत्तिवाराहविनिरूपकः॥ ३॥

### हिन्दी अनुवाद

भगवान् तो सभी कामनाओंको पूर्ण करनेमें समर्थ हैं, उसके प्रसन्न होनेपर संसारमें क्या दुर्लभ है। किन्तु उन तुच्छ कामनाओंकी आवश्यकता ही क्या है? जो लोग उनका अनन्यभावसे भजन करते हैं, उन्हें तो वे अन्तर्यामी परमात्मा स्वयं अपना परम पद ही दे देते हैं॥ ४९॥ ॐ ॐ अरे! संसारमें पशुओंको छोड़कर अपने पुरुषार्थका सार जाननेवाला ऐसा कौन पुरुष होगा, जो आवागमनसे छुड़ा देनेवाली भगवान्‌की प्राचीन कथाओंमेंसे किसी भी अमृतमयी कथाका अपने कर्णपुटोंसे एक बार पान करके फिर उनकी ओरसे मन हटा लेगा॥ ५०॥

त्रयोदश अध्याय समाप्त

# अथ चतुर्दशोऽध्यायः

श्रीशुक उवाच

निशम्य कौषारविणोपवर्णितां हरेः कथां कारणसूकरात्मनः।
पुनः स पप्रच्छ तमुद्यताञ्जलिर्न चातितृप्तो विदुरो धृतव्रतः ॥ १ ॥

विदुर उवाच

तेनैव तु मुनिश्रेष्ठ हरिणा यज्ञमूर्तिना। आदिदैत्यो हिरण्याक्षो हत इत्यनुशुश्रुम ॥ २ ॥
तस्य चोद्धरतः क्षोणीं स्वदंष्ट्राग्रेण लीलया। दैत्यराजस्य च ब्रह्मन् कस्माद्धेतोरभून्मृधः ॥ ३ ॥

मैत्रेय उवाच

साधु वीर त्वया पृष्टमवतारकथां हरेः। यत्त्वं पृच्छसि मर्त्यानां मृत्युपाशविशातनीम् ॥ ४ ॥

श्रीधरस्वामिविरचिता भावार्थदीपिका

चतुर्दशे निदानं तु तद्वधे वक्तुमुच्यते। संध्यायां कश्यपाद्गर्भसंभवः कामतो दितेः ॥ १ ॥

तेनैव येन भूमिरुद्धृता। अनुशुश्रुम त्वन्मुखात् ॥ २ ॥ ❀ ❀ मृधो युद्धम् ॥ ३ ॥ ❀ ❀ साधुत्वे हेतुः। यद्यस्मात्त्वं हरेरवतारकथां पृच्छसीति मृत्योः पाशं विशातयति मोचयतीति तथा ॥ ४ ॥

श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

तद्वधे हिरण्याक्षवधे। निदानं कारणं कामतो निषिद्धकामतः ॥ (१) ॥ कारणेन पृथ्व्युद्धारहेतुना सूकरस्यात्मा देहो यस्य स तथा। तस्य न चातितृप्त इति "कस्तृप्येतामृतं जुषन्" इत्युक्तेः ॥ १ ॥ ❀ ❀ येन स्वायंभुवे पृथ्वी समुद्धृता चाक्षुषेपि तेनैवेत्यर्थः इति संदर्भः ॥ २ ॥ ❀ ❀ तस्य हरेः ॥ ३ ॥ ❀ ❀ यद्यपि युद्धप्रश्नो न शुभस्तथापि साधु पृष्टं युद्धमिषेण वराहावतारकथां मे पृच्छसीति भावः ॥ ४ ॥

श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

निदानमादिकारणं सनकादिशापरूपं पञ्चदशाध्याये वक्तुं कामतः कामोद्रेकाद् हरिकथाश्रवणार्थं धृतव्रतः पुनश्चेति चकारान्वयः ॥ १ ॥ ❀ ❀ येन स्वायम्भुवे पृथ्वी उद्धृता चाक्षुषेऽपि तेनैव हिरण्याक्षो हित इत्यन्वयः ॥ २ ॥ ❀ ❀ तस्य चेति चकारः पुनरर्थे पृथिव्या द्विर्वारमुद्धारात् ॥ ३ ॥ ❀ ❀ साधु पृष्टं समीचीनः प्रश्नः कृतः। भावे निष्ठा ॥ ४ ॥

श्रीमद्वीरराघवव्याख्या

एवं सङ्ग्रहेण श्रुतवराहचरितो विदुरः पुनस्तच्चरित्रान्तर्भूतहिरण्याक्षवधवृत्तान्तं विस्तरबुभुत्सया पृच्छतीत्याह भगवान् शुकः। निशम्येति। कौषारविणा मैत्रेयेण उपवर्णितां कारणसूकरात्मनो हरेः कथां निशम्य श्रुत्वा धृतं व्रतं भगवत्कथाशुश्रूषारूपं येन स अतएव न चातितृप्तः संक्षेपतः तत्कथाश्रवणेन तृप्तिमलभमानः समुद्धृतः हस्तद्वयमेकीकृत्य उद्धृतः अञ्जलिः "अञ्जलिः परमा मुद्राक्षिप्रं देवप्रसादिनी" इत्युक्तविधो येन सः विदुरः पप्रच्छ पृष्टवान् ॥ १ ॥ ❀ ❀ प्रश्नप्रकारमेवाह। द्वाभ्यां तेनेति। श्रुतोपजीवनेन प्रश्नावतारद्योतनाय उक्तमनुवदन् पृच्छति विदुरः तेनेति। हे मुनिश्रेष्ठ! मैत्रेय येन भूमिरुद्धृता तेनैव यज्ञशरीरेण हरिणा आदिवराहेण आदिदैत्यो दैत्यानां प्रथमः वराहकल्पस्थापेक्षया प्राथम्यमत्र विवक्षितं हिरण्याक्षः हतः आदिवराहेण निहत इत्यनुशुश्रुम श्रुतवन्तो वयम् ॥ २ ॥ ❀ ❀ प्रष्टव्यं पृच्छति। तस्येति। स्वदंष्ट्राग्रेण क्षोणीं भूमिं लीलया उद्धरतस्तस्यादिवराहस्य हिरण्याक्षस्य च मृधः युद्धं कस्माद्धेतोरभूत् तद्युद्धनिमित्तमित्यर्थः ॥ ३ ॥ ❀ ❀ एवमापृष्टो मैत्रेयः सविस्तरं तत्कथां प्रास्तोष्यन् तावत् प्रश्नमभिनन्दति। साध्विति द्वाभ्याम्। हे वीर! त्वया साधु पृष्टं तत्कुतः मर्त्यानां मरणशीलानां मृत्युपाशं विशातयतीति मृत्युपाशविशातनी तां हरेरवतारकथां त्वं पृच्छसि ॥ ४ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

रुद्रादीनां हर्याज्ञाकारित्वेन तद्वशान्निरुपमचरितस्वातन्त्र्यगुणाकरे हरौ मनोरतिः कर्तव्या पुरुषेणेति विधीयतेऽस्मिन्नध्याये । तत्रादौ विदुरः पुनर्मुनिना वर्णितं वराहचरितमाकर्ण्य हरिकथायामलंबुद्धिरहितो विशेषतः श्रोतुकामो मैत्रेयं पृच्छतीति शुकः परीक्षितं कथयति । निशम्येति । समुद्यताञ्जलिर्हरिमुद्दिश्येति शेषः कुत एवमवगतमित्यत उक्तं न चेति । अनेन हरिकथाश्रवणतृष्णातिशयं ध्वनयति । ततो हरिप्रसादेन हरिकथाश्रवणं स्यादिति शिरसि मुकुलितकरकमल इत्यर्थः । कथाश्रवणविघ्नपरिहाराय धृतव्रत इति ॥ १ ॥ ❀ ❀ उक्तकथांशे वक्तव्यं नास्तीति द्योतयितुं श्रुतमनुवदति विदुर इत्याह । तेनेति । येन लयोदके मग्ना भूरुदाहारि तेनैव रूपान्तरेण ॥ २ ॥ ❀ ❀ तत्र श्रोतव्यांशं पृच्छति । तस्येति । रणोत्पत्तौ महतापराधेन भावितव्यं तादृशोपराधः क इति प्रश्नार्थः ॥ ३ ॥ ❀ ❀ मैत्रेयो विदुरप्रश्नं स्तौतीत्याह । साध्विति । साधुसत्सभासूचितम् वेर्हरेरिच्छायां रमत इति वीरः पुरुषार्थोपयोगित्वात्साधुत्वमस्येत्याह । यत्त्वमिति ॥ ४ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः ।

तेनैवेति । येन स्वायम्भुवे पृथ्वी समुद्दध्रे चाक्षुषेऽपि तेनैवेत्यर्थः ॥ १ ॥ २ ॥ ❀ ❀ तस्य चेति चशब्दः पुनरर्थे ॥ ३ ॥ ४ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

चतुर्दशे दितिः सायमकामं चकमे मुनिम् । अनुतेपे च तद्दुष्टपुत्राभूत् शिष्टनप्तृका ॥

चकार एवार्थः ॥ १ ॥ ❀ ❀ तेनैव येन हरिणा स्वायम्भुवे पृथ्वी उद्दध्रे तेनैव चाक्षुषीये हिरण्याक्षो हत इति व्याख्येयम् ॥ २ ॥ ❀ ❀ मृधो युद्धम् ॥ ३ ॥ ❀ ❀ हे वीर ! हरेर्युद्धलीला शुश्रूषोः पृष्टमिदं साधु यतः एतत्प्रश्नमिषेण अवतारयोर्वराहनृसिंहयोः कथां पृच्छसि तद्वैरकारणोक्तौ तयोरुपस्थितेः अन्यानपि कृतार्थयितुमित्याह । मर्त्यानामिति ॥ ४ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

एवं संक्षेपतो वराहचरितं श्रुत्वा विस्तरतस्तच्चरितं श्रोतुं विदुरः पुनः पप्रच्छेत्याह भगवान् शुकः निशम्येति ॥ १ ॥ तत्रापि दैत्यं गदया पतन्तं जघानेति त्वन्मुखात् अनुशुश्रुम ॥ २ ॥ ❀ ❀ मृधः सङ्ग्रामः ॥ ३ ॥ ❀ ❀ मर्त्यानां मरणशीलानां मृत्योः पाशमहंममाभिमानं शातयति मोचयतीति तथा ताम् ॥ ४ ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

वर्णिता सर्गलीलाऽत्र त्रिविधा भगवत्कृता । उपोद्घातस्तु तस्या वै, मतान्तरमिहोच्यते ॥ १ ॥
लौकिकी चाऽन्यभाषा च समाधेः पोषिके तु ते । ते प्रमाणमभिप्रायात् सर्वथा पूर्ववन्न हि ॥ २ ॥
यदेव भिन्नरीत्याऽत्र रूप्यते तन्मतान्तरम् । न तद्विरोधो दोषाय पदशास्त्रार्थयोः क्वचित् ॥ ३ ॥
कामेन क्रोधलोभाभ्यां कर्ममार्गादिनाशनम् । वर्ण्यते येन जीवानां मुक्तानामिह सम्भवः ॥ ४ ॥
सर्गस्थित्यन्तकथनं त्रिभिस्तेषां निरूप्यते । अतः षड्भिरिहाऽध्यायैः सर्गोपोद्घात उच्यते ॥ ५ ॥
मतान्तरे शिवोत्कर्षो ब्राह्मणोत्कर्ष एव च । भक्तस्य विष्णोश्चैवाऽत्र लीला व्यामोहिका मता ॥ ६ ॥
अन्यथा भगवल्लीला सर्गो नैव भवेद् ध्रुवम् । चतुर्दशे तु कामेन कर्मनाश इहोच्यते ॥ ७ ॥
आधारकथनं त्वादौ गर्भे जीवस्य संक्रमः । तामसः काम एषो हि ततोऽत्र शिवसंकथा ॥ ८ ॥
क्रोधोऽपि कामसंबन्धी प्रसादो भक्तिहेतुकः । पूर्वाध्याये वराहस्य चरित्रं तु निरूपितम् ॥ ९ ॥

तत्र हिरण्याक्षवधः संक्षेपेण निरूपितः, तं विस्तरेण श्रोतुं भगवतो युद्धलीलायामासक्तमनाः विदुरः पृच्छतीत्याह—निशम्येति । कौषारविणेति । पितृसंबन्धात् युद्धलीलां कथयिष्यतीति ज्ञापितम् । हरेरिति तत्र च क्लेशाभावः । कारणभूतो यः सूचको यज्ञः स आत्मनि यस्य । अनेन वराहावतारस्वरूपं तेन ज्ञातमिति सूचितम् । वराहावतारकथा पूर्वं पृष्टा, प्रकारान्तरेण पुनः पृच्छति—उद्यताञ्जलिरिति । कथां भिक्षामिव प्रार्थयति । तथा प्रार्थने हेतुः—न चाऽतितृप्त इति । विदुर इति देशकालाभिज्ञत्वेन निपुणता । अवश्यप्रश्ने हेतुः धृतव्रत इति । स हि धृतभगवद्व्रतः, भगवत्कथाश्रवणव्यतिरेकेण स्थातुं न शक्नोति ॥ १ ॥ ❀ ❀ संक्षेपेण पूर्वोक्तां प्रकृतोपयोगिनीं भगवत्कथामनुवदति—तेनैव त्विति । तेनैव वराहेणैव । मुनिश्रेष्ठेति ज्ञाने हेतुः । हरिणेति विरोधः, कथं सर्वदुःखहर्ता तं मारितवानिति । एतद्विरोधपरिहारार्थमेव बहु वक्तव्यम् । यज्ञरूपिणेति । दैत्यत्वान्मारणस्याऽवश्यम्भावः । आदिदैत्य इति पदद्वयं मारणे अमारणे च हेतुः । आदित्वाद् दैत्यानां मूलोच्छेदक एव स्यात् । हिरण्याक्ष इति । हिरण्यरूपे अक्षिणी यस्य । अनेन तस्य निधिरूपत्वं प्रदर्शितम् । एतदप्यमारणे हेतुः, मारणे वा । तद्दृष्टिस्पृष्टभूमौ सुवर्णत्वसम्भवात्

सर्वसुवर्णत्वे अमृतत्वेन सृष्टिर्न स्यादिति । अनुश्रवणमुच्चारणानन्तरम्, श्रमात् श्रुते उत्तरासम्भवात् ॥ २ ॥ ❀ ❀ अथ प्रतिबन्धकत्वेन समागतो हत इति पक्षेणास्य कथं प्रतिबन्धकत्वमिति पृच्छति—तस्य चोद्धरत इति । द्वयोः संबन्धिनोः षष्ठ्या निर्देशः संबन्धदार्ढ्यार्थः । एकः कार्यसाधकः कौतुकी, अपरो दैत्यराजत्वात् सिद्धसमस्तार्थः । अतः स्वभावतः कलहहेतोरभावात् कस्माद्धेतोरभून्मृध इति प्रश्नः ॥ ३ ॥ ❀ ❀ भगवत्कथाभिनिविष्टं दृष्ट्वा तमभिनन्दति मैत्रेयः—साधु वीरेति । वीरेति संबोधनं तादृशलीलायां मनसोऽभिनिवेशद्योतकम् । यथाकथञ्चिदपि मनोनिवेशने कृतार्थो भवेदिति त्वया साधु पृष्टम् । कर्म पूर्वोक्तमेव साधुत्वेन निर्दिष्टम् । पृष्टस्य वा साधुत्वं विधीयते । सर्वथैव तद्वाक्यं भिन्नम् । साधुत्वमुपपादयति—यद्यस्मात्कारणाद् हरेरवतारकथां पृच्छसि । साधवो हि परदुःखनिवारकाः । प्रश्नस्य साधुत्वं विषयसाधुत्वात् । विषयस्य कथारूपस्य साधुत्वमुपपादयति—मृत्युपाशविनाशिनीमिति । मृत्योः पाशं विनाशयतीति ॥ ४ ॥

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

अथ चतुर्दशाध्यायं विवरिषवः पूर्वसङ्गतिस्मारणपूर्वकं तेषामर्थमनुवदन्तः सङ्गतौ प्रकारविशेषमाहुः—वर्णितेत्यादि । द्वादशभिः सर्गलीला वर्णिता, तु पुनस्त्रयोदशे उपोद्घातो वर्णितः, वै निश्चयेन, तस्या उपोद्घातलीलायाः सम्बन्धिमतान्तरमिहाऽस्यां षडध्याय्यामुच्यत इत्यर्थः । ननु मतान्तरस्य कथमुपोद्घातमध्ये प्रवेश इत्याकाङ्क्षायां तत्प्रकारमाहुः—लौकिकीत्यादि । अत्र लौकिकीग्रहणं प्रसङ्गात्, मध्येऽत्र किञ्चिद्वर्तमानत्वाच्च । पूर्ववत् समाधिभाषावत् वर्णपदवाक्यार्थरूपेण न तत्र हेतुः । हि यतो हेतोः, ते उभे समाधेः समाध्युपलब्धस्याऽर्थस्य पोषिके दार्ढ्यजननेनोपष्टम्भिके, अतस्ते तथेत्यर्थः । नन्वत्र केचिदादिपदाभावात् कथं मतान्तरत्वावधृतिरित्याकाङ्क्षायां तद्गमकं रूपमाहुः—यदेवेत्यादि । तथा न तद्गमकपदाभावेऽपि प्रकारभेद एव तद्गमकमिति अर्थतो मतान्तरमित्यर्थः । ननु भिन्नरीतिकत्वे विरोधावश्यंभावात् कथं पोषकत्वमित्याकाङ्क्षायामाहुः—न तदित्यादि । न हि सर्वत्र विरोधः, किन्तु क्वचित्पदार्थस्य क्वचिच्छास्त्रार्थस्य, तत्तस्मात् कादाचित्कत्वाद् विरोधो दोषाय न । तथा च, तत्तात्पर्येऽवगते आपाततः प्रतिपन्नस्य अकिञ्चित्करत्वात् तत्प्रकारेण पोषकत्वमित्यर्थः । एवमुपोद्घातेन पोषकताप्रकारं निरूप्य प्रस्तुतं षडध्याय्याः प्रयोजनमाहुः—कामेनेति द्वाभ्याम् । तथा चतुर्भिर्मुक्तोत्पत्तौ हेतुकथनम्, त्रिभिस्तेषामवस्थाकथनम्, (एवं कथनं) षडध्याय्या तथोच्यत इत्यर्थः । नन्वत्र षडध्याय्यां किं मतान्तरत्वप्रयोजकं रूपमित्याकाङ्क्षायां तदाहुः—मतान्तर इत्यादि । तथा चैतच्चतुष्टयं मतान्तरत्वप्रयोजकं रूपमित्यर्थः । उपोद्घातत्वप्रकारमाहुः—अन्यथेत्यादि । यदि मार्गत्रयनाशो न स्यात्, भगवान्नाऽवतरेत् । यदि च व्यामोहिकां लीलां न कुर्यात्, तदा मुक्तानामुत्पत्त्यादिर्न स्यात् । यदि सा न स्यात्, तदा सर्गस्य कर्मजन्यत्वमेव स्यात्, न लीलात्वम् । अतस्तदुभयनिरूपणेनोपोद्घातत्वमित्यर्थः । एवं प्रकरणार्थं सङ्गृह्य प्रस्तुतार्थं सामान्यतो विशेषतश्चाहुः—चतुर्दश इत्यादि । इहेति । षडध्याय्याम् । आधारो दितिः । शेषं स्फुटम् । निशम्येत्यत्र । आसक्तमना इत्यनेन प्रश्नस्य विदुरोक्तौ प्रसङ्गः सङ्गतिरिति बोधितम् ॥ १ ॥ ❀ ❀ तेनेत्यत्र । अमृतत्वेति । 'अमृतं वै हिरण्यम्' इति श्रुतेर्हिरण्यस्याऽमृतत्वेन ॥ २ ॥ ❀ ❀ तस्येत्यत्र । कलहहेतोरभावादिति । एतेनाऽयं प्रश्नो न हेतुप्रश्नः, किन्त्ववतारकथाया एवेति ज्ञापितम् । अत एवाऽभिनन्दने तथैवोक्तम् । एतदेव चाऽत्रोपोद्बलकम् ॥ ३ ॥ ❀ ❀ साधु वीरेत्यत्र । पूर्वोक्तमिति । हिरण्याक्षवधकथारूपम् । पृष्टस्येति । प्रश्नस्य साधुत्वे प्रयोजकरूपमाहुः सर्वथेत्यादि ॥ ४ ॥

### श्रीगिरिधरकृता बालप्रबोधिनी

हिरण्याक्षवधे वक्तुं कारणं च चतुर्दशे । दितेः कामेन सन्ध्यायां गर्भाधानं निरूप्यते ॥ १ ॥

एवं सङ्ग्रहेण हिरण्याक्षवधं श्रुत्वा तद्विस्तरबुभुत्सया पुनर्विदुरः पप्रच्छेत्याह—निशम्येति । कौषारविणा मैत्रेयेणोपवर्णितां कारणसूकरात्मनः जगत्कारणभूतवराहावतारस्य यद्वा पृथ्व्युद्धारकारणाद्वराहावतारस्य हरेः कथां निशम्य श्रुत्वा उद्यताञ्जलिः स विदुरः पुनस्तं मैत्रेयं पप्रच्छेत्यन्वयः । प्रश्ने हेतुमाह—न चेति, कथाश्रवणेन यतो नातितृप्त इत्यर्थः । तत्रापि हेतुमाह—धृतव्रत इति, धृतं निश्चयेन सङ्कल्पितं भगवत्कथाश्रवणादिरूपं व्रतं येन सः ॥ १ ॥ ❀ ❀ प्रश्नमेवाह—तेनैवेति द्वाभ्याम् । तत्र स्वस्य श्रवणाधिकारित्वं सूचयन् यत्त्वयोक्तं तन्मयाऽवधारितमित्यनुवदति—तेनेति । हे मुनिश्रेष्ठ, येन भूमिरुद्धृता तेनैव यज्ञवराहरूपेण हरिणाऽऽदिदैत्यो हिरण्याक्षो हत इत्यनुशुश्रुम त्वत्त एव श्रुतवन्तो वयम् ॥ २ ॥ ❀ ❀ एवमुक्तानुवादं कृत्वा प्रष्टव्यं पृच्छति—तस्येति । हे ब्रह्मन् स्वदंष्ट्राग्रेण क्षोणीं भूमिं लीलया उद्धरतस्तस्य वराहस्य दैत्यराजस्य हिरण्याक्षस्य च मृधः युद्धं कस्माद्धेतोरभूत् युद्धनिमित्तं किमित्यन्वयः ॥ ३ ॥ ❀ ❀ एवमापृष्टो मैत्रेयः सविस्तरं तत्कथां प्रस्तोष्यंस्तावत्प्रश्नमभिनन्दति—साध्विति द्वाभ्याम् । एवं कामक्रोधादिवेगं विनिर्जित्य भगवत्परतया स्थातुं त्वमेव शक्तोऽसीति सूचयन् सम्बोधयति—वीरेति । त्वया साधु सर्वेषां कार्यसाधकमेव पृष्टम् । तत्र हेतुमाह—यदिति । यत् यस्माद् मर्त्यानां मरणशीलानां मृत्युपाशं विशातयति विमोचयतीति मृत्युपाशविशातनीं तां हरेरवतारकथां त्वं पृच्छसीत्यन्वयः ॥ ४ ॥

## हिन्दी अनुवाद

### दितिका गर्भधारण

श्रीशुकदेवजी कहते हैं—राजन्! प्रयोजनवश सूकर बने श्रीहरिकी कथाको मैत्रेयजीके मुखसे सुनकर भी भक्तिव्रतधारी विदुरजीको पूर्ण तृप्ति न हुई; अतः उन्होंने हाथ जोड़कर फिर पूछा ॥ १ ॥ ❀ ❀ विदुरजीने कहा—मुनिवर! हमने यह बात आपके मुखसे अभी सुनी है कि आदिदैत्य हिरण्याक्षको भगवान् यज्ञमूर्तिने ही मारा था॥ २ ॥ ❀ ❀ ब्रह्मन्! जिस समय भगवान् लीलासे ही अपनी दाढ़ोंपर रखकर पृथ्वीको जलमेंसे निकाल रहे थे, उस समय उनसे दैत्यराज हिरण्याक्षकी मुठभेड़ किस कारण हुई?॥ ३ ॥ ❀ ❀ श्रीमैत्रेयजीने कहा—विदुरजी! तुम्हारा प्रश्न बड़ा ही सुन्दर है; क्योंकि तुम श्रीहरिकी अवतारकथाके विषयमें ही पूछ रहे हो, जो मनुष्योंके मृत्युपाशका छेदन करनेवाली है॥ ४ ॥

**ययोत्तानपदः पुत्रो मुनिना गीतयार्भकः। मृत्योः कृत्वैव मूर्ध्न्यङ्घ्रिमारुरोह हरेः पदम्॥ ५ ॥**
**अथात्रापीतिहासोऽयं श्रुतो मे वर्णितः पुरा। ब्रह्मणा देवदेवेन देवानामनुपृच्छताम्॥ ६ ॥**
**दितिर्दाक्षायणी क्षत्तर्मारीचं कश्यपं पतिम्। अपत्यकामा चकमे सन्ध्यायां हृच्छयार्दिता॥ ७ ॥**
**इष्ट्वाग्निजिह्वं पयसा पुरुषं यजुषां पतिम्। निम्लोचत्यर्क आसीनमग्न्यगारे समाहितम्॥ ८ ॥**

### श्रीधरस्वामिविरचिता भावार्थदीपिका

तदेव दर्शयति। यया कथया। उत्तानपदः पुत्रो ध्रुवः। मुनिना नारदेन। अर्भक एव यदा ध्रुवाय सुनंदादिभिर्विमानमानीतं तदाऽस्य देहत्यागोऽपेक्षितः स्यादिति मत्वा मृत्यावासन्नेऽपि देहं न तत्याज। किंतु सोपान इव तस्य मूर्ध्नि पदं दत्त्वा विमानमारुह्य विष्णुपदमारूढः। वक्ष्यति हि। "परीत्याभ्यर्च्य धिष्ण्याग्र्यं कृतस्वस्त्ययनो द्विजैः। इयेष तदधिष्ठातुं बिभ्रद्रूपं हिरण्मयम्" इति॥ ५ ॥ ❀ ❀ तयोः संग्रामे हेतुं वक्तुमितिहासं प्रस्तौति। अथेति। अनुपृच्छतां देवानां ब्रह्मणा वर्णित इतिहासो मया श्रुतः॥ ६ ॥ ❀ ❀ देवप्रश्नप्रस्तावाय प्रथमं हिरण्याक्षहिरण्यकशिपूत्पत्तिप्रसंगमाह। दितिरित्यादिना यावदध्यायपरिसमाप्ति। मरीचेः पुत्रं कश्यपम्। हृच्छयः कामस्तेनार्दिता अतः संध्यायामेव कामितवती॥ ७ ॥ ❀ ❀ तदप्यग्निहोत्रशालायां तत्रापि समाहितम्। अग्निर्जिह्वा यस्य यजुषां यज्ञानां पतिं पुरुषं श्रीविष्णुम्॥ ८ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

तदेव मृत्युपाशविशातनत्वमेव। अर्भक इत्यनेन किशोरत्वं विवक्षितं तत्सान्निध्यात्। अन्यथा राज्यपालनयक्षयुद्धपुत्रोत्पत्त्यादिकं न संगच्छेतेति भावः। मूर्ध्नि पदं दत्त्वा तं विनमय्य मृत्युरपि तं ननामेत्यर्थः॥ ५ ॥ ❀ ❀ तयोर्वराहहिरण्याक्षयोः। अथेति मंगले। अत्रापि वराहहिरण्याक्षयुद्धेपि॥ ६ ॥ ❀ ❀ देवप्रश्नप्रस्तावाय यथा देवाः प्रश्नं करिष्यंति तत्प्रसंगायेत्यर्थः। यतः कामपीडिताऽतो हेतोः॥ ७ ॥ ❀ ❀ तदपि संध्यायामपि। तत्राप्यग्निहोत्रशालायामपि। समाहितं समाधिष्ठम्। अग्निजिह्वं "ब्राह्मणोऽग्निश्च वै विष्णोः सर्वदेवात्मनो मुखम्" इति वक्ष्यमाणत्वात्। निम्लोचति अस्तंगतवति। पयसेति पयोविकारेण 'घृतेन गोभिः श्रिणीतम्' इति वत्प्रयोगो बोध्यो यथाश्रुतार्थस्वीकारे त्वग्न्युच्छेदः स्यादिति॥ ८ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

तदेव मृत्युपाशविशातनीत्वमेवाह। यया द्वादशाक्षराद्युपदेशरूपया अत एवार्भकत्वमुक्तं किन्तु श्रीभगवद्दर्शनानुभावेन तस्य नित्यकिशोरलक्षणमर्भकत्वं तदवधि संपन्नमिति ज्ञेयम्। सोपान इव निश्रेणीतुल्ये। तस्य मृत्योः॥५॥ ❀ ❀ अथेत्यारम्भे अत्रापि सङ्ग्रामहेतुप्रश्नेऽपि अयं वक्ष्यमाणः वर्णित इत्यध्याहृतम्॥ ६ ॥ ❀ ❀ अतः कामार्दितत्वात्॥ ७ ॥ ❀ ❀ तदपि निषिद्धेऽर्कनिम्लोचनकालेऽपि तत्रापि अग्निहोत्रशालायामपि समाहितं समाधिनिष्ठम्॥ ८ ॥

### श्रीमद्वीरराघवव्याख्या

अथ मुनिना नारदेन यया भगवत्कथया उत्तानपदः पुत्रोऽर्भकः ध्रुवः मृत्योर्मूर्ध्नि अङ्घ्रिं कृत्वा पादं विन्यस्य हरेः पदं स्थानं प्रति ध्रुवगतिमारुरोहारूढवान्। ईदृशभगवत्कथाप्रश्नः साधिष्ठ इत्यभिप्रायः॥ ५ ॥ ❀ ❀ एवं प्रश्नमभिनन्द्य हिरण्याक्षस्य वृत्तान्तं वक्ष्यन् वृत्तान्तस्य साम्प्रदायिकत्वमाह। अथ ननु हे विदुर! अत्रापि त्वया पृष्टेऽर्थेऽपि अयमितिहासः मे मया श्रुतः कुत इत्यपेक्षायामाह। देवानामपि देवेन ब्रह्मणा चतुर्मुखेनानुपृच्छतां देवानां पुरा पूर्वकाले वर्णितः। स एव परंपरया मया श्रुत इत्यर्थः॥ ६ ॥ ❀ ❀ तमेव इतिहासं प्रस्तोष्यन् तदुपोद्घातरूपमितिहासं प्रस्तौति दितिरित्यादिना। दक्षस्यापत्यं स्त्री दाक्षायणी दितिः दितिनाम्ना हे क्षत्तः! मारीचं मरीचेः पुत्रं कश्यपं पतिम्भर्तारं स्वयमपत्यं कामयमाना हृच्छयः कामः तेन पीडिता

अतएव सन्ध्यायां चकमे कामितवतीत्यर्थः॥ ७॥ ❀ ❀ कथंभूतं चकमे इत्यत्राह। हुत्वेति। यजुषां यज्ञानां पतिं पुरुषं परमपुरुषमग्निजिह्वमग्निशरीरकं हुत्वाऽर्के सूर्ये निम्लोचति सत्यस्तं गच्छति सति अग्न्यागारेऽग्निहोत्रशालायामासीनमुपविष्टं समाहितचित्ते च॥ ८॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

न केवलं संसारलक्षणमृत्युपाशविच्छेदनी हरिकथा अपि त्वैहिकामुष्मिकसिद्धिकरीति निदर्शयति। ययेति। मुनिना नारदेनार्भकः पञ्चवर्षः। अस्याः प्रपञ्चश्चतुर्थे वक्ष्यते॥ ५॥ ❀ ❀ श्रोतॄणां श्रद्धातिशयजननार्थं विदुरप्रश्नपरिहारत्वेन पुरावृत्तं कथयति। अथेति। अथशब्देन पूर्वत्र ब्रह्मपुत्रो हिरण्याक्षो वराहहरिणा हतो न तु दितिपुत्रः स एव पार्षदाविष्टो निहन्यत इति कथा विशेष आरभ्य इति सूचयति। वधस्यैककर्तृत्वाद् दुष्टजनमोहनार्थत्वाच्च एवं कथनं सम्भावितमित्यपिपदेन वक्ति। श्रुतो वक्ष्यत इति शेषः॥ ६॥ ❀ ❀ कोऽयमिति तत्राह। दितिरिति। दाक्षायणी दक्षस्य पुत्री नाम्ना दितिः मरीचं मरीचेः पुत्रं रामवैरिमारीचव्यावृत्त्यर्थं कश्यपमिति। हृच्छयः कामः॥ ७॥ ❀ ❀ मारीचं विशिनष्टि इष्ट्वेति। अग्निरेव जिह्वा यस्य स तथा तं यजुषां पतिं यजुर्वेदगतमन्त्राणां विषयत्वेन स्वामिनं निम्लोचति अस्तङ्गच्छति अग्न्यागारेऽग्निगृहे॥ ८॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः।

यया यस्याः प्रभावेणार्भक एव सदा सन् अन्तकालेऽपि देहत्यागान्मृत्योर्मूर्ध्नि अङ्घ्रिमिव कृत्वा हरेः पदमारुरोह। किन्त्वर्भकत्वमत्र किशोरत्वं ज्ञेयम्। राजत्वे लब्धे तच्छ्रवणं जातमिति युक्तया लभ्यते राजत्वयोग्यवयस आवश्यकापेक्षत्वात्। पुत्राद्युत्पत्तिश्रवणाच्च॥ ५॥ ६॥ ❀ ❀ दितिरिति युग्मकम्॥ ७—१२॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

हरिकथैव जगदुद्धारिणीत्यत्र प्रमाणमाह। यया कथया मृत्योर्मूर्ध्नीति ध्रुवस्यातन्कालं ज्ञात्वा यदैव मृत्युरागस्तदैव सुनन्दादिभिर्विमानमानीतमारोढुं ध्रुवः सोपानान्वेषणे मृत्युमवस्थितं दृष्ट्वा भद्रमिदं जातमिति तस्यैव मूर्ध्नि पदं दत्त्वा शरीर-मत्यक्त्वैव विमानमारुह्य विष्णुपदं जगामेति॥ ५॥ ❀ ❀ मे मया अनुपृच्छतां देवानां सम्बन्धेन॥ ६॥ ❀ ❀ देवप्रश्नप्रस्तावाय प्रथमं हिरण्याक्षहिरण्यकशिपूत्पत्तिप्रसङ्गमाह। दितिरित्यादिना यावदध्यायसमाप्ति। मरीचेः पुत्रं कश्यपं हृच्छयार्दिता कामपीडिता अतः सन्ध्यायामेव तत्राप्यग्निहोत्रशालायां तत्रापि समाहितं कृतसमाधिं सन्ध्यायामपि निम्लोचत्यर्के अर्कास्तमयकाल एवेत्यर्थः। अग्निर्जिह्वा यस्य तं यजुषां यज्ञानां पतिं विष्णुम्॥ ७॥ ८॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः।

यया कथया मुनिना श्रीनारदेन उत्तानपदः पुत्रः ध्रुवः हरेः पदं स्थानम्॥ ५॥ ❀ ❀ अत्र दैत्यवधे॥ ६॥ ❀ ❀ देवप्रश्नप्रस्तावादौ दैत्यजन्मप्रसङ्गमाह। अध्यायसमाप्तेः दितिरिति चकमे कामितवती अग्निर्जिह्वा यस्य तं यजुषां यज्ञानां पतिम् "अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च" इति श्रीमुखोक्तेः॥ ७॥ ८॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

मृत्युपाशविनाशित्वमुपपादयति—ययेति। यया कथया उत्तानपदः पुत्रो ध्रुवो मुनिना नारदेन गीतया सुखार्थमपि श्रुतया मृत्योर्मूर्ध्नि अङ्घ्रिं कृत्वा स्थापयित्वा हरेः पदमारुरोह। स हि ध्रुवः शरीरमत्यक्त्वैव ध्रुवपदं गतः। वीरः स्ववीर्येणाऽभिनिवेशितचित्तः कथायां भवति। तपस्तु पूर्वसिद्धमेवेति तस्य न मृत्युनाशकत्वम्। भगवत्प्रसादोऽपि कथाया व्यापाररूपत्वान्न भिन्नतया साधकः। अतो नारदोपदिष्टः सर्व एव मार्गः कथारूपो जातः। यद्यपि मात्रा भजनमुपदिष्टम्, तदपि मुनिनैव निर्द्धारितम्। भजनकथाश्रवणयोः प्राप्ताप्राप्तविवेके क्रियमाणे तपस्यादेरप्रयोजकत्वात् कथाभिनिवेश एव फलसाधकः। तत्राप्यभिनिवेशस्य स्वरूप-मध्यपातात् भिन्ना कथैव हेतुः। उत्तानः पादो यस्येति। पूर्वं सोऽपि ऊर्ध्वपादस्तपः कृतवानिति ज्ञायते। तादृशस्याऽपि नरकरक्षको जात इति स्वपरपुरुषार्थसाधकत्वं कथाया निरूपितम्। अर्भक इति कालादेरसाधकत्वम्। विमाने समागते देहं त्यक्ष्यतीति बुद्ध्या मृत्युरपि समागतः, तदा कथाव्याप्तदेहस्य भगवच्चरणारविन्दच्छायया शान्तस्य हेयत्वाभावात्, मृत्युनोत्तोलितदेहो विमानपर्यन्तं मृत्योर्गमनाभावमाशङ्क्य, तस्य मस्तके पादं दत्त्वा तेनैव शरीरेण विमानम्, पश्चाद् ध्रुवलोकं चाऽऽरुरोह। अतः कथाऽभिनिवेशो महाफलः, स विदुरे जात इत्यभिनन्दनम्॥ ५॥ ❀ ❀ यस्मिन् कल्पे वराहहिरण्याक्षयोर्युद्धकथा अतिसमीचीना, तां वक्तुं प्रक्रियान्तरमारभते—अथेति। अत्राऽप्ययमितिहासः पूर्वं मया श्रुतः, इतिहासत्वात्। व्यासात्, पराशराद्वा। वेदसारोद्धारः समाधिभाषायाम्, इतिहाससारोद्धारो मतान्तर इति विवेकः। इतिहासः पुरावृत्तकथा, गर्वहेतुर्हास्यहेतुर्वा,

[1]आश्चर्याश्रयरूपता वा । अयमिति बुद्ध्युपस्थितः । पुरा ब्रह्मणा देवानामनुपृच्छतामर्थे वर्णित इति पुरावृत्तत्वं समर्थितम् । ब्रह्मणा बालकचेष्टाया वर्णितत्वात् हासहेतुत्वम्, देवतानां निदानपरिज्ञापकत्वेन गर्वहेतुत्वम्, सर्गलीलायाश्च मुक्तजीवविषयत्वेन आश्चर्याश्रयत्वम् । गर्भस्थितौ जयविजयौ देवानां प्रश्नहेतुभूताविति तद्धेतुकथनार्थमयमध्यायः । प्रकरणस्याऽप्युपोद्घात इति ब्रह्मानुक्तोऽप्यर्थ उच्यते । उक्तो वा ततः संकृष्य हेतुत्वार्थं भिन्नतया निरूप्यते । देवदेवेनेति देवानामिष्टदेवत्वात् कथायाः प्रामाणिकत्वम् । अनुपृच्छतामिति तत्रापि भगवत्कथायामेव तैरपि पृष्टमिति ज्ञायते ॥६॥ ❀ ❀ हेतुभूतां कथामारभते—दितिरिति । दाक्षायणीति पुरुषस्वभावा धृष्टा । दक्षोऽपि प्राचेतसो गर्वादिदोषयुक्तो बहुभर्तृकापुत्रः, अन्यथा तस्यास्तथा धाष्टर्यं नोपपद्येत । क्षत्तरिति जितेन्द्रियत्वेन संबोधनम्, कामलीलाया वक्ष्यमाणत्वाद् दोषाभावाय । मारीचमिति । 'मरीचिर्मनसोऽभवत्' इति मनसः सङ्कल्पजनकत्वात्, संकल्पस्य कामजनकत्वाच्च । कश्यपः कामावतार इति सूचितम्, अन्यथा तथा क्षोभो न भवेत्, न वा स प्रवर्तेत । कश्यपमिति । ब्रह्मणः शापरूपोऽयम् । यथा 'आसन् मरीचेः षट् पुत्राः' इति कल्पान्तरे, तथाऽस्मिन् कल्पे मरीचिपुत्रत्वादस्याऽप्युपहासः सम्भवति जितेन्द्रियाभिमानिनः । तदा ब्रह्मणा अयमपि शप्त इति लक्ष्यते, पौ[2]त्रीविवाहात्, एवं प्रसङ्गात्, नामनिरुक्तेश्च । पतित्वान्नाऽत्यन्तमनौचित्यम् । बहुस्त्रीकत्वात्तद्व्रतोऽयं रतिकाम्यया प्रवर्तते । यथाग्निहोत्रादिधर्मः, तथा व्रतमपि धर्म इति । परं विध[3]र्मत्वात् क्रोधजनकत्वम्, अपत्ये दोषसम्भवाच्च । अपत्यकामेति न वैराग्यादिना परिहर्तुं शक्या । सन्ध्यायामिति निषिद्धकामस्योद्गमनहेतुरुक्तः । हृच्छयः कामः । हृदये स्थित एव तदानीमुद्गतः, तेनाऽर्दिता भिन्नमर्मा ॥ ७ ॥ ❀ ❀ कश्यपं कर्मणि प्रवृत्तं नाशयितुं प्रवृत्तेति कथनार्थं तस्याऽग्निहोत्रकर्मोच्यते—इष्ट्वाऽग्निजिह्वमिति । अग्निरेव जिह्वा यस्य । यदा वीतार्चिर्लेला[4] यद्विभाति तद्देवानामास्यम्, यदा नीलोऽप्रकाशोऽर्चिरुदेति सोऽग्निर्भगवज्जिह्वा । पयसा नित्यहोमः । 'रेतः सिञ्चति प्रजनने' इति प्रकृतोपयोगित्वं च । अग्निहोत्रस्य चर्वणरूपत्वाद्यागरूपत्वाच्च । पुरुषमित्युक्तम् । यजुषां पतिमिति यजुर्वेदेनाऽग्निहोत्रमिति वाक्यात् । निम्लोचत्यर्क इति । अतः 'अस्तमिते होतव्यम्' 'सन्धौ होतव्यम्' इति च पक्ष आदृतः । आसीनमिति अनुपस्थानपक्ष उक्तः, अन्यथा प्रजायेत । अग्न्यागार एवाऽऽसीनम् । समाहितमिति सावधानान्तःकरणो भूत्वा, इष्टं भगवन्तं ध्यायतीति लक्ष्यते ॥ ८ ॥

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

ययेत्यत्र । ननु स्वकार्यार्थं श्रुतया कथया ध्रुवस्यैवंभावः कथमभूत् । अन्येषां च कथं भवेदित्याकांक्षायां पूर्वोक्तश्लोकसंबोधनं हृदि कृत्वाऽभिनिवेशात्मकं स्वरूपयोग्यतासम्पादकं तत्र साधनमाहुः—वीर इत्यादि । ननु तेन तपः कृतमिति तस्य तदेव साधनं भविष्यतीति शङ्कायामाहुः—तप इत्यादि । पूर्वसिद्धमिति । अन्यथा, तादृग्वंशे जन्मैव न स्यादतस्तस्य पूर्वसिद्धतपोवदिदमपि भोगादियोग्यशरीरसम्पादकमेव न तु तावत्पर्यन्तमपीत्यर्थः । तर्हि भगवत्प्रसाद एव तथास्त्विति शङ्कायामाहुः—भगवदित्यादि । तस्य व्यापारत्वं च कथयेति तृतीयया स्मार्यते । तर्हि भजनस्य तथात्वमस्तु, इत्यत आहुः—यद्यपीत्यादि । तर्ह्यभिनिवेश एव तथास्त्वित्यत आहुः—तत्रापीत्यादि ॥ ५ ॥ ❀ ❀ अथेत्यत्र । ( ब्रह्मणा वर्णितः श्रुतः ) इति प्रतिज्ञाऽनुरोधात् पक्षान्तरमाहुः—उक्तो वेति ॥ ६ ॥ ❀ ❀ दितिरित्यत्र । अस्याऽप्युपहास इति । एतत्कृतो ब्रह्मण उपहासः । नामनिरुक्तेरिति । कश्यं मद्यं पिबतीति यौगिकनिरुक्तेः । तद्व्रत इति । 'न काञ्चन परिहरेत्' इति वामदेव्यसामोपासनव्रतः । वैराग्यादिनेति । वैराग्योपदेशादिना ॥ ७ ॥ ❀ ❀ इष्ट्वेत्यत्र । अन्यथा प्रजायेतेति उपस्थानात् पूर्वमुत्तरं च प्रज्वालनविधानात् । उपस्थानपक्षे तदानीं पुनर्लेलायमानोऽग्निर्जायेतेत्यर्थः ॥ ८ ॥

### श्रीगिरिधरकृता बालप्रबोधिनी

कथाया मृत्युपाशविनाशकत्वमेव स्पष्टयति—ययेति । मुनिना नारदेन गीतया यया हरिकथया अर्भकः बालावस्थायामेव श्रुतया उत्तानपदः पुत्रो ध्रुवः मृत्योर्मूर्ध्नि अङ्घ्रिं कृत्वैव हरेः पदं स्थानमारुरोहेत्यन्वयः । यदा ध्रुवाय सुनन्दादिभिर्विमानमानीतं तदाऽस्य देहत्यागोऽपेक्षितः स्यादिति मत्वा मृत्यावासन्नेऽपि देहं न तत्याज । किन्तु सोपान इव तस्य मूर्ध्नि पदं दत्त्वा विमानमारुह्य विष्णुपदमारुरोह । तथाच वक्ष्यति—'परीत्याभ्यर्च्य धिष्ण्याग्र्यं कृतस्वस्त्ययनो द्विजैः । इयेष तदधिष्ठातुं बिभ्रद्रूपं हिरण्मयम्' इति ॥ ५ ॥ ❀ ❀ एवं विदुरप्रश्नमभिनन्द्य तयोः सङ्ग्रामे हेतुं वक्तुमितिहासं प्रस्तौति—अथेति प्रश्नोत्तरारम्भे । अत्रापि त्वया पृष्टेऽर्थेऽपि देवानामनुपृच्छतां सतां ब्रह्मणा पुरा पूर्वकाले वर्णितोऽयं मद्बुद्धावुपस्थित इतिहासो मे मया श्रुतोऽस्तीत्यन्वयः । ब्रह्माणं प्रति देवप्रश्न इतिहासस्य प्रामाणिकत्वे च हेतुं सूचयन् ब्रह्माणं विशिनष्टि—देवदेवेनेति, देवानामपि देवेन पूज्येनेत्यर्थः ॥ ६ ॥ ❀ ❀ देवप्रश्नप्रस्तावाय प्रथमं हिरण्याक्षहिरण्यकशिपोर्दितेर्गर्भागमनप्रसङ्गमाह—दितिरित्यादिना यावदध्यायसमाप्ति । कामचेष्टाया वक्ष्यमाणत्वान्मोहं मा गाः कथञ्चनेति सूचयन् सम्बोधयति—क्षत्तरिति । दाक्षायणी प्राचेतसस्य दक्षस्य कन्या दितिर्मारीचं मरीचेः पुत्रं स्वपतिं कश्यपं सन्ध्यायां चकमे इत्यन्वयः । सन्ध्यायामिति निषिद्ध-

---

१. आश्चर्यपीठरूपता वा० ग० । २. पौत्रा० क० । ३. विर्मजनकत्वात्० क० । ४. लेलायतीव ग० लोलायत् घ० ङ० ।

त्वादयुक्तत्वं सूचयति । तत्कथं कृतवतीत्यपेक्षायामाह—हृच्छयार्दितेति, हृच्छयः कामस्तेनार्दिता पीडितेत्यर्थः । तत्रापि हेतुमाह—अपत्यकामेति ॥ ७ ॥ ❀ ❀ अन्यथाप्ययुक्तत्वं सूचयन् कश्यपं विशिनष्टि—इष्ट्वेति । यजुषां यज्ञानां पतिं फलदातारं अग्निर्जिह्वा मुखं यस्य तं पुरुषं भगवन्तं पयसेष्ट्वा होमेन पूजयित्वा अर्के सूर्ये निम्लोचति अस्तं गच्छति सति अग्न्यागारे अग्निहोत्रशालायां आसीनं समाहितं चित्तैकाग्र्येण भगवन्तं ध्यायन्तम् ॥ ८ ॥

## हिन्दी अनुवाद

देखो उत्तानपादका पुत्र ध्रुव बालकपनमें श्रीनारदजीकी सुनायी हुई हरिकथाके प्रभावसे ही मृत्युके सिरपर पैर रखकर भगवान्के परमपदपर आरूढ़ हो गया था ॥ ५ ॥ ❀ ❀ पूर्वकालमें एक बार इसी वराह भगवान् और हिरण्याक्षके युद्धके विषयमें देवताओंके प्रश्न करनेपर देवदेव श्रीब्रह्माजीने उन्हें यह इतिहास सुनाया था और उसीको परम्परासे मैंने सुना है ॥ ६ ॥ ❀ ❀ विदुरजी ! एक बार दक्षकी पुत्री दितिने पुत्रप्राप्तिकी इच्छासे कामातुर होकर सायंकालके समय ही अपने पति मरीचिनन्दन कश्यपजीसे प्रार्थना की ॥ ७ ॥ ❀ ❀ उस समय कश्यपजी खीरकी आहुतियोंद्वारा अग्निजिह्व भगवान्, यज्ञपतिकी आराधनाकर सूर्यास्तका समय जान अग्निशालामें ध्यानस्थ होकर बैठे थे ॥ ८ ॥

## दितिरुवाच[1]

**एष मां त्वत्कृते विद्वन्[2] काम आत्तशरासनः । दुनोति दीनां विक्रम्य रम्भामिव मतङ्गजः ॥ ९ ॥**
**तद्भवान्दह्यमानायां सपत्नीनां समृद्धिभिः । प्रजावतीनां भद्रं ते मय्यायुङ्क्तामनुग्रहम् ॥ १० ॥**
**भर्तर्याप्तोरुमानानां लोकानाविशते यशः । पतिर्भवद्विधो यासां प्रजया ननु जायते ॥ ११ ॥**
**पुरा पिता नो भगवान्दक्षो दुहितृवत्सलः । कं वृणीत वरं वत्सा इत्यपृच्छत नः पृथक् ॥ १२ ॥**

### श्रीधरस्वामिविरचिता भावार्थदीपिका

कृपणां बहुभाषिणीमिति वक्ष्यति तत्र एष मामिति द्वाभ्यां कार्पण्यं भर्तरीति चतुर्भिश्च बहुभाषणं वर्ण्यते दुनोति पीडयति । विक्रम्य शौर्यमाविर्भाव्य । रंभां कदलीम् ॥ ९ ॥ ❀ ❀ आ क्तां सर्वतो युनक्तु सम्यक्करोतु ॥ १० ॥ ❀ ❀ भर्तरि प्राप्तबहुमानानां स्त्रीणां यशो लोकानाविशते व्याप्नोति । प्रजया पुत्ररूपेण । "तज्जाया जाया भवति यदस्यां जायते पुनः" इति श्रुतेः ॥ ११ ॥ ❀ ❀ नोऽस्माकं पिता नोऽस्मान्पृथगपृच्छत् । अयं भावः त्रयोदशानामप्यस्माकं त्वयि भावसाम्ये वैषम्याचरणं तवानुचितमिति ॥ १२ ॥ १३ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

वक्ष्यमाणपूर्त्यर्थमाह—कृपणामित्यादि । तत्र कार्पण्यबहुभाषणयोर्मध्ये एष प्रत्यक्षमिव दृश्यमानः । त्वत्कृते इति । यद्यह-मेकाकिन्यस्थास्यं तदा मम किमभविष्यदिति पत्यौ तस्मिन्नेव दोषो न्यस्तः । दीनां दुनोति त्वं पतिः कथं मां न रक्षसीति भावः । ननु कथं सहसैव लज्जामहासीस्तत्राह—रंभामिवेति । यदि प्राणा नश्यंति तदा किं लज्जयेति भावः ॥ ९ ॥ ❀ ❀ न च केवलमहं कामातुरैव रतिं याचे किंतु पुत्रार्थिन्यपीत्याह—तदिति । यतोऽहमेकैवापुत्रा तत्ततः समृद्धिभिः पुत्रलक्षणर्द्धिभिः ते भद्रमिति स्वीयार्थसिद्ध्यर्थमाशीर्ददातीति भावः ॥ १० ॥ ❀ ❀ त्वत्प्रसादाद्यशस्विनी पुत्रवती च स्यामित्याह—भर्त्तरीति । भर्तुः सकाशादित्यर्थः । तत्तदा यद्यदेति श्रुतिपदार्थः । यद्वा । भवद्विधः पतिः प्रजया हेतुनैव जायतेऽतोऽहं कथं न पुत्रवती स्यामिति भावः ॥ ११ ॥ ❀ ❀ किं च विवाहात्प्रागेवाहं त्वय्यनुरागिणी स्यामित्यतः प्रत्याख्येयवाक्यो भवितुं नार्ह-सीत्याह—पुरेति । भगवान् सर्वचित्ताभिप्रायज्ञः । हे वत्साः ॥ १२ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

तत्र कार्पण्यबहुभाषणयोर्मध्ये ॥ ९ ॥ ❀ ❀ तत्तस्माद् अनुग्रहं रमणरूपं तत्र सम्यक्त्वं पुत्रोत्पादकतया ॥ १० ॥ ❀ ❀ भर्त्तरि मानदे पत्युः पुत्ररूपत्वे श्रुतिः प्रमाणं यद्यस्माद्यस्यां स्त्रियां पुत्ररूपेण पतिर्जायते तत्तस्माज्जाया स्त्री जायाशब्द-वाच्या भवति ॥ ११ ॥ ❀ ❀ पितापीति क्वचित्पाठस्तत्र म इति पदमावर्त्तनीयम् ॥ १२ ॥

---

१. प्राचीने पाठे 'दितिरुवाच' अयमंशो मूले न, टीप्पण्यां वर्तते । २. प्रा० पा०—ब्रह्मन् ।

### श्रीमद्वीरराघवव्याख्या

तदुक्तिमेवाह । एष इत्यादिनाऽथ मे कुर्वित्यन्तेन । हे विद्वन्! कश्यप! आत्तमुपात्तं शरासनं धनुर्येन स एषः कामः त्वत्कृते त्वदर्थं त्वया सह सङ्गत्यर्थं दीनां कृपणां मा विक्रम्य दुनोति परितापयति पीडयति वा । अत्र दृष्टान्तः रम्भां कदलीं मतङ्गजो गज इवेति ॥ ९ ॥ ❀ ❀ तत्तस्मात्प्रजावतीनां सपत्नीनां समृद्धिभिः दह्यमानायां मयि भवाननुग्रहमायुङ्क्तां कुर्यात्ते तुभ्यं भद्रं मङ्गलमस्तु ॥ १० ॥ ❀ ❀ भर्तरि भर्तुः सकाशाद्विभक्तिव्यत्यय आर्षः आप्तोरुमानानां प्राप्तबहुमानानां स्त्रीणां यशः लोकान् प्रत्याविशते लोकेषु विस्तृतं भवति इत्यर्थः । कीदृशं तदुरुमानमित्यपेक्षायां तद्विशदयति । भवद्विधः भवादृशः पतिर्भर्ता यासां मादृशस्त्रीणां प्रजया प्रजारूपेणानुजायते हि शब्दः "तज्जाया जाया भवति यदस्यां जायते पुनः" इति श्रुतिप्रसिद्धिं द्योतयति । इदमेव तद्बहुमानं यत्स्वभार्यायां पतिः प्रजारूपेण जायते इति भावः ॥ ११ ॥ ❀ ❀ किञ्च पुरा पूर्वकाले नोऽस्माकं पिता दुहितृवत्सलः पुत्रीषु वात्सल्यवान् दक्षः अस्मान् प्रति पृथक् प्रत्येकं हे वत्से! कं वरं वृणीतेत्यपृच्छत् ॥ १२ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

मनसैव चकमे न तु वाक्पूर्वकमिति तत्राह । एष इति । त्वामुद्दिश्य रम्भां कदलीम् ॥ ९ ॥ ❀ ❀ न केवलं विषयभोगेच्छुरहं त्वां याचे किन्तु प्रयोजनान्तरेच्छयापीत्याह । तद्भवानीति । प्रजावतीनां पुत्रवतीनां मयि आयुङ्क्तामिति पदच्छेदः संभ्रमादिकारशिरोऽकारो न लुप्तः ॥ १० ॥ ❀ ❀ अस्मदनुग्रहात्किं तव प्रयोजनमिति तत्राह । भर्तरीति सप्तमी पञ्चम्यर्थे भर्तुराप्तोरुमानानामित्यर्थः । मानमपि पुत्रावाप्तिलक्षणमित्याशयेनाह पतिरिति ॥ ११ ॥ ❀ ❀ श्रुतगुणत्वेन स्नेहोदर्कया मया भगवान् वृत इत्यतोऽपि मदनुग्रहः कार्य इत्याशयेनाह । पुरेति ॥ १२ ॥

क्रमसन्दर्भो ९—१२ न

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी ।

एष मामिति । मुद्रितनेत्रे पत्यौ कायिकाश्चाक्षुषाश्च अभियोगा अकिञ्चित्करा एव वाचिकेष्वपि मध्ये शब्दोत्था अर्थोत्थाश्च व्यङ्ग्याः । परमेश्वराभिनिवेशितबुद्धौ कश्यपो नावकाशं लभत एवेत्युत्तमाङ्गनानामभिधयैव पुरुषे सम्भोगप्रार्थना यद्यपि नैवं स्वभावस्तथापि कन्दर्पपीडयोन्मादिता दितिर्लज्जाशङ्के निगिलन्तीव समाधिभङ्गार्थमुच्चैराह । एष साक्षादिव दृश्यमान इत्यर्थः त्वत्कृते इति । यद्यहमेकाकिन्यस्थास्यं तदैष मम किमकरिष्यदिति पत्यौ तस्मिन्नेव दोषो न्यस्तः । दीनां दुनोतीति त्वं पतिः कथं मां न रक्षसीति भावः । ननु लज्जां कथं सहसैवाहासीस्तत्राह । रम्भामिवेति । यदि प्राणा एव नश्यन्ति तदा किं लज्जयेति भावः ॥ ९ ॥ ❀ ❀ नच केवलमहं कामातुरैव रतिं याचे किन्तु पुत्रार्थिन्यपीत्याह । तदिति । आयुङ्क्तां सर्व्वतो भावेन करोतु ॥ १० ॥ ❀ ❀ त्वत्प्रसादाद्यशस्विनी पुत्रवती च भूयासमित्याह । भर्तरि भर्त्तुः सकाशादित्यर्थः । प्राप्तबहुसम्मानानां स्त्रीणां यशः लोकान् व्याप्नोति प्रजया पुत्ररूपेण । "तज्जाया जाया भवति यदस्यां जायते पुनः" इति श्रुतेः । यद्वा भवद्विधः पतिः प्रजया हेतुनैव जायते भवति अतोऽहं प्रजावती कथं न भवेयमिति भावः ॥ ११ ॥ ❀ ❀ किञ्च । विवाहात् पूर्व्वमेवाहं त्वय्यनुरागिणीति प्रत्याख्येयवाक्या न भवितुमर्हामीत्याह । पुरेति । नोऽस्माकं पिता नोऽस्मानपृच्छत् ॥ १२ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

दुनोति पीडयति रम्भाम् कदलीम् ॥ ९ ॥ ❀ ❀ आयुङ्क्तामायुनक्तु सम्यक्करोतु ते तवापि भद्रं भवतु ॥ १० ॥ ❀ ❀ भर्तरि आप्तः प्राप्तः उरुमानो याभिस्तासां मानप्राप्तिप्रकारमाह । प्रजयापत्यरूपेण पतिरेव जायते ॥११॥१२॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

दितिः षड्भिः सोपपत्तिकं संबन्धं प्रार्थयते । एष इति । कामपीडाप्रतीकारो यशसाऽनुग्रहस्तथा । वैषम्यस्य च निर्द्धारो द्वाभ्यामन्ते तु याचनम् ॥ १ ॥ प्रथमं कामपीडामाह सर्वहेतुभूताम्—एष इति । देवतारूपः कामः प्रत्यक्षो जात इति दर्शयति । कामशास्त्रे कामः पुरुषमेव बाधते, न तु स्त्रियम्, तस्याः स्वपूतनारूपत्वात् । पुरुषार्थश्च पुरुषस्यैव, अन्यथा पुरुषस्य स्त्रीशेषत्वं स्यात् । तस्मात्कथं बाधत इत्याशङ्कयाऽऽह—त्वत्कृत इति । त्वदर्थं मां बाधते । त्वां बाधितुमसमर्थस्त्वद्बाधार्थं मां बाधत इत्यर्थः । अतोऽहं कामप्रेरिता त्वद्बाधां करोमीति भावः । विद्वन्निति नाऽत्र किञ्चिन्निरूपणीयम्, कामातुरायाः शास्त्रसिद्धत्वात् । आत्तशरासन इति त्वद्बाधायामकृतायां मां जीवतो मारयिष्यतीति सूचितम् । साक्षात्कारः स्वस्य पूतनात्वसूचकः । अत एव 'भ्रुवोर्भङ्गो जायते' इति 'रसदृष्टयोऽपि निर्गच्छन्ति' इति शरत्वम् । दुनोति पीडयति । दीनामिति तस्य निर्दयत्वं सूचितमस्य दयोत्पादनार्थम् । विक्रम्येति तस्याऽत्यन्तमाग्रहः । रम्भामिव महागज इति नाशनार्थं प्रवृत्तिः ॥ ९ ॥ ❀ ❀ तस्मान्नाऽहमुपेक्षणीया, किन्तु कृपा कर्तव्येत्याह—तद्भवानिति । कामादयः षट् बाधकाः प्रत्येकं सर्वत्र लोके । मम तु सर्वे संभूय बाधका इति ज्ञापनार्थं कामबाधां निरूप्य मात्स-

येमाह—सपत्नीनां प्रजावतीनां समृद्धिभिर्दह्यमानायां मय्यनुग्रहमायुङ्क्ताम्। लोट आत्मनेपदम्। सपत्न्येव दाहहेतुः, तत्रापि बह्व्यः, तत्रापि मदपेक्षया तासां समृद्धिः, तत्रापि प्रजावत्त्वम्। अतो दोषचतुष्टयेन मात्सर्येण दाहः, तन्निवृत्त्यर्थमनुग्रहः कर्तव्यः। समृद्धिप्रजादाने ततोऽप्यधिकदाने वा दाहाऽभावः सुखं च भविष्यतीति भावः। भद्रं त इति पूर्वं बाधकत्वेन स्वस्य निरूपणात्, प्रवृत्तावपि कदाचिद्बाधः स्यात्, तथा सत्यप्रवृत्तिरेवाऽस्त्विति शङ्कां परिहरति॥ १०॥ ❀ ❀ त्वदनुग्रहेण न केवलं दोषाभावः, किन्तु गुणो भविष्यतीत्याह—भर्तरीति। सामीप्ये सप्तमी। भर्तुः समीपे आप्तोरुमानानां यशो लोकानाविशते। गर्भाधानादिसंस्कारेषु भर्त्रा सह एकासने स्त्रीणां संमाननमिति तत्कीर्तनम्। भर्तृकर्तृकं वा माननम्। तद्यशसो लोकप्रवेशमुपपादयति—पतिर्भवद्विध इति। यासां स्त्रीणां भवद्विधः पतिः प्रजया पुत्ररूपेण निश्चयेन जायते, 'तज्जाया जाया भवति यदस्यां जायते पुनः' इति श्रुतेः॥ ११॥ ❀ ❀ एवं गुणदोषौ निरूप्य नीतिमपि निरूपयति—पुरेति द्वाभ्याम्—विवाहात्पूर्वं नोऽस्माकं पिता दक्षः। भगवानिति सर्वसमर्थः। चन्द्रमिव त्वामपि करिष्यतीति भयं जनयति। दक्ष इत्यभिचरेद्वा। दुहितृवत्सल इति स्नेहादौदासीन्याभावः। अत एव हे वत्साः कं वृणीतेत्यपृच्छत पृथक्। पृथक् इत्यन्यानुरोधाभावाय। नोऽस्मान्। विभक्त्यन्तरत्वान्न पौनरुक्त्यम्। अनेन तस्य विचारभङ्गे महानुपद्रवो भविष्यतीति प्रवृत्तौ हेतुरुक्तः॥ १२॥

**श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः**

तद्भवानित्यत्र। बाधकत्वेन स्वस्य निरूपणादिति। कामस्य स्वबाधकत्वेन निरूपणादित्यर्थः॥ १०॥

**श्रीगिरिधरकृता बालप्रबोधिनी**

कामपीडितायास्तस्या वाक्यान्याह—एष इति षड्भिः। अत्र न किञ्चित्तव तिरोहितमिति सूचयन्ती सम्बोधयति—विद्वन्निति। आत्तं गृहीतं शरासनं धनुर्येन स एष इति षड्भिः। अत्र न किञ्चित्तव तिरोहितमिति सूचयन्ती सम्बोधयति- विद्वन्निति। आत्तं गृहीतं शरासनं धनुर्येन स एष कामशास्त्रे महाशूरत्वेन प्रसिद्धः कामः त्वत्कृते त्वदर्थं त्वया सह सङ्गत्यर्थं दीनां कृपणां मां विक्रम्य स्वशौर्यमाविर्भाव्य दुनोति पीडयतीत्यन्वयः। तत्र दृष्टान्तमाह—रम्भां कदलीं यथा मतङ्गजो दुनोति तथेत्यर्थः। दीनामित्यादिविशेषणानि दयोत्पादनार्थानि॥ ९॥ ❀ ❀ दीनतायां हेतुं दर्शयन्ती तदनुग्रहं प्रार्थयति—तदिति। तत्तस्मादतिदीनत्वात् प्रजावतीनां सपत्नीनां समृद्धिभिर्विभवैर्दह्यमानायां मयि भवान् अनुग्रहमायुंक्तां सम्यक् करोतु, एवं चेत्ते तवापि भद्रमेव भविष्यति॥ १०॥ ❀ ❀ स चानुग्रहो यन्मानमेव तेनैव मे महान् गुण इति कैमुत्यन्यायेनाह—भर्तरीति। भर्तरि भर्तुः सकाशाद् आप्त उरुर्मानो याभिस्तासां स्त्रीणां यशः लोकान् प्रति आविशते सर्वेषु लोकेषु प्रसृतं भवति। यद्येवं तर्हि भवद्विधो गुणवान् पतिर्यासां मादृशीनां स्त्रीणां प्रजया प्रजारूपेण जायते तासां यशो लोकानाविशते इति किं वक्तव्यम्? ननुशब्दः "तज्जाया जाया भवति यदस्यां जायते पुनः" इति श्रुतिप्रसिद्धिं द्योतयति। ह्यन्विति पाठान्तरम्॥ ११॥ ❀ ❀ एवमनुग्रहं सम्प्रार्थ्य नीतिविरोधोऽपि न कर्तव्य इत्याह—पुरेति। पुरा विवाहात्पूर्वकाले नोऽस्माकं पिता हे वत्सा इति सम्बोध्य कं वरं पतिं वृणीत इति नोऽस्मान् पृथक् पृथगपृच्छतेत्यन्वयः। ममापमाने तस्यापि कोपोऽवश्यं स्यादित्याशयेनाह—दुहितृवत्सल इति, यतोऽस्मासु स्नेहवानित्यर्थः। तथाप्रश्नेष्ययमेव हेतुर्ज्ञेयः। तत्कोपेऽपि किमित्याशङ्क्य तस्य वरशापयोः सामर्थ्यमाह—भगवानिति। तच्छापाच्चन्द्रः क्षयी जात इति। समर्थतया प्रसिद्ध एव स इत्याशयेनाह—दक्ष इति॥ १२॥

**हिन्दी अनुवाद**

दितिने कहा—विद्वन्! मतवाला हाथी जैसे केलेके वृक्षको मसल डालता है, उसी प्रकार यह प्रसिद्ध धनुर्धर कामदेव मुझ अबलापर जोर जताकर आपके लिये मुझे बेचैन कर रहा है॥ ९॥ ❀ ❀ अपनी पुत्रवती सौतोंकी सुख-समृद्धिको देखकर मैं ईर्ष्याकी आगसे जली जाती हूँ। अतः आप मुझपर कृपा कीजिये, आपका कल्याण हो॥ १०॥ ❀ ❀ जिनके गर्भसे आप-जैसा पति पुत्ररूपसे उत्पन्न होता है, वे ही स्त्रियाँ अपने पतियोंसे सम्मानित समझी जाती हैं। उनका सुयश संसारमें सर्वत्र फैल जाता है॥ ११॥ ❀ ❀ हमारे पिता प्रजापति दक्षका अपनी पुत्रियोंपर बड़ा स्नेह था। एक बार उन्होंने हम सबको अलग-अलग बुलाकर पूछा कि 'तुम किसे अपना पति बनाना चाहती हो?'॥ १२॥

**स विदित्वाऽऽत्मजानां नो भावं सन्तानभावनः। त्रयोदशाददात्तासां यास्ते शीलमनुव्रताः॥ १३॥**
**अथ मे कुरु कल्याण कामं कञ्जविलोचन। आर्तोपसर्पणं भूमन्नमोघं हि[2] महीयसि॥ १४॥**
**इति तां वीर मारीचः कृपणां बहुभाषिणीम्। प्रत्याहानुनयन् वाचा प्रवृद्धानङ्गकश्मलाम्॥ १५॥**
**एष तेऽहं विधास्यामि प्रियं भीरु यदिच्छसि। तस्याः[3] कामं न कः कुर्यात्सिद्धिस्त्रैवर्गिकी यतः॥ १६॥**

१. सामीप्ये. क.। २. प्रा० पा०—कर्तुमर्हसि। ३. प्रा० पा०—तस्या।

### श्रीधरस्वामिविरचिता भावार्थदीपिका

मोघं न भवति हि। महीयसि त्वादृशे महत्तमे ॥ १४ ॥ ❀ ❀ प्रवृद्धानंगेन कश्मलं मोहो यस्यास्ताम् ॥ १५ ॥ ❀ ❀ संध्याकालवंचनाय भार्याप्रशंसा। एष इति पंचभिः। यतो यस्याः सकाशात् ॥ १६ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

स दक्षः नोस्माकं लज्जया त्वन्नामागृह्णतीनामिंगितेनैव जनांतरद्वारा भावमभिप्रायं सहसा ज्ञात्वेत्यर्थः। अस्माकं त्रयोदशानां मध्ये कथमहमेवाऽपुत्रिणीत्यन्यासां पुत्रप्रदानं मम नेति वैषम्यं तव नोचितमिति भावः ॥ १३ ॥ ❀ ❀ अथातः कंजविलोचनेति श्लाघ्यसंबोधनं तु स्वस्यां दयोत्पत्त्यर्थं सौंदर्यद्योतनार्थं वा। ननु सायं स्वरमणार्थं मत्समाधिभंगे यतमाना त्वं कथं मत्समशीलेत्यत आह—आर्तोपसर्पणमिति। संप्रत्यहमार्त्ता किं करोमि 'नार्त्तः कालं प्रतीक्षते' इति शास्त्रं परमदयालुस्त्वं जानास्येवेति भावः। महांतस्त्वन्येषामकार्यमपि क्षमंत इत्याह भूमन्निति ॥ १४ ॥ ❀ ❀ हे वीरेति। यथा भवद्विधा धर्मवीरास्तथा न कश्यप इति यतोऽनुनयन्नेवाह—न सकोपकटाक्षं तर्जयन्निति यद्यहं कृत्रिममपि कोपं दर्शयिष्ये तदा तस्या भीत्या कामपीडाप्यंतर्धास्यतैवेति भावः। प्रवृद्धेति न ह्यनंगघूर्णिता ह्यनुनयं सहत इति भावः ॥ १५ ॥ ❀ ❀ एषोहम्। भीरु भयशीले त्रैवर्गिकी धर्मार्थकामरूपा ॥ १६ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

भावं त्वद्विषयकमनोविकारम्। अयं पद्यद्वयस्य भावः प्रयोजनीभूतो व्यङ्ग्योऽर्थः ॥ १३ ॥ ❀ ❀ अथ अतः वैषम्यस्यानुचितत्वाद् उपसर्प्पणं कामोपलब्धये सविधगमनम् ॥ १४ ॥ ❀ ❀ मोहोऽन्तःकरणविभ्रमः ॥ १५ ॥ ❀ ❀ भार्यायास्सर्वत्र किं विद्यया किं तपसा किं दानेनेत्यादिना सर्वत्र गर्हितत्वात् अर्थवादपरतया व्याचष्टे सन्ध्याकालेति एष त्वया प्रार्थितः ॥ १६ ॥

### श्रीमद्वीरराघवव्याख्या

स सन्तानं भावयति वर्द्धयतीति। सन्तानभावनो दक्षः आत्मजानां दुहितॄणां नः भावं साभिप्रायं विदित्वा ज्ञात्वा तासामात्मजानां मध्ये यास्ते तव शीलं स्वभावमनुव्रताः ता अस्मान् त्रयोदश अददात्। त्रयोदशानामप्यस्माकं त्वयि भावसाम्ये सति वैषम्याचरणमनुचितमित्यभिप्रायः ॥ १३ ॥ ❀ ❀ अथ ततः हे कश्यप! हे कल्याण! मङ्गलरूप मे मम काममभिलषितं कुरु हे कञ्जविलोचन! हे भूमन् महत्तम महीयसि महत्तरे पुरुषे आर्तानामुपसर्पणमनुच्छन्दनं मोघं न भवति ॥ १४ ॥ ❀ ❀ एवमुक्तः कश्यपः किमाहेत्यत्राह। इतीति। इत्युक्तरीत्या बहुभाषिणीं कृपणां दितिं प्रति वीरमारीचः जितेन्द्रियः कश्यपः प्रवृद्धोऽनङ्गः कामस्तेन कश्मलो यस्यास्तां वाचाऽनुनयन् सान्त्वयन् प्रत्याह प्रत्युवाच ॥ १५ ॥ ❀ ❀ उक्तिमेवाह एष त इत्यादिना ब्रह्मादयोयत्कृतसेतुपाला इत्यन्तेन। अत्र सन्ध्याकालापेक्षाया भार्यां प्रशंसति। एष त इति पञ्चभिः। हे भीरु! यदिच्छसि तत्प्रियं प्रीतिविषयं ते तुभ्यमहं विधास्यामि करिष्यामि तस्याः तादृशाया भार्यायाः काममभिलषितं को न कुर्यात्सर्वोऽपि कुर्यादेवेत्यर्थः। कीदृशी चासौ यस्याः कामं सर्वः कुर्यादित्यत्राह। सिद्धिरिति। यतः यस्याः पत्न्याः सकाशात् त्रैवर्गिकी धर्मार्थकामरूपा सिद्धिः फलं भवेदित्यर्थः ॥ १६ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

भावं हृद्गताभिप्रायमदाददात् ॥ १३ ॥ ❀ ❀ उपसंहरति। अथेति। अथ तस्माद् भवतो महत्तमत्वान्मम भवच्छरणगमनं सफलं स्यात् तथा दृष्टत्वादिति भावेनाह। आर्त्तेति। महीयसि पुरुषे आप्तत्वेनोपसर्पणं शरणगमनम् ॥ १४ ॥ ❀ ❀ एवं प्रार्थयमानामेनामगणय्य मारीचः किं तूष्णीमभूद्यत्किंचिदुत्तरमवददुतेति संशयो माभूदिति भावेनाह। इतीति ॥ १५ ॥ ❀ ❀ यतो यस्याः भार्यायास्त्रैवर्गिकी त्रयाणां धर्मार्थकामानां संबन्धिनी सिद्धिः ॥ १६ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

स इति पदस्यावृत्त्या चतुर्थ्यर्थः षष्ठ्यर्थश्च योज्यः ॥ १३—१६ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

नो भावमिति लज्जया त्वन्नामागृह्णतीनामप्यस्माकमिङ्गितेनैव जनान्तरद्वारा सहसा ज्ञात्वेत्यर्थः। तासां दुहितॄणां मध्ये तेन त्रयोदशानां मध्ये कथमहमेवापुत्रिणीति त्वद्वैषम्यमिदमनुचितमिति भावः ॥ १३ ॥ ❀ ❀ ननु स्वरमणार्थं सायं यत्समाधिभङ्गे यतमाना त्वं कथं मत्समशीलेत्यत आह। आर्तोपसर्पणमिति। सम्प्रत्यहमार्त्ता किं करोमि 'नार्तः कालमपेक्षते' इति शास्त्रं त्वं परमदयालुर्जानास्येवेति भावः ॥ १४ ॥ ❀ ❀ हे वीरेति यथा भवद्विधा धर्म्मवीरास्तथा न कश्यप

इति यतोऽनुनयन्नेव प्रत्याह नतु सकोपकटाक्षं तर्जयन्निति । यदि कृत्रिममपि कोपमदर्शयिष्यत्तदा तस्याः कामपीडापि भीत्या अन्तरधास्यदेवेति भावः । प्रवृद्धेति न ह्यनङ्गघूर्णिता अनुनयं सहत इति भावः ॥ १५ ॥ ❀ ❀ एष तेऽहमिति कश्यपस्य बहुवाग्विलासरचना सायङ्कालयापनार्थमेवेति ज्ञेयम् ॥ १६ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

महीयसि महत्तमे हे भूमन्! पतिरूपविष्णो ॥ १४ ॥ १५ ॥ ❀ ❀ अकाले प्रवृत्तां प्रशंसापूर्वकं निवारयति। एष इत्यादिषड्भिः । यतः यस्य सकाशात् ॥ १६ ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनीव्याख्या

इदानीमस्माकं नाऽस्ति वैषम्यम्, तव तु वैषम्यमित्याह—स विदित्वेति । आत्मजानां नो भावं विदित्वा तासां मध्ये त्रयोदश नोऽस्मान् ते अददात् । यास्ते शीलमनुव्रताः समानस्वभावाः । तत्राऽपि दक्षः संतानभावनः, दुहितृसंतानं भावयतीति । संतत्यभावे दानमेव व्यर्थं स्यात् ॥ १३ ॥ ❀ ❀ एवमप्रवृत्तौ नीतिविरोधमुपपाद्य प्रार्थयति—अथेति । न विरोधादिशङ्कया प्रवृत्तिः कर्तव्या, किन्तु रसेनैवेति भिन्नप्रक्रमः । तव कामाभावेऽपि मे कामं कुरु, मे कामनां पूरयेत्यर्थः । कञ्जविलोचनेति प्रकृतोपयोगिरूपवत्त्वम् । दैन्यमाह—आर्तोपसर्पणमिति । महीयसि महापुरुषे आर्त्तानां प्रार्थना सफलैवेत्यर्थः । सर्वत्र षड्भिर्निरूपणं तत्कार्यस्य भगवत्त्वाय ॥ १४ ॥ ❀ ❀ धर्माद्दक्षात्ततो भीतो लोकानां निन्दनादपि । कालकर्ममहादेवादप्रवृत्तस्त्वसान्त्वयत् ॥ १ ॥ असान्त्वितायां भगवानपि क्रुध्यतीति तस्याः सान्त्वनं कृतवानित्याह—इतीति । वीरेति संबोधनं सान्त्वनवाक्येषु भ्रमाभावाय । मारीच इति पूर्ववत् कृपणामिति दया । बहुभाषिणीमिति भयम् । वाचेति न प्रवृत्त्या, अन्यथा रसाभासः स्यात् । किञ्च, प्रवृद्धोऽनङ्ग एव कश्मलो यस्याः । न हि सकश्मला भुज्यते, अतः कश्मलनिवृत्त्यर्थं सान्त्वनम् ॥ १५ ॥ ❀ ❀ कामोऽभिमानात् फलतो वा निवर्तते, तत्र फलस्य साम्प्रतं कर्तुमयुक्तत्वात् साधारणवाक्यैरभिमानं जनयति—एषतेऽहमिति षड्भिः—

> प्रार्थितस्य परिज्ञानं हेतूक्त्या तस्य साधनम् । स्त्रियाश्चतुर्भिः स्तोत्रं च प्रार्थना च निरूप्यते ॥ १ ॥
> संसारदुःखतरणे हेतुः स्त्री स्वयमेव च । अरातितरणे दुर्गमनन्तोपकृतिर्गृहम् ॥ २ ॥
> एवमुत्कर्षकथने साभिमाना भवेदिति । पश्चात्संप्रार्थनं युक्तं [1]स्वकीर्तेर्हेतुताऽपि च ॥ ३ ॥

एष कामः । तेऽहमवश्यं विधास्यामि । भीर्विति विशिष्टस्त्रीत्वकथनं महत्त्वज्ञापकम्, 'विशेषास्त्वङ्गना भीरुः' इति कोशात् । प्रकृतोपयोगि च भीरुत्वम् । यदिच्छसीति पुत्रान्, भोगं, संपत्तिं च । एतदवश्यं कर्तव्यमित्युपपादयति—तस्या इति । 'संवत्सरो वै प्रजापतिः' इति श्रुतेः । 'त्रयोदशमासाः संवत्सर' इति च कश्यपानन्दस्त्रयोदशधाऽवतीर्णः । तत्रेयं मलमासरूपा । सामान्यतस्तु स्तुतिस्तस्या इति, न हि कश्चित् स्वानन्दं नाऽनुभवति । किञ्च, यतो भार्याऽतस्त्रैवर्गिकी सिद्धिः, पुरुषार्थत्रयं भार्यासहितस्यैव यतः सिद्ध्यति । मिलितं तस्यैव । धर्मोऽपि यज्ञात्मकस्तस्यैव, 'काञ्चनमञ्चितं भवति यत्सङ्गेऽङ्गना' इति वाक्यादर्थोऽपि तदधीन एव पुरुषार्थः, अन्यथा दुःखहेतुः स्यात्, कामसमुद्रस्य तु ❀ सा [2]तदेव ॥ १६ ॥

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

एष तेऽहमित्यत्र । सा तदेवेति । सा भार्या, तदेव सिद्धिरेव, सामान्ये नपुंसकम् ॥ १६ ॥

### श्रीगिरिधरकृता बालप्रबोधिनी

स दक्ष आत्मजानां नोऽस्माकं भावमभिप्रायं विदित्वा तासामात्मजानां मध्ये यास्ते तव शीलमनुव्रता अनुसृतास्ता अस्मान् त्रयोदश तुभ्यमददात् । अतस्त्रयोदशानामप्यस्माकं त्वयि स्नेहसाम्येऽपि त्वं चान्याभ्योऽपत्यानि सम्पादितवान् मह्यं नेति वैषम्यं तवानुचितमेवेति भावः । मह्यमपत्यासम्पादने दक्षस्यापि दौर्मनस्यं स्यात् सन्तानार्थंदानात् तदभावे दानस्य विफलत्वादित्याशयेनाह—सन्तानभावन इति ॥ १३ ॥ ❀ ❀ तव स्वरूपं नेत्रे दृष्ट्वा मम कामो वर्द्धते इति सूचयति सम्बोधनद्वयेन—हे कल्याणेति, हे कञ्जविलोचनेति । एवं नीतिविरोधमुक्त्वा पुनरनुग्रहे हेत्वन्तरं वदन्ती तं प्रार्थयति—अथेति । हे भूमन् महत्तम हि यस्माद् महीयसि त्वादृशे महत्तरे पुरुषे आर्तानां मादृशां उपसर्पणं समीपमागत्य याचनं मोघं वृथा न भवति, अथ तस्मान्मे काममभिलषितं कुरु सम्पादयेत्यन्वयः ॥ १४ ॥ ❀ ❀ इत्युक्तप्रकारेण बहुभाषिणीं तां दितिं वाचाऽनुनयन्सान्त्वयन् वीरमारीचः जितेन्द्रियः कश्यपः प्रत्याह उक्तवानित्यन्वयः । बहुभाषणे हेतुमाह—कृपणामिति, दीनामित्यर्थः । तत्र हेतुमाह—प्रवृद्धेति । प्रवृद्धो योऽनङ्गः कामस्तेन कश्मलं मोहो यस्यां तामित्यर्थः ॥ १५ ॥ ❀ ❀ कश्यपोक्तिमेव दर्शयति—

---

१. स्वाकीर्तेः क । २. तयैव, क. ख. ग. घ.

एष त इत्यादिभिस्त्रयोदशभिः । अत्र सन्ध्याकालक्षेपणार्थं भार्यां प्रशंसति—एप ते इति पञ्चभिः। सौशील्येन तस्या उत्तमत्वं सूचयति—हे भीर्विति । त्वं यदिच्छसि तत्ते प्रियमेप त्वया प्रार्थितोऽहं विधास्यामि करिष्यामि । तस्या भार्य्यायाः काममभिलषितं को न कुर्यात् ? सर्वोऽपि कुर्यादेवेत्यर्थः । तत्र हेतुमाह—सिद्धिरिति । यतः यस्या भार्यायाः सकाशात्त्रैवर्गिकी धर्मार्थकामरूपा सिद्धिः फलं भवतीत्यर्थः ॥ १६ ॥

## हिन्दी अनुवाद

वे अपनी सन्तानकी सब प्रकारकी चिन्ता रखते थे । अतः हमारा भाव जानकर उन्होंने उनमेंसे हम तेरह पुत्रियोंको, जो आपके गुणस्वभावके अनुरूप थीं, आपके साथ ब्याह दिया ॥ १३ ॥ ❀ ❀ अतः मङ्गलमूर्ते ! कमलनयन ! आप मेरी इच्छा पूर्ण कीजिये; क्योंकि हे महत्तम ! आप-जैसे महापुरुषोंके पास दीनजनोंका आना निष्फल नहीं होता ॥ १४ ॥ ❀ ❀ विदुरजी ! दिति कामदेवके वेगसे अत्यन्त बेचैन और बेबस हो रही थी । उसने इसी प्रकार बहुत-सी बातें बताते हुए दीन होकर कश्यपजीसे प्रार्थना की, तब उन्होंने उसे सुमधुर वाणीसे समझाते हुए कहा ॥ १५ ॥ ❀ ❀ 'भीरु ! तुम्हारी इच्छाके अनुसार मैं अभी-अभी तुम्हारा प्रिय अवश्य करूँगा । भला, जिसके द्वारा अर्थ, धर्म और काम–तीनोंकी सिद्धि होती है, अपनी ऐसी पत्नीकी कामना कौन पूर्ण नहीं करेगा ? ॥ १६ ॥

**सर्वाश्रमानुपादाय स्वाश्रमेण कलत्रवान् । व्यसनार्णवमत्येति जलयानैर्यथार्णवम् ॥ १७ ॥**
**यामाहुरात्मनो ह्यर्धं श्रेयस्कामस्य मानिनि । यस्यां स्वधुरमध्[1]यस्य पुमांश्चरति विज्वरः ॥ १८ ॥**
**यामाश्रित्येन्द्रियारातीन्दुर्जयानितराश्रमैः । वयं जयेम हेलाभिर्दस्यून्दुर्गपतिर्यथा ॥ १९ ॥**
**न वयं प्रभवस्तां त्वामनुकर्तुं गृहेश्वरि । अप्यायुषा वा[2] कार्त्स्न्येन ये चान्ये गुण[3]गृध्नवः ॥ २० ॥**

## श्रीधरस्वामिविरचिता भावार्थदीपिका

सर्वाश्रमानुपादायेति तानप्यन्नादिदानेन कृच्छ्रतस्तारयन्स्वयं तरतीत्यर्थः ॥ १७ ॥ ❀ ❀ आत्मनो देहस्यार्धं कर्मसु द्वयोः सहाधिकारात् । यच्छब्दानां तां त्वामिति तृतीयश्लोकेन संबंधः । स्वधुरं दृष्टादृष्टकर्मभारम् । विज्वरो निश्चिन्तः ॥१८॥ ❀ ❀ हेलाभिर्लीलाभिः जयेमेति सभार्यस्येंद्रियाणि प्रायेणेतस्ततो न सर्पंतीति भावः ॥ १९ ॥ ❀ ❀ तामनेकोपकारकर्त्रीं त्वां कार्त्स्न्येनानुकर्तुं प्रत्युपकारैस्त्वत्सदृशा भवितुं न प्रभवो समर्थाः । ये चान्ये गुणगृध्नवो गुणप्रियास्तेऽपि न समर्थाः । संपूर्णेनाप्यायुषा । वाशब्दाज्जन्मांतरैरपि न प्रभव इत्युक्तम् ॥ २० ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

इत्यर्थ इति । गृहस्थ एव सर्वेषामाश्रमाणां परायणं वानप्रस्थाश्रमस्योत्पत्तिद्वारा न त्वन्नदानादिनेति ज्ञेयमिति कृच्छ्रतः क्षुधादिरूपाद् वानप्रस्थं तु सिंहव्याघ्रादिकृच्छ्रत इति ज्ञेयं स्वयं च तेषामुपकृत्या कृच्छ्रतः संसारात्तरतीति भावः ॥ १७ ॥ ❀ ❀ कर्मस्वग्निसाध्येषु द्वयोः स्त्रीपुंसयोः "पाणिग्रहणाद्धि सहत्वं कर्मसु" इति श्रुतेः । दृष्टं गृहरक्षावस्तुसंचयनादिलक्षणमदृष्टं दैवपित्र्यतिथिसेवनादि स्वर्गादिहेतुः अध्यस्य निक्षिप्य ॥ १८ ॥ ❀ ❀ इति भाव इति । गृहस्थेतराः कामार्त्ता अगम्यागमनादिना नरकांश्चिरमनुभवंति । वस्तुतः स्त्रीमात्रस्यैव तेषामगम्यत्वादवश्यं तेषां सप्तसूर्म्याख्यनिरये वासः । गृहस्थस्य तु स्वाधीनकलत्रत्वेन व्यभिचारासंभवान्नरको न संभवति । यस्तु तत्रापि व्यभिचारादिनिष्ठः स न गृहस्थः, किं तु पतित एव सुतस्याप्यवश्यं नरके वासः "कुपूयाचरणाः कुपूयामेव योनिमाप्नुवंति" इति श्रुतेः । तथा चेतराश्रमापेक्षया गृहस्थाश्रम एव श्रेयानिति तात्पर्यम् । दस्यवो हि दुर्गमाश्रित्यैव जनान् लुंठंति यस्तु दुर्गपतिस्तत्र कथं तेषां प्रभाव इति दुर्गोत्र विषयभोगस्तत्र पतितान्ब्रह्मचार्यादीनेव भ्रंशयंतींद्रियदस्यवो न तु गृहस्थांस्तेषां विषयभोगस्य शास्त्रविहितत्वेन दुरदृष्टानुत्पत्तेः । यद्वेंद्रियाणामरातयो विषयास्तान् वक्ष्यति च "यः षट् सपत्नान्विजिगीषमाणो गृहेषु निर्विश्य यतेत पूर्वम् ।" इत्यादिना पञ्चमस्कंधे इममेवार्थं प्रियव्रतं प्रति ब्रह्मा ॥ १९ ॥ ❀ ❀ तदेवं स्त्रियमाश्रित्यैव गृहस्थ एव सुखेन विषयमपि भुंक्ते नरकेपि न पतति न तु विरक्त इत्यत आह—नेति । या पतिं नरकाद्रक्षेत्तां त्वां त्वादृशीं वयं मत्सदृशाः गुणगृध्नवः स्त्रीगुणास्तु गृहशोधनसंतत्युत्पादनागम्यागमनरक्षणप्रियसंभाषणपाकादिनैपुण्यादयस्तेषु दृष्टिमंतो ये तेपि स्त्रीं प्रत्युपकर्त्तुमक्षमाः संतस्तदानुकूल्यमेव जुषन्त इति भावः ॥ २० ॥

---

१. प्रा० पा०—मध्यास्य । २. प्रा० पा०—च । ३. प्रा० पा०—कामगृध्नवः ।

### श्रीराधारमणदासगोस्वामिविरचिता दीपनी व्याख्या

तरणे प्रकारस्याध्याहारेण व्याख्यातत्वादित्यर्थोक्तिः ॥ १७ ॥ ❀ ❀ सहाधिकारत्वाज्जायापती अग्निमादधीयातामिति श्रुत्योरेककारकत्वावगमात् दृष्टभारं पुत्रादिभरणरूपमदृष्टभारमग्निहोत्रादिरूपमध्यस्यारोप्य ॥ १८ ॥ ❀ ❀ हेलाशब्दस्य लीलावाचकत्वे विश्वप्रकाशः "हेलावज्ञातविलासयोश्च" इति लीलाभिर्विलासप्रभवालिङ्गनादिक्रियाभिः । तत्रापि विश्वः "लीलां विदुः केलिविलासखेलश्रृङ्गारभावप्रभवक्रियासु" इति ॥ १९ ॥ २० ॥

### श्रीमद्वीरराघवव्याख्या

परंपरया तुरीयपुरुषार्थोऽपि भार्यातः सिद्ध्यतीत्याह । कलत्रवान् भार्यावान् पुरुषः स्वाश्रमेण सर्वाश्रमानितरान् त्रीनाश्रमानुपादायोपकृत्य सर्वाश्रमोपकारको गृहस्थाश्रम इति भावः । व्यसनमिन्द्रियाणां विषयप्रावण्यरूपं दुःखमेवार्णवस्तमत्येति तरति । तत्र दृष्टान्तः जलयानैर्नौभिरर्णवं समुद्रं यथेति इन्द्रियजयादिद्वारा तुरीयपुरुषार्थसाधनभूता तरीरित्यर्थः ॥ १७ ॥ ❀ ❀ यामिति श्रेयस्कामस्य स्वर्गापवर्गाख्यश्रेयस्कामस्यात्मनोऽर्धमित्यनेन स्वर्गापवर्गसाधनेषु द्वयोः सहाधिकारित्वं सूच्यते यच्छब्दानां तां त्वामिति तृतीयश्लोकस्थतच्छब्देनान्वयः । यस्यां पत्न्यां स्वस्य धुरं दृष्टादृष्टकर्मभरमध्यस्य निक्षिप्य विज्वरः निश्चिन्तः पुमान् चरति ॥ १८ ॥ ❀ ❀ यां पत्नीमाश्रित्येतराश्रमैर्ब्रह्मचर्याद्याश्रमैर्दुर्जयान् जेतुमशक्यानिन्द्रियाण्येवारातयः शत्रवस्तान् हेलाभिर्लीलाभिर्वयं जयेम तत्र दृष्टान्तः दुर्गपतिर्दस्यून् दुष्टजीवान् चोरादीन् यथेति ॥ १९ ॥ ❀ ❀ तामुक्तविधोपकर्त्रीं त्वां कार्त्स्न्येनानुकर्तुं प्रत्युपकर्तुं हे गृहेश्वरि ! पुरुषायुषापि वयं न प्रभवः न समर्थाः एवमन्येऽपि गुणगृध्नवः गुणकांक्षिणः गुणदर्शिन इति यावत् तेऽपि पूर्णेनाप्यायुषा वाशब्दाज्जन्मान्तरैरपि न प्रभव इत्युक्तम् ॥ २० ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

एतदेव विशदयति । सर्वाश्रमानिति । कलत्रवान् प्रशस्तभार्यायुक्तः स्वाश्रमेण गार्हस्थ्याश्रमेणान्नदानादिना ब्रह्मचर्यादिसर्वाश्रमानुपादायसंभाव्य संसाराख्यव्यसनसमुद्रमत्येतीत्यन्वयः ॥ १७ ॥ ❀ ❀ स्वधुरं स्वव्यापारभारमध्यस्य निक्षिप्य ॥ १८ ॥ ❀ ❀ इतोऽपि त्वं संभाव्येत्याह । यामिति । इन्द्रियाण्येवारातयः शत्रव इन्द्रियारातयस्तान् इन्द्रियाणामरातयो विषयास्तानिति वा एवं चेद् दृष्टान्तोऽपि संगच्छते उभयेषामपि बाह्यत्वात् पूर्वत्र संभावनामात्रतयोक्तम् ॥ १९ ॥ ❀ ❀ वक्ष्यमाणस्ववाक्यार्थं कारयितुं मुनिः स्तुतिं करोति । न वयमिति । भवन्तो न प्रभवश्चेदन्यो भवादृशो नेति तत्राह । ये चेति येऽन्ये च गुणगृध्नवो गुणलुब्धाः पुरुषास्तेऽपि भार्यामनुकर्तुं न प्रभव इत्यर्थः ॥ २० ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

सर्व्वाश्रमानिति । वानप्रस्थस्यापि गृहस्थादेवोत्पत्तेः ॥ १७—२४ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

सर्वाश्रमानिति चतुरोऽप्याश्रमानन्नादिदानेन कृच्छ्रतस्तारयन् स्वयं तरतीत्यर्थः ॥ १७ ॥ ❀ ❀ यां स्त्रियमात्मनो देहस्य अर्धम् "अर्द्धो वा एष यत् पत्नी" इति श्रुतेः, स्वधुरं दृष्टादृष्टकर्म्मभारम् ॥ १८ ॥ ❀ ❀ दुर्गपतिरिति । दस्यवः खलु दुर्गमाश्रित्यैव जनान् लुण्ठन्ति यस्तु दुर्गपतिस्तत्र कथं प्रभवन्तीत्यर्थः । दुर्गोऽत्र विषयभोग एव तत्र दैवात् पतितान् ब्रह्मचार्य्यादीनेव भ्रंशयन्ति न तु गृहस्थान् तेषां भोगविशेषस्य शास्त्रविहितत्वेन दुरदृष्टानुत्पादनात् ॥ १९ ॥ ❀ ❀ तदेवं स्त्रियमाश्रित्यैव गृहस्थ एव सुखेन विषयमपि भुङ्क्ते नरकेऽपि न पतति न तु विरक्त इत्यतस्तां प्रसिद्धां त्वां स्त्रीजातिमनुकर्तुं प्रत्युपकारैस्तादृशीभवितुं वयं पुरुषजातयो न प्रभवः, कार्त्स्न्येन यदायुस्तेनापि सम्पूर्णेनाप्यायुषेत्यर्थः । वाशब्दाज्जन्मान्तरैरपि ये चान्येऽतिथयः गुणगृध्नवस्तद्गुणग्राहिणः पक्षे त्वामित्येकवचनेन वयमिति बहुवचनेन अप्यायुषेत्यादिना च परिहासः सूचितः ॥ २० ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

सर्वाश्रमानुपादाय अन्नादिदानेन संगृह्य तैः सह व्यसनार्णवं तरतीत्यर्थः ॥ १७ ॥ ❀ ❀ यच्छब्दानां तां त्वामित्यनेनान्वयः ॥ १८ ॥ ❀ ❀ हेलाभिर्लीलाभिः ॥ १९ ॥ ❀ ❀ अनुकर्तुमनेकोपकारकर्त्र्याः प्रत्युपकारैः सदृशीभवितुं न प्रभवो न समर्थाः येऽन्ये गुणगृध्नवः गुणाकांक्षावन्तः गुणलुब्धा इत्यर्थः । तेऽपि न प्रभवः ॥ २० ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

एवं तदीयं प्रार्थितमवश्यं कर्तव्यमित्युपपाद्य तां स्तौति सर्वदुःखनिवारकत्वेन—सर्वाश्रमानिति। अन्येषामाश्रमाणामन्नदाता गृहस्थ एव। अभार्यस्त्वभोज्यान्नः, अग्न्यभावेन वीरहत्वात्। अतः स्वतिरिक्ता श्रमानुपादाय स्वाश्रमेण गार्हस्थ्येन व्यसनार्णवं क्षुत्पिपासादिदुःखसमुद्रमत्येति। जलयानैर्वहित्रैः पोतैर्यथाऽर्णवमत्येति, अन्यथा मत्स्यादिभिर्ग्रस्त एव स्यात्॥ १७॥ ❀ ❀ किञ्च। यामाहुरिति। यां भार्यामात्मनोऽर्द्धमाहुः। चिद्रूपस्य स्वस्य स्वदेहः सद्रूपः, आनन्दरूपश्च भार्यायाः। अर्द्धवृगलत्वाद्वा। आहुरिति प्रमाणम्। हीत्युपपत्तिरुक्तैव। 'प्रजापतिरमृतमानन्द इत्युपस्थः' इति श्रुतेः। श्रेयस्कामस्येति केषांचिन्मते भार्यासहितस्यैव कर्मण्यधिकारः। मानिनीति संबोधनमेतादृशवाक्याकथनार्थम्। एवं सुखहेतुत्वमुपपाद्य दुःखाभावहेतुत्वमुपपादयति—यस्यामिति। स्वधुरं स्वयं धुर्यो बलीवर्दः, संसारलक्षणां धुरं निरन्तरं वहति। तत्र भार्याचे दनुकूला, सा सर्वमेव भारं गृह्णीयात्। इदं च लोकसिद्धं नोपपादनीयम्। चरतीति यथासुखं परिभ्रमति, मुक्तो जायत इत्यर्थः। विज्वर इति चिन्ताज्वररहितः, अन्यथा धनादिनिमित्तं सर्वत्र चिन्ता भवेत्॥ १८॥ ❀ ❀ किञ्च—यामिति। यां भार्यामाश्रित्य इन्द्रियलक्षणान् शत्रूनन्यायेन मारकान् भार्यासहिता वयं हेलाभिरेव जयेम, न हि शत्रवोऽन्याश्रमैर्जेतुं शक्याः, अत इतराश्रमैर्दुर्जयान् सभार्य एव जयति। भार्यावन्तमिन्द्रियाणि न बाधन्त इति केचित्। जयस्तु शत्रुत्वे, भार्यावतस्तदपेक्षणात्तेषां न शत्रुत्वम्। शास्त्रतः शत्रुत्वेऽपि वहिः स्वानन्दानुभवादनुषङ्गत एव हेलाभिरवज्ञयैवेन्द्रियाणां जयः। बाधकानामवाधकत्वमेव जयः, असामर्थ्यजनकत्वं वा। अबाधकत्वमात्रमत्र जय इति वक्तुं दृष्टान्तमाह—दस्यून्दुर्गपतिरिति। नहि चौराणां जये कश्चन पुरुषार्थः, किन्तु ते यथा बाधन्ते तथा दुर्गाश्रयणमेव कर्तव्यम्। न तु तेषां मारणं जयः, असमानत्वात्, जयस्य कादाचित्कत्वाच्च॥ १९॥ ❀ ❀ किञ्च। एकस्मिन्नपि दिवसे क्रियमाणस्य भार्योपकारस्य प्रत्युपकारो नास्तीत्याह—न वयमिति। तां पूर्वोक्तोपकारकारिणीं त्वां प्रत्युपकर्तुं वयं न प्रभवामः। य उपकारः कर्तव्यः सोऽपि स्वार्थमेव भवतीति। यथाऽलङ्काराः, देहपोषो वा। गृहेश्वरीति संबोधनात् प्रत्यहं तद्गृहे सर्वभोगान् भुञ्जानः कमुपकारं कुर्यात्? कार्त्स्न्येनाऽप्यायुषेति। तस्या भोग्यत्वं कियत्कालमेवेति, तदनन्तरं परिपालनादिकं प्रत्युपकारसाधकं भविष्यतीति संभाव्य निराकरोति, तयाऽपि तावत्कालमुपकारकरणात्। ये चाऽन्ये देवा अपि चिरजीविनः। गुणगृध्नव इति तस्या एकोऽपि गुणः पुत्रजननादिः प्रतिकर्तुमशक्यः। अतो येषां तद्गुणा अपेक्षिताः इह परत्रसाधकत्वेन, तैः प्रतीकारोऽशक्य इत्यर्थः॥ २०॥

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

यामित्यत्र। भार्यारूपस्यार्धस्यानन्दरूपत्वे मानमाहुः—प्रजापतिरित्यादि। तथा च तत्रानन्दोपासनाया उक्तत्वात्। सा तथेत्यर्थः। (ए) तादृशवाक्याकथनार्थमिति। पूर्वोक्तरीतिदैन्यवाक्याकथनार्थम्॥ १८॥

### श्रीगिरिधरकृता बालप्रबोधिनी

किञ्च कलत्रवान् पुरुषः स्वाश्रमेण गृहस्थाश्रमेण सर्वाश्रमानितरानपि त्रीनाश्रमान् उपादाय अन्नादिप्रदानेन तेषामपि निर्वाहं कृत्वा स्वयमपि व्यसनार्णवं क्षुत्पिपासादिदुःखसमुद्रमत्येति उत्तरति। तत्र दृष्टान्तमाह—जलयानैरिति। यथा नाविको जलयानैर्नौभिरन्यानप्यादाय स्वयं समुद्रं तरति तथेत्यर्थः॥ १७॥ ❀ ❀ "अर्द्धो वा एष आत्मनो यः पत्नी" इत्यादिश्रुत्युक्तस्वर्गापवर्गसाधनधर्मेषु द्वयोः सहाधिकारं सूचयन् यदुक्तं सिद्धिस्त्रैवर्गिकी यत इति तदुपपादयति—यामिति। स्वर्गापवर्गाख्यश्रेयस्कामस्य पुरुषस्यात्मनो देहस्यार्धं यां पत्नीं श्रुतय आहुरित्यन्वयः। अतस्त्वं दीनवत् न युक्ताऽभिमानयोग्यत्वादित्याशयेनाह—हे मानिनीति। यच्छब्दानां तां त्वामिति तृतीयश्लोकस्थतच्छब्देनान्वयः। यस्यां पत्न्यां स्वस्य धुरं दृष्टादृष्टकर्मभारमध्यस्य निक्षिप्य विज्वरो निश्चिन्तः पुमान् चरति॥ १८॥ ❀ ❀ यां पत्नीमाश्रित्य इतराश्रमैर्ब्रह्मचर्याद्याश्रमैर्दुर्जयान् जेतुमशक्यानपि इन्द्रियाण्येवारातयः शत्रवस्तान् हेलाभिर्लीलाभिरेव वयं गृहस्था जयेम। सभार्यस्य गृहस्थस्येन्द्रियाणि प्रायेण न ततस्ततः प्रसरन्तीति बाधकत्वाभावमात्रमेवात्र जयशब्दार्थः। तत्र दृष्टान्तमाह—दस्यूनिति, दुर्गपतिर्यथा दस्यूंश्चोरादीन् जयति तं यथा चोरा न बाधन्ते तथैतमिन्द्रियाणि न बाधन्त इत्यर्थः॥ १९॥ ❀ ❀ हे गृहेश्वरि तां पूर्वोक्तोपकारकर्त्रीं त्वामनुकर्तुं स्वकृतोपकारैस्त्वत्सदृशीभवितुं कार्त्स्न्येनाप्यायुषा-वाशब्दाज्जन्मान्तरैरपि-वयं न प्रभवो न समर्थाः। एवमन्ये च ये गुणगृध्नवो गुणग्राहकास्तेऽपि न प्रभवः। ये तु तत्कर्तुं वयं समर्था इति वदन्ति ते तु कृतघ्ना इति भावः॥ २०॥

### हिन्दी अनुवाद

जिस प्रकार जहाजपर चढ़कर मनुष्य महासागरको पार कर लेता है, उसी प्रकार गृहस्थाश्रमी दूसरे आश्रमोंको आश्रय देता हुआ अपने आश्रमद्वारा स्वयं भी दुःखसमुद्रके पार हो जाता है॥ १७॥ ❀ ❀ मानिनि! स्त्रीको तो त्रिविध पुरुषार्थकी कामनावाले पुरुषका आधा अङ्ग कहा गया है। उसपर अपनी गृहस्थीका भार डालकर पुरुष निश्चिन्त होकर विचरता है

१. विधुरत्वात् ख.।

॥ १८ ॥ ❀ ❀ इन्द्रियरूप शत्रु अन्य आश्रमवालोंके लिये अत्यन्त दुर्जय हैं; किन्तु जिस प्रकार किलेका स्वामी सुगमतासे ही लूटनेवाले शत्रुओंको अपने अधीन कर लेता है, उसी प्रकार हम अपनी विवाहिता पत्नीका आश्रय लेकर इन इन्द्रियरूप शत्रुओंको सहजमें ही जीत लेते हैं ॥ १९ ॥ ❀ ❀ गृहेश्वरी ! तुम-जैसी भार्याके उपकारोंका बदला तो हम अथवा और कोई भी गुणग्राही पुरुष अपनी सारी उम्रमें अथवा जन्मान्तरमें भी पूर्णरूपसे नहीं चुका सकते ॥ २० ॥

**अथापि काम[1]मेतं ते प्रजात्यै करवाण्यलम् । यथा मां[2] नातिवोचन्ति मुहूर्तं प्रतिपालय ॥ २१ ॥**
**एषा घोरतमा वेला घोराणां घोरदर्शना । चरन्ति यस्यां भूतानि भूतेशानुचराणि हि ॥ २२ ॥**
**एतस्यां साध्वि सन्ध्यायां भगवान् भूतभावनः । परीतो भूतपर्षद्भिर्वृषेणाटति भूतराट् ॥ २३ ॥**
**श्मशानचक्रानिलधूलिधूम्रविकीर्णविद्योतजटाकलापः । भस्मावगुण्ठामलरुक्मदेहो देवस्त्रिभिः पश्यति देवरस्ते ॥२४॥**

### श्रीधरस्वामिविरचिता भावार्थदीपिका

यद्यपि त्वदनुकरणमशक्यम् । प्रजात्यै पुत्रोत्पत्त्यै । नातिवोचंति न निंदंति । प्रतिपालय प्रतीक्षस्व ॥ २१ ॥ ❀ ❀ स्वनिंदामगणयंतीं भीषयन् श्रीरुद्रमनुवर्णयति । एषेति सप्तभिः । घोराणामेषा वेला स्वयं च घोरदर्शना ॥ २२ ॥ ❀ ❀ भूतपर्षद्भिर्भूतगणैः ॥ २३ ॥ ❀ ❀ तर्हि तत्संमुखत्वमात्रं वर्जनीयमिति चेत्तत्राह श्मशाने यश्चक्रानिलो वातमंडली तस्मिन् या धूलिस्तया धूम्रो विकीर्णो विक्षिप्तो विद्योतो द्युतिमान् जटाकलापो यस्य । भस्मनाऽवगुंठः प्रावृतोऽमलो रुक्मवद्देहो यस्य । स देवस्त्रिभिः सोमार्काग्निनेत्रैः पश्यतीत्यस्योत्तरश्लोकत्रयेऽप्यनुषंगः । एकस्य जामातरः परस्परं भ्रातरो व्यवह्रियंते । अतो मम भ्राता असौ तव देवर इति लज्जार्थमुक्तम् ॥ २४ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

नन्वलं वाग्विलासैः कालविलंबस्य दुःसहत्वात्तूर्णं तल्पगृहं प्रविशेति चेत्तत्राह यथा मामिति । अत्यवोपसर्गपूर्वाद्व-चेश्छांदसं रूपमतिवोचंतीति क्वचिच्छोचंतीति पाठः । तर्हीदं वाक्यं गुडजिह्विकातुल्यमेवेत्यत आह—मुहूर्तं संध्यामुहूर्त्तं प्रदोषमित्यर्थः ॥ २१ ॥ ❀ ❀ घोराणां भूतप्रेतादीनां वेला समयस्तेषां विहारकाल इत्यर्थः । घोराणां दर्शनं यस्यां सा तथा । यद्वा घोरं भयंकरं दर्शनं यस्यास्सा तथा अत एव घोरतमाऽतिशयेन भयंकरेति तदेवाह—चरंतीति । भूतेशस्य रुद्रस्यानुचराणि भूतानि प्रमथादीनि ॥ २२ ॥ ❀ ❀ भवत्सामर्थ्येन भूतान्यपि किं करिष्यंतीति भूतान्यप्यगणयंतीं पुनराह—एतस्यामिति । न हि साध्वीनां सदाचाराणामयं धर्म इति बोधयन्नाह—साध्वीति । भगवानतीव समर्थः । यश्चाधुना विकर्म-निरतस्तं भूतैर्नाशयतीत्याह—भूतराडिति । अत एव भूतानि सांसारिकाणि स्वगमनेन विकर्म निवर्त्तयन्भावयति पालयतीति तथा ॥ २३ ॥ ❀ ❀ समाधत्ते तर्हीति । जटाकलापेन सर्वं प्रकाशयित्वा देदीप्यमानदेहेन च सोमसूर्याग्निनेत्रैश्च नः पश्यति । तथा च न ततः किंचिदपि स्थलं गुप्तमस्तीति ॥ २४ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या ।

एतं पुत्रोत्पादकरतिलक्षणं वोचन्तीति वुचवोचहिंसानादरयोरिति स्वादिस्तस्मात् ॥ २१ ॥ ❀ ❀ घोराणामिति स्वस्वामिभावसंबन्धे षष्ठी घोरस्वामिकेत्यर्थः । स्वयञ्च घोरं भयजनकं दर्शनं परिचयो यस्याः सा तथा ॥ २२ ॥ ❀ ❀ पर्षच्छब्दः सभावाचकः सभा हि गोष्ठी सामाजिको गण एवेति भूतगणैरिति व्याख्यातम् "सभा सामाजिके द्यूते गोष्ठीमन्दिरयोरपि ।" इति विश्वः । वृषेण वृषमारुह्य ॥ २३ ॥ ❀ ❀ अनुषङ्गः अत्रान्वितस्यापि पश्यतीति क्रियापदस्य वक्ष्यमाणश्लोकेषु संबन्धः । देवरशब्दस्य भर्तृभ्रातृमात्रवाचकत्वाद्यद्यपीत्यादिटीका लोकदृष्ट्या केनापि कल्पितेति गम्यते, किन्तु लोकेऽपि ज्येष्ठादेव लज्जाधिक्यमिति चिन्त्यैव ॥ २४ ॥

### श्रीमद्वीरराघवव्याख्या

अथापि त्वदुपासनानुरूपेण उपकर्त्तुमशक्यत्वेऽपि ते प्रजात्यै प्रजनाय पुत्रोत्पत्तये इति यावत् यः कामः तमेतं काममलं पर्याप्तं करवाणि । यथा कृते मां प्रति त्वं नातिशोचन्ती भवसि तथा करवाण्येव । किंतु मुहूर्तं मुहूर्त्तं कालं प्रतिपालय प्रतीक्षस्व ॥२१॥ ❀ ❀ किमर्थं मुहूर्तं प्रतीक्षणम् इत्याशङ्कायां तस्य मुहूर्तस्य रत्यनुपयुक्ततां कथयति । एषेति । एषा वेला घोरतमा उग्रतमा घोराणामपि घोरदर्शना घोरं दृश्यत इति तथा यस्यां सन्ध्यावेलायां भूतेशो रुद्रस्तस्यानुचराणि भूतानि प्रमथाख्यभूतानि चरन्ति

---

१. प्रा० पा०—मेतत्ते प्रजायै । २. प्रा० पा०—यथा मानिनि बोधन्ति मुहु० ।

सञ्चरन्त्यतोऽपि नायमवसर इति भावः ॥ २२ ॥ ❀ ❀ चरन्ति चेद्भूतानि तर्हि तत्संचारविषयप्रदेशो वर्जनीय इत्यत्राह । एतस्यामिति । हे साध्वि ! एतस्यां संध्यायां भूतभावनो भूतानां सर्वजीवानां भावयति सुखमिति तथा भगवान् भूतराट् रुद्रः भूतपरिषद्भिः प्रमथगणैः परीतः परिवेष्टितः वृषेण स्ववाहनभूतेन वृषभेण नन्दिकेश्वरेण सहाटति चरति ॥ २३ ॥ ❀ ❀ किञ्च श्मशानेषु यश्चक्रानिलः वात्या तेन यो धूलिस्तेन धूम्रा विशीर्णा विक्षिप्ता विद्योता विद्योतमानाश्च या जटाः तासां कलापः समूहो यस्य सः भस्मनावगुण्ठः अवलिप्तः अमलः रुक्मवद्देहो यस्य सः देवः रुद्रः त्रिभिर्नयनैरिति शेषः पश्यति सर्वं साक्षात्करोत्यतस्तद्दर्शनाविषयप्रदेशो नास्तीति भावः । पश्यतु देवस्तथापि तमनादृत्य प्रवर्ते इत्यत्राह स तु रुद्रस्ते देवरः त्वद्भगिन्या उमायाः पतिरित्यर्थः । न तु पतिभ्रातृत्वे तदसंभवात् कश्यपो हि मरीचिपुत्रः न तु ब्रह्मपुत्रः स्वजनत्वादादरणीय इति भावः । यद्वा एकस्य जामातरः परस्परं भ्रातर इति व्यवहारः तेन कृत्वा देवर इत्युक्तम् ॥ २४ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली ।

किमिति स्तोत्रेण निष्प्रयोजनेनेति मा भूच्छङ्केत्याह । अथापीति । यद्यप्येवमथापि तर्हि किमिति कालः क्षिप्यते इति तत्राह । यथेति । अतिवोचन्ति निन्दन्ति तर्हीदं वचनं गुडजिह्विकाकल्पमित्यत उक्तं मुहूर्तमिति प्रतिपाल्य प्रतीक्षस्व ॥ २१ ॥ प्रतीक्षायां कि कारणमत्राह । एषेति । घोराणां वेलेत्युक्तं स्पष्टयति । चरन्तीति ॥ २२ ॥ ❀ ❀ भवत्सामर्थ्येन भूतानि किं कुर्वन्तीति तत्राह । एतस्यामिति ॥ २३ ॥ ❀ ❀ अस्मात्पशुपतेरपि किं भयमित्याशंक्य तस्मादस्मदवद्यदर्शने भयमित्याशयवानाह । श्मशानेति । श्मशाने विद्यमानश्चक्रानिलो वात्या वायुः श्मशानमण्डलवर्ती वातस्तस्मादुत्पन्नया धूल्या धूम्रो धूम्रवर्णः विशीर्णश्च विद्योतश्च जटाकलापो यस्य स तथा विशिष्टो द्योतः प्रकाशो यस्य स तथा भस्मनावगुण्ठोऽवरूपणं यस्य स तथोक्तः अमलरुक्मं भस्मावगुण्ठश्च रजतवद्धवलो देहो यस्य स तथा त्रिभिर्नेत्रैरिति शेषः, ते तव देवरः सहोदर्याः सत्याः पतिः ॥ २४ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

एवं यद्यपि त्वदनुकरणमशक्यं तथापि एतं कामं प्रजात्यै पुत्रोत्पत्त्यै करवाणि । नन्वलं वाग्विलासेन कालविलम्बस्य दुःखसहत्वात्तूर्णं तल्पगृहं प्रविशेति तत्राह । नातिवोचन्ति न निन्दन्ति प्रतिपाल्य प्रतीक्षस्व ॥ २१ ॥ ❀ ❀ निन्दामगणयन्तीं भीषयमाणः श्रीरुद्रमनुवर्णयति । एषेति सप्तभिः । घोराणां भूतप्रेतादीनां दर्शनं यस्याम् । अतएव घोरतमा घोराणामिति घोरस्वामिकेत्यर्थः । घोराण्येवाह । चरन्तीत्यादि ॥ २२ ॥ ❀ ❀ भूतान्यप्यगणन्तीं पुनराह । एतस्यामिति ॥ २३ ॥ ❀ ❀ तर्हि तत्संमुखत्वमात्रं वर्जनीयमिति चेत्तत्राह । श्मशाने यश्चक्रानिलः वातमण्डली तत्र धूलिधूम्रः विकीर्णो विक्षिप्तो विद्योतो द्युतिमान् जटासमूहो यस्य सः । भस्मना अवगुण्ठ आवरणं यस्य तथाभूतोऽमलः स्वर्णवद् देहो यस्य स देवस्त्रिभिः सोमार्काग्निनेत्रैः पश्यतीत्येतदपराधफलं सद्य एव स नो दास्यतीति भावः । स च ते न निःसम्बन्धो नाप्यपरिचितश्चेत्याह । देवर इति । एकस्य जामातरः परस्परं भ्रातरो व्यवह्रियन्ते । अतो मम भ्रातासौ तव देवर इति त्वं वा कथं न लज्जसे इति भावः ॥ २४ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

प्रजात्यै सन्तत्यै नातिवोचन्ति न निन्दन्ति ॥ २१ ॥ ❀ ❀ अन्यथा रुद्राद्भयं स्यादिति दर्शयन् रुद्रं वर्णयति । एषेति सप्तभिः । ॥ २२ ॥ ❀ ❀ भूतपर्षद्भिः भूतगणैः परीत आवृतः ॥ २३ ॥ ❀ ❀ श्मशानचक्रानिलस्य शवभस्मस्थलचारिचक्रवातस्य धूल्या धूम्रो विकीर्णो विक्षिप्तः विद्योतो द्युतिमान् जटाकलापो यस्य सः, भस्मना अवगुण्ठः आवृतः अमलरुक्मवद्देहो यस्य सः ते देवरः त्वद्भगिनीभर्ता ॥ २४ ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

एवं तां स्तुत्वा कालविलम्बं प्रार्थयति—अथाऽपीति । प्रार्थितं तु यथेच्छं कर्तव्यमेव, सुतरां प्रजानिमित्तमलमत्यर्थं करवाणि । अथापि मुहूर्तं परिपाल्य, यावत्सन्ध्यापगमो भवति । तत्र हेतुः—यथा मां नाऽतिवोचन्तीति । अतिक्रम्य निन्दापूर्वकं यथा न वदन्ति । अस्मत्सजातीयाः सर्वे सर्वज्ञास्त एव धर्मशास्त्रकर्तारस्तेषामज्ञातं किमपि न भवतीति तत्कथनसम्भावना ॥ २१ ॥ ❀ ❀ एवं तां प्रार्थयित्वा तस्य कालस्य स्वरूपतो दोषमाह—एषेति । एषा वेला घोरतमा सर्वभोगविगर्हिता, न हि घोरा भोगाधिकरणं भवति । कालदेशयोः सर्वाधिकरणत्वात्तद्दोषोऽवश्यं परिहरणीयः । सर्वस्याऽपि कालस्य सन्ध्या रजोरूपा । सन्ध्यैव रात्री रजस्वला, सा परिहरणीयेति । अत एव सा पुष्पिता भवति, प्रत्यक्षतश्च तस्या रागो रजोरूपो दृश्यते । कामादिजनकत्वाद् भयहेतुरपि भवति, अतो घोरतमा । घोराणां भूतादीनां च संबन्धिनी भवति । घोरदर्शना च, सर्वत्रैवाऽन्धकारव्याप्त्या । घोरसंबन्धित्वमुपपादयति—चरन्ति यस्यां भूतानीति । तानि च भूतानि मन्त्रादिभिर्न निराकर्तुं शक्यानीत्युपपादयति—भूतेशानुचराणीति । महादेवस्य सेवकानि तानि भूतानि हेत्याश्चर्ये । कथमेतस्मिन् काले एवं प्रार्थितमिति तस्या भयमुत्पादयति ॥ २२ ॥ ❀ ❀ किञ्च । अस्य कालस्याऽधिष्ठात्री देवता महादेवः, स कामनाशकः । तच्छत्रुपरिग्रहस्तस्य काले क्रियते चेत् , तदा स

मारयिष्यतीति भयं जनयन् महादेवं स्तौति षड्भिः—एतस्यामित्यादिभिः—परिभ्रमो दर्शनं च संबन्धाभाव एव च। मारणे हेतुत्रितयं दोषाभावाय चाऽपरे ॥ १ ॥ तत्र प्रथमं तस्य परिभ्रमणमाह, देशान्तरागमनाय। एतस्यां सन्ध्यायाम्। साध्वीति संबोधनं निषिद्धकाम-वस्त्वव्यावृत्त्यर्थम्। भगवानित्यप्रतिहतगतिः। परिभ्रमणमुपकारहेतुरित्याह—भूतभावन इति। भूतानि भावयति पालयतीति। सन्ध्यायामुत्पत्तिर्यदि भवेत्, तेन तस्य च लोकस्य नाशो भवेत्। अतः सर्वत्र सन्मार्गवर्तिषु भोगनिराकरणार्थं भूतपर्षद्भिः परीतः। भूतरूपा एव तस्य पर्षदः सभापतयो भवन्ति। तैः सहितो वृषमारुह्य स्वयमटति भूतानां राजा। भूतानां स एव कालः, अतः स्वभृत्यरक्षार्थं भूतराट् पर्यटति। यदि कश्चिदन्यायं कुर्यात्तदा पर्षद्भिस्तं दण्डयति। धर्मकारिणमपि सन्ध्यायामधर्मकारिणं मारयतीति सूचयितुं वृषेणाऽटतीत्युक्तम्। वृषो धर्मः, यस्तमेवाऽऽरुह्य तिष्ठति स कथमन्यं तादृशं परिपालयेत्? धर्मस्य साक्षित्वार्थं वा ॥ २३ ॥ एवं देशान्तरगमनाभावाय तस्य परिभ्रमणमुक्त्वा, अत्र स इदानीं स्वभावतः स्थितः पश्यत्येवेत्याह—श्मशानेति। अयं देवो महादेव-स्त्रिभिरपि चक्षुर्भिः पश्यति। गार्हपत्यादयस्तस्यैव चक्षूंषि। स च देवः, अतीन्द्रियमपि पश्येत्। देवर इति। लज्जोत्पादनम्। एक-जामातॄणां भ्रातृत्वव्यवहाराद्देवरत्वम्। पतिरपि देवर उच्यते, अग्निरूपत्वाद्भगवतः 'तृतीयो अग्निष्टे पतिः' इति श्रुतेः। दैत्यानां च देवं सुखं रातीति तवोपास्यो देवरः। तस्याऽतिक्रमः सर्वथाऽनर्थहेतुः। तस्य स्वभावत एव मृतस्थानक्रीडापरत्वान्न तस्य मारणे काचिच्छङ्केत्यभिप्रायेणाऽह—श्मशाने यश्चक्रानिलो वात्या, तेनोद्गता या धूलिः, तथा धूम्रा धूसरवर्णाः, विकीर्णा विद्योतमानाश्च या जटाः, तासां कलापो यस्य। प्रलयहेतुत्वाद् भस्मधूसरत्वाभावे विकीर्णा विद्योतमानाः प्रलयमेव कुर्युः। भस्मान्तरं च प्रलय-मेघान् न स्पृशति, चक्रानिलादन्यो न सर्वतो भस्मसंबन्धं कारयत्यतस्तथाभाव उचित एव। किञ्च, भस्मावगुण्ठामलरुक्मदेहः। भस्मना अवगुण्ठः प्रक्षालनं यस्य। अमलं यद्रुक्मं सुवर्णम्, रजतं वा, तद्भस्मना घृष्टमत्युज्ज्वलं भवति। अतस्तस्य भस्माऽपेक्षाऽस्तीति स्वल्पेऽप्यपराधे मारयेदित्यर्थः। देवर इति कल्पान्तरे प्राचेतस एव, षष्टिकन्यापक्षेऽपि महादेवाय सतीं दत्तवानित्यध्यवसेयम्। प्रथममन्वन्तरे यत्र सतीजन्म, न[१] तत्र दित्यादीनां जन्म। देवं पतिं रातीति देवरः श्वशुरो वा। तथा च मरीचिभ्रातृत्वान्महा-देवोऽपि देवरः। कन्यासमये प्रार्थितो महादेवः पतिं दत्तवानिति देवरः ॥ २४ ॥

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

श्मशानेत्यत्र। महादेवस्य कथं देवरत्वमित्याकांक्षायां तद्व्युत्पादयन्ति—एकेत्यादि। अयं पक्षः श्रीधरेणाऽप्युक्तः। परन्तु सत्याः स्वायम्भुवपुत्रीत्वेन दितेश्च प्राचेतसपुत्रीत्वेनैकजामातृत्वं व्यवहारे बाधितमिति पक्षान्तरमाहुः—पतिरित्यादि। उच्यत इति। यथा पाञ्चाल्या भीमादिः। भगवत इति। शिवस्य, तस्याऽष्टमूर्तिष्वग्नेरपि गणनात् तथेत्यर्थः। एतमपि पक्षं प्रसिद्धिविरुद्धमाशङ्क्य, पक्षान्तरमाहुः—दैत्यानामित्यादि। तथा च यौगिक एवाऽयं शब्दो न रूढ इत्यर्थः। प्रथमे(-म-)पक्षं साधयितुं युक्त्यन्तरमाहुः—कल्पान्तर इत्यादि। श्रीधरोक्ते अस्वरसं सूचयन्ति—प्रथमेत्यादि। अत्राऽपि क्लिष्टत्वमाशङ्क्य योगान्तरमाहुः—देवमित्यादि ॥ २४ ॥

### श्रीगिरिधरकृता बालप्रबोधिनी

अथापि त्वदुपकारानुरूपेण उपकर्तुमशक्यत्वेऽपि ते तव प्रजात्यै पुत्रोत्पत्त्यै एतं कामं मनोरथमलं पूर्णं करवाणि, परन्तु यथा लोका मां नातिवोचन्ति च निन्देयुः तथा मुहूर्तं सन्ध्याकालं प्रतिपालय प्रतीक्षस्व ॥ ३१ ॥ ❀ ❀ न केवलं लोकनिन्दामात्रं किन्तु अनर्थान्तरमपीति सूचयन् सन्ध्यां वर्णयति—एषेति सप्तभिः। एषा सन्ध्या घोरतमा अतिभयङ्करी न रतियोग्या, अस्यां रतौ कृतायां महाननर्थः स्यादित्यर्थः। घोरत्वमेवोपपादयति—स्वरूपतः घोरं दर्शनं यस्याः सा घोराणां वेला च। के ते घोरा इत्यपेक्षायामाह—चरन्तीति। यस्यां सन्ध्यायां भूतेशो रुद्रस्तस्यानुचराणि भूतानि भूतप्रेतपिशाचादीनि चरन्ति सर्वत्र पर्यटन्तीत्यर्थः। नात्र सन्देहः कर्तव्य इत्याह—हेति ॥ २२ ॥ ❀ ❀ न केवलं तदनुचराणि भूतान्येव चरन्ति येन मन्त्रादिनाऽपि तन्निवारणं स्यात्किन्तु स्वयमपीत्याह—एतस्यामिति। तवायं निर्बन्धो न युक्त इति सूचयन् सम्बोधयति—साध्वीति। एतस्यां सन्ध्यायां भूतराड् भूतानां राजा रुद्रः भूतानां प्रमथादीनां परिषदः सभाः समूहास्तैः परीतः परिवेष्टितो वृषेण स्ववाहनरूपनन्दीश्वरेणाटतीत्यन्वयः। स च न मन्त्रादिना निवारणयोग्यः, यतो भूतभावनः सर्वजनपालको भगवान् ऐश्वर्यादिपूर्णगुणः ॥ २३ ॥ ❀ ❀ एवं चेत्तर्हि तस्य सम्मुखमात्रं न वर्तनीयमित्याशङ्क्याह—श्मशानेति। ते देवरः-दिवु-क्रीडायां धातुः, देवं क्रीडासाधनं पतिं रातीति देवरः-तव पत्यर्थं कन्यादशायामाराध्यः पतिप्रदाता मे पितृव्यश्च देवो महादेव-स्त्रिभिः सोमसूर्याग्निनेत्रैः पश्यतीत्यन्वयः। यद्वा सत्या अपि दक्षकन्यात्वेन दितिभगिनीत्वाद् एकस्य जामातरः परस्परं भ्रातरो-ऽव्यवह्रियन्तेऽतो मम भ्राताऽसौ तव देवर इति लज्जार्थं देवरत्वमुक्तम्, अतः स्वजनत्वान्महेश्वरत्वाच्च तत्सम्मुखे निषिद्धाचरणं न युक्तमिति भावः। तदाचारः स्वरूपं च भयङ्कर इति भीषयन्नाह—श्मशानेति। श्मशानेषु यश्चक्रानिलो वातमण्डली तस्मिन् यो धूलिस्तेन धूम्रा विकीर्णा विक्षिप्ताः विद्योतिताश्च या जटास्तासां कलापो यस्य सः, भस्मना अवगुण्ठः प्रावृतः अमलरुक्मवद्देहो यस्य सः ॥ २४ ॥

---

१. एतन्नास्ति क. ग. ङ.।

हिन्दी अनुवाद

तो भी तुम्हारी इस सन्तान-प्राप्तिकी इच्छाको मैं यथाशक्ति अवश्य पूर्ण करूँगा। परन्तु अभी तुम एक मुहूर्त ठहरो, जिससे लोग मेरी निन्दा न करें॥ २१॥ ❀ ❀ यह अत्यन्त घोर समय राक्षसादि घोर जीवोंका है और देखनेमें भी बड़ा भयानक है। इसमें भगवान् भूतनाथके गण भूतप्रेतादि घूमा करते हैं॥ २२॥ ❀ ❀ साध्वि! इस सन्ध्याकालमें भूतभावन भूतपति भगवान् शङ्कर अपने गण भूत-प्रेतादिको साथ लिये बैलपर चढ़कर विचरा करते हैं॥ २३॥ ❀ ❀ जिनका जटाजूट श्मशानभूमिसे उठे हुए बवंडरकी धूलिसे धूसरित होकर देदीप्यमान हो रहा है तथा जिनके सुवर्ण-क्रान्तिमय गौर शरीरमें भस्म लगी हुई है, वे तुम्हारे देवर श्वशुर महादेवजी अपने सूर्य, चन्द्रमा और अग्निरूप तीन नेत्रोंसे सभीको देखते रहते हैं॥ २४॥

न यस्य[1] लोके स्वजनः परो वा नात्यादृतो नोत कश्चिद्विगर्ह्यः।
वयं व्रतैर्यच्चरणापविद्धामाशास्महेऽजां बत भुक्तभोगाम्॥ २५॥
यस्यानवद्याचरितं मनीषिणो गृणन्त्यविद्यापटलं बिभित्सवः।
निरस्तसाम्यातिशयोऽपि यत्स्वयं पिशाचचर्यामचरद्गतिः सताम्॥ २६॥
हसन्ति यस्याचरितं हि दुर्भगाः स्वात्मन् रतस्याविदुषः समीहितम्।
यैर्वस्त्रमाल्याभरणानुलेपनैः श्वभोजनं स्वात्मतयोपलालितम्॥ २७॥
ब्रह्मादयो यत्कृतसेतुपाला यत्कारणं विश्वमिदं च माया।
आज्ञाकरी तस्य पिशाचचर्या अहो विभूम्नश्चरितं विडम्बनम्॥ २८॥

श्रीधरस्वामिविरचिता भावार्थदीपिका

ननु तथापि महत्त्वेनादरणीयस्य स्वजनस्य च तव स सर्वं क्षमेतैव तत्राह। यस्य स्वजनादिर्नास्ति समत्वात्। ईश्वरस्य ऐश्वर्यमेवाह। येन चरणेनापविद्धां निर्माल्यवद्दूरतस्त्यक्तां तेन भुक्तभोगामजां मायां तन्मयीं विभूतिं महाप्रसाद इत्याशास्महे। व्रतैस्तमाराध्य॥ २५॥ ❀ ❀ अनिषिद्धसुखत्यागादसौ पिशाच इत्युपहासो न कार्य इत्याह द्वाभ्याम्। यस्यानवद्यं विषयासक्तिशून्यमाचरितम्। बिभित्सवो भेत्तुमिच्छवः॥ २६॥ ❀ ❀ समीहितमभिप्रेतं लोकशिक्षारूपम-विदुषोऽविद्वांसः। यद्वा। न विद्वानन्यो यस्मादिति तस्य सर्वज्ञस्येत्यर्थः। दुर्भगानेवाह। यैरिति। श्वभोजनं शुनां भोज्यं शरीरं स्वात्मतया यमेवात्मेति बुद्ध्या॥ २७॥ ❀ ❀ अहो अतर्क्यं तस्याचरणमित्याह। ब्रह्मादयो येन कृतान्सेतून्स्वस्वाधिका-रान्पालयंति यः कारणं यस्य येन कृतमिदं विश्वम्। माया च यस्याज्ञाकरी। विभूम्नः परमेश्वरस्य विडंबनमतर्क्यमित्यर्थः॥ २८॥

श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

अत्राशंकते नन्विति। यद्यपि पश्यति तथापीति संदर्भकारस्तस्य श्लोकस्यावतरणिकामित्थमाह—ननु श्मशानादि-संबंधः कथमस्मै रोचते यदि रोचते तर्ह्यस्माकं दुर्वृत्तमपि रोचेत। किञ्च यदि देवरस्तर्ह्यस्मत्सदृश एव कथमेतासदृशस्यादरः स्यात्त-त्राह—नेति। महानुभावत्वादसभ्यं सर्वसंपत्प्रदत्वात्तस्यानादरे दोष एव स्यादिति भावः॥ २५॥ ❀ ❀ ननु तस्यापि दिगंबरतया सदैव स्त्रिया सह मिथुनीभूय तिष्ठतः सर्वं सच्चरितमहं जानामीति तत्राह—हे कुमनीषिणि दिते मत्तः सकाशात्तच्च-रितं शृण्विति यस्यानवद्यमनिंद्यमेव चरितं मनीषिण एवादरेण गृणंति ते संसारान्मुक्ता भवंतीत्यर्थः। पटलो दर्शनप्रतिबंधको नेत्ररोगविशेषः। इह चाविद्यैव पटलं भगवद्दर्शनप्रतिबंधकत्वाद् निरस्तावपगतौ साम्यातिशयौ तुल्याधिक्ये यस्मात्स तथा पिशाचो देवयोनिविशेषो भूतभेदस्तादृशी चर्यां तैः सह चरणं वा सतां सदाचारनिरतानां गतिराश्रयः स्वयमचरन्न तु कस्यचिदा-ज्ञयेति। देहानुशयत्यागार्थमेवेति तत्त्वम्॥ २६॥ ❀ ❀ ये तु तच्चरितं निन्दन्ति ते संसारिणो भवंतीत्याह—हसंतीति। लोकशिक्षेति। देहस्य कुत्सितत्वं दर्शयित्वा स्वात्मनिष्ठा कर्त्तव्येतिलोकशिक्षारूपम् आर्षत्वापेक्षया सुगमपंथानमाह—यद्वेति। इत्यर्थ इति। नव्या पञ्चमीबहुव्रीहिणायमर्थो लभ्यत इति भावः। दुर्भगा न कस्याप्यनुकंप्या इत्यर्थः। यद्वा। स्वात्मनः स्वस्यात्मनि श्रीकृष्णे रतस्य समीहितमभिप्रायम्। तच्च समीचीनगंधपुष्पवस्त्राभरणादीनि मत्प्रभोः श्रीकृष्णस्यैवार्हाणीति तस्मै यान्यतो नाहमु-पभुंज इत्येवंरूपम्। दुर्भगलक्षणमाह—यैरित्यादि॥ २७॥ ❀ ❀ ❀ तस्य हरस्य अतर्क्यं तर्कागोचरम्। "यस्याज्ञया जग-त्स्रष्टा विरिञ्चिः पालको हरिः। रुद्रः संहारकर्त्ता च नमस्तस्मै पिनाकिने" इति श्रुतेः। इत्यर्थ इति। न हि तर्कागोचरे किंचिद्वक्त-

१. प्रा० पा०—यस्य।

व्यमस्तीति भावः । अत एवोक्तं गंधर्वराजेनापि "अतर्क्यैश्वर्ये त्वय्यनवसरदुः स्थो हतधियः" इति महिम्नाख्यस्तवे । यद्वा । तत्र विश्वेश्वरे के वयं वराका इत्याह—ब्रह्मादयो मन्वादिरूपेण यत्कृतान्सेतून् । सायं स्त्रीसंगभोजनस्वापत्यागादिरूपा मर्यादाः पालयन्ति "चत्वारीमानि कर्माणि संध्यायां परिवर्जयेत् । आहारं मैथुनं निद्रां स्वाध्यायञ्च चतुर्थकम्" इति स्मृतेः ।। २८ ।।

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

ईश्वरस्य समत्वादिति "ईश्वरस्तु पर्जन्यवद्द्रव्य" इति न्यायात् तन्मयीं मायाकार्य्यरूपां विभूतिं धनादिसंपत्तिम् ।। २५ ।। २६ ।। ❀ ❀ अभिप्रेतमभिप्रायविषयीभूतं देहस्य कुत्सितत्वं दर्शयित्वा स्वात्मनिष्ठा कर्त्तव्येति लोकविशेषं प्रति शिक्षारूपं प्रथमार्थे द्वितीया मननगौरवाद्वेति ।। २७ ।। ❀ ❀ गुणावतारत्वेन परमेश्वराभेददृष्ट्याह । ब्रह्मादय इति । स्वाधिकारान् प्रजासृष्ट्यादिलक्षणान् पिशाचानामिव चर्या देहानादरेणेतस्ततः पर्य्यटनम् "चर्य्यापर्य्यटने प्रोक्ता" इति विश्वः । देहस्य भाविदशानुकरणं विडम्बनं वैराग्यबोधकत्वादतर्क्यमित्यार्थिकोऽर्थः ।। २८ ।।

### श्रीमद्वीरराघवव्याख्या

यर्हि स्वजनत्वादादरणीयस्तर्हि तत एव स्वजनानामस्माकं सर्वं क्षमेतैव रुद्र इत्यत्राह । नेति । यस्य रुद्रस्य स्वजनः परः अस्वजनो वा लोके नास्ति नाप्यतीवादरणविषयः कश्चिद्विगर्ह्यः निन्द्योऽपि नोत नास्त्येव प्राकृतस्य हि विषमदृष्टेः स्वार्थापेक्षिणः स्वजनादिविभागः अस्य तु समदृष्टेरुपेक्षितसांसारिकलोकतद्विभूतेर्न स्वजनादिविभागोऽस्तीति भावः । एतदेवाह । वयमिति । सांसारिकाभिप्रायेण वयमित्युक्तं तत्त्वदर्शिनोऽपि स्वस्य तन्मण्डलस्थत्वाद्वयं संसारिणः लोकाः यस्य रुद्रस्य चरणाभ्यामपविद्धां निर्माल्यवद् दूरतः परित्यक्तां तेन भुक्तभोगामजां मायां तन्मयीं विभूतिं व्रतैर्नानाविधैश्वर्यसाधनैराशास्महे प्रार्थयामहे ।। २५ ।। ❀ ❀ ननु श्मशानेषु पिशाचवच्चरतोऽशुचेरस्मात् किमाशङ्कसे इत्यत्राह । यस्येति । यस्य रुद्रस्यानवद्यं निर्दुष्टमाचरितं चरित्रं मनीषिणः बुद्धिमन्तः अविद्यायाः पटलमावरणं विभित्सवः भेत्तुमिच्छवः ज्ञानार्थिन इत्यर्थः । गृणन्ति कीर्तयन्ति "आरोग्यं भास्करादिच्छेच्छ्रियमिच्छेद्धुताशनात् । शङ्कराज्ज्ञानमन्विच्छेन्मोक्षमिच्छेज्जनार्दनात्" इत्युक्तरीत्या फलविशेषार्थिभिरुपास्यत्वात् । कैश्चिज्ज्ञानार्थिभिस्तच्चरितमुपादेयमिति न पिशाचवच्चरतीति स निन्दनीय इति भावः । तर्हि किमर्थं स पिशाचवच्चरति तत्राह । स्वयं निरस्तसाम्यातिशयोऽपि । निरस्तं साम्यमतिशयश्च यस्मात्तथाभूतोऽपि सतां गतिः ज्ञानोपायः सन् पिशाचचर्यां चरति स्वोपासकैरपि जिज्ञासुभिरेवं वर्तितव्यमिति तच्छिक्षार्थं पिशाचचर्यां चरतीति भावः । तथाच श्रुतिः "यथाक्रतुरस्मिँल्लोके पुरुषो भवति" इति निरस्तसाम्यातिशयत्वं च ज्ञानप्रदत्वे वेदितव्यं प्रकरणत्वात् यद्वैतत्सर्वं रुद्रशरीरकपरमात्मदृष्ट्योक्तमिति वेदितव्यम् ।। २६ ।। ❀ ❀ एवमन्वयमुखेन तच्चरित्रस्यानिन्द्यत्वमुक्त्वा व्यतिरेकमुखेनाप्याह । हसन्तीति । स्वात्मनि रतस्य स्वात्मानुभवैकनिष्ठस्य समीहितं चेष्टितमविदुषः आर्षत्वाद्वचनव्यत्ययेन द्वितीया अविद्वांसः यस्य रुद्रस्याचरितं हसन्ति निन्दन्ति ते दुर्भगाः के तेऽविद्वांसः ये तस्याचरितं हसन्तीत्यत्राह । यैः कर्तृभिः वस्त्रादिभिः करणैः श्वभोजनं शुनो भोज्यं स्वशरीरं स्वात्मतया स्वात्माभिन्नत्वेन उपलालितमयं देह एवात्मेति बुद्ध्या देहो यैर्वस्त्रादिभिरुपस्क्रियते तेऽविदुष इत्यर्थः ।। २७ ।। ❀ ❀ एवमन्वयव्यतिरेकाभ्यां तच्चरित्रमनिन्द्यमित्युक्त्वा तस्य पिशाचचर्या विडम्बनमात्रमेवेत्याह । ब्रह्मादयो यत्कृतसेतुपाला इत्याद्युक्तिः रुद्रप्रशंसाद्योतिनी ब्रह्मादय इति अतद्गुणसंविज्ञानो बहुव्रीहिः चित्रगुमानयेतिवत् ब्रह्मणोऽर्वाचीना इत्यर्थः । अन्यथा पूर्वापरविरोधात् ब्रह्मणः स्रष्टृत्वं तद्दत्तनामधेयत्वं च प्रागुक्तं तेन ब्रह्मणो नमस्कार्यत्वं च वक्ष्यतेऽतो यथोक्त एवार्थः । यद्वा ब्रह्मादयः पुलस्त्यपुलहादयः न च ब्रह्माण इत्येते पुराणे निश्चयं गता इति तेषां ब्रह्मशब्दवाच्यत्वावगमात् यद्वा रुद्रशरीरकपरमात्मदृष्ट्येदमुक्तमित्यवगन्तव्यं ब्रह्मादयो येन रुद्रेण कृताः सेतवः मर्यादास्तान् पालयन्तीति तथा इदं विश्वं यत्कारणं यो रुद्रः कारणं यस्य तदिति बहुव्रीहिः विश्वं यत्कारणमित्यर्थः । रुद्रस्य विश्वसंहर्तृत्वात्तदभिप्रायेण विश्वं यत्कारणमित्युक्तं माया च यस्याज्ञाकरी मायाहंकृतिस्तत्कार्यत्वाद् यस्याज्ञाकरी अधिष्ठातृत्वात्तस्य विभूम्नो महीयसो रुद्रस्य पिशाचचर्यारूपं चरितं विडम्बनमनुकरणमात्रमेव अहो इत्याश्चर्ये । स्वत एवंविधस्य महीयसः पिशाचचर्यानुकरणमाश्चर्यमित्यर्थः ।। २८ ।।

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

गर्भिणीवधनोदार्थं पिशाचचर्यायां हर्याज्ञाकारित्वेन हरेः प्रियत्वादतस्तदप्रियं तस्याप्यप्रियमितीदानीमिदं कार्यमित्यभिप्रेत्य तस्य हरेरतिशयितमाहात्म्यमाह । न यस्येति । व्रतैर्हरिप्रीतिकरैर्यस्य चरणावविद्धां पदा तिर्यक् प्रहतां भुक्तभोगामप्यजां गृहभार्यां पुत्रादिरूपां प्रकृतिशब्दवाच्यां श्रियमाशास्महे इच्छामः बतेत्यनेन हरिमाहात्म्यमचिन्त्यमित्यास्वादयति ।। २५ ।। ❀ ❀ अविद्यालक्षणं पटलं दर्शनप्रतिबन्धकनेत्रदोषं विभित्सवो भेत्तुकामा मनीषिणो यस्यानवद्याचरितं जगत्सृष्ट्यादि कर्म गृह्णन्ति श्रवणादिनेति शेषः । यश्च हरिर्निरस्तसाम्यातिशयस्तस्य हरेराज्ञया देवेन्द्रादिसतामाश्रयो हरः पिशाचचर्यामचरदित्यन्वयः ।

पिशाचचर्यामचरद्रुद्रो विष्ण्वाज्ञयैव तु । गर्भिणीवधनोदार्थमहो विष्णुर्विडम्बकृत् ।।

इति वचनबलान्मध्ये हर्यांज्ञयेति पदमध्याह्रियते पशुपतावुक्तगुणानामसंभवाच्च। अहं रुद्राय धनुरातनोमीति पराधीनताप्रतीतेश्च ॥ २६ ॥ ❀ ❀ ननु केचिद्धरेश्चरितमपि निन्दन्ति तत्कथमित्याशङ्क्य ते तमःप्राप्तियोग्या असुरजना इति भावेनाह। हसन्तीति। यैः शुनो भोजनमन्नमिदं शरीरं वस्त्रादिभिः स्वात्मतया निजस्वरूपतया उपलालितं ते पुरुषाः समीहितं विडम्बनरूपचेष्टाविशेषमविदुषोऽविद्वांसोऽज्ञानवन्तोऽतएव दुर्भगा दुःखरूपतम आप्तुं योग्याः स्वात्मनि स्वरूप एव रतस्याचरितमुपनयात् ज्येष्ठविवाहाच्च पूर्व्वं पुत्रोत्पत्त्यादिरूपं हसन्ति। न देवचरितं चरेदिति द्योतको हिशब्दः ॥ २७ ॥ ❀ ❀ इतोऽपि ब्रह्मरुद्राद्यचिन्त्यमहिमा परमात्मेत्याह। ब्रह्मादय इति। ब्रह्मादयो देवा येन हरिणा कृतधर्मसेतुं तदाज्ञया पालयन्ति इति तत्कृतसेतुपालाः, इदं विश्वं हरिः कारणं निमित्तं यस्य तद्यत्कारणं तत्कारणत्वं च मायया स्वेच्छया न पराधीनतया हिशब्देन स हि कर्मफलोज्झित इति मानं सूचयति तस्य हरेराज्ञां करोतीति आज्ञाकारी केयं शिवस्य पिशाचचर्या हरेराज्ञा शिवः पिशाचचर्यामकरोदित्युक्तं भवति ततः किं तत्राह। अहो इति। विभूम्नः परिपूर्णस्य हरेर्विडम्बनं लोकानुकारिरूपं चरितमहो जगत्पूज्यान् रुद्रादीनपि स्वाज्ञाकर्मणि प्रवर्तयतीति। अत्र रुद्रविषयत्वेन यथास्थितव्याख्यानस्यानुपपत्तिरुक्तेति नेह प्रपञ्च्यते ॥ २८ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

ननु श्मशानादिसम्बन्धः कथमस्मै रोचते यदि रोचेत तदास्माकं दुर्वृत्तमपि रोचेत। किञ्च यदि देवर इत्युच्यते तदास्मत्सदृश एवासौ कथमेतावदादरविषयः स्यात् तत्राह। न यस्येति। महानुभावत्वादसभ्यं सर्व्वसम्पत्प्रदत्वात् तस्यानादरे दोष एव स्यादिति भावः। अत्र भुक्तभोगामिति यच्चरणापविद्धामिति च लोकशिक्षणाय तस्य कादाचित्कीं लीलामालम्ब्य सिद्धान्तितम् ॥ २५ ॥ २६ ॥ ❀ ❀ समीहितं देहस्य कुत्सितत्वं दर्शयित्वा स्वात्मनिष्ठा कर्त्तव्येति लोकविशेषं प्रति शिक्षारूपम् ॥ २७ ॥ ❀ ❀ गुणावतारत्वेन परमेश्वराभेददृष्ट्याह। ब्रह्मादय इति विडम्बनं देहस्य भाविदशानुकरणेन वैराग्यबोधकमित्यर्थः ॥ २८—३६ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

नन्वार्त्तया मया लज्जाभयाभ्यां जलाञ्जलिर्दत्त एव त्वयाप्यत्र न भेतव्यमेव महत्त्वेनादरणीयस्य स्वजनस्य तव सर्व्वमेवासौ देवः क्षमेतैवेति तत्राह। न यस्येति। यस्य स्वजनादिर्नास्ति ईश्वरत्वेन सर्व्वत्र साम्यादिति भावः। ऐश्वर्य्यमेवाह येन चरणेनापविद्धां निर्माल्यवद् दूरे त्यक्तां भुक्तभोगामजां तन्मयीं विभूतिं महाप्रसादं वयमाशास्महे तत्रापि व्रतैः सकामा वयं तदुच्छिष्टविषयभोजिन एव भवाम इत्यर्थः ॥ २५ ॥ ❀ ❀ ननु तस्यापि दिगम्बरतया सदैव स्त्रिया सह मिथुनीभूय तिष्ठतश्चिताभस्मास्थिभूषणस्य सर्वं सच्चरितमहं जानामीति तत्र कुमनीषिणि हे दिते! मत्तः सकाशात् तच्चरितस्य तत्त्वं शृण्वित्याह। यस्य अनवद्यमनिन्द्यमेव चरितं तत्सर्व्वं मनीषिण एवादरेण गृणन्ति ते संसारान्मुक्ता भवन्तीत्यर्थः। निरस्तेति भगवता सहैक्यात्। यद्वा निरस्तः साम्येन साम्यगुणवत्त्वेन अतिशयो यस्मात् सः ॥ २६ ॥ ❀ ❀ ये तु निन्दति ते संसारे बद्धा भवन्तीत्याह। हसन्तीति। दुर्भगाः न कस्याप्यनुकम्पा इत्यर्थः। स्वात्मन् स्वस्यात्मनि श्रीकृष्णे रतस्य समीहितमभिप्रायमविदुषोऽविद्वांसः। समीहितञ्चेदं समीचीनगन्धपुष्पवस्त्राभरणादीनि मत्प्रभोर्भगवत एवार्हाणीति तस्मै दत्तान्यतो नाहमुपभुञ्ज इत्येवं रूपम्। यैर्दुर्भगैः श्वभोजनं शुनां भोज्यं शरीरं स्वात्मतया अयमेवात्मेति बुद्ध्या वस्त्रादिभिरुपलालितम् ॥ २७ ॥ ❀ ❀ तत्र विश्वेश्वरे के वयं वराका इत्याह। ब्रह्मादयोऽपि यत्कृतान् सेतून् सायं स्त्रीसङ्गभोजनस्वापत्यागादिरूपमर्य्यादाः पालयन्ति। स एव कारणं यस्य तत् माया च यस्याधीना तस्याप्यहो चित्रं पिशाचचर्य्या तस्माद्विभूम्नः परमेश्वरस्य चरितं सर्व्वं विडम्बनमनुकरणमात्रमेव ॥ २८ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

अजां मायामयीं सम्पदम्। स पश्यतीति त्रिषु श्लोकेष्वनुषङ्गः ॥ २५ ॥ ❀ ❀ अविद्यापटलमज्ञानावरणम् ॥ २६ ॥ ❀ ❀ स्वात्मन् स्वकीये उपास्ये वासुदेवे आत्मनि अन्तर्यामिणि रतस्य "सत्त्वे च तस्मिन् भगवान् वासुदेव अधोक्षजो मे नमसाभिधीयते" इति वक्ष्यमाणाद् अविदुषः वासुदेवज्ञानवतः "अब्रह्म" इति श्रुतेः अकारो वासुदेवः स्यादिति वचनाच्च समीहितं येन केनापि वेषेण वासुदेवः स्मर्तव्यः इत्येवं भूतमीहितमाचरितं दुर्भगा हसन्ति निन्दन्ति ॥ २७ ॥ ❀ ❀ अथ रुद्राणां शङ्करश्चास्मीति श्रीमुखवचनाद्भगवद्विभूतिभूते श्रीरुद्रे भगवद्दृष्ट्येदमुच्यते। ब्रह्मादय इति ॥ २८ ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

एवं लज्जां भयं चोत्पाद्य संबन्धेनाऽपराधसहनमाशङ्क्य, तस्य संबन्धापेक्षा नाऽस्तीत्याह—❀ ह्यस्येति। हीति युक्तोऽयमर्थः। यस्तूत्पद्यते संबध्यते वा क्वचित्, तस्य संबन्ध्यपेक्षा; महादेवस्य ब्रह्मत्वेन तदुभयाभावात् न संबन्ध्यपेक्षेत्यर्थः। अत एव लोके तस्य स्वजनो नाऽस्ति। स्वश्चासौ जनश्च, आत्मीयो नास्तीत्यर्थः। परः शत्रुः। एतद्द्वयं देहधर्मः। नाऽस्यादृत इति अत्यन्तस्नेहपा-

त्रम्, विगर्ह्यो निन्दितो द्वेषपात्रम्, एतदुभयमन्तःकरणधर्मः, स्निग्ध एवाऽऽदृतो भवति, गर्हितः स्नेहरहित एव। ननु तस्य विषयाणामपेक्षितत्वाद् य एव विषयान् प्रयच्छति यो वा निवर्तयति स तथा भविष्यतीति चेत्तत्राऽऽह—वयं व्रतैरिति। तस्य सहजो विषयभोगः, परं तेन त्यक्तः। तथापि सा अजा प्रकृतिर्विषयरूपा तस्यैव, तद्दत्तैव प्राप्यते सर्वैः, यथा महाराजविभूतिः, अत एवाऽस्माभिरीश्वरसंबन्धाय[१]नपेक्षं व्रतैर्नितमविशेषैराराध्य, पाशुपतादिभिर्वा; तद्दत्तामजामाशास्महे। स हि सेवितः प्रसादत्वेन तां प्रयच्छति। सा हि भोगार्थमुपस्थिता पदयोः पतति। तदा स्वस्याऽन[२]भिप्रेतां मत्वा तामुपासकेभ्यः पदेनाऽपविद्धां प्रयच्छत्यवज्ञया भोगस्याऽनभिप्रेतत्वं मन्यमानः। तत्रापि भुक्तभोगामिति दृष्टदोषेण परित्यक्तेति ज्ञापयति। अत एव तदपेक्षा सर्वस्य, न तस्य कस्यचिदपेक्षा। सर्वेषामेव सेवकत्वान्नोपेक्षाऽपि॥२५॥ ❀ ❀ तर्हि विगर्हितरूपेण किमिति तिष्ठतीत्याशङ्कयाऽऽह—यस्याऽनवद्यमाचरितमिति। यस्य महादेवस्य। अनवद्यमाचरितं सर्वविषयत्यागेन स्वात्मचिन्तनरूपम्। मनीषिणो बुद्धिमन्तो मोक्षोपायान्वेषिणः, अत एवाऽविद्यापटलं बिभित्सवोऽविद्याभेदनार्थं प्रवृत्ताः आचरितं गृह्णन्ति। न हि महादेववद्यावन्मनुष्यो न तिष्ठेत्, तावत्कस्यचिज्ज्ञानं भवति। अत एव भगवान् महादेवो नित्यनिवृत्तानर्थोऽपि लोकशिक्षार्थं पिशाचचर्यामचरत्। मतान्तरे महान् हीनभावं प्राप्नोति चेत्तदा मुच्यते, समभावे संसारः, उत्कर्षाहङ्कारे हीनभावः। अतः सतां स्वयं तथा भूत्वाऽपि शिक्षक इति गतिर्भवति। उपदेष्टा, फलं वा। देवोत्तमस्य पिशाचत्वमेवाऽपकर्षः। एवं मनुष्यैर्गोमृगकाकचर्या कर्तव्येत्युपदेशः॥२६॥ ❀ ❀ ननु लोके निन्दितो महादेवः कथमेवं स्तूयते? तत्राऽऽह—हसन्तीति। तत्पदं गंतुमशक्तास्तं हसन्ति निन्दन्तीत्यर्थः। यस्य सर्वोपकारार्थं प्रवृत्तस्याऽऽचरितम्। सुदुर्भगा इति भाग्यरहिताः। सर्वोऽपि स्वसमानं दृष्ट्वा स्वाभिलषितं वा स्तौति, तद्विपरीतं तु हसति। तद्वैलक्षण्यमाह—स हि पूर्णज्ञानः आत्मारामः। तदाह—आत्मन्रतस्येति। अन्ये त्वज्ञा बहिर्मुखाः। अतएवाऽविदुषः, सम्यगीहितं भगवच्चरित्रं न जानन्ति। वैलक्षण्याभिनिवेश एव निन्दायां हेतुरिति। निन्दकानां विषयाभिनिवेशमाह—यैरिति। वस्त्राणि उष्णीषादीनि, माल्यानि पुष्पाणि, आभरणानि कङ्कणादीनि, अनुलेपनानि चन्दनादीनि-चत्वार एते पदार्था देहोपलालनहेतवः। ये पुनरेतदुपलालकास्ते देहात्माभिमानिन इति निश्चितम्। वस्तुतस्त्वयं देहः श्वभोजनम्, ग्राम एव तेषां मरणसम्भवान्न गृध्रादीनां ग्रहणम्। केवलमुपलालने धर्मो वा भवेदिति तन्निवृत्त्यर्थमाह—स्वात्मतयेति। स्वपदेन भगवत्त्वेन, तदधिष्ठातृत्वेन वा उपलालनं व्यावर्तितम्, अन्यथा 'भोगैरात्मानमात्मनि' इति पक्षो विरुध्येत॥२७॥ ❀ ❀ ननु महादेवस्य पिशाचचर्यायां किमित्येवमभिप्रायः कल्प्यते? शापात्पिशाचत्वं जातमित्येवं कथं नोच्यत इत्याशङ्कयाऽऽह—ब्रह्मादय इति। भवेदेतदेवम्, यद्युत्कर्षहेतुर्न स्यात्। सर्वोत्कृष्टा लोके ब्रह्मादयः, ते येन महादेवेन कृता मर्यादा मोक्षमभिव्याप्य वर्तन्त इति सेतुरूपाः, तेषां परिपालकाः, आज्ञाकारिण इत्यर्थः इदं च विश्वं यत्कारणम्, या माया कारणं यस्य। सा माया आज्ञाकारिणीति। आज्ञां चेत् प्रयच्छेत्, तदा माया महादेवभोगार्थं ब्रह्माण्डकोटीः सृजेत्। एवं विश्वकारणं विश्वप्रवर्तकांश्च यो नियमयति, तस्य पिशाचचर्या विडम्बनमेव, अनुकरणम्। यथा ब्राह्मणः कौतुकाविष्टः पिशाचादिवेषान् करोति, तदपि तस्याऽनुचितम्। यतो विभूमा, न ततोऽन्यः कश्चिन्महानस्ति; विडम्बनेन यं रसयुक्तं कुर्यात्। तथापि करोतीत्याश्चर्यम्। तदाह—अहो इति॥२८॥

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

न हीत्यत्र। अत एवाऽस्माभिरिति। महादेवाद्देवाऽस्माभिः प्राप्यत इत्यर्थः। अनभिप्रेतत्वं मन्यमान इति। उपासकानामपि सोऽनुचित इति मन्यमानः॥२५॥

### श्रीगिरिधरकृता बालप्रबोधिनी

एवं लज्जाभयार्थं स्वजनत्वादिकमुक्त्वा स्वजनत्वादेव स्नेहेनास्मदपराधमपि सहेदित्याशङ्कयाह—नेतीति। लोके संसारे यस्य महादेवस्य स्वजनः स्वकीयो जनो नास्ति, तथा परः अस्वजनो नास्ति, तथाऽत्यादृत आदरः स्नेहस्तद्विषयोऽपि नास्ति, तथा विगर्ह्यः द्वेषविषयत्वेन निन्द्यो वा कश्चिन्नोत नास्त्येव। लोके य एवापेक्षितान् विषयान् प्रयच्छति स आदरविषयो भवति यश्चापेक्षितविषयान् विघटयति स द्वेषो निन्द्यश्च भवति तथा तस्यापि तथा तथा कर्त्ता तथा तथा स्यादित्याशङ्कयाह—वयमिति। वयं संसारिणो जीवाः यस्येश्वरस्य श्रीमहादेवस्य चरणाभ्यामपविद्धां निर्माल्यवद्दूरतः परित्यक्तामजां मायामयीं विभूतिं व्रतैर्नानाविधसाधनैस्तमाराध्य तत आशास्महे प्रार्थयामहे। त्यागे हेतुमाह—भुक्तभोगामिति। भुक्तो भोगो यस्यास्तां दृष्टदोषामित्यर्थः। एवं निन्दितविषयप्रार्थनया स्फुरितं स्वखेदं सूचयति—वतेति। तथा च तन्मायामोहितानां विषयाविष्टचित्तानां जीवानामेव तथा व्यवहारो नैश्वर्यादिपूर्णस्य पूर्णानन्दस्य परमेश्वरस्येति भावः॥२५॥ ❀ ❀ ईश्वरश्चेत्तर्हि किमिति विगर्हितं भस्मादिधारणं करोतीत्यपेक्षायामाह—यस्येति। यस्य श्रीमहादेवस्य अनवद्यं सर्वदोषनिवर्तकमाचरितं परदुःखनिरासार्थं त्रिपुरवधादिरूपं सर्वविषयत्यागेन परमात्मचिन्तनरूपं च मनीषिणो बुद्धिमन्तो गृणन्ति कीर्तयन्ति। गृह्णन्तीति पाठान्तरम्।

---

१. अनपेक्षव्रतैः क.। २. अनभिप्रेतम् क.।

किमर्थमित्यपेक्षायामाह—अविद्येति। अविद्याकृतं यत्पटलमात्मावरणं तद्भिभित्सवो भेत्तुमिच्छव इत्यर्थः। अविद्यानिवृत्त्यर्थमिति भावः। स निरस्तसाम्यातिशयोऽपि निरस्तं साम्यमतिशयश्च यस्मात्तथाभूतोऽपि स्वयं यत् पिशाचचर्यामचरत् सर्वभोगविभवत्यागेन पिशाचवन्नग्नादिरूपेणाचरणं कृतवांस्तत्सतां गतिर्गुरुः सन् मुमुक्षवोऽप्येवं कुर्युरिति तच्छिक्षार्थं कृतवानित्यर्थः॥ २६॥ ❀ ❀ तर्हि कुतः केचित्तदाचरितमुपहसन्तीत्यपेक्षायामाह—हसन्तीति। हीत्यवधारणे। सुदुर्भगा इति पाठान्तरम्। दुर्भगाः महापापिन एव यस्याचरितं हसन्ति। तत्र हेतुमाह—आत्मन् आत्मनि रतस्य तस्य समीहितमभिप्रायं परशिक्षार्थत्वमविदुषः अविद्वांस इति। द्वितीया प्रथमार्थे। किंलक्षणास्ते इत्याकाङ्क्षायां लोके हि समानशीलव्यसनं स्तुवन्ति तद्विपरीतं हसन्ति निन्दन्ति चेति महादेवाद्विपरीतस्वभावांस्तानाह—यैरिति। वस्त्राणि उष्णीषादीनि माल्यानि पुष्पाणि आभरणानि कङ्कणादीनि अनुलेपनानि चन्दनादीनि तैः साधनैर्यैः पुरुषैः श्वभोजनं शुनां भोज्यं शरीरं स्वात्मतया स्वरूपत्वेनोपलालितं ते भ्रान्ता हसन्तीत्यन्वयः॥ २७॥ ❀ ❀ ननु किमित्यभिप्रायकल्पनया तस्य वस्तुतः पिशाचत्वमेव कुतो नाङ्गीक्रियते इत्याशङ्क्य भवेदेवं यद्युत्कर्षहेतुर्न स्यादित्याशयेनाह—ब्रह्मादय इति। सर्वोत्कृष्टा हि ब्रह्मादयस्तेऽपि येन रुद्रेण कृताः सेतवो मर्यादास्तत्पालकास्तदाज्ञानुसारिण इत्यर्थः। इदं विश्वं यत्कारणं यो रुद्रः कारणं यस्य, तथाभूतेन येन कृतमित्यर्थः। ब्रह्मादिसर्वजनमोहिनी माया च यस्याज्ञाकरी। अहो आश्चर्यं तस्य विभूम्नः महत्तमस्य पिशाचचर्या दृश्यते। अतस्तस्य वास्तवपिशाचत्वासम्भवात् पिशाचवदिदं चरितमाचरितं विडम्बनं उक्ताभिप्रायकमनुकरणमात्रमेवेत्यर्थः। न च रुद्रस्य ब्रह्मोद्भवत्वात् कथं ब्रह्मणस्तदाज्ञानुसारित्वमित्याशङ्क्य तदुद्भवत्वेऽपि ईश्वरत्वात्। चतुर्थस्कन्धे दक्षयज्ञध्वंसप्रसङ्गे ब्रह्मणैव 'जाने त्वामीशं विश्वस्य' इत्यादिना तथात्वेन स्तुतत्वाच्च॥ २८॥

### हिन्दी अनुवाद

संसारमें उनका कोई अपना या पराया नहीं है। न कोई अधिक आदरणीय और न निन्दनीय ही है। हम लोग तो अनेक प्रकारके व्रतोंका पालन करके उनकी मायाको ही ग्रहण करना चाहते हैं जिसे उन्होंने भोगकर लात मार दी है॥ २५॥ ❀ ❀ विवेकी पुरुष अविद्याके आवरणको हटानेकी इच्छासे उनके निर्मल चरित्रका गान किया करते हैं; उनसे बढ़कर तो क्या, उनके समान भी कोई नहीं है और उनतक केवल सत्पुरुषोंकी ही पहुँच है। यह सब होनेपर भी वे स्वयं पिशाचोंका-सा आचरण करते हैं॥ २६॥ ❀ ❀ यह नरशरीर कुत्तोंका भोजन है; जो अविवेकी पुरुष आत्मा मानकर वस्त्र, आभूषण, माला और चन्दनादिसे इसीको सजाते-सँवारते रहते हैं—वे अभागे ही आत्माराम भगवान् शङ्करके आचरणको हँसते हैं॥२७॥ ❀ ❀ हमलोग तो क्या, ब्रह्मादि लोकपाल भी उन्हींकी बाँधी हुई धर्ममर्यादाका पालन करते हैं; वे ही इस विश्वके अधिष्ठान हैं तथा यह माया भी उन्हींकी आज्ञाका अनुसरण करनेवाली है। ऐसे होकर भी वे प्रेतोंका-सा आचरण करते हैं। अहो! उन जगद्व्यापक प्रभुकी यह अद्भुत लीला कुछ समझमें नहीं आती'॥ २८॥

## मैत्रेय[1] उवाच

**सैवं संविदिते भर्त्रा मन्मथोन्मथितेन्द्रिया। जग्राह वासो ब्रह्मर्षेर्[2]वृषलीव गतत्रपा॥ २९॥**
**स विदित्वाथ[3] भार्यायास्तं निर्बन्धं विकर्मणि। नत्वा दिष्टाय रहसि तयाथोपविवेश ह॥ ३०॥**
**अथोपस्पृश्य सलिलं प्राणानायम्य वाग्यतः। ध्यायञ्जजाप विरजं ब्रह्म ज्योतिः सनातनम्॥ ३१॥**
**दितिस्तु व्रीडिता तेन कर्मावद्येन भारत। उपसङ्गम्य विप्रर्षिमधोमुख्यभ्यभाषत॥ ३२॥**

### श्रीधरस्वामिविरचिता भावार्थदीपिका

भर्त्रा निरूपकेणैवं संविदिते ज्ञापितेऽपि सति वृषलीव वेश्येव॥ २९॥ ❀ ❀ विकर्मणि निषिद्धे कर्मणि दिष्टाय दैवरूपायेश्वराय। उपविवेशेति मैथुनं लक्ष्यते॥ ३०॥ ❀ ❀ उपस्पृश्य स्नात्वा भर्गशब्दवाच्यं विरजं ज्योतिर्ध्यायन्सनातनं ब्रह्म गायत्रीं प्रणवं वा जजाप॥ ३१॥ ❀ ❀ कर्मावद्येन कर्मदोषेण॥ ३२॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः।

सा दितिः एवमुक्तरीत्या महादेवविभीषिकाप्रदर्शनेन वासः कटिवस्त्रं "कामो विवेकं ग्रसति स्त्रीयमन्यैश्च दर्शितम्। अत्र प्रमाणं ब्रह्मैव पुंसु स्त्रीपूच्यते दितिः" इत्यभियुक्तोक्तेः॥ २९॥ ❀ ❀ स कश्यपः अथ ज्ञापनानंतरं तं सुरतलक्षणं

---

१. प्राचीने पाठे 'मैत्रेय उवाच' अयमंशो न। २. प्रा० पा०—विप्रर्षे०। ३. प्रा० पा०—विदित्वा स्वभार्या०।

निर्बंधं दुराग्रहं तया दित्या अथेश्वरनेत्युत्तरं "निवेश उपभोगः स्यादुपवेशस्तु मैथुनम्" इत्यभिधानात्। इति प्रत्यारंभे ॥ ३० ॥ अथ मैथुनोत्तरं भर्गशब्दवाच्यं सूर्याभिन्नं ब्रह्म विरजं वरेण्यम्, एतेनाकालमैथुने स्नात्वा तत्प्रायश्चित्तरूपेण गायत्रीजपो विधेयः कार्यः शैत्ये तु प्रणवजपो वा कार्य इत्युक्तम्। "अनुक्ते त्वष्टसाहस्रं सहस्रं वा जपेदृचम्" इति स्मृतेः। "स्यादुपस्पर्शनं स्पर्शे स्नानाचमनयोरपि" इति मेदिनी ॥ ३१ ॥ ❀ ❀ अधोमुखी व्रीडयाऽवाङ्मुखी ॥ ३२ ॥

## श्रीराधारमणदासगोस्वामिविरचिता दीपनी व्याख्या

निरूपकेण वक्त्रा एवं सन्ध्याकालवञ्चनप्रकारेण ॥ २९ ॥ ❀ ❀ स गृहीतवासाः तं निर्लज्जतामयमथ ज्ञानान्वरं नत्वा पुनरवनत्यनन्तरमेव रह उपवेशमात्रस्य विकर्मत्वाभावात् मुख्यार्थबाधात् तत्कार्य्ये मैथुने लक्षणा, प्रयोजनञ्चाश्लीलगोपनमेव ॥ ३० ॥ ❀ ❀ अथ मैथुनानन्तरं ज्योतिः परं ब्रह्म ॥ ३१ ॥ ३२ ॥

## श्रीमद्वीरराघवव्याख्या

एवमुक्ता दितिस्ततः किमकरोदित्यत्राह। सेति। भर्ता कश्यपेनैवमुक्तप्रकारेण सम्वेदिते ज्ञापिते सति मन्मथेन उन्मथितानीन्द्रियाणि यस्याः साऽत एव वृषलीव वेश्येव गतत्रपा निर्लज्जा सती विप्रर्षेः कश्यपस्य वासो वस्त्रं जग्राह वासो गृहीत्वा विचकर्षेत्यर्थः ॥ २९ ॥ ❀ ❀ स कश्यपः भार्यायाः दितेः विकर्मणि सन्ध्यायां प्रतिषिद्धे रतिकर्मणि तं निर्बन्धं वासोग्रहणरूपं विदित्वा दृष्ट्वा दिष्टाय दैवरूपेश्वराय नत्वा तया भार्यया सह रहस्येकान्ते उपविवेश। उपविवेशेत्यनेन मैथुनं लक्ष्यते ॥ ३० ॥ ❀ ❀ अथोपवेशानन्तरं सलिलमुपस्पृश्य सलिले स्नात्वेत्यर्थः। प्राणानायम्य नियम्य वाग्यतः धृतमौनः विरजं निर्विकारं ज्योतिः ज्ञानस्वरूपं सनातनं नित्यं ब्रह्म ध्यायन् अत्र विरजशब्देन सत्यपदार्थः ज्योतिःशब्देन ज्ञानपदार्थः सनातनशब्देनानन्तपदस्यार्थः स्फोरितः। विरजशब्देन रजःकार्यविकारराहित्यस्य ज्योतिःशब्देन प्रकाशरूपत्वस्य सनातनशब्देन कालपरिच्छेदराहित्यस्य चोक्तत्वात् जजापेति एवंविधब्रह्मप्रतिपादकं प्रणवं जजापेत्यर्थः ॥ ३१ ॥ ❀ ❀ अथाध्यायशेषो दितिकश्यपयोरुत्तररूपेण प्रवृत्तस्तत्र तावद्दितिरुवाचेत्याह—दितिरिति। तेन कर्मावद्येन कर्मदोषेण व्रीडिता लज्जिता दितिः हे भारत! विदुर उपसङ्गम्य समीपे आगत्याधोमुखी सती विप्रर्षिं कश्यपं प्रत्यभाषत उक्तवती ॥ ३२ ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

हरेर्माहात्म्यं दुरवबोधं यदैवं ज्ञापितया दित्या पापकर्मणि प्रवृत्तमिति भाववान्मैत्रेय एवमुक्तया तया किमकारीति वैदुरीं मनःशङ्कां परिहरन्नाह। एवमिति। सम्विदिता सम्यग्ज्ञापिता वासः परिधानम् ॥ २९ ॥ ❀ ❀ निर्बन्धं दुराग्रहं दिष्टाय कर्मसाक्षिणे देवाय "निर्वेश उपभोगः स्यादुपवेशस्तु मैथुनम्" इत्यभिधानम्। 'प्रत्यारम्भे प्रसिद्धे हे' त्यभिधानाद्धेत्यनेन प्रत्यारम्भं सूचयति ॥ ३० ॥ ❀ ❀ अप्सरोमुग्धमुनिवदाकल्पं मारीचेन तथोपविष्टं किं नेत्याह। अथेति। अथ वीर्यपातानन्तरमेवाचम्य सुप्तं तेन किमत्राह। ध्यायन्निति ज्योतिः स्वज्योतीरूपं विरजं कज्जलादिरजोमलविधुरं ब्रह्म ध्यायन् सनातनं प्रणवनादेन सहितं ब्रह्म गायत्र्यात्मकं मन्त्रं जजापेत्यन्वयः ॥ ३१ ॥ ❀ ❀ दित्या पुनश्च किङ्कार्यमभूदथ किमिति गर्वीभूय स्थितं क्रियान्तरमारब्धमुतेति तत्राह। दितिस्त्विति। स्वकर्मणा जातेनावद्येन ॥ ३२ ॥

## श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

भर्त्रा एवं सम्विदिते ज्ञापितेऽपि सति। यद्वा भर्त्रा हेतुना एवं ज्ञापिते सति वृषलीव वेश्येव। "कामो विवेकं ग्रसति स्त्रीयमन्यैश्च दर्शितम्। अत्र प्रमाणं ब्रह्मैव पुंसः स्त्रीषूच्यते दितिः" ॥ २९ ॥ ❀ ❀ दिष्टाय स्वादृष्टाय उपविवेश रेमे ॥ ३० ॥ ❀ ❀ उपस्पृश्य स्नात्वा आचम्य जजाप प्रणवं गायत्रीं वा ॥ ३१ ॥ ❀ ❀ कर्म्मावद्येन कर्म्मदोषेण ॥ ३२ ॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

भर्त्रा एवं सम्विदिते ज्ञापिते सति वृषलीव वेश्येव ॥ २९ ॥ ❀ ❀ दिष्टाय दैवात्मने परमेश्वराय ॥ ३० ॥ ❀ ❀ उपस्पृश्य स्नात्वा विरजं गायत्रीप्रतिपाद्यं भगवन्तं ध्यायन् ब्रह्म गायत्रीं जजाप ॥ ३१ ॥ ❀ ❀ अवधीत् मा हन्यात् अंहसमंहः अपराधमहमकरवं कृतवत्यस्मि ॥ ३२ ॥

## श्रीमद्वल्लभाचार्यविरचिता सुबोधिनीव्याख्या

एवं महादेवभक्तां महादेवगुणकथनेन तत्परां करिष्यामीति कृतेऽपि स्तोत्रे सा उद्गतकामा न निवृत्ता जातेत्याह— एवमिति। वाचनिकेनैव प्रतीकारस्य करणात् तत्परित्यज्य कायिकं व्यापारं कृतवती। न च वक्तव्यम्, तदुक्तोऽर्थो न बुद्ध इति। एवं भर्त्रा सम्यक् वादे कृते, संवादे वा कृते, सम्यक् विदिते ज्ञाते सति वा; तथापि मन्मथोन्मथिताशया वासो जग्राह। एवं धाष्ट्र्यं

वृषल्या भवतीति तदृदृष्टान्तः। ब्रह्मर्षेरिति क्षोभकरणं[1] मारणं च निवारयति। वस्त्रग्रहणे क्षोभो ज्ञातो भविष्यतीति—वासो जग्राह इन्द्रियमथनं विवेकधैर्याद्यनुत्पादार्थम्। एकान्तत्वात्, भर्तृत्वाच्च त्रपाभावस्तस्या[2] उक्तः ॥ २९ ॥ ❀ ❀ एवं तया कृते यज्जातं तदाह—स विदित्वेति। अथेति वचनं वञ्चनाभावाद्यर्थम्। भार्यात्वादपि तदिच्छापूरणम्। विकर्मणि कर्मनाशे। कालकृतं तद्विदित्वा, दिष्टाय कालाय नत्वा। गत्यर्थकर्मणि द्वितीयाचतुर्थ्योर्विधानात् दिष्टायेति चतुर्थी। रहसि एकान्ते, अग्निहोत्रगृहं परित्यज्य गृहान्तरे। अथेति वैदिकप्रकारेण गर्भाधानप्रकारेण तया सह उपविवेश। हेत्वाश्चर्यम्। महतो विकर्मणि प्रवृत्तिः ॥ ३० ॥ ❀ ❀ एवं गर्भाधानं कृत्वा यत्कृतवांस्तदाह—अथोपस्पृश्येति। अत्रापि भिन्नक्रमः प्रायश्चित्तार्थः, कामाभावाद्यर्थे[3] वा। सलिलमुपस्पृश्येति स्नात्वा। 'प्राणायामैर्दहेद्दोषान्' इति दोषाभावार्थं प्राणानाम्य। वाग्यतः तन्निर्भत्सनाद्यकृत्वा। ध्यायन्, भगवच्चरणारविन्दं ज्ञानमार्गानुसारेण ब्रह्म ज्योतिः सर्वप्रकाशकम्, विरजमविद्यानाशकं ध्यायन् जजापेति। प्रणवार्थं ध्यायन् प्रणवं जजापेत्यर्थः ॥ ३१ ॥ ❀ ❀ एवमृषेः प्रायश्चित्तमुक्त्वा तस्या अपि यथोचितमपराधप्रायश्चित्तमाह—दितिस्त्विति। तुशब्दः पूर्वभावव्यावृत्त्यर्थः। कर्मण्यवद्यं कर्मावद्यम्, अग्निहोत्रमध्ये निन्दितकरणम्, तेन व्रीडिता। अन्यत्तु न विगीतम्। अतस्तेन प्रसिद्धेन अपराधेन व्रीडिता सत्युपसंगम्य अभ्यभाषतेति संबन्धः। भारतेति संबोधनं भ्रमाभावाय। भ्रान्त एव परमेकविधं मन्यते। पूरकत्वात् भाव्यार्थज्ञानाच्च विप्रर्षित्वम्। अधोमुखीति। शङ्कान्तराभावाय ॥ ३२ ॥

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः।

एवमित्यत्र। इति कृत इति। इतीच्छया कृते ॥ २९ ॥

### श्रीगिरिधरकृता बालप्रबोधिनी

भर्त्रा कश्यपेन एवमुक्तप्रकारेण संविदिताऽपि सती दितिः वृषलीव वेश्येव गतत्रपा निर्लज्जा सती ब्रह्मर्षेः कश्यपस्य वासो वस्त्रं जग्राह विचकर्षेत्यन्वयः। तत्र हेतुमाह—मन्मथेति, मन्मथेन कामेन उन्मथितं क्षोभितं व्याकुलीकृतमिन्द्रियराजो मनो यस्याः सेत्यर्थः ॥ २९ ॥ ❀ ❀ ततो यज्जातं तदाह—स इति। स कश्यपो भार्याया दितेस्तं विकर्मणि सन्ध्यायां प्रतिषिद्धे रतिकर्मणि निर्बन्धं हठं विदित्वा ज्ञात्वा अथानन्तरं दिष्टाय सर्वप्रवर्तकपरमेश्वराय नमस्कृत्य ममापराधो नास्ति सर्वप्रवर्तकस्त्वं यथेच्छसि तथा कुर्विति भावेन परमेश्वरं नमस्कृत्य अथानन्तरं रहसि अग्निशालां परित्यज्यान्यत्रैकान्तस्थले तया भार्यया सह उपविवेशेति मैथुनं लक्ष्यते। अहो ईश्वरेच्छा बलीयसी, यथा महतोऽपि विकर्मणि प्रवृत्तिर्जातेत्याश्चर्यं द्योतयति—हेति ॥ ३० ॥ ❀ ❀ तदनन्तरं कश्यपः किं कृतवानित्यपेक्षायां तत्कृतं प्रायश्चित्तमाह—अथेति। अथ उपवेशानन्तरं सलिलमुपस्पृश्य सलिले स्नात्वा प्राणानायम्य 'प्राणायामैर्दहेद्दोषान्' इति वाक्यात् प्राणायामान् कृत्वा वाग्यतः धृतमौनः विरजं निर्विकारं ज्योतिर्ज्ञानरूपं सनातनं नित्यं ब्रह्म ध्यायन् तद्वाचकं प्रणवं जजापेत्यर्थः ॥ ३१ ॥ ❀ ❀ एवं कश्यपकृतं प्रायश्चित्तमुक्त्वा दितिकृतं तद्दर्शयति—दितिस्त्विति। तुशब्दः पूर्वावस्थानिवृत्तिसूचकः। विदुरस्य निर्दोषत्वं सूचयन्सम्बोधयति—भारतेति। तेन स्वकृतेन कर्मावद्येन कर्मणि सन्ध्याकाले कर्तव्यजपादिमध्ये यदवद्यं निंदितं रतिरूपं तेन व्रीडिता सती अतएवाधोमुखी सती दितिः विप्रर्षिं कश्यपमुपसङ्गम्य समीपं गत्वा अभ्यभाषतेत्यन्वयः ॥ ३२ ॥

### हिन्दी अनुवाद

श्रीमैत्रेयजी कहते हैं—पतिके इस प्रकार समझानेपर भी कामातुरा दितिने वेश्याके समान निर्लज्ज होकर ब्रह्मर्षि कश्यपजीका वस्त्र पकड़ लिया ॥ २९ ॥ ❀ ❀ तब कश्यपजीने उस निन्दित कर्ममें अपनी भार्याका बहुत आग्रह देख दैवको नमस्कार किया और एकान्तमें उसके साथ समागम किया ॥ ३० ॥ ❀ ❀ फिर जलमें स्नानकर प्राण और वाणीका संयम करके विशुद्धज्योतिर्मय सनातन ब्रह्मका ध्यान करते हुए उसीका जप करने लगे ॥ ३१ ॥ ❀ ❀ विदुरजी! दितिको भी उस निन्दित कर्मके कारण बड़ी लज्जा आयी और वह ब्रह्मर्षिके पास जा, सिर नीचा करके इस प्रकार कहने लगी ॥ ३२ ॥

## दितिरुवाच[4]

**मा मे गर्भमिमं ब्रह्मन् भूतानामृषभो वधीत्। रुद्रः पतिर्हि भूतानां यस्याकरवमंहसम् ॥ ३३ ॥**
**नमो रुद्राय महते देवायोग्राय मीढुषे। शिवाय न्यस्तदण्डाय धृतदण्डाय मन्यवे ॥ ३४ ॥**
**स नः प्रसीदतां भामो भगवानुर्वनुग्रहः। व्याधस्याप्यनुकम्प्यानां स्त्रीणां देवः सतीपतिः ॥ ३५ ॥**

## मैत्रेय उवाच

**स्वसर्गस्याशिषं लोक्यामाशासानां प्रवेपतीम्। निवृत्तसन्ध्यानियमो भार्यामाह प्रजापतिः ॥ ३६ ॥**

---

१. क्षोभकारणम्. ग. घ. ङ। २. एव तस्याः, ग. ङ। ३. पापाभावाद्यर्थे, ङ। ४. प्राचीने पाठे 'दितिरुवाच' अयमंशो न।

### श्रीधरस्वामिविरचिता भावार्थदीपिका

मा वधीन्मा हंन्त्वित्यर्थः । वधशंकाबीजमाह । रुद्र इति । यस्य रुद्रस्य अंहसमंहोऽपराधमकरवं कृतवत्यस्मि ॥ ३३ ॥ ❀ ❀ रुत् दुःखं तद्द्रावयतीति रुद्रस्तस्मै उग्रायानतिलंघ्याय मीढुषे सकामेषु फलसेचनकर्त्रे निष्कामेषु शिवाय वस्तुतो न्यस्तदंडाय दुष्टेषु धृतदंडाय संहारे मन्यवे ॥ ३४ ॥ ❀ ❀ भामो भगिनीभर्ता उरुरनुग्रहो यस्य व्याधस्य निर्दयस्यापि सतीपतिरित्यनेन स्त्रीणां स्वभावं स्वयमपि वेत्तीति सूचयति ॥ ३५ ॥ ❀ ❀ स्वसर्गस्य स्वसंतानस्याशिषं शुभं लोक्यां लोकद्वयार्हाम् । संध्यायां यो नियमः स निवृत्तो यस्य ॥ ३६ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

इत्यर्थ इति । भूतानां श्लेषेण जीवजातानामृषभत्वादिति भावः बीजं हनने कारणम् ॥ ३३ ॥ ❀ ❀ द्रावयति दूरीकरोति । यद्वा । रोदयत्यपराधिनमिति रुद्रस्तस्मै अपराधक्षमणार्थमाह—महते. महत्त्वादपराधमगणयते । यद्वा । मद्गर्भं हनिष्यते स इत्यत आहोग्राय । तन्निवृत्तये पुनराह—मीढुषे मन्मनोरथशाखिनं कृपामृतेनाभिषेक्ष्यते यतो वस्तुतः परमार्थतः । यद्वा । मां दंडयिष्यतेऽतो मन्यवे मन्युस्वरूपाय ॥ ३४ ॥ ❀ ❀ एवं संशयानैव स्तुवाना स्वदैन्यं दर्शयंती तस्मादभयं प्रार्थयते । यद्वा । सत्या अप्यनुरोधेन तद्भगिनी मां सा दंडयत्विति सा सती मदपराधं मार्जयत्विति वा भावः ॥ ३५ ॥ ३६ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

अवधीदिति लकारव्यत्ययस्यार्षत्वादित्यर्थ इत्युक्तम् ॥ ३३ ॥ ❀ ❀ शिवाय मोक्षप्रदाय वस्तुतः परमवैष्णवत्वेन सर्वत्र न्यस्तस्त्यक्तो दण्डो येन "सर्वभूतेषु यः पश्येद्भगवद्भावमात्मन" इत्युक्तमभागवतलक्षणात् तमोगुणावतारत्वेन संहारार्थं मन्युस्वरूपाय ॥ ३४ ॥ ३५ ॥ ❀ ❀ आशासानामिच्छन्तीम् ॥ ३६ ॥

### श्रीमद्वीरराघवव्याख्या

भाषणमेवाह । मेति । हे ब्रह्मन् कश्यप ! भूतानामृषभः पतिः रुद्रः मे ममेमं गर्भं मावधीन्मा हन्याद्धि यस्माद्भूतानां रुद्रः पतिः यतः यस्य रुद्रस्यांहसमपराधमहमकरवं कृतवत्यतो मावधीदित्यर्थः ॥ ३३ ॥ ❀ ❀ एवं स्वाभिप्रेतमावेद्य नमस्कुर्वन्ती रुद्रं प्रसादयति नम इति द्वाभ्याम् । रुद्राय नमः कथम्भूताय महते देवाय महादेवायेत्यर्थः । विश्वसंहर्तृत्वमिन्द्राद्यपेक्षया महत्त्वं विवक्षितम् उग्राय उग्ररूपिणे मीढुषे सकामेषु फलसेचनकर्त्रे यद्वा रेतः सेकक्षमाय निष्कामेषु शिवाय वस्तुतो न्यस्तदण्डाय संहारे मन्यवे ॥ ३४ ॥ ❀ ❀ स इति । भामो भगिनीभर्ता उरुरनुग्रहो यस्य स उमायाः पतिर्भगवान् देवो रुद्रः व्याधस्याप्यनुकम्प्यानां दयनीयानां स्त्रीणां नोऽस्माकं प्रसीदतां प्रसन्नो भूयात् ॥ ३५ ॥ ❀ ❀ एवमाभाषन्तीं कश्यपः प्रत्याहेत्याह मैत्रेयः । स्वगर्भस्य लोक्यां लोकनीयामाशिषं शुभमाशासानां प्रार्थयन्तीं प्रवेपन्तीं परिकम्पन्तीं भार्यां निवृत्तः सन्ध्यायां यो नियमः स यस्य सः प्रजापतिः कश्यपः आह उवाच ॥ ३६ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

स्वकृतपापकर्मप्रतीकारोपायमाह किन्नेत्याह । नम इति । भूतानामृषभ इत्यस्य व्याख्यानं पतिरिति । अंहसमपराधम् ॥ ३३ ॥ ❀ ❀ समस्तापराधानां प्रतीकारो नमस्कारादन्यो नास्तीति मत्वा तमेव तद्दोषनिरासपटुगुणविषयत्वेन करोति नम इति रुद्रीयापराधलक्षणरोगद्रावकाय रोदनाद्रुद्र इति शिशुस्वभावो न युक्त इत्याह । महत इति । तस्य लोकानुकरणार्थत्वान्न-दोषाय स्यादिति भावः । यक्षादेरपि महत्त्वादिति अत उक्तं देवायेति । तस्यापि देवयोनित्वादित्यत उक्तमुग्रायेति । उद्धृतं सर्वं ग्रसतीत्युग्रस्तस्मै तर्ह्ययं सर्वभक्षको नतु निजाभीष्टवर्षीत्यत उक्तं मीढुष इति मिहसेचन इति धातुः स्वयं सुखित्वेन वर्तते चेन्निजाय सुखं ददातीति तत्कथमित्यतः शिवायेति । अनेन प्रसिद्धनामकरणेन कृत्यकर्तरि न्यस्तदण्डाय तद्विरुद्धकर्तरि धृतदण्डायेति तद्यो-ग्यतातिरेकेण क्रियां न करोतीत्युक्तम् । उभयार्थसूचकविशेषणमाह । मन्यवे । मननशीलाय क्रोधात्मने वा गुणदोषौ मत्वा निग्र-हानुग्रहौ करोतीति अनेन 'इमा रुद्राय स्थिरधन्वने गिरः क्षिप्रेषवे देवाय स्वधाम्ने' इत्यादिमन्त्रो दर्शितः ॥ ३४ ॥ ❀ ❀ फलि-तमाह । स न इति । मा भीरिति भीमः प्रसादकर्तृत्वे हेतुमाह । व्याधस्येति । व्यध हिंसायामिति धातोः सन्ततहिंसाशीलस्य अपिपदेन कैमुत्यलक्षणो हेतुरुक्तः ॥ ३५ ॥ ❀ ❀ गर्भः सर्वथा रक्षणीय इति लौकिकी लोक्या तामनुसरन्तीमाशासानां प्रवेपतीं कम्पमानाम् ॥ ३६ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

न अवधीत् मा हन्त्वित्यर्थः ॥ ३३ ॥ ❀ ❀ पश्चात्तापवती प्रणमति रुद्राय मां रोदयिष्यते किम्वा मम रुत् रोदनं कृपया द्रावयिष्यते दूरीकरिष्यते । यतो महते देवाय मदपराधं क्षमिष्यमाणाय । किं वा उग्राय मद्गर्भमिमंहनिष्यते किम्वा मीढुषे मन्मनोरथशाखिनं कृपामृतेनाभिषेक्ष्यते यतः शिवाय निरस्तदण्डाय किं वा धृतदण्डाय मां दण्डयिष्यते यतो मन्यवे मन्युस्वरूपाय ॥ ३४ ॥ ❀ ❀ एवं संशयानैव स्तुवाना स्वदैन्यं दर्शयन्ती तस्मादभयं प्रार्थयते । भामो भगिनीपतिः उरुरनुग्रहो यस्य सः व्याधस्य निर्दयस्यापि सतीपतिरिति स्त्रीणां स्वभावं स स्वयमेव वेत्तीति सूचयति । यद्वा सत्या अप्यनुरोधेन तद्भगिनीं मां मा दण्डयत्विति सा सती मदपराधं मार्जयत्विति वा भावः ॥ ३५ ॥ ❀ ❀ स्वसर्गस्य स्वसन्तानस्य लोक्यां लोकदयार्हाम् ॥ ३६ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

मीढुषे ज्ञानादिवीर्यसेचनकर्त्रे ॥ ३३ ॥ ❀ ❀ व्याधस्य निर्दयस्याप्यनुकम्प्यानां नोऽस्माकमुरुरनुग्रहो यस्य सः भामः भगिनीभर्ता प्रसीदताम् ॥ ३५ ॥ ❀ ❀ स्वसर्गस्य स्वसंततेः आशिषं मङ्गलमाशासानां लोक्यामालोकनीयां निवृत्तः संध्यानियमः संध्याकालिकं कृत्यं यस्य सः ॥ ३६ ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

निषिद्धाचरणाभावात् नाऽत्र स्मृत्याद्युक्तप्रायश्चित्तम्, अङ्गत्वात्कालस्याऽपि न साक्षादधर्महेतुत्वम् । यथा अकाले कृतो धर्मः अकृतो भवति, एवमकाले कृतो गर्भोऽकृतो भवेत्; तत्र केव[१]लकालस्य न बाधकत्वमपि, कर्मस्वभावानां बलिष्ठत्वात्, दैत्यानां स्वभावनिष्ठत्वाच्च । अतः कालाधिष्ठात्री देवता महादेवः कदाचित् हन्यात् ? तत्रापि ब्राह्मणक्रोधसहितो हन्यादेव । अतो ब्राह्मणक्रोधाभावं प्रार्थयितुं व्याजेन महादेवभक्तं तं ज्ञात्वा महादेवं प्रार्थयति । इयं च प्रार्थना नैमित्तिकमनूद्य, तदभावं काम्यत्वेन प्रथमं निर्दिशति—मा मे गर्भमिति । इमं संजातं गर्भं रुद्रो मावधीत् । ब्रह्मन्निति संबोधनं तत्प्रतीकारकरणसामर्थ्यं सूचयति । मारणे उपायः—भूतानामृषभ इति । भूतप्रेरणया मारयेत् । भूतानि हि गर्भं प्रविश्य स्रावयेयुः । ननु स प्रजापतिः प्रजानामुत्पादकः, कथं प्रजाः मारयेत्तत्राऽऽह—स[२] भूतानां पतिः, ये उत्पन्नास्तेषां स्वामी; यतो रुद्रो रोदयतीति । स हि बालक उत्पन्न एव रोदिति, न गर्भस्थः । अतो गर्भस्तदीयो न भवतीति गर्भं नाशयतीति वा । एवं गर्भनाशने उपपत्तिमुक्त्वा निमित्तमाह—यस्याऽकरवमंहसमिति । यस्याऽपराधं कृतवत्यस्मि ॥ ३३ ॥ ❀ ❀ एवं संकल्पमुक्त्वा, तत्सिद्ध्यर्थं रुद्रं प्रार्थयते—नमो रुद्रायेति । स हि गुणत्रयात्मकः, अहङ्कारस्य त्रिगुणत्वात्, अतो नवभिर्विशेषणैस्तत्प्रार्थना । महतां नमनमेव प्रसादने हेतुः । तत्र प्रथमं भूतानां कृपया यद्रोदनं कृतवान्, सा कृपाऽत्राऽप्यनुसन्धेयेति ज्ञापनार्थं रुद्रायेत्याह, अपराधसहनार्थम्—महते, प्रार्थनया अपराधसहनार्थम्—देवाय । अनेन तामसादिभावास्त्रय उक्ताः । पुनस्तानाह—उग्रायेति त्रिभिः । अन्यप्रेरणया मारयिष्यतीतीमं पक्षं व्यावर्तयति उग्रायेति । न हि उग्रस्याऽग्रे कश्चिद्वक्तुं शक्नोति । तर्हि प्रार्थितोऽपि मारयेदित्याशङ्क्य, न केवलमुग्र एव, किन्तु सर्वेषां कामवर्षकोऽपीत्याह—मीढुष इति । मीढ्वान् वृषभः, पतिः, कामवर्षक इति यावत् । किञ्च, न केवलं स फलदाता, किन्तु फलरूपोऽपीत्याह—शिवायेति । कल्याणरूपाय । अतः प्रार्थितो न मारयिष्यति, कल्याणं च करिष्यतीत्युक्तम् । पुनस्तृतीयपर्याये सत्त्वादिभावानाह—न्यस्तदण्डायेत्यादित्रिभिः । स हि पूर्वं दक्षं हत्वा महत्युपद्रवे जाते दण्डनं त्यक्तवान् । इदमपि ब्रह्मबीजम्, अतोऽमारणार्थं महादेवकृतमिममर्थं स्मारयति—न्यस्तदण्डायेति । तर्हि प्रार्थना व्यर्था, स्वत एव दण्डस्य त्यक्तत्वादित्याशङ्क्याऽऽह—धृतदण्डायेति । दुष्टमारणार्थं धृतो दण्डो येन । तर्हि स्वत एव प्रार्थ्यतां किं ममाऽग्रे कथनेनेत्याह—मन्यव इति । स हि ब्रह्ममन्युरूपः । ब्रह्ममन्युनैव प्रकटो भवति, नाऽन्यथा । अतस्त्वयि प्रसन्न एव स निवर्तते, नाऽन्यथेत्यर्थः ॥ ३४ ॥ ❀ ❀ एवं नमस्कारेण रुद्रं प्रार्थयित्वा पूर्वापराधं दूरीकृत्य भर्तारं प्रसादयितुमहङ्कारे स्थिते प्रसादोऽशक्य इति तदहङ्कारनिवृत्त्यर्थं महादेवमेव प्रार्थयति—स न इति । स पूर्वोक्तो नोऽस्मभ्यं प्रसीदताम् । यतो भामो भगिनीपतिः । न केवलं स्वतः प्रसादः, किन्तु भर्तारमपि प्रसादयुक्तं करोत्विति तत्सामर्थ्यार्थं भगवानित्युक्तम् । ननु कृतेऽपराधे दण्डाभाव एव भूयान्, कुतोऽनुग्रहं करिष्यतीत्याशङ्क्याऽऽह—उर्वनुग्रह इति । उरुरनुग्रहो यस्य । प्रार्थितो न केवलमबाधक एव, किन्तु फलदाताऽपीत्यर्थः । किञ्च, अस्मास्वनुग्रहः कर्तुमेवोचितः, यतो वयं स्त्रियो व्याधस्याऽनुकम्प्याः । पुरुषार्थार्थं हि तस्याऽपि हननम् । अर्थापेक्षया कामो महान्, स च स्त्रिया सत्यैव; अतो व्याधस्याऽप्यवध्याः, यतः स्त्रियोऽनुकम्प्याः । सर्वस्याऽऽनन्ददायिका अपि स्वयमकृतार्था भवन्तीति । किञ्च, स स्त्रीणां देवः, स्त्रियो हि गौरीमेव सभर्तृकां पूजयन्ति, स एव क्रीडाकर्तेति वा । किञ्च सतीपतिरिति । स्त्रीणां स्वभावज्ञ इति ॥ ३५ ॥ ❀ ❀ एवं महादेवे स्तुते अर्द्धं प्रसन्नः कश्यपः क्रोधं प्रसादं च कृतवानित्याह—स्वसर्गस्येति । स्वस्य सर्गस्य गर्भस्य, लोक्यां सर्वलोक-

---

१. केवलस्य. ग. । २. एतन्नास्ति. क. ।

प्रसिद्धामाशिषमाशासानां कामयमानाम्, किं भविष्यतीति प्रवेपतीमतिकम्पमानाम्, स्वयं निवृत्तसन्ध्यानियमो भूत्वा, भार्यात्वादवश्यवक्तव्यामाह। प्रजापतित्वाच्च वचनं निष्ठुरम्, अन्यथा सर्वा एव तथा कुर्युः। दयावश्यकत्वाभ्यां सामीचीन्यकथनम् ॥ ३६ ॥

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

मा मे (इ)त्यत्र। अत्र कर्मावद्यविषयके प्रायश्चित्ते प्रार्थनीये रुद्रापराधकृतानिष्टप्राप्त्यभावप्रार्थनं कृत इत्याकाङ्क्षायामधर्मजनकमर्थं विचार्यैतत्प्रार्थनमिति वक्तुं तमर्थं विचारयन्ति—निषिद्धेत्यादि। तत्रेति। गर्भे। तत्राऽपीति। हननेऽपि ब्राह्मणक्रोधसहित इति। 'पुरुषः कर्मार्थत्वात्' इति न्यायेन ब्राह्मणानां कर्मशेषत्वात् कर्मनाशिकायां मयि सर्वज्ञानां तेषां क्रोधसंभवात् तत्सहितः। प्रार्थयतीति। तं प्रत्यपि कर्मावद्यापराधनिवारणमेव प्रार्थयतीत्यर्थः ॥ ३३ ॥ ❀ ❀ स्वसर्गस्येत्यत्र। अर्द्धं प्रसन्न इति। स्वयं महादेवमाहात्म्यस्य तदर्थमुक्तत्वात् तद्द्वारेण (तदादरेण) प्रसन्नः, स्वस्य भगवद्भक्तत्वेन तत्राऽऽदराभावादप्रसन्न इत्यर्द्धं प्रसन्नः ॥ ३६ ॥

### श्रीगिरिधरकृता बालप्रबोधिनी।

तद्भाषणमेवाह—मेति। रुद्रं प्रसादयितुं तव सामर्थ्यमस्तीति सूचयन्ती सम्बोधयति—ब्रह्मन्निति। मे ममेमं गर्भं रुद्रो मा वधीत् मा हन्यात्। तस्य तद्धनने सामर्थ्यमस्तीत्याह—भूतानां प्रमथादीनामृषभः श्रेष्ठ इति। तत्रापि हेतुमाह—हि यस्मात्तेषां भूतानां पतिः पालक इति। तस्य तद्वधे को हेतुरित्यत आह—यस्येति। यस्य रुद्रस्य अंहसमवज्ञारूपमपराधं अहमकरवं कृतवत्यस्मीति ॥ ३३ ॥ ❀ ❀ एवं कश्यपं सम्प्रार्थ्य साक्षाद्रुद्रमेव प्रार्थयितुं तत्प्रभावं वर्णयन्ती नमस्करोति—नम इति। अपराधिषु उग्राय भयङ्कराय। तत्र हेतुः—धृतदण्डाय। तत्रापि हेतुमाह—मन्यवे इति, ब्रह्मणः क्रोधरूपायेत्यर्थः। सकामेषु मीढुषे सर्वकामवर्षिणे। साधुषु न्यस्तदण्डाय, दण्डरहितायेत्यर्थः। निष्कामाणां शिवाय परमानन्दमोक्षरूपायेत्यर्थः। कुत एवं तत्राह—महते देवायेति। एवम्भूताय रुद्राय नमः ॥ ३४ ॥ ❀ ❀ एवं नमस्कृत्य तत्प्रसादं प्रार्थयते—स इति। स वर्णितमाहात्म्यो रुद्रो नोऽस्माकं प्रसीदताम्। सम्बन्धित्वादपि प्रसादो युक्त इत्याशयेनाह—भाम इतीति। भामो भगिनीभर्ता, ब्रह्मपुत्रस्यैव दक्षस्य प्रचेतसः पुनरुत्पन्नत्वेन ब्रह्मपुत्रदक्षकन्यापि सती[1]···हीति भगिन्येवेति रुद्रस्य भामत्वं ज्ञेयम्। तत्स्वरूपविचारेणाप्यनुग्रहो युक्त इत्याह—उर्वनुग्रह इति, उरुर्महाननुग्रहो यस्य सः। तत्र हेतुमाह—भगवानिति। यदि वैराग्यादिपूर्णोऽनुग्रहं न कुर्यात्तर्हि कस्तं कुर्यादिति भावः। अस्मत्स्वभावविचारेणाप्यनुग्रहो युक्त इत्याह—व्याधेति। व्याधस्यातिक्रूरस्याप्यनुकम्प्यानामनुकम्पितुं योग्यानामित्यर्थः। तत्र हेतुमाह—स्त्रीणामिति। स्त्रीस्वभावमपि स जानात्येव। तत्र हेतुमाह—सतीपतिरिति तत्र हेतुमाह—देव इति, क्रीडापर इत्यर्थः ॥ ३५ ॥ ❀ ❀ एवं स्वसर्गस्य स्वगर्भस्य लोक्यां लोकद्वयार्हामाशिषं शुभमाशासानां प्रार्थयन्तीं रुद्रभयेन प्रवेपतीं कम्पमानां भार्यां निवृत्तः सन्ध्यानियमो जपादिरूपो यस्य सः प्रजापतिः कश्यपः आहेत्यन्वयः ॥ ३६ ॥

### हिन्दी अनुवाद

दिति बोली—ब्रह्मन्! भगवान् रुद्र भूतोंके स्वामी हैं, मैंने उनका अपराध किया है; किन्तु वे भूतश्रेष्ठ मेरे इस गर्भको नष्ट न करें ॥ ३३ ॥ ❀ ❀ मैं भक्तवाञ्छाकल्पतरु, उग्र एवं रुद्ररूप महादेवको नमस्कार करती हूँ। वे सत्पुरुषोंके लिये कल्याणकारी एवं दण्ड देनेके भावसे रहित हैं किन्तु दुष्टोंके लिये क्रोधमूर्ति दण्डपाणि हैं ॥ ३४ ॥ ❀ ❀ हम स्त्रियोंपर तो व्याध भी दया करते हैं, फिर वे सतीपति तो मेरे बहनोई और परम कृपालु हैं; अतः वे मुझपर प्रसन्न हों ॥ ३५ ॥ ❀ ❀ श्रीमैत्रेयजीने कहा—विदुरजी! प्रजापति कश्यपने सायङ्कालीन सन्ध्या-वन्दनादि कर्मसे निवृत्त होनेपर देखा कि दिति थर-थर काँपती हुई अपनी सन्तानकी लौकिक और पारलौकिक उन्नतिके लिये प्रार्थना कर रही है। तब उन्होंने उससे कहा ॥ ३६ ॥

### कश्यप उवाच

**अप्रायत्यादात्मनस्ते दोषान्मौहूर्तिकादुत। मन्निदेशातिचारेण देवानां[2]चातिहेलनात् ॥ ३७ ॥**
**भविष्यतस्तवाभद्रावभद्रे जाठराधमौ। लोकान् सपालांस्त्रींश्चण्डि मुहुराक्रन्दयिष्यतः ॥ ३८ ॥**
**प्राणिनां हन्यमानानां दीनानामकृतागसाम्। स्त्रीणां निगृह्यमाणानां कोपितेषु महात्मसु ॥ ३९ ॥**
**तदा विश्वेश्वरः क्रुद्धो भगवाँल्लोकभावनः[3]। हनिष्यत्यवतीर्यासौ यथाद्रीन् शतपर्वधृक् ॥ ४० ॥**

---

१. अत्र पूर्वं लेखकप्रमादात् मुद्रणतो वा प्रथमाद्यावृत्त्यां व्याख्यानं च्युतं स्यादिति भाति। २. प्रा० पा०—चैव हेल०। ३. प्रा० पा०—भावितः।

### श्रीधरस्वामिविरचिता भावार्थदीपिका।

ते आत्मनश्चित्तस्याप्रायत्यादशुचित्वात् मौहूर्तिकात्संध्यारूपात् उत अपि मम निदेशस्याज्ञाया अतिचारेणातिक्रमेण देवानां रुद्रानुचराणाम् ॥ ३७ ॥ ❀ ❀ एतैश्चतुर्भिर्हेतुभिर्जाठराधमौ पुत्रापसदौ भविष्यत इत्यन्वयः। हे चंडि कोपने ॥ ३७ ॥ ❀ ❀ हन्यमानानां सताम् ॥ ३९ ॥ ❀ ❀ शतपर्वधृक् वज्रधर इंद्रः ॥ ४० ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

"प्रयतः सावधानपवित्रयोरस्ति" इति नाममाला। मौहूर्तिकात्संध्यामुहूर्तजात्। अवहेलनमवज्ञानम्। चावहेलनादिति पाठानुरोधात् ॥ ३७ ॥ ❀ ❀ अभद्रे निषिद्धरतिकरणात्स्वस्य स्वपुत्राणाम् च भद्रमपहृतमित्याशयेनाह—हे अभद्रे अभद्राविति च जाठरौ जठरभवौ च तावधमौ जाठराधमौ अधमत्वमाह—लोकानिति। देवकोपनकर्त्रीत्वाचंडीत्याह। यद्वा। अकारवाच्याद्वासुदेवाद्भद्रं ययोस्तावभद्राविति। तथापि पुत्रद्वारा तत एव भद्रं भविष्यतीत्याहाभद्रे इति वा ॥ ३८ ॥ ❀ ❀ अकृतागसां निरपराधानां निगृह्यमाणानां प्रसह्याहृतानां सतीनां महति परमेश्वरे आत्मा मनो येषां तेषु विप्रादिषु "यत्र यत्र द्विजा गावः" इत्यग्रे वक्ष्यमाणत्वात् ॥ ३९ ॥ ❀ ❀ शतपर्व वज्रम् ॥ ४० ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

अप्रायत्यादिति युग्मकम्। चित्तस्याशुचित्वात् क्रूरचित्तौ संध्याया द्विघटिकत्वाच्च द्वौ आज्ञातिक्रमेण च धर्म्ममर्यादाभञ्जकौ देवहेलनाच्च हरिद्वेषिणौ एतैरशुचित्वादिभिश्चतुर्भिर्हेतुभिः क्रमेण चतुर्द्धा पुत्रापसदत्वं व्याख्येयम् ॥ ३७ ॥ ३८ ॥ ❀ ❀ प्राणिनामिति युग्मकम् ॥ ३९ ॥ ❀ ❀ तदा महत्कोपक्षण एव ॥ ४० ॥

### श्रीमद्वीरराघवव्याख्या

तदुक्तमेवाह चतुर्भिः अप्रायत्यादिति। ते आत्मनः चित्तस्याप्रायत्यादशुद्धिभावान्मौहूर्तिकात् संध्यामूहूर्तकालसम्बन्धिनो दोषात् उतापि मम यो नियोगः आज्ञा तस्य योऽतिचारोऽतिक्रमः-तेन देवानां रुद्रादीनां हेलनादपचारादपि च ॥ ३७ ॥ ❀ ❀ अभद्रौ लोकामङ्गलकरावत एव जाठराधमौ हे अभद्रे ! तव भविष्यतः। जाठरयोरभद्रत्वमेव विशदयति लोकानित्यर्द्धेन चण्डी क्रुद्धौ सपालान् लोकपालैः सहितान् त्रीन् लोकान् मुहुः पुनः पुनः आक्रन्दयिष्यतः रोदयिष्यत इत्यर्थः ॥३८॥ ❀ ❀ प्राणिनां मन्यमानानां सतां कथम्भूतानां दीनानां कृपणानामकृतमागः अपराधो यैस्तेषां स्त्रीणाञ्च निगृह्यमाणानां सतीनां महात्मसु कुपितेषु सत्सु ॥ ३८ ॥ ❀ ❀ तदा क्रुद्धो रोषितः विश्वेश्वरः लोकम्भावयति सुखयतीति लोकभावनोऽसौ भगवानवतीर्य वराहनरसिंहाभ्यामाविर्भूय हनिष्यति। तत्र दृष्टान्तः अद्रीन्पर्वतान्वज्रायुधधरः इन्द्रो यथेति ॥४०॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

आत्मनो मनसोऽप्रायत्यात् उपशमनलक्षणप्रयत्नाभावात् व्यवायाख्यदोषान्मन्निदेशातिचारेण मदाज्ञातिक्रमणेन हेलनादवज्ञानात् ॥ ३७ ॥ ❀ ❀ जाठराधमौ पुत्राधमौ अधमत्वमुपपादयति। लोकानिति ॥ ३८ ॥ ❀ ❀ प्राणिनां हन्यमानानां सतामकृतापराधानां स्त्रीणां निगृह्यमाणानां सतीनां महापुरुषेषु कुपितेषु सत्सु ॥ ३९ ॥ ❀ ❀ शतपर्वधृक् देवेन्द्रः ॥ ४० ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः।

अप्रायत्यादिति युग्मकम्। मुहूर्त्तः सन्ध्यारूपः तद्भवाद्दोषात् ॥ ३७ ॥ ३८ ॥ ❀ ❀ प्राणिनामिति युग्मकम्। यदा-लोकानाक्रन्दयिष्यतः तदा प्राणिनां हन्यमानानां स्त्रीणाञ्च निगृह्यमाणानां सम्बन्धे महात्मसु कुपितेषु सत्स्वित्यन्वयः ॥३९—४१॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

ते तव आत्मनो मनसोऽप्रायत्यादपावित्र्यात् क्रूरमनसौ मुहूर्तः सन्ध्यारूपो घोरस्तद्भवाद्दोषाद्धोरौ सन्ध्याया द्विघटिकत्वाच्च द्वौ। मम निदेशस्य आज्ञावाक्यस्य अतिचारेणातिक्रमेण च धर्म्ममर्य्यादाभञ्जनौ देवानां श्रीरुद्राणां हेलनाच्च भगवद्द्वेषिणौ हे अभद्रे इति तवैवाभद्राणि त्वत्पुत्रयोः सञ्चरिष्यन्तीति भावः ॥ ३७ ॥ ❀ ❀ जाठरौ त्वज्जठरभवौ अधमौ पुत्रौ एवं व्यस्तात् समस्ताच्च दोषात् लोकानित्यादि। हे चण्डीति ! मद्धर्म्मवाक्येऽपि यत्त्वया प्राचण्ड्यं कृतं तस्येदं फलं भुङ्क्ष्वेति कामक्रोधयोस्त्वं खनिरेवासीति कश्यपस्यापि तस्यां कोपो व्यक्तः ॥ ३८ ॥ ❀ ❀ कियत्तयोरायुरिति चेत् शृण्वित्याह। प्राणिनामित्यादि प्राणिष्वित्यर्थः। शतपर्व्वधृक् वज्रधर इन्द्र इव ॥ ३९ ॥ ४० ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

ते आत्मनो बुद्धेः प्रयतस्य भावः प्रायत्यं कृत्यकालावेक्षणं तद्विपरीतमप्रायत्यं तस्मात् मौहूर्तिकात् सन्ध्यायां कृतात् ग्राम्यकर्मसाहसरूपाद्दोषात् मम निर्देशस्य आज्ञाया अतिचारेण अपालनेन देवानां रुद्रादीनां हेलनादपराधाच्च जाठराधमौ पुत्राधमौ भविष्यतः चण्डि ! साहसिके ॥ ३७—४० ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

प्रथमतो दोषफलमाह—अप्रायत्यादित्यादिचतुर्भिः—तस्या दोषचतुष्टयमनुवदति हेतुत्वेन, प्रसादेऽपि विपरीतफलावश्यकत्वाय । प्रथममाह—अप्रायत्यादिति । ते आत्मनो देहस्य अप्रायत्यात्, अप्रयतत्वात्, रजस्वलात्वादित्यर्थः । मौहूर्त्तिको दोषः सन्ध्यारूपः, तत्रोत्पन्नो दुष्टो न जीवति च । उतेत्यप्यर्थे । एको दोषः सूतकवन्न दोषान्तरं दूरीकरोति, किन्तु समुच्चीयत इत्यर्थः । तृतीयं दोषमाह—मन्निर्देशातिचारेणेति । ममाऽऽज्ञोल्लङ्घनेन । अत्राप्युत, देहलीत्वात् । चतुर्थो दोषः—देवानां चैव हेलनादिति । देवानां भूतानां, गार्हपत्यादीनां वा; हेलनमवज्ञा ॥ ३७ ॥ ❀ ❀ एवं चतुर्भिर्दोषैस्तव पुत्रद्वयं भविष्यतीत्याह, एकैकत्र दोषद्वयसंक्रमात् । तत्र हिरण्याक्षे प्रथमौ, तस्य शीघ्रं मरणात्[1], तपस्यादिकरणाभावाच्च । अभद्रे इति संबोधनं पुत्रस्योभयांशत्वेऽपि मातृदोषेणैव दुष्टाविति ज्ञापयितुम्, अतस्तावभद्रौ । ननु 'माता भस्त्रा पितुः पुत्रः' इति शास्त्राद्वीजादुष्टत्वे कथं तयोर्दोषवत्त्वमित्याशङ्कयाऽऽह—जाठराधमाविति । जठरे जातेन दोषेणाऽधमौ । उत्तमबीजमपि यथा शूद्रायां प्रविष्टं शूद्रतामापद्यते तथेत्यर्थः । तयोर्दोषमाह—लोकानिति । लोकपालसहितान् लोकान् मुहुराक्रन्दयिष्यतः । रुद्रकालजातत्वाद्रोदयितृत्वम् । चण्डि ! कोपनशीले । अयमपि दोषस्तवैव ॥ ३८ ॥ ❀ ❀ एवं तयोर्दोषमेकमुक्त्वा अन्यांस्त्रीन्दोषानाह—प्राणिनामिति । प्राणिनां दोषवत्त्वेऽपि दीनानां वधोऽनुचितः, तत्राप्यकृतागसां वध इत्येको दोषः, स्त्रीणां निगृह्यमाणानामित्यपरः । पाति[2]व्रत्यात्त्याजनं निग्रहः । कोपितेषु महात्मस्विति चाऽपरः, तेषां भगवत्सेवाप्रतिबन्धात्कोपः ॥ ३९ ॥ ❀ ❀ एवं दोषचतुष्टये जाते 'भक्तद्रोहे वधः स्मृतः' इति वाक्यात्परमेश्वरस्तौ मारयिष्यतीत्याह—तदेति । मारणे हेतुः—विश्वेश्वर इति । न हि, जगतीश्वरद्वयं भवति । किञ्च, क्रुद्धः, भक्तानां पीडनात् । भगवानिति वैकुण्ठापचारपरिहारार्थमपि तादृशयोनेरुत्थापयिष्यतीति सूचयति । लोकभावन इति । मर्यादारक्षार्थमपि तद्धननम् । स्वामिनः सेवकवधः साक्षादनुचित इत्यवतीर्य हनिष्यति वराहनृसंहरूपेण । असाविति सोऽत्रैव तिष्ठतीति हननावश्यकत्वं सूचितम् । शतपर्वधृगिति । यथा प्राणिनां क्लेशनिवृत्त्यर्थं वज्रहस्तेनेन्द्रेण भारेण पततां पर्वतानां पक्षच्छेदः क्रियते, तद्वदीश्वरस्य तादृशवध आवश्यक इत्यर्थः ॥ ४० ॥

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

देहलीत्वादिति । पूर्वार्धसमाप्तिदेशस्य देहलीत्वादुत्तरार्धेऽपि उतेति पदं सम्बध्यत इत्यर्थः ॥ ३७ ॥ ❀ ❀ तदेत्यत्र । वैकुण्ठापचारेति । वैकुण्ठे जातो योऽपचारस्तन्निवृत्त्यर्थमित्यर्थः ॥ ४० ॥

### श्रीगिरिधरकृता बालप्रबोधिनी ।

तदुक्तमेवाह—अप्रायत्यादिति चतुर्भिः । ते तवात्मनश्चित्तस्याप्रायत्यात् अशुचित्वात्, मौहूर्तिकात् सन्ध्यामुहूर्तसम्बन्धिनो दोषात् उत अपि, मन्निर्देशातिचारेण ममाज्ञोल्लङ्घनेन, देवानां महादेवादीनां अतिहेलनादवज्ञानाच्च, अभद्रे हे अशुभरूपे तव जाठराधमौ पुत्राधमौ भविष्यत इति द्वयोरन्वयः । अधमत्वमेवाह—अभद्राविति, लोकामङ्गलकरावित्यर्थः । तदेव स्पष्टयति—लोकानिति । तव दोषादेव तयोस्तथात्वं न महोषादिति सूचयन् सम्बोधयति—चण्डीति, हे कोपने इत्यर्थः । तौ सपालान् लोकपालैः सहितान् त्रीन् लोकान् मुहुः पुनः पुनः आक्रन्दयिष्यतः रोदयिष्यत इत्यर्थः ॥ ३७ ॥ ३८ ॥ ❀ ❀ ताभ्यां दीनानां कृपणानां अकृतागसां निरपराधानां प्राणिनां हन्यमानानां सतां स्त्रीणां च निगृह्यमाणानां पातिव्रत्यधर्माच्चाल्यमानानां सतीनां आचारमर्यादाभङ्गेन महात्मसु भक्तेषु कोपितेषु सत्सु तदाऽसौ सर्वान्तर्यामी भगवान् क्रुद्धः सन्नवतीर्य वराहनरसिंहरूपाभ्यामाविर्भूय तौ हनिष्यतीति द्वयोरन्वयः । तत्क्रोधेन हनने हेतुमाह—लोकभावन इति, यतो लोकपालक इत्यर्थः । हनने पालने च सामर्थ्यमाह—विश्वेश्वर इति । तत्र दृष्टान्तमाह—यथेति । भारेणेतस्ततः पततो लोकान्विनाशयतः अद्रीन् शतपर्वधृक् वज्रधर इन्द्रो यथा पक्षच्छेदेन विनाशितवांस्तथेत्यर्थः ॥ ३९ ॥ ४० ॥

### हिन्दी अनुवाद

कश्यपजीने कहा—तुम्हारा चित्त कामवासनासे मलिन था, वह समय भी ठीक नहीं था और तुमने मेरी बात भी नहीं मानी तथा देवताओंकी भी अवहेलना की ॥ ३७ ॥ ❀ ❀ अमङ्गलमयी चण्डी! तुम्हारी कोखसे दो बड़े ही अमङ्गलमय

---

१. माराणात्, क । २. पातिव्रत्यात्त्याजनं, क ।

और अधम पुत्र उत्पन्न होंगे। वे बार-बार सम्पूर्ण लोकपालोंको अपने अत्याचारोंसे रुलायेंगे ॥ ३८ ॥ ❀ ❀ जब उनके हाथसे बहुत-से निरपराध और दीन प्राणी मारे जाने लगेंगे, स्त्रियोंपर अत्याचार होने लगेंगे और महात्माओंको क्षुब्ध किया जाने लगेगा, उस समय सम्पूर्ण लोकोंकी रक्षा करनेवाले श्रीजगदीश्वर कुपित होकर अवतार लेंगे और इन्द्र जैसे पर्वतोंका दमन करता है, उसी प्रकार उनका वध करेंगे ॥ ३९ ॥ ४० ॥

## दितिरुवाच

**वधं भगवता साक्षात्सुनाभोदारबाहुना। आशासे पुत्रयोर्मह्यं मा क्रुद्धाद् ब्राह्मणाद्विभो[1] ॥ ४१ ॥**
**न ब्रह्मदण्डदग्धस्य न भूतभयदस्य च। नारकाश्चानुगृह्णन्ति यां यां योनिमसौ गतः ॥ ४२ ॥**

## कश्यप उवाच

**कृतशोकानुतापेन सद्यः प्रत्यवमर्शनात्। भगवत्युरुमानाच्च भवे म[2]य्यपि चादरात् ॥ ४३ ॥**
**पुत्रस्यैव तु[3] पुत्राणां भवितैकः सतां मतः। गास्यन्ति यद्यशः शुद्धं भगवद्यशसा समम् ॥ ४४ ॥**

### श्रीधरस्वामिविरचिता भावार्थदीपिका ।

सुनाभेनोदारो बाहुर्यस्य। मह्यं मम। कोपितेष्वित्युक्तत्वाच्छंकितचित्ता सती प्रार्थयते ब्राह्मणान्मा भूदिति ॥ ४१ ॥ ❀ ❀ नारका अपि तथा यां यां योनिमसौ गतो भवति तत्रस्थाश्च नानुगृह्णंति कृपां न कुर्वन्ति ॥ ४२ ॥ ❀ ❀ कृतो योऽपराधस्तेन शोकस्ततोऽनुतापस्तेन प्रत्यवमर्शनाद्युक्तायुक्तविचारात् भगवति हरौ भवे श्रीरुद्रे एतैः कारणैः ॥ ४३ ॥ ❀ ❀ पुत्रस्य हिरण्यकशिपोः पुत्राणां मध्ये एकः सतां मतो भविष्यति। तमेव वर्णयति गास्यंतीति सार्धैः पंचभिः। समं सह सदृशं वा ॥ ४४ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः ।

"ब्रह्मकोपहतानां च न गतिर्विद्यते क्वचित्" इत्युक्तेः। यद्वा ब्राह्मणाद्रुद्रात्। तदुक्तं पराशरपुराणे "पितामहस्तु वैश्यश्च क्षत्रियः परमो हरिः। ब्राह्मणो भगवानुद्रः सर्वेषामुत्तमोत्तमः" इति। प्रपदाख्यसाम्न्यपि "त्वं देवेषु ब्राह्मणोऽस्म्यहं मनुष्येषु ब्राह्मणो वै ब्राह्मणमुपधावति" इति श्रुतेश्च। शिवो ब्राह्मण एवेति तत्त्वम्। उपधावति सेवत इत्यर्थः। श्रुत्या ब्राह्मणस्य देवतांतरोपासनापि निषिद्धा। यतः स्वोत्कृष्ट एवोपास्यते न तु स्वनिकृष्टः। उत्कृष्टाभावे स्वसमोऽप्युपास्य इति शिवापेक्षया देवतांतरस्य जातिहीनत्वात्तस्यैव महत्त्वमत एव तत्र महेश्वरमहादेवशब्दौ प्रयुज्येते। हरिवंशेऽपि विष्णुपर्वसप्तविंशशताध्याये परिजातोपाख्याने रुद्रस्तुतौ कश्यपेनाप्युक्तम्। "हविर्भुजं भुवनानां सदैवं ज्येष्ठं द्विजं धर्मभृतां प्रपद्ये" इत्युक्तं नीलकंठेन ज्येष्ठं द्विजं ब्राह्मणमिति व्याख्यातमित्ययमर्थः प्रपंचित इति। किं चात एव मंत्रशास्त्रेपि मनुष्यगुरौ श्रद्धाद्यभावे यथोचितगुरोरलाभे वा महादेवाद्दीक्षा ग्राह्या। तस्यैव सर्वदेवेषु गृहस्थत्वे सति ब्राह्मणत्वात्। दीक्षा च "तत्त्वज्ञो मंत्रयंत्राणां ब्राह्मणो वीतमत्सरः। गृहस्थः सत्यवादी च गुरुः कार्यः प्रयत्नतः॥" इत्याद्यगस्त्यसंहितोक्तेर्गृहस्थविप्रादेव ग्राह्या। तादृशो रुद्रं विना नान्यदेवोऽस्तीति "गुरोरभावे विप्रेंद्र मंत्रग्रहणमुच्यते। कृष्णपक्षे त्रयोदश्यां दक्षिणामूर्तिसन्निधौ" इत्यादिना तंत्रसारार्णवे। तत्प्रपंचित एकादशे प्रपंचयिष्यामो वयमप्यत उपरम्यतेऽत्र। किं च विष्णूपासना शिवोपासनातो न भिन्नास्ति। "यो वै रुद्रः स नारायणः" इति श्रुतेस्तदभिन्नत्वादिति ध्येयं सुज्ञैः। किञ्च। विष्णोरुपासनापि ब्राह्मणस्य श्रुत्यैव बोधिता "यस्त्वेवं ब्राह्मणो विद्यात्तस्य देवा असन्वशे" इत्युत्तरनारायणसूक्तोक्तेरित्यलं प्रसक्तानुप्रसक्त्येति। तमतिसुंदरं बाहुं पुत्रौ मे द्रक्ष्यत इति भाग्यवंतावेव पुत्रौ मे भविष्यतस्तथा मरणस्यावश्यकत्वेऽपि तद्धस्ततस्तयोर्मृतौ सर्वपापनिस्तारश्च भावीत्यत आशासे वांछाम्यहं मह्यं तावपि निस्तारयितुं तादृक्पुत्रयोर्माताहमपि जन्ममध्येऽप्यदृष्टभगवद्रूपापि पुत्रसंबंधेन भगवद्दर्शिनीवाभिमंस्ये। क्रुद्धाद्विप्राद्वधं मा आशास्स इति ब्राह्मणान्मे पुत्रौ मरिष्यत इति शंकितचित्ता व्याकुलैवाहमखिद्यं संप्रति भगवद्धस्ततो वधं श्रुत्वा स्थिरचित्तैवाभूवमिति भावः ॥ ४१ ॥ ❀ ❀ ब्रह्महतस्य न कुत्रापि सुखमित्याह-नेति। नारका नरकस्थाः। असौ ब्रह्मदंडहतो भूतभयदश्च। कृपां न कुर्वंति स्वसमीपे तदागमनसंभाषणादिकं च नानुमन्यंत इत्यर्थः ॥ ४२ ॥ ४३ ॥ ❀ ❀ मतः माननीयः यशसः सह गाने भगवत इदं भक्तस्य वेति भ्रांतिवारणायाह-सदृशं वेति ॥ ४४ ॥

---

१. प्रा. पा. णात्प्रभो। २. प्रा० पा०—भवे चाप्यधिकादरात्। ३. प्रा० पा०—च।

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनीव्याख्या ।

सुष्ठु नाभिर्वलयं यस्य तत्सुनाभं सुदर्शनचक्रं तेनोदारो मोक्षादिदाता महांश्च बाहुर्यस्य स तथा आशासेऽभिकांक्षे ॥ ४१ ॥ ❀ ❀ तत्र हेतुः न ब्रह्मेति द्वितीयार्थे षष्ठ्यौ तत्र स्थाश्चेति चकारान्वयः न कृपां कुर्वन्ति तन्निकटगमनादिकं नानुमोदन्त इत्यर्थः ॥ ४२ ॥ ❀ ❀ कृतेति सार्द्धकम् । मयि भर्तृरूपे गुरौ "पतिरेव हि नारीणां दैवतं परमं स्मृतम्" इत्युक्तः पुत्रस्यैव न तु पौत्रादेरिति सम्बन्धनैकट्यमेवकारेण व्यञ्जितम् ॥ ४३ ॥ ४४ ॥

### श्रीमद्वीरराघवव्याख्या

एवमुक्ते पुनरपि दितिराह द्वाभ्याम् । सुनाभश्चक्रन्तेनोदारः सुन्दरो बाहुर्यस्य तेन भगवता साक्षान्मह्यं मम पुत्रयोर्वधमाशासेऽनुमन्ये । किन्तु हे प्रभो ! क्रुद्धाद्ब्राह्मणान्नानुमन्ये कोपितेषु महत्सु चेत्युक्तत्वात् कोपिताद्ब्रह्मणाद्वधमाशङ्कमानामेवं प्रार्थयते क्रुद्धान्मा भूदिति ॥ ४१ ॥ ❀ ❀ नन्वस्तु ब्रह्मणादन्यतो वा कुतश्चित्तद्वधस्तत्र को विशेष इत्यत्राह नेति । ब्रह्मदण्डदग्धस्य ब्राह्मणशापहतस्य भूतानां भयसम्पादकस्य च नारकाः अपि नरकवासिनोऽपि नानुगृह्णन्त्यनुग्रहं न कुर्वन्ति । नरकवासिनो हि सर्वस्मै लोकाय दुःखं मा भूदिति मन्यन्ते तेऽप्येतयोः कृपां नो कुर्वन्ति इत्यतोऽतिपापिनौ ब्रह्मदण्डदग्धभूतभयदौ इत्यर्थः । किञ्च यां योनिमसौ ब्रह्मदण्डदग्धो लोकभयदश्च गतः प्राप्तो भवति तत्रस्था अपि नानुगृह्णन्तीत्यर्थः ॥ ४२ ॥ ❀ ❀ एवमुक्तो मुनिराह । कृतेत्यादिसप्तभिः कृतो योऽपराधः तेन शोकः तस्माद्योऽनुतापः प्रत्यवमर्शनाद्युक्तायुक्तविचाराद्भगवति परे परमपुरुषे उरुमानाच्च भवे रुद्रे मय्यप्यादराच्च हेतोः ॥ ४३ ॥ ❀ ❀ पुत्राणामार्षत्वाद्बहुवचनं पुत्रयोर्मध्ये एकस्य पुत्रस्य हिरण्यकशिपोः एकः पुत्रः सताम्मतः प्रह्लादः पुत्रः भविता भविष्यति तमेव वर्णयति । गास्यन्तीति सार्द्धैः पञ्चभिः । यस्य तव पौत्रस्य यशः भगवद्यशसा समं सह सदृशं वा गास्यन्ति यच्छब्दस्य स वा इत्युत्तरत्रान्वयः । किञ्च यस्य त्वत्पौत्रस्य शीलमनुवर्तितुं निर्वैरादिभिर्गुणैरात्मानमन्तःकरणं साधवो भावयिष्यन्ति शोधयिष्यन्ते, तत्र दृष्टान्तः योगैः क्षारादिसंयोगैः दुर्वर्णं हेम सुवर्णमिव ॥ ४४ ॥ ४५ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

भर्त्रैवमुक्ता दितिः किमाहेति तत्राह । वधमिति । सुनाभेन चक्रेण युक्तः उदारो महान् बाहुर्यस्य स तथोक्तः "उदारो महति ख्यात" इति यादवः, तेन मह्यं ममाशासे इच्छामि किन्तु विषयोऽस्तीत्याह । मा क्रुद्धादिति ॥ ४१ ॥ ❀ ❀ ब्रह्मशापेन हतस्य को दोष इति तत्राह । ब्रह्मेति । एतादृशः कोऽन्योऽस्तीति तत्राह । न भूतेति । नारक्यनरके पच्यमानाः प्रजाः असौ ब्रह्मशापदग्धभूतभयदो वा चशब्दो वार्थे ॥ ४२ ॥ ❀ ❀ सुनाभायुधात्पुत्रयोर्वधे सद्गतिमाशास इति यत्तत्राभिलषिते तत्तद्भक्तस्य नन्वभक्तस्यायोग्यस्यासुरस्य । तदुक्तम्

विष्णुहस्तवधाल्लोको भक्तस्यान्यस्य न क्वचित् । तथाप्यसुरमोहाय न विविक्तं क्वचित्क्वचित् ॥

इत्याशयवान् कश्यपः प्रकान्तरेण तयोः सद्गतिः स्यादिति ध्वनयन्नुत्तरं वक्ति । कृतशोकेति । कृतपापकर्मनिमित्तशोकाज्जातेनानुतापेन पश्चात्तापेन तव पुत्रस्य हिरण्यकशिपोः पुत्राणां मध्ये सतां सम्मतः एकः पुत्रो भविता स तव पुत्रस्य सद्गतेर्हेतुः स्यादिति शेषः । तदुक्तम्—हिरण्यकशिपुश्चापि भगवन्निन्दया तमः ।

इत्यादि न पुत्रमात्रात्पित्रादेः सद्गतिः किन्तु निर्वैरादिगुणविशिष्टयादिति भावेन तद्गुणमाह । गायन्तीति । भगवद्यशसोविनाभूतत्वात् सममित्युक्तम् ॥ ४३ ॥ ४४ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

नानुगृह्णन्ति न निकटे गमनादिकमनुमन्यन्ते ॥ ४२ ॥ ❀ ❀ कृतेति सार्द्धकम् ॥ ४३ ॥ ❀ ❀ गास्यन्तीति सार्द्धत्रिकम् ॥ ४५ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

सुनाभेन चक्रेण उदारो बाहुर्य्यस्य तेनेति तस्य तमतिसुन्दरं बाहुमुन्नमन्तं पुत्रौ मे द्रक्ष्यत इति भाग्यवन्तावेव पुत्रौ मे भविष्यतः तथा मरणस्यावश्यकत्वेऽपि तद्धस्ततो मरणात् सर्व्वपापेभ्यो निस्तारश्च तयोर्भावी आशासे वाञ्छामि मह्यं मामपि निस्तारयितुमिति तादृशपुत्रयोर्माता अहमपि जन्ममध्येऽप्यदृष्टभगवद्रूपापि पुत्रसम्बन्धेन भगवद्दर्शिनीवाभिमंस्ये । क्रुद्धाद्विप्राद्वधं मा आशासे इति । कोपितेषु महात्मस्विति त्वदुक्त्या ब्रह्मशापादेव पुत्रौ मे मरिष्यत इति शङ्कितचित्ता व्याकुलेवाह माखिद्यं सम्प्रति भगवद्धस्ततो वधं श्रुत्वा स्थिरचित्तैवाभूवमिति भावः ॥ ४१ ॥ ❀ ❀ यतः न ब्रह्मेत्यादि द्वितीयार्थे षष्ठ्यौ नारका अपि तथा यां यां योनिमसौ गतो भवति तत्रस्थाश्च नानुगृह्णन्ति ॥ ४२ ॥ ❀ ❀ कृतो योऽपराधस्तेन शोकस्ततोऽनुतापस्तेन प्रत्यवमर्शनात् युक्तायुक्तविचारात् एतैः पञ्चभिः कारणैः पुत्रस्य हिरण्यकशिपोः पुत्राणां मध्ये एकः सतां मतो भविष्यति ॥ ४३ ॥ ❀ ❀ सन्त एव गास्यन्ति समं सह सदृशं वा ॥ ४४ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

सुनाभः सुदर्शनस्तेनारिषु प्रक्षिप्यमाणेनोदारः प्रक्षेपकुशलो बाहुर्यस्य तेन ॥ ४१ ॥ ४४ ॥ ❀ ❀ कृतेनायुक्तकर्मणा यः शोकस्ततोऽनुतापस्तेन सद्यः प्रत्यवमर्शनात् योग्यायोग्यविचारात् पुत्रस्य हिरण्यकशिपोः ॥ ४३ ॥ ४४ ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

भर्त्रा क्रोधेन अनिष्टे श्राविते, सा विष्णुभक्ता पुत्रयोर्भगवत्संबन्धं श्रुत्वा संतुष्टा, ततेत्यन्वमोदतेत्याह—वधं भगवतेति। तेन पूर्वं 'कोपितेषु महात्मसु' इति महापुरुषकोप उक्तः। स शापपर्यवसायी मा भवतु। तच्छापेन भगवतापि वधे कृते सामीचीन्यं न भविष्यतीति तदभावेन केवलं भगवानेव ब्राह्मणप्रेरणान्यतिरेकेण करोत्विति प्रार्थयति। साक्षादिति स्वहस्तेन, न तु कालादिना। सुनाभोदारबाहुनेति। वधेऽपि सुदर्शनेनैव, हस्तेनैव। यतो हस्त एव मोक्षादिसर्वपुरुषार्थदाता। आशासे, कामितोऽयमर्थो दुर्लभः; परमनभिप्रेतः क्रुद्धादेव ब्राह्मणाद्वधः। तथा वरो देय इति तत्र सामर्थ्यं सूचितं, प्रभो इति ॥ ४१ ॥ ❀ ❀ ब्राह्मणाद्वधोऽत्यन्तविगर्हित इति वक्तुं तस्य परलोकबाधकत्वमाह—न ब्रह्मदण्डेति। ब्रह्मदण्डेन ब्रह्मशापेनाऽग्निरूपेण। दण्डो हि दृढकाष्ठरूपो भवति, तद्रूतोऽग्निः सर्वथैव दहेत्। तत्र हेतुः—भूतभयदस्येति। ब्रह्मदण्डदग्ध एव भूतेभ्यो भयं प्रयच्छति, न ह्यन्यः स्वयं दुःखाभिज्ञः परेभ्यो दुःखं प्रयच्छति। ब्रह्मशापे तु ज्ञानादीनां नाशात्तथा कर्तुं शक्नोति, पृथग्वा हेतुः। चकाराद्भगवद्द्वेषिणः। नारका अपि तस्य संबन्धिनस्तान्वा नाऽनुगृह्णन्ति। द्वितीयार्थे षष्ठी। चकारादन्येऽपि। अप्यर्थे वा चकारः, नारका अपि तं न स्पृशन्तीत्यर्थः। असौ ब्रह्मदण्डदग्धादिर्यां यां योनिं गतः। नारका द्विविधाः, स्थानभेदा योनिभेदाश्च। तत्र योनिभेदे दैहिकः संबन्धोऽधिको भवतीति कदाचिदनुग्रहो भवेत्, तन्निषेधार्थमाह—यां यां योनिमसौ गत इति ॥ ४२ ॥ ❀ ❀ कश्यपस्तां भगवद्भक्तां ज्ञात्वा, स्वबीजस्याऽपि सार्थकतां विलोक्य, वरं प्रयच्छति। कृतशोकानुतापेनेत्यादिसप्तभिः—वरः, पौत्रो वैष्णवस्तव भविष्यतीति। कारणे षड्गुणाः क्षेत्रे कार्ये बीजस्वभावतः। अष्टादशगुणा जातास्ते कीर्त्यन्ते क्रमादिमे ॥१॥ तत्र प्रथमं तस्याः षड्गुणानाह—कृतं यत् कर्म, तत्र शोकः, स्वपुरुषार्थो मया नाशित इति, यथा पुत्रादिनाशे शोकः। एवं कृतेऽपि भोगे, जातेऽपि गर्भे, शोकः। अनुतापो मया किमर्थं कृतमिति पश्चात्तापः। द्वयोरेकवद्भावः कर्तुर्दुःखजननसाम्यात्। अन्यं गुणमाह—सद्यः प्रत्यवमर्शनादिति। प्रत्यवमर्शनमपराधक्षमापनम् (?)। अत्र विनयेनाऽऽगमनं प्रार्थना च प्रत्यवमर्शः। भगवत्युरुमानो 'वधं भगवता साक्षात्' इति भगवत्यधिकसंमाननम्। लोके पुत्रमारकोऽत्यन्तं द्विष्टः, स चेदत्यन्तं मानितस्तदाऽयं महान् गुणः। गुणद्वयमाह—भवे मय्यपि चाऽऽदरादिति। पूर्वं 'न मे गर्भम्' इत्यादि भवस्याऽऽदरः सूचितः। मय्यादरः 'प्रभो' इति संबोधनात्, ब्राह्मणाधिक्याद्वा ॥ ४३ ॥ ❀ ❀ एतैः षड्भिर्गुणैः कृत्वा, एकस्य ज्येष्ठस्य पुत्राणां चतुर्णां मध्ये एकस्तृतीयः सतां मतो भविष्यति। अनेन वंशवृद्धिरपि सूचिता। सतां मतस्तेषां प्रमाणभूतः, अन्यथा सन् सत्तम इति वा वक्तव्यः स्यात्। मतस्तु मानेनैव ज्ञातः। अनेन भगवन्मार्गे स प्रमाणमिति निरूपितम्। यस्य प्रमेयतामाह—गास्यन्तीति। प्रमातु र्यदेव योग्यम्, यत्कदाचिदपि विरुद्धज्ञानविषयो न भवति, फलतः साधनतश्च। अतो भगवद्यशो यदा गीयते तदा तदाधारत्वेन प्रह्लादयशो गीयते। आधाराधेययोस्तुल्यत्वात्समत्वम्। भक्तानामाधारत्वं पूर्वं निरूपितम्। शुद्धमिति विशेषः। खण्डश आधारत्वव्यावृत्त्यर्थं सममित्युक्तम्। भगवद्यशसेति करणं वा शुद्धत्वे समत्वे च। दैत्यानां यशः प्रायेण विषमं भवतीति मतान्तरत्वाच्च तुल्यत्वकथनमपि न दोषाय। यथा 'पुण्यश्लोको नलो राजा' इति। अत एव गास्यन्ति लोकाः ॥ ४४ ॥

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

कृतेत्यत्र। अष्टादशगुणा इति। षण्णां त्रैगुण्येऽष्टादशत्वात्तावन्त इत्यर्थः ॥ ४३ ॥

### श्रीगिरिधरकृता बालप्रबोधिनी

एवमुक्ता दितिराह—वधमिति। भगवता साक्षान्मह्यं मम पुत्रयोर्वधमाशासे अनुमन्ये। मोक्षहेतुत्वादित्याशयेनाह—सुनाभेति। सुनाभं सुदर्शनचक्रं तेन उदारो मोक्षप्रदो बाहुर्यस्य तेनेत्यर्थः। 'कोपितेषु महात्मसु' इत्युक्तत्वात् क्रुद्धाद्ब्राह्मणात् वधो मा भूत्। एतत्सम्पादने तव सामर्थ्यमस्तीति सूचयन्ती सम्बोधयति—विभो इति ॥ ४१ ॥ ❀ ❀ ब्राह्मणाद्वधे को दोष इत्यत आह—नेति। ब्रह्मदण्डो ब्राह्मणशापस्तेन दग्धस्य मृतस्य भूतानां प्राणिनां भयं ददातीति भूतभयदस्तस्य च नारकाश्च नरकवासिनोऽपि नानुगृह्णन्ति अनुग्रहं न कुर्वन्ति। नारका हि स्वयं दुःखमनुभवन्तः एतत्कस्मा अपि मा भूदित्येवं कृपां कुर्वन्तोऽप्येतयोस्तां न कुर्वन्ति, तथा यां यां योनिमसौ ब्रह्मदण्डदग्धो लोकभयदश्च गतो भवति तत्रस्था अपि नानुगृह्णन्तीति। सर्वेभ्योऽपि महापातकिभ्य एतौ महापातकिनावित्यर्थः ॥ ४२ ॥ ❀ ❀ एवं शुद्धभावेन दित्योक्तः कश्यप आह—कृतशोकेति सप्तभिः। कृतं यत् दुष्कर्म तेन यः शोकः मया स्वयमेव स्वदुःखोपायः कृत इति ततो योऽनुतापः मया किमर्थमिदं कृतमिति पश्चात्तापस्तेन, सद्यः प्रत्यवमर्शनाद् युक्तायुक्तविचारेण अपराधक्षमापनात्, 'वधं भगवता साक्षात्' इत्युक्त्या भगवत्युरुमानाच्च 'मा मे गर्भं'

इत्याद्युक्त्या भवे मत्सन्निधावागत्य प्रार्थनया मय्यप्यादराच्च हेतोः ॥ ४३ ॥ ❀ ❀ तव पुत्रस्य हिरण्यकशिपोः पुत्राणां चतुर्णां तु मध्ये एक एव प्रह्लादः सताम्मतः प्रमाणत्वेन सम्मतो भविता भविष्यतीत्यन्वयः । तन्महत्त्वमेव दर्शयति—गास्यन्तीति सार्द्धैः पञ्चभिः । यस्य तव पौत्रस्य यशो भगवद्यशसा समं सह गास्यन्तीत्यन्वयः । तत्र हेतुमाह—शुद्धमिति, भगवन्माहात्म्यसूचकत्वाच्छुद्धिकरमित्यर्थः । यच्छब्दानां स वा इत्युत्तरत्र तच्छब्देनान्वयः ॥ ४४ ॥

### हिन्दी अनुवाद

दितिने कहा—प्रभो ! यही मैं भी चाहती हूँ कि यदि मेरे पुत्रोंका वध हो तो वह साक्षात् भगवान् चक्रपाणिके हाथसे ही हो । कुपित ब्राह्मणोंके शापादिसे न हो ॥ ४१ ॥ ❀ ❀ जो जीव ब्राह्मणोंके शापसे दग्ध अथवा प्राणियोंको भय देनेवाला होता है, वह किसी भी योनिमें जाय—उसपर नारकी जीव भी दया नहीं करते ॥ ४२ ॥ ❀ ❀ कश्यपजीने कहा—देवि ! तुमने अपने कियेपर शोक और पश्चाताप प्रकट किया है, तुम्हें शीघ्र ही उचित-अनुचितका विचार भी हो गया तथा भगवान् विष्णु, शिव और मेरे प्रति भी तुम्हारा बहुत आदर जान पड़ता है इसलिये तुम्हारे एक पुत्रके चार पुत्रोंमेंसे एक ऐसा होगा, जिसका सत्पुरुष भी मान करेंगे और जिसके पवित्र यशको भक्तजन भगवान्के गुणोंके साथ गायेंगे ॥ ४३ ॥ ४४ ॥

**योगैर्हेमेव दुर्वर्णं भावयिष्यन्ति साधवः । निर्वैरादिभिरात्मानं यच्छीलमनुवर्तितुम् ॥ ४५ ॥**
**यत्प्रसादादिदं विश्वं प्रसीदति यदात्मकम् । स स्वदृग्भगवान् यस्य तोष्यतेऽनन्यया दृशा ॥४६ ॥**
**स वै महाभागवतो महात्मा महानुभावो महतां महिष्ठः ।**
**प्रवृद्धभक्त्या ह्यनुभाविताशये निवेश्य वैकुण्ठमिमं विहास्यति ॥ ४७ ॥**
**अलम्पटः शीलधरो गुणाकरो हृष्टः परर्द्ध्या व्यथितो दुःखितेषु ।**
**अभूतशत्रुर्जगतः शोकहर्ता[1] नैदाधिकं तापमिवोडुराजः ॥ ४८ ॥**

### श्रीधरस्वामिविरचिता भावार्थदीपिका

हीनवर्णं हेम यथा योगैर्दाहादिभिरुपायैः शोध्यते तथा यस्य शीलं स्वभावमनुवर्तितुमनुगंतुं प्राप्तुं निर्वैरादिभिर्योगैरात्मानं भावयिष्यंति शोधयिष्यंति ॥ ४५ ॥ ❀ ❀ विश्वप्रसादे हेतुर्यदात्मकं स्वदृगात्मसाक्षी यस्यानन्यया भगवानेव सत्य इत्येवंभूतया दृशा तोष्यते तोषं प्राप्स्यते ॥ ४६ ॥ ❀ ❀ तत्र हेतुः । स वा इति । महात्माऽपरिच्छिन्नदृष्टिः महानुभावो महाप्रभावः महतामपि मध्ये महिष्ठोऽतिशयेन महान् प्रवृद्धया भक्त्यानुभाविते शोधिते चित्ते वैकुंठं हरिं निवेश्य देहाद्यभिमानं त्यक्ष्यति ॥ ४७ ॥ ❀ ❀ महाभागवतत्वमाह । अलंपट इति । शीलधरः सुस्वभावः गुणानां धैर्यादीनामाकरो जन्मभूमिः परेषां समृद्ध्या हृष्टः । परेषु दुःखितेषु सत्सु । न भूतो जातः शत्रुर्यस्य निदाघे भवं तापं चंद्रो यथा हरत्येवं जगतः शोकहर्ता भविष्यति ॥ ४८ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

हीनवर्णमष्टादशदोषयुतम् । शोध्यते दोषान्निरस्य निर्दोषं क्रियते । सुवर्णाष्टादशदोषास्तु रत्नपरीक्षाशास्त्रतोऽवसेयाः ॥४५॥ ❀ ❀ यस्य भगवतः प्रसादात् । यदात्मकं यत्स्वरूपम् । यद्वा । यस्य भगवतः प्रसादाद् यस्य यस्मै प्रह्लादाय इदं विश्वमेव प्रसीदति कीदृशं यद् यो भगवानेवात्मांतर्यामी यस्य तद् अंतर्यामिरूपेण तथा प्रेरयति तथा तत्पित्रविरोधिन इंद्राद्या अपि प्रह्लादाय प्रसीदंतीत्यर्थः । स्वान्स्वीयान्भक्तानेव प्रीत्या पश्यतीति स्वदृक् । न विद्यतेऽन्यो यस्यां तादृश्या दृशा बुद्ध्या यद्बुद्धावन्यः प्रवेष्टुं न शक्नोतीति भावः ॥ ४६ ॥ ❀ ❀ तत्र भगवत्तोषे । यद्वा । महात्मा महाबुद्धिर्महाधृतिर्वा महांत एव स्तंभस्वेदाद्याः प्रेमानुभावा यस्य स तथा । तत्र हेतुः—प्रवृद्धया भक्त्याऽनुभावं प्रापिते आशये मनसि वैकुंठं श्रीकृष्णं निवेश्येमं मायिकलोकं त्यक्ष्यतीत्यर्थः । अतद्विहास्यतीति पाठे तस्माद्धरेरन्यदतत् सर्वमनित्यमसारं चेति निरूप्य विहास्यतीत्यर्थः ॥ ४७ ॥ ❀ ❀ तस्य भक्तिं भक्त्युत्थान्महागुणांश्चावोचमन्यानपि भक्त्यनुकूलान्महाभागवतत्वसंपादकान्स्वाभाविकान्निर्वैरादिभिरित्यत्रोक्तादिपदग्राह्याञ्शृण्वित्याह—अलंपट इति । लंपटो विषयासक्तस्तदन्यो विरक्त इत्यर्थः । 'शीलसमाधौ' समाधिं कुर्वाण इत्यर्थः । वक्तुमशक्या एवं तस्य गुणा इत्याह गुणाकर इति । व्यथितस्तद्दुःखमात्मीयं करोतीत्यर्थः । निदाघे उष्णकाले ॥ ४८ ॥

---

१. प्रा० पा०—शोकहन्ता ।

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

गास्यन्तीति सार्द्धत्रिकम्। तत्रापि गर्भेऽङ्कपातं कृत्वा गास्यन्तीत्यर्द्धकम् "बहुवाक्यैकवाक्यत्वे गर्भेऽङ्का विन्दुमस्तका" इति परिभाषानियमात् शुद्धं श्रोतॄणामघहरं (१) आदिना शमादिग्रहः आत्मानं चित्तम्भावयिष्यन्ति तादृशभक्तियोग्यतायै शोधयिष्यन्ति ॥ ४५ ॥ ॐ ॐ (२) यदात्मकं यदधीनं यो हि यदधीनो भवति स तत्प्रसादात्प्रसीदतीति व्याप्तिदर्शनात् स्वदृक् स्वप्रकाशः ॥ ४६ ॥ ॐ ॐ (३) तत्र तथा दृष्टया तोषे महताम्भक्तानामपि मध्ये "भवान्मे खलु भक्तानां सर्वेषां प्रतिरूपधृक्" इति श्रीभगवदुक्तेः ॥ ४७ ॥ ॐ ॐ अलाम्पट्याद्यश्चैते भक्त्यनुकूलास्तटस्थलक्षणगुणाः ज्ञेयाः ॥ ४८ ॥

### श्रीमद्वीरराघवव्याख्या

किञ्च यत्प्रसादाद्भगवतः प्रसादादनुग्रहाद् इदं विश्वं प्रसीदति भगवदनुग्रहविषये कृत्स्नं विश्वमपि प्रसादमेव कुर्यादित्यर्थः। यदात्मकं भगवानेवात्मा यस्य तद्विश्वं यद्भगवदात्मकं स स्वदृक् करणनिरपेक्षं सर्वं साक्षात्कुर्वाण इत्यर्थः, भगवान् यस्य त्वत्पौत्रस्यानन्ययाऽव्यभिचारिण्या दृशा भक्त्या तोष्यते सन्तोषं प्राप्नोति ॥ ४६ ॥ ॐ स वै त्वत्पौत्रः महाभागवतः निरतिशयभगवद्भक्तः महानुभावः महात्मा निर्मलान्तःकरणः महतां माहात्म्यवतामपि मध्ये महिष्ठः निरतिशयमाहात्म्यवान् प्रवृद्धया भक्त्यानुभाविते संशोधिते आशये चित्ते वैकुण्ठं भगवन्तं निवेश्यावस्थाप्य तद्भगवद्व्यतिरिक्तमैश्वर्यादिकं विहास्यति त्यक्ष्यति ॥ ४७ ॥ ॐ ॐ किञ्चालम्पटः अलोलुपः शीलधरः सुस्वभावः गुणानामाकरः परद्धर्या परेषामृद्धिः समृद्धिस्तया हृष्टः परेषु दुःखितेषु सत्सु स्वयमपि व्यथितः दुःखितः न भूतो न जातः शत्रुर्यस्य सोऽभूतशत्रुः जगतः शोकं हरतीति तथा तत्र दृष्टान्तः नैदाघिकं निदाघो ग्रीष्मकालः तत्र भवं तापमुडुराजश्चन्द्रो यथा हरतीति ॥ ४८ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली ।

साधवो यस्य प्रह्लादस्य शीलं शमादिस्वभावमनुवर्तितुमात्मनि कर्तुं निर्वैरादिभिर्यथास्थितवस्तुदर्शनादिगुणैरात्मानमन्तःकरणं भावयिष्यन्ति शमादिमत्कुर्वन्ति दोषानपनीय कथमिव योगैरौषधाद्युपायैर्दुर्वर्णं दुष्टवर्णं हेमेव यथा भावयन्ति अष्टादशदोषान्निरस्य स्वस्वरूपस्थितं कुर्वन्ति तथेत्यर्थः। अनेन निदर्शनेनात्रेदं तात्पर्यमवगन्तव्यं तथाहि हिरण्यकशिपौ द्वौ चेतनौ स्तस्तत्रैकः सद्गतियोग्य एकोऽन्यगतियोग्यः अनादिभक्तिलक्षणयोग्यतौषधेन दुःसङ्गदोषलक्षणदुर्वर्णमपनीय पुत्रादिः सच्चेतनस्य सद्गतिहेतुः स्यान्न धुरस्यातोऽन्यद् दुष्टजनमोहनार्थं तदुक्तं "स्वतः सद्गतियोगस्य पुत्रादेर्हेतुता भवेत्। योग्यताऽनादिभक्तिः स्यादयोग्यस्य कुतो गतिः॥" इति ॥ ४५ ॥ ॐ ॐ तव पौत्रस्य प्रह्लादस्य माहात्म्यं भगवत्प्रसादायत्तमिति भावेनाह। यत्प्रसादादिति। यस्य हरेः प्रसादात् प्रसन्नत्वे हेतुमाह। यदात्मकमिति। यदात्मकं यत्स्वामिकं येन व्याप्तं च स स्वदृक् सर्वदैकप्रकारज्ञानो भगवान् यस्यान्यया सर्वोत्तमो हरिरेतत्सदृशोऽन्यो नास्तीत्येवं विशिष्टया दृशा ज्ञानेन तोष्यते ॥ ४६ ॥ ॐ ॐ स वा इति। स एव पौत्रो महात्मा एतादृशमहिमा अतत् तस्माद्धरेरन्यत्सर्वमनित्यमसारं हीनं चेति निरूप्य विहास्यति त्यक्ष्यतीत्यन्वयः। महानुभावो महाप्रभावः वैष्णवसिद्धान्ते महानिश्रयो वा वैकुण्ठं नारायणम् ॥ ४७ ॥ ॐ ॐ निर्वैरादिभिरित्यत्रादिशब्दोक्तान् गुणानाह। अलम्पट इत्यादिना। अलम्पटो विरक्तः शीलधरः शील-समाधाविति धातोः समाधिं कुर्वाणः गुणाकरो गुणनिधिः व्यथितेषु दुःखितेषु परेषु दुःखितस्तद्दुःखमात्मीयं करोतीत्यर्थः। अभूतशत्रुरजातशत्रुः नैदाघिकमुष्णकालजातम् ॥ ४८ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

तद्यशोगानस्य फलमाह। योगैरिति। अनुवर्त्तितुमनुमोदनेनानुगन्तुम् ॥ ४५ ॥ ॐ ॐ अनन्यया तदेकस्फूर्तिमय्या ॥ ४६ ॥ ॐ ॐ महाभागवतत्वमेव विवृणोति। महात्मेत्यादिना कुण्डलमण्डिताननमित्यन्तेन ॥ ४७ ॥ ॐ ॐ अलम्पट इति युग्मकम् ॥ ४८ ॥ ४९ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

हीनवर्णं हेम योगैर्दाहादिभिर्यथा शोध्यते तथा यस्य शीलं स्वभावमनुवर्तितुमनुगन्तुं प्राप्तुं निर्वैरादिभिर्योगैरात्मानं भावयिष्यन्ति शोधयिष्यन्ति ॥ ४५ ॥ ॐ ॐ यस्य भगवतः प्रसादाद्धेतोर्यस्मै प्रह्लादाय इदं विश्वमेव प्रसीदति कीदृशं सत् स एवात्मा अन्तर्य्यामी यस्य तद् अन्तर्य्यामिरूपेण तथा लोकान् प्रेरयति तथा तत्पितृवैरिण इन्द्राद्या अपि प्रह्लादाय प्रसीदन्तीत्यर्थः। स्वीयान् भक्तानेव प्रीत्या पश्यतीति स्वदृक्। न विद्यतेऽन्यो यस्यां तादृश्या दृशा बुद्ध्या यद्बुद्धौ अन्यः प्रवेष्टुं न शक्नोतीत्यर्थः ॥ ४६ ॥ ॐ ॐ महात्मा महाधृतिर्महाबुद्धिर्वा महान्त एव स्तम्भस्वेदाद्याः प्रेमानुभावा यस्य सः। तत्र हेतुः। प्रवृद्धया भक्त्या अनुभाविते अनुभावं प्रापिते आशये मनसि वैकुण्ठं कृष्णं वैकुण्ठस्थवस्तुमात्रं वा निवेश्य इमं मायिकं

लोकं त्यक्ष्यति ॥ ४७ ॥ ❀ ❀ तस्य भक्तिं भक्त्युत्थान् महागुणांश्चावोचमन्यानपि भक्त्यनुकूलान् स्वाभाविकान् गुणान् शृण्वित्याह । अलम्पट इति । वक्तुमशक्या एव गुणा इत्याह गुणानामाकरः । परेषामृद्ध्या सम्पत्त्या परेषु दुःखितेषु सत्सु निदाघभवं तापं चन्द्रो यथा तथा जगतः शोकहर्ता भविष्यतीति ॥ ४८ ॥

श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः ।

योगैः सन्तापनादिभिर्दुर्वर्णं हेम यथा भाव्यते तद्वत् साधवः मुमुक्षवः यस्य जायमानस्य प्रह्लादस्य शीलं स्वभावमनुवर्तितुमनुगन्तुं निर्वैरादिभिर्योगैरात्मानं भावयिष्यन्ति शोधयिष्यन्ति ॥ ४५ ॥ ४६ ॥ ❀ ❀ इमं प्रसिद्धं देहाद्यभिमानं विहास्यति त्यक्ष्यति ॥ ४७ ॥ ४८ ॥

श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

एवं साधारण्येन प्रमेयत्वमुपपाद्य, असाधारण्येनोपपादयति—योगैरिति । यथा कुन्दनकर्तारः कल्कादिभिः सुवर्णं शोधयन्ति, सर्वथा चेन्निर्दुष्टम् तदा स विजातीयसजातीयान् परिगृह्णाति । क्षुद्रेऽपि सजातीये भगवन्तं योजयितुं शक्नोति, हीरकमिव । तत्र निकषे ज्ञाते । तथा स्वात्मानमपि भावयेत् । अतः सुवर्णे रजतादिदोषा यथा दूरीक्रियन्ते, तथा आत्मन्यपि वैरादिदोषा दूरीकर्तव्याः । अतो निर्वैरताया अवधिर्ज्ञातव्यः । प्रह्लादस्तु औत्पत्तिकतादृशगुणयुक्तः । अतो 'यथा चिति तन्मात्रेण तदात्मकत्वात्' इति न्यायेन ब्रह्मचैतन्यमिव स्वचैतन्यं क्रियते, साधनैर्भगवद्भावो वा संपाद्यते, भगवदनुग्रहात् । तथा साधुत्वार्थमन्यत्र भगवद्भावसंपादनार्थं प्रह्लादभावोऽपि संपाद्यते । तदाह—यथा सुवर्णं साधयन्ति, तथा यच्छीलमनुवर्तितुं निर्वैरादिभिरात्मानं साधयिष्यन्ति । साधवः परोपकारनिरताः ॥ ४५ ॥ ❀ ❀ एवं प्रमेयत्वं निरूप्य फलत्वं निरूपयति—यत्प्रसादादिति । भगवान् येन तोष्यते । यद्यपि सर्वेषामात्मत्वात् स्वरूपतस्तुष्ट एव, तथापि साधनेन तुष्टस्तुष्ट इत्युच्यते । तदाह—यस्यानन्यया दृशेति । प्राणिनां षोडशदृष्टयो भवन्त्यन्तः; दशेन्द्रियाणि, अन्तःकरणचतुष्टयम्, आत्मा, देहश्चेति । प्राणेन सह सप्तदश । तत्सम्बन्धिनः पुत्रादयो बाह्याः सप्तदश । एवं चतुस्त्रिंशदपि दृष्टयो भगवद्विषयिका एव यस्य सोऽनन्यदृक्, सर्वभावेन प्रपन्नः । तदा सर्वभावमापन्नो भगवान् प्रसीदति । ननु भगवत्प्रसाद एव फलं कथमुच्यते ? विश्वस्यैव फलत्वात् । अन्यथा भगवानपि विश्वस्मिन् न रमेत । अत आह यस्य भगवतः प्रसादादिदं विश्वमेव प्रसीदति । भगवत्प्रसाद एव विश्वप्रसादः । अनुसन्धानभेदात् कार्यकारणभावः, अन्यथा कार्ये साधनान्तरमप्यपेक्ष्येत । अतो भेदव्यावृत्त्यर्थमाह—यदात्मकमिति । भगवदात्मकमेव विश्वम्, भगवति प्रसन्ने प्रसन्नमेव भवति । तदाऽस्य सर्वत्र कामचारो भवति भगवत इव । ननु भगवान् तं प्रति कथं विषयत्वमापद्यते, हीनभावापत्तेः मर्यादाभङ्गश्च स्यात् । अत आह—स्वदृगिति । स भगवान् सर्वमात्मत्वेनैव पश्यति । तथा च, तस्य प्रसादे अयमप्यात्मत्वेनैव पश्येत्, अतो न हीनत्वम्, न वा मर्यादाभङ्गः । स्वत एव भगवत्त्वात् पूर्णकामोऽपि । तदाह—भगवानिति । तस्मात्फलरूपः प्रह्लादः ॥ ४६ ॥ ❀ ❀ साधनरूपमाह त्रिभिः, साधनानां त्रैविध्यात् । गुणरूपाणि कानिचित्साधनानि, दोषाभावरूपाण्यपराणि, अन्तरङ्गं फलरूपं चैकम् । तत्र प्रथमं गुणरूपाणि साधनान्याह—स वै महाभागवत इति । यस्तूपपत्त्योत्पत्त्या च साधनवान्, स एव तच्छास्त्रे गुणयुक्तः । अतः प्रह्लादस्तादृश इति वै निश्चयेन महाभागवतः । यस्तु भगवदीयो भूत्वा भगवदीयमेव देहादिभिः करोति, जानाति, स भागवतः । यस्तु सर्वदैव तथाविधः, स महाभागवतः । अनेन भगवच्छास्त्रसिद्धं सर्वमेव साधनमुक्तम् । महात्मेति द्वितीयं साधनं ज्ञानमार्गसिद्धम् । ब्रह्मभावेन स जीवो महानात्मा भवति, अन्यथा परिच्छिन्न एव स्यात् । महत्त्वं चापरिमितमेव । महानुभाव इति तृतीयं साधनम् । कर्ममार्गानुसारेणोत्कर्षः, तत्र ह्यनुभावेनैव महत्त्वम् । कर्मणोऽनित्यत्वेन महत्त्वजनकत्वाभावात् कर्मजनितोऽनुभाव एव तथात्वबोधकः । तस्य महानुभावत्वमग्न्यादिभिर्दाहाद्यभावात् । सर्वोत्कृष्टोऽनुभावो महान् शीघ्रप्रत्ययहेतुः, महत्प्रत्ययहेतुश्च । महतां महिष्ठः, चतुर्थो लोके उत्कर्षहेतुः कीर्तिमतामपि कीर्तिमानित्यर्थः । कीर्तिश्रियौ वा लोके महत्त्वहेतू । अत एव महतां मध्येऽत्यन्तं महान् महिष्ठः । एवं चतुर्विधं साधनमुक्त्वा पञ्चमं पुरुषार्थरूपं भगवत्स्नेहमलौकिकं साधनत्वेनाऽऽह—प्रवृद्धभक्त्येति । पूर्वसाधनैः प्रकर्षेण वृद्धा या प्रेमलक्षणा भक्तिः, तयाऽनुभावितं यदन्तःकरणं प्रेम्णा तदात्मकं संजातम्, यथा भगवान् भाति । स हि स्वाश्रयः, अत एव स्वभावापन्नेऽन्तःकरणे संनिविशते[1] । वैकुण्ठमिति यद्दर्शनार्थमेतावान् क्लेशोऽनुभूतः । इमं देहं विहास्यति, विदेहकैवल्यं प्राप्स्यति, देहसंततिर्निवर्तिष्यत इत्यर्थः । एवं सर्वशास्त्रलोकसिद्धं साधनं सफलमुक्तं गुणरूपम् ॥ ४७ ॥ ❀ ❀ दोषाभावरूपमाह—अलम्पट इति । लाम्पट्यमिन्द्रियविषयासक्तिर्दोषः, शीलं सुस्वभावः, तदेव धनं यस्य । सर्वेभ्य एव चौरादिभ्यो धनं संरक्ष्यते, तथा हीनानामतिक्रमादिभिः स्वशीलं संरक्ष्यते । अनेन शीलनाशो दुःशीलता च निवारिता । गुणाकर इति । गुणाः सत्यादयः प्रथमस्कन्धोक्ताः, तेषामाकरः स्थानम् । ते सर्वे दोषाभावरूपाः । लौकिका भगवत्युच्यमानास्तथैव भवन्ति । सर्वेषु गुणेषु समता, दया चोत्कृष्टे इति तयोर्विवरणमाह—हृष्टः परद्धर्या व्यथितो दुःखितेष्विति । स्वसमृद्ध्यैव सर्वो हृष्यति, अयं

१. स निविशते. ग. ङ. ।

तु परसमृद्धयाऽपीति समः। दुःखितेषु व्यथितो दयावानेव भवति, परदुःखं दृष्ट्वा कारुणिक एव दुःखितो भवति। अभूतशत्रुरिति। न भूताः शत्रवो यस्य। किं बहुना, यस्य कामादयोऽपि न शत्रवः। जगतः शोकहर्तेति सामर्थ्यम्। परदुःखप्रहाणेच्छा सहजा निरुक्ता। शोकस्त्वन्तर्हितस्तापः। बहिस्तापमपि निवारयतीति दृष्टान्तेनाऽऽह—नैदाघिकमुष्णकाले सूर्यजनितम्, तथा कलिकालादौ कालजनितमपि तापम्। उडुराजश्चन्द्रः। स हि नक्षत्रैः सह तापं दूरीकरोति। तथा सर्वपरिकरसहितः स्वसान्निध्येन असान्निध्येन वा तापं दूरीकरोतीत्यर्थः॥ ४८॥

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

यत्प्रसादादित्यत्र। दृश्य इति। दर्शनसाधनानि, दर्शने विषयाश्च। कार्य इति। कार्यप्रसादार्थम् मर्यादाभङ्ग इति। 'पराञ्चि खानि' इति श्रुतिविरोधान्मर्यादाभङ्गः। अतो नेति। आत्मत्वादावृतचक्षुष्ट्वाच्च नेत्यर्थः॥ ४६॥ ❀ ❀ स वा इत्यत्र। स हि स्वाश्रय इति। स भगवान्, हि यतो हेतोः, स्वप्रतिष्ठित इत्यर्थः॥ ४७॥

### श्रीगिरिधरकृता बालप्रबोधिनी

किञ्च यस्य शीलमनुवर्तितुं निर्वैरादिभिर्गुणैरात्मानमन्तःकरणं साधवः समाचारनिष्ठाः स्वपरकार्यसाधकाः भावयिष्यन्ति शोधयिष्यन्ते। तत्र दृष्टान्तमाह—योगैरिति। दाहादिभिरुपायैर्दुर्वर्णं धात्वन्तरसम्मेलनेन हीनवर्णं हेम सुवर्णं यथा शोधयन्ति तथेत्यर्थः॥ ४५॥ ❀ ❀ किञ्च यस्य भगवतः प्रसादाद् अनुग्रहाद् इदं विश्वं प्रसीदति यदनुग्रहविषये कृत्स्नं विश्वमप्यनुग्रहमेव करोति। तत्र हेतुमाह—यदात्मकमिति, यो भगवानेव आत्मा यस्य तद् भगवदात्मकमित्यर्थः। स भगवान् यस्य तव पौत्रस्य अनन्यया दृशा एकान्तया भक्त्या तोष्यते सन्तोषं प्राप्यते। ननु भक्तेः स्नेहरूपत्वात्तस्य चान्तःकरणवृत्तिविशेषत्वात् तस्यान्यनिष्ठस्य ज्ञानमेव भगवतः कथमित्यत आह—स्वदृगिति, साक्षितया सर्वान्तःकरणे स्थितः स्वयमेव सर्वं पश्यतीत्यर्थः॥ ४६॥ ❀ ❀ वै निश्चयेन स त्वत्पौत्रो महतां माहात्म्यवतामपि मध्ये महिष्ठः निरतिशयमाहात्म्यवान् भविष्यति। तत्र नुभाव इति, महान् अग्न्यादिभिरप्यदाह्यत्वादिरूपोऽनुभावः प्रभावो यस्य स इत्यर्थः। तत्र हेतुमाह—महाभागवत इति, निरतिशयभगवद्भक्त इत्यर्थः। सर्वविषयत्यागमन्तरेण तथा भक्तिरपि न सम्भवतीति। तत्र हेतुमाह—महात्मेति, निर्मलान्तःकरण इत्यर्थः। अतो हि प्रवृद्धया भक्त्या अनुभाविते संशोधिते आशये चित्ते वैकुण्ठं भगवन्तं निवेश्य अवस्थाप्य इमं लोकं देहं वा विहास्यति त्यक्ष्यति॥ ४७॥ ❀ ❀ उक्तानेव महाभागवतत्वादीन् गुणान् स्पष्टयति—अलम्पट इति द्वाभ्याम्। अलम्पटः विषयेष्वनासक्तो जितेन्द्रिय इत्यर्थः। शीलधरः सुस्वभावः। शीलधन इति पाठान्तरम्। गुणानां सत्यप्रतिज्ञत्वधैर्यादीनामाकरः जन्मभूमिः परेषां समृद्धया हृष्टः। परेषु दुःखितेषु सत्सु स्वयमपि तद्दुःखेन व्यथितो दुःखितः। न भूतो न जातः शत्रुर्यस्य स अभूतशत्रुः शत्रुदृष्टिरहितः। जगतः सर्वप्राणिनः शोकहर्ता। तत्र दृष्टान्तमाह—नैदाघिकमिति, निदाघो ग्रीष्मकालस्तत्र भवं तापं यथा उडु[1]राजश्चन्द्रो हरति तथेत्यर्थः॥ ४८॥

### हिन्दी अनुवाद

जिस प्रकार खोटे सोनेको बार-बार तपाकर शुद्ध किया जाता है, उसी प्रकार साधुजन उसके स्वभावका अनुकरण करनेके लिये निर्वैरता आदि उपायोंसे अपने अन्तःकरणको शुद्ध करेंगे॥ ४५॥ ❀ ❀ जिनकी कृपासे उन्हींका स्वरूपभूत यह जगत् आनन्दित होता है, वे स्वयंप्रकाश भगवान् भी उसकी अनन्य भक्तिसे सन्तुष्ट हो जायँगे॥ ४६॥ ❀ ❀ दिति! वह बालक बड़ा ही भगवद्भक्त, उदारहृदय, प्रभावशाली और महान् पुरुषोंका भी पूज्य होगा। तथा प्रौढ़ भक्तिभावसे विशुद्ध और भावान्वित हुए अन्तःकरणमें श्रीभगवान्‌को स्थापित करके देहाभिमानको त्याग देगा॥ ४७॥ ❀ ❀ वह विषयोंमें अनासक्त, शीलवान् गुणोंका भण्डार तथा दूसरोंकी समृद्धिमें सुख और दुःखमें दुःख माननेवाला होगा। उसका कोई शत्रु न होगा तथा चन्द्रमा जैसे ग्रीष्म ऋतुके तापको हर लेता है, वैसे ही वह संसारके शोकको शान्त करनेवाला होगा॥ ४८॥ ❀ ❀

**अन्तर्बहिश्चामलमब्जनेत्रं स्वपूरुषेच्छानुगृहीतरूपम्।**
**पौत्रस्तव श्रीललनाललामं द्रष्टा स्फुरत्कुण्डलमण्डिताननम्॥ ४९॥**

---

१. यद्यपि क-ख-पुस्तकयोष्टीकायामिन्दुराजश्चन्द्र इति दृश्यते परं, मूले तु उडुराज इति ततोऽस्माभिर्मूलानुरोधी पाठः कल्पितोऽस्ति टीकायाम्।

### मैत्रेय उवाच

**श्रुत्वा भागवतं पौत्र[1]ममोदत दितिर्भृशम् । पुत्रयोश्च वधं कृष्णाद्विदित्वाऽऽसीन्महामनाः ॥ ५० ॥**

**इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां तृतीयस्कन्धे दितिकश्यपसंवादे चतुर्दशोऽध्यायः ॥ १४ ॥**

### श्रीधरस्वामिविरचिता भावार्थदीपिका

अपरिच्छिन्नदृष्टित्वमाह । अंतरिति । स्वपुरुषाणामिच्छाया पुनः पुनर्गृहीतानि रूपाणि येन । श्रीरेव ललना सुंदरी तस्या ललामं मंडनम् । द्रष्टा द्रक्ष्यति ॥ ४९ ॥ ❀ ❀ महामनाः सोत्साहचित्ता हरिणा सह युद्धेन मरणे पुत्रयोः कीर्तिः सद्गतिश्च भवेदिति ॥ ५० ॥

इति तृ० टी० चतुर्दशोऽध्यायः ॥ १४ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

अंतरन्तःकरणे ध्यानेन । बहिर्नेत्राभ्यां साक्षात् । पौत्रः प्रह्लादः ॥ ४९ ॥ ❀ ❀ भृशममोदत अहोमद्विकर्मापि सत्कर्मशिरोमणिदुर्लभं फलं दास्यतीत्याहाहो मे भाग्यम् । पुत्रयोर्मे सत्कीर्तिसद्गती भविष्यतः । पौत्रश्च मे हरिभक्तो भविष्यतीति सोत्साहचित्ता "कुलं पवित्रं जननी कृतार्था वसुंधरा भागवती च धन्या । स्वर्गं गता वै पितरो हि तेषां येषां कुले वैष्णवनामधेयम्" इति विष्णुधर्मे । किञ्च "ये ये हताश्चक्रधरेण विष्णुना त्रैलोक्यनाथेन जनार्दनेन । ते ते गता विष्णुपुरीं नरेंद्राः क्रोधोऽपि देवस्य वरेण तुल्यः" इति च ॥ ५० ॥

इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे तृतीयस्कन्धे चतुर्दशोऽध्यायः ॥ १४ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

अपरिच्छिन्नदृष्टित्वं सर्वत्र तदेकस्फूर्त्तिमत्त्वं कश्यपोक्तेर्बहुकालानन्तरं प्रह्लादस्य जनिष्यमाणत्वाद् द्रक्ष्यतीति लकारव्यत्ययो व्याख्यातः ॥ ४९ ॥ ❀ ❀ अमोदत हन्त हन्त मद्विकर्मापि सत्कर्मशिरोमणिदुर्लभं फलं दास्यतीत्याननन्द । वाराहनृसिंहाभ्यां पुत्रवधेऽपि कृष्णादित्युक्तिः श्रीकृष्णस्यांशित्वमभिव्यञ्जयति एवमन्यत्रापि ज्ञेयम् ॥ ५० ॥
इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीराधारमणदासगोस्वामिविरचितायां दीपकाटिप्पण्यां चतुर्दशोऽध्यायः ॥१४॥

### श्रीमद्वीरराघवव्याख्या

किञ्च तव पौत्रः श्रीललनाललामं श्रीः लक्ष्मीरेव ललना तस्या ललामं भूषणं "भर्तानाम परं नार्या भूषणादपि भूषणम्" इत्युक्तरीत्या भूषणभूतं श्रियःपतिं स्वहृदयकमलमध्ये वहिश्च द्रष्टा द्रक्ष्यते कथंभूतं श्रीललनाललामं स्फुरती ये कुण्डले ताभ्यां मण्डितं भूषितमाननं मुखं यस्य तं कुण्डलयोः श्रोत्रालंकारत्वेऽपि गण्डस्थलादिषु तत्प्रतिफलनवशान्मुखस्यापि शोभातिरिच्यते । स्वपुरुषाः स्वभक्तास्तेषामिच्छानुरूपं गृहीतमप्राकृतदिव्यशरीरं येन तमञ्जनेत्रं कमलनेत्रममलं निरस्तहेयगुणम् ॥ ४९ ॥ ❀ ❀ दितिकश्यपयोः प्रश्नोत्तरे निगमयति । श्रुत्वेति । दितिः भागवतं पौत्रं जनिष्यमाणं श्रुत्वा भृशममोदत जहर्ष कृष्णाद्भगवतः पुत्रयोर्वधं भाविनं विदित्वा ज्ञात्वा महामनाः हरिणा सह युद्धेन पुत्रयोर्मरणे कीर्तिः सद्गतिश्च भवेदिति महोत्सवचित्ता आसीत् ॥ ५० ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कंधे श्रीमद्वीरराघवाचार्यकृतभागवतचंद्रचंद्रिकाटीकायां चतुर्दशोऽध्यायः ॥१४॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

अतद्दास्यतीत्यनेन ब्रह्मेतरजगद्दास्यति नतु ब्रह्मेति ध्वनितमर्थं स्पष्टयति । अन्तर्बहिरिति । श्रियो ललनायाः स्त्रियो ललामं तिलकस्थानीयं द्रष्टा द्रक्ष्यति ॥ ४९ ॥ ❀ ❀ एतच्छ्रुत्वा दित्या किमकारीति तत्राह । श्रुत्वेति । अमोदतेत्यनेन दितिरपि सद्गतियोग्येति निरूपितमिति ॥ ५० ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्यां चतुर्दशोऽध्यायः ॥ १४ ॥

---

१. प्रा० पा०—पौत्रं मुमोद च दिति० ।

श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

महामना गम्भीरचित्ता आसीत्। तेनापि सह वैरं भविष्यतीति दुःखस्य तेनैव तौ हनिष्येते इति सुखजातस्य च परस्परोपमर्दात्॥ ५० ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भस्य चतुर्दशोऽध्यायः॥ १४ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

अन्तरन्तःकरणे ध्यानेन बहिः साक्षान्नेत्राभ्याञ्च पौत्रः प्रह्लादो द्रष्टा द्रक्ष्यति। श्रीरेव ललना कान्ता तस्या ललामं मण्डनरूपम्॥ ४९॥ ❀ ❀ भृशममोदत हन्त मद्विकर्म्माऽपि सत्कर्मशिरोमणिदुर्लभं फलं धास्यतीत्यहो मम भाग्यमित्याननन्द। महामनाः पुत्रयोर्मे सत्कीर्तिसद्गती भविष्यत इति सोत्साहचित्ता॥ ५०॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्। तृतीये चतुर्दशोऽध्यायः सङ्गतः सङ्गतः सताम्॥

श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

श्रीरेव ललना अतिसुन्दरी तस्याः ललामं मण्डनम्॥ ४९, ५०॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपटीकायां चतुर्दशाध्यायार्थप्रकाशः॥१४॥

श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

सर्वोत्कृष्टं साधनमाह—अन्तर्बहिरिति। तस्य हि भगवत्प्रसादेन भक्त्या ज्ञानवैराग्याभ्यां च भगवत्साक्षात्कारो जायते। तत्र भगवान् सर्वत्र साकारः, सच्चिदानन्दरूपः, सर्वतः पाणिपादान्तः, मायाजवनिकाच्छन्नस्तिष्ठति। तत्र प्रह्लाददृष्टेर्माया न जवनिकारूपा, तां भित्त्वाऽपि भगवद्रूपं पश्यतीत्यर्थः। केचित्तु प्रसन्नो भगवान् तस्य दृष्टेरग्रे स्वस्यैकां मूर्तिं स्थापितवानत्र वर्ण्यमानाम्। तत् यत्रैव दृष्टिं प्रसारयति, तत्रैव तं पश्यतीत्याहुः। तत्र यदि तद्रूपं ब्रह्मस्वरूपम्, तदा न पूर्वस्माद्विशेषः। अथोपाधिरूपम्, तदा न प्रह्लादस्योत्कर्ष इति। अन्तर्बहिर्द्रष्टा, द्रक्ष्यतीत्यर्थः। अमलमिति, यथा मध्यन्दिनवर्तिसूर्यमण्डलान्तः। अनेन दोषाभाव उक्तः। अब्जनेत्रमिति दृष्ट्यैव सर्वेष्टपूरकः। अनेन सर्वे गुणा उक्ताः। एवं निर्दोषपूर्णगुणविग्रहत्वमुक्त्वा भक्ताधीनत्वमाह—स्वपूरुषेच्छेति। स्वस्य पूरुषा भक्ताः, तेषां यादृशीच्छा तदनुसारेण गृहीतं रूपं येन। तव पौत्र इति भक्त्यंशस्तस्या एव। श्रीर्लक्ष्मीः, ललना स्त्रीचिह्नरूपा, तया ललामम्। अनेन सर्वभाग्यरूपत्वात् तद्दर्शने किञ्चिदन्यत्प्राप्तव्यं द्रष्टव्यं वा नाऽवशिष्यत इति निरूपितम्। अनेन भगवत ऐहिकफलरूपत्वमुक्तम्। स्फुरती ये कुण्डले, ताभ्यां मण्डितमाननं यस्य। ससाधनौ साङ्ख्ययोगौ स्फुरत्कुण्डले, तत्सहितो योऽयं भक्तिमार्गः स मुखमिति, सोपायमोक्षदातृत्वं निरूपितम्॥ ४९॥ ❀ ❀ एवं भगवन्माहात्म्यं तादृशं पौत्रं श्रुत्वा सर्वचिन्तारहिता जातेत्याह—श्रुत्वेति। विना पुत्रस्य भगवदीयत्वेन भागवतः पौत्रो न भवतीति पुत्रोऽपि भगवद्भक्तः। परं निमित्तवशादन्यथा प्रतिभासत इति मत्वा भृशं मुमोदत मुमुद इत्यर्थः। तकारश्छान्दसः, अलौकिकज्ञानबोधनार्थः। पुत्रयोरपि विनियोगः समीचीनः, भगवति प्रवेशात्, भगवल्लीलासाधकत्वाच्च। अतो ममोद्योगः सफल इति विदित्वा महामना आसीत्, यथा कश्चित् परमपुरुषार्थं साधयित्वा मुदितो भवति। अनेन दितिः परमभक्ता। एवंरूपेण भगवल्लीलां संपादयतीति विहितभक्तिमार्गाभावेऽपि भक्तेति मतान्तरेण सृष्ट्युपयोगित्वान्निरूपिता॥ ५०॥

इति श्रीभागवतसुबोधिन्यां श्रीलक्ष्मणभट्टात्मजश्रीवल्लभदीक्षितविरचितायां तृतीयस्कन्धे चतुर्दशाध्यायविवरणम्।

श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

श्रुत्वेत्यत्र। अनेनेति। उपसंहारपद्येन। परमभक्तत्वनिरूपणप्रयोजनमाहुः—एवंरूपेणेत्यादि। एवंरूपेणेति। एवंप्रकारेण। तथा चाऽध्यायारम्भे विदुरप्रश्नाभिनन्दनं कथामाहात्म्यं चोक्त्वा, ततोऽथेत्यनेन प्रकरणान्तरं प्रतिज्ञाय ततस्तद्रीत्योक्त्वा उपसंहारे यदस्या भगवति भक्तिं वदति, तेनोपक्रमोपसंहाराभ्यामस्य तात्पर्यं भगवत्येव निश्श्रेयम्। एवंप्रकारेणाऽवतारे मुक्तोत्पत्तौ चोपोद्घातत्वं ज्ञेयमित्याकूतं सूचितम्॥ ५०॥

इति श्रीतृतीयस्कन्धसुबोधिनीप्रकाशे चतुर्दशाध्यायविवरणं सम्पूर्णम्।

श्रीगिरिधरकृता बालप्रबोधिनी

किञ्च तव पौत्रः अन्तः स्वहृदयकमलमध्ये बहिश्च सर्वत्र भगवन्तं द्रष्टा द्रक्ष्यति। भगवत एव दर्शनीयत्वं सूचयन् विशिनष्टि—अमलमिति, अज्ञत्ववैषम्यादिदोषरहितमित्यर्थः। दृष्ट्यैव संसारतापहारकत्वं सूचयन्नाह—अब्जनेत्रमिति। भक्तानां सुलभत्वमाह—स्वेति,स्वपूरुषाणां स्वभक्तानां इच्छानुरूपं गृहीतं रूपं येन तमित्यर्थः। सौन्दर्यातिशयमाह—श्रीललनेति, श्रीः

लक्ष्मीरेव ललना सुन्दरी तस्या ललामं 'भर्ता नाम परं नार्या भूषणादपि भूषणम्' इति वाक्याद्भूषणरूपं पतिमित्यर्थः। स्फुरती ये कुण्डले ताभ्यां मण्डितं भूषितमाननं यस्य तमित्यर्थः॥ ४९॥ ❀ ❀ दितिकश्यपयोः प्रश्नोत्तरे निगमयति—श्रुत्वेति। जनिष्यमाणं भागवतं पौत्रं श्रुत्वा दितिर्भृशमत्यन्तममोदत जहर्ष। यथा कृष्णाद्भगवतः स्वपुत्रयोर्वधं विदित्वा तेन सह युद्धेन मरणेन च कीर्तिसद्गत्योरवश्यम्भावाद् महामना महोत्सवचित्ता चासीत्॥ ५०॥

इति श्रीवल्लभाचार्यवंशश्यगोपालसूनुना ॥ श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा ॥ १ ॥
श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये ॥ श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी ॥ २ ॥
रचिता च तृतीयेऽत्र वन्धसर्गनिरूपणे ॥ चतुर्दशो गतो वृत्तिं दितिगर्भनिरूपकः ॥ ३ ॥

## हिन्दी अनुवाद

जो इस संसारके बाहर-भीतर सब ओर विराजमान हैं, अपने भक्तोंके इच्छानुसार समय-समयपर मङ्गलविग्रह प्रकट करते हैं और लक्ष्मीरूप लावण्यमूर्ति ललनाकी भी शोभा बढ़ानेवाले हैं तथा जिनका मुखमण्डल झिलमिलाते हुए कुण्डलोंसे सुशोभित है--उन परम पवित्र कमलनयन श्रीहरिका तुम्हारे पौत्रको प्रत्यक्ष दर्शन होगा॥ ४९॥ ❀ ❀ श्रीमैत्रेयजी कहते हैं—विदुरजी! दितिने जब सुना कि मेरा पौत्र भगवान्का भक्त होगा, तब उसे बड़ा आनन्द हुआ तथा यह जानकर कि मेरे पुत्र साक्षात् श्रीहरिके हाथसे मारे जायँगे, उसे और भी अधिक उत्साह हुआ॥ ५०॥

चतुर्दश अध्याय समाप्त॥

# अथ पञ्चदशोऽध्यायः

## मैत्रेय उवाच

प्राजापत्यं तु तत्तेजः परतेजोहनं दितिः । दधार वर्षाणि शतं शङ्कमाना सुरार्दनात् ॥ १ ॥
लोके तेन हतालोके लोकपाला हतौजसः । न्यवेदयन् विश्वसृजे ध्वान्तव्यतिकरं दिशाम् ॥ २ ॥

## देवा ऊचुः

तम एतद्विभो वेत्थ संविग्ना यद्वयं भृशम् । न ह्यव्यक्तं भगवतः कालेनास्पृष्टवर्त्मनः ॥ ३ ॥
देवदेव जगद्धातर्लोकनाथशिखामणे । परेषामपरेषां त्वं भूतानामसि भाववित् ॥ ४ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

हतप्रभैः सुरैः पृष्टः प्राह पंचदशे विधिः । तद्बीजविप्रशापादि वैकुंठे विष्णुभृत्ययोः ॥ १ ॥

तदेवं देवानां ब्रह्मणश्च संवादप्रस्तावमुक्त्वेदानीं तं संवादं वक्तुमाह । प्राजापत्यं काश्यपं तेजो वीर्यं परेषां तेजो हंतीति तथा आर्षः । स्वपुत्राभ्यां करिष्यते यत्सुराणामर्दनं पीडनं तस्माच्छंकमाना ॥ १ ॥ ❀ ❀ तेन गर्भतेजसा हतालोके निरस्तसूर्यादिप्रकाशे हतौजसो हतप्रभावाः ध्वान्तेन व्यतिकरं संकरम् ॥ २ ॥ ❀ ❀ वेत्थ जानासि किं विचारयसि यद्यतो वयं संविग्नाः भीताः अव्यक्तमज्ञातम् । न स्पृष्टं वर्त्म ज्ञानप्रचारो यस्य ॥ ३ ॥ ब्रह्माणं परमेश्वरत्वेन स्तुवंतः प्रार्थयंते देवदेवेति सप्तभिः । लोकनाथानां शिखामणे भावविदभिप्रायज्ञोऽसि । केनाभिप्रायेण दितेर्गर्भो वर्धत इति जानासीत्यर्थः ॥ ४ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः ।

विधिर्ब्रह्मा ( १ ) "अमनुष्यकर्तृके च" इति टकि तेजोघ्नमिति वक्तव्ये तेजोहनमित्यत्रोपलोपाभाव आर्षः । यद्वा पचाद्यच् । यद्वाऽसुरार्दनाद्विष्णोः शंकमाना जातौ विष्णुर्मारयिष्यतीत्यर्थः ॥ १ ॥ ❀ ❀ "व्यतिकरः पुंसि व्यसनव्यतिषंगयोः" इति मेदिनी ॥ २ ॥ ❀ ❀ स्पृष्टं नाशितम् ॥ ३ ॥ ❀ ❀ लोकनाथानामिन्द्रादीनां शिखामणे मुख्यतमपरेषामुत्तमानानामपरेषामधमानां यद्वातीतानामनागतानां च इत्यर्थ इति अतीतानागतज्ञस्य तव न किञ्चिदगोचरमिति भावः ॥ ४ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनीव्याख्या

तद्बीजं तमसा हतप्रभत्वस्य बीजं परतेजोघ्नमिति वक्तव्ये तेजोहनमित्यार्षः पचाद्यच्त्वे तु नार्पतेति यत्स्पर्द्धया व्याख्यातं तदमनुष्यकर्तृके चेति विशेषास्त्वविरुद्धत्वान्नादरणीयम् ॥ १ ॥ ❀ ❀ व्यतिकरशब्दो व्यतिसङ्गवाचकः व्यतिसङ्गो हि परस्परसङ्गलक्षणः सङ्कर एव इति तथा व्याख्यातम् । दिशां ध्वान्तेन व्याप्तिमिति यावत् "व्यतिकरस्समाख्यातो व्यसनव्यतिसङ्गयोः" इति विश्वः ॥ २ ॥ ❀ ❀ यद्यतस्तमसो वयं संविग्नाः प्रभीता एतत्तम इति योज्यम् । न स्पष्टं न नष्टम् ॥ ३ ॥ ४ ॥

### श्रीमद्वीरराघवव्याख्या

एवं देवर्षिब्रह्मवादरूपेतिहासोपोद्घातरूपमितिहासान्तरं प्रस्तुत्येदानीं ब्रह्मनारदसंवादं प्रस्तोतुं तावद्देवानां ब्रह्मणः सन्निधावुपसत्तिहेतुं वदन् वृत्तमितिहासं वर्त्तिष्यमाणेतिहासेन सङ्गमयति मैत्रेयः । प्राजापत्यमिति । परेषां तेजो हन्तीति तथा प्राजापत्यं कश्यपसम्बन्धि तेजो वीर्यं दितिरसुरार्दनाच्छङ्कमाना इन्द्रः कदाचित्किं कुर्यादिति शङ्कमाना सती शतं वर्षाणि दधार गर्भं धृतवतीत्यर्थः ॥ १ ॥ ❀ ❀ तेन गर्भतेजसा हतालोके निरस्तसूर्यादिप्रकाशे हतौजसो हतप्रभाः लोकपाला दिशां ध्वान्तेनान्धतमसेन व्यतिकरं व्यत्यासम् इयं पूर्वा दिगिति पश्चिमेति ज्ञानाभावं विश्वसृजे चतुर्मुखाय न्यवेदयन् ब्रह्मसमीपमागत्य विज्ञापयामासुरित्यर्थः ॥ २ ॥ ❀ ❀ निवेदनमेवाह । त्वमिति । हे विभो ! ब्रह्मन् ! त्वमेवैतद्वेत्थ जानासि किन्तदित्यत्राहुः । यद्यस्माद्वयं भृशं सम्विग्नाः भीताः तत्त्वमेवेत्यर्थः । अहमपि त्वादृश एवातः कथं जानामीत्याशङ्कायां परमात्मनः आवेशावतारत्वात्त्वं सर्वं जानासीत्यभिप्रेत्याहुः । न हीति । कालेनास्पृष्टं वर्त्म ज्ञानं यस्य कालवशादसङ्कुचितज्ञानिनो भगवतः "सृष्टिं ततः करिष्यामि त्वामाविश्य प्रजापते" इत्युक्तेः । ते त्वया व्यक्तमविदितं भगवच्छरीरभूतस्य ते न ह्यस्ति इत्यर्थः ॥ ३ ॥ ❀ ❀ एतदेव विशद-

---

१. प्रा० पा०—कृतालोके । २. प्राचीने पाठे 'देवा ऊचुः' अयमंशो न । ३. प्रा० पा० शिरोमणे ।

यन्ति । हे देवदेव ! देवानामिन्द्रादीनामपि देव हे जगद्धातः ! जगन्निर्मातः ! लोकनाथशिखामणे ! लोकनाथानां शिखामणे परेषाम-परेषामस्मदपेक्षया पूर्वेषामर्वाचीनानां च भावविदभिप्रायज्ञोऽसि इति ॥ ४ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली ।

जयविजययोः शापमोक्षयोः प्रदानरूपसनकादिमहिम्नो वर्णने न तेषां भगवत्समाधिसमुद्रैकसमुद्भूतमाहात्म्येन निरुपमचरितमहिमा हरिरिति निरूप्यतेऽस्मिन्नध्याये, तत्रादौ दित्या पुनः किमकारीति विदुरस्य हार्दं प्रश्नं परिहरति । प्राजापत्यमिति । प्रजापतेः कश्यपस्येदमिति यथा विहितप्रत्ययः परेषां तेजस्विनां तेजो हन्ति हरतीति परतेजोहनमसुरार्दनाद्धरेर्वधं शङ्कमाना ॥ १ ॥ ❀ ❀ किमतस्तत्राह । लोक इति । तेन गर्भेण लोके हृतालोके अपहृतप्रकाशे सति तत्परिहारार्थं हृतौजसो नष्टसामर्थ्याः इन्द्रादिलोकपालाः दिशां ध्वान्तव्यतिकरणमन्धकारेण प्राप्तं व्यत्ययमुपद्रवमित्यर्थः ॥ २ ॥ ❀ ❀ यद्येन सम्विग्ना भ्रान्ता वयमेतत्तमो वेत्थ जानासि तत्र निमित्तं वदन्ति । नहीति । कालादिव्यवधानेनाज्ञानं स्यादित्यत उक्तं कालेनेति । अस्पृष्टमव्यवहितं ज्ञानवर्त्म यस्य स तथा तस्याप्रतिबद्धज्ञानमार्गस्येत्यर्थः ॥ ३ ॥ ❀ ❀ तदेव विवृणोति । देवदेवेति । परेषामुत्तमानामपरेषामधमानामतीतानागतानां वा भूतानां भावविद् हृदयज्ञोऽसीति यदतो व्यक्तं जानासीति भावः ॥ ४ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

शङ्कमानेति । गर्भे प्रसूते नूनमसुरार्द्दनो हनिष्यतीति । टीकायामार्ष इति तेजोघ्नमिति वक्तव्ये तेजोहनमिति प्रयोग आर्षः । "अमनुष्यकर्तृके च" इति तेजोघ्नमित्येव स्यात् ॥ १ ॥ ❀ ❀ ध्वान्तेन व्यतिकरमासङ्गम् ॥ २ ॥ ❀ ❀ अत्र देवा ऊचुरिति कचित् तम एतदित्यादिना परमेश्वराभेदेन ब्रह्माणं स्तुवन्ति ॥ ३ ॥ ❀ ❀ लोकपालेति पुण्यारण्यः ॥ ४ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

सुरैः पृष्टो विधिस्तत्त्वं वक्तुं दितितनूजयोः । शापं पञ्चदशे विष्णुपार्षदोर्विप्रतोऽभ्यधात् ॥

ततो दितेर्गर्भस्य का वार्त्तेत्यपेक्षायामाह । प्राजापत्यं प्रजापतेः कश्यपस्य सम्बन्धि । परेषां तेजो हन्तीति तथा तत् पचाद्यच् । सुराणामर्दनं पीडनं तस्मात् शङ्कमाना असुरार्द्दनाद्विष्णोरिति वा तद्धस्ततो मृत्युश्रवणात् ॥ १ ॥ ❀ ❀ तेन गर्भतेजसा हतालोके इति च पाठः । व्यतिकरं व्याप्तिम् ॥ २ ॥ ❀ ❀ वेत्थ जानास्येव यतो भगवतः सर्व्वज्ञस्य तव कालेनालुप्तज्ञानमार्गस्य ॥ ३ ॥ ❀ ❀ लोकनाथानामिन्द्रादीनां शिखामणे ! ॥ ४ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

द्वयेन प्राजापत्यं कश्यपाख्यप्रजापतिसम्बन्धि तेजो वीर्यं परतेजोहनं परशौर्य्यघ्नमुत्पन्नौ सुरपीडनं करिष्यत इत्येवं शङ्कमाना दधार ॥ १ ॥ ❀ ❀ तेन प्राजापत्येन तेजसा हतालोके हतप्रभे ध्वान्तेन प्रभाभावेन व्यतिकरं मिश्रीभावात् ॥ २ ॥ ब्रह्मणि भगवद्दृष्टिं कुर्वन्तो देवा ऊचुस्तम इत्याद्यष्टभिः । हे विभो ! त्वं वेत्थ जानासि ज्ञानावरणस्य तु का कथा न स्पृष्टं वर्त्म यस्य तस्य अव्यक्तमज्ञातम् ॥ ३ ॥ ❀ ❀ भावविद् अभिप्रायवित् ॥ ४ ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

निरूप्यते पञ्चदशे क्रोधेन ज्ञाननाशनम् । बीजे जीवप्रवेशार्थं भक्तशापोऽनुवर्ण्यते ॥ १ ॥
इतिहासप्रवृत्त्यर्थं सङ्गतिश्चाऽपि रूप्यते । ज्ञानमूलस्य सत्त्वस्य कार्यनाशकता पुनः ॥ २ ॥
वैकुण्ठे वृक्षपक्षीणां स्त्रीणां चापि न मत्सरः । सर्वदोषविहीनत्वात्तत्र दोषो हरीच्छया ॥
अतः सृष्टिप्रसिद्ध्यर्थं वैकुण्ठस्य च वर्णनम् ॥ ३ ॥

एवं पूर्वाध्याये दितेर्गर्भाधानमुक्तम् । तदग्रिमं वृत्तान्तमाह—प्राजापत्यमिति । प्रजापतिः कश्यपः, तस्य तेजो बीजमेव, बीजस्य ब्रह्मत्वात् । अत एव परतेजोहनम् । ब्रह्मतेजसा हि अन्ये हन्यन्त एव । इममेवार्थं हिशब्द आह । तस्य मारकत्वमुत्पत्तौ कालादिधर्मजन्यमिति सूचयितुं तदित्युक्तम् । शतं मानुषवर्षाणि गर्भं दधार । देववर्षाणि वा । तौ चेत् गर्भे पुष्टौ भवतः, तदा देवैर्मारयितुमशक्यौ, देवान् वा वृथा मारयेताम् । दितिपदेन च तस्याः स्वाभाविकं सामर्थ्यं सूचितम् । तस्याः सहजस्वसामर्थ्यानुसन्धानात् भयं नास्त्येव, ब्रह्मबीजत्वाच्च न देवानां वृथा मारणम् । तथापि भर्तृवाक्यात् शङ्का जातेत्याह—शङ्कमानेति । तदा तस्मिन् बीजे द्विधाभूते जयविजययोः प्रवेशो जात इति ब्राह्मं वैष्णवं च तेज एकीभूतम्, सूर्यादितेजोऽसहमानम्, स्वतेजसा तद् दूरीचकार ॥ १ ॥ ❀ ❀ तदा तेन बीजेन हतालोके सति, लोकपाला अपि कालाधीनाः कालतेजसि गते स्वयमपि हतौजसो जाताः । ते हीन्द्रादयो बलकार्यरूपाः, अतस्तेषामोज एव गतम् । तदा बलप्रकाशयोर्नाशात्तन्निदानं ज्ञातुकामा ब्रह्मलोकं

गताः, मेरुपृष्ठं वा । विश्वसृजे स्ववृत्तान्तं न्यवेदयन् । स्वस्यौजसोऽभावोऽप्रतिष्ठाहेतुत्वान्न निवेदितः, किन्तु ध्वान्तमन्धकारम्, तेन दिगव्युत्पत्तिं च न्यवेदयन् ॥ २ ॥ ❀ ❀ तत्र मूलं तम एवेति तत्र निदानं पृच्छन्ति—तम एतदिति ।

देवा भीता ब्रह्मणैव क्रियते दैत्यवर्द्धनम् । अतो देवविनाशः स्यादिति तैनैवमीरणम् ॥ १ ॥
ज्ञानं समर्थितं तस्य स्वदोषाभाव एव च । विद्यमानेपि तच्छान्तिस्तस्य भक्तकृपा तथा ॥ २ ॥
भक्तानामभयं तस्मात्सेवकाश्च वयं भृशम् । अतोऽस्मासु कृपा कार्या दैत्योत्पत्तिर्हि जायते ।
एवमष्टविधं वाक्यं ब्रह्माणं प्रति दैविकम् ॥ ३ ॥

तत्र प्रथमं महत्त्वात्प्रष्टुमप्यशक्तास्तमसोऽज्ञानं संभावयन्ति । हे विभो ! सर्वज्ञानादिसमर्थ । एतत्तमः सर्वथा वेत्थ, जानासि । अतोऽस्मान् ज्ञापयेति भावः । ज्ञापने हेतुः—यद्यस्मात्तमसो भृशं वयं संविग्ना; अन्धकारादोजसोऽभावात् । तव[1] त्वज्ञानं न संभवति । यदव्यक्तं भगवतो रूपं तत्त्वां प्रति न । अतो भगवतो वासुदेवगुणावतारस्य तव नाऽस्त्यव्यक्तम्, किञ्च, अव्यक्तहेतुरपि नास्ति । कालेन हि सर्वमव्यक्ते प्रविलाप्यते, त्वं तु कालेन न स्पृष्टं वर्त्म यस्य तादृशः ॥ ३ ॥ ❀ ❀ एवं ज्ञानं तस्य समर्थयित्वा स्वदोषाभावं निरूपयन्तस्तस्य सर्वहृदयाभिज्ञत्वमाहुः—देवदेवेति । अन्येषां भवान् न पूज्यः, तद्धृदयमप्रविष्टः कदाचिन्न जानात्यपि, वयं तु देवाः अस्माकं तु त्वमेवोपास्य इति संबोधनम् । किञ्च, वयं निष्कपटा एव त्वयोत्पादिताः शुद्धसत्त्वेन, अतोऽपि जानासीति संबोधनान्तरमाहुः जगद्धातरिति । जगतां त्वमेव विधाता, धारयिता वा । तथापि हृदयज्ञानमुचितमेव । किञ्च, स्वामीहि सेवकस्य हृदयं जानाति । भवांस्तु सर्वेषामेव लोकानां ये नाथा इन्द्रादयस्तेषां शिखामणिः । लोकनाथा एव स्वलोकस्याऽभिप्रायं जानन्ति, भवांस्तु तेषामपि । तत्रापि शिखामणिरिति तेषामुपरि तत्प्रकाशकत्वेन तत्कर्मसाक्षित्वेन च वर्तमानः । अतः प्रभुत्वेन, जनकत्वेन, प्रकाशकत्वेन च परेषामस्मदाद्यपेक्षयोत्कृष्टानामपरेषां च हीनानाम्, चकारादस्माकं च सर्वेषामेव भूतानां त्वं भावविदसि । अतोऽस्मासु न किञ्चित्तिरोहितम् ॥ ४ ॥

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

अथ पञ्चदशाध्यायं विवरीतुकामाः पूर्वाध्यायसङ्गतिं स्फुटीकर्तुमध्यायार्थमाहुः—निरूप्यत इत्यादि । तथा च, पूर्वाध्याये यथा कर्मनाशस्याऽवतारप्रयोजकता तथाऽत्र ज्ञानमार्गनाशस्य । तथा च, तत्र दितिकामस्य मुक्तोत्पत्तिप्रयोजकता, तथाऽत्र सनकादिजयादिक्रोधस्येत्यर्थः । तेनाऽध्याययोरेककार्यत्वं संङ्गतिरित्यर्थः । मैत्रेयवाक्ये सङ्गतिमाहुः—इतिहासेत्यादि । इतिहासो ब्रह्मप्रोक्तः, तस्य प्रवृत्त्यर्थमिदानीं कथनार्थं सङ्गतिः प्रयोजकत्वरूपा, चकाराद्देवोक्तहेतुतारूपापि रूप्यते । ज्ञानमूलस्य सत्त्वनाशकता रूप्यते । पुनः शब्देन स्कन्धरूपत्वप्रयोजको वासिष्ठरामायणोक्तः सत्त्वनाशः स्मार्यते । तेन सनकादिज्ञानस्य तथात्वं स्वाभाविकमिति बोध्यते । तदपि सङ्गतावेव प्रविशतीत्यर्थः । ननु वैकुण्ठवर्णनस्याऽत्र किं प्रयोजनमित्याकाङ्क्षायां तत्सङ्गतिं सार्द्धेनाहुः—वैकुण्ठेत्यादि । पक्षीणामिति । 'नदीनां च नखीनां च शृङ्गीणां शस्त्रपाणिनाम् इतिवदत्र च पक्षीशब्द ईकारान्त इति बोध्यम् । शेषं स्फुटम् । तथा च, तदप्युपोद्घातप्रयोजकत्वेनैवोक्तमित्यर्थः । तम इत्यत्र । देवा इति प्रथमकारिकया अष्टानां सामान्यार्थ उक्तः । अग्रिमयोस्तु प्रतिचरणं प्रातिस्विक इति बोध्यम् ॥ ४ ॥

### श्रीगिरिधरकृता बालप्रबोधिनी

ब्रह्मणा देवपृष्टेन वैकुण्ठे वसतोरपि । जयविजययोः शापः पञ्चदशे निरूप्यते ॥ १ ॥

प्राजापत्यं प्रजापतिकश्यपेन धृतं तत्तु तेजो वीर्यं गर्भं दितिः शतं वर्षाणि मनुष्यमानेन वर्षशतपर्यन्तमुदरे दधारेत्यन्वयः । तत्र हेतुमाह—शङ्कमानेति, ताभ्यां सुराणां यदर्दनं पीडा भविष्यति तस्माच्छङ्कमाना, किञ्चित्कालं मा भूदित्याशयेनेत्यर्थः । एवं शङ्कायां हेतुमाह—परेति । गर्भे स्थितमेव परेषां देवादीनां तेजो हन्तीति तथा ॥१॥ ❀ ❀ तेन गर्भस्थतेजसा लोके हतः निरस्त आलोकः सूर्यादिप्रकाशो यस्मिंस्तथाभूते सति लोकपाला इन्द्रादयश्च हतौजसः हतपौरुषाः सन्तो दिशां ध्वान्तेन तमसा व्यतिकरं सङ्करमियं पूर्वा दिगियं पश्चिमा दिगिति विवेकाभावं विश्वसृजे ब्रह्मणे न्यवेदयन् मेरुमूर्ध्नि तत्सभायां गत्वा विज्ञापयामासुः ॥ २ ॥ ❀ ❀ विज्ञापनमेवाह—तम एतदिति । विभो हे सर्वज्ञ एतत्तमस्त्वं वेत्थ किमनुसन्धत्से ? किं तदित्यत आहुः—यदिति, यत् यस्माद्वयं भृशमत्यन्तं संविग्ना भीताः स्मः तत् । यदि युष्माभिर्न ज्ञायते तर्ह्यहं कथं जानीयामित्यपेक्षायामाहुः—नहीति । तवाव्यक्तमज्ञातं किञ्चिन्नास्त्येव । तत्र हेतुमाहुः—कालेनेति । कालेनास्पृष्टमनभिभूतं वर्त्म ज्ञानमार्गभूतमन्तःकरणं यस्य तस्येत्यर्थः । तत्कुत इत्यपेक्षायां भगवदवतारत्वादित्याशयेनाहुः—भगवत इति ॥ ३ ॥ ❀ ❀ बहुधा सम्बोधनैर्महत्त्वं दर्शयन्तः पूर्वोक्तमेव विशदयन्ति—देवदेवेति, देवानामस्माकमपि देव पूज्य जगन्निर्मातृत्वादिति । तत्र हेतुं सूचयन्तः सम्बोधयन्ति—जगद्धातरिति ।

---

१. तव तत्त्वज्ञानं क. ख. घ. ङ. ।

अत एवान्येऽपि ये सर्वे लोकनाथास्तेषामपि शिखामणिरिवोपरि विराजमानस्त्वमित्याशयेन सम्बोधयन्ति—लोकनाथशिखामणे इति परेषां पूर्वेषामुत्कृष्टानां वा अपरेषामर्वाचीनानां निकृष्टानां सर्वेषां भूतानां त्वं भाववित् अभिप्रायज्ञोऽसि। अतः केनाभिप्रायेण दितिगर्भो वर्द्धते इत्यपि त्वं जानास्येवेति भावः ॥ ४ ॥

### हिन्दी अनुवाद

### जय-विजयको सनकादिका शाप

श्रीमैत्रेयजीने कहा—विदुरजी ! दितिको अपने पुत्रोंसे देवताओंको कष्ट पहुँचानेकी आशङ्का थी, इसलिये उसने दूसरोंके तेजका नाश करनेवाले उस कश्यपजीके तेज ( वीर्य ) को सौ वर्षोंतक अपने उदरमें ही रक्खा ॥ १ ॥ ❀ ❀ उस गर्भस्थ तेजसे ही लोकोंमें सूर्यादिका प्रकाश क्षीण होने लगा तथा इन्द्रादि लोकपाल भी तेजोहीन हो गये। तब उन्होंने ब्रह्माजीके पास जाकर कहा कि सब दिशाओंमें अन्धकारके कारण बड़ी अव्यवस्था हो रही है ॥ २ ॥ ❀ ❀ देवताओंने कहा—भगवन् ! काल आपकी ज्ञान-शक्तिको कुण्ठित नहीं कर सकता, इसलिये आपसे कोई बात छिपी नहीं है। आप इस अन्धकारके विषयमें भी जानते ही होंगे, हम तो इससे बड़े ही भयभीत हो रहे हैं ॥ ३ ॥ ❀ ❀ देवाधिदेव ! आप जगत्के रचयिता और समस्त लोकपालोंके मुकुटमणि हैं। आप छोटे-बड़े सभी जीवोंका भाव जानते हैं ॥ ४ ॥

**नमो विज्ञानवीर्याय माययेदमुपेयुषे। गृहीतगुणभेदाय नमस्तेऽव्यक्तयोनये ॥ ५ ॥**
**ये त्वा[1]नन्येन भावेन भावयन्त्यात्मभावनम् । आत्मनि प्रोतभुवनं परं सदसदात्मकम् ॥ ६ ॥**
**तेषां सुपक्वयोगानां जितश्वासेन्द्रियात्मनाम् । लब्धयुष्मत्प्रसादानां न कुतश्चित्पराभवः ॥ ७ ॥**
**यस्य वाचा प्रजाः सर्वा गावस्तन्त्येव यन्त्रिताः । हरन्ति बलिमायत्तास्तस्मै मुख्या[2]य ते नमः ॥ ८ ॥**

### श्रीधरस्वामिविरचिता भावार्थदीपिका।

विज्ञानं वीर्यं बलं यस्य। इदं ब्रह्मदेहमुपेयुषे प्राप्तवते गृहीतो गुणभेदो रजोगुणो येन। व्यक्तस्य प्रपंचस्य। योनये कारणाय। न व्यक्ता केनापि प्रमाणेन विज्ञाता योनिर्यस्येति वा ॥ ५ ॥ ❀ ❀ सकामतया प्रतिक्षणं दुःखमनुभवंतो निष्कामभक्तान् स्तुवंत आहुर्द्वाभ्याम्। ये त्वा त्वामनन्येन भावेन भक्त्या ध्यायंति · आत्मनो जीवान्भावयंतीति तथा। स्वस्मिन्प्रोतानि ग्रथितानि भुवनानि येन। चेतनाचेतनप्रपंचकारणमित्यर्थः। तत्र हेतुः सदसदात्मकं कार्यकारणरूपं वस्तुतस्ताभ्यां परम् ॥ ६ ॥ ❀ ❀ जितः श्वास इन्द्रियाण्यात्मा मनश्च यैः अतः सुपक्वयोगाः अत एव प्राप्तो युष्मत्प्रसादो यैस्तेषाम् ॥ ७ ॥ ❀ ❀ अन्ये तु नित्य कर्मक्लेशिन इत्याहुः। यस्येति। तंत्या दामन्या आयत्ता अधीनाः। मुख्याय नियंत्रे प्राणरूपायेति वा। तथा च श्रुतिः ॥ "तस्य वाक्तंतिर्नामानि दामानि" इत्यादि ॥ ८ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः।

प्रपञ्चकारणत्वं त्वन्येषामप्यस्ति किं तत्साम्यमेवेति चेदाह—न व्यक्तेत्यादि। यद्वाऽव्यक्तस्य प्रधानस्य योनये कारणाय प्रवर्त्तकाय वा। यद्वाऽव्यक्तो विष्णुर्योनिः कारणं यस्य तस्मै। यद्वा व्यक्तो लोके प्रसिद्धः कंजो योनिर्यस्य तस्मै ॥ ५ ॥ ❀ ❀ भावयति सृजति इत्यर्थ इति। "यथाग्नेः क्षुद्रा विस्फुलिंगा व्युच्चरंति तथैवास्मादात्मनः सर्वं चराचरं भवति" इत्यादिश्रुतेरिति भावः। तत्र चेतनाचेतनप्रपंचकारणत्वे ताभ्यां कार्यकारणाभ्यां परमसंगम् ॥ ६ ॥ ❀ ❀ अतो जितेन्द्रियादित्वात् अत एव सुपक्वयोगत्वादेव ॥ ७ ॥ अन्ये त्वद्विमुखाः। "प्राणो मुख्यः" इति श्रुतेराह प्राणरूपायेति तदधीनत्वे प्रमाणमाहुः तथा चेति। व्याख्याततरेयम् ॥ ८ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या।

विज्ञानं चिच्छक्तिः ज्ञानविज्ञाननिधये इत्यत्र तथा व्याख्यास्यमानत्वात् गृहीतोऽधिष्ठितः अत्र नञ्प्रश्लेषपक्षे निष्कारणायेत्यर्थः ॥ ५ ॥ ❀ ❀ येत्वेति युग्मकम्। भावयति उत्पादयति विशेषणद्वयस्य समुदायेन फलितव्याख्यानादित्यर्थ इत्युक्तं तत्र कारणत्वे मायया कार्य्यकारणरूपं वस्तुतः स्वरूपशक्त्या ताभ्यां कार्य्यकारणाभ्यां परङ्कार्य्यमाकाशादि कारणं महदादि ॥ ६ ॥ ७ ॥ ❀ ❀ लोकेऽपि नियन्तृत्वं दृश्यते तद्व्यवच्छेदार्थं मुख्यायेति नियन्त्रे इति विशेष्यमध्याहृत्य व्याख्यातम्। पक्षान्तरे मुख्यशब्दस्य प्राणपरत्वे "प्राणो वै मुख्य" इति श्रुतिः प्रमाणं ज्ञेयम्। वेदलक्षणवाक् तन्तिर्दीर्घरज्जुः नामानि ब्राह्मणादिशब्दाः दामानि गलबन्धनरज्जवः ॥ ८ ॥

---

१. प्रा० पा०—ये त्वामनन्यभावेन। २. प्रा० पा०—मुख्यात्मने नमः।

### श्रीमद्वीरराघवव्याख्या

एवं परमात्मावेशावतारत्वेन ब्रह्मशरीरकपरमात्मदृष्ट्या तस्य सर्वज्ञतामभिधाय पुनस्तद्दृष्ट्या तद्धर्मैर्विशिष्टत्वेन नमस्कुर्वन्ति। नम इति। ते तुभ्यं नमः कथंभूताय ते व्यक्तयोनये व्यक्तं कार्यावस्थं जगतत्रयस्य योनये कारणाय नाहं व्यक्तयोनिः किन्तु परमात्मेत्यत्राहुः। गृहीतगुणभेदाय गुणानां भेदः रजोगुणो यस्य स गुणभेदः ब्रह्मा गृहीतः शरीरत्वेन गुणभेदः रजोगुणप्रधानः ब्रह्मा येन तस्मै रजोगुणप्रधानब्रह्मशरीरकपरमात्मा यो जगत्स्रष्टा स त्वमेवेत्यर्थः। नेदं त्वद्रूपेणावस्थानं परमात्मनः कर्मायत्तमित्याह। मायया संकल्परूपज्ञानेनैव इदं ब्रह्माख्यं शरीरमुपेयुषे गताय एतदुपपादकत्वेन विशिनष्टि विज्ञानवीर्यायेति। विज्ञानमेव वीर्यं बलं यस्य तस्मै॥ ५॥ ❀ ❀ एवंविधस्य तव प्रजानां त्वन्निर्देशवर्त्तिनामस्माकमन्यैः परिभवोऽनुचित इति सूचयन्तो नमस्कुर्वन्ति त्रिभिः। ये त्विति। आत्मनो जीवान् देवमनुष्यादिरूपेण भावयतीत्यात्मभावनस्तमात्मनि स्वात्मन्येव प्रोतं सन्दर्भितं भुवनं येन तमत एव सदसदात्मकं कार्यकारणरूपं वस्तुतस्ताभ्यां परं विलक्षणं त्वायेऽनन्येनाव्यभिचारेण भावेन भक्त्या भावयन्त्युपासते॥ ६॥ ❀ ❀ तेषां कथं भूतानां जितश्वासेन्द्रियात्मनां जिताः श्वासाः प्राणा इन्द्रियाणि ज्ञानकर्मोभयेन्द्रियाण्यात्मान्तःकरणं च यैस्तेषामत एव सुपक्वः परिपक्वः योगः भक्तियोगो येषां तेषामत एव लब्धः युष्मत्प्रसादः भवदनुग्रहः यैस्तेषां कुतश्चिदपि पराभवो नास्ति॥ ७॥ ❀ ❀ यस्य तव वाचा वेदात्मिकया सर्वाः प्रजास्तन्त्या दामन्या गाव इव यन्त्रिताः बद्धाः आयत्तास्त्वदधीनाः सत्यः बलिं त्वत्पूजां हरन्ति कुर्वन्ति तस्मै मुख्याय श्रेष्ठाय ते नमः अनेन स्वसंबन्धिनां स्वनिर्देशवर्तिनामन्यैः परिभवोऽनुचित इति सूचितं भवति॥ ८॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

सर्वस्मात्प्रणतिरेव प्रसादजननीति मत्वा तत्पूर्वकं स्तुवन्ति। नम इति। विज्ञानवीर्यायाप्रतिबद्धज्ञानाय तदेव विशदयन्ति। माययेति। मायया श्रीनारायणानुगृहीतप्रज्ञाबलेन इदं विश्वमुपेयुषे ज्ञातवते रजआदिगुणेन ज्ञानप्रतिबन्धः सम्भाव्यत इत्यत उक्तं गृहीतेति। हर्याज्ञाया उपद्रावकत्वेन गृहीतरजआदिगुणविशेषाय इतोऽपि ज्ञानवीर्यं तवैवेति भावेन स्तुवन्ति। नमस्त इति। व्यक्तं ब्रह्माण्डं तस्य योनये कारणाय सृज्येषु वस्तुषु ब्रह्माण्डसर्जनस्यातिबहुलज्ञानसापेक्षत्वात्तस्य स्रष्टुर्ब्रह्मणोऽतिशयितज्ञानमस्तीति किम्वक्तव्यमिति निरूपितम्। सर्वेषां ज्ञानादिगुणप्रतिबन्धका रजआदिगुणाः कथमस्य न निरोधका हरिप्रसादादिति चेत्तत्प्रसादसम्भवोऽपि कथमित्यत आह। अव्यक्तेति। अव्यक्तं ब्रह्म तद्योनिः कारणं यस्य स तथा तस्मै "यो ब्रह्माणं विदधाति" इति श्रुतेः 'तेने ब्रह्म हृदा य आदिकवय' इति च अतः स्वपुत्रत्वेन सर्वानुग्रहपात्रत्वान्न तस्य सत्त्वादिगुणः परिपन्थिन इति॥ ५॥ ❀ ❀ यस्य यदभीष्टं तत्प्राप्तये तेन तथानुष्ठेयमिति मन्वाना दितिगर्भनिमित्ततिमिरप्राप्तपराभवपरिहरणाय तादृशगुणविशिष्टत्वेन स्तुवन्तीत्याह। य इति। ये पुरुषा अनन्यभावेन हरेरन्यः स्वतन्त्रो नास्तीति ज्ञानदृढीकृतभक्त्या त्वा भावयन्ति निरन्तरोपासनया वशीकुर्वन्ति तेषां पुंसां न कुतश्चित्पराभव इत्यन्वयः। पराभवकर्तॄणां त्वत्सृष्टजीवान्तर्गतत्वेन त्वन्नियतत्वान्न ते तावकान् द्रुह्यन्तीति भावेनोक्तमात्मभावनमिति। आत्मनो जीवान् भावयत्युत्पादयतीत्यात्मभावनस्तम् आत्मनः परमात्मनो भावनया निरन्तरोपासनया प्रवृद्धतदनुग्रहस्य तवासाध्यं नास्तीत्यतो वात्मभावनमिति। आत्मनो भावनं यस्य स तथा तं न केवलं जीवजातं त्वदुत्पन्नत्वेन त्वदधीनं किन्तु चेतनाचेतनात्मकं सर्वमपि त्वया धृतमित्याहुरित्याह आत्मनीति। त्वमपि जीवेष्वेक इति मन्दाशङ्कां निवारयति। परमिति। परं सर्वोत्तममनेन जीवोत्पादकत्वेऽनुपपत्तिः परिहृता, महदादिकार्यकारणव्यापित्वेन सर्वोत्तमत्वं युक्तमिति भावेनोक्तम्। सदसदात्मकमिति। न केवलं भारधरदेवदत्तवजगद्धारकत्वमस्य किन्तु बहिर्व्याप्तत्वेनापीत्यतो वोक्तम्। सदसदात्मकमिति। ततो विशेषं प्रतिपद्येत्यादिद्वितीये सर्वव्याप्तिमत्त्वमुक्तं मुक्तामुक्तप्रपञ्चस्य सुखादिदातृत्वादुक्तं युक्तमित्यतो वेत्युक्तम्। सदसदात्मकमिति। सन्त आत्मानो मुक्ता असन्त आत्मानोऽमुक्ताः, येषामुभयेषामपि कं सुखं यस्मात्तत्तथोक्तम्॥ ६॥ ❀ ❀ विशिष्टध्यानमनस एवैवंविधफलवत्त्वं न तु तन्मात्रस्य तन्मात्रेण योगादीनां परिपाकाभावेन युष्मत्प्रसादानुत्पत्तिरिति भावेन तान् विशिषन्तीत्याह। सुव्यक्तेति। अष्टाङ्गलक्षणो योगः॥ ७॥ ❀ ❀ विधिनिषेधलक्षणया देववाचा प्रवर्तमानाः प्रजाः स्वस्वकर्मानुसारेण सुखादिकमश्नन्ति तत्रायं कुत्रोपयुज्यत इत्याशङ्क्य तया त्वदीयया नियतास्तदुक्तप्रकारेण त्वत्पूजां कुर्वन्ति तदनुसारेण भवान्फलं प्रयच्छतीत्यतस्त्वं सर्वोत्तम इत्याहुरित्याह यस्येति। यस्य तव तन्त्या गोबन्धनोपरचितया दीर्घया रज्ज्वा यन्त्रिता बद्धाः यन्त्रि-बन्धन इति धातुः, हरन्ति नयन्ति मुख्यात्मने सर्वेभ्यो जीवेभ्यो मुख्याय॥ ८॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

नम इत्यादिना परमेश्वराभेदेन स्तुतिः॥ ५॥ ❀ ❀ ये त्वेति। युग्मकम्। अनन्यभक्त्या लब्धयुष्मत्प्रसादः ततः सुनिर्व्यूढभक्तियोगत्वेन स्वत एव श्वासादिजय इति क्रमः॥ ६॥ ९॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

इदं ब्रह्मदेहमुपेयुषे प्राप्तवते गुणभेदो रजः। अव्यक्तः परमेश्वर एव योनिः कारणं यस्य तस्मै ॥ ५॥ ❀ ❀ तदपि अनन्येन परमेश्वरादभिन्नेन भावेन ये हिरण्यगर्भोपासकाः। यद्वा। अनन्येन निष्कामेण भावेन भक्त्या भावयन्ति ध्यायन्ति आत्मनो जीवान् भावयति सृजतीति तथा। समष्टित्वादात्मनि स्वस्मिन् प्रोतानि ग्रथितानि भुवनानि येन तम्। अतः सन्तोऽसन्तश्च आत्मानो देवासुराद्या जीवा यस्मिंस्तम्॥ ६॥ ७॥ ❀ ❀ वाचा वेदलक्षणया। तथा च श्रुतिः। "तस्य वाक् तन्तिर्नामानि दामानि" इत्यादि॥ ८॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

विज्ञानं विविधं ज्ञानं वीर्यं बलं यस्य तस्मै मायया कृपया इदं चतुर्मुखशरीरमुपेयुषे प्राप्तवते गृहीतो गुणभेदः स्रष्टृत्वलक्षणः रजोगुणो वा येन तस्मै व्यक्तयोनये विश्वकारणाय अकारप्रश्लेषे तु अदृष्टकारणायेत्यर्थः॥ ५॥ ❀ ❀ आत्मभावनं स्वकारणं भावयन्ति ध्यायन्ति॥ ६॥ ९॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

एवं स्वदोषाभावमुक्त्वा दोषे वा विद्यमाने तत्क्षमां कारयन्तो नमस्यन्ति—नमो विज्ञानवीर्यायेति। ननु भगवानेव नमस्करणीयः, सर्वेषां स्वामित्वात्; गुरुर्वा, तन्मार्गोपदेष्टृत्वाद्ब्रौणः, अहं तु नोभयरूप इति चेत्तत्राऽऽह—नमो विज्ञानवीर्यायेति। विज्ञानं ब्रह्मानुभवो वीर्यं पराक्रमो यस्य। लौकिकी क्रिया लौकिकज्ञानसहिता सर्वेषां पराक्रमहेतुर्भवति। ततोऽपि केषामेव ऋषीणां वैदिकी क्रिया पराक्रमहेतुः। ततोऽपि ब्रह्मविदामेव तेजः सार्वज्ञ्यलक्षणः पराक्रमो ज्ञानेन सिद्ध्यति। तत्र साक्षात्कारेण विज्ञानेन भगवत एव बलं भवति। तादृशं तवापि वर्तत इति स्वेच्छया सृष्ट्याऽध्यवसीयते। अतो भगवत्स्वरूपाभिज्ञत्वात् गुरुत्वेन नमनमुचितमेवेति भावः। ननु तादृशज्ञाने संपन्ने भगवत्सायुज्यमेव भवेत् कथमेवमधिकारः स्यादित्याशङ्क्याऽऽह—माययेति। इदं शरीरमुपेयुषे स्वीकृतवते। या सृष्टिकरणभूता माया, तस्याः करणत्वनिर्वाहार्थम्, कर्त्रपेक्षायां सेवके विद्यमाने स्वामिनो व्यावृत्तिरनुचितेति भगवत्तुल्यताया जातत्वात्, जगद्द्वयापारवर्जश्रवणाच्च, तयैव मायया कृतमिदम्; तयैव कृत्वा स्वीकृतवानित्यर्थः। ननु द्वयी गतिः, जीवानामकर्तृत्वं भगवतः कर्तृत्वं चेति तत्राऽस्ति। कर्तृत्वे भगवत्त्वान्न शरीरापेक्षा, जीवत्वे तु जातेऽपि शरीरे न भेदकर्तृत्वं सेत्स्यतीत्याशङ्क्याऽऽह—गृहीतगुणभेदायेति। गृहीतो गुणैर्भेदो येन। नाऽस्य सहजो भेदः, येनाऽकर्तृत्वं स्यात्। नाप्यभेदः, गुणैर्भेदस्य कृतत्वात्। गुणा हि भेदरूपं भगवन्तं चिद्रूपे नियोजितवन्तः। अतस्तत्कृतभेदस्य विद्यमानत्वात् तत्साम्यकृतं देहमवलम्ब्य जगत्करणं युक्तमेव। नन्वव्यक्तादीनि भूतानीति वाक्यादलौकिककर्तृत्वादेव कार्ये सिद्धे पुनः किं ब्रह्मकर्तृत्वेनेत्याशङ्क्याऽऽह—नमस्त इति। अव्यक्तस्याऽयं योनिः। अव्यक्तमस्मिन् जगत् प्रवेश्य स्वयं निवर्तते। अत एवाऽस्य रजोगुणरूपत्वम्। यथा मातापित्रोर्जगत् जायते, तथाऽस्मादव्यक्ताच्च जगज्जायत इति नाऽस्याऽनुपयोगः। अतो मातृत्वात् पुनर्नमनम्॥ ५॥ ❀ ❀ एवमपराधक्षमापनं (?) कृत्वा तस्य भक्तकृपालुत्वं प्रतिपादयन्ति—ये त्वाऽनन्येनेति। अत्र वाक्यापरिसमाप्तिः कृपायाः सफलत्वप्रतिपादनार्था। अतः कृपातो भक्तानामभयं वक्ष्यत्यतः कृपाहेतुरेवाऽत्रोच्यते। ये सन्तः त्वां सर्वभावेन हृदये भावयन्ति, तेषां लब्धयुष्मत्प्रसादानां न कुतश्चित्पराभव इति संबन्धः। ननु भगवत्येवाऽनन्यभावः संभवति, कथमन्यस्मिन्? इत्याशङ्क्य अनन्यभावे हेतुचतुष्टयमाह—आत्मभावनमित्यादिपदैः। आत्मानं भावकस्वरूपं भावकस्य देहादिकं भावयतीति तथा। अनेन कर्तृत्वम्। आत्मनि प्रोतं भुवनं येन। अनेन समवायित्वम्। परं नियन्तारम्। स्थितौ सर्वप्रवर्तनादिकर्तारम्। सदसदात्मकमिति प्रलयकर्तारम्। सदसदात्मकः प्रलयः, सतामसदात्मक इति। मायात्मकत्वाद्वा प्रलयकर्तारम्, सर्वदा तस्य स्थित्यसम्भवात् जगदात्मत्वेऽपि प्राप्ताप्राप्तविवेकेन असत्स्वरूप इत्येव पर्यवस्यति। स्वकीयानां सर्वेषामुत्पत्त्यादिकर्तृत्वात्तदधीनत्वात् स्वस्याऽपि सर्वभावेन भावनं संभवतीत्यर्थः। एवं सर्वभावेन भावनं प्रसादहेतुः॥ ६॥ ❀ ❀ एवं कारणनिरूपणेन प्रसादं निरूप्य, तेनाऽभयं निरूपयन्ति—तेषामिति। प्रसादेनाऽभयजननेऽवान्तरव्यापारमाह—सुपक्वयोगानामिति। तस्य मुख्यात्मकत्वाद्योगद्वारा सर्वसिद्धिहेतुत्वम्, अन्यथा भगवत इव स्वतन्त्रता स्यात्। सुष्ठु पक्वो योगो येषाम्। सुपक्वो हि सर्वत्र नियोक्तुं शक्यते। योगपाके हेतुं वदन् व्यापारान्तरमाह—जितश्वासेन्द्रियात्मनामिति। जिताः श्वासा इन्द्रियाणि आत्माऽन्तःकरणं च येषाम्। प्राणेन्द्रियान्तःकरणजयस्तदीयपदार्थानामस्पर्शहेतुत्वात् साक्षात्प्रीतिहेतुः। वेदगर्भत्वेन ज्ञानहेतुत्वात् सकारणो योगोऽवान्तरव्यापार इति नाऽनेकव्यापारत्वम्। अत एव लब्धो युष्मत्प्रसादो येन। कुतश्चित्कालादेरपि। पराभवोऽभिभवः॥ ७॥ ❀ ❀ एवं भक्तेषु सफलां कृपामुक्त्वा, तस्य कृपावत्त्वं निरूप्य, स्वस्मिन् कृपां प्रार्थयितुं स्वस्य सेवकत्वमाहुः—यस्य वाचेति। यस्य ब्रह्मणो वेदलक्षणया वाचा सर्वा एव प्रजाः, कन्यका इव सर्वथाऽसमर्थाः, सेवकभूता अपि स्वकार्ये अतिनिर्बन्धेन नियोजिताः, बलीवर्दास्तन्त्येव यन्त्रिताः। ब्रह्मणो वाक् वेदलोकात्मिका। अत एव येषां वेदोऽपि न नियामकस्तेषां लौकिकेन यन्त्रणम्।

अनेनैव सेवकत्वं निरूपितम् । सर्वे हि प्राणिनः फलार्थं कर्म कुर्वन्ति । तत्र निष्पन्ने फले, अधिष्ठातृदेवताभिरुपस्थिते फले, यः सारांशः, तत्तैरेव स्वार्थं भिन्नं करोति । पश्चादसारं प्रयच्छति । तथा च सर्वकर्मणां यन्मुख्यं फलं सृष्टिः, भगवदाज्ञा, सुखं वा; तद्ब्रह्मणे सिद्धयति । धर्मतपस्यादिना योऽसारो नान्तरीयकमलमूत्रादिरमणम्, तत् जीवेभ्यः प्रयच्छतीति । एवं ज्ञात्वाऽपि तथैव करणं यन्त्रणम् । अत एव अधमा अपि गावो दृष्टान्तीक्रियन्ते । एवं ज्ञात्वा ते निश्रिता इति । एवं सर्वदा कार्यकर्तृष्वसारभक्षकेषु कृपा उचिता । किञ्च, बलीवर्दापेक्षयाप्येते उत्तमाः । यदसारभूतमपि तुभ्यं बलित्वेन प्रयच्छन्ति, अन्यथा तत्र मध्ये मारयेत् । अतो भवान् मुख्यः प्रवर्तकोऽपि भूत्वा प्रजासु श्रेष्ठः । व्यङ्ग्येन ब्रह्मणोऽप्युपहास एवोक्तः । आसन्यरूपत्वाद्वा बलिदानसा[१]क्षिकत्वेन मुख्यतया निरूपणम् । आसमन्तात् यत्ताः सावधानाः । अनेन कादाचित्ककरणं व्यावर्तितम् ॥ ८ ॥

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

नम इत्यत्र । तेज इति । पराक्रमहेतुरिति शेषः । तत्र गमकमाहुः—सार्वज्ञ्येत्यादि । एतस्याऽधिकारस्य मुक्तिपूर्वावस्थात्वं व्युत्पादयन्ति—या सृष्टीत्यादि । जगद्व्यापारवर्जश्रवणादिति । इदं चतुर्लक्षण्यां तुरीयेऽस्ति । तत्र मुक्तस्याऽप्यैश्वर्यं जगत्कर्तृत्वाभावश्चोक्तः । प्रकृतेऽपि तस्याः करणत्वायं (य) भगवत्कार्यार्थं कर्तृत्वाङ्गीकारेऽपि स्वतोऽभिमानाभावान्न मुक्तत्वभङ्ग इति न भगवज्ज्ञानराहित्यप्रसङ्ग इत्यर्थः । तत्राऽस्तीति । सायुज्यपूर्वावस्थायामस्ति । इत्याशङ्क्येति । इति हेतोर्मायया ब्रह्मदेहग्रहणकथनमसङ्गतमाशङ्क्य । तत्साम्यकृतमिति । गुणसाम्यकृतम् । युक्तमेवेति । भगवतस्तव च चैतन्यभेदाभा (वा) द्युक्तमेव । एवं चाऽनभिमानित्वेन गुणावतारत्वाद्भेदाभेद उक्तः । अव्यक्तस्याऽयं योनिरिति । अक्षरस्य क्षेत्रभूतः । अत इति । तथाभिमानपक्षेऽप्युपयोगसद्भावेन ॥ ५ ॥ ❀ ❀ ये त्वेत्यत्र । अनन्यभाव इति । सर्वभावः । भावकस्वरूपमित्यस्यैव व्याख्यानम्—भावकस्य देहादिकमिति । भावयतीति । उत्पादयति । सदसदात्मकमित्यत्र सतामसदात्मको येनेति व्यधिकरणपदो बहुव्रीहिः । सदसती आत्मा यस्येति समानाधिकरण एव चेदभिप्रेयते, तदापि प्रलयकर्तृत्वमेवार्थ इत्याहुः—मायेत्यादि । तस्येति । सदसदात्मकस्य । ननु सदसतोरात्मा सदसदात्मक इति समासे तु न सोऽर्थ आयातीति शङ्कायामाहुः—जगदित्यादि । एवं श्रीधरोक्तरीत्या जगदात्मकत्वे तु प्राप्ताप्राप्तविवेकेन 'आत्मनि प्रोतभुवनम्' इति पूर्वा (व) विशेषणेन जगत्कारणतयैव तथात्वं प्राप्तम्, प्रलयकर्तृत्वं त्वप्राप्तमिति तयोर्विचारेणाऽऽद्ये पुनरुक्तयापातात् असति अविद्यमाने प्रलय एव कारणत्वं पर्यवस्यतीति तदीयं व्याख्यानमुक्तमित्यर्थः । श्लोकस्य तात्पर्यार्थमाहुः—स्वकीयेत्यादि । ननु भवत्वेव सर्वभावः, तथापि प्रकृते तत्कथनस्य किं प्रयोजनमत आहुः—एवमित्यादि ॥ ६ ॥ ❀ ❀ तेषामित्यत्र । मुख्यात्मकत्वादिति । आसन्यात्मकत्वात् । तदीयपदार्थानामस्पर्शहेतुत्वादिति । ब्रह्मसम्बन्धिनां पदार्थानामतीन्द्रियत्वेनेन्द्रियसन्निकर्षाहेतुत्वात् ॥ ७ ॥ ❀ ❀ यस्येत्यत्र । एवं सेवकत्वमिति । यन्त्रणेन सेवकत्वम् । यन्त्रणमुपपादयन्ति—सर्वे हीत्यादि यन्त्रणमित्यन्तम् । तत्रेति । कर्मणि । तैरिति । स्वस्य करणभूतैरधिष्ठातृभिः । प्रयच्छतीति । कर्मकरेभ्यः प्रयच्छति । निश्रिता इति । बलीवर्दतुल्या निश्रिताः ।

### श्रीगिरिधरकृता बालप्रबोधिनी

एवम्भूते परमेश्वरे त्वयि वयं न कमप्युपकारं कर्तुं समर्था इत्याशयेन नमस्कुर्वन्ति—नम इति । विज्ञानं चिच्छक्तिरेव वीर्यं बलं यस्य तस्मै । अव्यक्ता योनिः कारणं यस्य तस्मै, यद्वा व्यक्तस्य प्रपञ्चस्य योनिः कारणं तस्मै । तर्हि कथमस्मदादिवत्प्रतीयते इत्याशङ्क्याहुः—गृहीतो गुणभेदो रजोगुणो येन तस्मै । तदपि गुणग्रहणं न कर्माधीनमित्याशयेनाहुः—मायया स्वेच्छयैवेदं स्वरूपमुपेयुषे गृहीतवते । नम इति द्विरुक्तिः सर्वत्र नम इति सम्बन्धसूचनार्था ॥ ५ ॥ ❀ ❀ यद्यपि निष्कामभक्तानां कुतश्चिदपि पराभवो युष्मत्कृपया न भवति तथापि सकामेष्वस्मासु कृपया तद्विधेय इति प्रार्थयन्त प्रणमन्ति—ये इति । ये त्वा त्वां अनन्येन भावेन निष्कामभक्त्या भावयन्ति ध्यायन्ति तेषां कुतश्चिदपि हेतोः पराभवो न भवतीत्युत्तरेणान्वयः । कथमेवं निष्कामभक्तिः सम्भवति लोके तथाऽदर्शनादित्याशङ्क्य भवतः सर्वकारणत्वादन्यत्र तदभावादित्याहुः—आत्मभावनमिति, आत्मनो जीवान्भावयतीति तथा तमित्यर्थः । एवं निमित्तकारणत्वमुक्त्वा उपादानत्वमप्याहुः—सदसदात्मकमिति, कार्यकारणात्मकमित्यर्थः । एवमेकस्यैवोभयरूपत्वं कथं सम्भवतीत्याकांक्षायामचिन्त्यशक्तित्वादित्याशयेनाहुः—आत्मनीति । स्वात्मन्येव प्रोतानि रचनया सन्दर्भितानि भुवनानि येन तम् । तथा सति विकारित्वं स्यादित्याशङ्क्याहुः—परमिति, प्रपञ्चातीतं सर्वनियन्तारमित्यर्थः । ननु निष्कामाणामपि भक्तानां पराभवः कुत्रचिद् दृश्यते इत्याशङ्क्याहुः—लब्धेति, लब्धो युष्माकं प्रसादोऽनुग्रहो यैस्तेषामित्यर्थः । यावद्युष्मत्प्रसादो न लब्धस्तावदेव पापप्राबल्यात् पराभवो भवतीति भावः । तर्हि कथम्भूतानां प्रसादो भवतीत्याकांक्षायामाहुः—सुपक्वयोगानामिति, सुनिष्पन्नभक्तियोगानामित्यर्थः । इन्द्रियादीनां विषयाभिमुख्ये

---

१. साक्षित्वेन. ग. ।

भक्तिरेव कथं सिद्ध्येत्तत्राह—जितेति । जितः श्वासः प्राण इन्द्रियाणि आत्मा अन्तःकरणं च यैस्तेषामित्यर्थः ॥ ६ ॥ ७ ॥ ❀ ❀ यस्य तव वाचा वेदलक्षणया सर्वाः वर्णाश्रमाधिकारयुक्ताः प्रजा नियन्त्रिताः स्वस्वाधिकारे प्रयोजिता आयत्ताः सावधानाश्च सत्यो वलिं हरन्ति । स्वाधिकारानुरूपाणि कर्माणि कुर्वन्तीत्यर्थः । तस्मै मुख्याय सर्वनियन्त्रे तुभ्यं नमः । तत्र दृष्टान्तमाहुः—गावस्तन्त्येवेति । गावो बलीवर्दा यथा तन्त्या दामन्या नासिकायां निवद्धाः सावधानाश्च स्वामिनः कार्यं कुर्वन्ति अन्यथा स्वातन्त्र्येण प्रवृत्तास्तु दण्डभागिनो भवन्ति तेषां भोगश्च स्वामिसम्पादितस्तत्प्रसादानुरूप एव तथाऽत्रापीत्यर्थः ॥ ८ ॥

### हिन्दी अनुवाद

देव ! आप विज्ञानवलसम्पन्न हैं; अपने मायासे ही यह चतुर्मुख रूप और रजोगुण स्वीकार किया है; आपकी उत्पत्तिके वास्तविक कारणको कोई नहीं जान सकता । हम आपको नमस्कर करते हैं ॥ ५ ॥ ❀ ❀ आपमें सम्पूर्ण भुवन स्थित हैं, कार्य-कारणरूप सारा प्रपञ्च आपका शरीर है; किन्तु वास्तवमें आप इससे परे हैं । जो समस्त जीवोंके उत्पत्तिस्थान आपका अनन्य भावसे ध्यान करते हैं, उन सिद्ध योगियोंका किसी प्रकार भी ह्रास नहीं हो सकता; क्योंकि वे आपके कृपाकटाक्षसे कृतकृत्य हो जाते हैं तथा प्राण, इन्द्रिय और मनको जीत लेनेके कारण उनका योग भी परिपक्व हो जाता है ॥ ६ ॥ ७ ॥ ❀ ❀ रस्सीसे बँधे हुए बैलोंकी भाँति आपकी वेदवाणीसे जकड़ी हुई सारी प्रजा आपकी अधीनतामें नियमपूर्वक कर्मानुष्ठान करके आपको बलि समर्पण करती है । आप सबके नियन्ता मुख्य प्राण हैं, हम आपको नमस्कार करते हैं ॥ ८ ॥

**स त्वं विधत्स्व शं भूमंस्त[1]मसा लुप्तकर्मणाम् । अदभ्रदयया दृष्ट्या आपन्नानर्हसीक्षितुम् ॥ ९ ॥**
**एष देव दितेर्गर्भ ओजः काश्यपमर्पितम् । दिशस्तिमिरयन् सर्वा वर्धते[2]ऽग्निरिवैधसि ॥ १० ॥**

### मैत्रेय उवाच

**स प्रहस्य महाबाहो भगवान् शब्दगोचरः । प्रत्याचष्टात्मभूर्देवान् प्रीणन् रुचिरया गिरा ॥ ११ ॥**

### ब्रह्मोवाच

**मानसा मे सुता युष्मत्पूर्वजाः सनकादयः । चेरुर्विहायसा लोकाँल्लोकेषु विगतस्पृहाः ॥ १२ ॥**

### श्रीधरस्वामिविरचिता भावार्थदीपिका

तमसा अहोरात्रविभागाभावेन लुप्तानि कर्माणि येषाम् । आपन्नानापद्ग्रस्तानस्मान् ॥ ९ ॥ ❀ ❀ आपत्कारणमाहुः । एष गर्भः तस्य विशेषणम् । अर्पितं निक्षिप्तं काश्यपमोजो वीर्यं दिशस्तिमिरयंस्तमोव्याप्ताः कुर्वन् ॥ १० ॥ ❀ ❀ दितेः कुचेष्टितं ज्ञात्वा प्रहस्य देवानां ये शब्दा विज्ञप्तिवाक्यानि तेषां गोचरो विषयभूतः प्रत्यभाषत ॥ ११ ॥ ❀ ❀ युष्मत्सकाशात्पूर्वं जाताः ॥ १२ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

भवतां महता संरंभेण स्तवनाभिप्रायः क इत्यत आहुः—स त्वमिति । स इति तच्छब्देन पूर्वोक्तवैशिष्ट्यं स्मारयति कर्माणि संध्यावंदनादीनि महतामल्पेष्ववश्यं दयादृष्टिर्भवतीत्याहुर्भूमन्निति । अदभ्रा पूर्णा दया यस्यां तया ॥ ९ ॥ देवानां सर्वज्ञत्वात्त्वं तु जानास्येवेत्याहुर्देवेति । तस्य गर्भस्याजहल्लिंगत्वाद्धेनुराहुतिसाधनमितिवद्विशेषणम् ॥ १० ॥ ❀ ❀ यद्वाऽहो अज्ञा मामेव स्तुवंति एतद्विपद्धरणे कोऽहं वराक इति वृद्धो बालकानिव प्रहस्येत्यर्थः । स ब्रह्मा आत्मभूः परमेश्वरोद्भूतः महाबाहो इति सनकादिभ्योऽपि त्वं क्रोधजयेन शूरोऽसीत्याह ॥ ११ ॥ ❀ ❀ मम कथने एषां प्रश्नो मा भूदित्यादित एव वक्तुमारभते—मानसा मनसो जाताः । विहायसाकाशपथा किंप्रयोजनवंतश्चरंतीति चेदाह—लोकेष्विति ॥ १२; १३ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

तमसामित्यत्र लोकानामिति पाठस्वाम्यसम्मतः ॥ ९ ॥ ❀ ❀ तस्य गर्भस्य वीर्य्यन्तत्परिणामः एधते इति कचित्पाठः ॥ १० ॥ ❀ ❀ स देवैः पृष्टः हे महाबाहो ! जितकामशत्रुत्वात्त्वमेव महाबाहुर्न तु कश्यपादिरिति भावः ॥ ११ ॥ ❀ ❀ लोकानां कृतार्थीकरणाय चेरुर्यतो लोकेषु स्पृहाशून्याः ॥ १२ ॥ १३ ॥

---

१. प्रा० पा०—भूमँल्लोकानां । २. प्रा० पा०—एधते ।

### श्रीमद्वीरराघवव्याख्या

एवं नमस्कृत्य स्वाभीप्सितं प्रार्थयन्ते । स त्वमिति । हे भूमन् ! स उक्तविधस्त्वं तमसाहोरात्रविभागाभावेन लुप्तानि कर्माणि येषामस्माकं शं सुखं विधत्स्व कुरु आपन्नानापद्गतान्नोऽस्मान् अदभ्रा अनल्पा दया यस्यास्तया दृष्ट्या इक्षणेन ईक्षितुं द्रष्टुमर्हसि ॥ ९ ॥ ❀ ❀ ननु किमिदानीं भवतां व्यसनमुपस्थितमित्यत्राहुः । एष इति । हे देव ! दितेर्गर्भेऽर्पितः निहितं काश्यपं कश्यपसम्बन्धयोजः वीर्यं सर्वा दिशस्तिमिरयन्नन्धीकुर्वन्नेधसि दारुनिचयेऽग्निरिवैधते वर्द्धते ॥ १० ॥ ❀ ❀ एवं देवैरुक्तो ब्रह्मा तान् प्राहेत्याह मुनिः । स इति । शब्दगोचरः वेदवेद्यः स भगवान् स्वभूर्ब्रह्मा प्रहस्य विहस्य हे महाबाहो विदुर ! मधुरया गिरा प्रीणयंस्तर्पयन् देवान् प्रत्याचष्ट उक्तवान् ॥ ११ ॥ ❀ ❀ उक्तिमेवाह मानसा इत्यारभ्याध्यायशेषेण मे मानसाः मनसः समुत्पन्नाः युष्मत्पूर्वजाः युष्मदपेक्षया पूर्वं जाताः सनकादयः लोकेषु विगता स्पृहा विषयाभिलाषो येषां ते तथोक्ता अपि लोकान्विहायसा नभोमार्गेण चेरुः सञ्चरितवन्तः ॥ १२ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

भवतां महता संरम्भेण स्तवनाभिप्रायः क इत्यतस्तमाहुरित्याह । स त्वमिति । स इति । तच्छब्देन पूर्वोक्तवैशिष्ट्यं स्मारयन्ति दितिगर्भनिमित्ततिमिरेण लुप्तसन्ध्यादिकर्मणाम् । तदर्थमयमेवोपाय इति विज्ञापयन्तीत्याह । अदभ्रेति । अदभ्रा पूर्णा दया यस्यां सा तथोक्ता तया दृष्ट्या ईक्षितुं द्रष्टुम् ॥ ९ ॥ ❀ ❀ किमिदानीं भयनिमित्तमिति तद्विज्ञापयन्तीत्याह । एष इति । काश्यपङ्कश्यपस्य विद्यमानं दित्यामर्पितमोजस्तेजः एष गर्भः सर्वा दिशस्तिमिरयन् अन्धंकारयन् लोकप्रदीपानां सूर्यादिग्रहाणां तेजोऽवष्टम्भनं दिशामन्धकारित्वमतोऽस्य ते त्वया परिहारो द्रष्टव्य इति यावत् ॥ १० ॥ ❀ ❀ स्वप्रज्ञाधिगमं स्तुवतामेषामुत्तरं प्रतिजानीते ब्रह्मेति मैत्रेयो विदुरं वक्ति । स प्रहस्येति । शब्दगोचरो मिथो व्यवहारविषयः वेदवेद्यो वा प्रीणयन् प्रत्याचष्ट भवदुक्तस्योत्तरं वक्ष्यामीत्याह ॥ ११ ॥ ❀ ❀ स्ववचनमध्ये तत्प्रश्नो माभूदिति मन्वान आदित एव वक्तुं प्रारभते । मानसा इति । मम मनसो जाताः अन्तरिक्षादिलोकान् किं प्रयोजनवन्त इत्यत आह । लोकेष्विति ॥ १२ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

गर्भनिदानमेव पृच्छामः । गर्भात्तमोजातमिति तु जानीम एवेत्याह । एष इति । एधते इति क्वचित् पाठः ॥ १० ॥ ❀ ❀ वृद्धो बालकान् प्रतीव प्रहस्य शब्दमात्रगोचर इति ब्रह्मणः साधारणागोचरत्वं व्यज्य महिमानं दर्शयति ॥ ११—१३ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

तमसा अहोरात्रविभागाभावेन । आपन्नान् अस्मान् । अदभ्रदयया अनल्पकृपया ॥ ९ ॥ ❀ ❀ ननु विशेषवार्त्तां ब्रूतेति तत्राहुः । काश्यपमोजो वीर्य्यमर्पितं सत् दितेर्गर्भः ॥ १० ॥ ❀ ❀ अहो अज्ञा मामेवं स्तुवन्ति एतद्विपत्त्राणे कोऽहं वराक इति वृद्धो बालान् प्रतीव प्रहस्य । शब्दा देवानां विज्ञप्तिवाक्यानि तेषां गोचरः विषयः ॥ ११ ॥ ❀ ❀ एतद्विपत्कारणवर्तीं प्राचीनामद्भुतां कथां तावत् शृणुतेत्याह । मानसा इति ॥ १२ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

अर्पितं निहितं तिमिरयन् तमोव्याप्ताः कुर्वन् ॥ १० ॥ ❀ ❀ शब्दगोचरः चतुर्मुखादिशब्दार्थः ॥ ११—१३ ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या ।

एवं स्वस्य सेवकत्वमुपपाद्य कृपां प्रार्थयन्ति—स त्वमिति । हे भूमन् ! हे अधिक, कृपायां कृतायामपि न तव काचित् क्षतिरित्यर्थः । अत एवाऽस्मभ्यं संप्रयच्छ । कल्याणान्तरव्यावृत्त्यर्थं स्वाभिप्रेतमाहुः—लुप्तकर्मणां लोकानामन्धकारेण सर्वकर्मरहितानां भुवनानां संबन्धिन आपन्नान् शरणागतानस्मानदभ्रदयया दृष्ट्या ईक्षितुमर्हसीति । कृपादर्शनव्यतिरेकेण तत्र विद्यमानमपि दैन्यादिकं न प्रकाशते । अतः कृपादृष्ट्या द्रष्टव्यमिति गूढोऽभिप्रायः । साधारणलोकानां दीनं दृष्ट्वा दयोत्पद्यते, परं सा व्यर्था । तथा मा भवत्वित्यदभ्रेति विशेषणम् ॥ ९ ॥ ❀ ❀ कस्मान्निमित्तात् कृपा विधेयेति शङ्कायां दैत्योत्पत्तिर्जायत इति ततोऽभयं कर्तव्यमित्यभिप्रायेणाऽऽहुः—एष देवेति । दितेरेष गर्भः काश्यपं तेनैवाऽर्पितमोजो दशदिशस्तिमिरयन् शुष्के एधसि काष्ठे अग्निरिव वर्द्धते । इदानीं दितेर्गर्भः । अनेन स्वभावतः क्रूरो भविष्यतीत्युक्तम् । तत्रापि कश्यपस्य बीजम् , तदप्योजोरूपम् । तेनैव चाऽर्पितं समर्पितम् । दितेः स्थाने समर्पितमिति तत्र न कोऽपि प्रतीकारः कर्तुं शक्यः ॥ १० ॥ ❀ ❀ एवं महाभयेन देवानां वचनं श्रुत्वा, तत्र निदानं हास्यरूपमिति तत्स्मृत्वा, तदवक्तव्यमिति बीजगर्भयोर्ज्ञातत्वात् तदतिरिक्तं हेत्वन्तरं वक्तुं कथामारभत इत्याह मैत्रेयः—संप्रहस्येति । महाबाहो इति विदुरसंबोधनं शूरत्वेन क्वापि भयं न कर्तव्यमिति ज्ञापनार्थम् । भगवा-

निति तज्ज्ञाने हेतुः, प्रतीका[1]राकरणे च । शब्दगोचर इत्यलौकिको वेदैकसमधिगम्यः । आधिदैविको ब्रह्मा तत्राऽऽविष्टो वदतीति ज्ञापितम् । अन्यस्य भगवत्सेवकापकर्षो वक्तुमयुक्तः । प्रत्याचष्ट प्रत्युत्तरं दत्तवान् । ब्रह्मणा किञ्चित्कृतमितीयं शङ्का व्यावर्तिता । 'भगवांस्तद्विधित्सति' इत्यग्रे वक्ष्यति । आत्मभूरिति तथा कथनं नाऽपराधहेतुः । 'मानसाः' इत्यादिवाक्येभ्योऽन्ययैव रुचिरया गिरा । तेषां यथा सुखं भवति तथा प्रीणन् प्रीतिं जनयन् ॥ ११ ॥ ❀ ❀ शापादागतजयविजययोः निस्तेजसोस्तेजसा एतज्जातमिति वक्तुं शापार्थमुपाख्यानमारभते मानसा इत्यध्यायद्वयेन । प्रसङ्गात्तेषां वैकुण्ठगमनमिति वक्तुं स्वभावतस्तेषां परिभ्रमणमाह—मानसा मे सुता इति । भगवता मनसि कृतं ते कृतवन्त इति ज्ञापयति । मत्सुता इति सृष्टिहेतुत्वमुक्तम् । युष्मत्पूर्वजा इति भवतामज्ञाने हेतुः । देवाः पश्चादुत्पन्नाः, न[2]त्वेते काश्यपाः । तस्मिन्कल्पे तथैवोत्पत्तिः । देवानां शुद्धसात्त्विकत्वात् ततः पूर्वजा गुणातीताः; अनेन स्वस्य दोषो नाऽस्तीति सूचितम् । यथा मम पुत्रास्तथा भवतां ज्येष्ठा इति । सनकादय इति तपोरूपत्वात् न कस्यापि प्रतीकारः शक्यः । विहायसा आकाशमार्गेण । सामर्थ्याप्रतिरोधः श्रमाभावश्च सूचितः । सर्वेष्वेव लोकेषु विगतस्पृहाः सन्तश्चेरुर्गमनं कृतवन्तः । लोकान् अलोकान् वा प्रति, लोकोद्धारार्थमित्यर्थः । लोकानित्यत्यन्तसंयोगे वा द्वितीया । पुनर्लोकग्रहणं जनेषु प्रयोजनाभावार्थम् । तेषां पर्यटनं नित्यमिति ते परिभ्रमन्त्यतो भुवनानामेव कर्मत्वम्, न तु जनानाम् ॥ १२ ॥

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः ।

संग्रहस्येत्यत्र । अन्ययेति । अत्रान्यत्वं 'प्रीणन्' इति पदोक्तेन कार्यस्य वर्तमानत्वेन ज्ञेयम् । मानसा इत्यत्र । स्वस्येत्यादि । दितिगर्भकृतो दोषः स्वहेतुको नास्तीत्यर्थः ॥ ११ ॥ ❀ ❀ विहायसालोकानित्यत्र आकारप्रश्लेषोपि शक्यवचन इत्यत आहुः—अलोकान् वेति ॥ १२ ॥

### श्रीगिरिधरकृता बालप्रबोधिनी

एवंविधः स सर्वनियन्ता त्वं तमसा अन्धकारेण अहोरात्रभागाभावेन लुप्तानि कर्माणि येषां तेषामस्माकं शं सुखं विधत्स्व कुरु । न तत्करणे तव किञ्चिदप्यायास इत्याशयेनाहुः—अदभ्रा अनल्पा दया यस्यां तया दृष्ट्या आपन्नान् शरणमागतान् आपद्गतान्वा अस्मान् ईक्षितुमर्हसीति । कृपादृष्टिमात्रेणैवास्मदापन्निवृत्तिपूर्वकसुखसम्पादने तव सामर्थ्यमस्तीति सूचयन्तः सम्बोधयन्ति—भूमन्निति ॥ ९ ॥ ❀ ❀ कुतः आपदागतेत्यत आहुः—एष इति । तव किं न विदितमित्याशयेन सम्बोधयन्ति—देवेति । एष दितेर्गर्भः सर्वा दिशस्तिमिरयंस्तमोव्याप्ताः कुर्वन् एधसि शुष्के काष्ठेऽग्निरिव वर्द्धते इत्यन्वयः । अन्येन तत्प्रतीकारो न सम्भवतीत्याशयेन गर्भं विशिनष्टि—काश्यपं कश्यपस्य ओजो वीर्यं तेनैव तस्यामर्पितं स्थापितमित्यर्थः ॥ १० ॥ स्त्रीप्रसङ्गश्रवणेऽपि तव मोहो न दृश्यतेऽतस्त्वं जितेन्द्रियोऽसीति सूचयन्सम्बोधयति—महाबाहो इति । स शब्दगोचरः देवादिप्रश्नविषयो भगवान् सर्वज्ञः आत्मभूर्ब्रह्मा दितेः कुचेष्टितं स्मृत्वा प्रहस्य रुचिरया मधुरया गिरा देवान् प्रीणन् सन्तोषयन् प्रत्याचष्ट प्रत्यभाषत ॥ ११ ॥ ❀ ❀ शापाद्वैकुण्ठात्पतितयोर्दितिगर्भप्रवृष्टयोस्तेजसा सर्वं निस्तेजस्कं जातमिति वक्तुं तयोः शापप्रसङ्गोपाख्यानमारभते—मानसा इति । युष्मत्सकाशात्पूर्वं जाताः मानसाः सङ्कल्पमात्रत उत्पन्नाः सनकादयो मे मम सुताः लोकेषु जनेषु विगतस्पृहाः प्रयोजनरहिता एव विहायसा आकाशमार्गेण सर्वान् लोकांश्चेरुरित्यन्वयः ॥ १२ ॥

### हिन्दी अनुवाद

भूमन्! इस अन्धकारके कारण दिन-रातका विभाग अस्पष्ट हो जानेसे लोकोंके सारे कर्म लुप्त होते जा रहे हैं, जिससे वे दुखी हो रहे हैं, उनका कल्याण कीजिये और हम शरणागतोंकी ओर अपनी अपार दयादृष्टिसे निहारिये ॥ ९ ॥ ❀ ❀ देव ! आग जिस प्रकार ईंधनमें पड़कर बढ़ती रहती है, उसी प्रकार कश्यपजीके वीर्यसे स्थापित हुआ यह दितिका गर्भ सारी दिशाओंको अन्धकारमय करता हुआ क्रमशः बढ़ रहा है ॥ १० ॥ ❀ ❀ श्रीमैत्रेयजी कहते हैं—महाबाहो ! देवताओंकी प्रार्थना सुनकर भगवान् ब्रह्माजी हँसे और उन्हें अपनी मधुर वाणीसे आनन्दित करते हुए कहने लगे ॥ ११ ॥ ❀ ❀ श्रीब्रह्माजीने कहा—देवताओ ! तुम्हारे पूर्वज, मेरे मानसपुत्र सनकादि लोकोंकी आसक्ति त्यागकर समस्त लोकोंमें आकाशमार्गसे विचरा करते थे ॥ १२ ॥

**त एकदा भगवतो वैकुण्ठस्यामलात्मनः । ययुर्वैकुण्ठनिलयं सर्वलोकनमस्कृतम् ॥ १३ ॥**
**वसन्ति यत्र पुरुषाः सर्वे वैकुण्ठमूर्तयः । येऽनिमित्तनिमित्तेन धर्मेणाराधयन् हरिम् ॥ १४ ॥**

---

१. प्रतीकारकरणे. ग. । २. नन्वेते. क. ङ. च. ।

**यत्र चाद्यः पुमानास्ते भगवान् शब्दगोचरः । सत्त्वं विष्टभ्य विरजं स्वानां नो मृडयन् वृषः ॥ १५ ॥**
**यत्र नैःश्रेयसं नाम वनं कामदुघैर्द्रुमैः । सर्वर्तुश्रीभिर्विभ्राजत्कैवल्यमिव मूर्तिमत् ॥ १६ ॥**

### श्रीधरस्वामिविरचिता भावार्थदीपिका

वैकुंठस्य विष्णोः वैकुंठाख्यं लोकं ययुः ॥ १३ ॥ ❀ ❀ तं वर्णयति । वसंतीत्यादिद्वादशभिः । वैकुंठस्य हरेरिव मूर्तिर्येषां ते । निमित्तं फलं प्रवर्तकं यस्मिन् । निष्कामेन धर्मेणेत्यर्थः । आराधयन्नाराधितवंतः ॥ १४ ॥ ❀ ❀ यत्रेति । शब्दगोचरो वेदांतैकवेद्यः विरजं सत्त्वमूर्तिं विष्टभ्य धृत्वा वृषो धर्ममूर्तिः स्वानां स्वान् ॥ १५ ॥ ❀ ❀ तत्रत्यं वनं विशिनष्टि यत्रेति चतुर्भिः । सर्वेष्वप्यृतुषु श्रीः पुष्पादिसंपद्येषां तैः ॥ १६ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

निलीयते सर्वमत्रेति निलयमिति निरुक्त्या किं शून्यागारमिति चेदाह वसंतीति इत्यर्थ इति । निष्कामकर्मणामेव तत्र गतिरिति भावः । यद्वा न विद्यते निमित्तं कारणं यस्य सोऽनिमित्तो विष्णुस्स एव निमित्तं फलं यस्मिंस्तेन भागवताख्येनेत्यर्थः । ये पूर्वमाराधितवंतः ते तत्र वसंति 'हरिपदानतिमात्रदृष्टैः;' इति 'यन्न व्रजंति' इत्यादिवक्ष्यमाणत्वात् ॥ १४ ॥ ❀ ❀ विरजं शुद्धं यस्य नामरूपलीलादिकं सर्वं शुद्धसत्त्वमेवेत्यर्थः ॥ १५ ॥ ❀ ❀ तत्रत्यं वैकुंठस्थं मूर्त्तिमत्कैवल्यमिवेति वनस्पतिसमूहस्य नित्यसिद्धत्वमेकरसपरमानंदमयत्वमात्मारामविहंगमस्पृहणीयत्वं चोक्तम् ॥ १६ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

प्रथमनिमित्तशब्दः फलपरः द्वितीयतच्छब्दः प्रवर्त्तकत्वपरः । वस्तुतस्तु निर्निमित्तो भगवानेव निमित्तं फलं यत्र निष्किंचनभागवतधर्म्मे स तथा तेन ॥ १४ ॥ ❀ ❀ प्राकृतस्य सत्त्वस्य सरजस्कत्वात् विरजमिति विशेषणेनाप्राकृत-विशुद्धसत्त्वमूर्त्तिमवष्टभ्य चक्षुराश्रित्य पश्यतीतिवत् प्रकाशयेत्यर्थः । मृडयन् सुखीकुर्वन्निति ॥ १५ ॥ ❀ ❀ कैवल्यैकप्रयो-जनमित्यत्र कैवल्यशुद्धभक्तिपरत्वेन निर्णेष्यमाणत्वान्मूर्त्तिमद्भक्तिसुखमिव ॥ १६ ॥

### श्रीमद्वीरराघवव्याख्या

ते सनकादयः एकदा एकस्मिन् कालेऽमलात्मनः शुद्धसत्त्वमयदिव्यमङ्गलविग्रहस्य वैकुण्ठस्याप्रतिहतैश्वर्यस्य भगवतः वैकुण्ठस्य सम्बन्धिनिलयं स्थानं प्रति कथंभूतं सर्वलोकैरर्वाचीनैर्लोकवासिभिर्नमस्कृतं ययुर्गतवन्तः तत्र वैकुण्ठनिलयमिति विष्णुलोक उपरिस्थानमुच्यते नतु नित्यविभूतिः । अष्टमस्कन्वे "वैकुण्ठः कल्पितो येन लोको लोकनमस्कृत" इति वक्ष्यमाणत्वात् ब्रह्मणापि समधिगम्यस्य परमाकाशप्रकृतियुक्तैर्गन्तुमशक्यत्वात् खचूडामणिमात्मधिष्ण्यमिति स्वर्गलोकचूडामणित्वेन वक्ष्यमाणत्वाच्च कैवल्य-मिव मूर्तिमदिति वक्ष्यमाणत्वेन मुक्तप्राप्यभूमित्वाभावावगमाच्च वैकुण्ठशब्दवाच्यत्वं च विकुण्ठस्य भगवतः स्थानत्वादुपपन्नमिति विज्ञेयम् ॥ १३ ॥ ❀ ❀ तमेव वैकुण्ठं वर्णयति । वसन्तीत्यादिद्वादशभिः । यत्र वैकुण्ठे अनिमित्तनिमित्तेन निमित्तं फलम-निमित्तेन निमित्तमप्रवर्त्तकं निमित्तं फलं यस्मिन्कामादिनिमित्तरहितेनेत्यर्थः । धर्मेण हरिमाराधयन् आराधितवन्तः ये पुरुषा वसन्ति ते सर्वे वैकुण्ठस्य भगवतः मूर्तिराकारो येषां ते तथोक्ताः आराधयन् वसन्तीत्यनेन विष्णुलोकवासिनामपि भगवदुपासकत्वमुक्तं "धर्मध्रुवाद्यास्तिष्ठन्ति यत्र ते लोकसाक्षिण" इत्यादिनैकार्थ्यात् पूर्वमाराध्येहागत्य वसन्तीत्यर्थेऽपि न विरोधः । नन्वकामेन धर्मेण भगवन्तमाराधयतां नित्यविभूतिरेव प्राप्या नत्वसावण्डान्तर्वर्तिवैकुण्ठलोकः । सत्यं त एव कुतश्चित्प्रतिबन्धात्प्रथमं नित्यविभूति-मनवाप्येमं वैकुण्ठमागत्य तत्र भगवदनुभवेन निरस्तप्रतिबन्धाः कल्पान्ते ततो नित्यविभूतिं गमिष्यन्तीत्यतो न विरोधः । अत्र यत्रेत्यादीनां यच्छब्दानां तद्विश्वगुर्वधिकृतमित्यत्रान्वयः ॥ १४ ॥ ❀ ❀ यत्र च वैकुण्ठे शब्दगोचरः शास्त्रैकप्रमाणकः भगवान् षाड्गुण्यपूर्णः आद्यः परमकारणभूतः वृषः श्रेष्ठः पुमान् परमपुरुषः विरजं रजोगुणेनाननुविद्धं सत्त्वं शुद्धसत्त्वमयं देहं विष्टभ्य धृत्वा स्वानां नः स्वकीयानस्मान्मृडयन्सुखयन्नास्ते ॥ १५ ॥ ❀ ❀ यत्र श्रीवैकुण्ठे निःश्रेयसं नाम निश्रेयसाख्यं वनमस्ति कथम्भूतं सर्वर्तुश्रीभिः सर्वेषु ऋतुषु या श्रीः पुष्पादिसम्पत्सा येषां तैः कामदुघैरभीष्टानि वर्षद्भिर्द्रुमैर्विभ्राजद्विशेषेण भ्राजमानं मूर्तिमत्कैवल्यमिव स्थितम् ॥ १६ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

ततः किमत्राह । त इति । विकुण्ठाख्यं निलयं गृहं नितरां लीयतेऽस्मिन् सर्वमिति ॥ १३ ॥ ❀ ❀ शून्यागारत्वं निवारयति । वसन्तीति । ये नित्यमनिमित्तेन अः विष्णुर्निमित्तं यस्य सोऽनिमित्तः तेन विष्णवर्पणबुद्ध्या क्रियमाणेनेत्यर्थः । धर्मेण

हरिमाराधयंस्ते यत्र वसन्तीत्यन्वयः। वैकुण्ठवन्मूर्तिर्येषां ते तथोक्ताः सारूप्यभाज इत्यर्थः॥ १४॥ ❀ ❀ यत्र लोके वृषः श्रेष्ठ आद्यः सर्वैरुपजीव्यो भगवान् स्वैर्भर्गैर्मूर्तिमद्भिरुपेतः शब्दगोचरोऽनन्तानां मूर्तिधराणां वेदानां विषयः पुमान् नारायणो विरजं दूरीकृतरजोगुणं सत्त्वं बलज्ञानसमाहारात्मत्वमवष्टभ्य स्वानां नो यदस्ति तत्सर्वं मृडयन् रक्षन् आस्त इत्यन्वयः॥ १५॥ ❀ ❀ कैवल्यं ब्रह्मकैवल्यममृतमक्षरं ब्रह्मेत्यभिधानं ज्ञानपुष्पसाध्यत्वन्नैःश्रेयसम्॥ १६॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

वैकुण्ठस्येव नित्यानन्दरूपा मूर्तिर्येषां ते यत्र सन्ति। तथा न विद्यते निमित्तं कारणं यस्य स श्रीभगवानेव निमित्तं फलं यत्र तेन धर्मेण भागवताख्येन ये च हरिमाराधयन् ते च यत्र वसन्तीत्यन्वयः। हरिपदानतिमात्रदृष्टैरिति यन्न व्रजन्तीत्यादि वक्ष्यमाणात्॥ १४॥ ❀ ❀ सत्त्वं गुणं सान्निध्येनोपकृत्य वृषः सर्वानन्दवर्षी॥ १५॥ ❀ ❀ कैवल्यं शुद्धं भक्तिसुखं तदेव मूर्तिमदिव जातम्। तदेकसम्पन्मयत्वात्॥ १६॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी।

अमलाः शुद्धा भवन्त्यात्मानोऽन्तःकरणानि यतस्तस्य॥ १३॥ ❀ ❀ वैकुण्ठमूर्त्तयः भगवत्सारूप्यवन्तः अनिमित्तं स्वप्रयोजनाभाव एव निमित्तप्रवर्त्तकं यस्मिंस्तेन निष्कामेण परमधर्म्मेण इत्यर्थः। आराधयन् पूर्व्वमाराधिवन्तः॥ १४॥ ❀ ❀ विरजं सत्त्वं शुद्धसत्त्वं विष्टभ्य धृत्वा यस्य नामरूपलीलादिकं सर्वमेव शुद्धसत्त्वमित्यर्थः। स्वानां स्वान् वृषः साक्षात् परमधर्म्मरूपः॥ १५॥ ❀ ❀ कैवल्यमूर्त्तिमदिवेति वनस्पतिसमूहस्य नित्यसिद्धत्वमेकरसं निरुद्वेगपरमानन्दमयत्वमात्मारामविहङ्गमस्पृहणीयत्वञ्चोक्तम्॥ १६॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

अनिमित्तः अनाश्रयः भगवानेव निमित्तं यस्मिन् तेन आराधयन् आराधितवन्तः॥ १४॥ ❀ ❀ शब्दगोचरो वेदैकवेद्यः सत्त्वं शुद्धसत्त्वरूपं शरीरं विरजं रजोपलक्षितप्रकृतिसम्बन्धरहितं विष्टभ्य धृत्वा भक्तवाञ्छितपदार्थान् वर्षतीति वृषः स्वानां स्वकीयान् मृडयन् सुखयन् यत्र वैकुण्ठे आस्ते॥ १५॥ ❀ ❀ वैकुण्ठस्थं वनं वर्णयति। यत्रेति चतुर्भिः। यत्र वैकुण्ठे सर्वेषु ऋतुषु श्रीः पुष्पादिसम्पद्येषां तैः द्रुमैर्विभ्राजात् शोभमानन्नैःश्रेयसं नाम वनं मूर्तिमत्कैवल्यमिव तिष्ठति॥ १६॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या.

तेषां प्रसङ्गाद् वैकुण्ठगमनमाह त एकदेति। भगवतो वैकुण्ठस्येति। साक्षात्पुराणपुरुषावतारो वैकुण्ठः, तन्नाम्ना निर्मितो लोको वैकुण्ठ इत्युच्यते। स्त्रीप्रार्थनया स लोको निर्मित इति सोऽवतारः कामीति शङ्का स्यात् तन्निवृत्त्यर्थमाह अमलात्मन इति। अमला आत्मानो यस्येति वा। यथा सत्यादिष्वविद्यावन्तस्तिष्ठन्ति, न तथा तत्रेत्यर्थः। वैकुण्ठनिलयमिति नित्यमेव स्थानम्। कृत्रिमत्वेऽपि व्यापिवैकुण्ठ एव 'तत्र निविष्ट इति तन्मुख्यमेव वैकुण्ठम्। अतः 'पुनर्लोकाय कल्पताम्' इति न विरोधः। 'चैद्ये च सात्वतपतेश्चरणं प्रविष्टे' इति च न विरुद्ध्यते, 'प्रत्येष्यताम्' इति च। साधारण्यलोक 'वैकुण्ठः कल्पितो येन' इतिवाक्यात् कृत्रिमत्वं च। सनकादीनां गमनाच्च, प्रसङ्गाच्च। अतः कृत्रिमे सहजस्याऽऽवेशः, लोकावतारो वा। वैकुण्ठस्य तु निलयमिति पुनरुक्तम्। वैकुण्ठ एव निलय इति। सर्वेषामगम्यमिति सूचयितुमाह—सर्वलोकनमस्कृतमिति। सर्वेषां जनानां नमस्करणीयम्, सर्वभुवनोत्कृष्टं वा। अन्यत्र लोके विद्यमाना लोकमुपद्रावयन्ति, अत्रत्यास्तु नैवमिति सर्वे लोका एनं नमस्कुर्वन्ति॥ १३॥ ❀ ❀ सामान्यतस्तं लोकं वर्णयति चिदानन्दसद्भेदैः। तत्र प्रथमं तत्रत्याश्चेतना आन्दरूपा इति स्वरूपोत्कर्षमाह—वसन्ति यत्र पुरुषा इति। यत्र वैकुण्ठे। पुरुषा इति स्त्रीणां न सारूप्यमुक्तिः। वैष्णवपतिव्रतानां तु तैः सह गमनम्, तत्र च भगवद्गुणगानमिति तदग्रे वक्ष्यति। सर्वं इति न तत्र वर्णादीनां प्रयोजकत्वम्। वैकुण्ठस्येव मूर्तिर्येषाम्। आनन्दाकार एव तेषां देहः, आनन्द एव वा! तथापि स्वानन्दस्य [1]तथात्वान्न भगवत्तुल्यत्वम्। तत्र तथात्वे हेतुमाह—येऽनिमित्तनिमित्तेति। ये भागवताः, अनिमित्तेन निष्कामेन धर्मेण, हरिमाराधयन् आराधितवन्तः। न निमित्तं लोकप्रसिद्धं कामनारूपं निमित्तं यत्र। निष्कामस्वधर्मेण श्रवणादिना धर्मरूपेण ये भगवदाराधनं कृतवन्तः॥ १४॥ ❀ ❀ एवं जीवोत्कर्षमुक्त्वा भगवदुत्कर्षमाह यत्रेति। यत्राऽऽनन्दमयो भगवान् सदंशस्य मुख्यभावरूपं सत्त्वं विष्टभ्य तिष्ठति। वैकुण्ठलोकोऽयं सर्वलोकविलक्षणः, अतश्चित आनन्दः शरीरम्, आनन्दस्य सत् शरीरम्, सतश्च मोक्षरूपतेति। अ(ए)त एव सत्त्वादयो गुणाः सच्चिदानन्दानामिति पूर्वमुक्तम्। सर्गस्त्वावृत्तिरूप इति सच्चिदानन्दानामावृत्तिरुच्यते।

---

१. ततस्तत्र. ग.। २. अतथात्वात् ग.।

अत एवाऽऽश्रये आनन्दे प्रतिष्ठां वक्ष्यति । चकाराद् व्यापिवैकुण्ठे । आद्यः पुमान् पुरुषोत्तमो भगवानिति स धर्मः । शब्दगोचर इति लौकिकसंबन्धाभावः । सत्त्वस्य विशेषेण स्तम्भनं कालप्रवाहेण रजोगुणादिभिः सह मिलनाभावार्थम् । पूर्वं त्वमिलितमित्याह—विरजमिति । ननु सत्त्वस्तम्भने कः पुरुषार्थ इत्याशङ्क्याऽऽह—स्वानां नो वृष इति । ब्रह्मादीनां भक्तानां स्वामी । स्वभक्ताः कालाच्छिन्नतया सर्वेष्टैः संयोज्या इति यतो वृषः स्वामी, स्वामिनो मृडनमावश्यकम् । स्वाम्यविशेषो वा साधारणस्वाम्यपेक्षया भक्तेषु मृडयन्नयं स्वामी, अतः सत्त्वविष्टम्भनमित्यर्थः ॥ १५ ॥ ❀ ❀ एवमानन्दस्य सत्त्वमुक्त्वा सतामुभयविधपरमपुरुषार्थत्वमाह—यत्र नैःश्रेयसं नामेति । यत्र वैकुण्ठे उपवनमस्ति । तस्य नाम नैःश्रेयसमिति । नैःश्रेयसशब्दो योग[1]रूढः । तत्र प्रथमं योगं समर्थयति—कामदुघैरिति द्रुमैर्विभ्राजत् । सर्व एव द्रुमाः कल्पवृक्षाः, त एव तत्रत्याः परमपुरुषार्थरूपाः, तत्रत्यानामपि कामितार्थदातृत्वात् । 'द्रु गतौ' इति, तद्रहिता द्रुमाः प्रतिष्ठिताः । स्वतोऽपि तेषामुत्तमत्वमाह—सर्वर्तुश्रीभिरिति । सर्वेष्वेवर्तुषु नियता पुष्पादिसम्पत्तिरूपा श्रीर्येषाम् । एवं योगार्थमुक्त्वा रूढ्यर्थमाह—मूर्तिमत् कैवल्यमिति । केवलस्य भावः कैवल्यम् , चिद्रूपाणां स्वरूपेण स्थितिः, पुनः, सङ्घातसंबन्धाभावः । अनेन जीवपुरुषार्थतोक्ता । तत्र गतः 'चिति तन्मात्रेण' इतिवत् कैवल्यमापद्यते । तदप्येकं रूपं भगवतः, यदौडुलोमिमतसिद्धम् । यदात्मत्वेन चाऽऽत्मवादिनो वदन्ति, भगवांश्च 'अहमात्मा गुडाकेश !' इति प्रथमं विभूतित्वेनोक्तवान् । सा कैवल्यमूर्तिः । तदेव नितरां श्रेयोरूपम् , 'आत्मलाभान्न परं विद्यते' इति श्रुतेः । तस्मादत्र वने प्रविष्ट आनन्दमयो भवति, ब्रह्मानन्दं च प्राप्नोतीति सतः परमपुरुषार्थत्वम् ॥ १६ ॥

## श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

त एकदेत्यत्र । तस्य नित्यत्वं जन्यत्वं चोपपादयन्ति—कृत्रिमेत्यादि । लोकायेति । अक्षरसायुज्याय । एतद्वाक्यत्रयतात्पर्यमग्रिमाध्याये निरूपणीयम् । ननु तस्य व्यापित्वात्तन्मुख्यमेव वक्तव्यमित्यत आहुः—वैकुण्ठः कल्पित इत्यादि । आवेशस्य तत्तत्कार्यकालनियतत्वे कादाचित्कत्वादत्र च तादृशकार्यस्याऽप्रतीयमानत्वात् पक्षान्तरमाहुः—लोकावतारो वेति । ननु किमर्थमयं प्रयासः ? षष्ठीतत्पुरुषेणाऽवतारविशेषलोकत्वमेव व्याख्येयमित्यत आहुः वैकुण्ठस्य त्वित्यादि ॥ १३ ॥ ❀ ❀ वसन्तीत्यत्र । स्त्रीणां नेति । एतेन पक्षिवृक्षादयोऽपि व्याख्याता इति न कोऽपि चोद्यावसरः । तासां स्त्रीत्वे प्रयोजकमाहुः—वैष्णवेत्यादि । तथा चाऽन्तसमये भगवद्ध्यानाभावः सारूप्याभावप्रयोजक इत्यर्थः । न भ(ग)वत्तुल्यत्वमि(ति)न साष्टि (ष्टिः) । तत्र हेतुं व्याकुर्वन्ति—ये भागवता इत्यादि । तथा च तत्कृतश्रवणादीनां भक्तिरूपत्वाभावो हेतुरित्यर्थः ॥ १४ ॥ ❀ ❀ यत्र चेत्यत्र । मुख्यभावरूपमिति । प्रथमधर्मरूपम् । एतदेव सत्त्वं रामानुजैर्द्रव्यत्वेनाऽङ्गीक्रियते, प्राकृतसत्त्वाद्विलक्षणं च । तेन सिद्धमाहुः—वैकुण्ठेत्यादि । तद्व्युत्पादयन्ति—अत इत्यादि । यतोऽन्यत्र 'यस्य पृथिवी शरीरम्' 'यस्याऽऽत्मा शरीरम्' इत्यादिश्रुतेर्भगवान् सद्विशेषशरीरश्चिच्छरीरश्चाऽन्तर्यामी । अत्र तु आद्यः पुमान् मूलपुरुषः स्वयं भगवान् आनन्दशरीर आस्ते । सोऽपि सत्त्वं विष्टभ्य सच्छरीरः । तदपि सत्त्वं विरजम् , रजःसम्बन्धाभावान्मोक्षरूपम् । तत्रत्याः पुरुषाश्चिदंशा वैकुण्ठमूर्त्तित्वादानन्दशरीरास्तदेतदन्येभ्यो वैलक्षण्यमित्यर्थः । नन्वत्र विरजं सत्त्वं सिद्धवन्निर्दिष्टम् , तावता केवलं तदस्तु । तथापि तस्य विवृतरूपत्वं कथमित्याकाङ्क्षायामाहुः—एत इत्यादि । पूर्वमिति । द्वितीयस्कन्धे 'सत्त्वं रजस्तम इति निर्गुणस्य गुणास्त्रयः' इत्यत्र । अत्र वैलक्षण्यबोधनप्रयोजनमाहुः—सर्गस्त्वित्यादि । एतेषामावृत्तौ ज्ञापकमाहुः—अत एवेत्यादि । आश्रय इति । द्वादशस्कन्धे । वक्ष्यतीति । 'आनन्दं प्रयन्ति' इति श्रुत्यनुसारेणाऽऽत्यन्तिकप्रलयविचारे सोत्पत्तिकं कथयिष्यति । तदेतद् द्वादशस्कन्धनिबन्धे स्फुटम् , योजनायां भगवत्कृपया दर्शितम् । एषैव रीतिर्व्यापिवैकुण्ठ इत्याहुः—चकारादित्यादि । एतेन 'ता वां वास्तूनि' इत्यादिषु श्राविते व्रज इतोऽपि विलक्षणरीत्या स्थितिर्बोधिता । सा वेणुगीतादिसुबोधिनीतो बोध्या ॥ १५ ॥ ❀ ❀ यत्र नैःश्रेयसमित्यत्र । द्रु गतावित्यादि । द्रवणं द्रुः, तस्य मा निषेधो यत्र ते द्रुमाः, समासान्तष्टच् । जीवपुरुषार्थरूपतां व्युत्पादयन्ति—तत्र गत इत्यादि । यदात्मत्वेनेति । यदिति पदच्छेदः स्फुटमन्यत् ॥ १६ ॥

## श्रीगिरिधरकृता बालप्रबोधिनी

त एकदा सर्वलोकनमस्कृतं उत्कृष्टत्वेन सर्वसम्मतं वैकुण्ठस्य विष्णोर्वैकुण्ठाख्यं निलयं स्थानं ययुरित्यन्वयः । तस्य सर्वलोकोत्कृष्टत्वहेतुत्वेन भगवत उत्कर्षमाह—अमलात्मन इति, कामक्रोधादिदोषरहितस्य । तत्र हेतुमाह—भगवत इति, ऐश्वर्यादिगुणपूर्णस्य ॥ १३ ॥ ❀ ❀ तं लोकं वर्णयति—वसन्तीत्यादिद्वादशभिः । वैकुण्ठस्य भगवत इव मूर्तिर्येषां तथाभूता एव सर्वे पुरुषा यत्र वसन्तीत्यन्वयः । तथा स्वरूपस्थानप्राप्तिः कथमित्यपेक्षायां हेतुमाह—ये इति । निमित्तं फलम् , न निमित्तं प्रवर्त्तकं यस्मिंस्तेन निष्कामेण धर्मेण ये हरिमाराधयंस्ते वसन्तीत्यन्वयः ॥ १४ ॥ ❀ ❀ यत्र च श्रीवैकुण्ठे शब्द-

---

१. योगरूढिभेदेन द्विविधः. क

गोचरः शास्त्रैकप्रमाणकः भगवान् षाड्गुण्यपूर्णः आद्यः परमकारणभूतः वृषो भक्तमनोरथपूरकः परमपुरुषः विरजं रजोगुणेनाननुविद्धं सत्त्वं विष्टभ्य शुद्धसत्त्वमयीं मूर्तिं धृत्वा स्वानां नः स्वकीयान्भक्तान् अस्मान् मृडयन्सुखयन्नास्ते इत्यन्वयः ॥ १५ ॥ ❀ ❀ यत्र च सर्वर्तुश्रीभिः सर्वेषु ऋतुषु श्रीः पुष्पफलादिसम्पद्येषां तैः कामदुघैः अभीष्टानि वर्षद्भिर्द्रुमैर्मूर्तिमन्तं कैवल्यं मोक्षमिव विशेषेण भ्राजमानं नैःश्रेयसं नाम वनमस्तीत्यन्वयः ॥ १६ ॥

### हिन्दी अनुवाद

एक बार वे भगवान् विष्णुके शुद्ध-सत्त्वमय सब लोकोंके शिरोभागमें स्थित,वैकुण्ठधाममें जा पहुँचे ॥ १३ ॥ ❀ ❀ वहाँ सभी लोग विष्णुरूप होकर रहते हैं और वह प्राप्त भी उन्हींको होता है, जो अन्य सब प्रकारकी कामनाएँ छोड़कर केवल भगवच्चरण-शरणकी प्राप्तिके लिये ही अपने धर्मद्वारा उनकी आराधना करते हैं ॥ १४ ॥ ❀ ❀ वहाँ वेदान्तप्रतिपाद्य धर्ममूर्ति श्रीआदिनारायण हम अपने भक्तोंको सुख देनेके लिये शुद्धसत्त्वमय स्वरूप धारणकर हर समय विराजमान रहते हैं ॥ १५ ॥ उस लोकमें नैःश्रेयस नामका एक वन है, जो मूर्तिमान् कैवल्य-सा ही जान पड़ता है। वह सब प्रकारकी कामनाओंको पूर्ण करनेवाले वृक्षोंसे सुशोभित है, स्वयं हर समय छहों ऋतुओंकी शोभासे सम्पन्न रहते हैं ॥ १६ ॥ ❀ ❀

**वैमानिकाः सललनाश्चरितानि यत्र गायन्ति लोकशमलक्षपणानि भर्तुः ।**
**अन्तर्जलेऽनु[1]विकसन्मधुमाधवीनां गन्धेन खण्डितधियोऽप्यनिलं क्षिप[2]न्तः ॥ १७ ॥**
**पारावतान्यभृतसारसचक्रवाकदात्यूहहंसशुकतित्तिरिबर्हिणां यः ।**
**कोलाहलो विरमतेऽचिरमात्रमुच्चैर्भृङ्गाधिपे हरिकथामिव गायमाने ॥ १८ ॥**
**मन्दारकुन्दकुरवोत्पलचम्पकार्णपुन्नागनागबकुलाम्बुजपारिजाताः ।**
**गन्धे[3]ऽर्चिते तुलसिकाभरणेन तस्या यस्मिंस्तपः सुमनसो बहु मानयन्ति ॥ १९ ॥**
**यत्संकुलं हरिपदानतिमात्रदृष्टैर्वैदूर्यमारकतहेममयैर्विमानैः ।**
**येषां बृहत्कटितटाः स्मितशोभिमुख्यः कृष्णात्मनां न रज आदधुरुत्स्मयाद्यैः ॥ २० ॥**

### श्रीधरस्वामिविरचिता भावार्थदीपिका

चरितानि चरित्राणि भर्तुः प्रभोः अनुविकसंत्यो मधु मकरंदस्तद्युक्ता माधव्यो वासंत्यो लताः। यद्वा अनुविकसन्मधवः प्रसरन्मकरंदा माधव्यो मधुकालीनाः सुमनसस्तासां गंधेन खंडिता विघ्निता धीर्येषां तेऽपि तद्गन्धप्रापकमनिलं क्षिपंतस्तिरस्कुर्वंतो गायंति। अनेन भगवत्पार्षदानां निरतिशयविषयसुखेऽपि भगवद्भजनानंदासक्तिर्दर्शिता ॥ १७ ॥ ❀ ❀ अन्यभृताः कोकिलाः दात्यूहश्चातकः अचिरमात्रं क्षणमात्रं विरमति। अनेन तत्रत्यपक्षिणामपि हरिकथाश्रवणादिपरमानंदो दर्शितः ॥१८॥ ❀ ❀ मंदारपारिजातौ सुरतरुविशेषौ कुरवस्तिलकवृक्षः उत्पलं रात्रिविकासि अम्बुजं दिननागो नागकेसरः एताः सुमनसः पुष्पजातयः सुगंधा अपि तुलसिकाभरणेन श्रीहरिणा तुलस्या गंधेर्चिते सति यस्मिन्वने तस्यास्तपो बहु विकासि यानयंति। अनेन तत्रत्या गुणग्राहिण एव न मत्सरिण इत्युक्तम्। एवंभूतं यत्र तद्वैकुंठं ययुरिति पूर्वेणान्वयः ॥१९॥ ❀ ❀ पुनर्वैकुंठमेव विशिनष्टि। यत्संकुलं व्याप्तं भवति कैः हरिपदयोरानतिः प्रणामस्तावन्मात्रेण दृष्टैर्भक्तानां विमानैर्न कर्मादिप्राप्यैर्वैदूर्यमारकतैर्हेममयैश्च विमानैः बृहंति कटितटानि यासाम्। स्मितशोभीनि मुखानि यासां ता अपि कृष्णे आत्मा येषां रजःकाममुत्स्मयाद्यैः परिहासादिभिर्न आदधुर्न जनयामासुः ॥ २० ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

वसन्तेऽनंतपुष्पसमृद्धेस्सत्त्वान्न केवलं वासंत्य एव लतास्तदा संतीति चेदाह—यद्वेति। लोकशमलेति। ब्रह्मांडवर्तिजीवमालिन्यक्षपणानि स्वेषां तु तद्वियोगदुःखक्षपणानि। वैमानिकाः खरविशेषाद्भावनार्थं विमानादवतीर्य सरोवरस्यांतर्जले कंठदघ्नजले। यद्वा। तदवर्त्तिनीनामेव जलसंलग्नवृक्षशाखामारुह्य ताः स्वपत्रादिभिराच्छादयंतीनामंतर्जल एव विकसंतीनां मधुयुक्तमाधवीनां गंधेन खंडिता भगवच्चरितास्वादनैकतानत्वे सविघ्नी कृता धीर्येषां तथाभूता अपि गायंत्येव न तु गानाद्विरमंतीत्यर्थः। किन्त्वनिलं क्षिपन्तः अरे माधवीपुष्पामोदतुंदिलसुमंदशीतानिलभक्तलीलामाधुर्येषु निमज्जिता अस्माकं धियो वृत्तीः कथमाक्रष्टुं

१. प्रा० पा०—जले तु विक०। २. प्रा० पा०—क्षिपन्ति। ३. प्रा० पा०—गन्धेऽन्विते।

यतसे किं त्वं तेभ्योप्यात्मानं मधुरं मन्यसे धिक् त्वां मूढेति निन्दन्तस्तेन कैवल्यमिव मूर्तिमदिति पूर्वोक्तेस्तद्वनस्थपुष्पादीनां ब्रह्मानंदरूपत्वेप्याक्षेपाद्ब्रह्मानंदादपि भजनानंदोऽप्यधिक इति द्योतितम् ॥ १७ ॥ ❀ ❀ वैमानिका इव तत्रत्याः पक्षिणोऽपि परमभक्ता निर्मत्सराश्चेत्याह—पारावताः कपोताः । हंहो संप्रति हरिकथा प्रवर्तते वयमपि तूष्णीमेव शृणुम इत्येवं कोलाहलो विरमति कदा भृंगाधिपे वनमालाधिकारिणि हरिकथामिव हरिकथातुल्यमेव किमपि घुणाक्षरन्यायेन गायति सति 'हरिहरि' इत्याकारकस्वपक्षशब्दं कुर्वतीत्यर्थः, न जाने तस्मिन्साक्षाद्धरिकथां गायमाने पक्षिणां कीदृगादरो भवेदिति भावः । संदर्भस्तु भृंगाधिपो वनमालाधिकारी मुख्यो भृंगस्तु स्वातिशयेन भगवत्प्रियत्वाच्छ्रीगरुडवत्स्वभावत एव तत्तदक्षरमयपक्षशब्दात्मकं गानमेव तेषु हरिकथेति ज्ञेयम् । इवेति तत्पार्षदादिकर्तृकहरिकथासादृश्यं ज्ञापयति वीणादिवत् ॥ १८ ॥ ❀ ❀ अर्णः करवीरं पुन्नागस्सुरकर्णिकारः । अर्चिते आदृते अहो धन्या त्वं तुलसि यद्गन्धेन भगवान्प्रीयते इति तस्या एव तपो बहु मानयंति न तु स्वेषां तेन यदास्यास्तपो वयं जानीमस्तदेव वयमितो भारतभूमिं गत्वा चराम इति तेषां मनोनुतापो ध्वन्यते । ततश्च वैकुंठवासिनोऽपि भारतभूमौ जन्म वांछंतीति वैकुंठादपि भारतभूमेरुत्कर्षोऽनुध्वन्यते । इत्थं बहुमानयंति न त्वसूयंतीत्यर्थः । यतः सुमनसः शोभनचित्ताः पक्षे पुष्पतरवः । तेन वैमानिका इति पारावतेति मंदारेत्यादिभिर्जरायुजांडजोद्भिदस्त्रय एव तत्र हरिं भजंतो वर्त्तंते न तु चतुर्थः स्वेदजोऽवर्णनादिति ज्ञेयम् । किञ्च वैकुंठे शोभार्थं पक्षिणो वृक्षादयश्च भगवदिच्छाकल्पिता एव न कर्मवशतः "वैकुंठः कल्पितो येन लोकनमस्कृतः । रमया प्रार्थ्यमानेन" इत्यष्टमस्कंधे वक्ष्यमाणत्वात् ॥ १९ ॥ ❀ ❀ अभितो वर्त्तिनीमुद्यानशोभां वर्णयित्वा मध्यवर्त्तिनीं वैकुण्ठशोभां वर्णयति तदिति । किञ्च । यत्र भजनानंदयुक्तेषु ब्रह्मानंदोऽपि न प्रभवति किं पुनर्विषयानंद इत्याह—येषामिति । ता अप्यतिसुंदर्योपि आत्मा चेतः उत्स्मयाद्यैरुत्कृष्टस्मितावलोकैरादिना गत्यालापादिव्यापारैः तैश्च संकुलमिति ॥ २० ॥

## श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

पूर्वार्थे माधवीलतामात्रस्य वैशिष्ट्यं विवक्षितन्तु तत्पुष्पजातिमात्रस्य वनशोभोपयोगित्वात् किञ्च युक्तपदाध्याहारगौवञ्चेत्यस्वरसाद्वेति यद्यपि तत्रत्यवनस्य कैवल्यमिव मूर्तिमदित्युक्तत्वेनाप्राकृतत्वाद्ब्रह्मानन्दादपि वैशिष्ट्यं तस्यारविन्दनयनस्य पदारविन्दस्येत्यादिवक्ष्यमाणत्वात् तथापि प्रेमानन्दं दारुको नाभ्यनन्ददितिवत् खण्डितधीशब्देन प्रेममूर्च्छैव व्याख्येया अनिलतिरस्कारेऽयं प्रकारः ते हि श्रीभगवच्चरित्रगानानन्दनिमग्ना अतस्तेषां तत उपरतिर्न रोचते इत्यरे माधवीपुष्पामोदतुन्दिलसुमन्द ! किमर्थं तद्गुणगाने विघ्नमाचरसि किं भगवद्गुणेभ्योऽपि त्वमधिकमात्मानं मनुषे धिक् त्वामिति निन्दनमेव अनेन श्लोकेन ॥ १७ ॥ ❀ ❀ भृङ्गाधिपश्चायं श्रीगरुडवत्स्वाभाविकतच्छब्दात्मकपक्षध्वनिमान् इति घुणाक्षरन्यायेन वीणावत्तत्पक्षध्वनिरेव गानत्वेनोत्प्रेक्ष्यते तद्ध्वनिश्च हरिहरीत्याकारको ज्ञेयः । भृङ्गाधिपत्वञ्च वनमालाधिकारित्वात् अनेन श्लोकेन ॥ १८ ॥ ❀ ❀ अनेन श्लोकेन तत्रत्या वैकुण्ठवनस्था गुणग्राहिण इति तदीयस्थावराणामपि ज्ञानशालित्वेन सच्चिदानन्दत्वं व्यज्यते ॥ १९ ॥ ❀ ❀ अत्र नतिरित्युपलक्षणं भक्तिमात्रेणेत्यर्थः । मात्रपदं व्याचष्टे न कर्मादिप्राप्यैरिति । आदिना शुष्कज्ञानवैराग्यतपआदिपरिग्रहः । कृष्णात्मनामिति वैकुण्ठनाथेऽपि तच्छब्दप्रयोगात्तस्य स्वयं भगवत्त्वमभिव्यञ्जितम् । एवं परत्रापि व्याख्येयम् । कामं न आदधुः किन्तु तासामपि परमभक्तत्वाद्भक्त्युद्दीपनमेव जनयामासुरित्यर्थः ॥ २० ॥

## श्रीमद्वीरराघवव्याख्या ।

पुनस्तमेव वर्णयति त्रिभिः । वैमानिकाः विमानारूढाः सललनाः सस्त्रीकाः यत्र नैःश्रेयसे वने लोकभर्तुर्भगवतो लोकानां यानि शमलानि पापानि क्षपयन्ति निरस्यन्तीति तथा चरितानि चरित्राणि गायन्ति कथम्भूताः सन्तो गायन्ति अन्तर्जलेऽनुविकसदनुस्यन्दमानं मधुमकरन्दो यासां माधवीनां वासन्तिकमाधवीपुष्पाणां गन्धेन सुगन्धेन पीडिता अन्तरिता धीर्येषां तथाभूता अपि अनिलं तत्प्रापकं वायुं क्षिपन्तः चरितानि गायन्तीत्यर्थः । अनेन भोग्यभोगोपकरणभोगस्थानसान्निध्येऽपि तदनादरेण तल्लोकस्थानां भगवद्गुणानुभव एव निरतिशयाभिलाषः सूचितः ॥ १७ ॥ ❀ ❀ किमुत तद्वनस्थानां पुरुषाणां गुणानुभवासक्तिरिति यतस्तिरश्चां तत्रस्थानां भगवत्परतामाह । पारावतादयः शकुनिविशेषाः अन्यभृताः कोकिला दात्यूहाश्चातकाः बर्हिणो मयूराः पारावतादीनां यः कोलाहलः कलकलो भृङ्गाधिपे भृङ्गश्रेष्ठे हरिकथामिव उच्चैर्गायमाने गानं कुर्वति सत्यचिरमात्रं क्षणमात्रं विरमते समाप्तो भवति । वनस्थाः पारावतादयः कोलाहलं कुर्वन्तो भृङ्गध्वनिमाश्रुत्य किमयं भृंगराजो हरिकथां गायतीति वयं श्रवणं कुर्मह इत्यभिप्रायेण स्वकोलाहलं त्यक्त्वा क्षणमात्रं भृङ्गध्वनिमेवोपशृण्वन्तीत्यर्थः ॥ १८ ॥ ❀ ❀ वनस्थानां स्थावराणामपि भगवत्परतामाह । मन्दारपारिजातौ सुरतरुविशेषौ कुन्दोऽतिमुक्तलताः कुरवकस्तिलकवृक्षविशेषः उत्पलं रात्रिविकासि अम्बुजं दिवाविकासि नागो नागकेसरः अर्णः पुष्पवृक्षविशेषः मन्दारादयः सुमनसः सुगन्धा अपि तुलसिकाभरणेन भगवता तस्याः तुलस्या गन्धेऽर्चिते सम्मानिते सति यस्मिन् वने तस्या तुलस्याः तपः बहुमानयन्ति तद्वनस्थाः पारिजातादयो मादृशेषु सत्स्वपि तुलस्यालंकृतो भगवान्

तुलसीमेव बहुमनुते। अहो तुलस्या आभरणेन भगवदाभरणं दृष्ट्वा तस्याः तुलस्यास्तपो महत्पुराकृतमिति बहुमानयन्तीत्यर्थः ॥ १९ ॥ ❀ ❀ एवं निःश्रेयसवनमुपवर्ण्य पुनस्तमेव लोकं वर्णयति। यदिति। यद्वैकुण्ठनिलयं भक्तानां विमानैः संकुलं व्याप्तं कथम्भूतैर्विमानैर्हरेर्भगवतः पादयोर्या आनतिः प्रह्वीभावः अनेन तत्पूर्वका भक्तिर्लक्ष्यते आनतिमात्रदृष्टैर्न कर्मयोगादिभिः प्रीतैरित्यर्थः। वैडूर्यादीनां विकारैर्येषां यद्विमानारूढानां कृष्णात्मनां बृहन्ति कटितटानि यासां स्मितेन शोभीनि मुखानि यासां ता अपि स्त्रियः उत्स्मयाद्यैः परिहसन्त्यः अपि स्त्रियः उत्स्मयाद्यैः परिहासादिभिः रजः रजोगुणसमुद्भवं कामं नादधुर्न जनयामासुः कृष्णात्मनामिति हेतुगर्भविशेषणं कृष्णे भगवत्येव निहितचित्तत्वान्न काममादधुरित्यर्थः ॥ २० ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली।

सललना ललनाभिः स्त्रीभिः सहिता वैमानिका विमानेन चरन्तः पुरुपा लोकस्य जनस्य शमलक्षपणानि पापनाशनानि भर्तुर्हरेश्चरितानि यत्र गायन्ति। नन्वत्र गानं वदनव्यादानेन न घटते पुष्पसौरभ्यसमावेशादिनेन्द्रियक्षोभसम्भवादित्याशङ्क्य परिहरति। अन्तर्जल इति। अत्रान्तःशब्दः समीपवचनः जलसमीपे तटे विलसन्तीनां मधौ वसन्ते विद्यमानानां माधवीनां वासन्तीलतापुष्पाणां गन्धेन खण्डितधियो विक्षुब्धबुद्धयोऽप्यनिलं गन्धप्रापकं वातुं क्षिपन्तः परिहरन्तः तुशब्देन भेदवाचिना मुक्ता अमुक्ताश्चेत्युभये सन्ति। तत्र मुक्तानां कचिदपि पुष्पगन्धवायुनेन्द्रियक्षोभलक्षणो भ्रमो नास्ति अमुक्तानां कचित्स्यादिति तात्पर्यं निरूप्यते।

मुक्ताश्चैवाधिकारस्था द्विधा वैकुण्ठलोकगाः। अमुक्तानां भ्रमः कापि न मुक्तानां कचिद्भवेत्॥

इति वचनात्॥ १७॥ ❀ ❀ तत्रत्यानां भक्तानां हरेश्चरणारविन्दार्चनावसरः कदा न्विति तत्राह। पारावतेत्यादिना। भृङ्गाधिपे हरिकथामनुगायमाने सप्तस्वरसमाहारेण गातुमुपक्रान्ते सति तद्गानमनुकूजद्भिः पारावतादिपक्षिगणैस्त्रिरमात्रया त्रिमात्रादिस्वरेण कोलाहले कलकललक्षणे कूजने विरचिते सत्ययं समय इति मत्वा यस्मिन् वैकुण्ठे तुलसीदले मन्दारादिपुष्पराशौ च भक्तैरङ्घ्रिमूलेऽर्चिते सति पुलसिकाभरणेन तुलसीमालाधारिणा हरिणान्यपुष्पदलमपहाय हस्तेन तुलसीदलमुद्धृत्य तद्गन्धे घ्राणेनार्चिते सम्भाविते सति मन्दराद्याः सुमनसो मन्दारादिशब्दवाच्यास्तद्देवतास्तस्यास्तुलस्यास्तपो बहु मानयन्ति गन्धार्थं कृतमिति शेषः।

तिरश्चीना स्थावराश्च सर्वे ज्ञानाद्विकुण्ठगाः। अमुक्ता मुक्तिमायान्ति नियमात्कर्मणः क्षयः॥

इति वचनात् ज्ञानान्मुक्तत्वात्तत्समयज्ञानं गानं प्रशंसनं च भृङ्गाधिपानां तिर्यञ्चां मन्दारादीनां स्थावराणां च युज्यते। यद्वा तुलसिकाभरणेन तुलसिकाभरणे कृते सति गन्धार्थं तपो बहु मानयन्ति गन्ध इति तादर्थ्ये सप्तमी, अर्णं करवीरपुष्पं नागो नागकेसरः पुन्नागः सुरकर्णिकारः॥ १८॥ १९॥ ❀ ❀ बृहन्तः कटितटाः श्रोणीभागा यासां तास्तथोक्ताः स्मितशोभिमुख्यः स्मितेन शोभमानवक्त्राः स्त्रियः उत्स्मयाद्यैर्मन्दहासशृङ्गारादिरसविशेषैः कृष्णे हरावात्मा मनो येषां ते तथा तेषां रजो रागं न आदधुर्नाकुर्वंस्तेषां विमानैर्यद्वैकुण्ठाख्यं स्थानं संकुलं व्याप्तं मञ्चस्थपुरुषन्यायेन विमानानि विशिनष्टि। हरीति। हरिपदयोरानतिमात्रेण तृप्तैः कृतार्था वयमिति भाववद्भिः। यद्वा हरिपदे व्योम्नि आनतिमात्रतृप्तैः सञ्चरणमात्रप्रयोजनैः वैडूर्यं पद्मरागं मरकतमिन्द्रनीलं हेम सुवर्णमेतैर्विराजितैः॥ २०॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

तादृशत्वेनैव वर्णयति। वैमानिका इत्यादिभिः। अन्तर्मध्ये जल इति तत्तदुपवनशोभाशैत्यादिकं ध्वनितम्। गन्धेन श्रीभगवद्विभूतिरूपत्वात्तत्सौरभ्यानुकारितया तत्स्मरणविशेषकर्त्रा तेन खण्डितधियः परमानन्दं मोहं प्राप्ता अपि भगवद्गुणगणाग्रहेण तद्गन्धवाहं क्षिपन्तः॥ १७॥ ❀ ❀ दात्यूहो जलचरो वर्षासु कक्वेतिप्रायभाषी भृङ्गाधिपो वनमालाधिकारी कोऽपि मुख्यो भृङ्गः तस्यातिशयेन भगवत्प्रियत्वात् श्रीगरुडवत् स्वभावत एव तत्तदक्षरमयशब्दात्मकं गानमेव तेषु हरिकथितं ज्ञेयम्। इवेति तत्पार्षदादिकर्तृकहरिकथासादृश्यं ज्ञापयति वीणादिवत्॥ १८॥ ❀ ❀ यत्र स्थावरा अपि ज्ञानशालिनः परकीयभगवत्प्रीणनगुणश्लाघिनश्चेत्याह। मन्दारेति। अर्णमपि पुष्पविशेषः सुमनसस्तत्तदधिष्ठात्र्यो देवता ज्ञेयाः॥ १९॥ ❀ ❀ तद्वैकुण्ठं मरकतमेव मारकतं रजो नादधुः किन्तु तासामपि परमभक्तत्वाद्भक्त्युद्दीपनमेव जातमित्यर्थः॥ २०॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी।

शमलेति। ब्रह्माण्डवर्तिजीवानां सर्वमालिन्यक्षपणानि स्वेषान्तु तद्विरहदुःखोपशमकानि। वैमानिकाः स्वरविशेषोद्भावनार्थं विमानादवतीर्य्य सरोवरस्यान्तर्जले कण्ठदघ्नजले इत्यर्थः। यद्वा तटवर्तिनीनामेव जलसंलग्नवृक्षशाखामारुह्य ताः स्वपत्रादिभिराच्छदयन्तीनामन्तर्जल एव विकसन्तीनां मधुयुक्तमाधवीनां गन्धेन खण्डिताः भगवच्चरितास्वादनैकतानत्वे सविघ्नीकृता धीर्य्येषाम्। तथाभूता अपि गायन्त्येव नतु गानाद्विरमन्तीत्यर्थः। किन्त्वनिलं क्षिपन्तः अरे माधवीपुष्पामोदतुन्दिलसुमन्दशीता-

निल ! भगवल्लीलामृतमाधुर्य्येषु निमज्जिता अस्माकं धियो वृत्तीः कथमाक्रष्टुं यतसे किं त्वं तेभ्योऽप्यात्मानं मधुरं मन्यसे धिक् त्वां मूढेति निन्दन्तः। तेन कैवल्यमिव मूर्तिमदिति पूर्व्वोक्तेस्तद्वनस्य पुष्पामोदादीनां ब्रह्मानन्दरूपत्वेऽप्याक्षेपात् ब्रह्मानन्दादपि भजनानन्दोऽत्यधिक एति द्योतितम् ॥ १७ ॥ ❀ ❀ वैमानिका इव तत्रत्याः पक्षिणोऽपि परमभक्ता निर्म्मत्सराश्चेत्याह। पारावताः कपोताः अन्यभृताः कोकिला दात्यूहो डाहुक इति ख्यातः। अचिरमात्रं शीघ्रमेव हंहे सम्प्रति हरिकथा प्रवर्त्तते तद्वयं सर्व्वे तावत्तूष्णीमेव शृणुम इत्येवं कोलाहलो विरमति। कदा भृङ्गाधिपे भगवद्वनमालाधिकारिणि हरिकथामिव हरिकथातुल्यमेव किमपि घुणाक्षरन्यायेन गायति सति हरिहरीत्याकारकस्वपक्षशब्दं कुर्व्वतीत्यर्थः। न जाने तस्मिन् साक्षाद्धरिकथां गायति सति पक्षिणां तेषां तस्मिन् कीदृश आदरो भवेदिति भावः ॥ १८ ॥ ❀ ❀ पक्षिण इव तत्रत्या वृक्षा अपि स्पर्द्धासूयादिरहिताः परमभक्ता एवेत्याह। मन्दारपारिजातौ सुरतरुविशेषौ कुरवस्तिलकवृक्षः। अर्णं पुष्पविशेषः नागो नागकेसरः एते वृक्षाः परमसुगन्धकुसुमा अपि तुलसिकाभरणेन श्रीहरिणा वनविहरणसमये तस्यास्तुलस्या गन्धे अर्चिते आदृते सति यस्मिन् वने अहो धन्यासि त्वं तुलसीति तस्या एव तपो बहुमानयन्ति नतु स्वेषामिति तेन यद्यस्यास्तपो जानीमः तर्हि तदेव तपो वयमितो भारतभूमिं गत्वा आचराम इति तेषां मनोऽनुलापो ध्वन्यते। ततश्च वैकुण्ठवासिनोऽपि भारतभूमौ जन्म वाञ्छन्तीति वैकुण्ठादपि भारतभूमेरुत्कर्षोऽनुध्वन्यते। बहुमानयन्त्येव नत्व सूयन्तीत्यर्थः। यतः सुमनसः शुद्धचित्ताः पक्षे पुष्पतरवस्तेन वैमानिका इति। पारावतेति। मन्दारेत्यादिभिर्जरायुजाण्डजोद्भिदस्त्रय एव तत्र हरिं भजन्तो वर्तन्ते नतु चतुर्थः स्वेदजोऽवर्णनादिति ज्ञेयम् ॥ १९ ॥ ❀ ❀ अभितो वर्तिनीमुद्यानशोभां वर्णयित्वा मध्यवर्तिनीं वैकुण्ठनगरशोभां वर्णयति तदिति। हरिपादयोरानतिः प्रणतिस्तावन्मात्रेणापि भजनेन दृष्टैः न तु सम्पूर्णाङ्गैरपि ज्ञानकर्म्मादिभिरित्यर्थः। किञ्च तत्र भजनानन्दनिर्वृतेषु लोकेषु पूर्व्वोक्तयुक्त्या ब्रह्मानन्दोऽपि न प्रभवति। किं पुनर्विषयानन्द इत्याह। बृहत्कटितटाः परमसुन्दर्य्योऽपि येषां कृष्णात्मनां कृष्णनिमग्नमनसाम् उत्स्मयाद्यैः उत्कृष्टस्मितावलोकगत्यालापादिव्यापारैः स्वाभाविकैरजः कामं न आदधुर्न जनयामासुस्तैश्च सङ्कुलम् ॥ २० ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः।

यत्र वने अन्तर्जले जलमध्ये अनुविकसन्त्यः मधुमाधव्यः मकरन्दयुक्ताः वासन्त्यो लतास्तासां गन्धेन खण्डिता विघ्निता धीर्येषां तेऽपि तद्गन्धप्रापकमनिलम्वायुं क्षिपन्तस्तिरस्कुर्वन्तः। शमलानि पापानि क्षिपन्ति निराकुर्वन्तीति तथा तानि भर्तुः स्वामिनः चरितानि गायन्ति। अनेन तत्र गन्धादिभोग्यपदार्थानामतिश्रैष्ठ्यं ततोऽपि भोक्तॄणां तन्निरपेक्षानन्दसम्प्रसन्नत्वं ततोऽपि गानाद्यानन्दाधिक्यं दर्शितम् ॥ १७ ॥ ❀ ❀ यत्र वने भृङ्गाधिपे हरिकथामिव गायमाने पारावतादीनां कोलाहलः अचिरमात्रं क्षणमात्रं विरमते तेऽपि हरिकथाश्रोतार इव क्षणमात्रं तूष्णींभूतास्तिष्ठन्तीत्यर्थः। तत्रान्यभृताः कोकिलाः दात्यूहाः चातकाः ॥ १८ ॥ ❀ ❀ यस्मिन्वने मन्दाराद्याः सुमनसः पुष्पजातयः तुलसिकाभरणेन भगवता तुलसिकायाः गन्धे अर्चिते सति तस्यास्तपः बहु अधिकं मानयन्ति ॥ १९ ॥ ❀ ❀ वनमुपवर्ण्य वैकुण्ठं पुनर्वर्णयति। तदित्यादिना। बृहन्ति कटितटानि यासां स्मितशोभितानि मुखानि यासां ताः अपि येषां रजः कामम् उत्स्मयाद्यैः परिहासादिभिः न आदधुः न जनयामासुः। तत्र हेतुगर्भितं विशेषणम्। कृष्णात्मनामिति तेषां विमानैस्तद्वैकुण्ठाख्यं स्थानं सङ्कुलं व्याप्तं कथम्भूतैः हरिपदानतिमात्रेण हरिपदानत्युपलक्षितहरिभक्तिमात्रेण दृष्टैः न कर्मादिप्राप्यैः ॥ २० ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

एवं लोकस्य सर्वलोकवैलक्षण्यार्थं सच्चिदानन्दवैशिष्ट्यं प्रतिपाद्य सर्वदोषाभावार्थं मोहाद्यभावमाह षड्भिः—वैमानिका इति। तत्र स्त्रीणां न मोहजनकत्वम्, तिर्यग्जीवानां न मदः, लतागुल्मादीनां पुष्पप्रधानानामपि न मात्सर्यम्, भगवद्भक्तस्त्रीणां न कामजनकत्वम्, लक्ष्म्या अपि नाऽभिमानलक्षणो मानात्मकः क्रोधः, लोभश्च तत्रैव प्रतिष्ठित इति न तस्याः स्वस्मिन् परमपुरुषार्थबुद्धिः, किन्तु भगवत्येवेति सर्वदोषाणामभाव उक्तो भवति। तत्र प्रथमं स्वाभाविकस्त्रीणां स्वभावदुष्टानामपि स्वदोषपरित्यागेन भगवद्गुणपरतोच्यते—वैमानिका इति। विमानैकसिद्धा वैमानिका गन्धर्वादयः। ते ह्यागन्तुकाः स्वभावगमनबलाभावात्, सौकर्याभावाच्च वैमानिका एव भवन्ति। तेषां तत्र गमने आदरेण गानमेव हेतुः। सललनाः सस्त्रीकाः। अनेनोभयोरन्योन्यमोहसम्भवो निरूपितः। यत्र वैकुण्ठे भर्तुश्चरितानि गायन्ति। ते गन्धर्वादयस्तदीया एव। भर्तुरित्यैहिकपारलौकिकनिर्वाहकत्वेन तद्गुणगानमावश्यकमिति सूचितम्। एवं गुणगानस्य स्वोपकारकत्वमुक्त्वा परोपकारकत्वमाह—लोकशमलक्षपणानीति। तस्य लोकस्य, सर्वेषामेव वा शमलं मार्गान्तरस्थितलोकसम्बन्धजातम्, नित्यं वा; तस्य क्षपणं तत्रैव विलयप्रापणं यैः। ते हि गन्धर्वा रूपं भगवन्तमुपासते, अतोऽप्सरसस्तेषु प्रतिष्ठिताः। गन्धर्वेषु योगव्युत्पत्त्या गन्धं वान्तीति पृषोदरादित्वाद्गन्धर्वा भवन्ति। अप्सरसस्तु गन्धमेव भगवन्तमुपासते। उभयथाऽपि सस्त्रीकाणां गन्धपरत्वम्। अतो गन्धेन खण्डितधियोऽपि गन्धवाहं वायुम्, सर्वदा परमाराध्यं क्षिपन्तः सन्तो गुणानेव गायन्ति। गन्धस्य ब्रह्मत्वाय दोषाभावमाह—अन्तर्जल

इति। जलमध्ये सुष्ठु विकसद्विकासेन प्रसरद्रूपं मधु मकरन्दो यासाम् । माधवी काचिल्लता, यत्र वसन्तर्तुराधिदैविकः प्रतिष्ठितः। सरसं च तस्येति विकसन्मधुत्वम् । अतस्तादृशीनां गन्धो वरप्राप्तः पृथिवीसंबन्धाभावादप्राकृतः। अतस्तेषां सहजोपास्योऽपि भगवद्गुणगानार्थं तैः परित्यक्त इत्याधिदैविकोऽपि मोहो नास्तीत्युक्तम् ॥ १७ ॥ ❀ ❀ एवं गन्धर्वाप्सरसामुक्त्वा पक्षिणां दोषाभावमाह—पारावतेति। एते पारावतादयो नव गुणभिन्नाः। तेषामपि स्वतः सिद्धा वाक्। तेषां वागेव ब्रह्म। चित्रस्वनत्वमेव तेषां माहात्म्यम्, अत एव प्रातरनुवाके तेषां वाक्यात् पूर्वमेवाऽऽरम्भः, अन्यथा देवानां तद्वाङ्माधुर्यपरत्वं स्यात्। अन्यभृतः कोकिलः, दात्यूहश्चातकः, बर्हीं मयूरः य इति प्रसिद्धोऽपि कोलाहलः। तद्वाक्ये व्याकरणाभावात्, पदवाक्यानामभावे शब्दराशित्वादनभिव्यक्तः कोलाहलत्वेनोक्तः। वस्तुतस्तु तेऽपि भगवद्गुणानेव गायन्ति, न हि तत्रत्याः पक्षिणोऽन्यद्वदन्ति शुद्धसत्त्वस्य तथा लोकत्वेनाऽऽविर्भावात् तत्र वृक्षपक्ष्यादीनां सम्भवः। सोऽपि कोलाहलः क्षणमात्रमेव विरमते। भृङ्गाधिपे भ्रमरश्रेष्ठे, हरिकथामिव गायमाने सति। अनेन तेषां स्ववाग्गर्वो नास्तीति सूचितम्, भृङ्गस्याऽऽधिपत्यं च मन्यन्ते, तस्य भगवत्सान्निध्यसम्भवात्, कुन्तलानां तत्साम्याच्च। भृङ्गाणामधिपो वा आधिदैविकः। तस्य वाग्रागरूपेति रागं कृत्वा गास्यतीति बुद्ध्या कोलाहलो विरमते। तस्याऽप्यनभिव्यक्तवाक्त्वात् रागपर्यवसानं ज्ञात्वा स्ववागिव तदपीति तदवधारणार्थम्। चिरमात्रं भगवत्कथागाने सौम्यो राग उपयुक्त इति यदा तन्नानानुसारेण भृङ्गरवः। उच्चैःशब्दात् भगवदाज्ञा प्रायेण जातेति सन्देहः ॥ १८ ॥ ❀ ❀ एवं पक्षिणां दोषाभावमुक्त्वा लतादीनां पुष्पप्रधानानां मात्सर्यलक्षणदोषाभावमाह—मन्दारेति। मन्दारो देवतरुर्भूमावप्रसिद्धः। कुन्दकुरबकोत्पलचम्पकाः सर्वत्र प्रसिद्धाः। अर्णः काश्मीरप्रसिद्धः। पुन्नागनागकेशरबकुलाम्बुजा अपि प्रसिद्धाः। पारिजातो मन्दारवत्। एते पुष्पप्रधाना अतिपरिमलयुक्ताः, तथापि तुलसिकाभरणेन भगवता तुलस्या गन्धेऽर्चिते, यस्मिन् वैकुण्ठे तस्या एव तपः सर्व एव सुमनसो भूत्वा मन्दारादयो बहु मानयन्ति। न केवलं बहिर्बहुमानम्, किन्तु अन्तःकरणेऽपीति सुमनस इत्युक्तम्। तपसा हि हीन उत्तमतां व्रजति। तुलसिका भगवत आभरणम्, वनमाला तत्सम्भवेति। तुलस्यमृतोद्भवा, यथा लक्ष्मीः। भगवत्प्रसादाच्च तया तपः कृतमित्यवसीयते। वृन्दात्वे वा तस्यां प्रसादः। सा हि जालन्धरपत्न्यभून्मधोः कन्या; जालन्धरवधार्थं च तां परिगृहीतवान्। तस्याः पातिव्रत्यं तपः, तप एव वा पूर्वसिद्धम्। गुणकृतसौन्दर्याभावाय भगवता सा तथैव स्थापिता। भक्तिमार्गे तस्या माहात्म्यं सर्वतोऽधिकम्। एवं प्रकारत्रयेण स्वभावसात्त्विकराजसतामसा अपि स्वदोषमभिमानं दूरीकृत्य यत्र वैकुण्ठे अस्वाभाविकधर्ममङ्गीकृतवन्त इत्युक्तम् ॥ १९ ॥ ❀ ❀ इदानीं मुख्यतया स्त्रीणामेव सहजदुष्टत्वात् दोषाभावः प्रतिपाद्यते। तत्र सर्वाः स्त्रियोऽन्या आधिभौतिक्यः। लक्ष्मीर्द्विविधा, आध्यात्मिकी लोकसंबन्धिनी, आधिदैविकी भगवद्भक्ता भगवदानन्दरूपा। त्रिविधानामपि स्त्रीणामानन्दरूपत्वात् सहजो दोषः संभवति, स निराक्रियते। तत्र प्रथमं भगवदीयानां स्त्रीणां दोषाभावमाह—तत्संकुलमिति। तद्वैकुण्ठं विमानैः संकुलम्। तेषां विमानानां प्राप्त्युपायमाह—हरिपदानतिमात्रदृष्टैरिति। हरिपदयोरानतिमात्रं येषाम्, तैर्दृष्टानि। भक्तिमार्गानुसारेण भगवति नम्रत्वे तादृशविमानदर्शनम्। श्रवणादिषड्विधभक्तिर्वा। मात्रशब्दोऽवधिवाची। सख्याद्यभावेऽप्यानतिपर्यन्तेनैव भक्तिमार्गेणेति तत्प्राप्तिरिति वा वैदूर्यमारकतहेममयैरिति विमानानां त्रैविध्यमुक्तम्। तत्र वैदूर्यं तामसमिव, मारकतं सात्त्विकमिव, हेम राजसमिव। भक्तानामपि त्रैविध्यात् त्रिविधप्राप्तिः अनेन भक्तानां तत्र विमानेषु स्थितिरुक्ता भोगातिशयाय। येषां विमानानां संबन्धिन्यो भोगार्थमेव स्थिताः। बृहत्कटितटा इति। भोगमेव पोषयन्ति। मोहकत्वं च सहजमित्याह—स्मितशोभिमुख्य इति। स्मितेन शोभायुक्तं मुखं स्मितशोभि, स्मितशोभि मुखमासामस्तीति स्मितशोभिमुख्यः। दर्शनेनैव मोहकत्वमुक्तम्। रसद्वयसिद्ध्यर्थं वा विशेषणद्वयम्। अमोहकत्वे हेतुः—कृष्णात्मनामिति। भगवद्भक्तानां मनसि ता न रज आदधुः, कामं नोत्पादितवत्यः। न च ता विभावाद्यचतुरा इति मन्तव्यम्, यत उत्स्मयाद्यैरपि हास्यादिसर्वभावैरपि न रज आदधुः। वैकुण्ठस्य माहात्म्यं कृष्णात्मत्वेनैव, तत्रैव कृष्णा( ? ) त्मानो भवन्तीति। कृष्ण आत्मनि येषामिति पक्षे दोषाणामदोषत्वं वा, अकृष्णात्मनां तत्राभावात्। नामविशेषकथनाद्रजउत्पत्तिहेतुत्वं वा। तदा वैकुण्ठोत्कर्ष एव भवति। अन्यत्राऽपि तस्य न दोषत्वम्, अन्यथा तत्र तेषामेव कीर्तनं विरुध्येत ॥ २० ॥

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

वैमानिका इत्यत्र। षण्णां तात्पर्योक्तौ—तत्रैवेति। भगवत्येव—मार्गान्तरस्थितलोकसम्बन्धजातमिति। यथा सनकादय इदानीमागताः, तथा शिवादयोपि स्वान्तरङ्गसेवकसहिताः समायान्ति, तत्सम्बन्धकृतमन्यावेशात्मकम्। तत्रैवेति। गान एव। सरसं च तस्येति। सामान्ये नपुंसकम्। माधव्य इत्यर्थः। वरप्राप्त इति। भगवत्प्रसादात्प्राप्तः ॥ १७ ॥ ❀ ❀ तत्सङ्कुलमित्यत्र। अवधिवाचीति। उत्तरावधिवाची रसद्वयसिद्ध्यर्थमिति। गुप्तप्रकटरससिद्ध्यर्थम्। वैकुण्ठस्य माहात्म्यमिति। तत्र हेतुरिति शेषः। तदेवोपपादयन्ति—कृष्ण इत्यादि। कृष्ण आत्मान इत्यादि। कृष्णे भगवति आत्मानोऽन्तःकरणानि भवन्तीति दोषाणां कामादीनां भगवद्दत्तत्वेनाऽदोषत्वम्। स्त्रीणां पुंसां सहभावेऽपि भगवत्कथागानादिपुरःसरमेव तथात्वाददोषत्वमित्यर्थः। तत्र हेतुः—अकृष्णात्मनामित्यादि। उभयेषामप्येकविधत्वादित्यर्थः। नामविशेषाकथनादिति। येषामिति सामान्यवचनेन तथात्वात्।

तदेति । रजउत्पत्तिहेतुतायामपि तदनुत्पादकत्वे । अन्यत्रापि तस्य न दोषत्वमिति । भूमिष्ठभगवद्धामस्वपि तत्स्थस्त्रीसौन्दर्यस्य स्त्रीपुंसभावस्य वा न दोषत्वमित्यर्थः । अत्र गमकमाहुः—अन्यथेत्यादि । तेषामित्यादि कामोत्पादकगुणानाम् ॥ २० ॥

### श्रीगिरिधरकृता बालप्रबोधिनी

एवं तत्र निरतिशयभोगसामग्रीं प्रदर्श्य तत्रासक्त्यभावपूर्वकं भगवद्भजनासक्तिमाह—वैमानिका इति । अन्तर्जले मध्येऽनुविकसन्मधवः प्रसरन्मकरन्दाः माधव्यः मधुकालीनाः सुमनसस्तासां गन्धेन खण्डिता विघ्निता धीर्येषां तथाभूता अपि तद्गन्धप्रापकमनिलं क्षिपन्तः अगणयन्तः सललनाः सस्त्रीकाः वैमानिकाः विमानचारिणो जना यत्र वैकुण्ठे वने वा भर्तुः स्वस्वामिनो भगवतश्चरितानि गायन्तीत्यन्वयः । ननु स्त्रीसन्निधानेऽपि तथाभूतेनानिलेन कथं न तेषां कामादिविकार इत्याशङ्क्याह—लोकशमलेति । लोकानां सर्वजनानां शमलानि कामक्रोधादिदोषमूलभूतानि पापानि क्षपयन्ति निराकुर्वन्तीति तथाभूतानि । तद्गानेनैव सर्वदोषनिरासान्न तेषां कामादिसम्भव इति भावः ॥ १७ ॥ ❀ ❀ आस्तां तावत्पुरुषाणां भगवत्परत्ववार्ता तत्रत्यानां पक्षिणामपि भगवद्भजनानन्दासक्तिरस्तीत्याह—पारावतेति । यत्र पारावतादीनां पक्षिविशेषाणां यः कोलाहलः स भृङ्गाधिपे भृङ्गश्रेष्ठे हरिकथामिव उच्चैर्गायमाने सति अचिरमात्रं क्षणमात्रं विरमते समाप्तो भवतीत्यन्वयः । वनस्थाः पारावतादयः कोलाहलं स्वस्वजात्यनुरूपं शब्दं कुर्वन्तो भृङ्गध्वनिमाश्रुत्य किमयं भृङ्गराजो हरिकथां गायतीत्यभिप्रायेण स्वकोलाहलं त्यक्त्वा क्षणमात्रं भृङ्गध्वनिश्रवणपरा एव भवन्तीत्यर्थः । अन्यभृताः कोकिलाः । दात्यूहाश्चातकाः । बर्हिणो मयूराः ॥ १८ ॥ ❀ ❀ एवं पक्ष्यादीनां भगवत्परता न चित्रं यत्र स्थावराणामपि भगवत्परताऽस्तीत्याशयेनाह—मन्दारेति । यस्मिन्वैकुण्ठे मन्दारादयः सुमनसः सुगन्धा अपि तुलसिकाभरणेन तुलसिकाभिः रचितान्याभरणानि यस्य तेन भगवता तस्यास्तुलस्याः गन्धे अर्चिते सम्मानिते सति तस्यास्तुलस्यास्तपो बहु मानयन्ति । तत्र मन्दारपारिजातौ सुरतरुविशेषौ लोकेऽप्रसिद्धौ । कुन्दो मुक्तलता । कुरवकस्तिलकवृक्षविशेषः । उत्पलं रात्रिविकासि । अम्बुजं दिवाविकासि । नागो नागकेसरः अर्णः पुष्पवृक्षविशेषः । वैमानिका इत्यादिवनविशेषणपक्षे एवंभूतं वनं यत्र तद्वैकुण्ठं ययुरिति पूर्वेणान्वयः ॥ १९ ॥ ❀ ❀ एवं निश्श्रेयसाख्यं वनमुपवर्ण्य पुनर्वैकुण्ठमेव वर्णयति—तत्सङ्कुलमिति । तद्वैकुण्ठनिलयं भगवद्भक्तानां वैडूर्यादिमयैः वैडूर्यादिविनिर्मितैर्विमानैः सङ्कुलं व्याप्तमस्ति । तेषां तादृशविमानप्राप्तिः कथमित्यपेक्षायामाह—हरिपदानतिमात्रदृष्टैरिति, हरेर्भगवतः पादयोर्या आनतिः नमस्कारस्तन्मात्रदृष्टैः । एतच्च भक्तिमात्रोपलक्षणं, भगवद्भक्तिमात्रेणैव लब्धैः कर्मयोगादिसाधनान्तरैर्दुर्लभैरित्यर्थः । भक्त्या तत्र गतानां पुनरपि भगवत्परतैव न विषयासक्तिरित्याह—येषामिति । बृहन्ति कटितटानि यासां ताः स्मितेन शोभीनि मुखानि यासां ता अपि स्त्रियः उत्स्मयाद्यैः परिहासादिभिर्येषां मनसि रजः रजोगुणसमुद्भवं कामं न आदधुः न जनयामासुः । तत्र हेतुमाह—कृष्णात्मनामिति, कृष्णे भगवति आत्मा मनो येषां तेषामित्यर्थः । मनसोऽणुत्वात्तस्य भगवति संलग्नत्वात्तत्र कामः कथमवकाशं ॥ २० ॥

### हिन्दी अनुवाद

वहाँ विमानचारीगन्धर्वगण अपनी प्रियाओंके सहित अपने प्रभुकी पवित्र लीलाओंका गान करते रहते हैं, जो लोगोंकी सम्पूर्ण पापराशिको भस्म कर देनेवाली हैं । उस समय सरोवरोंमें खिली हुई मकरन्दपूर्ण वासन्तिक माधवी लताकी सुमधुर गन्ध उनके चित्तको अपनी ओर खींचना चाहती है; परन्तु वे उसकी ओर ध्यान ही नहीं देते वरं उस गन्धको लानेवाले वायुको ही बुरा-भला कहते हैं ॥ १७ ॥ ❀ ❀ जिस समय भ्रमरराज ऊँचे स्वरसे गुंजार करते हुए मानो हरिकथाका गान करते हैं, उस समय थोड़ी देरके लिये कबूतर, कोयल, सारस, चकवे, पपीहे, हंस, तोते, तीतर और मोरोंका कोलाहल बंद हो जाता है—मानो वे भी उस कीर्तनानन्दमें बेसुध हो जाते हैं ॥ १८ ॥ ❀ ❀ श्रीहरि तुलसीसे अपने श्रीविग्रहको सजाते हैं और तुलसीकी गन्धका ही अधिक आदर करते हैं–यह देखकर वहाँके मन्दार, कुन्द, कुरबक ( तिलकवृक्ष ), उत्पल ( रात्रिमें खिलनेवाले कमल ), चम्पक, अर्ण, पुन्नाग, नागकेसर, बकुल ( मौलसिरी ), अम्बुज ( दिनमें खिलनेवाले कमल ) और पारिजात आदि पुष्प सुगन्धयुक्त होनेपर भी तुलसीका ही तप अधिक मानते हैं ॥ १९ ॥ ❀ ❀ वह लोक वैदूर्य, मरकतमणि ( पन्ने ) और सुवर्णके विमानोंसे भरा हुआ है । ये सब किसी कर्मफलसे नहीं, बल्कि एकमात्र श्रीहरिके पादपद्मोंकी वन्दना करनेसे ही प्राप्त होते हैं । उन विमानोंपर चढ़े हुए कृष्णप्राण भगवद्भक्तोंके चित्तोंमें बड़े-बड़े नितम्बोंवाली सुमुखी सुन्दरियाँ भी अपनी मन्द मुसकान एवं मनोहर हास-परिहाससे कामविकार नहीं उत्पन्न कर सकतीं ॥ २० ॥

**श्री रूपिणी क्वणयती चरणारविन्दं लीलाम्बुजेन हरिसद्मनि मुक्तदोषा ।**
**संलक्ष्यते स्फटिककुड्य उपेतहेम्नि सम्मार्जतीव यदनुग्रहणेऽन्ययत्नः ॥ २१ ॥**

वापीषु विद्रुमतटास्वमलामृताप्सु प्रेष्यान्विता निजवने तुलसीभिरीशम् ।
अभ्यर्चती स्वलकमुन्नसमीक्ष्य वक्त्रमुच्छेषितं भगवतेत्यमताङ्ग यच्छ्रीः ॥ २२ ॥
यन्न व्रजन्त्यघभिदो रचनानुवादाच्छृण्वन्ति येऽन्यविषयाः कुकथा मतिघ्नीः ।
यास्तु श्रुता हतभगैर्नृभिरात्तसारास्तांस्तान् क्षिपन्त्यशरणेषु तमःसु हन्त ॥ २३ ॥
येऽभ्यर्थितामपि च नो नृगतिं प्रपन्ना ज्ञानं च तत्त्वविषयं सहधर्म यत्र ।
नाराधनं भगवतो वितरन्त्यमुष्य सम्मोहिता विततया बत मायया ते ॥ २४ ॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

श्रीर्लक्ष्मीः रूपिणी मनोहरमूर्तिधारिणी सती श्रीहरेः सद्मनि संमार्जनं कुर्वतीव यस्मिन् लोके संलक्ष्यते चरणारविंदं क्वणयती नूपुरेण शब्दयंती मुक्तो दोषश्चांचल्यं यया । यद्वा मुक्तेन दोषा प्रसारितेन बाहुना । कीदृशे सद्मनि ? स्फटिकमयानि कुड्यानि यस्मिन् मध्ये मध्ये च शोभार्थमुपेतं संयुक्तं हेम यस्मिन् । यस्या अनुग्रहणे श्रीरनुग्रहं करोत्वित्येतदर्थमन्येषां ब्रह्मादीनां यत्नः सा । अयं भावः यद्यपि तत्र रजो नास्त्येव तथाऽपि स्वर्णपट्टिकाऽवच्छिन्नभित्तिभागेषु बहुधा प्रतिबिंबिता सती लीलांऽबुजं भ्रामयंती विनयभक्तिभ्यां तथा लक्ष्यत इति ॥ २१ ॥ ॐ ॐ अंग हे देवाः यस्मिँल्लोके श्रीरेवं अमत अमंस्त मेने । किं कुर्वती विद्रुममयानि तटानि यासां अमला अमृततुल्या आपो यासां तासु वापीषु निजवने लक्ष्मीवने परिचारिकाभिरन्विता तुलसीभिः श्रीविष्णुं पूजयंती तदोदके प्रतिबिंबितं शोभनालकयुक्तमुत्कृष्टनासिकायुक्तं च स्ववक्त्रं वीक्ष्य भगवता उच्छेषितं चुंबितमित्यमन्यत । अनेन लक्ष्म्या अपि सौभाग्यसुखं भगवदनुग्रहेणैवेति द्योतितम् ॥ २२ ॥ ॐ ॐ पुनः कथंभूतं तत् ? यद्वैकुंठं न व्रजंति के ये कुकथाः शृण्वंति कास्ताः अघं भिनत्तीत्यघभित्तस्य हरेः रचना सृष्ट्यादिलीला तस्या अनुवादादन्यविषया अर्थकामादिवार्ता मतिभ्रंशिकाः तेषामव्रजने हेतुः । यास्तु हत भाग्यैर्नरैः श्रुताः सत्यस्तांस्तान् श्रोतॄनशरणेषु निराश्रयेषु तमःसु नरकेषु क्षिपंति । हंत खेदे कथंभूता आत्तः सारः श्रोतॄणां पुण्यं याभिस्ताः ॥ २३ ॥ ॐ ॐ प्रसंगात्तान् शोचंति नोऽस्माभिर्ब्रह्मादिभिरप्यभ्यर्थितां नृगतिं मनुष्यजातिं प्रपन्नाः प्राप्ताः संतोऽपि हरेराराधनं न कुर्वंति । कीदृशीं नृगतिम् ? यत्र यस्यां धर्मसहितं तत्त्वज्ञानं भवति । तदुभयसाधकत्वात्तस्याः तेऽमुष्य भगवतो विस्तृततया मायया ननु संमोहिताः । बतेति खेदे यदि वैवं संबंधः । केवलं त एव न व्रजंति किं तु ये भगवदाराधनं न कुर्वंति तेऽपि तेषां मायामोहितत्वादिति ॥ २४ ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

मुक्तदोषेति । 'अयमात्मापहतपाप्मा' इतिवन्नित्यमेव दोषरहितैव सेति चेत्तत्राह—यद्वेति । अत्राशयमाह अयं भाव इति । विश्वनाथस्तु-सर्वे हरिभजनानंदवंत इति किं वक्तव्यं साक्षाच्छ्रीरपि यत्र सदा भजंती वर्त्तत इत्याह । यद्वा संमार्जनकारिण्यन्या दासीव यदुक्तं कुरुक्षेत्रयात्रायां "साहं तद्गृहमार्जनी" इति न चैतावता तन्माहात्म्यहानिरिति मंतव्यमित्याह-यदनुग्रहण इति ॥ २१ ॥ ॐ ॐ परिचरणभक्तिमुक्त्वा साधकभक्तानामिव तस्या अर्चनभक्तिमाह । वापीषु दीर्घिकासु निजवने निःश्रेयसवनैकदेशस्थे लक्ष्मीवने पूजयंती अर्चयितुं प्रायः स्नानं करिष्यंति प्रथमं मुखक्षालनार्थं सोपानतटमध्यासीना स्वमुखं निरीक्ष्य भगवता उच्छेषितमुच्छिष्टीकृतं चुम्बनाधरपानाभ्यामित्यमन्यत । यद्वा । तत्र जले नीलोत्पलप्रतिबिंबे मिलितं स्ववक्त्रप्रतिबिंबं वीक्ष्य भगवता उन्मुखं चुंबितं जातमिति भावोदयो जातः पत्युरेव परमदेवरूपत्वात्ततः सौभाग्यलाभार्थं स एव पूज्य इत्यभिप्रायेण तत्र जले ध्यानेन तत्स्फूर्तेस्तत्र स्वप्रतिबिंबदृष्ट्या स्वमूर्तेश्च सहयोगाच्चुंबितत्वज्ञानमपि संगतम् । यद्वा । उच्छेषितमुपभुक्तमित्यमन्यत पूर्वपूर्वानुभूततया स्मृतवतीत्यर्थः । भगवत्कृतचुंबनप्रभावादिदं मदीयं सौंदर्यमित्यमन्यतेति वार्थः "पतिरेव हि नारीणां दैवतं परमं मतम्" । किं च "स्त्रिया भर्त्तरि सुप्रीते कः काम इह चागमः" इति वक्ष्यमाणत्वात् । पतिवत्या स्त्रिया पतिं विहाय देवतांतरपूजा न कार्या । स एव तत्तद्देवतारूपेणाच्र्यः "स एव देवतालिंगैरर्चनीयः प्रयत्नतः" इत्युक्तेः । शैवेऽपि "पुत्रस्य पितरौ देवौ स्त्रिया भर्त्ता उदाहृतः" पत्युरेव देवत्वं विहितमिति ॥ २२ ॥ ॐ ॐ तत्र गंतुं केऽधिकारिण ? इत्यपेक्षायां प्रथममनधिकारिण आह—अघभिदोऽघासुरहंतुः "अघोऽपि यत्स्पर्शनधौतपातकः" इत्यत्र तथा प्रसिद्धस्यैवानुवादं परित्यज्यान्यदन्यदीयं तद्रचनं तदेव विषयो यासां ताः कथा इति कृष्णकथाः कदाचिदपि ये न शृण्वंतीत्यर्थ इति संदर्भः । यद्वा श्रीकृष्णस्य रचना लीलाकथा तस्या अनुवादादनुकीर्त्तनादन्यविषया एव कथा न्यायादिशास्त्रविषया अपि कथाः कुकथा एव वस्तुतस्तु मनुष्यवाङ्निर्मितपुराणेतिहासाप्रसिद्धाधुनिककथा एव कुकथा ज्ञेयास्ता ये शृण्वंति ते तद्वैकुंठं न व्रजंति तर्हि किं व्रजंति तत्राह

---

१. प्रा० पा०—त्तवीर्या । २. प्रा० पा०—ऽभ्यर्चिता० । ३. प्रा० पा०—ननु ।

यः कुकथाः हतभगा मन्दभाग्या एव तत्राधिकारिण इति सारोऽत्र विवेकादिः ताः कथा एव बलात्कारेण पातयंति । वक्ष्यति च "नूनं दैवेन विहता ये चाच्युतकथासुधाम् । हित्वा शृण्वंत्यसद्गाथाः पुरीषमिव विड्भुजः" इति ॥ २३ ॥ ❀ ❀ तानसत्कथाश्रोतॄन् हंतहंत यद्यपि तत्र गंतुं नृजातय एवाधिकारिणो न तु देवादिजातयस्तदपि भक्तिरहितशास्त्रतात्पर्याद् भ्रंशितबुद्धयो नृजातय एव केचिद्वंचितास्तांञ्शोचंतीत्यर्थः । हा हंत भारतभूमौ कदा नृजनुषो भूत्वा कृष्णं भजंतः क्षणमात्रेण वैकुंठं प्राप्नुयामेति नोऽस्माभिः प्रार्थितां "गायन्ति देवाः किल गीतकानि धन्यास्तु ये भारतभूमिभागे । स्वर्गापवर्गस्य फलार्जनाय भवंति भूयः पुरुषाः सुरत्वात्" इति गरुडोक्तेः । यस्यां नृजातौ भगवद्धर्मपर्यंतो धर्मो भवति भगवति भगवद्धर्मपर्यंतस्य तत्त्वस्य ज्ञानं च भवति तां प्राप्ताः सर्वेषां धर्माणां मूलं भगवदाराधनं न कुर्वंति ते मोहिताः । तदुक्तं 'बिले बतोरुक्रमविक्रम—' इत्यादि । ब्रह्मवैवर्त्तेऽपि "प्राप्यापि दुर्लभतरं मानुष्यं विबुधेप्सितम् । यैराश्रितो न गोविंदस्तैरात्मा वंचितो ध्रुवम् ॥ अशीतिचतुरश्चैव लक्षास्ताञ्जीवजातिषु । भ्रमद्भिः पुरुषैः प्राप्यं मानुष्यं जन्म पर्ययात् ॥ तदप्यफलतां जातं तेषामात्माभिमानिनाम् । वराकाणामनाश्रित्य गोविंदचरणद्वयम्" इति । पञ्चमे वक्ष्यति "अहो अमूषां किमकारि शोभनं प्रसन्न एषां स्विदुत स्वयं हरिः । यैर्जन्म लब्धं नृषु भारताजिरे मुकुंदसेवौपयिकं स्पृहा हि नः ॥" इत्यादिना 'यजतां शं तनोति' इत्यंतेन ग्रंथेन । विश्वनाथस्तु—तत्त्वविषयं ब्रह्मविषयं धर्मसहितं भवति तदप्याराधनं न कुर्वंति चेत्तेऽमुष्य हरेर्मायामोहिता एव । एवं धर्मज्ञानयोरपि भक्तिं विना फलासिद्धेरिति भावः । यद्वा यत्र धर्मसहितं ज्ञानं कुर्वंति न त्वाराधनं ते मोहिताः । यद्वा भगवत एवाराधनं भगवते न ददति नार्पयन्ति तत्सुखतात्पर्यतया न कल्पयंति ते सकामभक्ता अपि मोहिता इत्यर्थः । "मानुष्यं यः समासाद्य स्वर्गमोक्षप्रसाधकम् । द्वयोर्न साधयत्येकं तेनात्मा वंचितो ध्रुवम्" इति वाक्यं सकामपरं भागवतैर्नाद्रियत इति सह धर्मेण वर्त्तते इति । सहधर्मेति "धर्मादनिच् केवलात्" इत्यनिच् । सादेशस्तु पाक्षिकत्वान्नेति ॥ २४ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

पूर्वार्थे दोषरूपं चाञ्चल्यं प्राकृतश्रियामेव नतु स्वरूपशक्त्यां किञ्च सम्मार्ज्जनकाले लीलागुणात्मकं चाञ्चल्यं प्रत्युतापेक्षितमित्यरुचौ यद्वेति लीलाम्बुजेनेत्युपलक्षणे तृतीया । तत्र वैकुण्ठे विनयभक्तिभ्यां विनयादराभ्यां तथा संमार्जतीव लक्ष्यते पार्षदैर्दृश्यते । तदुक्तं श्रीकालिन्द्या 'साहं तद्गृहमार्ज्जनी'ति ॥ २१ ॥ ❀ ❀ विष्णुं पूजयन्ती जले विष्णुपूजां कुर्व्वतीति नित्यपार्षदेऽपि साधनभक्तेराग्रहेणान्वय उक्तः तदा जले विष्णुपूजाकाले भगवतो ध्यानजन्यस्फूर्तिलब्धेन अनेन लक्ष्म्यास्तादृशमननेन स्वसौभाग्यसुखं स्वसौन्दर्य्यसम्पत्तिजन्यानन्दः भगवदनुग्रहेणैव चुम्बनात्मकमदुपभोगलक्षणकृपयैव तदभावे सर्वसौभाग्यं तद्विरहस्फोरकत्वात् प्रत्युत दुःखप्रदमेवेत्यर्थः ॥ २२ ॥ ❀ ❀ अघमघासुरमघोऽपि यत्स्पर्शनभूतपातक इत्यादौ तच्छब्दस्य तत्र प्रसिद्धेः पापभिदादिशब्दानाञ्च तत्राप्रसिद्धेः नरकेषु तत्प्रायसंसारदुःखगर्त्तेषु ॥ २३ ॥ ❀ ❀ तत्त्वं भगवत्तत्त्वं तस्य ज्ञानमनुभवः धर्मोऽत्र वेदप्रणिहितो धर्म इति स्मृतिसूत्राद्यनुसारेण वर्णाश्रमप्रयुक्तो धर्म्मस्तत्सहितं तद्द्वयोः साधकत्वान्नृजातेः आराधनं धर्मज्ञानयोरपि फलप्रदं तदनन्तरा तत्फलासिद्धेः "सर्वासामपि सिद्धीनां मूलं तच्चरणार्चनम्" इत्युक्तेः ॥ २४ ॥

### श्रीमद्वीरराघवव्याख्या

श्रीर्लक्ष्मी रूपिणी मूर्तिमती हरिसद्मनि यद्वैकुण्ठलोकस्थे भगवद्वेश्मनि लीलाम्बुजेन लीलार्थं धृतेन कमलेन सम्मार्जती सम्मार्जनं कुर्वती संलक्ष्यते इव । कथम्भूता श्रीः चरणारविन्दं कणयती नूपुरेण शब्दयन्ती मुक्तदोषा मुक्तो दोषोऽनित्यत्वरूपो यया सा । यद्वा मुक्तदोपेति लीलाम्बुजविशेषणं मुक्तः प्रसारितो दोः भुजो यस्य तेनेति । कथम्भूते वेश्मनि स्फटिकमयानि कुड्यानि यस्मिन् उपेतहेम्नि शोभार्थं मध्ये तत्र तत्रोपेतं संयुक्तं हेम सुवर्णं यस्मिन् तस्मिन्निति । पुनः श्रियं विशिनष्टि । यदनुग्रहणे यस्याः श्रियः अनुग्रहे निमित्ते श्रीरस्मास्वनुग्रहं कुर्यादिति त्वन्येषां ब्रह्मादीनां यत्नः आराधनरूपो यत्नः स्यादित्यर्थः । यद्यपि भगवद्वेश्मनि संमार्जतीति रजो नास्त्येव तथापि स्वर्णपट्टिकायां लाञ्छितस्फटिकमयभित्तिभागेषु हेमचूर्णैरिव लीलया रागपुञ्जैर्विचित्रीकरणार्थं सम्मार्जती निरतिशयनिर्मलासु स्फटिकमयभित्तिषु प्रतिफलिता सती तत्रैवं लक्ष्यते इवाभूदिति भावः अलमतिविस्तरेण ॥ २१ ॥ ❀ ❀ वापीष्विति । अङ्ग हे देवाः ! यद्यत्र लोके श्रीः भगवतोच्छेषितं चुम्बितमित्यमतामन्यत । किं कुर्वती किं कृत्वा विद्रुममयानि तटानि यासां तासु अमला निर्मला अमृततुल्या आपो यासु वापीषु निजवने स्वकीयक्रीडावने प्रेष्याभिः स्वकीयपरिचारिकाभिः स्त्रीभिरन्विता तुलसीभिरीशं भगवन्तमभ्यर्चती पूजयन्ती तदोदके प्रतिबिम्बितं स्वलकं शोभना अलकाश्चूर्णकुन्तला यस्य उद्गता नासिका यस्य तत्स्वं वक्त्रं वीक्ष्य दृष्ट्वा निरतिशयविमलासु वापीनामप्सु तुलसीभिरीशमर्चयन्ती लक्ष्मीरुदकसमीपे स्वमुखं निधाय तत्र प्रतिबिम्बितं स्वमुखं भगवन्मुखमनुसन्धायाहो भगवान्मन्मुखं चुम्बतीति मेने इत्यर्थः । अनेन लक्ष्म्या मौग्ध्यं लक्ष्यते ॥२२॥ ❀ ❀ पुनः कथम्भूतं तद्वैकुण्ठस्थानमित्यत्राह । यद्वैकुण्ठनिलयं ते न व्रजन्ति नाप्नुवन्ति के त इत्यत्राह । अघं पापं भिनत्ति निरस्यतीत्यघभिद्धरिस्तस्मादन्यविषयाः अर्थकामादिविषयाः अत एव रचनानुवादाद् रच्यन्ते सम्पाद्यन्तेऽनयेति रचनानुवादस्तस्माद् अनुवादादनुवर्तनात्स्वसंपादनोपायबोधकदण्डनीतिकामतन्त्राद्यनुवर्तनात् मतिघ्नीः बुद्धिभ्रंशकराः कुकथा ये शृण्वन्ति ते इत्यर्थः । पुनः कुकथा

एव विशिनष्टि यास्तु कुकथाः हतभगैर्विभाग्यैर्नृभिर्नरैः श्रुताः । अत एव आत्तसाराः आत्तः स्वीकृतः सारः श्रोतॄणां पुण्यं याभिरेवं-भूताः सत्यस्ताम् श्रोतॄनशरणेषु निरालम्बेषु तमस्सु नरकेषु क्षिपन्ति पातयन्ति ॥ २३ ॥ ❀ ❀ प्रसङ्गाद्देवार्थपरान् श्रोतॄन् शोचति । य इति । ये हतभाग्या अभ्यर्थितां प्रार्थनीयां नृगतिं मनुष्यजन्म प्रपन्ना अपि यत्र मनुष्यजन्मनि सहधर्मनिवृत्तिधर्मसहितं ज्ञानेन तत्त्वज्ञानेनोपपन्नाः प्राप्ताः अत एव भगवत आराधनं संसिद्धिसाधनं भजनं न विन्दन्ति न कुर्वन्ति किंत्वमुष्य भगवतः विततया मायया ते हतभाग्याः सम्मोहिता भवन्ति बतेति खेदे । यद्वा तत्त्वज्ञानं सहधर्मं यत्र यस्मिन् मनुष्यजन्मनि यन्मनुष्यसाध्यं तादृशीं नृगतिं प्रपन्नाः भगवत आराधनं न कुर्वन्ति किंत्वस्य मायया संमोहिता एव इत्यर्थः । अस्मिन् पक्षेऽभ्यर्थितामपि नो इत्यत्र नो अस्माभिरभ्यर्थनीयां प्रार्थनीयां नृगतिमित्यर्थः ॥ २४ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

वैकुण्ठस्येतोऽधिकं माहात्म्यं किं वक्तव्यमिति भावेनाह । श्रीरिति । अन्येषामुपासकानामस्मदादीनामुपासनादिप्रयत्ना यस्या अनुग्रहणेऽनुग्रहार्थं स्युः सा नूपुरालङ्कृतचरणारविन्दं कणयती शब्दयन्ती जननादिसमस्तदोषैर्मुक्ता रूपिणी सौन्दर्य-सागरमूर्तिः श्रीर्यत्र वैकुण्ठे हरिवेश्मनि अन्तःपुरे उपेतहेम्नि सुवर्णखचिते स्फटिककुड्ये नीलाम्बुजेनावस्करधूननासाधनस्थानीयेन संमार्जयन्तीव संलक्ष्यत इत्यन्वयः । कुड्यं गृहभित्तिः ॥ २१ ॥ ❀ ❀ अङ्ग हे देवाः ! यद्यत्र प्रेष्याभिर्दासीभिरन्विता निजवने कमलवने तुलसीभिरीशमभ्यर्चती रुपिणी सौन्दर्यसागरमूर्तिः श्रीरमृतामलाप्सु विद्रुमरत्नवद्धतटासु वापीषु सुखावतारकूलासु प्रतिविम्बितं स्वलकं शोभनकुन्तलमुन्नसं किञ्चिदुन्नतनासिकं वक्त्रमुद्वीक्ष्य हरिणेदं चुम्बितमित्यमतेत्यन्वयः ॥ २२ ॥ ❀ ❀ स्वर्गादीनामसुरादिगम्यत्वादस्य तदभावात्ततोऽतिशयमाहात्म्यमस्तीति भावेनाह । यन्न व्रजन्तीति । अघभिदः संसारदुःखहेतुभूत-पापानां भेत्तुः कृष्णस्य रचनानां बालक्रीडादिचरितानां जगत्सृष्ट्यादिकर्मणां वा न अनुवादा येषां ते अरचनानुवादा असुरा यत्स्थानं न व्रजन्ति अनुवादः श्रवणमननादिलक्षणः ये चान्यविषया मतिघ्नीर्यथार्थज्ञाननाशनीः कुकथाः कुत्सितरतिवर्णनादिरूपाः कथाः शृण्वन्ति ते न यत्स्थानं न यान्ति तासां कथानामेतत्स्थानप्राप्तिप्रतिबन्धकत्वमेव न फलं किंतु तमःप्रापकफलमपीत्याह । या इति । हतभगैर्विनिष्टभक्त्यादिभाग्यैर्नृभिः श्रुता याः कथास्ता अशरणेषु निराश्रयेषु तमस्सु क्षिपन्ति आत्तवीर्याः तमःपातने बह्व-भ्यासेन समुन्नद्धशक्तयः हन्त अहो कष्टं तुशब्दः अधःपतितानां तारतम्यद्योतकः ॥ २३ ॥ ❀ ❀ केचिज्ज्ञानसाधनयोग्यां मनुष्ययोनिं प्राप्यापि तत्साधनं न कुर्वन्ति तत्र किङ्कारणमित्याशङ्कयासुरत्वमिति भावेनाह । येऽभ्यर्थितामिति । ये पुरुषा नोऽस्मा-कमभ्यर्थितां ज्ञानादिप्राप्तियोग्यत्वादाकाङ्क्षितां नृगतिं मनुष्ययोनिं प्राप्य यत्र यस्यां नृगतौ सहधर्मं धर्मेण सह वर्तमानं तत्त्वविषयं ज्ञानं च न प्रपन्नास्ते अमुष्य हरेर्जगति विततया मायया बन्धकशक्त्या धर्मज्ञानप्राप्तावयोग्यत्वेन सम्मोहिताः न भगवत आराधनं कुर्वन्ति न वितरन्त्यर्थिभ्यो नोपदिशन्त्यतो धर्मज्ञानादिवर्जिता असुरत्वात्ते न मनुष्या इतीतमर्थं ध्वनयति नन्वित्यनेन ॥ २४ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

मुक्तदोषा अयमात्मापहतपाप्मेतिवन् नित्यमेव दोषरहिता । अत एव तद्वत्त्यात्यन्तदीनं मन्यात्वेन संमार्जनकर्त्री या काचित् सैव लक्ष्यते नतु प्रेयसीवत् । यथोक्तं कुरुक्षेत्रयात्रायां श्रीकालिन्द्या 'अहं तद्गृहमार्ज्जनी'ति । लोलाम्बुजेनेत्युपलक्षणे तृतीया ॥ २१ ॥ ❀ ❀ वापीष्विति । पत्युरेव परमदेवरूपत्वात् ततः सौभाग्यलाभार्थं स एव पूज्य इत्यभिप्रायेण । तत्र च जने ध्यानेन तत्स्फूर्त्तेस्तत्र स्वप्रतिविम्वदृष्ट्या स्वमूर्त्तेश्च सहयोगाच्चुम्बितत्वभानमपि सङ्गतम् । यद्वा । उच्छेषितमुपभुक्तमित्यमन्यत पूर्व्वपूर्व्वानुभूततया स्मृतवतीत्यर्थः ॥ २२ ॥ ❀ ❀ अघभिदोऽघासुरहन्तुरघोऽपि यत्स्पर्शनधूतपातक इत्यत्र तथा प्रसिद्धस्य तस्य रचनाया अनुवादं परित्यज्य अन्यद् अन्यदीयं यद्रचनं तदेव विषयो यासां ताः कथा इति । भगवत्कथां कदाचिदपि ये न शृण्वन्तीत्यर्थः । तमःसु नरकप्रायेषु संसारगर्त्तेषु । सारो विवेकादिः ॥ २३ ॥ ❀ ❀ येऽभ्यर्थितामिति । यत्र यस्यां भगव-द्धर्म्मपर्य्यन्तस्य तत्त्वस्य ज्ञानञ्च भवतीत्यर्थः । तां प्राप्ता अपि सर्व्वेषां धर्म्माणां ज्ञानानाञ्च मूलं ये भगवतः आराधनं न वितरन्ति न कुर्व्वन्ति ते सम्मोहिताः । तदुक्तम् 'बिले बतोरुक्रमविक्रमान् ये' इत्यादि । तथा च ब्रह्मवैवर्त्ते । "प्राप्यापि दुर्लभतरं मानुष्यं विबुधेप्सितम् । यैराश्रितो न गोविन्दस्तैरात्मा वञ्चितश्चिरम् ॥ अशीतिं चतुरश्चैव लक्षांस्तान् जीवजातिषु । भ्रमद्भिः पुरुषैः प्राप्य मानुष्यं विबुधेप्सितम् ॥ तदप्यफलदं जातं तेषामात्माभिमानिनाम् । वराकाणामनाश्रित्य गोविन्दचरणद्वयम्" इति । यद्वा यत्र तत्तद्विषयं ज्ञानं धर्म्मश्च सर्व्वोऽपि जज्ञे तादृशीमपि नृगतिं प्रपन्ना य इति पशुनिर्व्विशेषा व्यावृत्ताः ॥ २४ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

सर्व्वे हरिभजनानन्दवन्त इति किं वक्तव्यम् । साक्षाल्लक्ष्मीरपि यत्र सदा भजन्ती वर्त्तत इत्याह द्वाभ्याम् । रूपिणी परमसौरूप्यवती चरणारविन्दं कणयन्ती मन्दगत्या नूपुरेण शब्दयन्ती हरेः सद्मनि स्फटिककुड्ये स्फटिकमयभित्तौ उपेतहेम्नि

मध्ये मध्ये शोभार्थं संयुक्तसुवर्णे। मुक्तदोषा प्रसारितेन भुजेन लीलाम्बुजेन पाणिधृतेन सम्मार्जतीव स्वच्छभित्तौ प्रतिबिम्बिता शोधन्या सम्मार्ज्जनं कुर्वतीव संलक्ष्यते। लीलाम्बुजमत्र शोधनीस्थानीयम्। यद्वा सम्मार्जतीव सम्मार्जनकारिण्यन्या दासीव। यदुक्तम् कुरुक्षेत्रयात्रायां 'साहं तद्गृहमार्जनी'ति। तदा मुक्तदोषा निर्दोषा। लीलाम्बुजेनेत्युपलक्षणे तृतीया। न चानेन साल्पमाहात्म्या मन्तव्येत्याह। यस्या अनुग्रहणे श्रीरनुग्रहं करोत्वित्येतदर्थमन्येषां ब्रह्मादीनां यत्नः सा॥२१॥ ❀ ❀ परिचरणभक्तिमुक्त्वा साधकभक्तानामिव तस्या अर्च्चनभक्तिमाह। वापीषु दीर्घिकासु अमृततुल्यजलासु निजवने निःश्रेयसवनैकदेशस्थे लक्ष्मीवने तुलसीभिरीशं श्रीनारायणमभ्यर्च्चती अभ्यर्चयितुं प्रातःस्नानं करिष्यन्ती प्रथमं मुखक्षालनार्थं सोपानतटमध्यासीना जले प्रतिबिम्बितं शोभनालकं उत्कृष्टनासिकायुक्तञ्च स्वमुखमीक्ष्य ईक्षित्वा भगवता उच्छेपितमुच्छिष्टीकृतं चुम्बनाधरपानाभ्यामित्यमत अमन्यत। यद्वा तत्र जले नीलोत्पलप्रतिबिम्बे—मिलितं स्ववक्त्रप्रतिबिम्बं वीक्ष्य भगवता तन्मुखं चुम्बितं जातमिति भावोदयो जातः॥२२॥ ❀ ❀ तत्र गन्तुं केऽधिकारिण इत्यपेक्षायां प्रथममनधिकारिण आह। अघभिदः श्रीकृष्णस्य रचना लीला कथा तस्या अनुवादात् अनुकीर्त्तनात् अन्यविषया एव कथा न्यायादिशास्त्रविषया अपि कथाः कुकथास्ता ये शृण्वन्ति ते यद्वैकुण्ठं न व्रजन्ति तर्हि किं व्रजन्ति तत्राह। याः कुकथा हतभगैः श्रुता इति। हतभागा एव तत्राधिकारिणः। अतो हतभगैर्नृभिरेवात्तो गृहीतः सारः श्रोतव्येत्वेनानुसंहितं महत्त्वं यासामत एव तास्तान् हतभगान् तमःसु नरकेषु ताः कथा एव बलात्कारेण क्षिपन्ति॥२३॥ ❀ ❀ हन्त हन्त यद्यपि तत्र गन्तुं नृजातय एवाधिकारिणो ननु देवादिजातयस्तदपि भक्तिरहितशास्त्रतात्पर्य्यभ्रंशितबुद्धयो नृजातय एव केचिद्वञ्चिता भवन्तीति तान् शोचति। ये इति। हा हन्त भारतभूमौ कदा नृजनुषो भूत्वा वयं कृष्णं भजन्तः क्षणमात्रेणैव वैकुण्ठं प्राप्नुयामेति नोऽस्माभिर्ब्रह्मादिभिरप्यभ्यर्थितां नृगतिं ये प्रपन्नाः प्राप्ताः यत्र यस्यां तत्त्वविषयं ब्रह्मविषयकं धर्म्मसहितं ज्ञानञ्च भवति तदपि भगवत आराधनं न वितरन्ति न कुर्व्वन्ति चेत् ते अमुष्य मायया मोहिताः धर्म्मज्ञानयोरपि भक्तिं विना फलासिद्धेरिति भावः। यद्वा यत्र धर्म्मसहितं ज्ञानं कुर्व्वन्ति न त्वाराधनं ते मोहिताः। यद्वा भगवतः एवाराधनं भगवते न ददति तत्सुखतात्पर्य्यतया न कल्पयन्ति ते सकामभक्ता अपीति॥२४॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः।

यदित्यनन्तरश्लोकगतं पदमत्र संयोज्यं यस्मिन्वैकुण्ठे मुक्तदोषा सर्वदापास्तसमस्तदोषा यस्या अनुग्रहणे श्रीरुपासकेष्वस्मास्वनुग्रहं करोत्विति सङ्कल्पेनान्येषां ब्रह्मादीनां यत्नः सा रूपिणी मूर्तिमती चरणारविन्दं क्वणयती नूपुरेण शब्दयन्ती श्रीर्लीलाम्बुजेन उपेतहेम्नि उपेतं यथायथं हेम यस्मिन् तस्मिन् हरिसद्मनि हरेर्वेश्मनि सम्मार्जतीव संलक्ष्यते। इवशब्देन संमार्जनाद्यभावः सूचितस्तस्य विरजस्कत्त्वात्॥२१॥ ❀ ❀ यत्र यस्मिन् वैकुण्ठे अङ्ग हे देवाः! उच्छेपितं चुम्बितमित्यमतामन्यत अनेन मुखाद्यङ्गप्रतिबिम्बादिदर्शनेनापि श्रियः भगवत्स्मरणजन्यानन्दातिशयः सूचितः॥२२॥ ❀ ❀ यद्वैकुण्ठं स्मरणमात्रेण अघं भिन्नत्तीति स तथा तस्य हरेः तमःसु तामसयोनिषु॥२३॥ ❀ ❀ अभ्यर्थितां प्रार्थितां नृगतिं मनुष्यजातिं प्रपन्नाः प्राप्ताः सन्तोऽपि न वितरन्ति न कुर्वन्ति॥२४॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

एवं भगवदीयस्त्रीणां दोषाभावमुक्त्वा लक्ष्म्यास्तत्र गर्वः सम्भवति, तदर्थमेव तन्निर्माणात्, अथापि तस्यास्तद्दोषाभावमाह—श्री रूपिणीति। सर्वस्मिन्नेव जगति विद्यमानलक्ष्म्याः सा देवता, अतो रूपिणीत्युच्यते। ब्रह्मानन्दस्य नीरूपस्य रूपं सञ्जातमित्यलौकिकार्थं वा रूपवती सा निरूप्यते। यद्यपि सौन्दर्यवदाभरणादिकमप्यभिमानहेतुरस्ति, तथापि नाऽभिमान इति वक्तुं क्वणयतीत्युक्तम्। चरणाविन्दं नूपुरशिञ्जितैः क्वणयतीं सशब्दं कुर्वती। रूपित्वम्, चरणक्वणनम्, लीलाम्बुजं च तस्याः सर्वेषां वेद्यमिति नान्यद्वर्णितम्। रूपवत्त्वं प्रतिमाया अपि भवतीति क्वणनमधिकं निरूपितम्। लीलाम्बुजेनाऽप्युपलक्षिता स्त्र्यन्तरव्यावृत्त्यर्थम्, यतः सैव पद्मकरा भवति। मुक्तो दोषो यया, स्थिरा। लोके आधिभौतिक्याश्चाञ्चल्यं दोषः। लीलाम्बुजयुक्तेन प्रसारितहस्तेनोपलक्षिता वा। हरिसद्मनीति। तत्र सर्वेषां सहजदुःखाभावः। दुःखाभावपूर्वकविषये सत्यवश्यं गर्वो भवत्येव, तथापि तत्र संमार्जतीव संलक्ष्यते। ननूचितमेव गृहिण्या गृहसंमार्जनमिति, तन्निवृत्त्यर्थं तस्याः प्रतिबिम्ब एव तथा दृश्यत इति ज्ञापनार्थं गृहं विशिनष्टि—स्फटिककुड्य उपेतहेम्नीति। एकस्फटिकत्वे शोभा न स्यादिति बहवः स्फटिका वक्तव्याः। तत्र योजकद्रव्यान्तरसंबन्धे पुना रजःसंबन्धः स्यात्, अत उपेतं हेम सन्धिषु यत्रेति। प्रतिबिम्बाधिक्यार्थं वा। अतस्तत्र रजःसंबन्धाभावेऽपि सैव निरभिमाना तिष्ठतीति तथोक्तम्। सर्वस्याऽपि वैकुण्ठस्याऽतिशोभायुक्तत्वात् लक्ष्म्यैव शोभा क्रियत इति तथोत्प्रेक्षणम्। तत्रत्यानां न लक्ष्मीपरत्वं वा, तेन तथोत्प्रेक्षा। अनेन लक्ष्म्याः, अन्येषामपि तत्कृतो दोषो नास्तीत्युक्तम्। आदराभावस्त्वत्यलौकिक इति ज्ञापयितुमाह—यदनुग्रहणेऽन्ययत्न इति। यस्या अनुग्रहणेऽनुग्रहार्थमन्येषां ब्रह्मादीनां यत्नः॥२१॥ ❀ ❀ एवमाध्यात्मिक्या गर्वाभावरूपं दोषाभावमुक्त्वा आधिदैविक्या मानाभिमाने न स्त इत्याह—वापीष्विति। निजवने लक्ष्मीवने, तुलसीभिः

साधनैः, वापीष्वीशमभ्यर्चती स्वक्रं भगवतोच्छेपितमित्यमंस्त । सा हि भगवद्भजनं कुर्वाणा, भजनस्य स्वस्य भगवच्चुम्बनमेव महाफलत्वेन ज्ञातवती। तस्याः कथमभिमानः स्यात्? तुलसीभिश्च पूजयतीति न सापत्न्यादिभावः। अवस्थास्मारकत्वेन वापीदास्योरुपयोगः। कदाचिदेवं भानव्यावृत्त्यर्थं वापीष्विति बहुवचनम्। प्रवालास्तटे यासामिति प्रतिबिम्बस्फुटता। विद्रुमास्तटेषु यासाम्, तटच्छायाया मालिन्याभावाय। अमलमिति नैर्मल्यं मुख्यं प्रतिबिम्बे हेतुः, अमृतजलत्वं च; लवणजले विवर्णप्रतीतेः। जले च पूजार्थं ध्यातो भगवान् प्रेष्याप्रतिबिम्बे स्फुरितः। सकचग्रहचुम्बने ऊर्ध्वं मुखं भवति। एतदेव महापुरुषार्थ इति ज्ञातवती। प्रेष्यान्विर्तेति शङ्काभावार्थं च। निजवन इति भगवदागमनाभावाय। यत्र तस्या एतावदेव मनोरथं सिद्धम्, तत्र कथं गर्वादिभावः। स्वलकमिति कचग्रहणार्थं वचनम्। ऊर्ध्वनासिकता तदैव भवति। उपविष्टायास्तु तावदेव, यत इयमभ्यर्चती। यस्य वैकुण्ठस्य श्रीः। तुलसीभिरिति बहुवचनं लक्ष्या[1]दिपूजाद्युपलक्षकम्। ईशमिति पूजायामपि पतित्वेन नाऽवहेला। अभितोऽङ्गादिसहितपूजनं महाफलत्वाय। चुम्बनमात्रेणैव कृतार्थताज्ञानं परमभक्तत्वबोधकम्, आत्मसमर्पणं तु जातमिति। उच्छेपितममंस्तेति क्रियाविरतिरपि सूच्यते, साक्षात्फले सम्भवति किमित्येवं क्रियत इति ॥ २२ ॥ ❀ ❀ एवं सर्वदोषाभावमुक्त्वा दोषवतां तत्र गमनमेव नाऽस्तीत्याह—यन्न व्रजन्तीति। अनेन संस्काररूपा अपि दोषास्तत्र न सन्तीति समर्थितम्। यद्वैकुण्ठं ते न व्रजन्ति, ये अघभिदो रचनानुवादादन्यविषयाः कथाः शृण्वन्ति। अन्यविषयककथाश्रवणं वैकुण्ठगमने साधने सत्यपि प्रतिबन्धकम्, अन्यथा साधनाभावादेव न गच्छेयुः, किमेतत्कथनेन। अघं भिनत्तीत्यघभित् भगवान्, तस्य पापनाशकत्वं सहजम्। तस्य रचना चरित्रम्। चरित्रस्य स्वातन्त्र्यायाऽसमासः। रचनाया अनुवादः श्रवणानुसारेण कीर्तनम्, कृतानुकीर्तनं वा, न तूत्प्रेक्षासिद्धं काव्यवत्। तस्मादन्यविषयाः कथा इति केनाऽपि प्रकारेण भगवत्संबन्धरहिताः, भगवद्विरुद्धदैत्यादिकथा वा। तासाममेलनादन्यत्वम्। अत एव ताः कुकथाः। तेषां धर्माणां दोषत्वात् दैत्यानां पराक्रमोऽपि ब्रह्महत्यारूपो भवति। ननु भगवत्कथाया अपि श्रुतत्वात् कथं तासामेव फलम्? तत्राऽऽह—मतिघ्नीरिति। पूर्वसिद्धा भगवत्कथा मतिं नाशयन्त्येव, यदि श्रुता भवेयुः, विषवत्। किञ्च, न तासां केवलं प्रतिबन्धकत्वम्, किन्तु स्वतन्त्रतया अनिष्टसाधकत्वं चेत्याह—यास्तु श्रुता इति। पुण्ये विद्यमाने तेषां श्रवणमेव न सम्भवतीति हतभगैरित्युक्तम्। भाग्यं सुखानुभवहेतुरदृष्टम्, तद्यदा केनाऽपि निमित्तेन नश्यति, तदा कुकथाश्रवणे मतिरुत्पद्यते। ननु तेषां विवेकधैर्यादेर्विद्यमानत्वात् पश्चाद्भगवत्कथां श्रोष्यन्तीत्याशङ्क्याऽऽह—आत्तसारा इति। नराणामल्पसारत्वात् तदपि कुकथाभिर्गृह्यते, तदा सत्सामग्र्या गतत्वात् तानशरणेषु तमःसु दैत्यस्थानेषु दूरादेव प्रक्षिपन्ति। हन्तेति खेदे। महता कष्टेन श्रुताः पश्चाद्घातुका जाता इति। तांस्तानिति वीप्सा। न कोऽपि तादृशो निस्तरतीति ज्ञापितम्। श्रवणे संपन्न एव, मननाद्यपेक्षापि नाऽस्ति। तदैव क्षिपन्तीति न मुक्तिवदेकः सहायोऽपेक्ष्यते। तेषां च स्थितौ मध्ये को वेद किं भवेदिति। तादृशानां बहुत्वसम्भवाद्बहुवचनेन वीप्सा ॥ २३ ॥ ❀ ❀ एवं तामसानां दोषवतां तत्रागमनपूर्वकं तमःप्रवेशमुक्त्वा राजसानामुदूर्ध्वाधोगतिरहितानां मध्ये परिभ्रमणेन क्लेशं दृष्ट्वा शोचन्नाह—येऽभ्यर्थितामपीति। ये नृगतिं प्रपन्ना भगवत आराधनं न वितरन्ति, ते निश्चयेन अमुष्य मायया मोहिताः। नृगतिं मनुष्यत्वम्। तस्या दुर्लभत्वमाह—नोऽभ्यर्थितामिति। ब्रह्मादिभिरपि नृगतिः प्रार्थ्यते, सर्वस्याऽपि प्रकृतिरूपत्वात्। यथा कनकात्सर्वमेव कुण्डलादिकं भवति, न तु कुण्डलात्। अत एव ब्रह्मादीनामपि नृगतिः प्रार्थ्या। न इति षष्ठी संबन्धमात्रविवक्षया, नृगतेर्वैलक्षण्यप्रतिपादनार्था। या नृगतिर्ब्रह्मत्वं संपादितवती, नाऽऽसुरीति यावत्। षष्ठ्या सूचितं विशेषमाह—ज्ञानं च तत्त्वविषयमिति। यत्र नृगतौ तत्त्वविषयं ज्ञानं तत्त्वज्ञानं भवति। ब्रह्मज्ञानं सुलभम्, तद्भावापन्नानां प्रापञ्चिकपदार्थानां वैदिकानां वा ज्ञानं दुर्लभम्। तत्त्वविषयमिति विषयपदं तत्त्वेन ज्ञानं वारयति। तदा बाधितं स्वरूपमेव ज्ञातं स्यात्। तद्दैत्यज्ञानेऽपि तुल्यम्। चकारात्स्वरूपज्ञानम्। सहधर्मेति धर्मज्ञानसहितम्। एवमपि सति भगवत आराधनाभावो मायाकार्य एव। वितरणं नाम मर्यादाव्यतिरेकेण दानम्, तथा सर्वेन्द्रियैः सर्वथा सर्वदा भगवद्भजनम्, न तु स्मार्तवत् पूजामात्रं सकृदाराधनं वा। मायामोहः शास्त्रेण निवर्तयितुं शक्यत इति दृष्टेऽपि शास्त्रे यदि वितरणम्, तन्मायामोहकार्यं न भवतीत्याशङ्क्याऽऽह—विततया। नन्विति कोमलसंबोधनेन नात्रान्यथाकथनं शङ्कनीयमिति ज्ञापितम्। सा हि वितता शास्त्रेऽप्यन्यथाबुद्धिं संपादयति। साऽपि मायाविन एव, सृष्ट्यर्थं मोहाभावात् ॥ २४ ॥

## श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

श्रीरित्यत्र। क्वणयतीत्युक्तमिति। एतेनाऽऽभरणवत्त्वमुक्तम्। इति तथोक्तमिति। एतद्बोधयितुं दासीकार्यकर्तृत्वमुक्तम्। ननु प्रकारान्तरेणाऽपि शक्यवचनत्वात् किमित्येवं कथनमित्यत आहुः—सर्वस्येत्यादि। तथोत्प्रेक्षणमिति। सम्मार्जनकर्तृत्वेनोत्प्रेक्षणम्। लक्ष्म्या शोभाकरणोक्तौ आगन्तुकशोभाभावोऽप्यायातीत्यरुच्या पक्षान्तरमाहुः—तत्रत्यानामित्यादि। लक्ष्मीपरत्वमिति लक्ष्मीनियम्यत्वम्। तत्कृत इति। लक्ष्मीकृतः। तथा चैतावद्बोधनाय तथा कथनमित्यर्थः। नन्वेवं सति 'न मन्यते स्वयमनुवर्ततीं भवान्' इत्यादिवाक्योक्त आदराभावो न युज्यत इत्यत आहुः—आदरेत्यादि। अत्यलौकिक इति। वैराग्यपरमकाष्ठाभिज्ञापकः। वापीष्वित्यत्र।

---

१. लक्ष्म्यादि, क. घ।

भजनस्य स्वस्य भगवच्चुम्बनमिति । स्वकृतभजनस्य भगवत्कृतस्वमुखचुम्बनम् । प्रेष्यान्वयवाप्योरवस्थासारकत्वं विवृण्वन्ति—जले चेत्यादि । यच्छ्रीरित्यत्र यदिति भिन्नं पदमित्यभिप्रेत्याहुः—यत इत्यादि । यच्छ्रीरित्येकं पदमित्यभिप्रेत्याहुः—यस्येत्यादि । इदमेवाऽऽधिदैविकत्वबोधकम् । क्रियत इति । मनोरथः क्रियते ॥ २२ ॥ ❀ ❀ यत्रेत्यत्र । संस्काररूपा इति । वासनारूपाः । तदभावं समर्थयन्ति—अन्यविषयेत्यादि । केनाऽपीति । साक्षाद्वा, भगवदीयकथात्वेन वा । एक इति । कोऽपीत्यर्थः । बहुवचनेनेति । 'तमस्सु' इति बहुवचनेन ॥ २३ ॥ ❀ ❀ येऽभ्यर्थितामित्यत्र । तद्दैत्यज्ञानेपि तुल्यमिति । तत्वत्त्वेन ज्ञानम् । सापि मायाविन एवेति तादृशी अन्यथाबुद्धिजनिका माया मायाविनोऽसुरमोहकस्यैव, न तु सृष्ट्याद्यर्थं मोहकस्य ॥ २४ ॥

## श्रीगिरिधरकृता बालप्रबोधिनी

श्रीर्लक्ष्मीरूपिणी मनोहरमूर्तिधारिणी सती यस्मिँल्लोके श्रीहरेः सद्मनि सम्मार्जतीव सम्मार्जनं कुर्वतीव सँल्लक्ष्यते दृश्यते इत्यन्वयः । भवतु तथा किमाश्चर्यमित्यत आह—यदनुग्रहणे इति । यस्याः श्रियः अनुग्रहणे श्रीरस्मास्वनुग्रहं करोत्विति त्येतदर्थमन्येषां ब्रह्मादीनां यत्नः साधनप्रयासो भवतीत्यर्थः । तत्रापि भूषणादिसम्पत्त्यतिशयं सूचयन्विशिनष्टि—चरणारविन्दं क्वणयतीति, नूपुरेण शब्दयन्तीत्यर्थः । ननु वैकुण्ठस्य प्राकृतत्वाभावेन तत्र रजसोऽप्यसम्भवात्कथं तत्र मार्जनं सम्भवतीति चेत्सत्यम् , अत एवेवशब्दप्रयोगः, यद्यपि तत्र रजोऽभावान्मार्जनं न सम्भवति तथापि स्वर्णपट्टिकालाञ्छितस्फटिकमयमिति भागेषु लीलाम्बुजं भ्रामयन्ती प्रतिबिम्बिता सती विनयभक्तिभ्यां तथोत्प्रेक्ष्यते इति सूचयन् श्रियं वेश्म च विशिनष्टि—लीलेति । लीलार्थमम्बुजं यस्मिंस्तेन मुक्तेन प्रसारितेन दोषा बाहुना श्रीः सम्मार्जतीव लक्ष्यते इत्यन्वयः । स्फटिकमयानि कुड्यानि यस्मिंस्तस्मिन्नित्यर्थः । मध्ये मध्ये च शोभार्थमुपेतं संयुक्तं हेम यस्मिंस्तस्मिन्नित्यर्थः ॥ २१ ॥ ❀ ❀ एवमपि लक्ष्म्याः स्वामिनीत्वाभिमानेन भगवत्तुल्यताभिमानः स्यादित्याशङ्क्य सापि स्वसौन्दर्यादिसौभाग्यसुखं भगवदधीनमेव मन्यते इत्याह—वापीष्विति । विश्वासार्थं सम्बोधयति—अङ्गेति । हे देवाः यत् यस्मिन् लोके प्रेष्याभिः स्वपरिचारिकाभिरन्विता श्रीर्लक्ष्मीर्निजवने स्वविहारवाटिकायां तुलसीभिरीशं भगवन्तमभ्यर्चती पूजयन्ती वापीषु स्ववक्त्रं मुखमीक्ष्य भगवता उच्छेषितं चुम्बितमित्यमत अमन्यतेत्यन्वयः । कथमेवमभिमान इत्यपेक्षायां सौन्दर्यातिशयदर्शनेनेत्याशयेन मुखं विशिनष्टि—स्वलकमिति । शोभनाः अलकाः केशाः यस्मिंस्तत् , उन्नसमिति, उत्कृष्टा नासा, यस्मिंस्तत् । वापीषु स्वमुखदर्शनं कथमित्याकांक्षायामाह—अमलेति, अमलाः स्वच्छाः अमृतवत् स्वादविशिष्टाः आपो यासां तासु । अमलत्वे हेतुमाह—विद्रुमतटास्विति, विद्रुममणिमयानि तटानि यासां तास्वित्यर्थः ॥ २२ ॥ ❀ ❀ एवं भक्त्या वैकुण्ठगतानां सर्वेषां भगवत्परत्वमुक्त्वा तद्विमुखानां दुराचाराणां तद्गमनाभावमाह—यदिति । ये कुकथाः शृण्वन्ति ते यत् वैकुण्ठं न व्रजन्ति । का वा ताः कुकथा इत्यपेक्षायामाह—अघेति । अघं भिनत्तीत्यघभित् श्रोतॄणां सर्वपापनिवर्तको भगवांस्तस्य रचना सृष्ट्यादिलीला तस्या अनुवादादन्यविषयाः अर्थकामादिवार्ता इत्यर्थः । तच्छ्रवणं न केवलं वैकुण्ठगमनप्रतिबन्धकं किन्तु नरकपाताद्यनर्थहेतुरपीति प्रसङ्गादाह—यास्त्विति । यास्तु कुकथा नृभिः श्रुताः सत्यस्तांस्तान् श्रोतॄन् अशरणेषु निराश्रयेषु तमस्सु नरकेषु क्षिपन्ति । ननु सुकृतवतां कथं तच्छ्रवणे प्रवृत्तिरित्याशङ्क्याह—हतभगैरिति । सुकृतं यदा केनचिद्धेतुना विनष्टं भवति तदैव तच्छ्रवणे प्रवृत्तिर्नान्यथेति भावः । तासां कथं श्रवणमात्रेण नरकहेतुत्वमित्यत आह—मतिघ्नीरिति, पूर्वसिद्धामपि सदाचारविषयां मतिं घ्नन्ति विनाशयन्तीति ताः । द्वितीया प्रथमार्थे । एवं मतिभ्रंशाद् दुराचारैः श्रवणजन्य दुरदृष्टैश्च नरके पतन्तीति भावः । तथापि विवेकधैर्यादीनां सत्त्वात्कथं दुराचारे प्रवृत्तिरित्याशङ्क्याह—आत्तसारा इति, आत्तः स्वीकृतः दूरीकृतः सारः श्रोतॄणां विवेकादिगुणो याभिस्ताः, तच्छ्रवणे विवेकादयो न तिष्ठन्तीत्यर्थः । हन्तेति पितामहत्वात्स्वखेदं सूचयति ॥२३॥ ❀ ❀ प्रसङ्गाद्भगवद्विमुखान् शोचति—य इति । नोऽस्माभिर्ब्रह्मादिभिरप्यर्थितां नृगतिं मनुष्यजातिं प्रपन्नाः प्राप्ताः सन्तोऽपि ये भगवत आराधनं न वितरन्ति न कुर्वन्ति ते अमुष्य भगवतो विततया विस्तृतया मायया सम्मोहिता एव । बतेति खेदेऽवधारणे वा । प्रार्थनायां हेतुमाह—ज्ञानमिति । यत्र यस्यां नृगतौ भगवदाराधनात् तत्प्रसादेन परमानन्दजनकवैकुण्ठप्राप्तिलक्षणमोक्षहेतुभूतं सद्धर्मे 'धर्मस्य ह्यापवर्ग्यस्य'इत्युक्तरीत्या धर्मपूर्वकं तत्त्वविषयज्ञानं भवतीत्यर्थः ॥ २४ ॥

## हिन्दी अनुवाद

परम सौन्दर्यशालिनी लक्ष्मीजी, जिनकी कृपा प्राप्त करनेके लिये देवगण भी यत्नशील रहते हैं, श्रीहरिके भवनमें चञ्चलतारूप दोषको त्यागकर रहती हैं । जिस समय अपने चरण-कमलोंके नूपुरोंकी झनकार करती हुई वे अपना लीलाकमल घुमाती हैं, उस समय उस कनकभवनकी स्फटिकमय दीवारोंमें उनका प्रतिबिम्ब पड़नेसे ऐसा जान पड़ता है मानो वे उन्हें बुहार रही हों ॥ २१ ॥ ❀ ❀ प्यारे देवताओ ! जिस समय दासियोंको साथ लिये वे अपने क्रीडावनमें तुलसीदलद्वारा भगवान्‌का पूजन करती हैं, तब वहाँके निर्मल जलसे भरे हुए सरोवरोंमें, जिनमें मूँगेके घाट बने हुए हैं, अपना सुन्दर अलकावली और

उन्नत नासिकासे सुशोभित मुखारविन्द देखकर 'यह भगवान्का चुम्बन किया हुआ है' यों जानकर उसे बड़ा सौभाग्यशाली समझती हैं ॥ २२ ॥ ❀ ❀ जो लोग भगवान्की पापापहारिणी लीलाकथाओंको छोड़कर बुद्धिको नष्ट करनेवाली अर्थ-कामसम्बन्धिनी अन्य निन्दित कथाएँ सुनते हैं, वे उस वैकुण्ठलोकमें नहीं जा सकते। हाय! जब वे अभागे लोग इन सारहीन बातोंको सुनते हैं, तब ये उनके पुण्योंको नष्टकर उन्हें आश्रयहीन घोर नरकमें डाल देती हैं ॥ २३ ॥ ❀ ❀ अहा! इस मनुष्ययोनिकी बड़ी महिमा है, हम देवतालोग भी इसकी चाह करते हैं। इसीमें तत्त्वज्ञान और धर्मकी भी प्राप्ति हो सकती है। इसे पाकर भी जो लोग भगवान्की आराधना नहीं करते, वे वास्तवमें उनकी सर्वत्र फैली हुई मायासे ही मोहित हैं ॥ २४ ॥

यच्च व्रजन्त्यनिमिषामृषभानुवृत्त्या दूरेयमा ह्युपरि नः स्पृहणीयशीलाः ।
भर्तुर्मिथः सुयशसः कथनानुरागवैक्लव्यबाष्पकलया पुलकीकृताङ्गाः ॥ २५ ॥
तद्विश्वगुर्वधिकृतं भुवनैकवन्द्यं दिव्यं विचित्रविबुधाग्र्यविमानशोचिः ।
आपुः परां मुदमपूर्वमुपेत्य योगमायाबलेन मुनयस्तदथो विकुण्ठम् ॥ २६ ॥
तस्मिन्नतीत्य मुनयः षडसज्जमानाः कक्षाः समानवयसावथ सप्तमायाम् ।
देवावचक्षत गृहीतगदौ परार्ध्यकेयूरकुण्डलकिरीटविटङ्कवेषौ ॥ २७ ॥
मत्तद्विरेफवनमालिकया निवीतौ विन्यस्तयासितचतुष्टयबाहुमध्ये ।
वक्त्रं भ्रुवा कुटिलया स्फुटनिर्गमाभ्यां रक्तेक्षणेन च मनाग्रभसं दधानौ ॥ २८ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

पुनः कथंभूतम्? यच्च न उपरिस्थितं व्रजंति। के अनिमिषां देवानामृषभः श्रेष्ठो हरिस्तस्यानुवृत्त्या दूरे यमा येषाम्। यद्वा। दूरीकृतयमनियमाः पाठांतरे दूरीकृताहंकारा इत्यर्थः। स्पृहणीयं करुणादि शीलं येषाम्। किं च भर्तुर्हरेर्यत्सुयशस्तस्य मिथः कथने योऽनुरागस्तेन वैक्लव्यं वैवश्यं तेन बाष्पकला तया सह पुलकीकृतमंगं येषाम्। यद्वा नः उपरीति व्रजतां विशेषणम्। निरहंकारत्वादस्मत्तोऽपि येऽधिकास्ते यद्व्रजंतीत्यर्थः ॥ २५ ॥ ❀ ❀ तत्तदा तदपूर्वं विकुंठमथो अनंतरमुपेत्य मुनयः परामुत्कृष्टां मुदमापुः। अपूर्वत्वे हेतवः विश्वगुरुणा हरिणाऽधिकृतमधिष्ठितम्। भुवनानामेकमेव वंद्यम्। दिव्यमलौकिकम्। विचित्राणि विबुधाग्र्याणां विमानानि तेषां शोचिर्दीप्तिर्यस्मिन्। योगमायाबलेनेति अष्टांगयोगप्रभावेणोपेत्य परमेश्वरे तु योगमायेति चिच्छ-क्तिविलास इति द्रष्टव्यम् ॥ २६ ॥ ❀ ❀ तस्मिन्वैकुंठे षट् कक्षाः प्राकारद्वाराणि असज्जमानाः भगवद्दर्शनोत्कंठया तत्तद-द्भुतदर्शन आसक्तिमकुर्वाणाः द्वारपालौ देवावपश्यन्। समानं वयो ययोः गृहीते गदे याभ्याम्। परार्ध्यैः केयूरादिभिर्विटंकः सुंदरो वेषो ययोः ॥ २७ ॥ ❀ ❀ तावेव वर्णयति मत्ता द्विरेफा यस्यां तया वनमालया निवीतौ कंठलंबिन्या अलंकृतौ असिता नीलाश्चतुष्टयं चतुःसंख्याका बाहवस्तेषां मध्ये विन्यस्तया वक्त्रं च मनाग्रभसं किंचित्क्षुब्धं दधानौ स्फुटावुत्फुल्लौ निर्गमौ श्वासमार्गौ नासापुटे ताभ्याम् ॥ २८ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

निश्चयेन मिषंति पश्यंतीति निमिषो मनुष्याः 'मिष दर्शने' ऽस्मात्क्विपि नञ्समासे च षष्ठ्या बहुवचनम्। देवानां श्रेष्ठो हरिस्तस्य निरंतरसेवया यमो यमराजः। ननु विष्णुभक्तदर्शनार्थं यमोप्यायात्येव तच्च बृहन्नारदीये प्रसिद्धं भगीरथयमसं-वादेऽत आह यद्वेति। यमा अहिंसादयस्ते च नियमादीनामप्युपलक्षकाः पाठांतरे दूरेऽहम इति पाठे। इत्यर्थ इति। निवृत्ताहंकारा अत्राप्यहंपदं ममत्वाद्युपलक्षकमिति भावः। ननु ब्रह्मलोकादुपरि त्वंडकटाहावरणान्यपि तिष्ठन्ति किं तत्र व्रजंतीत्याशंकानिवृत्त्यर्थ-माह—यद्वेति। इत्यर्थ इति। ममापि ते वंद्या इति भावः। किञ्च। कचित्पुराणादावसुराणामपि कदाचित्तत्र क्षणिकगमनादिकं श्रूयते तत्तु तत्रत्यचिद्विभूतिसुखानुभवाभावाद्गमनमप्यगमनायमानमेव यथा विविधसौरभ्यादिगुणयुक्तेषु मणिमयराजसदनेषु व्याघ्रभल्लूकादीनां प्रवेशः स्वपुरस्थपरिजनवृन्दान्येव कौतुकविशेषवशाद्दर्शयितुमिच्छो राज्ञ एवाज्ञया भवति तथैव स्वीयाप्राकृत-नित्यधामनि वासिनः स्वजनान् कौतुकवशाद्दर्शयितुं प्राकृतपदार्थान्कदाचित् घोरसत्त्वानसुरान् कदाचित्सात्त्विकान्भृग्वादीन् कदाचित्त्रिगुणातिक्रमिणः सनकादींश्च स्वेच्छयैव भगवानानयति पुनः शीघ्रमेव तदयोग्यत्वात्ततो निःसारयति च स्वैकांतिक-भक्तिसिद्धांस्तु स्वपार्षदद्वारा विमानेन वैकुंठमानयति तत्र सदा निवासयति स्वधाममाधुर्यं स्वसेवामाधुर्यं स्वलीलादिमाधुर्यं च तानेवास्वादयतीति विवेचनीयम् ॥ २५ ॥ ❀ ❀ तत्र तत्र सनकादीनां गमनं वर्णयति यदा भगवत इच्छा जाता तदेत्यर्थः। अपूर्वमदृष्टपूर्वम्। अनंतरमेव भगवदिच्छासमकालमेव। उत्कृष्टां तदीयब्रह्मानंदजमुदोऽप्यधिकां विश्वगुर्वधिष्ठितत्वान्नात्र

मायाशक्तेरधिकारः कृपया स्वीयभक्तिमुपदेष्टुमेव मुनीनप्यानिनायेति विश्वगुरुपदव्यंग्यं वस्त्विति। संदर्भचक्रवर्तिनौ तु—योगमायाया भगवदिच्छानुवर्त्तिन्या भगवच्छक्तेर्बलेन न तु स्वबलेन "मनीषितानुभावोऽयं मम लोकावलोकनाम्" इति भगवदुक्तन्यायेनेत्याहतुः॥ २६॥ ॐ ॐ यद्वा जन्मतो ब्रह्मानंदमग्नत्वात् तत्र तत्र द्वारप्राकारादौ सौरभ्यसौगंध्यसौंदर्ययुक्तेषु विषयबुद्धिमकुर्वाणाः देवौ जयविजयौ "कक्षा बृहतिकायां स्यात्कांच्यां मध्येभबन्धने। हर्म्यादीनां प्रकोष्ठे च" इति मेदिनी। 'प्रकोष्ठो मणिबंधस्य कूर्परस्यांतरेऽपि स्यात्' इति च। "टंकः पाषाणभिच्छस्त्रे विटंकः सुंदरे स्मृतः। भूषितेऽपि विटंकः स्यात्" इति स्वामी॥ २७॥ ॐ ॐ "निवीतं कंठलंबितम्" इत्यमरः॥ २८॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या।

पूर्वार्थे निषिद्धानाचरणमात्रेण यमो दूरे स्यात् तत्र मोक्षस्पर्द्धिन्या हर्य्यनुवृत्तेरनुपयोगात् इत्यरुचौ यद्वेति पाठान्तरे। दूरेऽहमा इति पाठे पूर्वार्थे रमावैकुण्ठस्य वैकुण्ठः कल्पितो येनेत्यष्टमानुसाराद्ब्रह्मलोकादुपरिस्थितत्वासम्भवात् माहात्म्येन तथात्वं चेत्तस्य मानान्तरेण प्राप्तत्वादनुवादमात्रता इत्यरुचौ यद्वेति। अस्मिन्पक्षेऽप्यर्थे चकारः। अस्मत्तोऽपीति व्याख्यानात्॥ २५॥ ॐ ॐ अष्टाङ्गयोगप्रभावेणेति अष्टाङ्गयोगश्चायं श्रीकपिलोक्त्यनुसारेण भगवद्ध्यानमयो ज्ञेयः 'मनीषितानुभावोऽयं मम लोकाऽवलोकनमि'ति श्रीभगवदुक्तेः इति द्रष्टव्यमित्यनेन भगवति योगमाया सर्वत्र स्वरूपशक्तिविलास एव व्याख्येयः नतु त्रिगुणात्मिका। न यत्र मायेति तत्र तन्निषेधादिति परमतं प्रत्याख्यातम्॥ २६॥ ॐ ॐ तस्मिन्निति युग्मकम्। सप्तमायां कक्षायाम्॥ २७॥ २८॥

### श्रीमद्वीरराघवव्याख्या

एवं भगवत्कथादिषु विमुखानां तल्लोकाप्राप्तिमभिधाय तांश्चानुशोच्य तत्कथाश्रवणप्रवणचित्तैस्तल्लोकस्य प्राप्यत्वमाह। यच्चेति। यद्वैकुण्ठनिलयमनिमिषां देवानामृषभः श्रेष्ठो भगवान् तस्यानुवृत्त्या भक्त्या व्रजन्ति कथम्भूता व्रजन्ति दूरे यमाद्युपचितसत्स्पृहणीयशीलाः दूरे चिरकालेन यमाद्युचितश्लाघ्यशीलाः दूरे यमाद्युपरि नः स्पृहणीयशीला इत्यपि पाठः। तत्र उपरिस्थितं यद् वैकुण्ठनिलयं व्रजन्ति कथम्भूताः नः अस्माभिरपि स्पृहणीयं श्लाघनीयं शीलं येषां ते दूरे चिरकालेन यमः यमोपलक्षितः शमदमादिगुणो येषां ते। किञ्च भर्तुर्हरेः सुयशसः मिथः परस्परं कथनेन योऽनुरागस्तेन यद्वक्तव्यमधाष्टर्यं तेन या वाष्पकला तया पुलकीकृतं उदञ्चितरोम अङ्गं शरीरं येषां ते व्रजन्तीत्यर्थः॥२५॥ ॐ ॐ एवं वैकुण्ठनिलयमनुवर्ण्याथानान्तरकथां प्रस्तौति। तदिति मुनयः सनकादयः तदुक्तविधं वैकुण्ठनिलयं योगमायाबलेनाणिमाद्यैश्वर्यबलेन उपेत्य प्राप्याथ कार्त्स्न्येन परामुत्कृष्टां मुदं सन्तोषमापुः प्रापुः। कथम्भूतं वैकुण्ठमपूर्वमदृष्टपूर्वं विबुधाग्र्या देवश्रेष्ठास्तेषां विमानैः शोचिः प्रकाशो यस्मिन्। विचित्रमद्भुतं दिव्यममानुषं भुवनैः एकं प्राधान्येन वन्द्यं बहुमन्तव्यं तत्र हेतुः विश्वगुरुणा भगवताधिकृतमधिष्ठितम्॥२६॥ ॐ ॐ तस्मिन् वैकुण्ठे षट् कक्षाः प्राकारद्वाराणि अतीत्यातिक्रम्य असज्जमानाः भगवद्दिदृक्षाश्रद्धया तत्राद्भुतदर्शने आसक्तिमकुर्वाणा मुनयः सनकादयः अथानन्तरं सप्तमायां कक्षायां देवावचक्षत दृष्टवन्तः। कथम्भूतौ देवौ समानं वयो ययोस्तौ गृहीते गदे याभ्यां तौ। परार्घ्यैः श्रेष्ठैः केयूरादिभिः विटङ्कौ रुचिरः वेषो ययोस्तौ। देवौ इति॥ २७॥ ॐ ॐ पुनस्तावेव वर्णयति। असितं नीलं यद्बाहुचतुष्टयं तस्य मध्ये विन्यस्तया मत्ताः द्विरेफाः भ्रमरा यस्यां तया वनमालया निवीतौ वनमालां कण्ठावलम्बिनीं कृतवन्तौ इत्यर्थः। किञ्च कुटिलया भ्रुवा स्फुटौ विकसितौ यौ निर्गमौ श्वासमार्गौ नासापुटे ताभ्यां च रक्तेक्षणौ रक्तनेत्रेण च मनाग्रीषद्रभसमुग्रं यथा भवति तथा वक्त्रं दधानौ देवौ॥ २८॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

सन्तो देवप्रकृतय एव भगवत आराधनं कृत्वा तज्ज्ञानेन यत्र स्थितं हरिं प्राप्नुवन्तीत्याह। यत्रेति। यत्र नोऽस्माकमुपरि स्थितं वैकुण्ठस्थितं हरिं प्रयान्तीत्यन्वयः। ये अनिमिषां देवानामृषभस्य स्वामिनो हरेरनुवृत्त्या निरन्तरसेवया दूरे यमा दूरीकृतयमलोका अत एव सर्वैः स्पृहणीयशीलाः सुयशसो भर्तुर्हरेर्गुणगणानां मिथः कथने योऽनुरागस्तस्मादुत्पन्नं यद्वैक्लव्यं पारवश्यं तन्निमित्तेन जाता या बाष्पकलानन्दाश्रुधारा तया पुलकीकृतान्यङ्गानि शरीरतदवयवा येषां ते तथोक्ताः। सुयशस इति भागवतानां विशेषणं वा वैकुण्ठादप्युपरि शिवलोक इति केचिदाचक्षते तस्याप्रस्तुतत्वादनुपपन्नत्वादिति हेतुद्वयं हीत्यनेन सूचयति॥ २५॥ ॐ ॐ प्रकृतमनुसरति। तद्विश्वगुर्वधिकृतमिति। अथ मुनयः परां मुदमापुरित्यन्वयः। भगवत्समाधिना नित्यतृप्तानां मुनीनां कादाचित्कमोदप्राप्तौ किङ्कारणमुच्यते तत् विकुण्ठस्थानमुपेत्य कीदृशम्। "उतामृतत्वस्येशानो यदन्नेनातिरोहति" इत्यादिना यो मुक्तामुक्तप्रपञ्चाधारत्वेन श्रुतः स चासौ विश्वगुरुस्तेन मुक्तामुक्तप्रपञ्चगुरुणा हरिणाधिकृतं विशेषतः स्वामित्वेनाभिमतं भुवनशब्देन तत्स्थाः पुरुषा लक्ष्यन्ते तैः शिवलोकोत्तमतया वन्द्यं दिव्यमप्राकृतं विचित्राणि नानावर्णानि विबुधाग्र्याणां विमानानि शोचयति दीपयति इति विचित्रविबुधाग्र्यविमानशोचिः शुचि दीप्ताविति धातुः अपूर्वं पूर्वमदृष्टं योगमायाबलेन भगवदुपासनालब्धज्ञानबलेन प्राप्येत्यर्थः॥ २६॥ ॐ ॐ मुदमुपेत्य बहिरेवावतिष्ठन्त उतान्तराविशन् आविश्य च किञ्चक्रुरिति तत्राह। यस्मि-

निति । तस्मिन् वैकुण्ठे षट् कक्ष्याः गोपुरद्वाराण्यतीत्य तत्रासज्जमाना अनिवार्यमाणाः सप्तमायां कक्षायां स्थितौ देवावचक्षत- पश्यन्नित्यन्वयः । केयूरादिभिर्विटङ्कोऽलङ्कृतो वेषो ययोस्तौ तथोक्तौ ॥ २७ ॥ ॐ ॐ तयोर्भावं वर्णयति । मत्तेति । असितानां श्यामानां बाहूनां चतुष्टयस्य मध्ये वक्षसि विन्यस्तया मत्ता द्विरेफा भृङ्गा यस्यां सा मत्तद्विरेफा वनमालिका वनमाला तया निवीतौ परिवृतौ कुटिलया वक्रया वक्रस्थितया भ्रुवा सह स्फुटं निर्गतेन रक्तेक्षणेन रक्तान्तकटाक्षनिरीक्षणेन मनाक् किञ्चिद्रभसं कोपं दधानौ अनुसन्धानं कुर्वन्तौ अन्तः प्रविशतो निर्गच्छतश्च जनान् ज्ञात्वा तिष्ठत इत्यर्थः ॥ २८ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः ।

अनिमिषां कालानधीनानामित्यर्थः ॥ २५ ॥ ॐ ॐ योगमायाबलेन भगवच्छक्तिप्रभावेणैव न तु स्वशक्त्या । मनीषितानुभावोऽयं मम लोकावलोकनमिति श्रीभगवतोक्तत्वात् ॥ २६ ॥ ॐ ॐ तस्मिन्निति युग्मकम् ॥ २७ ॥ २८ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

अथाधिकारिण आह । यन्नेति । अनिमिषामृषभो हरिस्तस्यानुवृत्त्या दूरे यमो येषाम् । यद्वा दूरीकृता यमनियमाः यैः । दूरेऽहमा इति पाठे दूरीकृताहङ्काराः नोऽस्माकमप्युपरिभूताः अधिकाः यतोऽस्माभिः स्पृहणीयमेव नतु प्राप्यं शीलं येषां ते, किं तत् शीलं तत्र तेषां प्रमाणमाह भर्त्तुः प्रभोर्मिथ इति परस्परप्रणयवत्त्वेन कथनेनास्वादविशेषोपलब्धेः क्वचित् पुराणादावसुराणामपि कदाचित् केषांचित् तत्र यत्क्षणिकागमनं श्रूयते तत्तु तत्रत्यचिद्विभूतिसुखानुभवाभावात् गमनमप्यगमनायमानमेव यथा विविधसौरभ्यादिगुणयुक्तेषु मणिमयराजसदनेषु व्याघ्रभल्लूकादीनां प्रवेशः । स्वपुरस्थपरिजनवृन्दान्येव कौतुकविशेषवशात् तांस्तान् दर्शयितुमिच्छो राज्ञ एवाज्ञया भवति तथैव स्वीयाप्राकृतनित्यधामनिवासिनः स्वजनान् कौतुकवशाद्दर्शयितुं प्राकृत- पदार्थान् कदाचित् घोरसत्त्वान् असुरान् सात्त्विकान् भृग्वादीन् कदाचित्त्रिगुणातिक्रमिणः सनकादींश्च स्वेच्छयैव भगवानेवान- यति पुनः शीघ्रमेव तदयोग्यत्वात्ततो निःसारयति च । स्वैकान्तिकभक्तिसिद्धांस्तु स्वपार्षदद्वारा विमानैर्वैकुण्ठमानयति तत्र सदा निवासयति स्वधाममाधुर्य्यं स्वसेवामाधुर्य्यं स्वलीलादिमाधुर्य्यं तानेवास्वादयतीति विवेचनीयम् ॥ २५ ॥ ॐ ॐ अत्र तत्र सनकादीनां गमनं वर्णयति । अथो तद्विकुण्ठं योगमायाया भगवदिच्छानुवर्त्तिन्या भगवच्छक्तेर्बलेन न तु स्वबलेन उपेत्य भगवत्कृपया परां मुदमपूर्व्वं यथा स्यात्तथा आपुः । अत्र परामपूर्व्वमिति पदाभ्यां तदीयब्रह्मानुभवमुदोऽपि सकाशात् वैकुण्ठीयमुद आधिक्यं दर्शितम् । विकुण्ठं कीदृशं तेनैव विश्वगुरुणा हरिणा स्वयमधिकृतमिति नात्र तन्मायाशक्तेरधिकार इत्यर्थः । कृपया स्वीयभक्तिमुपदेष्टुमेव मुनीनप्यानिनायेति विश्वगुरुपदव्यङ्ग्यं वस्तु विचित्राणि विबुधाग्र्याणां विमानानि तेषां शोचिर्यत्र तत् ॥ २६ ॥ ॐ ॐ ततश्च तस्मिन् विकुण्ठे षट् कक्षाः प्राकारद्वाराणि अतिक्रम्य । असज्जमानाः जन्मत एव ब्रह्मानुभवित्वात् । तत्र तत्र द्वारप्राकारादौ । सौरूप्यसौरभ्यसौन्दर्य्यादिषु विषयबुद्ध्या आसक्तिमकुर्व्वाणाः । अथ सप्तम्यां कक्षायां देवौ द्वारपालौ जयविजयावपश्यन् । गृहीतगदौ तत्रापि वक्त्रं मनाग्रभसं किञ्चित् कोपक्षुब्धञ्च दधानौ । केन लक्षणेनेत्यपेक्षायामाह । भ्रुवेत्यादिस्फुटनिर्गमाभ्यामित्यस्य नासाश्वासाभ्यामिति विशेष्यपदमध्याहार्य्यम् ॥ २७ ॥ २८ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः ।

यद्वैकुण्ठं नोऽस्माकं सुमेरूपरि संस्थितानां ब्रह्मादीनामुपरिस्थितमनिमिषानामृषभस्य श्रेष्ठस्य विष्णोः अनुवृत्त्या दूरे यमः संयमिनीपतिः यमयति वशीकरोतीति यमः अहंममाभिमानो वा येषां ते व्रजन्ति ॥ २५ ॥ ॐ ॐ तत्तदा तदुक्तप्रकारं विकुण्ठं विश्वगुरुणा सर्वोपदेष्ट्रा भगवता अधिकृतमधिष्ठितं विचित्राणां विबुधाग्र्यविमानानां शोचिर्दीप्तिर्यस्मिन् तत् अथोऽनन्तरं मुनयः योगः ध्यानयोगः माया वयुनन्तयोर्भक्तिज्ञानयोर्बलेन उपेत्य प्राप्य परामुत्कृष्टां मुदमापुः । भक्तिज्ञानबलेनैव वैकुण्ठप्राप्तिर्नान्यथेति सूचनाय तेषां भगवद्विज्ञानसम्प्रदायप्रवर्तकत्वसूचनाय च योगमायाबलेनेत्युक्तम् ॥ २६ ॥ ॐ ॐ तस्मिन् वैकुण्ठेऽपि असज्जमानाः आसक्तिमकुर्वाणाः । अतिविरक्तस्वभावत्वात् भगवद्ध्यानज्ञानानन्दपूर्णत्वाद्भगवद्दिदृक्षावशाच्च कक्षाः प्राकारद्वाराणि अतीत्य सप्तमायां कक्षायाम् परार्ध्यैः श्रेष्ठैः केयूरादिभिर्विटङ्कः रुचिरो वेषो ययोः तौ देवौ अचक्षत दृष्टवन्तः । कुटिलया भ्रुवा स्फुटौ निर्गमौ श्वासमार्गौ नासापुटे ताभ्याञ्च रक्तेक्षणेन च मनाग् ईषद्रभसं क्षुब्धं वक्रं दधानौ ॥२७॥२८॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

तत्र गमने साधनमाह—यन्न व्रजन्तीति । चकाराद्व्यापिवैकुण्ठम् । यद्वैकुण्ठं हरेरनुवृत्त्या व्रजन्ति । हे अनिमिषामृषभेति इन्द्र- संबोधनम् । तस्य भगवदनुकम्पयैवेन्द्रत्वप्राप्तिः । सर्वदुःखहतु रित्यनुवृत्तौ क्लेशाभावः । विमानदर्शनं भगवदानतिमात्रेणाऽपि भवति, प्राप्तिश्च । स्वतो वैकुण्ठगमनं तु हरेरनुवृत्त्यैव । आनतिरेव वाऽनुवृत्तिः । अन्यार्थं तत्र कीर्तनात् पुनः स्वावसरे कीर्तनम् । तस्यां अनु-

वृत्तेरत्र निदर्शनमाह—दूरेऽयमा इति। अहङ्कारस्तेषां दूरे। हीति भगवद्भजनस्य दोषनिवर्तकत्वात् तदा अहङ्कारलक्षणो दोषो निवर्तत एव अनिवृत्तौ तु भजनं नास्तीत्यवगन्तव्यमिति बोधयति। न उपरि व्रजन्तीति सत्यलोकोपरि स वैकुण्ठलोको वर्तत इति बोधितम्। ये निरन्तरं हरेरनुवृत्तिं कुर्वन्ति, ते शुद्धसात्त्विकस्वभावा भवन्तीति नः स्पृहणीयं शीलं येषाम्, तादृशा भवन्ति, अत एव न उपरि गच्छन्ति। यद्यपि वयमपि हरेरनुवृत्तिं कुर्मः, तथाप्यस्माकं न तदेकस्वभावः, अत एव न दूरेयमाः। अत एव तेषां शीलं स्पृहणीयम्। तेषां परिज्ञानार्थं लक्षणमाह—भर्तुरिति। स ह्यत्रापि परिपालकः, तेन देहादिनिर्वाहचिन्ताऽपि तेषां नास्ति, अन्यथा निर्वाहोऽपि न भवेदिति च। मिथ इति रसाविर्भावार्थमुक्तम्। सुयशस इति विषयोत्कर्षः। लौकिकानामपि यशः कीर्त्यते, यशःकीर्तने धर्मो भवतीति। इदं पुनर्यशो धर्मज्ञानभक्तिजनकत्वात् सुयशो भवति, अत एव कथनेऽनुरागः। कथानुरागेणैव कथयन्ति, न तु निबन्धेन फलान्तरेण वा कथनम्। सोऽप्यनुरागो नासक्तिमात्रम्, किन्तु सफलं सलक्षणं चेत्याह—वैक्लव्येति। अनुरागेण शरीरे वैक्लव्यं जायते, सर्वकार्यासमर्थं भवति, इदं फलम्। लक्षणद्वयमाह—बाष्पकलया पुलकीकृताङ्गा इति। बाष्पाणां कला उत्तरोत्तराभिवृद्धिः। अन्तः स्थितो भगवदानन्दः सर्वमेव संसारतापं बहिः करोति, तदा तस्य बाष्पा मुखतो निःसरन्ति, तेषां कलया सह। तयैव कलया प्रकाशमाना रोमाञ्चयुक्ताङ्गाश्च भवन्ति। अतो वैकुण्ठगतानां दोषः शङ्कनीयोऽपि नेत्यर्थः॥ २५॥ ॐ ॐ एवं नवभिानदुष्टे वैकुण्ठे स्वतो निर्दुष्टाः सनकादयः परमं दोषं कृतवन्त इति महदाश्चर्यमिति वक्तुमाह—तदिति। तद्वैकुण्ठं योगमायाबलेनाऽऽपुरिति संबन्धः। भक्त्यैव गतं तत्स्थानं हितकरं भवति, न तु स्वयोगबलेन गतम्। तत्रापि सर्गकर्त्री या योगमाया, तया सृष्ट्यर्थं नीताः कथमनर्थं करिष्यन्तीति भावः। तत् भक्त्यैव गन्तव्यमिति वक्तुं विशेषणमाह—विश्वगुर्वधिकृतमिति। विश्वगुरुणा वेदादिप्रवर्तकेन अधिकृतमधिष्ठितम्। गुरोः स्थाने धाष्ट्र्येन न गन्तव्यम्, नापि रिक्तहस्तादिना। किञ्च, तत्स्थानं भुवनैकवन्द्यम्, न तु पदा आक्रमणीयम्। तथा च सत्यनर्थो भवेदेव। किञ्च दिव्यं तदलौकिकम्, लौकिकप्रकारेण न गन्तव्यम्। अत एव विरक्तानामपि लौकिकदृष्ट्या गमने दोषोत्पत्तिः। किञ्च, विचित्रविबुधाग्र्यविमानशोचिः। विचित्राणि यानि विबुधाग्र्याणां विमानानि, तैः शोचिः कान्तिर्यस्य। ब्रह्मादयोऽपि तत् स्थानं पदा अस्पृष्ट्वा अलौकिकानि विमानान्यारुह्य अधस्तात् स्थितास्तस्योत्कर्षं संपादयन्ति। विमानानां विचित्रता छन्दोमयत्वादिना। न हि तादृशं यथाकथञ्चिद्गन्तव्यम्। एवं चतुर्विधोत्कर्षसहितम्, विकुण्ठं कदापि भङ्गरहितम्, स्थानमुपेत्य मुदमापुः। तस्याऽलौकिको धर्मस्तैरपि प्रत्यक्षीकृत इत्यर्थः॥ २६॥ ॐ ॐ सा हि योगमाया भगवता सृष्ट्यर्थमाज्ञप्ता स्वयं सृष्टिं विधाय तद्दर्शनार्थं भगवन्तमाकारयितुं भीता क्वावुपायेन तत्र नेतुं मुनीनानीतवती बलात्। भगवता तयोर्द्वारपालकत्वं दत्तम्। तौ चेद्भूमिपालकौ भवतः, तदा भवेत्, तदा भूमिमध्यात् द्वारत्वसिद्ध्यर्थं भगवानाविर्भवेत्, तदा स्वकृत्यं पश्येत् इति गूढाभिप्रायः। तानानीय यत्कर्तव्यं तत्कृतवतीत्याह—तस्मिन्नतीत्येति। तस्मिन् वैकुण्ठे षट् कक्षा अतीत्य मुनयः सप्तमायां देवावचक्षतेति संबन्धः। मुदमपि प्राप्य, तन्माहात्म्यं स्पष्टमप्यनुभूय, मायामोहवशात् तौ क्रोधदृष्ट्या दृष्टाविति। कक्षा रक्षकसहितद्वाराणि। तत्र विरक्तत्वादैश्वर्यादिषड्गुणप्रतिपादिका वैराग्यान्ता अतीताः, भक्तिः सप्तमी। भक्ताश्चेत्तदप्यतिक्रम्य गच्छेयुः, तदभावात्तत्र रक्षकौ दृष्टौ। असज्जमाना इति षट्कक्षातिक्रमे हेतुः। समानवयसाविति वृद्धिक्षयहेतुकालाभावयुक्तौ, वैकुण्ठे कालस्याऽनियामकत्वात्। कालस्य तुल्यत्वेन तत्प्रेर्यकर्मस्वभावयोरपि तुल्यता। अथेति भिन्नप्रक्रमे। तेषामप्यसज्जमानता गता, एतयोरपि पूर्ववदनिवारकत्वं गतम्। सप्तमायामिति। नेयं पूरणी कक्षेति ज्ञापनार्थं ङीप्प्रत्ययाभावः। सप्तम्यप्येषा प्रथमा भवति। तत्राऽन्ययो नाऽस्तीति साधिकरणत्वेन निर्दिष्टा। देवाविति वस्तुत एतेषामप्युपास्यौ, एते मनुष्याः। तथापि मुनय इति तेषां तत्र गमनम्। किञ्च, एतौ गृहीतगदौ। आसन्य एतदधीनः, तेन दैत्यनिवारणसमर्थौ। ततस्तयोराज्ञाकरणे कृतार्था एव भवन्ति। किञ्च, भगवत्सारूप्यमपि प्राप्तौ। तावनुवर्णयति—परार्ध्येति। परार्ध्यानि केयूरकुण्डलकिरीटानि हस्तकर्णशिरोभूषणानि। अनेन तयोः कर्माणि सिद्धानि, सांख्ययोगौ ज्ञानं च। आसन्यस्तु तदधीन एवेति मृत्युदैत्यजयः स्वतः सिद्धः। तैरपि विटङ्को वेषो ययोः। तैरलौकिकप्रकारेण भगवद्द्वारपालकयोग्यवेषौ। तयोः कर्मादिकमपि भक्त्युपयोगीत्यर्थः॥ २७॥ ॐ ॐ किञ्च—मत्तद्विरेफेति। मत्तद्विरेफवनमालिकया निवीतौ। तयोश्चतुर्विधान्यपि कर्माणि सिद्धानि, उत्पत्तिस्थितिप्रलया मोक्षश्चेति लौकिकानि, वैदिकानि दिव्यानि, भगवदीयानि च तैः संबद्धा तयोः कीर्तिर्वनमाला। तामनुवर्णयति। मत्ता ये द्विरेफा भ्रमराः। द्विरेफशब्दो रूढः, सर्वेषां शीघ्रप्रतीतेः, अन्यथाप्रतीतौ बर्बरशब्दादिव्युदासोऽपि न प्रतीयेत। मत्तद्विरेफसहिता वनमाला। रेफोऽत्राग्नितेजः, लौकिकवैदिकाग्नितेजोवद्वेदसहिता वनमाला सापि प्रेमसंबन्धान्मत्तभ्रमरैरिव संबद्धा। वनमालिकयेति ताभ्यां वनमालाशोभा। तया निवीतौ कण्ठलम्बितौ। सा कीर्तिस्तत्कर्मसहितेति वक्तुमसितचतुष्टयबाहुमध्ये विन्यस्तयेत्युक्तम्। अनेन तयोर्हृदये भगवान्, वनमाला, कमलम्, हस्तचतुष्टयम्, पत्राणीति निरूपितम्। एवंविधावपि, वक्रं कुटिलया भ्रुवा उपलक्षितम्, स्फुटनिर्गमाभ्यां श्वाससहिताभ्यां नासिकाभ्यां सहितम्, रक्तेक्षणेन च मनाग्रभसं क्रोधसहितं दधानौ। एतावद्रूपं भगवत्सारूप्यातिरिक्तं मायया कृतम्। वक्रं दधानाविति भक्तिमार्गनिष्ठौ[1]। तत्र दोषत्रयं कामादिरूपम्। कुटिला भ्रूः क्रोधस्य सूचिका। नासिकाद्वयवायुरेते

---

१. निविष्टौ. क. घ. ङ. च।

न प्रवेशनीया इत्यन्तःस्थितभगवद्दर्शनलक्षणमहाधनलोभेन चिन्तया श्रान्तयोः स्फुटं निर्गतो लोभस्य सूचकः । स्वस्याऽधिकारं मत्वा, स्वयं पूर्णकामौ भूत्वा, कामितः स पदार्थ एतेषां मा भवत्विति काममूलकक्रोधसूचकोऽक्ष्णोरारक्तिमा । त्रिभिर्दोषैः कृत्वा मनाग्रभसमुत्तरलं मुखम् । अत एतयोर्भक्तावन्तरायभूतं दोषत्रयं जन्मत्रयं संपादयिष्यति । मनाक् च संरम्भस्तदवहेलया ॥ २८ ॥

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

यन्नेत्यत्र । एकविषयत्वात् 'हरिपदानति···' इति श्लोकस्थं हरिपदं मनसिकृत्याऽऽहुः—सर्वदुःखहर्तुरित्यादि । हरिपदस्य तच्छ्लोकस्थस्याऽनुपक्षनेऽनुवृत्तिरप्यानतिरूप्यै( पै )वायातीति पुनरुक्तिदोषसम्भवे तत्परिहारमाहुः—आनतिरित्यादि । अनिवृत्ताविति । अहङ्कारानिवृत्तौ सुखत इति । रोमकूपमार्गात् । तद्विश्वेत्यत्र । छन्दोमयत्वादिनेति । अत्र (?) 'छन्दांसि मे रथो भवत' इति श्रुतिरत्रानुसन्धेया । आदिपदेन भगवत्प्रसादः ॥ २६ ॥ ❀ ❀ तस्मिन्नित्यत्र । विटङ्क इति सुन्दरः । तैरिति । परार्ध्यकेयूरादिभिः ॥ २७ ॥ ❀ ❀ मत्तद्विरेफेत्यत्र । द्विरेफशब्दस्य यौगिकरूढत्वं केचिदिच्छन्ति, केचिच्च लाक्षणिकत्वम् । तत्र बाधकमाहुः—सर्वेषामित्यादि । 'द्विरेफपुष्पलिड्भृङ्गषट्पद···' इति कोशवाक्येन शीघ्रं प्रतीतेः । पूर्वं रेफद्वयविशिष्टभ्रमरपदोपस्थितिस्तद्वाच्यस्य पक्षिण इति विलम्बस्याऽननुभावात् । तथाङ्गीकारे तु भ्रमरपदवदन्येऽपि बर्बरबर्करशर्कराप्रदराद्या रेफद्वयवन्तः शब्दा वर्तन्ते इति तेभ्यो विवेकोऽपि सहसैव प्रतीयेत, अविवेके विनिगमनादौर्घट्यात् । अतस्तन्मतद्वयमप्यसङ्गतमित्यर्थः । एते न प्रवेशनीया इति । एत इति पदच्छेदः ॥ २८ ॥

### श्रीगिरिधरकृता बालप्रबोधिनी

एवं भगवद्भजनविमुखानां वैकुण्ठभजनाभावमुक्त्वा तर्हि के तद्व्रजन्तीत्यपेक्षायां भगवद्भक्तानां तत्र गमनमाह—यन्नेति । यच्च वैकुण्ठनिलयं न उपरि स्थितं स्पृहणीयमस्मदादिभिरपि वाञ्छितं शीलं स्वभावो येषां ते व्रजन्तीत्यन्वयः । यद्वा नः उपरीति व्रजतां विशेषणम्, अस्मत्तोऽपि येऽधिकास्ते यद्व्रजन्तीत्यन्वयः । तत्र हेतुमाह—स्पृहणीयशीला इति । तदेव सहेतुकं दर्शयति—अनिमिषां देवानामृषभः श्रेष्ठो भगवांस्तस्यानुवृत्त्या श्रवणकीर्तनादिभक्त्या दूरेऽहमोऽहङ्कारो येषां ते मानापमानादिष्वहङ्काररहिता अतएव भर्तुः स्वपालकस्य भगवतो यत्सुयशस्तस्य मिथः परस्परं कथने योऽनुरागस्तेन वैक्लव्यं तेन बाष्पकला अश्रुबिन्दुस्तया सह पुलकीकृतं रोमाञ्चितमङ्गं येषां ते । अत्र सन्देहो न कर्तव्य इति सूचयितुमाह—हीति । 'दूरे यमाः' इति पाठान्तरे तु यमनियमादिसाधनान्तररहिता इत्यर्थः ॥ २५ ॥ ❀ ❀ तत् उक्तविधं विकुण्ठं मुनयः सनकादय उपेत्य प्राप्य अथो तद्दर्शनानन्तरं परामुत्कृष्टां मुदं हर्षमापुरित्यन्वयः । तत्र हेतुत्वेन शोभातिशयं सूचयन्विशिनष्टि—भुवनेति, भुवनेषु एकतया प्राधान्येन वन्द्यं बहुमतम् । तत्र हेतुमाह—विचित्राणि यानि विबुधाग्र्याणां विमानानि तेषां शोचिर्दीप्तिर्यैर्भसितस्तत् । तत्रापि हेतुमाह—दिव्यमिति, अप्राकृतमित्यर्थः । तत्रापि हेतुमाह योगमायाबलेन अचिन्त्यप्रभावेण विश्वगुरुणा शास्त्रप्रवर्तकतया सर्वपूज्येन भगवताऽधिकृतमुत्कृष्टतया निर्मितमित्यर्थः । तदपूर्वमदृष्टपूर्वमित्यर्थः ॥ २६ ॥ ❀ ❀ तस्मिन्वैकुण्ठे षट् कक्षाः प्रकारद्वाराणि अतीत्य अतिक्रम्य असज्जमानाः भगवद्दर्शनौत्कण्ठ्यात्तत्तदद्भुतदर्शने काप्यासक्तिमकुर्वाणा मुनयस्ते सनकादयः अथानन्तरं सप्तमायां कक्षायां देवौ द्वारपालावचक्षत अपश्यन् । तौ वर्णयति—समानं वयो ययोस्तौ, तत्र कालविक्रमाभावात् । गृहीते गदे याभ्यां तौ द्वारपालत्वात् । परार्ध्यैः श्रेष्ठैः केयूरादिभिर्विटङ्को रुचिरो वेषो ययोस्तौ ॥ २७ ॥ ❀ ❀ असितं नीलं यद्बाहुचतुष्टयं तस्य मध्ये विन्यस्तया मत्ता द्विरेफा भ्रमराः यस्यां तया वनमालया निवीतौ कण्ठलम्बिन्या अलंकृतौ कुटिलया भ्रुवा स्फुटौ विकसितौ यौ निर्गमौ श्वासमार्गौ नासापुटे ताभ्यां च रक्तेक्षणेन रक्तनेत्रेण च मनाक् ईषत् रभसमुग्रं यथा भवति तथा वक्त्रं दधानावचक्षतेति पूर्वेणान्वयः ॥ २८ ॥

### हिन्दी अनुवाद

देवाधिदेव श्रीहरिका निरन्तर चिन्तन करते रहनेके कारण जिसे यमराज दूर रहते हैं, आपसमें प्रभुके सुयशकी चर्चा चलनेपर अनुरागजन्य विह्वलतावश जिनके नेत्रोंसे अविरल अश्रुधारा बहने लगती है तथा शरीरमें रोमाञ्च हो जाता है और जिनके-से शील-स्वभावकी हमलोग भी इच्छा करते हैं—वे परम भागवत ही हमारे लोकोंसे ऊपर उस वैकुण्ठधाममें जाते हैं ॥ २५ ॥ ❀ ❀ जिस समय सनकादि मुनि विश्वगुरु श्रीहरिके निवासस्थान, सम्पूर्ण लोकोंके वन्दनीय और श्रेष्ठ देवताओंके विचित्र विमानोंसे विभूषित उस परम दिव्य और अद्भुत वैकुण्ठधाममें अपने योगबलसे पहुँचे, तब उन्हें बड़ा ही आनन्द हुआ ॥ २६ ॥ ❀ ❀ भगवद्दर्शनकी लालसासे अन्य दर्शनीय सामग्रीकी उपेक्षा करते हुए वैकुण्ठधामकी छः ड्यौढ़ियाँ पार करके जब वे सातवींपर पहुँचे, तब वहाँ उन्हें हाथमें गदा लिये दो समान आयुवाले देवश्रेष्ठ दिखलायी दिये—जो बाजूबंद, कुण्डल और किरीट आदि अनेकों अमूल्य आभूषणोंसे अलङ्कृत थे ॥ २७ ॥ ❀ ❀ उनकी चार श्यामल भुजाओंके बीचमें

मतवाले मधुकरोंसे गुञ्जायमान वनमाला सुशोभित थी तथा बाँकी भौंहें, फड़कते हुए नासिकारन्ध्र और अरुण नयनोंके कारण उनके चेहरेपर कुछ क्षोभकेसे चिह्न दिखायी दे रहे थे ॥ २८ ॥

द्वार्येतयोर्निविविशुर्मिषतोरपृष्ट्वा पूर्वा यथा पुरटवज्रकपाटिका याः।
सर्वत्र तेऽविषमया मुनयः स्वदृष्ट्या ये सञ्चरन्त्यविहता विगताभिशङ्काः ॥ २९ ॥
तान् वीक्ष्य वातरशनांश्चतुरः कुमारान् वृद्धान्दशार्धवयसो विदितात्मतत्त्वान्।
वेत्रेण चास्खलयतामतदर्हणांस्तौ तेजो विहस्य भगवत्प्रतिकूलशीलौ ॥ ३० ॥
ताभ्यां मिषत्स्वनिमिषेषु निषिध्यमानाः स्वर्हत्तमा ह्यपि हरेः प्रतिहारपाभ्याम्।
ऊचुः सुहृत्तमदिदृक्षितभङ्ग ईषत्कामानुजेन सहसा त उपप्लुताक्षाः ॥ ३१ ॥

मुनय ऊचुः

को वामिहैत्य भगवत्परिचर्ययोच्चैस्तद्धर्मिणां निवसतां विषमः स्वभावः।
तस्मिन् प्रशान्तपुरुषे गतविग्रहे वां को वाऽऽत्मवत्कुहकयोः परिशङ्कनीयः ॥ ३२ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

एतयोर्मिषतोः पश्यतोस्तावनादृत्यापृष्ट्वैव याः पूर्वाः षट् द्वारः पुरटालंकृतवज्रमय्यः कपाटिका यासु ता यथा विविशुस्तथा सप्तमायामपि द्वारि ते निविविशुः। अप्रश्ने हेतुः सर्वत्र ये अविहता अनिवारिताः संचरंति निःशंकत्वे हेतुः अविषमया स्वदृष्ट्येति ॥ २९ ॥ ❀ ❀ वातरशनान्नग्नान्वृद्धानपि पंचवर्षबालकवत्प्रतीयमानान् चकारादाज्ञया च अस्खलयतां निवारितवंतौ न तत्स्खलनमर्हंतीति तथा तान्। अहो अत्रापि धाष्ट्र्यमित्येवं तेषां तेजो विहस्य भगवतो ब्रह्मण्यदेवस्य प्रतिकूलं शीलं ययोः ॥ ३० ॥ ❀ ❀ हरेर्द्वारपालपतिभ्यां देवेषु पश्यत्सु वार्यमाणास्ते मुनयः को वामित्यादिश्लोकत्रयीमूचुः। सुहृत्तमः श्रीहरिस्तस्य दिदृक्षितं दर्शनेच्छा तस्य भंगे सति कामस्यानुजः क्रोधस्तेन सहसाऽकस्मादेवोपप्लुतानि क्षुभितान्यक्षीणि येषां ते सुष्ठु पूज्यतमा अपीति निषेधानर्हत्वे क्रोधानर्हत्वे वा हेतुः ॥ ३१ ॥ ❀ ❀ उच्चैर्महत्या भगवत्परिचर्यया एत्य प्राप्य इह वैकुंठे निवसतां तद्धर्मिणां भगवद्धर्मिणां समदर्शिनां मध्ये वां युवयोरेव कोऽयं विषमः स्वभावः कैश्चित्प्रवेष्टव्यं कैश्चिन्नेत्येवंभूतः। ननु स्वामिनो रक्षार्थं द्वारपालयोरेष स्वभावो गुण एवेति चेदत आहुः। तस्मिन्निति। कुहकयोः कपटयोः आत्मवत्स्वदृष्टांतेन यथा आवां कपटौ तथान्योऽपि कश्चित्कपटः प्रवेक्ष्यतीति। अयं भावः। न ह्यत्र भगवद्भक्तं विना कश्चिदागच्छति न चेश्वरे प्रशांतत्वादविद्यमानविरोधे भयशंका अतो युवां केवलं धूर्तावेवेति ॥ ३२ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

पुरटालंकृतवज्रमय्यः सुवर्णालंकृतहीरककीलवत्यः कपाटिका अरराणि यासु द्वार्षु "पुरटंकार्त्तस्वरे हेमकलधौते च" इति नाममाला। 'कपाटमररं तुल्ये' इत्यमरः। 'वज्रं हीरकशंवयोः इति' यादवः ॥ २९ ॥ ❀ ❀ तान्मुनीन्। वातस्य रसना क्षुद्रघंटिकोपलक्षिता वस्त्रालंकारादीनि येषां तान्नग्नानित्यर्थः। वृद्धान्ब्रह्मसमवयस्कानपि वेत्रेण तिर्यग्वेत्रधारणेन आज्ञया सहसा भगवदंतःपुरं मा विशतेति वाचा च धाष्ट्र्यं ब्रह्मजत्वादहंकारेणान्यागणनमिति दासद्वारापि स्वब्रह्मण्यताविघातो नोचितो यतः प्रभोर्मनोऽनुसारिलीला एव भृत्या अदंड्याः कुशलिनो भवंतीति भावः ॥ ३० ॥ ❀ ❀ देवेषु वैकुंठीयदेवेषु ताभ्यां जयविजयाभ्यां निर्गमागमार्थं प्रतिह्रियते प्राप्यते इति प्रतिहारो द्वारं तत्पात इति प्रतिहारपौ ताभ्यां "प्रतिहारो द्वारि द्वाःस्थे द्वास्थितायां तु योषिति" इति मेदिनी ॥ ३१ ॥ ❀ ❀ क्रोधोपरक्तत्वात्प्रथमं निंदति को वा इति तद्धर्मिणां भगवत्तुल्यधर्माणां तत्रापि इह समीप एव वसतां विषमो ब्राह्मणैर्न प्रवेष्टव्यमिति भगवत्स्वभावपरिपंथी कः स्वभावः। ननु ब्राह्मणवेषेण भगवद्द्वेषिणोऽपि कपटेन प्रविशंत्यतः प्रथमं ब्राह्मणा अपि जिज्ञास्या एव ततः प्रवेशनीया इति चेत्तर्हि युवामेव भगवद्भक्तवेषेण कपटिनौ तदीयब्रह्मण्यत्वप्रशांतत्वगतविग्रहत्वादिमहागुणलोपे प्रवृत्तौ तद्द्वेषिणावत्रत्यौ। न त्वन्यः कोपि तस्य शंकनीय इत्याहुः—तस्मिन्नित्यादि आत्मवदिति "आत्मवन्मन्यते जगत्" इति न्यायेन वां युवयोः कपटिनोरपि को वा शंकनीय इति काका युवामेव शंकनीयाविति भावः ॥ ३२ ॥

१. प्रा. पा. सर्वेऽपि ते। २. प्रा. पा. स्वत्वया। ३. प्रा० पा०—सम्यग्विहस्य। ४. प्राचीने पाठे 'मुनय ऊचुः' अयमंशो न। ५. प्रा० पा०—तद्धर्माणां।

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

अत्रापि वैकुण्ठेऽपि धाष्टर्यं ब्रह्मज्ञानप्रयुक्तसमदृष्टेः प्रागल्भ्यं शीलं ब्राह्मणनिरोधात्मकं चरित्रम् ॥ २९; ३० ॥ ❀ ❀ देवेषु पश्यत्स्विति क्रोधे हेतुः। दिदृक्षितेति भावे निष्ठा क्षुभितानि अरुणानि ॥ ३१ ॥ ❀ ❀ को वामिहैत्यत्र को वा इहैत्येति क्वचित्पाठस्तु स्वाम्यसम्मतः वामित्यस्यावृत्तिप्रसङ्गात् दूरान्वयाच्च। कुहकयोरिति कर्त्तरि षष्ठी कुहकाभ्यां युवाभ्यामित्यर्थः अत्र वैकुण्ठे अतोऽभक्तस्य प्रवेशाभावात् भगवति च भयशङ्काभावात् ॥ ३२ ॥

### श्रीमद्वीरराघवव्याख्या

द्वारीति। एतयोर्देवयोर्मिषतोः पश्यतोः सतोः तावनादृत्यापृष्ट्वैव याः पूर्वा द्वारः कनकवज्रमयकपाटिकाः यथा निविविशुः तथास्यां सप्तमायां द्वारि निविविशुरित्यर्थः। अपृष्ट्वैव निवेशे कारणमाह। यद्यस्मात्ते मुनयः अविषमया समया "विद्याविनयसम्पन्ने ब्राह्मणे गवि हस्तिनि" इत्युक्तविधया स्वदृष्ट्या विगताभिशङ्का अत एव सर्वत्राविहता अनिवारिताश्चरन्ति ये सञ्चरन्ति इति पाठे ये मुनयः सर्वत्राविहताश्चरन्ति ते निविविशुरित्येकान्वयः ॥ २९ ॥ ❀ ❀ तानिति। भगवत्प्रतिकूलशीलौ तौ देवौ वातरशनान्नग्नान् वृद्धानपि दशार्द्धवयसः पञ्चवर्षबालकवदवस्थितान् विदितमात्मतत्त्वं परमात्मयाथात्म्यं यैस्तान्मुनीन्वीक्ष्य तेजः तेषां प्रभावं विहस्याहो अत्रापि भवतां धाष्टर्यमित्येवं परिहस्येत्यर्थः, अतदर्हान् निवारणानर्हान् वेत्रेण चकाराद्वाचा च अस्खलयतां निवारितवन्तौ भगवत्प्रतिकूलाशीलाविति हेतुगर्भं भगवत्प्रतिकूलशीलत्वान्निवारितवन्ताविति भावः ॥ ३० ॥ ❀ ❀ ताभ्यामिति। हरेर्भगवतः प्रतिहारपाभ्यां ताभ्यां देवाभ्यामनिमिषेष्वन्येषु देवेषु मिषत्सु पश्यत्सु सत्सु अर्हत्तमाः स्वयं पूज्या अपि निषिध्यमाना निवारणेन परिभूता अत एव सुहृत्तमो भगवांस्तस्य दिदृक्षितं दर्शनेच्छा तस्य भंगेनेषत्कामानुजोऽल्पक्रोधः तेन सहसाशूपप्लुतान्याकुलानि व्याप्तान्यक्षीणि येषां तथाभूताः सन्त ऊचुः ॥ ३१ ॥ ❀ ❀ उक्तिमेवाह त्रिभिः। क इति। उच्चैर्महत्या भगवत्परिचर्यया इहास्मिन्वैकुण्ठलोके एत्य प्राप्येमं लोकं प्राप्येत्यर्थः निवसतां तत्कर्मणां तत्समानधर्मिणां मध्ये को वां विषमः स्वभावः इह वसतां विषमस्वभावोऽनुपपन्न इत्यर्थः। ननु द्वारपालयोरावयोरयं धर्म एव नूतनपुरातनप्रतिनिरोधावन्यथा स्वामिकृतदण्डपातापत्तेरित्याशङ्कायामाहुः। अस्मिन्निति। प्रशान्ताः पुरुषा यस्मिन् गतो विग्रहः कलहो यस्मात्तस्मिंल्लोके वाक्पारुष्यविवाददोषरहितेऽस्मिंल्लोके आत्मवदावामिवान्योऽपि कश्चित्कुटिलः प्रविशेदित्येवं परिशङ्कनीयः कुहकयोः कुटिलचित्तयोर्वां युवयोः को वास्ति यदि परिशङ्कनीयः त्वादृशः कश्चित्कुटिलोऽत्रास्ति चेद्वयं शङ्कनीया वारणीयाश्च अन्यथा प्रभोर्दण्डपातापत्तिश्च यतश्च खलु प्राकृतवाक्पारुष्यविवादादिदोषरहितोऽयन्देशः अत इयमाशङ्कानुपपन्नेत्यर्थः ॥ ३२ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

ये मुनयः सर्ववस्तुषु स्वस्य स्वतन्त्रस्य हरेर्दृष्ट्यान्तर्यामित्वदर्शनेन अविषया निस्पृहा अत एव विगताभिशङ्काः अविहताः अप्रतिहतगतयः सर्वत्र सञ्चरन्ति हि यस्मात्तस्मात्ते मुनयः तावपृष्ट्वा मिषतोः पश्यतोस्तयोर्द्वारि तथा प्रविविशुरित्यन्वयः। यथा पूर्वाः षट् द्वारः प्रविविशुः निःशङ्कतया कीदृशीर्द्वारः या आरपुटवज्रकपाटिका आरेण पित्तलेनालंकृतं पुटं यस्याः सा आरपुटा वज्रशिलया कृताकपाटिका आरपुटा च वज्रकपाटिका यासान्तास्तथा। "लोहमध्यारकूटं स्यात्पित्तलं चारमस्त्रियाम्" इति यादवः ॥ २९ ॥ ❀ ❀ ततः किमभूदिति तत्राह। तानिति। वातो वायुरेव रशना वस्त्रं येषां ते तथा तान् कुमारानित्युक्तं विवृणोति। दशार्धवयस इति। दृष्ट्या पञ्चवर्षान् विदितात्मतत्त्वान् ज्ञातपरमात्मस्वरूपान् वेत्रेण यष्ट्या अस्खलयतां प्रवेशप्रतिरोधं चक्रतुः अतदर्हणान् स्खलनायोग्यान् तेजस्तेषां प्रभावं विहस्याऽगणय्य तत्र निमित्तमाह। भगवदिति। भगवतो हरेः प्रतिकूलं विरुद्धं शीलं ययोस्तौ तथा तौ।

जयस्य विजयस्यापि कदाचिद्ब्रह्मशापतः। कृष्णावतारपर्यन्तं प्रातिकूल्यं च जायते ॥

इति वचनेन शापनिमित्तं प्रातिकूल्यं सावधिकं चेति ज्ञायते अन्यथा तयोस्तत्रावस्थानमेव न युज्यते रजआद्यभावास्योक्तत्वात् ॥ ३० ॥ ❀ ❀ न्यस्तदण्डत्वात्प्रतिषिद्धास्ते तूष्णीं यथागतं ययुः किमत्राह। ताभ्यामिति सुष्ठु अर्हत्तमाः पूज्यतमाः सुहृत्तमस्य हरेर्दिदृक्षितस्य दर्शनेच्छाया भङ्गे विघ्ने सति ईषत्कामानुजेनाल्पकोपेन उपाप्लुतानि अतिकलुषीकृतान्यक्षीणि येषां ते तथोक्ताः प्रतिहारपाभ्यामनिमिषेषु देवेषु मिषत्सु निषिध्यमाना ऊचुरित्यन्वयः ॥ ३१ ॥ ❀ ❀ क्रोधाकुलितनेत्रत्वाद्धितं न किन्त्वहितमेव तत्कीदृशमूचुरिति तत्राह। को वेति। भगवत उच्चैः परिचर्यया समुन्नतपूजादिसेवया इह वैकुण्ठे स्वयोग्यं स्थानमेत्य तद्धर्मिणां तस्य हरेर्ध्यानादिधर्मवतां सतां भागवतामपि मध्ये कः पुमान् विषमस्वभावः शत्रुरयमिदं मित्रमिति तामसशीलः वा इत्यनेनानुपपत्तिं सूचयति भगवद्विषये शङ्कनीयोऽस्तीति भगवन्निषेधः क्रियत इति तत्राह तस्मिन्निति। कुहकयोर्मिथ्यादृष्टिमतोर्युवयोरात्मवत् यथात्मा परिशङ्कनीयस्तथेह तस्मिन् भगवति विषये परिशङ्कनीयो विरुद्धस्वभावः कोवास्ति न कोऽपीत्यन्वयः। कुतो

नास्तीत्यत आह । प्रशान्तेति । लोके अप्रशान्तस्य परेण सहोत्पादितवैरस्य च शङ्कनीयो दृष्टस्तथा नायं पुरुषेषु प्रशान्तत्वात् अनुत्पादितवैरत्वाच्च । किञ्च प्रकृष्टानन्दस्वरूपत्वादनुपहतैश्वर्यादिषड्गुणपूर्णत्वात्सर्वशरीरेषु गतत्वादप्रतिद्वन्द्वत्वादप्राकृतशरीरत्वाच्चातोऽस्मिन्निषेधो व्यर्थ इत्यर्थः ॥ ३२ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः ।

मनाग्रभसत्वे हेतुर्द्वारीति ॥ २९ ॥ ❀ ❀ भगवत्प्रतिकूलशीलाविल्यस्यायं भावः । भगवांस्तावदात्मना सर्व्वतः परमेश्वर इति निजस्य पारमैश्वर्य्यस्य ब्राह्मणादिभिरतिक्रमणं सहते तदीयसेवकास्तस्य सुतरां तु तन्नियोगप्राप्तपालनाधिकारस्य तदंशस्य केनाप्यतिक्रमं सोढुं न शक्नुवन्तीति भगवतो विपरीतस्वभावौ ताविदं न सहेते इति । दृष्टान्तस्तु चित्रकेतुशिवशिवावृत्तान्त एव ज्ञेयः ॥ ३० ॥ ३१ ॥ ❀ ❀ तयोर्द्वारपालयोः सालोक्यसामीप्यादितारतम्यवत्सु वैकुण्ठजनेष्वप्युचितं विचारं कामानुजोपरक्तत्वात् स्वस्वभावानुसाराच्च निन्दति को वेति त्रिभिः ॥ ३२ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

तयोः कोपकारणमाह । एतयोर्मिषतोः पश्यतोः एतावप्रश्नादनादृत्य याः पूर्व्वाः षट् द्वारः पुरटपट्टिका हीरकक्कीलमयकवाटिकावत्यस्ता यथा विविशुः तथा सप्तम्यामपि द्वारि ते विविशुः प्रश्नाकरणे हेतुं तेषां स्वभावमेवाह । सर्व्वत्र ते सञ्चरन्ति ये अविहताः केनाप्यशक्याभिघाताः ॥ २९ ॥ ❀ ❀ वातस्य रसना क्षुद्रघण्टिका तदुपलक्षितानि सर्व्वाणि वस्त्रालङ्कारादीनि येषां ते वृद्धान् ब्रह्मसमवयस्कानपि पञ्चवर्षबालकवत् प्रतीयमानान् ब्रह्मज्ञान् वीक्ष्य वेत्रेण तिर्य्यग्वेत्रधारणेन चकारात् सहसा भगवदन्तःपुरमितो मा विशतेति वाचा च अस्खलयतां निवारयामासतुः । न तत्स्खलनमर्हन्तीति तथा तान् तौ जयविजयौ अहो अत्रापि ब्रह्मज्ञत्वादहङ्कारेण धाष्टर्यमित्येवं तेषां तेजो विहस्य भगवतो ब्रह्मण्यदेवस्य प्रतिकूलशीलाविति दासद्वारा स्वब्रह्मण्यताविघातो नैव सम्मतो यतः प्रभोर्मनोऽनुसारिशीला एव भृत्याः अदण्ड्याः कुशलिनो भवन्तीति भावः ॥ ३० ॥ ❀ ❀ अनिमिषेषु वैकुण्ठीयदेवेषु पश्यत्सु अर्हत्तमा अपि भगवत्समीपमतिशयेन गन्तुमर्हा अपि हरेर्द्वारपाभ्यां निषिध्यमाना ऊचुः । सुहृत्तमस्य हरेर्दर्शनेच्छाया भङ्गे उपघाते सति कामानुजेन क्रोधेन सहसा उपलक्षितमेव उपप्लुतानि व्याप्तानि अक्षीणि येषां ते ॥ ३१ ॥ ❀ ❀ क्रोधोपरक्तत्वात् प्रथमं निन्दन्ति को वा इति । तद्धर्म्मिणां भगवत्तुल्यधर्म्मिणां तत्रापि इह तत्समीप एव वसतां विषमः ब्राह्मणैर्न प्रवेष्टव्यमिति भगवत्स्वभावपरिपन्थी कः स्वभावः । ननु ब्राह्मणवेशेन भगवद्द्वेषिणोऽपि कपटेन प्रविशन्त्यतः प्रथमं ब्राह्मणा अपि जिज्ञास्या एव ततः प्रवेशनीया इति । चेत्तर्हि युवामेव तद्भक्तवेशेन कपटिनौ तदीयब्रह्मण्यत्वप्रशान्तत्वगतविग्रहत्वादिमहागुणलोपे प्रवृत्तौ तद्द्वेषिणावत्रस्थः न त्वन्यः कोऽपि तस्य शङ्कनीय इत्याहुः तस्मिन्नित्यादि । आत्मवदिति आत्मवन्मन्यते जगदिति न्यायेन वां युवयोः कपटिनोरपि को वा शङ्कनीय इति काक्वा युवामेव शङ्कनीयाविति भावः ॥ ३२ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

ईषद्रभसवक्रधारणहेतुमाह । पुरटविभूषितवज्रमय्याः कपाटिका यासुः ताः पूर्वाः षट् द्वारः यथा निर्विविशुः तथा तयोर्देवयोर्मिषतोः पश्यतोः अपृष्ट्वैव ते निर्विविशुरिति । अप्रश्ने हेतुमाह । ये सर्वत्र सर्वेषु लोकेषु वैकुण्ठेषु च अविहताः अनिवारिताः विगताभिशङ्काः सञ्चरन्ति । विगताभिशङ्कत्वे हेतुमाह । अविषमया स्वदृष्ट्येति ॥ २९ ॥ ❀ ❀ भगवत्प्रतिकूलशीलौ बह्वसुरानुग्रहार्थमसुरभावेन भगवन्तमाराधयितुं प्रवृत्ताविति फलितोऽर्थः । वातरसनान् तेषां तेजः प्रभावं विहस्य तन्निवारणं नार्हन्तीत्यतदर्हणान् वेत्रेण चकाराद् वचनेन । अस्खलयतां निवारितवन्तौ ॥ ३० ॥ ❀ ❀ मिषत्सु पश्यत्सु स्वर्हत्तमाः । अपि वैकुण्ठद्वारि ताभ्यां मिषद्भिश्च सुष्ठु पूजनीया अपि न पूजिताः प्रत्युत ताभ्यां निषिध्यमाना सुहृत्तमदिदृक्षितभङ्गे भगवद्दर्शनेच्छाप्रतिघाते सति कामानुजेन क्रोधेन सहसा अकस्मात् । उपप्लुतानि क्षुभितान्यक्षीणि येषां ते ऊचुः ॥ ३१ ॥ ❀ ❀ उक्तिमेवाह । क इति त्रिभिः । उच्चैर्महत्या भगवत्परिचर्य्यया एत्य प्राप्य इह वैकुण्ठे तद्धर्मिणां भगवद्धर्मिणां निवसतां मध्ये वां युवयोरेव कोऽयं विषमः स्वभावः प्रशान्ताः पुरुषा यस्मिन् ग्रहः विग्रहो यस्मात् तस्मिन् वैकुण्ठे आत्मवत् यथा आवां कुहकौ तथान्योऽपि कदाचित्प्रवेक्ष्यतीति स्वदृष्टान्तेन वां युवयोः कुहकयोः कपटयोः कः शङ्कनीयः ॥ ३२ ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

एवं तयोर्गुणदोषौ निरूप्य मुनीनां गुणदोषान् निरूपयति—द्वार्येतयोरिति । ज्ञानमार्गे अविषमदृष्टिः, शङ्काभावः, मननम्, आत्मज्ञानं चेति चत्वारो गुणाः । ते यदि भगवन्माहात्म्यज्ञानपूर्वकास्तद्धर्मेष्वादरयुक्ताः, तदा भक्तिमार्गेऽपि गुणा भवन्ति । लौकिकदोषनिवृत्त्यर्थमेव ते ज्ञानमार्गे गुणत्वेनोक्ताः । अधिकृतयोरुल्लङ्घनम्, भगवत्स्थानस्य सामान्यदर्शनम्, अन्तरङ्गबहिरङ्गयोस्तुल्यतया ज्ञानम्, तद्गतासाधारणगुणागणनं च चत्वारो दोषाः । तेन दैत्ययोनिः, स्वरूपज्ञानाभावः, बहुकालं गर्भवासक्लेशः,

यातना चेत्यनिष्टचतुष्टयं फलितम्। दोपाणां प्राबल्यान्मार्गान्तरगुणा अप्यत्र निवृत्ताः, तेन क्लेशो न दोषाय। एतयोर्मिषतोरेव सतोस्तावविगणय्य। द्वारि अन्तरङ्गभूतायां निविविशुः। अपृष्ट्वे ति किं भगवान् करोति, अवसरोऽनवसरो वेति प्रष्टव्यम्, तदपृष्ट्वा प्रविष्टा इत्यर्थः। पूर्वद्वारो यथा प्रविष्टा, तथेयमपि द्वाः। पुरटवज्रकपाटिकाया इति द्वारमाहात्म्यम्। पुरटं सुवर्णम्, तत्सहिता ये ये वज्रा हीरकाणि, तैरेव निर्मितौ कपाटौ यस्याः, कपाटिके वा। एवं पूर्वार्द्धे दोषा निरूपिताः। मार्गान्तरस्थान् गुणानाह—सर्वत्रेति। ते अविषमया दृष्ट्या चरन्ति, अत एव केनाप्यविहता इति, स्वस्मिन् विद्यमानमपि ज्ञानं परस्मिन् कार्यसंपादकमिति, सानुभावं निरूपितम्। अत एव विगताभिशङ्काः। विगता अभितः शङ्का येपाम्। ब्रह्मविदश्चेत् तदा दोषो न भवेत्। तत्रैवैते गुणत्वेनोक्ताः। एते त्वात्मविदः। स हि चिद्रूपं ब्रह्म। तत्रापि मननपर्यन्तं व्यापृताः। तदाप्यात्मरूपं न सर्वदा तेषामनुभवविषयः। तत्र स्वरूपयोर्मध्ये परिच्छेदधर्मस्य बलिष्ठत्वात् परिच्छेदाहङ्काररहितमेवाऽऽत्मज्ञानं गुणरूपम्, अन्यथा संसारिणामपि तत्सम्भवान्मोक्षः स्यात्। आत्मा हि भगवद्विभूतिरिति विभूतिमत्समीपे परधर्मांस्त्यजतीति न तेषामन्यत्र प्रच्युतिः॥ २९॥ ❀ ❀ एवमेतेषां गुणदोषान्निरूप्य यथाक्रममतिक्रममाह—तान्वीक्ष्येति। तत्र प्रथमं द्वारपालकृतातिक्रमो निरूप्यते। तत्र तयोः सहजत्वात् तेषां निवारणे हेतुः—वातरशनानिति। ते हि दिगम्बराः, बालका अपि कटिसूत्रवन्तो भवन्ति। अत एवैषां रशनानिषेधः। भ्रान्ता इव तद्दृष्ट्या प्रतीताः। चत्वारोऽप्येकविधा इत्याश्चर्यमपि। कुमाराः पञ्चवार्षिकाः, कालेन तेषां शरीरस्य कौमारपर्यन्तमेव भोगः कृत इति। उत्पत्तिकालविचारे तु ते वृद्धाः, परार्द्धमितायुषो ब्रह्मकल्प एवोत्पन्नाः। अत एव दशार्द्धवयसः। पञ्चवार्षिका इति केचित्। तेषां या मानुषदशापरार्द्धद्वयपरिच्छिन्ना तत्रार्द्धवयसः, एकस्य परार्द्धस्याऽतिक्रान्तत्वात्। तेषां ज्ञानवृद्धत्वमप्याह—विदितात्मतत्त्वानिति। विदितमात्मतत्त्वं यैरिति। वेत्रं लकुटविशेषः, चकारान्मुखेन च। अस्खलयतामिति यथा ते स्खलिता भवन्ति, तथा दण्डः प्रसारित इत्यर्थः। एवं कर्तुमनुचितास्त इत्याह—अतदर्हणानिति। तत् स्खलनं नाऽर्हन्तीति। ते हि स्थिरीकृत्य वा प्रष्टव्याः, विज्ञापनेन वा अनवसरो ज्ञापनीयः। तदुभयमकृत्वा स्खलनमेव कारितवन्तौ। ताविति पूर्वोक्तौ दोषसहितौ निरूपितौ। तेजो विहस्येति। सर्वथा नाऽज्ञानात्तथा करणम्, किन्तु ज्ञात्वैव। यत्तेषां ज्ञानम्, सर्वपरित्यागलक्षणः स्वधर्मः, देहाद्यभिमानाभावश्च; स तेजः। तद्विहस्य। दोषत्वेन पाखण्डित्वेन वा तद्गणनं विहसनम्। तदविगणय्य। तेजःकृतं धार्ष्ट्यं दोषं मत्वा। तत्र दण्डचिकीर्षा हास्ये हेतुः; न तु कौतुकमात्रम्। अत एव भगवतः प्रतिकूलं शीलं ययोः। अनेन स्वामिसेवकधर्मोऽपि तयोर्न सिद्ध इत्युक्तम्। गर्वस्तु भगवत्प्रतिकूलो धर्मः, दैत्यधर्मत्वात्, अत एव प्रतिकूलपदम्। शीलमिति तद्धर्मस्य दुर्लङ्घ्यता सूचिता॥ ३०॥ ❀ ❀ एवं तयोरतिक्रममुक्त्वा मुनिकृतातिक्रममाह—ताभ्यामिति। ताभ्यामिति चतुर्थी। तयोरर्थे शापमूचुरित्यर्थः। शापमिति नोक्तम्, विचारपूर्वकमग्रे वक्ष्यमाणत्वात्, इदानीमविचारितत्वात्। क्रोधेन वचनमर्थाच्छापरूपं भवतीति ज्ञातव्यम्। अत एव निषिध्यमानाः, मैवं शापो देय इति। गमननिषेधस्तु कृत एवेति वर्तमानप्रयोगो नोपपद्येत। अनिमिषेषु मिषत्स्विति देवानामुभयत्र साक्षित्वं निरूपितम्। ते ह्यनिमिषाः सर्वसाक्षिणः। तैरेव निषिध्यमाना इति नैकस्यादवसीयते। तत्रत्यैः सर्वैरेव वा। ताभ्यामेव निषिध्यमान इति ताभ्यामिति तृतीया वा। वस्तुतस्तु प्रवेशनिषेध एव ताभ्यां क्रियते, वर्त्तमानसामीप्येऽपि वर्तमानप्रयोग उपपन्नः। सुष्ठु अर्हत्तमा इति। निषेधानौचित्ये हेतुः। अर्हाः सदाचाराः, तथापि यथाशास्त्रं परमहंसा अर्हत्तमाः, तत्रापि ज्ञानिनः स्वर्हत्तमा इति। तर्हि निषेधः कथं कृत इत्याशङ्क्याऽऽह—हरेः प्रतिहारपाभ्यामिति। स हि सर्वदुःखहर्ता। अन्तःप्रवेशे भगवदतिक्रमे महान् दोषो भविष्यतीति तेनैव भगवता प्रतीहारा द्वारपालका रक्षिताः सर्वत्र बहवः, तेषामेतावधिपती। अतो द्वारपालकानां रक्षार्थम्, तयोरपि रक्षार्थम्, निषिद्धा इत्यर्थः। तर्ह्येतेषां क्रोधे को हेतुः? तत्राऽऽह—सुहृत्तमदिदृक्षितभङ्गे सति ईषत् कामानुजेन क्रोधेन त उपप्लुताक्षाः। तेषामात्मविदां सर्वत्राऽऽत्मबुद्धिरेव, भगवत्यप्यात्मबुद्धिः। भगवानप्यात्मविदिति तस्य दिदृक्षितं दिदृक्षा दर्शनेच्छा। यस्त्वस्मभ्यमेतावदुपकारं कृतवान् स द्रष्टव्य इति, फलस्य जातत्वात् साधने स्वल्पः कामः। दिदृक्षितस्य भङ्गे सत्यल्पत्वात् प्रतिबन्धे भङ्ग एव जातः, न त्वेतत्समाधानं कृत्वा पुनर्द्रष्टव्य इतीच्छा तेषु स्थिता। अत एव ईषत्कामस्याऽनुजः। महति कामे प्रतिरुद्धेऽपि क्रोधो न भवति यथेश्वरवाक्ये, अर्थार्थिनो वा। तेषामपि विचारो नोत्पन्न इत्याह—सहसेति। उप्लुतान्यक्षीणि येषाम्। अनेन तयोर्गुणा अपि तेषां न प्रत्यक्षा जाता इत्युक्तम्। उपप्लवः प्रलयः सर्वनाशरूपः, स तेषां जात इति तथोक्ताम्॥ ३१॥ ❀ ❀ तेषां वचनमाह—को वामिहेत्यादित्रिभिः—

तयोः स्वाभाविको दोषः स्वमिद्रोहस्तथाऽपरः। स्वस्याऽन्तरङ्गमित्रत्वात्तदुल्लङ्घनमेव च॥ १॥

दोषस्तृतीयो नाऽत्रोक्तो मित्रकार्यं परं कृतम्। तथावचनसंदर्भास्सोच्यते जन्मसंख्यया॥ २॥

तत्र प्रथमं तयोः स्वाभाविकं दोषमाहुः—इह वैकुण्ठे, उच्चैर्भगवत्परिचर्यया पूर्वजन्मनि कृतया, भूमेः सकाशादिहागत्य निवसतां भगवत्सेवकानां मध्ये को वां युवयोरेष विषमः स्वभावः? अस्मासु दोषबुद्धिः, 'नाऽर्थदा पुरुषद्विषाम्' इति पुरुषे द्वेषस्य निन्दितत्वात्। कैश्चित् प्रवेष्टव्यं कैश्चिन्नेति केचिदाहुः, तदा द्वारपालकाधिकारदानं भगवतो विरुध्येत। आत्मीयानामपि मातापित्रोरप्यनवसरे गमनमुचितं न भवतीति लौकिकार्थं तथाकरणं द्वारपालयोरुचितमेव। तथा नूतनानां महतामुपहासः

क्रोधदर्शनं वैकुण्ठवासिनामुचितम्, सामान्यधर्मानुरोधेनैव विशेषधर्माणां कर्तव्यताया उचितत्वात्। तेषा मते सर्वं कर्मजन्यमेव, तत्रापि भोगरूपम्, भक्तिमार्गस्याज्ञातत्वात्। अतो निरन्तरभगवत्सेवयाऽत्राऽऽगत्य स्थितिर्भवतीति मन्यन्ते। तत्रापि वैकुण्ठे ये भगवत्समानधर्मा ब्रह्मण्या धर्मनिष्ठप्रीतियुक्तास्तेषां मध्य इति। तेनैतयोः सहजवैकुण्ठादागमनं निवारितम्। स्वस्य मुखाद्वचनं निःसरतीति। को वेत्यधिक्षेपे। क इत्यधिक्षेपे, वेत्यनादरे वा। ननु त्रैविध्यात् केचन विषमस्वभावा अपि भवन्तीति चेत्तत्राऽऽह—तस्मिन् प्रशान्तपुरुषे गतविग्रह इति। अयं विषमस्वभावः स्वार्थम्, भगवदर्थं वा ? स्वार्थं चेत्, न युवां भगवदीयौ। तत्र हेतुमाह—प्रशान्तपुरुष इति। प्रकर्षेण शान्ताः पुरुषा यस्य। तस्य हि सर्वे पुरुषाः शान्ता एव। शान्तिस्तु ज्ञान एव, अतो वैषम्यं भगवदीयत्वाभीप्सोर्नोचितम्। भगवदर्थं च नाऽपेक्ष्यत इत्याह—गतविग्रह इति। गतो विग्रहः कलहो यस्य। विशेषेण ग्रह आग्रहो वा। विग्रहो देहो वा। देहाभावान्न केनाऽप्यनिष्टं कर्तुं शक्यम्, कलहाभावात् न कश्चित् द्विष्टः, आग्रहाभावात् नाऽनौचित्यं भगवान् मन्यते। अतो विषमस्वभाव उत्पत्त्या चोपपत्त्या चाऽत्र बाधितः। वां युवयोः। एवं तयोर्विषमस्वभावं निन्दित्वा स्वातिक्रमदोषं तयोरुपपादयन्ति—को वाऽऽत्मवदिति। कुहकयोर्वञ्चकयोः को वा आत्मवत्परिशङ्कनीय इति। दुष्ट एव हि अन्यत्र दोषं मन्यते, अतो युवयोर्दोषोऽस्तीत्यवसीयते। परिचर्याया एव वैकुण्ठागमनहेतुत्वं मन्यते, न तु निष्कपटपरिचर्यायाः। अतः कपटेन परिचर्यां कृत्वा वैकुण्ठे समागत्याऽधिकारं प्राप्य, स्वभावादधिकाराच्च, यथा वयं तथाऽन्योऽप्यत्रागमिष्यतीति यत्रैव स्वस्याऽस्वारस्यं विषमदृष्टिः, न तु विषयपरिज्ञानादिति तस्य पक्षस्याऽऽक्षेपः। वयं तु न परिशङ्कनीया इति भावः। निषेधस्तु परिशङ्काङ्गीकारे स्वस्याऽपि कुहकत्वं सेत्स्यतीति। तस्माद्वयं निर्दुष्टाः-युवामेव सदुष्टौ, निर्दुष्टे दोषारोपात्। आग्रहाविष्टबुद्धिर्नात्यन्तं युक्तिमपेक्षते, अतोऽस्मिन्पक्षे न सं¹मर्थोपपत्तिः। तथाऽग्रिमपक्षेऽप्यवगन्तव्यम्॥ ३२॥

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

द्वारीत्यत्र। ननु ज्ञानमार्गस्याऽपि भगवता स्वप्राप्त्युपायतया कथनात् तद्गुणानां कथमत्र दर्शनप्रतिबन्धकतेत्याकाङ्क्षायां तज्ज्ञानमिदं न भवति, यदुपायभूतमिति बोधयितुं 'मुनयः स्वदृष्ट्या' इति पदसूचितं तात्पर्यमाहुः—ब्रह्मविद इत्यारभ्य स्यादित्यन्ते (न)। स हीति। आत्मा हि। मननपर्यन्तं व्यापृता इति। न निदिध्यासनपराः। अत एव तदपि मतमप्यात्मस्वरूपं सर्वदा तेषां नाऽनुभवगोचरम्। तत्रापि हेतुस्तत्रेत्यादिनोक्तः। स्वरूपं चिद्रूपम्; धर्मोऽणुत्वम्; परिच्छेद इति यावत्। तथा चाऽधिकाराभावेन मार्गबन्धात् प्रतिबन्धकतेत्यर्थः। ननु तद्गतधर्माणां यदि नात्मज्ञानत्वं धर्मत्वं तदाऽन्यत्राऽपि गतिविघातः स्यात्, तथा सति मूलोक्तान्येतद्विशेषणानि विरुध्येरन्, अतो मार्गभेदप्रतिपादनं न समञ्जसमित्यत आहुः—आत्मा हीत्यादि। परधर्मानिति। विभूतिमतो भगवतो धर्मान्। तथा चाऽन्यत्राप्रतिरोधान्न विशेषणविरोध इत्यर्थः। तानित्यत्र। अत एवेति। बालत्वाभावादेव। ॥ ३०॥ ❀ ❀ ताभ्यामित्यत्र। वाभ्यामित्यत्र तृतीयां विहाय चतुर्थीव्याख्याने बीजमाहुः—गमननिषेध इत्यादि। दर्शनेच्छाया हेतुपूर्वकमाकारमाहुः—यस्त्वित्यादि। स्वल्पत्वे गमकं प्रमाणं चाहुः—दिदृक्षितस्येत्यादि, अत एवेत्यादि च॥ ३१॥ ❀ ❀ को वामित्यत्र। कारिकायाम् सेति। मित्रकृतिः। कार्यद्वारा वैषम्यस्वरूपं प्रकटयन्ति—आत्मीयानामित्यादि—उचितत्वादित्यन्तम्। अधिक्षेपं वक्तुं तन्मूलभूतविचारस्वरूपमाहुः—तेषां मत इत्यादि—आगमनमित्यन्तम्। तत्र हेतुः—निवारितमित्यादि। एतस्य विचारस्याऽऽपातप्रतिपन्नतां बोधयन्ति—आग्रहेत्यादि॥ ३२॥

### श्रीगिरिधरकृता बालप्रबोधिनी

एतयोः पार्षदयोर्मिषतोः पश्यतोः सतोस्तावनादृत्य अपृष्ट्वा भगवान् किं करोति दर्शनावसरोऽस्ति नास्ति वा अन्तर्गन्तव्यं न वेति प्रश्नमकृत्वैव याः पूर्वाः षट् द्वारः पुरटालंकृतवज्रमय्यः कपाटिका यासु ता यथा विविशुस्तथाऽस्यां सप्तमायामपि द्वारि निविविशुरित्यन्वयः। अपृष्ट्वैव निवेशे हेतुमाह—सर्वत्रेति। मुनय अविषमया उत्कृष्टापकृष्टस्त्रीपुंस्त्वादिवैषम्यरहितया स्वदृष्ट्या विगताभिशङ्काः अत्र प्रवेष्टव्यं न वेति शङ्काशून्याः अतः समदृष्ट्यैव अवहिता अनिवारिता ये सर्वत्र चरन्ति ते निविविशुरिति पूर्वेणैवान्वयः॥ २९॥ ❀ ❀ तांश्चतुरः कुमारान् सनत्कुमारादीन् वीक्ष्य तेषां तेजः प्रभावमहो अत्रापि धाष्टर्यमित्येवं विहस्य तौ पार्षदौ वेत्रेण चकाराद्वचनेन च अस्खलयतां निवारितवन्तावित्यन्वयः। निवारणे हेतुमाह—वातरशनानिति, वातः पवन एव रशना वस्त्रं येषां तान् नग्नानित्यर्थः। तत्रैव हेत्वन्तरमाह—वृद्धानिति, ब्राह्मकल्पे जातत्वेन वृद्धानपि दशार्धवयसः पञ्चवर्षबालकवत्प्रतीयमानानित्यर्थः। तथापि तन्निवारणमनुचितमित्याह—अतदर्हणानिति, न तत् स्खलनमर्हन्तीति तथा तानित्यर्थः। तत्र हेतुमाह—विदितेति, विदितमात्मतत्त्वं परमात्मयाथात्म्यं यैस्तानित्यर्थः। तर्हि किमिति निवारितवन्तावित्यत आह—भगवतो भक्तवत्सलस्य प्रतिकूलं शीलं ययोस्तावित्यर्थः॥ ३०॥ ❀ ❀ एवं द्वारपालकृतं प्रतिषेधं निरूप्य मुनिकृतं शापं निरूपयति—ताभ्यामिति। एवं ताभ्यां हरेः प्रतीहारपाभ्यां द्वारपालाभ्यां अनिमिषेषु अन्येषु देवेषु मिषत्सु पश्यत्सु सत्सु स्वर्हत्तमास्तत्त्वज्ञत्वसमदर्शित्वादिना अत्यन्तं पूज्यतमा निषेधानर्हा अपि हि यतो निषिध्यमानाः अतः सुहृत्तमो भगवांस्तस्य

1. सर्वथोपपत्तिः क. घ.।

दिदृक्षितं दर्शनेच्छा तस्य भङ्गे सति प्रतिरोधे सति य ईषत् कामानुजः स्वल्पक्रोधस्तेन सहसा झटिति उपप्लुतानि व्याप्तानि अक्षीणि येषां तथाभूताः सन्तस्ते ऊचुरित्यन्वयः ॥ ३१ ॥ ❀ ❀ तदुक्तिमेव दर्शयति—को वामित्यादिभिस्त्रिभिः । उच्चैर्म-हत्या जन्मान्तरेष्वनेकेषु कृतया भगवत्परिचर्यया एत्य इमं लोकमेत्य इह निवसतां तद्धर्मिणां तस्य भगवतो धर्मा ब्रह्मण्यसमदर्शि-त्वादयस्तद्वतां मध्ये वां युवयोरेव कोऽयं विषमः स्वभावः कैश्चित्प्रवेष्टव्यं कैश्चिन्नेति विषमा बुद्धिः ? । स्वामिनो रक्षार्थं द्वारपाल-योरेवं स्वभावो गुण एवेति चेत्तत्राहुः—तस्मिन्निति । आत्मवत्स्वदृष्टान्तेन यथा आवां कुटिलौ तथाऽन्योऽपि कश्चित् कुटिलः प्रवेक्ष्यतीत्येवं परिशङ्कनीयो वां युवयोः तस्मिन् भगवति को वाऽस्ति ? । भगवद्विरोधी कोऽपि नास्तीत्यर्थः । तत्र हेतुमाह—गतविग्रहे त्यक्तकलहे इत्यर्थः । तत्रापि हेतुमाह—प्रशान्तेति, प्रकृष्टशान्त्यादिगुणयुक्ते पुरुषे इत्यर्थः । अतो भक्तिं विनाऽत्रागमना-सम्भवाद्भगवति प्रशान्तत्वादिगुणविशिष्टे विरोधाभावेन भयासम्भवाच्च तत्र भयमिषेणास्मत्प्रतिषेधकर्त्रोर्युवयोरेव कौटिल्य-मित्याहुः—कुहकयोरिति, कुटिलचित्तयोरित्यर्थः ॥ ३२ ॥

### हिन्दी अनुवाद

उनके इस प्रकार देखते रहनेपर भी वे मुनिगण उनसे बिना कुछ पूछताछ किये, जैसे सुवर्ण और वज्रमय किवाड़ोंसे युक्त पहली छः ड्योढ़ी लाँघकर आये थे, उसी प्रकार उनके द्वारमें भी घुस गये । उनकी दृष्टि तो सर्वत्र समान थी और वे निःशङ्क होकर सर्वत्र बिना किसी रोक-टोकके विचरते थे ॥ २९ ॥ ❀ ❀ वे चारों कुमार पूर्ण तत्त्वज्ञ थे तथा ब्रह्माकी सृष्टिमें आयु सबसे बड़े होनेपर भी देखनेमें पाँच वर्षके बालकों-से जान पड़ते थे और दिगम्बर-वृत्तिसे ( नंग-धड़ंग ) रहते थे । उन्हें इस प्रकार निःसङ्कोचरूपसे भीतर जाते देख उन द्वारपालोंने भगवान्के शील-स्वभावके विपरीत सनकादिके तेजकी हँसी उड़ाते हुए उन्हें बेंत अड़ाकर रोक दिया, यद्यपि वे ऐसे दुर्व्यवहारके योग्य नहीं थे ॥३०॥ ❀ ❀ जब उन द्वारपालोंने वैकुण्ठवासी देवताओंके सामने पूजाके सर्वश्रेष्ठ पात्र उन कुमारोंको इस प्रकार रोका, तब अपने प्रियतम प्रभुके दर्शनोंमें विघ्न पड़नेके कारण नेत्र सहसा कुछ-कुछ क्रोधसे लाल हो उठे और वे इस प्रकार कहने लगे ॥३१॥ ❀ ❀ मुनियोंने कहा—अरे द्वारपालों ! जो लोग भगवान्की महती सेवाके प्रभावसे इस लोकको प्राप्त होकर यहाँ निवास करते हैं, वे तो भगवान्के समान ही समदर्शी होते हैं । तुम दोनों भी उन्हींमेंसे हो; किन्तु तुम्हारे स्वभावमें यह विषमता क्यों है ? भगवान् तो परम शान्त-स्वभाव हैं, उनका किसीसे विरोध भी नहीं है; फिर यहाँ ऐसा कौन है, जिसपर शङ्का की जा सके ? तुम स्वयं कपटी हो, इसीसे अपने ही समान दूसरोंपर शङ्का करते हो ॥ ३२ ॥

**न ह्यन्तरं भगवतीह समस्तकुक्षावात्मानमात्मनि नभो नभसीव धीराः ।**
**पश्यन्ति यत्र युवयोः सुरलिङ्गिनोः किं व्युत्पादितं ह्युदरभेदि भयं यतोऽस्य ॥ ३३ ॥**
**तद्वाममुष्य परमस्य विकुण्ठभर्तुः कर्तुं प्रकृष्टमिह धीमहि मन्दधीभ्याम् ।**
**लोकानितो व्रजतमन्तरभावदृष्ट्या पापीयसस्त्रय इमे रिपवोऽस्य यत्र ॥ ३४ ॥**
**तेषामितीरितमुभाववधाय घोरं तं ब्रह्मदण्डमनिवारणमस्त्रपूगैः ।**
**सद्यो हरेरनुचरावुरु बिभ्यतस्तत् पादग्रहावपततामतिकातरेण ॥ ३५ ॥**
**भूयादघोनि भगवद्भिरकारि दण्डो यो नौ हरेत सुरहेलनमप्यशेषम् ।**
**मा वोऽनुतापकलया भगवत्स्मृतिघ्नो मोहो भवेदिह तु नौ व्रजतोरधोऽधः ॥ ३६ ॥**

### श्रीधरस्वामिविरचिता भावार्थदीपिका

भयशंकाबीजं च भेदः स च कस्याप्यस्मिन्नास्तीत्याहुः । न हीति । समस्तं विश्वं कुक्षौ यस्य यत्र यदेह भगवति धीरा विद्वांस आत्मनोंऽतरं भेदं न पश्यंति किं त्वस्मिन्परमात्मन्यात्मानमंतर्भूतं पश्यंति महाकाशे घटाकाशमिव तदा यथा-ऽन्यस्य राजादेरुदरभेद्युदरभेदयुक्तं भयं भवति तथाऽस्य श्रीहरेस्तादृग्भयं यतो येन कारणेन सुरवेषधारिणोर्युवयोर्विशेषेणोत्पा-दितं तत्किम् । न किंचिदित्यर्थः ॥ ३३ ॥ ❀ ❀ तत्तस्मादमुष्य वैकुंठनाथस्य भृत्याभ्यां युवाभ्यां प्रकृष्टं भद्रमेव कर्तुमि-हास्मिन्नपराधे यद्युक्तं तद्धीमहि चिंतयेम । तदेवाहुः । अंतरस्य भेदस्य भावः सत्ता तद्दर्शनेन इतो वैकुंठलोकाद्व्रजतम् । यत्र येषु लोकेष्वस्य पापीयसोंऽतरभावद्रष्टुरिमे "कामः क्रोधस्तथा लोभ" इति गीतोक्तास्त्रयो रिपवो भवंति । इतो वैकुंठात्पापी-यसो लोकानिति वा ॥ ३४ ॥ ❀ ❀ इति तेषामीरितं भाषणं घोरमवधार्य तं च ब्रह्मदंडं ब्रह्मशापमवधार्य तं चास्त्र-

मूहैरप्यनिवार्यमवधार्य हरेरनुचरावतिकातरेणातिकातर्येण भयेन तत्पादग्रहणं कुर्वंतौ संतौ दंडवदपतताम् । कथंभूतस्य हरेः— एवंभूतेभ्यो मुनिभ्यस्ताभ्यामप्युरु अधिकं बिभ्यतो भयं भावयतः ॥ ३५ ॥ ❀ ❀ अहो अपराद्धमस्माभिरित्यनुतप्यमाना-न्प्रत्यूचतुः । अघोन्यघवति य उचितो दंडः स एव भगवद्भिरकारि नात्र भवतामपराधः कश्चित् । अतोऽसौ नौ आवयो-र्भूयात् । योऽशेषमपि सुरहेलनमीश्वराज्ञातिक्रमरूपं पापं हरेत किंतु युष्माकं यः कृपानिमित्तोऽनुतापस्तस्य लेशेन नौ अधो-ऽधो मूढयोनीर्व्रजतोरपि भगवत्स्मृतिप्रतिघातको मोहो मा भवेत्किं तु मोहोऽपि स्मृतिमेव प्रवहतादिति प्रार्थना ॥ ३६ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

उदरोपलक्षितदेहभेदयुक्तं तादृग्भयमुदरोपलक्षितदेहभेदभयम् इत्यर्थ इति । रे मूर्खाः शृणुत ये शंकनीयास्तेप्यस्य कुक्षौ वसंतीति भावः । यद्वा । कश्चिच्छत्रुर्वेषांतरेण प्रविश्य प्रभोरस्योदरं भेत्स्यतीति भयमित्यर्थः । अत्र यद्यपि सर्वज्ञादि-स्वरूपभूतानंतकल्याणगुणादीश्वरचैतन्यादल्पज्ञादिस्वभावं जीवचैतन्यं सूर्यात्तदातप इव जात्यैव भिद्यते तदाप्यत्र वक्तॄणां सनका-दीनां ज्ञानित्वात् ज्ञानिनां च पद्धतावद्वैतज्ञानलभ्यनिर्वाणसिद्ध्यर्थं चित्सामान्यग्रहणस्यैव विधीयमानत्वाच्चिद्विशेषभूतानामीश्वर-जीवयोर्गुणानां मायायाश्च ग्रहणस्य निषिद्धत्वादीश्वरजीवयोर्महाकाशदृष्टांतो नानुपपन्नो ज्ञेय इति विश्वनाथः ॥ ३३ ॥ ❀ ❀ एवं निंदित्वाप्यशांतक्रोधाः पुनराहुः यतो युवाभ्यामस्य विष्णोर्भेददर्शनेन विशेषतो ब्रह्मण्यदेवस्य ब्राह्मणवारणेन चापकर्षः कृतस्तत्तस्माद्धेतोरस्यांतरंगत्वाद्वयमेव ध्यायेमेत्यर्थः । तदेव प्रकृष्टकरणमेव । अंतरस्य भेदस्य सत्ताभवनं "भावः सत्ताजन्मनोः स्यात्" इति कोशात् । अस्य इम इत्याभ्यां बुद्धिस्थपरामर्शस्त्यदादीनां तथात्वोक्तेः । विश्वनाथस्तु—अत्रापरोक्षार्थवाचिनेदंशब्द-प्रयोगेणैते संप्रत्यस्माद्देहादुद्भूताः क्रोधादय इति सरस्वत्यभिमता इत्यर्थमाह । संभवत्वादर्थांतरमाह पापीयसो लोकानिति वेति । गोस्वामिनस्तु—लोकान् जनसमूहान् व्रजतं तत्र जायेतां यत्र व्रजने इमेस्मान्निर्दिष्टा लोका दैत्यराक्षसराजन्यजनसमूहास्तयोऽस्य भगवतोऽपि रिपवो भविष्यंतीत्याहुः ॥ ३४ ॥ ❀ ❀ अहो अपराद्धमावाभ्यां यद्ब्राह्मणाः कोपिता इति घोरं भयजनकम् । अस्त्रसमूहैर्ब्राह्मपाशुपताद्यस्त्रसंघातैः । एवंभूतेभ्यः क्रोधयुक्तपस्विभ्यः । ताभ्यां जयविजयाभ्यामपि सकाशादात्मनोऽधिकं भयं भावयतश्चिंतयतः । विश्वनाथस्तु—हरेः सकाशात्प्रथमं बिभ्यतुर्भीतौ । अतुस उकारस्याकारश्छांदसः । ततश्च तत्पादग्रहणं कुर्वंतौ दंडवदपततामित्याह । किञ्च ब्रह्मदंडमवधार्येत्यनेन तेषां शापात्पूर्वं ब्राह्मणत्वज्ञानं नासीदिति गम्यते ॥ ३५ ॥ ❀ ❀ तौ तु स्वस्य जन्म तद्रिपुषु बुध्द्वा रिपुत्वं च बुध्द्वा तत्स्मरणमात्रं प्रार्थयेते । यद्वा । अहो अपराद्धमस्माभिरेव यद्युवां भगवद्भक्तौ शप्तौ हंत हंतातः परं किं कुर्मः क्रोधाद्या जिता इत्यस्माकीनः सार्वकालिकोऽभिमानोऽत्र वैकुंठे चूर्णीबभूवेत्यनुतप्तान्प्रत्येकमाहतुः अघवत्यपराधिनि मयि भगवद्भिर्युष्माभिः । असौ भूया दित्याशीर्लिङा तमहमाशिषमेव भावयामीति न तु दंडम् । अत्र हेतुं पुनर्द्वौ संहतावेवाहतुः य इति नावावयोः युष्मदवज्ञानाद्भगवदनभिप्रेताचरणाच्च वैकुंठदेशानुचितक्रोधकरणाच्च युष्मासु भगवति वैकुंठे धाम्नि च जनितोऽपराधः सर्वं हरेत नाशयेत् ॥ ३६ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

अस्मिन् भगवति विद्वांसो ब्रह्मनिष्ठाः आत्मानं त्वंपदार्थमन्तर्भूतं जहदजहल्लक्षणया सामानाधिकरण्येनाभिन्नमुदर-भेदयुक्तमुदरोपलक्षितदेहैर्यो भेदः पृथक् पृथक् तत्पूरणात्मकः तद्युक्तं तादृक् उदरभेदयुक्तं येन भेददर्शनरूपेण कारणेन कर्त्रा युवयोः सम्बन्धे किं वा युवाभ्यां तत् भयबीजं भेददर्शनं किं भगवत्यस्ति न किञ्चिदित्यर्थः ॥ ३३ ॥ ❀ ❀ तस्मात्केवलधूर्तत्वात् युवाभ्यामिति चतुर्थी उद्देशार्थिका अस्मिन्भेददर्शनरूपेऽपराधे यद्युक्तं दण्डरूपं कारणम् ॥ ३४ ॥ ❀ ❀ घोरमसुरत्वोत्पादक-भयजनकं तं च भापणरूपं ब्रह्मदण्डमवधार्य्य ब्रह्मदण्डत्वेन निश्चित्येति पूर्वं सनकादिषु तेषां ब्राह्मणत्वज्ञानमवधानविषयं नासीदिति गम्यते । अत्र विधेयपरामर्शकत्वात्तच्छब्दस्य पुंस्त्वं तच्च ब्रह्मदण्डम् । एवं भूतेभ्यः शापं दातुं समर्थेभ्यः ताभ्यां भीताभ्यां जयविजयाभ्यां भावयतः कुर्वतः ॥ ३५ ॥ ❀ ❀ अस्माभिरपराद्धमपराधः कृतः अत्र तयोर्द्वित्वात् अघवतीत्येकवचनमसम्बद्धं स्यात् यच्छब्दस्य च तच्छब्दापेक्षकत्वम् अत उचित इति पदमध्याहृतम् । अत्रोचित-दण्डकरणे अत औचित्यात् असौ दण्डः । इह ईदृगपराधे भगवत्स्मृतिघ्नस्तु मोहो न भवेत् । आनुकूल्याभावेनापि स्मृतिमेव प्रवहतात् ॥ ३६ ॥

### श्रीमद्वीरराघवव्याख्या

नन्वस्त्वयं लोक एवं विधिः नाप्यत्रत्यः कश्चित्कुहकः तथापि भगवतामन्तःप्रवेशो भगवतोऽनिष्ट इति मत्वा वारयाम इत्यत्राहुः । नहीति । समस्तं विश्वं कुक्षौ यस्य तस्मिन् भगवत्यन्तरमयमन्तःप्रवेशयोग्यो नायमित्येतदन्तरं वैषम्यं नह्यस्तीत्यर्थः । समस्तकुक्षाविति विशेषणेन भगवता स्वोदरे निवेश्यमानं जगद्भवद्भ्यां किं निवारितमित्यभिप्रेतं भगवत्यन्तराभावमेवाह । यत्र यस्मिन्नात्मनि परमात्मनि आत्मानं जीवात्मानं नभसि महाकाशे नभः घटाद्याकाशमिव धीराः योगिनः पश्यन्ति अपृथक्सिद्धत्वेना-

नुसन्दधत इत्यर्थः। अत्राविभागेन साम्ये एव नभो दृष्टान्तः न तु तादात्म्यं दृष्टान्तेऽप्याकाशप्रदेशानां पार्थिवानां घटपटादीनामभिन्नत्वेन तादात्म्यासम्भवादाकाशस्य प्रदेशभेदानभ्युपगमे घटादेर्विभुत्वमाकाशस्याल्पत्वं वा प्रसज्जेत। तथाहि किं घटादेः कृत्स्नाकाशेन सम्बन्धः उत प्रदेशभेदेन, पूर्वस्मिन् पक्षे घटादेर्विभुत्वमाकाशस्याल्पपरिमाणत्वं वा, द्वितीये तु प्रदेशभेदाङ्गीकार एव वेदान्तिभिर्नभसो निरवयववादोऽपसिद्धान्तितः। वेदान्तेपु तस्यांशभेदेन पञ्चीकरणोपदेशादेकदेशांशेन वायुत्वेन परिणामवादादुत्पत्तिप्रलयदर्शनाच्च अत एव "घटध्वंसे घटाकाशो न भिन्नो नभसा यथा। ब्रह्मणा हेयविध्वंसे विष्ण्वाख्येन तथा पुमान्" इति शौनकवचनमपि नभस्यंशभेदाभिप्रायेण जीवस्य परस्मादात्मन औपाधिकवैषम्यविरहे दृष्टान्तसमर्थनपरं वेदितव्यं, यथाग्निरग्नौ सङ्क्षिप्तः समानत्वमनुव्रजेदिति तत्रैव साम्यदृष्टान्ताभिधानात् तस्माज्जीवात्मनः परमात्मानं प्रति शरीरत्वाच्छरीरस्यापृथक्सिद्धैकस्वाभाव्याज्जीवपरयोरवान्तरवैषम्येऽपि ज्ञानैकाकारत्वेन साम्याच्चाविभाग एव नभोदृष्टान्तः। अत एव ह्यविभागेनोपासनं मुक्तावनुभवश्च सूचितम् "आत्मेति तूपगच्छन्ति ग्राहयन्ति चाविभागेन दृष्टत्वात्" इति चातो यथोक्त एवार्थः। अतो भगवतः सर्वात्मकत्वात् न वैषम्यमस्तीत्यर्थः। सुरलिङ्गिनोरनुकूलवेशयोर्युवयोः सुरलिङ्गिभ्यां युवाभ्याम् इत्यर्थः। किं व्युत्पादितं रागद्वेषरहितेऽस्मिन् देशे किं भवद्भ्यामन्यनिवारणव्युत्पत्तिः कृता न ह्यत्रेदृशव्युत्पत्तिसम्भवः, अस्य देशस्य उदरभेदि उत् अपि अरं भेदोऽन्तरं वैषम्यमिति यावत् अल्पमप्यन्तरनिमित्तमित्यर्थः एवंविधं भयं यतः कारणादवगम्यते तादृशी व्युत्पत्तिः किं कृतेत्यर्थः। यद्वा यथान्यस्य रोगादेरुदरयुक्तं भयं भवति तथास्य हरेस्तादृग्भयं येन कारणेन सुरवेषधारिणोर्युवयोः विशेषेणोत्पादितं तत्किन्न किञ्चिदित्यर्थः ॥३३॥ ❀ ❀ तत्तस्मादमुष्य परमस्य समाभ्यधिकरहितस्य विकुण्ठभर्तुर्वैकुण्ठनाथस्य मन्दबुद्धिभ्यां वां युवाभ्यां वैकुण्ठनाथसम्बन्धिभ्यां कर्तुं यत्प्रष्टं युक्तं तद्धीमहि विचारयामः। किन्तदिति चेत् इतः लोकाल्लोकान् व्रजतं गच्छतं कान् लोकानित्यत्राहुः अन्तरभावदृष्ट्या परकीयस्वीयवैषम्यसद्भावबुद्ध्या पापीयसः त्रयः कामक्रोधलोभरूपाः रिपवः शत्रवः यत्र येषु लोकेषु भवन्ति तान् व्रजतमित्यर्थः। यदि भगवदभिप्रायेण वयं नापराधिनः युवामेवापराधिनौ ततो व्रजतमित्याशयः "अस्मासु वा य उचितो ध्रियतां स दण्डो येऽनागसो वयमयुङ्क्ष्महि किल्बिषेणे"ति वक्ष्यमाणत्वात्। ननु "स महात्मा सुदुर्लभ" इति भगवता गीतत्वात्कथं नित्यसिद्धानां शापानुभवः। ते हि सदा समस्तहेयरहिताः नित्यासंकुचितज्ञानैश्वर्यादिगुणाश्च "नित्यज्ञानक्रियैश्वर्ययोगोपकरणान्विता" इति ह्युच्यते। सत्यं तथाविधाः परमाकाशवर्तिनः पुरुषाः, इमौ तु द्वारपालौ, परमव्योमनिलयनित्यसिद्धभगवत्परिजनसमानरूपौ तु सुकृतविशेषाल्लब्धद्वाःस्थाधिकारौ। अन्यथा भगवद्भक्तप्रातिकूल्यायोगाल्लक्ष्म्याः प्रवेशनिवारणायोगाच्च साक्षाद्भगवत्परिजनानां हि नित्यं ज्ञानक्रियैश्वर्यवचनाद्भगवदभिप्रायानभिज्ञत्वं नोपपद्यते। भगवदनुचरत्वप्राप्तिश्चानुष्ठानविशेषाद्भवतीति स्मर्य्यते "भूमौ प्रस्तरशायी च विष्णोरनुचरो भवेत्" इत्यादि यथाऽनन्तवैनतेयव्यतिरेकेण नागसुपर्णजातीया बहवो विद्यन्ते एवं सुकृतवशाद्भगवत्परिजनतुल्यरूपतामापन्ना बहवः सम्भवन्ति अत्रापि "वसन्ति यत्र पुरुषाः सर्वे वैकुण्ठमूर्तयः। येऽनिमित्तनिमित्तेन धर्मेणाराधयन् हरिम्" इति सामान्यत उक्ताः। 'को वामिहैत्य भगवत्परिचर्ययोच्चैरि' त्यनयोर्भगवदाराधनेन तद्देशप्राप्तिर्विशेषत उक्ता' किञ्च "नन्दः सुनन्दोऽथ जयो विजयः प्रबलो बलः। कुमुदः कुमुदाक्षश्च विष्वक्सेनः पतत्रिराट्। जयश्चाश्रुतदेवश्च पुष्पदन्तश्च सात्वतः। सर्वे नागायुतप्राणा ह्यजेयाश्च सुरासुरैः॥" इति त्रिविक्रमकाले जयविजयस्थानावगमाच्च शापाभिभूतौ जयविजयौ साक्षाज्जयविजयाभ्यामन्यौ निश्चितौ कृष्णावतारे शापान्मोक्ष्यमाणयोस्तयोर्वामनावतारे तयोः पारिषदत्वावाप्त्यनुपपत्तेः। अस्य लोकस्य परमाकाशादन्यत्वं पूर्वमुपपादितम्। अतस्त्रिपाद्विभूतिवर्तिभगवत्परिजनव्यतिरिक्तत्वमनयोः सिद्धमिति न प्रमाणान्तरविरोधः॥ ३४॥ ❀ ❀ अथैवं मुनिभिरुक्तौ भगवद्द्वाःस्थौ तेषां पादमूले पतितौ विज्ञापयामासतुरित्याह ब्रह्मा तेषामित्यादि द्वाभ्याम्। तेषां मुनीनां तदीरितं भाषितं कथंभूतं ब्रह्मदण्डं ब्रह्मशापरूपमत एवास्त्रपूगैरस्त्रसमूहैरनिवारितमनिवारणीयम्। इत्युक्तप्रकारेणावधार्य श्रुत्वा सद्यः तदैव हरेरनुचरौ भृत्यावतिकातरेण तत्पादग्रहौ तेषां मुनीनां पादग्रहौ पादौ गृहीतवन्तौ उरु बिभ्यतः उरु अधिकं बिभ्यतः भीतान् अहो अस्माभिर्निरपराधाभ्यां भगवद्भक्ताभ्यामपराधमनेन भागवतापचारेण वयमपि संसरेमेति भयकम्पितान्मुनीन्प्रति अपततां दण्डवत्प्रणामपूर्वकं विज्ञापयामासतुरित्यर्थः॥ ३५॥ ❀ ❀ विज्ञापनमेवाह। भूयादिति। अघोन्यपराधवति य उचितो दण्डः स भगवद्भिर्युष्माभिरकारि कृतः नात्र कश्चिद्भवतामपराध इति भावः, अतोऽसौ दण्डः नावावयोर्भूयात् अशेषसुरहेलनं भवत्तिरस्काररूपं पापं च हरेतापनुद्याच्च। किन्त्वधोऽधः मूढयोनिषु व्रजतोरपि नावावयोर्भगवद्विषयस्मृतिनाशकः मोहः वः युष्माकमनुतापकलया यः कृपानिमित्तोऽनुतापः तस्य कलया लेशेन मा भवेत् न न भवेदित्यनुह्णीतेत्यर्थः॥ ३६॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

अपादितदोष एव पुरुषो दण्डयोग्य इति तयोर्दोषित्वमुपपादयन्ति। नहीति। इहास्मिँल्लोके स्थिता धीरा ज्ञानिनः समस्तस्य मुक्तामुक्तप्रपञ्चस्य कुक्षयः शरीरकुहराणि यस्यावासभूतानि स समस्तकुक्षिस्तस्मिन्। यद्वा समस्तकुक्षौ स्थिते भगवति अन्तरञ्छिद्रं भेदं न पश्यन्ति किन्तु यत्र यस्मिन् लोके नभसि महाकाशे नभो घटाकाशमिवात्मानं स्वात्मस्थं भगवद्रूपमात्मनि

व्याप्ते भगवद्रूपे पश्यन्ति तयोरैक्येनेत्यर्थः। ततः किमत्राह युवयोरिति। एवं ज्ञानिप्रत्यक्षे जाग्रति सुरलिङ्गिनोर्देवलक्षणवतोर्युवयोर्मनसा यतो भेददर्शनादस्य भेदस्य द्रष्टुः पुंसः सर्वत्र दुःखप्राप्तिरूपं भयं भवति तादृशमुदरभेदि उद्गता अरा दोषा यस्मात् तदुदरं ब्रह्म तस्य भेददर्शननिमित्तं भयं व्युत्पादितं किं प्रतिशरीरमन्तर्यामित्वेन स्थितस्याभयस्य हरेरन्यस्माद्भयमस्तीति बुद्धिः कृता। अन्यथास्मन्निवारणं किमिति कृतं हिशब्देन तत्स्वानुभव सिद्धं दर्शयन्ति। यद्वा

सर्वोदरगतं ब्रह्म ये भेदेन विचक्षते। सर्वत्रापि भयं तेषां मृतानां तम एव च॥

इति वाक्यं प्रमाणयन्ति। युवयोरिति तृतीयार्थे षष्ठी, तया तद्द्वारपालत्वेन स्वस्वामिसम्बन्धस्य स्वानुभवसिद्धत्वेन तदपलापेन सर्वापलापप्रसङ्गात् भगवदपराध एव कृत इति द्योतयन्ति॥ ३३॥ ❀ ❀ एवं दोषानुपपाद्य तद्योग्यं दण्डं कर्तुमुपक्रमन्ते। तद्वा इति। मन्दधीभ्यां कपटबुद्धिभ्यां युवाभ्याममुष्य विकुण्ठभर्तुर्मूलरूपस्य परं पश्चादस्यावतारान्तर्यामिरूपस्य च यद्भेददर्शनं तत्कर्तुं न युक्तमिति धीमहि चिन्तयामः, तद्युवाभ्यां कृतमतोऽन्तरभावदृष्ट्या भेददर्शनेनेतो वैकुण्ठलोकाद्यत्र येषु त्रिष्विमे त्रयोऽस्य हरे रिपवः स्युः तान्पापीयसोऽतिपापाज्जन्मयोग्यान् लोकान् देहान् व्रजतमित्यन्वयः। त्रीनासुरान्देहान्यातमित्यर्थः। वा इत्यनेन यथोदकं दुर्गे वृष्टं पर्वतेषु विधावति इत्यादि श्रुतिं प्रमाणयन्ति॥ ३४॥ ❀ ❀ स्वतो जयविजयौ सच्चेतनाविति ध्वनयति। तेषामिति। तावुभौ हरेरनुचरौ जयविजयौ उरु बहु विभ्यत इत्यन्वयः। ब्रह्मास्त्रायस्त्रगैरनिवारणं प्रतिषेद्धुमशक्यं घोरं तेषामितीरितं ब्रह्मदण्डं ब्रह्मशापमवधार्य हृदि कृत्वा किञ्च तेषां पादौ गृहीत इति तत्पादग्रहावपततां भूमाविति शेषः। अतिकातरेणेति भयातिरेकं दर्शयति। सद्य इति निर्दोषत्वम्॥ ३५॥ ❀ ❀ पादयोः पतित्वा ताभ्यां पुनः किं कृतमत्राह। भूयानिति। हे चतुर्थाश्रमशिखामणयो भगवद्भिर्भवद्भिरस्मत्कृतादघादपराधाद्धि हेतोर्भूयान्महान् दण्डोऽकारि युक्त एवार्यमिति ब्रुवाते। य इति। यो दण्डो नावावयोः न केवलं युष्मदपराधमेव हरति किन्त्वशेषं यथा तथा सुरहेलनं श्रीब्रह्मादिदेवावज्ञानमपि हरेत हर्तुं समर्थो भवति। तत्रेदं भगवतः प्रार्थयावहे नावावयोरिह वैकुण्ठे स्थितयोरंशिनोर्वो युष्माकमनुतापकलया पश्चात्तापलेशेन पुनः पूर्ववत् भगवत्स्मृतिघ्नो भगवतो यथा स्वरूपज्ञाननाशको मोहो मा भवेत् माभूम कीदृशयोर्युष्मच्छापेनाधोऽधोलोकादप्यधरलोकमासुरं व्रजतोर्गच्छतोरंशेनेति शेषः॥ ३६॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

धीराः ब्रह्मनिष्ठाः उदरैस्तदुपलक्षितैर्देहैर्यो भेदः पृथक् पृथक् तत्पूरणात्मकः। यदुक्तं तत्कारणं भयम्॥ ३३॥ ❀ ❀ पापीयसो लोकान् जनसमूहान् व्रजतं तेषु जायेताम्। यत्र व्रजने इमे अस्मिन्निर्दिष्टा लोका दैत्यराक्षसराजन्यजनसमूहास्त्रयोऽस्य भगवतोऽपि रिपवः॥ ३४॥ ❀ ❀ तच्च ब्रह्मदण्डमवधार्य्येत्यनेनानयोस्तेषु पूर्वं ब्राह्मणत्वज्ञानं नासीदिति गम्यते। ब्राह्मणेभ्य उरु विभ्यतः॥ ३५॥ ❀ ❀ तौ तु स्वस्य तद्रिपुष्वेव जन्म बुद्ध्वा रिपुत्वञ्च बुद्ध्वा तत्स्मरणमात्रं प्रार्थयेते। भूयादिति। इह ईदृगपराधे भगवत्स्मृतिघ्नस्तु मोहो मा भवेदित्यन्वयः॥ ३६॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

शृणुतं रे मूर्खौ शृणुतमित्याहुः। नहीति। समस्तमेव विश्वं कुक्षौ यस्य तस्मिन्निति युवयोऽर्ये शङ्कनीयास्तेऽप्यस्य कुक्षावेव वसन्तीत्यर्थः। इह वैकुण्ठे यत्र भगवति आत्मनि परमात्मनि आत्मानं सर्वमेव जीवात्मानं धीरा ज्ञानिनोऽन्तरं भिन्नं न पश्यन्ति नभसि महाकाशे नभो घटाकाशमिव तस्यास्य परमेश्वरस्य युवाभ्यां सुरलिङ्गिभ्यां उदरभेदि भयं शत्रुः कश्चित् कपटेनागत्य प्रभोरस्य उदरं भेत्स्यतीति भयं यतः कारणात् विशेषेणोत्पादितं तत् किं नाम अस्माकमग्रे ब्रूतं तावत् प्रथममित्यर्थः। अत्र यद्यपि सार्व्वज्ञ्यादिस्वरूपभूतानन्तकल्याणगुणादीश्वरचैतन्यादल्पज्ञत्वाधीनत्वादिस्वभावं जीवचैतन्यमीशितव्यं सूर्य्यात्तदातप इव जात्यैव भिद्यते, तथाप्यत्र वक्तॄणां सनकादीनां ज्ञानित्वाज्ज्ञानिनाञ्च पद्धतौ अद्वैतज्ञानलभ्यनिर्वाणसिद्धयर्थं चित्सामान्यग्रहणस्यैव विधीयमानत्वात् चिद्विशेषभूतानामीश्वरजीवयोर्गुणानां मायायाश्च ग्रहणस्य निषिद्धत्वादीश्वरजीवयोर्महाकाशदृष्टान्तो नानुपपन्नो ज्ञेयः॥ ३३॥ ❀ ❀ एवं निन्दित्वाप्यशान्तत्वात् पुनरतिक्रोधात् शपन्ति तत्तस्माद्वां युवाभ्यां मन्दधीभ्यां भृत्याभ्याममुष्य विकुण्ठभर्त्तुः प्रकृष्टं प्रकर्षं कर्त्तुं धीमहि अत्र भेददर्शनं विशेषतो ब्राह्मणवारणञ्च ब्रह्मण्यदेवस्यापकर्षस्तदभाव एव प्रकर्षस्तं कर्तुं तदनन्तरङ्गत्वेन वयमेव चिन्तयेमेति क्षणं तूष्णीं स्थित्वा तदेवाहुः। इतो वैकुण्ठाद् व्रजतम् लोकेषु पापीयसो युष्मद्विधापराधिजनस्य भेदभावदृष्ट्या इमे कामः क्रोधस्तथा लोभ इति गीतोक्तास्त्रयो रिपवो भवन्ति अत्रापरोक्षार्थवाचिना इदंशब्दप्रयोगेणेमे सम्प्रत्यस्मादेहाद्भूताः क्रोधादय इति सरस्वत्यभिमतोऽर्थः॥ ३४॥ ❀ ❀ अहो अपराद्धमावाभ्यां यद्ब्राह्मणाः कोपिता इति तयोर्वैक्लव्यमाह। तेषामिति। हरेः सकाशात् प्रथमं विभ्यतः भीतौ अतुस उकारलोपश्छान्दसः। ततश्च अतिकातर्य्येण तेषां पादग्रहणं कुर्वन्तौ दण्डवदपतताम्॥ ३५॥ ❀ ❀ अहो अपराद्धमस्माभिरेव यद्युवां भगवद्भक्तौ शप्तौ हन्त अतः परं किं कुर्म्मः क्रोधाद्या जिता इत्यस्माकं सार्व्वकालिको

ऽभिमानोऽत्र वैकुण्ठे चूर्णीबभूवेति पश्चात्तापवतस्तान् प्रत्येकमाहतुः। अघोनि। अपराधिनि मयि भगवद्भिर्युष्माभिर्यो दण्डोऽकारि स भूयादित्याशीर्लिङ्ग तमहं स्वस्मिन्नाशीर्वादमेव भावयामि, न तु दण्डमत्र हेतुं पुनर्द्वौ संहतावेवाहतुः, यो दण्डः नौ आवयोरशेषमेव सुरहेलनं युष्मदवज्ञानात् भगवदनभिप्रेताचरणाच्च। वैकुण्ठदेशानुचितक्रोधकरणाच्च युष्मासु भगवति च वैकुण्ठधाम्नि च जातमपराधं सर्व्वं हरेत नाशयेत्। किन्तु युष्माकं यः कृपानिमित्तः सम्प्रत्यनुतापस्तस्य कलया एकेन लेशेन एतद्देवावां प्राप्नुयावः नौ आवयोरधोऽधः पततोरपि मोहो भगवत्स्मृतिघ्नो मा भवेत्। मोहस्तु भगवति सेव्यबुद्धिपरिपन्थी भविष्यत्येव। युष्मदभिशापान्यथानुपपत्तेस्तदपि मोहः सोऽपि स्मृतिमेव प्रवहवात् नतु विस्मृतिमिति प्रार्थना ॥ ३६ ॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

अत्यन्तभिन्नस्य नभसो भास्कराद्भयं भवति भगवतस्तु सर्वात्मनोऽत्यन्तभिन्नवस्त्वभावात् निर्भये तस्मिन् भयं कल्पितं तदयुक्तमित्याहुः। नेति। यतः समस्तं विश्वं कुक्षौ यस्य तस्मिन्सर्वात्मनि धीराः हि निश्चितमन्तरं समस्तभेदं न पश्यन्ति "सर्वं खल्विदं ब्रह्म तज्जलानिति" इति श्रुतेः अतः यत्र भगवति आत्मनि परमात्मनि आत्मानमंशभूतं नभसि अवयविनि बृहदाकाशे नभः अवयवभूतं घटाकाशमिव पश्यन्ति अत्र आत्मनि आत्मानमित्युक्त्या केवलभेदप्रतीतिस्तन्निराकरणार्थं नभो नभमीवेत्युक्तम्, अंशस्य स्वाधीनस्थित्यादिमत्त्वाभावादंश्यभिन्नमात्मानं पश्यन्तीत्यर्थः। "आत्मत्वेनावगच्छन्ति ग्राहयन्ति" इति न्यायात् तस्यास्य भगवतः राजादेरिवोदरभेदयुक्तं भयं सुरलिङ्गिनोः सुरवेषधारिभ्यां युवाभ्यां व्युत्पादितं किम् स्वात्मकात्स्वस्य भयासंभवात् भगवतः सकाशादेते ह्यतदात्मका अत्यन्ततो भिन्ना इति भेददृष्टिर्युवाभ्यां कृतेति भावः ॥ ३३ ॥ ❀ ❀ तत्तस्मात् इहास्मिन् अपराधे विकुण्ठभर्तुः मन्दधीभ्यां वां युवाभ्यां प्रकृष्टं भद्रमेव कर्तुं यदुचितं तद्धीमहि चिन्तयेम वैकुण्ठप्रदा एव जनानां ज्ञानभक्तिप्रवर्तकत्वान् नतु वैकुण्ठाद्भागवतानां पातहेतवः। नच वैकुण्ठगतानां पातः, किन्तु युवाभ्यां निमित्तभूताभ्यामनेकानां भक्तानां वैकुण्ठप्रापकान् भगवदवतारान्कारयितुं चिन्तयेमेति भावः। अन्तरस्यात्यन्तभेदस्य भावः सत्ता तस्य दृष्ट्या दर्शनेन इतो वैकुण्ठात् यत्र येषु लोकेषु अस्य जीवस्य कामः क्रोधस्तथा लोभ इति त्रयो रिपवस्तान् व्रजतं कामादयो यद्यपि सुरेष्वपि सन्ति तथापि तेषु कामादीनां प्राशस्त्याभावाद् असुरौ भवत इत्यर्थः। अयं शापो वराहादिमूर्तिभिर्जगद्धिताय स्वपार्षदैः सह लीलाविशेषकामेन भगवतैव कृतः। शापो मयैव निर्मित इति वक्ष्यमाणाद् अतः परं वैकुण्ठप्रदेशभूतात् प्रकृताद्वैकुण्ठात्पुनरावृत्तिशङ्का नास्तीति ज्ञेयम् ॥ ३४ ॥ ❀ ❀ इति पूर्वोक्तं तेषामीरितमिहेत्यादिभाषणमवधार्य इतः पततमिति घोरमनिवारणमनिवारणीयं ब्रह्मदण्डं ब्रह्मशापञ्चावधार्य हरेरनुचरौ अतिकातरेणातिकातर्य्येण भयेन सद्यस्तत्पादग्रहौ शीघ्रं तेषां चरणग्रहणं कुर्वन्तौ सन्तौ उरु अधिकं विभ्यतः। अथ भगवान् किं करिष्यतीति भगवतो भीतौ तान् प्रति दण्डवदपतताम् ॥३५॥ ❀ ❀ अहोऽस्माभिरेतौ भगवद्वियुक्तौ कृतावित्यनुतप्यमानान् मुनीन् प्रत्यूचतुः अघोनि अपराधवति य उचितो दण्डः स एव भवद्भिरकारि कृतः। नात्र भवतां कश्चिद्व्यतिक्रम इति भावः। अतोऽसौ नौ आवयोर्भूयात् अशेषं कृत्स्नं सुरहेलनं भवदवज्ञारूपं पापञ्च हरेदपनुद्यात् किंत्वधो मूढयोनीर्व्रजतोरपि भगवत्स्मृतिघ्नो मोहो वो युष्माकं दयारूपोऽनुतापस्तस्य लेशेन मा भवेत्। मूढयोरप्यावयोर्वैरादिनिमित्तमपि भगवत्प्रावण्यमेव भवेदिति प्रार्थना ॥ ३६ ॥

## श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

स्वामिद्रोहमाह—न ह्यन्तरमिति। इह वैकुण्ठे शुद्धसत्त्वात्मके रजस्तमसोरभावात् तत्कृतमुच्चनीचत्वमपि नाऽस्ति। किञ्च, भगवति नाऽस्त्यन्तरम्, तेन ये ज्ञानादिमन्तस्ते भगवद्रूपा इति येषु भगवति चाऽन्तरकरणं स्वामिद्रोहः। किञ्च, समस्तकुक्षाविति। समस्तं कुक्षौ यस्य। वैकुण्ठवासिनः सर्वे पूर्वं तस्य कुक्षावेव स्थिताः, इदानीं वा नारायणोदरे सर्वे तिष्ठन्तीति। अतः प्रथमपक्षे वैकुण्ठवासिष्वन्तरमनुचितम्, द्वितीयपक्षे सर्वेष्वेव। तस्य समस्तकुक्षित्वं श्रुत्यनुभवसिद्धम्। तत्र श्रुतिः—'आत्मैवेदं सर्वम्' 'यस्मिन्निदं सं च वि चैति सर्वम्' इति च। अनुभवं कीर्तयन्ति—आत्मानमात्मनि नभो नभसीव धीराः पश्यन्तीति। आत्मानं स्वात्मानम्। आत्मनि भगवति। आत्मनश्च पुनः सर्वत्वज्ञानात् सर्वं भगवति भविष्यति, स्वदृष्टान्तेन वा। तत्र प्रथमपक्षो वादिनं प्रति वक्तव्यो न भवतीति दृष्टान्तपक्षमेव दृष्टान्तेन स्पष्टयति—नभो नभसीवेति। यथा घटाकाशो विद्यमानेऽपि घटे महाकाश एव, महाकाशे वा; तथा सर्व आत्मानः सोपाधयोऽपि भगवानेव, भगवति वा। अत्र प्रमाणम्—धीराः पश्यन्तीति। श्रुतिर्ब्रह्मवादे भगवद्वादे वाऽप्युपपद्यते, तथाप्यनुभव आत्मवाद एव स्वाधीनः, अतो धीरा इत्येवाऽधिकारिविशेषणम्। धैर्यं हि आत्मनो महाफलत्वज्ञानात् फलान्तरेच्छाभावपूर्वकेन्द्रियादिजयः, चित्तस्थैर्यमेव वा धैर्यम्। एवं सर्वकुक्षित्वं प्रतिपाद्य तत्रापराधः कृत इत्याहुः—यत्र भगवति, सुरलिङ्गिनोर्युवयोः। देवानां लिङ्गमात्रम्, वस्तुतस्तु दैत्या एव। तृतीया दैवगत्याऽपि करणं सम्भवतीति नोक्ता। षष्ठ्या तु स दोषस्तेषां संबन्धीति बोध्यते। उदरं भिनत्तीत्युदरभेदि, तस्य भयम्। 'यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते अथ तस्य भयं भवति' इति श्रुतिः। ये भगवद्भावं प्राप्तास्ते उदरशब्देनोच्यन्ते, तेष्वन्तरं कुर्वन् भयं

प्राप्नोतीत्यर्थः। उत् ऊर्ध्वमरमप्यन्तरमिति च। उत् ऊर्ध्वं लौकिकापेक्षयाऽप्यधिकं शास्त्रतो भेदसमर्थनम्, अरमीषत्। भृत्यापराधे स्वाम्येवैवं करोतीति लोके प्रतीतिर्भवेत्। तदोदरभेदिनां यद्भयम्, तदस्मिन्नपि कृतं भवेदिति युक्त एव तव स्वामिद्रोहो जात इति हिशब्दार्थः। सेवककृतत्वात् भगवत एतदङ्गीकर्तव्यम्, तथा सति भयं भवेदिति गूढाशयः॥ ३३॥ ❀ ❀ एतदनङ्गीकारे तु स्वामिनो भयं न भविष्यत्येव, तदेतयोरेव भयं भवत्विति शास्त्रार्थसिद्ध्यर्थं भगवति मैत्रीनिर्वाहार्थं च तयोः शापं प्रयच्छन्ति—तद्वामिति। अमुष्य भगवतः सर्वेषां परमस्य स्वामिनः, अस्मदाद्यनुग्रहार्थं विकुण्ठस्थाने संस्थितस्य। विकुण्ठशब्देन शुद्धं सत्त्वम्, तद्भर्तुरित्यस्मदादिसत्त्वस्याऽपि भर्तृत्वात् तस्य प्रकृष्टं कर्तुमिहाऽस्मिन्नर्थे यदुचितं तद्धीमहि, ध्यानेन साक्षात्करिष्यामः। वां युवाभ्याम्। मन्दधीभ्यामिति। ताभ्यामेव चेदनिष्टं दीयते, तदा ताभ्यामेव भगवत इष्टं भवतीति चतुर्थीतृतीये। ध्यानेन निश्चितमर्थमाहुः—लोकानितो व्रजतमिति। अन्तरभावेन या दृष्टिः कृता क्रूरा, तया कृत्वा, इतोऽधस्तनान् लोकान् व्रजतम्। इदं हि सत्त्वस्थानम्, ततोऽधस्तना राजसतामसाः। तत्रैकः केवलराजसः, द्वितीयो राजसतामसः, तृतीयस्तामस इति। अवान्तरलोकानां बहुत्वसम्भवात् त्रीनिति वक्तुं विशिनष्टि—पापीयसस्त्रय इति। अस्य भगवतो रिपवो भगवदीयैर्हेयत्वेन ज्ञाताः, 'कामः क्रोधस्तथा लोभस्तस्मादेतत् त्रयं त्यजेत्' इति वाक्यात्। ते च पापीयसः संबन्धिनः, न भगवदीयाः, किन्तु तद्विरोधिनश्च। अतो भगवद्विरोधि कामादित्रयं येषु लोकेषु, तान् लोकानितो व्रजतमित्यर्थः॥ ३४॥ ❀ ❀ पूर्वं शापपर्यवसायित्वमज्ञात्वा कृतोऽतिक्रमः। जाते च शापेऽमूर्त्ता वाग्गदादिभिर्दूरीकर्तुमशक्येति तेषां प्रार्थनयैव शापो गमिष्यतीति बुद्ध्वा तेषां प्रसादनं कृतवन्तावित्याह—तेषामिति। शापस्त्वङ्गीकृतो ग्लानिहेतुर्न भवतीति तदङ्गीकारार्थं ततोऽधिकं मा वदन्त्विति तेषां पदयोः पतितौ। इत्यमुना पूर्वोक्तप्रकारेण तेषामीरितमवधार्य, तदुक्तश्चाऽर्थो ब्रह्मदण्ड इति निश्चित्य, अस्त्रपूगैश्चाऽनिवारणं मत्वा, हरेरनुचरावपि तेषां पदयोरपतताम्। तत्रापि पादग्रहौ, तेषां पादान् गृहीत्वा तत्र पतितावित्यर्थः। सद्य इति। विलम्बे पुनः शापो भगवद्दण्डो वा भवेदिति। माया वा ततो निर्गतेति हरेरनुचराविति भगवदभिप्रायाभिज्ञौ, स्थानान्तरे गमनमत्यरिष्टमिति। स हि सर्वदा हरिः, अन्यत्र दुःखहर्ता कोऽपि नास्तीति। तेषां वा मनसि जातं दुःखं दूरीकर्तुं तथा कृतवन्तौ, यत एतयोः स्वामी हरिः। किञ्च उरु बिभ्यतः अधिकं च भयं प्राप्तवन्तौ, श्रुत्यर्थस्तदैव जात इति। अतिकातरेणेति तेषां दयोत्पादनार्थं स्वस्य दैन्यं ज्ञा[1]पितवन्तौ॥ ३५॥ ❀ ❀ एवं चरणयोः पतित्वा एकं प्रार्थयतः—भूयादघोनीति। अघोनि पापसहिते भगवद्भिर्यो दण्डः कृतः, स भूयात्। तथा कथने हेतुः—यो दण्डो नौ आवयोः सुरहेलनं भगवदवज्ञाम्, भागवद्देवतावज्ञां च[2] अशेषं सर्वमेव हरेव। यदि तद्दत्तः शापो नाऽङ्गीकृतः स्यात्, तदा वरमपि न प्रयच्छेयुरिति तदङ्गीकरणम्। प्रार्थनामाह—मावोऽनुतापकलयेति। वो युष्माकं योऽनुतापः, वृथैव शापो दत्त इति; तस्य कलया लेशेन नो आवयोरधोधो व्रजतोरपि मोहो मा भवतु। कामक्रोधलोभैर्नरक एव भवति, न संसारः; मोहेन च संसारो भवत्यतस्तत्प्रार्थनमुचितमेव। जायमानोऽपि मोह आवश्यकत्वात् तत्तज्जन्मनि भगवत्स्मृतिघ्नो मा भवेत्, किन्तु जायमानमप्यज्ञानं मोहात्मकं भगवत्स्मरणमेव संपादयतु। तु पुनरिह भगवति मोहो भवतु, भगवद्वैराग्यं मा भवत्विति। 'व्रजतम्' इति भगवद्वाक्यात् फलं शीघ्रमेव भविष्यतीति ज्ञापितम्। तथा स्मरणमपि भवत्विति प्रार्थनायां भावः। अधोध इति दैन्यं ज्ञापितम्। दैत्याद्राक्षसा निकृष्टाः, तेभ्योऽपि मनुष्या इति; राक्षसानामपि देवयोनित्वात्॥ ३६॥

## श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

न हीत्यत्र। सर्वत्वज्ञानादिति। 'आत्मैवेदं सर्वम्' इति श्रुत्युक्तसर्वत्वज्ञानात्। तस्य भयमिति। 'यतोऽस्य व्युत्पादितम्, तत्किम्' इति मूलशेषोऽत्र; तदेतद्धृदिकृत्य व्याकुर्वन्ति—यदेत्यादि। य इत्यादिनोक्तमन्तरशब्दस्य भगवद्भूतवाचकत्वपक्षे लक्षणया सम्बन्धिबोधकत्वं ज्ञेयम्। लक्षणादोषादरुच्या पक्षान्तरमाहुः—उदूर्ध्वमित्यादि। तेन स्वामिनो भयं व्युत्पादयन्ति—भृत्येत्यादि। भयं भवेदिति। वाशिष्ठरामायणोक्तशापवदिदानीमपि भवेत्॥ ३३॥ ❀ ❀ तद्वामित्यत्र। प्रकृष्टमिति। प्रकर्षम्, कल्याणमिति यावत्। चतुर्थीतृतीये इति। वामिति चतुर्थी, मन्दधीभ्यामिति तृतीया। वाक्यशेषस्तु ताभ्यामेवेत्यादिना व्याख्यात एव॥ ३४॥ ❀ ❀ भूयादित्यत्र। भगवदज्ञामित्यादौ भगवत्पदं सनकादिपरं बोध्यम्, तेषु मूले 'भगवद्भिः' इति भगवत्पदप्रयोगात्। भगवत्परं वा भवतु, 'ब्राह्मणाः प्रभवो दैवम्' इति वाक्यात्॥ ३६॥

## श्रीगिरिधरकृता बालप्रबोधिनी

अनिष्टोत्पादनं च भेददर्शनपूर्वकमेव तदत्रागतस्य कस्यापि भेददर्शनं न सम्भवतीत्याहुः—नहीति। यतो यस्मात् अस्य भगवत उदरम्भेदि देहभेदप्रयुक्तभयं युवयोर्युवाभ्यां व्युत्पादितं परिशङ्कितं धीरा विद्वांस इह भगवति अन्तरमात्मनो भेदं नैव पश्यन्ति। किं हि किन्तु यत्र यस्मिन्नात्मनि परमात्मनि आत्मानमन्तर्भूतमेव पश्यन्ति तत्तस्मादित्युत्तरेणान्वयः। तत्र हेतुमाह—समस्तकुक्षाविति, समस्तं विश्वमेव कुक्षौ यस्य तस्मिन्। तत्र दृष्टान्तमाह—नभो नभसीवेति, महाकाशे घटाकाशमिवेत्यर्थः।

---

१. ख्यापितवन्तौ क घ. ङ. च। २. वा ख. घ.

युवयोर्देवानां वेषमात्रमेव स्वभावस्त्वासुर एवेत्याशयेनाह—सुरलिङ्गिनोरिति ॥ ३३ ॥ ❀ ❀ यस्माद्वृथैव भगवति भयमारोप्य वयं निवारितास्तत्तस्मादमुष्य परमस्य परमेश्वरस्य विकुण्ठभर्तुः वैकुण्ठनाथस्य वां युवाभ्यां भृत्याभ्यां मन्दधीभ्यामपि प्रकृष्टं भद्रमेव कर्तुमिहास्मिन्नपराधे यद्युक्तं तद्धीमहि चिन्तयेम इत्युक्त्वा यच्चिन्तितं तदेवाहुः—लोकानिति। अन्तरस्य भेदस्य भावः सत्ता तद्दृष्ट्या भेददर्शनेन दोषेण इतो वैकुण्ठलोकात्पापीयसो लोकान्व्रजतमित्यन्वयः। के ते लोका इत्यपेक्षायामाहुः—यत्र येषु लोकेषु कामः क्रोधस्तथा लोभ इमे त्रयोऽस्य भेदद्रष्टू रिपवः सन्तीति ॥ ३४ ॥ ❀ ❀ इत्युक्तप्रकारकं तेषां मुनीनामीरितं भाषितं घोरमवधार्य श्रुत्वा हरेरनुचरौ भृत्यौ अतिकातरेण अतिभयेन सद्य एव तेषां पादग्रहौ पदग्रहणं कुर्वन्तौ सन्तौ उभावपि दण्डवदपततामित्यन्वयः। घोरत्वे हेतुमाह—अस्त्राणां पूगैः समूहैरपि अनिवारणं निवारयितुमशक्यमित्यर्थः। तत्र हेतुमाह—तं ब्रह्मदण्डमिति, तं ब्राह्मणशापरूपं मत्वेत्यर्थः। ननु भगवन्तं विहाय कथं मुनिपादयोः पतितावित्याशङ्क्याह—उरुबिभ्यत इति, एवम्भूतेभ्यो मुनिभ्यस्ताभ्यामप्युरु अधिकं भयं भावयत इत्यर्थः। यद्वा उरुबिभ्यत इति द्वितीयान्तं मुनीनां विशेषणम्, अहो अस्माभिर्निरपराधाभ्यां भगवद्भृत्याभ्यां वृथैवापराद्धमनेनास्माकमप्यनर्थः स्यादित्यधिकं भीतान्प्रति विज्ञापयामासतुरिति शेषेणान्वयः ॥ ३५ ॥ ❀ ❀ तद्विज्ञापनमेव दर्शयति—भूयादिति। तत्र प्रथमं तदुक्तशापानङ्गीकारे तत्प्रसादं विना तदनुग्रहोऽपि दुर्लभ इति शापमङ्गीकुरुतः—भूयादिति। अघोनि अघवति सापराधे य उचितो दण्डः स एव भगवद्भिः सर्वज्ञैर्भवद्भिरावयोरकारि कृतः, अतो नात्र भवतां कश्चिदपराधः, अतोऽसौ नौ आवयोर्भूयात्। उचितत्वमेव स्पष्टयन्तावाहतुः—य इति। यो दण्डो नावावयोः सुरहेलनं सुराणां भगवदभिप्रायातिक्रमेण तद्भक्तानां भवतां तिरस्कारजनितं पापं अशेषमेव हरेत निरस्येदित्यर्थः। अप्यवधारणे। किन्तु वो युष्माकं यः कृपानिमित्तोऽनुतापो वृथा शप्ताविति पश्चात्तापस्तस्य कलया लेशेन नौ आवयोः शापवशादधोऽधो मूढयोनिं व्रजतो यो मोहोऽवश्यम्भावी स त्विह मूढयोनावपि भगवत्स्मृतिप्रतिघातको मा न भवेत्, किन्तु मोहोऽपि भगवत्स्मृतिमेव प्रवहतादिति प्रार्थना ॥ ३६ ॥

### हिन्दी अनुवाद

भगवान्‌के उदरमें यह सारा ब्रह्माण्ड स्थित है; इसलिये यहाँ रहनेवाले ज्ञानीजन सर्वात्मा श्रीहरिसे अपना कोई भेद नहीं देखते, बल्कि महाकाशमें घटाकाशकी भाँति उनमें अपना अन्तर्भाव देखते हैं। तुम तो देव-रूपधारी हो; फिर भी तुम्हें ऐसा क्या दिखायी देता है, जिससे तुमने भगवान्‌के साथ कुछ भेदभावके कारण होनेवाले भयकी कल्पना कर ली ॥ ३३ ॥ ❀ ❀ तुम हो तो इन भगवान् वैकुण्ठनाथके पार्षद, किन्तु तुम्हारी बुद्धि बहुत मन्द है। अतएव तुम्हारा कल्याण करनेके लिये हम तुम्हारे अपराधके योग्य दण्डका विचार करते हैं। तुम अपनी भेदबुद्धिके दोषसे इस वैकुण्ठलोकसे निकलकर उन पापमय योनियोंमें जाओ, जहाँ काम, क्रोध, लोभ प्राणियोंके तीन शत्रु निवास करते हैं ॥ ३४ ॥ ❀ ❀ सनकादिके ये कठोर वचन सुनकर और ब्राह्मणोंके शापको किसी भी प्रकारके शस्त्रसमूहसे निवारण होनेयोग्य न जानकर श्रीहरिके वे दोनों पार्षद अत्यन्त दीनभावसे उनके चरण पकड़कर पृथ्वीपर लोट गये। वे जानते थे कि उनके स्वामी श्रीहरि भी ब्राह्मणोंसे बहुत डरते हैं ॥ ३५ ॥ ❀ ❀ फिर उन्होंने अत्यन्त आतुर होकर कहा—'भगवन्! हम अवश्य अपराधी हैं; अतः आपने हमें जो दण्ड दिया है, वह उचित ही है और वह हमें मिलना ही चाहिये। हमने भगवानका अभिप्राय न समझकर उनकी आज्ञाका उल्लङ्घन किया है। इससे हमें जो पाप लगा है, वह आपके दिये हुए दण्डसे सर्वथा धुल जायगा। किन्तु हमारी इस दुर्दशाका विचार करके यदि करुणावश आपको थोड़ा-सा भी अनुताप हो, तो ऐसी कृपा कीजिये कि जिससे उन अधमाधम योनियोंमें जानेपर भी हमें भगवत्स्मृतिको नष्ट करनेवाला मोह न प्राप्त हो ॥ ३६ ॥

**एवं तदैव भगवानरविन्दनाभः स्वानां विबुध्य स[1]दतिक्रममार्यहृद्यः।**
**तस्मिन् ययौ परमहंसमहामुनीनामन्वेषणीयचरणौ चलयन् सहश्रीः ॥ ३७ ॥**
**तं त्वागतं प्रतिह[2]तौपयिकं स्वपुम्भिस्तेऽचक्षताक्षविषयं स्वसमाधिभाग्यम्।**
**हंसश्रियोर्व्यजनयोः शिववायुलोलच्छुभ्रातपत्रशशिकेसरशीकराम्बुम् ॥ ३८ ॥**
**कृत्स्नप्रसादसुमुखं स्पृहणीयधाम स्नेहावलोककलया हृदि संस्पृशन्तम्।**
**श्यामे पृथावुरसि शोभितया श्रियास्व[3]श्चूडामणिं सुभगयन्तमिवात्मधिष्ण्यम् ॥ ३९ ॥**
**पीतांशुके पृथुनितम्बिनि विस्फुरन्त्या काञ्च्यालिभिर्विरुतया वनमालया च।**
**वल्गुप्रकोष्ठवलयं विनतासुतांसे विन्यस्तहस्तमितरेण धुनानमब्जम् ॥ ४० ॥**

---

१. प्रा० पा०—तमभिक्रम०। २. प्रा० पा०—प्रतिहतौ०। ३. प्रा० पा०—च चूडा०।

## श्रीधरस्वामिविरचिता भावार्थदीपिका ।

एवं स्वानां महत्स्वतिक्रममपराधं तत्क्षणमेव विबुध्य तस्मिन्यत्र ते रुद्धास्तं देशं ययौ आर्याणां हृद्यो मनोज्ञः । चरणौ चलयन्निति । अयं भावः । मच्चरणदर्शनप्रतिघातजं क्रोधं तौ दर्शयन् शमयिष्यामीति त्वराव्याजेन पद्भ्यामेव ययौ श्रीसाहित्यं च निष्कामानपि विभूतिभिः पूरयित्वा क्षमापयितुम् ॥ ३७ ॥ * * तत्र तैर्दृष्टं देवमनुवर्णयति पंचभिः । तं त्वागतं- तेऽचक्षत अपश्यन् आपंचमादिदमेव क्रियापदम् । स्वपुंभिः शीघ्रं प्रतिहृतमानीतमौपयिकं गमनोचितं छत्रपादुकादि यस्य । कथं- भूतम् स्वसमाधिना भाग्यं भजनीयं फलं यद्ब्रह्म तदेवाक्षविषयम् । हंसवच्छ्रीययोस्तयोरुभयतश्चलतोर्व्यजनयोर्यः शिवोऽनुकूलो वायुस्तेन लोलंतश्चलंतः शुभ्रातपत्रशशिकेसराः शुभ्रं यदातपत्रं तदेव शशिसादृश्याच्छशी तस्य केसरा मुक्ताहारविलंबास्तेभ्यो गलंति सीकरांबूनि यस्मिंस्तम् । सीकरोऽम्बुकणः ॥ ३८ ॥ * * कृत्स्नस्य द्वारपालमुनिवृंदस्य प्रसादे सुमुखम् । स्पृहणी- यानां गुणानां धाम स्थानम् । स्नेहावलोककलया सप्रेमकटाक्षेण हृदि संस्पृशंतं सुखयंतम् । त्रैलोक्यविवक्षापक्षे सत्यलोकपर्यंतः स्वर्गस्तस्य चूडामणिवत्स्थितं स्वधिष्ण्यं वैकुंठं सुभगयंतं शोभयंतम् ॥ ३९ ॥ * * पृथुर्नितंब आश्रयत्वेन विद्यते यस्य तस्मिन्पीतांशुके अलिभिर्नादितया वनमालया च युक्तम् । सुभगयंतमिति पूर्वेणैव वा संबंधः । वल्गुषु प्रकोष्ठेषु वलयानि यस्य गरुडस्य स्कंधे विन्यस्त एको हस्तो येन इतरेणान्येनाब्जं लीलाकमलं धुनानं भ्रामयंतम् । विन्यस्येति पाठे च वल्गिवलयादि हस्तस्य विशेषणम् ॥ ४० ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः ।

तात्पर्यमाह—अयं भाव इति । विश्वनाथस्तु एवं परस्परापराधभावनोद्भूतांतर्दैन्यसमुद्रप्रपद्भिरेवाश्रुमिषेण बहिर्निस्सरद्भिः स्नपयित्वेन दोषाच्छुद्धीकृतेषु सनकादिजयविजयेषु विप्रत्वभक्तत्वयोर्याथार्थ्यमनुभावितेषु तत्रत्यसभ्येष्वात्मधिक्कारेणैव भक्तिः समुद्योतते । समुद्योतिनी च भक्तिर्भगवंतमाकर्षतीममर्थं प्रमाणीकुर्वन्निव ब्रह्मण्यदेवो भक्तवत्सलो भगवांस्तदा तत्रैवाजगामेत्याह— एवमिति । स्वानां सदतिक्रमं स्वभक्तकर्तृकब्राह्मणातिक्रमम् । आर्याणां वेदानुयायिनां हृदि प्रादुर्भवतीत्यार्यहृद्यः सोऽपि तेषां नेत्रेष्वपि प्रादुर्भवितुमिति भावः । तस्मिन्सप्तमद्वारप्रदेशे महामुनीनामप्यन्वेषणीयावन्वेष्टुं योग्याविति यथा निर्विकल्पकज्ञानानंतरं सविकल्पकज्ञानमपेक्षितव्यं भवति । तथा ब्रह्मस्वरूपानुभवानंतरं भगवत्स्वरूपमनुभवितुमर्हैमित्यत एव चरणौ चलयन्निति । मच्चरणमाधुर्यमननुभूतचरमेताननुभाव्य महानिर्वृतिचमत्कारसिंधौ निमज्जयामीत्यभिप्रायेणैव सहश्रीरिति । बहिरंगाया मायाया एव मच्छक्तित्वमेते जानंति न त्वस्याः श्रियः स्वरूपभूताया इत्येतामप्याह्लादिनीं शक्तिमनुभावयामीत्यभिप्रायेण । गोस्वामिनस्तु— अत्र तेषामात्मारामाणामप्यानदंदानार्थं चरणदर्शनेन तस्य सच्चिदानंदघनत्वं श्रीसाहित्येन तच्छक्तिविलासस्यापि स्वरूपानतिरिक्तत्वं विवक्षितं स्वानामिति बहुवचनेन द्वयोरप्यपराधः, सर्वेष्वेव परिवारेष्वापततीत्यपेक्षया तयोर्बहुमानाद्वा । स्वशब्देन मुनीनां न तादृशं तदा स्वीयत्वमिति विवक्षितम् । यद्वा चरणौ चलयन्निति पादुके अप्यस्वीकुर्वन्निति मुनिष्वादरविशेषो दर्शितः । सहश्रीरिति । तेषु तस्या अप्यगोपनं दर्शयित्वा तयोरपराध एव दृढीकृत इत्याहुः । मम त्वित्थं प्रतिभाति ते नैष्ठिकाः स्त्रीदर्शनात्संकुचिता मां न किंचिद्वदिष्यंतीत्येतदर्थं सहश्रीरिति । यद्वा । कुपितः पुत्रः पित्रोपायशतेनापि बोधितो न शाम्यति मात्रा त्वल्पप्रार्थितोऽपि शाम्यतीति तत्कोपशमनार्थमेव सहश्रीरिति । यद्वा भगवान्किं तेभ्यो वदिष्यसीति कौतुकावलोकार्थं स्वयमेव सहागता श्रीरिति ॥ ३७ ॥ तत्र तदा । तैः सनकादिभिः । तं भगवंतम् । आपञ्चमात्पंचमपद्यपर्यंतम् । इदमेवाचक्षतेत्येवंरूपं योज्यमित्यर्थः । तत्र तैरननुभूतचरं तन्माधुर्यं वर्णयति प्रतिहृतेति । अहो भगवच्चरणाः संप्रति बहिश्चत्वरमलं कुर्वंत इति तात्कालिक्या प्रथया तमवलो- कितुमत्युत्कृष्टया । द्वारपुरनगरविमानकाननस्था भक्तजना आगत्य विविधरंगवस्त्रालंकारफलगंधपुष्पमालारात्रिकादीन्युपकल्पयाञ्च क्रुरित्यर्थः । अक्षविषयं तेषामिंद्रियगोचरीभूतम् । ननु तर्हि विषयत्वं प्रसक्तं तत्र सहुंकारभ्रूतर्जनमाह—स्वसमाधेस्तेषां हृदि ब्रह्माकारे ब्रह्मानंदानुभवस्यापि भाग्यं मूर्तिमदित्यर्थः । अहो एतद्दर्शनेनैवास्माकं समाधिरपि सफलो बभूवेति तेऽमन्यंत तदापि तद्रूपादे- र्विषयत्वं को मूढः संभावयेदिति भावः । अत्रातिशयोक्त्या मुक्तावलंबेन केसरत्वेन च्छत्रस्याधोमुखसहस्रदलकमलाकारत्वमा- रोपितं तेन च छत्रस्य शैत्यसौगन्ध्यमार्दवानि व्यंजितानि तथा शीकरांबूनां शशिसंबंधित्वेनामृतत्वं च व्यज्यत इति । "निगीर्या- ध्यवसानं तु प्रकृतस्य परेण यत् । प्रस्तुतस्य यदन्यत्वं यद्यर्थोक्तौ च कल्पनम् ॥ कार्यकारणयोर्यश्च पौर्वापर्यविपर्ययः । विज्ञेयाति- शयोक्तिः सा" इति काव्यप्रकाशे बहुधातिशयोक्तिरुक्ता । प्रकृतस्योपमेयस्य परेणोपमानेन निगीर्य कवलीकृत्याध्यवसानं तादात्म्य- मभेद इत्यर्थः । प्रस्तुतस्योपमेयस्याभिन्नस्य यदन्यत्वं सा द्वितीया । यदि शब्दार्थस्यासंभविनोर्थस्य यदिशब्देन न चेच्छब्देन चोक्तौ यदर्थकल्पनं कार्यकारणयोः पौर्वापर्यत्वेन वर्णनं चेति । अत्र च तस्याः प्रथमो भेदो ज्ञेय इति ॥ ३८ ॥ * * स्वभक्ताभ्यामपि शापदायिष्वस्मासु न जानीमो भगवानंतः कुप्यति न वेति संशयसिन्धुनिमग्नेषु कृत्स्न आभ्यंतरो बाह्यश्च यः प्रसादस्तेन सुमुखम् अत एव हंत हंतास्मासु प्रत्युत प्रसाद एव पूर्ण उपलभ्यत इत्यंतरुल्लसन्मुनिवृंदस्य नेत्रादींद्रियैः स्पृहणीयानां सौंदर्यसौस्वर्यसौ- रभ्यसौकुमार्याक्रोधौदार्यकारुण्यादीनां गुणानां धाम पूर्णास्पदं हा हंतावयोर्ब्रह्मशापानलदग्धयोरधः पततोरीदृग्दर्शनमाधुरी पुनर्न

घटिष्यत इति खेदार्णवनिमग्नौ रुदंतौ जयविजयौ प्रति यः स्नेहावलोकस्तस्य कलया कौशलेन तत्रत्यजनानां सर्वेषामेव हृदि संस्पृशंतमहो भक्तवात्सल्यमिति मनो लोभयंतं श्रिया वामस्तनोर्ध्वे स्वर्णरेखारूपत्वेन स्थितया स्वश्चूडामणिं सत्यलोकस्थानां स्वर्गाणां चूडाया मणिमिव स्वधिष्ण्यं स्वस्वरूपस्थानं वैकुंठं सुभगयंतं धन्यस्स वैकुंठलोको यत्रत्यस्स्वर्णरेखामयीं लक्ष्मीं भगवद्वक्षसि विलोकयंतीत्येवं सौभाग्यवंतं कुर्वंतमिति। अत्र कृत्स्नस्य द्वारपालमुनिवृंदस्येत्युक्तौ वक्ष्यमाणेन "एतौ तौ पार्षदौ मह्यं जयो विजय एव च" इत्यादिना विरोधात्पूर्वोक्त एवार्थः श्रेयान्॥ ३९॥ ❀ ❀ "तुलसीकुंदमंदारकरवीरसरोरुहैः। पञ्चभी रचिता माला वनमाला प्रकीर्त्तिता" इति गोपालभूषणे। इतरेण दक्षिणहस्तेन कमलं भ्रामयंतमिति लीलाकमलभ्रामणे मिषेण मुनीनां हृदयकमलं ब्रह्मास्वादसुस्थिरमपि स्वमाधुर्यदर्शनेन चपलीकुर्वन्तं तेन च हे मुनयो यन्निर्विशेषस्वरूपानंदात्सर्वोत्तमत्वेन निश्चितात्संप्रति कथंचित्तं चालयथ तत्रैव किं न स्थिरीकुरुध्वे मा स्वनिष्ठां त्यजतेति मुनिषु नर्म द्योतितम्॥ ४०॥

## श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

तदैवेत्यस्य व्याख्यानं तत्क्षणमेवेति स्वानामिति पार्षदानां सजातीयत्वं बहुवचनं च द्वयोरप्यपराधः सर्वजातीयकलङ्कप्रद इत्यभिप्रायात्। तस्मिन्निति द्वितीयार्थे सप्तमी। अयं भावश्चरणचालनस्यायं प्रयोजनीभूतो व्यङ्ग्योऽर्थः। तौ चरणौ विभूतिभिरप्राकृतसम्पित्तिभिः किञ्च स्वगृहिणीमप्यगोपयित्वाहं समागत इति नापराधः कश्चिन्ममेत्युरुभयभावनमपि सहश्रीरित्यनेन व्यञ्जितम्॥ ३७॥ ❀ ❀ तं त्वेति पञ्चकम्। तत्र बहुवाक्यैकवाक्यत्वात् गर्भे द्विविन्दुमस्तकाङ्कनिर्माणं टीकाक्रमबोधाय विधेयमेवमन्यत्रापि। तत्र सप्तमद्वारि आपञ्चमात् पञ्चमश्लोकपर्य्यन्तं ब्रह्मणोऽप्यक्षविषयत्वं स्वप्रकाशशक्तितादात्म्येन सनकादीन्द्रियेषु स्पष्टमनुभूयमानत्वमिति निर्विकल्पकासम्यगाविर्भावानन्तरं भक्त्या सविकल्पानुभवो व्यञ्जितस्तेन तदीयरूपरसादीनां सच्चिदानन्दघनत्वं व्यञ्जितम्। किञ्च पार्षदपरिच्छदादीनां विशेषणानामपि सनकादिरत्युद्दीपनत्वेनाह्लादिनीस्वरूपशक्तेर्वृत्तिविलासत्वमभिप्रेतम्। अत्र मुक्ताहारविलम्बानामुपमेयानामुपमानीभूतकेसरैर्निगीर्णत्वेन वर्णनमेवातिशयोक्त्यालङ्कारस्तेन शशित्वेन रूपितस्यापि छत्रस्याधोमुखसहस्रपत्रपद्मत्वरूपकालङ्कारो व्यञ्जित इत्यलङ्कारव्यङ्ग्यालङ्कारत्वेन महत्तमकाव्यत्वम्। शशिरूपकेण च यथा शशी परमाणुरूपममृतं स्रवति तेन च वस्त्रादि न क्लिन्नम्भवति तथा भगवत्यपि क्लिन्नत्वादिकं नाशङ्क्यमिति वस्तु व्यञ्जितम्। शीकराम्बुमिति गोवलीवर्द्दन्यायेनानधिकार्थम् ( १ ) स्वर्गः सुखभोगस्थानं श्रिया वामस्तनोर्ध्वरेखारूपया इवेति वाक्यालङ्कारे ( २ ) युक्तमित्यध्याहाराद्विशेषणे तृतीया ( ३ ) हारेण कौस्तुभेन च युक्तं सुभगयन्तमिति वा सम्बन्धः ( ४ ) भक्तानां भगवति स्नेहाधिकानां वीरपार्षदानामित्यर्थः। अन्यथा नित्यप्रेयस्यास्तस्यास्सौन्दर्य्यस्य न्यूनत्वे तेषां तथाऽवगमने रसाभासः प्रसज्येत। विनोदेन तु स्वमनसि तैस्तथा वितर्के रसोल्लास एवेति सर्वमनवद्यम्। तथोक्तं श्रीपृथुना 'स्व एव धिष्ण्येऽभिरतस्य किन्तये'ति। तदाहृतञ्च श्रीरसिकशुकेन रसामृतसिन्धौ "कृपां तस्य समाश्रित्य प्रौढान्नान्यमपेक्षते। अतुलां यो वहन्कृष्णप्रीतिं वीरस्स उच्यत" इति वीरलक्षणेन गणयेन्न भामामपीति॥ ३८—४२॥

## श्रीमद्वीरराघवव्याख्या

एवं स्वानां महद्व्यतिक्रममपराधं तदैव तत्क्षणमेवावबुध्य ज्ञात्वा आर्याणां भक्तानां हृद्यः मनोज्ञः अरविन्दनाभो भगवान् तस्मिन् यत्र देशे सनकादयो द्वाःस्थौ च तत्र देशे ययौ जगाम। कथंभूतः सन् सहश्रीः लक्ष्मीसहितः परमहंसा ये महामुनयः सनकादयस्तैरन्वेषणीयौ संशीलनौ चरणौ चलयन्मच्चरणदर्शनप्रतिघातहेतुकं क्रोधं तौ दर्शयित्वा शमयिष्यामीति त्वराव्याजेन पद्भ्यामेव ययौ इति भावः। मिथुनस्यैवोपास्यत्वप्राप्यत्वद्योतनाय मातृसन्निधौ सुतरां तेषां कोपमुपशमयितुं च सश्रियः आगमनमित्यभिप्रायः॥ ३७॥ ❀ ❀ अथागच्छन्तं भगवन्तमनुवर्णयति पञ्चभिः तमिति। आगतमागच्छन्तं भगवन्तं मुनयः अचक्षतापश्यन्। आपञ्चमादिदमेव क्रियापदं कथंभूतं भगवन्तं स्वपुंभिः स्वपार्षदैः प्रतिहृतं प्रत्याहृतमौपयिकं छत्रचामरव्यजनपादुकादि यस्य तं, स्वानां भक्तानां यः समाधिस्तस्य भाग्यं फलमक्ष्णोर्विषयं समाधिभाग्यमधुनाक्षिविषयतां गतमिव स्थितमित्यभिप्रायः। हंसवच्छ्रीर्ययोस्तयोर्व्यजनयोश्चामरयोर्यः शिवः सुरभिः सुमन्दो वायुस्तेन यल्लोलच्छुभ्रमातपत्रं छत्रं स एव शशी तस्य केसर मुक्ता दामविलम्बास्तेभ्यः शीकराम्बूनि तेभ्यो गलन्ति अम्बुकणानि यस्मिन् तं हंससदृशचामरसुरभिसुमन्दसुखस्पर्शवायवीमलौलचन्द्रमण्डलसदृशशुभ्रातपत्रविलम्बिमुक्तादामगलदमृतबिन्दुसन्दोहालंकृतमित्यर्थः॥ ३८॥ ❀ ❀ किञ्च कृत्स्नप्रसादसुमुखं कृत्स्नप्रसादः संपूर्णानुग्रहः तस्मिन्सुमुखं पूर्णमनुग्रहं कुर्वन्तमिव स्थितमित्यर्थः। स्पृहणीयानां कान्तिसौकुमार्यादिगुणानां धामाश्रयं स्नेहयुक्तो योऽवलोकः तस्य कलया प्रसरणेन हृदि संस्पृशन्तं चित्तमपहरन्तमित्यर्थः। पृथौ पीने विशाले च श्यामे उरसि शोभितया प्रकाशमानया श्रिया लक्ष्म्या स्वर्लोकस्य चूडामणिमिव स्थितमात्मधिष्ण्यमात्मनः स्वस्य धिष्ण्ये स्थानं वैकुण्ठलोकं सुभगयन्तमिव शोभयन्तमिव स्थितम्॥ ३९॥ ❀ ❀ किञ्च पृथनितम्बिन विपुलनितम्बवति पीताम्बरे विस्फुरन्त्या काञ्च्या मेखलया पृथुनितम्बोपरि धृतपीताम्बरोपरि विराजमानया

तदुभयानुरोधी पर्यायेण तयोः समाधानं कृतवाँस्तथापि तद्द्वयं न समाहितम्, उभयोरेकधा समाधानाभावादेकोपद्रवः सिद्ध एव[1]। असितपद्मकोशमित्यभूतोपमा। देशान्तरे तादृशकमलसम्भवः। ऊर्ध्ववीक्षणे नयनस्य हेतुत्वार्थं तथोक्तम्। तद्धि न सर्वकृष्णम्। रूपतो ज्ञानतश्चाऽस्य तथात्वं भविष्यतीति ख्यापनार्थं पद्मपदप्रयोगः। सजातीया जातीयपोषका इति, कोशपदेन तद्गतानां रक्षा सूचिता। उर्ध्ववीक्षणेन चरणयोः पतिता एव ते मुखारविन्दं पश्यन्तीत्युक्तम्। सुन्दरतरं यत् कुन्दपुष्पम्, तद्वद्धासो यस्य। इयमेव ह्यासीः। सुन्दरतरत्वेन पूर्वावस्थानिवारकमायाप्रवृत्तावपि पूर्वावस्थाकृतसुखनिवृत्त्यभाव उक्तः। तरप्प्रत्ययेन चाधिक्यमुक्तम्, ब्रह्मानन्दाद्भजनानन्दस्य महत्त्वात्। सुन्दरतरमधरं वा। तदा तत्र परमानन्दादधिकरसो लोभात्मकः स्थापित इति तद्रसस्पर्शी हासो गोपिकानामिव सुखदः। तस्य सुन्दरतरत्वमानन्दमूर्तेरक्षरानन्दाद्भजनानन्दाच्च महानानन्द इति ज्ञापयति, अन्यथा केवलमोहोऽनिष्टहेतुः स्यात्। कुन्दपुष्पसाम्यता भौतिकरागव्यावृत्त्यर्था। मोहोऽपि भक्त्यर्थमेव न विपयार्थः। कुं पृथ्वीं द्यति खण्डयतीति कुन्दम्। एतादृशं प्रसादं प्राप्य पुनरवेक्षणं स्वहृदये भगवच्चरणारविन्दाविर्भावार्थम्। अत एव तदीयमङ्घ्रिद्वयमाविर्भावात् चित्ते निगृह्यत इति निदध्युः। द्वन्द्वपदमवताराभिप्रायम्। साकारब्रह्मवादे नाऽन्यथासिद्धिः स्यात्। तस्य चरणस्य भक्तिमार्गसिद्धस्य सर्वपुरुषार्थदातृत्वज्ञापनार्थम्—नखा एव ये अरुणमणयः, तेषामाश्रयणं यत्र। ते हि चिन्तामणिरूपा अरुणवर्णाः, अनुरागपूर्वकत्वात्। अनेन तेषां सर्वोऽपि मनोरथः पूर्ण इति सूचितम्॥ ४४॥

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः।

अत्रोपसृष्टमित्यत्र। चकारस्य उत्स्मितपदेनाऽन्वयमभिप्रेत्याहुः—गर्वश्चोपसृष्ट इति। ये पुनरित्यादि। इदं न श्रीधरमतम्, 'इन्दिराया उत्स्मितम्' अहमेव सर्वसौन्दर्यनिधिरित्यहंकरणम्, अत्र भगवत्सौन्दर्ये उपसृष्टमस्तं गतम्' इति व्याख्यानात्। अतोऽन्यस्य बोध्यम्। मतान्तरव्यावृत्त्यर्थमिति। शिवभागवतशक्तिभागवतादिमतादिव्यावृत्त्यर्थम्॥ ४२॥ ❀ ❀ तस्येत्यत्र। ज्ञापितमिति। तस्येतिपदेन ज्ञापितम्। अरविन्देत्यस्य निरुक्तिमाहुः—अरविन्द्यतीत्यादि। उपजीव्यातिरिक्तं धर्ममिति। तेपामुपजीव्यः प्रकाशो ज्ञानात्मकः, तद्व्यतिरिक्तमित्यर्थः। आधिदैविक इति। 'घ्राणं च गन्धः' इति वाक्यात् घ्राणेन्द्रियात्मकः॥ ४३॥ ❀ ❀ ते वा इत्यत्र। सकृदिति। एकवारम्, युगपदेवेत्यर्थः। तत्रेति। क्षोभे। समाधानमिति। पक्षपातः। हेतुत्वं व्युत्पादयितुं तन्नेत्रभगवन्मुखयोः समानं धर्ममाहुः—तद्धीत्यादि। तथा च, पोपणार्थमुद्वीक्षणमित्यर्थः। इयमिति। हासावगतप्रसादरूपा। सुन्दर(तर)त्वेनेति। हासस्य तथात्वेन। प्रह्लादस्य ऊतिलीलोपयोगित्वेनैतेष्वधिकाराभावाद्वक्ष्यमाणव्याख्यानस्य प्रकृतानुपयुक्तत्वेऽपि स्वरूपविचारेणाहुः—सुन्दरतरमधरं वेति। अन्यथेति। तत्तदुपयोगिसौन्दर्याभावे। अन्यथासिद्धिरिति। पुनरुक्तिः॥ ४४॥

### श्रीगिरिधरकृता बालप्रबोधिनी

किञ्च स्वकान्त्या विद्युतः तडितः क्षिपती तिरस्कुर्वती ये मकराकृतिकुण्डले ताभ्यां यन्मण्डनमलङ्करणं तस्मिन्नर्हे गण्डस्थले यस्मिंस्तच्च तदुन्नसं च उदग्रनासिकं च मुखं यस्य तम्। मणिमत् मणियुक्तं किरीटं यस्य तम्। दोर्दण्डानां भुजदण्डानां यः षण्डः समूहः तस्य विवरे मध्ये स्थितेन हरता विहरता मनोहरेण वा पराद्ध्र्येन उत्कृष्टेन मुक्तादिहारेण कन्धरायां कण्ठगतेन स्थितेन कौस्तुभेन मणिना च शोभमानमिति शेषेणान्वयः॥ ४१॥ ❀ ❀ किम्बहुना? इन्दिरायाः लक्ष्म्याः यदुत्स्मितमहमेव निरतिशयसौन्दर्यनिधिरिति गर्वस्तच्चात्र इत्येवम्भूते भगवत्सौन्दर्ये उपसृष्टमस्तं गतम्, निरतिशयसौन्दर्यवत्याः लक्ष्म्याः सकाशादप्यतिसुन्दरमित्यर्थः। स्वानां भक्तानां धिया विरचितमिति स्वभक्तैर्ध्यानार्थं यथाभूतं तर्कितं तथारूपेणैवाविर्भूतमित्यर्थः। 'यद्यद्धिया त उरुगाय विभावयन्ति तत्तद्वपुः प्रणयसे सदनुग्रहाय' इत्युक्तत्वात्। एतदेव स्पष्टयति—मह्यमिति, चतुर्थी षष्ठ्यर्थे। मम भवस्य रुद्रस्य भवतां चकारादन्येपां च सर्वेषामुपासकानां उपासनार्थं तत्तत्फलदानार्थं च बहुसौष्ठवेन सौन्दर्येण आढ्यं युक्तं अङ्गं मूर्तिं भजन्तं प्रकटयन्तम्[2] चक्षत। निरी[3]क्ष्य च न विशेषतस्तृप्ता दृशो येषां ते मुदा हर्षेण पूर्णाः कैः शिरोभिर्नेमुः नमश्चक्रुरित्यन्वयः॥ ४२॥ ❀ ❀ तस्यारविन्दनयनस्य भगवतः पदारविन्दयोर्ये किञ्जल्काः केसरतुल्या अङ्गुलयस्तैर्मिश्रः सम्बद्धो यस्तुलसीमकरन्दस्तस्य वायुः स्वविवरेण नासारन्ध्रेण अन्तर्गतः प्रविष्टः संस्तेषां मुनीनां चित्ततन्वोः सङ्क्षोभं चकारेत्यन्वयः। तत्र चित्तसङ्क्षोभः आनन्दपारवश्यं, तनुक्षोभो रोमाञ्चत्वम्। ब्रह्मानन्दादपि भजनानन्दस्योत्कर्षं सूचयन्नाह—अक्षरजुषामपीति। यद्यपि तेषामक्षरब्रह्मसेविनां विषयानन्दो न सम्भवति तथापि भगवन्महिम्ना तत्सम्बन्धितुलसीगन्धमात्रेण क्षोभो जात इत्यर्थः॥ ४३॥ ❀ ❀ ते मुनयः अमुष्य भगवतो वदनमेव सन्तापहारकत्वाच्च असितपद्मस्य कोशस्तमुद्वीक्ष्य सम्यग्वीक्ष्य तेनैव लब्धाशिषः प्राप्तमनोरथाः सन्तः पुनस्तदीयं अङ्घ्रिद्वन्द्वं चरणद्वयमवेक्ष्य वै एतद्ध्यानमेव सर्वपुरुषार्थहेतुरिति निश्चयेन तदेव निदध्युर्ध्यातवन्त इत्यन्वयः। मुखारविन्दस्य दर्शनीयत्वमेव सूचयन् विशेषणान्तरमाह—सुन्दरेति, सुन्दरतरे अरुणे अधरोष्ठे

---

१. इव, क. ख. घ. ङ। २. ते तमचक्षतेतीतः प्राक्पञ्चमश्लोकस्थपदैः सम्बन्धः। ३. एवम्भूतविशेषणावशिष्टं भगवन्तं निरीक्ष्येत्यर्थः।

कुन्दपुष्पवद्धासो यस्मिंस्तमित्यर्थः । हासे प्रकाशमानाः कुन्दसदृशाः दन्ता एवोपचाराद्धासशब्देनोच्यन्ते । अङ्घ्रिद्वन्द्वस्य ध्यातृज्ञानाद्यन्धकारनिवर्तकत्वं तन्मनोरथपूरकत्वं च सूचयंस्तद्विशिनष्टि—नखेति । नखा एवारुणमणयः चिन्तामणिवत्प्रकाशमाना अभीष्टपूरकाश्च तेषामाश्रयणमाश्रयमित्यर्थः । पुनरवेक्ष्येत्यनेन युगपत्सर्वाङ्गलावण्यग्रहणाशक्तिं सूचयति ॥ ४४ ॥

### हिन्दी अनुवाद

उनके अमोल कपोल बिजलीकी प्रभाको भी लजानेवाले मकराकृति कुण्डलोंकी शोभा बढ़ा रहे थे, उभरी हुई सुघड़ नासिका थी, बड़ा ही सुन्दर मुख था, सिरपर मणिमय मुकुट विराजमान था तथा चारों भुजाओंके बीच महामूल्यवान् मनोहर हारकी और गलेमें कौस्तुभमणिकी अपूर्व शोभा थी ॥ ४१ ॥ ❀ ❀ भगवान्का श्रीविग्रह बड़ा ही सौन्दर्यशाली था। उसे देखकर भक्तोंके मनमें ऐसा वितर्क होता था कि इसके सामने लक्ष्मीजीका सौन्दर्याभिमान भी गलित हो गया है। ब्रह्माजी कहते हैं—देवताओ ! इस प्रकार मेरे, महादेवजीके और तुम्हारे लिये परम सुन्दर विग्रह धारण करनेवाले श्रीहरिको देखकर सनकादि मुनीश्वरोंने उन्हें सिर झुकाकर प्रणाम किया । उस समय उनकी अद्भुत छबिको निहारते-निहारते उनके नेत्र तृप्त नहीं होते थे ॥ ४२ ॥ ❀ ❀ सनकादि मुनीश्वर निरन्तर ब्रह्मानन्दमें निमग्न रहा करते थे। किन्तु जिस समय भगवान् कमलनयनके चरणारविन्दमकरन्दसे मिली हुई तुलसीमञ्जरीके गन्धसे सुवासित वायुने नासिकारन्ध्रोंके द्वारा उनके अन्तःकरणमें प्रवेश किया; उस समय वे अपने शरीरको सँभाल न सके और उस दिव्य गन्धने उनके मनमें भी खलबली पैदा कर दी ॥ ४३ ॥ ❀ ❀ भगवान्का मुख नील कमलके समान था, अति सुन्दर अधर और कुन्दकलीके समान मनोहर हाससे उसकी शोभा और भी बढ़ गयी थी । उसकी झाँकी करके वे कृतकृत्य हो गये। और फिर पद्मरागके समान लाल-लाल नखोंसे सुशोभित उनके चरणकमल देखकर वे उन्हींका ध्यान करने लगे ॥ ४४ ॥

पुंसां गतिं मृगयतामिह योगमार्गैर्ध्यानास्पदं बहु मतं नयनाभिरामम् ।
पौंस्नं वपुर्दर्शयानमनन्यसिद्धैरौत्पत्तिकैः समगृणन् युतमष्टभोगैः ॥ ४५ ॥

कुमारा ऊचुः

योऽन्तर्हितो हृदि गतोऽपि दुरात्मनां त्वं सोऽद्यैव नो नयनमूलमनन्त राद्धः ।
यर्ह्येव कर्णविवरेण गुहां गतो नः पित्रानुवर्णितरहा भवदुद्भवेन ॥ ४६ ॥
तं त्वां विदाम भगवन् परमात्मतत्त्वं सत्त्वेन सम्प्रति रतिं रचयन्तमेषाम् ।
तत्तेऽनुतापविदितैर्दृढभक्तियोगैरुद्ग्रन्थयो हृदि विदुर्मुनयो विरागाः ॥ ४७ ॥
नात्यन्तिकं विगणयन्त्यपि ते प्रसादं किन्त्वन्यदर्पितभयं भ्रुव उन्नयैस्ते ।
येऽङ्ग त्वदङ्घ्रिशरणा भगवतः कथायाः कीर्तन्यतीर्थयशसः कुशला रसज्ञाः ॥ ४८ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

योगमार्गैर्गतिं मृगयतां पुंसां ध्यानस्य विषयभूतम् । बहुमतमत्यादरास्पदम् । बहूनां तत्त्वदृशां संमतमिति वा । पौंस्नं पौरुषं वपुर्दर्शयंतम् । अन्येष्वसिद्धैरसाधारणैरौत्पत्तिकैर्नित्यैरणिमाद्यष्टैश्वर्यैर्युतम् । समगृणन्सम्यगस्तुवन् ॥ ४५ ॥ ❀ ❀ नित्यं ब्रह्मरूपेण प्रकाशसे नैतच्चित्रम् । इदानीं तु परममंगलविशुद्धसत्त्वश्रीमूर्त्या प्रत्यक्षोऽसि अहो भाग्यमस्माकमित्याहुः । हे अनंत यस्त्वं हृद्गतोऽपि दुरात्मनामंतर्हितो न स्फुरसि स नोऽस्माकमंतर्हितो व भवसि नयनमूलं त्वद्यैव राद्धः प्राप्तोऽसि । अंतर्धानाभावे हेतुः । भवतः सकाशादुद्भवो यस्य तेनास्मत्पित्रा यर्हि यदैवानुवर्णितरहा उपदिष्टरहस्यस्तदैव नः कर्णमार्गेण गुहां बुद्धिं गतः प्राप्तोऽसीति ॥ ४६ ॥ ❀ ❀ ननु पित्रोपदिष्टं भवतामन्यादृशमदृश्यमात्मतत्त्वमहं त्वन्य एव स्यां दृश्यत्वात् । नैवम् । अस्मत्प्रत्यभिज्ञया भेदनिरासादित्याहुः । तमिति । हे भगवन्नात्मतत्त्वमेव परं तं त्वां विदाम विद्मः प्रत्यभिजानीमः । ननु निरुपाधेरात्मतत्त्वस्य कथमीदृशमैश्वर्यं स्यादत आहुः । सत्त्वेन विशुद्धसत्त्वमूर्त्या एषां भक्तानां सम्यक् प्रतिक्षणं संप्रति रतिः प्रीतिस्तां रचयंतम् । आत्मतत्त्वमेवाहुः । तेऽनुतापः कृपा तेन विदितैर्ज्ञातैर्दृढैर्भक्तियोगैः श्रवणादिभिर्मुनयो हृदि यद्विदुः । कीदृशाः । उद्ग्रंथयो निरहंमाना अत एव विगतरागाः ॥ ४७ ॥ ❀ ❀ स्वयमपि भक्तिं प्रार्थयितुं भक्तानां सुखातिशयमाहुः । आत्यंतिकं

१. प्रा० पा०—त्वमद्यैव । २. प्रा० पा०—भक्तियुक्तै० । ३. प्रा० पा०—ये वा ।

मोक्षाख्यमपि तव प्रसादं ते न गणयंति नाद्रियंते । किं तु किमुतान्यदिंद्रादिपदम् । ते भ्रुव उन्नयैरुज्जृंभैः कालात्मकैरर्पितं निहितं भयं यस्मिंस्तत् । ते के । अंग हे भगवन् ये भवतः कथाया रसज्ञाः । कथंभूतस्य । रमणीयत्वेन पावनत्वेन च कीर्तन्यं कीर्तनार्हं तीर्थं पवित्रं च यशो यस्य ॥ ४८ ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः ।

किञ्च मुमुक्षूणामपि शुद्धभक्त्यभावात्तन्माधुर्यमजिघृक्षूणामपि तद्ध्यानं विना मुक्तिर्नेत्याह—पुंसामिति । गतिं मुक्तिं योगमार्गैरष्टांगयोगैः बहुमतं ध्यानास्पदमिति सविशेषरूपस्यावश्यध्येयत्वे नारायणस्वरूपमेव बहूनां संमतमित्यर्थः । पौंस्नं पौरुषं पुरुषस्य गर्भोदशायिनो गुणावताररूपं यद्विराडाख्यं वपुस्तदभिन्नतः स्वं वपुर्दर्शयंतं न तु ब्रह्मादिवदन्यथात्वेनेति संदर्भः । चक्रवर्ती तु—पौंस्नं पुरुषसंबंधीति तेनान्यान्यपि मोहिन्यादीनि तस्य वपूंषि संतीति ध्वनितम् । अनन्येन स्वेनैव सिद्धैः स्वरूपभूतैरित्यर्थः । अत एवौत्पत्तिकैः स्वाभाविकैर्नित्यैरष्टभिः शब्दस्पर्शरूपरसगंधकृपाकर्मैश्वर्यैर्भोगैर्नानाविधभक्तैर्भक्त्या युज्यमानत्वादास्वाद्यमानत्वाद्भोगैः तत्र शब्दादीनि सौख्यसौकुमार्यसौंदर्यमाधुर्यसौरभ्यवात्सल्यलीलाशब्दवाच्यानि । सप्त माधुर्याणि भक्तानां प्रेमाकारषडिंद्रियभोग्यानि अष्टमं भगशब्दवाच्यैश्वर्यषट्कं भक्तैर्मुमुक्षुभिर्मुक्तैश्च यथाशक्ति स्वाद्यत इति ज्ञेयं स्वामिचरणास्त्वणिमाद्यष्टैश्वर्यैरित्याहुः ॥ ४५ ॥ ❀ ❀ अहो महत्कृपाया अपारो महिमा यतो भगवतेदृशसाक्षात्कारानंदमनुभाविताः स्म इत्यहो अस्माकं भाग्यमिति । अनुवर्णितरह इति पाठे रहशब्दोऽदंतोपि 'तन्मातरो यदभजन्रहरूढभावाः' इत्यादिषु दर्शनात् । पित्रेति । भो ब्रह्मानंदानुभविनो मत्तनया ब्रह्मसाक्षात्कारादपि कोटिगुणितानंदो भगवत्साक्षात्कारे सोऽपि भगवान्नीलोत्पलदलश्यामलः पीताम्बरश्चतुर्बाहुः कटककुंडलादिमंडितश्चंद्रवदनो वैकुंठे विराजमानो भक्त्या लभ्यत इति त्वद्भक्तस्यास्मत्पितुः कृपाशीर्वचनं यदैवाश्रौषं तदैव कारणे लब्धे तत्फललब्धेरावश्यकत्वात् भगवन्न त्वं स्वतंत्रोऽस्मान्कृपयसि किं तु स्वभक्ताधीन एवेति त्वद्भक्तकृपामाहात्म्यमनिर्वचनीयमेवेति ॥ ४६ ॥ ❀ ❀ किञ्च एतावंतं कालं वयं ज्ञानिन एवास्म संप्रति तु त्वद्भक्ता अभूमेत्यहो भाग्यमस्माकमित्याहुः । तं पित्रानुवर्णितरहस्यमेव ननु पित्रोपदिष्टं भवतामदृश्यमात्मतत्त्वमहं त्वन्य एव स्यां दृश्यत्वादिति चेत्तत्राह—संप्रतीति । सत्त्वेन साधुत्वेन कृपयेत्यर्थः । 'सद्भावे साधुभावे च सत्' इति श्रीगीतोक्तेः । रतिं प्रीतिं किंभूतं परं "ब्रह्मणो हि प्रतिष्ठाहम्" इति गीतोक्तेरदृश्यतत्त्वापेक्षयोत्कृष्टम् । ननु चित्तं ब्रह्मसुखस्पृष्टं 'नैवोत्तिष्ठेत्तु कर्हिचित्' इति चेत्तर्हि पूर्वोक्तेन "आत्मारामाश्च मुनयो निर्ग्रंथा अप्युरुक्रमे । कुर्वंत्यहैतुकीं भक्तिमित्थंभूतगुणो हरिः" इति वाक्येन "प्रायेण मुनयो राजन्निवृत्ता विधिषेधतः । नैर्गुण्यस्था रमंते स्म गुणानुकथने हरेः" इति वाक्येन च समाधेयम् । अत एव निरहंकारत्वादेव ॥ ४७ ॥ ❀ ❀ अधुना त्वत्साक्षात्कारस्य का कथा त्वत्परोक्षेऽपि त्वत्कथाकीर्तनानंदोऽपि ब्रह्मानंदादधिक इति प्रोचुर्नेति । नाद्रियंत इति "सालोक्यसार्ष्टिसामीप्यसारूप्यैकत्वमप्युत । दीयमानं न गृह्णंति विना मत्सेवनं जनाः" इत्यग्रे कपिलोक्तेः । दर्शनानंदजातप्रेमाणः । ऊचुरंगेति कथारसज्ञा एव कुशलिनस्तदितरेऽकुशलिन इति भावः ॥ ४८ ॥

## श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या ।

गतिमात्मतत्त्वं ब्रह्मणोऽपि घनप्रकाशत्वादत्यादरास्पदं युतं विशिष्टं न तूपलक्षितमित्यणिमादीनां स्वरूपभूतत्वं व्यञ्जितम् ॥ ४५ ॥ ❀ ❀ विशुद्धसत्त्वं स्वपरप्रकाशकस्वरूपशक्तिवृत्तिविशेषस्तदात्मिकया श्रीमूर्त्या श्रीविग्रहेण अनुवर्णितरहः उपदिष्टचतुःश्लोकीप्रेमभक्त्याख्यरहस्यः ॥ ४६ ॥ ❀ ❀ दृश्यत्वात् श्रीविग्रहरूपेणास्मच्चक्षुरादिगोचरत्वात् मैवमित्यादि समाधानग्रन्थः स्मृतिभिन्नज्ञानोत्तरं ज्ञानं प्रत्यभिज्ञा सोऽयं देवदत्त इतिवत् स्मृतेर्विषयापेक्षकत्वं नास्ति प्रत्यभिज्ञायास्तु विषयापेक्षकत्वमिति द्वयोर्विशेषः पित्रानुवर्णितरहस्यं त्वत्प्रत्यभिजानीमः पुनः शङ्कते नन्विति । निरुपाधेः ऐश्वर्य्यहेतुमायोपाधिशून्यस्य विशुद्धसत्त्वमूर्त्या मायिकसत्त्वस्य सदेव रजआदिसंभिन्नत्वेन शुद्धत्वमेव नास्ति किं पुनर्विशुद्धत्वमित्यतः स्वपरप्रकाशस्वरूपशक्तिवृत्तिमयतन्वेत्यर्थः । अतस्तदैश्वर्य्यस्वरूपानुबन्धित्वेन स्वरूपानुबन्धित्वेन स्वरूपात्मकमेव न तु प्राकृतमितीदृशैश्वर्य्यवत्त्वेऽपि निरुपाधित्वमेवेति भावः अत एव उद्ग्रन्थत्वादेव ॥ ४७ ॥ ❀ ❀ भक्तिं स्वस्वामिसम्बन्धरूपभेदात्मिकां सुखातिशयभेदज्ञानिभ्यः सुखाधिक्यं ते प्रसादं त्वत्प्रसादत्वेन नाद्रियन्ते किन्तु भक्तिसुखलोपकत्वात् निग्रहत्वेनैव मन्यत इत्यर्थः ॥ ४८ ॥

## श्रीमद्वीरराघवव्याख्या

एवं निरतिशयसर्वलावण्ययुक्तं भगवन्तं स्वहृदि ध्यात्वा अथास्तुवन्नित्याह । पुंसामिति । इहास्मिल्लोके योगानां कर्मयोगज्ञानयोगभक्तियोगादीनां ये मार्गाः प्रकारास्तैर्गतिं स्वरूपं मृगयतां चिन्तयतां कर्मज्ञानयोगयोः प्रकारौ भक्तियोगसाधनतैकरूपौ भक्तियोगस्य तु मुक्तिसाधनतैकरूपः प्रकारः तैर्मृगयतां ज्ञानकर्मयोगानुगृहीतभक्तियोगेन गतिं स्वस्वरूपं चिन्तयतामित्यर्थः । तेषां पुंसां ध्यानास्पदं ध्यानस्य विषयभूतमतं बहुमतमत्यादरास्पदमत एव नयनयोरभिरामं पौंस्नं पौरुषं वपुः शरीरं दर्शयानं दर्शयन्त-

मनन्यसिद्धैः स्व साधारणैरौत्पत्तिकैः स्वभाविकैरष्टभोगैरणिमाद्यष्टविभूतिभिः यद्वा "अहिंसा प्रथमं पुष्पं पुष्पमिन्द्रियनिग्रहः" इत्याद्युक्तैः भोगैर्युतं युक्तं भगवन्तं समगृणन् सम्यगस्तुवन् ॥ ४५ ॥ ❀ ❀ स्तुतिमेवाह यावदध्यायसमाप्ति । तत्र चिरमस्माभिर्हृदये ध्यातमतस्त्वमस्मद्भाग्यवशादद्य नयनविषयतां गतोऽसीत्यात्मनः कृतार्थतामाहुः । य इति । दुरात्मनामयोगिनां हृदि गतोऽपि विद्यमानोऽपि अन्तर्हितस्तिरोहितः यस्त्वमद्यैव नोऽस्माकं नयनमूलं नयनविषयतां हे अनन्त ! राद्धः प्राप्तः । यर्ह्येव यदैव त उत्पन्नेन पित्राऽस्मत्पित्रा चतुर्मुखेनानुवर्णितरहा उपदिष्टस्वस्वरूपगुणाविभूतिर्भवान् अभूत्तर्ह्येव कर्णविवरेण नोऽस्माकं गुहां हृदयगुहां प्रविष्टः त्वत्पुत्रादस्मत्पितुश्चतुर्मुखादुपदिष्टं रहस्यं तत्प्रभृत्येतावन्तं हृदये ध्यात इदानीं नयनमूलं गतोऽसि । अतो वयं कृतार्था इति भावः ॥ ४६ ॥ ❀ ❀ ननु भवत्पित्रोपदिष्टमात्मतत्त्वमन्यदहन्त्वन्यस्तत्कथं मद्दर्शनेन कृतार्थतेत्यत्राहुः । तमिति । हे परम ! परो मा यस्मात् स परमः सर्वोत्कृष्टस्तस्य सम्बोधनं हे सर्वोत्कृष्ट भगवन् सत्त्वेन शुद्धसत्त्वमयदेहेन एषां भक्तानां संप्रति सम्यक् प्रतिक्षणं रतिमनुरागं रचयन्तम् अनेन "न वा अरे पत्युः कामाय पतिः प्रियो भवति आत्मनस्तु कामाय" इति स्मारितं पूर्वोक्तविधं त्वामेवात्मतत्त्वं पित्रोपदिष्टमात्मतत्त्वं विदाम प्रत्यभिजानीमः । किं तदात्मतत्त्वं यन्मदभिन्नं जानथेत्यत्राहुः अनुतापविदितैरनुतापः संसारनिर्वेदस्तेन लब्धे दृढे भक्तियोगे निश्चलभक्तियोगैः विरागा विगतशब्दादिविषयाभिलाषा उद्ग्रन्थयः निरहङ्कारास्ते प्रसिद्धा मुनयो हृदि यदात्मतत्त्वं विदुः स्थासीरन्मुनिभिरुपास्यं शुद्धसत्त्वमयविग्रहवदेवात्मतत्त्वमस्मत्पित्राप्युपदिष्टमिति प्रत्यभिज्ञातस्त्वामेव जानीम इति कृतार्थतोपपन्नेति भावः ॥ ४७ ॥ ❀ ❀ ननु कथं मद्दर्शनमात्रेण कृतार्थता यतो धर्मादीनामेव पुरुषार्थत्वमित्याशङ्क्य कैमुत्यन्यायेन दर्शनस्यैव कृतार्थतापादकत्वमाहुः । नेति । अङ्ग हे भगवन् ! ये त्वदङ्घ्रिरेव शरणं स्वरक्षणोपायो येषां ते भगवच्छरणागता इत्यर्थः । अत एव कुशला दुष्करोपायेभ्यो निवृत्तत्वात् कीर्तन्यं कीर्तनीयं तीर्थं पवित्रं यशो यस्य तस्य भगवतः कथाया रसज्ञाः रसानुभवपराः सन्तः ते तव प्रसादरूपमात्यन्तिकं मोक्षमपि न विगणयन्ति ते तव भ्रुवः उन्नयैर्विक्षेपैरर्पितं निहितं भयं यस्मिंस्तत् स्वर्गस्वराज्यादिकं न विगणयन्तीति किमु वक्तव्यमित्यर्थः । त्वत्कथाश्रवणमात्रेण स्वात्मनः कृतार्थतां मन्यमानाः त्वच्छरणागताः परमपुरुषार्थमोक्षमपि नाद्रियन्ते किमुत वाङ्मनसागोचरस्वरूपस्वभावभवद्दर्शनेनास्माकं कृतार्थतेति भावः ॥ ४८ ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

मनःसंकल्पेन वागिन्द्रियप्रवृत्तिदर्शनादयमपि कश्चन संक्षोभः संजात इत्यभिनयन्तस्तुवन्तीत्याह । पुंसामिति । ध्यानास्पदमुपासनाविषयं बहु पूर्णतायामिति धातोर्बहुत्वेन पूर्णत्वेन मतं ज्ञातं नयनान्यभिरमयति सुखयति इति नयनाभिराममेवंविधं तद्वपुर्दर्शयानं दर्शयन्तमनन्यसिद्धैरन्यैरननुभूतैरौत्पत्तिकैः सहजैरष्टभोगैरणिमाद्यष्टैश्वर्यैर्युतं मिश्रितमभिन्नं हरिं समगृणन्नित्यन्वयः । गॄ स्तुताविति धातुः ॥ ४५ ॥ ❀ ❀ गुरूपदिष्टगुणानुसङ्कीर्तनरूपत्वादियं स्तुतिः पारमार्थिकी न लौकिकेत्याशयेनाह । योऽन्तर्हित इति । त्वं दुरात्मनामशुभमनस्कानां हृदि गतोऽपि अन्तर्हितोऽसि । अत्यन्तसमीपवर्तिनोऽदर्शनवचनं स्तुतित्वायुज्यतां नाम न परमार्थत इत्यत उक्तमनन्तराद्ध इति । अनवसितमाहात्म्यादिदमपि किञ्चनमाहात्म्यमित्यर्थः । स त्वमद्य नो नयनमूलमेपि चक्षुर्विषयं गतोऽसि किंगुणविशिष्टत्वेनेत्यत आह । यर्हीति । भवत उद्भवो जननं यस्य स तथा तेन नः पित्रा नाम्ना ब्रह्मणा यर्हि येन लक्षणेनानुवर्णितरहः यथावदुपदिष्टरहस्यः हरिरस्मत्कर्णविवरेण हृदयगुहां गतोऽभूत् तल्लक्षणविशिष्टत्वेनेति शेषः । अनेन सच्चिदानन्दलक्षणं भगवन्तमद्राक्षन्नतु मायामयमित्युक्तं भवति । एवकारेणोपदिष्टदृष्टयो रूपयोरेकत्वं द्रढयति ॥४६॥ ❀ ❀ इतोऽपि नेदं तत्कालोपपन्नमायामयरूपं किं तु साक्षाज्जगज्जन्मादिकारणमिति भावेन स्तुवन्तीत्याह । तन्त्वामिति । हे भगवन्नः पित्रा जन्मादिकारणत्वेनोपदिष्टः तथेदानीं चक्षुर्विषयश्च तन्त्वां परमात्मनः परब्रह्मणस्तत्त्वमनारोपितं रूपं विदामः विद्मः । कीदृशं त्वां सम्प्रतीदानीमेषां लोकानां सत्त्वेन गुणेन रतिसुखं रचयन्तमुत्पादयन्तं सृष्ट्यादौ प्रवर्तमानस्यानारोपितरूपत्वे किं प्रमाणमित्याशङ्क्य सम्यग्ज्ञानिज्ञानं मानमित्याहुरित्याह । यत्त इति । तवानुभावस्य जगत्सृष्ट्यादिमहिम्नोऽनुभावेन निश्चयज्ञानेन विदितैर्लब्धैर्दृढैर्बलैर्भक्तियोगैर्विरागा विषयेषु शोभनाध्यासबुद्धिविधुरा अत एवोद्ग्रन्थय उन्मीलिताहंकारबन्धा उत्पाटितपुत्रभार्यादिस्नेहरूपहृदयग्रन्थयो वा मुनयः सर्वज्ञाः परमहंसा यत्तत्त्वं विदुरुपास्यापरोक्षीकुर्वते तादृक् तत्त्वात्मकं त्वां विद्म इत्यन्वयः ॥ ४७ ॥ ❀ ❀ इतोऽप्युपनिषत्कामिन्या परिष्वक्तं ब्रह्मत्वमेव यतो भगवत्कथारसायनस्वादुज्ञा मुक्तावानन्दसमृद्धिहेतुभूतभक्तिज्ञानमन्तरेण दर्शनमात्रेणापरिपक्वभक्तिज्ञानानां पुंसां योग्यां मुक्तिं नाकांक्षत इत्याह । नात्यन्तिकमिति । आत्यन्तिकं प्रसादं भगवद्दर्शनमात्रेण लिङ्गशरीरात्ययसमये विद्यमानभक्तिज्ञानपरिपाकाभावात् सम्यगनभिव्यक्तानन्दं मोक्षमपि न विगणयन्ति विशिष्टोऽयमिति न बहु मन्यन्ते

भक्तिज्ञानपरीपाकात् किञ्चित्पूर्वं च मुच्यते । दर्शनेन हरेस्तत्र नानन्दः पूर्णतां व्रजेत् ॥

इति वचनात् तव भक्त्या कथामृतपानतृप्तत्वात् भ्रुव उन्नयैरुज्जृंभणविशेषैरर्पितभयमन्यत्पारमेष्ठ्यादिपदं किञ्च किमु वक्तव्यं कुशला इत्यनेन 'मुमुक्षोः केवलो भक्तो मुक्तावपि सुखीभवेदि'त्यतो मोक्षेच्छुभ्योऽनपेक्षकाणां मुक्तावानन्दोद्रेकः स्यादिति भक्त्यापादनमेव साधीयानिति बुद्धिपाटवं सूचयति कीर्तन्यं कीर्तनीयं तीर्थं शुद्धं यशो यस्य स तथा तस्य अत्र मुक्तीनां बाहुविध्यात्तद-

धिकारिणां च तथात्वान्मुक्तावपि भेदः पारमार्थिकः तद्व्यतिरेकत्वेनाणुरपि स्वगतो भेदो नास्ति अनेकत्वे मिथो वैषम्येण नाश्यत्वापत्तेः प्रमाणविरोधाच्चेति द्योतितम् ॥ ४८ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

पुंसामिति । बहुमतं ब्रह्मणोऽपि घनप्रकाशत्वादत्यादरास्पदं पौंस्नं वपुर्दर्शयानमिति । पुरुषस्य गर्भोदशायिनो गुणावतार-रूपं श्रीविराटाख्यं यद्वपुस्तदभिन्नतः स्वं वपुर्दर्शयन्तं न तु ब्रह्मादिवदन्यथात्वेनेत्यर्थः। अनन्येनेति। अनन्येन स्वेनैव सिद्धैः स्वरूपभूतै-रित्यर्थः। अत एव औत्पत्तिकैः तद्वदेवानादिसिद्धैरित्यर्थः। अणिमाद्यष्टैश्वर्य्ययुतं विशिष्टं न तूपलक्षितम्। अनेन तेषां स्तुत्यास्पद-विशेषणत्वेन ऐश्वर्योपलक्षितसमस्तभगानां तादृशत्वं व्यञ्जितम् ॥ ४५ ॥ ❀ ❀ अथ श्रीभगवतस्तादृशत्वे तादृशत्वव्यञ्जिनीं निजां मूर्तिं तेषामेव स्वहार्द्दाभिव्यक्तीकारेण स्तुतिवाक्येन प्रमाणयति कुमारा ऊचुरिति। स्तुतिमाह य इति पञ्चभिः। अत्राक्षर-जुषामपीत्यनुसृत्य व्याख्यायते। नित्यं ब्रह्मस्वरूपेण प्रकाशसे न तच्चित्रम्। इदानीं तु विशुद्धसत्त्वलक्षणेन स्वरूपशक्तिवृत्तिविशेषेण प्रकाशितया घनप्रकाशपरतत्त्वैकरूपया मूर्त्या प्रत्यक्षोऽसि। स त्वं नोऽस्माकमन्तर्हितो न भवसि। तत्र हेतुः यर्ह्येव भवदुद्भवेनास्माकं पित्रास्मभ्यमनुवर्णितरहाः उपदिष्टचतुःश्लोकीप्रोक्तप्रेमभक्त्याख्यरहस्यः प्रोक्तः तर्ह्येव कर्णविवरेण तद्रूपतया गुहां गतोऽस्यन्तः स्फुरसीति नयनमूलं त्वद्यैव राद्धः प्राप्तोऽसि कृपावैशिष्ट्येन तर्ह्येव सम्यक् नयनं प्रविष्टः तत्राविर्भूत इत्यर्थः। रह इत्यदन्तोऽपि क्वचित् 'तन्मान्तरो यदभजन् रहरूढभावा' इत्यादिषु दृश्यते नाद्यैवेत्यत्र सोऽद्यैवेति क्वचित्। ननु टीकासम्मतः नोऽद्यैवेति क्वचित् ॥ ४६ ॥ ❀ ❀ तदेवानुभवेन परमतया निश्चिन्वन्ति तं त्वामिति। हे भगवन्! तं पित्रोपदिष्टरहस्यं त्वां परमं भगवल्लक्षणं यदात्मतत्त्वं "ब्रह्मणो हि प्रतिष्ठानम्" इति श्रीभगवद्गीतानुसारि "शुभाश्रयः सचित्तस्य सर्व्वगस्य तथात्मनः" इति श्रीविष्णुपुराणादिप्रसिद्धं ब्रह्मणोऽपि परमं तदेव विदामः प्रत्यभिजानीमः। कथं तत्राहुः सम्प्रति अधुना सत्त्वेन अस्मास्वेतद्रूपाविर्भावेन एतावन्तं कालं न ज्ञानवन्तो वयमधुना तु साक्षादनुभवेन निश्चितवन्त इत्यर्थः। न केवलं प्रत्यभिज्ञामात्रमित्याहुः। एषामस्माकं ब्रह्मानुभविनामपि रतिं रचयन्तम्। अन्यथा रतिरपि त्वय्यस्माकं नोद्भवेदिति भावः। यद्वा एषामस्माकं ब्रह्मानुभविनामपि सम्प्रति साक्षात्कारसमये-ऽस्मिन् रतिं रचयन्तमिति। अस्य परमत्वमात्मारामान्तरानुभवेनापि व्यञ्जयन्ति। तं त्वामिति विरागाः। "चित्तं ब्रह्मसुखस्पृष्टं नैवोत्तिष्ठति कर्हिचित्" इति। तादृशत्वेन असिद्धा अपि उद्ग्रन्थयो निरहंकारा अपि मुनयो यत् परमात्मतत्त्वं तव कृपा-विदितैर्मयि भक्तिरस्तु ते इति पृथ्व्यादाविव त्वत्कृपामात्रलब्धैः। अत एव दृष्टैः सालोक्यसार्ष्टि इत्यादिन्यायेन निश्चलैर्भक्तियोगै-र्विदुरिति। यथोक्तमात्मारामाश्च मुनय इत्यादि ॥ ४७ ॥ ❀ ❀ अथ पूर्व्वमभेदमतयोऽपि सम्प्रति स्वरूपानन्दशक्तिविलासै-र्विचित्रमतयो भूयोऽपि भेदात्मिकां भक्तिमेव प्रार्थयितुं भक्तानां सुखातिशयमाहुः। नात्यन्तिकमिति। आत्यन्तिकं मोक्षलक्षणं ते प्रसादमपि किमुतान्यदिन्द्रादिपदम् ॥ ४८ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

किन्तु मुमुक्षूणामपि शुद्धभक्त्यभावात्तन्माधुर्य्यमजिघृक्षूणामपि तद्ध्यानं विना न मुक्तिरित्याह पुंसामिति। गतिं मुक्तिं योगमार्गैरष्टाङ्गयोगैर्बहुमतं ध्यानास्पदमिति । सविशेषरूपस्यावश्यध्येयत्वे नारायणस्वरूपमेव बहूनां सम्मतमित्यर्थः। पौंस्नं पुरुषसम्बन्धिवपुर्दर्शयन्तमिति। मोहिन्यादिवपुरन्तरमपि। तस्य भगवच्छब्दवाच्यं बहुतरमस्तीति ध्वनितम्। अनन्येन स्वेनैव सिद्धैः स्वरूपभूतैरित्यर्थः, अतएवौत्पत्तिकैर्नित्यैः अष्टभिः शब्दस्पर्शरूपरसगन्धकृपाकर्म्मैश्वर्य्यैर्भोगैर्नानाविधभक्तैर्भक्त्या भुज्यमान-त्वादास्वाद्यमानत्वाद्भोगैः। तत्र शब्दादीनि सौस्वर्य्य—सौकुमार्य्य—सौन्दर्य्य—माधुर्य्य—सौरभ्य—वात्सल्य—लीलाशब्दवाच्यानि सप्त माधुर्य्याणि भक्तानां प्रेमाकार-षडिन्द्रियभोग्यान् अष्टमं भगशब्दवाच्यमैश्वर्य्यषट्कं भक्तैर्मुमुक्षुभिर्मुक्तैश्च यथाशक्ति स्वाद्यत इति ज्ञेयम्। अष्टभोगैरणिमाद्यष्टैश्वर्य्यैरिति केचित् ॥ ४५ ॥ ❀ ❀ अहो महत्कृपाया अपारो महिमा यतो भगवता ईदृशसाक्षात्कारानन्दमनुभाविताः स्म इत्यहो भाग्यमस्माकमित्याहुः। हे अनन्त! अपारमाधुर्य्यैश्वर्य्यसिन्धो! यस्त्वं दूरतोऽपि दुरात्मनामन्तर्हित एव स त्वं न केवलमद्यैव नोऽस्माकं नयनमूलं राद्धः प्राप्तोऽसि अपि तु पूर्व्वमपि। ननु कदाहमेवं दृष्ट आसं तत्र सरसमाहुः। यर्हीति। न स्मरसि भवदुद्भवेन पित्रा ब्रह्मणा अनुवर्णितं रहो यस्य स त्वं यदैव नोऽस्माकं कर्णमार्गेण गुहां बुद्धिं गतः प्राप्तोऽसि तदैवेत्ययमर्थः। भो ब्रह्मानुभविनो मत्तनया ब्रह्मसाक्षात्कारादपि भगवत्साक्षात्कारः कोटिगुणितानन्दः सोऽपि भवतामस्तु सतु भगवान्नीलोत्पलदलश्यामलः पीनायतचतुर्बाहुः कटककेयूरकुण्डलादिमण्डितश्चन्द्रवदनो वैकुण्ठे विराजमानो भक्त्या लभ्यत इति भगवद्भक्तस्यास्मत्पितुः कृपाशीर्वचनं यदैवाश्रौष्म तदैव कारणे लब्धे तत्फललब्धेरावश्यकत्वात् भावि किलाद्यतनमपि भवद्दर्शनं त्वद्भक्तकृपातुल्यकालमेव जातं जानन्तो वयमास्मेति भङ्ग्या हन्त! भगवन्न त्वं स्वतन्त्रोऽस्मान् कृपयसि किन्तु स्वभक्ताधीन एवेति त्वद्भक्तकृपाया माहात्म्यमनिर्वचनीयमेवेति ॥ ४६ ॥ ❀ ❀ किञ्च। एतावन्तं कालं वयं ज्ञानिन एवास्म सम्प्रति तु भक्ताअभूमेत्यहो भाग्यमस्माकमित्याहुः। तं पित्रानुवर्णितरहसं त्वां सम्प्रति सत्त्वेन साधुत्वेन त्वत्कृपया उद्भूतेन

वैष्णवत्वेन हेतुना विदाम साक्षादनुभवामः परमं यदात्मतत्त्वमिति। आत्मतत्त्वमस्माकं पूर्वमनुभूतमासीदेव अधुना तु 'ब्रह्मणोऽहि प्रतिष्ठाहमि'त्यादि त्वद्भक्तेरुत्कृष्टात्मतत्त्वमपीत्यर्थः। एषां वैकुण्ठवासिनां रतिं प्रेम रचयन्तं ननु भो ज्ञानिनो भक्तियोगेन विना ममेदं साकारं स्वरूपं नानुभूयते तत्राहुः। यदुत्कृष्टात्मतत्त्वं ते तव दृढभक्तियोगैरेव मुनयोऽसम्लक्ष्णाः सनकादयो विदुर्जानन्ति ननु केन लक्षणेन भक्तियोगो ज्ञातव्यः तत्राहुः। अनुतापेन त्वद्भक्ताभ्यां शापदानानन्तरजातेन पश्चात्तापेनैव विदितैर्ज्ञातैः नहि वीतरागा निर्विकारा मुनयो भक्तिं विनानुतपन्तीति॥ ४७॥ ❀ ❀ त्वत्साक्षात्कारस्य का कथा त्वत्परोक्षेऽपि त्वत्कथा-कीर्त्तनानन्दोऽपि ब्रह्मानन्दादधिक इत्याहुः। आत्यन्तिकं मोक्षाख्यं सायुज्यमपि ते प्रसादं त्वत्प्रसादत्वेन न गणयन्ति नाद्रियन्ते किमु किमुतान्यत् इन्द्रादिपदम्। ते भ्रुव उन्नयैरुज्जृम्भितैरर्पितं निहितं भयं यस्मिन् तत्। त एव के तत्राहुः येऽङ्गेति। कथारस-ज्ञास्त एव कुशलाः अन्ये अकुशलिन इत्यर्थः। कथायाः कीदृश्याः कीर्त्तनार्हाणि पावनत्वात्तीर्थरूपाणि यशांसि यस्याः भवत इत्यस्य वा विशेषणम्॥ ४८॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

बहुमतमत्यादरणीयं पौंस्नं पौरुषम् अनन्यसिद्धैः स्वासाधारणैः औत्पत्तिकैर्नित्यैः अष्टभोगैः अणिमाद्यैश्वर्यैर्युतं समगृणन् सम्यगस्तुवन्॥ ४५॥ ❀ ❀ हे अनन्त! यस्त्वं दुरात्मनां दुष्टचित्तानां हृदि गतोऽपि अन्तर्हितः तिरोहितोऽसि स त्वं नोऽस्माकं तु नयनमूलं नयनोपलक्षितसर्वेन्द्रियमूलमन्तःकरणमद्यैव न राद्धः प्राप्तः, किन्तु भगदुद्धवेन त्वत्पुत्रेण नः पित्रा यर्हि यदैव वर्णितरह उपदिष्टरहस्यः तदैव कर्णविवरेण गुहां हृत्पद्मं गतः प्राप्तोऽसि। महदनुग्रहेण सदैव त्वां पश्यामो धन्या वयमिति भावः॥ ४६॥ ❀ ❀ सत्त्वेन शुद्धसत्त्वेन अप्राकृतेन श्रीविग्रहेण एषां भक्तानां सम्यक् प्रतिक्षणं रतिं प्रीतिं रचयन्तं यद्यं त्वां दृढैर्भक्तियोगैस्त्वत्स्वरूपगुणादिश्रवणकीर्तनादिभिः उद्ग्रन्थयः निरहङ्कारा विरागाः हृदि विदुः जानन्ति ध्यायन्तीत्यर्थः तं त्वां विदाम॥ ४७॥ ❀ ❀ श्रीविग्रहमद्भगवज्ज्ञानध्यानाद्यासक्त्या ते मोक्षमपि न गणयन्तीत्याहुः। नेति। हे अङ्ग भगवन्! आत्यन्तिकं मोक्षमपि न गणयन्ति नाद्रियन्ते किन्तु किमुत ते तव भ्रुवः उन्नयनैर्विक्षेपैः अर्पितं निहितं भयं यस्मिन् तत् अन्यत् मोक्षेतरत् स्वर्गादि न गणयन्तीति किं वक्तव्यम्॥ ४८॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

एवं तेषां भक्तकृत्यमन्तरुक्त्वा स्तोत्रादिलक्षणं बाह्यमाहुः—पुंसामिति। भगवति स्तुतिर्युक्तैव, न त्वसद्गुणारोपभूता। ननु ज्ञात्वा हि भगवद्गुणा वक्तव्याः, भक्तैरेव च ज्ञायन्ते गुणाः, एते च पूर्वं न भक्ता इति कथं गुणज्ञानमित्याशङ्क्य, भक्तत्वा-भावेऽपि पूर्वमेते योगिनः, तत्र योगसिद्ध्यादिकं भगवता जातमिति, तेन मार्गेण तादृशं माहात्म्यं ज्ञायत इति वक्तुं योगोप-योगित्वेन भगवन्तं विशिनष्टि पञ्चभिर्विशेषणैः। योगे प्रथमं ध्येयं रूपम्, अन्ते च योगसिद्धिप्रदम्, मध्ये त्रीणि रूपाणि। निरन्तरध्यानेन तस्मिन्नादरः, तदा बहुमतं तद्भवति। ततो भगवत्साक्षात्कारः, तदा नयनाभिरामो भवति बहिर्दर्शनं दत्त्वा। अन्तरपि स्वदेहान्तर्हृदये प्रादेशमात्रं द्वितीयस्कन्धोक्तं पुरुषं पश्यति, तदा तदुक्तप्रकारेण फलं भवति। अवान्तरफलं चाऽणिमादिरूपं भवतीति तत्रैवोक्तम्। योगस्य बहुविधत्वात् तत्तत्फलदानार्थमिदमेव रूपं ध्यायत इति सर्वफलदातृत्वं तस्य ज्ञायत इति वक्तुम्, नानाविधगतिम्, मोक्षरूपां वा, मृगयतां पुंसां ध्यानास्पदमित्युक्तम्। पुरुषा एव योगिन इति पुंसामित्युक्तम्। बहुकालं योगं विधाय योगबलेन सार्वज्ञ्ये जाते प्राणिनां का गतिरित्यपेक्षायां तन्निश्चयार्थमपि भगवान् ध्यायत इति मृगयतामित्युक्तम्। पुरुष-रूपमन्तर्यामिरूपमेव, साक्षात्फलसाधकत्वेन तस्यैवोक्तत्वात्। बहुभ्योऽणिमाद्यष्टैश्वर्यं प्रयच्छन्नपि स्वयं रिक्तो न भवतीति विज्ञाप-नार्थमनन्यसिद्धैरित्युक्तम्। भगवतोऽणिमादयो नाऽन्यत्र सिद्धाः, अतो दीयमाना अपि नाऽन्यत्र स्वतो गच्छन्ति, किन्त्वंशत एव। तत्र हेतुरौत्पत्तिकैरिति, न हि स्वाभाविका गच्छन्ति। अष्टभोगा अणिमादयः। मनसा सह षट् ज्ञानेन्द्रियसुखानि, गुह्यवाग्भोगौ वा अष्टभोगाः। अष्टभागैरित्यपि पाठे स एवार्थः। सम्यग्गृणनमग्रे स्पष्टीभविष्यति॥ ४५॥ ❀ ❀ स्तोत्रमाहुः पञ्चभिः—

योऽन्तर्हित इति। योगे लोके तथा भक्तो भवान् विख्यातमङ्गलः। सर्वात्मना वयं दासा लब्धं तत्र च यत्फलम्॥ १॥
एतावतैव तैः स्तोत्रं कृतं भक्त्याऽतिविह्वलैः। अपराधस्य करणान्नाऽधिकं स्फुरितं हृदि॥ २॥

तत्र प्रथमं भगवन्तं ब्रह्मत्वेन स्तुवन्तः शास्त्रार्थपरत्वं वा मा भवत्विति पूर्वदर्शनेन यो दृष्टः स एवाऽयमिति प्रत्यभिज्ञां वदन्तस्तस्याऽन्तर्यामित्वं समर्थयन्ति—योऽन्तर्हित इति। यस्त्वं दुरात्मनां हृदि गतोऽप्यन्तर्हितः, सोऽद्यैव नोऽस्माकं नयनमूलं नो राद्धो न सिद्धः; किन्तु यर्ह्येव कर्णविवरेण हृदयं गत, तदैव परावृत्तचक्षुषा दृष्ट इति नयनमूलं तदैव राद्धः। ब्रह्म प्रकारद्वयेन निश्चीयते, शास्त्रतोऽनुभवतश्च। तत्र शास्त्रं दुष्टानां ब्रह्मसाक्षात्कारो न भवतीत्याह, न तु सतां साक्षात्कारो भवतीति, तथा सत्यनुवादकत्वं स्यात्। अत उपनिषदामात्मब्रह्मवाक्यरूपाणामनधिकार्यसाक्षात्कारविषय-पतिपादकत्वम्। तदेव प्रथममत्राप्याह—यस्त्वं दुरात्मनां हृद्गतोऽप्यन्तर्हित इति। स त्वमेव। अनेन शास्त्रप्रतिपाद्यो भगवानेवेति

निरुपितम्। स एव हृदये प्रकाशत इत्यनुभवमाह—सोऽयैवेति। वहिरिन्द्रियविषयत्वेनात्मत्वं स्यादितीदमप्यस्माकं चक्षुरात्मदर्शनाभ्यासवतामावृत्तमेवेति न बहिर्दर्शनमिति वक्तुं पूर्वदर्शनेन सह साजात्यं प्रतिपादयन्त आहुः—अद्यैव नयनमूलं राद्ध इति। एतद्दर्शनस्याऽप्रथमदर्शनत्वादनादर एव, प्रथमदर्शनस्यैव अनधिगतार्थज्ञानत्वेनाऽऽदरविषयत्वात्। भक्तिमार्गानुसारेणाऽप्यन्तर्भगवत्साक्षात्कारो जात इति वक्तुम्—कर्णविवरे गुहां गत इत्युक्तम्, अन्यथा अन्तरेव तस्याऽऽविर्भाव उक्तः स्यात्। 'प्रविष्टः कर्णरन्ध्रेण' इति तु भगवच्छास्त्रम्। पूर्वमपि वयं भवदीया एव, अन्यथाऽस्मत्पिता ब्रह्मा भवद्रहस्यमस्मासु न च वदेत्। न च ब्रह्मा शास्त्राधिकारं न जानातीति वक्तव्यम्, यतस्तव साक्षादौरसः पुत्रः। अतः 'स्वानां भावसरोरुहम्' इति न विरोधः॥ ४६॥ ॐ ॐ एवं भगवन्तं परब्रह्मत्वेन स्तुत्वा, आरोपेणैवं कथनमित्याशङ्कां व्यावर्तयन्ति—तं त्वा विदामेति। तमेव परब्रह्मरूपं त्वा विदामः। अन्यथा ज्ञात्वा अन्यथा कथनार्थमुत्प्रेक्षा भवति; तथा प्रकृते नाऽस्ति, किन्तु त्वा परमात्मतत्त्वमेव जानीमः। एते हि साङ्ख्यानुसारिणः, एतेषां तत्त्वपदप्रयोगः सर्वत्र। तत्त्वं सहजं रूपम्। तत्र तत्त्वेष्वात्माऽप्येकं तत्त्वम्। तत्र तेषामप्यात्मनस्त्रैविध्यम्। अस्मदादिजीवा अंशप्रायाः, तेऽप्यात्मान इत्युच्यन्ते। तश्च प्रकृत्यधिष्ठाता मुख्यः, सोऽप्युच्यते पञ्चविंशतितत्त्वेषु परः श्रेष्ठः। ततोप्युत्तमोऽसङ्गोदासीनः परमात्मा, स एव प्राप्य इति तं त्वां जानीम इत्यर्थः। ननु तस्य स्वप्रकाशत्वमात्मवृत्तिवेद्यत्वं वा सम्भवति, न तु चक्षुर्विषयत्वमित्याशङ्क्य तन्मतानुसारेण परिदृश्यमानत्वं समर्थयन्ति—सत्त्वेन संप्रति रतिं रचयन्तमेषामिति। इदानीं वैकुण्ठे स्थितानामेषां भक्तानां प्रीत्युत्पादनार्थं शुद्धं सत्त्वं पुरुषरूपं कृत्वा तिष्ठसीत्यर्थः। असङ्गोदासीन एव स्वभक्तानुरोधेन तथा करोति, अन्यथा तस्य फलत्वं शास्त्रार्थत्वं च न स्यात्। किञ्च, यदि भगवान् सत्त्वाविर्भावं न न कुर्यात्, तदा ज्ञानमपि न सिद्ध्येदित्याह—यत्तेऽनुतापविदितैरिति। यदा जीवात्मा संचरन् बहुकालं बहून् क्लेशान् प्राप्नोति, तदा भगवतः कृपा उत्पद्यते, अयं स्वानन्दानुभवयोग्यः क्लेशं प्राप्नोतीति। स क्लेशो भगवतैव जात इति कृपानुतापरूपेण निरूप्यते, अन्यथा लौकिका योगप्रकारा लौकिकबुद्धिगम्या न भवन्तीति भगवत्कृपयैव तादृशयोगमार्गाणां परिज्ञानम्। त एव दृढा भवन्ति, भक्तिप्रधानाश्च। भक्तिमार्गसिद्धयोगा वा। भगवतः सत्त्वाविर्भाव एवैतद्भवति। किञ्च, उद्ग्रन्थयोऽपि कृपयैव भवन्ति। अहङ्कारग्रन्थिः रजस्तमोभ्यां दृढो भवति, तद्भगवत्सत्त्वप्राकट्येनैव शिथिलो भवतीति। किञ्च, मुनयोऽपि तेनैव भवन्ति, विरागाश्च। भक्तियोगैश्च वेदनं न केवलैः, किन्तु भगवत्सत्त्वसहितैरेव। अतः सर्वोपकारित्वात्सत्त्वप्राकट्यमित्यर्थः॥ ४७॥ ॐ ॐ एवं सन्मार्गानुसारेण सत्त्वरूपमेतदिति निरूप्य भक्तिमार्गानुसारेण तद्रूपं परमपुरुषार्थरूपमेवेत्याहुः—नाऽऽत्यन्तिकमिति। हे अङ्ग! ये त्वदङ्घ्रिशरणास्ते आत्यन्तिकमपि न विगणयन्ति। निवृत्तसजातीयस्य संसारस्य पुनस्तत्राऽऽत्मन्यनुत्पाद इति मोक्ष आत्यन्तिक उच्यते। सोऽपि स्वकृतसाधनसाध्यो न भवति, किन्तु भगवान् प्रसन्नः सिद्धवत्कारेण तं प्रयच्छति। तादृशं ते न गृह्णन्तीति दूरापास्तम्, यतो न। ननु भक्ता भगवत्प्रसादं कथं न गणयेयुः ? तत्राऽऽह—विगणयन्ति। निवृत्तसजातीयस्य संसारस्य पुनस्तत्राऽऽत्मन्यनुत्पाद इति मोक्ष आत्यन्तिक उच्यते। सोऽपि स्वकृतसाधनसाध्यो न भवति, किन्तु भगवान् प्रसन्नः सिद्धवत्कारेण तं प्रयच्छति। तादृशं ते न गृह्णन्तीति दूरापास्तम्, यतो विगणयन्त्यपि न। ननु भक्ता भगवत्प्रसादं कथं न गणयेयुः ? तत्राऽऽह—विगणयन्तीति। गणयन्ति, परं यथा भक्तिं विशेषाकारेण प्रसादत्वेन गणयन्ति, तथा आत्यन्तिकं न गणयन्तीत्यर्थः। अत्राऽगणना नाऽवगणना, किन्तु भगवत्प्रसादेषु गण्यमानेषु नान्तरीयकमिति तद्गणनां न कुर्वन्ति। यत्र मोक्षस्यैवैषा व्यवस्था, तत्र किन्त्वन्यत्। तुशब्दो विषयासक्तिपक्षं व्यावर्त्तयति, अत्यन्तविषयासक्ता मोक्षं न मन्यन्त इति। ननु भक्त्युपयोगिपदार्था भगवत्सेवौपयिकाः भक्तैरपेक्ष्यन्त एव, कथं तेषामगणनेत्याशङ्क्याऽऽह—अन्यदिति। अन्यद्भगवत्सेवानौपयिकम्। परम्परोपयोग्यपि न भवतीति विज्ञापनार्थं विशेषणान्तरमाह—अर्पितभयमिति। भयं मृत्युः। भगवदीयपदार्थानामिदमेव निदर्शनम्, यद्भयजनकं न भवति, न वा नश्वरम्। तत्र हेतुः—भ्रुव उन्नयैस्त इति। ते भगवतो या भ्रूः स एव कालः, तस्योर्ध्वं नयनं सर्वप्रतीकारातिक्रमेण कार्यसाधनम्। न हि भगवान् स्वाभिप्रेतान् विषयांस्तथा करोति। मोक्षस्याऽगणनायामुपपत्तिमाह—येऽङ्गेति। अङ्गेति संबोधनं श्रवणादिभावे भगवत्तुल्यतया कोमलसंबोधनप्रतिपादकम्, तादृशभक्तेरङ्गभावाद्वा। अनेनाऽपि मोक्षस्याऽगणना निरूपिता, मोक्षदाता भगवानेव यस्यामङ्गमिति। तेषां सर्वामेव सामग्रीं मोक्षादप्यधिकामाह। तत्र तेषामादौ गृहं निरूप्यते—त्वदङ्घ्रिशरणा इति। तवांघ्रिद्वयमेव तेषां शरणम्, रक्षकं वा। एकत्राऽऽधारत्वम्, अपरत्र नियोज्यत्वम्। यच्चरणप्रसादलेशरूपाः सर्वे मोक्षादयः। भगवद्भक्तिः स्वतन्त्रा सप्तविधा, उत्तरोत्तराधिका च। तत्र प्रथमकक्षायामेव स्थिता न गणयन्ति, किमुत चरमकक्षायां स्थिता इति सूचयितुमाह—भवतः कथाया इति। ये कथाया रसज्ञाः। भगवदीयो रस उभयत्र प्रतिष्ठितः, रूपलीलायां नामलीलायां च। तत्र रूपलीलायामासक्ता भगवदनुरोधमपि कुर्वन्ति, अन्यथा सेवायाः कर्तुमशक्यत्वात्। अतोऽत्र कथारस एव निरूप्यते। कथारसोऽनुभवेनैव ज्ञायत इति रसज्ञा इत्युक्तम्। यथा कामादिषु हृदये विद्यमानेष्वेव सत्सु कामिन्यादिनामरूपरसा अनुभूयन्ते, नापि रसास्वादनव्यतिरेकेण किञ्चिदन्यत्तादृशं प्रमाणमस्ति, न वा अधिकारिणि कामाद्यभावे स रसः स्फुरति, रसानामधिकारिणं प्रत्येव स्फुरणनियमात्। अतो रसज्ञा एव निरूपिताः। स चाऽधिकारः शास्त्रानुभवाभ्यां प्रेमज्ञानाभ्यामेव भवति। रसान्तराविष्टचित्तानामत्र रसो नोत्पत्स्यत इति तद्व्यावृत्त्यर्थं भगवतो विशेषणमाह—कीर्तन्यतीर्थयशस इति। कथा हि यशःप्रतिपादिका।

यशो हि, सर्वेषां भगवतश्च, श्रवणे रसजनकं भवति । स्वाभाविकोऽन्यो रसः प्रथमरसासक्तिं वारयतीत्यनुभवसिद्धम् । विशेषाकारेणाऽपि पूर्वरसनिवर्त्तकमिति । विशेषणद्वयम् , कीर्तन्यं तीर्थरूपमिति । कीर्तनीयं तदेव भवति, कीर्तयितुर्येन रसो जनितो भवेत् , शास्त्रतो वाऽनुभवतो वा । अनुभवतो रसजनकावर्थकामौ, शास्त्रतो धर्ममोक्षौ । यत् सर्वानुगुणं तत् कीर्तनीयम् , तल्लोके नाऽस्तीति रसचतुष्टयप्रतिपादकं भगवद्यश एवेति कीर्तन्यपदेनोक्तम् । तीर्थं हि द्विविधम् , गुरुरूपं जलरूपं च; बाह्याभ्यन्तरोपकारजननभेदेन निरूपितम् । सर्वपुरुषार्थाभीप्सुस्तदुभयं सेवते विशेषसाधनासमर्थः । स्थितिनिर्वाहके च ते । अतो मरणान्तं तत्र स्थितौ सुखेनैव पुरुषार्थो भवतीति । यत्र काऽपि पुरुषार्थे आसक्तो भगवद्यश एव शृणुयात् तीर्थरूपत्वादित्यर्थः । अत्र च स्वाभाविकमधिकारसूचकं विशेषणमाह—कुशला इति । नैपुण्यं बुद्धितीक्ष्णता चाऽपेक्ष्यत इत्यर्थः ॥ ४८ ॥

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

पुंसामित्यत्र । तत्रैवोक्तमित्यन्तं विशेषतात्पर्यकथनम् , तदग्रे व्याख्या ॥ ४५ ॥ ❀ ❀ योऽन्तर्हित इत्यत्र कारिकायाम् । लोक इति । सर्वलोकवन्द्ये वैकुण्ठलोके । शास्त्रार्थपरत्वमिति । स्ववाक्यस्य शास्त्रार्थानुवादकत्वम् । समर्थयन्तीति । हृदिगतत्वकथनादिना समर्थयन्ति । शास्त्रतोऽनुभवतश्चेति । 'तं त्वौपनिषदम्' इति 'मनसैवाऽनुद्रष्टव्यम्' इति श्रुतेस्तथेत्यर्थः । शास्त्रमिति । 'न संदृशे तिष्ठति रूपमस्य' 'न चक्षुषा पश्यति कश्चनैनम्' इति, 'न तं विदाथ' इति, 'नाऽयमात्मा बलहीनेन लभ्यः' इत्यादिश्रुतिरूपम् । ननु तर्हि 'तमक्रतुं पश्य (तं) (ति वीत) शोकः' इत्यादिश्रुतिनां का गतिरित्यत आहुः—न तु सतामित्यादि । तथा सतामित्यादि । तथा तत्र 'धातुः प्रसादात्' इति 'यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनुं स्वाम्' इति साधनान्तरस्य श्रुत्यन्तरे कथनात् तत्रापि न सत्त्वमात्रेण साक्षात्कारकथनमित्यर्थः । ननु को दोषः सत्त्वमात्रेण साक्षात्काराङ्गीकार इत्यत आहुः—तथा सतीत्यादि । अनुवादकत्वमिति । 'आत्मा वा रे द्रष्टव्यः' 'मनसैवा (नु) द्रष्टव्यम्' इत्यादीनां तथात्वम् । ननु स्वभावगोचरत्वप्रतिपादने कथं नाऽनुवादक (त्व) मित्यत आहुः—इदमित्यादि । इदमिति । परोक्तेन प्रतीयमानम् । तथा चाऽत्रापि साधनद्वारकस्यैवाऽनुभवस्य कथनान्न श्रुतीनामनुवादकत्वमित्यर्थः । तदिदं सूचयन्ति—एतस्येत्यादिना । नन्वनुग्रहं विना आवृत्तचक्षुष्ट्वमपि नेदृग्दर्शनप्रयोजक (त्व) मित्यत आहुः—भक्तीत्यादि । अन्यथेति । अनुग्रहसहकारित्वस्याऽविवक्षितत्वे । नन्वेवं कथनेन कथं भक्तिमार्गानुसारावगम इत्याहुः—प्रविष्ट इत्यादि । तथा च, भगवच्छास्त्रानुसारात्तदवगम इत्यर्थः ॥ ४६ ॥ ❀ ❀ तं त्वा विदामेत्यत्र एते हि सांख्यानुसारिण इति । हंसगीतायां तथा सिद्धत्वात्तथा ॥ ४७ ॥ ❀ ❀ नाऽऽत्यन्तिकमित्यत्र । किमात्यन्तिकमित्यपेक्षायां तत्स्वरूपमाहुः—निवृत्तेत्यादि । कथं न गणयेयुरिति । 'अह्यपावृतार्तकरणाः' इत्यत्र प्रसादवैमुख्ये दोषस्य दर्शितत्वात्कथं न गणयेयुः । तेषामिति । मोक्षादन्येषाम् । अङ्गभावादिति विषयत्वेनाङ्गभावात् । तेषामिति । भक्तानाम् ।—अपरत्रेति । रक्षकत्वे । सप्तविधेति । दास्यपर्यन्ता । एतेषां दास्यपर्यन्तमेवाऽऽगतत्वात् । तादृशमिति । अनुभवजनकम् । स इति । रसज्ञानुकूलः । स्वाभाविक इति । स्वभावत एव रसात्मकः । ते इति । उभे तीर्थे ॥ ४८ ॥

इति श्रीतृतीयस्कन्धसुबोधिनीप्रकाशे पञ्चदशाध्यायविवरणं सम्पूर्णम् ।

### श्रीगिरिधरकृता बालप्रबोधिनी

एवं सर्वाङ्गलावण्ययुक्तं भगवन्तं ध्यात्वाऽथास्तुवन्नित्याह—पुंसामिति । इहास्मिन् लोके योगानां कर्मयोगज्ञानयोगभक्तियोगाष्टाङ्गयोगादीनां ये मार्गाः प्रकारास्तैर्गतिं धर्मार्थकाममोक्षाख्यं तत्तत्फलं मृगयतामभिकाङ्क्षतां पुंसां ध्यानास्पदं ध्यानस्य विषयभूतं पौंस्नं पौरुषं वपुः शरीरं दर्शयानं प्रदर्शयन्तं भगवन्तं ते समगृणन् सम्यगस्तुवन्नित्यन्वयः । ध्यानास्पदत्वे हेतुमाह—बहुमतमिति, ध्यातृणामत्यादरास्पदमित्यर्थः । तत्र हेतुमाह—नयनेति, नयनयोरभिरामं अत्यानन्दजनकमित्यर्थः । धर्मादिफलदातृत्वे हेतुं सूचयन् विशिनष्टि—अनन्येति । अन्येष्वसिद्धैरसाधारणैः औत्पत्तिकैः अष्टभोगैः अणिमाद्यष्टविभूतियुतमित्यन्वयः ॥ ४५ ॥ ❀ ❀ स्तुतिमेव दर्शयति—य इत्यादिना यावदध्यायसमाप्ति । त्वन्महिम्नोऽन्तो न ज्ञातुं शक्यते इति सूचयन्तः सम्बोधयन्ति—अनन्तेति । यस्त्वं दुरात्मनां देहादावहन्ताममतावत्त्वेन विषयाविष्टचित्तानां हृदि गतोऽप्यन्तर्हितो न स्फुरसि स नोऽस्माकमन्तर्हितो न भवसि परं नयनविषयतां त्वमद्यैव राद्धः प्राप्तोऽसि । अन्तर्धानाभावे हेतुमाहुः—यर्हीति । यर्हि यदैव नोऽस्माकं पित्रानुवर्णितरहः उपदिष्टस्वरूपगुणविभूतिर्भवान् अभूत्तर्ह्येव अस्मत्कर्णविवरेण अस्मद्गुहामन्तःकरणं गतः प्रविष्ट इत्यन्वयः । ब्रह्मोपदेशोऽपि कथं निष्फलः स्यात्तत्रापि त्वद्दत्तसामर्थ्यस्य विद्यमानत्वात् अतस्तदपि परम्परया त्वत्कृपयैवेति सूचयन्त आहुः—भवदुद्भवेनेति, भवत उत्पन्नेनेत्यर्थः ॥ ४६ ॥ ❀ ❀ ननु भवत्पित्रोपदिष्टमात्मतत्त्वं अन्यत् अहं त्वन्यस्तत्कथं मद्दर्शनेन कृतार्थतेत्यत आहुः—तमिति । अचिन्त्यैश्वर्यादिमतस्तव ज्ञानं सुदुर्लभमेवेति सूचयन्तः सम्बोधयन्ति—भगवन्निति । यदस्मत्पित्रोपदिष्टं परं तत्त्वान्तरेभ्य उत्कृष्टमात्मतत्त्वं तमेव त्वा त्वां विदाम विद्मः । ननु त्वत्पित्रोपदिष्टस्यादृष्टस्य कथमीदृशमैश्वर्यं स्यादत आहुः—सत्त्वेनेति । सत्त्वेन विशुद्धसत्त्वमूर्तिधारणेन एषां स्वभक्तानां सम्प्रति सम्यक् प्रतिक्षणं

रतिं सर्वपुरुषार्थहेतुभूतां स्वप्रीतिं रचयन्तमुत्पादयन्तमित्यर्थः। ननु यदि सर्वेषां हृद्येव भगवानस्ति तर्हि कथं तदज्ञानमित्यपेक्षायां वैराग्यादितत्साधनाभावात् विषयासक्तिरूपप्रतिबन्धकसद्भावाच्चेत्यभिप्रेत्य तत्र साधनमाहुः—यदिति। ते तव यत्तत्त्वं-यद्वा यदात्मतत्त्वं ते प्रसिद्धाः-मुनयो हृद्येव विदुः। मननशीला अपि बहवो भवन्ति ते सर्व एव तु तन्न विदन्ति तत्कुत इत्याशङ्क्य वैराग्याभावादित्याहुः-विरागा इति, विषयासक्तिरहिता इत्यर्थः। तत्र हेतुमाहुः-उद्ग्रन्थय इति, निवृत्ताहङ्कारा इत्यर्थः। तत्रापि हेतुमाहुः-दृढभक्तियोगैरिति, श्रवणादिभक्तिदार्ढ्येनेत्यर्थः। तर्हि महाफलत्वात्सर्वे भक्तिमेव कुतो न कुर्वन्तीत्यपेक्षायामहर्निशं संसारतापमनुभूयमानानामपि तदनुसन्धानाभावेन परमफलहेतुभक्त्यन्वेषणाभावादित्याशयेनाहुः- अनुतापविदितैरिति। वृथैव दुःखमनुभूयते इति पश्चात्तापेनैव तन्निवृत्त्युपायभक्त्यन्वेषणं ततश्च तज्ज्ञानं ततश्च तत्र प्रवृत्तिरिति भावः। यद्वा कुतो न सर्वे भक्तिं कुर्वन्तीत्यपेक्षायां त्वत्कृपाभावादित्याहुः- तेऽनुतापविदितैरिति, यदैव ते तवानुतापः अयं स्वानन्दानुभवयोग्यो वृथैव क्लेशमनुभवत्यतो भक्त्या तापाद्विमुच्यतामिति कृतानुतापपूर्वकः सङ्कल्पस्तेन विदितैर्भक्तियोगैरित्यर्थः। नह्यन्तर्यामिणस्त्वैवं सङ्कल्पं विना कस्यापि मोक्षमार्गस्य भक्तेर्ज्ञानं भवति प्रवृत्तिस्तु दूरत इति भावः॥ ४७॥ ॥ ॥ एवं भक्तिमाहात्म्यं निरूप्य स्वयमपि भक्तिं प्रार्थयितुं भक्तानां सुखातिशयमाहुः-नेति। यथा शरीरं विना न लौकिकं सुखं तथा त्वां विनापि न परमार्थसुखमिति सूचयन्तः सम्बोधयन्ति-अङ्गेति। ये तु कुशलाः स्वार्थे निपुणास्ते ते तव प्रसादं प्रसादतया त्वया दीयमानमात्यन्तिकमविनाशि परमानन्दस्वरूपं मोक्षमपि न विगणयन्ति नाद्रियन्ते। किन्त्वन्यत् इन्द्रादिपदं न विगणयन्तीति किमु वक्तव्यमित्यर्थः। तत्र हेतुं सूचयन्तो विशिंषन्ति-ते तव भ्रुवः कालरूपस्य उन्नयैः उज्जृम्भैः सर्वप्रतिकारातिक्रमेण विनाशकत्वरूपैरर्पितं निश्चितं भयं यस्मिंस्तदित्यर्थः। के ते कुशला इत्यपेक्षायामाहुः- त्वदङ्घ्रिशरणा इति, त्वदङ्घ्रिरेव शरणमाश्रयो येषां ते इत्यर्थः। ननु मच्चरणाश्रयणमात्रेणैव पुरुषार्थः सिद्ध्यति, नान्यथेति। तेषां निश्चयः कथमित्याकाङ्क्षायां त्वत्कथाश्रवणादिनैवेत्याशयेनाहुः—भवतः कथाया रसज्ञा इति। कथाया रसत्वमेव स्पष्टयन्तो भगवन्तं विशिंषन्ति— कीर्तन्यतीर्थयशस इति। कीर्तन्यं मनोहरत्वेन कीर्तनार्हं ( तत्र हेत्वन्तरमपि सूचयन्ति ) तीर्थं श्रोतृवक्त्रादीनां सर्वपापनिवर्त्तकत्वेन पवित्रकरं च यशो यस्य तस्येत्यर्थः॥ ४८॥

## हिन्दी अनुवाद

इसके पश्चात् वे मुनिगण अन्य साधनोंसे सिद्ध न होनेवाली, स्वाभाविक अष्टसिद्धियोंसे संपन्न श्रीहरिकी स्तुति करने लगे—जो योगमार्गद्वारा मोक्षपदकी खोज करनेवाले पुरुषोंके लिये उनके ध्यानका विषय अत्यन्त आदरणीय और नयनानन्दकी वृद्धि करनेवाला पुरुषरूप प्रकट करते हैं॥ ४५॥ ॥ ॥ सनकादि मुनियोंने कहा—अनन्त! यद्यपि आप अन्तर्यामीरूपसे दुष्टचित्त पुरुषोंके हृदयमें भी स्थित रहते हैं, तथापि उनकी दृष्टिसे ओझल ही रहते हैं। किन्तु आप हमारे नेत्रोंके सामने तो आप साक्षात् विराजमान हैं। प्रभो! जिस समय आपसे उत्पन्न हुए हमारे पिता ब्रह्माजीने आपका रहस्य वर्णन किया था, उसी समय श्रवणरन्ध्रोंद्वारा हमारी बुद्धिमें तो आप आ विराजे थे; किन्तु प्रत्यक्ष दर्शनका महान् सौभाग्य तो हमें आज ही प्राप्त हुआ है॥ ४६॥ ॥ ॥ भगवन्! हम आपको साक्षात् परमात्मतत्त्व ही जानते हैं। इस समय आप अपने विशुद्ध सत्त्वमय विग्रहसे अपने इन भक्तोंको आनन्दित कर रहे हैं। आपके इस सगुण साकार मूर्तिको राग और अहङ्कारसे मुक्त मुनिजन आपकी कृपादृष्टिसे प्राप्त हुए सुदृढ भक्तियोगके द्वारा अपने हृदयमें उपलब्ध करते हैं॥ ४७॥ ॥ ॥ प्रभो! आपका सुयश अत्यन्त कीर्तनीय और सांसारिक दुःखोंकी निवृत्ति करनेवाला है। आपके चरणोंकी शरणमें रहनेवाले जो महाभाग आपकी कथाओंके रसिक हैं, वे आपके आत्यन्तिक प्रसाद मोक्षपदको भी कुछ अधिक नहीं गिनते; फिर जिन्हें आपकी जरा-सी टेढ़ी भौंह ही भयभीत कर देती है, उन इन्द्रपद आदि अन्यभोगोंके विषयमें तो कहना ही क्या है?॥ ४८॥

कामं भवः स्ववृजिनैर्निरयेषु नः स्ताच्चेतोऽलिवद्यदि नु ते पदयो रमेत।
वाचश्च नस्तुलसिवद्यदि तेऽङ्घ्रिशोभाः पूर्येत ते गुणगणैर्यदि कर्णरन्ध्रः॥ ४९॥
प्रादुश्चकर्थ यदिदं पुरुहूत रूपं तेनेश निर्वृतिमवापुरलं दृशो नः।
तस्मा¹ इदं भगवते नम इद्विधेम योऽनात्मनां दुरुदयो भगवान् प्रतीतः॥ ५०॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां तृतीयस्कन्धे ज²यविजययोः सनकादिशापो नाम पञ्चदशोऽध्यायः॥१५॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका।

इदानीं स्वीयापराधं द्योतयंतो भक्तिं प्रार्थयंते। काममिति। हे भगवन्नितः पूर्वमस्माकं वृजिनं नाभवत् इदानीं सर्वाण्यपि जातानि यतस्त्वद्भक्तौ शप्तौ अतस्तैः स्ववृजिनैर्निरयेषु कामं नोऽस्माकं भवो जन्म स्तात्स्यात्। नु वितर्के। यदि तु नश्चेतस्ते तव

१. प्रा० पा०—तस्मादिदं। २. प्राचीने पाठे 'जयविजययोः सनकादिशापो नाम' अयमंशो न।

पदयो रमेत । अलिर्यथा कंटकैराविध्यमानोऽपि पुष्पेपु रमते तद्वद्विघ्नान् विगणय्य यदि रमेत । अंघ्रिभ्यां शोभा यासाम् । यथा च तुलसी गुणनैरपेक्ष्येण त्वदंघ्रिसंबंधेनैव शोभते तथा यदि नो वाचः शोभेरन् । यदि च ते गुणगणैरापूर्येत कर्णरंध्र इत्यल्पस्य पूरणमेव याचकरीत्या प्रार्थयन्ते । अयं तु गूढोऽभिप्रायः । कर्णरंध्रस्याकाशत्वाद् गुणगणानां चामूर्तत्वान्न कदाचित्पूरणमतो नित्यमतो श्रवणं फलिष्यतीति ॥ ४९ ॥ ❀ ❀ अथ वयं कृतार्थाः स्मेत्याहुः । हे पुरुहूत विपुलकीर्ते यदिदं प्रादुश्चकर्थ प्रकटितवानसि । दृशो नेत्राणि । अनात्मनामजितेन्द्रियाणां दुरुदयोऽप्रकटोऽपि इत इत्थं यः प्रतीतोऽसि तस्मै तुभ्यमिदं नमो विधेम ॥ ५० ॥

इति तृतीयस्कंधे टीकायां पंचदशोऽध्यायः ॥ १५ ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

स्ववृजिनैः स्वापराधैर्निरयेषु नारकियोनिषु अनेन तद्गुणवर्णनाकर्णनस्य तत्साक्षात्कारहेतुत्वेन तदधिगमे 'पूर्वोत्तराघयोरश्लेषविनाशौ तद्व्यपदेशात्' इति न्यायेन वस्तुतः पापयोनावपि पापिसंबंधो न भवति भगवद्गुणवर्णनादिना स्वत एव मोक्षो भवेत्किं तदर्थंनेनेति गूढोऽभिप्रायः । किं च श्रवणकीर्त्तनस्मरणानीत्यानंदत्रयं मोक्षो न भवति भवे तु संभवेदेवेति भव एव तदर्थं प्रार्थनीय इति भावः ॥ ४९ ॥ ❀ ❀ एवं त्वदीयश्रवणादिकलोभेन त्वत्परोक्षमयो भावोऽपि प्रार्थ्यते त्वया तु स्वसाक्षात्कारामृतं वयं त्वद्भक्तापराधिनोपि पायिताः स्म इत्याहुः ते कृपाया एतावती सीमा कारुण्यं त्वपारमित्याहुः । प्रादुरिति । पुरु यथा स्यात्तथा यद्वा । पुरुभिर्बहुभिर्भक्तैराहूत हे नारायण गोविंद विष्णो कृपया दर्शनं देहीत्याहूत तेन स्वभक्ताह्वानोत्थकृपापरवशेनैव भवता स्वरूपमाविष्कुर्वता वयमपि कृतार्थीकृता इति भावः । दृशो नेत्राणि बुद्धिवृत्तयो वा इदं नम इति । मूर्द्धसु धृतानंजलीन्दर्शयंति । यद्वा । इति—नाम इत्यस्य विशेषणम् । एति श्रीचरणारविंदं प्रति गच्छतीतीदित्यर्थः । यद्वा । येषां त्वं दुरुदयस्तेऽनात्मान आत्मशून्या मृतका एवेति भःवः । प्रतीत उलूकानां सूर्य इव दर्श एव निश्चित इत्यर्थः । अत्र ससस्तात्मारामचूडामणीनां लब्धनिरन्तरब्रह्मानुभवानां श्रुतावपि तस्मै मृदितकषायाय तमसा पारं दर्शयति भगवान्सनत्कुमार इत्यादिना प्रसिद्धानां भक्तावीदृशप्रार्थनलिंगेनैव ब्रह्मानन्दादपि भजनानन्दस्याधिक्येऽवगते भगवन्नामरूपगुणपरिच्छदभक्तधाम्नां चिद्घनाकारत्वं स्वत एव लब्धं तथाभूतत्वं विना भक्तेरसिद्धेः "मुक्तानामपि भक्तिर्हि नित्यानन्दस्वरूपिणी" इति भारततात्पर्ये प्रमाणिता श्रुतिश्च तथा 'आप्रायणात्तत्रापि हि दृष्टम्' इत्यत्र माध्वभाष्यप्रमाणिता सौपर्णश्रुतिः "सर्वदैनमुपासीत यावन्मुक्तिर्मुक्ता ह्येनमुपासते" इति । अत एव प्रह्लादबलिप्रभृतिमहाभागवतसंबंधमभिप्रेत्य श्रीविष्णुपुराणेऽप्युक्तं "पाताले कस्य न प्रीतिर्विमुक्तस्यापि जायते" इति । अत्र संदर्भकारैर्बहूक्तं तत्तत्रैव लोकनीयमित्युपरम्यते ॥ ५० ॥

इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे तृतीयस्कन्धे पञ्चदशोऽध्यायः ॥ १५ ॥

## श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

इतो भक्तापराधात्पूर्वमस्माकं जीवमुक्तानां "तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्" तत्सुकृतदुष्कृते विधूनुते इति न्यायश्रुतिभ्यां वृजिनं पापं नाभवदेव अत्र भक्तापराधलक्षणवृजिनस्यैकत्वेऽपि बहुत्वनिर्देशोऽचिन्त्यशक्त्या नष्टानामपि तेषां पुनर्विरोधात् अत एव सर्वाण्यपि जातानीति व्याख्यातम् । काममिति । न निरयेभ्योऽस्माकं भयम् । यदि चित्तरमणादिलक्षणा भक्तिस्स्यात् 'नारायणपरास्सर्वे न कुतश्चन बिभ्यती'त्यादेः त्वद्वैमुख्यस्यैव मूलदुष्फलत्वात् । तथा च श्लोकद्वयेऽस्मिन् भक्तिविरुद्धत्वात् भक्तिमात्रं कामयमानानामस्माकमनुभूतचरं कैवल्यमश्रेय एव तत्सद्भावे तदविरोधित्वान्नरकोऽपि तस्माच्छ्रेयानिति तात्पर्यं पर्य्यवसन्नम् ॥ ४९ ॥ ❀ ❀ तेन रूपेण दृश इत्युक्त्या योगिसिद्धं मानसध्यानमनादृतं साधनकोटिप्रविष्टत्वात् इत्थं याथार्थ्येन प्रतीतोऽसि दृष्टोऽसि तस्माद् ब्रह्मज्ञानिगुरूणां सनकादीनां तथानुभवेन भक्तेः पञ्चमपुरुषार्थत्वं सिद्धम्—

ब्रह्मभूतः प्रसन्नात्मा न शोचति न कांक्षति । समः सर्वेषु भूतेषु मद्भक्तिं लभते परामिति ।

श्रीभगवद्वचनात् "आप्रयाणात्तत्रापि हि दृष्टम्" इति न्यायाच्च यद्यत्र कश्चिद्विप्रतिपद्यते तेषां तथोक्तिर्लोकसंग्रहार्था साधनदशासंस्कारवशाद्वा तदोभयत्रापि "वासो यथा परिवृतं मदिरामदान्ध" इति न्यायेन तेषां तत्रावेशो न स्यात् । लोकेषु विगतस्पृहा इति तेषामन्यत्रानावेशात् महामुनीनामन्वेषणीयचरणावित्यादिनान्वेषणापरपर्य्यायावेशस्य भगवति सद्भावात् ब्रह्मणोऽपि घनप्रकाशोऽयं श्रीभगवानिति निर्णीयते तथाविधानां तादृशानुभवस्य सर्वप्रमाणचक्रवर्तित्वादिति ॥ ५० ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कंधे श्रीराधारमणदासगोस्वामिविरचितायां दीपिकाटिप्पण्यां पञ्चदशोऽध्यायः ॥ १५ ॥

### श्रीमद्वीरराघवव्याख्या

किं बहुना दर्शनस्य कृतार्थतापादकत्वं कथनीयमेतावतैव सर्वेषां कृतार्थता स्यादिति सूचयन्तस्तदेव प्रार्थयन्तो नमस्कुर्वन्ति। द्वाभ्यां श्लोकाभ्याम्। काममिति। हे भगवन्! स्ववृजिनैः स्वेषामस्माकं वृजिनैर्दुरितैः कामं नोऽस्माकं निरयेषु निरयप्रायेषु नीचयोनिषु भवो जन्म स्यान्तु वितर्के यदि नूनं ते तव पदयोर्नश्चेतश्चित्तमलिवद् भृङ्गवद्रमेत यदि नः वाचः गिरः तुलसीवत्तेऽङ्घ्रिशोभाः अङ्घ्री शोभयन्तीत्यङ्घ्रिशोभाः स्तुतिपराः स्युरित्यर्थः। यदि नः कर्णरन्ध्रं ते गुणगणैः पूर्येत नित्यं त्वद्गुण-गणश्रवणपरं स्यादित्यर्थः। इदं शिरः पाण्यादीनां भगवद्वन्दनार्चनादेरुपलक्षणं तत्तद्दुरितानुसारेण जन्म स्यान्न तत्र शोकः इदन्तु भगवन्तं प्रति प्रार्थनीयमवशिष्यते यच्चेत आदीनां भगत्पादारविन्दध्यानादिप्रावण्यमित्येतावतैव कृतार्था भवेयुरित्यर्थः। इदं तु लोकदृष्ट्योक्तम्॥ ४९॥ ❀ ❀ अथ स्वदृष्ट्या स्वकृतार्थतां वदन्तो नमन्ति प्रादुरिति। हे पुरुहूत! पुरुभिः बहुभिः हूत स्तुत्य सर्वोपनिषद्वेद्येत्यर्थः। यद्वा रूपविशेषणं पुरुभिर्हूतं वेद्यं पञ्चोपनिषत्प्रतिपाद्यमित्यर्थः। यदिदं रूपं दिव्यमङ्गलविग्रहं प्रादुश्चकर्थ प्रकटीकृतवानसि तेन रूपेण तद्दर्शनेनेत्यर्थः। हे ईशास्माकं दृशः नेत्राणि निर्वृतिं सुखमलं भृशमवापुः प्रापुः। अनात्मनां न विद्यते आत्मा अन्तःकरणं स्ववशं येषां तेषामयोगिनां दुरुदयः दुरवगमः यो भगवानित् इत्थमवधारणेर्वा प्रतीतः दृष्टः अस्माभि-रिति शेषः, तस्मै भगवते तुभ्यं इदं नमः कुर्म इत्यर्थः॥ ५०॥

**इति श्रीमद्भागवते महापुराणे तृतीयस्कंधे श्रीमद्वीरराघवाचार्यकृतभागवतचंद्रचंद्रिकायां पञ्चदशोऽध्यायः॥१५॥**

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

वयमपि त्वदङ्घ्र्येकशरणत्वादिदमेवाकांक्षामहे नान्यदिति विज्ञापयन्तीत्याह। काममिति। अङ्घ्री शोभयन्तीत्यङ्घ्रि-शोभाः स्तुतिद्वारेणेति शेषः, निरयेषु पश्वादियोनिषु वृजिनैर्दुःखैर्नष्टाः क्लिष्टाः

यावत्परमभक्तैस्तु भुज्यते दुःखमुल्बणम्। तावन्मुक्तौ सुखोद्रेकस्तत्र चेद्भक्तिवर्धनम्॥

इति वचनार्थमभिप्रेत्य निरयप्राप्तिप्रार्थना क्रियते इत्यभिप्रायः॥ ४९॥ ❀ ❀ सत्यां भक्तौ सर्वत्रानन्दोद्रेकः स्याद्यथा तवापरोक्ष-संभवो वृत्तस्तथेहास्मदपराधमविगणय्येति भावेनाहुरित्याह। प्रादुरिति। पुरु विस्तीर्णं हुतं यशो यस्य स तथा हे पुरुहूत! अलं निर्वृतिमापुरित्यनेनान्तर्दृष्टेर्बाह्यदृष्टेः स्पष्टत्वं सूचयति तस्येयं प्रत्युपक्रियेत्याहुरित्याह। तस्मा इति। यो भगवान् प्रतीतः प्रेक्षितो भक्तैरिति शेषः। यश्च दुरात्मनां दुरुदयः दुःप्रकाशस्तस्मै भगवते इदमुत्कृष्टं नमः विधेम कुर्म इत्यर्थः॥ ५०॥

**इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धटीकायां श्रीमद्विजयध्वजतीर्थकृतपदरत्नावलीटीकायां पञ्चदशोऽध्यायः॥१५॥**

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

काममिति। अनेन "तदधिगम उत्तरपूर्व्वापयोरश्लेषविनाशौ तद्व्यपदेशात्" इति न्यायेनासम्भवातद्भवानां ब्रह्मज्ञानि-नामपि स्वेषां बहुनरककारिबहुवृजिनापातक्षमापणेन तयोरित्थंभूतगुणो हरिरितिवत् सर्व्वाद्भुतमहत्तमत्वं सूचितम्। अहो निरया अपि भवेयुरेव न तावतापि पर्य्याप्तं तेभ्यश्च नास्माकमपि भयम्। अत्र तु मूलं दुष्फलं भवत्पराङ्मुखीभाव एव स त्वस्माकम् माभूदिति सकाकु प्रार्थयन्ते नु वितर्के यदि तु नश्चेतस्ते पादयो रमेत। तत्राप्यलिवदेव केवल-तन्माधुर्य्यास्वादापेक्षया नतु ब्रह्मानुभवापेक्षया। एवं वाचश्चेत्यादि। अत्र भक्तापराधस्य भगवता क्षमा तदिच्छामात्रकृततत्क्रोधजननात्तेषामपराधाभासत्वेन ज्ञेयम्। श्लोकद्वयेऽस्मिन् कैवल्यान्नरकोऽपि त्वद्भक्तिमात्रं तु कामयमानानामस्माकं तदविरोधित्वात् श्रेयानिति स्वारस्यलब्धम् ॥ ४९॥ ❀ ❀ तथापीत्थं कृतार्थत्वमस्माकमतिचित्रमित्याहुः। प्रादुरिति। अनात्मनामात्मनस्तव एकान्तभक्तिरहितानामप्र-कटोऽपि इत् इत्थं यः प्रीतोऽसि तस्मै तुभ्यं नम इदं विधेमेति। अत्रैतदुक्तं भवति एते ब्रह्मविद्यासिद्धानां परावरगुरूणामपि गुरवः। अतएव परमहंसमहामुनीनामित्युक्तम्। तं त्वामहं ज्ञानघनस्वभावप्रध्वस्तमायागुणभेदमोहैः। सनन्दनाद्यैर्हृदि सम्विभाव्यमिति श्रीमदंशुमद्वाक्यादौ। इहात्मतत्त्वं सम्यग् जगाद मुनयो यदचक्षतात्मन्निति ब्रह्मवाक्यादौ "तस्मै मृदितकषायाय तमसः पारं दर्शयति भगवान् सनत्कुमार" इति श्रुतौ च तथा प्रसिद्धम्। आसन्नानुभवस्यैव तत्सिद्धस्याणिमादिभिर्विघ्नोऽपि सम्विभाव्यः। न तु सिद्धानुभवस्य 'तं सप्रपञ्चमधिरूढसमाधियोगः स्वाप्नं पुनर्न भजते प्रतिबुद्धवस्तुरि'ति श्रीकपिलदेववाक्यात् अत एव तेषां प्रध्वस्तमायागुणभेदमोहानां क्रोधादिकमपि दुर्घटघटनकारिण्या श्रीभगवदिच्छयैव जातमिति तैरपि व्याख्यातम्। तद्वेव तेषां सततब्रह्मानन्दमग्नत्वं सिद्धम्। तदुक्तमक्षरजुषामपीति, श्रूयते चान्यत्र ब्रह्मजुषामविक्षिप्तचित्तत्वम्। तथा सप्तमे श्रीनारद-वाक्यम् "कामादिभिरनाविद्धं प्रशान्ताखिलवृत्ति यत्। चित्तं ब्रह्मसुखस्पृष्टं नैवोत्तिष्ठेत कर्हिचित्" इति। तथापि तेषां भगवदा-नन्दाकृष्टचित्तत्वमुच्यते एवमन्येषामप्यात्मारामाणां तादृशत्वं श्रूयते "स्वसुखनिभृतचेतास्तद्व्युदस्तान्यभावोऽप्यजितरुचिरलीला-कृष्टसार" इत्यादिषु। अथ लोकसंग्रहार्थैवेषा तेषां भक्तिप्रक्रिया प्राचीनसंस्कारवशाद्वा। नैवम्। उभयत्रापि "वासो यथा परिकृतं मदिरामदान्ध" इतिवत्तत्रावेशासम्भवात् दृश्यते त्वन्यत्रानावेशः। "मनसा मे सुता युष्मत्पूर्व्वजाः सनकादयः। चेरुर्विहायसा

लोकांल्लोकेषु विगतस्पृहा" इत्याद्यभिधानात् भगवति त्वावेशः परमहंसमहामुनीनामन्वेषणीयचरणावित्यत्र यादृच्छिकता विवोध्यान्वेषणीयत्वाभिधानात् । पञ्चमे तु "असङ्गनिशितज्ञानानलविधूताशेषमलानां भगवत्स्वभावानामात्मारामाणां मुनीनामनवरतपरिगुणितगुणगणे"त्यत्र गद्ये तदेकनिष्ठत्वमप्युक्तम् । अजितरुचिरलीलाकृष्टसार इत्यत्रैव च । अत्रापि 'तेनेश निर्वृतिमवापुरलं दृशो न' इत्यादौ सुखदत्वमपि साक्षादेवोक्तम् । अत्र पूर्व्वोक्तहेतोश्च स्तुतौ प्रत्युतोपालम्भप्रसङ्गाच्च स्नेहावलोककलया हृदि संस्पृशन्तमिति साक्षादुक्तेश्च दशामेव सुखमित्यनासक्तिरेव व्यञ्जितेत्यपि न व्याख्येयं तस्मादात्मारामाणां रमणास्पदत्वात् ब्रह्माख्यमात्मवस्त्वेव श्रीभगवान् तत्रापि 'चकार तेषां संक्षोभमक्षरजुषामपि चित्ततन्वोरि'ति श्रवणात् ततोऽपि घनप्रकाशः तत्तद्विचित्र श्रीभगवदङ्गोपाङ्गाद्यभिनिवेशदर्शनादानन्दवैचित्री चोपलभ्यते । सा चान्यथानुपपत्त्या स्वरूपशक्तिविलासरूपैवेति । ननु भवतु तेषामानन्दाधिक्यात् तस्मिन्निर्विशेषस्वरूपानन्दस्यैव घनप्रकाशता उपाधिवैशिष्ट्यात् । यतः विशुद्धसत्त्वसम्भावितायां चित्तवृत्तौ यद् ब्रह्म स्फुरति । तदेव घनीभूताखण्डविशुद्धसत्त्वमये भगवति स्फुरत्तदध्यस्ततया तदैक्यमापन्नायां तस्यां विशेषत एव स्फुरति अत एव श्रीविग्रहादिपरब्रह्मणोरभेदवाक्यमपि तदत्यन्ततादात्म्यापेक्षयैव । अत एव तत्र तत्रोपाधावेक एव निर्भेदपरमानन्दः समुपलभ्यते न तु विशेषाकारगन्धोऽपि । तत्तदुपाधेरपेक्षणन्तु प्रतिपदतदानन्दसमाधिकौतुकनिबन्धनं तस्मात् कथमनेन प्रमाणेन तत्तदुपाधीनामपि परतत्त्वाकारत्वं साध्यत इति चेत् उच्यते । भवन्मते तावद्यच्छुद्धचित्तवृत्तौ परब्रह्म स्फुरति तत् सम्यगेव स्फुरति । भेदांशपरित्यागेनैव ब्रह्मविद्याङ्गीकारात् । असम्यग्ज्ञानस्य तत्त्वानङ्गीकारात्तेन कैवल्यासम्भवाच्च । अतो न विग्रहादावधिकाविर्भावाङ्गीकारो युज्यते । किञ्च विशुद्धसत्त्वमया विग्रहा विलक्षणोपाधय इति वदतस्तव कोऽभिप्रायः । किं तत्परिणामास्ते तत्प्रचुरा वा । नाद्यः, रजोऽसद्भावेन परिणामासम्भव इति ह्युक्तम् । नचान्यः, येषु विग्रहादिषु तत्प्राचुर्यं ते मिश्रसत्त्वस्य कार्य्यभूता इत्यर्थापत्तौ 'सत्त्वं विशुद्धं श्रयते भवान् स्थितावि'त्यादिवचनजाते विशुद्धपदे वैयर्थ्यमिति चोक्तमेव । अस्तु वा विमिश्रत्वं तथापि तादृशे ब्रह्मस्फुरणयोग्यतैव न सम्भवेत् किं पुनर्विशेषेणेत्युद्दिश्य विस्मृतिश्च स्यात् । अथाखण्डशुद्धसत्त्वाश्रयत्वेन तेऽपि तद्रूपतयैवोच्यन्ते । ततश्च तेष्वनुभूताखण्डशुद्धसत्त्वे तस्मिन् ब्रह्मानुभवन्तीति चेत् तदयुक्तं कल्पनागौरवात् । तेऽचक्षताक्षविषयं स्वसमाधिभाग्यमिति साक्षादेव गोचरीकृतत्वेनोक्ततया परस्परादृष्टत्वप्रतिघाताच्च । तस्य शुद्धसत्त्वस्य प्राकृतत्वन्तु निषिद्धमेव, तस्मान्न ते प्राकृतसत्त्वपरिणामा न वा तत्प्रचुराः । किन्तु स्वप्रकाशतालक्षणशुद्धसत्त्वप्रकाशिता इति । प्राक्तनमेवोक्तं व्यक्तमत एव तेषामुपाधित्वनिराकृतेस्तदनुभवानन्दवैचित्री च सम्पद्यते तथैव तमेवंभूतमचक्षतेति तत्तद्विषयसौन्दर्यवर्णनं प्रस्तुतोपकारित्वात् सार्थकं स्यात् । अन्यथा अखण्डशुद्धसत्त्वमयत्वकथनमात्रेणैवाभिप्रेतसिद्धेः । अतएव निरीक्ष्य च न वितृप्तदृश इति दृक्सम्बन्धित्वाद्रूपकृतैवातृप्तिरुक्ता । तथैव च शब्देनैवाक्षरजयित्वं पदारविन्दपरिमलात्मकवायुलक्षणस्य तद्विशेषस्य दर्शितम् । अन्यथा उभयत्रापि ब्रह्मानन्दस्यैव निर्विशेषतयोपलभ्यमानत्वे विद्याजुषामपीत्युपाधिप्रधानमेवोच्येत उपाधियुगलस्यैव मिथः स्पर्द्धित्वप्राप्तेः । अनेनाक्षरानुभवसुखजयित्वकथनेन वशिष्ठादीनां पुत्रशोकादिकमिव तदावेशाभास एवायमित्यपि निरस्तम् । एवमेवोक्तं श्रीस्वामिभिरपि स्वरूपानन्दादपि तेषां भजनानन्दाधिक्यमाहेति । तस्मादस्ति वैचित्र्यमपि । अत एव तैरपि विचित्रतयैव प्रार्थितं 'चेतोऽलिवद्यदि नु ते पदयो रमेते'त्यादौ 'अक्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेदि'ति न्यायेन तदुपाध्यन्तरान्वेषणवैयर्थ्यात् तेषामतदन्वेषणकौतुकाभावाच्च । किञ्च न तेषामतदात्मको भावो वा दृश्यते । प्रत्युत नैर्मुनिरीक्ष्य न वितृप्तदृशो मुदा कैः 'कामं भवः स्ववृजिनैर्निरयेषु नः स्तादि'त्यादौ तत्प्रतियोगिनमस्काराद्युपलक्षितभेदात्मकभक्तिसुखमेव दृश्यते तस्मान्मायिकोपाधिर्निहीनत्वाद्धेयांशतया प्रतिभावत्वाच्च न तज्जातीयं सुखमन्यजातीयं कर्तुं शक्नोतीति सन्त्येवान्यथानुपपत्तिसिद्धयोः स्वरूपशक्तेरेव विलासाः । अस्तु तावज्जीवन्मुक्तिदशायां तन्मते विद्योपाधिप्रतिफलितस्यैव सतो ब्रह्मणः सकाशाच्छ्रीभगवतो घनप्रकाशता । सर्वोपाधिविनिर्मुक्तमुक्तिदशायामपि साक्षात्तादृशतास्त्येवेति सुव्यक्तं नात्यन्तिकं विगणयन्त्यपि ते प्रसादमित्यादौ । तस्मान्नोपाधितारतम्यचिन्ता भगवतः कथायामित्यनेन निरुपाधि ब्रह्म भूयादुपरि च वैचित्री स्फुटमेवासौ स्वीकृता । तस्मात् सान्तरङ्गवैभवस्य भगवतः सुखैकरूपत्वं तद्रूपत्वेऽपि घनप्रकाशत्वं स्वरूपशक्तिविलासवैचित्री चेति विद्वदनुभवप्रमाणेन निर्णीतम् । अत्र मुक्ता अपि लीलाया विग्रहं कृत्वा भजन्त इति । यत् सर्व्ववेदा आनमन्ति मुमुक्षवो ब्रह्मवादिनश्चेत्यत्र श्रुतावद्वैतवादगुरवोऽपि । कृष्णो मुक्तैरिज्यते वीतमोहैरिति भारते । 'ब्रह्मभूतः प्रसन्नात्मा न शोचति न कांक्षति । समः सर्व्वेषु भूतेषु मद्भक्तिं लभते परामि'ति श्रीभगवद्गीतोपनिषत्सु । मुक्तानामपि भक्तिर्हि नित्यानन्दस्वरूपिणीति भारततात्पर्य्यप्रमाणिता श्रुतिश्च । तथा । "आप्रयाणात्तत्रापि हि दृष्टम्" इत्यत्र च माध्वभाष्यप्रमाणिता सौपर्णश्रुतिः "सर्व्वदैनमुपासीत यावन्मुक्तिर्मुक्ता ह्येनमुपासत" इति । अत एव श्रीप्रह्लादबलिप्रभृतिमहाभागवतसम्बन्धमभिप्रेत्य श्रीविष्णुपुराणेऽप्युक्तम् "पाताले कस्य न प्रीतिर्विमुक्तस्यापि जायत" इति । अत्र विशेषो भगवत्सन्दर्भे ज्ञेयः ॥ ५० ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भस्य पञ्चदशोऽध्यायः समाप्तः ॥ १५ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

ननु मद्भक्ता सत्यमीदृशा एव मोक्षं न गणयन्त्येव । स्वेषां सम्प्रति का निष्ठा वः शुद्धभक्तौ मुक्तौ वा तां स्पष्टं ब्रूथ व्यञ्जनयालमित्यत आहुः । नोऽस्माकं भव एव स्तात् नतु मोक्ष इत्यर्थः । तत्रापि स्ववृजिनैः स्वाशुभकर्म्मभिर्निरयेषु नारकीष्वपि

योनिषु कस्तत्राधिको लोभो मुक्तौ वा कः खल्वलाभस्तमाहुः। चेत् इति। अलिर्यथा कण्टकैराविध्यमानोऽपि पुष्पेषु रमते तद्वत् विघ्नान् अविगणय्य यदि रमेतेति प्रेमा व्यञ्जितः। यदीत्यनेन नारक्यामपि योनौ भक्तेः सम्भवः। सत्याञ्च भक्तौ नरकोऽपि मोक्षादुत्तम इत्याशीस्तातज्ञा लभ्यते। अङ्घ्रिभ्यामेव शोभा यासां ता इति तुलसी यथा स्वशोभाया अभावादन्यत्र न तिष्ठति अङ्घ्र्योरेव शोभते तथैवास्मकं वाचोऽपि त्वदङ्घ्रिरूपगुणनामवर्णन एव शोभन्तां नान्यत्र। पूर्य्येतेति तत्रान्यवार्ता न प्रविशत्विति। यद्वा कर्णरन्ध्र इत्यल्पस्य पूरणमेव याचकरीत्या प्रार्थयन्ते। अयन्तु गूढोऽभिप्रायः कर्णरन्ध्रस्याकाशत्वात् गुणानाञ्चामूर्त्तत्वात् न कदापि पूरणमतो नित्यमेव श्रवणं फलिष्यतीत्येवं श्रवणकीर्त्तनस्मरणानीत्यानन्दत्रयं मुक्तौ नास्त्येव। भवे तु सम्भवेदपीति निकृष्टोऽपि भव एव प्रार्थितो न मोक्षः। एवमेव नाथ योनिसहस्रेष्विति कीटेषु पक्षिषु मृगेष्वित्यादिप्रार्थना निष्कामभक्तानां स्वभाव एव तेषामनुसंहितं भजनानन्दमनुसंहितमपि भवक्षयञ्च कुरुते इति भगवतोऽपि स्वभावः सर्व्वत्र द्रष्टव्यः॥ ४९॥ ❀ ❀ एवं त्वदीयश्रवणाद्यानन्दत्रिकलोभेन त्वत्परोक्षमयो भवोऽपि प्रार्थ्यते। त्वया तु स्वसाक्षात्कारामृतमपि वयं त्वद्भक्तापराधिनोऽपि पायिताः स्मेत्यहो ते क्षमाया एतावती सीमा कारुण्यन्त्वपारमित्याहुः। प्रादुरिति। पुरु यथा स्यात् पुरुभिर्बहुभिर्भक्तैराहूत हे नारायण! विष्णो! गोविन्द कृपया दर्शनं देहीत्याहूतः तेन स्वभक्ताह्वानोत्थकृपापरवशेनैव भवता स्वरूपमाविष्कुर्वता वयमपि कृतार्थीकृता इति भावः। दृशो नेत्राणि वृद्धिवृत्तयो वा इदं नम इति मूर्धसु धृतानञ्जलीन् दर्शयन्ति। इत् इत्थं। यद्वा इदिति नम इत्यस्य विशेषणं श्रीचरणारविन्दं प्रतिगच्छेदित्यर्थः। अनात्मनामात्मा त्वं सेव्यत्वेन न वर्त्तसे येषां तेषां दुरुदयः श्लेषेण येषां त्वं दुरुदयस्ते अनात्मानः आत्मशून्या मृतका एवेति भावः। प्रतीतः उलूकानां सूर्य इव दुर्द्दर्श एव निश्चित इत्यर्थः। अत्र समस्तात्मारामकुटमणीनां लब्धनिरन्तरब्रह्मानुभवानां श्रुतावपि तस्मै मृदितकषायाय तमसः पारं दर्शयति भगवान् सनत्कुमार इत्यादिवाक्येषु प्रसिद्धानां सनकादीनां भक्तावीदृशप्रार्थनालिङ्गेनैव ब्रह्मानन्दादपि भजनानन्दस्याधिक्येऽवगते भगवद्रूपनामगुणपरिच्छदभक्तधाम्नां चिद्घनाकारत्वं स्वत एव लब्धं तथाभूतत्वं विना भक्तेरसिद्धेरग्रे च कापिलेये निर्गुणत्वञ्चास्या वक्ष्यते। "मुक्तानामपि भक्तिर्हि नित्यानन्दस्वरूपिणी" इति भारततात्पर्य्ये प्रमाणिता श्रुतिश्च। तथा "आप्रयाणात्तत्रापि हि दृष्टम्" इत्यत्र माध्वभाष्यप्रमाणिता सौपर्णश्रुतिः "सर्व्वदैनमुपासीत यावन्मुक्तिरमुक्ता ह्येनमुपासत" इति। अतएव प्रह्लादबलिप्रभृतिमहाभागवतसम्बन्धमभिप्रेत्य श्रीविष्णुपुराणेऽप्युक्तम् 'पाताले कस्य न प्रीतिर्विमुक्तस्यापि जायत' इति॥ ५०॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्। तृतीये पञ्चदशोऽध्यायः सङ्गतः सङ्गतः सताम्॥ १५॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

लोकदृष्ट्याहुः। काममिति। कामं यथेष्टं भवो जन्म वाचः तुलसिवत् अङ्घ्रिभ्यां वर्ण्यमानाभ्यां शोभा यासां ता यदि स्युः॥ ४९॥ ❀ ❀ एवं लोकदृष्ट्या संप्रार्थ्याथ स्वकृतार्थतामाहुः। प्रादुरिति। हे पुरुहूत! विपुलकीर्ते! प्रादुश्चकर्थ प्रकटितवानसि अनात्मनां विस्मृतपरमात्मतत्त्वानां दुरुदयः अप्रकटोऽपि इत् इत्थं य प्रतीतोऽसि तस्मै इदं नमो विधेम॥ ५०॥

इति श्रीमद्भागवतमहापुराणे तृतीयस्कंधे श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपटीकायां पञ्चदशाऽध्यायार्थप्रकाशः॥ १५॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

एवं भक्तिमार्गानुसारेण भगवन्तं स्तुत्वा स्वस्याऽपराधाभावाय स्वदोषं कीर्तयन्ति शपथप्रकारेण—कामं भव इति। जयविजयावस्माभिर्व्याजेन शप्ताविति पक्षो नाऽस्ति, किन्तु भगवद्दर्शनलालसतया; अन्यथाऽस्माकमनिष्टं भवत्वित्याहुः—कामं भव इति। स्ववृजिनैः स्वकृतपापैः। नियतदुःखदं पापं वृजिनमित्युच्यते, नियमेन दुःखदं वा। अतो यः परस्मै दुःखं प्रयच्छति, स हि स्वयमपि दुःखं प्राप्नोति, अतो नोऽस्माकं भवो निरयेषु स्तात्, कामादीनां निरयद्वारत्वश्रवणात्। 'पापीयसस्त्रयः' इति वाक्यात्तयोः कामादिदानम्। निरयेष्विति बहुवचनं न त्रित्वपरम्, देशादिविशेषे दानस्याऽधिकफलजनकत्वात्। स्तादिति प्रार्थनायां लोट्। अङ्गीकारेऽनङ्गीकारे चोभयथा हेतुमाह—चेतोऽलिवदिति। यथा भ्रमरो रसाविष्टः कालमपि न गणयति, रात्रावपि तत्र स्थितो बद्धो भवति, तथा नश्चेतस्ते पदयोर्यदि रमेत, तदा देहस्य नरके स्थितिर्नाऽस्माकं बाधिका। किञ्च, तदेवाऽस्माकं निरये वासो भविष्यति, अलिवद्यदि पदयो रतिर्भवेत्। स हि मधुलोभेन पुष्पपीडामविगणय्य मधु पिबति, तथा वयमपि फलार्थिनश्चेत् दर्शनार्थं द्वारपालयोरपराधं कृतवन्तः, अन्यथा मा भवत्वित्यर्थः। एवं मानसमुक्त्वा वाचनिकमाहुः—वाचस्त्विति। यदि नो वाचस्तुलसीवत्। स्वरूपगन्धादिरहिता अपि चरणारविन्दे शोभते यथा तुलसी, तथा वाचोऽपि पदचातुर्याद्यनपेक्षा भगवद्गुणप्रतिपादकत्वेनैव यदि शोभायुक्ताः स्युः, तदापि नरके वासो न बाधकः। तुशब्दः पूर्वपक्षं व्यावर्तयति, तेन न समुच्चयः। किञ्च, यथा तुलसी परप्रेरणया चरणाविष्टा भवति, एवमन्यप्रेरणया भगवद्गुणा अस्मद्वाचि निविष्टा भवेयुः, तदा नरको भवतु। यदा स्वत एव निविष्टाश्चेत्, तदा न भविष्यतीत्यर्थः। कायिकमाह—पूर्येतेति। ते गुणसमूहैर्गुणानामवान्तरजातिभेदैर्वा यदि कर्णरन्ध्रः पूर्येत, अलमिति मन्यते, सर्वदा वा पूरितमेव तिष्ठति, निरन्तरश्रवणेन यथाऽन्यन्न प्रविशेत्तथा; पूर्ववदित्यर्थः॥ ४९॥ ❀ ❀

एवं स्वापराधे स्वयमेव स्वदण्डमनूद्य, समागतानां किमेतदेव फलमिति, शङ्कायां समागमनफलं जातमित्याहुः—प्रादुश्चकर्थेति। यदिदं रूपम्, हे पुरुहूत, प्रादुश्चकर्थ, तेन प्रादुर्भूतरूपेण दृशो निर्वृतिमवापुः। दृष्टीनां परमसंतोषो जात इत्यर्थः। एवं सुखदातुः प्रत्युपकारोऽपि नमस्कारेणैवेत्याह—तस्मा इदमिति। तस्मै भगवते इदं नम इद्विधेम। न हि शास्त्रानुसारेण कर्तुं शक्यते, अतोऽनुकरणमात्रमिति इदित्युक्तम्। इदित्यव्ययमिवार्थे। पुरुहूतेति यज्ञात्मकता, पुरुभिर्हूयत इति, पुरुधा वा इन्द्रादिरूपेण हूयत इति। स्वार्थे प्रादुर्भाव आगमनमेव, अन्तःकरणे तु सुखं न जातमिति भावः। शापदानेन चित्ते ग्लान्युत्पत्तेः। न चैतत्फलमल्पमिति मन्तव्यम्, यतोऽनात्मनां भवान् दुरुदयः प्रतीतो दृष्टः। न विद्यते आत्मा येषाम्। यैरात्मैव नाशितो बहिर्मुखत्वादिभिस्तेषां दुरुदयः, दुःखार्थमनुदयो वा। इदमिति प्रदर्शयन्तो नमस्कुर्वन्ति। भगवानुपकारकर्तेत्याश्चर्यार्थम्—तस्मै भगवते इत्युक्तम्। प्रतीत इति प्रमाणम्॥ ५०॥

इति श्रीभागवतसुबोधिन्यां श्रीलक्ष्मणभट्टात्मजश्रीवल्लभदीक्षितविरचितायां तृतीयस्कन्धे पञ्चदशाध्यायविवरणम्।

### श्रीगिरिधरकृता बालप्रबोधिनी।

इदानीं स्वापराधं निवेदयन्तो भक्तिं प्रार्थयन्ते-काममिति। हे भगवन् इतः पूर्वमस्माकं वृजिनं नाभवत्, इदानीं तु सर्वाण्यपि जातानि यतस्त्वद्भक्तौ शप्तौ अतस्तैः स्ववृजिनैः स्वकृतैः पापैर्निरयेषु निरयप्रायेषु नीचयोनिषु नोऽस्माकं कामं यथा यथेष्टमसङ्कोचेन भवो जन्म स्तात् भूयात्। नु वितर्के। यदि तु नोऽस्माकं चेतश्चित्तं ते पदयो रमेत। तत्र दृष्टान्तमाहुः-अलिवदिति। अलिर्यथा कण्टकैराविध्यमानोऽपि पुष्पेषु रमते तद्वद्विघ्नानविगण्य्य चित्तं यदि ते पदयोः रमेतेत्यर्थः। एवं मानसीं भक्तिं प्रार्थ्य वाचिकीं प्रार्थयन्ते- वाचश्चेति, यदि च नो वाचः तुलसिवत्ते तवाङ्घ्रिशोभा अङ्घ्रिं शोभयन्तीत्यङ्घ्रिशोभाः माहात्म्यप्रकाशिकाः स्युरित्यर्थः। यद्वा अङ्घ्रिभ्यां शोभा यासां तास्तथा। तत्र दृष्टान्तमाहुः-तुलसिवदिति। यथा च तुलसी स्वगुणैरपेक्ष्येण त्वदङ्घ्रिसम्बन्धेनैव शोभते तथा यदि वाचोऽपि स्वमाधुर्यादिगुणरहिता अपि त्वद्गुणगानमात्रेणैव शोभेरन्। इदानीं कायिकीं भक्तिं प्रार्थयन्ते-पूर्येतेति। यदि च ते गुणगणैर्नः कर्णरन्ध्रः पूर्येतेत्यन्वयः। इति च, अल्पस्य पूरणमेव याचकरीत्या प्रार्थयन्ते। तत्रायमभिप्रायः-कर्णरन्ध्रस्याकाशत्वात् गुणगणशब्दानां च अमूर्तद्रव्यत्वान्न कदाचिदपि पूरणं अतो नित्यमेव श्रवणं फलिष्यतीति। एतच्च शिरःपाण्यादिसर्वाङ्गानां वन्दनार्चनादिभक्तीनां चोपलक्षणं ज्ञेयम्॥ ४९॥ ❀ ❀ ॥ यदर्थं भवतामत्रागमनं तत्तु किमपि नोक्तमित्यपेक्षायां भगवद्दर्शनेनैव स्वकृतार्थतां वदन्तः प्रणमन्ति-प्रादुरिति। यदि परमेश्वर एवं कृपां न कुर्यात्तदा कः कुर्यादिति द्योतयन्तः सम्बोधयन्ति-हे ईशेति। अत एव विपुलकीर्तिरसीत्याशयेन पुनः सम्बोधयन्ति-पुरुहूतेति। यदिदमलौकिकं सर्वसौष्ठवाढ्यं रूपं विग्रहं प्रादुश्चकर्थ प्रदर्शितवानसि तेन तद्दर्शनेन नोऽस्माकं दृशो नेत्राणि अलं अतिशयेन निर्वृतिं सुखमवापुः प्रापुरित्यन्वयः। तत्र दुर्लभलाभरूपं हेतुमाहुः- य इति। अनात्मनां न विद्यते आत्माऽन्तःकरणं स्ववशं येषां विषयाकृष्टचित्तानां तेषां दुरुदयः दुरवगमोऽपि यो भवान् इत् इत्थं प्रत्यक्षतया प्रतीतः अस्माभिर्दृष्टस्तस्मै भगवते परमैश्वर्यपरिपूर्णाय तुभ्यं किञ्चिदपि कर्तुमसमर्था वयमिदं केवलं नमो विधेम; नमनं कुर्म इत्यर्थः॥ ५०॥

इति श्रीवल्लभाचार्यवंश्यगोपालसूनुना॥ श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा॥ १॥
श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये॥ श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी॥ २॥
रचिता च तृतीयेऽत्र बन्धसर्गनिरूपणे॥ गतः पञ्चदशो वृत्तिं द्वास्स्थशापनिरूपकः॥ ३॥

### हिन्दी अनुवाद

भगवन्! यदि हमारा चित्त भौंरेकी तरह आपके चरण-कमलमें ही रमण करता रहे, हमारी वाणी तुलसीके समान आपके चरण-सम्बन्धसे ही सुशोभित हो और हमारे कान आपकी सुयश-सुधासे परिपूर्ण रहें तो अपने पापोंके कारण भले ही हमारा जन्म नरकादि योनियोंमें हो जाय—उसकी हमें कोई चिन्ता नहीं है॥ ४९॥ ❀ ❀ विपुलकीर्ति प्रभो! आपने हमारे सामने जो यह मनोहर रूप प्रकट किया है, उससे हमारे नेत्रोंको बड़ा ही सुख मिला है; विषयासक्त अजितेन्द्रिय पुरुषोंके लिये इसका दृष्टिगोचर होना अत्यन्त कठिन है। आप साक्षात् भगवान् हैं और इस प्रकार स्पष्टतया हमारे नेत्रोंके सामने प्रकट हुए हैं। हम आपको प्रणाम करते हैं॥ ५०॥

**१५ वाँ अध्याय समाप्त**

# अथ षोडशोऽध्यायः

**ब्रह्मोवाच**

इति तद् गृणतां तेषां मुनीनां योगधर्मिणाम् । प्रतिनन्द्य जगादेदं विकुण्ठनिलयो विभुः ॥ १ ॥

**श्रीभगवानुवाच**

एतौ तौ पार्षदौ मह्यं जयो विजय एव च । कदर्थीकृत्य मां यद्वो बह्वक्रान्तामतिक्रमम् ॥ २ ॥
यस्त्वेतयोर्धृतो दण्डो भवद्भिर्मामनुव्रतैः । स एवानुमतोऽस्माभिर्मुनयो देवहेलनात् ॥ ३ ॥
तद्वः प्रसादयाम्यद्य ब्रह्म दैवं परं हि मे । तद्धीत्यात्मकृतं मन्ये यत्स्वपुम्भिरसत्कृताः ॥ ४ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

हरिणा सांत्वितैर्विप्रैरनुतप्तैस्तु षोडशे ॥ तयोरसुरभावेऽपि कृतोनुग्रह ईर्यते ॥ १ ॥

इति गृणतां तेषां तद्वाक्यं प्रतिनंद्येदं जगाद एतावित्येकादशभिः ॥ १ ॥ ❀ ❀ यद्यस्मान्मां कदर्थीकृत्य तुच्छीकृत्य बहु यथा भवति तथा अतिक्रमं वः कृतवंतौ ॥ २ ॥ ❀ ❀ तस्मात्स एव दंडोंऽगीकृतः ॥ ३ ॥ ❀ ❀ हि यस्माद्ब्रह्म ब्राह्मणा एव मे परमं दैवं दैवतं तत्तस्मादद्य वः प्रसादयामि । तव कोऽपराध इति चेत्तत्राह । तद्धीति मदीयैः पुंभिरसत्कृतास्तिरस्कृता इति यत्तदात्मकृतमेव मन्ये ॥ ४ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

तयोर्जयविजययोः गृणतां स्तुवतां योगो भक्तियोगः स एव धर्मोस्ति येषां तेषाम् । इदं वक्ष्यमाणम् विकुंठनिलय इत्यनेन प्रतीतं परिच्छिन्नत्वं वारयति विभुरिति 'विभुः सर्वगते पत्यौ' इति यादवः ॥ १ ॥ ❀ ❀ अपराधाशंकया युष्माभिर्न भेतव्यमित्याह एताविति । ताविति सर्वप्रधान्यद्योतनायोक्तम् । यद्वा यौ वोतिक्रमं कृतवंतावेतौ ताविति । मदनभिप्रेताचरणमेव मत्तुच्छीकरणम् ॥ २ ॥ ❀ ❀ अतो मया कर्त्तव्य एव दंडो भवद्भिः कृत इत्याह—मामनुलक्षीकृत्य व्रतानि तपश्चरणादीनि येषां तैः देवा मदीया ब्राह्मणास्तेषां हेलनमवज्ञा तस्मात् "नन्वस्य ब्राह्मणा राजन्कृष्णस्य जगदात्मनः । पुनंतः पादरजसा त्रिलोकीं दैवतं महत्" इति युधिष्ठिरं प्रति नारदोक्तेः "ब्रह्मण्यस्य परं दैवं ब्राह्मणाः किल ते प्रभो" इत्यग्रे इहैव वक्ष्यमाणत्वाच्च ॥ ३ ॥ ❀ ❀ तदेवाह परमं सर्वोत्कृष्टम् । किञ्च युष्मासु ममैवापराध इति चेत्तत्राह-तद्धीति । यदि जयविजयौ मद्भृत्यौ न स्यातामहं च तयोः प्रीतिमान्न स्यां तदा मेऽपराधो न स्यादिति भावः । स्वस्य मम पुंभिः 'मत्पुंभिः' इति पाठोपि क्वचिदस्ति स एव स्वामिसंमतः प्रतिभाति ॥ ४ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

गृणतां स्तुवताम् ॥ १ ॥ ❀ ❀ एतौ तौ अतिप्रसिद्धौ अतिक्रममपराधम्, अक्रांतामित्यार्षम् अत्र प्रत्ययोच्चारणमत्रार्थत्वेन क्रमुधात्वर्थस्याविवक्षितत्वात् कृञर्थस्य सर्वानुगतत्वात् कृतवन्ताविति व्याख्यातम् ॥ २ ॥ ❀ ❀ तस्माद्देवहेलनाद्धेतोः ॥ ३ ॥ ❀ ❀ मदीयैरिति तत्कृतस्य स्वकृतत्वमननञ्च तयोः स्वन्तरङ्गत्वं व्यञ्जयति ॥ ४ ॥

### श्रीमद्वीरराघवव्याख्या

एवं मुनिभिरावेदितस्वरूपगुणरूपविभूतिस्तत्प्रसादितो भगवानाश्रितसुलभः । प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः । ज्ञानी त्वात्मैव मे मतमिति । स्वगीतोक्तरीत्या निरतिशयस्वप्रीतिविषयान्मुनीन्प्रसादयितुमुवाचेत्याह ब्रह्मा । इतीति । मुनीनां शुभाश्रयसंशीलनशीलानां योगधर्मिणां भगवद्भक्तियोग एव धर्मो येषामस्तीति तेषामित्युक्तप्रकारेण गृणतां स्तुवतां तेषां सनकादीनां तद्भाषितं प्रतिनन्द्य शिरसा संश्लाघ्य विकुण्ठस्थानं निलयो यस्य स विभुर्भगवानिदं वक्ष्यमाणं जगाद

---

१. प्रा० पा०—तद्वदतां । २. प्रा० पा०—र्मय्यनुव्रतैः ।

उक्तवान् ॥ १ ॥ ❀ ❀ उक्तिमेवाह । एकादशभिः । एताविति । जयो विजय एव चेत्येतौ मह्यं मम पार्षदौ मां कदर्थीकृत्यावज्ञाय यद्युष्मद्वः युष्मभ्यं बहु भृशमतिक्रममपचारमकार्ष्टामकुरुताम् ॥ २ ॥ ❀ ❀ तस्मान्मामनुव्रतैर्भजद्भिर्भवद्भिरेतयो र्योदण्डः धृतः कृतः स एव दण्डः अस्माभिर्हे मुनयः ! देवहेलनाद्देवानां युष्माकं हेलनादवज्ञानान्निमित्तादनुमतोऽस्त्वित्यङ्गीकृतः ॥ ३ ॥ ❀ ❀ तत्तस्मादस्मद्भृत्यकृतयुष्मद्विषयापचरणाद्वः युष्मानद्याधुना प्रसादयामि क्षमापयामि ननु सत्यप्यपराधे उत्कृष्टा एव क्षमापयितव्या इत्यत्राह । हि यस्माद् ब्रह्म ब्राह्मणा मे मम परमुत्कृष्टं दैवमतो वः प्रसादयामि । ननु किमपराद्धं भवता येन प्रसादयामीति भाषसे इत्यत्राह । स्वपुंभिः मदीयैः पुंभिरसत्कृता अवज्ञाता इति यत्तद्धि आत्मकृतं मया कृतमित्येव मन्ये ॥ ४ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

दुस्तरापत्तिपरिहाराय भक्त्या हरिरेव प्रार्थनीय इत्ययमर्थः । प्रतिपाद्यतेऽस्मिन्नध्याये । तत्रादौ भक्तपराधीनोऽहमिति प्रकटयिष्यतो हरेः सनकादीन्प्रति स्नेहवचनप्रकारमाह । इतीति । योगो भक्तियोगः स एव धर्म एषामस्तीति योगधर्मिणः तेषामिदं वक्ष्यमाणं तत्स्तवनं प्रतिनन्द्य वैकुण्ठनिलय इत्यनेन प्रतीतं परिच्छिन्नत्वं निवारयति । विभुरिति । "विभुः सर्वगते पत्यौ" इति यादवः ॥ १ ॥ ❀ ❀ मह्यमिति व्यत्ययेन जयविजययोः पार्षदप्राधान्यं सूचयति मां कदर्थीकृत्याविगणय्याप्रयोजनीकृत्येति वा तत्कुत इति तत्राह । यद्व इति । बह्विति क्रियाविशेषणं यथा बहुः पूर्णो भवति तथातिक्रममपराधमक्रान्तामकुर्वतां यत्तस्मादिति शेषः ॥ २ ॥ ❀ ❀ तर्हि भगवताप्येतौ दण्ड्याविति शङ्कित्वा युष्माकमस्माकं चैकमनस्कत्वाद्युष्माभिर्दत्त एव दण्डोऽस्माभिर्दत्त इत्याह । यस्त्विति ॥ ३ ॥ ❀ ❀ किं चात इति तत्राह । तद्व इति । तत्तेन दण्डानुज्ञानेन किमेषां प्रसादनमत्राह । ब्रह्मेति । सर्वेषामिति पदमध्याहृत्यान्वेतव्यं मे मम भक्तियुक्तं ब्रह्म विप्रकुलं सर्वेषां परदैवं पूज्यं हि प्रसिद्धं मे परं मत्तात्पर्ययुक्तमिति वा अन्यकृतापराधस्य स्वात्मन्यारोपणं कथमत्राह । तद्धीति ॥ ४ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

एवमात्मीयत्वेन तौ भर्त्सयित्वा ब्राह्मणत्वेन तान् स्तौति यस्येति चतुर्भिः । कीर्त्तिः पूर्वोक्तं यशः यद्यपि लोकेश्वरास्ताभ्यामतिनिकृष्टा एव तथाप्यश्लीलाच्छादनायैव टीकायां तथा व्याख्यातम् ॥ १—६ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

भृत्येष्वात्मीयतामात्मस्वादरं जानतां हरिः । षोडशे विभ्यतां तेषां शापमेवान्वमोदत ॥

इति गृणतां स्तुवतां तेषां तद्वाक्यम् ॥ १ ॥ ❀ ❀ अपराधाशङ्कया युष्माभिर्न भेतव्यमित्याह । एतावित्येकादशभिर्मह्यं मम । यद्वस्मान्मां कदर्थीकृत्य तुच्छीकृत्य बहु यथा स्यात्तथा अतिक्रमं वः कृतवन्तौ । मदभिप्रेतानाचरणमेव तुच्छीकरणम् ॥ २ ॥ ❀ ❀ अतो मया कर्त्तव्य एव दण्डो भवद्भिः कृत इत्याह । य इति । मामनुलक्षीकृत्य व्रतानि येषां तैः देवस्य मम हेलनादिति मद्विषयक एवायमनयोरपराधो वस्तुत इति भावः ॥ ३ ॥ ❀ ❀ किञ्च युष्मासु ममैवापराधोऽभूदित्याह । तद्व इति । ननु कथं तवापराधस्तत्राह । तद्धीति । यदि जयविजयौ मद्भृत्यौ न स्यातामहं वा तत्र प्रीतिमान्न स्यां तदा अपराधो मे न स्यादिति भावः ॥ ४ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

तद्वाक्यं प्रतिनन्द्य इदं वक्ष्यमाणं जगाद ॥ १ ॥ ❀ ❀ कदर्थीकृत्य अवज्ञाय अपृष्ट्वेत्यर्थः । बहु यथा भवति तथा वः अतिक्रममपचारम् । आक्रान्तां कृतवन्तौ ॥ २ ॥ ३ ॥ ❀ ❀ स्वपुम्भिः मदीयैर्द्वारपालैर्वः बहुवचनं छत्रिणो यान्तीतिवत् असत्कृता इति यत् तद्धि आत्मकृतं मन्ये ॥ ४ ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या ।

मुनिमानससंतोषस्ततः स्तोत्रं तथाविधम् । शापस्थापननिर्योणे षोडशे विनिरूप्यते ॥ १ ॥
भक्तानां तु कृतिः सत्या वाक् सत्या ब्रह्मवादिनम् । मनो भगवतः सत्यमित्यध्यायविनिर्णयः ॥ २ ॥
मनसः प्रबलत्वाद्धि तेषां नान्यविरोधिता । पूर्वयोरनभिप्रेतं तृतीयादेव सुस्थिरात् ॥
अतो भगवतः सर्गलीलायां दुर्बलार(ऽव)तिः ॥ ३ ॥

एवं पूर्वाध्याये अर्द्धतुष्टानां मुनीनां स्तोत्रमुक्तम्। तयोः पूर्णसंतोषार्थं भगवान् ब्राह्मणस्तोत्रं कृतवानित्याह—इति तद्गृणतामिति। पूर्वोक्तप्रकारेण गृणतां तेषां भीतानां मुनीनां शास्त्रानुसारिणां वचनं प्रतिनन्द्य। तच्छब्देन वचनं प्राप्यते। प्रतिनन्दनं बहिरेव कृतम्, प्रतिनन्दनस्यैवाऽग्रे वक्ष्यमाणत्वात्। इदं वक्ष्यमाणं जगाद। ननु किमित्येवं जगाद, यतो भक्तानां दुःखं भवति। तत्राह—विकुण्ठ[1]निलय इति। विकुण्ठस्थानं निलयो यस्य। गृहागतानां संतोषः कर्तव्य इति। नन्वेवं सति भक्ताः पीडिता भवेयुरित्याशङ्क्याऽऽह—विभुरिति। स्वभृत्यान् सर्वप्रकारेणापि मोचयितुं समर्थ इत्यर्थः ॥१॥ ❀ ❀ प्रथमतः सेवकयोरपराधं समर्थयति—एतावितिएतौ जयविजयौ, तौ पूर्वकल्पे मधुकैटभौ, मह्यं वरदानान्मदुत्सङ्गे मृताविति मया वैकुण्ठे समानीतौ। तदानीं बहूनां सेवकानां विद्यमानत्वात्सन्देहनिवृत्त्यर्थं नाम गृह्णाति—जयो विजय एव चेति। मदर्थं यो जयः स एकः, जयनामा च। इन्द्रियादीनामन्यार्थं जयो ज्ञानमार्गे, मदर्थं जयो भक्तिमार्गे, अन्तःकरणजय इत्यर्थः। विविधो जय इन्द्रियादीनां द्वितीयः। अत एवैतौ मम पार्षदौ, पर्षदि सभायां योग्यौ। यथाऽन्तःकरणे तज्जयो भगवत्स्थितौ हेतुर्भवति, तथा वैकुण्ठस्थितावेतावेव हेतुभूतौ। अत एवैतयोरुत्पत्तिविमर्शनेनाऽपराधकरणं युक्तमेव। न हि साक्षान्मनसा भगवान् गन्तुं शक्यः, किन्तु जयेनैव शक्य इति भगवत आनन्दरूपस्य सहजसुखत्वेन मनसः प्रवृत्तियोग्यत्वेऽपि जयप्रतिबन्धान्न भगवद्गमनम्। अत एव मां कदर्थीकृत्य, व्यवहारेऽपि ब्रह्मण्यत्वादिमद्धर्मान् दूरीकृत्य, वो युष्माकमतिक्रमं बद्धकान्ताम् ॥ २ ॥ ❀ ❀ अत एवैतयोर्दण्ड उचित इत्याह—यस्त्वेतयोरिति। तुशब्दो दण्डान्तरव्यावृत्त्यर्थः। यो जन्मत्रयात्मको दण्डः, स एवाऽनुमतोऽस्माभिः। भवद्भिर्मया चेति; सेवकसहितेन मया वा। उभावपि दण्डनीयावित्येतयोरित्युक्तम्। अनुव्रताः सधर्माः। मत्कार्यं कृतमिति, ममाऽत्र महान् संतोष इति, तेषां कृत्यभिनन्दम्। मुनय इति संबोधनं काकतालीयकरणव्यावृत्त्यर्थम्, अभिप्रायज्ञानार्थं वा। नन्वेतयोः कोऽपराधः? द्वाररक्षा तु स्वधर्म इति। तत्राऽऽह—देवहेलनादिति। अस्मद् वा ब्राह्मणाः, परोक्षदेवो यज्ञः, प्रत्यक्षदेवो यज्ञाधिष्ठाता विष्णुरिति। स एवेत्येवकारेण इदानीमन्यो न वक्तव्य इति सूचितम् ॥ ३ ॥ ❀ ❀ एवमपराधदण्डौ निरूप्य, सेवकापराधं दूरीकृत्य, दण्डापराधं स्वापराधं च दूरीकरोति प्रार्थनया—तद्वः प्रसादयामीति। युष्मानद्य प्रसादयामि, यतोऽपराधो जात इति। अपराधो हि महत्यल्पस्य भवति, प्रकृते तु कथमपराध इति चेत्तत्राऽऽह—ब्रह्म दैवं परमिति। मम दैवं देवता, ब्रह्म ब्राह्मणजातिः। परमिति विष्णवपेक्षयाऽपि। आधिदैविको विष्णुर्देवो भवति, 'विष्णुर्वा अकामयत, पुण्यं श्लोकं शृण्वीय न मा पापाकीर्तिरागच्छेदिति। स एतं विष्णवे श्रोणायै पुरोडाशं त्रिकपालं निरवपत्' इति श्रुतेः। तद्व्यावृत्त्यर्थमाह—परमिति। प्रत्यक्षश्रुतौ देवापेक्षया ब्राह्मणानामुत्कर्षविधानात्, 'एते वै देवाः प्रत्यक्षं यद् ब्राह्मणा इति'। तदाह—हिशब्देन। ननु भवतः कोऽपराधस्तत्राऽऽह—'तद्धि ह्यात्मकृतं मन्य इति। यत् स्वपुम्भिः स्वसेवकैरसत्कृतम्, तदहमात्मकृतमेव मन्ये। हि युक्तोऽयमर्थः, भृत्यकृता एव स्वामिकृता भवन्तीति, अन्यथा भृत्यापराधे स्वामिनो दण्डो न स्यात्। अनेन मयैव भवन्तो निवारिता इत्यप्युक्तम्। कृतमपि तदुक्तमेव, द्वारपालकधर्मत्वात्। अत एव हि द्वयमन्योन्यं हेतुभूतम्। यद्यप्येतादृशे लोकः स्वाम्यपराधं न मन्यते, तथाप्यहं मन्ये; यतस्ते स्वपुरुषाः ॥ ४ ॥

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

अथ षोडशाध्यायं व्याख्यातुकामाः सङ्गतेः पूर्वनिरूपितत्वादध्यायार्थमाहुः—मुनिमानसेत्यादि। विनिरूप्यत इति। एष पदार्थसंघो लोभकृतभक्तिनाशशेषतया भगवदवतारमुक्त्योत्पत्त्योः प्रयोजकभूतो निरूप्यत इत्यर्थः। तेन सिद्धमाहुः—भक्तानामित्यादि। सत्यत्वमत्र विषयाव्यभिचारित्वम्। तत्रापि भगवन्मनःसत्यत्वमेव मुख्यतया प्रतिपाद्यमित्याहुः—मनस इत्यादि। तेषां भक्तानां ब्रह्मवादिनां च मनसः प्रबलत्वान्नान्यविरोधिता, न भगवन्मनोविरोधित्वम्। तत्र गमकम्—पूर्वयोरित्यादि। तथा च, भगवन्मनसो विषयाव्यभिचारित्वादेव देहेन्द्रियासुहीनानामपि तदानीं मनःप्रभृतिसम्बन्ध इति सर्गोपोद्घातत्वमस्येत्यर्थः। अत्र मूलस्थं गमकमाहुः—अत इत्यादि। भवतिः स्थितिलीला। तथा च, 'विप्रशापं समर्थोपि हन्तुं नेच्छे' 'एतर्हि भगवांस्तद्विधित्सति' इति वाक्याभ्यां तथाऽवसीयत इत्यर्थः ॥ १ ॥ ❀ ❀ एतौ ताविन्यत्र। इन्द्रियादीनामित्यादिना जयविजयस्वरूपनिरुक्त्या पूर्वदत्तस्वरूपं विवृतमस्तीति प्रतिभाति। तथा च, यथा विष्वक्सेनादयस्तन्त्राद्यात्मकाः, तथा युवामुक्तविधजयविजयात्मकौ भूयास्तामिति। अत एवेति। वरदानादेव। गन्तुमिति। प्राप्तुम्। अत एवेति। आगन्तुकानां मनःप्रतिबन्धादेव। अक्रान्ताम्। अकार्ष्टाम् ॥ २ ॥ ❀ ❀ यस्त्वित्यत्र। देवहेलनादित्यस्य ब्राह्मणयज्ञविष्णूनां हेलनादित्यर्थो बोध्य इत्येतदर्थमाहुः—अस्मदित्यादि ॥ ३ ॥ ❀ ❀ तद्वा इत्यत्र। दण्डापराधमिति। दण्डकरणापराधम्। अत्र विवक्षितस्य विष्णोः स्वरूपमाहुः—आधिदैविक इत्यादि। तथा च यज्ञाधिष्ठाता भगवदंशो यः स विष्णुरित्यर्थः। द्वयमिति। स्वकृतं स्वसेवककृतं च ॥ ४ ॥

### श्रीगिरिधरकृता बालप्रबोधिनी

हरिणा प्रार्थितैः सम्यक्तयोस्तु सनकादिभिः। कृतो ह्यनुग्रह इति षोडशे विनिरूप्यते ॥

एवं मुनिभिः संस्तुतः परमकारुणिको भगवांस्तयोः स्वभृत्ययोरनुग्रहं प्रार्थितवानित्याह—इतीति। इत्युक्तप्रकारेण गृणतां स्तुवतां तेषां सनकादिनां तद्भाषितं प्रतिनन्द्य इदं जगाद, शापमङ्गीकृत्य तदनुग्रहं प्रार्थितवानित्यर्थः। वैकुण्ठो निलयः

१. वैकुण्ठनिलय इति। वैकुण्ठस्थानं. ग. घ.। २. तद्धीत्यात्मकृतम्. क.।

स्थानं यस्य स विभुर्महान्भगवानित्यनेन महतस्तस्य स्वगृहमागतानां सन्मानं युक्तमेवेति सूचितम्। तेषामपि सन्मानयोग्यतामाह—योगधर्मिणामिति। 'प्रियो हि ज्ञानिनोऽत्यर्थं, ज्ञानी त्वात्मैव मे मतः' इत्यादिवाक्याज्ज्ञानयोगवत्त्वेन प्रियत्वादिति भावः। ज्ञानित्वेऽपि हेतुमाह—मुनीनामिति॥ १॥ ❀ ❀ भगवदुक्तिमेव दर्शयति—एतावित्येकादशभिः। जयो विजयश्चेत्येतौ यौ मह्यं मम पार्षदौ वो युष्माकं बहु यथा स्यात्तथा यदतिक्रममपराधं अक्रांतां कृतवन्तौ तौ मां कदर्थीकृत्य अवज्ञाय एव तत्कृतवन्तौ। न तत्र ममापि सम्मतिरस्तीत्यर्थः॥ २॥ ❀ ❀ देवानां देववदस्मत्पूज्यानां युष्माकं हेलनात् अवज्ञानात् हेतोर्भवद्भिर्यस्त्वेतयोर्दण्डो धृतः स एव दण्डोऽस्माभिरनुमतोऽङ्गीकृत इत्यन्वयः। तदङ्गीकारे हेतुमाह—मामनुव्रतैरिति। मदभिप्रायानुसारिभिरित्यर्थः। तत्र हेतुं सूचयन् सम्बोधयति—मुनय इति॥ ३॥ ❀ ❀ एवमपराधं निरूप्य तद्दण्डमङ्गीकृत्य क्षमापयति—तदिति। हि यस्मात् ब्रह्म ब्राह्मणा मे मम परमुत्कृष्टं दैवतं तत्तस्माद्वो युष्मान् अद्य प्रसादयामि क्षमापयामीत्यन्वयः। ननु तव कोऽपराधो यत्क्षमापयसीत्यत आह—तद्वीति। स्वपुम्भिः मदीयैर्भृत्यैरसत्कृता अवज्ञाता इति यत्तदात्मकृतं स्वकृतमेव मन्ये इत्यन्वयः॥ ४॥

## हिन्दी अनुवाद

### जय-विजयका वैकुण्ठसे पतन

श्रीब्रह्माजीने कहा—देवगण! जब योगनिष्ठ सनकादि मुनियोंने इस प्रकार स्तुति की, तब वैकुण्ठनिवास श्रीहरिने उनकी प्रशंसा करते हुए यह कहा॥ १॥ ❀ ❀ श्रीभगवान्ने कहा—मुनिगण! ये जय-विजय मेरे पार्षद हैं। इन्होंने मेरी कुछ भी परवा न करके आपका बहुत बड़ा अपराध किया है॥ २॥ ❀ ❀ आपलोग भी मेरे अनुगत भक्त हैं; अतः इस प्रकार मेरी ही अवज्ञा करने के कारण आपने इन्हें जो दण्ड दिया है, वह मुझे भी अभिमत है॥ ३॥ ❀ ❀ ब्राह्मण मेरे परम आराध्य हैं; मेरे अनुचरोंके द्वारा आपलोगोंका जो तिरस्कार हुआ है, उसे मैं अपना ही किया हुआ मानता हूँ। इसलिये मैं आपलोगों से प्रसन्नता की भिक्षा माँगता हूँ॥ ४॥

यन्नामानि च गृह्णाति लोको भृत्ये कृतागसि। सोऽसाधुवादस्तत्कीर्तिं हन्ति त्वचमिवामयः॥ ५॥

यस्यामृतामलयशःश्रवणावगाहः सद्यः पुनाति जगदा श्वपचाद्विकुण्ठः।
सोऽहं भवद्भ्य उपलब्धसुतीर्थकीर्तिश्छिन्द्यां स्वबाहुमपि वः प्रतिकूलवृत्तिम्॥ ६॥
यत्सेवया चरणपद्मपवित्ररेणुं सद्यःक्षताखिलमलं प्रतिलब्धशीलम्।
न श्रीर्विरक्तमपि मां विजहाति यस्याः प्रेक्षालवार्थ इतरे नियमान् वहन्ति॥ ७॥
नाहं तथाद्मि यजमानहविर्विताने श्च्योतद्घृतप्लुतमदन् हुतभुङ्मुखेन।
यद् ब्राह्मणस्य मुखतश्चरतोऽनुघासं तुष्टस्य मय्यवहितैर्निजकर्मपाकैः॥ ८॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

किं च। ममैवैताभ्यामनिष्टं कृतमित्याह। यस्य स्वामिनो नामानि तस्य कीर्तिम्। आमयोऽत्र श्वेतकुष्ठम्॥ ५॥ ❀ ❀ यस्य मेऽमृतरूपेऽमले यशसि श्रवणेनावगाहः प्रवेशः। श्वपचमभिव्याप्य जगत्सद्यस्तत्क्षणमेव पुनाति सोऽहं विकुंठो भवद्भ्यो हेतुभूतेभ्य उपलब्धा प्राप्ता सुशोभना तीर्थभूता कीर्तिर्येन सः स्वबाहुस्थानीयं लोकेश्वरमपि हन्यां काऽन्यस्य कथेत्यर्थः। स्वगुणानुवर्णनं तु ब्राह्मणोत्कर्षार्थमेव॥ ६॥ ❀ ❀ चरणपद्मयोः स्थितः पवित्रो रेणुर्यस्य अत एव क्षतो निरस्तोऽखिलस्य लोकस्य मलो येन। यद्वा। चरणपद्मालग्नः पवित्रो रेणुर्यस्मिन्निति क्षतोऽखिलो मलो यस्येति च विग्रहः। प्रतिलब्धं प्राप्तं शीलं येन येषां सेवया एते गुणा ममात एव श्रीर्मां न विजहाति प्रेक्षालवार्थेऽवलोकनलेशार्थम्। इतरे ब्रह्मादयः तेषां वः प्रतिकूलवृत्तिं छिंद्यामिति पूर्वेणैव संबंधः॥ ७॥ ❀ ❀ किं च ब्राह्मणो ममैव श्रेष्ठं मुखमतो युष्मदवज्ञया मन्मुखतिरस्कार एव कृत इत्याह। नाहमिति। विताने यज्ञे यजमानस्य हविश्चरुपुरोडाशादि हुतभुगग्निस्ते मुखेनादन्नश्नन्नपि तथा। नाद्मि नाश्नामि यद्यथा श्च्योतता क्षरता घृतेन प्लुतं विलोडितं पायसादि प्रतिग्रासं रसास्वादपूर्वकं चरतो भुंजानस्य ज्ञानिनो ब्राह्मणस्य मुखतो श्नामि। मयि समर्पितैः कर्मफलैस्तुष्टस्य निष्कामस्येत्यर्थः॥ ८॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

ननु परमेश्वरस्य तव कथमपराधस्तथात्वेऽपि तव को दंडयितेति किं संकुचसीति चेत्तत्राह—मास्तु दंडयिता दुष्कीर्तिस्तु स्यादेवेत्याह-किञ्चेति। एताभ्यां जयविजयाभ्याम्। अमुकस्य भृत्योऽयं कुकर्मकृदिति स्वामिन एव दुष्कीर्त्तिरिति यस्य त्वक्

तस्यैवायं पुमान्कुष्ठीति निंदामुत्पादयतीति ॥ ५ ॥ ❀ ❀ नन्वस्मदपराधात्तव दुष्कीर्त्तिरस्मत्प्रसादनाच्च तव कीर्तिरिति चित्रं यतोऽस्मादृशा जीवास्त्वत्सृष्टास्त्वद्धीधिका एव त्वत्त इति चेदत्र कः संशय इत्याह-यस्येति । भवद्भ्यो विप्रेभ्यः "इंद्रादयो बाहव आहुरुस्राः" इत्युक्तेराह लोकेश्वरमिति । इत्यर्थ इति यद्यहन्तास्पदं स्वांगमपि छिंद्यां तर्हि ममतास्पदयोर्जयविजयोस्तु का वार्तेति तदसमर्थो युष्मासु सापराध एवाहमिति भावः । ननु 'यस्यामल' इत्याद्युक्तेः स्वोत्कर्षप्रतीतेः स्वगुणाविष्क्रियादोष इति दंडयुक्तेर्भगवता तत्कथं कृतमिति चेदाह-स्वगणेति । एतेन स्वोत्कर्षार्थं स्वगुणवर्णनस्यैव दोषत्वं न त्वन्योत्कर्षार्थमित्युक्तम् ॥ ६ ॥ ❀ ❀ नन्वस्मद्वैकुंठागमनस्येदमेव फलं वृत्तं यद्भवानस्मदभीष्टदैवतमस्मान्प्रत्येवं ब्रूत इति चेत्तत्राह नैतद्विपरीतमिति यदिति । अत एव चरणपद्मस्थितपवित्ररेणुत्वादेव नन्वेतेन स्वोत्कर्ष एवोक्तः स च परकीयस्तुत्यवसरे नोचित इति चेदाह यद्वेति । अत एव युष्मच्चरणरजःसंबंधादेव शीलं सुचरितम् । किञ्च यद्भवद्भिर्मह्यं नमस्कारादि क्रियते तदपि भवदिच्छातिक्रमभयादेव न निवार्य्यत इति ॥ ७ ॥ ❀ ❀ एवमहं ब्राह्मणानेव सेवे मद्दृष्ट्या च ये ब्राह्मणान्सेवंते त एव मत्सेवका नान्ये इत्याह-किं चेति । यतो यूयं मम मुखमतो हेतोः ब्राह्मणावज्ञानं मम मुखे चपेटाप्रदानमिव तिरस्कारहेतुरित्यर्थः । आदिना सांनाय्यादिग्रहः । तेन मुखेन "ब्राह्मणोऽग्निश्च वै विष्णोः सर्वदेवात्मनो मुखम्" इत्यष्टमे कश्यपोक्तेरग्निरूपेण मुखेनेत्यर्थः । इत्यर्थ इति । मन्निष्ठ-ब्राह्मण एव मत्तृप्तिकरत्वादर्चनीय इति भावः ॥ ८ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

भृत्यकृतं स्वामिनि प्रतिफलतीति न्यायान्ममैवेति स अपराधलक्षणः अत्र युष्मदपकृतिप्रकरणे ॥ ५ ॥ ❀ ❀ एवं स्वीयत्वेन तौ भर्त्सयित्वा ब्रह्मण्यत्वाद्ब्राह्मणत्वेन तान् स्तौति । यस्येति । विकुण्ठ उपाध्यनावृतः, तीर्थभूता परमपावनी कीर्त्तिः ब्रह्मण्यताख्यातिः । अत्र यद्यपि लोकेश्वराभ्यामतिनिकृष्टा एवेति प्राकरणिकं कैमुत्यं न सङ्गच्छते, तथापि स्वरूपात्मकस्य तद्द्रा-होऽच्छेदनासम्भवात् अश्लीलताच्छादनायैव स्वबाहुस्थानीयमिति व्याख्यातम् ॥ ६ ॥ ❀ ❀ रेणोः पावित्र्यं यद्यपि नित्यं सदैव तथापि ब्रह्मण्यत्वगुणेन तत्प्राकट्यातिशय इत्यभिप्रायेण तथा प्रशंसनम् । अत एव पवित्ररेणुत्वादेव पूर्वार्थे प्रतिपत्तिगौरवं स्वप्रशंसा साक्षात्कृता विप्रप्रशंसा तु परम्परयेत्यरुचौ यद्वेति चरणपद्मादर्थाद्ब्राह्मणानाम् इति हेतोः मलश्चात्र 'निरपेक्षं मुनिं शान्त-मि'त्यादेः पूयेयेत्यङ्घ्रिरेणुभिरित्यत्र भक्तिनिष्कृत्यभाव एवाभिप्रेतः । स ऋणित्वरूपो मलस्तादृशब्राह्मणसेवया क्षतो नष्टो यस्य स तथाशीलं चात्र भक्तवात्सल्यादिसुखानुभवः । एते कीर्तिपावित्र्यादितीर्थत्वशीलादयः । अत एव तादृशगुणवत्त्वादेव ॥ ७ ॥ ❀ ❀ ज्ञानिनः भगवद्ज्ञानवतः न तु शुष्कज्ञानिनस्तस्य समदृष्ट्या रसास्वाद पूर्वकभोजनासम्भवात् ॥ ८ ॥

### श्रीमद्वीरराघवव्याख्या

भृत्यकृतमगः स्वामिन्येव पर्यवस्यतीत्याह । यदिति । भृत्ये कृतागसि कृतापराधे सति यन्नामानि यस्य स्वामिनो नामानि च जनः गृह्णाति । अनेन स्वामिना भृत्यद्वारा एवमेवमसाधुकृतमतोऽयं दुरात्मेत्यादि विनिन्दकनामापि लोको वदति सः असाधुवादः तत्कीर्त्तिं तस्य स्वामिनः कीर्तिं हन्ति नाशयति त्वचमामय इवामयोऽत्र श्वेतकुष्ठादिरोगः स यथा त्वच्युत्पन्नः तद्गतं सौन्दर्यं हन्ति तथेत्यर्थः । भृत्यकृतापराधनिमित्तोऽसाधुवादः स्वामिनि पर्यवसन्नस्तत्कीर्त्तिमेव नाशयतीति भावः ॥ ५ ॥ ❀ ❀ तस्मादाश्रित-सौलभ्यादिकल्याणगुण इति यशःसम्पन्नोऽहं निरतिशयप्रियाणां भवतां विरोधी चेत्स्वाङ्गमपि लुनामीत्याह । यस्येति । यस्य ममामलामृतयशःश्रवणावगाहः अमलं पवित्रममृततुल्यं यद्यशः तस्य श्रवणावगाहः श्रोत्रप्रवेशः आश्वपचं श्वपाकपर्यंतं जगत्सद्यः पुनाति पवित्रयति सोऽहं विकुण्ठः श्रोत्रप्रवेशमात्रेण सद्यो जगत्पावनकरयशःसम्पन्नः विकुण्ठः प्रतिहतिरहितः भवद्भिर्निमित्त-भूतैर्भवद्भ्य इति पञ्चम्यन्तपाठोऽपि तदा भवद्भ्यो हेतुभ्यः उपलब्धसुतीर्थकीर्तिः आश्रितदुर्लभ इत्यधिक्षिप्तकीर्तिरहं वः युष्माकं प्रतिकूला वृत्तिर्यस्य तं स्वबाहुमपि छिन्द्यां वः प्रतिकूलवृत्तिश्चेत्स्वबाहुमपि लुनीये इत्यर्थः ॥ ६ ॥ ❀ ❀ एवं स्वस्य भक्तेषु निरतिशयप्रीतिं तद्विरोधिनिरसनं चाभिप्रेतमाविष्कृत्य "प्रशस्तिः सा राज्ञो यदपि च पुरीकोशकथनम्" इति न्यायेन स्वप्रशंसार्थं स्वभक्तान्ब्राह्मणान्प्रशंसति । यत्सेवयेत्यादिपञ्चभिः । ननु कथमात्मप्रशंसा निन्दिता भगवता क्रियते इति न शङ्कनीयमविद्यमान-गुणारोपणेनात्मप्रशंसाया निन्दितत्वादियं तु प्रशंसा "स्वाभाविकी ज्ञानबलक्रिया च" इति श्रुत्युक्तविधया स्वाभाविकगुणानु-कथनरूपेति न दोषः । यत्सेवया येषां ब्राह्मणानां सेवया चरणपद्मयोः स्थितः पवित्रो रेणुर्यस्य तं स्वपादरेणूनां पवित्रत्वं ब्राह्मणसेवया लब्धमिति भावः, अत एव सद्यः क्षतो निरस्तः अखिलस्य लोकस्य मलो येन तं प्रतिलब्धं प्राप्तं शीलं येन तम् । एते गुणा ब्राह्मण-सेवयैव स्वेन लब्धा इति भावः । एवंविधं विरक्तमनादृतमपि मां श्रीर्लक्ष्मीर्न जहाति तदत्यागोऽपि ब्राह्मणसेवयैवेति हृदयं कीदृशी चासौ लक्ष्मीर्या मां न जहाति इत्युच्यते तत्राह । यस्या लक्ष्म्याः प्रेक्षालवार्थं कटाक्षलेशप्रसारणायेतरे ब्रह्मादयः नियमान्व्रतानि वहन्ति कुर्वन्ति । ब्रह्मादिभिरुपास्यासौ लक्ष्मीरनादृतवन्तमपि मां ब्राह्मणसेवाप्रभावेणैव न विजहातीत्यर्थः ॥ ७ ॥ ❀ ❀ किञ्च । विताने यज्ञे श्च्योतद्घृतप्लुतं श्च्योतता क्षरता घृतेन प्लुतं विलोडितं यजमानहविः यजमानसम्बन्धि हविः

तेन देवतोद्देशेन त्यक्तं चरु पुरोडाशादिरूपं हविरित्यर्थः । हुतभुङ्मुखेनाग्निमुखेनादन्नश्नन्नप्यहं तथा नाश्नि नाद्नामि यद्यथा मय्यवसितैरर्पितैर्निजकर्मपाकैः स्ववर्णाश्रमोचितकर्मफलैस्तुष्टस्य निजकर्मफलानि मयि समर्प्य स्वत एव तुष्टस्येत्यर्थः । अनुग्रासं प्रतिकवलं चरतो भुञ्जानस्य ब्राह्मणस्य मुखतः मुखेनाश्नि । 'अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च' इत्युक्तरीत्या सर्वयज्ञफलप्रदः तद्देवाग्निस्तद्वायुरिति श्रुत्युक्त रीत्याग्न्याद्यन्तर्यामित्वेन यागीयं हविर्भुञ्जानो भगवान् यथा ब्राह्मणमुखेन भुञ्जानस्तुष्यति तथा न तुष्यतीत्यर्थः । यजमानहविर्विर्तानैरित्यपि पाठः । तदा निजकर्मपाकैः स्वपुण्यफलरूपैः मय्यवसितैरर्पितैर्यजमानहविर्वितानैः यजमानसम्बन्धिहविर्विस्तारैर्हुतभुङ्मुखेन तथा नाश्नि यथा श्च्योतद्घृतप्लुतमनुग्रासं चरतः स्वत एव तुष्टस्य ब्राह्मणस्य मुखेनाश्नीत्यन्वयः । फलाभिसन्धिरहितयज्ञैर्भगवदाराधकनिष्कामभगवद्भक्तब्राह्मणमुखेन भगवदाराधनस्य भगवत्सन्तोषातिशयाधायकत्वमत्रोक्तं भवति ॥ ८ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली ।

एतदेवोपपादयति । यन्नामानीति । ततः का हानिरित्यत आह । स इति । आमयः कुष्ठलक्षणः, आम रोग इत्यस्माद्धातोः स्वार्थे यच् प्रत्ययः, रोगमङ्गभङ्गं यापयतीति अस्मिन्नर्थे णिच् वा ॥ ५ ॥ ❀ ❀ लोके पूज्यत्वाय हरिर्ब्राह्मणेषु परमप्रियत्वं प्रतिपादयति । यस्येत्यादिना । यस्य ममामलामृतत्वप्रदयशःश्रवणादिलक्षणोऽवगाहः स्नानरूपप्रवेशः सद्यस्तत्क्षणादेवाश्वपचं जगत्पुनाति भवद्भ्य उपलब्धा विस्तृता सुतीर्था सुपावनी कीर्तिर्यस्य स तथा सोऽहं विकुण्ठः वो युष्माकं प्रतिकूलवृत्तिं स्वबाहुमपि छिन्द्यामित्यन्वयः । सर्वोत्तमोऽपि भगवान् विप्रादेः पूजनाय च "गुणलब्धिं ततो ब्रूते नित्यपूर्णगुणोऽपि सन् । ब्रूयुश्चान्ये क्वचित्तत्तु तदुक्तेरनुसारतः । उपादत्ते वरांश्चापि लोकानां मोहनाय च" इति वचनेन कथं पूर्णगुणस्य स्वतस्तृप्तस्य हरेरन्यतो गुणलब्धिरिति चोद्यं निरस्तम् ॥ ६ ॥ ❀ ❀ विप्राणां चरणपद्मपवित्ररेणोः सेवया सेवाविडम्बनेन प्रतिलब्धशीलं विडम्बिततत्स्वभावमिदं केवलं विडम्बनार्थं मोहनार्थमुच्यत इति भावेनात्मानं विशिनष्टि । सद्य इति । नामसङ्कीर्तनादिना सद्यस्तत्क्षणादेव क्षतं नष्टमखिलं जनस्य मलमघं येन स तथा तं "मलं क्लिष्टाघयोर्न स्त्री" इति यादवः । स्वरतत्वेन विरक्तं तदपेक्षया रहितमिव स्थितमपि मां श्रीर्न जहातीति यद्यस्मात् स्वबाहुमपि छिन्द्यामिति पूर्वेणान्वयः । "अनुक्ताश्च गुणा विष्णोरुक्ता दोषा न तस्य तु । अज्ञानादोपविज्ञानं गुणज्ञानं यथार्थत" इति श्रुत्या विप्रचरणसेवया हरेर्नष्टमलत्वं किं न स्यादिति चोद्यं निरस्तं, संदिग्धवचनं तु मोहार्थत्वादिति ज्ञायते "विप्राणां चापि भक्तानामन्येषां च जनार्दनः । ब्रह्मणः शङ्कराद्वापि देवताभ्यस्तथैव च । आत्मनश्च श्रियश्चैव सकाशात्प्रियतामपि । पूज्यतामत्ययुक्तं च वदेत्क्वापि विमोहयन्" इत्यनेन परिहर्तव्यम् । स्त्रीत्वाविशेषात् मां न जहातीति किं माहात्म्यं विशिष्योच्यत इति तत्राह । यस्या इति । मदितरेषां ब्रह्मादीनां नियमस्तपोलक्षणो यस्याः श्रियः प्रेक्षालवार्थं कटाक्षनिरीक्षणलेशार्थमर्हत इत्यन्वयः । यद्वा मदितरेषां नियमो यस्याः प्रेक्षालवार्थमर्हते सा श्रीर्मम चरणपद्मपवित्ररेणोः सेवया प्रतिलब्धशीलं निरन्तरं मदुपासनास्वभावमिति क्रियाविशेषणं मां न जहातीति यत्तस्मादेवंविधमाहात्म्योऽहं युष्मद्विरोधकरं स्वबाहुमपि छिन्द्यामिति । विप्रेभ्यः किमपि प्रयोजनमपेक्षमाणं किन्नेत्याह । सद्य इति । सद्य इत्यनेनेतरसेवकेभ्यः स्वसेवकानां कालक्षेपमन्तरेण फलप्राप्तिं ध्वनयति । श्रियो मत्तः प्रयोजनसद्भावेऽपि मम तस्यानर्थ इत्याह । विरक्तमिति । वौ विशिष्टे मयि रक्तं स्वरतमित्यर्थः । स्वरतस्यान्यतः प्रयोजनापेक्षां धिक् करोति अपीति ॥ ७ ॥ ❀ ❀ वदान्यान् पुरुषान् शिक्षमाण इव पुनरपि विप्रान् स्तौतीत्याह । नाहमिति । अहं वितानैरुत्तमकल्पैर्यज्ञैः करणैश्चोतद्गलद्घृतं तेनाज्येन प्लुतं स्यन्दमानं यजमानस्य हविर्हुतभुङ्मुखेनादन् तथा तृप्तिं न यामि अहं यथा मय्यवहितैरर्पितैर्निजकर्मपाकैः फलैस्तुष्टस्य चरतो भुञ्जानस्य ब्राह्मणस्य सद्भक्तिलक्षणस्य विप्रस्यानुघासम्प्रतिकवलं मुखेनाश्नि अदनेन प्रीतो भवामीति यत्तस्मान्मेऽतिप्रियत्वाद्विप्राः पूज्या इति भावः ॥ ८ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

कथमस्मत्तो भवतस्तादृशत्वं तत्राह । यत्सेवयेति । अयमर्थः 'विप्राणां देवदेवानां भगवानात्मदैवतमिति' वक्ष्यमाणानुसारेण येषां ब्राह्मणानां स्वभावत एव मल्लक्षणब्रह्मभावनापराणां भवतां सेवया सम्बन्धेनैव भवच्चरणपद्मे स्थितपवित्ररेणुप्रकटिततादृशशक्तिर्जातः । तथा क्षतोऽखिलो मल आत्मारामत्वाद्भजत्स्वप्यौदासीन्यादिरूपो येन तादृशो जातः । ततश्च प्रतिलब्धं शीलं भक्तवात्सल्यादिसुखभावो येन तथाभूतश्च जातो योऽहं तं मां विरक्तमपि लब्ध्वा श्रीर्ब्रह्माण्डपरार्द्धाधिष्ठात्री न जहाति न त्यजत्येवेत्यर्थः । ततश्च तस्या महिमापि महानेव जातस्तत्सेवया अन्येषामपीत्याह । यस्या इति । इतरे लोकपालाद्याः । तस्मात् साध्वेवोक्तं सोऽहं भवद्भ्य इत्यादीति भावः । तत्र भवद्भिर्यन्नमस्कारादिकमपि क्रियते तदपि भवदिच्छातिक्रमभयादेव न निवार्य्यत इति ॥ ७ ॥ ❀ ❀ अतो ममान्तःसन्तोषोऽपि ब्राह्मणसन्तोषेणैव स्यादित्याह । नाहमिति । मय्यवहितैरतिस्नेहेन मय्येव समर्पितैः ॥ ८ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी ।

ननु परमेश्वरस्य तव कथमपराधः अपराधित्वेऽपि को दण्डयितेति किं सङ्कुचसीति तत्र मास्तु दण्डयिता दुष्कीर्त्तिस्तु स्यादेव इत्याह । यस्य स्वामिनो नामानि अमुकस्य भृत्योऽयं कुकर्म्मकृदिति तस्य स्वामिन एव कीर्त्तिं हन्ति । आमयः श्वित्रं त्वचं हन्ति अथ च यस्य त्वक् तस्यैव कुष्ठी पुमानयमिति निन्दामुत्पादयतीत्यर्थः ॥ ५ ॥ ❀ ❀ नन्वस्मदपराधात्तव दुष्कीर्तिरस्मत्प्रसादनाच्च तव कीर्तिरिति त्वत्सृज्या अस्मद्विधजीवा एव त्वत्तः परमेश्वरादपि तर्ह्यधिका अभूमेति चेत् तत्र कः सन्देह इत्याह । यस्येति । सोऽहं विकुण्ठः भगवद्भ्यो हेतुभूतेभ्य उपलब्धा प्राप्ता सुतीर्थरूपा कीर्त्तिर्येन सः । स्वबाहुमपीति ममतास्पदयोर्जयविजययोः का वार्त्ताऽहन्तास्पदं स्वाङ्गमपि छिन्द्यां तदसमर्थो युष्मासु सापराध एवास्मीति भावः ॥ ६ ॥ ❀ ❀ नन्वस्माकं वैकुण्ठागमनस्येदमेव फलं वृत्तं यद्भवानस्मदभीष्टदैवतमप्यस्मान् प्रत्येवं ब्रूते इति तत्र किं विपरीतं ब्रूथेत्याह । यत्सेवया मम चरणे पद्मे अभूतां तत्रत्या रेणवोऽपि जगत् पवित्रयन्ति । अखिला अपि कामादयो मलाः मत्तो हेतोरप्यन्येषामपि क्षताः । सौशील्यानि लब्धानि लक्ष्मीरपारसम्पदपि मां न जहाति यस्या लक्ष्म्या अवलोकलेशार्थमपि इतरे ब्रह्माद्या अपि नियमांस्तपआदीन् भजन्तीत्येतत् सर्वं येषामेव सेवया तेषां वः प्रतिकूलवृत्तिं स्वबाहुमपि छिन्द्यामिति पूर्व्वेणैवान्वयः ॥ ७ ॥ ❀ ❀ एवमहं ब्राह्मणानेव सेवे मद्दृष्ट्या च ये ब्राह्मणान् सेवमाना भवेयुस्त एव मत्सेवकाः, यतो ब्राह्मणमुखेनैवाहं भुञ्जे इत्याह । नाहमिति । यजमानस्य हविश्चरुपुरोडाशादि हुतभुगग्निस्तेन मुखेन अदन्नपि नाद्मि तथा यथा ब्राह्मणस्य मुखतो मुखेनानुघासं प्रतिग्रासमेव श्च्योतद्भिर्घृतैः प्लुतं व्याप्तमित्यत्राप्यनुवर्त्तनीयं चरतो भुञ्जानस्य मयि समर्पितैः कर्मफलैस्तुष्टस्येत्यनेन तथा विप्राणां देवदेवानां भगवानात्मदैवतमित्यग्रिमवाक्येन ब्राह्मणस्य भक्तिराहित्ये सत्यपूज्यत्वमभिव्यज्य "स्वपाकमिव नेक्षेत लोको विप्रमवैष्णवम्" इत्यादिवचनविरोधः परिहृतः । अवैष्णवं वैष्णवद्वेषिणमिति तत्रार्थो द्रष्टव्यः । एवञ्च भक्तिमिश्रस्वधर्मवानेव ब्राह्मणो भवति यथा वसिष्ठादिः । भक्ते कैवल्ये प्राधान्ये सति जात्या ब्राह्मणोऽपि वैष्णव एवोच्यते । यथा श्रीनारदादिरिति विवेचनीयम् ॥ ८ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

यद्यस्य स्वामिनः तत्तस्य स्वामिन एव ॥ ५ ॥ ❀ ❀ यस्य मम अमृतं मुक्तिप्रदं यदमलं शुद्धं यशःश्रवणाभ्यामवगाहः ग्रहणं यस्य, तत् आश्वपचाज्जगत्पुनाति सोऽहं भगवद्भ्यो हेतुभूतेभ्यो लब्धा सुतीर्थभूता कीर्तिर्येन स तथाभूतोऽहं वः प्रतिकूलवृत्तिं स्वबाहुमपि छिन्द्याम् ॥ ६ ॥ ❀ ❀ यत् येषां सेवया चरणपद्मयोः स्थितः पवित्रो रेणुर्यस्मात् क्षतोऽखिलस्य लोकस्य मलो येन तम् । तेषां वः प्रतिकूलवृत्तिं छिन्द्यामिति पूर्वेणैव सम्बन्धः ॥ ७ ॥ ❀ ❀ यजमानस्य हविः चरुपुरोडाशादि श्च्योतता क्षरता घृतेन प्लुतं मिश्रितम् । विताने यज्ञे । नाद्मि नाश्नामि यथा निजकर्मणां पाकैः फलैः । मयि । अवहितैः अर्पितैः तुष्टस्य चरतो भुञ्जानस्य मुखतोऽनुघासं प्रतिग्रासम् अश्नामि ॥ ८ ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

प्रसादश्चाऽत्र सर्वथा कर्तव्यः, अन्यथा महदनिष्टं स्यादित्याह—यन्नामानीति । महतामपि लोकापवादाद्भयं भवति । अत एव भृत्ये कृतागसि लोको यस्य स्वामिनो नाम गृह्णाति । नामानीति बहुवचनं तस्य स[1]र्वसंबन्धेनाऽधिक्षेपार्थं सर्वाण्येव नामानि गृह्णाति; चकारात्तस्य गुणान् कर्माणि च निन्दार्थमुद्घाटयति । किमतो यद्येवमत आह—सोऽसाधुवाद इति । स लोकैरुच्चर्यमाणोऽसाधुवादः । असाधुत्वेन कीर्त्तनमपकीर्तिरिति यावत् । तत्कीर्तिं हन्ति, यद्विषयकः स्वयम् । ननु विद्यमानां कीर्तिं प्रसिद्धां कथं हन्यादित्याशङ्क्य दृष्टान्तेन समर्थयति—हन्ति त्वचमिति । आमयो रोगः श्वित्रादिः, यथा शरीरे विद्यमान एव तस्य त्वचं हन्ति, स्वस्य रूपमेव प्रकटयति ॥ ५ ॥ ❀ ❀ नन्वीश्वरस्य सर्वनियन्तुर्दासानुदासस्य तुच्छस्याऽन्तःप्रवेशाभावे को वा अपराधः ? लोको हिं तु, महाराजगृहे क्षुद्राणां प्रवेशो नाऽस्तीति, कथमपकीर्तिं वदेदित्याशङ्क्याऽऽह—यस्येति । उपजीव्यत्वाद्ब्राह्मणातिक्रमे ममाऽपकीर्तिं वदेदेव । उपजीव्यत्वं च मम कीर्तिस्तदधीनेति । तदेवाह—यस्य ममामृतममलं यद्यशः, तस्य श्रवणावगाहः, आ श्वपचात् श्वपचं मर्यादीकृत्य, जगदेव सर्वं पुनाति । एवं जगत्पवित्रकीर्तित्वादहं विकुण्ठः कुण्ठरहितः । कस्मिन्नप्यंशे दोषरहित इत्यर्थः । एतादृशोऽप्यहं पुरुषोत्तमो भवद्भ्य एवोपलब्धा सुतीर्थरूपा कीर्तिर्यस्य तादृशः यशः पराक्रमजन्यम्, कीर्तिः सदाचारजन्या । मम यशो जगति पावित्र्यमपि संपादयति, मन्नाम्ना दुष्टरूपपापनिग्रहात् । पराक्रमो हि दोषनिवारणरूपः । स चेद्दोषः सहजोऽपि भवेत्सोऽपि मद्भयान्नश्येत्, अतश्चण्डालदेहे उत्पादकोऽपि दोषो नश्यति । अतो वैकुण्ठस्थानं यशःव्युत्त्वेन विराजमानं मम सामर्थ्यसूचकं वर्तते । तथापि कीर्तिः, साधवश्चेत् कीर्त्तयेयुः, तदैव भवति । तेन कीर्त्या ये मम सेवकाः सदाचाराः, ते मत्परायणा भवन्ति; निरन्तरं कीर्तनेन कृतार्थाश्च भवन्ति । अतस्तीर्थभूतकीर्तिसंपादकत्वेनोपजीव्या ब्राह्मणाः । अतस्तेषु योऽपराधं करोति,

---

१. सर्वसंबन्धिनः क. ग. ङ. ।

मद्बाहुरूप इन्द्रोऽपि, तमपि छिन्द्याम्। अत एव बृहस्पत्यतिक्रमे इन्द्रस्य महती पीडा संवृत्ता राज्यभ्रंशादिरूपा। अतो युक्तमेव प्रसादनमित्यर्थः। कीर्तिर्लक्ष्मीस्तथा भोगत्रयं विप्रप्रसादतः। भृगोः कन्या यतो लक्ष्मीर्मुखं चाऽपि द्विजा मम तत्र कीर्तिं निरूप्य ब्राह्मणाधीनां लक्ष्मीं निरूपयति—यत्सेवयेति। स्त्रियः स्वभावतो दुष्टाश्चञ्चलाश्चाऽपि नित्यशः। आचारजनिता कीर्तिर्ब्राह्मणाश्च नियामकाः ॥ १ ॥ ईश्वरस्य तु याः पत्न्यस्ता विरक्ते न हि स्थिराः। भृगोराज्ञां ततः प्राप्य स्थिरा लक्ष्मीस्ततो मयि ॥ २ ॥ स्वोत्कर्षं वर्णयति ब्राह्मणोत्कर्षार्थम्। येषां ब्राह्मणानां सेवया चरणपद्मे पवित्रो रेणुर्यस्य। सेवाजनितः संस्कारश्चरणे तिष्ठतीति चरणसंबन्धी यः कश्चन रेणुः, स गङ्गावत्पवित्ररूपो भवति। रेणुरिति पाठे एतावद्भिन्नं वाक्यम्। द्वितीयान्तपाठे तु पूर्वार्द्धविशेषणान्युद्देश्यानि ब्राह्मणसेवासाध्यानि। विरक्तिरपि तत एव, विरक्तिविरोधी नियतो लक्ष्मीस्थितिलक्षणो धर्मोऽपि तत एव। लक्ष्म्या माहात्म्यं ब्राह्मणमाहात्म्यार्थम्। सद्यः क्षतमखिलानां मलं येन। प्रतिलब्धं शीलं येन। यस्या लक्ष्म्याः प्रेक्षालवार्थे इतरे ब्रह्मादयो नियमान् कृच्छ्रादीन्, भगवद्व्रतानि वा, वहन्ति। लक्ष्मीकटाक्षकामनया तपः कुर्वन्तीत्यर्थः। पापनाशकत्वमपि ब्राह्मणसेवया, तद्वाक्यादेव नियमात्, सारस्वतकल्पे सर्वस्य ब्राह्मणाधीनत्वाच्च। वस्तुतस्त्वपहतपाप्मा भगवान्, अत एव लोकानामपि तत्संबन्धात् पापनाशः, लक्ष्म्या अपि दोषनिवृत्तिः। प्रभूणां भोगाभिनिर्विष्टानां सदाचारपरिपालनलक्षणः सुस्वभावो महापुरुषागमनेन महापुरुषसेवया संपद्यते, रागनिवृत्तिरपि तदनुरोधादेव वस्तुतस्तु धर्मो भगवत्येव प्रतिष्ठित इति निर्दुष्टत्वाच्च रागानाचाराभावः ॥ ७ ॥ ❀ ❀ ब्राह्मणाधीनं स्वस्य भोगमाह—नाऽहं तथाद्मीति। स्वभावतोऽहं स्वमुखेनाऽनश्नन्नेव तिष्ठामि, 'अनश्नन्नन्यो अभिचाकशीति' इति श्रुतेः। गौणं च मम मुखद्वयम्, अग्निर्ब्राह्मणश्च कार्यरूपम्। तत्राऽग्न्यपेक्षयाऽपि ब्राह्मणो मम मुखं समीचीनम्। तदाह—नाऽहं तथा हुतभुङ्मुखेनाऽद्मि। तर्हि यज्ञानां वैफल्यं स्यादित्याशङ्क्याऽऽह—अदन्नपि तथा नाऽद्मीति। अदनमपि वह्नेः सर्वभक्षकत्वात् काष्ठादिभक्षकत्वाच्च तस्य मुखत्वेऽनिष्टं भविष्यतीति न निषिध्यते, किन्तु निषेधेऽन्य एव हेतुरिति वक्तुमाह—यजमानहविर्विताने श्च्योतद्घृतप्लुतमिति। यजमानपदेन सत्रनिषेधः, क्रूरत्वात्, बहुकर्तृकत्वाच्च, 'किमेते सत्रिणः' इति श्रुतेः; गणान्नत्वाच्च। हविर्यज्ञाः पश्वादिव्यतिरिक्ताः, अतो हविःशब्देन पश्वादिकं निषिध्यते। विताने विस्तारयज्ञे। श्च्योतद्घृतप्लुतमिति। उभयतश्च्योतता घृतेन प्लुतं हविर्हुतभुङ्मुखेनाऽदन्। अग्नौ प्रथमत आज्यश्च्योतनम्, पश्चाद्धविषः प्रक्षेपः, पुनःश्च्योतनमिति। तथापि हुतं भक्षयतीति, मन्त्रहोत्राद्यपेक्षित्वान्महता शब्देन हुतत्वाच्च तथा न भक्षणम्। ब्राह्मणमुखे तु नाऽयं दोषः। ब्राह्मणस्य विशेषणमनुग्रासं चरत इति। प्रतिकवलं भक्षयतः। तत्र पुरोनुवाक्यायै, याज्यायै, देवतायै, वषट्कारायेत्येकस्यामाहुत्यां चतुर्णां भागाः। अत्रैक एव प्रतिकवलं भक्षयति, स हि मुखत एव भक्षयति, मुखस्याऽपि मुखमिति विशिष्टम्। यथाग्नेर्विशेष उक्तः, तथा ब्राह्मणमपि विशिनष्टि—तुष्टस्येति। मयि तुष्टस्य, विषयव्यतिरेकेणाऽपि केवलं मय्येव प्राप्ते तुष्टस्य। अवहितैरहितैरपि निजकर्मपाकैस्तुष्टस्येति, कर्मवशात् प्राप्तेऽपि दुःखेऽनुद्विग्नस्य, भगवति वा समर्पितैः। कर्मसमर्पणं कृत्वा तुष्टस्येत्यर्थः ॥ ८ ॥

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

यन्नामानीत्यत्र। तत्कीर्तिमित्यादि। यद्विषयकोऽपराधस्तद्विषयिणीं कीर्तिम्। यत्सेवयेत्यत्र। भगवान्स्वयं स्वोत्कर्षं यद्वदति, तल्लोकदृष्ट्याऽनुचितमिवेत्याशङ्क्य तत्तात्पर्यमाहुः—स्वेत्यादि। तथा चाऽतो न दोष इत्यर्थः ॥ ७ ॥ ❀ ❀ नाहमित्यत्र। तस्येति। सर्वभक्षस्य लौकिकाग्नेः। कर्मसमर्पणमिति। तैत्तिरीयषष्ठाष्टके 'वाशिष्ठो ह सात्यहव्यः' इत्युपाख्यानोक्तं यज्ञेय (?) प्रतिष्ठापनरूपं कर्मसमर्पणम्। 'कर्मशुद्धिर्मदर्पणम्' इत्युक्तं वा ॥ ८ ॥

### श्रीगिरिधरकृता बालप्रबोधिनी।

अन्यकृतापराधस्य कथमन्यकृतत्वमित्याशङ्क्य लोके तथाव्यवहारस्य प्रसिद्धत्वादित्याह—यन्नामानीति। भृत्ये कृतागसि कृतापराधवति सति लोको जनो यस्य स्वामिनो नामानि गृह्णाति अनेनैव स्वामिना भृत्यद्वारा एवमसाधु कर्म कृतमतोऽयं दुरात्मेति निन्दति सोऽसाधुवादो निन्दावचनं तस्य स्वामिनः कीर्तिं पूर्वसिद्धमपि यशो हन्ति। तत्र दृष्टान्तमाह—त्वचमिति, आमयोऽत्र श्वेतकुष्ठादिरोगः स यथा त्वग्गतं सौन्दर्यादि हन्ति तथेत्यर्थः ॥ ५ ॥ ❀ ❀ एवं भृत्यकृतस्यापराधस्य स्वकृतत्वं समर्थ्य तद्दण्डाभावे स्वकीर्तिहानिं च सूचयित्वा तद्दण्डस्योचितत्वं सूचयन् यदुक्तं 'ब्रह्म दैवं परं हि मे' इति तदप्युपपादयति—यस्येति पञ्चभिः। यस्य अमृतवदाह्लादकं स्वादु अमलं सर्वदोषविवर्जितं यद्यशस्तस्य यः श्रवणेऽवगाहः प्रवेशः स आश्वपचात् श्वपचं चाण्डालमभिव्याप्य सर्वमपि जगत्सद्य एव पुनाति सोऽहं विकुण्ठः सर्वत्र प्रतिहतिरहितो भवद्भ्यो ब्राह्मणेभ्यः एव उपलब्धा प्राप्ता सुशोभना तीर्थभूता पूर्वोक्ता कीर्तिर्येन स वः युष्माकं प्रतिकूला वृत्तिर्यस्य तथाभूतं चेत्स्वबाहुमपि च्छिन्द्याम्, भृत्यादीनां तु का वार्तेत्यर्थः ॥ ६ ॥ ❀ ❀ चरणपद्मालग्नः पवित्रो रेणुर्यस्मिंस्तं अतएव सद्यः क्षतो निरस्तोऽखिलो मलो दोषो यस्य तं प्रतिलब्धं प्राप्तं शीलं सुस्वभावो येन तं येषां ब्राह्मणानां सेवया एवं गुणवन्तं ततो विरक्तमपि मां श्रीः चञ्चलत्वेन प्रसिद्धा लक्ष्मीर्न विजहाति न परित्यजति तेषां वः प्रतिकूलवृत्तिं स्वबाहुमपि च्छिन्द्यामिति पूर्वेणैवान्वयः। एवं लक्ष्म्याः त्यागेऽपि को वाऽतिशय इत्याशङ्क्य तन्माहात्म्यमाह—यस्याः लक्ष्म्याः प्रेक्षालवार्थमवलोकलेशार्थं इतरे ब्रह्मादयो नियमान् वहन्ति,

तपोव्रतादीनि कुर्वन्तीत्यर्थः ॥ ७ ॥ ❀ ❀ किञ्च मम तु मुखद्वयमग्निर्ब्राह्मणश्च तत्राप्यग्न्यपेक्षया ब्राह्मणरूपं मुखं श्रेष्ठमतो युष्मदवज्ञया मन्मुखस्यैव तिरस्कारो जात इत्याशयेनाह—नाहमिति। विताने यज्ञे उच्योतता क्षरता घृतेन प्लुतं विलोडितं पायसादि अनुघासं प्रतिग्रासं रसास्वादपूर्वकं चरतो भुञ्जानस्य ब्राह्मणस्य मुखतोऽश्नामीत्यन्वयः। इतरव्यावृत्त्यर्थं स्वमुखरूपं ब्राह्मणं विशिनष्टि। मयि अवहितैः समर्पितैर्निजकर्मणां पाकैः फलैस्तुष्टस्य सर्वकामनारहितस्य मदाराधनपरस्येत्यर्थः ॥ ८ ॥

## हिन्दी अनुवाद

सेवकोंके अपराध करनेपर संसार उनके स्वामीका ही नाम लेता है। वह अपयश उनकी कीर्तिको इस प्रकार दूषित कर देता है, जैसे त्वचाको चर्मरोग ॥ ५ ॥ ❀ ❀ मेरी निर्मल सुयश-सुधामें गोता लगानेसे चाण्डालपर्यन्त सारा जगत् तुरंत पवित्र हो जाता है, इसीलिये मैं 'विकुण्ठ' कहलाता हूँ। किन्तु यह पवित्र कीर्ति मुझे आपलोगोंसे ही प्राप्त हुई है। इसलिये जो कोई आपके विरुद्ध आचरण करेगा, वह मेरी भुजा ही क्यों न हो—मैं उसे तुरंत काट डालूँगा ॥ ६ ॥ ❀ ❀ आपलोगोंकी सेवा करनेसे ही मेरी चरण-रजको ऐसी पवित्रता प्राप्त हुई है कि वह सारे पापोंको तत्काल नष्ट कर देती है, और मुझे ऐसा सुन्दर स्वभाव मिला है कि मेरे उदासीन रहनेपर भी लक्ष्मीजी मुझे एक क्षणके लिये भी नहीं छोड़तीं—यद्यपि इन्हींके लेशमात्र कृपा-कटाक्षके लिये अन्य ब्रह्मादि देवता नाना प्रकारके नियमों एवं व्रतोंका पालन करते हैं ॥ ७ ॥ ❀ ❀ जो अपने सम्पूर्ण कर्मफल मुझे अर्पणकर सदा सन्तुष्ट रहते हैं, वे निष्काम ब्राह्मण ग्रास-ग्रासपर तृप्त होते हुए घीसे तर तरह-तरहके पकवानोंका जब भोजन करते हैं, तब उनके मुखसे मैं जैसा तृप्त हूँ वैसा यज्ञमें अग्निरूप मुखसे यजमानकी दी हुई आहुतियोंको ग्रहण करके नहीं होता ॥ ८ ॥

येषां बिभर्म्यहमखण्डविकुण्ठयोगमायाविभूतिरमलाङ्घ्रिरजः[1] किरीटैः।
विप्रांस्तु को न विषहेत यदर्हणाम्भः सद्यः पुनाति सहचन्द्रललामलोकान् ॥ ९ ॥
ये मे तनूर्द्विजवरान्दुहतीर्मदीया भूतान्यलब्धशरणानि च भेदबुद्ध्या।
द्रक्ष्यन्त्यघक्षतदृशो ह्यहिमन्यवस्तान् गृध्रा रुषा मम कुषन्त्यधिदण्डनेतुः ॥ १० ॥
ये ब्राह्मणान्मयि धिया क्षिपतोऽर्चयन्तस्तुष्यद्धृदः स्मितसुधोक्षितपद्मवक्त्राः।
वाण्यानुरागकलयाऽऽत्मजवद् गृणन्तः सम्बोधयन्त्यहमिवाहमुपाहृतस्तैः ॥ ११ ॥
तन्मे स्वभर्तुरवसायमलक्षमाणौ युष्मद्व्यतिक्रमगतिं प्रतिपद्य सद्यः।
भूयो ममान्तिकमितां तदनुग्रहो मे यत्कल्पतामचिरतो भृतयोर्विवासः ॥ १२ ॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

किं च येषाममलमंघ्रिरजोऽहं किरीटैर्बिभर्मि तान्विप्रानपकुर्वतोऽपि कोऽन्यो न विषहेत। कथंभूतोऽहम्। अखंडाऽनवच्छिन्ना विकुंठाऽप्रतिहता च योगमाया विलासभूता विभूतिर्यस्य सः तथा यस्य ममार्हणांभः पादोदकं चंद्रललामेनेश्वरेण सहिताँल्लोकान्सद्यः पुनाति एवं परमेश्वरः परमपावनोऽपि सन्नहं त्रिभर्मीति ॥ ९ ॥ ❀ ❀ किं च मे तनूरधिष्ठानानि कास्ताः द्विजवरान्दुहतीर्दोग्ध्रीः गा इत्यर्थः। दुहितॄरिति पाठेऽपि गा एव विष्णुरूपात्सूर्यादुत्पन्नत्वात्। "सूर्यसुताश्च गावः" इति वचनात्। अलब्धशरणानि रक्षकहीनानि भेदबुद्ध्या मदधिष्ठानं न भवंतीति पृथग्दृष्ट्या ये द्रक्ष्यंति अघेन क्षता नष्टा दृष्टिर्येषां तान्। मदीयोऽधिकृतो दंडनेता यो यमस्तस्य गृध्राकारा ये दूताः अहिवन्मन्युर्येषाम्। रुषा क्रोधेन कुषंति चंचुभिश्छिंदंति ॥ १० ॥ ❀ ❀ एवंभूतास्तु मां वशीकुर्वंतीत्याह। ये क्षिपतः परुषं भाषमाणानपि ब्राह्मणान्संबोधयंति मयि या धीस्तया वासुदेवदृष्ट्याऽर्चयंतः संतः तुष्यद्धृदः प्रीयमाणचित्ताः स्मितमेव सुधा तयोक्षितं सिक्तं पद्मतुल्यं वक्त्रं येषामनुरागकलया प्रेमशोभया वाचा गृणंतः स्तुवंतः यथा कुपितमात्मजं स्निग्धः पिता सत्पुत्रो वा पितरम्। अहमिव भृगुं युष्मान्वा तैरहमुपाहृतो वशीकृतः ॥ ११ ॥ ❀ ❀ तत्तस्मान्मेऽवसायमभिप्रायमलक्षमाणावजानंतौ युष्मदपराधोचितां गतिं सद्यः प्राप्य मत्समीप इतां प्राप्नुताम्। तदिति स मेऽनुग्रहः। तमेवाह। यत् भृतयोर्विवासोऽचिरतः शीघ्रं कल्पतां संपद्यतां समाप्यतामिति ॥ १२ ॥

---

१. प्राचीने पाठे। रजः शब्दादारभ्यैकादश्लोकस्य 'क्षिप. शब्दावधिकोंऽशो मूले लेखकप्रमादान्नोधृतः। टिप्पण्यां तु वर्तते।

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

ब्राह्मणातिक्रमोपि सोढव्य एव न तु प्रतिकर्तव्य इत्याह । किं चेति । अन्यो मदन्यः को नेति अपि तु सर्व एव तत्र कारणजिज्ञासायां तर्जन्या स्वकिरीटं दर्शयन्नाह-किरीटैरिति । बहुत्वं सर्वावतार‌रूपग्रहणार्थम् । यद्वारणप्रसादाद् अकुंठयोगमाया-संपत्तिरहमभूवं तथा यस्य ममार्हणांभो ब्रह्मणा वामनावतारे स्वलोकगतस्य मच्चरणस्य यत्क्षालनं कृतं तज्जलं श्रीगंगारूपम् । एतेन यो विप्ररजो मूर्ध्नि धत्ते तस्यैव चरणामृतं ग्राह्यं नान्यस्येति ध्वनितम् । किं च किरीटैरिति सर्वेश्वरस्य मम शिरस उपर्युष्णी-षवस्त्रं तदुपरि किरीटं तदुपरि विप्रांघ्रिरज इत्यत्युत्कर्ष उक्तो रजसः ॥ ९ ॥ ❀ ❀ ब्राह्मणकृतातिक्रममसहिष्णूनां का वार्त्ता ब्राह्मणेषु मद्भेदबुद्धिमंत एव नारकिन इत्याह-किं चेति । अधिष्ठानानि पूजास्थानानि । इत्यर्थ इति । विशेषतः पयोदात्रीरिति भावः । विष्णुरूपात् "अस्तमानः स्वयं विष्णुः" आदित्यं ये प्रपश्यंति मां पश्यन्ति न संशयः' इति भविष्येऽर्जुनं प्रति श्रीकृष्णोक्तेः । इति वचनादिति । पराशरस्मृतेः । यद्वा ओ वासुदेवस्तस्मात्स एव लब्धः शरणं रक्षणं यैस्तान्यलब्धशरणानि भगवद्भक्तानित्यर्थः ॥ १० ॥ ❀ ❀ एवंभूता वक्ष्यमाणलक्षणाः संबोधयंति भो दयासिंधवः हे स्वामिन् इत्यादिकोमलामंत्रणेन प्रीणयंति ॥ ११ ॥ ❀ ❀ अभिप्रायं ब्राह्मणानुरागलक्षणम् । अजानतौ दैवादपश्यन्तौ ननु ब्राह्मणातिक्रमिणो मद्द्वेषिण एवेति स्वयं श्रीमुखेन ब्रूषे तत्कथं तयोः पुनरेवं श्लिष्यसीति सवैवश्यमाह म इति । यद्यस्मात्तत्र जयविजययोर्ममानुग्रह एव न तु निग्रह इति । न हि स्वाभाविको धर्मस्त्यक्तुं शक्यत इति भावः । भृतयोर्भृत्ययोर्विवासः विशिष्टो मया सह वासः ॥ १२ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपनी व्याख्या

अनवच्छिन्ना देशपरिच्छेदशून्या अप्रतिहता कालपरिच्छेदशून्या योगमायायाश्चिच्छक्तेः विलासभूता वृत्तिरूपा विभूति-र्वैकुण्ठादित्रिपाद्विभूतिर्यस्य सः ॥ ९ ॥ ❀ ❀ रक्षकहीनानि मदेकशरणत्वात् "नैते यदोपससृपुर्निखिलात्मकत्वात्तत्राखिला-मरमयो हरिराविरासीत्" इत्यादिवद्रक्षकान्तरापेक्षारहितानि अघेन मदधिष्ठानद्रोहरूपेण पापेन ॥ १० ॥ ❀ ❀ एवंभूताः वर्ण्यमानविप्रभक्तिविशिष्टा उक्षितं सिक्तम् ॥ ११ ॥ ❀ ❀ प्राप्नुतामागच्छतां दुःखरूपस्य विवासस्य सम्पत्तिर्हि तत्समाप्ति-रूपा अतएव समाप्यतामिति व्याख्यातम् ॥ १२ ॥

### श्रीमद्वीरराघवव्याख्या

किञ्च येषां ब्राह्मणानाममलं पवित्रं यदङ्घ्रिरजः पादरजस्तदहं किरीटैर्बिभर्मि तान् विप्रान्को न विषहेत तिरस्कुर्वतोऽपि ब्राह्मणान्को न क्षाम्येत कथंभूतोऽहमखण्डानन्ता विकुण्ठाप्रतिहतिरहिता योगमाया विभूतिः स्वापृथक्सिद्धत्वेन युज्यमानाश्चर्य-शक्तिर्विभूतिकार्यात्मिका विभवा यस्य सः । यस्य ममार्हणाम्भः तीर्थोदकरूपा गङ्गा सह चन्द्रललामलोकान् चन्द्रो ललाम चिह्नं यस्य स महादेवस्तत्सहितांल्लोकान् पुनाति । तथा च वक्ष्यते

यच्छौचनिःसृतसरित्प्रवरोदकेन तीर्थेन मूर्ध्न्यधिकृतेन शिवः शिवोऽभूत्

इत्येवम् । परमपावनोऽप्यहन्तत्पादरजो बिभर्मीति भावः ॥ ९ ॥ ❀ ❀ एवं ब्राह्मणान्प्रस्तुत्य अथ तानेव स्तुवन् तेषु कृतापराधिनो मन्निग्रहविषयाः कृतोपचारास्तु मदनुग्रहविषया इत्याह द्वाभ्याम् ये म इति । मे तनूः शरीरभूतान् द्विजवरान् मदीयः मच्छरीरभूताः दुहतीः गाश्च प्रशंसाप्रसङ्गाद् दुहत्याद्युक्तिः अलब्धशरणानि रक्षकहीनानि भूतानि मच्छरीराणि भूतान्तराणि च ये पुरुषा अघं पापं तेन क्षताः अनुविद्धाः दृशो नेत्राणि येषां तेऽत एवाहिमन्यवः अहेः सर्पस्येव मन्युः क्रोधो येषां तथाभूताः सन्तो बुद्ध्या मदात्मत्वविरुद्धबुद्ध्या द्रक्ष्यन्ति तान्मम मन्नियाम्यस्य दण्डनेतुः यमस्याधीना गृध्रा अयोमुखाः गृध्राः कुषन्ति तेषां नेत्राणि तुदन्तीत्यर्थः ॥ १० ॥ ❀ ❀ ये पुनः क्षिपतः तिरस्कुर्वतोऽपि ब्राह्मणानपि धिया मदात्मकबुद्ध्याऽर्चयन्तः पूजयन्तः तुष्यद्धृदः सन्तुष्टचित्ताः स्मितं हासः तदेव सुधा तयोक्षितं सिक्तं पद्ममिव मुखं येषां ते अनुरागकलयाऽनुरागेण कलया कलितया युक्तया वाचा गिरा आत्मजवत्पुत्रवत्पुत्रमिव भणन्तो भाषन्तः सम्बोधयन्ति तैरहमिव उपाकृतः उपकारितः ते मदनुग्रहविषया इति भावः ॥ ११ ॥ ❀ ❀ एवं ब्राह्मणान्प्रशस्याथ मुनिविहितं दण्डं स्वयमप्यनुमनुते । तन्म इति । तस्मात्स्वभर्तुः स्वयोरात्म-नोर्भर्तुर्ममावसायमुक्तविधं निश्चयमलक्षमाणावजानन्तौ युष्मासु यो व्यतिक्रमोऽपराधः तस्य गतिं फलं प्रतिपद्य सद्य आशु भूयः पुनः ममान्तिकं समीपमितां प्राप्नुतां यद्यस्मद्धृतो दण्ड एव भवतानुमतश्चेत्तव का भृत्यानुग्रहकारितेत्यत्राह । भृतयोर्भृत्ययोरचिरत आशु विवासः युष्मद्व्यतिक्रमगतिसमाप्तिः कल्पतां कल्पत इति यत्तदेव मेऽनुग्रहः महदतिक्रमफलमवाप्य पुनराशु मत्समीपागमनमेव मदनुग्रह इत्यर्थः ॥ १२ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

इदानीं स्पष्टमसुरजनमोहकवचनमिदमिति प्रकटयन् विप्रान् स्तौतीत्याह । येषामिति । अखण्डा पूर्णा विकुण्ठा विगतभेदा च योगमाया स्वरूपेच्छा तया विभूतिर्विविधभवनम् आदित्यानामहं विष्णुरित्यादिस्वरूपं यस्य स तथोक्तः अहं किरीटैर्येषां विप्राणा-

ममलाङ्घ्रिरजो बिभर्मि कोऽपि पुमान् तान् विप्रान् न विषहेत सोढा न भवेदित्यन्वयः । एकस्मिन्नवतारेऽपि विप्रज्ञानं नास्तीति द्योतनाय किरीटैरिति बहुवचनं केवलं विप्रबहुमानार्थं तदङ्घ्रिरजोभरणमित्याशयेनात्मानं विशिनष्टि यदर्हणेति । यदर्हणाभो यस्य मम ब्रह्मणा कृतपादप्रक्षालनोदकं गङ्गाख्यमम्भः चन्द्रललामेन चन्द्रशेखरेण सह वर्तमानान् लोकान् जनान् पुनाति ॥ ९ ॥ ❀ ❀ इदमपि महिमान्तरकथनं विप्रद्वेषोऽपि मद्द्वेष एवाधःपातहेतुत्वादित्याह ये म इति । ये पुरुषा मे तनूः प्रतिमास्थानीयान् मदीयान् मद्भक्तान् द्विजवरान् तथा "शरणं ग्रहरक्षित्रोः" इत्यभिधानादलब्धशरणानि रक्षकरहितानि भूतानि भेदबुद्ध्या वैलक्षण्यबुद्ध्या दुदुहुः पीडयाञ्चक्रुः, ये चाघेन क्षतदृशोऽन्धीकृतदृष्टयोऽभितो मन्युर्येषां ते द्रक्ष्यन्ति तान् ममाधिनेतुर्दण्डनायकस्य यमस्य गृध्राः श्येनाः कुषन्ति नेत्राण्युत्पाट्य भक्षयन्तीत्यन्वयः ॥ १० ॥ ❀ ❀ इदानीं मद्भक्तब्राह्मणसत्कारपरिपाकं वच्मीत्याह । ये ब्राह्मणानिति । तुष्यद्धृदः हृष्यन्मनसः स्मिताख्यसुधया उक्षितमासिक्तं पद्मवक्त्रं येषां ते तथा अनुरागकलया स्नेहवृद्ध्या कल बंधन इति धातोः वाण्या आत्मजवत् गृणन्तः प्रशंसन्तः अहमिव यथाहं विप्रान्संबोधयामि तथा संबोधयन्ति ये मद्भक्ता रुषा क्षिपतो भर्त्सयतः ब्राह्मणानर्चयन्ति कथं मयि धिया हरिरेषु विशेषतः सन्निहित इति बुद्ध्याहं तैर्विप्रार्चकैरुपाकृतो वशीकृत इत्यन्वयः ॥ ११ ॥ ❀ ❀ नन्वेवमुभयेषां युष्माकं शापोऽभिमतश्चेत्कदापि शापमोक्षो नेत्यतस्तन्मोक्षमाह । तन्मे स्वभर्तुरिति । विप्राणां ममात्यन्तं प्रियत्वात्तद्विरोधिनो मद्विरोधिन एवेति यस्मात्तथापि युष्मद्व्यतिक्रमगतिं युष्मदपराधफलमसुरत्वादिलक्षणं प्रतिपद्य सद्यो भूयो ममान्तिकमितामागच्छतामित्यन्वयः । भगवतोक्तमिदं तात्कालिकं ननु तत्त्वमित्यत्राह । मे स्वभर्तुर्मे अवसायं विप्रानुरागलक्षणं निश्चयमलक्षमाणौ विप्रार्चनादिलक्षणैरप्यजानन्तौ अज्ञानं च ब्रह्मशापनिमित्तं तयोरिति ध्वनयति नहि वैकुण्ठे अज्ञानादिसंभवोऽस्ति । ननु ममान्तिकमितामित्यनेन शापमोक्षलक्षणः कोऽनुग्रहविशेषो ध्वनितः स्यादिति तत्राह तदनुग्रह इति । हृतयोर्युष्मच्छापेन सुरेतरगतिं गमितयोरेतयोर्विवासः वैकुण्ठादसुरादिव्यवस्थापनं कालतो बहुना कालेनाप्यविरमोऽवसानरहितमिति यत्तस्मात् स मेऽनुग्रहः पुनर्मम लोकप्राप्तिलक्षणः शापमोक्ष इत्यर्थः । मदनुग्रहाभावे बलवता ब्राह्मणशापेन कदाप्यसुरयोनिमोक्षो न स्यादिति भावः । हिशब्देन सनकादीनामपि शापमोक्षानुमतिरस्तीति द्योतयति, यतः स्वामिनोऽभिमतं भृत्यैरप्यनुमन्तव्यम् ॥ १२ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

यस्मादेवं तस्मात् येषामिति ॥ ९ ॥ ❀ ❀ ततो मदनुशरणा विप्रादिषु तथा बुद्धिमेव कुर्वीरन् न चेद्दण्डं प्राप्स्यन्तीत्याह । ये मे इति तनूस्तन्निर्विशेषणत्वान्ममाहङ्कारास्पदानि । मदीया ममतास्पदानि । अलब्धशरणाः कृपास्पदानि । भेदबुद्ध्या तत्तदितरत्वबुद्ध्या ॥ १० ॥ ❀ ❀ पुनः प्राकृतानां ब्राह्मणानां भक्तिं विशिष्याह । य इति । मयि स्थिता या धीर्ब्राह्मणभक्तिलक्षणा तया तदनुसारिण्येवेत्यर्थः ॥ ११ ॥ ❀ ❀ भगवत्कृपया तावदेव तौ ममान्तिकमिताम् आगच्छतां किन्तु एतयोर्भृत्ययोर्विवासः शीघ्रं कल्पयतां भवत्विति यत् तन्मे मह्यं भवतामनुग्रहरूपमेव दण्डं विना तु मम सुखं न स्यादिति भावः ॥ १२ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी ।

किञ्च । ब्राह्मणकृतातिक्रमोऽपि सोढव्य एव न तु प्रतिकर्त्तव्य इत्याह । येषामिति विप्रानपाकुर्वतोऽपि को न सहेत अपि तु सर्व एव । तत्र कारणजिज्ञासायां स्वकिरीटं तर्जन्या दर्शयन्नाह येषामङ्घ्रिरजः किरीटैरहं बिभर्मि यद्धारणप्रसादात् अकुण्ठयोगमायासम्पत्तिरहमभूवं तथा यस्य मम अर्हणाम्भश्चरणोदकं चन्द्रललामेन महादेवेन सहितान् लोकान् सद्यः पुनाति तेन यो मच्चरणरजो मूर्ध्नि धत्ते तस्यैव चरणामृतं ग्राह्यं नान्यस्येति ज्ञेयम् ॥ ९ ॥ ❀ ❀ ब्राह्मणकृतातिक्रमसहिष्णूनां का वार्त्ता ब्राह्मणेषु मद्बुद्धिभेददर्शिन एव नारकिण इत्याह । ये जना मे तनूर्मम देहरूपान् दुहतीर्दोग्ध्रीर्गा इत्यर्थः । दुहितॄरिति पाठे गा एव विष्णुरूपात् सुर्यादुत्पन्नत्वात् "सुर्येसुताश्च गाव" इति वचनात् । अलब्धशरणानि अनाथानि भेदबुद्ध्या मत्तनवो न भवन्तीति पृथग्दृष्ट्या ये द्रक्ष्यन्ति तान् मदीयोऽधिकृतो दण्डनेता यो यमस्तस्य गृध्राकारा दूता अहिमन्यवः रुषा कुषन्ति नेत्रादिषु चञ्चुभिश्छिन्दन्ति ॥ १० ॥ ❀ ❀ ये तु कृतातिक्रमानपि ब्राह्मणान् प्रति कुर्वन्ति प्रत्युताधिकं प्रसादयन्ति तेषामहमेव वश इत्याह । ये मयि या धीस्तया भगवद्दृष्ट्या ब्राह्मणान् क्षिपतः परुषं भाषमाणानपि अर्चयन्तः कटूक्तिभिरपि तुष्यद्धृदः । अनुरागकलया प्रेमवैदग्धीमय्या वाण्या आत्मजवत् कुपिते पितरं सत्पुत्रा इव गृणन्तः परुषमिदं न भाषध्वे किन्तु परमहितं कृपामृतमेव वर्षथेति स्तुवन्तः सम्बोधयन्ति हे स्वामिनः हे कृपासिन्धवः इत्यादिकोमलामन्त्रणेन प्रीणयन्ति अहमिव युष्मान् भृगुं वा तैरहमुपाकृतो वशीकृतः ॥ ११ ॥ ❀ ❀ तत्तस्मादेवं स्वभर्त्तुर्मम अवसायमभिप्रायमलक्षमाणौ दैवादपश्यन्तौ इतां युष्मदपराधोचितां गतिं सद्यः प्राप्य मत्समीपं इतां पुनः प्राप्नुतामितीयं मे प्रार्थनेति भावः । ननु प्रभो ! ब्राह्मणातिक्रमिणो मदपराधिन एवेति श्रीमुखेन स्वयमेव ब्रूषे तत् कथं पुनरपि तयोरेवं स्निह्यसीति तत्र सवैवश्यमाह । तदनुग्रहो मे इति । हि यस्मात्तत्र जयविजययोर्ममानुग्रह एव न तु निग्रह इति नहि स्वाभाविको धर्मस्त्यक्तुं शक्यत इति भावः । तस्मात् भृतयोर्भृत्ययोर्विवासः विशिष्टो मया सह वासः अचिरादेव कल्पतां समर्थो भवतु ॥ १२ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

अखण्डा संपूर्णा विकुण्ठा प्रतिहतिरहिता च योगमायाख्यशक्तिर्विभूतिर्यस्य सः यस्यार्हणाम्भः चरणक्षालनोदकं चन्द्रललामेन शिवेन सहितान् लोकान् सद्यः पुनाति सोऽहं येषाममलमङ्घ्रिरजः किरीटैर्बिभर्मि तान् प्रतिकूलानपि को न विषहेत किन्तु सर्वोऽपि पुरुषार्थकामो विषहेतैव ॥ ९ ॥ ❀ ❀ दुहतीर्गाः अलब्धशरणानि निराश्रयाणि अघक्षतदृशः पापोपमर्दितदृष्टीन् कुषन्ति चक्षुरादौ चञ्चुभिश्छिन्दन्ति ॥ १० ॥ ❀ ❀ भृगुमहमिव अनुरागेण कला मधुरा तया गृणन्तः स्तुवन्तः मयि धिया मद्दृष्ट्या आत्मजाः पितॄन् यथा तद्वत् ये क्षिपतः परुषं भाषमाणानपि अर्चयन्ति तैः अहमुपाकृतः वशीकृतोऽपि ॥ ११ ॥ ❀ ❀ तस्मात् पूर्वोक्तं विप्रभक्तिविषयमवसायन्निश्चयम् अलक्षमाणौ अजानन्तौ युष्मद्व्यतिक्रमस्य गतिं गम्यते प्राप्यते इति गतिः फलं तां सद्यः प्राप्य भूयः मत्समीपमिताम् प्राप्नुताम् तदिति स मेऽनुग्रहः मां प्रति भवत्कृतोऽनुग्रहः अनुग्रहमेवाह। यत् भृतयोः विवासः अचिरत आशु कल्पतां सम्पाद्यतां समाप्यतामिति ॥ १२ ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

एवं स्वोपकारेण ब्राह्मणान् स्तुत्वा स्वरूपतोऽपि ते महान्त इत्याह—येषामिति। महत्त्वं हि महतामनुवृत्त्या। महत्त्वं हि द्विविधम्, लौकिकमलौकिकं च। लौकिकमुत्तरोत्तरभावापन्नं भगवति विश्रान्तम्। सर्वलोकप्रसिद्धो हि भगवान् पुरुषोत्तमः, वेदप्रसिद्धोऽपि। तेन ज्ञापनं ब्राह्मणाधीनमित्यलौकिकज्ञानं तेषां वर्तत इति ते भगवज्ज्ञापका इति। 'ये यथा मां प्रपद्यन्ते' इति न्यायेन तदनुवृत्तिमपि भगवान् करोति। तेषामवयवत्वात् तदुत्कर्षो न स्वापकर्षं करोति। अधिकारोऽपि स्वेनैव दत्त इति, स्वधर्म एव तत्र विद्यत इति, स्वोत्कर्ष एव। यथा च ते अलौकिकप्रकारेण भगवन्तमुत्कृष्टमाहुः, तथा भगवानपि लोके तेषामुत्कर्षमाह—येषाममलाङ्घ्रिरजः किरीटैरहं बिभर्मि। अग्रे ब्राह्मणवृन्दं गच्छत्[1] रज उत्थापयति, तद्रजः किरीटेषु संबद्धं भवति। पावित्र्यं नामैकं भगवत्स्वरूपं सर्वपदार्थेषु सहजं तिष्ठति, संस्कारैराधीयते च। तत्र ब्राह्मणेषु पावित्र्यं पादयोः सहजम्, अतस्तेषां चरणरजोऽमलं भवति। किरीटैरिति सर्वदा धारणं सूचितम्। अवतारभेदैर्मूलरूपेण वा तथा करोतीति वा। अखण्डा विकुण्ठा योगमाया विभूतिश्च यस्य। माययोत्पत्तिस्थितिप्रलयाः, विभूत्या सर्वसौख्यम्। एवं सति न कस्याऽप्यपेक्षा, सर्वैरपेक्षित एव भवति। न च तयोर्नित्यशक्त्योर्विच्छेदो वा कार्याक्षमता वा संभवति। येषामिति। नाऽन्यद्विप्रत्वात्तेषां गुणान्तरमपेक्ष्यत इति ज्ञापितम्। विप्रपदेन योगोऽपि सूचितः। विशेषेण पूर्णं च तेषां सहजो धर्मः। ज्ञानभक्तिव्यतिरेकेण चिदानन्दौ न पूरितौ भवत इति ज्ञानभक्तिमन्त एव योगेन विप्रा इति निरूपितम्। एतदुभयसद्भावे नाऽन्यदपेक्षितमिति। संस्कारस्त्वानुषङ्गिकः। अनेनैवोपकारेण भगवता तथा क्रियते। तुशब्देन योगरहिता व्यावर्त्यन्ते। एतादृशान् ब्राह्मणान् को न विशेषेण सहेत ? को वा तद्वारं नाऽङ्गीकुर्यात् ? भारस्त्वतिक्रमादिरूप एव भवति, अतस्त्वन्यलभ्यत्वाद्विप्रापराध इति नोक्तम्। येषामतिक्रमो मया सह्यते, तत्र कथमन्यो न सहत इत्यर्थः। ननु मायाविभूत्योर्विद्यमानत्वेऽपि पावित्र्यस्याऽभावाद्भगवान् विप्रापराधं सहतु नाम, कथमन्येन सोढव्य इत्याशङ्क्याऽऽह—यदर्हणाम्भ इति। यस्य ममाऽर्हणाम्भश्चरणोदकं गङ्गा, सह चन्द्रललामलोकान् महादेवसहितांस्त्रीनपि लोकान् पुनाति। धर्मः कृतः कर्तारमेव पुनाति, संबद्धं वा; न तु मह(?)त्कालपर्यन्तम्। परम्परासंबद्धान्, दूरस्थान्, बहून्, सर्वतामसभेदसहितान् यत् पुनाति तदर्हणसंबन्धेनैवेति ज्ञापयति—अर्हणाम्भ इति। सद्य इति, 'सद्यः पुनाति गाङ्गेयम्' इति वाक्यात्। भगवतः कालनियामकत्वान्न तत्संबन्धिनां कालापेक्षा। चन्द्रललामेति सर्वदाहकत्वेन तामसी शक्तिः स्वीकृतेति तत्ताप्व्यावृत्त्यर्थममृतमयश्चन्द्रः स्थापितः। क्रियाजनितो दोषस्तु न तेन निवर्त्तत इति गङ्गा स्थापिता, अन्यथा तावान् दोषो नाऽन्येन निवर्तत इति सूचयति ॥ ९ ॥ ❀ ❀ एवं ब्राह्मणातिक्रमः सोढव्य इत्युक्त्वा, ये न सहन्ते तेषां विपक्षे बाध[2]कमाह—ये मे तनूरिति। ये द्विजवरादीन् भेदबुद्ध्या द्रक्ष्यन्ति, तान् यमलोके गृध्राः कुषन्तीति संबन्धः। 'मृत्योः स मृत्युमाप्नोति' इति श्रुत्या क्वचिदपि भेददर्शने संसारो भवतीत्युक्तम्। एतादृशेषु भेददर्शनेन यमयातना भवतीत्यधिकमुच्यते, 'यदा ह्येवैषः' इति श्रुतेः। अत्र भेदो भगवद्भेदः, स्वभेदस्य पूर्वसिद्धत्वात्। ननु विद्यमाने भेदे लोकप्रसिद्धे द्रष्टॄणां को दोष इत्याशङ्क्याऽऽह—मे तनूरिति। यदि योगी सहस्रं शरीराणि गृह्णाति, तथापि स एक एव; जीवस्यैकत्वात्, तथाऽनन्तमूर्तिः। तत्रापि यज्ञरूप आधिभौतिकशरीरद्वयं गृह्णाति, हविर्मन्त्रात्मकत्वाद्यागस्य। तत्र मन्त्रा ब्राह्मणेषु प्रतिष्ठिताः हविर्धेनुषु। ते चेद्ब्राह्मणा गावश्चाऽन्ये भवेयुः, तदा तेभ्य उद्गतेषु मन्त्रत्वं हविष्ट्वं च न स्यात्, भगवद्व्यतिरिक्तास्ते लौकिका एव भवन्तीति। अत एवाऽन्यैरुच्चारिता मन्त्रा एव न भवन्ति, लौकिकवाण्योच्चारितत्वात्। अतस्ते ममैव तन्वः। तान्निर्दिशति—द्विजवान् दुहतीरिति। यज्ञोपयोगित्वान्नाऽत्र विप्रपदम्, द्विजत्वमेवाऽत्रोपयोगि। जन्मोत्कर्षार्थं द्विजपदम्, कर्मोत्कर्षार्थे वरपदं च। दुहतीरिति कर्तरि दुहधातोरतृ[3]प्रत्ययः सहजदोहार्थः, तास्वेव हविष उत्पत्तेः, अग्नि-

---

१. गच्छन् क. ग.। २. दोषम् क.। ३. तिप् ख. घ. ङ. च।

होत्रार्थमेव च वत्सोत्पत्तेः। मदीया इति गवामधिको गुणः। मित्रत्वाद्भगवतोऽपि सर्वसखित्वात्तद्धर्मप्रतिष्ठया तदीयत्वम्। अथवा, मदीया इति भिन्न एव निर्देशः, भक्तिमार्गानुसारेण भगवद्गोगौपथिकहविदोहकर्तृत्वात्। भूतान्यलब्धशरणानीति रक्षकत्वेन ज्ञानमार्गानुसारेण धर्मो निरूपितः। तत्रापि रक्षकत्वं भगवन्निष्ठमिति भेदभाव उचित एव। एवं मार्गत्रयोपयोगिपदार्थान् ये मत्तो भिन्नान् जानन्ति, तेषां विशेषभयम्। ननु भगवत्त्वाज्ञानेऽपि, वस्तुतस्तेषां भगवत्त्वात्तद्दर्शने कथं नरकपातस्तत्राऽऽह—अघक्षतदृश इति। अघेन भेदजनितेन क्षता दृष्टिर्येषाम्। ब्रह्मवध इव भेदोऽप्यधर्महेतुः। अयं वधो ज्ञानमयः, तथापि क्रियामयाद्विशिष्टः, मूलविषयत्वात्। दण्डोऽपि चक्षुष एव। ननु व्यवहारे भेदोऽपेक्षित इति कथं तस्य दोषजनकत्वम्। तत्राऽऽह—अहिमन्यव इति। न व्यवहारमात्रं निषिध्यते, किन्त्वन्तःकरणारूढदोषत्वेन। सर्पैः स्वल्पोऽप्यपराधो न विस्मर्यत इति, वधान्तं च प्रयत्नं कुर्वन्ति, तथा हृदयेन चेद्दर्शनं तदा दण्ड इत्यर्थः। गृध्रमुखे प्रविष्टं चक्षुर्न कदाचिदप्यावृत्तं भवतीत्यनिर्मोक्षः सूचितः। रुषेति चक्षुषो विद्यमानत्वादेवैतैर्भगवदपराधः कृत इति चक्षुषि रोषः। मम रुषा सहिता वा गृध्राः कुपन्तीति। तैर्जन्यते नाश एव, न तूपघातमात्रम्। अधिकं दण्डान् नयतीत्यधिदण्डनेता यमः। अल्पदण्डस्तु राजव्याध्यादिभिरेव क्रियत इति निरूपयति यमम्॥ १०॥ ❀ ❀ एवं विपरीते बाधकमुक्त्वा सन्माननायां प्रसादमाह—ये ब्राह्मणानिति। क्षिपतोऽपि ब्राह्मणान् अर्चयन्ति तैरहमेवोपाहृतः। सर्वपुरुषार्थरूपोऽहं तत्समीपे चेत् स्थितः, सिद्धा एव सर्वे पुरुषार्थाः। तेषु बन्धुत्वेनाऽपकारभयात्, लोकापकीर्तिभयाद्वा, दम्भेन वा यद्यर्चयन्ति, तदा नेदं फलम्। किन्तु मयि धिया भगवद्विषयकबुद्ध्या मत्तनूरिति। अथवा, मयि या बुद्धिरस्ति, ब्राह्मणाः सर्वथा उपास्या इति, तादृशबुद्ध्या। क्षिपतो गालीः प्रयच्छतोऽर्चयन्तीति विरोधप्रदर्शनेन नाऽयमर्थः कचित्सेत्स्यतीति भगवदुपाहृतिर्नाऽतिप्रसक्तेति सूचितम्। तत्रापि तुष्यद्धृदः। ते चेत् क्रोधमन्तरेव स्थापयेयुः, तदा महदनिष्टं स्यादिति तेषां क्रोधस्य बहिर्निर्गमने महान्ममोपकारो जात इति ज्ञानं हृदयतोषे हेतुः। इदमतिमाहात्म्यज्ञाने भवति। किञ्च, स्मितेन सुधारूपेणोक्षितं पद्मसदृशं वक्त्रं येषाम्। माहात्म्यज्ञाने विद्यमानेऽपि स्नेहेनैव दोषसहनम्। मन्दहासस्त्वन्तः क्षोभाद्यजननज्ञापकः। तद्गतस्नेहरसस्तन्निष्पीडनेन प्रकटो भवतीति बालकवत्तेषामाक्रोशः परमसंतोषहेतुर्भवतीति स्मितस्य सुधात्वम्। तस्याऽमृतत्वं स्वकार्यं जनयतीति तदुक्षितवक्त्रत्वमुक्तम्। तथा सति वक्त्रमतिविकसितं भवतीति वर्णस्पर्शयोर्धर्मजनितयोरत्राऽऽविर्भाव इति ज्ञापनार्थं पद्मपदम्। एवमन्तःकरणकायिकसंतोषमुक्त्वा वाचनिकं संतोषमाह—वाण्येति। वाण्या अनुरागाः कला भवन्ति, चन्द्रमस इव वृद्धिहेतवः। एवं कायवाङ्मनःप्रीतिः पुत्र एव भवतीति दृष्टान्तेन तथा कर्तॄणां ब्रह्मभावो निरूपितः। अर्चनं कायिकद्रव्यैः, गृणनं वाचा। संबोधयन्तीति व्यवहारार्थम्, सम्यक् बोधार्थं वा। आक्रोशेऽपि न तेषु वैषम्यं कदाचिदपीति सूचितम्। एतादृशानां दृष्टान्तोऽहमेव। ज्ञा[1]पनार्थमेवमुक्तम्, न तु स्वोत्कर्षार्थम्। यथा भृग्वतिक्रमे मया कृतमित्यर्थः। अहमुपाहृत इति। फलवाक्यं भिन्नम्, अतो न पौनरुक्त्यम्। तेषामुत्कर्षार्थमन्ते कीर्तनम्॥ ११॥ ❀ ❀ एतन्निरूपणस्य प्रकृतोपयोगमाह—तन्मे स्वभर्तुरिति। यत एवं ब्राह्मणानां स्वरूपम्, मया च तथा मन्यते। तदज्ञानात् तौ युष्मद्व्यतिक्रमगतिं प्रतिपद्य भूयो ममाऽन्तिकमिताम्। अयं ममाऽनुग्रहो भक्तिरक्षार्थः। अत्र हेतुर्नाऽस्तीति ममैवाऽयमनुग्रह इत्युक्तम्। अधिकोऽप्यनुग्रहः कर्तव्य इति चेत्तत्राऽऽह—यत्कल्पतामिति। यस्मादनुग्रहात् भृतयोर्भृत्ययोः, भक्त्या पूरितयोर्वा। विवासः परदेशवासः। अचिरतः कल्पताम्, शीघ्रमेव परिसमाप्यताम् जन्ममरणक्लेशाभावाच्छापो विवासत्वेनैवोक्तः। ममाऽन्तिकमिति पुनर्दासभावं प्राप्नुताम्।

जीवानां तु त्रयो भावा उत्कर्षोत्कर्षहेतवः। जीवाः स्वभावतो दासा देहभावोऽधमस्ततः॥ १॥
ब्रह्मभावः स्वतः श्रेष्ठस्तत्स्वभाव इह स्थिताः। देहभावस्तु तच्छापः स्वभावोऽनुग्रहः स्मृतः॥ २॥
सायुज्ये ब्रह्मभावः स्यान्नाऽन्यथेति विनिश्चयः। सायुज्ययोग्यताकाले ब्र[2]ह्मभावो निरूप्यते॥ ३॥
भगवानेव हि ब्रह्म नाऽन्यो भवितुमर्हति। एकं च ब्रह्म सर्वेषां तथात्वे तु विरुद्ध्यते॥ ४॥
भगवत्करणाल्लोके भावना दुर्बला मता। दासभावादतो नाऽन्यत् काम्यं भवति कस्यचित्॥ ५॥
अतो हि भगवान् भर्ता जीवानामिति निश्चयः। अभिप्रायस्तु तस्याऽपि ब्रह्मभावमभीप्सुभिः॥ ६॥
ब्राह्मणातिक्रमो नैव कर्तव्य इति निश्चयः। अतो दण्डस्तु सोढव्यो नो चेदग्रे फलं न तत्॥ ७॥

एवं भगवता शापः स्थिरीकृतः॥ १२॥

## श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः।

येषामित्यत्र। महतामनुवृत्त्या कथं महत्त्वमित्यत उत्पा(पपा)दयन्ति—महत्त्वं हीत्यादि। नन्वनुवृत्तौ कथं न लौकिकमहत्त्वक्षतिरित्यत आहुः—तेषामित्यादि। तथाकरोतीति। नमनेन धरति। संस्कार इति। उपनयनादिरूपः। अनेनेति। चिदानन्दपूर्णरूपेण येषामतिक्रम इति। मत्कृतोऽतिक्रमः। सूचयतीति। गङ्गासम्बन्धेन सूचयति॥ ९॥

---

१. ज्ञानार्थ क। २. स्वभावो विनिरूप्यते। पा.

❀ ❀ ये म इत्यत्र । स्वभेदस्येत्यादि । जीवभेदस्य । 'यथाऽग्नेः' इति, 'बहु स्याम्' इतीच्छया व्युच्चरणेन प्रागेव सिद्धत्वात् । धर्म इति । हंसपरमहंसधर्मः, तादृशामलब्धगृहाश्रमत्वादिति । रक्षकत्वमिति । ज्ञानमार्गरक्षकत्वम् । दण्डोऽपीति । गृध्रकृतकुशन( कोषण )रूपो दण्डः ॥ १० ॥ ❀ ❀ तन्म इत्यत्र । ननु शापदूरीकरणे समर्थस्य भगवतः तच्छापस्थापने पुनः स्वदासत्वस्य तदनुग्रहत्वेन प्रार्थने च किं बीजमित्याकांक्षायां तत्र भगवद्विचारितमाहुः—जीवानामित्यादि । तुर्विशेषावधारणे । जीवानां त्रयो भावा अवस्थाविशेषाः । उत्कर्षोत्कर्षहेतवः । उत्तरोत्तरमुत्कर्षाधायकाः । तत्र जीवाः स्वभावतो दासाः, क्रीडार्थमुत्पादितत्वात् । ततो हेतोस्तेषां देहभावः । अधमो निकर्षावस्था । अतस्तद्रहितो दासभावो जीवानामुत्कर्षहेतुः पूर्वावस्थारूपः । ब्रह्मभावः स्वतः श्रेष्ठ इति । स्वाभाविकाद्दासभावादुत्कृष्टः । इह वैकुण्ठे तत्स्वभावे स्थिताः केवलेन स्वरूपेण दासभूताः स्थिताः । तु पुनः, तच्छापः सनकादिशापो देहभावः । तथा सति तत उत्कृष्टः स्वभावः केवलस्य दासभाव एवेति । स एवाऽनुग्रह इति । स्मृतो भगवता विचारितः । ननु केवलदासत्वस्य देवभावेऽपि सत्त्वेनाऽप्रयोजकत्वाद् ब्रह्मभावसाहित्यमवश्यमपेक्षितम् , अतः स एवोत्कृष्टतरः कुतो न प्रार्थित इत्यत आहुः—सायुज्य इत्यादि । किमत्र गमकमित्यत आहुः—सायुज्ययोग्यताकाल इत्यादि । बाधाभावो योग्यता । तथा चोत्कृष्टतमसायुज्यावस्थापूर्वकाले स निरूप्यते, अतः स तदैव भवति । तच्च न दित्सितमतः स न प्रार्थित इत्यर्थः । ननु सायुज्यदित्साभावेऽपि तेषां ब्रह्मभावावस्थासम्भवे को दोष इत्यत आहुः—भगवानित्यादि । विरुध्यत इति । ऐक्यं व्याकुप्येत । तत्र हेतुः—लोके भगवत्करणात् । वैकुण्ठे भगवत्त्वस्य प्रकटनात् । असङ्गोदासीनतायां ब्रह्मभावो न विरुद्धः, कार्याभावात् । भगवत्तायां तु विरुद्धः, कार्यकरणात् । अत ऐक्यव्याकोप एव दोष इत्यर्थः । तर्ह्यहंग्रहोपासनादौ ब्रह्मभावभावना किमिति विधीयते, तत्राहुः—भावना दुर्बलेति । तत्र हेतुः—मतेति । न हि तदानीं ब्रह्मभावो भवति, किन्तु ब्रह्मभूतं मन्यते । अतः कार्यविरोधभावात् फलस्य स्वा(य)त्तत्वसम्पादनाय विधीयते । तया तावन्मात्रं भवतीति सा दासभावापेक्षया दुर्बला । अतो लोकस्थस्य कस्यापि दासभावादन्यत्काम्यं न भवति । अत एवं विचारणाद्धेतोः, हि निश्चयेन, जीवानां भगवान् भर्ता सर्वनिर्वाहक इति निश्चयः । तथा सति यो यो विचाराभिप्रायः सिद्धस्तमाहुः—अभिप्राय इति सार्धेन । तथा च, शापस्थापने दासत्वस्याऽनुग्रहत्वेन प्रार्थनं इदं बीजमित्यर्थः । तदेतदाहुः—एवमित्यादि ॥ १२ ॥

## श्रीगिरिधरकृता बालप्रबोधिनी

किञ्च अखण्डा व्याप्ता विकुण्ठा अप्रतिहता च योगमायाविभूतिर्विलासशक्तिर्यस्य, यस्य चार्हणाम्भः पादोदकं गङ्गा चन्द्रो ललामं चिह्नं यस्य तेन श्रीमहादेवेन सहितान् सर्वान् लोकान् सद्यः पुनाति, एवम्भूतः परमेश्वरः परमपावनोऽपि सन्नहं येषाममलं पवित्रमङ्घ्रिरजः किरीटैर्बिभर्मि तान् विप्रान् अपकुर्वतोऽपि कोऽन्यो न विषहेत न क्षाम्येतेत्यन्वयः ॥ ९ ॥ ❀ ❀ एवं ब्राह्मणातिक्रमः सोढव्य इत्युक्त्वा ये न सहन्ते तेषां विपक्षे बाधकमाह—य इति । ये मे मम तनूः शरीरभूतान् मत्तो भेदबुद्ध्या द्रक्ष्यन्ति पश्यन्ति तान् मम मदीयोऽधिकृतो दण्डनेता यो यमस्तस्य गृध्राः गृध्राकाराः दूता अहिमन्यवः अहिवन्मन्युः क्रोधो येषां ते रुषा क्रोधेन कुषन्ति चञ्चुभिश्छिन्दन्तीत्यन्वयः । "मृत्योः स मृत्युमाप्नोति, य इह नानेव पश्यति" इति श्रुत्या क्वचिदपि भेददर्शने संसारो भवतीत्युक्तम् , अत्र तु ब्राह्मणादिषु भेददर्शनेन तिरस्कारे तु यमयातना भवतीत्यधिकमुच्यते । कास्तास्तनूरित्यपेक्षायामाह—द्विजवरान् ब्राह्मणश्रेष्ठान् , तेषां तनुत्वं च यज्ञात्मकस्य भगवतोऽङ्गभूतमन्त्राद्याधारत्वेन । अत एव साधारणेतरब्राह्मणव्यावृत्त्यर्थं वरानिति विशेषणम् । दुहतीर्दोग्ध्रीः गा इत्यर्थः । दुहितॄरिति पाठेऽपि गा एव विष्णुरूपात्सूर्या-दुत्पन्नत्वात् 'सूर्यसुताश्च गावः' इति वचनात् । मदीया इति गवां विशेषणम् । तासां तनुत्वं च यज्ञाङ्गभूतघृताद्याधारत्वेन ज्ञेयम् । यद्वा ये वा मदीया मद्भक्तास्तान् । तेषां तु हृदि नित्यं निवासात्तनुत्वम् । अलब्धशरणानि रक्षकहीनानि भूतानि तेषामपि प्रतिक्षणं दुःखमनुभवतां भगवत्स्मरणेन हृदि भगवत्प्रवेशात्तनुत्वम् । कथं तर्हि तेषां भेददर्शनेन तिरस्कारं कुर्वन्तीत्यपेक्षायामाह—अघेति, अघेन बहुशः कृतेन स्वपापेन क्षता विनष्टा दृक् विवेको येषां ते इत्यर्थः । नात्र सन्देह इति द्योतयितुं हिशब्दः ॥ १० ॥ ❀ ❀ एवं ब्राह्मणतिरस्कारे दोषमुक्त्वा तत्सम्मानफलमाह—य इति । ये तु क्षिपतस्तिरस्कुर्वतोऽपि ब्राह्मणान्मयि धिया मदात्मकत्वबुद्ध्या अर्चयन्तः तुष्यद्धृदः सन्तुष्टचित्ताः स्मितं हासस्तदेव सुधा तयोक्षितं सिक्तं पद्ममिव वक्त्रं येषां ते अनुराग-कलया अनुरागेण कलया युक्तया वाण्या आत्मजवत् कुपितं पुत्रं पितेव कुपितं पितरं पुत्र इव वा गृणन्तः स्तुवन्तः सम्बोधयन्ति सन्तोषयन्ति तैरहमुपाहृतो वशीकृतो भवामीत्यन्वयः । तत्राहमेव दृष्टान्त इत्याह—अहमिवेति, अहं यथा युष्मानन्यान् वा सन्तोषयामि तथेत्यर्थः । ननु तिरस्कुर्वत्सु तेषु कथमनुरागादि सम्भवतीत्याशङ्क्योक्तं तुष्यद्धृद इति । क्रोधे तेषामन्तःस्थिते महाननर्थः स्यादतो दुर्वचनादिना तिरस्कारे क्रोधस्य बहिर्निर्गमनान्महदेव भद्रं जातमिति सन्तोष एव कर्तव्य इति भावः ॥ ११ ॥ एवं ब्राह्मणान् प्रशस्य तद्विहितस्य दण्डस्य सङ्कोचं प्रार्थयते—तदिति, तत्तस्मान्मे मम तु पूर्वोक्ताभिप्रायबलात् स्वभर्तुः स्वयोः स्वामिनो मम अवसायं निश्चयं अलक्षमाणावजानन्तौ एतौ युष्मासु यः कृतो व्यतिक्रमोऽपराधस्तस्य गतिं फलं प्रतिपद्य प्राप्य

सद्यः आशु भूयः पुनः ममान्तिकं समीपमितां प्राप्नुतां तत् स एव युष्मत्कृतो मे मय्यनुग्रह इत्यर्थः । तमेव स्पष्टयति--यदिति । भृतयोः भृत्ययोर्विवासः दूरनिवासः वियोगः अचिरतः शीघ्रं कल्पतां समाप्यतामिति यत् यः स इत्यन्वयः ॥ १२ ॥

### हिन्दी अनुवाद

योगमायाका अखण्ड और असीम ऐश्वर्य मेरे अधीन है तथा मेरी चरणोदकरूपिणी गङ्गाजी चन्द्रमाको मस्तकपर धारण करनेवाले भगवान् शङ्करके सहित समस्त लोकोंको पवित्र करती हैं। ऐसा परम पवित्र एवं परमेश्वर होकर भी मैं जिनकी पवित्र चरण-रजको अपने मुकुटपर धारण करता हूँ, उन ब्राह्मणोंके कर्मको कौन नहीं सहन करेगा ॥ ९ ॥ ❀ ❀ ब्राह्मण, दूध देनेवाली गौएँ और प्राणी—ये मेरे ही शरीर हैं। पापोंके द्वारा विवेकदृष्टि नष्ट हो जानेके कारण जो लोग इन्हें मुझसे भिन्न समझते हैं, उन्हें मेरे द्वारा नियुक्त यमराजके गृध्र-जैसे दूत—जो सर्पके समान क्रोधी हैं—अत्यन्त क्रोधित होकर अपनी चोंचोंसे नोचते हैं ॥ १० ॥ ❀ ❀ ब्राह्मण तिरस्कारपूर्वक कटुभाषण भी करे, तो भी जो उसमें मेरी भावना करके प्रसन्नचित्तसे तथा अमृतभरी मुसकानसे युक्त मुखकमलसे उसका आदर करते हैं तथा जैसे रूठे हुए पिताको पुत्र और आपलोगोंको मैं मनाता हूँ, उसी प्रकार जो प्रेमपूर्ण वचनोंसे प्रार्थना करते हुए उन्हें शान्त करते हैं, वे मुझे अपने वशमें कर लेते हैं ॥ ११ ॥ ❀ ❀ मेरे इन सेवकोंने मेरा अभिप्राय न समझकर ही आप लोगोंका अपमान किया है। इसलिये मेरे अनुरोधसे आप केवल इतनी कृपा कीजिये कि इनका यह निर्वासनकाल शीघ्र ही समाप्त हो जाय, ये अपने अपराधके अनुरूप अधम गतिको भोगकर शीघ्र ही मेरे पास लौट आयें ॥ १२ ॥

### ब्रह्मोवाच

**अथ तस्योशतीं देवीमृषिकुल्यां सरस्वतीम् । नास्वाद्य मन्युदष्टानां तेषामात्मायप्तृप्यत ॥ १३ ॥**
**सतीं व्यादाय शृण्वन्तो लघ्वीं गुर्वर्थगह्वराम् । विगाह्यागाधगम्भीरां न विदुस्तच्चिकीर्षितम् ॥ १४ ॥**
**ते योगमाययाऽऽरब्धपारमेष्ठ्यमहोदयम् । प्रोचुः प्राञ्जलयो विप्राः प्रहृष्टाः क्षुभितत्वचः[1] ॥ १५ ॥**

### श्रीधरस्वामिविरचिता भावार्थदीपिका

उशतीं कमनीयां प्रियां देवीं द्योतमानामृषिकुल्यां ऋषयो मंत्रास्तत्प्रवाहरूपामृषिकुलयोग्यामिति वा । सरस्वतीं वाचमास्वाद्य तन्माधुर्यमनुभूय सर्पप्रायेण मन्युना दष्टानामपि क्रोधविषव्याप्तानां हि मनो रसानुभवाभावाद्प्रियभाषणमपि न सहते तेषां त्वात्मा मनो नातृप्यदलमिति नामन्यत ॥ १३ ॥ ❀ ❀ सतीं श्रेष्ठां व्यादाय प्रसार्य कर्णं दत्त्वेत्यर्थः । लघ्वीं मिताक्षरां गुरुभिरर्थैर्गह्वरां दुष्प्रवेशाम् अगाधामभिप्रायतः गंभीरामर्थतः विगाह्य विचार्यापि किमस्मानभिनंदति निंदति वाऽस्मत्कृतं दंडं वा संकोचयतीति न विदुः ॥ १४ ॥ ❀ ❀ ततश्चाभिनंदतीति ज्ञात्वा ते प्रहृष्टाः संतः प्रोचुः । क्षुभिता रोमांचिता त्वग्येषाम् । कुपितेति पाठे संजातरोमकूपोक्त्या रोमांचितत्वमेवोक्तम् । आरब्ध आविष्कृतः पारमेष्ठ्यस्य परमैश्वर्यस्य महोदयः परमोत्कर्षो येन तम् । अधिराजत्वमाविष्कृत्य राजशिक्षार्थं ब्राह्मणान्मानयतीति ज्ञात्वेत्यर्थः ॥ १५ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

सरस्वतीं वाणीं नदीं च पक्षे स्वच्छां देवीं मुनीनां बुद्ध्या विविधवितर्कादिमय्या सह क्रीडतीं पक्षे पूज्याम् । ऋषीणां कुल्यां जलाशयरूपाम् अत्र तेषां महानुतापत्वेपि यन्मन्युः सर्पविषानपगमस्तद्भक्तापराधस्य दुर्वारत्वमेव ज्ञापयति सत्यपि तादृशे भक्तापराधे यो भगवच्चरणतुलसीगंधादिमाधुर्यानुभवः स खलु ब्राह्मणातिक्रमानंतमनुतप्तयोर्जयविजययोर्या तेषु कृपा तदनुगामिन्या भगवत्कृपायाः प्रभावमेव ज्ञापयति । अतो यद्येषां भक्तापराधो नाभविष्यत्तदा भक्तभगवतोः कृपापात्रीभूतानामेषां शुद्धदास्यप्रेमैवाजनिष्यत तस्मादपराधसद्भावाद्वातद्भक्तत्वमेवैषामभूत् । यदुक्तं "भावोऽप्यभावमायाति कृष्णप्रेष्ठापराधतः । आभासतां च शनकैर्न्यूनजातीयतामपि" इति ॥ १३ ॥ ❀ ❀ इत्यर्थ इति व्यासंगांतरत्यागपूर्वकं शुश्रुवुरित्यभिप्रायः अत्राभिनंदनपक्षो व्याख्यात एव निंदापक्षस्तु भगवदनभिप्रेतोऽपि बिभ्यद्भिर्मुनिभिरात्मनि संभावितत्वात् सरस्वत्या च दत्तावकाशत्वादेवं व्याख्येयः । तथा हि—"एतौ द्वौ पार्षदौ मह्यम्" इति सर्वज्ञानपि मुनीन् यत्परिचाययति स्म तेन रेरे मूढा मत्पार्षदावपि शपथ एतावदपि बलं धध्वे इति व्यंजितम् । कदर्थीकृत्य मामित्यत्र सनकाद्यवज्ञानात्पूर्वं भगवत्कदर्थनाभावा-

---

१. प्रां० पा०—कुपितं वचः ।

दियं तेपु भगवतो वक्रोक्तिः कोपव्यंजिकैव। वस्तुतस्तु—चतुर्थ्येतिशयोक्त्या प्रथमं कदर्थनं न ततो युष्मदतिक्रम इति कारणकार्ययोः पौर्वापर्यविपर्ययो भगवता प्रयुक्तः स एवानुमत इति। अस्मदननुमतिर्यद्यभविष्यतदा युष्मत्कृतो दंडोऽपि नाभविष्यत्। "ब्रह्मतेजः समर्थोपि हंतुं नेच्छे मतं तु मे" इति वक्ष्यमाणोक्तेः। ततश्च यूयं च वराटिकार्द्धमूल्या अभविष्यतेति मद्ब्रह्मण्यतैव युष्मानुन्मादयतीति भावः। तद्धि ह्यात्मकृतं मन्य इति। जयविजययोरात्मत्वेन स्वीकारात्प्रेमाधिक्यम् 'सोऽहं भवद्भ्य' इत्यादिमुनिष्वादरमात्रम्। छिंद्यां स्वबाहुमपीति तेषां प्रेमास्पदता। यत्सेवयेति मुनिपु पुनरप्यादरः सोऽपि बाह्य एव ब्राह्मणसेवयैव किं तस्य चरणरेणुः पवित्रोऽभूत् तयैव किं तस्याखिलामलाः क्षताः तयैव किं लक्ष्मीस्तं न त्यजतीति हेत्वसत्त्वादिति नाहं तथाश्नीत्यादौ यूयं ब्राह्मणा भोजनप्रियाः केवलं भोजनीया एवेति ब्राह्मणमुखेनाहं भुंजे इति ख्यातिं लोकेपु विस्तारयितुम्। घासं चरतः श्लेषेण ब्राह्मणः खलु गौरिवादनीयश्चारणीयः पशुबुद्धित्वादेव मद्दत्तेन गौरवेण हृष्यंति न तु युष्माभिर्मत्सुखतात्पर्यिका काचिन्मदीयपरिचर्या संभवेदिति। येषां बिभर्मीति किरीटेपु ब्राह्मणपदरजोधारणादेव योगमाययैश्वर्यं तथा तस्मादेव हेतोर्मच्चरणोदकं सर्वजगत्पावनी गंगेति गौरवमुपहास एव फलितम्। दुहतीर्मदीया इति। गोब्राह्मणयोर्भेदो नास्ति द्वयोरेव मत्तनुत्वादिति। पुनरपि हास एव ये ब्राह्मणानिति। ब्राह्मणानां खलु क्रोध औत्पत्तिक एव धर्मस्तु—क्वाहं मद्भक्ताश्च हसंत एवेति सहिष्णुता सुधा मद्भक्तेभ्य एव मया दत्तेति तयैवाहं वशीकृतः स्यामिति। जयविजययोश्च सहिष्णुतायाः संप्रत्यनुदयान्मम तत्रौदासीन्यं जातमतः शापोऽपि वः प्राभूदन्यथा तु नैव प्राभविष्यदत एवांबरीषे ममौदासीन्याभावाद् दुर्वाससः कोपात्क्षिप्तजटाया अपि वैफल्यं प्रत्युत मत्स्वरूपचक्रकृतः संतापः साक्षान्मया ब्रह्मण्येन कारितमंबरीषपादपतनादिकमिति "यं वानयोर्दममधीश भवान्विधत्ते वृत्तिं नु वा तदनु मन्महि निर्व्यलीकम्। अस्मासु वा य उचितो ध्रियतां स दंडो येऽनागसो वयमयुंक्ष्महि किल्बिषेण॥" इत्यग्रिमवाक्यदृष्ट्या निंदनपक्षो व्याख्यातः॥ १४॥ ❀ ❀ एवं निंदनाभिनंदनयोर्द्वयोरपि पक्षयोः पर्यवसाने कतरस्मिन्भगवदभिमता विश्रांतिरिति चिरं विमृश्याभिनंदनमेव निश्चित्य हृष्यंत आहुः ते इति। इत्यर्थे इति। पारमेष्ठ्यमहोदययुक्तैरपि कृतापराधा अपि ब्राह्मणाः पूजनीया एव न दंड्या इति भावः। कृपा जाताः अस्या इति कृपिता तादृक् त्वक् येषां ते तथा एकदेशोच्चारणन्यायेन रोमकूपोपस्थितिः, 'निशम्य भानुनंदिनीति पदं वृषभानुनंदिन्युपस्थापकं तत्र तद्वदत्रापीत्यर्थः। "सर्वोत्कृष्टे पारमेष्ठ्यं साम्राज्ये ब्रह्मणः पदे" इति निरुक्तिः॥ १५॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

अथ श्रवणानन्तरं तेषां ब्रह्मज्ञानिगुरूणाम् अलमिति नामन्यत किन्तु ललितवर्णविन्यासोच्चारणार्थमाधुरीश्रवणेच्छायुक्तमेवाभूदित्यर्थः॥ १३॥ ❀ ❀ अभिप्रायतः भावतः अगाधामतलस्पर्शाम् अर्थतो वाच्यार्थमर्य्यादयापि गम्भीरां दुर्विबोधाशयाम्॥ १४॥ ❀ ❀ ततश्च ज्ञापनहेतुभगवदिच्छानन्तरम्॥ १५॥

### श्रीमद्वीरराघवव्याख्या

एवमाश्रितसौलभ्यसौशील्यादिगुणसंपन्नेन भगवतोक्तानि 'ब्रह्म दैवं परं हि मे' 'यत्सेवया चरणपद्मपवित्ररेणुं न श्रीर्विरक्तमपि मां विजहाति' 'येषाममलाङ्घ्रिरजः किरीटैर्बिभर्भि'इत्यादिवचांस्याश्रुत्य मुनयः "तं देवतानां परमं च दैवतम्" इत्यादिश्रुतिभिः परमदैवतत्वेन कीर्तितो भगवान् किमस्मद्वञ्चनायैव वदत्याहोस्विद्धर्मसंस्थापनाय यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जन इति स्वगीतानुसारेण वदतीति तात्पर्यमजानन्तो नूनमसौ न भक्तान्वञ्चयति किंतु धर्मसंस्थापनार्थायैव वदतीति पुनर्निश्चिचीषया तदुक्तानि वाक्यान्यन्यतात्पर्यकत्वेन प्रतिपादयिष्यन्तः सम्प्रत्यूचुरित्याह। ब्रह्मा त्रिभिः। अथोक्तविधभगवद्वाक्यश्रवणानन्तरं तस्य भगवतः ऋषिकुल्यां वेदसजातीयामुशतीं कमनीयां दैवीममानुषां सरस्वतीं श्रुतां गिरमास्वाद्यानुभूय मन्युना विषसमानेन क्रोधेन दग्धानां व्याप्तानां तेषां मुनीनामात्मान्तःकरणं नातृप्यत तद्वाक्यतात्पर्याज्ञानान्मन्युदष्टत्वाच्च चित्तं नातिप्रसन्नमभूदित्यर्थः॥ १३॥ ❀ ❀ सतीं साध्वीमल्पाक्षरां गुरुभिर्बहुभिर्वैरथैरभिधेयैर्गह्वरां दुर्विज्ञेयामगाधां गम्भीरामभिप्रायेणागाधामर्थतो गम्भीरां सरस्वतीमित्यनुषङ्गः, शृण्वन्तः विगाह्य विलोड्यादायाहृत्येदमेषां वाक्यानां तात्पर्यमिति परिष्कृत्येत्यर्थः। तेन भगवता चिकीर्षितं कर्तुमिष्टं न विदुः विचार्य परिष्कृत्य न विदुः किन्तु तुष्मीमापाततो विदुरित्यर्थः॥ १४॥ ❀ ❀ योगमाययात्मीयविचित्रसर्गकारिण्या प्रकृत्या आरब्धस्य कृत्स्नस्य जगतः यत्पारमेष्ठ्यं सर्वोत्कृष्टमाधिपत्यं तस्योदयो यस्मात्तमस्मदाधिपत्यप्रदातारमित्यर्थः, तं भगवन्तं ते विप्राः कुपितत्वचः संशयावहवाक्यश्रवणेन क्रुद्धा त्वग्येषां ते प्रहृष्टाः निरतिशयकल्याणगुणगणाकरस्यात्मदैवतस्य भगवतो दर्शनतत्संभाषणतत्कृपावलोकनादिजनितहर्षयुक्ताश्च प्राञ्जलयः प्रोचुः॥ १५॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

कोपाहिदष्टानां तेषां शापमोक्षानुमतिः कथं संगच्छत इति तत्राह। अथेति। तस्य हरेरुशतीमभीष्टप्रदामृषिकुल्यामृषिकुलस्तुतिपरामन्यत्र मुनिकुलप्रियां देवीमभिधेयमणिभिर्द्योतमानामन्यत्र देवादिस्नानक्रीडायोग्यां सरस्वतीं वाचमन्यत्र नदीमास्वाद्य

श्रवणादिनान्यत्र स्नानादिना भगवद्दिदृक्षाभङ्गाङ्कुरितेन मन्युना सर्पेण दष्टानां तेषां सनकादीनामात्मा मनोऽन्यत्र बाह्याभ्यन्तर-विशिष्टो देहोऽतृप्यत कोपापगमेन भगवदुक्त्युद्भूतानन्दपूर्णोऽभूदन्यविषयापगमेन प्रकृतिस्थितोऽभूदित्यर्थः ॥ १३ ॥ ❀ ❀ वचनमाधुर्यास्वादनेन मनसस्तृप्तिर्न त्वर्थज्ञानेन तस्यानवगाह्यादिति भावेनाह। सतीमिति। मुखं व्यादाय शृण्वन्तः शब्दतो लघ्वीं मितां गुरुणा महतार्थेन गह्वरामप्रवेश्यां वाचं विगाह्य विचार्य गाध प्रतिष्ठायामिति धातोरगाधमतलस्पर्शमत एव गम्भीरमवगाढु-मशक्यं तस्य हरेश्चिकीर्षितं किञ्चन कर्त्तुमिष्टं कञ्चन क्षेप्तुं वेति न विदुः। क्षु विक्षेपे इति धातुः ॥ १४ ॥ ❀ ❀ तर्हि यावज्ज्ञान-मपि किञ्चन नोचुः किमिति तत्राह। ते योगेति। सनकादयः योगमायया स्वरूपेच्छया जातेन भ्रूभङ्गेनारब्ध उत्पादितः पार-मेष्ठ्यमहोदयो ब्रह्मपदसम्बन्धिप्रभूतैश्वर्यं यस्य सः तथा तं हरिं प्रोचुरित्यन्वयः। कम्पितत्वचो रोमाञ्चितगात्राः ॥ १५ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

देवीं प्रभावयुक्ताम् ॥ १३ ॥ ❀ ❀ सतीमकपटाम्। गुरुर्योऽर्थः प्रयोजनं गह्वरामिव दुर्गमो यस्यां ताम्। यतो-ऽगाधगम्भीराम्। अगाधां भावतोऽतलस्पर्शां गम्भीरामर्थतोऽपि दुरवगाह्यञ्च। अतस्तां यथाशक्ति विगाह्य तृप्ता अपि तत्र तस्य कर्त्तुमिष्टं युद्धादिलीलालक्षणन्तु न विदुरित्यर्थः ॥ १४ ॥ ❀ ❀ तेषामपि प्राञ्जलित्वादि महाभक्तौ हेतुः। योगेति। योगमाया स्वरूपशक्तिः। कुपितेति पाठे रोममूलानामुच्छूनतया तदन्तरालेषु सञ्जाताः कूपवन्निम्नप्रदेशाः यत्र तादृशत्वचः ॥ १५ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

सरस्वतीं वाणीं नदीं च। उशतीं कमनीयां पक्षे स्वच्छां देवीं मुनीनां बुद्ध्या विविधवितर्कादिभङ्ग्या सह क्रीडन्तीं पक्षे पूज्यामृषिकुलाय हितां पक्षे ऋषीणां कुल्यां जलाशयरूपामास्वाद्य माधुर्यमनुभूय मन्युना सर्पतुल्येन दष्टानां क्रोधविषव्याप्तानां मनो रसानुभवाभावात् प्रियभाषणमपि न सहते। तेषान्तु आत्मापि बुद्धिरपि मनोऽपि नातृप्यत् अलमिति नामन्यत। अत्र तेषां महानुतापत्वेऽपि यन्मन्युसर्पविषानपगमस्तद्भक्तापराधस्य दुर्वारत्वमेव ज्ञापयति। सत्यपि तादृशे भक्तापराधे यो भगवच्चरणतुलसी-गन्धादिमाधुर्यानुभवः स खलु ब्राह्मणातिक्रमानन्तरमनुतप्तयोर्जयविजययोर्या तेषु कृपा तदनुगामिन्या भगवत्कृपायाः प्रभावमेव ज्ञापयति अतो यद्येषां भक्तापराधो नाभविष्यत्तदा भक्तभगवतोः कृपापात्रीभूतानामेषां शुद्धदास्यप्रेमैवाजनिष्यत। तस्मादपराध-सद्भावाच्छ्रान्तभक्तत्वमेवैषामभूत्। यदुक्तं 'भावोऽप्यभावमायाति कृष्णप्रेष्ठापराधतः। आभासताञ्च शनकैर्न्यूनजातीयतामपी'ति ॥ १३ ॥ ❀ ❀ व्यादाय कर्णौ प्रसार्य शृण्वन्तः। सतीं सत्यां शोभनाञ्च लघ्वीं मिताक्षरां गुरुभिरर्थैर्गह्वरां दुष्प्रवेशाम-गाधामगम्याभिप्रायां गम्भीरां दुर्बोधबाह्याभ्यन्तरार्थां विगाह्य विचार्यापि किमस्मानभिनन्दति निन्दति वा अस्मत्कृतं दण्डं व्यवस्थापयति सङ्कोचयति वा निरस्यति वा अस्मान् वापराधेन योजयति भृत्यौ वा प्रसादाधिक्येनेति तच्चिकीर्षितं न विदुः। अत्राभिनन्दनपक्षो व्याख्यात एव निन्दनपक्षस्तु भगवदनभिप्रेतोऽपि बिभ्यद्भिर्मुनिभिरात्मनि सम्भावितत्वात् सरस्वत्या च दत्तावकाशत्वादेवं व्याख्येयः। तथाहि। एतौ द्वौ पार्षदौ मह्यमिति सर्वज्ञानपि मुनीन् यत् परिचाययति स्म तेन रे मूढा मत्-पार्षदावप्यभिशपथ एतावदपि बलं धद्ध्वे इति व्यञ्जितम्। कदर्थीकृत्य मां यद्वो बह्वक्रातामतिक्रममित्यत्र सनकाद्यतिक्रमात् पूर्वं भगवत्कदर्थनाभावादियं तेषु भगवतो वक्रोक्तिः कोपव्यञ्जिकैव। वस्तुतस्तु चतुर्थ्यैतिशयोक्त्या प्रथमं मत्कदर्थनं कृतम्। ततो युष्मदतिक्रम इति कारणकार्ययोः पौर्वापर्यविपर्ययो भगवता प्रयुक्तः। स एवानुमतोऽस्माभिरिति। अस्मदनुमतिर्यद्यभविष्यत् तदा युष्मत्कृतो दण्डोऽपि नासेत्स्यत् 'ब्रह्मतेजः समर्थोऽपि हन्तुं नेच्छे मतन्तु मे' इत्यग्रिमोक्तेः। ततश्च यूयञ्च वराटकार्द्धमूल्या अभविष्यतेति मद्ब्रह्मण्यतैव युष्मानुन्मादयतीति भावः। तद्धि ह्यात्मकृतं मन्य इति जयविजययोरात्मत्वेन स्वीकारात् प्रेमाधिक्यं सोऽहं भवद्भ्य उपलब्धसुतीर्थकीर्त्तिरिति मुनिष्वादरमात्रम्। छिन्द्यां स्वबाहुमपीति पुनरपि तयोः प्रेमास्पदता यत्सेवयेति मुनिषु पुनरप्यादरः सोऽपि बाह्य एव। ब्राह्मणसेवयैव किं तस्य चरणरेणुः पवित्रोऽभूत् तयैव किं तस्याखिला मलाः क्षताः तयैव किं लक्ष्मीस्तं न त्यजतीति हेत्वसत्त्वादिति। नाहं तथाद्मीत्यादौ यूयं ब्राह्मणा भोजनप्रियाः केवलं भोजनीया एवेति। ब्राह्मण-मुखेनाहं भुञ्जे इति ख्याते। लोकेषु विस्तारिता घासं चरत इति श्लेषेण ब्राह्मणः खलु गौरिवादरणीयः पशुबुद्धित्वादेव मद्दत्तेन गौरवेण हृष्यति नतु युष्माभिर्मत्सुखतात्पर्या काचिन्मदीयपरिचर्या सम्भवेदिति। येषां बिभर्मीति किरीटेषु ब्राह्मणपादरजो-धारणादेव मम योगमाययैश्वर्यं तथा तस्मादेव हेतोर्मच्चरणोदकं सर्वजगत्पावनी गङ्गेति गौरवमुपहास एव फलितं दुहतीर्मदीया इति गोब्राह्मणयोर्भेदो नास्ति द्वयोरेव मत्तनुत्वादिति पुनरपि हास एव। ये ब्राह्मणानिति ब्राह्मणानां खलु क्रोध औत्पत्तिक एव धर्मस्तञ्चाहं मद्भक्ताश्च सहन्त एवेति सहिष्णुता सुधा मद्भक्तेभ्य एव मया दत्तेति तयैवाहं वशीकृतः स्यामिति जयविजययोस्तु सहिष्णुतायाः सम्प्रत्यनुदयान्मम तत्रौदासीन्यं जातमतः शापोऽपि वः प्राभूदन्यथा तु नैव प्राभविष्यदत एवाम्बरीषे ममौदासीन्या-भावात् दुर्वाससः कोपात् क्षिप्तजटाया अपि वैफल्यं प्रत्युत मत्स्वरूपचक्रकृतः सन्तापः साक्षान्मया ब्रह्मण्येन कारितमम्बरीषे पादपतनादिकमिति। यं वानयोर्दममधीश भवान् विधत्ते वृत्तिं नु वा तदनुमन्महि निर्व्यलीकम्। अस्मासु वा य उचितो

भ्रियतां स दण्डो येनागसो वयमयुङ्क्ष्महि किल्बिषेण।" इत्यग्रिमवाक्यदृष्ट्या च निन्दनपक्षोऽयं व्याख्यातः॥ १४॥ ❀ ❀ एवं निन्दनाभिनन्दयोर्द्वयोरपि पक्षयोः पर्यवसाने कतरस्मिन् भगवदाभिमत्यविश्रान्तिरिति चिरं विमृश्याभिनन्दनमेव निश्चित्य हृष्यन्त आहुरित्याह ते इति। योगमाया स्वरूपशक्तिस्तया आरब्धमनादित एव विस्तारितं पारमेष्ठ्यं परमैश्वर्यं महानुदयश्च यस्य तम्। तस्मादन्यानधीनमहामहैश्वर्येणानेन प्रभुणा कस्यानुरोधेन स्तुतिगर्भा निन्दा कर्त्तव्या। यदि वयं दण्ड्या एव भविष्यामः तदा विप्रा इमे मद्भक्तापराधिनो नरके निपात्यन्तामिति प्रकटमेवावक्ष्यदिति विविच्य कुपिता क्षुभिता रोमाञ्चिता त्वग् येषां ते कुपितेति पाठे सञ्जातरोमकूपोक्त्या रोमाञ्चितत्वमेवोक्तम्॥ १५॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः।

अथ भगवद्वचनश्रवणानन्तरम्। तस्य भगवतः उशतीं कमनीयां द्योतमानामृषिकुल्याम् "यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः। स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते।" इति श्रीगीतानुसारेण लोकशिक्षायै ऋषिकुलयोग्यां सरस्वतीं वाणीमास्वाद्य तन्माधुर्य-मनुभूय मन्युदष्टानामपि क्रोधव्याप्तानामपि तेपामात्मा मनः न अतृप्यत अलन्नामन्यत॥ १३॥ ❀ ❀ किंच सतीं साध्वीं लघ्वीं मिताक्षरां गुरुभिर्बहुभिरर्थैर्गह्वरां दुर्बोधाम् आगधमाशयतः गम्भीरां विषयतः सरस्वतीं व्यादाय विवृत्य कर्णमिति शेषः शृण्वन्तो विगाह्य विलोड्य धर्मरक्षायै लोकान् शिक्षयितुं 'तद्वः प्रसादयाम्यद्य ब्रह्मदैवं परं हि मे' इत्यादि सरस्वती भगवतेरितेति ज्ञात्वापीत्यर्थः। तच्चिकीर्षितं भगवतः तयोः आत्मसु च निग्रहमनुग्रहं वा कर्तुमिष्टं मुनिना शापद्वारैव स्वभृत्यविवासरूपं च न विदुः॥ १४॥ ❀ ❀ अतस्तत्सरस्वतीतात्पर्यलाभात् प्रहृष्टाः अनयोः अस्मासु च निग्रहमनुग्रहं वा कथं करिष्यतीति चिन्तया कुपितत्वचः योगः सङ्कल्पस्तद्युक्तया मायया कृपया ब्रह्माण्डमध्ये आरब्धः आविष्कृतः पारमेष्ठ्यस्य वैकुण्ठस्य महोदयो येन तम्। प्राञ्जलयः प्रोचुः॥ १५॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

एवं भगवान् प्रसन्नो जात इति ज्ञात्वा गताधयो मुनयः सम्यक् स्तोत्रं कृतवन्त इति वक्तुम्, प्रथमं भगवद्वाक्येन तेषामाधिर्गत इत्याह—अथ तस्योशतीमिति त्रिभिः—भगवतो वाक्यं शब्दार्थभेदेन चिन्तानिवारकम्। तत्र शब्देनैव निःसन्दिग्धं चिन्ता निवारिता, अर्थस्तु भगवद्वाक्यानां सर्वतोमुखत्वादनिर्द्धारित इति स्वरूपतो निर्द्धारितोऽपि फलतो न निर्द्धार इति सम्यक् चिन्तां न दूरीकृतवान्। तथापि दृष्टसामग्र्या बलवत्त्वात् सर्वमेवाऽन्तःकरणं चिन्तावत्त्वेऽपि निर्मलं जातमिति श्लोकत्रयम्, शब्दार्थसामग्रीभेदात्। प्रथमं शब्देन तेषां सुखं जातमित्याह—अथेति। भिन्नप्रक्रमोऽर्थपर्यालोचनाभावाय। उशतीं कमनीयाम्, अनेन तस्या दुःखदूरीकर्तृत्वं रूपमुक्तम्। युक्त्यर्थं विशेषणान्तरमाह—ऋषिकुल्यामिति। ऋषिकुलयोग्याम्। ऋषयो हि मन्त्रद्रष्टारः, अलौकिकानुभावाश्च मन्त्राः; तत्र हितकर्त्री ततोऽप्यलौकिकानुभावा भवतीति स्वसामर्थ्याद्दुःखदूरीकर्तृत्वम्। किञ्च—देवीमिति। द्योतकत्वात् कान्त्यर्था भवति, काऽन्यथा हृदयप्रकाशिका भवति। अतोऽपि दुःखदूरीकरणम्। किञ्च—सरस्वतीमिति। सर इत्युदकनाम। आधिदैविकीति तदुदकममृतं भवति। तेषां हृदयं मन्युना दष्टं मृतप्रायम्। तदमृतेन जीव्यते, कान्त्या प्रकाश्यते, अलौकिकभावेन कार्यसमर्थं क्रियते, परमानन्दश्च प्राप्यत इति चत्वारि विशेषणानि। एतादृशीं सरस्वतीमास्वाद्याऽपि, स्थिताना-मात्मा नाऽतृप्यत, अलमिति नोक्तवान्। यद्यर्थार्थं श्रुतं स्यात्, तदाऽर्थपूर्णे इति इच्छा पूर्येत। स्वरूपतः श्रवणे तु आनन्देऽलंबु-द्ध्यभावान्न निवर्तते। सर्पदष्टो[1] हि मन्त्रेण जलं पाय्यते, न च स तृप्यति, विषज्वालाभूयस्त्वात्। आत्मनोऽपि दंशे सर्वाङ्गे ज्वाला जातेति त एव दष्टा निरूपिताः॥ १३॥ ❀ ❀ एवं शब्दतः फलमुक्त्वा अर्थानुसन्धानेनाऽपि यज्जातं तदाह—सतीमिति। सा हि सन्मार्गप्रतिपादिका, अतः समुदायार्थपरिज्ञानेन सुखं जातमेव। व्यादाय श्रवणमपावृतकर्णरन्ध्रैः श्रवणम्। लघ्वी सा स्वरूपतः, तेनाऽऽलोचयितुं शक्यत इति सुखदायिनी। एवं विशेषणद्वयेनाऽर्थद्वाराऽपि सुखदातृत्वं निरूपितम्। फलतः साधनतश्च न सुखदातृत्वं जातमित्याह—गुर्वर्थगह्वरामगाधगम्भीरामिति। अर्थो हि गम्भीरः, पुरुषोत्तमस्य भगवतो हीनानां सेवक-जीवानां च विपरीतधर्मप्रतिपादकत्वात्। श्रुतपदार्थानां श्रुतार्थापत्त्या निर्णयं कृत्वा संदेहो दूरीकर्तव्य इति चेत्तत्राऽऽह—अगाधगम्भीरामिति। अगाधत्वान्न तत्र श्रुतार्थापत्तिः कल्प्यते। पदार्थानां तलस्पर्शे तत्कल्पना युक्ता। गम्भीरत्वाच्च मज्जनेनाऽपि तलस्पर्शो न संभवति। एतावता भगवान् किञ्चिद्गम्भीरमुक्तवानित्यध्यवसीयते। तथापि किमयमेवं वदतीति तच्चिकीर्षितं न विदुः। विगाहनमन्तःप्रवेशः। विचार्याऽपि न विदुरित्यर्थः॥ १४॥ ❀ ❀ एवं वाक्यं किञ्चिज्ज्ञात्वाऽपि भगवन्तं दृष्ट्वा मुदिताः सन्तः स्तोत्रं कृतवन्त इत्याह—त इति। योगमाया हि भगवद्वैभवयोग्यान्[2] पदार्थान् सृजति। न ते प्राकृताः, नाऽपि ब्रह्मसृष्टाः, अतः परमेष्ठ्यपेक्षयापि महोदयरूपाः। योगमायया आरब्धाः पारमेष्ठ्यमहोदया यस्य। अतः सामग्रीं दृष्ट्वा परमानन्दो

---

१. सर्पदंष्टे ग. घ. ङ। २. भगवद्योग्यान् क. ख. घ. ङ।

बहुविधो भासत इति प्रहृष्टा जाताः । स्वयं विप्रा अपि, मनसाऽपि तादृशं नाकलितमिति, माहात्म्यज्ञानात् प्राञ्जलयः । तद्दर्शनेनाऽन्तःपूर्णानन्दो रोमकूपद्वारा निर्गच्छन् कुपितां त्वचं कृतवान् । सा हि वायुदेवताका, वायोश्च संचारो नास्तीति कोप उचित एव । क्षुभितेति पाठेऽपि समानोऽर्थः ॥ १५ ॥

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

अथेत्यत्र । निःसन्दिग्धमिति । भगवानस्मासु प्रसन्नो न वेति सन्देहराहित्यं यथा स्यात्तथा । न निर्वतत इति इच्छा न निवर्तते ॥ १३ ॥

### श्रीगिरिधरकृता बालप्रबोधिनी

अथ अथोक्तभगवद्वाक्यश्रवणानन्तरं तस्य भगवतः सरस्वतीं वाणीमास्वाद्य तन्माधुर्यमनुभूयापि तेषां मुनीनामात्मा अन्तःकरणं नातृप्यत अलमिति नामन्यतेत्यन्वयः । क्रोधविषयव्याप्तानां मनो माधुर्यानुभवाभावात् प्रियभाषणमपि न सहते तेषां तु नातृप्यतेत्याश्चर्यं द्योतयन्नाह—मन्युना सर्पप्रायेण क्रोधेन दष्टानां व्याप्तानामपीत्यर्थः । तत्र हेतुत्वेन वाणीं विशिनष्टि—उशतीं मनोहरां देवीं द्योतमानामलौकिकीं ऋषिकुल्यां ऋषयो मन्त्रास्तद्रूपां ऋषिकुलयोग्यामिति वा ॥ १३ ॥ ❀ ❀ तृप्त्यभावेऽपि तात्पर्यं तु तैर्न ज्ञातमेवेत्याह—सतीमिति । व्यादाय कर्णं दत्त्वा वाणीं शृण्वन्तो विगाह्य विचार्यापि तस्य चिकीर्षितं किमस्मानभिन्दति, निन्दति वा अस्मत्कृतं दण्डं वा सङ्कोचयतीति न विदुरित्यन्वयः । तत्र हेतून्दर्शयन्विशिनष्टि । सतीं श्रेष्ठां, लघ्वीमल्पाक्षरां, गुरुभिरर्थैर्गह्वरां, दुष्प्रवेशामभिप्रायेण अगाधाम् अर्थतो गम्भीरां च ॥ १४ ॥ ❀ ❀ युज्यते नि ज्यते इति योगा स्वाज्ञानुसारिणी या माया अचिन्त्या शक्तिस्तया आरब्धः विरचितः पारमेष्ठ्यस्य परमैश्वर्यस्य महोदयः परमोत्कर्षो येन तं तद्दर्शनेन प्रहृष्टा अतएव क्षुभिता रोमाञ्चिता त्वक् येषां ते—कुपितत्वच इति पाठेऽपि सञ्जातरोमकूपोक्त्या रोमाञ्चितत्वमेवोक्तम्—ते विप्राः प्राञ्जलयः सन्तः प्रोचुः ॥ १५ ॥

### हिन्दी अनुवाद

ब्रह्माजी कहते हैं—देवताओं ! सनकादि मुनि क्रोधरूप सर्पसे डसे हुए थे, तो भी उनका चित्त अन्तःकरणको प्रकाशित करनेवाली भगवान्‌की मन्त्रमयी सुमधुर वाणी सुनते-सुनते तृप्त नहीं हुआ ॥ १३ ॥ ❀ ❀ भगवान्‌की उक्ति बड़ी ही मनोहर और थोड़े अक्षरोंवाली थी; किन्तु वह इतनी अर्थपूर्ण, सारयुक्त, दुर्विज्ञेय और गम्भीर थी कि बहुत ध्यान देकर सुनने और विचार करनेपर भी वे यह न जान सके कि भगवान् क्या करना चाहते हैं ॥ १४ ॥ ❀ ❀ भगवान्‌की इस अद्भुत उदारताको देखकर वे बहुत आनन्दित हुए और उनका अङ्ग-अङ्ग पुलकित हो गया । फिर योगमायाके प्रभावसे अपने परम ऐश्वर्यका प्रभाव प्रकट करनेवाले प्रभुसे वे हाथ जोड़कर कहने लगे ॥ १५ ॥

## ऋषय ऊचुः

**न वयं भगवन् विद्मस्तव देव चिकीर्षितम् । कृतो मेऽनुग्रहश्चेति यदध्यक्षः प्रभाषसे ॥ १६ ॥**
**ब्रह्मण्यस्य परं दैवं ब्राह्मणाः किल ते प्रभो । विप्राणां देवदेवानां भगवानात्मदैवतम् ॥ १७ ॥**
**त्वत्तः सनातनो धर्मो रक्ष्यते तनुभिस्तव । धर्मस्य परमो गुह्यो निर्विकारो भवान्मतः ॥ १८ ॥**

### श्रीधरस्वामिविरचिता भावार्थदीपिका

अध्यक्षः सर्वेश्वरः संस्तद्धीत्यात्मकृतं मन्य इत्युक्त्या मयापराधः कृत इति तथा तदनुग्रहो मे इत्यादिवचनेन ममानुग्रहश्चेति यत्प्रभाषसे तेन तव यच्चिकीर्षितं तन्न विद्मः ॥ १६ ॥ ❀ ❀ किलेति लोकशिक्षार्थं सूचितम् । परमार्थमाहुः । विप्राणामिति । देवदेवानां देवपूज्यानामपि भगवांस्त्वमात्मा च दैवतं च ॥ १७ ॥ ❀ ❀ लोकशिक्षार्थताप्रपंचस्त्वत्त इत्यष्टभिः । धर्मस्त्वत्त एव भवति रक्ष्यते च त्वदवतारैः परमः फलरूपोऽत एव गुह्यो गोप्यः न च स्वर्गादिफलवद्विकारी भवान्किं तु निर्विकारो मतः । अत एवंभूतस्य तदेवं लोकशिक्षामात्रमिति भावः ॥ १८ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

तदेवं ज्ञाततत्त्वा अपि तदभिप्रायं तन्मुखादेव श्रोतुं पुनः प्रश्नगर्भमाहुः । नेति । चिकीर्षितमनुग्रहं निग्रहं वेति यद्यतः ॥ १६ ॥ १७ ॥ ❀ ❀ अत एव परमफलत्वादेव "यदायदा हि धर्मस्य" इत्याद्युक्तेः । यतो धर्मस्य प्रवर्तको रक्षकश्च

त्वमतो हेतोः। इति भाव इति। "यदि ह्यहं न वर्त्तेयं जातु कर्मण्यतंद्रितः। मम वर्त्मानुवर्वंते मनुष्याः पार्थ सर्वशः" इत्यादि गीतोक्तेरत्रायमाशयः ॥ १८ ॥

## श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

ममोपरि तेन तथा तथा वचनेन ॥ १६ ॥ ❀ ❀ आत्मा रश्मीनां सूर्यवन्मूलस्वरूपः दैवतमिष्टदेवत्वेन पूज्यः ॥ १७ ॥ ❀ ❀ अत एव भवत्फलकत्वादेव गोप्यः स्पष्टं फलन्तु स्वर्गादिनिर्विकल्पक इति स्वाम्यसम्मतः पाठः। अतः परमफलरूपत्वादेवंभूतस्य सर्वेश्वरस्य इदं नमनादि ॥ १८ ॥

## श्रीमद्वीरराघवव्याख्या

उक्तिमेवाहुर्दशभिः। नेति। हे भगवन्! देव त्वया चिकीर्षितं वयं न विद्मः किं भवानस्माननुजिघृक्षति उत निजिघृक्षतीति त्वत्तात्पर्यं विशिष्य न जानीमः किंतु मे मह्यं प्रत्येकाभिप्रायेणैकवचनम्। अनुग्रहश्चेत्यनुग्रहः कृत इत्यापाततो विद्मः, आपाततो वानुग्रहः कृतः। कथं जानथेत्यत्राहुः। यद्यस्मादध्यक्षः वाङ्मनसागोचरस्त्वमक्षिविषयः प्रभाषसे ॥ १६ ॥ ❀ ❀ एवं स्वात्मनां तदभिप्रायानभिज्ञत्वमावेद्य तदुक्तीनां तात्पर्यं क्रोडीकुर्वन्तो ब्रह्म दैवं परं हि मे इत्याद्युक्तयो धर्ममर्यादास्थापनायैव प्रवृत्ता उपपन्ना नान्यथेत्याहुः। ब्रह्मण्यस्येति अष्टभिः। हे प्रभो! ब्रह्मण्यस्य ब्राह्मणतन्मर्यादापालकस्य तव ब्राह्मणाः परं दैवतं किलेत्यनेन लोकशिक्षा सूचिता। यदि भगवान् ब्राह्मणान् परदैवतभावेन नानुवर्त्तसे ततस्त्वत्तोऽवरजना ब्राह्मणान्न बहु मन्यन्तो नश्येयुरतो लोकशिक्षार्थमेव ब्रह्म दैवं परं हि मे इत्युक्तमिति भावः। वस्तुतस्तु देवदेवानां देवेन त्वयापि देवानां बहुमन्तव्यानां विप्राणां भगवान् षाड्गुण्यपूर्ण आत्मदैवतमात्मदैवतमिति हेतुगर्भम् आत्मदैवतस्य तव न देवतान्तरम् सम्भवतीत्यर्थः। तथा च श्रूयते "पतिं विश्वस्यात्मेश्वरं यस्मात्परं नापरमस्ति न तस्येशे कश्चन तस्य नाम महद्यशः स्वे महिम्नि प्रतिष्ठित" इत्यादि ॥ १७ ॥ ❀ ❀ ब्रह्मण्यत्वमेव प्रपञ्चयन्ति। त्वत्त इति। धर्मश्चातुर्वर्ण्यचातुराश्रम्यव्यवस्थयावस्थितः सनातनो धर्मः त्वत्त एव प्रवृत्तः तव तनुभिरवतारै रक्ष्यते चेदृशस्य धर्मस्य परमः नित्यो निरतिशयगुह्यः फलं निर्विकारो भवानेव मतः ज्ञातः श्रुतिभिरिति शेषः। तथा च श्रूयते "इष्टापूर्तं बहुधा जातं जायमानं विश्वं बिभर्त्ति भुवनस्य नाभिः एष भूतपाल एष सेतुर्विधरणः अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुत" इत्यादि निर्विकार इत्यनेन कर्मसु रुचिमात्रजनकानामवान्तरफलानां क्षयिष्णुत्वं सातिशयत्वं भगवत्यनन्तस्थिरफलत्वं च सूचितम् ॥ १८ ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

किमूचुरित्याशङ्क्य न विदुस्त्वच्चिकीर्षितमिति हृद्गतं वाचोद्गलयन्तीत्याह। न वयमिति। अध्यक्षः सर्वेश्वरस्त्वं स एवानुमतो दंडस्तदनुग्रहो मे इत्यादिना ममानुग्रहः कृत इति प्रभाषस इति यत्तस्मात्तव चिकीर्षितं न विद्म इति ॥ १६ ॥ ❀ ❀ अस्मदुक्तेरन्यथाकरणसंभवात्कस्मादज्ञानं भवतामित्याशङ्क्यास्मद्वचनादित्याहुरित्याह। ब्रह्मण्यस्येति। किलेत्यनेनास्मदितरेषां मोहकमस्माकन्तु स्तुतिपरमिदमिति सूचितं तत्कथमित्यत्राहुरित्याह। विप्राणामिति। हे देव! आत्मदैवतं कुलदेवता ॥ १७ ॥ ❀ ❀ कुतो हेतोरित्यत उक्तम्। त्वत्त इति। विप्रादिसर्ववर्णैर्ब्रह्मचर्याद्याश्रमिभिश्चानुष्ठेयः सनातनो वेदवेद्यत्वेन नित्यो धर्मस्त्वत्तो भूत्वा वर्तते क्षेत्रादिवत्कालतो द्रव्यतो नोत्साद्यते कथं वृत्तिरत्राहुरित्याह। रक्ष्यत इति। तनुभिर्मत्स्याद्यवतारैः "यदा यदा हि धर्मस्य ग्लानिर्भवति भारत" इत्यादेर्लटा सनातनत्वमवधारयति भवान्क इति तत्राहुरित्याह। धर्मस्येति। "वायुना वै गौतमसूत्रेण" इत्यादिश्रुत्या सर्वधारकत्वेन मतो धर्मो वायुस्तस्य मातृत्वेन परोत्तमा मा श्रीर्यस्य स तथोक्तः लक्ष्म्यादिमुक्तसमुदायात् वाय्वाद्यमुक्तजगतोऽपि श्रेष्ठो भवानित्यर्थः। अत्र किं प्रमाणमित्युक्तम्। गुह्य इति। धर्मस्येत्यनुवर्तते अपीति। पदमध्याहृत्य वाक्ययोजना। "गुह संवरण" इति धातोः वायोरपि गुह्यः संवार्यः दुर्ज्ञेयः इत्यर्थः। नीलिम्नाकाशादिवत् केनापि विकारेण ज्ञेयः किं न स्यादित्यत उक्तम् निर्विकारः इति। उक्तचोद्यस्य किमुत्तरमित्यत उक्तं मत इति। भवानिति वर्तते "मन अवबोधन" इति धातोः एष सर्वेश्वर इत्यादिना निर्विकारः सदा शुद्ध इत्यादिना च भवानवबुद्धः सम्यग्ज्ञात इत्यादिकं मानमुत्तरमुक्तं भवति। अनेन वायोरपि दुर्ज्ञेयत्वे शशशृङ्गतुल्यमिदमिति चोद्यं निरस्तं तेन तद्विषयज्ञानसाकल्यं निषिध्यते नतु ज्ञानमात्रमत एव गुह्य इत्युक्तं समाधिना ज्ञातुं शक्यो न घटादिवत् सुज्ञेय इति। यद्वा धर्मस्य मुख्यविषयो भावनेव न स्वर्गादिरित्याहुरित्याह। धर्मस्येति कुतो न स्वर्गादिरित्यत उक्तं निर्विकार इति। स्वर्गादेः प्राकृतत्वेनानित्यत्वादस्य तु निर्गुणत्वेन स्वतोऽन्यतो वा तद्धर्मराहित्यात् धर्मकारयितृत्वेन निरुपमस्वातन्त्र्यात्तद्दत्तफलस्य च नित्यत्वसंभवादिति भावः ॥ १८ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

न वयमिति । अयमर्थः । अनयोर्वैकुण्ठसेवकयोर्ब्राह्मणावज्ञा न सम्भवति अस्माकं च ब्रह्मनिष्ठानां सामान्यत एव क्रोधो न सम्भवति विशेषतो भगवद्भक्त्यात्रागतानां पार्षदेषु इति तवैव चिकीर्षितं न विद्मः । येन तत्तदघटनीयं घटितम् । तत्र हेतुः अध्यक्षः अन्तर्बहिरपि सर्वेश्वरत्वेन सर्वमन्यथा कर्त्तुं समर्थः । यदि वास्माकमेव दोषः स्यात् तदाध्यक्षेण त्वया पूर्वमेवैतयोरस्माकं चान्तःकरणं ततस्तत उद्धृत्य नियमितं स्यादिति । स्वयं च निजाभीष्टसिद्धिरेवाभिप्रेतेत्याह । यत् यस्मात् मे मह्यमनुग्रहश्च कृत इति प्रभाषसे ॥ १६ ॥ ❀ ❀ यच्चोक्तं यस्यामृतेत्यादिना तत्राहुः । ब्रह्मण्यस्येति । किलशब्दो ह्यनृते । तच्चान्यथाख्यापनम् । तच्चेह लोकशिक्षार्थमेवेति तथा तैर्व्याख्यातम् । तत्र च ब्राह्मणस्येति यद्यपि सौशील्येनैव तव तादृशगुणत्वं तथापि लोकशिक्षार्थमपि कल्पत इति भावः । अत एव ब्रह्मण्यत्वेनैवास्माकं दैवतत्वं साध्यते तव तु दैवतत्वं स्वरूपेणैवेति विवक्षितम् ॥ १७ ॥ १८ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

तदेवं ज्ञाततत्त्वा अपि तदभिप्रायं तन्मुखादेव श्रोतुं पुनः प्रश्नगर्भमाहुः । वयमिति । चिकीर्षितमनुग्रहं निग्रहं वेत्यर्थः । यद् यस्मादध्यक्षः सर्वेश्वरः सन्नस्मान् प्रत्यपि कृतो मेऽनुग्रहो युष्माभिरिति भाषसे । तदसम्भाव्यत्वादस्मान्निजिघृक्षुरेव प्रथममुपहससि किम्वा ब्रह्मण्यत्वात् स्वकृतधर्मप्रवर्त्तनार्थमस्माननुजिघृक्षुरेव वास्तवमेव स्तौषीति त्वच्चिकीर्षितं ज्ञातुमसमर्थानज्ञानस्मान् स्वाभिप्रायं ज्ञापयेति ध्वनिः ॥ १६ ॥ ❀ ❀ श्रीमुखवाक्यानां दुर्ज्ञेयत्वं प्रपञ्चयन्त आहुः । ब्रह्मण्यस्य तव ब्रह्मण्यत्वेनैव ब्राह्मणा दैवं नतु स्वभावत इत्यर्थः । देवदेवानां देवपूज्यानामपि भगवांस्त्वमेवात्मना स्वभावेनैव दैवतमिति तवैव दैवतत्वं वास्तवं नतु ब्राह्मणानां श्लेषेणात्मा दैवतं चेति त्वां विना ते मृतका एव तदपि त्वं यत्सेवया चरणपद्मपवित्ररेणुमित्यादि यद् ब्रूषे तत् किंस्विदिति भावः ॥ १७ ॥ ❀ ❀ किञ्चानुष्ठीयमानेन धर्मेणैव लोकाः पूज्या भवन्ति । सच धर्मस्त्वद्भक्तिलक्षण एव न वर्णाश्रमनिष्ठः । तञ्च धर्मं त्वद्भक्ता एव प्रवर्त्तयन्तीति त्वद्भक्ता ब्राह्मणेभ्योऽपि श्रेष्ठा इत्याहुः । त्वत्तः प्रादुर्भूतो भक्तिलक्षणः सनातनो धर्मः दृष्टिः सतां दर्शनेऽस्तु भवत्तनूनामिति दृष्ट्या तव तनुभिर्भक्तै रक्ष्यते सर्वत्र प्रवर्त्तनादित्यर्थः । तस्य च धर्मस्य परमः फलरूपः न च स्वर्गादिफलवद्विकारी किन्तु निर्विकारः भवानेव मतः त्वत्प्राप्तिरेव त्वद्भक्तेः फलमित्यर्थः । अत्र सनातननिर्विकारपदाभ्यामन्यो धर्मो न व्याख्यातः ॥ १८ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

चिकीर्षितं कर्तुमिष्टं न विद्मः तथा अनयोः अस्मासु च यथेष्टं निग्रहादिकं कुर्विति वक्तुं तद्वः प्रसादयाम्यद्येत्यादिवाक्यस्यान्यथानुपपत्त्या लोकसंग्रहार्थत्वं विद्मः । त्वं तु सर्वेषां स्वामी न तादृशवाक्येन तव तेजः क्षतं भवतीत्याहुः । कृतो मे इत्यादिना अध्यक्षः सन् तदनुग्रहो मे इत्याद्युक्त्या ममानुग्रहः कृत इति तत्प्रभाषसे तल्लोकसंग्रहार्थमिति गम्यते । अध्यक्षस्य सर्वस्वामिनः अनुग्राह्यत्वानुपपत्तेः ॥ १६ ॥ ❀ ❀ लोकशिक्षार्थता प्रपञ्च्यते ब्रह्मण्येत्यादिना । विप्राणां किम्वहुना देवदेवानां ब्रह्मशिवादीनामपि भगवान् त्वम् आत्मा मूलं दैवतमुपास्यं च तस्य तव ब्रह्मण्यस्य सतः ब्राह्मणाः परं दैवं हे प्रभो ! किलेति वार्तायां वार्ताव्यवहारः लोकशिक्षायै इत्यर्थः ॥ १७ ॥ ❀ ❀ तद्युक्तमेवेत्याहुः । त्वत्त इति । सनातनः वेदप्रोक्तः धर्मः त्वत्तः एव भवति तव तनुभिः मूर्त्तिभिः रक्ष्यते च धर्मस्य च परमः फलरूपः गुह्यः दृष्टात् ऐहिकादन्यः अविकारी आमुष्मिकादन्यः मुक्तगम्यः मतः सर्ववेदसम्मतः भवानेव । अतो लोकशिक्षार्थं तादृशवाक्यं तव सङ्गतमिति भावः ॥ १८ ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

विरोधं परिहरन्त एव स्तोत्रं कुर्वाणाः प्रथमं विरोधमनुवदन्ति—न वयमिति । विरुद्धार्थप्रतिपादकत्वे सति न विरोधः, किन्तु मनसा तद्व्यवस्थाशक्तौ सत्याम् । मनो हि वाचो भर्ता, स चेत्प्रभुरविरोधं सम्पादयति, किं दासीनां विरोधेन । तदपि नास्तीति स्वानुभवेनाऽऽहुः—हे भगवन्, स एव तदनन्तरं देव ! तव चिकीर्षितं न विद्मः । ज्ञाने त्वभिप्रायः कल्प्येत । अकल्पनायां हेतुभूतं विरोधमाह—कृतो मेऽनुग्रह इति । यस्त्वमध्यक्षः सर्वसाक्षी प्रभुः, सेवकान् प्रति वदस्यनुग्रहः कृत इति तदर्थतो विरुद्धम् ॥ १६ ॥ ❀ ❀ विरोधान्तरमाह—ब्रह्मण्यस्येति । त्वं तु ब्रह्मण्यः, ब्राह्मणानां हितः, तेषां सर्वपुरुषार्थसाधकत्वेन तदुपास्यः । अथापि ब्राह्मणाः किल ते परं दैवमिति प्रभाषसे । किलेति प्रसिद्धे । न हि तद्वाक्ये ब्राह्मणप्रभुत्वप्रतिपादके 'येषां बिभर्मि' इत्यत्र सन्देहोऽस्ति । भागभेदेन तदुभयं संगच्छत इति पक्षं खण्डयति—प्रभो इति । सर्वसमर्थो भवान्न केनाऽप्यंशेन ब्राह्मणापेक्षायुक्त इत्यर्थः । किञ्च, विप्राणाम्, देवानाम्,

देवदेवानामपि भगवानात्मा दैवतं च। आवश्यक उपास्यश्च। आत्मनो वा दैवतम्, चिदंशानां भगवत्सेवकत्वात्॥ १७॥ ❀ ❀ नन्वस्मदुक्तप्रकारेणैव वेदो वदतीति तथैव शास्त्रार्थतोऽस्त्वित्याशङ्कयाऽऽहुः—त्वन्न इति। त्वमेव नः सनातनो धर्मः, यज्ञरूपत्वात्, ब्रह्मरूपत्वाच्च। 'यज्ञेन यज्ञमयजन्त देवाः' 'अयं तु परमो धर्मो यद्योगेनाऽऽत्मदर्शनम्' इति। त्वयैव तनुभिरवतारैः स्वधर्मो रक्ष्यते 'यदा यदा हि धर्मस्य' इति वाक्यात्। किञ्च, त्वं धर्मस्य परमो गुह्यः। धर्मस्याऽत्यन्तं गोप्यस्त्वमेव। धर्मो ह्यन्यगतो धर्मिणं गोपायति; यथा जलगतमौष्ण्यं वह्निं गोपायति, तथा जीवेष्वागतो धर्मो ब्रह्म गोपायति। स हि तस्यैव, क्रियाशक्तिरूपत्वात्। तस्य गोप्यो हि भक्तियोगोऽपि भवति, तथापि भगवान् परमो गुह्यः तस्य ब्रह्मैव गुह्यमिति कथं भगवानित्याशङ्कयाऽऽह—भवानेव निर्विकल्पो मत इति। 'पूर्वंवद्वा' इति सिद्धान्तेन सर्वकल्पनाशून्यं ब्रह्म तदेव पश्चात् धर्मरूपेणाऽऽविर्भूय तत्सहितं भगवानित्युच्यते। भगवतो वा एकं रूपं निर्विकल्पं ब्रह्म। उभयथाऽपि धर्मस्य परमो गुह्यः॥ १८॥

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

त्वन्न इत्यत्र। धर्मस्य कथं भगवान् गोप्य इत्याकाङ्क्षायामुपपादयन्ति-धर्मो हीत्यादि। स हि तस्यैवेति। स धर्मः तस्य भगवत एव धर्मभूतः। धर्मत्वे हेतुः—क्रियेत्यादि। पूर्वंवद्वेति। इदमधिकरणं साधनाध्यायद्वितीयपादे वर्तते। अर्थस्तूक्त एव। उभयव्यपदेशसूत्रानुसारेण मुख्यं सिद्धान्तमाहुः—भगवतो वेत्यादि॥ १८॥

### श्रीगिरिधरकृता बालप्रबोधिनी

तदुक्तिमेव दर्शयति—न वयमित्यादिभिर्दशभिः। अचिन्त्यैश्वर्यस्य विविधक्रीडापरस्य च तवाभिप्रायं को वा ज्ञातुं समर्थ इत्याशयेन सम्बोधनद्वयमाहुः—भगवन्निति देवेति च। स्वयमध्यक्षः सर्वनियन्ताऽपि सन् कुतः 'तद्धीत्या'त्मकृतं मन्ये' इत्युक्त्या मयाऽपराधः कृत इति तथा 'तदनुग्रहो मे' इत्यादिना ममानुग्रहः कृतः स्यादिति यत्प्रभाषसे तेन यत्तव चिकीर्षितं तद्वयं न विद्म इत्यन्वयः॥ १६॥ ❀ ❀ तदानीमेव लोकशिक्षार्थमेवं वदतीति ज्ञात्वाऽऽहुः। ब्राह्मणस्य ब्रह्मशब्देन ब्राह्मणा वेदाश्च तेषां हितस्य रक्षकस्य ते ब्राह्मणा मे परं दैवमिति यद्वचनं तल्लोकशिक्षार्थमेवेति शेषः। किलेत्यवधारणे। वस्तुतस्तु प्रभो हे सर्वथासमर्थ देवदेवानां देवानामपि देवतया पूज्यानां विप्राणां भगवान् ऐश्वर्यादिगुणपूर्णो भवानेवात्मा च दैवतमाराध्यश्च॥ १७॥ ❀ ❀ उक्तमेव स्पष्टयन्ति—त्वत्त इति। सनातनः सनातनश्रुतिस्मृतिप्रतिपादितो वर्णाश्रमनिबन्धनो धर्मस्त्वत्त एव प्रवर्तते तवैव तनुभिरवतारैः रक्ष्यते च। धर्मस्य परमः फलभूतश्च भवानेव मतः श्रुत्यादिसम्मत इत्यर्थः। ननु स्वर्गादिपदार्थ एव फलत्वेन सम्मत इत्यत आहुः—गुह्य इति, सर्ववेदरहस्य इत्यर्थः। ननु स तु ब्रह्मशब्दवाच्यो निर्विशेषः परमात्मैवेत्यत आहुः—निर्विकल्प इति, सोऽपि भवानेवेत्यर्थः॥ १८॥

### हिन्दी अनुवाद

मुनियोंने कहा—स्वप्रकाश भगवन्! आप सर्वेश्वर होकर भी जो यह कह रहे हैं कि 'यह आपने मुझपर बड़ा अनुग्रह किया' सो इससे आपका क्या अभिप्राय है—यह हम नहीं जान सके हैं॥ १६॥ ❀ ❀ प्रभो! आप ब्राह्मणोंके परम हितकारी हैं; इससे लोक-शिक्षाके लिये आप भले ही ऐसा मानें कि ब्राह्मण मेरे आराध्यदेव हैं। वस्तुतः तो ब्राह्मण तथा देवताओंके भी देवता ब्रह्मादिके भी आप ही आत्मा और आराध्यदेव हैं॥ ❀ ❀ सनातनधर्म आपसे ही उत्पन्न हुआ है, आपके अवतारोंद्वारा ही समय-समयपर उसकी रक्षा होती है तथा निर्विकारस्वरूप आप ही धर्मके परम गुह्य रहस्य हैं—यह शास्त्रोंका मत है॥ १८॥

**तरन्ति ह्यञ्जसा मृत्युं निवृत्ता यदनुग्रहात्। योगिनः स भवान् किंस्विदनुगृ᳚ह्येत यत्परैः॥ १९॥**

**यं वै विभूतिरुपयात्यनुवेलमन्यैरर्थार्थिभिः स्वशिरसा धृतपादरेणुः।**
**धन्यार्पिताङ्घ्रितुलसीनवदामधाम्नो लोकं मधुव्रतपतेरिव कामयाना॥ २०॥**

### श्रीधरस्वामिविरचिता भावार्थदीपिका

विपरीतं चेदमित्याहुः। तरंतीति यस्यानुग्रहादेव निवृत्ता विरक्ता योगिनश्च संतो मृत्युं तरंति स भवान्परैरनुगृह्येतेति किंस्वित् न किंचिदित्यर्थः॥ १९॥ ❀ ❀ यच्चोक्तं "यत्सेवया चरणपद्मपवित्ररेणुं सद्यः क्षताखिलमलं प्रतिलब्ध-

---

१. चतुर्थश्लोकोऽयम्। २. प्रा० पा०—नुग्राह्यते परम्।

शीलम्" इत्यादि तदत्यंतमसंभावितमित्याहुर्द्वाभ्याम्। यं वै विभूतिर्लक्ष्मीरनुवेलमवसरेऽवसरे उपयाति सेवते धृतः पादरेणुर्यस्याः धन्यैः सुकृतिभिरर्पितमंघ्रौ यत्तुलस्या नवं दाम माला तद्धाम स्थानं यस्य तस्य मधुव्रतपतेर्भ्रमरमुख्यस्य लोकं स्थानमंघ्रि कामयमानेव ॥ २० ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

भगवदुक्तौ वैपरीत्यमाहुः। इत्यर्थ इति। न घटत इति भावः ॥ १९ ॥ ❀ ❀ यं त्वाम् ॥ २० ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

इदं तदनुग्रहो मे इति वचनम् न किञ्चिदघटितमित्यर्थः। काकार्थलाभादित्यर्थोक्तिः ॥ १९ ॥ ❀ ❀ विभूतिर्लक्ष्मीश्चात्र जगदधिकारिण्येव व्याख्येया। प्रेयस्यास्तस्याः परमभागवतशिरोमणित्वेन वक्ष्यमाणानादरानुपपत्तेस्तथाप्यत्रव्यवहितपचे तथा भावार्थव्याख्यानमभेदाभिप्रायेणेति गम्यम्। इवेति स्वाधिकारे जगति वैराग्याभावोऽपि दर्शितः। अभेदपक्षे तु अन्तरङ्घ्रिकामनायामपि बहिर्वाम्याविष्कारोऽपि दर्शितः ॥ २० ॥

### श्रीमद्वीरराघवव्याख्या

प्रभो! धर्मसंस्थापनार्थायैव ब्रह्मदैवमित्युक्तमन्यथेदमनुपपन्नमित्याहुः। तरन्तीति। निवृत्ताः निवृत्तिधर्मनिष्ठाः योगिनः मृत्युं संसारं यदनुग्रहाद्यस्य तवानुग्रहादञ्जसा सुखेन तरन्ति तथा च श्रुतिः अमृतस्यैष सेतुरिति सेतुः प्रापकः स भगवान्परैरन्यैरनुगृह्येत किंस्विदिति काकुः नानुगृह्येत इत्यर्थः। अनुग्राहयते परमिति पाठान्तरं तदा परं ब्राह्मणमनुग्रहकर्त्तारं करोषि किमित्यर्थः ॥ १९ ॥ ❀ ❀ यदुक्तं न श्रीर्विरक्तमपि मां विजहातीति। तदपि यथाश्रुताभिप्रायकत्वेऽत्यन्तानुपपन्नमिति मत्वा तत्तात्पर्यं परिष्कुर्वन्त आहुः सार्द्धेन। यमिति। यं त्वां विभूतिर्लक्ष्मीः कथंभूता अर्थार्थिभिश्चतुर्विधपुरुषार्थार्थिभिः स्वशिरसा धृतः पादरेणुर्यस्याः सा। तथा चोक्तम् 'अकिञ्चन्यैकशरणाः केचिद्भाग्याधिकाः पुनः। तत्पादाम्भोरुहद्वन्द्वं प्रपद्य प्रीतमानसाः। लक्ष्मीं पुरुषकारेण वृतवन्तो वरानने!' इति एवंभूता लक्ष्मीः धन्यार्चिताङ्घ्रितुलसीनवदामधाम्नः धन्यैर्भागवतैरर्चितं नूतनतुलसीमालायाः स्थानं यस्य तस्य मधुव्रतपतेर्भृङ्गराजस्य लोकं स्थानं श्रीपादपद्मं प्रकामयमानेव यं त्वामनुवेलं तत्तदुचितावसरेषु उपयाति सेवते ॥ २० ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

मुक्तामुक्तप्रपञ्चोत्तमत्वमर्थादुक्तं तदिदानीं घटयन्तीत्याह। तरन्तीति। निवृत्ता निवृत्तिधर्मनिष्ठा योगिनो ज्ञानिनो यस्यानुग्रहात् मृत्युं संसारमञ्जसा तरन्ति हि यस्य प्रसादादित्यादिश्रुतिसिद्धत्वात् संसारोन्मूलकत्वेन स मुक्तामुक्तोत्तमो भवान् परैरन्यैर्ब्राह्मणादिभिरनुगृह्येतानुग्रहपात्रीक्रियेतेति यत्तत् किंस्वित् विप्रस्तुतिमन्तरेण न किमपीत्यर्थः ॥ १९ ॥ ❀ ❀ लक्ष्म्या उत्तमत्वं स्पष्टयन्तीत्याह। यं वा इति। वा इत्यनेन मम योनिरप्स्वान्तरित्यादिवाक्यं प्रमाणयन्ति। विभूतिः श्रीरन्यैर्ब्रह्मादिभिर्विरक्तिभक्त्याद्यर्थार्थिभिः नित्यप्राप्तभगवदनुग्रहाया नित्यमुक्तायाः प्राप्यप्रयोजनान्तराभावादुपयानं किमर्थमित्याशङ्क्य सेवायामानन्दैकरूपत्वेन स्वभावत्वेऽपि लोकविडम्बनमेव प्रयोजनमिति भावेन विशिंषन्तीत्याह—धन्येति। धन्यैर्भक्तिज्ञानादिगुणपूर्णत्वेन स्वर्गादिफलानिच्छुभिरर्पितमङ्घ्रितुलसीनवदाम यत्तस्य धाम्नो धारकस्य तव तुलस्या लोकं स्थानं चरणयुगलमुरसि स्थितां स्पर्धयेव कामयमाना ममैतत्स्थानं भूयादिति भावं दर्शयन्तीयं निषेवत इत्यर्थः। नचेदमविज्ञातं हरिणेति भावेनोक्तं मधुव्रतपतेरिति मधुनो रसस्य व्रतं भुक्तिर्येषां ते मधुव्रताः सारभोजनास्तेषां पत्युः व्रतं वै विष्णुवर्षेज्यातपोमासाग्निभुक्तिष्वभिधानं लब्ध्वापि वक्षसि पदमित्यस्मादुक्त एवार्थः ॥ २० ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः।

तरन्तीति। यदनुगृह्येत तत् किंस्वित् तत्तु तर्कातीतमित्यर्थः ॥ १९ ॥ ❀ ❀ यमिति। अत्र च पूर्ववज्जगदधिकारिण्येव लक्ष्मीः न तु साक्षात् प्रेयसी वैकुण्ठलक्ष्मीः। अस्याः परमभागवतशिरोमणित्वात् उपयाति आराधयति। लोकं विषयं वैकुण्ठकीटविशेषस्यापि त्रिपयं कामयमानेति तस्या वैकुण्ठलक्ष्मीतोऽतिन्यूनत्वं दर्शितम्। इवेति स्वविषये जगति वैराग्याभावोऽपि दर्शितः ॥ २० ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

तेष्वपि ब्राह्मणेषु मध्ये प्रवृत्तिनिष्ठेभ्यो निवृत्ताः श्रेष्ठाः, तेभ्योऽपि योगिनस्तेऽपि यदनुग्रहान्मृत्युं तरन्ति स भवान् यत् परैरन्यैरनुगृह्येत तत् किंस्विदिति प्रश्नो विस्मयाधिक्येन ॥ १९ ॥ ❀ ❀ यन्नोक्तम्।

"यत्सेवया चरणपद्मपवित्ररेणुं सद्यः क्षताखिलमलं प्रतिलब्धशीलम्।
न श्रीर्विरक्तमपि मां विजहाति यस्याः प्रेक्षालवार्थमितरे नियमान् वहन्ति ॥

इति तदप्यसम्भवत्वादति दुर्ज्ञेयमित्याहुर्द्वाभ्याम्। यं त्वां विभूतिः सम्पत्तिरूपा लक्ष्मीः अनुवेलमवसरे अवसरे उपयाति सेवते धृतः पादरेणुर्यस्याः सा। धन्यैर्भक्तैरर्पितमङ्घ्र्योर्यत्तुलस्या नवदाम तत्रैव धाम ऐश्वर्यं यस्य तस्य मधुव्रतपतेर्भ्रमरमुख्यस्य लोकमङ्घ्रिं कामयमाना इव त्वत्कान्तापि त्वद्भक्तैवेत्यर्थः॥ २०॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

अन्यथा त्वं यः संसारार्णवादन्यानुद्धरति स भवानन्यैः कथमनुगृह्येतेत्याहुः। तरन्तीति॥ १९॥ ❀ ❀ यच्चोक्तं

यत्सेवया चरणपद्मपवित्ररेणुं सद्यः क्षताखिलमलं प्रतिलब्धशीलम्।
न श्रीर्विरक्तमपि मां विजहाति यस्याः प्रेक्षालवार्थमितरे नियमान् वहन्ति॥

इति येषां बिभर्म्यहमखण्डविकुण्ठयोगमायाविभूतिरमलाङ्घ्रिरज इति च। तदपि यथाश्रुतत्वेऽत्यन्तमनुपपन्नं लोकशिक्षार्थतया तु सङ्गच्छते इत्याशयेनाहुः। यमिति द्वाभ्याम्। अर्थार्थिभिः पुरुषार्थकामैः शिरसा धृतः पादरेणुर्यस्याः सा विभूतिः लक्ष्मीः वक्षसि स्थितापि धन्यैः सुकृतिभिरर्पितमङ्घ्रौ यत्तुलस्याः नवदाम नूतना माला तद्धाम स्थानं मधुव्रतपतेः भ्रमरराजस्य लोकं स्थानमङ्घ्रिरसविशेषलोभेन कामयानेव अनुवेलम् अवसरे यमुपयाति सेवते॥ २०॥

## श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

ज्ञानस्यापि गुह्य इत्याह—तरन्तीति। निवृत्ताः परमहंसाः। यस्याऽनुग्रहं प्राप्य अञ्जसा मृत्युं तरन्ति। उभयतः कूलङ्कषा नदीव मृत्युः सर्वेषां मज्जनकर्ता, अतस्तस्य तरणमुक्तम्। योगिन इत्यधिकारिविशेषणमनुग्रहे, न तु तरणे योगो हेतुः। एतादृशो भवान् सर्ववेदरहस्यः किमन्यैरनुगृह्येत? तत्रापि परैरप्रयोजकैः। गृह्णीत इत्यपि पाठे परैः कृत्वा यत्कर्म, किं किमर्थम्, स्विदिति निश्चये, अनुगृह्णीत; किमर्थमनुगृह्णीयात्। अन्यैः स्वस्य माहात्म्यं संपाद्य परानुग्रहं किमर्थं कुर्यादित्यर्थः। एतादृशस्याऽनुग्रहवचनं बाधितार्थमिति। प्रतिभाति सत्यवाक्यत्वाच्च तदपि न संगच्छते, अतोऽज्ञानमेव॥ १९॥ ❀ ❀ किञ्च, ब्राह्मणकृपया लक्ष्मीः स्थिरेति वचनं सर्वथा बाधितार्थमिति प्रतिभातीत्याह—यं वै विभूतिरिति। विभूतिर्लक्ष्मीः यं भगवन्तमनुवेलमन्यैरर्थार्थिभिः शिरसा धृतपादरेणुरप्युपयाति सेवार्थं गच्छति। तत्रापि भक्त्येव। तां च भवान् नात्यादि्रयत, स कथं द्विजानुपथपुण्यरजसा पुनीतः सन् श्रीवत्सलक्ष्म अगा इति श्लोकद्वयान्वयः। विप्रप्रसादात् लक्ष्म्याः स्थैर्यमिति पक्षो न संगच्छते, भक्त्यैव तस्याः स्थिरत्वात्। न च तस्या भक्तिर्ब्राह्मणसाध्या, भक्तौ ब्राह्मणानामपि भक्तत्वेनैवोपयोगात्। ब्रह्मभावानन्तरं भक्त्यधिकारात् ब्रह्मभावप्रापणार्थं तदपेक्षेति चेत्, तस्याः सिद्ध एव ब्रह्मभावः, 'मम योनिर्महद्ब्रह्म' इति वाक्यात्, ब्रह्मानन्दरूपत्वाच्च तच्छरीरस्य। अतः साक्षात्परम्परया वा तस्या भक्तौ ब्राह्मणानामनुपयोगात्, भक्त्यैव च स्थैर्याद्भगवद्वाक्यं चिन्त्यम्। किञ्च, ब्राह्मणा भिक्षुका अर्थार्थिनामिन्द्रादीनामुपसर्पकाः, ते च लक्ष्म्याश्चरणरेणूपासकाः। अत उपजीव्योपजीवकत्वात् तस्याः कथं ब्राह्मणाधीनत्वम्? किञ्च, सा हि भोग्यभावमेव त्यक्तवती, तेन तस्याः फलत्वमेव नाऽस्ति। सा हि रसान्तरे प्रविष्टा, न भक्तिरसे कामरसः प्रविशति। भगवानपि 'ये यथा मां प्रपद्यन्ते' इति वाक्यात् भक्तत्वेनैव तां स्वीकरोति, यथा तुलसीयम्। अतस्तस्या गुणा अपि नाऽपेक्ष्यन्ते। सा हि तुलसीमपि निर्गुणां बहु मन्यते, ततोऽपि हीनभावं च। भ्रमरा नानापुष्परसेष्वासक्ताः, तेऽपि यदि भक्तिमाहात्म्यात् तुलसीरस एव मकरन्दायासेऽप्यासक्ताः, तदा मयाऽपि तथैव विधेयमिति भ्रमरलोकमेव कामयते। एवमपि सति लब्धपदा सा पुनः स्वभावं प्राप्स्यतीति भक्तत्वेऽपि तां नाऽत्यादि्रयत्। तदपेक्षयाऽपि स्वभावत एव निर्दुष्टा भगवति लब्धपदा अपि हेत्वभावान्न पूर्वावस्थां प्राप्नुवन्ति, ते परमभागवताः; तेष्वेव प्रकृष्टः सङ्गः। एतादृशलक्ष्म्याः कथमसाधारणधर्मत्वम्? तत्रापि भवान् भगवच्छब्दार्थः। नित्या एव भगवति षड् गुणाः, ब्राह्मणानुग्रहजन्यत्वे कृत्रिमता स्यात्। व्यामोहनलीलापरत्वेन तु अलौकिकप्रकारेण वयं न व्यामोहनीयाः, साधारणेन तु विशेषज्ञानस्य जातत्वान्न व्यामोहो भविष्यतीति तात्पर्यम्। विशेषेण भूतिर्यस्या इति भगवद्भजने भगवदुपयोगिनी सर्वसामग्री निरूपिता। तस्याः समीपगमनमेव, न तु भोगपर्यवसानमित्युपेत्युक्तम्। अन्यैरिति भगवद्विमुखैः। भगवद्वैमुख्ये हेतुः—अर्थार्थिभिरिति। धनाभिनिविष्टचित्ता न भगवत्संमुखा भवन्ति। बाला एव ते स्तनपानव्यग्रा मातरमेव मन्यन्ते। स्वशिरसा धृतपादरेणुरिति भक्त्यैवाऽन्येषां प्रवृत्तिः, तेषां चेयमुपास्या देवता। तस्या अपि चरणरेणवस्तदीयशरीरसंपादकाः। शिरसा स्थापनं तेषामेव प्रथमसंबन्धार्थम्। तुलस्या अलौकिकत्वे तल्लोकाकाङ्क्षित्वं न भक्तिहेतुकमिति धन्यार्पितेत्युक्तम्। कृत्रिममात्रत्वे भगवत्संबन्धो न सम्भवतीति धन्येति। धनमर्हन्तीति धन्याः। लक्ष्म्या आधिभौतिकं रूपमर्हन्तीति भगवद्भूतानि। सेवका धन्याः, अन्ये धनिनोऽपि न धनमर्हन्ति, श्वान इव गङ्गाजलम्। अत एव न तस्य धनस्य भगवदुपयोगः। धनस्य स्वोपयोगात् तदधिका तुलसी तैर्भगवति

समर्प्यते । अङ्घ्रौ समर्पणं भक्तिहेतुकम् । तुलस्य नवदाम चरणे समर्प्यते, अन्यथा बहुतुलसीदाने चरण आच्छन्नः स्यात् । तद्भगवच्चरणारविन्द एव तिष्ठति, भक्तप्रसादे वा तत्कण्ठेषु । उभयथाऽपि नैतादृशं स्थानमन्यदस्तीति तद्धाम भ्रमरस्य । तथात्वे हेतुमाह—मधुव्रतपतेरिति । मध्वेव व्रतं यस्य । नियमाद्धर्म इति पक्षे मधुव्रतेऽपि धर्मः । मधुव्रतानां पतिरिति व्रतिनामिव तत्संबन्धित्वेन कृतार्थः परम्परयाऽपीति सूचितम् । इवेति ब्रह्मानन्दस्य हीनभावव्यावृत्त्यर्थमुपमा निरूपिता । कामयानेवेति वा, कामितोऽर्थः श्रद्धायुक्तो भवतीति । एवमपि भजने भगवतश्चेत्तत्फलं भवेत्तदापि ब्राह्मणवाक्यस्य हेतुत्वं कल्प्येताऽपि, तदपि नास्तीत्याह ॥ २० ॥

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

यं वै विभूतिरित्यत्र । तस्या भक्तिरिति । लक्ष्म्या भगवति भक्तिः । भक्तौ ब्राह्मणानामपीत्यादि । विप्राद् द्विषड्गुणयुतादरविन्दनाभपादारविन्दविमुखात् श्वपचं वरिष्ठम्' इति, 'किं पुनर्ब्राह्मणाः पुण्याः' इत्यादिवाक्यैस्तथा निश्चयेन तथेत्यर्थः । ननु सत्यम्, भक्तत्वेनैव भक्तावुपयोगः; परं सामान्यब्राह्मणानाम्, न तु भवादृशाम्; अतो 'यत्सेवया' इति मद्वाक्यं नानुपपन्नमित्याकाङ्क्षायामाहुः—ब्रह्मेत्यादि । 'ब्रह्मभूतः प्रसन्नात्मा न शोचति, न काङ्क्षति । समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम् ।' इत्यादिवाक्यैस्तथाऽवसीयत इति भक्तौ ब्रह्मभूतानामेव मुख्यः, न सामान्यानाम्, अतो ब्रह्मभूतब्राह्मणप्रसादाल्लक्ष्मीः स्थिरेति पक्षो न युक्त इत्यर्थः । ब्रह्मभावप्रापणार्थमिति । लक्ष्म्यास्तथात्वार्थम् । ते चेति । इन्द्रादयश्च । रसान्तर इति । भक्तिरसे । हीनभावं चेति । मन्यत इत्यर्थात् । असाधारणधर्मत्वमिति । ब्राह्मणानुग्रहासाधारणधर्मत्वम् । साधारणेनेति । भगवद्वाक्यतात्पर्यानगवमेऽपि शास्त्रानुभवाभ्यां साधारणप्रकारेण । प्रथमसम्बन्धार्थमिति । प्रथमं शिरस एवोत्पत्तेः, तस्यैतत्सम्बन्धे सर्वस्य शरीरस्य योग्यता भवतीति तस्य सम्बन्धार्थम् । अनुवेलपदं तु न व्याख्यातम्, अर्थस्तु सेवासमयं लक्ष्मीकृत्येति । धन्यार्पितेत्युक्तमिति । धन्यार्पिता लौकिक्येवेति तल्लोकाकाङ्क्षित्वं भक्तिहेतुकमेव नेर्ष्याहेतुकमित्यर्थः । कृत्रिममात्रत्वमित्यादि । अन्यार्पिततया आगन्तुकमात्रत्वे ,भूर्यप्यभक्तोपहृतं न मे तोषाय कल्पते' इति वाक्याद्भगवत्सम्बन्धो न भवतीति तदर्पकाणां भक्तत्वज्ञापनाय धन्यपदमित्यर्थः । तद्व्युत्पादयन्ति—धनमित्यादि । तस्येति । अनर्हसम्बन्धिनः । तदधिकेति । लक्ष्म्याधिभौतिकरूपादधिका । चरण इति । चरणसमीपे । तदिति । तुलसीदाम । तद्धामेति । भ्रमरस्य स्थानम् । व्रतमिति । नियत आहारः, 'पयोव्रतो ब्राह्मणो यवागूव्रतो राजन्यः' इत्यादौ तथा दर्शनात् । तत्सम्बन्धित्वेनेति । तुलसीदामसम्बन्धित्वेन । तत्फलमिति । तज्जनित आनन्दविशेषः ॥ २० ॥

### श्रीगिरिधरकृता बालप्रबोधिनी

य[1]दुक्तं 'तदनुग्रहो मे' इति तदप्येवं तात्पर्यं विना नोपपद्यते इत्याहुः—तरन्तीति । निवृत्ताः निवृत्तिधर्मनिष्ठाः धर्मार्थकामेभ्यो विरक्ताः वा योगिनो भक्तियोगज्ञानयोगादिमन्तो यस्य तवानुग्रहात् अञ्जसा अनायासेनैव मृत्युं जन्ममरणादिसंसारदुःखं तरन्ति स भवान् परैरनुगृह्येतेति यत्किंचित् न किञ्चिदित्यर्थः ॥ १९ ॥ ॐ ॐ यच्चोक्तं 'य[2]त्सेवया चरणपद्मपवित्ररेणुं' इत्यादि तदपि पावित्र्यमिच्छद्भिर्ब्राह्मणाः सेवितव्या इत्येतत्तात्पर्यकमेव अन्यथानुपपत्तेरित्याहुः—यमिति द्वाभ्याम् । वा इति निश्चये । यं विभूतिर्लक्ष्मीः अनुवेलमवसरेऽवसरे उपयाति सेवते तथापि विविक्तचरितैर्विशुद्धैः परिचरणैरनुवर्तमानां सेवमानामपि तां यो नात्याद्रियत् नातीवादृतवान् स त्वं किं द्विजानां अनुपथं पथि पथि लग्नं यत्पुण्यरजस्तेन पुनीतः सन् श्रीवत्सलक्ष्म अगाः प्राप्तवानसीति द्वयोरन्वयः । अत्र पुनीत इत्यार्षः, पूत इत्यर्थः । यद्वा यस्तां नात्याद्रियत्तं त्वां किं द्विजानुपथपुण्यरजः श्रीवत्सलक्ष्म च पुनीतः पवित्रीकुरुतः स त्वं किमर्थं ते उभे अगाः स्वीकृतवानसि ? ताभ्यामाधिक्याभावादित्यर्थः । लक्ष्म्याः सेवनेऽपि किमित्याशङ्क्य तन्माहात्म्यमाह—अर्थेति, अर्थमैश्वर्यादि तदर्थिभिरन्यैर्देवमनुष्यादिभिः स्वशिरसा धृतः पादरेणुर्यस्याः सेत्यर्थः । किमर्थं सेवते इत्यपेक्षायामाहुः—धन्येति । धन्यैरनेकजन्मानुष्ठितत्वेन भगवत्कृपाप्राप्तचरणसान्निध्येन कृतार्थैरर्पितमङ्घ्रौ यत्तुलस्या नवदाम माला तद्धाम स्थानं यस्य तस्य मधुव्रतपतेः भ्रमरमुख्यस्य लोकं स्थानं तच्चरणं कामयमानेव । इवशब्दः एवकारार्थः । अयं हि तदभिप्रायः—अयं हि सारग्राही मधुव्रतोऽतिचञ्चलस्वभावोऽप्यङ्घ्रिगतायां तुलस्यां सपरिवारो निश्चलः सन् रमते । अतोऽङ्घ्रिलावण्यमत्यधिकं स्यात् ततोऽहं वक्षसि स्थिताऽपि बहुसेवकसङ्कर्षमङ्गीकृत्यापि तुलस्या सह सापत्न्येऽपि चरणावेव सेविष्ये इति । एवम्भूताया अप्युपेक्षायां हेतुमाहुः—परमेति, परमभागवतेषु एकान्तभक्तेष्वेव प्रकृष्टः सङ्गः आसक्तिर्यस्य तथाभूत इत्यर्थः । ननु निखिलैश्वर्याधिष्ठात्रीं लक्ष्मीमुपेक्ष्य किं भक्तासक्त्येत्याशङ्क्याहुः—भगभाजनस्त्वमिति । स्वयमेव भगशब्दवाच्यैश्वर्यादीनां भाजनः आश्रयस्त्वम्, अतः किं तयेत्यर्थः ॥ २० ॥ २१ ॥

---

१. द्वादशश्लोके । २. सप्तमश्लोकोऽयम् ।

## हिन्दी अनुवाद

आपकी कृपासे निवृत्तिपरायण योगीजन सहजमें ही मृत्युरूप संसार-सागरसे पार हो जाते हैं; फिर भला, दूसरा कोई आपपर क्या कृपा कर सकता है ॥ १९ ॥ ❀ ❀ भगवन्! दूसरे अर्थार्थीजन जिनकी चरण-रजको सर्वदा अपने मस्तकपर धारण करते हैं, वे लक्ष्मीजी निरन्तर आपकी सेवामें लगी रहती हैं; सो ऐसा जान पड़ता है कि भाग्यवान् भक्तजन आपके चरणोंपर जो नूतन तुलसीकी मालाएँ अर्पण करते हैं, उनपर गुंजार करते हुए भौंरोंके समान वे भी आपके पादपद्मोंको ही अपना निवासस्थान बनाना चाहती हैं ॥ २० ॥

यस्तां विविक्तचरितैरनुवर्तमानां नात्याद्रियत्परमभागवतप्रसङ्गः।
स त्वं द्विजानुपथपुण्यरजः पुनीतः श्रीवत्सलक्ष्म किमगा भगभाजनस्त्वम् ॥ २१ ॥
धर्मस्य ते भगवतस्त्रियुग त्रिभिः स्वैः पद्भिश्चराचरमिदं द्विजदेवतार्थम्।
नूनं भृतं तदभिघाति रजस्तमश्च सत्त्वेन नो वरदया तनुवा निरस्य ॥ २२ ॥
न त्वं द्विजोत्तमकुलं यदिहात्मगोपं गोप्ता वृषः स्वर्हणेन ससूनृतेन।
तर्ह्येव नङ्क्ष्यति शिवस्तव देव पन्था लोकोऽग्रहीष्यदृषभस्य हि तत्प्रमाणम् ॥ २३ ॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

विविक्तचरितैर्विशुद्धैः परिचरणैरनुवर्तमानां सेवमानामपि यो नात्याद्रियन्नातीवादृतवान्। स एवंभूतस्त्वम्। अयं भावः। इत्थं नामातिलंपटतया लक्ष्मीस्त्वां सेवते। कथम्। एवं हि सा मेने। अयं हि सारग्राही मधुव्रतश्चंचलश्च स चांघ्रिगतायां तुलस्यां सपरिवारो निश्चलः सन् रमतेऽतोंघ्रिलावण्यमत्यधिकं स्यात्ततोऽहं वक्षसि स्थितापि योगिजनादिबहुसेवकसंघर्षमंगीकृत्यापि तुलस्या सह सापत्न्येनापि चरणौ सेविष्ये इति तदेवमत्यौत्सुक्ये नानुवर्तमानामपि तां त्वं नातीवाद्रियसे। यतः परमभागवतेष्वेव प्रकृष्टसंगवान्। स एवं परमसौभाग्यनिधिस्त्वम्। अतो ब्राह्मणप्रसादान्मां श्रीर्न त्यजतीत्यलभ्यलाभत्वेन निर्देशो न समंजस इति। किं च स्वत एव त्वं भगभाजनो भजनीयानां गुणानामाश्रयः परमशुद्धश्च तं त्वां द्विजानामनुपथं पथि पथि लग्नं यत्पुण्यं रजस्तथा श्रीवत्स लक्ष्म च किं पुनीतः पवित्रीकुरुतः। किं किमर्थं च ते उभे अगाः प्राप्तो भूषणत्वेन स्वीकृतवानसि। अतो "यत्सेवया चरणपद्मपवित्ररेणुम्" इत्यादिवचनं लोकसंग्रहमात्रमित्यर्थः ॥ २१ ॥ ❀ ❀ धर्ममूर्तेश्च तवेदमुचितमेवेत्याहुः। धर्मस्येति त्रिभिः। त्रिष्वेव युगेष्वाविर्भवतीति त्रियुगः। यद्वा त्रीणि युगानि युगलानि त्रियुगाः षड्गुणा भगशब्दवाच्याः संत्यस्येति त्रियुगः। हे त्रियुग धर्मरूपस्य तव त्रिभिः पद्भिः स्वैरसाधारणैस्तपःशौचदयाभिः सत्यस्य धर्मविप्लवेऽपि कलावनुवर्तमानत्वात्त्रिभिरित्युक्तम्। भृतं पालितम्। किं कृत्वा नोऽस्माकं वरदया सत्त्वेन तनुवा तन्वा तत्त्वमूर्त्या तदभिघाति तेषां पादानामभिघातकं रजश्च तमश्च निराकृत्य द्विजानां देवतानां च प्रयोजनाय नूनं भृतम्। यद्वा। हिल्लोपे रूपं निरस्येति। अस्माकं तन्निवर्तयेत्यर्थः ॥ २२ ॥ ❀ ❀ आत्मगोपं त्वयैव रक्षणीयं द्विजोत्तमानां कुलम्। यदिह स्फुटं त्वं न गोप्ता न रक्षिता तृन्प्रत्ययांतत्वान्न षष्ठीप्रयोगः। वृषः श्रेष्ठः हे देव पन्था वेदमार्गो नंक्ष्यति नाशं यास्यति ऋषभस्य श्रेष्ठस्य हि यस्मात्तदनर्हणमसूनृतं चाग्रहीष्यत्। तदुक्तं गीतासु। "यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः। स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते" इति ॥ २३ ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

अत्राशयमाह-अयं भाव इति। यतो रमतेऽत इति। ततोऽत्यधिकत्वात्। अन्यदघटनीयत्वमाहुः किं चेति। श्रीवत्सलक्ष्मात्र भृगुपादताडनजातचिह्नं ज्ञेयं "भृग्वंघ्रेर्लक्ष्म श्रीवत्सं रोमावर्त्तमथापरे" इति संहितोक्तेः। श्रीर्वसत्यनेनेति श्रीवत्सः, इह वसतेः साधने सप्रत्यय औणादिकस्तस्य तश्च। स्वार्थेच्छाद्यर्थाभावाद् द्वित्वाभावः। 'प्रयोगमनुसृत्य प्रयोक्तव्यः' इत्युक्तेः। स च श्रीवत्सो विप्रपादसंबंध एव तदुक्तं "विप्रपादाङ्कितस्थाने पद्मवैकुंठयोः सदा। निवसामि हरेः प्रीत्यै दुर्नीते न कदाचन" इति लक्ष्म्या उक्तं नारदं प्रति पुराणांतरेऽत एव श्रीवैकुण्ठेशेन त्रिदेवीपरीक्षायां भृगुं प्रत्युक्तम् "अद्याहं भगवंल्लक्ष्म्या आसमेकांतभाजनम्। वत्स्यत्युरसि मे भूतिर्भवत्पादहतांहसः" इति। इत्यर्थ इति। सर्वमेतल्लोकशिक्षैवेति भावः ॥ २१ ॥ ❀ ❀

१. प्रा० पा०—मानो।

औचित्यमाहुः—धर्मेति। इदं लोकसंग्रहणम् आविर्भवति स्वचिह्नैः स्पष्टमाविर्भवतीत्यर्थः। अनन्यलभ्यत्वादर्थस्यात्र त्रियुगेत्युक्तेस्त्रियुगाविर्भाववानित्यर्थो यन्नलभ्योऽतोऽक्षरार्थमाह–यद्वेति। सद्गुणाः "ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः। ज्ञानवैराग्ययोश्चैव षण्णां भग इतींगना" इति वाक्योक्ता भगशब्दस्यार्थभूताः। सत्यरूपचतुर्थपदानुपादानं त्रियुगापेक्षयेत्याह सत्यस्येति। धर्मस्य विप्लवो यत्र तस्मिन्कलाविति। "तन्वादीनां वेयङुवङौ" तनुं पुपेम, तनुवं पुपेम विपुं पश्य विपुवं पश्य, स्वर्गो लोकः सुवर्गो लोकः त्र्यंबकं त्रियंबकं वरेण्यं वरेणियमिति वैदिक्याम्। पादानां तपःशौचदयानां "तपःशौचदयाहीनो जायते सर्वदा नरः। रजस्तमोभ्यामाविष्टचेता धर्मबहिष्कृतः" इत्यादिपुराणात्। संभवत्वादर्थांतरमाह-यद्वेति। निरुपपदाद्दैवादिकात् 'असु क्षेपणे' इत्यस्मादेतद्रूपम्। इत्यर्थ इति। वयमपि द्विजा अतोऽस्माकं रजस्तमसी नाशयेति भावः॥ २२॥ ❀ ❀ अतिप्रियत्वात् "न ब्राह्मणान्मे दयितं रूपमेतच्चतुर्भुजम्" इत्युक्तेः। स्वदेहतोऽपि प्रियस्य ब्राह्मणकुलस्य रक्षणं तव नातीवाश्चर्यं, वृषः सर्वेप्सितवर्षणाच्छ्रेष्ठः सूनृतं सत्यप्रियवचनं तद्रहितमसूनृतम्। तदपभाचरितग्रहणम् अतोऽस्मास्वघटमानमपि यत्सेवयेत्यादि त्वद्वचः केवलं लोकशिक्षार्थमेव तदिति भावः॥ २३॥

## श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

यो नात्यद्रियत् स परमसौभाग्यनिधिस्त्वमसीति पृथक् वाक्यम्, रजः श्रीवत्सलक्ष्मणी उभे कर्तृभूते ते परमसौभाग्यनिधिं त्वां किं पुनीत इति तु पृथक् वाक्यम्। ते उभे रजः श्रीवत्सलक्ष्मणी कर्मभूते भूषणभूषणाङ्गस्त्वं किमर्थं भूषणत्वेन स्वीकृतवानसीति च पृथक् वाक्यम्। किं पदस्य च स्याच्चैकस्यापि ब्रह्मशब्दवदिति न्यायेनोभयत्र योजना। अतः रजः श्रीवत्सलक्ष्मणोः पावकत्वभूषणत्वासम्भवात् ते त्वामिति कर्मपदमध्याहृत्य व्याख्यातम्। स त्वमित्यत्र तं त्वामिति पाठे स त्वमित्यस्याध्याहारो ज्ञेयः॥ २१॥ ❀ ❀ इदं ब्राह्मणनमनादि पूर्वार्थे त्रीणि युगान्याविर्भावकालाः सन्ति यस्येत तथा व्याख्यानं क्लिष्टकल्पनामयप्रकृतश्लेत्यरुचौ यद्वेति कलावनुवर्त्तमानत्वात् अनुगतत्वात् सत्यस्य प्रतियुगे नाशाभावात् तेन पालनमनुपयुक्तमिति तत्कथनेन किञ्चित्प्रयोजनमतस्त्रिभिरित्युक्तम्। तपआदिभिर्जगत्पालनं रजस्तमोनाशपूर्वकमेवेति पुनस्तन्निरासकथनमधिकम्, अतो यद्वेति नः रज अप्रवृद्धा गमने प्रयोजकं तमश्च शापप्रयोजकं त्वं निरस्येति मध्यमपुरुषस्य हिलोपे रूपम्॥ २२॥ ❀ ❀ तत्तु सर्वश्रेष्ठभवत्कर्तृकमपूजनमप्रियवचनं च प्रमाणं प्रमाणत्वेनाऽग्रहीष्यत् तत् श्रेष्ठकृताचरणस्य प्रमाणत्वेन ग्रहणमुक्तम्॥ २३॥

## श्रीमद्वीरराघवव्याख्या

तां लक्ष्मीं विविक्तैः परिशुद्धैः चरितैः समर्हणैरनुवर्तमानां यो भगवान्नात्याद्रियन्नात्याहृतवान् कुतः यतः यतस्त्वं परमभागवतैरेव प्रकृष्टसंगवान्। अयं भावः एवं हि सा लक्ष्मीर्मेने अयं हि सारग्राही मधुव्रतोऽतिचञ्चलश्चार्चिताङ्घ्रिगतायां तुलस्यां सपरिवारो निश्चलः सन् रमतेऽतोऽङ्घ्रिलावण्यमधिकं स्यात्ततोऽहं वक्षसि स्थितापि योगिजनादिबहुसेवकसंमर्दमङ्गीकृत्यापि तुलस्या सह सापत्न्येनापि चरणौ सेविष्ये इति एवमौत्सुक्येनानुवर्त्तमानामपि तां त्वं परमभागवतप्रसङ्गेनावसरमलभमानो नातीवादृतवानिति यदुक्तं यत्सेवया चरणपद्मपवित्ररेणुमिति तदपि पावित्र्यमिच्छद्भिर्ब्राह्मणाः सेवितव्या इत्येतत्तात्पर्यकमित्याभिप्रेत्याथ येषाममलाङ्घ्रिरजो विभर्मीत्यस्य तात्पर्यं परिष्कुर्वन्तः आहुरर्द्धेन। तमिति। तं धर्ममर्यादाप्रतिष्ठापयितारं श्रियोऽपि समाश्रणीयं लावण्यनिधिं त्वां द्विजानामनुपथं पथि पथि लग्नं यत् पुण्यं रजः तथा श्रीवत्सलक्ष्म च श्रीवत्सचिह्नं च किं पुनीतः पवित्रीकुरुतः किं किमर्थं च ते उभे भगभाजनः निरतिशयसौन्दर्याश्रयः त्वमगाः प्राप्तवानसि भूषणत्वेन स्वीकृतवानसि पुनीतेति पाठान्तरं तदा द्विजानुपथपुण्यरजः पुनीते किं न पुनीत इत्यर्थः। तर्हि कथं रजो विभर्षीति श्रीवत्सलक्ष्म किं किमर्थमगा भूषणत्वेनेति चेद्रजोऽपि तथैव विभर्षीति शङ्कोत्तरत्वेन व्याख्येयम्॥ २१॥ ❀ ❀ एवमलंकारायैव रजो विभर्षीत्यभिधायाथ लोकमर्यादापालकेन भवतावश्यं तत्कर्तव्यमेवेति प्रतिपादयिषवोऽवश्यं लोकमर्यादा भवता पाल्या, अन्यथोत्सीदेयुरिमे लोका इत्यमुमर्थमन्वयव्यतिरेकाभ्यामुपादयन्त आहुस्त्रिभिः। हे त्रियुग! त्रीणि युगानि युग्मानि ज्ञानशक्त्यादिगुणानां षण्णां यस्येति त्रियुगस्तस्य संबोधनं धर्मस्य धर्मरूपस्य ते तव त्रिभिः स्वैरसाधारणैः पद्भिस्तपोदानदयात्मकैर्द्विजदेवतार्थं द्विजदेवतासंरक्षणार्थं तदभिघाति तेषां धर्मपादानामविघातुकं यद्रजस्तमश्च रजस्तमःप्रचुरांस्तान्सत्त्वेन शुद्धसत्त्वमयेन तन्वा मूर्त्यावतारैरित्यर्थः। निरस्य चराचरात्मकमिदं जगद्भृतं नूनं स्वेच्छोपात्तप्राकृतदिव्यमङ्गलशुद्धसत्त्वमयमूर्त्या द्विजदेवतार्थं धर्मविरोधिनो रजस्तमःप्रचुरान्निरस्य कृत्स्नजगत्तपोदानदयाख्यैः धर्मपदैः पोषयसीत्यर्थः॥ २२॥ ❀ ❀ न त्वमिति आत्मना भगवता गोप्यं गोपनीयं रक्षणीयं द्विजोत्तमानां कुलमर्हणेन समर्हणेन सूनृतेन प्रियवाक्येन च यदि श्रेष्ठस्त्वं गोप्ता रक्षिता नचेत् स्वयं धर्माननुतिष्ठंल्लोकांस्तेषु प्रवर्तयसे न चेदित्यर्थः। तर्ह्येव तदैव शिवः श्रेयःसंपादकः तव त्वत्संबंधी वेदपथः वेदमार्गः कर्मोपासनात्मकः नंक्ष्यति। हि यस्मा दृषभस्य यदाचरितं तदेव लोकः प्रमाणं प्रमाणत्वेनाग्रहीष्यत्। तदेव गीतं

यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः। स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते॥ २३॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

एवमितरेभ्योऽधिकं निषेवमाणायामस्यां किमपि प्राप्यप्रयोजनान्तराभावात्पूर्वस्मादपरविशेषो नास्ति किन्तु भागवतानां गुणतारतम्यप्रस्तावे परमभागवतत्वेन प्रशंसाप्रसङ्ग एवेत्याह—यस्तामिति। विविक्तचरितैरनन्यसाधारणसेवाकरणैरनुवर्तमानां तां श्रियं नात्यद्रियत् गुणानां प्रतीयमानत्वात्तदधिकार्थोक्त्या आदरं नाकरोत्। किन्तु परमभागवतत्वेन प्रसङ्गो यस्य स तथोक्तः एवम्विधमाहात्म्यः स त्वं द्विजानामनुपथेनानुगमनेन तत्पादपुण्यरजसा पुनीतिः शुद्धिर्यस्य स द्विजानुपथपुण्यरजः-पुनीतिः। पथ गताविति धातुः श्रीवत्सलक्ष्म श्रीवत्साख्यलाञ्छनमगाः किं भगभाजनत्वं सौभाग्यपात्रत्वं वागच्छः किमित्याक्षेपः। अत इदं भगवदुक्तं सर्वं विप्रस्तुतिपरमिति सिद्धं यद्ययं शास्त्रतात्पर्यार्थः स्यात्तर्हीदं स्तुतिपरं स्यात्तत्कुत इतीयमाशङ्का "हरिभक्तिर्हरेः प्रीतिर्ज्ञानानन्दादयो गुणाः। अधिकारे च मुक्तौ च ब्राह्मवाय्वोश्च तत्रियोः॥ शेषवीन्द्र-हराणां वासवादीनाम्। यथाक्रमं तु विज्ञेया भूमौ करणतोऽन्यथा। देहस्य लक्षणं चैव भूमावप्यन्यथा भवेत्॥ ब्राह्मादिषु क्रमेणैव नित्यं स्याद्देहलक्षणम्। श्रियोऽधिका गुणाः सर्वे सर्वेभ्यो नियमेन तु। उक्ताश्चैवाप्यनुक्ताश्च ततो विष्णोर्न संशयः॥" इत्यनेन परिहृतेति॥ २१॥ ❀ ❀ इतोऽपि द्विजकुलस्य गोपनीयत्वाभिप्रायेण भगवता द्विजावनादिकं क्रियते इति विज्ञापयन्तीत्याह। धर्मस्येति। नूनमन्यत्प्रयोजनमन्तरेण धर्मस्य सर्वधारकस्य धारणाद्भगवान् धर्म इत्यादेर्भगवतस्ते तव स्वैः स्वरूपभूतैस्त्रिभिरनन्ता-सनवैकुण्ठक्षीरसागरशायिभिः पद्भिरंशैर्मूर्तिभिश्चराचरमिदं विश्वं द्विजानां प्रयोजनमुद्दिश्य भृतं रक्षितमित्यन्वयः। हे त्रियुग त्रियुगेष्ववतारो यस्य स तथा संबुद्धिः। तत्प्रतिषेधपक्षनिर्मूलनाभावे रक्षणं कथं संगच्छते इत्यत उक्तं तदभिघातीति। तपआद्यनुष्ठानविरोधिरजस्तमश्च तनवा मूर्त्या निरस्याभिभूय कथं मूर्तिरित्यत उक्तं नो वरदयेति। अस्माकं ज्ञानप्रदाननिरतया किमाख्ययेत्यस्यापि इदमेवोत्तरं वरदया कपिलाख्यया 'कपिलो वरदश्चैव विकल्पश्चेति कथ्यते इत्यतो गुणवाचकस्य विशेष्याभिधेयत्वं कथमिति निरस्तं तापसस्य शान्तस्य कपिलस्य क्षत्रियवदायुधाद्यग्रहणात्कथं विरोधिविनाशकत्व-मित्यत उक्तं सत्त्वेनेति। सत्त्वेन सत्त्ववर्धनेन निरास इति शेषः, तृतीयया सत्त्वगुणस्य कारणमात्रत्वं न मुख्यत्वं कपिलस्यैव मुख्यत्वं ज्ञायते शरेण राम इतिवत् एवं विशेषार्थः कस्मादयं कल्प्यत इति चोद्यम् "अनन्तासनवैकुण्ठक्षीरसागरगैस्त्रिभिः। रक्षां करोति भगवान् कपिलः सत्त्ववर्धनात्। असत्त्वोऽपि रजश्चैव तमश्चापि निरस्यतु।" इत्यनेन निरस्तम्॥ २२॥ ❀ ❀ हे वृष! इन्द्र परमै-श्वर्यवारिधे! यो द्विजदेवतारक्षैकनिरतः स त्वं यद्यदि हि जगति आत्मैव गोपो गोपको यस्य तदात्मगोपं द्विजोत्तमकुलं सुसूनृतेन शोभना मधुरा वाग्यस्य तत्तथा तेन स्वर्हणेन लोकमान्यसत्कारेण न गोप्ता न रक्षितासि। देव! क्रीडादिगुणपूर्ण तर्हि तदानीमेव तव शिवः शुद्धः पन्थाः तत्त्वविषयो ज्ञानमार्गः शिष्टाचारश्च नंक्ष्यति उत्सन्नो भविष्यति। तत्र हेतुगर्भविशेषणमाह। लोक इति। लोक इतरो जनः ऋषभस्य सद्धर्मप्रवृत्तिसमर्थस्य यत्प्रमाणं तद्धयेवाग्रहीष्यत् यद्यदाचरति श्रेष्ठ इत्यादेः॥ २३॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

अतः पूतचरितैः परिचरन्तीमपि नात्याद्रियत् तल्लोकस्यादानात् जगति मुहुः स्थापनाच्च। परमो निष्कामः। अत्र टीकाया-मेकमेव किंपदमुभयथोभयत्र योजितं स्याच्चैकस्यापि ब्रह्मशब्दवदिति न्यायेन॥ २१॥ ❀ ❀ अथ निर्वेदाद्भारतवर्षस्थितिः तत्तद्युगस्वभावाविष्टसाधारणविप्रवन्मान्यतया सदैन्यमाहुः। धर्मस्येति त्रिभिः। पद्भिरिति एकशेषो द्वन्द्वः। एकैकपादस्य त्रिभि-स्त्रिभिरंशैरित्यर्थः। त्रियुगत्वात् कलौ तदाविर्भावाभावेन चतुर्थचतुर्थांशमात्रस्य स्थितत्वात्। ततश्च तेषां कालेन क्रमशो नश्यतामपि तदाविर्भावेनैव च मुहुः पूरणात्त्रिभिरित्युक्तम्। अतोऽभीष्टप्रदयानया तन्वा आकृत्या सत्त्वेन सह तत्पदत्रयात्मकं रजस्तमश्च नोऽस्माकं निराकुरु। यैः पार्षदानां निग्रहानुग्रहादौ प्रवर्त्तिताः स्मः तान् गुणान् निजतनुतेजसा स्वयमपुनरुद्भवान् कुर्वित्यर्थः॥ २२॥ ❀ ❀ तत्प्रमाणं मत्वेति योज्यम्॥ २३॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी।

विविक्तचरितैर्विशुद्धैः परिचरणैः नात्याद्रियत् नातीवादृतवान् अत्रातिशब्देन पत्नीत्वेनैव नाद्रियत भक्तत्वांशेन त्वाद्रि-यतैव यतः परमभागवतेष्वेव प्रकृष्टः सङ्ग आसक्तिर्यस्य सः। स त्वं लक्ष्म्या सदैवापेक्ष्यमाणोऽपि तस्यां निरपेक्षोऽपि ब्राह्मणप्रसादा-देव मां श्रीर्न जहातीति यद् ब्रूषे तत् किंस्विदिति भावः। तथा द्विजानामनुपथं पथि पथि लग्नं यत् पुण्यं रजः तथा श्रीवत्सलक्ष्म च किमगाः प्राप्तवानसि किं तत एव हेतोस्त्वं भगभाजनः षडैश्वर्यवानभूः तथा पुनीतः ते एव पुण्यरजः श्रीवत्सलक्ष्मणी त्वां पवित्रीकुरुत एतत् सर्वं दुर्ज्ञेयं किंस्विदित्यर्थः॥ २१॥ ❀ ❀ किं च विप्रा वयमितः पूर्वं त्वत्तः पराभवं नैव प्राप्ता इत्याहुः धर्मस्येति। त्रिष्वेव युगेषु स्पष्ट आविर्भवसीति हे त्रियुग! यद्वा त्रीणि युगलानि षड्गुणाः भगवच्छब्दवाच्याः सन्त्यस्येति त्रियुग त्रिभिस्तपःशौचदयादिभिः स्वैः असाधारणैः पद्भिः इदं विश्वं भृतं पालितं सत्यस्य धर्मविप्लवेऽपि कलावनुवर्त्तमानत्वात् त्रिभिरित्युक्तं द्विजदेवतार्थं द्विजानां देवतानां च प्रयोजनायैव नूनं भृतं किं कृत्वा नोऽस्माकं वरदायिन्या तनुवा तन्वा तदभिघाति तेषां पादानामभि-घातकं रजस्तमश्च सत्त्वेन सत्त्वगुणेन निरस्य निराकृत्य॥ २२॥ ❀ ❀ तस्मादधुनाप्यस्मासु तवानुग्रह एवायं न तु निग्रह इति

निश्चित्य समाश्वसिम इत्याहुः। द्विजोत्तमानां कुलं आत्मगोपं त्वयैव रक्षणीयं त्वं यदि ह स्पष्टं न गोप्ता गोपायिष्यः वृषो धर्मरूपः श्रेष्ठो वा तर्हि हे देव! पन्थाः वेदमार्गो नङ्क्ष्यति अनङ्क्ष्यन् ऋषभस्य हि यस्मात् तदनर्हणम् असूनृतञ्च अग्रहीष्यन्। यदुक्तं गीतासु 'यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः। स यत्प्रमाणं कुरुते लोकस्तदनुवर्त्तते॥' इति। अतोऽस्मास्वघटमानमपि यत्सेवये- त्यादि त्वद्वचो लोकशिक्षार्थमेवेत्यभिप्रायः॥ २३॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

यस्तु विविक्तचरितैः अन्योपासकसेवाप्रकारभिन्नैः तदसाधारणैः सेवाप्रकारैः अनुवर्तमानामपि नात्याद्रियन् नातीवा- दृतवान् परमभागवतानां ब्रह्मशिवादीनामपि प्रकृष्टः शुद्धार्थं सङ्गो यस्मिन् स त्वं द्विजानामनुपथं पथि पथि लग्नं यत्पुण्यं रजस्तेन पुनीतः पवित्रीकृतः किं यश्च भगभाजनः स्वाभाविकैश्वर्यनिधिः स त्वं श्रीवत्सलक्ष्म अगाः ऐश्वर्यार्थं स्वीकृतवानसि किं न हि भगवन्! यथाश्रुवन्ते वाक्यमुपपन्नमपि तु लोकशिक्षार्थमिति भावः॥ २१॥ ❀ ❀ किञ्च द्विजोत्तमानां रक्षार्थं विश्वं त्वयैव पालितं तद्रक्षाभावे तन्नाशे वेदमार्गनाशः स्यादतो लोकशिक्षार्थं विप्रेऽवनतस्य तव तेजोहानिर्नेत्याहुः। धर्मस्येति त्रिभिः। हे त्रियुग षाड्गुण्य- निधे द्विजेषु या देवता ब्राह्मणजातिस्तद्रक्षार्थं धर्मस्य धर्मरूपस्य ते त्रिभिः सत्त्वेन सत्त्वगुणजन्येन सत्येन सहितैः चतुर्भिरित्यर्थः। स्वैः स्वासाधारणैः तपःशौचदयासत्यैः इदं नूनं निश्चितम्। भृतं पालितम्। किं कृत्वा नो वरदया तनवा मूर्त्या जातावेकवचनं नानामूर्तिभिः तद्वधाति तपआदिघातकं रजस्तमश्च निरस्य निराकृत्य॥ २२॥ ❀ ❀ वृषः श्रेष्ठस्त्वमात्मगोपं भवतैव रक्षणीय- मर्हणेन पूजनेन सूनृतेन प्रियवाक्यसहितेन गोप्ता न रक्षिता तर्ह्येव हे देव! वेदमार्गः नंक्ष्यति नाशं यास्यति ऋषभस्य श्रेष्ठस्य तव तदिदमाचरणं प्रमाणम्। अग्रहीष्यन् "यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः। स यत् प्रमाणं कुरुते लोकस्तदनुवर्तते।" इति श्रीमुखोक्तेश्च॥ २३॥

## श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

यस्तामिति। यः प्रसिद्धो लक्ष्म्याः प्रसादत्वं वदति, सोऽपि वदत्येव, न तु तां मन्यते, यतस्तां नाऽत्याद्रियन्। तत्र हेतुः—परमभागवतेषु प्रकृष्टः सङ्गो यस्येति। ते हि परमा असाधारणाः, लक्ष्मीसहितं नोपासते, अंशेन सेवाया व्यभिचारात्। अतस्तदनुरोधेनाऽपि न लक्ष्म्या सह रमणम्। एतादृशस्त्वं द्विजानामनुपथं यत्पुण्यरजः। भगवतो द्विजानुगमनमेव न सम्भवति, ईश्वरत्वात्। ते हि पादचारिणोऽश्वाध्यैनुवर्तकाश्च। दूरे तद्रजसः पुण्यत्वम्, मार्गरजसोऽपवित्रत्वात्। तेन च पावित्र्यं तदोऽपि दूरे। श्रीवत्सरूपं लक्ष्म चिह्नं किमर्थं त्वमगाः प्राप्तवानसि? यतस्त्वं भगभाजनः सहजश्यादिधर्मयुक्तः॥ २१॥ ❀ ❀ एवं विरोधमुक्त्वा तस्य तात्पर्यं कल्पयन्तो धर्मरक्षार्थं वचनमिति कल्पयितुम्, धर्मो भगवता सर्वथा रक्षित इति धर्मरक्षां हेतुत्वार्थमाह—धर्मस्येति। हे त्रियुग! युगत्रय एव भगवदाविर्भावः, न कलौ। अत एव कलौ धर्मोऽपि नास्ति, रक्षकाभावात्। युगत्रय एव भगवदाविर्भावे तत्रैव रक्षायां च हेतुमाह—त्रिभिः स्वैः पद्भिरिति। भगवांस्त्रिपात्, यज्ञस्य सवनत्रयात्मकत्वात्। स्वैरसाधारणैः। अतो द्विपाच्चतुष्पाच्च लोकसिद्ध इति तद्वैलक्षण्यं न दोषाय। पद्भिरिति वा द्वित्वसङ्ख्या, तेन षड्गुणेषु द्वाभ्यां द्वाभ्यामेकैकस्मिन् युगे धर्मरक्षा। ज्ञानवैराग्याभ्यां सत्ये, यशःश्रीभ्यां त्रेतायाम्, ऐश्वर्यवीर्याभ्यां द्वापर इति कलौ न कोऽप्यव- शिष्यते धर्मो धर्मरक्षकः। किञ्च, सत्त्वेन पाल्यते धर्मः। केवलसत्त्वस्य प्रवृत्तिः सत्ये, रजसा सहितस्य त्रेतायाम्, सत्त्वसंबन्ध- योग्येन रजसा तमसा च द्वापरे धर्मरक्षा। कलौ तु सत्त्वस्य तत्संबन्धिनश्चाऽभावान्न रक्षा। जगदपि भगवता धर्मार्थमेव रक्षितमित्याह—चराचरमिदमिति। यद्यपि धर्मोऽपि भगवान्, जगदपि; तथापि धर्मार्थमेव जगत् पाल्यते। तदाह—द्विजानां देवानां चाऽर्थे इदं जगत् नूनं भृतमिति। ननु स्वल्पेनैवाऽत्र धरणम्, किं सत्त्वेन गुणैर्वेत्याशङ्क्याऽऽह—तस्य जगतोऽभिघाति नाशकं रजश्च तमश्च। विक्षेपेण मारयति रजः आवरणेन तु तमः। उभयथाऽपि जगद्धर्मार्थं न भवति, अतो रजस्तमश्च सत्त्वेन निरस्य नूनं भृतमिति संबन्धः। सत्त्वस्योभयनिराकरणे सामर्थ्यमाह—नो वरदया तनुवेति। ब्रह्मादीनां वेदानामूर्ध्वगतिदातृत्वात् वरदत्वम्, अन्यदभीष्टं प्रयच्छतीति च। तदेव सत्त्वं तनुरूपं जातम्। तनोतीति तनुः। अतोऽनन्तस्वरूपजननसामर्थ्यात् तयोर्निरसनसामर्थ्यम्। अतस्त्वं धर्मरूपो देवब्राह्मणेषु प्रतिष्ठित इति ब्राह्मणोत्कर्षस्तद्रक्षापरनामेत्यन्तः प्रीतिहेतुत्वात् तथोच्यत इति भावः॥ २२॥ ❀ ❀ विपरीते बाधकमाह—न त्वमिति। यदि त्वं द्विजोत्तमकुलं न गोप्ता, तर्ह्येव तव शिवो वेदपन्था नङ्क्ष्यति। तत्र हेतुः लोकोऽग्रहीष्यदिति। ऋषभस्य प्रभोर्यत् प्रमाणम्, तल्लोकोऽग्रहीष्यत्। द्विजोत्तमानां धर्मज्ञानसहितानां कुलं समूहः। यद्यस्मात् कारणात्। यद्वा, कुलमात्मगोपम्, आत्मानं स्वात्मानं वा भवन्तं गोपायतीति। आत्मा स्थितश्चेत् स्वमार्गे गच्छेत्, अत आत्मा प्रथमतो रक्षणीयः। तदनन्तरं स्वमार्गरक्षा। स्वात्मानं प्रति ये समायान्ति येन मार्गेण, स स्वमार्गः। तत्रापि भक्तानामागमनप्रतिबन्धकनिवृत्तिरेव रक्षा। ते चेद्भगवद्रक्षका भवेयुर्धर्मज्ञानयुक्ताश्चेद्भक्तिमार्गप्रवर्तकाः, तदा ते रक्षणीया इत्यर्थः। तेषां रक्षा त्रिविधा: स्वरूपतः, संतोषजननेनाऽन्तः, प्रतिष्ठाजननेन च बहिः। तत्र स्वरूपतो रक्षाऽवतारैः क्रियत एव। अथाऽवशिष्यतेऽन्तर्बहिश्च। तदाह—अर्हणेन सूनृतेनेति। सुष्ठु अर्हणं पूजा कायिकी, तेन बही रक्षा तेषां प्रयोजनसाधिका,

अन्यथा लोकसंमाननाभावे भगवन्मार्गोपदेशो न स्यात् । सूनृतेन चाऽन्तः । परिसंतोपोऽनेनोक्तः । एतस्य सद्भावोऽन्तस्तोपस्य भगवत्कार्यहेतुत्वाय । अतो मार्गप्रवर्तकरक्षाभावे मार्गो नश्येदेव । तर्ह्येवेति पाखण्डप्रवृत्तेः सुगमत्वात् । न च बहूनां मार्गाणां विद्यमानत्वात् किं वेदमार्गेणेत्यत आह—शिव इति । अन्ये याद्दच्छिकाः, कस्यचिदेव दुःखेनाऽपि फलसाधकाः, वेदमार्गस्तु शिवः कल्याणरूपः । ननु ब्राह्मणानां सन्मानाभावे कथं वेदो न रक्षितः स्यादित्याशङ्कयाऽऽह—लोकोऽग्रहीष्यदिति । लोकस्तु स्वामी भगवान् यं मन्यते तमेव मन्यते । ब्राह्मणैरेव वेदमार्गो बोध्यते, नाऽन्यैरिति तेषां संमाननाभावे अप्रवृत्तिः, पाखण्डतुल्यता वा स्यात् । वृषेति संबोधनं धर्मरूपत्वाय, वर्पणाद्वा ॥ २३ ॥

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

यस्तामित्यत्र । प्रसिद्ध इति । भगवानेव । एतादृश इति । लक्ष्म्यनभीप्सुः । किमगा इत्यत्र मूले काकुर्वा प्रश्नो वा । उभयथापि न तस्याः ब्राह्मणप्रसादजन्यत्वम् , किन्तु स्वाभाविकत्वमिति निर्णीतम् ॥ २१ ॥ ❀ ❀ धर्मस्येत्यत्र । तस्येति । 'यत्सेवया' इति 'येषां बिभर्मि' इति वाक्यस्य । लोकसिद्ध इति । स्मृतिसिद्धः । 'मुखेनैकम्' इति श्रुतौ द्वयोरेव सनयोः । पादत्वं सिद्धमिति नैवं त्रिपात्त्वं युक्तमित्यरुच्या पक्षान्तरमाहुः—पद्भिरिति । वा द्वित्वसङ्ख्येति । यथा 'दर्शपूर्णमासाभ्याम्' इत्यत्र यागत्रिक-द्वित्वमादाय द्वि ( त्व ) संख्या; तथाऽत्र गुणद्विकत्रित्वमादाय पद्भिरिति त्रित्वसंख्येति त्रित्वप्रयोजिका गुणगता द्वित्वसङ्ख्येति भिन्न एव प्रकार इति न श्रुतिविरोध इत्यर्थः ॥ २२ ॥ ❀ ❀ न त्वमित्यत्र । विपरीते बाधकमिति । धर्मारक्षणे, वेदमार्गनाशरूपं बाधकम् । तर्कपूर्वं तत्समर्थयन्ति—यदीत्यादि । अत्र यत्पदस्य यदीदि संभावनार्थकत्वं कालार्थकत्वं वा, तर्कवाक्ये चान्वयः । हेतुवाक्ये तु तत्पदस्य विद्यमानत्वेन नित्यसम्बन्धादेव यत्पदप्राप्तिः । अस्मिन् पक्षे यत्पदस्य दूरान्वयात् प्रकारान्तरमन्यत् द्वयमाहुः—द्विजोत्तमानामिति, यद्वेति च । तदेदं हेतुवाक्यम्—यस्माद् द्विजोत्तमकुलं तस्मात्त्वं गोप्तेति, यस्माद्वा आत्मगोपं तस्मात्त्वं गोप्तेति । ततो यदि न गोप्ता, तर्ह्येव वेदपन्था नङ्क्ष्यतीति तत्पदबलादेव यदीत्यस्याध्याहारः । आत्मरक्षकरक्षणस्य कथं वेदमार्गरक्षण-हेतुत्वमित्यत उपपादयन्ति—आत्मा स्थित इत्यादि । वेदमार्गस्य स्वमार्गत्वं समर्थयन्ति—स्वात्मानमित्यादि । स्वमार्गस्वरूपमाहुः—तत्रापीत्यादि । तत्रापीति । स्वमार्गेऽपि । तथा च, प्रवाहनिरूपणे निर्वाह एव रक्षेत्यर्थः । त इति । ब्राह्मणाः । सूनृतेन चेति । रक्षेत्यर्थात् ॥ २३ ॥

### श्रीगिरिधरकृता बालप्रबोधिनी

किञ्च धर्ममूर्तेश्च तवेदमुचितमेवेत्याहुः—धर्मस्येति त्रिभिः । त्रिष्वेव कृतादियुगेष्वाविर्भवतीति त्रियुगः, यद्वा त्रीणि युगानि युगलानि त्रियुगाः षड्गुणाः ज्ञानैश्वर्यादयो भगशब्दवाच्याः सन्ति यस्येति त्रियुगस्तत्सम्बोधनं हे त्रियुग, नोऽस्माकं भक्तानां वरदया अभीष्टप्रदया सत्त्वेन सत्त्वमय्या भगवतस्ते तव तनुवा मूर्त्या स्वेच्छागृहीततत्तदवतारेण तदभिघाति तेषां धर्मपदानाम-भिघातकं यद्रजस्तमश्च तन्निरस्य दूरीकृत्य स्वैः असाधारणैस्त्रिभिस्तपोदानदयात्मकैर्धर्मस्य तव पद्भिर्द्विजानां देवतानां चार्थमिदं चराचरात्मकं विश्वं नूनं निश्चयेन भृतं पालितमित्यन्वयः ॥ २२ ॥ ❀ ❀ अतः ह इति स्फुटमेतत् , आत्मना गोपं रक्षणीयं द्विजो-त्तमानां धर्मज्ञानादिमत्त्वेन ब्राह्मणश्रेष्ठानां कुलं समूहं ससूनृतेन प्रियवाक्यसहितेन सु सम्यगर्हणेन पूजनेन वृषः श्रेष्ठस्त्वं यदि गोप्ता रक्षिता न भवेः स्वयं सम्मानयन् लोकांस्तत्र न प्रवर्तयेः, तर्ह्येव तदैव हे देव तव त्वया प्रवर्त्तितः शिवः श्रेयस्सम्पादकः पन्था कर्मोपासनाद्यात्मकवेदमार्गो नङ्क्ष्यति नाशं यास्यति । हि यस्मात् ऋषभस्य श्रेष्ठस्य तव यदाचरितं तदेव लोकः प्रमाणत्वेनाग्रहीष्यत् ग्रहीष्यति ॥ २३ ॥

### हिन्दी अनुवाद

किन्तु अपने पवित्र चरित्रोंसे निरन्तर सेवामें तत्पर रहनेवाली उन लक्ष्मीजीका भी आप विशेष आदर नहीं करते, आप तो अपने भक्तोंसे ही विशेष प्रेम रखते हैं । आप स्वयं ही सम्पूर्ण भजनीय गुणोंके आश्रय हैं; क्या जहाँ-तहाँ विचरते हुए ब्राह्मणोंके चरणोंमें लगनेसे पवित्र हुई मार्गकी धूलि और श्रीवत्सका चिह्न आपको पवित्र कर सकते हैं ? क्या इनसे आपकी शोभा बढ़ सकती है ? ॥ २१ ॥ ❀ ❀ भगवन् ! आप साक्षात् धर्मस्वरूप हैं । आप सत्यादि तीनों युगोंसे प्रत्यक्षरूपसे विद्यमान रहते हैं तथा ब्राह्मण और देवताओंके लिये तप, शौच और दया—अपने इन तीन चरणोंसे इस चराचर जगत्की रक्षा करते हैं । अब आप अपनी शुद्धसत्त्वमयी वरदायिनी मूर्तिसे हमारे धर्मविरोधी रजोगुण-तमोगुणको दूर कर दीजिये ॥ २२ ॥ ❀ ❀ देव ! यह ब्राह्मणकुल आपके द्वारा अवश्य रक्षणीय है । यदि साक्षात् धर्मरूप होकर भी आप सुमधुर वाणी और पूजनादिके द्वारा इस उत्तम कुलकी रक्षा न करें तो आपका निश्चित किया हुआ कल्याणमार्ग ही नष्ट हो जाय; क्योंकि लोक तो श्रेष्ठ पुरुषोंके आचरणको ही प्रमाणरूपसे ग्रहण करता है ॥ २३ ॥

**तत्तेऽनभीष्टमिव सत्त्वनिधेर्विधित्सोः क्षेमं जनाय निजशक्तिभिरुद्धृतारेः ।**
**नैतावता त्र्यधिपतेर्बत विश्वभर्तुस्तेजः क्षतं त्ववनतस्य स ते विनोदः ॥ २४ ॥**

निश्चित्य समाश्वसिम इत्याहुः । द्विजोत्तमानां कुलं आत्मगोपं त्वयैव रक्षणीयं त्वं यदि ह स्पष्टं न गोप्ता गोपायिष्यः वृषो धर्मरूपः श्रेष्ठो वा तर्हि हे देव ! पन्थाः वेदमार्गो नङ्क्ष्यति अनङ्क्ष्यत् ऋषभस्य हि यस्मात् तदनर्हणम् असूनृतञ्च अग्रहीष्यत् । यदुक्तं गीतासु 'यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः । स यत्प्रमाणं कुरुते लोकस्तदनुवर्त्तते ।।' इति । अतोऽस्मास्वघटमानमपि यत्सेवयेत्यादि त्वद्वचो लोकशिक्षार्थमेवेत्यभिप्रायः ।। २३ ।।

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

यस्तु विविक्तचरितैः अन्योपासकसेवाप्रकारभिन्नैः तदसाधारणैः सेवाप्रकारैः अनुवर्तमानामपि नात्याद्रियत् नातीवादृतवान् परमभागवतानां ब्रह्मशिवादीनामपि प्रकृष्टः शुद्धार्थं संगो यस्मिन् स त्वं द्विजानामनुपथं पथि पथि लग्नं यत्पुण्यं रजस्तेन पुनीतः पवित्रीकृतः किं यश्च भगभाजनः स्वाभाविकैश्वर्यैनिधिः स त्वं श्रीवत्सलक्ष्म अगाः ऐश्वर्यार्थं स्वीकृतवानसि किं न हि भगवन् ! यथाश्रुतन्ते वाक्यमुपपन्नमपि तु लोकशिक्षार्थमिति भावः ।। २१ ।। ❀ ❀ किञ्च द्विजोत्तमानां रक्षार्थं विश्वं त्वयैव पालितं तद्रक्षाभावे तन्नाशे वेदमार्गनाशः स्यादतो लोकशिक्षार्थं विप्रेऽवनतस्य तव तेजोहानिर्नेत्याहुः । धर्मस्येति त्रिभिः । हे त्रियुग षाड्गुण्यनिधे द्विजेषु या देवता ब्राह्मणजातिस्तद्रक्षार्थं धर्मस्य धर्मरूपस्य ते त्रिभिः सत्त्वेन सत्त्वगुणजन्येन सत्येन सहितैः चतुर्भिरित्यर्थः । स्वैः स्वासाधारणैः तपःशौचदयासत्यैः इदं नूनं निश्चितम् । भृतं पालितम् । किं कृत्वा नो वरदया तनवा मूर्त्या जातावेकवचनं नानामूर्तिभिः तदवघाति तपआदिघातकं रजस्तमश्च निरस्य निराकृत्य ।। २२ ।। ❀ ❀ वृषः श्रेष्ठस्त्वमात्मगोपं भवतैव रक्षणीयमर्हणेन पूजनेन सूनृतेन प्रियवाक्यसहितेन गोप्ता न रक्षिता तर्ह्येव हे देव ! वेदमार्गः नंक्ष्यति नाशं यास्यति ऋषभस्य श्रेष्ठस्य तव तदिदमाचरणं प्रमाणम् । अग्रहीष्यत् "यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः । स यत् प्रमाणं कुरुते लोकस्तदनुवर्तते ।" इति श्रीमुखोक्तेश्च ।। २३ ।।

## श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

यस्त्वामिति । यः प्रसिद्धो लक्ष्म्याः प्रसादत्वं वदति, सोऽपि वदत्येव, न तु तां मन्यते, यतस्तां नाऽत्याद्रियत् । तत्र हेतुः—परमभागवतेषु प्रकृष्टः सङ्गो यस्येति । ते हि परमा असाधारणाः, लक्ष्मीसहितं नोपासते, अंशेन सेवाया व्यभिचारात् । अतस्तदनुरोधेनाऽपि न लक्ष्म्या सह रमणम् । एतादृशस्त्वं द्विजानामनुपथं यत्पुण्यरजः । भगवतो द्विजानुगमनमेव न सम्भवति, ईश्वरत्वात् । ते हि पादचारिणोऽर्थाद्ध्येनुवर्तकाश्च । दूरे तद्रजसः पुण्यत्वम् , मार्गरजसोऽपवित्रत्वात् । तेन च पावित्र्यं तन्नोऽपि दरे । श्रीवत्सरूपं लक्ष्म चिह्नं किमर्थं त्वमगाः प्राप्तवानसि ? यतस्त्वं भगभाजनः सहजश्र्यादिधर्मयुक्तः ।। २१ ।। ❀ ❀ एवं तस्य तात्पर्यं कल्पयन्तो धर्मरक्षार्थं वचनमिति कल्पयितुम् , धर्मो भगवता सर्वथा रक्षित इति धर्मरक्षां हेतुत्वार्थमाह—धर्मस्येति । हे त्रियुग ! युगत्रय एव भगवदाविर्भावः, न कलौ । अत एव कलौ धर्मोऽपि नास्ति, रक्षकाभावात् । युगत्रय एव भगवदाविर्भावे तत्रैव रक्षायां च हेतुमाह—त्रिभिः स्वैः पद्भिरिति । भगवांस्त्रिपात् , यज्ञस्य सवनत्रयात्मकत्वात् । स्वैरसाधारणैः । अतो द्विपाच्चतुष्पाच्च लोकसिद्ध इति तद्वैलक्षण्यं न दोषाय । पद्भिरिति वा द्वित्वसङ्ख्या, तेन षड्गुणेषु द्वाभ्यां द्वाभ्यामेकैकस्मिन् युगे धर्मरक्षा । ज्ञानवैराग्याभ्यां सत्ये, यशःश्रीभ्यां त्रेतायाम् , ऐश्वर्यवीर्याभ्यां द्वापर इति कलौ न कोऽप्यवशिष्यते धर्मो धर्मरक्षकः । किञ्च, सत्त्वेन पाल्यते धर्मः । केवलसत्त्वस्य प्रवृत्तिः सत्ये, रजसा सहितस्य त्रेतायाम् , सत्त्वसंबन्धयोग्येन रजसा तमसा च द्वापरे धर्मरक्षा । कलौ तु सत्त्वस्य तत्संबन्धिनश्चाऽभावान्न रक्षा । जगदपि भगवता धर्मार्थमेव रक्षितमित्याह—चराचरमिदमिति । यद्यपि धर्मोऽपि भगवान् , जगदपि; तथापि धर्मार्थमेव जगत् पाल्यते । तदाह—द्विजानां देवानां चाऽर्थे इदं जगत् नूनं भृतमिति । ननु स्वरूपेणैवाऽत्र धरणम् , किं सत्त्वेन गुणैर्वेत्याशङ्क्याऽऽह—तस्य जगतोऽभिघाति नाशकं रजश्च तमश्च । विक्षेपेण मारयति रजः; आवरणेन तु तमः । उभयथाऽपि जगद्धर्मार्थं न भवति, अतो रजस्तमश्च सत्त्वेन निरस्य नूनं भृवनिति संबन्धः । सत्त्वस्योभयनिराकरणे सामर्थ्यमाह—नो वरदया तनुवेति । ब्रह्मादीनां वेदानामूर्ध्वगतिदातृत्वात् वरदत्वम् , अन्यदपीष्टं प्रयच्छतीति च । तदेव सत्त्वं तनुरूपं जातम् । तनोतीति तनुः । अतोऽनन्तस्वरूपजननसामर्थ्यात् तयोर्निरसनसामर्थ्यम् । अतस्त्वं धर्मरूपो देवब्राह्मणेषु प्रतिष्ठित इति ब्राह्मणोत्कर्षस्तद्रक्षापरनामेत्यन्तः प्रीतिहेतुत्वात् तथोच्यत इति भावः ।। २२ ।। ❀ ❀ विपरीते बाधकमाह—न त्वमिति । यदि त्वं द्विजोत्तमकुलं न गोप्ता, तर्ह्येव तव शिवो वेदपन्था नङ्क्ष्यति । तत्र हेतुः लोकोऽग्रहीष्यदिति । ऋषभस्य प्रभोर्यत् प्रमाणम् , तल्लोकोऽग्रहीष्यत् । द्विजोत्तमानां धर्मज्ञानसहितानां कुलं समूहः । यद्यस्मात् कारणात् । यद्वा, कुलमात्मगोपम् , आत्मानं स्वात्मानं वा भवन्तं गोपायतीति । आत्मा स्थितश्चेत् स्वमार्गे गच्छेत् , अत आत्मा प्रथमतो रक्षणीयः । तदनन्तरं स्वमार्गरक्षा । स्वात्मानं प्रति ये समायान्ति येन मार्गेण, स स्वमार्गः । तत्रापि भक्तानामागमनप्रतिबन्धकनिवृत्तिरेव रक्षा । ते चेद्भगवद्रक्षका भवेयुर्धर्मज्ञानयुक्ताश्चेद्भक्तिमार्गप्रवर्तकाः, तदा ते रक्षणीया इत्यर्थः । तेषां रक्षा त्रिविधा; स्वरूपतः, संतोषजननेनाऽन्तः, प्रतिष्ठाजननेन च बहिः । तत्र स्वरूपतो रक्षाऽवतारैः क्रियत एव । अथाऽवशिष्यतेऽन्तर्बहिश्च । तदाह—स्वर्हणेन सुसूनृतेनेति । सुष्ठु अर्हणं पूजा कायिकी, तेन बही रक्षा तेषां प्रयोजनसाधिका,

अन्यथा लोकसंमाननाभावे भगवन्मार्गोपदेशो न स्यात् । सूनृतेन चाऽन्तः । परिसंतोषोऽनेनोक्तः । एतस्य सद्भावोऽन्तस्तोषस्य भगवत्कार्यहेतुत्वाय । अतो मार्गप्रवर्तकरक्षाभावे मार्गो नश्येदेव । तर्ह्येवेति पाखण्डप्रवृत्तेः सुगमत्वात् । न च बहूनां मार्गाणां विद्यमानत्वात् किं वेदमार्गेणेत्यत आह—शिव इति । अन्ये याद्दच्छिकाः, कस्यचिदेव दुःखेनाऽपि फलसाधकाः, वेदमार्गस्तु शिवः कल्याणरूपः । ननु ब्राह्मणानां सन्मानाभावे कथं वेदो न रक्षितः स्यादित्याशङ्क्याऽऽह—लोकोऽग्रहीष्यदिति । लोकस्तु स्वामी भगवान् यं मन्यते तमेव मन्यते । ब्राह्मणैरेव वेदमार्गो बोध्यते, नाऽन्यैरिति तेषां संमाननाभावे अप्रवृत्तिः, पाखण्डतुल्यता वा स्यात् । वृषेति संबोधनं धर्मरूपत्वाय, वर्षणाद्वा ॥ २३ ॥

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

यस्यामित्यत्र । प्रसिद्ध इति । भगवानेव । एतादृश इति । लक्ष्म्यनभीप्सुः । किमगा इत्यत्र मूले काकुर्वा प्रश्नो वा । उभयथापि न तस्याः ब्राह्मणप्रसादजन्यत्वम्, किन्तु स्वाभाविकत्वमिति निर्णीतम् ॥ २१ ॥ ❀ ❀ धर्मस्येत्यत्र । तस्येति । 'यत्सेवया' इति 'येषां बिभर्मि' इति वाक्यस्य । लोकसिद्ध इति । स्मृतिसिद्धः । 'मुखेनैकम्' इति श्रुतौ द्वयोरेव सनयोः । पादत्वं सिद्धमिति नैवं त्रिपात्त्वं युक्तमित्यरुच्या पक्षान्तरमाहुः—पद्भिरिति । वा द्वित्वसङ्ख्येति । यथा 'दर्शपूर्णमासाभ्याम्' इत्यत्र यागत्रिक-द्वित्वमादाय द्वि ( त्व ) संख्या; तथाऽत्र गुणद्विकत्रित्वमादाय पद्भिरिति त्रित्वसंख्येति त्रित्वप्रयोजिका गुणगता द्वित्वसङ्ख्येति भिन्न एव प्रकार इति न श्रुतिविरोध इत्यर्थः ॥ २२ ॥ ❀ ❀ न त्वमित्यत्र । विपरीते बाधकमिति । धर्मारक्षणे, वेदमार्गनाशरूपं बाधकम् । तर्कपूर्वं तत्समर्थयन्ति—यदीत्यादि । अत्र यत्पदस्य यदीदि संभावनार्थकत्वं कालार्थकत्वं वा, तर्कवाक्ये चान्वयः । हेतुवाक्ये तु तत्पदस्य विद्यमानत्वेन नित्यसम्बन्धादेव यत्पदप्राप्तिः । अस्मिन् पक्षे यत्पदस्य दूरान्वयात् प्रकारान्तरमन्यत् द्वयमाहुः—द्विजोत्तमानामिति, यद्वेति च । तदेदं हेतुवाक्यम्—यस्माद् द्विजोत्तमकुलं तस्मात्त्वं गोप्तेति, यस्माद्वा आत्मगोपं तस्मात्त्वं गोप्तेति । ततो यदि न गोप्ता, तर्ह्येव वेदपन्था नङ्क्ष्यतीति तत्पदबलादेव यदीत्यस्याध्याहारः । आत्मरक्षकरक्षणस्य कथं वेदमार्गरक्षण-हेतुत्वमित्यत उपपादयन्ति—आत्मा स्थित इत्यादि । वेदमार्गस्य स्वमार्गत्वं समर्थयन्ति—स्वात्मानमित्यादि । स्वमार्गस्वरूपमाहुः—तत्रापीत्यादि । तत्रापीति । स्वमार्गेऽपि । तथा च, प्रवाहनिरूपणे निर्वाह एव रक्षेत्यर्थः । त इति । ब्राह्मणाः । सूनृतेन चेति । रक्षेत्यर्थात् ॥ २३ ॥

### श्रीगिरिधरकृता बालप्रबोधिनी

किञ्च धर्ममूर्तेश्च तवेदमुचितमेवेत्याहुः—धर्मस्येति त्रिभिः । त्रिष्वेव कृतादियुगेष्वाविर्भवतीति त्रियुगः, यद्वा त्रीणि युगानि युगलानि त्रियुगाः षड्गुणाः ज्ञानैश्वर्यादयो भगशब्दवाच्याः सन्ति यस्येति त्रियुगस्तत्सम्बोधनं हे त्रियुग, नोऽस्माकं भक्तानां वरदया अभीष्टप्रदया सत्त्वेन सत्त्वमय्या भगवतस्ते तव तनुवा मूर्त्या स्वेच्छागृहीततत्तदवतारेण तदभिघाति तेषां धर्मपदानाम-भिघातकं यद्रजस्तमश्च तन्निरस्य दूरीकृत्य स्वैः असाधारणैस्त्रिभिस्तपोदानदयात्मकैर्धर्मस्य तव पद्भिर्द्विजानां देवतानां चार्थमिदं चराचरात्मकं विश्वं नूनं निश्चयेन भृतं पालितमित्यन्वयः ॥ २२ ॥ ❀ ❀ अतः ह इति स्फुटमेतत्, आत्मना गोपं रक्षणीयं द्विजो-त्तमानां धर्मज्ञानादिमत्त्वेन ब्राह्मणश्रेष्ठानां कुलं समूहं ससूनृतेन प्रियवाक्यसहितेन सु सम्यगर्हणेन पूजनेन वृषः श्रेष्ठस्त्वं यदि गोप्ता रक्षिता न भवेः स्वयं सम्मानयन् लोकांस्तत्र न प्रवर्तयेः, तर्ह्येव तदैव हे देव तव त्वया प्रवर्त्तितः शिवः श्रेयस्सम्पादकः पन्था कर्मोपासनाद्यात्मकवेदमार्गो नङ्क्ष्यति नाशं यास्यति । हि यस्मात् ऋषभस्य श्रेष्ठस्य तव यदाचरितं तदेव लोकः प्रमाणत्वेनाग्रहीष्यत् ग्रहीष्यति ॥ २३ ॥

### हिन्दी अनुवाद

किन्तु अपने पवित्र चरित्रोंसे निरन्तर सेवामें तत्पर रहनेवाली उन लक्ष्मीजीका भी आप विशेष आदर नहीं करते, आप तो अपने भक्तोंसे ही विशेष प्रेम रखते हैं । आप स्वयं ही सम्पूर्ण भजनीय गुणोंके आश्रय हैं; क्या जहाँ-तहाँ विचरते हुए ब्राह्मणोंके चरणोंमें लगनेसे पवित्र हुई मार्गकी धूलि और श्रीवत्सका चिह्न आपको पवित्र कर सकते हैं ? क्या इनसे आपकी शोभा बढ़ सकती है ? ॥ २१ ॥ ❀ ❀ भगवन् ! आप साक्षात् धर्मस्वरूप हैं । आप सत्यादि तीनों युगोंसे प्रत्यक्षरूपसे विद्यमान रहते हैं तथा ब्राह्मण और देवताओंके लिये तप, शौच और दया—अपने इन तीन चरणोंसे इस चराचर जगत्की रक्षा करते हैं । अब आप अपनी शुद्धसत्त्वमयी वरदायिनी मूर्तिसे हमारे धर्मविरोधी रजोगुण-तमोगुणको दूर कर दीजिये ॥ २२ ॥ ❀ ❀ देव ! यह ब्राह्मणकुल आपके द्वारा अवश्य रक्षणीय है । यदि साक्षात् धर्मरूप होकर भी आप सुमधुर वाणी और पूजनादिके द्वारा इस उत्तम कुलकी रक्षा न करें तो आपका निश्चित किया हुआ कल्याणमार्ग ही नष्ट हो जाय; क्योंकि लोक तो श्रेष्ठ पुरुषोंके आचरणको ही प्रमाणरूपसे ग्रहण करता है ॥ २३ ॥

**तत्तेऽनभीष्टमिव सत्त्वनिधेर्विधित्सोः क्षेमं जनाय निजशक्तिभिरुद्धृतारेः ।**
**नैतावता त्र्यधिपतेर्बत विश्वभर्तुस्तेजः क्षतं त्ववनतस्य स ते विनोदः ॥ २४ ॥**

यं वानयोर्दममधीश भवान् वि'धत्ते वृत्तिं नु वा तदनुमन्महि निर्व्यलीकम्।
अस्मासु वा य उचितो ध्रियतां स दण्डो येऽनागसौ वयमयुङ्क्ष्महि किल्बिषेण ॥ २५ ॥

श्रीभगवानुवाच

एतौ सुरेतरगतिं प्रतिपद्य सद्यः संरम्भसम्भृतसमाध्यनुबद्धयोगौ।
भूयः सकाशमुपयास्यत आशु यो वः शापो मयैव नि'मितस्तदवैत विप्राः ॥ २६ ॥

ब्रह्मोवाच

अथ ते मुनयो दृष्ट्वा नयनानन्दभाजनम्। वैकुण्ठं तदधिष्ठानं विकुण्ठं च स्वयंप्र'भम् ॥ २७ ॥
भगवन्तं परिक्रम्य प्रणिपत्यानुमा'न्य च। प्रतिजग्मुः प्रमुदिताः शंसन्तो वैष्णवीं श्रियम् ॥ २८ ॥

श्रीधरस्वामिविरचिता भावार्थदीपिका

नश्यत्विति चेत्तत्राहुः। तद्वेदमार्गनाशनम्। इवेति लोकोक्तिः। सत्त्वनिधित्त्वाज्जनाय क्षेमं शं विधातुमिच्छोरत एव निजशक्तिभी राजादिभिरुत्पाटितधर्मप्रतिपक्षस्य अतस्तव ब्रह्मकुलेऽवनतिर्युक्तैव। ननु महतोऽन्येष्ववनतिस्तेजोहानिकरी। तत्राहुः एतावता तु धर्मत्राणप्रयोजनेनावनतस्य नमनं कृतवतस्तव तेजः प्रभावो न क्षतं न क्षीणं यतः स नमनादिस्ते विनोदः ॥ २४ ॥ ❀ ❀ शापाग्रहं परित्यज्य विज्ञापयंति यं वाऽन्यं दंडं विधास्यति भवान्वृत्तिं तु अधिकजीविकां वा तत्सर्वमनुमन्यामहे। ये वयं निरपराधावेतौ किल्बिषेण शापेनायुंक्ष्महि योजितवंतः ॥ २५ ॥ ❀ ❀ मत्कारितत्वाच्छापस्य युष्माकं नापराध इत्याश्वासयन्नाह। एतौ सद्य एवासुरयोनिं प्राप्य भूयोऽप्याशु मत्समीपमागमिष्यतः। संरंभेण क्रोधावेशेन संभृतः संवृद्धो यः समाधिरेकाग्रता तेनानुबद्धो दृढीकृतो योगो ययोः। हे विप्रा यो वः शापो युष्मत्कृतः शापस्तदिति स मयैव निमितो निर्मित इत्यवैत जानीत ॥ २६ ॥ ❀ ❀ नेत्रोत्सवजनकं विकुंठं हरिं तन्निवासं च वैकुंठलोकम्। स्वयं प्रकाशं प्रकाशांतरानपेक्षम्। सत्त्वपरिणामत्वात् ॥ २७ ॥ ❀ ❀ अनुमान्यानुज्ञाप्य परिक्रम्य प्रदक्षिणीकृत्य वैष्णवीं श्रियं वैकुंठे वर्णिताम् ॥ २८ ॥

श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

स्वयमाक्षिप्य समाधत्ते नश्यत्विति इवेति। नात्रेवशब्द उपमाने किं त्ववधारणेऽनभीष्टमेवेत्यर्थः। लोकोक्तिरज्ञोक्तिः। 'लोकोऽज्ञे भुवने जने' इति धरणिः। अत एव जनक्षेमविधानेच्छुत्वादेव। अतो धर्मप्रतिपक्षहंतृत्वात्। अत्राक्षिपति नन्विति। विनोदो विलासः कौतुकविशेष वेत्यर्थः ॥ २४ ॥ ❀ ❀ वस्तुतस्तु-दुरवगाहाभिप्रायं त्वां कायवाङ्मनोभिरवनता वयमिदं निवेदयामो नास्माकं शापाद्याग्रह इत्याह-शापाग्रहमिति। अनुमन्यामहे स्वच्छंदेनैवैतौ तां विधेहि अस्मद्दत्तशापस्तु रसातलं गच्छत्विति भावः। पुनश्च सभयाश्चुकंपमाहुः-अस्मास्विति ॥ २५ ॥ ❀ ❀ आश्वासयन्मा भैष्टेति सांत्वयन्। योगो मत्संयोगः। निमितः निरत्र निरर्थेऽनेकार्थत्वादुपसर्गाणां छांदसत्वाद्वोपसर्गरेफलोपः। अनयोर्मत्परमभक्तयोरसुरभावसिद्ध्यर्थं युष्मान्वैकुंठमानीय द्वारपालाविमौ शुद्धसत्त्वस्वरूपावपि ब्राह्मणमात्रपरमभक्तावपि युष्मत्प्रातिकूल्ये प्रवर्त्य युष्माकमात्मारामचूडामणीनामपि क्रोधमुत्पाद्य शापमुपगमितौ मयैव न तु मत्पार्षदयोर्नापि युष्माकं कोऽप्यपराध इति भावः। ननु भक्तवत्सलस्यापि तव भक्ताभ्यामीदृशदुःखदाने प्रवृत्तौ किं कारणं तत्राह-हे विप्रास्तत्कारणमवैत परामृश्य सर्वज्ञत्वेनैवावगच्छत किं मत्कथनेन तच्च कारणं जयविजययोरेव प्रेमविजृं'भिता काचिदिच्छा सा च भोः प्रभुवर देवाधिदेव वैकुंठनाथ अन्यत्राल्पबलत्वादस्मासु प्रातिकूल्याभावाद्यदि तत्र भवतो युयुत्सासुखं न संपद्यते तदावामेव केनापि प्रकारेण प्रतिकूलीकृत्य तद्युद्धसुखमनुभूयतामित्यावयोस्त्वत्सर्वसुखपरिपूर्णतायामणुमात्रमपि न्यूनत्वमसहमानयोः किंकरयोः प्रार्थनाहठः स्वभक्तवात्सल्यगुणमपि लघूकृत्य निष्पाद्यतामिति "मनोऽनुलापमयी रसो वै सरस" इति। "आनंदमयः" इति "सैषा नंदमयस्य मीमांसा भवति" इत्यादिश्रुतिविवृतिषु भगवतः शृं'गारादिसर्वरसपरिपूर्त्तिविवेचनप्रसंगभवा ज्ञेया ततश्च स्वेच्छामयस्येति "मद्भक्तानां विनोदाय करोमि विविधाः क्रियाः" इति तत्प्रकारसंपादने भगवतोऽपीच्छाजनीति रहस्यस्य प्रकटानुक्तिरहो महदपराधाद्वैकुंठादपि परमसिद्धानामप्यधः पातो भवेत्किं पुनर्मर्त्यलोकात्साधकाभासानामस्माकमिति साधकभक्तान्महदपराधेषु सावधानीकर्त्तुं ज्ञेया। प्रकृतमनुसरामः सकाशं "समीपे सप्रकाशे च सकाशः ससुखेऽपि च" इति निरुक्तिः। समीपं कृष्णसायुज्यं प्राप्य तदंतर्द्धानावसरे उपयास्यतेति। अत्रोपयोगिवृत्तं शैवेऽपि तौ प्रति

---

१. प्रा० पा०—विचष्टे। २. प्रा० पा०—निहित०। ३. प्रा० पा०—प्रभुः। ४. प्रा० पा०—मान्य च।

कुमारोक्तिः । "भक्तिभावं समाश्रित्य सप्तभिर्जन्मभिस्त्विह । वैरभावे त्रिभिः स्थानं जन्मभिरिदमाप्स्यथः" इति । पुनर्हरिं प्रति "यथेच्छा ते हरे चाद्य तथैव त्रियतां त्वया" इति ॥ २६ ॥ ❀ ❀ अथ भगवदाश्वासनोत्तरम् ॥ २७ ॥ ❀ ❀ वैष्णवीं वैकुंठगां श्रियं संपत्तिं श्लाघयंतः ॥ २८ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

लोकोक्तिरिति । वस्तुतस्त्वनभीष्टमेवेत्यर्थः । सत्त्वनिधेरिति हेतुगर्भं विशेषणम् । सत्त्वनिधित्वात् समग्रसत्त्वाश्रयत्वात् अतएव क्षेमविधित्वादेव अत उत्पाटितधर्मप्रतिपक्षत्वात् ब्रह्मकुले वेदोक्तधर्मानुष्ठातरि विश्वभर्तुरिति तेजसोऽक्षतत्वे हेतुगर्भं विशेषणम् । अपरिच्छेद्यतेजस्त्वादिति भावः । हेत्वन्तरं यतो हेतोः नहि कन्दुकादिविनोदेन राज्ञस्तेजः क्षतं स्यादिति भावः ॥ २४ ॥ ❀ ❀ पूर्वमेव वृत्तेः सत्त्वादधिकामित्यध्याहृतं तत्सर्वमधिकदण्डजीविकाप्रदानादि ॥ २५ ॥ ❀ ❀ योगो मय्येव चित्तवृत्तिनिरोधः । ब्रह्मदिनापेक्षया आश्वित्युक्तम् । मत्समीपमिति पूर्वं कृष्णसायुज्यं प्राप्येति शेषः । श्रीदशमे तथोक्तेः सामीप्य-प्राप्तिश्च श्रीकृष्णान्तर्द्धाने सति तस्मिन्प्रविष्टस्य विकुण्ठासुतस्य वैकुण्ठलोकगमने तेनैव सहेति ज्ञेयम् ॥ २६ ॥ ❀ ❀ अथेति युग्मकम् । विकुण्ठमुपाध्यावरणशून्यं सत्त्वपरिणामत्वाद्विशुद्धसत्त्वविलासत्वात् शंसन्तः प्रशसंन्त इति तत्सम्पत्तेर्ब्रह्मानन्दतोऽपि वैशिष्ट्यं व्यञ्जितम् ॥ २७ ॥ २८ ॥

### श्रीमद्वीरराघवव्याख्या

न मे पार्थास्ति कर्तव्यं त्रिपु लोकेपु किंचन । नानवाप्तमवाप्तव्यं वर्त एव च कर्मणि ॥
यदि ह्यहं न वर्तेयं जातु कर्मण्यतन्द्रितः । मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः ॥
उत्सीदेयुरिमे लोका न कुर्यां कर्म चेदहम् । संकरस्य च कर्त्ता स्यामुपहन्यामिमाः प्रजाः ॥

इति त्वयैव गीतत्वाद्वेदमार्गनाशनं तवानुचितमेवेत्याहुः । तदिति । सत्त्वनिधेः शुद्धसत्त्वाश्रयात् एवं जनाय क्षेमं विधातुं कर्तुमिच्छोः निजशक्तिभिः निजावतारैरुद्धृताः निर्मूलिताः अरयो धर्मविरोधिनो यस्य तव तद्वेदमार्गनाशनमनभीष्टमिवानभीष्ट-मेवेत्यर्थः । हे त्र्यधिपते त्रिलोकाधिपते विश्वस्य भर्तुरुद्धारकस्य पोषकस्य वावनतस्य ब्राह्मणान्प्रणतस्य अत्र प्रणतस्येति रजोधारणस्या-प्युपलक्षणं तावता प्रणतिमात्रेण तेजः प्रभावः न क्षतं न विहतं किंतु स प्रणामः ते विनोदः लोकप्रेरणरूपः ॥ २४ ॥ ❀ ❀ एवं यथामति भगवदुक्तीनां तात्पर्यं परिष्कृत्य तच्चिकीर्षितमजानन्तः स्वापराधानुगुणं दण्डधारणं च निवेदयन्त आहुः । वयमिति । हे अधीश ! तवानयोर्भृत्ययोः यं वा दममस्माभिर्विहितमन्यं वा दण्डं वृत्तिं यथापूर्वमत्र लोके वर्तनं च विधत्ते तन्निर्व्यलीकं सत्यं यथानुमन्महेऽनुमान्यामहेऽस्मासु चोचितः स्वापराधानुरूपः यो दण्डः स क्रियतां भवद्भिः किमपराद्धमिति चेत् ये वयमनागसौ निरपराधिनौ किल्बिषेण शापेनायुंक्ष्महि योजितवन्तः द्वाःस्थयोरपूर्वजननिवारणं स्वाभाविकमित्यभिप्रायेणानागसावित्युक्तम् ॥ २५ ॥ ❀ ❀ एवं मुनिभिरावेदितहार्दो मुनीनां भृत्ययोश्चानुग्रहं कर्तुमना भगवान्मुनीन्प्रत्याहैकेन एतौ पार्षदौ सुरेतरगतिं-मासुरं जन्म प्रतिपद्य जन्मप्रभृति मयि यः संरम्भः क्रोधस्तेन संभृतः संजातः समाधिरनवरतभावना तेनानुबद्धोऽनुवृत्तः योगः मत्संबन्धो ययोस्तावत एव पुनः सकाशं मत्समीपमुपयास्यतः । हे विप्राः ! च युष्माकं यः शापः स मयैव युष्मन्मुखेन विहित इत्यवैतावगच्छत जानीतेति यावत् ॥ २६ ॥ ❀ ❀ एवं भगवतोक्ता मुनयो ययुरित्याह द्वाभ्याम् । अथानन्तरं नयनयोर्ये आनन्दस्तस्य भाजनं विषयं वैकुण्ठं तस्याधिष्ठानं स्थानं स्वप्रकाशं विकुण्ठलोकं च दृष्ट्वा ते मुनयः ॥ २७ ॥ ❀ ❀ भगवन्तं परिक्रम्य प्रदक्षिणीकृत्य प्रणम्यानुमान्यानुज्ञाप्य वैष्णवीं भागवतीं श्रियं संपदं शंसन्तः प्रशंसन्तः मुदिताः प्रतिजग्मुः ॥ २८ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली ।

ततः किमनिष्टं तत्राह । तत्त इति । यस्मादसुरा अप्रिया अपि लोकस्य यथा दुःखजनकत्वेन न तथा हरेः नित्यानन्द-पूर्णत्वात् दुःखप्रवेशानवकाशात्किन्तु निषेधयोग्यज्ञानविषयमप्रियं भगवतो मतं तदुक्तम् 'असुरा अप्रियाश्चापि नित्यानन्दान्न लोकवत् निषेध्यबुद्धिविषयमप्रियं हि हरेर्मतम्'इति तस्मादनभीष्टमिवेत्युक्तं सत्त्वनिधेरित्ययं हेतुः सुखकरमार्गनाशनं तत्ते तवानभीष्टमिव दुःखजनकत्वेन न किन्तु निषिध्यत्वेनैवानभीष्टं कुत इति तत्राह विधित्सोरिति । असक्तस्येच्छया कोऽर्थ इति तत्राह । निजेति । नन्वेवंविधस्य तव मानभङ्गहेतुः विप्रप्रणामः किमिति क्रियत इति तत्राह । नैतावतेति । विप्रावनतस्य तवावनत इत्येतावता तेजः क्षतिः मानभङ्गलक्षणतेजोभङ्गो नास्ति तत्र हेतुगर्भविशेषणमाह त्र्यधीति । न केवलं त्रिलोकीमात्रस्याधिपतिस्तत्रत्यानां समस्ता-नामविशेषेण वोढेत्याह । विश्वभर्तुरिति । न चानेन किमपि प्रयोजनमित्याह । सत इतिं । विप्रप्रणामो विनोदो लीलाविलासः । तुशब्देन प्रयोजनान्तरं निवारयति ॥ २४ ॥ ❀ ❀ अधीश ! निरुपमचरिताखण्डेश भवाननयोर्यथावत् यं दमं दण्डं विचष्टे पश्यति अथवात्रैव वृत्तिं स्थितिलक्षणां वयं तत्तयोरेकं निर्व्यलीकमनुमन्महि अनुजानीमहे पूर्वदण्डादल्पोऽभिमतश्चेत्सोऽस्त्वित्यभिप्रेत्य यं वा दममित्युक्तं ये वयमनागसौ स्वतो निष्पापौ किल्बिषेण दोषेणायुंक्ष्महि योजितवन्तस्तेष्वस्मासु य उचितो दण्डः स वा श्रियतामि-

त्यनेनापि हरेर्विप्रप्रियत्वमुक्तं दण्डावल्त्वं च ध्वनितम्। किलेवु क्वेति सूत्रात् किल श्वैत्यक्रीडनयोरित्यस्माद्धातोरिपच् प्रत्ययो भवति वुगागमश्च। दोषेऽभिधेयेऽनेन किल्बिषमिति भवतीत्यनेन स्वत एतौ निर्दोषौ निमित्तात्सदोषाविति सूचितम्॥ २५॥ ❀ ❀ सनकाद्युक्तेरुत्तरत्वेन पुनरुक्तिं करोति। एताविति। संरम्भो द्वेषोत्कर्षः तेन सम्भृतः संपादितो यः समाधिर्मनस एकाग्रतारूपस्तेनानुबद्धो योगो भक्तियोगो ययोस्तौ तथा उपयास्यतः उपयातामिति व्यत्ययस्तत्क्रियायाः "अन्तर्भक्ता बहिः क्रुद्धा हिरण्याद्या हरिं प्रति। सर्वक्रुद्धाः शंवराद्या अन्तः क्रोधवशास्तथा" इति विशेषं सूचयति। तत् तयोः॥ २६॥ ❀ ❀ अथोत्तरकथाप्रसङ्गः क इति तत्राह। अथेति। अथ शापमोक्षानन्तरम्॥ २७॥ ❀ ❀ अनुमान्यानुज्ञाय श्रियं स्वरूपभूतां 'स्वरूपं श्रीस्तथाभार्या द्वेधा श्रीस्तु हरेर्मते'ति॥ २८॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

सत्त्वस्य निधिः शेवधिरूपो यस्तस्य। तेजस अक्षतत्वे हेतुः विश्वभर्तुरिति। अपरिच्छेद्यतेजस्त्वादिति भावः। तादृशस्यावनमनादौ हेतुः विनोद इति। सुखमय इत्यर्थः। सत्त्वनिधित्वादिति भावः॥ २४॥ ❀ ❀ अत्र श्रीभगवतः किमपि चिकीर्षितमेव कारणं निश्चित्याहुः। अस्मास्विति॥ २५॥ ❀ ❀ तत्र तेषां तयोश्च चित्तप्रसक्तौ स्वचिकीर्षितमेव कारणमाह। एताविति। गतिश्चेष्टा अनुकरणमिति यावत्। पूर्वं संरम्भेण समाधिः पश्चात् योगो भक्तियोगो यः स्वाभाविकः स एव ययोस्तौ। सकाशं समीपं श्रीकृष्णसायुज्यं प्राप्य तदन्तर्द्धानादनन्तरमिति ज्ञेयम्॥ २६॥ ❀ ❀ अथेति युग्मकम्। स्वयम्प्रभं स्वप्रकाशं भगवद्वत्सच्चिदानन्दरूपत्वात्॥ २७॥ २८॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

ननु नश्यतु पन्थास्तत्राहुः। तत् वेदमार्गनाशनमिवेति लोकोक्तिः जनायेति क्रियायाः सम्प्रदानं क्रियाग्रहणमपि कर्त्तव्यमिति षष्ठ्यर्थे चतुर्थी वा। अतएव निजसूक्तिभिर्लोके राजादिभिरुत्पादितधर्मप्रतिपक्षस्य ननु तदपि परमोत्कृष्टस्य निकृष्टेष्ववनतिस्तेजोहानिकरी। तत्राहुः नैतावतेति। एतावता तु धर्मत्राणप्रयोजनेनावनतस्य नमनं कृतवतस्तव तेजः प्रभावः न क्षतं न क्षीणं यतः स नमनादिस्ते विनोदः कौतुकविशेष एव॥ २४॥ ❀ ❀ वस्तुतस्तु दुरवगाहाभिप्रायं त्वां कायमनोवाक्यैरवनता वयमिदं निवेदयाम इत्याहुः। यं वा दमं दण्डं ब्रह्मण्यत्वात्तथा भक्तवत्सलत्वाद् वृत्तिं यामधिकां जीविकां वा भवान् विधत्ते तत्सर्वमनुमन्यामहे स्वच्छन्देनैव प्रभो तां विधेहि। अस्मद्दत्तोऽभिशापस्तु रसातलं गच्छत्विति भावः। पुनश्च सभयाश्रुकम्पमाहुः। अस्मास्विति ये वयं निरपराधावेतौ किल्बिषेण शापेनायुंक्ष्महि योजितवन्तः॥ २५॥ ❀ ❀ मा भैष्टेति तानाश्वासयन्नाह। एताविति। संरम्भेण क्रोधावेशेन सम्भृतः सम्पुष्टो यः समाधिर्मदीयध्यानपरिपाकस्तेनानुबद्धः प्रतिक्षणाभ्यस्तो योगो मत्संयोगो वा याभ्यां तौ विप्राः! वो युष्माकं शापः स मयैव निमितो निर्मितः। अनयोर्मत्परमभक्तयोरसुरभावसिद्ध्यर्थं युष्मान् वैकुण्ठमानीय द्वारपालाविमौ शुद्धसत्त्वस्वरूपावपि ब्राह्मणमात्रपरमभक्तावपि युष्मत्प्रातिकूल्ये प्रवर्त्य युष्माकमात्मारामचूडामणीनामपि क्रोधमुत्पाद्य शाप उत्पादितो मयैव। ननु मत्पार्षदयोर्नापि युष्माकं कोऽप्यपराध इति भावः। ननु भक्तवत्सलस्याऽपि तव भक्ताभ्यामाभ्यामीदृशदुःखदाने प्रवृत्तौ किं कारणं तत्राह तत्कारणं हे विप्रा! अवैत सर्वज्ञत्वेनैवावगच्छत मया प्रकाशितेन तेनालमिति भावः तच्च कारणं जयविजययोरेव प्रेमविजृम्भिता काचिदिच्छा सा च भो प्रभुवर! देवाधिदेव वैकुण्ठनाथ अन्यत्राल्पबलत्वात् अस्मासु प्रातिकूल्याभावात् यदि तत्र भवतो युयुत्सासुखं न सम्पद्यते तदा आवामेव केनापि प्रकारेण प्रतिकूलीकृत्य तद्युद्धसुखमनुभूयतामित्यावयोस्त्वत्सर्वसुखपरिपूर्णतायामणुमात्रमपि न्यूनत्वमसहमानयोः किङ्करयोः प्रार्थनाहठः स्वभक्तवात्सल्यगुणमपि लघूकृत्य निष्पाद्यतामिति मनोऽनुलापमयी 'रसो वै स इति' आनन्दमय इति सैषा आनन्दस्य 'मीमांसा भवती'त्यादि च श्रुतिविवृतिषु भगवतः शृङ्गारादिसर्वरसपरिपूर्तिविवेचनप्रसङ्गभवा ज्ञेया। ततश्च स्वेच्छामयस्येति "मद्भक्तानां विनोदाय करोमि विविधाः क्रियाः"। तत्प्रकारसम्पादने भगवतोऽपीच्छाप्यजनीति रहस्यस्य प्रकटानुक्तिरहो महदपराधाद्वैकुण्ठादपि परमसिद्धानामप्यधः पातो भवेत् किं पुनर्मर्त्यलोकात् साधकाभासानामस्माकमिति साधकभक्तान्महापराधेषु सावधानीकर्तुं ज्ञेया॥ २६॥ ❀ ❀ विकुण्ठं हरिं तदधिष्ठानं च स्वयंप्रभं स्वप्रकाशं शुद्धसत्त्वमयत्वात् अनुमान्य अनुज्ञाप्य॥ २७—२८॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः।

क्षेमं कुशलं विधातुमिच्छोः इव शब्द एवार्थे। तद्वेदमार्गनशनमनभीष्टमेव स्यात्। अतो वेदमार्गरक्षार्थं ब्रह्मकुले अवनतिर्युक्तैव अवनतस्य तव एतावता अवनतिमात्रेण त्र्यधिपतेस्त्रिलोकस्वामिनः तेजः प्रभावः न क्षतं क्षीणं न भवति स वेदमार्गरक्षार्थनमनादिस्ते विनोदः॥ २४॥ ❀ ❀ अनुमन्महि अनुमन्यामहे किल्बिषेण शापेन अयुंक्ष्महि योजितवन्तः॥ २५॥ ❀ ❀ नात्र भवतां कश्चिदपराधः शापस्तु मयैव कारितः एतौ तु बहूनामसुरादीनामुपकाराय मदिच्छयैवासुरयोनिं प्राप्य शीघ्रमत्रागमिष्यत इति। मच्चिकीर्षितं ज्ञात्वा सुखिनो भवन्त्वित्याशयेनाह। भगवानेताविति। संरम्भेण क्रोधावेशेन सम्भृतः

सम्वृद्धः यः समाधिः मनस ऐकाग्र्यं तेनानुबद्धो दृढीकृतो योगो ययोः तौ हे विप्राः ! यो वः शापः युष्मत्कृतः शापः सः मयैव निमितः निर्मितः कारितः तत् मम कृत्यमवैत जानीत ॥ २६ ॥ ❀ ❀ स्वयंप्रभं स्वप्रकाशम् ॥ २७ ॥ २८ ॥

## श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

नन्वेवं सति वैषम्यप्रतिपादनान्मम ब्रह्मत्वं न स्यादित्याशङ्कयाऽऽह—तत्तेऽनभीष्टमिति । यद्ब्राह्मणानां रक्षार्थं सन्मानम्, तेऽनभीष्टमिव । अथवा, पूर्वश्लोके वेदमार्गनाश उक्तः, अतस्तद्वेदनाशनं तेऽनभीष्टमिव । सर्वथाऽभीष्टाभावोऽनभीष्टम्; अल्पाभीष्टाभावस्त्वनभीष्टमिव । प्रथमपक्षे रक्षा एवार्थः, द्वितीये नाशः; कालत्वात्, सर्वकर्तृत्वाच्च । तत्र हेतुः—सत्त्वनिधेरिति । सत्त्वनिधे रक्षाऽभीष्टा, नाशस्त्वनभीष्टः । विधित्सोरिति । स एव तथा विधातुमिच्छति । जनाय हि क्षेमं विधातुमिच्छति, जायमानाः स्वकृतेनैव हि सम्यक् भवन्तीति । अथवा, सत्त्वनिधेर्नाशोऽनभीष्टः । जनानां क्षेमकरणं तन्नाशः; उत्पत्तेर्वेदनाश एव भवति । उत्पत्त्यर्थं क्षेमश्चेत्, उत्पन्नानां वा वैदिकस्य संस्कारकत्वे पाखण्डाद् दुर्बलत्वम् । पुरुषार्थप्रतिपादकत्वे देहनिर्वाहकपाखण्डाद्दुर्लिष्टत्वम् निजशक्तिभिरुद्धृतारेरित्युभयत्र हेतुः । स्वस्याऽसाधारणसामर्थ्यैरुद्धृता अरयो येन । उभयत्राऽपि प्रतिबन्धकाभावो भगवच्छक्त्यैव सिद्धः । ननु तथापि स्वस्य दोषजननेन परोपकारः सिद्ध्यति, धर्मरक्षायां त्वेक एव दोष इति चेत्तत्राऽऽह—नैतावतेति । स्वस्य नमनमात्रं न दोषः, नमतां नमनमिति व्युत्पत्तेः । नम्रभावो हीनानामेव हीनत्वबोधकः. उत्कृष्टानां तु भारसूचक इव । ये हि महाभारवन्तो भवन्ति ते नम्रा भवन्ति, अतो नम्रत्वमनम्रत्वं वा नैकान्ततो दोषरूपम्, गुणरूपं वा; अतस्तव महत्त्वं सिद्धमिति । हीनावनतिः कौतुकार्थं भवत्यभिनयरूपत्वात् । स एव हि रसजनकः । महत्त्वमाह—अधिपतेरिति । बतेति हर्षे, स्वस्तिसन्माननापरिज्ञानात् । विश्वभर्तुरित्यपि माहात्म्यम् । विश्वं हि यो बिभर्ति स हि लोके भाराक्रान्त इव नम्रो भवति, अन्यथा लोका भर्तुर्भारं न ज्ञापयेयुः । अतो नमनस्य प्रयोजनद्वयम्, लोके स्वस्य भर्तृत्वज्ञानम्, स्वार्थे तु विनोदः । अवनतस्य सोऽवनतिरूपः पदार्थः, ते विनोद इति संबन्धः । अनेन दोषः परिहृतः ॥ २४ ॥ ❀ ❀ एवं पूर्णान्तःकरणा[1] भूत्वा, भगवता यो दण्डः स्थापितः, तत्राप्यभिप्रायापरिज्ञानात्, स्वापराधं दूरीकुर्वन्ति—यं वाऽनयोरिति । हे अधीश ! अस्माकं तयोश्च । अधिकेशत्वं नाम वेदयुक्त्याद्यपेक्षयाऽपि, वेदादीनां नियामकत्वं वा; अत एवाऽस्मदुक्तप्रयोजकम् । अनयोर्भवान् वृत्तिं यं वा दमं विधत्ते, तदनुमन्महि । वृत्तिर्जीविका, द्वारि स्थित्वा सर्वेषां निवारणं कर्तव्यम् । तदा निवारिताः स्वप्रवेशार्थं स्वकीयं धनं धर्मं वा दास्यन्तीति वृत्तिदानम् । स्वयं वा द्वारे परिपालनं करोतीति स्वतन्त्रतया वा वृत्तिदानम् । अस्मदुक्तो वा दण्डोऽन्यो वा, यमेव दण्डं भवान् विधत्ते तदनुमन्महि । भवदिच्छानन्तरमस्माभिरपि स्वीक्रियत इत्यनुमाननम् । एतदपि नाऽनुरोधात्, किन्तु निर्व्यलीकम् । स्वस्याऽप्यपराधात् दण्डश्चेत् तदप्यङ्गीक्रियत इत्याहुः—अस्मास्विति । वेत्युभयत्राऽनादरे । सङ्कोचो न कर्तव्य इत्यभिप्रायेणाऽऽहुः—य उचित इति । भ्रियतां स दण्ड इति । इदानीं वाक्यमात्रमुक्त्वाऽन्येन तत्फलं संपादनीयमिति न, किन्तु इदानीमेव स दण्डोऽस्मासु स्थापनीयः । अथवा, स एव वा दण्डो जन्मत्रयात्मकोऽस्मासु स्थापनीयः । तत्र स्वस्याऽपराधमाहुः—येन कारणेन अनागसौ निरपराधौ वयं किल्बिषेण अयुङ्क्ष्महि योजितवन्तः । स दण्डः सहैवोभयेषां जन्मत्रयमिति । अस्मासु वेति पक्षे तेषां दण्डोऽस्तु न वेत्यौदासीन्यम् । एवं सर्वभावेन भगवतो माहात्म्यं निरूपितम् ॥ २५ ॥ ❀ ❀ भगवांस्तु शापाद्भीता इति तान् ज्ञात्वा स्वकृतमित्याह—एताविति । सुरेतरगतिं दैत्यत्वम्, राक्षसत्वम्, मनुष्यत्वं च । इतरत्वं समाने भवतीत्यसुरमनुष्ययोर्देवतुल्यत्वं 'त्रया ह प्राजापत्याः' इत्यत्र निरूपितम्, राक्षसा अपि बीजपराक्रमाभ्यां देवतुल्या इति । यक्षादयस्तु न स्वतन्त्राः, कुबेरस्तु देव एव; अतस्त्रिविधामेव सुरेतरगतिं प्रतिपद्य सद्य एव भूयो ममाऽन्तिकमुपयास्यतः । यो वो युष्माभिर्दत्तः शापः स मयैव निहित इति, तदवैत । निमित इति पाठे नितरां मयैव मितः । विप्रा इत्यदीर्घदर्शित्वम् । ननु सुरेतरगतिप्राप्तौ शीघ्रं कथं भव[2]त्समीपागमनम्, तत्तज्जन्मकर्मणां भोक्तव्यत्वादित्याशङ्कयाऽऽह—संरम्भसंभृतसमाध्यनुबद्धयोगाविति । क्रोधसंरम्भेण सम्यग्भृतो यः समाधिः, तेनाऽनुबद्धो योगः । योगेन सर्वपापक्षय इति पूर्वमवोचाम । भूयः सकाशमुपयास्यत इति शापान्तः । परिमितशापदानं मत्कृतः शाप इत्यवैतेति निर्भयार्थम् ॥ २६ ॥ ❀ ❀ एवमागतानां मुनीनां सर्वदुःखदूरीकरणमुक्तम् । इदानीं सर्वेषां यथायथं प्रतिगमनमाह—अथेति । तत्र प्रथमं योगिनां प्रतिगमनं द्वाभ्यामाह कृतकरिष्यमाणप्रमेयभेदेन—अथेति । पुनस्ते स्वभावं प्राप्ताः, यतो मुनयः । यस्य या निष्ठा तस्य स एव गुणः, विपरीतो दोषः । ते ह्यन्तरेव भगवन्तं पश्यन्ति, न बहिः । बहिर्दर्शनं च नोपकारीति प्रतिजग्मुः । बहिर्दर्शने एको गुणो जात इत्याह—नयनानन्दभाजनमिति । इन्द्रियाणि हि परमैश्वर्यसंबन्धात् सुखं पञ्चधा विभज्य रूपादिभेदेन तमानन्दमनुभवन्ति, करणत्वाज्जीवस्यापि सुखजनकानि । अयं च भगवानानन्दमूर्तिर्लावण्यपूर इति नयनानन्दस्य भाजनम् । तद्भाजनं द्वयमपीत्याह—वैकुण्ठं तदधिष्ठानं विकुण्ठं चेति । ननूभयोस्तुल्यतया नयनानन्दभाजनत्वं कथमुच्यते ? तत्राऽऽह—स्वयं प्रभुमिति । लोकः स्वयमेव, वैकुण्ठोऽपि स्वयम्; तथापि प्रभुत्वेन भगवत्स्फुरणे लोकत्वेन तत्स्फुरणात्,

---

१. पूर्णान्तःकरणो क । २. भगवत्समीपागमनम् ग. ङ. ।

अक्षरस्य भगवत्त्वाद्नोभयोस्तथात्वमित्यर्थः ॥ २७ ॥ ❀ ❀ अग्रिमकृत्यमाह—भगवन्तं परिक्रम्येति। प्रदक्षिणा नमस्कार आज्ञाप्रार्थनमेव च। आगत्यतोषभावश्च गमने स्तोत्रमेव च ॥ १ ॥ समागतानां पञ्चाङ्गं तोषलक्षणमुच्यते। यथागतिगतिः कार्ये प्रसङ्गं वारयेदिति ॥२॥ प्रतिजग्मुरागमनप्रकारेणैव पुनर्गता इत्यर्थः। बहिर्दर्शनस्याऽधिकत्वात् प्रकर्षेण मुदिताः। वैष्णवीं श्रियमिति शान्तिप्रसादलक्षणाम्। पूर्वस्मादयमेव विशेषः ॥ २८ ॥

## श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

तत्त इत्यत्र। अनभीष्टमिवेति। वैषम्यापादकत्वादनभिप्रेतम्। तथा च, स्थित्यर्थतया परार्थम्, अतो वैषम्याभावान्न ब्रह्मत्वक्षतिरित्यर्थः। पूर्वश्लोके ब्राह्मणरक्षाया एव वाक्यार्थत्वात्तत्पदेन तस्यैव परामर्श इत्यभिप्रेत्यैवं व्याख्यातम्। एतस्याऽपुष्टार्थत्वादेकदेशपरामर्शित्वं तत्पदस्याऽङ्गीकृत्य पक्षान्तरमाहुः—अथवेत्यादि। पक्षद्वयेऽपि यथायथमनभीष्टत्वप्रयोजकरूपद्वयमाहुः—कालेत्यादि। तथा च, कालत्वाद्रक्षाऽनभीष्टा सर्वकर्तृत्वान्नाशोऽनभीष्ट इत्यर्थः। स एवेति। सत्त्वनिधिरेव। स्वकृतेनैवेति। भगवत्कृतेनैव। तन्नाश इति। वेदनाशः। तद्व्युत्पादयन्ति—उत्पत्तेरित्यादि। उत्पत्तेरिति। 'जायस्व म्रियस्व' इति प्रवाहप्रवेशात्। रक्षापक्षे जनाय क्षेमं विधित्सोरित्यस्याऽर्थमाहुः—उत्पन्नानां वेति। उत्पन्नानामर्थे क्षेमश्चेदित्यन्वयः। प्रथमपक्षे अनभीष्टा, अस्मिन् पक्षे वेदरक्षाऽभीष्टेति तस्या अनभीष्टत्वेऽभीष्टत्वे च क्रमेण हेतुद्वयमाहुः—वैदिकस्येत्यादि। एवमत्राऽर्धस्य व्याख्यानद्वयेन साम्यप्रतिपादनाद्भगवति वैषम्यं परिहृतम्। दोषजननेनेति। हीननम्रीभावरूपदोषजननेन। एक एवेति। मुख्य एव। रसजनक इति। अत्र रसो बीभत्सो बोध्यः। स्वस्तिसंमाननापरिज्ञानादिति। अविनाशस्य संमाननस्य च तात्पर्यापरिज्ञानात् ॥ २४ ॥ ❀ ❀ यं वेत्यत्र। इति वृत्तिदानमिति। अस्मिन् पक्षे वयमपि स्वकीयं धर्मं दद्म इति वृत्त्यनुमाननं ज्ञेयम्। तेषां दण्ड इति। अस्मदुक्तस्तेषां दण्डोऽस्माकमेवाऽस्त्वित्यर्थः ॥ २५ ॥ ❀ ❀ भगवन्तमित्यत्र। आगत्यतोषा (ष)भाव इति। आगमनानां तोषपूर्त्यभावः ॥ २८ ॥

## श्रीगिरिधरकृता बालप्रबोधिनी

तत् वेदमार्गविनाशनं ते तव अनभीष्टमिव अनभिप्रेतमेव। तत्कथमित्यत आहुः—निजशक्तिभिः निजावतारैः स्वज्ञानाक्रियाबलादिभिर्वा उद्धृताः निर्मूलिताः अरयो धर्मविरोधिनो येन तस्य। तदपि किमर्थमित्यत आहुः—जनाय क्षेमं विधित्सोः विधातुमिच्छोः। तत्रापि हेतुमाहुः—सत्त्वनिधेरिति, पालनशक्तिसत्त्वगुणाङ्गीकारादित्याशयः। ननु तथापि महतोऽन्येष्ववनतिस्तेजोहानिकरी भवति तत्राहुः—नेति। एतावता तु धर्मत्राणप्रयोजनमात्रेण अवनतस्य ब्राह्मणनमनं कृतवतस्तव तेजः प्रभावो न क्षतं विहतं न भवति। यतः स नमनादिश्च ते तव विनोदो लीलामात्रमित्यर्थः। ननु विनोदेनापि कृतावनतिः कुतो न तेजोहानिकरीत्याशङ्क्य प्रभावस्य सिद्धत्वेन तस्या लोकशिक्षार्थत्वे पर्यवसानादित्याशयेन भगवन्तं विशिंषन्ति—विश्वभर्तुरिति, विश्वपालकस्येत्यर्थः। पालने सामर्थ्यमाहुः— त्र्यधिपतेरिति, सत्त्वादिगुणत्रयनियन्तुरित्यर्थः। तथाप्यनेन विनोदेन तव भक्तानां खेदो भवतीति सूचयन्ति–व्रतेति ॥ २४ ॥ ❀ ❀ एवं यथामति भगवद्वाक्यतात्पर्यं निरूप्य भगवदानुगुण्येनैव भद्रमिति निश्चित्य स्वशापाग्रहं परित्यज्य विज्ञापयन्ति—यमिति। त्वमेव सर्वेश्वर इति तवाग्रेऽस्मच्छापोऽकिञ्चित्कर इति सूचयन्तः सम्बोधयन्ति—अधीशेति। अनयोः स्वभृत्ययोर्यं दममस्माभिर्विहितमन्यं वा दण्डं वृत्तिं तु यथापूर्वं अस्मिँल्लोके वर्तनं विशेषतोऽधिकां जीविकां वा भगवान् विधत्ते, यद्वा द्वाःस्थयोरपूर्वजनप्रवेशनिवारणस्योचितत्वात् अनागसौ निरपराधावेतौ ये वयं किल्बिषेण दुःखहेतुशापेनाऽयुक्ष्महियोजितवन्तस्तेष्वस्मासु य उचितः स्वापराधानुरूपो दण्डः स भ्रियतां विधीयतां तदेतद्भवत्कृतं सर्वं निर्व्यलीकं श्रद्धापूर्वकं अनुमन्महि वयमनुमन्यामहे इत्यन्वयः ॥२५॥ ❀ ❀ एवं मुनिभिरावेदितहार्दो मुनीनां भृत्ययोश्चानुग्रहमना भगवान् शापस्य मत्कारितत्वात् युष्माकं नापराध इत्याश्वासयन्नाह—एताविति। एतौ मत्पार्षदौ सुरेतरगतिं आसुरत्वमानुषत्वादिरूपां प्रतिपद्य प्राप्य आशु शीघ्रमेव भूयः पुनः मत्सकाशं मत्समीमुपयास्यतः आगमिष्यतः। तत्रोपायमाह—सद्यः जन्मप्रभृति मयि यः संरम्भः क्रोधावेशस्तेन सम्भृतः संवृद्धो यः समाधिः चित्तैकाग्रता तेनानुबद्धो दृढीकृतो योगो ययोस्ताविति। विप्रा इति सम्बोधनमाश्वासनार्थम्। वो युष्माकं यः शापस्स मयैव निर्मितः युष्मन्मुखेन मयैव निर्मित इत्येवं जानीत ॥ २६ ॥ ❀ ❀ एवं भगवता प्रोक्तास्ते मुनयः सनकादयः 'एवं शप्तौ स्वभवनात्पतन्तौ तैः कृपालुभिः। प्रोक्तौ पुनर्जन्मभिर्वां त्रिभिर्लोकाय कल्पताम् ॥'' इति सप्तमस्कन्धे वक्ष्यमाणमनुग्रहं कृत्वा अथानन्तरं नयनयोर्य आनन्दस्तस्य भाजनं पात्रं यद्दृष्टे परमानन्दप्राप्तिर्भवति तं विकुण्ठं भगवन्तं तदधिष्ठानं स्थानं वैकुण्ठं लोकं च दृष्ट्वा भगवन्तं परिक्रम्य प्रदक्षिणीकृत्य प्रणामं कृत्वा अनुमान्य अनुज्ञाप्य च वैष्णवीं श्रियं सम्पदं शंसन्तो प्रमुदिताः हृष्टाः प्रतिजग्मुरिति द्वयोरन्वयः। नयनानन्दभाजनमिति स्वयम्प्रभमिति च विशेषणद्वयमपि भगवतस्तल्लोकस्य च प्रत्येकं बोध्यम् ॥ २७ ॥ ॥ २८ ॥

## हिन्दी अनुवाद

प्रभो ! आप सत्त्वगुणकी खान हैं और सभी जीवोंका कल्याण करनेके लिये उत्सुक हैं। इसीसे आप अपनी शक्तिरूप राजा आदिके द्वारा धर्मके शत्रुओंका संहार करते हैं; क्योंकि वेदमार्गका उच्छेद आपको अभीष्ट नहीं है। आप त्रिलोकीनाथ

और जगत्प्रतिपालक होकर भी ब्राह्मणोंके प्रति इतने नम्र रहते हैं, इससे आपके तेजकी कोई हानि नहीं होती; यह तो आपकी लीलामात्र है ॥ २४ ॥ ❀ ❀ सर्वेश्वर ! इन द्वारपालोंको आप जैसा उचित समझें वैसा दण्ड दें, अथवा पुरस्काररूपमें इनकी वृत्ति बढ़ा दें—हम निष्कपट भावसे सब प्रकार आपसे सहमत हैं । अथवा हमने आपके इन निरपराध अनुचरोंको शाप दिया है, इसके लिये हमींको उचित दण्ड दें; हमें वह भी सहर्ष स्वीकार है ॥ २५ ॥ ❀ ❀ श्रीभगवान्‌ने कहा—मुनिगण ! आपने इन्हें जो शाप दिया है—सच जानिये, वह मेरी ही प्रेरणासे हुआ है । अब ये शीघ्र ही दैत्ययोनिको प्राप्त होंगे और वहाँ क्रोधावेशसे बढ़ी हुई एकाग्रताके कारण सुदृढ़ योगसम्पन्न होकर फिर जल्दी ही मेरे पास लौट आयेंगे ॥ २६ ॥ ❀ ❀ श्रीब्रह्माजी कहते हैं—तदनन्तर उन मुनिश्वरोंने नयनाभिराम भगवान् विष्णु और उनके स्वयंप्रकाश वैकुण्ठ धामके दर्शन करके प्रभुकी परिक्रमा की और उन्हें प्रणामकर तथा उनकी आज्ञा पा भगवान्‌के ऐश्वर्यका वर्णन करते हुए प्रमुदित हो वहाँसे लौट गये ॥ २७ ॥ २८ ॥

**भगवाननुगावाह यातं मा भैष्टमस्तु शम् । ब्रह्मतेजः समर्थोऽपि हन्तुं नेच्छे मतं तु मे ॥ २९ ॥**
**एतत्पुरैव निर्दिष्टं रमया क्रुद्धया यदा । पुरापवारिता द्वारि विशन्ती मय्युपारते ॥ ३० ॥**
**मयि संरम्भयोगेन निस्तीर्य ब्रह्महेलनम् । प्रत्येष्यतं निकाशं मे कालेनाल्पीयसा पुनः ॥ ३१ ॥**
**द्वाःस्थावादिश्य भगवान् विमानश्रेणिभूषणम् । सर्वातिशयया लक्ष्म्या जुष्टं स्वं धिष्ण्यमाविशत् ॥ ३२ ॥**

### श्रीधरस्वामिविरचिता भावार्थदीपिका

ममैव तु मतं संमतम् । इदमत्र तत्त्वम् । यद्यपि सनकादीनां क्रोधो न संभवति न च भगवत्पार्षदयोर्ब्राह्मणप्रातिकूल्यं न च भगवतः स्वभक्तोपेक्षा न च वैकुंठगतानां पुनर्जन्म तथापि भगवतः सिसृक्षादिवत्कदाचिद्युयुत्सा समजनि तदाऽन्येषामल्पबलत्वात्स्वपार्षदानां तुल्यबलत्वेऽपि प्रातिपक्ष्यानुपपत्तेरेतावेव ब्राह्मणनिवारणे प्रवर्त्य तेषु च क्रोधमुद्दीप्य तच्छापव्याजेन प्रतिपक्षौ विधाय युद्धकौतुकं संपादनीयमिति भगवतैव व्यवसितमतः सर्वं संगच्छते । तदिदमुक्तं शापो मयैव निमित इति मा भैष्टमिति अस्तु शमिति हंतुं नेच्छे मतं तु मे इत्यादि च ॥ २९ ॥ ❀ ❀ यदा मयि उपारते योगनिन्द्रां गतवति सति द्वारि विशंती युवाभ्यां पुराऽपवारिता तदा क्रुद्धया रमया एतद्यद्ब्राह्मणैरिदानीमुक्तं तत्पुरैव निर्दिष्टम् ॥ ३० ॥ ❀ ❀ प्रत्येष्यतं प्रत्येष्यथः । निकाशं समीपम् ॥ ३१ ॥ ३२ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

युवां यातमित्युपस्थितजयविजयौ प्रत्युक्तिः । तदैव विरहव्याकुलौ कृतकृत्य रुदंतौ वीक्ष्य पुनः कृपाद्रवचित्तनवनीत आह मा भैष्टं शं कल्याणं युवयोरस्तु इतो वैकुंठान्मा यातम् अत्रैव मां सेवमानौ सदा तिष्ठतमिति मा पदमुभयत्रान्वयि । पुनरानंदितौ वीक्ष्याह-ब्रह्मतेजः ब्रह्मशापं हंतुं समर्थोऽप्यहम् । मे तु मम तु मतं नेच्छामि ब्रह्मशापस्यामोघत्वमर्यादाया मयैव कृतत्वात् । अतो वज्रस्यामोघत्वरक्षणार्थं गरुडो यथा पक्षांशमेकं तत्याज तथैवैकांशेनैकैकप्रकाशेनासुरभावं गच्छतं वैकुंठेऽपि स्वरूपेण तिष्ठतमित्यतो वामनचरिते "तानभिद्रवतो दृष्ट्वा दितिजानीकयूथपान् । प्रहस्यानुचरा विष्णोः प्रत्यषेधन्नुदायुधाः ॥ नंदः सुनंदोऽथ जयो विजयः प्रबलो बलः॥" इत्यादीनां युध्यमानानां भगवत्पार्षदानां मध्ये जयविजययोरप्युल्लेखः श्रूयते । तदा च तयोर्हिरण्याक्षहिरण्यकशिपुत्वानंतरं रावणकुंभकर्णत्वप्राप्त्युन्मुखता च लक्ष्यते इति तयोर्युगपदेव पार्षदत्वासुरत्वान्यथानुपपत्तेरेवमवश्यं व्याख्येयम् ॥२९॥ ॥ ३० ॥ ❀ ❀ न चैकांशेनासुरभावेऽपि चिंता कार्या यतोऽहमप्यवतारत्रयेण युवाभ्यां सह वीररसमयं युद्धसुखमनुभविष्यामीत्यासुरभावेऽपि मत्सेवैव भवद्भ्यां संपादयिष्यते । तृतीये तु जन्मनि साक्षादेव वां स्वीकरिष्यते इत्याह मयीति । संरंभेण क्रोधावेशेन योगः युद्धेषु मयि संयोगो ध्यानं वा । ब्रह्महेलनं ब्रह्मशापम् । अल्पीयसेति । शैववाक्यानुरोधेन सप्तजन्मापेक्षया त्रिजन्मलक्षणेनेत्यर्थः ॥ ३१ ॥ ❀ ❀ धिष्ण्यं मंदिरम् ॥ ३२ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनीव्याख्या

अत्र नित्यपार्षदानां पुनरावृत्तौ तत्त्वं सिद्धान्तयाथार्थ्यं क्रोधोऽपीत्यपि शब्दोऽसम्भवान्तरसमुच्चयार्थः तथापि क्रोधाद्यसम्भवेऽपि तदा युयुत्साकाले अन्येषां प्राकृतजीवानां प्रातिपक्ष्यं शत्रुत्वं तदनुपपत्तेस्तदसम्भवात् एतौ जयविजयौ तेषु सनकादिषु अतः श्रीभगवतस्तथा व्यवसायात् सर्वं क्रोधादि मा भैष्टमस्तु शमित्यनेनासुरभावस्याभासमात्रत्वं व्यञ्जितम् । यथा जीवन्मुक्तानां देहावेशस्याभासमात्रत्वं यथा च नटानां तत्तद्रूपत्वमनुकरणमात्रम् । तद्वत् अन्यथाष्टमे ।

नन्दः सुनन्दोऽथ जयो विजयः प्रबलो बल इति ।

युध्यमानपार्षदमध्ये तयोरुल्लेखो न श्रूयेत तावत्तयोः शापानिवृत्तेः । अतो देहलीदीपकन्यायेन मा यातं मा भैष्टमिति मापदमुभयत्रान्वितमित्यपि व्याख्यानान्तरम् ॥ २९ ॥ ❀ ❀ अत्र एतत्पुरैव निर्दिष्टं रमया क्रुद्धया यदा । पुरापवारिता द्वारि विशन्ती मय्युपारते ॥' इति विगीतं पद्यं गुर्जरदेशे सटीकमस्तीति ज्ञेयम् ॥ ३० ॥ ❀ ❀ संरम्भः क्रोधाभासस्तस्य योगेन सम्बन्धाभासेन ॥ ३१—३२ ॥

### श्रीमद्वीरराघवव्याख्या

मुनिगमनानन्तरं द्वास्थौ सान्त्वयन्भगवानुवाचेत्याह । त्रिभिः । भगवाननुगौ भृत्यौ प्रत्याह उवाच उक्तिमेवाह । यातं गच्छतं मा भैष्टं भयं मा कुरुतं शं सुखमेव गच्छतोरपि युवयोरस्तु । यद्यावयोरनुग्रह एव भवता क्रियते तर्हि ब्रह्मदण्ड एव किं न निरस्यते इत्यत्राह । ब्रह्मतेजः ब्रह्मदण्डस्तेजःकार्यत्वाद्दण्डस्यापि तेजःशब्देन निर्देशः, हन्तुं निरसितुं समर्थोऽपि नेच्छे कुतः हि यस्मान्मे मम मतं संमतम् ॥ २९ ॥ ❀ ❀ न केवलं ममैवेदं ब्रह्मतेजो मतं किन्तु लक्ष्म्या अपीत्याह । एतदिति । एतद्युवयोरितो निर्गमनं पुरा पूर्वकाले क्रुद्धया रमया लक्ष्म्यैव निर्दिष्टं पुरा कदेत्यत्राह । मयि उपारते प्रणयकलहवशात्तूष्णीं शयाने सति मन्निलयाद्बहिर्निर्गत्य पुनरन्तः प्रविशन्ती द्वारि युवाभ्यां यद्यदा निवारिता तदेत्यर्थः ॥ ३० ॥ ❀ ❀ अन्ते मयि संरम्भः क्रोधस्तस्य योगोऽनवरतसम्बन्धः तेन ब्रह्मविदपराधजन्यं फलं निस्तीर्य निरवशेषमपोह्याल्पीयसैव कालेन पुनर्मे निकाशं समीपं प्रत्येष्यतं प्रत्यागच्छतम् ॥ ३१ ॥ ❀ ❀एवं द्वास्थावादिश्य भगवान्स्वस्थानमाविवेशेत्याह । भगवान् द्वास्थावादिश्याज्ञाप्य विमानश्रेणय एव भूषणं यस्मिन्सर्वातिशयया निरतिशयया लक्ष्म्या संपदा जुष्टं यद्वा प्रियं स्वधिष्ण्यं स्वकीयस्थानं लक्ष्म्या सहाविशत् ॥ ३२ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

मा भैष्टं भयं न कुरुतं शं सुखमस्तु इच्छे इच्छामि ॥ २९ ॥ ❀ ❀ अपराधान्तरसद्भावान्मतमित्युक्तं कोऽसावपराध इति तत्राह । एतदिति । अपवारिता निवारिता योगनिद्रामुपागते ॥ ३० ॥ ❀ ❀ ब्रह्मशापनिवारकं संरम्भ एव भक्तियोगवरमुपदिशन्निवाह । संरम्भेति । एतयोर्भक्तियोगोऽस्तीति कस्मादवगतमितीदं चोद्यम्

अन्तर्भक्ता बहिर्वैरा हिरण्याद्या हरेर्मताः । तत्र भक्त्या भवन्पूताद्वेष आवेशकान् मतः ॥
ब्रह्मजा असुरा ये तु विष्णोः पार्षदतां गताः । बाणाद्याश्च हरेर्द्वेषमन्तः कृत्वा तमो गताः ॥

इत्यनेन निरस्तम् । अनेन संरंभो नीचफलो भक्तियोग एव ब्रह्मशापनिस्तारक इत्युक्तं भवति । पुनः शापाद् व्यावृत्तौ स्वरूपावाप्तौ कालक्षेपो नास्तीत्याशयेनोक्तं कालेनेति ॥ ३१ ॥ ❀ ❀ द्वाःस्थौ द्वारपालौ ॥ ३२ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

तच्चिकीर्षितत्वमेव स्पष्टयति । भगवानिति । मा भैष्टमस्तु शमित्यस्य आसुरभावोऽपि भवतोर्जीवन्मुक्तानां देहावेश इव नटानां तत्तदनुकरणमिव च तदाभास एव स्यादिति भावः । तथैव हि व्याख्यास्यते तैः सप्तमे विष्णुचक्रहतांहसावित्यत्र । तयोरंह एव हतं नतु ताविति । तदिदं षष्ठसन्दर्भे सप्तमवाक्यावतारिकायां कचिच्च लीलाशक्तिरेवेत्यारभ्य वस्तुतः तेन तथा उक्तत्वेन कोपादिहेत्वभावात् इत्येवेत्यन्तेन विवृतमस्ति तथाहि । कचिच्च लीलाशक्तिरेव स्वयं तल्लीलामाधुर्यपोषाय प्रतिकूलेष्वनुकूलेषु चात्मापकरणेषु तादृशशक्तिं विन्यस्य तादृशतत्प्रियजनानामपि विषयावेशाद्याभासं सम्पादयति । यथा पूतना वर्णने । 'वल्गुस्मितापाङ्गविसर्गवीक्षितैर्मनो हरन्तीं वनितां व्रजौकसामि'ति तदाभासत्वविवक्षया च मनो हरन्ती मनोहरेवाचरन्तीति श्लिष्टमुक्तम् । तद्दत्तशक्तित्वञ्च तस्य तत्रैव सूचितम् ।

न यत्र श्रवणादीनि रक्षोघ्नानि स्वकर्मसु । कुर्वन्ति सात्वतां भर्त्तुर्यातुधान्यश्च तत्र हि ॥ इत्यनेन ।

तथैवेदं घटते 'अमंसताम्भोजकरेण रूपिणीं गोप्यः श्रियं द्रष्टुमिवागतां पतिमि'ति । श्रियं प्राकृतसम्पदधिष्ठात्रीं । पतिं यं कञ्चित्तदुचितप्राचीनपुण्यभाजमित्यर्थः । पूर्ववदेव तां तीक्ष्णचित्तामित्यादौ तत्प्रभया च धर्षिते जननी अतिष्ठतामित्युक्तं एवमेव कचित्तादृशानामपि मायाभिभवाभासो मन्तव्यः । यथा 'प्रायो माया तु मे भर्तुर्नान्या मेऽपि विमोहिनी'त्यादिषु श्रीबलदेवादीनाम् । यथा दैत्यजन्मनि जयविजययोः । अत्र पूर्वेषां स्वल्प एव तदाभासः तयोस्तु सम्यागति विशेषः तत्प्रेमादीनामनावरणाच्च । अत्र तयोर्वैरभावप्राप्तौ खलु मुनिकृतत्वं न स्यात् । मतं तु मे इत्यत्र भगवदिच्छायास्तत्कारणत्वेन स्थापितत्वात् । नापि सा तदीयवैरभावाय सम्पद्यते स्वेच्छामयस्येत्यादिभ्यः । त्रैवर्गिकायासविघातमस्मत्पतिर्विधत्ते पुरुषस्य शक्रे त्यादिभिः कैमुत्यापाताच्च । अत एवोक्तम् । 'तथा न ते माधव तावकाः कचिद्भ्रश्यन्ति मार्गात्त्वयि बद्धसौहृदाः । इत्यादि । न च तयोरपि स्वापराधभोगशीघ्रनिस्तारार्थमपि तादृशीच्छा जातेति वाच्यम् । तादृशैः परमभक्तैर्हि भक्तिं विना सालोक्यादिकमपि नाङ्गीक्रियते तत्सम्भवे निरयोऽप्यङ्गीक्रियत इति नात्यन्तिकं विगणयन्तीत्यादेः "कामं भवः स्ववृजिनैर्निरयेषु नः स्तादित्यादेश्च" अत एवाभ्यामपि तथैव प्रार्थितम् । 'भावोऽनुतापकलया भगवत्स्मृतिघ्नो मोहो भवेदिह तु नौ व्रजतोरधोऽध' इत्यनेन । न चानयोर्वास्तववैरभावसत्त्वे सति भक्तान्तराणामपि सुखं

स्यादिति वाच्यम्। भक्तिस्वभावभक्तसौहृदविरोधादेव। तस्मात्तयोर्वैरभावाभासत्व एव श्रीभगवतस्तयोरन्येषां भक्तानामपि रसोदयः स्यादिति स्थितम्। तत एवमर्थापत्तिलब्धं सर्व्वभक्तसुहृच्छ्रीभगवदभिमतयुद्धकौतुकादिसम्पादनार्थं वैराभावात्मकमायिकोपाधिस्वाभाविकाणिमादिसिद्धिकेन शुद्धसत्त्वात्मकस्वविग्रहेण प्रविश्य स्वसान्निध्येन चेतनीकृत्य च विलीय स्थिताया अपि भक्तिवासनायाः प्रभावेण तत्रानाविष्टावेव तिष्ठतः। अतो वैरभावजस्मरणेन वैरभावोऽपगत इत्युभयमपि वाह्यम् एतदभिप्रेत्यैव श्रीवैकुण्ठनाथेनाप्युक्तम्। यातं मा भैष्टमस्तु शमिति। तथा हिरण्याक्षयुद्धे परानुषक्तमित्यादिपद्ये टीका। प्रचण्डमन्युत्वमधिक्षेपादिकञ्चानुकरणमात्रं दैत्यवाक्यभीतानां देवानां भयनिवृत्तये। वस्तुतस्तेन तथा उक्तत्वेन कोपादिहेत्वभावादित्येषा। ब्रह्मतेज इति। यावत् ब्राह्मणत्वोपहितभक्तीनां सान्निध्यमासीत् तावद्‌ब्रह्मण्यता,गुण एव प्रबल आसीत्। अधुना शुद्धभक्तगुणसान्निध्ये तु शुद्धभक्तवात्सल्यमेव॥ भक्तिविशेषं प्राप्यैव तद्‌गुणविशेषप्रकाशादिति भावः।

एतत् पुरैव निर्दिष्टं रमया क्रुद्धया तदा। पुरापवारिता द्वारि विशन्ती मय्युपारते।

एतदिति पद्यं विगीतमपि सर्वत्र दृश्यते गुर्जरदेशे तु टीका चास्ति॥ २९॥ ३०॥ ❀ ❀ तदपराधाभासदुःखफलभोगाभासानुवादेन मर्यादां रक्षन्नाह। मयीति। संरम्भस्य योगेन प्रतिफलेनाभासेनेत्यर्थः॥ ३१—३२॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

तदैवोपस्थितावनुगौ जयविजयौ दृष्ट्वाह। यातमितो मर्त्यलोकं गच्छतं तदैव विरहव्याकुलौ क्षुतक्लृत्य रुदन्तौ वीक्ष्य पुनः कृपाद्रवच्चित्तनवनीत आह। मा भैष्ट शं कल्याणं युवयोरस्तु। इतो मा यातमत्रैव वैकुण्ठे मां सेवमानौ सदा तिष्ठतमिति मापदमुभयत्रान्वितं पुनरानन्दितौ तौ वीक्ष्याह। ब्रह्मतेजः ब्रह्मशापं हन्तुं समर्थोऽप्यहं मे तु मम तु मतं नेच्छामि। ब्रह्मशापस्यामोघत्वमर्य्यादाया मयैव कृतत्वात् अतो वज्रस्यामोघत्वं रक्षणार्थं गरुणो यथा पक्षांशमेकं ददौ तथैवैकांशेन एकैकप्रकाशेन असुरभावं गच्छतं वैकुण्ठेऽपि स्वस्वरूपेण तिष्ठतमित्यतो वामनचरिते

तानभिद्रवतो दृष्ट्वा दितिजानीकपान्नृप। प्रहस्यानुचरा विष्णोः प्रत्यपेधन्नुदायुधाः॥
नन्दः सुनन्दोऽथ जयो विजयः प्रबलो बलः। कुमुदः कुमुदाक्षश्च विष्वक्सेनः पतत्रिराट्॥

इत्यादीनां युध्यमानानां भगवत्पार्षदानां मध्ये जयविजययोरप्युल्लेखः श्रूयते तदा च तयोर्हिरण्याक्षत्वहिण्यकशिपुत्वानन्तरं रावणकुम्भकर्णत्वप्राप्त्युन्मुखता च लक्ष्यते तयोर्युगपदेव पार्षदत्वासुरत्वान्यथानुपपत्तेरेवमवश्यमेव व्याख्येयम्। अत्रैतत्पुरेति पद्यं सर्वत्र दृष्टमप्यसाम्प्रदायिकत्वान्न व्याख्यातम्॥२९—३०॥ ❀ ❀ न चैकांशेनासुरभावेऽपि चिन्ता कार्या यतोऽहमप्यवतारत्रयेण युवाभ्यां सह वीररसमयं युद्धं सुखमनुभविष्यामीत्यासुरभावेऽपि मत्सेवैव भवद्भ्यां सम्पादयिष्यते। तृतीये तु जन्मनि साक्षादेव वां स्वीकरिष्ये इत्याह। मयीति। संरम्भेण क्रोधावेशेन योगः युद्धेषु मयि यः संयोगो ध्यानं वा तेन प्रत्येष्यतं प्रत्येष्यथः निकाशं समीपम्॥ ३१॥ ३२॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः।

ब्रह्मतेजः सनकादिशापरूपं तेजः मे ममैव मतं संमतं युवां निमित्तीकृत्य बहुजनकल्याणार्थं वाराहाद्यवतारैर्विहरिष्यामीति भावः। अन्यथा सनकादीनां क्रोधः हरिद्वारपालयोर्मुनिप्रातिकूल्यं वैकुण्ठवासिनां पुनर्जन्म च नैव स्यात्॥ २९—३०॥ ❀ ❀ मे निकाशं समीपं प्रत्येष्यतं प्रत्यागच्छतम्॥ ३१॥ ३२॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

भगवतो निर्गमनं वक्तुं सेवकयोः समाधानमाह—भगवानिति। अनुरोधे हेतुः—अनुगाविति। तेषां वाक्यविश्वासे कारणम्—भगवानिति। यातमित्याज्ञा शापेन गमनाभावार्थम्, अनेन तयोः स्वधर्मो रक्षितः। अत एव—मा भैष्टम्। शापेन गमने सति भयं भवति। ननु कृते कारणे कथं फलं न भविष्यतीत्याशङ्क्याऽऽह—अस्तु शमिति। भवतां कल्याणमस्तु। इदानीं सालोक्यम्, गतानां तु सायुज्यं भविष्यतीत्यर्थः। इदानीं लोके कौचिद्भवन्तौ, पश्चाल्लोकरूपावेव भविष्यत इति 'लोकाय कल्पताम्' इति वाक्यम्। चरणपदमपि तमेवार्थं वक्ति। प्रविष्टयोश्चरणभावश्च सिद्धः, नैकत्र्यं तु तदा महत्। किं ब्राह्मणानामनुरोधेनैवं क्रियते? नेत्याह—ब्रह्मतेज इति। ब्रह्मास्त्रं किल दूरीक्रियत आधिदैविकं ब्रह्मतेजः, इदं त्वाधिभौतिकम्। अतः समर्थोऽपि ब्रह्मतेजो हन्तुं नेच्छे, सृष्ट्युपयोगित्वात्। अतो मम मतम्। नु इति निश्चये। अभिप्रायं तु भगवानेव जानाति, वचनात् न कल्प्यते, कल्प्यमानोऽपि कार्यानुरोधेन कल्पनीय इति॥ २९॥ ❀ ❀ तर्हि ब्रह्मशापस्य का गतिः? तत्राह—मयीति। ब्रह्मशापस्य प्रायश्चित्तं कर्तव्यम्। प्रायश्चित्तानन्तरं हि पुरुषः शुद्धः, शुद्धेनैव हि विहितं कर्तव्यम्, भगवद्भक्तानां च प्रायश्चित्तं भगवत्स्मरणमेव। तच्च स्मरणं लौकिकं भवति, शुद्धस्यैव हि वैदिके अधिकारात्। लौकिकत्वात् प्रायश्चित्तत्वं च। नित्यता तु स्मरणस्य

प्रथमप्रवृत्तानाम्, यावद्भगवदीया भवन्ति। पश्चात्तु पापमेव नोत्पद्यते। भगवदिच्छया तु तदुत्पत्तिः। तदिच्छाया बलिष्ठत्वात् स्मरणं न सम्भवति। लौकिके तु बाधाभावात् भगवत्सायुज्यादिसाधकत्वाभावेऽपि प्रायश्चित्तत्वमस्ति, दोषनिर्घातकत्वस्य स्मरणसहजधर्मत्वात्। कामादयो हि केवललौकिका लौकिकपोषहेतवः। क्रोधोऽत्र शापे हेतुर्जात इति क्रोधेनैव स्मरणं भविष्यति, अन्यथा विस्मरणमेव स्यात्। एवं गोपिकानां कामोऽपि। ब्रह्मणा हि कामेन वाक् शप्ता, अत एव वाचा न प्रजापतेर्होमः। 'वाक् च मनश्चार्त्तीयेताम्' इत्युपाख्याने तथा निरूपणात्। सैव वाक् गोपिकाः। भयेन शुक्राचार्येण शप्ताः कालनेमिप्रभृतयः, ते हि बृहस्पतिमुररीकृतवन्तः स्वपौरोहित्यगमनभयात् क्षिप्ता इति भयेनैव स्मरणं कंसस्य। अन्ये च देवा यथायथं तत्तत्संबन्धिनो बृहस्पतिदुर्वासःप्रभृतिभिः शप्ता इति संबन्धस्नेहादेव स्मरणं यादवादीनाम्। एते चत्वारोऽपि शापात् तथोत्पन्नाः, तथा स्मरणेन तत्तच्छापं हित्वा 'स्वभगवदीयेनैव रूपेण भगवत्पदं प्राप्ताः। तथाऽत्रापि 'अस्तु शम्' इति वाक्यात् भगवत्पदप्राप्तिः। भगवति च क्रोधसंरम्भयोगेन ब्रह्मावज्ञालक्षणं दोषं निर्हृत्य, मे निकाशं समीपम्, अतिनैकट्यं वा द्वारापेक्षया चरणे, अल्पीयसा कालेन पुनः प्रत्येष्यतमिति। क्रोधसंबन्धस्य लोके अपुरुषार्थत्वात् पुरुषार्थत्वाय योगपदम्॥ ३१॥ ❀ ❀ एवं तयोः सान्त्वनमुक्त्वा भगवान् यथास्थानं गत इत्याह—द्वाःस्थाविति। आदिश्येति वचनात् नाऽन्यथाकरणं संभवति। भगवतः खेदो भविष्यतीत्याशङ्क्याऽऽह—भगवानिति। ऐश्वर्यज्ञानवैराग्याणां खेदनाशकत्वात्। नन्वेतावुभौ निष्कासितौ दुष्टौ चेत्, अन्येऽपि तथा भविष्यन्तीति तन्निष्कासनमपि कर्तव्यम्, अन्यौ च द्वारपालकौ कर्तव्यौ। तदुभयमकृत्वा कथं गृहे गत इत्याशङ्क्याऽऽह—विमानश्रेणिभूषणमिति। विमानानां श्रेणयः, तासां भूषणमलङ्कारभूतम्। वैकुण्ठस्थितानि विमानानि सार्थकानि। अतो विगतो मानो येषामिति तदतिरिक्ताः सर्वेऽभिमानरहिताः, अतो निर्दुष्टा इत्यर्थः। त एव तत्र साधारणा अपीति श्रेणिपदम्। तेषामपि भूषणमिति सर्वथा सर्वदोषरहितं स्थानमित्यर्थः। अत एवाऽन्ये न विनियुक्ताः, एतौ सदोषाविति। परं द्वारस्थत्वेन नियुक्तौ, न त्वन्यप्रतिरोधार्थम्, मुनीनां वाक्येन तथा निर्णयात्। पुनस्तत्रैव गमने हेतुः—सर्वातिशयया लक्ष्म्येति। सर्वेभ्योऽतिशयया। लक्ष्म्यर्थं कृतत्वात् लक्ष्मीस्तं सर्वभावेनाऽलङ्कृतवती, अतः सर्वातिशयया शोभया युक्तं भवति। स्वकीयं स्वरूपभूतं च तत् स्थानमिति नाऽन्यत्र गमनम्॥ ३२॥

## श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

मयीत्यत्र। लौकिकत्वादिति। स्मरणस्य तथात्वात्। ननु स्मरणस्य प्रायश्चित्तरूपत्वे पापापनोदोत्तरमकरणापत्त्या 'स्मर्तव्यः सततं विष्णुः' इत्यादिवाक्योक्ता नित्यता बाध्येतेत्यत आहुः—नित्यतेत्यादि। तथा च, प्रथमकक्षायां प्रायश्चित्तरूपता, पश्चात्तु स्वाभाविकत्वात्फलरूपता वा, अवश्यकर्तव्यं चेति न तद्बाध इत्यर्थः। नन्वेवं सति प्रकृते कथं पापोत्पत्तिरित्यत आहुः—भगवदिच्छयेत्यादि। ननु लौकिकाद्विलिष्टं वैदिकं स्मरणं तत्र चैतेऽधिकारिणोऽपीति, तेनैव कुतो न पापनिवृत्तिरित्यत आहुः—स्मरणं न संभवतीति। कर्मव्यासङ्गान्न संभवति। न चैतेषां ज्ञानेऽधिकारः 'पापीयसस्त्रय इमे' इति शापेन प्रतिबन्धादित्यर्थः। एवं प्रतिपादने भगवद्वाक्यमेव 'हन्तुं नेच्छे' इति बीजभूतं ज्ञेयम्। नन्वेवं सति लौकिकेऽप्युक्तन्यायापत्तिरित्यत आहुः—लौकिकेत्वित्यादि। बाधाभावादिति। लौकिकप्रतिकूलभगवदिच्छाभावात्। नन्वस्त्वेवम्, तथापि संरम्भस्यैव स्मारकताया अज्ञापने किं बीजमित्यत आहुः—कामेनेत्यादि। बृहस्पतिमिति। शुक्राचार्ये तपोर्थं गते तद्रूपं कृत्वा आगत (तो) बृहस्पतिरिति पुराणान्तरे कथनात्तम्। क्षिप्ता इति। अधिक्षिप्ता धिक्कृताः। यादवादीनामित्यत्राऽऽदिपदं पाण्डवोपलक्षकम्। तेषां च शापः पञ्चेन्द्रोपाख्याने प्रसिद्धः। तेन स्नेहसम्बन्धावुभावपि पाण्डवयादवयोः प्रापकौ ज्ञेयौ॥ ३१॥ ❀ ❀ द्वाःस्थावित्यत्र। त एव तत्र साधारणा इति। वैमानिका एव वैकुण्ठे साधारणजनरूपाः। उपकारित्वख्यापनार्थमिति। गर्वनिवारकत्वेन तथात्वार्थम्॥ ३२॥

## श्रीगिरिधरकृता बालप्रबोधिनी

एवं मुनिगमनानन्तरं भगवान् अनुगौ भृत्यौ जयविजयौ प्रत्याह उवाच। तदुक्तमेव दर्शयति—यातमिति, इतो मनुष्यलोकं गच्छतमित्यर्थः। तत्र गमने भयं कुर्वन्तावाह—मा भैष्टमिति, भयं मा कुरुतमित्यर्थः। शापवशान्नीचयोनौ कथं न दुःखं स्यात् येन भयं न कर्तव्यमित्यत आह—अस्तु शमिति। तत्रापि मदनुग्रहात् सर्वोत्कर्षेण सुखमेव भविष्यतीति भावः। ननु यद्येवमावयोरनुग्रह एव भगवता क्रियते तर्हि ब्रह्मदण्ड इव किं न निरस्यते इत्याशङ्क्याह—ब्रह्मतेज इति। तेजःकार्यत्वाद्दण्डस्यापि तेजश्शब्देन निर्देशः। ब्रह्मदण्डं हन्तुं निरसितुं समर्थोऽपि नेच्छे तन्निरासेच्छां न करोमि। कुतः? हि यस्मात् तन्मे मम मतं सम्मतम्। हीत्यत्र तु इति वा पाठः। इदमत्र तत्त्वम्—यद्यपि सनकादीनां क्रोधो न संभवति ब्रह्मदर्शित्वात्, न च जयविजययोर्ब्राह्मणप्रातिकूल्यं भगवदनुसारित्वात्, न च भगवतः स्वभक्तोपेक्षा भक्तवत्सलत्वात्, न च वैकुण्ठगतानां पुनर्जन्म 'मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते' इति वाक्यविरोधात्, तथापि भगवतः सिसृक्षादिवत् कदाचिद्युयुत्सा समजनि तदाऽन्येषामल्पबलत्वात्

---

१. स्वभावभगवदीयेन. ग. २. संरम्भस्य. ग।

स्वपार्षदानां तुल्यबलत्वेऽपि प्रतिपक्षत्वाभावेन युद्धानुपपत्तेरित्येतावेव ब्राह्मणनिवारणे प्रवर्त्य तेषु च क्रोधमुद्दीप्य तच्छापव्याजेन प्रतिपक्षौ विधाय युद्धकौतुकं सम्पादनीयमिति भगवतैव व्यवसितं अतः सर्वं सङ्गच्छते। तदुक्तं शिवपुराणे—'लक्ष्म्याः पत्युः समुत्पन्ना योद्धुमिच्छा मुनीश्वराः। एकस्मिन् दिवसे विष्णुर्विचारतत्परोऽभवत्॥ केन युद्धं प्रकर्तव्यं मया चैवं विचार्य च। जयश्च विजयश्चैव कुमारैः शापितौ तदा' इति। अत एवात्राप्युक्तं 'शापो मयैव निमितः, इति 'हन्तुं नेच्छे मतं तु मे' इति च ॥ २९ ॥ ❀ ❀ मयि संरम्भः क्रोधस्तस्य योगः अनवरतसम्बन्धस्तेन ब्रह्महेलनं ब्राह्मणतिरस्कारजं पापं निस्तीर्य निरवशेषं अपोह्य अल्पीयसैव कालेन पुनर्मे निकाशं समीपं प्रत्येष्यतं प्रत्यागमिष्यथः ॥ ३० ॥ भगवानेवं द्वास्थावादिश्य आज्ञाप्य विमानश्रेणय एव भूषणं यस्य तत् सर्वातिशयया सर्वत उत्कृष्टया लक्ष्म्या सम्पदा जुष्टं पूर्वं स्वं धिष्ण्यं स्वकीयं स्थानमाविशत् ॥ ३१ ॥ ❀ ❀ तौ तु गीर्वाणऋषभौ देवश्रेष्ठौ पार्षदौ दुस्तराद् ब्रह्मशापाद् हरिलोकतः पतन्तौ हतश्रियौ नष्टतेजसौ अतएव विगतस्मयौ विगतगर्वौ चाभूताम् ॥ ३२ ॥

## हिन्दी अनुवाद

फिर भगवान्ने अपने अनुचरोंसे कहा, 'जाओ' मनमें किसी प्रकारका भय मत करो; तुम्हारा कल्याण होगा। मैं सब कुछ करनेमें समर्थ होकर भी ब्रह्मतेजको मिटाना नहीं चाहता; क्योंकि ऐसा ही मुझे अभिमत भी है ॥ २९ ॥ ❀ ❀ एक बार जब मैं योगनिद्रामें स्थिर हो गया था, तब तुमने द्वारमें प्रवेश करती हुई लक्ष्मीजीको रोका था। उस समय उन्होंने क्रुद्ध होकर पहले ही तुम्हें यह शाप दे दिया था ॥ ३० ॥ ❀ ❀ अब दैत्ययोनिमें मेरे प्रति क्रोधाकारवृत्ति रहनेसे तुम्हें जो एकाग्रता होगी, उससे तुम इस विप्र-तिरस्कारजनित पापसे मुक्त हो जाओगे और फिर थोड़े ही समयमें मेरे पास लौट आओगे, ॥ ३१ ॥ ❀ ❀ द्वारपालोंको इस प्रकार आज्ञा दे, भगवान्ने विमानोंकी श्रेणियोंसे सुसज्जित अपने सर्वाधिक श्रीसम्पन्न धाममें प्रवेश किया ॥ ३२ ॥

**तौ तु गीर्वाणऋषभौ दुस्तराद्धरिलोकतः। हतश्रियौ ब्रह्मशापादभूतां विगतस्मयौ ॥ ३३ ॥**
**तदा विकुण्ठधिषणात्तयोर्निपतमानयोः। हाहाकारो महानासीद्विमानाग्र्येषु पुत्रकाः ॥ ३४ ॥**
**तावेव ह्यधुना प्राप्तौ पार्षदप्रवरौ हरेः। दितेर्जठरनिर्विष्टं काश्यपं तेज उल्बणम् ॥ ३५ ॥**
**तयोरसुरयोरद्य तेजसा यमयोर्हि वः। आक्षिप्तं तेज एतर्हि भगवांस्तद्विधित्सति ॥ ३६ ॥**
**विश्वस्य यः स्थितिलयोद्भवहेतुराद्यो योगेश्वरैरपि दुरत्यययोगमायः।**
**क्षेमं विधास्यति स नो भगवांस्त्र्यधीशस्तत्रास्मदीयविमृशेन कियानिहार्थः ॥ ३७ ॥**

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां तृतीयस्कन्धे षोडशोऽध्यायः ॥ १६ ॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका।

दुस्तरात् ब्रह्मशापात् हरिलोकतः पतताविति शेषः। हरिलोकतः एव हतश्रियावभूतामिति वा विगतस्मयौ नष्टगर्वौ च ॥ ३३ ॥ ❀ ❀ विकुंठस्य धिषणात्स्थानात्। पुत्रका हे देवाः ॥ ३४ ॥ ❀ ❀ काश्यपं तेजो वीर्यं प्राप्तौ ॥ ३५ ॥ ❀ ❀ सहैव गर्भे प्रविष्टौ यमौ तयोस्तेजसा वस्तेज आक्षिप्तं तिरस्कृतम्। न चात्र प्रतिविधिः शक्यः। यतः एतर्हीदानीं भगवानेव तदेवं विधातुमिच्छति ॥ ३६ ॥ ❀ ❀ तथापि कोऽप्युपायो विचार्यतामिति चेत्तत्राह। विश्वस्येति। त्रयाणां गुणानामीशः स एव सत्त्वोत्कर्षकाले नः क्षेमं विधास्यति विमृशेन विमर्शनेन ॥ ३७ ॥

इति श्रीमद्भा० टीकायां षोडशोऽध्यायः ॥ १६ ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः।

पूर्वव्याख्यानुसारेणाह। पक्षांतरमाह-हरिलोक एव हतश्रियौ जातौ सप्तम्यर्थेऽत्र तसिः। अंशेन श्रियोऽसुरभावत्वोक्तेः पूर्णश्रिया हीनावभूतामिति भावः ॥ ३३ ॥ ❀ ❀ तदा भगवद्वाक्योत्तरम्। तयोर्जयविजययोः। विमानाग्र्येषु सत्यादिलोकगतविमानश्रेष्ठेषु। पुत्रका इति। देवान्प्रति ब्रह्मण आमंत्रणम् ॥ ३४ ॥ ❀ ❀ प्राप्तौ अणिमाख्यसिद्ध्या प्रविष्टौ स्वदेहत्वेन स्वीकृतवंतावित्यर्थः। उल्बणमुग्रम् ॥ ३५ ॥ ❀ ❀ यमयोः श्लेषेणांतकतुल्ययोः। तर्हि किमप्युपशमनं कुर्विति चेत्तत्र के वराकाः शापदग्धयोरपि भगवत्पार्षदयोरुपरि नास्माकं प्रभुतेत्याह तत्खलूपशमनं स एव भगवान् विधातुमिच्छति ॥ ३६ ॥ ❀ ❀ ननु वयं संप्रति म्रियामहे स कदोपशमनं विधास्यतीति चेत्तत्र भवंतो म्रियन्तां जीवंतु वा तस्यैवेच्छा कारणम्। किं तु संप्रति

पालनसमये स पालयिष्यत्येवेत्याह। विश्वस्येति। तत्र प्रकारं तु वयं नैव जानीम इत्याह-योगेश्वरैरिति। तत्र सर्वज्ञानमिति भावः। ननु तदप्यत्र विपत्तावस्मदाश्वासनार्थं किमपि विमृशेति चेत्तत्राह तत्रास्मदीयेति। तत्र विपत्त्युपशमने। अस्मदीयविमृशेन अस्मत्कर्तृकविचारेण। कियानर्थो न कियदपीति। अस्मद्विमृश्यमन्यथा कर्त्तुमपि स प्रभुरिति भावः॥ ३७॥

इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे तृतीयस्कन्धे षोडशोऽध्यायः॥ १६॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या।

ब्रह्मशापात्तं व्याजीकृत्य भगवदिच्छयैवेत्यर्थः॥ ३३—३४॥ ❀ ❀ प्राप्तौ अणिमाख्यसिद्धया प्रविष्टौ अत एव विष्णुचक्रहतांहसावित्यत्र स्वामिपादैर्व्याख्यास्यते तयोरंह एव हतं ननु ताविति॥ ३५॥ ❀ ❀ अत्र तेजस्तिरकृतौ तत् तेजस्तिरस्करणम् एवं शापादिप्रकारेण किम्वा तदित्यस्यैव एवमित्यर्थः कृतः॥ ३६॥ ❀ ❀ तत्र एवंविधभगवदिच्छायाम्॥ ३७॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीराधारमणदासगोस्वामिविरचितायां दीपिकाटिप्पण्यां षोडशोऽध्यायः॥१६॥

### श्रीमद्वीरराघवव्याख्या

अथ तौ किंभूतौ किमकुर्वतामित्यत्राह। ताविति। गीर्वाणऋषभौ पार्षदप्रवरौ तौ द्वाःस्थौ दुस्तराद् ब्रह्मशापाद्धेतोर्हरिलोकतः हरिलोक एव हतश्रियौ भ्रष्टतेजस्कौ अत एव विगतस्मयौ विनष्टगर्वौबभूताम्॥ ३३॥ ❀ ❀ तदा विकुण्ठस्थानादुभयोर्निपतमानयोः सतोः हे पुत्रकाः! देवाः विमानाग्र्येषु वसतां महानुच्चैर्हाहाकार आसीत्॥ ३४॥ ❀ ❀ तावेव हरेः पार्षदश्रेष्ठौ दितेर्जठरे कुक्षौ निविष्टं प्रविष्टं कश्यपसम्बन्धि उल्बणमुग्रं तेजः वीर्यं प्रत्यधुना आशु प्राप्तौ भवतः॥ ३५॥ ❀ ❀ तयोरसुरयोरासुरजन्मनोर्यमयोः सहैव गर्भं प्रविश्य उत्पत्स्यमानयोस्तेजसाद्य वः युष्माकं तेजः आक्षिप्तमभिभूतमेतर्हि इदानीं भगवान् तद्भवतां तेजः विधास्यति करिष्यतीत्यर्थः॥ ३६॥ ❀ ❀ भगवान् कदाविधास्यति विधातुं स प्रभवेन्न वेति शङ्काद्वयं परिहरन्नितिहासं निगमयति। विश्वस्येति। विश्वस्य जगतः स्थितिलयोत्पत्तिहेतुरत एवाद्यः सृष्टेः प्रागपि निर्विकारत्वेन स्थितः कथं निर्विकारस्य सृष्ट्यादिहेतुत्वमित्यत्राह। योगेश्वरैरपि योगपरिशुद्धमानसैरपि दुरत्यया दुर्विवेचनीया आत्मीया विचित्रसर्गकारिणी शक्तिर्यस्मात्तेन संहारसृष्ट्यादिहेतुत्वमिति फलितम्। एवंभूतस्त्र्यधीशः त्रिलोकाधिपतिः यो भगवान् स एव नोऽस्माकं क्षेमं विधास्यति सत्त्वगुणोत्कर्षकाले करिष्यति तत्रेह तथाभूते एतस्मिन् भगवत्यस्मदीयस्यास्मदिष्टस्य विमृशेन कियानर्थः कियत्प्रयोजनम्। कृत्स्नविश्वस्थितिलयोद्भवलीलस्याचिन्त्यविविधविचित्ररचनासमर्थमायाधीशस्य षाड्गुण्यपूर्णस्य त्रिलोकाधिपतेः स्वाश्रितास्मदीयविमर्शनमत्यल्पं प्रयोजनमित्यर्थः॥ ३७॥

इति श्रीभागवतमहापुराणे तृतीयस्कंधे श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रिकायां षोडशोऽध्यायः॥ १६॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

दुर्मदानां दण्ड एव मदशान्तिहेतुरिति भावेनाह। तौ त्विति। गीर्वाणऋषभौ इति संधिकार्याभावादेव श्रैष्ठ्यमौपचारिकमिति दर्शयति। दुस्तराद् ब्रह्मशापतो विगतस्मयौ नष्टमदावभूतामित्यन्वयः॥ ३३॥ ❀ ❀ मदाभावात्तत्रैवावस्थानमभूत्किंनेत्याह। तदेति विकुण्ठधिषणात् वैकुण्ठलोकात् विमानाग्र्येषु स्थितानामिति शेषः॥ ३४॥ ❀ ❀ कथाप्रसङ्गं प्रकृते सङ्गमयति। तावेवेति। दितेरुदरं प्रविष्टं कश्यपस्य विद्यमानं काश्यपं तेजो वीर्यं प्राप्तौ॥ ३५॥ ❀ ❀ असुरयोरसुराविष्टयोः आक्षिप्तमभिभूतं तस्य प्रतीकारमुपदिशति। एतर्हीति। एतर्हि इदानीं तत्तस्य प्रतीकारं विधित्सति कर्तुमिच्छति कालान्तरे क्रियमाणत्वादपराधपूरणस्य चापेक्षितत्वादिदानीमिच्छैवेत्यतो विधित्सतीति॥ ३६॥ ❀ ❀ अधुनैव भवता कश्चिदुपायो निरूपणीय इत्याशङ्क्योक्तमेव विवृणोति। विश्वस्येति। विश्वस्य स्थित्यादिहेतुरित्यनेनास्य तत्कर्तृत्वं सूचयति। योगेश्वरैर्ब्रह्मादिभिरपि दुरत्ययो दुर्ज्ञेयो योगमार्ग उपायप्रकारो यस्य स तथा क्षेमं प्राप्तरक्षां विधास्यतीत्यनेन नेदानीं काल इति सूचयति उक्तकाले को निश्चय इत्यत उक्तं त्रातेति। त्राणशीलत्वात्करिष्यत्येवेति निश्चयोपपत्तेः हेत्वन्तरं चाह। त्र्यधीश इति। त्रयाणां लोकानामीश्वरा इन्द्रादयस्तेषामीश्वर ऐश्वर्यैकर्तृत्वेन स्वामी त्राणापेक्षायामिन्द्राद्यैश्वर्यमपि न स्यादिति फलितमाह। अस्मदीयेति। अस्मदीयेन विमर्शेनोपायनिर्मार्गणेन कियानर्थः न कोऽपीत्यर्थः 'स्यादप्यधिक ईश्वर' इति यादवः॥ ३७॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्यां षोडशोऽध्यायः॥ १६॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः।

दुस्तरात् त्यक्तुमशक्याद्धेतोर्हतश्रियौ दुःखेन म्लानौ स्मितरहितौ चाभूताम्। ब्रह्मशापं लक्ष्यीकृत्य भगवदिच्छयैवेत्यर्थः॥ ३३॥ ३४॥ ❀ ❀ तावेवेति। तौ पार्षदरूपावेव सन्तौ अणिमाख्यसिद्धया प्राप्तौ प्रविष्टौ॥ ३५॥ ❀ ❀ तयोरित्यस्य टीकायां तदेव विधातुमिति तदित्यस्यैवार्थः। नोऽस्माकं भक्तानान्तु सर्वदा क्षेममेव करिष्यति॥ ३६—३७॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भस्य षोडशोऽध्यायः॥ १६॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

हरिलोकतः पतन्ताविति शेषः । विगतस्मयौ नष्टानन्दौ ॥ ३३ ॥ ❀ ❀ विकुण्ठस्य धिषणात् स्थानात् विमानाग्र्येषु सत्यादिलोकस्थविमानश्रेष्ठेषु पुत्रकाः ! हे देवाः ! ॥ ३४ ॥ ❀ ❀ काश्यपं तेजः कश्यपस्य वीर्यं प्राप्तौ स्वदेहत्वेनाङ्गीकृतवन्ताविरयर्थः ॥ ३५ ॥ ❀ ❀ यमयोः श्लेषेणान्तकतुल्ययोः तर्हि किमप्युपशमनं कुर्विति चेत् तत्र के वयं वराकाः शापभ्रष्टयोरपि भगवत्पार्षदयोरुपरि नास्माकं प्रभुतेत्याह तत् खलूपशमनं स एव भगवान् विधातुमिच्छति ॥ ३६ ॥ ❀ ❀ ननु वयं सम्प्रति म्रियामहे स कदा उपशमं विधास्यतीति चेत्तत्र भवन्तो म्रियन्तां जीवन्तु वा तस्यैवेच्छा कारणं किन्तु सम्प्रति पालनसमये स पालयिष्यत्येवेत्याह । विश्वस्येति । तत्र प्रकारन्तु वयं नैव जानीम इत्याह । योगेश्वरैरिति । तत्र सर्वज्ञानामपि न ज्ञानमिति भावः । ननु तदप्यत्र विपत्तावस्मदाश्वासनार्थं किमपि परामृशेति तत्राह । तत्रास्मदीयेन विमृशेन विमर्शेन कियानर्थ इति अस्मद्विमृश्यमन्यथापि स कुर्यादिति भावः ॥ ३७ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् । तृतीये षोडशोऽध्यायः सङ्गतः सङ्गतः सताम् ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः ।

दुस्तरात् ब्रह्मशापात् हरिलोकतः पतन्तौ हतश्रियौ विगतस्मयौ नष्टगर्वौ च अभूताम् ॥ ३३ ॥ ❀ ❀ हे पुत्रकाः ! ॥ ३४ ॥ ❀ ❀ तेजो वीर्यं प्राप्तौ ॥ ३५ ॥ ❀ ❀ आक्षिप्तं तिरस्कृतम् । तद्युष्मत्तेजसस्तिरस्कारं भगवानेव विधातुमिच्छतीति ॥ ३६ ॥ ❀ ❀ विमृशेन विमर्शेन ॥ ३७ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे षोडशाध्यायार्थप्रकाशः ॥ १६ ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

एवं भगवतो गृहप्रवेशमुक्त्वा तयोरन्यत्र गमनमाह—तौ त्विति । तत्र तयोर्निलीय स्थितिं व्यावर्तयति तुशब्दः । तौ हि विचारकौ, भगवदाज्ञापरिपालनादेव निस्तार इति । तथा ज्ञाने हेतुः—गीर्वाणऋषभाविति । दुस्तरादिति तस्य लोकस्य तरणं दुःखेनाऽप्यशक्यम् । तत्रापि—हरिलोकतः । स हि सर्वदुःखनिवारकः । तत्रापि प्रकाशमानो लोकः, अन्यत्राऽज्ञानमेवेति भावः । वैकुण्ठस्थितयोर्या शोभा स्थिता, सा ब्रह्मशापाद्धता; अतस्तत्र स्थातुमपि न शक्यते, तत्रत्यैः सह साधर्म्याभावात् । किञ्च, विगतः स्मयो गर्वो ययोः । अत एवैतयोः पूर्वं गर्वः स्थितः, नतु निर्दुष्टौ । ततो निष्कासिताविति । लोकस्योपकारित्वख्यापनार्थं लोकत एव विगतस्मयाविति हेतुहेतुमद्भावो निरूपितः ॥ ३३ ॥ ❀ ❀ एवं तत्कृतमुपकारं प्राप्य तौ गताविल्याह—तदेति । वैकुण्ठधिषणात् तयोर्निपतमानयोः सतोः, तदा हाहाकार आसीत्, अयुक्तं जातमिति । विमानाग्र्येष्विति तेषां दर्शनयोग्यता निरूपिता । हाहाकारवर्णनं तयोर्दयासूचकम्, अत एवाऽत्र प्रतीकारो न कर्तव्यः, क्लिष्टयोरधिकक्लेशापत्तेः पुत्रका इति स्नेहेन संबोधनं स्वस्य दयावत्त्वज्ञापनार्थम्॥ ३४ ॥ ❀ ❀ तयोर्निरूपणस्य प्रकृतोपयोगमाह—तावेवेति । अधुना तावेव दितेर्जठरनिर्विष्टं काश्यपं तेजः प्राप्तौ । गर्भे प्रवेश एवाऽत्र, न तु प्रकारान्तरेणाऽन्नादिषु संक्रमः । सुरभावान्निर्गतत्वादसुरत्वम् । तयोर्योग्यं बीजमित्याह—उल्बणमिति । स्वभावत एवोल्बणम्, अन्यायेन निर्गतत्वात् । तत्रापि दितेर्जठरनिर्विष्टम् । तयोरापद्धेयमिति ख्यापनार्थं पूर्वावस्थाकीर्तनम्—हरेः पार्षदप्रवराविति ॥ ३५ ॥ ❀ ❀ तर्ह्यन्धकारे किं कारणम् ? तत्राऽऽह—तयोरिति । तौ ह्यधुना असुरौ, अतस्तत्तेजसा वो(?)युष्माकं तेज आक्षिप्तम् । भगवत्तेजसा दैत्यतेज आक्षिप्तं भवति, दैत्यतेजसा च देवानाम् । किञ्च, मुनीनामपकारसंस्मरणात्—दिवः । यमयोर्हि व इति पाठेऽपि भवतामेव यमौ, अत एव भवतां तेज आक्षिप्तं भवति । तर्हि प्रतीकारः कर्तव्य इति चेत्तत्राऽऽह—भगवांस्तद्विधित्सतीति । एतर्हीदानीं भवतामुपद्रवं भगवानेव विधित्सति, केन प्रतीकारः कर्तव्य इत्यर्थः ॥ ३६ ॥ ❀ ❀ तर्हि का गतिरित्याकांक्षायामाह—विश्वस्येति । का भवतां चिन्ता, स एव शान्तिं करिष्यति । तत्र हेतुः—यो विश्वस्य स्थितिलयोद्भवहेतुरिति । यस्तूत्पादयति, स एव पालयतीत्यधुनाऽपि स एव पालयिष्यति । अथ यदि न पालयिष्यति, तदा प्रलयकर्तृत्वात् प्रलयं करिष्यतीति न चिन्ता कर्तव्या, प्रलयस्याऽवश्यम्भावात् । तथापि क्लेशाचिन्तेति चेत् तद्युत्पादनमपि करिष्यतीति न चिन्ता कर्तव्या । किञ्च न केवलं भवतामेव तेन कार्यं कर्तव्यम्, किन्तु विश्वस्यैव । यतो विश्वस्यैव स उत्पत्त्यादिकर्ता । ननु साधारणदाहेऽपि यथा पलायनेन जङ्गालुर्न दह्यते, तथाऽस्मासु प्रतीकारस्त्वया कर्तव्य इत्याशङ्क्याऽऽह—योगेश्वरैरपि दुरत्यययोगमाय इति । भगवतो योगमाया सर्वक्लेशहेतुः, सा हि दुरत्यया । साधनेषु योगो महान्, तस्याऽपि ये ईशाः स्वाधीनयोगाः; तैरपि योगमायातिक्रमः कर्तुमशक्यः । अतो न मया[1] प्रतीकारः । तर्हि त्वत्तोऽप्युत्कृष्टो वक्तव्य इति चेत्तत्राऽऽह—आद्य इति । न हि तदपेक्षया कश्चिदाद्योऽस्ति, यो वक्तव्यः स्यात् । तर्हि स एवोच्यतामित्याशङ्क्याऽऽह—क्षेमं विधास्यतीति ।

---

१. मायाप्रतीकारः क ।

सोऽनुक्तोऽपि स्वयमेव क्षेमं विधास्यति। तत्र हेतुः—ह्यधीश इति। अन्यथा लोकद्वयमेव स्यात्, यदि ताभ्यां दिवो नाशः स्यात्। ननु ताभ्यां नाशे कृते पश्चात् कथं पालयिष्यतीत्याशङ्कयाऽऽह—भगवानिति। ननु तथापि त्वया शुभाशंसनं कर्तव्यम्, अस्माभिर्वा-त्वद्वचनेन तपस्यादिकं कर्त्तव्यमिति चेत्तत्राह—तत्राऽस्मदीयविमृशेनेति। यथा पर्जन्येऽवर्षति ततः पूर्वं घटेन क्षेत्रसेचनम्। यदि देवो न वर्षे सेकेनाऽपि न सस्योत्पत्तिः, वृष्टौ सत्यां सेको व्यर्थ एव। तत्राऽस्मदीयेन विमर्शेन। तत्र सर्गे[1] इहेदानीम्, कियान् वा अर्थः ? सर्वसर्वार्थमेव शुभं करिष्यतीति किं प्रत्येकप्रयासेन फलासाधकेनेत्यर्थः॥ ३८॥

इति श्रीभागवतसुबोधिन्यां श्रीलक्ष्मणभट्टात्मजश्रीवल्लभदीक्षितविरचितायां तृतीयस्कन्धे षोडशाध्यायविवरणम्।

**श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः**

तदेत्यत्र। (अ)प्रतिकार इति। दितिगर्भे प्रतिकारः॥ ३४॥ ❀ ❀ तयोरित्यत्र। भवतामे(व)यमाविति। 'स यमो देवानामिन्द्रियं वीर्यमयुवत, तद्यमस्य यमत्वम्' इति यमपदनिर्वचनाद्भवतामेवेन्द्रियवीर्यनाशकावित्यर्थः॥ ३६॥

इति श्रीतृतीयस्कन्धसुबोधिनीप्रकाशे षोडशाध्यायविवरणं सम्पूर्णम्।

**श्रीगिरिधरकृता बालप्रबोधिनी**

विश्वासार्थं दयां सूचयन् सम्बोधयति—हे पुत्रका इति। तदैव विकुण्ठस्य भगवतो धिषणात् स्थानात् तयोर्निपतमानयोः सतोर्विमानाग्र्येषु वसतां महान् उच्चैः हाहाकार आसीत्॥ ३३॥ ❀ ❀ तावेव हरेः पार्षदप्रवरावधुना दितेर्जठरे निर्विष्टं काश्यपं तेजः वीर्यं प्राप्तौ। हि यस्मात् तदुल्वणं निषिद्धसन्ध्याकाले धृतत्वाद्भयङ्करमसुरोत्पत्तिहेतुभूतमित्यर्थः॥ ३४॥ ❀ ❀ तयोर्यमयोः सहैव गर्भं प्रविश्य सहैवोत्पत्स्यमानयोरसुरयोस्तेजसा अद्य वः युष्माकं तेज आक्षिप्तमभिभूतम्। न चात्र प्रतिविधिः शक्यः, यत एतर्हि इदानीं भगवानेव तत् लोकोपद्रवं विधित्सति विधातुमिच्छतीत्यर्थः॥ ३५॥ ❀ ❀ तथाप्युपायस्त्वया विचार्यतामिति चेत्तत्राह—विश्वस्येति। यो भगवान् विश्वस्य स्थितिलयोद्भवहेतुः स एव नोऽस्माकं क्षेमं विधास्यति, तत्रैवं सति इहास्मिन् सङ्कटे अस्मदीयेन विमृशेन विचारेण कियानर्थः सिद्ध्यतीत्यन्वयः। विश्वस्थित्यादिहेतुत्वे हेतुमाह—अधीश इति, तद्धेतुः सत्त्वादिगुणत्रयनियन्तेत्यर्थः। तत्रापि हेतुमाह—आद्य इति, पुराणपुरुष इत्यर्थः। भवद्विचारस्य कथं निरर्थकत्वमित्यपेक्षायामाह—योगेश्वरेति, योगेश्वरैरपि अस्मदादिभिर्दुरत्ययाऽनुल्लङ्घ्या योगमाया इच्छाशक्तिर्यस्य स इत्यर्थः॥ ३६॥

इति श्रीवल्लभाचार्यवंश्यगोपालसूनुना॥ श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा॥ १॥
श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये॥ श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी॥ २॥
रचिता च तृतीयेऽत्र वन्धसर्गनिरूपणे॥ षोडशो विवृतो द्वास्थानुग्रहस्य निरूपकः॥ ३॥

**हिन्दी अनुवाद**

वे देवश्रेष्ठ जय-विजय तो ब्रह्मशापके कारण उस अलङ्घनीय भगवद्धाममें ही श्रीहीन हो गये तथा उनका सारा गर्व गलित हो गया॥ ३३॥ ❀ ❀ पुत्रो! फिर जब वे वैकुण्ठलोकसे गिरने लगे, तब वहाँ श्रेष्ठ विमानोंपर बैठे हुए वैकुण्ठ-वासियोंमें महान् हाहाकार मच गया॥ ३४॥ ❀ ❀ इस समय दितिके गर्भमें स्थित जो कश्यपजीका उग्र तेज है, उसमें भगवान्के उन पार्षदप्रवरोंने ही प्रवेश किया है॥ ३५॥ ❀ ❀ उन दोनों असुरोंके तेजसे ही तुम सबका तेज फीका पड़ गया है। इस समय भगवान् ऐसा ही करना चाहते हैं॥ ३६॥ ❀ ❀ जो आदिपुरुष संसारकी उत्पत्ति, स्थिति और लयके कारण हैं, जिनकी योगमायाको बड़े-बड़े योगिजन भी बड़ी कठिनतासे पार कर पाते हैं—वे सत्त्वादि तीनों गुणोंके नियन्ता श्रीहरि हमारा कल्याण करेंगे। अब इस विषयमें हमारे विशेष विचार करनेसे क्या लाभ हो सकता है॥ ३७॥

**१६ वाँ अध्याय समाप्त**

---

१. स्वर्गे ग।

# अथ सप्तदशोऽध्यायः

मैत्रेय उवाच

निशम्यात्मभुवा गीतं कारणं शङ्कयोज्झिताः । ततः सर्वे न्यवर्तन्त त्रिदिवाय दिवौकसः ॥ १ ॥
दितिस्तु भर्तुरादेशादपत्यपरिशङ्किनी । पूर्णे वर्षशते साध्वी पुत्रौ प्रसुषुवे यमौ ॥ २ ॥
उत्पाता बहवस्तत्र निपेतुर्जायमानयोः । दिवि भुव्यन्तरिक्षे च लोकस्योरुभयावहाः ॥ ३ ॥
सहाचला भुवश्चेलुर्दिशः सर्वाः प्रजज्वलुः । सोल्काश्चाशनयः पेतुः केतवश्चार्तिहेतवः ॥ ४ ॥
ववौ वायुः सुदुःस्पर्शः फूत्कारानीरयन्मुहुः । उन्मूलयन्नगपतीन्वात्यानीको रजोध्वजः ॥ ५ ॥
उद्धसत्तडिदम्भोदघटया नष्टभागणे । व्योम्नि प्रविष्टतमसा न स्म व्यादृश्यते पदम् ॥ ६ ॥
चुक्रोश विमना वार्धिरुदूर्मिः क्षुभितोदरः । सोदपानाश्च सरितश्चुक्षुभुः शुष्कपङ्कजाः ॥ ७ ॥
मुहुः परिधयोऽभूवन् सराह्वोः शशिसूर्ययोः । निर्घाता रथनिर्ह्रादा विवरेभ्यः प्रजज्ञिरे ॥ ८ ॥
अन्तर्ग्रामेषु मुखतो वमन्त्यो वह्निमुल्बणम् । सृगालोलूकटङ्कारैः प्रणेदुरशिवं शिवा ॥ ९ ॥
सङ्गीतवद्रोदनवदुन्नमय्य शिरोधराम् । व्यमुञ्चन् विविधा वाचो ग्रामसिंहास्ततस्ततः ॥ १० ॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका ।

ततः सप्तदशे जन्म तयोर्लोकभयंकरम् । हिरण्याक्षप्रभावश्च वर्ण्यते दिग्जयेऽद्भुतः ॥ १ ॥

क्षेमं विधास्यतीति ब्रह्मवचनानंतरं शंकया त्यक्ताः ॥ १ ॥ ❀ ❀ भर्तुरादेशात् । "लोकान्सपालांस्त्रींश्चण्डि मुहुराक्रंदयिष्यतः" इति वाक्यात् । स्वापत्याभ्यां परिशंकिनी देवोपद्रवं शंकमाना ॥ २ ॥ ❀ ❀ तत्र तदा निपेतुरुद्बभूवुः उरुभयमा समंताद्वहंतीति ॥ ३ ॥ ❀ ❀ अचलैः सहिता भुवः प्रदेशाः केतवश्चोदयं चक्रुरिति शेषः ॥ ४ ॥ ❀ ❀ सुदुस्पर्शः फूत्कारानिति तीव्रवायुशब्दानुकरणम् । नगपतीन्महावृक्षान् वात्या वातसमूह एवानीकं यस्य रज एव ध्वजो यस्य ॥ ५ ॥ ❀ ❀ उच्चैर्हसंत्य इव तडितो येषु तेषामंबुदानां घटया समूहेन नष्टो भागणः सूर्यादिप्रभासमूहो यस्मिन् । पदं स्थानं न व्यादृश्यते स्म ईषदपि नादृश्यत ॥ ६ ॥ ❀ ❀ वार्धिः समुद्रो विमना इव उन्नता ऊर्मयो यस्मात् क्षुभिता उदरस्था मकरादयो यस्मिन् उदपानैर्वापीकूपादिभिः सहिताः शुष्काणि पंकजानि यासु ॥ ७ ॥ ❀ ❀ परिधयः परिवेषाः सराह्वो राहुग्रस्तयोः निर्घाता निरभ्रगर्जितानि रथनिर्ह्रादतुल्या ध्वनयः विवरेभ्यो गिरिगुहाभ्यः ॥ ८ ॥ ❀ ❀ सृगालानामुलूकानां च टंकारैर्ध्वनिभिः सह शिवाः सृगाल्यः ॥ ९ ॥ ❀ ❀ ग्रामसिंहाः श्वानः ॥ १० ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः ।

तयोर्जयविजययोर्हिरण्याक्षहिरण्यकशिपुरूपेण जन्मेत्यर्थः । दिशां जये दिग्विजये ॥ १ ॥ कारणं तस्योपद्रवस्योत्पत्तौ प्रतीकारे च हेतुम् । ततः ब्रह्मवाक्यश्रुतेरनंतरं वैकुंठाद्वा त्यक्ता रहिता भगवति विश्वासेनेति भावः ॥ १ ॥ ❀ ❀ अपत्याभ्यां शंकावती सर्वलोकोपद्रवमपत्यं प्रति हरिहेतुकवधाद्वा शंकमानेत्यर्थः ॥ २ ॥ ❀ ❀ तदा तयोरुत्पत्तिकाले ( ३ ) भुवः प्रदेशा इति । भूम्यवयवा इत्यर्थः । तदुक्तं ज्यौतिषकल्पतरौ "चलयति पवनः शतद्वयं शतमनलो दशयोजनान्वितम् । सलिलमशीतियुतं शतं कुलिशधरो ह्यधिषष्टिकं शतं च" इति मिहिराचार्योक्तेः । सर्वभूकंपो न भवति किन्तु तत्प्रदेशा एव कंपन्ते पवनादिमंडलवशादिति मंडलानि तु "प्राग्द्वित्रिचतुर्भागेषु द्युनिशोरद्भुतेषु सर्वेषु । अनिलाग्निशक्रवरुणा मंडलपतयः शुभाशुभं भैः स्यात् ॥ १ ॥ अर्यम्णा[3]दिचतुष्कचन्द्र[4]तुरगा[5]दि[6]त्येषु वायुर्भवेद्देवे[7]ज्याज[8]विशाखयाम्य[9]युगले पित्र्य[10]द्वये चानलः । वि[11]श्वादित्रयधा[12]तृमै[13]त्रयुगलेष्विन्द्रो भवेन्मण्डलः [14]सार्पोपांत्य[15]शतां[16]त्यमूलयुगले[17]शानेष्वपामीश्वरः ॥" इति । एवं केतव

---

१. प्रा० पा०—रूर्मिभिः क्षुभि० । २. प्रा० पा०—शिवाः । ३. उत्तराफाल्गुनी । ४. मृगशिराः । ५. अश्विनी । ६. पुनर्वसुः । ७. पुष्पः । ८. पूर्वभाद्रपदा । ९. भरणी । १०. मघा । ११. उत्तराषाढा । १२. रोहिणी । १३. अनुराधा । १४. आश्लेषा । १५. उत्तराभाद्रपदा । १६. रेवती । १७. आर्द्रा ।

इति । बहुत्वेन केतवोऽपि बहव एव ते षष्ठस्कंधे नारायणवर्मव्याख्याने वर्णयिष्यंते सहस्रसंख्याका ब्रह्मपुत्रादिभेदेन ॥ ३ ॥ ४ ॥ ❀ ❀ सुदुःस्पर्शः अतीव दुःखदस्पर्शवान् । वात्या मंडलवायुः । अनीकं सेना ॥ ५ ॥ ६ ॥ ❀ ❀ उदरशब्देनोदरस्थोपादानं 'तात्स्थ्यात्ताच्छब्द्यम्' इति न्यायात् । चुक्षुभुरुच्छृंखला बभूवुः ॥ ७ ॥ ८ ॥ ❀ ❀ शिवाः शृगालस्त्रियः । अशिवा नाशबोधिका वाच इति शेषः । प्रणेदुर्जगदुः ॥ ९ ॥ ❀ ❀ शिरोधरां ग्रीवाम् । उन्नमय्योर्ध्वं कृत्वा । ततस्ततस्तत्रतत्र देशे ॥ १० ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनीव्याख्या ।

ततः षोडशाध्यायानन्तरम् । तयोर्जयविजययोरसुररूपेण जन्म कारणं तादृशानर्थे तन्निवारणे च हेतुं भगवदिच्छारूपं शङ्कया सन्देहेन ततः मेरुस्थब्रह्मसदनात् ॥ १ ॥ २ ॥ ❀ ❀ तदा प्रसूतिकाले जायमानयोस्सतोः ॥ ३ ॥ ❀ ❀ त्रिविधानेवोत्पातान्निर्दिशति सहाचला इत्यादिद्वादशभिः । केतवो लम्बायमानास्ताराः ॥ ४ ॥ ❀ ❀ अनीकं सैन्यम् ॥ ५ ॥ ❀ ❀ तमसा हेतुना ॥ ६ ॥ ७ ॥ ❀ ❀ परिवेषाः मण्डलानि ॥ ८ ॥ ❀ ❀ अशिवा अमङ्गलाः ॥ ९—११ ॥

### श्रीमद्वीरराघवव्याख्या

एवमथात्रापीति हासोऽयं श्रुतो मे वर्णितः पुरा । ब्रह्मणा देवदेवेन देवानामनुपृच्छतामित्युपक्रान्तदेवब्रह्मसंवादरूपम् इतिहासं प्रस्तुत्य तमेव निगमयन् परमप्रकृतं हिरण्याक्षवधं प्रतुष्टूपुर्ब्रह्मनारदसंवादोपोद्घातमितिहासान्तरं परमप्रकृतेन सङ्गमयन् हिरण्याक्षजन्मप्रभृतिवृत्तान्तमाह मैत्रेयः । आत्मभुवा ब्रह्मणा गीतं कारणं व्यसनकारणं निशम्य शङ्कया उज्झिताः क्षेमं विधास्यतीति वचनात् शङ्कया त्यक्ताः सर्वे त्रिदिवौकसः देवास्ततः ब्रह्मलोकात् त्रिदिवाय त्रिदिवं स्वर्गं प्रति जग्मुः ॥ १ ॥ ❀ ❀ दितिस्तु भर्तुः कश्यपस्यादेशात् 'लोकान्सपालांस्त्रींश्चण्डि मुहुराक्रन्दयिष्यत' इति वाक्यात् स्वापत्याभ्यां देवोपद्रवमाशङ्कमाना सती वर्षशते पूर्णे सति यमौ द्वौ पुत्रौ प्रसुषुवे प्रसूतवती युगपज्जातौ यमावित्युच्येते ॥ २ ॥ ❀ ❀ तत्र तज्जन्मदेशे तयोर्जायमानयोः सतोर्दिवि भुवि अन्तरिक्षे बहवः विचित्राः लोकस्योरु भृशं भयावहाः भयंकरा उत्पाताः निपेतुः पतिता उद्बभूवुरित्यर्थः ॥ ३ ॥ ❀ ❀ तानेव प्रपञ्चयति । सहेत्यादिभिरेकादशभिः । सहाचला सपर्वता भुवः भूभागाः चेलुश्चलितवत्यः सर्वा दिशः प्रजज्वलुः वह्निज्वाला युक्ता बभूवुः सोल्काः साङ्गाराः अशनयश्च पेतुः पतिताः आर्तिहेतवः लोकपीडासूचकाः केतवः धूमकेत्वादयः उद्बभूवुरिति शेषः ॥ ४ ॥ ❀ ❀ सुदुःस्पर्शः कठिनस्पर्शः फूत्कारानिति तीव्रवायुशब्दानुकरणम्, तान्मुहुरीरयन् ध्वनयन्नगपतीन्वृक्षश्रेष्ठानुन्मूलयन् वात्याश्चक्रवायवः तेषामनीकः समूहो यस्य रज एव ध्वजो यस्य वात्यानीतेति । पाठे वात्याभिरानीतमुद्धतं रज एव ध्वजो यस्येत्यर्थः । एवंविधो वायुर्ववौ प्रासरत् ॥ ५ ॥ ❀ ❀ उच्चैर्हसन्त्य इव तडितो येषु तेषामम्भोदानां मेघानां घटया समूहेन नष्टो भागणः सूर्यादौ प्रभासमूहो यस्मिन् तस्मिन् व्योम्नि प्रविष्टतमसा प्रविष्टगाढान्धकारेण तत्पदं तत्स्थानं न व्यादृश्यत ईषदपि नादृश्यतेत्यर्थः ॥ ६ ॥ ❀ ❀ वार्धिः समुद्रः विमना दुःखितचित्त इव उदूर्मिभिः क्षुभितमुदरं उदरस्था मकरादयो यस्य स चुक्रोश । शुष्कानि पङ्कजानि यासु ताः उदपानाः उदकानि पिबत्यस्मिन्निति वापीकूपतडागादयः तैः सहिताः नद्यश्चुक्षुभुः ॥ ७ ॥ ❀ ❀ सराह्वो राहुग्रस्तयोः शशिसूर्ययोः मुहुः पुनः पुनः परिधयः परिवेशाः अभवन् निर्घाता निरभ्रगर्जितानि रथनिर्ह्रादाः रथध्वनितुल्यध्वनयः विवरेभ्यः गिरिगह्वरेभ्यः प्रजज्ञिरे जाताः ॥ ८ ॥ ❀ ❀ अन्तर्ग्रामेषु ग्राममध्येषु मुखतो मुखैः उल्वणं वह्निं वमन्त्यः उद्गिरन्त्यः शिवा गोमायवः सृगालानामुलूकानां च टङ्कारैर्ध्वनिभिः सहाशिवं यथा तथा प्रणेदुः ध्वनितवत्यः शिवाः शृगालजात्यवान्तरजातीयाः ग्रामेषु यासां ध्वनिमत्यन्तारिष्टसूचकं लोका वदन्ति ॥ ९ ॥ ❀ ❀ ग्रामसिंहाः श्वानः शिरोधरां कन्धरामुन्नमय्योद्धृत्य संगीतवद्रोदनवच्च विविधाः वाचो भषणानि ततस्ततः तत्र तत्र व्यमुञ्चन्नकुर्वन्नित्यर्थः ॥ १० ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

अनन्यवध्ययोर्हिरण्यकशिपुहिरण्याक्षयोः निहन्तुर्हरेरमितमहिम्नोऽवगतत्वादस्मिन्भगवति भक्तिः कर्तव्येति तन्महिमा प्रतिपाद्यतेऽस्मिन्नध्यायद्वये । तत्रादौ देवानां त्रिदिवगमनं वक्ति । निशम्येति । आत्मभुवा ब्रह्मणा गीतं कथितम् ॥ १ ॥ ❀ ❀ अपत्यपरिशङ्किनी अपत्ययोर्हरेर्नाशशङ्कावती यमौ यमलौ ॥ २ ॥ ❀ ❀ आभ्यां दैत्याभ्यां यथा जनोपद्रवा भवन्ति तथा सूचकानुत्पातानाह । उत्पाता इति ॥ ३ ॥ ❀ ❀ सहाचलाः सपर्वताः प्रदेशबहुत्वाद्भुव इति बहुवचनं सोल्कापातसहिता अशनयो निर्घाताः ॥ ४ ॥ ❀ ❀ "फट्कारश्चैव फूत्कारस्तथा किलकिलादयः । अनुकारशब्दा विज्ञेया ये चान्ये तादृशा मताः" इत्यभिधानात् फटकारोऽनुकारशब्दः तद्वान् फटकारारावान् तादृशा इति टङ्कारादयः वात्यानां मण्डलवायूनामनीकं समूहो यस्य स तथा रजएव ध्वजो यस्य स रजोध्वजः ॥ ५॥ ❀ ❀ उल्लसन्त्यस्तडितो यपु ते तथा उल्लसत्तडितः ते च ते अम्भोदा मेघास्तेषां घटया मालया नष्टो भानां नक्षत्राणां गणो यस्मिंस्तत्तथा तस्मिन् तारकं तारकेतिवत् भं भेतिनाम द्वयम् ॥ ६ ॥ ❀ ❀ वार्धिः समुद्रः सोदपाना वापीकूपादिभिः सहिताः शुष्काणि म्लानानि पङ्कजानि यासु तास्तथा ॥ ७ ॥ ❀ ❀ परिधयः परिवेषाः

निर्घातरवो निर्मेघगर्जनशब्दः तस्य निर्ह्रादाः प्रतिध्वनयः विवरेभ्यः पर्वतगुहादिभ्यः ॥ ८ ॥ ❀ ❀ सृगाला पुमांसः शिवाः सृगालास्त्रय; अपि टङ्कारैर्निनन्दितानुकारस्वरैः प्रणेदुरित्यनेन नाशं सूचयति। तदुक्तम् 'अपिः संभावनाप्रश्नगर्हाशङ्कासमुच्चये।' नाशस्तत्र सृगालानां शिवानां चान्यथा स्वर इति ॥ ९ ॥ ❀ ❀ ग्रामसिंहाः सारमेयाः शिरोधराः कण्ठास्तानुन्नमय्य ऊर्ध्वीकृत्य संगीतवन्नाट्यगानवत् ॥ १० ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

कारणं तस्योपद्रवस्योत्पत्तौ प्रतीकारे च हेतुम्। शङ्कया सन्देहेन ॥ १ ॥ ❀ ❀ अपत्यपरिशङ्किनीति। शङ्कमाना सुरार्दनादिति पूर्वोक्तत्वात् तस्मात् तत्र भययुक्ता ॥ २—१४ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

तयोर्जन्मन्यरिष्टानि स्पष्टं सप्तदशेऽभवन्। उपाहसच्च दिग्जेता हिरण्याक्षः प्रचेतसम् ॥ १ ॥

शङ्कया उज्झिता भगवत्येव विश्वासेनेति भावः ॥ १ ॥ ❀ ❀ भर्त्तुरादेशात् लोकान् क्रन्दयिष्यतीति तद्वाक्यात् अपत्याभ्यां सर्वलोकोपद्रवमपत्यं प्रति विष्णुहस्ततो वधाद्वा शङ्कमाना ॥ २ ॥ ❀ ❀ निपेतुरुद्बभूवुः ॥ ३ ॥ ❀ ❀ केतवश्च उद्बभूवुरिति शेषः ॥ ४ ॥ ❀ ❀ फूत्कारानिति तीव्रवायुशब्दानुकरणं वात्या एव अनीकं सेना यस्य सः ॥ ५ ॥ उच्चैर्हसन्त्य इव तडितो येषु तेषामम्बुदानां घटया नष्टो भागणः सूर्यादिप्रभा यस्मिंस्तस्मिन् व्योम्नि पदं स्थानम् ॥ ६ ॥ ❀ ❀ वार्धिः समुद्रः। सोदपानाः सकूपाः ॥ ७ ॥ ❀ ❀ निर्घाता निरभ्रगर्जितानि रथनिर्ह्रादतुल्या ध्वनयः विवरेभ्यः गिरिगुहाभ्यः ॥ ८ ॥ ❀ ❀ टङ्कारैर्ध्वनिभिः सह शिवाः शृगालस्त्रियः ॥ ९ ॥ ❀ ❀ ग्रामसिंहाः श्वानः ॥ १० ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

एवं दित्युदरगतयोरसुरयोः भावकारणमुक्तमथसप्तदशे तज्जन्मादि वर्ण्यते उज्झितास्त्यक्ताः ॥ १ ॥ ❀ ❀ अपत्याभ्यां परिशङ्किनी देवाद्युपद्रवं शङ्कमाना ॥ २ ॥ ❀ ❀ तत्र तज्जन्मवेलायाम्। निपेतुः प्रादुर्बभूवुः ॥ ३ ॥ ❀ ❀ भुवः नानाद्वीपरूपाः केतवः उद्बभूवुरिति शेषः ॥ ४ ॥ ❀ ❀ वात्याश्चक्रवायव एव अनीकं सेना यस्य रज एव ध्वजो यस्य सः ॥ ५ ॥ ❀ ❀ उद्धसन्त्यः प्रस्फुरन्त्यः तडितो येषु तेषामम्बुदानां घटया समूहेन नष्टः भागणः भास्करादिदीप्तिसमूहो यस्मिन् पदं चक्षुर्विषयो न व्यदृश्यते स्म ईषदपि नादृश्यतेत्यर्थः ॥ ६ ॥ ❀ ❀ उद्धता ऊर्मयो यस्मात् क्षुभितोदरः विकृतान्तर्भागः ॥ ७ ॥ ❀ ❀ सराह्वोः सोपरागयोः निर्घाताः निर्मेघगर्जितानि रथनिर्ह्रादाः रथध्वनिनिभा ध्वनयः ॥ ८ ॥ ❀ ❀ अन्तर्ग्रामेषु ग्राममध्ये शृगालादिध्वनिभिः सह अशिवं यथा तथा प्रणेदुः। किं कुर्वन्त्यः मुखतो मुखैर्वह्निं वमन्तः ॥ ९ ॥ ❀ ❀ ग्रामसिंहाः श्वानः ॥ १० ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

कामादिना मार्गनाशा उपोद्घातेन वर्णिताः। सृष्टिमात्रप्रयोगाय तत्फलं वर्ण्यते शुभम् ॥ १ ॥
उत्पत्तिस्तामसी प्रोक्ता स्थितिर्वै राजसी मता। सात्त्विकः प्रलयश्चेति विपरीतं फलं तयोः ॥ २ ॥
उत्पत्तिर्द्विविधा प्रोक्ता स्वरूपानिष्टभेदतः। तावद्वृद्धिरिहोत्पत्तिः; कायवाग्दोषवर्णनम् ॥ ३ ॥
सजातीयविजातीयक्लेशदानाय जन्मनः। शापस्त्वेक इति प्रोक्तो हिरण्याक्षो न चाऽपरः ॥ ४ ॥
आधारस्तु स एवोक्तो द्वितीये दोषवर्णनम्। उत्पत्तिरेव शापेन नीचयोनौ निरूपिता ॥ ५ ॥
स्थितिनाशौ तयोस्तस्माद्वरावेवाऽत्र वर्ण्यते। कृष्णेन सहिता लीलाः स्थितिस्तस्य महात्मनः ॥ ६ ॥
निधनं चाऽपि तस्यैव कल्याणवचनान्मतम्। स्वरूपोत्पत्तिरन्यत्र हेतुरित्युच्यते बहु ॥ ७ ॥
अनिष्टसूचकं तत्र ज्ञानं दुःखप्रणाशनम्। अतः सप्तदशेऽध्याये दुःखाभावस्तथोद्गमः।
अनिष्टसूचनं दोषौ वर्ण्यन्ते पञ्च सम्भवे ॥ ८ ॥

तत्र प्रथमं निदानज्ञानेन भयनिवृत्तिमाह—निशम्येति। आत्मभुवा ब्रह्मणा गीतं कारणं निशम्य शङ्कया उज्झिता जाताः। आत्मभुवेति कारणम्। गीतमिति हर्षेण सार्वजनीनमुक्तमिति फले निःसन्देहः। शङ्का स्वनाशे। पीडामात्रं तु परिच्छिन्नत्वात् सोढव्यमिति शङ्कयैवोज्झिता जाताः, इष्टानिष्टयोः कालस्य च निर्द्धारितत्वात्। शङ्कानिवृत्त्यनन्तरं च सर्वे त्रिदिवाय न्यवर्तन्त। दिवौकस इति तत्र गमनावश्यकत्वम् ॥ १ ॥ ❀ ❀ उत्पत्तिमाह—दितिस्त्विति। ऋषिविचारेण सद्य एवोत्पादनीयौ, तथापि दित्या तथा न कृतमिति तुशब्दः। भर्तुः कश्यपस्य, आदेशात् वाक्यादाज्ञारूपात्, अपत्ये विषये परितः शङ्कायुक्ता जाता। तया

शङ्कया तयोर्दोषनिवृत्त्यर्थं मारकः कालः प्रतीक्षितः । स हि वर्षशतात्मको भवति, अतः पूर्णे वर्षशते पुत्रौ प्रसुषुवे । उभौ पुत्रौ जनितवती । तौ यमलावपि दुःखदातृत्वाद्यमावित्युक्तौ । पुत्रापराधेन भर्ता स्वात्मानं त्यक्ष्यतीति भयाच्छतवर्षधारणमिति बोधयति—साध्वीति । एते वर्षा मानुषाणाम् ॥ २ ॥ ❀ ❀ एवमुत्पत्तिमुक्त्वा तस्यास्तामसत्वं ज्ञापयितुमनिष्टसूचकान् बहूनुत्पातान् वर्णयति । कालप्रतीक्षा कृतेति संवत्सरात्मकः कालस्तत्राऽनिष्टसूचक इति द्वादशभिरनिष्टानि, फलं चैकेनोच्यते । तत्र प्रथमं सामान्यमनिष्टमाह—उत्पाता इति । तत्राश्रमे, तदा वा तयोर्जायमानयोः सतोः, त्रिविधा अपि जाताः । तेषां देशभेदेनैव त्रैविध्यमाह—दिवि भुव्यन्तरिक्षे चेति । सात्त्विकराजसतामसक्रमोऽत्र । चकारादात्मनि भूतकृतानि च । तेषां फलमाह—लोकस्योरुभयावहा इति । लोकस्येति सामान्यतः, सतां वा । उरुभयमावहन्तीत्यधिकं भयं लोकनाशात्, धर्मनाशाद्वा ॥ ३ ॥ ❀ ❀ उद्देशत उक्त्वा स्वरूपतस्त्रिविधानाह—सहाचला इति । एतेऽपि दिव्या इति केचित् । पर्वतसहिता भुवः खण्डशश्चेलुः । अनवच्छिन्ना चेत्, भूश्चचालेति वदेत् । सहाचला इत्यचलानामपि पृथक् चलनम् । दिग्दाहोऽन्तरिक्षस्थः, अन्तरिक्षे प्रतिष्ठिता दिश इति । सर्वा अष्टौ । जज्वलुरिति न धूमपात्रम् । दिव्यानाह— सोल्काश्चाऽशनय इति । उल्का अग्निसदृशा नक्षत्ररूपाः, तत्सहिता अशनयो वज्राः । केतवः शतं धूमकेतुप्रभृतयः । सर्वेषां साधारण्येन भयजनकत्वेऽपि केतूनामार्तिजनकत्वमधिकम् । यैः पातो दृश्यते, तेषां शरीरे पीडा भवतीति विशेषः । आर्तिहेतवो यमदूतादयो वा ॥ ४ ॥ ❀ ❀ भौतिकमाह—वायुरिति । वायुर्द्विविधः, वात्यारूपः सदागतिश्च । उभयविधोऽप्यनिष्टसूचक इत्याह । तत्र सदागतेरनिष्टसूचकं रूपमाह—मुहुःस्पर्श इति । निरन्तरगमनमेव स्वभावतोऽनिष्टसूचकम्, तत्रापि सुष्ठु दुष्टः स्पर्शो यस्य । फट्कारानीरयन्निति दुष्टशब्दाननुकुर्वन् वातीत्यर्थः । मुहुरित्येकस्मिन्नपि धाराप्रवाहे बहुधा शब्दजननम् । वात्यारूपस्याऽनिष्टलक्षणमाह—उन्मूलयन्निति । नगपतीन् वृक्षश्रेष्ठान् मूलत उत्पाटयन् भ्रमणवायुर्गगनपर्यन्तं रज उत्थापयतीत्यर्थः ॥ ५ ॥ ❀ ❀ मेघानामनिष्टलक्षणमाह—उद्धसदिति । ऊर्ध्वं हसन्त्य इव यास्तडितः, तत्सहिता येऽम्भोदाः, तेषां या घटा समूहः, तया कृत्वा नष्टो भागणस्तेजःसमूहो यत्र । एतादृशे व्योम्नि प्रविष्टं यत्तमः, तेन कृत्वा किमपि पदम्, ज्योतिषामन्येषां वा, न व्यादृश्यते स्म । स्मेति लौकिकं प्रमाणं संमत्यर्थमुच्यते । तडितां हासतुल्यता अनिष्टम्, अत्यन्तं तमश्च । तमस इति पाठे तमसः पदं मेघादिकं न दृश्यत इत्यर्थः ॥ ६ ॥ ❀ ❀ समुद्रस्याऽनिष्टलक्षणमाह—चुक्रोशेति । विमना इव वार्धिः समुद्रश्चुक्रोश । ऊर्ध्वमूर्मयो यस्य । क्षुभितमुदरं यस्य । मकराद्युद्वेगेन ज्ञायते । सोदपानाः कूपादिसहिताः सरितः पुष्करिण्यश्च शुष्कपङ्कजा जाताः । सरित एव वा ॥ ७ ॥ ❀ ❀ चन्द्रसूर्ययोरेकदैव राहुग्रस्तयोर्मुहुः परिधयोऽभूवन् । निर्घातो निरभ्रविद्युत्पातो जात इत्यर्थः । निर्ह्रादाः शब्दाः, रथघोषसदृशाः । विवरेभ्यः प्रदरेभ्यः, कन्दरादिभ्यः, पातालादिभ्यो वा सर्पादिबिलेभ्यो वा प्रकर्षेण जाताः ॥ ८ ॥ ❀ ❀ अन्तर्ग्रामेषु मुखत उल्बणं वह्निं वमन्त्यः शिवाः शृगाल्यः श्वगालोलूकटङ्कारैः सहिता वाचः प्रणेदुः प्रकर्षेण नेदुः । अशिवा इति लोकेऽपि तेषाममङ्गलत्वं प्रसिद्धमिति ज्ञापितम् ॥ ९ ॥ ❀ ❀ शुनामाह—संगीतवदिति । यथा लोके गीतं भवति, यथा वा रोदनं पाश्चात्त्यानाम् । शिरोधरां ग्रीवामुन्नमय्य विविधा वाचो व्यमुञ्चन् । ततस्ततः परितः । ग्रामसिंहाः श्वानः ॥ १० ॥

## श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

अथ सप्तदशाध्यायं विवरिषवः पूर्वत्रय्या एतस्याः सङ्गतिमाहुः—कामादिनेत्यादि । सृष्टिप्रयोगायेति । सृष्टेः प्रकर्षो भगवत्प्रयुक्तत्वम्, तस्य सम्बन्धाय । तथा च सृष्टिं प्रत्युपोद्घातः, एतत्त्रयीं प्रति तु तेषां हेतुतेति त्रय्योर्हेतुहेतुमद्भावः सङ्गतिरित्यर्थः । त्रयाणां क्रमेणाऽर्थमाहुः–उत्पत्तिरित्यादि । तयोरिति । जयविजययोः । फलं शाप ( फ ) लं शापजन्यम् । विपरीतम् । लोकविलक्षणम्, पर्यवसान उत्कर्षाधायीत्यर्थः । एवं सामान्यतस्त्रयाणामर्थमुक्त्वा विशेषं विभजन्ते–उत्पत्तिरित्यादिसार्धैश्चतुर्भिः । तत्र सपादैस्त्रिभिः प्रथमार्थः पूर्वं विमृश्यते । कायेतिचरणोऽग्रिमार्धेन संबध्यते । ननु भवत्वेवम्, सपरिकरात्तदुत्पत्तिः, तत्र तथापि सन्नियोगशिष्टत्वात् प्रसङ्गाच्चोभयोः कथाऽत्र वक्तव्या, तत्रैकस्यैव कुत उक्तेत्यत आहुः—शाप इत्यादि । तु शङ्कानिरासे । शाप एक इति प्रोक्तः, द्वितीयोऽप्युत्पत्त्या तूक्तः, सङ्क्षेपेण वृद्ध्या च । तु पुनः । हिरण्याक्ष आधारः, दितिदोषतः प्रथममुत्पन्नत्वादाधारदोषबहुलः । चोऽवधारणे । अपरो हिरण्यकशिपुस्तादृशो न । स एवोक्तो विशेषाकारेणोक्तः । द्वितीये हिरण्यकशिपौ उल्बणवीर्यजन्यत्वात् दोषवर्णनम्, 'अकुतोमृत्युरुद्धतः' इत्यनेनौद्धत्यमात्रवर्णनम् । किञ्च, इदमुत्पत्तिप्रकरणम्, अत उत्पत्तिरेव तयोर्नीचयोनौ शापेन निरूपिता, स्थितिनाशौ तु तस्माद्भगवतः सकाशात् । अतस्तदवतारान्तरस्याऽत्र प्रकृतत्वान्न द्वितीयस्य स्थितिनाशकथोक्ता, किन्तु प्रकृतत्वादेकस्यैवोक्तेत्यर्थः । द्वितीयतृतीययोराहुः—हरावित्यादि । अत्राऽस्मिन् प्रकरणे तस्य महात्मनः प्रकृष्टान्तःकरणस्य हिरण्याक्षस्य । कृष्णेन सहिता लीला इति हरावेव स्थितिः । च पुनस्तस्य निधनमप्येवं हरावेव मतम् । तत्र गमकम्—कल्याणवचनादिति । 'अस्तु शम्' इति भगवद्वचनात् । एवं सपादेनाऽग्रिमयोरर्थौ विमृष्टः । अतः परं द्वाभ्यामुपपत्त्या प्रकृतार्थमाहुः—स्वरूपेत्यादि । अन्यत्रेति । अन्येषामप्युत्पत्त्यादौ । तत्र ज्ञानमिति । तद्विषयकं निदानज्ञानम् । दोषाविति । वाक्कायदोषौ । सम्भव इति । उत्पत्तौ । निशम्येत्यत्र । आत्मभुवेति कारणमिति । स ह्यात्मनो भूर्देवानामुत्पत्तिस्थानम्, अतः कारणत्वात्तदुक्तं तद्धितकरं

चेति भावः ॥ १ ॥ ❀ ❀ सहाचला इत्यत्र । दिव्यानाहेति । एतेनोक्ता उत्पाता नारदसंहितोक्तेभ्यो भिन्नविधास्ततोऽपि भीषणा इति ज्ञाप्यते । तेन तद्विरोधो न दोषः ॥ ४ ॥ ❀ ❀ वायुरित्यत्र । सुष्ठु दुष्ट इति । स्फुटं दुष्टः ॥ ५ ॥

### श्रीगिरिधरकृता बालप्रबोधिनी

**सप्तदशे तयोर्जन्म सर्वलोकभयङ्करम् ॥ हिरण्याक्षप्रभावश्च विशेषेण निरूप्यते ॥ १ ॥**

एवमुपक्रान्तं देवब्रह्मसंवादं निरूप्य हिरण्याक्षजन्मप्रभृति वृत्तान्तमाह—निशम्येति । आत्मभुवा आत्मा परमात्मा श्रीनारायणस्तत उत्पन्नेन प्रमाणीभूतेन ब्रह्मणा गीतं वर्णितं दितिगर्भतेजसा देवतेजस्तिरस्कारस्य कारणं तथा 'भगवांस्तत् विधित्सति' एति तदुपद्रवशान्तिकारणं च निशम्य श्रुत्वा, कथमेवमुपद्रवो जातः कथं वा निवृत्तो भविष्यतीति या शङ्का तया उज्झिताः त्यक्ताः रहिताः सन्तो सर्वे दिवौकसो देवास्ततो ब्रह्मस्थानात् त्रिदिवाय स्वर्गं प्रति न्यवर्तन्त आजग्मुरित्यन्वयः ॥ १ ॥ ❀ ❀ दितिस्तु भर्तुः कश्यपस्य आदेशात् 'लोकान् सपालांस्त्रींश्चण्डि मुहुराक्रन्दयिष्यतः' इति वाक्यात् स्वापत्याभ्यां परिशङ्किनी लोकोपद्रवं शङ्कमाना सती मनुष्यमानेन वर्षशते पूर्णे सति यमौ सहगर्भं प्रविष्टौ पुत्रौ प्रसुषुवे प्रसूतवती । एवं शङ्कायां तावद्गर्भ-धारणसामर्थ्ये च हेतुं सूचयंस्तां विशिनष्टि—साध्वीति, यतः सदाचारनिष्ठेत्यर्थः ॥ २ ॥ ❀ ❀ तयोर्जायमानयोः सतोः तत्र तदा दिवि भुवि अन्तरिक्षे च लोकस्योरुभयावहाः अतिभयङ्कराः बहव उत्पाता निपेतुरुद्बभूवुरित्यर्थः ॥ ३ ॥ ❀ ❀ उत्पाता-नेव दर्शयति—सहाचला इत्यादिभिरेकादशभिः । अचलाः पर्वतास्तत्सहिता भुवः भूखण्डाः चेलुश्चलितवत्यः । सर्वा दिशः प्रजज्वलुः वह्निज्वालायुक्ता जाताः । सोल्काः साङ्गारा अशनयश्च पेतुः । आर्तिहेतवः लोकपीडासूचकाः केतवो धूमकेत्वादय उद्बभूवुरिति शेषः ॥ ४ ॥ ❀ ❀ सुदुस्पर्शः कठिनस्पर्शः फूत्कारान्-फूत्कारः तीव्रवायुशब्दानुकरणं तान्-मुहुः ईरयन् ध्वनयन् नगपर्वतान् महावृक्षान् उन्मूलयन् मूलत उत्पाटयन् वात्याश्चक्रवायव एव अनीकं सेना यस्य रज एव गगनपर्यन्तोत्थितो ध्वजो यस्य-'वात्यानीतरजोध्वजः' इतिपाठे वात्याभिरानीतं रज एव ध्वजो यस्य-एवंविधो वायुर्ववौ ॥ ५ ॥ ❀ ❀ उच्चैर्हसन्त्य इव तडितो येषु तेषामम्भोदानां मेघानां घटया समूहेन नष्टो भागणः सूर्यादिप्रभासमूहो यस्मिंस्तस्मिन् व्योम्नि प्रविष्टं यत्तमः अन्धका-रस्तेन पदं तत्तत्स्थानं न व्यादृश्यते स्म ईषदपि नादृश्यतेत्यर्थः ॥ ६ ॥ ❀ ❀ वार्द्धिः समुद्रः विमनाः दुःखितचित्त इव चुक्रोश । विमनस्त्वे हेतुमाह—उद्रोर्मिभिः उत्थिततरङ्गैः क्षुभितमुदरमुदरस्था मकरादयो यस्य स इत्यर्थः । शुष्कानि पङ्कजानि यासु ता उदपाना उदकानि पिबन्ति येष्विति वापीकूपतडागादयस्तैः सहिताः सरितो नद्यश्चुक्षुभुः ॥ ७ ॥ ❀ ❀ सराह्वोः राहुग्रस्तयोः शशिसूर्ययोः मुहुः पुनः पुनः परिधयः परिवेषा अभूवन् । निर्घाता निरभ्रगर्जितानि रथनिर्ह्रादाः रथध्वनितुल्यध्वनयो विवरेभ्यो गिरिगुहाभ्यः प्रजज्ञिरे जाताः ॥ ८ ॥ ❀ ❀ अन्तर्ग्रामेषु ग्राममध्येषु मुखत उल्बणं भयसूचकं वह्निं वमन्त्य उद्गिरन्त्यः शिवाः सृगाल्यः सृगालानामुलूकानां च टङ्कारैर्ध्वनिभिः सह अशिवमपशकुनं यथा भवति तथा प्रणेदुः ध्वनितवत्यः । शिवाः शृगालजा-त्यवान्तरजातीयाः ग्रामेषु यासां ध्वनिमत्यन्तारिष्टसूचकं लोका वदन्ति ॥ ९ ॥ ❀ ❀ ग्रामसिंहाः श्वानः शिरोधरां कन्धरां उन्नमय्य उद्धृत्य सङ्गीतवद्रोदनवच्च विविधा वाचो भाषणानि ततस्ततस्तत्र व्यमुञ्चन्नकुर्वन्नित्यर्थः ॥ १० ॥

### हिरण्यकशिपु और हिरण्याक्षका जन्म तथा हिरण्याक्षका दिग्विजय

### हिन्दी अनुवाद

श्रीमैत्रेयजीने कहा—विदुरजी ! ब्रह्माजीके कहनेसे अन्धकारका कारण जानकर देवताओंकी शङ्का निवृत्त हो गयी और फिर वे सब स्वर्गलोकको लौट आये ॥ १ ॥ ❀ ❀ इधर दितिको अपने पतिदेवके कथनानुसार पुत्रोंकी ओरसे उपद्रवादिकी आशङ्का बनी रहती थी । इसलिये जब पूरे सौ वर्ष बीत गये, तब उस साध्वीने दो यमज ( जुड़वे ) पुत्र उत्पन्न किये ॥ २ ॥ ❀ ❀ उनके जन्म लेते समय स्वर्ग, पृथ्वी और अन्तरिक्षमें अनेकों उत्पात होने लगे—जिनसे लोग अत्यन्त भयभीत हो गये ॥ ३ ॥ ❀ ❀ जहाँ-तहाँ पृथ्वी और पर्वत काँपने लगे, सब दिशाओंमें दाह होने लगा । जगह-जगह उल्कापात होने लगा, बिजलियाँ गिरने लगीं और आकाशमें अनिष्टसूचक धूमकेतु ( पुच्छल तारे ) दिखायी देने लगे ॥ ४ ॥ बार-बार साँय-साँय करती और बड़े-बड़े वृक्षोंको उखाड़ती हुई बड़ी विकट और असह्य वायु चलने लगी । उस समय आँधी उसकी सेना और उड़ती हुई धूल ध्वजाके समान जान पड़ती थी ॥ ५ ॥ ❀ ❀ बिजली जोर-जोर चमककर मानो खिल-खिला रही थी । घटाओंने ऐसा सघन रूप धारण किया कि सूर्य, चन्द्र आदि ग्रहोंके लुप्त हो जानेसे आकाशमें गहरा अँधेरा छा गया । उस समय कहीं कुछ भी दिखायी न देता था ॥ ६ ॥ ❀ ❀ समुद्र दुःखी मनुष्यकी भाँति कोलाहल करने लगा, उसमें ऊँची-ऊँची तरंगें उठने लगीं और उसके भीतर रहनेवाले जीवोंमें बड़ी हलचल मच गयी । नदियों तथा अन्य जलाशयोंमें भी बड़ी खलबली मच गयी और उनके कमल सूख गये ॥ ७ ॥ ❀ ❀ सूर्य और चन्द्रमा बार-बार ग्रसे जाने लगे तथा उनके चारों ओर अमङ्गलसूचक मण्डल बैठने लगे । बिना बादलोंके ही गरजनेका शब्द होने लगा तथा गुफाओंमेंसे रथकी

घर-घराहटका शब्द निकलने लगा ॥ ८ ॥ ❀ ❀ गाँवोंमें गीदड़ और उल्लुओंके भयानक शब्दके साथ ही सियारियाँ मुखसे दहकती हुई आग उगलकर बड़ा अमङ्गल शब्द करने लगीं ॥ ९ ॥ ❀ ❀ जहाँ-तहाँ कुत्ते अपनी गर्दन ऊपर उठाकर कभी गाने और कभी रोनेके समान भाँति-भाँतिके शब्द करने लगे ॥ १० ॥

खराश्च कर्कशैः क्षत्तः खुरैर्घ्नन्तो धरातलम् । खार्काररभसा मत्ताः पर्यधावन् वरूथशः ॥ ११ ॥
रुदन्तो रासभत्रस्ता नीडादुदपतन् खगाः । घोषेऽरण्ये च पशवः शकृन्मूत्रमकुर्वत ॥ १२ ॥
गावोऽत्रसन्नसृग्दोहास्तोयदाः पूयवर्षिणः । व्यरुदन्देवलिङ्गानि द्रुमाः पेतुर्विनानिलम् ॥ १३ ॥
ग्रहान् पुण्यतमानन्ये भगणांश्चापि दीपिताः । अतिचेरुर्वक्रगत्या युयुधुश्च परस्परम् ॥ १४ ॥
दृष्ट्वान्यांश्च महोत्पातानतत्त्वविदः प्रजाः । ब्रह्मपुत्रानृते भीता मेनिरे विश्वसम्प्लवम् ॥ १५ ॥
तावादिदैत्यौ सहसा व्यज्यमानात्मपौरुषौ । ववृधातेऽश्मसारेण कायेनाद्रिपती इव ॥ १६ ॥
दिविस्पृशौ हेमकिरीटकोटिभिर्निरुद्धकाष्ठौ स्फुरदङ्गदाभुजौ[1] ।
गां कम्पयन्तौ चरणैः पदे पदे कट्या सुकाञ्च्यार्कमतीत्य तस्थतुः ॥ १७ ॥
प्रजापतिर्नाम तयोरकार्षीद् यः प्राक् स्वदेहाद्यमयोरजायत ।
तं वै हिरण्यकशिपुं विदुः प्रजा यं तं हिरण्याक्षमसूत साग्रतः ॥ १८ ॥
चक्रे हिरण्यकशिपुर्दोर्भ्यां ब्रह्मवरेण च । वशे सपालाँल्लोकांस्त्रीनकुतोमृत्युरुद्धतः ॥ १९ ॥
हिरण्याक्षोऽनुजस्तस्य प्रियः प्रीतिकृदन्वहम् । गदापाणिर्दिवं यातो युयुत्सुर्मृगयन् रणम् ॥ २० ॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

कर्कशैस्तीक्ष्णैः । हे क्षत्तः खार्कारो गर्दभजातिशब्दस्तस्मिन् रभसः संभ्रमो येषाम् । वरूथशः संघशः ॥ ११ ॥ ❀ ❀ रासभशब्दात्त्रस्ताः सर्वतः क्रोशंतः ॥ १२ ॥ ❀ ❀ गावोऽत्रसन् त्रस्ताः असृग्दोहाश्च बभूवुः देवलिंगानि व्यरुदन् प्रतिमानामश्रुस्राव आसीदित्यर्थः ॥ १३ ॥ ❀ ❀ पुण्यतमान्गुरुबुधादीन्भगणान् बहूनि नक्षत्राणि चान्ये क्रूरग्रहा मंगलादयोऽतिचेरुरतिक्रम्य जग्मुर्वक्रगत्या प्रत्यावृत्त्य युयुधुश्च ॥ १४ ॥ ❀ ❀ ब्रह्मपुत्रानृते विना तेषां स्वशापादिज्ञानात् ॥ १५ ॥ ❀ ❀ व्यज्यमानमात्मपौरुषं पूर्वसिद्धं स्वपौरुषं ययोः ॥ १६ ॥ ❀ ❀ निरुद्धाः व्याप्ताः काष्ठा दिशो याभ्याम् । स्फुरंत्यंगदानि येषु ते भुजा ययोः अंगदेति टावंतत्वमार्षम् । शोभना कांची यस्यां तया कट्या ॥ १७ ॥ ❀ ❀ यमयोर्मध्ये यः स्वदेहात्प्रथममजायत तं यथा हिरण्यकशिपुं विदुः सा दितिः प्रथमं यमसूत तं हिरण्याक्षं यथा विदुस्तथा नाम कृतवानित्यर्थः । अयं भावः । यदा हि गर्भाधानसमये योनिपुष्पं विशद्वीर्यं द्विधा विभक्तमादिपश्चाद्भावेन प्रविशति तदा यमौ भवतस्तयोश्च पितृतः प्रवेशक्रमविपर्ययेण मातृतः प्रसूतिः । "यदा विशेद् द्विधा भूतं बीजं पुष्पं परिक्षरत् । द्वौ तदा भवतो गर्भौ सूतिर्वेशविपर्ययात् ।" इति पिंडसिद्धिस्मरणात् अतः स्वदेहात्पूर्वं यो जातस्तस्या हिरण्यकशिपुरिति दितिः प्रथमं यमसूत तस्य हिरण्याक्ष इति नाम कृतवानिति ॥ १८ ॥ ❀ ❀ दोर्भ्यामुद्धतो ब्रह्मवरेणाकुतोमृत्युः ॥ १९ ॥ ❀ ❀ रणं युद्धम् ॥ २० ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

धराया भूमेस्तलमुपरिभागम् ॥ ११ ॥ ❀ ❀ रासभो गर्दभः, नीडं पक्षिगृहम् । घोष आभीरपल्ली । शकृत्पुरीषम् ॥ १२ ॥ ❀ ❀ गावः सौरभेय्यः । असृग्रुधिरम् । दोहो दुग्धस्थानीयं यासां तास्तथा "पूयं स्यादामरुधिरे पवित्रे गमनेऽपि च" इति निरुक्तिः । इत्यर्थ इति । पाषाणादिमय्योऽपि देवता रुरुदुरिति भावः ॥ १३ ॥ ❀ ❀ आदिना शुक्रग्रहः । दीपिताः क्रुद्धाः । अतिचारवक्रत्वयुद्धादीनि ग्रहाणां सूर्यसिद्धान्तादिभ्योऽवसेयानि । स्थूलरीतिस्तु—"सूर्यात्पञ्चमगः खेटो वक्रो मार्गी चतुर्थगः । सूर्येण युक्तोऽस्तमयं प्रयाति रविप्रमुक्तो ह्युदयं प्रयाति । द्वितीयरामाब्धिषु सूर्यतश्चेच्छीघ्रः समो मंदगतिर्भवेद् ग्रहः ॥" इत्यस्मत्कृतपञ्चाङ्गदर्शनादवसेयेति ॥ १४ ॥ ❀ ❀ अन्यानुक्तेतरानुल्कापातादीन् । तेषामुत्पातानां तत्त्वं कारणं सनकाद्युत्सृष्टजयविजयशापलक्षणं विदंतीति तथा पुनर्नवा समास तथा सत्यः ॥ १५ ॥ ❀ ❀ ब्रह्मशापेऽपि भगवत्पार्षदयोरकृतैरपि सुकृतैस्त्रैलोक्याधिपत्यादिकृतैरप्यनंतदुष्कृतैर्नरकाभावादीत्याधिक्यमाह—ताविति । अश्मवत्सारेण दृढेन अद्रिपती

---

[1] प्रा० पा०—दाद्भुभौ ।

महापर्वतौ। व्यज्यमानं व्यक्तिं प्राप्तं सहसा झटिति ॥ १६ ॥ ❀ ❀ यद्वांगदेति सोमपावत्। कट्या कटिभागेन ॥ १७ ॥ ❀ ❀ प्रजापतिः कश्यपः यथातथयोरत्राध्याहारेणान्वयः। इत्यर्थ इति। स्वस्मात्प्राग् जातं ज्येष्ठं दितेः प्राग्जातं कनिष्टं नामाक्षरतारतम्येन बोधितवानिति भावः। यद्वोक्तरीत्या क्रमद्वैविध्येन द्वयोरेव ज्येष्ठत्वे पितुः प्राधान्याद्धिरण्यकशिपुरेव ज्येष्ठ इति ध्वनितम् 'हिरण्याक्षोऽनुजस्तस्य' इति वक्ष्यमाणत्वात् अत्राशयं स्वामिचरणा आहुः अयं भाव इति। योनिपुष्पं योन्यंतर्गतं पुष्पाकारं वीर्याशयं यमौ द्वौ तयोर्यमयोः। क्रमविपर्ययेणेति। यद्वस्तु पात्रे प्रथमं निक्षिप्यते तत्पश्चान्निस्सरति यच्च पश्चान्निक्षिप्यते तत्पूर्वं निःसरतीत्यर्थः। अत्र पिंडसिद्ध्याख्यग्रंथसंमतिमाह-यदेति। वेशविपर्ययात् प्रवेशक्रमवैपरीत्यत इत्यर्थः। अतः प्रवेशवैपरीत्येन सूतित्वात् ॥ १८ ॥ ❀ ❀ न कुतोऽपि वहिरंतः शुष्कार्द्रादिभिर्मृत्युर्यस्य स तथा दोर्भ्यां भुजाभ्याम् ॥ १९ ॥ तस्य हिरण्यकशिपोः। मृगयन्नन्वेषयन्। युयुत्सुर्योद्‌धुकामः ॥ २० ॥

## श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

रासभशब्दस्य तच्छब्दे रूढलक्षणा ॥ १२ ॥ ❀ ❀ रोदनशब्दस्य प्रतिमास्वसंभवात् अश्रुस्रावे लक्षणा अत इत्यर्थ इत्युक्तम् ॥ १३ ॥ १४ ॥ ❀ ❀ ब्रह्मपुत्रान् सनकादीन् तेषां सनकादीनां विश्वप्रलयमासन्नं मेनिरे ॥ १५ ॥ ❀ ❀ पूर्वसिद्धमिति व्याख्यानेन तयोरणिमाख्यसिद्ध्यासुरदेहे गूढस्थितिर्व्यज्यते ॥ १६ ॥ ❀ ❀ चरणैस्तच्चालनैः ॥ १७ ॥ ❀ ❀ यथा तथेत्यध्याहारादित्यर्थोक्तिः तयोश्च यमयोः पितृतः सकाशाद्वीर्य्यस्य योनिपुष्पं प्रति यो द्विधा प्रवेशक्रमस्तस्माद्विपर्ययेण प्रथमप्रविष्टस्य पश्चात्प्रसूतिः पश्चात्प्रविष्टस्य प्रथमं प्रसूतिरित्यर्थः। यथा संकुचितवीथ्यां प्रथमं प्रविष्टस्य रथादेः पश्चान्निःसृतिः पश्चात्प्रविष्टस्य तु प्रथमं निःसृतिस्तद्वदिति द्विधाभूतं पुंसो वीजं परिक्षरत्सत् यदा योनिपुष्पं प्रविशति तदा द्वौ गर्भौ भवतः वेशविपर्य्ययात्पितृतः प्रवेशक्रमविपर्य्ययेण मातृतः प्रसूतिर्भवतीति पिण्डसिद्धिनामकग्रन्थस्य पद्यार्थः अतः पूर्वव्याख्यात नियमाद्धेतोः ॥ १८ ॥ ❀ ❀ उद्धतः समुद्धतोऽविनीत इति यावत् अविनीते समुद्धत इति विश्वप्रकाशात् चस्त्वर्थे ॥ १९ ॥ ❀ ❀ तस्य हिरण्यकशिपोः ॥ २० ॥

## श्रीमद्वीरराघवव्याख्या

खुराः गर्दभाः कर्कशैः कठिनैः खुरैर्धरातलं घ्नन्तः ताडयन्तः खरखार्कारो गर्दभजातिशब्दः तस्मिन् रभसः सम्भ्रमस्तेन मत्ताः, रभसः सम्भ्रमो येषां त इति वा वरूथशः सङ्घशः पर्यधावन् ॥ ११ ॥ ❀ ❀ रासभत्रस्ताः रासभध्वनिभीताः खगाः रुदन्तो ध्वनिं कुर्वन्तो नीडात्कुलायादुदपतन्नुद्गम्य निपेतुः। घोषे आभीरपल्ल्यामरण्ये च ये पशवः ते शकृत्पुरीषं मूत्रं चाकुर्वंत उत्ससर्जुः ॥ १२ ॥ ❀ ❀ गावोऽसृग्दोहाः रक्तं दुहन्त्यः अत्र सन्तुद्वेजितवत्यः तोयदाः मेघाः पूयवर्षिणः कश्मलवर्षिणोऽभूवन् देवताप्रतिमाः व्यरुदन्नश्रूण्यमुञ्चन्ननिलं वायुं विनान्तरेणापि द्रुमाः पेतुः ॥ १३ ॥ ❀ ❀ पुण्यतमान् शुभकरान् ग्रहान् गुरुबुधादीन् भगणान् बहूनि नक्षत्राणि चान्ये क्रूरग्रहा अङ्गारकादयोऽतिपीडिताः यद्वा कर्तरि क्तः आर्षत्वात्पीडाकराः अतिचेरुरतिक्रम्य जग्मुः वक्रगत्या प्रत्यावृत्य परस्परं युयुधुश्च ॥ १४ ॥ ❀ ❀ अन्यांश्चोक्तानन्यांश्च महोत्पातान् दृष्ट्वा अतत्त्वविदस्तदुत्पातफलमजानत्यः ब्रह्मपुत्रान्मरीच्यादीन् ऋतेऽन्तरेण सर्वाः प्रजाः भीताः विश्वसम्प्लवं जगत्संहारं मेनिरेऽमन्यन्त। ब्रह्मपुत्रास्तु त्रैकाल्यवस्तुविषयज्ञानसम्पन्ना न भीता इत्यर्थः ॥ १५ ॥ ❀ ❀ तौ जातावादिदैत्यौ सहसा आशु व्यज्यमानमात्मपौरुषं पूर्वसिद्धं स्वपौरुषं ययोस्तावश्मसारेणायस्तुल्येन कायेनाद्रिपती इव पर्वतश्रेष्ठौ इव ववृधाते ॥ १६ ॥ ❀ ❀ पुनस्तावेव विशिनष्टि। दिवीति। हेमकिरीटकोटिभिः स्वर्णमयमुकुटाग्रैः दिविस्पृशौ तौ निरुद्धा काष्ठा दिशो याभ्यां तौ निरुद्धकोष्ठाविति पाठे भूषणबद्धकोष्ठावित्यर्थः। स्फुरन्त्यङ्गदानि येषु ते भुजा ययोस्तौ अङ्गदेत्यावन्तत्वमार्षं चरणैः पादैः पदे पदे प्रतिपादविन्यासं गां भूमिं कम्पयन्तौ सुशोभना काञ्ची मेखला यस्यां तया कट्यार्कं सूर्यमतीत्यातिक्रम्य तस्थतुः स्थितवन्तौ ॥ १७ ॥ ❀ ❀ तयोर्यमयोर्मध्ये यः स्वदेहात्प्रथममजायत तं हिरण्यकशिपुं यथा विदुः सा दितिः यं प्रथममसूत तं हिरण्याक्षं यथा विदुः तथा नामधेयं प्रजापतिः कश्यपः अकार्षीत्कृतवान्। अयं भावः यदा हि गर्भाधानसमये योनिपुष्पं विशद्वीर्यं द्विधा विभक्तमादितः प्राक्पश्चाद्भावेन प्रविशति तदा यमौ भवतः स्वपितृतः प्रवेशक्रमविपर्ययेण मातृतः प्रसूतिः। यदा विशद् द्विधाभूतं वीर्यं पुष्पं परिक्षरत् द्वौ तदा भवन्तौ गर्भौ सूतिर्वेशविपर्ययादिति। पिण्डसिद्धिस्मरणात्। अतः स्वदेहात्पूर्वं यो जातस्तस्य हिरण्यकशिपुरिति दितेः प्रथमं प्रसूतस्य हिरण्याक्ष इति नाम कृतवानित्यर्थः ॥ १८ ॥ ❀ ❀ हिरण्यकशिपुः स्वदोर्भ्यां भुजाभ्यामुद्धतः ब्रह्मणश्चतुर्मुखस्य वरेणाकुतोमृत्युः कुतश्चिदपि मृत्युरहितः सपालांल्लोकपालसहितान् लोकान्वशे चक्रे स्वाधीनानकार्षीत् ॥ १९ ॥ ❀ ❀ तस्य हिरण्यकशिपोरनुजः पितृक्रमादनुजः हिरण्याक्षः प्रियः प्रीतिविषयः अन्वहं स्वयमग्रे प्रीतिकृद्गदा पाणौ यस्य स युयुत्सुर्योद्‌धुमिच्छुरत एव रणं युद्धं मृगयन् दिवं यातः गतः ॥ २० ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

खराः क्रूराः उष्ट्राः खरोष्ट्रा खात्कारोऽप्यनुकारशब्दः तस्य रभसा वेगेन ॥ ११ ॥ ❀ ❀ रासभा गर्दभा गर्दभादिध्वनित्रस्ताः खगाः पक्षिणो नीडादुदपतन् ॥ १२ ॥ ❀ ❀ गावः सौरभेय्यः अत्रसन् भीताः । देवलिङ्गानि प्रतिमाः ॥ १३ ॥ ❀ ❀ अन्ये दुष्टग्रहाः ॥ १४ ॥ ❀ ❀ अन्यान् भूकम्पादीन् न तयोर्जयविजययोस्तत्त्वं शापादिनिमित्तं विदन्ति जानन्ति न तेषामुत्पातादीनां तत्त्वं जयविजयनिमित्तं विदन्तीति वा ॥ १५ ॥ ❀ ❀ इदानीं दैत्ययोर्भावं वक्ति । ताविति । सहसा बलेन पौरुषं पराक्रमः अश्मवत्सारेण दृढेन ॥ १६ ॥ ❀ ❀ कोटिभिरिति बहुवचनं चतुरस्रापेक्षया काष्ठा दिशः ॥ १७ ॥ ❀ ❀ तयोर्नामकरणं वक्ति । प्रजापतिरिति । प्रजापतिः कश्यपस्तयोर्नामाकार्षीदित्यन्वयः कथमत्राह । य इति । यमयोस्तयोर्मध्ये यः स्वदेहात्प्रागजायत जातस्तं हिरण्यकशिपुं विदुर्वैतयोर्माता सा ततः पश्चाद्यमसूत प्रजास्तं हिरण्याक्षं विदुरित्यर्थः ॥ १८ ॥ ❀ ❀ पूर्वजस्य जयस्य दिग्विजयं वक्ति । चक्र इति । न कुतोऽपि बहिरन्तः शुष्कादेरपि मृत्युर्यस्य सोऽकुतोमृत्युः ॥ १९ ॥ ❀ ❀ अनुजस्य दिशां जयं विस्तृत्याह । हिरण्याक्ष इति युयुत्सुर्योद्धुकामः ॥ २० ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

दृष्ट्वेति । ब्रह्मपुत्रान् सनकादीनृते ब्रह्मसृष्टाः । सर्व्वा एव प्रजा अतत्तत्त्वविदो भीता विश्वसम्प्लवं मेनिरे । देवास्तु ब्रह्मवाक्यात्तत्त्वविदोऽभीता आसन् न तु विश्वसम्प्लवं मेनिरे इत्यर्थः ॥ १५ ॥ ❀ ❀ ताविति । अत्रानयोरणिमादिशक्त्या गूढस्थितौ टीकासम्मतिश्च ॥ १६ ॥ ❀ ❀ सोमपाशब्दवदङ्गदाशब्दोऽपि भवेत् ॥ १७ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

हे क्षत्तः ! खार्कारो गर्दभशब्दानुकरणं तेनैव रभसो हर्षो येषां ते ॥ ११ ॥ ❀ ❀ रासभात् गर्दभशब्दात् त्रस्ताः ॥ १२ ॥ ❀ ❀ असृग्दोहा रुधिरदुग्धाः देवलिङ्गानि देवप्रतिमाः ॥ १३ ॥ ❀ ❀ पुण्यतमान् बृहस्पतिशुक्रादीन् अन्ये क्रूरग्रहा मङ्गलादयः अतिक्रम्य जग्मुर्वक्रगत्या प्रत्यावृत्य युयुधुः ॥ १४ ॥ ❀ ❀ ब्रह्मपुत्रान् सनकादीन् तेषां स्वशापादिज्ञानात् ॥ १५ ॥ ❀ ❀ ब्रह्मशापेऽपि भगवद्भक्तानां सर्वाधिक्यमिति बोधयितुं तयोरकृतैरतिसुकृतैः त्रैलोक्याधिपत्यबलप्रभावयोगैश्वर्यादीनि कृतैरपि बहिर्भिर्दुष्कृतैर्नरकयातनागन्धमावाभावं च वक्तुमाह । ताविति ॥ १६ ॥ ❀ ❀ पञ्चकदिनवयस्त्व एव तावेवमभूतामित्याह । दिवीति काष्ठा दिशः । अङ्गदेति टावन्तत्वमार्षम् ॥ १७ ॥ ❀ ❀ दशमेऽह्नि नामकरणमाह । प्रजापतिः कश्यपः यमयोर्मध्ये स्वदेहात् यः प्रथममजायत तं हिरण्यकशिपुं यथा विदुः सा दितिः प्रथमं यमसूत तं हिरण्याक्षं यथा विदुस्तथा तयोर्नाम अकार्षीदिति । यथातथयोरध्याहारेणान्वयः । 'यदा विशेद् द्विधा भूतं बीजं पुष्पं परिक्षरत् । द्वौ तदा भवतो गर्भौ सूतिर्वेशविपर्ययादि'ति पिण्डसिद्धिस्मरणात् । पितृक्रमेण हिरण्यकशिपुर्ज्येष्ठः पित्रा कश्यपेन तस्यैवादावाहितत्वात् । तथा मातृक्रमेण हिरण्याक्षो ज्येष्ठः मात्रा दित्या तस्यैवादौ प्रसूतत्वात् । एवं क्रमद्वैविध्येन द्वयोरपि ज्येष्ठत्वे पितुः प्राधान्यात् हिरण्यकशिपुरेव ज्येष्ठत्वेन व्याहृतः ॥ १८ ॥ ❀ ❀ दोर्भ्यां बाहुबलेनैवेत्यर्थः । ब्रह्मवरेण चेति चकारात् ब्रह्मवरोऽपि तत्र सहायोऽभूदित्यर्थः ॥ १९ ॥ २० ॥ २१ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

खार्कारे खरजातिशब्दे रभसः संभ्रमो येषां ते वरूथशः सङ्घशः संघीभूता इत्यर्थः ॥ ११ ॥ ❀ ❀ रासभत्रस्ताः गर्दभखुरमुखध्वनिभिर्भीताः ॥ १२ ॥ ❀ ❀ असृग्दोहाः अत्रसन् उद्वेजितवन्त्यः ॥ १३ ॥ ❀ ❀ पुण्यतमान् सौम्यान् अन्ये क्रूराः अतिचेरुः अतिक्रम्य जग्मुः वक्रगत्या प्रत्यावृत्य युयुधुश्च ॥ १४ ॥ १५ ॥ १६ ॥ ❀ ❀ निरुद्धाः व्याप्ताः काष्ठा दिशो याभ्यां तौ स्फुरन्त्यङ्गदानि येषु ते भुजे ययोस्तौ अङ्गदेति दैर्घ्यं छंन्दोऽनुरोधेन ॥ १७ ॥ ❀ ❀ प्रजापतिः कश्यपः तयोर्यमयोर्मध्ये गर्भाधानवेलायां यो वीर्यादुद्भूतः स्वदेहात् प्रथममजायत तं यथा हिरण्यकशिपुं विदुः सा दितिः प्रवेशक्रमतो निर्गमक्रमस्य वैपरीत्यात् यं प्रथममसूत तं हिरण्याक्षं यथा विदुः तथा नाम अकार्षीत् कृतवान् ॥ १८ ॥ ❀ ❀ ब्रह्मवरेण न कुतोऽपि मृत्युर्यस्य सः ॥ १९ ॥ २० ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

गर्दभानामनिष्टलक्षणमाह—[1]खराश्चेति । गर्दभाः कर्कशैः खुरैर्धरातलं घ्नन्तः, तज्जातिशब्देन खार्कारेण, रभसमत्यन्तमामत्ताः, रभसा वा मत्ताः, वरूथशः पर्यधावन् । तच्छब्देनाऽनिष्टान्तरमाह रुदन्तः खगा रासभत्रस्ताः सन्तः नीडादूर्ध्वमपतन् । रासभशब्देन

---

१. कर्कशैस्तीक्ष्णैः । हे क्षत्तः ! खार्कारो गर्दभजातीयः शब्दः, तस्मिन्रभसः संभ्रमो येषाम् । वरूथशः संघशः ॥ ११ ॥ खगानामाह—'क' पुस्तके तु इयं व्याख्या ।

तेऽपि भीता इत्यर्थः ॥ ११ ॥ १२ ॥ ❀ ❀ पशूनामनिष्टलक्षणमाह—घोषे आभीराणां गृहे, अरण्ये च भयात् शकृन्मूत्रं चाऽकुर्वत । गोमययुक्तं वा मूत्रमकुर्वत । गावश्चाऽत्रसन् । असृग्दोहा रुधिरदोग्ध्र्यः। तोयदा मेघाश्च पूयवर्षिणो जाताः । पूर्वं तेषामाच्छादकत्वमेवोक्तम् । देवलिङ्गानि देवप्रतिमा विशेषेणाऽरुदन्, शब्दं नेत्राज्जलं चाऽत्यजन् । द्रुमाश्चाऽनिलव्यतिरेकेण पेतुः ॥ १३ ॥ ❀ ❀ ग्रहयुद्धं च जातमित्याह—पुण्यतमान् शुक्रादीन् । अन्ये शनैश्चरादयः, आलक्ष्य पेतुरिति संबन्धः । अपीडयन्निति वाऽर्थात् भगणाः सर्वाण्येव नक्षत्राणि । दीपिता जाताः, केनचित् ज्वालिता इव जाता इत्यर्थः ॥ १४ ॥ ❀ ❀ एवं निमित्तान्युक्त्वा तेषां फलमाह—अन्याननुक्तानपि महोत्पातान् सूर्यपातचन्द्रपातरूपान् । अतत्त्वविदः प्रजा अस्य विश्वस्य संप्लवं प्रलयमेव मेनिरे । परं ये चत्वारो मूलभूताः सनकादयस्तद्व्यतिरेकेण । सर्व एव भीता जाताः, प्रलयं च मेनिरे ॥ १५ ॥ ❀ ❀ एवमनिष्टलक्षणानि सफलानि निरूप्य वृद्धिरूपामुत्पत्तिमाह—मधुकैटभौ आदावेव दैत्यत्वं प्राप्ताविति वा, दितिपुत्राणामादिभूतौ वा । सहसा कारणकालविलम्बव्यतिरेकेण । व्यज्यमानमात्मनि पौरुषं ययोः । व्यज्यमानात्मानौ पुरुषाविति वा । तौ हि पूर्वजन्मनि भगवत्सारूप्यं प्राप्तौ, इदानीमपि तथैव व्यज्यमानदेहौ सन्तौ पुरुषौ जातौ, न तु रूपान्तरेणेत्यर्थः । अथवा, व्यज्यमान आत्मनि पुरुषो याभ्याम् । अन्तश्चेद्भगवांस्तादृशरूपो भवति, तदैव बहिरन्यश्चतुर्भुजादिरूपो भवति; तथेमावपि वैजयन्त्यादियुक्तौ । अश्मवत्सारेण दृढेन, कायेन, अद्रिपती इव मेरू इव, ववृधाते ॥ १६ ॥ ❀ ❀ तयोर्वृद्धिं वर्णयति—दिविस्पृशाविति । हेमकिरीटयोः कोटिभिर्दिविस्पृशौ । द्वितीयार्थे सप्तमी, अलुक् च । स्फुरदङ्गद क्तौ भुजौ । अङ्गदावित्यङ्गदा, 'सुपां सुलुक्' इत्याकारादेशः । पदे पदे गां कम्पयन्ताविति भूमिं रसातलं नेतुमुद्यताविव । कार्येण तयो रूपमनुमेयमित्यर्थः । सुकाञ्च्या शोभना काञ्ची यत्र तादृश्या, कट्या अर्कमतीत्य तस्थतुः । एतावदूर्ध्वप्रमाणौ यावता कटिः सूर्यमण्डलादूर्ध्वं भवति ॥ १७ ॥ ❀ ❀ एवं तयोर्वृद्धिमुक्त्वा नामकरणादिसंस्कारानाह—प्रजापतिः कश्यपस्तयोर्नामाऽकार्षीत् । तन्मध्ये प्राग्यः स्वदेहाद्रेतोरूपेण अजायत । यद्यपि स्वस्मिन् न प्रवेशः, तथापि पश्चादपि तथोत्पन्नबीजसंबन्धात् स्वदेहादजायतेत्युक्तम् । तत्र हि बीजमेव पुत्रत्वे कारणम् । यमयोर्मध्ये यः पश्चात् उत्पद्यते मातृतः, स पितृतः प्रथममुत्पन्न इति ज्ञेयम्; क्रमेण प्रविष्टयोर्वैपरीत्येनैव निर्गमनसम्भवात् । तं हिरण्यकशिपुं विदुः प्रजाः । सा दितिर्यमग्रे असूत, तं हिरण्याक्षं विदुरित्यर्थः । अतो हिरण्याक्षः प्रथमत उत्पन्नोऽपि कनिष्ठः ॥ १८ ॥ ❀ ❀ तत्र हिरण्यकशिपोर्दोषरूपं वासनायां वक्तव्यमिति स्थितिमात्रमत्र सूच्यते द्वितीयस्याऽतिक्रमाभावाय—अयं द्विभुजोऽपि भुजद्वयेनैव, ब्रह्मवरेण च सह, लोकपालसहितांस्त्रीनेव लोकान् वशे चक्रे । तस्य धर्मो मोक्षश्च नाऽस्तीत्याह—अकुतोमृत्युरुद्धतश्च जात इति । मृत्युरेव नाऽस्तीति मृत्युविशेषो मुक्तिः सुतरामेव नास्ति । उद्धतत्वान्न धर्मः, नम्रीभाव एव तदुत्पत्तिः ॥ १९ ॥ ❀ ❀ एवं सामान्यतो हिरण्यकशिपुपराक्रममुक्त्वा हिरण्याक्षस्य दोष[2]त्वज्ञापनाय कृतमुपद्रवं स्वर्गादावाह—हिरण्याक्षोऽनुज इत्यादिषड्भिः । प्रयत्नश्च भयोत्पत्तिरूपं कार्यं च तस्य तत् । तेन गर्वस्ततो मादस्तस्मात्सर्वभयं पुनः । प्रथमं तस्य देवविरोधार्थं यत्नमाह—हिरण्याक्षोऽनुज इति । हिरण्यकशिपोरनुजः । तस्यैवाऽस्याऽपि जगत्त्रयं वश इत्युक्तं भवति । प्रिय इति तस्य प्रीतिविषयत्वात् हिरण्यकशिपुकृतं जयादिकमप्येतन्नामीत्युक्तम् । अयमपि प्रीतिकृत्, समानशीलव्यसनाभावे प्रीतिर्नोत्पद्यत इति । ज्येष्ठप्रीत्यर्थं देवविरोधार्थं यत्नं कृतवानित्याह—अन्वहं गदापाणिर्भूत्वा रणं मृगयन्; न दर्शनार्थं नारदवत्, किन्तु युयुत्सुः; देवैः सह युद्धं करिष्यन् दिवं ययौ ॥ २० ॥

## श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

ग्रहानित्यत्र । आलक्ष्य पेतुरिति सम्बन्ध इति । अग्रे च वक्रगत्येति वक्तव्यत्वात्तस्याश्चाऽतिचारेण सम्बन्धात् ग्रहानिति द्वितीयायाश्चाऽतियुयुधुरित्यनेनाऽसम्बन्धात् पूर्वश्लोकस्थां क्रियामादायैवं व्याख्यातम् ॥ १४ ॥

## श्रीगिरिधरकृता बालप्रबोधिनी

हे क्षत्तः खरा गर्दभाश्च कर्कशैस्तीक्ष्णैः खुरैः धरातलं पृथ्वीं घ्नन्तः खार्कारो गर्दभजातिशब्दः तस्मिन् रभसः सम्भ्रमो येषां ते मत्ताः सन्तो वरूथशः सङ्घशः पर्यधावन् ॥ ११ ॥ ❀ ❀ रासभत्रस्ताः रासभशब्दात् भीताः खगाः रुदन्तः क्रोशन्तो नीडात् कुलायात् उदपतन् उपरि उड्डीय अधो निपेतुरित्यर्थः । घोषे आभीरपल्ल्यां अरण्ये च ये पशवस्ते शकृत् पुरीषं मूत्रं च अकुर्वत उत्ससृजुः ॥ १२ ॥ ❀ ❀ गावः अत्रसन् असृग्दोहाः रक्तं दुहन्त्यश्च बभूवुः । तोयदा मेघाः पूयवर्षिणः कश्मलवर्षिणो जाताः । देवलिङ्गानि देवताप्रतिमाः व्यरुदन् अश्रूण्यमुञ्चन् । अनिलं वायुं विनापि द्रुमाः पेतुः ॥ १३ ॥ ❀ ❀ पुण्यतमान् शुभकरान् ग्रहान् बुधगुर्वादीन् भगणान् अन्यानि बहूनि नक्षत्राणि च अन्ये क्रूरग्रहाः शन्यङ्गारकादयः अतिदीप्तिमन्तः सन्तोऽतिचेरुः अतिक्रम्य जग्मुरित्यर्थः । वक्रगत्यावृत्त्य परस्परं युयुधुश्च ॥ १४ ॥ ❀ ❀ उत्कान् ततोऽन्यांश्च महोत्पातान् दृष्ट्वा भीताः प्रजाः विश्वस्य सम्प्लवं प्रलयमागतं मेनिरे । कुत इत्यपेक्षायामाह—अतत्त्वविद इति, यतस्तेषामुत्पातानां तत्त्वं पूर्वोक्तं शापादिका-

---

२. दोषवत्त्व ख. घ. ङ. च ।

रणमजानन्त्य इत्यर्थः । ब्रह्मपुत्रानृते इति, सनकादींश्चतुरो विना, तेषां स्वशापादिज्ञानात्तथा मोहो न जात इत्यर्थः ॥ १५ ॥ ❀ ❀ तौ जातावादिदैत्यौ सहसा आशु व्यज्यमानं आत्मपौरुषं पूर्वसिद्धं स्वपौरुषं ययोस्तौ अश्मसारेण अयस्तुल्येन कायेन अद्रिपती इव पर्वतश्रेष्ठाविव ववृधाते ॥ १६ ॥ ❀ ❀ हेमकिरीटकोटिभिः स्वर्णमयमुकुटाग्रैर्दिविस्पृशौ दिवं स्पृशन्तौ निरुद्धाः व्याप्ताः काष्ठा दिशो याभ्यां तौ स्फुरन्त्यङ्गदानि येषु ते भुजा ययोस्तौ । अङ्गदेति टाबन्तत्वमार्षम् । चरणैः पदे पदे प्रतिपदविन्यासे गां भूमिं कम्पयन्तौ सुशोभना काञ्ची मेखला यस्यां तया कट्या प्रकाशेनोच्चत्वेन चार्कं सूर्यमतीत्य अतिक्रम्य तस्थतुः ॥ १७ ॥ ❀ ❀ एवं तयोः स्वरूपं निरूप्य नामकरणमाह—प्रजापतिरिति । तयोर्यमयोर्मध्ये यः स्वदेहात् प्राक् प्रथममजायत तं हिरण्यकशिपुं यथा विदुः सा दितिर्यमग्रतः प्रथममसूत तं हिरण्याक्षं यथा विदुस्तथा नामधेयं प्रजापतिः कश्यपः अकार्षीत् कृतवानित्यर्थः । तत्रायं भावः—यदा हि गर्भाधानसमये योनिपुष्पं प्रविशद्वीर्यं द्विधा विविक्तं यदादिपश्चाद्भावेन प्रविशति तदा यमौ भवतः, तयोश्च पितृतः प्रवेशक्रमविपर्ययेण मातृतः प्रसूतिः, 'यदा विशेद् द्विधा वीर्यं योनिपुष्पं परिक्षरत् । द्वौ तदा भवतो गर्भौ सूतिर्वेशविपर्ययात्' इति पिण्डसिद्धिस्मरणात्, अतः स्वदेहात् पूर्वं यो जातस्तस्य हिरण्यकशिपुरिति दितेः प्रथमप्रसूतस्य हिरण्याक्ष इति नाम कृतवान् अतएव च हिरण्याक्षस्य दितेः प्रथमजातत्वेऽपि कनिष्ठत्वं कश्यपतः पश्चाज्जातत्वात्, हिरण्यकशिपोश्च दितितः पश्चाज्जातत्वेऽपि ज्येष्ठत्वं कश्यपतः प्रथमजातत्वादिति ॥ १८ ॥ ❀ ❀ तयोः प्रभावमाह—चक्रे इति । स्वदोर्भ्यां स्वभुजबलेन उद्धतः अनम्रः ब्रह्मणो वरेण वा अकुतोमृत्युः सर्वतो मृत्युरहितो हिरण्यकशिपुः सपालान् त्रीँल्लोकान् स्ववशे चक्रे ॥ १९ ॥ ❀ ❀ हिरण्याक्षस्तस्यानुजः अतएव तस्य प्रियः अतः स्वयमपि तत्प्रीतिकृत् अतस्तत्प्रीतये युयुत्सुर्गदापाणिश्च सन्नन्वहं रणं युद्धं मृगयन् कदाचिद्दिवं स्वर्गं यातः ॥ २० ॥

## हिन्दी अनुवाद

विदुरजी ! झुंड-के-झुंड गधे अपने कठोर खुरोंसे पृथ्वी खोदते और रेंकनेका शब्द करते मतवाले होकर इधर-उधर दौड़ने लगे ॥ ११ ॥ ❀ ❀ पक्षी गधोंके शब्दसे डरकर रोते-चिल्लाते अपने घोंसलोंसे उड़ने लगे। अपनी खिरकोंमें बँधे हुए और वनमें चरते हुए गाय-बैल आदि पशु डरके मारे मल-मूत्र त्यागने लगे ॥ १२ ॥ ❀ ❀ गौएँ ऐसी डर गयीं कि दुहनेपर उनके थनोंसे खून निकलने लगा, बादल पीबकी वर्षा करने लगे, देवमूर्तियोंकी आँखोंसे आँसू बहने लगे और आँधीके बिना ही वृक्ष उखड़-उखड़कर गिरने लगे ॥ १३ ॥ ❀ ❀ शनि, राहु आदि क्रूर ग्रह प्रबल होकर चन्द्र, बृहस्पति आदि सौम्य ग्रहों तथा बहुत-से नक्षत्रोंको लाँघकर वक्रगतिसे चलने लगे तथा आपसमें युद्ध करने लगे ॥ १४ ॥ ❀ ❀ ऐसे ही और भी अनेकों भयङ्कर उत्पात देखकर सनकादिके सिवा और सब जीव भयभीत हो गये तथा उन उत्पातोंका मर्म न जाननेके कारण उन्होंने यही समझा कि अब संसारका प्रलय होनेवाला है ॥ १५ ॥ ❀ ❀ वे दोनों आदिदैत्य जन्मके अनन्तर शीघ्र ही अपने फौलादके समान कठोर शरीरसे बढ़कर महान् पर्वतोंके सदृश हो गये तथा उनका पूर्व पराक्रम भी प्रकट हो गया ॥ १६ ॥ ❀ ❀ वे इतने ऊँचे थे कि उनके सुवर्णमय मुकुटोंका अग्रभाग स्वर्गको स्पर्श करता था और उनके विशाल शरीरोंसे सारी दिशाएँ आच्छादित हो जाती थीं। उनकी भुजाओंमें सोनेके बाजूबंद चमचमा रहे थे। पृथ्वीपर जो वे एक-एक कदम रखते थे, उससे भूकम्प होने लगता था और जब वे खड़े होते थे, तब उनकी जगमगाती हुई चमकीली करधनीसे सुशोभित कमर अपने प्रकाशसे सूर्यको भी मात करती थी ॥ १७ ॥ ❀ ❀ वे दोनों यमज थे। प्रजापति कश्यपजीने उनका नामकरण किया। उनमेंसे जो उनके वीर्यसे दितिके गर्भमें पहले स्थापित हुआ था, उसका नाम हिरण्यकशिपु रक्खा। जो दितिके उदरसे पहले निकला, वह हिरण्याक्षके नामसे विख्यात हुआ ॥ १८ ॥ ❀ ❀ हिरण्यकशिपु ब्रह्माजीके वरसे मृत्युभयसे मुक्त हो जानेके कारण बड़ा उद्धत हो गया था। उसने अपनी भुजाओंके बलसे लोकपालोंके सहित तीनों लोकोंको अपने वशमें कर लिया ॥ १९ ॥ ❀ ❀ वह अपने छोटे भाई हिरण्याक्षको बहुत चाहता था और वह भी सदा अपने बड़े भाईका प्रिय कार्य करता रहता था। एक दिन वह हिरण्याक्ष हाथमें गदा लिये युद्धका अवसर ढूँढ़ता हुआ स्वर्गलोकमें जा पहुँचा ॥ २० ॥

**तं वीक्ष्य दुःसहजवं रणत्काञ्चननूपुरम् । वैजयन्त्या स्रजा जुष्टमंसन्यस्तमहागदम् ॥ २१ ॥**
**मनोवीर्यवरोत्सिक्तमसृण्यमकुतोभयम् । भीता निलिल्यिरे देवास्तार्क्ष्यत्रस्ता इवाहयः ॥ २२ ॥**
**स वै तिरोहितान् दृष्ट्वा महसा स्वेन दैत्यराट् । सेन्द्रान्देवगणान् क्षीबानपश्यन् व्यनदद् भृशम् ॥ २३ ॥**
**ततो निवृत्तः क्रीडिष्यन् गम्भीरं भीमनिस्वनम् । विजगाहे महासत्त्वो वार्धिं मत्त इव द्विपः ॥ २४ ॥**

**तस्मिन् प्रविष्टे वरुणस्य सैनिका यादोगणाः सन्नधियः ससाध्वसाः ।**
**अहन्यमाना अपि तस्य वर्चसा प्रधर्षिता दूरतरं प्रदुद्रुवुः ॥ २५ ॥**

स वर्षपूगानुदधौ महाबलश्चरन्महोर्मी[1]ञ्छ्वसनेरितान्मुहुः ।
मौर्व्याभि[2]जघ्ने गदया विभावरीमासेदिवांस्तात पुरीं[3] प्रचेतसः ॥ २६ ॥
तत्रोपलभ्यासुरलोकपालकं यादोगणानामृषभं प्रचेतसम् ।
स्मयन् प्रलब्धुं प्रणिपत्य नीचवज्जगाद मे देह्यधिराज संयुगम् ॥ २७ ॥
त्वं लोकपालोऽधिपतिर्बृहच्छ्रवा वीर्यापहो दुर्मदवीरमानिनाम् ।
विजित्य लोकेऽखिल[4]दैत्यदानवान् यद्राजसूयेन पुरायजत्प्र[5]भो ॥ २८ ॥
स एवमुत्सिक्तमदेन विद्विषा दृढं प्रलब्धो भगवानपां पतिः ।
रोषं समुत्थं शमयन् स्वया धिया व्यवोचदङ्गोपशमं गता वयम् ॥ २९ ॥
पश्यामि नान्यं पुरुषात्पुरातनाद् यः संयुगे त्वां रणमार्गकोविदम् ।
आराधयिष्यत्यसुरर्षभेहि तं मनस्विनो यं गृणते भवादृशाः ॥ ३० ॥
तं वीरमारादभिपद्य विस्मयः शयिष्यसे वीरशये श्वभिर्वृतः ।
यस्त्वद्विधानामसतां प्रशान्तये रूपाणि धत्ते सदनुग्रहेच्छया ॥ ३१ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां तृतीयस्कन्धे हिरण्याक्षदिग्विजये सप्तदशोऽध्यायः ॥ १७ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

दुःसहो जवो वेगो यस्य । रणंतौ कांचनमयौ नूपुरौ यस्य । अंसे न्यस्ता महती गदा येन ॥ २१ ॥ ❀ ❀ मनसा शौर्येण वीर्येण बलेन वरेण चोत्सिक्तं गर्वितम् । अस्पृण्यं निरंकुशम् । निलिल्यिरे लीना बभूवुः ॥ २२ ॥ ❀ ❀ स्वेन महसा तेजसा तिरोहितान्स दृष्ट्वा ज्ञात्वा क्षीबान्मत्तानपश्यन्सन् क्लीबानिति पाठे पौरुषहीनान् ॥ २३ ॥ २४ ॥ ❀ ❀ सन्ना अवसन्ना धीर्येषाम् । वर्चसा तेजसा प्रधर्षिता अभिभूताः संतः ॥ २५ ॥ ❀ ❀ महोर्मीनभिजघ्ने मौर्व्या मारयति इति मौर्वं कार्ष्णायसं तन्मय्या । यद्वा मूर्वा नाम तृणविशेषः तन्मयरज्ज्वा दृढनिबद्धयेत्यर्थः । विभावरीसंज्ञाम् । आसेदिवान् । प्राप्तः ॥ २६ ॥ ❀ ❀ असुराणां लोकः पातालं तत्पालकम् । प्रलब्धुमुपहसितुं प्रणिपत्य ॥ २७ ॥ ❀ ❀ यद्यस्माद्राजसूयेन भवानयजत् ॥ २८ ॥ ❀ ❀ उपशमं युद्धादिकौतुकादुपरमम् ॥ २९ ॥ ❀ ❀ युद्धमार्गनिपुणं त्वां यस्तोषयिष्यति तमिति गच्छ । गृणते स्तुवन्ति ॥ ३० ॥ ❀ ❀ आराच्छीघ्रम् । विस्मयो नष्टगर्वः वीरशये रणांगणे रूपाणि वराहाद्यवतारान् ॥ ३१ ॥

इति श्रीमद्भागवते तृतीयस्कंधे टीकायां सप्तदशोध्यायः ॥ १७ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

तं हिरण्याक्षं वीक्ष्य देवा निलिल्यिरे इत्यग्रिमेणान्वयः । "वैजयन्ती भवेन्मालाष्टधा मौक्तिकनिर्मिता" इति लक्षणादष्टप्रकारमौक्तिकमालया युतमित्यर्थः । अष्टधा मुक्ताश्च "जीमूतकरिमत्स्याहिवेणुशंखवराहजाः । शुक्त्युद्भवाश्च शास्त्रेषु मौक्तिका ह्यष्टधा मताः" इति रत्नपरीक्षार्णव उक्ताः । तीर्थस्तु—"पुष्पैश्चतुर्गुणां मालां वैजयन्तीं विदुर्बुधाः" इत्याह ॥ २१ ॥ ❀ ❀ वरेण देवप्रसादेन । तेनापि तपसा वरो लब्ध इत्यन्यत्रोक्तेः । सृणिनांकुशेन विनेयः सृण्यो न सृण्योऽसृण्यस्तम् "सृणिः स्यादंकुशेऽध्वनि" रिति निरुक्तिः ॥ २२ ॥ ❀ ❀ स दैत्यः ॥ २३ ॥ ❀ ❀ स्वप्रतियोद्धारं दशदिक्षु क्वापि कमप्यदृष्ट्वा स्वीयमहाबलस्योष्मणाऽनुतप्तो वारिधिमध्ये कथंचित्कश्चिद्वा तिष्ठेत्तेन सह युद्धापेक्षया वार्द्धिं जगाहे इत्याह तत इति । ततो देवतिरोधानानंतरम् ॥ २४ ॥ ❀ ❀ अवसन्नाः त्रस्ताः सभयाः तस्मिन्दैत्ये प्रविष्टे सति ॥ २५ ॥ ❀ ❀ स दैत्यः वर्षपूगान् वर्षसमूहान्व्याप्य गदायाः कार्ष्णायसमयत्वं तु प्रसिद्धमेव किं पुनस्तत्कथनेनेति चेदाह—यद्वेति । इत्यर्थ इति । मूर्वातृणानामतिनम्रत्वेन त्रोटितुमशक्यत्वादिति भावः । हे तातेति । प्रिय त्वत्तवैतच्चरितं श्रावयामीति संबुद्ध्यभिप्रायः ॥ २६ ॥ ❀ ❀ तत्र

---

१. प्रा० पा०—महोर्म्युच्छ्वस० । २. प्रा० पा०—मौर्व्या निज० । ३. प्रा० पा०—पुरं । ४. प्रा० पा०—खिलदेवदान० । ५. प्रा० पा०—प्रभुः ।

विभावर्याम्। असुरलोका दानवप्रायजनाः। "तं गृहीत्वानयद्भृत्यो वरुणस्यासुरोऽतिकम्" इति दशमे वक्ष्यमाणत्वात्॥ २७॥ भवानयजदिति पृथग्वाक्यम्। विजित्येति विपरीतलक्षणा। तेन दैत्यानां तदानीमभावात्सर्वैरपि राजसूयः कर्तुं शक्यते स्म तथा चाधुना मां विजित्य पुनरपि राजसूयं कुर्विति भावः। यद्वा। कृतोऽपि राजसूयस्तदैव ते सिध्यति यदा मां जयसीति भावः॥ २८॥ ❀ ❀ स वरुणः। उत्सिक्तोऽत्यधिको मदो यस्य तेन प्रलब्ध उपहसितः। शमयन्निति। अत्र मे रोषो न किञ्चित्कर्तुं शक्त इति विमर्शे नेत्यर्थः। उपशमं गताः संप्रति प्रवयसो जाता इत्यर्थः। तेन यौवनावस्थायां यदि त्वां प्राप्स्यं तदा त्वादृशसहस्रमप्यजेष्यमिति भावः। यद्वा। उपशमं संन्यासं तेन संन्यासं चेन्नाकरिष्यं तदाधुनापि त्वामजेष्यमिति भावः॥ २९॥ ❀ ❀ तर्हि मे रणकंडूयानिवृत्तिः कथं स्यात्तत्राह—पश्यामीति। यस्तोषयिष्यति तस्मादित्यर्थः। मनस्विनः शूराः गृणते रणकंडूयापहर्तृत्वेन स्तुवंति॥ ३०॥ ❀ ❀ ननु तं कतिभिर्दिनैर्लप्स्य इति चेत्तत्राह—तमिति। आरात्पंचषैरेव दिनैरित्यर्थः। संप्रति तु गर्वरोगपीडितो रणकंडूयोद्वेगेन त्वं संशेष इति भावः। वीराः शेरते यत्र स वीरशयो रणांगणम्। तत्र तव शय्यापि समुचिता भविष्यतीत्यर्थः। तदा चरणाद्यंगपरिचारिका अपि बहवो भविष्यंतीत्याह—श्वभिरिति। नन्वेवं चेत्तस्याकारं ज्ञापय यथाधुनैव ब्रह्माण्डस्यांतर्बहिश्चान्विष्य तं निष्कास्य तेन सहाहं योत्स्ये। कथं स मां हन्यादिति यूयं पश्यथेति तत्राह—त्वद्विधानां त्वादृशानां प्रशांतये नाशाय। आदिना नृसिंहादिग्रहः। सामान्यतोऽहं जानामि त्वां तु केन रूपेण वधिष्यतीति विशेषं न जानामीति भावः॥ ३१॥

इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे तृतीयस्कन्धे सप्तदशोऽध्यायः॥ १७॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

तमिति युग्मकम्। तार्क्ष्यो गरुडः॥ २१॥ २२॥ ❀ ❀ क्षीवाणौ समबुध्यत इति दशमे व्यासप्रयोगात् क्षीवो मत्त इत्येकवचनान्ततया व्याख्यानान्नान्तोऽपि क्षीवन् शब्दोऽस्तीति गम्यते अकारान्ततच्छब्दे तु बहुवचनत्वेन देवविशेषणता तेषां भीतत्वेन मत्तत्वासंभवान्न संगच्छत इति ज्ञेयम्॥ २३॥ ❀ ❀ ततः स्वर्गात्॥ २४॥ ❀ ❀ तस्मिन् हिरण्याक्षे समुद्रं प्रविष्टे सति। अवसन्ना खिन्नाः तत्र हेतुः ससाध्वसाः सभयाः॥ २५॥ ❀ ❀ मूर्वशब्दस्य लोहवाचकत्वमप्रसिद्धमतो यद्वेति एवंभूतपराक्रमोऽप्यनायासेनैव भगवता हत इत्याश्चर्यबोधार्थं तातेति सम्बोधनम्॥ २६॥ ❀ ❀ तत्र विभावर्याम्॥ २७॥ ❀ ❀ लोके त्रिभुवने॥ २८॥ ❀ ❀ उत्सिक्तमदेन निरङ्कुशगर्वेण प्रलब्ध उपहसितः धिया बलवति दोषः स्वहानिकर इति व्यवसायेन शमयन्निरुन्धन्॥ २९॥ ३०॥ ❀ ❀ धत्ते जगति प्रकटयति॥ ३१॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीराधारमणदासगोस्वामिविरचितदीपिन्याख्यायां दीपिका-टिप्पण्यां सप्तदशोऽध्यायः॥ १७॥

### श्रीमद्वीरराघवव्याख्या

तं हिरण्याक्षं दुःसहबलं रणन्ती काञ्चनमये नूपुरे यस्य तं वैजयन्त्या स्रजा पुष्पपल्लवादिनिर्मितस्रग्विशेषो वैजयन्ती तया स्रजा जुष्टमलंकृतम्। अंसे स्कन्धे न्यस्ता निहिता महती गुर्वी गदा येन तम्॥ २१॥ ❀ ❀ मनसा वीर्येण बलेन वरेण च उद्रिक्तं गर्वितमस्पृण्यं निरङ्कुशमकुतोऽभयं कुतश्चिद्भीतिमकुर्वाणं वीक्ष्य भीताः सन्तो निलिलियिरेऽन्तर्हिताः। तत्र दृष्टान्तः तार्क्ष्यात् गरुत्मतः त्रस्ता अहयः सर्पा इवेति॥ २२॥ ❀ ❀ स दैत्यराट् हिरण्याक्षः स्वेन महसा तेजसा तिरोहिता-निन्द्रसहितान् देवसमूहान् ज्ञात्वा क्षीवो मत्तः न पश्यन् तान्नपश्यन् क्लीबानपश्यदिति पाठे पौरुषहीनानपश्यत् ज्ञातवान् अत एवं भृशं व्यनदत् अध्वनत्॥ २३॥ ❀ ❀ ततो दिवः निवृत्तः प्रत्यागतः क्रीडिष्यन् विहरिष्यन् गम्भीरमगाधं भीमः निस्वनः तरङ्गजन्यो ध्वनिर्यस्मिंस्तं वार्द्धिं समुद्रं महासत्त्वो महाबलः हिरण्याक्षः द्विपो गज इव विजगाहे विलोडितवान्॥ २४॥ ❀ ❀ तस्मिन् हिरण्याक्षे प्रविष्टे सति वरुणसैनिका यादोगणाः ससाध्वसा भययुक्ताः अत एव सन्नधियः विषण्णबुद्धयः यद्वा-वसन्नबुद्धयः दुःखितचित्ता इति यावत्। अहन्यमाना अपि तस्यासुरस्य वर्चसा तेजसा प्रधर्षिता अभिभूताः सन्तो दूरतरं प्रदुद्रवुः पलायितवन्तः॥ २५॥ ❀ ❀ वर्षपूगान् बृहत्संवत्सरानुदधौ समुद्रे चलन् चरन् श्वसनेनेरितानुत्थितान्महोर्मीनुच्चैस्तरङ्गान्मुहुर्मुहुः मौर्व्याऽयोमय्या गदया अभिजघ्ने प्रजहार। तत्र विभावरीं प्रचेतसः वरुणस्य पुरीमासेदिवान्प्राप्तः॥ २६॥ ❀ ❀ तत्र विभावर्यामसुराणां यो लोकः पातालः तस्य पालकं यादोगणानामृषभमधिपतिं प्रचेतसं वरुणमुपलभ्य समीपे प्राप्य स्मयन्नीष-द्धसन् प्रलब्धुं नीचवत्प्रणिपत्य प्रणम्य हे अधिराज! वरुण मे मह्यं संयुगं देहीति जगाद मया सह युध्यस्वेत्युक्तवान्॥ २७॥ ❀ ❀ तस्य युयुत्सामुत्पिपादयिषुराह। त्वं लोकपालानामधिपतिः बृहच्छ्रवा महायशाः दुर्मदा ये वीरमात्मानं मन्यन्ते तेषां वीर्यापहर्ता कथमहमेवंविधस्त्वया निश्चित इत्यत्राह। यद्यस्मात्पुराखिलान् दैत्यान् दानवांश्च विजित्य राजसूयेनायजदिष्ट-वान्॥ २८॥ ❀ ❀ हे प्रभो! स भगवानपां पतिः वरुणः उद्रिक्तमदेन विद्विषा असुरेणैवमुक्तः दृढं यथा तथा प्रलब्धो

विप्रलब्धः समुत्थरोषं स्वया धिया शमयन् उवाच हे असुर! वयं उपशमं युयुत्सायामुपरमं गताः प्राप्ताः ॥ २९ ॥ ❀ ❀ किञ्च सनातनात्पुरुषात्परमपुरुषात् हे असुरर्षभ! युद्धमार्गेषु कोविदं निपुणं त्वां यः संयुगे आराधयिष्यति तमन्यं न पश्यामः अतस्त्वं पुरुषम् एहि गच्छ कीदृशोऽसौ पुरुषः यमिहीत्युच्यत इत्यत्राह। भवादृशा मनस्विनः स्वैराः यं पुरुषं गृणते स्तुवन्ति ॥ ३० ॥ ❀ ❀ वीरं तं परमपुरुषमारात्समीपेऽभिपद्य विस्मयो विगतगर्वः वीरशये रणप्रदेशे श्वभिर्वृतः परिवेष्टितः शयिष्यसे भवानिव सोऽपि न युयुत्सति चेत्किं विधेयमित्यत्राह। यो हि भगवांस्त्वद्विधानामसतां प्रशान्तये विनाशाय सतामनुग्रहेच्छया रूपाणि वराहाद्यवतारान् धत्ते बिभर्ति ॥ ३१ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायां सप्तदशोऽध्यायः ॥ १७ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

रणत्काञ्चननूपुरं कणत्कनकपादवलयम्। "पुष्पैश्चतुर्गुणां मालां वैजयन्तीं विदुर्बुधा" इत्यभिधानाच्चतुर्गुणिता वैजयन्ती नाम ॥ २१ ॥ ❀ ❀ मनोऽभिमतवीर्यमदेनोत्सिक्तमुद्रिक्तं निलिल्यिरे निलीनाः। तार्क्ष्यो गरुडस्तेन ॥ २२ ॥ ❀ ❀ सहसा बलेन ॥ २३ ॥ ॥ २४ ॥ ❀ ❀ सन्नधियो नष्टबुद्धयः प्रधर्षिता अधिभूताः ॥ २५ ॥ ❀ ❀ तात! विदुर! प्रचेतसो वरुणस्य नाम्ना विभावरीपुरमासेदिवान् प्राप्तः महत्या गदया विजघ्न इत्यन्वयः ॥ २६ ॥ ❀ ❀ प्रलब्धुं विप्रलब्धुं स्मयन् माद्यन् नीचवत् म्लेच्छवदेकहस्तेन नत्वा ॥ २७ ॥ ❀ ❀ बृहच्छ्रवा लोकव्याप्तकीर्तिर्दुष्टो मदो दुर्मदस्तेन वीरा वयमित्यात्मानं मन्तुं शीलमेषामस्तीति दुर्मदवीरमानिनस्तेषां वीर्यमात्मन्यावहति सन्निधापयतीति वीर्यरहितान्करोतीति वीर्यावहः। एतदेव विवृणोति। विजित्येति। राजसूयेन यज्ञेनायजदिति यदतो दुर्मदवीरमानिनां वीर्यावहत्वादधिराजत्वाच्च मे युद्धं देहीति गतेनान्वयः ॥ २८ ॥ ❀ ❀ विनिषेधमेवावोचत् कथमित्यत उक्तमङ्गेति। यद्वा। विपृथक्भूतं पुरुषमयाचत् ॥ २९ ॥ ❀ ❀ स क इति तत्राह। पश्यामीति। आवारयिष्यति आवृणोति सम्यक् निरोत्स्यतीति वा तत्र रुचिं जनयति। मनस्विन इति ॥ ३० ॥ ❀ ❀ स कुत्रेति विचारो मा भूदित्याह। तमिति। वीरं शूरमारात् निकटमधुनैव वीराः शेरतेऽस्मिन्निति बाहुलकादधिकरणे अच् यद्वा "पुंसि संज्ञायां घः प्रायेण" इत्यधिकरणे घः। वीरशयो रणाङ्गणस्तस्मिन् मम विरूपेण सङ्गमः कथं घटत इति शङ्का मा भूदित्याह। यस्त्वद्विधानामिति प्रशान्तये विनाशाय वराहादिरूपाणि यत्त्वौत्पत्तिकजयभाजनानां देवादीनां जयोऽनयोः कथमिति शङ्केयम् "न देवानां प्रजापानां विजेता वरतो विना। बलेन विद्यया वापि न समस्तत्पतीन्विना। वरोऽपि तादृशो यावच्छरीरं नान्यदेहग" इत्यनेन परिहर्तव्येति ॥ ३१ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्यां सप्तदशोऽध्यायः ॥ १७ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

तमिति युग्मकम् ॥ २१—२६ ॥ ❀ ❀ असुरलोकाः दानवप्रायजनाः। तं गृहीत्वानयद्भूत्यो वरुणस्यासुरोऽन्तिकर्मिति दशमात् ॥ २७—३१ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भस्य सप्तदशोऽध्यायः ॥ १७ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

मनोवीर्यवरैर्मनोबलदेहबलदेवताबलैरुत्सिक्तं गर्वितमसृण्यं निरङ्कुशम् ॥ २२ ॥ ❀ ❀ न परयन् सन् क्षीबान् मत्तान्। क्लीबानिति पाठे पौरुषहीनान् ॥२३॥ ❀ ❀ स्वप्रतियोद्धारं दशदिक्षु कापि कमप्यदृष्ट्वा। स्वीयमहाबलस्योष्मणानुतप्तो वारिधिमध्ये कथंचित् कश्चिद्वा तिष्ठेत् तेन सह युध्येयेत्याकांक्षया वार्धिं जगाहे ॥ २४ ॥ २५ ॥ ❀ ❀ वर्षपूगान् वर्षसमूहान् व्याप्य महोर्मीनिव गदया जघ्ने चलन् चपलः मौर्वं कार्ष्णायसं मूर्वा नाम तृणविशेषो वा तन्मय्या। अहो जलमध्ये काचित् पुरी वर्त्तते तदिमां प्रविशामीति विभावरीसंज्ञां प्राप्तः ॥ २६ ॥ ❀ ❀ असुरलोकस्य पातालस्य पालकं प्रलब्धुमुपहसितुं प्रणिपत्य ॥ २७ ॥ ❀ ❀ अयजद्भवानिति पृथग्वाक्यम्। विजित्येति विपरीतलक्षणा तेन तदानीं दैत्यानामभावात् सर्वैरपि राजसूयः कर्त्तुं शक्यते स्म तेन संप्रति मां जित्वा पुनरपि राजसूयं कुर्विति भावः। यद्वा। कृतोऽपि राजसूयस्तदैव ते सिद्ध्यति यदि मां जयसीति भावः ॥ २८ ॥ ❀ ❀ स्वया धिया शमयन्निति अत्र मे रोषो न फलवान् भविष्यतीति परामर्शेनेत्यर्थः। उपशमं गता वयं सम्प्रति प्रवयसोऽभूमेत्यर्थः। तेन यौवनावस्थायां यदि त्वां प्राप्स्यं तदा त्वादृशानां सहस्रमप्यजेष्यमिति भावः। यद्वा उपशमं सन्न्यासं तेन सन्न्यासं चेन्नाकरिष्यं तदाधुनापि त्वामजेष्यमिति भावः ॥ २९ ॥ ❀ ❀ तर्हि मे रणकण्डूयातः कथं निस्तारस्तत्राह। पश्यामीति। तस्मात् हे असुरर्षभ! त्वम् इहि गच्छ मनस्विनः शूरा गृणते रणकण्डूयापहर्तृत्वेन स्तुवन्ति ॥ ३० ॥ ❀ ❀ ननु तं कतिभि-

र्दिनैर्लप्स्य इति तत्राह । तमिति । आरात् पञ्चषपैरेव दिनैरित्यर्थः । विस्मयो विगतगर्वः सन् शयिष्यसे सम्प्रति तु गर्वरोगपीडितो रणकण्डूयोद्वेगेन त्वं शेषे इति भावः । वीरशये वीराः शेरते यत्र तत्र रणाजिरे इति तव शय्यापि समुचिता भविष्यतीत्यर्थः । तदा चरणाद्यङ्गयन्त्रणकारिणः परिचारका अपि बहवो भविष्यन्तीत्याह । श्वभिरिति । नन्वेवं चेत्तस्याकारं ज्ञापय यथाधुनैव ब्रह्माण्डस्यान्तर्बहिरपि अन्विष्य तं निष्काश्य तेन सहाहं योत्स्ये कथं स मां हन्यादिति यूयं पश्यथेति तत्राह । य इति । प्रशान्तये नाशाय रूपाणि वराहनृसिंहाद्याकारान् धत्ते इति सामान्यतो जानामि त्वान्तु केन रूपेण वधिष्यतीति विशेषन्तु न जानामीत्यर्थः ॥ ३१ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्। तृतीयेऽस्मिन् सप्तदशः सङ्गतः सङ्गतः सताम् ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

रणन्तौ काञ्चनमयौ नूपुरौ यस्य तम्। असृण्यं निरङ्कुशं निलिल्यिरे तिरोहिता बभूवुः ॥ २१-२२ ॥ ❀ ❀ महसा तेजसा क्षीवान् मत्तान् अपश्यन् सन्। अत्यर्थं व्यनदत् ॥ २३ ॥ २४ ॥ ❀ ❀ सन्नधियः। अवसन्नधियः। वर्चसा तेजसा ॥ २५ ॥ ❀ ❀ आसेदिवान्प्राप्तः ॥ २६ ॥ ❀ ❀ असुरलोकस्य पातालस्य पालकम् ॥ २७ ॥ २८ ॥ ❀ ❀ उपशमं युद्धादितः उपरमम् ॥ २९ ॥ ❀ ❀ हे असुरर्षभ ! यस्त्वामाराधयिष्यति तमिहि गच्छ गृणते स्तुवन्ति ॥ ३० ॥ ❀ ❀ विस्मयः नष्टगर्वः वीरशये रणाङ्गणे आरात् शीघ्रं शयिष्यसे ॥ ३१ ॥

इती श्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे सप्तदशाध्यायार्थप्रकाशः ॥ १७ ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

ततो देवानां भयोत्पत्त्यर्थं देवदृष्टं तस्य रूपमनुवर्णयति—तं वीक्ष्येति । प्रथमत एव तस्य दुःसहो जवो वेगः । दूराद् दृष्ट एव क्षणेनैवाऽऽगत्य मारयतीति प्रतीकारासामर्थ्यम्। रणत्काञ्चननूपुरमिति । विरुदावली तस्य निरूपिता जयपरम्पराप्रतिपादिका । वैजयन्त्या श्रिया जुष्टमिति भगवदीयत्वज्ञापकम्, स एव हि वैजयन्त्या जुष्टो भवति । अंसन्यस्तमहागदमिति श्रमः साधनाधिक्यं चोक्तम् ॥ २१ ॥ ❀ ❀ एवं चतुर्भिर्विशेषणैर्भयजनकं रूपमुक्त्वा भीता देवाः पलायितवन्त इत्याह—मनोवीर्येति । मन उत्साहः, वीर्यं पराक्रमः, मदो गर्वः; तैः कृत्वा उत्सिक्त उच्छलितः, मर्यादामतिक्रान्त इति यावत्। असृण्यो निरङ्कुशः । भ्रातुर्नियामकत्वेऽपि तस्यैव तथा कारकत्वादौद्धत्येन नियामकत्वम्। सृणिरङ्कुशः। अत एव न विद्यते कुतश्चिद्भयं यस्य। एवं त्रिदोषयुक्तं दृष्ट्वा भीताः सन्तो युद्धमकृत्वैव निलिल्यिरे लीना जाताः। ननु स्त्रीधनादिकं विहाय कथं लीना इत्याशङ्क्याऽऽह—तार्क्ष्यत्रस्ता इवाऽहय इति । गरुडो हि सर्पान् जीवग्राहं मारयति, न धनादिदानेनाऽपि त्यजति, तथाऽयमिति मत्वा स्वप्राणरक्षार्थं लीना जाता इत्यर्थः ॥ २२ ॥ ❀ ❀ ततोऽपि गर्वो जात इत्याह—समानतायां शत्रुत्वम्। पुरुषस्य पुरुषो भवति समानः, न तु क्लीवः। देवत्वं शूरत्वं वा दूरे। महाभिमानश्चैवं मन्यते। ननु कालादिना सर्व एव तिरोहिता भवन्ति, किमाश्चर्यमिति चेत्तत्राऽऽह--महसा स्वेनेति । अयुद्ध्यमाना अपि तत्तेजसैव ते तिरोहिताः, यथा सौरप्रभयाऽन्धकारः। इन्द्रसहितान् सर्वानेव देवविशेषान् स्वकार्येणाऽपि कार्यासाधकान्, स्वरूपेणाऽप्यनुपयुक्तान्। अत एवाऽपश्यन्, भृशं व्यनदत्। तिरोहितज्ञानं क्लीवज्ञाने हेतुः। स्वेनैव महसा तिरोहितान् स्वेनैव महसा दैत्यराट् जात इति भिन्नं वाक्यम्। अत एव क्लीबादिधर्मयुक्तानपि तान् अपश्यन् भृशं व्यनदत्। निकटस्थाश्चेत् नादेनैव मरिष्यन्तीति ॥ २३ ॥ ❀ ❀ एवं हत्वा, सुतरां गर्भस्थान्, महागर्वेण ज्वलद्देहः समुद्रे जलक्रीडां कृतवानित्याह—महा[1]मदं ज्ञापयति--ततो निवृत्त इति । क्रीडिष्यन्निति । स्वर्गात् क्रीडार्थमेव समुद्रे आगतः। क्रीडा हि कामसाध्या भवतीति स्थिते क्रोधे युद्धाभिनिवेशे वा क्रीडा न भविष्यतीति ततो भावान्निवृत्तः। देवापेक्षया समुद्रं महान्तं ज्ञात्वा समागत इति वक्तुं समुद्रं विशिनष्टि—गम्भीरं भीमनिःस्वनमिति । भयजनकमगाधजलं गम्भीरम्। अनेन समता, शोषाभावश्च तस्य सूचितः। भीमनिःस्वनमिति प्रतिपक्षवाक्यजननाद्युद्धार्थित्वमपि ज्ञातम्। मत्तत्वादेवं ज्ञानम्। तथापि न युद्धरसेन समागतः, किन्तु क्रीडिष्यन्नेवेति तदाधिक्यम्। विगाहनं मध्ये पातः। तथाकरणे सामर्थ्यमाह—महासत्त्व इति । महत्सत्त्वं यस्येति । अत्रैवं ज्ञातव्यम्। पद्मकल्पे एतावुत्पन्नौ, मृत्योश्च जयान्न कल्पान्ते मरणम्। तदैव लोकत्रयं वशे कृतवान् (?) ततो मोहग्रस्तयो रसातले शयनमादिवराहकल्पे प्रलये च। तत्राऽऽदिवराहकल्पः संपूर्णो न वृत्त इति भूम्युत्पत्तिः। देवानां कियत्प्रजानां च सृष्टिं कृतवान् ब्रह्मा। तदाऽयं कनिष्ठो ज्येष्ठे शयान एव ब्रह्मणः प्रातःकाले स्वर्गं गतः। सामिकृतत्वाच्च मध्ये पुनर्भूमिर्निमग्ना। ततोऽपि निवृत्तः प्रलयोदक एव पतितो देवानां सृष्टत्वाद्दैत्याधिपतित्वाच्च वरुणो रसातले समानकटाहांशपश्चिमभागे वा स्थि[2]तः। मन्वादीनां जातत्वात् नारदादयोऽपि पद्मकल्प एवोत्पन्ना उपरि स्थिताः। दिती रसातले, कश्यपस्तु उपरि। मग्नायां पृथिव्यां जलस्य बाधकत्वाभावात् दैत्योपभोगः। अतो नारदवाक्यात् वराहसंबन्ध

---

१. महामादं क ग. घ. ङ. च. । २. स्थितः पृथिव्याम् क. ।

इति सर्वमेव युक्तम्। पुराणानि च एकचतुर्युगवार्तामेव कथयन्ति विशेषतः, सामान्यधर्माश्चाऽनूद्यन्ते। चतुर्युगान्तरवार्ता कल्पान्तरवार्ता च मतान्तरमिति न तद्विरोधः शङ्कनीयः। श्रुतार्थापत्तिरत्र प्रमाणम्। मत्तत्वादेर्वाद्धिमपि प्रविष्टः। तत्र जलं निरन्तरमुत्पद्यते। विवेकसहितमदान्मत्त इवेत्युक्तम्, अन्यथा द्विप इत्येव वदेत्। महाक्षोभं जनयन्निन्यर्थे दृष्टान्तः। द्विपशब्देन च तस्य मज्जनाभावः सूचितः, शुण्डव्यतिरेकेण तस्याऽन्तर्जलप्रवेशात्॥ २४॥ ❀ ❀ ततोऽपि तत्रत्यानां महानुपद्रवो जात इत्याह—हिरण्याक्षे प्रविष्टे वरुणस्य सैनिका युद्धकुशला यादोगणा जलेऽतिबलवन्तो निधिसहिताः सर्वाधिव्यतिरिक्ताः सर्वतः पुष्टाः, एतादृशा अपि ससाध्वसा जाताः। अत एवाऽहन्यमाना अपि देववत् तस्य वर्चसा तेजसैव प्रकर्षेण धर्षिता गतसत्त्वाः कृता इति दूरतरं प्रदुद्रुवुः॥ २५॥ ❀ ❀ एवं तस्य सर्वोपद्रवकारित्वेन कायिकीं चेष्टामुक्त्वा वाचिकीं वदन् पूर्वचरित्रसंबन्धमेव वदति—स वर्षपूगानिति षड्भिः—तत्र पूर्वं समुद्र आत्मानं महान्तं मन्यत इति ज्ञात्वा तस्य हस्तप्रायांस्तरङ्गान् गदया ताडितवानित्याह। स हिरण्याक्षः। वर्षपूगानिति कल्पान्तपर्यन्तम्। महाबल इति कालेन तस्य बलक्षयाभाव उक्तः। तत्रैव समुद्रे चरन् स्वश्वासवायुना निर्मितानप्यूर्मीन् तद्धस्तान् ज्ञात्वा, मौर्व्या तृणविशेषवद्धया महागदया अभितो जघ्ने। श्वासेनैव यदोर्मयः, तदा चलने ताडने वा किं वक्तव्यम्। एवं समुद्रनिग्रहे क्रियमाणे ततोऽप्यधिकोर्मीन् दृष्ट्वा तस्याऽधिपतिं वरुणं ताडयितुं तत्पुरीमासेदिवान्, पुर्या निकटं प्राप्तवान्। तत्रत्यैव वा। तद्गृहं गत इत्यर्थः। प्रचेतस इति प्रकृष्टचित्तत्वान्न तस्य भयं पलायनं वा॥ २६॥ ❀ ❀ तत्र गत्वा तमुपहसतीत्याह—तत्रोपलभ्येति। मारयेदेव तम्, परं दैत्यानां रक्षक इति न मारितवानित्याह—असुरलोकपालकमिति। असुराणां यावन्तो लोका रसातलादिस्थिताः, तेषामयं पालकः। ये असुरलोके उपद्रवकर्तारः, तन्मारका यादोगणाः, लोकपोषकाश्च। अत्र लोके गजाश्वा इव तेऽपि वरुणस्यैव वशे भवन्ति। अतो न हन्तव्य इत्याह—यादोगणानामृषभमिति। किञ्च, स्वभावतोऽपि प्रकृष्टचित्तयुक्तो गर्वादिरहितः, अतो मारणाद्यकृत्वा, ततोऽपि गर्वयुक्तः स्मयन् अल्पं हसन्, प्रलब्धुं वक्रोक्त्या वञ्चयितुम्, नमस्कृत्य सेवकादपि हीनवत् जगाद, अल्पाक्षरैर्विनयपूर्वकं किञ्चिदुक्तवान्। तदेवाऽऽह—हे अधिराज! सङ्गरं देहीति। अयं मां न जानातीति हास्यम्; कार्येणैतज्ज्ञापनीय इति प्रलम्भवचनम्; प्रणिपातो गर्वोत्पादनार्थः; स्वस्य नीचानुकरणमवगणनार्थम्, अन्यथा संयुगे न प्रवृत्तो भविष्यतीति। अधिराजेति संबोधनं तव भयं नास्तीति ज्ञापनार्थम्, त्वयैव सह युद्धं कर्तव्यमिति वरप्रार्थना सङ्गरं युद्धम्॥ २७॥ ❀ ❀ एवं याचयित्वा तूष्णींभूते तस्मिन् प्रोत्साहयति गुणान् वदन् त्वं लोकपाल इति। त्वं यथा भगवान्, तथा षड्गुणैश्वर्ययुक्तः। तस्य षडगुणानाह-आदौ त्वं लोकपाल ईश्वरः, सर्वपत्यपेक्षयाऽधिपतिस्त्वम्, 'स वै पतिः स्यात्' इति न्यायेन वीर्यवानेवाऽधिपतिर्भवति। अत एव बृहच्छ्रवा अधिककीर्तिमान्। स्पष्टमेव यशः। दुर्मदवीरमानिनां वीर्यापह इति श्रीः। शत्रुजये श्रीमेतीति। दुर्मदाश्च ते, वीरा वयमिति मानिनश्च; यावता च तेषां वीर्यं गच्छति तावत्कर्तेति। ते चेन्निःश्रीका भवेयुस्तदैवमिति स्वस्य श्रीमत्त्वम्। ज्ञानमाह—विजित्य लोके किल दैत्यदानवानिति। मिथ्याज्ञानेन च तमो ज्ञानेन च परं पदम्' इति वाक्यात् दैत्यानां ज्ञानप्रतिपक्षत्वम्। तत्र दैत्या राजसाः, दानवास्तामसा इति। उभयेषां द्वन्द्वैक्यम्। ज्ञानेनैव हि ते निराकर्तुं शक्यन्त इति। किञ्च, कर्मणाऽपि ते निराकर्तुं शक्या इति यद्राजसूयेन पुराऽयजदित्याह। देवानां लोकपालानां वीर्याधिकारात् क्षत्रियत्वे तेषां परमोत्कर्षहेतू राजसूय इति। तेन दैत्यजयः। प्रभुरिति वैराग्यम्, सापेक्षमसमर्थं भवतीति निरपेक्ष एव प्रभुः॥ २८॥ ❀ ❀ एवं कृते स्तोत्रे प्रार्थितमभिधातुं मुख्यषड्गुणैश्वर्यसंपन्नमेव निर्देष्टुम्, प्रलम्भवाक्येनोत्पन्नमपि क्रोधं दूरीकृत्य, तथोक्तवानित्याह—स एवमिति। ननु स्वयं दैत्यपतिः कथं दैत्यानामहितमुक्तवान्। तत्राऽऽह—उपसिक्तमदेनेति। दैत्यानां मदे विद्यमानेऽपि सर्वमज्जनार्थं न तदुत्सेकः, अस्य तूत्सेकात् सर्वनाशं करिष्यतीति तन्नाशः कर्तव्य इत्यर्थः। शिक्षाभावायाऽऽह—विद्विषेति। विशेषेण द्वेष्टीति तथा। दृढमिति मर्मोद्घाटनम्। अशक्तोऽन्यथा कथयतीत्याशङ्काव्यावृत्त्यर्थमाह—भगवानिति। तर्हि कथं न मारयतीत्याह—अपां पतिरिति। न हि जलस्थितो वह्निर्ज्वलति, अत एव समुत्थितमपि रोषमशमयदात्मज्ञानेन। तदाह—स्वया धियेति। विशेषेण स्पष्टतया अवोचत्। किं त्वया युद्धमात्रमपेक्ष्यते, मया सह युद्धं वा? तत्र द्वितीये उत्तरमाह। हे अङ्गेति कोमलसंबोधनं ज्ञानपूर्णत्वबोधकम्, न हि स्वाङ्गं केनचिदुपहन्यते। वयमुपशमं शान्तिं गताः शस्त्रसंन्यासं गृहीतवन्त इत्यर्थः॥ २९॥ ❀ ❀ युद्धमात्रं चेदपेक्ष्यते, तदाऽप्येक एवास्ति सर्वेच्छापूरको नाऽन्य इत्याह पश्यामीति। तुच्छा हि त्वां न मन्यन्ते, ज्ञानी हि आक्रोशं न करोति, इत्याराधयिष्यतीत्युक्तम्। अन्यस्तु अनात्मा न पूजयिष्यतीति। अत्र प्रमाणं मम ज्ञानम्। तदाह—पश्यामीति। पुरुषात्पुरातनादन्यं न पश्यामीति भिन्नं वाक्यं ज्ञानपरम्, अन्यथैवं भङ्ग्या न वदेत्। पुरुषो हि पौरुषयुक्तः, अन्ये सर्वे प्राकृतशरीरसंबन्धात् स्त्रियः, त एव हि परिदृश्यन्त इति। पुरातनादिति बलाधिक्यज्ञापनार्थम्, कालेन हि बलह्रासो भवतीति। अत एव यः संयुगे युद्धे त्वामाराधयिष्यति। संतोषोत्पादनं ह्याराधनम्। संतोषस्तु स्वज्ञानादधिकज्ञाने। तदर्थं तस्य ज्ञानमाह—रणमार्गकोविदमिति। युद्धमार्गेषु परम्परासिद्धेषु युद्धप्रकारेषु कोविदम्। असुरर्षभेति संबोधनमात्मत्वेऽपि मारणार्थम्। आ समन्तात् ईहितं

---

१. तत्रापि क. घ. ङ.। २. पूर्णाः क. घ.। ३. ऊर्ध्वश्वासेनैव क. उग्रश्वासेनैव घ. ङ.। ४. तत्रत्य एव वा ख.। ५. क्षत्रियत्वं ग.। ६. त्यादाङ्क्याह ग.।

यस्य, सर्वप्रकारेण युद्धाभिज्ञम् । असुरर्षभेषु वा ईहितं यस्य; यथा महान्तोऽसुरा भवन्ति, तथा त्वमित्यर्थः । असुरर्षभा ईहितं यस्येति वा वधे हेतुः, एतद्वधे सर्वे एवाऽसुरा हता भवन्ति । असुरर्षभे वा हिरण्यकशिपावहितम्, विधेयविशेषणमेतत् तस्यैवं करणे किं सामर्थ्यमित्यत आह—मनस्विनो यं गृणत इति । मनस्विनः शूरा दृढमनसो यं भगवन्तं गृणते । तेन सह युद्धं कृत्वा पराजिता अपि तमेव स्तुवन्ति । एतद्वचनं प्रोत्साहकम्, महता हि सह युद्धं कर्तव्यम् । भवादृशा इति स्तुतिः ॥ ३० ॥ ❀ ❀ एवं युद्धार्थं प्रतियोगित्वेन भगवन्तं निरूप्य तस्य प्राप्तिमाह—तं वीरमिति । सोऽपि भगवान् वीरः, युद्धमेवाऽभीप्सते । तदर्थमेव शापादिदानमिति भावः । कालविलम्बोपि नास्तीत्याह—आरात् निकट एवेति । अभिपद्येति । यथा शलभोऽग्नौ पतति, तद्वत्पतिष्यसीति भावः । तथापि त्वं निर्भयो मृत्युभयरहितः, न हि भगवन्तं प्राप्य कश्चिन्मृत्युना ग्रस्यते, अतो मृत्युभयरहित इत्यर्थः । विस्मय इति पाठे विगतगर्वः, तावदेव गर्व इति । ततः कस्य जयो भविष्यतीत्याशङ्कायामाह—त्वमेव वीरशये शयिष्यस इति । रणाङ्गणे शयनं करिष्यस इत्यर्थः । जित्वाऽपि निर्भयत्वज्ञापनार्थम् । रणा[३]ङ्गणेऽपि शयनं सुखादपि सम्भविष्यतीति तन्निवृत्त्यर्थमाह—श्वभिर्वृत इति । मृतमेव श्वानो वेष्टयन्तोति । ननु युद्धमात्रे प्रार्थिते कामितपूरको भगवान् किमिति मारयेदित्याशङ्क्याह—यस्त्वद्विधानामिति । यद्यपि त्वत्कामितं तावदेव, तथापि देवानां कामितं त्वन्मरणमिति मारयिष्यति । यतः—असतां प्रशान्तय एव नानाविधानि रूपाणि भगवान् बिभर्त्ति वराहादीनि, अन्यथा अवतारप्रयोजनं न स्यात् । नन्वात्मा भगवान् किमति मरणार्थमेवं रूपाणि करोतीत्याशङ्क्याह—सदनुग्रहेच्छयेति । स तु रूपाणि सतामनुग्रहार्थमेव गृह्णाति ! धर्मरक्षार्थमेव प्रवृत्तिः, आनुषङ्गिकं त्वसतां मारणं नान्तरीयकमिति । अनेन पुनरपि कामो नोत्पत्स्यत इत्यप्युक्तम्, अन्यथा पुनः कालान्तरे एवंभावे कः समाधानं कुर्यादिति भावः ॥ ३१ ॥

इति श्रीभागवतसुबोधिन्यां श्रीलक्ष्मणभट्टात्मजश्रीवल्लभदीक्षितविरचितायां तृतीयस्कन्धे सप्तदशाध्यायविवरणम् ।

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः ।

ततो निवृत्त इत्यत्र । पूर्वं त्रयोदशाध्यायारम्भे वाराहादिवाराहकल्पाभ्यां कथासंदर्भ उपपादितः, इह तु मतान्तरत्वात् प्रकारान्तरेणोपपादयन्ति—अत्रैवं ज्ञातव्यमित्यादि । अत्रेति मतान्तरे । अस्मिन् प्रकारे वारद्वयं भूमज्जनम्, शेषं पूर्ववदेव । नन्वस्त्वेवम्, तथापि 'स भवान् दह्यमानायां सपत्नीनां समृद्धिभिः' इति दितिवाक्यं कथं संगच्छते ? पद्मकल्पे कालोत्पन्नब्रह्मोत्पन्नयोरेव सर्गयोरुक्तत्वेनाऽन्येषामभावादित्याकाङ्क्षायामाहुः—पुराणानीत्यादि ॥ २४ ॥ ❀ ❀ पश्यामीत्यत्र । आसमन्तादीहितं यस्येति । अत्र ईहितपदं चेष्टितवाचकम् । असुरर्षभेहितमित्येकपदपक्षेऽर्थमाहुः—असुरर्षभेष्वित्यादि । ईहितमिति वाञ्छितार्थकम् । अस्मिन्नपि पक्षे हिरण्याक्षबोधकस्य त्वामित्यस्य विशेषणमिदम् । तथा त्वमिति । अत्र तथेति पदच्छेदः । भगवद्वाचकस्य यमित्यस्येदं विशेषणमित्यभिप्रेत्य पक्षान्तरमाहुः—असुरर्षभा इत्यादि । एवमपि क्लिष्टत्वात् पक्षान्तरमाहुः—असुरर्षभे वेत्यादि । विधेयविशेषणमिति । क्रियाविशेषणम् । तथा च, तस्मिन्नहितं यथा स्यात्तथा त्वामाराधयिष्यतीत्यर्थः ॥ ३० ॥

इति श्रीतृतीयस्कन्धसुबोधिनीप्रकाशे सप्तदशाध्यायविवरणं सम्पूर्णम् ।

### श्रीगिरिधरकृता बालप्रबोधिनी

तं वीक्ष्य देवा भीताः सन्तो निलिल्यिरे लीना अन्तर्हिता बभूवुरिति द्वयोरन्वयः । भयहेतुत्वं दर्शयंस्तं वर्णयति—दुस्सहः जवो वेगो यस्य तम् । रणती ध्वनती काञ्चनमये नूपुरे यस्य तम् । पुष्पपल्लवादिनिर्मिता वैजयन्ती तया स्रजा जुष्टमलङ्कृतम् । अंसे स्कन्धे न्यस्ता निहिता महती गुर्वी गदा येन तम् । मनसा शौर्येण वीर्येण बलेन त्रह्मवरेण च उत्सिक्तं गर्वितम् । असृण्यं निरङ्कुशं अकुतोभयं सर्वतो निर्भयम् । भयेनान्तर्द्धाने दृष्टान्तमाह—तार्क्ष्येति । तार्क्ष्येण गरुडेन त्रस्ता भीता अहयो यथा स्वधनपुत्रकलत्राद्यपेक्षामकुर्वाणा एव स्वप्राणपरीप्सया अन्तर्हिता भवन्ति तथा देवा अपि धनादिकं परित्यज्यान्तर्हिता इत्यर्थः ॥ २१ ॥ २२ ॥ ❀ ❀ स च दैत्यराड् हिरण्याक्षः सेन्द्रान् इन्द्रेण सहितान् देवगणानपश्यन् युद्धं विनैव स्वेन महसा तेजसैव तिरोहितान् अत एव क्षीवान् प्रमत्तान्–क्लीबानिति पाठे पौरुषहीनांश्च–दृष्ट्वा ज्ञात्वा भृशमतीव व्यनदत् अध्वनत् ॥ २३ ॥ ❀ ❀ ततः स्वर्गात् निवृत्तः परावृतः क्रीडिष्यन् गम्भीरं भीमो निस्स्वनस्तरङ्गजन्यो ध्वनिर्यस्मिंस्तं वार्धिं समुद्रं विजगाहे विलोडितवान् । तत्र सामर्थ्यमाह—महासत्त्व इति, महाबल इत्यर्थः । तत्र दृष्टान्तमाह—मत्तो द्विपो हस्ती यथेति ॥ २४ ॥ ❀ ❀ तस्मिन् हिरण्याक्षे तत्र प्रविष्टे सति वरुणस्य सैनिकाः तेनाहन्यमाना अपि दूरतरं प्रदुद्रुवुरित्यन्वयः । तत्र हेतुमाह—सन्नधिय इति, विशीर्णबुद्धय इत्यर्थः । तत्र हेतुमाह—ससाध्वसा इति, भययुक्ता इत्यर्थः । तत्रापि हेतुमाह—तस्येति, हिरण्याक्षस्य वर्चसा तेजसा प्रधर्षिता अभिभूता इत्यर्थः । तर्हि तेषां दुर्बलत्वमाशङ्क्य जले तेषां प्रबलत्वं सूचयन् विशिनष्टि—यादोगणा इति, यादसां

---

३. अपीति नास्ति क. ख. घ. ।

जलचराणां गणा इत्यर्थः ॥ २५ ॥ ❀ ❀ स वर्षपूगान् बहून् संवत्सरान् उदधौ समुद्रे चरन् विहरन् श्वसनेन स्वश्वासेन ईरितान् उत्थितान् महोर्मीनुच्चैस्तरङ्गान् मौर्व्या मुरुलोहविशेषस्तृणविशेषो वा तन्निर्मितया गदया मुहुर्मुहुरभिजघ्ने प्रजहार, यतो महाबलः। तातेति सम्बोधनं विश्वासार्थस्नेहसूचकम्। ततश्च विभावरीं प्रचेतसो वरुणस्य पुरीमासेदिवान् प्राप्तवान्। अत्र वर्षपूगानित्यनेन पाद्मकल्पे उत्पन्नावेव हिरण्यकशिपुहिरण्याक्षौ वाराहकल्पे भगवतानिहताविति सूचितम्। न च प्रलये तयोः कथं स्थितिरिति शङ्कनीयम्, 'ब्रह्मवरेणाऽकुतोमृत्युरुद्धतः' इत्युक्त्या भगवता मारणं विना कुतोऽपि कथमपि तन्मृत्युभावस्य निश्चितत्वात्। अन्यथा चाक्षुषे षष्ठे मन्वन्तरे जातस्य प्राचेतसदक्षस्य षष्टिकन्यामध्ये जाताया दितेः पुत्रस्य प्रथमे स्वायम्भुवे मन्वन्तरे विद्यमानताया असम्भवात् हिरण्याक्षेण सह भगवतो वराहस्य युद्धादिनिरूपणमसङ्गतं स्यात्। न च तर्हि मनुपुत्रोत्तानपदो वंश एव प्राचेतसदक्षजन्मकथनात् कल्पभेदोऽपि कथं सङ्गच्छते इति शङ्कनीयम्, 'श्रुतौ स्मृतौ पुराणे च कालत्रयमुदीर्यते। भूतं भव्यं भवच्चैव संशयं मा वृथा कृथाः' इति काशीखण्डे उमां प्रति शिववाक्यात्, प्रायेण वंशवृत्तान्तस्य प्रतिकल्पं समानत्वात्, षष्ठस्कन्धे 'देवासुरनृणां सर्गः' इत्यादिना राज्ञा पृष्टेन शुकेन पुराणरीत्या 'यदा प्रचेतसः पुत्राः' इत्यादिना पाद्मकल्पीयवृत्तस्यैवोक्तत्वात्। अत एव चतुर्थस्कन्धान्ते प्रचेतसां ब्रह्मणा सान्त्वनं षष्ठस्कन्धे च चन्द्रेण सङ्गच्छते। अन्यथा तदपि विरुद्धं स्यादिति ज्ञेयम् ॥ २६ ॥ ❀ ❀ तत्र पुर्या असुरलोकानां पालकं यादोगणानामृषभं स्वामिनं प्रचेतसं वरुणमुपलभ्य दृष्ट्वा स्मयन् हसन् प्रलब्धुं वञ्चयितुं नीचवत्प्रणिपत्य हे अधिराज मे मह्यं संयुगं युद्धं देहीति जगाद। मया सह युद्धयस्वेति प्रार्थितवान् ॥ २७ ॥ ❀ ❀ एवं याचितेऽपि तस्मिंस्तूष्णीं स्थिते सति समर्थस्य तवैवं कातर्यमयुक्तमित्युपहसन्नाह—त्वमिति। प्रभो हे समर्थ त्वं लोकपालानामप्यधिपतिः अतएव दुर्मदेन य आत्मानं वीरं मन्यन्ते तेषां वीर्यापहर्त्ता अतएव बृहच्छ्रवाः महायशाः। कथमहमेवंविध इति त्वया निश्चितं तत्राह—विजित्येति। यस्मात्पुरा लोके अखिलान् दैत्यान् दानवांश्च विजित्य राजसूयेनायजत् इष्टवान् ॥ २८ ॥ ❀ ❀ स अपाम्पतिर्वरुण उत्सिक्तमदेन उत्सिक्तो वृद्धो मदो यस्य तेन विद्विषा शत्रुणा तेनैवं दृढं यथा स्यात्तथा प्रलब्ध उपहसितः अतः समुत्थमपि रोषं स्वया धिया विचारात्मिकया बुद्धया शमयन् व्यवोचत् तं प्रत्युवाचेत्यन्वयः। किमुवाचेत्यपेक्षायां तदाह—अङ्गेति कोमलसम्बोधने। किं त्वया मया सह युद्धमपेक्ष्यते युद्धमात्रं वेति विकल्प्याद्ये उत्तरमाह—वयं उपशमं युद्धादिकौतुकादुपरमं गता इति ॥ २९ ॥ ❀ ❀ द्वितीये उत्तरमाह—पश्यामीति। हे असुरर्षभ युद्धमार्गेषु कोविदं निपुणं त्वां संयुगे युद्धे यः आराधयिष्यति स्वनैपुण्येन सन्तोषयिष्यति तं पुरातनात्पुरुषात् अन्यं न पश्यामि, किन्तु स एक एव तथाविधः अतस्तमिहि गच्छ। सोऽपि कश्चिदल्पबल इति मा शङ्किष्ठा इत्याशयेन तं विशिनष्टि—मनस्विन इति, भवादृशाः मनस्विनः शूराः युद्धे पराजिताः यं गृणन्ति श्लाघन्ते इत्यर्थः ॥ ३० ॥ ❀ तं कथं प्राप्स्यामीत्यपेक्षायामाशीर्व्याजेन शपति—तमिति। तं वीरं आरात् शीघ्रमेवाभिपद्य प्राप्य विस्मयः विगतगर्वस्त्वं वीरशये रणभूमौ श्वभिर्वृतो मृतः सन् शयिष्यसे। एवमुक्तेऽपि यदि भवानिव सोऽपि न युयुत्सेत्तदा किं विधेयमित्यभिप्रायवन्तं प्रत्याह—य इति। यो भगवान् त्वद्विधानामसतां दुष्टानां प्रशान्तये विनाशाय रूपाणि नरसिंहहयग्रीववराहाद्यवतारान् धत्ते बिभर्ति। अस्मद्विनाशेऽपि तस्य किं प्रयोजनमित्यपेक्षायामाह—सतां निजभक्तानां अनुग्रहेच्छयेति ॥ ३१ ॥

इति श्रीवल्लभाचार्यवंश्यगोपालसूनुना ॥ श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा ॥ १ ॥
श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये ॥ श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी ॥ २ ॥
रचिता च तृतीयेऽत्र बन्धसर्गनिरूपणे ॥ सप्तदशो गतो वृत्ति द्वास्स्थजन्मनिरूपकः ॥ ३ ॥

## हिन्दी अनुवाद

उसका वेग बड़ा असह्य था। उसके पैरोंसे सोनेके नूपुरोंकी झनकार हो रही थी, गलेमें विजयसूचक माला धारण की हुई थी और कंधेपर विशाल गदा रक्खी हुइ थी ॥ २१ ॥ ❀ ❀ उसके मनोबल, शारीरिक बल तथा ब्रह्माजीके वरने उसे मतवाला कर रक्खा था; इसलिए वह सर्वदा निरङ्कुश और निर्भय हो रहा था। उसे देखकर देवतालोग डरके मारे वैसे ही जहाँ-तहाँ छिप गये जैसे गरुड़के डरसे साँप छिप जाते हैं ॥ २२ ॥ ❀ ❀ जब दैत्यराज हिरण्याक्षने देखा कि मेरे तेजके सामने बड़े-बड़े गर्वीले इन्द्रादि देवता भी छिप गये हैं, तब उन्हें अपने सामने न देखकर वह बार-बार भयंकर गर्जना करने लगा ॥ २३ ॥ ❀ ❀ फिर वह महाबली दैत्य वहाँसे लौटकर जलक्रीडा करनेके लिए मतवाले हाथीके समान गहरे समुद्रमें घुस गया, जिसमें लहरोंकी बड़ी भयंकर गर्जना हो रही थी ॥ २४ ॥ ❀ ❀ ज्यों ही उसने समुद्रमें पैर रक्खा कि डरके मारे वरुणके सैनिक जलचर जीव हकबका गये और किसी प्रकारकी छेड़छाड़ न करनेपर भी वे उसकी धाकसे ही घबरा कर बहुत दूर भाग गये ॥ २५ ॥ ❀ ❀ महाबली हिरण्याक्ष अनेक वर्षोंतक समुद्रमें ही घूमता और सामने किसी प्रतिपक्षीको न पाकर बार-बार वायुवेगसे उठती हुई उसकी प्रचण्ड तरङ्गोपर ही अपनी लोहमयी गदाको अजमाता रहा। इस प्रकार घूमते-घूमते वह वरुणकी राजधानी विभावरीपुरीमें जा पहुँचा ॥ २६ ॥ ❀ ❀ वहाँ पाताललोकके स्वामी, जलचरोंके

अधिपति वरुणजीको देखकर उसने उनकी हँसी उड़ाते हुए नीच मनुष्यकी भाँति प्रणाम किया और कुछ मुसकराते हुए व्यङ्गसे कहा—'महाराज ! मुझे युद्धकी भिक्षा दीजिये ॥ २७ ॥ ❀ ❀ प्रभो ! आप तो लोकपालक राजा और बड़े कीर्तिशाली हैं। जो लोग अपनेको बाँका वीर समझते थे, उनके वीर्यमदको भी आप चूर्ण कर चुके हैं और पहले एक बार आपने संसारके समस्त दैत्य-दानवको जीतकर राजसूय यज्ञ भी किया था' ॥ २८ ॥ ❀ ❀ उस मदोन्मत्त शत्रुके इस प्रकार बहुत उपहास करनेसे भगवान् वरुणको क्रोध तो बहुत आया, किन्तु अपने बुद्धिबलसे वे उसे पी गये और बदले में उसे कहने लगे,—भाई ! हमें तो अब युद्धका कोई चाव नहीं रह गया है ॥ २९ ॥ ❀ ❀ भगवान् पुराणपुरुषके सिवा हमें और कोई ऐसा दीखता भी नहीं, जो तुम-जैसे रणकुशल वीरको युद्धमें सन्तुष्ट कर सके। दैत्यराज ! तुम उन्हींके पास जाओ, वे ही तुम्हारी कामना पूरी करेंगे। तुम-जैसे वीर उन्हींका गुणगान किया करते हैं ॥ ३० ॥ ❀ ❀ वे बड़े वीर हैं उनके पास पहुँचते ही तुम्हारी सारी शेखी पूरी हो जायगी और तुम कुत्तोंसे घिरकर वीरशय्यापर शयन करोगे। वे तुम-जैसे दुष्टोंको मारने और सत्पुरुषोंपर कृपा करनेके लिये अनेक प्रकारके रूप धारण किया करते हैं ॥ ३१ ॥

१७ वाँ अध्याय समाप्त ॥

# अथाष्टादशोऽध्यायः

**मैत्रेय उवाच**

तदेवमाकर्ण्य जलेशभाषितं महामनास्तद्विगणय्य दुर्मदः ।
हरेर्विदित्वा गतिमङ्ग नारदाद् रसातलं निर्विविशे त्वरान्वितः ॥ १ ॥
ददर्श तत्राभिजितं धराधरं प्रोन्नीयमानावनिमग्रदंष्ट्रया ।
मुष्णन्तमक्ष्णा स्वरुचोऽरुणश्रिया जहास चाहो वनगोचरो मृगः ॥ २ ॥
आहैनमेह्यज्ञ महीं विमुञ्च नो रसौकसां विश्वसृजेयमर्पिता ।
न स्वस्ति यास्यस्यनया ममेक्षतः सुराधमासादितसूकराकृते ॥ ३ ॥
त्वं नः सपत्नैरभवाय किं भृतो यो मायया हन्त्यसुरान् परोक्षजित् ।
त्वां योगमायाबलमल्पपौरुषं संस्थाप्य मूढ प्रमृजे सुहृच्छुचः ॥ ४ ॥
त्वयि संस्थिते गदया शीर्णशीर्षण्यस्मद्भुजच्युतया ये च तुभ्यम् ।
बलिं हरन्त्यृषयो ये च देवाः स्वयं सर्वे न भविष्यन्त्यमूलाः ॥ ५ ॥
स तुद्यमानोऽरिदुरुक्ततोमरैर्दंष्ट्राग्रगां गामुपलक्ष्य भीताम् ।
तोदं मृषन्निरगादम्बुमध्याद् ग्राहाहतः सकरेणुर्यथेभः ॥ ६ ॥
तं निःसरन्तं सलिलादनुद्रुतो हिरण्यकेशो द्विरदं यथा झषः ।
करालदंष्ट्रोऽशनिनिस्वनोऽब्रवीद् गतह्रियां किं त्वसतां विगर्हितम् ॥ ७ ॥

**श्रीधरस्वामिविरचिता भावार्थदीपिका**

अष्टादशे हिरण्याक्षधरोद्धर्तृवराहयोः । निर्विशेषं महायुद्धं देवक्षोभि निरूप्यते ॥ १ ॥

प्रतियोद्धारं श्रुत्वा महामनाः शयिष्यस इति यदुक्तं तद्विगणय्यागणयित्वा यतो दुर्मदः ॥ १ ॥ ❀ ❀ अभितो जयतीत्यभिजित्तं श्रीहरिम् । प्रकर्षेणोर्ध्वं नीयमाना अवनिर्येन अग्रदंष्ट्रया दंष्ट्राग्रेण स्वरुचो हिरण्याक्षतेजांस्यरुणश्रिया युक्तं यत्तेनाक्ष्णा नेत्रेण मुष्णंतं तिरस्कुर्वंतम् । अहो चित्रं वनगोचरो मृगो वारिचरो वराहः ॥ २ ॥ ❀ ❀ एह्यागच्छ रसौकसां पातालवासिनां नोऽस्माकं समर्पिता अन्यथा पातालावतरणमस्या न घटत इति भावः । हिरण्याक्षेणाधिक्षेपार्थं प्रयुक्ताऽपि भारती वस्तुतो भगवंतं स्तौति । तथा हि । वनगोचरो जले शयानः श्रीनारायणः स एव योगिभिर्मृग्यते दुष्टान्वा हंतुं मृगयत इति मृगः । अज्ञ, नास्ति ज्ञो यस्मात्सर्वज्ञेत्यर्थः । सुरा अधमा यस्मात् हे सुरोत्तम ममेक्षमाणस्यापि सतो मामनादृत्यापि त्वमनया सह वर्तमानो नोऽस्मदीयं स्वस्ति समस्तं मंगलं राज्यं यास्यसि प्राप्स्यसि नात्र संदेहस्तथाप्यस्मत्कृपया विमुंचेत्यर्थः । आसादिता लीलया स्वीकृता सूकराकृतिर्येन ॥ ३ ॥ ❀ ❀ अभवाय नाशाय भृतः पुष्टः वस्तुतस्तु मोक्षाय भृतो धृत आश्रित इत्यर्थः । यो भवान्परोक्षेण चौर्येण जयतीति तथा । वस्तुतस्तु दूरत एव स्थित्वा जयतीति संस्थाप्य हत्वा वस्तुतस्तु योगमायारूपमचिंत्यं बलं यस्य अल्पं पौरुषं यस्मात् तं त्वां सम्यक् स्थापयित्वा भक्त्या हृदि स्थिरीकृत्येत्यर्थः । हे मूढ प्रमूढान्प्रात्याप्याययतीति तथा । प्रा पूर्ताविति धातुः । सुहृदां शुचः संसारदुःखानि मृजे नाशयामि । यतस्त्वं स्मर्तुर्बांधवानपि मोचयसीति भावः ॥ ४ ॥ ❀ ❀ अस्मद्भुजच्युतयापि गदयाऽशीर्णं शीर्षं यस्य तथाभूते त्वयि सुखं स्थिते सति ये तुभ्यमधुना बलिं हरंति नवीना भक्ता ये च पूर्वे भक्ता ऋषयो देवाश्च ते सर्वे स्वयमेवोद्यमं विनैवामूला न भविष्यंति । किं तु दृढमूला एव भविष्यंतीत्यर्थः ॥ ५ ॥ ❀ ❀ स हरिररेर्दुरुक्तान्येव तोमराः शस्त्रविशेषास्तैस्तुद्यमानो व्यथ्यमानो दंष्ट्राग्रगतां पृथ्वीं भीतामालक्ष्य तोदं दुरुक्तव्यथां मृषन्सहमान एव निर्गतः करेणुर्हस्तिनी वस्तुतस्त्वरिदुरुक्ततोमरैर्निमित्तभूतैस्तुद्यमानः यथाश्रुतार्थग्राहिणां ब्रह्मादीनां व्यथां दृष्ट्वाऽनुकंपया

---

१. प्रा० पा०—कृति । २. प्रा० पा०—रभयाय ।

पीड्यमान इत्यर्थः। तोदं मृषन्नित्यस्याप्ययमेवार्थः ॥ ६॥ ❀ ❀ सलिलान्निर्गच्छंतमनुगतः सन् हिरण्यवल्कपिशाः केशा यस्य दैत्यस्य झषो मकरः करालास्तुंगा दंष्ट्रा यस्य अशनिवन्निःस्वनो यस्य निर्लज्जानामसतां किं विगर्हितमस्ति निंदाभयाभावात्पलायनमपि नायुक्तमित्यर्थः। वस्तुतस्तु गतह्रियः प्राप्तह्रियः न संतो येभ्यस्तेषां कृपालूनां किं विगर्हितम्? न किंचित्। अतः कृपालुत्वाद्दंष्ट्राश्रितभूरक्षणार्थं किंचित्पलायनमपि न निंदितमित्यर्थः। यद्वा। लोकोपकाराय भुवमुद्धरतोऽनुद्रवणमनुचितं मन्वानो दैत्य आत्मानमेवाधिक्षिपति। गतह्रियां स्वार्थैकपराणामसतामस्माकं किं विगर्हितगणनास्त्यपि तु नास्त्येव धिगस्मानित्यब्रवीदित्यर्थः ॥ ७॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः।

धराया उद्धर्त्ता धरोद्धर्त्ता स चासौ वराहश्चेति तथा निर्गतो विशेष उपमानभेदो यस्मात्तत्तथा अनुपममित्यर्थः। शयितस्य हरेः क्षोभः प्रकृतिविपर्यासो यत्र तत्तथा। तदेवमित्थं महामनाः सोत्साहचित्तः गतिं गमनं रसातलं गर्भोदमेव ॥ १॥ ❀ ❀ पूर्वोक्तवराहचरिते युद्धलीला विशेषतो नोक्तेति तां वर्णयितुमाह—ददर्शेति। तत्र। गर्भोदे अभिजितं तन्नामकर्क्षाधिदैवतं वा। वने एव विविक्तारण्ये स्थित्वा तपश्चर्यादिना मुनिजनदृश्यत्वाद्वनगोचरो वा। यद्वा। रामावतारे पित्राज्ञया वनगोचरो यः सोऽयमित्यर्थः। अवताराणामनादित्वादियमुक्तिरपि नासंगतेति। यद्वा। वनगोऽपि संसारवनप्राप्तोप्यचरो ध्रुव एव, संसारधर्म्मैरुत्पत्त्यादिभिर्न चाल्य इति भावः ॥ २॥ ❀ ❀ रसौकसामिति पंचम्यर्थे षष्ठी रसौकोभ्य इत्यर्थः। पातालेऽवतरणं गमनमस्या भुवः। इति भाव इति। अस्मदीयत्वादेवास्मल्लोकमाक्षेत्याशयः। 'विधाता विश्वसृड्विधिः' इत्यमरः। यद्वा। हे विश्वसृज! इगुपधत्वात्कः। महीं नो निषेधे मा विमुंच, इयं मही अर्पिता तुभ्यमुपहारीकृता न केवलमियमेव नोऽस्माकं स्वस्ति राज्याद्यप्यनया सहैव प्राप्स्यसि। नस्स्वस्तीति—"अनचि च" "वा शरि" इति सकारद्वयसिद्धेर्व्याख्याद्वयम्। ननु कुतो मह्यं महीं ददासि तत्राह—मम ईक्ष ईक्षणं तस्मात् मत्कर्मकात्कृपावलोकादीदृशाद्धेतोरित्यर्थः ॥ ३॥ ❀ ❀ यद्वा। अक्षाणीन्द्रियाणि जयतीत्यक्षजिदत एव पर इन्द्रियानाकृष्ट इत्यर्थः। यद्वा। मायया कृपयाऽसुरानपि हंति स्वकर्तृकहननेन सद्गतिं ददातीत्यर्थः। "लोकान्प्रयांतु रिपवोऽपि हि शस्त्रपूता" इति मार्कंडेयोक्तेः। "ये ये हताश्चक्रधरेण विष्णुना" इत्याद्युक्तेश्च। अत एव कृपाधिक्यादेव। परोक्षोप्यप्रत्यक्षीभूतोऽपि जयसि देवतांतरेभ्योऽल्पसाधनेनैव प्रत्यक्षीभूतेभ्योऽपि यसाक्षाद्भूतस्त्वं तेभ्यः सर्वेभ्य उत्कर्षेण वर्त्तस इत्यर्थः। पौरुषं पुरुषस्य महत्स्रष्टुः कर्म विश्वसृष्ट्यादि तदपि अल्पमननुरूपं यस्य तं त्वामिति वा। स्वामिचरणैस्तु पौरुषपदेन बलमुक्तमत एव पंचमीसमासः कृतः। इति भाव इति। 'कुलं पवित्रम्' इत्याद्युक्तेरिति तात्पर्यम् ॥ ४॥ ❀ ❀ इत्यर्थ इति। स्वामिसुखेन भृत्यसुखस्यापि संभवादिति भावः ॥ ५॥ ❀ ❀ इत्यर्थः इति। तोदं पाक्षिकदुरुक्तिव्यथां मृषन् पाक्षिकसूक्तसुखापेक्षया सहमान इति वार्थः ॥ ६॥ ❀ ❀ कपिशाः किंचित्पीताः इत्यर्थ इति। किमकार्यमसाधूनामिति भावः। इत्यर्थः इति। परोपकृतयेऽकार्यकरणेऽपि न दोषः इति भावः। वस्तुतस्तु—भगवति निंदा न संभवतीति तेनैव विचारितमित्याह। यद्वेति। इत्यर्थ इति। उपकारिष्वपकारस्मरणाद्वयमेव निन्दिता इति भावः ॥ ७॥

## श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

निर्विशेषं जयादिविशेषरहितं सममित्यर्थः। अत एव देवक्षोभिशङ्कया देवक्षोभकरं तादृशलीलाया दर्शनार्थं तत्पथ्येवागच्छतः श्रीनारदात् गतिं स्थितिम् ॥ १॥ ❀ ❀ तत्र रसातले अरुणश्रियेति विशेषणे तृतीया। अतएव युक्तं यदक्ष्णीति व्याख्यातम् ॥ २॥ ❀ ❀ अन्यथा समर्पणाभावे अस्या मह्याः अधिक्षेपपक्षे अनचि चेति द्वित्वमाश्रित्य ममेक्षतस्ततोऽनया मह्या स्वस्ति सुखं न यास्यसीति योजनीयम्। स्तुतिपक्षे तु वा शरीति सकारपक्षमाश्रित्य नोऽस्माकमिति व्याख्यातमिति ज्ञेयम् ॥ ३॥ ❀ ❀ स्तुतिपक्षे मूढान् भक्तिविवशान् योगमायारूपं चिच्छक्तिविलासात्मकम् ॥ ४॥ ❀ ❀ निन्दापक्षे तु मूलं त्वमेव तच्छून्यास्सन्तः न भविष्यन्ति न जीविष्यन्ति मरिष्यन्तीत्यर्थः ॥ ५॥ ❀ ❀ अयमेवार्थ इति निगूढार्थमजानतां ब्रह्मादीनां स्वनिन्दानिमित्तकं तोदं व्यथां मृषन्सहमान इत्येवार्थः ॥ ६॥ ❀ ❀ वास्तवार्थे कृपालूनां परोपकृत्यर्थं पलायनमपि न निन्दितमिति कृपालुत्वस्यैव पोषकं न तु प्राप्तह्रीत्वस्येत्यरुचौ यद्वेति ॥ ७॥

## श्रीमद्वीरराघवव्याख्या

एवं वरुणेनाभाषितोऽसुरस्तं भगवन्तमन्वेषयन् गत इत्याह मुनिः। तत् एवम् उक्तप्रकारेण जलेशभाषितं वरुणभाषितमाकर्ण्य निशम्य महामनाः प्रतियोद्धारं श्रुत्वा हृष्टचित्तः दुर्मद अत एव शयिष्यस इति यदुक्तं तदविगणय्य अङ्ग हे विदुर! हरेर्भगवतो गतिं मार्गं नारदाद्विदित्वा ज्ञात्वा त्वरान्वितः रसातलं निर्विवेश प्रविष्टवान् ॥ १॥ ❀ ❀ तत्र रसातलेऽभितः सर्वतो जयतीत्यभिजित्तं हरिं कथंभूतं धराधरं भूधरं पर्वत इव स्थितमग्रदंष्ट्रया दंष्ट्राग्रेण प्रोन्नीयमानोर्ध्वं नीयमानावनिर्येन तमरुणश्रियाक्ष्णा स्वरुचा हिरण्याक्षतेजांसि हरन्तम् अम्बुरुहारुणश्रियमिति पाठेऽक्ष्णारुणाम्बुरुहश्रियं मुष्णन्तमित्यर्थः, ददर्श। अहो वन-

गोचरः वनेपु अलक्ष्यमाणः मृगोऽत्र दृश्यत इति जहासापहसितवांश्च ॥ २ ॥ ❀ ❀ तत एवं भगवन्तमाहोवाच च उक्तिमेवाह । एह्यागच्छाज्ञ ! महीं विमुञ्च रसौकसां पातालवासिनां नोऽस्माकं विश्वसृजा ब्रह्मणा इयं समर्पितान्यथा पातालावतरणमस्या न घटत इति भावः । हिरण्याक्षेणाधिक्षेपार्थं प्रयुक्तापीयं भारती वस्तुतो भगवन्तं स्तौति । तथाहि वनगोचरः जलशयो नारायणः स एव योगिभिः मृग्यते इति मृगः दुष्टान्निहन्तुं मृगयत इति वा अज्ञ नास्ति ज्ञो यस्मात् सर्वज्ञेत्यर्थः । हे सुराधम ममेक्षतः पश्यतः सत अनया भूम्या सह स्वस्ति मङ्गलं यथा तथा यास्यसि । स्तुतिपक्षे तु सुरा अधमाः यस्मात् हे सुरोत्तम ! ममेक्षमाणस्यापि सतः मामनादृत्य त्वमनया सह वर्तमानो नोऽस्मदीयं समस्तं मङ्गलं राज्यं यास्यसि तथाप्यस्मत्कृपया विमुञ्चेत्यर्थः । आसादिता लीलया स्वीकृता सूकराकृतिर्येन स तत्सम्बोधनम् ॥ ३ ॥ ❀ ❀ किंच त्वमिति । सपत्नैः सुरैर्नोऽस्माकमभवाय नाशाय त्वं भृतः पुष्टः किं परोक्षजित्परोक्षं जयतीति परोक्षजिद्यो मायया सुरान् हंसि त्वां योगमाया आत्मीयमायैव बलं यस्य तमत एवाल्पपौरुषमल्पबलं संस्थाप्य हत्वा हे मूढ सुहृदां शुचः अश्रूणि प्रमृजे । स्तुतिपक्षे नः सपत्नैरभवाय मोक्षाय भृतः किमाश्रितः यो भवान्परोक्षेण इन्द्रादिद्वारेण जिन्मायया आत्मीयसङ्कल्पेनासुरान् हंसि नतु तवास्ति वैषम्यं किन्तु लीलयैवेत्यर्थः । योगमायाबलमात्मीयमचिन्त्यबलम् अथवाऽल्पपौरुषमल्पं पौरुषं यस्मात्तं त्वां संस्थाप्य हृदि सम्यक् भक्त्या स्थापयित्वा दृढीकृत्येत्यर्थः । हे मूढप्र ! मूढान्प्राति आप्याययतीति मूढप्रः तत्संबोधनं प्रा पूर्ताविति धातुः सुहृदां बन्धूनां शुचः संसारदुःखानि मृजे नाशयामि यतस्त्वं स्वर्तुर्बान्धवानपि मोचयसीत्यर्थः ॥ ४ ॥ ❀ ❀ त्वयीति । अस्मद्भुजच्युतया अस्मद्धस्तविसृष्टया गदया शीर्णं भिन्नं शिरो यस्य तस्मिन् स्वयं संस्थिते हते सति तुभ्यं बलिं पूजां ये च ऋषयो देवाश्च हरन्ति कुर्वन्ति ते सर्वे स्वयमेव प्रयत्नमन्तरेण अमूला अनाश्रयाः सन्तः न भविष्यन्ति नंक्ष्यन्तीत्यर्थः । स्तुतिपक्षे त्वस्मद्भुजच्युतया गदया शीर्णशीर्षण्यपि त्वयि संस्थिते सम्यक् स्थिते सति तुभ्यं बलिं हरन्ति ऋषयो देवाश्च ते सर्वे अमूला न भविष्यन्ति किन्तु दृढमूला एव भविष्यन्तीत्यर्थः ॥ ५ ॥ ❀ ❀ स भगवानरेरसुरस्य दुरुक्तय एव तोमराः शस्त्रविशेषास्तैस्तुद्यमानः व्यथ्यमानः भीतां दंष्ट्राग्रगतां गां भूमिमुपलक्ष्य तोदं दुरुक्तिव्यथां मृषन् सहमानः अम्बुमध्यात् ग्राहेण मकरेण हस्तिनी सहितः इभो गज इव निरगान्निर्गतः ॥ ६ ॥ ❀ ❀ निःसरन्तं सलिलान्निर्गच्छन्तं भगवन्तं गजं यथा झषो मकरस्तथानुद्रुतः अनुधावन् हिरण्यकेशो हिरण्याक्षः करालां भयंकारा दंष्ट्रा यस्य सः अशनिरिव निःस्वनो यस्य सः अब्रवीत् तदेवाह । गतह्रियां निर्लज्जानामसतां किंतु विगर्हितमस्ति निन्दाभावात्पलायनं नायुक्तमिति भावः । स्तुतिपक्षे तु गतह्रियामस्माकं किं विगर्हितमस्ति लोकोपकारार्थं भुवमुद्धरन्तं प्रत्यसतामस्माकमनुद्रवणमनुचितमेवेत्यर्थः ॥ ७ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

एकमर्थमनेकधा प्रतिपद्यमानो महामनास्तद्वरुणोक्तं विगणय्यावज्ञाय विचार्य वा आगच्छति । यद्यपि विशतेः सम्पूर्वात् स्वापार्थत्वं तथाप्यत्र जले नेत्रे निमील्य प्रवेशाभिप्रायेणोक्तम् ॥ १ ॥ ❀ ❀ अग्रदंष्ट्रया दंष्ट्राग्रेण प्रकर्षेणोर्ध्वं नीयमानावनिर्येन स तथा तं धराधरं पर्वतं किन्नेत्युक्तमविजितमिति अक्ष्णा अम्बुरुहारुणश्रियं रक्तपद्मदलकान्ति मुष्णन्तं चोरयन्तं वने जले गवि भूमौ चरतीति वनगोचरो मृगो वराहः ॥ २ ॥ ❀ ❀ ननु भुवि यतमानो वने जले च दृग्विषयोऽभूदहो इति प्रहस्य तिरश्चीनं गतः किं नेत्याह । आहेति विश्वसृजा ब्रह्मणा रसौकसां दैत्यानामर्पिता दत्ता अमुया भूम्या सुरा अधमा यस्मात्स सुराधम इति तात्पर्यार्थः । अनेन हिरण्याक्षस्यान्तर्भक्तिं ध्वनयति प्रातीतिकेन द्वेषं प्रकटयति यथासंभवमुत्तरत्राप्येवमूहनीयम् ॥ ३ ॥ ❀ ❀ अस्माकं शत्रुभूतैर्देवैरभयाय वृतत्वान्मायया सूकरादिव्याजेनासुरान्नो हंसि मारयसि अन्यत्र नोऽभयाय सपत्नैर्वृतः किं यस्त्वं मायया असुरान् हंसीति कीदृशस्त्वं परोक्षजित् परोक्षेणाप्रत्यक्षतया चौर्येण जयतीति अक्षाणीन्द्रियाणि जयतीत्यक्षजित् अत एव परः, योगमायाबलं कपटोपायबलमत एवाल्पपौरुषं त्वां संस्थाप्य हत्वा सुहृदां शुचः प्रमृज इत्यन्वयः । स्वरूपेच्छाबलं स्वसमपुरुषसमूहरहितमेकचित्ते सम्यक् स्थापयितुं योग्यमूढं भक्त्या हृतं कृत्वा सर्वत्र सुहृदहं संसारशुचः प्रमृज इत्यन्वयः ॥ ४ ॥ ❀ ❀ इदानीं बाह्यद्वेषमुद्गलयति । त्वयीति । अमूला मूलाश्रयरहिताः ॥ ५ ॥ ❀ ❀ तस्यान्तरभक्तिं विदधान इव बाह्यद्वेषं सहमानो यदर्थं जलमज्जनं तत्करोमीति मन्वान उदमज्जदित्याह । स इति । उपलभ्य दृष्ट्वा करेणुर्हस्तिनी ॥ ६ ॥ ❀ ❀ हरेरभीष्टकार्यमध्ये हिरण्याक्षेण किमकारीत्याह । तमिति । अनुद्रुतोऽनुयातः हिरण्यकेशो हिरण्याक्षः ॥ ७ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

विगणय्य विशेषेण गणयित्वा सम्मत्य ॥ १ ॥ ❀ ❀ अरुणश्रियेति अक्ष्णः सामानाधिकरण्यं पुंवत्त्वञ्च भाषितपुंस्कत्वात् ॥ २ ॥ ❀ ❀ दैत्यभावस्याभासमात्रत्वमेव व्यर्थेन तदीयवाक्येन बोधयति । आहेति त्रिभिः । रसौकसामिति सम्प्रति तु विजिते स्वर्ग एवानयोर्वासः सम्पन्न इति गम्यते । रसाया अपि पृथ्वीविवरत्वात् न स्वस्तीत्यत्र अनचि चेति वा शरीति च सकारद्वयसिद्धेर्व्याख्याद्वयम् ॥ ३ ॥ ❀ ❀ वास्तवार्थे मूढान् भक्तिविवशान् प्रतीति ॥ ४—५ ॥ ❀ ❀ स तुद्यमानेति । अत्र वास्तवार्थेन तयोर्निगूढभक्तभावत्वं स्पष्टमेवाङ्गीकृतम् ॥ ६ ॥ ❀ ❀ तमिति । अत्र वस्तुतः कैमुतिकेनैव श्रीवराहदेवस्य हिरण्याक्षस्य च तज्ज्ञानादुभयस्यापि वास्तवार्थस्य स्तुतावेव पर्यवसानं गम्यते ॥ ७—८ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

असुरस्य वराहस्याप्युक्तिप्रत्युक्त्यनन्तरम् । अष्टादशे गदायुद्धं ब्रह्मभीतिदमुच्यते ॥ १ ॥

प्रतियोद्धारं श्रुत्वा महामनाः सोत्साहचित्तः शयिष्यसे इति प्रशान्तय इति यदुक्तं तत् खलु स्ववधस्यासम्भवत्वनिश्चयात् विगणय्य अगणयित्वा तमहं क प्राप्स्यामीत्यन्विष्यन् दैवात् पुरोदृष्टान्नारदात् पृष्टात् हरेर्गतिं गमनं विदित्वा रसातलं गर्भोदमेव प्रविवेश ॥१॥ ❀ ❀ पूर्वोक्ते वराहचरिते युद्धलीलाविशेषतो न निवृतेति तां विवरीतुमाह । ददर्शेत्यादि । अभितो जयतीत्यभिजित्तम् अभिजिन्नक्षत्राधिदैवतं वा । प्रकर्षेणोर्ध्वं नीयमाना अवनिर्येन तम् । स्वरुचः हिरण्याक्षतेजांसि वनगोचरः वारिचरः हिरण्याक्षेनाधिक्षेपार्थं प्रयुक्तापि सरस्वती वस्तुतो भगवन्तं स्तौति । वनगोचरः जलशयनो नारायणः स एव मुनिभिमृ॑ग्यत्वान्मृगः । यद्वा वने विविक्तारण्ये एव नतु ग्रामे भवद्भिर्दर्शनार्हत्वाद्वनगोचरः ॥२॥ ❀ ❀ विश्वसृजा ब्रह्मणा रसौकसां विभक्तिपरिणामेन रसौकोभ्य एवार्पिता अन्यथा पातालावतरणमस्या न घटत इति भावः । ईक्षतः ईक्षमाणं मामनादृत्य अनया सह पक्षे न विद्यते ज्ञो यस्मात् हे सर्वज्ञेत्यर्थः । नो इति निषेधे महीं मा विमुञ्चेत्यर्थः । हे विश्वसृज इगुपधत्वात् कः । इयं मही अर्पिता तुभ्यमुपहारीकृता न केवलमियमेव किन्तु नोऽस्माकं स्वस्ति मङ्गलं राज्यादिकमनया सहैव यास्यसि प्राप्स्यसि नः। स्वस्तीति अनचि चेति वा शरीति च सकारद्वयसिद्धे र्व्याख्याद्वयम् । ननु कस्मान्मह्यं महीं ददासि तत्राह । मम ईक्षतः ईक्षणं तस्मात् मत्कर्मकात् कृपावलोकादीदृशाद्धे तोरित्यर्थः। सुरा अधमा यस्मात् हे सुरोत्तम आसादिता प्रापिता स्वभक्तेभ्यो दत्ता सेवार्थं शूकराकृतिर्येन ॥ ३ ॥ ❀ ❀ सपत्नैर्देवैर्नोऽस्माकमभवाय नाशाय त्वं भृतः किं पालितः यो माययैव हन्ति अतः परोक्षं जयति ननु साक्षात् तं त्वां योगमायैव नतु दैहिकं बलं यस्य तं संस्थाप्य हत्वा सुहृदां शुचः शोकाश्रूणि प्रमृजामि पक्षे । अभवाय मोक्षाय भृतः धृतः आश्रित इत्यर्थः । किन्तु मायया कृपया असुरानपि यो हन्ति स्वकर्तृकहननेन तेषामपि सद्गतिं करोति । अत एव कृपाधिक्यादेव परोक्षोऽपि सर्वेषां प्रत्यक्षीभूतोऽपि जयसि देवतान्तरेभ्योऽल्पसाधनेनैव प्रत्यक्षीभूतेभ्योऽपि वहुतरसाधनैरप्यसाक्षाद्भूतस्त्वं तेभ्यः सर्वेभ्य उत्कर्षेण वर्त्तस इत्यर्थः। योगमायारूपमचिन्त्यं बलं यस्य तमल्पपौरुषं यस्य तं त्वां सम्यक् स्थापयित्वा स्वहृदये मन्दिरे भक्त्या स्थिरीकृत्येत्यर्थः। मूढप्र ! मूढान् प्रति स्वभक्तिदानेनाप्याययतीति तथा । प्रा पूर्त्तौ । सुहृदः शुचः संसारदुःखानि मृजे नाशयामि यतस्त्वं स्मर्तुर्बान्धवानपि मोचयसीति भावः ॥ ४ ॥ ❀ ❀ संस्थिते मृते सति न भविष्यन्ति मरिष्यन्ति, पक्षे असद्भुजच्युतयापि गदया अशीर्णं शीर्षं यस्य तस्मिन् संस्थिते सति ये तुभ्यमधुना बलिं हरन्ति नवीना भक्ता ये च पूर्वे भक्ता ऋषयो देवाश्च ते सर्वे स्वयमेव उद्यमं विनैव अमूला न भविष्यन्ति किन्तु दृढमूला एव भविष्यंन्तीत्यर्थः ॥ ५ ॥ ❀ ❀ स हरिः अरेरसुरस्य दुरुक्तितोमरैस्तुद्यमानः पक्षे तैरेव निमित्तभूतैस्तुद्यमानः यथाश्रुतार्थग्राहिणां ब्रह्मादीनां व्यथां दृष्ट्वा अनुकम्पया पीड्यमान इत्यर्थः । तोदं पाक्षिकदुरुक्तव्यथां मृषन् पाक्षिकसूक्तसुखप्राप्त्या सहमान इत्यर्थः । अत एव ग्राहेण आहतः अहतश्च करेणुर्हस्तिनी ॥ ६ ॥ ❀ ❀ तं भगवन्तमनुद्रुतोऽनुधावन् गतह्रियां निर्लज्जानामसतामवीराणां किं विगर्हितमपितु नैव निन्दा प्रतियोद्धारं दृष्ट्वा पलायनं न युक्तमित्यर्थः । पक्षे गता प्राप्ता ह्रीर्यैस्तेषां ह्रीमतां न सन्तो येभ्यस्तेषां कृपालूनां किं विगर्हितमपितु कृपालुत्वात् दंष्ट्राश्रितभूरक्षणार्थं किञ्चित्पलायनमपि न निन्दितमित्यर्थः । यद्वा लोकोपकाराय भुवमुद्धरतो भगवतोऽनुद्रवणमनुचितं मन्वानो दैत्य आत्मानमेवाधिक्षिपति गतह्रियां स्वार्थैकपराणामसतामस्माकं किं विगर्हितमस्ति अपितु नास्त्येव धिगस्मानित्यब्रवीदित्यर्थः ॥ ७ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

अष्टादशे श्रीवराहहिरण्याक्षयोर्युद्धं वर्णयति। अयं संयुगे त्वां रणमार्गकोविदम् । आराधयिष्यतीत्येवं जलेशभाषितं श्रुत्वा महामनाः हृष्टचित्तः शयिष्यते वीरशये श्वभिर्वृत इति तद्भाषितं विगणय्यागणयित्वा यतो दुर्मदः हरेः गतिं मार्गम् ॥ १ ॥ ❀ ❀ अग्रदंष्ट्रया दंष्ट्राग्रेण स्वस्य दैत्यस्य रुचः कान्तीः मुष्णन्तं चोरयन्तं ददर्श अहो वनगोचरो मृगः जलचरो वराह इति जहास च ॥ २ ॥ ❀ ❀ आसादिता गृहीता सूकराकृतिर्येन हे आसादितसूकराकृते ! ॥ ३ ॥ ❀ ❀ यो मायया दम्भेन हन्ति सः विष्णुः किन्त्वमभवाय असमृद्धये भृतः पुष्टोऽसि ॥ ४ ॥ ❀ ❀ त्वयि मूलभूते अत्र एहि अज्ञ इत्यादि भाषणमासुरभावमूलम् । विष्णुः सर्वमूलमित्यादिज्ञानन्तु 'मावोऽनुतापकलया भगवत्स्मृतिघ्नः शापो भवेदि' तिप्रार्थनयेति दिक् ॥ ५ ॥ ❀ ❀ गाम् भूमिम् ॥ ६ ॥ ७ ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

अष्टादशे स्थितिस्तस्य भगवत्सन्निधौ स्फुटा । निरूप्यते, तथा शापात्पारुष्यं विजयस्ततः ॥ १ ॥
स्थित्यध्यायोऽयमाख्यातो ब्रह्मणा तत् स्थिरीकृतम् । उत्पत्तावेव शापो हि मारणं ब्रह्मवाक्यतः ॥ २ ॥

युद्धमात्रे [1]हरीच्छा हि कायवाङ्मनसा तु[2] सा। उभयोरुद्यमोक्त्यैव युद्धं मानसमीरितम्॥ ३॥
कायिकं चाऽग्रिमाध्याये मध्यमं मध्यमे मतम्। अतो विरोधवाक्यानामुभयेषां न दूषणम्॥ ४॥
प्रसङ्गो दर्शनं वाक्यं त्रिभिर्भक्तानुरोधनम्। पुनराक्षेपवाक्यं च शरव्य[3]करणं तथा॥ ५॥
वाक्योपक्रमणं वाक्यं त्रिभिर्मानस्तथोद्यमः। युद्धं षड्भिर्भगवत्त्वात् ब्रह्मप्रार्थनमन्ततः॥ ६॥
उभयोर्वचनं षड्भिर्युद्धं चैव तथोभयोः। स्थितिरेषा तस्य हरौ तत्पोपकमिहाऽपरम्॥ ७॥

प्रथमं युद्धार्थं तयोः प्रसङ्गमाह—तदैवमिति। जलेशो वरुणः। [4]तदा एवं तद्वचनमाकर्ण्य महामना उत्साहयुक्तो जातः। यद्यपि मरणं श्रुतम्, तथापि तदविगणय्यैव महामना जात इति सम्बन्धः। तत्र हेतुः—दुर्मद इति। दुष्टो मदः स्वानिष्टं न बोधयतीति। भगवन्तं भक्त एव जानातीति नारदः पृष्टः। भगवत्कार्यैककर्तृत्वात् नारदस्याऽपि समागमनम्। अतो नारदाद्धेतोः, हरेर्गतिं विदित्वा, तत्सद्भावदेशस्य श्रुतत्वात्, युद्धाभिनिविष्टस्त्वरान्वितो रसातलं निर्विविशे॥ १॥ ❀ ❀ ततो दर्शनमाह—यथाऽन्यदर्शने तस्याऽवज्ञोत्पन्ना, न तथा भगवद्दर्शने इति ज्ञापयितुं भगवन्तं विशिनष्टि। तत्र रसातले अभिजितम्, धराधरम्, प्रोन्नीयमा[5]नावनिम्, मुष्णन्तमिति चतुर्द्धा। 'पराक्रमस्तथा कार्यमिति शूरत्वबोधनम्। शत्रोः पराजयश्चेति सहजं तच्चतुष्टयम्' अभितो जितं यस्य। आकारदर्शनेनैव तस्य सर्वतो जयो लक्ष्यते। धरां बिभर्तीति तथा। धरायां वा अधरं यस्य। तन्न दृश्यत इत्यतोऽपि भगवद्दर्शनेऽपि न स्वस्मिन् भगवति वा लोभ उत्पन्नः। दंष्ट्राया अग्रमग्रदंष्ट्रा पूर्वं निरूपिता, तया प्रोन्नीयमाना अवनिर्येन। अनेन शत्रुः कार्यासक्त इति सूचितम्। स्वस्य हिरण्याक्षस्य रुचः, अरुणश्रिया अक्ष्णा मुष्णन्तम्। दैत्यः सुवर्णवर्णः, कार्याभिनिविष्टस्य भगवतोऽप्यक्षि अरुणवर्णम्, रजोगुणप्राकट्यात्। अनेन भगवदग्रे स्वात्मानं भगवन्तं च न दृष्टवान् इत्युक्तम्। एवं ज्ञात्वाऽपि अग्रिमभगवल्लीलेच्छायाः प्राधान्यात् जहास। ददर्श जहास च। चकारादग्रिमवचनान्यपि संगृहीतानि। तान्याह—अहो वनगोचरो मृग इति। हास्यरूपं चैतत्। अहो आश्चर्यम्, मृगोऽरण्यवासी अवनगोचरः, वनरहितभूमौ तिष्ठतीति। वने जले वा चरतीति तादृशो मृगोऽयमिति। भगवद्बुद्ध्या समागतम्, अयं तु वनगोचरो मृग इत्यर्थः॥ २॥ ❀ ❀ अस्तु यथा तथा रूपम्, युद्धं तु कर्तव्यमित्यभिप्रायेणाऽऽह—एनं भगवन्तमेव[6] माह—हे भगवन्, एहि। कदाचिदात्मानं न जानातीति तथा संबोधनम्। युद्धार्थमाकारयामि। कार्यान्तरेऽहं व्यापृत इति चेत्तत्राऽऽह—महीं विमुञ्चेति। ननु प्रारब्धं कर्म परिसमाप्य पश्चादन्यत्कर्तव्यमिति चेत्तत्राऽऽह—नो रसौकसां विश्वसृजेयमर्पितेति। इयं भूमिरस्मदीया, रसौकसामर्थे विश्वसृजा अर्पितत्वात्। अतोऽन्यस्य भूमिर्न नेया। क्षत्रियधर्मेण चेन्नीयते, तदा युद्धं कृत्वा नेतव्येत्युभयथाऽपि एनां विमुञ्च, अस्मदीयैषेति। न चिन्ताऽप्येतस्याः कार्या, यतो नोऽस्माकमेषा। न हि स्वामिनि विद्यमाने अन्यस्य चिन्ता युक्तेति भावः। शरीरवन्न्यायतश्चेयं प्राप्तेति ज्ञापनार्थं ब्रह्मणा समर्पितत्वकीर्तनम्। तथाप्यत्यजन्तं प्रत्याह—न स्वस्ति यास्यसीति। मम ईक्षतः सतः, अनया सह स्वस्ति यथा भवति तथा न यास्यसीत्यर्थः। संबोधनद्वयमधिक्षेपजनकम्, क्रोधोत्पादनार्थम्। महद्भिरपि देवैरस्मद्विरोधे कार्यं कर्तुं न शक्यते, येषां रूपमत्युत्तमम्। रूपेणैव हि महत्त्वममहत्त्वं च ज्ञायते। आसादिता स्वीकृता सूकरवदाकृतिर्येन। पूर्वस्य हेतुः॥३॥ ❀ ❀ देवप्रेरणया समागतमिति चेत्तत्राऽऽह—त्वं नः सपत्नैरिति नः सपत्नैर्देवैस्त्वं किमभवाय भृत इत्यधिक्षेपप्रश्नः। कार्यं तु महद्भिरेव न भविष्यतीति कथं त्वयेति ते देवा असाध्यकार्ये नियोजकास्तवाऽहिता एवेत्यर्थः। नन्वहं विष्णुः, स्वतन्त्रतया भवच्छत्रुः, कथं देवप्रेरित इत्युच्यत इति चेत्तत्राऽऽह—यो मायया हंसीति। त्वं हि ज्ञातो विष्णुरेव सत्यम्। अभिज्ञानमाह—यस्त्वमसुरान् मायया कापट्येनैव हंसि। [7]मायेव कारणम्, 'ये यथा मां प्रपद्यन्ते' इति वाक्यात्, 'मायेत्यसुराः' इति श्रुतेः; मोक्षाभावार्थं च। अनिष्टनिवृत्त्यर्थं वा माययैव हंसि। कापट्ययुद्धं न वीरत्वबोधकम्। तदाह—परोक्षजिदिति। परोक्षे समागत्य जयं संपादयसीत्यतः प्रत्यक्षे युद्धं न कर्तव्यम्। भूमिं त्यक्त्वा गच्छेत्युपदेशः। तथा[8] न क्रियत इति चेत्तत्राऽऽह—त्वां योगमायाबलमिति। तव तु न सहजं बलम्, किन्तु योगमायया। सा त्वस्मदीयेत्यस्मत्स्थाने सा न प्रभविष्यतीत्यल्पमेव पौरुषं स्वतो भविष्यतीत्यर्थः। अत एव सम्यक् स्थापयित्वा सुहृच्छुचः प्रमृजे; ये त्वया मारिताः, तेषामनृणो भविष्यामीत्यर्थः। अहं मारितशत्रूणां संबन्धीति मां न जानासीति तथा संबोधनम्॥ ४॥ ❀ ❀ ननु देवानां विद्यमानत्वात् कथं दैत्यानां शोकाभावस्तत्राऽऽह—त्वयि संस्थित इति। अस्मद्भुजच्युतया गदया शस्त्राभेद्येऽपि शरीरे प्रहारेण व्यथिते सम्यक् स्थितिः। अस्मद्भुजच्युतयेति महाबलसंबन्ध उक्तः। ततः किमत आह—ये च तुभ्यं बलिं हरन्ति, ऋषयो देवाश्च। अन्येऽपि स्वतन्त्रा येऽभिमानिनः, तेऽपि सर्वे भवन्मूलका एवेति स्वयमेवाऽमारिता अपि न भविष्यन्ति, उद्भवं न प्राप्स्यन्तीत्यर्थः। तत्र हेतुः—अमूला इति॥ ५॥ ❀ ❀ एवं दुष्टवचनान्यपि भक्तहितार्थमङ्गीकृतानीत्याह—स तुद्यमान इति। अरिर्हिरण्याक्षः, तस्य दुरुक्तय एव तोमरा

१. हरेरिच्छा ग.। २. हि ग.। ३. प्रारब्धकरणम्, संरब्धकरणम् ख. घ. ङ.। ४. तदेवम् ग.। ५. उन्नीयमानम्. क. ख. घ. ङ.। ६. एवाह. क. ङ.। ७. माययैव. ङ.। ८. तथापि. क.।

भङ्गविशेषाः, यैर्गजस्तुद्यते। तथा तुद्यमानोऽपि भीतां गामुपलभ्य तोदं मृषन्नेव अम्बुमध्यान्निरगात्। अयुक्तेपि तथा निःसरणे दृष्टान्तः—ग्राहेणाऽऽहतः करेणुसहितो यथेभ इति। अत्र भगवतो युद्धलीला प्रतिपाद्यत इति, विरोधिनोश्च युद्धसम्भवात्, गदाप्रहार इव विरोधिवचनान्यपि युक्तान्येव। यदि वचनान्यन्यथा व्याख्यायन्ते, तदाऽन्यथा क्रियाऽपि व्याख्येया। सा चेन्नटवद्व्याख्याता, तुल्यं वचनेष्वपि। तथापि भक्तानां श्रवणकटुत्वाद्वचनान्यन्यथा व्याख्यायन्ते, न तु स भागवतार्थः। वस्तुतो हिरण्याक्षो भक्तः, भारती च। तथा सति तानि वाक्यानि स्तुतिपराण्येवेति पुनर्व्याख्यायते—अहो इति स्वभाग्यमभिनन्दति। वने गोभिरुपनिषद्भिश्चर्थैते ज्ञायत इत्यधिकारिविशेषेण वेदान्तसमधिगम्यो यः, सोऽस्मानिदानीं मृगयतीत्याश्चर्यम्। अत एव भगवन्तं प्रत्याह—हे भगवन्, एहि, अस्मदुद्धारार्थमागच्छ। पृथिवी गमनं न मन्यत इति चेत्तदाह—अज्ञ महीं विमुञ्चेति। अज्ञा चाऽसौ मही च, सा ह्यस्मद्दुःखं न जानाति। भक्तो हि परदुःखाभिज्ञः, अतः सा त्यक्तव्या। नो रसौकसामर्थे। रस एव ओकः स्थानं येषाम्। वयं रसिका भक्ताः, अतोऽस्मदुद्धारं प्रथमतः कुर्वित्यर्थः। तर्हि पृथिव्याः का गतिरिति चेत्तत्राऽऽह—विश्वसृजेयमर्पितेति। इयं न स्वभावतस्तव स्थाने समागता, किन्तु ब्रह्मणा अर्पिता। अर्पितत्वात् पुनः प्रत्यर्पणं कर्तव्यम्, तदा ब्रह्मैव तदुद्धारं करिष्यतीत्यर्थः। वयं त्वनन्यगतिकाः, इयं तु सगतिकेत्यपि विशेषः। किञ्च, यद्यस्मदुद्धारमकृत्वाऽनया सह गमिष्यसि, तदा परमदयालोस्तव सुखं न भविष्यतीत्याह—न स्वस्ति यास्यसीति। अनुद्धृतस्य मम ईक्षत एव सतोऽनया सह सुखं न यास्यसीत्यर्थः। न हि भक्तमनुद्धृत्य सदयः कश्चिद्भार्यया सुखमश्नुते। देवास्त्वदुद्धारं न मन्यन्त इति चेत्तत्राऽऽह—सुराधमेति। सुरा अधमा यस्मात्। ते हि निकृष्टाः, किं तेषां संमत्येत्यर्थः। ननु श्रान्तोऽहं भूम्युद्धारेण, रूपान्तरेणोद्धरिष्यामीति चेत्तत्राऽऽह—आसादितसूकराकृत इति संबोधनम्। न सादिता अवसादं प्रापिता सूकराकृतिर्येन। इदानीमप्येतद्रूपं नाऽवसन्नम्, अतो भूम्युद्धारमकृत्वा मामुद्धरेत्यर्थः। ननु देवैर्भूम्युद्धारार्थं प्रार्थितोऽहम्, ते हि भूमौ मामाराध्य मुक्ता भविष्यन्ति; अतो बहूपकारसिद्धेर्भूमिरेवोद्धर्त्तव्येति चेत्तत्राह—त्वं नः सपत्नैरिति। नः सपत्नैः शत्रुभिः सनकादिभिः, तत्सहितैर्देवैर्वा, किमभवाय मोक्षाय भृतो धृतः, भूमौ भगवद्भजनेन मोक्षो भविष्यतीति। तत्तु न भविष्यति, भक्तद्रोहात्। यतोऽस्माकं ते सपत्नाः शत्रवः, न हि भक्तद्रोहे मुक्तिर्भवति। नन्वहमपि भवतां शत्रुरेवेति चेन्नेत्याह—यो मायया हंसीति। त्वं त असुरान् कापट्येन मारयसे, लोकव्यामोहनार्थम्। वस्तुतस्तेभ्यः सायुज्यं प्रयच्छसि, यतस्ते असुराः; असून् प्राणान्, रान्ति शब्दायन्ते-शब्दयुक्तान् कुर्वन्ति प्राणघोषं शृण्वन्ति। योगिन इत्यर्थः। प्राणं स्तुवन्तीति वा। न ह्यासन्योपासका मृता भवन्ति, 'मृत्युमत्यमुच्यत' इति श्रुतेः। किञ्च, परोक्षजिद्भवान्। पराणि अक्षाणि इन्द्रियाणि येषाम्, तानेव जयतीति परोक्षजित्। इन्द्रियारामानेव मारयसीत्यर्थः; असुरान् वा। परोक्षजित्। असुरान् लक्ष्यीकृत्य परोक्षं यथा भवति तथा जयतीति। लोकानां स्थानेऽसुरा जिता इति वदति, वस्तुतस्तु तदधीनो भवति, यथा बलिस्थाने। तर्हि समागतेन त्वया किं कर्तव्यमित्यपेक्षायामाह—त्वामिति। त्वां संस्थाप्य सुहृच्छुचो मृजे। तर्हि समागतेन किम्? योगेन, शस्त्रेण वा सम्यक् स्थापनं क्रियतामित्याशङ्क्याऽऽह—योगमायाबलमिति। योगमायाया अपि बलं यस्मात्। 'ज्ञानिनामपि चेतांसि' इति वाक्यात् योगादिभ्योऽपि योगमायैव बलिष्ठा; तस्य अपि बलं त्वत्तः; स कथं योगेन वशीक्रियत इत्यर्थः। ननु पुरुषरूपं हृदये चिन्त्यताम् 'एवं पुरा धारणया' इति वाक्यानुसारेण। तत्राऽऽह—अल्पपौरुषमिति। पुरुषसंबन्धि रूपं पौरुषम्, अल्पं पौरुषं यस्मात्। ब्रह्माण्डकोटिविग्रहो भवान्। अत एव त्वामेव संस्थाप्य सकुटुम्बः कृतार्थो भविष्यामि। ननु ज्ञानाभावात् तव कथं मोक्षः? तत्राऽऽह—हे मूढप्रेति। मूढेष्वपि प्रकर्षो यस्य, अतस्त्वं मूढानपि कृतार्थान् करोषीति न भक्तिमार्गे ज्ञानापेक्षेत्यर्थः। किञ्च, न केवलमहमेव सकुटुम्बो मुक्तो भविष्यामि, किन्तु सर्व एव भक्ता एवं कृते परमविश्वासेन कृतार्था भविष्यन्तीत्याह—त्वयि संस्थित इति। अस्मद्धेतोस्त्वयि संस्थिते सति, भुजच्युतया गदया शीर्णे शीर्षणि च सति, ये च तुभ्यमृषयो देवाश्च बलिं हरन्ति, चकारात् भक्तेभ्योऽपि, ते सर्वे अमूला न भविष्यन्ति, सर्व एव समूला भविष्यन्तीत्यर्थः। भगवांश्चेद्धृदये स्थिरो भवति, तदा सुषुम्णा नाडी, गतिं ददातीति; भुजानां क्रियाशक्तीनां च्युतिर्यया; तया ब्रह्मरन्ध्रभेदे सति, प्राणादीनां तेन मार्गेण गमने, स्वस्य च भगवति योगे सर्व एव सायुज्यं प्राप्ताः समूला एव भविष्यन्तीत्यर्थः। एवमन्यपराणां शब्दानामन्यपरता योजनीया। तुद्यमाना व्यथायुक्ता ये दैत्याः, तत्सहितो भगवान् भक्तैः कृत्वा जातः। अरयो दुरुक्तितोमरा येषामिति। तेषां परभेदकान्यसद्वाक्यानि कदापि न सन्ति, ते हि भक्ता नारदादयः। तैः कृत्वा हिरण्याक्षादिसहितो भगवान् जात इति तत्संबन्धेन स्वविस्मरणं भवतीति भूमेर्भयम्। दंष्ट्रायाश्च यमत्वात्, तदन्ते स्थिता अपि। भगवद्दृष्ट्यभावे पुनः स यमो ग्रसिष्यतीति दैत्यभाव एव तेषां तादात्मकः। तं भगवान् वस्तुतो न सहते। तेषां तद्भावदूरीकरणार्थं यदि दृष्टिर्व्याप्येति (?), तदा भूमेर्भयं भविष्यतीति तेषां तोदं सहन्नेवाऽम्बुमध्यान्निर्गतः, जले ते यद्यपि संस्कर्तव्याः। ननु किमिति तथा कृतवानित्याशङ्क्य दृष्टान्तमाह-ग्राहेणाहतः, तं गृहीत्वैव यथा करेणुसहितो महागजः। गजस्तु कालाधीन एवेति ग्रहास्तत्र बाधका भवन्ति, ते चेदबाधकाः; तदा करेणुसहितो मोदत इति। दैत्यत्वं भगवतो न बाधकमिति सुखक्रियासाधकत्वात् सेवकस्त्रीसहित एव निर्गत

---

१, चेत्तत्राह, ग. घ. ङ.। २, दधातीति, क. घ. ङ.।

इत्यर्थः ॥ ६ ॥ ❀ ❀ एवमुभयसहितस्य भगवतश्चरित्रमुभयेषां हितरूपमाह द्वाभ्याम्—तं निःसरन्तमिति। प्रथमं हिरण्याक्षस्य कृतार्थतामाह-तं भगवन्तं सलिलान्निःसरन्तमनुद्रुतः यदैव भगवान् सलिलान्निर्गतः, तदैव भगवत्सायुज्यार्थम्, सैन्धवखिल्यवत्, अनु पश्चात् द्रुतः, कठिनभावं त्यक्तवान्। दैत्यत्वं गतमित्यर्थः। ततः किं जातमित्याकाङ्क्षायामाह—हिरण्यकेश इति। सूर्यमण्डलस्थिता मूर्तिर्भगवतो हिरण्यकेशरूपा भवति, अतस्तादृशं रूपं गृहीतवानित्यर्थः। ननु भगवत्सन्निधिमात्रेण कथमस्य दिव्यरूपप्राप्तिरित्याशङ्क्याऽऽह—द्विरदं गजेन्द्रमनु यथा झषो हूहूर्गन्धर्वो दिव्यरूपं प्राप्तवान् तथेत्यर्थः। प्रासङ्गिकं फलमेतज्जातमित्युक्तम्, उत्तमं फलं वक्ष्यति सायुज्यात्मकम्। ननु तस्य मृत्युः किं जात इत्याशङ्क्याऽऽह—करालदंष्ट्र इति। करालेषु दंष्ट्रा यस्येति। करो भगवदीयोऽलं येषां भगवद्वध्याः, तेष्वेव दंष्ट्रारूपो यमो गत इत्यर्थः। अथवा, करालेषु सुदर्शनादिष्वेवाऽस्यापि मृत्युः स्थितः। ननु बाधका ग्रहाः किं जातास्तत्राऽऽह—अशनिनिःस्वन इति। शनिरहितानामदुष्टानां ग्रहाणां नितरां स्वनो यत्र। सर्वे एव शुभग्रहा एकीभूता इति ग्रहदोषो निवृत्त इत्यर्थः। अत एव भगवन्तं प्रत्याह—गतह्रियामिति। ह्रीशब्देन देहाद्यभिमानरूपाः सर्वे एव धर्मा उक्ताः। तुशब्देन तेषां पूर्वधर्मराहित्यमुक्तम्। एवं मुक्तजीवानां निस्त्रैगुण्ये विचरतां किं विगर्हितमिति प्रश्नार्थः। तत्रापि असः कृष्णः, तस्य सतां परमभक्तानाम्। यद्यपि निस्त्रैगुण्याः, तथापि भक्तविरोधिनः पदार्थाः कर्तव्या न वेति सन्देहात् प्रश्नः। प्रतीयमानपक्षे तु शीघ्रं भगवन्तमनुद्रुतः। तस्य तथा सामर्थ्यसूचकम्—हिरण्यकेश इति। तस्य गतिप्रतिबन्धकोऽपि जात इति दृष्टान्तः। ननु युद्धार्थिनो युद्धादाने कथं क्रोधस्तत्राऽऽह—कराला दंष्ट्रा यस्येति। स्वभावतः क्रोधयुक्त इत्यर्थः। अनेन मारयितुमेव प्रवृत्त इत्युक्तं भवति। तथापि स्वस्य वीर्यगर्वात् मारणमकृत्वैव, मम वचनमेव वज्रतुल्यमिति दुष्टेनैव वचनेन तथोक्तवानित्याह—अशनिनिःस्वनोऽब्रवीदिति। 'आहूतो न निवर्तेत' इति शास्त्रात् युद्धार्थमाकारितस्य पलायनं शूराणां लज्जाजनकमपि भवति। अतो मुख्यधर्मलज्जापरित्यागे केवलं प्राणरक्षकाणां किं विगर्हितमित्युपहासः। असत्पदेन धर्मराहित्यमप्युक्तम्। अनेन स्वनिवृत्त्यर्थं युद्धायोग्यता निरूपिता। अत एव भगवान् स निवर्तिष्यतीति तदाक्षेपकाणि वचनान्युक्तवान्, यथा न निवर्तेत ॥ ७ ॥

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

अथाऽष्टादशाध्यायं विवरीतुमवसररूपां सङ्गतिं बोधयन्त एवाऽध्यायार्थमाहुः—अष्टादश इत्यादि स (म्पादने) पादेन। ननु समाप्तौ मारणोपक्रमस्याऽप्युक्तत्वान्नैकान्ततः स्थित्यध्यायत्वं निश्चेतुं शक्यमित्याकाङ्क्षायामाहुः—ब्रह्मणेत्यादि। 'आक्रीडबालवद्देव' इति कथनेन विनाशसामग्रीसान्निध्याभावबोधनात् ब्रह्मणा पारुष्यं सर्ववाक्यैः स्थिरीकृतम्। अतः सुखेन स्थित्यध्यायत्वं निश्चेतुं शक्यमित्यर्थः। नन्वेवं सति ब्रह्मै (ह्मणै) तन्मारणं किमिति प्रार्थ्येत इत्याकांक्षायाम्, तदपि पर्यवसानतः स्थितेरेव बोधकमित्येतदुपपादयन्ति—उत्पत्तावित्यादिसार्धाभ्याम्। सेति। युद्धकृतिः। मध्यममिति। वाचिकम्। तथा च, यदि ब्रह्मा न वदेन्न मारयेदेव, युयुत्साया अपूरितत्वात्। अत इच्छाबोधकत्वाद्ब्रह्मवाक्यमपि स्थितावेव पर्यवस्यतीत्यर्थः। एवमध्यायार्थं निरूप्य तद्गतानि वाक्यानि विभजन्ते—प्रसङ्ग इत्यादिद्वाभ्याम्। ददर्शेत्यत्र। पूर्वं निरूपितेति। 'प्रायणीयोदयनीयदंष्ट्रः' इत्यनेन निरूपिता ॥२॥

### श्रीगिरिधरकृता बालप्रबोधिनी

अष्टादशे विशेषेण हिरण्याक्षवराहयोः। युद्धं भयङ्करं देवमनुष्याणां निरूप्यते ॥ १ ॥

एवं वरुणेनोक्तो हिरण्याक्षः किमकरोदित्यपेक्षायामाह—तदिति। एवमुक्तप्रकारेण जलेशो जलचराणामधिष्ठाता वरुणः तदभिभाषितमाकर्ण्य श्रुत्वा तत् ततो वाक्यादेव प्रतियोद्धृप्राप्तिश्रवणात् महामनाः हृष्टचित्तो जातः। ननु तत एव 'श्वभिर्वृतः शयिष्यसे' इति मरणमपि श्रुतवांस्तत्कथं हर्ष इत्याशङ्क्याह—तद्विगणय्येति, अगणयित्वेत्यर्थः। तत्र हेतुमाह—दुर्मद इति। अत एव तदन्वेषणपरः सन् हे अंग नारदात् हरेर्गतिं स्थितिं स्थानं विदित्वा ज्ञात्वा त्वरान्वितः अन्यत्र गमनशङ्कया शीघ्रमेव रसातलं निर्विविशे निर्विवेश ॥ १ ॥ ❀ ❀ तत्र रसातले अभितो जयतीत्यभिजितं वराहमूर्तिं भगवन्तं ददर्श दृष्ट्वा चाहो आश्चर्यं मया तु प्रतियोद्धाऽन्विष्यते। अयं तु वनगोचरो वनवासी मृग इत्युक्त्वा जहास चेत्यन्वयः। तेन दृष्टं भगवन्तं वर्णयति—धराधरं पर्वताकारम्, अग्रदंष्ट्रया दंष्ट्राग्रेण ऊर्ध्वं नीयमाना अवनिर्येन तम्, अरुणश्रिया युक्तेन अक्ष्णा नेत्रेण स्वरुचः हिरण्याक्षतेजांसि मुष्णन्तं हरन्तमित्यर्थः। एवं हिरण्याक्षेण निन्दार्थं प्रयुक्ताऽपि भारती वस्तुतो भगवन्तं स्तौत्येव। तथाहि—वनं जलम्। वनगोचरो जलशयनः श्रीनारायणः स एव श्रेयोर्थिभिर्मृग्यते इति मृगः स दृष्ट इत्यहो भाग्यमित्यर्थः ॥ २ ॥ ❀ ❀ तत एनं भगवन्तमाह उवाच। तदेव दर्शयति—एतद्वृत्तं त्वं न जानासीति सूचयन् सम्बोधयति—हे अज्ञेति। महीं विमुञ्च। तत्र हेतुमाह—रसौकसां रसातलवासिनां नोऽस्माकमेवेयम्। कुतः प्राप्तेत्यपेक्षायामाह—विश्वसृजा ब्रह्मणाऽस्मभ्यमियमर्पिता दत्तेति। अन्यथाऽस्या अत्रागमनं न स्यादिति भावः। एवमुक्तेऽपि गच्छन्तं प्रत्याह—एहीति, यदि बलादेनां नेतुमिच्छसि तर्हि युद्धार्थमागच्छेत्यर्थः। तथापि गच्छन्तं प्रत्याह—हे सुराधम देवेषु नीच। तत्रापि हेतुं सूचयन् सम्बोधनान्तरमाह—आसादित सूकराकृते इति। ममेक्षतः पश्यतः सतः अनया भूम्या सह स्वस्ति मङ्गलं यथा तथा न यास्यसि। स्तुतिपक्षे तु—नास्ति ज्ञो ज्ञानी

यस्मात्तत्सम्बोधनं हे अज्ञ, हे सर्वज्ञ इत्यर्थः। तवाग्रे मया किमधिकं वक्तव्यमिति भावः। मम भक्तस्येक्षतो भूमिं प्रतीक्षतोऽपि सतो मामनादृत्य अनया भूम्यैव त्वं स्वस्ति उत्कर्षं न यास्यसि स्वत एवैश्वर्यादि गुणपूर्णत्वात् अतो विश्वसृजा त्वया यदीयमस्मास्वर्पिता स्यात्तदेव भक्तवात्सल्यादिना तवोत्कर्षः। अतो नोऽस्माकं रसौकसामर्थे महीं विमुञ्च। मदनुग्रहार्थमेहि मम समीपमागच्छ। ननु देवपक्षपातिनो मम युष्मभ्यं भूमिदानमयुक्तमेवेत्याशङ्क्य सुरा अधमा यस्मात्तस्य सुरोत्तमस्य न किञ्चिद्देवैः कृत्यमस्ति किन्तु केवलं भक्तवात्सल्यादेव सूकरमूर्तिं स्वीकृतवानसि अतो ममापि भक्तत्वान्मय्यपि कृपा युक्तैवेत्याशयेन द्विः सम्बोधयति—सुराधमेति, आसादितसूकराकृते इति च॥ ३॥ ॐ ॐ त्वं किं नोऽस्माकं सपत्नैः शत्रुभिर्देवैर[1]भवाय अस्मद्विनाशाय भृतो धृत आश्रितः पुष्टो वा? यो भवान् मायया वाराहादिवेषान्तरधारणलक्षणकापट्येन तथापि परोक्षजित् अस्मत् परोक्षे असम्मुखे जयतीति तथाभूतः सन्नसुरान् हन्ति। त्वं मम प्रभावं न जानासीति सूचयन् सम्बोधयति—मूढेति। इदानीं तु त्वां संस्थाप्य हत्वा सुहृदां त्वद्धतबन्धूनां रुदतां शुचः अश्रूणि प्रमृजे इत्यन्वयः। त्वद्धनने मम प्रयासो नास्तीति सूचयन्नाह—योगमाया लोकव्यामोहिकैव बलं यस्य तम्। अतएवाल्पं पौरुषं बलं यस्य तम्। स्तुतिपक्षे तु—अस्मत्सपत्नैर्देवैः किं नोऽस्माकं अभवाय संसारविमोक्षाय त्वं भृतः आश्रितः ?। यो भवान् परोक्षजित् सन् मायया लोकव्यामोहिकया देवादीन् मोहयन्नेव असुरान् हन्ति देवादिदृष्ट्या हनन्नपि वस्तुतस्तु मोक्षमेव प्रापयति। एवं चेत्तर्हि योगमाया अचिन्त्यशक्तिरूपा बलं यस्य तम्। अल्पं लोकानां पौरुषं यस्मादेवम्भूतं त्वां हृदि संस्थाप्य स्थिरीकृत्य यथा सुहृदां स्वपित्रादीनां शुचः संसारदुःखानि मृजे नाशयामि तथाऽनुगृहाण। यतः त्वं मूढानपि प्राति अप्याययतीति तथाभूत इत्याशयेन सम्बोधयति—हे मूढप्रेति। प्रा पूर्ताविति धातुः। अतएव 'त्रिसप्तभिः पिता पूतः पितृभिः सह तेऽनघ' इति प्रह्लादं प्रति नरसिंहवचनम्॥ ४॥ ॐ ॐ अस्मद्भुजच्युतया अस्मद्भुजविसृष्टया गदया शीर्णं भिन्नं शीर्षं शिरो यस्य तस्मिंस्त्वयि संस्थिते मृते सति ये च देवा ऋषयो ये चान्येऽपि भक्ता मनुष्यादयः तुभ्यं बलिं हरन्ति सर्वस्वं निवेदयन्ति ते सर्वे स्वयमेव मत्प्रयत्नमन्तरेणैव अमूलास्त्वदाश्रयत्वादनाश्रयाः सन्तो न भविष्यन्ति, नङ्क्ष्यन्त्येवेत्यर्थः। स्तुतिपक्षे तु—न केवलमेवं ममैव सकुटुम्बस्य मोक्षः किन्त्वन्येषामपि सर्वेषां त्वद्भक्तानामित्याह—त्वयीति। एवं त्वयि हृदि संस्थिते सम्यक् स्थिरीभूते सति अस्माकं त्वद्भक्तानां हस्ताभ्यां च्युतया विनिस्सृतया गदया मोक्षमार्गभूतया सुषुम्णया नाड्या शीर्णशीर्षणि ब्रह्मरन्ध्रे भिन्ने च सति ये च ऋष्यादयस्तव भक्तास्तुभ्यं बलिं हरन्ति सर्वस्वं समर्पयन्ति ते सर्वे स्वयमेव तद्व्यतिरिक्तं प्रपन्नमन्तरेणैवामूलाः यथाऽन्ये संसारिणो निर्मूलास्त्वदाश्रयाभावेन अनाश्रया एव भवन्ति तथा निराश्रया नैव भविष्यन्ति। यद्वा अमूलाः संसारमूलाऽविद्यारहिताः सन्तः पुनः संसारिणो नैव भविष्यन्ति। किन्तु त्वां प्राप्तास्त्वदाश्रयाश्च सन्तः परमानन्दमनुभविष्यन्तीत्यर्थः। अत्र गदाशब्देन संसारबन्धमोक्षहेतुभूता सुषुम्णाख्या नाडी बोध्या। भुजच्युतिशब्देन मुक्तस्य तया प्रयोजनाभावात् तद्विनाशो बोध्यः। शीर्णशीर्षणीति भक्तानां ब्रह्मरन्ध्रभेदेनोत्क्रान्त्या तत्प्राप्तिश्च बोध्या॥ ५॥ ॐ ॐ स वाराहरूपी भगवान् अरेर्हिरण्याक्षस्य दुरुक्तान्येव तोमराः शस्त्रविशेषास्तैस्तुद्यमानो व्यथमानोऽपि तोदं मृषन् सहमान एव अम्बुमध्याद्बहिर्निरगादित्यन्वयः। तत्र दृष्टान्तमाह—ग्राहेण मकरेणाहतो जले व्यथितः सकरेणुः हस्तिनीभिः सहित इभो गजो जलान्निस्सरेत्तथेति। ननु समर्थस्य तस्य कुतस्तावत् क्षमया व्यथासहनमित्यपेक्षायां कृपया दंष्ट्राग्रे स्थितपृथ्वीरक्षार्थमित्याशयेनाह—दंष्ट्राग्रे गतां गां पृथ्वीं भीतामुपलक्ष्य दृष्ट्वेति॥ ६॥ ॐ ॐ तं भगवन्तं सलिलान्निस्सरन्तं अनुद्रुतोऽनुधावन् हिरण्यवत्कपिशाः केशा यस्य स हिरण्याक्षः अब्रवीत्। तत्स्वरूपस्य भयङ्करत्वमाह—कराला भयङ्करा दंष्ट्रा यस्य स इति। तच्छब्दस्यापि भयङ्करत्वमाह—अशनिवत् वज्रवद्व्यथाकरो निस्स्वनः यस्य स इति। अनुधावने दृष्टान्तमाह—द्विरदं यथा झष इति, झषो मकरो द्विरदं गजं यथाऽनुद्रुतो भवेत्तथेत्यर्थः। किमब्रवीदित्यपेक्षायामाह—गतेति। गतह्रियां त्यक्तलज्जानामसतां युष्माकं किं तु विगर्हितमस्ति? निन्दाभयाभावात् पलायनं नायुक्तमित्यर्थः। स्तुतिपक्षे तु—गतह्रियां प्राप्तलज्जानाम्। न सन्तो येभ्यस्तेषां कृपालूनां किं विगर्हितं? न किञ्चित्। अतः कृपालुत्वाद्दंष्ट्राश्रितभूमिरक्षार्थं किञ्चित्पलायनमपि न निन्दितमित्यर्थः। यद्वा लोकोपकाराय भुवमुद्धरतोऽनुद्रवणमनुचितं मन्वानो हिरण्याक्षः आत्मानमेवाधिक्षिपति—गतह्रियां स्वार्थैकपराणां असतामस्माकं विगर्हितं किमस्ति? अपितु न किमपि, धिगस्मानित्यब्रवीदित्यर्थः॥ ७॥

## हिन्दी अनुवाद

### हिरण्याक्षके साथ वराहभगवान्का युद्ध

श्रीमैत्रेयजीने कहा—तात! वरुणजीकी यह बात सुनकर वह मदोन्मत्त दैत्य बड़ा प्रसन्न हुआ। उसने उनके इस कथन पर कि 'तू उनके हाथसे मारा जायगा' कुछ भी ध्यान नहीं दिया और चट नारदजीसे श्रीहरिका पता लगाकर रसातलमें पहुँच

---

१. असम्भवायेति क. ख. पाठे त्वर्थवादः।

गया ॥ १ ॥ ❀ ❀ वहाँ उसने विश्वविजयी वराहभगवान्‌को अपनी दाढ़ोंकी नोकपर पृथ्वीको ऊपरकी ओर ले जाते हुए देखा । वे अपने लाल-लाल चमकीले नेत्रोंसे उसके तेजको हर लेते थे । उन्हें देखकर वह खिलखिलाकर हँस पड़ा और बोला; 'अरे ! यह जंगली पशु यहाँ जलमें कहाँसे आया ?' ॥ २ ॥ ❀ ❀ फिर वराहजीसे कहा, 'अरे नासमझ ! इधर आ, इस पृथ्वीको छोड़ दे; इसे विश्वविधाता ब्रह्माजीने हम रसातलवासियोंके हवाले कर दिया है । रे सूकररूपधारी सुराधम ! मेरे देखते-देखते तू इसे लेकर कुशलपूर्वक नहीं जा सकाता ॥ ३ ॥ ❀ ❀ तू मायासे लुक-छिपकर ही दैत्योंको जीत लेता और मार डालता है । क्या इसीसे हमारे शत्रुओंने हमारा नाश करनेके लिये तुझे पाला है ? मूढ़ ! तेरा बल तो योगमाया ही है; और कोई पुरुषार्थ तुझमें थोड़े ही है । आज तुझे समाप्तकर मैं अपने बन्धुओंका शोक दूर करूँगा ॥ ४ ॥ ❀ ❀ जब मेरे हाथसे छूटीहुई गदाके प्रहारसे सिर फट जानेके कारण तू मर जायगा, तब तेरी आराधना करनेवाले जो देवता और ऋषि हैं, वे सब भी जड़ कटे हुए वृक्षोंकी भाँति स्वयं ही नष्ट हो जायँगे' ॥ ५ ॥ ❀ ❀ हिरण्याक्ष भगवान्‌को दुर्वचन-बाणोंसे छेदे जा रहा था; परन्तु उन्होंने दाँतकी नोकपर स्थित पृथ्वीको भयभीत देखकर वह चोट सह ली तथा जलसे उसी प्रकार बाहर निकल आये, जैसे ग्राहकी चोट खाकर हथिनीसहित गजराज ॥ ६ ॥ ❀ ❀ जब उसकी चुनौतीका कोई उत्तर न देकर वे जलसे बाहर आने लगे, तब ग्राह जैसे गजका पीछा करता है, उसी प्रकार पीले केश और तीखी दाढ़ोंवाले उस दैत्यने उनका पीछा किया तथा वज्रके समान कड़ककर वह कहने लगा, 'तुझे भागनेमें लज्जा नहीं आती ? सच है; असत् पुरुषोंके लिये कौन-सा काम न करने योग्य है !' ॥ ७ ॥

स गामुदस्तात्सलिलस्य गोचरे विन्यस्य तस्यामदधात्स्वसत्त्वम् ।
अभिष्टुतो विश्वसृजा प्रसूनैरापूर्यमाणो विबुधैः पश्यतोऽरेः ॥ ८ ॥
परानुषक्तं तपनीयोपकल्पं महागदं काञ्चनचित्रदंशम् ।
मर्माण्यभीक्ष्णं प्रतुदन्तं दुरुक्तैः प्रचण्डमन्युः प्रहसंस्तं बभाषे ॥ ९ ॥

श्रीभगवानुवाच

सत्यं वयं भो वनगोचरा मृगा युष्मद्विधान्मृगये ग्रामसिंहान् ।
न मृत्युपाशैः प्रतिमुक्तस्य वीरा विकत्थनं तव गृह्णन्त्यभद्र ॥ १० ॥
एते वयं न्यासहरा रसौकसां गतह्रियो गदया द्राविताास्ते ।
तिष्ठामहेऽथापि कथञ्चिदाजौ स्थेयं क यामो बलिनोत्पाद्य वैरम् ॥ ११ ॥
त्वं पद्रथानां किल यूथपाधिपो घटस्व नोऽस्वस्तय आश्वनूहः ।
संस्थाप्य चास्मान् प्रमृजाश्रु स्वकानां यः स्वां प्रतिज्ञां नातिपिपर्त्यसभ्यः ॥ १२ ॥

श्रीधरस्वामिविरचिता भावार्थदीपिका

स भगवान्विश्वसृजाऽभिष्टुतो विबुधैश्च प्रसूनैरापूर्यमाणः पाठान्तरे विश्वसृजां प्रसूनैर्विबुधैरभिष्टुत इति सलिलस्योदस्तादुपरि व्यवहारगोचरे देशे गां पृथ्वीं विन्यस्य तस्यां स्वसत्त्वमाधारशक्तिं निहितवान् अरेस्तस्य पश्यत एव ॥ ८ ॥ ❀ ❀ परा पराक् पृष्ठतोऽनुषक्तं लग्नम् । तपनीयोपकल्पं सुवर्णाभरणम् । कांचनमयश्चित्रो दंशः कवचं यस्य तं दैत्यम् । प्रचंडमन्युत्वमधिक्षेपादिकं चानुकरणमात्रं दैत्यवाक्यभीतानां देवानां भयनिवृत्तये वस्तुतस्तेन तथाऽनुक्तत्वेन कोपादिहेत्वभावात् ॥ ९ ॥ ❀ ❀ ग्रामसिंहान् शुनः प्रतिमुक्तस्य बद्धस्य विकत्थनं श्लाघाम् ॥ १० ॥ ❀ ❀ न्यासहरा निक्षेपहराः द्राविताः पलायनं कारिताः अथाप्यसमर्था अपि तिष्ठामः । तत्किम् । यतः स्थेयं स्थातव्यमेवास्माभिः तत्किमित्यत आह क यामः गंतव्यदेशाभावात् ॥ ११ ॥ ❀ ❀ पद्रथानां पदातीनां ये यूथपास्तेषामधिपः मुख्य इत्यर्थः । अस्वस्तये पराभवार्थमाशु घटस्व यतस्त्व अनूहो निर्वितर्कः यो नातिपिपर्ति न पूरयति पालयति वा असावसभ्यः सभायामनर्हः ॥ १२ ॥

---

१. प्रा० पा०—प्रसभं तं । २. प्रा० पा०—द्विधं मृग० । ३. प्रा० पा०—सिंहम् । ४. प्रा० पा०—महे चापि । ५. प्रा० पा०—त्वया ।

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

व्यवहारगोचरे नेत्रव्यवहारदेशे आधारशक्तिं यथा जले न मज्जेदिति भावः। पाठांतरे 'विश्वसृजां प्रसूनैः' इति पाठे। प्रजापतिभिर्वृष्यमाणैः पुष्पैरित्यर्थः। तस्य दैत्यस्य। यद्वा। विश्वसृजां प्रसूनैः पुष्पतुल्यैः संततिभिर्विबुधैरभिष्टुतः। अत्र पक्षे आपूर्यमाण इह करणाकांक्षायां प्रसूनैरिहापि योज्यम्॥ ८॥ ❀ ❀ तेन दैत्येन। तथानुक्तत्वादधिक्षेपवाक्यानुक्तेः। कोपादीहादिना क्लेशादिग्रहः। यद्वा। दुरुक्तैः प्रचंडमन्युः, पाक्षिकसूक्तैः प्रहसन्निति हिरण्याक्षवाक्ये सरस्वतीकृतस्य स्तुतिवचनस्य प्रतिवचनमवश्यमपेक्ष्यत इत्यतो भगवद्वाक्येऽपि द्वितीयार्थो व्याख्येयः॥ ९॥ ❀ ❀ वनगोचरा वनस्थैरत्यक्तविषयभोगैर्भक्तैरेव दृश्यास्तदपि कृपयैव। ग्रामसिंहान् ग्रामस्थान् विषयासक्तांस्तन्मुख्यानपि मृगयेऽन्वेषयामि स्वपदं दातुम्। नन्वात्मश्लाघिनो दुर्विनीतान्कथं कृपयसीति तत्राह-धीरा अस्मद्विधा दयावीरास्तव विकत्थनं दोषं न गृह्णंति। अत एव तव कथंभूतस्य मृत्युपाशैः प्रतिमुक्तस्यातिशयेन त्यक्तस्य ममानुकंपितजने मृत्योरनधिकारात्। हे अभद्र न विद्यते भद्रं यस्मात्सः॥ १०॥ ❀ ❀ तत्स्थानं किं कुतः पुनस्तत्स्थेयत्वं, काकूक्त्योपहास एवायम्। पक्षे रसौकसामसुराणामपि न्यासहरा भक्त्या समर्पितपूजोपहारग्राहिणः। गतह्रियः भक्तवात्सल्यादेव हेतोर्न लज्जामहे इत्यर्थः। यतो गदया तव स्तुतिवाचा द्राविता द्रुतचित्तीकृताः। गदेर्भिदादित्वादङ्। अथापि तदपि त्वया सह आजौ युद्धेऽपि तिष्ठामहे स्वबलोद्रेकं प्रकाशयाम इत्यर्थः "प्रकाशनस्थेयाख्ययोश्च" इति प्रकाशने आत्मनेपदम्। ननु हे प्रभवः वैकुण्ठं गत्वा सुखेन विराजध्वं किं युद्धक्लेशेन तत्राह-स्थेयमिति। सनकादिद्वारा शापेन वैरमुत्पाद्य युद्धसुखार्थं बलिना त्वया सहाजौ स्थेयमेव क यामः॥ ११॥ ❀ ❀ इत्यर्थ इति। पद्रथेत्युपलक्षणं सेनामात्रस्य त्वमेवाधुना राजासीति भावः। पक्षे त्वयैव प्रेयोमद्युद्धसुखोत्पादनार्थं प्रतिज्ञायासुरभावोऽगीकृतः। अतो यः स्वामित्यादि। अत एव त्वमित्यादि। नोस्मान्सुखयितुं घटस्वेति "क्रियार्थोपपदस्य—" इति चतुर्थी। असूनामस्तये स्वप्राणत्यागार्थं किं कृत्वा संस्थाप्य हृदये सम्यक् स्थिरीकृत्य स्वीयानां कामानन्दानां सम्बन्धि अश्रु प्रमृज॥ १२॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या।

विश्वसृजा ब्रह्मणा विश्वसृजामिति पाठे मरीच्यादीनां पुष्पैरापूर्य्यमाणः। पश्यत एव तमनादृत्येत्यर्थः॥ ८॥ ❀ ❀ वस्तुतः भारतीकृतस्तुतिपक्षे तेन हिरण्याक्षेण तथाधिक्षेपपरतयानुक्तत्वेन कोपादीत्यादिना भगवत्कर्तृकाधिक्षेपपरिग्रहः। एवञ्च सप्तमे श्वित्रो न जातो जिह्वायामित्यादिना श्रीयुधिष्ठिरेण तद्दुरुक्तिनिन्दनन्तु अनुकरणमात्रमेवाश्रित्य लोकशिक्षार्थमेवेति सर्वमनवद्यम्॥ ९॥ ❀ ❀ सत्यमित्यादिभगवद्वाक्येऽधिक्षेपपरता तु देवानां सन्तोषार्थं स्फुटैव। वास्तवार्थश्चायं तत्र वनगोचरमृगपदयोर्व्याख्यानन्तु तद्भारतीस्तुतिपक्षे कृतमेवेतीतरेषां यथा ग्रामसिंहान् ग्राम्यविषयिश्रेष्ठान् मृगये मृगयामहे मोचयितुमिति शेषः नानावतारदृष्ट्या बहुवचनं हेऽभद्र! अमङ्गलविषयासक्त न गृह्णन्ति किन्त्वनुग्रहमेव कुर्वन्ति॥ १०॥ ❀ ❀ रसो भक्तिरस एवौको निवासो येषां भक्तानां ते न्यासो भावेनात्मनिवेदनन्तं हरन्ति स्वीकुर्वन्तीति तथा। अत एव ऋणित्वेन गतह्रियः प्राप्तलज्जाः यद्यपि प्रातिकूल्येन ते गदया द्राविता अथापि पूर्वभक्तवात्सल्येन तिष्ठामहे मोचितुं स्वशक्तिवैभवं प्रकाशयामह इत्यर्थः। प्रकाशनार्थे तिष्ठतेरात्मनेपदित्वात् मतं तु मे इत्युक्तत्वात्स्वाभीप्सिते संग्रामे कथंचित्स्थेयमेव बलिना स्वपार्षदेन त्वया सह स्वेच्छया वैरं द्वेषाभासमुत्पाद्य मुक्तिमदत्वा क यामः यथापूर्वं पार्षदत्वमाविर्भावयिष्याम एवेत्यर्थः॥ ११॥ ❀ ❀ नोऽस्माकं पद्रथाः पार्षदास्तेषां मध्ये असूनां प्राकृतप्राणानां अस्तये त्यागाय यतस्व संस्थाप्य हृदये सम्यक् स्थापयित्वा स्वकानां समानजातीयपार्षदानामश्रु अहो अत्रत्योऽपि क गत इति शोकं प्रमृज यो नातिपिपर्ति स एवासभ्यः भवांस्तु सभ्य एव तथा कर्त्तुं स्वयमुपस्थितत्वात्॥ १२॥

### श्रीमद्वीरराघवव्याख्या

स भगवान् सलिलस्योदस्तादुपरि गोचरे व्यवहारगोचरे देशे गां भूमिं विन्यस्य विनिधाय तस्यां गवि स्वसत्त्वं स्वबलरूपामाधारशक्तिमदधान्निहितवान् अरेः शत्रोर्हिरण्याक्षस्य पश्यतः सतः विश्वसृजा ब्रह्मणाऽभिष्टुतः त्वया साधु कृतमित्येवमुक्तः विबुधैर्देवैः कर्तृभिः प्रसूनैः पुष्पैः करणैरापूर्यमाणः विकीर्यमाणः। यद्वाभिष्टुतः तं हिरण्याक्षं बभाषे इत्युत्तरेणान्वयः॥ ८॥ ❀ ❀ परानुपक्तं परा पृष्ठतोऽनुषक्तमनुलग्नमनुद्रुतं तपनीयं सुवर्णं तन्मयान्युपकल्पानि भूषणानि यस्य तं महती गुर्वी गदा यस्य तं काञ्चनमयं दंशं यस्य तं दुरुक्तैर्दुर्वाक्यैरभीक्ष्णं पुनः पुनः मर्माणि प्रतुदन्तं व्यथन्तमसुरं प्रति प्रचण्ड उत्कृष्टः मन्युः क्रोधो यस्य सः भगवान्प्रहसन्सन् बभाषे उवाच सोपालम्भमिति शेषः॥ ९॥ ❀ ❀ तद्वचनमेवाह। सत्यमिति। भो! असुर! वयं वनगोचराः मृगा इति यदुक्तं तत्सत्यमेव किन्तु युष्मद्विधान् भवादृशान् ग्रामसिंहान् शुनः मृगयन् मृगः अन्वेषयन्मृगयितुमहं मृगो जात इत्यर्थः। मृगय इति पाठे तु मृगयेऽन्वेषयामीत्यर्थः।

मृत्योः पाशैः प्रतिमुक्तस्य बद्धस्य तवाभद्रममङ्गलं विकत्थनं श्लाघनं धीराः शूरा न गृह्णन्ति नाभिनन्दन्ति। मृत्युपाशैः प्रतिमुक्तस्येति-हेतुगर्भं मृत्युपाशप्रतिबद्धत्वाद्यद्विकत्थनं तन्न गृह्णन्तीत्यर्थः ॥ १० ॥ ❀ ❀ तदुक्तिं विपर्यये पर्यवसाययन्नाह। रसौकसां रसातलवर्तिनां युष्माकं बलवर्जिता न्यासहरा एते वयं न्यस्यन्ति निक्षिपन्ति पादावस्मिन्निति न्यास आधारः भवतामाधार-भूहरा वयं अयं काकुः। नहीयं भूमिः रसातलवर्त्तिनां न्यास इत्यर्थः। एते वयं गतलज्जाः ते त्वया कर्त्रा गदया द्राविताः धाविताः अयमपि काकुः अस्माभिरेव यूयं द्रावयिष्यन्त इत्यर्थः। अथापि गदया द्राविता अपि कथंचित् केनापि प्रकारेणाजौ तिष्ठामहे स्थातुमिच्छामहे। बलिना त्वया सह वैरं विरोधमुत्पाद्य क यामः क गमिष्यामः। अत्रापि भवदपेक्षया विलक्षणेनैव प्रकारेणाजौ तिष्ठामहे स्थातुमिच्छामहे बलिभिरस्माभिर्विरोधमुत्पाद्य क यास्यसीति विपर्यये पर्यवसानमभिप्रेतम्॥ ११॥ ❀ ❀ त्वमिति पद्रथानां पदातीनां ये यूथपास्तेषामधिपस्त्वं नोऽस्माकमस्वस्तये परिभवायाशु घटस्व यतस्व। अनूहः अशङ्कस्त्वमस्मान्संस्थाप्य हत्वा स्वकानामश्रूणि प्रमृज यः पुमान्स्वप्रतिज्ञां नातिपिपर्ति न पूरयति प्रतिज्ञातार्थनिवर्तनेन न समापयति स असभ्यः सभायामनर्हः अत्रापि त्वं पद्रथानामित्यादिशब्दानां विपर्ययपर्यवसायित्वं भगवतोऽभिप्रेतम्॥ १२॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

त्रिलोक्यामेकीभूयागतायामप्यविभ्यतो हरेः किमेकेन हिरण्याक्षेणानुयातेनेति भावेन भूमेः प्रतिष्ठापनप्रकारं वक्ति। स गामिति। गां भूमिमुदस्तादुपरि गोचरे अदूरप्रदेशे स्वसत्त्वं स्थैर्यलक्षणं स्वबलम्॥ ८॥ ❀ ❀ अथ जले भूमिं प्रतिष्ठाप्य पृष्ठतोऽनुद्रुतं रिपुमविगणय्य हरिणा किं कृतमत्राह। परानुषक्तमिति। परानुषक्तं पृष्ठतोऽनुगतं तपनीयोपकल्पा सुवर्णाभरणभूषिता महती गदा यस्य तथा तं काञ्चनैराभरणैश्चित्रितान्यलंकृतान्यङ्गान्यवयवा यस्य स तथा तं प्रहसन्नित्यनेन बाह्यकोपलक्षणं निरुणद्धि इदं महतां लक्षणम्॥ ९॥ ❀ ❀ किमाहेत्यत आह। सत्यमिति। जलशायित्वाद्वनगोचरा जलविषयाः ज्ञानिभिर्मृग्यत्वात् मार्गणाच्च मृगा इत्येतत्सत्यं तत्र केषां मार्गणं क्रियत इत्यत उक्तम्। युष्मद्विधानिति। ग्रामसिंहान् शुनः मृत्युपाशैः प्रतिमुक्तस्य बद्धस्य पुंसो विकत्थनमसंबद्धभाषणम्॥ १०॥ ❀ ❀ न्यासहरा निक्षेपहारिणः रसौकःसु स्थितेषु कथं निक्षेपापहरणमित्यत उक्तं गतह्रिय इति। तद्वद्गतह्रीत्वेन भवानपि द्रवति चेत्तुल्यः समाधिरित्यत उक्तं तिष्ठामह इति। बलिना रिपुणा वैरमुत्पाद्य कथं-चिदाजौ स्थेयं स्थातव्यं क कुत्र यामो गन्तव्यप्रदेशाभावादथ तस्मात्तिष्ठामहे आत्मानं प्रकाश्य स्थितिं कुर्मः। प्रकाशनस्थेयाख्ययो-श्चेति सूत्रादात्मनेपदप्रयोगः॥ ११॥ ❀ ❀ नाहं बलीति नेत्याह। त्वमिति। रथानामिति। रथिनो लक्ष्यन्ते रथानां रथिनां यूथपाधिपस्त्वं नोऽस्मान् अस्वस्तये नाशाख्यामङ्गलायाद्रुद्रुहः द्रोहमकार्षीरिति यत्तत् किल क्रीडनमसुराणां हिंसनं विहारस्वभावो ह्यतो युद्धाय घटस्वेत्यन्वयः। किल श्वैत्य क्रीडन इति धातुः। ततः किं फलमत्राह। संस्थाप्येति। इयं तव प्रतिज्ञा अस्या अपालने तवाप्रशस्तकर्मत्वं स्यादित्याह। यः स्वामिति। अतिपिपर्ति प्रशस्य पालयति। पॄपालनपूरणयोः। 'अतिः स्यादधिकार्थोक्तौ प्रशंसाया-मतिक्रम' इति॥ १२॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

परानुषक्तेति। अत्रापि तद्वत्। अग्रिमाध्याये करालेत्यादावपि। तथापि सप्तमस्कन्धे यच्छ्रीयुधिष्ठिरेण तद्दुरुक्तिनिन्दनं श्रीनारदेन च भगवतस्तदस्पृश्यतया सिद्धान्तितं तदौपधिकानुकरणमात्रमवलम्ब्येति ज्ञेयम्॥ ९॥ ❀ ❀ सत्यमित्यादि श्रीभगवद्वाक्यानि च केवलोपाधिदृष्ट्या तानि चोपहासपराण्यपि वास्तवार्थमपि वहन्ति। तत्र वनगोचरत्वमेकान्तवासत्वं ज्ञेयम्। तथापि कृपया युष्मद्विधान् ग्राम्यविषयासक्तश्रेष्ठान् मृगये मृगयामहे मोचयितुमन्वेषयामः। नन्वविनीतानस्मान् कथं कृपयसि तत्राह। न मृत्यियति॥ १०-१९॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

पृथ्वीयं बिभेतीत्येतत्सहितस्य ममासुरेण सह युद्धं न साध्विति स भगवान् गां पृथ्वीं सलिलस्य उदस्तात् उपरि गोचरे स्वनयनगोचरे देशे विन्यस्य निधाय तस्या गवि स्वसत्त्वं स्वशक्तिं न्यधात् यथा जले सा न मज्जेदित्यर्थः। विश्वसृजा ब्रह्मणा विश्व-सृजामिति पाठे प्रजापतिभिर्विबुधैश्च प्रसूनैर्वृष्यमाणैरापूर्य्यमाणः। पश्यतः पश्यन्तमरिमनादृत्य॥ ८॥ ❀ ❀ परा पृष्ठतोऽ-नुषक्तं लग्नं तपनीयोपकल्पं स्वर्णालङ्कारं दंशं कवचं दुरुक्तैरुदन्तं न तु सूक्तैरिति भावः। अत एव दुरुक्तश्रवणेन प्रचण्डमन्युः सूक्तश्रवणेन प्रहसन् हिरण्याक्षवाक्ये सरस्वतीकृतस्य स्तुतिवचनस्य प्रतिवचनमवश्यमपेक्षत इत्यतो भगवद्वाक्येऽपि द्वितीयोऽर्थो व्याख्यायते॥ ९॥ ❀ ❀ ग्रामसिंहान् शुनः वीरा अस्मद्विधाः प्रतिमुक्तस्य बद्धस्य पक्षे वनगोचराः वनस्थैस्त्यक्तविषय-भोगैर्भक्तैरेव दृश्यास्तदपि कृपयेव ग्रामसिंहान् ग्रामस्था विषयसक्तास्तान्मुख्यानपि मृगये स्वपदं दातुमन्वेषयामि। नन्वात्मश्लाघिनो दुर्विनीतानस्मान् कथं कृपयसीति तत्राह। वीराः अस्मद्विधा दयावीरास्तव विकत्थनं दोषं न गृह्णन्ति। अत एव तव कथम्भूतस्य मृत्युपाशैः प्रतिमुक्तस्य अतिशयेन त्यक्तस्य अस्मदनुकम्पितजने मृत्योरनधिकारात् हे अभद्र! न विद्यते भद्रं यस्मात्॥ १०॥

❀ ❀ काकूक्त्या उपहसति। न्यासहरा न्यस्तवस्तुहरा द्राविताः पलायनं कारिता अथापि असमर्था अपि ननु किमनेन क्लेशेन यथेष्टं पलायध्वं तत्राह। स्थेयमेव वतः क्वेत्यादि पक्षे रसौकसामसुराणामपि न्यासहरा भक्त्या समर्पितपूजोपहारग्राहिणः गतह्रियः भक्तवात्सल्यादेव हेतोर्न लज्जामहे इत्यर्थः। यतो गदया तव स्तुतिवाचा द्राविता द्रुतचित्तीकृता गदेर्भिदादित्वादङ्। अथापि तदपि त्वया सह आजौ युद्धेऽपि तिष्ठामहे स्वबलोद्रेकं प्रकाशयाम इत्यर्थः। प्रकाशने आत्मनेपदम्। ननु हे प्रभवो वैकुण्ठं गत्वा सुखेन विराजध्वं किं युद्धक्लेशेन तत्राह। स्थेयमिति। सनकादिद्वारा अभिशापेन वैरमुत्पाद्य युद्धसुखार्थं वलिना त्वया सहाजौ स्थेयमेव क यामः॥ ११॥ ❀ ❀ पद्रथानां पदातीनां ये यूथपास्तेषामधिपः अस्वस्तये पराभवार्थमाशु घटस्व यतस्व। अनूहो निर्वितर्कः। यो नातिपिपर्त्ति न पूरयति असौ असभ्यः सभायामनर्हः पक्षे त्वयैव प्रेम्णा मद्युद्धसुखोत्पादनार्थं प्रतिज्ञाय असुरभावोऽङ्गीकृतः। अतो यः स्वामित्यादि। अत एव त्वमित्यादि नोऽस्मान् सुखयितुं घटस्व क्रियार्थोपपदस्येत्यादिना चतुर्थी। असूनामस्वस्तये स्वप्राणत्यागार्थं किं कृत्वा संस्थाप्य हृदये सम्यक् स्थिरीकृत्य स्वीयानां कानामानन्दानां सम्बन्धि अश्रु प्रमृज॥ १२॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

सलिलस्योदस्तादुपरि गोचरे व्यवहारार्हे देशे स्वसत्त्वमाधारशक्तिम्॥ ८॥ ❀ ❀ परा पृष्ठेऽनुषक्तमनुलग्नं तपनीयानि स्वर्णमयानि उपकल्पान्याभरणानि यस्य तम्। काञ्चनमयः चित्रो दंशः कवचं यस्य तम् प्रचण्डमन्युर्युद्धक्रीडानुरूपः॥ ९॥ ❀ ❀ प्रतिमुक्तस्य बद्धस्य॥ १०॥ ❀ ❀ न्यासो निक्षेपस्तद्धराः॥ ११॥ ❀ ❀ पद्रथानां पदातीनाम्॥ १२—१६॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

एवमुक्तो भगवान् शीघ्रं भूमिस्थापनकार्यं कृतवानित्याह—स गामुदस्तादिति। स भगवान्, सलिलस्य उदस्तादुपरि। गोचरे निर्भयदेशे; तत्रैव हि गावश्चरन्तीति। वैकुण्ठे वा स्थित्वा यत्पश्यति तत्स्थानं गोचरमित्युच्यते। ज्योतिर्मण्डलमध्ये वा, अत एव तत्राऽतिप्रकाशः। तादृशे स्थाने गां विन्यस्य, तत्स्थानरक्षकदेवेषु न्यासमिव स्थापयित्वा, तस्यां देवानां भगवदीयमिति ज्ञापनार्थं स्वसत्त्वमदधात्। अत एवाऽस्यां पृथिव्यां सर्वत्र भगवन्मूर्त्तयः, भगवद्गुणाः, भक्ताश्च तिष्ठन्ति। स्वसत्त्वं नाम शुद्धं सत्त्वगुणम्, तदेव हि धारकं सामर्थ्यं रूपं च। एवं कृते देवानां संतोषो जात इति तैः स्तोत्रं पुष्पवृष्टिश्च कृतेत्याह—अभिष्टुत इति। विश्वसृजा अभिष्टुतः, विबुधैः प्रसूनवर्षैश्चाऽभिवर्षितः; उभयमुभयेषां वा। पूर्वं हिरण्याक्षस्य युद्धाकरणे अवज्ञा जाता, तां निराकर्तुमाह—पश्यतोऽरेरिति। उत्कर्षो ह्यरिदृष्टः परममुत्कर्षं संपादयतीति च। स्तुतिपक्षे किमिति देवैरभितः स्तुतः, पुष्पवृष्टिश्च कृतेत्याकाङ्क्षायामाह—अरेः पश्यत इति। नैतत्स्तोत्रादिकं काम्यम्, नित्याच्चाऽतिरिक्तम्; अतो नैमित्तिकमिति ज्ञापयितुं निमित्तद्वयं निर्दिशति। भूमौ समागतायां सर्वत्र यागादिधर्मा भविष्यन्ति, ते सर्वे द्रष्टव्याः तथाऽनुग्रहार्थं स्तोत्रकरणम्। पश्यतो हेतोः स्वस्यैव रूपं पश्यद्भविष्यतीति स्तुत्या प्रसन्नस्तथा करिष्यति। प्रसूनवृष्टिश्चाऽरेर्हेतोः, देवानां शत्रुभयं महत्, तद्व्यावृत्त्यर्थं च। अस्मत्समृद्धिर्भवन्निमित्तमिति ज्ञापयितुं तथा करणम्॥ ८॥ ❀ ❀ भगवानेवं भूमिं कृतार्थां कृत्वा भक्तहिरण्याक्षप्रश्ने उत्तरं दातुमुपक्रमं कृतवानित्याह—ननु भगवान् किमर्थमुत्तरं प्रयच्छतीत्याशङ्क्याह—परानुषक्तमिति। परस्मिन्ब्रह्मण्यनुषक्तम्। यो हि सन्मार्गे गन्तुमिच्छति, स उपदेष्टव्य इत्यर्थः। ननु तथापि भगवदुक्तं न ग्रहीष्यतीत्याशङ्कां वारयति—तपनीयोपकल्पमिति। अत्यन्तं तापयोग्य उपकल्पो यस्य[1]। तस्य देहेन्द्रियसामग्री सर्वाऽपि परमतपसा सिद्धा; अतप्ततनुर्न[2] एतन्नाऽश्नुते। किञ्च—महागदमिति। महानगदोऽस्य। सर्वरोगनिवर्त्तिका महती भक्तिस्तस्य वर्तत इति स एव तस्य महानगदः। तथापि कालादिजनितबुद्धिदोषसम्भवात् कथमेकान्ततो वाक्यग्रहणमित्याशङ्क्याऽऽह—काञ्चनचित्रदंशमिति। काञ्चनाऽलौकिकीं भक्तिं प्रति चित्रो[3] दंशो यस्य। भगवता हि तथा चिह्नं कृतमस्ति, येन परमा भक्तिरुत्पत्स्यते। मुनीनां शापलक्षणो दंशो विचित्रो भवति; देहस्थितमसमीचीनं दूरीकरोति, स्वतन्त्रभक्तिं च स्थापयति। लोके हि सर्पादिना दष्टो विपरीतो भवति। अत एव मर्माणि स्वस्य पापच्छिद्राण्यभीक्ष्णं प्रकर्षेण तुदन्तम्; परममिन्द्रियनिग्रहं कुर्वन्तम्। अतः सर्वसाधनयुक्तत्वादयमुपदेष्टव्यः। ननु 'ईश्वराज्ज्ञानमन्विच्छेत्' इति वाक्यात् महादेव एव तमुपदेक्ष्यति, किं स्वोपदेशेनेत्याशङ्क्याह—दुरुक्तैः प्रचण्डमन्युरिति। यद्यपि महादेवो गुरुर्भवति, तथापि दुरुक्तैः प्रचण्डो भवति, अवाच्यानि बहूनि सन्तीति। प्रकृष्टा वा चण्डिका यस्य। तत्र गते सा व्यामोहयेत्, लोकाश्चाऽन्यथा वदेयुः। प्रचण्डो मन्युर्यस्येति। मन्युः शिवः। सर्वथा गुणातीतस्य भक्तिरसास्वादनं भविष्यतीति प्रकर्षेण हसन्। व्यामोहनमपि फलपर्यवसायीति प्रकर्षः। तं पूर्वप्रश्नकारिणं बभाषे। उत्तरदानेन सन्देहं दूरीकृतवानित्यर्थः। कथापक्षे तु भगवान् भूमिं स्थापयित्वा तद्वधं करिष्यन् वचनैः क्रुद्धं करोतीत्याह परानुषक्तमिति। परा पृष्ठतोऽनुषक्तम्, यदि देवानां पुरस्कारं दृष्ट्वा गच्छेद्गच्छेदेव, न गच्छतीति मारणीयः। ननु सर्वात्मा भगवान् कथं नोपेक्षते? तत्राऽऽह—

---

१. इतीत्यधिकं क. ख.। २. अतप्ततनुः क.। ३. विचित्रः ख. ग. घ.।

तपनीयोपकल्पमिति--तपनीयं सुवर्णमयमुपकल्पमङ्गदादिकं यस्य। अनेन तस्य चाऽहंकारो निरूपितः। तस्य वा उपकल्पं प्राप्तदैत्यादिसामग्री सम्यक् तपनीया, अतो मारणीय इत्यर्थः। युद्धयोगोऽपि भवतीत्याह—महागदमिति। महती गदा यस्य काञ्चनं सुवर्णमयं चित्रं दंशं यस्य। स्वरक्षायां कवचम्, परमारणार्थं गदा। परप्रोत्साहनार्थं चाऽभीक्ष्णं मर्माणि प्रकर्षेण तुदन्तम्। भक्तानुरोधेन यद्भगवानलौकिकं करोति, तन्मर्मेत्युच्यते। लौकिकभक्तवाक्यव्यावृत्त्यर्थम्—दुरुक्तैरिति। एक एवाऽर्थः सुशब्दैरनिष्टशब्दैश्चोच्यत इष्टद्विष्टभेदेन; यथा जेता, यथा घातुक इति। अतो निर्दुष्टपूर्णगुणा अपि भगवतो दुरुक्तैरुच्यमाना मर्मरूपतामापन्नाः, अत एव तत्स्पर्शे तुदन्ति। भगवदपकर्षं श्रुत्वा अन्तः स्थितो महादेवस्तद्वधार्थं प्रचण्डो जात इतिप्रचण्डमन्युरित्युक्तम्। प्रहसितं युद्धसमारम्भोत्साहसूचकम्। तमिति पूर्वोक्तदुष्टवाक्यम्। तमालक्ष्य बभाषे ॥ ९ ॥ ❀ ❀ शत्रुभावं पुरस्कृत्य यथा तेनाऽवध्यान्युक्तानि, तथा भगवानप्याह त्रिभिः—सत्यमिति भो इति सामान्यतः संबोधनम्, भगवद्विरोधिनो नाम न ग्राह्यमिति ज्ञापनार्थम्। वयं वन एव गोचरा दृश्याः, न तु गृहे। सत्यमेवैतत्। वने जले वा तव गोचरा जाता इत्यपि सत्यम्। मृग इति यदुक्तम्, तदपि सत्यमेव। मृगयन्तीति मृगाः। अस्मासु सर्व एव यौगिकोऽर्थः सिध्यति, यतो वयं सर्वकर्तारः सर्वशब्दवाच्याश्च। प्रकृते यदुक्तं मृगा वध्या इति, तत्राऽप्यस्माकं योगोऽस्तीत्याह—मृगा इति। मृगयन्तीति मृगाः। पारधावपि ये हन्यन्ते, ते ग्रामसिंहान् मृगयन्तीति। श्वानो हि तन्मारतन्मारकाः, न हि तद्व्यतिरेके पारधिर्भवति, 'श्वा मृगग्रहणे शुचिः' इति वाक्यसिद्धत्वात्। परमत्र कश्चन विशेषोऽस्तीति सिद्धमर्थमनुवदति—युष्मद्विधानिति। यादृशा वयं मृगाः, तादृशा एव ग्रामसिंहा भवन्तीति। यदि मृगत्वेन स्तूयते, तदाऽस्माभिरपि सिंहत्वेन स्तूयत इति तथा वचनम्। अथ यदि निन्दार्थमुच्यते, तद्बाधितार्थत्वात् विपरीतार्थत्वाच्चाऽप्रमाणमिति न गृह्णीम इत्याह—न मृत्युपाशैरिति। देवदैत्ययोः साधारणविरोधप्रतिपादनार्थं बहुवचनम्। उत्तरार्द्धे तु निन्दनं तेनैव कृतमित्येकवचनम्। सर्वे च निन्दिता इति देवपक्षे तु बहुवचनमेव। यदि कोऽपि त्वद्वचनमङ्गीकुर्यात्, तदाऽस्माभिरप्यङ्गीक्रियते। अनङ्गीकारे हेतुः—मृत्युपाशैः प्रतिमुक्तस्येति। यथा सन्निपाती वल्गति, तदा मृत्युपाशैः प्रतिमुक्तो बद्धः। एकेनाऽपि पाशेन बद्धो न मुच्यते, किं पुनर्बहुभिः। तस्य तस्मिन् दिवसे कालकर्मस्वभावा भगवांश्च, सर्व एव मारकत्वेनोपस्थिता इति पाशबाहुल्यम्। प्रतिकूलतया मुक्तः प्रतिमुक्त इति। किञ्च, वीरा हि वाक्यं न गृह्णन्ति, किन्तु कृतिमेव। तत्राऽपि विकत्थनं न गृह्णन्ति। युद्धभूमौ सिद्धं जयादिकमन्यत्र कीर्त्यते, तत्रैव विकत्थनं कृतिविरुद्धं को वा गृह्णीयात्? तत्रापि तव, एकानिनोऽसहायस्य। माहात्म्यं च चोरवदुपद्रवकर्तृत्वादित्याह—हे अभद्रेति। अभद्रं पापम्। पापकर्ता प्रसिद्धोऽपि अपकीर्तिहेतुरेव ॥ १० ॥ ❀ ❀ यद्यप्यधर्मकर्तृत्वेन वयं निर्दिष्टा 'महीं विमुञ्च' इति, तत्राप्युत्तरमुच्यते—एते वयमिति। ये भवत्संबन्धिनो न्यासहराः, ते वयमेते। स्वरूपप्रदर्शनेन चौरत्वं निराकृत्य प्रभुत्वं स्थापितम्, न तु चौरत्वस्यैवानुवादः। अनेन यज्ञोऽहमित्यप्युक्तम्। न वा यथोचितं कर्तव्यमिति निवेदनमर्थः। वक्रोक्तावपि सत्यत्वान्न्यासहरणस्यैते वयमिति निर्देशो दूषणाङ्गीकारपरः स्यात्, अनुवादत्वाभावात्। यदप्युक्तं गतह्रियामिति, तत्राऽऽह—गतह्रिय इति। युद्धमकृत्वा ये पलायन्ते विकत्थन्ते च, ते गतह्रियः। एतदपि सत्यमेव, न हि ह्रीमान् सेवकेन युध्यते। गता प्राप्ता ह्रीर्येनेति वा, 'त्रयो वै गतश्रियः' इत्यत्र तथा निर्णयात्। अन्तर्बाधहेतावपि स्वकीय एव बाधहेतुपदार्थपरित्यागो गतह्रीत्वम्। बहिस्तथात्वमाह—गदया द्राविताස्त इति। अयुध्यमानस्य ततोऽपसरणं पलायनमेव। मृगा हि लकुटं दृष्ट्वा पलायन्त इत्युचितमेव द्रावणम्, लज्जाभावश्च। तर्ह्यनूद्यत एव किमिति, पलायनं कथं न क्रियते? इत्याशङ्क्याऽऽह—तिष्ठामहेऽथापीति। अथापि, स्वापकर्षे विद्यमानेऽपि, उत्कर्षो भविष्यतीति बुद्ध्या आजौ संग्रामे कथञ्चित्तिष्ठामहे। कथञ्चिदिति कियत्कालम्। स जानाति भगवांस्तु संग्रामे बहिर्मुखानां पुरतो न तिष्ठति, तथापि भक्तानां ग्लानिव्यावृत्त्यर्थं कथञ्चित्तिष्ठाम इत्यर्थः। किञ्च, बलिना वैरमुत्पाद्य क यामः? गन्तव्यदेशाभावादपि स्थीयत इत्यर्थः। बलिष्ठो हि पलायने अन्विष्याऽपि मारयेत्, अतो निग्रहस्य सिद्धत्वाद् युद्धमेव क्रियत इति कथञ्चित्। स्थीयत इति वक्रोक्तिः। न्यासहरणेन आज्ञाऽकरणेन च वैरोत्पादनम् ॥ ११ ॥ ❀ ❀ एवमुक्ते तद्बुद्धौ दीनभावः समायास्यति, ततो युद्धमकृत्वैव गमिष्यतीत्याशङ्क्याऽऽह—त्वं पद्रथानामिति। पदातीनां रथानां च ये यूथपाः; तेषामपि भवान् किलाऽधिपः। पादरूपा रथा येषामिति वा; अनेन यथासुखं रथ[1]बले सामर्थ्यवन्त इत्युक्तम्; तेषां यूथपाः सेनापतयः। अतस्त्वया एकाकिना युद्धं न कर्त्तव्यम्, किन्तु सर्वैः संभृत्यागन्तव्यमिति स्वोत्कर्षः सूचितः। नोऽस्मान् घटस्व। वयमपि बहवः, महता हि महद्भिः सह युद्धं कर्तव्यमिति। तदपि युद्धं न कौतुकरूपमिति, किन्तु अस्वस्तये अकल्याणाय, एकतरमारणस्याऽवश्यकत्वात्। अथवा, न इति संबध्यते, तदा हि स प्रोत्साहितो भवति। विपरीतवाक्ये वञ्चनोक्तिः। उभयथाऽप्यस्माकं क्षतिरेव, तुच्छजयात्सेवकमारणाच्च' अत एव भगवता न इत्युक्तम्। अस्तु यथा कथञ्चित्। अनूहः सन् आशु घटस्व। कस्मिन्नप्यंशे विचारो न कर्तव्यः। ऊहो विचारः। विघ्नाभावयुक्तो वा अनूहः, अप्रत्यून इत्यर्थः। ततः[2] किं स्यादत आह वक्रोक्त्या संस्थाप्य चाऽस्मान्, चकारात् देवानपि,स्वकानामश्रु प्रमृज। संस्थापनमात्रेणैव अश्रूणि निवृत्तानीति, कथञ्चिल्लेश[3]ः स्थास्यतीति, बहूनां

---

१. रथचलन. ग. । २. अतः. क. घ. ङ. । ३. क्लेशः. क. घ. ङ. ।

संबन्धि एकं[1]मग्विवत्युक्तम्। यु[2]द्धकरणपक्षे बहूनामुपकारः, स्वस्य परमल्प[3]मारणेन मनसि हीनता। युद्धे गुणान्तरमप्यस्तीत्याह—यः स्वां प्रतिज्ञामिति। यस्तु स्वस्य प्रतिज्ञामाधिक्येन न पिपर्ति न पूरयति, सोऽसभ्यः। अतोऽस्मिन्पक्षे प्रतिज्ञापूरणात् सभ्यत्वस्य सिद्धत्वात्, बहूनामुपकाराच्च युद्धं सर्वथा कर्तव्यमित्यर्थः॥ १२॥

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

स गामित्यत्र। स्वस्यैव रूपं पश्यद्भविष्यतीति। स्तुतिकर्तृरूपं भगवन्तं पश्यत् भविष्यतीत्यर्थः॥ ८॥ ❀ ❀ परानुषक्तमित्यत्र। भगवत्कृतचिह्नस्वरूपमाहुः—मुनीनामित्यादि। अन्यथा वदेयुरिति। शैवोऽयमिति वदेयुः॥ ९॥ ❀ ❀ सत्यमित्यत्र। मृगयन्तीति मृगा इति व्युत्पत्तौ 'मृगये' इति मूलमेव बीजं ज्ञेयम्। मृगं करोतीति मृगयते, नामधातुप्रयोगात्। अत्र 'व्यत्ययो बहुलम्' इत्यनुशासनाद्बहुवचनस्थान एकवचनं बोध्यम्। तदाहुः—सर्वकर्तार इत्यनेन। पारधाविति मृगयायाम्॥ १०॥ ❀ ❀ एत इत्यत्र। अनेनेति। क्रियाशक्तिपूर्णताबोधकेन वाक्येन। दूषणाङ्गीकारपरः स्यादिति। तत्परो युक्त इत्यर्थः॥ ११॥ ❀ ❀ त्वमित्यत्र। न इति। हे पुरुषेत्यर्थः॥ १२॥

### श्रीगिरिधरकृता बालप्रबोधिनी

स भगवान् सलिलस्य उदस्तात् उपरि गोचरे व्यवहारयोग्यप्रदेशे गां भूमिं विन्यस्य निधाय तस्यां भूमौ स्वसत्वं स्वसामर्थ्यमाधारशक्तिं अदधात् निहितवान्, यथा सा पुनर्न निमज्जेत् ततश्चारेर्हिरण्याक्षस्य पश्यत एव सतो विश्वसृजा ब्रह्मणा विबुधैर्देवैश्चाभिष्टुतः प्रसूनैः पुष्पैरापूर्यमाणश्च अन्तः प्रचण्डमन्युरपि बहिः प्रहसंस्तं बभाषे इत्युत्तरेणान्वयः॥ ८॥ ❀ ❀ भगवतोऽपि प्रचण्डमन्युत्वे हेतुं सूचयन् हिरण्याक्षमनुवर्णयति—परा पृष्ठतः अनुषक्तमनुलग्नम्। तपनीयोपकल्पं सुवर्णमयभूषणम्। महागदं महती गुर्वी गदा यस्य तम्। काञ्चनमयं चित्रं दंशं कवचं यस्य तम्। दुरुक्तैर्दुर्वचनैरभीक्ष्णं पुनःपुनः मर्माणि मनआदीन्यन्तःकरणानि प्रतुदन्तं व्यथयन्तमिति॥ ९॥ ❀ ❀ भगवद्भाषणमेव दर्शयति—सत्यमिति। भो अभद्र असुर वयं वनगोचराः जलनिवासिनो मृगा इति यत्त्वया उक्तं तत्सत्यं अथापि युष्मद्विधान् ग्रामसिंहान् शुनो मृगये अन्वेषयामि। यत्तु ममेक्षतो न स्वस्ति यास्यसि इत्युक्तं तत् मृत्युपाशैः प्रतिमुक्तस्य बद्धस्य तव विकत्थनं स्वश्लाघावचनं मादृशा वीरा न गृह्णन्ति॥ १०॥ ❀ ❀ रसौकसां रसातलवासिनां युष्माकमेते वयं न्यासहराः प्रजापतिदत्तपृथ्वीहरा अतएव ते तव गदया द्राविताः पलायनं कारिताः अतएव गतह्रियो निर्लज्जा अथापि त्वदुक्तरीत्या सामर्थ्याभावेऽप्याजौ युद्धे कथञ्चित्तिष्ठामहे। तत्कुतः यतोऽस्माभिरपि स्थेयं स्थातव्यमेव। तदपि कुत इत्यत आह—बलिना त्वया सह वैरमुत्पाद्य क्व यामः? सर्वत्र च सञ्चारसत्वेन पलायनेऽपि त्वत्तो विमुक्त्यदर्शनादित्यर्थः॥ ११॥ ❀ ❀ त्वं किल प्रसिद्धः पद्रथानां पादचारिणां ये यूथपास्तेषामधिपः अत अनूहः निश्शङ्कः सन्नेव नोऽस्माकमस्वस्तये परिभवाय आशु शीघ्रं घटस्व प्रयतस्व। अस्मान् संस्थाप्य हत्वा स्वकानां अश्रु प्रमृज। यः पुमान् स्वां स्वीयां प्रतिज्ञां नातिपिपर्ति न सम्यक् पूरयति स असभ्यः सभायोग्यो न भवतीति स्वप्रतिज्ञातं पूरय॥ १२॥

### हिन्दी अनुवाद

भगवान्‌ने पृथ्वीको ले जाकर जलके ऊपर व्यवहार-योग्य स्थानमें स्थित कर दिया और उसमें अपनी आधारशक्तिका सञ्चार किया। उस समय हिरण्याक्षके सामने ही ब्रह्माजीने उनकी स्तुति की और देवताओंने फूल बरसाये॥ ८॥ ❀ ❀ तब श्रीहरिने बड़ी भारी गदा लिये अपने पीछे आ रहे हिरण्याक्षके जो सोनेके आभूषण और अद्भुत कवच धारण किये था तथा अपने कटुवाक्योंसे उन्हें निरन्तर मर्माहत कर रहा था, अत्यन्त क्रोधपूर्वक हँसते हुए कहा॥ ९॥ ❀ ❀ श्रीभगवान्‌ने कहा—अरे! सचमुच ही हम जंगली जीव हैं, जो तुम-जैसे ग्राम-सिंहों (कुत्तों) को ढूँढ़ते फिरते हैं। दुष्ट! वीर पुरुष तुझ-जैसे मृत्यु-पाशमें बँधे हुए अभागे जीवोंकी आत्मश्लाघापर ध्यान नहीं देते॥ १०॥ ❀ ❀ हाँ, हम रसातलवासियोंकी धरोहर चुराकर और लज्जा छोड़कर तेरी गदाके भयसे यहाँ भाग आये हैं। हममें ऐसी सामर्थ्य ही कहाँ है कि तेरे-जैसे अद्वितीय वीरके सामने युद्धमें ठहर सकें। फिर भी हम जैसे-तैसे तेरे सामने खड़े हैं; तुझ जैसे बलवानोंसे वैर बाँधकर हम जा भी कहाँ सकते हैं?॥ ११॥ ❀ ❀ तू पैदल वीरोंका सरदार है, इसलिये अब निःशङ्क होकर—उधड़बुन छोड़कर हमारा अनिष्ट करनेका प्रयत्न कर, हमें मारकर अपने भाई-बन्धुओंके आँसू पोंछ। अब इसमें देर न कर। जो अपनी प्रतिज्ञाका पालन नहीं करता, वह असभ्य है—भले आदमियोंमें बैठनेलायक नहीं है॥ १२॥

---

१. एकमस्त्वि. क. ख. घ.। २. अयुद्ध....क. घ. ङ.। ३. अन्य. ग.।

मैत्रेय[1] उवाच

सोऽधिक्षिप्तो भगवता प्रलब्धश्च रुषा भृशम्। आजहारोल्बणं क्रोधं क्रीड्यमानोऽहिराडिव ॥ १३ ॥
सृजन्नमर्षितः श्वासान्मन्युप्रचलितेन्द्रियः। आसाद्य तरसा दैत्यो गदयाभ्यहनद्धरिम् ॥ १४ ॥
भगवांस्तु गदावेगं विसृष्टं[2] रिपुणोरसि। अवञ्चयत्तिरश्चीनो योगारूढ इवान्तकम् ॥ १५ ॥
पुनर्गदां स्वामादाय[3] भ्रामयन्तमभीक्ष्णशः। अभ्यधावद्धरिः क्रुद्धः संरम्भाद्दष्टदच्छदम् ॥ १६ ॥
ततश्च गदयारातिं दक्षिणस्यां भ्रुवि प्रभुः। आजघ्ने स तु[4] तां सौम्य गदया कोविदोऽहनत् ॥ १७ ॥
एवं गदाभ्यां गुर्वीभ्यां हर्यक्षो हरिरेव च। जिगीषया सुसंरब्धावन्योन्यमभिजघ्नतुः ॥ १८ ॥

तयोः स्पृधोस्तिग्मगदाहताङ्गयोः[5] क्षतास्रवघ्राणविवृद्धमन्य्वोः।
विचित्रमार्गांश्चरतोर्जिगीषया व्यभादिलायामिव शुष्मिणोर्मृधः[6] ॥ १९ ॥
दैत्यस्य यज्ञावयवस्य मायागृहीतवाराहतनोर्महात्मनः।
कौरव्य मह्यां द्विषतोर्विमर्दनं दिदृक्षुरागादृषिभिर्वृतः स्वराट् ॥ २० ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

सोऽधिक्षिप्तः सत्यं वयमिति श्लोकेन रुषा प्रलब्ध उपहसितश्च एते वयमिति द्वाभ्याम्। क्रीडां कार्यमाणोऽहिराण्महासर्प इव ॥ १३ ॥ ❁ ❁ मन्युना प्रचलितानि क्षुभितानींद्रियाणि यस्य ॥ १४ ॥ ❁ ❁ अंतकं मृत्युम् ॥ १५ ॥ १६ ॥ ❁ ❁ सौम्य विदुर तां गदामप्राप्तामेवाहनत् ॥ १७ ॥ ❁ ❁ हर्यक्षो हिरण्याक्षः ॥ १८ ॥ ❁ ❁ स्पृधोः स्पर्धमानयोः तिग्माभ्यां गदाभ्यामाहतान्यंगानि ययोः क्षतादास्रवतीति क्षतास्रवं रुधिरं यस्य घ्राणमवघ्राणं तेन विवृद्धो मन्युर्ययोः। विचित्रान्मार्गान्गदायुद्धभ्रमणभेदान् इला गौस्तस्यां निमित्तभूतायां शुष्मिणोर्मत्तयोर्वृषभयोः प्रस्तुतेऽपि इला पृथ्वी तदर्थम्। वृषभौ हि खलु बहूनि दिनानि संग्रथितोत्तुंगशृङ्गसंघर्षविदीर्णांगगलद्रुधिरौ परस्परोपमर्दव्यग्रोग्रसंरंभौ चमत्कारितगजयूथपौ युध्यमानौ तिष्ठत इति प्रसिद्धम् ॥ १९ ॥ ❁ ❁ यज्ञा एवावयवा यस्य तस्य च मह्यां महीनिमित्तं द्विषतोः एवंविधं विमर्दनं युद्धं दिदृक्षुः स्वराट् ब्रह्मा तत्रागात् ॥ २० ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

पक्षे अधिक्षिप्तः अधिकारात्पार्षदत्वलक्षणात्क्षिप्तः पातितः। अत एव रुषा कर्त्र्या प्रकर्षेण लब्धश्च भगवदिच्छाप्रयुक्त-शापवशाच्छुद्धसत्त्वमयोऽपि तमोमयोभूदित्यर्थः। तदा तु युद्धकाले आ सम्यक्प्रकारेणैवोल्बणमत्युद्रिक्तं क्रोधं जहार जग्राह ॥ १३ ॥ ❁ ❁ तरसा बलेन अहनत् शब्लुगभावोऽत्रार्षः ॥ १४ ॥ ❁ ❁ तिरश्चीनः तिर्यक् सन् अवंचयत् तत्सांमुख्यमत्यजत्। यथा कालमासन्नं वीक्ष्य योगी प्राणायामसमाधिना वंचयति तद्वदित्यर्थः ॥ १५ ॥ ❁ ❁ दष्टो दच्छदोऽधरोष्ठो येन तम् ॥ १६ ॥ ❁ ❁ ततो गदाभ्रामणोत्तरं भ्रुवि भ्रुदेशे। सौम्येति। त्वया तु सौम्यत्वात्स्वगदा दुर्योधनद्वार्येव न्यस्तेत्यभिप्रायः। "सौम्यो ज्ञे ना त्रिष्वनुग्रे मनोज्ञे सोमदैवते" इति मेदिनी। भगवद्भक्तिमनोज्ञत्वात्तवाहमेतद्वदामीति वा। सुसंरब्धावतिकुपितौ ॥ १७ ॥ १८ ॥ ❁ ❁ तयोर्हरिहिरण्याक्षयोः। संग्रथिते मिलिते ये उत्तङ्गशृंगे तयोः संघर्षेण विदीर्णगलाद्भिन्नकंठप्रदेशाद्गल-त्स्रवद्रुधिरं ययोस्तौ तथा। परस्परोपमर्देऽन्योन्ययुद्धे व्यग्रौ संलग्नौ उग्रस्संरंभः कोपो ययोस्तावुग्रसंरंभौ परस्परोपमर्दव्यग्रौ च तावुग्रसंरंभौ परस्परोपमर्दव्यग्रोग्रसंरंभौ। चमत्कारितौ विडम्बितौ गजयूथपौ याभ्यां तौ तथा इति लोके प्रसिद्धं 'भूगोवाच-स्त्विडा इलाः' इत्यमरः ॥ १९ ॥ ❁ ❁ कौरव्येति। युद्धोत्कण्ठा कौरवाणां धर्म एवातस्तव तच्छ्रवणोत्कण्ठेति भावः। मायया भक्तकृपया गृहीता वराहसम्बन्धिनी तनुर्येन तस्य वराहवपुषैव तन्नाशस्य पुराणान्तरे प्रतिपादितत्वात्। अत्रापि "दिष्ट्या त्वां विहितं मृत्युमयमासादितः स्वयम्" इति वक्ष्यमाणब्रह्मोक्तेश्च। द्विषतोर्द्वेषं कुर्वतो विमर्दनं युद्धम्। तत्र युद्धदेशे ॥ २० ॥

---

१. प्राचीने पाठे 'मैत्रेय उवाच' न। २. प्रा० पा०—विसु०। ३. प्रा० पा०—समा०। ४. च तं। ५. प्रा० पा०—तयोर्मृधे तिग्मगदाहृ०। ६. प्रा० पा०—युद्धयोः।

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या ।

अधिक्षिप्तत्वादिकं देवप्रतीत्यभिप्रायेणोक्तं वस्तुतस्तु पार्षदत्वाधिकारप्राप्त्यर्थं प्रयुक्तः रुपा लीलार्थं स्वेन प्रकर्षेण प्राप्तश्चेति व्याख्येयम् । आजहार प्राप ॥ १३ ॥ ❀ ❀ अमर्षितोऽसहिष्णुः ॥ १४ ॥ ❀ ❀ योगारूढ ऐच्छिकमृत्युः ॥ १५ ॥ संरम्भात्क्रोधात् ॥ १६ ॥ ❀ ❀ ततश्चाभिधावनानन्तरं सौम्येति तस्योग्रत्वं शृण्वित्यभिप्रायात् भुवमप्राप्तामेव गदया स्वगदया ॥ १७ ॥ ❀ ❀ हर्य्यक्षः हरितनेत्रः लोके तथा भूतस्य परमदुष्टत्वप्रसिद्धेः ॥ १८ ॥ ❀ ❀ रुधिरं चात्र दैत्यस्यैव भगवदङ्गे संलग्नमिति तेन संरम्भावेशेन स्वीयत्वमेव तत्रानुमतमिति तदवघ्राणस्य मन्युहेतुत्वं ज्ञेयम् ॥ १९ ॥ ❀ ❀ मायया कृपया गृहीतत्वं प्रपञ्चं प्रत्यानीतत्वम् ॥ २० ॥

### श्रीमद्वीरराघवव्याख्या

भगवताधिक्षिप्तः तिरस्कृतः उक्तरीत्या सः रुषा भृशं प्रलब्धः प्रहसितश्चासुरः उल्बणं क्रोधमाजहार स्वीकृतवान् चुक्रोधेत्यर्थः यथा क्रीड्यमानः अहिराट् सर्पश्रेष्ठः तथेति दृष्टान्तः ॥ १३ ॥ ❀ ❀ अमर्षितः क्रुद्धः अत एव निश्वासं सृजन् अत एव मन्युना प्रचलितानीन्द्रियाणि यस्य स दैत्यः आसाद्य समीपमागत्य तरसा बलेन गदया हरिमभ्यहनत् ताडितवान् ॥ १४ ॥ ❀ ❀ भगवांस्तु रिपुणासुरेण उरसि विसृष्टं गदाया वेगं तिरश्चीनः तिर्यग्गमनः सन् अन्तकं मृत्युं योगारूढः निष्पन्नयोगीवावञ्चयत् परिहृतवानित्यर्थः ॥ १५ ॥ ❀ ❀ पुनस्तामप्राप्तामेव गदामभीक्ष्णशः पुनः पुनर्भ्रामयन्तमसुरं प्रति क्रुद्धो हरिरत एव संरम्भात् क्रोधाद्दष्टदच्छदः दष्टाधरः अभ्यधावत् अभिमुखमगात् ॥ १६ ॥ ❀ ❀ ततः अभिधावनानन्तरं प्रभुर्भगवान् स्वगदयारातिं शत्रुं दक्षिणस्यां भ्रुवि दक्षिणपार्श्वे आजघ्ने प्रजहार हे सौम्य ! विदुर ! स त्वसुरः कोविदः गदायुद्धे कुशलोऽतएव तां स्वदक्षिणस्यां भुवि हरिणा युक्तामप्राप्तामेव गदयाभ्यहनदाजघ्ने ॥ १७ ॥ ❀ ❀ हर्यक्षो हिरण्याक्षः हरिश्च सुसंरब्धौ जिगीषयान्योऽन्यं जेतुमिच्छया गुर्वीभ्यां गदाभ्यामन्योऽन्यं परस्परमधिजघ्नतुः ॥ १८ ॥ ❀ ❀ तयोर्हर्यसुरयोः स्पृधोः स्पर्धमानयोः तिग्माभ्यां गदाभ्यामाहतानि ताडितान्यङ्गानि ययोरत एव क्षताद्गदाघातादास्रवतीत्यास्रवं रुधिरं तस्य घ्राणेन विवृद्धः मन्युर्ययोस्तयोरत एवेलायां भूम्यां निमित्तभूतायामिलार्थमित्यर्थः जिगीषया परस्परजयेच्छया विचित्रमार्गान् गदायुद्धक्रमेण प्रभेदांश्चरतोर्मृधः संग्रामः शुष्मिणोर्मत्तवृषभयोरिव व्यभाद्बभौ ॥ १९ ॥ ❀ ❀ दैत्यस्य हिरण्याक्षस्य यज्ञावयवस्य यज्ञमूर्त्तेर्माययया स्वसंकल्पेन गृहीता वाराहतनुर्यस्य तस्य महात्मनः दैत्येऽप्यनुग्रहप्रवणचित्तस्य भगवतश्च हे कौरव्य विदुर ! मह्यां भूम्यां निमित्तभूतायां द्विषतोर्युध्यमानयोर्विमर्दनं युद्धं दिदृक्षुर्द्रष्टुमिच्छुः स्वराट् ब्रह्मा ऋषिभिर्मरीच्यादिभिर्वृतः अगात् आगतवान् ॥ २० ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

आविष्टासुरभावनिमित्तं बाह्यक्रोधभावमाह । स इति । प्रलब्धो वाचा वञ्चितः क्रीड्यमानोऽनिष्टक्रीडाविषयं क्रियमाणः पीड्यमान इति वा ॥ १३ ॥ ❀ ❀ मन्युना प्रचलितानि स्वस्थानच्युतानीन्द्रियाणि यस्य सः ॥ १४ ॥ ❀ ❀ योगारूढो योगाविष्टः ॥ १५ ॥ ❀ ❀ दष्टो दच्छदोऽधरोष्ठो येन स तथा ॥ १६ ॥ ❀ ❀ आजघ्न इत्यस्याकर्मकत्वस्य द्योतनाय दक्षिणस्यां भुवीत्युक्तम् आङो यमहन इत्यात्मनेपदं कोविदो गदायुद्धमार्गप्रभेदज्ञानपटुः ॥ १७ ॥ ❀ ❀ हर्यक्षो हिरण्याक्षः हरिरच्युतः ॥ १८ ॥ ❀ ❀ स्पृधोः स्पर्धमानयोः क्षतस्रवस्य रुधिरस्याघ्राणेन विवृद्धं युद्धं ययोस्तौ तयोः इलायां भुवि शुष्मिणोर्मत्तवृषभयोः ॥ १९ ॥ ❀ ❀ इदं युद्धं काकग्राम्यकर्मवदज्ञातं न किन्तु ब्रह्मादिदेवैर्दृष्टमिति भावेन ब्रह्मागमनं वक्ति । दैत्यस्येति । यज्ञास्तत्साधनानि चावयवेषु यस्य स तथा तस्य मायया स्वेच्छया स्वं स्वतन्त्रं परमात्मानं राजयति दीपयति प्रकाशयतीति स्वराट् ब्रह्मा तदुपदिष्टब्रह्मज्ञानेन हि सर्वेषां मुक्तिरिति ॥ २० ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

दैत्यस्येति । मायया कृपया गृहीतत्वं प्रपञ्चं प्रत्यानीतत्वम् ॥ २०—२१ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

सोऽधिक्षिप्तः सत्यं वयमिति श्लोकेन रुषा प्रलब्ध उपहसितः । एते वयमिति द्वाभ्यां क्रीडां कार्यमाणोऽहिराट् महासर्प इव । पक्षे अधिक्षिप्तः अधिकारात् पार्षदत्वलक्षणात् क्षिप्तः अत एव रुषा कर्त्र्या प्रकर्षेण लब्धश्च । भगवदिच्छाप्रयुक्तब्रह्मशापवशात् शुद्धसत्त्वमयोऽपि तमोमयोऽभूदित्यर्थः । तदातु युद्धकाले आ सम्यक् प्रकारेणैव उल्बणमत्युद्रिक्तं क्रोधं जहार जग्राह ॥ १३ ॥ १४ ॥ ❀ ❀ अन्तकं मृत्युम् ॥ १५—१६ ॥ ❀ ❀ सोऽसुरस्तु तां भगवद्गदामप्राप्तामेवाहनत् ॥ १७ ॥ ❀ ❀ हर्यक्षो हिरण्याक्षः ॥ १८ ॥ ❀ ❀ स्पृधोः स्पर्द्धमानयोः क्षतादास्रवतीति क्षतास्रवं रुधिरं तस्य घ्राणेन विवृद्धो

मन्युर्ययोः इलायां वासितायां गवि विषये शुष्मिणोर्मत्तयोर्वृषभयोरिव इलायां भुवि शुष्मिणोर्हरिहर्यक्षयोर्मृधो व्यभात् अशोभत "भूगोवाचस्त्विडा इला" इत्यमरः॥ १९॥ ❀ ❀ मायया शक्त्या गृहीता स्वस्वामित्वेनाङ्गीकृता वाराही तनुर्येन तस्य मायाभर्त्तुर्वाराहस्येत्यर्थः। मायया कृपया गृहीतत्वं प्रपञ्चं प्रत्यानीतत्वमिति सन्दर्भः। स्वराट् ब्रह्मा॥ २०॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

हे सौम्य!॥ १७॥ ❀ ❀ हर्यक्षः हिरण्याक्षः॥ १८॥ ❀ ❀ स्पृधोः स्पर्द्धमानयोः क्षतादास्रवतीति तद्रुधिरं तस्य घ्राणेनावघ्राणेन विवृद्धमन्य्वोः इलायां गवि निमित्तभूतायां शुष्मिणोर्मत्तयोर्वृषयोरिव मृधः संग्रामः व्यभात् बभौ॥ १९॥ ❀ ❀ मायया वयुनेन सङ्कल्पेनेत्यर्थः। मह्यां निमित्तभूतायां द्विषतोः॥ २०॥

## श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

एवमन्योन्यं वाक्ययुद्धं निरूपितम्, ततः कायिकं युद्धं जातमित्याह—सोऽधिक्षिप्त इति षड्भिः। द्वाभ्यां युद्धं तु दैत्यस्य आरम्भो युद्धमेव च। प्रतीकारश्च युद्धं च द्वयं च भगवतः पुनः। मिश्रयुद्धं ततः स्थूलमुपसंहार एव च॥ १॥ तत्र प्रथमं हिरण्याक्षयुद्धं श्लोकद्वयेनाऽऽह। युद्धे हि क्रोधो मुख्यसामग्री, सा प्रथम[1]मुच्यते—सोऽधिक्षिप्त इति। भगवता अधिक्षिप्त इति क्रोधे हेतुः। स तु भक्ते वा, अल्पे वा, न भवतीति स इत्युक्तम्। स दैत्यो महाबलश्च। तदा भगवता स्वभाव आविर्भावित इति भगवतेत्युक्तम्। अधिक्षेपो 'ग्रामसिंहान्' इति। प्रलब्धो वक्रोक्त्या वञ्चितः 'एते वयम्' इत्यादिभिः। चकारात् युद्धार्थमाकारितश्च। तत्रापि रो[2]षेण प्रलब्धः, न तु हितोपदेशेन। अतो दोषत्रयस्य जातत्वात् तस्य त्रिदोषरूपो महान् क्रोधो जात इत्याह—आजहारेति। क्वचित् स्थापितमिवाऽऽनीतवानित्यर्थः। उल्बणम्। अनिष्टपर्यवसायी। सहजक्रोधयुक्तः साधने अनर्थपर्यवसायी भविष्यतीति किं वक्तव्यमित्यत्र दृष्टान्तमाह—क्रीड्यमान इति। यथा अहिराट् सर्पश्रेष्ठः, कालियोऽन्यो वा॥ १३॥ ❀ ❀ स यथा स्वपौरुषं प्रकटयति, तथा प्रकटितवानित्याह—सृजन्निति। अत्यमर्षितः श्वा[3]सं सृजन् गदयाऽभ्यहनदिति संबन्धः। अन्तःस्थितक्रोधेन श्वास उत्पन्नः, बहिःस्थितेन तु क्रोधेन मन्युशब्दवाच्येन प्रकर्षेण चलितानीन्द्रियाणि यस्य तादृशो जातः। एवं तस्य क्रोधव्याप्तिरुक्ता। अत एव शीघ्रमासाद्य भगवन्निकटे समागत्य। भगवता सह युद्धमयुक्तमित्याशङ्क्य तस्य जातिं निर्दिशति—दैत्य इति। महांस्तु पश्चादेव मारयति, न प्रथममिति, भगवदुत्कर्षकथनार्थं तस्य प्रथमं मारणमाह—गदयाऽभ्यहनदिति। सिंहो वा, दुःखनिवारको वा, मारितः स्वस्यैवाऽनिष्टहेतुरिति सूचयितुं हरिमित्युक्तम्। एवं मारणान्तं तस्य युद्धं निरूपितम्॥ १४॥ ❀ ❀ भगवत्कर्तृकं युद्धं श्लोकद्वयेनाऽऽह—भगवांस्त्विति। तुशब्दः, तद्वत् क्रोधं न कृतवान्, किन्तु शान्त एव तत्प्रतीकारं कृतवानित्याह। भगवतः प्रतीकारे सामर्थ्यं स्वशब्देनोक्तम्। गदावेगमिति। गदा ह्यप्रत्याख्येयवेगा, निकटे हि हन्यते इति। तत्राप्युरसि विशेषेण सृष्टम्; तत्रापि रिपुणा। अवञ्चने हेतुत्रयं निरूपितम्। तथापि वञ्चनं कृतवानित्याह—अवञ्चयदिति। कथमवञ्चयदित्याशङ्क्य प्रकारमाह—तिरश्चीन इति। अतिवेगेन भगवान् तिर्यक् जातः। ननु निकटे जायमानः प्रहारः कथं तिर्यग्भावमात्रेणाऽपगच्छेत्? तत्राऽऽह—योगारूढ इवेति। योगो हि प्राणवशीकरणे हेतुः, अन्तको हि प्राणवशीकरणे हेतुः, अन्तको हि प्राणहारकः; स हि योगेन प्राणं लीनं करोति, तदा मृत्युः प्राणमन्वेषयन्नपि न प्राप्नोति। एवं भगवान् शत्रोः समक्षं स्वरूपं कृतवान्। तावतैव तिरोहित इति प्रहारस्थाने लीनत्वात् वञ्चनं जातमित्यर्थः॥ १५॥ ❀ ❀ एवं पूर्वकृत[4]प्रतीकारं कृत्वा तूष्णीं स्थितेऽपि, पुनर्मारणार्थं प्रवृत्तः पश्चाद्भगवता ताडित इत्याह—पुनर्गदामिति। स्वां मौर्वीमभीक्ष्णशो भ्रामयन्तमिति। दृढप्रतीकारार्थं परिभ्रमणस्य पूर्वकालता च निरूपिता। हरिर्वराहो मारयितुमभ्यधावत्, धावनं कृत्वा निकटे गत इत्यर्थः। तस्य पूर्वप्रयासवैयर्थ्यादत्यन्तं क्रोधसंरम्भेण दष्टो दच्छदो दन्तानां छादनरूपमोष्ठं येन। 'ये यथा मां प्रपद्यन्ते' इत्येतदर्थमेवं कृतवानिति भावः॥ १६॥ ❀ ❀ तत किं कृतवानित्याकाङ्क्षायामाह—ततश्चेति। गदया कौमोदक्या। दक्षिण्यां भ्रुवि। आसुरी (?) मृत्युस्तस्य नश्यत्विति पुरुषत्वात् दक्षिणस्यां भ्रुवि ताडितः। ननु कथं सूक्ष्मे स्थाने ताडयितुं शक्यत इत्याशङ्क्याऽऽह—प्रभुरिति। तां कौमोदकीं गदाम्। हे सौम्य, स्वगदया मौर्व्या, कोविदः पण्डितोऽहनत्॥ १७॥ ❀ ❀ एवमन्योन्ययुद्धमुक्त्वा उपसंहरति—एवं गदाभ्यामिति। बहुकालयुद्धोपयोगाय गुर्वीभ्यामिति। हर्यक्षो हिरण्याक्षः। हरिरेवाऽक्षणि यस्य वर्तत इति समानत्वाय हर्यक्षपदप्रयोगः। हरिर्भगवान्। उभयत्र हरिपदप्रयोगोऽवधाय। जयार्थमेव यत्नो न वधार्थमिति जिगीषयेत्युक्तम्। सुष्ठु संरब्धावित्युभयोर्युद्धहेतुरुक्तः। अन्योन्यमभितो जघ्नतुः॥ १८॥ ❀ ❀ एवं भगवतो युद्धलीलामुक्त्वा तां वर्णयति—तयोः स्पृधोरिति। अन्योन्यस्पर्द्धिनोः। तिग्मगदाभ्यामाहते अङ्गे ययोः। दुःखानुभावेन युद्धान्निवृत्तिमाशङ्क्य क्रोधाधिक्यं सहेतुकमाह—क्षतास्रवद्घ्राणविवृद्धमन्य्वोः। गदाप्रहारेण यत् क्षतम्, तस्मात् स्रवत् यद्रुधिरम्, तस्य घ्राणनमास्वादनम्, तेन विवृद्धो मन्युर्ययोः। गदा[5]या विचित्रमार्गाश्चरतो-

---

१. प्रथम उच्यते ङ। २. स्वरोषम् घ.। ३. श्वासान् विसृजन् घ.। ४. पूर्वमकृतप्रतीकारम् ख. ब.। ५. गदया क. घ. ङ.।

रिति युद्धलीलायां रसाभिनिवेश उक्तः । अत्राऽपि जिगीषैव हेतुः, स्वरूपतोऽभिप्रायतश्च जिगीषेति । ननु वैरिणोः कथं जयमात्रं हेतुरित्याशङ्क्याऽऽह—इलायामिव शुष्मिणोरिति । इला भूमिः । एकत्राऽधिकरणसप्तमी, इतरत्र निमित्तसप्तमी । यथा पृथिव्यां काममत्तौ वृषभावतिपुष्टावन्योन्यजिगीषया युद्धं कुरुतः, वासितार्थे वा तयोर्मृधो यथा । व्यभात् युद्धं शोभते स्म ॥ १९ ॥ ❀ ❀ एवं लीलया युद्धे क्रियमाणे भगवता तस्य मृत्युर्न भविष्यतीत्याशङ्क्य, ब्रह्मा स्वयमागत्य तद्वधार्थं प्रार्थयति द्वाभ्याम्—दैत्यस्येति । आगमनप्रार्थनाभेदेनोभयोः समानबलत्वं निरूपयितुं स्वरूपं वर्णयति । तत्र दैत्यत्वमेव युद्धादावुपयोगीति तदेवोक्तम् । यज्ञा अवयवा यस्य, अनेन क्रियाशक्तिस्तत्र पूर्णेत्युक्तम् । ननु यो यज्ञावयवः, स कथमेवंरूप इति दूषणं दूरीकुर्वन्नेव सामर्थ्यविशेषमाह—मायया गृहीतवाराहतनोरिति । महात्मन इति तादृशस्य युद्धकरणे हेतुर्न ज्ञायत इति सूचितम् । कौरव्येति संबोधनं महतां चरित्रे विश्वासार्थम् । जलयुद्धपक्षे तु तेन न दृश्यत इति तद्व्यावृत्त्यर्थम्, मह्यां पृथिव्यां द्विषतोर्विशेषेण मर्दनं दिदृक्षुः स्वयमभ्यगात् । ननु ब्रह्मणो हिरण्याक्षवधे किं प्रयोजनं सिध्येदित्यत आह—स्वराडिति । स हि सर्वस्यापि सर्गस्य राजा, इन्द्रादयस्तदंशाः । साक्षित्वाय ऋषीणामागमनम् ॥ २० ॥

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

भगवानित्यत्र । स्वशब्देनेति । भगवच्छब्देन ॥ १५ ॥ ❀ ❀ दैत्यस्येत्यत्र तेन न दृश्यत इति । जलेन युद्धं न दृश्यते ॥ २० ॥

### श्रीगिरिधरकृता बालप्रबोधिनी

एवमन्योन्यं वाग्युद्धं निरूप्य कायिकं तन्निरूपयति—स इति । रुषा क्रोधेन भगवता भृशमत्यन्तं प्रलब्धः उपहसितः अधिक्षिप्तः तिरस्कृतश्च स हिरण्याक्ष उल्बणं मरणपर्यवसायिनं क्रोधमाजहार आनीतवान् । तत्र दृष्टान्तमाह—क्रीड्यमानोऽहिराट् महासर्पो यथेति ॥ १३ ॥ ❀ ❀ अमर्षितः क्रुद्धः अत एव श्वासान् विसृजन् विमुञ्चन् अतएव मन्युना प्रचलितानि व्याकुलानीन्द्रियाणि यस्य स दैत्यः आसाद्य समीपमागत्य तरसा वेगेन गदया हरिमभ्यहनत् ॥ १४ ॥ ❀ ❀ भगवांस्तु रिपुणा शत्रुणा उरसि विसृष्टं प्रक्षिप्तं गदावेगं तिरश्चीनः सन् अवञ्चयत् । तत्र दृष्टान्तमाह—योगारूढो निष्पन्नयोगो यथाऽन्तकं मृत्युं जयति तथेति ॥ १५ ॥ ❀ ❀ पुनः स्वां गदामादाय अभीक्ष्णशः पुनः पुनर्भ्रामयन्तमसुरं हन्तुं क्रुद्धः अतः संरम्भात् क्रोधात् दष्टो दच्छदो दन्ताच्छादक ओष्ठो येन तथाभूतो हरिरभ्यधावत् धावनं कृत्वा तत्समीपं जगामेत्यर्थः ॥ १६ ॥ ❀ ❀ ततस्तदनन्तरं प्रभुः समर्थो भगवान् स्वगदया अरातिं शत्रुं दक्षिणस्यां भ्रुवि आजघ्ने । इयं च युद्धलीला क्षोभकरीति सौम्यस्वभावस्य तव श्रवणयोग्या नास्तीति सङ्क्षेपतो वर्ण्यते इत्याशयेन सम्बोधयति—हे सौम्येति । सोऽसुरोऽपि कोविदः गदायुद्धे कुशलः अतस्तां हरिणा प्रयुक्तामप्राप्तामेव गदां स्वगदया अभ्यहनत् ॥ १७ ॥ ❀ ❀ हरौ अक्षिणी यस्य स हिरण्याक्षो हरिश्च उभावेव सुसंरब्धौ अतिक्रुद्धौ अन्योन्यजिगीषया जेतुमिच्छया गुर्वीभ्यां गदाभ्यां अन्योन्यं परस्परं एवं उक्तप्रकारेण अभिजघ्नतुरित्यन्वयः ॥१८॥ ❀ ❀ तयोर्हर्यसुरयोः स्पृधोः स्पर्धमानयोः तिग्माभ्यां तीक्ष्णधाराभ्यां गदाभ्यां आहतानि ताडितान्यङ्गानि ययोः अतएव क्षतादास्रवतीति क्षतास्रवं रुधिरं तस्य घ्राणमवघ्राणं तेन विवृद्धो मन्युः क्रोधो ययोः, इलायां भूम्यां निमित्तभूतायां भूम्यर्थं परस्परं जिगीषया जेतुमिच्छया विचित्रमार्गान् गदायुद्धक्रमणभेदान् चरतोः कुर्वतोर्मृधः सङ्ग्रामः इला गौस्तदर्थं शुष्मिणोर्मत्तवृषभयोः सङ्ग्राम इव व्यभात् बभावित्यन्वयः ॥ १९ ॥ ❀ ❀ दैत्यस्य यज्ञा अवयवा यस्य तस्य यज्ञावतारस्य मायया स्वेच्छयैव गृहीता वाराहतनूर्येन तस्य महात्मनो भगवतश्च हे कौरव्य विदुर मह्यां निमित्तभूतायां द्विषतोर्युध्यमानयोः विमर्दनं युद्धं दिदृक्षुर्द्रष्टुमिच्छुः ऋषिभिर्मरीच्यादिभिर्वृतः सहितः स्वराट् ब्रह्मा अगात् ॥ २० ॥

### हिन्दी अनुवाद

**श्रीमैत्रेयजी कहते हैं**—विदुरजी ! जब भगवान्ने रोषसे उस दैत्यका इस प्रकार खूब उपहास और तिरस्कार किया, तब वह पकड़कर खेलाये जाते हुए सर्पके समान क्रोधसे तिलमिला उठा ॥ १३ ॥ ❀ ❀ वह खीझकर लंबी-लंबी साँसें लेने लगा, उसकी इन्द्रियाँ क्रोधसे क्षुब्ध हो उठीं और उस दुष्ट दैत्यने बड़े वेगसे लपककर भगवान्पर गदाका प्रहार किया ॥ १४ ॥ ❀ ❀ किन्तु भगवान्ने अपनी छातीपर चलायी हुई शत्रुकी गदाके प्रहारको कुछ टेढ़े होकर बचा लिया—ठीक वैसे ही जैसे योगसिद्ध पुरुष मृत्युके आक्रमणसे अपनेको बचा लेता है ॥ १५ ॥ ❀ ❀ फिर जब वह क्रोधसे होठ चबाता अपनी गदा लेकर बार-बार घुमाने लगा, तब श्रीहरि कुपित होकर बड़े वेगसे उसकी ओर झपटे ॥ १६ ॥ ❀ ❀ सौम्यस्वभाव विदुरजी ! तब प्रभुने शत्रुकी दायीं भौंहपर गदाकी चोट कीः किन्तु गदायुद्धमें कुशल हिरण्याक्षने उसे बीचमें ही अपनी गदापर ले लिया ॥ १७ ॥ ❀ ❀ इस प्रकार श्रीहरि और हिरण्याक्ष एक दूसरेको जीतनेकी इच्छासे अत्यन्त क्रुद्ध होकर आपसमें अपनी भारी गदाओंसे प्रहार करने लगे ॥ १८ ॥ ❀ ❀ उस समय उन दोनोंमें ही जीतनेकी होड़ लग गयी, दोनोंके ही अङ्ग गदाओंकी

चोटोंसे घायल हो गये थे, अपने अङ्गोंके घाओंसे बहनेवाले रुधिरकी गन्धसे दोनोंका ही क्रोध बढ़ रहा था; और वे दोनों ही तरह-तरहके पैंतरे बदल रहे थे। इस प्रकार गौके लिये आपसमें लड़नेवाले दो साँड़ोंके समान उन दोनोंमें एक दूसरेको जीतनेकी इच्छासे बड़ा भयङ्कर युद्ध हुआ ॥ १९ ॥ ❀ ❀ विदुरजी ! जब इस प्रकार हिरण्याक्ष और मायासे वराहरूप धारण करनेवाले भगवान् यज्ञमूर्ति पृथ्वीके लिये द्वेष बाँधकर युद्ध करने लगे, तब उसे देखनेके लिये वहाँ ऋषियोंके सहित ब्रह्माजी आये ॥ २० ॥

आसन्नशौण्डीरमपेतसाध्वसं कृतप्रतीकारमहार्यविक्रमम् ।
विलक्ष्य दैत्यं भगवान् सहस्रणीर्जगाद नारायणमादिसूकरम् ॥ २१ ॥

ब्रह्मोवाच

एष ते देव देवानामङ्घ्रिमूलमुपेयुषाम् । विप्राणां सौरभेयीणां[1] भूतानामप्यनागसाम् ॥ २२ ॥
आगस्कृद्भयकृद्दुष्कृदस्मद्राद्धवरोऽसुरः[2] । अन्वेषन्नप्रतिरथो लोकानटति कण्टकः ॥ २३ ॥
मैनं[3] मायाविनं दृप्तं निरङ्कुशमसत्तमम् । आक्रीड बालवद्देव यथाऽऽशीविषमुत्थितम् ॥ २४ ॥
न यावदेष वर्धेत स्वां वेलां प्राप्य दारुणः । स्वां देव मायामास्थाय तावज्जह्यघमच्युत ॥ २५ ॥
एषा घोरतमा सन्ध्या लोकच्छम्बट्करी[4] प्रभो । उपसर्पति सर्वात्मन् सुराणां जयमावह ॥ २६ ॥
अधुनैषोऽभिजिन्नाम योगो मौहूर्तिको ह्यगात् । शिवाय नस्त्वं सुहृदामाशु निस्तर दुस्तरम् ॥ २७ ॥
दिष्ट्या त्वां विहितं मृत्युमयमासादितः स्वयम् । विक्रम्यैनं मृधे हत्वा लोकानाधेहि शर्मणि ॥ २८ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां तृतीयस्कन्धे हिरण्याक्षवधेऽष्टादशोऽध्यायः ॥ १८ ॥

श्रीधरस्वामिविरचिता भावार्थदीपिका

आगत्य च नारायणमाह । किं कृत्वा दैत्यं विलक्ष्य । कथंभूतम् । आसन्नं प्राप्तं शौंडीरं शौर्यं मदो वा येन अपेतं साध्वसं यस्मात् कृतः प्रतीकारो येन अहार्योऽप्रतीकार्यो विक्रमो यस्य सहस्रणीः सहस्राणामृषिसहस्राणां नेता ॥ २१ ॥ ❀ ❀ हे देव तेऽङ्घ्रिमूलं प्राप्तानां देवादीनाम् । एषोऽसुरः ॥ २२ ॥ ❀ ❀ आगस्कृद् वृथैवापराधारोपकः तत्परिहाराय प्रवृत्तौ भयकृत् भीतं ज्ञात्वा दुष्कृदर्थप्राणादिहर्ता अस्मत्तो राद्धो लब्धो वरो येन अन्वेषन्प्रतिरथमवलोकयन् अप्रतिरथः प्रतिपक्षशून्यः ॥ २३ ॥ ❀ ❀ यद्यस्मादेवंभूतोऽयं तस्मादेनं मा क्रीड मा क्रीडय । हे देव यथोत्थितं क्षुभितमाशीविषं सर्पं बालः पुच्छाकर्षणादिना क्रीडयति तद्वत् ॥ २४ ॥ ❀ ❀ स्वामासुरीम् । हे देव स्वां मायाम् । अघं पापरूपम् ॥ २५ ॥ ❀ ❀ वेलामेवाह । एष इति । लोकानां छंबट्करी विनाशकरी छंबडित्यव्ययं विनाशे वर्तते ॥ २६ ॥ ❀ ❀ अभिजिन्मध्याह्नः स एव मौहूर्तिको योगः सन् मुहूर्तः शुभदः कालः अगाद्गतप्रायः अतो यावन्मुहूर्तशेषोऽस्ति तावदेव सुदुस्तरमेनं निस्तर जहि ॥ २७ ॥ ❀ ❀ त्वां मृत्युं त्वयैव शापानुग्रहकाले विहितं निर्मितम् । आसादितः प्राप्तः शर्मणि सुखे आधेहि स्थापय ॥ २८ ॥

इति श्रीभागवते महापुराणे तृतीये टीकायामष्टादशोऽध्यायः ॥ १८ ॥

श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

"शौंडीरं शौर्यमदयोश्चातुर्ये मद्यमारके" इति निरुक्तिः ॥ २१ ॥ ❀ ❀ एष इति युग्मकम् ॥ २२ ॥ ❀ ❀ कंटकः कंटकवद्दुःखदः ॥ २३ ॥ ❀ ❀ एवंभूतो देवद्विजादिदुःखदः । बालवदज्ञवत् । त्वं तु विज्ञचूडामणिरेवासीति भावः । यथाशीविषं कृष्णसर्पं गरुड इति शेषः । यद्वा । यथोत्थितं दृष्टुमुद्युक्तं सर्पं लोको मन्यते तथेमं मन्य इति शेषः ॥ २४ ॥ ❀ ❀ न वर्द्धेतेति । तेनासुरवेलायां विवृद्धबलमेनं हंतुं त्वं न प्रभविष्यसीत्यैश्वर्यज्ञानवतोऽपि ब्रह्मणः प्रेम्णैवानिष्टोपशंकित्वं ज्ञेयं यथैश्वर्यज्ञानवतोरपि वसुदेवदेवक्योः "समुद्विजे भवद्धेतोः कंसादहमधीरधीः" इत्यादिकथनम् । मायां सामर्थ्यम् ॥ २५ ॥ ❀ ❀ भयेन निकटत्वप्रतीतेरेषेति ॥ २६ ॥ ❀ ❀ अभिजिदर्थमाह—"मध्याह्नस्त्वभिजित्प्रोक्त आषाढोत्तर एव च । श्रवणस्यापि पूर्वार्द्धो विषुवद्वाभिजि-

---

१. प्रा० पा०—मेयाणां । २. प्राचीने पाठे "आगस्कृद्....."पूर्वार्द्धोऽयं मूले नास्ति । ३. प्रा० पा०—नैनं । ४. प्रा० पा०—च्छ्द्यकरी ।

त्स्मृतः ॥" इति । काशिनाथस्तु-"अंगुल्यो विंशतिः सूर्ये शंकोः सोमे च षोडश । कुजे पञ्चदशांगुल्यो बुधवारे चतुर्दश । त्रयोदश गुरोर्वारे द्वादशार्कजशुक्रयोः । शंकोर्मूले यदा छाया मध्याह्ने च प्रजायते ॥ सा तदाभिजिदाख्या हि घटिकैका स्मृता बुधैः । अत्र कार्याणि सर्वाणि सिद्धिं यांति कृतानि च । जातोभिजिति राजा स्याद्व्यापारे सिद्धिरुत्तमा" । अस्यार्थः—अत्र शंकुर्द्वादशांगुलो ग्राह्यः सूर्यसिद्धांतादिषु तथैवोक्तत्वात् "मूले द्व्यंगुलविस्तारः सूच्यग्रो द्वादशांगुलः । भवेच्छंकुः" इति तल्लक्षणात् । अंगुलिमानमपि लीलावत्यां 'यवोदरैरंगुलमष्टसंख्यैः' इति । यदा मध्याह्ने सति तच्छंकोर्मूले छाया प्रजायते तदा बुधैरेका घटिकाऽभिजिदाख्या स्मृताऽह्नो मध्यात्परतो घटिकैका यावदित्यर्थः । सार्वत्रिकोयं विधिरिति मध्याह्ने चेति । चशब्देन पुनरभिजित्कालः कथ्यते च पुनः सूर्ये रविवारे यदा तच्छंकुच्छायांगुल्यो विंशतिप्रमिता भवंति सोमवारे च षोडशांगुलिमिता छाया भवति तदा तत्काल-मारभ्यैका घटिकाभिजिदाख्या स्मृता परञ्चेयमभिजिद्घटी पूर्वाह्नेऽपराह्ने चेति कालद्वये जायते इति विज्ञेयं सुधिया । एवं कुजादि-वारेष्वपि स्वस्वांगुलच्छायामानेन वारद्वयमभिजिद्भवतीति । देवानांप्रियास्तु—रविवारे विंशत्यंगुलं शंकुं कृत्वा मध्याह्ने तच्छंकोर्मूले यदा च्छाया जायते तदाभिजिदाख्या घटिका स्मृता । एवं चंद्रादिषु स्वस्वांगुलमानशंकुं विधाय तन्मूले छायातोऽभिजिद्भवतीति व्याख्यानं चक्रुस्तदसत् । यतो यावदंगुलमितः शंकुस्स्यात्तावदङ्गुलमितशंकोर्मूले छाया मध्याह्ने सदा भवेत् यद्येवं तर्हि रव्यादि-वारेषु पृथगंगुलशंकुना किं न ह्यन्यशास्त्रवज्ज्योतिःशास्त्रं पारोक्ष्यापादकमिति किं तु प्रत्यक्षतापादकमेव "प्रत्यक्षं ज्यौतिषं शास्त्रं साक्षिणौ चंद्रभास्करौ" इति सिद्धांतोक्तेरित्यलं शास्त्रांतरविचारेण प्रकृतमनुसरामः अतो मुहूर्त्तस्य गतप्रायत्वात् ॥ २७ ॥ ❀ ❀ त्वयेति । अहमेव युवां दैत्यभावे वराहनृसिंहरूपाभ्यां राक्षसत्वे नृपतिरूपत्वे च नररूपेण हनिष्यामीति प्रतिज्ञातमिति पुराणांतरा-दवसेयम् । यद्वा । तपोनंतरवरदानावसरे मया निर्मितमिति ॥ २८ ॥

इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे तृतीयस्कन्धेऽष्टादशोऽध्यायः ॥ १८ ॥

## श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

अप्रतिकार्य्यः दुर्निवार्य्यः नेता प्रवर्तकः ॥ २१ ॥ ❀ ❀ एष इति युग्मकम् ॥ २२ ॥ २३ ॥ ❀ ❀ एवंभूत आगस्कृदित्यादिलक्षणः यदाशीविषमित्येव पाठः स्वामिसम्मतो न तु यथाशीविषमुत्थितमिति यद्यस्मादिति व्याख्यानादग्रे यथेति तु वत्प्रत्ययस्यैवार्थः ॥ २४ ॥ ❀ ❀ यद्यपि भगवदग्रे तस्य वृद्धिवेलादिकं न किञ्चित्करं तथापि तस्य युद्धलीलाभिनिवेशं दृष्ट्वा प्रेमस्वभावेन ब्रह्मण ऐश्वर्य्यज्ञानाच्छादनात्तथोक्तिरिति ज्ञेयम् ॥ २५ ॥ ❀ ❀ एषेति भयेन हृदि सन्निहितत्वस्फूर्त्तेः छंवडित्यत्र छंछडिति गौडीयपाठः सर्वात्मन्निति अस्याप्यात्मत्वादेतच्छक्तिं नाशयेति भावः ॥ २६ ॥ ❀ ❀ सुहृदां प्रेमस्वभावेन हितैषिणाम् ॥ २७ ॥ ❀ ❀ विहितं मयि संरम्भयोगेनेति स्ववाक्येन निर्मितम् ॥ २८ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कंधे श्रीराधारमणदासगोस्वामिविरचितायां दीपिकाटिप्पण्यां अष्टादशोऽध्यायः ॥ १८ ॥

## श्रीमद्वीरराघवव्याख्या

आगतश्च सहस्रणीः देवसहस्रं नयतीति देवसहस्रनेता भगवान् ब्रह्मा दैत्यमालक्ष्यादिसूकरं नारायणं जगाद कथंभूतं दैत्यम् ? आसन्नं प्राप्तं शौण्डीरं मदो येन तमपेतोऽपगतः साध्वसः यस्मात्तं कृतः प्रतीकारः प्रतिहरणरूपा प्रतिक्रिया यस्य असह्यः विक्रमो यस्य तमिति ॥ २१ ॥ ❀ ❀ उक्तिमेवाह । एष इत्यादिना यावदध्यायसमाप्ति एष दैत्यः हे देव नारायण ! ते त्वाङ्घ्रि-मूलं पादमूलमुपेयुषां शरणागतानां विप्राणां सौरभेयीणां धेनूनामनागसां निरपराधिनामपि भूतानां सर्वजीवानां च ॥ २२ ॥ ❀ ❀ आगस्कृत् निर्निमित्तमपराधकृत् तत्परिहाराय प्रवृत्तौ भयकृद्भीतान् ज्ञात्वा दुष्कृदर्थप्राणादिहर्त्ता असत्तो राद्धो लब्धो वरो येन सः स्वयमप्रतिरथः प्रतिपक्षरहितः अन्वेषयन्प्रतिरथं मृगयन् कण्टक इव लोकान्प्रत्यटति चरति ॥ २३ ॥ ❀ ❀ हे देव ! मायाविनं विचित्रचतुरङ्गादिबलोत्पादकाश्चर्यशक्तिसम्पन्नमत एव दृप्तं गर्वितं निरङ्कुशं निरङ्कुशगजमिव स्थितमसत्तमं दुरात्मानमेनं दैत्यं प्रत्युत्थितमाशीविषं सर्पं पुच्छाकर्षणादिना बालकवत् मा क्रीड ॥ २४ ॥ ❀ ❀ दारुण उग्रः एष दैत्यः यावत्स्वां स्वबलकरीं वेलां संध्यां प्राप्य न वर्द्धेत तावदेव स्वामात्मीयां मायां बलमास्थायाश्रित्य जहि यद्वा स्वां पूर्वोक्तविधां मायामास्थाय स्वां वेलां प्राप्य यावदेष न वर्द्धेत तावज्जहीत्यन्वयः । हे अच्युताश्रितान्न च्यवते इत्यच्युत ॥२५॥ ❀ ❀ का सा वेला या आयास्यति यां प्राप्य वर्द्धेतेत्युच्यते इत्यत्राह । हे प्रभो लोकछंवट्करी लोकानां प्रतिकूलकरी लोकच्छंवट्करीति पाठे मोहनकरीत्यर्थः । घोरतमा भयंकरी एषा संध्या उपसर्पति सा आयास्यति हे सर्वात्मन् सुराणां जयमावह सम्पादय असुराणां जयापहेति पाठे संध्याविशेषणम् ॥ २६ ॥ ❀ ❀ अधुना इदानीमेष अभिजिन्नामाभिजिदाख्यः मौहूर्तिकः मध्याह्नमुहूर्त्तरूपः योगयुक्तः कालः अगादागतः तत्तस्मात्सुहृदां त्वत्सुहृदां नः शिवाय स्वस्तये दुस्तरं दुर्जयं दैत्यमाशु निस्तर जहि ॥ २७ ॥ ❀ ❀ दिष्ट्येति । विहितं त्वयैव शापानुग्रहकाले विहितम् । यद्वा ।

तदा विश्वेश्वरः क्रुद्धो भगवांल्लोकभावनः । हनिष्यत्यवतीर्णोऽसौ यथाद्रीन् शतपर्वधृक् ॥

इति पित्रा कश्यपेनैव विहितं मृत्युं त्वामयमसुरः स्वयं दिष्ट्या दैवेनैवासादितः एतमसुरं मृधे युद्धे विक्रम्य पराक्रम्य हत्वेत्यर्थः लोकान् शर्मणि सुखे आधेहि सुखोत्तरान् कुर्वित्यर्थः ॥ २८ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कंधे श्रीमद्वीरराघवाचार्यकृतभागवतचंद्रचंद्रिकायां अष्टादशोऽध्यायः ॥१८॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

न केवलं युद्धदर्शनाय ब्रह्मण आगमनं किन्तु दैत्यवधोपायनिवेदनलक्षणकार्यान्तरज्ञापनाय चेत्यनेनाशयेन हरिं प्रति ब्रह्मविज्ञापनप्रकारं वक्ति । आसन्नेति । अनेन कोविदेनाप्ययपि तत्परिहारप्रकारो वक्तव्य इति न्यायदर्शनार्थमुक्तं न तु हरेरुपायाज्ञानादिति तात्पर्यम् । आसन्नशौण्डीरं प्राप्तपाटवम् अहार्यं आहर्तुमशक्यो विक्रमो यस्य स तथा तं विलक्ष्य दृष्ट्वा सहस्रणीः अनेककल्पजननेतृत्वात् ब्रह्मणो योगनाम ॥ २१ ॥ ❀ ❀ प्रथमतो दैत्यस्य वध्यत्वे दोषानाह । एष इति ॥ २२ ॥ ❀ ❀ द्रव्यादानाद्यपहारेणागस्कृत् आगो मन्त्रश्च विप्रियमिति । वधादिना भयकृदग्निहोत्रादिदूषणेन दुष्कृत् तत्र निमित्तमाह । अस्मल्लब्धेति ॥ २३ ॥ ❀ ❀ क्रीडाया अकरणे कारणमाह । यदिति । आशीविषं कृष्णसर्पविषमुत्थितमुज्ज्वलितं यत्तस्मादिति ॥ २४ ॥ ❀ ❀ स्वां वेलामासुरीमपराह्णां तावत्ततः पूर्वमेव स्वां मायां महिमानं त्वदन्येन न हन्यत इत्यर्थः । ब्रह्माच्युतेत्यनेन अक्षतः क्षतवद्विष्णुरसमः समवत्तया । सजितो जितवच्चैव ज्ञोऽज्ञवच्च प्रकाशयेत् ॥ सर्वरूपेष्वनन्तोऽपि ब्रह्माद्याश्चैव तन्मतेः ॥ अनुसारितया ब्रूयुः कुर्युश्च न स दुःखभागिति वाक्यं द्योतयति ॥ २५ ॥ ❀ ❀ कीदृश्यासुरी वेलेति तत्राह एषेति । 'आदरं तु मुखं विद्याच्छम्वट्कारं तु भक्षणमि'त्यभिधानात् । लोकशम्वट्करी सर्वजनभक्षिणी ॥ २६ ॥ ❀ ❀ इदानीं समीचीनो योगः क इति तत्राह । अधुनेति । "मध्याह्नस्त्वभिजित्प्रोक्त आषाढोत्तर एव च । श्रवणस्यापि पूर्वार्धो विषुवच्चाभिजित्स्मृतम् ।" इत्यतोऽभिजिद्योगो मध्यंदिनमुहूर्तम् ॥ २७ ॥ ❀ ❀ अस्यानन्यवध्यत्वं स्पष्टं ध्वनयति । दिष्ट्येति । मृत्युं मारकं त्वा त्वां शर्मणि सुखे आधेहि स्थापय ॥ २८ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धटीकायां श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्यां अष्टादशोऽध्यायः ॥१८॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः ।

एष इति युग्मकम् ॥ २२ ॥ २३ ॥ ❀ ❀ मैनमित्यादि श्रीब्रह्मणो वाक्यम् । तादृशभगवद्युद्धलीलावेशमयेन प्रेमविशेषेणैश्वर्यज्ञानसङ्कोचात् । टीकायां यद्यस्मात् इति व्याख्यानाद्यदाशीविषमित्येव पाठः । सर्वत्र चैष एव अतो यथेत्यध्याहार्यैव व्याख्यातम् ॥ २४ ॥ ❀ ❀ मायां शक्तिमास्थाय प्रकटीकृत्य ॥ २५ ॥ ❀ ❀ एषेति भयेन निकटत्वस्फूर्त्तेः ॥ २६ ॥ ❀ ❀ मुहूर्त्ते भवो मौहूर्त्तिको योगः कालविशेषः ॥ २७—२८ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भस्य अष्टादशोऽध्यायः ॥ १८ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

आसन्नं प्राप्तं शौण्डीरं शौर्य्यं मदो वा येन तम् । ऋषिसहस्राणां नेता सहस्रणीर्ब्रह्मा ॥ २१ ॥ २२ ॥ ❀ ❀ हे देव ! आगस्कृत् वृथैवापराधारोपकः तत्परिहाराय प्रवृत्तौ भयकृत् भीतान् ज्ञात्वा दुष्कृत् अर्थप्राणादिहर्त्ता ॥ २३ ॥ ❀ ❀ एनं मा आक्रीडय बालवत् अज्ञ इव स्वयन्तु विज्ञचूडामणिरेवासीति भावः । यद्यथा आशीविषं सर्पमुत्थितं गरुड इति शेषः । अथवा यद्यस्मादाशीविषमुत्थितं एनं मन्य इति शेषः ॥ २४ ॥ ❀ ❀ स्वां वेलामासुरीं हे देव ! स्वां मायां तेनासुरवेलाया विवृद्धबलमेनं त्वं परमेश्वरोऽपि हन्तुं नैव प्रभविष्यसीत्यैश्वर्यज्ञानवतोऽपि ब्रह्मणः प्रेम्णैवानिष्टाशङ्कित्वं ज्ञेयम् । यथैश्वर्यज्ञानपूर्णयोरपि वसुदेवदेवक्योः समुद्विजे भवद्धेतोः कंसादहमधीरधीरित्यादि वाक्यम् ॥ २५ ॥ ❀ ❀ छंवट्करी विनाशकरी छंवडित्यव्ययं विनाशवाचकम् ॥ २६ ॥ ❀ अभिजित् मध्याह्नं मौहूर्त्तिकः मुहूर्त्तत्रयभवः । अगात् गतप्रायः अतो यावदस्यावशिष्टोंऽशोऽस्ति तावदेवासुरं दुस्तरमेनं निरस्तर जहीत्यर्थः ॥ २७ ॥ ❀ ❀ त्वा त्वां विहितं त्वयैव शापानुग्रहसमये निर्मितमित्यर्थः ॥२८॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् । तृतीयेऽष्टादशोऽध्यायः सङ्गतः सङ्गतः सताम् ॥ १८ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

ऋषिसहस्रं नयतीति स तथा श्रीब्रह्मा आसन्नं प्राप्तं शौण्डीरं शौर्य्यं येन तम् अपेतसाध्वसम् अपगतालसम् । कृतः प्रतीकारः प्रतिक्रिया येन तम् । अहार्य्यः सुरासुरैर्विक्रमो यस्य तम् दैत्यं विलक्ष्य नारायणं जगाद ॥ २१ ॥ ॥ २२ ॥ ❀ ❀ हे देव ! एष दैत्य आगस्कृत् अपराधकृत् मनसा भयकृत् वाण्या दुष्कृत् देहेन यत इत्थं भूतोऽयं तत एनं मा क्रीड ॥ २३—२४ ॥ ❀ ❀ स्वामासुरीम् हे देव ! मायामद्भुतां शक्तिम् ॥ २५ ॥ ❀ ❀

आसुरीं वेलामेवाह। एषेति। लोकछंवट्करी प्राणिविनाशकरी छंवट् इति विनाशार्थकमव्ययम्॥२६॥ ❀ ❀ अधुना इदानीमभिजित् मध्याह्नः स एव मौहूर्तिको योगः मुहूर्त्ते शुभदः काल अगादागतः शिवाय कल्याणाय दुस्तरम् अन्यैर्दुर्जयमेनं निस्तर जहि॥२७॥ ❀ ❀ विहितं वैपरीत्येन हितं प्रतिभटरूपेण यद्वा 'तदा विश्वेश्वरः क्रुद्धो भगवाँल्लोकभावनः। हनिष्यत्यव-तीर्यासौ यथाद्रीन् शतपर्वधृक्॥' इति। कश्यपेन विहितं त्वां मृत्युं मारकम्॥२८॥

**इति श्रीमद्भागवते महापुराणे तृतीयस्कंधे श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपटीकायां अष्टादशाऽध्यायार्थप्रकाशः॥१८॥**

## श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या।

तयोर्युद्धं दृष्ट्वा, लीलां कुर्वाणावेताविति मत्वा, वधार्थं प्रार्थयत इत्याह—आसन्नशौण्डीरमिति। भगवत उत्कर्षो युक्तः, तस्याऽयुक्त इति तदेव वर्णयति। आसन्नं स्वीकृतं शौण्डीरं येन। शौण्डीरं साहसोत्साहः। भगवतः सकाशादपास्तं साध्वसं यस्य। कृतः प्रतीकारो येन। न केनाऽपि हार्यो हर्तुं योग्यो विक्रमो यस्य। एतादृशं दैत्यं विलोक्याऽयमजेय इति ज्ञात्वा स्वपितरं भगवन्तम्, सर्वावताराणां प्रथमावताररूपम्; भगवांश्चेन्मारयितुमिच्छेत्तदैवाऽस्य मरणं भवेत्, न तूदासीनतयेति मत्वा, आदिसूकर-माहेति संबन्धः। तादृशज्ञानमस्तीत्यत्र हेतुः—भगवानिति। नन्वेवमुच्यमाने स चेद् ब्रह्माणमेव मारयेत्, तदा का गतिः स्यादित्या-शङ्क्याऽऽह—सहस्रणीरिति। सहस्रं नयतीति। ब्रह्मा हि स्वसदृशान् सहस्रं योधान्नयति, अतो नास्य भयमित्यर्थः॥२१॥ ❀ ❀ ब्रह्मा मारणार्थं तस्य दूषणान्येवाऽऽह—एष इति द्वाभ्याम्—'भक्तद्रोहे वधः स्मृतः' इति भगवद्धृदयात् अयं भक्तद्रोहमेव कृतवानि-त्याह—एष हिरण्याक्षः। हे देवेति संबोधनमेव पक्षपातबोधनार्थम्। देवद्रोहात् वधो न दोषायेति ज्ञापयितुं देवानामित्युक्तम्। अङ्घ्रिमूलमुपेयुषामिति मुख्यो हेतुः। विप्राणां सौरभेयीणामिति। ब्राह्मणानां गवां यज्ञोपयोगित्वात् तद्विरोधेन यज्ञवराहेणाऽवश्यं मारणीय इति प्रकृतावतारोपयोगित्वेनोक्तम्। सामान्यतो विष्णो रक्षाकर्तृत्वात् तत्त्वेन रक्षार्थं भूतानामप्यनागसामित्युक्तम्। निर-पराधीनि भूतानि सर्वथा रक्षकेन रक्षणीयानीति। चतुर्भिर्हेतुभिरयं मारणीय इति हेतवो निरूपिताः॥२२॥ ❀ ❀ तस्याऽपि दोष-चतुष्टयमाह—आगस्कृदिति। प्रथमतो निरपराधिनं सापराधं बोधयति, मिथ्यैवाऽपराधं संपादयतीत्यर्थः। ततो भयं जनयति निर्भर्त्सनादिभिः। ततो दुष्टं मारणम्, सर्वस्वहरणादिकं वा करोति। अन्येषामपि दोषाणामुत्पत्त्यर्थं तस्य बलमाह—अस्मद्राद्धवर इति। अस्मत्तो राद्धः सिद्धो वरो यस्येति। देववरं प्राप्य कथं दुष्टो जात इत्याशङ्क्याऽऽह—असुर इति सर्पाणां पयःपानवत्। चतुर्थं दोषमाह—अयं कण्टक इति। गतिमेव नाशयति। अल्पोऽपि परमदुःखद इत्यर्थः। अप्रतिरथश्चाऽयम्, न विद्यते लोके प्रतिरथो युद्धे समानो यस्य। अत एव प्रतिरथमन्वेषयन् लोकानटति। अतो दृप्तो दुरात्मा हन्तव्य इत्यर्थः॥२३॥ ❀ ❀ अस्योपेक्षा न कर्तव्येत्याह—मैनमिति। एनं मा क्रीड, मा क्रीडयेत्यर्थः। एनं वा लक्षीकृत्य क्रीडां मा कुर्वित्यर्थः। तत्र हेतवश्चत्वारः। मायाविनमिति। अयं च मायावी, अस्य बलं न ज्ञायते; असौ यदैव क्षीणबलो भविष्यति तदैव पलायनं करिष्यतीति इदानीमेव हन्तव्यः। किञ्च, दृप्तोऽयमनिमित्तः, उपेक्षायां जगदेव मारयिष्यतीति। किञ्च, निरङ्कुशमिति। त्वद्व्यतिरिक्तोऽन्योऽस्य न नियाम-कोऽस्ति, अतोऽस्य नान्यः प्रतीकारः। स्वयमेव कालान्तरे बाल्यं त्यक्ष्यतीति न मन्तव्यम्, यतोऽयमसत्तमः। अत एव बालवद्देव! मा क्रीड। बालो ह्युदर्कं न विचारयति। किञ्च, अयं त्वय्यप्यपकारं करिष्यतीत्याह—यदाशीविषमुत्थितमिति। उत्थितः सर्पः। चेष्टया यदा शयानः सर्प उत्थापितश्चेद्धन्तव्य एव, अन्यथाऽपकारं कुर्यात्॥२४॥ ❀ ❀ किञ्च, स्वभावत एवाऽयं बलिष्ठः, सन्ध्याकाले अत्यन्तं बलिष्ठो भविष्यति; अतो यावदस्य वृद्धिकालो नाऽऽयाति, तावदेव हन्तव्य इत्याह—न यावदिति। वृद्धौ दोषमाह—दारुण इति। स्ववेला सन्ध्या; तदा हि ते दैत्या उत्पन्नाः, एतयोरपि तदैव जन्म। कथं तर्हि मारणीयः? इत्यत आह—स्वां देवमायामिति। देवमाया ह्यसुरबाधिका, 'रजस्तमश्चाभिभूय सत्त्वं भवति भारत!' इति वाक्यात्। वधे दोषो भविष्यतीति न मन्तव्यम्, यतोऽयमघरूपः। एतद्युद्धे स्वस्मिन् सन्देहो न कर्तव्य इत्याह—अच्युतेति॥२५॥ ❀ ❀ सन्ध्या स्वतोऽपि नाशिकेत्याह एषा घोरतमेति। एषा देवानां सन्ध्या। ज्योतिश्चक्रस्य स्थितत्वात्, मध्ये च पृथिव्याः स्थापितत्वात्। ब्रह्मादीनां देवतात्वात् देवमा-नेनेत्यध्यवसीयते। अथवा, ब्रह्मणो वा एतद्दिनम्, 'लोकच्छम्बट्करी' इति वचनात्, तस्य संवत्सरान्तदिन एव कल्पप्रलयात्। प्रथमपक्षे सन्ध्यायां लोकनाशकत्वं स्वाभाविकमिति तथोच्यते। ज्योतिश्चक्रपरावृत्त्या मानुषमेव वा मानम्। अधिष्ठात्र्यो देवता वा भगवत्सेवार्थमागतस्य कालस्य परम्परयैव आविर्भवन्तीति सन्ध्या सैवोच्यते; तथैवाऽभिजिदपि। एवं चतुर्ष्वपि पक्षेषु समाधातुं शक्येष्वप्ययमेव ज्यायान्। 'छम्बट्'-शब्दो वैदिको नाशवाचको रिक्तपर्यायः, 'तेनैकाष्ट[१]कान् छम्बट् कुर्वन्ति' इति श्रुतेः। अत एव सन्ध्याऽपि लोकनाशिका, दैत्योऽपि। उभयोर्मिल[२]ने महाननर्थो भविष्यतीति ततः पूर्वमेव दैत्यो मारणीय इत्यर्थः। तथा सामर्थ्यं सूचयति—प्रभुरिति। सर्वेष्वेवाऽवतारेषु सत्त्वांशव्यवधानात् ज्ञानतिरोभावमिव मन्यते, ततो बोधनम्। प्रहरत्रयं जातमस्ति, अतो निकट एव सन्ध्या भविष्यतीत्युपसर्पतीत्युच्यते। सर्वरक्षा तवाऽऽवश्यकीति तथा संबोधयति—सर्वात्मन्निति।

---

१. एकाष्टकां न ख. ग. । २. मेलने ग. मिलनेन. ख. ।

एकमारणे बहूनां रक्षाजननात् सर्वात्मकत्वेऽपि मारणं न विरुद्धम् । तथापि सर्वथा न मारणीयः, रक्षामात्रमेव कर्तव्यमिति चेत्तत्राऽऽह—सुराणां जयमावहेति । सत्त्वकाले सुराणां जयः कर्तव्यः ॥ २६ ॥ ❀ ❀ नन्वहमेव मारयिष्यामि, किमिति बोध्यत इत्याशङ्क्याऽऽह—अधुनैष इति । तदधिष्ठात्री देवता प्रत्यक्षेत्येष इत्युक्तम् । अभिजिन्नक्षत्रं मध्याह्ने राशिद्वारा मिलतीति तथोच्यते । तुलासंक्रमणस्य दिनाष्टके गते, तस्मिन्नेव दिवसे उत्तराषाढाचतुर्थपादे, मध्यन्दिने सति मुहूर्तमात्रमभिजियोगो भवति ।'ते देवास्तस्मिन्नक्षत्रेऽभ्यजयन्' इत्युपाख्याने अभिजिन्नक्षत्रे देवानां दैत्यज[१]य उक्तः । स तु निकट एव गतः; तदैव मारणीयो भवेदित्यनपचय्यजयत्वात् । अथवा, 'पापपराजितमिवतु' इति श्रुतेः, अभिजिन्नक्षत्रं नाऽत्यन्तमुत्कृष्टम्, पापेन पराजितत्वात् । तस्मात्सोऽपि गतः सन्ध्या च नाऽऽगता, अतो मारणीय इत्यर्थः । सुहृदां देवानां नः शिवाय । एवं दुष्टं दुस्तरं मृत्युरूपमाशु निस्तर, नितरां तर ॥ २७ ॥ ❀ ❀ नन्वस्य जीवनादृष्टे विद्यमाने कथं म्रियत इत्याशङ्क्याह—दिष्ट्येति । यदयमेतस्मिन्नवसरे त्वां प्राप्तः, तेन ज्ञायते नाऽस्त्यस्य जीवनादृष्टमिति । अस्य मृत्युस्त्वमेव, अतोऽयं स्वयमेव त्वां मृत्युं दिष्ट्या आसादितः प्राप्तवान् । यथा मृत्युः रोगादिना पराक्रमेण तं हन्ति, एवमेनमपि विक्रम्यैव संग्रामे हत्वा, परमसुखे सर्वानेव लोकान् स्थापयेति प्रार्थना । युद्धे मारणान्न दोषोऽपि ॥ २८ ॥

इति श्रीभागवतसुबोधिन्यां श्रीमल्लक्ष्मणभट्टात्मजश्रीमद्वल्लभदीक्षितविरचितायां तृतीयस्कन्धे अष्टादशाध्यायविवरणम् ।

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

एषेत्यत्र । अयमेवेति । देवतासमागमनरूपसन्ध्यापक्ष एव ॥ २६ ॥ ❀ ❀ अधुनेत्यत्र । तथोच्यत इति । योगत्वेनोच्यते । ते देवा इत्यादि । 'अभिजिन्नाम नक्षत्रम् । उपरिष्टाद (दा) षाढानाम् । अवस्ताच्छ्रोणायै । देवासुराः संयत्ता आसन् । ते देवास्तस्मिन्नक्षत्रेऽभ्यजयन् । यदभ्यजयन्, तदभिजितोऽभिजित्त्वम् । यं कामयेतानपजय्यं (ग्यं) जयेदिति । तस्मिन्नक्षत्रे याजयेत् । अनपजय्यमेव जयति पापपराजितत्वमिव त्विति । श्रुत्युदित उपाख्याने इत्यर्थः ॥ २७ ॥

इति श्रीतृतीयस्कन्धसुबोधिनीप्रकाशेऽष्टादशाध्यायविवरणं सम्पूर्णम् ।

### श्रीगिरिधरकृता बालप्रबोधिनी

आगतश्च ब्रह्मा आसन्नं प्राप्तं शौण्डीरं साहसोत्साहो येन तम् । अपेतसाध्वसं निर्भयं कृतप्रतीकारं कृतः प्रतीकारः प्रहारप्रतिक्रिया येन तं अहार्यः अप्रतिकार्योऽसह्यो वा विक्रमो यस्य तमेवम्भूतं दैत्यं विलक्ष्य आदिसूकरं स्वजनकं धृतवाराहमूर्तिं श्रीनारायणं जगाद आह । तत्र हेतुः—सहस्रणीरिति । सहस्रशब्दोऽनन्तवाची । सर्वनियन्तेत्यर्थः । तत्र सामर्थ्यमाह—भगवानिति, ऐश्वर्यादियुक्तः ॥ २१ ॥ ❀ ❀ तदुक्तिमेव दर्शयति—एष इति यावदध्यायसमाप्ति । विविधक्रीडापरस्य तवैतद्वध एवोचितोऽन्यथा सर्वविनाशेन तव क्रीडैव न सिद्ध्येदिति सूचयन् सम्बोधयति देवेति । यत एषोऽसुरस्ते तवाङ्घ्रिमूलमुपेयुषां चरणैकशरणानां विप्रादीनां आगआदिकृत् अत एनं मा क्रीडय किन्तु जहीति चतुर्णामेकोऽन्वयः । देवानां विप्राणां सौरभेयीणां गवां च यज्ञाङ्गभूतत्वाद्यज्ञावतारेण त्वयाऽवश्यं रक्षा कर्तव्या । तेऽङ्घ्रिमूलमुपेयुषां भक्तानामपि त्वया भक्तवत्सलेनावश्यं रक्षा कर्तव्या । अनागसां निरपराधानामपि भूतानां सर्वपालकेन त्वयाऽवश्यं रक्षा कर्तव्येत्याशयः ॥ २२ ॥ ❀ ❀ आगस्कृत् निर्निमित्तमपराधारोपकः, तत्परिहाराय प्रवृत्तौ भयकृत्, भीतान् ज्ञात्वा दुष्कृत् अर्थप्राणाद्यपहर्त्ता, अस्मत्तो राद्धो लब्धो वरो येन सः, अतएव स्वयमप्रतिरथः प्रतिपक्षरहितः अतएव प्रतिरथमन्वेषयन् लोकान् अटति । कण्टकः कण्टकवत् सन्मार्गप्रतिरोधकः ॥ २३ ॥ ❀ ❀ हे देवेति सम्बोधनमुक्ताभिप्रायकं आतुरतासूचकम् । एनं माऽऽक्रीड मा आक्रीडय, अनर्थहेतुत्वात् । तत्र दृष्टान्तमाह—उत्थितमुत्थितमस्तकं आशीविषं सर्पं आक्रीडयन् यथा तत्कृतमनर्थं प्राप्नोति तद्वदित्यर्थः । तस्यानर्थहेतुत्वं सूचयंस्तं वर्णयति—मायाविनं अचिन्त्यपदार्थरचनाशक्तिसम्पन्नम्, अतएव दृप्तं गर्वितं, निरङ्कुशं त्वद्व्यतिरिक्तनियन्तृरहितम्, असत्तमं दुष्टचित्तम् ॥ २४ ॥ ❀ ❀ देवदेवस्य तव देवपक्षपातेनैतद्वधे न काचित्क्षतिरित्याशयेन सम्बोधयति—देवेति । तत्रापि हेतुं सूचयन् पुनः सम्बोधयति—अच्युतेति । स्वभावत एव दारुणोऽप्येष यावत्स्वां स्वबलकरीं वेलां प्राप्य न वर्धेत तावदेव स्वां मायामचिन्त्यशक्तिमास्थाय आविष्कृत्य अघं दोषरूपमेनं जहीत्यन्वयः ॥ २५ ॥ ❀ ❀ काऽसौ वेला आयास्यतीत्यपेक्षायामाह—एषेति । प्रभो हे स्वामिन् सर्वात्मनस्तव यद्यप्यविदितं किञ्चिन्नास्ति तथापि स्वव्याकुलत्वेन विज्ञापयामीति द्योतयन् सम्बोधयति—सर्वात्मन्निति । छम्वडित्यव्ययं विनाशवाचकम् । लोकानां छम्वट्करी विनाशकरी, सन्ध्यायामेव प्रलयप्रसिद्धेः । अतएव घोरतमा अतिभयङ्करी एषा सन्ध्या उपसर्पति आयास्यति ततः पूर्वमेव सुराणां जयमावह सम्पादयेत्यर्थः ॥ २६ ॥ ❀ ❀ अधुना एष अभिजिन्नाम मौहूर्तिको योगो मध्याह्नः कालः—ते देवास्तस्मिन्नक्षत्रेऽभ्यजयन्नित्युपाख्याने देवानां जयहेतुत्वेनोक्त इति पराजितत्वश्रवणात् । सोऽपि गत एवातो यावत्सन्ध्या

---

१. जयः क. ख. ।

नागच्छेत्तावदेव सुहृदां त्वद्भक्तानां नोऽस्माकं शिवाय सुखार्थं दुस्तरं दुर्जयमेवमाशु निस्तर जहि ॥ २७ ॥ ❀ ❀ त्वया विनाऽस्य कोऽपि हन्ता नास्तीत्याशयेनाह—दिष्टयेति । विहितं शापानुग्रहसमये 'एतौ सुरेतरगतिं प्रतिपद्य सद्यः' इत्यादिना त्वयैव निर्मितं–यद्वा 'तदा विश्वेश्वरः क्रुद्धोऽवतीर्य हनिष्यति' इति कश्यपेनैव विहितं–मृत्युरूपं त्वामयं स्वयमेवासादितः प्राप्तस्तद्दिष्टया सर्वेषां भाग्येनैव, अतो मृधे युद्धे एनं विक्रम्य पराक्रमं कृत्वा हत्वा लोकान् शर्मणि सुखे आधेहि सुखोत्तरान् कुर्वित्यर्थः ॥ २८ ॥

इति श्रीवल्लभाचार्यवंश्यगोपालसूनुना ॥ श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा ॥ १ ॥
श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये ॥ श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी ॥ २ ॥
रचिता च तृतीयेऽत्र वन्धसर्गनिरूपणे ॥ अष्टादशो गतो दैत्यक्रोडयुद्धनिरूपकः ॥ ३ ॥

### हिन्दी अनुवाद

वे हजारों ऋषियोंसे घिरे हुए थे जब उन्होंने देखा कि वह दैत्य बड़ा शूरवीर है, उसमें भयका नाम भी नहीं है, वह मुकाबला करनेमें भी समर्थ है और उसके पराक्रमको चूर्ण करना बड़ा कठिन काम है, तब वे भगवान् आदि सूकररूप नारायणसे इस प्रकार कहने लगे ॥ ११ ॥ ❀ ❀ ब्रह्माजीने कहा—देव ! मुझसे वर पाकर यह दुष्ट दैत्य बड़ा प्रबल हो गया है । इस समय यह आपके चरणोंकी शरणमें रहनेवाले देवताओं, ब्राह्मणों गौओं तथा अन्य निरपराध जीवोंको बहुत ही हानि पहुँचानेवाला, दुःखदायी और भयप्रद हो रहा है । इसकी जोड़का और कोई योद्धा नहीं है, इसलिये यह महाकण्टक अपना मुकाबला करनेवाले वीरकी खोजमें समस्त लोकोंमें घूम रहा है ॥ २२-२३ ॥ ❀ ❀ यह दुष्ट बड़ा ही मायावी, घमण्डी और निरङ्कुश है । बच्चा जिस प्रकार क्रुद्ध हुए साँपसे खेलता है, वैसे ही आप इससे खिलवाड़ न करें ॥ २४ ॥ ❀ ❀ देव ! अच्युत ! जबतक यह दारुण दैत्य अपनी बलवृद्धिकी वेलाको पाकर प्रबल हो, उससे पहले-पहले ही आप अपनी योगमायाको स्वीकार करके इस पापीको मार डालिये ॥ २५ ॥ ❀ ❀ प्रभो ! देखिये, लोकोंका संहार करनेवाली सन्ध्याकी भयङ्कर वेला आना ही चाहती है । सर्वात्मन् ! आप उससे पहले ही इस असुरको मारकर देवताओंको विजय प्रदान कीजिये ॥ २६ ॥ ❀ ❀ इस समय अभिजित् नामक मङ्गलमय मुहूर्तका भी योग आ गया है । अतः अपने सुहृद् हमलोगोंके कल्याणके लिये शीघ्र ही इस दुर्जय दैत्यसे निपट लीजिये ॥ २७ ॥ ❀ ❀ प्रभो ! इसकी मृत्यु आपके ही हाथ बदी है । हम लोगोंके बड़े भाग्य हैं कि यह स्वयं ही अपने कालरूप आपके पास आ पहुँचा है । अब आप युद्धमें बलपूर्वक इसे मारकर लोकोंको शान्ति प्रदान कीजिये ॥ २८ ॥

**१८वाँ अध्याय समाप्त**

# अथैकोनविंशोऽध्यायः

## मैत्रेय उवाच

अवधार्य विरिञ्चस्य निर्व्यलीकामृतं वचः। प्रहस्य प्रेमगर्भेण तदपाङ्गेन सोऽग्रहीत् ॥ १ ॥
ततः सपत्नं मुखतश्चरन्तमकुतोभयम्। जघानोत्पत्य गदया हनावसुरमक्षजः ॥ २ ॥
सा हता तेन गदया विहता भगवत्करात्। विघूर्णितापतद्रेजे तदद्भुतमिवाभवत् ॥ ३ ॥
स तदा लब्धतीर्थोऽपि न बबाधे निरायुधम्। मानयन् स मृधे धर्मं विष्वक्सेनं प्रकोपयन् ॥ ४ ॥
गदायामपविद्धायां हाहाकारे विनिर्गते। मानयामास तद्धर्मं सुनाभं चास्मरद्विभुः ॥ ५ ॥

तं व्यग्रचक्रं दितिपुत्राधमेन स्वपार्षदमुख्येन विषज्जमानम्।
चित्रा वाचोऽतद्विदां खेचराणां तत्रास्मासन् स्वस्ति तेऽमुं जहीति ॥ ६ ॥
स तं निशाम्यात्तरथाङ्गमग्रतो व्यवस्थितं पद्मपलाशलोचनम्।
विलोक्य चामर्षपरिप्लुतेन्द्रियो रुषा स्वदन्तच्छदमादशच्छ्वसन् ॥ ७ ॥

करालदंष्ट्रश्चक्षुर्भ्यां सञ्चक्षाणो दहन्निव। अभिप्लुत्य स्वगदया हतोऽसीत्याहनद्धरिम् ॥ ८ ॥
पदा सव्येन तां साधो भगवान् यज्ञसूकरः। लीलया मिषतः शत्रोः प्राहरद्वातरंहसम् ॥ ९ ॥
आह चायुधमाधत्स्व घटस्व त्वं जिगीषसि। इत्युक्तः स तदा भूयस्ताडयन् व्यनदद् भृशम् ॥ १० ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

ऊनविंशे विरिंच्यादिप्रार्थितेन महामृधे ॥ वराहेण हिरण्याक्षवधः श्लाघ्योऽनुवर्ण्यते ॥ १ ॥

निर्व्यलीकं च तदमृतं च पाठांतरे निष्कपटाभिप्रायं च तदृतं च कालात्मनोऽपि मम मुहूर्तबलमुपदिशतीति प्रहस्यापांगालोकनेन स्वीकृतत्वात् ॥ १ ॥ ❀ ❀ मुखतः अभिमुखे हनौ कपोलस्याधोभागे अक्षजो ब्रह्मणो घ्राणेंद्रियादाविर्भूतः ॥ २ ॥ ❀ ❀ सा स्वगदया तेन हता ततो विहता विच्युता सती विघूर्णिता भूत्वाऽपतद्रेजे च। तद्भगवत्करात्पतनम्। यद्वा तत्पदस्यावृत्त्या रेज इत्यनेनापि संबंधः तद्दैत्यपौरुषं रेज इति ॥ ३ ॥ ❀ ❀ लब्धतीर्थो लब्धावसरः स च न बबाधे न प्राहरत् स मानयन्बभूवेति वाक्यभेदात्स इत्यस्यापौनरुक्त्यम् ॥ ४ ॥ ५ ॥ ❀ ❀ व्यग्रं ससंभ्रमं चक्रं यस्य विषज्जमानं विशेषेण संगं प्राप्नुवंतं प्रति अतद्विदां तत्प्रभावमजानताम्। आसमंतादासन्स ॥ ६ ॥ ❀ ❀ स दैत्यस्तमात्तचक्रं निशम्य दृष्ट्वाऽग्रतो व्यवस्थितं च विलोक्यामर्षेण क्रोधेन परिप्लुतानि क्षुभितानींद्रियाणि यस्य सः आदशद्दष्टवान् ॥ ७ ॥ ❀ ❀ चक्षुर्भ्यां दहन्निव संचक्षाणः पश्यन् इवेति। वस्तुतः क्रोधाभावमाह। हतोऽसि ज्ञातोऽसीति वास्तवोऽर्थः ॥ ८ ॥ ❀ ❀ वातरंहसं वायुवेगाम् ॥ ९ ॥ ❀ ❀ घटस्वोद्यमं कुरु यतस्त्वं जेतुमिच्छसि ॥ १० ॥ ११ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

निष्कपटं स्वादु च वचः। पाठांतरे निर्व्यलीकऋतं वच इति पाठे। अत्र समास "ऋत्यकः" इति प्रकृतिभावः। निर्व्यलीकं तु 'अस्मद्राद्धवरोऽसुरः' इत्युक्तेः। अमृतं 'न यावदेष वर्द्धेत' इत्यादिप्रेममयत्वादमृततुल्यं वचस्तु भगवताप्यादरेणास्वादितं तदिति अहो प्रेम्णः सर्वविस्मारकतासामर्थ्यं यत्कालात्मनो मुहूर्त्तबलमुपदिशतीति। तद्वचः प्रेमगर्भेण प्रीतियुक्तेन रात्रावेवैनं हनिष्यामीति ज्ञापयामासेत्यर्थः ॥ १ ॥ ❀ ❀ नन्वल्पशरीरेण वराहेणात्युच्चांगदैत्यहनौ हननं कथमिति चेत्तत्राह—उत्पत्येति उत्प्लुत्येत्यर्थः ॥ २ ॥ ❀ ❀ तेनाऽसुरेण ततो हरिकरात्। औचित्यादन्वयांतरमाह—यद्वेति ॥ ३ ॥ ❀ ❀ स दैत्यः। तदा गदापतनावसरे। "तीर्थं क्षेत्रावकाशस्त्रीरजश्शास्त्राध्वरेषु च" इति कोशात्। धर्मं निरायुधेऽप्रहरणरूपम्। यद्वा। समृधे सयुद्धे जने यो धर्मस्तमिति। चक्रवर्त्ती तु—न बबाधे न प्राहरत् तत्र हेतुः—मानयन्निति। तेन च प्रकोपयन्निति किमरे मामपि

---

१. प्रा० पा०—विननादाथ सुस्वरम्। २. प्राचीने पाठे 'विघूर्णिता०' अयमुत्तरार्धे नास्ति। ३. प्रा० पा०—च निर्गते।

स्वबाहुबलादेव पतितगदं व्याकुलं जानासि यत्स्वधार्मिकत्वं प्रथयन्न प्रहरसि पश्य रे पश्य क्षणमात्रेणैव त्वत्प्राणानेवापहरामीति भगवांश्चुकोपेत्यर्थः। अपविद्धायां पतितायां न चैतत्सौभयुद्धे शार्ङ्गधनुःपतनमिव परमतमाशंकनीयं हिरण्याक्षस्य पार्षदत्वात्। पार्षदस्य च भगवत्तुल्यबलत्वात्। तुल्यबलत्वे च गदापतनस्यासंभवत्वाभावात्। तुल्यबलत्वं विना च युद्धसुखानुत्पत्तेर्गदापतनमिदं भगवदुत्साहवर्द्धकत्वाद्भूषणमेव न दूषणं भक्तस्थाने भगवता प्रेमांबुधिना स्वपराभवस्य शतशोंगीकृतत्वादितो तदर्थव्यंजकमुत्तरश्लोके स्वपार्षदमुख्येनेति पदमनुसंधेयं, सुनाभं चेति चकाराद्गदामपि पूर्वं सस्मारैवेति गम्यते ॥ ४ ॥ ❀ ❀ सुनाभं सुदर्शनचक्रम्। अपविद्धायुधसंग्रहस्य सत्यं त्वं यथा दिशसि तथैव कुर्वन्निमं हन्मि किं तु ममास्य च युयुत्सासुखं पूर्यतामतो योधानामनुचितत्वाच्चक्रस्मरणम् ॥ ५ ॥ ❀ ❀ महानपीतरप्रेरित एव कार्यं करोति न तु स्वयमिति भावनातः खेचरा अस्य वधाय प्रेरयंतीत्याह तमिति। व्यग्रं संभ्रमयुक्तं हंत हंत भगवान्मां स्मरति स्मेति स्वयमेवागत्य हस्ते लग्नं चक्रं दितिपुत्राभिधेनेत्यपि पाठमाह चक्रवर्त्ती, दितिजाभिधेनेति संदर्भः। नाममात्रतत्तद्रूपेणेत्यर्थः। तत्प्रभावमैश्वरं तेजः प्रेमवैवश्यतयैव खेचराणां सिद्धानां देवविशेषाणाम् ॥ ६ ॥ ७ ॥ ❀ ❀ साधो इति। भगवल्लीलाश्रवणव्यग्रत्वात्साधुरसीत्यभिप्रायः ॥ ९ ॥ ❀ ❀ सोसुरः। तयेति तीर्थः ॥ १० ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

वराहेण कर्त्रा। अमृतं तद्वदास्वाद्यं प्रेमैकमयत्वात् पाठान्तरे निर्व्यलीकमृतमितिपाठे पृथक् पदद्वयम्। ऋतं सत्यं दिष्ट्या त्वां विहितमित्यादि ॥ १ ॥ ❀ ❀ उत्पत्य उत्प्लुत्य ॥ २ ॥ ❀ ❀ सा भगवता विक्षिप्ता। गदापतत् रेजे चेति चकारोऽध्याहृतः। भगवदिच्छया स्वपार्षदबलेन तत्पतनं न वस्तुतोऽद्भुतमिति इव शब्देन द्योतितम्। अतः शाल्वयुद्धे धनुःपतनमिवैतत्परमतं नाशङ्कनीयम्। पूर्वार्थे पराजितस्य पतितगदायाः प्रकाशनासम्भव इत्यस्वरसाद्यद्वेति तद्दैत्यपौरुषं रेजे तद्भगवत्करात् पतनमद्भुतमिवाभवदिति तत्पदस्यावृत्त्यान्वयः ॥ ३ ॥ ❀ ❀ धर्मं निरायुधो न हन्तव्य इति ॥ ४ ॥ ❀ ❀ अपविद्धायां पतितायां सत्यां सुनाभं चेति चकारेण गदामपि पूर्वं सस्मारेति गम्यते ॥ ५ ॥ ❀ ❀ दितिजाभिधेनेति क्वचित्पाठः। तत्र नाममात्रेण दितिजेन वस्तुतस्तु स्वपार्षदमुख्येन ॥ ६ ॥ ७ ॥ ❀ स्वगदयाहनत् क्षात्रधर्म्मेण सेवितवान् इति वास्तवोऽर्थः ॥ ८ ॥ ❀ ❀ तामागच्छन्तीम् ॥ ९ ॥ ❀ ❀ भगवता इत्युक्तः स दैत्यः ॥ १० ॥

### श्रीमद्वीरराघवव्याख्या

एवं ब्रह्मणा भाषितो भगवांस्तद्वचोऽभिनन्द्यासुराणां बलकर्यामपि वेलायां स्वपराक्रममेव प्रदिदर्शयिषया पुनर्युयुध इत्याह मुनिः। अवधार्येति। विरिञ्चस्य ब्रह्मणो निर्व्यलीकं निर्दोषममृततुल्यं च वचोऽवधार्य श्रुत्वा प्रहस्य कालात्मना सर्वसंहर्तुर्ममापि शत्रुबलाढ्यं ब्रवीतीति विहस्य स भगवान्प्रेमगर्भेण प्रेमसहितेनापाङ्गेन कटाक्षेण तद्विक्रम्यैनं मृधे हत्वा लोकानाधेहि शर्मणीति वचो गृहीतवान् ॥ १ ॥ ❀ ❀ ततः वचोग्रहणानन्तरमकुतोभयं कुतश्चिद्भीतिरहितमत एव मुखतः अभिमुखतश्चरन्तं सपत्नमसुरमक्षजो ब्रह्मणो घ्राणेन्द्रियादाविर्भूतो भगवानुत्पत्योद्धृत्य गदया हनौ कपोलस्याधोदेशे जघान ॥ २ ॥ ❀ ❀ सा भगवत्प्रयुक्ता प्राप्तैव गदा तेनासुरेण कर्त्रा गदया हता भगवत्कराद्विहता च्युता सती विघूर्णिता ध्वनयन्ती अपतत् ततो रेजे रराज तद्भगवत्कराद्विहत्य पतनमद्भुतं पश्यतामाश्चर्यमिवाभवत् ॥ ३ ॥ ❀ ❀ सोऽसुरस्तदा लब्धतीर्थो लब्धावकाशोऽपि निरायुधमायुधरहितं विष्वक्सेनं भगवन्तं मृधे युद्धे धर्मं स मानयन्प्रकोपयन्न बबाधे न प्राहरत्। समृधे इति पाठे तु स लब्धतीर्थोऽपि न बाधे स मानयन् बभूवेति वाक्यभेदेनान्वयादपौनरुक्त्यं बोध्यम् ॥ ४ ॥ ❀ ❀ गदायामपविद्धायां स्वहस्ताद्विहतायां सत्यां पश्यतां हाहाकारे च विनिर्गते च सति विभुर्भगवांस्तस्य दैत्यस्य धर्मं निरायुधाबाधनरूपं धर्मं मानयामास बहुमन्यत सुनाभं चक्रमस्मरच्च स्मरणेन स्वहस्तगतमकरोदित्यर्थः ॥ ५ ॥ ❀ ❀ तं भगवता स्मृतं दितिपुत्राभिधेन दितिपुत्र इति नाम्ना व्यवह्रियमाणेन स्वपार्षदमुख्येन विपज्जमानं विशेषेण सङ्गं प्राप्नुवन्तं व्यग्रचक्रं संभ्रमयुक्तचक्रं प्रति दृष्ट्वेति शेषो वा। अतद्विदां तच्चक्रप्रभावमविदां खेचराणां चित्रा बहुविधा वाचः अमुमसुरं जहि ते तुभ्यं स्वस्त्यस्त्वित्येवमादिकाः तत्र युद्धदेशे आसन्स्म बभूवुरित्यर्थः ॥ ६ ॥ ❀ ❀ सोऽसुरः पद्मपलाशाक्षमात्तं रथाङ्गं चक्रं येन तं भगवन्तं निशाम्य दृष्ट्वाग्रतो व्यवस्थितं च विलोक्यामर्षेण क्रोधेन परिप्लुतानि क्षुभितानीन्द्रियाणि यस्य सः रुषा क्रोधेन श्वसन् स्वदन्तच्छदं स्वाधरोष्ठमादशत् समन्ताद्दष्टवान् ॥ ७ ॥ ❀ ❀ करालदंष्ट्रः भयंकरदंष्ट्रोऽसुरः चक्षुर्भ्यां दहन्निव संचक्षाणो सम्यक् पश्यन्नभिद्रुत्याभिमुखमागत्य हरिं भगवन्तं हतोऽसीत्युच्चरन् स्वगदयाहनत्प्रजघान ॥ ८ ॥ ❀ ❀ यज्ञसूकरः यज्ञमूर्तिरादिसूकरो भगवान् वातरंहसं वायुवेगां तामप्राप्तामेव गदां सव्येन पदा वामपादेन शत्रोर्मिषतः पश्यतः सतः लीलया प्राहरत् ॥ ९ ॥ ❀ ❀ ततः आयुधमाधत्स्व गृहाण घटस्व यतस्व त्वमवश्यं जिगीषसीत्याह च उक्तवांश्च। एवमुक्तः स असुरः तया पदा ताडितया पुनः गृहीतया गदया भूयः पुनर्भगवन्तं ताडयन् भृशं व्यनदत् नादं चकार ॥ १० ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

ब्रह्मवचनं हरिणावधृतं किमत्राह। अवधार्येति। अपाङ्गेन कटाक्षेण॥ १॥ ❀ ❀ विरिञ्चिवाक्यग्रहणं हरिणा कृतमिति कथं ज्ञायत इति तत्राह। तत इति। मुखतः परतः हनौ कपोले ह्रस्वेन वराहेणोन्नतस्यासुरस्य कपोले हननं कथमित्यत उक्तमुत्पत्येति॥ २॥ ❀ ❀ दुष्टजनमोहनाय सा हतेति विघूर्णिता विभ्राम्य त्यक्ता रेजे उल्कावदिति शेषः॥ ३॥ ❀ ❀ तदा जनं प्रति असुरोऽपि स्वस्वधर्मयुद्धवित्त्वं प्रकाशयति। स इति। लब्धवीर्यः प्राप्तावकाशः मृधे धर्मप्रत्ययार्थं निरायुधे सायुधेनेतरेण न प्रति प्रहर्तव्यमिति लौकिकम्॥ ४॥ ❀ ❀ अथान्यत् हरिप्रियं तदुक्तम्। "धर्मः सत्यमिति प्रोक्तो धर्मश्चापि हरेः प्रियः" इति। अनेन यो हरेः प्रियः स धर्मोऽन्यो लौकिक इत्युक्तं भवति अत एव मानयामासेत्युक्तं न तु प्रियमिति अपविद्धगदाप्रत्यादानं योधानां जुगुप्सितं किमुत हरेरतो हरिणा किमकारीति तत्राह। सुनाभमिति। सुनाभं सुदर्शनम्॥ ५॥ ❀ ❀ महानपीतरप्रेरित एव स्वकर्तव्यं करोति न तु स्वयमिति भावज्ञाः खेचरा अस्य वधाय प्रेरयन्तीत्याह। तमिति। व्यग्रं शत्रुहननाय विभ्रमच्चक्रं यस्य स तथा तं तद्विदां तस्य हरेः स्वरूपज्ञानाम्॥ ६॥ ❀ ❀ दैत्यस्य वीरस्वभावं दर्शयति। स इति। खेचराणां तद्वचनं निशम्यामर्षेण दुःसहद्वेषेण परिप्लुतानि स्वस्थानच्युतानीन्द्रियाणि यस्य स तथा स्वदन्तच्छदं स्वाधरोष्ठमदशद्दष्टवान्॥ ७॥ ❀ ❀ वीरत्वादधरोष्ठदशनफलमाह। करालेति। संचक्षाणः पश्यन् हतोऽसीत्याभाष्येति॥ ८॥ ❀ ❀ हरेर्युद्धलाघवं वक्ति। पदेति। शत्रोस्तां गदां वातरंहसा वायुवेगेन अनेन प्रतिवीरस्य परिहारायोग्यत्वप्रकाशेन हरेरतिमाहात्म्यं प्रकाशितम्॥ ९॥ ❀ ❀ एतदेव ध्वनयति। आहेति। चः समुच्चये। नह्यल्पमाहात्म्यस्यायुधमाधत्स्वेत्यादिप्रवचनं युज्यते भीत्या वागनुद्गलनाद् गूढमाक्षिपतीत्याह। त्वमिति। उक्तं सत्त्वमिति मन्वानः स्वपाटवं व्यनक्ति। इतीति॥ १०॥

## श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

निर्व्यलीकमकपटममृतं प्रियं च। प्रेमैकमयत्वात्। पाठान्तरे ऋतमर्थतोऽपि निष्कपटम्॥ १॥ ❀ ❀ अक्षजः योऽधोक्षजोऽपि। सम्प्रति नेत्रादिषु प्रकटीभूत इत्यर्थः॥ २॥ ❀ ❀ तद्भगवत्कारात् पतनमद्भुतमिवाभवदितीवशब्दो भगवदिच्छया तत्तत्सम्भवान्न वस्तुतोऽद्भुतमिति बोधयति॥ ३॥ ❀ ❀ समृधे सयुद्धे जने यो धर्मस्तम्॥ ४॥ ❀ ❀ सुनाभञ्चेति चकारेण पूर्वं गदामपि सस्मारेति गम्यते॥ ५॥ ❀ ❀ बहिर्दितिपुत्राधमेन अन्तस्तु स्वपार्षदमुख्येनेत्यर्थः। दितिजाभिधेनेति पाठे नाममात्रतस्तद्रूपेण॥ ६—१२॥

## श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

युद्धे तस्यासमर्थस्य मायाः सृष्टवतो हरिः। स्वास्त्रेण हत्वा तमहन्नूनविंशे स्वपाणिना॥

निर्व्यलीकं निष्कपटमस्सद्राद्धवरोऽसुर इति। अमृतं न यावदेष वर्द्धेतेत्यादि प्रेममयत्वादमृततुल्यं वचस्तद्भगवताप्यादरेणास्वादितं तदित्याह। प्रहस्येति। अहो मत्प्रेम्णः सर्वविस्मारकतासामर्थ्यं यत्कालात्मनोऽपि मम मुहूर्त्तबलमुपदिशतीति प्रेमगर्भेणैवापाङ्गेन स्वीचकार सत्यं त्वं यथादिशसि तथैव कुर्वन्निममधुनैव हन्मि। किन्तु ममास्य च युयुत्सासुखं पूर्यतामतोऽद्य रात्रावेवैनं हनिष्यामीति ज्ञापयामासेत्यर्थः॥ १॥ ❀ ❀ मुखतः संमुख एव हनौ कपोलस्याधोभागे अक्षजः ब्रह्मणो घ्राणेन्द्रियादाविर्भूतः॥ २॥ ❀ ❀ सा हरेर्गदा तेनासुरेण विहता विच्युता सती विघूर्णिता भूत्वा अपतत् विरेजे च तत् भगवत्करात् पतनम्॥ ३॥ ❀ ❀ लब्धतीर्थः लब्धावसरोऽपि न बबाधे न प्राहरत्। तत्र हेतुः मानयन्निति तेन च प्रकोपयन्निति। किमरे मामपि त्वद्बाहुबलादेव पतितगदं व्याकुलं जानासि यत् स्वधार्मिकत्वं प्रथयन्न प्रहरसि पश्य रे! पश्य क्षणमात्रेणैव त्वत्प्राणानेवापहरामीति भगवांश्चुकोपेत्यर्थः॥ ४॥ ❀ ❀ अपविद्धायां पतितायां न चैतत् शाल्वयुद्धे शार्ङ्गधनुःपतनमिव परमतमाशङ्कनीयम्। हिरण्याक्षस्य पार्षदत्वात् पार्षदस्य च भगवत्तुल्यबलत्वात् तुल्यबलत्वं विना च युद्धसुखस्यानुत्पत्तेर्गदापतनमिदं भगवदुत्साहवर्धकत्वाद् भूषणमेव नतु दूषणम्। भक्तस्थाने भगवता प्रेमाम्बुधिना स्वपराभवस्य शतशोऽङ्गीकृतत्वादित्येतदर्थव्यञ्जकमुत्तरश्लोके स्वपार्षदमुख्येनेति पदमनुसन्धेयं सुनाभञ्चेति चकाराद्गदामपि पूर्वं सस्मारैवेति गम्यते॥ ५॥ ❀ ❀ व्यग्रं सम्भ्रमयुक्तं हन्त! हन्त! भगवान्मां स्मरति स्मेति स्वयमेवागत्य हस्ते लग्नं चक्रं यस्य तम्। अत्र दितिपुत्राभिधेन दितिजाभिधेन दितिपुत्राधमेनेति पाठत्रयम्। विषज्जमानं वीक्ष्येति शेषः॥ ६॥ ❀ ❀ प्रथममात्तरथाङ्गं निशाम्य दृष्ट्वा पुनरग्रतो व्यवस्थितं च विलोक्य दन्तच्छदमधरम्॥ ७॥ ❀ ❀ ❀ सञ्चक्षाणः पश्यन् हतोऽसि पक्षे ज्ञातोऽसि॥ ८॥ ❀ ❀ वातरंहसं वायुवेगाम्॥ ९—१०॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

ऊनविंशे हिरण्याक्षवधं वर्णयितुमाह। अवधार्येति। सर्वज्ञं मां प्रति अधुनैषोभिजिन्नामेत्यादि विज्ञापयतीति प्रहस्यापाङ्गेनाक्षिसंकोचेन स्वीकृतवान्॥ १॥ ❀ ❀ अक्षजः ब्रह्मघ्राणेन्द्रियजः॥ २॥ ❀ ❀ सा गदा विघूर्णिता भूता अपतत्

रेजे च तत् असुरपौरुषतो भगवद्गदापतनमद्भुतमिवाभवत् ॥ ३ ॥ ❀ ❀ सः असुरः लब्धतीर्थः प्राप्तप्रहारावसरो बभूव स तदापि तस्मिन्नवसरेऽपि निरायुधो न हन्तव्य इति मृधे धर्मं मानयन् विष्वक्सेनं प्रकोपयन् च न प्राहरत। वाक्यभेदात्स इत्यस्य अपौनरुक्त्यम् ॥ ४ ॥ ❀ ❀ गदापतनस्याद्भुतत्वं प्रपञ्चयति गदायामिति ॥ ५ ॥ ❀ ❀ व्यग्रमनैकाग्र्ययुक्तं सर्वान् सुरासुरान् भस्मीकरिष्यतीति प्रतीयमानं चक्रं यस्य तं दितिपुत्राधमेनैव विषज्जमानं विशेषेण संगं प्राप्नुवन्तं प्रति अतद्विदां यथापात्रं निग्रहानुग्रहकारित्वं भगवतोऽजानतां ते त्वदीयानां ते त्वत्तो वा खेचराणामस्माकं स्वस्ति भवतु अमुं तु जहीति तथा चित्रा अन्या अपि बहुविधा वाच आसमंतात् आसन् स्म ॥ ६ ॥ ❀ ❀ आत्तरथाङ्गं निशाम्य दृष्ट्वा अग्रतो व्यवस्थितं च विलोक्य ॥ ७-८ ॥ ❀ ❀ वातरंहसं वायुवेगाम् ॥ ९ ॥ ❀ ❀ घटस्व प्रयत्नं कुरु ॥ १० ॥ ११ ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

एवं स्थितिर्हरौ तस्य पूर्वाध्याये निरूपिता। प्रलयो ब्रह्मणो वाक्यात् भगवत्कृत ईर्यते ॥ १ ॥
एकोनविंशे भगवान् क्रीडन्निव महासुरम्। सुराणां महदर्थाय हतवानिति वर्ण्यते ॥ २ ॥

एवं ब्रह्मणा स्तोत्रे क्रियमाणेऽपि भक्तत्वान्मारयिष्यति न वेति सन्देहे सत्याह—अवधार्येति। भगवांस्तद्वाक्यं विचारितवान्, किमयं देवभावात् द्वेषेण वदति, आहोस्विदेवमेवेति। तन्निश्चित्य तथैव करिष्यामीत्यङ्गीकृतवान्। विरञ्चयशब्देनाऽपि तस्याऽसत्यवाक्यत्वं निराकृतम्। रविशब्दो विपरीतः; विरं रविं चिनोतीति विरञ्चयः, सूर्यादिनिर्माताऽयम्, नान्धकारनिर्मातेति। अतो निर्व्यलीकम्। अमृतं हितकारि मिष्टं च। एवंगुणयुक्तं वचः सत्यमित्यवधार्य, ब्रह्माणं भीतं मत्वा प्रहस्य, सान्निध्ये ज्ञानोत्पत्त्यभावाय वा, प्रेम्णा गम्भीरं तद्वचः कटाक्षेणैवाऽग्रहीत्। प्रेमगर्भेणेति पाठे—दृष्टिः प्रेमसहिता, अधिकं च प्रेमोत्पादयिष्यतीति तेषां निर्भयत्वं बोधयति। स इति भगवान्। भूम्युद्धारं कृत्वा नाऽन्तर्हितः, तस्मिन् रूपे च नाऽन्तःप्रवेशित इति बोधयति ॥ १ ॥ ❀ ❀ एवंविधपूर्वभावं भगवदिच्छामुक्त्वा, हननात्पूर्वं सर्वात्मत्वात्तस्य कामनां पूरयति। तस्य हि युद्धं कर्तव्यमिति महती कामना, जयश्च भवत्विति; अतः प्रथमं तदुभयं सम्पादयति। तत्र प्रथमं युद्धे तस्य जयं संपादितवानित्याह—ततः सपत्नमिति पञ्चभिः। दैत्यजयोऽग्रे वक्तव्य इति प्रथमं भगवत्कर्तृकं युद्धमाह—युद्धं तस्य प्रतिकारो दैत्यधर्मश्च साधकः। सर्वलोकप्रसिद्धिश्च भक्तानामाशिषस्तथा ॥ १ ॥ सर्वेषामेव हृदये जयस्तस्य समागतः। इति दर्शयितुं देवास्त[१]दाहुरिति रूप्यते ॥ २ ॥ ततो ब्रह्मवाक्यानन्तरम्, सपत्नं शत्रुम्, जघानेति संबन्धः। प्राप्त्यर्थम्—मुखतश्चरन्तमिति। मुखत इति संमुखे, मुख्यत्वेन वा। मुखादेव चरति। अन्तस्तु मारणेच्छायामुत्पन्नायां तस्याऽपि हृदये मरणं समागतमिति मुखत एव युद्धे चरणमुक्तम्। एवं ज्ञात्वाऽपि निर्भयः, पलायनाभावायोक्तम्। उत्पत्योत्प्लुत्य, उपरि पतित्वा वा। अक्षजो भगवान्, ब्रह्मणो नासापुटाज्जात इति। गदया हनावताडयत्। हनुर्मुखादधोऽस्ति ॥ २ ॥ ❀ ❀ ततः प्रतीकारमाह—सा हता तेनेति। दैत्यः स उपरि पतन्तीं गदां कौमोदकीं स्वगदयाऽभ्यहन्, तदा सा कौमोदकी तेन हता भगवत्कराद्विगलिता, आकाशे भ्रमणं प्राप्य, विघूर्णिता अपतत्—भूमौ पतिता, न तु भिन्ना; किन्तु भूमिं प्राप्य रेजे। भगवतो हस्तात्कौमोदकीपातोऽत्यद्भुत इत्याह—तदद्भुतमिति। अद्भुतादप्याश्चर्यमिवेत्यनेनोक्तम्। भगवद्धस्तादेव पात आश्चर्यम्, ततोऽपि कौमोदक्याः; सा ह्यासन्यरूपा, दैत्यास्तत एव विहिता भवन्ति; स हि अपहतपाप्मा। अतोऽत्राश्चर्यादप्याश्चर्यम्। भगवता चेत् कामना पूर्यते, तदा मर्यादामुल्लङ्घ्याऽपि पूर्यत इति तथा जातम् ॥ ३ ॥ ❀ ❀ भगवत्कृतमेवेतदिति ज्ञापयितुं तस्य धर्मबुद्धिरुच्यते, अन्यथा दुष्टो निष्कारणं लोकेषु आगस्कृत्, भयकृत्, दुष्कृत्, कथं तदा तूष्णीं भवेत्? नाप्याह भगवत्सामर्थ्यादिति; अतो धर्मो निरूप्यते—स तदेति। तदा कौमोदकीपातानन्तरम्, लब्धतीर्थोऽपि—भगवानशस्त्र इदानीं जेतुं शक्यत इति लोकदृष्ट्या जयावसरे विद्यमानेऽपि—निरायुधं भगवन्तं न बबाधे। ननु जयाकांक्षी कथं न बबाधे? तत्राऽऽह—मानयन्स मृधे धर्ममिति। संग्रामे निरायुधः शत्रुर्न मारणीय इति धर्मः, तं धर्मं परिपालयन् न मारितवानित्यर्थः। इमं धर्मं भगवत्कृतजयार्थं प्रतिपाद्य, तस्य धर्मस्य सहजत्वाभावाय तस्याऽभीष्टमन्यदित्याशङ्क्याऽऽह—विष्वक्सेनं प्रकोपयन्निति। विष्वक् परितः सेना यस्य। अनेन तस्य भ्रान्तत्वं सूचितम्। तूष्णींभावोऽपि जयप्रतिपादकः, भावं चोद्गिरति 'जितं मया' इति। एवं दैत्यस्य जयबुद्धिर्निरूपिता ॥ ४ ॥ ❀ ❀ लोकानां जयबुद्धिमाह—गदायामिति। अपविद्धायां ताडनेन पतितायां सत्याम्, लोके च सर्वत्र हाहाकारे विनिर्गते सति। गदापात गदापातहेतुको हाहाकारः। भगवानपि लोकानुसारी तस्य जयमङ्गीकृतवानित्याह—मानयामास तद्धर्ममिति। तस्याऽऽयुधरहित[२]वधाभावलक्षणं धर्मं मानयामास, अन्यथा भगवदनङ्गीकृतो धर्मः फलदायी न भवेत्। ततः किं कृतवानित्याह—सुनाभं चाऽस्मरदिति। सुनाभं सुदर्शनम्, चकारात् स्वस्य भावं च। ननु स्मरणमात्रेण कथं स्वभावस्य, भगवत्त्वस्य, सुदर्शनस्य चाऽऽगमनमित्याशङ्क्य बोधयति—विभुरिति। स हि सर्वसमर्थः ॥ ५ ॥ ❀ ❀ तदा भगवद्भक्तानामपि तस्य जयो हृदये समागत इति पुनर्भगवन्तं सायुधं दृष्ट्वोज्जीविता

---

१. तथा. ग. २. बाधाभावः'''ग

अविलम्बेन तद्वधार्थं प्रार्थयन्ति—तं व्यग्रचक्रमिति । तं पूर्वोक्तप्रकारेण क्रीडाकारिणम् । सुदर्शनमपि भगवल्लीलां न हृदयेन मानयति, न वा गदायाः पातम्; अतो दैत्यवधार्थं व्यग्रं चक्रं यस्य । ननु भगवान् सृष्ट्यर्थं प्रवृत्तः कथं तं मारयति ? दैत्या अप्युत्पादनीया इत्याशङ्क्याऽऽह—दितिपुत्राधमेनेति । दितेः पुत्राणां मध्ये अधमेन । न ह्यधमेन सृष्टिरुत्तमा भवति । अधमत्वं च दैत्यमर्यादाभावात् । अतो वध्य इति सुदर्शनादिस्मरणम् । ननु हीनेन तेन सह युद्धं किमर्थं करोति ? सुदर्शनेन वध एव परं कर्तुमुचित इत्याशङ्क्याऽऽह—स्वपार्षदमुख्येनेति । स हि पार्षदानां मध्ये मुख्यः, अतः स्वसेवकमुख्येन सह क्रीडा उचितेत्यर्थः । युद्धार्थं तेन सह विशेषेण सज्जमानमासङ्गयुक्तम् । अत एव दैवानामेतन्मर्माऽजानतां केवलमाकाशे स्थित्वा पश्यताम्, तत्र तस्मिन्नवसरे विचित्रा वाचो जाताः । कश्चिदाह मारयिष्यति; कश्चिन्नेति; कश्चित् शक्यः; कश्चिदशक्य इत्येवं चित्रा वाचः । स्मेति प्रसिद्धे । आशीर्वादमाहुर्व्यग्राः सन्तः—ते स्वस्त्यस्तु, अमुं च जहीति । कुशलं शत्रुजयश्च द्वयं प्रार्थयन्ति । चित्रा वागेव वैयग्र्ये हेतुः, वैयग्र्याच्च तथा वचनम् । इदं तु वचनं न चित्रमिति । इतिशब्दस्य प्रकारवाचित्वेऽपि वाक्यत्रयनिरूपणं कर्तव्यं स्यात् ॥ ६ ॥ ❀ ❀ एवं सर्वजनीनं तस्य जयं निरूप्य युद्धं निरूपयति—स तं निशम्येत्यष्टादशभिः, सर्ववाक्प्रतिपाद्या हि भगवतो लीलेति । "दशभिः सत्ययुद्धं तु मायायुद्धं तथाऽष्टभिः । द्विविधेनाऽपि युद्धेन क्रीडति स्मेति वर्ण्यते ॥ १ ॥ दैत्यस्य युद्धसंरम्भः पश्चाद्युद्धं सवाचिकम् । प्रतीकारोक्तिभिश्चैवं क्रोधाद्युद्धं पुनस्तथा ॥ २ ॥ ततः पौरुषनाशोऽभूत् भगवल्लीलया रिपोः । एवं षड्भिर्गदायुद्धं द्वाभ्यां शूलेन चैव हि ॥ ३ ॥ मुष्टिभिश्च तथा द्वाभ्यां स्वदेवास्त्रात्तथा स्वतः । युद्धं निरूपितं तस्य मायासामान्यवर्णनम् ॥ ४ ॥ चतुर्भिस्तद्विशेषाश्च तस्याऽप्युक्ता प्रतिक्रिया । मायायुद्धं ततः षड्भिः स्वयं तूत्तरहेतुकम् ॥ ५ ॥ दुर्निमित्तदर्शियुद्धं मारणार्थमिहोच्यते । एकेन मारणं चैव मरणं च ततो महत् ॥ ६ ॥ मृतस्य वर्णनं चैव त्रिभिरित्येष संग्रहः । स्तोत्रं भगवतो यानमुपसंहार एव च ॥ ७ ॥ माहात्म्यं द्विविधं तस्य श्रवणस्य निरूपितम् । गुणोपसंहृतिश्चैव दृष्टान्तार्थमिहोच्यते ॥ ८ ॥ जातं जनिष्यमाणं च फलमत्र निरूप्यते । द्वाभ्यां द्वाभ्यां ततः षड्भिः श्रवणस्य फलं ततम् ॥ ९ ॥" प्रथमं स्वायुधगदया युद्धमाह द्वाभ्यामुद्योगयुद्धभेदेन—स तं निशम्येति । जयानन्तरं हि प्राणिन उत्साहो भवति । अकस्माद्भगवतः साधनान्तरप्राप्तौ भगवदुत्कर्षं दृष्ट्वा क्रुद्धो जात इत्याह—स दैत्यः, अग्रतोऽग्रे, तं भगवन्तम्, आत्तरथाङ्गं निशम्य श्रुत्वा । क्रोधात् दृष्टमपि श्रुतमिव मन्यते । निशाम्येति पाठः स्पष्टः । पद्मपलाशलोचनमिति चक्रायुधः कमलनयनस्तस्याऽन्तकाले ध्येय इति वर्णितम् । शत्रोर्जये जातेऽप्यक्षोभदृष्टिं वा । तादृशं दृष्ट्वा भगवतोऽक्षोभलक्षणमुत्कर्षमसहमानोऽमर्षपरिप्लुतेन्द्रियो जातः । अमर्षेण क्रोधेन परिप्लुतानि मग्नानि इन्द्रियाणि यस्य । पुनरुद्गतेन क्रोधेन स्वदन्तदच्छदमधरमादशत् दष्टवान् । पुनरन्तःप्रवृद्धेन क्रोधेन श्वसन्नपि जातः । एवं युद्धार्थं क्रोधत्रयं [3]कारणं निरूपितम् । उत्कर्षदृष्टौ मात्सर्यात् चक्रदृष्टेस्तु घातकः । स्वाभिमानान्महान् रोषो विलम्बं न सहेत्तथा ॥ १ ॥ एवं युद्धार्थं तस्य क्रोधो वर्णितः ॥ ७ ॥ ❀ ❀ युद्धमाह—करालदंष्ट्र इति । कराला दंष्ट्रा यस्य दैत्यस्य । यमस्तद्दंष्ट्रायामागत इति स्वाधिदैविकसामग्रीसहित उक्तः । चक्षुर्भ्यां व्याचक्षाण इति पूर्णा दृष्टिस्तत्रैव निरूपिता, तेनाऽन्यत्र दृष्टिर्व्यावर्त्यत इति विचारान्तरेणाऽपि युद्धाभावशङ्का व्यावर्तिता । सतीं दृष्टिं व्यावर्तयितुमाह—दहन्निवेति । स्वाविद्याम्, जगद्वा । रूपवद्दु[4]ष्णस्पर्शेऽपि चक्षुषो जात इति दहन्नित्युक्तम् । तथाप्यग्निराश्रयं दग्ध्वैव परं दहतीतीवेत्युक्तम् । एवं क्रूरदृष्ट्या दृष्ट्वा स्वगदया सहितः, आभिमुख्येन गत्वा, [5]अहतोऽसीत्यहनत् । अयं हि यज्ञः; तथा 'स्वधिते मैनं हिंसीः' इति 'न वा उ वैतन्म्रियसे' विपरीतमिव वदन् अहनत् । ननु विपरीतवादे को हेतुः ? तत्राऽऽह—हरिमिति । स हि सर्वदुःखहर्ता कथं वा हतो भवेत् । अथवा, अयुद्ध्यमानं कथं मारयसीत्याशङ्क्याऽऽह—आहतोऽसीत्यहनत् । पूर्वमासमन्तात् हतवानसीत्यर्थः । मुखेनाऽपि मारणं कृत्वा मारयतीति केचित् । स्तुत्यर्थत्वे—हतोऽसि प्राप्तोऽसीत्यगमदित्यर्थः ॥ ८ ॥ ❀ ❀ एवं तस्य युद्धमुक्त्वा तस्य प्रतीकारमाह— पदा सव्येनेति । पश्चात्तनो वामपादः सव्यपादुच्यते । तां गदां भगवान् लीलया प्राहरत्, पादघातेन तां भूमौ पातितवानित्यर्थः । साधो ! इति संबोधनं विश्वासार्थम् । साधूनां रक्षार्थं वा तथा कृतवानिति सूचितम् । भगवानिति अवज्ञया प्रहारेण तथा करणे सामर्थ्यम् । यज्ञसूकर इति तदर्थमेवाऽवतार इत्यवश्यं प्रतिक्रियाकरणम् । लीलयेति पुनः क्रोधोत्पादनार्थम् । मिषत इति तस्यास्तथात्वाय वातरंहसमिति गदाया उत्कृष्टत्वं प्रतिक्रियाभावाय ॥ ९ ॥ ❀ ❀ एवं प्रतीकारं कुर्वन्नेव क्रोधं जनयति—आह चेति । उक्तवानपि—आयुधं गृहाण; तदनु घटस्व युद्धं कुरु, युद्धार्थं वा सज्जो भव; यतस्त्वं जिगीषसि । वचनत्रयं तस्याऽभिमानभङ्गार्थम् । निरभिमानस्य कार्यं पतितस्य ग्रहणम्, निर्लज्जस्य कार्यं पतितस्य ग्रहणम्, निर्लज्जस्य कार्यं पुनर्युद्धकरणम्, भ्रान्तस्य कार्यमेतादृशोऽप्यहं जेष्यामीति । एवमुक्तेऽपि क्रोधवशात् व्यङ्ग्यमज्ञात्वा, स एव दैत्यः, तयैव गदया, भूयस्ताडयन् भृशमनदत् । इदं तस्य द्वितीयं युद्धं मध्यमभावेन ॥ १० ॥

## श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

अथ एकोनविंशाध्यायं व्याख्यातुमारभमाणा अवसररूपां सङ्गतिं स्मारयन्ति—एवमित्यादि । अवधार्येत्यत्र । नाऽन्तः प्रवेशित इति । स्वार्थे णिचि नाऽन्तःप्रविष्ट इत्यर्थः ॥ १ ॥ ❀ ❀ तत इत्यत्र । मारणेच्छायामिति भगवतस्तन्मारणेच्छायाम् ॥ २ ॥

१. द्वयम् २. ततः क. घ. ३. सकारणम्. ग. ४. दुष्टस्पर्शः क. घ. ङ. ५. अतो हतः क. ख. घ.।

❀ ❀ तं व्यग्रेत्यत्र। सुदर्शनवैयग्र्ये हेतुः-तथा वचनमिति। आशीर्वचनं मारणवचनं च। एतदतिरिक्तचित्रवचनस्य कल्पने बीजमाहुः—इदं त्वित्यादि ॥ ६ ॥ ❀ ❀ स तं निशम्येत्यत्र। कारिकासु। मायायुद्धमिति। मायापूर्वकमन्यच्च युद्धम्। प्रतीकारोक्तिमिश्रैव-मिति। प्रतीकारसहिता उक्तयस्ताभिरेवम्, एकैकेनेत्यर्थः। पुनस्तथेति। एकेन। एकादशस्याऽर्थमाहुः—स्वदेवास्त्रादिति पादोनेन। तथा। एकेन। स्वतः स्वेच्छयैव। स्वस्य दैत्यस्य देवो माया, तस्याऽस्त्रात्, 'असु क्षेपणे' क्षेपात्। मायासामान्यस्य वर्णनं यस्मिन्, तादृशं युद्धं निरूपितमित्यर्थः। षोडशस्यार्थमाहुः—तस्याऽप्युक्ता प्रतिक्रियेति। सुदर्शनप्रयोगेण मायाप्रतिक्रियाऽप्येकेनोक्ता। उपसंहरन्ति मायायुद्धं ततः षड्भिरिति। तेन हेतुना, उक्तैः षड्भिः श्लोकैर्मायायुद्धमुक्तमित्यर्थः। अग्रिमयोरर्थमाहुः—स्वयमित्यादि। 'विनष्टासु' इति पद्योक्तं स्वयंरूपोपगूहनात्मकं युद्धं तु उत्तरहेतुकं सुदर्शनप्रयोगोत्तरदुर्निमित्तहेतुकम्। तत्पूर्वश्लोके दितेर्दुर्निमित्तदृशिः। एतयोः कथं युद्धे निवेश इत्यत आहुः—युद्धमित्यादि। मारणहेतुरूपत्वाद्युद्धे निवेश इत्यर्थः। एवमष्टादशानां तात्पर्यमुक्तम्। इत्येष संग्रह इति। एवं प्रकारेणैकविंशतिभिस्तन्नाशस्य संग्रहः। अग्रिमाणां तात्पर्यमाहुः—स्तोत्रमित्यादि। मरणस्य तयोर्भगवतश्च स्तोत्रं यथाक्रममेकैकेन; भगवतो यानमेकेन, उपसंहार एकेन। अग्रे इति कौषारवेत्यादिभिः षड्भिः श्रवणफलमुच्यते। तात्पर्यमाहुः—माहात्म्यमित्यादिभिः। द्विविधमिति। प्रत्यक्षमुपपाद्यं च। द्वितीयस्यस्य कैमुतिकस्य तात्पर्यमाहुः—गुणोपसंहृतिरित्यादि। गुणोपसंहृति-रिति सदाचारपराक्रमादिरिति गुणानामेकत्र सत्ता। एतदुभयविधं माहात्म्यमग्रे दृष्टफलत्वेन वक्तव्यम्। स्फुटमन्यत् ॥ ७ ॥ ❀ ❀ पदेत्यत्र। तस्यास्तथात्वायेति। तद्गदाया भगवत्कृतप्रहारासहत्वाय ॥ ९ ॥

### श्रीगिरिधरकृता बालप्रबोधिनी

ब्रह्मणा प्रार्थितेनैवं हरिणा क्रोडमूर्त्तिना ॥ ऊनविंशे हिरण्याक्षवधोऽध्याये निरूप्यते ॥ १ ॥

विरिञ्चस्य ब्रह्मणो निर्व्यलीकं च तत् भक्तिपूर्वकत्वेन श्रोत्रप्रियत्वादमृततुल्यं च वचोऽवधार्य श्रुत्वा महानपि भयेन कालात्मनोऽपि मम मुहूर्त्तमुपदिशतीति विहस्य भगवान् प्रेमगर्भेण प्रेमसहितेन अपाङ्गेन कटाक्षेण अग्रहीत् अनुमोदितवान् ॥ १ ॥ ❀ ❀ ततो ब्रह्मवाक्यानुमोदनानन्तरं अक्षजो ब्रह्मणो घ्राणेन्द्रियात् प्रादुर्भूतो भगवान् उत्पत्य अकुतोभयं सर्वतो भयरहितं अत-एव मुखतः अभिमुखं विचरन्तं सपत्नं शत्रुमसुरं गदया हनौ कपोलस्याधोदेशे जघानेत्यन्वयः ॥ २ ॥ ❀ ❀ सा भगवत्प्रयुक्ता गदा तद्धनुमप्राप्यैव तेनाऽसुरेण स्वगदया हता भगवत्कराद्विहता विच्युता विघूर्णिता च सती भूमावपतत्। ततो रेजे तद्भगवत्क-रात्पतनं तत्रत्यानां पश्यतां अद्भुतमाश्चर्यमिवाभूत् ॥ ३ ॥ ❀ ❀ सोऽसुरस्तदा लब्धतीर्थो लब्धावकाशोऽपि निरायुधमपि भगवन्तं न बबाधे न प्राहरत्। किन्तु समृधे युद्धे निरायुधो न हन्तव्य इति धर्मं मानयन् विष्वक्सेनं भगवन्तं प्रकोपयंश्च बभूवेत्यन्वयभेदान्न स इत्यस्य पौनरुक्त्यम् ॥ ४ ॥ ❀ ❀ गदायामपि विद्धायां स्वहस्ताद्विच्युतायां सत्यां पश्यतां ब्रह्मादीनां भयेन हाहाकारे विनिर्गते सति विभुः सर्वथा समर्थोऽपि भगवान् तद्धर्मं तस्य दैत्यस्य निरायुधाबाधनरूपं धर्मं मानयामास बहुमन्यत, सुनाभं सुद-र्शनचक्रं चास्मरत् स्मरणेनागतं स्वहस्तस्थितमकरोदित्यर्थः ॥ ५ ॥ ❀ ❀ तत्र तस्मिन् देशे काले वा खेचराणामाकाशे स्थित्वा युद्धं पश्यतां देवादीनां तं भगवन्तं प्रति ते तुभ्यं स्वस्त्यस्तु अमुमसुरं जहीत्येवमादिकाः चित्राः विविधप्रकारिकाः वाच आसन्नि-त्यन्वयः। तत्र हेतुं सूचयन् विशिनष्टि—व्यग्रचक्रमिति। दैत्यवधार्थं त्वरया व्यग्रं व्याकुलं चक्रं यस्य तं तथापि चक्रं मारणाज्ञाम-दत्त्वा दितिपुत्राधमेन सह विषज्जमानं विशेषेण सङ्गं प्राप्नुवन्तं क्रीडंतमित्यर्थः। तत्रापि हेतुत्वेन तं विशिनष्टि—स्वपार्षदमुख्येनेति। तस्यापि स्वपार्षदत्वेन भक्तत्वात् युद्धमनोरथपूरणार्थं क्रीडन्तमिति भावः। ननु तस्य परमेश्वरत्वात् स्वतस्सिद्धभगवत्त्वाच्च तं प्रति स्वस्ति स्तादित्याशीर्वचनं कथं युक्तमित्याशङ्क्याह—अतद्विदामिति, भगवत्प्रभावमजानतामित्यर्थः ॥ ६ ॥ ❀ ❀ स हिर-ण्याक्षः तं वाराहमूर्तिं भगवन्तं आत्तरथाङ्गं गृहीतचक्रं निशाम्य दृष्ट्वा युद्धेपि श्रमाभावेन पद्मपलाशवत्प्रसन्नं लोचनं यस्य तथाभूतं अग्रतो व्यवस्थितं च विलोक्य अमर्षेण परिप्लुतानि व्याप्तानि मनश्चक्षुरादीनीन्द्रियाणि यस्य तथाभूतः अतएव श्वसन् श्वासान् विमुञ्चन् स्वस्य दन्तच्छदमोष्ठं आ समन्तात् अदशत् ॥ ७ ॥ ❀ ❀ कराला भयङ्करा दंष्ट्रा यस्य सोऽसुरः क्रोधयुक्ताभ्यां चक्षुर्भ्यां दहन्निव सञ्चक्षाणः पश्यन् इदानीं हतोऽसीति वदन् अभिप्लुत्य झटिति समीपमागत्य स्वगदया हरिमाहनत् ॥ ८ ॥ ❀ ❀ साधूनां संरक्षार्थमेव भगवतः सर्वाऽपि लीलेति सूचयन् सम्बोधयति—साधो इति। यज्ञसूकरः यज्ञावतारवराहमूर्तिर्भगवान् तत्प्रयुक्तां वातरंहसं वायुवेगां तामायान्तीमेव गदां शत्रोस्तस्य मिषतः पश्यत एव सतः सव्येन वामेन पदा लीलयाऽनायासेनैव प्राहरत् हत्वा भूमौ पातितवानित्यर्थः ॥ ९ ॥ ❀ ❀ तत् आयुधमाधत्स्व गृहाण, घटस्व प्रयतस्व, यतस्त्वं जिगीषसीत्याह च, इत्येवं भगवतोक्त सोऽसुरः तयाः पतितया पुनर्गृहीतया गदया भूयः पुनर्भगवंतं ताडयन् भृशं व्यनदत् ॥ १० ॥

### हिन्दी अनुवाद

### हिरण्याक्षवध

मैत्रेयजी कहते हैं—विदुरजी ! ब्रह्माजीके ये कपट-रहित अमृतमय वचन सुनकर भगवान्ने उनके भोलेपनपर मुसकरा-कर अपने प्रेमपूर्ण कटाक्षके द्वारा उनकी प्रार्थना स्वीकार कर ली ॥ १ ॥ ❀ ❀ फिर उन्होंने झपटकर अपने सामने निर्भय

विचरते हुए शत्रुकी ठुड्डीपर गदा मारी। किन्तु हिरण्याक्षकी गदासे टकराकर वह गदा भगवान्‌के हाथसे छूट गयी और चक्कर काटती हुई जमीनपर गिरकर सुशोभित हुई। किंतु यह बड़ी अद्भुत-सी घटना हुई॥ २-३॥ ❀ ❀ उस समय शत्रुपर वार करनेका अच्छा अवसर पाकर भी हिरण्याक्षने उन्हें निरस्त्र देखकर युद्धधर्मका पालन करते हुए उनपर आक्रमण नहीं किया। उसने भगवान्‌का क्रोध बढ़ानेके लिये ही ऐसा किया था॥ ४॥ ❀ ❀ गदा गिर जानेपर और लोगोंका हाहाकार बंद हो जानेपर प्रभुने उसकी धर्मबुद्धिकी प्रशंसा की और अपने सुदर्शनचक्रका स्मरण किया॥ ५॥ ❀ ❀ चक्र तुरंत ही उपस्थित होकर भगवान्‌के हाथमें घूमने लगा। किंतु वे अपने प्रमुख पार्षद दैत्याधम हिरण्याक्षके साथ विशेषरूपसे क्रीडा करने लगे। उस समय उनके प्रभावको न जाननेवाले देवताओंके ये विचित्र वचन सुनायी देने लगे-'प्रभो! आपकी जय हो; इसे और न खेलाइये, शीघ्र ही मार डालिये'॥ ६॥ ❀ ❀ जब हिरण्याक्षने देखा कि कमल-दल-लोचन श्रीहरि उसके सामने चक्र लिये खड़े हैं, तब उसकी सारी इन्द्रियाँ क्रोधसे तिलमिला उठीं ओर वह लंबी साँसें लेता हुआ अपने दाँतोंसे होठ चबाने लगा॥ ७॥ ❀ ❀ उस समय वह तीखी दाढ़ोंवाला दैत्य, अपने नेत्रोंसे इस प्रकार उनकी ओर घूरने लगा, मानो वह भगवान्‌को भस्म कर देगा। उसने उछलकर 'ले' अब तू नहीं बच सकता' इस प्रकार ललकारते हुए श्रीहरिपर गदासे प्रहार किया॥ ८॥ ❀ ❀ साधुस्वभाव विदुरजी! यज्ञमूर्ति श्रीवराहभगवान्‌ने शत्रुके देखते-देखते लीलासे ही अपने बायें पैरसे उसकी वह वायुके समान वेगवाली गदा पृथ्वीपर गिरा दी और उससे कहा, 'अरे दैत्य तू मुझे जीतना चाहता है, इसलिये अपना शस्त्र उठा ले और एक बार फिर वार कर।' भगवान्‌के इस प्रकार कहनेपर उसने फिर गदा चलायी और बड़ी भीषण गर्जना करने लगा॥ ९॥ १०॥

**तां स आपततीं वीक्ष्य भगवान् समवस्थितः। जग्राह लीलया प्राप्तां गरुत्मानिव पन्नगीम्॥ ११॥**
**स्वपौरुषे प्रतिहते हतमानो महासुरः। नैच्छद्गदां दीयमानां हरिणा विगतप्रभः॥ १२॥**
**जग्राह त्रिशिखं शूलं ज्वलज्ज्वलनलोलुपम्। यज्ञाय धृतरूपाय विप्रायाभिचरन् यथा॥ १३॥**

**तदोजसा दैत्यमहाभटार्पितं चकासदन्तःख उदीर्णदीधिति।**
**चक्रेण चिच्छेद निशातनेमिना हरिर्यथा तार्क्ष्यपतत्त्रमुज्झितम्॥ १४॥**
**वृक्णे स्वशूले बहुधारिणा हरेः प्रत्येत्य विस्तीर्णमुरो विभूतिमत्।**
**प्रवृद्धरोषः स कठोरमुष्टिना नदन् प्रहृत्यान्तरधीयतासुरः॥ १५॥**

**तेनेत्थमाहतः क्षत्तर्भगवानादिसूकरः। नाकम्पत मनाक् क्वापि स्रजा हत इव द्विपः॥ १६॥**
**अथोरुधासृजन्मायां योगमायेश्वरे हरौ। यां विलोक्य प्रजास्त्रस्ता मेनिरेऽस्योपसंयमम्॥ १७॥**
**प्रववुर्वायवश्चण्डास्तमः पांसवमैरयन्। दिग्भ्यो निपेतुर्ग्रावाणः क्षेपणैः प्रहिता इव॥ १८॥**
**द्यौर्नष्टभगणाभ्रौघैः सविद्युत्स्तनयित्नुभिः। वर्षद्भिः पूयकेशासृग्विण्मूत्रास्थीनि चासकृत्॥ १९॥**
**गिरयः प्रत्यदृश्यन्त नानायुधमुचोऽनघ। दिग्वाससो यातुधान्यः शूलिन्यो मुक्तमूर्धजाः॥ २०॥**

### श्रीधरस्वामिविरचिता भावार्थदीपिका

हतो मानो गर्वो यस्य॥ १२॥ ❀ ❀ ज्वलन्यो ज्वलनस्तद्वल्लोलुपं ग्रसनव्यग्रम्। यज्ञाय विष्णुमालक्ष्य अकार्यकरत्वे दृष्टांतः। विप्रमुद्दिश्याभिचारं कुर्वन्यथा॥ १३॥ ❀ ❀ अंतःखे आकाशमध्ये चकासत्प्रकाशमानम्। उदीर्णोत्कटा दीधितिर्दीप्तिर्यस्य निशातनेमिना शितधारेण हरिरिंद्रो यथा तार्क्ष्यस्य पतत्रमुज्झितं चिच्छेद देवान्विनिर्जित्यामृतकलशं नयता गरुडेनेन्द्रप्रयुक्तवज्रस्यामोघस्य मानं दातुं पिच्छमेकं त्यक्तं तद्यथेंद्रश्चिच्छेद छिन्नं च तद्यथा खे प्रचकाशे तद्वत्प्रकाशमानमित्यभिसंधिः॥ १४॥ ❀ ❀ अराः संत्यस्येत्यरि चक्रं तेन बहुधा वृक्णे छिन्ने सति प्रत्येत्याभिमुखमागत्य हरेरुरो वक्षः प्रहृत्य॥ १५॥ ❀ ❀ मनागीषदपि क्वाप्यंशे॥ १६॥ ❀ ❀ अस्य जगतः उपसंयमं प्रलयम्॥ १७॥ ❀ ❀ पांसुकृतं तमश्च प्रेरितवंतः क्षेपणैर्यंत्रैः॥ १८॥ ❀ ❀ नष्टो भगणो नक्षत्रसमूहो यस्याम्। अनेन दैत्यबलातिरेकाद्ब्रह्मदत्तमुहूर्तातिक्रमो गम्यते। अह्नि नक्षत्राणामसंभवात्॥१९॥ ❀ ❀ नाना आयुधानि मुंचंतीति तथा यातुधान्यश्च प्रत्यदृश्यंत॥ २०॥

---

१. प्रा० पा०—नैच्छद् ग्रहीतुं सुगमां हरि०।

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

तां गदाम् । गरुत्मान् गरुडः पद्भ्यां न गच्छतीति पन्नगीं सर्पस्त्रीम् ॥ ११ ॥ १२ ॥ ❀ ❀ ज्वलन् ज्वालायुक्तः अभिचारं कुर्वन् कृत्यां प्रयुञ्जन् "यज्ञो वै विष्णुः" इति श्रुतेः ॥ १३ ॥ ❀ ❀ स्मरणादागतं मामरिवधाय किमिति न प्रायुंक्त भगवानिति सुदर्शनचैत्तं जानन्निव तेन त्रिशूलमच्छिनदित्याह—तदिति । तत्त्रिशूलं निशातनेमिनेति । तादृशसहस्रच्छेदेऽपि यन्नैशित्यं न नश्यतीत्यर्थः । हरिरित्युभयत्रान्वेति । एकत्र विष्णुरन्यत्रेन्द्र इत्यर्थः ॥ १४ ॥ ❀ ❀ प्रहृत्य ताडयित्वा सोऽसुरः साक्षाद्युद्धे स्वासामर्थ्यं वीक्ष्य मायाः सृक्ष्यन्नंतर्दध इत्यर्थः ॥ १५ ॥ ❀ ❀ तन्मुष्टिप्रहारेण भगवतः किं पतनादि जातमिति मा शंकीरित्याह—तेनेति । 'स्रङ्मालापुष्पयोर्मता' इति कोशात् ॥ १६ ॥ ❀ ❀ अथांतर्द्धानोत्तरं यां मायाम् ॥ १७ ॥ ❀ ❀ यंत्रैर्भिन्दिपालैः प्रहिताः प्रेरिताः ॥ १८ ॥ ❀ ❀ विद्युतस्तडितः स्तनयित्नवो गर्जितानि तत्सहितैः । "स्तनयित्नुः पुमान्वारिधरेपि स्तनितेपि च" इति मेदिनी । नष्टोऽदृश्यो भगणः ॥ १९ ॥ २० ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

अप्राप्तामेव स्वसमीपे प्राप्तां वा ॥ ११ ॥ १२ ॥ ❀ अभिचारं कुर्वन् यथाहवनीयद्रव्यं गृह्णाति कश्चित् ॥ १३ ॥ ❀ ❀ तद्वत् । छिन्नपक्षवत् प्रकाशमानमिति प्रकाशमात्रांशे दृष्टान्तो ननु गरुडेच्छावत् दैत्येच्छायामपि ॥ १४ ॥ ❀ ❀ प्रवृद्धरोषत्वादिकं वस्तुतस्तदाभास एव प्रहृत्येति कचित् पाठः । प्रहारादिकञ्च भगवतोऽच्छेद्यत्वादिकं ज्ञात्वैवेति ॥१५॥ ❀ ❀ तेन कठोरमुष्टिना अंशेऽङ्गे स्रजा हत इति दृष्टान्तेन तदेव स्पष्टीकृतम् ॥ १६ ॥ ❀ ❀ अथ कम्पाभावज्ञानानन्तरं प्रजा ब्रह्मपुत्रादयः ॥ १७ ॥ ❀ ❀ यन्त्रैर्गोफियेति ख्यातैः प्रहिताः प्रक्षिप्ताः ॥ १८ ॥ ❀ ❀ तादृशी द्यौर्बभूवेति शेषः । अनेन विशेषणेन आतिरेक्यादाधिक्यात् नक्षत्राणां ध्वंसाभावप्रतियोगिनां स्तनयित्नुर्गर्जितं मेघज्योतिराख्यो वा ॥ १९ ॥ २० ॥

### श्रीमद्वीरराघवव्याख्या

तामसुरेण प्रयुक्तामापतन्तीमागच्छन्तीं गदां वीक्ष्य भगवान् गरुत्मान् पन्नगीं सर्पमिव प्राप्तां समीपं प्राप्तां लीलया जग्राह ॥ ११ ॥ ❀ ❀ एवं स्वपौरुषे स्ववीर्ये प्रतिहते विहते सति हतः विगतः मानो गर्वो यस्य सोऽसुरः अतः एव विगत-प्रभः विनष्टतेजाः हरिणा दीयमानामपि गदां नैच्छत् ग्रहीतुमिति शेषः ॥ १२ ॥ ❀ ❀ किंतु त्रिशिखं तिस्रः शिखा अग्रभागा यस्य तं ज्वलन् यो ज्वलनः अग्निस्तद्वल्लोलुपं स्वकार्यकरणव्यग्रं शूलं धृतवाराहरूपाय यज्ञाय यज्ञमूर्तये जग्राह प्राहिणोत् यज्ञाय धृतरूपायेति सर्वयज्ञलिङ्गे सर्वयज्ञभोक्तरि तत्फलप्रदे स्वेच्छोपात्ताप्राकृतदिव्यवराहरूपे भगवति शूलस्य स्वकार्य्यकरणं सूचितम् । एतदेव दृष्टान्तेन स्पष्टयति । विप्राय ब्रह्मविद्विप्रमुद्दिश्य अभिचरन्मारणयोगं कुर्वन् यथा न मारयति तथा इत्यर्थः । ज्वलन् समिद्धः ॥ १३ ॥ ❀ ❀ ओजसा वीर्येण दैत्यानां मध्ये महाभटेन महाशूरेणार्पितं प्रयुक्तम् । उदीर्णा उद्गता दीधितयो यस्य तदन्तः खे आकाशमध्ये चकासतं प्रकाशमानं तत्त्रिशूलं निशातनेमिना निशितधारेण चिच्छेद हरिरिन्द्रो यथा तार्क्ष्यपतत्रं तार्क्ष्येणोज्झितं त्यक्तं पक्षमिवेत्यर्थः । पुरा खलु देवान्निर्जित्यामृतकलशं नयता गरुडेनेन्द्रप्रयुक्तस्य वज्रायुधस्यामोघस्य मानं दातुं पत्रमेकं त्यक्तं तच्चेन्द्रो वज्रेण चिच्छेदेतीतिहासोऽत्रानुसन्धेयः ॥ १४ ॥ ❀ ❀ अरिणा चक्रेण स्वशूले बहुधा वृक्णे छिन्ने सति प्रवृद्धः रोषो यस्य सोऽसुरः प्रत्येत्याभिमुखमागत्य स्वकठिनतरमुष्टिना विभूतिमल्लक्ष्म्या आश्रयभूतं विस्तीर्णं हरेर्भगवतः उरः वक्षः प्रहृत्य प्रताड्यान्तरधीयतान्तर्हितवान् ॥ १५ ॥ ❀ ❀ हे क्षत्तः ! तेनासुरेणेत्थं मुष्टिना आहतस्ताडित आदिवाराहो भगवान्मना-गीषदपि नाकम्पत न चलितवान्स्रजा पुष्पदाम्ना हतो गज इवेति ॥ १६ ॥ ❀ ❀ अथान्तर्द्धानानन्तरं योगमायेश्वरे युज्यन्ते इति योगाः तासां मायानामीश्वरे स्वसम्बन्धिनीनामाश्चर्यशक्तीनां नेतरि हरौ भगवत्युरुधा माया असृजत् । कथंभूतां मायामसृ-जदित्यत्राह । यां विलोक्य दृष्ट्वा त्रस्ता भीताः सर्वाः प्रजा अस्य विश्वस्योपसंयमं प्रलयं मेनिरे अमन्यन्त ॥ १७ ॥ ❀ ❀ मायाः प्रपञ्चयति । प्रववुरित्यादिभिश्चतुर्भिः । प्रचण्डाः प्रचण्डवायवः पांसवं पांसुकृतं तम ऐरयन् प्रसृतवन्तः सन्तः प्रववुः ग्रावाणः अश्मानः दिग्भ्यः क्षेपणैः यन्त्रविशेषैः प्रहिताः प्रयुक्ता इव निपेतुः ॥ १८ ॥ ❀ ❀ पूयं दुर्गन्धि असृक् रक्तं विट्विष्ठापूयादीनसकृत्पुनः पुनः वर्षद्भिः सविद्युत्स्तनयित्नुभिः विद्युत्सहितं यथा तथा ध्वनयद्भिर्मेघौघैः नष्टभगणा नष्टो नक्षत्रगणो यस्याः तथाभूताभूदित्यर्थः । नष्टभगणेत्यनेन चतुर्मुखोक्तसंध्यावेलातिक्रमः सूचितः, अह्नि नक्षत्राणामसम्भवादिति भावः ॥ १९ ॥ ❀ ❀ गिरयः पर्वताः नानायुधमुचः नानायुधानि मुञ्चन्तः प्रत्यदृश्यन्त दृष्टा बभूवुः तथा यातुधान्यश्च प्रत्यदृश्यन्त कथंभूता दिग्वाससः दिगम्बराः शूलिन्यः शूलधारिण्यः मुक्ताः प्रसारिताः मूर्द्धजाः केशा यासां ताः ॥ २० ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली ।

हरिरपि युद्धलाघवं दर्शयतीत्याह । तां स इति ॥ ११ ॥ ❀ ❀ दैत्यस्याभिमानमुद्गलयति । स्वपौरुष इति ॥ १२ ॥ ❀ ❀ ततः किञ्चकारेति तत्राह । जग्राहेति । अभिचरन् कृत्यां प्रयुञ्जानः ॥ १३ ॥ ❀ ❀ स्मरणादागतं मां वैरिविधाय

किमिति न प्रायुङ्क्त भगवानिति सुदर्शनचैत्तं जानन्निव तेन शूलमच्छिनदित्याह । तदेति । यदोजसा बलेन दैत्येन महाभटेनार्पितं मुक्तं तदा भगवान्निशाततनेमिना उत्तेजितधारेणानेनानेकसंख्यापरिच्छेदनेऽप्यस्य नैशित्वनाशो नास्तीति सूचनेन हरिचक्रस्य हरेरिवातिमाहात्म्यमुक्तं चक्रेण शूलं चिच्छेदेत्यन्वयः । आत्मस्पर्शात्पूर्वमेवाच्छिनदिति द्योतनायोक्तमन्तः ख इति अन्तः खे आकाशमध्ये उदीर्णा दीधितिर्यस्य तत्तथोक्तमनेन हरिचक्रादन्येनाच्छेद्यत्वमुद्द्योतितं मन्दबुद्धयवतारार्थं निकृष्टमपि दृष्टान्तयति । हरिरिति । दधीचेर्महामुनेरस्थ्ना विरचितवज्रस्यामोघत्वेन तदच्छेदे मुनेरवज्ञानिमित्तकोपभयात् गरुडेनोज्झितं पतत्रमिन्द्रोऽच्छिनदिति तदिहोच्यते हरिरित्यादिना ॥ १४ ॥ ❀ ❀ किं दैत्य आयुधाभावादधावदिति तत्राह । वृक्ण इति । वृक्णे छिन्ने विभूतिर्लक्ष्मीरस्यास्तीति विभूतिमत् प्रहृत्य प्रहारं कृत्वा असुरः मायया असनशीलः असेरुरदिति सूत्रादसुक्षेपण इति धातोस्ताच्छील्यार्थ उरत्प्रत्ययो भवति ॥ १५ ॥ ❀ ❀ दैत्यमुष्टिप्रहारेण किं हरिणा पतितं मूर्च्छितं पलायितमिति विदुरस्य मानसीं शङ्कां परिहरति । तेनेति । द्वाभ्यां पिबतीति द्विपो गजः ॥ १६ ॥ ❀ ❀ अन्तर्धाय दैत्येन किमकारीति तत्राह । अथेति । योगमायेश्वरस्वरूपभूतानामणिमादिमहिम्नामधिपताविल्यनेनासुर्यो माया हरेर्बाधिका न स्युरिति सूचितम् । अस्य विश्वस्योपसंयमं प्रलयम् ॥ १७ ॥ ❀ ❀ पांसवं धूलिमयं क्षेपणैः पाषाणक्षेपणैः पाषाणक्षेपणयन्त्रैः ॥ १८ ॥ ❀ ❀ द्यौर्व्योमाभ्रौघैर्मेघजालैर्विद्युत्तडित्स्तनयित्नवो गर्जन्मेघा विद्युतस्तनयित्नवस्तैः सह वर्तन्त इति तैः ॥ १९ ॥ ❀ ❀ युधसंप्रहार इति धातोः नानायुधानि नानाविधसंप्रहारान् मुञ्चन्तीति । दिग्वाससो नग्नाः ॥ २० ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

यज्ञायेति । यज्ञो विष्णुस्तदर्थं लक्ष्यीकृत्येत्यर्थः । विप्रार्थं विप्रमुद्दिश्य अभिचरन् यथा हवनीयद्रव्यं गृह्णाति तद्वत् ॥ ११ ॥ ❀ ❀ दैत्यमहाभटेन हिरण्याक्षेण अर्पितं क्षिप्तम् । उज्झितमिति तार्क्ष्यपतत्रस्य त्यक्तत्वमात्रांशे तात्पर्यम् । न तु तद्वदिच्छयैव तत्सिद्धमित्यंशेऽपि ॥ १२ ॥ ❀ ❀ वृक्ण इत्यादिषु पूर्वपूर्ववत् क्रोधाधिकं तदाभास एव । प्रहारादिकञ्च महासारत्वं ज्ञात्वैव ॥ १३ ॥ ❀ ❀ तथैवानन्तरमाह । तेनेत्थमिति । आदिः परमकारणरूपश्चासौ शूकराकृतिश्चेति ॥ १४ ॥ १५ ॥ ❀ ❀ प्रजाः ब्रह्मपुत्रादयः ॥ १६ ॥ १७ ॥ ❀ ❀ स्तनयित्नुरत्र मेघज्योतिराख्यः । कर्त्तरि प्रयोगात् ॥ १८-२४ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी ।

तां गदाम् ॥ ११ ॥ १२ ॥ ❀ ❀ ज्वलत् ज्वालायुक्तं ज्वलनो वह्निस्तद्वल्लोलुपं प्रसनव्यग्रं यज्ञाय मूर्त्तिमन्तं यज्ञमिव हन्तुम् ॥ १३ ॥ ❀ ❀ चकासद्दीप्यमानमन्तर्यस्य तथा खे आकाशे उदीर्णा उद्गता बहिरपि दीधितयो यस्य तत् । यद्वा । चकासत्यः अन्तः खे आकाशमध्ये उदीर्णा दीधितयो यस्य तत् निशाततनेमिना तीक्ष्णधारेण हरिरिन्द्रो यथा तार्क्ष्यस्य गरुडस्य पतत्रं पक्षमुज्झितं त्यक्तं चिच्छेद देवान् जित्वा अमृतकलशं नयता गरुडेन इन्द्रप्रयुक्तवज्रस्यामोघत्वरक्षणार्थं पिच्छमेकं त्यक्तं तद्यथा इन्द्रश्चिच्छेद छिन्नञ्च यथा खे प्रकाशते तद्वत् प्रकाशमानमित्यपि सम्बन्धः ॥ १४ ॥ ❀ ❀ वृक्णे छिन्ने उरः प्रहृत्य साक्षाद्युद्धे स्वसामर्थ्याभावमवधार्य मायाः स्रक्ष्यन्नन्तर्दधौ ॥ १५ ॥ ❀ ❀ मनाक् ईषदपि काप्यंशे ॥ १६ ॥ ❀ ❀ असृजत् ससर्ज । अस्य विश्वस्य उपसंयमं प्रलयम् ॥ १७ ॥ ❀ ❀ नष्टभगणेत्यनेन युद्धकुतूहलिना भगवता ब्रह्मदत्तमुहूर्तस्यातिक्रमो गम्यते ॥ १८॥ ❀ ❀ नाना- धमुचो यातुधान्यश्च प्रत्यदृश्यन्त ॥ २० ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

हतमानः हतगर्वः ॥ १२ ॥ ❀ ❀ अभिचरन् अभितोऽभिचरन् विप्राय ब्रह्मणो घ्राणेन्द्रियजातत्वाद्यज्ञाय विष्णवे यथा यथावत् शूलं जग्राह ॥ १३ ॥ ❀ ❀ अन्तःखे खमध्ये चकासत् प्रकाशमानमुदीर्णा उत्कटा दीधितिर्यस्य तत् शूलं चिच्छेद हरिरिन्द्र उज्झितं श्रीगरुडेन त्यक्तं तार्क्ष्यपतत्रं गरुडपिच्छं यथा चिच्छेद तद्वत् इदमादिपर्वणि भारते द्रष्टव्यममृताहरणप्रकरणे ॥ १४ ॥ ❀ ❀ अरिणा चक्रेण वृक्णे छिन्ने ॥ १५ ॥ ❀ ❀ काप्यङ्गे ॥ १६-१७ ॥ ❀ ❀ पांसवं रेणुकृतं तमश्च ऐरयन् प्रेरितवन्तः ॥ १८ ॥ ❀ ❀ नष्टो भगणो यस्यां सा दैत्यमाययैव रात्रिप्रतीतिः दिवि भगणनाशप्रतीतिश्च यत्तु अनेन दैत्यबलातिरेकात् ब्रह्मदत्तमुहूर्तातिक्रमो गम्यते अहि नक्षत्राणामसंभवादित्युक्तं तन्न । "अवधार्य विरञ्चस्य निर्व्यलीकामृतं वचः । प्रहस्य प्रेमगर्भेण तदपाङ्गेन सोऽग्रहीत् ॥" इति ब्रह्मणो मुहूर्तनिवेदनस्य भगवतस्तत्स्वीकारस्य च वैयर्थ्यप्रसंगात् ॥ १९ ॥ २० ॥ २१ ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

**अस्यापि प्रतीकारमाह—स तामापततीमिति । पूर्वं तस्य विचारः 'दैवगत्या भूमौ पतिता गदा, न तु बुद्धिपूर्वकं तेन तथा कृतमिति' अतो मारणम् । एतज्ज्ञात्वा द्वितीयवारं भगवान् प्रकारान्तरं कृतवान् इत्याह—**

स तामापततीं वीक्ष्येति। गदामुपरि पतन्तीं वीक्ष्य तिरोभावादिकमकृत्वा यथापूर्वमेव सम्यगवस्थितः। ततः प्राप्तां स्वोपरि समागतां तां गदां लीलया जग्राह। उभयोरभिप्रायं समर्थयंस्तथाकरणमुपपादयति दृष्टान्तेन—गरुत्मानिव पन्नगीमिति। पन्नगी हि 'गरुडो मया भक्षणीयः, अस्मत्पतिपुत्रादि हन्ति' इति शीघ्रमायाति; गरुडस्तु 'भक्ष्यं मया प्राप्तम्' इति मोदकवत्तां गृह्णाति। एवं वेगेन समागतां मारणार्थमागतां क्रीडार्थं गृहीतवानित्यर्थः॥ ११॥ ❀ ❀ एवं प्रतीकारमुक्त्वा तेन तस्य मध्यमभावोऽपि गत इत्याह—स्वपौरुष इति। पुरुषो हि स्वतन्त्रः, तस्य परप्रतिबन्धरहितं यत्सामर्थ्यम्। तत्पौरुषं यदा पुनः पुरुषान्तरसामर्थ्येनोपहन्यते तदोपहतं भवति। अन्तस्तस्य नाशे बहिश्च कार्यं न भवति। पौरुषं तु पूर्वमेव नष्टमिदानीं ज्ञातमित्यर्थः। बलवता वा प्रतिबद्धम्। स्वशब्देनाऽत्र गदाकृतं तद्द्वारा स्वगतम्। अस्य क्षत्रियत्वात् शस्त्रद्वारैवाऽभिमानो मुख्यः, अतस्तस्मिन् प्रतिहते हतमानोऽपि जातः। तदाऽभिमानाभावात् पराश्रयं कृतवान्। असुरस्तु क्रूरः, शरीरबलमपि तस्य सहजं भवति; अयं तु महासुरः, असुरदेवाङ्कधवरः; अतोऽस्य पौरुषद्वयमवशिष्यत इत्युक्तं भवति। अतएव पुनर्दीयमानामपि गदां नैच्छत्। यदि गृह्णीयात्, कियत्कालं युद्धमपि कुर्यात्। भगवत्तेजसा संबद्धत्वात् देवतान्तरसामर्थ्याविर्भावादग्रहणम्। एवं ज्ञात्वैव भगवताऽपि दीयते; देवतान्तरसम्बन्धो माऽस्त्विति वा। दाने हेतुः—हरिणेति। तदा भगवतो दया तस्मिन् जाता। पूर्वं वैष्णवं तेजस्तस्मिन् स्थितमिति प्रभा स्थिता, गदाद्वारा च समागता; पुनश्चेद् गृह्णीयात् पुनः प्रतिसंक्रामेत्। तदाभावात् विशेषेण गता प्रभा यस्य तादृशो जात इत्यर्थः॥ १२॥ ❀ ❀ तदा देवान्तरवरप्राप्तं शूलं गृहीतवानित्याह—जग्राहेति। शूलं सूच्यग्रम्। भेदकमग्रत्रयमु[१]क्तम्। त्रिशिखं त्रिशूलमिति यावत्। शिखापदप्रयोगोऽग्निवद्दाहकमपि तदिति सूचयितुम्, अन्यथा देवताप्राप्तं न स्यात्। ज्वलन् यो ज्वलनः, तद्वल्लोलुपम्। अनेन सुदर्शनवदस्यापि लज्जेव जाता, न चेत् प्रतीकारार्थं स्वयमेव प्रवर्तितुमिच्छति। देवताप्रेरणयेति सूचितम्। तामसी शक्तिर्वा कृत्यारूपाऽत्र प्रवर्तत इति तथात्वम्। देवता ह्युपजीव्यव्यतिरेकेणाऽन्यत्र शक्ता। सर्वासामेव देवतानां यज्ञ उपजीव्यः, तत्रापि साक्षात्प्रकटः; तद्विरोधे स्वात्मैव न सिद्ध्येत्। तमेव मारयितुम्, तेनैव, यो यतते स भ्रान्तः। उपजीव्यत्वं दृष्टान्तेन स्पष्टयति—विप्रायाऽभिचरन् यथेति। अभिचारो हि मन्त्रसाध्यः, स च ब्राह्मणाधीनः; तेनैव मन्त्रेण तस्यैव ब्राह्मणस्याऽपराधकरणं न युज्यत इत्यर्थः॥ १३॥ ❀ ❀ ततः किं जातमित्याकांक्षायामाह—तदोजसेति। ओजोऽत्र देवताप्राप्तं तेजो मनसि स्थितम्। देवताप्राधान्यख्यापनाय दैत्यस्य भटत्वम्; देवतायाः प्रेरणसामर्थ्याय महाभटत्वम्; भगवति विरोधख्यापनाय दैत्यत्वम्। अर्पितमिति। समर्पितम्; अन्यथा देवतान्तरभजनदोषः स्यादिति परमार्थः। खे आकाशे चकासत् प्रकाशयुक्तम्। अन्तरुदीर्णा दीधितिर्यस्य। रुद्रा ह्यन्तरिक्षदेवाः, तत्रैव च तेषां शोभा। अन्तर्दीधितिवर्णनं तस्या देवताया उत्साहज्ञापनार्थम्, स्वस्थाने तस्य बलं बहु भवतीति। स्थानान्तरे तस्य बलक्षये हानिर्युक्तेति शङ्काव्यावृत्त्यर्थं तत्रैव चक्रेण चिच्छेद। ननूभयोः सजातीयत्वात् कथमन्येनाऽन्यस्य च्छेदनम्? तत्राऽऽह—निशातनेमिनेति। निशाता[२] तीक्ष्णा नेमिर्यस्य। ननु कल्पान्तरे सुदर्शनस्य महादेवांशत्वात् कथं तेन शूलप्रतिघात इत्याशङ्क्याऽऽह—हरिरिति। सर्वदुःखहरणार्थं भगवानेव तथा कृतवानित्यर्थः। भगवतोऽपि देवतातिक्रमोऽयुक्त इति चेत्तत्राऽऽह—हरिर्यथेति। यथा इन्द्रः। तार्क्ष्यस्य गरुडस्य पतत्रं पक्ष[३] तेनैवोज्झितं यथा छिनत्ति, तद्वत्। वज्रमप्यप्रतिहतम्, गरुडोऽप्यवध्यः; तथाप्युभयरक्षार्थं तेनैकं पतत्रं त्यक्तम्; तथा भगवताऽपि महादेवेन तत् शूलं त्यक्तं सुदर्शनसत्यत्वाय। अतो न कोऽपि विरोधः। देवता तत् शूलं परित्यज्य अन्यत्र गतेत्यर्थः। एवं देवबलमपि निराकृतम्॥ १४॥ ❀ ❀ ततः स्वसामर्थ्यं प्रकटितवानित्याह—वृक्णे स्वशूल इति। देवताया गतत्वात् स्वस्यैव शूलं वृक्णम्। अरिणा चक्रेण। तस्य सामर्थ्यं पूर्वमुक्तम्। हरेरिति संबन्धिसामर्थ्यात् नोपजीव्यविरोधः। लक्ष्मीलोभादेवसहमुपेक्षित इति ज्ञापयन्निव[४] विभूतिमत् इत्युक्तम्। भगवद्वक्षो मुष्टिना प्रहृत्याऽन्तरधीयतेति संबन्धः। प्रतिकूलतया आगमनं मोक्षाभावं सूचयति, अन्यथा 'मामुपेत्य तु कौन्तेय' इति वाक्यात् भगवत्समीपे गतस्य कृतार्थतैव स्यात्। उरो मर्मस्थानम्। विस्तीर्णमिति सर्वमुष्टिसंबन्धार्थे; विशेषेण स्तीर्णं वा संवरणाशक्यम्। ननु शस्त्रे हते किमनेन भविष्यतीत्याशङ्क्याऽऽह—प्रवृद्धरोष इति। प्रकर्षेण वृद्धो यो रोषः, तेन विचारो न जात इति। ननु क्रोधेऽपि कथं विचारस्य न प्रवृत्तिः? तत्राऽऽह—स इति। पूर्वोक्तः। अतो विवेकाद्यभावात् न विचारोत्पत्तिः। मुष्टेः साधनत्वायाऽऽह—कठोरेति। अनेन तस्य महत्त्वं सूचितम्। नदन्निति स्वात्मानं ज्ञा[४]पयन्ननवधानव्यावृत्त्यर्थम्। सर्वस्मिन्नपि बले क्षीणे अ[५]सुरत्वात् प्रहृत्याऽन्तरधीयत। अस्य प्रतीकारे किमवशिष्यत इति तिरोधानम्॥१५॥ ❀ ❀ अप्रतीकारे सति प्रत्याहारेण किं कृतमित्याशङ्कायामाह—तेनेत्थमाहत इति। क्षत्तरिति संबोधनं विवेकित्वज्ञापनार्थम्। यथा पुत्रेण ताड्यते, यथा वा स्त्रिया स्रजा। भगवानिति अकिञ्चित्कारे हेतुः। अवताररूपेऽपि विचार्यमाणे न मुष्टिप्रहारेण किञ्चिन्नश्यति। तत्राऽप्यादिसूकरोऽतिकठिनः। मनागपि नाऽकम्पत। पश्वादिदेहेषु मक्षिकोपवेशेन कम्पो भवति। प्रहारस्याऽधमं कार्यं कम्पः; तत्राऽप्येकदेशे; तत्राऽपि श्वासेन देहचलनवन्मनाक्; तदपि न। साधनस्य साध्याजननं कथं संगच्छत इत्याशङ्क्याऽऽह—स्रजा हत इव द्विपः। न हि स्रजा हतो हस्ती कम्पते। न प्रहारमात्रं दुःखजनकम्, किन्त्वल्पस्य महत्; तथा चेत् प्रकृतेऽपि तुल्यमित्यर्थः॥ १६॥ ❀ ❀ एवं तस्य सहजं युद्धमुक्त्वा

---

१. युक्तम् ख. घ. । २. निशातस्तीक्ष्णः ग. । ३. इति ग. । ४. ख्यापयन् ख. ग. । ५. आसुरत्वात् ख. घ. ।

मायिकमाह—अथोरुधेति। प्रकारान्तरेण नानाप्रकारां दैत्यानामुपास्यभूतां मायामसृजत्। 'मायेत्यसुराः, तद्वै तान् भूत्वाऽवति' इति श्रुतेः। भगवन्मोहनार्थं मायानिर्माणम्; परं भ्रान्तः। अन्यत्रैवैतत् कर्तव्यम्, न तु योगमायाया ईश्वरे। [1]सर्वा माया योगमायाया अंशाः, तस्या अपि भगवानीश्वरो नियन्ता; तत्रापि सर्वदुःखहर्ता। अन्याश्च मायाः प्राणिनां दुःखदाः; अतो विचार्योऽपि, लीनामपि, मायां परदुःखदां हन्ति। तत्र स्वस्य सर्वस्वभूतां चिन्मायां भगवन्निकटे योजयेत्, तदा तां मारयन् स्वस्य सर्वस्वमेव नाशयेदिति तस्य दुर्बुद्धित्वप्रतिपादनार्थं सप्तम्यन्तं पदद्वयम्। तर्हि किमिति प्रयुक्तवानित्याशङ्क्य, लोके माया जये परमसाधनमिति। तस्याः स्वरूपं गुणाश्च वक्तव्याः, तत्र गुणानाह—यां विलोक्येति। यां मायां विलोक्य, सर्वा एव प्रजाः, स्ववधशङ्कया प्रथमतो भीताः, पश्चान्महतीं दृष्ट्वा अस्योपसंयममेव मेनिरे। जगतः प्रलय एव जात इति ज्ञातवत्यः॥ १७॥ ❀ ❀ मायायाः स्वरूपमाह—प्रववुरिति। चण्डा वायवोऽसह्याः, प्रकर्षेण ववुः-वान्ति स्म। किञ्च, पांसवं तम ऐरयन् प्रकटितवन्तः। तथा पांसुवृष्टिर्जाता, यथा महान्धकारो भवति। तृतीयं रूपमाह—दिग्भ्यो निपेतुर्ग्रावाण इति। सर्वतः पाषाणा अपतन्। ते पाषाणाश्च न करकावत् पतन्ति, किन्तु क्षेपणेन-दुर्गादिस्थयन्त्रेणौपधबलेन-यथा पतन्ति क्षेपणैः प्रहिताः प्राणिनो घातयन्ति, तद्वदित्यर्थः। एषा माया तामसी त्रिविधा॥ १८॥ ❀ ❀ राजसीमाह—द्यौर्नष्टभगणेति। स्वर्गो मेघैः कृत्वा नष्टज्योतिश्चक्रो भवति। अभ्रौघैरिति मेघानामवान्तरजातिभेदा उक्ताः। विद्युतस्तडितः, स्तनयित्नवो गर्जितानि, ताभ्यां सहितैः [2]सात्त्विकैः। [3]राजसतामसयोर्द्धर्मयोरत्र सहभावः प्राणिगर्भवधार्थः। मेघानां कार्यमाह—वर्षद्भिरिति। षड् मलानि वर्षन्ति पूयादीन् ( ? )। पूयकेशासृजः एकप्रकारा, भयानका बीभत्साः; विण्मूत्रास्थीनि केवलबीभत्सानि। चकारादन्यान्यपि भयानकानि। असकृद्वारं वारमिति सहजत्वज्ञापकम्॥ १९॥ ❀ ❀ सात्त्विकीमाह—गिरय इति। नानायुधमुचः खड्गादीन्यनेकान्यायुधानि मुञ्चन्तीति, साक्षान्मारकत्वं साधनतोऽपीति। अनघेति संबोधनं विश्वासार्थं च। सात्त्विकमायाया आधिदैविकान्याह—दिग्वासस इति। यातुधान्यो राक्षस्यः, स्वभावतो भयानकाः; दिगम्बराः स्वरूपतोऽमङ्गलाः; शूलिन्यो गृहीतशूलाः साधनतो घातुकाः; मुक्तमूर्द्धजा मुक्तकेशाः, रूपतो भयानकाः॥ २०॥

## श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

जग्राहेत्यत्र। उपजीव्यव्यतिरेकेणाऽन्यत्र शक्तेति। उपजीव्यभिन्ने एव शक्तेत्यर्थः॥ १३॥ ❀ ❀ तदोजसेत्यत्र। सजातीयत्वादिति। 'रुद्रात्प्राप्तं चक्रम्' इति पक्षे रौद्रत्वेन, अन्यथा तु तेजोरूपत्वेन साजात्यात्॥ १४॥ ❀ ❀ वृक्ण इत्यत्र। किमवशिष्यत इति। अर्थात् किमपि नाऽवशिष्यते इत्यर्थः॥ १५॥ ❀ ❀ अथोरुधेत्यत्र। माया जये इत्यत्र मायेति भिन्नं पदम्॥ १७॥

## श्रीगिरिधरकृता बालप्रबोधिनी

तां तेन प्रयुक्तां गदां आपततीमागच्छन्तीं वीक्ष्य स भगवान् सम्यक् सम्मुखमवस्थित एव प्राप्तां समीपमागतां गदां लीलयैव जग्राह। तत्र दृष्टान्तमाह—पन्नगीं गरुत्मान् गरुड इवेति॥ ११॥ ❀ ❀ एवं गदाग्रहणेन स्वपौरुषे प्रतिहते स्वबले प्रतिबद्धे सति हतः विगतः मानो गर्वो यस्य स अतएव विगतप्रभः विनष्टतेजाः महासुरो हिरण्याक्षो हरिणा दीयमानामपि स्वगदां लज्जया नैच्छत् न जग्राह॥ ११॥ ❀ ❀ किन्तु त्रिशिखं तिस्रः शिखा अग्रभागाः यस्य तत् ज्वलन् यो ज्वलनोऽग्निस्तद्वल्लोलुपं स्वकार्यकरणव्यग्रं शूलं धृतवराहरूपाय यज्ञाय भगवते जग्राह प्राहिणोत्। भगवति तत्प्रयोगस्य स्वानर्थपर्यवसायित्वं सूचयन् दृष्टान्तमाह—विप्रायेति, ब्रह्मविदं विप्रमुद्दिश्य अभिचरन् मरणयागं कुर्वन् यथा तथेत्यर्थः॥ १३॥ ❀ ❀ दैत्यानां मध्ये महाभटेन महाशूरेण ओजसा बलेन अर्पितं प्रयुक्तं उदीर्णा उद्गता दीधितिर्दीप्तिर्यस्य तत् अन्तःखे आकाशमध्ये चकासत् प्रकाशमानं तत् त्रिशूलं निशातनेमिना तीक्ष्णधारेण चक्रेण भगवान् चिच्छेद। तत्र दृष्टान्तमाह—हरिर्यथेति। हरिरिन्द्रो यथा तार्क्ष्यस्य गरुडस्य उज्झितं त्यक्तं पतत्रं पक्षं चिच्छेद तथेत्यर्थः। पुरा खलु देवान्निर्जित्यामृतकलशं नयता गरुडेन इन्द्रप्रयुक्तस्य वज्रस्यामोघस्य मानं दातुं पतत्रमेकं त्यक्तं तच्चेन्द्रो वज्रेण चिच्छेदेतीतिहासोऽत्र अनुसन्धेयः॥ १४॥ ❀ ❀ अरिणा अराः सन्त्यस्येत्यरिचक्रं तेन स्वशूले बहुधा वृक्णे छिन्ने सति प्रवृद्धो रोषो यस्य सोऽसुरः नदन् प्रत्येत्य अभिमुखमागत्य कठोरेण कठिनतरेण मुष्टिना विभूतिमत् लक्ष्म्याश्रयभूतं विस्तीर्णं हरेर्वाराहस्य उर वक्षः प्रहृत्य प्रताड्य अन्तरधीयत अन्तर्हितवानित्यन्वयः॥ १५॥॥ ❀ ❀ हे क्षत्तः तेनासुरेणेत्थं मुष्टिना आहतस्ताडितः आदिवराहरूपो भगवान् मनाक् ईषदपि क्वाप्यंशे नाकम्पत। तत्र दृष्टान्तमाह—स्रजा पुष्पमालया हतो द्विपो गज इवेति॥ १६॥ ❀ ❀ अथान्तर्धानानन्तरं योगमायानां अचिन्त्यशक्तीनां ईश्वरे नियन्तरि हरौ उरुधा बहुधा मायामसृजत्। तां विशिनष्टि—यां मायां विलोक्य त्रस्ताः प्रजाः अस्य विश्वस्य उपसंयमं प्रलयं मेनिरे॥ १७॥ ❀ ❀ तां मायामेव प्रदर्शयति—प्रववुरिति चतुर्भिः। प्रचण्डाः प्रचण्डवेगाः दुस्पर्शा वायवो ववुः। पांसवं पांसुकृतं तमोऽन्धकारमैरयन् वायव एव प्रेरितवन्तः। ग्रावाणः पाषाणाः क्षेपणैर्यन्त्र-

---

१. एतान् ख. ग। २. अन्याः ख.। ३. इदं नाऽस्ति ग० घ०। ४. सात्त्विकराजसयोः ग०।

विशेषैः प्रहिताः प्रयुक्ता इव दिग्भ्यो निपेतुः ॥ १८ ॥ ❀ ❀ पूयादीन् असकृत् पुनःपुनर्वर्षद्भिः सविद्युत्स्तनयित्नुभिः विद्युतस्तडितः स्तनयित्नवो गर्जितानि तत्सहितैः अभ्रौघैः मेघैः नष्टो भगणो नक्षत्रगणो यस्यास्तथाभूता द्यौरभूत् । पूयं दुर्गन्धि । असृक् रक्तम् । विट् विष्ठा । नष्टभगणेत्यनेन ब्रह्मोक्तसन्ध्यावेलातिक्रमः सूचितः । अह्नि नक्षत्रासम्भवात् ॥ १९ ॥ ❀ ❀ गिरयः पर्वताः नानायुधमुचः नानायुधानि मुञ्चन्तः प्रत्यदृश्यन्त । तथा यातुधान्यश्च प्रत्यदृश्यन्त । भयङ्करत्वेन ताः वर्णयति—दिग्वाससो नग्ना इत्यादि । तस्य निर्विकारित्वेन सम्बोधयति—अनघेति ॥ २० ॥

### हिन्दी अनुवाद

गदाको अपनी ओर आते देखकर भगवान्‌ने, जहाँ खड़े थे वहीं उसे आते ही अनायास इस प्रकार पकड़ लिया, जैसे गरुड़ साँपिनको पकड़ ले ॥ ११ ॥ ❀ ❀ अपने उद्यमको इस प्रकार व्यर्थ हुआ देख उस महादैत्यका घमंड ठंडा पड़ गया और उसका तेज नष्ट हो गया । अबकी बार भगवान्‌के देनेपर उसने उस गदाको लेना न चाहा ॥ १२ ॥ ❀ ❀ किंतु जिस प्रकार कोई ब्राह्मणके ऊपर निष्फल अभिचार ( मारणादिप्रयोग ) करे—मूठ आदि चलाये, वैसे ही उसने श्रीयज्ञपुरुषपर प्रहार करनेके लिये एक प्रज्वलित अग्निके समान लपलपाता हुआ त्रिशूल लिया ॥ १३ ॥ ❀ ❀ महाबली हिरण्याक्षका अत्यन्त वेगसे छोड़ा हुआ वह तेजस्वी त्रिशूल आकाशमें बड़ी तेजीसे चमकने लगा । तब भगवान्‌ने उसे अपनी तीखी धारवाले चक्रसे इस प्रकार काट डाला, जैसे इन्द्रने गरुड़जीके छोड़े हुए तेजस्वी पंखको काट डाला था[1] ॥ १४ ॥ ❀ ❀ भगवान्‌के चक्रसे अपने त्रिशूलके बहुत-से टुकड़े हुए देखकर उसे बड़ा क्रोध हुआ । उसने पास आकर उनके विशाल वक्षःस्थलपर, जिसपर श्रीवत्सका चिह्न सुशोभित है, कसकर घूँसा मारा और फिर बड़े जोरसे गरजकर अन्तर्धान हो गया ॥ १५ ॥ ❀ ❀ विदुरजी ! जैसे हाथीपर पुष्पमालाकी चोटका कोई असर नहीं होता, उसी प्रकार उसके इस प्रकार घूँसा मारनेसे भगवान् आदिवराह तनिक भी टस-से-मस नहीं हुए ॥ १६ ॥ ❀ ❀ तब वह महामायावी दैत्य मायापति श्रीहरिपर अनेक प्रकारकी मायाओंका प्रयोग करने लगा, जिन्हें देखकर सभी प्रजा बहुत डर गयी और समझने लगी कि अब संसारका प्रलय होनेवाला है ॥ १७ ॥ ❀ ❀ बड़ी प्रचण्ड आँधी चलने लगी, जिसके कारण धूलसे सब ओर अन्धकार छा गया । सब ओरसे पत्थरोंकी वर्षा होने लगी, जो ऐसे जान पड़ते थे मानो किसी क्षेपणयन्त्र ( गुलेल ) से फेंके जा रहे हों ॥ १८ ॥ ❀ ❀ बिजलीकी चमचमाहट और कड़कके साथ बादलोंके घिर आनेसे आकाशमें सूर्य, चन्द्र आदि ग्रह छिप गये तथा उनसे निरन्तर पीब, केश, रुधिर, विष्ठा, मूत्र और हड्डियोंकी वर्षा होने लगी ॥ १९ ॥ ❀ ❀ विदुरजी ! ऐसे-ऐसे पहाड़ दिखायी देने लगे, जो तरह-तरहके अस्त्र-शस्त्र बरसा रहे थे । हाथमें त्रिशूल लिये बाल खोले, नंगी राक्षसियाँ दीखने लगीं ॥ २० ॥

**बहुभिर्यक्षरक्षोभिः पत्त्यश्वरथकुञ्जरैः । आततायिभिरुत्सृष्टा हिंस्रा वाचोऽति[2]वैशसाः ॥ २१ ॥**
**प्रादुष्कृतानां मायानामासुरीणां विनाशयत् । सुदर्शनास्त्रं भगवान् प्रायुङ्क्त दयितं त्रिपात् ॥ २२ ॥**
**तदा दितेः समभवत्सहसा हृदि वेपथुः । स्मरन्त्या भर्तुरादेशं स्तनाच्चासृक् प्रसुस्रुवे ॥ २३ ॥**
**वि[3]नष्टासु स्वमायासु भूयश्चाव्रज्य केशवम् । रुषोपगूहमानोऽमुं ददृशेऽवस्थितं बहिः ॥ २४ ॥**
**तं मुष्टिभिर्विनिघ्नन्तं वज्रसारैरधोक्षजः । करेण कर्णमूलेऽहन् यथा त्वाष्ट्रं मरुत्पतिः ॥ २५ ॥**

**स आहतो विश्वजि[4]ता ह्यवज्ञया परिभ्रमद्गात्र उदस्तलोचनः ।**
**वि[5]शीर्णबाह्वङ्घ्रिशिरोरुहोऽपतद् यथा नगेन्द्रो लुलितो नभस्वता ॥ २६ ॥**
**क्षितौ शयानं तमकुण्ठवर्चसं करालदंष्ट्रं परिदष्टदच्छदम् ।**
**अजादयो वीक्ष्य शशंसुरागता अहो इमां को नु लभेत[6] संस्थितिम् ॥ २७ ॥**
**यं योगिनो योगसमाधिना रहो ध्यायन्ति लिङ्गादसतो मुमुक्षया ।**
**तस्यैष दैत्यऋषभः पदाहतो मुखं प्रपश्यंस्तनुमुत्ससर्ज ह ॥ २८ ॥**

---

१ एक बार गरुड़जी अपनी माता विनताको सर्पोंकी माता कद्रूके दासीपनेसे मुक्त करनेके लिये देवताओंके पाससे अमृत छीन लाये थे । इन्द्रने उनके ऊपर अपना वज्र छोड़ा । इन्द्रका वज्र कभी व्यर्थ नहीं जाता, इसलिये उसका मान रखनेके लिये गरुड़जीने अपना एक पर गिरा दिया । उसे उस वज्रने काट डाला । २. प्रा० पा०—ऽभिवै० । ३. प्रा० पा०—व्युदस्तासु च मायासु । ४. प्रा० पा०—विश्वसृजा । ५. प्रा० पा०—विकीर्णबाह्वङ्घ्रिशिरोधरो । ६. प्रा० पा०—कोऽत्र ।

एतौ तौ पार्षदावस्य शापाद्यातावसद्गतिम्। पुनः कतिपयैः स्थानं प्रपत्स्येते ह जन्मभिः ॥ २९ ॥

देवा ऊचुः

नमो नमस्तेऽखिलयज्ञतन्तवे स्थितौ गृहीतामलसत्त्वमूर्तये।
दिष्ट्या हतोऽयं जगतामरुन्तुदस्त्वत्पादभक्त्या वयमीश निर्वृताः ॥ ३० ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

हिंस्राश्छिंधिभिंधीत्येवंभूता अतिवैशसा अत्युग्रा वाच उत्सृष्टा इत्यत्रैव वाक्यसमाप्तिः ॥ २१ ॥ ❀ ❀ प्रादुष्कृतानामिति प्रकटिता माया विनाशयत्। विनाशनमिति पाठे यथाश्रुतैव षष्ठी। त्रीणि सवनानि पादा यस्य यज्ञमूर्तिरित्यर्थः "त्रयो अस्य पादाः" इति श्रुतेः ॥ २२ ॥ ❀ ❀ भर्तुरादेशं त्वत्पुत्रो भगवान् हनिष्यतीत्येवंभूतम् ॥ २३ ॥ ❀ ❀ आव्रज्याऽभिमुखमागत्य उपगूहमानो बाह्वोरंतर्निधाय संघट्टयन् ॥ २४ ॥ ❀ ❀ अहन् जघान त्वाष्ट्रं वृत्रम्। मरुत्पतिरिंद्रः ॥ २५ ॥ ❀ ❀ परितो भ्रमद्गात्रं शरीरं यस्य उदस्ते बहिर्निर्गते लोचने यस्य विशीर्णा बाह्वादयो यस्य नगेन्द्रो महाद्रुमः लुलित उन्मूलितः नभस्वता वायुना ॥ २६ ॥ ❀ ❀ संस्थितिं मृत्युम् ॥ २७ ॥ ❀ ❀ असत आरोपितालिंगाल्लिंगशरीरान्मोक्तुमिच्छया वराहस्य पूर्वपादयोरेव करत्वात्करेणाहन्निति पदाहत इति चाविरुद्धम् ॥ २८ ॥ ❀ ❀ अखिलयज्ञानां तंतवे विस्ताराय कारणायेति वा अरुंतुदो मर्मभेत्ता ॥ ३० ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

आसन्नित्यादिक्रियापदाध्याहारनिवृत्त्यर्थमुक्तमत्रैवेत्यादि ॥ २१ ॥ ❀ ❀ अत्र षष्ठी द्वितीयार्थे। श्रुतिस्त्वष्टमस्कंधे व्याख्यास्यतेपि—अस्य यज्ञरूपस्य विष्णोस्त्रयः सवनत्रयं पादा इत्यर्थः ॥ २२ ॥ ❀ ❀ यदा भगवता सुदर्शनास्त्रं प्रत्युक्तं तदेत्यर्थः ॥ २३ ॥ ❀ ❀ बहिः स्वभुजांतराद्बहिः स्थितं ददर्शेत्यर्थः। तत्रार्षः। आव्रज्य समीपं प्राप्य ॥ २४ ॥ ❀ ❀ करेण करवत्साधनभूतेन पादेनेत्यर्थः। अग्रे पदाहत इति वक्ष्यमाणत्वात् ॥ २५ ॥ २६ ॥ ❀ ❀ आदिना ऋष्यादिग्रहः। अहो अद्भुतम्। इमां भगवद्धस्तताडनजाम्। भगवदनुग्रहं विना न कोपि लभत इत्यर्थः ॥ २७ ॥ ❀ ❀ इतरमरणादस्य मरणस्य वैशिष्ट्यमाह इयमिति। हेतिं। पुनर्देहारंभसूचनाय ॥ २८ ॥ ❀ ❀ तौ जयविजयौ। कतिपयैस्त्रिभिस्त्रिभिर्लोकाय कल्पतामिति वक्ष्यमाणत्वात्। शैवोक्तेश्च ॥ २९ ॥ ❀ ❀ "तंतुर्विस्तारसंतानकारणेषु निगद्यते" इति निरुक्तिः। निर्वृताः संजातानंदाः ॥ ३० ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

उत्सृष्टा उच्चारिता आसन्निति वाक्यसमाप्तिः ॥ २१ ॥ ❀ ❀ यथाश्रुतैव षष्ठी नतु द्वितीयार्थे पञ्चया आर्षत्वकल्पनम्। वराहस्य चतुष्पादत्वात्त्रयोऽस्य पादा इति मन्त्रे यज्ञस्यैव त्रिपात्त्वात्तद्रूपत्वेन तत्त्वमिति प्रतिपत्तिगौरवादित्यर्थ इत्युक्तम् ॥ २२ ॥ ❀ ❀ तदा सुदर्शनप्रयोगकाले ॥ २३ ॥ ❀ ❀ संघट्टयन् संमर्दयन् ॥ २४ ॥ ❀ ❀ मरुत्पतिरिन्द्रः वज्रेणेति शेषः। अत्र हननस्य परोक्षत्वं वीर्य्यातिशयस्य द्योतकमिति जघानेति लकारव्यत्ययो व्याख्यातः ॥ २५ ॥ ❀ ❀ विशीर्णा व्याकुलत्वेन प्रसृताः ॥ २६ ॥ ❀ ❀ इमां मुक्तिजनिकाम् ॥ २७—२८ ॥ ❀ ❀ ह निश्चितम् कतिपयैः त्रिभिः ॥ २९ ॥ ❀ ❀ स्थितौ पालनार्थं गृहीता जगति प्रकटीकृता विशुद्धसत्त्वात्मिका मूर्त्तिर्येन तस्मै विष्णुरूपाय ॥ ३० ॥

### श्रीमद्वीरराघवव्याख्या

तथा आततायिभिर्हिंसाशीलैर्बहुभिर्यक्षरक्षोभिः पत्तिः पदातिः पत्त्यादिभिश्चोत्सृष्टाः प्रयुक्ता अतिवैशसा अत्युग्रा हिंस्राः क्रूराः छिन्धि भिन्धीत्येवंरूपाः वाचः प्रत्यसृज्यन्त अश्वादिशब्दैरश्वाद्यारूढा उच्यन्ते ॥ २१ ॥ ❀ ❀ प्रादुष्कृतानां प्रादुर्भूतानामासुरीणामसुरसम्बन्धिनीनां मायानां विनाशयन् विनाशयितुं मायानामिति द्वितीयार्थे षष्ठी। विनाशनमिति पाठे तु यथाश्रुतैव षष्ठ्युपपन्ना। दयितं स्वस्य निरतिशयप्रियं सुदर्शनास्त्रं त्रिपाद्भगवान् त्रिपाच्छब्देन त्रिपाद्विभूतिमानुपचाराद्विवक्षितः प्रायुङ्क्त प्रयुक्तवान् ॥ २२ ॥ ❀ ❀ तदा भर्त्तुः कश्यपस्यादेशं लोकभावनो भगवानवतीर्योर्व्यामित्येवंरूपं निदेशं स्मरन्त्या दितेर्हृदि सहसा आशु वेपथुः कम्पः समभवदुत्पन्नः स्तनादसृग्रुधिरं च प्रसुस्रुवे ॥ २३ ॥ ❀ ❀ स्वमायासु विनष्टासु असुरः भूयः पुनश्चाभिमुखमागत्य रुषा केशवमुपगूहमानः बाह्वोरन्तरे निधाय संघट्टयन्नमुं केशवं बहिर्बाहुमध्याद्बहिरवस्थितं ददर्श ॥ २४ ॥ ❀ ❀ वज्रसारैर्वज्रवदेवाभेद्यैर्मुष्टिभिर्निघ्नन्तं ताडयन्तं तमसुरं करेण हस्तेन कर्णमूलेऽहन् जघान यथा मरुत्पतिरिन्द्रस्त्वाष्ट्रं विश्वरूपम् ॥ २५ ॥ ❀ ❀ विश्वसृजा भगवतावज्ञया निमित्तभूतया आहतः सोऽसुरः भगवद्भागवतावहेलनमेव तद्वधनिमित्तमित्य-

वज्रयेत्यनेन सूचितं परिभ्रमद्गात्रं शरीरं यस्य उदस्ते बहिर्निर्गते लोचने यस्य विशीर्णा विक्षिप्ता बाह्वादयो यस्य सोऽपतत् यथा नभस्वता वायुना लुलित उत्पाटितः नगेन्द्रः महाद्रुमः ॥ २६ ॥ ❀ ❀ क्षितौ भूभ्यां शयानं तथाप्यप्रतिहततेजस्कं भयङ्करदंष्ट्रं परितो दष्टाधरोष्ठं तमसुरमागता अजादयो दृष्ट्वा शशंसुः । तदेवाह आश्चर्यमिमामीदृशीं भगवतेत्यर्थः । संस्थितिं मरणं को नु लभेत न कोऽपीत्यर्थः ॥ २७ ॥ ❀ ❀ एतदेव प्रपञ्चयति द्वाभ्याम् । योगिनोऽसतः अचेतनपरिणामाल्लिङ्गाद्देहान्मुमुक्षया मोक्तुमिच्छया संसारनिवृत्तय इत्यर्थः । योगसमाधिना समाधियोगेन यद्वा कर्मज्ञानयोगाभ्यां युक्तो यः समाधिस्तेन यद्वा युज्यन्ते इति योगा विवेकविमोकादयः तद्युक्तो यः समाधिस्तेन रह एकान्ते यं भगवन्तं ध्यायन्ति भजन्ति तस्यैव भगवतः पदा पादेन दैत्यश्रेष्ठो हतः वराहपूर्वपादयोरेव करत्वात्करेणाहन्निति चाविरुद्धं मुखं भगवतो मुखं प्रपश्यंस्तनुं शरीरमुत्ससर्ज तत्याज हेत्याश्चर्ये ॥ २८ ॥ ❀ ❀ एतौ हिरण्याक्षहिरण्यकशिपू अस्य भगवतः पार्षदौ शापाद्ब्राह्मणशापादसद्गतिमसुरयोनिं यातौ प्राप्तौ पुनः कतिपयैर्जन्मभिः स्थानं भगवत्स्थानं प्रपत्स्येते गमिष्यतः ॥ २९ ॥ ❀ ❀ एवं तत्संस्थितिं प्रशस्य भगवन्तं प्रणमन्त आहुर्देवाः । अखिलयज्ञतन्तवे समस्तयज्ञोत्पत्तिहेतवे प्रवर्त्तकायेत्यर्थः । स्थितौ जगद्रक्षणे निमित्ते गृहीता स्वेच्छयोपात्ता अमला रजस्तमोभ्यामननुविद्धा सत्त्वमूर्तिर्येन तस्मै ते नमो नमः आदराद् द्विरुक्तिः जगतां लोकानामरुन्तुदः मर्मच्छेत्ता अयमसुरः दिष्ट्या दैवाद्धतः । हे ईश ! त्वत्पादयोर्भक्त्या वयं निर्वृताः सुखिताः । त्वत्पादभक्तिरेवाभिलषितश्रेयःसाधनी अत एव वयं निरस्तशत्रवः सुखिता इति भावः ॥ ३० ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

अतिवैशसा अतिक्रूराः यक्षादिभिरुत्सृष्टा उच्चरिता हिंस्रा वाचोऽश्रूयन्तेति शेषः ॥ २१ ॥ ❀ ❀ "यथेच्छयैव सर्वं तु मनसा देहतोऽपि वा । कर्तुं शक्तोऽपि शस्त्राद्या लीलैवानन्तशक्तितः ॥" इति वचनात्मन आदिनासुरमायाविनाशे समर्थोऽपि भगवान् लीलयैव तन्नाशाय सुदर्शनं प्रायुङ्क्तेत्याह । प्रादुष्कृतानामिति । विनाशनं विनाशकारणम् अमृतं क्षेममभयमिति त्रयः पादा यस्य स त्रिपात् ॥ २२ ॥ ❀ ❀ सुदर्शनप्रयोगेण भगवान् दितेः पुत्रमरणं संज्ञापयति । तदेति ॥ २३ ॥ ❀ ❀ प्रभाते नक्तंचरवत् स्वमायानाशे पराद्रवत्किं नेत्याह । व्युदस्तास्विति । शस्त्राद्यभावात्कथं युद्धाय प्राप्त इत्याशङ्क्य द्विमुखाहिवत् पदावेष्ट्य निष्पीड्य हन्मीति भावोऽप्यप्रयोजक इत्याशयेनाह । उपेति । उपोपात्यन्तसमीपे वर्तमानमसुरममुं भगवन्तं गूहमानः स्वहस्तवलयात् बहिरवस्थितं हरिं ददर्श इत्यन्वयः ॥ २४ ॥ ❀ ❀ मम शत्रुहननादावायुधग्रहणं मन्दजनानुकरणार्थं नत्वशक्यत्वतः स्वहस्तादिनैव शक्तिरस्तीति ज्ञापयन् शत्रुं वृत्रं मरुत्पतिरिन्द्रः ॥ २५ ॥ ❀ ❀ हरेरयं प्रहारो रिपोर्दीर्घनिद्राहेतुरित्याह । समाहत इति । विश्वसृजा हरिणा अवज्ञया निरायासेन समाहतः लुलित उन्मूलितः नभस्वता वायुना ॥ २६ ॥ ❀ ❀ वीराणां रणरङ्गे मरणं शस्तं किं पुनर्भगवन्निमित्तमिति भावेन ब्रह्मादयोऽस्यासुरस्य मरणं स्तुवन्तीत्याह । क्षिताविति । संस्थितिं मरणम् ॥ २७ ॥ ❀ ❀ इतरमरणादस्य वैशिष्ट्ये किं कारणमत्राह । यमिति । असतोऽमङ्गलात् सूक्ष्मशरीरात् मुमुक्षवः करपादयोरैक्यादन्योऽन्यक्रियाशक्तिमत्त्वाच्च पदाहत इत्युक्तं योगिनामस्य दैत्यस्य महान्विशेषोऽस्तीति द्योतयितुं च हेत्यनेन एतद्देहत्यागेऽपि देहान्तरारम्भोऽस्तीति सूचनात् अतोऽस्य सुकृताधिक्यं हरिमुखं दृष्ट्वा मरणेन स्यात्तदपि पार्षदस्यैव न तदाविष्टस्यासुरस्य ॥ २८ ॥ ❀ ❀ पार्षदत्वं स्मारयति । एताविति । असद्गतिमासुरीं योनिं जन्मभिरिति बहुवचनेन शापमोक्षानन्तरं जन्मान्तरं प्राप्य ज्ञानमापाद्य वैकुण्ठे मुक्तिस्थानप्राप्तिरिति सूचयति ॥ २९ ॥ ❀ ❀ इदानीमपरोक्षतः स्तुवन्तीत्याह । नम इति । अखिलयज्ञतन्तवेऽखिलयज्ञानां प्रवर्तने सन्तानभूताय स्थितौ निमित्तभूताय अरुन्तुदो व्यथकः अयं विक्रमोऽस्माकमपि परमानन्दहेतुरभूदित्याहुरित्याह । त्वत्पादेति ॥ ३० ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

तमिति । मरुत्पतिरिन्द्रः । वज्रेणेति शेषः ॥ २५ ॥ २६ ॥ ❀ ❀ अजादय इति । ऋषिसहितत्वात् ॥ २७—२९ ॥ ❀ ❀ देवा ऊचुरिति । देवा इन्द्रादयः । स्थितिसमये प्रकटितशुद्धसत्त्वात्ममूर्त्तये श्रीविष्णुरूपाय ॥ ३० ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी ।

अतिवैशसा अत्युग्रा वाचश्च उत्सृष्टा उदसृज्यन्त ॥ २१ ॥ ❀ ❀ विनाशनं विनाशकं विनाशयन्निति पाठे द्वितीयार्थे षष्ठ्यः त्रयस्तपआदयः पादा यस्य स त्रिपात् धर्म्ममूर्त्तिः । यद्वा त्रीणि सवनानि पादा यस्य । "त्रयोऽस्य पादा" इति श्रुतेर्यज्ञमूर्त्तिरित्यर्थः ॥ २२ ॥ ❀ ❀ भर्तुरादेशं त्वत्पुत्रौ भगवान् हनिष्यतीत्येवम्भूतम् ॥ २३ ॥ ❀ ❀ बाह्वोरन्तर्निधाय मर्दयिष्यन्नुपगूहमानोऽपि तं स्वस्माद्बहिरवस्थितं ददर्श ॥ २४ ॥ ❀ ❀ ततश्च तमसुरं त्वाष्ट्रं वृत्रं मरुत्पतिरिन्द्रः ॥ २५ ॥ ❀ ❀ नगेन्द्रो महाद्रुमः लुलितः उन्मूलितः ॥ २६ ॥ ❀ ❀ संस्थितिं मृत्युम् ॥ २७ ॥ ❀ ❀ पदाहत इति वराहस्य पूर्व्वपादयोरेव करत्वात् करेणाहन्नित्यनेनाविरोधः मुनीनां शापात् ह स्पष्टम् ॥ २८ ॥ २९ ॥ ❀ ❀ तन्तवे विस्तारकाय कारणायेति वा । अरुन्तुदः मर्म्मभेदी ॥ ३० ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

त्रिपात् त्रीणि सवनानि पादा यस्य स तथा "त्रयोऽस्य पादा इति" श्रुतेः ॥ २२ ॥ ❀ ❀ भर्तुः हनिष्यत्यवतीर्यासाविति कश्यपस्यादेशम् ॥ २३ ॥ २४ ॥ ❀ ❀ अहन् जघान ॥ २५ ॥ ❀ ❀ परिभ्रमत् गात्रं शरीरं यस्य सः ॥ २६ ॥ ❀ ❀ स्थितिं पञ्चताम् ॥ २७ ॥ ❀ ❀ असतः सूक्ष्मात् ॥ २८ ॥ २९ ॥ ❀ ❀ अखिलयज्ञानां तन्तवे मूलाय ॥ ३० ॥ ३१ ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

लौकिकप्रकारेणाऽपि मायया युद्धोपयोगिस्वरूपमाह—बहुभिर्यक्षरक्षोभिरिति । यक्षराक्षसभेदोऽग्रे वक्तव्यः । बहुभिरिति तेषामवान्तरजातयो गृहीताः । दैत्यत्वे एते योधाः । स्वभावतश्चतुर्विधां सेनामाह— पत्त्यश्वरथकुञ्जरैरिति । पदातयः, अश्ववाराः, रथाः, गजाश्च सेनाङ्गाः । एवं रूपेणैव मारकत्वमुक्त्वा वचनेनापि तथात्वमाह—आततायिभिरिति । शस्त्रपाणिभिः सर्वैरेवोर्ध्वं सृष्टा वाचो जाताः, मारय ताडयेत्याद्याः । तासां विशेषणद्वयमाह—हिंस्राः स्वरूपवतो हिंसाजनकाः, यथा खट्फट्जहीत्याद्याः । अतिवैशसाश्च प्राणिघातमन्त्ररूपाः, यैर्नृपशवो मार्यन्ते ॥ २१ ॥ ❀ ❀ एवं चतुर्विधं मायारूपमुक्त्वा तस्याः प्रतीकारमाह—प्रादुष्कृतानामिति । यास्तु मायाः, तेन विसृष्टा अपि भगवद्भयात् न प्रादुर्भूताः, तत्र स्वकीया अपि सजातीयप्रतिबन्धार्थं प्रादुर्भूताः, तद्व्यावृत्त्यर्थमाह— आसुरीणामिति । विशेषेण नाशनं यस्मात्, पुनस्तासामन्यत्राऽप्यनुत्पत्तेः । सुदर्शनास्त्रमिति शस्त्ररूपे सुदर्शने मन्त्रात्मकं सुदर्शनास्त्रं योजयित्वा, पश्चात् सुदर्शनं प्रक्षिप्तवानित्यर्थः । ननु सा देवता सात्त्विकीति न तां मारयेदित्याशङ्क्याऽऽह—दयितमिति । तदत्यन्तं प्रियम्, प्रियस्य हितं करिष्यत्येवेत्यर्थः । त्रिपाद्यज्ञः, सवनत्रयात्मकत्वात् । मायाविनाश एव यज्ञोत्पत्तेस्तस्य तदावश्यकत्वमित्यर्थः । यज्ञस्य परकृतिसाध्यत्वव्यावृत्त्यर्थमाह—भगवानिति ॥ २२ ॥ ❀ ❀ एवं मायायुद्धमप्युक्त्वा, तस्य कामनां पूरयित्वा, मारणार्थमिच्छां कृतवान्; तदा तस्य मृत्युसूचकं दुर्निमित्तं जातमित्याह—तदा दितेरिति । स्वस्थाने स्थिताया दितेस्तस्मिन् काले हृदये कम्पो जातः । भयं कारणे प्रथमं प्रविष्टं कार्ये चेत् समायाति, तदा नियतं भवतीति तथा वचनम् । वेपथुः । आराद्धिप्रियदानं पूर्वमुक्तम् । पुत्रमरणमेव भविष्यतीति च ज्ञातवती, तदाह—स्मरन्त्या भर्तुरादेशमिति । 'तदा विश्वेश्वरः क्रुद्धः' इति कश्यपवाक्यं स्मृत्वा, अकस्माद्धृदये कम्पे जाते, पुत्रनाशमेव निश्चितवतीत्यर्थः । किञ्च, निमित्तान्तरमपि जातमित्याह—स्तनाच्चाऽसृक् प्रसुस्रुव इति । इदं पुत्रनाशसूचकमेव, स्तन्यं दुग्धं तस्य पोषकम्, रुधिरं नाशकमिति । चकारात् हृदयं तथैव वदतीत्युक्तम् ॥ २३ ॥ ❀ ❀ एवं निमित्ते जाते विनष्टायामपि मायायाम्, सर्वस्मिन्नेव पौरुषे प्रतिहते, यदि नाऽऽगच्छेत्; तदा भगवानक्लिष्टकर्मा न मारयेदिति सूचनार्थं तस्य पुनरतिक्रममाह—विनष्टास्विति । सर्वा एव माया विनष्टाः, स्वांशे यावत्यः पतिता इति ज्ञापयति—स्वेति । पूर्वं मुष्टिमारणे यथा समागतः, भूयश्चाऽपि तथैव समागत्य रोषेण भगवदुपगूहनं कृतवान्, धृत्वा स्थानान्तरे नेष्यामीति । तदा सूक्ष्मो भगवान् जातः, तस्य हस्तान्मध्ये विनिर्मुक्तो बहिरेवाऽवस्थितः । तदा तं निकटे स्थितं भगवन्तं दृष्टवानित्याह—ददृशेऽवस्थितमिति ॥ २४ ॥ ❀ ❀ तं मुष्टिभिरिति । एवमप्यमारयन्तं भगवन्तं पुनर्मुष्टिभिरताडयत्, यथा बालको मातरं पितरं वा । विशेषेण निघ्नन्तमिति तथा मारणे हेतुः । हेत्वन्तरमाह—वज्रसारैरिति । वज्रपातादपि कठिनैः । उद्वेगान्मारणं व्यावर्तयति—अधोक्षज इति । इन्द्रियजन्यं ज्ञानं कर्म वा न भगवन्तं स्पृशतीति बहिर्मुखत्वान्मारणमिति भावः । मारणप्रकारमाह—करेण कर्णमूलेऽहन्निति । अग्रिमपादः करः । सुदर्शनेन हनने मुक्तिः स्यादिति क्रियाशक्त्या हनने पुनर्भवश्च[1] सूचितः । एतद्वधे प्रयोजनमाह—यथा त्वाष्ट्रं मरुत्पतिरिति । वृत्रो हि तेजोऽस्त्रायुधसम्पदो गिलितवान्, तद्व[2]धे पुनः प्राप्ताः; अन्यथा अतिप्रवृद्धो लोकानेवाऽऽवृणुयात् । अतो लोकरक्षार्थम्, देवहितार्थम्, स्वस्य सेवकसिद्ध्यर्थं च हतवानित्यर्थः ॥ २५ ॥ ❀ ❀ तस्य हिरण्याक्षस्य हननानन्तरं जातं स्वरूपमनुवर्णयति—स आहत इति । विश्वसृजा अवज्ञयाऽऽहतोऽपतदिति संबन्धः । आ ईषत् । ननु भगवतस्तस्य वधे क उपकार इत्याशङ्क्याऽऽह—विश्वसृजेति । सृष्ट्यर्थं तस्य वध इत्यर्थः । स हि रजोगुणाभिमानी रजः प्रतिबध्य तिष्ठति । ईषद्धननं च तन्मात्रनिराकरणाय, न तु रजसः । इममेवार्थं हि शब्द उपपादयति, तदमारणे रजसः कार्याक्षमत्वात् । यद्यपि रज एव ततः पृथक्कर्तुं शक्यते, न मारणमपेक्षितम्; तथापि प्रयत्नस्य तुल्यत्वात् हननमेव कृतम् । तदाह—अवज्ञयेति । मरणं भगवत उद्देश्यं न भवतीत्यर्थः । परिभ्रमद्गात्रं यस्य करेण ताडितो भ्रमतीति । उदस्ते लोचने यस्य; ऊर्ध्वं निर्गते लोचने । स हि केवलराजसोऽपि बीजवशात् सत्त्वसहितोऽपि भवति । सत्त्वेन चोत्तरत्रोपकारः, प्रकृते च नाशः, अन्यथा रजः प्रतिबन्धः स्यात् । अत एव प्रथमं रजसो विक्षेपमाह—परिभ्रमद्गात्र इति । लोचने तु सत्त्वं बीजजीव भेदादुभयविधमिति लोचने इति द्विवचनम् । परिभ्रमणेन बहुधा रजसः प्रवृत्तेर्वाह्वादीनां विक्षेपणम् । वर्णानामस्मिन् कल्पे नानाप्र-

---

१. चकारो नाऽस्ति. क. घ. । २. वधेन. ग.

कारेणोत्पत्त्यर्थं बाह्वोऽङ्घ्रयः शिरोरुहाश्च विकीर्णा येन विकीर्णेति। क्रियाशक्तिर्गतिर्जन्म विकीर्णं तस्य चेति[1] विकलतया तस्य सर्वे संस्कारा निवारिताः अन्तरिक्ष एव प्राणा गता इति तस्याऽग्रे राक्षसत्वं भक्तत्वं च। भूमौ तु प्राणा न गता इत्याह—न्यसुरपतदिति। तथात्वे ज्ञापकं दृष्टान्तेनाऽऽह—यथा नगेन्द्र इति। वृक्षश्रेष्ठो यथा नभस्वता वायुनोन्मूलितः पततीत्यर्थः॥ २६॥ ॐ ॐ मृतं वर्णयति—क्षितौ शयानमिति। मृत्युग्रस्तो हि विवर्णो भवति, अयं तु भगवता उपसंहृत इति न कुण्ठं वचो यस्य। करालदंष्ट्रा यस्येति मरणसमये यमस्य करालत्वादग्रे राक्षसत्वम्; अधरस्य लोभस्य स्नेहेन विद्ध[2]त्वान्मानुषत्वं च; परितो विद्ध[3]त्वान्मरणान्तं लोभः। अस्य मरणं सर्ववादिसम्मतत्वेन समीचीनमिति ज्ञापयितुं ब्रह्मादीनां स्तोत्रम्। फलस्य कर्मविरुद्धत्वात् हिरण्याक्षेण तादृशी गतिः प्राप्तेत्याश्चर्यम्। संस्थितिं मृत्युम्। विरुद्धकर्ता नैवं प्राप्नोतीति को नु लभेतेत्याश्चर्योक्तिः। फलविरुद्धा तस्य कृतिर्ब्रह्मणैव निरूपिता॥ २७॥ ॐ ॐ न चैतत्फलं तादृशमेवेति शङ्कनीयम्, किन्तु परमोत्कृष्टयोगस्यैतत्फलमित्याह—यं योगिन इति। यं भगवन्तम्, योगिनो जितयोगाः, योगेनैव समाधिं प्राप्य एकान्ते तत्र ध्यायन्ति। असतः प्राकृतात्, लिङ्गात् समुदायात्, मुमुक्षया। अस्य वराहस्य मानस्यपि मूर्तिर्मार्गान्तरस्थैरपि चिन्तिता समाधौ मोक्षमुत्पादयति, तत्र साक्षाद्भगवान्; तस्या अपि गतिदा[illegible]ी, भक्तानामाश्रयभूतः पादः। अयं च स्वधर्मनिष्ठ इत्याह—दैत्यऋषभ इति। किञ्च, मरणकाले ज्ञानं पूर्णम्, यतो मुखं पश्यन् तनुमुत्ससर्ज। तां सन्ततिमेव त्यक्तवानित्यर्थः। ब्रह्मा देवान् प्रति तस्य फलमाहाऽऽश्चर्यमिति॥ २८॥ ॐ ॐ एवमपि मरणे जन्मान्तरसंबन्धे सति च विस्मयेन विस्मितान् प्रत्याह—एताविति। तौ पूर्वोक्तौ। अस्यैव पार्षदाविति एवं फलं नाऽऽश्चर्यम् एवंभावे हेतुमाह—शापाद्यातावसद्गतिमिति। तर्हि कदा निस्तार इत्याकांक्षायामाह—पुनः कतिपयैरिति। अनेन सहजन्मनां त्रैविध्यम्। सम्भावनया बहुवचनम्, कर्मणां दुर्ज्ञेयत्वात्॥ २९॥ ॐ ॐ एवं तं स्तुत्वा भगवतोऽनवगाह्यमाहात्म्यमवगत्य तं नमति—नमो नम इति। आदरे वीप्सा। एकं भगवतः कार्यं बहूनि फलानि साधयतीति भगवतो बहु कार्यं निरूपयन्ति। तत्र प्रथमं सृष्ट्यर्थं यज्ञाविर्भावो निरूप्यते, अन्यथा कदाचित्केचन यज्ञाः केषांचिदाविर्भूता भवन्ति, अत्र तु सर्व एवाऽऽवि[4]र्भाविताः। तदाहुः—अखिलयज्ञतन्तव इति। अखिला ये यज्ञतन्तवो यज्ञसंस्थाः, तद्रूपो भवान्। किञ्च, रक्षा भगवतो धर्मः साक्षाद्विशेषाकारेण; तदप्यनेन रूपेण सिद्धमित्याह—स्थित्यर्थं गृहीता अमला सत्त्वमूर्तिर्येन। अमलं गुणान्तरासंबद्धम्। धर्मग्लानिरपि निवर्तितेत्याह—दिष्ट्या हतोऽयमिति। परमभाग्येनाऽयं हतः। धर्मो हि भाग्यम्, धर्मस्य पोषकम्। एतद्वधे धर्मरक्षायां बीजमाह—जगतामरुन्तुद इति। अरुर्मर्म। देवभक्तिरक्षाऽप्यनेन सिद्धेत्याह—त्वत्पादभक्त्येति। वयं देवाः। ईशेति संबोधनं सर्वत्र सामर्थ्यबोधकम्, एकस्यैव सामर्थ्यस्य तथात्वबोधकं वा। निर्वृताः सुखिताः; हिरण्यकशिपोरौद्धत्याभावात्, उपस्थितदुःखनाशाद्वा॥ ३०॥

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

विनष्टास्वित्यत्र। स्वांश इति स्वदाये॥ २४॥ ॐ ॐ स आहत इत्यत्र। भक्तत्वमिति। रुद्रभक्तत्वम्, अन्तरिक्षस्य रुद्र (त) त्वादिति। अत्र व्यसुत्वं लक्षणैरेव ज्ञाप्यते। एवं च भगवत्कृतेन घातेन उच्छन्नमपि पादविकिरणाद्बोध्यम्। तथात्वे इति। स्थानान्तरे पतने॥ २६॥ ॐ ॐ यमित्यत्र। तस्या अपीति। प्रकृतेरपि। तां संततिमिति। दैत्यसन्ततिम्॥ २८॥ ॐ ॐ नमो नम इत्यत्र। परमभाग्येनेति। एकं पदम्, महाभाग्येनेत्यर्थः। वयं देवा इति। देवानां विष्णुभक्तिः स्वाभाविको धर्म इति वामनपुराणे प्रसिद्धम्। तथात्वबोधकमिति। अनेककार्यकारित्वबोधकम्॥ ३०॥

### श्रीगिरिधरकृता बालप्रबोधिनी

आततायिभिः हिंसाशीलैः बहुभिर्यक्षरक्षोभिः पत्त्यादिभिश्च उत्सृष्टाः प्रयुक्ताः अतिवैशसाः अत्युग्राः हिंस्राः क्रूराः छिन्धिभिन्धीत्येवंरूपा वाचः प्रत्यश्रूयन्त। पत्तिः पदातिः॥ २१॥ ॐ ॐ प्रादुष्कृतानां प्रादुर्भूतानां आसुरीणां मायानां विनाशयन् विनाशयितुम्। षष्ठी द्वितीयार्थे। विनाशनमिति पाठे तु यथाश्रुतैव। दयितं स्वस्यातिप्रियं सुदर्शनास्त्रं भगवान् त्रिपात् यज्ञावतारः प्रायुंक्त। त्रीणि सवनानि पादा यस्य सः यज्ञमूर्तिः "त्रयोऽस्य पादाः" इति श्रुतेः॥ २२॥ ॐ ॐ भर्तुः कश्यपस्या[illegible]शं त्वत्पुत्रं भगवानवतीर्य हनिष्यतीत्येवम्भूतं स्मरन्त्या दितेर्हृदि सहसा अकस्मादेव वेपथुः प्रकम्पः समभवत्, स्तनात् अस्रक् रुधिरं च प्रसुस्रुवे॥ २३॥ ॐ ॐ स्वमायासु विनष्टासु सतीषु स भूयः पुनरात्रज्य अभिमुखमागत्य रुषा केशवमुपगूहमानो बाह्वोरन्तरे निधाय सङ्कट्टयन्नप्यमुं बहिर्बाहुमध्याद्बहिरवस्थितं ददृशे। तत्र सामर्थ्यं केशवपदेन सूचितम्, को ब्रह्मा ईशो रुद्रस्तयोरपि वं सुखं यस्मात्तम्॥ २४॥ ॐ ॐ वज्रवत् सारं दार्ढ्यं येषां तैः मुष्टिभिः निघ्नन्तं तं अधोक्षजो भगवान् करेण कर्णमूले अहन् यथा मरुत्पतिरिन्द्रः त्वाष्ट्रं वृत्रम्॥ २५॥ ॐ ॐ विश्वसृजा भगवता अवज्ञया उपेक्ष्यैव

---

१. वेति क. ङ. च. २. निरुद्धत्वात् ग. विरुद्धत्वात् ख. घ. ३. निरुद्धत्वात् ग. विरुद्धत्वात् घ. ४. आविर्भूताः क. ङ.

न तु बलेन—आहतः सन् परिभ्रमद्गात्रं यस्य उद्स्ते बहिर्निर्गते लोचने यस्य विकीर्णाः विक्षिप्ताः बाह्वादयो यस्य सोऽपतत् । यथा नभस्वता वायुना लुलितः उत्पाटितो नगेन्द्रो महाद्रुमः ॥ २६ ॥ ❀ ❀ क्षितौ शयानं कराला दंष्ट्रा यस्य तं परितो दष्टो दच्छद ओष्ठो येन तं तथापि भगवत्स्पर्शादकुण्ठवर्चसं अप्रतिहततेजस्कं तं तत्रागता अजादयः वीक्ष्य अहो इमां संस्थितिं मृत्युं को नु लभेत ? इति शशंसुरित्यन्वयः ॥ २७ ॥ ❀ ❀ एतदेव स्पष्टयन्ति—यमिति द्वयेन । असतः अविद्ययैव आत्मत्वेन अभिमताल्लिङ्गात् लिङ्गशरीरात् मुमुक्षया आत्मानं मोक्तुमिच्छया योगसमाधिना युज्यतेऽनेनेति योगः कर्मज्ञानादियमनियमादिसाधनकलापः तत्सहितेन समाधिना रहः एकान्ते यं भगवन्तं ध्यायन्ति तस्यैव पदा पादेन एष दैत्यऋषभः दैत्यश्रेष्ठो हतस्तस्य मुखं प्रपश्यन् तनुं शरीरं उत्ससर्ज तत्याज । एवं मृत्योर्दुर्लभत्वेनाश्चर्यं कुर्वन्ति—हेति । वराहस्य पूर्वपादयोरेव करत्वात् करेणाहन्निति पदा हत इति च न विरोधः ॥ २८ ॥ ❀ ❀ दुर्लभलाभे कारणमाहुः—एताविति । एतौ हिरण्याक्षहिरण्यकशिपू अस्य भगवतः तौ जयविजयाख्यौ पार्षदौ ब्राह्मणशापात् असद्गतिमसुरयोनिं यातौ पुनश्च कतिपयैर्जन्मभिः भगवतः स्थानं प्रपत्स्येते गमिष्यतः । हेति निश्चये ॥ २९ ॥ ❀ ❀ एवं दैत्यमरणं प्रशस्य परमोपकारिणं भगवन्तं प्रणमन्तो विज्ञापयन्ति—नम इति । अखिलयज्ञतन्तवे समस्तयज्ञप्रवर्त्तकाय स्थितौ जगद्रक्षणे निमित्ते गृहीता स्वेच्छोपात्ता अमला रजस्तमोभ्यामननुविद्धा सत्त्वमूर्तिर्येन तस्मै ते तुभ्यं नमो नमः । द्विरुक्तिरादरार्था । जगतां प्राणिनामरुन्तुदः मर्मभेत्ता अयमसुरो दिष्ट्या स्वदुष्टकर्मणा हतः । हे ईश त्वत्पादयोर्भक्त्या सेवया वयं निर्वृताः शत्रुवधेन त्वया सुखिताः कृता इत्यर्थः ॥ ३० ॥

### हिन्दी अनुवाद

बहुत-से पैदल-घुड़सवार, रथी और हाथियोंपर चढ़े हुए सैनिकोंके साथ आततायी यक्ष-राक्षसोंका 'मारो-मारो, काटो-काटो' ऐसा अत्यन्त क्रूर और हिंसामय कोलाहल सुनायी देने लगा ॥ २१ ॥ ❀ ❀ इस प्रकार प्रकट हुए उस आसुरी माया-जालका नाश करनेके लिये यज्ञमूर्ति भगवान् वराहने अपना प्रिय सुदर्शनचक्र छोड़ा ॥ २२ ॥ ❀ ❀ उस समय अपने पतिका कथन स्मरण हो आनेसे दितिका हृदय सहसा काँप उठा और उसके स्तनोंसे रक्त बहने लगा ॥ २३ ॥ ❀ ❀ अपना माया-जाल नष्ट हो जानेपर वह दैत्य फिर भगवान्के पास आया । उसने उन्हें क्रोधसे दबाकर चूर-चूर करनेकी इच्छासे भुजाओंमें भर लिया, किंतु देखा कि वे तो बाहर ही खड़े हैं ॥ २४ ॥ ❀ ❀ अब वह भगवान्को वज्रके समान कठोर मुक्कोंसे मारने लगा । तब इन्द्रने जैसे वृत्रासुरपर प्रहार किया था, उसी प्रकार भगवान्ने उसकी कनपटीपर एक तमाचा मारा ॥ २५ ॥ ❀ ❀ विश्वविजयी भगवान्ने यद्यपि बड़ी उपेक्षासे तमाचा मारा था, तो भी उसकी चोटसे हिरण्याक्षका शरीर घूमने लगा, उसके नेत्र बाहर निकल आये तथा हाथ पैर और बाल छिन्न-भिन्न हो गये और वह निष्प्राण होकर आँधीसे उखड़े हुए विशाल वृक्षके समान पृथ्वीपर गिर पड़ा ॥ २६ ॥ ❀ ❀ हिरण्याक्षका तेज अब भी मलिन नहीं हुआ था । उस कराल दाढ़ोंवाले दैत्यको दाँतोंसे होठ चबाते पृथ्वीपर पड़ा देख वहाँ युद्ध देखनेके लिये आये हुए ब्रह्मादि देवता उसकी प्रशंसा करने लगे कि 'अहो ! ऐसी अलभ्य मृत्यु किसको मिल सकती है ॥ २७ ॥ ❀ ❀ अपनी मिथ्या उपाधिसे छूटनेके लिये जिनका योगिजन समाधियोगके द्वारा एकान्तमें ध्यान करते हैं, उन्हींके चरण-प्रहारसे उनका मुख देखते-देखते इस दैत्यराजने अपना शरीर त्यागा ॥ २८ ॥ ❀ ❀ ये हिरण्याक्ष और हिरण्यकशिपु भगवान्के ही पार्षद हैं । इन्हें शापवश यह अधोगति प्राप्त हुई है । अब कुछ जन्मोंमें ये फिर अपने स्थानपर पहुँच जायँगे' ॥ २९ ॥ ❀ ❀ देवतालोग कहने लगे—प्रभो ! आपको बारबार नमस्कार है । आप सम्पूर्ण यज्ञोंका विस्तार करनेवाले हैं तथा संसारकी स्थितिके लिये शुद्धसत्त्वमय मङ्गलविग्रह प्रकट करते हैं । बड़े आनन्दकी बात है कि संसारको कष्ट देनेवाला यह दुष्ट दैत्य मारा गया । अब आपके चरणोंकी भक्तिके प्रभावसे हमें भी सुख-शान्ति मिल गयी ॥ ३० ॥

### मैत्रेय[1] उवाच

**एवं हिरण्याक्षमसह्यविक्रमं स सादयित्वा हरिरादिसूकरः ।**
**जगाम लोकं स्वमखण्डितोत्सवं समीडितः[2] पुष्करविष्टरादिभिः ॥ ३१ ॥**
**मया यथानूक्तमवादि ते हरेः कृतावतारस्य सुमित्र चेष्टितम् ।**
**यथा हिरण्याक्ष उदारविक्रमो महामृधे क्रीडनवन्निराकृतः ॥ ३२ ॥**

---

१. प्राचीने पाठे 'मैत्रेय उवाच' अयं पाठो न । २. प्रा० पा०—समीलितः । 'वधो नाम' इत्यत्र 'वधे' इति पाठः ।

सूत उवाच

इति कौषारवाख्यातामाश्रुत्य भगवत्कथाम्। क्षत्ताऽऽनन्दं परं लेभे महाभागवतो द्विज ॥ ३३ ॥
अन्येषां पुण्यश्लोकानामुद्दामयशसां सताम्। उपश्रुत्य भवेन्मोदः श्रीवत्साङ्कस्य किं पुनः ॥ ३४ ॥
यो गजेन्द्रं झषग्रस्तं ध्यायन्तं चरणाम्बुजम्। क्रोशन्तीनां करेणूनां कृच्छ्रतोऽमोचयद् द्रुतम् ॥ ३५ ॥
तं सुखाराध्यमृजुभिरनन्यशरणैर्नृभिः। कृतज्ञः को न सेवेत दुराराध्यमसाधुभिः ॥ ३६ ॥
यो वै हिरण्याक्षवधं महाद्भुतं विक्रीडितं कारणसूकरात्मनः।
शृणोति गायत्यनुमोदतेऽञ्जसा विमुच्यते[1] ब्रह्मवधादपि द्विजाः ॥ ३७ ॥
एतन्महापुण्यमलं पवित्रं धन्यं यशस्यं पदमायुराशिषाम्।
प्राणेन्द्रियाणां युधि शौर्यवर्धनं[2] नारायणोऽन्ते गतिरङ्ग[3] शृण्वताम् ॥ ३८ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां तृतीयस्कन्धे हिरण्याक्षवधो नामैकोनविंशोऽध्यायः[4] ॥ १९ ॥

श्रीधरस्वामिविरचिता भावार्थदीपिका

सादयित्वा हत्वेत्यर्थः। पुष्करविष्टरादिभिर्ब्रह्मादिभिः संस्तुतः ॥ ३१ ॥ ❀ ❀ यथाऽनूक्तं गुरूक्तिमनतिक्रम्य मयाऽवादि तव कथितम्। हे सुमित्र यथा येन प्रकारेण ॥ ३२ ॥ ❀ ❀ हे द्विज शौनक ॥ ३३ ॥ ❀ ❀ कथामुपश्रुत्य ॥ ३४ ॥ ❀ ❀ भक्तिमात्रेण पशूनामपि सुलभोऽन्यथा देवानामपि दुर्लभ इति तत्कथाश्रवणे कस्यानंदो न स्यादित्याह। य इति द्वाभ्याम्। झषो ग्राहः क्रोशंतीनां सतीनामिति कृपालुत्वमुक्तम्। संकटादमोचयत् ॥ ३५ ॥ ३६ ॥ ❀ ❀ कारणेन पृथिव्युद्धरणादिना सूकररूपस्य हरेः ॥ ३७ ॥ ❀ ❀ एतद्धरेर्विक्रीडितं शृण्वतामंते श्रीनारायणो गतिर्भवति। महापुण्यं स्वर्गादिप्रदम् अलं पवित्रमतिशयेन शोधकम्। धन्यं धनावहम्। यशस्यं कीर्तिकरम्। आयुषश्चाशिषां च पदं स्थानं परित्राणं वा प्राणानामिंद्रियाणां च पदम्। अंग हे विदुर ॥ ३८ ॥

इति तृतीये टीकायामेकोनविंशोऽध्यायः ॥ १९ ॥

श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

इत्यर्थ इति। स्वार्थण्यन्तात्सदेः क्त्वाप्रत्ययविधानादयमर्थो लब्ध इति भावः। पुष्करं पद्मं विष्टरमासनं यस्य स पुष्करविष्टरो ब्रह्मा स आदिर्मुख्यो येषामिन्द्रादीनां ते तथा तैः ॥ ३१ ॥ ❀ ❀ ते तुभ्यं सुष्ठु श्रीकृष्णो मित्रं यस्य स सुमित्र विदुर कृष्णभक्तत्वात्तवैतदुक्तं न चाभक्ताय मे जात्वित्युक्तन्यायेनेति भावः ॥ ३२ ॥ ❀ ❀ द्विजेति। ब्राह्मणत्वाद्दानरूपेण प्रोक्तमिति। किं च एतत्कथनस्य महादानत्वात्स्वस्य भूरिदत्वज्ञापनाय च। "तव कथामृतं तप्तजीवनम्" इत्यारभ्य "भुवि गृणंति ते भूरिदा जनाः" इति श्रीदशमे साक्षाच्छ्रुत्यवतारभूताभिर्गोपीभिर्वक्ष्यमाणत्वात् ॥ ३३ ॥ ❀ ❀ पुण्यश्लोकानां नलयुधिष्ठिरादीनां "पुण्यश्लोको नलो राजा" इत्याद्युक्तेः। कथामिति प्रसंगलब्धम् ॥ ३४ ॥ ❀ ❀ अन्यथा भक्त्यभावे यो हरिः 'करेणुरिभ्यां स्त्री नेभे' इत्यमरः। कृच्छ्रत आसन्नमरणात् ॥ ३५ ॥ ❀ ❀ ऋजुभिरकुटिलैः असाधुभिः कुटिलैः ॥ ३६ ॥ ❀ ❀ फलश्रवणस्य क्षिप्रं प्रवर्तकत्वात्तदाह। ब्रह्मज्ञानं "सत्यं ज्ञानमनंतं ब्रह्म" इति श्रुतेः। "विप्रज्ञानात्मसु ब्रह्म" इति कोशाच्च। तेन वध्यते नश्यत इति ब्रह्मवधः संसारो वा तस्मादपि अनुमोदते। वराहचरितं वक्तव्यमिति वक्त्रे प्रेरणमनुमोदनं श्रुतस्य श्लाघनं वा ॥ ३७ ॥ ❀ ❀ अंते इति। श्रवणाभ्यासेन मननसंभवात्। ततोऽपरोक्षज्ञानेन लिंगदेहनाशान्नारायणैकस्वरूपतां प्राप्नोतीत्यर्थः। "पदं व्यवसितत्राण-" इत्यादिकोशमाश्रित्याह—परित्राणं वेति। भगवद्भक्तत्वान्मे प्रियोसीत्याह—अंगेति ॥ ३८ ॥

इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे तृतीयस्कन्धे एकोनविंशोऽध्यायः ॥ १९ ॥

श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

अत्रावसादनस्य तत्कार्ये हनने लक्षणात इत्यर्थोक्तिः स्वं वाराहम् ॥ ३१ ॥ ❀ ❀ येन प्रकारेण निराकृतो इतस्ततप्रकारविशिष्टं चेष्टितं मया कथितमित्यन्वयः ॥ ३२ ॥ ❀ ❀ इति कौषारवेत्यादिकं शुकवाक्यादधिकं सूतवचनमिति ज्ञेयम् ॥ ३३ ॥ ३४ ॥ ❀ ❀ अन्यथा भक्त्यभावे तस्य भक्तिसुलभस्य कथाश्रवणे ॥ ३५ ॥ ❀ ❀ ऋजुभिरकुटिलैः

---

१. प्रा० पा०—स मुच्यते। २. प्रा० पा०—ध्रुवम्। ३. प्रा० पा०—फलं। ४. प्राचीने पाठे 'वधो नाम' स्थाने 'वधे' इति पाठः।

असाधुभिः कुटिलैः ॥ ३६ ॥ ❀ ❀ पृथिव्युद्धरणादिनेत्यत्रादिना दैत्यवधभक्तविनोदनपरिग्रहः ॥ ३७ ॥ ❀ ❀ स्थानं कारणं परित्राणं रक्षकम्। "पदं व्यवसितस्थानत्राणलक्ष्माङ्घ्रिवस्तुषु इत्यमरः।" टीकायामङ्ग हे शौनक! इत्येव पाठः विदुरेति तु प्रामादिकः ॥ ३८ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीराधारमणदासगोस्वामिविरचितदीपिन्याख्य-दीपिकाटिप्पण्यामूनविंशोऽध्यायः ॥ १९ ॥

### श्रीमद्वीरराघवव्याख्या

एवं विदुरेण। तेनैव तु मुनिश्रेष्ठ हरिणा यज्ञमूर्तिना इत्यादिना पृष्टं हिरण्याक्षवधवृत्तं सप्रपञ्चमभिधाय तन्निगमयति मैत्रेयो द्वाभ्याम्। असह्यविक्रमं दुर्धर्षपराक्रमं हिरण्याक्षमेवमुक्तप्रकारेण सादयित्वा निहत्य आदिसूकरः भगवान् पुष्करविष्ट-रादिभिः समीडितः संस्तुतः अखण्डितः अनन्तः उत्सवो यस्मिन् तं स्वं स्वीयं लोकं वैकुण्ठं जगाम ॥ ३१ ॥ ❀ ❀ अति-दुष्करमिदं भगवता कृतमिति त्वया न विस्मयः कार्य्य इत्याह। मयेति। हे सुमित्र! विदुर कृतावतारस्य धृतवराहरूपस्य हरेः चेष्टितं मे मया ते तुभ्यमनूक्तमुक्तस्योक्तं यथा तथा यथानायासेनैवावादि कथितं तथा उदारविक्रम उदारपराक्रमः हिरण्याक्षः मृधे युद्धे क्रीडनवत् क्रीडनमिव निराकृतः भगवता इति शेषः। यथा हिरण्याक्ष इति पाठे यथा येन प्रकारेण क्रीडनवद्भगवता हिरण्याक्षो निराकृतः तं प्रकारमनतिक्रम्यैव यथानूक्तं गुरूक्तिमनतिक्रम्य हरेश्चेष्टितं मयावादीति निगमनपरत्वेनान्वेतव्यम् ॥ ३२ ॥ ❀ ❀ एवं निशम्य वाचो वदतो मुनेरित्यादिनोपक्रान्तं भगवच्चरित्रप्रसक्तानुप्रसक्त्या स्वायंभुवमनुचरित्रतदनुप्रसक्तवराह-चरित्रप्रश्नोत्तररूपं विदुरमैत्रेयसम्वादमुपसंहरति भगवान् श्रीशुकः यावदध्यायसमाप्ति इत्युक्तप्रकारेण कौषारवाख्यातां मैत्रेय-कथितां भगवत्कथां भगवत्कथागर्भां स्वायंभुवकथामित्यर्थः। भगवत्कथाया एव प्राधान्येन कथनीयत्वाद्भगवत्कथामिति निर्देशः। यद्वा भगवत्कथानिगमनेनैव तदुपक्रमरूपा स्वायंभुवकथा निगमितप्रायैवेत्यभिप्रेत्य भगवत्कथामित्युक्तम्। आश्रुत्याकर्ण्य महा-भागवतः क्षत्ता विदुरः उत्कृष्टमानन्दं लेभे लब्धवान्। हे नृप! परीक्षिद्राजन्। महाभागवत इति हेतुगर्भं यतोऽसौ क्षत्ता महाभागवत-स्ततो भगवत्कथामाश्रुत्य परमानन्दं लेभे इत्यर्थः ॥ ३३ ॥ ❀ ❀ एतदेव कैमुत्यन्यायेनाह। अन्येषामिति। पुण्यशीलानां पुण्यैकाचाराणामुद्दामयशसामुदीर्णकीर्तीनामन्येषामपि कथामाश्रुत्य मोदो भवेच्छ्रीवत्साङ्कस्य भगवतः कथामुपश्रुत्य मोदो भवेदिति किं पुनर्वक्तव्यमित्यर्थः ॥ ३४ ॥ ❀ ❀ एवं कैमुत्यन्यायेन भगवत्कथाश्रवणादानन्दावाप्तिमभिधायाश्रितार्तिनिर-सनैकशीलस्याश्रितसुलभस्यार्थितपुरुषार्थदस्य भगवतः कथां कृतघ्नमन्तरेण को न सेवेतेत्याह द्वाभ्याम्। य इति। झषेण ग्रस्तं मकरेण गृहीतं स्वचरणाम्बुजं ध्यायन्तं गजेन्द्रं करेणूनां हस्तिनीनां क्रोशन्तीनां रुदन्तीनां सतीनां यो भगवान् कृच्छ्रात् झषग्रहणेन दुःखाद् द्रुतमाशु अमोचयत् त्याजितवानित्यर्थः ॥ ३५ ॥ ❀ ❀ तं भगवन्तं कथंभूतमनन्यशरणैः रक्षकान्तररहितैः नृभिर्नरैः ऋजुभिरुपायैरिति शेषः। सुखेनाराधयितुं शक्यमसाधुभिर्दुराराध्यं कृतज्ञः को न सेवेत कृतघ्नमन्तरेण सर्वोऽपि सेवेतैवेत्यर्थः ॥ ३६ ॥ ❀ ❀ एवं भगवत्कथा सर्वैरुपादेयेत्यभिधाय प्रकृतहिरण्याक्षवधवृत्तान्तश्रवणकीर्तनानुमोदनफलमवान्तरप्रधानं चाह—य इति द्वाभ्याम्। महाद्भुतं भृशं विस्मयनीयं कारणसूकरात्मनः जगद्रक्षणधृतसूकरशरीरस्य भगवतो विक्रीडितं क्रीडारूपं हिरण्याक्ष-वधं यो द्विजः शृणोति गायति कथयति अनुमोदतेऽभिनन्दति वा स अञ्जसा आशु ब्रह्मवधात् "ब्रह्महत्याश्वमेधाभ्यां नापरं पुण्यपापयोः" इति निरतिशयपापत्वेन कीर्तिताद्ब्रह्मवधादपि विमुच्यते त्यज्यते ॥ ३७ ॥ ❀ ❀ एतद्धिरण्याक्षवधवृत्तान्तरूपं भगवच्चरितं महापुण्यसंपादकमत एवालं च शौर्यवर्द्धनं सामर्थ्यवर्द्धनमत एवमवान्तरफलयुक्तं प्रधानफलमाह। अङ्ग हे राजन्! शृण्वतां नृणामन्ते देहान्ते नारायणो गतिः फलं तत्प्राप्तिरेव फलमित्यर्थः ॥ ३८ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम् एकोनविंशोऽध्यायः ॥ १९ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली।

हिरण्याक्षहननानन्तरं हरिणा को विक्रमोऽकारि सोऽस्ति चेत्तमाख्याहीति मानसीं विदुरशङ्कां प्रत्याह। एवमिति। संसादयित्वा निहत्य नितरां हनने स्वातन्त्र्यं दर्शयति। पुष्करविष्टरादिभिर्ब्रह्मादिभिः ॥ ३१ ॥ ❀ ❀ हरेर्वराहावतारस्य चरितमुपसंहरति। मयेति। यथा येन प्रकारेण हिरण्याक्षो हतो निराकृतस्तथा तेन विधिना कृतवराहावतारस्य हरेश्चेष्टितं मयानूक्तं श्रुतवत्कथितमादित आरभ्य"अथातोऽनन्तराप्यर्थविकल्पारम्भमङ्गल" इति यादवः ॥ ३२ ॥ ❀ ❀ शुकोऽप्येतां कथां श्रोतुं श्रोतृशेमुषीमनुकूलयति। इतीति यथा मम परानन्दोऽभूत्तथा विदुरस्यापि किमिति परीक्षितो मनःशङ्कां परिहरति शुक इत्यतो वाह। इतीति ॥ ३३ ॥ ❀ ❀ अत्र कैमुत्येन परमानन्दं सम्पादयति। अन्येषामिति ॥ ३४ ॥ ❀ ❀ इतोऽपि हरेः कथाश्रवणात्परमानन्दावाप्तिः स्यादित्याह। य इति। करेणूनां करिणीनां क्रोशन्तीनां रुदन्तीनां कृच्छ्रादासन्न-मरणात्कृतस्मरणानन्तरं कालक्षेपमन्तरेण ॥ ३५ ॥ ❀ ❀ एवंविधो हरिर्भक्त्यैकसाध्य इत्याह। तमिति। अन्ययोग-

व्यवच्छेदार्थमाह । दुराराध्यमिति ॥ ३६ ॥ ❀ ❀ फलश्रवणे क्षिप्रं प्रवृत्तिः स्यादिति तद्वक्ति । यो वा इति । अपिशब्दे-नान्यदुष्कृतानां संग्रहात् ब्रह्मपरमात्मतत्त्वमज्ञजनेन वध्यत इति ब्रह्मवधः संसारस्तस्मात् उक्तफलेऽधिकारिणमाह । द्विज इति । तस्यैव हरौ निरतिशयभक्तिसम्भवात् ॥ ३७ ॥ ❀ ❀ गानाद्यशक्तानां श्रवणैकरतानां किं फलमत्राह । एतदिति । अन्त इति विशेषणात् श्रवणाभ्यासेन मननादिशक्तिसम्भवात् अपरोक्षज्ञानसामग्र्यां लिङ्गशरीरविनाशे नारायणो गम्यत इति गतिर्भवतीति ध्वनयति ॥ ३८ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम् एकोनविंशोऽध्यायः ॥ १९ ॥

## श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

स्वं वराहमेव ॥ ३१ ॥ ३२ ॥ ❀ ❀ इति कौषारवेत्यादिकं श्रीशुकवचनादधिकं सूतवचनमिति गम्यते ॥ ३३ ॥ ॥ ३४ ॥ ३५ ॥ ❀ ❀ तमिति । ऋजुभिरकुटिलैरत एवानन्यशरणैः असाधुभिस्ततोऽन्यादृशैः । कृतज्ञः शरणागतिमात्रे सुखाराध्यताविज्ञः । पुरुषार्थचतुष्टयदातृत्वात् । तदेवं सति को न सेवेत तस्यैव सेवापरित्यागेन तत्तदन्यद्वाञ्छेदित्यर्थः ॥ ३६ ॥ ❀ ❀ सर्व्वकारणं तत्तत्त्वं तदेव शूकररूप आत्मा विग्रहो यस्य ॥ ३७ ॥ ❀ ❀ एतदिति । अङ्ग हे शौनक ! ॥ ३८ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भस्य एकोनविंशतितमोऽध्यायः ॥ १९ ॥

## श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

पुष्करं पद्मं विष्टरमासनं यस्य स ब्रह्मा तदादिभिः ॥ ३१ ॥ ❀ ❀ यथानूक्तं गुरूक्तमनतिक्रम्य यद्वा यथा उक्तं श्रीगुरुणेत्यर्थतो लभ्यम् । तथा अनु अनन्तरं ते तुभ्यमवादि उक्तम् । हे सुमित्र ! चेष्टितमेव केन प्रकारेण ज्ञातं तत्राह । यथा येन प्रकारेण ॥ ३२ ॥ ३३ ॥ ❀ ❀ पुण्यश्लोकानां युधिष्ठिरादीनां पुण्यश्लोको युधिष्ठिरः इति प्रसिद्धः ॥ ३४ ॥ ❀ ❀ कथाश्रवणमात्रेण मनुष्यानुद्धरतीति किं वक्तव्यं यतः स्मरणेनापि पशूनप्युद्धरति स्मेत्याह । य इति । झषो ग्राहः झषादिति किं वक्तव्यं कृच्छ्रतः संसारादपि । करेणूनामिति तासां पतिमित्यर्थः ॥ ३५ ॥ ❀ ❀ अतः स सदैवाराधयितुमुचित इत्याह । तमिति । कृतज्ञः शरणागतपालनाभिज्ञः । असाधुभिरनृजुभिरनन्यशरणैश्च ॥ ३६ ॥ ❀ ❀ सकामानपि कथाश्रवणे प्रवर्त्तयति । यो वा इति ॥ ३७ ॥ ३८ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् । तृतीये एकोनविंशः सङ्गतः सङ्गतः सताम् ॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

हे सुमित्र ! विदुर ! यथानूक्तं यथोपदेशं मया ते अवादि तुभ्यं कथितम् । हे द्विज शौनक ! ॥ ३२ ॥ ३३ ॥ ❀ ❀ एतद्वराहविक्रीडितं पदं रक्षकम् ॥ ३७ ॥ ३८ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे एकोनविंशाध्यायार्थप्रकाशः ॥ १९ ॥

## श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

एवं भगवानवतारं कृत्वा तदुपसंहारं चकारेत्याह—एवमिति । असह्यविक्रमं हिरण्याक्षं सम्यक् सादयित्वा स्वं लोकं जगामेति संबन्धः । असह्यविक्रम इति तद्गतो दोषो मारणे हेतुः । हरिरिति तस्य तथाकरणे स्वधर्मो हेतुः । आदिसूकर इति शीघ्रं तिरोभावे हेतुः आदिपदं चाऽलौकिकपरम् , तेन तस्य दोषाभावः । स्वमित्यावश्यकम् । यद्यप्यत्रापि स्थितिः कीर्तिजनिका भवति, तथाप्यखण्डितोत्सवो लोको वैकुण्ठाख्यः । उत्सवा हर्षहेतवो न कदाचिदपि खण्डिता भवन्तीत्यवतारकार्यसमाप्तिं सूचयति । पुष्करविष्टरादिभिः कमलासनब्रह्मादिभिः सम्यक् स्तुतः ॥ ३१ ॥ ❀ ❀ एवं वराहचरित्रमुक्त्वा तस्य चरित्रान्तरमप्येवं भविष्यतीत्याशङ्कयाऽऽह—मयेति । अस्तु वा, मा वा; यावत् यथानूक्तम् , गुरुपरम्परया प्राप्तम् , अस्मद्गुरुणा यथोक्तम् ; तथा ते तुभ्यमवादि । आवश्यककरणे हेतुः—हरेरिति । कृतावतारस्येति गुरूणामपि ज्ञाने हेतुः । सुमित्रेति संबोधनं गुह्यकथनार्थम् । सुष्ठु मित्रमिति यथाऽहं तथेति, नाऽत्र गोप्यमिति, सम्यक्कथने हेतुः । परम्परायामन्धत्वं वारयति—यथा हिरण्याक्ष इति । उदारो विक्रमो यस्य । सर्वेषां गायकानां सर्वेष्वेव वीरेषु कीर्तिः, तेभ्यः स्वसामर्थ्यात् सर्वं प्रयच्छतीति महामृधे लौकिकसंग्रामे हिरण्याक्षकृते सति, क्रीडनवत् काष्ठपुत्रिकावत् , निराकृतः । यथा भगवता कृतम् , तथाऽस्मद्गुरुभिरुक्तम् ; तथैव मयोक्तमित्यर्थः ॥ ३२ ॥ ❀ ❀ अस्य चरित्रस्य त्रिविधं फलमाह, एतद्दृष्टमन्यदृष्टमदृष्टं च षड्भिः । द्वाभ्यां द्वाभ्यामेकैकम् । तत्र प्रथमं तस्यां कथायां श्रुतायां विदुरदृष्टमाह द्वयेन—इतीति कथनोपपादनाभ्याम्—तत्र प्रथमं कथायां श्रुतायां तस्य किं जातमित्याकाङ्क्षायामाह—इत्यमुना प्रकारेण । कुषारोः पुत्रः कौषारवो मैत्रेयः । पितृनाम्ना तन्निर्देशः कथने विश्वासार्थः । भगवत्कथामिति कथाया अपि षड्गुणा निरूपिताः ।

क्षत्तेति विचक्षणः, मोहकक्रीलां परित्यज्य मुख्यलीलाग्रहणार्थमुक्तः। परमानन्दं कथायामेव विद्यमानं श्रोतृविशेषादभिव्यक्तं लेभे तथात्वे हेतुः—भगवत इति। शौनकादीनां तथात्वाभावात् बाधितार्थत्वमाशङ्क्य निराकरोति—हे द्विजा इति। वेदोक्तकर्मादि-भारवत्त्वात् तदस्फूर्तिरिति भावः ॥ ३३ ॥ ❀ ❀ अत एव तदुपपादयति—अन्येषामिति पुण्या श्लोका कीर्तिर्येषां नलादीनाम्। कीर्तियशसोः पूर्वं वैलक्षण्यमुक्तम्, सदाचारपराक्रमकृतम्, वैदिकलौकिकभेदेन भिन्नम्। उभयवत्त्वे सत्त्वम्। प्रमोदे वा त्रयं हेतुः। कृपालुत्वादयः सद्धर्मा अन्तःकरणोत्कर्षहेतवः। बहुधाऽऽवर्तितं सत्कर्म, सानुभावं सत्, पुण्यकीर्त्तित्वमापद्यते। उद्दामं यशो येषाम्, अव्याहतपराक्रमजन्यमित्यर्थः। तेषां कथामुपश्रुत्य, मोदः श्रवणसुखं भवेत्। श्रीवत्साङ्कपदेन सदाचारः सर्वे गुणाश्च निरूपिताः, लक्ष्मीस्थानत्वात्। तदप्यङ्कं चिह्नमिव। एतादृशान्यपि चिह्नानि बहूनीति कैमुतिकन्यायो युक्तः[1] ॥ ३४ ॥ ❀ ❀ तस्य चरित्रान्तरं संवादार्थं तथाविधमाह—यो गजेन्द्रमिति द्वाभ्यां स्वरूपफलभेदेन। तत्र स्वरूपमाह—यो गजेन्द्रमिति। यो हरिः, झषग्रस्तं नक्रधृतम्, धरणेन निमग्नं वा, कृच्छ्रतोऽमोचयत्। मोचने हेतुः—ध्यायन्तमिति। चरणाम्बुजमिति प्रेमभक्तिमार्गेण ध्यानं निरूपितम्। क्रोशन्तीनां करेणूनामिति दीनता निरूपिता। कृच्छ्रतस्तस्मात् सङ्कटात्। शीघ्रममोचयत्। दृष्टद्वारा भगवानेव फलप्रद इत्युक्तम्। तथा सति दृष्टं परित्यज्य कोऽन्यमदृष्टं भजिष्यतीति वक्ष्यति। भजनीयसाधकं दयासाधकं चैतच्चरित्रमिति तदेव प्रकृतोपयोगित्वादानन्दजनकत्वेनोच्यते झषोऽत्र[2] नक्रो जलचरविशेषः, सर्व एव नक्रा झषा इत्युच्यन्ते। तेन शरीरेणैवोद्धारे करेणुकृता दया हेतुः, सर्वथोद्धारे ध्यानमिति विशेषः। अनेन साधनाभावोऽप्युक्तः। गजश्रेष्ठो हि महामत्तो भवति, झषग्रस्तः सर्वसाधनरहितो भवति। जातिस्वरूपप्रतिबन्धानां दुष्टत्वात् भगवत्प्रसादो दुर्लभ इति गजेन्द्रनिरूपणम्। अवस्थास्वरूपसंबन्धानां दुष्टत्वात् लौकिकत्वाच्च एकेनैव ध्यानेन तत्संबन्धिनामपि सुखं कृतवानिति करेणूनां कीर्तनम् ॥ ३५ ॥ ❀ ❀ एवमनेकार्थ-प्रतिपादकं चरित्रमुक्त्वा येनांशेनाऽत्र दृष्टान्तत्वम्, तद्रूपं कीर्तयन् भजनं फलरूपं समर्थयति—तमिति। वैषयिकसुखादप्यधिक-सुखसाधकानि यत्र साधनानि फलं चाऽलौकिकं महत् स सुखाराध्यः, सुखेनैवाऽऽराधयितुं शक्यः। तत्राऽतिप्रसङ्गनिवारणाय विशेषणमाह—ऋजुभिरिति। अवक्रैः कायवाङ्मनोभिः, न वक्रं गृह्णन्ति, न वक्रमाचरन्तीति। अयमपि तेषां स्वाभाविको धर्मः, न त्वागन्तुकः साधनभूतः। एतादृशा मार्गान्तरेऽपि भवन्तीति तद्व्यावृत्त्यर्थमाह—अनन्यशरणैरिति। न विद्यते अन्यत् शरणं येषाम्। अनेन शरणागतौ ब्रह्मास्त्रन्याय उक्तः। अशरणाश्च न तिष्ठन्तीत्यर्थात् भगवच्छरणाः। नृभिः साधारणैर्मनुष्यैः। अभिमाना-भावाय प्रकृतोपयोगिविवेकाय चोक्तम्। कृतज्ञ इति। जनकत्वादन्तर्यामित्वात्, पालकत्वात्, पूर्वभजने विशेषोपकारकरणाद्वा यो भगवत्कृतं जानाति, स को वा न सेवेत ? अकृतज्ञस्तु न सेवते। तत्र भगवद्गुणा एव हेतव इत्याह—दुराराध्यमिति। अन्यथा पाक्षिकभजनीयः स्यात्। न हि ते न भजन्तीति, किन्तु भगवानेव दुराराध्यो दुःखेना-ऽप्याराधयितुमशक्यः। असाधव शिश्नोदरपराः ॥ ३६ ॥ ❀ ❀ एवं भजनसमर्थनमुक्त्वा अलौकिकं फलमाह—यो वै हिरण्याक्षवधमिति द्वाभ्याम्, पापनिवर्तकं फलजनकं च। तत्र प्रथमं पापनिवर्त्तकत्वमाह—हिरण्याक्षवधमिति। अन्यथा हिरण्याक्षस्य ब्राह्मणत्वाद्वधः श्रोतव्यो न स्यात्। महाद्भुतमिति मतान्तरसिद्धम्, वधस्य हितरूपत्वाद्वा। महानद्भुतो भवतीति महत्त्वं श्रोतृणामप्युपकारसाधकत्वात्। तथापि श्रोतव्यतायां हेतुमाह—विक्रीडितमिति। विशेषेण क्रीडितं यत्र। भगवतो युद्धलीला हि तत्र स्पष्टा, भगवत्सम्बन्धेन शोधितत्वात् तथात्वम्। कारणसूकरात्मन इति यज्ञार्थं सृष्ट्यर्थं च तथाकरणं युक्तमित्युक्तम्। 'कर्तुः शास्तुरनुज्ञातुः' इति न्यायेन त्रयाणां फलमाह—शृणोति गायत्यनुमोदते इति। श्रवणं मुख्यम्, गानं शास्त्ररूपम्। सुखस्य तत्र दृष्टकारणत्वात् तस्याऽप्रायश्चित्तत्वमाशङ्क्याऽऽह—गायतीति। अनुमोदनं तादृशम्, यदुभय-निर्वाहकम्। क्रियमाणस्तोत्ररूपमिति केचित्। अञ्जसेति। सर्वत्र सर्वभावेन श्रवणम्; अर्थतः, तात्पर्यतः शब्दतश्च। कीर्तनेऽपि एतत्त्रयम्, हेत्वभावश्च। अनुमोदनमपि हेत्वभावात्। तदा वधमात्रदोषाद्विमुच्यते। प्रधानपरं न भविष्यतीत्याह—ब्रह्मवधादपीति। द्विजा इति ज्ञानार्थमुक्तम्। ज्ञाने सत्यन्यस्याऽपि भवतीति ज्ञातव्यम्। यज्ञसंबन्धात् द्विजस्यैव भवतीति वा ॥ ३७ ॥ ❀ ❀ फलजनकत्वमाह—एतदिति। चतुर्विधपुरुषार्थसाधकमेतत्। तत्र धर्मो द्विविधः, स्वर्गादिफलसाधको देहादिसंस्कारसाधकश्च। तदु-भयरूपमाह—महापुण्यमलं पवित्रमिति। अव्यभिचारिश्रेयःसाधनं महापुण्यम्, सर्वथाऽन्तःकरणपवित्रहेतुरलं पवित्रम्। अर्थो द्विविधः, धनरूपो यशोरूपश्च 'यशःश्रियामेव' इत्यत्र वक्ष्यते। तदुभयमाह—धन्यं यशस्यमिति। कामस्त्रिविधः, जीवनभोगशत्रुजयात्मकः; 'शरीरारोग्यमैश्वर्यमरिपक्षक्षयः' इति वाक्यात्। तत्त्र[3]यमाह——आयुषामाशिषां च पदम्, प्राणेन्द्रियाणां युधि धैर्यवर्धनमिति। आशिषः पुत्रादयो विष[4]याः, तेषामिदमेव पदम्, अस्योपाख्यानस्य सृष्टिहेतुत्वात्। प्राणो बलसाधनम्, इन्द्रियाणि करणानि। पूर्वत्र वा संबन्धः भक्ष्यभोगात्मको विषय इति। युद्धे धैर्यवर्द्धनं यस्मादिति। धैर्यादेव जयः, धैर्यस्य बलेन्द्रियसहकारित्वात् तत्संबन्धित्वेन निरूपितम्। क्षेमशूरव्यावृत्त्यर्थम्—युधीति। मोक्षसाधकत्वमाह—नारायण इति। अस्मच्छास्त्रे नारायणप्राप्तिरेव मोक्ष इत्येकविध एवोक्तः। तत्र भगवच्छास्त्रे नारायणप्राप्तिस्त्रिविधा—ब्रह्माण्डविग्रहे नारायणे सायुज्यम्, अक्षरे, पुरुषोत्तमे वा तत्त्रयमपि नारायण-शब्द एव वदतीति नारायणपदप्रयोगः। 'नराज्जातानि तत्त्वानि नाराणीति विदुर्बुधाः' 'नराणां समूहो नारम्, इति, 'आपो नारा इति

---

१. अप्युक्तः ख. । २. अत्रेति नास्ति क. ग. ङ । ३. तद्रूपम् क. घ. ङ. । ४. अन्यविषयाः ख घ।

प्रोक्ताः' इति च। प्रथमार्थे पुरुषोत्तमः, द्वितीयेऽक्षरम्, तृतीये ब्रह्मपिता। अस्य श्रवणात् त्रिविधो भवतीति नारायणपदम्। अङ्गेति संबोधनमप्रतारणाय स्नेहबोधकम्। गतिर्भवतीत्यर्थः। गतिशब्दः पर्यवसानफलवाचकः। शृण्वतामिति प्रधानस्यैवैतत्फलमुक्तम्॥ ३८॥

इति श्रीभागवतसुबोधिन्यां श्रीलक्ष्मणभट्टात्मजश्रीवल्लभदीक्षितविरचितायां तृतीयस्कन्धे एकोनविंशाध्यायविवरणम्।

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

मयेत्यत्र। आवश्यककरण इति। अवश्यमवतरणे॥ ३२॥ ❀ ❀ इति कौषारवेत्यत्र। आहेति। सूतमुखेन व्यास आह॥ ३३॥

इति श्रीतृतीयस्कन्धसुबोधिनीप्रकाशे एकोनविंशाध्यायविवरणं सम्पूर्णम्।

### श्रीगिरिधरकृता बालप्रबोधिनी।

एवं विदुरेण 'तेनैव तु मुनिश्रेष्ठ हरिणा यज्ञमूर्तिना' इत्यादिना यत्पृष्टं हिरण्याक्षवधवृत्तान्तं तत् सप्रपञ्चमभिधाय निगमयति—एवमिति द्वयेन। असह्यविक्रमं दुर्धर्षपराक्रमं हिरण्याक्षं स आदिसूकरो भगवान् हरिः एवमुक्तप्रकारेण सादयित्वा निहत्य पुष्करविष्टरः कमलासनो ब्रह्मा तदादिभिर्देवैः समीडितः संस्तुतः सन् अखण्डितः अनन्त उत्सवो यस्मिंस्तं स्वं स्वीयं लोकं वैकुण्ठं जगामेत्यन्वयः॥ ३१॥ ❀ ❀ विश्वासार्थं स्नेहं सूचयन् विदुरं सम्बोधयति—सुमित्रेति। यथा उदारविक्रमो महाबलपराक्रमो हिरण्याक्षो महामृधे हरिणा क्रीडनवत् मृद्रचितपुत्तिकावत् अनायासेन निराकृतो विनाशितः तथा कृतावतारस्य धृतवराहरूपस्य हरेश्चेष्टितं चरितं यथाऽनूक्तं गुरूक्तिमनतिक्रम्य मया ते तुभ्यं अवादि कथितमित्यन्वयः॥ ३२॥ ❀ ❀ प्रसक्तानुप्रसक्तं वाराहचरितमुपसंहरति—इतीत्यादिना। इत्युक्तप्रकारेण कौषारवेण मैत्रेयेण आख्यातां कथितां भगवतो वराहस्य कथां श्रुत्वा क्षत्ता विदुरः परं महान्तं आनन्दं लेभे। तत्र हेतुमाह—महाभागवत इति। भागवतत्वादेव तवाग्रेऽपि मया कथितमित्याशयेन शौनकं सम्बोधयति सूतः—द्विजेति॥ ३३॥ ❀ ❀ तत्रैव कैमुत्यन्यायमाह—अन्येषामिति। पुण्यश्लोकानां पवित्रकीर्तीनां अतएव उद्दामं सर्वतः प्रसृतं यशो येषां तेषामन्येषामपि सतां तद्भक्तानां कथां आश्रुत्य मोद आनन्दो भवेत्, श्रीवत्साङ्कस्य भगवतः कथामुपश्रुत्य मोदो भवेदिति किं पुनर्वक्तव्यमित्यर्थः॥ ३४॥ ❀ ❀ झषेण मकरेण ग्रस्तं गजेन्द्रं कृच्छ्रतस्तद्ग्रसनदुःखात् द्रुतं अमोचयत्तं सुखाराध्यं को न सेवेतेति द्वयोरन्वयः। करेणूनां हस्तिनीनां क्रोशन्तीनां रुदन्तीनां सतीनामिति दैन्यं दर्शितम्। मोचने मुख्यं हेतुमाह—ध्यायन्तं चरणाम्बुजमिति, अनेनैव सुखाराध्यत्वं च दर्शितम्। गजेन्द्रमित्यनेन जातिसंस्कारादिनियमोऽपि नापेक्ष्यते इति सूचितम्। तर्हि कुतो बहवस्तमसेवमाना दृश्यन्ते इत्याशङ्क्याह—कृतज्ञ इति। तत्कृतोपकारज्ञानाभावान्न सेवन्ते इत्याशयः। ननु तस्यान्तर्यामित्वात् जनकत्वात् कृपालुत्वाच्च तत्कृतं कुतो न जानन्तीत्यपेक्षायां विषयाविष्टचित्तत्वेन तदनुसन्धानाभावादित्याशयेनाह—दुराराध्यमिति, असाधुभिः स्वपरमार्थसाधनशून्यैः विषयाविष्टचित्तैः दुराराध्यमित्यर्थः। बहूनां तदाराधनपराणामपि तल्लाभस्यादर्शनात् कथं तस्य सुखाराध्यत्वमित्याशङ्क्याह—ऋजुभिरिति, अवक्रैः निष्कपटैरित्यर्थः। के ते इत्यपेक्षायामाह—अनन्यशरणैर्नृभिरिति, निरपेक्षैरैकान्तभक्तैरित्यर्थः॥ ३५॥ ॥ ३६॥ ❀ ❀ एवं भगवत्कथायाः सर्वैरुपादेयत्वमुक्त्वा प्रकृतस्य हिरण्याक्षवधस्य श्रवणादेः फलमाह—यो वा इति। महाद्भुतं चित्ताह्लादकरं कारणसूकरात्मनः जगत्कारणभूतस्य धृतवाराहरूपस्य भगवतो विक्रीडितं क्रीडारूपं हिरण्याक्षवधं यो वै य एव प्राणी शृणोति गायति कीर्त्तयति श्रुत्वाऽनुमोदते च सः अञ्जसा प्रायश्चित्तान्तरप्रयासमन्तरेणैव ब्रह्मवधात् 'ब्रह्महत्याश्वमेधाभ्यां नापरं पुण्यपापयोः' इति निरतिशयपापत्वेनोक्तादपि विमुच्यते। अन्येभ्यः पापेभ्यो विमुच्यते इति किं वक्तव्यम्?। एतच्च युष्माकमपि सम्मतमित्याशयेन सम्बोधयति—द्विजा इति॥ ३७॥ ❀ ❀ तत्र हेतुः—अलं पवित्रमिति, अतिशयेन शोधकमित्यर्थः। न केवलं पापनिवर्त्तकं किन्तु सर्वपुरुषार्थसाधकमपीत्याह—एतदिति। एतद्भगवच्चरितं शृण्वतामिति कीर्त्तनादि कुर्वतामप्युपलक्षणम्। महापुण्यं निरतिशयपुण्यजनकम्। धन्यं धनकरम्। यशस्यं यशस्करम्। आयुषः आशिषां सर्वमनोरथानां पदं सम्पादकम्। युधि युद्धे प्राणेन्द्रियाणां शौर्यस्य सामर्थ्यस्य वर्द्धनम्। अन्ते प्रारब्धसमाप्तौ नारायणो गतिः फलतया प्राप्तो भवतीत्यर्थः। अङ्गेति सम्बोधनेन अप्रतारकत्वं सूचयति॥ ३८॥

इति श्रीवल्लभाचार्यवंश्यगोपालसूनुना॥ श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा॥ १॥
श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये॥ श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी॥ २॥
रचिता च तृतीयेऽत्र बन्धसर्गनिरूपणे॥ ऊनविंशो गतो वृत्तिं दैत्यवधनिरूपकः॥ ३॥

## हिन्दी अनुवाद

श्रीमैत्रेयजी कहते हैं—विदुरजी ! इस प्रकार महापराक्रमी हिरण्याक्षका वध करके भगवान् आदिवराह अपने अखण्ड आनन्दमय धामको पधार गये । उस समय ब्रह्मादि देवता उनकी स्तुति कर रहे थे ॥ ३१ ॥ ❀ ❀ भगवान् अवतार लेकर जैसी लीलाएँ करते हैं और जिस प्रकार उन्होंने भीषण संग्राममें खिलौनेकी भाँति महापराक्रमी हिरण्याक्षका वध कर डाला, मित्र विदुरजी ! वह सब चरित जैसा मैंने गुरुमुखसे सुना था, तुम्हें सुना दिया ॥ ३२ ॥ ❀ ❀ सूतजी कहते हैं—शौनकजी ! मैत्रेयजीके मुखसे भगवान्‌की यह कथा सुनकर परम भागवत विदुरजीको बड़ा आनन्द हुआ ॥ ३३ ॥ ❀ ❀ जब अन्य पवित्रकीर्ति और परम यशस्वी महापुरुषोंका चरित्र सुननेसे ही बड़ा आनन्द होता है, तब श्रीवत्सधारी भगवान्‌की ललित-ललाम लीलाओंकी तो बात ही क्या है ॥ ३४ ॥ ❀ ❀ जिस समय ग्राहके पकड़नेपर गजराज प्रभुके चरणोंका ध्यान करने लगे और उनकी हथिनियाँ दुःखसे चिग्घाड़ने लगीं, उस समय जिन्होंने उन्हें तत्काल दुःखसे छुड़ाया और जो सब ओरसे निराश होकर अपनी शरणमें आये हुए सरलहृदय भक्तोंसे सहजमें ही प्रसन्न हो जाते हैं किंतु दुष्ट पुरुषोंके लिये अत्यन्त दुराराध्य हैं—उनपर जल्दी प्रसन्न नहीं होते, उन प्रभुके उपकारोंको जाननेवाला ऐसा कौन पुरुष है, जो उनका सेवन न करेगा ? ॥ ३५-३६ ॥ ❀ ❀ शौनकादि ऋषियों ! पृथ्वीका उद्धार करनेके लिये वराहरूप धारण करनेवाले श्रीहरिकी इस हिरण्याक्ष-वध नामक परम अद्भुत लीलाको जो पुरुष सुनता, गाता अथवा अनुमोदन करता है, वह ब्रह्महत्या-जैसे घोर पापसे भी सहजमें ही छूट जाता है ॥ ३७ ॥ ❀ ❀ यह चरित्र अत्यन्त पुण्यप्रद, परम पवित्र, धन और यशकी प्राप्ति करानेवाला, आयुवर्द्धक और कामनाओंकी पूर्ति करनेवाला तथा युद्धमें प्राण और इन्द्रियोंकी शक्ति बढ़ानेवाला है । जो लोग इसे सुनते हैं, उन्हें अन्तमें श्रीभगवान्‌का आश्रय प्राप्त होता है ॥ ३८ ॥

॥ १९ वाँ अध्याय समाप्त ॥

# अथ विंशोऽध्यायः

### शौनक उवाच

महीं प्रतिष्ठामध्यस्य सौते स्वायम्भुवो मनुः । कान्यन्वतिष्ठद् द्वाराणि मार्गायावरजन्मनाम् ॥ १ ॥
क्षत्ता महाभागवतः कृष्णस्यैकान्तिकः सुहृत् । यस्तत्याजाग्रजं कृष्णे सापत्यमघवानिति ॥ २ ॥
द्वैपायनादनवरो महित्वे तस्य देहजः । सर्वात्मना श्रितः कृष्णं तत्परांश्चाप्यनुव्रतः ॥ ३ ॥
किमन्वपृच्छन्मैत्रेयं विरजास्तीर्थसेवया । उपगम्य कुशावर्त आसीनं तत्त्ववित्तमम् ॥ ४ ॥
तयोः संवदतोः सूत प्रवृत्ता ह्यमलाः कथाः । आपो गाङ्गा इवाघघ्नीर्हरेः पादाम्बुजाश्रयाः ॥ ५ ॥
ता नः कीर्तय भद्रं ते कीर्तन्योदारकर्मणः । रसज्ञः को नु तृप्येत हरिलीलामृतं पिबन् ॥ ६ ॥
एवमुग्रश्रवाः पृष्ट ऋषिभिर्नैमिषायनैः । भगवत्यर्पिताध्यात्मस्तानाह श्रूयतामिति ॥ ७ ॥

### सूत उवाच

हरेर्धृतक्रोडतनोः स्वमायया निशम्य गोरुद्धरणं रसातलात् ।
लीलां हिरण्याक्षमवज्ञया हतं सञ्जातहर्षो मुनिमाह भारतः ॥ ८ ॥

### विदुर उवाच

प्रजापतिपतिः सृष्ट्वा प्रजासर्गे प्रजापतीन् । किमारभत मे ब्रह्मन् प्रब्रूह्यव्यक्तमार्गवित् ॥ ९ ॥
ये मरीच्यादयो विप्रा यस्तु स्वायम्भुवो मनुः । ते वै ब्रह्मण आदेशात्कथमेतदभावयन् ॥ १० ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

विंशे वराहजन्मादिव्यवधानादथादितः ॥ सर्गोऽनुस्मार्यते वक्तुमन्वयं प्रस्तुतं मनोः ॥ १ ॥

प्रतिष्ठां स्थानम् । अध्यस्य प्राप्य सौते सूतस्य रोमहर्षणस्य पुत्र अवरमर्वाचीनं जन्म येषां तेषामीश्वरे लीनानां मार्गाय निर्गमाय कानि द्वाराणि कृतवान् । अर्वाचीनान् प्राणिनः कैरुपायैः सृष्टवानित्यर्थः ॥ १ ॥ ❀ ❀ विदुरमैत्रेयसंवादेनैवैतज्ज्ञास्यत इति तमेव संवादं प्रष्टुमाह । क्षत्तेति पंचभिः । श्रीकृष्णसुहृत्त्वे हेतुः । य इति । दुर्योधनादिभिरपत्यैः सहितमग्रजं धृतराष्ट्रमघवान्कृतापराध इति हेतोः श्रीकृष्णोक्तमंत्रानादरायस्तत्याज ॥ २ ॥ ❀ ❀ अनवरो न्यूनः महित्वे महिम्नि ॥ ३ ॥ ❀ ❀ कुशावर्ते गंगाद्वारे ॥ ४ ॥ ❀ ❀ यत्किमपि पृच्छतु किं तवेति चेत्तत्राह । तयोरिति । अघघ्नीरघघ्न्यो नूनं कथाः प्रवृत्ताः ॥ ५ ॥ ❀ ❀ कीर्तन्यानि कीर्तनार्हाण्युदाराणि कर्माणि यस्य हरेः ॥ ६ ॥ ❀ ❀ एवमिति व्यासवाक्यम् । उग्रश्रवा रोमहर्षणपुत्रः नैमिषमयनमाश्रयो येषाम् । अर्पितमध्यात्मं मनो येन ॥ ७ ॥ ❀ ❀ गोरुद्धरणं लीलां हिरण्याक्षं चावज्ञया हतं निशम्य । भारतो विदुरः ॥ ८ ॥ ❀ ❀ यस्मात्त्वमव्यक्तमार्गवित् । ब्रह्मणो वा विशेषणम् ॥ ९ ॥ ❀ ❀ एतज्जगत् । अभावयन्नुत्पादयामासुः ॥ १० ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

आदिना युद्धादिग्रहः । अथ पुनः । प्रस्तुतम् ॥ १ ॥ प्रासंगिकीं वाराहलीलां श्रुत्वा प्रकृतं पृच्छति महीमिति । अवरं सनकादिभ्यः । इत्यर्थ इति । कथमेते सृष्टा इति भावः ॥ १ ॥ ❀ ❀ तत् अर्वाचीनप्राण्युत्पत्तिद्वारं ज्ञायते बोधिष्यते तथा च विदुरकथाप्रश्ने स्वातंत्र्येण मम प्रश्नोऽनुचित इति विमृश्य तत्प्रश्नमेव पृच्छति । क्षत्तेति । ऐकान्तिकः अनन्यः ॥ २ ॥ ❀ ❀ तस्य द्वैपायनस्य सर्वात्मना सर्वभावेन । यद्वा । सर्वेषामात्मा सर्वात्मा तेन हेतुना तत्परान्कृष्णभक्तान् अनुव्रतः अनुगतः ॥ ३ ॥ ❀ ❀ विगतं रजो यस्मात्स विरजा

---

१. प्रा० पा०—मध्यास्या । २. प्रा० पा०—स्वारवित् ।

तीर्थसेवयेति हेतूक्तेः। प्रत्यासत्त्या च तीर्थानामिव मालिन्यं विगतमित्यर्थः। "तीर्थीकुर्वंति तीर्थानि" इति युधिष्ठिरोक्तेः॥ ४॥ ॐ ॐ स्वयमाक्षिप्य समाधत्ते यत्किमपीति। तयोर्विदुरमैत्रेययोः प्रवृत्ता इत्यनेनादित एव शुश्रूषा स्पष्टीकृता गांगा गंगासंबं-धिन्यः उभयोः श्रीकृष्णभक्तत्वेन श्रीकृष्णकथेतरकथास्तत्र न संजाता इत्यतस्तत्संवादं ब्रूहीति भावः॥ ५॥ ॐ ॐ कीर्त्तन्यो-दारकर्मणः श्रीकृष्णस्य ताः कथाः नोऽस्मभ्यम्॥ ६॥ ॐ ॐ ऋषिभिश्शौनकादिभिः॥ ७॥ ॐ ॐ सुष्ठु अमायया धृता नित्यस्थिता क्रोडतनुर्येस्य तस्य तौदादिकस्य 'धृङ्-अवस्थाने' इति धातोः क्तप्रत्यये रूपम्। यस्यां लीलायां गोरुद्धरणमस्ति तां लीलां तत्रैवावज्ञया हेतुना हतं च निशम्य॥ ८॥ ॐ ॐ प्रजापतयो मरीच्यादयस्तेषां पतिर्ब्रह्मा। प्रजासर्ग इति। निमित्ते सप्तमी। अव्यक्तमार्गवित्। अस्मदाद्यगोचरवस्तुवेत्ता॥ ९॥ १०॥ ११॥

## श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

प्रासङ्गिकेन वराहजन्मतच्चरितादिना यद्व्यवधानं तस्मादेव हेतोः अथ एकोनविंशाध्यायानन्तरमादितः प्रकृतित एव प्रस्तुतं वर्णनीयम्। निर्गमाय ईश्वरान्निःसारणाय यथा गृहान्निःसरणे द्वारमुपायो भवति तथात्र कैरुपायैरिति गौण्या व्याख्यातत्वा-दित्यर्थ इत्युक्तम्॥ १॥ ॐ ॐ एतत् सृष्टिप्रकरणम्॥ २॥ ॐ ॐ सर्वात्मनानन्यवृत्त्या॥ ३॥ ॐ ॐ प्रथमं दुःसङ्गप्रायश्चित्तेच्छया तीर्थसेवया विरजाः पश्चान्मैत्रेयमुपसङ्गम्य॥ ४॥ ॐ ॐ पादाम्बुजाश्रयास्तद्विषयिण्यः॥ ५-६॥ ॐ ॐ यद्यपि शौनकेन प्रश्नः कृतस्तथापि सर्वैस्तत्प्रश्नस्यानुमोदनादृषिभिरिति बहुवचनम्॥ ७॥ ॐ ॐ हरेरिति सूतवाक्यं शुकवाक्यानुवादरूपम्। गोरुद्धरणरूपां लीलां निशम्य तत्रापि अवज्ञया हतं हिरण्याक्षं च निशम्येति योज्यम्॥ ८॥ ॐ ॐ यस्मात्त्वमव्यक्तमार्गवित् अस्मदाद्यगोचरवस्तुवेत्ता ब्रह्मविशेषणपक्षे ब्रह्मवर्त्मज्ञः॥ ९—१०॥

## श्रीमद्वीरराघवव्याख्या

द्वितीयस्कन्धान्ते 'यथासौ भगवान् सूत! क्षत्ता भागवतोत्तम' इत्यादिना विदुरमैत्रेयसम्वादे शौनके पृष्टे राजा परीक्षिता पृष्टो यदवोचदित्यादिना त्वया पृष्ट एव विदुरमैत्रेयसम्वादो राज्ञा पृष्टः शुकेनोक्तः। अतो राजशुकप्रश्नोत्तरा-नुसारेणैव विदुरमैत्रेयसम्वादं वर्णयामीत्युपक्रम्य सूतेनैकोनविंशत्यध्यायगणेन वर्णिते सति पुनः शौनकः 'स' वै स्वायम्भुवः सम्राडित्यादिना विदुरपृष्टं यदा स्वभार्यया साकमिति मैत्रेयेणोपक्रान्तं स्वायंभुवचरित्रं प्रष्टुकामः परम-प्रकृतान् दशमाध्यायादौ अन्तर्हिते भगवति ब्रह्मा लोकपितामहः प्रजाः ससर्ज कतिधा दैहिकीर्मानसीर्विभुरिति विदुरपृष्टान् दैहिकमानसिकप्रजासृष्टिभेदान् कांश्चित्मैत्रेयेण वर्णितानेव सूतमुखादाश्रुत्यावशिष्टान् तद्भेदान् प्रकृतमनुचरितं च पृच्छति शौनकः नवभिः श्लोकैः। यद्यपि परीक्षित्प्रश्नोऽपि शौनकेन प्रष्टव्यः शुकोत्तरमेव सूतेनापि वक्तव्यं नतु विदुर-पृष्टं नापि मैत्रेयेणोक्तं सूतेन वक्तव्यं सूतशौनकसम्वादस्य शुकपरीक्षित्सम्वादरूपत्वात्तथापि विदुरप्रश्नेनैव परीक्षित्प्रश्नोऽपि पृष्टप्राय इत्यभिप्रेत्य साक्षाद्विदुरप्रश्नमेव पृच्छति शौनकः। महीमिति। हे सौते सूतस्य रोमहर्षणस्य पुत्र! महीं भूमिं प्रतिष्ठां यथास्थानमध्यास्य प्रापय्य स्वायम्भुवो मनुरवरमर्वाचीनं जन्म येषां तेषां मार्गाय मृग्यते इति मार्गः धर्मादिचतुर्विधरूपः पुरुषार्थ-स्तस्मै कानि द्वाराण्युपायानन्वतिष्ठदनुष्ठितवान् 'यद्यदाचरति श्रेष्ठ' इति न्यायेन कान्पुरुषार्थोपायान् लोकमर्यादापालनाय स्वयमन्वतिष्ठदित्यर्थः॥ १॥ ॐ ॐ एवं प्रकृतं मनुचरितं पृष्ट्वा परमप्रकृतप्रजासृष्टिभेदाः वैदुरिकप्रश्नेनैव पृष्टप्राया इत्य-भिप्रेत्य वैदुरिकप्रश्नेऽपि पिपृच्छिषया प्रथमं विदुरं प्रशंसति। क्षत्तेत्यादिद्वाभ्याम्। क्षत्ता विदुरः महाभागवतः निरतिशयभगव-द्भक्तियुक्तः अत एव कृष्णस्य भगवतः ऐकान्तिकः असाधारणः सुहृन्निरतिशयप्रीतिविषयः अत्र "प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः" इतिभगवदुक्तरीत्या भगवानपि तस्य सुहृदिति बोद्धव्यं सुहृत्त्वमेव स्पष्टयति। यः क्षत्ता सापत्यं दुर्योधनाद्यपत्य-सहितमग्रजं धृतराष्ट्रं कृष्णे भगवत्यघवान् सापराध इति तत्याज त्यक्तवान् श्रीकृष्णोक्तमन्त्रानादराद्भगवदाश्रितेषु धर्ममर्यादानु-वर्तिषु पाण्डुतनयेषु द्रोहाचरणाच्च कृष्णेऽघवानिति भावः॥ २॥ ॐ ॐ किञ्च महत्त्वे माहात्म्ये द्वैपायनाद् द्वैपायनाद्धेतोः विदुरः अनवरः अन्यूनः सर्वात्मना समस्तभावेन "माता पिता भ्राता निवासः शरणं सुहृद्गतिश्च नारायण" इत्युक्तभावेनेत्यर्थः। कृष्णं भगवन्तमाश्रितः तत्परां भगवत्परांश्चानुव्रतोऽनुवर्तमानः सेवमान इत्यर्थः॥ ३॥ ॐ ॐ एवं विदुरं प्रस्तुत्य तत्पृष्टम-नुपृच्छति किमित्यादिभिस्त्रिभिः। तीर्थानां गङ्गादिपुण्यतीर्थानां सेवया त्रिषवणस्नानादिना विरजाः विधूतबाह्याभ्यन्तरमलः विदुरः कुशावर्ते हरिद्वारकुशावर्तबिल्वकनीलपर्वतकनखलाख्यानि पञ्च तीर्थानि गङ्गाद्वारि सन्ति तत्र कुशावर्ते आसीनं तत्त्वविद-ग्रेसरं मैत्रेयमुपसङ्गम्य किमन्यदपृच्छदनुपृष्टवानित्यर्थः॥ ४॥ ॐ ॐ यत्किमप्यपृच्छत्किन्तदित्यत्राह। हे सूत! तयोर्विदुर-मैत्रेययोः सम्वदतोः सम्वादं कुर्वतोरमलाः शृण्वल्लोकपावन्यः कथाः भगवत्कथाः प्रवृत्ता भवेयुः। अमलत्वे दृष्टान्तः हरेर्भगवतः पदाम्बुजाश्रयाः पादाम्बुजप्रसूताः अघघ्न्य उपस्पृशतामघनिवर्त्तिकाः गाङ्गा गङ्गासम्बधिन्यः आप इवेति॥ ५॥ ॐ ॐ कीर्त्त-न्योदारकर्मणः कीर्त्तनीयजगद्व्यापारादिविस्तरचेष्टितस्य भगवतस्ताः कथाः नोऽस्मभ्यं कीर्त्तय कथय ते तुभ्यं भद्रं मङ्गलमस्तु पुनः पुनः भगवत्कथामेव किं पृच्छसीत्यत्राह। रसज्ञः भगवत्कथारसज्ञः हरेर्लीलैवामृतं तत्पिबन्को नु तृप्येत न कोऽपीत्यर्थः॥

अतोऽतृप्यन्पृच्छामीत्यभिप्रायः ॥ ६ ॥ ❀ ❀ नैमिषं निमिषक्षेत्रमयनं स्थानं येषां तैः नैमिषक्षेत्रवासिभिः शौनकादिभिरेवमुक्तप्रकारेण पृष्ट उग्रश्रवाः सूतः भगवत्यर्पितं निहितमध्यात्ममन्तःकरणं येन सः तान्नैमिषायनान्प्रति श्रूयतामित्याह । एवं विधानि वचनान्यैतद्ग्रन्थकृता त्रैकाल्यज्ञानेन भगवता बादरायणेन स्वकृतग्रन्थस्य तच्छ्रोतृवक्तृक्रमेण भाविनीं प्रवृत्तिमालोच्य तत्सन्दर्शनार्थं न्यस्तानि । अत इदं वचनं द्वैपायनीयमेवेति साम्प्रदायिकाः । तच्छिष्यप्रशिष्यैः सन्दर्भाय विरचय्य न्यस्तानीत्यपरे ॥ ७ ॥ ❀ ❀ एवमापृष्टः सूतो वृत्तवाराहकथाश्रवणे जातहर्षो विदुरः प्रकृतस्वायंभुवचरितं प्रक्ष्यमाणः परमप्रकृतान् प्रजासृष्टिभेदानपृच्छदित्याहैकेन । हरेरिति । स्वमायया स्वसङ्कल्पेन धृतक्रोडतनोर्धृतवराहरूपस्य हरेर्लीलां लीलारूपं रसातलाद्भूमेरुद्धरणमवज्ञया हतं हिरण्याक्षं च निशम्य श्रुत्वा सञ्जातहर्षो भारतः विदुरः मुनिं मैत्रेयमाह ॥ ८ ॥ ❀ ❀ उक्तिमेवाह । त्रिभिः । प्रजापतीनां मरीच्यादिनां पतिः ब्रह्मा प्रजासर्गे निमित्ते प्रजापतीन् सृष्ट्वा किमारभत किमकुर्वत मे मह्यं ब्रूहि हे ब्रह्मन् ! यतस्त्वमव्यक्तमार्गविन्न व्यज्यत इत्यव्यक्तमतीन्द्रियं तस्य मार्गस्य रूपं वेत्ति अतस्त्वं प्रभुः समर्थ इत्यर्थः ॥ ९ ॥ ❀ ❀ मरीच्यादयो ये विप्राः यः स्वायंभुवो मनुश्चेति वै ब्रह्मणश्चतुर्मुखस्यादेशान्निर्देशादेतद्विश्वं कथमभावयन्नसृजन् ॥ १० ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली ।

सृष्टिप्रलयानां स्फुटं विज्ञेयस्य देवादीनां तारतम्यज्ञानस्य हरिप्रीतिजनकत्वेन पुरुषार्थहेतुत्वादनुक्तसमुच्चयार्थं च पूर्वोक्तसृष्टिं प्रपञ्चयत्यस्मिन्नध्याये । "सृष्टौ लये तारतम्यं देवानां ज्ञायते स्फुटम् । तारतम्यपरिज्ञाने महातात्पर्यमिष्यते ॥ अतस्तद्बहुशः सूक्तमन्यच्चैतत्प्रकाशकम् ॥" इति वचनात् प्रवक्ता श्रोतुरभीष्टमर्थं ब्रूते । किमन्यद्वेति ज्ञातुं न शक्यते । तस्मात्तन्निरासार्थं तत्रादौ राजा शुकं पृच्छति । महीमिति । महीमध्यास्य मह्यां स्थित्वा । "अधिशीङ्स्थासां कर्म" इति सूत्रात्सप्तम्यर्थे द्वितीया, अवरजन्मनां पश्चात्तनकाले जातानां प्राणिनां मार्गाय वर्णाश्रमस्वरूपभेदज्ञानाय कानि द्वाराणि सृष्टिसाधनानि अध्यतिष्ठत्तत्र स्थित्वासृजदित्यर्थः ॥ १ ॥ ❀ ❀ विदुरप्रश्नवचनानुसारेण मम वक्तव्यमितिभावेन पृच्छति । क्षत्तेति । सन्निकृष्टमृत्योस्तव विदुरप्रश्नो ग्राम्यविषयत्वेन कथं सङ्गच्छत इत्याशङ्क्य न मादृशोऽसाविति तद्गुणानाह । क्षत्ता महाभागवत इत्यादिना । अत्रैतानि विशेषणानि मिथो हेतुहेतुमद्भावसूचकानीति ज्ञायते "क्षत संचूर्णन" इति धातोः संसारगिरिसंचूर्णनात्क्षत्ताः एकः प्रधानः सर्वोत्तमो हरिरन्तो निर्णयोऽस्यास्तीति अस्मिन्नर्थे यथाविहितप्रत्ययः अघवानपराधवान् ॥ २ ॥ ❀ ❀ सर्वात्मनेति प्रोक्तहेतुनिगमनरूपम् ॥ ३ ॥ ❀ ❀ किमन्वपृच्छन्मया पृष्टमन्यद्वेति कुशावर्ते गङ्गाद्वारे ॥ ४ ॥ ❀ ❀ तत्रान्यप्रसङ्गा दूरीभूता एवेति भावेनाह । तयोरिति ॥ ५ ॥ ❀ ❀ बहुशः श्रुतत्वात्तव तन्द्रा निद्रालुत्वं स्यादिति तत्राह । रसज्ञ इति ॥ ६ ॥ ❀ ❀ एतमर्थं सूतः शौनकादिभ्यः कथयति । एवमिति । अर्पिताध्यात्मः अर्पितं शरीरमधिकृत्य वर्तमानं मन आदीन्द्रियजातं येन सोऽर्पिताध्यात्मः ॥ ७ ॥ ❀ ❀ शुकोऽपि त्वत्पृष्टमर्थं प्रष्टुं विदुरो मैत्रेयं वक्तीत्याह । हरेरिति ॥ ८ ॥ ❀ ❀ किमाहेति तत्राह । प्रजापतीति । अव्यक्तानां परमात्मादितत्त्वानां मार्गं प्रकारं वेत्तीति ॥ ९ ॥ ❀ ❀ राजविदुरप्रश्नयोरेकविषयत्वं वक्ति । य इति । अभावयन् प्रावर्धयन् ॥ १० ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

वराहलीलां प्रासङ्गिकीं श्रुत्वा प्रस्तुतं पृच्छति । महीमिति ॥ १ ॥ ❀ ❀ तदेवं स्वातन्त्र्येण प्रश्नं विदुरप्रश्नमयकथाशुश्रूषायामनुचितं मत्वा तत्प्रश्नमेव पृच्छति । क्षत्तेति पञ्चभिः ॥ २--३ ॥ ❀ ❀ तत्र च यदि कचित्तद्द्वाराविच्छिन्नास्ति तर्ह्यप्यावृत्त्य तामेवादितः प्रवर्तयेत्याह विरजास्तीर्थसेवयेत्यादिना पादोनपद्यत्रयेण । प्रथमं तावत् तीर्थसेवया विरजाः दुःसङ्गदुःखरहितः पश्चादुपगम्य ॥ ४ ॥ ❀ ❀ प्रवृत्ता इत्यादिना पुनरादित एव श्रवणेच्छा स्पष्टीकृता ॥ ५–६ ॥ ❀ ❀ ऋषिभिरिति । श्रीशौनकप्रश्नमनुमोदमानैः सर्वैरेव तदनुवादात् ॥ ७ ॥ ❀ ❀ श्रीसूतस्तु भगवत्क्रमवत् श्रीविदुरस्य क्रम इति कस्माद्धाराविच्छिद्यतेत्येवं तत्प्रशंसागर्भमुत्तरमाह । हरेरिति । तदिदमपि श्रीशुकोक्तमेव सूतोऽयमनुकृतवानिति गम्यते । तदेवानुसृत्यासौ सर्वं कथयति गोरुद्धरणरूपां लीलां निशम्य तस्यामेव हिरण्याक्षमवज्ञया हतं निशम्येत्यर्थः ॥ ८ ॥ ❀ ❀ अव्यक्तमार्गवित् । अस्मदाद्यगोचरवस्तुवेत्ता ॥ ९—१२ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

विसर्गो यः समासेन पूर्वमुक्तः स एव हि । विंशे व्यस्योच्यते स्वायम्भुववंशविवक्षया ॥

प्रतिष्ठामाश्रयम् । सौते ! रोमहर्षणसूनो अवरजन्मनां सनकादिभ्यः उत्तरकालजन्मवतां जीवानामीश्वरे लीलानां मार्गाय निर्गमाय कानि द्वाराणि कृतवान् । अर्वाचीनान् प्राणिनः । कैरुपायैः सृष्टवानित्यर्थः ॥ १ ॥ ❀ ❀ एतत्प्रश्नोत्तरन्तु विदुरमैत्रेयसम्वादेनैव ब्रूहीत्याशयेनाह । क्षत्तेति । सापत्यं दुर्योधनाद्यैः पुत्रैः सहितम् ॥ २ ॥ ❀ ❀ अनवरः अन्यूनः ॥ ३ ॥ ❀ ❀ विरजाः विगतं रजो यस्मात् सः । तीर्थसेवयेति हेतूक्तेः प्रत्यासत्त्या च तीर्थानामेव रजोमालिन्यं विगतमित्यर्थः । कुशावर्त्ते

गङ्गाद्वारे ॥ ४ ॥ ❀ ❀ अमलाः कथा इति तयोर्भक्तत्वात् भक्तानाञ्च कृष्णान्यकथाराहित्यात् गङ्गाया आपः गाङ्गग्यः अघघ्नीरघघ्न्यः ॥ ५ ॥ ❀ ❀ भद्रं ते इत्यौत्सुक्येनाशीर्वादः । कीर्त्तन्यानि उदाराणि कर्माणि यासु यस्य वेति कथाया हरेर्वा ॥ ६ ॥ ❀ ❀ अध्यात्मकं मनः ॥ ७ ॥ ❀ ❀ सुष्ठु अमायया धृता नित्यस्थिता क्रोडतनुर्यस्य तस्य हरेः तौदादिकस्य धृङ् स्थितावित्यस्य रूपम् । गोः पृथिव्याः । भारतो विदुरः ॥ ८—९ ॥ ❀ ❀ एतज्जगत् अभावयन् उत्पादयामासुः ॥ १० ॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः ।

एवं चतुर्मुखकर्तृकसर्गप्रकरणे सप्तभिरध्यायैः प्रासङ्गिकं वराहचरितं वर्णितं संप्रत्यवशिष्टश्चतुर्मुखकृतः सर्गः महदाद्युत्पत्त्यनुवादपूर्वकं वर्ण्यते विंशेनाध्यायेन प्रतिष्ठां स्थानं प्राप्य अवरमर्वाचीनं जन्म येषां तेषां मार्गायोत्पत्तये कानि द्वाराणि साधनानि अन्वतिष्ठत् अनुष्ठितवान् ॥ १ ॥ ❀ ❀ सापत्यं दुर्योधनादिसहितम् ॥ २ ॥ ३ ॥ ❀ ❀ कुशावर्ते द्युनद्याः द्वारि ॥ ४ ॥ ❀ ❀ अघघ्नीः अघघ्न्यः हरेः कथाः प्रवृत्ताः ॥ ५—६ ॥ ❀ ❀ एवमिति श्रीव्यासोक्तिः अर्पितमध्यात्मं मनो येन सः ॥ ७ ॥ ❀ ❀ स्वमायया स्वेन वयुनेन संकल्पेनेत्यर्थः । धृतक्रोडतनोः गोः भूमेरुद्धरणं लीलामवज्ञया हिरण्याक्षं हतं च निशम्य श्रुत्वा भारतो विदुरः ॥ ८—९ ॥ ❀ ❀ एतत् तत् पुत्रपौत्रादिकं कथं केन प्रकारेण अभावयन् जनयामासुः ॥ १० ॥

## श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

भगवत्कृतसर्गस्तु सोपोद्घातो निरूपितः (?) । चतुर्दशभिरध्यायैरुच्यते हरये परः ॥ १ ॥
गुणवैषम्यभावेन सर्गाः पूर्वं निरूपिताः । गुणवैषम्यभावोऽत्र द्विविधो वर्ण्यते स्फुटः ॥ २ ॥
आधिदैविकभावोऽत्र नाऽस्तीति द्वैधवर्णनम् । आधिभौतिकमेकेन चतुर्भिश्च तथा परम् ॥ ३ ॥
भूतमात्रेन्द्रियधियां हरौ ज्ञानोपयोगिनाम् । गुणाः स्वभावतः केऽत्र पुष्टिमार्गोपयोगिनः ॥ ४ ॥
निरूप्यन्ते हरेरुक्ताः प्रत्येकं त्रिविधा यथा । आधिदैविकमाध्यात्ममाधिभौतिकमेव च ॥ ५ ॥
चतुर्भिश्च चतुर्भिश्च तथैकेनोच्यते क्रमात् । भक्तिसाङ्ख्यात्मविज्ञानयोगैश्चत्वार आद्यके ॥ ६ ॥
आध्यात्मिकः काल एव माहात्म्यकरणे तथा । तदधीनं जगत्सर्वमित्यथाऽस्तु द्वितीयके ॥ ७ ॥
मुक्त एव हरेरर्थे भूतत्वेनोपयुज्यते । अतो मुक्तिः स्त्रियाश्चैव पूर्वेषु द्विविधेष्वपि ॥ ८ ॥
धर्मादयोऽपि द्विविधास्तत्रोच्यन्ते क्रमादिमे । सर्गे तेषामनुत्पत्तौ मार्गस्तेषां न वै भवेत् ॥ ९ ॥
यादृशा भगवन्मार्गे जीवचिन्तनचिन्तिताः । एकविंशतिभिस्तेऽत्र निरूप्यन्ते क्रमात् स्फुटाः ॥ १० ॥
भगवच्चिन्तिता ये वै पञ्चविंशतिभिस्तु ते । अन्यत्सर्वं कालकृतं चत्वारस्तेऽपि वर्णिताः ॥ ११ ॥
त्रिविधा अपि तेऽप्युक्ता मुख्यो मोक्षस्तथाऽन्तिमः । मूलम् , सर्गस्त्रयाणां तु मुख्यो मोक्षः फलं तथा ॥ १२ ॥
चतुर्दशभिरध्यायैरतः सर्गो निरूपितः । तद्विंशतितमेऽध्याये सङ्कीर्णः सर्ग उच्यते ॥ १३ ॥
षड्विधो हरिकार्यार्थमत्रोक्ताः सकला हरौ । सर्गमेकविधं ज्ञात्वा विसर्गे प्रश्न ईदृशः ॥ १४ ॥
तथापि शास्त्रमेवाऽत्र वक्तव्यमिति निश्चयः । अभिप्रेतं न तस्याऽपि तथैवेत्यन्यथोच्यते ॥ १५ ॥
प्रश्नद्वयं तु कुरुते शौनकः प्रकृतौ महान् । विसर्गविषयं त्वाद्यं भक्तानां तु तथा परम् ॥ १६ ॥
एकेन पञ्चभिश्चैव मूलारम्भो हि भेदकः । परीक्षिच्छुकयोरत्र विरामो नैव दृश्यते ।
सूत एव ततो वक्ता तुल्यार्थत्वान्न दूषणम् ॥ १७ ॥

तत्र शौनकः, सर्गः सविशेषः श्रुत इति, विसर्गं पृच्छति—महीं प्रतिष्ठामिति । पूर्वानुवादपूर्वकं हि प्रष्टव्यम् । हिरण्याक्षवध उपोद्घात इति न स पूर्वोक्तत्वेन गृह्यते । भूमिश्च मनोरर्थे समाहृतेति मनोरेव चरित्रं पृच्छति । प्रकर्षेण स्थिता प्रतिष्ठा; सर्वेषां वा जीवानामियमेव प्रतिष्ठेति, देहस्य तन्मूलकत्वात् । तदर्थमेवोद्धृतेति स एव तामधिष्ठाय स्थितः । प्रतिष्ठां प्राप्तः सर्वं करोतीति कृतिप्रश्नावसरः । शुकादिभिरिदं नोक्तमिति त्वया वक्तव्यमिति ज्ञापनार्थं सौत इति संबोधनम् ; हे सूतपुत्र । कथाकथनं तस्य कुलपरम्परागतो धर्मः । मनोः सृष्ट्यावश्यकत्वाय स्वायम्भुवेति पदम् । मनुरिति धर्मप्रवर्तकत्वात् नाऽन्यथाकरम् । ब्रह्मणा तु द्वारद्वयमेव कृतम् , मनः शरीरं च । यद्यन्येऽपि शरीरान्मनश्च जातस्तथैव जनकाः स्युः, तदा जगतस्त्रैविध्यं न स्यादिति विशेषप्रश्नः—यान्यन्वतिष्ठद् द्वाराणीति । अवरजन्मनां मनोः सकाशादर्वाचीनजन्मयुक्तानाम् ॥ १ ॥ ❀ ❀ एवं मनोर्धर्मात्मनः कार्यं पृष्ट्वा, स्वापेक्षया विदुरं भक्तं ज्ञात्वा, तत्पृष्टमेव त्वया वक्तव्यमित्यभिप्रायेण तेन सर्वथा पृष्टं भविष्यतीत्यर्थे प्रमाणमाह त्रिभिः—क्षत्ता महाभागवत इति । सोपपत्तिकभक्तत्वं तस्य मूलं निरूप्यते । उत्कृष्टपदनकर्तृत्वं

सोपपत्तिकमाह हि ॥ १ ॥ प्रथमं विदुरस्य भागवतत्वं निरूपयति । यस्त्वसिधाराव्रतं करोति स महाभागवतो भवति। विदुरस्य भागवतत्वे मुख्यमेतद्बीजम् ; तदाह—क्षत्ता महाभागवत इति क्षत्ता ह्यसिधाराव्रतकर्ता, पुराणान्तरे राजसूये युधिष्ठिरं प्रति भगवता तद्व्रतमुपदिष्टम्—"स्वयं पुष्टश्च तरुणः सकामः सन्निधौ स्त्रियाः । नित्यं स्थितोऽपि मनसा विकारं यो न गच्छति ॥ स्त्रियः सर्वाङ्गसंहृद्याः सर्वाभरणभूषिताः । अप्राप्तकामास्तं प्राप्य साभिलाषा अपि स्वयम् ॥ स्वकीयासु तथाऽन्यासु स्वभार्यास्वपि कुत्रचित् । पञ्चाग्निमध्यवर्त्तिष्ठेदसिधाराव्रतं तु तत् ॥" क्षत्ता तथा भवतीति तस्य महाभागवतत्वम् । दृष्टप्रकारेणाऽपि महाभागवतत्वमाह—कृष्णस्यैकान्तिक इति । एकान्ते हित ऐकान्तिकः । स्वामिकार्यप्रसङ्गानां तथात्वेऽपि यतो दृढः । यः केवलं हरेरर्थे सर्वथा यत्नवान् स्वतः । प्रसङ्गादपि न स्वार्थे महाभागवतस्तु सः । किञ्च, सुहृत् , सुष्ठु हृदयं यस्य; अन्येऽपि दोषास्तत्र न सन्तीति । सांसर्गिकोऽपि दोषो नाऽस्तीत्याह—यस्त्वत्याजेति । अग्रे जातः पितृसमो भवति । 'भ्रातॄणामेकजातानाम्' इति न्यायेन तत्पुत्रः स्वपुत्र एवेति पूर्वपरापेक्षापरित्यागेन भगवद्वैमुख्यमात्रं ज्ञात्वा धृतराष्ट्रं दुर्योधनादिसहितं त्यक्तवानित्यर्थः । वस्तुतः कृष्णे अघवानपि न भवति, तथापि भगवदङ्गीकृतपाण्डवविरोधादघवान् । इतिशब्दः प्रकारवाची, सम्भावनावाची वा ॥ २ ॥ ❀ ❀ एवं सोपपत्तिकं भागवतत्वमुपपाद्य तथात्वं तस्योचितमेवेत्याह—द्वैपायनादिति । भगवदंश एव महाभागवतो भवतीति भगवदंशत्वनिरूपणार्थम्—वेदव्यासात् महित्वे अघवरः, अवरो न भवति, न्यूनो न भवतीत्यर्थः । महोऽस्यास्तीति मही, महिनो भावो महित्वम् । तादृशे धर्मे विचार्यमाणे यथा महित्वं वेदव्यासे, तथैव विदुरे । उत्सवोऽत्र भगवत्स्मरणादिकम् । 'मह उद्धव उत्सवः' इति कोशादकारान्तो महशब्दः । यथा ज्ञानम् , भगवत्स्मरणम् , भगवद्धर्मप्रवर्तकत्वं वा वेदव्यासे; तथेति । तत्र हेतुमाह—तस्य देहज इति । वेदव्यासस्याऽयं बीजजः पुत्रोऽत्यन्तरङ्गः, अतो युक्तमेव तस्य तथात्वमिति । इदं तु ततोऽप्यधिकम्—सर्वात्मना श्रितः कृष्णमिति । वेदव्यासस्याऽधिकारित्वात् न सर्वात्मनाऽऽश्रितत्वम् । सर्वात्मभावेन ऐहिकपारलौकिकदैहिकात्मीयादीनां कार्यफलार्थे भगवन्तमेवाऽऽश्रयतीति तथा । सर्वरूपत्वं भगवतो वक्तुं नामविशेषमाह । भक्तिमार्गे रसिकश्चाऽयमित्यधिकारिज्ञानिभक्ताद्विशेषमाह—तत्परांश्चाऽप्यनुव्रत इति । भगवत्परान् भक्ताननुव्रतः सेवमानः । एवं सर्वप्रकारेण तस्य भागवतत्वं युक्तम् ॥ ३ ॥ ❀ ❀ एवं विदुरं भक्तत्वेन स्तुत्वा तस्य प्रश्नस्योत्तमत्वमाह—किमन्वपृच्छदिति पृष्टे कथनं रोषाभावं च प्रतिपादयितुमाह—मैत्रेयमिति । स हि मित्रायाः सुतः । नन्वत्यन्तभगवद्भक्तोऽपि गुणवशात् , कालवशाद्वा; लौकिकम् , प्राकृतं वा पृच्छेत् । तद्व्यावृत्त्यर्थमाह—विरजास्तीर्थसेवयेति । यः साधनेन निष्पापः, रजोगुणरहितो वा जातः, स नाऽन्यत् पृच्छति । रजस एव निराकृतत्वात् दूरे तमः । तत्रापि महता कष्टेन, विषमे देशे गत्वा, सत्सङ्गे सति कथमन्यत्पृच्छेदित्याह—उपगम्य कुशावर्त इति । गङ्गाद्वारस्थानान्तर्गतदेशविशेषः कुशावर्तः, तस्मिन् आसीनमिति । तत्रापि तत्त्वविदां मध्ये श्रेष्ठम् , न हि तादृशे देशे तादृशोऽन्यत्पृच्छति । अलौकिकं गूढं स एव जानातीति तत्त्ववित्तममित्युक्तम् ॥ ४ ॥ ❀ ❀ किं प्रश्नमात्रं वक्तव्यम् , आहोस्विदुत्तरम् , उभयं वा ? तथा सति तत्त्वेनाऽग्रहे भगवत्कथारसाभिनिवेशो न स्यादित्याशङ्क्य निरूपणं भगवत्कथार्थमित्याह—तयोरिति । तयोर्विदुरमैत्रेययोः संवदतोः सतोर्मध्ये कथाः प्रवृत्ताः स्वत एव भवन्ति । सूतेति संबोधनं तादृशकथाज्ञानार्थम् , तस्य सैव वृत्तिरिति । तथा वीराणां युद्धे रुधिरप्रवाहाः; ते समलाः, एतास्त्वमला इति । अमलत्वं कीदृशमित्यपेक्षायां दृष्टान्तेन स्पष्टयति—आपो गाङ्गा इवेति । आपः स्वभावत एव मेध्याः, तत्राप्युत्कर्षो गङ्गायाः; साक्षाद्भगवद्रूपा इत्यर्थः । अघघ्नीरिति पापनाशिकाः, अपराधनिवर्तिका वा । स्वयं निर्मला एवाऽन्यमपि तथा कुर्वन्ति, ब्रह्मदण्डदग्धा अपि गङ्गया पाविता इति । तथात्वे उभयोरेकं हेतुमाह—हरेः पादाम्बुजाश्रया इति । चरणाम्बुजाश्रया उभयाः ॥ ५ ॥ ❀ ❀ ततः किमत आह—ता नः कीर्त्तयेति । सूतत्वाद्देयं चेत्तत्राऽऽह—भद्रं त इति । ते भद्रमस्तु, ब्राह्मणानामाशिष एव देयाः । कथानामाधिक्ये हेतुमाह—कीर्तन्यान्युदाराणि कर्माणि यस्येति । भगवतः कर्मणां स्वभावद्वयम् , यः कश्चन तानि कीर्तयेदेव, अफलार्थी फलार्थी च । अफलार्थिनो नित्यविधिः—कीर्तन्यानीति । फलार्थिनस्तु सर्वाण्येव फलानि पात्रापात्रविचारव्यतिरेकेणैव सर्वफलदातॄण्युदाराणि; तस्मात् कीर्तनीयानि । सर्वेषु पदार्थेषु सन्ति रसाः, रसज्ञं प्राप्याऽभिव्यक्ता भवन्ति । भगवतस्तु कर्माण्यभिव्यक्तान्येव, रसज्ञः परमपेक्ष्यते । कथानां स्वविषयरुच्युत्पादकत्वं पूर्वमवोचाम । यथाऽऽग्नेयेनौषधेन क्षुज्जायते, एवमन्नेन च तृप्यते । अन्नमेव चेत् क्षुज्जनकं स्यात् , कथं तृप्येत ? तद्वत् रसज्ञः को वा, नु निश्चयेन, तृप्येत ? पीतेनाऽमृतेनोत्तरत्रेच्छोत्पादनात् । स हि दुःखहर्ता स्मरन्नेव; दुःखं चाऽऽत्मतिरोभावात् , तिरोभावकश्च प्राकृतो गणः, स भूयानिति । कालादिरपि । अतो निरन्तरोत्पद्यमानदुःखनिवृत्त्यर्थं हरिः स्मर्तव्यः । किञ्च, लोके आलस्याद्युद्वेगादिषु लीलया स्वास्थ्यं भवति; स्वस्याऽन्यस्य वा क्रियमाणया कीर्त्यमानया वा । मृत्योर्भयं सर्वेषाम् , तत्राऽवश्यापेक्षममृतम् । किञ्च, पादस्य कियत्कालव्यवधाने; कालादिना, प्राकृतैर्वा, मध्ये रसान्तरोत्पादने अलं मन्येताऽपि; अस्मरणाद्वा । पिबन्नेव कथं तृप्येतेत्यर्थः ॥ ६ ॥ ❀ ❀ सर्गलीला प्रथमत आरभ्यत इति ज्ञापयितुं व्यासः स्वयमाह—एवमुग्रश्रवा इति । उग्रं श्रवः कीर्तिर्यस्येति । इदमुग्रत्वं भगवत्कीर्तिविरोधिनिराकरणार्थम् । रोमहर्षणस्याऽहं पुत्रः, उग्रश्रवा इति नाम्ना । ऋषयो हि ज्ञात्वा पृच्छन्ति, अनेन कार्यसिद्धिर्भविष्यतीति । नैमिषमेवाऽयनं येषाम् ; वैष्णवक्षेत्रे स्थिता देशगुणेनाऽपि वैष्णवा भवन्तीति । आत्मनि यावान् परिकरो बाह्याभ्यन्तरभेदेन देहादिः, बुद्ध्यादिर्वा; तत्सर्वं भगवत्येवाऽर्पितं

येन, तादृशस्यैतदेव कृत्यम्; अतस्तान्प्रत्याह-श्रूयतामिति । स्वस्य वक्तृत्वं सिद्धम्; तेषां श्रोतृत्वं स्थिरीकरोति—श्रूयतामिति । शुकस्तु मध्ये न विरत इति तस्य '[१]प्रश्नेनोत्तरम् । विदुरवाक्यं शुकोऽप्याहेति ज्ञातव्यम् ॥ ७ ॥ ॐ ॐ सूतस्तु विदुरः प्रश्नं कृतवानित्याह—हरेरिति । शुकस्तु प्रश्नमेवाऽऽह, अयं तूपोद्घातमनुवदति, विदुरप्रश्नेनैव विशेषतो हिरण्याक्षवधस्योक्तत्वात् । सर्वदुःखहरणार्थमेव क्रोडतनुर्भगवता धृता । स्वमाययेति स्वाधीनया मायया, यथासुखं परिवर्तमानया । लोकप्रदर्शनार्थं तथाभावं बोधयति, संपादयति वा; अत एव मायया धृतक्रोडतनोस्तस्य चरित्रद्वयम्—भूम्युद्धरणमिष्टरूपम्, हिरण्याक्षहननमनिष्टनिवृत्तिरूपम् । उभयं श्रुत्वा संजातहर्षः । अनुवादेऽपि भगवतो माहात्म्यज्ञापनार्थमुभयोर्लीलात्वमाह—मध्ये—लीलामिति । उभयं लीला । हिरण्याक्षो भगवदीय इति स एव लीलात्वेनोक्तः । विशेषणपर्यवसाने तु लक्षणा, गौरवं च स्यात्; हिरण्याक्षचरित्रं चाऽधिकं स्यात् । एवं सर्वं लीलैव भवति । हर्षोत्पत्ती रुच्युत्पादकत्वेन । मुनिमित्यग्रिमज्ञानार्थम् । भारत इति प्रकृते रसान्तरजननार्थम् ॥ ८ ॥ ॐ ॐ प्रजापतिपतिरिति—विदुरस्त्वेवं मन्यते, भक्तो हि ब्रह्मा सृष्टिं कृतवानेव; अतः परं भक्त्युपयोग्येव किञ्चित्कार्यं करिष्यतीति । किमारभतेति ब्रह्मकार्यविषयकः प्रथमं प्रश्नः भक्तेन भगवदर्थमेव सृष्टा इति मरीच्यादयोऽपि कीदृशान् भक्तानुत्पादितवन्त इति द्वितीयः प्रश्नः । तत्राऽपि प्रकारत्रयं भक्तजनने तारतम्यबोधनार्थम् । सद्वितीया इति सद्वितीयाः सभार्याः, तथा सति प्राकृतभक्तोत्पत्तिः । स्वतन्त्रा एकाकिनः, तथा सति ज्ञानिभक्तोत्पत्तिः । संहता मिलिताः, तथा सति परमभक्तोत्पत्तिरिति । यदि ब्रह्मा प्रजापतिसृष्ट्यनन्तरं न किञ्चित् कुर्यात्, प्रजापतिरेव भवेत्, न तु प्रजापतिपतिः । सर्गस्य प्रवाहवत्प्रवर्त्तमानत्वान्न मरीच्यादिभ्यो विशेषः । प्रजापतिसृष्टिव्यतिरेकेण केवलं प्रजासृष्टौ रक्षकाभावात् प्रजा अमर्यादाः स्युः; तत्सृष्टौ तु तैरेव प्रजा भविष्यन्तीति प्रजासर्गे प्रजापतीनेव सृष्टवान् । सृष्ट्वेत्येवाऽनुवादः । पूर्वशेषव्यावृत्त्यर्थमारभतेत्युक्तम् । ब्रह्मन्निति ज्ञानार्थम् । म इति स्वाधिकारिज्ञानात् । ब्रह्मणस्ततोऽप्यलौकिककरणज्ञानार्थमाह—अव्यक्तमार्गविदिति । अव्यक्त इति कारणरूपं ब्रह्म, यस्य मार्ग उत्पत्तिप्रलयप्रकारः । कथं तस्मादेते समायान्ति, कथं प्रविशन्तीत्येतद्ब्रह्मैव जानाति । सर्वस्याऽपि कारणमव्यक्तमिति तथोक्तम् । द्वितीयं प्रश्नमाह—ये मरीच्यादय इति । मरीच्यादयः स्वतन्त्राः सृष्टाः, मनुस्तु सभार्यः । ते सर्वे सृष्टौ नियोजिताः । निश्चयेन ब्रह्मण आदेशादेतत् जगत् कथमभावयन्? उत्पादितवन्त इत्यर्थः । कर्मसूत्पादनादिष्वन्येष्वपीति भिन्नं वाक्यम्, न ह्युत्पादनमात्रेणैव सर्वं भवति । सर्वं इति वचनात् त्रिचतुराः, सर्वे वा कृतवन्त इति प्रश्नः । इदमिति परिदृश्यमानस्य कार्यस्य विद्यमानत्वादवश्यं कृतिः, प्रकारः संदिग्ध इति प्रश्नः । स्मेति प्रसिद्धे, नेदं जगन्मायिकम्, भ्रमसृष्टं चेति कथनार्थम् । अतः सम्यगकल्पयन्, कात्स्न्र्येनाऽभिव्यक्तं केन प्रकारेण कृतवन्त इति प्रश्नः ॥ ९ ॥ १० ॥ ११ ॥

## श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

अथ विंशाध्यायं विवरिषवः प्रकरणान्तरस्याऽऽरप्स्यमाणत्वात् प्रथमतः सङ्गतिं वक्तुं पूर्वप्रकरणार्थानुवादपूर्वकमेतस्याऽर्थमाहुः—भगवदित्यादि । ईरित इति । एकोनविंशतिभिरीरितः । हरय इति हर्यर्थम् । तस्य च स्वार्थपरार्थभेदेन सर्गद्वैविध्यात् प्रथमं परार्थमुक्त्वाऽधुना स्वार्थ उच्यते;' अतोऽवसरः सङ्गतिरित्यर्थः । अत्र सोपोद्घात इति कथनादुपोद्घातप्रकरणस्य मध्यस्थस्य ब्रह्मरूपकर्तृनिरूपकत्वादेतं प्रत्यपि हेतुतेति तेन सह हेतुहेतुमद्भावोऽपीति च । ननु करणभूतस्य गुणवैषम्यस्याऽपि मध्यप्रकरणे निरूपितत्वात्तस्य कुतो न हेतुताप्रयोजकत्वमित्यत आहुः—गुणेत्यादि । स्फुट इति । विंशे षड्विंशे च क्षोभपदस्य कण्ठत उक्तत्वात् स्फुट इत्यर्थः । तथा च, यस्मादत्र पुन(र्नि)रूप्यते, तस्मान्न तत्र गुणवैषम्ये हेतुताप्रयोजकत्वम्, किन्तु पूर्वान्प्रत्येव तथेत्यर्थः । एवं सङ्गतिं सोपपत्तिकां निरूप्य वैषम्यद्वैविध्ये हेतुमाहुः—आधिदैविकेत्यादि । अत्र एतत्प्रकरणोक्ते सर्गे 'एते देवाः कला विष्णोः' इतिवद्देवत्वस्य सत्त्वेष्वकथनात् प्रकारभेददर्शनेन पूर्वानुवादस्याऽशक्यवचनतया तेषां ग्रहीतुमशक्यत्वाच्च आधिदैविकत्वं नाऽस्तीत्यतस्तथेत्यर्थः । वर्णने क्रममाहुः—आधिभौतिकेत्यादि । एकोनविंशेन भौतिकं वैषम्यम् । तथा चतुर्भिर्हरौ हर्यर्थम् । भगवत्प्रादुर्भावयोग्यत्वाय ज्ञानोपयोगिनां भूतमात्रेन्द्रियधियां गुणसंस्काररूपं जन्मोच्यते । तथा च, पञ्चाध्यायात्मकमेकमाद्यमवान्तरप्रकरणमित्यर्थः । अग्रिमस्य प्रकारमाहुः—गुणा इत्यादि । अत्राऽस्मिन् प्रकरणे स्वभावतः पुष्टिमार्गोपयोगिनो ये भूतमात्रेन्द्रियधियां गुणाः संस्काररूपास्ते क इत्याकांक्षायाम्, हरेः कपिलस्योक्ता ये निरूप्यन्ते, ये यथा यथावत् आधिदैविकादिभेदेन प्रत्येकं त्रिविधाः । अतः क्रमात् पूर्वं चतुर्भिराधिदैविकम्, च पुनश्चतुर्भिरध्यात्मम्, च पुनरेकेनाऽऽधिभौतिकमित्येवं तेषां त्रैविध्यमुच्यते । तथा चैवं नवाऽध्यायात्मकं द्वितीयमवान्तरप्रकरणमित्यर्थः । आधिदैविकादीन् विशदीकुर्वन्ति—भक्त्यादि । तथा चाऽऽधिदैविके भक्त्यादयश्चत्वारो गुणाः क्रमेण भूतादिसंस्कारकाः । आध्यात्मिके कालाद्याश्चत्वारस्तथा । आध्यात्मिक इति । संवत्सरात्मकः । माहात्म्यकरणे इति द्विवचनम् । करणपदेन मुक्तसङ्गतया विवरणमुच्यते । तदधीनं जगत् सर्वमिति एषा बुद्धिर्बुद्धिसंस्काररूपा । अथ द्वितीयके । आध्यात्मिकप्रकारे । अस्तु । कालादिसंस्कृतं भूतादिकं क्रमेण सर्गरूपमस्तु इत्यर्थः । तृतीये एक एवाऽध्यायः कुत इत्यपेक्षायामाहुः—

---

१. प्रश्नो नोत्तरम् ख. ग. ङ. प्रश्नोत्तरम् घ.

मुक्तएवेत्यादि । आधिदैविकाध्यात्मिकभेदेन द्विविधेष्वपि हरेरर्थे संस्कृतेषु सत्सु शिष्टो मुक्तः । मुक्तदेह एव भूतत्वेन भौतिककक्षानिविष्टत्वेनोपयुज्यते । अतो हेतोः । स्त्रियाश्चैव स्त्रिया अपि मुक्तिरुच्यते । अतो निराकांक्षात्वात्तृतीय एकोऽध्याय इत्यर्थः । एवमेकधा विभज्य प्रयोजनान्तरेण विभागान्तरमाहुः—धर्मेत्यादि । तत्र तेष्वध्यायेषु क्रमादिमे धर्मादयो द्विविधाः पुरुषार्था अप्युच्यन्ते । तत्कथनहेतुः—सर्ग इत्यादि । तथा च, तन्मार्गप्रचारार्थं द्विविधास्त उच्यन्त इत्यष्टावध्याया इत्यर्थः । द्वैविध्यं कुत इत्यपेक्षायामाहुः—यादृशा इत्यादि । एकविंशतिभिरिति । एकविंशादारभ्य चतुर्भिः । एवं पञ्चविंशतिभिरित्यत्राऽपि बोध्यम् । अग्रिमाणां प्रयोजनमाहुः—अन्यदित्यादि । अन्यद्भगवन्मार्गीयव्यतिरिक्तं तच्चतुष्टयं कालकृतमिति ज्ञापयितुं ते धर्मादयश्चत्वारोऽप्यूनत्रिंशादारभ्य चतुर्षु वर्णिता इत्यर्थः । अतः परमध्यायद्वयं वक्तुं सर्वं संगृह्याऽऽहुः—त्रिविधा इत्यादि । एवं त्रिविधा अपि तेऽप्युक्ताः—वद्धत्वेन मुक्तत्वेन चोक्ताः—इति मुख्यो मुखे भवो विशेषस्तेषां मोक्षः । अन्तिमस्त्रयस्त्रिंशो मूलमुत्पत्तिरूपः । तुः शङ्कानिरासे । त्रयाणां धर्मप्रभृतीनां सर्गोऽस्ति, तथा मुख्यः परमो मोक्षस्तेषां फलमस्ति । अत उभयथा विभागेऽपि प्रयोजनसत्त्वात्तथेत्यर्थः । एवं प्रकरणान्यध्यायांश्च विभज्य प्रस्तुतस्याऽर्थमाहुः—त(दि)त्रेत्यादि । संकीर्णं इति । सत्यपि वैलक्षण्ये स्वरूपतौल्याद्विविच्य ज्ञातुमशक्यः । सर्ग इति । वैषम्यपूर्वकः सर्गः । हराविति । तादात्म्येन साक्षाद्भगवन्निष्ठाः । तथा चाऽस्य वैलक्षण्यस्य दुरापत्वात्तथेत्यर्थः । नन्वत्र द्वितीयः सर्ग एव चेद्वक्तव्यस्तदा व्यासेन शुकेन वक्तव्यः, विदुरप्रश्नादिकं किमित्युच्यत इत्यत आहुः—सर्गमित्यादि । ईदृश इति । भगवदुपयोगिकार्यविषयकः । तथा च विवक्षितसर्गानुकूलत्वात्तदुच्यत इत्यर्थः । नन्वानुकूल्येपि प्रश्नस्य विसर्गविषयकत्वान्मैत्रेयस्य तावदेव वक्तव्यम्, न तु सर्गोऽपीति तेन कुत उच्यत इत्यत आहुः–तथापीत्यादि । तथा च, प्रश्नाभावेपि शास्त्रमेव तदर्थं वक्तव्यम्, अतः प्रसङ्गात्तेनोच्यत इत्यर्थः । ननु तदुक्ताविदं प्रासङ्गिकमित्यत्र किं गमकमत आहुः—अभिप्रेतमित्यादि । अपिशब्दात् विदुरस्य । तथा चोपेक्षया यथाकथञ्चित् कथनमेव प्रासङ्गिकत्वगमकमित्यर्थः । ननु भवत्वेवम्, तथापि शौनकाद्युक्त्युपन्यासस्य किं प्रयोजनमत आहुः—प्रश्नद्वयमित्यादि । तथा च, तस्याऽतिसात्त्विकज्ञापनाय तदुपन्यास इत्यर्थः । ननु तर्हि 'एवमुग्रश्रवाः' इत्यस्य किं प्रयोजनमत आहुः—मूलेत्यादि । भेदक इति । सूताधिकारस्य भेदकः । तथा चैतदर्थं तद्वाक्यमित्यर्थः । शेषं स्फुटम् । महीमित्यत्र । सविशेष इति । तज्जनकव्यापारादिसहितः ॥ १ ॥ ❀ ❀ चक्तेत्यत्र । तस्य मूलमिति । स्वकरिष्यमाणप्रश्नमूलम् । तत्र गमकमाहुः—उत्कृष्टेत्यादि । हि यतो हेतोर्द्वाभ्यामुत्कृष्टत्वं तस्याऽऽह, अग्रे च संवादस्याऽऽहाऽतस्तथेत्यर्थः । एतदिति । क्षत्तृत्वम् । तथात्वेऽपीति । विरुद्धत्वे ॥ २ ॥ ❀ ❀ द्वैपायनेत्यत्र । सर्वरूपत्वमिति । भजनीयसर्वरूपत्वम् । अत्र पद्ये सर्वात्मनेत्यादिना, सर्वरूपत्वेत्यादिना च यथायथं शरणमार्गीयभक्तिमार्गीयौ सर्वात्मभावौ विवेचितौ ज्ञेयौ ॥ ३ ॥ ❀ ❀ किमित्यत्र । तत्त्वेनेति । तत्संवादत्वेन ॥ ५ ॥ ❀ ❀ ता न इत्यत्र । पूर्वमिति । द्वितीयस्कन्धस्य तृतीयाध्याये 'ज्ञानं यदा प्रतिनिवृत्तगुणोर्मिचक्रम्' इति श्लोके ॥ ६ ॥ ❀ ❀ एवमित्यत्र । ज्ञातव्यमिति । 'कुत्र क्षत्तुर्भगवता' इति श्लोके संवादस्य सर्वस्याऽपि पृष्टत्वात्तदनुरोधेन ज्ञातव्यमित्यर्थः ॥ ७ ॥ ❀ ❀ हरेरित्यत्र । ननु लीलायाः कर्मात्मकत्वाद्भूम्युद्धारस्य लीलात्वं युक्तम्, न तु हिरण्याक्षस्य पुरुषत्वादित्याशङ्क्याहुः हिरण्याक्ष इत्यादि । भगवदीय इति । भगवत्क्रीडोपकरणात्मकः । तथा च, तस्यापि युद्धलीलेच्छासम्पादितशरीरत्वेन लीलाशेष इति लीलात्वेनोक्त इत्यर्थः । ननु किमित्येवं कल्प्येत ? तद्धननस्यैव लीलात्वं वक्तव्यमित्याशङ्कायामाहुः—विशेषणेत्यादि । अत्र हि विशेषणभूतं हतपदं कर्मव्युत्पन्नम्, तस्य भावव्युत्पन्नत्वमङ्गीकार्यम्, हिरण्याक्षपदस्य तदन्वयार्थं तद्गतद्वितीयायाः षष्ठ्यर्थे लक्षणाऽङ्गीकार्येति तत्पर्यवसाने लक्षणा गौरवं च स्यात् । हिरण्याक्षकृते भगवल्लीलायामप्रवेशात्तच्चरित्रस्य सर्गलीलामध्यपाताभावेनाऽऽधिक्यं स्यात्, अतः स पक्षो न युक्तः । एवमस्मदुक्तरीत्यात्य (?) ङ्गीकारे तु यथा यागपदेन कर्मसचिवपदार्थसंग्रहः, यथा च 'राज्ञां क्ष्वेली' इत्यत्र तदुपकरणसंघसंग्रहः सापेक्षवृत्तिकत्वादेवं लीलापदस्याऽपि सापेक्षवृत्तिकत्वेन तच्छेषभूतं सर्वं लीलैव भवति, प्रचुरप्रयोगाच्च न लक्षणादिदोष इत्ययमेव पक्षो ज्यायानित्यर्थः ॥ ८ ॥

### श्रीगिरिधरकृता वालप्रबोधिनी

ऊनविंशतिभिश्चैवं वन्धसर्गो निरूपितः । चतुर्दशभिरध्यायैर्मोक्षसर्गो निरूप्यते ॥ १ ॥
वाराहचरितं श्रुत्वा क्षत्रा पृष्टेन चोदितः । सङ्क्षेपेण पुनः सर्गो विंशेऽध्याये निरूप्यते ॥ २ ॥

एवं वाराहचरितं श्रुत्वा शौनको मनुवंशं पृच्छति—महीमिति । कथाश्रवणं तव कुलधर्म एवेत्याशयेन सम्बोधयति–सौत इति, हे सूतस्य रोमहर्षणस्य पुत्र । स्वायम्भुवो मनुः प्रकर्षेण तिष्ठत्यस्यामिति प्रतिष्ठा तां सर्वजनस्थानभूतां महीं अध्यास्य प्राप्य अवरमर्वाचीनं जन्म येषामीश्वरे लीनानां मार्गाय ततो निर्गमाय कानि द्वाराण्यन्वतिष्ठत् कृतवान् । अर्वाचीनान् प्राणिनः कैरुपायैः सृष्टवानित्यर्थः ॥ १ ॥ ❀ ❀ एतच्च विदुरमैत्रेयसंवादद्वारैव वक्तव्यं तयोः परमभक्तत्वेन तत्र भगवत्कथानामवश्यम्भावादित्याह—क्षत्तेति पञ्चभिः । क्षत्ता विदुरः कुशावर्ते गङ्गाद्वारे आसीनं मैत्रेयमुपगम्य किमन्वपृच्छदिति तृतीयेनान्वयः । यत्किमपि पृच्छतु तेन किं तवेत्यत आह—तयोरिति । तयोर्विदुरमैत्रेययोः संवादतोः संवादं कुर्वतोः सतोर्हरेः पादाम्बुजाश्रयाः अतएव

अमलाः सर्वदोषनिवर्त्तिकाः कथाः हि अवश्यं प्रवृत्ताः स्युः । ताः कीर्त्तन्यानि कीर्त्तनार्हाणि यतः उदाराणि श्रोतॄणां भक्तानां परमपुरुषार्थप्रदानि कर्माणि यस्य तस्य कथाः । हे सूत ते तव भद्रं कल्याणं भवतु । नोऽस्मान्प्रति कीर्त्तयेति पुनर्द्वयोरन्वयः । एवं श्लोकपञ्चकस्यैकं कुलकं बोध्यम् । तत्र भगवत्कथाप्रवृत्तौ विदुरस्य परमभागवतत्वं हेतुमाह—कृष्णस्येति । ऐकान्तिकः परमस्नेहविषय इत्यर्थः । तत्र हेतुमाह—महाभागवत इति । तस्य भक्तिमेव विशदयति—य इति । श्रीकृष्णोक्तमन्त्रानङ्गीकारात्तद्भक्तपाण्डवप्रतिपक्षित्वाच्च श्रीकृष्णे अघवान् कृतापराध इति हेतोः सापत्यं दुर्योधनादिभिरपत्यैः सहितं अग्रजं धृतराष्ट्रं यस्तत्याजेत्यन्वयः । एवं भागवतत्वेऽपि हेतुमाह— सुहृदिति, निर्मलान्तःकरणः परमविवेकीत्यर्थः ॥ २ ॥ ❀ ❀ अन्येऽपि विवेकिनो भगवद्भक्ता भवन्ति परमयं तु नान्यसाधारण इत्याह—द्वैपायनादिति । महित्वे ज्ञानवैराग्यभक्त्यादिभिर्महिम्नि द्वैपायनाद्वेदव्यासात् अनवरः अन्यूनः । तत्तु नाश्चर्यमित्याशयेन तत्र हेतुमाह—तस्य द्वैपायनस्य देहजः पुत्र इति । तस्य भक्तिमेवाह—सर्वात्मना सर्वभावेन श्रीकृष्णमेवाश्रितः, तद्व्यतिरेकेण कुतोऽपि प्रयोजनं कस्यापि भजनं चास्य नास्त्यहर्निशं तद्भजनपरायण इत्यर्थः । तत्परान् श्रीकृष्णभक्तांश्चाप्यनुव्रतः सेवमान इत्यर्थः ॥ ३ ॥ ❀ ❀ मैत्रेयस्यापि महत्त्वमाह—तत्त्ववित्तममिति, तत्त्वज्ञत्वे सत्यपि भगवद्भक्तत्वात्तेष्वपि श्रेष्ठमित्यर्थः । आसीनमित्यनेनैव कार्यान्तरव्यग्रता निरस्ता, तथाभूतस्यैवोपदेष्टृत्वं सफलं भवतीति च सूचितम् । विदुरोपि भगवत्कथां विना नान्यवार्तां प्रष्टुमर्हति यतस्तीर्थसेवया विरजाः रजस्तमःकार्यसर्वदोषविवर्जित इत्यर्थः ॥ ४ ॥ ❀ ❀ कथायाः सर्वदोषनिवर्त्तकत्वे दृष्टान्तमाह—आप इति । अत्रापि भगवच्चरणसम्बन्ध एव हेतुरित्यत्रापि हरेरित्यादियोज्यम् । हरेः पादाम्बुजाश्रया आपोऽघघ्नीः अघघ्न्यः गङ्गाः गाङ्गया आपो यथा तथेति सम्बन्धः । सूतेति सम्बोधनेन तवैषा जीविकेति सूचितम् ॥ ५ ॥ ❀ ❀ तत्र भगवत्कथायाः परमपुरुषार्थहेतुतया तदुचितदेयाभावाद् ब्राह्मणत्वाच्चाशीरेव दीयते इति भद्रं ते इत्यनेन सूचितम् । ननु बह्व्यः कथा भवद्भिः श्रुता एव किं पुनस्तच्छ्रवणेन तत्राह—रसज्ञ इति । रसशब्देन श्रवणसुखं तस्य परमपुरुषार्थहेतुत्वं च तदभिज्ञः हरिलीलामृतं पिबन् हरिलीलाः शृण्वन् को नु तृप्येत ? । यथाऽमृतस्य स्वादविशेषं गुणांश्च जानंस्तत्पिबन्न तृप्यते तथा हरिलीलाश्रवणसुखमनुभवन् लीलाश्चान्तःकरणे स्थापयन् कस्तृप्येतेत्यमृतं पिबन्नित्यनेन सूचितम् ॥ ६ ॥ ❀ ❀ एवमिति व्यासवाक्यम् । उग्रं श्रवः पौराणिकत्वेन कीर्तिर्यस्य स उग्रश्रवाः सूतः ऋषिभिः शौनकादिभिः एवमुक्तप्रकारेण पृष्टस्तान् ऋषीन् प्रति भवत्पृष्टं कथयामि श्रूयतामित्याहेत्यन्वयः । ऋषीणामपि गृहं परित्यज्य भगवद्यशःश्रवणपरत्वेन नैमिषारण्ये स्थितानां श्रवणाधिकारित्वं सूचयन्नाह—नैमिषायनैरिति । सूतस्यापि परमभक्ततया तत्कथाकथनाधिकारित्वाद्धर्षेण कथने प्रवृत्तिर्जातेत्याशयेनाह—भगवतीति, भगवत्यर्पितमध्यात्मं मनो येन सः ॥ ७ ॥ ❀ ❀ एवमृषीन् सावधानीकृत्य सूत आह—हरेरिति । स्वमायया स्वेच्छया धृतक्रोडतनोर्धृतवाराहमूर्त्तेर्हरेः रसातलाद्गोः पृथ्व्या उद्धरणमुद्धरणरूपां तथा अवज्ञया अनायासेनैव तेन हिरण्याक्षं हतं तद्धननरूपां च लीलां निशम्य श्रुत्वा सञ्जातो हर्षो यस्य स भारतो विदुरो मुनिं मैत्रेयमाह पुनः पप्रच्छ ॥ ८ ॥ ❀ ❀ तदेव दर्शयति—प्रजापतिपतिरिति । ब्रह्मन् हे सर्वज्ञ ! मैत्रेय प्रजापतीनां पतिर्ब्रह्मा प्रजासर्गे निमित्ते प्रजापतीन् मरीच्यादीन् सृष्ट्वा स्वयं किमारभत किं कृतवान् तन्मे प्रब्रूहि । नूनं तेनापि किञ्चिद्भगवत्प्रीत्युपयोग्येव कार्यं कृतं स्यात् यतः अव्यक्तमार्गवित् अव्यक्तस्य भगवतो मार्गमाराधनप्रकारं वेत्तीति यथा ॥ ९ ॥ ❀ ❀ ये च मरीच्यादयो विप्राः यस्तु क्षत्रियः स्वायम्भुवो मनुः ते वै तेऽपि ब्रह्मण आदेशात् आज्ञात एतत् जगत् कथमभावयन् उत्पादयामासुः ? ॥ १० ॥

## हिन्दी अनुवाद

### ब्रह्माजीकी रची हुई अनेक प्रकारकी सृष्टिका वर्णन

शौनकजी कहते हैं—सूतजी ! पृथ्वीरूप आधार पाकर स्वायम्भुव मनुने आगे होनेवाली सन्ततिको उत्पन्न करनेके लिये किन-किन उपायोंका अवलम्बन किया ? ॥ १ ॥ ❀ ❀ विदुरजी ! बड़े ही भगवद्भक्त और भगवान् श्रीकृष्णके अनन्य सुहृद् थे । इसलिये उन्होंने अपने बड़े भाई धृतराष्ट्रको, उनके पुत्र दुर्योधनके सहित भगवान् श्रीकृष्णका अनादर करनेके कारण अपराधी समझकर त्याग दिया था ॥ २ ॥ ❀ ❀ वे महर्षि द्वैपायनके पुत्र थे और महिमामें उनसे किसी प्रकार कम नहीं थे, तथा सब प्रकार भगवान् श्रीकृष्णके आश्रित और कृष्णभक्तोंके अनुगामी थे ॥ ३ ॥ ❀ ❀ तीर्थसेवनसे उनका अन्तःकरण और भी शुद्ध हो गया था । उन्होंने कुशावर्त्तक्षेत्र ( हरिद्वार ) में बैठे हुए तत्त्वज्ञानियोंमें श्रेष्ठ मैत्रेयजीके पास जाकर और क्या पूछा ? ॥ ४ ॥ ❀ ❀ सूतजी ! उन दोनोंमें वार्तालाप होनेपर श्रीहरिके चरणोंसे सम्बन्ध रखनेवाली बड़ी पवित्र कथाएँ हुई होंगी, जो उन्हीं चरणोंसे निकले हुए गङ्गाजलके समान सम्पूर्ण पापोंका नाश करनेवाली होंगी ॥ ५ ॥ ❀ ❀ सूतजी ! आपका मङ्गल हो, आप हमें भगवान्की वे पवित्र कथाएँ सुनाइये । प्रभुके उदार चरित्र तो कीर्तन करने योग्य होते हैं । भला, ऐसा कौन रसिक होगा, जो श्रीहरिके लीलामृतका पान करते-करते तृप्त हो जाय ॥ ६ ॥ ❀ ❀ नैमिषारण्यवासी मुनियोंके इस प्रकार पूछनेपर उग्रश्रवा सूतजीने भगवान्में चित्त लगाकर उनसे कहा 'सुनिये' ॥ ७ ॥ ❀ ❀ सूतजीने कहा—

मुनिगण! अपनी मायासे वराहरूप धारण करनेवाले श्रीहरिकी रसातलसे पृथ्वीको निकालने और खेलमें ही तिरस्कारपूर्वक हिरण्याक्षको मार डालनेकी लीला सुनकर विदुरजीको बड़ा आनन्द हुआ और उन्होंने मुनिवर मैत्रेयजीसे कहा ॥ ८॥ ❀ ❀ विदुरजीने कहा—ब्रह्मन्! आप परोक्ष विषयोंको भी जाननेवाले हैं; अतः यह बतलाइये कि प्रजापतियोंके पति श्रीब्रह्माजीने मरीचि आदि प्रजापतियोंको उत्पन्न करके फिर सृष्टिको बढ़ानेके लिये क्या किया ?॥ ९॥ ❀ ❀ मरीचि आदि मुनीश्वरोंने और स्वायम्भुव मनुने भी ब्रह्माजीकी आज्ञासे किस प्रकार प्रजाकी वृद्धि की ?॥ १०॥

सद्वितीयाः किमसृजन् स्वतन्त्रा उत कर्मसु। आहोस्वित्संहताः सर्व इदं स[1] समकल्पयन् ॥ ११ ॥

मैत्रेय उवाच

दैवेन दुर्वितर्क्येण परेणानिमिषेण च। जातक्षोभाद्भगवतो महानासीद् गुणत्रयात् ॥ १२ ॥
रजःप्रधानान्महतस्त्रिलिङ्गो दैवचोदितात्। जातः ससर्ज भू[2]तादिर्वियदादीनि पञ्चशः ॥ १३ ॥
तानि चैकैकशः स्रष्टुमसमर्थानि भौतिकम्। संहत्य दैवयोगेन हैममण्डमवासृजन् ॥ १४ ॥
सोऽशयिष्टाब्धिसलिले आण्डकोशो निरात्मकः। साग्रं वै वर्षसाहस्रमन्ववात्सीत्तमीश्वरः ॥ १५ ॥
तस्य नाभेरभूत्पद्मं सहस्रार्कोरुदीधिति। सर्वजीवनिकायौको यत्र स्वयमभूत्स्वराट् ॥ १६ ॥
सोऽनुविष्टो भगवता यः शेते सलिलाशये। लोकसंस्थां यथापूर्वं निर्ममे संस्थया स्वया ॥ १७ ॥
ससर्जच्छायया विद्यां पञ्चपर्वाणमग्रतः। तामिस्रमन्धतामिस्रं तमो मो[3]हो महातमः ॥ १८ ॥
विससर्जात्मनः कायं नाभिनन्दंस्तमोमयम्। जगृहुर्यक्षरक्षांसि रात्रिं क्षुत्तृट्समुद्भवाम् ॥ १९ ॥
क्षुत्तृड्भ्यामुपसृष्टास्ते तं जग्धुमभिदुद्रुवुः। मा रक्षतैनं जक्षध्वमित्यूचुः[4] क्षुत्तृडर्दिताः ॥ २० ॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

सद्वितीयाः सभार्याः स्वतंत्रा भार्यानपेक्षाः कर्मसु प्रजासर्गादिषु संहताः परस्परापेक्षाः। इदं जगत् ॥ ११॥ ❀ ❀ ब्रह्मा किमारभतेति प्रश्नस्य यक्षादीन्सृष्टवानित्युत्तरं वक्तुं पूर्वोक्तां सृष्टिमनुस्मारयति। दैवेनेति सप्तभिः। मन्वादिप्रश्नानां तूत्तराध्यायमारभ्योत्तरं भविष्यति। दुर्वितर्क्येण दैवेन जीवादृष्टेन परेण प्रकृत्यधिष्ठात्रा महापुरुषेणानिमिषेण कालेन च हेतुना भगवतो निर्विकाराज्जातक्षोभं यद्गुणत्रयं प्रधानं तस्मान्महानासीत्। तदुक्तं तंत्रे "विष्णोस्तु त्रीणि रूपाणि पुरुषाख्यान्यथो विदुः। प्रथमं महतः स्रष्टृ द्वितीयं त्वंडसंस्थितम्॥ तृतीयं सर्वभूतस्थं तानि ज्ञात्वा विमुच्यते" इति ॥ १२॥ ❀ ❀ महतो जातो भूतादिरहंकारस्त्रिलिंगस्त्रिगुणः रजःप्रधानादिति स्वतः सत्त्वप्रधानस्यापि महतोऽहंकारोत्पत्तिकाले कार्यानुरूपं रजःप्रधानत्वं भवतीति भावः। पंचशस्तन्मात्राणि महाभूतानि ज्ञानेन्द्रियाणि कर्मेंद्रियाणि तत्तद्देवताश्चेति पंच पंच ससर्जेत्यर्थः ॥ १३॥ ❀ ❀ भौतिकं हैममंडमेकैकशः प्रत्येकं स्रष्टुमसमर्थानि संति संहत्य ससृजुः ॥ १४॥ ❀ ❀अन्ववात्सीदधिष्ठितवान् ॥ १५॥ ❀ ❀ सहस्रार्काणामिवोरुर्दीधितिः यस्य तत्। सर्वजीवनिकायानामोकः स्थानं पद्मम्। स्वराट् ब्रह्मा ॥ १६॥ ❀ ❀ यः सलिलाशये गर्भोदकस्यांतः शेते तेन भगवताऽनुविष्टोऽधिष्ठितः सन् स स्वराट् स्वया संस्थया नामरूपादिक्रमेण ॥ १७॥ ❀ ❀ छाया प्रभाप्रतियोगिनी तया अबुद्धयेत्यर्थः। "यस्त्वबुद्धिकृतः प्रभोः" इत्युक्तत्वात्। महातम इति महामोहः स्वरूपनिर्देशमात्रविवक्षया मोह इति प्रथमाप्रयोगः ॥ १८॥ ❀ ❀ तदेवं प्रथमोक्तां साधारणां सृष्टिमनूद्य केनचिद्विशेषेणासाधारणां सृष्टिमाह। विससर्जेत्यादिना यावत्समाप्ति। तद्विसृष्टं कायं रात्रिरूपं तत एव जातानि यक्षरक्षांसि जगृहुः क्षुत्तृषोः समुद्भवो यस्यां ताम्। अत्र च "या अस्य सा तनूरासीत्तामपाहत सा तमिस्राऽभवत्" इत्यादि श्रुतिरनुसंधेया ॥ १९॥ ❀ ❀ उपसृष्टा अभिभूताः जग्धुमत्तुं भक्षयितुं यतो वयं क्षुत्तृड्भ्यामर्दिताः अत एनं पितेति कृपया मा रक्षतेत्येके। अन्ये तु जक्षध्वं भक्षयतेति ब्रुवंतः "जक्षभ क्षहसनयोः" इति धातुः ॥ २०॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

प्राप्तसर्गं वक्तुं संगतये पूर्वप्रवृत्तब्राह्मीयसर्गं स्मारयति दैवेनेति। दुर्वितर्क्येण दुर्ज्ञेयमूलकेन भगवतः सकाशात्तदीक्षितादित्यर्थः ॥ १२॥ ❀ ❀ इति भाव इति। भगवत्सिसृक्षावशादिति तात्पर्य्यम् इत्यर्थ इति। पंचञ्शब्दात् "संख्यैकवचनाच्च

---

१. प्रा० पा०—सर्वमकल्पयन्। २. प्रा० पा०—भूतानि विय०। ३. प्रा० पा०—मोहं। ४. प्रा० पा०—त्युच्चैः।

वीप्सायाम्" इति वीप्सायां शस्। "तद्धितश्चाऽसर्वविभक्तिः" इत्यत्र परिगणितान्तर्गतत्वादव्ययत्वमिति भावः॥ १३॥ ❀ ❀ दैवयोगेन भगवच्छक्तियोगेन भूतानामुत्पादने प्रधानत्वाद्भौतिकं भगवत्तेजोयुक्तत्वेन हेमवद्देदीप्यमानत्वाद्धैमम्। यद्वा। केवलपंचभूतात्मकमेव ब्रह्मांडं न तु तार्किकाभिमतनवद्रव्यात्मकं सप्तपदार्थात्मकं वा। तच्च श्रीमहाभारते श्रीबादरायणेनोक्तं शांतिपर्वान्तर्गतमोक्षधर्मे। तथैव व्याख्यातं नीलकंठाचार्य्यैः तथा हि-"आकाशं मारुतो ज्योतिरापः पृथ्वी च पंचमी। भावाभावौ च कालश्च सर्वभूतेषु पञ्चसु" इति अस्यार्थः-भूतेषु जरायुजादिषु पञ्चसु पञ्चात्मकेषु एतेन भावाभावकालानामपि भौतिकत्वमुक्तम्। ननु पञ्चभ्यो भूतेभ्योऽधिकानि कालदिगात्ममनांसि चत्वारि द्रव्याणि गुणाश्च चतुर्विंशतिः कर्मसामान्यविशेषसमवायाश्च भावपदार्थाः सप्तमोऽभावपदार्थश्चेति काणादा मन्यन्ते तत्कथं सर्वस्य पञ्चात्मकत्वं प्रतिज्ञायते इति चेत् अत्रोच्यते न कालो नाम पदार्थांतरमतीतानागतादिव्यवहारहेतुः कश्चिदस्ति नूतनत्वपुराणत्वादिवद्द्रव्यगताभिरेवातीताद्यवस्थाभिस्ताद्दग्व्यवहारोपपत्तेः। नापि दिक् आकाश एव सूर्योपाधिकी प्राच्यादिकल्पनेत्युपगमात्। नापि मनस्तस्येंद्रियत्वेन श्रोत्रादिवद्ग्राह्यसजातीयगुणाश्रयत्वस्यावश्यं वक्तव्यत्वेन पाञ्चभौतिकत्वात्। पराभिमतमनसस्तु ग्राह्यसजातीयगुणानाश्रयत्वेन दिक्कालवन्नेंद्रियत्वं युज्यते गुणा अपि आश्रयान्नातिरिच्यंते इति न पृथक्पदार्थः। तथा द्रव्यस्यैव स्वास्थ्यप्रच्युतिः परिस्पंदात्मावस्थाविशेषः कर्मेति तदपि न पृथक्पदार्थः। तथा सत्सदिति व्यवहारविषयत्वस्य स्वकल्पितस्य सामान्यादिषु सद्भावेप्यनवस्थादिदोषभयात्तेभ्यो व्यावृत्तं द्रव्यगुणकर्मस्वेवानुगतं सामान्यमित्यसत्। अधिष्ठानसत्त्वेनैव सत्सदिति व्यवहारस्योपपत्तौ सत्यामननुगतस्य तस्य कल्पनाया अनौचित्यात्। 'नित्यद्रव्यवृत्तयोऽनंता विशेषा' इत्युपगमस्त्वैकात्म्ये नित्यद्रव्याणामेवाभावान्निरालंबनो मानांतरासिद्धश्च समवायवद्रूपादिकमपि समवायं विनैव द्रव्ये स्थास्यतीति समवायकल्पनाप्यनर्थिकैव। यथा घटे पटान्योन्याभावः एवं भूतलं घटसंसर्गाभावोपि भविष्यति तथा चोक्तं"भावांतरमभावो हि कयाचित्तु व्यपेक्षया" इति। प्रागभावप्रध्वंसाभावयोस्त्वसत्प्रतियोगिकत्त्वादेवासिद्धिः सद्धयामभावो निरूप्यते इति न्यायेन तन्निरूपकाभावात्। तस्माद् भौतिकः पदार्थ एव नास्तीति युक्तमुक्तं भावाभावकालानामपि पंचात्मकत्वमिति दिक्॥ १४॥ ❀ ❀ निरात्मकः तदानीं जीवानामनुद्बोधात्। तमंडकोशम्। ईश्वरः महत्स्रष्टा गर्भोदशायिना द्वितीयरूपेण साग्रं किञ्चिदधिकम्॥ १५॥ ❀ ❀ य एव ब्राह्मे कल्पे सृष्टवांस्तस्य प्रविष्टस्य सतो पाद्मे कल्पे नाभेः सकाशात्पद्ममभूत् यत्र पद्मे स्वयं विष्णुरेव स्वराडभूत्॥ १६॥ ❀ ❀ लोकानां संस्थां रचनां यथापूर्वं "धाता यथापूर्वमकल्पयत्" इति श्रुतेः॥ १७॥ ❀ ❀ ब्रह्मसृष्टेषु यक्षराक्षसदेवमनुष्येष्वहंकारोऽविद्यां विना न संभवेदतः प्रथममविद्यावृत्तीः स्वयमेवाविर्भवंतीस्ता ब्रह्मद्वारेति हेतोस्ता ब्रह्मा ससर्जेत्याह-इत्यर्थ इति। तस्या आवरणस्वभावत्वादविद्योपलक्षिततमोरूपया तन्वेति भावः। अत्र हेतुत्वेन पूर्वोक्तं स्मारयति यस्त्विति। ननु सृजेः सकर्मत्वात्कर्त्तरि प्रत्ययविधानात्कर्मणि द्वितीयया भाव्यं कथं मोह इति प्रथमेति चेदत्राह—स्वरूपेति आर्षत्वाद्वा सेति॥ १८॥ ❀ ❀ नाभिनंदन् हंतहंत सृष्टयारंभे तमसैवावृतोऽभूवमिति विनिंद्य तत्याजेत्यर्थः। तत एव तमस एव तदानीमेव जातानि अत्र च तमस्तनुत्यागे तस्या रात्रिरूपत्वे च प्रमाणरूपा श्रुतिः 'अस्य ब्रह्मणः सा तनूस्तामसी तनूर्यासीत्तां तनूमपाहत अजहात्सा तमिस्रा तामसी रात्रिरभवदि'ति श्रुतिपदार्थः। अत्र च द्विपरार्द्धायुषो ब्रह्मणः कायत्यागो नाम भावत्याग एव विवक्षितः। ततश्च मनसि क्रोधादिस्तामसो भाव आविर्बभूव तस्माद्यक्षरक्षांसि बभूवुः। स च तामसो भावो रात्रिरभूत्तां च यक्षरक्षांस्येव जगृहुरित्येतावानेवार्थः सृष्टयर्थं योगबलेन पृथक्पृथक्कायग्रहणवत्त्वे द्विपरार्द्धायुष्ट्वं तस्य न व्याहन्येत। विषयभोगार्थमपीन्द्रादिदेवानां नानारूपग्रहणत्यागदर्शनादित्यपि केचिदाहुः॥ १९॥ २०॥

## श्रीराधारमणदासगोस्वामिविरचिता दीपिनीव्याख्या

भार्य्यासहकारितया तदनपेक्षतया प्रजापत्यन्तरसहकारितयेति प्रश्नत्रयम्॥ ११॥ ❀ ❀ पूर्वोक्तां कल्पगतां भगवतः परमकारणात् महापुरुषेण द्वारेण जातः क्षोभो गुणसाम्यत्यागो यस्य तादृशं यत्प्रधानं तस्मान्महान्महत्तत्वमासीत्तत्र दैवं जीवादृष्टं निमित्तमेकम्। तस्मादप्युत्तमः कालो निमित्तं तेन तेन च हेतुना तत् पुरुषरूपेण महत्स्रष्टृत्वम्। अथो साकल्येन महतः स्रष्टृ संकर्षणाख्यमण्डसंस्थितं गर्भोदशायिरूपं प्रद्युम्नाख्यं सर्वभूतस्थमनिरुद्धाख्यं तानि ज्ञात्वोपास्य॥ १२॥ ❀ ❀ रजःप्रधानत्वं सूत्राख्यस्य तद्भागस्येति ज्ञेयम्॥ १३॥ ❀ ❀ दैवयोगेन भगवच्छक्तिसम्बन्धेन तदा संहत्य चान्योऽन्यं भगवच्छक्तिचोदिता इति द्वितीयोक्तेः हैमं प्रकाशबहुलम्॥ १४॥ ❀ ❀ अब्धिसलिले कारणार्णवजले अण्डकोश एवाण्डकोशस्तदन्तर्वर्त्ती विराड्वा किञ्चिदधिकं वर्षसहस्रमभिव्याप्य अशयिष्टेत्यन्वयः। निरात्मकत्वञ्च तस्य इदानीं तस्मिन्समष्टिजीवानुद्बोधात् ईश्वरः कारणार्णवशायी गर्भोदशायिरूपेण तमधिष्ठितवान्॥ १५॥ ❀ ❀ तस्य गर्भोदशायिपद्मनाभानिरुद्धस्य स्वयमेक एव॥ १६॥ ❀ ❀ स्वया वेदेन स्वस्मिन्ननेकधा विचारितया॥ १७॥ ❀ ❀ प्रभाप्रतियोगिनी प्रकाशविरोधि तमस्तस्य चाज्ञानपर्यायत्वमिति नेयार्थलक्षणया व्याख्यातत्वादित्यर्थोक्तिः सर्वत्र सृष्टिक्रियाकर्मत्वेन द्वितीयासद्भावात् मोह इति प्रथमाप्रयोगः नाम्ना स्वरूपकथनमात्रापेक्षया॥ १८॥ ❀ ❀ साधारणीं पूर्ववर्णिततुल्यां केनचिद्यक्षरक्षस्तद्वृत्तकथनादिना विशेषेण वैलक्षण्येन द्विपरार्धायुषो

ब्रह्मणः कायत्यागो हि क्रोधादिमानसविकारपरित्याग एव । इन्द्रादिदेवान्तराणामपि नवमे विषयभोगार्थं नानारूपग्रहणत्यागदर्शनात् ततएव रात्रिरूपकायादेव अत्र च कायस्य रात्रिरूपत्वे च सा क्रोधादिभावरूपत्वेन प्रसिद्धा या ब्रह्मणस्तनुरासीत्तामजहात्तत्याज । तमिस्रा रात्रिः अनुसन्धेया प्रमाणत्वेन स्मर्त्तव्या ॥ १९ ॥ २० ॥

## श्रीमद्वीरराघवव्याख्या

कथमिति स्वाभिपृष्टमेवं प्रकारं मुनिमुखान्निश्चिचीषया विकल्पयति । सद्वितीयाः सभार्याः किमसृजन् । किं शब्दः प्रश्ने उताहोस्वित् कर्मसु सृष्टयादिव्यापारेषु स्वतन्त्रा भार्यानिरपेक्षा आहोस्वित्सर्वे मरीच्यादयः संहताः परस्परसापेक्षया इदं विश्वं समकल्पयन्नसृजन् स्म ॥११॥ ॐ ॐ एवमापृष्टो मैत्रेयः सर्गभेदानां प्रतिपिपादयिषया पूर्वोक्तां महदाद्यविद्यापञ्चपर्वान्तां सृष्टिमनुवदति सप्तभिः । दैवेनेति । दुर्वितर्क्येणाचिन्त्यप्रभावेण दैवेनेश्वरेण कर्त्रा परेण प्रकृतिपुरुषविलक्षणपरमात्मकेनानिमिषेण च कालेन च हेतुना जातः क्षोभः कार्यौन्मुख्यरूपव्यापारो यस्य तस्माद्भगवतः भगवत्संबन्धिनः तच्छरीरभूतादित्यर्थः । गुणत्रयात्मकात्प्रधानान्महत्तत्त्वमासीत् । अत्र भगवतो गुणत्रयादित्यनेन ब्रह्मात्मकप्रधानस्योपादानत्वकथनेन विशिष्टोपादानत्वं दैवेनेत्यनेन केवलस्य ब्रह्मणो निमित्तत्वं परेण कालेनेति कालस्यापि परमात्मात्मकत्वकथनेन ब्रह्मणः सृष्टयादिव्यापारे उपकरणान्तरनैरपेक्ष्यमनिमिषेण गुणत्रयादिति कालप्रधानयोः सृष्टेः प्रागपि सद्भावावगमेन तदा विजातीयवस्तुसत्त्वं दुर्वितर्क्येणेत्यनेन निमित्तत्वोपादानत्वोपयुक्ताचिन्त्यसर्वज्ञत्वसर्वशक्तित्वसत्यकामत्वादिप्रभावत्वावगमेन स्वगतभेदसत्वं तयोरुपलक्षणत्वेन सजातीयजीवभेदसत्त्वं चोक्तं भवति ॥ १२ ॥ ॐ ॐ रज इति । दैवेन भगवता चोदितात्प्रेरितात्रजःप्रधानान्महतः स्वतः सत्त्वप्रधानत्वेऽपि महतः कार्यौन्मुख्यदशायां रजसः तमस्सत्त्वयोरुभयोरप्यनुग्राहकत्वेन रजःप्रधानादित्युक्तेः जातः त्रिलिङ्गकः पञ्चमहाभूतज्ञानकर्मेन्द्रियात्मकः भूतादिरहङ्कारः वियदादीन्याकाशादीनि आदिशब्देन तन्मात्राणि ज्ञानेन्द्रियाणि कर्मेन्द्रियाणि चोक्तानि पञ्चशः प्रत्येकं पञ्चसंख्याकानि ससर्ज ॥ १३ ॥ ॐ तानि च वियदादीनि एकैकशः परस्परमसमेतानि भौतिकमण्डं स्रष्टुमसमर्थान्यभूवन् । अथ दैवयोगेन भगवदनुप्रवेशेन समेत्येत्यनेन पञ्चीकरणं विवक्षितं हैमं प्रकाशबहुलमण्डं ब्रह्माण्डमसृजन् ॥ १४ ॥ ॐ ॐ अण्डकोशः निरात्मकः अधिष्ठातृचेतनरहितः अधिसलिलं सलिले अनेनाण्डसृष्टेः प्रागुदकसृष्टिरर्थसिद्धा अशयिष्टाध्यवसत्तमण्डकोशमीश्वरोऽनिरुद्धः साग्रं संपूर्णं सम्वत्सरसहस्रमन्ववात्सीज्जलवेष्टितं जलपूर्णमण्डं भगवानध्यशेत इत्यर्थः ॥ १५ ॥ ॐ ॐ कोऽसौ भगवान्योऽन्ववात्सीदित्यत्राह यस्याण्डे शयानस्य भगवतो नाभेः सकाशात्सहस्रसंख्याकादित्यवदुरुप्रकाशं पद्ममभूत् स ईश्वरोऽवात्सीदित्यर्थः । कीदृशं पद्मं यन्नाभेरभूदित्यत्राह । सर्वेषां जीवानां देवादीनां निकायः समूहः तस्यौकः स्थानं यत्र पद्मे स्वराट् ब्रह्मा स्वयमभूदुत्पन्नः तत्पद्ममभूदित्यर्थः ॥ १६ ॥ ॐ ॐ स ब्रह्मा भगवतानुविष्टः सङ्कल्परूपज्ञानेनानुप्रविष्ट इत्यर्थः । कोऽसौ भगवान्येनानुप्रविष्ट इत्यत्राह । सलिलाशये गर्भोदकस्यान्ते यः शेते तेनेत्यर्थः । भगवतानुप्रविष्टो ब्रह्मा यथापूर्वं पूर्वकल्पानुसारेण लोकसंस्था लोकानां संस्थानं विन्यासं स्वया असाधारणया संस्थया देवादिनामरूपात्मकया प्राकल्पयत्कृतवान् ॥ १७ ॥ ॐ ॐ छायया तमोगुणेन पञ्चपर्वाणमविद्यां ससर्ज पञ्चपर्वाण्येवाह । तामिस्रमित्यर्थेन तामिस्रादिस्वरूपं तु पूर्वमेव प्रपञ्चितम् ॥ १८ ॥ ॐ ॐ एवं साधारणीं सृष्टिमनूद्यासाधारणान् सृष्टिभेदानाह । विससर्जेत्यादिना यावदध्यायसमाप्ति । नाभिनन्दन् अनभिनन्दन् तमोमयं तमःप्रचुरं कायं छायारूपां तनुं विससर्ज सर्वत्र तनुत्यागो नाम तत्तदवस्थापरपर्यायभावत्यागो विवक्षितः, ग्रहणं च तत्तद्भावापत्तिः । यक्षा रक्षांसि विसृष्टात्कायात् समुत्पन्नानि यक्षरक्षांसि तमेव कायं स्वात्मानं क्षुत्तृषोः क्षुत्पिपासयोः समुद्भवो यस्यां तां रात्रिं रात्रिधर्मरूपेण परिणम्यमाणां जगृहुः ॥ १९ ॥ ॐ ॐ ते यक्षादयः क्षुत्तृड्भ्यामुपसृष्टाः पीडितास्तं कायं जग्धुमभिदुद्रुवुरभ्यधावन् यतो वयं क्षुत्तृड्भ्यामर्दिताः तत एव ते कायं कृपया पितेति रक्षतेत्येके ऊचुरपरे पुनः पितरमपि जक्षध्वं भक्षयतेत्यूचुः ॥२०॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

द्वितीया भार्या स्वतन्त्रा अन्यापेक्षारहिताः कर्मभिः प्रेरिता इति शेषः । संहताः सम्मिलिताः स्मेत्यनेन संहत्यसर्जनं प्रधानं स्मारयति ॥ ११ ॥ ॐ ॐ किमारभतेति यत्पृष्टं तस्योत्तरं वक्तुं पूर्वोक्तसृष्टिमविस्मरणायादितोऽनुवदति । दैवेनेति । दुर्वितर्क्येण प्राण्यदृष्टानां बहुत्वादनुमातुमशक्येनादृष्टेन 'नैषा तर्केण मतिरापनेये'ति श्रुतेरदृष्टान्तर्यामिणा हरिणा वा दुर्विकल्पेनेति पाठे इदमदो वेति संशयविषयेणानिमिषेण सर्वतो विलक्षणेन सृष्टिकालेन तदन्तर्यामिणा हरिणा वा सर्वेषां मूलकारणस्य प्रलयसमुद्रे लक्ष्मीपर्यङ्के शयानस्य भगवतः प्रेरणया जातक्षोभात्कार्याभिमुखोत्पन्नविकाराद्विषमावस्थामुपगताद् गुणत्रयाद्यथासंख्यसंयुक्तसत्त्वादिगुणत्रयान्महान्महत्तत्वाभिमानी ब्रह्मासीत्तदभिमन्यमानमहत्तत्त्वं चाभूत् । किञ्च भगवतो वीर्याधानेन जातक्षोभादुत्पन्नसिसृक्षुत्वविशेषात् स्वजीवशक्त्यां गुणकर्मयोनौ इत्यतो गुणत्रयाभिमानिनोऽजाभिधानादक्षरान्महत्तत्त्वाभिमानी वायुश्च सरस्वती भारती च जाता इत्यर्थः । "महतो ब्रह्मवायू च तद्भार्ये चाभिमानिनः" इति वाक्यादयमर्थः कल्प्यत इति ॥ १२ ॥ ॐ ॐ महत्तत्त्वादहङ्कारस्योत्पत्तिमाह । रजःप्रधानादिति । साम्यावस्थायां मूले रजसि यद्रजोमूले तमसि मिश्रितं यद्रजोमूले सत्त्वे यद्रज इति त्रिधा विभक्तेन समस्तेन रजसा युक्तत्वाद्रजःप्रधानत्वं महत्तत्त्वस्य । तस्मान्महतो महत्तत्वाद्दैवचोदिताद्विकुर्वाणाज्जातो वैकारिकतैजसाभ्यां

सहितः त्रिलिङ्गस्त्रिरूपो भूतादिस्तामसाहङ्कारः श्रोत्रादिदशेन्द्रियाणि वैकारिकाहङ्कारो मनोदिगाद्यभिमानिदेवान् ससर्ज । मूलाहङ्कारादनन्तगरुडरुद्राद्याः स्वभार्याभिः सह जाताः मनोभिमानिनावनिरुद्धचन्द्रौ वैकारिकाभिमानिदेवविशेषाज्जातौ । तदुक्तम् "अहमः शेषवीन्द्रौ च रुद्रेन्द्रौ कामतस्त्रियः । मनसस्त्वनिरुद्धश्च चन्द्रश्चान्ये यथोदितम् ॥ एवं क्रमो व्यत्ययस्तु सूक्ष्मस्थूलादिभेदतः । सृष्टौ गुणे च ज्ञानादौ मुक्तिस्थेष्वप्ययं क्रमः ॥ नियमेनान्यथोक्तिस्तु मोहायासुरजन्मनाम् ।" इति ॥ १३ ॥ ❀ ❀ सूक्ष्मसृष्टिमनूद्य स्थूलसृष्टिं वक्तुमारभते । तानीति । यद्वा सद्वितीया इत्यादिप्रश्नं परिहरति । तानीति । तानि त्रयोविंशतितत्त्वानि भौतिकं हैमं ब्रह्माण्डं देवस्य क्रीडादिगुणसम्पन्नस्य हरेर्योगेन चेष्टकलक्षणप्रवेशसम्बन्धेन संहत्य संयुज्यावगम्य वासृजन् ॥ १४ ॥ ❀ ❀ सृज्यवस्तूनि विमृश्य स्रष्टव्यानि न सहसेति न्यायमनुसन्दधतो हरेरण्डोत्पत्त्यनन्तरं तदन्तःसर्जनं क्रमेण स्यादित्यभिमतत्वेन जलावगाहेन दार्ढ्यादिकं च स्यादित्यण्डस्य जलावस्थानं वक्ति । सोऽशयिष्टेति । निरात्मकः अप्रकाशितपरमात्मस्वरूपः परमात्मा तत्र नास्तीति किं न स्यादत्राह । अन्ववात्सीदिति । अव्यक्ततया स्थितः ॥ १५ ॥ ❀ ❀ यो ब्रह्माण्डगर्भोदके श्रीमयपर्यङ्के कालनाम्ना ब्रह्मणा सह शयानस्तस्य हरेर्नाभौ पद्ममभूदित्यन्वयः । इदमितरपद्माद्विशिनष्टि । सहस्रेति । सहस्रधा संख्यया संख्यातेभ्योऽर्केभ्य उर्वी दीधितिर्दीप्तिर्यस्य तत्तथोक्तम् । अनेन सर्वप्रकाशकसूर्याद्युत्पत्तेः पूर्वं तमसावगूढाकाशे कथं प्रवृत्तिरिति निरस्तम् । सर्वजीवनिकायस्यौको गृहस्थानीयं यतो यस्मात्तस्मात्स्वयं सर्वजीवप्रधानः स्वराट् ब्रह्माभूदित्यन्वयः ॥ १६ ॥ ❀ ❀ यदर्थं ब्रह्मोत्पन्नस्तत्प्रयोजनमाह । सोऽनुविष्ट इति । यो हरिः सलिलाशये गर्भोदकलक्षणे वारिधौ श्रीसन्निहितशेषपर्यङ्के शेते तेन भगवतानुविष्टः स ब्रह्मा स्वया संस्थया परमात्मनि स्थितसामर्थ्येन यथापूर्वं लोकसंस्थानेन पद्मेन चतुर्दशलोकव्यवस्थां निर्ममे इत्यन्वयः ॥ १७ ॥ ❀ ❀ विद्यैकापनोद्यत्वादविद्यायास्तज्ज्ञापनार्थं तत्सृष्टिं प्रथमतो वक्ति । ससर्जेति । छायया राज्यपरपर्यायया तन्वा पर्वाण्याह । तामिस्रमित्यनेनोक्तवक्ष्यमाणेन कान्यध्यतिष्ठत् द्वाराणीत्यस्योत्तरमुक्तं भवति ॥ १८ ॥ ❀ ❀ अधिष्ठातृभावेन विसृष्टो देहो नष्टोऽभूत्किं नेत्याह । जगृहुरिति । क्षुत्तृषोः समुद्भवो यस्याः सा तथोक्ता ताम् ॥ १९ ॥ ❀ ❀ क्षुत्तृषौ ज्ञानविरोधिन्यौ यतो ब्रह्मणः स्वोत्पादकत्वेन गुरुत्वमविज्ञाय यक्षादिभिस्तद्भक्षणार्थमद्रावीति भावेनाह । क्षुत्तृड्भ्यामिति । उपसृष्टा उपद्रुता अस्य विवरणं क्षुत्तृडर्दिता इति । इत्युच्चैर्वदन्तोऽभिदुद्रुवुः । एनं ब्रह्माणं मा रक्षत किन्तु जक्षध्वं भक्षयतेति ॥ २० ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

पाद्मीयविसर्गं कथयितुं सङ्गतये पूर्ववृत्तं ब्राह्मीयसर्गमपि स्मारयति । दैवेनेत्यादिना । भगवतः परमकारणान्महानासीत् । तच्च तत एव न साक्षात् किन्तु तच्छक्तेः प्रधानाख्याद् गुणसाम्यादेव । कीदृशात् दैवादिहेतुना जातक्षोभात् तत्रानिमिषेण कालेन दैवादप्युत्तमेन ॥ १२—२४ ॥ ❀ ❀ अण्डकोष एवाण्डकोषः तदन्तर्वर्त्ती विराड् वा । तस्य निरात्मकत्वं तदानीमपि जीवानामप्यनुद्बोधात् । ईश्वरो महत्स्रष्टा द्वितीयपुरुषरूपेण ॥ १५ ॥ ❀ ❀ य एवं ब्राह्मे कल्पे सृष्टवान् तस्य प्रविष्टस्य सतः पाद्मे कल्पे नाभेः सकाशात् पद्ममभूत् ॥ १६ ॥ ❀ ❀ स्वया संस्थया स्वस्मिंस्तत्तन्नामरूपाद्याविर्भावक्रमेण ॥ १७ ॥ ❀ ❀ तथा दर्शयति । ससर्जेति ॥ १८—२१ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

सद्वितीयाः सभार्य्याः कर्म्मसु सृष्ट्यादिषु स्वतन्त्राः अन्यानपेक्षाः संहताः बहुतरसम्मेलनापेक्षाः ॥ ११ ॥ ❀ ❀ किमारभतेति प्रश्नस्योत्तरं विसर्गविस्तारं वक्ष्यन् तत्पूर्वभागं सर्गमुक्तमपि कथासौष्ठवार्थं संक्षेपेणानुवदति । दैवेन जीवादृष्टेन कीदृशेन दुर्वितर्क्येण दुर्ज्ञेयमूलकेन परेण परमेश्वरेण च तदीयसिसृक्षयेत्यर्थः । अनिमिषेण कालेन जातक्षोभात् गुणत्रयात् प्रधानान्महानासीत् भगवतः सकाशात् भगवदीक्षितादित्यर्थः ॥ १२ ॥ ❀ ❀ रजःप्रधानादिति । सत्त्वप्रधानोऽपि महान् अहंकारोत्पत्तिकाले रजःप्रधानः सूत्राख्यो भवेदिति भावः । त्रिलिङ्गस्त्रिगुणो भूतादिरहङ्कारः । वियदादीनि महाभूतानि शब्दादीनि सूक्ष्मभूतानि ज्ञानेन्द्रियाणि कर्मेन्द्रियाणि तत्तद्देवताश्च पञ्च पञ्च ससर्जेत्यर्थः ॥ १३ ॥ ❀ ❀ दैवयोगेन भगवच्छक्तियोगेन संहत्य मिलित्वा ॥ १४ ॥ ❀ ❀ अब्धिसलिले कारणार्णवजले निरात्मकः तत्रत्यसमष्टिजीवस्यानुद्बोधात् । साग्रं किञ्चिदधिकं वर्षसाहस्रमशयिष्ट । अनु तदनन्तरमीश्वरो महतः स्रष्टा गर्भोदशायिरूपेणावात्सीत् ॥ १५ ॥ ❀ ❀ नाभेः सकाशात् यत्र पद्मे स्वराट् ब्रह्मा ॥ १६ ॥ ❀ ❀ स ब्रह्मा भगवता अनुविष्टः अधिष्ठितः भगवानेव कस्तत्राह । य इति ततश्च स ब्रह्मा भगवत्प्रेरितः सन् लोकसंस्थां लोकरचनां स्वया संस्थया परिपाट्या नामरूपादिक्रमया ॥ १७ ॥ ❀ ❀ यक्षराक्षसदेवमनुष्यादिदेहेषु ब्रह्मणा स्रष्टव्येषु जीवानामहङ्कारोऽविद्यया विना न सम्भवेदतः प्रथममविद्यावृत्तीः स्वयमेव ब्रह्मद्वारा आविर्भवतीस्तमआदिरूपेण ब्रह्मा ताः ससर्जेत्याह । ससर्जेति । छायया छायारूपया तामसस्वभावयुक्तया तया तमसेत्यर्थः । अत्र तमोमोहमहामोहतामिस्रान्धतामिस्राः क्रमेणाज्ञानास्मितारागद्वेषाभिनिवेशा ज्ञेयाः ॥ १८ ॥ ❀ ❀ कार्यं छायारूपं नाभिनन्दन् हन्त हन्त सृष्ट्यारम्भे तमसैवावृतोऽभूवमिति विनिन्द्य

तत्याज । स च तद्विसृष्टः कायो रात्रिरभूत्ताश्च तत एव तदानीमेव जातानि यक्षरक्षांसि जगृहुः स्वीचक्रुरित्यविद्याधर्मावावरण-विक्षेपौ यक्षरक्षसामत्यधिकाविति विवक्षितम् । कीदृशीं क्षुत्तृषोः समुद्भवो यस्यां तामत्र या अस्य तनुरासीत्तामजहात् । सा तमिस्राभवदित्यादिश्रुतिरनुसन्धेया । अत्र द्विपरार्धायुषो ब्रह्मणः कायत्यागो नाम भावत्याग एव विवक्षितः । ततश्च ब्रह्मणो मनसि क्रोधादिस्तामसो भावः आविर्बभूव । तस्माद् यक्षरक्षांसि बभूवुः । स च तामसो भावो रात्रिरभूत्ताश्च यक्षरक्षांस्येव जगृहुरित्येतावानेवार्थः । सृष्ट्यर्थं योगबलेन पृथक् पृथक् कायग्रहणत्यागवत्त्वेऽपि द्विपरार्द्धायुष्ट्वं तस्य न व्याहन्यते विषयभोगार्थमपीति देवानां नानारूपग्रहणत्यागदर्शनादित्यपि केचिदाहुः ॥ १९ ॥ ❀ ❀ उपसृष्टा उपद्रुताः तं ब्रह्माणं जग्धुं भक्षयितुं तत्र केचिदेनं पितेति कृपया मा रक्षतेत्यूचुः । अन्ये तु यक्षध्वमिति जक्षभक्षहसनयोरित्यस्मात् ॥ २० ॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

इदं ब्राह्मणादिकम् । सद्वितीयाः सभार्याः किम्वा स्वतन्त्राः भार्यानपेक्षाः आहोस्वित्कर्मसु नानाव्यापारेषु संहताः इदं स्वानुरूपं कार्यं समकल्पयन् असृजन् ॥ ११ ॥ ❀ ❀ प्रजापतिपतिः स्रष्टा प्रजासर्गे प्रजापतीन् किमारभतेति प्रश्नप्रतिवचनार्थमवशिष्टं चतुर्मुखकृतं सर्गं वक्तुं महदाद्युत्पत्तिमनुवदति । दैवेनेति सप्तभिः । दुर्वितर्क्येण दैवेन जीवादृष्टेन परः भगवदवताररूपः पुरुषः 'त्वत्तः पुमान् समधिगम्य ययास्य वीर्यं धत्ते महान्तमि'त्येकादशे वक्ष्यमाणः तेन अनिमिषेण कालेन च शक्तिभूतेन हेतुना भगवतः चिदचिच्छक्तिमतः विश्वोपादाननिमित्तहेतोः जातक्षोभं यद्गुणत्रयं ब्रह्मात्मकं प्रधानं तस्मान्महानासीदित्यन्वयः ॥ १२ ॥ ❀ ❀ स्वतः सत्त्वप्रधानोऽपि महान् भूताद्युत्पत्तिसमये कार्योनुनः रजःप्रधानो भवति तस्मात् त्रिलिङ्गः त्रिगुणः भूतादिरहंकारः जातः सन् वियदादीनि पञ्च तन्मात्राणि पञ्चमहाभूतानि पञ्च ज्ञानेन्द्रियाणि पञ्च कर्मेन्द्रियाणि पञ्च ज्ञानेन्द्रियदेवताः पञ्च कर्मेन्द्रियदेवताः इत्येवं पञ्चशः ससर्ज्ज ॥ १३ ॥ १४ ॥ ❀ ❀ ईश्वरानधिष्ठितत्वात्पूर्वं निरात्मकः पुनः सात्मको जात इत्याह तमीश्वर इति । अन्ववात्सीत् तदन्तः प्रविश्य शयान आसीत् ॥ १५ ॥ ❀ ❀ सहस्रार्केभ्योऽप्युर्वधिका दीधितिर्द्युतिर्यस्य तत् ॥ १६ ॥ ❀ ❀ अनुविष्टः अधिष्ठितः ॥ १७ ॥ ❀ ❀ छायया तमोमयेन कायेन अविद्याम-नाद्यज्ञानरूपाम् तत्प्रपञ्चस्तामिस्रमित्यादि ॥ १८ ॥ ❀ ❀ एवं भगवत्कृतां महदादिसृष्टिं चतुर्मुखकृतां सृष्टिं च संक्षेपतोऽनूद्येदानीमवशिष्टां संक्षेपत आह । विससर्जेत्यादिना यावदध्यायसमाप्ति । तमोमयं तमःप्रधानम् । विससर्ज्ज क्षुत्तृषोरुद्भवो यस्यां तां रात्रिं तेन विसृष्टं कायमेव तादृशरात्रिरूपेण संस्थितं तत एव जातानि यक्षरक्षांसि जगृहुः स्वीकृतवन्तः । अनेन यास्य सा तनूरासीत् तामजहात् "सा तमिस्राभवत्" इत्यादिश्रुतिरुपबृंहिता ॥ १९ ॥ ❀ ❀ यतस्तेषु एके रक्षोनामकाः अन्ये यक्षनामका जातास्तं हेतुं दर्शयति । क्षुत्तृड्भ्यामिति । ते सर्वे सामान्यतः क्षुत्तृडर्दिताः तं जग्धुमत्तुं भक्षयितुमभिदुद्रुवुः । तेषु केचित्पितरं बुध्वा रक्षतेत्यूचुः । अन्ये तु विशेषतः क्षुत्तृड्भ्यामुपसृष्टा अभिभूताः मा रक्षा नैव कार्या किन्त्वेनं यक्षध्वं भक्षयतेत्यूचुः ॥ २० ॥

## श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

सृष्टिभेदान् वक्तुं साधारणीं सृष्टिमनुवदति षड्भिः, भगवद्गुणत्वाय । महत्तत्त्वमहङ्कारः सकार्योऽण्डं तथैव च । नारायणत्वं पद्मं च ब्रह्मा चेत्यत्र षट्क्रमात् ॥ १ ॥ प्राकृताः षडिमे सृष्टा एकादश तु वैकृताः । सगुणास्तु न चैतेषु पुरुषो भगवत्कृतः ॥ २ ॥ निर्गुणः प्रोच्यते पुम्भिः शब्दब्रह्मात्मनो ( ? ) ऋषिः । एवं सप्तदश प्रोक्ता यज्ञात्मानो मता इमे ॥ ३ ॥ तेनैव प्रथमं देवस्तृप्यते सर्गलीलया । अतस्तदर्थं सर्गोऽयं नाऽन्यथेति निरूपितम् । वेदे सर्गोऽयमेवोक्तस्तस्मादुभयतो महान् ॥ ४ ॥ प्रथमतो महतः सृष्टिमाह—दैवेनेति । अयं महान्, न प्रकृ[1]तेः, किन्तु ब्रह्मण एव गुणवैषम्याज्जातः । अत्र त्रयो गुणाः—दैवम्, परः, कालश्चेति । दैवं भगवदिच्छा, काम इति यावत् । तस्य तु स्वरूपमिदमित्थतया वक्तुमशक्यमिति दुर्वितर्क्यमुक्तम् । स कामो देवसंबन्धी, 'सोऽकामयत' इति श्रुतेः । स च कामो न निरूपित इति निरूपकाणामतर्क्यः । परोऽत्र पुरुषोऽक्षरं वा स राजसः । अनिमिषः कालस्तामसः । चकारान्निमित्तमापद्यन्ते कर्मस्वभावादयोऽपि कालादिभेदाः । एतैस्त्रिभिर्गुणैरपि जातः क्षोभो यस्य, तस्माद्भगवतः पुरुषोत्तमान्महानासीत् । एते भगवद्रूपा एवेति न तत्त्वपदप्रयोगः । गुणत्रयादिति सच्चिदानन्देभ्यः, तदंशेभ्यो वा ॥ १२ ॥ ❀ ❀ महतः सकाशात् सकार्यस्याऽहङ्कारस्य सृष्टिमाह—रजःप्रधानादिति । महांस्त्रिगुणात्मकोऽपि अहङ्कारसृष्ट्यर्थं रजःप्रधानो जातः । स त्रिविधोऽपि रजोभेदकृत एव । तत्रापि भगवदिच्छा प्रेरिकेत्याह—दैवचोदितादिति । स जात एव त्रिविधोऽपि पञ्चशः ससर्जेति संबन्धः । तत्र भूतादिस्तामसः । स आकाशादीनि भूतानि पञ्च, मात्राश्च पञ्चेति । एवमिन्द्रियादिरपि; ज्ञानेन्द्रियाणि, कर्मेन्द्रियाणि, प्राणादीनि, नागादीनि च । सृष्टवान् देवादिश्च तत्तदभिमानिदेवदिगादीन् पञ्च; वह्न्यादींश्च; मनः, अन्तःकरणदेवताचतुष्टयं च । एवं पञ्चशस्त्रिलिङ्गोऽप्युत्पादितवानित्यर्थः ॥ १३ ॥ ❀ ❀ तैर्ब्रह्माण्डनिर्माणमाह—वानि चेति । असमर्थत्वान्नपुंसकनिर्देशः चकाराद्देवादयोऽप्येकैकं कार्यार्थे क्षोभयितुमशक्ता इत्युक्तम् । एकैकशः प्रत्येकं ब्रह्माण्ड-

१. प्राकृत ग. घ. ङ. ।

निर्माणे अशक्ताः, यतः सर्वभूतात्मकं ब्रह्माण्डम् । अतः संहत्य भगवदिच्छया प्रकाशबहुलं सुवर्णमयं ब्रह्माण्डमसृजत् । अवोपसर्गो नानार्थोऽपि प्रकृते रक्षावाचकः, दृढमनश्वरमवृद्धिक्षयमण्डमसृजन्निति ॥ १४ ॥ ❀ ❀ तत्र प्रविष्टो भगवान् नारायणो जात इत्याह—स इति । अब्धिसलिल इति प्रलयोदके । पूर्वं वा समुद्रनिर्माणम्, 'अप एव ससर्ज' इति वाक्यात् । स एवाऽण्डः कमलकोशात्मको जातः, यथाऽण्डात्पक्षी भवत्येवं कोशात्मको जातः । स आण्डकोश इत्युच्यते । स हि भगवदर्थं सृष्ट इति नाऽन्यस्तत्र प्रवेशमर्हति, अतो निरात्मक एव संपूर्णं वर्षसाहस्रमशयिष्ट । ततो भगवान्, अनु उत्पत्त्यनन्तरम्, अवात्सीत् तत्रैव वासं कृतवान्, तं प्रविवेशेति वा तत्र प्रयोजनादिजिज्ञासा न कर्तव्येत्याह—ईश्वर इति ॥ १५ ॥ ❀ ❀ एवं नारायणत्वमुक्त्वा तस्मात् पद्मोद्भवमाह—तस्य नाभेरिति । प्राकृतपद्मवत् तस्य विकासजनकसूर्याद्यपेक्षार्थमाह—सहस्रमर्काः, तेभ्योऽप्युरुरधिका दीधितिर्यस्य । न केवलं तस्य जगत्प्रकाशकत्वम्, किन्तु जगदाधारत्वमपीत्याह—सर्वजीवानां समूहस्थानमिति । उत्पादकं च तदेवेत्याह—यत्र कमले स्वयं भगवानेव, स्वराट् ब्रह्मा, अभूत् । ततः सर्वं भविष्यतीति भावः ॥ १६ ॥ ❀ ❀ यथा ब्रह्मणः सकाशात् सृष्टिर्भवति, तथोपायमाह—सोऽनुविष्ट इति । भगवता सह अनुविष्टः प्रविष्टः । को भगवानित्याकांक्षायामाह—यः शेत इति । सलिलमेवाऽऽशयो गृहम् । नारायण इत्यर्थः । ततः किं जातमत आह—लोकसंस्थामिति । लोकानां सम्यग्व्यवस्था, जातिगुणस्थानभेदेन यथा पूर्वकल्पे स्थिता । नन्वस्याः सृष्टेस्तथा सति को विशेष इत्याशङ्कयाऽऽह—संस्थया स्वयेति । अत्र स्वयमेव भगवान् तथा स्थितः, आकृतिमात्रसमता तु पूर्वेण । एवं षड्विधा मूलसृष्टिर्निरूपिता ॥ १७ ॥ ❀ ❀ कार्यसृष्टिनिरूपणे प्रथमं तामसीं सृष्टिमाह—ससर्जेति त्रिभिः, कार्यकरणतत्कार्यभेदेन—तत्र प्रथमं स्वस्मिन् विद्यमानतमसा तामसं पञ्चविधं कार्यमाह—"छाययाऽविद्यामिति । आत्मा देहस्तथा छाया सात्त्विकादिविभेदजाः । तामसी तत्र वै छाया तस्यामपि हरिः स्वयम् ॥ १ ॥ ततश्छाया हि करणमविद्यां प्रति नाऽन्यथा । एतस्याः पञ्च पर्वाणि, पूर्वस्मात्तु विशिष्यते ॥ २ ॥ ससर्जाग्रेऽन्धतामिस्रमिति पूर्वप्रकल्पना । अन्यथेयं समाख्याता महामोहफला मता ॥ ३ ॥ अत्र प्रथममविद्यायाः पर्वणां मध्ये तामिस्रम्; भगवतो वैमुख्ये महाभोगेच्छा परमं बाधकम्, तदनु भोगेच्छा, ततोऽप्यज्ञानं स्वल्पम्, ततोऽपि पुत्रादिषु विकलेषु सकलेष्वहमेव विकलादिरिति । एतस्य[1] वैराग्यजनकत्वादज्ञानात्समीचीनता । ततोऽपि देहाहङ्कारो भगवत्सेवौपयिकत्वादुत्कृष्ट इति । प्रकृत एव त्वयं क्रमः । अग्रत इति । अग्रिमेयं छायेति लक्ष्यते, अन्यथा प्रथमनिरूप्योऽग्रिमो भवत्येव ॥ १८ ॥ ❀ ❀ यया मूर्त्या एषा छाया भवति तां मूर्तिं जहौ—विससर्जेति । तस्यास्तामसत्वं कार्यवशादवगम्यते । वस्तुत इयं सृष्ट्युपयोगिनीति तस्या अभिनन्दनमुचितम्, तदपि न कृतवान् । तत्र हेतुः—तमोमयमिति । अस्यां स्थितायां भगवद्वैमुख्यं भविष्यतीति तां तनुं त्यक्तवान् । अतेजसां हरिवैमुख्यं सुखकरमिति तामन्ये यक्षरक्षांसि जगृहुः । सा रात्र्यभिमानिनी देवता जाता । त्यक्तायास्तस्याः कार्यमाह—क्षुत्तृट्समुद्भवामिति । पूर्वकल्प एवोत्पन्नानि यक्षरक्षांसि, अष्टदेवसर्गमध्ये गणनात् । अथवा, पूर्वोक्तायाः पञ्चपर्वाया एतानि देवताः, अतः पञ्चपर्वा सदेवोत्पन्नेति । अत्रैव तेषामुत्पत्तिः । अत एव स्वकारणभूतां तां जगृहुः ॥ १९ ॥ ❀ ❀ तस्याः स्पर्शमात्रेण यक्षरक्षसां क्षुत्तृट् जातेत्याह—क्षुत्तृड्भ्यामिति । ततः पूर्वमस्मिन् कल्पे क्षुत्तृडुद्भवो न स्थितः । स्थितावपि देहाधिष्ठानसहितौ न स्थिताविति कामादिवत्पूर्वं स्थितौ, वृक्षाणामिव सह्यौ । अतो महद्भ्यां क्षुत्तृड्भ्यामुपसृष्टा भक्षान्तरस्याऽसृष्टत्वात् ब्रह्माणं जग्धुमेवाऽभिदुद्रुवुः । पूर्वं नपुंसकत्वेन निर्दिष्टा अपि प्रतिनिर्देशे पुंस्त्वेन निर्देशो ब्रह्मापेक्षयाऽपि बलिष्ठत्वात् । अत्र केचिदाहुः—मा रक्षतैनमिति । एनं ब्रह्माणं मा रक्षत । तदानीं माययाऽविद्यया वा क्षुत्तृडुपशान्तिं कुर्यादपि, तथाप्येनं मा रक्षत; पुनरुपद्रवान्तरमुत्पादयिष्यतीति । अन्ये त्वाहुः—जक्षध्वमिति । 'जक्ष भक्षहसनयोः' इति भक्षणार्थो जक्षिः, यक्षधातुर्वा भक्षणार्थः । ननु कथं पितरमेवमूचुरित्याशङ्कयाऽऽह—क्षुत्तृडर्दिता इति । नहि पीडितः किञ्चिज्जानाति धर्माधर्मम् ॥ २० ॥

## श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः ।

दैवेनेत्यत्र । साधारणीमिति । सर्वकल्पेष्वेकरूपाम् । प्राकृताः सृष्टा इति । भगवता सर्वसृष्टिकारणत्वेन सृष्टाः । वैकृता इति । तत्तत्सृष्टिकारणभूताः । नन्वविद्यादिऋष्यन्तगणनायां सर्गा बहवो भवन्तीति कथमेकादशेत्याकाङ्क्षायां विभाजकोपाधिविचारेण तावत्त्वमित्याशयेनाहुः—सगुणा इत्यादि । एतेष्वेकादशसु पुरुषो मनुसर्गः, पुम्भिः पूर्वसृष्टैः स्तुत इति निर्गुणः प्रोच्यते । शब्दब्रह्मात्मनः सकाशाज्जात ऋषिः, ऋषिसर्ग एकादश इत्यर्थः । समुदायसङ्ख्याप्रयोजनमाहुः—एवमित्यादि । 'एष सप्तदश प्रजापतिः' इति श्रुतेरस्य सर्गस्य यज्ञियाक्षरसमानसङ्ख्याकत्वादिमे यज्ञात्मानो मताः । देवो भगवान् सर्गलीलया प्रथमं तेन यज्ञेनैव तृप्यते । अतोऽयं सर्गस्तदर्थो भगवदर्थः । नाऽन्यथा न जीवार्थ इतीदं निरूपितं[2] सङ्ख्यया बोधितम् । तथा चेदं समुदायसङ्ख्याप्रयोजनमित्यर्थः । संख्यामात्रस्याऽनिर्णायकत्वमाशङ्क्य हेत्वन्तरमाहुः—वेद इत्यादि । उभयत इति । सङ्ख्यातः शब्दतश्च, प्रमाणतः प्रमेयतश्चेति वा । एवं सङ्ख्यातात्पर्यमुक्त्वा वैलक्षण्यं बोधयितुं व्याकुर्वते—प्रथमत इत्यादि । त्रय इत्यादि । तथा च, सत्त्व-

---

१. एतस्याः ग. । २. निरूपितः क. ङ. ।

रजस्तमःस्थानापन्ना एत इत्यर्थः। न निरूपित इति। 'बहु स्यां प्रजायेय' इति श्रुतौ सामान्याकारेणोक्तोऽपि येन प्रकारेण बहुत्वम्, येन च प्रकारेणोच्चनीचत्वादिरूपः प्रकर्षः, तेन विशेषाकारेणाऽनिरूपितः। स राजस इति। रजःस्थानापन्नः। न तत्त्वपदप्रयोग इति। तत्त्वं हि तस्य भावः, धर्म इति यावत्। अत्र तु धर्मिण एव तथाऽऽविर्भावान्न तत्त्वपदप्रयोग इत्यर्थः। एवं च पूर्वस्मादस्य वैलक्षण्ये गुणभेदः, साक्षाद्भगवतः कारणत्वम्, तत्त्वपदाप्रयोगश्चेति गमकत्रयमत्रोक्तम्। सच्चिदानन्देषु गुणपदप्रयोगस्याऽप्रसिद्धत्वात् पक्षान्तरमाहुः—तदंशेभ्यो वेति। द्वितीयस्कन्धोक्तेभ्यः सत्त्वादिभ्यः॥ १२॥ ❀ ❀ रजःप्रधानादित्यत्र। अत्रापि वैलक्षण्यमाहुः—स इत्यादि। त्रिविधोऽपि। अहङ्कारः। रजोभेदकृत एवेति। पूर्वत्र तत्त्वपदप्रयोगात्, द्वितीयस्कन्धे च 'महतस्तु विकुर्वाणाद्रजः सत्त्वोपबृंहितात्। तमः प्रधानात्' इति महद्विशेषणात्, अत्र तु 'रजःप्रधानात्' इति गुणान्तरोपबृंहणानुक्तेश्च। देवताचतुष्टयमिति। चन्द्ररुद्रब्रह्मचैत्याः॥ १३॥ ❀ ❀ सोऽनुविष्ट इत्यत्र। अत्रापि वैलक्षण्यं बोधयन्ति—अत्रेत्यादि॥ १७॥ ❀ ❀ ससर्जेत्यत्र। कार्यकरणेत्यत्र। करणपदेन छाया बोध्या। तेन अत्रापि वैलक्षण्यं बोधितम्। पूर्वं दशमे 'अबुद्धिकृतः' इत्युक्तम्, एकादशे च करणं नोक्तम्, परन्तु 'अज्ञानवृत्तयः' इति कथनादज्ञानमेव तत्र करणमिति। वैलक्षण्यान्तरं कारिकाभिः स्पष्टयन्ति—आत्मेत्यादि। विशिष्यत इति अविद्यारूपं भिन्नमुत्तमं च भवतीत्यर्थः। महामोहफलेति। महामोहोत्तमपर्विका। परमं बाधकमित्यादि। एतेषां बाधकरूपत्वेऽपि भगवदुपयोगित्वमेवं ज्ञेयम्। तथाहि—इन्द्रस्य यथा मखभङ्गच्युतरुहरणयोरुच्यमानं क्रोधजनकमज्ञानं तामिस्रं महाभोगेच्छारूपं भक्तौ बाधकमपि गोवर्धनोद्धरणाद्युपयोगि; अत एवाऽग्रेऽनुग्रहो बोधितः 'मखभङ्गोऽनुगृहृता' इति। एवमन्धतामिस्रमपि बभ्रूग्रसेनयोर्भोगेच्छारूपं भगवल्लीलोपयोगि. 'न्यबोधयदेव निधारय' इति वाक्यात्। उग्रसेनादीनां भोगेच्छा तु राजधर्मेषु भगवन्नारदसंवादे 'दास्यमैश्वर्यवादेन ज्ञाते (ती) नां वै करोम्यहम्। अर्धभाक् चास्मि भोगानां वाग्दुरुक्तानि च क्षमे' इति भगवद्वाक्येषु 'बभ्रूग्रसेनयो राज्यं नाप्तुं शक्यं कथंचन' इत्यादिनारदवाक्येषु च स्पष्टम् (?)। एवं तमः पर्वरूपमज्ञानं च मातृचरणादीनां 'सद्यो नष्टस्मृतिः' इत्यादिषु स्फुटमेव। पुष्ट्युपयोगित्वमत्रैव 'ततोपि' इत्यादिना विवृतमिति सर्वं सुस्थम्। प्रकृत इति सप्तम्यन्तमिदम्। अग्निमेति। स्वदर्शनयोग्या। यथा प्रग्रस्थे सूर्ये तथेत्यर्थः। एवमर्थानुक्तौ बाधकमाहुः—अन्यथेत्यादि। तथा चाऽग्रत इत्यस्य वैयर्थ्यापत्तिरित्यर्थः॥ १८॥ ❀ ❀ भविष्यतीति। यथा प्रक्षिप्ताध्यायोक्तवत्साहरणे जातम्, तथा भविष्यति। अत्र च तादृशतनुत्यागकथोक्त्या तत्कार्यं नैतत्कल्पीयस्य ब्रह्मण इत्यपि स्फुटतीति बोध्यम्॥ १९॥ ❀ ❀ क्षुत्तृड्भ्यामित्यत्र। देवाधिष्ठानसहिताविति क्षुत्तृट्पदार्थाविति शेषः॥२०॥

### श्रीगिरिधरकृता बालप्रबोधिनी

कथमित्येतदेव विशेषेण पृच्छति—किं सद्वितीयाः सभार्या इदं विश्वमसृजन् उत अथवा कर्मसु प्रजासर्गादिषु स्वतंत्राः भार्यानिरपेक्षा एव जाताः?। आहोस्वित् अथवा सर्वे संहताः मिलिताः सन्त इदमकल्पयन्?। सर्वथाप्याश्चर्यमेवेति सूचयन्नाह—स्मेति॥ ११॥ ❀ ❀ एवं विदुरेण पृष्टो मैत्रेयो ब्रह्मा किमारभत इति प्रश्नस्य यक्षादीन् सृष्टवानित्युत्तरं वक्तुं पूर्वोक्तामेव सृष्टिमादितः स्मारयति—दैवेनेति सप्तभिः। मरीच्यादयः कथं सृष्टिं कृतवन्त इत्यादिप्रश्नानामुत्तरं तु उत्तराध्यायमारभ्य भविष्यति। दुर्वितर्क्येण दैवेन जीवादृष्टेन परेण प्रकृत्यधिष्ठात्रा महापुरुषेण। अनिमिषेण सदा सावधानेन कालेन च जातः क्षोभः साम्यावस्थात्यागलक्षणं वैषम्यं यस्य तथाभूतं यत् भगवतो गुणत्रयं गुणत्रयात्मकं प्रधानं तस्मात् महान् आसीत् जातः॥ १२॥ ❀ ❀ रजःप्रधानादिति स्वतः सत्त्वप्रधानस्यापि महतः कार्योत्पत्तिकाले कार्यानुरूपं रजःप्रधानत्वं जातं तस्माद्दैवचोदितात् भगवद्दृष्टिप्रेरितान्महतो जातः सन् त्रिलिङ्गस्त्रिगुणो भूतादिरहङ्कारः वियदादीनि पञ्चशः शब्दादितन्मात्राणि वियदादिमहाभूतानि चक्षुरादिज्ञानेन्द्रियाणि वागादिकर्मेन्द्रियाणि तत्तद्देवताश्चेत्येवं पञ्च पञ्च ससर्जेत्यर्थः॥ १३॥ ❀ ❀ तानि च वियदादीनि एकैकशः प्रत्येकं भौतिकं पञ्चमहाभूतानां मिलितानां कार्यं स्रष्टुमसमर्थानि सन्ति दैवयोगेन भगवदनुप्रवेशेन संहत्य मिलित्वा हैमं हेमकार्यवत्प्रकाशबहुलं अण्डमवासृजन् ससृजुः॥ १४॥ ❀ ❀ स आण्डकोशो निरात्मकः अचेतनो वै एव साग्रं किञ्चिदधिकं वर्षसाहस्रं अब्धिसलिले प्रलयोदकेऽशयिष्ट अवात्सीत्। अनु तदनंतरं तमाण्डकोशमीश्वरोऽवात्सीत् अधिष्ठाय श्रीनारायणरूपेण स्थित इत्यर्थः॥ १५॥ ❀ ❀ तस्य नारायणस्य नाभेः सकाशात् सहस्रार्काणामिव उरुः अधिका दीधितिर्दीप्तिर्यस्य तत् तथा सर्वेषां जीवनिकायानां जीवसमूहानामोकः स्थानभूतं पद्ममभूत्। यत्र पद्मे स्वराट् ब्रह्मा स्वयमभूत्॥ १६॥ ❀ ❀ यः सलिलाशये सलिलं गर्भोदकमेवाशयो गृहं तस्मिन् शेते नारायणस्तेन भगवताऽनुविष्टः अधिष्ठितः प्रेरितः सन् स ब्रह्मा स्वया संस्थया नामगुणादिव्यवस्थया यथापूर्वं पूर्वकल्पे आसीत्तथा लोकसंस्थां लोकरचनां निर्ममे कृतवान्॥ १७॥ ❀ ❀ तत्र प्रथममविद्यां सृष्टवानित्याह—ससर्जेति। स ब्रह्मा अग्रतः प्रथमं छायया प्रभाप्रतियोगिन्या अबुद्ध्या देहच्छायया वा पञ्चपर्वाणमविद्यां ससर्ज। तां दर्शयति—तामिस्रमिति। महातम इति महामोह इत्यर्थः। पूर्वं तथोक्तेः। विवरणमपि पूर्वत एव ज्ञेयम्। स्वरूपनिर्देशमात्रविवक्षया मोह इति प्रथमाप्रयोगः॥ १८॥ ❀ ❀ तदेवं प्रथमोक्तां साधारणां सृष्टिमनूद्य केनचिद्विशेषेण असाधारणां सृष्टिमाह—विससर्जेत्यादिना यावत्समाप्ति। येन कायेन छायाद्वारा अविद्यां सृष्टवांस्तदात्मनः स्वस्य कायं

विससर्ज त्यक्तवान्। तत्र हेतुमाह—नाभिनन्दन्निति। तत्रापि हेतुमाह—तमोमयमिति। द्विपरार्धायुपस्तस्य देहत्यागो नाम तदभिमानत्यागः। यद्वा तत्तत्सृष्टयर्थं योगिवच्छरीरत्यागे तद्ग्रहणे चापि भोगस्य तावद्विद्यमानत्वान्नानुपपत्तिरिति ज्ञेयम्। तद्विसृष्टां क्षुत्तृषोः समुद्भवो यस्यां रात्रिरूपां तनुं तत एव तदानीं जातानि यक्षरक्षांसि जगृहुः। अत्र च "याऽस्य सा तनूरासीत्तामपोहत सा तमिस्राऽभवत्" इत्यादिश्रुतिरनुसन्धेया॥ १९॥ ❀ ❀ ततश्च क्षुत्तृड्भ्यां उपसृष्टा अभिभूतास्ते यक्षा राक्षसाश्च तं ब्रह्माणमेव जग्धुं भक्षयितुमभिदुद्रुवुः। यतो वयं क्षुत्तृड्भ्यामर्दिताः पीडिताः अत एनं पितेति बुद्ध्या मा रक्षतेत्येके। अन्ये तु जक्षध्वं भक्षयेत्येवं परस्परमूचुश्च॥ २०॥

### हिन्दी अनुवाद

क्या उन्होंने इस जगत्को पत्नियोंके सहयोगसे उत्पन्न किया या अपने-अपने कार्यमें स्वतन्त्र रहकर, अथवा सबने एक साथ मिलकर इस जगत्की रचना की ?॥ ११॥ ❀ ❀ श्रीमैत्रेयजीने कहा—विदुरजी ! जिसकी गतिको जानना अत्यन्त कठिन है—उन जीवोंके प्रारब्ध, प्रकृतिके नियन्ता पुरुष और काल—इन तीन हेतुओंसे तथा भगवान्की सन्निधिसे त्रिगुणमय प्रकृतिमें क्षोभ होनेपर उससे महत्तत्त्व उत्पन्न हुआ॥ १२॥ ❀ ❀ दैवकी प्रेरणासे रजःप्रधान महत्तत्त्वसे वैकारिक ( सात्त्विक ), राजस और तामस—तीन प्रकारका अहङ्कार उत्पन्न हुआ। उसने आकाशादि पाँच-पाँच तत्त्वोंके अनेक वर्ग[1] प्रकट किये॥ १३॥ ❀ ❀ वे सब अलग-अलग रहकर भूतोंके कार्यरूप ब्रह्माण्डकी रचना नहीं कर सकते थे, इसलिये उन्होंने भगवान्की शक्तिसे परस्पर संगठित होकर एक सुवर्णवर्ण अण्डकी रचना की॥ १४॥ ❀ ❀ वह अण्ड चेतनाशून्य अवस्थामें एक हजार वर्षोंसे भी अधिक समयतक कारणाब्धिके जलमें पड़ा रहा। फिर उसमें श्रीभगवान्ने प्रवेश किया॥ १५॥ ❀ ❀ उसमें अधिष्ठित होनेपर उनकी नाभिसे सहस्र सूर्योंके सामान अत्यन्त देदीप्यमान एक कमल प्रकट हुआ, जो सम्पूर्ण जीव-समुदायका आश्रय था। उसीसे स्वयं ब्रह्माजीका भी आविर्भाव हुआ॥ १६॥ ❀ ❀ जब ब्रह्माण्डके गर्भरूप जलमें शयन करनेवाले श्रीनारायणदेवने ब्रह्माजीके अन्तःकरणमें प्रवेश किया, तब वे पूर्वकल्पोंमें अपने ही द्वारा निश्चित की हुई नाम रूपमयी व्यवस्थाके अनुसार लोकोंकी रचना करने लगे॥ १७॥ ❀ ❀ सबसे पहले उन्होंने अपनी छायासे तामिस्र, अन्धतामिस्र, तम, मोह और महामोह—यों पाँच प्रकारकी अविद्या उत्पन्न की॥ १८॥ ❀ ❀ ब्रह्माजीको अपना वह तमोमय शरीर अच्छा नहीं लगा, अतः उन्होंने उसे त्याग दिया। तब, जिससे भूख-प्यासकी उत्पत्ति होती है—ऐसे रात्रिरूप उस शरीरको उसीसे उत्पन्न हुए यक्ष और राक्षसोंने ग्रहण कर लिया॥ १९॥ ❀ ❀ उस समय भूख-प्याससे अभिभूत होकर वे ब्रह्माजीको खानेको दौड़ पड़े और कहने लगे—'इसे खा जाओ, इसकी रक्षा मत करो', क्योंकि वे भूख-प्याससे व्याकुल हो रहे थे॥ २०॥

देवस्तानाह संविग्नो मा मां जक्षत रक्षत। अहो मे यक्षरक्षांसि प्रजा यूयं बभूविथ॥ २१॥
देवताः प्रभया या या दीव्यन् प्रमुखतोऽसृजत्। ते[2] अहार्षुर्देवयन्तो विसृष्टां तां प्रभामहः॥ २२॥
देवोऽदेवाञ्जघनतः सृजति स्मातिलोलुपान्। त एनं लोलुपतया मैथुनायाभिपेदिरे॥ २३॥
ततो हसन् स भगवानसुरैर्निरपत्रपैः। अन्वीयमानस्तरसा क्रुद्धो भीतः परापतत्॥ २४॥
स उपव्रज्य वरदं प्रपन्नार्तिहरं हरिम्। अनुग्रहाय भक्तानामनुरूपात्मदर्शनम्॥ २५॥
पाहि मां परमात्मंस्ते प्रेषणेनासृजं प्रजाः। ता इमा यभितुं पापा उपाक्रामन्ति मां प्रभो॥ २६॥
त्वमेकः[3] किल लोकानां क्लिष्टानां क्लेशनाशनः। त्वमेकः क्लेशदस्तेषामनासन्नपदां तव॥ २७॥
सोऽवधार्यास्य कार्पण्यं विविक्ताध्यात्मदर्शनः। विमुञ्चात्मतनुं घोरामित्युक्तो विमुमोच ह॥ २८॥
तां क्वणच्चरणाम्भोजां मदविह्वललोचनाम्। काञ्चीकलापविलसद्दुकूलच्छन्नरोधसम्॥ २९॥
अन्योन्यश्लेषयोत्तुङ्गनिरन्तरपयोधराम्। सुनासां सुद्विजां स्निग्धहासलीलावलोकनाम्॥ ३०॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका।

देवो ब्रह्मा संविग्नो भीतः सन्मां मा जक्षत मा भक्षयत किं तु रक्षत अहो हे यक्षरक्षांसि यूयं मे प्रजाः सुता बभूविथ जाताः स्थ। एवमुग्रस्वभावा यक्षराक्षसा जाता इत्यर्थः। तत्र ये जक्षध्वमित्यूचुस्ते यक्षा ये तु मा रक्षतेति राक्षसा इति ज्ञेयम्।

---

१. पञ्च तन्मात्र, पञ्च महाभूत, पाँच ज्ञानेन्द्रिय, पाँच कर्मेन्द्रिय और उनके पाँच-पाँच देवता इन्हीं छः वर्गोंका यहाँ संकेत समझना चाहिये। २. प्रा० पा—तेऽहारिषुर्दे०। ३. प्रा० पा०—त्वमेव।

एतच्च तिर्यगादितामससर्गस्याप्युपलक्षणम् ॥ २१ ॥ ❀ ❀ प्रभया दीव्यन् द्योतमानो या या देवता द्युतिमत्यः सात्त्विक्य-स्तास्ताः प्रमुखतः प्राधान्येनासृजत् । ते देवाः । देवता इति स्त्रीत्वेन निर्दिष्टानामप्यर्थमात्रविवक्षया त इति पुंस्त्वेन प्रतिनिर्देशः । एवं यक्षरक्षांसीत्यत्रापि ज्ञेयम् । तेन विसृष्टां त्यक्तां प्रभामहः दिवसरूपां सतीं देवयंतः क्रीडयंतोऽहार्पुर्जगृहुः ॥ २२ ॥ ❀ ❀ अदेवानिति छेदः । "स जघनादसुरानसृजत" इति श्रुतेः । अतिलोलुपान्स्त्रीलंपटान् अभिपेदिरे प्राप्ताः ॥ २३ ॥ ❀ ❀ परा-पतत् पलायत ॥ २४ ॥ ❀ ❀ भक्तेच्छानुरूपमात्मानं दर्शयतीति तथा तमुपव्रज्य ॥ २५ ॥ ❀ ❀ पाहीति द्वाभ्यां प्रार्थित-वान् । यभितुं मैथुनेन धर्षयितुम् ॥ २६ ॥ ❀ ❀ लोकानां जनानाम् । तवानासन्नावनाश्रितौ पादौ यैस्तेषाम् ॥ २७ ॥ ❀ ❀ विविक्तमसंदिग्धमध्यात्मदर्शनं परचित्तज्ञानं यस्य हरेः घोरां कामकश्मलां स्वतनुं विमुंचेति उक्तवानिति शेषः । इत्यु-क्तश्च ब्रह्मा तां तनुं विमुमोच । सर्वत्र तनुत्यागो नाम तत्तन्मनोभावत्यागो विवक्षितः । ग्रहणं च तत्तद्भावापत्तिरिति द्रष्टव्यम् ॥ २८ ॥ ❀ ❀ "साऽहोरात्रयोः संधिरभवत्" इति श्रुतेः सा तेन विसृष्टा तनुः सायंतनी संध्या बभूव । सा च कामोद्रेकवेला असुराश्च राजसत्वात्स्त्रीलंपटा अतस्तां संध्यामेव स्त्रियं कल्पयित्वा ते संमोहं प्राप्ता इत्याह । तामिति त्रिभिः । नूपुराभ्यां क्वणती चरणांभोजे यस्याः मदेन विह्वले लोचने यस्याः कांचीकलापेन विलसद्दुकूलं तेन छन्नं रोधः कटितटं यस्यास्ताम् ॥ २९ ॥ ❀ ❀ अन्योन्यमाश्लेषयोपमर्देन हेतुनोत्तुंगौ निरंतरौ पयोधरौ यस्याः । सुद्विजां सुदतीम् । स्निग्धो हासो लीलाऽवलोकनं च यस्याः ॥३०॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः ।

इत्यर्थ इति । एवं कारणानुरूपत्वात्कार्यस्येति भावः । तत्र तेषु । एतद्यक्षराक्षसादिस्वभावकथनम् ॥ २१ ॥ ❀ ❀ प्रभया प्रभारूपया सत्त्वमय्या तन्वा देवयंतो याचमाना इत्यर्थः । 'दिवु अर्दने' इत्यस्य चौरादिकस्य रूपमिति संदर्भः । तथा चात्र ब्रह्मणो मनसि प्रसादः सात्त्विकभाव आविर्बभूव तस्माद्देवा बभूवुः । स च प्रसादो दिनं बभूव । तच्च त एव जगृहुरित्येतावा-नेवात्रार्थः । अहारिषुरिहेडार्षः ॥ २२ ॥ ❀ ❀ एवं च तस्य मनसि कामो राजसो भावोऽभूत्तस्मादसुरा बभूवुः स च भावः संध्याऽभूत्तां चासुरा जगृहुरित्याह—देव इति । अत्र प्रमाणमाह—स इति । जघनात् श्रोणिपुरोभागात् । यद्यपि जघन-शब्दो नार्य्यवयवे प्रयुज्यते तथापि तत्साहश्यात्पुरुषावयवेऽपीत्यनेनैव ज्ञाप्यते "पश्चान्नितंवः स्त्रीकट्याः क्लीबे तु जघनं पुरः" इत्यमरः । कामस्यानर्थहेतुतामाह—त इति । तेऽसुरा एनं ब्रह्माणं लंपटलोलुपौ पर्यायौ स्त्रीपरायणे वर्त्तेते । लोलुपतया । मैथुनाय मैथुनं कर्त्तुम् ॥ २३ ॥ ❀ ❀ ततस्तैः निरपत्रपैः स्वकरात्तशिश्नैरन्वीयमानोऽनुगम्यमानः । तरसा वेगेन । स ब्रह्मा ॥ २४ ॥ ॥ २५ ॥ ❀ ❀ परमात्मन्निति । निवेदनाभावेऽपि त्वं जानास्येवेत्याह—प्रेषणेन प्रेरणया । इमा इति । शृङ्गग्राहिकया वदति । धर्षयितुं पातयितुम् । उपाक्रामंति समीपमायांति । प्रभो इति । त्वमेवैषां वारणे शक्त इत्याह ॥ २६ ॥ ❀ ❀ त्वत्पादावाश्रितवतां भक्तानां क्लिष्टानामपि क्लेशनाशनस्त्वमसीति गम्यते । एक इत्युक्तेस्त्वामृते कोऽपि भक्तवत्सलो नास्तीति भावः । क्लेशद इति । स्वं प्रत्युन्मुखीकर्तुमिति भावः । तथा च त्वच्चरणमनाश्रितवतां कालकर्मग्रहादिरूपेण त्वमेवैकः क्लेशदः तेषामेवाकस्माच्चरणाश्रितत्वे सति साक्षात्त्वमेव तत्तत्क्लेशनाशनः, त्वद्भक्तेषु कालकर्मादीनामनधिकारोऽस्तीत्याशयः "प्रेताश्च राहौ पितरः सुरेज्ये चंद्रे च देव्यस्तपने खदेव्यः । शाकिन्य आरे भृगुजेंबुदेव्यस्स्वगोत्रदेव्यः क्षितिजे शनौ वा ॥ बुधे च भूता व्यय-रंध्रसंस्थे गृह्णन्ति मर्त्यं विमुखं मुकुंदात् ॥" इति ज्योतिःशास्त्रात् । "देवर्षिभूताप्तनृणां पितॄणां न किंकरो नायमृणी च राजन् । सर्वात्मना यः शरणं शरण्यं गतो मुकुन्दं परिहृत्य कर्तुम् ॥" इत्येकादशे वक्ष्यमाणत्वाच्च । त्वयि वैषम्याभावश्च कल्पतरुदृष्टांतेन ज्ञेयः ॥ २७ ॥ ❀ ❀ स विष्णुः । अस्य ब्रह्मणः । कार्पण्यं दैन्यम् । भावो नाम सृज्यावेश एव ज्ञेयः । भावत्वमननं च तदा-युषो द्विपरार्द्धमितत्वात् ॥ २८ ॥ ❀ ❀ अतः स्त्रीलंपटत्वात् । क्वणदिति । अत्र स्वनीडं प्रति गंतुं सशब्दमुड्डीनांश्चटकसार-सादीनेव नूपुरकांच्यादीन्कल्पयंति स्म । तत्तदाकारान्मेघखंडानेव चरणनयननितंवस्तनादीन् । अत एवैकत्र श्लेषेण पयोधरशब्द उपन्यस्तः । संध्याया आरुण्यमेवारुणदुकूलं, रोधः कटितटम् ॥ २९ ॥ ❀ ❀ श्लेषयेति । भिदाद्यङंताट्टाप्प्रत्ययः, ङित्त्वेऽपि गुण आर्षः । यद्वा । "सुपां सुलुक्" इत्यादिना टाप्प्रत्ययस्य यादेश इति ज्ञेयम् । अंतराच्छिद्रोत्थौ यत्किंचित्सूर्यप्रकाशावेव । हासावलोकने कदाचित्तत्तन्मेघखंडांतर्द्धानमेव, लज्जया निगूहनम् । ऊर्ध्वतस्तलपर्यंतपतितानि दीर्घश्याममेघखंडान्येव नीलाल-कवरूथं समूहः धर्मावतारत्वाच्छृङ्गाररसमग्नो मा भवेत्यभिप्रायः ॥ ३० ॥ ३१ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

एतच्च यक्षराक्षससृष्टिकथनञ्च ॥ २१ ॥ ❀ ❀ प्रभया सात्त्विकबुद्ध्या । अर्थमात्रविवक्षयेति । उभयत्रापि देवत्वरूपा जातिस्तुल्य एवार्थः । जातेरेव सर्वत्र प्रवृत्तिनिमित्तत्वादिति विवक्षयेत्यर्थः । एवं यक्षरक्षांसीत्यत्रापि क्लीबत्वेन निर्दिष्टानां तेषां देवस्तानाहेत्यत्र पुंस्त्वेन प्रतिनिर्देशोऽप्यर्थमात्रविवक्षयैवेति ज्ञेयम् । देवयन्त इति दिवुधातोश्चौरादित्वात्साधुः । क्रीडयन्त इत्य-र्थस्तु अनेकार्थत्वाद्धातोरिति ज्ञेयम् ॥ २२ ॥ ❀ ❀ अदेवानिति विरोधे नञ् तत्र श्रुतिः प्रमाणं जघनतः नाभेरधः प्रदेशात्

॥ २३ ॥ २४ ॥ ❀ ❀ प्रार्थितवानिति शेषः ॥ २५ ॥ २६ ॥ ❀ ❀ स्वसाम्मुख्यं कर्तुं क्लेशदः ॥ २७ ॥ ❀ ❀ तत्तदिति तेषु तेषु सृज्येषु यो मनोभाव आवेशस्तस्य त्याग एव विवक्षितः। तदायुषो द्विपरार्द्धपरिमितत्वात् ॥ २८ ॥ ❀ ❀ तामिति त्रिकम्। लेखाशब्दवत् श्लेपाशब्दोऽपि टाबन्तो ज्ञेयः ॥ २९ ॥ ३० ॥ ३१ ॥

### श्रीमद्वीरराघवव्याख्या

देवो ब्रह्मा संविग्नः भीतः तान् यज्ञादीन्प्रति मां मत्कायं मा जक्षत न भक्षयत किंतु रक्षतेत्याह। अहो हे यक्षरक्षांसि यूयं मे प्रजाः पुत्रा बभूविथ जाता एवं तमःस्वभावा जाता इत्यर्थः। तत्र ये यक्षध्वमित्यूचुस्ते यक्षाः, ये तु मा रक्षतेत्यूचुस्ते राक्षसा इति विज्ञेयम् ॥ २१ ॥ ❀ ❀ प्रभया छायाप्रतियोगिन्या तेजसेत्यर्थः। दीव्यन्प्रकाशमानः ब्रह्मा प्रमुखतः प्राङ्मुखं या या देवताः देवास्तान् देवान् असृजत्। देवाः देवयतेः द्योतमाना विसृष्टां त्यक्तामहः अहर्धर्मरूपां प्रभामहारिपुर्ह्रतवन्तः ॥ २२ ॥ ❀ ❀ देवः ब्रह्मा जघनतः जघनादतिलोलुपानतीव कामासक्तान् देवानसुरान्सृजतिस्मातिलौलुप्येन भावेनासृजत् तेऽदेवा अतिलोलुपतयातिकामासक्ततया मैथुनाय एनं ब्रह्माणमभिपेदिरेऽभितः प्राप्ताः ॥ २३ ॥ ❀ ❀ स भगवान् ब्रह्मा हसन्निरपत्रपैर्निर्लज्जैरसुरैरन्वीयमान अभिपद्यमानः अत एव क्रुद्धो भीतश्च तरसा आशु परापतत्पर्यधावत् ॥ २४ ॥ ❀ ❀ स ब्रह्मा भक्तानामनुग्रहायानुरूपं तत्तद्भक्तबुद्ध्यनुरूपमात्मानं दर्शयतीति तं प्रपन्नदुःखहरं वरदमभीष्टदं हरिं भगवन्तमुपव्रज्य समीपमेत्याहेति शेषः ॥ २५ ॥ ❀ ❀ उक्तिमेवाह द्वाभ्याम्। हे परमात्मन् ! मा पहि पालय ते तव प्रेक्षणेन सङ्कल्पेन प्रजा अहमसृजं ताः त्वत्संकल्पेन मया सृष्टाः पापा इमा असुररूपाः प्रजा यभितुं मैथुनं कर्तुं मामुपक्रामन्ति परिवेष्टन्ते ॥ २६ ॥ ❀ ❀ हे प्रभो ! त्वमेक एव क्लिष्टानां दुःखितानां लोकानां क्लेशनाशनः बाधानिवर्तकः किल तवानासन्नावनाश्रितौ पादौ यैस्तेषां तव पादमनाश्रितानां लोकानां त्वमेव क्लेदः क्लेशसंपादकः ॥ २७ ॥ ❀ ❀ विविक्ताध्यात्मदर्शनः विविक्तं विशदं यथा तथाध्यात्मदर्शनः पराभिप्रायज्ञः स भगवानस्य ब्रह्मणः कार्पण्यं क्लेशमुपधार्य ज्ञात्वा घोरामतिलौलुप्यरूपामात्मतनुमात्मनो भावं विमुञ्चेत्याहेति शेषः। एवमुक्तो भगवता ब्रह्मा तां तनुभावं विमुमोच विससर्ज। सा तेन विसृष्टा तनुः सायन्तनी सन्ध्या बभूव सा च कामोद्रेकवेला ॥ २८ ॥ ❀ ❀ असुरा राजसत्वात् स्त्रीलम्पटाः यतस्तां सन्ध्यामेव स्त्रियं कल्पयित्वा संमुमुहुरित्याह त्रिभिः। तां सन्ध्यारूपां स्त्रीत्वेन कल्पितां तनुं कथंभूतां कणच्चरणाम्भोजां नूपुराभ्यां ध्वनच्चरणकमलां मदेन विह्वले लोचने यस्यास्तां काञ्चीकलापेन मेखलारत्नभूषणेन विलसद्दुकूलं क्षौमवासस्तेन छन्नं पिहितं रोधः नितम्बप्रदेशो यस्यास्ताम् ॥ २९ ॥ ❀ ❀ अन्योऽन्याश्लेषेण परस्परोपमर्देन उत्तुङ्गावुन्नतौ निरन्तरौ श्लिष्टौ पयोधरौ स्तनौ यस्यास्तां सुनासां तिलपुष्पतुल्यनासिकां सुद्विजां कुन्दकुड्मलसदृशदन्तपङ्क्तिस्निग्धो हासो यस्मिंस्तल्लीलावलोकनं यस्यास्ताम् ॥ ३० ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

तत्र ब्रह्मणा किं कृतमत्राह। देव इति। यूयं मा मां मा जक्षत किन्तु रक्षत आपदि मित्रजनो बोधनीय इति भावेनाह। अहो इति। अहो युष्माकमज्ञानम्। यूयं मे प्रजाः पुत्राः भविष्यथ तस्मात् क्षणमयुक्तम्। किन्तु रक्षणमेव कीदृश्यो युष्माकं मध्ये ये यूयं मा जक्षत किन्तु रक्षतेत्यूचिध्वं ते यक्षा भविष्यथ ये केचिद्यूयं मा रक्षत किन्तु जक्षतेत्यूचिध्वं तानि रक्षांसि भविष्यथ ॥ २१ ॥ ❀ ❀ देवानां विद्यायोग्यत्वेन तद्विरोध्यविद्यासृष्ट्यनन्तरं देवसृष्टिमाह। देवता इति। या या दिव्याः क्रीडादिगुणयुक्तास्तास्ता देवताः प्रभया भा दीप्ताविति धातोः सर्वप्रकाशकलक्षणया विद्यापरपर्यायया तन्वासृजदित्यन्वयः। सर्वसृष्टिभ्यः प्रधानत्वात् प्रमुखत इति देवयन्तः क्रीडादिगुणान् द्योतयन्तो देवास्तां प्रभाख्यां तनुमहार्षुरङ्गीकृतवन्तस्तदहरभवच्च ॥२२॥ ❀ ❀ अदेवानसुरान् जघनतो जघननाम्ना देहेन ॥ २३ ॥ ❀ ❀ क्रुद्धो भीत इति विडम्बनं परापतत्पलायितवान् ॥२४॥ पलायनावधिमाह। स इति। हरिं प्राप्य जगादेति शेषः अनुरूपमुपासकानां योग्यतानुकूलमात्मनो दर्शनं यस्य स यथा तम् ॥ २५ ॥ ❀ ❀ ते तव यभितुं "यभ मैथुने" इति धातुः मैथुनं कर्तुम् ॥ २६ ॥ ❀ ❀ नित्यं भगवत्प्रीतिकृत्प्रेष्येण आपदि हरिरेव स्तोतव्य इति भावेनाह। त्वमिति। अनासन्नौ न प्राप्तौ पादौ यैस्ते तथा तेषामनासन्नपदाम् ॥ २७ ॥ ❀ ❀ स्वानिष्टवारणे समर्थस्यापि भगवान् स्वप्रियार्थं शरणं गतस्य ब्रह्मणस्तन्निवारणोपायमाह। स इति। सर्वज्ञस्यापि विरिञ्चस्याज्ञवदशक्तवत्कार्पण्यमवधार्य। तदुक्तम् 'जानन्नपि समर्थोऽपि क्वचिद्ब्रह्मा हरेः प्रियम्। ज्ञात्वा करोति कर्माणि ह्यज्ञवच्चाप्यशक्तवदि'ति। अनेन स्वापदं परिहर्तुं समर्थस्य तत्प्राप्तौ हरिशरणगतौ हरिप्रीतिः स्यादिति न्यायो दर्शितः। विविक्तमनन्याधीनमध्यात्मदर्शनं शरीरादिकमधिकृत्य वर्तमानं ज्ञानं यस्य स विविक्ताध्यात्मदर्शनोऽशेषविशेषज्ञानवानित्यर्थः। चेतनाचेतनराशेर्विविक्तो भिन्नोऽत एवाध्यात्मा सर्वजीवराशेरधिक ईश्वर इति दर्शनमपरोक्षज्ञानं यस्य स तथोक्तः "तद्ब्रह्मा वेदाहं ब्रह्मास्मि" इति श्रुतेरिति वा। "स्यादध्यधिक ईश्वर" इति यादवः। हेत्यनेन स्वाज्ञाकरणाद्धरेरभ्यधिका प्रीतिरभूदिति सूचयति अत एव विमुञ्चेति भवतश्चेन्मदनुग्रहपात्रज्ञानसाधनयोग्या तनुरस्ति किमनया घोरयेति ॥२८॥ ❀ ❀ निश्चेतना सा तनुः किमभूदिति तत्राह। तामिति। असुरास्तां तनुं स्त्रियं स्त्रीभूतामु-

पलभ्य दृष्ट्वा कीदृशीं शरीरपूर्वोत्तरयोः सन्धौ जघने जातत्वान्नाम्ना सन्ध्यां सर्वैरसुरैरितां परिवृताम् । "कलापो भूषणे बर्हे" इत्यभिधानात्काञ्चीकलापेन काञ्चीभूषणेन विलसता दुकूलेन छन्नं पिहितं रोधः कटितटं यस्याः सा तथा ताम् ॥ २९ ॥ ❀ ❀ अन्योऽन्याश्लेषेण परस्परसम्बन्धेन उत्तुङ्गौ उन्नतौ निरन्तरावनवकाशौ च पयोधरौ स्तनौ यस्याः सा तथा ताम् ॥ ३० ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

देवयन्त इति । दिवु अर्द्दने इत्यस्मात् चौरादिकात् याचमान इत्यर्थः ॥ २२–२६ ॥ ❀ ❀ क्लेशद इति स्वम्प्रत्युन्मुखीकर्तुमिति ज्ञेयम् ॥ २७ ॥ ❀ ❀ सोऽवधार्य्येत्यस्य टीकायां भावो नाम सृज्यावेशो ज्ञेयः । भावत्वमननञ्च तदायुषो द्विपरार्द्धमितत्वात् ॥ २८ ॥ ❀ ❀ तामिति त्रिकम् । अन्योऽन्येति लेखादिवत् श्लेषाप्यङ्गीकृता । यद्वा सुपां सुलुगित्यादिना यादेशः ॥ २९–३३ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

देवो ब्रह्मा मां न भक्षयत किन्तु रक्षत, अहो आश्चर्यं हे यक्षरक्षांसि ! ॥ २१ ॥ ❀ ❀ प्रभया प्रभारूपया सत्त्वमय्या तन्वा दीव्यन् द्योतमानः । या या देवताः प्रमुखतः प्राधान्येनासृजत् । अत्र या इत्यस्यापि ते इत्यनेन प्रतिनिर्देशोऽर्थमात्रदृष्ट्यैव ज्ञेयः । विसृष्टां तेन त्यक्तां तां प्रभाम् अहः दिवसरूपां तत्तनुमहारिपुर्जगृहुः । किमर्थं तां देवयन्तः क्रीडयन्तः क्रीडयितुं यथा रात्रिर्यक्षरक्षोभिः सहैव तिष्ठति तथा अहोऽपि देवैर्दीव्यतीत्यर्थः । दिवु अर्दन इत्यस्माच्चौरादिकात् याचमाना इत्यर्थः । इति सन्दर्भः । अत्र ब्रह्मणो मनसि प्रसादः सात्त्विकभावः आविर्बभूव । तस्माद्देवा बभूवुः स च प्रसादो दिनं बभूव तच्च ते एव जगृहुरित्येतावानेवार्थः ॥ २२ ॥ ❀ ❀ एवञ्च तस्य मनसि कामो राजसभावोऽभूत् तस्मादसुरा बभूवुः । स च भावः सन्ध्या अभूत् तां चासुरा जगृहुरित्याह देव इति । अदेवानसुरान् "स जघनादसुरानसृजत्" इति श्रुतेः कामादनर्थो महान् भवतीत्याह । त एवमित्यादि ॥ २३ ॥ ❀ ❀ परापतत् पलायत ॥ २४ ॥ ❀ ❀ उपव्रज्य मनसैवोपसाद्य निवेदयामासेति शेषः ॥ २५ ॥ ❀ ❀ यभितुं पुमांसमपि मां सम्भोक्तुम् ॥ २६ ॥ ❀ ❀ तव अनासन्नपदां त्वत्पदावनाश्रितवतामभक्तानां स त्वं क्लेशदः । तेन क्लिष्टानामपि त्वत्पादावाश्रितवतां भक्तानां त्वं क्लेशनाशन इति गम्यते । एक इत्येवम्विधो भक्तवत्सलः कोऽपि नास्तीति भावः । त्वच्चरणमनाश्रितवतां कालकर्मग्रहादिरूपेण त्वमेवैकः क्लेशदः तेषामेवाकस्माच्चरणाश्रितत्वे सति साक्षात् त्वमेव तत्तत्क्लेशनाशनः त्वद्भक्तेषु कालकर्मादीनामनधिकारादित्याशयः । त्वयि वैषम्याभावस्तु कल्पतरुदृष्टान्तेन ॥ २७ ॥ ❀ ❀ विविक्तमसन्दिग्धमध्यात्मदर्शनं परचित्तज्ञानं यस्य सः विमुञ्चेत्युक्तवानिति शेषः । इत्युक्तश्च ब्रह्मा तनुं विमुमोच ॥ २८ ॥ ❀ ❀ मत्वा मूढधियः स्त्रियमित्यग्रिमोक्तेस्तां सन्ध्यामेव स्त्रियं कल्पयित्वा स्त्रीलम्पटा असुरा मुमुहुरित्याह । तां क्वणदिति । अत्र स्वस्वनीडं प्रतिगन्तुं नभसि सशब्दमुड्डीनान् चटकसारसादीनेव नूपुरकाञ्च्यादीन् कल्पयन्ति स्म तत्तदाकारान् मेघखण्डानेव चरणनयननितम्बस्तनादीन् अत एवैकत्र श्लेषेण पयोधरशब्द उपन्यस्तः । सन्ध्याया आरुण्यमेवारुणदूकूलं रोधः कटितटं श्लेषयेति भिदाद्यङन्ताट्टाप्प्रत्ययः । ङित्यपि गुण आर्षः । अन्योऽन्यश्लेषया उपमर्द्देनैव हेतुना उत्तुङ्गौ निरन्तरावव्यवधानौ पयोधरौ "यस्यास्तां सुपां सुलुक्" इत्यादिना टाप्प्रत्ययस्य यादेशो वा अन्तराच्छिद्रौ तौ यत् किञ्चित् सूर्यप्रकाशावेव हासावलोकने कदाचित्तत्तन्मेघखण्डान्तर्धानमेव लज्जया निगूहेनमूर्ध्वतस्तलपर्यन्तपतितानि दीर्घश्याममेघखण्डान्येव नीलालकवरूथम् । हे धर्म ! विदुर तां स्त्रियमुपलभ्य मत्वा ॥ २९ ॥ ३१ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः ।

संविग्नः पुत्रस्वभावदर्शनात् देवो ब्रह्मा अहो हे प्रजाः ! पुत्रकाः मे मम यूयं ये यक्षध्वमित्यूचुः ते यक्षाः, ये तु रक्षतेत्यूचुस्ते रक्षांसि इत्येवं यक्षरक्षांसि यक्षा राक्षसाश्च नामतः बभूविथ जाताः । अतः मा मां पितरं मा जक्षत मा भक्षयत किन्तु रक्षतेत्याह ॥ २१ ॥ ❀ ❀ तमोरूपं कायविशेषं त्यक्त्वा प्रभया तन्वा दीव्यन् द्योतमानः या या देवताः द्युतिमत्यः सुररूपा प्रजास्तास्ताः प्रमुखतः प्राधान्यतःअसृजत् । तमोमयकायापेक्षया प्रभामयकायस्य प्राधान्यं तत इत्यर्थः । ते देवतापरपर्यायाः पुत्राः तेन विसृष्टां त्यक्तां प्रभाम् अहः दिवसरूपां सतीं देवयन्तः क्रीडयन्तः अहारिषुर्जगृहुः ॥ २२ ॥ ❀ ❀ स जघनादसुरानसृजतेति श्रुत्युपबृंहणायाह । देव इति । अदेवानसुरान् ॥ २३ ॥ ❀ ❀ ततः तेषां व्यतिक्रमात् क्रुद्धो लोकविदूषकसुतोत्पत्त्या भीतः तद्वालयस्मरणात् हसन् परापतत् पलायितवान् ॥ २४ ॥ ❀ ❀ अनुरूपं भक्तेच्छानुसारिणमात्मानं दर्शयतीति तथा तम् उपव्रज्य प्रार्थयामासेति शेषः ॥ २५ ॥ ❀ ❀ मां पाहीति प्रार्थना तन्मूलं निवेदयति । यभितुं मैथुनेन धर्षयितुम् ॥ २६ ॥ ❀ ❀ तव अनाश्रितौ न शरणीकृतौ पादौ यैस्तेषाम् ॥ २७ ॥ ❀ ❀ विविक्तमध्यात्मदर्शनं तत्त्वदर्शनं यस्मात्सः 'यमेवैष वृणुते तेन लभ्यः" "ददामि बुद्धियोगं तं येन मामुपयान्ति ते" इति श्रुतिस्मृतिभ्यां विमुञ्चतेत्युक्तवानिति शेषः । इत्युक्तो ब्रह्मापि तां विमुमोच ॥ २८ ॥ ❀ ❀ साहोरात्रयोः सन्धिरभवदिति श्रुत्युपबृंहणार्थं तेन त्यक्तां तनुं सन्ध्यारूपेण संस्थितामसुराः

स्त्रियं मत्वा जगृहुरिति वर्णयति। तामिति नवभिः। नूपुराभ्यां क्वणती चरणजलजे यस्यास्ताम्। काञ्चीकलापविलसता दुकूलेन छिन्नमाहतं रोधः कटितटो यस्यास्ताम्॥ २९॥ ❀ ❀ अन्योऽन्यश्लेषया परस्परोपमर्देनोत्तुङ्गौ निरन्तरौ च पयोधरौ यस्यास्ताम्॥ ३०॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

ततः किं जातमित्याकाङ्क्षायामाह—देवस्तानाहेति। देवत्वात्तस्य तथा ज्ञानम्, तामसोत्पादनात् तस्य तथा भयम्। भगवदिच्छयैव तथा जातमिति तन्निराकरणार्थं स्वयं देहे त्यक्ते भगवतः कोपादेवं जातमिति लक्ष्यते, अन्यथा दैन्यमात्रे कृते ते न त्यजेयुः। मा मां जक्षत रक्षतेत्याह। मां मा जक्षत मा भक्षतेत्यर्थः, किन्तु रक्षत। तत्रोपपत्तिमाह—अहो मे यक्षरक्षांसीति। अहो इत्याश्चर्ये। न हि पुत्राः पितरं भक्षयन्ति, यतो मे यक्षरक्षांसि प्रजाः, पुत्रा इत्यर्थः। ननु यक्षरक्षसां पुत्रत्वे किमस्माकं तत्राऽऽह—यूयं मे यक्षरक्षांसि बभूविथ। 'मा रक्षतैनं यक्षध्वम्' इति वचनात् यूयं यक्षरक्षांसि, अत एव मे प्रजा बभूविथ। प्रजेति जातिवचनम्। सर्वेऽपि मम प्रजामात्रम्, तेन मध्यमपुरुषैकवचनमुपपद्यते। एवं प्रार्थनया सह चतुर्भिः प्रथमसृष्टिर्निरूपिता॥ २१॥ ❀ ❀ सात्त्विकीं सृष्टिमाह—देवता इति। प्रभा यथा दीपस्य, यथा वा मणेः, सूर्यादेर्वा; तथा ब्रह्मणोऽपि; अतस्तया प्रभया देवता असृजत् प्रभया सृष्टा देवता विशिनष्टि—या याः प्रमुखतो दीव्यन्। सम्मुखतया या या देवताः क्रीडन्ति, उपास्या देवताः सूर्यादिरूपाः; ता एव प्रमुखत उपासकस्य क्रीडन्ति। एवं ताः सृष्ट्वा दोषाभावेऽपि भिन्नभावोत्पत्तेस्तामपि तनुं विससर्ज। ततो ब्रह्मणा विसृष्टां तां प्रभारूपाम्, त एव देवाः, पूर्वं स्तोत्वेनाऽप्युक्ताः, अहारिषुः हृतवन्तः, गृहीतवन्त इत्यर्थः। अहोरूपां दिनरूपाम्। अहारिषुरिति पाठेऽप्यर्थः स एव॥ २२॥ ❀ ❀ रजसा सृष्टिमाह—देव इति। पूर्वं तत्तद्भावापन्नस्तत्तत्सृष्टिं करोति, दैत्यसृष्टिं तु देवभावापन्नः करोतीत्याह—देव इति। अदेवान् देवप्रतिपक्षान्। जघनत इति गुह्यस्थानात् कटिस्थानाद्वा; कटिमारभ्य जानुपर्यन्ताद्वा; यत्रैव कामसंबन्धः। अतिलोलुपानिति उत्कटकामान्। कामस्तु स्त्रीसम्भोगात्मको मुख्यः। मैथुनं पुरुषेऽपि भवतीति ते असुराः, एनं प्रजापतिम्, मैथुनार्थमभिपेदिरे। यथा मातुः सङ्गो निषिद्धः, तथा पितृसङ्गोऽपि; तथापि लोलुपतया तथा कृतवन्तः। कामेनाऽस्थिरत्वं लोलुपता, कामो विवेकादीनां नाशकः॥ २३॥ ❀ ❀ ततः किं जातमत आह—तत इति। प्रथमतो हसन् जातः। तेषां लज्जाभावेन हास्यम्। तदनन्तरं स भगवान्, भगवता सहितो जातः, भगवद्धर्म एव तस्य स्थिरो जातः, न दैत्यधर्मः, अन्यथा तैः सह क्रीडां कुर्यात्। रसाभासेन प्रवृत्ता इति निरपत्रपाः। अन्यतो लज्जाऽपत्रपा। असुराश्च स्वभावतो रजःप्रधानाः, अतस्तैः, अन्वीयमानस्तरसा प्रथमतः क्रुद्धो जातः, क्रोधेन कामो निवर्तनीय इति। तदनन्तरं भीतः, अभीतानिवृत्तान् दृष्ट्वा ततः परापतन् पलायनं कृतवानित्यर्थः॥ २४॥ ❀ ❀ स गच्छन् वैकुण्ठं गतः, यत्र भगवानधिष्ठायाऽऽस्त इत्याह—स उपव्रज्येति। लौकिकोपायेन नैते शान्ता भविष्यन्ति, अलौकिकस्तूपायो भगवत एव भवतीति ज्ञापयितुमाह—वरदमिति। वरो ह्यलौकिकपदार्थप्राप्त्युपायः। ते वरा लोके इष्टप्राप्तिरूपा इति तद्व्यावृत्त्यर्थमाह—प्रपन्नार्तिहरमिति। दैत्या अपि गता इति तेषामपि कदाचिदार्तिं हरेदत आह—प्रपन्नेति। यतो हरिः। किञ्च, भक्तानामनुग्रहार्थमेव वैकुण्ठमधिष्ठाय स्थितः। तदाह—अनुग्रहायेति। भक्तानामनुग्रहार्थम्। भक्तानां यादृशं रूपमनुरूपम्, तादृशमात्मनो दर्शनं यस्य। आत्मा स्वरूपम्। लोके संघातः, प्रकृते तु सच्चिदानन्दरूपमेव, नाऽन्तरात्मान्तरमस्ति। पौराणिकास्त्वस्तीत्याहुः॥ २५॥ ❀ ❀ एवं भगवन्तं गत्वा, असुरैः पीडितत्वात् स्तोत्रनमस्कारादिकमकृत्वैव विज्ञापनामेवाऽऽह—पाहीति। तव प्रेरणेनाऽहं प्रजामसृजम्। तत्र दैत्यरूपा इमाः प्रजाः, मामेव यभितुमुपाक्रामन्ति अतः पाहीति संबन्धः। पालनसामर्थ्यम्, मम प्रेर्यत्वम्, तव प्रेरकत्वं च न सन्दिग्धम्; यतस्त्वं परमात्मा। परमश्चासावात्मा चेति नियामकभूत आत्मा। अत एव त्वयाऽहं प्रेरितः। एते एवंविधा उत्पत्स्यन्तीति भवानेव जानाति, नाऽहम्। अतो दोषसमाधानमपि त्वयैव कर्तव्यमिति दोषविज्ञापना। निकटे चाऽतिक्रमणं जायत इति शीघ्रसमाधानम्। तत्र सामर्थ्यज्ञापकम्—प्रभो इति॥ २६॥ ❀ ❀ ननु त्वयोपार्जिताः प्रजाः; त्वं पिता ते च पुत्राः; अतोऽन्यतरहितं कर्तुमशक्यम्, उभयोस्तु हितं विरोधे कथं भविष्यतीत्याशङ्क्य, दैत्येषु प्रसादाभावादन्यतरहितमेव प्रार्थयितुमाह—त्वमेक इति। अनासन्नपदामिति विपरीते वचनादासन्नपदां त्वमेव, एकोऽसहायः, तेषामदृष्टादिकमप्यनपेक्ष्य, किलेति प्रसिद्धे, क्लिष्टानां लोकानां क्लेशं नाशयसि। कालादिकृतश्च क्लेशः। तर्ह्यन्येष्वपेक्षा स्यात्, तद्व्यावृत्त्यर्थमाह—त्वमेकः क्लेशद इति। अनासन्नपदामिति वाक्यात् 'सुखं दुःखं भवो भावः' इति शास्त्रानुसारेण नाऽत्र क्लेशदानम्, किन्तु भक्तिप्रवर्तकरूपेण। यथा कालादयोऽधिकारिणो दुःखदाः, तथा भगवानपि स्वतन्त्रतया दुःखद इति त्वमेकः क्लेशद इत्युक्तम्। अनासन्नपदां त्वमेक एव क्लेशदः। ननु कथमेवं शास्त्रार्थो वैषम्यापादकः, तत्राऽऽह—तवेति। तव भूत्या ये अनासन्नपदः, तेषामित्यर्थः। अनेन त्वदीयानां नाऽन्यः सुखःदुःखदाता, किन्तु त्वमेवेत्युक्तम्, कालस्य साधारणत्वाद्दुःखदानेऽपि त्वं निवारक इति। ततोऽस्मद्दुःखं दूरीकर्तव्यम्, एते च निराकार्या इति॥ २७॥ ❀ ❀ तद्भगवतो नाऽत्यन्तमभीष्टमित्युभयसमाधानमाह—सोऽवधार्येति। दोषस्य निदाना-

---

१. यूयमेव ख० ग०।

परिज्ञानेन तन्निवर्तकत्वे भगवतो मर्यादानाशकत्वं स्यादिति तदर्थमाह—विविक्ताध्यात्मदर्शन इति। विविक्तः सम्यक्तया इतरवैलक्षण्यपूर्वकं विवेचितः अध्यात्मा ब्रह्मसङ्घातस्थितसकलपदार्थः तत्र दर्शनं प्रत्यक्षतया ज्ञानं यस्येति। एतादृशो भगवान् ब्रह्माणमाह—विमुञ्चाऽऽत्मतनुमिति। यया तन्वा दैत्याः सृष्टाः, सा घोरा भवति, कारणा[1]तथात्वे तादृशकार्यानुत्पत्तेः। एवमुक्तो ब्रह्मा तां विमुमोच। विमोचनार्थं वा विविक्ताध्यात्मदर्शन इति ब्रह्मणो विशेषणम्। हेत्याश्चर्ये ॥ २८ ॥ ❀ ❀ भिन्नस्वभावेनोत्पादितत्वात् सा देवताऽपि दैत्यहितकारिणी, देवत्वाद् भ्रामिका च जातेत्याह—तामित्यनुवर्णयति त्रिभिः—देवता हि यादृश्या भावनया दृश्यते, तादृशी भवति। ते च कामातुरास्तां स्त्रियं रूपवतीं दृष्टवन्तः। यादृशाश्च प्रकारास्तेषां मनसि रोचन्ते, ते ते देवतात्वात् तस्यां दृष्टा अनुवर्ण्यन्ते। यावच्च दैत्यैर्न स्पृष्टा, तावद्बहिः स्थिता तथाऽऽत्मानं प्रदर्शितवती। यदा पुनः सा स्पृष्टा; तदा तेष्वेव संनिविष्टा सन्ध्याभिमानिनी देवतेति दृष्टाया वर्णनम्, स्तोत्रम्, निकटे गमनम्, कामलीलया च प्रश्नपूर्वकं वर्णनमित्यष्टभिस्तत्प्रशंसा निरूप्यते। ततो ग्रहणमेकेन, अर्द्धेन चाऽनुभवः। क्वणन्तौ चरणावेव अम्भोजतुल्यौ यस्याः। तस्या देहे अनावृतं द्वयमेव, पादौ मुखं च; अन्यद्वस्त्रादिकम्। अतस्तेषां हीनाङ्गे स्पृहेति प्रथमतश्चरणवर्णनम्। नेत्रयोः सुखजनकत्वादम्भोजत्वम्। ततो मुखवर्णनं स्वाभिलषितप्रकारेण। मदेन विह्वले लोचने यस्याः। काञ्चीकलापेन विलसत् यत् दुकूलम्, तेन छन्नं रोधः कटिभागो यस्याः। अनेन प्रकटाभरणं वस्त्रं च निरूपितम्। काञ्च्याः कलापत्वम्, कलां पातीति; श्लथद्वस्त्रधारकत्वमित्यर्थः। अंशानामप्युत्कृष्टत्वात् कलापतुल्यसमूहरूपा वा। रोधश्शब्दः कामकुण्डे स्नानार्थिनां तटत्वबोधकः। अन्योन्य[2]श्लेषणौ, उत्तुङ्गौ ऊद्र्ध्वमुन्नतौ, निरन्तरौ मध्ये छिद्ररहितौ, पयोधरौ स्तनौ यस्याः ॥ २९ ॥ ३० ॥

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

देव इत्यत्र। तन्निराकरणार्थमिति। तामसोत्पत्तिनिराकरणार्थम्। एवं जातमिति। भयमात्रं जातं। अन्यथेति। सर्वथा मारणेच्छायाम् ॥ २१ ॥ ❀ ❀ तामित्यत्र। कलाप (?) समूहतुल्यरूपा वेति। कलापशब्दो बर्हे समूहे च वर्तते इति तदुभयमुक्तम् ॥ २९ ॥

### श्रीगिरिधरकृता बालप्रबोधिनी

तदा च देवो ब्रह्मा संविग्नो भीतः सन् हे यक्षरक्षांसि यतो यूयं मे प्रजाः सुता बभूविथ जाताः स्थ अतो मां मा जक्षत किन्तु रक्षतेति तान् प्रत्याहेत्यन्वयः। अहो इत्याश्चर्ये। नहि पुत्राः पितरं भक्षयंति किन्तु रक्षन्त्येव कथं यूयं भक्षयितुं प्रवृत्ता इत्याशयः। एवमुग्रस्वभावा यक्षराक्षसा जाताः। तत्र ये जक्षध्वमित्यूचुस्ते यक्षा बभूवुः। ये तु मा रक्षतेत्यूचुस्ते राक्षसा बभूवुरिति विवेकः ॥ २१ ॥ ❀ ❀ एवं तामसीं सृष्टिमुक्त्वा सात्त्विकीं तामाह—देवता इति। या या देवताः द्युतिमत्यः सात्त्विक्यस्तास्ताः सात्त्विक्या स्वप्रभया दीव्यन् द्योतमानः प्रमुखतः प्राधान्येनासृजत्। देवता इति स्त्रीत्वेन निर्दिष्टानामपि अर्थमात्रविवक्षया ते इति पुंस्त्वेन प्रतिनिर्देशः। एवं यक्षरक्षांसीत्यत्रापि ज्ञेयम्। ते देवा देवयन्तः क्रीडयन्तः तां ब्रह्मणा विसृष्टां अहः दिवसरूपां प्रभां अहारपुः अहार्षुर्जगृहुः ॥ २२ ॥ ❀ ❀ राजसीं सृष्टिमाह—देव इति। देवो ब्रह्मा जघनतः कटिमारभ्य जानुपर्यंतो जघनः तस्मात् अदेवान्—"स जघनादसुरानसृजत" इति श्रुतेः—देवप्रतिपक्षान् असुरान् सृजति स्म असृजत्। कामप्रदेशेन सृष्टत्वात्तेऽपि कामिनो जाता इत्याह—अतिलोलुपान् अतिशयेन स्त्रीलम्पटान्। अतस्ते लोलुपतया एनं ब्रह्माणमेव मैथुनाय अभिपेदिरे प्राप्ताः ॥ २३ ॥ ❀ ❀ ततश्च स भगवान् ब्रह्मा तेषां कामचेष्टां दृष्ट्वा हसन् जातः, ततश्च निरपत्रपैर्निर्लज्जैस्तैरसुरैः अन्वीयमानः हठादनुगम्यमानः तन्निवृत्त्यर्थं क्रुद्धो जातः, ततोऽपि निवृत्तिमदृष्ट्वा भीतः संस्तरसा वेगेन परापतत् पलायत ॥ २४ ॥ ❀ ❀ पलायमानश्च स हरिमुपव्रज्य गत्वा प्रार्थितवानिति शेषेणान्वयः। ननु कस्मिन् स्थाने स हरिं प्राप्त इत्यपेक्षायां तत्रैव ध्यानेनाविर्भूत इत्याशयेनाह—अनुग्रहायेति। भक्तानामनुग्रहार्थं तदिच्छानुरूपमेव आत्मानं दर्शयतीति तथा तम्। ननूपायान्तरं विहाय हरिमेव कथं चिन्तितवांस्तत्राह—प्रपन्नानां शरणमागतानां आर्तिं हरतीति तथा तम्। न केवलं पीडामेव निवर्त्तयति किन्त्वभीष्टमपि प्रापयतीत्याह—वरदमिति ॥ २५ ॥ ❀ ❀ प्रार्थनामेव दर्शयति—पाहीति द्वाभ्याम्। अन्तर्यामित्वात्त्वमेव कर्तुमकर्तुमन्यथाकर्तुं च समर्थ इति सूचयन् सम्बोधयति—परमात्मन्निति। त्वां स्वामिनं विहाय सेवकोऽहं कं वाऽन्यं विज्ञापयामीत्याशयेन च पुनः सम्बोधयति—प्रभो इति। ते तव प्रेषणेन प्रेरणयाऽहं प्रजा असृजं, ता इमाः पापाः पापिष्ठाः प्रजा मामेव यभितुं मैथुनेन धर्षयितुं उपाक्रामन्ति अनुगच्छन्ति अतस्ताभ्यो मां पाहीति सम्बन्धः ॥ २६ ॥ ❀ ❀ सूचितमेव सामर्थ्यं स्पष्टयति—त्वमिति। क्लिष्टानां लोकानां शरणागतप्राणिनां क्लेशनाशनस्त्वमेक एव, तव अनासन्नौ अनाश्रितौ पादौ यैस्तेषां त्वद्विमुखानां क्लेशदोऽपि त्वमेक एव, नात्र सन्देहः। 'सुखं दुःखं भवो भावः' इत्यादिशास्त्रसिद्धत्वादिति सूचयन्नाह—किलेति ॥ २७ ॥ ❀ ❀ स भगवान् अस्य ब्रह्मणः कार्पण्यं दैन्यमवधार्य निश्चित्य घोरां कामकश्मलां आत्मनः स्वस्य तनुं विमुञ्चेत्युक्तवानिति शेषः। न च भगवतो विज्ञापनापेक्षा सर्वान्तस्साक्षित्वात् अतो ब्रह्मा विज्ञापनात्पूर्वमेव तज्ज्ञातवानित्याशयेन तं विशि-

---

१. कारणान्यथात्वे. ख.। २. अन्योन्यश्लेषेण. क. ख. घ.।

नष्टि—विविक्तेति ! विविक्तमसंदिग्धं अध्यात्मदर्शनं परचित्तज्ञानं यस्य सः । इत्येवमुक्तो ब्रह्मा तां तनुं विमुमोच । भगवल्लीलाया आश्चर्यं सूचयति—हेति ॥ २८ ॥ ❀ ❀ "साऽहोरात्रयोः सन्धिरभवत्" इति श्रुतेः, सा तेन विसृष्टा तनूः सायन्तनी प्रमदाकृतिः सन्ध्याभिमानिनी देवता जाता, तां दृष्ट्वा, तेऽसुरा मोहं प्राप्ता इत्याह—तामित्यादिभिर्नवभिः । तां स्त्रियमुपलभ्य दृष्ट्वा सर्वे असुरा मुमुहुरिति तृतीयेनान्वयः । तामेव वर्णयति त्रिभिः—नूपुराभ्यां कणती चरणाम्भोजे यस्यास्ताम् । मदेन विह्वले लोचने यस्यास्ताम् । काञ्चीकलापेन विलसत् यद्दुकूलं तेनाच्छन्नं रोधः कटितटं यस्यास्ताम् ॥ २९ ॥ ❀ ❀ अन्योन्यं श्लेषेण उपमर्देन हेतुना उत्तुङ्गौ निरन्तरौ अन्तरालरहितौ पयोधरौ यस्यास्ताम् । सुष्ठु नासा यस्यास्ताम् । सुद्विजां सुदतीम् । स्निग्धः स्नेहपूर्वको हासो लीलाऽवलोकनं कटाक्षनिरीक्षणं च यस्यास्ताम् ॥ ३० ॥

## हिन्दी अनुवाद

ब्रह्माजीने घबराकर उनसे कहा, 'अरे यक्ष-राक्षसो ! तुम मेरी सन्तान हो; इसलिये मुझे भक्षण मत करो, मेरी रक्षा करो ।' ( उनमेंसे जिन्होंने कहा 'खा जाओ', वे यक्ष हुए और जिन्होंने कहा 'रक्षा मत करो', वे राक्षस कहलाये ) ॥ २१ ॥ ❀ ❀ फिर ब्रह्माजीने सात्त्विकी प्रभासे देदीप्यमान होकर मुख्य-मुख्य देवताओंकी रचना की । उन्होंने क्रीडा करते हुए, ब्रह्माजीके त्यागनेपर, उनका वह दिनरूप प्रकाशमय शरीर ग्रहण कर लिया ॥ २२ ॥ ❀ ❀ इसके पश्चात् ब्रह्माजीने अपने जघनदेशसे कामासक्त असुरोंको उत्पन्न किया । वे अत्यन्त कामलोलुप होनेके कारण उत्पन्न होते ही मैथुनके लिये ब्रह्माजीकी ओर चले ॥ २३ ॥ ❀ ❀ यह देखकर पहले तो वे हँसे; किन्तु फिर उन निर्लज्ज असुरोंको अपने पीछे लगा देख भय-भीत और क्रोधित होकर बड़े जोरसे भागे ॥ २४ ॥ ❀ ❀ तब उन्होंने भक्तोंपर कृपा करनेके लिये उनकी भावनाके अनुसार दर्शन देनेवाले, शरणागतवत्सल वरदायक श्रीहरिके पास जाकर कहा—॥ २५ ॥ ❀ ❀ 'परमात्मन् ! मेरी रक्षा कीजिये; मैंने तो आपकी ही आज्ञासे प्रजा उत्पन्न की थी, किन्तु यह तो पापमें प्रवृत्त होकर मुझको ही तंग करने चली है ॥ २६ ॥ नाथ ! एकमात्र आप ही दुःखी जीवोंका दुःख दूर करनेवाले हैं और जो आपकी चरण-शरणमें नहीं आते, उन्हें दुःख देनेवाले भी एकमात्र आप ही हैं ॥ २७ ॥ ❀ ❀ प्रभु तो प्रत्यक्षवत् सबके हृदयकी जाननेवाले हैं । उन्होंने ब्रह्माजीकी आतुरता देखकर कहा, 'तुम अपने इस कामकलुषित शरीरको त्याग दो ।' भगवान्के यों कहते ही उन्होंने वह शरीर भी छोड़ दिया ॥ २८ ॥ ❀ ❀ ( ब्रह्माजीका छोड़ा हुआ वह शरीर एक सुन्दरी स्त्री—सन्ध्यादेवी—के रूपमें परिणत हो गया । ) उसके चरणकमलोंके पायजेब झङ्कृत हो रहे थे । उसकी आँखें मतवाली हो रही थीं और कमर करधनीकी लड़ोंसे सुशोभित सजीली साड़ीसे ढकी हुई थी ॥ २९ ॥ ❀ ❀ उसके उभरे हुए स्तन इस प्रकार एक दूसरेसे सटे हुए थे कि उनके बीचमें कोई अन्तर ही नहीं रह गया था । उसकी नासिका और दन्तावली बड़ी ही सुघड़ थी तथा वह मधुर-मधुर मुसकराती हुई असुरोंकी ओर हाव-भावपूर्ण दृष्टिसे देख रही थी ॥ ३० ॥

गूहन्तीं व्रीडयाऽऽत्मानं नीलालकवरूथिनीम् । उपलभ्यासुरा धर्म सर्वे सम्मुमुहुः स्त्रियम् ॥ ३१ ॥
अहो रूपमहो धैर्यमहो अस्या नवं वयः । मध्ये कामयमानानामकामेव विसर्पति ॥ ३२ ॥
वितर्कयन्तो बहुधा तां सन्ध्यां प्रमदाकृतिम् । अभिसम्भाव्य विश्रम्भात्पर्यपृच्छन् कुमेधसः ॥ ३३ ॥
कासि कस्यासि रम्भोरु को वार्थस्तेऽत्र भामिनि । रूपद्रविणपण्येन दुर्भगान्नो विबाधसे ॥ ३४ ॥
या वा काचित्त्वमबले दिष्ट्या सन्दर्शनं तव । उत्सुनोपीक्षमाणानां कन्दुकक्रीडया मनः ॥ ३५ ॥
नैकत्र ते जयति शालिनि पादपद्मं घ्नन्त्या मुहुः करतलेन पतत्पतङ्गम् ।
मध्यं विषीदति बृहत्स्तनभारभीतं[2] शान्तेव दृष्टिरमला[3] सुशिखासमूहः ॥ ३६ ॥
इति सायन्तनीं सन्ध्यामसुराः प्रमदायतीम् । प्रलोभयन्तीं जगृहुर्मत्वा मूढधियः स्त्रियम् ॥ ३७ ॥
प्रहस्य भावगम्भीरं जिघ्रन्त्यात्मानमात्मना । कान्त्या ससर्ज भगवान् गन्धर्वाप्सरसां गणान् ॥ ३८ ॥
विससर्ज तनुं तां वै ज्योत्स्नां कान्तिमतीं प्रियाम् । त एव चाददुः प्रीत्या विश्वावसुपुरोगमाः ॥ ३९ ॥
सृष्ट्वा भूतपिशाचांश्च भगवानात्म[4]तन्द्रिणा । दिग्वाससो मुक्तकेशान् वीक्ष्य चामीलयद् दृशौ ॥ ४० ॥

---

१. प्रा० पा०—का स्यास्त्वम० । २. प्रा० पा०—भीत्या । ३. प्रा० पा०—रचला । ४. प्रा० पा०—तन्त्रिणः ।

### श्रीधरस्वामिविरचिता भावार्थदीपिका

गूहंतीं वस्त्रांचलेनावृण्वानाम्। नीलानामलकानां वरूथः स्तोमो विद्यते यस्याः हे धर्म विदुर तां स्त्रियमुपलभ्य मत्वा ॥ ३१ ॥ ❀ ❀ संमूढानां विभावनाक्रममाह। अहो इति ॥ ३२ ॥ ❀ ❀ अभिसंभाव्य सत्कृत्य। विश्रंभात्प्रणयात्। कुबुद्धयस्ते तां पप्रच्छुः ॥ ३३ ॥ ❀ ❀ काऽसीति त्रिभिः। काऽसि जात्या कस्य वा कन्या। हे भामिनि कोपने रूपमेव द्रविणमनर्घ्यं वस्तु तदेव पण्यं क्रयार्हं तेन तदसमर्पणेन नो विबाधसे ॥ ३४ ॥ ❀ ❀ किं जातिकुलादिप्रश्नेन या वा काचिद्भवदिष्टयेदं तावद्भद्रं जातं यत्तव दर्शनं किं तु केवलं नो मन उत्सुनोषि विमथ्नासि ॥ ३५ ॥ ❀ ❀ क्षुभितचित्तानां वाक्यं नैकत्रेति। हे शालिनि श्लाध्ये एकत्र न जयति न स्थिरीभवति यद्वा नैकत्रानेकगतिविलासेषु जयति सर्वोत्कर्षेण वर्तते। पतत्पतंगमुच्चलंतं कंदुकम्। बृहतोः स्तनयोर्भाराद्भीतं तव कृशं मध्यं विषीदति श्राम्यति शांता मंथरेव प्रसरति सुशिखासमूहः शोभनः केशकलापस्ते पाठांतरे सुशिखाः शोभनान्केशानवकीर्यमाणान्समूहं बधानेति। अत्र चास्तं गच्छन्सूर्य एव पतत्पतंगः मेघविच्छेदो मध्यविषादः तारकारूपा दृष्टिः तम एव केशा इत्याद्यूह्यम् ॥ ३६ ॥ ❀ ❀ प्रमदेवाचरंतीं स्त्रियं मत्वा जगृहुः ॥ ३७ ॥ ❀ ❀ प्रहस्यात्मानमात्मना जिघ्रंत्या कांत्या सौंदर्येण प्रहसनमात्मावघ्राणं च सौंदर्यानुभावचातुर्यविकारः ॥ ३८ ॥ ❀ ❀ ज्योत्स्नां चंद्रिकारूपाम्। त एव गंधर्वादिगणाः विश्वावसुः पुरोगमो मुख्यो येषु ॥ ३९ ॥ ❀ ❀ आत्मनस्तंद्रिणा आलस्येन तांश्च मुक्तकेशान्वीक्ष्य नेत्रे निमीलितवान् ॥ ४० ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

विभावना विशिष्टभावना काममोहप्रलापः। इवेन वस्तुतः सकामेत्युक्तम् ॥ ३२ ॥ ❀ ❀ वितर्कयंतः किमियमस्मास्वेवानुरागिणी अन्यत्र वा देवी मानुषी वा वृषस्यंती ब्रह्मचारिणी वेत्येवं विमृशंतः ॥ ३३ ॥ ❀ ❀ यद्वा। दुर्भगान् त्वद्दास्यानर्हानपि विबाधसे बद्ध्वा स्वसंग एव जिघृक्षसि। यद्वा। विबाधसे न क्रीणासि धिगस्मान्दुर्भगानिति भावः ॥ ३४ ॥ ❀ ❀ तद्दर्शनमेव परं मन्यमाना आहुः—किं जातीत्यादि। अबल इति। विपरीतलक्षणया प्रबल इत्यर्थः ॥ ३५ ॥ ❀ ❀ जयतेः स्थिरार्थाप्रसिद्धेराह—यद्वेति। पाठांतरे 'सुशिखाः समूह' इत्येवं पाठे उक्तार्थं गमयितुमाह। अत्र च संध्यापक्षे ॥ ३६ ॥ ❀ ❀ संध्या हि कामिनां स्त्रीस्फूर्त्तिं करोति ततश्च तेषां तस्यां स्फुरंती स्त्री तदभेदेन तैरवगता मुनीन्द्रेणापि वर्णितेति ज्ञेयमित्याह—इतीति ॥ ३७ ॥ ❀ ❀ यदा ब्रह्मणः सौंदर्यं स्मृतिपथमागतं तदा ततो गंधर्वाद्या बभूवुस्तच्च सौंदर्यं ज्योत्स्नीभूतं त एव जगृहुरित्याह-प्रहस्येति। सौंदर्यविषयको योऽनुभावः सूचनं तद्विषयकं यच्चातुर्यं तत्सूचको विकारः सौंदर्यानुभावचातुर्यविकारः सौंदर्यास्वादचिह्नानीत्यर्थः। भावगंभीरं व्यंजिताभियोगं यथा स्यात्तथा प्रहस्य। कांत्या कांतिमत्या कांतिकांतिमतोरभेदोपचारात् ॥ ३८ ॥ ३९ ॥ ❀ ❀ कदाचिद्ब्रह्मण आलस्यमभूत्ततो भूतप्रेताद्या बभूवुः, तच्चालस्यं जृंभानिद्रारूपतां प्राप्तं त एव जगृहुरित्याह-सृष्ट्वेति। दिग्वाससो नग्नान् ॥ ४० ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या।

मध्येऽन्तः इवशब्देन वाम्यस्वभावस्सूचितः ॥ ३२ ॥ ❀ ❀ वितर्कयन्तो विभावयन्तः ॥ ३३ ॥ ❀ ❀ अत्रास्मत्सन्निधौ अर्थः प्रयोजनम्। दुर्भगान् एतन्मूल्यद्रव्यहेतुभाग्यशून्यान् तदसमर्पणेन रूपदर्शनादानेन हेतुनेति शूरे कातरशब्दवद्विरोधिनी लक्षणा ॥ ३४ ॥ ❀ ❀ कुलादीत्यादिनार्थपरिग्रहः। केवलमिति सङ्गं न ददासीत्यर्थः ॥ ३५ ॥ ❀ ❀ जयतेः स्थिरार्थेऽप्रसिद्धत्वाद्यद्वेति मन्थरेव घूर्णायमानेव पाठान्तरेऽविसर्गपाठे समूहेति हिलोपे रूपमत्र च सन्ध्यापक्षे विच्छेदोऽन्योऽन्यविभागः। इत्यादीत्यादिना तन्नैविड्यमेव तद्बन्धनम् ॥ ३६ ॥ ❀ ❀ स्त्रियं मत्वेति कामोद्रेकवेलायां तस्यां स्त्रियाः स्फूर्त्तिर्जाता तया सा तैस्तदभिन्नत्वेनानुभूतेति मुनिनापि तथा वर्णितमिति ज्ञेयम् ॥ ३७ ॥ ❀ ❀ भावगम्भीरं व्यञ्जितस्वाभियोगं यथा स्यात्तथा प्रहस्य यद्वा भावोऽत्र सौन्दर्य्यजन्यो गर्वस्तेन गम्भीरं तेष्वदत्तदृष्टित्वादिकं यथा स्यात्तथा प्रहस्य आत्मना स्वयमेव आत्मानं स्वं जिघ्रन्त्या स्वस्मिन्नेव प्रेमातिशयात् सौगन्ध्यातिशयानुभवाच्चावघ्रातं कुर्वन्त्या कान्त्या सौन्दर्य्येण। ननु सौन्दर्य्यस्याङ्गनिष्ठरम्यतारूपत्वात्प्रहसनाऽवघ्राणकर्तृत्वं न सङ्गच्छत इत्याशङ्क्य व्याचष्टे। प्रहसनमिति। 'यत्राकृतिस्तत्र गुणा वसन्ति' इति न्यायात् सौन्दर्य्यस्यानुभावः कार्य्यं चातुर्य्यं तस्य विकारः कार्य्यं प्रहसनमवघ्राणञ्चातः स्वकर्त्तृकेति तत्रारोपिते असिश्छिनत्तीतिवत्। सौन्दर्य्यानुभवेति पाठे सौन्दर्य्यास्वादनचातुर्य्यचिह्ने इति व्याख्येयम् ॥ ३८ ॥ ❀ ❀ तां प्रहसनावघ्राणद्योत्यां स्वसौन्दर्य्यानुभावावेशरूपां तत्याज। ननु साक्षात्तन्मनोभावत्यागस्य स्वामिभिः पूर्वं व्याख्यातत्वात् भावत्यागे चन्द्रिकारूपां भाव एव चन्द्रिकामुत्पादितवानित्यर्थः। क्रान्तिमतीं सौन्दर्य्यवतीं त एवानन्तरपद्ये तत उत्पन्नत्वेन निर्दिष्टा एव जगृहुरिति सौन्दर्य्यादिविशिष्टा बभूवुरित्यर्थः ॥ ३९ ॥ ❀ ❀ यद्यपि तन्द्राकार्य्यत्वेनास्ति यस्य तत्तन्द्रि आलस्यमिति व्युत्पत्त्या तन्द्रिशब्द आलस्यवाचकस्तथापि तन्द्राजृम्भिका निद्रोन्मादहेतुत्वेत्यग्रिमव्याख्यानुसारादालस्यस्यापि तत्कार्य्यतन्द्रायां लक्षणया तन्द्रयेत्यर्थः। उपलक्षणं चैतज्जृम्भानिद्रोन्मादानां तेषां क्रमेण तन्द्राकार्य्यत्वात् ॥ ४० ॥

## श्रीमद्वीरराघवव्याख्या

व्रीडया लज्जया आत्मानं देहमुपगूहन्तीं वस्त्राञ्चलेनावृण्वतीं नीलानामलकानां चूर्णकुन्तलानां वरूथः समूहो यस्यास्तां स्त्रियमुपलभ्य मत्वा सर्वेऽसुरा हे धर्म ! विदुर ! संमुमुहुः ॥ ३१ ॥ ❀ ❀ मोमुह्यमानानामसुराणां प्रलपनमाह । अहो इति पञ्चभिः । अहो इत्याश्चर्ये रूपमाकारः स्थैर्यं लावण्यं वयः यौवनं कामयमानानामस्माकं मध्येऽकामेवाकामयमानेव विसर्पति गच्छति ॥ ३२ ॥ ❀ ❀ बहुधा वितर्कयन्तः रूपगुणैरीदृशमीदृशमस्या रूपादिकमित्यूहयन्तः प्रमदाकृतिं स्त्रीरूपवत्त्वेन कल्पितां तां संध्यामभिसम्भाव्य सत्कृत्य विस्रम्भात्प्रणयात्कुमेधसः कुबुद्धयोऽसुराः पर्यपृच्छन् ॥ ३३ ॥ ❀ ❀ पृच्छामेवाह त्रिभिः । कासि किं देवता अथवा मानुषी उतान्या वा कस्य सम्बन्धिन्यसि हे रम्भोरु । रंभा कदली तद्वदूरू यस्याः हे भामिनि ! कोपनेऽत्रास्मिन्मध्ये ते को वार्थः किं प्रयोजनं रूपमेव द्रविणमनर्घ्यं वस्तु तदेव पण्यं क्रयार्हं तेन तत्समर्पणेन दुर्भगान् भाग्यहीनान्नोऽस्मान् बाधसे क्लेशयसि ॥ ३४ ॥ ❀ ❀ किं जातिकुलादिप्रश्नेन या वा काचिद्भवसि हे अबले ! दिष्ट्याऽस्मद्भाग्यवशेन तव संदर्शनं जातमीक्षमाणानां पश्यतां नोऽस्माकं मनः कन्दुकक्रीडया उत्सुनोपि हरसि मथ्नासीति यावत् ॥ ३५ ॥ ❀ ❀ मथितमनसां वाक्यं हे शालिनि ! सुन्दरि पतत्पतङ्गमुत्प्लुत्य पतन्तं कन्दुकं मुहुः करतलेन घ्नन्त्यास्तव पादपद्ममेकत्र न जयति न तिष्ठति । बृहतोः स्तनयोर्भाराद्गीतं तव कृशं मध्यं विषीदति क्लिश्यति श्राम्यति वा । दृष्टिः श्रान्ता मन्दं प्रसरति । सुशिखासमूहः शोभनः केशकलापः सुशिखा बधानेति पाठे शोभनकेशान् विकीर्यमाणान् बधानेत्यर्थः । अत्र चास्तं गच्छन्सूर्य एव पतङ्गः मेघविच्छेदो मध्यविषादः तारकारूपा दृष्टिः तम एव केशा इत्याद्यूह्यम् ॥ ३६ ॥ ❀ ❀ इत्युक्तरीत्या प्रमदायतीं स्त्रीवाचरन्तीं सायन्तनीं संध्यां प्रलोभयन्तीं मोहयन्तीं स्त्रियं मत्वा मूढधियो मोहितबुद्धयोऽसुराः जगृहुरुपाददुः । ननु कथं छाया प्रभालौलुप्यानां ब्रह्मणोपात्तत्यक्तानां रात्र्याहःसंध्याकालरूपवत्त्वं कालो हि छायादीनामपि च्छेदकः तेभ्यो विलक्षण एव सत्यं छायादयो हि रात्र्यहःसंध्याकालैः परिच्छिद्यन्ते । अतः परिच्छेद्यपरिच्छेदकयोरभेदविवक्षया रात्रिं प्रभामहः लौलुप्यं संध्यामित्यभेदनिर्देशः । परमार्थवस्तु यं यं धर्ममुपादाय यान्यानसृजत् ते ते तत्तद्धर्मप्रधाना जाताः । रात्र्यादिकालविशेषाणां निद्रादितमःकार्यादिहेतुत्वात्स्वगुणानुसारेण तत्तत्कालविशेषमेव स्वव्यवहारायोपाददुरित्यभिप्रायः ॥ ३७ ॥ ❀ ❀ भगवान्ब्रह्मा भावेनाभिप्रायविशेषेण गम्भीरं यथा तथा प्रहस्यात्मानं देहमात्मना स्वयं जिघ्रन्कान्त्या सौन्दर्येण गन्धर्वाणामप्सरसां च गणान्ससर्ज प्रहसनं स्वात्मावघ्राणनं च सौन्दर्यानुभावचातुर्यविकारः ॥ ३८ ॥ ❀ ❀ तां कान्तिमतीं कान्तिबहुलां प्रियां स्वाभिमतां ज्योत्स्नां प्राक्संध्यारूपां तनुं विससर्ज्ज त एव गन्धर्वाप्सरसां गणाः विश्वावसुः पुरोगमो मुख्यो येषां ते प्रीत्या तां तनुमुपाददुः ॥ ३९ ॥ ❀ ❀ भगवान्ब्रह्मा आत्मतन्द्रिणा आत्मनस्तन्द्रिणा आलस्येन भूतानि पिशाचांश्च सृष्ट्वा एतान्मुक्तकेशान्विकीर्णकेशान् दिग्वाससः दिगम्बरान् भूतानि पिशाचांश्चान्वीक्ष्य दृशौ नेत्रे अमीलयन्निमीलितवान् ॥ ४० ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

नीलालकानां वरूथः समूहोऽस्या अस्तीति नीलालकवरूथिनी तामुपलभ्य प्राप्य स्त्रियं जातां तां तनुमुद्दिश्य मुमुहुरिति वा ॥ ३१ ॥ ❀ ❀ अत्र मोहो नाम न मूर्च्छा किन्तु वैक्लव्यहेतुको वितर्क इति भावेनाह ! अहो रूपमिति ॥ ३२ ॥ ❀ ❀ ततः किं चक्रुरिति तत्राह । वितर्कयन्त इति ॥ ३३ ॥ ❀ ❀ भामिनि कान्तिमति ! रूपमेव द्रविणं द्रव्यं तदेव पण्यं क्रययोग्यं तेन दुर्भगान् त्वत्सङ्गोपभोगभाग्यरहितान् ॥ ३४ ॥ ❀ ❀ त्वत्संदर्शनमेवास्माकं सुरतक्रियेति भावेनाहुः । या वेति । एवमपि तवेयं कन्दुकक्रीडास्मन्मनः खेदयतीत्याहुः । उद्धुनोषीति ॥ ३५ ॥ ❀ ❀ इतरकन्दुकक्रीडाया इयं वैशेषिकीत्याह । नैकत्रेति । हे शालिनि भार्ये । पतत्पतङ्गमुन्नमदवनमत् कन्दुकं जयति ते पादपद्मं प्राप्नोति विषीदति भङ्गं प्राप्नोति जटावरूथो वेणीभारोऽमलो मुक्तश्च "मल वन्धन" इति धातोः ॥ ३६ ॥ ❀ ❀ सर्वभावैः स्त्रियो बन्धहेतव इति भावेन असुराणां तद्ग्रहणमाह । इतीति । संध्यां व्यावर्तयति । सायंतनीमिति । प्रातःकालीनायाः पुण्यहेतुत्वात् प्रलोभयन्तीमात्मनीच्छां कुर्वन्तीम् ॥ ३७ ॥ देवासुरसर्गयोरनन्तरं गन्धर्वादिसर्गस्याभ्यर्हितत्वात्तमाह । प्रहस्येति । भावगम्भीरमिति । क्रियाविशेषणं भावः शृङ्गारचेष्टाकथं ज्ञातुं शक्यत इति तमभिनयति जिघ्रन्त्यात्मानमात्मनेति नाम्ना कान्त्या तन्वा ॥ ३८ ॥ ❀ ❀ ज्योत्स्नां चन्द्रिकावदाह्लादकरीं संज्ञान्तरं वा प्रियां मनोदृष्टिसुखकरीम् ॥ ३९ ॥ ❀ ❀ भूतादीनां देवयोनित्वाद्गन्धर्वादिसृष्ट्यनन्तरं भूतादिसृष्टिमाह । सृष्ट्वेति । आत्मनो देहिनस्तन्द्रीं मुखव्यादानादिलक्षणामुत्पादयतीत्यात्मतन्द्री तेन जृम्भणाख्येन देहेन ॥ ४० ॥

## श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

विबाधने हेतुः । दुर्भगान् एतन्मूल्यद्रव्यहीनान् ॥ ३४—३६ ॥ ❀ ❀ इतीति । सन्ध्या हि कामिनां स्त्रीस्फूर्तिं करोति । ततश्च तेषां स्फुरन्ती स्त्री तदभेदेन तैरवगता तदनुसारेण मुनीन्द्रेणापि वर्णितेति ज्ञेयम् ३७ ॥ ❀ ❀ भावः सौन्दर्यगर्वः तेन गम्भीरमन्यत्रादत्तदृष्टित्वादिकं यथा स्यात्तथा प्रहस्य स्वस्मिन्नेव प्रेमातिशयेन सौरूप्यातिशयानुभवेन च स्वयमात्मानं

जिघ्रन्त्या कान्त्या कान्तिमत्या तन्वा ॥ ३८ ॥ ३९ ॥ ❀ ❀ आत्मतन्द्रिणा आत्मनस्तन्द्रायुक्तेन देहेन उपलक्षणं चैतत् जृम्भा निद्रोन्मानवत्त्वस्य तस्य एव कार्य्यक्रमरूपत्वात्तेषाम् ॥ ४० ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

तेषां काममोहप्रलापमाह। अहो इति ॥ ३२ ॥ ❀ ❀ किमियमस्मास्वेवानुरागिणी अन्यत्र वा देवी मानुषी वृषस्यन्ती ब्रह्मचारिणी वेत्येवं वितर्कयन्तः अभिसम्भाव्य सत्कृत्य ॥ ३३ ॥ ❀ ❀ रूपमेव द्रविणमनर्घ्यं वस्तु तदेव पण्यं क्रयार्हं तेनास्मान् दुर्भगान् त्वद्दास्यानर्हानपि विबाधसे बध्वा स्वसङ्ग एव जिघृक्षसि। यद्वा विबाधसे न क्रीणासि धिगस्मान् दुर्भगानिति भावः ॥ ३४ ॥ ❀ ❀ उत्सुनोषि मथ्नासि। कन्दुकक्रीडयेति अस्तं गच्छन् चञ्चलः सूर्य्य एव अरुणकन्दुकत्वेन कल्पितः ॥ ३५ ॥ ❀ ❀ कन्दुकक्रीडां वर्णयन्ति। हे शालिनि ! श्लाघ्ये एकत्र न जयति न स्थिरीभवति पतत्पतन्गमधश्च-लत्कन्दुकम्। पक्षेऽस्तं गच्छन् सूर्य्यः। कृशत्वाद्विषीदति दृष्टिरमला निष्कामेव वस्तुतस्त्वन्तः सकामैवेत्यर्थः। श्रान्ता कन्दुक-क्रीडाश्रमं व्यञ्जयन्ती अत एव सुशिखाः शोभनान् केशान् अवकीर्य्यमाणान् समूह बधान। सुशिखासमूह इति पाठे स्वित्यव्ययम्। पृथक् पदम्। ततश्च शिखासमूहश्च सुन्दर इत्यर्थः ॥ ३६ ॥ ❀ ❀ प्रमदेवाचरन्तीं स्त्रियं मत्वा जगृहुः ॥ ३७ ॥ ❀ ❀ यदा ब्रह्मणः सौन्दर्य्यं स्मृत्यारूढं बभूव तदा तस्मात् गन्धर्वादयो बभूवुस्तच्च सौन्दर्य्यं ज्योत्स्नाभूत्ताञ्च त एव जगृहुरित्याह। प्रहस्येति। कान्त्या कीदृश्या भावगम्भीरं व्यञ्जितस्वाभियोगं यथा स्यात्तथा प्रहस्य आत्मनैवात्मानं जिघ्रन्त्येति कान्तिकान्ति-मतोरैक्येनोपचारात् प्रहसनावघ्राणादीनि स्वसौन्दर्य्यास्वादनचिह्नानि ॥ ३८ ॥ ३९ ॥ ❀ ❀ कदाचिद् ब्रह्मण आलस्यम-भूत्तस्माच्च भूतपिशाचाद्या बभूवुस्तच्चालस्यं जृम्भानिद्रादिरूपाभूत्ताञ्च त एव जगृहुरित्याह। स्त्रद्वेति। तन्द्रा यस्य कार्य्यत्वेनास्ति तत्तन्द्रि आलस्यं तेन ॥ ४० ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

नीलालकानां वरूथः स्तोमो विद्यते यस्यास्ताम्। हे धर्म ! विदुर ! ॥ ३१—३२ ॥ ❀ ❀ अभिसम्भाव्य सर्वतः सन्मानवतीं विधाय विस्रम्भात्प्रणयात् ॥ ३३ ॥ ❀ ❀ रूपमेव द्रविणं तेन पण्येन व्यवहारार्हेण प्रक्षेपणीयेनेत्यर्थः ॥ ३४ ॥ ❀ ❀ उत्सुनोषि विमथ्नासि ॥ ३५ ॥ ❀ ❀ हे शालिनि ! श्लाघ्ये ते पादपद्मं नैकत्र अनेकगतिविलासेषु जयति सर्वोत्कर्षेण वर्तते अमला विमला श्रान्तेव मन्थरेव दृष्टिश्च जयति सुशिखासमूहः शोभनः केशकलापश्च जयति पतत्पतङ्गमुच्चलन्तं कन्दुकं करतलेन घ्नन्त्या बृहतोः स्तनयोर्भाराद्धीतं मध्यं तु विषीदति क्लिश्यति। अत्र अस्तं गच्छन् सूर्यः कन्दुकम्। सन्ध्यायाः पूर्वभागस्य दिवसग्रस्तत्वादपरभागस्य रात्रिग्रस्तत्वात् तन्मध्यगतोऽल्पकालः विषीदन् मध्यमिव अदृश्यभास्करप्रभा अत्युष्णदोष-रहिता विमला श्रान्तेव दृष्टिः तदानींतनो मेघसमूहः केशकलाप इत्याद्यूह्यम् ॥ ३६—३७ ॥ ❀ ❀ भगवान् चतुराननः भावेन अभिप्रायविशेषेण गम्भीरं यथा तथा प्रहस्य आत्मानमात्मना जिघ्रन्त्या अवघ्राणेनात्मानुभावातिशयं द्योतयन्त्या कान्त्या कान्तिमत्या ज्योत्स्नया ॥ ३८ ॥ ❀ ❀ ते एव गन्धर्वादिगणाः ॥ ३९ ॥ ❀ ❀ आत्मतन्द्रिणा निजालस्येन ॥ ४० ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

एवं रूपं द्वाभ्यामुक्त्वा स्त्रीभावमनुवर्णयति—व्रीडयाऽऽत्मानं गोपयन्तीम्। अत्राऽऽत्मा स्त्रीभावमापन्नः; स यथैव चेष्टया गुप्तो भासते, व्रीडया तादृशीं चेष्टां करोतीत्यर्थः। परिदृश्यमानावयवान् वस्त्रेण गोपायतीति केचित्। यथा बाह्याः पदार्था बुद्धया परिकल्पिताः; तथा व्रीडाऽप्यत्र। नीलवर्णा ये अलकाः, तेषां समूहयुक्ता च। अनेन तस्याः स्वलक्षणानि निरूपितानि। केचिदेनामाध्यात्मिकीं वर्णयन्ति। चरणक्वणनं पक्ष्यादिशब्दाः; अर्धोदयास्तमययुक्तौ चन्द्रसूर्यौ लोचने; आरक्ता मेघाः काञ्ची; आकाशमेवाऽम्बरम्; तटा दिशः; कामुकीकामुकयोर्मनोरथावेव स्तनौ, चक्रवाकौ वा; उत्तमा नासिका शुकाः; दन्ताः कुन्दादयः, शोभना द्विजा यस्या इति पक्षिणो वा योगात्; स्निग्धो यो हासः, पुरुषेण सह संबन्धसूचकः; तत्र या लीला तया सहितमेवाऽ-वलोकनं यस्याः। तत्काले कामिनीनाम्, विकसितपुष्पस्थभ्रमरादीनां वा, भावाः। प्रतिक्षणं सन्ध्यातिरोभाव एव गूहनम्; लज्जा तदानीन्तनसत्कर्माणि; अन्धकार एव केशपाशः। एते धर्मा ज्ञापका एव, नत्वेतन्मात्रम्, अन्यथा वाक्यार्थो बाधितः स्यात्, सर्ववाक्यविरोधश्च। अतो ज्ञापकत्वेनैव एतेषां वर्णनमुचितम्। देवतायास्तथात्वाभावे लोके सन्ध्यायां तथा भावा न भवेयु-रिति। एवं तां वर्णयित्वा तद्दर्शनकार्यमाह—उपलभ्येति। धर्मेति विदुरसंबोधनं मोहाभावाय। हे धर्मराजेत्यर्थः। एकदेशसंबो-धनं साम्प्रतं राजत्वाभावात् विद्यमानधर्ममात्रबोधकम्। सर्वे असुराः संमुमुहुः। मोहे हेतुः स्त्रीत्वमेव, अतोऽन्ते निरू-पणम् ॥ ३१ ॥ ❀ ❀ दृष्टानां तद्भावेन मुग्धानां भावप्रतिपादकं वाक्यमाह—अहो रूपमिति। रूपमनूद्याश्चर्यत्वं विधीयते।

१. गोपायती ख. गोपयन्ती ङ.। २. चोऽधिकः क. ख.।

अहो धैर्यमित्यपि तथा । चेष्टया कामस्त्वस्या अपि महानिव लक्ष्यते, तथापि या न लोलुपा, अत आश्चर्यमस्या धैर्यमित्यर्थः । एतद् द्वयमपि भुक्तभोगायाः, जरठाया वा नाऽऽश्चर्यहेतुरित्याशङ्क्याऽऽह—अहो अस्या नवं वय इति । नवमनुपभुक्तम्, प्रत्यग्रविकसितं वा; वय उद्दिश्य आश्चर्यत्वं विधीयते । एवं दोपत्रयं तस्याः कामलक्षणसंनिपातजनकम्, सा कथमकामेव । अस्या अकामत्वज्ञापकं विशेपसर्पणमेव, स्तम्भोऽपेक्ष्यते मुख्यः । भावादीनां दृश्यमानत्वादकामेव । किञ्च, न केवलमस्या आन्तरा एव दोषाः, किन्तु वाह्या अपीत्याह—मध्ये कामयमानानामिति । वयं सर्व एव कामयमानाः, तेन कामस्याऽऽवश्यकत्वात्, वेष्टकत्वाच्च, मध्ये कथमकामा भवेदित्यर्थः ॥ ३२ ॥ ❀ ❀ परिचयाभावादिति चेत्, तर्हि 'संवादेन परिचितां करिष्यामः' इत्यभिप्रेत्य संवादार्थं यत्नं कृतवन्त इत्याह—वितर्कयन्त इति । प्रमदाकृतिं तां सन्ध्यां बहुधा वितर्कयन्तः पर्यपृच्छन्निति संबन्धः ! बहुधेति स्वरूपसंबन्धाद्यर्थम्, न तु स्त्रीत्वे तस्याः सम्भोग्यत्वे वा सन्देहः; किन्तु सन्देहरूपाण्यग्रे प्रक्ष्यन्ते । प्रश्नात्पूर्वं स्वत एव ज्ञानार्थं वितर्कः । प्रकर्षेण मदो यस्याः सकाशात् । स्त्रीरूपा च सा देवता । अभितः संभाव्य स्तुत्वा, कुशलादिकं च पृष्ट्वेत्यर्थः । विश्रम्भादिति विश्वासात्, इयमस्मान् भजिष्यतीति । परितो नामगोत्रादिभेदेन । कुमेधस इति देवतात्वाज्ञानात्, न हि देवता भोग्या भवति । दृश्यैव सा, न तु स्पृश्येत्यर्थः ॥ ३३ ॥ ❀ ❀ प्रश्नत्रयमाहुः—काऽसीति । जातिकुलप्रश्नः, कस्याऽसीति संबन्धिप्रश्नः, पितुर्भर्तुश्च । अत्राऽऽगमने च किं प्रयोजनमिति तृतीयः । परिचर्यार्थमेव ते प्रश्नाः, न तूत्तरज्ञाने किञ्चित्प्रयोजनमस्ति । भामिनीति स्तोत्रम्, हे भव्ये । आपाततो ज्ञायते महती, महतो महत् कार्यं तवेति । परमेकमेव तवाऽसामीचीन्यम्, यद्रूपद्रविणपण्येन दरिद्रानस्मान् बाधसे इति । रूपमेव द्रविणं सुवर्णादि, तदेव च पण्यम्, बहुद्रव्येण च प्राप्यम्, वयं च दुर्भगाः; तन्मूल्यद्रव्यरहिताः; अतो बाधसे । केचित्तामसा उपायमज्ञात्वा एवमुक्तवन्तः ॥ ३४ ॥ ❀ ❀ अन्ये त्वाहुः—या वा काश्चिदिति । त्वं या काचित् । वा इत्यनादरे । स्विदिति सम्भावनायाम् । संबन्धे संभावनायां वा[1]ऽनादरः । हे अबले इति संबोधनेन, बलरहितायाः शुश्रूषणं कर्तव्यमिति, पादसंवाहनादिकं करिष्याम इति ज्ञापितम् । वयं न दुर्भगाः, किन्तु सुभाग्या इति निश्चितम्, यतः संदर्शनं तव जातम् । एतद्दिष्ट्या । सापरा[2]धां वदन्ति—उत्सुनोषीति । तत् त्वं सर्वथा देवता; देवताभजनं देवतादर्शनं च नाऽल्पभाग्येनेत्यपि सूचयन्ति । त्वं नोऽस्माकं कन्दुकक्रीडया मन उत्सुनो[3]षि । यथा ग्रावभिः सोमोऽभिपूयते, तथा मन ऊर्ध्वमभिषुणोषि, यत ऊर्ध्वमेव नोत्सर्पति । कन्दुकक्रीडा तु देहचालनेन भवति, तत्रावयवानां संवरणविवरणे भवतः; अतो यद्दर्शनाकाङ्क्षि चित्तम्, तत् क्षणे-क्षणे संभृतं भवतीति मनसः खेदः ॥ ३५ ॥ ❀ ❀ अन्ये सात्त्विकाः, नैषोपालभ्या, किन्तु स्तुत्या; अतः स्तोत्रेण प्रसन्ना भविष्यतीत्यभिप्रेत्य स्तोत्रं कृतवन्तः—नैकत्रेति । कामशास्त्रे हि कामिन्येव देवता, 'ताः स्तुमः' इति वाक्यात् । अलौकिकरूपवर्णनमेव महत्त्वेन कथनं स्तोत्रमिति तदाह—हे शालिनि मनोहरे, विनययुक्ते वा, ते पादपद्मं नैकत्र जयति । प्रसिद्धं पद्मं तु जल एव शोभते, तव तु सर्वत्रेति विशेषः । पादपद्मपदं च भक्तिसूचकम् । एकत्र न जयति, किन्तु सर्वत्र । नैकत्र अनेकत्र वा । पादपद्मस्य चलने हेतुमाह—घ्नन्त्या इति । मुहुर्वारं वारम्, करतलेन पतत्पतङ्गं घ्नन्त्या । कन्दुकार्थं गच्छन्ती मध्ये समागतान् भ्रमरान् करतलेन घ्नन्ती । तेऽपि पतङ्गाः पतन्तो भवन्ति । जात्यपेक्षया त्वेकवचनम् । सात्त्विकत्वाद्वा सूर्यमेव तथा मन्यन्ते, अस्तं गच्छन् सूर्यः सन्ध्याकिरणैर्हन्यत इति । मध्यं विषीदतीति खेदनिराकरणार्थमस्माभिर्वा कलशौ स्तम्भनीयाविति भावः । कृशत्वाद्विषादः । उत्तमस्त्रियाश्च लक्षणं कृशमध्यत्वम्, अन्यथा तृतीयशास्त्रे बन्धाः केऽपि न संगच्छेरन् । विषादहेतुः—बृहत्स्तनभारेण । भीतमिति । न केवलं विषादमात्रम्, किन्तु भङ्गो भविष्यतीति भयमपि । तेन सुप्त्वैव स्थातव्यमिति भावः । किञ्च, दृष्टिरपि ते श्रान्तेव, रसेन पूर्णा आलस्ययुक्ता च जाता । श्रमो बहिःकार्येण शारीरः, आलस्यं मनसः सुष्ठु शिखासमूहो यस्याः । अत उत्सङ्गे शयनं कर्तव्यमिति भावः ॥ ३६ ॥ ❀ ❀ एवं स्तुत्वा तूष्णीं स्थितां ताम्, 'अप्रतिषिद्धमनुमतं भवति' इति ज्ञात्वा सर्वे तां गृहीतवन्त इत्याह इतीति । सायन्तनीं पश्चिमाम्, सन्ध्यां प्रमदामिवाचरन्तीमात्म[4]ना च प्रलोभयन्तीं काममुत्पादयन्तीम् । स्त्री चेत्प्रलोभयन्ती जाता, तदा सिद्धा जातेति ज्ञात्वा, जगृहुरालिङ्गितवन्तः, यत एते मूढधियः । ब्रह्मणः पुत्रा अपि तत्त्वं न जानन्तीति तथा वचनम् । ततः किं जातमित्याशङ्क्याऽऽह–ते सर्वे तामालिङ्ग्य, स्वस्मिंस्तस्यां प्रविष्टायां भूताविष्टा इव आत्मनैवाऽऽत्मानं जिघ्रन्ति स्म । प्रथमतस्तया आलिङ्गिता इव संतुष्टाः, क्षणात्तामदृष्ट्वा, अस्मान् वञ्चयितुं लीनेति, भावगम्भीरं यथा भवति तथा प्रहस्य, पश्चादात्मानमेव स्त्रियं ज्ञात्वा, नियामकं रूपादिकमदृष्ट्वा, कमलगन्धां तां मत्वा घ्राणेन ज्ञातुं जिघ्रन्ति ॥ ३८ ॥ ❀ ❀ एवमेकप्रकारेण प्रथमं त्रिविधां सृष्टिमुक्त्वा द्वितीयेन प्रकारेणाऽऽह—कान्त्या ससर्जेति । कान्तिर्लावण्यम् । एषा सात्त्विकी सृष्टिः । राजसीति केचित्, साध्याः पितरश्च सात्त्विका इति । तच्चिन्त्यम् । भगवानिति पुनर्मूलप्रवेशः, आरब्धगुणानां समाप्तत्वात् । गन्धर्वाप्सरसां गणानित्यवान्तरजातिभेदान् । विससर्जेति । तामपि तनुं विससर्ज, सा ज्योत्स्नाऽभवत्, यतः कान्तिमयी सा । कान्तिमतीमित्यपि पाठे तथा । सा हि ब्रह्मणः प्रिया, गन्धर्वाप्सरसां वा; ते हि ज्योत्स्नायामेव रमन्त इति । अत एव त एव गणास्तामाददुः । चकारात् भौतिकीं च ज्योत्स्नाम् । विश्वावसुर्मुख्यो वेदे, 'विश्वावसुः पर्यमुष्णात्' इति श्रुतेः, 'विश्वावसुः

---

१. च. ख. घ. । २. सापराधाः क. घ. ङ. । ३. इतीत्यधिकम्. क. घ. ङ. । ४. आत्मनश्च. ग. घ. ङ. ।

पूर्वंचित्तिर्गन्धर्वाप्सरसाम्' इति विभूतिवाक्याच्च ॥ ३९ ॥ ❀ ❀ सृष्ट्वेति। तन्द्री आलस्यनिद्रा, तया भूतानि पिशाचांश्चाऽसृजत्। न चैषा सृष्टिरेतावती, किन्त्वधिकाऽप्यस्तीति ज्ञापयितुं सृष्ट्वेति क्त्वाप्रत्ययः। दृशोर्मीलनं चाऽऽलस्यनिद्रायामवान्तरं करणम्। सृष्टाः पिशाचा दिग्वाससो मुक्तकेशाश्च। तानमङ्गलान् दृष्ट्वा, दृशावमीलयत्। निमीलनेन चोन्मादो गण उत्पन्न इति। तनुद्वयं च त्यक्तम् ॥ ४० ॥

## श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

गूहन्तीं व्रीडयेत्यत्र। श्रीधरमतमाहुः—परिदृश्यमानेत्यादि। पुनः श्रीधरमतमाहुः, अन्येषां वेदम्। केचिदित्यादि। तत्राऽस्वरसं बोधयितुमाहुः—एत इत्यादि। आधिदैविकस्वरूपस्य तादृशत्वज्ञापका एव, न तु गौण्या कथनमात्रम्। यद्येवं नाऽङ्गीक्रियते तदा स्त्रीरूपो वाक्यार्थः असम्भवन् बाधितः स्यात्, मोहधैर्यग्रहणाग्रिमवर्णनादिवाक्यानां च विरोधः स्यादित्यर्थः ॥ ३१ ॥ ❀ ❀ अहो इत्यत्र। विशेषसर्पणमिति। स्वाकारगोपनम् ॥३२॥ ❀ ❀ नैकत्रेत्यत्र। नशब्देन सह समासमभिप्रेत्याहुः अनेकत्र वेति। कान्तेत्यत्र। एकप्रकारेणेत्यादि। तामसतामसतामससात्त्विकतामसराजसप्रकारेणोक्त्वा, सात्त्विकसात्त्विकसात्त्विकतामससात्त्विकराजसप्रकारेणाऽऽहेत्यर्थः। सात्त्विकीति एतज्जनिकायास्तनोः प्रकाशकत्वात् प्रियत्वाच्च तत्कार्यभूता इयमपि सात्त्विकीत्यर्थः। राजसीत्यादि। इदं न श्रीधरमतम्। मतान्तरे दूषणमाहुः—चिन्त्यमिति। युक्त्यभावाच्चिन्त्यमित्यर्थः ॥ ३९ ॥ ❀ ❀ सृष्ट्वेत्यत्र। त्यक्तमिति। निमीलितं त्यक्तम् ॥ ४० ॥

## श्रीगिरिधरकृता बालप्रबोधिनी

व्रीडया लज्जयाऽऽत्मानं देहं गूहन्तीं वस्त्राञ्चलेनावृण्वानाम्। नीलानामलकानां वरूथः स्तोमो विद्यते यस्यास्ताम्। धर्मराजावतारत्वेन मोहासम्भवात् स्त्रीप्रसङ्गवर्णनेनापि न काचित् क्षतिरिति सूचयन् सम्बोधयति—धर्मेति ॥ ३१ ॥ ❀ ❀ तेषां मोहमेव दर्शयति--अस्याः स्त्रियाः अहो आश्चर्यं रूपं सौन्दर्यम्। अहो नवं नवीनं वयः। अहो धैर्यम्। धैर्यमेव विशदयन्ति--कामयमानानामस्माकं मध्ये इयमकामेव विसर्पति विचरतीति। बहिः कामचेष्टाभावेऽपि स्त्रीत्वादन्तः कामोऽस्तीत्याशयेन इवशब्दप्रयोगः ॥ ३२ ॥ ❀ ❀ अतो विश्रम्भात् अस्मान् भजिष्यतीति विश्वासात् तां प्रमदाकृतिं सन्ध्यां अभिसम्भाव्य कुशलप्रश्नादिना सत्कृत्य बहुधा वितर्कयन्तः पर्यपृच्छन्। ननु देवतारूपा सा कथं तेषामसुराणां भोगयोग्येत्याशङ्क्याह--कुमेधस इति। तेषां कामवशात्तथा भ्रममात्रमेवेत्याशयः ॥३३॥ ❀ ❀ वितर्कपूर्वकं प्रश्नमेव दर्शयति--कासीति त्रिभिः। स्वमनसि कामोद्वेगं सूचयन्तः सम्बोधयन्ति—रम्भोर्विति। तथापि कोपो न कार्य इत्याशयेन पुनः सम्बोधयन्ति—भामिनि इति। त्वं काऽसीति जातिप्रश्नः। कस्यासीति पितृभर्त्रादिसंबन्धिप्रश्नः। अत्रागमने ते तव को वाऽर्थः किं प्रयोजनम्?। एवं तद्वृत्तं पृष्ट्वा स्वपीडां निवेदयन्ति--रूपमिति। रूपमेव द्रविणमनर्घ्यं वस्तु तदेव पण्यं क्रयार्हं तेन तत्प्रदर्शनेन दुर्भगान् तन्मूल्यदाने असमर्थान् दरिद्रान्नोऽस्मान् विबाधसे। कामोद्दीपनेन पीडयसीत्यर्थः ॥ ३४ ॥ ❀ ❀ हे अवले इति सम्बोधनेन कामोद्दीपनद्वारा वशीकरणे एव तव बलमस्ति न शारीरं बलमिति सूचयन्ति। किं जातिकुलादिप्रश्नेन ? या वा काचित्त्वं भव। तव सन्दर्शनं तु दिष्ट्या अस्मद्भाग्येनैव जातं, परन्तु ईक्षमाणानामस्माकं मनः कन्दुकक्रीडया उत्सुनोषि कामोद्दीपनेन विमथ्नासि ॥ ३५ ॥ ❀ ❀ स्तुत्या सर्वोऽपि प्रसीदतीत्याशयेन स्तुवन्तः कन्दुकक्रीडामेव वर्णयन्ति--नैकत्रेति। हे शालिनि हे शोभने ते तव पादपद्मं नैकत्र अनेकगतिविलासेषु जयति सर्वोत्कर्षेण वर्त्तते। तत्र हेतुं सूचयन्त आहुः--पतत्पतङ्गमुच्चलन्तं कन्दुकं मुहुर्वारंवारं करतलेन घ्नन्त्या इति। बृहतोस्तनयोर्भाराद्धीतं तव कृशं मध्यमुदरभागं विषीदति श्राम्यति। अमला क्रोधादिविकाररहिता तव दृष्टिः शान्ता मन्थरेव प्रसरति। सुशिखासमूहः शोभनः केशकलापस्ते। सुशिखाः समूहेति पाठे तु शोभनान् केशान् अवकीर्यमाणान् समूह बधानेत्यर्थः ॥ ३६ ॥ ❀ ❀ इत्येवं वदन्तो मूढधियः भ्रान्तचित्ता असुराः प्रमदेवाचरंतीं अत एव कामोद्दीपनेन प्रलोभयन्तीं सायन्तनीं सन्ध्यां स्त्रियं मत्वा जगृहुः ॥ ३७ ॥ ❀ ❀ सा च भावेनाभिप्रायेण गम्भीरं दुरवगाहं यथा तथा प्रहस्य आत्मना स्वयमेव आत्मानं देहं जिघ्रन्ती सती अन्तर्दधे इति शेषः। जिघ्रन्निति पाठे तु ब्रह्मणो विशेषणं सुगममिति। ततश्च भगवान् ब्रह्मा कान्त्या सौन्दर्येण गन्धर्वाप्सरसां गणान् ससर्ज ॥ ३८ ॥ ❀ ❀ तां वै तामपि कान्तिमतीं सौन्दर्ययुक्तामत एव प्रियां तनुं विससर्ज त्यक्तवान्। तां च त्यक्तां ज्योत्स्नां चन्द्रिकाभूतां तनुं त एव विश्वावसुः पुरोगमो मुख्यो येषु ते गन्धर्वादयः प्रीत्या आददुः गृहीतवन्तः ॥ ३९ ॥ आत्मनस्तन्द्रिणा आलस्येन भगवान् ब्रह्मा भूतपिशाचांश्च सृष्ट्वा तान् दिग्वाससो नग्नान् मुक्तकेशांश्च वीक्ष्य दृशौ नेत्रे न्यमीलयत् ॥ ४० ॥

## हिन्दी अनुवाद

वह नीली-नीली अलकावलीसे सुशोभित सुकुमारी मानो लज्जाके मारे अपने अञ्चलमें ही सिमिटी जाती थी। विदुरजी ! उस सुन्दरीको देखकर सब-के सब असुर मोहित हो गये ॥ ३१ ॥ ❀ ❀ 'अहो ! इसका कैसा विचित्र रूप,

कैसा अलौकिक धैर्य और कैसी नयी अवस्था है। देखो, हम कामपीड़ितोंके बीचमें कैसी बेपरवाह-सी विचर रही है॥ ३२॥ ❀ ❀ इस प्रकार उन कुबुद्धि दैत्योंने स्त्रीरूपिणी सन्ध्याके विषयमें तरह-तरहके तर्क वितर्क करके फिर उसका बहुत आदर करते हुए प्रेमपूर्वक पूछा—॥ ३३॥ ❀ ❀ 'सुन्दरि! तुम कौन हो और किसकी पुत्री हो? भामिनि! यहाँ तुम्हारे आनेका क्या प्रयोजन है? तुम अपने अनूप रूपका यह बेमोल सौदा दिखाकर हम अभागोंको क्यों तरसा रही हो?॥ ३४॥ ❀ ❀ अबले! तुम कोई भी क्यों न हो, हमें तुम्हारा दर्शन हुआ—यह बड़े सौभाग्यकी बात है। तुम अपनी गेंद उछाल-उछालकर तो हम दर्शकोंके मनको मथे डालती हो॥ ३५॥ ❀ ❀ सुन्दरि! जब तुम उछलती हुई गेंदपर अपनी हथेलीकी थपकी मारती हो, तब तुम्हारा चरण-कमल एक जगह नहीं ठहरता, तुम्हारा कटिप्रदेश स्थूल स्तनोंके भारसे थक-सा जाता है और तुम्हारी निर्मल दृष्टिसे भी थकावट झलकने लगती है। अहो! तुम्हारा केशपाश कैसा सुन्दर है॥ ३६॥ ❀ ❀ इस प्रकार स्त्रीरूपसे प्रकट हुई उस सायङ्काल सन्ध्याने उन्हें अत्यन्त कामासक्त कर दिया और उन मूढ़ोंने उसे कोई रमणीरत्न समझकर ग्रहण कर लिया॥ ३७॥ ❀ ❀ तदनन्तर ब्रह्माजीने गम्भीर भावसे हँसकर अपनी कान्तिमयी मूर्तिसे, जो अपने सौन्दर्यका मानो आप ही आस्वादन करती थी, गन्धर्व और अप्सराओंको उत्पन्न किया॥ ३८॥ ❀ ❀ उन्होंने ज्योत्स्ना चन्द्रिका रूप अपने उस कान्तिमय प्रिय शरीरको त्याग दिया। उसीको विश्वावसु आदि गन्धर्वोंने प्रसन्नतापूर्वक ग्रहण किया॥ ३९॥ ❀ ❀ इसके पश्चात् भगवान् ब्रह्माने अपनी तन्द्रासे भूत-पिशाच उत्पन्न किये। उन्हें दिगम्बर (वस्त्रहीन) और बाल बिखेरे देख उन्होंने आँखें मूँद लीं॥ ४०॥

जगृहुस्तद्विसृष्टां तां जृम्भणाख्यां तनुं प्रभोः[1]। निद्रामिन्द्रियविक्लेदो यया भूतेषु दृश्यते।
येनोच्छिष्टान्धर्षयन्ति तमुन्मादं प्रचक्षते॥ ४१॥
ऊर्जस्वन्तं मन्यमान आत्मानं भगवानजः। साध्यान् गणान् पितृगणान् परोक्षेणासृजत्प्रभुः॥ ४२॥
त आत्मसर्गं तं कायं पितरः प्रतिपेदिरे। साध्येभ्यश्च पितृभ्यश्च कवयो यद्वितन्वते॥ ४३॥
सिद्धान् विद्याधरांश्चैव तिरोधानेन सोऽसृजत्। तेभ्योऽददात्तमात्मानमन्तर्धानाख्यमद्भुतम्॥ ४४॥
स किन्नरान् किम्पुरुषान् प्रत्यात्म्येनासृजत्प्रभुः। मानयन्नात्मनाऽऽत्मानमात्माभासं विलोकयन्॥ ४५॥
ते तु तज्जगृहू रूपं त्यक्तं यत्परमेष्ठिना। मिथुनीभूय गायन्तस्तमेवोषसि कर्मभिः॥ ४६॥
देहेन वै भोगवता शयानो बहुचिन्तया। सर्गेऽनुपचिते क्रोधादुत्ससर्ज ह तद्वपुः॥ ४७॥
येऽहीयन्तामुतः केशा[2] अहयस्तेऽङ्ग[3] जज्ञिरे। सर्पाः प्रसर्पतः क्रूरा नागा भोगोरुकन्धराः॥ ४८॥

**श्रीधरस्वामिविरचिता भावार्थदीपिका**

इंद्रियाणां विक्लेदः स्रावो यया तां निद्रां प्रचक्षते येनेंद्रियविक्लेदेन हेतुनोच्छिष्टांश्च सतो धर्षयंति भ्रांतान्कुर्वंति तं भूतादिगणमुन्मादं प्रचक्षते। तंद्राजृंभिकानिद्रोन्मादहेतुत्वेन भूतादीनां तनूनां च चातुर्विध्यमुक्तम्॥ ४१॥ ❀ ❀ ऊर्जस्वंतं बलवंतम्। परोक्षेणादृश्यरूपेण॥ ४२॥ ❀ ❀ आत्मनः सर्गो यस्मात्तम्। यद्येन कायेन संप्रदानत्वनिमित्तेन कवयः कर्मकोविदाः साध्येभ्यः पितृभ्यश्च स्वपितृरूपेभ्यः वितन्वते श्रद्धादिना हव्यं कव्यं च ददति॥ ४३॥ तिरोधानेन दृश्यत्वे सत्यप्यंतर्धानशक्त्या॥ ४४॥ ❀ ❀ प्रत्यात्म्येन प्रतिबिंबेन देहेन आत्माभासं प्रतिबिंबमात्मनाऽऽत्मनो मानः प्रतिबिंबदर्शिनः सुंदरस्य शिरःकंपादिचेष्टा अत एव तत्सृष्टानां मिथः संमाननेन नित्यं मिथुनीभावः॥ ४५॥ ❀ ❀ तत्प्रतिबिंबरूपम्। कर्मभिस्तत्पराक्रमानुवर्णनैः॥ ४६॥ ❀ ❀ भोग आभोगो विस्तारः पादादिप्रसरणं तद्वता देहेन अनुपचिते वृद्धिमप्राप्ते तद्भोगक्रोधादियुक्तम्॥ ४७॥ ❀ ❀ अमुतोऽमुष्माद्देहाद्ये केशा अहीयंत प्रच्युतास्तेऽहयो जाताः। प्रसर्पतः पादाद्याकुंचनैः प्रचलतोऽमुष्मात्सर्पाः अत एव अगा न भवंतीति नागाः अतिवेगवंत इत्यर्थः। भोगवतो जातत्वाद्भोगेन फणेनोरुर्विस्तीर्णा कंधरा येषाम्। सर्वे चैते तत्क्रोधयोगात्क्रूराः। तेषामवांतरजातिभेदः सर्पसिद्धांते प्रसिद्धः॥ ४८॥

**श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः**

उन्मादमित्युक्तेः भूतप्रेतादिधर्षिता जनाः उन्मत्ता इत्युच्यंते॥ ४१॥ ❀ ❀ कदाचिद्धातात्मनो बलिष्ठत्वं पारोक्ष्यं च भावयामास ताभ्याञ्च साध्याः पितरश्च बभूवुरित्याह—द्वाभ्यामूर्जस्वंतमिति॥ ४२॥ ४३॥ ४४॥ ❀ ❀ अतएवात्ममाननादेव। तत्सृष्टानां प्रतिबिम्बसृष्टानाम्॥ ४५॥ ❀ ❀ तमेव स्रष्टारमेव। उषसि प्रत्यूषे॥ ४६॥ ❀ ❀

१. प्रा० पा०—विभोः। २. प्रा० पा०—ऽहीयन्तशिरःकेशा। ३. प्रा० पा०—ते च।

बहुचिंतयेति । कथं मे सृष्टिरिसिध्येदिति भावनया ततश्च चिंतामध्य एव कश्चिदविवेकोऽभूत् यतो महान् क्रोधो बभूव क्रोधानंतरं तद्वपुरुत्ससर्जेति ॥ ४७ ॥ ❀ ❀ अत एव पादाद्याकुञ्चनैः प्रचलनादेव । इत्यर्थ इति । न गच्छन्तीत्यगाः, न अगा नागा नञर्थेन नशब्देन 'सुप्सुपा' इति समासे रूपसिद्धेरयमर्थो लब्ध इति भावः । सर्पसिद्धांताख्यग्रंथे ॥ ४८ ॥

## श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

जगृहुरिति सार्द्धकम् । तां तन्द्रारूपां स्वकार्य्यभेदेन जृम्भणाख्यां निद्रारूपामुपलक्षणेनोन्मादरूपां च तनुं तत्तदावेशे ये भूतादयो धर्षयन्ति तेषां भूतादीनां गणमुन्मादकत्वादुन्मादसंज्ञं प्रचक्षते । तन्द्रेति । तन्द्रादिजनकत्वेन भूतादीनां चातुर्विध्यं तच्चतुष्टयजनकत्वेनैव तनूनां तत्तद्भावरूपाणां च चातुर्विध्यमुक्तमुपलक्षणतयेत्यर्थः ॥ ४१ ॥ ❀ ❀ पितृभ्योऽन्नोदकदानेन तत्कृपया पुत्रो भवति तेन च स्वस्मै अन्नं दीयते इत्यभिप्रायेणान्नवन्तमिति व्याख्यातम् । ऊर्ज्जसः साध्यमात्रोत्पादकत्वमभिप्रेत्य पक्षान्तरमाह । बलवन्तं वेति तथा च साध्या बलवन्तस्तेभ्यो हव्यदानेन बलोपलब्धिरिति भावः । अदृश्यरूपेण अदृश्यकायेन तु पितृगणानसृजदित्यन्वयः ॥ ४२ ॥ ❀ ❀ येनादृश्यरूपेण कायेन दानपात्रत्वनिमित्तेन । तथा चादृश्येभ्य एव पितृभ्यः पिण्डानि देयानि नतु दृश्येभ्य इत्यर्थः । अत एव शन्तनुर्भीष्मात्पिण्डग्रहणार्थं स्वहस्तं प्रसारितवांस्तदा भीष्मो न ददाविति पुराणान्तरप्रसिद्धिरिति । एवं साध्येष्वपि ज्ञेयम् ॥ ४३ ॥ ❀ ❀ अन्तर्धानाख्यमददादिति । अन्तर्धानशक्तिस्तेषां जाता इत्यर्थः ॥ ४४ ॥ ❀ ❀ अत एव तादृशमानवतो देहाज्जातत्वादेव ॥ ४५ ॥ ❀ ❀ तमेव ब्रह्माणमेव ॥ ४६ ॥ ❀ ❀ बहुचिन्तया सृष्टिविपर्यिण्या ॥ ४७ ॥ ❀ ❀ अत एव प्रसर्पद्देहजातत्वादेव केशस्खलनमप्यस्य भावमयमेव ज्ञेयम् । सर्पसिद्धान्तसंज्ञके ग्रन्थे ॥ ४८ ॥

## श्रीमद्वीरराघवव्याख्या

तन्द्रिरालस्यजृम्भणनिन्द्रोन्मादरूपश्चतुर्विधः । तत्रालस्यादीनामुत्तरोत्तरं हेतुत्वं सूचयन्निद्रोन्मादयोः स्वरूपं च कथयन् भूतपिशाचानां चातुर्विध्यं तन्द्रिप्रधानत्वमाह जगृहुरिति सार्द्धेन । तेन ब्रह्मणा विसृष्टां प्रभोर्ब्रह्मणस्तां जृम्भणाख्यां तनुं जगृहुरुपाददुः । तन्द्रिचातुर्विध्यसूचनाय तदवान्तरभेदेन जृम्भणाख्यामिति निर्देशः । यथा जृम्भणाख्यया इन्द्रियविक्लेदः इन्द्रियविरसत्वमिन्द्रियवैकृव्यं भूतेषु दृश्यते तां निद्रां प्रचक्षते इत्युत्तरान्वयः । येनेन्द्रियविक्लेदेन उच्छिष्टानपरिशुद्धान् धर्षयन्ति सहन्ते स्वार्थे णिच् तं घर्षमुन्मादमिति प्रचक्षते । भूतपिशाचा अप्येतच्चतुर्विधतन्द्रिप्रधाना इति भावः ॥ ४१ ॥ ❀ ❀ प्रभुर्भगवानजो ब्रह्मा आत्मानमूर्ज्जस्वन्तं बलवन्तं मन्यमानः साध्यान् गणान् गुणगुणिनोर्भेदाविवक्षया सामानाधिकरण्यनिर्देशः पितॄणां गणांश्च परोक्षेणाभिमुखमसृजत् ॥ ४२ ॥ ❀ ❀ आत्मसर्गमात्मनां साध्यानां पितॄणां च सर्ग उत्पत्तिर्यस्मात्तं तत्कार्यं ब्रह्मण ऊर्मूपं पितरः प्रतिपेदिरे । पितर इति साध्यानामप्युपलक्षणमूर्जस्वन्तोऽभूवन्निति भावः । अत एवोर्जस्त्वमिच्छद्भिस्ते इज्यन्त इत्याह । कवयः कर्मकुशलाः साध्येभ्यश्च पितृभ्यश्च यद्यदूर्जं वितन्वते यज्ञैराराधयन्ति साध्यान् संसाधको विशां तन्तुं तन्वन् पितॄन् यजेदिति द्वितीयस्कन्धोक्तरीत्या विट्पतित्वसन्ततिवृद्ध्यादिभिरात्मनो बलसम्पादनाय साध्यान्पितॄंश्च यजन्तीत्यर्थः । यदा ऊर्क् प्राणनं प्रकृष्टं जीवनं तद्वन्तं मन्यमानः साध्यादीनसृजदत एव विट्पतित्वसन्तत्यादिभिरिहामुत्र च प्राणनमिच्छद्भिरिज्यन्त इत्यर्थः ॥ ४३ ॥ ❀ ❀ स ब्रह्मा तिरोधानेन स्वेक्षरैरदृश्यत्वशक्त्या सिद्धान्विद्याधरांश्चासृजत्तेभ्यः सिद्धविद्याधरेभ्यः तमन्तर्द्धानाख्यमात्मानं कायमद्भुतमाश्चर्यं ददौ । तेऽन्तर्द्धानाख्यशक्तिप्रधाना अभूवन्नित्यर्थः ॥४४॥ ❀ ❀ प्रभुर्ब्रह्मात्माभासमात्मप्रतिबिम्बं विलोकयन् तमात्मानं प्रतिबिम्बरूपं कायं मानयन् प्रत्यात्म्येन प्रतिबिम्बेन किन्नरसहितान् किंपुरुषानसृजत् ॥४५॥ ❀ ❀ ते तु किन्नरादयः परमेष्ठिना यत्त्यक्तं तत्प्रत्यात्मरूपं कायं जगृहुरत एव ते किन्नराः किंपुरुषाश्च परस्परं मिथुनीभूय बिम्बप्रतिबिम्बयोर्यादृशोभिमानस्तमभिमानं कृत्वा तमेव ब्रह्माणमुषसि कर्मभिस्तच्चेष्टितस्तुतिरूपैस्ते गायन्तो बभूवुः । आत्मभासं विलोकयन्निति पाठे त्वात्मभासं स्वप्रकाशं विलोकयंस्तमात्मानं स्वविशेषणत्वेन स्वाभिन्नं मन्यमानस्तेन प्रत्यात्म्येनात्मप्रकाशेनासृजदत एव तत्सृष्टा गानाख्ये कर्मणि परस्परं गुणप्रधानभावेनाभिन्नप्रयोजनात्मनो मत्वा मिथुनीभूय गायन्तो बभूवुरित्यर्थः ॥ ४६ ॥ ❀ ❀ भोगवता सौकुमार्यवता दैर्घ्यवता देहेन बहुचिन्तया शयानः सर्गेऽनुपचितेऽप्रवृद्धे सति क्रोधात्तद्वपुः भोगक्रोधबहुचिन्तारूपं वपुः उत्ससर्ज ह ॥ ४७ ॥ ❀ ❀ अमृतः भोगवतो देहाद्ये केशा अहीयन्त प्रच्युताः ते केशा अहयो जज्ञिरे अङ्ग हे विदुर ! प्रसर्पतः पादाद्याकुञ्चनैः प्रचलतोऽमुष्माद्देहात् सर्पाः प्रजज्ञिरे प्रसर्पतो जातत्वात्ते नागा न गच्छन्तीत्यगा न अगा नागा अतिवेगा इत्यर्थः । क्रोधात्त्यक्तकायाज्जातत्वात् क्रूरा बहुचिन्ताक्रान्ता भोगवतो जातत्वाद्भोगाः सुखस्पर्शदेहा दीर्घाश्च शयानाज्जातत्वाद्दीर्घकन्धराः ॥ ४८ ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

तस्याः स्वभावलक्षणमाह । निद्रादीति । विक्लेदो वैक्लव्यं तया तन्वोच्छिष्टान् ग्रस्तान् देहिनो धर्षयन्ति स्वचेष्टादिविशेषान् कारयन्ति तं चेष्टादिविशेषमुन्मादं प्रचक्षते तज्ज्ञा इति शेषः । 'व्यसृजन्मलवद्देहं बाह्यं न तु निजं पुरा । ब्रह्मा तच्चाहरादित्वं प्राप देवादिदैवतम् ॥' इति वचनात् बाह्यमेव प्रभादिशरीरं त्यजति ब्रह्मा नतु निजं देहमिति ज्ञायते । पुरा सृष्टिसमये ॥ ४१ ॥

❀ ❀ स्वयोग्यात्मदानेन तृप्ताः साध्यादिगणाः पितृपिशाचादिग्रहदोषं निवारयन्त्यतस्तत्सर्गानन्तरं साध्यादिगणसृष्टिं वक्ति । ऊर्जस्वन्तमिति । अनेन प्रेतादिग्रहाणां मुख्यचिकित्सेयमिति दर्शितम् । ऊर्जस्वन्तं साराम्नवन्तम् । 'ऊर्जं साराम्नमुद्दिष्टं तदेव पितृभक्षणम्' इति च । नाम्ना परोक्षेण देहेन अत एवाद्यापि मांसदृष्ट्यगोचरेभ्यः पित्रादिभ्यस्तत्तुष्ट्यै पिण्डादिकं प्रयच्छन्ति ॥ ४२ ॥ ❀ ❀ आत्मनः सर्गः सृष्टिर्यस्मात्स आत्मसर्गस्तं यत्साराम्नं वितन्वते बलिहरणादिना विसृज्य पितरन्ति ॥ ४३ ॥ ❀ ❀ सिद्धादीनां साध्याद्यवरत्वादनन्तरं तत्सर्गमाह । सिद्धानिति । नाम्ना तिरोधानेन कायेन अन्तर्धानाख्यमन्तर्धानापरपर्यायमात्मानं देहमिति तस्माददद्भुतमदृश्यहेतुत्वादितरेषां वरादिना अदृश्यत्वमेतेषां स्वत एवेति विशेषः, हरिशक्तेरचिन्त्यत्वादिति भावः ॥ ४४ ॥ ❀ ❀ स्वबोधनविडम्बनाय स्वसन्निकृष्टपुरुषसृष्टे प्राशस्त्यबुद्धिजननाय च पुरुषाभाससृष्टिमाह । सकिन्नरानिति । "किं प्रश्नाक्षेपकुत्सायां वितर्काभासगोचरे" इति वचनात् किन्नराभासान् किंपुरुषान् पुरुषाभासान् आत्मना रूपेण कायेनासृजदित्यन्वयः । येन भावेन ब्रह्मा पदार्थान् सृजति स चेष्टादिलक्षणो भावस्तेषामौत्पत्तिकतया यावच्छरीरं वर्तत इत्यतस्तं भावं दर्शयतीत्याह । मानयन्निति आत्मना मनआदिना आत्मानं स्वशरीरं गन्धपुष्पादिभिर्मानयन् पूजयन् दर्पणादिना आत्माभासं स्वच्छायां विलोकयन्नसृजदिति पूर्वेणान्वयः । अयं न्यायः पूर्वत्रोत्तरत्र चानुसंधेयः ॥ ४५ ॥ ❀ ❀ परमेष्ठिनो त्यक्तं ते किन्नरास्तद्रूपं स्वभावलक्षणकमाकारं जगृहुरित्यन्वयः । 'रूपं शब्दे पशौ श्लोके ग्रन्थावृत्तौ हितादिषु । सौन्दर्ये च स्वभावे च'त्यभिधानम् । तेषां कृत्यमाह । मिथुनीभूयेति । तं ब्रह्माणं कर्मभिश्वरितैः पद्यादिना ग्रथितैः अनेन पक्षिणां सृष्टिरपि व्याख्याता किन्नरादीनां मुखस्यैव नराकारत्वादण्डजत्वाविशेषात् ॥ ४६ ॥ ❀ ❀ सर्पादिसृष्टिप्रकारं वक्ति । देहेनेति । भोगवता सर्पशरीराकारवता देहेन शयानो ब्रह्मा प्रजासर्गे अनुपचिते अलं भावरहिते बहुचिन्तया जाताक्रोधात्तद्वपुरुत्ससर्ज । हि शब्दो हेत्वर्थः । यस्मात्क्रोधादस्राक्षीत्तस्मादीपद्दुपद्रुताः क्रुद्धाः सर्वान् लोकानुपद्रवन्तीति ॥ ४७ ॥ ❀ ❀ एकस्माद्देहादुत्पन्नानामवान्तरभेदमाह । यइति । अमुतः अमुष्माच्छरीरात् केशा अहीयन्त त्यक्ता आसंस्तेऽहयो जज्ञिरे इत्यन्वयः । क्रियापदस्य सुबन्तत्वं यदश्वत्तस्मादश्व इति वेदे दृष्टत्वाद्युक्तविसर्पतो विविधसर्पणात्सर्पाः तत्स्वभावमाह । क्रूराः क्षिप्रं क्रोधशीलत्वात् न गच्छन्तीत्यगाः । अगा न भवन्तीति नागाः क्षिप्रगन्तृत्वात् तल्लक्षणमाह । भोगोरुकन्धरा इति । भोगवदुर्व्यो बृहत्यः कन्धरा येषां ते तथा भित्तिप्रदीपन्यायेनोरुशब्द उभयत्रान्वेतव्यः । उरुभोगाश्चोरुकन्धराश्चोरुभोगोरुकन्धराः । 'उरुभोगाय विद्महे महाकण्ठाय धीमहि । तन्नो नागः प्रचोदयादि'ति । जाङ्गलिकतन्त्रे ॥ ४८ ॥

## श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः ।

जगृहुरिति सार्द्धकम् । अत एवाभेदेनाह । जृम्भणाख्यां निद्रामिति च । धर्मस्यैव प्राधान्यविवक्षया मत्वर्थीयश्च नात्र कृतः । तमिन्द्रियविक्लेदं यमुन्मादं प्रचक्षते तत्रोन्मादोऽपि भवतीति तदभेदेन तमपि निर्दिशन्तीत्यर्थः ॥ ४१ ॥ ❀ ❀ उर्ज्जस्वन्तं वरदानेनोत्साहादिलक्षणसत्त्वयुक्तम् ॥ ४२ ॥ ❀ ❀ त इति । तद्युक्तमेव ज्ञात्वा तेभ्यो ददतीति यत् येन स्वलक्षणेन कायेनैव हेतुना ॥ ४३—४७ ॥ ❀ ❀ ये इति । केशस्खलनमप्यस्य भावमयमेव ज्ञेयम् ॥ ४८ ॥

## श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

यया निद्रया भूतेषु मनुष्यादिषु इन्द्रियाणां मुखादीनां विक्लेदः येन चाविक्लेदेन हेतुना उच्छिष्टान् सतो धर्षयन्ति तद्धर्षणमुन्मादं प्रचक्षते अत एव भूतप्रेतादिधर्षिता जना उन्मत्ता उच्यन्ते ॥ ४१ ॥ ❀ ❀ कदाचिदात्मनो बलिष्ठत्वं पारोक्ष्यञ्च भावयामास ताभ्याञ्च साध्याः पितरश्च बभूवुस्ते च हव्यकव्ये बभूवतुरित्याह द्वाभ्याम् । ऊर्ज्जस्वन्तं सत्त्ववन्तं तेन सत्त्वेन साध्यान् गणान् परोक्षेण पारोक्ष्येण च पितृगणान् ॥४२॥ ❀ ❀ ते साध्याः पितरश्च तं कायमनुरूपमित्यर्थः । यद्यतो हेतोर्वितन्वते साध्येभ्यो हव्यमन्नं पितृभ्यः कव्यमन्नं श्राद्धादिना समर्पयन्तीत्यर्थः ॥ ४३ ॥ ❀ ❀ कदाचित् स अन्तर्द्धानं भावयामास तस्माच्च सिद्धविद्याधरा बभूवुरित्याह । सिद्धानिति ॥ ४४ ॥ ❀ ❀ आत्मनः प्रतिविम्बं भावयामास तस्माच्च किन्नरकिंपुरुषा बभूवुरित्याह । स किमिति । प्रत्यात्म्येन प्रतिबिम्बेन अहं सुन्दर इत्यात्मनैवात्मानं मानयन् आत्माभासं सुन्दरम् ॥ ४५ ॥ ❀ ❀ तत्प्रत्यात्मं स्त्रीपुंसयोः पारस्परिकदर्शनरूपमभूदतस्तेऽपि तदेव जगृहुरित्याह । ते त्विति ॥ ४६ ॥ ❀ ❀ मनसैव शयानं देहं तत्याज स चाहिसर्पादिरूपो बभूवेत्याह । देहेनेति । भोग आभोगो विस्तारस्तद्वता पादादिप्रसारणवतेत्यर्थः । बहुचिन्तया सर्गे अनुपचिते सति कथं मे सृष्टिः सिद्ध्येदिति भावनया । ततश्च चिन्तामध्य एव कश्चिदविवेकोऽभूत् यतो महान् क्रोधो बभूव क्रोधानन्तरं तद्वपुः उत्ससर्ज ॥ ४७ ॥ ❀ ❀ अमुतः अमुष्माद्देहात् ये केशा अहीयन्त विच्युतास्ते अहयो जाताः प्रसर्पतः पादाद्याकुञ्चनैः प्रचलतोऽमुष्माद्देहाद्ये हस्तपादाद्या विच्युतास्ते सर्पाः ये च मुण्डकन्धराद्यास्ते नागाः कीदृशाः भोगवतो जातत्वात् भोगेन फणेन उरुर्विस्तीर्णा कन्धरा येषां ते सर्वे च क्रोधयोगात् क्रूरास्तेषामवान्तरजातिभेदः सर्पसिद्धान्ते प्रसिद्धः ॥ ४८ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः ।

तत्तेन भगवता विसृष्टां तां तन्द्रां ते एव भूतादयो जगृहुः । यया इन्द्रियाणां विक्लेद आस्रवः दृश्यते तां मनुष्यादिषु विजृम्भणाख्यां निद्रां च प्रचक्षते येनेन्द्रियविक्लेदेन हेतुना उच्छिष्टां मनुष्यादीन् धर्षयन्ति भ्रान्तान् कुर्वन्ति ते एव भूतादयः तमिन्द्रियविक्लेदमुन्मादं विचक्षते भूतादिगणं वा ॥ ४१ ॥ ❀ ❀ ऊर्जस्वन्तमदृश्यतापादकबलवन्तम् । परोक्षेण अदृश्यरूपेण ॥ ४२ ॥ ❀ ❀ आत्मसर्गं स्वजनकम् । यत् येन कायेन सम्प्रदानत्वनिमित्तेन कवयः वितन्वते श्राद्धादिना हव्यं कव्यं च ददति ॥ ४३ ॥ ❀ ❀ तिरोधानेन अन्तर्धानशक्त्या ॥ ४४ ॥ ❀ ❀ प्रत्यात्म्येन प्रतिबिम्बेन । आत्माभासं प्रतिबिम्बम् ॥ ४५ ॥ ❀ ❀ तत्प्रतिबिम्बात्मकंरूपम् । तं परमेष्ठिनम् । कर्मभिस्तत्पराक्रमवर्णनैः ॥ ४६ ॥ ❀ ❀ सर्गे अनुपचिते अप्रवृत्ते सति बहुचिन्तया भोगवता शयनवशाद्दैर्घ्यवता देहेन शयानः तद्दैर्घ्ययुक्तं वपुः क्रोधात् उत्ससर्ज ॥ ४७ ॥ ❀ ❀ हे अङ्ग ! विदुर अमुतः दैर्घ्यक्रोधबहुचिन्तायुक्तादमुष्माद्देहात् ये केशा अहीयन्त प्रच्युताः ते अहयो जज्ञिरे जाताः । प्रसर्पतः उत्सर्जनवेलायां प्रचलतः सर्पाः अतिवेगाज्जज्ञिरे उत्सृष्टादचलात् नागा गतिहीना अजगरा जज्ञिरे । भोगवतो जातत्वात् भोगेन दीर्घेण शरीरेण सहिता उरु बहु विस्तीर्णा कन्धरा येषां ते स्थौल्ययुक्तदीर्घशरीरकन्धराः जज्ञिरे । क्रोधांशात् ये जाताः ते विशेषतः क्रूरा इत्यर्थः ॥ ४८ ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

तत्रैकस्या विनियोगमाह—जगृहुरिति । भूतपिशाचा एव तां जगृहुः । विशेषेण सृष्टा विसृष्टेति योगेन पूर्ववद्ग्रहणमपि सूचितम् । विसृष्टा त्यक्ता । तयोर्भेदार्थं पूर्वस्या नामाह—जृम्भणाख्यामिति । आलस्यनिद्रायां हि समागतायां जृम्भा भवतीति । असमीचीनाया अपि ग्रहणे हेतुः—प्रभोरिति । द्वितीयां पूर्वसंदिग्धामिदानीं लक्षयति—निद्रामिति । निद्रा एव तनुर्द्वितीया, पूर्वा तु जृम्भणाख्या । तस्या देवतारूपाया निद्रायाः कार्यद्वारा लक्षणं निरूपयति—इन्द्रियविक्लेदो यया भूतेषु दृश्यते इति । निद्रया हि इन्द्रियाणि सर्वाणि लीनानि भवन्ति, स्रवन्ति च निद्रया । तयैवाऽऽधिदैविकया चक्षुःस्रावादिकमपि भवति । अतस्त्रिविधमपि कार्यमिन्द्रियविक्लेदशब्देनोच्यते । तां ये गृहीतवन्तस्तानाह—येनोच्छिष्टानिति । स गणस्तून्मादलक्षणः, येन सा गृहीतेत्यर्थादुक्तं भवति, अन्यथा निरूपणवैयर्थ्यापत्तेः । तेषामुन्मादसंज्ञा कथं जातेत्याशङ्क्याऽऽह—येन कारणेन उच्छिष्टान् । भोजनादिना, मलोत्सर्गादिना वा, उच्छिष्टा भवन्ति, तांस्ते धर्षयन्ति । तत्तेन कारणेन तं गणमुन्मादं प्रचक्षते । उद्गतो मादो यस्येति । उन्मत्ता एव ह्यनवहितान् धर्षयन्ति, अतस्तं गणमुन्मादं प्रचक्षते । यद्वा, भूतपिशाचा एव जृम्भणाख्यां निद्रां च गृहीतवन्तः । निद्रया द्वितीयतन्वोत्पादितं च गणं धर्षणार्थं करणत्वेन गृहीतवन्तः । तथा सति स गणः पिशाचमध्य एवाऽन्तर्भूतो ज्ञेयः । धर्षयन्ति पिशाचाः—आचक्षते अभिज्ञाः ॥ ४१ ॥ ❀ ❀ राजसीं सृष्टिमाह—ऊर्जस्वन्तमिति । इडो(ड्र)र्जश्शब्दौ शक्तिविशेषवाचकौ । इन्द्रियाणां विषयग्रहणसामर्थ्यविशेषसंपादिका आत्मनिष्ठा शक्तिर्विचारकारणभूता चोर्जश्शब्देनोच्यते । क्षुत्पिपासाभिवृद्धिकर्त्री तु शक्तिरिट्शब्देनोच्यते । अत एव शाखा[1]च्छेदने एते काम्ये 'इषेत्वोर्जेत्वा' इति । एते शक्ती भगवत एव, जीवे ओषधिवनस्पतिषु च प्रतिष्ठिते । 'ऊर्ग्वा अन्नाद्यं दधि' 'ऊर्ग्वा उदुम्बरम्' इति च; 'इषे प्राणाय, ऊर्जेऽपानाय' इति च । यस्तु ऊर्ग्युक्तः स ऊर्जस्वान् । यद्वैवं ब्रह्मणोऽभिमानो जातः । भगवानिति [2]मूलोक्संबन्धज्ञापकः । अज इत्यभिमाने हेतुः, अन्यथा भगवान् सर्वरूपो नाऽऽत्मानं तथाऽभिमन्यते । तदा परोक्षेण भावेन साध्यान् पितृगणांश्चाऽसृजत् । अदृष्टं सर्वं परोक्षम् । अत एव साध्या अतिरिक्तभागिनो जाताः—पितरश्च न्युब्जभागिनः, 'परोक्षभागिनश्च ह्रीकाः'[3] इति श्रुतेः । अत उभयेषां सृष्टिरदृष्टैव कृता । तथा सृष्टौ सामर्थ्यम्—प्रभुरिति ॥ ४२ ॥ ❀ ❀ तामपि तनुं विससर्ज—तं त्वात्मेति । अत एव ते उभये, आत्मसर्गं स्वोत्पादकम्, तस्य ब्रह्मणः कायं शरीरम्, मुख्यतया पितरः प्रतिपेदिरे । लोकेऽत्यन्तं पितर एव प्रसिद्धा इति । तेन शरीरेणोभयेषां विनियोगमाह—साध्येभ्यः पितृभ्यश्चेति । यद्येन शरीरेण वितन्वते लोकाः, अतिरिक्तेन श्राद्धेन च ॥ ४३ ॥ ❀ ❀ पुनस्तृतीयं गुणत्रयसर्गमाह—सिद्धानिति । एते सात्त्विकाः । सिद्धा ज्ञानसिद्धाः, विद्याधराः कर्मसिद्धाः, उभयानपि तिरोधानेनैवाऽसृजत् । तिरोधानविद्यारूपो यो भावः, तेनाऽसृजदित्यर्थः । तां च तनुं पूर्ववन्न त्यक्तवान्, किन्तु तेभ्यो दत्तवानित्याह—तेभ्य इति । आत्मानं देहमददात् । असंदेहार्थं तस्य नामाऽऽह—अन्तर्धानमित्याख्या यस्य । अद्भुतमिति स्व[4]तो दाने हेतुः ॥ ४४ ॥ ❀ ❀ राजसीमाह—स किन्नरानिति । किन्नराः किम्पुरुषाश्च देवगायकाः, तान् प्रत्यात्म्येन प्रतिबिम्बेनाऽसृजत् । प्रभुरिति पूर्ववत् । न प्रतिबिम्बमात्रेण तेषां सृष्टिः, किन्तु सम्मानपुरःसरमित्याह—मानयन्निति । आत्मना प्रतिबिम्बरूपेण, आत्मानं बिम्बरूपम्, मानयन्नसृजदिति संबन्धः । लोकोऽपि दर्पणादौ मुखं पश्यन्नात्मानं बहु मन्यते । किञ्च, नापि सन्माननमात्रसहितेन, किन्त्वात्माभासं विलोकयन्नेवाऽसृजत् । तेन दर्शनेन सम्माननेन सहितेन प्रतिबिम्बेनाऽसृजदित्यर्थः ॥ ४५ ॥ ❀ ❀ तेन कार्ये त्रिरूपता जातेत्याह—ते त्विति । इदं रूपं ब्रह्मणा त्यक्तमेव, यतः स परमेष्ठी, परमां निष्ठां प्राप्तवानिति 'तेन स परमां काष्ठामगच्छत्' इति श्रुतेः । ततो यज्जातं तदाह—मिथुनोभूयेति ।

---

१. शिखाच्छेदने क. घ. ङ । २. मूलसम्बन्ध' 'ख. भूर्लोकसम्बन्धः क. घ. ङ । ३. ह्रीकाः ख. घ. ङ । ४. तनोः, क ।

ते उभयेऽपि स्त्रीपुरुषरूपेण जाताः, (?) माननस्याऽयं धर्मः। उषसि च प्रातः काले, कर्मभिर्ब्रह्मकृतैरुत्कर्षहेतुभिर्मिथुनीभूयैव रसाभिव्यक्त्यर्थं, तमेव ब्रह्माणं गायन्तो जगुहुरिति संबन्धः। गानं दर्शनकृतम्॥ ४६॥ ❀ ❀ तामसीं सृष्टिमाह—देहेनेति। भोगवता स्थूलेन देहेन। भोगो विषयभोगः, तद्वान् स्थूलो भवत्येव। इदं लोकप्रसिद्धमिति वै निश्चयेनेत्युक्तम्। बहुचिन्तया शयानो जातः, पतित्वा स्थित इत्यर्थः। चिन्तायां हेतुः—सर्गेऽनुपचित इति। कामस्याऽपूर्तौ क्रोधो जातः, क्रोधाच्च तद्वपुरुत्ससर्ज॥ ४७॥ ❀ ❀ त्यक्ताद्वपुषः सृष्टिर्जातेत्याह—येऽहीयन्तेति। अमुतः शरीरात् ये केशा अहीयन्त। अनेन क्रोधात् स्वकेशाकर्षणमपि कृतवानिति ज्ञायते। त एव केशा अहयो जाताः। अहयः सर्पाः, नागा इत्यवान्तरभेदाः। 'क्रियावन्तोऽफणाद्याश्च सफणास्तु तथा परे। नागा अजगराः प्रोक्ता मध्यमाः सविषाः स्मृताः॥' यतोऽहीयन्त, अतोऽहयः। क्रोधाद्यद्धावनं कृतवान्, ततः प्रसर्पतो देहाद्ये जाताः, ते सर्पाः। पतितात् क्रियारहिताद्ये जाताः, ते नागाः, स्थूलाकारात् देहात् क्रियारहितात् यज्जाताः, अतः भोगोरुकन्धराः। महान् भोगः, उरुः कन्धरा च येषाम्। कन्धराः फणस्थानानि। उरुशब्दस्य मध्ये प्रयोगादुभयसम्बन्धः। भोगार्थं वोरुकन्धरा, भोगापेक्षया वा॥ ४८॥

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

ऊर्जस्वन्तमित्यत्र। अत एवेत्यादि। इन्द्रियसामर्थ्यसम्पादकत्वतदभिवृद्धिकर्तृत्वाभ्यामेव सान्नाय्यस्येन्द्रियवीर्यरूपतया तत्तन्त्रे पवित्रार्थं 'इषेत्वेति शाखामाच्छिनत्ति' इत्यनेन विहिते शाखाच्छेदने तथेत्यर्थः। उभयत्र प्रतिष्ठितत्वे प्रमाणमाहुः—ऊर्वेत्यादि॥ ४२॥ ❀ ❀ सिद्धानित्यत्र। तृतीयमिति। राजसराजसराजससात्त्विकराजसतामसभेदभिन्नम्॥ ४४॥ ❀ ❀ ते त्वित्यत्र। अयमिति। (?)स्त्रीत्वपुंस्त्वाभ्यां भवनरूपः। दर्शनकृतमिति। दर्शनधर्मः। प्रतिबिम्बधर्मास्तु किन्नराः। किम्पुरुषा मिथुनीभावश्चेति स्वाप्रतिबिम्बः सम्मानानां त्रयाणां कार्यं निर्दिष्टम्॥ ४६॥

इति श्रीतृतीयस्कन्धसुबोधिनीप्रकाशे विंशाध्यायविवरणं सम्पूर्णम्।

### श्रीगिरिधरकृता बालप्रबोधिनी

तां च तेन विसृष्टां प्रभोः त्यागग्रहणसमर्थस्य तनुं ततो जाता भूतप्रेतादयो जगृहुः। तस्या एव तन्द्रा जृम्भणं निद्रा उन्माद इति चतुर्विधभेदो द्रष्टव्यः। तत्र तन्द्रा आलस्यम्। जृम्भणं प्रसिद्धमेव। यया इन्द्रियाणां विक्लेदो वैवश्यं भूतेषु दृश्यते तां निद्रां प्रचक्षते इत्यन्वयः। येन दोषविशेषेण उच्छिष्टान् भुक्तान् मलमूत्रादिसंयुक्तान् प्राणिनः भूतादयो धर्षयन्ति भ्रान्तान् कुर्वन्ति तमुन्मादं प्रचक्षते अभिज्ञाः कथयन्ति॥ ४१॥ ❀ ❀ ततश्च भगवान् ऐश्वर्यादिमान् अत एव प्रभुः समर्थोऽजो ब्रह्मा आत्मानमूर्जस्वन्तं बलवन्तं मन्यमानः परोक्षेण अदृश्यरूपेण साध्यान् गणान् पितृगणांश्चासृजदित्यन्वयः॥ ४२॥ ❀ ❀ ते तु साध्याः पितरश्च आत्मनां सर्गो यस्मात्तं ब्रह्मणा सृष्टं कायं प्रतिपेदिरे जगृहुः। यत् येन सम्प्रदानत्वनिमित्तेन कायेन कवयः कर्मकोविदाः साध्येभ्यः पितृभ्यश्च वितन्वते श्राद्धादिना हव्यं कव्यं च ददतीत्यर्थः॥ ४३॥ ❀ ❀ ततश्च स ब्रह्मा तिरोधानेन दृश्यत्वे सत्यपि अन्तर्हितस्वरूपेणैव सिद्धान् विद्याधरांश्च देवविशेषान् असृजत्। तेभ्यः सिद्धादिभ्योऽन्तर्द्धानाख्यं अद्भुतमात्मानं शरीरमदात्॥ ४४॥ ❀ ❀ प्रभुर्ब्रह्मा आत्माभासं प्रतिबिम्बं विलोकयन् आत्मनाऽऽत्मानं मानयन् प्रतिबिम्बसौन्दर्यदर्शनेन आत्मानं सुन्दरं मानयन् प्रत्यात्म्येन तेन प्रतिबिम्बेन किन्नरसहितान् किम्पुरुषान् असृजत्॥ ४५॥ ❀ ❀ यत् प्रतिबिम्बात्मकं रूपं परमेष्ठिना ब्रह्मणा त्यक्तं तत्तु ते किन्नरा जगृहुः, अतस्ते उषसि प्रातःकाले कर्मभिः तत्पराक्रमानुवर्णनैस्तमेव मिथुनीभूय स्त्रीपुरुषौ मिलित्वा गायन्तो जाताः॥ ४६॥ ❀ ❀ सर्गे अनुपचिते वृद्धिमप्राप्ते सति कथं वृद्धिः स्यादिति बहुचिन्तया भोगवता स्थूलेन देहेन शयानः मनोरथापूर्तौ क्रोधात् तत् क्रोधयुक्तं वपुरुत्ससर्ज त्यक्तवान्॥ ४७॥ ❀ ❀ हे अङ्गेति सम्बोधनं विश्वासार्थम्। अमुतः अमुष्मात् देहात् ये केशा अहीयन्त प्रच्युता जातास्ते अहयो जज्ञिरे। प्रसर्पतः पादाद्याकुञ्चनादिना प्रचलतोऽमुष्मात् सर्पा जाताः। अगा न भवन्तीति नागा अतिवेगवन्तः। भोगवतो जातत्वाद्भोगेन फणेन उरुर्विस्तीर्णा कन्धरा येषां ते। क्रोधयुक्ताज्जातत्वात् क्रूराश्च। तेषामवान्तरभेदश्च सर्पसिद्धान्ते प्रसिद्धः॥ ४८॥

### हिन्दी अनुवाद

ब्रह्माजीके त्यागे हुए उस जँभाईरूप शरीरको भूत-पिशाचोंने ग्रहण किया। इसीको निद्रा भी कहते हैं, जिससे जीवोंकी इन्द्रियोंमें शिथिलता आती देखी जाती है। यदि कोई मनुष्य जूठे मुँह सो जाता है तो उसपर भूत-पिशाचादि आक्रमण करते हैं; उसीको उन्माद कहते हैं॥ ४१॥ ❀ ❀ फिर भगवान् ब्रह्माने भावना की कि मैं तेजोमय हूँ और अपने अदृश्य रूपसे साध्यगण एवं पितृगणको उत्पन्न किया॥ ४२॥ ❀ ❀ पितरोंने अपनी उत्पत्ति स्थान उस अदृश्य शरीरको ग्रहण कर लिया। इसीको लक्ष्यमें रखकर पण्डितजन श्राद्धादिके द्वारा पितर और साध्यगणको क्रमशः कव्य ( पिण्ड ) और हव्य अर्पण

करते हैं ॥ ४३ ॥ ❀ ❀ अपनी तिरोधानशक्तिसे ब्रह्माजीने सिद्ध और विद्याधरोंकी सृष्टि की और उन्हें अपना वह अन्तर्धाननामक अद्भुत शरीर दिया ॥ ४४ ॥ ❀ ❀ एक बार ब्रह्माजीने अपना प्रतिबिम्ब देखा। तब अपनेको बहुत सुन्दर मानकर उस प्रतिबिम्बसे किन्नर और किम्पुरुष उत्पन्न किये ॥ ४५ ॥ ❀ ❀ उन्होंने ब्रह्माजीके त्याग देनेपर उनका वह प्रतिबिम्ब-शरीर ग्रहण किया। इसीलिये ये सब उषःकालमें अपनी पत्नियोंके साथ मिलकर ब्रह्माजीके गुण-कर्मादिका गान किया करते हैं ॥ ४६ ॥ ❀ ❀ एक बार ब्रह्माजी सृष्टिकी वृद्धि न होनेके कारण बहुत चिन्तित होकर हाथ-पैर आदि अवयवोंको फैलाकर लेट गये और फिर क्रोधवश उससे जो बाल झड़कर गिरे, वे अहि हुए तथा उसके हाथ-पैर सिकोड़कर चलनेसे क्रूरस्वभाव सर्प और नाग हुए, जिनका शरीर फणरूपसे कंधेके पास बहुत फैला होता है ॥ ४८ ॥

स आत्मानं मन्यमानः कृतकृत्यमिवात्मभूः। तदा मनून् ससर्जान्ते मनसा लोकभावनान् ॥ ४९ ॥
तेभ्यः सोऽसृजत्स्वीयं पुरं पुरुषमात्मवान्[1]। तान् दृष्ट्वा ये पुरा सृष्टाः प्रशशंसुः प्रजापतिम् ॥ ५० ॥
अहो एतज्जगत्स्रष्टः सुकृतं बत ते कृतम्। प्रतिष्ठिताः क्रिया यस्मिन् साकमन्नमदामहे ॥ ५१ ॥
तपसा विद्यया युक्तो योगेन सुसमाधिना[2]। ऋषीनृषिर्हृषीकेशः ससर्जाभिमताः प्रजाः ॥ ५२ ॥
तेभ्यश्चैकैकशः[3] स्वस्य देहस्यांशमदादजः। यत्तत्समाधियोगर्द्धितपोविद्याविरक्तिमत् ॥ ५३ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां तृतीयस्कन्धे विंशोऽध्यायः॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका।

यदा मन्यमानोऽभूत्तदा मनून्ससर्ज ॥ ४९ ॥ ❀ ❀ तेभ्यः स्वीयं पुरुषं पुरुपाकारं पुरं देहमत्यसृजद्ददौ तान्मनून् ॥ ५० ॥ ❀ ❀ ते त्वया यत्कृतं तत्सुकृतम्। सुकृतत्वमाहुः। यस्मिन्मनुसर्गे क्रिया अग्निहोत्राद्याः। अतोऽस्मिन्सर्वे वयं साकं सहान्नं हविर्भागाद्यदाम भक्षयाम हे ब्रह्मन् ॥ ५१ ॥ ❀ ❀ कायसृष्टिमुक्त्वा ऋषीणां सृष्टिमाह। तपसेति। विद्या उपासना योगोऽत्रासनादिः सुसमाधिर्वैराग्यैश्वर्यादियुक्तः समाधिः तेन च युक्तः हृषीकेशः स्ववशेंद्रियः सन् ऋषिर्ब्रह्मा ऋषीन्प्रजाः ससर्ज ॥ ५२ ॥ ❀ ❀ किं तद्देहं यस्यांशमदादित्यत आह। यदिति। समाधिश्च योगश्च ऋद्धिश्च ऐश्वर्यं तपश्च विद्या च विरक्तिश्च विद्यंते यस्मिंस्तत् ॥ ५३ ॥

इति तृतीयस्कंधे टीकायां विंशोऽध्यायः ॥ २० ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः।

चिंतानंतरं सृष्टिर्मे पूर्णैव समपद्यतेति मनसि मिथुनं सिसृक्षतस्तस्य यदानंदो जातस्तस्मान्मनवो बभूवुस्ते च सृष्टिपूर्तिमयीं पुरुषाकारतां जगृहुरित्याह—स इति। मनूनिति तेषु तदा स्वायंभुवो मनुः प्रकटं सर्वैरदृश्यतान्ये च यथासमयं सर्वे दृश्या इति ज्ञेयम्। अत्रांतेति पदोपन्यासान्मनुसर्गोऽयं सर्वांतिमो ज्ञेयः। अत एतदनंतरं वक्ष्यमाणोऽप्यृषिसर्ग एतत्पूर्व एव ज्ञेयः। अत्र दशमद्वादशविंशाध्यायेषु कचित्क्रमेण कचिन्मंडूकप्लुतिसिंहावलोकनादिन्यायात्क्रमातिक्रमेणाप्युक्तानां सर्गाणामयं क्रमो ज्ञेयः। प्रथमं पञ्चपर्वाविद्यासर्गस्ततो वनस्पतिवृक्षादिसर्गस्ततस्सर्पादिसर्गस्ततो गोमहिष्यादिसर्गस्ततो यक्षराक्षसासुरकिन्नरकिंपुरुषादिसर्गस्ततश्च सनकादिमरीच्यादिसर्गस्ततो मनुष्यसर्गः सर्वांते मनुसर्गस्ततः पूर्वसृष्टोऽपि स्त्रीपुंसरूपेण वर्द्धते स्मेति ॥ ४९ ॥ ५० ॥ ❀ ❀ एतन्मनुसृष्टिरूपं ते कृतं कर्म सुकृतं शोभनमस्ति। प्रतिष्ठिता भवेयुस्तैर्मनुभिः पालनादिति भावः। यत एतत्सर्गोऽग्निहोत्रादिपालकोऽस्ति अतो हेतोः अस्मिन्मनुसर्गे। हे इति पृथक्पदम् ॥ ५१ ॥ ❀ ❀ ततो विद्यया युक्तस्य ब्रह्मणो मानुषीं सृष्टिमाह तपसेति। ऋषीन्सनकादीन्मरीच्यादींश्च ॥ ५२ ॥ ❀ ❀ तेभ्य ऋषिभ्यः यत्समाध्यादिमत्तददादित्यन्वयः ॥ ५३ ॥

इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे तृतीयस्कन्धे विंशोऽध्यायः ॥ २० ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

कृत्यस्य परमार्थत्वाभावादिवेत्युक्तम्। लोकभावनान् कर्मणा सर्वलोकोद्भवहेतून् ॥ ४९ ॥ ❀ ❀ आत्मवान् समष्टिजीवत्वात्सर्वाश्रयः। आत्मन इति पाठे परमात्मनः प्रकाशस्थानं "पुरुषत्वे चाविस्तरामात्मा" इति श्रुतेः ॥ ५० ॥ ❀ ❀ अतः प्रतिष्ठितक्रियाश्रयत्वात् ॥ ५१ ॥ ❀ ❀ कर्मिणां सृष्टिकर्तृणां मनूनां सृष्टिकार्य्येति लेखकभ्रमः ॥ ५२ ॥ ❀ ❀ यत्समाध्यादिमत् तत्तस्य स्वस्य देहस्यांशं समाध्यादिकमेवादादित्यन्वयः ॥ ५३ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीराधारमणदासगोस्वामिविरचितायां दीपिकाटिप्पण्यां विंशोऽध्यायः ॥२०॥

---

१. प्रा० पा०—ऽसृजद्देहं पुरं पुरुषमात्मनः। २. प्रा० पा०—स समा०। ३. प्रा० पा०—कशस्तस्य।

### श्रीमद्वीरराघवव्याख्या

स आत्मभूर्यदात्मानं कृतकृत्यमिव मन्यमान आसीत्तदा अन्ते साक्षात्स्वकर्तृकसर्गान्ते मनसा लोकभावनान् प्रजास्रष्टॄन् मनूनसृजत् ॥ ४९ ॥ ❀ ❀ तेभ्यो मनुभ्यः स ब्रह्मा आत्मनः स्वस्य पुरुषं पुरुषाकारं पुरं देहमत्यसृजद्ददौ आत्मवत् पुरुषाकारदेहविशिष्टानकरोदित्यर्थः। पुरा पुरुषाकारदेहेन तद्विशिष्टत्वेन रूपेणेत्यर्थः। ये पुरा सृष्टा इति हेतुगर्भं यतः पुरुषाकारदेह-विशिष्टत्वेन सृष्टा अतस्ते पुरं दृष्ट्वा प्रजापतिं प्रशशंसुः ॥ ५० ॥ ❀ ❀ प्रशंसामेवाह। अहो इति हे जगत्स्रष्टः! ते त्वया कृतं निर्मितं एतत्पुरुषाकारं शरीरमहो सुकृतं सुष्ठु कृतं यस्मिन् पौरुषे देहे क्रियाः स्वर्गापवर्गसाधनभूताः क्रियाः प्रतिष्ठिताः सर्वाः क्रियाः पौरुषशरीरसाध्या इत्यर्थः। अतः साकं पौरुषशरीरेण सहान्नं भोग्यजातमदामहेऽनुभवेम ॥ ५१ ॥ ❀ ❀ विद्या भगवदुपासना तपः विवेकादिसाधनसप्तकं ताभ्यां युक्तः हृषीकाणां व्यष्टीन्द्रियाणामीशः जितेन्द्रियः ऋषिर्ब्रह्मा योगेन प्रकृतिविवि-क्तात्मयाथात्म्यज्ञानयोगेन समाधिना चित्तैकाग्र्येण च ऋषीन् ऋषिरूपा अभिमताः प्रजाः ससर्ज ॥ ५२ ॥ ❀ ❀ अजः ब्रह्मा स्वस्य देहस्य शरीरस्य एकैकमंशं तेभ्य ऋषिभ्योऽदाद्ददौ किन्तच्छरीरं यस्यैकैकमदादित्यत आह। यच्छरीरं तपोविद्यासमा-धियोगाः पूर्वोक्ताः ऋद्धिरणिमाद्यैश्वर्यं विरक्तिर्विषयेषु निःस्पृहत्वमेभिर्युक्तमित्यर्थः ॥ ५३ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायां विंशोऽध्यायः ॥ २० ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

सृष्टानां सर्वेषां सर्वकर्माधिकारित्वेनोपकारकत्वेन मनुसृष्टिमाह। स आत्मानमिति। यदात्मभूर्ब्रह्मात्मानं देहं कृतकृत्य-मिव मन्यमानोऽभूत्तदन्तेऽवसाने मनःपूर्वकं लोकभावनान् लोकवृद्धिकरान् मनून् ससर्ज। स परः पुरुषो ब्रह्मात्मनस्तं देहं तेभ्यो व्यसृजदित्यन्वयः। सर्वस्याः सृष्टेरियं सृष्टिः प्रशस्तेति भावेनाह। तां दृष्ट्वेति। ये पुरा सृष्टा देवास्ते तां मनुसृष्टिं दृष्ट्वा हो इति प्रजापतिं प्रशशंसुः ॥ ४९ ॥ ५० ॥ ❀ ❀ एतदेव विवृणोति। एतदिति। हे जगतः स्रष्टस्ते तवैतत्कृत्यं कर्म सुष्ठु कृतं पर्या-प्तमितोऽधिकं नास्तीत्यर्थः। बतेत्यनेन ता अब्रुवन् सुकृतं बतेति श्रुतिर्मानमिति। किंच यस्मिन्मनुसर्गे यागादिक्रियाः प्रतिष्ठिताः ततः प्रयोजनमाह। साकमिति। तैर्दत्तमन्नं भवता साकमदामहे तेनास्मत्प्रसादात्तेषामपि महती प्रजावृद्धिः स्यादित्यदामहे इति व्यत्ययेन प्रयोजनमसूचि। 'दृष्ट्वा तु पौरुषीं सृष्टिं देवाः सुकृतमूचिरे।' इत्यनेन ये पुरा सृष्टा असुरास्ते तां सृष्टिं दृष्ट्वा प्रजापतिं प्रशशंसुरित्य-पव्याख्यानं प्रत्युक्तं देवसृष्ट्यनन्तरत्वाच्च ॥ ५१ ॥ ❀ ❀ सुरसृष्टेः प्रथमतः कृतमप्यृषिसर्गं देवासुरादिसाधारणत्वप्रकटनाय तत्सर्गं पश्चाद्वक्ति। तपसेति। हृषीकेशो ब्रह्मान्तर्यामी तपआदिना युक्तः सर्वस्मादादौ सर्वाभिमताः प्रजा ऋषीन् ससर्जेत्यन्वयः। सर्वत्रापि श्रीनारायण एव ब्रह्मान्तर्यामित्वेन स्रष्टा नान्य इति प्रकाशनाय हृषीकेश इति भगवत्येव रूढं नाम प्रायोजीति ज्ञातव्यम-भेदाभिप्रायेण किं न स्यादिति चेन्न दैत्योपद्रवे तत्परिहाराय ब्रह्मणा क्रमेण विष्णुशरणोपगतेरुक्तत्वात्। यत्रापि तु हरेर्नाम तदन्यत्र प्रयुज्यते। "तदान्तरहरेस्तत्र गृहीतिर्नान्यथा भवेत्। स्वातन्त्र्यादवरत्वं च परस्यापि प्रयुज्यते। स्मितस्यापि यथा राज्ञः स्वानां जयपराजयौ।" इत्यनेन मुख्यार्थानुपपत्तावमुख्यार्थोपपत्तेः सिद्धत्वात् ॥ ५२ ॥ ❀ ❀ अजो ब्रह्मा यत्तत्स्वशरीरं समाधि-योगपूर्तिमत्तपोविद्याविरक्तिमच्च तस्य शरीरस्यैकैकांशं समाध्यादिकं तेभ्य ऋषिभ्यः प्रादादित्यन्वयः ॥ ५३ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्यां विंशोऽध्यायः ॥ २० ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

कृतकृत्यमिवेति इवशब्दात् कृतं पूर्वकृत्यमित्यर्थः। मनून् मनुष्यान् लोकभावनान् कर्मणा सर्वलोकोद्भवहेतून् अत एव श्रीमनोः प्रजा भविष्यन्ति ॥ ४९ ॥ ❀ ❀ तेभ्य इति आत्मवान् परमाश्रयः सन्नित्यर्थः। आत्मनः इति पाठस्तु प्रायो दृश्यते। तत्र परमात्मनः पुरं प्रकाशस्थानमित्यर्थः ॥ ५०—५३ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भस्य विंशोऽध्यायः ॥ २० ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

चिन्तानन्तरं सृष्टिर्मे पूर्णेव सम्पद्येतेति मनसि यदा मिथुनं सिसृक्षतस्तस्य आनन्दो बभूव तदा तस्मात् मनवो अभूवंस्ते च सृष्टिपूर्तिमयीं पुरुषाकारतां जगृहुरित्याह। स आत्मानमिति द्वाभ्याम् मनूनिति। तेषु इदानीं स्वायम्भुवो मनुः प्रकटं सर्वैरदृश्यत अन्ये च यथासमयं दृश्या इति ज्ञेयमत्रान्ते इति पदोपन्यासान्मनुसर्गोऽयं सर्वान्तिमो ज्ञेयः अत एतदनन्तरं वक्ष्यमाणोऽपि ऋषिसर्ग एतत् पूर्वत्रैव ज्ञेयः। अत्र दशमद्वादशविंशाध्यायेषु क्वचित् क्रमेण क्वचिन्मण्डूकप्लुतिसिंहावलोकादिन्यायात् क्रमातिक्रमेणाप्युक्तानां सर्गाणामयं क्रमो ज्ञेयः—प्रथमं पञ्चपर्वाविद्यासर्गः ततो वनस्पतिवृक्षादिसर्गः ततः सर्पादिसर्गः। ततो गोमहिष्यादिसर्गः। ततो यक्षराक्षसासुरकिन्नर किं पुरुषादिसर्गः ततश्च सनकादिमरीच्यादिसर्गः

ततो मनुष्यसर्गः सर्वान्ते मनुसर्गस्ततः पूर्वसृष्टा अपि स्त्रीपुंस्वरूपेण वर्द्धन्ते स्मेति ॥ ४९ ॥ ❀ ❀ स्वीयं पुरं पुरुषाकारं देहमत्यसृजद्ददौ ॥ ५० ॥ ❀ ❀ हे जगत्स्रष्टस्ते त्वया यस्मिन्मनुसर्गे सति क्रिया अग्निहोत्राद्याः प्रतिष्ठिता भवेयुस्तैर्मनुभिः पालनादिति भावः । साकं सहैव वयं सर्वे अन्नं हविर्भागादिकमदाम भक्षयामहे हे इति पृथक् पदम् ॥ ५१ ॥ ❀ ❀ ततो विद्यया युक्तस्य ब्रह्मणो मानुषीं सृष्टिमाह । तपसेति । विद्या उपासना योगोऽष्टाङ्गः सुसमाधिर्ज्ञानवैराग्ये हृषीकेशः स्ववशेन्द्रियः सन्नृषीन्सनकादीन् ॥ ५२ ॥ ❀ ❀ किन्तद्देहं यस्यांशमदादित्यत आह । समाधिर्ज्ञानञ्च योगश्च ऋद्धिरणिमाद्यैश्वर्यं च तपश्च विद्या च विरक्तिश्च विद्यन्ते यस्मिंस्तत् । एतदनन्तरं रुद्रोद्भवस्ततश्च मरीच्यादिसृष्टिर्द्वादशाध्याये ज्ञेयाः ॥ ५३ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् । तृतीये विंशतितमः सङ्गतः सङ्गतः सताम् ॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

यदात्मानं कृतकृत्यं मन्यमानः आसीत्तदा ॥ ४९ ॥ ❀ ❀ तेभ्यो मनुभ्यः स्वीयपुरुषं पुरुषाकारं पुरं देहम् अत्यसृजत् अत्यादरेण ददौ । तान् मनून् ॥ ५० ॥ ❀ ❀ एतत्पुरुषाकारं शरीरं ते त्वया कृतं भवति यस्मिन् क्रियाः भुक्तिमुक्तिसाधनरूपाः प्रतिष्ठिताः अतः अस्मिन् । साकं सह वयमन्नमदाम हविर्भागादि भक्षयामः हे ब्रह्मन् ! ॥ ५१ ॥ ❀ ❀ तपआदियुक्तः हृषीकेशः जितेन्द्रियः विरक्तियुक्त इत्यर्थः । तथा च पञ्चगुणयुक्तः पञ्चविधान् ऋषीन् प्रजाः ससर्जेत्यर्थः ॥ ५२ ॥ ❀ ❀ तेभ्यः पञ्चप्रकारेभ्य एकैकशः स्वस्य तपआदिपञ्चगुणयुक्तस्य देहस्य अंशमेकैकं तपआदिगुणभेदम् अदात् । कः सन्देहः यस्यांशमदादित्यत आह । यदिति । यत् शरीरम् । समाधिश्च योगर्द्धिश्च तपश्च विद्या च विरक्तिश्च ताः विद्यन्ते यस्मिन् तत् ॥ ५३ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे विंशाध्यायार्थप्रकाशः ॥ २० ॥

## श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

एवं नवविधां सृष्टिमुक्त्वा स्वस्य गुणातीतभावनया कांचित् सृष्टिं कृतवान् । तामाह—स आत्मानमिति । यदैव पुरुषः स्वस्मिन् गुणातीतेऽवतिष्ठते । तदैव कृतकृत्योऽहमित्यात्मानं स मन्यते ॥ इवेति भावनया तथात्वात् । एवं भावे हेतुः—आत्मभूरिति । आत्मनो भगवतः सकाशात् जातः । तदा मनून् ससर्ज । मनसा शरीरस्थानीयेन । मनवोऽत्र चतुर्दश मुख्याः, अन्येऽपि बहवस्तद्विधाः । स्वसृष्टेरन्ते । नाऽतः परं ब्रह्मणः सृष्टिः, ऋषिसृष्टिस्तु वेदात्मकभगवतः । एतेषामुत्कर्षमाह—लोकभावनानिति । लोकाननुभावयन्ति धर्मादिभिरिति ॥ ४९ ॥ ❀ ❀ तदा ब्रह्मा स्वस्य सामर्थ्यं तेभ्यो दत्तवानित्याह—तेभ्य इति । पुरं ब्रह्माण्डात्मकम् । तदेव तेभ्यः कालतो विभज्य दत्त[1]वान्, यतः स पुरुषः । ते हि पुरं पालयिष्यन्ति, स्वयं शयिष्यत इति । तदा बहवो मनवो ब्रह्मस्थानीया जाता इति पूर्वसृष्टानां सुखं जातमित्याह—तान् दृष्ट्वेति । ये मन्वपेक्षया पुरा सृष्टाः, ते प्रजापतिं प्रशशंसुः ॥ ५० ॥ ❀ ❀ प्रशंसामेवाऽऽह—अहो इति । सृष्टिरत्यन्ताश्चर्यरूपा, वयमपि तेनैव सृष्टाः, एतेऽपि । तथापि कारणतुल्यत्वेऽप्युत्तमा जाता इत्येतत्कृतमेव जगत्स्रष्टुः सुकृतम् । बतेति हर्षे, स्वकारणादुत्तमं जातमिति । हेत्वन्तरमप्याह—प्रतिष्ठिताः क्रिया यस्मिन्निति । यस्मिन् कृते मनुरूपे, क्रिया धर्मादिरूपाः, प्रकर्षेण स्थिताः । अनेन धर्मो मोक्षश्च सिद्ध उक्तः । साकमन्नमदामह इति चाऽर्थः कामश्च । एवं सर्वपुरुषार्थसाधकता ॥ ५१ ॥ ❀ ❀ उत्कृष्टभगवद्भावेन सृष्टिमाह—तपसेति । ज्ञानकर्मभक्तिभिर्हृषीकेशो भगवान्, ऋषीन् सर्ववेदादिप्रवर्तकान्, [2]अभिमतप्रजारूपान्, ससर्ज तपोऽत्र ज्ञानम्, विद्या भक्तिः । योगेन युक्तो भगवद्भावं प्राप्तः, समाध्यन्तेन योगेन वा युक्तः । [3]सर्वैः भगवत्ता वा, इन्द्रियपतित्वात् स्रष्टुः । ऋषयो जितेन्द्रियास्त्रिविधाश्च; ज्ञाननिष्ठाः, कर्मनिष्ठाः, भक्तिनिष्ठाश्चेति । ऋषिश्चासौ हृषीकेशश्च, शब्दार्थब्रह्मरूप इत्यर्थः ॥ ५२ ॥ ❀ ❀ भगवतः षड्गुणा एकीभूताः कर्तृविशेषणभूता इति सृष्टेभ्य एकैकमंशमदादित्याह—तेभ्य इति । हि युक्तश्चाऽयमर्थः, यदंशपुरस्कारेण ये सृष्टाः, तेभ्यः सोंऽशो देय इति । स्वार्थं तु नापेक्ष्यते, यतोऽयमजः, अतः परं पुत्रादिरूपेण न भविष्यतीति । तानेवांशानाह—यत्तदिति । [4]यदेव यस्य तदेव तस्येत्यर्थः । ऐश्वर्यादिषु षट्सु समाध्यादयः षडन्तर्भाव्याः, तत्त्वेन वा व्याख्येयाः; भिन्ना वा । एते प्रकृतोपयोगिभगशब्दवाच्याः[5] । समाधिश्चित्तैकाग्र्यम्, योगस्तस्योपायः, ऋद्धिः फलं तस्य; इति त्रयमेका कोटिः । तपो ज्ञानम्, विद्या भक्तिः, वैराग्यं चेत्यपरा । विद्यैव यशः, ऋद्धिरेव श्रीः, योगो बलम्, समाधिरैश्वर्यमिति । सम्यगाधिः शत्रूणां यस्मादिति योगश्च । ऋषयो हि भगवत एकैकमंशं संपादयन्तीति ॥ ५३ ॥

इति श्रीभागवतसुबोधिन्यां श्रीलक्ष्मणभट्टात्मजश्रीवल्लभदीक्षितविरचितायां तृतीयस्कन्धे विंशाध्यायविवरणम् ।

---

१. इतिः पूर्वं 'तत्' इत्यधिकम् क. ग. । २. इतः प्राक् 'अभिमतप्र'. इति पाठः क्वचित् पुस्तकेषु दृश्यते । ३. यावदस्य. क. ख. ग. ङ. । ४. षड्गुणेषु ख. षट्स्वेते ग. । ५. भगवच्छब्दवाच्याः ग. ङ. ।

### श्रीगिरिधरकृता बालप्रबोधिनी

स आत्मभूर्ब्रह्मा यदात्मानं कृतकृत्यमिव मन्यमानोऽभूत्तदा अन्ते लोकभावनान् धर्मादिप्रवर्त्तनेन सर्वलोकपालकान् मनून् मनसा ससर्जेत्यन्वयः ॥ ४९ ॥ ❀ ❀ तेभ्यो मनुभ्यः स्वीयं पुरुषं पुरुषाकारं पुरं देहं स ब्रह्मा अन्वसृजन् ददौ । तत्र हेतुमाह—आत्मवानिति, आत्मानो जीवास्तेषां सर्वेषां स्वामीत्यर्थः । तान् मनून् दृष्ट्वा ये पुरा तेभ्यः पूर्वं सृष्टा देवादयस्ते तं प्रजापतिं प्रशशंसुः ॥ ५० ॥ ❀ ❀ प्रशंसामेवाह—अहो इति । तवैवमुचितमेवेत्याशयेन सम्बोधयन्ति—जगत्स्रष्टरिति । एतन्मनुष्याकारनिर्माणं ते त्वया सुकृतं कृतं सुष्ठु कार्यं कृतम् । बतेति हर्षं सूचयन्ति । अस्मदादीनपि त्वमेव सृष्टवान् परन्तु नैतादृशा वयमित्याश्चर्यं सूचयन्ति—अहो इति । उक्तमेव सुकृतत्वं स्पष्टयन्ति—प्रतिष्ठिता इति । यस्मिन् पुरुषशरीरक्रियाः स्वर्गापवर्गादिपुरुषार्थसाधनभूताः प्रतिष्ठिताः, सर्वाः क्रियाः पुरुषशरीरसाध्या इत्यर्थः । अतः साकं पुरुषशरीरेण सह यज्ञादिद्वारा वयमप्यन्नं भोगजातमदामहे अनुभवेम ॥ ५१ ॥ ❀ ❀ तपसा ज्ञानेन विद्यया भगवदुपासनया सुसमाधिना सम्यक् समाधिपर्यन्तेन यमनियमाद्यष्टाङ्गयोगेन युक्तः हृषीकेशो हृषीकाणीन्द्रियाणि तेषामीशः वशीकृतसकलेन्द्रियश्च सन् ऋषिर्वेदद्रष्टृत्वेन सर्वोपायाभिज्ञो ब्रह्मा ऋषीन् ऋषिरूपाः स्वाभिमताः प्रजाः ससर्जेत्यन्वयः ॥ ५२ ॥ ❀ ❀ तत्पूर्वोक्तं ऋषीणामुत्पादकं समाधिपर्यन्तो योगश्च तज्जनिता ऋद्धयः अणिमादयः सिद्धयश्च तपो ज्ञानं च विद्या उपासना च विरक्तिश्च तद्वत् यच्छरीरं तस्य देहस्यैकैकशोंऽशं तेभ्य ऋषिभ्योऽदात् । एकस्मै एकस्मै यथाधिकारं भक्तिज्ञानयोगादिषु मध्ये एकमेकमदादित्यर्थः । अतएव केचिज्ज्ञानप्रधानाः केचिद्भक्तिप्रधानाः केचिद्योगप्रधानाः दृश्यन्ते इत्याशयः ॥ ५३ ॥

इति श्रीवल्लभाचार्यवंश्यगोपालसूनुना ॥ श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा ॥ १ ॥
श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये ॥ श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी ॥ २ ॥
रचिता च तृतीयेऽत्र मोक्षसर्गनिरूपणे ॥ विंशोऽगान्महदादीनां वृत्तिं सर्गनिरूपकः ॥ ३ ॥

### हिन्दी अनुवाद

एक बार ब्रह्माजीने अपनेको कृतकृत्य-सा अनुभव किया । उस समय अन्तमें उन्होंने अपने मनसे मनुओंकी सृष्टि की । ये सब प्रजाकी वृद्धि करनेवाले हैं ॥ ४९ ॥ ❀ ❀ मनस्वी ब्रह्माजीने उनके लिये अपना पुरुषाकार शरीर त्याग दिया । मनुओंको देखकर उनसे पहले उत्पन्न हुए देवता-गन्धर्वादि ब्रह्माजीकी स्तुति करने लगे ॥ ५० ॥ ❀ ❀ वे बोले, 'विश्वकर्ता ब्रह्माजी ! आपकी यह ( मनुओंकी ) सृष्टि बड़ी ही सुन्दर है । इसमें अग्निहोत्र आदि सभी कर्म प्रतिष्ठित हैं । इसकी सहायतासे हम भी अपना अन्न ( हविर्भाग ) ग्रहण कर सकेंगे' ॥ ५१ ॥ ❀ ❀ फिर आदिऋषि ब्रह्माजीने इन्द्रियसंयमपूर्वक तप, विद्या, योग और समाधिसे सम्पन्न हो अपनी प्रिय सन्तान ऋषिगणकी रचना की और उनमेंसे प्रत्येकको अपने समाधि, योग, ऐश्वर्य, तप, विद्या और वैराग्यमय शरीरका अंश दिया ॥ ५२-५३ ॥

२० वाँ अध्याय समाप्त

# अथैकविंशोऽध्यायः

विदुर उवाच

स्वायम्भुवस्य च मनोर्वंशः परमसम्मतः। कथ्यतां भगवन् यत्र मैथुनेनैधिरे प्रजाः ॥ १ ॥
प्रियव्रतोत्तानपादौ सुतौ स्वायम्भुवस्य वै। यथाधर्मं जुगुपतुः सप्तद्वीपवतीं महीम् ॥ २ ॥
तस्य वै दुहिता ब्रह्मन्देवहूतीति विश्रुता। पत्नी प्रजापतेरुक्ता कर्दमस्य त्वयानघ ॥ ३ ॥
तस्यां स वै महायोगी युक्तायां योगलक्षणैः। ससर्ज कतिधा वीर्यं तन्मे शुश्रूषवे वद ॥ ४ ॥
रुचिर्यो भगवान् ब्रह्मन्दक्षो वा ब्रह्मणः सुतः। यथा ससर्ज भूतानि लब्ध्वा भार्यां च मानवीम् ॥ ५ ॥

मैत्रेय उवाच

प्रजाः सृजेति भगवान् कर्दमो ब्रह्मणोदितः। सरस्वत्यां तपस्तेपे सहस्राणां समा दश ॥ ६ ॥
ततः समाधियुक्तेन क्रियायोगेन कर्दमः। सम्प्रपेदे हरिं भक्त्या प्रपन्नवरदाशुषम् ॥ ७ ॥
तावत्प्रसन्नो भगवान् पुष्कराक्षः कृते युगे। दर्शयामास तं क्षत्तः शाब्दं ब्रह्म दधद्वपुः ॥ ८ ॥
स तं विरजमर्काभं सितपद्मोत्पलस्रजम्। स्निग्धनीलालकव्रातवक्त्राब्जं विरजोऽम्बरम् ॥ ९ ॥
किरीटिनं कुण्डलिनं शङ्खचक्रगदाधरम्। श्वेतोत्पलक्रीडनकं मनःस्पर्शस्मितेक्षणम् ॥ १० ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

**एकविंशे तपोविद्यातोषितेन तु विष्णुना ॥ कर्दमस्य मनोः पुत्र्या विवाहघटनोच्यते ॥**

एधिरे एधांचक्रिरे ॥ १ ॥ ❀ ❀ धर्मं महीं च यथा जुगुपतुः ररक्षतुस्तन्मे वदेति तृतीयेनान्वयः ॥ २ ॥ ❀ ❀ तस्य मनोः ॥ ३ ॥ ❀ ❀ योगलक्षणैर्यमादिभिर्युक्तायाम्। कतिधा वीर्यं ससर्ज कति पुत्रानुत्पादयामासेत्यर्थः ॥ ४ ॥ ❀ ❀ मानवीं मनोः कन्यामाकूतिं च प्रसूतिं च भार्यां लब्ध्वा यथा भूतानि ससर्ज तच्च वदेति चकारस्यार्थः ॥ ५ ॥ ❀ ❀ सहस्राणां समा दश दशसहस्राणि संवत्सरानित्यर्थः ॥ ६ ॥ ❀ ❀ ततस्तस्मिंस्तपसि क्रियायोगेन पूजाप्रकारेण संप्रपेदे सिषेवे प्रपन्नेभ्यो भक्तेभ्यो वरदातारम् ॥ ७ ॥ ❀ ❀ शब्दैकवेद्यं यद्ब्रह्म तन्मयं वपुर्दधत्तं प्रत्यात्मानं दर्शयामास ॥ ८ ॥ ❀ ❀ स कर्दमस्तं खेऽवस्थितं दृष्ट्वा मूर्ध्ना क्षितावपतत्। गीर्भिश्चाभ्यगृणादिति चतुर्णामन्वयः। पद्मोत्पले दिनरात्रिविकासे सितानां पद्मानामुत्पलानां च स्रक् यस्य तम्। स्निग्धा नीलाश्च येऽलकास्तेषां व्रातो वक्त्राब्जे यस्य ॥ ९ ॥ ❀ ❀ श्वेतोत्पलं क्रीडनकं यस्य मनःस्पर्शं मनस्यानंदजनकं स्मितमीक्षणं च यस्य तम् ॥ १० ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

घटना रचना ॥ परमसंमतोऽतीव श्रेष्ठः। एधिरे एधांचक्रिरे आर्षत्वादाम्न ॥ १ ॥ २ ॥ ❀ ❀ तस्य मनोः। देवहूती देवहूतिरत्र ङीवार्षः। कचित् 'देवहूतिरिति श्रुता' इत्यपि पाठः। अनघेति दर्शनादिना पापनिवर्त्तकोऽसीत्याह ॥ ३ ॥ ❀ ❀ तस्यां देवहूत्याम्। स कर्दमः। इत्यर्थ इति। पुत्रानपत्यानीति भावः। पुत्रपदं स्वामिचरणैरुपलक्षणत्वेनोपन्यस्तमत्रेति ज्ञेयम् ॥ ४ ॥ ५ ॥ अत्र मनुपुत्रयोश्चरितस्यादौ वक्तव्यत्वेऽपि सूचीकटाहन्यायेन देवहूतिचरिताविनाभूतं कर्दमचरितं वक्तुमुपक्रमते–प्रजा इति। इत्यर्थ इति। समा दशेति "कालाध्वनोरत्यंतसंयोगे" इति द्वितीयेति भावः। बहुत्वमार्षं 'विंशत्याद्याः सदैकत्वे' इत्युक्तेः ॥ ६ ॥ ❀ ❀ तत इति सप्तम्यर्थे तसिल्। अत उक्तं तस्मिंस्तपसीति स्वामिचरणैः ॥ ७ ॥ ❀ ❀ तावदिति। यावत्संप्रपेदे तावदिति। सति पूजने तत्प्रसादोऽविलंबेनैवास्तीति सूचितम्। तन्मयं चिद्घनं न तु मायिकभौतिकमिति ॥ ८ ॥ ❀ ❀ स कर्दमः। विगतं रजो भक्तानां यैः कर्मभिस्तानि विरजानि अदन्तत्वमार्षम्। तादृशानि कर्माणि यस्य तम् ॥ ९ ॥ ❀ ❀ शंखादित्रयोक्तेश्चतुर्थे हस्ते श्वेतोत्पलमेव धृतं कंजस्थान इति ज्ञेयम् ॥ १० ॥

---

१. प्रा. पा. स समा०।

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या ।

विष्णुना किष्णुकर्तृका विवाहरचनोच्यते मैत्रेयेणेति शेषः । यत्र मनुवंशे ॥ १ ॥ ❀ ❀ तत् तं प्रकारम् ॥ २ ॥ ❀ ❀ देवदूतीति पाठान्तरं हेयमप्रसिद्धत्वात् ॥ ३ ॥ ❀ ❀ वीर्य्यशब्दस्य वीर्य्यजन्यपुत्रेषु लक्षणा अत इत्यर्थोक्तिः तत्संख्याविशिष्टं पुत्रोत्पादनम् ॥ ४ ॥ ❀ ❀ तत् तं रुचेः सृष्टिप्रकारकम् ॥ ५ ॥ ❀ ❀ सहस्राणामिति बहुवचन-मार्षम् । सहस्रसङ्ख्यामात्रस्य विवक्षितत्वात् यथा सङ्ख्यायाः सम्वत्सरसम्बन्धित्वं तथा सम्वत्सराणामपि सङ्ख्यासम्बन्धित्वं सम्बन्धस्योभयनिष्ठत्वात्तथा च दशसहस्राणि सम्वत्सरानित्यार्थिकोऽर्थः ॥ ६ ॥ ❀ ❀ समाधियुक्तेन चित्तैकाग्र्यसम्पन्नेन पूजाप्रकारेण या सञ्जाता प्रेमभक्तिस्तया सिषेव इति योजनीयम् । भक्त्या सञ्जातया भक्त्येतिवत् ॥ ७ ॥ ❀ ❀ तावत्तावत्ता दशसहस्रवर्षपरिमितेन कालेन यद्ब्रह्म परब्रह्म तन्मयं तत्स्वरूपम् ॥ ८ ॥ ❀ ❀ स तमिति चतुष्कम् । कर्दमसृष्टेः पूर्वं विनताया जन्माऽभावाद्गरुडस्य नित्यसिद्धत्वं व्यञ्जितम् ॥ ९—१२ ॥

### श्रीमद्वीरराघवव्याख्या

एवमसाधारणान् सृष्टिभेदानाकर्ण्य प्रकृतं स्वायंभुवमनुचरित्रं तद्वंशं च पृच्छति विदुरः । स्वायम्भुवमित्यादि पञ्चभिः । स्वायंभुवस्य मनोः परम उत्कृष्टः सत्तमः सतामिति शेषः कथ्यतां यत्र वंशे मैथुनेन कर्मणा प्रजा एधिरे ववृधिरे ॥ १ ॥ ❀ ❀ स्वायम्भुवस्य मनोः पुत्रौ प्रियव्रतोत्तानपादौ धर्मं यथा तद्वत् तत्तद्वर्णाश्रमधर्मानतिक्रम्येत्यर्थः । सप्तद्वीपयुक्तां पृथिवीं यथा जुगुपतुः यथा रक्षितवन्तौ तत्प्रकारश्च कथ्यतामित्यर्थः ॥ २ ॥ ❀ ❀ तस्य स्वायम्भुवस्य दुहिता पुत्री देवहूतिरिति श्रुता त्वत्तो मयेति शेषः । हे ब्रह्मन्ननघेति । द्वे सम्बोधने कर्दमस्य प्रजापतेः पत्नीति त्वयोक्ता च ॥ ३ ॥ ❀ ❀ योगलक्षणैः शमदमादि-भिर्युक्तायां तस्यां देवहूत्यां महायोगी परिपक्वभगवदुपासनात्मकयोगनिष्ठः स वै कर्दमः कतिधा कतिभिः प्रकारैः वीर्य्यं ससर्ज्ज कत्यपत्यान्यसृजदित्यर्थः । तच्छुश्रूषवे श्रोतुमिच्छवे मे मह्यं वद कथय ॥ ४ ॥ ❀ ❀ हे ब्रह्मन् मैत्रेय ! भगवान् षाड्गुण्यपूर्णः रुचिर्दक्षश्च ब्रह्मणश्चतुर्मुखस्य सुतः मानवीं मनुपुत्रीमाकूतिं प्रसूतिं च भार्यां लब्ध्वा भूतान्यपत्यानि यथा ससर्ज तत्प्रकारं मे वदेति पूर्वेणान्वयः ॥ ५ ॥ ❀ ❀ एवमापृष्टो मैत्रेयः तद्यथावन्मनुपुत्रचरित्रं वक्ष्यमाणस्तावद्देवहूत्याख्यभार्यालाभाय कर्दमस्य तपश्चर्याप्रकारमाह । द्वाभ्याम् । ब्रह्मणा चतुर्मुखेन प्रजाः सृजेत्युक्तो भगवान् कर्दमः सरस्वत्याख्यां नद्यां सहस्राणां दश समाः दशसहस्रसंवत्सरान् तपस्तेपे चकार । पाकं पचतीति वन्निर्देशः ॥ ६ ॥ ❀ ❀ ततस्तस्मिन् तपसि कर्दमः समाधिश्चित्तै-काग्र्यं तेन युक्तेन क्रियायोगेन स्ववर्णाश्रमोचितानभिसंहितफलभगवदाराधनरूपक्रियायोगेन भक्त्या ध्रुवानुस्मृतिरूपोपासनया च प्रपन्नानां वरदाशुषं वरप्रदं हरिं प्रपेदे सिषेवे ॥ ७ ॥ ❀ ❀ कृतयुगे तावद्दशसहस्रवर्षपर्यन्ततपश्चर्यान्ते पुण्डरीकाक्षो भगवान् प्रसन्नः तपसा तोषितः हे क्षत्तः ! शाब्दं पञ्चोपनिषन्मात्रवेद्यं ब्रह्म सौगन्ध्यसौकुमार्य्यलावण्ययौवनाद्यनन्तकल्याणगुणाकरं वपुर्दिव्यमङ्गलविग्रहं दधद्विभ्रत् कर्दमं प्रति दर्शयामास स्वात्मानमिति शेषः । यद्वात्मानमिति विग्रहापेक्षया पुल्लिङ्गनिर्देशः तं विग्रहं दर्शयामासेत्यर्थः ॥ ८ ॥ ❀ ❀ तमेव भगवन्तमनुवर्णयन् तं प्रणम्यास्तावीदित्याह । चतुर्भिः स इति । स कर्दमस्तं भगवन्तं दृष्ट्वा कथंभूतं तं विरजं निर्मलमर्काभमर्कस्य सूर्यस्येवाभा यस्य तं सितानां पद्मानामुत्पलानां च स्रजो यस्य तं स्निग्धा नीलाश्च येऽलकाः कुन्तलास्तेषां व्रातो वक्त्राब्जे यस्य तं विरजं निर्मलमम्बरं पीताम्बरं यस्य तम् ॥ ९ ॥ ❀ ❀ किरीटधारिणं कुण्डल-धारिणं त्रिभिर्हस्तैः शंखचक्रगदाः वहन्तं श्वेतोत्पलं क्रीडनं क्रीडासाधनं यस्य तमेकेन करेण लीलार्थं श्वेतोत्पलं वहन्तमित्यर्थः । मनःस्पर्शस्मितेक्षणं चित्तापहारिहासयुक्तावलोकनयुक्तम् ॥ १० ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली ।

अकामः सर्वकामो वा मोक्षकामो हरिं भजेदिति ॥ यदुक्तं पूर्वत्र तदिह कर्दमचरितव्याजेन प्रपञ्च्यतेऽध्यायत्रयेण तत्र मैत्रेयं विदुरः पृच्छति । स्वायंभुवस्येति । परमत्वेनोत्तमत्वेन संमतः संप्रतिपन्नस्तस्मात्कथ्यतामिति । हेत्वर्थे च शब्दः एधिरे एधाञ्च-क्रिरे ॥ १ ॥ ❀ ❀ देवहूत्याः कथाया अवश्यश्रोतव्यत्वेऽपि प्रथमतस्तत्कथने मनोः कन्यैव न तु पुत्राविति प्रतीतायास्तस्या अभ्रातृमतीत्वेन परिणेतुः प्राशस्त्यबुद्धिर्न स्यादिति तत्प्रीत्यै तत्पुत्रावाह । प्रियव्रतेति । वा इत्यनेनौरसत्वमवधारयति । एतच्चरितं वक्तव्यमित्यस्मिन्नर्थे वा ॥ २ ॥ ❀ ❀ देवहूत्या भ्रातृमतीत्वमुक्त्वा तच्चरितं श्रोतुमुक्तमनूद्य शेषं पृच्छति । तस्य वा इति । अस्तु मनोः पुत्री ततः किमित्यत आह । प्रजापतेरिति । त्वया या कर्दमस्य प्रजापतेर्जायेत्युक्ता ॥ ३ ॥ ❀ ❀ स कर्दमस्तस्यां कतिधा वीर्यं ससर्ज तद्वीर्यसर्जनलक्षणं चरितं यमनियमादियोगलक्षणैः ॥ ४ ॥ ❀ ❀ अनन्तरं रुचिदक्षयोश्चरितं वक्तव्य-मित्याह । रुचिरिति ॥ ५ ॥ ❀ ❀ मैत्रेयः प्रथमतो मनुपुत्रयोः कथाया वक्तव्यत्वेऽपि सूचीकटाहन्यायेन रुचिदक्षयोश्चरितयो-रनन्तरं पृष्टत्वाच्च देवहूतिचरिताविनाभूतं कर्दमचरितं वक्तुमुपक्रमते । प्रजा इत्यादिना । सहस्राणां दश समाः ॥ ६ ॥ ❀ ❀ किंविषयमिदं तप इति तत्राह । तत इति । समाधियुक्तेन क्रियायोगेन वैदिकतान्त्रिकलक्षणोपायेन दाशुषं दाश्रृ दाने वरदम् ॥ ७ ॥

❀ ❀ साधनसामग्रीफलमाह । तावदिति । यः स्वयं चित्तीकृतस्तमात्मानं शाब्दं वेदैकवेद्यं ब्रह्म सर्वगुणपूर्णम् "अथ कस्मादुच्यते ब्रह्मेति बृहन्तो ह्यस्मिन् गुणा" इति श्रुतिवेद्यत्वदर्शनाय ब्रह्मपदप्रयोगः वपुः शुभाकारं शुभाकारे तनौ वपुरिति न मायामयम् ॥ ८ ॥ ❀ ❀ शुभाकारत्वं विवृणोति । स तमिति ॥ ९ ॥ ❀ ❀ ❀ क्रीडनकं क्रीडासाधनं द्रष्टृणां मनःस्पर्शे मनोविषये स्मितेक्षणे यस्य स तथा तम् ॥ १०—११ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

देवहूतिरिति कचित्पाठः ॥ १—५ ॥ ❀ ❀ प्रजा इति । दशानां समानां सहस्राणीति यदि स्यात् तदा सम्बन्धस्योभयाश्रयत्वे सहस्राणामित्याद्यपि स्यादिति भावः । सहस्राणां तु बहुत्वमार्षम् ॥ ६—७ ॥ ❀ ❀ तावदिति यावता कालेन सम्यक् प्रपेदे तावतेत्यर्थः । शाब्दं शब्दब्रह्मप्रतिपाद्यं यत्परं ब्रह्म तत्स्वरूपं दधत् प्रकाशयत् ॥ ८ ॥ ❀ ❀ स तमिति चतुष्कम् । स्निग्धश्च नीलश्च अलकव्रातो यत्र तादृशं वक्त्राब्जं यस्य ॥ ९—१० ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

एकविंशे तपस्तुष्टः कर्दमेन स्तुतो हरिः । विवाहघटनामाह मनुस्तत्राजगाम च ॥

एधिरे एधाञ्चक्रिरे ॥ १ ॥ ❀ ❀ धर्मानतिक्रमेण यथा जुगुपतुस्तन्मे वदेति तृतीयेनान्वयः ॥ २ ॥ ❀ ❀ देवहूतीति देवहूतिरित्यर्थः ॥ ३ ॥ ❀ ❀ योगलक्षणैर्यमनियमादिभिः कतिधा वीर्यं ससर्ज कत्यपत्यान्युत्पादयामासेत्यर्थः ॥ ४ ॥ ❀ ❀ मानवीं मनोः कन्यामाकूतीं प्रसूतिञ्च ॥ ५ ॥ ❀ ❀ समा वर्षाणि दश सहस्राणीत्यर्थः ॥ ६ ॥ ❀ ❀ ततस्तपश्चरणान्तरं तावतापि तपसा दर्शनमप्राप्येत्यर्थः । समाधिश्चित्तैकाग्र्यं क्रियायोगेन पूजाप्रकारेण प्रसन्नेभ्यो भक्तेभ्यो वराणां दाशुषं दातारम् ॥ ७ ॥ ❀ ❀ तावदिति यावत् सम्प्रपेदे इति पूजायां सत्यां तत्प्रसादे विलम्बाभावः सूचितः । शाब्दं शब्दैकवेद्यं यद्ब्रह्म तन्मयं वपुर्दधदिति श्रीस्वामिचरणाः सच्चिदानन्दमयमाकारं दधत् प्रकटयन् कर्दमदत्तगन्धमाल्यनैवेद्याद्युपचारैः पुष्यन्निति वा ॥ ८—९ ॥ ❀ ❀ शङ्खचक्रगदाधरमित्युक्त्वा चतुर्थे हस्ते पद्मस्थाने श्वेतोत्पलमेव क्रीडनार्थं धृतवानित्याह । श्वेतेति । मनःस्पर्शं द्रष्टुर्मनः प्रमोदजनकं स्मितमीक्षणञ्च यस्य तम् । प्रीतिरेव स्वभावः स्वतः सिद्धो धर्मो यस्य तादृश आत्मा मनो यस्य सः ॥ १०—११ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

इत्थमवशिष्टं चतुर्मुखकृतं सर्गं श्रुत्वा प्रकृतं मनुवंशादिकं पृच्छति । स्वायम्भुवस्येति ॥ १ ॥ ❀ ❀ धर्मं महीं च यथा जुगुपतुः एतद्वदेति तृतीयेनान्वयः ॥ २ ॥ ३ ॥ ❀ ❀ योगलक्षणैर्यमादिभिः कतिधा कतिसंख्याकं वीर्यमपत्यं ससर्जोत्पादयामास ॥ ४ ॥ ❀ ❀ भार्यामाकूतीं रुचिर्दक्षः प्रसूतीं च ॥ ५ ॥ ❀ ❀ सहस्राणां समा दशसहस्राणि संवत्सराणीत्यर्थः ॥ ६ ॥ ❀ ❀ ततस्तस्मिंतपसि समाधियुक्तेन चित्तैकाग्र्ययुक्तेन क्रियायोगेन अर्चनप्रकारेण भक्त्या परया च प्रपन्नेभ्यः स्वशरणेभ्यः वरदातारं प्रपेदे सिषेवे ॥ ७ ॥ ❀ ❀ शाब्दं वेदैकवेद्यं ब्रह्म बृहत्स्वरूपगुणयुक्तं परं तत्त्वं तदेवाह । भगवान् वपुरप्राकृतं शरीरं दधत् कर्दमं प्रति दर्शयामास ॥ ८ ॥ ❀ ❀ स कर्दमस्तं भगवन्तं दृष्ट्वा मूर्ध्ना क्षितावपतत् गीर्भिश्चाभ्यगृणादिति चतुर्णामन्वयः । अर्कस्येवाभा यस्य तं सितानां शुक्लानां पद्मानामुत्पलानां च स्रक् यस्य तम् । स्निग्धनीलालकानां व्रातो वक्त्राब्जे यस्य तम् । मनःस्पर्शं मनोह्लादकरं स्मितमीक्षणं च यस्य तम् । प्रीतिरेव स्वभाव औत्पत्तिको गुणो यस्य स आत्मा मनो यस्य सः अभ्यगृणात् स्वाभिप्रायं निवेदयन् अस्तौषीत् ॥ ९—१२ ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

एकविंशे तु सफ[१]ले धर्ममार्गो निरूप्यते । भूतसंस्कारकर्तृत्वाद्भूतसर्गोऽयमुच्यते ॥ १ ॥
षड्विधं रूपमस्याऽपि तपोदर्शनसंस्तवाः । त्रिविधाः कारणे युक्ता वाक्यागमसमृद्धयः ॥
फलेऽपि त्रिविधाः प्रोक्ता ऋषिवाक्यं समृद्धये ॥ २ ॥

एवं सकलां ब्रह्मसृष्टिं पूर्वाध्याये श्रुत्वा, तद्विशेषं श्रोतुं मनोवंशं पृच्छति—स्वायम्भुवस्येति पञ्चभिः—अस्य विशेषत्वं मैथुनजनितत्वमेव । स्वयंभुवो वंशः श्रुतः, स्वायंभुवस्य च मनोवंशः श्रोतव्यः । तत्र हेतुः—परमसंमत इति । परममत्यर्थं संमतः । सर्वसंमतं च श्रोतव्यम्, यत इदानीन्तनानां तथैव जन्म । तदाह—मैथुनेनैधिरे प्रजा इति । भगवन्निति ज्ञानार्थं संबोधनं मैत्रेयस्य ॥ १ ॥ ❀ ❀ एवं सामान्यतः पृष्ट्वा पुत्रयोर्विशेषं पृच्छति—प्रियव्रतेति । यौ स्वायंभुवस्य सुतौ प्रियव्रतोत्तानपादावुक्तौ, तौ, निश्चयेन, धर्ममनतिक्रम्य, सप्तद्वीपवतीं [२]महीं जुगुपतुः । जन्ममात्रं श्रुतम्, युक्त्या रक्षा च निर्द्धारिता । तयोर्वंशस्तु वक्तव्य

---

१. सफलम् क. ग. ङ. च. । २. पृथिवीं ग. घ. च. ।

इति भावः ॥ २ ॥ ❀ ❀ कन्यकानां वंशं पृच्छति—तस्येति। मध्यमाया द्वयेन, शिष्टयोरेकेन। मध्यमा सर्वत्र मूलभूतेति तस्याः प्रशंसा। तन्मोक्षावधिरेव सर्गः। ब्रह्मन्निति संबोधनमविकृतत्वाय। देवानां हूतिर्यस्या इति सर्वदेवमयी, सर्वदेवाधिष्ठिता वा। संतर्पणार्थं वा देवानामाह्वानम्। उपभोगार्थं वा, मोहिता रूपेण समाहूता इति। सर्वथा विशेषण श्रुता प्रसिद्धा। तस्या विवाहश्च श्रुतः। कर्दमस्य प्रजापतेः, त्वया, पत्नीति निरुक्ता। अनघेति संबोधनात् स्वीकृतो भावो हृदये नोत्पत्स्यत इत्युक्तम्। पापयुक्तानामेव तादृशः कामो भवति, यो लौकिकेन क्षुभ्यति ॥ ३ ॥ ❀ ❀ अनूद्य प्रश्नमाह—तस्यामिति। तस्य महायोगित्वात्, बीजावापो योगप्रतिबन्धक इति, तादृशस्यापि बह्वपत्यजनकत्वमाश्चर्यमिति प्रश्नः। साऽपि योगलक्षणैर्युक्ता। द्वात्रिंशल्लक्षणयुक्तो योगस्याऽधिष्ठानं भवतीति कर्दमस्य तु सिद्धो योगः। तस्यास्तु लक्षणानि सन्ति, योगस्त्वग्रे सेत्स्यति। अत उभयोरपि सृष्टिविरुद्धत्वात् प्रश्नः। महायोगित्वाच्च सर्गेऽपि न काचित् क्षतिरिति। वै निश्चयेन। तस्यां कतिधा वीर्यं ससर्जेति सङ्ख्यायां प्रकारविशेषे च प्रश्नः। उत्तरे हेतुः—शुश्रूषव इति। श्रोतुमिच्छवे। वदेति प्रार्थना ॥ ४ ॥ ❀ ❀ अवशिष्टयोरपि वंशप्रश्नमाह—रुचिरिति। रुचिर्ज्ञानपूर्ण इति पूर्वकल्पेपूर्वरितः। ब्रह्मन्निति सर्वथा सर्वार्थपरिज्ञाने दक्षस्तृतीयायाः। भूतानीति कन्यासु नानाविधोत्पत्तिः सूचिता। मानवीमिति मनोः पुत्रीं भार्यात्वेन लब्ध्वा, चकारात् ब्रह्मण आज्ञाम् ॥ ५ ॥ ❀ ❀ सर्गे कर्दमस्यैवोपयोगात् देवहूत्याः सकाशात्[2] सृष्टिमाह चतुर्भिरध्यायैः। "साधनं च विवाहश्च सृष्टिर्द्वेधा त्रिभेदतः। विसर्गे सर्ववस्तूनां धर्मादावुपयोगिनाम्। निरूपणं हि सर्गे तु सर्वं सर्गार्थमेव हि ॥ १ ॥" ब्रह्मा भगवद्रूपः, कर्दमोऽपि भगवद्रूपः, अतः स्वकर्तव्यसृष्टौ कर्दममेव प्रेरितवान्, स्वतुल्यत्वात्। सृष्ट्युपयोगिनी हि ब्रह्मदैवत्या सरस्वती; तस्याः तीरे दशवर्षसहस्राणि दिव्यानि तपस्तेपे। एतावता चतुर्युगानामावृत्तिर्जाता। स्वतन्त्रब्रह्मसृष्ट्यर्थमपि सहस्रवर्षमात्रं तपः, इदं तु ततोऽप्यधिकमिति तत्र हेतुं वक्ष्यति ॥ ६ ॥ ❀ ❀ न केवलं तपसा भगवान् परितुष्यति, किन्तु भक्त्येति भगवद्भजनमाह—ततः समाधियुक्तेनेति। समाधौ भगवानाविर्भावितः। तत्र क्रियायोगः परिचर्या। अतः समाधिना युक्तेन क्रियायोगेनेत्युक्तम्। एवं परिचर्यया सम्यक् प्रपेदे। ततो भजनक्लेशनिवृत्तिर्भजनीयगुणात्। तदाह—हरिमिति। ततः प्रेमभक्तिः। तयापि संप्रपेदे। भगवान् वा तया कृत्वा प्रपन्नानां वरदाता जातः। दाशुषं दातारम् ॥ ७ ॥ ❀ ❀ ततो भगवत्साक्षात्कारो जात इत्याह—तावदिति। तावता[3] कालेन प्रसन्नः। प्रेम्णा वा प्रपन्नवरदातारं यावत् सेवते, मनःपूर्णा सेवा यावन्न जाता; तन्मध्य एव भगवान् प्रसन्नो जात इत्यर्थः। विलम्बे कारणं कृते युग इति। स हि सत्ययुगे तपः कर्तुमुपविष्टः। सत्ये तपसा शुद्धान्तःकरणो जातः, ततस्त्रेतायां योगसिद्धो जातः; तपस्त्वनुवर्तत एव सर्वत्र। ततो भगवदाविर्भावः। ततो द्वापरे परिचर्या, ततः प्रेम कलौ। तत्र चेदाविर्भावं प्राप्नुयात्, ततः कलावुत्पन्ना सृष्टिरसङ्गता स्यात्। अतो जातेऽपि स्नेहे प्रपन्नानां वरदातेति तदनाशार्थं कृतयुगे प्रादुर्भूतो जातः। तत्र तु न विलम्ब इति द्योतितम्। तावदिति। पुष्कराक्ष इति दृष्ट्यैवाऽऽप्यायनजनकः। शब्दब्रह्मणा वेदेन निष्पादितं[4] छन्दोमयम्, वेदपुरुषो भगवान्, तादृग्रूपं गृहीत्वा आविर्भूतः, तं दर्शयामास। क्षत्तरिति संबोनधमन्तःपुरात् बहुप्रकारेण प्रभुराविर्भवतीति भगवतो रूपविशेषे सन्देहाभावायोक्तम्। यद्यपि तदतीन्द्रियमेव, तथापि भगवानेव दर्शयामास। न हि भगवतोऽशक्यं किञ्चित्, स्वरूपमेव बहिरनेकधा कृतवतः ॥ ८ ॥ ❀ ❀ एवं दृष्टं भगवद्रूपमनुवर्णयति त्रिभिः—स तमिति। स्वरूपाभरणोपकल्पैः प्रथमं स्वरूपमनुवर्णयति। स कर्दमः, तं प्रसिद्धम्, दृष्ट्वा जातहर्षः सन् मूर्ध्नाऽपतदिति संबन्धः। सृष्ट्यर्थं पुरुषार्थार्थं चतुर्दशविधो हरिः ॥ १ ॥ सृष्टिश्च द्विविधा तस्मादतो द्वाभ्यां तु पञ्चधा। दशापत्यानि तस्माद्धि एक एव पुमान् यतः ॥ २ ॥ सर्गे च दोषव्यावृत्तिः पुरुषार्थेषु च स्वयम्। शुक्लो हरिः प्रादुरासीदाद्या नव हिताः सताम् ॥ ३ ॥" प्रथमतो दोषाभावमाह—विरजमिति। रजोगुणो, रागः, कालुष्यं च नाऽस्तीत्यर्थः। अज्ञानान्धकारजडत्वव्यावृत्त्यर्थमाह—अर्काभमिति। अर्को हि देवतामण्डलं नारायणश्च। अर्कस्येवाभा यस्य। सितानि पद्मानि, उत्पलानि च तेषां स्रक् यस्य। अहोरात्रविकासयुक्तगणसमूहवान् भगवानुक्तः। स्निग्धा नीला ये अलकव्रातास्तैरावृतं वक्त्राब्जं यस्य। अनेन भक्तिः सर्वसुखसहिता तस्मिन् प्रकाशिता। सुखं चैहिकामुष्मिकमित्यलके विशेषणद्वयम्। विरजं शुक्लमम्बरं यस्य, शुद्धा एव वेदभागास्तेन गृहीता इति। अनेन पूर्णा ज्ञानशक्तिरुक्ता। एवमनेन दोषाभावो गुणाश्च त्रिविधा उक्ताः ॥ ९ ॥ ❀ ❀ पुनर्द्वितीयेन राजसान् गुणान् दोषाभावं चाऽऽह—किरीटिनमिति। किरीटयुक्तं कुण्डलयुक्तं शङ्खचक्रादियुक्तं च। वेदान्ते परमं वेद्यं प्रमेयबलमीरितम्। साङ्ख्ययोगौ प्रमाणं च तत्त्वानां कार्यतो बलम्। त्रिविधान्यपि तत्त्वानि प्रोक्तानि त्रिभिरायुधैः ॥ १ ॥" भूमाववतीर्णो लीलां कुर्वाणः तद्गतदोषयुक्तो भवेदिति तन्निराकरणार्थं चतुर्थमायुधं पद्ममपि परित्यज्य, श्वेतं यदुत्पलं तदेव क्रीडनकं यस्य, तथा जातः। क्रीडनकमिति वचनात् भ्रामणं लक्ष्यते। कमले च भ्रामिते जगदेव भ्रामितं स्यात्, उत्पले त्वज्ञानम्; अतो लीलाऽप्यज्ञाननाशिकैवेत्युक्तम्। मनः स्पृशति मनोहरं यत् स्मितम्, तत्सहितमीक्षणं यस्य। भगवतो मायासृष्टिश्च मनस्येवाऽल्पं किञ्चिद्विकारं जनयति, न तु कायिकादि। अनेनाऽयं पुत्रो योगभक्तिज्ञानानि च नेष्यतीत्यपि सूचितम् ॥ १० ॥

---

१. सर्वतर्पणार्थम्. घ. ङ.। २. सकाशादेव ख. ग.। ३. तावत् क.। ४. निष्पादितानि क.।

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

अथैकविंशाध्यायविवरणं चिकीर्षवः सङ्गतीनां पूर्वमुक्तत्वात्तान्निरूप्यास्य प्रकरणस्य प्रकारद्वयेन विभक्तत्वादेकैकाध्यायेऽर्थद्वयस्य सत्त्वात्ताभ्यामध्यायादिभेदो यथा न भवेत्तदर्थमर्थयोरेव हेतुहेतुमद्भाव इति बोधयन्तः प्रस्तुताध्यायार्थमाहुः—एकविंशे त्वित्यादि। अयमिति। धर्ममार्गः। द्वाभ्यामेतदध्यायस्थानर्थान् विभजन्ते—षडित्यादि। कारण इति। भूतसंस्कारकारणे धर्मे। फल इति। भूतसंस्काररूपे फले। ऋषिवाक्यमिति। मनुं प्रति कर्दमवाक्यम्। एवं सर्वोऽध्यायार्थ उक्तः। तत्र विदुरप्रश्नस्य सङ्गतिरनुप्रसङ्गरूपा बोध्या।

मैत्रेयवाक्यतात्पर्यकथने। साधनं चेत्यर्धेनाध्यायचतुष्टयस्यार्थ उक्तो भवति। तत्र द्वेधा सृष्टिमध्ये कन्यासृष्टिस्तृतीयस्य पुत्रसृष्टिस्तुरीयस्येति बोध्यम्। उच्यमाने द्विविधेऽप्यध्यायार्थे येषां वाक्यार्थानां यत्रोपयोगस्तमाहुः—विसर्ग इत्यादि। तु शङ्कानिरासे। हि यतो हेतोः निरूपणं सर्ववस्तूनां सर्गं अतो हि निश्चयेन सर्वसर्गार्थमेव। तत्र युक्तिः प्रकरणित्वादिति द्वितीयेन हिशब्देनोच्यते। अवान्तरे मैत्रेयवाक्यविचारे तु सर्वं विसर्गार्थम्, विदुरप्रश्नेन तस्यैवावान्तरप्रकरणित्वावगमात्। उपयोगिनां निरूपणं धर्मादौ धर्माद्यर्थमिति विभागेन बोध्यमित्यर्थः। तस्य हेतोः स्वरूपमाहुः—न केवलमित्यादि॥ ६॥ ❀ ❀ स तमित्यत्र। चतुर्दशभगवद्विशेषणतात्पर्यमाहुः—सृष्ट्यर्थमित्यादि। अर्धेन समुदायसङ्ख्यामुक्त्वा अग्रे विभज्याहुः—तस्मात्कर्दमात् सृष्टिः सगुणनिर्गुणभेदेन वा, स्त्रीपुंभेदेन वा, द्विधा। अतो हेतोः द्वाभ्यां श्लोकाभ्यां तु पुनः पञ्चधा एकैकस्मिन् पञ्च पञ्च विशेषणानि। पुंस एकत्वे बीजमाहुः—एक एवेत्यादि। सांख्यान्तरे यथा पुरुषबहुत्वं तथा नाऽत्रेति ज्ञापनाय तथेत्यर्थः। तृतीयपद्योक्तविशेषणसंख्यातात्पर्यमाहुः—सर्गे चेत्यादि। भाद्या इति स्त्रियः। हिताः सतामित्यनेन समानसृष्टिकर्त्र्य इति बोध्यते। तेन संख्यया सृष्टिप्रकाराश्चापि सांख्यांतराद्वैलक्षण्यमिति हृदयम्। विशेषणद्वयमिति। अत्र स्निग्धशब्देन समुदायशक्त्या त्र(व)यो (?) रूपमैहिकं सुखमुच्यते। नीलशब्देन तु निकृष्टा इला भूर्यस्मादिति योगेन आमुष्मिकमुच्यत इति भावबोधनायेदं द्वयमित्यर्थः॥ ९॥ ❀ ❀ किरीटिनमित्यत्र उत्पले त्वज्ञानमिति। उत्पलस्य रात्रिविकासित्वात् तद्भ्रामणेन तमोज्ञानरूपं भ्रामितं दूरीकृतं स्यादित्यर्थः। नेष्यतीति। प्रणेष्यति॥ १०॥

### श्रीगिरिधरकृता बालप्रबोधिनी

आविर्भूतस्तपस्तुष्टो वरं दत्त्वा ययौ हरिः॥ एकविंशे मनुस्तत्रागतश्चेति निरूप्यते॥ १॥

एवं प्रजापतिपतिः किमारभतेति प्रश्नस्योत्तरत्वेन तत्कृतान् सृष्टिभेदान् श्रुत्वा ये मरीचिमन्वादयस्ते कथं सृष्टिं कृतवन्त इति पृष्टमेव मन्वादिवंशं तच्चरितं चौत्सुक्यात् पुनः पृच्छति—स्वायम्भुवस्येत्यादिभिः पञ्चभिः। चकारोऽप्यर्थे। प्रजापतिवंशस्तु त्वया कथितः स्वायम्भुवस्य मनोरपि वंशः कथ्यतामित्यन्वयः। भगवन्निति सम्बोधनं सर्वज्ञत्वसूचकम्। ननु भगवद्भक्तस्य तव किं तद्वंशश्रवणेनेत्याशङ्क्याह—परमसम्मत इति। मनोः परमभक्तत्वात्तद्वंशोऽपि सतां श्रोतव्यत्वेनातिसम्मत इत्यर्थः। भिन्नप्रकारकत्वेन श्रोतॄणामाह्लादकत्वादपि सम्मत इत्याशयेनाह—यत्रेति। यस्मिन्वंशे स्त्रीपुंसोर्मैथुनेन हेतुना प्रजा एधिरे ववृधिरे इत्यर्थः॥ १॥ ❀ ❀ स्वायम्भुवस्य वै प्रसिद्धौ सुतौ प्रियव्रतोत्तानपादौ यथा येन प्रकारेण वर्णाश्रमप्रयुक्तं धर्मं महीं च जुगुपतुः रक्षितवन्तौ तत्प्रकारश्च कथ्यतामिति शेषेणान्वयः। कथमपि रक्षेतां किं तेनेत्यपेक्षायां राज्यस्य महत्त्वात्तयो रक्षा सुदुष्करेति तत्प्रकारोऽवश्यं श्रोतव्य इत्याशयेनाह—सप्तद्वीपवतीमिति॥ २॥ ❀ ❀ तव च स्त्रीप्रसङ्गवर्णनेऽपि न विकारप्रसङ्गो निर्दोषत्वादिति सूचयन् सम्बोधयति—अनघेति। तत्कुत इत्यपेक्षायां बलिष्ठत्वादित्याशयेन पुनः सम्बोधयति—ब्रह्मन्निति। तस्य वै स्वायम्भुवस्यैव दुहिता पुत्री देवहूतिरिति या श्रुता प्रसिद्धा कर्दमस्य प्रजापतेः पत्नी त्वयोक्ता॥ ३॥ ❀ ❀ तस्यां देवहूत्यां स कर्दमः कतिधा कतिभिः प्रकारैर्वीर्यं ससर्ज कत्यपत्यान्यसृजत् तत् शुश्रूषवे श्रोतुमिच्छवे मह्यं वदेति द्वयोरन्वयः। तच्छुश्रूषा कथमित्यपेक्षायां उभयोरपि यमनियमादियोगनिष्ठापूर्वकभगवद्भक्तत्वेन तदपत्यान्यपि महाप्रभाववन्त्येव भविष्यन्तीति तच्छुश्रूषा युक्तैवेत्याशयेन उभौ विशिनष्टि—महायोगीत्यादि। वा इति सन्देहवारणाय॥ ४॥ ❀ ❀ भक्ताभिप्रायेणैव पुनः सम्बोधयति—हे ब्रह्मन्निति। भगवान् ऐश्वर्यवीर्यादिमान् ब्रह्मणः सुत इति च विशेषणद्वयमपि रुचिदक्षयोरुभयोरपि प्रत्येकं बोध्यम्। मानवीं मनुपुत्रीं यथाक्रमं आकूतिं प्रसूतिं च भार्यां लब्ध्वा भूतानि अपत्यानि यथा ससर्ज तत्प्रकारं मे वदेति पूर्वेणान्वयः॥ ५॥ ❀ ❀ एवं पृष्टो मैत्रेयस्तावद्देवहूत्याख्यभार्यालाभाय कर्दमस्य तपश्चर्याप्रकारमाह—प्रजा इति द्वाभ्याम्। ब्रह्मणा प्रजाः सृजेति उदित उक्तो भगवान् सर्गादौ समर्थः कर्दमः सरस्वत्यां तत्तीरे सहस्राणां दश समाः दशसहस्रसंवत्सरान् तपस्तेपे चकारेत्यर्थः॥ ६॥ ❀ ❀ 'नाहं तपसा न दानैर्लभ्यः' 'भक्त्या त्वनन्यया लभ्य' इत्यादौ केवलेन तपसा दुर्लभत्वस्य केवलया भक्त्या सुलभत्वस्य च सिद्धान्तितत्वात् ततस्तस्मिन् तपसि कर्दमः समाधिश्रित्तैकाग्र्यं तद्युक्तेन क्रियायोगेन पूजाप्रकारेण प्रपन्नानां वरदाशुषं वरप्रदं हरिं भक्त्या सम्प्रपेदे सिषेवे॥ ७॥ ❀ ❀ कृतयुगे तावता दशसहस्रवर्षपर्यन्तेन तपसा पुष्कराक्षः दृष्ट्वैव सर्वसन्तापनाशको भगवान् प्रसन्नः सन् शाब्दं वेदप्रतिपाद्यं यद्ब्रह्म सच्चिदानन्दात्मकं तन्मयं वपुर्दधत् तं कर्दमं प्रति आत्मानं दर्शया-

मासेत्यन्वयः ॥ ८ ॥ ❀ ❀ स कर्दमस्तं भगवन्तं दृष्ट्वा जातहर्षो मूर्ध्ना क्षितावपतत् दण्डवत्प्रणतवान्, ततश्च कृताञ्जलिः सन् गीर्भिस्त्वभ्यगृणात् तुष्टावेति चतुर्णामन्वयः। तद्दृष्टं भगवन्तं वर्णयति। विरजं निर्मलमर्कस्येव आभा दीप्तिर्यस्य तम्। पद्मोत्पले दिनरात्रिविकासे, सितानां पद्मानामुत्पलानां च स्रक् यस्य तम्। स्निग्धाः चिक्कणाश्च ते नीलाश्च ये अलकाः केशास्तेषां व्रातः समूहो वक्त्राब्जे यस्य तम्। विरजं निर्मलमम्बरं वस्त्रं यस्य तम् ॥ ९ ॥ ❀ ❀ किरीटधारिणं, कुण्डलधारिणं, त्रिभिर्हस्तैः शङ्खचक्रगदाधरम्, श्वेतोत्पलं क्रीडनकं क्रीडासाधनं यस्य तम्, एकेन हस्तेन कमलं भ्रामयन्तमित्यर्थः। मनस्स्पर्शं मनस्यानन्दजनकं स्मितमीक्षणं च यस्य तम् ॥ १० ॥

## हिन्दी अनुवाद

### कर्दमजीकी तपस्या और भगवान्‌का वरदान

विदुरजीने पूछा—भगवन्! स्वायम्भुव मनुका वंश बड़ा आदरणीय कहा गया है। उसमें मैथुनकर्मके द्वारा प्रजाकी वृद्धि हुई थी। अब आप मुझे उसीकी कथा सुनाइये ॥ १ ॥ ❀ ❀ ब्रह्मन्! आपने कहा था कि स्वायम्भुव मनुके पुत्र प्रियव्रत और उत्तानपादने सातों द्वीप पृथ्वीका धर्मपूर्वक पालन किया था, तथा उनकी पुत्री, जो देवहूति नामसे विख्यात थी, कर्दमप्रजापतिको व्याही गयी थी ॥ २ ॥ ३ ॥ ❀ ❀ देवहूति योगके लक्षण यमादिसे सम्पन्न थी, उससे महायोगी कर्दमजीने कितनी सन्तानें उत्पन्न कीं ? वह सब प्रसङ्ग आप मुझे सुनाइये, मुझे उसके सुननेकी बड़ी इच्छा है ॥ ४ ॥ ❀ ❀ इसी प्रकार भगवान् रुचि और ब्रह्माजीके पुत्र दक्षप्रजापतिने भी मनुजीकी कन्याओंका पाणिग्रहण करके उनसे किस प्रकार क्या-क्या सन्तान उत्पन्न की, यह सब चरित भी मुझे सुनाइये ॥ ५ ॥ ❀ ❀ मैत्रेयजीने कहा—विदुरजी! जब ब्रह्माजीने भगवान् कर्दमको आज्ञा दी तुम संतानकी उत्पत्ति करो तो उन्होंने दस हजार वर्षोंतक सरस्वती नदीके तीरपर तपस्या की ॥ ६ ॥ ❀ ❀ वे एकाग्र चित्तसे प्रेमपूर्वक पूजनोपचारद्वारा शरणागतवरदायक श्रीहरिकी आराधना करने लगे ॥ ७ ॥ ❀ ❀ तब सत्ययुगके आरम्भमें कमलनयन भगवान् श्रीहरिने उनकी तपस्यासे प्रसन्न होकर उन्हें अपने शब्दब्रह्ममय स्वरूपसे मूर्तिमान् होकर दर्शन दिये ॥ ८ ॥ ❀ ❀ भगवान्‌की वह भव्य मूर्ति सूर्यके समान तेजोमयी थी। वे गलेमें श्वेत कमल और कुमुदके फूलोंकी माला धारण किये हुए थे, मुखकमल नीली और चिकनी अलकावलीसे सुशोभित था। वे निर्मल वस्त्र धारण किये हुए थे ॥ ९ ॥ ❀ ❀ सिरपर झिलमिलाता हुआ सुवर्णमय मुकुट, कानोंमें जगमगाते हुए कुण्डल और कर कमलोंमें शङ्ख, चक्र, गदा आदि आयुध विराजमान थे। उनके एक हाथमें क्रीडाके लिये श्वेत कमल सुशोभित था। प्रभुकी मधुर मुसकानभरी चितवन चित्तको चुराये लेती थी ॥ १० ॥

विन्यस्तचरणाम्भोजमंसदेशे गरुत्मतः। दृष्ट्वा खेऽवस्थितं वक्षःश्रियं कौस्तुभकन्धरम् ॥ ११ ॥
जातहर्षोऽपतन्मूर्ध्ना क्षितौ लब्धमनोरथः। गीर्भिस्त्वभ्यगृणात्प्रीतिस्वभावात्मा कृताञ्जलिः ॥ १२ ॥

ऋषिरुवाच

जुष्टं बताद्याखिलसत्त्वराशेः सांसिध्यमक्ष्णोस्तव दर्शनान्नः।
यद्दर्शनं जन्मभिरीड्य सद्भिराशासते योगिनो रूढयोगाः ॥ १३ ॥
ये मायया ते हतमेधसस्त्वत्पादारविन्दं भवसिन्धुपोतम्।
उपासते कामलवाय तेषां रासीश कामान्निरयेऽपि ये स्युः ॥ १४ ॥
तथा स चाहं परिवोढुकामः समानशीलां गृहमेधधेनुम्।
उपेयिवान्मूलमशेषमूलं दुराशयः कामदुघाङ्घ्रिपस्य ॥ १५ ॥
प्रजापतेस्ते वचसाधीश तन्त्या लोकः किलायं कामहतोऽनुबद्धः।
अहं च लोकानुगतो वहामि बलिं च शुक्लानिमिषाय तुभ्यम् ॥ १६ ॥
लोकांश्च लोकानुगतान् पशूंश्च हित्वा श्रितास्ते चरणातपत्रम्।
परस्परं त्वद्गुणवादसीधुपीयूषनिर्यापितदेहधर्माः ॥ १७ ॥
न तेऽजराक्षभ्रमिरायुरेषां त्रयोदशारं त्रिशतं षष्टिपर्व।
षण्नेम्यनन्तच्छदि यत्त्रिणाभि करालस्रोतो जगदाच्छिद्य धावत् ॥ १८ ॥

---

१. प्रा० पा०—त्त्वरा०। २. प्रा० पा०—भ्रमिवायु०। ३. प्रा० पा०—धावतु।

एकः स्वयं सन्जगतः सिसृक्षया द्वितीययाऽऽत्मन्नधियोगमायया ।
सृजस्यदः पासि पुनर्ग्रसिष्यसे यथोर्णनाभिर्भगवन् स्वशक्तिभिः ॥ १९ ॥
नैतद्बताधीश पदं तवेप्सितं यन्मायया नस्तनुषे भूतसूक्ष्मम् ।
अनुग्रहायास्त्वपि यर्हि मायया लसत्तुलस्या तनुवा विलक्षितः ॥ २० ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

वक्षसि श्रीर्यस्य कौस्तुभः कंधरायां यस्य ॥ ११ ॥ ❀ ❀ प्रीतिरेव स्वभावः स्वतः सिद्धो धर्मो यस्य तथाविध आत्मा मनो यस्य ॥ १२ ॥ ❀ ❀ त्वामृते परमानंदं धिगन्यवरकामुकम् । अथापि कृपणं मानुगृहाण वरदानतः बतेति हर्षे । हे ईड्य नोऽस्माभिः समग्रसत्त्वनिवेस्तव दर्शनादद्याक्ष्णोः सांसिध्यं साफल्यं जुष्टं सेवितम् । त्वद्दर्शनमेव महाफलमित्युपपादयति । यस्य तव दर्शनं सद्भिरुत्तरोत्तरमापादितप्रकर्षैर्जन्मभी रूढो विरूढो योगो यैस्तेऽपि ॥ १३ ॥ ❀ ❀ सकामभक्तान्विगर्हयन्नाह य इति । हे ईश ये निरयेऽपि स्युस्तेषां कामानां लवाय ये त्वन्मायया नष्टबुद्धयस्त एवोपासते त्वं तु तेषां तान्कामानपि रासि ददासि ॥ १४ ॥ ❀ ❀ यः सकामान्निंदामि सोऽहमपि तादृश एवेत्याह । तथेति । गृहमेधो गृहाश्रमस्तत्र धेनुं त्रिवर्गदोग्ध्रीं भार्यां परिवोढुकामः परिणेतुमिच्छन्कामदुघांघ्रिपस्य कल्पद्रुमस्य तव मूलमंघ्रिमुपेयिवानुपगतोऽस्मि । ननु कामाद्यर्थमन्यत्किमप्युपास्यतां न यतोऽशेषस्य पुरुषार्थस्य मूलमेतदेव ॥ १५ ॥ ❀ ❀ ननु तर्हि मुक्त्यर्थमेव किं न भजसि अनाधिकारादित्याह । हे अधीश यस्त्वं प्रजापतिस्तस्य तव वचसा तंत्या अयं कामहतो लोकः पशुवद्बद्धः । हे शुक्ल शुद्धधर्ममूर्तेऽहं च किल लोकानुगतोऽतस्तुभ्यं बलिं वहामि कर्ममयीं त्वदाज्ञामनुवर्ते । अनिमिषाय कालात्मने तदर्थं भार्यां चेच्छामीति चकारस्यार्थः । न केवलं लोकानुगतो बलिं वहामि किं तु ऋणत्रयापाकरणार्थमिति किलेत्युक्तम् ॥ १६ ॥ ❀ ❀ अनिमिषायेत्यनेन कालात्मकात्त्वत्तो भीतः कर्म करोमीत्युक्तमेतत्तु भयं त्वद्भक्तानां नास्तीत्याह द्वाभ्याम् । लोकान्कामाभिभूतांस्ताननुसृतान्पशूंश्च विवेके सत्यपि पुनः कर्मजडान्मादृशान्हित्वा अनादृत्य ये तव चरणरूपमातपत्रं श्रिताः । तानेवाह । त्वद्गुणानां वादः कथा तदेव सीधु मदिरा संसारविस्मारकत्वात् । पीयूषं रुचिकरत्वात् तेन निर्यापिता विलापिता देहधर्माः क्षुत्पिपासादयो यैः । एषामित्युत्तरेणान्वयः ॥ १७ ॥ ❀ ❀ तव यत् त्रिणाभि कालचक्रं तज्जगदाच्छिद्याकृष्य धावदपि एषां त्वद्भक्तानामायुराच्छिद्य धावन्न भवति । कथंभूतम् । अजरं ब्रह्म तस्मिन्नक्षरूपे भमिर्भ्रमणम् । भ्रमदिति वक्तव्येऽतिभ्रमणशीलत्वादुपचारेण भ्रमिरित्यभेद- । अधिकमासेन सह त्रयोदशमासा अरा यस्य । त्रिशतं षष्टिश्चाहोरात्राः पर्वाणि यस्य । शतशब्दे विभक्तेरलुगार्षः । षड् ऋतवो नेमयो यस्य । अनंताः क्षणलवादयश्छदाः पत्राणि पत्राकारा धाराः संति यस्य । त्रीणि चातुर्मास्यानि नाभय आधारभूतानि वलयानि यस्य । करालस्रोतस्तीव्रवेगम् । एतैर्विशेषणैरेव संवत्सरात्मकं चक्रमुक्तमिति द्रष्टव्यम् ॥ १८ ॥ ❀ ❀ ननु निरुपाधिमुदासीनं मां किं याचसे तथाऽपि मायया विश्वसृष्ट्यादिकर्तृत्वात्त्वमेव याच्य इत्याह । स्वयमेक एव सन्नप्यात्मन्यधिकृतया योगमायया हेतुभूतया याः स्वीकृताः शक्तयः सत्त्वाद्यास्ताभिः । अदो विश्वम् । स्वव्यतिरिक्तसाधनानपेक्षत्वे दृष्टांतः यथेति ॥ १९ ॥ ❀ ❀ यद्यपि मायिकत्वाद्भक्तेभ्यो विषयसुखं मायया तनुषे विस्तारयसीति तदेतत्तव यद्यपीप्सितं न भवति तथाऽप्यस्मदनुग्रहायास्तु ऋणत्रयापाकरणानंतरमेवापवर्गाय भवत्वित्यर्थः । यर्हि यतो मायया परिच्छिन्नमिव लसंत्या तुलस्या युक्तस्त्वं विलक्षितोऽसि एवंभूतस्य तव दर्शनं यतो भुक्तिमुक्तिप्रदमित्यर्थः ॥ २० ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

गरुत्मतमित्युक्तेर्विनतापुत्रत्वं गरुडस्य निरस्तं तदानीं विनताजन्माभावादिति संदर्भः ॥११॥१२॥ ❀ ❀ सकामत्वं विनिंद्यापि कृपणत्वात्तदेवाशास्त इत्याह-त्वामिति । अथापि त्वदन्यकामस्यायोग्यत्वेऽपि ( १ ) इतः पूर्वमक्षिणी अप्यनक्षिणी एवास्तामिति भावः । तेऽपीति । आशाशत इच्छंत्येव न तु लब्धमिति भावः । ईड्येति । मत्तस्त्वद्दर्शनोपयोगि किञ्चिदपि नो जातं तथापि दर्शनं दत्तमतो धन्योसीत्यभिप्रायः ॥ १३ ॥ ❀ ❀ हे ईश सर्वसंपादनसमर्थ हंत हंत एवं कृपासमुद्रमपि त्वां सकामतया भजंत्यहो लोकानां मौढ्यमित्याह । ये तव मायया हतबुद्धयो भवंति त एव नान्ये । कामलवाय कामलेशं प्राप्तुमुपासते त्वं तु तेषां कामान् बहूनेवाकामितानपि रासि ददासि । अन्यथा भक्तिसुखानभिज्ञाने त्वद्भक्तिमपि त्यक्तुं नैव विलंबेरन्निति भावः । भक्तेरत्यागे तु काले तेऽपि निष्कामा भवेयुरेवेत्याशयेन ददासि न तु तद्दान एव तात्पर्यं यतस्ते कलत्रपुत्रकुटुंबैश्वर्याद्याः कामा निरये नारक्यामपि योनौ स्युः । किन्तु स्वर्गनरकयोः कर्मजन्यत्वनियमनात् । त्वद्भक्तानां तु-तादृशानामपि भोगानां कर्मजन्यत्वाभावेन बंधकत्वाभावात् । नैव वस्तुतः स्वर्गनरकशब्दव्यपदेशस्तदपि तत्तुल्यत्वात्तथोक्तिरिति ज्ञेयम् ॥ १४ ॥ ❀ ❀ धेनुपदेन

---

१. प्रा० पा०—भगवान् वि० ।

स्वस्य निर्बुद्धित्वाद् वृषत्वमुक्तम्। किञ्च। सकामेष्वप्यहं दुराशयः दुरभिप्रायत्वाददतिदुर्बुद्धिरिति। अत्राक्षिपति-नन्विति। अशेषाः सर्वे पदार्था मूले तले यस्य तत्। "स्वर्गापवर्गयोः पुंसां रसायां भुवि संपदाम्। सर्वासामपि सिद्धीनां मूलं तच्चरणार्चनम्।" इत्युक्तेः ॥ १५॥ ❀ ❀ पुनराक्षिपति—नन्विति। एवं विवेकश्चेत्तर्हि निष्काम एव कथं न भजसीत्यत आह—प्रजापतेर्ब्रह्मणस्तव त्वदीयस्य। प्रजाः सृजेति वचसा तंत्या लोको मरीच्यादिः "सहयज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः। अनेन प्रसविष्यध्वम्" इति श्रीगीतोक्तेश्च। सोपि त्वदाज्ञानुसारणैव वक्ति न तस्यापि दोष इति ते पदध्वनिः। ननु कामहतो लोकोऽनुरक्तो भवतु नाम त्वं त्वकामहतः कथं सनकादिवत्तन्नातिक्रामसि तत्राह—अहं च लोकानुगतस्तदनुसारिबुद्धिर्न तु नारदादिसदृशो भवितुं समर्थ इत्यर्थः। अतस्तंत्या बद्धो वृष इव बलिं वहामि कर्ममयीं त्वदाज्ञामनुवर्त्ते तदर्थमेकां भार्यामिच्छामीत्यर्थः। चकारात्त्वद्भक्तिञ्च करोम्यायत्यां त्वत्प्राप्त्यर्थमिति भावः। हे शुक्ल सर्वदोषविनिर्मुक्तत्वात्त्वं मादृशमपि शुक्लीकर्त्तुं समर्थोसीत्यभिप्रायः। अनिमिषाय कालरूपं त्वां प्रसादयितुमित्यर्थमाह विश्वनाथः॥ १६॥ ❀ ❀ ननु लोकाः पित्रादयस्तदाज्ञानुवर्त्तिनः पुत्रभ्रात्रादयश्च लोकतो धर्मतश्च यशस्विनः सुखिनश्च दृश्यंते किमिति तान्सकामत्वान्निन्दसि, पित्रादीन्दुःखयतां निष्कामभक्तानां निष्परिग्रहाणां किं सुखं किं वा यशो यतस्तानभिनंदसीति तत्राह—द्वाभ्याम्। लोकानिति। पशूनिति। तेषां पशुत्वात्तत्त्यागे दोषो नास्तीति भावः। यद्वा। लोकान्न्यायमीमांसादिशास्त्राभिज्ञान् तदनुगतांस्तदुपदेशवाक्येषु विश्वसतः शास्त्रानभिज्ञान्। तेषामुभयेषामपि पशुत्वं भक्तिराहित्यात्। चरणमेवातपत्रमाश्रिता इति। निरातपत्राः पशवस्तु जाज्वलंत एवेति भावः। तेषां सुखमपरमप्याह—त्वद्गुणानां वादः कथनमेव संसारविस्मारकत्वाच्छीधु मृत्युदूरीकरणादतिस्वादुत्वाच्च पीयूषं तेनैव तत्पानेनैव निर्यापिता देहधर्मा बाल्य-पौगंडादयः क्षुत्पिपासादयो वा यैस्ते भवंतीति क्रिययान्वयः॥ १७॥ ❀ ❀ उपचारेण गौण्या वृत्त्या॥ १८॥ ❀ ❀ नन्वेवं निष्कामभक्तानेव धन्यान्ब्रूषे अथ च निष्कामो भवितुं न शक्नोषि तर्ह्यन्यस्माद्देवतांतराच्छीघ्रफलप्रदात्कथं स्वकामं न साधयसीति चेत्त्वां विना जगत्यन्यं कमप्यहं न पश्यामीत्याह। स्वामिचरणैरप्येतदभिप्रायेणैवोक्तम् 'निरुपाधिमुदासीनं मां कथम्' इत्यादि। इच्छाया द्वितीयत्वाभावाददद्वितीयया सिसृक्षया "एकोऽहं बहु स्याम्" इति श्रुत्युक्तया आत्मनि अधिगतः प्राप्तो योग ईक्षणयोगाद्यस्यास्तया मायया। यद्वा। योगमायया चिच्छक्त्या। यथेति। अतस्त्वद्भिन्नदेवतां-तराभावात्सकामेनापि मया त्वमेव सेव्यस इति भावः॥ १९॥ ❀ ❀ एवं चेत्तर्हि मत्प्रसादात्तव कलत्रापत्य-भोगैश्वर्याणि परमोत्तमानि भवंत्विति वरं ददानं भगवंतं सप्रणाममाह—नैतदिति द्वाभ्यां-हे अधीश एतत्पदं मत्काम्यमानं वस्तु तव स्वभक्तमात्रहितकारिणे दातुमीप्सितं न भवति "न राति रोगिणोऽपथ्यं वाञ्छतोऽपि भिषक्तमः" इति त्वदुक्तेरवसीयते इति भावः। कथं तर्हि ददासीति तत्राह—यद्यस्मान्नोऽस्मभ्यं भूतसूक्ष्मं शब्दादींद्रियभोग्यं विषयसुखं तनुषे ददासि। तत्खलु माययैव न त्वमायया अनभिज्ञभक्तोयमन्यथा विमनस्को भविष्यतीति मदनुरोधेनैवेत्यर्थः। वासनामयं विषयसुखमंतःकरणे वर्त्तत एव तदेव वरदानेन विस्तारयसीति तनुधात्वर्थः। नन्वेवं चेत्तर्हि न ददासीति तत्राह—अनुग्रहायास्तु दीयमानमेतद्वस्तु किं त्वनुग्रहायापि हंतहंत मयैव दत्तेन विषयसुखवरेण भक्तोऽयमंधे तमसि पातितस्तदिममुद्धरामीत्यायत्यां त्वत्कृपाप्राप्त्यर्थ-मप्यस्त्वित्यर्थः। तत्र लिंगं तर्हि वरदानसमये संप्रति विलक्षितो विशेषेण त्वं दृष्टस्तर्हि मायया कृपया 'मनःस्पर्शस्मितेक्षणम्' इत्युक्तेः स्मितद्योतितकृपाकटाक्षेण विशिष्ट एव दृष्टस्तत्रापि लसंत्या भक्तजनैः सपर्यायां समर्पितया दृष्टः परमसुखदया तुलस्या उपलक्षिता चिदानंदमयी या तनुस्तया युक्त इति भक्तपरिचरणीयत्वमेव तनोरमायिकत्वे लिंगम्। अमायिकतनुदर्शनप्रदानमेव कृपायां लिङ्गम्। 'भगवान्विलक्षित' इति पाठ एव श्रीधरसंमतः प्रतिभाति। तैस्तथैव तनूपदानुल्लेखेन लसंत्या तुलस्या युक्त इति व्याख्यातत्वात्। इत्यर्थ इति। "ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत्। अनपाकृत्य मोक्षं तु सेवमानो व्रजत्यधः॥" इत्युक्तेरयं भावः। अत एव भगवता गौतमेनाप्युक्तम्। "ऋणक्लेशप्रवृत्त्यनुबंधादपवर्गाभावः" इति। सूत्रार्थस्तु-ऋणानुबन्धान्ना-स्त्यपवर्गः। जायमानो हि वै ब्राह्मणस्त्रिभिर्ऋणैर्ऋणवान् जायते, ब्रह्मयज्ञेन ऋषिभ्यो, यज्ञेन देवेभ्यः, प्रजया पितृभ्य इति ऋणानि तेषामनुबन्धः स्वकर्मभिस्सम्बन्धः कर्मसम्बन्धवचनात्। "जरामर्य्यं वै एतत्सत्रं यदग्निहोत्रं दर्शपूर्णमासौ च" इति। "जरया ह एष तस्मात्सत्राद्विमुच्यते मृत्युना ह च" इति ऋणानुबंधादपवर्गानुष्ठानकालो नास्तीत्यपवर्गाभावः। क्लेशानुबन्धान्ना-स्त्यपवर्गः क्लेशानुबद्धश्च जायते नास्य क्लेशानुबंधविच्छेदो गृह्यते। प्रवृत्त्यनुबंधान्नास्त्यपवर्गः जन्मप्रभृत्ययं यावत्प्रायणं वाग्बुद्धि-शरीरारंभेणाविमुक्तो गृह्यते तत्र यदुक्तं "दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनंतराभावादपवर्गः" इति तदनुप-पन्नम्। अत्राभिधीयते यत्तावद्दृगानुबंधादिति ऋणैरिव ऋणैरिति सूत्रान्तरमाह। "प्रधानशब्दानुपपत्तेर्गुणशब्देनानुवादो निंदा-प्रशंसोपपत्तेः" अस्यार्थः ऋणैरिति नायं प्रधानशब्दः यत्र खल्वेकः प्रत्यादेयं ददाति द्वितीयश्च प्रतिदेयं गृह्णाति तत्रास्य दृष्टत्वात् प्रधानमृणशब्दः। न चैतदिहोपपद्यते प्रधानशब्दानुपपत्तेर्गुणशब्देनायमनुवादः। ऋणैरिव ऋणैरिति प्रलुप्तोपमं चैतत्। अग्निर्माणवक इति। अन्यत्र दृष्टश्चायमृणशब्द इह प्रयुज्यते यथाऽग्निशब्दो माणवके। कथं गुणशब्देनानुवादः निंदाप्रशंसोपपत्तेः। कर्मलोपे ऋणीव ऋणादानान्निन्द्यते। कर्मानुष्ठाने च ऋणीव ऋणदानात्प्रशस्यते। जायमान इति। गुणशब्दो विपर्ययेऽनधिकारात्। जायमानो ह वै ब्राह्मण इति च शब्दः। गृहस्थः संपद्यमानो जायमान इति यदा गृहस्थो जायते तदा कर्मभिरधिक्रियते मातृतो

जायमानस्यानधिकारात्। यदा तु मातृतो जायते कुमारो न तदा कर्मभिरधिक्रियते "अर्थितः शक्तस्य चार्थी समर्थो विद्वान्यजेत्" इति श्रुतेः "अधिकारोर्थिन एव कर्मभिः" इति कर्मविधौ कामसंयोगस्मृतेः। "अग्निहोत्रं जुहुयात्स्वर्गकामः" इत्येवमादिशक्तस्य च प्रवृत्तिसंभवात्। शक्तस्य कर्मभिरधिकारः प्रवृत्तिसंभवात्। शक्तः खलु विहिते कर्मणि प्रवर्त्तते नेतर इति। उत्तमाभावस्तु प्रधानपदार्थे मातृतो जायमाने कुमारे उभयमर्थिता शक्तिश्च न भवतीति। न भिद्यते लौकिकवाक्याद्वैदिकवाक्यं प्रेक्षापूर्वकारिपुरुषप्रणीतत्वेन तत्र लौकिकस्तावदपरीक्षकोपि न जायमानं कुमारमेवं ब्रूयादधीष्व यजस्व ब्रह्मचर्यं चरेति। कुत एव ऋषिरुपपन्नानवद्यवादी उपदेशार्थेन प्रयुंक्त उपदिशति। न खलु वै नर्त्तकोंधेषु प्रवर्त्तते न गायनो बधिरेष्विति। उपदिष्टार्थविज्ञानं चोपदेशविषयः। यश्चोपदिष्टमर्थं जानाति तं प्रत्युपदेशः क्रियते न चैतदस्ति जायमानकुमारके इति। गार्हस्थ्यलिङ्गञ्च मंत्रब्राह्मणं कर्माभिवदिति। यच्च मंत्रब्राह्मणं कर्माभिवदति तत्पत्नीसम्बन्धिना गार्हस्थ्यलिङ्गेनोपपन्नं तस्माद् गृहस्थोयं जायमानोऽभिधीयते इति अर्थित्वस्य चाविपरिणामे जरामर्य्यवादोपपत्तिः। यावच्चास्य फलेनार्थित्वं न विपरिणमते न निवर्त्तते तावदनेन कर्मानुष्ठेयमित्युपपद्यते। जरामर्य्यवादस्तं प्रतीति जरया हवेत्यायुषस्तुरीयस्य चतुर्थस्य प्रव्रज्यायुक्तस्य वचनं 'जरया ह वा एष एतस्माद्विमुच्यते' इति आयुषस्तुरीयं चतुर्थं प्रव्रज्यायुक्तं जरेत्युच्यते। तत्र हि प्रव्रज्या विधीयतेऽत्यंतजरासंयोगे जरया ह वेत्यनर्थकम्। अशक्तो विमुच्यते इत्येतदपि नोपपद्यते। स्वयमशक्तस्य बाह्यशक्तिमाह—अंतेवासी वा जुहुयाद्ब्रह्मणा सपरिक्रीतः क्षीरहोता वा जुहुयाद्धनेन स परिक्रीत इति। अथापि विहितं वानूद्येत कस्माद्वार्थः परिकल्प्येत विहितानुवचनं न्याय्यमिति ऋणवानिवास्वतंत्रो गृहस्थः कर्मसु वर्तेत इत्युपपन्नं वाक्यस्य सामर्थ्यं फलस्य हि साधनानि प्रयत्नविषयो न तु फलं तानि संपन्नानि फलाय कल्प्यते विहितञ्च जायमानं विधीयते च जायमानं तेन यः संबध्यते सोऽयं जायमान इति प्रत्यक्षविधानाभावादिति प्रत्यक्षतो विधीयते गार्हस्थ्यं ब्राह्मणेन। यदि चाश्रमांतरमभविष्यत्तदपि व्यधास्यत प्रत्यक्षतः प्रत्यक्षविधानाभावान्नास्त्याश्रमांतरमिति न प्रतिषेधस्य प्रत्यक्षविधानाभावात्। न प्रतिषेधोपि ब्राह्मणेन प्रत्यक्षतो विधीयते न सन्त्याश्रमान्तराणि एक एव गृहस्थाश्रम इति प्रतिषेधस्य प्रत्यक्षतोऽश्रवणादयुक्तमेतदिति। अत्र सूत्रांतरमाह—"अधिकाराच्च विधानं विद्यांतरवत्" अस्यार्थः—यथा शास्त्रांतराणि स्वे स्वेऽधिकारे प्रत्यक्षतो विधायकानि नार्थांतराभावात्। एवमिदं ब्राह्मणं गृहस्थशास्त्रं स्वेधिकारे प्रत्यक्षतो विधायकं नाश्रमांतराणामभावादिति। ऋग्ब्राह्मणं चापवर्गाभिधाय्यभिधीयते ऋचश्च ब्राह्मणानि चापवर्गाभिवादीनि भवन्ति। ऋचश्च तावत्—"कर्मभिर्मृत्युमृषयो निषेदुः प्रजावंतो द्रविणमिच्छमानाः। अथापरे ऋषयो मनीषिणः परं कर्मभ्योऽमृतत्वमानशुः॥ न कर्मणा न प्रजया धनेन त्यागेनैकेऽमृतत्वमानशुः। परेणं नाकं विहितं गुहायां विभ्राजते यद्यतयो विशंति॥ वेदाहमेतं पुरुषं महांतमादित्यवर्णं तमसः परस्तात्। तमेव विदित्वातिमृत्युमेति नान्यः पंथा विद्यतेऽयनाय॥" इति॥ अथ ब्राह्मणानि—"त्रयो धर्मस्कंधा यज्ञोऽध्ययनं दानमिति। प्रथमस्तप एव द्वितीयो ब्रह्मचार्याचार्यकुलवासी तृतीयोत्यंतमात्मानमाचार्यकुलेऽवसादयत् सर्व एवैते पुण्यलोका भवंति ब्रह्मसंस्थोऽमृतत्वमेति एवमेव प्रव्राजितो लोकमभोप्संतः प्रव्रजंतीति अथो खल्वाहुः काममय एवायं पुरुष इति स यथाकामो भवति तथा क्रतुर्भवति तथा तत्कर्म कुरुते यत्कर्म कुरुते तदभिसंपद्यते" इति कर्मभिस्संसरणमुक्त्वा प्रकृतमन्यदुपदिशति "इति तु कामयमानो योऽकामो निष्काम आत्मकामो भवति न तस्य प्राणा उत्क्रामन्ति इहैव समवलीयन्ते ब्रह्मैव सन्ब्रह्माप्येति" इति। तत्र यदुक्तमृणानुबन्धादपवर्गाभाव इत्येतद्युक्तमिति ये चत्वारः पथयो देवयाना इति चातुराश्रम्यश्रुतेरैकाश्रम्यानुपपत्तिः फलार्थितश्चेदं ब्राह्मणं "जरामर्य्यं ह वा एतत्सत्रं यदग्निहोत्रं दर्शपूर्णमासौ च" इति। कथमत्र सूत्रांतरमाह—"समारोपणादात्मन्यप्रतिषेधः" अस्यार्थः प्राजापत्यामिष्टिं निरूप्य तस्यां सार्ववेदसं हुत्वात्मन्यग्नीन्समारोप्य ब्राह्मणः प्रव्रजेदिति श्रूयते। तेन विजानीमः प्रजावित्तलोकैषणायाश्च व्युत्थायाथ भिक्षाचर्य्याश्चरंतीति एषणाभ्यो व्युत्थितस्य पात्रचयांतानि कर्माणि नोपपद्यन्त इति नाविशेषेण कर्त्तुः प्रयोजकफलं भवतीति चातुराश्रम्यविधानाच्च इतिहासपुराणधर्मशास्त्रेष्वैकाश्रम्यानुपपत्तिः तदप्रमाणमिति चेन्न, प्रमाणेन खलु ब्राह्मणेनेतिहासपुराणस्य प्रामाण्यमभ्यनुज्ञायते। ते वा खल्वेते अथर्वांगिरस एतदितिहासपुराणमभ्यवदत् इतिहासपुराणं पञ्चमो वेदानां वेद इति तस्मादयुक्तमेतदप्रामाण्यमिति। अप्रामाण्ये च धर्मशास्त्रस्य प्राणभृतां व्यवहारलोपाल्लोकोच्छेदप्रसंगः। द्रष्टृप्रवक्तृसामान्याच्चाप्रामाण्यानुपपत्तिः। य एव मंत्रब्राह्मणस्य द्रष्टारः प्रवक्तारश्च त एव खल्वितिहासपुराणस्य धर्मशास्त्रस्य चेति विषयव्यवस्थानाच्च यथाविषयं प्रामाण्यम्। अन्यो मंत्रब्राह्मणस्य विषयोऽन्यश्चेतिहासपुराणधर्म्मशास्त्राणाम्, यज्ञो मंत्रब्राह्मणस्य, लोकवृत्तमितिहासपुराणस्य, लोकव्यवहारव्यवस्थानं धर्मशास्त्रस्य विषयः। तत्रैकेन सर्वं व्यवस्थाप्यते इति यथाविषयमेतानि प्रमाणानि इंद्रियादिवदिति। यत्पुनेरतत्क्लेशानुबंधस्याऽनुच्छेदादिति तत्र सूत्रांतरमाह—"सुषुप्तस्य स्वप्नादर्शने क्लेशाभावादपवर्गः"। अस्यार्थस्तु—यथा प्रसुप्तस्य खलु रागानुबंधः सुखदुःखानुबंधश्च विच्छिद्यते तथापवर्गेपीति। एतच्च ब्रह्मविदो मुक्तस्यात्मनो रूपमुदाहरंतीति। यदपि प्रवृत्त्यनुबंधादिति तत्र सूत्रांतरेण परिहरति "न प्रवृत्तिः प्रतिसंधानाय हीनक्लेशस्य" अस्यार्थस्तु-प्रक्षीणेषु रागद्वेषमोहेषु प्रवृत्तिर्न प्रतिसंधानाय पूर्वसंधिस्तु पूर्वजन्मनि वृत्तौ पुनर्जन्म तच्चादृष्टकारितम्। तस्यां प्रहीणायां पूर्वजन्माभावे जन्मांतराभावोऽप्रतिसंधानमपवर्गः। कर्मवैफल्यप्रसंग इति चेन्न, कर्मविपाकसंवेदनस्याप्रत्याख्यानात् पूर्वजन्म न भवतीत्युच्यते न तु कर्मविपाकप्रतिसंवेदनं प्रत्याख्यायते "सर्वाणि पूर्वकर्माणि ह्यंते जन्मनि विपच्यंते" इति सूत्रान्तरम्। "न क्लेशसंततेः स्वाभाविकत्वात्"। अस्यार्थः-

नोपपद्यते क्लेशानुबंधविच्छेदः कस्मात् क्लेशसंततेः स्वाभाविकत्वात्। अनादिरियं क्लेशसंततिः। न चानादिः शक्य उच्छेत्तुमिति। अत्र कश्चित्परिहारमाह सूत्रांतरेण "प्रागुत्पत्तेरभावानित्यत्ववत्स्वाभाविकेप्यनित्यत्वम्"। अस्यार्थः-यथानादिः प्रागुत्पत्तेरभाव उत्पन्नेन भावेन निवर्त्यते एवं स्वाभाविकी संततिरनित्येति। किं च। "अणुश्यामताभावेऽनित्यत्ववद्वा" अस्यार्थः-अपर आह यथाऽनादिरप्यणुश्यामताऽग्निसंयोगादनित्या तथा क्लेशसंततिरपीति। एवंभूतस्य लसत्तुलसीयुक्तस्य। इत्यर्थं इति। तव दर्शनादखिलपापक्षये प्रतिबंधकाभावाद्भोगमोक्षौ भवत एवेति भावः॥ २०॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

समस्तस्तुतिवाक्याभिप्रायमेकेन व्याचष्टे। त्वामृत इति। अनुगृहाण स्वानुरक्तं कुरु नोऽस्माभिः॥ १३॥ ❀ ❀ भवसिन्धुपोतमित्यनेन कामान्दत्वापि मोक्षप्रदत्वं व्यञ्जितं तेन च तादृशहितकारिणि तस्मिन् शुद्धप्रीतिरेव योग्येत्यनुव्यञ्जितम्। प्रीतिस्वभावात्मेत्युक्तत्वात्॥ १४॥ ❀ ❀ तादृश एव। स काम एव मूलं मूलकारणमेतदेव चरणारविन्दमेव। "सर्वासामपि सिद्धीनां मूलं तच्चरणार्चनम्" इत्युक्तेः॥ १५॥ ❀ ❀ अतः लोकानुगतत्वात् तदर्थं कर्माज्ञानुवर्त्तनार्थम्॥ १६॥ ❀ ❀ शुद्धभक्तैर्लोकसंङ्कोचादिना काम्यकर्माद्याग्रहो न कर्त्तव्य इति विवेके सत्यपि॥ १७॥ ❀ ❀ आकृष्य संहृत्य एषां चरणाश्रितत्वादिलक्षणवतां भ्रमेर्धर्मत्वाचक्रस्य च धर्मित्वाद्यद्यपि भ्रमदिति वक्तव्यं तथापि आयुर्घृतमितिवदुपचारेण सादृश्यप्रतीत्याभेदनिर्देशः प्रयोजनञ्च भ्रमेरनुपरम इति प्रयोजनवती लक्षणा। एतैरसाधारणैः॥ १८॥ ❀ ❀ तथापि निरुपाधितयोदासीनत्वेऽपि अद्वितीयया शक्तित्वादेव स्वाश्रयमन्तरा स्वतन्त्रसत्ताशून्यया स्वस्मिन्नधिकारिणि अधिकृतया नियम्यत्वाधिकारं प्राप्तया भगवानिति क्वचित् पाठः॥ १९॥ ❀ ❀ तत्। विषयसुखमनुग्रहपदस्य परमार्थं व्याचष्टे। ऋणत्रयेति। मायया स्वाभाविकाचिन्त्यशक्त्या भगवानित्यत्र ननु वेति क्वचित्पाठस्तु स्वाम्यसम्मतः। लसत्तुलस्या तनुवेत्यन्वयसामञ्जस्ये युक्त इत्यध्याहारासम्भवात् एवंभूतस्य मूर्त्तब्रह्मणस्तव॥ २०॥

### श्रीमद्वीरराघवव्याख्या

गरुत्मतो गरुडस्यांसदेशे स्कन्धप्रदेशे विन्यस्ते निहिते चरणे पदे येन तम्। वक्षसि श्रीर्यस्य तं कौस्तुभः कन्धरायां यस्य तम्। खे आकाशेऽवस्थितं दृष्ट्वा जातहर्ष इति। लब्धः दर्शनप्राप्तिरूपो मनोरथो येन सः। अत एव जात उत्पन्नः हर्ष आनन्दो यस्य सः। क्षितौ भूम्यां मूर्ध्ना शिरसापतद्दण्डवत् प्रणत इत्यर्थः। ततः प्रीतिरेव स्वभावो यस्य सः। आत्मा मनश्च यस्य सः। कृत अञ्जलिर्येन सः। गीर्भिस्तत्स्वरूपगुणमाहात्म्यप्रतिपादिकाभिर्गीर्भिर्वचोभिरभ्यगृणात् स्वाभिप्रेतं निवेदयन्नस्तावीदित्यर्थः॥ ११॥ १२॥ ❀ ❀ तदेवाह नवभिः। जुष्टमिति हे ईड्य! स्तुत्य अखिलसत्त्वराशेः परिपूर्णशुद्धसत्त्वमयस्य तव दर्शनान्नोऽस्माकमक्ष्णोर्नेत्रयोः सांसिध्यं संसिद्धिविषयभूतं फलमद्य जुष्टं प्राप्तं बतेति हर्षे यदा तव दर्शनमिति पाठस्तदा नोऽस्माकं सांसिध्यं संसिद्धिस्तपसः फलाव्यवहितसाधनत्वदशा तया साध्यं यत्फलं त्वद्दर्शनरूपं तदक्ष्णोरक्षिभ्यां जुष्टमित्यर्थः। दर्शनस्य सांसिध्यत्वमुपपादयति यस्य तव दर्शनं योगरूढाः योगो रूढ आरूढो यैस्ते प्राप्तयोगा इत्यर्थः। सद्भिः सात्त्विकजन्मभिरपि यतस्तव दर्शनमेव प्रार्थ्यते स्वजन्मभिराशासते प्रार्थयन्ते आरूढयोगैर्बहुजन्मभिरतस्तदेव निरतिशयं सांसिद्धिकफलमित्यर्थः॥ १३॥ ❀ ❀ ननु धर्मादिष्वन्यतम एव पुरुषार्थः नतु मद्दर्शनमित्यत्राह। य इति। ते मायया ये हतमेधसः कामानां लवार्थम्। उपासते ये निरयेऽपि निरयप्रायेऽपि नीचयोनौ विषये कामाः स्युः तान्कामान् तेषां तान् सुखलेशानपि रासि ददासि। तथापि ते सुमेरुमासाद्य वराटिकाद्यन्वेषयन्त इव नित्यनिरतिशयानन्दजलधिं त्वां प्रपद्य आनन्दलेशमाशासानास्त्वन्मायया हतबुद्धय एव। अतो धर्मादिषु पुरुषार्थदृष्ट्या त्वां भजन्मूर्ख एवेति भावः॥ १४॥ ❀ ❀ योऽहं कामकामिनो निन्दयामि सोऽहमपि कामकामीत्याह। तथापीति। अहमपि गृहमेधधेनुं गार्हस्थ्यवर्द्धिनीं समानशीलां समानधर्मादिकुलशीलामित्यर्थः भार्यां परिवोढुकामः उद्वोढुमिच्छन्नत एव दुराशयः दुष्टान्तःकरणः कामदुघाङ्घ्रिपस्य कल्पवृक्षवदर्थितार्थदस्य तवाशेषपुरुषार्थानां मूलमुपेयिवान्प्राप्तवानस्मि॥ १५॥ ❀ ❀ नन्वेवं हेयोपादेयविभागकुशलस्त्वं कथं कामकामी मामुपेयिवानित्यत्राह। प्रजापतेरिति। हे अधीश! प्रजापतेस्तव वचसा वेदात्मिकवचोरूपया तन्त्या दाम्नायं लोकः सांसारिकलोकः कामहतः कामैरभिभूतः अनुबद्धः पशुरिव बद्धः "यामिमां पुष्पितां वाचं प्रवदन्त्यविपश्चितः। वेदवादरताः पार्थ! नान्यदस्तीति वादिनः॥ कामात्मानः स्वर्गपरा जन्मकर्मफलप्रदाम्। क्रियाविशेषबहुलां भोगैश्वर्यगतिं प्रति॥" इति त्वदुक्तरीत्या कामात्मानः त्रैवर्गिकमेव फलं बहुमन्वानास्तत्रैवासक्ताः। अहमपि लोकान् सांसारिकलोकाननुगतः अनुसृतः हे शुक्ल! निर्मल भगवन् अनिमिषाय कालस्वरूपिणे तुभ्यं बलिं गृहाश्रमोचितधर्मरूपबलिं हरामि। यद्यप्यहं हेयोपादेयविवेकसम्पन्नः तथापि त्वन्निर्देशानुवर्त्यस्मत्पित्रा चतुर्मुखेन प्रजाः सृजेत्यनुशिष्टोऽहमत एव गृहमेधीयैरेव धर्मैस्त्वामाराधयितुं त्वां प्रार्थयामीति भावः। अनिमिषायेति हेतुगर्भं यतस्त्वं कालरूपेण संसारिणां निरर्थकमायुः क्षपयस्यतोऽहं सांसारिकधर्माननुतिष्ठन् कालात्मकात्वत्तो भीतः सन् अस्मदायुषः सद्व्ययं चिकीर्षुः पितृनिदेशं च पालयन् कालरूपाय तुभ्यमेव बलिं पूजां वहामि तव पूजां करोमीत्यभिप्रायः॥ १६॥ ❀ ❀ अनिमिषायेत्यनेनाभिप्रेतं

संसारिणामेव वृथायुःक्षपयितृत्वं व्यतिरेकमुखेनाप्याह । द्वाभ्याम् । ये लोकान् संसारिणस्तदनुगतानन्यांश्च हित्वा त्यक्त्वा परस्परं मिथः तव गुणानां वादः कथनं तदेव सीधु मधुरपीयूषममृतं तेन निर्यापिता निरस्ता देहधर्मा जरामरणादयो येषान्ते तव चरणावेवातपत्रं तापत्रयनिवर्त्तकत्वादातपत्रत्वरूपणमाश्रितास्ते तेन जराक्षुद्भ्रमिः जरामरणादिक्षुत्पिपासादिपरिवृत्तिमन्तः भ्रमिः भ्रमणं तद्वन्त इत्यर्थः । एकवचनमार्षम् । जराक्षुद्रूपेण भ्रमणं यस्येति कालचक्रविशेषणं वा कालचक्ररूपविशेष्यं विशेषण-सामर्थ्यसिद्धम् । अस्मिन् पक्षे ये आश्रितास्तेषामायुरिति सम्बन्धः । ते तव सम्वत्सरात्मकं कालचक्रं जगदाच्छिद्य धावदित्यर्थः । तेषामायुः सफलमित्युक्तं भवति तेऽजराक्षभ्रमिरिति पाठे अजराक्षभ्रमिरिति च्छेदः अजरः अनुपरतः अक्षभ्रमिरक्षभ्रमणं यस्येति चक्रविशेषणमेव । यद्वा जरोऽविशीर्णः अक्षो यस्य स चासौ भ्रमिर्यस्येत्यर्थः । अजरमक्षरं ब्रह्म तस्मिन्नक्षरूपेण भ्रमिर्भ्रमणं यस्येति वा । कथंभूतं कालचक्रं त्रयोदशारमधिमाससहिता द्वादश मासा आरा यस्य तत् त्रिशतं षष्टिश्च अहोरात्राणि पर्वाणि यस्य शतविभक्तेर-लुगार्षः । षड्ऋतवो नेमयो यस्य अनन्ताः क्षणलवादयः छदा दलानि यस्य सन्तीति तथा त्रिणाभिसमाधिकन्यूनगतिमन्ति त्रीणि चातुर्मास्यान्येव नाभयो रन्ध्रा यस्य करालं तीव्रं स्रोतो वेगःयस्य तत् ईदृशं त्वदात्मकं कालचक्रं केवलं संसारिणामेवायुराच्छिद्य धावत् वृथा तदायुर्हरति न तु त्वद्गुणानुभवपराणामतः कालचक्रशरीरकस्याश्रितकामदुघस्य भवत एव पादमूलमुपेयिवान् अहमिति भावः ॥ १७ ॥ १८ ॥ ⁂ ⁂ ननु ब्रह्मरुद्रादिषु बहुषु सत्स्वपिताननादृत्य मत्पादमूलमेव किं विशेषेणोपेयिवा-नित्याशङ्कायां "कश्च ध्येयः कारणं तु ध्येयम्" इति श्रुत्यैव प्रश्नोत्तररूपेण जगत्कारणत्वस्यैवोपास्यत्वाभिधानात् जगत्कारणभूतस्त्व-मेवोपास्य इत्यभिधास्यन् तावत्कारणत्वमुपपादयति । एक इति । स्वयमेकः सन् एकशब्देन "सदेव सौम्येदमग्र आसीदेकमेवा-द्वितीयं ब्रह्म" इति कारणत्वपरा श्रुतिः स्मारिता । तथाचायमर्थः सृष्टेः प्रागेक एव नामरूपविभागानर्हसूक्ष्मचिदचित्कालशरीरः सन्नुपादानत्वेन विद्यमानः अत्रापि श्रुताविव एव कारार्थगर्भमिदमेक एवउपादानकारणान्तरशून्यः एकत्वं च सृष्ट्यनन्तर-भाविनामरूपविभागनिबन्धनबहुत्वप्रतिसम्बन्धिनामरूपविभागाभावाधीनमेव विवक्षितं न तु प्रकृतिपुरुषादिराहित्यम् । एक इति अद्वितीय इत्यस्याप्युपलक्षणं तथा च निमित्तकारणान्तरशून्यः सदित्यनेन कारणत्वेनावस्थितस्य प्रमाणसम्बन्धार्हत्वरूपसत्तायोगित्व-कथनादसत्कार्यवादो निरस्तः । एकमित्यनेन उपलक्षिताद्वितीयपदेन चोपादानत्वनिमित्तत्वोपयुक्तसर्वशक्तित्वसर्वज्ञतादयो धर्मा आक्षिप्यन्ते । एवं च मृत्कुलालयोरिव निमित्तोपादानयोर्भेद एव नाभेद उपपद्यत इति शङ्का परास्ता मृदस्त्वज्ञत्वात्कुलालस्या-सर्वज्ञत्वाच्च निमित्तत्वोपादानत्वयोरुभयोरपि मृत्कुलालयोरन्यतरस्मिन्नसम्भवः । इह तु ब्रह्मणः 'परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी' यः सर्वज्ञः सर्वविदिति सर्वज्ञत्वसर्वशक्तित्वाद्यनन्तकल्याणगुणाकरत्वेन कीर्तितस्यैवोपादानत्वं चोभय-मप्युपपन्नतरमेव । एवं च नामरूपविभागानर्हसूक्ष्मचिदचिद्विशिष्टत्वाकारेणोपादानत्वेन प्रकृतिपुरुषकालनियन्तृत्वाका-रेण निमित्तत्वेन च तदुपयुक्तसर्वज्ञत्वादिगुणविशिष्टत्वेन च सृष्टेः प्राग्विद्यमानः जगतः नामरूपविभागार्हस्थूलचिदचिद्विशिष्टपरमा-त्मकजगतः सिसृक्षया स्रष्टुमिच्छया हेतुना अनेन 'तदैक्षत बहु स्यां' इत्यास्यार्थो विवृतः । द्वितीयया स्वरूपतः स्वभावतश्च स्वस्माद-त्यन्तभिन्नया योगमायया युज्यत इति योगा स्वसम्बन्धिनी स्वशरीरभूतेत्यर्थः तया मायया प्रकृत्या अद्वितीयेत्यपि छेत्तुं शक्यं तदा स्वापृथक्सिद्धया अनया योगमायया स्वशरीरभूतया मायया द्वारेण आत्मन्यधिस्वात्मन्येवादः नामरूपविभागार्हचेतनाचेतनात्मकं जगत्सृजसि पासि रक्षसि पुनर्ग्रसिष्यसि संहरसि मायाद्वारेण सृजसि । सद्द्वारकोपादानत्वकथनेन सर्गायत्तविकाराणां द्वारभूतप्रकृतिगतत्वावगमात् निर्विकारश्रुतिविरोधः परिहृतः । आत्मनि सृजसीत्यनेनाधारान्तरव्यावृत्तिः । तथा च श्रुतिः ब्रह्मवनं ब्रह्म स वृक्ष आसीद्यतो द्यावापृथिवी निष्टतक्षुरिति अनया श्रुत्या निमित्तमुपादानमाधार उपकरणानि च स्वयमेवेत्युक्तम् एतदेवोर्णनाभिदृष्टान्तेन स्पष्टयति हे भगवन्! उर्णा नाभौ यस्य सः उर्णनाभिस्तंतून् संतन्यमानः कीटविशेषः स यथा स्वश-क्त्या सृजते तन्तूनिति शेषः तथा त्वमपि स्वशक्तिभिरेव सृजसि रक्षसि ग्रसिष्यसे तस्माज्जगत्कारणमाश्रितकल्पद्रुमं त्वामेव काम-लोकाननुसरन्परिवोढुकाम उपेयिवानहमिति भावः ॥ १९ ॥ ⁂ ⁂ ननु कुत एतत्केचित्कामकामिनोऽन्ये त्वस्मत्पदाभि-लषिण इत्यत्राह । नैतदिति । हे अधीश ! मायया प्रकृत्या स्वसंकल्पेन वाहमहंकारं तस्माद्भूतसूक्ष्मं भूतान्याकाशादीनि भूतसूक्ष्माणि शब्दादीनि च तनुपे सृजसि भूतसूक्ष्ममिति समाहारद्वन्द्वः नस्तनुपे भूतसूक्ष्ममिति पाठे तु भूतानां सूक्ष्मकारणमहंकारमित्यर्थः कारणं हि कार्यात्सूक्ष्ममिति सूक्ष्मशब्देनाहंकार उक्तः मायया भूतसूक्ष्मं सृजसीति यत्तेन ते पदं तव स्थानं नेप्सितं नाभिलषितं त्वत्सृष्टाहंकारवश्यत्वादस्माभिस्त्वत्पदं नाभिलषितमित्यर्थः । वतेति खेदे यद्यप्यहमहंकारग्रस्तस्त्वत्पदं नाभिलषामि तथापि माम-नुगृह्य त्वत्पदमपि मह्यं दास्यतीति मे प्रतिभातीत्याह । अपि तथापि मया त्वत्पदेऽनभिलषितेऽपि यर्हि यदा लसत्तुलस्या लसन्ती तुलसी माला यस्यास्तया तन्वा आश्चर्यविग्रहेण भवान्विलक्षितः दृष्टः मयेति शेषः । तदेवानुग्रहाय त्वत्पदप्रापणरूपानुग्रहार्थं भवान् अस्तु स्यादिति निश्चिनोमीत्यध्याहारः । अस्त्वितीति पाठे तु क्रियापदमात्रमध्याहर्तव्यम् ॥ २० ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

स्वभावात्मा अव्यग्रमनाः स्वतन्त्रो भावो यस्य स स्वभावो हरिः स आत्मनि मनसि यस्य स तथेति वा स्वभावे आत्मा यस्य स तथेति वा ॥ १२ ॥ ⁂ ⁂ स्तुतिरपि स्तुत्यस्य हरेः क्षिप्रप्रीतिकरी यथार्थत्वेनानुकम्पाहेतुत्वादुत्तरत्र फलोदयाच्चेति

भावेनाह। जुष्टमिति। हे ईड्य! सतात्पर्यं वेदादिभिः स्तुत्य अद्य अखिलसत्त्वराशेः पूर्णज्ञानबलसमुद्रस्य तव दर्शनात्साक्षात्कारान्नोऽस्माकमक्ष्णोर्जुष्टं निषेवणं त्वत्क्षेत्रलिङ्गादिविषयं संसिद्धं सम्यक् फलितमभूत्। बताश्चर्यमिदं दुर्भगेष्वस्मासु अनुकम्पेति उपलक्षणमेतत् श्रोत्रादेस्तथा श्रवणादिनिषेवणम् "अक्षरण्वन्त" इत्यादिश्रुतेः तवानुग्रह एव मुख्यं निमित्तं तन्नास्मत्प्रयत्नमिति भावेनाह। यद्दर्शनमिति। रूढयोगा निरन्तरानुवृत्तध्यानयोगिनो यमादिमन्तः पुरुषा यद्दर्शनमाशासते वाञ्छन्ति तादृशमिति भावः। महता कालेन प्रयतमानानां योगिनामाकांक्षामात्रमस्माकं तु अल्पेनैव कालेनाभूदित्यतो बतेति॥ १३॥ ❀ ❀ इदानीमनुग्रहकातरं भगवद्भावं पश्यन् कर्दमः स्वमनोरथं गर्हयन्विज्ञापयति। य इति। ईश! ऐश्वर्यवारिधे! तव मायया बन्धकशक्त्या हतचेतसो नष्टज्ञानान्तःकरणाः पुरुषा भवसिन्धुपोतं संसारसमुद्रस्योत्तरणे तरीभूतं त्वत्पादारविन्दं कामलवाय उपासते सेवन्ते ये कामा निरयेऽपि स्युः सुलभास्तांस्तेषां रासि। "रा दान" इति धातुः। निरयः सूकरादियोनिरिति कृच्छ्रत्वद्योतनायेदमुदितमनेनेदृशमपि भगवत्कटाक्षोपक्षिप्तं किमुत राज्यादीति सूचितम्॥ १४॥ ❀ ❀ किमनेन प्रकृते इत्याशङ्क्याहमप्येष्वेको लम्पट इत्याह। तथेति। तथा पूर्वोक्तकामोपासकवत् सोऽहं च कामदुघाङ्घ्रिपस्याभीष्टवर्षणशीलकल्पतरोस्तवाशेषमूलमपेक्षितसमस्तपुरुषार्थकारणं पादमूलमुपेयिवानित्यन्वयः। किं कामस्त्वमित्यत उक्तं परिवोढुकाम इति समानशीलां गृहमेधिवेनुं गृहस्थयज्ञाङ्गभूतां भार्यां परिवोढुकामः परिणेतुकामः तत्र निमित्तमाह। दुराशय इति। दुरशोभने विषये आशयो यस्य स तथा। "दुरशोभनदुःखयो" रिति यादवः॥ १५॥ ❀ ❀ अघटितघटकमहिमा भगवान् यतः सकामोपास्तिं निकृष्टां जानन्तोऽपि मादृशास्तव वेदाख्यपचनमायया नियताः संसरन्तीत्याह। प्रजापतेरिति। अधीशेति संबुद्धेः प्रजापतिर्हरिरेव न विरिञ्चस्तस्य तत्र मुख्यार्थानुपपत्तेरिन्द्रादिशब्दवत् अधय ईश्वरा ब्रह्मादयस्तेषामपीशजगत्सृष्ट्यादिविभूतिप्रवर्तकत्वात्। प्रजापतेस्तव वचसा वेदलक्षणतन्त्या "तस्य वाकृतन्तिर्नामानि दामानि" इति श्रुतेः अयं जनः स्वर्गादिकामहेतोर्निबद्धः किल तत्पूजालक्षणं बलिं वहतीति शेषः हे शुक्ल! संसारशुचं विलाप्य कं सुखमादाय ददातीति लोकानुगतत्वादहमप्यनिमिषाय। प्राणिचीर्णपुण्यपापनिरीक्षणार्थमुन्मीलितनेत्रत्वात्तच्छब्दवाच्याय कालान्तर्यामिणे तुभ्यं बलिं वहामि उत्तरत्र सभार्यो वहेयमिति चार्थः॥ १६॥ ❀ ❀ अयमेव बलिर्भगवदर्पणबुद्ध्या चिकीर्षितो भक्तिहेतुरपि भवतीति भावेनाह। लोकांश्चेति। "अस्माल्लोकात्प्रेत्य" इति श्रुतेः लोकान् जडशरीराणि च लोकानुगतान् पशून् प्राकृतेन्द्रियाणि च हित्वा ते तव चरणातपत्रं श्रिताः पुनश्च परस्परं तव गुणवाद एव सीधु पीयूषं सुखजनकनवसूतगवीदुग्धं यत्तेन निर्यापिताः प्रवर्तिता देहधर्माः सच्चिदानन्दात्मकशरीरधर्मा येषां ते तथा। यद्वा निर्यापिता निवारिता जननमरणादिलक्षणा देहधर्मा येषां ते तथा॥ १७॥ ❀ ❀ लक्षणदर्शनाल्लक्ष्यमध्याहृत्यान्वेतव्यं ते तव चक्रमेषामायुर्न छिनत्तीति शेषः। सुदर्शनाद्यावर्तयति। अजरेति। अजरे कदापि जरादोषरहिते अक्षे नाभिद्वारे भ्रमतीत्यराक्षभ्रमिः नियतलिङ्गत्वाद्गिरिशब्दवत् अधिमासैः सह त्रयोदशमासाः अराणि दलानि यस्य तत्तथा त्रीणि शतानि षष्टिसंख्यासहितानि अहोरात्रलक्षणानि दिनान्येव पर्वाणि यस्य तत्तथा त्रिशतं षष्टिपर्व छान्दसत्वादनुस्वारलक्षणबिन्दुलोपो नास्ति षट् ऋतवो नेमयश्चक्रप्रान्तदेशा यस्य तत् षण्नेमयः अनन्ताः परमाणुद्व्यणुकादिलक्षाश्छिदाः छिद्रा अतिशयिताच्छिद्रा अवयवा यस्य सन्तीति अनन्तच्छिदि "तृतीयोऽतिशये" इति सूत्रादिकारो लोकवैलक्षण्यलक्षणातिशयार्थः यद्वा छद् इत्यस्मिन्नर्थे छिदीति निपातनं "मथनान्मिथिलो जात" इति वद्युक्तं च त्रीणि चातुर्मास्यानि नाभिर्यस्य स त्रिनाभिः करालस्रोतोऽतिदुस्तरवेगं जगदाच्छिद्य कवलीकृत्य धावत् गच्छत् पुनः पुनरावर्तमानमित्यर्थः। यदेवंविधं कालचक्रं तदितिशेषः एषामायुराच्छिद्य न धावत् जगदाच्छिद्य धावदित्यनेन गृहाश्रमं गृहीत्वा पामरवन्न संसरामि किन्तु त्वदनुग्रहकरं कर्मकारं जरसं गच्छन्नन्ते निवृत्तिमार्गमनुतिष्ठामीति ध्वनितम्॥ १८॥ ❀ ❀ भक्तजनविषयस्वेच्छानियतसंसारोन्मूलनं कैमुत्येन सिद्धमिति भावेनाह। एक इति। निर्गुणस्य गुणेषु सत्सु तदमृतपानेन निर्यापितदेहधर्मत्वं सम्भवति तत्तु चिन्त्यमित्यतोवाह। एक इति। ब्रह्माद्यन्यतमासाध्यजगत्सर्जनादेस्तवत्कटाक्षलेशनियतत्वेन बन्धध्वंसनं किमु वक्तव्यं सार्वज्ञ्यादिगुणाभावे सृष्ट्यादिकमनुपपन्नमतोऽन्यथानुपपत्त्या गुणानामानन्त्यं सिद्धमत उक्तम्। युक्तमिति। आत्मनि स्वोदरे स्थितस्य जगतः सिसृक्षया स्वाधीनया योगमायया चित्प्रकृत्या जडप्रकृत्या च लोकविडम्बनार्थं द्वितीययेत्युक्तं द्वितीय आत्मन्निति पाठे पुरुषरूपो भूत्वेत्यर्थः। स्वशक्तिभिः स्वरूपसामर्थ्योपेतमत्स्याद्यवतारैः पालनादिकं करोषीति सृष्ट्यादिलक्षणं वास्तवमिति ज्ञापनायोर्णनाभिनिदर्शनमुक्तम् "यथोर्णनाभिः सृजते गृह्णते च" इति श्रुतेः॥ १९॥ ❀ ❀ यथा सृष्ट्यादिलक्षणाज्ज्ञानं पुरुषार्थसाधनमित्याशयेन सृष्ट्यादिकमुक्तमेवं स्रष्टृसृज्ययोर्भेदज्ञानं तत्साधनमित्यभिप्रायेणाह। नैतदिति। अधीश यत् भूतसूक्ष्मं ब्रह्माण्डं मायया स्वेच्छयानन्यप्रेरणया रूपत्वेन जगृहे अङ्गीकृतवान् भूतसूक्ष्मैर्निमित्तमपि मृद्घटवदित्युच्यते तवैव रूपमीप्सितम् "सत्यं ज्ञानमनन्तं ब्रह्म" इत्युपनिषदभीष्टं पदं रूपं न भवति बत एवं ज्ञानमेव तोषलक्षणपुरुषार्थकरमभेदेन ज्ञानं खेदलक्षणदुःखकरमित्यर्थः। तर्हि किमित्यग्रहीदित्यत उक्तम्। अनुग्रहायेति। त्वयि भक्तिभाजां मन्दाधिकारिणां भगवति भक्त्युत्पादकानुग्रहायाग्रहीदित्यर्थः। त्वयैतत्कुतो ज्ञातं यर्हीति विलक्षित इति पदमावृत्य योजनीयं स भगवान् यर्हि यदा लसन्ती तुलसी यस्यां सा लसत्तुलसी तया मालया उपलक्षणमेतत् मकरकुण्डलाद्यलंकारैश्च मया विशिष्टत्वेन लक्षितोऽङ्कितोऽन्यवस्तुवैलक्षण्येन लक्षितो ध्यानपदं गमितस्तथेदानीमपि लक्षितो दृष्ट इति यर्हिः यस्मात्तस्मादिदमेवाभी-

दृष्टमिति ज्ञातम् । यद्वा । "नृ नय" इति धातोर्नोपायवान् भगवान् भूतानां सूक्ष्मं द्रष्टुमशक्यं यद्रूपं जगृहे एतत्तवेप्सितं पदं तर्हि कथं दृष्टमिति तत्राह । अनुग्रहायेति । तर्ह्यनुग्रहोऽपि तथापि शिष्टः किमिति नाभूदत्राह । यर्हीति । यदा यादृशलक्षणवत्तया लक्षिताऽध्यातस्तथा मया विलक्षितो दृष्ट इति यस्मात्तस्मात् भक्त्यनुकम्पितत्वात्त्वामित्वज्ञानं श्रेयःसाधनमिति सूचितम् ॥ २० ॥

## श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

विन्यस्त इति । गरुत्मतो विनतापुत्रत्वमात्रं निरस्तं तदा विनताया जन्माभावात् ॥ ११ ॥ १२ ॥ ❀ ❀ टीकायां कर्दमवाक्यवृन्दार्थं संक्षेपेणाह । त्वामिति । अनुगृह्णाणेति । कार्पण्यदोषनाशार्थं वरं दत्त्वा पश्चादनुगृह्णाणेत्यर्थः । प्रीतिस्वभावात्मे-त्युक्तत्वाद्भवसिन्धुपोतमित्यनेन लोकानां तादृशोपकर्त्तरि तस्मिन् प्रीतिरेव समुचितेति सूचितम् ॥ १३ ॥ १४ ॥ ❀ ❀ अशेषमूलमिति । "स्वर्गापवर्गयोः पुंसां रसायां भुवि सम्पदाम् । सर्व्वासामपि सिद्धीनां मूलं तच्चरणार्च्चनम्" इति ॥ १५ ॥ ❀ ❀ तर्हि प्रीत्यैव केवलया किं भजसि तत्राह । प्रजेति । ते तवाधीनो यः प्रजापतिरित्यादि श्रीगीतोक्तः सोऽपि त्वदाज्ञानुसारेणैव तथा वक्तीति भावः । ननु कामहतोऽनुबन्धो भवतु नाम त्वं न कामहतः कथं नारदादिवत्तन्नातिक्रामसि तत्राह । लोकानुगतः । तेषु लोकेषु प्रतिष्ठालिप्सुरित्यर्थः । प्रतिष्ठात्यागस्तु दुष्कर इति भावः । तस्मादनिमिषाय कालात्मकत्वात् सर्वप्रवर्त्तकाय तुभ्यं बलिं पूजोपहारञ्च वहामि समर्पयामि । दुष्फले लब्धेऽप्यायत्यां तादृशदुर्व्वासना निवर्त्यतामिति विचिन्त्येति भावः । यद्यप्यसौ चामल-स्वभावात् गुरुलोकतः सङ्कोचेनैव तादृशनिजदुःखमप्यङ्गीकरोति न तु प्रतिष्ठादीच्छया तथापि परमाश्चर्यशिरोमणिः स्वस्मिन् तत्तद्दो-षत्वेनैव पश्यतीति ज्ञेयम् ॥ १६ ॥ ❀ ❀ शुद्धभक्तानान्तु लोकसङ्कोचहेतुकापि कामाद्यासक्तिर्निह्नुयेत्यपि तथैवाह । लोकांश्चेति ॥ १७ ॥ ❀ ❀ टीकायां त्रिगुणेत्यधिकमेवात्र भाति त्रिनाभिशब्दस्यान्यथैव व्युत्पाद्यत्वात् । पाठस्तु त्रिनाभीत्येव सत्पुस्तके ॥ १८ ॥ ❀ ❀ सकामैरपि सर्व्वात्मा भवानेव प्रार्थ्य इत्यभिप्रायेणाह । एक इति । सिसृक्षया हेतुना आत्मन् आत्मन्यधिकृता या योगमाया तया चाधिकृता याः स्वशक्तयः ताभिः सर्व्वत्रैव विशेषणं अद्वितीययेति अर्थवशाद्विभक्तिविपरिणामः। भवानिति क्वचित् पाठः ॥ १९ ॥ ❀ ❀ अतः सकामत्वात्त्वत्तो बहिर्मुख एव मादृशस्त्वं तु तत्रापि परमकृपालुरित्याह । नैतदिति । यत् शब्दादिरूपं विषयमसभ्यं तनुषे एतत्तव ईप्सितं न स्यात् कथं तर्हि तनोमि तत्राह । मायया व्याजेनैव स्निग्धेना-भजेन स्वस्मिंस्तत्स्नेहवर्द्धनार्थमिति बालानुजाय खण्डलड्डुकदानवत् तद्व्याजेनात्मनि स्नेहमेव वर्द्धयितुमित्यर्थः । अतस्तद्दानमनु-ग्रहायास्तु भवेत् । तत्र लिङ्गं यर्हि यद्वरदानसमये मायया कृपया हेतुभूतया त्वं दृष्टोऽसि तत्रापि लसन्त्या भक्तजनदृष्टेः परमसुख-दया तुलस्या युक्त इति भगवानित्यत्र तनुवेति पाठे तादृशतुलसिकया तन्वेत्यर्थः । वरदानमात्रं पारोक्ष्येणापि भवेदिति भावः ॥२०॥

## श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

अहो मद्भाग्यस्य प्रभोः कारुण्यस्य च परमा काष्ठा यदचिरेणैव दर्शनं लब्धवानस्मीत्याह । जुष्टमिति । बतेति विस्मये तव दर्शनान्नोऽस्माकमक्ष्णोः सांसिद्ध्यं ममाक्षिणी अद्यैव सम्यक्सिद्धे सफले जाते । इतः पूर्व्वमपि सिद्धे अक्षिणी अप्यनक्षिणी एवेत्यास्तामिति भावः । तच्च सांसिद्ध्यं जुष्टं सेवितं सर्व्वैरादृतमित्यर्थः । अहो धन्ये ते कर्दमस्य अक्षिणी नमस्ताभ्यां याभ्यां हरिर्दृष्ट इति सर्वे तोष्यन्तीति भावः । तव कीदृशस्य अखिलसत्त्वानामतिनिकृष्टसत्त्वानामित्यर्थः । राशेः राशिरूपस्येत्यर्थः । नैतदनुरूपं मया साधनञ्च कृतमित्याह । यदिति । हे ईड्य! सद्भिरुत्तरोत्तरश्रेष्ठैर्बहुभिरपि जन्मभिः रूढो योगो यैस्तेऽपि आशासते एव नतु लभन्ते ॥ १२ ॥ १३ ॥ ❀ ❀ हन्त हन्त एवं कृपासमुद्रमपि त्वां सकामतया भजन्तीत्यहो मौढ्यं लोकानामित्याह । ये तव मायया हतबुद्धयो भवन्ति ते एव नान्ये कामलेशाय कामलेशमेव प्राप्तुमुपासते त्वन्तु तेषां कामान् बहूनेव अकामितानपि रासि ददासि अन्यथा भक्तिसुखानभिज्ञास्ते त्वद्भक्तिमपि त्यक्तुं नैव विलम्बेरन्निति भावः । भक्तेरत्यागे तु काले तेऽपि निष्कामा भवेयुरेवेत्याशयेन ददासि नतु तद्दाने तव तात्पर्यं यतस्ते कलत्रपुत्रकुटुम्बैश्वर्याद्याः कामा निरये नारक्यामपि योनौ स्युः । किन्तु स्वर्गनरकयोः कर्मजन्यत्व-नियमनात् त्वद्दत्तानां तु तादृशानामपि भोगानां कर्मजन्यत्वाभावेन बन्धकत्वाभावात् नैव वस्तुतः स्वर्गनरकशब्दव्यपदेशस्तदपि तत्तुल्यत्वात्तथोक्तिरिति ज्ञेयम् ॥ १४ ॥ ❀ ❀ योऽहं सकामान्निन्दामि स चाहमेव सकामेषु मुख्य इत्याह । तथेति । गृहमेधो गृहाश्रमस्तत्र धेनुं त्रिवर्गदोग्ध्रीं भार्यां परिणेतुमिच्छन् धेनुपदेन स्वस्य निर्बुद्धित्वाद् वृषत्वमुक्तम् । किञ्च सकामेष्वपि मध्ये अहं दुराशयः दुरभिप्रायत्वादतिनिर्बुद्धिरित्यर्थः । यतः परिवोढुकाम एव कामदुघाङ्घ्रिपस्य तव मूलमङ्घ्रिमुपेयिवान् अशेषाः । सर्वे एव पदार्था मूले तले यस्य तत् स्वर्गापवर्गयोः पुंसामित्याद्युक्तेः ॥ १५ ॥ ❀ ❀ नन्वेवं चेदस्ति विवेकस्तर्हि निष्काम एव कथं त्वं न भजसीत्यत आह । प्रजापतेर्ब्रह्मणस्तव त्वदीयस्य प्रजाः सृजेति वचसा तन्त्या लोको मरीच्यादिः "सहयज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः । अनेन प्रसविष्यध्वम्" इति गीतोक्तेश्च सोऽपि त्वदाज्ञानुसारेणैव वक्तीति न तस्यापि दोष इति ते पदध्वनिः । ननु कामहतो लोको अनुबद्धो भवतु नाम त्वं त्वकामहतः कथं सनकादिवत्तन्नातिक्रामसि तत्राह । अहञ्च लोकानुगतः तदनुगामि-बुद्धिर्नतु नारदादिसदृशो भवितुं समर्थ इत्यर्थः । अतस्तन्त्या बद्धो वृष इव बलिं वहामि कर्ममयीं त्वदाज्ञामनुवर्ते तदर्थमेकां भार्या-मिच्छामीत्यर्थः । चकारात् त्वद्भक्तिञ्च करोम्यायत्यां त्वत्प्राप्त्यर्थमिति भावः । हे शुक्ल ! अनिमिषाय कालरूपं त्वां प्रसादयितुमित्यर्थः

॥ १६ ॥ ॐ ॐ ननुः लोकाः पित्रादयः तदाज्ञानुवर्तिनः पुत्रभ्रात्रादयश्च लोकतो धर्मतश्च यशस्विनः सुखिनश्च दृश्यन्ते किमिति तान् सकामत्वान्निन्दसि पित्रादीन् दुःखयतां निष्कामभक्तानां निष्परिग्रहाणां किं सुखं किं वा यशो यतस्तानभिनन्दसि इति तत्राह द्वाभ्याम् । लोकानिति पशूनिति । तेषां पशुत्वात्तत्त्यागे दोषो नास्तीति भावः । यद्वा लोकान् न्यायमीमांसादिशास्त्राभिज्ञान् तदनुगतांस्तदुपदेशवाक्येषु विश्वसतः शास्त्रानभिज्ञान् तेषामुभयेषामपि पशुत्वं भक्तिराहित्यात् चरणमेवातपत्रमाश्रिता इति निरातपत्राः पशवस्तु जाज्वल्यन्त एवेति भावः तेषां सुखमपरमप्याह । त्वद्गुणानां वादः कथनमेव संसारविस्मारकत्वात् सीधु मृत्युदूरीकरणादतिस्वादुत्वाच्च पीयूषं तेनैव तत्पानेनैव निर्यापिता देहधर्मा बाल्यपौगण्डादयः क्षुत्पिपासादयो वा यैस्ते भवन्तीति क्रियया अन्वयः ॥ १७ ॥ ॐ ॐ त एव कालं जयन्ति नान्ये इत्याह । न ते इति । यत्त्रिनाभि कालचक्रं तज्जगदाच्छिद्य संहृत्य धावदपि एषां त्वद्भक्तानामायुराच्छिद्य धावन्न भवतीत्यन्वयः । कथम्भूतमजरं ब्रह्म तस्मिन्नक्षरूपे भ्रमिः भ्रमदिति वक्तव्ये अतिभ्रमणशीलत्वात् उपचारेण भ्रमिरित्यभेदन्निर्देशः अधिकमासेन त्रयोदशमासा अरा यस्य तत् त्रिशतं षष्टिश्चाहोरात्राः पर्वाणि यस्य तत् शतशब्दे विभक्तेरलुगार्षः षट् ऋतवो नेमयो यस्य अनन्ताः क्षणलवादयश्छदाः पत्राणि पत्राकारा धाराः सन्ति यस्य त्रीणि चातुर्मास्यानि नाभयः आधारभूतानि वलयानि यस्य करालस्रोतस्तीव्रवेगम् । एतैर्विशेषणैरेव सम्वत्सरात्मकं कालचक्रमुक्तमिति द्रष्टव्यम् ॥ १८ ॥ ॐ ॐ नन्वेवं निष्कामभक्तानेव धन्यान् ब्रूषे अथ च निष्कामो भवितुं न शक्नोपि तर्ह्यन्यस्मादेव देवतान्तरात् शीघ्रफलप्रदात् कथं स्वकामं न साधयसि तत्र त्वां विना जगत्यस्मिन्नन्यं कमपि न पश्यामीत्याह । स्वयमेक एव सन्नपि इच्छाया द्वितीयत्वाभावात् अद्वितीयया सिसृक्षया यद्वा तव सिसृक्षा ब्रह्मादिसिसृक्षैव नान्यानुरोधवतीत्यर्थः आत्मनि स्वस्मिन्नधिगतः प्राप्त ईक्षणयोगात् योगो यस्यास्तया मायया सृष्ट्यादिकं करोषि । यद्वा आत्मन्यधिकृतया योगमायया चिच्छक्त्या हेतुना याः स्वीकृताः सत्त्वाद्याः शक्तयस्ताभिरदो विश्वं स्वव्यतिरिक्तसाधनानपेक्षत्वे दृष्टान्तः अथेति । अतस्त्वद्भिन्नस्य देवतान्तरस्याभावात् सकामेनापि मया त्वमेव सेव्यसे इति भावः ॥ १९ ॥ ॐ ॐ एवञ्चेत्तर्हि मत्प्रसादात् तव कलत्रापत्यभोगैश्वर्याणि परमोत्तमानि भवन्त्विति वरं ददानं भगवन्तं सप्रणाममाह । नैतदिति द्वाभ्याम् । हे अधीश ! एतत्पदं मत्काम्यमानं वस्तु तव स्वभक्तमात्रहितकारिणो दातुमीप्सितं न भवति 'न राति रोगिणोऽपथ्यं वाञ्छतोऽपि भिषक्तमः' । इति त्वदुक्तेरवसीयते इति भावः । कथं तर्हि ददामीति तत्राह । यद्यस्मान्नोऽस्मभ्यं भूतसूक्ष्मं शब्दादीन्द्रियभोग्यं विषयसुखं तनुषे ददासि तत् खलु माययैव नत्वमायया अनभिज्ञभक्तोऽयमन्यथा विमनस्को भविष्यतीति मदनुरोधेनैवेत्यर्थः । वासनामयं विषयसुखमन्तःकरणे वर्त्तत एव तदेव वरदानेन विस्तारयसीति तनुधात्वर्थः । नन्वेवञ्चेत् तर्हि न ददामीति तत्राह । अनुग्रहायास्तु दीयमानमेतदस्तु किं त्वदनुग्रहायेति हन्त हन्त मयैव दत्तेन विषयसुखवरेण भक्तोऽयमन्वे तमसि पातितस्तदिमगुद्धरामीत्यायत्यां त्वत्कृपाप्राप्त्यर्थमप्यस्त्वित्यर्थः । तत्र लिङ्गं यर्हि वरदानसमये सम्प्रति विलक्षितः विशेषेण त्वं दृष्टस्तर्हि मायया कृपया मनःस्पर्शस्मितेक्षणमित्युक्तेः स्मितद्योतितवक्रपाकटाक्षेण विशिष्ट एवं दृष्टः तत्रापि लसन्त्या भक्तजनैः परिचर्यायां समर्पितया दृष्टेः परमसुखदया तुलस्या उपलक्षिता चिदानन्दमयी या तनुस्तया युक्त इति भक्तपरिचरणीयत्वमेव तनोरमायिकत्वे लिङ्गममायिकतनुदर्शनप्रदानमेव कृपायां लिङ्गं भगवानित्यप्यत्र पाठः ॥२०॥

श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

सांसिध्यं लब्धार्थत्वं जुष्टं सेवितमाशासते प्रार्थयन्ते ॥ १३ ॥ ॐ ॐ यद्यप्यर्थार्थं भजनं नातियुक्तं तथापि प्रजापत्यात्मनो भवतो वाक्तन्त्या बद्धोऽहं सकामभक्तः सन् तुभ्यं बलिं हरामीत्याह । य इति त्रिभिः । रासि ददासि ॥ १४ ॥ ॐ ॐ गृहमेधे गृहाश्रमे धेनुं त्रिवर्गदोग्ध्रीं भार्यां कामदुघाङ्घ्रिपस्य कल्पद्रुमस्य तव मूलमङ्घ्रिम् ॥ १५ ॥ ॐ ॐ हे अधीश ! हे शुक्ल धर्ममूर्ते ! लोकः कामहतोऽत एव सहोभौ म धर्ममाचरतामित्यादिवाचा बद्धः अहमपि लोकानुगतः लोकमनुसृतः अनिमिषाय कालात्मने तुभ्यं बलिं वहामि यथा कामहतो लोकः कालवश्यतां वहति तथा हेयोपादेयविवेकवानहमपि लोकानुगतत्वात्कालवश्यतां वहामि न तु कालातीतं त्वां निष्कामभजनेन प्राप्यकालवश्यतां त्यक्ष्यामीति फलितोऽर्थः ॥ १६ ॥ ॐ ॐ लोकतदनुगतापेक्षाणां त्वद्भजनरसिकानां तु न कालवश्यतेत्याह । लोकानिति द्वाभ्याम् । लोकानस्मद्विधान् लोकानुगतांश्च पशून् पशुतुल्यान् हित्वा भगवद्भजने विघ्नभूतं कलत्रादिप्रावण्यं लोकवदनुगतमनादृत्येत्यर्थः । ते चरणातपत्रं तापत्रयघ्नं तव चरणं ये श्रिताः अत एव परस्परं मिथः त्वद्गुणानां वादः सम्वादस्तदेव सीधु अतिमधुरं पीयूषममृतं तेन निर्यापिता अनादितः प्रतीयमाना अपि आत्मनः सकाशात् निराकृताः देहधर्माः जन्ममरणादयो यैः एषामित्यग्रिमेणान्वयः ॥ १७ ॥ ॐ ॐ ते तव यत् त्रिनाभि त्रीणि चातुर्मास्यानि नाभयः आराधारभूतानि वलयानि यस्य तत्तथा कालचक्रं तत् जगदाच्छिद्य स्वपरिच्छिन्नं कृत्वा धावदपि एषां त्वद्गुणसम्पादेन जन्ममरणरहितात्मयाथात्म्यविदां त्वायुराच्छिद्य धावन्न भवति तेषां देहेन्द्रियादिविलक्षणनित्यस्वरूपनिष्ठानां कालवश्यत्वाभावात् कथम्भूतमजरे ब्रह्मण्यक्षरूपे भ्रमिर्भ्रमणं यस्य तत् सोरलुक्छन्दोऽनुरोधेन अधिकमासः अन्ये द्वादशमासाश्च आरा यस्य तत् त्रिशतं षष्टिश्च अहोरात्राणि पर्वाणि यस्य तत् त्रिशतशब्दे विभक्तेरलुगार्षः षट् ऋतवो नेमयो यस्य तत् अनन्ताः क्षणलवादयः छदाः पत्राणि पत्राकारा धाराः सन्ति यस्य तत् करालस्रोतः तीव्रवेगम् ॥ १८ ॥ ॐ ॐ

सर्वकारणत्वं सर्वशक्तिमत्त्वं भुक्तिमुक्तिप्रदत्वं भक्तेच्छानुसारित्वम् । सर्वोपास्यत्वं च भगवतो वदन् नमस्करोति । एक इति त्रिभिः । हे भगवन् ! आदौ स्वयमेकः सन् द्वितीयया जगतः सिसृक्षया आत्मन्यधिगतया अनन्तशक्तिमत्यात्मनि आविष्कृतया योगमायया युज्यते इति योगः सङ्कल्पः तेन सहिता तत्प्रवर्तिता माया प्रकृत्याख्या शक्तिस्तया कालादिस्वशक्तिभिश्च शक्तिपरिणामसिद्धान्तं द्योतयितुं दृष्टान्तमाह यथोर्णनाभिरिति ॥ १९ ॥ ❀ ❀ हे अधीश ! नोऽस्माकं भक्तानां यत् भूतसूक्ष्मं पदं श्रोत्रादीन्द्रियविषयं शब्दादिकं मायया कृपया तनुषे विस्तारयसीति एतत्तवेप्सितं न भवति तथाप्यस्मदनुग्रहायास्तु तवेप्सितं भवतु तत्र भवतो भक्तेच्छपरिपूरकत्वादिति हेतुं सूचयितुमाह यर्हि यतः लसन्ती तुलसी यस्यां तया तनुवा तन्वा श्रीमूर्त्या मायया कृपया विलक्षितोऽसि मया दृष्टोऽसीत्यर्थः "माया कृपायां दम्भे च" इति विश्वः । मुक्तिदोऽपि भक्ताग्रहतो भुक्तिदोऽसीति भावः ॥ २० ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

पुरुषार्थेषु दोषान्निराकुर्वन्नाह—विन्यस्तेति । धर्मे हि मृत्युः श्रमात्मको मृत्युरूपश्च निमित्तभूतश्च कालो बाधको भवतीति तन्निराकरणार्थम्, गरुत्मति काले चरणकमलं भक्तिमार्गं च विन्यस्य स्थितः । अंसदेश इति मोक्षपर्यन्तं भक्तिरुक्ता, शिरश्चतुर्थांश इति । खे आकाशे स्थितम्, आकस्मिकोर्थस्तस्य निरूपितः । वक्षसि श्रीर्यस्य, कामो यथेच्छं निरूपितः । कौस्तुभो मणिः कन्धरायां यस्य । जीवाः सर्वे स्वोपरि यथासुखं नयनार्थं स्थापिता इति सर्वविधा मुक्तिरुक्ता ॥ ११ ॥ ❀ ❀ जातहर्ष इति । अत एव जातो हर्षो यस्य । मूर्ध्ना क्षितावपतत्, उपरि स्थितस्य तिष्ठन्नेव चरणं न स्पृष्टवान् । दर्शनाकाङ्क्षी च शिरो न नामयेदिति दोषश्च व्यावर्तितः । समागतो मदर्थमेवेति लब्धो भगवद्रूपो मनोरथो येन । एवं कायिकं मानसिकं च भजनमुक्त्वा वाचनिकं भजनमाह गीर्भिस्त्वभ्यगृणादिति । अभितो गृणनं सर्वसिद्धान्तनिरूपणपूर्वकम् । भगवति प्रीतिः स्वभाव एव यस्य । अतो भक्त्या गृणनं न वक्तव्यम्[3], सर्वकर्मस्वेव भक्तेर्विनियोगात् । तादृश आत्मा यस्य । जीवान्तःकरणस्वभाव एव[4] तादृश इति देहकार्ये दासकार्ये वा स्नेहोऽनवच्छिन्नो निरूपितः । प्रार्थनार्थम्—कृताञ्जलिरिति । प्रसृताञ्जलिरुक्तः प्रसादग्रहणार्थम् ॥ १२ ॥ ❀ ❀

> नवधा वर्णयामास सृष्ट्यर्थं गुणभावतः । आद्यास्तु रजसा सत्त्वे तमसाऽप्यत्र योजितम् ( ? ) ॥ १ ॥
> द्वाभ्यां सत्त्वं रजःसत्त्वात् त्रिभिरन्तिम ईर्यते । सत्त्वमिश्रं रजः पूर्वं तमोमिश्रं तथा परम् ॥ २ ॥
> फलं तु भगवानेव सर्वोत्कृष्टमिति स्थितिः । तं परित्यज्य तस्माद्धि प्राप्यं प्रथममुच्यते ॥ ३ ॥
> दोषज्ञाने तथा कामे विद्यमाने तु मध्यमः । विचार्य भगवान् दातेत्यस्य वै शरणं गतः ॥ ४ ॥

प्रथमं सत्त्वयुक्तरजोभावेन भगवानेव परमपुरुषार्थ इति निरूपयति—जुष्टमिति । नोऽक्ष्णोः सांसिद्ध्यं सम्यक् सिद्धेर्भावः, तव दर्शनादेव जुष्टं सेवितम् । सिद्धिरुत्तमा सर्वफलात्, यतः सर्वाणि फलानि स्वाधीनान्येव भवन्ति । सा च सिद्धिरस्माकं जातेति सर्वप्रकारेण भविष्यतीति ज्ञायते । यतः प्रथममक्ष्णोः सिद्धिर्जाता, अस्माभिर्ज्ञाता; न हि असिद्धा दृष्टिरधोक्षजं द्रष्टुमर्हति । तेन ज्ञायते, अक्षिभ्यां सांसिद्ध्यमाधिदैविकी सिद्धिः सेवितेति । अत एव—बतेति हर्षे । अद्येत्यलभ्यलाभोक्तिः । सिद्धयः सर्वाः सत्त्वकार्याः, अखिलानि च सत्त्वानि त्वयि राशीभूतानि । तानि चेत् निकटे दृष्टानि, तदा का सिद्धिरवशिष्येतेत्यभिप्रायेणाऽऽह—अखिलसत्त्वराशेरिति । न इति सर्वानेव सिद्धानात्मत्वेन ज्ञात्वा वदति । एवं दर्शनान्यथानुपपत्त्या चक्षुषोः सिद्धिरुक्ता । इदानीं दर्शनमेव सर्वसिद्धीनां फलमित्याह—यद्दर्शनमिति । ईड्येति संबोधनात् नेदं स्तोत्रं क्रियते, किन्तु वस्तुस्वरूपमेव तथेति ज्ञापितम् । भगवतः स्तोत्रं नित्यसिद्धम्, सर्वैरेव क्रियत इति । अतः स्तोत्रस्याश्चर्यत्वाभावात्, न वाक्यानां स्तोत्रपरत्वम् । रूढयोगा अपि, बहुभिः जन्मभिः, कायव्यूहमपि कृत्वा, देहदेशकालकृतसंदेहव्यावृत्त्यर्थं सद्भिरपि जन्मभिर्यद्दर्शनमाशासते । तेषां सिद्धयः स्वतः सिद्धाः, दर्शनं तु दुर्लभमाकाङ्क्षितमेव ॥ १३ ॥ ❀ ❀ एवं भगवद्दर्शनं सूचकत्वेन फलत्वेन च निरूप्य दर्शनानन्तरं दर्शनदातुः सकाशात् येऽन्यत्कामयन्ति तान् निन्दति—ये माययेति । ये ते पदारविन्दं कामलवायोपासते, ते मायया हृतचेतसः । बालो हि मायया मोहितो बहुसुवर्णं दत्वा भक्ष्यमुष्टिं गृह्णाति, तद्वदिति । तथा ग्रहणे हेतुः—इति । हृतचेतस इति । पादारविन्दमिति सुसेव्यता । ननु, ये भजन्ति, ते हि कार्यार्थमेव; अतो वरप्रार्थनोचितेत्याशङ्क्याऽऽह–भवसिन्धुपोतमिति । सैन्धवः[5] पोतोऽस्ति तत्तीरवासिनां पारोत्तरणहेतुः; तदर्थमेव तस्य निर्माणात्, न तु ग्रामवत् भोगार्थे । अतो ये पारगमनेच्छवः तैरेवारोढव्यः, न तु ग्रामवत् स्थित्यर्थम् । तथार्थमारोहे कर्णधारः क्रुद्ध्यति । ये पुनस्तत्र कार्यार्थं स्थापिताः, ते भोगं प्राप्नुवन्तोऽपि निरोधेन क्लिष्टयातयामभोगानेव भुञ्जते । ते तु नरकेऽपि भवन्ति, निरोधादीनां विद्यमानत्वात् । अतः पोतारूढो यथाकथञ्चित् पार एव गच्छेत् । न तु ततो विषयभोगं वाञ्छेत्; तत्र निरोधस्य सहजस्य विद्यमानत्वात् । ( क्षणमात्रं प्राप्नोति ) कामलव एव तत्र भोगेन भवति । परमदयालुस्तु

---

१. व्यकार्श क. ग. ङ. । २. यथासुखं न यथार्थम् क. यथासुखं यथार्थम् ङ. । ३. न कर्तव्यम् ख. कर्तव्यम् क. ङ. वक्तव्यम् घ. । ४. एतादृशः ग. च. । ५. सिन्धोः ख. घ. ङ. च. ।

भगवान् तदपि प्रयच्छति यथा महता कष्टेन पोतारूढः, तत्र तत्र स्थितकर्णधारात् भक्ष्यमात्रं प्राप्नोति, महानगराद्यपेक्षया तु तदन्नादिकमपकृष्टमेव; तद्वदित्यर्थः ॥ १४ ॥ ❀ ❀ एवं गुणदोषान् ज्ञात्वाऽपि गत्यन्तराभावात्, उद्गतकामस्य प्रतीकाराभावाच्च आत्मार्थमपि भगवन्तमेव प्रार्थयति—तथेति। स चाऽहमिति ज्ञात्वाऽपि प्रकटकामः, अत एव परिवोढुकामः। स्वयोगबलेन कामिनीर्निर्माय न भोगकामः, न वा तथोत्पादिता ब्रह्मणः कार्ये प्रयोजका भवेयुः, हीनास्ते। तद्व्यावृत्त्यर्थमाह—समानशीलामिति। समानं शीलं यस्याः। तदा पूर्णमपत्यं भवति। अनेन भगवता मदानन्देनैव[1] सा निर्मिता भवतीति ज्ञापितम्। किञ्च, न केवलं कामार्था, किन्तु धर्मादयोऽप्यपेक्ष्यन्ते। अतो ये गृहमेधिनो गृहस्थितबुद्धयो धर्मार्थकामपराः, तेषां धेनुर्धर्मादिदोग्ध्री। तादृशीं परिवोढुकामस्ते कामदुघाङ्घ्रिपस्य मूलमुपेयिवान्। कल्पवृक्षमूले गतः सर्वं प्राप्नोति, यावती शक्तिः कल्पवृक्षे भगवत्स्थापिता, तत्र सिद्धम्। भगवच्चरणारविन्दद्वयं तु ततो विशिष्टमित्याह—अशेषमूलमिति। न हि कल्पवृक्षः सर्वस्य मूलम्, न हि देवहूतिं दातुं समर्थो वा भवति। ननु चित्तशुद्धिं प्रार्थय, संपादय वा; किमनयेत्याशङ्क्याऽऽह—दुराशय इति। अन्तःकरणशुद्ध्यभावान्न स पक्षः सिद्ध्यति। यथा भवसिन्धुपोतः, तथा कल्पवृक्षोऽपि भवान्; अतो भार्यार्थमपि भजनं युक्तमिति भावः ॥ १५ ॥ ❀ ❀ नन्वन्तःकरणशुद्धिरेव वरात्कथं न प्रार्थ्यते? किं कामपूरणेनेत्याशङ्क्याऽऽह—प्रजापतेरिति। न केवलं कामः, किन्तु पितुराज्ञा च। स च वैष्णवस्त्वत्पुत्रः; अतस्तव यः प्रजापतिः, तस्य वचसा। लोकापेक्षया वा स एव भवान्; यथा ग्रामवासिनां ग्रामाधिपतिरेव महाराजः। लोकानां ब्रह्मवाक्यमनुल्लङ्घनीयमित्याह—ते वचसा तन्त्या अयं सर्वोपि लोकः कामहतोऽनुबद्धः। 'ऋणत्रयमपाकृत्य मनो मोक्षे निवेशयेत्'। जायमानो वै ब्राह्मणस्त्रिभिर्ऋणैर्वा जायते' इति च। एवंविधानि श्रुतिस्मृतिवाक्यानि सकामपराणि, अतः सकामश्चेदन्यथा कुर्यात् पतेदेव। अतो हे अधीश! अनुल्लङ्घ्यसामर्थ्ये, सर्व एव लोकः कामहतोऽनुबद्ध एव। एवं सामान्यतः कामहतस्य ऋणत्रयापाकरणं कर्तव्यमित्युक्त्वा, स्वस्य लोकत्वाभावेऽपि सकामत्वं लोकानुगतत्वं च वर्तत इत्याह—अहञ्चेति। हे शुक्ल! ते च बलिं वहामि। इदमधिकम्, भक्तोऽहमपि यतः। अतस्त्रितयकार्यार्थं मह्यं स्त्री देयेति भावः। शुक्लेति संबोधनान्न संसारकृतः कश्चन क्लेशो भविष्यतीति सूचितम् ॥ १६ ॥ ❀ ❀ एवं लोकानुसारिणं सकामभक्तमात्मानं निरूप्य मुख्यभक्तान् निरूपयितुं तेषां धर्ममाह—लोकांश्चेति। मुख्या भगवद्भक्तास्त्रिधर्मा भवन्ति। प्रथमतो लोकान् त्यजन्ति, तदनु ते चरणातपत्रमाश्रिता भवन्ति, निरन्तरं च तादृशैः सह तथा भगवद्गुणगानं कुर्वन्ति। यथा देहादीनामस्मरणं भवति। यद्येतन्मध्ये एकमपि न्यूनं भवेत्, न स वैष्णवो मुख्यः। यथा लोकास्त्यक्तव्याः, एवमेव भगवद्भक्ता अपि लोकानुगताश्चेत् त्यक्तव्या एव। लोकापेक्षयाऽप्येते विशेषतस्त्यक्तव्या इत्यत्र हेतुमाह—पशूनिति। अन्धश्चेत् कूपे पतति, युक्तं तत्; चक्षुष्मान् चेत् पतति स महानन्ध इति ज्ञेयम्। त्यक्त्वा पश्चाच्चरणशरणता। आतपत्रग्रहणादिदानीमिव भगवान् यस्य प्रसन्नो भवति, तथा सति शरणागतश्चेन्, स मुख्यो भवति। स्वत एव गुणकथने रसाविर्भावो न स्यात्, अभिमानश्च स्यादिति समानाश्चेत्परस्परं वदेयुः। तत्रापि त्वद्गुणानां वादो यत्र; तादृशवाक्समुद्र एव, मथनादिवोद्धृतं यममृतं तेन कृत्वा नितरां यापिताश्चेत् क्षुत्पिपासादयः। त एव भगवद्भक्ताः, ये कथामृते पीयमाने देहधर्मरहिता भवन्ति। अमृतं च तदेव यद्देहधर्मनिवर्तकम्। येषां च निवर्तते, त एव त्यक्तलोका भवन्ति, अन्येषां तदपेक्षाया विद्यमानत्वात्। वादस्तदैवान्तस्तापं दूरीकुर्यात्; यदि चरणच्छायामाश्रितो भवेत्। यस्य च्छायान्तरेण धर्मनिवृत्तिः, अन्नादिना च क्षुन्निवृत्तिः, ते चेल्लोकानुगताः, पतिता एव; तदा उभयभ्रंशात्। अतो लक्षणत्रयमुक्तम् ॥ १७ ॥ ❀ ❀ तथाविधानां फलं वदन् कालादीनामबाधकत्वमाह—न त इति। ते[2] त्रिणाभि कालचक्रमेषामायुराच्छिद्य धावन्न भवतीति संबन्धः। कालस्य बलिष्ठत्वमनन्यप्रेर्यत्वं वक्तुं प्रवाहत्वेनोच्यते स्वरूपम्, चक्रे त्वन्यप्रेरणं भवति। चक्रस्येव वा गतिविशेषस्य प्रवाहत्वं विधीयते। कालचक्रं संवत्सरात्मकमविकृतेऽक्षेऽक्षररूपे प्रोतं भ्रमति, नाशकमिति। समलं त्रयोदशारमुच्यते। त्रयोदशमासा एवाऽराः। सारमेतच्चक्रम्, न तु प्रधियुक्तम्। एकैकस्याऽरस्य त्रिंशत् पर्वाणि भवन्ति। तथा सति त्रिशतं षष्टि पर्वाणि यस्य। इदमाधिदैविकं चक्रं तुल्यमेव, अन्यथा तस्यैव परिवर्तो न स्यात्। आधिभौतिके हि वृद्धिक्षयौ, अतस्तावत्पर्वत्वं नानुपपन्नम्। षड् ऋतव एव नेमयो यस्य। अरास्तु नाभिं नेमिं प्रविशन्ति, अयं च त्रिणाभिर्भवति। सर्पकुण्डलिकावन्नाभित्रयम्, परं चत्वार एवारा एकस्यां नाभौ प्रविशन्ति। अत एवाऽस्य करालत्वम्। ते च वर्षातपहिमागमा नाभिस्थानीयाः। किञ्च, अनन्तच्छदि च भवति। प्ररोहात्मा चाऽयं संवत्सरः, यतोऽस्य पत्राणि सन्ति, न तु प्राकृतचक्रवत् शुष्ककाष्ठजनितम्, अतो नाऽस्य कदाऽपि क्षयः। करालं चाऽस्य स्रोतः, अत एव जगदाच्छिद्य धावद्भवति। लोकमध्ये स्थितौ अवर्जनीयतयापि तस्याऽऽयुराच्छिद्येत्। तटच्छायाश्रयणेऽपि कदाचित्पातयेत्, परिवृत्तौ तद्गतानां वैकल्यसम्भवात्। तदपेक्षया तन्निकटगमने पातयेदेव। अपेक्षा च कथया चेद्देहधर्मनिवृत्तिः, तदैव निवर्तते। एवं द्वाभ्यां भक्तिमार्गनिष्कर्षो निरूपितः ॥ १८ ॥ ❀ ❀ तामसभावेन जगत्कर्तृत्वेनोक्त्वा तं च लीलाविग्रहं मत्वा, तेन च वरं प्रार्थयते—एक इति त्रिभिः—स्वमेक एव स्वयम्। यदा जगतः सिसृक्षा

---

१. सदानन्देन. क.। २. युक्तमेतत् क. ख। ३. तत् क. घ. ङ।

जाता, तदा तादृशोऽपि सन् , आत्मनि स्वधिष्ठाने, अधिका योगमाया निर्मिता। तदा सा द्वितीया करणत्वेन प्राप्ता, तदा सर्वमेव जगदिदोऽव्यक्तरूपमपि सृजसि, पासि, पुनश्च ग्रसिष्यसे। असहाये करणमात्रापेक्षायां दृष्टान्तः—यथोर्णनाभिरिति। तथा करणे सामर्थ्यम्—भगवानिति। ऊर्णांशाः स्वशक्तयः सत्त्वादयः ॥ १९॥ ❀ ❀ सर्वकर्तृत्वात् पालकत्वाच्च स्त्र्यादिदानेन सृष्टिकारणं नाऽऽश्चर्यम् , तथापि भक्तिमार्गे तथा करणं तस्याऽप्याश्चर्यमित्याह—नैतदिति। एतद्विवाहादिलक्षणं पदम् , तवाभीप्सितं न भवति। बतेति खेदे। यतस्त्वमधीशः, अन्यथापि सर्वां सृष्टिं कर्तुं शक्तः। भक्तेभ्यश्च संसारदायकं भूतसूक्ष्ममहङ्कारं तन्मात्रा वा, यन्नस्तनुषे विस्तारयसि, एतन्न तवेप्सितम्। सहजजगन्निर्माणे भक्तार्थं त्वया विषया न सृष्टा इत्यर्थः। नन्वेवं सत्यन्यार्थं निष्पादिता विषयाः कथं प्रार्थ्यन्ते ? तत्राऽऽह—अनुग्रहायाऽस्त्विति। अन्यार्थं कृता अप्यनुग्रहेणाऽन्यस्मै देयाः, अत एव तद्दानमनुग्रहाय भवतु। अयीति संबोधने स्नेहेन। अव्ययं चैतत्। नन्वनुग्रहेणाऽपि कथमन्यथाकर्तुं शक्यते ? तत्राऽऽह—यर्हि मायया कृतया लसत्तुलस्या तनुवा भवान् विशेषेण लक्षितः। त्वया न भक्तार्थं स्वार्थं वा किञ्चित्सृष्टम् , तत्र परार्थसृष्टैरेव सत्त्वकार्यैः स्वस्य तनुं संपाद्य, तुलस्याद्याभरणानि च गृहीत्वा, विष्णुरयमिति चेदात्मानं प्रकाशयसि, तदा भक्तमपि यथाभिलषितं विषययुक्तं संपादयेत्यर्थः। तामसभावत्वेऽप्येवंविधैव सृष्टिः॥ २०॥

## श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

श्रमात्मक इति 'तानि मृत्युः श्रमो भूत्वोपयेमे' इति श्रुतेरित्यर्थः। यथेच्छमिति। कर्दमेच्छानुरूपः॥ ११॥ ❀ ❀ गीर्भिरित्यत्र। जीवान्तःकरणस्वभाव इति। जीवान्तःकरणयोः स्वभावः॥ १२॥ ❀ ❀ कारिकासु। आद्या इति जुष्टमित्याद्याश्चत्वारः श्लोकाः, त्रिभिः षड्भ्योऽग्रिमैरजःसत्त्वात् अन्तिमे नवमे रजःसत्त्वमुत्तरावधीकृत्य। पूर्वं सप्तमे। सत्त्वमिश्रं रजः। परम्—अष्टमे तमोमिश्रं रजस्तथा तेन प्रकारेणेर्यत इत्यर्थः। आद्यानां चतुर्णामर्थमाहुः—फलमित्यादि द्वाभ्याम्। तत्राद्यार्द्धेन प्रथमस्य द्वितीयार्द्धेन द्वितीयस्य। दोषज्ञान इति। दोषं ज्ञात्वा तथेत्यारभ्य तृतीयार्द्धेन तृतीयस्याग्रे तुरीयस्येति ज्ञेयम्। विचार्येति। मध्यमत्वं स्वस्मिन् विचार्येत्यर्थः।

जुष्टमित्यत्र। यत इति। सिद्धेः सकाशादित्यर्थः। भविष्यतीति। सिद्धिर्भविष्यति। स्तोत्रमिति। असत्समारोपणरूपं स्तोत्रम्। सूचकत्वेनेति। सिद्धसूचकत्वेन॥ १३॥ ❀ ❀ य इत्यत्र। तत्रेति। पोते इत्यर्थः॥ १४॥ ❀ ❀ तथेत्यत्र। त इति। स्वार्थं योगनिर्मिताः पदार्था इत्यर्थः॥ १५॥ ❀ ❀ न त इत्यत्र। त्रयोदशारत्वे त्रिशतं नवतिश्च पर्वाणि भवन्तीति विशेषणयोर्विरोधमाशङ्क्य, समादधते—इदमित्यादि। अतएवेति। सर्पकुण्डलिकाकारत्वादेवेत्यर्थः॥ १८॥ ❀ ❀ नैतदित्यत्र। एवंविधैवेति। परार्थसृष्टसत्त्वकार्यैर्निर्मितेत्यर्थः॥ २०॥

## श्रीगिरिधरकृता बालप्रबोधिनी

गरुत्मतः गरुडस्य अंसदेशे स्कन्धप्रदेशे विन्यस्ते निहिते चरणाम्भोजे येन तम् , खे आकाशे अवस्थितम्। वक्षसि श्रीर्लक्ष्मीर्यस्य तम्। कौस्तुभं रत्नं कन्धरायां यस्य तम् ॥ ११॥ ❀ ❀ भगवद्दर्शनमात्रेण कथं हर्षो जात इत्यत आह—लब्धमनोरथ इति। लब्धो भगवद्दर्शनलक्षणो मनोरथो येन सः। तस्य तन्मनोरथ एव कथमासीदित्याकाङ्क्षायां भक्त्यतिशयादित्याह—प्रीतीति। भगवति प्रीतिरेव स्वभावः स्वतस्सिद्धो धर्मो यस्य तथाभूत आत्माऽन्तःकरणं यस्य स इत्यर्थः॥ १२॥ ❀ ❀ तत्कृतां स्तुतिमेव दर्शयति—जुष्टमिति नवभिः। न केवलं मयैव अतिस्तुतिः क्रियते किन्तु पूर्णगुणत्वात् सर्वैरेवेत्याशयेन सम्बोधयति—ईड्येति। तव दर्शनान्नोऽस्माभिरद्याक्ष्णोः सांसिद्धं साफल्यं जुष्टं सेवितं प्राप्तमित्यर्थः। बतेति हर्षे। कथं दर्शनमात्रेण साफल्यमित्याकाङ्क्षायां दुर्लभत्वादित्याह—यदिति। यस्य तव दर्शनं सद्भिः उत्तरोत्तरं आपादितप्रकर्षैर्जन्मभिः रूढो विरूढो योगो यैस्तेऽपि योगिनः आशासते प्रार्थयन्ते। तत्र हेतुं सूचयन् विशिनष्टि—अखिलसत्त्वराशेरिति, सत्त्वकार्यज्ञानादिपूर्णस्येत्यर्थः ॥ १३॥ ❀ ❀ काम्यन्ते इति कामा विषयसुखानि तेषां लवाय लेशार्थं ये त्वत्पादारविन्दमुपासते ते तव मायया हतमेधसो मोहितबुद्धय इत्यन्वयः। कुतः यतस्ते न प्रार्थनायोग्या इत्याह—निरयेऽपि ये स्युरिति, ये कामा विषयसुखानि प्रार्थनां विनाऽपि प्रारब्धवशादेव निरयप्राये श्वसूकरादियोनावपि भवन्तीत्यर्थः। तर्हि किमर्थं तद्भजनं कर्त्तव्यमित्यपेक्षायामाह—भवसिन्धुपोतमिति, भवः संसारः स एव क्रोधमोहादिग्राहयुक्तत्वात् दुस्तरत्वाच्च सिन्धुस्तत्र पोतं तदुत्तारकं तत्पारे वर्तमानपरमानन्दस्वरूपस्य तव प्राप्तिसाधनं नौकारूपम्। अतः संसारादुत्तीर्य त्वत्प्राप्त्यर्थमेव त्वच्चरणोपासनं कर्त्तव्यमिति भावः। तथापि त्वच्चरणोपासनं सकामानामपि न विफलमित्याह—तेषामिति, तेषां सकामानामपि तत्कामितान् कामान् रासि त्वं ददास्येव। तत्र हेतुं सूचयन् सम्बोधयति—ईशेति। कथं परमेश्वरस्य भजनं विफलं स्यादिति भावः॥ १४॥ ❀ ❀ यः सकामान्निन्दामि सोऽहमपि तथा निन्दायोग्य एव, यतः गृहमेधो गृहाश्रमः तत्र धेनुं धर्मार्थकामरूपत्रिवर्गदोग्ध्रीं भार्यां परिवोढुकामः परिणेतुमिच्छन्नेव कामदुघाङ्घ्रिपस्य कल्पवृक्षवत् स्वशरणागतानामर्थिनं अर्थितार्थप्रदस्य तव मूलमङ्घ्रिमूलं उपेयिवान् उपगतोऽस्मि। तथापि भार्यायाः विरुद्धस्वभावत्वे कलहेन स्वाभीष्टपुरुषार्थो न सिद्ध्येदित्याशङ्क्याह—समानशीलामिति। कथं सर्वाभीष्टपूरकत्वमित्यपेक्षायामाह—

अशेषमूलमिति, अशेषाणां ब्रह्मादीनां पुरुषार्थानां च सर्वेषां कारणमित्यर्थः। ननु सकामान् निंदसि चेत्तर्हि त्वं कथं सकामतया प्रवृत्त इत्याशङ्कयाह—दुराशय इति, तपोदुष्टचित्त इत्यर्थः ॥ १५ ॥ ❀ ❀ स्त्रीकामनयोपासने प्रवृत्तौ हेत्वन्तरमप्याह—प्रजापतेरिति। त्वदाज्ञोल्लङ्घने दण्डः स्यादिति सूचयन् सम्बोधयति—अधीशेति। अधीशत्वे हेतुं सूचयन् पुनः सम्बोधयति—शुक्लेति। हे अविद्यादिदोषरहित शुद्धेत्यर्थः। ते त्वदीयस्य सेवकस्य प्रजापतेर्ब्रह्मणो वचसा प्रजाः सृजेत्येवंरूपया तन्त्या दाम्ना अयं मरीच्यादिलोकः यद्वा प्रजापतेः प्रजापालकस्य ते तव वचसा "जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवान् जायते" 'ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत्। अनपाकृत्य मोक्षं तु सेवमानो व्रजत्यधः' इत्यादिश्रुतिस्मृतिवाक्यरूपेण तन्त्या दाम्ना अयं सर्वोऽपि लोकः अनुबद्धः पशुवत्तत्तत्कर्मणि नियुक्तस्तत्तत्कर्म करोतीत्यर्थः। ननु "यदहरेव विरजेत्तदहरेव प्रव्रजेत्" इत्यादौ अनृणत्वं तत्तत्कर्मपरित्यागोऽप्युक्त एवेत्यांशङ्कयाह—कामहत इति, नानाविधकामैरभिभूत इत्यर्थः। त्यागस्तु विरक्तस्यैवोक्तः। अहं च किल लोकानुगतः कामहत एव अतोऽनिमिषाय कालात्मने तुभ्यं बलिं हरामि कर्ममयीं त्वदाज्ञां पालयामि अतस्तदर्थं भार्यां चेच्छामीति चकारस्यार्थः ॥ १६ ॥ ❀ ❀ अनिमिषायेत्यनेन कालात्मकात् त्वत्तो भीता एवं वयं त्वदाज्ञां पालयाम इत्ययुक्तम्, तदेतद्भयं तु त्वद्भक्तानां नास्तीत्याह—लोकानिति द्वाभ्याम्। लोकान् कामाभिभूतान् जनान्ताननुगतान् अनुसृतान् पशून् अज्ञांश्च हित्वा अनादृत्य ये ते तव चरणरूपमातपत्रं आध्यात्मिकाधिदैविकाधिभौतिकतापत्रयनिवर्त्तकत्वात् छत्रमाश्रिता एषामित्युत्तरेणान्वयः। भगवच्चरणाश्रितानां किं लक्षणमित्यपेक्षायां तान् विशिनष्टि—परस्परं यत् त्वद्गुणानां वादः कथा तदेव सीधु मधुरं पीयूषममृतं रुचिरत्वात् संसारविस्मारकत्वाच्च तेन निर्यापिता विलापिता देहधर्माः क्षुत्पिपासाजरामरणसुखादयो यैस्ते ॥ १७ ॥ ❀ ❀ ते तव यत्त्रिणाभि कालचक्रं तत्सर्वं जगत् आच्छिद्य आकृष्य धावदपि वृथैव विनाशयदपि एषां त्वद्भक्तानां आयुराच्छिद्य धावन्न भवति प्रतिक्षणं त्वद्भजनेन सफलत्वात्। कालचक्रं विशिनष्टि—अजरं ब्रह्म तस्मिन्नक्षरूपे भ्रमि-भ्रमणं—भ्रमदिति वक्तव्ये अतिभ्रमणशीलत्वात् उपचारेण भ्रमिरित्यभेदनिर्देशः। अधिकमासेन सह त्रयोदश मासा अरा नेमिं नाभिं प्रविष्टा यस्य तत्, एकैकस्यारस्य त्रिंशत् त्रिंशत् एवं त्रिशतं षष्टिश्च अहोरात्राः पर्वाणि ग्रन्थिविशेषा यस्य तत्, शतशब्दे विभक्तेरलुगार्षः, षट् ऋतवो नेमयो यस्य तत्, अनन्ताः क्षणलवादयः छदाः पत्राणि पत्राकाराः सन्ति यस्य तत्, त्रीणि चातुर्मास्यानि नाभयश्चक्रमध्यस्थाः सच्छिद्रा वर्त्तुलाकारा अक्षाधारभूता यस्य तत्। करालस्रोतः तीव्रवेगम्, एतैर्विशेषणैः संवत्सरात्मकं चक्रमुक्तमिति ज्ञेयम् ॥ १८ ॥ ❀ ❀ यदुक्तमशेषमूलमिति तदेवोपपादयति—एक इति। प्रथमं भगवान् ऐश्वर्यवीर्याद्यचिन्त्यानन्तशक्तिमांस्त्वं स्वयमेक एव सन्नपि जगतः सिसृक्षयाऽधिकृतया अद्वितीयया स्वशक्तिभूतया अधियोगमायया आविर्भूताभिः स्वशक्तिभिः रजःसत्त्वतमोरूपाभिः आत्मन् स्वात्मन्येव अदो विश्वं सृजसि पासि पुनर्ग्रसिष्यसे चेत्यन्वयः। स्वव्यतिरिक्तसाधनानपेक्षत्वे दृष्टान्तमाह—यथेति। ऊर्णा नाभौ यस्य स ऊर्णनाभिस्तंतून् सन्तन्यमानः कीटविशेषः स यथा स्वशक्त्यैव तन्तुसृष्ट्यादि करोति तथेत्यर्थः ॥ १९ ॥ ❀ ❀ तथापि भक्ताय तुभ्यं कथं संसारहेतुभूतं स्त्र्यादिविषयसुखं मया देयमित्याशङ्कयाह—नेति। त्वत्कृपास्ति चेत्तदा विषयभोगेऽपि तथाबन्धो न स्यादित्याशयेन सम्बोधयति—अधीशेति। नोऽस्माकं भक्तानां अस्मदभिलापानुरोधेन यत् भूतसूक्ष्मरूपं पदं शब्दादिविषयसुखं मायया कृपया तनुषे विस्तारयसि ददासि तदेतद्यद्यपि तवेप्सितमिष्टं न भवति तथापि यर्हि यदि मायया कृपया लसन्ती तुलसी यस्यां तथाभूतया तनुवा तन्वा विलक्षितो दृष्टोऽसि तदास्मदनुग्रहाय ऋणत्रयापाकरणाय तदप्यस्तु कृपया देहीत्यर्थः ॥ २० ॥

### हिन्दी अनुवाद

उनके चरणकमल गरुड़जीके कंधोंपर विराजमान थे तथा वक्षःस्थलमें श्रीलक्ष्मीजी और कण्ठमें कौस्तुभमणि सुशोभित थीं। प्रभुकी इस आकाशस्थित मनोहर मूर्तिका दर्शन करके कर्दमजीको बड़ा हर्ष हुआ, मानो उनकी सभी कामनाएँ पूर्ण हो गयीं। इन्होंने सानन्द हृदयसे पृथ्वीपर सिर टेककर भगवान्‌को साष्टाङ्ग प्रणाम किया और फिर प्रेमप्रवण चित्तसे हाथ जोड़कर मधुर वाणीमें वे उनकी स्तुति करने लगे ॥ ११ ॥ १२ ॥ ❀ ❀ कर्दमजीने कहा—स्तुति करनेयोग्य परमेश्वर ! आप सम्पूर्ण सत्त्वगुणके आधार हैं। योगिजन उत्तरोत्तर शुभ योनियोंमें जन्म लेकर अन्तमें योगस्थ होनेपर आपके दर्शनोंकी इच्छा करते हैं; आज आपका वही दर्शन पाकर हमें नेत्रोंका फल मिल गया ॥ १३ ॥ ❀ ❀ आपके चरणकमल भवसागरसे पार जानेके लिये जहाज हैं। जिनकी बुद्धि आपकी मायासे मारी गयी है, वे ही उन तुच्छ क्षणिक विषय-सुखोंके लिये, जो नरकमें भी मिल सकते हैं, उन चरणोंका आश्रय लेते हैं; किंतु स्वामिन् ! आप तो उन्हें वे विषय-भोग भी दे देते हैं ॥ १४ ॥ ❀ ❀ प्रभो ! आप कल्पवृक्ष हैं। आपके चरण समस्त मनोरथोंको पूर्ण करनेवाले हैं। मेरा हृदय काम-कलुषित है। मैं भी अपने अनुरूप स्वभाववाली और गृहस्थधर्मके पालनमें सहायक शीलवती कन्यासे विवाह करनेके लिये आपके चरणकमलोंकी शरणमें आया हूँ ॥ १५ ॥ ❀ ❀ सर्वेश्वर ! आप सम्पूर्ण लोकोंके अधिपति हैं। नाना प्रकारकी कामनाओंमें फँसा हुआ यह लोक आपकी वेद-वाणीरूप डोरीमें बँधा है। धर्ममूर्ते ! उसीका अनुगमन करता हुआ मैं भी कालरूप आपको आज्ञापालनरूप पूजोपहारादि

समर्पण करता हूँ ॥ १६ ॥ ❀ ❀ प्रभो ! आपके भक्त विषयासक्त लोगों और उन्हींके मार्गका अनुसरण करनेवाले मुझ-जैसे कर्मजड पशुओंको कुछ भी न गिनकर आपके चरणोंकी छत्रछायाका ही आश्रय लेते हैं तथा परस्पर आपके गुणगानरूप मादक सुधाका ही पान करके अपने क्षुधा-पिपासादि देहधर्मोंको शान्त करते रहते हैं ॥ १७ ॥ ❀ ❀ प्रभो ! यह कालचक्र बड़ा प्रबल है । साक्षात् ब्रह्म ही इसके घूमनेकी धुरी है, अधिक माससहित तेरह महीने अरे हैं, तीन सौ साठ दिन जोड़ हैं, छः ऋतुएँ नेमि ( हाल ) हैं, अनन्त क्षण-पल आदि इसमें पत्राकार धाराएँ हैं तथा तीन चातुर्मास्य इसके आधारभूत नाभि हैं । यह अत्यन्त वेगवान् संवत्सररूप कालचक्र चराचर जगत्की आयुका छेदन करता हुआ घूमता रहता है, किंतु आपके भक्तोंकी आयुका ह्रास नहीं कर सकता ॥ १८ ॥ ❀ ❀ भगवन् ! जिस प्रकार मकड़ी स्वयं ही जालेको फैलाती, उसकी रक्षा करती और अन्तमें उसे निगल जाती है—उसी प्रकार आप अकेले ही जगत्की रचना करनेके लिये अपनेसे अभिन्न अपनी योगमायाको स्वीकार कर उससे अभिव्यक्त हुई अपनी सत्त्वादि शक्तियोंद्वारा स्वयं ही इस जगत्की रचना, पालन और संहार करते हैं ॥ १९ ॥ ❀ ❀ प्रभो ! इस समय आपने हमें अपनी तुलसीमालामण्डित, मायासे परिच्छिन्न-सी दिखायी देनेवाली सगुण-मूर्तिसे दर्शन दिया है । आप हम भक्तोंको जो शब्दादि विषय-सुख प्रदान करते हैं, वे मायिक होनेके कारण यद्यपि आपको पसंद नहीं हैं, तथापि परिणाममें हमारा शुभ करनेके लिये वे हमें प्राप्त हों—॥ २० ॥

तं त्वानुभूत्योपरतक्रियार्थं स्वमायया वर्तितलोकतन्त्रम् ।
नमाम्यभीक्ष्णं नमनीयपादसरोजमल्पीयसि कामवर्षम् ॥ २१ ॥

ऋषिरुवाच

इत्यव्यलीकं प्रणुतोऽब्जनाभस्तमाबभाषे वचसामृतेन ।
सुपर्णपक्षोपरि रोचमानः प्रेमस्मितोद्वीक्षणविभ्रमद्भ्रूः ॥ २२ ॥

श्रीभगवानुवाच

विदित्वा तव चैत्त्यं मे पुरैव समयोजि तत् । यदर्थमात्मनियमैस्त्वयैवाहं समर्चितः ॥ २३ ॥
न वै जातु मृषैव स्यात्प्रजाध्यक्ष मदर्हणम् । भवद्विधेष्वतितरां मयि संगृभितात्मनाम् ॥ २४ ॥
प्रजापतिसुतः सम्राण्मनुर्विख्यातमङ्गलः । ब्रह्मावर्तं योऽधिवसन् शास्ति सप्तार्णवां महीम् ॥ २५ ॥
स चेह विप्र राजर्षिर्महिष्या शतरूपया । आयास्यति दिदृक्षुस्त्वां परश्वो धर्मकोविदः ॥ २६ ॥
आत्मजामसितापाङ्गीं वयःशीलगुणान्विताम् । मृगयन्तीं पतिं दास्यत्यनुरूपाय ते प्रभो ॥ २७ ॥
स[1]माहितं ते हृदयं यत्रेमान् परिवत्सरान् । सा त्वां ब्रह्मन्नृपवधूः काममाशु भजिष्यति ॥ २८ ॥
या त आत्मभृतं वीर्यं नवधा प्रसविष्यति । वीर्ये त्वदीये ऋषय आधास्यन्त्यञ्जसाऽऽत्मनः ॥ २९ ॥
त्वं च सम्यगनुष्ठाय निदेशं म उशत्तमः । मयि तीर्थीकृताशेषक्रियार्थो मां प्रपत्स्यसे ॥ ३० ॥

श्रीधरस्वामिविरचिता भावार्थदीपिका

तं त्वा त्वां भुक्तिमुक्तिप्रदं नमामि । मुक्तिदत्वे हेतुः । अनुभूत्या ज्ञानेनोपरतः क्रियार्थः कर्मफलभोगो यस्मिन् । भोगदत्वे हेतुः । स्वमायया आवर्तितं लोकतंत्रं विश्वोपकरणं येन अतः सकामैर्निष्कामैश्च नमनीयं पादसरोजं यस्य तम् । तत्राल्पीयसि सकामे पुंसि भजने वा कामान्वर्षतीति यथा तम् ॥ २१ ॥ ❀ ❀ अमृतेन सुखकरेण प्रेमस्मिताभ्यामीक्षणेन विभ्रमंती भूर्यस्य ॥ २२ ॥ ❀ ❀ चैत्त्यं हार्दं भावम् । मे मया समयोजि संघटितम् । यदर्थमेवाहं समर्चितस्तत् ॥ २३ ॥ ❀ ❀ मयि संगृभितः संगृहीत एकाग्रीकृत आत्मा चित्तं यैस्तेषां यन्मदर्हणम् । त्वादृशेष्वतितरां सर्वथा मृषा निष्फलं न स्यात् ॥ २४ ॥ ❀ ❀ विख्यातं मंगलमभ्युदयः सदाचारादिलक्षणं यस्य ॥ २५ ॥ ❀ ❀ हे विप्र महिष्या सह ॥ २६ ॥ २७ ॥ यत्र यस्यां भार्यायाम् । समाहितमिसंधानेन स्थितम् । नृपवधू राजकन्या ॥ २८ ॥ ❀ ❀ ते वीर्यमात्मनि भृतं धृतं या प्रसविष्यति सा भजिष्यति वीर्ये वीर्यप्रसूतासु कन्यासु अंजसा आत्मनः पुत्रानाधास्यंति ॥ २९ ॥ ❀ ❀ निदेशमाज्ञाम् । उशत्तमः शुद्धसत्त्वः । तीर्थं पात्रं तेन दानं लक्ष्यते । मयि समर्पितसर्वकर्मफल इत्यर्थः ॥ ३० ॥

---

१. प्रा० पा०—सम्मोहितं ।

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

उपरतो विनष्टः कर्मफलभोक्तृणामस्मत्सादृश्येन मोक्षदाने सामर्थ्यं नास्तीति भावः । आवर्त्तितं संपादितम् । अतो भोगमोक्षप्रदत्वात् । विश्वनाथस्तु-न त्वेतत्त्वय्यसंभवमित्याह । तं त्वाम् । अनुभूत्या उपरतः क्रियार्थः कर्मफलभोगो यस्मात्तं कृपया यदा स्वमाधुर्यानुभवं दास्यसि तदैव भोगेच्छा स्वयमेवापयास्यतीति । स्वमायया स्वीयमायाशक्तिप्रेरणया वर्तितं जनितं लोकानां देवतिर्यगादीनां तंत्रं कर्मफलसुखदुःखसंबंधिपरिच्छेदो येन तं, यावदविद्यां प्रेरयसि तावद्भोगेच्छा भवत्येवेति भावः । तेन संप्रति सृष्टिं विवर्द्धयिषुरस्मान्कामसंवलितान्करोषीति सत्यपि विवेके कामांस्त्यक्तुं न शक्नुम इत्याह—अल्पीयसीति । निकृष्टेपि मद्विधे जने कामान्वर्षसीति तम् ॥ २१ ॥ ❀ ❀ अव्यलीकं निष्कपटम् ॥ २२ ॥ ❀ ❀ चैत्त्यं चित्ताभिप्रायम् । दिगादियदंतात्स्वार्थेण् । अहमेव नान्य इत्यर्थः ॥ २३ ॥ ❀ ❀ न च मद्भजनं कामं दत्त्वैव केवलमुपक्षीयतेऽपि तु मत्पदमपि ददातीति समाश्वसिहीत्याह । 'सत्यं दिशत्यर्थितमर्थितो नृणाम्' इत्यादिन्यायेन मदर्हणमात्रं मृषैव तुच्छफलदमेव न स्यात्किंत्वंते मत्पदप्रदमेव स्यात् । तत्रापि संगृभितात्मनां निहितमनसां भक्तानां मध्ये त्वादृशेष्वतितरां मृषा न स्यादित्यर्थः । "हृग्रहोर्भश्छंदसि" इति भकारः । ह्रस्वत्वमार्षम् ॥ २४ ॥ ❀ ❀ प्रकृतमनुसरति प्रजाः मरीच्यादयस्तेषां पतिः "उपान्वध्याङ्वसः" इत्याधारस्य कर्मत्वं—ब्रह्मावर्त्तमिति सप्तार्णवामिति । भाविनि भूतवदुपचारः । प्रियव्रताद्बतदात्मजरथखातत्वात्तेषाम् । अनेन सम्राट्त्वं तस्योक्तम् ॥ २५ ॥ ❀ ❀ विप्रेति । तस्य दानपात्रत्वमाह—महिष्या पट्टराज्ञ्या ॥ २६ ॥ ❀ ❀ वनवासिनो मम किं सम्राजा तत्राह—आत्मजामिति । असितापांगीं नीलद्युतिनेत्रां कियद्वयस्तस्या इति प्रश्नमंतरेणैव वयो लक्षयति । मृगयंतीमिति । आसन्नरजस्कां पाणिग्रहणयोग्यामित्यर्थः ॥२७॥ ❀ ❀ राजपुत्र्यास्तापसोऽहं कथमनुरूपः स्यामिति तत्राह—इमानतीतान्वत्सरान् व्याप्य यस्यां राजपुत्र्यादिविशेषणमंतरेण ते हृदयं समाहितं ममानुकूला भार्या स्यादिति सधर्मचारिणित्वयोग्यं चेतः संक्लप्तम् । सा नृपवधू राजकन्या "वधूर्जायास्नुषा कन्या नवोढा सारिवासु च" इति धरणिः ॥ २८ ॥ ❀ ❀ नवधा नवप्रकारापत्यरूपेण वीर्ये इति कारणे कार्यप्रयोगः । गोभिः श्रिणीत मत्सरमितिवत् । "आत्मा वै पुत्रनामासि" इति श्रुतेः ॥ २९ ॥ ❀ ❀ मे निदेशं वैदिकं नित्यनैमित्तिककर्मानुष्ठानलक्षणम् । "अहरहः सन्ध्यामुपासीत" इत्यादिश्रुतिविहितम् । इत्यर्थ इति । सर्वकर्मणां मयि समर्पणेनाकर्मत्वान्मोक्षमेव प्राप्स्यसीति भावः ॥ ३० ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनीव्याख्या ।

आवर्तितं पुनः पुनः कृतं विश्वोपकरणं विश्वभोगपरिच्छदः अतो भुक्तिमुक्तिप्रदत्वात् तत्र सकामनिष्कामयोर्मध्ये अभीक्ष्णं नमामीत्युक्त्या स्वस्य वस्तुतो भक्तीच्छुत्वं व्यञ्जितम् । भार्य्यादीच्छा तु पित्राज्ञापालनार्थमिति ज्ञेयम् ॥ २१ ॥ ❀ ❀ भ्रुवो भ्रमणञ्च गरुडादिनिजगणे तत्सारल्यसूचनार्थम् ॥ २२ ॥ ❀ ❀ यदर्थमेव भार्य्यासम्पादनार्थमेव तद्भार्य्यासम्पादनं मया पुरैव त्वत्प्रार्थनात् पूर्वमेव सङ्घटितं योग्यघटनाविषयीकृतम् ॥ २३ ॥ ❀ ❀ सर्वथैव निष्फलं न स्यात् किन्तु भुक्तिमुक्त्यभयफलदं स्यादित्यर्थः ॥ २४ ॥ ❀ ❀ अभ्युदयः पारलौकिकोत्कर्षप्रदसदाचारश्शिष्टाचारः । आदिना निषिद्धवर्जनपरिग्रहः तदुक्तं स्मृतौ । "प्रशस्ताचरणं यस्मादप्रशस्तस्य वर्ज्जनम् । एतद्धि मङ्गलं प्रोक्तमृषिभिस्तत्त्वदर्शिभिरिति" यद्यपि प्रियव्रतरथखातरूपाणामर्णवानां तदानीमुत्पत्तेरभावात् सप्तार्णवत्वं न सङ्गच्छते तथापि भाविनि भूतवदुपचारः ॥ २५ ॥ २६ ॥ ❀ ❀ हे अनघ ! दोषरहित । प्रभो इति पाठे हे मदाराधनप्रभावयुक्त ॥ २७ ॥ ❀ ❀ अभिसंधानेनेच्छया "नारी सीमन्तिनी वधूः" इत्यमरप्रामाण्यात् वधूशब्दस्य स्त्रीमात्रवाचकत्वात् स्त्रीत्वस्य कन्यायामपि सत्त्वाद्राजकन्येति व्याख्यातम् ॥ २८ ॥ ❀ ❀ "आत्मा वै जायते पुत्र" इति वाक्यात् आत्मनः पुत्रानिति व्याख्यातम् ॥ २९ ॥ ❀ ❀ शुद्धसत्त्वः मदराधनगृहस्थधर्म्मेण शुद्धान्तःकरणः तीर्थशब्दस्य क्षेत्रवाचकत्वं दानबीजस्य च क्षेत्रं दानपात्रमिति तीर्थं पात्रमिति व्याख्यातम् । तथा च विश्वप्रकाशः "तीर्थं शास्त्राध्वरक्षेत्रोपायोपाध्यायमन्त्रिषु" इति दानक्रियापात्रयोरुद्देश्यतासम्बन्धः । स्वस्मै कृतस्य दानस्य स्वाभिन्नत्वमाहात्म्यं प्रयोजनमिति प्रयोजनवती लक्षणा । एवं लक्ष्यार्थत्वादित्यर्थ इत्युक्तम् ॥ ३० ॥

### श्रीमद्वीरराघवव्याख्या

ननु स्वात्मानुभवानन्दपूर्णमुदासीनं मां कथं जगत्कारणं प्रतिपादितवानसीत्याशङ्कां परिहरन् स्तुतिमुपसंहरति । तमस्मदनुग्रहैकनिरतं त्वामभीक्ष्णं पुनः पुनः नमामि कथंभूतमनुभूत्या स्वात्मानुभवेन उपरतः अनपेक्षितः क्रियार्थः जगद्व्यापाररूपक्रियाप्रयोजनं यस्य तमपि स्वमायया स्वलीलासङ्कल्पमात्रेण प्रवर्तितं लोकतन्त्रं जगद्व्यापारो येन तमल्पीयसि 'स्वल्पमप्यस्य धर्मस्य त्रायते महतोभयादि'ति त्वदुक्तरीत्या ईषद्भवदीयाराधनं कुर्वत्यपि पुरुषे कामान् वर्षतीति तथा तमत एव नमनीयं वन्दनीयं पादसरोरुहं यस्य तम् ॥ २१ ॥ ❀ ❀ एवं कर्दमेन स्तुतः तेन निवेदिताभिप्रायश्च भगवांस्तमुवाचेत्याह मैत्रेयः । इत्येवं व्यलीकं विगतालीकं सत्यं यथा तथा अव्यलीकमिति पाठेऽप्ययमेवार्थः । प्रणुतः प्रकृष्टगुणविशिष्टत्वेन स्तुतः सुपर्णस्य गरुडस्य पृष्ठोपरि स्कन्धदेशे रोचमानः प्रकाशमानः प्रेम्णा स्मितेन उद्वीक्षणेन च विभ्रमन्ती भ्रूर्यस्य सोऽब्जनाभो भगवान् तेनामृततुल्येन वचसा तं कर्दमं प्रत्या-

बभाषे उवाचेत्यर्थः ॥ २२ ॥ ❀ ❀ उक्तिमेवाह दशभिः। विदित्वेति। तव चैत्यमभिप्रायं विदित्वा ज्ञात्वा मे मया तत्त्वदभिप्रेतं पुरैव समयोजि संघटितं किं तदित्यत्राह। यदर्थं यत्कन्यालाभार्थमात्मनो नियमैः शमदमादिभिः त्वयाहमेव समर्चितः सम्यगाराधितः ॥ २३ ॥ ❀ ❀ हे प्रजाध्यक्ष ! कर्दम मदर्हणं मदाराधनं जातु कदाचिदपि मृषा व्यर्थं न स्यादेवमपि सङ्गृभितः एकाग्रीकृतः आत्मा मनः यैस्तेषु भवद्विधेषु भवादृशेषु सुतरामपि मदर्हणं न मृषेत्यर्थः। सङ्गृहीतात्मनामिति षष्ठ्यन्तपाठे सङ्गृभितात्मनां मदर्हणं न मृषैव भवद्विधेषु सुतरामपि न मृषेति योज्यम् ॥ २४ ॥ ❀ ❀ यः प्रजापतेर्ब्रह्मणः पुत्रः सम्राट् सार्वभौमो विख्यातं मङ्गलं मङ्गलाचारो यस्य सः श्रौतस्मार्तसदाचारनिष्ठो मनुः स्वायम्भुवमनुः ब्रह्मावर्त्तं ब्रह्मावर्त्ताख्यं देशमध्यवसदधिष्ठायावसत्सप्त अर्णवाः समुद्रा यस्यां तां महीं पृथ्वीं शास्ति धर्मतः पालयति ॥ २५ ॥ ❀ ❀ स च राजर्षिर्मनुः शतरूपया शतरूपाख्यया महिष्या भार्यया सह धर्मकोविदं धर्मेषु मदाराधनरूपेषु धर्मेषु कुशलं त्वां दिदृक्षुः द्रष्टुमिच्छुः परश्वः इतोऽनागते द्वितीयेऽह्न्यायास्यति आगमिष्यति ॥ २६ ॥ ❀ ❀ आयातु मम किमित्यत्राह। असितापाङ्गीमतिनीलकनीनिकायुक्तनेत्रां वयसा शीलेन सुस्वभावेन सद्वृत्त्या च गुणैर्जितेन्द्रियत्वादिभिश्चान्वितां पतिं स्वानुरूपं भर्तारं मृगयन्तीं दूतप्रेषणादिभिः परिशीलयन्तीमात्मजां देवहूत्याख्यां तनयामनुरूपाय ते तुभ्यं दास्यति। हे प्रभो ! वश्येन्द्रिय ॥ २७ ॥ ❀ ❀ यत्र यस्यां मनुकन्यायामिमान् यावतः परिवत्सरान् सम्वत्सरान् अत्यन्तसंयोगे द्वितीया ते, हृदयं चित्तं सम्यगाहितं भोगासक्तं तावत्सम्वत्सरपर्यन्तं सा नृपवधूर्नृपकन्या हे ब्रह्मन् ! त्वामाशु क्षणवत्कामं भजिष्यति अनुभविष्यति। त्वया सह बहुवर्षपर्यन्तं कामान् सेवमाना क्षणमात्रमिवानुभविष्यतीत्यर्थः ॥ २८ ॥ ❀ ❀ या देवहूतिः ते त्वयात्मभृतमात्मना धृतं स्वस्मिन् वीर्यं नवधा प्रसविष्यति त्वदीये वीर्ये त्वदुत्पन्नासु नवसु पुत्रीषु ऋषयः मरीच्यादयोऽञ्जसा विश्रुतात्मनः पुत्रान् "आत्मा वै पुत्रनामासि" इति श्रुतेः आधास्यन्ति उत्पादयिष्यन्ति ॥ २९ ॥ ❀ ❀ त्वं मे मम निदेशमाज्ञां सम्यगनुष्ठाय परिपाल्य उशत्तमः कमनीयमदाराधननिष्ठः मयि तीर्थीकृतः तीर्थशब्देन पात्रमुच्यते तेन दानं लक्ष्यते तीर्थीकृतः समर्पितः अशेषक्रियार्थः समस्तक्रियाफलं येन स मां प्रपत्स्यसे प्राप्स्यसि ॥ ३० ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

मदनुग्रहेण सच्चिदानन्दलक्षणं वपुर्दर्शयतो भवतो नमनोपायनदानेन नित्यतृप्तस्य प्रत्युपकरोमीति भावेनाह। तन्त्वेति। यस्त्वमनायासेन जगत्सृष्ट्यादिकं करोषि अहं तं त्वा त्वां नमामीत्यन्वयः। ननु यदि नन्तुर्नम्यो विशिष्टः स्यात्तर्हि स तत्क्रियाविषयः स्यादित्यतस्तं विशिनष्टि। अनुभूत्येति। अनुभूत्या स्वरूपानुभवेनोपरतो नित्यनिवृत्तः क्रियार्थः देहादिनिमित्तकर्मफलविषयो यस्य स तथा स्वरूपानन्दानुभवेन निवृत्तविषयसुखो वा तं स्वमायया स्वेच्छया वर्त्तितं लोकतन्त्रं देहादिलक्षणलोकप्रवृत्तिसाधनं येन स तथा तमभीक्ष्णशः पुनः पुनरित्यनेन तात्पर्यातिशयद्योतकेन इदमेव त्वत्प्रीतिसाधनमिति सूचयति भवानौषधपानवत् बलात्कर्मणा रुचिविषयो न किन्तु स्वत एवेति भावेनाह। नमनीयेति। इतोऽपि त्वमेव नन्तव्य इत्याह। अल्पीयसि जात्या गुणेन बालपतरभक्ते कीटे व्यासमिवाभीष्टं वर्षन्तं कामस्याभीष्टस्य वर्षो यस्मात् स तथोक्तः तमित्यक्षरयोजना। यद्वा महदहङ्कारादिजगत्स्रष्टृ यद्रूपं तन्निजं न भवतीति यन्मतं तद् दूषयितुमेवाह। तन्त्वेति। उक्तार्थोऽयं श्लोकः आवर्तितः लोकाख्यराज्यव्यापारो येन स तथा तम् ॥ २१ ॥ कर्दमेन प्रणतरूपं सत्यज्ञानानन्दलक्षणमेव न मायाशबलमिति भावेनाह। इतीति। प्रेम्णा युक्तेन स्मितेन सह सकृदुत्कृष्टं वीक्षणं तेन विलोकनेन विभ्रमन्ती विस्फुरन्ती भ्रूर्यस्य स तथोक्तः ॥ २२ ॥ ❀ ❀ पुरा मे मया तव चैत्यं चित्तस्थमभिप्रायं विदित्वैव समयोजितं प्रेरितं तदेवाह। यदर्थमिति ॥ २३ ॥ ❀ ❀ पूजाकर्मणः क्षणभङ्गुरत्वेन तस्मादिदं फलमभूदिति निश्चेतुं न शक्यत इति शङ्का मा भून्मदर्पितत्वेनाक्षीणफलत्वादित्यभिप्रेत्याह न वा इति। जातु वै कदाचिदपि पाशुपतशास्त्रोक्तवन्मयि सङ्गृहीतात्मनां समाहितमनआदीन्द्रियाणां युष्माकंयन्मदर्हणं तदिदं भवद्विधेषु पुरुषेषु मृषा क्षणभङ्गुरत्वेन निष्फलं न स्यान्मदर्पणचिकित्सायुक्तत्वादभक्तव्यावृत्त्यर्थमतितरामिति। संगृहीतात्मनामिति षष्ठी सप्तम्यर्थे वा सन्निकृष्टत्वादुभयोः स्वस्वामित्वसम्बन्धो नित्यमनुसन्धेय इति तात्पर्यद्योतनाय प्रायोऽन्यथा मयि संगृहीतात्मस्विति प्रयोक्तुं शक्यते अनेन श्रेयोऽर्थिभिरभेदवार्तां दूरादेव परिहृत्य भेदज्ञानमेवापाद्यमिति सूचितम् ॥ २४ ॥ ❀ ❀ कर्दमं प्रशस्य प्रकृतमनुसरति। प्रजापतीति। प्रजापतयो मरीच्यादयस्तेषां पतिः। सप्तार्णवामिति। अनेन सम्राट्त्वं विवृतं ब्रह्मावर्तक्षेत्रमधिवसन् "अधिशीङ्स्थासाङ्कर्म" इत्यतः सप्तम्यर्थे द्वितीया ॥ २५ ॥ ततः किमस्माकमत्राह। स चेति। हे विप्र ! ॥ २६ ॥ ❀ ❀ वनवासिनो मम सम्राजा किं तत्राह। आत्मजामिति। असितापाङ्गीं नीलद्युतिनेत्रान्तां नीलेनाञ्जितत्वेनापि तत्स्वभावः स्यादिति गुणान्तराण्याह। वय इति। कियद्वय इति प्रश्नमन्तरेण वयो लक्षयति। मृगयन्तीमिति। आसन्नरजःकामुकत्वेन पाणिग्रहणयोग्यामित्यर्थः ॥ २७ ॥ ❀ ❀ राजपुत्र्यास्तापसोऽहं कथमनुरूपः स्यामिति तत्राह। समाहितमिति। राजपुत्रीत्वादिविशेषमन्तरेण यत्र यस्यां वध्वामिमानतीतान् परिवत्सरान् ते हृदयं समाहितं ममानुकूला भार्या स्यादिति संक्लृप्तम् ॥ २८ ॥ ❀ ❀ इदं च त्वत्सङ्कल्पान्तर्भूतं सत्यं भवतीति भावेन कन्यां विशिनष्टि। येति। या चात्मधृतं ते वीर्यं रेतोलक्षणं गर्भं नवधा प्रसविष्यति नवधा विभक्ततया प्रसूतं तव वीर्यं वंशवृद्धिकरं चेत्याह। वीर्ये

इति । मरीच्यादयोऽपि त्वदीये वीर्ये नवधा विभज्य पुत्रीभूते आत्मनस्तेजो गर्भलक्षणमाधास्यन् यदि भवान् मदुक्तमकरिष्य-त्तर्हीति शेषः । वा नृपस्य वधूः कन्या त्वां कामं भजिष्यति संसेविष्यत इत्यन्वयः । आशु कालक्षेपो नैवेति ॥ २९ ॥ ❀ ❀ मदर्पणबुद्ध्या चिकित्सितस्य स्वधर्मानुष्ठानस्य मत्प्राप्तिरेव फलमित्याह । त्वं चेति ॥ ३० ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

तं परमप्रीतिदं तत्र हेतुः भक्तानां निजानुभवेन शिथिलितकर्मफलभोगं तदनुभवादन्यत्र तु स्वेत्यादिरूपं तस्मान्महतां स्वभावत एव नमनीयपदाब्जं अतिक्षुद्र एव कामवर्षित्वेन स्फुरन्तमिति ॥ २१ ॥ ❀ ❀ प्रेमपूर्वकं यत् स्मितं तत्पूर्वकं यद्वीक्षणं तस्य गरुडादिषु तत्सौजन्यव्यञ्जनाय विभ्रमन्त्यौ भ्रुवौ यस्य ॥ २२ ॥ ❀ ❀ चैत्यं लोकव्यवहारानुसृतावपि मत्-प्रीत्यैकतात्पर्यमयं हार्दं तव ज्ञात्वा तदुचितमेव समयोजि पर्यवसानतः स्वयमेव पुत्रः स्यामिति । अतः सकामत्वेऽपि मत्प्रीत्यैक-तात्पर्यत्वात्त्वयैवाहं सम्यगर्चितः तथा नान्यैर्निष्कामैरपीत्यर्थः ॥ २३ ॥ ❀ ❀ तत्र कैमुत्येन हेतुः । न वा इति । सत्यं दिशत्यर्थितमर्थितो नृणामित्यादिन्यायेन मदर्हणमात्रं मृषैव तुच्छफलदमेव न स्यात् किंत्वेतेषां परमार्थफलमपि स्यात् मयि संगृभितात्मनां मध्ये त्वादृशेषु त्वतितरामित्यर्थः ॥ २४ ॥ ❀ ❀ सप्तार्णवामिति । भाविनि भूतवदुपचारः प्रियव्रतरथख्यात-त्वात्तेषाम् ॥ २५ ॥ २६ ॥ ❀ ❀ प्रभो ! हे मदाराधनभावयुक्त ! ॥ २७ ॥ ❀ ❀ इमान् एतान् वत्सरान् व्याप्य समाहितं मदर्पितं यत्तव हृदयं तद्यत्र वर्तते यस्यामेव सधर्म्मचारिणीत्वयोग्यं त्वदीयहृदयतुल्यं हृदयं वर्त्तते इत्यर्थः । वक्ष्यते च श्रीमनुना सर्व्वात्मनानुरूपां त इति ॥ २८ ॥ २९ ॥ ❀ ❀ अहं तावत् पात्रत्वात्तीर्थं ततो मयि यत् समर्पितं तदपि मदन्तः-पातातिशयविवक्षया तीर्थमेवोच्यते इति भावः ॥ ३० ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी ।

नत्वेतत्त्वय्यसम्भवमित्याह । तं त्वामनुभूत्या उपरतः क्रियार्थः कर्म्मफलभोगो यस्मात्तं यदा कृपया स्वमाधुर्य्यानुभवं दास्यसि तदैव भोगेच्छा स्वयमेवापयास्यतीति भावः । स्वमायया स्वीयमायाशक्तिप्रेरणयावर्तितं जनितं लोकानां देवतिर्यगादीनां तन्त्रं कर्मफलसुखदुःखसम्बन्धिपरिच्छदो येन तं यावदविद्यां प्रेरयसि तावद्भोगेच्छा भवत्येवेति भावः । तेन सम्प्रति सृष्टिं विवर्द्धयिपुरस्मान् कामसम्वलितान् करोषीति सतापि विवेकेन कामांस्त्यक्तुं न शक्नुम इत्याह । अल्पीयसीति निकृष्टेऽपि मद्विधे जने कामान् वर्षसीति तथा तम् ॥ २१ ॥ ❀ ❀ अव्यलीकं निष्कपटम् ॥ २२ ॥ ❀ ❀ चैत्यं चित्ताभिप्रायं दिगादि-यदन्तात् स्वार्थेऽण् मे मया समयोजि सङ्घटितं त्वया अहमेव नान्यः ॥ २३ ॥ ❀ ❀ नच मद्भजनं कामं दत्त्वैव केवल-मुपक्षीयते किन्तु मत्पदमपि ददातीति समाश्वसिहीत्याह । सत्यं दिशत्यर्थितमर्थितो नृणाम् इति न्यायेन मदर्हणमात्रं मृषैव तुच्छ-फलदमेव न स्यात् किन्त्वन्ते मत्पदप्रदमेव स्यात् अत्रापि मयि संगृभितात्मनां निहितमनसां भक्तानां मध्ये त्वादृशेषु त्वतितरा-मित्यर्थः । "हृग्रहोर्भश्छन्दसि" इति भकारः ह्रस्वत्वमार्षम् ॥ २४ ॥ २५ ॥ ❀ ❀ हे विप्र ! ॥ २६ ॥ ❀ ❀ वयः-शीलादिभिरनुरूपाय ॥ २७ ॥ ❀ ❀ यत्र यस्यां तव हृदयं समाहितमासक्तं नृपवधूः राजकन्या ॥ २८ ॥ ❀ ❀ ते वीर्यमात्मनि भृतं नवधा नवापत्यरूपेणेत्यर्थः । वीर्ये वीर्यप्रसूतासु कन्यासु अञ्जसा आत्मनो वीर्यमाधास्यन्ति ॥ २९ ॥ ❀ ❀ अनुग्रहायास्त्विति यत् प्रार्थितं तत्राह । त्वञ्चेति द्वाभ्याम् । तीर्थं पात्रं तेन दानं लक्ष्यते मयि समर्पितसर्वकर्मफल इत्यर्थः ॥ ३० ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

सामान्यतः सर्वलोकोपकारकर्तुः स्वभक्तकामपरिपूरकत्वं सुतरामस्तीत्याह । तमिति । तं त्वा त्वामभीक्ष्णं पुनः पुनर्नमामि । कथंभूतं स्वानुभूत्या स्वकीयनिरतिशयानन्दानुभूत्या उपरतः अनीप्सितः क्रियार्थः क्रियायाः प्रयोजनं यस्य तम् । तथापि स्वमायया स्वाधारणया कृपया आवर्तितं लोकतन्त्रं सर्वलोकोपकरणं येन तन्नमनीये पादसरोजे यस्य तमल्पीयसि क्षुद्रे सकामभक्तेऽस्मद्विधे कामान् वर्षतीति तथा तम् ॥ २१ ॥ ❀ ❀ अव्यलीकं निष्कपटं यथा तथा प्रणुतः स्तुतः प्रेमस्मिताभ्यां यदुद्वीक्षणं तेन भ्रमन्ती भ्रूर्यस्य सः ॥ २२ ॥ ❀ ❀ चैत्यं चित्तगतम् मे समयोजि मया संपादितम् ॥ २३ ॥ ❀ ❀ संग्रभितः समाहितः आत्मा मनो यैस्तेषाम् ॥ २४ ॥ ❀ ❀ विख्यातं मङ्गलं सुचरितं यस्य सः ॥ २५ ॥ २६ ॥ ❀ ❀ हे ! प्रभो हे वश्ये-न्द्रिय ! ॥ २७ ॥ ❀ ❀ हे ब्रह्मन् ! ब्रह्मवित् अत्र यस्यां प्रजापतिरूपस्य ममाज्ञया सृष्ट्यर्थं ते हृदयं मनः समाहितं सा नृप-वधूः नृपकन्या इमान् बहूनपि परिवत्सरान् अत्यन्तसंयोगे द्वितीया बहुषु सम्वत्सरेषु । अपि कामं यथेष्टमपि बहुकालनिवर्त्यं सुखं दर्शयन्नपत्यिर्थः । आशु क्षणमिव त्वां भजिष्यति तव मुमुक्षोः स्वतो गार्हस्थ्यमनिच्छतो बहुसम्वत्सरात्मकोपि कालः क्षणमिव गमिष्यतीति भावः ॥ २८ ॥ ❀ ❀ या नृपकन्या आत्मनि भृतं धारितं ते वीर्यं नवधा प्रसविष्यति । वीर्ये नवधा कन्यारूपेण विभक्ते आत्मनः पुत्रान् "आत्मा वै पुत्रनामासि" इति श्रुतेः ॥ २९ ॥ ❀ ❀ मयि अर्पणेन तीर्थीकृतः पवित्रतां नीतोऽशेषाणां लौकिकीनां वैदिकीनां च क्रियाणामर्थः फलं येन सः प्रपत्स्यसे ध्यानेनाप्स्यसि ॥ ३० ॥ ३१ ॥

## श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

एवं स्वाभिलषितं ज्ञापयित्वा तद्दानार्थं नमस्यति—तं त्वेति। सर्वप्रकारेणोक्तं त्वां नमामीति संबन्धः। भगवान् हि स्वतोऽनुभूयमानस्वानन्देनैव पूर्णः स्वार्थं कामपि क्रियां न करोति, अतोऽनुभूत्यैव उपरतक्रियार्थो भवति। क्रियायाश्चाऽर्थद्वयम्—दुःखाभावः स्व[1]सुखं चेति। जगत्कारणव्यावृत्तिरपि न तस्य स्वतः, किन्तु माययेत्याह—स्वमाययेति। बहुधा आवर्तितं लोकतन्त्रं लोकरचना येन; स्वाधीनया माययैव बहुधा सृष्टिः क्रियत इति। अत एतादृशमभीक्ष्णं नमामि। इदं च नमनं नाऽपूर्वमित्याह—नमनीयमेव पादसरोजं सर्वेषां यस्येति। प्रकृतोपयोगाय विशिनष्टि—अल्पीयसि कामवर्षमिति। अल्पीयस्यप्यर्थे, पुरुषे वा, यथेष्टं वर्षतीति। मया तु गार्हस्थ्यमात्रं प्रार्थ्यते, अलौकिकं च दास्यसीति भावः ॥ २१ ॥ ❀ अद्भुतकर्मा भगवान् प्रार्थिते सति किं कृतवानित्याकांक्षायामाह—इत्यव्यलीकमिति। यथाहृदयं कथनादव्यलीकत्वम्। [2]स्वरूपनिरूपणमेतत्। भगवांस्तु प्रकर्षेण नुतः, तपोभक्त्यादिकं त्वग्रे[3] फलिष्यति। इदं तु स्तोत्रफलमेवेति ज्ञापितम्। अब्जनाभ इति जगत्कर्तृत्वादेव करणमभीष्टमेव। विषयदाने कदाचिन्मृत्युर्भवेदित्याशङ्क्य अमृतेन वचसेत्युक्तम्। तथात्वसिद्ध्यर्थं सुपर्णपक्षोपरि रोचमान एव बभाषे। पक्षपदेन कालपक्षपातोऽपि लक्षितः, येन परित्यागादिसाधनानि च कृतवान्। भगवता सह संवादेऽस्य मायापगतिर्मा भवत्विति स्मितपूर्वं दर्शनम्, संसारभावापत्तिव्यावृत्त्यर्थं प्रेम च। उद्वीक्षणमुत्कर्षाधायकम्, तदर्थं विभ्रमयुक्ता भ्रूर्यस्य। मोक्षे देहपरित्याग उत्कर्षाधायको भवति। एवं सर्वमेव भाव्यर्थं सूचयन् बभाष इत्यर्थः ॥ २२ ॥ ❀ ❀ स्वसिद्धान्तं कामनायाः पूरणं द्विविधं तथा। तत्र च त्वत्पितुश्चैव मदाज्ञा न्यास एव च। एवं कृते त्वहं तुष्टः पुत्रस्ते भविता शुभः ॥ १ ॥ द्वाभ्यां भगवच्छास्त्रसिद्धान्तमाह—विदित्वेति। भक्तस्य हृदये कामस्तदैव स्याद्यदा पुरा। भगवान् पूरकं कुर्यात्सिद्ध एव हि[4] साधनम् ॥ १ ॥ अतो हि सर्वमार्गाणां भगवन्मार्ग उत्तमः। सफलान्येव सर्वाणि साधनान्यत्र सर्वदा ॥ २ ॥ तव चैत्यं चित्तभावं विदित्वा, त्वद्याचनात्पूर्वमेव, तन्मया समयोजि। किं त्वया योजितमित्याशङ्क्य भयाभावार्थमाह—यदर्थमिति। यत्कामनार्थमात्मनियमैस्तपस्यादिभिः सह भक्त्या त्वयैवाऽहं समर्चितः। यदि मया तन्न कृतं स्यात्। तदाऽन्तर्यामिप्रेरणया अहमेव त्वया कथमर्चितः स्याम्, अतो मदर्चनायाः सफलत्वाय पुरैव मया कृतम्, सफलैवोत्पद्यतामिति ॥ २३ ॥ ❀ ❀ नन्वर्चना पश्चात्कुतो न फलतीत्याशङ्क्याऽऽह—न वा इति। मदर्चनं कदाचिदपि मृषा फलरहितं न स्यात्, कालभेदेनाऽपि मद्भजनस्य न फलाभावसंबन्धः। भगवच्छास्त्रे अदृष्टादेरभावात्, भगवतो व्यापारत्वाभावात् तदानीं फलानि न भवेयुः, भजनस्य निवृत्तत्वात्। सामग्री पूर्वसिद्धा कामितेति न समकालमपि फलोत्पत्तिः। सर्वेष्वेव पक्षेषु फलस्यैकोंशो बाध्येत, यदि पूर्वं न क्रियेत। अतो मद्भजनस्य स्वभाव एव तादृश इति पूर्वमेव फलजननम्। किञ्च, अभक्तेषु मदर्हणमन्यथापि भवेत्, भक्तिविरोधात्। भवद्विधेषु तु अन्यथाभावशङ्का नास्त्येवेत्याह–भवद्विधेष्विति। अतितरां सर्वथा, न केनाप्यंशेनाऽन्यथाभावः तमेव प्रकारमाह—मयि संगृभितात्मस्विति। मयि सम्यक् गृभितो गृहीत आत्मा येषाम्, तेषु ॥ २४ ॥ ❀ ❀ एवं सिद्धान्तकथनेन सामान्यतस्तस्य कामनां पूरयित्वा विशेषतः पूरयति—प्रजापतेरिति चतुर्भिः—"श्वशुराधिक्यकथनं तत्समागम एव च। कन्यादानं ततः कन्यारुचिस्त्वयि[5] च वर्ण्यते" ॥ १ ॥ प्रथमं मनोरुत्कर्षमाह—प्रजापतेः ब्रह्मणः सुतः, अनेनोत्तमो वंशो निरूपितः। सम्राडिति राजा, सम्पत्तिरुक्ता। मनुरिति धर्मः। विख्यातमङ्गल इति कीर्तिः। विख्यातं मङ्गलं सदाचारो यस्य। देशस्वधर्मावाह—ब्रह्मावर्ते देशे अभितो वसन् सप्तार्णवामेव पृथिवीं शास्ति। 'सरस्वतीदृषद्वत्योर्देवनद्योर्यदन्तरम्। तद्देवनिर्मितं देशं ब्रह्मावर्तं प्रचक्षते ॥' इति। तदानीं कुरुक्षेत्रमिति प्रसिद्धम्। एवं मनुः सर्वत उत्कृष्ट उक्तः ॥ २५ ॥ ❀ ❀ तस्याऽऽगमनमाह स्व[6]यम्—स चेहेति। न हि भक्ताः स्वयं याचन्ते। विप्रेति संबोधनमागते स्वागतकरणार्थम्। विप्रा हि पश्चिमबुद्धयः, असंमानने अभिमानो दोषो भवेत् तदभावार्थं संबोधनेनोपदेशः। राजर्षिरिति योग्यता। भार्याया अपि संमत्यर्थं तया सहाऽऽगमनम्। तस्याः प्रतिबन्धकत्वाभावाय विचक्षणत्वनिरूपणार्थं शतरूपयेत्युक्तम्। विवाहस्याऽज्ञातत्वात् दिदृक्षुरेव त्वामायास्यति। अयं चाऽर्थो नाऽतिदूर इत्याह—परश्व इति। धर्मकोविद इति। 'अभिगम्य स्वयं कन्यामलङ्कृत्य यथाविधि। सद्वराय प्रयच्छेद्यः स कृकुद इति स्मृतः' अतः कन्यादानधर्मं जानातीति ॥ २६ ॥ ❀ ❀ आगत्य कन्यां दास्यतीत्याह—आत्मजामिति। पिता हि कन्यादाने मुख्योऽधिकारी। असितापाङ्गीमिति स्वभावतो नेत्रप्रान्तकार्ष्ण्यं सर्वसल्लक्षणसूचकम्। वयस्तारुण्यम्, शीलं पातिव्रत्यम्, गुणाः स्त्रीलक्षणानि। विरक्ताया विवाहानौचित्यात् पतिं मृगयन्तीमिति। त्वमपि तादृश इत्यनुरूपाय ते दास्यति। प्रभो इति संबोधनं स्वसामर्थ्यं तत्र दत्तवानिति ज्ञापनार्थम्। अतः स्त्रीणां यावानपेक्ष्यते भोगपदार्थः स सर्वोऽपि मया दत्त इति बोधितः ॥ २७ ॥ ❀ ❀ एतदज्ञानेऽपि सा त्वां भजिष्यतीत्याह—समाहितमिति। यस्यां देवहूत्यां ते हृदयं सम्यगाहितम्। इमान् परिवत्सरानिति दशसहस्रसङ्ख्याकान्। अत्यन्तसंयोगे द्वितीया। सा देवहूतिस्त्वां भजिष्यति। ऋषिर्हि राजकन्याया न रोचते, तथापि मदिच्छया भजिष्यति ब्रह्मन्निति निरूपितार्थसंवादार्थम्। नृपवधूर्नृपकन्या। वधूरिव सुरक्षिता, पितृगृहे चाञ्चल्यसम्भवात् तन्निवृत्त्यर्थमुक्तम्। कामं यथासुखम् न। त्वतिक्रमेण रतिः प्रीतये भवतीत्युभयो रतिरुक्ता ॥ २८ ॥ ❀ ❀ या त इति। ततस्त्वया सर्वभावेन सा भोक्तव्या। भिन्नभिन्न-

---

१. सुखम् ख. ग. । २. स्वस्वरूप'''ग. । ३. स्वर्गं. क. । ४. चक्र. तु. ङ. । ५. त्वपि. ग. । ६. स्वयमिति नास्ति ख. घ. ङ. ।

भावेन स्थापितान्यपि बीजानि स्वसामर्थ्यादेकधा एकभावापन्नमात्मनि धृतं नवधा प्रसविष्यति। ता नवापि कन्या एव भविष्यन्ति। ततस्त्वदीये वीर्ये कन्यासु, मरीच्यादय ऋषयः, आत्मनः पुत्रान् आधास्यन्ति। अतस्तेभ्यो देया इति भावः॥ २९॥ ॐ ॐ त्वया च ततः संन्यासो ग्राह्य इत्याह—त्वं चेति। न तु यावज्जीवं श्रुत्यनुरोधेन गार्हस्थ्येनैव स्थातव्यमिति भावः। ममाज्ञा पूर्वोक्तैव। त्वंचेति। चकारस्त्वर्थे। सापि प्रपत्स्यत इति ज्ञापितम्। निदेशमाज्ञाम्, सम्यगुक्तप्रकारेणाऽनुष्ठाय मां प्रपत्स्यस इति संबन्धः। उशत्तमेति संबोधनं मत्प्रवेशयोग्यतार्थम्। ननु कर्मणां विद्यमानत्वात् कथं भगवति प्रवेशः? तत्राऽऽह—मयीति। तीर्थीकृताश्चीर्थे समर्पिता अशेषक्रियार्था येन, तादृशो मां प्रपत्स्यस इत्यर्थः॥ ३०॥

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

न वै जात्वित्यत्र। कालभेदेनाऽपीति। जीवकृतं याञ्चा। साधनतानिर्वाहकपूर्वकालरूपेणापीत्यर्थः। तथा च भगवद्भजने फलसाधनताप्रतीतिव्यवहारौ व्यापकावाहनन्यायेनौपकारिकाविति भावः। समकालमिति याञ्चासमकालमित्यर्थः॥ २४॥

### श्रीगिरिधरकृता बालप्रबोधिनी

एवं स्तुतिपूर्वकं स्वामिलषितं सम्प्रार्थ्य भगवतः स्वानन्दपूर्णत्वं परमोपकारित्वं च वर्णयन् प्रणमति—तमिति। अनुभूत्या आत्मानन्दानुभवेनैव उपरतः अनपेक्षितः क्रियार्थः क्रियासाध्यं फलं यस्य तं, स्वमायया स्वलीलासङ्कल्पमात्रेण वर्तितं सम्पादितं लोकस्य तन्त्रमुपकरणं येन तं, अल्पीयसि अत्यल्पेऽप्याराधने कामान् वर्षतीति तथा तं, अतएव नमनीयं वन्दनीयं पादसरोरुहं यस्य तमेवम्भूतं त्वा त्वामभीक्ष्णं पुनः पुनर्नमामीत्यन्वयः॥ २१॥ ॐ ॐ इत्येवं तथा स चाहमित्यादिना स्वदोषस्यापि कथनादव्यलीकं निष्कपटं यथा तथा प्रणुतः प्रकृष्टगुणविशिष्टत्वेन स्तुतः अब्जनाभो भगवान् अमृतेन अमृतवत्परमानन्दजनकेन वचसा तं कर्दमं प्रति आबभाषे इत्यन्वयः। दर्शनेनापि परमानन्दं दत्तवानित्याशयेन तच्छोभां वर्णयति—सुपर्णस्य गरुडस्य पक्षोपरि पृष्ठोपरि रोचमानः प्रकाशमानः। प्रेमस्मिताभ्यां सहितेन उद्वीक्षणेन विभ्रमन्ती भ्रूर्यस्य सः॥ २२॥ ॐ ॐ तदुक्तमेव दर्शयति—विदित्वेति दशभिः। यदर्थं यस्य कन्यालाभस्यार्थं आत्मनो नियमैः शमदमादिभिः त्वयाऽहं समर्चितः सम्यक् पूजितस्तत् त्वदभिप्रेतं तव चैत्यमभिप्रायं विदित्वा ज्ञात्वा मे मया पुरा त्वद्विज्ञापनात्पूर्वमेव समयोजि सम्यक् सम्पादितमित्यन्वयः॥ २३॥ ॐ ॐ मयि संगृभितः संगृहीत एकाग्रीकृत आत्मा चित्तं यैस्तेषां मदर्हणं मदाराधनं जातु कदाचिदपि मृषा निष्फलं नैव स्यात्, भवद्विधेषु तु सुतरां मदर्हणं निष्फलं न भवति प्रजापालकत्वादिति। तत्र हेतुं सूचयन् सम्बोधयति—प्रजाध्यक्षेति। अत्र स्मृतिपुराणादिप्रमाणं सूचयन्नाह—वा इति। 'हृग्रहोर्भश्छन्दसी'ति भकारः, ह्रस्वत्वमार्षम्॥ २४॥ ॐ ॐ कथं मदभिप्रेतं भवता सम्पादितमित्यपेक्षायामाह—प्रजापतिसुत इति। यः प्रजापतिसुतः स्वायम्भुवो मनुः स च त्वां दिदृक्षुः द्रष्टुमिच्छन् परश्वः इतोऽनागते द्वितीयेऽहनि इह तव स्थाने आयास्यति ते तुभ्यं स्वकन्यां च दास्यतीति त्रयाणामन्वयः। तस्य कन्या च तव योग्येत्याशयेन तं विशिनष्टि—राजर्षिरिति, राजत्वेऽप्यृषिवद्वर्त्तमान इत्यर्थः। राजत्वमाह—सम्राडिति, चक्रवर्त्तीत्यर्थः। तदेव स्पष्टयति—यो ब्रह्मावर्त्ताख्यं पुण्यक्षेत्रमधिवसन् सप्तार्णवां सप्तसमुद्रवतीं महीं शास्ति। ऋषित्वमाह—धर्मकोविद इति। स्वपरवर्णाश्रमधर्माभिज्ञ इति। कोविदमिति पाठे तु कर्दमविशेषणम्। न केवलं धर्मज्ञानमात्रं किन्त्वाचारोपीत्याह—विख्यातेति, विख्यातं सर्वतः प्रसिद्धं मङ्गलं भगवद्भजनादि शुभाचरणं यस्य सः। त्वमपि तत्कन्यावरयोग्य एव विप्रत्वादित्याशयेन सम्बोधयति—विप्रेति। वरान्वेषणार्थं स्वभार्यया सहैव विनिस्सृत इत्याशयेनाह—महिष्येति, शतरूपाख्यया भार्यया सहेत्यर्थः॥ २५॥ २६॥ ॐ ॐ समानशीलामिति यथा त्वया प्रार्थिता सापि मनुकन्या तथाभूतैवेत्याह—असितापाङ्गीमिति अतिनीलकनीनिकायुक्तनेत्रीम्। वयसा शालेन सुस्वभावेन गुणैर्जितेन्द्रियत्वादिभिश्च अन्वितां युक्ताम्। पतिं स्वानुरूपं भर्त्तारं मृगयन्तीं अभिकांक्षन्तीम्। त्वं वयश्शीलगुणादिभिस्तदनुरूप एवेत्याह—अनुरूपायेति। तन्मनोरथपूरणे समर्थश्चेत्याशयेन सम्बोधयति—प्रभो इति॥ २७॥ ॐ ॐ एवं विवाहघटनामुक्त्वा तदग्रिममपि कार्यं मया चिन्तितं तद्भविष्यतीत्याह—समाहितमिति। इमान् परिवत्सरान् दशसहस्रसंवत्सरपर्यन्तं यत्र यस्यां भार्यायां ते हृदयं समाहितं सँल्लग्नमस्ति या च ते त्वया आत्मनि स्वस्मिन् भृतं स्थापितं वीर्यं नवधा नवकन्यारूपेण प्रसविष्यति, सा नृपवधूः राजकन्या त्वामाशु शीघ्रमेव भजिष्यतीति द्वयोरन्वयः। तदपि भजनं त्वदभिप्रायानुरोधेन न तु स्वानुरोधेनेत्याह—काममिति। तत्र ब्रह्मनिष्ठत्वादिति हेतुं सूचयन् सम्बोधयति—ब्रह्मन्निति॥ २८॥ ॐ ॐ त्वदीये वीर्ये त्वदीयवीर्यजातासु नवकन्यासु ऋषयो मरीच्यादयः अञ्जसा साक्षात् आत्मनः "आत्मा वै पुत्रनामासि" इति श्रुतेः आत्मांशान् पुत्रान् आधास्यन्ति उत्पादयिष्यन्ति॥ २९॥ ॐ ॐ त्वं च मे मम निदेशं पुत्रोत्पादनाद्याज्ञां सम्यगनुष्ठाय सम्पाद्य अतएव उशत्तमः, ऋणत्रयाद्विनिर्मुक्त इत्यर्थः। तीर्थशब्देन पात्रमुच्यते, तेन दानं लक्ष्यते। मयि तीर्थीकृतः समर्पितः अशेषक्रियार्थः समस्तक्रियाफलं येन तथाभूतः सन् अन्ते मां प्रपत्स्यसे प्राप्स्यसि॥ ३०॥

हिन्दी अनुवाद

नाथ ! आप स्वरूपसे निष्क्रिय होनेपर भी मायाके द्वारा सारे संसारका व्यवहार चलानेवाले हैं। तथा थोड़ी-सी उपासना करनेवालेपर भी समस्त अभिलषित वस्तुओंकी वर्षा करते रहते हैं। आपके चरणकमल वन्दनीय हैं, मैं आपको बार-बार नमस्कार करता हूँ ॥ २१ ॥ ❀ ❀ मैत्रेयजी कहते हैं—भगवान्‌की भौंहें प्रणय-मुसकानभरी चितवनसे चञ्चल हो रही थीं, वे गरुड़जीके कंधेपर विराजमान थे। जब कर्दमजीने इस प्रकार निष्कपटभावसे उनकी स्तुति की तब वे उनसे अमृतमयी वाणीसे कहने लगे ॥ २२ ॥ ❀ ❀ श्रीभगवान्‌ने कहा—जिसके लिये तुमने आत्मसंयमादिके द्वारा मेरी आराधना की है, तुम्हारे हृदयके इस भावको जानकर मैंने पहलेसे ही उसकी व्यवस्था कर दी है ॥ २३ ॥ ❀ ❀ प्रजापते ! मेरी आराधना तो कभी भी निष्फल नहीं होती; फिर जिनका चित्त निरन्तर एकान्तरूपसे मुझमें ही लगा रहता है, उन तुम-जैसे महात्माओंके द्वारा की हुई उपासनाका तो और भी अधिक फल होता है ॥ २४ ॥ ❀ ❀ प्रसिद्ध यशस्वी सम्राट् स्वायम्भुव मनु ब्रह्मावर्तमें रहकर सात समुद्रवाली सारी पृथ्वीका शासन करते हैं ॥ ॥ २५ ॥ ❀ ❀ विप्रवर ! वे परम धर्मज्ञ महाराज महारानी शतरूपाके साथ तुमसे मिलनेके लिये परसों यहाँ आयेंगे ॥ २६ ॥ ❀ ❀ उनकी एक रूप-यौवन, शील और गुणोंसे सम्पन्न श्यामलोचना कन्या इस समय विवाहके योग्य है। प्रजापते ! तुम सर्वथा उसके योग्य हो, इसलिये वे तुम्हींको वह कन्या अर्पण करेंगे ॥ २७ ॥ ❀ ❀ ब्रह्मन् ! गत अनेकों वर्षोंसे तुम्हारा चित्त जैसी भार्याके लिये समाहित रहा है, अब शीघ्र ही वह राजकन्या तुम्हारी वैसी ही पत्नी होकर यथेष्ट सेवा करेगी ॥ २८ ॥ ❀ ❀ वह तुम्हारा वीर्य अपने गर्भमें धारणकर उससे नौ कन्याएँ उत्पन्न करेगी और फिर तुम्हारी उन कन्याओंसे लोकरीतिके अनुसार मरीचि आदि ऋषिगण पुत्र उत्पन्न करेंगे ॥ २९ ॥ ❀ ❀ तुम भी मेरी आज्ञाका अच्छी तरह पालन करनेसे शुद्ध चित्त हो, फिर अपने सब कर्मोंका फल मुझे अर्पण-कर मुझको ही प्राप्त होओगे ॥ ३० ॥

कृत्वा दयां च जीवेषु दत्त्वा चाभयमात्मवान्। मय्यात्मानं सह जगद् द्रक्ष्यस्यात्मनि चापि माम् ॥ ३१ ॥
सहाहं स्वांशकलया त्वद्वीर्येण महामुने[1]। तव क्षेत्रे देवहूत्यां प्रणेष्ये तत्त्वसंहिताम् ॥ ३२ ॥

मैत्रेय[2] उवाच

एवं तमनुभाष्याथ भगवान् प्रत्यगक्षजः। जगाम बिन्दुसरसः सरस्वत्या परिश्रितात् ॥ ३३ ॥
निरीक्षतस्तस्य ययावशेषसिद्धेश्वराभिष्टुतसिद्धमार्गः।
आकर्णयन् पत्ररथेन्द्रपक्षैरुच्चारितं स्तोममुदीर्णसाम ॥ ३४ ॥
अथ सम्प्रस्थिते शुक्ले कर्दमो भगवानृषिः। आस्ते स्म[3] बिन्दुसरसि तं कालं प्रतिपालयन् ॥ ३५ ॥

श्रीधरस्वामिविरचिता भावार्थदीपिका

गार्हस्थ्येन दयां कृत्वा संन्यासेनाश्रयं दत्त्वा मय्यात्मानं जगच्च सहैकीभूतं द्रक्ष्यसि ॥ ३१ ॥ ❀ ❀ त्वद्वीर्येण सह देवहूत्यामवतीर्येति शेषः ॥ ३२ ॥ ❀ ❀ प्रत्यग्भूतेष्वक्षेषु जायते आविर्भवतीति प्रत्यगक्षजः सरस्वत्या नद्या परिश्रितात्परिवेष्टितात् ॥ ३३ ॥ ❀ ❀ अशेषैस्तपोमंत्रादिसिद्धेश्वरैरभिष्टुतः सिद्धमार्गो वैकुंठमार्गो यस्य। यद्वा। अशेषसिद्धेश्वराभिष्टुतश्चासौ सिद्धैर्मृग्यत इति सिद्धमार्गश्च स ययौ पत्ररथेंद्रो गरुडस्तस्य पक्षैरुदीर्णमभिव्यक्तं समाकर्णयन्। "बृहद्रथंतरे पक्षौ" इति श्रुतेः। उच्चारितं स्तोमं च सामाधारभूतानामृचां समुदायं शृण्वन्। "स्तोम आत्मा" इति श्रुतेः। समासपाठे उच्चारितः स्तोमः स्तोत्रीयसमुदायो यस्य साम्न इति ॥ ३४ ॥ ❀ ❀ तं कालं परश्व इत्युक्तं प्रतीक्षमाणः ॥ ३५ ॥

श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

यद्वा। वैराग्ये मद्भक्त्युपदेशेनाभयं दत्त्वेत्यर्थः। मय्यधिष्ठानतत्त्वे परमेश्वरे सर्वं जगदात्मसहितमस्तीति यच्छास्त्रदृष्ट्या सांप्रतं जानासि तदेव तदा साक्षादेव द्रक्ष्यसि प्रथममादिपुरुषं कारणार्णवशायिनं सहस्रशीर्षादिस्वरूपं मां द्रक्ष्यसि। ततश्च तस्यैव मम रोमकूपेषु अनंतकोटिब्रह्मांडान्यात्मसहितानि साक्षाद् द्रक्ष्यसीत्यर्थः। तथात्मनि स्वस्मिन्नंतर्यामिणं मां संतमधुना जानास्येव तदा तु "केचित्स्वदेहान्तर्हृदयावकाशे प्रादेशमात्रं पुरुषं वसंतम्" इति द्वितीयस्कंधोक्तं तृतीयपुरुषं क्षीरोदनाथं मामेव साक्षाद्द्रक्ष्यसीति सृज्यासृज्यं सर्वं वस्तु त्वामहं दर्शयिष्यामीति फलितार्थः। यद्वा। मयि पुत्ररूपे श्रीयशोदेव जगदात्मानं द्रक्ष्यसि तथात्मनि

---

१. प्रा० पा०—महामते। २. प्राचीने पाठे 'मैत्रेय उवाच' अयमंशो न। ३. प्रा० पा०—आस्तेऽस्मिन्।

चापि मां श्रीगोपीव "तं काचिन्नेत्ररंध्रेण हृदिकृत्य निमील्य च । पुलकांग्युपगुह्यास्ते योगीवानंदसंप्लुता" इत्युक्तरीत्या द्रक्ष्यसीति ॥ ३१ ॥ ❀ ❀ किञ्चान्याञ्च काञ्चनानंदस्य वार्त्तां शृण्वित्याह-त्वद्वीर्य्येण त्वत्कन्यापत्यवृन्देन सहाविर्भूयेति शेषः । तव क्षेत्रे भार्यायां "क्षेत्रं पुरे गृहे देहे केदारे योनिभार्ययोः । पुण्यक्षेत्रे समूहे च" इति यादवः । तत्त्वसंहितां तत्त्वसंख्यानलक्षणं सांख्यशास्त्रं प्रणेष्ये करिष्ये ॥ ३२ ॥ ❀ ❀ तं कर्दमम् । अथ प्रथमभाषणोत्तरम् । परिप्लुतादिति पाठेऽप्ययमेवार्थः । ॥ ३३ ॥ ❀ ❀ सिद्धमार्गशब्दस्य वैकुंठेऽप्रसिद्धेराह—यद्वेति । साम सामवेदावयवम् । पक्षाभ्यां सामाभिव्यक्तौ प्रमाणमाह—बृहेति । स्पष्टार्था श्रुतिः । स्तोमः स्तोमाख्यो वेदावयवः । आत्मा आधार इति श्रुति पदार्थः । समासपाठे उच्चारितस्तोममिति पाठे ॥ ३४ ॥ ❀ ❀ अथ शुक्लप्रस्थानानंतरं भगवान् योगैश्वर्यवान् ॥ ३५ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

एकीभूतमधिष्ठानभिन्नं कल्पितस्याधिष्ठानमात्रात्मकत्वादित्यद्वयवादसम्मतोऽर्थः वैष्णवमते तु एकीभूतं परमाश्रयान् मत्तोऽभिन्नम् "एकदेशस्थितस्याग्नेर्ज्योत्स्ना विस्तारिणी यथा । परस्य ब्रह्मणः शक्तिस्तथेदमखिलं जगत्" इति विष्णुपुराणोक्तेः । तत्रापि श्रीवैष्णवमते चिदचितोरूच्छरीरत्वाच्छरीरवाचकानाञ्च शब्दानां शरीरिपर्यन्तधावनान्मुख्यमेव सामानाधिकरण्यम् । माध्वमते तु तद्व्याप्यत्वात्तदायत्तवृत्तिकत्वात् तत्तदभेदः । श्रीकृष्णचैतन्यमते तु जगतो बहिरङ्गशक्तिमयत्वाज्जीवानाञ्च तटस्थशक्तित्वाच्छक्ति-शक्तिमतोरभेदादेकीभूतत्वं ज्ञेयम् । तत्र यथारुचि ग्राह्यम् । वासनावैचित्र्यादेवमन्यत्रापि व्याख्येयम् ॥ ३१ ॥ ❀ ❀ स सर्वो-पादानीभूतोऽहं त्वद्वीर्येण त्वत्तपःप्रभावेण तज्जन्येन यशसा सहेत्यर्थः । वक्ष्यते च कर्दमेन "स त्वया राधितः शुक्लो वितन्वन्मा-मकं यश" इति ॥ ३२ ॥ ❀ ❀ प्रत्यग्भूतेषु निरुद्धेषु अन्तर्भूतेष्वित्यर्थः ॥ ३३ ॥ ❀ ❀ सिद्धशब्दस्य वैकुण्ठवाच-कत्वमप्रसिद्धमतो यद्वेति बृहद्रथन्तरे तन्नामकसामन्तौ गरुडस्य पक्षौ स्तः उच्चारितमिति पृथक्पदपाठे स्तोमं चेति चकारोऽध्याहृतः । स्तोम ऋक्समुदायः आत्मा मध्यभागः समासपाठे उच्चारितस्तोममित्येकपदपाठे साम्नो विशेषणमेतत् ॥ ३४ ॥ ३५ ॥

### श्रीमद्वीरराघवव्याख्या

आत्मवान् जितान्तःकरणस्त्वं भूतेषु चराचरात्मकेषु दयां कृत्वा अभयं च दत्त्वा मय्यन्तःप्रविश्य धारके मयि कृत्स्नं चराचरात्मकं जगदात्मानं च सहैव द्रक्ष्यसि व्याप्तं धार्यं च द्रक्ष्यसि धार्ये स्वात्मनि च मां धारकं व्यापकं च द्रक्ष्यसीत्यर्थः ॥ ३१ ॥ ❀ ❀ स्वांशकलया स्वांशेन सहाहं च त्वद्वीर्येण द्वारभूतेन हे महामुने ! तव क्षेत्रे क्षेत्रभूतायां देवहूत्यामवतीर्येति शेषः तत्त्वसंहितां तत्त्वानां प्रकृतिपुरुषेश्वराणां स्वरूपविवेचनीं संहितां प्रणेष्ये कथयिष्यामि ॥ ३२ ॥ ❀ ❀ एवं कर्दममाभाष्य स्वस्थानं प्रति भगवान् गत इत्याह । मैत्रेयः प्रत्यगक्षजः प्रत्याहृतेष्विन्द्रियेषु जायते आविर्भवतीति प्रत्यगक्षजो भगवान् तं कर्दममनु-भाष्याथानन्तरं सरस्वत्या नद्या परिश्रितात्परिवेष्टितात् बिन्दुसरसः सरोवरतीरस्थात्कर्दमाश्रमाज्जगाम ॥ ३३ ॥ ❀ ❀ कथं जगामेत्यत्राह । निरीक्षत इति । तस्य कर्दमस्य निरीक्षतः पश्यतः सतः अशेषसिद्धेश्वरैः सर्वयोगीश्वरैरभिष्टुतः सिद्धः स्वतः सिद्धः मार्गः कल्याणगुणगणरूपप्रकारो यस्य सः पत्ररथेन्द्रो गरुडः तस्य पक्षैरुच्चारिते उदीर्णे अभिव्यक्ते सामनी बृहद्रथन्तरे यस्मिन् तं स्तोमं सामाधारभूतमृक्समुदायं "बृहद्रथन्तरे पक्षौ स्तोम आत्मा" इति श्रुतेः आकर्णयन् श्रावयन् ययौ जगाम ॥ ३४ ॥ ❀ ❀ गते भगवति कर्दमः किमकरोदित्यपेक्षायामनन्तरवृत्तान्तमाह । अथेत्यादिना । शुक्ले भगवति संप्रस्थिते सम्यक् प्रयाते सति भगवान् कर्दमऋषिस्तं कालं दिदृक्षुस्त्वां परश्व इति भगवता निर्दिष्टं कालं प्रतिपालयन् प्रतीक्षमाणः बिन्दुसरसि बिन्दुसरस्तीरे आस्ते स्म उपविष्टः किल ॥ ३५ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

गार्हस्थ्यानन्तरं चतुर्थाश्रमोऽप्यवश्यमनुष्ठेय इत्याशयेनाह । कृत्वेति । अभयं दत्त्वा भूतेभ्य इति शेषः आत्मवान् मदेकशरणः संन्यासाश्रमानुष्ठानफलमाह । मयीति । सह जगदिति क्रियाविशेषणं यथा जगता सह वर्तमानस्तथात्मानं त्वां मयि द्रक्ष्यसि मदाधारं द्रक्ष्यसीत्यर्थः । आत्मनि त्वयि स्थितं मां च द्रक्ष्यसि । अनेनाधाराधेयभावेनोपास्तिं कुर्वत एवंविधज्ञानेन मत्प्राप्तिरुक्ते-त्यतो भेदज्ञानमेव परमपुरुषार्थसाधनमुक्तं भवति ॥ ३१ ॥ ❀ ❀ पिण्डविच्छेदात्पितृशापः स्यादित्यातङ्को मा भूदिति भावेनाह । सम्भूयेति । तव क्षेत्रे भार्यायाम् 'क्षेत्रं पुरे गृहे देहे केदारे योनिभार्ययोः । पुण्यस्थाने समूहे च' इति यादवः । त्वद्वीर्येण सह गर्भं प्रविश्येति शेषः । स्वांशकलया शुक्ररक्तसम्बन्धरहितया सच्चिदानन्दलक्षणया सम्भूय सम्यगभिव्यज्य तत्त्वसंहितां तत्त्वसाङ्ख्यशास्त्रं प्रणेष्ये करिष्य इत्यन्वयः ॥ ३२ ॥ ❀ ❀ कर्दमायाशेषपुरुषार्थसाधनमभीष्टं हरिरुपदिश्य पुनः किमकार्षीदिति तत्राह । एवं तमिति । प्रत्यगक्षमन्तर्यामिविषयमिन्द्रियं विषयत्वेन गच्छत्येनं प्रतीति प्रत्यगक्षगः अपरोक्षज्ञानविषय इत्यर्थः । प्रत्यक् स्थितोऽपी-दानीमिन्द्रियविषयगतो वा ॥ ३३ ॥ ❀ ❀ अशेषसिद्धेश्वरैः समस्तब्रह्मादिभिरभिष्टुतः सिद्धैः सनकादिभिर्मृग्यत इति सिद्ध-मार्गश्च "मार्गो मृगपदे मासि सौम्यर्क्षेऽन्वेषणेऽध्वनि" इति यादवः । पत्ररथाः पक्षिणस्तेषामिन्द्रो गरुडस्तस्य पत्रैः पक्षैरुदीर्णमुत्कृष्टं

साम यस्मिन् तथा तं स्तोमं स्तुतिविशेषम् ।। ३४ ।। ❀ ❀ अनन्तरं कर्दमोऽपि तपश्चेत्सम्पन्नं किमत्रेत्यन्यत्र वागमत् किं तत्राह । एवमिति । प्रतिपालयन् प्रतीक्षमाणः ।। ३५ ।।

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

मयि परमाश्रये आत्मानं द्रक्ष्यसि आत्मनि तदधिष्ठाने मां तत्र सह जगद्यथा स्यात्तथैव जगदपि द्रक्ष्यसीत्यर्थः ।। ३१ ।। ❀ ❀ वीर्यं प्रभावं तेन सह व्यक्तीभूयेति शेषः । मद्व्यक्तौ त्वत्तपःप्रभावो व्यक्तीभविष्यतीत्यर्थः । वक्ष्यते च प्रजापतिना "शुक्लो वितन्वन् मामकं यश" इति ।। ३२-३३-३४-३५ ।।

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

गार्हस्थे अन्नाच्छादनादिदानैर्जीवेषु दयां कृत्वा वैराग्ये अभये मद्भक्त्युपदेशेनेत्यर्थः । मय्यधिष्ठानतत्त्वे परमेश्वरे सर्वं जगदात्मसहितमस्तीति यत् शास्त्रदृष्ट्या साम्प्रतं जानासि तदेव तदा साक्षादेव द्रक्ष्यसि प्रथममादिपुरुषं कारणार्णवशायिनं सहस्रशीर्षादिरूपं मां द्रक्ष्यसि ततस्तस्यैव मम रोमकूपेषु अनन्तकोटिब्रह्माण्डान्यात्मसहितानि साक्षात् द्रक्ष्यसीत्यर्थः । तथा आत्मनि स्वस्मिन्नन्तर्यामिणं मां सन्तमधुना जानास्येव । तदा तु "केचित् स्वदेहान्तर्हृदयावकाशे प्रदेशमात्रं पुरुषं वसन्तो चतुर्भुजं शङ्खगदा" इति द्वितीस्कन्धोक्तं तृतीयपुरुषं क्षीरोदनाथं मामेव साक्षाद् द्रक्ष्यसीति सृज्यासृज्यं सर्वं वस्तु त्वमहं दर्शयिष्यामीति फलितोऽर्थः । यद्वा मयि पुत्रभूते श्रीयशोदेव जगदात्मानं द्रक्ष्यसि तथात्मनि चापि मां श्रीगोपीवत्'तं काचिन्नेत्ररन्ध्रेण हृदिकृत्य निमीलय च पुलकाङ्ग्युपगुह्यास्ते योगीवानन्दसम्प्लुता" इत्युक्तरीत्या द्रक्ष्यसीति ।। ३१ ।। ।। ❀ ❀ किञ्चान्याञ्च कञ्चिदानन्दस्य वार्त्तां शृणित्याह ! सहाहमिति । त्वद्वीर्येण त्वत्कन्यापत्यवृन्देन सह वाविर्भूयेति शेषः ।। ३२ ।। ❀ ❀ प्रत्यग् भूतेष्वक्षेषु जायते आविर्भवतीति सः सरस्वत्या नद्या परिश्रितात् परिवेष्टितात् ।। ३३ ।। ❀ ❀ तस्य कर्दमस्य निरीक्षमाणस्य सतः अशेषैः सिद्धेश्वरैरभिष्टुतः सिद्धमार्गो वैकुण्ठमार्गो यस्य सः पत्ररथेन्द्रो गरुडस्तस्य पक्षैरुच्चारितं स्तोममृक्समुदायं शृण्वन् कीदृशमुदीर्णमभिव्यक्तं साम यत् तत् स्वरूपं समासपाठे उच्चारितः स्तोमः स्तोत्रीयसमुदायो यस्य तथाभूतं यदुदीर्णं साम तत् "बृहद्रथन्तरे पक्षौ" इति श्रुतेः ।। ३४ ।। ❀ ❀ तं कालं परश्व इत्युक्तं प्रतीक्षमाणः ।। ३५ ।।

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

हे महामुने ! त्वद्वीर्येण यत्र ऋषयः पुत्रानाधास्यन्ति तेन तत्वसंहिताधिकार्य्युत्पत्तिस्थानेन नवकन्यारूपेण सहावतीर्येति शेषः ।। ३२ ।। ❀ ❀ प्रत्यग्भूतेषु प्रत्याहृतेषु स्वाभाविकीं प्रवृत्तिं विहाय भगवद्ग्राहकतां नीतेष्विन्द्रियेषु जायते आविर्भवतीति प्रत्यगक्षजः परिश्रितात्परिवेष्टितात् ।। ३३ ।। ❀ ❀ अशेषैः समग्रैः सिद्धः ईश्वरः येभ्यः प्रतिपादकेभ्यस्तैर्वेदैः "वेदैश्च सर्वैरहमेव वेद्य" इतिश्रीमुखोक्तेः सिद्धैः श्रेष्ठैर्वा अभिष्टुतः सिद्धो निष्पन्नो यो ज्ञानभक्तिरूपो मार्गो यस्य स पत्ररथेन्द्रस्य पक्षिराजस्य पक्षैः उदीर्णमभिव्यक्तं साम तैरेवोच्चारितं स्तोमं सामाधारभूतानामृचां ससुदायं चाकर्णयन् शृण्वन् ।। ३४ ।। ३५ ।।

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

ततः पूर्वमभिज्ञापकं तव ज्ञानं भविष्यतीत्याह—कृत्वेति । सर्वसाक्षात्कारो हि तस्याभिज्ञापकम् , ब्रह्मविद एव भगवत्प्राप्तिः । ज्ञानस्य च निदर्शनं 'यस्मिन् विदिते सर्वमिदं विदितम्' इति । तस्याऽपि निदर्शनमाह—जीवेषु दयां कृत्वा अभयं च दत्त्वेति । स्वयं च ब्रह्मभावमापन्नः, अन्ये तु तद्रहिता दीना दयापात्रं भवन्ति । आत्मतत्वे स्फुरिते तु अभयदानं च आत्मविदो हि तत् कृत्यम् । तदाह—आत्मवानिति । आत्मवत्त्वं नाम मूलचिद्रूपस्य स्वस्मिन्नाविर्भावः । इन्द्रियजयस्तत्र नोपयुज्यत एव, पूर्वमेव सिद्धत्वात् । तदा सर्वाधिष्ठानत्वेन मां पश्यतीत्याह—मय्यात्मानं सह जगदिति । भगवति स्वात्मानं जगच्च द्रक्ष्यसि आत्मनि, चकारात् जगति च मां द्रक्ष्यसि । एतावता आधाराधेयभूतो भगवान् ज्ञातः, स्वाधारश्चेति पूर्णब्रह्मज्ञानं तस्योक्तम् ।। ३१ ।। ❀ ❀ एवं तस्मै आज्ञामुक्त्वा तदङ्गीकारे स्वस्य प्रसादमाह—सहेति । स्वांशकलया सह । अंशा आनन्दरूपाः, भगवतस्त एव स्वांशभूताः । जीवास्त्वंशाः, कला ज्ञानक्रियाशक्तयः । तत्रानन्दांशो ज्ञानकलासहितः । त्वद्वीर्येण सह, तव क्षेत्रे देवहूत्याम् , तत्त्वसंहितां साङ्ख्यसिद्धान्तप्रतिपादिकां प्रकर्षेण नेप्ये कथयिष्यामि । वीर्यक्षेत्रसंबन्ध एव, न तु जीववदुत्पत्तिरस्तीति । पुराणे वेदवन्मूलसंहिताश्चतस्रः, साङ्ख्ययोगपशुपतिमतवैष्णवसिद्धान्तप्रतिपादकमन्त्ररूपाः । सर्वाण्येव पुराणानि तस्याऽपेक्षितषडङ्गभूतकालादिप्रतिपादकानि ब्राह्मणस्थानीयानि । तत्र मूलसंहिताः कालेन ग्रस्ता इति, तत्राऽऽद्यां प्रकाशयिष्यामीत्यर्थः । स्वस्यांशस्य वीर्यस्य चाऽभेदप्रतिपादनाय प्रथमत एव सहेत्युक्तम् । महामुने इति संबोधनं तथा त्वधिकारज्ञापनाय ।। ३२ ।। ❀ ❀ एवं कामनां पूरयित्वा, स्वसन्निधाने जीवस्य कामना न सिद्ध्यतीति, भगवान् वरं दत्त्वा प्रस्थित इत्याह द्वाभ्याम्—एवमिति । तं कर्दममनुभाष्य । करिष्यति सर्वं स्वयमेव, अनुभाषणमात्रं तु क्रियते । अथ भिन्नप्रक्रमेण । पूर्वं दयापरीतः समागत इदानीं भक्तमुद्धृत्य पूर्णमनोरथ इव गतः । अतो भिन्न-

प्रक्रमः । तस्मिन् स्थापितं ब्रह्मभावं गृहीत्वा गत इति ज्ञापयितुं भगवानित्युक्तम् । पुनराविर्भावः कदा भविष्यतीत्याशङ्क्य तामेवाऽवस्थां कथयन्निव भगवन्तं विशिनष्टि—प्रत्यगक्षज इति । प्रत्यग्भूतेष्वक्षेष्वाविर्भवतीति । यदैवाऽयमन्तर्मुखो भविष्यति, तदैव भगवदाविर्भाव इत्यर्थः । तद्धि तीर्थं विन्दुसर इति भगवतैव निर्मितम्, सरस्वती च ब्रह्मदेवत्या, तया च परिश्रितम् । भगवद्भावः सृष्टिश्च द्वयं तत्र सिद्धं भव'तीति स्थानादेव तस्य द्वयं सेत्स्यतीति सरस्वतीपरिवेष्टिताद्विन्दुसरसो जगामेत्युक्तम् ॥ ३३ ॥ ❀ ❀ अन्यचित्ते तदानीं देशोऽप्यनुपयुक्तो भविष्यतीति, हृदये भगवत्स्थापनार्थं च निरीक्षत एव तस्य सतो ययावित्याह—निरीक्षत इति । अशेषसिद्धेश्वरैरभितः स्तुतः, सिद्धः स्वत एव सिद्धो मार्गो यस्य, वैकुण्ठमार्गो वा । सिद्धैर्मृग्यत इति भगवतो गमनागमने च सिद्धानां संमते । अतो भगवति गते न तस्य काचिदप्रतिष्ठा, पुनरागमनसम्भवात् । सिद्धैः सह भगवतो व्यवहार एव तादृशः । सर्वसम्मतिरत्रेत्यशेषपदम्, येषामपि सिद्धिर्जाता, स्वयं च सिद्धिदातारः, तेषामपि भववन्मार्गोऽभीष्टदः, ततोऽप्यधिकफलापेक्षित्वात् । ननु सिद्धेश्वरा भगवन्तं निरन्तरं स्तुवन्तीति तेषां स्तोत्राण्यश्रुत्वा कथं गत इत्याशङ्क्याऽऽह—पत्ररथस्य गरुडस्य, पक्षैः पृष्ठरूपैर्बृहद्रथन्तरादिभिरुच्चारितः स्तोमः स्तोत्रियसमुदायो यस्मिन् । उदीर्णं यत् साम, ऋगधि'रूढगीतम् । त्रिवृदादयः स्तोमाश्चत्वारः, बृहदादयोऽपि । तत्र ऋचः प्रधानभूताः । पक्षैः उदीर्णं यत् साम तदाकर्णयन्निति संबन्धः । उच्चारितस्तोममिति विशेषणम् । अतो वेदैः साक्षाद्भगवानेव स्तूयते, तदे'व च शृणोति । अन्ये तु मार्गानेव स्तुवन्तीति भावः ॥ ३४ ॥ ❀ ❀ एवं भगवत्कृतमुक्त्वा तथैवेदं जातमित्याह—अथेति । अथाऽऽनन्तर्यवाचकः । यस्मिन्नेव क्षणे शुक्लनारायणः प्रस्थितः, तदैव मनुः स्वगृहान्निर्गतः । कर्दमोऽपि ऋषित्वात्तमर्थं जानन्, भगवत्वाच्च अदीनः सन्, तं कालं परिपालयन्नेव स्थितः । कदा दिनद्वयं यास्यतीति । दीनो हि तत्र प्रयत्नं कुर्यात् । कामापेक्षयापि भगवद्वाक्यं महदिति विश्वासो भगवद्भावापन्नस्यैव ॥ ३५ ॥

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

कृत्वेत्यत्र । आत्मवानित्यस्य जितान्तःकरण इत्यर्थोक्तौ बाधकमाहुः । इन्द्रियेत्यादि ॥ ३१ ॥ ❀ ❀ निरीक्षत इत्यत्र । पृष्ठरूपैरिति । 'अभित्वाशूरनो नुम इति, कयानश्चित्रेति, तं वोदस्ममृतीषहमिति, तिरोभिर्वा(?)वदद्वस्तुम्' इति सूक्तचतुष्टयानि, क्रमेण रथन्तरवामदेव्यानौधसकालेयसामभिर्माध्यन्दिनसवने गीयमानानि पृष्ठशब्दवाच्यानि तद्रूपैरित्यर्थः । पृष्ठशब्दनिरुक्तिश्च स्पर्शनात् पृष्ठानीतिरूपा द्रष्टव्या । स्तोत्रियसमुदाय इति । पृष्ठेषु सप्तदशः स्तोमो भवति, तस्य विष्टुतिश्चैवमाम्नायते । 'पञ्चभ्यो हिं करोति स एकया तिसृभिः स एकया सप्तभ्यो हिं करोति स एकया स तिसृभिः स तिसृभिः' इति । हिं करोति गायतीत्यर्थः । अत्र प्रथमावृत्तौ प्रथमायास्त्रिरभ्यासो द्वितीयावृत्तौ मध्यमायास्तृतीयावृत्तौ मध्यमोत्तमयोरेवं कृते गाने सप्तदशस्तोमः । ईदृशो गीयमानमन्त्रसमुदाय इत्यर्थः । त्रिवृदादय इति । त्रिवृत्पञ्चदशसप्तदशैकविंशाश्चत्वारः । तल्लक्षणं विस्तरभयान्न लिख्यते । बृहदादय इति । सर्वे सामविशेषाः । तत्रेति । सामस्वित्यर्थः ॥ ३४ ॥

पञ्चत्रिंशच्छ्लोकाच्चतुःपञ्चाशत्श्लोकावधि सुबोधिनीप्रकाशो न ।

### श्रीगिरिधरकृता बालप्रबोधिनी

ततः पूर्वं साधनान्तरमप्याह—कृत्वेति । सर्वजीवेषु गार्हस्थ्येऽन्नादिप्रदानादिना दयां कृत्वा सन्न्यासे च मत्तः सर्वभूतेभ्योऽभयमस्त्विति सङ्कल्पेन भक्त्याद्युपदेशेन चाभयं दत्त्वा । कथमेतत्सम्भवति तत्राह—आत्मवान् निर्जितेन्द्रिय इत्यर्थः । मयि सर्वाधारभूते आत्मानं जगच्च सहैव द्रक्ष्यसि । तथात्मनि स्वस्मिन् 'केचित्स्वदेहान्तर्हृदयावकाशे प्रादेशमात्रं पुरुषं वसन्तम्' इत्युक्तप्रकारकं मां च द्रक्ष्यसीत्यन्वयः ॥ ३१ ॥ ❀ ❀ तद्भक्त्यतिशयेन स्वप्रीतिं सूचयन् सम्बोधयति—महामुने इति । तव क्षेत्रे भार्यायां देवहूत्यां त्वद्वीर्येण सह स्वांशकलया स्वांशांशेन अहमवतीर्य तत्त्वानां प्रकृतिपुरुषेश्वराणां स्वरूपविवेचनीं संहितां प्रणेष्ये कथयिष्यामि ॥ ३२ ॥ ❀ ❀ प्रत्यक्षु प्रत्याहृतेषु अक्षेषु इन्द्रियेषु जायते आविर्भवतीति प्रत्यगक्षजो भगवान् तं कर्दमं प्रति एवमुक्तप्रकारकं अनुभाष्य अथानन्तरं सरस्वत्या नद्या परिश्रितात् परिवेष्टितात् विन्दुसरसः बिन्दुसरोवरतीरस्थात्कर्दमाश्रमात् जगामेत्यन्वयः ॥ ३३ ॥ ❀ ❀ गच्छन्तं भगवन्तमनुवर्णयति—निरीक्षत इति । तस्य कर्दमस्य निरीक्षतः भक्त्या पश्यत एव सतः अशेषैः सिद्धेश्वरैरभिष्टुतश्चासौ सिद्धैर्मृग्यते इति सिद्धमार्गश्च स भगवान् पत्ररथेन्द्रः पक्षिराजो गरुडस्तस्य पक्षैरुच्चारितं उदीर्णे अभिव्यक्ते सामनी बृहद्रथन्तरे यस्मिंस्तत्स्तोमं सामाधारभूतं ऋक्समुदायं आकर्णयन् श्रावयन् ययावित्यन्वयः । "बृहद्रथन्तरे पक्षौ स्तोम आत्मा" इति श्रुतिरत्रानुसन्धेया ॥ ३४ ॥ ❀ ❀ भगवद्गमनानन्तरं कर्दमः किमकरोदित्यपेक्षायां तदनन्तरवृत्तान्तमाह—अथेत्यादिना । शुक्ले शुद्धे भगवति सम्प्रस्थिते सम्यक् प्रयाते सति अथानन्तरं भगवान् भगवद्दत्तज्ञानैश्वर्यादिमान् कर्दमर्षिस्तं परश्च इति भगवता निर्दिष्टं कालं परिपालयन् प्रतीक्षमाणो विन्दुसरसि विन्दुसरसस्तीरे स्वाश्रमे आस्ते स्म ॥ ३५ ॥

---

१. भविष्यतीति ख. ङ., । २. समधिरूढ क. ङ. । ३. तदेव शृणोति क. ख. ।

## हिन्दी अनुवाद

जीवोंपर दया करते हुए तुम आत्मज्ञान प्राप्त करोगे और फिर सबको अभयदान दे अपने सहित सम्पूर्ण जगत्‌को मुझमें और मुझको अपने में स्थित देखोगे ॥ ३१ ॥ ❀ ❀ महामुने ! मैं भी अपने अंश-कलारूपसे तुम्हारे वीर्य द्वारा तुम्हारी पत्नी देवहूतिके गर्भमें अवतीर्ण होकर सांख्यशास्त्रकी रचना करूँगा ॥ ३२ ॥ ❀ ❀ श्रीमैत्रेयजी कहते हैं—विदुरजी ! कर्दमऋषिसे इस प्रकार सम्भाषण करके, इन्द्रियोंके अन्तर्मुख होनेपर प्रकट होनेवाले श्रीहरि सरस्वती नदीसे घिरे हुए बिन्दुसर-तीर्थसे ( जहाँ कर्दमऋषि तप कर रहे थे ) अपने लोकको चले गये ॥ ३३ ॥ ❀ ❀ भगवान्‌के सिद्धमार्ग ( वैकुण्ठमार्ग ) की सभी सिद्धेश्वर प्रशंसा करते हैं। वे कर्दमजीके देखते-देखते अपने लोकको सिधार गये। उस समय गरुड़जीके पक्षोंसे जो सामकी आधारभूता ऋचाएँ निकल रही थीं, उन्हें वे सुनने जाते थे ॥ ३४ ॥ ❀ ❀ विदुरजी ! श्रीहरिके चले जानेपर भगवान् कर्दम उनके बताये हुए समयकी प्रतीक्षा करते हुए बिन्दुसरोवरपर ही ठहरे रहे ॥ ३५ ॥

मनुः स्यन्दनमास्थाय शातकौम्भपरिच्छदम् । आरोप्य स्वां दुहितरं सभार्यः पर्यटन्महीम् ॥ ३६ ॥
तस्मिन् सुधन्वन्नहनि भगवान् यत्समादिशत् । उपायादाश्रमपदं मुनेः शान्तव्रतस्य तत् ॥ ३७ ॥
यस्मिन् भगवतो नेत्रान्न्यपतन्नश्रुबिन्दवः । कृपया सम्परीतस्य प्रपन्नेऽर्पितया भृशम् ॥ ३८ ॥
तद्वै बिन्दुसरो नाम सरस्वत्या परिप्लुतम् । पुण्यं शिवामृतजलं महर्षिगणसेवितम् ॥ ३९ ॥
पुण्यद्रुमलताजालैः कूजत्पुण्यमृगद्विजैः । सर्वर्तुफलपुष्पाढ्यं वनराजिश्रियान्वितम् ॥ ४० ॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

शातकौंभाः सौवर्णाः परिकरा यस्मिंस्तं रथमास्थाय दुहितरं चारोप्य वरान्वेषणार्थं पर्यटन् ॥ ३६ ॥ ❀ ❀ हे सुधन्वन्विदुर यदहः ॥ ३७ ॥ ❀ ❀ तत्प्रवेशमात्रेण परमानंदं प्राप्त इति दर्शयितुमाश्रमं वर्णयति । यस्मिन्नित्यादिभिः सप्तभिः श्लोकैः । प्रपन्ने कर्दमे ॥ ३८ ॥ ❀ ❀ शिवमारोग्यममृतवत्स्वादु जलं यस्मिन् ॥ ३९ ॥ ❀ ❀ कूजंतः पुण्या मृगा द्विजाश्च येषु तैः पुण्यद्रुमलतानां जालैः समूहैर्युक्तम् ॥ ४० ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

यदहो भगवान्समादिशत्तस्मिन्नहनि महीं पर्यटन्मुनेराश्रमपदमुपायादिति द्वयोरन्वयः ॥ ३६ ॥ ❀ ❀ सुधन्वन्निति । शूरास्त्वद्वत्सैन्याद्याश्रयणं विनैव निर्भया विचरंतीति मा शंकीः । सभार्यो विना बलं कथं विचरतीति ? । "स्वसैन्यचरणक्षुण्णम्" इति वक्ष्यमाणोक्तिस्तु राज्ञां गमनबोधनपरेति न तया विरोधः । तत् प्रसिद्धम् । शांतमुपरतम् । व्रतं ब्रह्मचर्यलक्षणं यस्य भार्याभिलापुकत्वात् ॥ ३७ ॥ ❀ ❀ यस्मिन्स्थले तत्स्थानं बिंदुसरो नामेति द्वयोरन्वयः ॥ ३८ ॥ ❀ ❀ बिंदूनां सरणं यत्र तद्बिंदुसर इति आरोग्यमारोग्यवर्द्धकम् । 'आयुर्घृतम्' इतिवत्प्रयोगः ॥ ३९ ॥ ❀ ❀ पुण्यद्रुमा अश्वत्थामलक्यादयः । पुण्यलता विष्णुक्रांतामाधव्याद्याः । पुण्यमृगाः कृष्णसारादयः । पुण्यद्विजा जरितार्यादिपक्षिणः ॥ ४० ॥

## श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

मनुरिति युग्मकं तस्मिन्नहनि तत्प्रसिद्धम् ॥ ३६-३७ ॥ ❀ ❀ यस्मिन्निति सप्तकम् । तथापि बहुवाक्यैकवाक्यत्वाद्गर्भेऽङ्का बिन्दुमस्तका इति न्यायो घटितटीकाक्रमबोधायानुसरणीयः । प्रपन्ने शरणापन्ने "१" बिन्दुसरो नामकं सर अस्तीति शेषः । आरोग्यमारोग्यजनकमित्यर्थः । आयुर्घृतमितिवत् आरोग्याव्यभिचारः प्रयोजनम् । आरोगमित्यपि क्वचित्पाठः "२" युक्तमित्यन्वितमित्यस्यैवार्थः "३" मिथ आहूयन्तः परस्परमाकारयन्तः अत एव मत्ताः "४" अशनो विजयसारः चूतपोतैर्बालाम्रैः "४" ५ "६" तद्विशेषाः मर्कटभेदाः ॥ ३८—४४ ॥

## श्रीमद्वीरराघवव्याख्या

मनुः स्वायम्भुवः शातकौम्भाः सुवर्णमयाः परिच्छदा अलंकारा यस्मिंस्तं स्यन्दनं रथमास्थायाधिष्ठायारुह्येत्यर्थः । तत्र स्वां दुहितरमारोप्य सभार्यः शतरूपया सहितः महीं दुहितुः पत्यन्वेषणार्थं परितः सञ्चरन् ॥ ३६ ॥ ❀ ❀ भगवान् यदहः समादिशन्निर्दिष्टवान् तस्मिन्नहनि हे सुधन्वन् ! विदुर शान्तव्रतस्योपशमशीलस्य मुनेराश्रमपदं स्थानं प्रति उपायादुपागात् ॥ ३७ ॥ आश्रमपदं वर्णयति सप्तभिः । यस्मिन्निति । प्रपन्ने कर्दमे भृशमत्यन्तमर्पितया निहितया कृपया संपरीतस्य सम्यक् परितो व्याप्तस्य

१. प्रा० पा०—सुधन्ये न्वहनि । २. प्रा० पा०—पतन्हर्षबिन्दवः ।

भगवतो नेत्राद्धर्षबिन्दव आनन्दाश्रूणि यस्मिन् सरस्यपतन् ॥ ३८ ॥ ❀ ❀ तत्सरः बिन्दुसरो नाम इति प्रसिद्धम् । इदमेव बिन्दुसरःशब्दस्य प्रवृत्तिनिमित्तं यद्धरिहर्षबिन्दुनिपतनादाविर्भावः । कथंभूतं सरस्वत्या नद्या परितः श्रितं वलयितं पुण्यमुपस्पर्शना-दिभिः पुण्यसाधनं शिवममृततुल्यं जलं यस्मिंस्तन्महर्षिगणैः सेवितमहरहरुपस्पृश्यमानम् ॥ ३९ ॥ ❀ ❀ कूजन्तः पुण्याः मृगा द्विजाः शकुनयश्च येषु तैः पुण्यानां द्रुमाणां लतानां च जालैः समूहैः सर्वर्तुषु यानि फलानि पुष्पाणि च तैराढ्या शालिनी या वनराजिर्वनपंक्तिस्तस्याः श्रिया शोभयान्वितं युक्तम् ॥ ४० ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली ।

ऋष्याद्युक्तमपि न मृषा भवति किमुतेश्वरभाषितमिति भावेन मनोर्गमनं वक्ति । मनुरिति । पर्यटन्महीमिति ॥ ३६ ॥ ❀ ❀ अनेन पित्रा दुहित्रर्थं वरानुगमनं न लौकिकमिति राज्यपरीक्षाव्याजेन यदृच्छया प्राप्त इति भावं सूचयति । हे सुधन्वन् ! विदुर ! शान्तव्रतस्य पूर्णव्रतस्य ॥ ३७ ॥ ❀ ❀ कर्दमाश्रमस्य बिन्दुसर इति नाम कस्मादिति तत्राह । यस्मिन्निति ॥ ३८ ॥ ❀ ❀ बिन्दूनां सरणं प्रसरणं यत्र तद्बिन्दुसर इति कन्यादानकार्यमन्तरेणापि श्रेयोऽर्थिना गन्तुं योग्यमित्याशयेन तदाश्रमगुणा-नाह । पुण्यमिति । शिवं चामृतमयाचितं च जलं यस्मिंस्तत्तथा । "अमृतं व्योम्नि देवान्ने यज्ञशेषे रसायने । अयाचिते च दुग्धा-ब्धौ" इत्यभिधानम् ॥ ३९ ॥ ❀ ❀ पुण्यद्रुमा अश्वत्थादयः लता माधव्यादयः तेषां जालैः समूहैः मुकुलैश्च युक्तमिति शेषः । पुण्यमृगाः कृष्णसारङ्गादयः द्विजा जावितर्यादिपक्षिणः ॥ ४० ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

मनुरिति युग्मकम् ॥ ३६ ॥ ३७ ॥ ❀ ❀ तस्मिन्निति सप्तकम् । प्रपन्ने प्रपन्नमात्रे अर्पितया तदेकसत्कृतयेत्यर्थः । यस्मिन्नेव तत् अश्रुबिन्दुवृन्दस्वरूपं बिन्दुसरो नाम सरोऽभूदित्यर्थः । टीकायां शिवमारोग्यमिति आयुर्घृतमितिवत् आरोग्यजनक-मित्यर्थः । अरोगमिति क्वापि ॥ ३८—४४ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी ।

यदहो भगवान् समादिशत् तस्मिन्नहनि महीं पर्यटन् मुनेराश्रमपदमुपायादित्यन्वयः ॥ ३६ ॥ ❀ ❀ हे सुधन्वन् । हे विदुर ! ॥ ३७ ॥ ❀ ❀ आश्रमं वर्णयति । यस्मिन्निति सप्तभिः श्लोकैः । प्रपन्ने कर्दमे ॥ ३८ ॥ ३९ ॥ ❀ ❀ लता-जालैरन्वितम् ॥ ४० ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

हे सुधन्वन् ! विदुर ! आश्रमपदमाश्रमप्रदेशम् ॥ ३६—३७ ॥ ❀ ❀ तद्वर्णयति । यस्मिन्निति सप्तभिः । कूजन्तः पुण्या मृगादयो येषु तैः पुण्यद्रुमादीनां जालैः समूहैर्युक्तम् । मत्तभ्रमराणां विभ्रमो विलासो यस्मिन् । मत्तबर्हिण एव नटास्तेषामा-टोपो नृत्यविलासो यस्मिन् तत् । हुतः हुताशनः ब्रह्मचारियोग्यो येन तम् । भार्याभावे अग्निहोत्राधिकाराभावात् तपसि चिर-मुप्रस्तीव्रो युक् योगो यस्य तेन । नातिक्षामं नातिकृशम् । तस्य भगवतो व्याहृतमेवामृतकला अमृतस्य सुखकलानिधेः कला तन्मयस्य पीयूषस्य श्रवणेन च प्रांशुमुन्नतम् । असंस्कृतमनिर्णिक्तम् । अर्ह्यते अनेनेति अर्हणं महारत्नं यथा तथा मलिनमकृतोद्वर्तनादिकं मुनिमुपसंसृत्य निकटं गत्वा ददर्शेति सार्द्धत्रयाणामन्वयः ॥ ३८—४७ ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

मनुस्तु सभार्यः समागत इत्याह—मनुरिति । शातकौम्भपरिच्छदमिति सौवर्णपरिकरयुक्तं स्यन्दनं विवाहं सूचयति । आरोप्य स्वां दुहितरमिति विवाहे कृतनिश्चयः । अन्तर्यामिप्रेरणया तत्तथैव भविष्यतीति विनिश्चित्य, स्वकन्याया नाऽन्यः प्रष्टव्य इति दम्पत्योः प्राधान्यात्सभार्यः, देयत्वेन तां गृहीत्वा, तामज्ञापयन् , तस्याः पश्चात् कौतुकदर्शनं न भविष्यतीति महीं व्यचरत् । उत्तमस्थानानि सर्वाणि प्रदर्शितवानित्यर्थः ॥ ३६ ॥ ❀ ❀ एवं दिनद्वयमतीतम् । तृतीये दिवसे कुरुक्षेत्रात् बिन्दुसरसि समागत इत्याह—तस्मिन्निति । हे सुधन्वन्निति स्वपौरुषं ख्यापयन् स्वस्य जितेन्द्रियत्वं बोधयतीति विदुरप्रतीत्यर्थः संबोधनम् । भगवदाज्ञा नाऽन्यथा भवतीति तस्मिन्नेव दिने समागतः, यद्भगवान् समादिशत् , न तु काकतालीयन्यायेन तदा समागतः । एतद्व्यावृत्त्यर्थमेव भगवदा-ज्ञाकीर्त्तनम् । आश्रमो यस्मिन् पदे देशे, तमुपायात् तस्य निकटे समागतः । ननु तपसा तप्यमाने तस्मिन् तत्तेजसा कथं निकटे गत इति तत्राऽऽह—शान्तव्रतस्येति । परिसमाप्तं तपोलक्षणं व्रतं यस्य । तत् प्रसिद्धम् ! न ज्ञानार्थं प्रभापेक्षा ॥ ३७ ॥ ❀ ❀ भगवन्निरुपितकालः स एवेति निरूप्य, देशोऽपि भगवत्कृत इत्याह—यस्मिन्निति । बिन्दुसरोनिरुक्तिस्तत एव, बिन्दवः सरसि यस्मि-न्निति । तेषां बिन्दूनामुत्पत्तिमाह—यस्मिन् सरसि भगवतो नेत्रादश्रुबिन्दवो न्यपतन् । बिन्दुपाते निमित्तम्—कृपया परीतस्येति । कृपायां निमित्तम्—प्रपन्नेऽर्पितयेति । शरणागतश्चेत् क्लिष्टः, तदा तत्र कृपा भवति । कृपया यो व्याप्रियते स्वस्थानात् प्रच्याव्यते । तदा

नेत्रात् बिन्दवो भवन्ति। भगवान् स्वकृपां शरणागतेष्वेवाऽर्पितवान्; अतो न दीनमात्रे भगवतो दया, यतः प्रपन्नाय दत्तवान्, तदाहाऽर्पितयेति। भृशमिति सर्वभावेन॥ ३८॥ ❀ ❀ एवं देशकालयोर्भगवन्निरूपितत्वमुक्त्वा भगवत्कृपाकार्यं तस्मिन् देशे वर्णयति कन्यायाः सुख[1]स्थित्यर्थम्। तद्वै बिन्दुसर इति षड्भिः—भगवद्गुणकृतत्वाय बिन्दुसर इति नाम प्रसिद्धम्। सरस्वत्या परिश्रितमिति। तत्र धर्मसिद्धिः। परिप्लुतमिति पाठे सरस्वतीमध्ये एव कालीयह्रद इव तत्कुण्डम्। प्रथमतो जलं वर्णयति—पुण्यमदृष्टजनकम्। शिवमारोग्यकरम्। अमृतं स्वादु। प्रमाणमाह—महर्षिगणसेवितमिति। महर्षयो ये सर्वपदार्थयाथात्म्यद्रष्टारः तेषां सङ्घेन सेवितम्, अतो महाफलमेवैतज्जलम्॥ ३९॥ ❀ ❀ जलप्रान्तभागं ऋषिगणसेवितत्वेनोक्त्वा, तस्याऽपि वेष्टनरूपं वनमनु[2]वर्णयति—पुण्येति। द्रुमा वृक्षाः, लताश्च; स्वभावतोऽपिपुण्याः आम्रादयः द्राक्षादयश्च, पुण्यजनकाश्च। पुण्यास्तत्फलभक्षकाः कूजन्तो मृगा हरिणादयः, द्विजा मयूरादयश्च यत्र। तत्र[3] तादृशानि द्रुमलतानां जालानि; तैः कृत्वा सर्वर्तुषु तत्स्थानम् फलैः, पुष्पैश्चाढ्यम्। वनपंक्तिश्च तत्र शोभ[4]माना परितः। तदाह—वनराजिश्रियान्वितमिति॥ ४०॥

### श्रीगिरिधरकृता बालप्रबोधिनी

सभार्यः शतरूपासहितः मनुः स्वयम्भुवः शातकौम्भाः सुवर्णमयाः परिच्छदाः अलङ्कारा यस्मिंस्तं स्यन्दनं रथमास्थाय उपारुह्य तत्र स्वां दुहितरं कन्यामारोप्य दुहितुः पत्यन्वेषणार्थं महीं पर्यटन् सर्वतः सञ्चरन्॥ ३६॥ ❀ ❀ सुधन्वन् हे विदुर भगवान् यदहः समादिशत् निर्दिष्टवान् तस्मिन्नहनि शान्तव्रतस्य उपशमशीलस्य मुनेस्तत् पूर्वोक्तमाश्रमपदं प्रति उपायात् आगतः॥ ३७॥ ❀ ❀ मुनिप्रभावातिशयं सूचयंस्तमाश्रमं वर्णयति—यस्मिन्निति सप्तभिः। प्रपन्ने कर्दमे भृशमत्यन्तम् अर्पितया निहितया कृपया सम्परीतस्य सम्यक् व्याप्तस्य भगवतो नेत्राद् अश्रुबिन्दवः आनन्दाश्रूणि यस्मिन् सरसि न्यपतन्॥ ३८॥ ❀ ❀ वत्सरः वै निश्चयेन भगवन्नेत्राद्धर्षबिन्दुपातात् बिन्दुसर इति नाम्ना प्रसिद्धं सरस्वत्या नद्या परितः श्रितं बलायितं—परिप्लुतमिति पाठान्तरम्—पुण्यं उपस्पर्शनादिभिः पुण्यजनकं पापनाशनं च शिवमारोग्यकरममृतं तद्वत्स्वादु च जलं यस्मिंस्तत्। अतएव महर्षिगणैः सेवितम्॥ ३९॥ ❀ ❀ कूजन्तः पुण्या मृगा द्विजाः पक्षिणश्च येषु तैः पुण्यानां द्रुमाणां लतानां च जालैः समूहैर्युक्तमिति शेषः। सर्वेषु ऋतुषु यानि फलानि पुष्पाणि च तैराढ्यं समृद्धम्। वनराजिः स्वत उत्पन्नवृक्षपङ्क्तिः यस्याः श्रिया शोभया अन्वितं युक्तम्॥ ४०॥

### हिन्दी अनुवाद

वीरवर! इधर मनुजी भी महारानी शतरूपाके साथ सुवर्णजटित रथपर सवार होकर तथा उसपर अपनी कन्याको भी बिठाकर पृथ्वीपर विचरते हुए, जो दिन भगवान्ने बताया था, उसी दिन शान्तिपरायण महर्षि कर्दमके उस आश्रमपर पहुँचे॥ ३६॥ ३७॥ ❀ ❀ सरस्वतीके जलसे भरा हुआ यह बिन्दुसरोवर वह स्थान है, जहाँ अपने शरणागत भक्त कर्दमके प्रति उत्पन्न हुई अत्यन्त करुणाके वशीभूत हुए भगवान्के नेत्रोंसे आँसुओंकी बूँदें गिरी थीं। यह तीर्थ बड़ा पवित्र है, इसका जल कल्याणमय और अमृत के समान मधुर है तथा महर्षिगण सदा इसका सेवन करते हैं॥ ३८॥ ३९॥ ❀ ❀ उस समय बिन्दु-सरोवर पवित्र वृक्ष-लताओंसे घिरा हुआ था, जिनमें तरह-तरहकी बोली बोलनेवाले पवित्र मृग और पक्षी रहते थे। वह स्थान सभी ऋतुओंके फल और फूलोंसे सम्पन्न था और सुन्दर वनश्रेणी भी उसकी शोभा बढ़ाती थी॥ ४०॥

**मत्तद्विजगणैर्घुष्टं[5] मत्तभ्रमरविभ्रमम्। मत्तबर्हिनटाटोपमाह्वयन्मत्तकोकिलम्॥ ४१॥**
**कदम्बचम्पकाशोककरञ्जबकुलासनैः[7]। कुन्दमन्दारकुटजैश्चूतपोतैरलङ्कृतम्॥ ४२॥**
**कारण्डवैः प्लवैर्हंसैः कुररैर्जलकुक्कुटैः। सारसैश्चक्रवाकैश्च चकोरैर्वल्गु कूजितम्॥ ४३॥**
**तथैव हरिणैः क्रोडैः श्वाविद्गवयकुञ्जरैः। गोपुच्छैर्हरिभिर्मर्कैर्नकुलैर्नाभिभिर्वृतम्॥ ४४॥**
**प्रविश्य तत्तीर्थवरमादिराजः सहात्मजः[8]। ददर्श मुनिमासीनं तस्मिन् हुतहुताशनम्॥ ४५॥**

### श्रीधरस्वामिविरचिता भावार्थदीपिका

घुष्टं नादितम्। मत्तभ्रमराणां विभ्रमो विनोदो यस्मिन्। मत्ता बर्हिण एव नटास्तेषामाटोपो नृत्यसंभ्रमो यस्मिन्। आह्वयंतो मिथो मत्ताः कोकिला यस्मिन्॥ ४१॥ ❀ ❀ कदंबादिभिर्वृक्षैरलंकृतम्॥ ४२॥ ❀ ❀ कारंड-

---

१. सुखस्यात्यर्थम् क. सुखप्रीत्यर्थं. घ. सुखस्फीत्यर्थं. ङ.। २. वनमुपवर्णयति. ग.। ३. एतन्नास्ति ख. ग.। ४. शोभायमाना ख. ग.
५. प्रा० पा०—गणैर्जुष्टं। ६. प्रा० पा०—बर्हिणन्याद्योपमा०। ७. प्रा० पा०—कदम्बबकुलाशोककरञ्ज वञ्जुलासनैः। ८. प्रा० पा०—सहानुगः।

वादिभिः पक्षिभिर्वल्गु यथा तथा कूजितम् ॥ ४३ ॥ ❀ ❀ हरिणादिभिर्वृतम् । तत्र क्रोडः सूकरः श्वाविच्छल्लकः मर्को मर्कटः तद्विशेषा गोपुच्छाः हरिर्वानरः सिंहो वा नाभिः कस्तूरीमृगः ॥ ४४ ॥ ❀ ❀ हुतो हुताशनो ब्रह्मचारियोगयो येन ॥ ४५ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

"आटोपः संभ्रमे कोपे" इति धरणिः ॥ ४१ ॥ ❀ ❀ ॥ ४२ ॥ ४३ ॥ ❀ ❀ यथैव पूर्वोक्तैः पक्ष्यादिभिस्तथैवेत्यर्थः । क्वचित्तु 'शशकैर्हरिणैः' इति पाठः । तद्विशेषा मर्कटभेदाः वानराणां मर्कपदेनोक्तत्वादाह—सिंहो वेति । नकुलो रक्तमुखः सर्पविरोधी वन्यजीवः ॥ ४४ ॥ ❀ ❀ तद्वर्णितं तीर्थं बिंदुसरो यत्रेति तत्तीर्थवरमाश्रमम् आदिराजः स्वायंभुवः । अनुगच्छतीत्यनुगा भार्या तत्सहितः, कतिपयानुचरयुतो वा । तस्मिन्नाश्रमे ॥ ४५ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

प्रविश्येति सार्द्धत्रिकम् । तस्मिंस्तीर्थवरे तपसा कृशमित्यादि अतिशब्दबलाद्व्याख्यातम् ।

### श्रीमद्वीरराघवव्याख्या

मत्ता ये द्विजास्तैर्घुष्टं नादितं मत्ता मधुपानमत्ता ये भ्रमरास्तेषां विभ्रमो विलासो यस्मिन् मत्ता बर्हिणो मयूरा एव नटास्तेषामाटोपो नृत्यसम्भ्रमो यस्मिन्नाह्वयन्तो मिथः मत्ताः कोकिला यस्मिन् ॥ ४१ ॥ ❀ ❀ कदम्बादिभिः पुष्पवृक्षैरलंकृतम् ॥ ४२ ॥ ❀ ❀ कारण्डवादिभिः पक्षिभिः वल्गु मधुरं सुन्दरं वा यथा तथा कूजितम् ॥ ४३ ॥ ❀ ❀ तथा हरिणादिभिर्मृगैर्वृतं तत्र क्रोडः सूकरः श्वावित् शल्यकः मर्को मर्कटः तद्विशेषो गोपुच्छः हरिः सिंहः नाभिः कस्तूरीमृगः ॥ ४४ ॥ ❀ ❀ सहानुगः सभृत्यः आदिराजो मनुः तत्तीर्थश्रेष्ठं प्रविश्य तस्मिंस्तीर्थे हुतः हुताशनो येन तं कृताग्निकार्यमित्यर्थः । आसीनमुपविष्टं मुनिं ददर्श ॥ ४५ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

मत्तेन द्विजगणेन विशिष्टपक्षिसमूहेन उद्घुष्टमाघोषितं मत्तानां भ्रमराणां विभ्रमः शृङ्गारविशेषो यस्मिंस्तत्तथा बर्हाणि येषां सन्तीति बर्हिणो मयूरास्त एव नटास्तेषामाटोपो नृत्यसंभ्रमो यस्मिंस्तत्तथा मिथ आह्वयन्तो मत्ताः कोकिला यस्मिंस्तत्तथा ॥ ४१ ॥ ❀ ❀ न केवलमश्वत्थादयो यत्राऽन्येऽपि सन्तीत्याह । कदम्बेत्यादिना ॥ ४२ ॥ ❀ ❀ सामान्येनोक्तान् पक्षिणो विशेषनाम्ना निर्दिशति । कारण्डवैरित्यादिना । कारण्डवाख्यमहापक्षिभिः ॥ ४३ ॥ ❀ ❀ श्वविशो वृका गवया वन्या गावः गोपुच्छाश्चमर्यः हरिभिः सिंहैः मर्कैर्वनमार्जारैः नाभिभिर्मृगनाभिभिः ॥ ४४–४५ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

प्रविश्येति सार्द्धत्रिकम् । नातीति नैवेत्यर्थः ॥ ४५–५१ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

घुष्टं नादितं मत्ता बर्हिण एव नटास्तेषामाटोपो नृत्यसम्भ्रमो यस्मिंस्तं मिथ आह्वयन्तो मत्ताः कोकिला यस्मिंस्तत् ॥ ४१–४२ ॥ ❀ ❀ तत्रत्यान् वृक्षानुक्त्वा पक्षिण आह कारण्डवैरित्यादि ॥ ४३ ॥ ❀ ❀ मृगानाह । तथैवेति । क्रोडः शूकरः । श्वावित् शल्यः मर्को मर्कटः गोपुच्छस्तद्विशेषः हरिः सिंहः नाभिः कस्तूरीमृगः ॥ ४४–४५ ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

एवं धर्मजनकत्वं वनस्य निरूप्य रसालत्वं निरूपयति—मत्तेति । द्विजगणाः पक्षिगणाः । सर्व एव तत्रत्यरसेन मत्ताः । अत एव, तल्लोभेन सेवन्त एव, अतस्तैर्जुष्टम् । मत्तानां भ्रमराणां, विभ्रमो विलासः, मधुररणनम्, गतिविशेषो वा यत्र । मत्ता ये बर्हिणस्त एव नटा नर्तकास्तेषामाटोपः संभ्रमो यस्मिन् । निश्चिन्तता अहिंसकत्वात्तेषां निरूपिता । आह्वयन्तो मत्ताः कोकिला यस्मिन् ॥ ४१ ॥ ❀ ❀ एवं रसालतां निरूप्य पुष्पप्रधानान् वृक्षान् गणयति—कदम्बेति । अ ( ? ) सनोऽपि वृक्षः पुष्पप्रधानः चूतपोताः सूक्ष्माम्राः, तैरप्यलङ्कृतम् ॥ ४२ ॥ ❀ ❀ कारण्डवैरिति । कारण्डवादयः पक्षिविशेषाः, तैर्वल्गु यथा तथा उपकूजितम् ॥ ४३ ॥ ❀ ❀ तथैवेति । हरिणादयो मृगविशेषास्तैर्वृतम् । क्रोडः सूकरः । श्वावित् शल्लकः । गोपुच्छादयः मर्कटविशेषाः, हरयः सिंहाः वानरा वा । नाभिभिः कस्तूरीमृगैः ॥ ४४ ॥ ❀ ❀ तादृशं वनं निःशङ्कं प्रविश्य तत्र विद्यमानं मुनिं दृष्टवानित्याह—प्रविश्येति । बिन्दुसरसो निकटे तस्य पर्णशाला; अत एव तीर्थवरं प्रविश्येत्युक्तम् । नदीमुत्तीर्य तदाश्रमे गत इति प्रविश्येति

१. तैरुपकूजितम् ग. ङ. । २ मर्को मर्कटः तद्विशेषा गोपूछाः क. ३. एतादृशं ख. ग. ङ. ।

पदात् ज्ञायते । तीर्थश्रैष्ठ्यपरिज्ञानार्थमादिराज इत्युक्तम् । आदिराजो मनुः । सहा[1]नुगः ससेवकः, राजत्वपरिज्ञानार्थम् । दूरादेव ददर्श । हुतो हुताशनो येन । अनेन कर्मसमाप्तिः सूचिता ॥ ४५ ॥

### श्रीगिरिधरकृता बालप्रबोधिनी

मत्तैर्द्विजगणैः पक्षिसमूहैर्घुष्टं नादितम् । मधुपानेन मत्ता ये भ्रमरास्तेषां विभ्रमो विलासो यस्मिंस्तत् । मत्ताः बर्हिणो मयूरा एव नटास्तेषां आटोपो नृत्यसम्भ्रमो यस्मिंस्तत् । मिथः आह्वयन्तो मत्ताः कोकिलाः यस्मिंस्तत् ॥ ४१ ॥ ❀ ❀ कदम्बादिभिः पुष्पवृक्षैरलङ्कृतम् ॥ ४२ ॥ ❀ ❀ कारण्डवादिभिः पक्षिभिर्वल्गु मधुरं मनोहरं यथा कूजितम् ॥ ४३ ॥ ❀ ❀ तथैव हरिणादिभिर्मृगैर्वृतम् । तत्र क्रोडः सूकरः, श्वावित् शल्लकः, मर्को मर्कटः, तद्विशेषो गोपुच्छः, हरिः सिंहः, नाभिः कस्तूरीमृगः ॥ ४४ ॥ ❀ ❀ सहानुगः अनुगैर्भृत्यादिभिः सहितः आदिराजो मनुः तत्तीर्थवरं प्रविश्य तस्मिंस्तीर्थे हुतः हुताशनो ब्रह्मचारियोग्योऽग्निर्येन तं आसीनमुपविष्टं मुनिं कर्दमं ददर्शेत्यन्वयः ॥ ४५ ॥

### हिन्दी अनुवाद

वहाँ झुंड-के-झुंड मतवाले पक्षी चहक रहे थे, मतवाले भौंरे मँडरा रहे थे, उन्मत्त मयूर अपने पिच्छ फैला-फैलाकर नटकी भाँति नृत्य कर रहे थे और मतवाले कोकिल कुहू-कुहू करके मानो एक दूसरेको बुला रहे थे ॥ ४१ ॥ ❀ ❀ वह आश्रम कदम्ब, चम्पक, अशोक, करञ्ज, बकुल, असन, कुन्द, मन्दार, कुटज और नये-नये आमके वृक्षों से अलंकृत था ॥ ४२ ॥ ❀ ❀ वहाँ जलकाग, बत्तख आदि जलपर तैरनेवाले पक्षी हंस, कुरर, जलमुर्ग, सारस, चकवा और चकोर मधुर स्वरसे कलरव कर रहे थे ॥ ४३ ॥ ❀ ❀ हरिन, सूअर, स्याही, नीलगाय, हाथी, लंगूर, सिंह, वानर, नेवले और कस्तूरीमृत आदि पशुओंसे भी वह आश्रम घिरा हुआ था ॥ ४४ ॥ ❀ ❀ आदिराज महाराज मनुने उस उत्तम तीर्थमें कन्याके सहित पहुँचकर देखा कि मुनिवर कर्दम अग्निहोत्रसे निवृत्त होकर बैठे हुए हैं ॥ ४५ ॥

विद्योतमानं वपुषा तपस्यु[2]ग्रयुजा चिरम् । नातिक्षामं भगवतः स्निग्धापाङ्गावलोकनात् ॥
तद्व्याहृतामृतकलापीयूषश्रवणेन च ॥ ४६ ॥
प्रांशुं पद्मपलाशाक्षं जटिलं चीरवाससम् । उपसंश्रित्य मलिनं यथार्हणमसंस्कृतम् ॥ ४७ ॥
अथोटजमुपायातं नृदेवं प्रणतं पुरः । सपर्यया पर्यगृह्णात्प्रतिनन्द्यानुरूपया ॥ ४८ ॥
गृहीतार्हणमासीनं संयतं प्रीणयन्मुनिः । स्मरन् भगवदादेशमित्याह श्लक्ष्णया गिरा ॥ ४९ ॥
नूनं चङ्क्रमणं देव सतां संरक्षणाय ते । वधाय चासतां यस्त्वं हरेः शक्तिर्हि पालिनी ॥ ५० ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

उग्रा युक् योगो यस्य तेन वपुषा विद्योतमानं तस्य भगवता व्याहृतं भाषणमेवामृतकला अमृतमयस्य चंद्रस्य कला तन्मयं पीयूषं तस्य श्रवणेन च नातिक्षामं तपसा कृशं संतमप्यकृशम् ॥ ४६ ॥ ❀ ❀ प्रांशुमुन्नतं उपसंसृत्य समीपं गत्वा मलिनं ददर्शेति पूर्वेव क्रिया । अर्ह्यते अनेनेत्यर्हणं महारत्नं तदसंस्कृतमनिर्णिक्तं यथा मलिनं दृश्यते तद्वत् ॥ ४७ ॥ ❀ ❀ उटजं पर्णशालां प्राप्तं पुरः पादसमीपे प्रणतमाशीर्भिरभिनंद्य सपर्यया पूजया प्रत्यगृह्णात्सत्कृतवान् ॥ ४८ ॥ ४९ ॥ ❀ ❀ ते चंक्रमणं पर्यटनम् । हि यस्मात् ॥ ५० ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः ।

अनतिक्षामत्वे हेतुद्वयं—स्निग्धापांगेति, तद्व्याहृतेति । अमृतमयी कला यस्य सोऽमृतकलस्तस्याऽऽसम्यक्पीयूषममृतं तस्य श्रवणेनास्वादनेनेत्यर्थः । पीयूषस्य पानमेव युक्तं तच्छ्रवणस्य तृप्त्यजनकत्वात् ॥ ४६ ॥ ❀ ❀ उन्नतमष्टवितस्तिप्रमाणम् । अनिर्णिक्तमशोधितम् ॥ ४७ ॥ ❀ ❀ अथ दर्शनोत्तरं "पर्णशालोटजोस्त्रियाम्" इत्यमरः । सत्कृतवानुत्थाप्य भुजाभ्यामालिलिंग्येत्यर्थः । प्रतिनंद्य अद्य मूर्त्तमेव तपोमयं तेजः साक्षात्कृत्य कृतार्थोस्मीत्यभिनंदंस्तं राजानं 'राजन्नद्य भागवती विश्वपालिनी शक्तिस्त्वमेवावलोक्यस' इति प्रत्यभिष्टुत्येत्यर्थः ॥ ४८ ॥ ❀ ❀ क्षालितचरणमुचितदर्भाद्यासन आसीनं, गृहीतान्यर्हणानि गंधपुष्पदूर्वादलादीनि येन तं, संयतं तूष्णींभूतम् । श्लक्ष्णया शोभनया ॥ ४९ ॥ ❀ ❀ हे देव यस्य ते चंक्रमणं सम्यक्पर्यटनं सतां मादृशानां तपस्विनामसतामसद्विरोधिनाम् । स त्वं हरेः पालिनी शक्तिर्भवसीत्यर्थः ॥ ५० ॥

---

१. सदानुजः क. घ. ङ. । २. प्रा० पा०—रुजा ।

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

अनुरूपया राजयोग्यया ॥ ४८ ॥ ❀ ❀ प्रीणयन् हर्षयन् भगवदादेशमायास्यति दिदृक्षुस्त्वामित्यादि ॥ ४९—५१ ॥

### श्रीमद्वीरराघवव्याख्या

पुनर्मुनिमेव विशिनष्टि सार्द्धद्वयेन । तपसि चिरमुग्रो युग्योगो यस्य तेन वपुषा विद्योतमानं भगवतः स्नेहयुक्तं यदपाङ्गावलोकनं कटाक्षप्रसरणं तस्मात् ॥ ४६ ॥ ❀ ❀ तस्य भगवतो व्याहृतं भाषणमेवामृतकलामृतमयस्य चन्द्रस्य कला तन्मयं पीयूषं तस्य स्रवेण च नातिक्षामं तपसा कृशमपि नातिकृशमित्यर्थः । प्रांशुमुन्नतं जटिलं सञ्जातजटं उपसंसृत्य समीपमागत्य मलिनं ददर्शेति पूर्वेव क्रिया । अर्ह्यतेऽनेनेत्यर्हणं महारत्नं तदसंस्कृतमनिर्णिक्तं यथा मलिनं भवति तद्वत् ॥ ४७ ॥ ❀ ❀ अथानन्तरं उटजं पर्णशालामुपायान्तं प्राप्तं पुरः पादयोः समीपे प्रणतं नमस्कुर्वन्तं नृदेवं मनुं प्रतिनन्द्याशीर्भिरभिनन्द्यानुरूपया सपर्यया पूजया प्रत्यगृह्णात्सत्कृतवान् ॥ ४८ ॥ ❀ ❀ गृहीतं प्रतिगृहीतमर्हणं पूजनं येन तमासीनमुपविष्टं संयतं स्ववाक्यश्रवणे सम्यक् यतमानं मुनिं मुनिः कर्दमः श्लक्ष्णया मधुरया गिरा स्वागतप्रश्नरूपया वाचा नृपं प्रीणयन् तर्पयन्निति वक्ष्यमाणप्रकारेणाह जगाद ॥ ४९ ॥ ❀ ❀ हे देव मनो ! ते तव चंक्रमणं पर्यटनं सतां रक्षणायासतां वधाय च यद्यस्मात्त्वं पालिनी जगत्पालिनी हरेर्भगवतः शक्तिः हरेर्जगत्पालकत्वशक्तियुक्तस्त्वमित्यर्थः ॥ ५० ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली ।

तपसि विषये उग्रतर इत्युग्रयुक् तीव्रवेगवतेत्यर्थः । उग्रयोगतपस्त्वे वपुः कार्श्येन दृष्टिसुखाजनके कन्यादाने वैराग्यं स्यादित्यत्राह । नातिक्षाममिति । तत्र हेतुद्वयमाह । भगवत इति ॥ ४६ ॥ ❀ ❀ पुरुषलक्षणभावेनातिक्षामत्वप्रयोजकमिति तत्राह । प्रांशुमिति । प्रांशुमुन्नतं तपोवेषगूढत्वेनान्यल्लक्षणमत्र न दृश्यत इति भावेनाह । जटिलमसंस्कृतमनलंकृतम् ॥ ४७ ॥ ❀ ❀ उटजं पर्णशालामनुरूपया राजयोग्यया ॥ ४८ ॥ ❀ ❀ "तृणानि भूमिरुदकं वाक् चतुर्थी च सूनृता" इति । अस्यार्थमनुसंदधानो मुनिर्वाचापि तं मानयतीत्याह । गृहीतेति । श्लक्ष्णया मधुरया ॥ ४९ ॥ ❀ ❀ किमर्था सुरसां वाणीमाहेत्यत्राह । नूनमिति । मुकुरे मुखस्येवास्मिन् राज्ञि हरेर्विशेषसन्निधानस्य प्रतीयमानत्वाद्देवेति वक्ति हिशब्दो हेत्वर्थः । सप्तसु प्रथमेति सूत्रात्त्वमिति सप्तम्यर्थे त्वयि हरेः पालिनी सात्त्विकी शक्तिः सन्निहिता हि यस्मात्ते तव चंक्रमणं सम्यक् पर्यटनं सतामस्मादृशानां संरक्षणायासतामस्मद्विरोधिनां च वधाय नूनं निश्चय इत्यन्वयः ॥ ५० ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

तपसि तपोमध्य एव उग्रो युक् योगो यत्र तेन तदपि न अतिक्षाममतिकृशं तत्र कृपापाङ्गेति तद्व्याहृतेति हेतुद्वयं तद्व्याहृतमेवामृतकलस्य चन्द्रस्य आसम्यक् पीयूषं तस्य श्रवणेनेत्यनेन त्वन्मुखस्यामृतकलत्वमुक्तम् ॥ ४६ ॥ ❀ ❀ प्रांशुमष्टवितस्तिप्रमाणतनुमुपसंसृत्य निकटं गत्वा मलिनं ददर्शेति पूर्वेव क्रिया । अर्ह्यतेऽनेनेत्यर्हणं महारत्नं तत् असंस्कृतं यथा मलिनं दृश्यते तद्वत् ॥ ४७ ॥ ❀ ❀ उटजं पर्णशालां प्राप्तं पुरः पादसमीपे प्रणतं पुनरपि पादौ गृह्णन्तमनुरूपया आतिथ्योचितया सपर्यया सहितः प्रत्यगृह्णात् भुजाभ्यामुत्थाप्यालिलिङ्ग किं कृत्वा पतिनन्द्य अद्यमूर्त्तमेव तपोमयं तेजः साक्षात्कृत्य कृतकृत्योऽस्मीत्यभिनन्दन् तं राजानं राजन्नद्य भागवती विश्वपालिनी शक्तिस्त्वमवलोक्यसे इति प्रत्यभिष्टुत्येत्यर्थः । क्षालितचरणमुचितदर्भायासने आसीनं गृहीतानि अर्हणानि पुष्पचन्दनदुर्वादलफलादीनि येन तं संयतं तूष्णीं स्थितम् ॥ ४८ ॥ ४९ ॥ ❀ ❀ हे देव ! यस्य चंक्रमणमित्यादि स एव त्वं हरेः पालिनी शक्तिर्भवसि ॥ ५० ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

उटजं पर्णशालामुपायान्तं प्राप्तम् । पुरः प्रणतमाशीर्भिः अनुरूपया ब्रह्मर्षिणा राजर्षये कर्तुमुचितया प्रत्यगृह्णात् सत्कृतवान् ॥ ४८ ॥ ❀ ❀ श्लक्ष्णया मधुरया ॥ ४९ ॥ ❀ ❀ चंक्रमणं विचरणम् ॥ ५० ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

कन्यादानयोग्यत्वाय वर्णयति सार्द्धाभ्याम्—विद्योवमानमिति । उग्रयुजा तपसि वपुषा विद्योतमानम् । उग्रो युक् योगो यस्य । तपसि तस्य महान् योगः, तपसः परमधर्मत्वात् चिरकालकृतेनापि तपसा वपुर्विद्योतमानमेव । अनेन वर्णोत्तमता निरूपिता । कृशत्वं परिहरति—नातिक्षाममिति । भगवतो यत् स्निग्धापाङ्गावलोकनं तेनाऽत्यन्तं न कृशः । 'दुरन्तसर्गो यदपाङ्गमोक्षः' इत्यादिवाक्यात् भगवत्कटाक्षः सर्वपदार्थजनको भवति । स हि देहपुष्टिमपि जनयेत् । दुरन्तत्वव्यावृत्त्यर्थं स्निग्धता निरूपिता । देहे स्थूलत्वापादका अवयवा भगवत्स्नेहसहितदृष्ट्या जनिता इति नोत्तरत्राऽन्यथाभावः । ते चावयवाः कियन्त एव भवन्तीति नातिक्षामता । साक्षाद्दृष्टिजनितत्वाय सर्वावयवेषु दृष्टिसंबन्धार्थं बहुवचनम् । तथाप्यासन्यो न तृप्यतीति कारणान्तरमप्याह—तद्व्याहृतेति ।

भगवतो यत् व्याहृतं वाक्यं, स एवामृतकलः चन्द्रः, तस्याऽऽसमन्ताद्यत्पीयूषम्, तस्य श्रवणेन च । भगवद्वाक्यं निरन्तरामृतोत्पत्तिरूपमिति वाक्यश्रवणेनापि पुष्टिप्रतिपादनार्थममृतकलत्वेन निरूपितम् । अतो नाऽत्र द्रविडमण्डकः । तत्रापि प्रयोजकं रूपं वक्तुं अमृतकलप्रयोगः । तस्य च श्रवणमात्रमिति नातिक्षामता । अन्यथा पुष्टिरेवोक्ता स्यात् । चकारादलौकिककृपया ॥ ४६ ॥ ❀ ❀ एवं दोषाभावमुक्त्वा गुणान् वर्णयति—प्रांशुमिति । प्रकृष्टा अंशवः पर्वाणि यस्य । आजानुबाहुत्वं यज्ञियत्वं च निरूपितम् । पद्मपलाशवत् अक्षिणी यस्येति । सौन्दर्यं प्रकृतोपयोगि । जटिलं चीरवाससमिति तप ऋषित्वज्ञापकं सत्त्वाय । उपसंसृत्य निकटे गत्वा ददर्शेति पूर्वेणैव संबन्धः । अथवा । उप निकटे संसृत्य संसारं प्राप्य मलिनम् । कामेन हि प्राणिनो मलिना भवन्ति । 'धूमेनाव्रियते वह्निः' इति वाक्यात् । तत्र दृष्टान्तमाह सहजदोषत्वाभावाय, यथार्हणमसंस्कृतमिति । महारत्नमनिर्णिक्तं यथा स्वभावत उज्ज्वलमपि बहिः संस्काराभावे न सुवर्णे योजयितुं शक्यते तथाऽत्र प्रकृते विद्योतमानमिति विशेषणविरोधात् ऋषीणां तथात्वस्य बाधकत्वाभावात् द्वितीयः पक्षः ॥ ४७ ॥ ❀ ❀ एवं दूराद्दृष्टं तं वर्णयित्वा, तस्य लौकिकधर्मं वक्तुमाह—अथोटजमिति । पर्णशालां प्रत्यायान्तं राजानं पुरः पादसमीपे प्रणतम्, क्षत्रियस्य तथैव धर्म इति राजपूजार्थं पूर्वमेव संपादितया सपर्यया पर्यगृह्णात् । प्रतिनन्द्याऽऽशीर्भिः कुशलप्रश्नैर्वा तुल्यताज्ञानार्थं च । अनुरूपया महाराजयोग्ययाऽ[1]र्घ्यादिरूपया इत्यर्थः । परिग्रहो ह्यात्मीयतया गृहे नयनम् ॥ ४८ ॥ ❀ ❀ एवं बहिस्तस्य पूजां विधाय, आधिनिराकरणार्थं सर्वसन्देहनिवृत्त्यर्थं च वाचा पूजां कृतवानित्याह—गृहीतार्हणमिति । ऋषिदत्तां पूजां स्वीकृत्य स्थितं ज्ञात्वा अग्रिममपि स्वीकरिष्यतीति निश्चित्य सम्यक् यत्तं (?) सावधानं विनीतं, प्रीणयन्निति प्रथमं स्तोत्रं कुर्वन् । मुनिरिति भाव्यर्थज्ञाता । तथापि निश्चयरूपेण कथं तदुक्तं करिष्यामीति प्रतिजानीते । स चेदन्यदेव किञ्चिद्वदेदित्याशङ्कयाऽऽह—स्मरन् भगवदादेशमिति । 'आत्मजामसितापाङ्गीम्' इति भगवद्वाक्यात् कन्यां दातुमेवाऽयमागतः । लज्जया च स्वयं न वक्ष्यति । अतः स्वयमेव श्लक्ष्णया मनोहरया वाचा अग्रिमवाक्यरूपमिदमाह । वाक्यान्येवाऽह सप्तभिः । यद्यपि त्वया किमर्थमागतमिति न प्रष्टव्यं प्रसङ्गाद्प्यागमनसम्भवात् । प्रसङ्गश्च वक्तव्यः षड्भिः, तथापि विशेषाकारेण मत्समीपमागत इति लक्षित इति तथात्वे यद्भवानाज्ञापयिष्यति तत् करिष्यामीति समुदायार्थः ॥ ४९ ॥ ❀ ❀ प्रसङ्गमाह—नूनमिति । हे देव ! तव चङ्क्रमणं सतां संरक्षणाय, असतां वधाय च । देवेति संबोधनमुपपादयति—यत् यस्मात्त्वं हरेः पालिनी शक्तिः 'स्थानेऽथ धर्मे' इति वाक्यात् सतामसतां चाऽनुग्रहनिग्रहौ स्वतन्त्रौ धर्मत्वात् । न त्वेकार्थमन्यत् ॥ ५० ॥

### श्रीगिरिधरकृता बालप्रबोधिनी ।

पुनस्तद्दृष्टं मुनिमेव विशिनष्टि—विद्योतमानमिति सार्द्धद्वयेन । तपसि चिरमुग्रस्तीव्रो युक् योगो यस्य तेन वपुषा विद्योतमानम् । भगवतो यत् स्नेहयुक्तमपाङ्गावलोकनं कटाक्षनिरीक्षणं तस्मात् तथा तस्य भगवतो व्याहृतं भाषणमेव अमृतकलश्चन्द्रः तस्य आ सुष्ठु पीयूषममृतं तस्य श्रवणेन च नातिक्षामं नातिकृशम् । तपसा कृशं सन्तमपि भगवदवलोकनादिना पुनः किञ्चित्स्थूलत्वं प्राप्तमित्यर्थः ॥ ४६ ॥ ❀ ❀ प्रांशुमुन्नतम् । पद्मपलाशवदक्षिणी यस्य तम् । जटिलं जटाधारिणम् । चीरं वासो यस्य तम् । असंस्कृतमनिर्णिक्तं अर्ह्यतेऽनेनेत्यर्हणं महारत्नं यथा मलिनं भवति तथाऽतितेजस्वित्वेऽपि मर्दनादिसंस्काराभावात् मलिनमुपसंसृत्य समीपमागत्य ददर्शेति पूर्वेणान्वयः ॥ ४७ ॥ ❀ ❀ अथानन्तरं उटजं पर्णशालाम् उपायातं प्राप्तं पुरः पादयोः समीपे प्रणतं नृदेवं मनुं प्रतिनन्द्य आशीर्भिरभिनन्द्य अनुरूपया तद्योग्यया सपर्यया पूजया पर्यगृह्णात् सत्कृतवान् ॥ ४८ ॥ ❀ ❀ गृहीतं प्रतिगृहीतं अर्हणमासनफलजलादिरूपं येन तं आसीनमुपविष्टं संयतं स्ववाक्यश्रवणाय सावधानतया तूष्णीं स्थितं मनुं श्लक्ष्णया मधुरया गिरा प्रीणयन् मुनिः कर्दम इति वक्ष्यमाणं आहेत्यन्वयः । स्वकार्यविवाहसिद्धिनिश्चयात् तस्यापि महानानन्दो जात इति सूचयन्नाह—स्मरन् भगवदादेशमिति ॥ ४९ ॥ ❀ ❀ देव हे नरदेव ते तव चंक्रमणं पर्यटनं सतां सदाचारनिष्ठानां संरक्षणाय असतां दुराचारनिष्ठानां वधाय च नूनमिति निश्चितमेव यत् यस्मात् त्वं हरेर्भगवतो विश्वपालिनी शक्तिरेव, शक्तियुक्त एवेत्यर्थः । हीत्यवधारणे ॥ ५० ॥

### हिन्दी अनुवाद

बहुत दिनोंतक उग्र तपस्या करनेके कारण वे शरीरसे बड़े तेजस्वी दीख पड़ते थे, तथा भगवान्के स्नेहपूर्ण चितवनके दर्शन और उनके उच्चारण किये हुए कर्णामृतरूप सुमधुर वचनोंको सुननेसे इतने दिनोंतक तपस्या करनेपर भी वे विशेष दुर्बल नहीं जान पड़ते थे ॥ ४६ ॥ ❀ ❀ उनका शरीर लंबा था, नेत्र कमलदलके समान विशाल और मनोहर थे, सिरपर जटाएँ सुशोभित थीं और कमरमें चीर-वस्त्र थे । वे निकटसे देखनेपर बिना सानपरचढ़ी हुई महामूल्य मणिके समान मलिन जान पड़ते थे ॥ ४७ ॥ ❀ ❀ महाराज स्वायम्भुवमनुको अपनी कुटीमें आकर प्रणाम करते देख उन्होंने उन्हें आशीर्वादसे प्रसन्न किया और यथोचित आतिथ्यकी रीतिसे उनका स्वागत-सत्कार किया ॥ ४८ ॥ ❀ ❀ जब मनुजी उनकी पूजा

---

१. ऋद्ध्यादिरूपया इत्यपि पाठः ।

ग्रहण कर स्वस्थचित्तसे आसनपर बैठ गये, तब मुनिवर कर्दमने भगवान्‌की आज्ञाका स्मरण कर उन्हें मधुर वाणीसे प्रसन्न करते हुए इस प्रकार कहा ॥ ४९ ॥ ❀ ❀ 'देव ! आप भगवान् विष्णुकी पालनशक्तिरूप हैं, इसलिये आपका घूमना-फिरना निःसन्देह सज्जनोंकी रक्षा और दुष्टोंके संहारके लिये ही होता है ॥ ५० ॥

योऽर्केन्द्वग्नीन्द्रवायूनां यमधर्मप्रचेतसाम् । रूपाणि स्थान आधत्से तस्मै शुक्लाय ते नमः ॥ ५१ ॥
न यदा रथमास्थाय जैत्रं मणिगणार्पितम् । विस्फूर्जच्चण्डकोदण्डो रथेन त्रासयन्नघान् ॥ ५२ ॥
स्वसैन्यचरणक्षुण्णं वेपयन्मण्डलं भुवः । विकर्षन् बृहतीं[1] सेनां पर्यटस्यंशुमानिव ॥ ५३ ॥
तदैव सेतवः सर्वे वर्णाश्रमनिबन्धनाः । भगवद्रचिता[2] राजन् भिद्येरन् बत दस्युभिः ॥ ५४ ॥
अधर्मश्च समेधेत लोलुपैर्व्यङ्कुशैर्नृभिः । शयाने त्वयि लोकोऽयं दस्युग्रस्तो विनङ्क्ष्यति ॥ ५५ ॥
अथापि पृच्छे त्वां वीर यदर्थं त्वमिहागतः । तद्वयं निर्व्यलीकेन प्रतिपद्यामहे हृदा ॥ ५६ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां तृतीयस्कन्धे एकविंशोऽध्यायः ॥ २१ ॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

मनस्थं विष्णुं प्रणमति य इति । स्थाने तत्तत्कार्यावसरे । शुक्लाय विष्णवे ॥ ५१ ॥ ❀ ❀ नयेदिति पंचानामयमर्थः यद्यपि धर्मरक्षार्थं सर्वतः पर्यटतस्तव प्रसंगादप्यागमनं भवति तथापि विशेषकार्यं चेदस्ति तत्कथ्यतामिति जैत्रं जयप्रदं मणिगणा अर्पिता यस्मिंस्तं रथमारुह्य त्वं यदा भुवो मंडलं न पर्यटसि तदा सेतवो भिद्येरन्निति त्रयाणामन्वयः । विस्फूर्जन्नादं कुर्वच्चंडं कोदंडं धनुर्यस्य ॥ ५२ ॥ ❀ ❀ स्वसैन्यस्य चरणैः क्षुण्णं संघट्टितम् ॥ ५३ ॥ ❀ ❀ वर्णाश्रमाणां निबंधनं यैः । बत अहो ॥ ५४ ॥ ❀ ❀ निरंकुशैर्नृभिर्निमित्तभूतैः शयाने निश्चिन्ते ॥ ५५ ॥ ❀ ❀ निर्व्यलीकेन सहर्षेण प्रतिपद्यामहे स्वीकुर्महे ॥ ५६ ॥

इति श्रीमद्भागवते तृतीयस्कंधे टीकायामेकविंशतितमोऽध्यायः ॥ २१ ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

तत्र प्रतापेन त्वमर्कः यशसाऽऽह्लादकत्वेन च चंद्रः, अधृष्यत्वेनाग्निः, ऐश्वर्यवत्त्वेन कामप्रवर्षकत्वेन चेंद्रः, सर्वप्रवेशवत्त्वेन वायुः, दुष्टनिग्रहत्वेन यमः, शिष्टपालकत्वेन धर्मः, गांभीर्येण गुप्तवित्तत्वेन च प्रचेताः । अत एव तस्मै मदभीष्टदेवाय त्वद्रूपेण पुनरपि ममोटजगताय शुक्लाय शुद्धसत्त्वाय तुभ्यं नमः ॥ ५१ ॥ ❀ ❀ पञ्चानां श्लोकानाम् । हे राजन् किमर्थमागतोसीति कथं पृच्छामि यतस्तत्कारणं जानामीत्याभिप्रायेणाह—यद्यपीति ॥ ५२ ॥ ❀ ❀ संघट्टितं चूर्णितम् ॥ ५३ ॥ निबंधनं स्थितिः दस्युभिर्हिंसाशीलैश्चौरैर्वा "दस्युश्चौरे रिपौ दुष्टे हिंसके क्षीणारिक्थिके" इति निरुक्तिः ॥ ५४ ॥ ❀ ❀ लोलुपैर्विषयानुरागिभिः निश्चिंते नीतिविचारशून्ये सति ॥ ५५ ॥ ❀ ❀ अथापि यद्यपि सामान्यतो जानामि तदपि विशेषतः पृच्छे । इह मत्पर्णशालायां, यदर्थमिति । न हि दुष्टनिग्रहार्थं पर्यटनं मत्पर्णशालायां सफलीभवतीति भावः । "व्यलीकं छद्मदुःखयोः" इति यादवः ॥ ५६ ॥

इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे तृतीयस्कन्धे एकविंशोऽध्यायः ॥ २१ ॥

## श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या ।

न यदेति सार्द्धत्रिकम् । रथेन रथनादेन ॥ ५२ ॥ ५३ ॥ ५४ ॥ ❀ ❀ शयान इत्यर्द्धकम् ॥ ५५ ॥ ❀ ❀ यद्यपि प्रसङ्गादागमनमथापि यदर्थं यद्विशेषकार्य्यार्थम् ॥ ५६ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कंधे श्रीराधारमणदासगोस्वामिविरचितायां दीपिकाटिप्पण्यामेकविंशोऽध्यायः ॥ २१ ॥

## श्रीमद्वीरराघवव्याख्या

प्रसङ्गात्स्मृतं भगवन्तं प्रणमति । य इति । यो विष्णुरर्कादीनां रूपाणि शिलापुत्रकस्येदं शरीरमितिवदभेदसंसर्गे षष्ठी अर्कादिरूपाणि शरीराणि स्थाने तत्तदुचितजगत्परिपालनावसरे आधत्से बिभर्षि तस्मै विष्णवे शुक्लाय निर्मलाय ते तुभ्यं भगवते नमः ॥ ५१ ॥ ❀ ❀ एवं विष्णुं प्रणम्य मुनिर्मनोरागमनप्रयोजनं प्रष्टुकामः प्रथमं तत्प्रश्ने जगद्रक्षणाय पर्यटन्ते मां किमर्थमागतोऽसीति किं पृच्छसीति मा वादीरित्यभिप्रायेण प्रधानप्रयोजनं जगद्रक्षणमेवानुषङ्गिकमिहागमनप्रयोजनं यत्किंचिदस्ति चेत्

१. प्रा० पा०—महतीं । २. प्रा० पा०—भगवद्ग्रथिता ।

कथ्यतामित्याह । यावदध्यायसमाप्ति । जैत्रं जयशीलं मणिगणैरर्पितं खचितं रथमास्थायाधिरुह्य चण्डं परेषां भयजनकं कोदण्डं धनुर्यस्य स विस्फूर्जन् ध्वनयन् कोदण्डमिति शेषः । द्वितीयान्तपाठे तु कर्मधारयः चण्डकोदण्डं विस्फूर्जन् रथेनाघान् धर्मविरोधिनः त्रासयन् उद्वेजयन् ॥ ५२ ॥ ❀ ❀ स्वसैन्यानां चरणैः क्षुण्णं संघट्टितं भुवो मण्डलं वेपयन् कम्पयन्महतीं सेनां विकर्षन्नाकर्षयन् सूर्य इव यदा यर्हि न पर्यटसि ॥ ५३ ॥ ❀ ❀ तत्तदैव वर्णाश्रमप्रयुक्ता भगवता रचिताः कल्पिताः सर्वे सेतवः धर्ममर्यादा हे राजन्! दस्युभिः धर्मविरोधिभिर्भिद्येरन्नश्येरन् बतेति खेदे ॥ ५४ ॥ ❀ ❀ व्यङ्कुशैः निष्प्रतिपक्षैः लोलुपैः केवलार्थकामपरायणैः नृभिरधर्मश्च समेधेत वर्द्धेत त्वयि शयाने सत्ययं लोकः दस्युग्रस्तः विनङ्क्ष्यति नाशं यास्यति ॥ ५५ ॥ ❀ ❀ अतो लोकरक्षणमेव तवाटनस्य प्रधानं प्रयोजनं तथापि हे वीर! त्वं यदर्थमिहास्मदाश्रमे आगतः तत्प्रयोजनं त्वां प्रति पृच्छे वयं तत्त्वदागमनप्रयोजनं निर्व्यलीकेन निष्कपटेन हृदा चित्तेन प्रतिपद्यामहेऽङ्गीकुर्महे ॥ ५६ ॥

इति श्रीभागवतमहापुराणे तृतीयस्कंधे श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रिकायामेकविंशोऽध्यायः ॥ २१ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

एतदेव विवृणोति । य इति । अर्कस्य रूपं प्रकाशकत्वं चन्द्रस्याह्लादकत्वमग्नेरधृष्टत्वमिन्द्रस्यैश्वर्यकरत्वं वायोः श्रेष्ठत्वं यमस्य दुष्टजनदमने निर्घृणत्वं धर्मस्य पुण्यापुण्यविवेकवैशद्यं प्रचेतसो वरुणस्य गाम्भीर्यं यस्त्वमेतानि रूपाणि स्थाने तत्तद्विनियोगकाले प्राप्ते आधत्से धारयसि तस्मै शुक्लस्य हरेरात्मने प्रतिमारूपाय विशेषावेशसन्निधानस्थानाय नम इत्यन्वयः । प्रतीयमानं तादात्म्यं विहाय तत्प्रतिमात्वकल्पना नाप्रामाणिकी "स्वायंभुवो मनुश्चैव पृथुरैलोऽर्जुनावपि । ब्रह्मशेषविपा रुद्र इन्द्रऋष्यादयस्तथा । विष्ण्वावेशयुताः सर्वे नतु विष्णुस्वरूपका" इति वचनात् युक्तमुक्तम् ॥ ५१ ॥ ❀ ❀ जगद्रक्षणार्थमुत्पन्नत्वात्तव हरेर्विशेषावेशो युक्त इत्यभिप्रेत्य व्यतिरेकमुखेन राजानं प्रशंसति । न यदेति । जैत्रं जयशीलमघान् पापपुरुषान् त्रासयन् कम्पयन् ॥ ५२ ॥ ❀ ❀ अंशुमानादित्यः ॥ ५३ ॥ ❀ ❀ दस्युभिर्हिंसाशीलैः पुरुषैः सेतुभेदः स्यात् ॥ ५४ ॥ ❀ ❀ ततः किमत्राह । अधर्मश्चेति । व्यङ्कुशैः निरङ्कुशैः अतोऽपि किमत्राह । शयान इति । शयाने न्या[१]यान्यायविचारशून्ये ॥ ५५ ॥ ❀ ❀ ऋषित्वाभिमानभङ्गभयात् किञ्चिज्जानन्निव कर्दमः कार्यविशेषं पृच्छति । अथापीति । अनेन राज्ञोऽर्थनाशभङ्गभयं निवृत्तमिति ध्वनयति ॥ ५६ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्यां एकविंशोऽध्यायः ॥ २१ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

न यदेति सार्द्धत्रिकम् । रथेन रथसान्निध्यमात्रेण ॥ ५२—५४ ॥ ❀ ❀ शयान इत्यर्द्धकम् । धर्माधर्मयोः पालनसंहारौ त्वद्दृष्ट्यैव सम्यक् स्यातां दस्युनिवारणं त्वदनुसन्धानमात्रेण स्यादिति ॥ ५५ ॥ ५६ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भस्य एकविंशोऽध्यायः ॥ २१ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

अर्कादीनां रूपाणि स्थाने युक्तमेव त्वमासम्यक्तया धत्से तत्र प्रतापेन त्वमर्कः यशसा चन्द्रः अधृष्यत्वेनाग्निः ऐश्वर्येणेन्द्रः । सर्वत्र प्रवेशवत्त्वेन वायुः दुष्टनिग्रहवत्त्वेन यमः । शिष्टपालनेन धर्मः गाम्भीर्येण गुप्तवित्तत्वेन च प्रचेताः अत एव तस्मै मदभीष्टदेवाय त्वद्रूपेण पुनरपि ममोटजमागताय शुक्लाय तुभ्यं नमः ॥ ५१ ॥ ❀ ❀ हे राजन्! किमर्थमायातोऽसीति त्वां कथं पृच्छामो यतस्तत्कारणं जानाम्येवेति व्यतिरेकेणाह । न यदेति । यदा भुवो मण्डलं न पर्यटसि तदा सेतवो भिद्येरन्निति त्रयाणामन्वयः । मणिगणानामर्पितमर्पणं यत्र तं जैत्रं जयशीलं जैत्रत्वमेवाह । रथेन रथसान्निध्यमात्रेण अघान् दुष्टान् ॥ ५२—५५ ॥ ❀ ❀ अथापि यद्यपि सामान्यतो जानामि तदपि पृच्छे पृच्छामि इह मत्पर्णशालायां यदर्थमिति नहि दुष्टनिग्रहार्थं पर्यटनं मत्पर्णशालायां सफलीभवतीति भावः । निर्व्यलीकेन निष्कपटेन सहर्षेण वा हृदा प्रतिपद्यामहे स्वीकुर्महे ॥ ५६ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् । एकविंशः तृतीयस्य सङ्गतः सङ्गतः सताम् ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

स्थाने तत्तद्रूपधारणावसरे अर्कादिरूपाणि आधत्से तस्मै ते शुक्लाय विष्णवे नमः "राजर्षीणां मनुरहम्" इति श्रीमुखवचनात् ॥ ५१ ॥ ❀ ❀ यद्यपि धर्मत्राणार्थं तव चंक्रमणं सामान्यतः सर्वत्र युक्तमेव तथाप्यत्रागमने किंचित्प्रयोजनं चेत्तद्वण्यतामित्याह । नेति पञ्चभिः । विस्फूर्ज्जत् स्वासाधारणं टङ्कारं कुर्वत् चण्डं शत्रुभयवर्द्धनं कोदण्डं धनुर्यस्य सः जैत्रं जयावहम् अघान् पापिनः ॥ ५२ ॥ ❀ ❀ क्षुण्णं संघट्टितम् । वेपयन् कम्पयन् यदि अंशुमानिव न पर्यटसि इति पूर्वश्लोकस्थनकारेण संबन्धः

---

१ न्यायान्यायविचारित्वं राज्ञः शयनमुच्यत इति प्रमाणम् ।

॥ ५३ ॥ ❀ ❀ वर्णाश्रमाणां निबन्धनाः स्थापकाः दस्युभिश्चौरैर्भिद्येरन् ॥ ५४ ॥ ❀ ❀ व्यङ्कुशैर्नियन्तृरहितैर्निमित्तभूतैः समेधेत सम्यग् वर्द्धेत ॥ ५५ ॥ ❀ ❀ निर्व्यलीकेन हृदा शुद्धेन चित्तेन प्रतिपद्यामहे अङ्गीकुर्महे ॥ ५६ ॥

इती श्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे एकविंशाध्यायार्थप्रकाशः ॥ २१ ॥

## श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

ननु लोकपालकैरेव पालने सिद्धे किं मन्वादिभिरित्याशङ्क्य, परिपालिकां शक्तिं निरूपयन् तथाकर्तारं भगवन्तं नमस्यति—योऽर्केति। यः अर्कादीनां लोकपालानां रूपाणि, स्थाने तत्तत्कार्यावसरे, मनुशरीरे वा आधत्ते, तस्मै ते शुक्लाय नम इति। अयं शुक्लनारायण एव मनौ तिष्ठतीति; तस्मै नमः। सर्वाणि रूपाणि अन्यस्तत्र स्थापयितुं न शक्नोति। न वा भगवत्स्थितिव्यतिरेकेण तत्र सर्वदेवतासान्निध्यं भवति; अतो मनुमधिष्ठाय पालनार्थं भगवानेव स्थितः ॥ ५१ ॥ ❀ ❀ विपरीते बाधकमाह चतुर्भिः। साधनाभ्यां फलाभ्यां च स्वतश्च सेनया च परिपालनं द्वयेन, सेतुधर्मरक्षा अधर्मनिवृत्तिश्च फले। प्रथमतः स्वतो रक्षाभावं बाधकत्वेनाऽऽह—न यदेति। यदा त्वं जैत्रं रथमास्थाय न पर्यटसि तदा सेतवो नश्येरन्निति संबन्धः। रथस्य मुख्यासनत्वं जैत्रमिति जयशीलम्। अनेन न काऽपि पराभवशङ्का। मणिगणार्पितमिति महाराजयोग्यत्वात् दृष्ट्वैव भयमसतां ज्ञापितम्। विशेषेण स्फूर्जंश्चण्डः कोदण्डो यस्य। अनेन धनुष्टङ्कारेण दूरादेव भयं जनयतीति ज्ञापितम्। पापानां पापिष्ठानां न मारणं शस्त्रेण किन्तु, रथेनैव त्रासं जनयन् ॥ ५२ ॥ ❀ ❀ दुष्टानां बहुत्वात् तदर्थं साधनान्तरमप्याह—स्वसैन्येति। स्वसैन्यानां चतुर्विधानां चरणैः क्षुण्णं भुवो मण्डलं वेपयन् महतीं सेनां दृष्ट्वैव[1] महान्तो दोषा निवर्तन्तं इति भूकम्पननिमित्तान्तरत्वज्ञानाभावाय[2] बृहतीं सेनां विकर्षन् तत्र तत्र नयन्। पूर्वोक्तधर्मं धर्माधर्मनिवृत्तिसाधकत्वेन निरूपयन् दृष्टान्तमाह—अंशुमानिवेति स हि सहस्रकिरणः तमो दूरीकरोति। अग्निहोत्रादिधर्मं च जनयति। न हि सूर्ये अनुदिते कश्चिद्धर्मादिः सेत्स्यति ॥ ५३ ॥ ❀ ❀ तदैवेति। तदैव सर्वे सेतवो मर्यादा वर्णकृता आश्रमकृताश्च भगवद्रचिताः। औदासीन्याभावाय राजन्निति, तस्य स्वधर्म इति ज्ञापितम्। दस्युभिरेव भिद्येरन्। चौरभये वर्णाश्रमवतां भीतत्वान्न मर्यादा सिद्ध्यतीति ॥ ५४ ॥ ❀ ❀ अधर्म इति। न केवलं धर्महानिरेव किन्तु, अधर्मश्च समेधेत वृद्धिं गच्छेत्। चकारात् पाखण्डधर्मा अपि। तत्र हेतुः—लोलुपैरिति। धर्मे निरन्तरं क्रियमाणे इन्द्रियाणि व्यापृतानि भवन्ति, तदा लौकिके भोगे नाऽऽसक्तानि भवेयुः। अन्यथा त्वासक्तानि योग्यैः कामैरपूर्णानि अयोग्ये लोलुपानि भवन्ति। तथापि राजभयं चेत्, न कार्यनिष्पत्तिः स्यात्। अन्यथा त्वतिप्रसङ्गः स्यादेवेत्याह—व्यङ्कुशैरिति। विगतोऽङ्कुशो नियामको येषाम्। नृभिरिति। त एव हि भगवदाज्ञोल्लङ्घका वेदेनोक्ता अशनप्रसङ्गे। राज्ञो द्रव्यवस्था; विषयभोगः, परिपालनं च। आद्यैव[3] शयनम्। यदि चोभयोः समता, यदि वा कालविभेदेन व्यवस्था, यदि वा भोगप्राधान्यम्, सर्वप्रकारेणापि त्वयि शयाने सति अयं लोको दस्युभिरेव ग्रस्तः, आच्छिन्नदारद्रविणः स्वरूपादपि विनङ्क्ष्यति। अतस्त्वया पर्यटनमवश्यं कर्तव्यम्। अतः प्रसङ्गादागमनम्। अत्रापि चोरादिनिराकरणार्थं च ॥ ५५ ॥ ❀ ❀ अथाऽपीति। हे वीर! स्वधर्मनिष्ठ! यदर्थं त्वमिहागतः; तत्प्रयोजनं पृच्छामि। मां प्रार्थयितुमिति यदि; तदा तद्वाक्यं निर्व्यलीकेन हृदा प्रतिपद्यामहे स्वीकुर्महे। ननु त्वत्प्रार्थनां न करिष्यामीति सन्देहः। एवं वचनं हि भगवत्प्रसादादेव महाराजादप्युत्कर्षवचनात् ॥ ५६ ॥

इति श्रीभागवतसुबोधिन्यां श्रीमल्लक्ष्मणभट्टात्मजश्रीमद्वल्लभदीक्षितविरचितायां तृतीयस्कन्धे एकविंशाध्यायविवरणम्।

## श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

अधर्म इत्यत्र। अशनप्रसङ्ग इति। तैत्तिरीयब्राह्मणप्रथमाष्टके। 'तस्मात्त्रिरह्नः पशवः प्रेरितः(?)'इत्यादिना सर्वेषां अशनकालकथने तस्माद्विरह्नो मनुष्येभ्य उपह्रियत इत्युक्ते तत्प्रसङ्गे ॥ ५५ ॥

इति श्रीतृतीयस्कन्धसुबोधिनीप्रकाशे एकविंशाध्यायविवरणं सम्पूर्णम्।

## श्रीगिरिधरकृता बालप्रबोधिनी।

मनुस्थं भगवन्तं प्रणमति—य इति। स्थाने जगत्पालने निमित्ते सति यस्त्वं अर्कादीनां रूपाणि आधत्से बिभर्षि तस्मै ते तुभ्यं शुक्लाय निर्मलाय भगवते नमः ॥ ५१ ॥ ❀ ❀ एवं भगवन्तं प्रणम्य यद्यपि जगद्रक्षार्थं सर्वत्र पर्यटतस्तव प्रसङ्गादपि आगमनं सम्भवति तथाप्यत्रागमने किञ्चिद्विशेषप्रयोजनमस्ति चेत्तर्हि वक्तव्यमिति मनुं प्रत्याह—नेति पञ्चभिः। यदा त्वं जैत्रं जयप्रदं मणिगणैरर्पितं खचितं रथं आस्थायाधिरुह्य विस्फूर्जन्नादं कुर्वत् चण्डं परेषां भयजनकं कोदण्डं धनुर्यस्य सः। अघान् दुराचारान् त्रासयन् ॥ ५२ ॥ ❀ ❀ स्वसैन्यानां चरणैः क्षुण्णं सङ्घट्टितं भुवो मण्डलं वेपयन् कम्पयन् बृहतीं महतीं सेनां

---

१. दृष्ट्वापि ग. ङ. दृष्ट्वा। २. भूकम्पनं ग. भूकम्पने ख. घ. ङ। ३. अद्यैव. क. ख. घ. ङ.।

विकर्षयन् आकर्षयन् अंशुमान् सूर्य इव रथेन[1] पर्यटसि ॥ ५३ ॥ ❀ ❀ तदैव हे राजन् वर्णाश्रमप्रयुक्ता भगवता प्रवर्त्तिताः सर्वे सेतवः धर्ममर्यादाः दस्युभिर्दुराचारैर्भिद्येरन् इति त्रयाणामन्वयः। तर्ह्यस्माकं महान् खेदः स्यादित्याह—बतेति ॥ ५४ ॥ ❀ ❀ न केवलं मर्यादाभङ्गमात्रमपि त्वनर्थान्तरमपीत्याह—अधर्म इति। त्वयि दण्डधरे शयाने निद्रिते सति व्यङ्कुशैः निःप्रतिपक्षैः लोलुपैः केवलं अर्थकामपरायणैर्नृभिः अधर्मश्च समेधेत वर्धेत दस्युभिरुत्पथैर्ग्रस्तोऽयं सर्वोऽपि लोको विनङ्क्ष्यति। अतो यद्यपि लोकधर्ममर्यादासंरक्षणार्थं पर्यटनं सम्भवति ॥ ५५ ॥ ❀ ❀ अथापि हे वीर यदर्थं त्वं इहास्मदाश्रमे आगतस्तत्प्रयोजनं पृच्छे। तत् त्वदागमनप्रयोजनं वयं निर्व्यलीकेन निष्कपटेन हृदा चित्तेन प्रतिपद्यामहे अङ्गीकुर्महे ॥ ५६ ॥

इति श्रीवल्लभाचार्यवंश्यगोपालसूनुना ॥ श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा ॥ १ ॥
श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये ॥ श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी ॥ २ ॥
रचिता च तृतीयेऽत्र मोक्षसर्गनिरूपणे ॥ कर्दमस्यैकविंशोऽगात्तपआदिनिरूपकः ॥ ३ ॥

### हिन्दी अनुवाद

आप साक्षात् विशुद्ध विष्णुस्वरूप हैं तथा भिन्न-भिन्न कार्योंके लिये सूर्य, चन्द्र, अग्नि, इन्द्र, वायु, यम, धर्म और वरुण आदि रूप धारण करते हैं; आपको नमस्कार हैं ॥ ५१ ॥ ❀ ❀ आप मणियोंसे जड़े हुए जयदायक रथपर सवार हो, अपने प्रचण्ड धनुषकी टंकार करते हुए उस रथकी घरघराहटसे ही पापियोंको भयभीत कर देते हैं और अपनी सेनाके चरणोंसे रौंदे हुए भूमण्डलको कँपाते अपनी उस विशाल सेनाको साथ लेकर पृथ्वीपर सूर्यके समान विचरते हैं। यदि आप ऐसा न करें तो चोर-डाकू भगवान्की बनायी हुई वर्णाश्रमधर्मकी मर्यादाको तत्काल नष्ट कर दें तथा विषयलोलुप निरङ्कुश मानवोंद्वारा सर्वत्र अधर्म फैल जाय। यदि आप संसारकी ओरसे निश्चिन्त हो जायँ तो यह लोक दुराचारियोंके पंजेमें पड़कर नष्ट हो जाय ॥ ५२-५५ ॥ ❀ ❀ तो भी वीरवर ! मैं आपसे पूछता हूँ कि इस समय यहाँ आपका आगमन किस प्रयोजन-से हुआ है; मेरे लिये जो आज्ञा होगी, उसे मैं निष्कपट भावसे सहर्ष स्वीकार करूँगा ॥ ५६ ॥

२१ वाँ अध्याय समाप्त

---

१. क-ख-पुस्तके रथेन पर्यटसे इति।

# अथ द्वाविंशोऽध्यायः

मैत्रेय उवाच

एवमाविष्कृताशेषगुणकर्मोदयो मुनिम्। सव्रीड इव तं सम्राडुपारतमुवाच ह ॥ १ ॥

मनुरुवाच

ब्रह्मासृजत्स्वमुखतो युष्मानात्मपरीप्सया। छन्दोमयस्तपोविद्यायोगयुक्तानलम्पटान् ॥ २ ॥
तत्त्राणायासृजच्चास्मान्दोःसहस्रात्सहस्रपात्। हृदयं तस्य हि ब्रह्म[1] क्षत्रमङ्गं प्रचक्षते ॥ ३ ॥
अतो ह्यन्योन्यमात्मानं ब्रह्म क्षत्रं च रक्षतः। रक्षति स्माव्ययो देवः स यः सदसदात्मकः ॥ ४ ॥
तव सन्दर्शनादेवच्छिन्ना मे सर्वसंशयाः। यत्स्वयं भगवान् प्रीत्या धर्ममाह रिरक्षिषोः ॥ ५ ॥

श्रीधरस्वामिविरचिता भावार्थदीपिका

द्वाविंशे कर्दमायादाद्यथादिष्टं हि विष्णुना ॥ मनुर्दुहितरं देवहूतिमित्युपवर्ण्यते ॥ १ ॥

एवमाविष्कृतोऽभिष्टुतोऽशेषाणां गुणानां कर्मणां चोदय उत्कर्षो यस्य स सम्राण्मनुः सव्रीड इव स्वकीर्तिश्रवणात् प्रत्याख्यानशंकया वा तं मुनिमुवाच उपारतं निवृत्तिनिरतम् ॥ १ ॥ ❀ ❀ मदीया कन्या त्वया परिणेयेति विज्ञापयिष्य-न्युष्मदस्मत्संबंधस्तावदीश्वरेण पूर्वमेव घटित इत्याह। ब्रह्मेति सार्द्धाभ्याम्। आत्मनः परीप्सया पर्याप्तुमिच्छया छंदोमयस्यात्मनः पर्याप्तिः पालनं वेदप्रवर्तनं तस्येच्छया युस्मान्ब्राह्मणान् ॥ २ ॥ ❀ ❀ तत्राणाय ब्राह्मणपालनाय ब्रह्म ब्राह्मणजातिः क्षत्रं क्षत्रियजातिः ॥ ३ ॥ ❀ ❀ एवं स देव एव रक्षति स्म। कोऽसौ। सदसदात्मकः सर्वात्मकः तथाऽप्यव्ययो निर्विकारः ॥ ४ ॥ ❀ ❀ विज्ञापयितुमेव तद्दर्शनादिकमभिनंदति। तवेति त्रिभिः ॥ ५ ॥

श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

यथा विष्णुनादिष्टम् "आत्मजामसितापांगीम्" इत्यादिना कथितं तथादादित्यर्थः ॥ १ ॥

निवृत्तिपरे व्यवहारवार्ता न वक्तव्या तदप्रियत्वात्तत्कथनप्रवृत्तः सम्राड् लज्जित इव जात इति वार्थः। यद्वा। उं दुर्वासोरूपं रुद्रं पाति निजास्त्रत इत्युपो विष्णुस्तत्रासमंताद्रतं तत्परमित्यर्थः ॥ १ ॥ ❀ ❀ सहसा प्रदानप्रसंगस्य तत्प्रत्याख्यानशंकया ब्राह्मणक्षत्रिययोः कमपि संबंधं सन्यायमाह। एतदभिप्रायेणैव स्वामिचरणैरप्युक्तं मदीयेत्यादि-ब्रह्मेति ॥ २ ॥ ❀ ❀ ब्राह्मणान्के पालयेयुस्तत्राह-तदिति। परमेश्वरेणैक्यं ब्रह्मणो मत्वाह-दोःसहस्रादीति। ननु क्षत्रियानपि कः पालयेत्तत्राह-ब्रह्म ब्राह्मणः हृदयं ज्ञानशक्तिप्रधानत्वात्, अंगं भुजः क्रियाशक्तिप्रधानत्वात्। अत्रायं भावः—लोके हि हृदये प्रहारे आपतिते भुजाभ्यां हृदयस्य गोपनं दृश्यते। भुजे च प्रहारे प्राप्ते देहं कुंचितीकृत्य हृदयमध्य एव भुजो गोप्यते इति हृदयस्य पालको भुजो भुजस्य पालकं हृदयम्। अत एव महाभारतेपि शांतिपर्वणि "ब्रह्म वर्द्धयति क्षत्रं क्षत्रतो ब्रह्म वर्द्धते। यत्रादृष्टं भयं ब्रह्म प्रजानां शमयत्युत ॥ दृष्टं च राजा बाहुभ्यां यद्राज्यं सुखमेधते ॥" इति। किञ्च। "मिथो भेदाद् ब्राह्मणक्षत्रियाणां प्रजा दुःखं दुःसहञ्चाविशंति। एवं ज्ञात्वा कार्य एवेह नित्यं पुरोहितो नैकविद्यो नृपेण ॥" इति ॥ ३ ॥ ❀ ❀ यतो ब्रह्मक्षत्रे भगवदवयवभूते अतो हेतोः। एवं पूर्वोक्तरीत्या ब्रह्म ब्राह्मणस्तपोबलेन क्षत्रियं पालयति क्षत्रं च बाहुबलेन। ब्राह्मणमिति। वस्तुतस्तु—स देवः परमेश्वर एवोभयं रक्षति तथापि सर्वात्मकत्वेपि निर्विकार एकरसः ॥ ४ ॥ ❀ ❀ अतोऽहं स्वपालकं त्वामागतस्त्वया चाहं दर्शनेनैव पालित इत्याह-तवेति। संशयोत्र तत्कारणं चित्तमलं कन्याप्रत्याख्यानादिरूपो वा बहुत्वमेषामनन्तत्वात्। सर्वपदेनान्येप्यात्मानात्मविषयास्ते गृह्यंत इति। यद्यतः स्वयं मत्प्रेरणां विनैव भगवान् भवानेव रिरक्षिषोर्मे क्षत्रियस्य धर्ममाह—'न यदा रथमास्थाय' इत्यादिश्लोक-चतुष्केनेत्यर्थः। यद्वा। यद्यस्मै स्वयं भगवान् शुक्लरूपो विष्णुः रिरक्षिषोर्हेतोर्धर्ममाह—'कृत्वा दयाञ्च जीवेषु' इत्यादिना धर्मरक्षार्थं गृहस्थादिधर्मं संक्षेपेणोक्तवानित्यर्थः। यद्वाऽऽह वक्ष्यति 'गच्छ कामं मयादिष्टो मयि संन्यस्तकर्मणा' इत्यादिना। आहेति वर्तमान-समीपे भविष्यति लडस्तीति। वेदमार्गप्रवर्तकत्वेन ब्राह्मणा एव धर्मरक्षका इत्यभिप्रेत्याऽऽह। रिरक्षिषोस्तवेति वा योज्यम् ॥ ५ ॥

---

१. प्रा० पा०—ब्रह्मन्नुत्तमाङ्गं प्र०।

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

प्रत्याख्यानं निषेधः ॥ १ ॥ ❀ ❀ ब्रह्मा विराडभिमानीश्वरः स्वमुखत इति ब्राह्मणजात्यभिप्रायेण अन्यथा 'छायायाः कर्दमो जज्ञे' इत्यनेन विरोधः स्यात्। अत एव दोःसहस्रात् सहस्रपादित्युक्तम् ॥ २ ॥ ❀ ❀ हृदयं ज्ञानशक्तिप्राधान्यात् अङ्गं क्रियाशक्तिप्राधान्यात् ॥ ३ ॥ ❀ ❀ अतः हृदयाङ्गत्वात् स एव ईश्वर एवान्तर्यामितया तत्र तत्र प्रविश्येति शेषः। तथापि उपादानतया सर्वात्मकत्वेऽपि "श्रुतेस्तु शब्दमूलत्वात्" इति न्यायेन निर्विकारः ॥ ४ ॥ ❀ ❀ स्वयं प्रश्नं विनैव भगवान् सर्वज्ञो भवान् मे धर्ममाहेति यत्तत्त्वधिकं कृपासूचकमित्यर्थः ॥ ५ ॥

### श्रीमद्वीरराघवव्याख्या

एवं कर्दमेनोक्तो मनुस्तमुवाचेत्याह मैत्रेयः। एवमिति आविष्कृतानां गुणानां च कर्मणां च उभय उत्कर्षो यस्य स अत एव सव्रीड इव स्वकीर्तिश्रवणाल्लज्जित इव सम्राट् मनुरुपारतं निवृत्तिधर्मनिष्ठं तं मुनिमुवाच हेति हर्षे ॥ १ ॥ ❀ ❀ उक्तिमेवाह त्रयोदशभिः। मदीयेयं कन्या त्वया परिणेयेति विज्ञापयिष्यन् तावद्युष्मदस्मत्संबन्ध ईश्वरेण ब्रह्मणा पूर्वमेव संघटित इत्याह मनुः। ब्रह्मेति सार्द्धद्वयेन। छन्दोमयो वेदप्रचुरः ब्रह्मा स्वमुखात् तपः कर्मयोगः विद्या भगवदुपासना योगो ज्ञानयोगः एतैर्युक्तान् अलंपटान् विषयेष्वलम्पटान् युष्मान् वेदमयान् ब्राह्मणानात्मपरीप्सया वेदमयस्यात्मनः रिरक्षिषया वेदमयस्यात्मनः परीप्सा रिरक्षिषैव आत्मपरीप्सया आत्मज्ञानप्रवर्तनश्रद्धया वा चतुर्मुखशरीरकः परमात्मा स्वमुखादसृजत् ॥ २ ॥ ❀ ❀ तेषां ब्राह्मणानां त्राणाय रक्षणायास्मान् क्षत्रियान् सहस्रपात्सर्वतः पाणिपादादिकार्यकर्ता भगवान् दोःसहस्रादसृजत् तस्य ब्रह्मणः हृदयं ब्रह्मकुलं क्षत्रं क्षत्रियकुलमङ्गं प्रचक्षते ॥ ३ ॥ ❀ ❀ अतो वेदपालनाय ब्राह्मणान् ब्राह्मणपालनायास्मांश्च यतः सृष्टवानतः ब्रह्मक्षत्रं च अन्योऽन्यं मिथः रक्षतः रक्षां कुर्वतः एवं परस्परं रक्षिष्यमाणे उभयमपि सदसदात्मकः कार्यकारणरूपः एवमव्ययः कार्यगतविकारैरस्पृष्टः यद्वा सदसदात्मकः चेतनाचेतनशरीरकः अत एवाव्ययः नहि शरीरगतैर्विकारैः शरीरी स्पृश्यते यो देवः स रक्षति ॥ ४ ॥ ❀ ❀ तस्मै स्वाभिप्रायं निवेदयितुकामः तद्दर्शनादिकं प्रस्तौति। त्रिभिः। तव दर्शनादेव मे सर्वे संशयाः प्रष्टव्यार्थविषयाः छिन्नाः। हे भगवन्! कर्दम! यद्यस्मात्स्वयमेव भवान् रिरक्षिषोः प्रजाः पालयितुमिच्छोर्मम धर्ममाह न यदा रथमास्थायेत्यादिनोक्तवान् ॥ ५ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली।

राज्ञा कर्दमपृष्टं श्रुत्वा च तूष्णीमास्थायि कश्चन वाग्व्यवहारोऽकारीति तत्राह। एवमिति। सव्रीड (१) मिवेति विनयगुणं भूषयति उपारतं यावदपेक्षितमुक्त्वा तूष्णीं स्थितं यद्वा (२) उपाधिके सर्वेश्वरे हरावकारशब्दवाच्ये रतं निरतं श्रीनारायणध्यानोपेतमित्यर्थः "अ आ अं अः पुराणर्षि" इति पाद्मे ॥ १ ॥ ❀ ❀ हेत्यनेन विप्रक्षत्रिययोः सूचितां समानसम्बन्धप्रसिद्धिं प्रपञ्चयति। ब्रह्मेति। अस्मत्परीप्सयास्मद्रक्षणेच्छया छन्दोमयान् वेदप्रधानान् तपः कायक्लेशः विद्या शास्त्रज्ञानं योगो भगवद्भक्तिलक्षणः अनेन क्षत्ररक्षासामर्थ्यमुक्तं भवति अलम्पटान् विरक्तान् शमदमादिगुणसम्पन्नानित्यर्थः ॥ २ ॥ ❀ ❀ विप्राणां त्राणाय रक्षणाय अनन्तत्वद्योतनाय दोःसहस्रादिति उभयोर्हरेः किं प्रियतममिति तत्राह। हृदयमिति। तस्य हरेर्ब्रह्म कुलं हृदयमतिप्रियं हि छिन्द्यां स्वबाहुमपीत्युक्तं हि। तर्हि किं क्षत्रेणेत्यत उक्तं क्षत्रमिति अङ्गाङ्गिभावेन तारतम्येनातिप्रियत्वम् ॥ ३ ॥ ❀ ❀ यत एवाङ्गाङ्गित्वमत एव ब्रह्म क्षत्रं रक्षति क्षत्रं च ब्रह्म रक्षति आत्मनाब्जोपदेशादिना रक्षति यः सदसदात्मकः कार्यकारणव्यापी देवो द्वयमपि रक्षतीत्यन्वयः ॥ ४ ॥ ❀ स्वप्रार्थनां ग्राहयितुं कर्दमं प्रशंसति। तवेति। दर्शनादित्यनेन चक्षुःसन्निकर्षः शास्त्रीयवचनं चेति द्वयं विवक्षितं धर्मं राज्यपालनादिकम् ॥ ५ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

ब्रह्मा विराड्रूपः स्वमुखत इति जातिमात्रापेक्षयोक्तम् ॥ १—२ ॥ ❀ ❀ एवं दोःसहस्रादिति च हृदयं ज्ञानशक्तिप्राधान्यात् अङ्गं क्रियाशक्तिप्राधान्यात् ॥ ३ ॥ ४ ॥ ❀ ❀ यत्तु स्वयं भगवान् धर्ममाह तदिदं त्वधिकमिति शेषः। यद्वा यत् यस्मात् सन्दर्शनादेव मद्योग्यतायां कारणात् स्वयं धर्ममप्याह। संशयोऽत्र तत्कारणं चित्तमलम् ॥ ५—६ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

द्वाविंशे प्रियभाषी स्वां ज्ञाततत्त्वाय कन्यकाम्। कर्दमाय नृपो दत्त्वा स्वं धामागादितीर्यते ॥

आविष्कृतोऽशेषाणां गुणानां कर्मणाञ्च उदय उत्कर्षो यस्य सः। वचनादुपरतं निवृत्तिनिरतं वा मुनिं सव्रीड इवेति स्वकीर्त्तिश्रवणात् परमार्थपरायणे तस्मिन् व्यवहारवार्त्ताया वक्तव्यत्वाच्च ॥१॥ ❀ ❀ सहसा स्वकन्याप्रदानप्रसङ्गस्य तत्प्रत्याख्यानशङ्कया प्रथमं ब्राह्मणक्षत्रिययोः कमपि सम्बन्धं सन्यायमाह। ब्रह्मेति सार्द्धाभ्याम्। आत्मनश्छन्दोमयस्य स्वस्य परीप्सया वेदप्रवर्तनेन पालनेच्छया

युष्मान् असृजत्। पर्याप्तिः पालनम्॥ २॥ ❀ ❀ ब्राह्मणान् के पालयेयुरित्यत आह। तदिति। दोःसहस्रादिति। परमेश्वरेणैक्यात् ननु क्षत्रियानपि कः पालयेत्तत्राह। ब्रह्म ब्राह्मणः अङ्गं भुजः। अयमर्थः लोके हि हृदये प्रहार आपतिते भुजाभ्यां हृदयस्य गोपनं दृश्यते भुजे च प्रहार आपतिते देहं कुब्जितीकृत्य हृदयमध्ये एव भुजो गोप्यते इति हृदयस्य पालको भुजः भुजस्य पालकं हृदयम्॥ ३॥ ❀ ❀ एवं ब्रह्म ब्राह्मणस्तपोबलेन क्षत्रियं पालयति। क्षत्रं क्षत्रियः शारीरबलेन ब्राह्मणमिति वस्तुतस्तु देवः परमेश्वर एवोभयं रक्षति। सदसदात्मकः तदप्यव्ययो निर्विकारः॥ ४॥ ❀ ❀ अतोऽहं यस्य पालकं त्वामागतस्त्वया च स्वसन्दर्शनेनैवाहं पालित इत्याह। तवेति। रिरक्षिपोः क्षत्रियस्य॥ ५॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः।

द्वाविंशेन तु महतादरेण देवहूतीं कर्दमायादित्युच्यते एवं मुनिना आविष्कृतः अशेषाणां गुणानां कर्मणां चोदय उत्कर्षो यस्य सः स्वगुणकर्मोदयश्रवणेन सव्रीड इव सम्राट् मनुः मनुगुणकर्मोत्कर्षकथनादुपारतं मुनिमुवाच॥ १॥ ❀ ❀ ब्रह्म जगत्कारणं परमात्मेत्यर्थः। छन्दोमयो वेदमयः आत्मनः वेदस्य परीप्सया रक्षणेच्छया युष्मान् ब्राह्मणान् मुखतोऽसृजत् वेदरक्षेणेनैव क्षत्रियरक्षणमपि सिद्धम्। वेदाभावे क्षत्रियाणामपि प्रजापालनयज्ञाद्यनुष्ठानासंभवान्नाशप्रसंगात्॥ २॥ ❀ ❀ तत्तेषां ब्राह्मणानामस्मान् क्षत्रियान्तस्य परमात्मनो ब्रह्म ब्राह्मणो जातः हृदयमन्तरङ्गं क्षत्रं क्षत्रियजातिः अङ्गं बहिरङ्गम्। भगवता मुखतः ब्रह्मजातिः दोःसहस्रतः क्षत्रियजातिश्च सङ्कल्पमात्रेणोत्पादितात्र वर्णिता चतुराननेन तु ब्राह्मणाः मनुना सहिता येन प्रकारेणोत्पादिताः स प्रकारः प्राक् प्रपञ्चित एव॥ ३॥ ❀ ❀ अतो ब्रह्मक्षत्रं च आत्मानं परस्परं रक्षतः एवं यः पूर्वोक्तः उभयजनकः सदसदात्मकः सर्वात्मकः सर्वात्मा स एव रक्षति॥ ४॥ ❀ ❀ क्षत्रियकुलोपकारिणि ब्राह्मणकुले प्रत्युपकाराय स्वां कन्यां दातुं ब्राह्मणक्षत्रिययोरन्योऽन्यतः उपकारित्वं सर्वरक्षित्रा भगवतैव कृतमित्युक्तमिदानीं विशेषतः पात्रभूतमुनिदर्शनाभिनन्दनपूर्वकं मदीया कन्या त्वया परिणेयेति स्वाभिप्रायं निवेदयति। तवेति दशभिः। ब्राह्मणोपदेशतः संशयच्छेदः प्रसिद्धः तव तु दर्शनादेव मे सर्वे संशयाः छिन्नाः अद्भुतप्रभावोऽसीति भावः। दयालुत्वादिगुणानाह। रिरक्षिपोः प्रजारक्षणेच्छोः राज्ञः यत् ये धर्माः तान् न यदा रथमास्थायेत्यादिना स्वयं न तु शिष्यादिद्वारेण। भगवान् प्रीत्याह अहो तवाद्भुतं दयालुत्वं निरभिमानित्वं प्रीतिजनकत्वं चेति भावः॥ ५॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

द्वाविंशे कर्दमस्याऽर्थः सिद्धस्त्रीधनरूपवान्। अयमेवैन्द्रियगणः कृष्णार्थं सुविनिश्चितः॥ १॥
अर्थस्य सत्त्वं चाख्यातुं मनोर्धर्मस्य वर्णनम्। भगवत्कृपयैवार्थ उत्तमो नान्यथेति च॥ २॥
आकूतिः पुत्रिकात्वेन दत्ता येन निजेच्छया। स एवात्यन्तदैन्येन देवहूतिं प्रयच्छति॥ ३॥
कृतकृत्यं च मनुते ततो धर्मं च सेवते। यज्ञश्रवणभेदेन द्विरूपमपि सर्वदा॥ ४॥

पूर्वाध्यायान्ते त्वद्वाक्यं कर्तव्यमिति ऋषिमुखात् श्रुत्वा, सन्तुष्टो विज्ञापयितुमादौ तं स्तौतीत्याह—एवमिति। आविष्कृताः प्रकटीकृताः सर्वे गुणाः कर्माणि, अभ्युदयश्च यस्य, गुणकर्मणां वाऽभ्युदयो यस्य। गुणोदयः सर्वदेवाधिष्ठानात्। धर्माधिपालनात् कर्माभ्युदयः। अन्यथा कथनं व्यावर्तयति—मुनिर्मिति। सव्रीड इव स्वकीर्तिश्रवणात्, प्रत्याख्यानशङ्कया वा कन्यार्थं प्रार्थनायामपि। सम्राडिति। महतः सर्वमेव वचनं शोभाकरम्। उपारतं तूष्णींभूतम्। उप समीपे कन्यायामासमन्ताद्रतं वा। हेत्याश्चर्ये। न हि महाराजः कंचिदेवं प्रार्थयति॥ १॥ ❀ ❀ प्रथमं ब्राह्मणक्षत्रिययोर्विवाहो नोचित इत्याशङ्क्य, भगवत्कृत एव तयोः संबन्ध इत्यन्योऽन्योपकारेण तुल्यतामापादयति—ब्रह्माऽसृजदिति त्रिभिः—प्रथमतो ब्रह्म वेदमयः स्वमुखतो युष्मान् ब्राह्मणानसृजत्। आत्मपरीप्सया आत्मनः स्वस्य वेदस्य पर्याप्तुमिच्छया, रक्षार्थं वा। ब्राह्मणव्यतिरेकेण वेदानां यज्ञानां वा पर्याप्तिः पूर्तिर्न भवति। छन्दोमय इति सर्ववेदात्मकः। ते ब्राह्मणास्त्रिविधाः; तपोयुक्ताः, योगयुक्ताः, भगवदुपासनायुक्ता वा। त्रितययुक्ता मुख्याः। अलम्पटानिति विषयलाम्पट्यं ब्राह्मणानां दोषः, तपस्यादयो गुणाः॥ २॥ ❀ ❀ एवं गुणदोषाभावयुक्तान् ब्राह्मणान्निरूप्य, क्षत्रियान्निरूपयति—तत्त्राणायेति। ब्राह्मणानां त्राणायाऽस्मान् क्षत्रियान् दोःसहस्रात्। वरेणाऽन्यस्यापि सहस्रबाहवो भवन्तीति तद्व्यावृत्त्यर्थमाह—सहस्रपादिति। वेदो हि ब्राह्मणेषु स्थितो भगवता रक्ष्यते। रक्षणे च बाहवः करणम्। तत्र जाताः क्षत्रियाः। शब्दप्राधान्येन ब्राह्मणानां सृष्टिः, अर्थप्राधान्येन क्षत्रियाणामिति योनिभेदोऽपि विवाहार्थः सूचितः। उभयोरन्योऽन्योपयोगमाह—हृदयं तस्य हि ब्रह्मेति। तस्य भगवतः, ब्रह्म ब्राह्मणाभिमानिनी देवता, हृदयमन्तःकरणम्, आत्मा मध्यमिति यावत्। क्षत्रं क्षत्रियाभिमानिनी देवता, अङ्गमवयवाः। प्रचक्षत इति प्रमाणम्। यथाऽङ्गव्यतिरेकेणात्माऽवसीदति। एवमात्मव्यतिरेकेणाप्यङ्गान्यवसीदन्ति॥ ३॥ ❀ ❀ अत इति। अतोऽन्योन्यं ब्रह्म च क्षत्रं च रक्षतः, तथा सत्यमात्मानमेव रक्षतः। हि युक्तोऽयमर्थः। यो हि आत्मार्थं अन्यान् पालयति। एवमन्योन्यपालनमुक्त्वा उभयोः साकाङ्क्षत्वेन पालकत्वमाशङ्क्य स्वतन्त्रेण भगवता पाल्यमानाः अन्योन्यं पालयन्तीति वक्तुमाह—रक्षति स्मेति। स हि देवः स्वतन्त्रः सर्वानेव पालयति। पालने

हेतुः—सदसदात्मक इति। सर्वात्मकोऽपि निर्विकार इत्याह—अव्यय इति। स्मेति प्रमाणम्। एवं च भगवता कृत्वा यथाऽन्योन्यरक्षा तथा कामकन्यकाभ्यामप्युभयो रक्षा कर्तव्या। तव कामोऽस्माभिः पूरणीयः कन्यादानेनास्मत्कामोऽपि त्वया पूरणीयो विवाहेनेति भावः॥ ४॥ ❀ ❀ स कामो विवाहात्मक एवेति वक्तुमन्यानि फलान्येव वचनादेव सिद्धानीति तानि गणयति—तव संदर्शनादेवेति त्रिभिः—ब्राह्मणानां स्थाने राजादयो धर्मनिर्णयार्थमप्यागच्छन्ति; तदस्माकं प्रथमत एव जातम्। यतस्तव संदर्शनादेव सर्वे संशयाः संछिन्नाः। एवमेव तपःकार्यम्, भगवत्सेवा च। तथा सत्येवं प्रसन्ने भगवति सर्व एव पुरुषार्थः सेत्स्यति, नाऽन्यथेति। पूर्वं ये संदेहाः स्थिताः सर्वार्थेषु, ते सर्वे त्वद्दर्शनेनैव जातेन निश्चयेन छिन्ना इत्यर्थः। को धर्मो राज्ञामित्यपि संदेहो गत इत्याह—यत्स्वयमिति। यद्यस्माद्दर्शनानन्तरं प्रीत्या रिरक्षिषोः पालकस्य, पालनेच्छोर्वा; भगवा[1]नेव धर्ममाह। अतः क्षत्रियाणां धर्मः प्रजापालनं परमो धर्म इति। अतो वाक्यादेव धर्मसंदेहो गतः॥ ५॥

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

अथ द्वाविंशाध्यायं विवरिषवोऽवसर एवाऽत्र सङ्गतिरित्यर्थनिरूपणमुखेन तामाहुः—द्वाविंश इत्यादि। ऐन्द्रियगण इति ऐन्द्रियग्राह्या मात्रा ऐन्द्रियास्तासां गणः। तथा च संवादद्वयेऽपि स्वस्वविचारेणाऽवसरः सङ्गतिरित्यर्थः। अवान्तरार्थसङ्गतिमाहुः—अर्थस्येत्यादि। सत्त्वमिति। साधुत्वम्। 'सद्भावे साधुभावे च सदित्येतत् प्रयुज्यते' इति गीतावाक्यात्। शेषं स्फुटम्॥

### श्रीगिरिधरकृता बालप्रबोधिनी

एकविंशे यथाऽऽदिष्टं कर्दमं प्रति विष्णुना॥ द्वाविंशे तु तथा तस्य विवाहादि निरूप्यते॥ १॥

एवं पूर्वोक्तप्रकारेण आविष्कृतो वर्णित अशेषाणां गुणानां भगवच्छक्तिमुक्तत्वादीनां कर्मणां जगत्पालनादीनां च उदय उत्कर्षो यस्य स मनुः उपारतं वर्णयित्वा तूष्णीं स्थितं तं मुनिं प्रत्युवाचेत्यन्वयः। कन्यापितृत्वस्य हीनत्वापादकत्वात् सव्रीड इति। समृद्धस्याप्यन्यस्य तु का वार्त्तेति सूचयन्नाह—सम्राडिति। तथापि सर्वजनीनत्वादिवशब्दः। यथेष्टवरलाभात्तत्प्रतिपद्यामहे इति तेनाङ्गीकारसूचनाच्च हर्षेणोवाचेति सूचयितुमाह—हेति॥ १॥ ❀ ❀ तदुक्तिमेव दर्शयति—त्रयोदशभिः। मदीयेयं कन्या त्वया परिणेयेति विज्ञापयिष्यंस्तावद्युष्मदस्मत्सम्बन्ध ईश्वरेण पूर्वमेव सङ्घटित इत्याह—ब्रह्मेति त्रिभिः। आत्मपरीप्सया आत्मनो रिरक्षिषया ब्रह्मा युष्मान् ब्राह्मणान् स्वमुखतोऽसृजत्। ब्राह्मणेभ्यः कथं तस्य रक्षेत्यपेक्षायां तस्य वेदमयत्वात् वेदस्य च ब्राह्मणैरेव संरक्षणादित्याह—छन्दोमय इति। ब्राह्मणानामेव कथं तद्रक्षकत्वमित्यपेक्षायां आचारेण स्वगुणेन चेत्याशयेनाह—तप इति। तपः कृच्छ्रचान्द्रायणादि कर्म, विद्या भगवदुपासनादितत्तत्त्वज्ञानरूपा, योगोऽष्टाङ्गः, एतैर्युक्तान्। अलम्पटान् विषयेष्वनासक्तान्॥ २॥ ❀ ❀ तर्हि ब्राह्मणानां रक्षा कथमित्यपेक्षां पूरयन्नाह—तदिति। तेषां ब्राह्मणानां त्राणाय रक्षणाय अस्मान् क्षत्रियान् सहस्रपात् भगवान् दोस्सहस्रात् भुजासहस्रात् असृजत्। दोस्सहस्रात्सहस्रपादिति भगवद्ब्रह्मणोरभेदविवक्षयोक्तम्। अतो हि तस्य भगवतो ब्रह्म ब्राह्मणकुलं हृदयं क्षत्रं क्षत्रियकुलं च अङ्गं प्रचक्षते वेदज्ञाः कथयन्ति॥ ३॥ ❀ ❀ हि यतो वेदपालनाय ब्राह्मणान् ब्राह्मणपालनायास्मांश्च सृष्टवानतो वेदाक्तसन्मार्गप्रवर्त्तनेन क्षत्रं क्षत्रियकुलं रक्षति ब्राह्मणान् जीविकाप्रसाधनेन दुष्टनिग्रहादिना च ब्रह्म ब्राह्मणकुलं रक्षति क्षत्रियान्, एवमन्योन्यमात्मानं च रक्षतः सर्वान् स एव देवो रक्षति। कोऽसौ देवः कथं वाऽन्योन्यं रक्षा तद्रक्षा किमर्थं वा स सर्वान् रक्षतीत्यपेक्षायामाह—य इति, यः कार्यकारणात्मक इत्यर्थः। तर्हि विकारित्वं स्यादित्याशङ्क्याह—अव्यय इति। अस्यार्थस्य शास्त्रप्रसिद्धिं सूचयन्नाह—स्मेति॥ ४॥ ❀ ❀ एवं सम्बन्धं निरूप्य स्वाभिप्रेतं निवदयितुकामस्तद्दर्शनादिकं स्तौति—तवेति त्रिभिः। तव दर्शनादेव मे मम स्वधर्मविषयाः सर्वे संशयाः छिन्नाः। यत् यस्मात् स्वयमदृष्ट एव भगवान् सर्वज्ञो भवान् रिरक्षिषोः प्रजाः पालयितुमिच्छोर्मम धर्ममाह 'न यदा रथमास्थाय' इत्यादिनोक्तवान्॥ ५॥

## हिन्दी अनुवाद

### देवहूतिके साथ कर्दम प्रजापतिका विवाह

श्रीमैत्रेयजी कहते हैं—विदुरजी! इस प्रकार जब कर्दमजी ने मनुजी के सम्पूर्ण गुणों और कर्मों की श्रेष्ठता का वर्णन किया, तो उन्होंने उन निवृत्तिपरायण मुनि से कुछ सकुचाकर कहा॥ १॥ ❀ ❀ मनुजीने कहा—मुने! वेदमूर्ति भगवान् ब्रह्माने अपने वेदमय विग्रहकी रक्षाके लिये तप, विद्या और योगसे सम्पन्न तथा विषयोंमें अनासक्त आप ब्राह्मणोंको अपने मुखसे प्रकट किया है और फिर उन सहस्र चरणोंवाले विराट् पुरुषने आप लोगोंकी रक्षाके लिये ही अपनी सहस्रों भुजाओंसे हम क्षत्रियोंको उत्पन्न किया है। इस प्रकार ब्राह्मण उनके हृदय और क्षत्रिय शरीर कहलाते हैं॥ २-३॥ ❀ ❀ अतः एक ही

१. भवानेव. क, ख, ग, घ, ङ,।

शरीरसे सम्बद्ध होनेके कारण अपनी-अपनी और एक दूसरेकी रक्षा करनेवाले उन ब्राह्मण और क्षत्रियोंकी वास्तवमें श्रीहरि ही रक्षा करते हैं, जो समस्त कार्य कारणरूप होकर भी वास्तवमें निर्विकार हैं ॥ ४ ॥ ❁ ❁ आपके दर्शनमात्रसे ही मेरे सारे सन्देह दूर हो गये, क्योंकि आपने मेरी प्रशंसाके मिससे स्वयं ही प्रजापालनकी इच्छावाले राजाके धर्मोंका बड़े प्रेमसे निरूपण किया है ॥ ५ ॥

दिष्ट्या मे भगवान् दृष्टो दुर्दर्शो योऽकृतात्मनाम्। दिष्ट्या पादरजः स्पृष्टं शीर्ष्णा मे भवतः शिवम् ॥ ६ ॥
दिष्ट्या त्वयानुशिष्टोऽहं कृतश्चानुग्रहो महान्। अपावृतैः कर्णरन्ध्रैर्जुष्टा दिष्ट्योशतीर्गिरः ॥ ७ ॥
स भवान्दुहितृस्नेहपरिक्लिष्टात्मनो मम। श्रोतुमर्हसि दीनस्य श्रावितं कृपया मुने ॥ ८ ॥
प्रियव्रतोत्तानपदोः स्वसेयं दुहिता मम। अन्विच्छति पतिं युक्तं वयः शीलगुणादिभिः ॥ ९ ॥
यदा तु भवतः शीलश्रुतरूपवयोगुणान्। अशृणोन्नारदादेषा त्वय्यासीत्कृतनिश्चया ॥ १० ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

अकृतात्मनामवशीकृतचित्तानाम् ॥ ६ ॥ ❁ ❁ अनुग्रहोऽनुशासनादिरूप एव। उशतीरुशत्यः ॥ ७ ॥ ❁ ❁ विज्ञापयति। स भवानिति सप्तभिः। दुहितुः स्नेहेन परिक्लिष्ट आत्मा यस्य। श्रावितं विज्ञापनम् ॥ ८ ॥ ❁ ❁ प्रियव्रतोत्तानपदोः स्वसेति पुत्रिकाकरणशंका निरस्ता मम सुतेति क्षत्रकन्या तव योग्येति दर्शितम् ॥ ९ ॥ ❁ ❁ एषा देवहूतिः ॥ १० ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः।

भगवान्भवान् दिष्ट्या भद्रम्। अकृतात्मनां पुण्यहीनानाम् ॥ ६ ॥ ❁ ❁ अनुशिष्टः दत्तशिक्षः। अपावृतैर्व्याधिना कार्यादिना वानवधानदोषरहितैः ॥ ७ ॥ ❁ ❁ एवं च त्वद्दर्शनान्मे सर्वे क्लेशा गता एव परं त्वेकः क्लेशो दुर्वारो हृदि वर्तते तमपि त्वत्कृपया दत्ताश्वासो विगतभीरेवोद्घाटयामीत्याह—स कृपासिंधुः। दीनस्येति। पुत्रीप्रदमहाराजेनापि अतिनिस्स्व-संप्रदानाग्रेपि दैन्यमेवाश्रयणीयमित्याह—मुने इति। मत्कथनं विनापि त्वं मदभिप्रायं ज्ञातुं समर्थ इत्याह—स्नेहाकुलचेतस्त्वाद् ब्रवीम्येवेत्यर्थः ॥ ८ ॥ ❁ ❁ वयआदिकथनं तादृशां धर्मसाचिव्यप्राधान्येनैवेति न लज्जाकरमिति। अन्विच्छंतीति शत्रंतपाठः सम्यक् प्रतिभाति ( द्वयोरन्वयः कार्यः )। तथा च इयं मम कन्या यदा तु नारदाद्भवतः शीलादीनशृणोत्तदा त्वय्येव कृतनिश्चयासीत्। किंभूता। पतिमन्विच्छंती पत्यन्वेषणां कुर्वन्तीत्यर्थः ॥ ९ ॥ १० ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

अकृतात्मनां मलिनचित्तानाम् ॥ ६ ॥ ❁ ❁ अनुशासनादीत्यादिना तत्तद्ग्रहणे शक्तिसंचारः अपावृतैर्वाधिर्य्यानवधानादिदोषाच्छन्नैः बहुत्वं स्पृहयानेकायमानत्वात् ॥ ७ ॥ ❁ ❁ स कृतानुग्रहः ॥ ८ ॥ ❁ ❁ अत्र स्वपुत्र्या वयआद्यनुसंधानकथनं स्वलज्जाहेतुस्तथापि धर्मापेक्षकाणां तथाविधानां धर्मोत्कण्ठार्थमेवेति ज्ञेयम् ॥ ९ ॥ ❁ ❁ नारदान्नैष्ठिकादपीति तत्प्रोत्साहनार्थम् ॥ १० ॥

### श्रीमद्वीरराघवव्याख्या

अकृतात्मनामकृतसुकृतैर्दुर्दर्शः द्रष्टुमशक्यो भगवान् त्वं मे मया दिष्ट्यासद्भाग्येन दृष्टः भवतः शिवं मङ्गलकरं पादरजः मे शीर्ष्णा शिरसा स्पृष्टं धृतम् ॥ ६ ॥ ❁ ❁ अनुशिष्टोऽनुशिक्षितः महाननुग्रहोऽनुशासनादिरूपः त्वया कृतः अपावृतैरनावृतैः कर्णरन्ध्रैरुशतीरुशत्यः कमनीयाः गिरः दिष्ट्या जुष्टाः ॥ ७ ॥ ❁ ❁ एवमात्मनः कृतार्थतामावेद्य तं प्रसादयन् स्वाभिप्रेतं निवेदयति। स इति सप्तभिः। दुहितरि स्नेहेन परिक्लिष्टः आत्मा मनो यस्य अत एव दीनस्य मम मया श्रावितं विज्ञापितं भगवान् कृपया श्रोतुमर्हति किं तदित्यत्राह। इयं देवहूतिः प्रियव्रतोत्तानपदोः स्वसा भगिनी मम दुहिता च प्रियव्रतोत्तानपदोः स्वसेत्यनेन पुत्रीकरणशङ्का निरस्ता। मम दुहित्येत्यनेन क्षत्रियकन्या तव योग्येति दर्शितं वयःशीलादिभिर्युक्तं पतिमन्विच्छतीत्यनेन स्वयंवरेति सूचितम् ॥ ८ ॥ ९ ॥ ❁ ❁ तदेव विशदयति। यदेति। यदातु यर्ह्येव भवतः शीलादीन्नारदोपदेशादशृणोत् तर्ह्येव त्वयि कृतः निश्चयः तवैवाहं भार्येति निश्चयो यया सा ॥ १० ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

भगवद्दर्शनं सुपूतानामेव लभ्यते नापुण्यानामित्याह। दिष्ट्येति। अङ्गसङ्गस्तु ततोऽभ्यधिकपुण्याल्लभ्यत इति भावेनाह। दिष्ट्येति ॥ ६ ॥ ❁ ❁ अपावृतैर्विवृतैरुशतीरुशत्यो निर्मलाः ॥ ७ ॥ ❁ ❁ अलमनुलापेन किमिच्छुरागतोऽसि तद्ब्रू-

हीति तत्राह । स भवानिति ॥ ८ ॥ ❀ ❀ भातृमतीत्वेन ग्राह्यत्वे हेतुं पुत्रिकापुत्रधर्मराहित्यं ध्वनयन्नाह । प्रियव्रतेति । सामान्यविशेषाभ्यां व्यवहारः संभवति अत एव कथमस्यावरविचार इति तत्राह । अन्विच्छतीति । यदा वयःशीलगुणादिभिर्युक्तं पतिमन्विच्छती संभोगवयः प्राप्तासीत् न हि कन्या स्वयं पतिं मृगयते प्रत्युत बान्धवा एवातोऽन्विच्छतीत्यनेन वय एव लभ्यते ॥ ९ ॥ ❀ ❀ यदा तु नारदाद्भवतः शीलादिगुणानश्रृणोत्ततः किमत्राह । सैषेति । या श्रुतवती सैषा स एव मम पतिः स्यादिति कृतनिश्चयासीत् ॥ १० ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः ।

अनुग्रहः स्वशिक्षाग्रहणसामर्थ्ये हेतुः कृपादृष्ट्यादिरूपः । अपावृत्तैर्बाधितकार्यानवधानादिदोषेणाच्छन्नैर्बहुत्वं स्पृहया-नेकायमानत्वात् ॥ ७—८ ॥ ❀ ❀ वयआद्यनुसन्धानं तत्कथनं च तादृशां धर्मसाचिव्यप्राधान्येनैवेति न लज्जाकरम् ॥९—१०॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

अकृतात्मनामपुण्यात्मनाम् ॥ ६ ॥ ❀ ❀ उशतीरुशत्यः ॥ ७ ॥ ❀ ❀ एवं च त्वद्दर्शनान्मे सर्वक्लेशा गता एव किन्त्वेकः क्लेशस्तु दुर्वारो हृदि वर्त्तत एव तमपि त्वत्कृपया दत्ताश्वासो विगतभीरेवोद्घाटयामीत्याह । स प्रसिद्धः कृपासिन्धु-रित्यर्थः । परिक्लिष्ट इति एष क्लेशो मे विवेकेनापि नापयातीति भावः ॥ ८ ॥ ❀ ❀ प्रियव्रतोत्तानपदोः स्वसेति पुत्रिकाकरण-शङ्का निरस्ता मम दुहितेति क्षत्रियकन्या तव योग्यैवेति भावः ॥ ९—११ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः ।

स्वभाग्यं प्रसंगादभिनन्दन् मुनिदर्शनादिकमकृतात्मनां दुर्लभमित्याह । दिष्ट्येति ॥ ६ ॥ ❀ ❀ उशतीः उशत्यः कमनीयाः ॥ ७ ॥ ❀ ❀ मम श्रावितं प्रार्थनावाक्यम् ॥ ८—१० ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

महापुरुषाणां दर्शनमेव स्वतन्त्रफलमिति चेत्; तदपि वचनव्यतिरेकेणैव जातमित्याह—दिष्ट्येति । भगवान् भवान् अकृतात्मनां दुर्दर्शोऽपि[१] मे मया दिष्ट्या दृष्टः । यैः संघातात्पृथगात्मा न कृतः, भगवदर्थं वाऽन्तःकरणं न कृतम्; तेऽकृतात्मानः । आत्मयोग्यदेहार्थं वा यैर्भूतानि न संस्कृतानि तादृशस्य तव दर्शने परलोकोपयोगि सर्वमेव कार्यं सिद्धमिति परलोकसंदेहोऽपि गतः । पापक्षयार्थं प्रायश्चित्तमिति किमपि न प्रष्टव्यमित्याह—दिष्ट्येति । ते पादरज एव शिवं कल्याणरूपं मे मया शीर्ष्णा स्पृष्टं मच्छिरसा वा । 'पुनन्तु मां ब्राह्मणपादपांसवः' इति सर्वप्रायश्चित्तापेक्षया इदमेव वरम् । किञ्च । न केवलं पापनिवर्त्तकं किन्तु कल्याणकरमपीति शिवमित्युक्तम् । शिरसा चेत्स्पृष्टमज्ञानामपि पापं गच्छत्येव, प्रधानत्वात् । दैवगत्या जातमिति दिष्ट्या ॥ ६ ॥ ❀ ❀ ब्राह्मणो हि क्षत्रियमनुशास्ति । यथाऽऽचार्योऽन्तेवासिनं 'सत्यं वद' इत्यादिभिः । तदप्यवचनादेव जातमित्याह—दिष्ट्येति । वचनव्यतिरेकेण प्रजापालनं कर्तव्यमिति धर्मोऽप्युपदिष्टः । 'तद्द्वयं निर्व्यलीकेन' इति वाक्यात् अनुग्रहश्च कृतः । महतां मुखात् भगवद्गुणाः श्रोतव्या इत्यप्यस्माकं जातमित्याह—अपावृतैरिति । योऽर्केन्द्वग्नीन्द्रेति । एते हि भगवतः सर्वपा-लका गुणाः; तत्प्रतिपादका एव कमनीया गिरः ताः पुनः शब्दान्तरैरावरणरहितैः कर्णरन्ध्रैः अकस्माद्भाग्येनैव जुष्टाः सेविताः ॥ ७ ॥ ❀ ❀ एवं सद्दर्शनेन यावद्भाव्यं तावत्सर्वं जातम् । अतः परमन्यत् विज्ञापयामीत्याह—स भवानिति । सामान्यत इयं प्रार्थना । स महान् भवान् । 'कन्यापितृत्वं दुःखाय' इति न्यायेन दुहितृस्नेहेन परितः क्लिष्ट आत्मा यस्य । न केवलं दुहितृमात्रं बाधकं किन्तु स्नेह इति तथोक्तम् । ममेति दीनतायामयोग्यता, अतः कृपा । मुन इति प्रकृतार्थ-परिज्ञानाय संबोधनम् । श्रावितं विज्ञापितम्, नारदादिद्वारा भगवता वा पूर्वं श्रावितम्, श्रवणार्थमुक्तं वा ॥ ८ ॥ ❀ ❀ एवं श्रोतव्यमित्युक्त्वा तद्वाक्यमाह—प्रियव्रतेति । यस्यास्तु न भवेद् भ्राता न विज्ञायेत वै पिता । नोपयच्छेत तां प्राज्ञः पुत्रिकाधर्मशङ्कया ॥ १ ॥ भ्रातुरभावे विवाह्या न भवतीति प्रियव्रतोत्तानपदोः स्वसेत्युक्तम् । उभयोश्च कीर्तनं 'नैकः पुत्रः पुत्रो भवति' इति वाक्यात् । पिता प्रसिद्ध इति वक्तुं दुहिता ममेत्युक्तम् । अकामायाः कामनमयुक्तमित्यन्विच्छति पतिमिति । दोषाभावाय युक्तमिति । कामार्थं योगो मास्त्विति वक्तुं वयःशीलगुणादिभिरित्युक्तम् । वयः कामार्थम्, शीलं धर्मार्थम्, गुणा अर्थार्थाः । आदिशब्देन ज्ञानादयो मोक्षार्थाः ॥ ९ ॥ ❀ ❀ एवं चतुर्विधपुरुषार्थसिद्ध्यर्थं स्त्रियाः सर्वं पुरुषाधीनमिति तादृशं पतिं वाञ्छति । तादृशः[२] कश्चिदन्यः तया मनसा स्वीकृतः स्यात्, तथापि निषिद्धेति तन्निवृत्तिं वदन् त्वदग्रहणे नाऽस्त्येवास्याः पतिरित्यभिप्रायेणाऽऽह—यदा त्विति । सर्वान् वरान् स्वयोग्यान् श्रोतुं प्रवृत्ता यदा तु भवतः शीलादिकं श्रुतवती ततः प्रभृति त्वय्येव कृतनिश्चया आसीत् । शीलमाचारः, श्रुतं विद्यादिजनितज्ञानम्, रूपं सौन्दर्यम्, वयः तारुण्यम्, गुणा औदार्यादयः । एतान् यदा अश्रृणोत् । नारदो हि देवकार्यकर्ता प्रसङ्गमुत्पाद्य वदति । त्वय्येव कृतो निश्चयः ममायमेव पतिरिति ॥ १० ॥

---

१. दुर्धर्षोऽपि. क. ङ. २. तादृशश्चेदन्यः. ख. ग. ङ.

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

दिष्ट्येत्यत्र। अवचनादिति। प्रश्नं विनैवेत्यर्थः॥ ७॥

### श्रीगिरिधरकृता बालप्रबोधिनी

अकृतात्मनां न कृतो भगवदाराधनादिः साधनपरतया न स्थापितः आत्माऽन्तःकरणं यैस्ते अकृतात्मानस्तेषां यो दुर्दर्शो द्रष्टुमशक्यः स भगवान् ज्ञानादिगुणयुक्तो भवान् मे मया दिष्ट्या स्वभाग्येनैव दृष्टः। भवतः शिवं मङ्गलकरं पादरजो मे मया दिष्ट्या स्वभाग्येनैव शीर्ष्णा शिरसा स्पृष्टं शिरसि धृतम्॥ ६॥ ❀ ❀ दिष्ट्यैवाहं त्वयाऽनुशिष्टः 'न यदा रथमास्थाय' इत्यादिनाऽनुशिक्षितः। त्वत्प्रयोजनं वयं निर्व्यलीकेन हृदा स्वीकुर्म इति वचनेनातिथ्यादिना च अस्मद्भाग्येनैव त्वया महाननुग्रहश्च कृतः। अपावृतैः आवरणरहितैः कर्णरन्ध्रैः उशतीः उशत्यः 'योऽर्केन्द्वग्निवायूनां' इत्यादिभगवत्परत्वेन कमनीयास्ते गिरः दिष्ट्या स्वभाग्येनैव जुष्टाः सेविताः श्रुताः॥ ७॥ ❀ ❀ एवं मुनिदर्शनादिनाऽऽत्मनः कृतार्थतामावेद्य स्वाभिप्रेतं प्रार्थयितुं स्वविज्ञापनश्रवणं प्रार्थयते—स इति। स परमकृपालुतया प्रसिद्धो भवांस्त्वं दुहितुः स्नेहेन परिक्लिष्टं योग्यायेयं देयेति वरपरीक्षापरतया व्याकुल आत्मा मनो यस्य तस्य अतएव दीनस्य मम श्रावितं विज्ञापनं कृपया श्रोतुमर्हसि। कृपा च तव युक्तैव मननशीलत्वादित्याशयेन सम्बोधयति—मुने इति॥ ८ ७ ❀ ❀ किं तदित्यपेक्षायां तदाह—प्रियव्रतेति षड्भिः। इयं देवहूतिः वयश्शीलादियुक्तं पतिमन्विच्छति। तत्र वयः कामसाधकं, शीलं धर्मसाधकं, गुणोऽर्थसाधकः, आदिपदेन भक्तिज्ञानादि मोक्षसाधकं, एवं पुरुषार्थचतुष्टयसाधनसम्पन्नमित्युक्तम्। क्षत्रियस्य कन्या तव योग्यैवेति सूचयन्नाह—दुहिता ममेति। पुत्रिकाकरण-शङ्कानिरासायाह—प्रियव्रतोत्तानपदोः स्वसेति॥ ९॥ ❀ ❀ यदा तु नारदादेषा भवतः शीलादीन् अशृणोत्तदाप्रभृति त्वय्येव कृतो निश्चयः अयमेव मम पतिर्योग्य इत्येवंरूपो यया तथाभूता आसीदित्यन्वयः। शीलं सुस्वभावः। श्रुतं विद्या। रूपं सौन्दर्यम्। वयस्तारुण्यम्। गुणाः भक्त्यादयः॥ १०॥

### हिन्दी अनुवाद

आपका दर्शन अजितेन्द्रिय पुरुषोंको बहुत दुर्लभ है; मेरा बड़ा भाग्य है, जो मुझे आपका दर्शन हुआ और मैं आपके चरणोंकी मङ्गलमयी रज अपने सिरपर चढ़ा सका॥ ६॥ ❀ ❀ मेरे भाग्योदयसे ही आपने मुझे राजधर्मोंकी शिक्षा देकर मुझपर महान् अनुग्रह किया है और मैंने भी शुभ प्रारब्धका उदय होनेसे ही आपकी पवित्र वाणी कान खोलकर सुनी है॥ ७॥ ❀ ❀ मुने! इस कन्याके स्नेहवश मेरा चित्त बहुत चिन्ताग्रस्त हो रहा है; अतः मुझ दीनकी यह प्रार्थना आप कृपापूर्वक सुनें॥ ८॥ ❀ ❀ यह मेरी कन्या—जो प्रियव्रत और उत्तानपादकी बहिन है–अवस्था, शील और गुण आदिमें अपने योग्य पतिको पानेकी इच्छा रखती है॥ ९॥ जबसे इसने नारदजीके मुखसे आपके शील, विद्या, रूप, आयु और गुणोंका वर्णन सुना है, तभीसे यह आपको अपना पति बनानेका निश्चय कर चुकी है॥ १०॥

**तत्प्रतीच्छ द्विजाग्र्ये मां श्रद्धयोपहृतां मया। सर्वात्मनानुरूपां ते गृहमेधिषु कर्मसु॥ ११॥**
**उद्यतस्य हि कामस्य प्रतिवादो न शस्यते। अपि निर्मुक्तसङ्गस्य कामरक्तस्य किं पुनः॥ १२॥**
**य उद्यतमनादृत्य कीनाशमभियाचते। क्षीयते तद्यशः स्फीतं मानश्चावज्ञया हतः॥ १३॥**
**अहं त्वाशृणवं विद्वन्[१] विवाहार्थं समुद्यतम्। अतस्त्वमुपकुर्वाणः प्रत्तां[२] प्रतिगृहाण मे॥ १४॥**

### ऋषिरुवाच

**बाढमुद्वोढुकामोऽहमप्रत्ता च तवात्मजा। आवयोरनुरूपोऽसावाद्यो वैवाहिको विधिः॥ १५॥**

### श्रीधरस्वामिविरचिता भावार्थदीपिका

प्रतीच्छ स्वीकुरु॥ ११॥ ❀ ❀ उद्यतस्य स्वतः प्राप्तस्य विषयस्य प्रतिवादः प्रत्याख्यानम्॥ १२॥ ❀ ❀ कीनाशं कृपणम्। अवज्ञया परापमानेन॥ १३॥ ❀ ❀ यस्य सावधि ब्रह्मचर्यं स उपकुर्वाणः मे प्रत्तां मया दत्ताम्॥ १४॥ ❀ ❀ अप्रत्ता चेति मय्येव कृतनिश्चयत्वात्कस्मैचित्प्रतिश्रुता च न भवतीत्यर्थः। आद्यः प्रथमः ततः पूर्वं विवाहाभावात्। मुख्य इति वा॥ १५॥

---

१. प्रा० पा०—विद्वन्नुद्वाहार्थं। २. प्रा० पा०—प्रपन्नां प्रतिगृह्ण मे।

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

हे द्विजाग्र्येति । दानपात्रतामाह श्रद्धादत्तं ग्राह्यमेवेत्याह—श्रद्धयेति । सर्वात्मना सर्वप्रकारेण गृहमेधेषु गृहस्थोचितेषु कर्मस्वग्निहोत्रसंतत्युत्पादनादिष्वनुरूपां योग्याम् ॥ ११ ॥ ❀ ❀ न चाहं विरक्तस्तपस्वी तव कन्यां कथं स्वीकरोमीति वाच्यम् । स्वतः प्राप्तस्य धात्रा समुत्पादितस्य निर्मुक्तसंगस्य केवलं धर्मार्थं विषयोपार्जनमिति मनस्यासक्तिरहितस्य कामरक्तस्येति । तवांतर्गतं कामं ज्ञात्वैवाहमिहागममिति कामो नापलपनीय इति भावः ॥ १२ ॥ ❀ ❀ अत्र व्यावहारिकीं नीतिमाह य इति । अनादृत्य प्रतिष्ठानुरोधाल्लज्जया प्रत्याख्याय पुनः कृपणमदातारमपि जनं तमेव कामं याचते । कामेनैवाचिरादेव प्राबल्यवता लज्जाप्रतिष्ठयोर्भ्रंश्यमानत्वादिति भावः । मानश्च हतो भवतीत्यर्थः । तेन परिणामदर्शिना विदुषा वर्तमानमपि वैराग्यं स्वमनोमध्यवर्तिना कामेनाग्रतो ग्रसिष्यमाणमनुमाय प्रथममेव दैवादयाचित एवायातोऽनिषिद्धो विषयोंगीकर्तव्य एवेति ध्वनिः । स्फीतं प्रवृद्धम् । "कीनाशः कर्षकक्षुद्रोपांशुघातियमेषु च" इति धरणिः ॥ १३ ॥ ❀ ❀ ननु मन्मनोमध्यवर्त्तिनं कामं त्वं कथमज्ञासीरिति चेत् श्रुतत्वादित्याह–अहमिति । त्वा त्वाम् । अशृणवम् । श्रवणमपि स्फूर्तिप्राप्तस्य भगवत एव मुखादवगंतव्यम् । यतस्त्वं न नैष्ठिकः । किं तूपकुर्वाणोऽस्यतो हेतोः ॥ १४ ॥ ❀ ❀ इत्यर्थ इति । "अशृणोन्नारदादेषा त्वय्येव कृतनिश्चया" इति तदुक्तेरिति भावः । 'आकूतिं रुचये प्रादात्' इत्युक्तेर्दानमात्रमेवेतः पूर्वमासीत्पद्धत्योद्वाहो ममैव भवत्वित्यर्थः । यत आदिना वेदेन विहितः । आद्यो वेदविहितोऽतोऽसौ वैवाहिको विवाहसंबंधी विधिः प्रकार आवयोर्मद्देवहूत्योरनुरूपो योग्योस्ति, द्वयोस्साभिलाषत्वात् । 'भार्याश्चतस्रो विप्रस्य' इत्युक्तेः क्षत्रियकन्याया ग्राह्यत्वाच्चेति भावः । इतः पूर्वं गौणविवाहस्य दानरूपस्य सत्त्वेपि विधिविहितत्वादयमेव मुख्य इति स्वामिचरणैरुक्तम् । मुख्यो वेति । एतेन सम्यग्दानविधिना दत्ताया एव कन्याया भार्यात्वं भवति नान्यथा तथा चोक्तं भारतेऽनुशासनपर्वणि–"पाणिग्रहणमंत्राणां निष्ठा स्यात्सप्तमे पदे । पाणिग्रहस्य भार्या स्याद्यस्य चाद्भिः प्रदीयते" इति । किं च–"बंधुभिः समनुज्ञाते मंत्रहोमौ प्रयोजयेत् । तथा सिद्ध्यंति ते मंत्रा नादत्तायाः कथंचन" इति च वाल्मीकीयायोध्याकाण्डेपि श्रीरामं प्रति सीतावाक्यम् । "इह लोके च पितृभिर्या स्त्री यस्य महाबल । अद्भिर्दत्ता स्वधर्मेण प्रेत्यभावेपि तस्य सा" इति । एतेन श्रीमनुना यदुक्तम् "अद्भिरेव द्विजाग्र्याणां कन्यादानं प्रशस्यते । इतरेषां तु वर्णानामितरेतरकाम्यया" इत्यत्राप्यन्यवर्णानां जलपूर्वकप्रदानस्य निषेधो न कृतः । किन्तु ब्राह्मणैरद्भिरेवान्यवर्णैस्त्वद्भिरन्यथा वेति । न ह्यत्रैवकारो द्विजाग्र्यपदसमभिव्याहृतोस्ति येन ब्राह्मणैरेवाद्भिः प्रदानमितरैर्नेत्यर्थो लभ्येत । तथा सति पंचमवेदश्रीमहाभारतसाक्षाद्वेदरूपश्रीमद्वाल्मीकीयवाक्याभ्यां 'यस्य चाद्भिः प्रदीयते' इति "या स्त्री यस्य महाबल । अद्भिर्दत्ता" इत्येवंरूपाभ्यां या यस्येति । निर्देशेनागृहीतविप्रपदाभ्यां विरोधोऽवश्यं भविष्यतीति । किं च । "वाचा दत्ता तु या कन्या न दत्ता वारिणा च या । सा कन्या पितुरेव स्यात्" इति दिवोदासीयाशौचनिर्णयप्रकरणे मरीचिवाक्येपि विप्रपदानिर्देशात्सर्वेषां कन्यादानं जलदर्भैरेव शोभनमत एव लोके प्रवृत्तिरेषेति ॥ १५ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

श्रद्धयादरेणोपाहृतां समर्पितां सर्वात्मना सर्वथा ॥ ११ ॥ ❀ ❀ निर्मुक्तसङ्गस्य धर्मार्थं विषयोपार्ज्जनेऽपि मनस्यनासक्तस्य ॥ १२ ॥ ❀ ❀ वैराग्यप्रतिष्ठादम्भेनानादृत्य परापमानेन परस्य दातुः प्रत्याख्यानाद्योऽपमानः कृतस्तेनः किम्वा परकृतेनापमानेन ॥ १३ ॥ १४ ॥ ❀ ❀ विवाहाभावात् रुचेः प्रथमतो दानाद्विवाहविध्यभावादित्यर्थः । अत एव पक्षान्तरम् ॥ १५ ॥

### श्रीमद्वीरराघवव्याख्या

तत्तस्माद्धे द्विजाग्र्य ! मया श्रद्धयोपाहृतां समर्पितां तव गृहमेधिषु गार्हस्थ्येषु कर्मसु सर्वात्मना सर्वप्रकारैरनुरूपामनुकूलामिमां कन्यां प्रतीच्छ प्रतिगृहाण ॥ ११ ॥ ❀ ❀ प्रतिग्रहप्रत्याख्यानशङ्कया तं प्रोत्साहयन्नाह । त्रिभिः उद्यतस्य दैवात् स्वतः प्राप्तविषयस्य कामस्याभिलाषस्य प्रतिवादः प्रत्याख्यानं निर्मुक्तसङ्गस्यापि न शस्यते कर्त्तुमिति शेषः, कामासक्तस्य किं पुनः प्रविवादो न शस्यत इति किं पुनर्वक्तव्यमित्यर्थः ॥ १२ ॥ ❀ ❀ प्रतिवादे किं स्यादित्यत्राह । य इति । यः पुमानुद्यतं काममनादृत्य पश्चात्कीनाशं कृपणमभियाचते स्फीतं प्रवृद्धमपि तस्य पुंसो यशः क्षीयते नश्यति अवज्ञया परावमानेन मानः बहुमानश्च हतः विनष्टो भवेत् ॥ १३ ॥ ❀ ❀ ननु सत्यं त्वदुक्तं सर्वं परिवोढुकामश्चाहं तु न तादृश इत्यत्राह । अहमिति । हे विद्वन् ! त्वामुद्वाहार्थं समुद्यतं यतमानमहमशृणवं श्रुतवान् अतस्तस्मादुपकुर्वाणः नैष्ठिकेतरब्रह्मचारी सावधिकब्रह्मचर्यवान् त्वं मे मया प्रत्तां दत्तां कन्यां प्रतिगृहाण ॥ १४ ॥ ❀ ❀ एवं मनुना विज्ञापितः कर्दमस्तदुक्तमङ्गीकुर्वन्नाह । बाढमिति षड्भिः । बाढमित्यङ्गीकारे अहमुद्वोढुकामः परिणेतुकामः तवात्मजा पुत्री अप्रत्ता कस्मैचिदप्रतिश्रुता चात आवयोरनुरूप आद्यः ब्राह्मः वैवाहिकः विवाहरूपः विधिर्विधानमस्त्विति शेषः ॥ १५ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

अत्रापि कीदृशोऽसौ कुत्रास्त इत्यादिविशेषप्रश्नादिना निश्चयो लभ्यत इत्यत एकोंऽशो निरणायि। अतो द्वितीयोऽपि निर्धार्य इति भावेनाह। तत्प्रतीच्छेति। कन्येच्छायाः प्रतिनिधित्वेनेच्छां कुरु गृहाणेत्यर्थः। अत्रान्योऽपि गुणोऽस्तीत्याह। श्रद्धयेति। उपहृतां दत्तामतोऽपि गुणात् गृहाणेत्याशयेनाह। सर्वात्मनेति। गृहमेधेषु गृहस्थाश्रमयोग्ययज्ञाख्येषु कर्मसु ते तव सर्वात्मना युक्तायुक्तविचारमन्तरेण स्वत एवानुरूपामनुकूलशब्दादिगुणां "रूपं शब्दे पशौ श्लोके ग्रन्थावृत्तौ हितादिपु सौन्दर्ये च स्वभावे च" इति॥ ११॥ ❀ ❀ किंच नेदानीमिति प्रतिवादेन न "काञ्चन स्त्रियं परिहरेत्तद्व्रतम्" इति श्रुतिविरोधोऽपि स्यादिति भावेनाह। उद्यतस्येति। निर्मुक्तसङ्गस्य विषयसङ्गमनिच्छतोऽपि न तु सर्वात्मना सङ्गस्य निषिद्धत्वादनर्थहेतुत्वाच्च तदुक्तम्। "यस्तु प्रव्रजितो भूत्वा पुनः सेवेत मैथुनम्। षष्टिवर्षसहस्राणि विष्ठायां जायते कृमिः इति।" कामरक्तस्य योग्यस्य प्रतिवादः प्रत्याख्यानं निषेध इत्यर्थः॥ १२॥ ❀ ❀ भवन्तमन्तरेणान्यः कश्चित्प्रत्याख्याति चेद्बाधकं चास्तीत्याह। य उद्यतमिति। कीनाशं कदर्यं कर्षकं वा॥ १३॥ ❀ ❀ अनापृच्छयागमनमात्मदोषं परिहरति। अहं चेति। अनेन बहिर्मुखेषु अयं दोषो न पण्डितेष्विति दर्शितम्। उपकुर्वाणो विवाहकामः "वेदानधीत्य यो वर्णी विवाहार्थं गुरोः कुलात्। कृतानुज्ञो निवर्तेत उपकुर्वाण उच्यते"॥ १४॥ ❀ ❀ प्रतिबुद्धप्रत्युत्तरो मुनिः किमकार्षीदिति राज्ञोऽन्तः शङ्कां निवारयति। बाढमिति। बाढमित्युक्तं विवृणोति। उद्वोढुकाम इति। "बाढं त्वभिमते भृशं" इति च तव पुत्री वोढुं योग्येत्याह। अप्रमत्तेति। "पतिशुश्रूषणे यत्ता विषयासक्तिनिस्पृहा। धर्मार्थकामहेतुर्या त्वप्रमत्तेति तां विदुः" इति त्वप्रत्तेति पाठेऽर्थितायान्यस्मै वाचाप्यदत्तत्वात् परामृष्टश-ङ्काभावादुपयन्तुं योग्येत्याह। अप्रत्तेति चशब्दो हेत्वर्थः। किंनामायं विवाह इति तत्राह। आवयोरिति। चतुर्णां विवाहविधी-नामयं वैवाहिको विधिराद्यो ब्राह्मः "शक्त्या कन्यामलंकृत्याहूय यत्र प्रदीयते स ब्राह्मः" इति स्मार्तः। मुहूर्तं प्रतीक्ष्य न स्थेयमित्यतो वाह। आवयोरिति। आद्योऽद्यतनो दिवस एव विवाहयोग्यो विधीयत इति विधिः विभक्तिप्रतिरूपकं चाव्ययं भवति इति वचनादद्येत्यव्ययं सुबन्तरूपमपि विवक्षावशाद्भवति 'प्रतिः प्रतिनिधिप्रतिदानयोरि'ति॥ १५॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

उद्यतस्य धात्रा स्वयमुपसादितस्य निर्मुक्तसङ्गस्य केवलं धर्मार्थं विषयोपार्ज्जनमिति मनस्यासक्तिरहितस्य॥ १२॥ ❀ ❀ अवज्ञया परकृतापमानेन॥ १३—१४॥ ❀ ❀ बाढमिति। रुचेः प्रथमतो दानेऽपि वैवाहिकविधेरत्रैव प्रार-ब्धत्वादाद्य इत्युक्तम्॥ १५॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

न चाहं विरक्तस्तपस्वी त्वत्कन्यां कथं स्वीकरोमीति वाच्यमित्याह। उद्यतस्य स्वतः प्राप्तस्य विषयस्य प्रतिवादः प्रत्याख्यानं कामरक्तस्येति तत्रान्तर्गतं कामं ज्ञात्वैवाहमिहागच्छमतो मयि कामो नापलपनीय इति भावः॥ ११॥ ❀ ❀ तत्र व्यावहा-रिकीं नीतिमाह। य इति। अनादृत्य प्रतिष्ठानुरोधाल्लज्जया प्रत्याख्याय पुनः कृपणमदातारमपि जनं तमेव कामं याचते कामेनैवा-चिरादेव प्राबल्यवता लज्जाप्रतिष्ठयोर्ग्रस्यमानत्वादिति भावः। मानश्च हृतो भवतीत्यर्थः। तेन परिणामदर्शिना विदुषा वर्त्तमानमपि वैराग्यं स्वमनोमध्यवर्तिना कामेनाग्रतो ग्रसिष्यमाणमनुमाय प्रथममेव दैवादयाचित एवायातोऽनिषिद्धो विषयोऽङ्गीकर्त्तव्य एवेति ध्वनिः॥ १३॥ ❀ ❀ ननु मन्मनोमध्यवर्तिनं कामं त्वं केन लक्षणेनाज्ञासीस्तत्र ज्ञानस्य का कथा श्रवणमपि मे जात-मित्याह। अहं त्वेति। त्वा त्वामश्रृणवमिति श्रवणमिदं स्फूर्तिप्राप्तस्य भगवत एव मुखादित्यवगन्तव्यम्। यस्य सावधि ब्रह्मचर्यं स उपकुर्वाणः प्रत्तां मया दत्ताम्॥ १४॥ ❀ ❀ अप्रत्ता कस्मैचिन्न प्रतिश्रुता। आद्यः ततः पूर्वं विवाहाभावात्॥ १५॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

तत्तस्मात् प्रतीच्छ प्रतिगृहाण॥ ११॥ ❀ ❀ काम्यते इति काम इष्टपदार्थः तस्योद्यतस्याकस्मात्प्राप्तस्य प्रतिवादः निवारणम्॥ १२॥ ❀ ❀ कीनाशं कृपणं स्फीतं समृद्धम्। अवज्ञया कीनाशादिकृते नासत्कारेण हतो विनष्टो भवेत्॥ १३॥ ❀ ❀ मे मया प्रत्तां दत्ताम्॥ १४॥ ❀ ❀ अप्रत्तेति मय्येव कृतनिश्चयत्वात् कस्मैचित्प्रतिश्रुता न भवतीत्यर्थः॥ १५॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

एवमपि सति पित्रधीना कन्येति। पित्रा देया इति मया दीयमानां गृहाणेत्याह—तत्प्रतीच्छेति। द्विजाग्र्येति ब्राह्मणानां पित्रादिदत्तायां[1] एव विवाहो मुख्यः, न तु गान्धर्वादिरिति सूचितम्। इमामिति कालान्तरविवाहं व्यावर्तयति। रूपप्रदर्शनेन प्रलोभयति च 'श्रद्धया दत्तमनभिप्रेतमपि गृह्णीयात्' इति ग्रहणार्थमाह—श्रद्धयोपाहृतामिति। सर्वात्मनानुरूपामिति भगवता त्वदर्थमेव निर्मितेति ज्ञापितम्, नतु साधारणी। न केवलं कामार्थमनुरूपा। किन्तु, गृहमेधेषु कर्मसु। गृहेषु मेधा बुद्धिर्यैः, यैश्च कर्मभिर्गार्हस्थ्यं

१. दत्त एव क. ङ.

सिद्ध्यतीत्यर्थः ॥ ११ ॥ ❀ ❀ एवं कन्याविषयकं सर्वमुपपाद्य वरविषयकमुपपादयति—उद्यतस्येति त्रिभिः—बहिर्गतो हि विषयः कामे सत्येव गृह्यते । उभयोर्योगसिद्धौ हि विश्लेषोऽशक्य एव च ॥ उभयोः कामकाम्ययोरेकपदेन निरूपणमैक्यबोधाय । उद्यतस्य कार्योन्मुखस्य प्रतिवादो निराकरणं न शक्यते कर्तुम् । न शक्यत इत्यर्थात्[१] । स एव वा शक्तिविषयो न भवति । उद्यतस्य स्वतः प्राप्तस्य कामस्य काम्यविषयस्य वा प्रतिवादो नास्ति । सङ्गत्यागेन कामः काम्यं वा निराकर्तुं शक्यत इत्याशङ्क्याह—अपि निर्मुक्तसङ्गस्येति । कामेन रक्तस्य व्यापृतस्य प्रतिवादो दूरापास्त इति किं वक्तव्यमित्यर्थः ॥ १२ ॥ ❀ ❀ कामे उद्यतानङ्गीकारे बाधकमाह—य उद्यतमिति । उद्यतं स्वतः प्राप्तमनङ्गीकृत्य; अनुद्यतं योऽभियाचते तस्य स्फीतमपि यशः क्षीयते । मानश्चाऽवज्ञया हतो भवति । अनुद्यतमिति वक्तव्ये कीनाशं कृपणमिति वचनम्; महतोऽप्यनुद्यतत्वसूचनार्थम् । कृपणगत एव विषयः सर्वेषामप्राप्यो भवति । कृपणो हि विषयमप्यदत्त्वा कीर्तिं च ख्यापयति स्वोत्कर्षार्थम् । अतस्तद्यशः क्षीयते । स्फीतमपीति कृपणजनिताकीर्तेः[२] पुष्टत्वात् । एवं बहिरपवादमुक्त्वाऽऽन्तरमप्युपचारमाह—मानश्चेति । 'मानो हि महतां धनम्' इति । अङ्गीकृतग्लानौ माननाशोऽसह्यः । हत इति पुनः प्ररोहाभावाय ॥ १३ ॥ ❀ ❀ एवं काम्यनिराकरणे बाधकमुक्त्वा तस्मिन् कामनां साधयति—अहमिति । त्वां विवाहार्थं समुद्यतमिति अहमेव साक्षादश्रवम् । विद्वन्निति संबोधनमयुक्तनिराकरणाय । विवाहं कृत्वैव कामः पूरणीय इति । अतो विवाहेच्छुर्ब्रह्मचारी उपकुर्वाणो भवति । स एव पित्रादिभ्य उपकरोतीति सावधिब्रह्मचारी उपकुर्वाणः । प्रत्तां दत्तां प्रकर्षेण भार्यात्वेन गृहाण । मे मयेति ॥१४॥ ❀ ❀ भगवद्गुणा एवाऽत्राङ्गीकारे हेतुरिति षड्भिरङ्गीकारमाह—"बाढमिति । इयं हि भगवद्दासी भगशब्दनिरूपिता । ऐश्वर्यादिप्रसिद्ध्यर्थमस्या वर्णनमुच्यते ॥ १ ॥ अनङ्गीकरणे त्वस्याः स्वतः कामेन बाधनात् । तुल्यत्वं चाभिलषितमत आद्यो निरूपितः ॥ २ ॥ धर्मो वीर्यं द्वितीयेन विध्यादरणवर्णनात् । यशो हि वर्ण्यते तस्या विश्वावसुनिरूपणात् ॥ ३ ॥ कान्त्याधिक्यस्य कथनाल्लक्ष्म्याश्चैव निराकृतेः । सोमसंबन्ध एवोक्तो गन्धर्वस्तु ततः स्फुटः ॥ ४ ॥ लक्ष्मीवद्वर्णनं तस्याः श्रियमिच्छेद्धुताशनात् । इति वाक्याच्च तस्यापि संबन्धो विनिरूपितः ॥ ५ ॥ ज्ञानवैराग्ययोर्वाक्ये स्पष्ट एव निरूपिते । अतोऽस्या वर्णनं तत्र न निषिद्धमिति स्थितिः ॥ ६ ॥ बाढमिति वचनं विवाहे प्रसिद्धम् । 'बाढं वृणीध्वम्' इति वचनात् । अव्ययमेतत् । यथासुखमित्यर्थे, सत्यार्थे वा । अहं तु वोढुकाम एव । तव चाऽऽत्मजा कन्या न कस्मैचिद्दत्ता । दत्तायास्तु विवाहोऽत्र लौकिकः परिकीर्तितः । अप्रत्ताया विवाहो हि ब्राह्म एव निरूपितः ॥ उद्वोढुकाम इति वचनात् ममापि पूर्वं न विवाहः । अत आवयोरप्ययमाद्यो वैवाहिको विधिः विवाहसंबन्धी अपूर्वजनकः प्रकारः । 'दत्तामपि हरेत् कन्यां श्रेयांश्चेद्वर आव्रजेत् । नष्टे मृते प्रव्रजिते क्लीबे च पतिते सति । पञ्चस्वापत्सु नारीणां पतिरन्यो विधीयते' ॥ इति वाक्यात् । आपदि विवाहः प्राजापत्यश्च सन्तत्यर्थं निरूपितः सोऽत्र निराक्रियते विधिर्भूयादिति ॥ १५ ॥

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः ।

उद्यतस्येत्यत्र । कारिकायाम् उभयोरिति । कामकाम्ययोः ॥ १२ ॥ ❀ ❀ य उद्यतमित्यत्र । महतोऽपीत्यादि । रूढवयसोऽपि कर्दमस्याऽनुद्यतत्वसूचनार्थम् । तथा चेदानीं मदनादरेऽग्रेऽन्यो न तवानादर इत्यर्थः ॥ १३ ॥ ❀ ❀ बाढमित्यत्र । कारिकासु । पितुरग्रे पुत्रीसौन्दर्यवर्णनं लोकविरुद्धम् । श्रीक्षेपनिरूपणं च वैष्णवत्वविरुद्धमिति शङ्कायां तस्या दूषणत्वायाहुः—इयमित्यादि षड्भिः भगेत्यादि । भगशब्दवाच्यैकदेशश्रीकोटौ निरूपिता । अत इति शेषः । आद्य इति । ऐश्वर्यरूप एकदेशः । श्रीक्षेपादिकथनस्य प्रयोजनान्तरमाहुः—लक्ष्म्या इत्यादि तथा च भगिनीत्वनिवृत्त्यर्थं तथा कथनमित्यर्थः । शेषं स्फुटम् । वाक्ये इति । वाक्यद्वयम् । अत इति । एतैर्लक्षणैर्भगवद्दासीत्वात् । तत्रेति । अङ्गीकारावसरे ॥ १५ ॥

### श्रीगिरिधरकृता बालप्रबोधिनी

तं प्रोत्साहयन् सम्बोधयति—द्विजाग्र्येति । तत्तस्मात्त्वयि कृतनिश्चयत्वात् गृहे मेधा बुद्धिर्येषां तेषु गृहमेधेषु गार्हस्थ्येषु कर्मसु सर्वात्मना सर्वप्रकारेण ते तवानुरूपां अनुकूलां मया श्रद्धया उप समीपं आहृतां आनीतामिमां प्रतीच्छ प्रतिगृहाण ॥ ११ ॥ ❀ ❀ प्रतिग्रहप्रत्याख्यानमाशङ्क्याह—उद्यतस्येति । उद्यतस्य उद्यमं विना स्वत एव प्राप्तस्य कामस्याभिलषितस्य भोजनाच्छादनादेरावश्यकस्य विषयस्य प्रतिवादः प्रत्याख्यानं निर्मुक्तसङ्गस्य विरक्तस्यापि न शस्यते शोभनं नैव भवति । न शक्यत इति पाठान्तरम् । हिशब्दोऽवधारणे । कामेषु विषयेषु रक्तस्यासक्तस्य प्रतिवादो न शस्यते इति किं पुनर्वक्तव्यम् ॥ १२ ॥ ❀ ❀ कुतो न शस्यते इत्यपेक्षायां तत्र दोषमाह—य इति । यः पुमानुद्यतं कामं अनादृत्य पश्चात् कीनाशं कृपणं जनमभियाचते तस्य स्फीतं निष्कामत्वनिर्लोभत्वमहत्त्वादिनाऽत्युज्ज्वलमपि यशः क्षीयते याच्ञया नश्यतीत्यर्थः । महत्त्वाभिमानश्च अवज्ञयाऽपमानेन हतो विनष्टो भवति ॥ १३ ॥ ❀ ❀ एवं प्रत्याख्याने दोषमुक्त्वा तस्य सकामत्वं उपपादयन् कन्याग्रहणं प्रार्थयते—अहमिति । सर्वज्ञस्य तवाग्रे मया किं बहु वक्तव्यमिति सूचयन् सम्बोधयति—विद्वन्निति । त्वा त्वां विवाहार्थं समुद्यतं प्रयतमानं अहमश्रृणवं श्रुतवानस्मि, अतएव यस्य गार्हस्थ्यावधिकं ब्रह्मचर्यं स उपकुर्वाणस्तथाभूतस्त्वमतो मे मया प्रत्तां श्रद्धया दत्तां कन्यां प्रतिगृहाण ॥ १४ ॥ ❀ ❀ एवं विज्ञापितः कर्दमस्तदङ्गीकरोति—बाढमिति षड्भिः । बाढ-

१. इत्यर्थं ग. । २. जनितकीर्तेः क. ।

मित्यङ्गीकारे। सत्यमहमुद्वोढुकामः परिणेतुकामः तवात्मजा पुत्री च अप्रत्ता कस्मैचिदप्रतिश्रुता। प्रतिश्रुतत्वेऽपि विरुद्धं स्यात्तदपि नास्ति, अतोऽसौ वैवाहिको विधिः विवाहप्रकार आद्यः मुख्य एव, अत आवयोरनुरूपो योग्य एव। अतोऽस्त्विति शेषः ॥ १५ ॥

### हिन्दी अनुवाद

द्विजवर! मैं बड़ी श्रद्धासे आपको यह कन्या समर्पण करता हूँ, आप इसे स्वीकार कीजिये। यह गृहस्थोचित कार्योंके लिये सब प्रकार आपके योग्य है ॥ ११ ॥ ❀ ❀ जो भोग स्वतः प्राप्त हो जाय, उसकी अवहेलना करना विरक्त पुरुषको भी उचित नहीं है, फिर विषयासक्तकी तो बात ही क्या है ॥ १२ ॥ ❀ ❀ जो पुरुष स्वयं प्राप्त हुए भोगका निरादर कर फिर किसी कृपणके आगे हाथ पसारता है, उसका बहुत फैला हुआ यश भी नष्ट हो जाता है और दूसरोंके तिरस्कारसे मानभङ्ग भी होता है ॥ १३ ॥ ❀ ❀ विद्वान्! मैंने सुना है; आप विवाह करनेके लिये उद्यत हैं। आपका ब्रह्मचर्य एक सीमातक है, आप नैष्ठिक ब्रह्मचारी तो हैं नहीं। इसलिये अब आप इस कन्याको स्वीकार कीजिये, मैं इसे आपको अर्पण करता हूँ ॥ १४ ॥ ❀ ❀ श्रीकर्दममुनिने कहा—ठीक है, मैं विवाह करना चाहता हूँ और आपकी कन्याका अभी किसी के साथ वाग्दान नहीं हुआ है, इसलिये हम दोनोंका सर्वश्रेष्ठ ब्राह्म[1] विधिसे विवाह होना उचित ही होगा ॥ १५ ॥

कामः स भूयान्नरदेव तेऽस्याः पुत्र्याः समाम्नायविधौ प्रतीतः।
क एव ते तनयां नाद्रियेत स्वयैव कान्त्या क्षिपतीमिव श्रियम् ॥ १६ ॥
यां हर्म्यपृष्ठे क्वणदङ्घ्रिशोभां विक्रीडतीं कन्दुकविह्वलाक्षीम्।
विश्वावसुर्न्यपतत्स्वाद्विमानाद्विलोक्य सम्मोहविमूढचेताः ॥ १७ ॥
तां प्रार्थयन्तीं ललनाललाममसेवितश्रीचरणैरदृष्टाम्।
वत्सां मनोरुच्चपदः स्वसारं को नानुमन्येत बुधोऽभियाताम् ॥ १८ ॥
अतो भजिष्ये[2] समयेन साध्वीं यावत्तेजो बिभृयादात्मनो मे।
अतो धर्मान् पारमहंस्यमुख्यान् शुक्लप्रोक्तान् बहुमन्येऽविहिंस्रान् ॥ १९ ॥
यतोऽभवद्विश्वमिदं विचित्रं संस्थास्यते यत्र च वावतिष्ठते।
प्रजापतीनां पतिरेष मह्यं परं प्रमाणं भगवाननन्तः ॥ २० ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

भूयाद्भवेत् प्रतीतः "गृभ्णामि ते सौभगत्वाय हस्तं मया पत्या" इत्यादिमंत्रप्रसिद्धः। स्वयांगकान्त्यैवं श्रियं भूषणादिशोभाम् ॥ १६ ॥ ❀ ❀ यां विलोक्य न्यपतत् संमोहेन विमूढं व्याकुलं चेतो यस्य क्वणद्भ्यामंघ्रिभ्यां शोभा यस्याः ॥ १७ ॥ ❀ ❀ तां ललनानां ललामं भूषणभूताम् असेवितौ श्रियश्चरणौ यैस्तैरदृष्टां द्रष्टुमप्ययोग्याम् उच्चपदः उत्तानपादस्य अभियातां स्वयं प्राप्ताम् ॥ १८ ॥ ❀ ❀ भजिष्ये स्वीकरिष्ये यावदपत्योत्पत्तिस्तावद्गार्हस्थ्यं ततः परं संन्यास इति। भाषाबंधः समयः तमेवाह। यावदात्मनो मम तेजो गर्भं बिभृयात्। यद्वा ममात्मगो देहाच्च्युतं तेजोवीर्यं बिभृयादिति। अतः परं पारमहंस्यं ज्ञानं तस्मिन्मुख्यान् शुक्लेन विष्णुना साक्षात्प्रकर्षेणोक्तानविहिंस्रान्हिंसारहितान् शमादीन्बहु यथा भवत्येवमनुष्ठेयान्मन्ये ॥ १९ ॥ ननु तव पितुः प्रजापतेराज्ञा सृष्टावेव न संन्यासे तत्राह। यत इति। संस्थास्यते च लयं यास्यति। ऋणत्रयापाकरणानंतरं संन्यास एव मादृशानां भगवतोक्त इत्यर्थः ॥ २० ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

"कामः स भूयात्" इत्यादित्रयस्यायमर्थः। तादृशीयं मां तपस्विनमपि प्रार्थयते तत एनां शुद्धभक्तां कथं त्यजेयमिति। शुद्धभक्तित्वं चास्याः "पितृभ्यां प्रस्थिते साध्वी" इत्यादिना वक्ष्यति। यः समाम्नायविधौ प्रसिद्धः ते हस्तं सौभगत्वाय सौभाग्य-

---

१ मनुस्मृतिमें आठ प्रकारके विवाहोंका उल्लेख पाया जाता है—(१) ब्राह्म, (२) दैव, (३) आर्ष, (४) प्राजापत्य, (५) आसुर, (६) गान्धर्व, (७) राक्षस और (८) पैशाच। इनके लक्षण वहीं तीसरे अध्यायमें देखने चाहिये। इनमें पहला सबसे श्रेष्ठ माना गया है। इसमें पिता योग्य वरको कन्याका दान करता है। २. प्रा० पा०—वरिष्ये।

वृद्धयेऽहं गृह्णामि मया पत्या सह जरदष्टिर्वृद्धा यथा भवसीति श्रुतिपदार्थः। छांदसत्वाद्धस्य भः। स्वयाऽसाधारणया क्षिपतीमिव श्रियमिति व्यतिरेकालंकारेण तस्याः सौन्दर्यसाद्गुण्यादिकं निरुपममुक्तम्। "व्यतिरेको विशेषश्चेदुपमानोपमेययोः। शैला इवोन्नताः संतः किं तु प्रकृतिकोमलाः" इति तल्लक्षणात्। अस्यार्थः उपमानापेक्षयोपमेयस्योपमेयापेक्षयोपमानस्य च विशेषे व्यतिरेकालंकारः। यथा शैला इवेत्यत्रोन्नतत्वेन साम्येपि कोमलत्वेन विशेषोपपादनादिति। एवमत्रापि शोभात्वेन साम्येप्यंगशोभा-भूषणादिशोभयोरतिशयत्वेन विशेष इति ध्येयम्॥ १६॥ ❀ ❀ तामेवाह स्वाभाविकीं यामिति। नितरामपतत् संमोहेन तद्दर्शनजेन सौंदर्यानुभवपारवश्येन भावपूर्वकतदवलोकनमहापराधफलं सद्य एव प्रापेत्यर्थः॥ १७॥❀ ❀ ननु विलोक्येति क्त्वाप्र-त्ययोक्तेर्विश्वावसुना सा दृष्टैवेति न हि न हीत्याह-असेवितश्रीति। मदभीष्टदेवश्रीमन्नारायणकान्तायाः श्रियाश्चरणौ मयैव सेवितावतो मयैव सा दृश्या भवेन्नान्येषां केषामपीति भावः। तेन चाकाशचारिण्यास्तस्याः कान्तिरेव विश्वावसुना विलोकिता न सेत्यायातम्। आभिजात्येत्युत्कर्षमाह-मनोस्तव वत्सां वात्सल्यपात्राम्। प्रियव्रतस्य तदा विरज्य गतत्वादुत्तपद इत्युक्तम्। "ललामं लांछने ध्वजे। शृङ्गे प्रधाने भूषायां रम्ये वालधिपुंड्रयोः। तुरंगे च प्रभावे" इति मेदिनी॥ १८॥ ❀ ❀ यत इयं सर्वथा योग्याऽतो हेतोः समयः संकेतः "समयौ कालसंकेतौ" इति कोशात्। तमेव समयमेव आत्मनो ममेति द्विरुक्तिप्रतीतेराह-यद्वेति। अत्रापि च्युतपदापेक्षणाद्वास्तवार्थमाह-आत्मनः परमात्मनस्तेजः कपिलाख्यं मे मत्तो बिभृयात्। मे ममात्मनोभीष्टस्येति विश्वनाथः। अतः परं कपिलाख्यतेजोधारणोत्तरं पारमहंस्याज्ज्ञानादपि मुख्यान्निष्परिग्रहभक्तिधर्मानिति चक्रवर्त्ती। अविहिंस्रान्यश्चाद्यालंभ-विधुरान्॥ १९॥ ❀ ❀ अत्राक्षिपति-नन्विति। यद्वात्रार्थे मम तव च स्मृत्यारूढो भगवानेव प्रमाणमित्याह-यत इति। इत्यर्थ इति। भगवता मन्वादिरूपेण "ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत्" इत्युक्तेरिति भावः। यद्वा भगवान्वेदो "वेदो नारायणः साक्षात्" इति याम्योक्तेः। "जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवाञ्जायते ब्रह्मचर्येणर्षिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्य एष वा अनृणो यः पुत्री यज्वा ब्रह्मचारी वासीत्स प्रव्रजेत्" इत्यादिश्रुतिरूपो नारायणो मम पित्रादिभ्यः परं प्रमाणं तदाज्ञा च पित्राद्याज्ञातोपि परं प्रमाणमित्यर्थः। वस्तुतः शास्त्रस्यैव मुख्यं पितृत्वं रक्षणार्थकपाधातुनिष्पन्नपितृशब्दस्यै-वार्थस्यैहिकामुष्मिकहितोपदेष्टृत्वेन पालनस्य तत्रैव चरितार्थत्वात्। वक्ष्यत्यपि। "शास्त्रस्य पितुरादेशं यो न वेद निवर्त्तकम्। कथं स पितुरादेशं गुणविस्रंभ्युपक्रमेत्" इति नारदो दक्षोपाख्याने॥ २०॥

## श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

सौभगत्वाय सधवत्वादिसौभाग्याय हे प्रिये! ते हस्तमहं गृह्णामि मया पत्या सह जरदष्टिर्यथा सेति मन्त्रशेषो ज्ञेयः त्वं जरदष्टिर्वृद्धा भवेति इवेति लोकोक्तिः॥ १६॥ ❀ ❀ यामिति युग्मकम्। उभयोरपि कामादूषितचित्तत्वेनालौकिकत्वात्सरल-त्वाच्च न लज्जावकाशः प्रियव्रतस्य तदानीं विरागश्रवणादुत्तानपादमात्रकथनम्॥ १७—१८॥ ❀ ❀ आत्मनः स्वस्य मम च तेजो वीर्य्यमियं गर्भत्वेन यावद्बिभृयात् पूर्वार्थे आत्मन इति अधिकं पदमपुष्टार्थत्वाच्चकाराध्याहारश्चातो यद्वेति॥ १९॥ ❀ ❀ भगवानेव परं प्रमाणं ननु भगवतो प्रमाणत्वेऽपि सृष्टिः कुतो न कर्त्तव्येत्याशङ्क्य व्यङ्ग्यार्थं व्याचष्टे। ऋण-त्रयमिति॥ २०॥

## श्रीमद्वीरराघवव्याख्या

हे नरदेव! ते तवास्याः पुत्र्याः यः समाम्नायविधौ वेदरूपचोदनायां प्रतीतः प्रख्यातः स कामः विवाहः भूयात् एवं तद्विज्ञापितमनुमत्य नाहं त्वत्प्रोत्साहेन प्रतिग्रहीष्याम्यपि त्वस्याः सौन्दर्य्यवयःशीलादीन् श्रुत्वास्यामेव कृतनिश्चयः भगवतादिष्टश्च प्रतीच्छामीति वदन् तां वर्णयति। क इत्यादिना। ते सार्वभौमस्य तव तनयां को नाम नाद्रियेत कथम्भूतां स्वयैवाभरणादिभिर्विना कान्त्या सौन्दर्य्येण श्रियं भूषणादिकृतशोभां क्षिपतीमिव स्थितां भूषणभूषणाङ्गीमित्यर्थः॥ १६॥ ❀ ❀ किंच हर्म्यपृष्ठे प्रासादोपरि क्वणतोर्नूपुराभ्यां शब्दं कुर्वतोरङ्घ्र्योः पादयोः शोभा यस्यास्तां विक्रीडतीं कन्दुके विह्वले चञ्चले अक्षिणी यस्यास्तां यां तव कन्यां विलोक्य संमोहेन विमूढं व्याकुलं चेतो यस्य सः विश्वावसुर्नाम कश्चिद्गन्धर्वः स्वाद्विमानान्न्यपतत्तां को नानुमन्ये-तेत्युत्तरेणान्वयः॥ १७॥ ❀ ❀ पुनः कथम्भूतां प्रार्थयन्तीं पतिमिति शेषः। ललनाललामं ललनानां ललामं योषितां भूषण-भूतां श्रेष्ठामित्यर्थः। असेवितौ श्रियो लक्ष्म्याश्चरणौ यैस्तैरदृष्टां द्रष्टुमशक्यां मनोर्वत्सां पुत्रीम्। उत्तानपदः तव पुत्रस्य भगिनीं स्वयमेव प्राप्तां बुधः कुशलः को नाम नानुमन्येत नाङ्गीकुर्यात्॥ १८॥ ❀ ❀ अत उक्तहेतुभ्यः मे मम तेजः वीर्यं याव-द्बिभृयात्तावता समयेन कालेन साध्वीमिमां भजिष्ये स्वीकरिष्ये अपत्यजननावधि स्वीकरिष्य इत्यर्थः। अथो अनन्तरं पारमहंस्ये परमहंसाश्रमे मुख्यान् प्राधान्येनोपादेयान् शुक्लेन भगवता प्रोक्तानविहिंस्रान् हिंसारहितान् सात्त्विकान् धर्मान् विवेकविमोका-दीन् बहुमन्ये अनुष्ठास्यामि अपत्योत्पत्त्यनन्तरं निवृत्तिधर्मनिष्ठोऽहमिमां त्यक्ष्यामीति भावः॥ १९॥ ❀ ❀ अयं भाषाबन्धो न केवलं मयैव कृतः किन्तु समस्तजगदुदयविभवलयलीलेन भगवतैव निर्दिष्ट इत्याह। यत इति। एवं देवतिर्यङ्मनुष्यस्था-वरादिभेदेन विचित्रं विश्वं यतो भगवतः अभवदुदपद्यत यत इति हेतौ पञ्चमी हेतुत्वस्य निमित्तोपादानसाधारणत्वात्तथाच यतो

निमित्तभूताद्रुपादानभूताच्चेत्यर्थः। यत्र यस्मिन् कारणभूते भगवति संस्थास्यते संहारं यास्यति यत्र यस्मिन्नन्तः प्रविश्य प्रशासनेन धारके भगवति अवतिष्ठते प्रशासितव्यत्वेन धार्यत्वेनावतिष्ठते तिष्ठति स एव प्रजापतीनां ब्रह्मादीनामपि पतिरनन्तः "सत्यं ज्ञानमनन्तम्" इत्युक्तलक्षणो भगवान् परं केवलं प्रमाणमस्मदुक्तभाषावत्त्वे प्रमाणमित्यर्थः। तथैव हि भगवताभिहितं समाहितं ते हृदयमित्यारभ्येति भावः॥ २०॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

संतानलक्षणस्त्रीणां मुख्यकामः सविधिना स्यात्तादृशो भूयादिति राज्ञोऽभिप्रायं जानन्निव कर्दमो नियुङ्क्ते। काम इति। यः कामः समाम्नायविधौ वेदवाक्ये "दशास्यां पुत्रानाधेहि पतिमेकादशं कृधि" इति प्रतीतो व्याख्यातो हे नरदेव! स कामस्ते तवास्याः पुत्र्याः स्यादित्यन्वयः। अनन्तरमपि भवता मत्पुत्री लालनीयेति न प्रार्थनीयमिति भावेनाह। क एवेति। स्वयौत्पत्तिक्या कान्त्यान्याः स्त्रियः क्षिपन्तीं श्रियं लक्ष्मीमिव स्थिताम्। अनादरहेतुरूपलावण्याद्यभावादित्यर्थः॥ १६॥ ❀ ❀ यथा पुरास्या नारदवाक्यादस्मद्गुणविषयाभिरुचिरभूत्तथास्माकमपि केनचित्पथिकेन श्रावितायामस्यां शृङ्गारादिगुणपङ्क्तिमाकर्ण्याकाङ्क्षा समुत्पन्नेति भावेन तल्लावण्यं स्तौति। यामित्यादिश्लोकद्वयेन विश्वावसुर्गन्धर्वः समीचीनो मोहो यस्मात्सौन्दर्यात्तत्तथा तेन संमोहेन तत्सौन्दर्येण विमूढं कृत्याकृत्यशून्यं तेन मूढचेताः। अनेन कर्दमस्य ऋषित्वमन्वर्थमिति दर्शितं यद्वा सम्मोहो नाम वस्तुनि स्नेहविशेषस्तेन॥ १७॥ ❀ ❀ प्रार्थयन्तीमित्यादीनि पञ्च विशेषणानि स्वीकारे कारणानि ललनानां विलासिनीनां स्त्रीणां ललनातिलकभूतां न सेवितौ श्रियो लक्ष्म्याश्चरणौ यैस्ते तथा तैः पुरुषैरदृष्टामित्यनेन दृष्टिविषयीकारयोग्यतापि न किं पुनः स्वीकार इति सूचयति। मनोः सुतामिति। कुलमुत्तपद उत्तानपादस्य स्वसारं भगिनीमिति भ्रातृमतीत्वं कोऽप्यस्थाने जातोऽपि बुधः स्यादभिजात इति अनेनात्मनो योग्यतातिशयं ध्वनयति॥ १८॥ ❀ किमनुलापेनोक्तं सर्वं सत्यं प्रत्यक्षं च परं किं क्रियते इति तत्राह। अत इति। यत एवंविधगुणा अत इति समयेन कालेन कालं च वक्ति। यावदिति। इयं तव पुत्री यावद्यदा मे आत्मनः शरीरस्य भुक्तान्नविकारकृतरेतोलक्षणं तेजो बिभृयाद्बिभर्ति अहमपि तावदेव बिभर्मीति शेषः ततः परं किमत्राह। अत इति अतोऽत्रापत्योत्पत्त्यनन्तरं पारमहंस्यमुख्यान् परमहंससम्बन्धिनोऽत एव मुख्यान् शुक्लेन नित्यशुद्धेन हरिणोपदिष्टानविहिंस्रान् पश्वाद्यालम्भनविधुरान् यमान् बहु मन्ये अनुतिष्ठामि सम्प्राप्स्यामीत्यर्थः॥ १९॥ ❀ ❀ अस्मिन्नर्थे हरिरेवावयोः साक्षीत्याह। यत इति येन संस्थाप्यते स्वसेतौ निधाय रक्ष्यते प्रलये यत्र यस्योदरे स च प्रमाणं साक्षी अनन्त इति साक्षिणः कालत्रयेऽप्यवस्थानमाह॥ २०॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

कामः स भूयादित्यादित्रयस्यायमर्थः तादृशीयं मां तपस्विनमपि प्रार्थयते। तत एनां शुद्धभक्तां कथं त्यजेयमिति वक्ष्यते च पितृभ्यां प्रस्थित इत्यादिभिः श्रियं जगल्लक्ष्मीम्॥ १६॥ ❀ ❀ यामित्यादि युग्मकम्। उभयोरपि कामादूषितचित्तत्वेन सर्वैः प्रतीयमानत्वात् न लज्जाकरं प्रियव्रतस्य तदा विरज्य गतत्वात् उत्तपद इत्युक्तम्॥ १७—१८॥ ❀ ❀ आत्मनः परमात्मनः कपिलाख्यं तेजो मे मत्तो यावद्बिभृयात्॥ १९—२०॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

अस्याः कामो भूयात् भवतु सम्यगाम्नायोक्तविवाहविधौ प्रतीतः 'गृभ्णामि ते सौभगत्वाय हस्तं मया पत्या जरदष्टिर्भवेथा इत्यादिमन्त्रः प्रसिद्धः श्रियं भूषणशोभाम्॥ १६॥ ❀ ❀ क्षिपतीमिव श्रियमिति व्यतिरेकालङ्कारेण तस्याः सौन्दर्यसाद्गुण्यादिकं निरुपममुक्त्वा स्वाभाविकं प्रभावमप्याह। यामिति। कणद्भ्यामङ्घ्रिभ्यां शोभा यस्यास्तां विमानात् नितरां भूमितले अपतत् विलोक्य सम्मोहेति। तत्रापि सम्यगचेतनो मृतक इव भूत्वेति भावपूर्वकतदवलोकनमहापराधफलं सद्यः प्रापेत्यर्थः। ननु विलोक्येति क्त्वाप्रत्ययोक्तेर्विश्वावसुना सा दृष्टैवेति॥ १७॥ ❀ ❀ तत्र नहि नहीत्याह। असेवितश्रीचरणैर्जनैरदृष्टां मदभीष्टदेवश्रीमन्नारायणकान्तायाश्चरणौ मयैव सेवितावतो ममैव सा दृश्या भवेन्नान्येषां केषामपीति भावः। तेन चाकाशचारिणा तस्याः कान्तिरेव विश्वावसुना विलोकिता न तु सेत्यायातं आभिजात्येऽप्युत्कर्षमाह। मनोस्तव वत्सां वात्सल्यपात्रीं कन्याम्। उत्तपदः उत्तानपादस्य प्रियव्रतस्य तदा विरज्य गतत्वान्नोल्लेखः। तत्राप्यभियातां स्वयं प्राप्ताम्॥ १८॥ ❀ ❀ समयेनेति यावदपत्योत्पत्तिस्तावद्गार्हस्थ्यं ततः परं सन्न्यास इति भाषाबन्धमयः समयस्तेन। यद्वा यावत् ममात्मनो देहाच्च्युतं तेजो बिभृयात् तावद्भजिष्ये तत्रापि समयेन मम ममात्मनो मत्प्रियेष्टदेवस्य तेजः कपिलदेवाख्यमिति वस्त्वर्थश्च ज्ञेयः। अतोऽनन्तरं पारमहंस्येषु मुख्यान् पारमहंस्यान् ज्ञानादपि मुख्यान् निष्परिग्रहभक्तिरूपान् शुक्लेन विष्णुना साक्षात् प्रकर्षेणोक्तान् अविहिंस्रान् हिंसारहितान् बहु यथा स्यादेवमनुष्ठेयान्मन्ये॥ १९॥ ❀ ❀ अत्रार्थे प्रमाणं तव मम च स्मृत्यारूढो भगवानेवेत्याह। यत इति। यद्वा ननु तव पितुः प्रजापतेराज्ञा सृष्टावेव न वैराग्ये तत्राह। यत इति। संस्थास्यते लयं यास्यति वावेत्यवार्थे प्रजापतीनां मत्पित्रादीनामपि पतिरतः स एव परं प्रमाणं तस्याज्ञैव मया पालनीया न तु पितुरेवेति भावः॥ २०॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

समाम्नायविधौ 'गृभ्णामि ते सौभगत्वाय हस्तमि'त्यादिवेदविधौ यः कामः प्रतीतः स भूयात् भवेत् श्रियमन्यकान्तिम् ॥ १६ ॥ ❀ ❀ विश्वावसुः गन्धर्वः कणद्भ्यां नूपुरध्वनिमद्भ्यामङ्घ्रिभ्यां शोभा यस्यास्ताम्। ललनाललामं स्त्रीरत्नम्। न सेवितौ श्रीचरणौ श्रीयुक्तचरणौ भगवत्पादपद्मे यैस्तैरदृष्टाम्। यस्येयं भार्या स भगवतोऽपि पुत्रीभूतस्यानुग्रहभाजनो भविष्यति सेयं भगवत्प्रसादलभ्येति भावः। अभिप्रयातां स्वयमागताम्॥ १७ ॥ १८ ॥ ❀ ❀ यतः इयं भगवत्प्रसादलभ्या अतो हेतोः साध्वीमिमां भजिष्ये स्वीकरोमि एवंभूतादपि कलत्रस्वीकारात्तत्त्यागपूर्वको भगवद्भजनमार्गस्वीकारः श्रेष्ठः इति द्योतयितुमाह। समयेनेति। समयमेवाह यावदियमात्मनो मे तेजो गर्भं बिभृयात् तावदेव भजिष्ये अतः परं तु शुक्लेन विष्णुना प्रोक्तान् पारमहंस्यमुख्यान् धर्मान् विष्णुध्यानतत्साधनभूततच्छ्रवणकीर्तनपञ्चकालयजनादिरूपान् तत्प्रापकान् बहु यथा भवति तथानुष्ठेयान् मन्ये। तथोक्तं श्रीमुखेन।

सर्वगुह्यतमं भूयः शृणु मे परमं वचः। इष्टोसि मे दृढमितिस्ततो वक्ष्यामि ते हितम्॥
मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु। मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे॥
सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज। अहं त्वां सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः॥

ननु प्रजासृजेति प्रजापत्याज्ञा जीवनपर्यन्तं पालनीया किं शुक्लप्रोक्तधर्मानुष्ठानेनेत्यत्राह यत इति ॥ २० ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

केवलमदृष्टजनकः शोभाकरो न भवतीति शोभाऽपि यथासुखं भवत्वित्याह—काम इति। स एव विधिः कामो भूयात् कामितप्रकारेण भवत्वित्यर्थः। तत्र हेतुः—नरदेवेति। राज्ञां हि न ब्राह्मणानामिव विवाहः शोभारहितः परं स न सर्वात्मना लौकिकः कर्तव्यः, किन्तु समाम्नायविधौ प्रतीतः कर्तव्यः। समाम्नायो नामाभ्यासः। यथा पूर्वं सर्वैः कृतः तादृशविधौ प्रतीतः। समाम्नायो वेद इति केचित्। ननु तदा कन्याया महत्त्वप्रतीतेः मात्सर्यादग्रहणं स्यादित्याशङ्क्याऽह—क एवेति। कस्ते तनयां नाद्रियेत। एवेत्यनादरे। तत्र हेतुः—स्वया असाधारण्या कान्त्यैव श्रियमिव लक्ष्मीं क्षिपतीम्। अस्यापि भगवच्छक्तित्वात् तथा कथनं न दोषाय। लक्ष्मीं क्षिपतीमिवेति भक्तिरूपताऽप्यस्याः सूचिता॥ १६ ॥ ❀ ❀ तस्याः कीर्तिमाह—यां हर्म्यपृष्ठ इति। विश्वावसुर्गन्धर्वो यां देवहूतिं हर्म्यपृष्ठे क्रीडन्तीं कन्दुकेन विह्वले अक्षिणी यस्याः। अप्सरसां सान्निध्येऽपि शोभया गृहीतचित्तः उपरि गच्छन् विमानात् तस्याः पुरतः पतित इति नारदादिवाक्यैर्ज्ञायते। हर्म्यपृष्ठेन व्यवधानम्। क्वणदङ्घ्रिशोभामिति उद्दीपनादयो निरूपिताः। कन्दुकविह्वलाक्षीमिति चाञ्चल्यम्, मुग्धभावश्च निरूपितः। सम्यक् मोहेन विमूढं चेतो यस्य। गन्धर्वत्वान्न दोषः॥ १७ ॥ ❀ ❀ तस्याः श्रीत्वं वर्णयति—तां प्रार्थयन्तीमिति। प्रथमतः प्रार्थयन्तीं स्वयमेव चाऽभियातां बुधः सन् को वा नाभिमन्येत। प्रार्थयन्ती सर्वथा ग्राह्या, या काचित्। तत्रापि 'स्त्रीरत्नं दुष्कुलादपि' इति न्यायेनाऽपि सा ग्राह्येत्याह—ललनाललामामिति। ललना स्त्री, तासां मध्ये ललामा श्रेष्ठा। भगवत्प्रसादरूपत्वाच्च सर्वथा ग्राह्येत्याह—न सेवितौ श्रीयुक्तौ भगवच्चरणौ यैः, तैरदृष्टाम्। ते तां द्रष्टुमपि न शक्नुवन्ति, अत इयं भगवत्प्रसादरूपा। मनुर्धर्मरूपः। स चेत्फलं दोग्धि, तदेयं वत्सा प्रिया कन्येत्यर्थः। उच्चपदः स्वसारमिति। भ्रातृमती, प्रसिद्धकन्या च। को वा सर्वशास्त्रार्थवेत्ता न मन्येत। एतादृशी स्त्री ब्रह्मविद्याया अप्यधिकेति। आभिमुख्येन यातेत्येतादृश्याः परित्यागे दोषश्रवणात्॥ १८ ॥ ❀ ❀ परमेको दोषोऽस्ति, तं चेत् स्वीकुर्यात्तदा भजिष्य इत्याह—अतो भजिष्य इति। यस्मादेषा सर्वोत्कृष्टा, अतो भजिष्ये। परं समयेन, कालनियमेन। ननु प्रथमत एव किमित्येवं निर्बन्धः क्रियते यदैव वैराग्यम्, तदैव परं त्यक्तव्या। तत्राऽऽह—साध्वीमिति। एषा हि पतिव्रता। 'मृते म्रियेत या नारी सा स्त्री ज्ञेया पतिव्रता' इति मरणपर्यन्तं तस्या धर्मरक्षार्थं संग्राह्या स्यात्, अन्यथा शरणागताया धर्मो नश्येत्। अतः पूर्वमेव पणबन्धे परिग्रहसमये तया तथाव्रतं न गृहीतं स्यात्। समयमाह—यावत्तेजो बिभृयादात्मनो म इति। मे तेजो बीजात्मकम्, ब्रह्मत्वात्। तावतैव तस्याः कृतार्थत्वायाऽऽह—आत्मन इति। अहमात्मा तस्या अपि आत्मतेजश्चेद्धृतं तदैव पातिव्रत्यं सिद्धम्, पतिः स्वस्मिन्नेव स्थित इति। तदनन्तरं पारमहंस्यधर्मानेव भजिष्य इत्याह—अत इति। पारमहंस्ये आश्रमे मुख्यान्। प्रमाणमाह—शुक्लप्रोक्तानिति। शुक्लनारायणेन प्रोक्तान् तानेव बहु मन्ये। तेषां धर्माणां प्रमेयतोऽप्युत्कर्षमाह अविहिंस्रानिति। गार्हस्थ्ये यज्ञादयो हिंस्राः॥ १९ ॥ ❀ ❀ ननु 'यावज्जीवमग्निहोत्रं जुहुयात्' इति श्रुतेः, । 'इत एव ब्रह्मचर्यादेव प्रव्रजेत्' इति स्मृतेश्च गार्हस्थ्यानन्तरं न प्रव्राज इति चेत्तत्राऽऽह—यतोऽभवदिति। अस्मिन्नर्थे एष भगवानेव प्रमाणम्। सर्वथाऽऽदरणीयो यः स प्रमाणमिहोच्यते। तत्संबन्धात्कृतिस्तस्य प्रमाणं वाक्यमेव च॥ वेदानां प्रामाण्यं भगवद्वाक्यत्वात्। स ह्यनन्तः, अनन्तमूर्तिः, देशाद्यपरिच्छिन्नश्च। स हि तत्तदधिकारानुसारेण बहुधा शास्त्रार्थमाह। भक्तेभ्यश्च पृथक् पृथगाह। अतो यन्मां प्रत्याह विशेषाकारेण, तदेव प्रमाणम्; विशेषो बलवानिति। वेदात्स्वतन्त्रादपि भगवान् महानिति वक्तुं जगत्कर्तृत्वमाह—यतो भगवतः सकाशादिदं विश्वमभवदुत्पन्नम्। विचित्रमित्यलौकिककर्तृत्वं तस्य बोधितम्। यत

इति कारणमविकृतम्। चिन्तामण्यादेः सकाशादुत्पादितानां घटादीनां न समवायादि किञ्चिदपि कारणमन्यद् दृश्यते। तथा यावदपेक्षितकारणानि भगवानेव, नान्यदित्यव्ययनिर्देशः। यत्रैव संस्थाप्यते लीनं भवति, यत्र च वाऽवतिष्ठते स्थितं भवति। एककारणत्वं गुणानां तदभिमानिनश्च सम्भवतीति त्रितयकीर्तनम्। नियामकत्वं चाऽऽह—प्रजापतीनां पतिरिति। तत्राप्ययं, इदानीमपि निकटे भासते; अनेनोल्लङ्घनमपि न शक्यमित्युक्तम्। अत एव वेदाद्यपेक्षयापि परं प्रमाणम्। भगवानित्यविकृतं ब्रूते इति। अनन्त इति प्रामाण्ये हेतुः, अन्यस्यानादरणीयत्वात्॥ २०॥

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

यत इत्यत्र। एककारणत्वमिति। उत्पत्त्याद्यन्यतमं प्रति कारणत्वम्॥ २०॥

### श्रीगिरिधरकृता बालप्रबोधिनी

त्वमप्यादरणीयोऽसीति सूचयन्सम्बोधयति—नरदेवेति। अस्यास्ते पुत्र्याः कामः कामितः समाम्नायविधौ प्रतीतः "गृभ्णामि ते सौभगत्वाय हस्तं मया पत्या—" इत्यादिमन्त्रप्रसिद्धः स विवाहो भूयात् भवतु। एवं तदुक्तमङ्गीकृत्य देवहूतिं स्तौति—क इति सार्द्धाभ्याम्। स्वयैवाङ्गकान्त्या शोभया श्रियं भूषणादिकृतशोभां क्षिपतीं तिरस्कुर्वतीमिव स्थितां ते तव सार्वभौमस्य तनयां क एव नाद्रियेत? आद्रियेतैवेत्यर्थः॥ १६॥ ❀ ❀ किञ्च क्वणतोर्नूपुराभ्यां शब्दं कुर्वतोरङ्घ्र्योः पादयोः शोभा यस्यास्तां हर्म्यपृष्ठे प्रासादोपरि विक्रीडतीं कन्दुके सँल्लग्ने विह्वले चञ्चले अक्षिणी यस्यास्तां यां विलोक्य सम्मोहेन विमूढं व्याकुलं चेतश्चित्तं यस्य स विश्वावसुर्गन्धर्वः स्वाद्विमानान्न्यपतत् तां को नानुमन्येतेत्युत्तरेणान्वयः॥ १७॥ ❀ ❀ ललनानां योषितां ललामं भूषणभूताम्। असेवितौ श्रियो लक्ष्म्याश्चरणौ यैः यद्वा असेवितौ श्रीमन्तौ भगवच्चरणौ यैस्तैरदृष्टां द्रष्टुमप्यशक्यां मनोस्तव वत्सां पुत्रीं उत्तपदः उत्तानपदः स्वसारं भगिनीं स्वयमेवाभियातां प्राप्तां पत्यर्थं प्रार्थयन्तीं बुधः स्वार्थकुशलः को नानुमन्येत नाङ्गीकुर्यात्॥ १८॥ ❀ ❀ यस्मादेवमतः साध्वीं मम कार्यसाधनयोग्यामिमां भजिष्ये परन्तु समयेन कालनियमेन। कोऽसौ कालनियम इत्यत आह—मे ममात्मनो देहात्तेजो वीर्यं तावद्बिभृयात्तावदिति, अपत्यजननावधि स्वीकरिष्ये इत्यर्थः। अतोऽनन्तरं पारमहंस्ये आश्रमे मुख्यान् प्राधान्येनोपादेयान् शुक्लेन भगवता प्रोक्तान् अविहिंस्रान् हिंसाशून्यान् श्रवणकीर्तनध्यानादीन् धर्मान् बहु मन्ये अनुष्ठास्यामि ध्यानादिनिष्ठ एनां त्यक्ष्यामीत्याशयः॥ १९॥ ❀ ❀ ननु तव पितुः प्रजापतेराज्ञा तु सृष्टावेव न संन्यासे इत्याशङ्क्याह—यत इति। मह्यं मम तु एष भगवानेव परं केवलं प्रमाणं तेन तु त्वं च सम्यगनुष्ठाय निदेशं मे इत्यादिना ऋणत्रयापाकरणानन्तरं सन्न्यास एवाज्ञप्तः अतस्तमेव करिष्ये इत्यर्थः। ननु तदाज्ञया ब्रह्माज्ञोल्लङ्घनं कथं विपरीतमेव कुतो न स्यादित्याशङ्क्याह—प्रजापतीनां ब्रह्मादीनामपि पतिरिति। तत्र हेतुमाह—यत इति, हेतौ पञ्चमी हेतुत्वस्य निमित्तोपादानसाधारणत्वात्। यतो निमित्तभूतादुपादानभूताच्चेदं दृश्यमानं देवतिर्यङ्मनुष्यस्थावरादिभेदेन विचित्रं विश्वमभवत् उदपद्यत, यत्र यस्मिंश्च कारणभूते संस्थास्यते प्रलयं यास्यति, यत्र च वाव यस्मिन्नेव च अवतिष्ठते इदानीमपि वर्तते। कथमेवं सर्वरूपेण भवितुं समर्थ इत्यत आह—भगवानिति। तथापि कालान्तरे तस्यापि विनाशमाशङ्क्याह—अनन्त इति॥ २०॥

### हिन्दी अनुवाद

राजन्! वेदोक्त विवाह-विधिमें प्रसिद्ध जो 'गृभ्णामि ते' इत्यादि मन्त्रोंमें बताया हुआ काम (संतानोत्पादन-रूप मनोरथ) है, वह आपकी इस कन्याके साथ हमारा सम्बन्ध होनेसे सफल होगा। भला, जो अपनी अङ्गकान्तिसे आभूषणादिकी शोभाको भी तिरस्कृत कर रही है, आपकी उस कन्याका कौन आदर न करेगा?॥ १६॥ ❀ ❀ एक बार यह अपने महलकी छतपर गेंद खेल रही थी। गेंदके पीछे इधर-उधर दौड़नेके कारण इसके नेत्र चञ्चल हो रहे थे तथा पैरोंके पायजेब मधुर झनकार करते जाते थे। उस समय इसे देखकर विश्वावसु गन्धर्व मोहवश अचेत होकर अपने विमानसे गिर पड़ा था॥ १७॥ ❀ ❀ वही इस समय यहाँ स्वयं आकर प्रार्थना कर रही है; ऐसी अवस्थामें कौन समझदार पुरुष इसे स्वीकार न करेगा? यह तो साक्षात् आप महाराज श्रीस्वायम्भुवमनुकी दुलारी कन्या और उत्तानपादकी प्यारी बहिन है तथा यह रमणियोंमें रत्नके समान है। जिन लोगोंने कभी श्रीलक्ष्मीजीके चरणोंकी उपासना नहीं की है, उन्हें तो इसका दर्शन भी नहीं हो सकता॥ १८॥ ❀ ❀ अतः मैं आपकी इस साध्वी कन्याको अवश्य स्वीकार करूँगा, किन्तु एक शर्तके साथ, जबतक इसके संतान न हो जायगी, तबतक मैं गृहस्थधर्मानुसार इसके साथ रहूँगा। उसके बाद भगवान्के बताये हुए संन्यास-प्रधान हिंसारहित शम-दमादि धर्मोंको ही अधिक महत्त्व दूँगा॥ १९॥ ❀ ❀ जिनसे इस विचित्र जगत्की उत्पत्ति हुई है, जिनमें यह लीन हो जाता है और जिनके आश्रयसे यह स्थित है—मुझे तो वे प्रजापतियोंके भी पति भगवान् श्रीअनन्त ही सबसे अधिक मान्य हैं॥ २०॥

मैत्रेय उवाच

स उग्रधन्वन्नियदेवाबभाषे आसीच्च तूष्णीमरविन्दनाभम्।
धियोपगृह्णन् स्मितशोभितेन मुखेन चेतो लुलुभे देवहूत्याः ॥ २१ ॥
सोऽनु ज्ञात्वा व्यवसितं महिष्या दुहितुः स्फुटम्। तस्मै गुणगणाढ्याय ददौ तुल्यां प्रहर्षितः ॥ २२ ॥
शतरूपा महाराज्ञी पारिबर्हान्महाधनान्। दम्पत्योः पर्यदात्प्रीत्या भूषावासः परिच्छदान् ॥ २३ ॥
प्रत्तां दुहितरं सम्राट् सदृक्षाय गतव्यथः। उपगुह्य च बाहुभ्यामौत्कण्ठ्योन्मथिताशयः ॥ २४ ॥
अशक्नुवंस्तद्विरहं मुञ्चन् बाष्पकलां मुहुः। आसिञ्चदम्ब वत्सेति नेत्रोदैर्दुहितुः शिखाः ॥ २५ ॥

श्रीधरस्वामिविरचिता भावार्थदीपिका

हे उग्रधन्वन् विदुर लुलुभे मुनेर्मुखेन प्रलोभ्यते स्म यद्वा मुखेन प्रलोभितवान् ॥ २१ ॥ ॐ ॐ स मनुः अन्वनन्तरं महिष्याश्च व्यवसितं निश्चयं ज्ञात्वा ॥ २२ ॥ ॐ ॐ पारिबर्हान्विवाहकाले प्रदेयान् भूषाः भूषणानि वासांसि परिच्छदान्गृहोपकरणानि च ॥ २३ ॥ ॐ ॐ प्रत्तां दत्ताम्। सदृक्षाय सदृशाय गता व्यथा चिंता यस्य औत्कण्ठ्येनोन्मथितः क्षुभित आशयो यस्य ॥ २४ ॥ ॐ ॐ तस्या विरहं सोढुं हे अंब हे वत्से इति ब्रुवन्। संधिरार्षः शिखाः केशानासिंचत् ॥ २५ ॥ २६ ॥

श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

हे उग्रधन्वन्निति। यथा त्वं वीरो युद्धान्न निवर्त्तसे तथायमपि भगवद्धर्मादित्यभिप्रायः। मुखेन कर्त्रा। मुखदर्शनलोभितत्वान्मुखेनेत्युक्तिः। मुखस्य जडत्वेन साक्षात्कर्तृत्वं न युक्तं किं तु करणत्वमित्याह—यद्वेति। अरविंदनाभानुभवजातप्रसादरूपेण स्मितेन यच्छोभितं शोभाविशेषं प्राप्तं तेन मुखेन लुलुभेऽयमेव महाभागवतो मद्योग्यः पतिरिति लोभं चकारेति भावः। सस्मितेक्षणभाषणादियुतमुखत्वं कन्याकर्षणमंत्रोऽयं पत्युरन्यथेदानीमेवांगारलिप्तमिवोत्तरत्र किमुत वैमुख्यादिकं स्यादित्यतस्तादृशावसरे सस्मितेनैव भाव्यम्। यद्वा। देवहूत्या मुखेन स्मितशोभितेन चेतो लुलुभे। अर्थात्कर्दमस्य चेतस्तस्यां साकांक्षं बभूव। 'लुभ आकांक्षायां' धातुः, तेन च हंत हंतातिविरक्ते कन्यार्पितेति मनुशतरूपयोरनुतापो मा भूदिति व्यंजितम् ॥ २१ ॥ ॐ ॐ अनु अनंतरम्। दुहितुर्देवहूतेरयं मद्योग्यः पतिरित्येवंरूपं महिष्यास्तन्मातुरवश्यमस्मै तपस्विने दानेन मत्पुत्र्याः सुखं भावीत्ययमेवास्या अनुरूप इत्येवंरूपं च निश्चयम्। गुणाः शीलरूपादयस्तेषां गणेन परिवारेण युताय। तुल्यां गुणगणाढ्याम्। समयोगेन प्रहर्षितो जातानन्दः ॥ २२ ॥ ॐ ॐ "पारिबर्हं राजयोग्यद्रव्ये देयपरिच्छदे। वरवध्वोर्विवाहादौ सर्वतो हिंसितेऽपि च" इति निरुक्तिः। "सामग्र्यां परितश्छन्ने गृहोपकरणे गृहे। परिच्छदपरिच्छादौ मेघसंघातवस्त्रयोः" इति च ॥ २३ ॥ ॐ ॐ औत्कण्ठ्येन प्रेमविशेषेण। सदृशाय गुणशीलादिभिस्तुल्याय ॥ २४ ॥ ॐ ॐ "अम्बा मातरि पुत्र्यां च काशीराजहिमालयोः। रक्षितायां सुतायां च" इति निरुक्तिः। सोढुमिति शेषः। तद्विरहं सुतावियोगम् ॥ २५ ॥ २६ ॥

श्रीराधारमणदासगोस्वामिविरचिता दीपिनीव्याख्या

पूर्वार्थे करणभूते मुखे कर्तृत्वमारोपितं तच्च मुख्यार्थसम्भवेऽनुपपन्नमतो यद्वेति तथाच कर्दमस्य कर्तृत्वान्नारोपः ॥ २१ ॥ ॐ ॐ तुल्यां तादृशगुणगणाढ्याम् ॥ २२—२३ ॥ ॐ ॐ प्रत्तामिति युग्मकम्। सोढुमिति शेषः ॥ २४–२५ ॥

श्रीमद्वीरराघवव्याख्या

कर्दमोक्तिमुपसंहरति मैत्रेयः। स इति। हे उग्रधन्वन्! विदुर! स कर्दम इयदेव एतावदेव आबभाषे उक्तवान् अनन्तरमरविन्दनाभं भगवन्तं धियोपगृह्णन् चिन्तयन् तूष्णीं मौनेनासीत्। स्थितवान् स्मितेन मन्दहासेन शोभितं यन्मुखं तेन देवहूत्याश्चित्तं लुलुभे मोहितवान् ॥ २१ ॥ ॐ ॐ अनु अनन्तरं स मनुः महिष्या भार्यायाः दुहितुश्च व्यवसितं निश्चितं स्फुटं व्यक्तं यथा तथा ज्ञात्वा गुणगणैराढ्याय युक्ताय तस्मै कर्दमाय तुल्यां वयःशीलादिभिस्तुल्यां कन्यां प्रहर्षितः ददौ दत्तवान्। प्रधर्ष इति पाठे गुणविवश इत्यर्थः ॥ २२ ॥ ॐ ॐ महाराजस्य मनोः स्त्री शतरूपा पारिबर्हानुपायनरूपान् भूषादीन् वासांसि

४. प्राचीने पाठे 'मैत्रेय उवाच' नास्ति। ५. प्रा० पा०—धन्वन्नृप आबभा०। ६. प्रा० पा०—पारिहार्यं महाधनम्। ७. प्रा० पा०—पिता। ८. आसिञ्चन्नित्र वाऽम्बेति नेत्रो.।

वस्त्राणि परिच्छदाः क्रीडोपकरणानि दम्पत्योर्दुहितृजामात्रोः पर्यदात् ॥ २३ ॥ ❀ ❀ सदृक्षाय सदृशाय प्रत्तां दत्तां दुहितरं सम्राट् मनुः गतव्यथः निरस्तदुहितृपत्यन्वेषणदुःखबाहुभ्यामुपगुह्यालिङ्गय औत्कण्ठ्येन पुत्र्यां प्रेमातिशयेन उन्मथितः क्षुभितः आशयोन्तःकरणं यस्य सः ॥ २४ ॥ ❀ ❀ अत एव तस्य दुहितुर्विरहं विश्लेषमशक्नुवन् सोढुमिति शेषः, अत एव मुहुः वाष्पकलाः नेत्राम्बुकणान् मुञ्चन् हे अम्ब ! हे वत्सेति संबोधयन्नेत्रजलैर्दुहितुः शिखामासिञ्चन् ॥ २५ ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

मैत्रेयो विदुरं प्रति कर्दमस्य मितभाषित्वगुणं वक्ति । स उग्रधन्वन्निति । इयदेव एतावदेव स्वमनीषितं चेद्भूदतो हरिणा किमिति हरावनादरबुद्धिर्नाभूत्तत्प्रसादादेवेदं समस्तं कार्यजातमभूदिति सततं श्रीनारायणस्मृतिमानिति भावेन उक्तमरविन्दनाभमिति नवोद्वाहयोग्यायाः कन्यायाः प्रथमः कर्षणमन्त्रः पत्युः स्मितशोभिमुखमन्यथेदानीमङ्गारलिप्तमिवोत्तरत्र किमुत वैमुख्यादिकं स्यादित्यत इदमौत्पत्तिकं न नैमित्तिकमिति भावेनायमेव पतिः स्यान्नान्य इति स्मितशोभिना मुखेन देवहूत्या मन आकर्षितमित्याह । स्मितशोभितेनेति । लुभ गार्ध्ये गृधु अभिकाङ्क्षायामित्याकाङ्क्षणमप्याकर्षणविशेषः ॥ २१ ॥ ❀ ❀ महिषीदुहित्रोः पूर्वसम्वाद इदानीमपि सन्नेतद्दर्शनेनान्यथाभूदिति विविदिषुरिव राजा तन्निश्चयज्ञानपूर्वकं कन्यामस्मा अदादित्याह । स इति । अन्वनन्तरम् ॥ २२ ॥ ❀ ❀ तत्र राज्ञा किमदाथीति तत्राह । शतरूपेति । पारिवर्हान् वरवध्वोर्दीयमानद्रव्याणि तानि लोकविलक्षणानि किन्नेत्याह । गृहेति ॥ २३ ॥ ❀ ❀ पुत्रीं दत्त्वा किञ्चित्कालमत्रैव तत्स्नेहादवात्सीत्किन्नेत्याह । प्रत्तेति । सदृक्षाय समानाय अनेन मनुः स्वकुमारीं राजकुमाराभावाच्छान्दसाय दत्तवानित्यपवादमपाकरोति ॥ २४ ॥ ❀ ❀ वाष्पकला अश्रुबिन्दून् नेत्रोदैर्नेत्रजलैः शिखाः केशभारान् ॥ २५ ॥ २६ ॥

## श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

अरविन्दनाभानुभवजातप्रसादरूपेण स्मितेन यत् शोभितं शोभाविशेषं प्राप्तं तेन मुखेन लुलुभे । अयमेव महाभागवतो मत्पतित्वयोग्य इति लोभं चकार ॥ २१—२३ ॥ ❀ ❀ प्रत्तामिति युग्मकम् ॥ २४—२५ ॥

## श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

हे उग्रधन्वन्निति । त्वं यथा वीरो युद्धान्न प्रत्यावर्तसे तथा सोऽपि स्वाभिमताद्भगवद्धर्मादिति भावः । ततश्च देवहूत्याः स्मितशोभितेन मुखेन चेतो लुलुभे अर्थात् कर्दमस्य चेतस्तस्यां लुब्धं बभूव तेन च हन्त हन्तातिविरक्ते कन्यार्पितेति मनुशतरूपयोरनुतापो नाभूदिति व्यञ्जितम् ॥ २१ ॥ ❀ ❀ स मनुः अनु अन्तरं दुहितुर्देवहूतेर्महिष्यास्तन्मातुश्च व्यवसितमभिप्रायम् ❀ ❀ पारिवर्हान् विवाहे प्रदेयान् महान्ति मूल्यानि येषांताननर्घ्यानित्यर्थः ॥ २३ ॥ ❀ ❀ प्रत्तां प्रदत्तां हे वत्से ! इति ब्रुवन् ॥ २४—२६ ॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

हे उग्रधन्वन् ! स मुनिः इयदेवाबभाषे ततोऽरविन्दनाभं धियोपगृह्णात् तूष्णीमासीत् तूष्णीमासीनश्च स्मितशोभितेन मुखेन देवहूत्याः चेतो लुलुभे प्रलोभितवान् ॥ २१ ॥ ❀ ❀ अनु अनन्तरं व्यवसितं निश्चितम् ॥ २२ ॥ ❀ ❀ दम्पत्योः वरवध्वोः प्रीत्या पारिवर्हान् विवाहे देयान् भूषा अलङ्काराणि च वासांसि च परिच्छदान् गृहोपकरणानि च परितः सर्वतः अदात् ॥ २३ ॥ ❀ ❀ सदृक्षायं सदृशाय हे अम्ब ! हे वत्से ! इति संबोधयन् सन्धिरार्षः, शिखाः केशान् आसिञ्चत् ॥ २४ ॥ २५ ॥

## श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

एतावदुक्त्वा, चेदङ्गीकरिष्यन्ति, तदा विवाहं कारयिष्यामीति निश्चित्य तूष्णीं स्थित इत्याह—स इति । उग्रधन्वन्निति संबोधनमक्षोभाय । स्त्रिया भावितायां अपि क्षोभयितृत्वात् । इयदेव एतावदेवाऽऽबभाषे । एतत्साधकमपि वक्तव्यं पक्षान्तरे वाऽन्यद्वक्तव्यमिति न तस्य हृदयमित्याह—आसीच्च तूष्णीमिति । पाक्षिकदोषस्य विद्यमानत्वात् तत्परिहारार्थमरविन्दनाभं धियोपगृह्णेत्युक्तम् । स हि कमलनाभः जगदेव भिन्नतया कर्तुं शक्तः, किमेतावन्मात्रे अशक्यमिति । तावतैव भगवता कश्चन उपायः कृत इत्याह—धिया उपगृह्णन्नेव । स्मितेन शोभितं यन्मुखम्, तेन देवहूत्याश्चेतो लुलुभे ॥ २१ ॥ ❀ ❀ न हि मायामोहितः वस्तुनि लुब्धो वा भाविगुणदोषान् पश्यति, अतो मनोः संदिग्धमपि मनः, भार्याया हृदयं समीचीनो दुहितुः पतिरिति, दुहितुश्च चित्तं ज्ञात्वा, निःसन्दिग्धं जातमिति तस्मै कन्यां दत्तवानित्याह—सोऽनुज्ञात्वेति । व्यवसायो निश्चयः, स्फुटमिति वचनादिभिः । अत एव

तस्मै ददौ । स्वस्याऽनिवारणे हेतुः—गुणगणाढ्यायेति । बाधकं च साधकं ज्ञातवानित्याह—तुल्यामिति । इयमपि मुक्ता भविष्यतीत्यर्थः । भगवताऽन्यथा तुल्या नोत्पादिता स्यात् । अत एव प्रहर्षितः ॥ २२ ॥ ❀ ❀ सङ्कल्प्याऽयं दत्तवान्, उत्सवं तु शतरूपा कृतवतीत्याह—शतरूपेति । सामर्थ्यम्—महाराज्ञीति । पारिबर्हान् विवाहसमये दानयोग्यान् । महाधनानमूल्यान् । न केवलं दुहितुः, किन्तु दम्पत्योः । न संकल्पेन, नापि दयया, किन्तु प्रीत्या भूषा अलङ्काराः कुण्डलादयः । वासांसि नानाविधानि । परिच्छदा उपकरणानि ॥ २३ ॥ ❀ ❀ कन्यां दत्वा गृहं गन्तुर्मनोः कृत्यमाह—प्रत्तामिति । दत्तापि दुःखदा कन्या विसदृशाय तदभावान्निश्चितो जात इत्याह—सदृक्षाय गतव्यथ इति । दत्त्वेति वक्तव्ये सिद्धत्वात्तदनुवादमकृत्वा, उपगूहेन ईप्सितत्वात् प्रत्तामिति द्वितीयैवोक्ता । शीघ्रगमने हेतुः—सम्राडिति चकाराद्वाक्यान्यपि तदानीन्तनानि योग्यानि सूचितानि । उपगृह्येति पाठे समीपे ग्रहणमात्रम् । उभयथापि शिरस एव ग्रहणम् । अतिस्नेहो द्विवचनेन ज्ञापितः । प्रेम्णा च विह्वलो जात इत्याह—औत्कण्ठ्येति । उन्मथितोऽत्यन्तं क्षुभित आशयो यस्य ॥ २४ ॥ ❀ ❀ गन्तुमप्यशक्तो जात इत्याह—अशक्नुवन्निति । सोढुमित्यर्थात् । स्वस्मिन् संबद्ध एव हि विरहः शक्यो वा भवति । अत एव बाष्पकलां मुञ्चन् । अन्तस्तापेन हि मुखतो बाष्पनिर्गमनम् । बाष्पगतः शोभायमानत्वात् कलात्वम् । मुहुरिति प्रतिस्मरणं विरहाधिक्यं द्योतयति । नेत्रे च जलं बहु निर्गतमित्याह—आसिञ्चन्निति । तस्या अपि रोदने[1] अम्ब वत्सेति संबोधनम् । मा रोदीरित्यादि वक्तुमशक्तो नेत्रजैर्जलैर्दुहितुः शिखामासिञ्चन् । मुनिवरं चाऽऽमन्त्र्य तेनैवाऽनुज्ञातः सहानुगः सभार्यश्च रथमारुह्य स्वपुरं प्रतस्थ इति श्लोकत्रयसंबन्धः । मुनिवरत्वादेव न विशेषतः समर्पणम् । स्वपुरं प्रति । नृप इति रक्षार्थं गमनमावश्यकं निरूपितम् ॥ २५ ॥ २६ ॥

एवविंशतिश्लोकात्पञ्चत्रिंशत्श्लोकावधि सुबोधिनीप्रकाशो न ॥

## श्रीगिरिधरकृता बालप्रबोधिनी

कर्दमोक्तिमुपसंहरति मैत्रेयः—स इति । यथा भगवत्स्मरणे तव शूरत्वं तथा तस्यापीति सूचयन् सम्बोधयति—उग्रधन्वन्निति । स कर्दम इयदेव एतावदेव आबभाषे उक्तवान् । ततश्च अरविन्दनाभं भगवन्तं धिया उपगृह्णन् चिन्तयन् तूष्णीं मौनेन आसीत् । स्मितेन मन्दहासेन शोभितं यन्मुखं तेन देवहूत्याश्चित्तं लुलुभे प्रलोभितवान् ॥ २१ ॥ ❀ ❀ अनु तदनन्तरं स मनुः महिष्याः स्वभार्याया अस्मै कन्या देयेति दुहितुः स्वकन्याया अयं मम पतिर्योग्य इति च व्यवसितं निश्चितं स्फुटं यथा भवति तथा ज्ञात्वा गुणगणैराढ्याय युक्ताय तस्मै कर्दमाय तुल्यां गुणगणयुक्तां कन्यां स्वयमपि प्रहर्षितः सन् ददौ । प्रधर्षित इति पाठे तु गुणगणविवश इत्यर्थः ॥ २२ ॥ ❀ ❀ महाराज्ञी शतरूपा महाधनानमूल्यान् पारिबर्हान् विवाहोचितदेयान् भूषा भूषणानि वासांसि परिच्छदान् गृहोपकरणानि पात्रादीनि दम्पत्योः दुहितृजामात्रोः प्रीत्या पर्यदात् ॥ २३ ॥ ❀ ❀ यावद्योग्यो वरो नोपलभ्यते तावन्महतां महान् क्लेशो भवतीति सूचयन्नाह—सम्राडिति । अतः सदृक्षाय सदृशाय दत्तत्वाद्गतव्यथः निरस्तदुहितृपत्यन्वेषणदुःखः तां प्रत्तां दत्तां दुहितरं बाहुभ्यामुपगुह्यालिङ्ग्य औत्कण्ठ्येन पुत्र्यां प्रेमातिशयेन उन्मथित आशयोऽन्तःकरणं यस्य सः ॥ २४ ॥ ❀ ❀ अत एव तस्या विरहं सोढुमिति शेषः । अशक्नुवन् अत एव हे अम्ब हे वत्से इति परस्परं सम्बोधयन् मुहुः बाष्पकलाः नेत्राम्बुकणान् मुञ्चन् नेत्रोदकैर्दुहितुः शिखा आसिञ्चत् । वत्सेति सन्धिरार्षः ॥ २५ ॥

## हिन्दी अनुवाद

श्रीमैत्रेयजी कहते हैं—प्रचण्ड धनुर्धर विदुर ! कर्दमजी केवल इतना ही कह सके, फिर वे हृदयमें भगवान् कमलनाभका ध्यान करते हुए मौन हो गये। उस समय उनके मन्द हास्ययुक्त मुखकमलको देखकर देवहूतिका चित्त लुभा गया ॥ २१ ॥ ❀ ❀ मनुजीने देखा कि इस सम्बन्धमें महारानी शतरूपा और राजकुमारीकी स्पष्ट अनुमति है, अतः उन्होंने अनेक गुणोंसे सम्पन्न कर्दमजीको उन्हींके समान गुणवती कन्याका प्रसन्नतापूर्वक दान कर दिया ॥ २२ ॥ ❀ ❀ महारानी शतरूपाने भी बेटी और दामादको बड़े प्रेमपूर्वक बहुत-से बहुमूल्य वस्त्र, आभूषण और गृहस्थोचित पात्रादि दहेजमें दिये ॥ २३ ॥ ❀ ❀ इस प्रकार सुयोग्य वरको अपनी कन्या देकर महाराज मनु निश्चिन्त हो गये। चलती बार उसका वियोग न सह सकनेके कारण उन्होंने उत्कण्ठावश विह्वलचित्त होकर उसे अपनी छातीसे चिपटा लिया और 'बेटी ! बेटी !' कह कर रोने लगे। उनकी आँखोंसे आँसुओंकी झड़ी लग गयी और उनसे उन्होंने देवहूतिके सिरके सारे बाल भिगो दिये ॥ २४-२५ ॥

---

1. बोधने क. नोदने च ।

आमन्त्र्य तं मुनिवरमनुज्ञातः सहानुगः । प्रतस्थे रथमारुह्य सभार्यः स्वपुरं नृपः ॥ २६ ॥
उभयोर्ऋषिकुल्यायाः सरस्वत्याः सुरोधसोः । ऋषीणामुपशान्तानां पश्यन्नाश्रमसम्पदः ॥ २७ ॥
तमायान्तमभिप्रेत्य ब्रह्मावर्तात्प्रजाः पतिम् । गीतसंस्तुतिवादित्रैः प्रत्युदीयुः प्रहर्षिताः ॥ २८ ॥
बर्हिष्मती नाम पुरी सर्वसम्पत्समन्विता । न्यपतन् यत्र रोमाणि यज्ञस्याङ्गं विधुन्वतः ॥ २९ ॥
कुशाः काशास्त एवासन् शश्वद्धरितवर्चसः । ऋषयो यैः पराभाव्य यज्ञघ्नान् यज्ञमीजिरे ॥ ३० ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

ऋषिकुलहितायाः उभयोः सुरोधसोः शोभनतटयोः ॥ २७ ॥ ❀ ❀ अभिप्रेत्य ज्ञात्वा ब्रह्मावर्तादेशात्प्रजाः पतिं प्रत्युज्जग्मुः ॥ २८ ॥ ❀ ❀ कोऽसौ ब्रह्मावर्त इत्यपेक्षायामाह । यत्र बर्हिष्मती नाम पुरीति । साऽपि कुत्र यत्र यज्ञस्य यज्ञवराहस्य रोमाणि न्यपतन्निति यत्रेति सर्वत्र संबध्यते ॥ २९ ॥ ❀ ❀ बर्हिष्मतीनामनिरुक्तिं ब्रुवन्प्रसंगादेशस्य श्रैष्ठ्यमाह द्वाभ्याम् । कुशाः काशाश्चासन् शश्वन्नित्यं हरितं वर्चो वर्णो येषाम् । यज्ञघ्नान् राक्षसादीन् पराभवं नीत्वा यज्ञं विष्णुम् ॥ ३० ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

आश्रमसंपदोऽग्निहोत्रादिसाधनस्रुक्स्रुवादिलक्षणा वेदध्वनिलक्षणा वा । "ऋचो यजूंषि सामानि सा हि श्रीरमृता सताम्" इत्यादिश्रुतेः ॥ २७ ॥ ❀ ❀ "सरस्वतीदृषद्वत्योर्देवनद्योर्यदंतरम् । तं देवनिर्मितं देशं ब्रह्मावर्त्तं प्रचक्षते" इत्यादि-पुराणात् । तं स्वायंभुवम् ॥ २८ ॥ ❀ ❀ सापि बर्हिष्मत्यपि ॥ २९ ॥ ❀ ❀ आदिनाऽसुरग्रहः । यैः कुशैः "अपहता असुरा रक्षांसि वेदिषदः" इति श्रुतेः ॥ ३० ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

आमन्त्र्येति युग्मकम् । अनुज्ञां प्रार्थयित्वा आश्रमसम्पद आश्रमसमृद्धीः ॥ २६—२८ ॥ ❀ ❀ यत्र ब्रह्मावर्त्ते सापि कुत्रेत्यपेक्षायां तन्नाम निर्वक्ति । यत्रेति ॥ २९ ॥ ❀ ❀ तानीति वक्तव्येऽपि तच्छब्दस्य विधेयपरामर्शकत्वात् त एवेति पुंस्त्वम् । त एव रोमरूपा एव ॥ ३० ॥

### श्रीमद्वीरराघवव्याख्या

मुनिवरं कर्दममामन्त्र्यानुज्ञाप्य तेनानुज्ञातः सभार्यो रथमारुह्य नृपो मनुः सहानुगः स्वपुरं प्रतस्थे गतवान् ॥ २६ ॥ ❀ ❀ गच्छन्तमनुवर्णयति द्वाभ्यां ऋषिकुल्यायाः ऋषिकुलहितायाः ऋषिकुलसहितायाः सरस्वत्याः उभयोः सुरोधसोः शोभन-तटयोः उपशान्तानां शमदमादिगुणसंपन्नानामृषीणामाश्रमेषु संपदः भगवदाराधनोपयुक्ततुलसीपुष्पफलादिसमृद्धीः पश्यन्प्रतस्थ इति पूर्वेणान्वयः ॥ २७ ॥ ❀ ❀ आयान्तमागच्छन्तं पतिं मनुमभिप्रेत्य ज्ञात्वा प्रजाः प्रहर्षिताः ब्रह्मावर्ताद्देशाद्गीतसंतुतिमृदङ्गादि-वाद्यध्वनिभिः प्रत्युदीयुः प्रत्युज्जग्मुः । ब्रह्मावर्त्तानिति द्वितीयान्तपाठे ब्रह्मावर्त्तान्प्रत्यायान्तमित्यन्वयः । प्रजापतिमिति समस्तपाठे प्रजानां पतिं मनुं ब्रह्मावर्तात्तत्स्था लोकाः प्रत्युदीयुरित्यन्वयः ॥ २८ ॥ ❀ ❀ कासौ पुरी यां प्रतस्थ इत्युक्तमित्यत्राह । बर्हि-ष्मती नामपुरी कथम्भूता सर्वाभिः संपद्भिरैश्वर्यैः युक्ता सापि कुत्रेत्यत्राह । यज्ञस्यादिवराहस्याङ्गं शरीरं विधुन्वतः कम्पयतः सतः रोमाणि तनूरुहाणि यत्रापतंस्तत्रेत्यर्थः ॥ २९ ॥ ❀ ❀ पतितानि रोमाणि किमासन्नित्यत्राह । त एव पतितान्येव रोमाणि शश्वत् सदा हरिद्वर्णाः कुशाः काशाश्चासन्नुत्पन्नाः । कस्तेषामुपयोग इत्यत्राह यैः कुशैः काशैश्च यज्ञघ्नान्यज्ञविरोधिनो राक्ष-सान् पराभाव्य यज्ञम् ईजिरे कृतवन्तः । पाकं पचतीतिवन्निर्देशः । यद्वा यज्ञं भगवन्तमीजिरे इष्टवन्तः भगवदाराधनरूपयज्ञेषूपयुक्ता इत्यर्थः ॥ ३० ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

राजा महति गहने कक्षे स्थिताय कस्मैचिन्मूलफलाशनाय तापसाय पुत्रीं दत्त्वा याम्यहमित्यनुशोकानुत्पादकं स्वराज-धानीविशिष्टसम्पत्समुद्रमृषीणामाश्रममण्डलं ददर्श स्वपुरीमयादित्याह । उभयोरिति । ऋषिकुल्याया ऋषिकुलप्रियाया रोधसोस्ती-रयोः स्थितानामुपशान्तानामतिशयितभगवन्निष्ठानाम् ॥ २७ ॥ ❀ ❀ मनोः राजेति शब्दार्थं लक्षयति । तमायान्तमिति । अनेन प्रजानुरागेण रञ्जनाद्राजेति शब्दो निरुक्त इति ध्वनयति ॥ २८ ॥ ❀ ❀ इयमपि नगरीतरक्षेत्रेभ्योऽपि पुण्यतमेति श्रैष्ठ्यमाह । न्यपतन्निति । जलार्द्रमङ्गं विधुन्वतो यज्ञवराहस्याङ्गाद्रोमाणि ज्ञानानन्दलक्षणानि यत्र बर्हिष्मत्यां न्यपतन् सहस्रशोऽ-

---

१. प्रा० पा०—कुशकाशास्त ।

वतारा अभिव्यक्ता अभूवन्नित्यर्थः ॥ २९ ॥ ❀ ❀ रोम्णामवतारत्वे कुशकाशा आसन्नित्यन्वयः । प्रथमप्राप्तपरित्यागे किङ्कारणमिति चेन्न, हरेर्हेयोपादेयराहित्यात् न्यपतन्नित्युक्त्या किन्न स्यादिति चेन्न "ज्ञानानन्दस्वरूपेभ्यो रोमभ्योऽस्य कुशादयः । विधुन्वतः प्रयागे तु वाराहवपुषोऽभवन् । तानि रोमाणि देवस्य रूपाण्यासन्सहस्रश" इति वाक्यविरोधात् रोम्णां कर्कशत्वात्कुशकाशानामकर्कशत्वेन सुकुमारकान्तिमत्त्वात् न रोमत्त्वं युक्तमिति भावेनाह । लसदिति । लसद्धरितवर्चसो भास्वद्दूर्वाङ्कुरश्यामरोचिषः । यथायोदाहकत्वमन्यनियतमेवं कुशादीनामवध्यराक्षसपरिभावकत्वं भगवद्रोमशक्तिनियुक्तमतस्त एवासन्निति व्यपदेश इति भावेनाह । ऋषय इति । पराभाव्य पराभूय यज्ञं भगवन्तम् ॥ ३० ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

आमन्त्र्येति युग्मकम् ॥ २६—२९ ॥ ❀ ❀ कुशकाशा इति त एव तद्रूपा एव ॥ ३०—३२ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

ऋषिकुल्याया ऋषीणां सरितः ऋषिकुलहिताया वा उभयोः सुरोधसोः शोभनतटयोः ॥ २७ ॥ ❀ ❀ प्रत्युदीयुः प्रत्युज्जग्मुः ॥ २८ ॥ ❀ ❀ कोऽसौ ब्रह्मावर्त्त इत्यपेक्षायामाह । यत्र बर्हिष्मती नाम पुरी यत्र च पुर्य्यां यज्ञवराहस्य ॥ २९ ॥ ❀ ❀ बर्हिष्मतीनाम निर्वक्ति । रोमाण्येव कुशास्ते आसन्नित्यन्वयः ॥ ३० ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः ।

आमन्त्र्य पृष्ट्वा ऋषिकुल्यायाः ऋषिसमूहहिताया सुरोधसोः शोभनतटयोः ॥ २६ ॥ २७ ॥ ❀ ❀ तं पतिं रक्षितारमायान्तमभिप्रेत्य अभिधार्य ब्रह्मावर्तात् देशात् प्रजाः प्रत्युज्जग्मुः ॥ २८ ॥ ❀ ❀ कः स देश इत्यत्राह । यत्र ब्रह्मावर्ते बर्हिष्मती नाम पुरी यज्ञस्य वराहस्य रोमाणि न्यपतन् ॥ २९ ॥ ❀ ❀ बर्हिष्मती नामनिरुक्तिं दर्शयति । कुशा इति द्वाभ्याम् । शश्वत् निरन्तरं हरितं वर्चो वर्णो येषां ते कुशाः काशा आसन् यज्ञं विष्णुम् ॥ ३० ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या ।

दुहितुः सहवासो नास्तीत्यपि शङ्कां निवारयति—उभयोरिति । ऋषिकुलयोग्यायाः सरस्वत्या उभयो रोधसोः स्थितानामुपशान्तानामृषीणां पथि आश्रमसंपदः पश्यन् इति पूर्वेणैव संबन्धः । उभयो रोधसोरिति परस्परदर्शनार्थम् । ऋषिकुलयोग्यत्वात् सरस्वत्याः प्रार्थनयाऽपि जामातुः स्वनिकटे गमनं निवारितम् । सृष्ट्यर्थं च सोपयुज्यत इति सरस्वत्या इति । उत्तमरोधस्त्वं सुव्यवहार्यत्वात् । कलहाभावायोपशान्तानामिति । संपद इति समृद्धिर्निरूपिता ॥ २७ ॥ ❀ ❀ एवमितो गमनमुक्त्वा तस्य स्वनगरे प्रवेशे संभ्रममाह—तमायान्तमिति । ब्रह्मावर्तादिति । सरस्वतीतीरं सर्वमेव ब्रह्मावर्त्तत्वेनोच्यते । ब्रह्मावर्तानिति पाठः सुगमः । प्रजापतिं मनुम् । योगोऽत्र । प्रजाः पतिमिति पाठः । प्रहर्षिताः प्रजा गीतादिभिः प्रत्युदीयुराभिमुख्येन गताः ॥ २८ ॥ ❀ ❀ बिन्दुसरः परित्यज्य स्थलान्तरे मनुः कथं गतः ? किमिति तत्रैव राजधानीं न कृतवानित्याशङ्क्य, मनुस्थितापि नगरी बिन्दुसरस्तुल्येति वक्तुं तामनुवर्णयति—बर्हिष्मतीति त्रिभिः—यथेदं बिन्दुसरः, तथा सा बर्हिष्मती नाम । ननु तुल्यत्वेऽपि अत्रैव कथं नाऽवस्थानम् ? तत्राऽऽह—पुरीति । पुर्यामेव हि राजानो वसन्ति, न तु स्थानमात्रे । किञ्च, एषा सर्वसंपत्समन्विता । प्राणिनो हि पुरुषार्थचतुष्टयम्, तदपि बहुविधम् । सर्वप्रकाराणां सर्वा संपदस्यामस्त्यतो राज्ञः सर्वोपकारित्वादत्र स्थितिर्युक्ता । बर्हिष्मतीत्वं साधयति, न्यपतन्निति । बर्हिर्वर्तते यस्यामिति सा पुरी बर्हिष्मती । बर्हिश्च वैदिकं यत्रावयवोत्पन्नम्, मन्त्रादिना कुशकाशादिषु तत्त्वमारोप्यते; यथा पितरो ब्राह्मणेषु । तद्धि देवानामासनम्, तद्यत्र, तत्रैव हि देवाः । यत्र पुनस्तत् स्वाभाविकम्, तत्राऽऽवाहनापेक्षाऽपि नाऽस्ति । तच्च बर्हिस्तस्यामेव पुर्यामुत्पन्नमिति निरूपयितुं कथामाह—यज्ञवराहस्य अङ्गं विधुन्वतो यत्र रोमाणि न्यपतन् । स हि यज्ञात्मा, रोमाणि च बर्हिः ॥ २९ ॥ ❀ ❀ त एव कुशकाशा अभवन् । तेषां यज्ञियत्वपरिज्ञानार्थमलौकिकं रूपमाह—शश्वद्धरितवर्चस इति । सर्वेष्वेव कालेषु कुशा उत्पद्यन्ते, हरितवर्णाश्च भवन्ति, नत्वन्ये व्रीहियवादयः । अतस्त एवाऽऽसन् । रोमाणि कुशकाशा एवाऽभवन्नित्यर्थः । ननु यज्ञियाः पश्वादयो बहव एव पदार्थाः, ते च सर्वत्रैव यथायथमुत्पद्यन्त इति कथं बर्हिष एवाऽऽधिक्यम् ? कथं वा तेन बर्हिष्मत्या माहात्म्यमिति ! तत्राऽऽह—ऋषयो यैरिति । यैः कुशकाशैः, यज्ञघ्नान् राक्षसान्, पराभाव्य यज्ञमीजिरे । कुशानां यज्ञप्रतिपक्षनाशकत्वं शाखान्तरेषु चिन्त्यम् ॥ ३० ॥

### श्रीगिरिधरकृता बालप्रबोधिनी

मुनिवरं कर्दममामन्त्र्यानुज्ञाप्य तेन चानुज्ञातः सन् सभार्यो रथमारुह्य सहानुगो नृपो मनुः स्वपुरं प्रति प्रतस्थे गमनं कृतवान् ॥ २६ ॥ ❀ ❀ गच्छन्तं मनुं वर्णयति—उभयोरिति । ऋषिकुल्यायाः ऋषिकुलयोग्यायाः सरस्वत्याः उभयोः सुरोधसोः शोभनतटयोः उपशान्तानां शमदमादिगुणसम्पन्नानामृषीणां आश्रमसम्पदः भगवदाराधनोपयुक्ततुलसीपुष्पफलादि-

समृद्धीः पश्यन् प्रतस्थे इति पूर्वेणैवान्वयः ॥ २७ ॥ तं स्वपतिं मनुमायान्तमभिप्रेत्य ज्ञात्वा प्रहर्षिताः प्रजाः गीतसंस्तुतिवादित्रैः सह ब्रह्मावर्त्तात् प्रत्युदीयुः, समानेतुं सन्मुखं ययुरित्यर्थः । ब्रह्मावर्त्तानिति पाठे तु ब्रह्मावर्तान्प्रति आयातमित्यन्वयः । प्रजापतिमिति समस्तपाठे तु मनुविशेषणम् । ब्रह्मावर्त्तस्था जनाः प्रत्युदीयुरिति शेषेणान्वयः ॥ २८ ॥ ❀ ❀ कोऽसौ ब्रह्मावर्त्त इत्यत आह—बर्हिष्मतीति । सर्वाभिः सम्पद्भिरैश्वर्यैः समन्विता युक्ता बर्हिष्मती नाम पुरी यत्रास्तीति । साऽपि कुत्रेत्यत आह—यज्ञस्य यज्ञावतारस्य वराहस्याङ्गं स्वशरीरं विधुन्वतः कम्पयतः सतः रोमाणि यत्र न्यपतन्निति ॥ २९ ॥ ❀ ❀ बर्हिष्मतीनामनिरुक्तिं ब्रुवन् प्रसङ्गात्तस्य देशस्य श्रैष्ठ्यमाह—कुशा इति । त एव तानि पतितानि रोमाण्येव शश्वत् सदा हरितं वर्चः वर्णो येषां तथाभूताः कुशाः काशाश्च आसन् जाताः । कस्तेषामुपयोग इत्यत आह—ऋषय इति । ऋषयो यैः कुशैः काशैश्च यज्ञघ्नान् यज्ञविरोधिनो राक्षसान् पराभाव्य पराभवं नीत्वा यज्ञमीजिरे कृतवन्तः । यद्वा यज्ञं भगवन्तमीजिरे पूजितवन्त इत्यर्थः ॥ ३० ॥

### हिन्दी अनुवाद

फिर वे मुनिवर कर्दमसे पूछकर, उनकी आज्ञा ले रानीके सहित रथपर सवार और अपने सेवकोंसहित ऋषिकुलसेवित सरस्वती नदीके दोनों तीरोंपर मुनियोंके आश्रमोंकी शोभा देखते हुए अपनी राजधानीमें चले आये ॥ २६-२७ ॥ जब ब्रह्मावर्तकी प्रजाको यह समाचार मिला कि उसके स्वामी आ रहे हैं तब वह अत्यन्त आनन्दित होकर स्तुति, गीत एवं बाजे-गाजेके साथ अगवानी करनेके लिए ब्रह्मावर्तकी राजधानीसे बाहर आयी ॥ २८ ॥ ❀ ❀ सब प्रकारकी सम्पदाओंसे युक्त बर्हिष्मती नगरी मनुजीकी राजधानी थी, जहाँ पृथ्वीको रसातलसे ले आनेके पश्चात् शरीर कँपाते समय श्रीवराह भगवान्‌के रोम झड़कर गिरे थे ॥ २९ ॥ ❀ ❀ वे रोम ही निरन्तर हरे-भरे रहनेवाले कुश और कास हुए, जिनके द्वारा मुनियोंने यज्ञमें विघ्न डालनेवाले दैत्योंका तिरस्कार कर भगवान् यज्ञपुरुषकी यज्ञोंद्वारा आराधना की है ॥ ३० ॥

कुशकाशमयं बर्हिरास्तीर्य भगवान्मनुः । अयजद्यज्ञपुरुषं लब्धा स्थानं यतो भुवम्[1] ॥ ३१ ॥
बर्हिष्मतीं नाम विभुर्यां निर्विश्य समावसत् । तस्यां प्रविष्टो भवनं तापत्रयविनाशनम् ॥ ३२ ॥
सभार्यः सप्रजः कामान् बुभुजेऽन्याविरोधतः । सङ्गीयमानसत्कीर्तिः सस्त्रीभिः सुरगायकैः ।
प्रत्यूषेष्वनुबद्धेन हृदा शृण्वन् हरेः कथाः ॥ ३३ ॥
निष्णातं योगमायासु मुनिं[3] स्वायम्भुवं मनुम्[2] । यदा भ्रंशयितुं भोगा न शेकुर्भगवत्परम् ॥ ३४ ॥
अयातयामास्तस्यासन् यामाः स्वान्तरयापनाः । शृण्वतो ध्यायतो विष्णोः कुर्वतो ब्रुवतः कथाः ॥ ३५ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

यज्ञपुरुषं विष्णुं यत इति यत्रायजत् भुवं स्थानं लब्ध्वेति तृन्प्रत्ययांतम् । लब्धवान्सन्नित्यर्थः । यतो लब्धवांस्तं यज्ञपुरुषमिति वा । एतेन स्वर्गादपि भूमिः श्रेष्ठा तत्रापि तत्स्थानं श्रेष्ठमित्युक्तं भवति ॥ ३१ ॥ ❀ ❀ प्रस्तुतमाह । यां बर्हिष्मतीं नाम पुरीं समावसत् पूर्वं यस्यामुषितस्तस्यां निर्विश्य भवनं प्रविष्टः सन्भोगान्बुभुजे इत्यन्वयः ॥ ३२ ॥ ❀ ❀ अन्येषां धर्मादीनामविरोधेन प्रत्यूषेषु उषःसु संगीयमाना सत्कीर्तिर्यस्य तथापि स्वयं हरेरेव कथाः शृण्वन्भोगान्बुभुजे ॥ ३३ ॥ ❀ ❀ योगमायासु ऐच्छिकभोगरचनासु यद्यतः आभ्रंशयितुम् आ ईषदपि भ्रंशयितुमभिभवितुम् ॥ ३४ ॥ ❀ ❀ अतो यातो यामो यस्य पक्वस्यान्नस्य तद् गतसारं भवत्यतोऽन्यदपि गतसारं यातयाममुच्यते । अयातयामा अगतसारा आसन् । स्वांतरं तदीयं मन्वंतरं यापयंति ते यामाः कालावयवाः कुर्वतः स्ववाक्यैरुपनिबध्नतः ॥ ३५ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

बर्हिःशब्द उभयार्थकः । यद्वा । कुशकाशरूपं बर्हिर्हस्तमितं तदित्यर्थः । "हस्तमात्रं भवेद्बर्हिरत उर्ध्वं तृणं स्मृतम् ।" एतेनासनं हस्तमितकुशकाशनिर्मितं जपयज्ञादौ कार्यमिति ध्वनितम् । यद्वास्तीर्यास्तरणं परिस्तरणं विधाय होमवेलायामित्यर्थः । यत इति सप्तम्यर्थे तसिः । इत्यर्थ इति । तृन्प्रत्ययस्य शीलेऽर्थे विहितत्वाच्छीलार्थातीतार्थयोः "तृन्" इत्यादिसूत्रेषु समनिर्दिष्टत्वात्तृन्प्रत्ययस्याप्यतीतार्थकत्वमिति भावः । यत्तदोर्नित्यसम्बन्धमपेक्ष्याह—यतो लब्धवानिति । स्वर्गादपि भूमिः श्रेष्ठेति खट्वांगोपाख्याने स्फुटतरं स्वर्गाद् भूतलागमनेनावसीयते । तत्रापि भूमितलेऽपि तत्स्थानं भारतांतर्गतार्यावर्त्तमध्यवर्त्ति ब्रह्मावर्त्तमित्यर्थः ॥ ३१ ॥ ❀ ❀ अविरोधेन यथा कामभोगैर्धर्मार्थमोक्षा न नश्येयुस्तथा बुभुज इत्यर्थः ॥ ३२ ॥ ❀ ❀ सस्त्रीभिः साप्सरोभिः सुरगायकैर्गंधर्वादिभिः ॥ ३३ ॥ ❀ ❀ निष्णातं निपुणम् ॥ ३४ ॥ ❀ ❀ यतः पूर्वमुक्तेरत इति । "जीर्णं च परिभुक्तं च यातयाममिदं द्वयम्" इत्यमरः ॥ ३५ ॥

---

१. प्रा० पा०—भुवः । २. प्रा० पा०—मनुं । ३. प्रा० पा०—मुनिम् ।

## श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

यत्र वर्हिष्मत्यां पूर्वार्धे सन्नित्यध्याहारः अत एव पक्षान्तरम् ॥ ३१ ॥ ३२ ॥ ❀ ❀ सभार्य्य इति सार्द्धकमनुवद्धेन तदैकासक्तेन ॥ ३३ ॥ ❀ ❀ निष्णातमिति युग्मकम् । यतो हेतोः अतो भोगानां भ्रंशयितुमशक्तत्वात् अतः यातयामपक्वान्नस्य गतसारत्वगुणकत्वात् अन्यदपि वस्तु सिंहो देवदत्त इतिवद्गौण्या वृत्त्या यातयामशब्देनोच्यते श्रवणादिकं तु यथाक्रममेव ज्ञेयं योग्यतया उपनिबध्नतः प्रथयतः ॥ ३४ ॥ ३५ ॥

## श्रीमद्वीरराघवव्याख्या

अत एव भगवान् मनुः कुशकाशरूपं वर्हिरास्तीर्य यतो भगवतो वराहाद् भुवः स्थानं प्रतिष्ठां लब्धवान तमेव यज्ञपुरुषमयजत् यज्ञैराराधितवान् अनेन इदमेव वर्हिष्मतीशब्दस्य प्रवृत्तिनिमित्तं यत्कुशकाशरूपवर्हिषा युक्तत्वमित्युक्तं भवति ॥३१॥ ❀ ❀ विभुर्मनुर्यां बर्हिष्मतीं माम पुरीं निर्विश्य प्रविश्य पूर्वं समावसत्तस्यां पुर्यामाध्यात्मिकाधिभौतिकाधिदैविकरूपतापत्रयरहितं भवनं गृहं प्रविष्टः सभार्यः सपुत्रश्चान्याविरोधतः वर्णाश्रमप्रयुक्तभगवदाराधनरूपधर्माविरोधेन कामान् बुभुजे अनुबभूव ॥ ३२ ॥ ❀ ❀ एतदेव प्रपञ्चयति । सङ्गीयमानेत्यादिषड्भिः । प्रत्यूषेषु प्रत्युषःसु सस्त्रीतिः स्त्रीभिः सहितैः सुरगायकैः सुरा गन्धर्वाः किन्नरादयः त एव गायकास्तैः सम्यग् गीयमाना सती निर्मला कीर्त्तिर्यस्य । सोऽपि अनुबन्धेन प्रेमानुबन्धेन हृदा हरेः कथाः शृण्वन् कामान् बुभुज इति पूर्वेणान्वयः ॥ ३३ ॥ ❀ मुनिं शुभाश्रयसंशीलनपरं भगवत्परं भगद्गुणानुचिन्तनपरं स्वायम्भुवं मनुं भोगाः कामभोगा योगमायासु भगवदाश्चर्यशक्तिकासु निष्णातमासक्तं यथा तथा आभ्रंशयितुमीषदपि पातयितुं यद्यस्मान्न शेकुः न समर्था अतस्तस्य यामा अयातयामा आसन्नित्युत्तरेणान्वयः ॥ ३४ ॥ ❀ ❀ विष्णोः कथा शृण्वतः ब्रुवतः कथयतः कुर्वतः भगवदाराधनमिति शेषः, ध्यायतः विष्णुमिति शेषः, तस्य मनोः स्वान्तरं मन्वन्तराख्यकालं यापयन्ति नयन्ति यामाः कालावयवाः प्रहरा अयातयामाः सफला आसन् । यामा इत्यन्तेनैकस्मिन्नपि यामे भगवदाराधनाभावराहित्यं सूच्यते ॥ ३५ ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

इतोऽपि कुशादीनां रोमव्यपदेशो युज्यते यज्ञाङ्गत्वेन विष्णुप्रदप्राप्तिहेतुत्वादित्याशयेनाह । कुशेति । कुशकाशमयं कुशकाशनिर्मितं यत्र कुशकाशाकारे पुरे स्थित्वा मनुर्यज्ञपुरुषमयजत्तेन मनुना यतो यस्य बर्हिषो गुणात्स्थानगुणाद्वा दृढमाश्रयं स्थानं विष्णुपदं लब्धमनेन वर्हिष्मतीति शब्दार्थो निरुक्त इति ज्ञायते ॥ ३१ ॥ ❀ ❀ स मनुरेवंविधां बर्हिष्मतीं नाम पुरीं निर्विश्य सुखमावसदित्यन्वयः । तस्य विषयभोगाभावे शून्यागारस्थवत्किं सुखमत्राह । तस्यामिति । तस्यां पुर्यां विद्यमानं भवनं प्रविष्टः कामान् भोगान् विषयभोगो धर्मादिपुरुषार्थविरोधेन दुःखहेतुरित्यत उक्तमन्याविरोधत इति अन्यस्य धर्मादेरविरोधेन ॥ ३२ ॥ ❀ ❀ धर्माद्यविरोधेन विषयभोगः कथमत्राह । संगीयमानेति । अनुबद्धेन स्निग्धेन ॥ ३३ ॥ ❀ ❀ ग्राहग्रस्तस्येव विषयासक्तस्य हरिकथाश्रवणेन किं फलमत्राह । निष्णातमिति । योगमायासु योगसामर्थ्येष्वणिमादिषु मुनिं सर्वज्ञं "वेत्ता वेद्यस्य सर्वस्य मुनिः सद्भिरुदाहृत" इत्यभिधानं स्रंसयितुं हरिकथाश्रवणात् श्लथयितुम् ॥ ३४ ॥ ❀ ❀ विषयसेवायाः प्राबल्ये कथं न शेकुरिति वचनमित्याशङ्क्य हरिकथाश्रवणादेर्निरन्तरत्वेन संवर्द्धितोपचयत्वेन ततोऽपि प्राबल्यातिशयादिति भावेनाह । अयातयामा इति । "यातयामं गतरसं "गतसारं यातयामं यामः सार इहोच्यत" इति वचनादयातयामा अगतसारा न निष्फला इत्यर्थः । यामाः कालावयवाः स्वान्तरयापनाः स्वावसानकारिणः ॥ ३५ ॥

## श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः ।

सभार्य इति सार्द्धकम् ॥ ३३ ॥ ❀ ❀ निष्णातमिति युग्मकम् । अयातयामा न जीर्णा वृथा नापक्षीणा इत्यर्थः । अन्याघ्राता इति वा । "जीर्णञ्च परिभुक्तञ्च यातयाममिदं द्वयम्" इत्यमरः । शृण्वत इत्यादिकं यथाक्रममेव ज्ञेयं ध्यायतस्तद्वैशिष्ट्येन स्मरतः कुर्वतस्तत्कथाग्रन्थान् रचयतः ब्रुवतस्तानुपदिशतः ॥ ३४—३६ ॥

## श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी ।

कुशकाशमयमिति । वर्हिःशब्देनोभयोक्तेः भुवं भूरूपं स्थानं लब्धेति तृन् प्रत्ययान्तम् ॥ ३१ ॥ ❀ ❀ प्रस्तुतमाह । यां समावसत् यस्यां पूर्वमुषितस्तस्यां प्रथमं निर्विश्य स्वीयं भवनम् ॥ ३२ ॥ ❀ ❀ अन्यस्य धर्मस्याविरोधेन प्रत्यूषेषु प्रत्युषःसु प्रत्यूष आरभ्येत्यर्थः । कथयैव स्वमाधुर्येणानुविद्धेन वशीकृतेन हृदा ॥ ३३ ॥ ❀ योगादष्टाङ्गयोगाभ्यासादेव मायासु मायाज्ञानेषु निष्णातं पारगं यथासौ विषयान् भोक्तुं जानाति तथा सम्यग्भुक्ता अपि विषयाः स्वेष्वासक्तिमुत्पादयितुं न शक्नुवन्तीत्यर्थः । तदा तस्य यामा अयातयामा अव्यर्थाः । "जीर्णञ्च परिभुक्तञ्च यातयाममिदं द्वयम्" इत्यमरः । कीदृशाः स्वान्तरं स्वीयं मन्वन्तरं यापयन्तीति ते । कुर्वतः स्ववाक्यैर्दृश्यश्राव्यकाव्यरूपेणोपनिबध्नतः ॥ ३४ ॥ ३५ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

यतो यज्ञपुरुषात् भुवं स्थानं लब्धा वृन्प्रत्ययान्तम्। लब्धवान् तं यज्ञपुरुषमादिवराहं कुशकाशमयं बर्हिः आस्तीर्य अयजत्॥ ३१॥ ❀ ❀ अन्याविरोधतः कर्माद्यविरोधतः॥ ३२॥ ३३॥ ❀ ❀ योगः ध्यानयोगस्तेन हेतुभूतेन याः मायाः शब्दस्पर्शादिविभूतयः तासु निष्णातं प्रविष्टमपि भोगाः शब्दादयः भगवत्परं ततो भ्रंशयितुं न शेकुः यदा तदा तस्य विष्णोः कथाः शृण्वतः अवशिष्टां साधनरूपां विष्णुभक्तिं कुर्वतः ध्यायतः। परां भक्तिं ध्रुवस्मृतिलक्षणां लब्धवतः स्वान्तरयापनाः मन्वन्तरपूरकाः यामाः कालांशाः अयातयामाः। अगतसाराः आसन्॥ ३४॥ ३५॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

एवं बर्हिष्मतीत्वमुपपाद्य, विशेषतस्तत्र स्थितौ प्रयोजनमाह—कुशकाशमयमिति। अश्ववालः काशः, स हि प्रस्तरो भवति पश्वादिष्वातिथ्यादिषु च। कुशकाशप्रकृतिकं बर्हिरास्तीर्य, स्वयं दीक्षितो भगवद्रूपो भूत्वा, मनुर्यज्ञपुरुषमयजत्। यतो भुवः स्थानं प्राप्तवान्। अधिकारित्वाविशेषेऽपि इन्द्रादयः स्वर्गाधिकारिणः, मनुस्तु भूमेः। सा च देवयजनरूपा। देवयजनं प्राप्याऽवश्यं यज्ञाः कर्तव्या इति लब्ध्वाऽयजदिति। लाभस्य यज्ञमात्रोपयोगित्वाय क्त्वाप्रत्ययः। यतो वा यज्ञात्। यज्ञवराहेणैव स दत्ता, अतो यज्ञार्थमेव मया प्राप्तामित्ययजत्[1]॥ ३१॥ ❀ ❀ एवं बर्हिष्मत्यां स्थितौ प्रयोजनमुक्त्वा तां प्रविष्ट इत्याह—बर्हिष्मतीमिति। तादृशस्थाने स्थितिसामर्थ्याय विभुरिति। अत एवोत्तमाधारे शत्रूणां बाधाभावादेकत्रैव सर्वदा स्थित इत्याह—यां निर्विश्य[2] समावसदिति[3]। बर्हिष्मतीं प्रसिद्धां भुवः स्थानं लब्ध्वेति पूर्वेणैव संबन्धः। यामित्यादि भिन्नम्। सम्यगावसत्[4]। किञ्च, न केवलं पुर्येव सर्वोत्तमा, किन्तु तस्यां भवनमपि सर्वोत्तममिति। तस्यां प्रविष्ट इति तस्यां विद्यमानं भवनं प्रविष्टः। तापत्रयविनाशनमित्युत्कर्षः, स्थानस्य भक्तिजनकत्वात्॥ ३२॥ ❀ ❀ तापत्रयाभावे हि बाह्याभ्यन्तरबाधाभावाद्यथाशास्त्रं पुरुषार्थाः साधयितुं शक्याः। तदाह सभार्यः सप्रजः कामान् विषयान् धर्माद्यविरोधेन बुभुज इति। बाधकत्वादेव भार्यापुत्रास्त्यज्यन्ते पुरुषार्थविरोधे। तथात्वे नियतं ज्ञापकमाह—संगीयमान इति। सुरगायकैर्गन्धर्वादिभिः स्त्रीसहितैः संगीयमाना सत्कीर्तिर्यस्य। देवास्त्वसत्यं न गायन्ति, नाऽपि धर्मादिविरुद्धां कीर्तिं गायन्ति शृण्वन्ति वा। अस्याः कीर्तेः पुरुषार्थचतुष्टयरूपत्वं प्रतिपादयति। सम्यक्त्वं मोक्षपर्यवसानात्, औदार्यं ज्ञानम्, सदिति धर्मः, कीर्तिः कामः। अतः कामजनकत्वात्स्त्रीभिः सह गानम्। सुरा हि धर्मफलाः, गायकाः कामार्थप्रधानाः, विशिष्टा मोक्षोपयोगिनश्चेति। पूर्वोक्तस्य सर्वस्य साधकमाह—प्रत्यूषेष्विति प्रातःकालेषु। अनुबद्धेन हृदा हरेः कथां शृण्वन् बुभुज इति पूर्वेणैव संबन्धः॥ ३३॥ ❀ ❀ प्रेम्णा भगवत्कथायाः श्रवणस्य सर्वपुरुषार्थसाधकत्वेन मध्ये निदर्शनमाह—निष्णातमिति। योगमायासु निष्णातं स्वायम्भुवं मनुं भोगा यदा भ्रंशयितुं न शेकुः, तदा अयातयामास्तस्य यामा आसन्नित्युत्तरेण संबन्धः। योगमाया नानाविधविषयभोगप्रकारा अणिमादयः, तत्र निष्णातं सर्वभोगभोक्तारम्; मननशीलत्वाद्विद्यमानमोक्षम्। तेन मोक्षभयादपि न भोगनिवृत्तिः। परलोकभयं तु नास्त्येव, स्वयंभूपुत्रत्वात्। अत एव न ऋणनिवृत्त्यपेक्षा, नाऽपि परलोकभयम्। एवं सति निःशङ्को भोगो भवति। तथा च सति तदभिनिवेशात् भ्रंशः संभवति। परं ते भ्रंशयितुं न शक्ताः। तत्र हेतुः—भगवत्परमिति। कथाश्रवणादिना भगवत्परत्वम्। भगवत्परत्वे च विषयासक्त्यभावः। अनासक्तौ न भ्रंशः। मननं ब्रह्मसुतत्वादिकं वा योगमायानिष्णातत्वे हेतुः। विषयासक्त्यैव कालो व्यर्थो भवति, नाऽन्यथा। प्रकृते तदभावात्तस्या यामाः कालविशेषाः, अयातयामा अगतसारा एवाऽभवन्। संपूर्ण एव कालस्तादृशो जात इत्याह—स्वान्तरयापना इति। स्वमन्वन्तरस्य यापनाः। यापयन्ति समापयन्ति ये कालखण्डाः, ते सर्वे एव अयातयामा इति। एकसप्ततियुगानि हि मन्वन्तरम्। भोगानां भ्रंशाजनकत्वमात्रेण नाऽयातयामत्वम्, किन्तु हेत्वन्तरमस्तीत्याह—शृण्वत इति। विष्णोः कथाः शृण्वतः। कथा एव ध्यायतः। योगबलेन भगवद्गुणान् ज्ञात्वा तन्निबन्धनेन कथाः कुर्वतः। गोष्ठ्यां वा[5] राजसभायां वा तत्कथामेव कुर्वतः, श्रोतृणामर्थं ब्रुवतश्च। जागरणानन्तरं देहशुद्धेः पूर्वं कथानां श्रवणम्। ततो ध्यानमावश्यकसभापर्यन्तम्। तत्र च सद्भिः सह तत्कथाकरणम्। ततोऽनुशिक्षार्थमाप्रस्वापं भगवत्कथाकथनमित्येवं प्रत्यहम्॥ ३४॥ ३५॥

### श्रीगिरिधरकृता बालप्रबोधिनी

अतएव भगवान् ज्ञानैश्वर्यादिसम्पन्नो मनुरपि कुशकाशमयं बर्हिरास्तरणविशेषं आस्तीर्य यतो यज्ञात् धृतवराहावताराद्भुवं स्थानं लब्धा लब्धवांस्तमेव यज्ञपुरुषं अयजदित्यन्वयः। अत एव सा बर्हिष्मती नामेति॥ ३१॥ ❀ ❀ प्रस्तुतमाह—बर्हिष्मतीमिति। यां बर्हिष्मतीं नाम पुरीं निर्विश्य प्रविश्य पूर्वं समावसत् तस्यां पुर्यां आध्यात्मिकाधिभौतिकाधिदैविकरूपतापत्रयविनाशनं भगवत्कीर्तनादिमत्त्वेन तापत्रयनिवर्त्तकं भवनं प्रविष्टः प्रत्यूषेषु प्रत्यूषस्सु सस्त्रीभिः स्त्रीसहितैः सुरगायकैः गन्धर्वादिभिः सम्यग्गीयमाना सती निर्मला कीर्तिर्यस्य तथाभूतोऽपि सभार्यः सप्रजः सपुत्रश्च विभुः समर्थो मनुः अनुबद्धेन प्रेमानुबद्धेन हृदा

---

१. प्राप्तेत्यजत्. क.। २. निविश्य. ख च.। ३. समविशत्.। ४. सम्यगाविशत्. क. घ. ङ. ५. च. क. ख.।

हरेः कथाः शृण्वन् अन्याविरोधतः धर्मार्थमोक्षाणामविरोधेन तत्साधनानुष्ठानपूर्वकं कामान् विषयान् बुभुजे इति सार्द्धद्वयस्यान्वयः॥ ३२ ॥ ३३ ॥ ❀ ❀ ननु भोगस्य धर्मादिविरोधित्वात् कथं न विरोध इत्यत आह—निष्णातमिति। योगमायासु ऐच्छिकपदार्थरचनासु निष्णातं समर्थमपि स्वायम्भुवं मनुं यत् यस्मात् आ ईषदपि भ्रंशयितुं स्वासक्त्याधर्मादिमार्गाच्चलयितुं भोगा न शेकुरित्यन्वयः। तत्र हेतुमाह—भगवत्परमिति भगवद्भजनपरत्वेन तेन रक्षितत्वादित्यर्थः। एवं तत्परत्वे हेतुमाह—मुनिमिति, सत्यासत्यपरिशीलनपरमित्यर्थः॥ ३४ ॥ ❀ ❀ उक्तमेव विशदयति—अयातयामा इत्यादिना। विष्णोः कथाः शृण्वतः तं ध्यायतः तत्सेवां कुर्वतः तन्मायादि ब्रुवतश्च तस्य मनोः स्वान्तरं मन्वन्तराख्यं कालं यापयन्तीति ते यामाः कालावयवाः प्रहरा अयातयामाः सफला आसन्। यातो गतो यामो यस्य पक्वान्नस्य तद्गतसारं यातयाममुच्यते। तथाऽन्यदपि गतसारं निष्फलं यातयाममुच्यते। यामा इत्यनेनैकस्मिन्नपि यामे भगवदाराधनाभावराहित्यं सूच्यते॥ ३५ ॥

### हिन्दी अनुवाद

महाराज मनुने भी श्रीवराहभगवान्से भूमिरूप निवासस्थान प्राप्त होनेपर इसी स्थानमें कुस और कासकी बर्हि ( चटाई ) बिछाकर श्रीयज्ञभगवान्की पूजा की थी॥ ३१ ॥ ❀ ❀ जिस बर्हिष्मती पुरीमें मनुजी निवास करते थे, उसमें पहुँचकर उन्होंने अपने त्रितापनाशक भवनमें प्रवेश किया॥ ३२ ॥ ❀ ❀ वहाँ अपनी भार्या और सन्ततिके सहित वे धर्म, अर्थ और मोक्षके अनुकूल भोगोंको भोगने लगे। प्रातःकाल होनेपर गन्धर्वगण अपनी स्त्रियोंके सहित उनका गुणगान करते थे; किन्तु मनुजी उसमें आसक्त न होकर प्रेमपूर्ण हृदयसे श्रीहरिकी कथाएँ ही सुना करते थे॥ ३३ ॥ ❀ ❀ वे इच्छानुसार भोगोंका निर्माण करनेमें कुशल थे; किन्तु मननशील और भगवत्परायण होनेके कारण भोग उन्हें किंचित् भी विचलित नहीं कर पाते थे॥ ३४ ॥ ❀ ❀ भगवान् विष्णुकी कथाओंका श्रवण, ध्यान, रचना और निरूपण करते रहनेके कारण उनके मन्वन्तरको व्यतीत करनेवाले क्षण कभी व्यर्थ नहीं जाते थे॥ ३५ ॥

स एवं स्वान्तरं निन्ये युगानामेकसप्ततिम्। वासुदेवप्रसङ्गेन परिभूतगतित्रयः॥ ३६ ॥
शारीरा मानसा दिव्या वैयासे ये च मानुषाः। भौतिकाश्च कथं क्लेशा बाधन्ते हरिसंश्रयम्॥ ३७ ॥
यः पृष्टो मुनिभिः प्राह धर्मान्नानाविधाञ्छुभान्। नृणां वर्णाश्रमाणां च सर्वभूतहितः सदा॥ ३८ ॥
एतत्त आदिराजस्य मनोश्चरितमद्भुतम्। वर्णितं वर्णनीयस्य तदपत्योदयं शृणु॥ ३९ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां तृतीयस्कन्धे द्वाविंशोऽध्यायः॥ २२ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

परिभूतगतित्रयं जाग्रदादि तात्त्विकादि वा येन॥ ३६ ॥ ❀ ❀ दिव्यास्त्वांतरिक्षाः मानुपाः शत्रुप्रभावाः भौतिकाः शीतोष्णादिप्रभावाः। वैयासे हे विदुर॥ ३७ ॥ ❀ ❀ तस्य ज्ञानातिशयमाह। य इति। नृणां साधारणधर्मान्॥ ३८ ॥ ❀ ❀ तस्य यदपत्यं देवहूतिस्तस्योदयं प्रभावम्॥ ३९ ॥

इति तृतीये टीकायां द्वाविंशोऽध्यायः॥ २२ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

स मनुः॥ ३६ ॥ ❀ ❀ शारीरा व्याधयः। मानसाः कामादिजाः शारीरा मानसा आध्यात्मिकाः। दिव्या आधिदैविकाः। मानुपा भौतिकाश्चाधिभौतिकास्तत्तदवांतरभेदविवक्षया तु द्वयोर्भेदः॥ ३७ ॥ ❀ ❀ तस्य मनोः। स यत्र स्मृतिं चकार तदप्यधिकारानुसारेण भक्तौ तान्प्रवेशयितुमेव। ननु भक्तानेवानुगृह्णातु किमन्यैरत आह सर्वभूतेति॥ ३८ ॥ ❀ ❀ तस्य मनोः॥ ३९ ॥

इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे तृतीयस्कन्धे द्वाविंशोऽध्यायः॥ २२ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या।

एवं श्रवणादिप्रकारेण॥ ३६ ॥ ❀ ❀ शारीरा मानसाश्चाध्यात्मिकाः आन्तरिक्षाश्चाधिदैविका एवं ग्रहयक्षभूतादिजदुःखस्याकस्मिकत्वात् शत्रुप्रभवाश्चाधिभौतिका एव एवं शीतोष्णादिप्रभवाश्च 'भीष्मो हि देवः सहसः सहीयानि'त्युक्तेराधिदैविका एवेति त्रैविध्यमेव क्लेशानां व्याख्येयम्॥ ३७ ॥ ❀ ❀ य इति। यच्छब्दस्योत्तरवाक्यस्थत्वात्तच्छब्दापेक्षा नास्ति तस्य स्वस्मृतौ धर्मवर्णनं तु शुद्धभक्त्यनधिकारिणो भक्तौ प्रवेशयितुमेव तत्र हेतुः सर्वभूतहित इति॥ ३८ ॥ ❀ ❀ गार्हस्थ्येऽपि मुक्तत्वादद्भुतम्॥ ३९ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीराधारमणदासगोस्वामिविरचितदीपिन्याख्यायां दीपिकाटिप्पण्यां द्वाविंशोऽध्यायः॥ २२ ॥

### श्रीमद्वीरराघवव्याख्या

स मनुरेवं भगवत्कथाश्रवणकीर्तनध्यानतदाराधनादिभिर्युगानामेकसप्ततिपरिमाणं स्वान्तरं कालं वासुदेवे प्रकृष्टासङ्गेन परिभूतं गतित्रयम्। "ऊर्ध्वं गच्छन्ति सत्त्वस्था मध्ये तिष्ठन्ति राजसाः। जघन्यगुणवृत्तिस्था अधो गच्छन्ति तामसा" इत्युक्तगतित्रयं येन सः निन्ये यापयामास। यद्वा गतयोऽवगतयः क्लेशावगतयस्तासां त्रयं निरस्ताध्यात्मिकादितापत्रय इत्यर्थः॥ ३६॥ ❀ ❀ एतदेव विशदयति। शारीरा इति। हे वैयासे! विदुर! शारीरा व्याधिरूपा मानसा आधयः एते आध्यात्मिकाः क्लेशा दिव्या अन्तरिक्षा अशनिशीतोष्णवातवर्षादिप्रभवा एते आधिदैविकाः क्लेशाः भौतिकाः शत्रुव्याघ्रचोरसर्पादिभूतप्रभवाः एते आधिभौतिकाः। एते सर्वे मानुषा मनुष्यैरनुभाव्याः क्लेशाः हरिः संश्रयः आश्रयो यस्य तं कथं वाधेरन्। आश्रितक्लेशहरभगवदाश्रयं मनुं न कथंचिदपि वाधेरन्नित्यर्थः॥ ३७॥ ❀ ❀ हरिसंश्रयमित्यनेन सूचितं तस्य ज्ञानातिशयमाह। य इति। सर्वभूतहितः यो मनुः मुनिभिः पृष्टः नृणां तत्रापि वर्णाश्रमाणां चात एव नानाविधान् शुभान् स्वर्गापवर्गसाधनभूतान् धर्मान्प्राह॥ ३८॥ ❀ ❀ एवं वर्णितं मनुचरित्रं निगमयंस्तदपत्यचरित्रमवतारयति। एतदिति। वर्णनीयस्य कथनीयकीर्तेरादिराजस्य मनोरद्भुतं विस्मयनीयमेतच्चरित्रं ते तुभ्यं वर्णितं मयेति शेषः। अथ तस्य मनोः अपत्यं देवहूतिस्तस्या उदयं प्रभवमुत्कर्षं वा शृणु मत्त इति शेषः॥ ३९॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायां द्वाविंशोऽध्यायः॥ २२॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

स्वकालावधिः कियानित्यत्राह। स एवमिति। स्वान्तरं स्वकालावधिं परिभूतं निरस्तगतीनां तिर्यग्यातनातमसां त्रयं येन स तथा॥ ३६॥ ❀ ❀ शारीरादिक्लेशोपद्रुतत्वेन यामानामगतसारत्वं कथमत्राह। शारीरा इति। पर्यासे मानुषत्वेनावस्थानेऽपि मानुषा मनुष्येभ्यो जाताः भौतिका भूतप्रेतादिभ्यो जाताः॥ ३७॥ ❀ ❀ धर्मशास्त्रप्रणेतृत्वाल्लोकहितकरस्य न कोऽप्युपद्रव इत्याशयेनाह। यः पृष्ट इति॥ ३८॥ ❀ ❀ मनुचरितमुपसंहृत्य वक्तव्यांशं प्रति जानीते। एतत्त इति। तस्य मनोरपत्यस्य देवहूत्या उदयं समृद्धिं शृण्विति॥ ३९॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्यां द्वाविंशोऽध्यायः॥ २२॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

शारीरा मानसाश्चाध्यात्मिकाः। दिव्या आधिदैविकाः। मानुषा भूतान्तरजाश्चाधिभौतिकाः। तत्तदवान्तरभेदविवक्षया तु द्वयोर्भेदः॥ ३७॥ ❀ ❀ अतो यच्च स्मृतिकम्पनं तदप्यधिकारानुसारेण क्रमशो भगवद्भक्तौ तान् प्रवेशयितुमिच्छयैवेति ज्ञेयमित्याह। य इति। ननु तादृशश्चेद्भक्तानेवाशु गृह्णातु किं तद्विमुखैरित्याशङ्क्याह। सर्वभूतहितः सदेति॥ ३८॥ ❀ ❀ तस्यापत्यानां देवहूत्यादीनामुदयम्॥ ३९॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भस्य द्वाविंशतितमोऽध्यायः॥ २२॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

गतित्रयं जाग्रदादि सत्त्वादि वा तापत्रयं वा॥ ३६॥ ❀ ❀ तत्र भक्तिरेव कारणमित्याह। शारीरा इति। दिव्या आन्तरिक्षाः मानुषाः शत्रुप्रभवाः भौतिकाः शीतोष्णादिप्रभवाः वैयासे हे विदुर!॥ ३७—३८॥ ❀ ❀ उदयं प्रभवम्॥३९॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्। द्वाविंशोऽयं तृतीयस्य सङ्गतः सङ्गतः सताम्॥ २२॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

परिभूतं गतित्रयं सत्त्वादिगुणगतित्रयं येन स सत्त्वादय उक्ताः श्रीमुखेन गुणगतयः "ऊर्ध्वं गच्छन्ति सत्त्वस्था मध्ये तिष्ठन्ति राजसाः। जघन्यगुणवृत्तिस्था अधो गच्छन्ति तामसा" इति॥ ३६॥ ❀ ❀ हे वैयासे! विदुर॥ ३७—३९॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे द्वाविंशाध्यायार्थप्रकाशः॥ २२॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

ततः किं जातमित्यत आह—स एवेति। मनुरेव तत्र प्रथममन्वन्तरे राजा जातः। स्वाधिकारकालेऽन्यस्तथाधर्मं न पालयिष्यतीति स एव स्वान्तरमेवंप्रकारेण निन्ये, नीतवान्। प्रियव्रतस्य राज्यकथा कल्पान्तरीया। उत्तानपादस्तु मन्वन्तरान्तरे। प्रियव्रतपुत्राणामेव मन्वन्तराधिपतित्वात्कल्पान्तरे वा। म[1]नोर्वहुकल्पजीवित्वमनेन ज्ञापितम्। कालो न बाधक इति च।

१. मनोर्वा. कल्प ग.।

भगवद्दत्ता[1]धिकारे ह्यधिकारकालो नाऽऽयुर्गणनायां प्रविशति। अतोऽधिकाराभावसमय एव शतायुष्ट्वम्। पितृदेवमनुष्येषु वा नाऽस्य प्रवेशः। मन्वन्तरस्य परिमाणमाह—युगानामिति। सहस्रकल्पेषु चतुर्दशधा विभागे नवशतं चतुर्नवतिश्च युगानां भवति। षट् युगानि च समसङ्ख्यया नायान्तीति न गणितानि। अस्य सृष्ट्यन्तरत्वाद्भगवद्गुणानामुपभोगार्थे षड्गुणानि वा[2]। ततः किं जातमित्याकाङ्क्षयामाह—वासुदेवप्रसङ्गेनेति। वासुदेव एव मानसो वाचिकः कायिकश्च यः सङ्गो ध्यानकीर्तनपरिचर्यादिरूपः, तेनैव, परिभूतं तिरस्कृतं गतित्रयं येन। ऊर्ध्वाधोमध्ये गतयो गुणत्रयसाध्याः, ते त्रयोऽपि गताः। अतो भगवत्येव गतिश्चाऽवशिष्यते। न हि मोक्षदातुरेवं सङ्गे धर्मार्थकामरूपा गतिर्भवति॥ ३६॥ ❀ ❀ ननु निरन्तरं कथं भगवत्कथादि सिद्ध्येत्! क्लेशादीनां बाधकत्वादित्याशङ्क्याऽऽह—शारीरा इति। शारीरा व्याधिरूपाः, मानसा आधिरूपाः, दिव्या अशनिवृष्ट्यादिजनिताः। विश्वासार्थे वैयासे इति! संबोधनम्। व्यासो हि तस्य चरित्रं बहुधा आह। मानुषा आज्ञातिक्रमादयः। यद्यपि शारीरमानसमध्ये सर्वस्याऽप्यनुप्रवेशः, तथापि परदृष्ट्या धनाद्यभावे, आज्ञाद्यकरणे, प्रजानां भूताद्युपद्रवे च राजा क्लिष्ट इति लोका मन्यन्ते। राजत्वाच्च तन्निराकरणार्थं यत्नकरणाच्च। अतः क्लेशाः दुःखानि अहङ्काराज्ञानादीनि च कथं बाधन्ते? तत्र हेतुः—हरिसंश्रयमिति। उक्तोऽपि हेतुर्बहुधोच्यते॥ ३७॥ ❀ ❀ प्रासङ्गिकत्वाभावाय तस्य भगवदाश्रयत्वं निःसन्दिग्धं फलतः साधयति—यः पृष्ट इति। भगवद्भक्ता एव हि गुह्यं धर्मं विदुः। अतो मुनिभिरयं भक्त इति ज्ञात्वा धर्मान् पृष्टः। अतो मुनिभ्यो धर्मानाह। एकविधधर्मकथने स्वभावगुणभिन्नानां सर्वेषां संग्रहो न भवतीति ततो नानाविधानाह। सर्व एव च कल्याणकराः विशेषधर्मानप्युक्तवानिति विशेषान् गणयति—नृणां मनुष्याणाम्, वर्णानामाश्रमाणां च। एतत्कथनं न लाभपूजाख्यात्यर्थम्, किन्तु सर्वभूतहितः सन्नाह। राज्ञा हि सर्वभूतहितं कर्त्तव्यमित्येवाऽभिसन्धाय तथाऽऽह। सर्वदा वाऽयं तथा॥ ३८॥ ❀ ❀ एवं मनुचरित्रमुक्त्वोपसंहरति—एतत्त इति। आदिराजस्येति राज्ञामग्रे महत्त्वम्। मनोरिति ब्राह्मणानाम्। अद्भुतमिति विषयभोगः, भक्तिः, वैराग्यं च त्रितयमेकस्मिन् स्थितमिति। तेन मनोरेव चरित्रं पृष्टवानिति। वर्णितमिति तस्यैवोपसंहारः। केवलं प्रश्नानुरोधेन वर्णितम्, किन्तु वर्णनीयस्येति। तस्य हि चरित्रं वर्णनीयमेव, भगवच्चरित्राश्रयत्वात्। अग्रे प्रश्नान्तरव्यावृत्त्यर्थमाह—तदपत्योदयं शृण्विति। तस्याऽपत्यानि पञ्च। तत्र प्रकृता देवहूतिः, तस्याः उदयः कन्यादीनामुत्पत्तिविवाहौ तस्याश्च मुक्तिः, सर्वमुदयत्वेनोच्यते। तत्राऽऽदरार्थं शृण्विति विधिः॥ ३९॥

इति श्रीभागवतसुबोधिन्यां श्रीलक्ष्मणभट्टात्मजश्रीवल्लभदीक्षितविरचितायां तृतीयस्कन्धे द्वाविंशाध्यायविवरणम्।

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

स एवेत्यत्र। सहस्रयुगपर्यन्तमिति(?)। चतुर्युगानां च सहस्रमिति वाक्यैकवाक्यत्वायाऽत्र युगपदं चतुर्युगीपरं वक्तव्यम्। तथैवं मन्वन्तरकालगणनायां चतुर्युगी षट्कर्म विशिष्यत इति तन्निवेशप्रकारमाहुः—अस्येत्यादि। मन्वन्तरभोग्यकालसङ्ख्यायाः सर्वत्र साधारण्येनाऽन्यत्र दोषानिवृत्तिरित्यरुच्या पक्षान्तरमाहुः—गुणानिवेति। गुणभूतानि तानि युगानि। तथा च यथासंभवं तस्यामेव संख्यायामधिकप्रवेश इत्यर्थः॥ ३६॥

इति श्रीतृतीयस्कन्धसुबोधिनीप्रकाशे द्वाविंशाध्यायविवरणं सम्पूर्णम्।

### श्रीगिरिधरकृता बालप्रबोधिनी

वासुदेवप्रसङ्गेन परिभूतं गतित्रयं आध्यात्मिकाधिदैविकाधिभौतिकात्मकं तापत्रयं येन स मनुरेवं भगवत्कथाश्रवणादिभिः युगानामेकसप्ततिपरिमितं कालं निन्ये यापयामासेत्यन्वयः॥ ३६॥ ❀ ❀ परिभूतगतित्रयत्वं कथं तापत्रयस्य बलिष्ठत्वादित्याशङ्क्याह शारीरा इति। व्यासेनैतस्य निर्णीतत्वात्। तत्पुत्रत्वाच्च तवाप्येतत्सम्मतमेवेति सूचयन् सम्बोधयति—वैयासे इति। शारीरा व्याधिप्रभवाः मानसा आधय एते आध्यात्मिकाः, दिव्या देवप्रभवाः अनावृष्ट्यादिजन्याः आधिदैविकाः, ये च मानुषा मनुष्यजन्या अन्ये च भौतिका व्याघ्रसर्पादिप्रभवाश्च क्लेशाः। हरिरेव संश्रयो यस्य तं मनुं कथं बाधन्ते बाधेरन्॥ ३७॥ ❀ ❀ हरिसंश्रयमित्यनेन सूचितं तस्य ज्ञानातिशयमाह—य इति। यो मनुः सदा सर्वभूतहितः सन् मुनिभिरपि पृष्टो नृणां मनुष्याणां सर्वसाधारणान् तथा वर्णाश्रमाणां विशेषांश्च नानाविधान् शुभान् स्वर्गापवर्गसाधनभूतान् धर्मान् प्राहेत्यन्वयः॥ ३८॥ ❀ ❀ मनुचरितमुपसंहरति—एतदिति। वर्णनीयस्य कथनीयकीर्त्तेः आदिराजस्य मनोरद्भुतमेतच्चरितं ते तुभ्यं मया वर्णितम्। अथ तदपत्यस्य देवहूतेः उदयमुत्कर्षं मत्तः शृणु॥ ३९॥

इति श्रीवल्लभाचार्यवंश्यगोपालसूनुना॥ श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा॥ १॥
श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये॥ श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी॥ २॥
रचिता च तृतीयेऽत्र बन्धसर्गनिरूपणे॥ द्वाविंशो गतो वृत्तिं दैत्यवधनिरूपकः॥ ३॥

---

[1] भगवद्दत्ताधिकारकालो हि. क. भगवद्दत्ताधिकारे हि कालो. ङ.। [2] च. ग।

## हिन्दी अनुवाद

इस प्रकार अपनी जाग्रत् आदि तीनों अवस्थाओं अथवा तीनों गुणोंको अभिभूत करके उन्होंने भगवान् वासुदेवके कथाप्रसङ्गमें अपने मन्वन्तरके इकहत्तर चतुर्युग पूरे कर दिये ॥ ३६ ॥ ❀ ❀ व्यासनन्दन विदुरजी ! जो पुरुष श्रीहरिके आश्रित रहता है, उसे शारीरिक, मानसिक, दैविक, मानुषिक अथवा भौतिक दुःख किस प्रकार कष्ट पहुँचा सकते हैं ॥ ३७ ॥ ❀ ❀ मनुजी निरन्तर समस्त प्राणियोंके हितमें लगे रहते थे। मुनियोंके पूछनेपर उन्होंने मनुष्योंके तथा समस्त वर्ण और आश्रमोंके अनेक प्रकारके मङ्गलमय धर्मोंका भी वर्णन किया ( जो मनु संहिताके रूपमें अब भी उपलब्ध है ) ॥ ३८ ॥ ❀ ❀ जगत्के सर्वप्रथम सम्राट् महाराज मनु वास्तवमें कीर्तनके योग्य थे। यह मैंने उनके अद्भुत चरित्रका वर्णन किया, अब उनकी कन्या देवहूतिका प्रभाव सुनो ॥ ३९ ॥

२२ वाँ अध्याय समाप्त

# अथत्रयोविंशोऽध्यायः

### मैत्रेय उवाच

पितृभ्यां प्रस्थिते साध्वी पतिमिङ्गितकोविदा । नित्यं पर्यचरत्प्रीत्या भवानीव भवं प्रभुम् ॥ १ ॥
विश्रम्भेणात्मशौचेन गौरवेण दमेन च । शुश्रूषया सौहृदेन वाचा मधुरया च[1] भोः ॥ २ ॥
विसृज्य कामं दम्भं च द्वेषं लोभमघं मदम् । अप्रमत्तोद्यता नित्यं तेजीयांसमतोषयत् ॥ ३ ॥
स वै देवर्षिवर्यस्तां मानवीं समनुव्रताम् । दैवाद्ग[2]रीयसः पत्युराशासानां महाशिषः ॥ ४॥
कालेन भूयसा क्षामां कर्शितां व्रतचर्यया । प्रेमगद्गदया वाचा पीडितः कृपयाब्रवीत् ॥ ५ ॥

### कर्दम उवाच

तुष्टोऽहमद्य तव मानवि मानदायाः शुश्रूषया परमया परया च भक्त्या ।
यो देहिनामयमतीव सुहृत्स्वदेहो नावेक्षितः समुचितः क्षपितुं मदर्थे ॥ ६ ॥
ये मे स्वधर्मनिरतस्य तपःसमाधिविद्यात्मयोगविजिता भगवत्प्रसादाः ।
तानेव ते मदनुसेवनयावरुद्धान् दृष्टिं प्रपश्य वितराम्यभयानशोकान् ॥ ७ ॥
अन्ये पुनर्भगवतो भ्रुव उद्विजृम्भविभ्रंशितार्थरचनाः किमुरुक्रमस्य ।
सिद्धासि भुङ्क्ष्व विभवान्निजधर्मदोहा[3]न् दिव्यान्नरैर्दुरधिगान्नृपविक्रियाभिः ॥ ८ ॥
एवं ब्रुवाणमबलाखिलयोगमायाविद्याविचक्षणमवेक्ष्य गताधिरासीत् ।
सम्प्रश्रयप्रणयविह्वलया गिरेषद्व्रीडावलोकविलसद्धसिताननाऽऽह ॥ ९ ॥

### देवहूतिरुवाच

राद्धं वत[4] द्विजवृषैतदमोघयोगमायाधिपे त्वयि विभो तदवैमि भर्तः ।
यस्तेऽभ्यधायि समयः सकृदङ्गसङ्गो भूयाद्गरीयसि गुणः प्रस[5]वः सतीनाम् ॥ १० ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका ।

त्रयोविंशे ततो योगनिर्मिते सर्वसंपदि । विमाने कामगे चित्रा तयो रतिरुदीर्यते ॥ १ ॥

प्रस्थिते गमने कृते सति ॥ १ ॥ २ ॥ ❀ ❀ दंभं कपटम् । अघं निषिद्धाचरणं तेजीयांसमतितेजस्विनम् ॥ ३ ॥ ❀ ❀ दैवाद्गरीयसो दैवादपि गुरुतरात् । दैवमप्यन्यथा कर्तुं समर्थादित्यर्थः ॥ ४ ॥ ❀ ❀ व्रतचर्यया कर्शितां तत्रापि भूयसा कालेनातिक्षामामित्यर्थः ॥ ५ ॥ ❀ ❀ सुहृत्प्रियः मदर्थे क्षपयितुं नावेक्षितो न गणितः समुचितः श्लाघ्योऽपि मत्सेवासक्त्योपेक्षित इत्यर्थः ॥ ६ ॥ ❀ ❀ तपश्च समाधिश्च विद्या च उपासना तासु य आत्मयोगश्चित्तैकाग्र्यं तेन विजिताः प्राप्ता भगवत्प्रसादा दिव्यभोगास्तानेव तेऽवरुद्धांस्त्वयापि वशीकृतान्प्रपश्य ते दिव्यां दृष्टिं वितरामि यया दृष्ट्या द्रक्ष्यसि ॥ ७ ॥ ❀ ❀ अन्ये पुनर्भोगाः किं न किमपि अतितुच्छा इत्यर्थः । तत्र हेतुः । भगवत उरुक्रमस्य या भ्रूस्तस्या उद्विजृंभो वक्रीभावस्तेन विभ्रंशिता अर्थरचना मनोरथा येषु निजधर्मेण पातिव्रत्येन दुह्यंत इति तथा तान् दुरधिगान्दुष्प्रापान् नृपा वयमिति या विक्रियास्तत्तद्भोगविकृतयस्ताभिः ॥ ८ ॥ ❀ ❀ अखिला योगमायाश्च विद्याश्च तत्तदुपासनास्तासु विचक्षणं निपुणमेवं ब्रुवाणं पतिमवेक्ष्य गताधिर्निश्चिंता जाता संप्रश्रयो विनयः प्रणयः प्रेम ताभ्यां विह्वला गद्गदा तया गिरा ईषद्व्रीडासहितो योऽवलोकस्तेन विलसद्विकसितं हसितं जातहासं चाननं यस्याः सा आह जगाद ॥ ९ ॥ ❀ ❀ वतेति हर्षे । द्विजवृष द्विजश्रेष्ठ हे भर्तस्त्वय्येतत्सर्वं राद्धं सिद्धमेव तदहमवैमि जानामि, किं तु यस्ते त्वया समयोऽभिहितः स तावद्भूयात् सकृदिति गर्भसंभवमात्रपर्यंत इत्यर्थः ।

---

१. प्रा. पा. तथा । २. प्रा. पा. दयितां गरीयसीं । ३. निजवर्त्मदो. । ४. प्रा. पा. तव । ५. प्रा. पा. प्रभवः ।

यस्माद्गरीयसि श्रेष्ठे भर्तरि हेतुभूते स्त्रीणां प्रसवो गुणो महान् लाभः। समासपाठे गरीयसि सतीनां यतो गुणविस्तारो भवति। अतः पुत्रोत्पत्त्या मम गुणविस्तारे जाते पश्चात्त्वदुक्तं सर्वं भवत्विति भावः॥ १०॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः।

सर्वाः संपदो यस्मिंस्तत्तथा तस्मिन्। तयोर्देवहूतिकर्दमयोः। चित्राऽनेकप्रकारा॥ १॥ ❀ ❀ पतिरेव स्त्रीणामभीष्टद इति। विश्वासो विस्रंभः। आत्मशौचं मनःशुद्धिः। शुश्रूषया हितश्रवणेच्छया सेवया वा। सौहृदेनानिमित्तस्नेहेन॥ २॥ ❀ ❀ कामं विषयेच्छाम्। दंभं आत्मन्यविद्यमानमाहात्म्यप्रकटनम्। अघं व्यसनं वा। अतितेजस्विनमतींद्रियकरणशक्तिमंतम्॥ ३॥ ❀ ❀ ब्रह्मदेहोद्भवा मरीच्यादयो देवर्षयः। देवत्वे सति तपोविद्यादिनिष्ठत्वात् तेष्वपि वर्य्यः श्रेष्ठः कर्दमः मानवीं मनुपुत्रीं समनुव्रतां स्वानुकूलाम्। इत्यर्थ इति। तपोयोगबलेनाभवितव्यमपि भवितव्यं, भवितव्यं चाभवितव्यीकर्तुं समर्थादिति भावः॥ ४॥ ❀ ❀ तत्रापि कार्शत्वेऽपि। इत्यर्थ इति। बहुकालव्रतादिनातिस्थूलोप्यतिकृशो भवतीति भावः॥ ५॥ ❀ ❀ इत्यर्थ इति। तिष्ठतु नश्यतु वेत्येवं न गणितः इति भावः। पतिव्रताया युक्तं तवैतदित्याह मदर्थे मत्सेवार्थ एव क्षपितुं क्षीणीकर्तुं समुचित इति देहविशेषणम्॥ ६॥ ❀ ❀ तस्मादेतन्निरुपाधिसेवा ऋणपरिशोधनार्थमन्यत्किञ्चन पूजां दातुं नोपयुज्यते। किं त्वेतदेव परमदुर्लभं वस्त्वित्याह-य इति। पूर्वं स्वधर्मः। ततः प्रधानपूजा ततस्तपस्ततः समाधिरेकाग्रता ततो विद्यानुभवः तत आत्मना भगवता शुक्लेन योगः संयोगः तैर्निर्जिता इति धर्मादीनामपि तत्परत्वेन कृतिर्गम्यत इति संदर्भः। अत्र स्वधर्मतपोमिश्रभगवद्ध्यानादिभिर्ये भगवत्प्रसादास्तेभ्यो भोगमोक्षाववाधितावेव स्यातामित्यभिप्रायेणाह—अभयानशोकानिति॥७॥ ❀ ❀ अन्ये स्वर्गादिलोकीयाः। इत्यर्थ इति। सभयत्वादिति भावः। तत्र तुच्छत्वे उरुक्रमस्य विष्णोः। ताभिर्हेतुभूताभिरित्यर्थः। यद्वा। नृपाणां विशिष्टाः क्रिया अश्वमेधादिरूपास्ताभिरित्यर्थः। विभवान् ऐश्वर्याणि। "विभवो रैमोक्षैश्वर्ये" इति मेदिनी। सिद्धासि कृतार्थासि। "स्यात्सिद्धस्त्रिषु निष्पन्नः" इति धरणिः। निजधर्मप्राप्तान्॥ ८॥ ❀ ❀ एवमुपदिष्टाया देवहूत्या मनसि किमभूदिति चेत्तत्राह-एवमिति। अवेक्ष्य विचार्य मद्भर्त्ता मत्पारलौकिकीर्भोगमोक्षसंपदो ददाति न त्वैहिकीरिति मनसि विमृशंती। संप्रश्रयो विनयः प्रणयः प्रेमविशेषस्तावेव विह्वलं यथा स्यात्तथा यांती कर्दमं प्रति गच्छंती या गीस्तया विह्वलयेति सोमपाशब्दवदिति चक्रवर्त्ती। पत्यौ प्रकटं संभोगप्रार्थनाया रसाभासत्वात्। तस्या देवहूतेश्चोत्तमांगनामुकुटमणित्वात्। राद्धमित्यादिपद्यद्वयस्य मुखेन वक्तुमशक्यत्वात् तद्वाचनार्थं लज्जा हसितव्रक्षितमवलोकमेव मुखं चकार। तत्र व्यज्यमानौ विनयप्रणयावेव गद्गदवाणीं चक्रतुः तथा यथा राद्धमित्यादिपद्यद्वयं स्पष्टमुच्यमानं बभूव। मुखेन तु सा तूष्णीमेव तदा तस्थावित्यर्थः॥ ९॥ ❀ ❀ एतत्सर्वमपूर्वैश्वर्योत्पादनादि। तत्सर्वमहं जानामि त्वत्सेवाप्रभावेण। इत्यर्थ इति। यावत्तेजो विभृयादात्मनो मे इत्युक्तः। संकेतस्संपादनीय इति भावः। प्रसवोऽपत्योत्पत्तिः। यदभावाद्वंध्येयमिति स्त्रीणां निंदैवेति भावः। समासपाठे गुणप्रसव इति पाठे। इति भाव इति। मत्पुत्रोत्पत्त्यनंतरं यत्तवाभीप्सितं संन्यासकरणं तदप्यृणत्रयस्य शोधितत्वाद्भवत्वित्यहमप्यनुजानामीति तात्पर्यम्। गुणविस्तारस्तु धन्यौ मातापितरौ ययोरीदृशः पुत्र इत्येवंलक्षणः कीर्त्तिप्रसर एवेत्यर्थः॥ १०॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या।

सर्वाः सम्पदो यस्मिन् तयोर्देवहूतिकर्दमयोः प्रीत्या शृङ्गाररत्या॥ १॥ ❀ ❀ विश्रम्भेणेति युग्मकम्। श्रीकर्दमवाक्यविश्वासेन आत्मशौचेन शुचितया पावित्र्येण गौरवेण तन्निष्ठगुरुत्वबुद्ध्या दमेन बहिरिन्द्रियनियमनेन शुश्रूषया पादसेवया सौहृदेन हिताचरणेन॥ २—३॥ ❀ ❀ स वै इति युग्मकम्। दैवमदृष्टमपि तत्रापि व्रतकर्शितत्वेऽपि समानार्थकपदद्वयेन तदतिशयस्य व्यङ्ग्यत्वादित्यर्थोक्तिः॥ ४॥ ५॥ ❀ ❀ भक्त्या मद्विषयकैकान्तभावेन तस्याःपरत्वे हेतुः। यो देहानामिति। स नावेक्षित इति योजनीयम्। यत्तदोर्नित्यसम्बन्धात् समाहृत्य व्याख्यानादित्यर्थोक्तिः॥ ६॥ ❀ ❀ स्वधर्मो भगवदर्पितः तपः वर्षातपादिसहनात्मकं ततः समाधिश्चित्तवृत्तिनिरोधः तदनन्तरमपि विद्या उपासना तदर्चनकीर्त्तनादिरूपा तथा व्याख्यातं यं सर्वे देवा नमन्तीत्यत्र सर्वज्ञैर्भाष्यकृद्भिः मुक्ता अपि लीलया विग्रहं कृत्वा भजन्त इति तज्जनितभोगानां भगवत्प्रसादत्वनिर्देशात् धर्मादीनां तदर्थविनियोक्तृत्वं व्यज्यते॥ ७॥ ❀ ❀ अत्र काकाक्षिन्नत्वादित्यर्थोक्तिः तत्रावितुच्छत्वे तत्तद्भोगानां विकृतयः कार्य्यरूपाहङ्काराः॥ ८॥ ❀ ❀ योगमाया अष्टाङ्गयोगप्रभावाः तत्तदुपासनाः तत्तत्सिद्ध्युपयोगिन्यस्ततद्धारणाः व्रीडायाः सङ्कोचकत्वादीषदिति अवलोकनविशेषणम्। हसितं स्मितं तादृशावलोकनेन विलसितत्वात्॥ ९॥ ❀ ❀ एतत्सर्वं तत्तद्दिव्यभोगप्रदर्शनदिव्यदृष्टिप्रदानादिसिद्धमेव वर्त्तत एव नात्रासम्भावना तत्सर्वसिद्धत्वं समयो भाषा बन्धः प्रसवोऽपत्योत्पत्तिः, अतस्त्वद्विधपतिसङ्गस्य गुणविस्तारकत्वात्तदुक्तम्। परमहंसधर्मानुष्ठानादि॥ १०॥

### श्रीमद्वीरराघवव्याख्या

तदपत्योदयं शृण्वति प्रतिज्ञामेव वर्णयितुमारभते मैत्रेयः पितृभ्यामिति। मनुशतरूपाभ्यां प्रस्थिते गमने कृते सति साध्वीङ्गितकोविदा पत्युरभिप्रायज्ञा देवहूतिः प्रभुं भवं रुद्रं भवानीव पतिं कर्दमं प्रीत्या पर्यचरदाराधितवती॥ १॥ ❀ ❀ एतदेव

प्रपञ्चयति द्वाभ्याम् । विश्रम्भेणेति । विश्रम्भेण विश्वसितेनात्मशौचेनात्मनोऽन्तःकरणस्य शौचेन शमेनेत्यर्थः । गौरवेण सर्वातिशयबुद्ध्या दमेन बाह्येन्द्रियनिग्रहेण शुश्रूषया हिताहितयोः श्रोतुमिच्छया च सौहार्देन मधुरया वाचा च पतिमतोषयदित्युत्तरेणान्वयः ॥ २ ॥ ❀ ❀ कामादीन् विसृज्य तत्र दम्भः कापट्यमघं निषिद्धाचरणं मदो गर्वः अप्रमत्ता अनवधानरहिता उद्यता तन्निदेशाचरणोद्युक्ता तेजीयांसमतिशयिततेजःसम्पन्नं पतिं कर्दममतोषयत् ॥ ३ ॥ ❀ ❀ स वै देवर्षिवर्यः कर्दमः तामनुवर्त्तमानां मानवीं मनोः पुत्रीं देवहूतिं प्रेम्णा गद्गदस्वरया वाचा गिरा पीडितः अविनिसृतवाक् कृपयाऽब्रवीत् कथम्भूतां मानवीं दैवादपि गरीयसः गरीयस्त्वेनानुसंहितात् यद्वा दैवभावेनानुसंहितात् श्रेष्ठतमात् पत्युर्भर्तुर्महाशिषमपत्यप्राप्तिरूपां महतीमाशिषं पुरुषार्थमाशासानां प्रार्थयन्तीं व्रतचर्यया कर्शितां तत्रापि भूयसा कालेन क्षामामतिकृशाङ्गीमित्यर्थः ॥ ४—५ ॥ ❀ ❀ उक्तिमेवाह त्रिभिः । हे मानिनि ! परमया शुश्रूषया परया भक्त्या च मयि सम्मानमेव कुर्वन्त्यास्ते तुभ्यमद्याधुनाहं तुष्टः प्रीतोऽस्मि । देहिनामतीव सुहृत्प्रियतमो यो देहः स्वदेहः समुचितः श्लाघ्योऽपि मदर्थे क्षपितुं कर्शितुं नापेक्षितः उपेक्षितः उचितमपि देहमनादृत्य स मदर्थे क्षपित इत्यर्थः ॥ ६ ॥ ❀ ❀ स्वधर्मनिरतस्य स्ववर्णाश्रमोचितधर्मेषु निरतस्य मे मया तपः कर्मयोगः समाधिश्चित्तैकाग्र्यं विद्या भगवदुपासना आत्मयोगः प्रकृतिविविक्तात्मयाथात्म्यज्ञानयोगः एतैर्विजिताः लब्धा भगवत्प्रसादाः भगवत्प्रसादहेतुकाः प्रसादादिति पाठान्तरं तदा तपआदिभिर्यो भगवत्प्रसादस्तस्माद्धेतोः निर्जिता ये भोग्यभोगोपकरणभोगस्थानादयस्तानेव न विद्यते भयं येषु तान् अत एवाशोकानशोच्यानित्यर्थः । मदनुसेवया मत्सेवयावरुद्धान् त्वया विवशीकृतान् प्रपश्य ते तव दिव्यां दृष्टिं वितरामि ददामि ॥ ७ ॥ ❀ ❀ ननु सर्वोपभोग्यादीननादृत्य तपआदिभिरार्जितान्विलक्षणान् भोग्यान् वितरामीति किमुच्यते इत्याशङ्कायामभयानशोकानिति सूचितमितरभोग्यादीनां तुच्छत्वं वदन्स्वसंपादितानामेव सर्वोत्तमत्वमाह । अन्य इति । उरुविक्रमस्य भगवतः या भ्रूस्तस्या उद्विजृम्भः विक्षेपः तेन विभ्रंशिताः अर्थरचनाः प्रयोजनाभिलापा येषु ते अन्ये पुनः किं तैः अतितुच्छास्त इत्यर्थः ! अतो यतस्त्वं सिद्धासि पतिपाराध्यादिभिः धर्मे मदनुग्रहविषयातीततत्त्वैर्नरैर्दुरधिगमान् दुष्प्रापान् निजधर्मैः पतिपाराध्यादिभिर्दुह्यन्ते प्रपूर्यन्ते साध्यन्ते इति यावत् तान् विभवान् भोगविस्तारान् नृपविक्रियाभिः नृपाणां सार्वभौमाणामपि विक्रिया भोगाभिलाषो यासु ताभिर्भोग्यादिसंपद्भिरिति शेषः भुङ्क्ष्वानुभव ॥ ८ ॥ ❀ ❀ भर्त्रैवमुक्ता देवहूतिस्तमुवाचेत्याह । मैत्रेयः एवमित्येकेन । एवमिति ब्रुवाणं भाषमाणमखिला या योगमाया विचित्रसर्गकारिस्वसम्बन्धिसामर्थ्यापरपर्यायाः शक्तयः तासां विद्या स्वकार्यजनप्रवर्तनानुगुणज्ञानं तस्मिन्विचक्षणं निपुणं पतिमवेक्ष्य अबला देवहूतिर्गताधिर्गतमनोव्यथा आसीत् । ततः संप्रश्रयः विनयः प्रणयः प्रेमा ताभ्यां विह्वला गद्गदा तया गिरा वाचा ईषद्व्रीडासहितो योऽवलोकस्तेन विलसद्धसितं यस्मिन् तदाननं मुखं यस्या सती आह ॥ ९ ॥ ❀ ❀ उक्तिमेवाह द्वाभ्याम् । राद्धमिति । हे द्विजवर अमोघाः सप्रयोजना या योगमायाः पूर्वोक्तास्तासामधिपे विभौ त्वय्ये तत्त्वदुक्तं सर्वं राद्धं सिद्धमेवेत्यवैमि जानामि बतेति हर्षे हे । भर्तः ते त्वया यः सकृत् अपत्यजननपर्यन्तमङ्गसंगो यस्मिन् समयः कालोऽभिहितः भूयात् । यस्माद्गरीयसि श्रेष्ठे भर्तरि हेतुभूते सतीनां स्त्रीणां प्रसवः अपत्यं गुणः महान् लाभः गुणप्रसव इति समस्तपाठे गरीयसि पत्यौ सतीनां यतो गुणप्रसवः गुण विस्तारो भवति अतः पुत्रोत्पत्त्या गुणविस्तारे जाते सति दृष्टिं प्रपश्य वितरामीति यदुक्तं तत्सर्वं भवेत् ॥ १० ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली ।

पितृभ्यां मातापितृभ्यां "मातापितरौ पितरौ" इत्यभिधानम् । इङ्गितकोविदा चित्तस्थविज्ञाननिपुणा भवानी पार्वती ॥ १ ॥ ❀ ❀ विस्रम्भेण पत्युरेवाभीष्टसिद्धिः निश्चयलक्षणेन विश्वासेन वात्मशौचं मनःशुद्धिः शुश्रूषया हितश्रवणेच्छया सौहृदमनिमित्तस्नेहः ॥ २ ॥ ❀ ❀ कामो विषयेच्छा दम्भ आत्मनि अविद्यमानमाहात्म्यप्रकटनम् । अघं पापव्यसनं तेजीयांसमतीन्द्रियकरणशक्तिमन्तम् ॥ ३ ॥ ❀ ❀ सन्तोषलक्षणमादिमसंभाषणं तदभूदित्याह । स वा इति । पुत्रादिमहाशिष आशासानामिच्छन्तीम् ॥ ४ ॥ ❀ ❀ क्षामां म्लानामत एव कर्षितां लघ्वीभूतशरीरयष्टिम् ॥ ५ ॥ ❀ ❀ परमभक्त्यादिकमस्तीति कुतो लक्ष्यत इति तत्राह । य इति । यो देहिनामत्यन्तसुहृत् अयं स्वदेहः समुचितं स्नानालङ्कारभोजनादिलक्षणं प्रति नापेक्षितः किमिति तत्राह । क्षपितुमिति । यदर्थे यस्य मम प्रीत्यर्थं क्षपितुं कृशीकर्तुं मम कृशदेहदर्शनेनैव अयं तुष्टः स्यादिति यदतोऽहं तव तुष्ट इत्यन्वयः ॥ ६ ॥ ❀ ❀ किमनया गुडजिह्विकया मधुरया वाण्या पुरुषार्थानुपयोगिन्येत्याशङ्क्य तुष्टिफलं प्रत्यक्षयति । या म इति । स्वधर्मनिरतस्य मे मम तप आदि साधनैर्विजितोपार्जिता तस्य हरेरनुभावनया उत्पन्ननिरन्तरोपासनया भगवत्प्रसादादवरुद्धा वशीकृता या तां मे मम विद्यमानां दृष्टिं प्रपश्य सन्निकृष्टफलत्वात्तुभ्यं वितरामि । तया किं तत्राह । अभयामिति । अभयप्रदामशोकां दुःखविनाशिनीं, मदनुभावनयेति पाठे मम नित्यशुश्रूषालक्षणयोपासनया त्वयावरुद्धा उपदेशयोग्यताकारितेत्यर्थः । आत्मयोगश्चित्तनिरोधलक्षणः ॥ ७ ॥ ❀ ❀ मोक्षव्यतिरिक्तपुरुषार्थानां क्षणभङ्गुरत्वेन तत्साधनमायासेन न पृथगनुष्ठेयमेतदविनाभूतत्वाच्चेत्यभिप्रेत्याह । अन्य इति । स्वर्गाद्यवाप्तिसाधनोपदेशं विहाय चतुर्थपुरुषार्थप्राप्त्युपायोपदेशः कस्मादित्यतो वाह । अन्ये पुनरिति । उरुक्रमस्य भगवतो भ्रूव उद्विजृम्भतो विनाशकलक्षणस्फुरणेन विभ्रंशिता विनाशिता अर्थरचना विषयभोगचमत्कारा येषां ते तथोक्ता इति दस्मात्तदुपदेशेन किं न किमपीत्यर्थः । स्वर्गादीनां भगवद्विजृम्भानुगृहीतावस्थानत्वात्तदनुग्रहेण

तत्प्राप्तिः किं वाच्येति स्वनियमितं कण्ठोक्तीकरोति सिद्धासीति न केवलं चतुर्थपुरुषार्थेन त्वं सिद्धासि किंत्वपेक्षिताशेषपुरुषार्थेनापि तत्कथमत्राह। भुङ्क्ष्वेति। निजधर्मस्य दोहो येषां ते तथा तान् अश्वमेधादिविशिष्टक्रियाभिः साधनैरपि नरैर्दुरधिगान् अधिगन्तुमशक्यान्। अनेन भगवदनुग्रह एवालमेतदवाप्तये न कर्मादिकमित्युक्तं भवति॥ ८॥ ❀ ❀ एवमुपदिष्टाया देवहूत्या मनसि किमभूदिति तत्राह। एवमिति। अखिलासु योगमायाविद्यासु अणिमाद्यष्टाङ्गयोगसामर्थ्यसिद्धिकरीषु विचक्षणं निपुणं भर्तुः प्रसन्नतामवेत्यावेक्ष्य सदा शुश्रूषानिरतत्वेन तदवसरोऽपि नास्तीति गताधिः निरस्तमनःपीडा एतत्कथमवगतमत्राह। संप्रश्रयेति। प्रश्रयेण विनयगुणेन सह वर्तत इति संप्रश्रयः स चासौ प्रणयः स्नेहप्रसरः तेन विह्वला स्खलन्ती तया व्रीडयावलोकेन विलसच्छृङ्गारविशेषं कुर्वद्धसितं मंदस्मितं यस्य तत्तथा व्रीडावलोकविलसद्धसितमाननं यस्याः सा तथा॥ ९॥ ❀ ❀ स्वयं प्रसन्नेन्द्रियत्वात् श्रोतुश्च प्रसादजनकवाक्यमाहेत्याह। राद्धमिति। हे द्विजवृष! ब्राह्मणश्रेष्ठ! यद् ब्रवीष्येतत्तव राद्धं सिद्धं हे भर्तः! अमोघयोगमायाया अधिपे त्वयि यद्योगसामर्थ्यं तदहमवैमीति अथ किं तवापेक्षितमत्राह। यस्त इति। ते तव सकृदङ्गसङ्गः शरीरस्पर्शलक्षणो ग्राम्यधर्मः समयोऽभ्यधायि स भूयादिति प्रार्थय इति शेषः। सकृदङ्गसङ्गेन किं फलं स्यादिति तत्राह। वरीयसीति! सतीनां पतिव्रतानां स्त्रीणां वरीयसी गुणोत्तमे पत्यौ सकृदङ्गसङ्गो गुणप्रसवः गुणाढ्यं पुत्रं प्रसूते इति सफल एवेत्यर्थः॥ १०॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

विश्रम्भेणेति। युग्मकम्॥ १—३॥ ❀ ❀ स वै इति युग्मकम्। महाशिषस्तादृशसंततिपर्यवसानाः॥ ४॥ ❀ ❀ क्षामां क्षीणशक्तिं कर्शितां तनुकृतदेहां कर्दम उवाचेति क्वचित्॥ ५॥ ६॥ ❀ ❀ ये म इति। पूर्वं स्वधर्मः तत्प्रधानपूजा ततस्तपः ततः समाधिरेकाग्रता ततो विद्यानुभवः ततः आत्मना भगवता शुक्लेन योगः संयोगः तैर्विजिता इति स्वधर्मादीनामपि तत्परत्वेन कृतिर्गम्यते॥ ७॥ ❀ ❀ नृपाणां विक्रियाभिः सामाद्युपायैः॥ ८॥ ❀ ❀ एवमित्यत्र हसितस्यैव ईषदित्यपि विशेषणम्॥ ९॥ ❀ ❀ अङ्गसङ्ग इत्यनेन प्राप्तां मदनोद्भवद्योतनजां लज्जां वारयति गरीयसीति॥ १०॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

देवहूत्यां वरस्तस्या वाञ्छिता दिव्यसम्पदः। सृष्टा रतिः कर्दमस्य त्रयोविंशे निरूप्यते॥ ०॥

अधमपराधम्॥ १॥ २॥ ३॥ ❀ ❀ दैवाद् गरीयसः दैवादपि गुरुतरात् दैवमप्यन्यथा कर्तुं समर्थात् यद्वा विसृज्य काममित्युक्तम्। तदपि कियत्समयानन्तरं दैवात् परमेश्वरप्रेरणवशात् महाशिषः कामान् आशासानाम् इच्छन्तीम्॥ ४॥ ❀ ❀ कृपया पीडितस्तस्याः कार्श्यदर्शनेन सन्तप्तः॥ ५॥ ❀ ❀ स देहो नावेक्षितः तिष्ठतु नश्यतु वेत्येवं न गणित इत्यर्थः। परमपतिव्रतायास्तवैतत् युक्तमेवेति देहं विशिनष्टि। मदर्थे मत्सेवार्थे एव क्षपयितुं क्षीणीकर्तुं समुचितः॥ ६॥ ❀ ❀ तस्मादेतन्निरुपाधिसेवा ऋणपरिशोधनार्थमन्यत् किञ्चन तुभ्यं दातुं नोपयुज्यते किन्त्वेतदेव परमदुर्लभं वस्त्वित्याह। ये इति। समाधिर्ध्यानपरिपाकः विद्या उपासना तावेवात्मयोगौ ताभ्यां विजिताः प्राप्ताः अवरुद्धान् त्वयापि वशीकृतान् न्यायतो लब्धानेवेत्यर्थः। प्रपश्य ते दिव्यां दृष्टिं वितरामि यया दृष्ट्या तानेवाधुना साक्षाद् द्रक्ष्यसि। यद्वा मत्कृपया दृष्टिं प्रकर्षेण पश्य अलमत्र लज्जयेति भावः। अत्र स्वधर्मतपोमिश्रभगवद्ध्यानादिभिर्ये भगवत्प्रसादास्तेभ्यो भोगे मोक्षाववाधितावेव स्यातामित्यभिप्रायेणाह। अभयानशोकानिति॥ ७॥ ❀ ❀ अन्ये शच्यादिभिरपि भुज्यमानाः स्वर्गीया अपि भोगा भयशोकव्याप्ता एवेत्याह। अन्ये इति। किं न किमपि तुच्छा इत्यर्थः। निजधर्मेण पातिव्रत्येन दुह्यमानान् नृपोऽहं नृपपत्नी चाहमिति या विक्रियास्ताभिर्दुरधिगमान् दुर्लभानित्यर्थः॥ ८॥ ❀ ❀ योगमाया योगोत्था विभूतयः विद्या उपासनाश्च तासु च विचक्षणं मद्भर्त्ता मत्पारलौकिकीर्भोगमोक्षसम्पदो मह्यं ददाति न त्वैहिकीरिति मनसि विमृशन्ती संप्रश्रयो विनयः प्रणयः प्रेमविशेषस्तावेव विह्वलं यथा स्यात्तथा यान्ती कर्दमं प्रति गच्छन्ती या गीस्तया विह्वलयेति सोमपाशब्दवत् ईषद्व्रीडायुक्तोऽवलोक एव विलसद्धसितमाननं यस्याः सा आह। पत्यौ प्रकटसम्भोगप्रार्थनाया रसाभासत्वात् तस्या देवहूतेश्चोत्तमाङ्गनामुकुटमणित्वात् राद्धमित्यादि पद्यद्वयस्य मुखेन वक्तुमशक्यत्वात् तद्वाचनार्थं लज्जाहसितप्रक्षितमवलोकमेव मुखश्चकार। तत्र व्यज्यमानौ विनयप्रणयावेव गद्गदवाणीचकार तथा यथा राद्धमित्यादि पद्यद्वयं स्पष्टमुच्यमानं वभूव मुखेन तु सा तूष्णीमेव तदा तस्थावित्यर्थः॥ ९॥ ❀ ❀ देवहूतिरुवाचेति नेत्रेङ्गितेनेति शेषः। हे द्विजवृष! ब्राह्मणश्रेष्ठ! एतत् त्वयि राद्धं सिद्धमेव तदहमेवावैमि जानाम्येव किन्तु यस्ते त्वया समयोऽभ्यधायि उक्तः स भूयात् सकृदिति सकृद्गर्भसम्भवपर्यन्तोऽङ्गसङ्ग इत्यर्थः। यस्माद्वरीयसि श्रेष्ठे पत्यौ हेतुभूते सतीनां स्त्रीणां गुणः खलु प्रसवोऽपत्योत्पत्तिरेव यदभावाद्वन्ध्येयमिति स्त्रीषु निन्दैवेति भावः। निर्विसर्गपाठे गुणानां प्रसव इति समासेऽपत्यमिषेण पत्युर्गुणा एव प्रसूयन्ते ताभिरिति मे त्वत्तः सदपत्यानि भवन्त्विति भावः॥ १०॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः।

तदपत्योदयं शृण्वित्युक्तं तत्र देवहूत्याः पातिव्रत्यं पतिप्रसादलब्धे विमाने भर्त्रा सह क्रीडां कन्योत्पत्तिं च वर्णयति। पितृभ्यामिति त्रयोविंशेनाध्यायेन। इङ्गितकोविदा चेष्टाभिज्ञा॥ १॥ ❀ ❀ विस्रम्भेण विश्वासेन तेजीयांसमतितेजोयुक्तम्

॥ २, ३ ॥ ❀ ❀ देवाद्धेतोः सम्यगनुवृताम् । गरीयसः गुरुतरात् पत्युः सकाशात् अतिसुखदङ्गसङ्गं तदुपकरणगर्भसम्भवादिरूपाशिषः आशासानां प्रार्थयन्तीं भूयसा कालेन क्षामां परिम्लानदेहेन्द्रियां व्रतचर्यया कर्शितां कृशाम् ॥ ४ ॥ ५ ॥ ❀ ❀ यो देहिनामतीव प्रियः समुचितः सुखोचितोऽपि स्वदेहः स मदर्थे क्षपितुं नावेक्षितः मत्परिचर्यायां तिरस्कृत इत्यर्थः । अतस्तत्र परमया शुश्रूषया परया वासुदेवदृष्ट्या कृतया भक्त्या च अहं तुष्टः ॥ ६ ॥ ❀ ❀ स्वधर्मे भगवदाराधने निरतस्य मे मत्तः यः स्वाश्रमकर्मानुष्ठानजन्यकायक्लेशः समाधिर्भगवत्यात्मार्पणं तद्भक्तिरित्यर्थः । विद्या भगवत्स्वरूपगुणादिज्ञानं च अर्थात्कर्मभक्तिज्ञानान्येवात्मयोगाः आत्मनि आराध्ये योगा उपायाः तैर्विजिताः स्वाधीनीकृताः भगवत्प्रसादाः दिव्याः भोगाः तान् ते त्वयापि मदनुसेवनयावरुद्धान् स्वाधीनीकृतान् प्रपश्य तद्दर्शनार्थं ते दृष्टिं वितरामि ददामि ॥ ७ ॥ ❀ ❀ भ्रुवः कालस्योद्विजृम्भेण वेगेन विभ्रंशिता अर्थरचना येषां ते अन्ये भोगाः किं न किमपि अबला देवहूती एवं ब्रुवाणम् । अखिलासु योगमायासु योगशक्तिषु तदापादिकासु च विचक्षणमवेक्ष्य गताधिः गतव्यथा आसीत्संप्रश्रयः स्नेहोद्रेकः प्रीतिस्ताभ्यां विह्वलया गद्गदया गिरा ईषद्व्रीडावलोकाभ्यां विलसद्धसितमाननं यस्याः सा ॥ ८ ॥ ९ ॥ ❀ ❀ हे द्विजवृष ! द्विजश्रेष्ठ ! हे भर्तः ! हे विभो ! विपुलज्ञान यद्वा भर्तरि वासुदेवदृष्ट्यभिप्रायेणेदं संबोधनं तत्र हे विभो ! हे सर्वव्यापक ! अमोघयोगमायाधिपे योगशक्त्योपेते त्वयि एतत् राद्धं सिद्धं तदहमवैमि जानामि किन्तु यस्ते त्वया समयः अभ्यधायि अभिहितः तदर्थं सकृदङ्गसङ्गो भूयात् गरीयसि भर्त्तरि सतीनां यः प्रसवः स गुणः ॥ १० ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

कर्दमस्य हि कामोऽत्र स्वीकृतत्वात्तदिच्छया । त्रयोविंशतिमेऽध्याये वैराग्यावधिरुच्यते ॥ १ ॥
भगवद्भोगसृष्टौ हि पूर्वं मात्रा निरूपिताः । तद्ग्राहकाणीन्द्रियाणि निरूप्यन्तेऽधुना स्फुटम् ॥ २ ॥
भगवत्कृतभोगो हि नाल्पसत्त्वेन भुज्यते । अतस्तस्या योग्यतायै पतिसेवा निरूप्यते ॥ ३ ॥
ततः प्रसादो विज्ञप्तिर्भोग्यसाधननिर्मितिः । अन्तःस्थितहरेर्ज्ञप्त्या तथात्वज्ञापनं तथा ॥ ४ ॥
भोगो नानाविधश्चैव सर्वभावेन चैत्र हि । भार्येच्छया कन्यकानां जननं चाऽपि वर्ण्यते ।
वैराग्यमुभयोश्चैव कामस्तेनैव पूर्यते ॥ ५ ॥

तत्र प्रथमं तस्याः पतिसेवामाह—पितृभ्यामिति । मातापितृभ्यां प्रस्थाने कृते सति, दीनाऽपि सती, खेदमकृत्वा पतिं पर्यचरत् । पतिसंबन्धपर्यन्तमेव पित्रोः संबन्धः, यतः साध्वी । पतिव्रतायाः स एव धर्मः । सेवा सैव, या भर्तू रोचते । रुचिश्च महान् न वदतीति, तदिङ्गितैर्ज्ञातव्येति । तज्ज्ञानं च पातिव्रत्यादेव जातमित्याह—इङ्गितकोविदेति । इङ्गिते कोविदा पण्डिता । दीर्घकालादरनैरन्तर्यसेवा फलदा भवतीति तदाह—नित्यं प्रीत्येति । नित्यमिति दीर्घनैरन्तर्ये । प्रीतिरादरः स्नेहश्च सेव्यवश्यत्वहेतुः । निष्कामकामनायामावश्यकत्वे च दृष्टान्तः—भवानीव भवमिति । विवाहात्पूर्वं प्रभुत्वेनैव पार्वत्या सेवितः । केवलं मनसा पतिरिति जानाति, पूर्वसंस्काराच्च । तद्वदियमपि संबन्धरहिता काम्यालङ्कारादिकामनारहिता चावश्यकत्वेनैव सेवां कृतवतीत्यर्थः ॥ १ ॥ ❀ ❀ सेवायां गुणान् दोषाभावांश्चाह द्वयेन । गुणानाह—विश्रम्भेणेति । विश्रम्भेण विश्वासेन; अनेन मम सर्वपुरुषार्थः सेत्स्यतीति । आत्मनो देहस्याऽन्तःकरणस्य शौचेन शुद्धया । सन्तः शुद्धयै प्रसीदन्ति । विश्वासः सर्वत्राङ्गम् । पुत्रपित्रादिष्विव न सेवा, किन्तु देववदित्याह—गौरवेणेति । गौरवमादरविशेषो महत्त्वपूर्वकः, यथा गुरौ क्रियते । दम इन्द्रियनिग्रहः, इन्द्रियचाञ्चल्ये सेवा न फलतीति लोकवेदसिद्धम् । शुश्रूषा चरणसंवाहनाद्यन्तरङ्गसेवा । सौहृदं सुहृदो भावः । सर्वैरेव मित्रधर्मैरित्यर्थः । गुह्यगूहनगुणप्रकटीकरणादिभिः । मधुरा च वाणी पूर्वोक्तसर्वगुणेषु प्राणभूता । 'सत्यस्वप्रियवादिनीम्' इति तद्विरोधिनस्त्यागहेतुत्वात् । चकारादन्येऽपि शमादयः । भो इति केवलं संबोधनं सावधानार्थे ॥ २ ॥ ❀ ❀ दोषाभावानाह—विसृज्येति । कामादयः षड् दोषाः, पापापराधौ चाऽधिकौ । तत्र काम आद्यः, कामपूरणार्थमेव कामिनीव भजते । मानमिति पाठे अहङ्कारो राजपुत्र्यहमिति कामस्थानीयः । दम्भो लोभात्मकः, धनकीर्त्यादिलोभाभावे दम्भं न कुर्यात् । अत्र तु तदीयं सर्वं तस्या एवेति साक्षाल्लोभो न सम्भवतीति राजपुत्र्यास्तदग्रे पश्चाच्च नैकरूपता सेवायां सम्भवतीति दम्भो निर्दिष्टः । चकारादपराधो निवारितः । द्वेषो मत्सरात्मकः, क्रोधश्च संगृहीतः । लोभः स्पष्टः । अघमपराधः । मदो गर्वः । एवमष्टाऽपि निवारिताः । अप्रमत्ता चासावुद्यता च । नित्योद्यमः प्रमादाभावश्चाऽन्तरङ्गौ । एवं कृते यज्जातं तदाह—तेजीयांसमतोषयदिति । अतितेजस्विनं दुर्धर्षमप्यतोषयदित्यर्थः ॥ ३ ॥ ❀ ❀ तुष्टस्य प्रसादं वक्तुं यस्याऽधीनत्वमतिप्रसादाय तद्दृष्टं निरूपयति—स वा इति द्वाभ्याम्—महत्त्वं हि दैन्यसामानाधिकरणं दयाहेतुर्भवतीति प्रथमं महत्त्वमाह—मानवीमित्यादि विशेषणत्रयेण । तथाज्ञाने हेतुः—देवर्षिवर्य इति । देवा हि हृदयस्थं जानन्ति,

१. त्रयोविंशे तु चाध्याये ख. घ. ङ. च. । २. तज्ज्ञापकानीन्द्रियाणि ख. ग. च. । ३. तत्त्वानाम्. क. घ. । ४. एव च ग. ङ. च. । ५. मित्रा. ग. । ६. कामिनी ग. कामिनीम्. घ. ङ. ।

ऋपयोऽलौकिकम्, ततोऽप्युत्तमः। बाह्यमाभ्यन्तरमलौकिकं जानाति। तत्र-मानवीमिति बाह्योत्कर्पः। सम्यगनुव्रतामिति यथा स्वस्याऽनुभावादिः, अन्तःकरणबाह्यधर्मा वा। दैवमदृष्टं कालो वा, ततोऽपि गरीयान् पतिः। दैवमप्यन्यथाकर्तुं शक्त इत्यर्थः। ततो महाशिप आशासानाम्, दुर्लभामपि कामनां पूरयिष्यतीति। आभ्यन्तरमेतत्॥४॥ ❀ ❀ दैन्ये हेतुद्वयमाह—कालेनेति। महता कालेन विपयरहितेन क्षामां दुर्बलाम्। व्रतचर्यया च कर्शिताम्। यथा पतिर्महातपसि तिष्ठति, तथा पतिव्रतेयं स्थितेति क्लिष्टा परमखेदं प्राप्तवती। एतादृशीं दृष्ट्वा कृपया पीडितः, तद्गतप्रेम्णा, गद्गदया वाचा, अग्रे वक्ष्यमाणं प्रसादरूपं वाक्यमब्रवीदित्यर्थः॥ ५॥ ❀ ❀ तान्येव वाक्यान्याह त्रिभिः—तुष्टोऽहमद्येत्यादिभिः-संतोषः सर्वदानं च दुर्लभत्वं च तस्य वै। त्रयं भगवता देयं नाऽन्येनेति निरूप्यते ॥ १॥ प्रथमं तोपमाह—तुष्टोऽहमिति। सुहृत्प्रियः। मदर्थे क्षपितुं नाऽवेक्षितः, न गणितः। समुचितः श्लाघ्योऽपि। मत्सेवाऽऽशया उपेक्षित इत्यर्थः। हे मानवि, महतः पुत्रि, अद्य तवाऽहं तुष्टः। न केवलं पितृमातृमाहात्म्यात्तवापि स्वतो माहात्म्यादित्याह—मानदायाः। यो हि निरन्तरं मानं सन्माननां प्रयच्छति, स हि पात्रे दानात्स्वयमपि मानं प्राप्नोति। एवमाधारगतं गुणद्वयं तोपे हेतुः। करणद्वयमाह शुश्रूपया परमया परया च भक्त्येति। परमा लोकोत्तरा शुश्रूषा अन्तरङ्गसेवा। इदं बाह्यं करणम्। परा माहात्म्यज्ञान-पूर्विका उत्कृष्टा भक्तिः प्रीतिः अन्तरङ्गं करणम्। किञ्च, न केवलं करणद्वयेनैव कार्यं सिद्ध्यति, आजन्मभजनाभावात्। किन्त्वाजन्मैतद्द्वयं यत्र व्यापृतम्, तस्यापि तदर्थं क्षपणमपेक्षत इति। तदाह–यो देहिनामिति। तत्र पूर्वोक्तं करणद्वयं सर्वथा व्यापृतमिति वक्तुमयं देहो देहिनां देहाभिमानिनामतीव सुहृन्मित्रमात्मभूतमित्ररूपम्, सोऽपि मदर्थं क्षपितुं क्षपयितुम्। कर्तृद्वयस्याऽप्येकत्वादन्तर्भावितणिच्प्रयोगः। स्वार्थमनुपयुक्तस्य लोकोपकारार्थं क्षपणं दृष्टमिति तद्व्यावृत्त्यर्थमाह—समुचित इति। सम्यगुचितः, स्वस्य सर्वपुरुषार्थसाधकः। अतो गुणत्रयस्य पूर्णप्रसादहेतोर्जातत्वात् अहं तुष्टः॥ ६॥ ❀ ❀ तुष्टस्य कृत्यमाह–ये म इति। मे मम ये भगवतः प्रसादा भगवता मह्यं दत्ताः, तानेव ते तुभ्यं वितरामि हि सर्वस्वम्, यद्वोत्कृष्टम्, तत्प्रयच्छति। मम तु सर्वस्वमुत्कृष्टं च सर्व एव भगवत्प्रसादाः; तेऽपि प्रसिद्धाः, न त्वप्रयोजकाः। तत्र हेतुः—स्वधर्मनिरतस्येति। स्वधर्मो भगवद्धर्मः, निरतः प्रतिष्ठितः। ते चेदयया प्राप्ताः स्युः, तदाऽन्यस्मै दीयमाना न कार्यक्षमा भवेयुः। अतस्तद्व्यावृत्त्यर्थमाह–तपःसमा-धिविद्यात्मयोगविजिता इति। तपो धर्मरूपम्, धर्मेण ये केचन प्रसादाः सिद्ध्यन्ति ते तेन विजिताः। समाधिर्योगोत्कर्पः, तेन सिद्धा अणिमादयोऽर्थाः; तद्रूपा अपि भगवत्प्रसादाः तेन जिताः। विद्या भक्तिः, उपासना वा वानप्रस्थसाध्या; तत्साध्या अपि भगवत्प्र-सादा ज्ञानादिरूपाः, तेऽपि विजिताः। आत्मयोगो यतिधर्मो मोक्षसाध्यः, तेनापि विजितास्तथा। तानेव वितरामि। एवकारो नाऽन्य-व्यवच्छेदकः, किन्त्वर्थविशेपे अदेयत्वेन ते सिद्धा इति तेपामुत्कर्षवाचकः। ननु भगवत्प्रसादाः स्वतन्त्राः, दीयमाना अपि कथं मयि समायास्यन्तीत्याशङ्क्याह–मदनुसेवनयाऽवरुद्धानिति। मम या अनुसेवा, सा मामेव गृहीतवती कः सन्देहः परिकरगुणेपु। अवरुद्धाश्च स्वाधीना भवन्ति। अलौकिके विश्वासार्थमाह–दृष्टिं प्रपश्येति। दृष्टिं वितरामि तद्दर्शनार्थम्, अतः प्रपश्येत्यर्थः। प्रथमतस्तेपां दानम्; पश्चात् दृष्टेर्दानम्, आत्मगामित्वात्फलस्य। प्रसादानामपि विषयत्वादौत्पत्तिकदोपसहिता एव भविष्यन्ती-त्याशङ्क्य दोपद्वयं परिहरति–अभयान् इहामुत्र भयरहितान्। अशोकांश्च। स्वापगमेन शोकं च न जनयन्तीत्यर्थः॥ ७॥ ❀ ❀ राजकन्यात्वात् राज्यविषयकानेव तान् बहु मन्यते, नत्वलौकिकानित्याशङ्क्य पूर्वं भोग्यत्वेनैव ज्ञातान् विपयान् अन्ये पुनरिति। निन्दति–अन्ये राज्यादयः, वा किं न किञ्चिदित्यर्थः। तत्र हेतुमाह–उरुक्रमस्य भगवतः, भ्रुव उद्विजृम्भविभ्रंशि-तार्थरचनाः। भगवत इति सामर्थ्यम्। उरुक्रमेत्यद्भुतकर्मत्वम्, अन्यथा स्वदत्तं स्वयमेव कथं हन्यात्! कथं वाऽपकारि भवेत्! आत्मा वा भूत्वा कथमेवं कुर्यादिति। अनेन सर्वे दोषाः परिहृताः, चिकीर्षितापरिज्ञाने हेतुश्चोक्तः। अत एव तस्य भ्रुवः कालस्य, या उद्विजृम्भा आलस्येनापि ग्रहणम्, तेनैव विभ्रंशिता अर्थरचना येषां राज्यादीनाम्। स्वरूपतोऽपि नश्यन्ति, यदर्थं क्रियन्ते तदपि न संपादयन्ति। अर्थार्थं रचना निर्माणम्। नन्वहमपि तादृश्येवेति यथायोग्यं फलं भवत्विति चेत्तत्राऽऽह–सिद्धाऽसीति। न त्वमसिद्धा, पूर्ववत्। अतः पूर्वसिद्धविषयभोगे पातित्यं भवति। न केवलं पूर्वनिपेधः क्रियते, किन्तु विभवान् भुङ्क्ष्व। विगतो भवो जन्म येभ्यः। विषयत्वेऽपि मोक्षसाधकान् नाऽप्येते धर्मफलरूपाः, अन्यथा कृतो धर्मः क्षीयेत। प्रत्युत निजधर्मपातिव्रत्यादिकं दुहन्तीति—निजधर्माणां दोहो येभ्य इति। न केवलं फलत एवोत्कृष्टाः, स्वरूपतोऽपीत्याह—नरैर्दुरधिगा-निति। वयं नृपा इति विक्रिया सन्निपातकार्यम्, तैः करणैः, मनुष्या उपभोक्तारः, तान् विषयान् ग्रहीतुं न शक्नुवन्तीत्यर्थः ॥ ८॥ ❀ ❀ एवं वरे दत्ते सहसा तद्धृदये सर्वं न समागतमिति पूर्वविचारितमिव किञ्चित्प्रार्थयितुमारभत इत्याह—एवं ब्रुवाणमिति। आदौ तस्याः खेदनिवृत्तिमाह—एवं ब्रुवाणमवेक्ष्य गताधिरासीत्। केवलमाहात्म्यार्थं न वचनम्, स्त्रीष्वनृतं न दोपायेति। तन्निवृत्त्यर्थमाह—अखिलयोगमायाविद्याविचक्षणमिति। अखिला या योगमाया नानाविधसर्वविषयरूपा, तस्या वशीकरण-मन्त्रादिरूपा विद्या, तत्र विचक्षणोऽतिनिपुणः। अतस्तादृशं ज्ञात्वा। तादृशं च वक्तारम्, विचक्ष्य विचारेण सत्यं वदतीति ज्ञात्वा, गताधिरासीत्। प्रार्थयितुमाह—संप्रश्रयेति। प्रश्रयो विनयः, प्रणयः स्नेहः। प्रश्रितेति पाठे सम्यक् प्रकर्षेण योऽयमाश्रितः, तस्य यः

---

१. नाऽन्यैस्त्वेवम्. क. नान्येत्येवम्. ङ. च.। २. पातिव्रत्यम्. क. घ. ङ.। ३. कृतौ क. ग. ङ.।

प्रणयः, तेन विह्वला गीः। विनयोऽपि वर्णोद्गमप्रतिबन्धकः, स्नेहोऽपि। वाच्यार्थस्मरणेन ईषत् यत् स्मितम्, कुलवधूत्वात्; तेन व्रीडापूर्वको योऽयमवलोको भावितार्थसूचकः, तेन विकसद्धसितानना सती वक्ष्यमाणमाह ॥ ९ ॥ ❀ ❀ अभिप्रेतं ससाधनमाह द्वाभ्याम्—राद्धमिति ! यद्यपि भर्त्रा भगवत्प्रसादा इत्युक्तम्, तथापीयं भगवत्त्वेनैव तं सेवितवतीति तदुक्तानां धर्माणां तस्मिन् स्वाभाविकत्वमनूद्य, तस्मिन् स्वज्ञानं प्रमाणीकरोति हे द्विजवृष ! एतत् त्वदुक्तम्, त्वयि राद्धं सिद्धमेव। बतेति हर्षे। द्विजानां मध्ये ये श्रेष्ठा ब्रह्मविदः, तेषामेतत्सर्वं सिद्धमिति ज्ञापनार्थं संबोधनम्, कामपूरणार्थं वा, पशव्यो हि कामः। अमोघा या योगमाया, तस्या अधिपे त्वयि सर्वं सिद्धमेव। काचिद्योगमाया प्रदर्शनार्थेऽपि भवतीति तद्व्यावृत्त्यर्थममोघोक्ता। तादृशस्यैव तथावचनं सत्यं भवतीति तथाऽनुवादः। तदवैमीति प्रमाणम्। विभो इति संबोधनं च तत्साधकम्। भर्तरिति संबोधनं स्वस्य तथाज्ञाने सामर्थ्यजननाय, भर्तुरेव धर्मेण भार्यायाः सामर्थ्यं भवतीति। विवाहे पणस्य कृतत्वात्तदतिरिक्तयाचने स्वधर्मः क्षीयत इति पूर्वोक्तमेव स्मारयति—यस्तेऽभ्यधायीति। सकृदङ्गसङ्ग इति। यस्त्वया पूर्वमुक्तः 'यावत्तेजो बिभृयात्' इति, स एकान्तः सङ्गः। अमोघवीर्यश्च भवान्, अतोऽर्थात् सकृदेवाङ्गसङ्गोऽभ्यधायि। स च समयः। समयबन्ध उभयोरनुल्लङ्घनार्थः। स भूयादिति प्रार्थना। ततः किं स्यादित्याशङ्क्याऽऽह—स एव सकृदङ्गसङ्गः सतीनां गुणप्रसवः। पतिव्रतास्तु न कामुक्यः पतिव्रतमेव च व्रतं तासाम्। अतस्तावदेवाऽपेक्षितम्। तद्गताश्च गुणा आनन्दादयस्तदैव भर्त्रेऽभिव्यक्ता भवन्ति। अग्रे च पुत्रद्वारा प्रकर्षेण सूयन्ते, तदैव च तासां जन्मसाफल्यमिति ॥ १० ॥

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

अथ त्रयोविंशाध्यायं विवरिषवः पूर्ववदवसर एव सङ्गतिरिति बोधनायार्थमेव सर्वं सङ्गृह्याहुः—कर्दमस्येति द्वाभ्याम्। निरूपिता इति। भगवद्वाक्यर्षिवाक्यमन्वादिधर्मैः संस्कृता देवहूतिनिष्ठा भगवद्दर्शनतपःप्रभृतिभिः संस्कृताः कर्दमीयाश्च निरूपिताः। इन्द्रियाणीति। तयोरेवेन्द्रियाणि। अवान्तरवाक्यार्थानाहुः—भगवत्कृतेत्यादि। तथात्वज्ञापनमिति भगवत्कृतत्वज्ञापनम्।

तुष्ट इत्यत्र। अन्येति। एतादृशव्यतिरिक्ता सम्पत्। यत्र व्यापृतं तस्यापि तदर्थं क्षपणमिति। यस्मिन्नधिकरणे व्यापारत्वेन स्थितं तस्याऽप्यधिकरणरूपस्य देहस्यान्तःकरणस्य च तदर्थं व्यापारात्मकसेवाप्रीत्योरर्थे क्षपणमित्यर्थः ॥ ६ ॥ ❀ ❀ ये म इत्यत्र। मोक्षसाध्य इति। 'बन्ध इन्द्रियविक्षेपो मोक्ष एषां च संयमः' इति भगवद्वाक्यादिन्द्रियसंयमात्मकमोक्षसाध्यः। यस्मिन्नर्थविशेष एवकारोऽभिप्रेतस्तं स्फुटीकुर्वन्ति—अदेयत्वेनेत्यादि तथा च, नित्यं सम्बन्धेन तत्पदप्राप्तावपि या तदुक्तिः, सा तेषां तथाप्रसिद्धिबोधनार्था। तथा सति तत्सन्निधिवशादेवकारोऽपि तदुत्कर्षमेव ब्रूत इति तथेत्यर्थः ॥ ७ ॥

### श्रीगिरिधरकृता बालप्रबोधिनी

तपोयोगप्रभावेण त्रयोविंशे विशेषतः। कर्दमदेवहूत्योश्च चित्रा क्रीडा निरूप्यते ॥ १ ॥

'तदपत्योदयं शृणु' इति प्रतिज्ञातमेव वर्णयितुमारभते—पितृभ्यामित्यादि। पितृभ्यां मनुशतरूपाभ्यां प्रस्थिते गमने कृते साध्वी पतिव्रता इङ्गितकोविदा पत्युरभिप्रायज्ञा देवहूतिः पतिं कर्दमं नित्यं प्रीत्या पर्यचरत् सेवितवती। तत्र दृष्टान्तमाह—प्रभुमीश्वरं भवं रुद्रं भवानी यथा परिचरति तथेति ॥ १ ॥ ❀ ❀ एतदेव प्रपञ्चयति द्वाभ्याम्। श्रवणे सावधानतार्थं सम्बोधयति—भो इति। कामादीन् दोषान् हित्वा नित्यं निरन्तरमप्रमत्ता अनवधानरहिता उद्यता प्रयत्नयुक्ता च विश्रम्भादिभिः तेजीयांसं अतितेजस्विनमपि कर्दमं अतोषयदिति द्वयोरन्वयः। विश्रम्भेण एतत्प्रसादेनैव मम सर्वपुरुषार्थसिद्धिरिति विश्वासेन। आत्मनो-र्देहान्तःकरणयोः शौचेन स्नानसन्तोषादिभिर्विशुद्धत्वेन गौरवेण तन्महत्त्वसंरक्षणलक्षणादरविशेषेण। दमेन बाह्येन्द्रियनिग्रहेण। शुश्रूषया पादसंवाहनादिसेवया सौहृदेन प्रेमातिशयेन मधुरया वाचा च ॥ २ ॥ ❀ ❀ कामं विषयाभिलाषम्। दम्भमन्तःकरणेऽन्यथाभावे सत्यपि उपरितोऽन्यथाभावाविष्करणम्। द्वेषं मामुपेक्ष्य कथं स्वयं तपश्चरतीत्यप्रीतिविशेषम्। लोभं विषयसङ्ग्रहेच्छाम्। अघमाज्ञोल्लङ्घनाद्यपराधम्। मदं अहं महाराजकन्या कथमन्यपरिचर्यां करोमीति गर्वम् ॥ ३ ॥ ❀ ❀ सन्तुष्टस्य प्रसादं वक्तुं प्रथमं दयाहेतुभूतं महत्समानाधिकरणं दैन्यं दृष्ट्वा कृपया पीडितो जात इत्याह—स इति द्वयेन। स वै प्रसिद्धः कर्दमस्तां मानवीं महाराजाधिराजस्य मनोः कन्यां समनुव्रतां सम्यगनुसेवमानाम्। पूर्वं निष्कामामपीदानीं दैवादपि देवतान्तरात् प्रारब्धाद्वा गरीयसः गुरुतरत्वेनानुसंहितात् पत्युः सकाशात् महाशिषः पुत्रादीन् मनोरथान् आशासानामभिकाङ्क्षमाणां व्रतचर्यया कर्शितां क्लिष्टां तत्रापि भूयसा कालेन व्रतपरतया बहुकालव्यतीतेन अतिक्षामामतिदुर्बलां–दृष्ट्वेति शेषः–कृपयाऽतिपीडितः प्रेम्णा गद्गदया स्खलिताक्षरया वाचाऽब्रवीदिति द्वयोरन्वयः। ननु तस्य पराभिप्रायज्ञानं कथमिति शङ्कानिरासार्थं कृतघ्नतापरिहारार्थं तन्मनोरथपूरणे सामर्थ्यं द्योतयंश्च विशिनष्टि—देवर्षिवर्य इति ॥ ४ ॥ ५ ॥ ❀ ❀ तद्वाक्यान्येवाह—तुष्टोऽहमिति त्रिभिः। महद्कुलोत्पन्नायास्तव एतदेवोचितमिति सूचयन् सम्बोधयति—मानवीति। मानदाया मम सन्मानं कुर्वत्यास्तव परमया शुश्रूषया सेवया परया भक्त्या चायाहं तुष्टः प्रीतोऽस्मि। भक्तेः परत्वमेव सूचयति–योऽयं देहिनामतीव सुहृत्प्रियतमः स्वदेहः स मदर्थे क्षपयितुं नावेक्षित उपेक्षितः। मत्सेवार्थं देहमनादृत्य क्षपित इत्यर्थः। निःप्रयोजनस्य सर्वोऽप्यनादरं करोत्यत आह—समुचितः

सर्वपुरुषार्थहेतुतया श्लाघ्य इत्यर्थः ॥ ६ ॥ ❀ ❀ तच्च तत्र सफलमेवेत्याह—ये इति । स्वेषु वर्णाश्रमधर्मेषु निरतस्य मे मम तपः व्रतादि समाधिश्च भगवद्ध्यानं विद्या च तासु य आत्मयोगश्चित्तैकाग्र्यं तेन विजिताः प्राप्ता ये भगवत्प्रसादाः दिव्या भोगास्तानेव ते त्वयाऽपि मदनुसेवनया अवरुद्धान् वशीकृतान् त्वं प्रपश्येत्यन्वयः । ननु तर्हि ते मया कुतो न दृश्यन्ते इत्यत आह—दृष्टिमिति । तुभ्यं दिव्यां दृष्टिं वितरामि ददामि यया तान् द्रक्ष्यसि । भगवत्प्रसादप्राप्तत्वाद् तेषामलौकिकत्वमाह—अभयानशोकानिति नास्ति नरकपातादिभयं येषु तान्, नास्ति विनाशे सति शोको येषां यावद्भोगाभिलाषाविनाशित्वात् तान् ॥ ७ ॥ ❀ ❀ एवं भगवत्प्रसादप्राप्तानां उत्कर्षं निरूप्य तदितरेषां तुच्छत्वमाह—अन्ये इति । तदन्ये पुनर्भोगाः किं ? न किमपि; अति तुच्छा इत्यर्थः । तत्र हेतुमाह—उरवः क्रमाः पादविक्षेपा लीला यस्य भगवतः भ्रुवः कालस्य उद्विजृम्भः वक्रीभावस्तेन विभ्रंशिता अर्थरचना मनोरथा येषु ते । अतः मत्सेवयैव त्वं सिद्धासि कृतार्थासि दिव्यान् अलौकिकान् भोगान् भुंक्ष्व । अलौकिकत्वमेवाह—विभवानिति, विगतो भवति भवो येभ्यस्तान् मोक्षपर्यवसायिन इत्यर्थः । तत्र हेतुमाह—निजेति, निजधर्माणां भक्तिविरक्त्यादीनां दोहो येभ्यस्तान् । अतएव नृपाणां सार्वभौमानामपि विक्रिया अभिलाषो यासु सम्पत्सु ताभिः साधनभूताभिरपि नरैः—कर्तृभिः—दुरधिगान् दुस्साध्यानित्यर्थः ॥ ८ ॥ ❀ ❀ अखिला योगमाया विचित्रपदार्थरचनाशक्तयः विद्या च तत्तदुपासना तासु विचक्षणं निपुणं कर्दमं एवं पूर्वोक्तप्रकारेण ब्रुवाणं भाषन्तमवेक्ष्य अबला देवहूतिः गताधिः विगतमनोव्यथा आसीत् । ततश्च सम्प्रश्रयः विनयः प्रणयः स्नेहस्ताभ्यां विह्वलया गद्गदाक्षरया गिरा वाचा तमाहेत्यन्वयः ॥ ९ ॥ ❀ ❀ त्वत्प्रभावो मदर्थमेवेत्याशयेन सम्बोधयति—भर्त्तरिति । सामर्थ्यं सूचयन्त्याह—हे विभो इति । तत्र हेतुं सूचयन्ती सम्बोधयति—द्विजवृषेति । अमोघाः सफलाः योगमायाः शक्तयस्तासामधिपे नियन्तरि त्वयि यदेतत्त्वदुक्तं सर्वं राद्धं सिद्धमस्ति तदहमवैमि जानाम्येव । वतेति स्वहर्षं सूचयति । एवं तदुक्तमभिनन्द्य विवाहसमये समयस्य कृतत्वात् यदतिरिक्तयाचनस्य पातिव्रत्यभ्रंशकत्वात् तदेव स्मारयति—यस्य इति । ते त्वया यः समयोऽभ्यधायि भाषाबन्धः कृतः सकृद् गर्भसम्भवमात्रपर्यन्तः अङ्गसङ्गः स भूयात् । तस्मात् गरीयसि श्रेष्ठे भर्त्तरि निमित्ते सति सतीनां स्त्रीणां प्रसवो गुणो महाँल्लाभः । गुणप्रसव इति समस्तपाठे तु गरीयसि पत्यौ सति सतीनां यतो गुणप्रसवः गुणविस्तारो भवति । अतः पुत्रोत्पत्त्या मम गुणविस्तारे जाते पश्चात्त्वदुक्तं पारमहंस्यधर्मानुष्ठानं भवत्विति भावः ॥ १० ॥

## हिन्दी अनुवाद

### कर्दम और देवहूतिका विहार

श्रीमैत्रेयजीने कहा—विदुरजी ! माता-पिताके चले जानेपर पतिके अभिप्रायको समझ लेनेमें कुशल साध्वी देवहूति कर्दमजीकी प्रतिदिन प्रेमपूर्वक सेवा करने लगी; ठीक उसी तरह, जैसे श्रीपार्वतीजी भगवान् शङ्करकी सेवा करती हैं ॥ १ ॥ ❀ ❀ उसने काम-वासना, दम्भ, द्वेष लोभ, पाप और मदका त्यागकर बड़ी सावधानी और लगनके साथ सेवामें तत्पर रहकर विश्वास, पवित्रता, गौरव, संयम शुश्रूषा, प्रेम और मधुर भाषणादि गुणोंसे अपने परम तेजस्वी पतिदेवको सन्तुष्ट कर लिया ॥ २-३ ॥ ❀ ❀ देवहूति समझती थी कि मेरे पतिदेव देवसे भी बढ़कर हैं, इसलिए वह उनसे बड़ी-बड़ी आशाएँ रखकर उनकी सेवामें लगी रहती थी । इस प्रकार बहुत दिनोंतक अपना अनुवर्तन करनेवाली उस मनुपुत्रीको व्रतादिका पालन करनेसे दुर्बल हुई देख देवर्षिश्रेष्ठ कर्दमको दयावश कुछ खेद हुआ और उन्होंने उससे प्रेमगद्गद वाणीमें कहा ॥ ४-५ ॥ ❀ ❀ कर्दमजी बोले—मनुनन्दिनि ! तुमने मेरा बड़ा आदर किया है । मैं तुम्हारी उत्तम सेवा और परम भक्तिसे बहुत सन्तुष्ट हूँ । सभी देहधारियोंको अपना शरीर बहुत प्रिय एवं आदरकी वस्तु होता है, किन्तु तुमने मेरी सेवाके आगे उसके क्षीण होनेकी भी कोई परवा नहीं की ॥ ६ ॥ ❀ ❀ अतः अपने धर्मका पालन करते रहनेसे मुझे तप, समाधि, उपासना और योगके द्वारा जो भय और शोकसे रहित भगवत्प्रसाद-स्वरूप विभूतियाँ प्राप्त हुई हैं, उनपर मेरी सेवाके प्रभावसे अब तुम्हारा भी अधिकार हो गया है । मैं तुम्हें दिव्य दृष्टि प्रदान करता हूँ, उसके द्वारा तुम उन्हें देखो ॥ ७ ॥ ❀ ❀ अन्य जितने भी भोग हैं, वे तो भगवान् श्रीहरिके भ्रुकुटिविलासमात्रसे नष्ट हो जाते हैं; अतः वे इनके आगे कुछ भी नहीं हैं । तुम मेरी सेवासे ही कृतार्थ हो गई हो; अपने पतिव्रत-धर्मका पालन करनेसे तुम्हें ये दिव्य भोग प्राप्त हो गये हैं, तुम उन्हें भोग सकती हो । हम राजा हैं, हमें सब कुछ सुलभ है, इस प्रकार जो अभिमान आदि विकार हैं, उनके रहते हुए मनुष्योंको इन दिव्य भोगोंकी प्राप्ति होनी कठिन है ॥ ८ ॥ ❀ ❀ कर्दमजीके इस प्रकार कहनेसे अपने पतिदेवको सम्पूर्ण योगमाया और विद्याओंमें कुशल जानकर उस अबलाकी सारी चिन्ता जाती रही । उसका मुख किंचित् संकोचभरी चितवन और मधुर मुसकानसे खिल उठा और वह विनय एवं प्रेमसे गद्गद वाणीमें इस प्रकार कहने लगी ॥ ९ ॥ ❀ ❀ देवहूतिने कहा—द्विजश्रेष्ठ ! स्वामिन् ! मैं यह जानती हूँ कि कभी निष्फल न होनेवाली योगशक्ति और त्रिगुणात्मिका मायापर अधिकार रखनेवाले आपको ये सब ऐश्वर्य प्राप्त हैं । किन्तु प्रभो ! आपने विवाहके समय जो प्रतिज्ञा की थी गर्भाधान होनेतक मैं तुम्हारे साथ गृहस्थ-सुखका उपभोग करूँगा, उसकी अब पूर्ति होनी चाहिये । क्योंकि श्रेष्ठ पतिके द्वारा सन्तान प्राप्त होना पतिव्रता स्त्रीके लिये महान् लाभ है ॥ १० ॥

तत्रेतिकृत्यमुपशिक्ष यथोपदेशं येनैष मे कर्शितोऽतिरिरंसयाऽऽत्मा।
सिद्ध्येत ते कृतमनोभवधर्षिताया दीनस्तदीश भवनं सदृशं विचक्ष्व ॥ ११ ॥

मैत्रेय उवाच

प्रियायाः प्रियमन्विच्छन् कर्दमो योगमास्थितः। विमानं कामगं क्षत्तस्तर्ह्येवाविरचीकरत् ॥ १२ ॥
सर्वकामदुघं दिव्यं सर्वरत्नसमन्वितम्। सर्वर्द्ध्युपचयोदर्कं मणिस्तम्भैरुपस्कृतम् ॥ १३ ॥
दिव्योपकरणोपेतं सर्वकालसुखावहम्। पट्टिकाभिः पताकाभिर्विचित्राभिरलंकृतम् ॥ १४ ॥
स्रग्भिर्विचित्रमाल्याभिर्मञ्जुशिञ्जत्षडङ्घ्रिभिः। दुकूलक्षौमकौशेयैर्नानावस्त्रैर्विराजितम् ॥ १५ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

अंगसंगार्थं च प्रथममिति कर्तव्यतां संपादयेत्याह। हे ईश तत्रांगसंगे इतिकृत्यं साधनं यथोपदेशं कामशास्त्रानुसारेणोपशिक्ष संजानीहि उपकल्पयेत्यर्थः। येन साधनेनाभ्यंगभोजनपानादिनाऽतीव रंतुमिच्छया कर्शितो दीनश्च ममैष आत्मा देहः सिध्येत रतिसमर्थो भवेत्। कथंभूतायाः। ते त्वयैव कृतः क्षोभितो यो मनोभवस्तेन धर्षितायाः। तत्ततोऽनुरूपं भवनं विचक्ष्व वितर्कय विचारयेति यावत् ॥ ११ ॥ ❀ ❀ तर्हि तत्क्षणमेव आविरचीकरदाविर्भावयांबभूव ॥ १२ ॥ ❀ ❀ तदेव विशिनष्टि। सर्वकामदुघमिति नवभिः सर्वैश्च रत्नादिभिः समन्वितम्। सर्वर्धीनां सर्वसंपदां य उपचयस्तस्योदर्क उत्तरोत्तराभिवृद्धिर्यस्मिन् उपस्कृतं शोभितम् ॥ १३ ॥ ❀ ❀ उपकरणं परिकरः। पट्टिका अल्पविस्तारपट्टवस्त्रविशेषाः पताका विस्तृतास्ताभिः ॥ १४ ॥ ❀ ❀ विचित्राणि माल्यानि पुष्पाणि यासु मंजु यथा भवत्येवं शिंजन्तः कूजंतः षडंघ्रयो यासु ताभिः स्रग्भिः ॥ १५ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

ननु तर्हि प्रविश पर्णशालां तत्ते वांछितं करवाणीति चेन्न तदीदृशमलिनशरीरेणैतादृशपर्णशालायां नैतादृशपरिच्छदेन सिद्ध्येदित्याह-तत्रेति। कामशास्त्रानुसारेण वात्स्यायनादिशास्त्रोपदेशानतिक्रमेण उपशिक्ष। स्वस्मादेव जानीहि कामक्रियायाः स्वैकगम्यत्वात् ज्ञात्वा च तत्तत्समुचितं वस्तुजातं रसोद्दीपनादिकमभ्यंगभोजनपानादिकं च साधु संपादयेत्यर्थः। धर्षितायाः अभिभूतायाः भवनं गृहम्। ईशेति। योगवलेन सर्वं कर्तुं समर्थोऽसीत्याह ॥ ११ ॥ ❀ ❀ तूष्णीं स्थितया देवहूत्या नेत्रेङ्गितेनैव यदुक्तं कर्दमोपि तूष्णीं स्थित एव तदैव तत्सर्वं संपादयामासैव। न तु प्रत्युत्तरं ददावित्याह प्रियाया इत्यादिना। योगं योगवलमास्थित। विमानं सार्वभौमसंपद्युतं साप्तभूमिकं खगामि गृहम्। "सम्राट्संपद्युतं गेहं खगामि साप्तभूमिकम्। विमानं प्रोच्यते पोताश्वामरवाहनेष्वपि" इति धरणिः ॥ १२ ॥ ❀ ❀ तदेव विमानमेव। दिव्यं सुंदरम्। "दिव्यं बलौ दिवि भवे लवंगामलकीफले" इति धरणिः। संघवृद्ध्योरुपचय इति च अत्रोपचयः संघः ॥ १३ ॥ ❀ ❀ परिकरः सामग्री सर्वकालेषु शीतोष्णवर्षासमयेषु तत्तत्कालोचितस्थानद्रव्यादिभिः सुखदम्। पट्टिकाल्पपताका। "पताका विस्तृतध्वजे स्मृता" इति स्वामी ॥ १४ ॥ ❀ ❀ सिंजंतः शब्दं कुर्वंतः स्रग्भिर्मालाभिः। शिंजितशब्दो यद्यपि भूषणशब्देस्ति तथाप्यत्र भ्रमराणामपि मालाभूषणत्वादत्र न विरुद्ध इति। "दुकूलं क्षौममस्त्रियाम्" इत्यमरोक्तेर्दुकूलक्षौमयोरेकार्थत्वेप्यवांतरभेदो ज्ञेयः। यद्वा। दुकूलैः श्लक्ष्णैः क्षौमैः कौशेयैश्च। क्षुमी अतसी तज्जैः क्षौमैः। कोशो जंतुविशेषस्तज्जैः कोशेयैः। "दुकूलं श्लक्ष्णवस्त्रे क्षौमे च" इति मेदिनी ॥ १५ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

तत इति कृत्योपदेशानन्तरमनुरूपं रत्यनुकूलम् ॥ ११ ॥ ❀ ❀ प्रियाया इति दशकम्। योगमाश्रितः योगप्रभावमाविष्कुर्वन् सन् ( १ ) तदेव विमानमेव उपचयोऽत्र समूहः अन्यथा पुनरुक्तिः प्रसज्येत ( २ ) परिकरस्सामग्री ( ३ ) यद्यपि दुकूलं क्षौमस्त्रियामित्यमरसिंहात् द्वयोस्सपर्यायत्वं तथापि परिधानीयोत्तरीयत्वेन भेदो ज्ञेयः। कौशेयं पट्टवस्त्रसामान्यम् ( ४ ) क्षिप्तैः स्थापितैः ( ५ ) तत्र तत्र तेपु तेपूपर्य्युपरिरचितगृहेषु विनिक्षिप्तत्वं रचितत्वं ( ६ ) ( ७ ) पूर्वार्थे पद्मरागस्थप्रकाशादीनां चक्षुष्ट्वेन रूपणं कथञ्चित्कल्प्यमित्यरुचौ यद्वेति ( ८ ) तत्र तत्र उपर्य्युपरि गृहभित्तिशिखरादिषु ( ९ ) अत्राविर्भावनक्रियायां कर्दमस्य कर्तृत्वात्स्वशब्दस्य च कर्तृपरामर्शकत्वात् आत्मशब्दस्य च स्वशब्दार्थत्वन्मायाविन इति व्याख्यातम्। वस्तुतस्तु तत्र भगवत्प्रसादत्वमनेन नातिचित्रत्वाभावादिवेत्युक्तम् ( १० ) मलिनदेहत्वादिद्वयं भावानुदीपनद्वारा हेतुः ॥ १२—२२ ॥

---

१. प्रा० पा०—मालाभि०।

### श्रीमद्वीरराघवव्याख्या

अङ्गसङ्गार्थमितिकर्त्तव्यतां च संपादयेत्याह। तत्रेति। हे ईश! तत्र अङ्गसङ्गे इतिकृत्यम् इतिकर्त्तव्यतां साधककलापं यथोपदेशं कामतन्त्रोक्तानुसारेण उपशिक्ष सम्पादय। किं तदितिकृत्यं यदुपशिक्षणीयं तत्राह। ते त्वयैव कृतः उत्पादितः यो मनोभवः कामस्तेन धर्षितायाः पीडितायाः मे मया अतिरिरंसया भृशं रन्तुमिच्छया कर्शितः अत एव दीनः एष आत्मा देहः येनेतिकृत्येन सिद्ध्येत कार्श्यदैन्यादिपरिहारेण स्वस्थो भवेत्तदितिकृत्यमुपशिक्षयेत्यर्थः। तस्मात् सदृशमनुरूपं भवनं भोगस्थानमिदं भोग्यादीनामप्युपलक्षणं विचक्ष्व कल्पय॥ ११॥ ❀ ❀ एवमुक्तः कर्दमो भोग्यादीनसृजदित्याह मैत्रेयः। हे क्षत्तः! प्रियायाः भार्यायाः प्रियमन्विच्छन् कर्तुमिति शेषः कर्दमः योगम् उक्तयोगमायामाश्रितः कामं यथेच्छं गच्छतीति तद्विमानं तर्ह्येव तत्क्षणमेव आविरचीकरदाविर्भावयामास॥ १२॥ ❀ ❀ तदेव विमानं वर्णयति नवभिः। सर्वकामदुघं सर्वाभिलषितपूरकं दिव्यममानुषं सर्वर्द्धीनां सर्वसम्पदां य उपचयस्तस्योदर्क उत्तरोत्तराभिवृद्धिर्यस्मिन्मणिमयैः स्तम्भैरुपस्कृतं परिष्कृतम्॥ १३॥ ❀ ❀ दिव्यैरुपकरणैः परिकरैरुपेतं युक्तं सर्वस्मिन् काले सुखमेवावहति प्रापयति तथा पट्टिकाः अल्पविस्ताराः पट्टवस्त्रविशेषाः पताका वितताः ताभिश्च विचित्राभिरलंकृतम्॥ १४॥ ❀ ❀ विचित्राणि माल्यानि मालानिर्माणयोग्यानि पुष्पाणि यासु ताभिः मञ्जु मधुरं यथा तथा सिञ्जन्तः ध्वनन्तः षडङ्घ्रयो भ्रमरा यासु ताभिः स्रग्भिरलंकृतं दुकूलैः क्षौमैः धौतैः कौशेयैरन्यैश्च नानाविधैर्वस्त्रैर्विशेषेण राजितम्॥ १५॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

तर्हि तथास्त्वित्याशङ्क्य कृत्यं किंचिदस्तीत्याह। तत्रेति। तत्र सकृदङ्गसङ्गविषये यथोपदेशं शास्त्रोपदेशमनतिक्रम्य कृत्यमितिकर्तव्यतामुपशिक्ष विद्यामुपादत्स्व कुतो विद्योपादानमत्राह। येनेति। अतिरिरंसया ग्राम्यधर्मेच्छया कर्शित एष मे मम आत्मा देहो येन विद्योपादानेन सिध्येत सफलो भूयात्सकामोऽस्तु किमुद्दिश्येत्यत उक्तं ते कृत इति त्वत्कृतमनोभवेन त्वन्निमित्तकामेन धर्षिताया अभिभूतायाः कीदृक् विद्योपादानकाम इति तत्राह। तदीशेति यत्सार्वभौमपुत्र्या मम सदृशं योग्यं तद्भवनं विद्यासामर्थ्येन विचक्ष्व दृष्ट्वा कुर्वित्यन्वयः। अतितरां रिरंसया रन्तुमिच्छया ते तव मनोभवधर्षिताया मे एष कामः कमनीय आत्मा कायो येन विद्याबलेन रचितेन गृहादिना सिध्येत तादृशं भवनं विचक्ष्वेति वा॥ ११॥ ❀ ❀ विषयेभ्य आहृत्यात्मन्येवाधिष्ठापितसर्वेन्द्रियग्रामोऽपि कर्दमः आश्रितवत्सला महान्त इति भावं दर्शयन् प्रियावचनं पालयन् योगविद्याबलेन तत्क्षण एव गृहं निर्ममे इत्याह। प्रियाया इति। यादृशेन भगवद्ध्यानेनाभीष्टं स्यात्तादृशं योगमनुतिष्ठन् आविरचीकरत् प्रकाशयामास॥ १२॥ ❀ ❀ श्रोतॄणां भगवद्ध्यानमाहात्म्ये श्रद्धातिशयजननायाप्राकृतं प्राकृतमिव वर्णयति। सर्वकामेत्यादिना। सर्वासां समृद्धीनां उपचयेन समाहारेण उदर्कमुत्कृष्टं एतदेव विशिनष्टि। मणिस्तम्भैरिति। उपस्कृतमलङ्कृतम्॥ १३॥ ❀ ❀ दिव्यानि कुलालादिरचनारहितान्युपस्कराणि भाण्डादिगृहसाधनानि तैर्युक्तं पट्टिकाभिः पट्टवस्त्रकृताभिः॥ १४॥ ❀ ❀ विचित्रमालाभिः नानाविधपुष्परचिताभिः स्रग्भिर्मालाभिर्मञ्जु मधुरं सिञ्जन्तः शब्दं कुर्वन्तः षडङ्घ्रयो भ्रमरा यासु तास्तथोक्तास्ताभिः॥ १५॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः।

तत्र सत्पुत्रोत्पत्तिकामनायामितिकर्त्तव्यं शिक्षय। यथोपदेशं त्वच्छिक्षानुरूपं येन च तत्कर्त्तव्येन हेतुना तत्कृतकामधर्षितीभवन्त्या मे मम एष आत्मा देहः तपआदिना अतिकर्शितो दीनश्चापि रिरंसया सिध्येत तद्योग्यः स्यात् तदनन्तरञ्च॥ ११॥ ❀ ❀ प्रियाया इति दशकम्॥ १२—१४॥ ❀ ❀ दुकूलक्षौमे अतसीतन्तुसम्भवत्वेन समानेऽप्यवान्तरभेदे ज्ञेये "दुकूलं क्षौमम्" अस्त्रियामित्यमरः॥ १५—२०॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

ननु तर्हि प्रविश पर्णशालां तत्ते वाञ्छितं करवाणीति चेन्न, तदीदृशमलिनकृशशरीरेण नैतादृशपर्णशालायां नैतादृशपरिच्छदेन सिद्ध्येदित्याह। तत्रेति। तत्र अङ्गसङ्गे इति कृत्यं साधनं यथोपदेशं वात्स्यायनादिशास्त्रोपदेशमनतिक्रम्य उपशिक्ष स्वस्मादेव जानीहि कामप्रक्रियायाः स्वैकगम्यत्वात् ज्ञात्वा च तत्तत्समुचितवस्तुजातं रसोद्दीपनादिकमभ्यङ्गभोजनपानादिकञ्च साधु सम्पादयेत्यर्थः, येन एष आत्मा देहः अतिरिरंसया कर्शितः क्षोभितः सन् सिद्ध्येत रतिसमर्थो भवेत् मम कीदृश्याः तें त्वयैव कृतः स्वदर्शनादिना जनितो यो मनोभवस्तेन धर्षितायाः दीनः सम्प्रति तु दरिद्र एव तत्तस्मात् हे ईश! योगबलेन सर्वं स्रष्टुं समर्थ! सदृशं रत्यनुरूपं भवनञ्च विचक्ष्व विचारय॥ ११॥ ❀ ❀ तूर्णीं स्थितया देवहूत्या नेत्रेङ्गितेनैव एतद्यदुक्तं कर्दमोऽपि तूर्णीं स्थित एव तदैव तत्तत्सर्व्वं सम्पादयामासैव नतु प्रत्युत्तरं ददावित्याह। प्रियाया इत्यादिना॥ १२॥ ❀ ❀ न च देवमनुष्यादिकृतमिव तदपूर्णसुखमयमित्याह। सर्वेति न च सामान्यविमानमिव उत्तरोत्तरकालकृतापचय एव उदर्कः उत्तरोत्तरफलं यत्र तत्॥ १३॥ ❀ ❀ उपस्करणं परिकरः नचौष्ण्यशैत्यादिकालिकदुःखसहितमित्याह। सर्व्वकालेति। पट्टिकाभिः क्षुद्रपताकाभि-

बृंहतीभिः ॥ १४ ॥ ❀ ❀ स्रग्भिरतिपुष्टदीर्घाभिर्गोपानसीलग्नाभिः विचित्राणि रक्तपीतादिवर्णानि माल्यान्यन्तरा प्रोतानि यासु ताभिः। दुकूलैः क्षुद्रकृमिकोषोत्थपट्टवस्त्रैराङ्कवैः कार्पासैश्च चतुष्किकावेद्यास्तरणरूपैः ॥ १५ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

तत्र अङ्गसङ्गे इतिकृत्यं साधनम्। यथोपदेशमुपदिश्यते इत्युपदेशः शास्त्रं कामशास्त्रं तदनुसारेणोपशिक्ष संपादय येन साधनेन स्नानादिरूपेणातिरन्तुमिच्छया कर्षितः दीनो व्याकुलश्च आत्मा देहः सिध्येत अङ्गसङ्गयोग्यो भवेत् हे ईश! तत्सदृशमङ्गसङ्गयोग्यं भवनं च विचक्ष्व वितर्कय कल्पयेति यावत् ॥ ११ ॥ ❀ ❀ आविः प्रकटमचीकरत् चकार ॥ १२ ॥ ❀ ❀ सर्वासामृद्धीनां संपदामुपचयो वृद्धिरेवोदर्कमुत्तरोत्तरं फलं यस्मिन् मणिस्तम्भैः मणिमयैः स्तम्भैः उपस्कृतं शोभितम् ॥ १३ ॥ ❀ ❀ दिव्यैरलौकिकैः उपस्करैः भोगोपकरणैरुपेतं पट्टिकाभिः अल्पविस्तारवस्त्रनिर्मिताभिः पताकाभिः त्रिस्तृतपट्टनिर्मिताभिः ॥ १४ ॥ ❀ ❀ विचित्रमाल्याभिः नानावर्णपुष्पाभिः मञ्जु मधुरं यथा भवत्येवं सिञ्जन्तः ध्वनन्तः षडङ्घ्रयो यासु ताभिः स्रग्भिः दुकूलैः कार्पासतन्तुमयैः क्षौमैः क्षुमाविकारैः कौशेयैश्च नानावस्त्रैर्विराजितम् ॥ १५ ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

साधनमाह—तत्रेतिकृत्यमिति। तत्र इतिकृत्यमुपशिक्ष। स चेद्रसात्मक एव भवति सङ्गः, सपुरुषार्थो भवति। [1]सकृद्धोक्तैव ससामग्रीको भवेत्। रसश्च विभावानुभावव्यभिचारिभिरुत्पद्यते, ते सर्वे विस्तरेणोक्ताः कामशास्त्रे। तन्निकट एव ज्ञानदार्ढ्यार्थं द्रष्टव्यमिति भावः। अत एव यथोपदेशमित्युक्तम्। 'इन्दुर्मन्दिरमिन्दिरा मृगमदः' इत्यादिः। उद्गतो रागो नान्यथा निवर्तत इत्याह—येनेति। एष मे आत्मा रिरंसयाऽतिकर्शितः क्लिष्टः। एष आत्मेति। देहोऽन्तःकरणं च। न कामशास्त्रव्यतिरेकेणाऽयं रसयोग्यो भविष्यति। एतादृशोऽप्यात्मा रिरंसया क्लिष्टो येनैव सिद्ध्येत्, स एवोपायः कर्तव्य इत्यर्थः। किञ्च, ते त्वया कृतो यो मनोभवः, तेन धर्षितायाः। मनोभवेन निर्भर्त्सिताऽहम्, तत्पराभवोऽपि दूरीकर्तव्यः। अयं च देहः स्वाधीनः। विज्ञापनान्तरमाह—हे ईश! सदृशं भवनं विचक्ष्वेति ॥ ११ ॥ ❀ ❀ तदा कर्दमो विचारितवान्। नेयं संबन्धमात्रमपेक्षते, किन्तु वैभवसहितम्। अतस्तथैव कर्तव्यमित्यभिप्रेत्य भगवद्दत्तयोगसामर्थ्येन तथैव कृतवानित्याह—प्रियाया इति। प्रेमविषया भार्या प्रिया, तस्याः प्रीतिं वाञ्छन् कर्दमो भगवद्दत्तं योगमास्थितः। योगबलेन कामगं विमानमाविरचीकरत् आविष्कारं कृतवान्। योगे सर्वं स्थितमेवेच्छया प्रादुर्भवति। गृहात्मकमपि तत् कामगम्। क्षत्तरिति संबोधनमन्तःपुरवैभवसाक्षित्वाय ॥ १२ ॥ ❀ ❀ यद्विमानमनुवर्णयति भावनवकेन नवविधक्रीडार्थं नवभिः श्लोकैः—सर्वकामदुघमिति। सर्वानेव कामान् दोग्धीति दिव्यमलौकिकम्। सर्वरत्नसमन्वितं स्पष्टम्। सर्वा ऋद्धयः सम्पत्तयः, तासामुपचय आधिक्यम्, तदेव उदर्को यस्य। तस्मिन् गृहे ऋद्धीनामुपभोगेन उपचय एव भवति, नाऽपचयः। उत्तरफलं लोके सर्वत्राऽपचयः। मणिमयैः। स्तम्भैरुपस्कृतम्। यथा शोभातिशयो भवति तथा रचितम् ॥ १३ ॥ ❀ ❀ दिव्यानि यान्युपकरणानि वस्त्रपीठादीनि, तैरुपेतम्, शीतादिसर्वकालेषु सुखकरम्। बहिः शोभातिशयमाह—पट्टिकाभिरिति। पट्टिका लम्बायमानपट्टवस्त्रनिर्मिताः। पताका जयपत्राङ्किताः। सर्वा एव विचित्राः। ताभिरलंकृतम् ॥ १४ ॥ ❀ ❀ स्रग्भिरिति। स्रग्भिर्मालाभिः। विचित्राणि माल्यानि पुष्पाणि यत्र। सर्वदाऽम्लानत्वार्थं, आमोदमकरन्दसहितत्वाय च मञ्जु सिञ्जन्तः षडङ्घ्रयो भ्रमरा यत्र। दुकूलक्षौमकौशेयाः पट्टाम्बरविशेषाः, कीटजाः, तृणजाः, वल्कलजाश्च। नानाविधानि च वस्त्राणि, तैर्यथायोग्यं विराजितम् ॥ १५ ॥

### सुबोधिनीप्रकाशो नं

### श्रीगिरिधरकृता बालप्रबोधिनी

हे ईश सर्वथासमर्थ तत्राङ्गसङ्गे इतिकृत्यं साधनकलापं यथोपदेशं कामशास्त्रोक्तानुसारेण उपशिक्ष सम्पादय, येन साधनेन अभ्यङ्गभोजनपानादिना ते त्वया कृतः संक्षोभितो यो मनोभवः कामस्तेन धर्षितायाः पीडितायाः मे मम अतिरिरंसया भृशं रन्तुमिच्छया कर्शितः अत एव दीनश्च एष आत्मा देहः सिद्ध्येत कार्श्यदैन्यादिपरिहारेण रतिसमर्थो भवेत्। तत्तश्च सदृशं भोगानुरूपं भवनं विचक्ष्व विचारय। सदृशमित्यनेन अन्यदपि सर्वमुपकरणं सूचितम् ॥ ११ ॥ ❀ ❀ हे क्षत्तः एवं प्रार्थितः कर्दमः प्रियायाः भार्यायाः प्रियं कर्तुमिच्छन् अनु अनन्तरमेव योगमचिन्त्यशक्तिं आस्थितः सन् तर्हि तत्क्षणमेव कामं यथेच्छं गच्छतीति तथाभूतं विमानं आविरचीकरत् आविर्भावयामास ॥ १२ ॥ ❀ ❀ तं विमानं वर्णयति—सर्वेति नवभिः। सर्वकामदुघं सर्वाभिलषितपूरकम्। दिव्यमलौकिकम्। सर्वैः रत्नैः समन्वितं खचितम्। सर्वर्द्धीनां सर्वसम्पदामुपचयस्तस्योदर्क उत्तरोत्तराभिवृद्धिः यस्मिंस्तत्। मणिमयैः स्तम्भैरुपस्कृतं भूषितम् ॥ १३ ॥ ❀ ❀ दिव्यैरुपकरणैर्गार्हस्थ्यनिर्वाहकैः पात्रपीठकादिभिरुपेतं सम्पन्नम्। सर्वेषु शीतोष्णादिकालेषु सुखावहमनुकूलम्। पट्टिकाः अल्पविस्ताराः पट्टवस्त्ररचिताः ध्वज-

---

१. सकृद्धोक्तैव वा, ग। सकृद्धोक्तेव ख. घ. ङ।

विशेषास्ताभिः पताका विस्तृता ध्वजास्ताभिश्च विचित्राभिरलंकृतम् ॥ १४ ॥ ❀ ❀ विचित्राणि नानावर्णानि माल्यानि मालानिर्माणयोग्यानि पुष्पाणि यासु ताभिः मञ्जु मधुरं यथा तथा सिञ्जन्तः ध्वनन्तः षडङ्घ्रयो भ्रमरा यासु ताभिः स्रग्भिः विराजितम् । दुकूलैः सूक्ष्मैः कार्पासैः क्षौमैरतसीतन्तुभवैः कौशेयैः कृमिकोशोत्थैश्च नानाविधवस्त्रैर्विराजितम् ॥ १५ ॥

हिन्दी अनुवाद

हम दोनोंके समागमके लिए शास्त्रके अनुसार जो कर्तव्य हो, उसका आप उपदेश कीजिये और उबटन, गन्ध, भोजन आदि उपयोगी सामग्रियाँ भी जुटा दीजिये जिससे मिलनकी इच्छासे अत्यन्त दीन, दुर्बल हुआ मेरा यह शरीर आपके अङ्ग-सङ्ग के योग्य हो जाय; क्योंकि आपकी ही बढ़ायी हुई कामवेदनासे मैं पीड़ित हो रही हूँ। स्वामिन्! इस कार्यके लिये एक उपयुक्त भवन तैयार हो जाय, इसका भी विचार कीजिये ॥ ११ ॥ ❀ ❀ श्रीमैत्रेयजी कहते हैं—विदुरजी! कर्दम मुनिने अपनी प्रियाकी इच्छा पूर्ण करनेके लिये उसी समय योगमें स्थित होकर एक विमान रचा, जो इच्छानुसार सर्वत्र जा सकता था ॥ १२ ॥ ❀ ❀ यह विमान सब प्रकार के इच्छित भोग-सुख प्रदान करनेवाला, अत्यन्त सुन्दर, सब प्रकारके रत्नोंसे युक्त, सब सम्पत्तियोंकी उत्तरोत्तर वृद्धिसे सम्पन्न तथा मणिमय खंभोंसे सुशोभित था ॥ १३ ॥ ❀ ❀ वह सभी ऋतुओंमें सुखदायक था और उसमें जहाँ-तहाँ सब प्रकारकी दिव्य सामग्रियाँ रक्खी हुई थी तथा उसे चित्र-विचित्र रेशमी झंडियों और पताकाओंसे खूब सजाया गया था ॥ १४ ॥ ❀ ❀ जिनपर भ्रमरगण मधुर गुंजार कर रहे थे, ऐसे रंग-विरंगे पुष्पोंकी मालाओंसे तथा अनेक प्रकारके सूती और रेशमी वस्त्रोंसे वह अत्यन्त शोभायमान हो रहा था ॥ १५ ॥

उपर्युपरि विन्यस्तनिलयेषु पृथक्पृथक् । क्षिप्तैः कशिपुभिः कान्तं पर्यङ्कव्यजनासनैः ॥ १६ ॥
तत्र तत्र विनिक्षिप्तनानाशिल्पोपशोभितम् । महामरकतस्थल्या जुष्टं विद्रुमवेदिभिः ॥ १७ ॥
द्वाःसु[1] विद्रुमदेहल्या भातं वज्रकपाटवत् । शिखरेष्विन्द्रनीलेषु हेमकुम्भैरधिश्रितम् ॥ १८ ॥
चक्षुष्मत्पद्मरागाग्र्यैर्वज्रभित्तिषु निर्मितैः । जुष्टं विचित्रवैतानैर्महार्हैर्हेमतोरणैः ॥ १९ ॥
हंसपारावतव्रातैस्तत्र तत्र निकूजितम्[2] । कृत्रिमान् मन्यमानैः[3] स्वानधिरुह्याधिरुह्य च ॥ २० ॥
विहारस्थानविश्रामसंवेशप्राङ्गणाजिरैः । यथोपजोषं रचितैर्विस्मापनमिवात्मनः ॥ २१ ॥
ईदृग्गृहं[4] तत्पश्यन्तीं नातिप्रीतेन चेतसा । सर्वभूताशयाभिज्ञः प्रावोचत्कर्दमः[5] स्वयम् ॥ २२ ॥
निमज्ज्यास्मिन् ह्रदे भीरु विमानमिदमारुह । इदं शुक्लकृतं तीर्थमाशिषां यापकं[6] नृणाम् ॥ २३ ॥
सा तद्भर्तुः समादाय वचः कुवलयेक्षणा । सरजं बिभ्रती वासो वेणीभूतांश्च मूर्धजान् ॥ २४ ॥
अङ्गं च मलपङ्केन संछन्नं शबलस्तनम् । आविवेश सरस्वत्याः सरः शिवजलाशयम् ॥ २५ ॥

श्रीधरस्वामिविरचिता भावार्थदीपिका ।

उपर्युपरिविरचितगृहेषु कशिपुभिः शय्याभिः कांतं कमनीयम् । पर्यंकादिभिश्च कांतम् ॥ १६ ॥ १७ ॥ ❀ ❀ द्वास्सु द्वारेषु विद्रुमनिर्मिता देहली उदुंबरस्तया भातं शोभितम् । वज्रखचितकपाटयुक्तम् । इंद्रनीलमयेषु शिखरेषु प्रासादाग्रभागेषु ॥ १८ ॥ ❀ ❀ चक्षुष्मंत इव ये पद्मरागाग्र्यास्तैः । यद्वा । चक्षुष्मदिव कैः पद्मरागाग्र्यैः विचित्रैर्वैतानैर्वितानसमूहैः ॥ १९ ॥ ❀ ❀ कृत्रिमानपि हंसादीन्स्वान्सजातीयान्मन्यमानैस्तत्रतत्राधिरुह्य निकूजितम् ॥ २० ॥ ❀ ❀ विहारस्थानं क्रीडाप्रदेशः विश्रामः शयनगृहम् । संवेश उपभोगस्थानम् । प्रांगणं गृहाद्बहिः अजिरं प्राकाराद्बहिः यथोपजोषं यथासुखमात्मनः स्वस्य मायाविनोऽपि विस्मयजनकमिव ॥ २१ ॥ ❀ ❀ नातिप्रीतेन मलिनदेहत्वात्परिचारिकाभावाच्च ॥ २२ ॥ ❀ ❀ अस्मिन् ह्रदे बिंदुसरसि आरुहाधिरोह शुक्लेन विष्णुना कृतमानंदबिंदुनिपातनेन, तीर्थं यापकं प्रापकम् ॥ २३ ॥ ❀ ❀ समादायाहृत्य सरजं मलिनम् । वेणीभूताञ्जटिलान् ॥ २४ ॥ ❀ ❀ शबलौ विवर्णौ स्तनौ यस्मिंस्तत् । सरस्वत्याः शिवानि जलान्याशेरते यस्मिन् । शिवा जलाशया जलचरा यस्मिन्निति वा ॥ २५ ॥

श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

शय्या चोक्ता शिल्पिशास्त्रे । "चतुरशीतिपर्वाणि दैर्घ्येण परिकल्पयेत् । षष्ट्यंगुलानि विस्तारं मञ्चकं हस्तसंमितम् । एवं शय्या विधातव्या सर्वेषां शयनोचिता । मानाधिक्ये दरिद्रः स्यान्मानहीने सुखक्षयः ॥" वाराहे तु "एकद्रुमेण धन्या वृक्षद्वयनिर्मिता तु धन्यतरा । त्रिभिरात्मजवृद्धिकरी चतुर्भिरर्थो यशश्चाग्र्यम् ॥ पंचवनस्पतिरचिता पंचत्वं याति तत्र यः शेते ।

१. प्रा. पा. द्वाःस्वविद्रु. । २. प्रा. पा. विकू. । ३. प्रा. पा. सविमानांश्च समन्तादधिरुह्य । ४. प्रा. पा. इत्थं गृहं तस्य पश्यन्तिप्रीतेन । ५. प्रा. पा. प्रोवाच कर्दमः । ६. प्रा. पा यद्भवेन्द्र ।

षट्सप्ताष्टतरूणां काष्ठैर्घटिता कुलं हंति" इति । काष्ठविचारोप्युक्तः । पर्यंकलक्षणमपि तत्रैवोक्तम् । "आयामः सप्ततालः स्याच्चतुस्तालश्च विस्तृतम् । द्वितालमुन्नतं ज्ञेयमिति पर्यंकलक्षणम् ।।" तालादिप्रमाणञ्च । "अंगुष्ठादिकनिष्ठांतं भवेन्मानचतुष्टयम् । प्रादेशस्तालगोकर्णं वितस्तिस्तु यथाक्रमम्" इति प्रयोगरत्नात् । व्यजनं तालवृन्तम् । आसनमौर्णादि ।। १६ ।। ❀ ❀ तत्र तत्र तासु तासु भूमिकासु महामरकतो मणिभेदस्तद्रचितया स्थलया प्रासादाधस्तनभूम्या । विद्रुमोपि मणिभेदः । वेदिश्चतुष्का ।। १७ ।। ❀ ❀ शिखरेषु सर्वोर्ध्वप्रासादचूडासु । हेमकुंभैः स्वर्णकलशैः ।। १८ ।। ❀ ❀ पद्मरागो मंणिभेदः । अचक्षुष्मत्तोपमानं सौभाग्याय समासापेक्षयाऽसमस्तस्य झटिति बुद्ध्यारोहणादाह-यद्वेति ।। १९ ।। २० ।। ❀ ❀ यद्वात्मनो विमानस्यापि विस्मापनमिवेत्युत्प्रेक्षामात्रमिति संदर्भः ।। २१ ।। २२ ।। ❀ ❀ आशिषामभीप्सितानाम् ।। २३ ।। ❀ ❀ सा देवहूतिः ।। २४ ।। ❀ ❀ मलपंकेन दृढकिट्टेन । शिवानि कल्याणदानि । यद्वा । सरस्वत्याः सरस्तत्संबंधिकासारः तन्निकटमिति यावत् । सरस्वत्या परिश्रितम् इत्युक्तेः ।। २५ ।।

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

इतिकृत्यं शिक्षयति । निमज्ज्येति ।। २३ ।। ❀ ❀ सेति युग्मकम् । सरजमित्यत्र मध्ये सरजसमित्यसमाधाय मलिनमिति व्याख्यानादकारान्तोऽपि रजशब्दोऽस्तीति गम्यते । द्वितीयपक्षे सरस्वत्यास्संबन्धि सर इति योज्यम् । शिवा भक्त्या स्नातुरबाधकाः ।। २४ ।। २५ ।।

### श्रीमद्वीरराघवव्याख्या

उपर्युपरि न्यस्तेषु विरचितेषु गृहेषु पृथक् पृथक् विभक्तं कल्पितैः कशिपुभिः शय्याभिः कान्तं कमनीयं तथा पर्य्यङ्कादिभिश्च कान्तम् ।। १६ ।। ❀ ❀ तत तत्र भित्त्यादिषु विनिक्षिप्तैः विरचितैर्नानाविधैः शिल्पैरुपशोभितं महामरकतस्थल्याम् इन्द्रनीलमणिमयभूम्यां रचिताभिर्विद्रुमवेदिकाभिर्जुष्टं, युक्तस्थल्येतिपाठे तया विद्रुमवेदिकाभिश्च युक्तम् ।। १७ ।। ❀ ❀ द्वास्सु द्वारेषु विद्रुममयदेहल्यामुदुम्बरेण भातं शोभितं वज्रखचितकपाटयुक्तमिन्द्रनीलमणिमयेषु शिखरेषु सुवर्णमयकलशैरधिष्ठितं चक्षुष्मन्त इव ये पद्मरागश्रेष्ठाः वज्रभित्तिषु खचितास्तैर्जुष्टं विचित्रैर्वैतानैर्वितानसमूहैरनर्घैर्हेममयतोरणैश्च जुष्टम् ।। १८ ।। १९ ।। ❀ ❀ कृत्रिमानपि हंसादीन्स्वान् सजातीयान्मन्यमानैर्हंसानां पारावतानाञ्च समूहैस्तत्र तत्राधिरुह्यावरुह्य च विकूजितम् ।। २० ।। ❀ ❀ यथोपजोषं यथासुखं रचितैः कल्पितैः विहारस्थानादिभिर्युक्तमिति शेषः । यद्वा विहारस्थानादिभिरात्मनः स्वस्य मायाविनोऽपि विस्मापनमिव विस्मयजनकमिवावस्थितमाविरचीकरदिति पूर्वेणान्वयः । तत्र विहारस्थानं क्रीडाप्रदेशः विश्रामः शयनगृहं सम्वेश उपभोगस्थानं प्राङ्गणं गृहाद्बही रचितम् अजिरं प्राकाराद्बहिः ।। २१ ।। ❀ ❀ ईदृगेवंविधं तद्गृहं विमानं नातिप्रीतेनानतिसन्तुष्टेन चेतसा पश्यन्तीं देवहूतिं स्वयं सर्वभूतानामाशयमभिप्रायं जानातीति सः कर्दमः स्वयं प्रावोचत् ।। २२ ।। ❀ ❀ हे भीरु ! इदं तीर्थं शुक्लकृतं शुक्लेन भगवता कृतमानन्दाश्रुनिपातेन कृतं नृणामाशिषां कांक्षितानां प्रापकमतोऽस्मिन् ह्रदे बिन्दुसरसि निमज्ज्य स्नाहि इदं विमानमारुहाधिरुह ।। २३ ।। ❀ ❀ सा कुवलयेक्षणा देवहूतिः भर्त्तुः कर्दमस्य वचः समादाय गृहीत्वा सरजं मलिनं वासः वस्त्रं वेणीभूतान्मूर्द्धजान्केशान् ।। २४ ।। ❀ ❀ मलपङ्केन सम्यक् छन्नौ अत एव शबलौ विवर्णौ स्तनौ यस्मिंस्तदङ्गं शरीरं च बिभ्रती सती शिवानां निर्मलानां जलानामाशयमाश्रयं सरस्वत्या परिश्रितमिति शेषः । षष्ठ्यन्तपाठे तन्मध्यस्थमित्यर्थः, सरः बिन्दुसरः आविवेश प्रविष्टवती ।। २५ ।।

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

कशिपुभिः शय्याभिः पर्यङ्कैर्मञ्चैः ।। १६ ।। १७ ।। ❀ ❀ द्वास्सु द्वारेषु विद्रुमदेहल्या निर्मितद्वारबन्धेन देहलीद्वारबन्धः स्यादिति च वज्ररत्नकृताः कपाटयो यस्मिन् सन्तीति वज्रकपाटिमत् ।। १८ ।। ❀ ❀ चक्षुष्मन्तो दीप्तिमन्तः पद्मरागाद्या मणयः विचित्राणां वितानानां समूहैः ।। १९ ।। ❀ ❀ कृत्रिमान् शोभार्थं कृतान् स्वान् अकृत्रिमान् मन्यमानैः ।। २० ।। ❀ ❀ शयननिवेशनं संवेशः प्राङ्गणं गृहपूर्वभूमिरजिरं गृहवाह्यसंस्कृतभूमिः यथोपजोषं यथासुखम् ।। २१ ।। ❀ ❀ परिचारिकाभावान्नातिप्रीतेन सर्वभूतानामाशयमभिप्रायमभितो जानातीति सर्वभूताशयाभिज्ञः ।। २२ ।। ❀ ❀ आशिषां शुभानां चाप्तये प्राप्तये एवंविधे ह्रदे तीर्थे ।। २३ ।। ❀ ❀ सरजं धूलिधूसरम् ।। २४ ।। ❀ ❀ मलेन किट्टेन दृढबद्धेन पङ्केन कर्दमेन कल्मषेण वा शबलौ कृष्णपाण्डुरौ स्तनौ यस्मिंस्तत्तथा तत् सरस्वत्याः सरो ह्रदं शिवानां जलानामाशयं स्थानम् ।। २५ ।।

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

आत्मन इति । विमानस्यापि विस्मापनमिवेत्युत्प्रेक्षामात्रम् ।। २१ ।। ❀ ❀ मलिनदेहादित्वेन भावानुद्दीप्तेर्नातिप्रीतेन स्वयमित्यत्र प्रियामिति क्वचित् ।। २२ ।। ❀ ❀ इतिकृत्यं शिक्षयति । निमज्ज्येति युग्मकम् । वेणीभूतान् स्वमूर्द्धजानिति क्वचित् ।। २३-२५ ।।

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

कशिपुभिः शय्याभिः ॥ १६ ॥ १७ ॥ ❀ ❀ विद्रुममय्या देहल्या भातं द्वास्सु वज्रकवाटवत् हीरककवाटयुक्तं शिखरेषु सर्व्वोर्ध्वप्रासादचूडासु ॥ १८ ॥ ❀ ❀ हीरकमयभित्तिषु अर्पितैः पद्मरागाग्र्यखण्डैश्चक्षुष्मदिव वैतानैर्वितानसमूहैः हेम्नस्तोरणैर्वन्दनमाल्येति ख्यातैः ॥ १९ ॥ ❀ ❀ कृत्रिमानपि हंसादीन् स्वान् सजातीयान्मन्यमानैस्तत्र तत्र स्वगणमध्ये अधिरुह्य नितरां कूजितम् ॥ २० ॥ ❀ ❀ विहारस्थानं क्रीडाप्रदेशः विश्रामः शयनगृहं संवेशः सम्भोगान्तनिद्रागृहं प्राङ्गणं गृहाद्बहिः अजिरं प्राचीराद्बहिः यथोपजोषं यथासुखमात्मनः स्वस्य कर्दमस्यापि इवेति स्वनिर्म्मितत्वात् स्वस्य वस्तुतो न विस्मापनमिति ॥ २१ ॥ ❀ ❀ नातिप्रीतेनेति मलिनदेहत्वात् परिचारिकाभावाच्चेति भावः ॥ २२ ॥ ❀ ❀ ह्रदे बिन्दुसरसि यापकं प्रापकम् ॥ २३ ॥ ❀ ❀ समादाय आदृत्य ॥ २४-२६ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

उपर्य्युपरि विशेषतो न्यस्तेषु रचितेषु निलयेषु गृहेषु पृथक् पृथक् क्षिप्तैः संस्थापितैः कशिपुभिः पर्य्यङ्कादिभिश्च कान्तं कमनीयम् ॥ १६ ॥ ❀ ❀ विनिःक्षिप्तैः विशेषतो रचितैर्नानाशिल्पैरुपशोभितं महामरकतरचितया भूमिकया ॥ १७ ॥ १८ ॥ ❀ ❀ वज्रभित्तिषु निर्मितैः खचितैः पद्मरागाग्र्यैः चक्षुष्मदिव विचित्रैर्वैतानैर्वितानसमूहैः हेमतोरणैश्च जुष्टं युक्तम् ॥ १९ ॥ ❀ ❀ हंसपारावतसमूहैः कृत्रिमानपि हंसादीन् स्वान् सजातीयान् मन्यमानैः तत्र तत्र कृत्रिमहंसादिनिकटे अधिरुह्याधिरुह्य निकूजितम् ॥ २० ॥ ❀ ❀ विहारस्थानं क्रीडास्थानं विश्रामः शयनस्थानं संवेश उपभोगस्थानं प्राङ्गणं गृहाद्बहिः अजिरं प्राकाराद्बहिस्तैः यथोपजोषं यथासुखं रचितैः आत्मनः स्रष्टुरपि विस्मापनमिव ॥ २१ ॥ ❀ ❀ ईदृक् एवंविधमपि तद्गृहं विमानं नातिप्रीतेन चेतसा पश्यन्ती स्वदेहस्य कृशत्वादिना तदनुरूपत्वाभावात् ॥ २२ ॥ ❀ ❀ ह्रदे बिन्दुसरसि यापकं प्रापकम् ॥ २३ ॥ ❀ ❀ भर्तुर्वचः समादाय गृहीत्वा शबलौ विवर्णौ स्तनौ यस्मिन् ॥ २४ ॥ २५ ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

उपर्युपरि च गृहा उत्तरोत्तरं विरचितास्तत्र शतशः सन्ति । सर्वेष्वेव गृहेषु पृथक् पृथक् क्लृप्तैः कशिपुभिरुत्तमशय्याभिः कान्तं रमणीयम्, न तु गृहान्तरस्थिताः शय्याः पुनरन्यत्र नेतव्याः । पर्यङ्काः खट्वाविशेषाः, व्यजनविशेषा, आसनविशेषाश्च; तैः सर्वैरेव कान्तं रमणीयम् ॥ १६ ॥ ❀ ❀ कामशास्त्रानुसारेण सर्वबन्धबोधकानि चित्राणि तत्र वर्णयति—तत्र तत्रेति । विशेषेण निक्षिप्तानि यानि नानाशिल्पानि, तैरुपशोभितम् । तत्र तत्र गृहेषु महामरकतमणिभिः कृता स्थली भवति, तया च जुष्टम् । विद्रुमाः प्रवालाः, तैश्च वेद्यो निर्मिता भवन्ति । वेदिरत्रोच्चोपवेशनभूमिः ॥ १७ ॥ ❀ ❀ द्वाःसु । द्वारेषु, विद्रुमाणामेव देहली भवति, तयाऽपि भातं प्रकाशमानम् । वज्रमयकपाटयुक्तं च । शिखरेषु गृहाणां शिरोभागेष्विन्द्रनीलमणिविरचितेषु स्थापितैः सुवर्णकुम्भैरधिश्रितम् । हेमकुम्भास्तमाश्रित्यैव तिष्ठन्ति, तेषामपि तत एव शोभा ॥ १८ ॥ ❀ ❀ चक्षुष्मन्तस्तेजस्वन्तः, पश्यन्तीव प्रतीयमानाः पद्मरागश्रेष्ठाः, वज्रमयीषु भित्तिषु निर्मिताः, तैरपि जुष्टम् । विचित्राणि वैतानानि चन्द्रातपाः, पत्राकारसुवर्णैस्तोरणरूपैः सहिताः । तैरपि जुष्टम् ॥ १९ ॥ ❀ ❀ हंसादयः पक्षिविशेषाः, तेषां समूहैस्तत्र तत्र कूजितम् । चित्रपटेष्वपि ते हंसादयो विरचिताः । एते सत्याः । कृत्रिमान् चित्रगतान् स्वानकृत्रिमानेव मन्यमानैः कूजितमिति पूर्वेणैव संबन्धः । अधिरुह्याऽधिरुह्येति काष्ठपाषाणनिर्मिता अपि हंसादयः सकृदधिरुह्यापि मुह्यन्तीति । अधिरुह्याऽधिरुह्येति बहुवारमप्यधिरुह्य मुह्यन्तीति शिल्पनैपुण्यम् ॥ २० ॥ ❀ ❀ विहारस्थानं क्रीडास्थानम् । विश्रामस्थानं बाहुयुद्धादिकं कृत्वा श्रमापनोदनार्थमुपवेशस्थानम् । संवेशनं सुखोपवेशनस्थानम् । प्राङ्गणं कोष्ठाद्बहिरङ्गणम् । अजिरमङ्गणम्, तैर्यथोपजोषं रचितैः यथायोग्यं निर्मितैः । आत्मनो योगाधीशस्य कर्दमस्याऽपि विस्मापनमिव । यद्यपि योगमायावैभवं जानाति, तथापि तादृक् कदापि न दृष्टमिति विस्मापनमिवेत्युक्तम् ॥ २१ ॥ ❀ ❀ अभिलषितगृहे दृष्टेऽपि स्वस्य शरीरं न तथा योग्यमिति तस्या अनुशयं मत्वा तस्याऽपि तथात्वाय तामुपदिशतीत्याह—ईदृग्गृहमिति । पूर्वोक्तरूपं गृहं नाऽतिप्रीतेन चेतसा पश्यन्तीं स्वयोगबलेन सर्वभूतहृदयाभिज्ञः तूष्णीमेव स्थितां तां स्वयमेव कर्दमोऽवोचत् ॥ २२ ॥ ❀ ❀ निमज्ज्येति । हे भीरु उत्तमे, भयं च न कर्तव्यम्, ज्ञात्वैव भीरुत्वं यतः स्नानार्थं प्रेष्यत इति । अस्मिन् ह्रदे निमज्ज्य इदं विमानमारुह । किं शीतोदके असंस्कृताया मज्जनेनेत्याशङ्क्याऽऽह—इदं शुक्लकृतं तीर्थमिति । शुक्लनारायणेन निर्मितं तीर्थं सर्वेषामाशिषां कामनानां प्रापकम् । अस्मिन् प्रविष्टे यथा तव मनोरथः, तादृशं तव शरीरं भविष्यतीति भावः । नित्यं स्नाने च महतां तथाऽभ्यनुज्ञा नाऽस्तीति न पूर्वं सिद्धिः ॥ २३ ॥ ❀ ❀ तथैव कृतवतीत्याह—सा तद्भर्तुरिति द्वाभ्याम्—सा देवहूतिः, भर्तुर्वाक्यं समादाय, सरजं वासो वेणीभूतांश्च मूर्द्धजान् मलपङ्केन छन्नमङ्गं बिभ्रती सरस्वत्याः सर आविवेश । वाक्यग्रहणे हेतुः—भर्तुरिति । सर्वो हि भारस्तस्यैव । सम्यगादानं देहासिद्धाविदमेव साधनमिति ज्ञानपूर्वकं ग्रहणम् । कुवलयेक्षणा उत्पलदलायताक्षी । अनेन क्रोधेर्ष्याखेदादयो भावा निवारिताः । वाक्यविश्वासादेव नेत्रप्रसादः, न तु सामग्री तादृशीति वक्तुं विपरीतां सामग्रीं

वर्णयति—रजःसहितं मलिनं वस्त्रम्। बाह्यं साधनमावश्यकमसमीचीनमिति सूचितम्। वेणीभूता मूर्द्धजा बहिरङ्गभूताः, अङ्गं च। प्रत्यहं जायमानं मलं जलसंबद्धं पङ्कप्रायं जातम्, अतस्तदुद्धारः कठिन इत्यर्थः। शबलौ विवर्णौ स्तनौ यस्येत्यङ्गविशेषणम्। उपभोग्यावयवानां सुतरामयोग्यत्वं सूचितम्। सरस्वती सृष्टिहेतुः, अतोऽनया नूतनं संभविष्यतीति तत्र प्रवेशः। शिवं कल्याणकरम्, स्नानेऽपि नाऽपकारं जनयतीति उपकारस्तु वाक्यात् भविष्यत्येव, अपकारस्तु न भविष्यत्येवेत्यर्थः ॥ २४ ॥ २५ ॥

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

चक्षुष्मदित्यत्र। चन्द्रातपा इति। लोकभाषायां 'चँदोवा' इति प्रसिद्धाः ॥ १९ ॥

### श्रीगिरिधरकृता बालप्रबोधिनी

उपर्युपरि विन्यस्तेषु विरचितेषु निलयेषु गृहेषु पृथक् पृथग्विभक्तं क्षिप्तैः स्थितैः कशिपुभिः शय्याभिः कान्तं कमनीयम्। पर्यङ्कादिभिश्च कान्तम् ॥ १६ ॥ ❀ ❀ तत्र तत्र भित्त्यादिषु विनिक्षिप्तैः विरचितैर्नानाविधैः शिल्पैरुपशोभितम्। महामरकतस्थल्या इन्द्रनीलमणिमयभूम्या जुष्टं युक्तम्। विद्रुमैः प्रवालैः रचिताभिर्वेदिभिः उपवेशनस्थानविशेषैश्च जुष्टम् ॥ १७ ॥ ❀ ❀ द्वास्सु द्वारेषु विद्रुममयदेहल्या उदुम्बरेण भातं शोभितम्। वज्रखचितकपाटयुक्तम्। इन्द्रनीलमणिमयेषु शिखरेषु हेममयकुम्भैरधिश्रितं अधिष्ठितम् ॥ १८ ॥ ❀ ❀ चक्षुष्मन्त इव ये पद्मरागाग्र्याः पद्मरागश्रेष्ठाः तैर्वज्रभित्तिषु निर्मितैः खचितैः तथा विचित्रैः वैतानैर्वितानसमूहैः महार्हैरनर्घ्यैः हेममयतोरणैः पात्राकारैर्द्वारि द्वार्युपरि विरचितैश्च जुष्टम् ॥ १९ ॥ ❀ ❀ कृत्रिमानपि हंसादीन् स्वान् स्वजातीयान् मन्यमानैर्हंसानां पारावतानां च व्रातैः समूहैस्तत्र तत्र अधिरुह्याधिरुह्य च निकूजितमित्यन्वयः ॥ २० ॥ ❀ ❀ यथोपजोषं यथापेक्षितं रचितैर्विहारस्थानादिभिः आत्मनः स्वस्य कर्दमस्यापि विस्मापनं विस्मयजनकमिव आविरचीकरदिति पूर्वेणान्वयः। विहारस्थानं क्रीडास्थानम्। विश्रामं बाह्यत आगत्य श्रमापनोदनार्थमुपवेशस्थानम्। संवेशनं शयनगृहम्। प्राङ्गणं गृहाद्बहिः। स्वविरचितत्वेन अन्यवदाश्चर्यजननात् इवशब्दप्रयोगः ॥ २१ ॥ ❀ ❀ ईदृगेवंविधं तद्गृहं विमानं नातिप्रीतेन देहादेर्मलिनत्वात् परिचारकाद्यभावाच्च अनतिसन्तुष्टेन चेतसा पश्यन्तीं देवहूतिं योगबलेन सर्वभूतानां आशयमभिप्रायं जानातीति सः कर्दमः स्वयमेव प्रावोचदित्यन्वयः ॥ २२ ॥ न्यूनत्वभयं मा कुर्वित्याशयेन सम्बोधयति—भीर्विति। अस्मिन् बिन्दुसरआख्ये ह्रदे पूर्वं निमज्ज्य स्नात्वा तत इदं विमानं आरुह अधिरोह। अत्र स्नाने किं स्यादित्यपेक्षायामाह—नृणां आशिषामाकांक्षितानां यापकं प्रापकमिति। तत्र हेतुमाह—इदमिति, यत इदं तीर्थं शुक्लेन परमशुद्धेन भगवता आनन्दाश्रुनिपातेन कृतमित्यर्थः ॥ २३ ॥ ❀ ❀ सा कुवलयेक्षणा देवहूतिर्भर्तुर्वचः समादाय स्वीकृत्य सरजं मलिनं वासः वस्त्रं वेणीभूतान् मूर्धजान् केशान् मलपङ्केन सञ्छन्नं अतएव शबलौ विवर्णौ स्तनौ यस्मिंस्तथाभूतं अङ्गं शरीरं च बिभ्रती सती शिवानां निर्मलानां सुखकराणां जलानां आशयमाश्रयं सरस्वत्याः मध्यस्थं तत्सरः बिन्दुसर आविवेश प्रविष्टवती ॥ २४ ॥ २५ ॥

### हिन्दी अनुवाद

एकके ऊपर एक बनाये हुए कमरोंमें अलग-अलग रक्खी हुई शय्या, पलंग, पंखे और आसनोंके कारण वह बड़ा सुन्दर जान पड़ता था ॥ १६ ॥ ❀ ❀ जहाँ-तहाँ दीवारोंमें की हुई शिल्पचरचनासे उसकी अपूर्व शोभा हो रही थी उसमें पन्नेका फर्श था और बैठनेके लिये मूँगेकी वेदियाँ बनायी गयी थी ॥ १७ ॥ ❀ ❀ मूँगेकी ही देहलियाँ थीं। उसके द्वारोंमें हीरेके किवाड़ थे तथा इन्द्रनील मणिके शिखरोंपर सोनेके कलश रक्खे हुए थे ॥ १८ ॥ ❀ ❀ उसकी हीरेकी दीवारोंमें बढ़िया लाल जड़े हुए थे, जो ऐसे जान पड़ते थे मानो विमानकी आँखें हों, तथा उसे रंग-बिरंगे चँदोवे और बहुमूल्य सुनहरी वंदनवारोंसे सजाया गया था ॥ १९ ॥ ❀ ❀ उस विमानमें जहाँ-तहाँ कृत्रिम हंस और कबूतर आदि पक्षी बनाये गये थे, जो बिल्कुल सजीव-से मालूम पड़ते थे; उन्हें अपना सजातीय समझकर बहुत-से हंस और कबूतर उसके पास बैठ-बैठकर अपनी बोली बोलते थे ॥ २० ॥ ❀ ❀ उसमें सुविधानुसार क्रीडास्थली, शयनगृह, बैठक, आँगन और चौक आदि बनाये गये थे—जिनके कारण वह विमान स्वयं कर्दमजीको भी विस्मित-सा कर रहा था ॥ २१ ॥ ❀ ❀ ऐसे सुन्दर घरको भी जब देवहूतिने बहुत प्रसन्न चित्तसे नहीं देखा तो सबके आन्तरिक भावको परख लेनेवाले कर्दमजीने स्वयं ही कहा ॥ २२ ॥ ❀ ❀ 'भीरु! तुम इस बिन्दुसरोवरमें स्नान करके विमानपर चढ़ जाओ; यह विष्णुभगवान्‌का रचा हुआ तीर्थ मनुष्योंको सभी कामनाओंकी प्राप्ति करानेवाला है' ॥ २३ ॥ ❀ ❀ कमललोचना देवहूतिने अपने पतिकी बात मानकर सरस्वतीके पवित्र जलसे भरे हुए उस सरोवरमें प्रवेश किया। उस समय वह बड़ी मैली-कुचैली साड़ी पहने हुए थी; उसके सिरके बाल चिपक जानेसे उनमें लटें पड़ गयी थी, शरीरमें मैल जम गया था तथा स्तन कान्तिहीन हो गये थे ॥ २४-२५ ॥

सान्तः सरसि वेश्मस्थाः शतानि दशकन्यकाः । सर्वाः किशोरवयसो ददर्शोत्पलगन्धयः ॥ २६ ॥
तां दृष्ट्वा सहसोत्थाय प्रोचुः प्राञ्जलयः स्त्रियः । वयं कर्मकरीस्तुभ्यं शाधि नः करवाम किम् ॥ २७ ॥
स्नानेन तां महार्हेण स्नापयित्वा मनस्विनीम् । दुकूले निर्मले नूतने[1] ददुरस्यै च मानदाः[2] ॥ २८ ॥
भूषणानि परार्ध्यानि वरीयांसि द्युमन्ति च । अन्नं सर्वगुणोपेतं पानं चैवामृतासवम् ॥ २९ ॥
अथादर्शे स्वमात्मानं स्रग्विणं विरजाम्बरम् । विरजं कृतस्वस्त्ययनं कन्याभिर्बहुमानितम् ॥ ३० ॥
स्नातं कृतशिरःस्नानं सर्वाभरणभूषितम् । निष्कग्रीवं वलयिनं कूजत्काञ्चननूपुरम् ॥ ३१ ॥
श्रोण्योरध्यस्तया काञ्च्या काञ्चन्या बहुरत्नया । हारेण च महार्हेण रुचकेन च भूषितम् ॥ ३२ ॥
सुदता[3] सुभ्रुवा श्लक्ष्णस्निग्धापाङ्गेन चक्षुषा । पद्मकोशस्पृधा नीलैरलकैश्च लसन्मुखम् ॥ ३३ ॥
यदा सस्मार ऋषभमृषीणां दयितं पतिम् । तत्र चास्ते[4] सह स्त्रीभिर्यत्रास्ते स प्रजापतिः ॥ ३४ ॥
भर्तुः पुरस्तादात्मानं स्त्रीसहस्रवृतं तदा । निशाम्य तद्योगगतिं संशयं प्रत्यपद्यत ॥ ३५ ॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

सा तत्र निमग्ना सती विस्मयं ददर्श । तमाह । सांऽतः सरसीति दशभिः । उत्पलगंधयः कमलगंधीः ॥ २६ ॥ ❀ ❀ तुभ्यं तव कर्मकरीः परिचारिका वयमस्मानाज्ञापयेति स्त्रियः प्रोचुः ॥ २७ ॥ ❀ ❀ ततश्च स्नानेन स्नानयोग्यतैलादिना ॥ २८ ॥ ❀ ❀ परार्ध्यानुत्कृष्टानि वरीयांसि तत्प्रियाणि द्युमंति दीप्तिमंति च । पानं पेयम् । अमृतं स्वादु आसवं मादकम् ॥ २९ ॥ ❀ ❀ आदर्शे स्वमात्मानं ददर्शेति शेषः । आत्मानं विशिनष्टि चतुर्भिः । कृतं स्वस्त्ययनं मंगलं यस्य पुंस्त्वमात्मशब्दसामानाधिकरण्यात् ॥ ३० ॥ ❀ ❀ विरजमित्यस्य प्रपंचः स्नातमुद्वर्त्य क्षालितम् । कृतं शिरःस्नानमभ्यंगो येन भूषितत्वमेवाह । निष्कं पदकं ग्रीवायां यस्य ॥ ३१ ॥ ❀ ❀ बहूनि रत्नानि यस्यां तया रुचकेन मंगलद्रव्येण कुंकुमादिना । तदुक्तं विश्वप्रकाशे "रुचकं मंगलद्रव्ये ग्रीवाभरणदंतयोः" इति ॥ ३२ ॥ ❀ ❀ सुदता सुभ्रुवा चक्षुपेति च जातावेकवचनानि एतैर्लसच्छोभमानं मुखं यस्य कथंभूतेन चक्षुपा श्लक्ष्णो मनोहरः स्निग्धोऽपांगो नेत्रप्रांतो यस्य पद्मकोशेन स्पर्धत इति पद्मकोशस्पृत्तेन ॥ ३३ ॥ ❀ ❀ दृष्ट्वा च यदा पतिं सस्मार तदा यत्रासौ तत्रैव स्वयमप्यास्ते ॥ ३४ ॥ ❀ ❀ आत्मानं निशाम्य दृष्ट्वा तां च तस्य योगगतिं योगप्रभावं दृष्ट्वा संशयं किमिदमिति विस्मयम् ॥ ३५ ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

तत्र बिंदुसरसि तं विस्मयं विस्मापकम् । प्रथमा द्वितीयार्थेत्र । यद्वोत्तरश्लोकस्थस्त्रिय इत्यस्य विशेषणम् ॥ २६ ॥ ❀ ❀ परिचारिका दास्यः ॥ २७ ॥ ❀ ❀ परिचारिकत्वमाह-ततश्च प्रार्थनोत्तरं महतां राजकलत्राणामर्हेण सुगंधिद्रव्याद्युद्वर्त्तनपूर्वकेण मनस्विनीमुदारमनसम् । दुकूले धौतवस्त्रे । निर्मले शुक्लोत्तरीये इत्यर्थः ॥ २८ ॥ ❀ ❀ सर्वगुणोपेतं सर्वरसयुतम् ॥ २९ ॥ ❀ ❀ अथ वस्त्रालंकारधृत्युत्तरपानभोजनानंतरम् । आदर्शे मुकुरे । "आदर्शो दर्पणे टीकाप्रतिपुस्तकयोरपि" इति मेदिनी ॥ ३० ॥ ❀ ❀ केचित्तु सुभगायाः शिरस्स्नानं काचित्कमाहुः । "कुलस्त्री तु शिरःस्नानमुत्सवे पुण्यतीर्थके । तैलादिना पैतृके च सर्वदा कंठसंप्लवा ॥ वारुणर्क्षे न कुत्रापि स्नायात्स्त्री विधवां विना" इति स्मार्त्ताः । बिंदुसरोवरस्य श्रीभगवन्नेत्रांबुसंभूतत्वादतीव पुण्यतीर्थत्वमस्त्यतोत्र शिरःस्नानेपि न दोषः । स्वामिचरणैः सशिरःस्नानस्य काचित्कत्वाभिप्रायेणैव शिरःस्नानपदेनाभ्यंगो गृहीतः । पदकमलंकारभेदः । "वक्षोलंकरणे निष्कम्" इति मेदिनी । वलयाः करकंकणास्तद्युक्तम् । "पादावंकृतिनूपुरम्" इति । "न धार्यं हेमपादयोः" इति निषेधस्य मनुष्यविषयत्वेन तस्य देवर्षिशिरोमणिकर्दमपत्नीत्वात्सर्वदेवतोत्तमत्वमतो न दोषः ॥ ३१ ॥ ❀ ❀ रुचकं वृत्ताकारं कंठाभरणं वा आदिना मुक्तादिग्रहः । "मंगलानि समस्पृशत्" इत्यत्र श्रीदशमे मंगलद्रव्याणि वक्ष्यामः ॥ ३२ ॥ ❀ ❀ "श्लक्ष्णं द्वये परिष्वंगे" इति निरुक्तिः ॥ ३३ ॥ ❀ ❀ सस्मार एतत्सर्वं पतिपार्श्वे एव शोभत इति यदा चिचिन्त । अत्रात्मानं पत्युरेकासने आसीनमेव विवेद न तु जलह्रदात्पदव्यापारेण यान्तमिति तस्माद्‌भुतैव योगगतिः ॥ ३४ ॥ ❀ ❀ संशयं विस्मयं न तु कोटिद्वयावलंबिविकल्पं प्रागेव योगित्वनिश्चायकधर्मदर्शनादित्यर्थः । "सुशय्यायां विस्मये च विकल्पेपि च संशयः" इति निरुक्तिः ॥ ३५ ॥

---

१. प्रा० पा० भूते । २. प्रा० पा० मानिताः । ३. प्रा० पा० सुभ्रुवा सुदता । ४. प्रा० पा० चास्ति ततः स्त्रो० ।

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

उत्पलगन्धय उत्पलगन्धीरिति टीका ज्ञेया। तदभावे अनादिलेखकदोषो ज्ञेयः। अन्यथार्पत्त्वाऽविशेषात् वाक्यद्वयस्यैक्येन युग्मकत्वोक्तिगौरवमेव लेखकदोषामनने तु सान्तरिति युग्मकम्। उत्पलगन्धय उत्पलगन्ध्यः स्त्रियः प्रोचुरिति योजनीयम्। सा तत्रेत्यादिः श्लोकाभास एव न तु योजना मूले विस्मयपदाऽभावात्॥ २६॥ २७॥ ❀ ❀ स्नानेनेति युग्मकम्। महार्हेण सुगन्धादिना परमश्रेष्ठेन॥ २८॥ २९॥ ❀ ❀ अथादर्शं इति चतुष्कम्। अभ्यङ्गस्सुगन्धतैलादिना शिरस्संस्कारः॥ ३०॥ ॥ ३३॥ ❀ ❀ दृष्ट्वा चेति पूर्ववाक्येन सहैकवाक्यत्वायाध्याहृतम्। सस्मार उत्कण्ठया स्मृतवती आस्ते स्म॥ ३४॥ ❀ ❀ तां विमानाविर्भावमारभ्य सरसो निष्कम्य तदग्रे स्वस्थितिपर्य्यन्तां संशयस्य विस्मयाधायकत्वाद्विस्मये लक्षणा तत्प्रकारकतदभावप्रकारकज्ञानरूपमुख्यार्थस्याऽसम्भवात्॥ ३५॥

### श्रीमद्वीरराघवव्याख्या

सा अन्तःसरसि निमग्ना सती तत्र वेश्मस्थाः मन्दिरस्थाः दशशतानि कन्यकाः ददर्श। कथम्भूताः सर्वाः किशोरवयसः उत्पलस्येव देहगन्धो यासां ताः॥ २६॥ ❀ ❀ तां देवहूतिं दृष्ट्वा दशशतानि स्त्रियः सहसा आशु प्रोत्थाय जलस्थाद्वेश्मनो बहिर्विनिर्गत्य प्राञ्जलयः वयं तुभ्यं कर्मकरीः किङ्करीः नोऽस्मान् शाधि अनुशिक्षय किं दास्यं करवामेति प्रोचुः॥ २७॥ ❀ ❀ महार्हेण श्रेष्ठतमेन स्नानेन स्नानयोग्येन सुगन्धितैलादिना तां मनस्विनीं देवहूतिं स्नापयित्वा मानदाः स्त्रियः अस्यै देवहूत्यै एव निर्मले नूत्ने नवीने दुकूले ददुः दत्तवत्यः॥ २८॥ ❀ ❀ तथा परार्द्ध्यानि श्रेष्ठतमानि द्युमन्ति दीप्तिमन्ति वरीयांसि तत्प्रियाणि भूषणानि सर्वगुणोपेतं षड्रसोपेतमन्नममृतं स्वाद्वासवं मादकं पानं पेयं च अस्यै ददुः॥ २९॥ ❀ ❀ असौ देवहूतिः स्वामात्मानं देहमादर्शे दर्पणे ददर्शेति शेषः। कथम्भूतं स्रग्विणं स्रजः बिभ्रतं विरजः निर्मलमम्बरं वासो यस्य तं विरजस्कं मलहीनं कृतं स्वस्त्ययनं मङ्गलानामाचरणं यस्य तं कन्याभिः संमानितम्॥ ३०॥ ❀ ❀ स्नातमुद्वर्तनक्षालितं कृतं शिरःस्नानमभ्यङ्गो येन तं सर्वैराभरणैर्भूषितमलङ्कृतम्। एतदेव प्रपञ्चयति निष्कं पदकं ग्रीवायां यस्य तं कूजन्ती काञ्चनमये नूपुरे यस्य तम्॥ ३१॥ ❀ ❀ श्रोण्योर्नितम्बयोरध्यस्तया धृतया काञ्चनमय्या बहूनि रत्नानि यस्यां तया काञ्च्या मेखलया महार्हेण हारेण रुचकेन मङ्गलद्रव्येण च कुङ्कुमादिना तदुक्तं विश्वप्रकाशे "रुचकं मङ्गलद्रव्ये ग्रीवाभरणदन्तयोः" इति विभूषितम्॥ ३२॥ ❀ ❀ सुभ्रुवा शोभनया भ्रुवा सुदता सुन्दरदन्तपङ्क्त्याश्लक्ष्णो मनोहरः स्निग्धोऽपाङ्गः नेत्रप्रान्तो यस्मिन् पद्मकोशस्पृधा पद्मकोशस्पर्धिना चक्षुषा नेत्रेण सुभ्रुवा चक्षुषेति जातावेकवचनं तथा नीलैरलकैश्च लसन्मुखं यस्य तम्॥ ३३॥ ❀ ❀ एवंभूतमात्मानं दृष्ट्वा यदा ऋषीणामृषभं श्रेष्ठं दयितं प्रियं पतिं भर्तारं सस्मार स्मृतवती तथा यत्र स प्रजापतिः कर्दमः आस्ते तत्र स्वयमपि स्त्रीभिः सहास्ते उपविवेशेत्यर्थः॥ ३४॥ ❀ ❀ भर्तुः पुरस्तादग्रे स्त्रीसहस्रैर्वृतमात्मानं निशाम्य दृष्ट्वा तस्य भर्तुर्योगगतिं योगप्रभावं प्रति संशयं प्रत्यपद्यत कीदृशीयं योगगतिरिति संशयं विस्मयं प्राप्तवतीत्यर्थः॥ ३५॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

ह्रदं प्रविश्य किमकरोदित्यत्राह। अन्तःसरसीति। वेश्म गृहं तत्र स्थिता दशशतानि सहस्रं कैशोरवयसः षोडशवर्षवयस उत्पलगन्धवत् गन्धो यासां ता उत्पलगन्धयः॥ २६॥ ❀ ❀ पथि तृणदर्शनवदेतद्दर्शनेन किमस्याः प्रयोजनमिति तत्राह। तां दृष्ट्वेति। अनेनाभ्युत्थानप्रणामसंभाषणादिप्रयोजनमुक्तं भवति कर्मकरीः कर्मकर्यः शाधि अनुशासनं कुरु॥ २७॥ ❀ ❀ कीदृशं परिचारकर्माकुर्वन्निति तत्राह। स्नानेनेति। महत्या राज्या अर्हेण योग्येन मनस्विनीं प्रसन्नमनसं नूत्ने नूतने॥ २८॥ ❀ ❀ वरीयांसि वरणीयतमानि द्युमन्ति कान्तिमन्ति सर्वगुणैर्भक्ष्यभोज्यचोष्यलेह्यलक्षणैरुपेतं मधुरादिषड्गुणोपेतं वा अमृतवत्स्वादु मद्यं यस्मिंस्तदमृतासवम्॥ २९॥ ❀ ❀ भर्तृसान्निध्याभावे शरीरश्रृङ्गारेण किं तत्र वक्ति। अथेति। आदर्शे दर्पणे आत्मानं शरीरं विरजं निर्मलं कृतस्वस्त्ययनं दासीभिः कृताशीर्वचनम्॥ ३०॥ ❀ ❀ "कुलस्त्री तु शिरःस्नानमुत्सवे स्नातु तैलतः। वारे वा पैतृके कर्मण्यन्यदा कण्ठसंप्लवा॥" इति स्मार्ताः॥ ३१॥ ❀ ❀ पूर्वपश्चिमभागापेक्षया श्रोण्योरिति रुचकेन वृत्ताकारेण कण्ठाभरणेन॥ ३२॥ ❀ ❀ सुभ्रुवादिभिश्च लसच्चकासन्मुखं यस्मिंस्तत्तथोक्तं पद्मकोशं स्पर्धत इति पद्मकोशस्पृत्तेन॥ ३३॥ ❀ ❀ एवंविधमात्मानं दृष्ट्वा यदा ऋषीणामृषभं दयितं प्रेष्ठं पतिं पतिसमीपे इदं सर्वं शोभत इति सस्मार ततस्तदा स प्रजापतिर्यत्रास्ते स्वयं च ताभिः स्त्रीभिः सह तत्रैवास्त इत्यन्वयः॥ ३४॥ ❀ ❀ यदा सा भर्तुः पुरस्तात् स्थितं स्त्रीसहस्रैश्च वृतमात्मानमद्राक्षीत्तदा तस्य कर्दमस्य योगगतिं भगवद्ध्यानफलं निशाम्य किमिदं चित्रमिति संशयं प्रत्यपद्यत न तु कोटिद्वयावलम्बि विकल्पं प्रागेव निश्चायकधर्मदर्शनादित्यर्थः॥ ३५॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

सान्तरिति युग्मकम्। कर्म्मकरीनः शाधि। वयं किं करवामेत्यन्वयः॥ २६॥ २७॥ ❀ ❀ स्नानेनेति युग्मकम्। परार्द्ध्यानीति पाठो बहुत्र॥ २८॥ २९॥ ❀ ❀ अथादर्श इति चतुष्कम्॥ ३०॥ ❀ ❀ कृतशिरःस्नानं तैलादिना आशिर आरभ्य सर्व्वाङ्गस्नानम्॥ ३१॥ ३३॥ ❀ ❀ ततश्च भावो जात इत्याह। यदेति॥ ३४॥ ३५॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

तुभ्यं तव कर्म्मकरीः किङ्कर्य्यः यद्वा तुभ्यं त्वां परिचरितुं त्वमस्मान् शाधि आज्ञापय ॥ २७ ॥ ❀ ❀ स्नानेन स्नानयोग्यतैलादिना भूषणादीनि परिधातुं ददुः । अन्नपाने च भोक्तुं ददुः ॥ २८ ॥ २९ ॥ ❀ ❀ स्वमात्मानं ददर्शेति शेषः । काश्चित् । पाश्चात्याः स्त्रियः शिरसा न स्नान्तीति तद्वारणार्थमाह । कृतशिरःस्नानमिति । श्रोण्योः कट्योरध्यस्तया उपरि विन्यस्तया काञ्च्या रुचकेन मङ्गलद्रव्येण "रुचकं मङ्गलद्रव्ये ग्रीवाभरणदन्तयोः" इति विश्वः, सुदता सुभ्रुवा चक्षुषेति जातावेकवचनानि श्लक्ष्णो मनोहरः स्निग्धोऽपाङ्गो यत्र तेन पद्मकोषेण सह स्पर्द्धत इति पद्मकोषस्पृन् तेन ॥ ३०-३३ ॥ ❀ ❀ दृष्ट्वा च पत्युस्तस्य रमणयोग्यमात्मानं मत्वा यदा तं सस्मार तदा यत्र स प्रजापतिस्तत्रैव स्वयमप्यास्ते इति तत्रात्मानं पत्युरेकासने आसीनमेव विवेद । न तु जलह्रदात् पदव्यापारेण यान्तमिति तस्याद्भुतैव योगगतिः ॥ ३४ ॥ ❀ ❀ निशाम्य दृष्ट्वा तस्यैव योगगतिं योगप्रभावञ्च दृष्ट्वा संशयं कथमेतदभूदिति विस्मयम् ॥ ३५ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

तुभ्यं किं करवाम नोऽस्मान् शाधि आज्ञापय ॥ २६ ॥ २८ ॥ ❀ ❀ परार्द्ध्यानि अमितमूल्यानि वरीयांसि श्रेष्ठानि अमृतासव स्वादु मादकं च पानं पेयम् ॥ २९ ॥ ❀ ❀ तस्याः सौन्दर्यं वर्णयति । अथेति चतुर्भिः । स्वमात्मानं ददर्शेति शेषः ॥ ३० ॥ ❀ ❀ स्नातमुद्वर्त्य प्रक्षालितं कृतमलस्नानमित्यर्थः । कृतं सुरभ्योपधिजलेन शिरःस्नानं येन तम् । कृतशुद्धस्नानमित्यर्थः निष्कं पदकं ग्रीवायां यस्य तम् । कूजती काञ्चनमये नूपुरे यस्य तम् ॥ ३१ ॥ ❀ ❀ श्रोण्योर्नितम्बयोरध्यस्तयाऽवघृतया बहूनि रत्नानि यस्यां तया रुचकं कुङ्कुमादिमङ्गलद्रव्यं तेन तदुक्तं विश्वप्रकाशे "रुचकं मङ्गलं द्रव्ये ग्रीवाभरणदन्तयोरिति" ॥ ३२ ॥ ❀ ❀ सुदता सुभ्रुवा चक्षुषेति चैकवचनं जात्यभिप्रायेण कीदृशेन चक्षुषा श्लक्ष्णः सुन्दरः स्निग्धोऽपाङ्गो नेत्रप्रान्तो यस्य तेन पद्मकोशेन स्पर्द्धते इति पद्मकोशस्पृत्तेन एतैः लसच्छोभमानं मुखं यस्य तम् ॥ ३३, ३४ ॥ ❀ ❀ भर्तुः पुरस्तात् स्त्रीसहस्रवृतमात्मानं निशाम्य दृष्ट्वा तां योगगतिं च निशाम्य किमिदमिति संशयं प्रत्यपद्यत ॥ ३५ ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

ततः किमासीत्तदाह—साऽन्तःसरसीति । स्वस्याऽऽनन्दांशो देवहूतिः, तस्यास्तत्त्वमितस्तिरोहितं योगं निमित्तीकृत्य सहस्रस्त्रीरूपेण जातम् । अतो न ताभिः काचित्क्षतिः । सरोमध्ये गृहमेकमद्भुतम् ; इदं तु भगवत्कृतमेव, ऋषिणा निर्मितमित्यवचनात् । स्वनिर्मितस्त्रीणामुपभोगे दोषो देवहूतिविवाहश्च व्यर्थः स्यात् । तद्गतोऽप्यानन्दः पुनरस्यामेव संक्रमिष्यति । बहिरुपचारास्तु सेत्स्यन्ति । ताः पुनर्भगवदीया इति देवहूतिदेहस्थितिपर्यन्तं स्थित्वा पुनर्भगवद्योगमायायामेव प्रवेक्ष्यन्ति । तस्मिन् गेहे विद्यमाना दशशतानि कन्यका ददर्श । सर्वासामेकवयस्त्वं भगवत्कृतमेवेति ज्ञापयितुमाह—सर्वाः किशोरवयस इति । सहस्रसङ्ख्या कामशास्त्रानुसारेण तत्रत्योत्कर्षप्रतिपादनार्था । लोहितोत्पले स्त्रीस्वभावे रागासक्तिः सूचिता । गन्धनिरूपणमन्यत्र सङ्क्रमणार्थम् ॥ २६ ॥ ❀ ❀ ततो यज्जातं तदाह—तां दृष्ट्वेति । देवहूतिं दृष्ट्वा ताः स्त्रियः परिचर्यार्थं विश्वासार्थं च प्राञ्जलयो भूत्वा प्रोचुः । तासां वचनमाह—वयमिति । कर्मकरीस्तुभ्यम् ; त्वत्सेवार्थं वयं कर्मकरीर्दासीः, अत एव शाधि आज्ञापय—ते किं करवामेति । अभीप्सितार्थो वक्तव्यः, शरीरसंस्कारस्त्वस्माकं स्वधर्म एवेति स चेन्न वक्तव्य इति भावः ॥ २७ ॥ ❀ ❀ अतस्तथैव सेवां कृतवत्य इत्याह—स्नानेनेति द्वाभ्याम् । आदौ अमूल्येन स्नानेन स्नापयित्वा । मलापकर्षणं स्नानमादौ । सुखकरमङ्गमर्दनादिस्नानं द्वितीयम् । कर्पूराद्यमूल्यद्रव्यैः स्नानं तृतीयम् । स्नानशब्दः क्रियावाची तद्द्रव्येष्वपि वर्तते, अग्निहोत्रशब्दवत् । अतः स्नानेन स्नापयित्वेत्युक्तम् । मनस्विनीं मानवतीम् । मनोः पुत्रीं वा, मानवीमिति पाठे । चकारादुद्वर्तनादि सर्वे संस्काराः अन्तःपरिधानार्थमुपरिवस्त्रा[2]र्थं च दुकूले । निर्मले इति । नूतनयोरौत्पत्तिकमलसम्भवात् । पक्षान्तरव्यावृत्त्यर्थमाह—नूत्ने इति । अस्यै च ददुरिति । तस्याः संमाननार्थं पुरतो बहून्येव दुकूलानि स्थापितानि, सर्वाभ्यः सखीभ्यो दत्त्वा परिधेहीति तथा सति तस्याः संमाननं भवति । यत एता मानदाः । भूषणानि नानाविधानि च दत्तवत्यः । परार्ध्यानि अमूल्यानि । गुणतोऽप्यमूल्यानि भवन्तीति वरीयांसीत्युक्तम् । अतिसुन्दराणि कान्तियुक्तानि च । अन्नं भोजनार्थम् । सर्वे गुणा व्यञ्जनादयः । पानं च पानकादि, अमृतरूपमासवरूपं च । मादकानि हि द्रव्याणि कामशास्त्रे रसोत्पत्त्यर्थमुक्तान्यनिषिद्धानि जातीफलादीनि, न तु मदिरादीनि निषिद्धानि । अन्यथा भर्त्रा सह स्मरसङ्ग्रामो न स्यात् ॥ २८ ॥ २९ ॥ ❀ ❀ दर्पणं दर्शनार्थं दत्तवत्यः । प्रमाणार्थं तद्दृष्टमेव तस्या रूपं वर्णयति—अथेति चतुर्भिः, कामपृतनारूपायास्तस्याश्चतुरङ्गत्वात्—सर्वालङ्करणानन्तरमथ भिन्नप्रक्रमेण । स्वरुच्यनुसारेण विरचनार्थमथेत्याह—आत्मानं देहम् , स्वं स्वकीयम् । सखिष्वप्यात्मभावो जात इति तद्व्यावृत्त्यर्थं स्वपदप्रयोगः । स्रग्विणं मालायुक्तम् । विरजानि

---

१. सर्वाः. ख. ङ. । २. उपरिष्ठार्थम् ( ? ) ख. ग. ङ. ।

अम्बराणि यस्याः । देहोऽपि विरजः । कृतं स्वस्त्ययनं शुश्रूषणं यस्य । प्रतिबिम्बेऽपि कन्यानां सान्निध्यात्कन्याभिर्बहुमानितम् । स्नातम् । पुनः कृतं शिरःस्नानं येन । अनेन स्त्रीणां सर्वदा न शिरःस्नानम्, स्नानद्वयं च सूचितं भिन्नप्रकारेण । सर्वाभरणानि नित्यान्यावश्यकानि । निष्कं पदकं ग्रीवायां यस्य । वलयिनमिति स्वाभाविकाभरणाद्यतिरिक्तो वलयः । कूजती शब्दायमाने काञ्चननिर्मिते नूपुरे यस्य । श्रोण्योरध्यस्ता या काञ्ची सुवर्णमयी बहुरत्नयुक्ता, हारश्च मुक्तानाममूल्यः । रुचकः कुङ्कुमबिन्दुः चकारात्सर्वाण्येवानुक्तानि । तैः सर्वैरेव भूषितम् ॥ पद्मकोशस्पृधा मुखेन उपशोभितम् । लसन्मुखमिति पाठेऽपि वक्रेण पद्मकोशस्पृधा लसत् संपूर्णमेव मुखम् । सुदतेति वक्त्रविशेषणम् । शोभना दन्ता यस्मिन्निति । शोभना यस्य भ्रूः । श्लक्ष्णः स्निग्धोऽपाङ्गो यस्मिन्, तादृशचक्षुषा नीलैरलकैश्च मुखस्थैः पार्श्ववर्तिभिः सर्वैरेव लसत् मुखं यस्य ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ❀ ❀ एवमात्मानं दृष्ट्वा तस्य योग्यतां मत्वा भोक्तारं सस्मारेत्याह—यदा सस्मारेति । आत्मनः पतिम्, दयितं परमप्रेमास्पदम्, ऋषीणामृषभम् । स्वधर्मेण लौकिकधर्मेण वैदिकधर्मेण च भजनीयः कर्दमो भवतीति विशेषणत्रयम् । सिद्धस्थानत्वात् मनःसिद्धिर्जातेत्याह—तत्र चाऽऽस्त इति । पूर्वं यत्र प्रजापतिरास्ते तत्रैव स्त्रीभिः सह स्वयमप्यास्ते ॥ ३४ ॥ ❀ ❀ एवं स्वानुभूतं वैभवं दृष्ट्वा भर्तुर्माहात्म्ये परमाश्चर्यं प्राप्तवतीत्याह—भर्तुरिति । भर्तुरग्रे स्वात्मानं स्त्रीसहस्रयुतं यदा अपश्यत्, तदा तस्य योगगतिं दृष्ट्वा साधनापरिज्ञानात् परमं संशयमापद्यत, निर्द्धारणे प्रमाणाभावात् । संशयकार्यमाश्चर्यं वाऽऽपद्यत ॥ ३५ ॥

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

सान्तःसरसीत्यत्र । तत्त्वमिति । देवाकारणहेतुत्वम् ॥ २६ ॥ ❀ ❀ स्नानेनेत्यत्र । अग्निहोत्रशब्दवदिति । यथा 'यावज्जीवमग्निहोत्रं जुहोति' इत्यादौ क्रियावाचकोऽप्यग्निहोत्रशब्दो 'यस्याऽग्निहोत्रमधिश्रितममेध्यमापद्येत' इति बह्वृचब्राह्मणे तद्द्रव्यवाचकस्तद्वदित्यर्थः ॥ २८ ॥ २९ ॥

### श्रीगिरिधरकृता बालप्रबोधिनी

सा अन्तस्सरसि निमग्ना सती तत्र वेश्मस्था मन्दिरस्थाः दशशतानि कन्यकाः ददर्श । ता वर्णयति—सर्वाः किशोरवयसः उत्पलस्येव देहगन्धो यासां ताः ॥ २६ ॥ ❀ ❀ तां देवहूतिं दृष्ट्वा ताः स्त्रियः सहसा आशु उत्थाय प्राञ्जलयः संयोजिताञ्जलयः सत्यो वयं तुभ्यं तव कर्मकरीः कर्मकर्यः परिचारिका अतः किं तव दास्यं करवाम तन्नः शाधि आज्ञापयेति प्रोचुरित्यन्वयः ॥ २७ ॥ ❀ ❀ एवमुक्त्वा च ता मानदाः सन्मानकर्त्र्यः स्त्रियो महार्हेण अतिश्रेष्ठेन स्नानेन स्नानसाधनेन सुगन्धितैलादिना तां मनस्विनीमुत्साहयुक्तां देवहूतिं स्नापयित्वाऽस्यै देवहूत्यै निर्मले शुद्धे नूत्ने नवीने दुकूले सूक्ष्मवस्त्रे परिधानोत्तरीये ददुरित्यन्वयः ॥ २८ ॥ ❀ ❀ तथा परार्ध्यानि अमूल्यानि, वरीयांसि श्रेष्ठतमानि, द्युमन्ति दीप्तिमन्ति च भूषणानि, सर्वगुणोपेतं षड्रसोपेतमन्नं च अमृतवत्स्वादु आसवं मादकं च पानं पेयं चास्यै ददुः ॥ २९ ॥ ❀ ❀ अथानन्तरं देवहूतिः स्वमात्मानं स्वदेहं आदर्शे दर्पणे ददर्शेति शेषः । तद्दृष्टं स्वरूपं वर्णयति—स्रग्विणं स्रजं बिभ्रतम्, विरजं निर्मलमम्बरं वासो यस्य तम्, विरजं निर्मलशरीरम्, कृतं स्वस्त्ययनं मङ्गलं यस्य तम्, ताभिः कन्याभिर्बहुमानितं सेवितम् ॥ ३० ॥ ❀ ❀ स्नातमुद्वर्त्य क्षालितं शिरस्स्नानमभ्यङ्गो येन तम् । सर्वैराभरणैर्भूषितम् । एतदेव प्रपञ्चयति—निष्कं पदकं ग्रीवायां यस्य तम्, कूजती शब्दं कुर्वती काञ्चनमये नूपुरे यस्य तम् ॥ ३१ ॥ ❀ ❀ श्रोण्योर्नितम्बयोरध्यस्तया धृतया काञ्चनमय्या बहूनि रत्नानि यस्यां तया काञ्च्या मेखलया महार्हेण श्रेष्ठेन हारेण रुचकेन कुङ्कुमादिमङ्गलद्रव्येण च भूषितम् । 'रुचकं मङ्गलद्रव्ये ग्रीवाभरणदन्तयोः' इति विश्वकोशात् ॥ ३२ ॥ ❀ ❀ सुदता सुन्दरदन्तपंक्तया सुभ्रुवा शोभनया भ्रुवा श्लक्ष्णो मनोहरः स्निग्धोऽपाङ्गो नेत्रप्रान्तो यस्य तेन अतएव पद्मकोशेन स्पर्धते इति पद्मकोशस्पृत् तेन चक्षुषा नीलैरलकैश्च लसत् शोभमानं मुखं यस्य तम् । सुदता सुभ्रुवा चक्षुषेति च जातावेकवचनानि ॥ ३३ ॥ ❀ ❀ एवम्भूतमात्मानं दृष्ट्वा यदा ऋषीणां ऋषभं श्रेष्ठं दयितं प्रियं पतिं भर्तारं सस्मार तदा यत्र सः प्रजापतिः कर्दम आस्ते तत्र स्वयमपि स्त्रीभिः सह आस्ते इत्यन्वयः ॥ ३४ ॥ ❀ ❀ भर्तुः पुरस्तात् अग्रे स्त्रीसहस्रैर्वृतं आत्मानं निशाम्य दृष्ट्वा तदा तस्य भर्तुर्योगगतिं प्रति संशयं प्रत्यपद्यत । कीदृशोऽस्य योगप्रभाव इति विस्मयं प्राप्तवतीत्यर्थः ॥ ३५ ॥

### हिन्दी अनुवाद

सरोवरमें गोता लगानेपर उसने उसके भीतर एक महलमें एक हजार कन्याएँ देखीं । वे सभी किशोर अवस्थाकी थीं और उनके शरीरोंसे कमलकी-सी गन्ध आती थी ॥ २६ ॥ ❀ ❀ देवहूतिको देखते ही वे सब स्त्रियाँ सहसा खड़ी हो गयीं और हाथ जोड़कर कहने लगीं, 'हम आपकी दासियाँ हैं; हमें आज्ञा दीजिये, आपकी क्या सेवा करें' ॥ २७ ॥ ❀ ❀ विदुरजी ! तब स्वामिनीको सम्मान देनेवाली उन रमणियोंने बहुमूल्य मसालों तथा गन्ध आदिसे मिश्रित जलके द्वारा मनस्विनी

देवहूतिको स्नान कराया तथा उसे दो नवीन और निर्मल वस्त्र पहननेको दिये ॥ २८ ॥ ❀ ❀ फिर उन्होंने ये बहुत मूल्यके बड़े सुन्दर और कान्तिमान् आभूषण, सर्वगुणसम्पन्न भोजन और पीनेके लिये अमृतके समान स्वादिष्ट आसव प्रस्तुत किये ॥ २९ ॥ ❀ ❀ अब देवहूतिने दर्पणमें अपना प्रतिविम्ब देखा तो उसे मालूम हुआ कि वह भाँति-भाँतिके सुगन्धित फूलोंके हारोंसे विभूषित है, स्वच्छ वस्त्र धारण किये हुए है, उसका शरीर भी निर्मल और कान्तिमान् हो गया है तथा उन कन्याओंने बड़े आदरपूर्वक उसका माङ्गलिक शृङ्गार किया है ॥ ३० ॥ उसे सिरसे स्नान कराया गया है, स्नानके पश्चात् अङ्ग-अङ्गमें सब प्रकारके आभूषण सजाये गये हैं तथा उनके गलेमें हार-हमेल, हाथोंमें कङ्कण और पैरोंमें छमछमाते हुए सोनेके पायजेब सुशोभित हैं ॥ ३१ ॥ ❀ ❀ कमरमें पड़ी हुई सोनेकी रत्नजटित करधनीसे; बहुमूल्य मणियोंके हारसे और अङ्ग-अङ्गमें लगे हुए कुंकुमादि मङ्गलद्रव्योंसे उसकी अपूर्व शोभा हो रही है ॥ ३२ ॥ ❀ ❀ उसका मुख सुन्दर दन्तावली, मनोहर भौंहें, कमलकी कलीसे स्पर्धा करनेवाले प्रेमकटाक्षमय सुन्दर नेत्र और नीली अलकावलीसे बड़ा ही सुन्दर जान पड़ता है ॥ ३३ ॥ ❀ ❀ विदुरजी ! जब देवहूतिने अपने प्रिय पतिदेवका स्मरण किया, तो अपनेको सहेलियोंके सहित वहीं पाया, जहाँ प्रजापति कर्दमजी विराजमान थे ॥ ३४ ॥ ❀ ❀ उस समय अपनेको सहस्रों स्त्रियोंके सहित अपने प्राणनाथके सामने देख और इसे उनके योगका प्रभाव समझकर देवहूतिको बड़ा विस्मय हुआ ॥ ३५ ॥

स तां कृतमलस्नानां विभ्राजन्तीमपूर्ववत् । आत्मनो बिभ्रतीं रूपं संवीतरुचिरस्तनीम् ॥ ३६ ॥
विद्याधरीसहस्रेण सेव्यमानां सुवाससम् । जातभावो विमानं तदारोहयदमित्रहन् ॥ ३७ ॥

तस्मिन्नलुप्तमहिमा प्रिययानुरक्तो विद्याधरीभिरुपचीर्णवपुर्विमाने ।
बभ्राज उत्कचकुमुद्गणवानपीच्यस्ताराभिरावृत इवोडुपतिर्नभःस्थः ॥ ३८ ॥
तेनाष्टलोकपविहारकुलाचलेन्द्र द्रोणीष्वनङ्गसखमारुतसौभगासु[2] ।
सिद्धैर्नुतो द्युधुनिपातशिवस्वनासु रेमे चिरं धनदवल्ललनावरूथी ॥ ३९ ॥

वैश्रम्भके सुरसने नन्दने पुष्पभद्रके । मानसे चैत्ररथ्ये च स रेमे रामया रतः ॥ ४० ॥
भ्राजिष्णुना विमानेन कामगेन महीयसा । वैमानिकानत्यशेत चरँल्लोकान् यथानिलः ॥ ४१ ॥
किं दुरापादनं तेषां पुंसामुद्दामचेतसाम् । यैराश्रितस्तीर्थपदश्चरणो व्यसनात्ययः ॥ ४२ ॥
प्रेक्षयित्वा भुवो गोलं पत्न्यै यावान् स्वसंस्थया । बह्वाश्चर्यं महायोगी स्वाश्रमाय न्यवर्तत ॥ ४३ ॥
विभज्य नवधाऽऽत्मानं मानवीं सुरतोत्सुकाम् । रामां निरमयन् रेमे वर्षपूगान्मुहूर्तवत् ॥ ४४ ॥
तस्मिन् विमान उत्कृष्टां शय्यां रतिकरीं श्रिता । न चाबुध्यत तं कालं पत्यापीच्येन सङ्गता ॥ ४५ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

स मुनिर्विवाहात्प्राग्यदात्मनो रूपं तदेव पुनर्बिभ्रतीम् । संवीतौ प्रावृतौ रुचिरौ स्तनौ यस्याः । पाठांतरे तु रूपविशेषणम् ॥ ३६ ॥ ❀ ❀ शोभने वाससी यस्याः । जातो भावः प्रेम यस्य । हे अमित्रहन् जितकाम ॥ ३७ ॥ ❀ ❀ तस्मिन्विमाने मुनिर्बभ्राजे । न लुप्तो महिमा स्वातंत्र्यं यस्य उपचीर्णं शुश्रूषितं वपुर्यस्य विकसितकुमुद्गणवानपीच्योऽतिसुंदरः पूर्णचन्द्र इव मुनिर्नभ इव विमानं तारा इव ताः स्त्रियः कुमुदानीव तासां नेत्राणीति ज्ञेयम् ॥ ३८ ॥ ❀ ❀ तेन विमानेन अष्टलोकपालानां विहारो यस्मिन्कुलाचलेंद्रे मेरौ तस्य द्रोणीषु दरीषु अनंगस्य सखा यो मारुतः शीतसुगंधमंदानिलस्तेन सौभगं सौंदर्यं यासु सिद्धैर्नुतः स्तुतः सन् द्युधुनिर्गंगा तस्याः पातेन शिवः स्वनो यासु तासु रेमे । ललनावरूथी स्त्रीरत्नसमूहवान् ॥ ३९ ॥ वैश्रंभकादिषु देवोद्यानेषु मानसे च सरसि रतः प्रीतः सन् ॥ ४० ॥ ❀ ❀ अत्यशेतातिक्रम्य स्थितः ॥ ४१ ॥ ❀ ❀ उद्दामचेतसां धीराणाम् । व्यसनं संसारस्तस्यात्ययो यस्मात् ॥ ४२ ॥ ❀ ❀ प्रेक्षयित्वा दर्शयित्वा गोलं मंडलम् । स्वसंस्थाया द्वीपवर्षादिरचनाया यावांस्तावंतम् । बहून्याश्चर्याणि यस्मिंस्तम् ॥ ४३ ॥ ❀ ❀ नवधा विभज्य नवप्रभेदमात्मानं कृत्वा ॥ ४४-४५ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

मलनिवर्तकं स्नानं मलस्नानं मध्यमपदलोपिसमासः । कृतं मलस्नानं यया ताम् । पाठांतरे संवीतरुचिरस्तनमिति पाठे ॥ ३६ ॥ ❀ ❀ विद्याधरो देवयोनिभेदस्तस्य भार्यासहस्रेण दासीरूपेण ॥ ३७ ॥ ३८ ॥ ❀ ❀ कुलाचला

---

१. प्रा० पा० वान्परार्घ्य । २. पा० पा० सौरभासु ।

मलयादयस्तेषामिन्द्रः। "वरूथो रथगुप्तौ ना समूहेपि च कथ्यते" इति ॥ ३९ ॥ ❀ ❀ स मुनिः ॥ ४० ॥ ❀ ❀ वैमानिकान्विमानगामिनो देवान् ॥ ४१ ॥ ❀ ❀ उद्गतं दाम बंधनं यस्मात्स तथा यद्वोत्कृष्टं दाम यस्य स तथा। दामोदरो नंदनंदनस्तत्र चेतो येषां कृष्णभक्तानामित्यर्थः। तदेव स्फुटयति—यैरिति। तीर्थपदो गंगादितीर्थाश्रयस्य ॥ ४२ ॥ ❀ ❀ स्वाश्रमाय स्वाश्रमं प्राप्तुम् ॥ ४३ ॥ ❀ ❀ आत्मानमात्मा शरीरं तेन तत्कारणं वीर्यं लक्ष्यते ॥ ४४ ॥ ❀ ❀ तं कालं भोगकालं न चाबुध्यत कियान्कालो गत इति नाज्ञासीत्। तत्र हेतुः पत्येति। अपीच्येनाल्पकालचरमधातुस्खलनवर्जितेन। 'पीच स्खलने' धातुः ॥ ४५ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

विवाहात्प्रागित्यादिवत्प्रत्ययस्वारस्यात् व्याख्यातम्। पूर्ववत्त्वन्तु तपोमयदशापेक्षया। पाठान्तरे रुचिरस्तनमिति पाठे ॥ ३६ ॥ ३७ ॥ ❀ ❀ उडुः रोहिणी सा इव देवहूतिरिति ज्ञेयम् ॥ ३८ ॥ ❀ ❀ शीतलत्वादिकमनङ्गसखत्वेनाक्षिप्तम् ॥ ३९ ॥ ❀ ❀ रामया देवहूत्या सह ॥ ४० ॥ ❀ ❀ महीयसा विपुलेन ॥ ४१ ॥ ❀ ❀ उद्दामं विषयान्तरापेक्षाराहित्येनोत्कृष्टं निजाश्रये धैर्यं गतं चित्तं येषां तथा च धीराणामिति फलितोऽर्थः ॥ ४२ ॥ ❀ ❀ स्वाश्रमाय स्वाश्रमङ्गन्तुम् ॥ ४३ ॥ ❀ ❀ नवप्रभेदेन तत्तदपत्योत्पत्तौ तत्तद्गुणप्रधानत्वप्रयुक्तनवभेदेन विशिष्टमात्मानं स्वं कृत्वा ध्यात्वा ॥ ४४ ॥ ❀ ❀ अपीच्येन सर्वाङ्गसुन्दरेण ॥ ४५ ॥ ४६ ॥

### श्रीमद्वीरराघवव्याख्या

हे अमित्रहन्! विदुर जितारिषड्वर्ग सः कर्दमः जातभावः सन् पूर्ववत् विवाहात्प्राग्वत् आत्मनः स्वस्या रूपं बिभ्रतीमत एव विशेषेण भ्राजमानां सम्वीतौ प्रावृतौ रुचिरौ स्तनौ यस्याः ताम्। पाठान्तरे रूपविशेषणं, शोभने वाससी यस्यास्ताम् ॥ ३६ ॥ ३७ ॥ ❀ ❀ अलुप्तमहिमा अलुप्तप्रभावः प्रियया भार्ययानुसक्त अनुसङ्गतः विद्याधरीभिरुपचीर्णं शुश्रूषितं वपुर्यस्य स मुनिः कर्दमः तस्मिन्विमाने बभ्राजे रराज। तत्र दृष्टान्तः उत्कचकुमुद्गणवान् विकसत्कुमुद्गणवान् अपीच्यो दर्शनीयः ताराभिरावृतो नभःस्थः उडुपतिः पूर्णचन्द्र इवेति पूर्णचन्द्र इव मुनिः नभ इव विमानं तारा इव स्त्रियः कुमुदानीव तासां नेत्राणि इति विज्ञेयम् ॥ ३८ ॥ ❀ ❀ तेन विमानेनाष्टलोकपालानां विहारा यस्मिन् सः कुलाचलेन्द्रो मेरुः तस्य द्रोणीषु दरीषु कथंभूतासु अनङ्गस्य यः सखा मारुतः शीतसुगन्धमन्दानिलः तेन सौभगं सौन्दर्यं यासु शुधुनी गङ्गा तस्याः पातेन शिवः स्वनो यासु तासु ललनावरूथी स्त्रीरत्नसमूहवान्मुनिर्धनदवत्कुबेर इव रेमे ॥ ३९ ॥ ❀ ❀ वैस्रम्भकादिषु देवोद्यानेषु मानसे च सरसि रतः प्रीतः सन् रमया स्त्रिया सह रेमे रमितवान् ॥ ४० ॥ ❀ ❀ भ्राजिष्णुना प्रकाशमानेन महीयसा श्रेष्ठेन कामगेन विमानेनानिल इव सर्वत्राप्रतिहतगत्या चरन् वैमानिकान् लोकानत्यशेतातिक्रम्य स्थितः ॥ ४१ ॥ ❀ ❀ कीदृशोऽयं मुनेः प्रभाव इति न विस्मयनीयमित्याह। किमिति। यैः पुम्भिस्तीर्थपदः भगवतः व्यसनाघ्ययः तापत्रयनाशनश्चरणः पादः आश्रितः तेषामुद्दामचेतसां योगपरिशुद्धमनसां पुंसां किं दुरापादनं दुष्प्रापं किमस्तीत्यर्थः ॥ ४२ ॥ ❀ ❀ स्वसंस्थया द्वीपवर्षादिसंस्थानेन यावान् भूगोलस्तावन्तं बह्वाश्चर्यमिति विस्मयनीयं भुवो गोलं पत्न्यै भार्यायै दर्शयित्वा महायोगी कर्दमः पुनः स्वाश्रमाय न्यवर्तत स्वाश्रमं प्रत्यागतवान् ॥ ४३ ॥ ❀ ❀ नवधात्मानमपत्यं विभज्य नवधापत्यमुत्पादयिष्यामीति मनसा स्ववीर्यं विभज्येत्यर्थः। सुरते उत्सुकामुत्साहवतीं मनोः पुत्रीं रामां स्वस्त्रियं विशेषेण रमयन्वर्षपूगान्वर्षगणान्मुहूर्तवद्रेमे ॥ ४४ ॥ ❀ ❀ तस्मिन्विमाने उत्सृष्टां निरतिशयसुखस्पर्शां रतिकरीं रतिवर्द्धिनीं शय्यां श्रिता अपीच्येन सुन्दरेण पत्या भर्त्रा सङ्गता संयुक्ता सती तमनेकवर्षसमूहात्मकं कालं नाबुध्यत एतावान् कालो व्यतीत इति न ज्ञातवती ॥ ४५ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

अर्थक्रियायोग्यत्वान्न विकल्पापरपर्यायः संशयोऽभूत् किंतु विस्मय एवेति भावेन व्यवायोपक्रमं वक्ति। स तामिति। स्तनपट्टिकया सम्वीतौ रुचिरौ स्तनौ यस्य तत्तथा ॥ ३६ ॥ ❀ ❀ जातभावः प्रादुर्भूतव्यवायलीलारम्भः ॥ ३७ ॥ ❀ ❀ जातभाव इत्युक्तं विवृणोति। तस्मिन्निति। स तस्मिन्विमाने बभ्राजे चकास इत्यन्वयः। प्रकाशयोग्यगुणानाह। अलुप्तेत्यादिना। अलुप्तमहिमा अपरिच्छिन्नमाहात्म्यः ग्राम्यकर्मासक्तस्यापि सामर्थ्यलोपो नास्तीत्यर्थः। "सर्वेन्द्रियाणां जरयन्ति तेज इति" श्रुतेरितरेषां स स्यादिति माहात्म्यलोपशङ्काकारणमाह। प्रिययेति। "आलिङ्गने चुम्बने वाप्यनुषङ्गोऽनु वर्तत" इति अङ्गमर्दनादिना उपचीर्णमपचूर्णितं शुश्रूषितं वपुर्यस्य स तथा। अनेन सुरतालये स्त्रिय एव परिचारिका इति सूचितम् "कचः कलङ्के दोषे च कुन्तले भ्रमरे तथा" इत्यभिधानादुत्कचक उद्धृतदोषः उत्कृष्टो गुणो यस्य तदुद्गुणं तच्च पानं पातुं योग्यमधरामृतं तदुद्गुणपानं तस्य वीचिः परम्परास्यास्तीत्युद्गुणपानवीचयः मत्वर्थे यत्प्रत्ययः। यद्वा उद्गुणपानः उत्तमाधरामृतश्च वीचयः एवावीचयः प्राप्तषोडशवर्षः "प्राप्तषोडशवर्षः सन्नावीच्य इति कथ्यत" इति च बुद्धयवतारार्थं दृष्टान्तमाह। ताराभिरिति।

उडुपतिश्चन्द्रः उक्तविशेषणानि यथासम्भवं चन्द्रेऽपि घटनीयानि ॥ ३८ ॥ ❀ ❀ वनजलक्रीडादीनां सुरताङ्गत्वात् तदध्ययनेनानुष्ठितमिति भावेन कामगमित्युक्तं विवृणोति श्लोकद्वयेन । तेनेति । तेन विमानेनाष्टानां लोकपालानामिन्द्रादीनां विहारः क्रीडा यासु तास्तथोक्ताः कुलाचलेन्द्राणां सप्तकुलपर्वतानां द्रोण्यो नितम्बगुहास्तासु अष्टलोकपविहार कुलाचलेन्द्रद्रोणीषु वैश्रवणवच्चिरं रेमे इत्यन्वयः । पाषाणसन्धिषु सूर्यकिरणसन्तापसम्भूतनिदाघेषु स्वतः कामाग्निना तप्तस्य सुरतोत्सवानुभवः कथं घटत इत्यत उक्तमनङ्गेति अनङ्गसखो मारुतो वायुस्तेन सौभगासु सुन्दरसुखासु द्युधुनी आकाशगङ्गा तस्याः पातेन प्रस्रवणेन शिवः कर्णसुखः स्वनः शब्दो यासु तास्तासु । अनेन विशेषणद्वयेन मान्द्यशैत्यमिति गुणद्वयमुक्तं ललनाः स्त्रियः वरूथः समूहः उभयत्र समम् ॥ ३९ ॥ ❀ ❀ इदानीं सौरभ्याध्वनयति वैस्रम्भके सुरवन इति ॥ ४० ॥ ❀ ❀ इतरेषां वैमानिकानां स्वाधिकृतेष्वेव प्रदेशेषु सञ्चारादस्य विमानस्य विशेषाभावादयं सर्वातिशयीत्याह । भ्राजिष्णुनेति । विमानेन चरन्तीति वैमानिकास्तान् ॥ ४१ ॥ एतदैश्वर्यं न स्वनियतं श्रीनारायणप्रसादायत्तमित्याशयेनाह । किं दुरापादनमिति । उद्दामचेतसामगाध-बुद्धीनां तीर्थं शुद्धजलं गङ्गा पदोर्यस्य स तीर्थपात्तस्य ॥ ४२ ॥ ❀ ❀ बह्वाश्चर्यात् भूगोलकादधिकैश्वर्यातिशयः स्वाश्रम इति भावेन ततस्तस्य निवृत्तिं वक्ति । प्रेक्षयित्वेति । स्वसंस्थया स्वसमाध्या यावांस्तावत्प्रदेशोपेतं भूगोलकं भूमण्डलम् ॥४३॥ ❀ ❀ विन्दुसरः स्वाश्रमं प्राप्य किमकार्षीत्कर्दम इति तत्राह । विभज्येति । महायोगित्वाद्बहुशरीरग्रहणसमर्थः कर्दम आत्मानं स्वं नवधा विभज्य योगशक्त्या नवसंख्याविशिष्टानि शरीराणि गृहीत्वा सुरतोत्सुकां मानुषरतिकामुकीं मानवीं मनुपुत्रीं रामामपि तावद्रूपवर्तीं नितरां रमयन् वात्स्यायनोक्तविधिना वर्षपूगान् मुहूर्तवद्रेम इत्यन्वयः ॥ ४४ ॥ ❀ ❀ तृतीयपुरुषार्थानुभव ईदृगिति व्यनक्ति । तस्मिन्निति । मसृणत्वाद्रतिकरीं यो बहुतिथस्तं कालम् ॥ ४५ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

स तामिति युग्मकम् । अपूर्ववत्वे हेतुः आत्मन इति टीकायां विवाहात् प्रागित्यादिकमपूर्ववदिति वतिप्रत्ययस्वारस्या-ल्लभ्यते । अपूर्व्वत्वं हि तपोमयदशामात्रापेक्षया ॥ ३६ ॥ ३७ ॥ ❀ ❀ उडुपतिरिति उडुः रोहिणी सा च प्रियास्थानीया ज्ञेया प्रियाशब्द एवोभयत्रोन्नीयते ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ ❀ ❀ किमिति । उद्दामचेतसामपेक्षान्तरावद्धचित्तत्वेन निजाश्रये धैर्य्यं गतानाम् । यद्वा । सर्व्वत्र कुण्ठतारहितचित्तानामिति तीर्थपद इति व्यसनात्यय इति च दुःसाध्यत्वमेव व्यावर्त्तयति । सर्व्वविघ्नात्ययपूर्व्वकं सर्व्वसम्पादनस्य विवक्षितत्वात् ॥ ४२ ॥ ४३ ॥ ❀ ❀ तत्तदपत्योत्पत्तौ तत्तद्गुणप्रधानत्वेन नवधा ॥ ४४ ॥ ४५ ॥ ४६ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

स मुनिः आत्मनो रूपं विवाहात् प्राक् यादृशमासीत्तदेव पुनर्बिभ्रतीमित्यर्थः । सम्वीतौ प्रावृतौ रुचिरौ स्तनौ यस्यास्ताम् । नपुंसकपाठे रूपविशेषणम् । हे अमित्रहन् ! जितकाम ॥३६॥३७॥ ❀ ❀ तस्मिन् विमाने मुनिर्विभ्राजे । उपचीर्णं शुश्रूषितं वपुर्यस्य सः विकसितकुमुद्गणवान् अपीच्योऽतिसुन्दरः पूर्णचन्द्र इव मुनिः नभ इव विमानं तारा इव ताः स्त्रियः कुमुदानीव वासां नेत्राणीति ज्ञेयम् ॥ ३८ ॥ ❀ ❀ तेन विमानेन रेमे । कुलाचलेन्द्रो मेरुः द्युधुनिर्गङ्गा तस्या ऊर्द्ध्वतः पातेन शिवः स्वनो यासु तासु ललनासमूहवान् ॥ ३९ ॥ ❀ ❀ वैश्रम्भकादिषु देवोद्यानेषु मानसे सरसि ॥ ४० ॥ ❀ ❀ अत्यशेत अतिक्रान्तवान् ॥ ४१ ॥ ❀ ❀ उद्दामचेतसां तच्चारणादन्यत्राबद्धमनसाम् ॥ ४२ ॥ ❀ ❀ गोलं मण्डलं स्वसंस्थया द्वीपवर्षादिरचनया यावान् तावन्तम् ॥ ४३ ॥ ❀ ❀ नवधा नवप्रभेदेनात्मानं कृत्वा ॥ ४४ ॥ ४५ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

कृतमलस्नानां कृतकण्ठस्नानामुपलक्षणमेतच्छुद्धस्नानस्यापि स्नानद्वयस्य पूर्वत्रोक्तत्वात् । विवाहात्प्राक् यदात्मनो रूपं तदेव बिभ्रतीं ततोऽप्याधिक्यं दर्शयति । अपूर्ववत् विभ्राजन्तीमिति । संवीतौ कुचपट्टिकावृतौ रुचिरौ स्तनौ यस्यास्ताम् । जातो भावो भक्तिर्यस्य सः हराविति शेषः । अयमर्थः ब्रह्माज्ञापालनार्थं स्त्रीसङ्गं करिष्यामि वस्तुतस्त्विदं हेयमेव परमपुरुषार्थस्तु हरिभक्तिरेवेति । तत्पूर्ववर्णितगुणं विमानमारोहयत् हे अमित्रहन् ! जितषड्वर्ग ! ॥ ३६ ॥ ३७ ॥ ❀ ❀ जातभावत्वादेव तस्मिन् विमाने विद्याधरीभिरुपचीर्णं शुश्रूषितं वपुर्यस्य स तथाभूतोऽपि प्रियया हेतुभूतया अनुरक्तोऽपि तस्यामनुरक्तिविडम्बनां कुर्वाणोऽपि अलुप्तमहिमैव विभ्राज अशोभत ।उत्कचो विकसितः यो कुमुत्समूहस्तद्वान् अपीच्यो निर्मलः कुमुद्गणवानासक्तिरहितः ताराभिरावृतः उडुपतिश्चन्द्रो यथा भ्राजते तद्वत् कुमुद्गणतुल्यदेवहूतिनेत्राद्यङ्गनागणवान् तदनासक्तः तारायुक्तनभस्तुल्यविद्याधरीयुक्तविमानस्थः मुनिर्द्विजपतिरित्यर्थः ॥ ३८ ॥ ❀ ❀ तेन विमानेन अष्टलोकपालानां विहारो यस्मिन् कुलाचलानामिन्द्रे मेरौ तस्य द्रोणीषु दरीषु अनङ्गस्य सखा वसन्तस्तस्मान्मारुतेन शीतसुगन्धमन्देन सौभगं सौन्दर्यं यासु द्युधुन्याः गङ्गायाः पातेन शिवः मङ्गलप्रदः स्वनः शब्दो यासु तासु सिद्धैर्नुतः स्तुतः ललनानां वरूथः समूहोऽस्यास्तीति स तथा धनद इव रेमे ॥ ३९ ॥ ❀ ❀ वैस्रम्भकादिषु देवारामेषु मानसे सरसि च रामया प्रियया चरतः प्रीतः सन् ॥ ४० ॥ ❀ ❀ यथा अनिल-

श्चरन् लोकानतिक्रामति तथा वैमानिकानत्यशेत अतिक्रम्य स्थितः ॥ ४१ ॥ ❀ ❀ उद्दामचेतसां वनमालिनिविष्टचेतसां यैस्तीर्थपदः श्रीहरेः व्यसनानामत्ययो नाशो यस्मात्स चरण आश्रितस्तेषां किं दुर्ल्लभम् ॥ ४२ ॥ ❀ ❀ स्वसंस्थया द्वीपादिरचनया यावान् यावन्तं भुवो गोलं मण्डलं पत्न्यै प्रेक्षयित्वा दर्शयित्वा ॥ ४३ ॥ ❀ ❀ आत्मानं स्वरूपं नवधा नवप्रकारेण विभज्य नवापत्यरूपं स्वरूपं करिष्यामीति सङ्कल्प्येत्यर्थः । सुरते सम्भोगे उत्सुकां नितरां रमयन् वर्षसमूहान् मुहूर्तवद्रेमे ॥ ४४ ॥ ❀ ❀ अपीच्येन सुन्दरेण ॥ ४५ ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

स्वमाहात्म्ये ज्ञाते पश्चात्तया सह सङ्गं कृतवानित्याह—स तामिति । कृतं मलस्नानं ययेति बाह्यशुद्धिरुक्ता । तामित्यान्तरी । अपूर्ववत् नूतनवद्विभ्राजन्तीमिति नूतनरसोत्पादनार्थमुक्तम् । एतावताऽप्यलंकारेण विवाहकालरूपमेव प्राप्तवती, न त्वलौकिकं किञ्चिज्जातमिति वदन् तस्याः स्वभावसौन्दर्यं वर्णयति—आत्मनो बिभ्रतीं रूपमिति । सम्यक् वीतौ कञ्चुकादिना वेष्टितौ रुचिरौ स्तनौ यस्याः ॥ ३६ ॥ ❀ ❀ स्वदत्तं वैभवमधिकमाह—विद्याधरीसहस्रेति । ता भगवदीया विद्याधर्यः, 'सिद्धा विद्याधराश्चैव योग एव प्रतिष्ठिताः' इति । सुवाससमिति कामभावे उद्दीपनार्थम् । तथा वर्णनायाः फलमाह—जातभाव इति । जातो भावः कन्दर्पो यस्य । तद्विमानं तामारोहयत् । अमित्रहन्निति श्रोतुः कामाभावार्थम् । अन्यकामलीलाश्रवणेन जायमानः कामः दुष्टो भवतीत्य- मित्रत्वम् ॥ ३७ ॥ ❀ ❀ तस्य कामलीलामाह—तस्मिन्निति चतुर्भिः—रागो हि महत्त्वनाशको भवतीति दृष्टादृष्टविभेदेन तदभावार्थमाह—अलुप्तमहिमेति । स्वयमपि विद्याधरीभिरुपचीर्णवपुः । रञ्जकद्रव्येणैव प्रियया अनुरक्तः, प्रियागतरागेण प्रियात्वाद्रक्त इत्यर्थः । उत्कचकुमुद्गणवान् विकसितकुमुद्गणयुक्तश्चन्द्रः । उद्गताः कचा यासाम्, कौ मुदं(?)याभ्यः; केशवत्यः सुखदायिन्यो याः स्त्रियः तद्गणावृतः । अपीच्यः स्त्रीणां प्रियः । सौन्दर्यं गुणसूचकम् । रसालम्बनत्वं स्त्रीरुच्या । तासामपि रसविकाशकत्वं तच्छास्त्राभिज्ञत्वं बोधयति । स्त्रीभिश्च सेवितवपुः, तत्कार्योपयोगिकोमलत्वापादिका हि ताः । तासु रागाभावार्थं तया रञ्जनमुक्तम् । तस्मिन् प्रसिद्धे विमाने च बभ्राजे । राजकन्या हि वैभवमपेक्षते, अतः प्रथमतः शोभातिशयो वर्णितः । सर्वलोकप्रसिद्धाश्च ते जाता इति दृष्टान्तेन स्पष्टयति—ताराभिवृत इवोडुपतिर्नभस्थ इति । आकाशवद्विमानस्य विशालता च सूचिता । प्रदेशान्तरे यथा तारा अन्या एवावरका भवन्ति, तथाऽत्रापीति । यथा शय्यादिपदार्थास्तत्र तत्र, तथा स्त्रियोऽपीति ज्ञापितम् ॥ ३८ ॥ ❀ ❀ विहारमाह—तेनेति । अष्ट ये लोकपालाः, तेषां विहारस्थानभूताः कुलाचलेन्द्रस्य मेरोः द्रोण्यः तासु रेम इति सम्बन्धः । यथा धर्मे देशादयोऽङ्गभूताः, एवं कामेऽपि । अक्षयो हि स रसस्तत्र तत्राऽभिव्यज्यते, यथाऽऽकरेष्वर्थः । तस्य देशस्य रसोत्पादने अनुभावसान्निध्यमाह—अनङ्गसखमारुतो दाक्षिणात्यो वातः, कामजनकोऽन्यो वा । रमणे वा तस्याऽत्यन्तापेक्षा । अतस्तेन सौभगासु । सिद्धानां स्तोत्राणि च प्रोत्साहकानि, अन्यथा वैराग्यादिभी रस उपहन्येत । द्युधुनी गङ्गा, तस्याः पाताः सीतादयः प्रवाहाः । पतितानां वातैः शिवः स्वनो यासु । अशुद्धे हि भौतिकानि पापानि संक्रान्तानि भवन्ति, तदभावार्थमुक्तम् । धनदवदिति द्रव्यक्षयाभावः । ललना स्त्री तत्समूहयुक्तः । परितः स्त्रीणां दर्शनम् ॥ ३९ ॥ ❀ ❀ न केवलं तानि स्थानानि, दृष्टानि, किन्तु तत्र रमणमपि कृतवानित्याह—वैश्रम्भके सुरसन इति । वैश्रम्भकादीनि दिक्पालकानां भोगोपवनानि षट्स्थानानि गणितानि भगवद्दत्तानीति ज्ञापयितुम् । सा हि रामात्वं प्राप्ता । बन्धादिकरणात् स्वयमपि तया रतः ॥ ४० ॥ ❀ ❀ एवमलौकिकोत्कर्षमुक्त्वा तत्रत्यसजातीयेभ्य उत्कर्षमाह—भ्राजिष्णुनेति । वैमानिकानयमत्यशेत, सर्वप्रकारेण तानतिक्रम्य स्थितः । तेषां विमानानि न स्वप्रकाशभूतानि, तेषां च मर्यादा विमानस्य, न हि ते भूमौ समायान्ति, नापि सिद्धपदादग्रे गच्छन्ति, इदं तु कामगम्, अपरिमितं चैतत् । अतश्चतुर्भिर्गुणैरत्यशेत । क्रिययाऽप्यतिक्रममाह—चरँल्लोकानिति । लोकाल्लोकान्तरं गच्छन्, अनिल इव, तानत्यशेतेत्यर्थः ॥ ४१ ॥ ❀ ❀ एवं भोगमुपपाद्य यत एतावत्त्वं तदाह—किं दुरापादनमिति । प्रतिनियतभोगा यस्य कस्यापि न भवन्ति, तथा सति मर्यादाभङ्गः स्यात् । सर्वं च भवति तेन सह । तत्राऽपि मर्यादा । अतोऽस्य कथमेतज्जातमित्याशङ्क्य तदुपपादयति—यैराश्रितस्तीर्थपदश्चरणः । 'चरणं पवित्रं विततं पुराणम्' इति श्रुत्या चरणस्य व्यापकत्वं, सनातनत्वम्, अपहतपाप्मत्वं च । आश्रितानामपि तथात्वसंपादकत्वं च । अतः सर्वगतो भोगः चरणाश्रये न विरुध्यते । तारतम्यं च पापात्, तदप्यहतपाप्म- त्वान्न भवति । पुराणत्वाच्च न तत्र कालस्य प्रतिबन्धकत्वम् । अतः स्वभावत एव सर्वे भोगाश्चरणाश्रये भवन्ति । किञ्च, कामिता अपि भवन्ति । तीर्थानि कामितदानार्थे क्लृप्तानि[1], तान्यपि चरणे सन्तीत्याह—तीर्थानि पादे यस्येति । सर्वाणि च फलानि विचित्रव्यसने संसारे भोक्तुमशक्यानि, व्यसनानां बाधकत्वात् । तान्यपि चरणो दूरीकरोतीत्याह—व्यसनात्यय इति । व्यसना- नामत्ययो यस्मात्; 'अतिपाप्मानमरातिं तरेम' इति वाक्याच्चरणस्य व्यसननाशकत्वं सिद्धम् । तस्याश्रयणं च न सर्वेषां भवति, किन्तु केषांचिदेवेति । तदर्थं देहान्तःकरणयोर्गुणद्वयमाह—पुंसामिति स्वातन्त्र्यम्, तेषामिति प्रसिद्धिः, तदुभयधर्मवत्त्वेन । केचनैव लोकादिभ्यः स्वतन्त्रा भवन्ति । अन्तःकरणधर्ममाह—उद्दतं दाम चित्ते येषाम् । बन्धकं हि दाम, अपरिमितश्चरणः; न हि बद्धे

---

१. कृतानि क. घ ।

परिच्छिन्ने स्थापयितुं शक्यते। अतोऽन्तःकरणस्य देहस्यापि प्रतिबन्धकत्वाभावादुभयोपभोग्यः। तेषां न कोऽपि दुरापः। दुःखेनापादनं यस्येति परिच्छिन्नस्यैव भवन्ति ॥ ४२ ॥ ❀ ❀ एवं सोपपत्तिकं भोगमुक्त्वोपसंहरति—प्रेक्षयित्वेति। तस्याः कामपूरणे पत्नीत्वमेव साधकम्। योगबलेन नैकत्र प्रदर्शनम्, किन्तु स्वसंस्थया यावान्। यो यत्र यावान् वर्तते, तां तत्रैव नीत्वा प्रदर्शितवान्। बहून्याश्चर्याणि यत्र, अन्यथा न पश्येत्। तथा दर्शने सामर्थ्यम्—महायोगीति। स्वाश्रमः सिद्धक्षेत्रम् ॥ ४३ ॥ ❀ ❀ अन्तरिक्षे अपत्यजनने रुद्रदैवत्यो भवतीति ऋषीणामुत्पत्तिसिद्ध्यर्थं भूमावागत्य प्रजामुत्पादितवानित्याह—विभज्येति। नवधा आत्मानं विभज्य, भिन्नभावेन नवरूपाणि कृत्वा, तस्यास्तथा सहने सामर्थ्यम्, मानवीमिति। बहुधा करणे हेतुः—सुरतोत्सुकामिति। भिन्नभावे वैलक्षण्ये ज्ञानेऽपि तस्याः शङ्काभावायाऽऽह—रामामिति। रामायां हि लज्जा, भयं च नोत्पद्यते, तथाभावादेव तस्या रामात्वम्। अतस्तां नितरां रमयन्, स्वयं च वर्षपूगान्मुहूर्तवद्वेमे। कालस्य गणनायां हि वर्षा भवन्ति, आनन्दानुभवाभावे च गणना। अतः सुरतान्तकालः सुखानुभवहेतुर्मुहूर्तमात्रमिति तथैव सर्वं कालं मेने ॥ ४४ ॥ ❀ ❀ तस्या अपि कालज्ञानाभावमाह—तस्मिन्निति। आश्रयधर्मादेव प्रकाशमानात्सूर्यादिगत्या कालाज्ञानम्। शय्या च निद्रादिजननात् मोहिका। तत्रापि सा रतिकरी, अन्तःस्थितमानन्दं प्रकटयति। अतो भोगकालो यावान् जातः, तं च नाऽबुध्यत। आत्मानं पूर्वावस्थां च। पतिश्च परमसुन्दरः, तत्कालगुणेष्वनुकूलः ॥ ४५ ॥

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

तस्मिन्नित्यत्र ! विमानशब्दार्थमात्रोपयोगिनमाहुः—आश्रयेत्यादि। प्रकाशमानो य आश्रयस्य विमानस्य विगतमानलक्षणो धर्मस्तं प्राप्येत्यर्थः। पञ्चम्यत्र ल्यब्लोपे। चकारसमुच्चितमर्थमाहुः—आत्मानमित्यादि ॥ ४५ ॥

### श्रीगिरिधरकृता बालप्रबोधिनी

हे अमित्रहन् निर्जितेन्द्रियादिशत्रुवर्ग जातभावः तद्दर्शनादुद्बुद्धकामः स मुनिस्तां तद्विमानमारोहयदिति द्वयोरन्वयः। तेन दृष्टां तां वर्णयति—अपूर्ववत् तपोदशातो नूतनवद्विभ्राजन्तीं विवाहसमये यदात्मनो रूपं तदेव पुनर्बिभ्रतीम्, संवीतौ कञ्चुक्यादिना वेष्टितौ रुचिरौ स्तनौ यस्यास्ताम्। स्पष्टमन्यत् ॥ ३६ ॥ ३७ ॥ ❀ ❀ अलुप्तः महिमा प्रभावो यस्य सः प्रियया भार्यया सहानुरक्तः विद्याधरीभिरुपचीर्णं शुश्रूषितं वपुर्यस्य स मुनिस्तस्मिन् विमाने बभ्राज रराजेत्यन्वयः। तत्र दृष्टान्तमाह—उत्कचकुमुद्गणवान् विकसत्कुमुदगणवान् अपीच्योऽतिसुन्दरः ताराभिरावृतो नभस्स्थ उडुपतिः पूर्णचन्द्र इवेति। तत्र चन्द्र इव मुनिः, नभ इव विमानम्, तारा इव स्त्रियः, कुमुदानीव तासां नेत्राणीति ज्ञेयम् ॥ ३८ ॥ ❀ ❀ तेन विमानेन अष्टलोकपालानां विहारो यस्मिन्स कुलाचलेन्द्रः पर्वतश्रेष्ठो मेरुस्तस्य द्रोणीषु दरीषु ललनावरूथी स्त्रीरत्नसमूहवान् मुनिश्चिरं रेमे इत्यन्वयः। दरीणां भोगे श्रेष्ठत्वमाह—अनङ्गस्य कामस्य सखा उद्दीपको मारुतः शीतसुगन्धमन्दानिलस्तेन सौभगं सौन्दर्यं यासां तासु। तथापि द्युधुनी गङ्गा तस्याः पातेन शिवः सर्वपापनिवर्त्तकः स्वनो ध्वनिर्यासु तासु। सिद्धैर्नुतः स्तुतः सन्। तथापि बहुकालं रममाणस्य तस्यैश्वर्यक्षयमाशङ्क्य तदभावं सूचयन् दृष्टान्तमाह—धनदवदिति, कुबेरवदित्यर्थः ॥ ३९ ॥ ❀ ❀ वैश्रम्भकादिषु देवोद्यानेषु मानसे सरसि च रतः प्रीतः सन् स मुनिः रामया स्त्रिया सह रेमे ॥ ४० ॥ ❀ ❀ भ्राजिष्णुना प्रकाशमानेन महीयसा महत्तमेनातिश्रेष्ठेन कामगेन यथेष्टं गच्छता विमानेन अनिलवत् अप्रतिहतगतिर्लोकांश्चरन् वैमानिकान् अत्यशेत अतिक्रम्य स्थितः ॥ ४१ ॥ अहो आश्चर्यं मुनेः प्रभावः इति विस्मयो न कार्य इत्याशयेनाह—किमिति। यैः पुम्भिः तीर्थपदो भगवतः व्यसनात्ययः तापत्रयविनाशकश्चरण आश्रितः तेषामुद्दामचेतसां सत्यसङ्कल्पानां पुंसां किं दुरापादनं सम्पादयितुं किमशक्यं ? न किमपीत्यर्थः। तीर्थपद इत्यनेन तीर्थानां तत्तत्फलप्रदत्वस्य शास्त्रसिद्धत्वात् तेषां सर्वेषामाश्रयभूतस्य चरणस्य सुतरां सर्वफलप्रदत्वमिति सूचितम् ॥ ४२ ॥ ❀ ❀ स्वसंस्थया द्वीपवर्षादिरचनया यावानस्ति तावन्तमत एव बहून्याश्चर्याणि यस्मिंस्तं भुवो गोलं मण्डलं पत्न्यै भार्यायै प्रेक्षयित्वा दर्शयित्वा महायोगी सर्वथासमर्थः कर्दमः स्वाश्रमाय न्यवर्त्तत स्वाश्रमं प्रत्यागतवान् ॥ ४३ ॥ ❀ ❀ आत्मानं नवधा विभज्य आत्मनो नव रूपाणि कृत्वा—तत्र हेतुमाह—सुरते उत्सुकां उत्साहवतीं मानवीं मनुकन्यां रामां स्वभार्यां विशेषेण रमयन् वर्षपूगान् संवत्सरगणान् मुहूर्तवदिति भोगासक्तस्य तावत्कालानुसन्धानं न जातमित्यर्थः ॥ ४४ ॥ ❀ ❀ देवहूतेरपि कालानुसन्धानं न जातमित्याह—तस्मिन्निति। तस्मिन्नुत्कृष्टे विमाने उत्कृष्टां निरतिशयसुखकरीं रतिकरीं रतिवर्द्धिनीं शय्यां श्रिता अधिष्ठिता अपीच्येन अतिसुन्दरेण पत्या च सङ्गता संयुक्ता सती तमनेकवर्षसमूहात्मकं कालं नावुध्यत एतावान् कालो गत इति न ज्ञातवती ॥ ४५ ॥

### हिन्दी अनुवाद

शत्रुविजयी विदुर ! जब कर्दमजीने देखा कि देवहूतिका शरीर स्नान करनेसे अत्यन्त निर्मल हो गया है, और विवाहकालसे पूर्व उसका जैसा रूप था, उसी रूपको पाकर वह अपूर्व शोभासे सम्पन्न हो गयी है। उसका सुन्दर वक्षःस्थल

चोलीसे ढका हुआ है, हजारों विद्याधरियाँ उनकी सेवामें लगी हुई हैं तथा उसके शरीरपर बढ़िया-बढ़िया वस्त्र शोभा पा रहे हैं। तब उन्होंने बड़े प्रेमसे उसे विमानपर चढ़ाया ॥ ३६-३७ ॥ ❀ ❀ उस समय अपनी प्रियाके प्रति अनुरक्त होनेपर भी कर्दमजीकी महिमा ( मन और इन्द्रियोंपर प्रभुता ) कम नहीं हुई। विद्याधरियाँ उनके शरीरकी सेवा कर रही थीं। खिले हुए कुमुदके फूलोंसे शृङ्गार करके अत्यन्त सुन्दर बने हुए वे विमानपर इस प्रकार शोभा पा रहे थे, मानो आकाशमें तारागणसे घिरे हुए चन्द्रदेव विराजमान हों ॥ ३८ ॥ ❀ ❀ उस विमानपर निवासकर उन्होंने दीर्घकालतक कुबेरजीके समान मेरुपर्वतकी घाटियोंमें विहार किया। ये घाटियाँ आठों लोकपालोंकी विहार भूमि हैं; इनमें कामदेवको बढ़ानेवाली शीतल, मन्द, सुगन्ध वायु चलकर इनकी कमनीय शोभाका विस्तार करती है तथा श्रीगङ्गाजीके स्वर्गलोकसे गिरनेकी मङ्गलमय ध्वनि निरन्तर गूँजती रहती है। उस समय भी दिव्य विद्याधरियोंका समुदाय उनकी सेवामें उपस्थित था और सिद्धगण वन्दना किया करते थे ॥ ३९ ॥ ❀ ❀ इसी प्रकार प्राणप्रिया देवहूतिके साथ उन्होंने वैश्रम्भक सुरसन, नन्दन, पुष्पभद्र और चैत्ररथ आदि अनेकों देवोद्यानों तथा मानस सरोवरमें अनुरागपूर्वक विहार किया ॥ ४० ॥ ❀ ❀ उस कान्तिमान् और इच्छानुसार चलनेवाले श्रेष्ठ विमानपर बैठकर वायुके समान सभी लोकोंमें विचरते हुए कर्दमजी विमानविहारी देवताओंसे भी आगे बढ़ गये ॥ ४१ ॥ ❀ ❀ विदुरजी! जिन्होंने भगवान्के भवभयहारी पवित्र पादपद्मोंका आश्रय लिया है, उन धीर पुरुषोंके लिये कौन-सी वस्तु या शक्ति दुर्लभ है ॥ ४१ ॥ ❀ ❀ इस प्रकार महायोगी कर्दमजी यह सारा भूमण्डल जो द्वीप-वर्ष आदिकी विचित्र रचनाके कारण बड़ा आश्चर्यमय प्रतीत होता है, अपनी प्रियाको दिखाकर अपने आश्रमको लौट आये ॥ ४३ ॥ ❀ ❀ फिर उन्होंने अपनेको नौ रूपोंमें विभक्त कर रतिसुखके लिये अत्यन्त उत्सुक मनुकुमारी देवहूतिको आनन्दित करते हुए उसके साथ बहुत वर्षोंतक विहार किया, किन्तु उनका इतना लम्बा समय एक मुहूर्त्तके समान बीत गया ॥ ४४ ॥ ❀ ❀ उस विमानमें रतिसुखको बढ़ानेवाली बड़ी सुन्दर शय्याका आश्रय ले अपने परम रूपवान् प्रियतमके साथ रहती हुई देवहूतिको इतना काल कुछ भी न जान पड़ा ॥ ४५ ॥

एवं योगानुभावेन दम्पत्यो रममाणयोः। शतं व्यतीयुः शरदः[1] कामलालसयोर्मनाक् ॥ ४६ ॥
तस्यामाधत्त रेतस्तां[2] भावयन्नात्मनाऽऽत्मवित्। नोधा[3] विधाय रूपं स्वं सर्वसङ्कल्पविद्विभुः ॥ ४७ ॥
अतः सा सुषुवे सद्यो देवहूतिः स्त्रियः प्रजाः। सर्वास्ताश्चारुसर्वाङ्ग्यो लोहितोत्पलगन्धयः ॥ ४८ ॥
पतिं सा प्रव्रजिष्यन्तं तदाऽऽलक्ष्योशती सती। स्मयमाना विक्लवेन हृदयेन विदूयता ॥ ४९ ॥
लिखन्त्यधोमुखी भूमिं पदा नखमणिश्रिया। उवाच ललितां वाचं निरुध्याश्रुकलां शनैः ॥ ५० ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

शरदः संवत्सराः मनागीषदिव व्यतीयुः ॥ ४६ ॥ ❀ ❀ आत्मना स्वदेहार्धरूपेणातिप्रीत्या भावयन् तथा सति सदपत्यं भवेदिति नोधा नवधा सर्वसंकल्पविदिति तस्या बह्वपत्यसंकल्पं जानन्नित्यर्थः। विभुस्तथा कर्तुं समर्थश्च आत्मविदिति च तस्यामनासक्तत्वात्स्त्रियो जाता इति भावः। "पुमान्पुंसोऽधिके शुक्रे स्त्री भवत्यधिके स्त्रियाः" इति स्मृतेः ॥ ४७ ॥ ❀ ❀ अतोऽनंतरमेव सद्य एकस्मिन्नेवाहनि चारूणि सर्वाण्यंगानि यासाम् ॥ ४८ ॥ ❀ ❀ प्रव्रजिष्यंतमालक्ष्य वितर्क्य स्मयमाना बहिरंतस्तु विप्लवेन व्याकुलेन विदूयता संतप्यमानेन हृदा उवाचेत्युत्तरेणान्वयः ॥ ४९ ॥ ❀ ❀ नखा एव मणयस्तैः श्रीः शोभा यस्य तेन पदा भुवं लिखंतीति दुरंतचिंतालक्षणम् ॥ ५० ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः।

इवोत्रार्थलभ्य इत्याह—ईषदिवेति ॥ ४६ ॥ ❀ ❀ तथा सति शुक्रशोणितसंगमे उभयोः सौमनस्ये सत्संतति-वैपरीत्ये तु कुसंततिरित्युक्तं गारुडे—"दंपत्योः शुक्रसंयोगे सौमनस्ये सुसंततिः। वैमनस्ये तयोस्तत्र निश्चितं स्यात्कुसंततिः" इति। इति भाव इति। अनासक्तत्वात्कामाल्पत्वं ततश्च वीर्याल्पत्वमतो देवहूत्याश्चासक्तिमत्त्वाच्छोणिताधिक्यात्स्त्रीप्रजाधिक्यमित्या-शयः। प्रमाणं चात्राह—पुमान् इति। नवशब्दस्य नवादेशश्छांदसः। यद्वा सर्वेषां ब्रह्मणो मरीच्यादिप्रजापतीनां च सृष्टिकामनया यः संकल्पस्तद्वित्। तथात्मानं भगवन्तं निजोपदेशकं वेत्तीति तथा। 'या तु आत्मभृतं वीर्यं नवधा प्रसविष्यति। वीर्ये त्वदीये ऋषय आधास्यंत्यंजसात्मनः। सहाहं स्वांशकलया त्वद्वीर्येण महामुने। तव क्षेत्रे देवहूत्यां प्रणेष्ये तत्त्वसंहिताम् ॥" इति हि तदु-पदेशो यद्यपीत्थं तथापि तदसमाप्तौ प्रव्रजिष्यंतमिति ततोप्यग्रिमतत्प्रार्थनान्तरमाशंक्येति गम्यते। श्रीदेवहूत्यास्तु "यावत्तेजो

---

१. प्रा० पा०—शरदां। २. प्रा० पा०—रेतः स्वं ३. प्रा० पा०—नवधा।

बिभृयादात्मनो मे" इत्यत्रार्थविशेषो नावगत इति संदर्भः ॥ ४७ ॥ ❀ ❀ अतो वीर्यसेकोत्तरमेव ता देवहूत्यात्मजाः आसन्निति शेषः ॥ ४८ ॥ ❀ ❀ तदा कन्याप्रसूत्युत्तरप्रव्रज्योद्योगावसरे वितर्क्यविपर्योपरत्यादिना ज्ञात्वा उशती पुत्रमिच्छंती ॥ ४९ ॥ ❀ ❀ पदनखेन भूविलेखनमपारचिन्ताचिह्नम् । वात्स्यायनेन तु कामार्त्ताचिह्नमुक्तं, तदित्यतः पुत्रोत्पत्तये सुरताभिलाषिणी सेत्यर्थः । ललितां प्रार्थनागर्भितत्वेन मनोज्ञाम् ॥ ५० ॥

## श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

तथासति अतिप्रीत्या देहार्द्धत्वेन भावने सति ॥ ४७ ॥ ❀ ❀ अतस्तद्गुणप्रधानत्वेन नवधात्मनो ध्यानेन वीर्य्याधानानन्तरमेवात्मवित्त्वेन तस्यामनासक्तत्वात् स्त्रिय एव प्रजाः सा देवहूतिरुत्पादितवती । एकस्मिन्नेवाह्नीति योगप्रभावो दर्शितः ॥ ४८ ॥ ❀ ❀ पतिमिति युग्मकम् । तदा नवपुत्र्युत्पत्त्यनन्तरकाले ॥ ४९ ॥ ५० ॥

## श्रीमद्वीरराघवव्याख्या

कियान्कालो व्यतीत इत्यत्राह । एवमिति । योगानुभावेन योगप्रभावेण कामासक्तयोः दम्पत्योः रममाणयोः सतोः शतं शरदः सम्वत्सराः मनागीषत्कालमिव व्यतीयुः अतिक्रान्ताः ॥ ४६ ॥ ❀ ❀ आत्मवित् जीवपरमात्मयाथात्म्यवित् कर्दमः तां प्रियामात्मना स्वदेहार्धरूपेणातिप्रीत्या आत्मना मनसा भावयन्नभिप्रयन्सर्वसङ्कल्पवित्तस्याः बह्वपत्यसङ्कल्पं जानन् विभुस्तथाकर्तुं समर्थः स्वं स्वीयं रूपं वीर्यं नोधा नवधा विधाय विभज्य तद्रेतः तस्यां पत्न्यामाधत्त निहितवान् ॥ ४७ ॥ ❀ ❀ ततः अनन्तरं सा देवहूतिः सद्य आशु स्त्रियः स्त्रीप्रजाः अपत्यानि सुषुवे प्रसूतवती कथम्भूताः प्रजाः ताः सर्वा नव स्त्रियः चारूणि सर्वाण्यङ्गान्यवयवा यासां लोहितोत्पलस्य रक्तोत्पलस्येव गन्धो यासां ताः ॥ ४८ ॥ ❀ ❀ तदापत्योत्पत्त्यनन्तरं प्रव्रजिष्यन्तं सन्यस्यन्तं पतिमालक्ष्य वितर्क्य उशती कमनीया सा सती देवहूतिः बहिः स्मयमाना ईषद्धसमाना अन्तस्तु विक्लवेन व्याकुलितेन चेतसा विदूयता परितप्यमानेन हृदयेन मनसा अधोमुखी नखा एव मणयः तेषां श्रीः शोभा यस्मिंस्तेन पदा चरणेन भुवं लिखन्ती । अनेन दुरन्तचिन्ता सूच्यते । अश्रुकणान् शनैः निरुध्य ललितां मृद्वीं वाचमुवाच ॥ ४९ ॥ ५० ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली ।

इदानीं कालं संख्याति । एवमिति । शरदो वत्सराः व्यतीयुरतिक्रान्ताः कामलालसयोश्चन्द्रोदये वर्धमानसमुद्रतरङ्गवद्विषयभोगाभिलाषयोः ॥ ४६ ॥ ❀ ❀ सुरतफलितमाह । तस्यामिति । आत्मवित्त्वं विवृणोति । सत्येति । सत्यसङ्कल्पो हरिः तं सत्यसङ्कल्पत्वादिगुणविशिष्टत्वेन वेत्तीति येन यो गुणो हरावुपसंह्रियते स तद्गुणविशिष्टो भवतीति न्यायात् स्वयमपि सत्यसङ्कल्पः स्वं स्वरूपं नवधा विधाय तामप्यात्मना मनसा नवधा भावयन् तस्यां गर्भलक्षणं रेत आधत्तेत्यन्वयः । योगशक्त्या नवसु स्वस्य व्याप्तिसामर्थ्यं सूचयति । विभुरिति । अर्धमात्मन इति पाठे आत्मनोऽर्धं पत्नीं भावयन्नित्यर्थः "अर्धो वा एष आत्मनो यत्पत्नी" इति श्रुतेः ॥ ४७ ॥ ❀ ❀ शुक्लेन हरिणा ऋषयः अध्यास्यंस्तेज आत्मन इत्यादावभिहितत्वादाहितः स गर्भः स्त्रीलिङ्ग इति निश्चितेऽपि कतिषु कालावयवेषु गतेषु सा किमसूतेति तत्राह । तत इति । सद्य इत्यनेन निरस्यति कतिष्विति शङ्काम् ॥ ४८ ॥ ❀ ❀ महतां यदुत्तरं कार्यं तत्प्रार्थनापूर्वकं कर्तव्यमित्यतो देवहूतिः पुत्रीणां दानं पुत्रं च पतिं प्रार्थयते । पतिमिति । प्रव्रजिष्यन्तं संन्यासं कर्तुमिच्छन्तमालक्ष्य विषयरागादिलक्षणेन ज्ञात्वा उशती पुत्रं कामयमानाऽत एव स्मयमाना विषयाभिलाषिणीवात्मानं दर्शयन्ती उत्पत्स्यमानभर्तृविरहजेन विक्लवेन ॥ ४९ ॥ ❀ ❀ विषयाभिलाषं व्यनक्ति । लिखन्तीति । नखा एव मणयः नखमणयस्तेषां श्रीर्यस्य स तथा तेन । अनेन कामार्ताः पादाङ्गुष्ठेन भूमिमुल्लिखन्तीति वात्स्यायनप्रसिद्धमिति सूचयति ॥५०॥

## श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

तस्यामिति । सर्व्वेषां ब्रह्मणो मरीच्यादिप्रजापतीनाञ्च सृष्टिकामनया यः सङ्कल्पस्तद्वित् तथा आत्मानं भगवन्तञ्च निजोपदेशकं वेत्तीति तथा या त आत्मभृतं वीर्य्यं नवधा प्रसविष्यति "वीर्य्ये त्वदीये ऋषय आधास्यन्त्यञ्जसात्मनः । सहाहं स्वांशकलया त्वद्वीर्य्येण महामुने ! तव क्षेत्रे देवहूत्यां प्रणेष्ये तत्त्वसंहिताम्" इति हि तदुपदेशः । यद्यपीत्थं तथापि तदसमाप्तौ प्रव्रजिष्यन्तमिति ततोऽप्यग्रिमतत्प्रार्थनान्तरमाशङ्क्येति गम्यते । श्रीदेवहूत्या तु यावत्तेजो बिभृयादात्मनो मे इत्यत्रार्थविशेषो नावगत इति ॥४७-४८॥ ❀ ❀ पतिमिति युग्मकम् ॥ ४९ ॥ ५० ॥

## श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

मनाक् ईषदिव व्यतीयुः ॥ ४६ ॥ ❀ ❀ तां स्त्रियं भावयन्निति आधानकाले स्त्रीध्यानेन स्त्र्यपत्यं स्यादिति तस्याः स्त्र्यपत्यकामनां जानन्नित्यर्थः । आत्मना बुद्ध्या आत्मविद्विरक्त इति तस्य कामाल्पत्वात् शुक्राल्पत्वमतोऽपि स्त्र्यपत्यं भवेद्यदुक्तम् । "पुमान् पुंसोऽधिके शुक्रे स्त्रीभवत्यधिके स्त्रिया" इति नोधा नवधा सर्व्वसङ्कल्पविदिति तस्या बह्वपत्यसङ्कल्पं जानन्नित्यर्थः । विभुः

सर्वत्र समर्थः ॥ ४७ ॥ ❀ ❀ सद्य एकस्मिन्नेवाहनि ॥ ४८ ॥ ❀ ❀ स्मयमानेति पतिदर्शनस्वाभाव्यात् वस्तुतस्तु विक्लवेन विदूयमानेन। चिन्ताभिरित्यर्थः ॥ ४९—५० ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

मनाक् अतितुच्छकामललसयोः योगानुभावेन अतियत्नसाध्ययोगप्रभावे रममाणयोः शतं शरदः शतसंख्याकाः सम्वत्सराः व्यतीयुः। धिक् कामलालसाः इति भावः ॥ ४६ ॥ ❀ ❀ आत्मवित्परमात्मतत्त्ववित् आत्मना तेनैव परमात्मना विभुर्विपुलज्ञानवान् अत एव ब्रह्मा मरीच्यादीन् सदारान् कर्तुमिच्छति तेऽपि सृष्ट्यर्थं दारान् कर्तुमिच्छन्तीति सर्वेषां सङ्कल्पं वेत्तीति तथा अतः स्वरूपं नोधा नवधा विधाय नवकन्यारूपं करिष्यामीति सङ्कल्प्येत्यर्थः "आत्मा वै पुत्रनामासि" इति श्रुतेः तां भावयन् कन्योत्पत्त्यानुकूल्ये स्थापयन् तस्यां रेतः आधत्तेत्यन्वयः ॥ ४७ ॥ ❀ ❀ अतः सर्वसङ्कल्पविन्मुनिः सङ्कल्पाद्धेतोः ॥ ४८ ॥ ❀ ❀ उशती कान्तिमती अत एव स्मयमाना स्वभावतः स्मितमुखी ॥ ४९ ॥ ५० ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

उभयोः कालाज्ञानेऽपि स्वयं भोगकालमाह—एवमिति। योगानुभावेन दम्पत्यो रममाणयोः सतोः शतं शरदो व्यतीयुः। शतं वर्षा जाताः। भोगे शरत्काल उत्तम इति शरत्प्रयोगः। तथापि कामे न तृप्तिः, अनलत्वात्तस्य अतस्तावानपि कालो मनागेव जातः। अतिसूक्ष्मकालो मनाक् ॥ ४६ ॥ ❀ ❀ एवं रमणान्ते तस्यां बीजाधानं कृतवानित्याह—तस्यामिति। तामेव भावयन्निति स्त्र्यपत्यार्थसिद्धयर्थमुक्तम्। न हि भावनामात्रेण तथा भवतीत्याशङ्क्याऽऽह—आत्मविदिति। स ह्यात्मानं जानाति, अतः सर्वज्ञत्वात्तथाकरणं च। एतच्च स्वत एव, नत्वन्योपदेशात्। तदाह—आत्मनेति। स्वरूपं च नवधा विधाय। अन्यथा एकैव कन्या, एकरूपा वास्युः। अतः नोधा विधाय। नवधेत्यत्र परोक्षकथनार्थं कृतसंप्रसारणस्य प्रयोगः। स्वमेव रूपं कृतमिति न दूषणम्। सर्वेषां मरीच्यादीनां संकल्पो भार्याप्राप्त्यर्थः, तं जानातीति। तथा करणे हेतुः। विभुरिति सामर्थ्यम् ॥ ४७ ॥ एवं पितृत उत्पत्तिमुक्त्वा मातृत आह—अत इति। सद्य एव सुपुवे, न तु दशमासानन्तरम्। देहनिष्पत्तिस्तु आधानकर्तुर्विभुत्वात्। तत्त्वमतः शब्देनोक्तम्। प्रकर्षेण जाता अपि स्त्रिय एव सुपुवे। यतः सा देवहूतिर्देवप्रकृतिकैव। ता वर्णयति—सर्वास्ता इति। चारुसर्वाङ्ग्य इति अङ्गवैकल्याभावः सौन्दर्य्यातिशयश्चोक्तः। जातिस्त्रियश्च जाता इत्याह—लोहितोत्पलगन्धय इति। रागार्थं भोगसमय एव गन्धप्राकट्यार्थं च लोहितोत्पलपदम् ॥ ४८ ॥ ❀ ❀ एवं कृत्वा कर्दमश्चलितुमारम्भं कृतवान्। तदा तस्याः तज्ज्ञानं जातमित्याह—पतिमिति। लिखन्तीति। प्रव्रजिष्यन्तं संन्यासप्रकारेण गमने कृतनिश्चयम्। तद्गमनमालक्ष्य इङ्गितैर्ज्ञात्वा, कमनीया सती, प्रतिबन्धमकृत्वा विज्ञापनमेव कृतवतीत्याह। उवाच ललितां वाचमिति द्वितीयश्लोके संबन्धः। विक्लवश्चित्तखेदः, स्वस्यैव तथा दोषो जात इति। स्मयमाना काष्ठहास्यं कुर्वाणा। हृदयेन च विशेषेण दूयता दुःखं प्रापयता उपलक्षिता। स्वचिन्तां ख्यापयितुमधोमुखी भूत्वा भूमिं लिखन्ती। देहकान्तिसहितैव तथा वदतीति ज्ञापयितुम्—नखमणिश्रिया पदेति। लेखने करणमुक्तम्। नखा एव मणयः, तेषां च तथैव श्रियो यत्र। ललितां मनोहराम्। रोदनेन हि कार्यं सेत्स्यतीत्यश्रुकलां निरुद्धय। शनैरिति पूर्वभावापगमः सूचितः ॥ ४९ ॥ ५० ॥

### सुबोधिनीप्रकाशो न

### श्रीगिरिधरकृता बालप्रबोधिनी।

कियान् कालो व्यतीत इत्यत आह—एवमिति। एवं यथेष्टं योगानुभावेन रममाणयोर्दम्पत्योः शतं शरदः संवत्सराः मनागीपत्कालमिव व्यतीयुः अतिक्रान्ता इत्यर्थः। तत्र हेतुमाह—कामलालसयोरिति, भोगासक्तत्वेन अनुसन्धानाभावादित्यर्थः ॥ ४६ ॥ ❀ ❀ स कर्दमः स्वं रूपं नोधा नवधा विधाय तस्यां रेत आधत्त निहितवान्। तेन नव कन्या जाता इति ज्ञेयम्। तर्हि कन्या एव कथं जाता इत्याकांक्षायां तत्र हेतुमाह—तां प्रियामात्मना देहार्धेन भावयन् चिन्तयन्निति। किमर्थं नव कन्या उत्पादितवांस्तत्राह—सर्वसङ्कल्पविदिति, मरीच्यादिविवाहार्थं ब्रह्मणस्तथा सङ्कल्पं जानन्नित्यर्थः। आत्मानं नवधा कथं कृतवानित्यत आह—विभुरिति, सर्वत्र समर्थ इत्यर्थः। तत्र हेतुमाह—आत्मविदिति, परमात्मोपासक इत्यर्थः ॥ ४७ ॥ ❀ ❀ अतः पूर्वोक्तादेव हेतोः सा देवहूतिः चारूणि सर्वाण्यङ्गानि अङ्गावयवा यासां तथा लोहितोत्पलस्य गन्ध इव गन्धो यासां तथाभूतास्ताः सर्वाः स्त्रियः स्त्रीरेव प्रजाः अपत्यानि सद्य आशु सुपुवे प्रसूतवती ॥ ४८ ॥ ❀ ❀ समयस्य पूरितत्वात्तदा अपत्योत्पत्त्यनन्तरमेव प्रव्रजिष्यन्तं सर्वं त्यक्त्वा गन्तुमिच्छन्तं पतिमालक्ष्य तच्चेष्टया ज्ञात्वा बहिः स्मयमाना ईषद्धसन्ती अन्तस्तु विक्लवेन व्याकुलेन विदूयता कम्पमानेन हृदयेन उपलक्षितेति शेषः। तत्र हेतुमाह—सतीति, पतिव्रतेत्यर्थः। तत्रापि हेतुमाह—उशतीति, शुद्धस्वभावेत्यर्थः। सा देवहूतिः अधोमुखी नखा एव मणयस्तेषां श्रीः शोभा यस्मिंस्तेन यदा भूमिं लिखन्ती-अनेन दुरन्तचिन्ता सूच्यते-अश्रुकलां शनैर्निरुद्धय ललितां मृद्वीं वाचमुवाचेति द्वयोरन्वयः ॥ ४९ ॥ ५० ॥

### हिन्दी अनुवाद

इस प्रकार उस कामासक्त दम्पतीको अपने योगबलसे सैकड़ों वर्षोंतक विहार करते हुए भी वह काल बहुत थोड़े समयके समान निकल गया ॥ ४६ ॥ ❀ ❀ आत्मज्ञानी कर्दमजी सब प्रकारके सङ्कल्पोंको जानते थे; अतः देवहूतिको सन्तान प्राप्तिके लिये उत्सुक देख तथा भगवान्‌के आदेशको स्मरणकर उन्होंने अपने स्वरूपके नौ विभाग किये तथा कन्याओंकी उत्पत्तिके लिये एकाग्रचित्तसे अर्धाङ्गरूपमें अपनी पत्नीकी भावना करते हुए उसके गर्भमें वीर्य स्थापित किया ॥ ४७ ॥ ❀ ❀ इससे देवहूतिके एक ही साथ नौ कन्याएँ पैदा हुईं । वे सभी सर्वाङ्गसुन्दरी थीं और उनके शरीरसे लाल कमलकी-सी सुगन्ध निकलती थी ॥ ४८ ॥ ❀ ❀ इसी समय शुद्ध स्वभाववाली सती देवहूतिने देखा कि पूर्व प्रतिज्ञाके अनुसार उसके पतिदेव संन्यासाश्रम ग्रहण करके वनको जाना चाहते हैं, तो उसने अपने आँसुओंको रोककर ऊपरसे मुसकराते हुए व्याकुल एवं संतप्त हृदयसे धीरे-धीरे अति मधुर वाणीमें कहा । उस समय वह सिर नीचा किये हुए अपने नखमणिमण्डित चरण कमलसे पृथ्वीको कुरेद रही थी ॥ ४९-५० ॥

### देवहूतिरुवाच[१]

सर्वं तद्भगवान्मह्यमुपोवाह प्रतिश्रुतम् । अथापि मे प्रपन्नाया अभयं दातुमर्हसि ॥ ५१ ॥
ब्रह्मन्दुहितृभिस्तुभ्यं विमृग्याः पतयः समाः । कश्चित्स्यान्मे विशोकाय त्वयि प्रव्रजिते वनम् ॥ ५२ ॥
एतावतालं कालेन व्यतिक्रान्तेन मे प्रभो । इन्द्रियार्थप्रसङ्गेन परित्यक्तपरात्मनः ॥ ५३ ॥
इन्द्रियार्थेषु सज्जन्त्या प्रसङ्गस्त्वयि मे कृतः । अजानन्त्या परं भावं तथाप्यस्त्वभयाय मे ॥ ५४ ॥
सङ्गो यः संसृतेर्हेतुरसत्सु विहितोऽधिया । स एव साधुषु कृतो निःसङ्गत्वाय कल्पते ॥ ५५ ॥
नेह यत्कर्म धर्माय न विरागाय कल्पते । न तीर्थपदसेवायै जीवन्नपि मृतो हि सः ॥ ५६ ॥
साहं भगवतो नूनं वञ्चिता मायया दृढम् । यत्त्वां विमुक्तिदं प्राप्य न मुमुक्षेय बन्धनात् ॥ ५७ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां तृतीयस्कन्धे का[२]पिलेयोपाख्याने त्रयोविंशोऽध्यायः ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

उपोवाह संपादितवान्! अभयमिति भाविनो दैन्यात्संसाराच्च यद्भयं तन्निवर्तयेत्यर्थः ॥ ५१ ॥ ❀ ❀ तत्र दैन्यं निवेदयति । तुभ्यं तव दुहितृभिः स्वयमेवात्मनः समा योग्याः पतयो विमृग्या इति दैन्यं प्राप्तम् । संसारभयमुररीकृत्याह । कश्चिदिति । विशोकाय ज्ञानोपदेशाय स्त्रीभिऋर्णानपाकरणात्कंचित्कालं त्वदवस्थानेन ब्रह्मवित्पुत्रः कश्चित्किं स्यादित्यर्थः ॥ ५२ ॥ ❀ ❀ विषयान् भुंक्ष्व किं ब्रह्मविद्ययेति चेत्तत्राह । एतावताऽलं पूर्यताम् । परित्यक्तः पर आत्मा यया तस्या मम ॥ ५३ ॥ ❀ ❀ स्वकृतमनुशोचंत्याह । इंद्रियार्थेष्विति चतुर्भिः । मे मया परं भावं त्वं ब्रह्मविदिति ॥ ५४ ॥ ❀ ❀ प्रसंगः कथमभयायास्तु तत्राह । संग इति अधियाऽज्ञानेन ॥ ५५ ॥ ❀ ❀ स्वभावतः प्रवृत्तं यस्य कर्म धर्मार्थं न कल्पते धर्माभिमुखं न भवेत् । तत्रापि निष्कामधर्मद्वारा विरागाय न कल्पते । तद्द्वारा च तीर्थपदस्य हरेः सेवार्थं न पर्यवस्येदित्यर्थः ॥ ५६ ॥ ❀ ❀ न मुमुक्षेय मोक्तुमिच्छां न कृतवत्यस्मि ॥ ५७ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कंधे टीकायां कपिलोपाख्याने त्रयोविंशतितमोऽध्यायः ॥ २३ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

यत्प्रतिश्रुतं यावत्तेज इत्याद्युक्तं प्रतिज्ञातं तत्सर्वमिति । इत्यर्थ इति । 'अप्रजदुस्तरम्' इत्यग्रे वक्ष्यमाणत्वात् "अपुत्रस्य गतिर्नास्ति" इत्यन्योक्तेश्च । संसारभयनिवर्त्तकं पुत्रं तद्द्वारा ज्ञानं देहीति भावः ॥ ५१ ॥ ❀ ❀ तत्र द्वयोर्मध्ये स्त्रीणां कन्यावरान्वेषणार्थं पतिं विना पुरुषांतराग्रे दैन्यमेव कर्त्तव्यं भवतीत्यतस्तन्निवृत्तये स्वयमेवेति । किञ्च स्त्रीभिः कन्याभिः । पैतृकर्णानिवृत्तेः । "पुत्री प्रव्रजेत्" इति स्मरणाच्च । इत्यर्थ इति । मत्कृपया कतिचिद्दिनान्यत्रैव तिष्ठ पुत्रोत्पत्तिनिमित्तमिति भावः । शोकोऽज्ञानलक्षणः संसारस्तस्य तरणं "ज्ञानेनैव तरति शोकमात्मवित्" इति श्रुतेः ॥ ५२ ॥ ❀ ❀ एतावता कालेन यः इंद्रियार्थप्रसङ्गस्तेनालं यतः पर आत्मा परमेश्वरः । एतेनैतावान्कालो व्यर्थो गत इति भावः ॥ ५३ ॥ ❀ ❀ महाभागवतस्य

---

१. प्राचीने पुस्तके 'देवहूतिरुवाच' इती मूले नास्ति, टिप्पण्यामस्ति ।२. प्रा. पा. कापिलोपा ।

तव क्षणिकेनापि संगेन लोका निस्तरंति मम त्वेतावद्धार्पिकेणापि यन्निस्तारो नाभूत्तत्र हेतुद्वयमित्येवं स्वकृतं शोचंत्याह—इंद्रियार्थेष्विति । परं भावं तवैवं वैराग्यं महाभागवतत्वं यत्क्षणमात्रेणैव सर्वं ममतास्पदं त्यक्तुं प्रवृत्तोसीति भावः । त्वत्परभावाज्ञानमिंद्रियार्थप्रसंगश्चेति हेतुद्वयं मदनिस्तारे यद्यप्यस्ति तथापि मय्यपराधिन्यां कृपां कुर्विति भावः ॥ ५४ ॥ ❀ ❀ अत्राक्षिपति—प्रसंग इति । किं च 'वस्तुशक्तिर्बुद्धिन्नापेक्षते' इति न्यायेन भवद्विधसाधुसंगो विफलो भवितुं सर्वथैव नार्हतीत्याह—संग इति । स एव योऽसाधुषु कृतोऽनर्थहेतुः । अज्ञानेन सत्संगान्मद्भव्यं भविष्यत्यत एषां संगो विधेय इति ज्ञानं विनापि घुणाक्षरन्यायेनाकस्माज्जातोपि सत्संगो मोक्षपर्यवसायी भवतीत्याशयः ॥ ५५ ॥ ❀ ❀ तत्रापि धर्माभिमुखत्वेपि । तद्द्वारा च वैराग्यद्वारा च । इत्यर्थ इति । यस्य स्वाभाविको देहेंद्रियादिव्यापारः परंपरया भगवत्सेवायां न पर्यवस्येत्स जीवन्मृतो व्यर्थायुरिति भावः । "आयुर्हरति वै पुंसामुद्यन्नस्तं च यन्नसौ । तस्यर्ते यत्क्षणो नीत उत्तमश्लोकवार्त्तया" इत्युक्तेः "क्षिणोति देवो निमिषस्तु येषामायुर्वृथा" इत्याद्युक्तेश्च । यद्वा । तीर्थपदाः साधवः "तीर्थीकुर्वंति तीर्थानि" इत्युक्तेः । अत एवोक्तं "जीवच्छवो भागवतांघ्रिरेणुं न जातु मर्त्योभिलभेत यस्तु" इति ॥ ५६ ॥ ❀ ❀ अत्रोदाहरणमहमेवेत्याह—सेति । या यथाकथंचित्कृतभवत्संगापि साहमिति । मायया वंधकशक्त्या । यद्यतः वंधनात्संसारवंधात् ॥ ५७ ॥

इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे तृतीयस्कन्धे त्रयोविंशोऽध्यायः ॥ २३ ॥

## श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

प्रतिश्रुतं प्रतिज्ञातं दिव्यदृष्टिदानादि भाविनो भविष्यात् स्वयम्वरान्वेषणरूपाद्दैन्यात् ॥ ५१ ॥ ❀ ❀ तत्र दैन्यसंसारयोर्मध्ये ॥ ५२ ॥ ❀ ❀ परित्यक्तो विस्मृतः ॥ ५३ ॥ ❀ ❀ भावं ब्रह्मवित्त्वमभयाय संसारभयनिवृत्तये ॥ ५४ ॥ ❀ ❀ स एवेत्येवकारेण "आमयो येन भूतानाम्" इति न्यायो दर्शितः ॥ ५५ ॥ ❀ ❀ तत्रापि धर्म्माभिमुखत्वेऽपि तद्द्वारा विरागद्वारा अन्यवेशपरित्यागेन भक्तिवेशोपयोगित्वं द्वारत्वम् । तथाच शुष्कवैराग्यस्य हेयत्वं व्यञ्जितम् । जीवन्मृतत्वोक्तेः तत्तद्वार्ताया आप्तत्वादित्यर्थोक्तिः ॥ ५६ ॥ ❀ ❀ सा यथा कथञ्चित्कृतभवत्सङ्गापि वञ्चिता त्वन्महिमज्ञानांशे वञ्चनं प्राप्ता ॥ ५७ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीराधारमणदासगोस्वामिविरचितायां दीपिकाटिप्पण्यां त्रयोविंशोऽध्यायः ॥२३॥

## श्रीमद्वीरराघवव्याख्या

हे भगवन् ! मह्यं यत्प्रतिश्रुतं तत्सर्वमुपोवाह उपावहत् सम्पादितवान् तथापि प्रपन्नाया मे अभयं दातुमर्हसि अभयप्रदानं करोषीति चेत्कथयामीति भावः ॥ ५१ ॥ ❀ ❀ ओंतत् किमित्यत आह । हे ब्रह्मन् ! दुहितृभिः समाः वयःशीलगुणादिभिः तुल्याः पतयः तासां भर्तारः तुभ्यं त्वया विभक्तिव्यत्यय आर्षः । विमृग्या अन्वेषणीयाः । त्वयि वनं प्रति प्रव्रजिते सति संन्यस्य गते सति मम विशोकाय विगतः शोको यस्मात् सः विशोकः ब्रह्मज्ञानं "तरति शोकमात्मवित्" इति श्रुतेः तेन तदुपदेशो लक्ष्यते तस्मै कश्चित्पुत्रः स्यात्किमित्यर्थः कच्चिदिति पाठान्तरं तदा किं स्यात्पुत्र इति शेषः ॥ ५२ ॥ ❀ ❀ एवं स्वाभिप्रेतं निवेद्याथ संसारात् स्वनिर्वेदमावेदयन्त्याह । यावदध्यायं हे विभो इन्द्रियार्थेषु शब्दादिविषयेषु प्रसङ्गेन प्रकृष्टासङ्गेन परित्यक्त अनुपासितः परात्मा परमात्मा यया तस्या मे मम व्यतीतेनातिक्रान्तेन एतावता शतवर्षपरिमितेन कालेनालम् ॥ ५३ ॥ स्वकृतमनुशोचन्त्याह । इन्द्रियार्थेषु सज्जन्त्या आसक्ताया मे मया त्वयि प्रसङ्गः प्रकृष्टासङ्गः कृतः तथापि परं भावमुत्कृष्टं भावं त्वं ब्रह्मविदिति भावमजानन्त्या अपि मे ममाभयायास्तु स्यात् त्वयि कृतः सङ्ग इत्यनुषङ्गः ॥ ५४ ॥ ❀ ❀ कथमिन्द्रियार्थप्रसङ्गो मयि कृतोऽपि अभवाय स्यादित्यत्राह । सङ्ग इति । अधियाऽज्ञानेनासत्सु विहितः कृतोः यः सङ्गः संसृतेर्हेतुः स एवाधिया कृतोऽपि सङ्गः साधुषु भवादृशेषु कृतश्चेन्निःसङ्गत्वाय विरागत्वायैव कल्पते अन्ततो वैराग्यमेव जनयतीत्यर्थः । धियेति छेदे तदा बुद्धिपूर्वकोऽप्यसत्सु विहितः सङ्गः संसृतेर्हेतुः किमुताधिया साधुषु तूभयविधोऽपि सङ्गः निःसङ्गत्वायैव भवतीत्यर्थः ॥ ५५ ॥ ❀ ❀ इह लोके यत्कर्म यस्य पुंसः स्वभावतः प्रवृत्तमपि कर्म धर्माय न कल्पते निसर्गतः प्रवृत्तमप्याहारविहारचेष्टितनिद्रादिरूपं कर्म "युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु । युक्तस्वप्नावबोधस्य योगो भवति दुःखहा" इत्युक्तरीत्या सात्त्विकानेव सेवेत । ऋतावुपेयादित्यादिशास्त्रानुमतद्रव्यकालादिविशेषविषयं स प्रत्यवायपरिहारेण भगवदाराधनरूपकर्मयोगाख्यधर्मनिवृत्तये न भवेदित्यर्थः । स एव धर्मः विरागाय विगतो रागो यस्मात्सः ज्ञानयोगः 'रसोऽप्यस्य परं दृष्ट्वा निवर्तते' इति भगवता गीतत्वात् तस्मै न कल्पते चेदित्यर्थः तस्य जीवनं व्यर्थमिति भावः । यद्यपि कर्मयोगस्य भक्तियोगाङ्गस्य ज्ञानयोगाङ्गत्वमनुपपन्नं तथापि "कर्मण्यकर्म यः पश्येदकर्मणि च कर्म यः" इत्युक्तरीत्या कर्मयोगज्ञानयोगयोः परस्परोपकर्तृत्वमप्यस्तीति बोध्यं स च धर्मो विरागश्च तीर्थपदस्य भगवतः सेवायै भक्त्यै न कल्पते चेत्सः जीवन्नेव मृतो हि जीवच्छवः खल्वित्यर्थः । तस्य जीवनं व्यर्थमिति भावः ॥ ५६ ॥ ❀ ❀ स्वात्मानं प्रति निर्विद्यते सा इन्द्रियार्थेष्वेव सज्जन्त्यहं भगवतो मायया दैवी ह्येषा गुणमयीत्युक्तविधया दृढं वञ्चिता मोहिता याहं विमुक्तिदं मुक्तिसाधनप्रदं त्वां प्राप्यापि वन्धनात्संसारान्न मुमुक्षेय मोक्तुं नेच्छामि स्म ॥ ५७ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायां त्रयोविंशोऽध्यायः ॥ २३ ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली ।

किमाहेति वृत्तमनुवदति । सर्वमिति । उपोवाहोपचकार अथ किं तत्राह । अथापीति । अभयमभयलक्षणं पुत्रम् ॥ ५१ ॥ ❀ ❀ किंच तुभ्यं तव दुहितृभिः समाः अभयमिति सामान्यत उक्तं स्पष्टयति । अपीति । त्वयि वनं प्रव्रजिते संन्यस्य वनं गते सति मम विशोकाय संसारदुःखप्रहाणाय पुत्रः स्यादपि सम्भवेत्किं तत्सम्भवाय भवदनुग्रहो भूयादिति शेषः । सच्चिदिति पाठे सच्चिदानन्दलक्षणः परमात्मेति ध्वनयति कश्चिदिति पाठे अयमेवार्थः सुदृछान्दसः ॥ ५२ ॥ ❀ ❀ अथापि पुत्रप्रार्थनव्याजेनेयं विषयाभिलाषुरिति शङ्का मा भूदित्याह । एतावतेति । इन्द्रियार्थेषु शब्दादिषु प्रसङ्गो गुणबुद्ध्यातिस्नेहलक्षणो यस्तेन परित्यक्तो विस्मृतः परमात्मा सर्वोत्तमो हरिर्यया सा तथोक्ता तस्याः ॥ ५३ ॥ ❀ ❀ मम गतकालोऽपि पुरुषार्थहेतुः स्यादिति प्रार्थयते इत्याह । इन्द्रियार्थेष्विति यद्यपि इन्द्रियार्थेषु सज्जन्त्या भवतः परमितरविलक्षणं भावं योगैश्वर्यमजानन्त्या मे त्वयि कृतो यः प्रसङ्गः स तथापि परमभागवतत्वेन त्वत्सङ्गत्वान्मे अभवाय अपुनर्भवायास्त्वित्यन्वयः ॥ ५४ ॥ ❀ ❀ ज्ञानं विना सङ्गस्य पुरुषार्थहेतुत्वं कथमित्यतस्तं विशिनष्टि । संगो य इति । साधुषु भागवतेषु निःसङ्गत्वाय संसारविरागाय । अनेन वैराग्यभक्तिज्ञानद्वारा सत्सङ्गः पुरुषार्थहेतुरित्युक्तम् भवति ॥ ५५ ॥ ❀ ❀ सत्सङ्गत्योत्पन्नब्रह्मार्पणबुद्ध्या चिकित्सितस्य कर्मणो द्वारद्वारिकया परमपुरुषार्थहेतुत्वं न केवलस्य क्षणिकत्वेन चाचेतनत्वेन च स्वाभीष्टफलदानसामर्थ्याभावादित्याह । नेहेति । इह कर्मभूमौ येन पुरुषेण यत्क्रियमाणं कर्म धर्माय धर्माख्यपुरुषार्थप्राप्तये न स्यात् विरागाय न कल्पते वैराग्योत्पत्तौ न समर्थं स्यात् तीर्थपदस्य हरेः सेवायै च न स्यात्तादृशकेवलस्य कर्मणः कर्ता स पुरुषो जीवन्मृत इत्युच्यते । अपिशब्देन तस्य जन्म गर्हयति । यस्मात्तस्माद्भागवतसङ्गत्या शिक्षितं कर्मैव कर्तव्यमित्यर्थः ॥ ५६ ॥ ❀ ❀ तर्हि किमर्थं सकृदङ्गसङ्गो भूयादिति विषयाभिलाषः प्रार्थित इति तत्राह । साहमिति । सा तादृश्यहं भगवतो हरेर्मायया बन्धकशक्त्या वञ्चिता नूनं तर्कयामि "तर्कनिश्चययोर्नूनम्" इति च तत्र हेतुमाह । या त्वामिति । संसारविमुक्तिदं त्वां प्राप्य संसारबन्धनान्न मुमुक्षे मुक्तिं नेच्छामीति यस्मादत इति हेत्यनेन संसारप्रवृत्त्यारम्भमेवेच्छामीति सूचयति ॥ ५७ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्यां त्रयोविंशोऽध्यायः ॥ २३ ॥

## श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

अथ श्रीदेवहूतिरुवाचेति क्वचित् अभयं पुनः प्रार्थनाक्षमारूपम् ॥ ५१ ॥ ❀ ❀ प्रार्थनामेवाह । ब्रह्मन्निति । तुभ्यं त्वया दुहितृभिः समास्तासां योग्याः ॥ ५२ ॥ ५३-५४ ॥ ❀ ❀ सङ्ग इति । स एव सोऽपि अज्ञानपूर्वकोऽपीत्यर्थः ॥ ५५ ॥ ❀ ❀ तीर्थपदाः साधवः । तीर्थीकुर्वन्ति तीर्थानीत्याद्युक्तेः ॥ ५६ ॥ ❀ ❀ सा यथाकथञ्चित् कृतभगवत्सङ्गाप्यहं तन्महिमाज्ञानांशेन वञ्चिता अतो भगवन्मायैवात्र कारणमित्यर्थः ॥ ५७ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भस्य त्रयोविंशोऽध्यायः ॥ २३ ॥

## श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी ।

उपोवाह सम्पादितवान् ॥ ५१ ॥ ❀ ❀ तुभ्यं तव स्वयमेव विमृग्या इत्यासां विवाहचिन्तापि मे नास्तीति भावः । विशोकाय शोकदूरीकरणाय तेन कमपि योग्यं पुत्रमपि त्वत्तोऽहं प्राप्नुयामिति कृपया कतिचिद्दिनानि तिष्ठेति भावः ॥ ५२ ॥ ❀ ❀ ननु किमेतदुक्तिभङ्ग्या पुनरपि मत्तो विषयसुखं वाञ्छसीति तत्र सलज्जमाह । एतावता कालेन य इन्द्रियार्थप्रसङ्गस्तेनालं यतः परित्यक्तः पर आत्मा परमेश्वरो यया तस्या इति तेनैतावान् कालो मे व्यर्थ एव गत इति भावः ॥ ५३ ॥ ❀ ❀ महाभागवतस्य तव क्षणिकेनापि सङ्गेन लोका निस्तरन्ति मम त्वेतावद्वार्षिकेणाऽपि यन्निस्तारो नाभूत्तत्रैतदेव हेतुद्वयमित्याह । इन्द्रियार्थेष्विति । परं भावं तवैवं महावैराग्यं महाभागवतत्वञ्च यत् क्षणमात्रेणैव सर्वं ममतास्पदं त्यक्तुं प्रवृत्तोऽसीति भावः । तथापीति तदपि मय्यपराधिन्यां कृपां कुर्विति भावः ॥ ५४ ॥ ❀ ❀ किञ्च । वस्तुशक्तिर्बुद्धिं नापेक्षत इत्यतो भवद्विधसाधुसङ्गो विफलो भवितुं सर्वथैव नार्हतीत्याह । सङ्ग इति । अधिया अज्ञानिनापीत्युभयत्राप्यन्वेति ॥ ५५ ॥ ❀ ❀ ननु किमेवं निर्विद्यसे तवैतावती सम्पत्तिरतो विषयान् भुङ्क्ष्वेति तत्राह । नेहेति । यस्य कर्म्म देहेन्द्रियादिव्यापारो धर्म्माद्यर्थं न भवेत् ॥ ५६ ॥ ❀ ❀ तत्रोदाहरणमहमेवेत्याह । साहं जीवन्मृता न विमुमुक्षेय मोक्तुमिच्छामात्रमपि न कृतवत्यस्मीति साश्रु सगद्गदवाक्यम् ॥ ५७ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् । त्रयोविंशस्तृतीयस्य सङ्गतः सङ्गतः सताम् ॥२३॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

उपोवाह सम्पादयामास। अथानन्तरमपि निश्चितं प्रपन्नायामुक्त्यर्थं त्वां शरणं गताया अभयं मुक्त्युपायम्॥ ५१॥ ❀ ❀ लौकिकव्यवहारसिद्ध्यै प्रार्थयते ब्रह्मन्नित्यर्द्धेन। तुभ्यं तव दुहितृभिः तुल्याः पतयः विमृग्या अन्वेषणीयाः। अथ पुनर्मुक्त्युपायलाभार्थं प्रार्थयते यावदध्यायसमाप्ति विशोकाय ज्ञानभक्त्युपदेशाय ॥ ५२॥ ❀ ❀ हे प्रभो! इन्द्रियार्थेषु शब्दादिषु यः प्रकृष्टः सङ्गस्तेन परित्यक्तः न जिज्ञासितः परः आत्मा यद्विज्ञानेन सर्वं चिदचिदात्मकं विज्ञातं स्यात्सर्वकारणकारणो भगवान् श्रीवासुदेवो यया तस्या मे अतिक्रान्तेन एतावता भोगकालेनालं पर्याप्तम्। अवशिष्टे काले मुक्त्युपायं संपादयिष्यामीति भावः॥ ५३॥ ❀ ❀ परं मुक्तौ गम्यं भावं भजनीयमजानन्त्या अत एवेन्द्रियार्थेषु सज्जन्त्या मे मया त्वयि तत्त्वज्ञे सङ्गः कृतः। तथापि अधुना मे अभवाय मोक्षोपायलाभाय त्वयि सङ्गोऽस्त्वित्यन्वयः॥ ५४॥ ❀ ❀ अधिया असत्सु विहितः कृतो यः सङ्गः संसृतेर्हेतुरस्तु साधुषु अधियापि कृतः यः सङ्गः स एव निःसङ्गत्वाय निर्गतः सङ्गः प्रकृतदेहगेहादिसङ्गो यस्मात्स निःसङ्गो भगवान् तस्य भावस्तत्त्वं तस्मै भगवद्भावाय मुक्तये कल्पते योग्यो भवति। अधियापि मया त्वयि साधौ कृतः सङ्गः मुक्तये भवत्विति भावः॥ ५५॥ ❀ ❀ मुक्तिविरुद्धे कर्मणि पूर्वमासक्तमात्मानं निन्दयन्त्याह। नेति द्वाभ्याम् ॥ ५६॥ ❀ ❀ यत् यस्माद्विमुक्तिदमपि प्राप्य बन्धनात् संसारात् न मुमुक्षेय मोक्तुमिच्छां न कृतवती॥ ५७॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कंधे श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे त्रयोविंशोऽध्यायार्थप्रकाशः॥ २३॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

सप्तभिस्तस्या वाक्यान्याह—सर्वं तदित्यादिभिः—परलोकार्थं विज्ञप्तिर्विवाहः कन्यकासु च। भोगाभावस्य कथनं सत्सङ्गश्च प्रसङ्गतः॥ १॥ फलभावश्यकं तस्य सत्रं व्यर्थं ततोऽन्यथा। स्वदोषाभावकथनं कृपासिद्ध्यै निरूपितम्॥ २॥ यथा पूर्वं सुरतं प्रार्थितम्, एवमिदानीमभयं प्रार्थयते। सतां हि सकृदेव प्रार्थनोचिता, तथापि स्वदैन्यात् पुनः प्रार्थनमिति ज्ञापयितुं पूर्वप्रार्थिते शेषो नास्तीत्याह—सर्वमिति। यत्प्रतिश्रुतं तत्सर्वमेव भगवान् मह्यमुपोवाह समीपे उद्वासमानीय दत्तम्। तथा च न दातव्यमवशिष्यते। अथापि शरणागताया अभयं दातुमर्हसि यथा शरणागतस्य वाक्यं प्रार्थितं क्रियते, तथा शरणा[१]गतिसिद्ध्यर्थमभयमपि देयम्, अन्यथा प्रपन्नः पालितो न भवेदिति। अनेन मम परलोकार्थमुपायः कर्तव्य इति विज्ञापितम्॥ ५१॥ ❀ ❀ दुहितॄणां च विवाहः कर्तव्य इत्याह—ब्रह्मन्निति। दुहितृभिः पतयो विमृग्याः। तुभ्यं तव। दैन्यमुक्तमिति केचित्। कन्यानां पतिसंबन्धस्त्वन्मनोरथसिद्धये। तथापि संशयो भार्या तस्मात्त्वं ताः प्रयच्छ हि॥ १॥ प्रार्थनान्तरमाह—त्वयि वनं प्रव्रजिते मे विशोकाय कश्चित् स्यादिति। कन्यास्तु गमिष्यन्ति, पुत्रो देय इत्यर्थः॥ ५२॥ ❀ ❀ नन्वेतन्मिषेण पुनर्भोगं याचस इत्याशङ्क्याऽऽह—एतावताऽलमिति। एतावतैव व्यर्थं व्यतिक्रान्तेन कालेनालम्। अतः परमवशिष्टे काले पुरुषार्थः साधनीय इत्यभिप्रायः। गतकालस्य दोषमाह—इन्द्रियार्थप्रसङ्गेनेति। इन्द्रियार्थेषु प्रकृष्टः सङ्गो यस्मात्, तादृशेन कालेन कृत्वा परित्यक्तः परो भगवान् आत्मा येन। तादृशस्य स्वार्थनाशकस्य एतावतैवाऽलम्॥ ५३॥ ❀ ❀ तर्हि किं कर्तव्यमित्याकाङ्क्षायामाह—इन्द्रियार्थेष्विति। साधनं तु सत्सङ्गः, तन्मम प्रसङ्गादेव जातम्। यथा कस्यचिद्रोगार्थं भक्षिता शर्करा औषधं भवति, तथा इन्द्रियार्थेषु विषयभोगेषु सज्जन्त्या मया त्वयि प्रकृष्टः सङ्गः कृतः, तथापि सत्सङ्गो भवत्येव। यद्यपि सत्त्वेन ज्ञानं न वृत्तं [२]सत्प्रकारकश्च सङ्गो न भवति। तथापि वस्तुतः सत्सङ्गो भवतीति फलिष्यतीत्याह—अजानन्त्येति। ते परमो भावोऽतिसामर्थ्यं यद्यपि न ज्ञातम्। सेवादिषु सत्प्रकारेणाऽपि सङ्गोऽस्ति, पतिव्रतात्वात्। न सेवाया मे भोगोपयोगः, भोगश्चाऽनिषिद्धः परं [३]माहात्म्यज्ञानमेवावशिष्यते। अज्ञानेऽपि तत्सफलमस्त्विति प्रार्थना—तथापि मे अभयायास्त्विति॥ ५४॥ ❀ ❀ ननु क्रियातः फलम्, न तु द्रव्यतः। सताऽपि द्रव्येण असत्कार्यकरणे असदेव फलम्, असताऽपि सत्कार्यकरणे सदेवेति। तस्मात् कु[४]तो न सत्सङ्ग इति चेत्तत्राऽऽह सङ्ग इति। भवेदेतदेवम्, यदि कार्यं सदसतोर्भिन्नं भवेत्। द्रव्यसामर्थ्यादेव कार्यस्य सत्त्वम्, अन्यथा त्वसत्त्वमेव; यतः सर्व एव सङ्गो धिया विहितः संसृतेर्हेतुर्भवति। अर्थात्तदसत्सु भवति, अतः सङ्गो न समीचीनः स्वतः। स एव साधुषु चेत् क्रियते, तदा निःङ्गत्वाय कल्पते। साधवो हि स्वसंबन्धात् क्रियात्वमेव निवारयन्ति, फले का चिन्ता? अतः सतां बलिष्ठत्वान्न[५] क्रिया फलवती। अतो मम सत्सङ्गोऽस्त्विति सिद्धम्॥ ५५॥ ❀ ❀ तर्ह्येतादृशोऽपि किमपेक्ष्यत इत्याशङ्क्याऽऽह—नेह यत्कर्मेति। त्रिविधकर्मण एव सफलत्वम्, येन कर्मणा धर्मो भवति, वैराग्यं, भक्तिर्वा। यस्तु न तादृशकर्मकर्ता स जीवन्नपि मृत एव। जीवतो मृताद्वैलक्षण्यं कर्मकरणम्। तत्र कर्म स्वार्थं, स्वाम्यर्थम्, इष्टार्थं वा चेद्भवेत्तदा सफलम्, रोच[६]नार्थं चेद्विपरीतं फलम्, तैर्मरणस्याऽऽवश्यकत्वात्। अतो मृतो एवेत्युक्तम्॥ ५६॥ ❀ ❀ तादृशं च मया कृतमित्याह—साऽहमिति। तथा करणे

---

१. शरणागत क. ख. ङ.। २. तत्र कारकः ग.। ३. माहात्म्याज्ञानम् क. ख. ङ.। ४. कृतो न सत्सङ्गः ख. ग. ङ. च.। ५. तक्रिया ग. ङ.। ६. चोरार्थम् ग. च.।

त्वन्मायामोहितत्वमेव हेतुः । तदाह—सा एतादृश्यप्यहं विवेकवती, मत्तोऽप्यधिकस्य तव भगवतो मायया नूनं वञ्चिता । कार्यवशादवसीयते, अन्यथा त्वां विमुक्तिदं प्राप्य संसारबन्धनादपि कथं न मुमुक्षेय, न मुक्ता जाताऽस्मि । सत्त्वात् मोक्षदातृत्वम् । बन्धनं कामादिः, विमुक्तिः कालान्मुक्तिः । तस्मान्न केवलं स्वदोषादहमेव जाता, किन्तु त्वया मोहितेति त्वयैवोद्धारः कर्तव्य इति भावः ॥ ५७ ॥

इति श्रीभागवतसुबोधिन्यां श्रीलक्ष्मणभट्टात्मजश्रीवल्लभदीक्षितविरचितायां तृतीयस्कन्धे त्रयोविंशाध्यायविवरणम् ।

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

सङ्ग इत्यत्र । कार्यमिति । क्रियारूपं कार्यम् । सतां बलिष्ठत्वात् क्रिया फलवतीति । अयमर्थः । जैमिनीये नये 'हिरण्यमात्रेयाय ददाति' 'सोमेन यजेत' इत्यादौ क्रियापदस्याऽपूर्वप्रतिपादकत्वात् क्रियैव मुख्या फलहेतुः । लोकेऽपि न्यायागतद्रव्येण द्यूताद्याचरणे राजदण्डादिदर्शनात् अन्यायागतद्रव्येण गवादिपालनेऽन्नादिदाने च सत्कारादिदर्शनाच्च क्रियैव फलहेतुर्यद्यपि दृश्यते, तथापि प्रस्तुतवाक्योक्तसङ्गतिक्रियायां द्रव्यादेव फलप्रतिपादनेन लोकेऽपि तथा दर्शनेन च व्यभिचारान्न क्रियात्वेन फलवत्त्वेन नियमः । किन्तु द्रव्यक्रिययोर्मध्ये यद्बलिष्ठं तत्फलवदिति बलिष्ठत्वेन फलवत्त्वेन नियमः । एवं च वरकालादिद्वारैरसुरः, शिवेन च कृतो यज्ञादिध्वंसोऽपि युज्यते । 'तपो न तत्क' ? इत्यादि भारतवाक्यमपि सङ्गच्छत इति । शेषमतिरोहितार्थम् ॥ ५५ ॥

इति श्रीतृतीयस्कन्धसुबोधिनीप्रकाशे त्रयोविंशाध्यायविवरणं सम्पूर्णम् ।

### श्रीगिरिधरकृता बालप्रबोधिनी

तदेव दर्शयति—सर्वमिति । यद्यपि मह्यं मदर्थं भवता यत्प्रतिश्रुतं विवाहसमये प्रतिज्ञातं तद्भगवान् समर्थो भवान् सर्वमुपोवाह संपादितवान्, अथापि प्रपन्नायाः शरणमागतायाः मे मम त्वमभयं दातुमर्हसीत्यन्वयः ॥ ५१ ॥ ❀ ❀ कस्माच्च किं च तव भयं प्राप्तं कथं च तन्निवर्तनीयमित्यपेक्षायां कन्यावरान्वेषणात् संसाराच्च भयं प्राप्तमतो हे ब्रह्मन् सर्वज्ञस्य तवाग्रे मया किं बहु वक्तव्यम् ? दुहितृभिः समाः वयश्शीलादिभिस्तुल्यास्तत्पतयः तुभ्यं त्वया विमृग्या अवश्यन्वेषणीयाः । तावत् त्वयि वनं प्रव्रजिते सन्न्यस्य गते सति ज्ञानभक्त्याद्युपदेशेन मे मम विशोकाय संसारदुःखनिवृत्त्यर्थं कश्चिज्ज्ञानी पुत्रोऽपि स्यात् । अतः किञ्चित्कालं स्थित्वा तद्द्वयं सम्पादनीयम् ॥ ५२ ॥ ❀ ❀ एवं भङ्ग्यन्तरेण मत्स्थितिप्रार्थनया पुनर्मत्तो विषयसुखमेव वाञ्छतीति शङ्कानिरासं कुर्वन्ती स्वनिर्वेदमावेदयति—एतावतेत्यादिना । स्वामिनस्तवाग्रे नान्यथा वदामीत्याशयेन सम्बोधयति—प्रभो इति । इन्द्रियाणामर्थेषु विषयेषु शब्दादिषु यः प्रकृष्टः सङ्गस्तेन परित्यक्तः अनुपासितः परात्मा भगवान् यया तस्याः मे मम व्यतीतेन अतिक्रान्तेनैतावता शतवर्षपरिमितेन कालेनालम् । भगवदाराधनं विनैतावान् कालो वृथैव गत इति भावः ॥ ५३ ॥ ❀ ❀ गतः स तु गत एव तर्हीदानीं किं कर्त्तव्यमित्यत आह—इन्द्रियेति । इन्द्रियार्थेषु विषयेषु सज्जन्त्या आसक्तया अतएव तव परं भावं मोक्षसाधनोपदेशसामर्थ्यमजानन्त्या अननुसन्दधत्या मया यद्यपि त्वयि प्रकृष्टः सङ्गः कृतः; तथापि स मे मम अभयाय त्वत्प्रसादेन तत्त्वज्ञपुत्रलाभात् संसारभयनिवृत्तयेऽस्तु ॥ ५४ ॥ ❀ ❀ ननु सङ्गस्य संसारहेतुत्वात्कथं स तन्निवृत्तिहेतुः स्यादित्याशङ्क्याह—सङ्ग इति । य एव सङ्गः अधिया अज्ञानेन असत्सु विषयाविष्टचित्तेषु विहितः कृतः सन् संसृतेर्जन्ममरणादिसंसारदुःखानुभवस्य हेतुर्भवति, स एव सङ्गः साधुषु स्वपरकार्यसाधनसमर्थेषु भगवद्भक्तेषु कृतः सन् निस्सङ्गत्वाय संसारदुःखनिवृत्तिपूर्वकपरमानन्दप्राप्तये कल्पते हेतुर्भवतीत्यर्थः । अतस्तव साधुत्वात् त्वत्सङ्गस्य तत्फलमावश्यकमिति भावः ॥ ५५ ॥ ❀ ❀ भगवद्विमुखं विनिन्दति—नेति । इह संसारे यस्य कर्म कायवाङ्मनोव्यापारो धर्माय पुण्योत्पत्तये न कल्पते समर्थो न भवति, तद्द्वारा च विरागाय न कल्पते, तद्द्वारा च तीर्थपदस्य भगवतः सेवायै आराधनार्थं न पर्यवस्यति, स प्राणी जीवन्नपि मृततुल्य एव । तद्व्यापारस्य नरकादिदुःखहेतुत्वेन तस्य जीवनान्मरणमेव वरमित्यर्थः ॥ ५६ ॥ ❀ ❀ तर्हि त्वमेवं सुविज्ञाऽपि कुतो विषयासक्ता जाता कुतो न विमुक्त्युपायं कृतवतीत्यपेक्षायामाह—साऽहमिति । या विमुक्तिदं भक्तिज्ञानादिमुक्तिसाधनोपदेशेन तद्धेतुं त्वां प्राप्यापि संसारबन्धनान्न मुमुक्षेय मोक्षेच्छां न कृतवती साऽहं भगवतो मायया दृढं यथा तथा वञ्चिता मोहिता नूनमत्र न संदेहः ॥ ५७ ॥

इति श्रीवल्लभाचार्यवंश्यगोपालसूनुना ॥ श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा ॥ १ ॥<br>
श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये ॥ श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी ॥ २ ॥<br>
रचिता च तृतीयेऽत्र मोक्षसर्गनिरूपणे ॥ त्रयोविंशो गतो वृत्तिं चित्रक्रीडानिरूपकः ॥ ३ ॥

## हिन्दी अनुवाद

देवहूतिने कहा—भगवन्! आपने जो कुछ प्रतिज्ञा की थी, वह सब तो पूर्णतः निभा दी; तो भी मैं आपकी शरणागत हूँ, अतः आप मुझे अभयदान और दीजिये ॥ ५१ ॥ ꕥ ꕥ ब्रह्मन्! इन कन्याओंके लिये योग्य वर खोजने पड़ेंगे और आपके वनको चले जानेके बाद मेरे जन्म-मरणरूप शोकको दूर करनेके लिये भी कोई होना चाहिये ॥ ५२ ॥ ꕥ ꕥ प्रभो! अबतक परमात्मासे विमुख रहकर मेरा जो समय इन्द्रियसुख भोगनेमें बीता है, वह तो निरर्थक ही गया ॥ ५३ ॥ ꕥ ꕥ आपके परम प्रभावको न जाननेके कारण ही मैंने इन्द्रियोंके विषयोंमें आसक्त रहकर आपसे अनुराग किया। तथापि यह भी मेरे संसार-भयको दूर करनेवाला ही होना चाहिये ॥ ५४ ॥ ꕥ ꕥ अज्ञानवश असत्पुरुषोंके साथ किया हुआ जो संग संसार-बन्धनका कारण होता है, वही सत्पुरुषोंके साथ किये जानेपर असङ्गता प्रदान करता है ॥ ५५ ॥ संसारमें जिस पुरुषके कर्मोंसे न तो धर्मका सम्पादन होता है; न वैराग्य उत्पन्न होता है और न भगवान्‌की सेवा ही सम्पन्न होती है वह पुरुष जीते ही मुर्देके समान है ॥ ५६ ॥ ꕥ ꕥ अवश्य ही मैं भगवान्‌की मायासे बहुत ठगी गयी, जो आप-जैसे मुक्तिदाता पतिदेवको पाकर भी मैंने संसार-बन्धनसे छूटनेकी इच्छा नहीं की ॥ ५७ ॥

॥ २३ वाँ अध्याय समाप्त ॥

# चतुर्विंशोऽध्यायः

मैत्रेय उवाच

निर्वेदवादिनीमेवं मनोर्दुहितरं मुनिः । दयालुः शालिनीमाह शुक्लाभिव्याहृतं स्मरन् ॥ १ ॥

ऋषिरुवाच

मा खिदो राजपुत्रीत्थमात्मानं प्रत्यनिन्दिते । भगवांस्तेऽक्षरो गर्भमदूरात्सम्प्रपत्स्यते ॥ २ ॥
धृतव्रतासि[1] भद्रं ते दमेन[2] नियमेन च । तपोद्रविणदानैश्च श्रद्धया चेश्वरं भज ॥ ३ ॥
स त्वयाऽऽराधितः शुक्लो वितन्वन्मामकं यशः । छेत्ता ते हृदयग्रन्थिमौदर्यो ब्रह्मभावनः ॥ ४ ॥

मैत्रेय उवाच

देवहूत्यपि संदेशं गौरवेण प्रजापतेः । सम्यक् श्रद्धाय पुरुषं कूटस्थमभजद्गुरुम् ॥ ५ ॥
तस्यां बहुतिथे काले भगवान्मधुसूदनः । कार्दमं वीर्यमापन्नो जज्ञेऽग्निरिव दारुणि ॥ ६ ॥
अवादयंस्तदा व्योम्नि वादित्राणि घनाघनाः । गायन्ति तं[3] स्म गन्धर्वा नृत्यन्त्यप्सरसो मुदा ॥ ७ ॥
पेतुः सुमनसो दिव्याः खेचरैरपवर्जिताः । प्रसेदुश्च दिशः सर्वा अम्भांसि च मनांसि च ॥ ८ ॥
तत्कर्दमाश्रमपदं सरस्वत्या परिश्रितम्[4] । स्वयम्भूः साकमृषिभिर्मरीच्यादिभिरभ्ययात् ॥ ९ ॥
भगवन्तं परं ब्रह्म सत्त्वेनांशेन शत्रुहन् । तत्त्वसंख्यानविज्ञप्त्यै जातं विद्वानजः स्वराट् ॥ १० ॥

श्रीधरस्वामिविरचिता भावार्थदीपिका

चतुर्विंशे ततो जन्म कपिलस्याह तत्पितुः । प्रव्रज्यां तमनुज्ञाप्य ऋणत्रयविमोक्षतः ॥ १ ॥

शालिनीं श्लाघ्याम् । शुक्लेनाभिव्याहृतं "सहाहं स्वांशकलया" इत्यादि ॥ १ ॥ ❀ ❀ इत्थं मा खिदः खेदं मा कार्षीः आत्मानं प्रत्यहं भाग्यहीनेति । अदूराच्छीघ्रम् ॥ २ ॥ ❀ ❀ दमेनेंद्रियसंयमेन नियमेन स्वधर्मेण तपांसि द्रविणदानानि च तैः ॥ ३ ॥ ❀ ❀ हृदयग्रंथिं चिज्जडात्मकमहंकारलक्षणं बंधं छेत्ता छेत्स्यति औदर्यः पुत्रः सन् ब्रह्म भावयत्युपदिशतीति तथा ॥ ४ ॥ ❀ ❀ श्रद्धाय विश्वस्य ॥ ५ ॥ ❀ ❀ बहुतिथे बहुतरे कालेऽतिक्रान्ते सति । कार्दमं कर्दमसंबंधि ॥ ६ ॥ ❀ ❀ घनाघना इत्येकं पदम् । वर्षंतो मेघाः । गायंति स्म नृत्यंति स्म ॥ ७ ॥ ❀ ❀ अपवर्जिता मुक्ताः ॥ ८ ॥ ❀ ❀ परिश्रितं परिवेष्टितम् ॥ ९ ॥ ❀ ❀ आगत्य किं कृतवांस्तदाह । भगवंतमिति द्वाभ्याम् । तत्त्वानां संख्यानं यस्मिंस्तस्य सांख्यस्य विज्ञप्त्यै विशेषेण ज्ञापनाय भगवंतं जातं विद्वानजो ब्रह्म स्वराट् स्वतःसिद्धज्ञानः ॥ ॥ १० ॥

श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

तत्पितुः कर्दमस्य । तं कपिलम् । 'शाडृ श्लाघायां' शाडनं शालः सोऽस्या अस्तीति शालिनी ताम् । निर्वेदं वैराग्यं वदितुं प्रतिपादयितुं शीलमस्या इति तथा ताम् । दुहितरं देवहूतिम् ॥ १ ॥ ❀ ❀ निन्दितं स्त्रीणां पतिसेवात्यागादि तन्न विद्यते यस्यास्तत्संबुद्धौ तथा । अक्षरः पितृवीर्येण मातृयोनौ क्षरणहीनः प्राकृतदेहहीनः ॥ २ ॥ ❀ ❀ न त्वमन्या प्राकृतीवाकृतपुण्यासि किंतु जन्मांतरे कृतव्रतादिनियमास्यत इहापि जन्मनि ते भद्रं भविष्यति ॥ ३ ॥ ४ ॥ ❀ ❀ प्रजापतेः कर्दमस्य । संदेशमुपदेशं, गौरवेण गुरुतया । कूटस्थं लयविक्षेपशून्यं, गुरुं वेदरूपेण सर्वेषां हितोपदेष्टारम् ॥ ५ ॥ ❀ ❀ तस्यां देवहूत्यां, बहूनां पूरणे बहुतिथे "बहुपूगगणसंघस्य तिथुक्" इति सूत्रम् । भगवच्छब्दस्य हरिशब्दवदनेकार्थत्वादाह—मधुसूदन इति । आपदं नाशं नयति प्रापयतीत्यापन्नः । कर्मणि डः । वीर्यमापन्नोऽपाकुर्वन्प्रादुर्भूतः । यथाग्निः काष्ठे स्थित एव मथनेन प्रादुर्भूतः काष्ठमपनयति तद्वत् । न हि वीर्येण

---

१. प्रा० पा०—व्रता सुभद्रं । २. प्रा० पा०—यमेन । ३. प्रा० पा०—स्म स गन्धर्वा । ४. प्रा० पा०—परिश्रुतम् ।

तद्देहो जातस्तस्य चिद्घनत्वात् । तदुक्तं वैष्णवसिद्धांते—"नावतारेष्वपि हरेर्देहः शुक्रादिसंभवः । तथापि शुक्रसंस्थः सन्मातृदेहं प्रविश्य च । विलाप्य शुक्रं तत्रैव केवलज्ञानरूपतः । उदेति भगवान्विष्णुः काले लोकं विडंवयन्" इति । काले दशमे मासि । तथा च पूर्वमंतर्यामिरूपेण स्थित एव पुत्ररूपेण दारुणि स्थित एवाग्निर्यथा प्रादुर्भवति तथा प्रादुर्बभूवेति भावः ॥ ६ ॥ ❀ ❀ तत्र साक्षान्नारायण एव रूपांतरेणाभिव्यक्तो लोकविलक्षणोत्सवदर्शनादिति । तं कालं विशिनष्टि—अवादयन्नित्यादिना । घनाघना जगर्जुरिति शेषः । गर्जंतो मेघा इव देवा इत्यर्थः । "वर्षुकाब्दा घनाघनाः" इत्यमरः ॥ ७ ॥ ❀ ❀ खेचरैरमरैः । मनांसि सताम् ॥ ८ ॥ ❀ ❀ तत्पूर्वत्र वर्णितम् ॥ ९ ॥ ❀ ❀ सत्त्वेन शुद्धसत्त्वेनांशेन न तु पूर्णस्वरूपेणेत्यर्थः । शत्रुहन्निति । त्वद्वत्सोप्यज्ञानशत्रुहरणार्थमेवावतीर्ण इत्यभिप्रायः ॥ १० ॥

## श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या ।

तत्पितुः कपिलपितुः कर्दमस्य तं कपिलम् ऋणत्रयविमोक्षतो हेतोः "ऋणत्रयमपाकृत्य मनो मोक्षे निवेशयेत्" इति स्मृतेः शालिनीमिति "शाडृश्लाघायाम्" शाडनं शालः सोऽस्या अस्तीति शालिनी ताम् ॥ १ ॥ ❀ ❀ इत्थं कश्चित्स्यान्मे विशोकायेत्यादिप्रकारेण ॥ २ ॥ ❀ ❀ दमादिभिरीश्वरं भजेति तदर्पणेनैव तेषां सार्थकत्वे व्यञ्जितम् ॥ ३ ॥ ❀ ❀ ब्रह्म स्वरूपेण गुणैश्च बृहत्तमं भगवत्तत्वं तथोपदेशस्याग्रे वक्ष्यमाणत्वात् ॥ ४ ॥ ❀ ❀ गुरुं तथोपदेष्टृत्वेन चिन्त्यमानम् ॥ ५ ॥ ❀ ❀ बहुतिथे बहूनां दिनानां पूरणे काले "बहुपूगगणसंघस्ये"ति तिथुगिति स्मृतेः । अत एव बहुतर इति व्याख्यातम् । वीर्यं भक्तिप्रभावं वश्यत्वेनापन्नस्तद्भक्तिवशीकृतस्सन्नित्यर्थः । अपव्याख्याने दृष्टान्तासङ्गतिरनीश्वरत्वप्रसक्तिश्चेति चिन्त्यम् ॥ ६ ॥ ❀ ❀ "वर्षुकाब्दा घनाघना" इत्यमरसिंहः ॥ ७ ॥ ८ ॥ ❀ ❀ तत् प्रसिद्धं पूर्ववर्णितं वा ॥ ९ ॥ ❀ ❀ भगवन्तमिति युग्मकम् । तदाह तत्राह । सत्त्वेन विशुद्धसत्त्वेन जातमाविर्भूतं तस्य भगवतश्चिकीर्षितं कर्त्तुमिष्टं सांख्यप्रवर्त्तनादि प्रहृष्यमाणैर्हर्षेण विक्रियमाणैः ॥ १०—११ ॥

## श्रीमद्वीरराघवव्याख्या

एवं निर्विद्यमानां भार्यां प्रत्याह कर्दम इत्याह मैत्रेयः । एवमिति । निर्वेदं कथयन्तीं मनोर्दुहितरं शालिनीं स्वगृहिणीं प्रति मुनिः कर्दमः दयालुः शुक्लाभिव्याहृतम् । अहं च स्वांशकलयेति भगवद्वचनं स्मरन्नाह ॥ १ ॥ ❀ ❀ उक्तिमेवाह । त्रिभिः हे राजपुत्रि ! अनिन्दिते ! अनवद्याचारे ! आत्मानं प्रतीत्थं मा खिदः खेदं मा कार्षीः अक्षरो निरस्तप्राकृतगुणो भगवाननन्तकल्याणगुणो हरिरदूरादाशु ते तव गर्भं प्रपत्स्यते ॥ २ ॥ ❀ ❀ ते तुभ्यं भद्रं मङ्गलमस्तु धृतं व्रतं भगवदाराधनरूपं व्रतं यया सा सती त्वं दमेन बाह्येन्द्रियनियमनेन नियमेनान्तरिन्द्रियनियमनेन पातिव्रत्यस्योचिततपसा द्रविणानां हिरण्यादीनां दानैश्च श्रद्धया प्रारिप्सितभगवदाराधनत्वरया चेश्वरं भगवन्तं भज ॥ ३ ॥ ❀ ❀ त्वया आराधितः स शुक्लो भगवान्मदीयं यशो वितन्वन् विस्तारयन्नौदर्यः तदुदरे जातः ब्रह्मभावनः तव ब्रह्मोपदेष्टा भूत्वा ते हृदयग्रन्थिमज्ञानं छेत्स्यति ॥ ४ ॥ ❀ ❀ एवमुक्ता देवहूतिस्तथाकरोदित्याह मैत्रेयः । देवहूतिरपि प्रजापतेः कर्दमस्य संदेशं निदेशं गौरवेण सम्यक् श्रद्धाय विश्वस्य कूटस्थं निर्विकारं गुरुमज्ञाननिवर्त्तकं पुरुषं परमपुरुषमभजत् ॥ ५ ॥ ❀ ❀ बहुतिथे बहुतरे काले गते सति भगवान्मधुसूदनः तस्यां देवहूत्यां कार्दमं कर्दमसम्बन्धि वीर्यमापन्नः प्राप्तः दारुण्यग्निरिव जज्ञे कार्दमवीर्यसंश्लिष्टजीवविशेषमाविष्टः अवततारेत्यर्थः । अयमावेशावतारो जामदग्न्यवत् आवेशावतारो नाम जीवान्तरात्मतयावस्थितस्यैव भगवतः जीवद्वारा ज्ञानशक्त्यादिगुणविशेषान्यतमाविर्भावः तावतैव तस्मिन् जीवे स्वस्यान्येषां चेश्वरत्वाभिमानः ॥ ६ ॥ ❀ ❀ तदावतरणसमये व्योम्नि वादित्राणि शङ्खमृदङ्गदुन्दुभ्यादीन्यवादयन् अध्वनयन् देवा इति शेषः । घनाघना इत्येकं पदं वर्षन्तो मेघाः अभूवन्नित्यर्थः । सगन्धर्वाः किन्नरादयः गायन्ति स्म गीतवन्तः अप्सरसः मुदा हर्षेण नृत्यन्ति स्म अनृत्यन् ॥ ७ ॥ ❀ ❀ खेचरैर्दिविजैरपवर्जिता मुक्ताः सुमनसः पुष्पाणि पेतुः पतितवन्ति । सर्वा दिशः अम्भांसि जलानि मनांसि सर्वेषां चित्तानि च प्रसेदुः प्रसन्नान्यभूवन् ॥ ८ ॥ ❀ ❀ सरस्वत्या परिवेष्टितं तत् कर्दमस्थानं प्रति स्वयम्भूश्चतुर्मुखो मरीच्यादिभिः ऋषिभिः सहाभ्यागच्छत् ॥ ९ ॥ ❀ ❀ हे शत्रुहन् । विदुर अंशेन स्वापृथक्सिद्धविशेषणेन सत्त्वेन नित्यासङ्कुचितज्ञानगुणेन परं ब्रह्मैव तत्त्वानां प्रकृतिपुरुषेश्वराणां संख्यानं याथात्म्यकथनं तेन विज्ञप्त्यै ज्ञापनाय प्रकृत्यादियाथात्म्यकथनेन तद्याथात्म्यं लोकं प्रति ग्राहयितुमित्यर्थः । जातमतीवर्णं भगवन्तं विद्वान् जानन् तद्द्रष्टा स्वराडजो ब्रह्मा भगवदावेशावतारत्वाद्भगवद्दृष्टया ब्रह्मणः स्वराट्त्वमकर्मवश्यत्वमुक्तम् ॥ १० ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

हरेरवतारा अपि सच्चिदानन्ददेहत्वाच्छुक्रशोणितसंपर्कप्रारब्धशरीरा न भवन्तीत्यायर्थतात्पर्यावबोधायास्याध्यायस्यारम्भः तत्रादौ कर्दमेन देवहूत्युक्तस्य किमुत्तरत्वेनाभाणीति तत्राह । निर्वेदवादिनीमिति । निर्वेदं वैराग्यं वदितुं प्रतिपादयितुं शीलमस्या अस्तीति निर्वेदवादिनीं शालिनीं भार्यां "शालिनी मालिनी मालया चार्या भार्येति चोच्यते" इत्यभिधानात् शुक्लनाम्नो हरेरभिव्याहृतं

वचनम्॥ १॥ ❀ ❀ आत्मानं त्वां च मां च प्रति पितुः शुक्ररूपेण मातृयोनौ न क्षरतीत्यक्षरः तत्र हेतुर्भगवानिति॥ २॥ ❀ ❀ कदा प्रतिपत्स्यत इत्याशङ्क्य मदुक्तनियमानन्तरमाविर्भविष्यतीति भावेन नियममाह। धृतव्रतेति॥ ३॥ ❀ ❀ अपिस्यान्मे विशोकायेति प्रश्नं प्रत्याह। स त्वयेति। ब्रह्माणं चतुर्मुखं विभावयत्युत्पादयतीति ब्रह्म परमात्मतत्त्वं ग्राहयतीति वा तपश्चर्याबुद्धिमुत्पादयतीति वा ब्रह्मभावनः औदर्यः पुत्रतयावतीर्णः हृदयग्रन्थिमहङ्कारबन्धं संसारम्॥ ४॥ ❀ ❀ देवहूत्यपि दमादीनां दुःसहत्वान्नेदानीं तत्करणं प्रकारान्तरं चेदुपदिश्यतामिति भावेन भर्तृवचनं नोदास्ते किंतु श्रद्धया न्वतिष्ठदित्याह। देवहूतीति। संसारिचेतनव्यावृत्तये कूटस्थामिति सर्वव्यापिरूपवन्नोदासीनं ब्रह्मादिज्ञानोपदेष्टारमिति भावेनोक्तं गुरुमिति॥ ५॥ ❀ ❀ वह्वयामपि साधनसामग्र्यां कार्यानुत्पत्तिवदत्रापि तथा किं नेत्याह। तस्यामिति। बहूनां तिथि-विशेषाणां कालावयवानां पूरणे काले गते सति कार्दमं कर्दमभुक्तान्नविकारं र [ १ ] मणीयोगवीर्यरेत आपन्नः प्रविष्टस्य रेतस आपदं विलापनलक्षणां नयतीति आपन्नो वा तस्यां देवहूत्यां जज्ञे प्रादुर्बभूव अस्यायमेवार्थ इत्यत्र तादृशं दृष्टान्तमाह। अग्नि-रिवेति। अग्निर्दारुणि स्थितो दारुतश्चाभिव्यक्तो भवति अत एव तस्यामित्युक्तं पूर्वमपि तत्र सत्त्वात् एतत्सर्वं नावतारेष्वपि हरेर्देहः शुक्रादिसंभवः "तथापि शुक्रसंस्थः सन्मातृदेहं प्रविश्य च। विलाप्य शुक्रं तत्रैव केवलज्ञानरूपतः। उदेति भगवान्विष्णुः काले लोकं विडम्बयन्।" इत्यादि ग्रन्थान्तरसिद्धं काले दशमे मासे॥ ६॥ ❀ ❀ तत्र साक्षान्नारायण एव रूपान्तरेणाभिव्यक्तो लोकविलक्षणोत्सवदर्शनादिति भावेन तं कालं विशिनष्टि। अवादयन्नित्यादिना। घनाघनाः गर्जन्मेघा जगर्जुरिति शेषः॥ ७॥ तस्मिन्हरौ व्यज्यमाने अपवर्जिता अधः पातिताः॥ ८॥ ❀ ❀ इतोऽपि हरिरेवाभिव्यक्त इतरथा ब्रह्माद्यागमनासंभवादि-त्याशयेनाह। तत्कर्दमेति॥ ९॥ ❀ ❀ सरस्वत्या परिप्लुतमिति विशेषितत्वात्तीर्थस्नानार्थं तेषामागमनं किं तत्राह। भगवन्तमिति। आद्विष्णोर्जात इत्यजस्य चतुर्मुखत्वे सिद्धेऽपि तस्य भक्त्यायतिशयत्वद्योतनाय स्वराडिति मनोवाक्कायकर्मभिः स्वतन्त्रे राजत इति स्वेन राजत इति वा'न भारती मेऽङ्ग मृषे'त्यादेः सत्त्वेन सर्वगुणपरिपूर्णत्वेन सिद्धेनांशेन किं प्रयोजनोऽयमवतार इत्यत उक्तम्। तत्त्वेति। चतुर्विंशतितत्त्वानां संख्यानं सम्यग्ज्ञानं तस्य विज्ञप्त्यै विज्ञापनाय सत्त्वस्य प्रकृतिगुणेष्वेकत्वात्तेन प्राकृतदेहेन जात इत्येवार्थ इतीदं चोद्यं "महागुणाभिपूर्णत्वं सत्त्वमित्युच्यते बुधैः" रित्यनेन परिहर्तव्यं केवलो निर्गुणश्चेति श्रुतेश्च अत्र संख्यानमित्यनेन सम्यग्ज्ञानमेव कथ्यते न तु दुष्टकपिलोक्तं शास्त्रं कुतः "सम्यक् ज्ञानं तु सांख्यं स्यात्तदर्थो योग उच्यत" इति वचनात्॥ १०॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

शालिनीमिति शाडृ श्लाघायां शाडनं शालः सोऽस्या अस्तीति शालिनी तां शुक्लाभिव्याहृतं स्मरन्निति तदेकध्या-नत्वात्॥ १-३॥ ❀ ❀ स त्वयेति। कदाचिदपि तद्विस्मर्तुं न शक्नोति यः स इत्यर्थः। ब्रह्म भगवत्तत्त्वम्॥ ४॥ सन्देशमुपदेशं गुरुं गुरुतया चिन्त्यमानम्॥ ५॥ ❀ ❀ वहुतिथः वहूनां पुरणे काले 'बहुपूगगणसङ्घस्य तिथुगि'ति पूरण-प्रकरणे पाणिनिसूत्रम्। वीर्य्यं भक्तिप्रभावः तदापन्नस्तेन वशीभूत इत्यर्थः॥ ६-९॥ ❀ ❀ भगवन्तमिति युग्मकम्॥ १०-१५॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

चतुर्विंशे जनुः प्रोक्तं कपिलस्य विधेर्वचः। कन्योद्वाहः कर्दमस्य प्रव्रज्यास्तुत्यनन्तरा॥

शालिनीं श्लाध्यां शुक्लेनाभिव्याहृतं सहाहं स्वांशकलयेत्यादि॥ १॥ ❀ ❀ हे अनिन्दिते! इत्थं मा खिदः खेदं मा कार्षीः॥ २॥ ❀ ❀ न चान्या प्राकृतीव त्वमकृतपुण्येत्याह। धृतव्रतासि। पूर्वजन्मनि कृतव्रतादिनियमास्यत इहापि जन्मनि ते भद्रं भविष्यति॥ ३॥ ❀ ❀ हृदयग्रन्थिमहङ्कारलक्षणं बन्धमौदर्य्यः उदरजातः सन् ब्रह्मभावनः ब्रह्मोप-देष्टा॥ ४॥ ❀ ❀ संदेशमुपदेशं गुरुं यः पुत्रो भूत्वा गुरुर्भविष्यति तम्॥ ५॥ ❀ ❀ बहुतिथेति बहूनां पूरणे वहुतरे काले अतिक्रान्ते सतीत्यर्थः। "वहुपूगगणसङ्घस्य तिथुक्" इति सूत्रं कार्दमं वीर्य्यं कर्दमस्य भक्तिप्रभावमापन्नस्तेन वशीकृत इत्यर्थः। अग्निरिव दारुणीति तस्यामन्तर्यामिरूपेण स्थित एव स पुत्ररूपेण प्रकटीबभूवेत्यर्थः॥ ६॥ ❀ ❀ घनाघना गर्जन्तो मेघा इति देवा इत्यर्थः। "वर्षुकाब्दा घनाघना" इत्यमरः॥ ७॥ ❀ ❀ अपवर्जिता विसृष्टाः॥ ७॥ ❀ ❀ परिश्रितं वेष्टितम्॥ ९॥ ❀ ❀ सत्त्वेन शुद्धसत्त्वस्वरूपेण अंशेन नतु पूर्णस्वरूपेणेत्यर्थः। तत्त्वस्य सङ्ख्यानं यस्मिन् तस्य साङ्ख्यस्य विज्ञप्त्यै विशेषेण ज्ञापनाय जातमाविर्भूतं जानन् सभाजयन् पूजयन् प्रहृष्यमाणैरसुभिरिन्द्रियैरुपलक्षितः कर्दमश्चकाराद्दे-वहूतिश्च॥ १०—११॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

चतुर्विंशे भगवदाविर्भावः ब्रह्ममरीच्यादीनां सन्तोषः कर्दमस्य वैराग्यज्ञानभक्तिसाधनसपंत्त्या भगवद्भावापत्तिरूपा मुक्तिश्च वर्ण्यते। एवमुक्तप्रकारेण निर्वेदवादिनीं शालिनीं श्लाघ्यां सहाहं स्वांशकलयेत्यादि शुक्लेन व्याहृतं स्मरन्नाह॥ १॥

❀ ❀ अदूरादल्पकालेन ॥ २ ॥ ❀ ❀ तावत्तदाराधनं कुरु स त्वयाराधितः पुत्रीभूतस्त्वद्बन्धनं छेत्स्यतीत्याह। धृतव्रतासीति द्वाभ्याम् ॥ ३ ॥ ❀ ❀ औदर्यः पुत्रः सन् ब्रह्मभावनः ब्रह्म बृंहत्स्वरूपगुणादिपरमात्मतत्त्वं भावयत्युपदिशतीति स तथा हृदयग्रन्थिं देहे अहंतां गृहादौ ममतां छेत्ता छेत्स्यति त्वां संसारान्मोचयिष्यतीति भावः ॥ ४ ॥ ❀ ❀ संदेशमुपदेशं सम्यक् श्रद्धाय स्वीकृत्य कूटस्थं निर्विकारं गुरुमज्ञाननिवर्तकं पुरुषमभजत् ॥ ५ ॥ ❀ ❀ बहुतिथे काले इति। अतः सा सुषुवे सद्यो देवहूतिः स्त्रियः प्रजा इतिवत्सद्यो जातत्वशङ्कानिराकरणार्थं भगवतः स्वच्छन्दजातत्वद्योतनार्थं च वस्तुतस्तु "भगवांस्तेऽक्षरो गर्भमदूरात् संप्रपत्स्यते" इति स्वभक्तेनोक्ते अल्पे इत्यर्थः। वीर्यं प्रभावं भक्तिबलमापन्नः श्रेष्ठपुत्रार्थं तद्भजनं स्वीकृत्येत्यर्थः। तस्यां जज्ञे प्रादुर्बभूव। अन्यथा "हिरण्यकेशः पद्माक्षः पद्ममुद्रापदाम्बुजः। एष मानवि! ते गर्भं प्रविष्ट" इत्यनेन विरोधः स्यात् ॥ ६ ॥ ❀ ❀ तदा आविर्भाववेलायां तं भगवन्तमुद्दिश्य वादित्राणि दुन्दुभ्यादीनि अवादयन् गायन्ति च घनाः निबिडाः सघना इत्यर्थः मेघा बभूवुरिति शेषः ॥ ७ ॥ ❀ ❀ अपवर्जिताः मुक्ताः प्रसेदुः प्रसन्नतां प्रापुः ॥ ८ ॥ ❀ ❀ परिश्रितं वेष्टितमाश्रमपदमाश्रमस्थानं साकं सह ॥ ९ ॥ ❀ ❀ तत्त्वानि वक्ष्यमाणानि चिदचिद्ब्रह्माख्यानि संख्यायन्ते यस्मिन् येन वा तस्य वैष्णवस्य सांख्यशास्त्रस्य विज्ञप्त्यै विशेषतः अब्रह्मात्मकप्रधानप्रतिपादकसांख्यशास्त्रवैलक्ष्यण्यतः ज्ञापनाय सत्त्वेन ऋषिकुलानुरूपेण सत्त्वस्वभावेन जातमाविर्भूतं विद्वानजो ब्रह्मा स्वेनोपास्येन भगवता राजते इति स्वराट् भगवदधीनस्थितिवृत्तिकः तस्य भगवतश्चिकीर्षितं सभाजयन्प्रहृष्यमाणैरसुभिरिन्द्रियैरुपलक्षितः कर्दमं चकरात् देवहूतिमिदमभ्यधात् अवोचत् इति द्वयोरन्वयः ॥ १०–११ ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

चतुर्विंशे तथाऽध्याये मोक्षो बुद्धिश्च वर्ण्यते। कपिलो हि हरिर्बुद्धिरुपदेशो भजिस्तथा ॥
ऋणत्रयपरित्यागो मोक्षार्थं तस्य वर्ण्यते ॥ १ ॥

पूर्वाऽध्याये देवहूतेर्वैराग्यं प्रार्थना चोक्ता, अन्ते चाऽऽशाभावः सूचितः। तत्र प्रथममाशाभावं निराकरोतीत्याह—निर्वेदवादिनीति। निर्वेदो वैराग्यम्। विषयभोगेन निर्विण्णा सा। स्वस्य तावत्पर्यन्तमेव पतित्वमिति संकेतात् मनोरेषा दुहितेत्युक्तम्। मुनिरिति भाव्यर्थज्ञानम्। सान्त्वने हेतुः—दयालुरिति। शालिनीं विनीतां मनोहरां वा। यद्यपि देवगुह्यं न वक्तव्यम्, तथाप्येषा विरक्ता, सत्कुलप्रसूता, विनीता चेति गुह्यकथनम्। किञ्च, शुक्लाभिव्याहृतं स्मरन्। शुक्लनारायणेन 'अथाहं स्वांशकलया' इति पुत्रो भविष्यामीत्युक्तम्, तदपि स्मरन्। सतामपि मोक्षसाधकत्वं भगवत्संबन्धजननात् ॥ १ ॥ ❀ ❀ मोक्षदस्तु भगवानेव। स चेत्पुत्रो भविष्यति, तदा सर्वमेव कार्यं सेत्स्यतीति तां तथा बोधयन्नाश्वासयति—मा खिद इति। इत्थं स्वजन्मवैफल्यादिवचनैः, हे राजपुत्रि त्वं मा खिदः आत्मानं स्वात्मानं मां वा लक्ष्यीकृत्य; कृतस्य कर्मणो नाशकत्वाभावात्, अन्यथा अन्ते वैराग्यं न स्यात्। तदाह-हे अनिन्दित इति। अनिन्दितत्वस्य निदर्शनमाह–भगवांस्ते गर्भमदूरात्संप्रपत्स्यत इति। अक्षर इति ज्ञानरूपः, अन्तर्याम्यधिकरूपश्च। अदूरादिति मद्गमनात्पूर्वमेव। गर्भमिति पुत्रो भविष्यति। यदि स्वच्छन्दक्रीडया काऽप्युपहतिर्भवेत्, तदा भगवान् पुत्रत्वेन नाऽऽविर्भवेत्। आविर्भावावश्यकत्वञ्च भगवद्वाक्यान्निश्चितमिति भावः ॥ २ ॥ ❀ ❀ तर्हि साधनं न कर्तव्यमित्याशङ्कयाऽऽह—धृतव्रतेति। साधनानि सिद्धे भगवति प्रवर्तन्ते। यदा भगवान् स्वयमेवागमिष्यामीति मन्यते, तदा साधनानि कृतानि भगवन्तं बोधयन्ति, प्राप्नुवन्ति, वशीकुर्वन्ति, उत्पादयन्ति। यथा लोके स्वभावतो भोक्तारमतिथिनिमन्त्रणादिना वशीकृत्य भोजयन्ति, न त्वभोक्तारमुपायशतैरपि। यतो भगवान् स्वयं समागन्ता, अतः साधनानि कर्तव्यानि। तानि तव न कर्तव्यानीत्याह—धृतव्रताऽसीति। पातिव्रत्यव्रतं धृतमेव त्वया वर्तते। अतः परं त्वयि गते गमिष्यतीति चेत्तत्राऽऽह—भद्रं त इति। ते भद्रमस्तु। अस्मद्वाक्यादेव व्रताकरणेऽपि व्रतिन इव तव फलं भविष्यतीत्याशीः। सिद्धे व्रते भगवत्प्रसादार्थं पञ्च साधनानि कर्तव्यानीत्याह। दम इन्द्रियनिग्रहः कर्तव्यः। नियमो भगवदीयैरेव धर्मैर्व्यवहर्तव्यमिति। नियमाः स्नानादयो वा देहस्य; तदा चकारेण प्रथमा ग्राह्याः। तपः प्रसिद्धं कृच्छ्रादिरूपम्। द्रविणानि द्रव्याणि सुवर्णादीनि भगवदर्थं कर्तव्यानीत्येकं साधनम्। द्रविणदानं चाऽन्यत्, दानमेव वा। अन्यथा अवान्तरबहुत्वे बहुवचनं व्यर्थं स्यात्, 'प्रयतात्मनः' इति वाक्यात्। दमो नियतः। व्रतानां हरितोषजनकत्वादाविर्भावे तेऽपि प्रयोजकाः। 'यज्ञो दानं तपश्चैव' इति। भगवदुक्तशास्त्रार्थकरणे भगवान् परितुष्यतीति तपःप्रभृतीनां ग्रहणम्। द्रविणपदेन च यज्ञा भगवन्मखरूपा उक्ताः। श्रद्धाऽत्र सर्वाङ्गम्। ननु सिद्धे किमित्येतावन्ति साधनानि? तत्राऽऽह—ईश्वरमिति। स न येन केनापि नियम्यः, अतोऽसिद्धवदेव साधनानि कर्तव्यानीत्यर्थः ॥ ३ ॥ ❀ ❀ ततः किं भविष्यतीत्याशङ्कयाऽऽह—स त्वयेति। मया आराधितोऽपि त्वया चेदेवमाराधितः। स हि शुक्लः, निर्दोषपूर्णगुणविग्रहो मामकं यशो वितन्वन्, लोके कर्दमस्य पुत्रो जात इति कीर्तिं वितन्वन्, ते हृदयग्रन्थिं भेत्स्यति। अदोषार्थे, आवश्यकार्थे, विश्वासार्थे चाऽऽह—औदर्य इति। उदरे भव औदर्यः। ननु तस्य मत्पुत्रस्य कथं मदज्ञानदूरीकरणसामर्थ्यम्? तत्राऽऽह—ब्रह्मभावन इति। ब्रह्म भावयत्यनुभावयति स्वस्मिन् अन्यस्मिंश्चेति। अतस्त्वय्यपि ब्रह्माऽऽविर्भाव्य हृदयग्रन्थिं छेत्ता। एवमाश्वासनमुक्तवान् ॥ ४ ॥

❀ ❀ भर्तृवाक्यात्तथैव कृतवतीत्याह—देवहूत्यपीति। मध्ये कर्दमोऽपि ध्यानारूढ इति ज्ञातव्यम्। देवहूत्यपि प्रजापतेः संदेशमत्यादरेण सम्यक् श्रद्धाय, तद्वाक्ये विश्वासं कृत्वा, तमेव पुरुषं शुक्लनारायणरूपं कूटस्थमन्तर्यामिणमविकृतं वा, ज्ञानमार्गेऽपि भगवत्त्वेन सेव्यम्, गुरुमभजत्। उक्तेनैव प्रकारेणेति ज्ञातव्यम्॥ ५॥ ❀ ❀ तदा भगवानाविर्भूत इत्याह—तस्यामिति बहुकालं तया भजने क्रियमाणे तस्यां भगवान् जज्ञे आविर्भूतः। तस्यां वा बहुकालं स्थित्वा भगवान् बहिराविर्भूत इत्याद्य एवार्थः। कोऽयमाविर्भूत इत्यंशव्यावृत्त्यर्थं भगवान्मधुसूदन इत्युक्तम्। यो हि योगनिद्रानिर्मीलिताक्षः स मधुसूदनः, स एवाऽयमिति। पुत्रप्रकारेण चाविर्भविष्यतीत्याह—कार्दमं वीर्यमापन्न इति। ते न हि गुरुणा भाव्यम्, अतो मर्यादारक्षार्थं प्रथमं कर्दमवीर्ये आविर्भूतः पश्चादाविर्भविष्यति। न चैवं सति प्राकृतत्वं शङ्कनीयमित्याह—अग्निरिव दारुणीति। काष्ठं गोमयपिण्डं वा प्राप्य आविर्भवन्, उच्चावचत्वं, वृद्धिक्षयौ च प्राप्नुवन्नाऽग्निः[1] प्राकृतो भवति, जायते वा किन्त्वाविर्भाव एव। तत्रैव स्थितस्तत्रैवाऽऽविर्भवतीति ज्ञापयितुं दारुणीत्युक्तम्॥ ६॥ ❀ ❀ भगवदवतारो जात इति ज्ञापनार्थं तदभिज्ञानान्याह—अवादयन्नित्यादिभिः। भगवतः समागमनमेकम्, देवानां वाद्यादिवादनानि च बहूनि; तान्याह—द्वयेन—व्योम्नि घनाघना निबिडमेघाः, वादित्राणि मेघरूपाण्येव, अवादयन्। गन्धर्वाश्च गायन्ति स्म। अप्सरसश्च नृत्यन्ति स्म। उत्सवे यथाऽन्यत्राऽन्यप्रेरिता न तथेत्याह—मुदेति॥ ७॥ ❀ ❀ पुष्पवृष्टिश्च जातेत्याह—पेतुरिति। अन्यकृतव्यावृत्त्यर्थम्—दिव्या इति। खेचरैर्देवैः, द्रष्टुकामैरागतैरपवर्जितास्त्यक्ताः। वृष्टिकरणे प्रेम्णा विकला अपि ते इति सूचितम्। दिशः प्रसेदुः, अम्भांसि च, प्राणिनां मनांसि च। त्रितयप्रसादोऽलौकिक आधिदैविकरूपः, वादित्रादीन्याधिभौतिकानि॥ ८॥ ❀ ❀ ब्रह्मणः समागमनमाधिदैविकम्। तदाह—तत्कर्दमाश्रमपदमिति। त्रिभिः—तद् विन्दुसरोरूपं कर्दमस्याश्रमपदम्। सरस्वत्या परिश्रितमिति ब्रह्मणो निःशङ्कागमने हेतुः। तस्याऽलौकिकं ज्ञानमस्तीति ज्ञापयितुम्—स्वयम्भूरित्युक्तम्। ऋषिभिः सनकादिभिर्मरीच्यादिभिश्च सह अभ्ययात्॥ ९॥ ❀ ❀ न केवलं कर्दमदर्शनार्थम्, किन्तु भगवानाविर्भूत इति ज्ञात्वेत्याह—भगवन्तमिति। भगवान् स्वयं परब्रह्मभूत एव। सत्त्वेन स्वांशेन सत्त्वं गृहीत्वा, ज्ञानकलया, तत्त्वानां सङ्ख्यानं साङ्ख्यशास्त्रम्, तस्य विज्ञप्त्यै ज्ञापनार्थमज एव स्वयं जात इति विद्वान्। यतोऽयं स्वराट्, स्वस्मिन्नेव राजते॥ १०॥

## श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

अथ चतुर्विंशाध्यायं विवरिषवः पूर्ववदेव सङ्गतिं बोधयितुमर्थं संगृह्याऽऽहुः सार्द्धेन—चतुर्विंशेत्यादि। स्पष्टम्। व्रतवतेत्यत्र। सिद्ध इति। प्रसन्नेऽपि साधनावश्यकत्वं व्युत्पादयन्ति—यदेत्यादि शतैरपीत्यन्तेन। द्रविणपदस्य दानेऽन्वये पूर्वोक्तोऽर्थो भज्यत इति पक्षान्तरमाहुः—दानमेवेति। पञ्चममित्यर्थः। ननु द्रविणपदस्य दानेनाऽन्वये को दोषो येनैवं व्याख्यात इत्याकांक्षायामाहुः—अन्यथेत्यादि। द्रविणपदस्य दानविशेषणत्वे मूलस्थबहुत्वस्यावान्तरविशेषपरता वक्तव्या। तदापि तयोर्द्रविणदानयोरेव मुख्यतया ताभ्यामेव तल्लाभे बाधकाभावाद् द्विवचनापत्त्याहुः, वचनं व्यर्थं स्यादित्यर्थः। श्रीभागवतस्य गीताविस्तरत्वाद्गीतानुसारेण दमादीनां पञ्चानामावश्यकत्वं साधयन्ति—प्रयतेत्यादिना। त इति। नियमा इत्यर्थः॥ ३॥

## श्रीगिरिधरकृता बालप्रबोधिनी

कपिलस्य चतुर्विंशे प्रादुर्भावो विधिस्तुतिः। कन्यायौनर्कपेस्तस्य सन्न्यासश्च निरूप्यते॥ १॥

एवं देवहूत्या सम्प्रार्थितः कर्दमस्तामाश्वासितवानित्याह—निर्वेदेति। एवं निर्वेदवादिनीं वैराग्यं कथयन्तीं देवहूतिं प्रति दयालुर्मुनिः कर्दमः शुक्लाभिव्याहृतं अहं स्वांशकलयाऽवतीर्येति भगवद्वाक्यं स्मरन्नाहेत्यन्वयः। दयायां हेतुं सूचयंस्तां विशिनष्टि—मनोर्महाराजाधिराजस्य दुहितरमिति, शालिनीं सुस्वभावेन श्लाघ्यामिति च॥ १॥ ❀ ❀ खेदायोग्यतां सूचयन् सम्बोधयति—हे राजपुत्रीति। अनिन्दिते हे सर्वदोषविवर्जिते—इत्थमहं वञ्चिता भाग्यहीनेत्येवं आत्मानं प्रति मा खिदः खेदं मा कार्षीः। तत्र हेतुमाह—भगवानिति, अक्षरो विनाशादिविकारशून्यो भगवानेव तवोद्धारार्थं अदूरात् मन्निर्गमनात्पूर्वं शीघ्रमेव ते गर्भं सम्प्रपत्स्यते, तव पुत्रो भविष्यतीत्यर्थः॥ २॥ ❀ ❀ तर्हि तत्प्रादुर्भावार्थं किं साधनं मयाऽनुष्ठेयमित्याकाङ्क्षायामाह—धृतेति। यद्यपि पूर्वमेव अनेकजन्मसु धृतानि अनुष्ठितानि व्रतानि यया तथाभूताऽसि तथापीदानीमपि दमेन बाह्येन्द्रियनिग्रहेण नियमेन स्नानजपपूजानमस्कारादिनियमेन कृच्छ्रचान्द्रायणादितपोभिर्द्रविणानां हिरण्यान्नादीनां दानैश्च श्रद्धया प्रेम्णा चेश्वरं भगवन्तं भज। एवं ते तव भद्रं कल्याणं भविष्यति॥ ३॥ ❀ ❀ एतदेव स्पष्टयति—स इति। त्वया आराधितः स शुक्लः शुद्धो भगवान् मामकं मदीयं 'भगवानपि कर्दमस्य पुत्रो जात' इति यशो वितन्वन् विस्तारयन् औदर्यैः त्वत्पुत्रः सन् ब्रह्म भावयत्युपदिशतीति तथा च संस्ते तव हृदयग्रन्थिमज्ञानं च्छेत्ता च्छेत्स्यतीत्यर्थः॥ ४॥ ❀ ❀ एवमुक्ता देवहूतिस्तथाऽकरोदि-

---

१. प्राप्नुवन् अग्निः, क. ख. घ. ङ।

त्याह—देवहूतीति। देवहूतिः अपि प्रजापतेः कर्दमस्य सन्देशं निदेशं गौरवेण सम्यक् श्रद्धाय विश्वस्य कूटस्थं निर्विकारं गुरुं ज्ञानप्रदं पुरुषं पुरुषोत्तमं भगवन्तमभजत् ॥ ५ ॥ ❀ ❀ ततश्च बहुतिथे बहुतरे काले गते सति मधुसूदनो मधुदैत्यहन्ता भगवान्विष्णुः कार्दमं कर्दमसम्बन्धि वीर्यमापन्नः सन् तस्यां देवहूत्यां जज्ञे प्रादुर्बभूव। तत्र दृष्टान्तमाह—अग्निरिव दारुणीति। दारुणि काष्ठे यथा महाभूतरूपोऽग्निः प्रथमतः स्थितोऽपि बहिष्ठः पुनः प्रविश्याविर्भवति तथापि निर्लेपत्वान्न काष्ठरूपेण दुष्टो भवति तथा तया तस्यां स्थितोऽपि पुनः प्रविश्याविर्बभूव न तत्सम्बन्धेन प्राकृतत्वं निर्लेपत्वादित्यर्थः ॥ ६ ॥ ❀ ❀ तदा तदवतारसमये व्योम्नि आकाशे वादित्राणि शङ्खमृदङ्गदुन्दुभ्यादीन् देवा अवादयन्। तच्छब्दानुकरणं घनाघना इति शब्दा जाता इति शेषः। वर्षन्तो मेघा जाता इति वा। स्पष्टमन्यत् ॥ ७ ॥ ❀ ❀ खेचरैर्देवैरपवर्जिता विमुक्ताः दिव्याः सुमनसः पुष्पाणि पेतुः। सर्वा दिशः अम्भांसि जलानि सर्वप्राणिमनांसि च प्रसेदुः प्रसन्नानि निर्मलानि अभूवन् ॥ ८ ॥ ❀ ❀ सरस्वत्या नद्या परिश्रितं परिवेष्टितं तद्बिन्दुसरस्संज्ञकं कर्दमस्याश्रमपदं स्थानं प्रति मरीच्यादिभिर्ऋषिभिः साकं सह स्वयम्भूर्ब्रह्मा अभ्ययात् आगच्छत् ॥॥ ९ ॥ ❀ ❀ किमर्थमागत इत्यपेक्षायामाह—भगवन्तमिति द्वाभ्याम्। भगवद्भक्तत्वादादरार्थं सम्बोधयति—शत्रुहन्निति। हे निर्जितेन्द्रियादिशत्रो सत्त्वेन सत्त्वगुणाङ्गीकारेण तत्त्वानां प्रकृत्यादीनां सङ्ख्यानं निरूपणं यस्मिंस्तस्य साङ्ख्यशास्त्रस्य विशेषेण ज्ञप्त्यै ज्ञापनाय अंशेन जातं भगवन्तं विद्वान् जानन् अतएव प्रहृष्यमाणैः आनन्दाश्रुरोमाञ्चितगद्गदादि-विकारयुक्तैः। असुभिश्चक्षुरादीन्द्रियैः उपलक्षितः विशुद्धेन चेतसा तस्य भगवतश्चिकीर्षितं सभाजयन् सम्मानयन् अभिनन्दयन् कर्दमं चकाराद्देवहूतिं चेदं वक्ष्यमाणमभ्यधात् अभ्यभाषतेति द्वयोरन्वयः। औपचारिकभगवत्त्वशङ्कानिरासायाह—परम्ब्र-ह्मेति। ब्रह्मा तत्कथं ज्ञातवानित्यत आह—स्वराडिति, स्वतस्सिद्धज्ञान इत्यर्थः। तत्र हेतुमाह—अज इति, लौकिकरीत्या न जात इत्यर्थः ॥ १० ॥

## हिन्दी अनुवाद

### श्रीकपिलदेवजीका जन्म

श्रीमैत्रेयजी कहते हैं—उत्तम गुणोंसे सुशोभित मनुकुमारी देवहूतिने जब ऐसी वैराग्ययुक्त बातें कहीं, तब कृपालु कर्दम मुनिको भगवान् विष्णुके कथनका स्मरण हो आया और उन्होंने उससे कहा ॥ १ ॥ ❀ ❀ कर्दमजी बोले—दोषरहित राजकुमारी! तुम अपने विषयमें इस प्रकार खेद न करो; गर्भमें अविनाशी भगवान् विष्णु शीघ्र ही पधारेंगे ॥ २ ॥ ❀ ❀ प्रिये! तुमने अनेक प्रकारके व्रतोंका पालन किया है, अतः तुम्हारा कल्याण होगा। अब तुम संयम, नियम, तप और दानादि करती हुई श्रद्धापूर्वक भगवान्का भजन करो ॥ ३ ॥ ❀ ❀ इस प्रकार आराधना करनेपर श्रीहरि तुम्हारे गर्भसे अवतीर्ण होकर मेरा यश बढ़ावेंगे और ब्रह्मज्ञानका उपदेश करके तुम्हारे हृदयकी अहंकारमयी ग्रंथिका छेदन करेंगे ॥ ४ ॥ ❀ ❀ श्रीमैत्रेयजी कहते हैं—विदुरजी! प्रजापति कर्दमके आदेशमें गौरव-बुद्धि होनेसे देवहूतिने उसपर पूर्ण विश्वास किया और वह निर्विकार, जगद्गुरु भगवान् श्रीपुरुषोत्तमकी आराधना करने लगी ॥ ५ ॥ ❀ ❀ इस प्रकार बहुत समय बीत जानेपर भगवान् मधुसूदन कर्दमजीके वीर्यका आश्रय ले उसके गर्भसे इस प्रकार प्रकट हुए, जैसे काष्ठमेंसे अग्नि ॥ ६ ॥ ❀ ❀ उस समय आकाशमें मेघ जल बरसाते हुए गरज-गरजकर बाजे बजाने लगे, गन्धर्वगण गान करने लगे और अप्सराएँ आनन्दित होकर नाचने लगीं ॥ ७ ॥ ❀ ❀ आकाशसे देवताओंके बरसाये हुए दिव्य पुष्पोंकी वर्षा होने लगी; सब दिशाओंमें आनन्द छा गया, जलाशयोंका जल निर्मल हो गया और सभी जीवोंके मन प्रसन्न हो गये ॥ ८ ॥ ❀ ❀ इसी समय सरस्वती नदीसे घिरे हुए कर्दमजीके उस आश्रममें मरीचि आदि मुनियोंके सहित श्रीब्रह्माजी आये ॥ ९ ॥ ❀ ❀ शत्रुदमन विदुरजी! स्वतः सिद्ध ज्ञानसे सम्पन्न अजन्मा ब्रह्माजीको यह मालूम हो गया था कि साक्षात् परब्रह्म भगवान् विष्णु सांख्य-शास्त्रका उपदेश करने के लिये अपने विशुद्ध सत्त्वमय अंशसे अवतीर्ण हुए हैं ॥ १० ॥

सभाजयन् विशुद्धेन चेतसा तच्चिकीर्षितम्। प्रहृष्यमाणैरसुभिः कर्दमं चेदमभ्यधात्[१] ॥ ११ ॥

ब्रह्मोवाच

त्वया मेऽपचितिस्तात कल्पिता निर्व्यलीकतः। यन्मे सञ्जगृहे वाक्यं भवान्मानद मानयन् ॥ १२ ॥
एतावत्येव शुश्रूषा कार्या पितरि पुत्रकैः। बाढमित्यनुमन्येत गौरवेण गुरोर्वचः ॥ १३ ॥
इमा दुहितरः सभ्य तव वत्स सुमध्यमाः। सर्गमेतं प्रभावैः स्वैर्बृंहयिष्यन्त्यनेकधा[२] ॥ १४ ॥
अतस्त्वमृषिमुख्येभ्यो यथाशीलं यथारुचि। आत्मजाः परिदेह्यद्य विस्तृणीहि यशो भुवि ॥ १५ ॥

१. प्रा० पा०—मब्रवेत्। २. प्रा० पा०—ष्यन्ति नैकधा।

### श्रीधरस्वामिविरचिता भावार्थदीपिका

तस्य चिकीर्षितं सभाजयन्पूजयन्प्रहृष्यमाणैरसुभिरिंद्रियैरुपलक्षितः कर्दमं चेदमभ्यधादिति द्वयोरन्वयः। चकाराद्देवहूतिं च ॥ ११ ॥ ❀ ❀ तत्र त्वयेति पंचभिः। कर्दमं प्रत्याह। अपचितिः पूजा कृता यद्यस्मात् निर्व्यलीकतो निष्कपटं सम्यग्गृहीतवान् ॥ १२ ॥ ❀ ❀ अनुमन्येतेति यदेतावत्येव ॥ १३ ॥ ❀ ❀ अनेकधा प्रभावैर्वंशैर्बृंहयिष्यंति वर्धयिष्यंति ॥ १४ ॥ ❀ ❀ ऋषिमुख्येभ्यो मरीच्यादिभ्यः ॥ १५ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

तस्य हरेश्चिकीर्षितं सम्यग्ज्ञानसाधनशास्त्रनिर्माणलक्षणम्। इदं वक्ष्यमाणम् ॥ ११ ॥ ❀ ❀ तत्र द्वयोर्मध्ये। "भवेदपचितिः पूजाव्ययनिश्चयहानिषु" इति मेदिनी। तात—मानदेति संबुद्धिद्वयं स्नेहद्योतनार्थम् ॥ १२ ॥ ❀ ❀ पुत्रकैः सत्पुत्रैः। बाढमिति मयांगीकृतं यथाज्ञापयति तथा करोमीति भावः। गौरवेण परमादरेण। गुरोः पितुः। यदि तव पुत्रा अभविष्यंत सर्गो नावर्द्धयिष्यत ॥ १३ ॥ ❀ ❀ यथाभिर्दुहितृभिः सर्गो विस्तारयिष्यते इत्याह—इमा इति। प्रभावैः प्रभाववद्भिः प्रकर्षेण भावो भवनं येषां तैरिति वा। वत्सेति स्नेहोक्तिः। सभ्येति। पुत्रीणां योग्येभ्योर्पणात्सभासु तव कीर्त्तिर्भविष्यतीत्यभिप्रायः। मध्ये देहमध्ये भवा मध्यमा संततिः सुष्ठु मध्यमा यासां तास्सुमध्यमाः। इयमुक्तिर्ब्रह्मणो भाविज्ञानवत्त्वात् ॥ १४ ॥ ❀ ❀ यतः एताः सर्गवृद्धियोग्या अतो हेतोः ऋषयश्च ते मुख्या इति कर्मधारयस्तत्पुरुषानवकाशात्। तदनवकाशस्तु मरीच्यादिभिन्नर्षितराभावादेव। कन्या शीलरुच्यनुसारेणैव योग्येभ्यो देहीत्याह—यथाशीलमिति। तेन तव लोके ख्यातिर्भविष्यतीत्याह—विस्तृणीहीति ॥ १५ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

तत्र कर्दमदेवहूत्योर्मध्ये मानयन् सत्कुर्वन् ॥ १२ ॥ ❀ ❀ एतावती गुरुवचनानुमतिरूपा ॥ १३ ॥ १४ ॥ ❀ ❀ अतो दुहितॄणां वंशवृद्धिशक्तिमत्त्वात् ॥ १५ ॥

### श्रीमद्वीरराघवव्याख्या

तस्यावतीर्णस्य भगवतः चिकीर्षितं विशुद्धेन मनसा सभाजयन् संमानयन्नभिनन्दयन्निति यावत् अत एव प्रहृष्यमाणैरसुभिरिन्द्रियैरानन्दाश्रुपूर्णरोमाञ्चितगद्गदस्वरादियुक्तनेत्रत्वग्वागादीन्द्रियैरुपलक्षितः कर्दमं चकाराद्देवहूतिं च प्रतीदं वक्ष्यमाणमभ्यधादभ्यभाषत ॥ ११ ॥ ❀ ❀ तत्र त्वयेति पञ्चभिः कर्दमं प्रत्याह। हे तात! पुत्र त्वयाऽपचितिः पूजा निर्व्यलीकेन प्रेमातिशयेन मे मह्यं कल्पिता विहिता। कापचितिर्मया कल्पितेत्यत्राह। हे मानद! भवान्वाक्यं मद्वचः मानयन् जगृहे गृहीतवानिति यत्तदेव ममापचितिः ॥ १२ ॥ ❀ ❀ त्वद्वाक्यकरणमात्रेण कथमपचितिः कल्पितेत्यत्राह। पितरि पुत्रैः कार्या शुश्रूषा अपचितिरेतावत्येव यद्गुरोः पितुर्वचः वाक्यं गौरवेण बाढमनुमन्येताङ्गीक्रियेतेति प्रजाः सृजेति मयाभिहितस्त्वं तथैवाकार्षीरतो मदपचितिः कल्पितेति भावः ॥ १३ ॥ ❀ ❀ हे वत्स! सुमध्यमाः शोभनाङ्ग्यः इमाः सत्यः साधुशीलाः तव दुहितरः स्वैः प्रभावैरंशैः सर्गमनेकधा तत्तदपत्यपरंपराभिर्बृंहयिष्यन्ति वर्द्धयिष्यन्ति ॥ १४ ॥ ❀ ❀ अतस्त्वमृषिमुख्येभ्यो मरीच्यादिभ्यः आत्मजा दुहितॄः तत्तद्दुहितृरुचिशीलानतिक्रमेण परिदेहि प्रयच्छ। अद्याधुना भुवि यशः विस्तृणीहि वितनु ॥ १५ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

ब्रह्मणागत्य किं वचनमुक्तं तत्राह। सभाजयन्निति। तस्य हरेश्चिकीर्षितं सम्यक् ज्ञानसाधनशास्त्रनिर्माणेच्छां सभाजयन् साध्विति बहुमानयन् हरेर्भक्तानुकम्पितत्वेन प्रहृष्यमाणैरसुभिरिन्द्रियैरुपलक्षितश्चशब्देन हरेश्चिकीर्षा सभाजनं कर्दमसंभाषणं च समुच्चिनोति ॥ ११ ॥ ❀ ❀ सामान्येनोक्तं विशिनष्टि। त्वयेति। अपचितिः पूजा केयमपचितिरत्राह यन्मे सङ्गगृह इति ॥ १२ ॥ ❀ ❀ एतावता कथमपचितिरभूदित्यत्राह। एतावतीति। बाढमभिमतमनुमन्येत करोमीति यावत् यावत्येव ॥ १३ ॥ ❀ ❀ किमनया स्तुत्या प्रजाः सृजेति भवदाज्ञा न निस्तीर्णेति तत्राह। इमा इति। सत्यः सन्त्विति शेषः। सतीगुणेन किं फलं तत्राह। सर्गमिति। सर्गमवशिष्टमिति शेषः। अनेन मदाज्ञा च कृता स्यादित्युक्तं भवति ॥ १४ ॥ ❀ ❀ मानुषसर्गस्तु मिथुनेन भाव्यत इति तस्मादत आसां योग्येभ्यो यथारुचि देहीत्याह। अत इति। अनेनोभौ लोकौ च प्राप्नोषीत्याशयेनाह। विस्तृणीहीति। विस्तृणीहि विस्तृतं कुरु ॥ १५ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

अपचितिः परिचर्य्या कृता ॥ १२ ॥ ❀ ❀ पुत्रकैः सत्पुत्रैः। बाढमिति यथाज्ञापयसि तथा करवाणीति ॥ १३ ॥ ❀ ❀ तव पुत्रा यद्यजनिष्यन्त तदाप्येवं सर्गो नावर्द्धिष्यत। याभिर्दुहितृभिः सर्गो विस्तारयिष्यते इत्याह। इमा इति। प्रभावैः प्रभाववद्भिर्वंशैः ॥ १४—१५ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

तत्र कर्दमं प्रत्याह । त्वयेति पञ्चभिः । हे तात ! पुत्र ! अपचितिः पूजा कल्पिता कृता ॥ १२ ॥ ❀ ❀ यद्गुरोः पितुः वच आज्ञावाक्यं बाढमित्यनुमन्येत एतावत्येव शुश्रूषा पुत्रकैः पितरि कार्य्या ॥ १३ ॥ १४ ॥ ❀ ❀ ऋषिमुख्येभ्यो मरीच्यादिभ्यः न तु भगवदवतारेभ्यः सनत्कुमारादिभ्यः ।

सनकाद्या नारदश्च रिभुर्हंसो रुणिर्यतिः । नैते गृहान् ब्रह्मसुता ह्यावसन्नूर्ध्वरेतसः ॥

इति तेषामूर्ध्वरेतस्त्वात् ॥ १५ ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

आगत्य प्रथमं कर्दमं सभाजितवानित्याह—सभाजयन्निति । यावत्तेन कृतम् , तत्सर्वं विशुद्धेन चेतसा सभाजयन् , साध्वेव कृतमित्यङ्गीकुर्वन् , चिकीर्षितं प्रव्रज्यादिकं च सभाजयन् । प्रहृष्यमाणैरसुभिरिन्द्रियैः, प्राणैरेव वोत्फुल्लैः, वक्ष्यमाणं कर्दमं प्रत्यभ्यधात् ॥ ११ ॥ ❀ ❀ तेन हि पूर्वं ऋणत्रयापाकरणं कृतम् । तत्र पितृऋणे ब्रह्मा पिता, तदभीष्टं कर्तव्यम् ; तत् कृतमित्याह—त्वयेति । जाता मम बहवः पुत्राः, त्वयैव मे परमपचितिः प्रत्युपकारलक्षणपूजा कृता । तत्रापि—निर्व्यलीकतः । भगवति प्रसन्ने, शास्त्रार्थे च ज्ञाते, उत्कटे च कामेऽसति, यो मद्वाक्यानुरोधेन विपरीत इवाऽपकर्षमपि सोढ्वा, महता कष्टेन आज्ञां कृतवान् । तदेवाऽऽह—यन्मे संजगृहे वाक्यम् । एतदेव सम्यग्ग्रहणम् , अन्तःकरणपूर्वकं ग्रहणान्मानयन् । मानदेति संबोधनं वैपरीत्येऽपि ब्रह्मणा महानुपकारः कृत इति हृदये संमाननम् । वाक्यकरणम् , स्वस्मिन् रागाभावे सति करणम् , तस्मिन् दोषाननारोप्य करणम् , तदुपकारित्वेनाऽकरणम् , सोपकारत्वेन करणं चेति । एवं पञ्चाऽङ्गीकरणं सर्वोत्कृष्टम् ॥ १२ ॥ ❀ ❀ एतावदेव करणमित्याह—एतावतीति । पितरि पुत्रकैरेतावत्येव शुश्रूषा कर्तव्या । कायिकसेवायाः साऽनुरोधाल्लौकिकी । अतः पितृत्वेन गुरुत्वेन च यत् करणम् , तदलौकिकमेव कर्तव्यम् । तद्वाक्यमेव । मनस्तु तत्रैवैतस्येति निश्चीयते, पूर्वरूपत्वात् । पुत्रकैरिति बहुवचनं सर्वैः संभूय वा कर्तव्यं प्रत्येकाशक्ताविति ज्ञापितम् गुरोर्वचो बाढमित्यनुमन्येत गौरवेणेति स्वकृतार्थता । बाढमिति मत्सराभावः । अनुमननं तथैव करणम् । गुरोरिति तस्मिन् दोषाभावः, पश्चादेव वचनात् स्वस्मिन् रागाभावश्च । प्रजाः सम्यक् सृष्टा इति तात्पर्यम् ॥ १३ ॥ ❀ ❀ तस्य विनियोगमाह—इमा दुहितर इति । सभ्येति तस्य स्वतो रागाभावो द्योतितः । वत्सेत्यादरे । सुमध्यमा इति सौन्दर्येण गुणा उक्ताः । अत एव स्वैरेव प्रभावैः, स्वस्मिन् भर्तृग्रहणधर्मैः, एतं सर्गमनेकधा बृंहयिष्यन्ति । अतः कन्याभिरेव जगत्पूर्यत इति नातः परं किञ्चित्कर्तव्यम् ॥ १४ ॥ ❀ ❀ अतस्तदर्थमृषिभ्यः प्रयच्छेत्याह—अतस्त्वमिति । ऋषिमुख्येभ्यो मरीच्यादिभ्यः । यथाशीलं यथारुचीति भगवत्कृतसंबन्धं स्वाभाविकं च संबन्धमनतिक्रम्य । अद्येति विशिष्टः कालः । यद्यपि भगवत्कृतत्वात्सहजत्वाच्च संबन्धस्य न त्वत्कृतिरपेक्ष्यते, तथापि स्वयं दानेन भुवि यशो विस्तारय ॥ १५ ॥

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

एतावत्येवेत्यत्र । किं तदलौकिकमित्याकाङ्क्षायामाहुः—तद्वाक्यमेवेति । उक्तमेव कर्त्तव्यमित्यर्थः । ननु वाक्येऽपि कश्चिदनुरोधः सम्भाव्यत इति मन एव कर्त्तव्यमिति वाच्यमिति चेत्तत्राहुः—मनस्त्वित्यादि । तथा च, तदत्र वाक्यकरणेनैव सिद्धमित्यर्थः ॥ १३ ॥

### १४ श्लोकात् ३२ श्लोकावधि सुबोधिनीप्रकाशो न

### श्रीगिरिधरकृता बालप्रबोधिनी ।

तत्र कर्दमं प्रत्याह—त्वयेति पञ्चभिः । स्नेहं सूचयन् सम्बोधयति—तातेति । तत्र हेतुं सूचयन् पुनः सम्बोधयति—त्वया मे मम अपचितिः पूजा निर्व्यलीकतः निष्कपटतया प्रेमातिशयेन कल्पिता कृता । का सेत्यत आह—मे मम वाक्यं मानयन् जगृहे इति यत् ॥ १२ ॥ ❀ ❀ एतदेव स्पष्टयति—पुत्रैः पितरि एतावत्येव शुश्रूषा सेवा कार्या यत् गुरोः पितुर्वचः वाक्यं गौरवेण हेतुना बाढमित्यनुमन्येत अङ्गीक्रियेत । अतः प्रजासृष्ट्याऽऽज्ञापालनमेव मम महती पूजा कृतेत्याशयः ॥ १३ ॥ ❀ ❀ अयमपि मम मनोरथस्त्वयाऽवश्यं पूरणीय इत्याशयेन सम्बोधयति—वत्सेति । सुमध्यमाः शोभनाङ्ग्यः इमास्तव दुहितरः स्वैः प्रभावैः वंशैरेतं सर्गं अनेकधा अपत्यपरम्परया बृंहयिष्यन्ति वर्द्धयिष्यन्ति । एतत्तवापि विदितमेवेत्याशयेन पुनः सम्बोधयति—सभ्येति ॥ १४ ॥ ❀ ❀ अतः यथाशीलं यथारुचि आसां शीलादिसादृश्येन इमाः स्वात्मजाः कन्यास्त्वं ऋषिमुख्येभ्यो मरीच्यादिभ्यः परिदेहि प्रयच्छ, तेनाद्य भुवि स्वयशो विस्तृणीहि वितनु ॥ १५ ॥

### हिन्दी अनुवाद

अतः भगवान् जिस कार्यको करना चाहते थे, उसका उन्होंने विशुद्ध चित्तसे अनुमोदन एवं आदर किया और अपनी सम्पूर्ण इन्द्रियोंसे प्रसन्नता प्रकट करते हुए कर्दमजीसे इस प्रकार कहा ॥ ११ ॥ ❀ ❀ श्रीब्रह्माजीने कहा—प्रिय

कर्दम ! तुम दूसरोंको मान देनेवाले हो। तुमने मेरा सम्मान करते हुए जो मेरी आज्ञाका पालन किया है, इससे तुम्हारे द्वारा निष्कपटभावसे मेरी पूजा सम्पन्न हुई है॥ १२॥ ❀ ❀ पुत्रोंको अपने पिताकी सबसे बड़ी सेवा यही करनी चाहिये कि 'जो आज्ञा' ऐसा कहकर आदरपूर्वक उनके आदेशको स्वीकार करें॥ १३॥ ❀ ❀ बेटा ! तुम सभ्य हो, तुम्हारी ये सुन्दरी कन्याएँ अपने वंशोंद्वारा इस सृष्टिको अनेक प्रकारसे बढ़ावेंगी॥ १४॥ ❀ ❀ अब तुम इन मरीचि आदि मुनिवरोंको इनके स्वभाव और रुचिके अनुसार अपनी कन्याएँ समर्पण करो और संसारमें अपना सुयश फैलाओ॥ १५॥

वेदाहमाद्यं पुरुषमवतीर्णं स्वमायया। भूतानां शेवधिं देहं बिभ्राणं कपिलं मुने॥ १६॥
ज्ञानविज्ञानयोगेन कर्मणामुद्धरन् जटाः। हिरण्यकेशः पद्माक्षः पद्ममुद्रापदाम्बुजः॥ १७॥
एष मानवि ते गर्भं प्रविष्टः कैटभार्दनः। अविद्यासंशयग्रन्थिं छित्त्वा गां विचरिष्यति॥ १८॥
अयं सिद्धगणाधीशः साङ्ख्याचार्यैः सुसम्मतः। लोके कपिल इत्याख्यां गन्ता ते कीर्तिवर्धनः॥ १९॥

मैत्रेय उवाच

तावाश्वास्य जगत्स्रष्टा कुमारैः सहनारदः। हंसो हंसेन यानेन त्रिधाम परमं[1] ययौ॥ २०॥
गते शतधृतौ[2] क्षत्तः कर्दमस्तेन चोदितः। यथोदितं स्वदुहितॄः[3] प्रादाद्विश्वसृजां ततः॥ २१॥
मरीचये कलां प्रादादनसूयामथात्रये। श्रद्धामङ्गिरसेऽयच्छत्पुलस्त्याय हविर्भुवम्॥ २२॥
पुलहाय गतिं युक्तां क्रतवे च क्रियां सतीम्। ख्यातिं च[4] भृगवेऽयच्छद्वसिष्ठायाप्यरुन्धतीम्॥ २३॥
अथर्वणेऽददाच्छान्तिं यया यज्ञो वितन्यते। विप्रर्षभान् कृतोद्वाहान् सदारान् समलालयत्॥ २४॥
ततस्त ऋषयः क्षत्तः कृतदारा निमन्त्र्य तम्। प्रातिष्ठन्नन्दिमापन्नाः स्वं स्वमाश्रममण्डलम्॥ २५॥

श्रीधरस्वामिविरचिता भावार्थदीपिका

पुत्रस्तु साक्षादीश्वर इत्याह। वेदाहमिति। शेवधिं निधिं सर्वाभीष्टदम्॥ १६॥ ❀ ❀ देवहूतिं प्रत्याह। त्रिभिः। ज्ञानं शास्त्रोक्तं विज्ञानमपरोक्षं च ते एव योग उपायस्तेन कर्मणां जटा मूलानि वासना उद्धरन्नुत्पाटयिष्यन् पद्ममुद्रायुक्तं पदांबुजं यस्य॥ १७॥ ❀ ❀ हे मानवि अविद्या स्वरूपाज्ञानं संशया मिथ्याज्ञानानि तन्मयं तव हृदयग्रन्थिम्॥ १८॥ ❀ ❀ सुसंमतः सुपूजितः सन् गन्ता प्राप्स्यति॥ १९॥ ❀ ❀ कुमारैः सहेति शेषः। सहनारदो नारदसहितश्च मरीच्यादीन्विवाहार्थमवस्थाप्य नैष्ठिकैरेतैः पंचभिः सहितो हंसो ब्रह्मा ययौ। त्रिधाम तृतीयं धाम स्वर्गस्तस्य परां काष्ठां सत्यलोकम्॥ २०॥ ❀ ❀ शतधृतौ ब्रह्मणि॥ २१॥ २२॥ ❀ ❀ युक्तां योग्याम्। अयच्छददात्॥ २३॥ ❀ ❀ वितन्यते समृद्धः क्रियते शांत्यधिष्ठात्रीं देवतामित्यर्थः। समलालयत्संतोषितवान्॥ २४॥ ❀ ❀ निमंत्र्य पृष्ट्वा नंदिं हर्षं प्राप्ताः संतः॥ २५॥

श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

स्वेषु भक्तेषु मायया कृपयेति वा। कं सुखं पाति रक्षतीति कपिर्ज्ञानं सर्वसम्पद्वत्त्वेप्यज्ञानिनस्सुखादर्शनात् तज्ज्ञाति ददाति मात्रे मुनिभ्यश्चेति कपिलस्तं तन्नामानम्। कपिलवर्णत्वाद्वा कपिलम्। कपिं लाति स्वीकरोति कर्णेनेति कपिल इति निरुक्तेः। शब्दार्णवे तु—"सितपीतहरिद्रक्तः कडारस्तृणवह्निवत्। अयं तूद्रिक्तपीतांगः कपिलो गोविभूषणः॥" इति सितरक्तहरितालपीताधिक्ये वर्णः कपिलवर्णः। वानररोमवद्वर्णो वेति केचित्। "मुनिं प्रशान्तं कपिलम्" इति श्रुतेः। मुन इति। त्वमप्येतज्ज्ञानास्येव तपोबलेनेत्याह॥ १६॥ ❀ ❀ "जटा लग्नकचे मूले" इति मेदिनी। अयञ्च हिरण्यकेशादिस्वलक्षणलक्षित एव। "हिरण्यकेशो हिरण्यश्मश्रुः" इत्यादिश्रुतेः॥ १७॥ ❀ ❀ कपिल इत्याख्याश्रवणाद्‌धुताशावतारनिरीश्वरसांख्यकर्त्तायमिति मा संशयिष्ठा इत्याह—कैटभार्दनः कैटभाख्यदैत्यहंता विष्णुरेवायं न तु स इत्यर्थः। अविद्यादिकमन्येषां छित्त्वेति ज्ञेयम्। भगवत्प्रादुर्भावस्थानस्य शुद्धसत्त्वात्मकत्वात्तत्र न संभवति। उपदेशादिकं तूद्भवादिवल्लोकहितार्थमेवेति संदर्भः॥ १८॥ ❀ ❀ अयमिति सुसंमतः। अन्यस्तु सिद्धविशेषः कपिलो दर्शनकर्त्ता न सुष्ठु संमतः वेदविरुद्धानीश्वरवादात्। तथैव भाष्यकृद्भिः पाद्मं वचनमुदाहृतम्—"कपिलो वासुदेवाख्यस्तत्त्वं सांख्यं जगाद ह। ब्रह्मादिभ्यश्च देवेभ्यो भृग्वादिभ्यस्तथैव च॥ तथैवासुरये सर्ववेदार्थैरुपबृंहितम्" इति। "सर्ववेदविरुद्धं च कपिलोन्यो जगाद ह। सांख्यमासुरयेऽन्यस्मै कुतर्कपरिबृंहितम्॥" इति च।

---

१. प्रा० पा०—त्रिधाम प्रत्यपद्यत। २. प्रा० पा०—सत्यव्रते। ३. प्रा० पा०—सुदु०। ४. प्रा० पा०—स।

स च वह्न्यवतारोहीत्यन्यत्रोक्तम् ॥ १९ ॥ ❀ ❀ तौ देवहूतिकर्दमौ। सहनारद इति 'वोपसर्जनस्य' इति वैकल्पिकत्वान्न सादेशः। "हंसः सर्वादिलोकेशशतधृतिकंजोद्भवाः। वेदास्यश्च शतानंदः" इत्यभिधानचिंतामणिः। हंसेन मानसौकसा पक्षिणा ॥ २० ॥ ❀ ❀ तेन शतधृतिना। यथोदितं वेदोक्तरीत्या। ततस्तेषां विश्वसृजाम्। चतुर्थ्यर्थे षष्ठी। तसिश्च षष्ठ्यर्थे। तेभ्यो विश्वसृग्भ्यः ॥ २१ ॥ ❀ ❀ वरान्नामतो निर्दिशति अथेति मंगले ॥ २२ ॥ ❀ ❀ पातिव्रत्यशक्तिर्ज्ञेयारुंधतीति तन्नाम हि पतीच्छारोधनाकरणात् ॥ २३ ॥ ❀ ❀ इत्यर्थ इति। शांतिं विना न कोपि यज्ञः सिध्यतीति भावः ॥ २४ ॥ ❀ ❀ ततो विवाहोत्तरम्। तं कर्दमम् ॥ २५, २६ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

स्वमायया स्वेषु भक्तेषु कृपया विश्राणं प्रकटयन्तम् ॥ १६ ॥ १७ ॥ ❀ ❀ यद्यपि भगवन्मातुः शुद्धसत्त्वात्मकत्त्वेनाविद्यादिकं न संभवति तथापि तथोपदेशस्य लोकहितत्वात् तन्मात्रादरार्थमुद्धवादाविव तत्र तदारोपितमिति ज्ञेयम्। वस्तुतस्त्वन्येषामविद्यादिकं छित्त्वेति व्याख्येयम् ॥ १८ ॥ ❀ ❀ अयं तु सांख्याचार्य्यैः सुसंमत इत्युक्त्यान्योऽप्यसंमतः कपिलोऽग्निवंशजो निरीश्वरसांख्यप्रवर्त्तको ज्ञेयः। तदुक्तं पाद्मे "कपिलो वासुदेवाख्यस्तत्त्वं सांख्यं जगाद ह। ब्रह्मादिभ्यश्च देवेभ्यो भृग्वादिभ्यस्तथैवच। तथैवासुरये सर्ववेदार्थैरुपबृंहितम्। सर्ववेदविरुद्धं च कपिलोऽन्यो जगाद ह। सांख्यमासुरयेऽन्यस्मै कुतर्कपरिबृंहितम्" इति ॥ १९ ॥ ❀ ❀ त्रिलोकीपक्षे तृतीयं स्वर्गं सत्यलोकपर्य्यन्तम् ॥ २० ॥ ❀ ❀ शतधृतिशब्दस्य ब्रह्मवाचकत्वे सिद्धपदसान्निध्यं हेतुर्ज्ञेयः। विश्वसृजां विश्वसृड्भ्यः ततस्तदनन्तरमेव ॥ २१ ॥ २२ ॥ ❀ ❀ योग्यां तदनुरूपां सतीम्। विहितक्रियाधिष्ठातृत्वाच्छ्रेष्ठाम् ॥ २३ ॥ ❀ ❀ समृद्धः साङ्गतया सम्पूर्णः ॥ २४ ॥ ❀ ❀ ततस्संतोषानन्तरम् ॥ २५ ॥

### श्रीमद्वीरराघवव्याख्या

तव पुत्रस्तु साक्षादीश्वर इत्याह। हे मुने! स्वमायया आत्मीयसङ्कल्पेनावतीर्णं किमर्थं भूतानां शेवधिं निधिं देहं विश्राणं निधिमिवाभीष्टप्रदानाय देहं बिभ्राणं कपिलमाद्यं जगत्कारणं परमपुरुषमेवाहं वेद जानामि ॥ १६ ॥ ❀ ❀ देवहूतिं प्रत्याह त्रिभिः हे मानवि! मनुपुत्रि! कैटभार्दनः कैटभारिर्भगवान् ज्ञानविज्ञानयोगेन जीवपरयाथात्म्यज्ञानयोगोपदेशेन कर्मणा शुश्रूषतां पुंसामनादिपुण्यपापरूपकर्मणां जटा मूलानि उद्धरन्नुत्पाटयितुमित्यर्थः। ते तव गर्भं प्रविष्टो जात इत्यर्थः। कथम्भूतः हिरण्यकेशः हिरण्यवत्प्रकाशमानाः केशा यस्य स पद्माक्षः पुण्डरीकाक्षः पद्माकारा मुद्रा रेखा यस्मिंस्तत्पदाम्बुजं यस्य स एष अविद्या देहात्माभिमानः संशयः अब्रह्मात्मकस्वतन्त्राभिमानः उभयात्मको यस्तव ग्रन्थिः हृद्गतमज्ञानं तं छित्त्वा निरस्य गां भूमिं विचरिष्यति ॥ १७ ॥ १८ ॥ ❀ ❀ अयं त्वत्पुत्रः सिद्धगणानां योगिसमूहानामधीशः सांख्याचार्यैः संङ्ख्या बुद्धिः बुद्ध्यावधारणीयमात्मतत्त्वं सांङ्ख्यं तत्प्रतिपादकं शास्त्रमपि सांख्यमेव तस्याचार्याः स्वामनुष्ठानेनोपदेष्टारः तैः सुसंमतः बहुमतः लोके कपिल इत्याख्यां नामधेयं गन्ता गमिष्यति प्राप्स्यतीत्यर्थः। ते तव कीर्तिवर्धनः ॥ १९ ॥ ❀ ❀ एवमुक्त्वा ब्रह्मा स्वलोकं ययावित्याह मैत्रेयः। तौ कर्दमदेवहूती आश्वास्य सान्त्वयित्वा जगत्स्रष्टा हंसो ब्रह्मा कुमारैः सहेति शेषः सहनारदः नारदसहितश्च हंसेन यानेन वाहनेन त्रिधाम्नः स्वर्गात्परमुपरिस्थितं सत्यलोकं प्रति ययौ ॥ २० ॥ ❀ ❀ शतधृतौ ब्रह्मणि गते सति क्षत्तः! तेन ब्रह्मणा चोदितः आदिष्टः कर्दमः ततः स्वदुहितॄः विश्वसृजां विश्वसृड्भ्यः यथोचितं यथानुरूपं प्रादात्प्रायच्छत् ॥ २१ ॥ ❀ ❀ कस्मै कां प्रादादित्यत्राह। मरीचय इति। मरीचय्त्र्यङ्गिरःपुलस्त्यपुलहक्रतुभृगुवशिष्ठाथर्वभ्यो यथाक्रमं कलानुसूयाश्रद्धाहविर्भूगतिक्रियाख्यात्यरुधन्तीशान्त्याख्या दुहितॄः प्रायच्छदित्यर्थः ॥ २२ ॥ ❀ ❀ तत्र युक्तां वयआदिभिरिति शेषः। इदं सर्वासामप्युपलक्षणम् ॥ २३ ॥ ❀ ❀ यया शान्त्या यज्ञः क्रतुर्वितन्यते विस्तार्यते बहुयज्ञवर्द्धिनीत्यर्थः। दम्पत्योः सहाधिकारादयेत्युक्तं कृतोद्वाहान् कृतविवाहान् सदारान् मरीच्यादीन्समलालयत् वैवाहिकवस्त्राभरणादिप्रदानेन संतोषितवान् इत्यर्थः ॥ २४ ॥ ❀ ❀ हे क्षत्तः! विदुर! ततः कृतदाराः प्रगृहीतदारास्ते मरीच्यादय ऋषयस्तं कर्दमं निमन्त्र्यानुज्ञाप्य नन्दिं हर्षमापन्नाः प्राप्ताः सन्तः स्वं स्वमाश्रमं स्थानं प्रातिष्ठन् प्राविशन् ॥ २५ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

अयं तव गृहेऽवतीर्णः साक्षान्नारायणः एव नान्यस्तल्लक्षणसद्भावादित्यहं वेद्मि त्वमपि तथा विद्धीत्यभिप्रेत्याह। वेदाहमिति। भूतानां जीवानां शेवधिं पुरुषार्थसाधननिधिं देहं बिभ्राणं कम्पिबति लाति चेति कपिलं नाम्नाऽहं वेदेत्यन्वयः ॥ १६ ॥ ❀ ❀ यो ज्ञानविज्ञानयोगेन कर्मणां स्वरूपमुद्धरन् प्रकाशयन् उन्मूलयन्वा यश्च हिरण्यकेशादिस्वलक्षणलक्षितस्तमिति शेषः "हिरण्यश्मश्रुः हिरण्यकेश" इत्यादिश्रुतेः ॥ १७ ॥ ❀ ❀ स्वस्य जगद्गुरुत्वादिसिद्धये देवहूत्या अपि स्वविज्ञानमुपदिशति। एष मानवीति। तव तत्त्वविज्ञापनेनाविद्यासंशयग्रन्थिम् अज्ञानमविद्याविकल्पः संशयस्ताभ्यामुत्पन्नग्रन्थिं बन्धनं पाशलक्षणं छित्त्वा गां भूमिं विचरिष्यति स्वपादैकशरणानां तत्त्वज्ञापनायेति शेषः ॥ १८ ॥ ❀ ❀ न केवलं तव विद्या संशयग्रन्थिं छिनत्ति किन्त्वन्येषामपीति भावेनाह। अयमिति। अयं भगवान् लोके कपिल इत्याख्यां गन्ता इत्यन्वयः! संसारकम्पलहेतुत्वात्कपिल इत्य-

स्मिन्नर्थे विप्रतिपत्तिर्नास्तीत्याह। सांख्येति। सांख्यशास्त्रं कृत्वा प्रवर्तकत्वेन तदाचार्याणां पुरुषाणां परमगुरुत्वेन तैः सुसंमतोऽविप्रतिपन्नः कुतर्कैर्बृंहितसांख्यकर्ता नायमित्याह। सिद्धेति। सिद्धाः मुक्तास्तेषां गणस्याधीशः अन्यकपिलस्यैतदभावात्। इतोऽपि न दुष्टकपिलोऽयमित्याह। ते कीर्तिवर्धन इति॥ १९॥ ❀ ❀ मानुषैः सह बहुलं संभाषणं न न्याय्यमिति भावेन जगत्स्रष्टुस्त्रिधामाभिगमनं वक्ति। ताविति। हंसो निर्मलः॥ २०॥ ❀ ❀ कर्दमेन पुत्राननदर्शनेन धातुर्वचनं न विस्मृतमिति भावेन तदुक्तं कृतमित्याह। गत इति। शतधृतौ शतानन्दे चतुर्मुखे तत इत्यनेन न विलम्बः कृत इति ध्वनयति॥ २१॥ ❀ ❀ मन्दमतीनां सम्यगवबोधाय वरान् व्यनक्ति मरीचय इति॥ २२॥ २३॥ ❀ ❀ कर्दमो जामातॄणां दुहितृषु प्रीत्यर्थं किमकार्षीदिति तत्राह। विप्रर्षभानिति। समलालयद्धनमानाभ्यामिति शेषः॥ २४॥ ❀ ❀ तल्लालिता जामातरस्तत्प्रीत्यर्थं तदाश्रम एव किमवसन्नुत स्वाश्रममयासिपुरुभयमपि संभावितमिति तत्राह। तत इति। कृतदारा विहितभार्या भार्यान्तरप्राप्तीच्छारहिता वा "युगेऽक्षपाते पर्याप्ते कृतं क्लीबे हितेऽर्थवत्" इति यादवः। नन्दं धनमानाभ्यां समृद्धिमापन्नाः प्राप्ताः॥ २५॥

## श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

स्वेषु माया कृपा तया॥ १६—१७॥ ❀ ❀ अविद्यादिकमन्येषां छित्त्वेति ज्ञेयं भगवत्प्रादुर्भावस्थानस्य शुद्धसत्त्वात्मकत्वात्। तत्र न सम्भवति उपदेशादिकन्तु लोकहितार्थं यथोद्धवादाविति विवेचनीयम्॥ १८॥ ❀ ❀ अयमिति। अन्यस्तु विशेषः कपिलो दर्शनकर्त्ता न सुसम्मतः वेदविरुद्धानीश्वरवादात् तथैव हि पाद्मवचनं भाष्यकृद्भिरुद्धृतम्। "कपिलो वासुदेवाख्यस्तत्त्वं साङ्ख्यं जगाद ह। ब्रह्मादिभ्यश्च देवेभ्यो भृग्वादिभ्यस्तथैव च। तथैवासुरये सर्व्ववेदार्थैरुपबृंहितम्। सर्व्ववेदविरुद्धञ्च कपिलोऽन्यो जगाद ह। साङ्ख्यमासुरयेऽन्यस्मै कुतर्कपरिबृंहितम्॥" इति॥१९—२१॥ ❀ ❀ कलाद्याः सर्व्वा एव भगवच्छक्तित्वेन योज्याः॥ २२॥ ❀ ❀ अरुन्धती च पातिव्रत्यशक्तिर्ज्ञेया तन्नमा हि पतीच्छारोधं नाकरणात् युक्तामिति सतीमिति च सर्व्वत्र योज्यम्॥ २३॥ ❀ ❀ एवं ययेति च॥ २४—२७॥

## श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी।

स्वमाययैव भूतानां शेवधिं निधिं सर्व्वाभीष्टप्रदं सात्त्विकज्ञानादिप्रदातारं बिभ्राणं वस्तुतस्तु नित्यदेहमेवमवतीर्णमित्यर्थः॥ १६॥ ❀ ❀ देवहूतिं प्रत्याह ज्ञानं परोक्षं विज्ञानमपरोक्षं ते तव योग उपायस्तेन कर्म्मणां जटा मूलानि वासना उद्धरन् उत्पाटयितुमित्यर्थः। अविद्या स्वरूपाज्ञानं संशया मिथ्याज्ञानानि तन्मयं हृदयग्रन्थिम्॥ १७—१८॥ ❀ ❀ अयं सुसम्मतः इत्यन्यस्तु सिद्धविशेषः कपिलो दर्शनकर्त्ता न सुष्ठु सम्मतः वेदविरुद्धानीश्वरवादात्तथैव हि पाद्मवचनं भाष्यकृद्भिरुद्धृतम् "कपिलो वासुदेवाख्यस्तत्त्वं साङ्ख्यं जगाद ह। ब्रह्मादिभ्यश्च देवेभ्यो भृग्वादिभ्यस्तथैव च। तथैवासुरये सर्व्ववेदार्थैरुपबृंहितम्। सर्व्ववेदविरुद्धञ्च कपिलोऽन्यो जगाद ह। साङ्ख्यमासुरयेऽन्यस्मै कुतर्कपरिबृंहित" मिति॥ १९॥ ❀ ❀ कुमारैः सहेति शेषः। मरीच्यादीन् विवाहार्थमवस्थाप्य नैष्ठिकैरेतैः पञ्चभिः सहितो हंसो ब्रह्मा त्रिधाम तृतीयं धाम स्वर्गस्तस्मादपि परमं सत्यलोकम्॥ २०॥ ❀ ❀ शतधृतौ ब्रह्माणि यथोदितं शास्त्रोदितमनतिक्रम्य विश्वसृजां विश्वसृड्भ्यः॥ २१—२२॥ ❀ ❀ युक्तां योग्याम्॥ २३॥ ❀ ❀ ययेति शान्त्यैव तपोयज्ञज्ञानयज्ञा विस्तृताः सफला भवन्तीत्यर्थः॥ २४॥ ❀ ❀ निमन्त्र्य पृष्ट्वा नन्दिम् हर्षम्॥ २५॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

आद्यं विश्वहेतुं भूतानां शेवधिं निधिं सर्वार्थदं देहमप्राकृतं बिभ्राणं मायया कृपया अवतीर्णमहं वेद॥ १६॥ ❀ ❀ अथ देवहूतिं प्रत्याह। ज्ञानेति त्रिभिः। कर्मणां जटाः तन्मूलभूता वासनाः ज्ञानविज्ञानयोर्योगेनोपदेशेन उद्धरन् उद्धरिष्यन् हिरण्यकेशः हिरण्यकेशोपलक्षितनित्यदेहयुक्त एव ते गर्भं प्रविष्टः ते अविद्या संशयग्रन्थिमज्ञानजन्यसंशयग्रन्थिं छित्त्वा अन्येषामज्ञानजन्यसंशयग्रन्थिं छिन्दन् गां विचरिष्यतीत्यन्वयः॥ १७—१९॥ ❀ ❀ हंसः हेयोपादेयवित् ब्रह्मा सहनारदः नारदेन सहितः कुमारैः सहेति शेषः त्रिधाम परमं लोत्रयात्परे महरादयो लोकाः तेभ्योऽपि श्रेष्ठत्वात् त्रिधाम्नः लोकत्रयात् परमः अत्युत्कृष्टः सत्यलोकस्तम्॥ २०—२२॥ ❀ ❀ युक्तां योग्याम्॥ २३॥ ❀ ❀ शान्तिं शान्त्याख्यगुणश्रेष्ठस्य अधिष्ठात्रीं देवतां यया यज्ञो विष्णुः वितन्यते तत्प्रतिपादकशास्त्राध्ययनादिद्वारा लोके विस्तार्य्यते इत्यर्थः। कर्दमोऽपि तथैव सदारान् समलालयत्सन्तोपितवान्॥ २४॥ ❀ ❀ नन्दिं हर्षं प्राप्ताः निमन्त्र्य पृष्ट्वा॥ २५॥

## श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

एवमग्रिमाज्ञां दत्त्वा कपिलं भगवानयमिति ज्ञापयति—वेदाऽहमिति। अहं वेदेति प्रमाणम्। आद्यः पुरुषो भगवान्, स्वमायया स्वेच्छापूरिकया, लोकानामन्यथात्वं ज्ञापयन्त्या, तादृश्या प्राणिनां निधिरूपं देहं बिभर्ति। कपिल इति लोके प्रसिद्धः। अनेन पुत्रगताः सर्वे गुणा उक्ताः। मुनिमिति तस्मिंस्तव न किञ्चित्कर्तव्यमिति सूचितम्॥ १६॥ ❀ ❀

स्वस्वरूपमुक्त्वा कार्यमाह—ज्ञानेति। स हि ज्ञानम्, विज्ञानम्, योगं च प्रकटयिष्यति। ज्ञानं साङ्ख्यम्, विज्ञानं ससाधनमनुभवः, योगोऽष्टाङ्गः। यानि कर्माण्याधिभौतिकानि तानि साङ्ख्येनोन्मूलितानि भवन्ति; यान्याध्यात्मिकानि तान्यनुभवेन; यान्याधिदैविकानि तानि योगेनेति त्रिभिः कृत्वा कर्मणां परस्परमिश्रणेन या जटाः, ता उद्धरन् ऊर्ध्वमुत्पाटयन्। भविष्यतीत्यर्थात्। त्रितयप्रवर्त्तकत्वाय लक्षणान्याह—हिरण्यकेश इति। सुवर्णवर्णाः केशाः साङ्ख्यसिद्धिहेतवः। पद्मसदृशे ईक्षणे यस्य। अनुभवलक्षणमेतत्। पद्ममुद्रा पदाम्बुजे यस्य। एतद्योगलक्षणम्॥ १७॥ ❀ ❀ एवं कर्दममुक्त्वा देवहूतिमाश्वासयति—एष मानवीति। मनोः पुत्रीति संबोधनात् स्ववंशे भगवदाविर्भावो न दोषाय। कैटभार्दन इति मूलपुरुष उक्तः। क्रियापरो मधुसूदनः, ज्ञानपरः कैटभार्दन इति उभयोः प्रतिबन्धकयोर्नाशात्। अत एवाऽविद्याकृतं संशयग्रन्थिम्, सर्वशास्त्रार्थश्रवणेऽपि हृदये संशयापादकं मोहग्रन्थिम्, छित्वा स्वयमपि लोके तत्प्रचारं कुर्वन्, गां विचरिष्यति॥ १८॥ ❀ ❀ किञ्च। अयं च महान् भविष्यति परमार्थतः, लौकिकालौकिकप्रसिद्धिभ्यां च महान् भविष्यति। तत्र परमार्थोत्कर्षमाह—अयं सिद्धगणाधीश इति। सिद्धा योगादिना; तेषां नियामको यः परमार्थत एव सिद्धो भवति। साङ्ख्याचार्या ये साङ्ख्यस्य प्रवर्तकाः, तैरभिष्टुत इत्यलौकिकोत्कर्षः। लोके च कपिल इत्याख्यां गमिष्यति। एवंविधोऽपि ते कीर्तिवर्द्धनो भविष्यति, देवहूत्याः पुत्रः कपिल इति॥ १९॥ ❀ ❀ एवमाश्वासनं कृत्वा, अग्रिमकार्यसिद्ध्यर्थं ततो गत इत्याह—ताविश्वास्येति। नन्वल्पे कार्ये कथं स्वयमागतो गतश्चेति? तत्राऽऽह—जगत्स्रष्टेति। यस्मिन् कार्ये क्रियमाणे जगत्सृष्टेरभिवृद्धिर्भवति, तदेव कर्तव्यमतो गमनम्, कार्यान्तरार्थं चाऽऽगमनमिति। कुमारैः सनकादिभिः सह, सहनारदश्च। एतेषां विवाहे उपयोगाभावात्। हंस इति क्षीरनीरविवेककर्ता। अतोऽयं मरीच्यादीन् स्थापयित्वा, अन्यांश्च गृहीत्वा गतः[1]। हंस एव यानम्, तेन; प्रसङ्गादन्यत्र गमनाभावः। त्रिधाम त्रयाणां लोकानां धाम तेजोरूपम्, गुणानां वा साम्यस्थानम्। ब्रह्मणो बहूनि स्थानानि सन्तीति तद्व्यावृत्त्यर्थम्—परममिति सत्यलोकं ययौ॥ २०॥ ❀ ❀ गत इति। ततः शतधृतौ ब्रह्मणि गते, ब्रह्मणा प्रेरितः, यथा ब्रह्मणा उदितम्, तथा सादृश्यं[2] रुची विचार्य, विश्वसृजां मध्ये एकैकस्मै एकैकां प्रादात्। ब्रह्मणो गाम्भीर्यैकथनाय शतधृतिप्रयोगः शतं धृतयो यस्येति॥ २१॥ ❀ ❀ विवाहानाह—मरीचय इति सार्द्धाभ्याम्—हविर्भूरिति कन्या। गतिरिति नाम। युक्तां यथायोग्याम्, अन्यथा पुलहपुलस्त्यौ राक्षसप्रकृतिकौ। क्रियेति नाम। क्रतोर्दक्षिणाया एव तुल्यत्वेऽपि सत्यक्रियाया अपि तुल्यत्वमिति सतीं क्रियामित्युक्तम्। अथर्वा वेदाभिमानी देवः, अथर्वाङ्गिरसां ब्रह्मप्रतिपादकत्वात्, तद्भार्या शान्तिः। सोऽपि ब्रह्मपुत्र एवेति ज्ञातव्यम्। नन्वस्य निवृत्तिपरत्वात् किं भार्यया कर्तव्यमित्याशङ्क्याऽऽह—यया यज्ञो वितन्यत इति। यथा ब्रह्मप्रतिपादकत्वम्, तथा यज्ञोपयोगित्वमपि। तथा सति यया शान्त्या यज्ञविस्तारः क्रियते सेयमित्यर्थः। तेभ्यः कन्या दत्वा भूषणादिभिरुपलालयदित्याह—विप्रर्षभानिति। ते ब्राह्मणाः स्वस्वमतानुसारेण विवाहं कृतवन्तः। अतः स्वतन्त्रविवाहे सामर्थ्यम्—विप्रर्षभानिति स्वकन्या अपि तेषु स्त्रीभावमेव प्राप्ता इति सदारान् सस्त्रीकान् सम्यगलालयत्॥ २२॥ २३॥ २४॥ ❀ ❀ तत इति। ततस्ते सर्व एव मन्त्रद्रष्टारः, अलौकिकं ज्ञात्वा, तासु सृष्टिं चिकीर्षवः कृतदारास्तासु कन्यासु कृतं दारत्वं यैरिति। धर्मधर्मिणोरभेदात् कृतदारा इत्युक्तम्। तं श्वशुरम्, निमन्त्र्य गच्छामीत्युक्त्वा, नन्दिं परमां मुदमापन्नाः, तत एव प्रत्येकं विभक्ताः, स्वं स्वमाश्रममण्डलं प्रति प्रातिष्ठन्॥ २५॥

## श्रीगिरिधरकृता बालप्रबोधिनी

त्वयाऽपि एतज्ज्ञातमेवेत्याशयेन सम्बोधयति—मुने इति। भूतानां शेवधिं परमपुरुषार्थहेतुत्वान्निधिभूतं देहं बिभ्राणं कपिलं स्वमायया स्वेच्छया आद्यं जगत्कारणभूतं पुरुषोत्तममेव त्वद्गृहेऽवतीर्णमहं वेदेत्यन्वयः॥ १६॥ ❀ ❀ तदवतारप्रयोजनं वदन् देवहूतिं प्रत्याह—ज्ञानेति। ज्ञानं साङ्ख्यशास्त्रोत्थं परोक्षं तत्त्वज्ञानं, विज्ञानमपरोक्षं दर्शनं, योगोऽष्टाङ्गस्तेन प्राणिकर्मणां जटाः अनेकजन्मसञ्चितसंसारहेतुवासना उद्धरन् उत्पाटयिष्यन्, हिरण्यवत् प्रकाशमानाः केशा यस्य सः, पद्मवदक्षिणी यस्य सः, पद्माकारा मुद्रा रेखा तद्युक्तं पदाम्बुजं यस्य सः, एष कैटभार्दनः कैटभाख्यदैत्यनिहन्ता भगवान् हे मानवि ते गर्भमुदरं प्रविष्टः। अतस्तव अविद्यास्वरूपाज्ञानं संशयस्तज्जनितो देहाद्यात्माभिमानः स एवं संसारहेतुभूतग्रन्थिविशेषस्तं ज्ञानाद्युपदेशेन च्छित्त्वा गां भूमिं विचरिष्यतीति द्वयोरन्वयः॥ १७—१८॥ ❀ ❀ अयं त्वत्पुत्रो लोके कपिल इत्याख्यां नामधेयं गन्ता गमिष्यति प्राप्स्यतीन्वयः। सिद्धगणानां योगिसमूहानां अधीशो नियन्ता साङ्ख्यशास्त्राचार्यैः सुसम्मतः सत्कृतः ते तव कीर्तिवर्धनश्च भविष्यति॥ १९॥ ❀ ❀ एवं तौ कर्दमं देवहूतिं चाश्वास्य सान्त्वयित्वा जगतः स्रष्टा तथापि हंसः स्वकीयत्वाभिमानराहित्येन शुद्धो ब्रह्मा मरीच्यादीन् विवाहार्थमवस्थाप्य कुमारैः सनत्कुमारादिभिश्चतुर्भिः—सहेति शेषः—सहनारदः नारदसहितश्चेति नैष्ठिकैरेतैः पञ्चभिः सहितो हंसेन यानेन त्रिधाम तृतीयं धाम स्वर्गस्तस्य परमं परां काष्ठामापन्नं सत्यलोकं ययौ॥ २०॥ ❀ ❀ ततः हे क्षत्तः शतधृतौ ब्रह्मणि गते सति तेन चोदित आज्ञप्तः कर्दमस्ततस्तदनंतरं विश्वसृजां विश्वसृग्भ्यो मरीच्यादिभ्यः

---

१. समागतः क. च. २. सादृश्यं तु क. घ. सादृश्यं रुचिम्. ग.।

स्वदुहितृर्यथोचितं शीलरुच्याद्यनुरूपं यथा स्यात्तथा प्रादात् प्रायच्छत् । यथोदितमिति पाठेऽपि ब्रह्मणा यथाशीलमित्युक्तत्वा दयमेवार्थः ॥ २१ ॥ ❀ ❀ कस्मै कां कन्यां प्रादादित्यपेक्षायामाह—मरीचये इति सार्द्धाभ्यां द्वाभ्याम् ॥ २२ ॥ ❀ ❀ युक्तां वयश्शीलादिभिर्योग्यामित्यर्थः । इदं विशेषणं सर्वासामपि ज्ञेयम् । सतीं साध्वीम् ॥ २३ ॥ ❀ ❀ यया शान्त्या यज्ञो वितन्यते समृद्धः क्रियते ताम्, शान्त्यधिष्ठात्रीं देवतामित्यर्थः । अथर्वाऽपि ब्रह्मपुत्रो ज्ञेयः । समलालयत् प्रियवस्तुदानप्रियवचनादिभिः सन्तोषितवानित्यर्थः ॥ २४ ॥ ❀ ❀ ततश्च ते ऋषयस्तं निमन्त्र्य गमनानुज्ञां सम्प्राप्यं नन्दिमापन्नाः हर्षं प्राप्ताः सन्तः स्वं स्वमाश्रममण्डलं प्रातिष्ठन् जग्मुः ॥ २५ ॥

## हिन्दी अनुवाद

मुने ! मैं जानता हूँ, जो सम्पूर्ण प्राणियोंकी निधि हैं—उनके अभीष्ट मनोरथ पूर्ण करनेवाले हैं, वे आदिपुरुष श्रीनारायण ही अपनी योगमायासे कपिलके रूपमें अवतीर्ण हुए हैं ॥ १६ ॥ ❀ ❀ [फिर देवहूतिसे बोले—] राजकुमारी ! सुनहरे बाल, कमल-जैसे विशाल नेत्र और कमलाङ्कित चरणकमलोंवाले शिशुके रूपमें कैटभासुरको मारनेवाले साक्षात् श्रीहरिने ही, ज्ञान-विज्ञानद्वारा कर्मोंकी वासनाओंका मूलोच्छेदन करनेके लिये, तेरे गर्भमें प्रवेश किया है। ये अविद्याजनित मोहकी ग्रन्थियोंको काटकर पृथ्वीमें स्वच्छन्द विचरेंगे ॥ १७-१८ ॥ ❀ ❀ ये सिद्धगणोंके स्वामी और सांख्याचार्योंके भी माननीय होंगे। लोकमें तेरी कीर्तिका विस्तार करेंगे और 'कपिल' नामसे विख्यात होंगे ॥ १९ ॥ ❀ ❀ श्रीमैत्रेयजी कहते हैं—विदुरजी ! जगत्की सृष्टि करनेवाले ब्रह्माजी उन दोनोंको इस प्रकार आश्वासन देकर नारद और सनकादिको साथ ले, हंसपर चढ़कर ब्रह्मलोकको चले गये ॥ २० ॥ ❀ ❀ ब्रह्माजीके चले जानेपर कर्दमजीने उनके आज्ञानुसार मरीचि आदि प्रजापतियोंके साथ अपनी कन्याओंका विधिपूर्वक विवाह कर दिया ॥ २१ ॥ ❀ ❀ उन्होंने अपनी कला नामकी कन्या मरीचिको, अनसूया अत्रिको, श्रद्धा अङ्गिराको और हविर्भू पुलस्त्यको समर्पण की ॥ २२ ॥ ❀ ❀ पुलहको उनके अनुरूप गति नामकी कन्या दी, क्रतुके साथ परम साध्वी क्रियाका विवाह किया, भृगुजीको ख्याति और वसिष्ठजीको अरुन्धती समर्पण की ॥ २३ ॥ ❀ ❀ अथर्वा ऋषिको शान्ति नामकी कन्या दी, जिससे यज्ञकर्मका विस्तार किया जाता है। कर्दमजीने उन विवाहित ऋषियोंका उनकी पत्नियोंके सहित खूब सत्कार किया ॥ २४ ॥ ❀ ❀ विदुरजी ! इस प्रकार विवाह हो जानेपर वे सब ऋषि कर्दमजीकी आज्ञा ले अति आनन्दपूर्वक अपने-अपने आश्रमोंको चले गये ॥ २५ ॥

स चावतीर्णं त्रियुगमाज्ञाय विबुधर्षभम् । विविक्त उपसङ्गम्य प्रणम्य समभाषत ॥ २६ ॥
अहो पापच्यमानानां निरये स्वैरमङ्गलैः । कालेन भूयसा नूनं प्रसीदन्तीह देवताः ॥ २७ ॥
बहुजन्मविपक्वेन सम्यग्योगसमाधिना । द्रष्टुं यतन्ते यतयः शून्यागारेषु यत्पदम् ॥ २८ ॥
स एव भगवानद्य हेलनं नगणय्य नः । गृहेषु जातो ग्राम्याणां यः स्वानां पक्षपोषणः ॥ २९ ॥
स्वीयं वाक्यमृतं कर्तुमवतीर्णोऽसि मे गृहे । चिकीर्षुर्भगवान् ज्ञानं भक्तानां मानवर्धनः ॥ ३० ॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

स च मुनिः त्रियुगं विष्णुम् । विविक्ते रहसि ॥ २६ ॥ ❀ ❀ पापच्यमानानां भृशं दह्यमानानाम् । निरये संसारे स्वीयैरमंगलैः पापैः ॥ २७ ॥ ❀ ❀ कुतः सर्वा देवताः प्रसन्ना इति ज्ञातमलभ्यलाभादित्याह द्वाभ्याम् । बहुषु जन्मसु विपक्वेन सुसिद्धेन सम्यग्योगो भक्तियोगस्तस्मिन्समाधिरैकाग्र्यं तेन शून्यागारेषु विविक्तस्थानेषु यस्य तव पदम् ॥ २८ ॥ ❀ ❀ हेलनमवज्ञां लाघवं न गणय्यागणयित्वा उचितमेव तवैतदित्याह । यस्त्वं स्वानां भक्तानां पक्षं पुष्णासीति तथा सः ॥ २९ ॥ ❀ ❀ एतत्प्रपंचयति द्वाभ्याम् । स्वयमेवावतीर्णोऽसि स्ववाक्यं "तव पुत्रो भविष्यामि" इति यत्तत्सत्यं कर्तुं ज्ञानं ज्ञानसाधनं सांख्यं च चिकीर्षुः सन् ॥ ३० ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

इह जगति ॥ २७ ॥ ❀ ❀ पदं स्वरूपम् ॥ २८ ॥ ❀ ❀ ग्राम्याणां विषयलोलुपानाम् ॥ २९ ॥ ❀ ❀ स्वीयं वाक्यं "सहाहं स्वांशकलया" इत्यादि रूपम् ॥ ३० ॥

---

१. प्रा० पा०—यत् ।

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनीव्याख्या ।

कलौ छन्नत्वात्त्रियुगम् । सर्वप्रत्यक्षे पुत्रे नत्यसम्भवाद्रहसि प्रणम्येति तस्य दास्यनिष्ठा दर्शिता ॥ २६ ॥ ❀ ❀ कालेन तपसा संस्कृतेनेति देवताप्रसादस्य कारणत्वमलभ्यलाभरूपभगवज्जन्मनः कार्य्यत्वं तथाच फलेन फलकारणमनुमीयत इति न्यायात् भगवज्जन्मना सर्वदेवताप्रसादोऽनुमीयते । तदुक्तं द्वितीये "एतावानेव यजतामिह निःश्रेयसोदयः । भगवत्यचलो भावो यद्भागवतसङ्गत" इति ॥ २७ ॥ ❀ ❀ बह्विति युग्मकम् । ज्ञातमनुमितम् । पदं स्वरूपं यतन्त एव नतु पश्यन्तीत्यलभ्यत्वमुक्तम् । श्रीभगवत्यवज्ञाया असम्भवाल्लाघवे लक्षणा पुत्रतयाविर्भूते तस्मिंल्लाघवस्यौचित्यात् एतद् लाघवागणनेन जन्मस्वीकरणं भक्तानां शुद्धानाम् ॥ २८ ॥ २९ ॥ ❀ ❀ एतद्भक्तपक्षपोषणम् । भक्तानामस्मदाद्याश्रयाणां ब्रह्मादीनाम् ॥ ३० ॥

### श्रीमद्वीरराघवव्याख्या

हे भरतर्षभ ! सः कर्दमः त्रीणि युगानि ज्ञानशक्त्यादिगुणयुग्मानि यस्य तं भगवन्तं कपिलरूपेणावतीर्णमाज्ञाय विदित्वा विविक्ते एकान्ते उपसङ्गम्य समीपमेत्य प्रणम्य सम्यक् मधुराक्षरं यथा तथाऽभाषत ॥ २६ ॥ ❀ ❀ भाषणमेवाह । अहो इत्यष्टभिः । तावत्सामान्येन देवताप्रसादो दुर्लभ इत्याह । स्वीयैरमङ्गलैः दुष्कृतैः निरये संसारे पापच्यमानानां भृशं दह्यमानानां भूयसा कालेन देवताः प्रसीदन्ति प्रसन्ना भवन्ति नूनं निश्चयः अहो आश्चर्यम् ॥ २७ ॥ ❀ ❀ वाङ्मनसागोचरस्वरूपस्वभावस्त्वं भक्तेषु स्वसौलभ्यं प्रदर्शयन्नस्मद्भाग्यवशान्नयनविषयतां गतोऽसीत्याह । बह्वित्यादिना त्रयेण । बहुभिर्जन्मभिर्विपक्वेन परिपाकदशामापन्नेन बहुजन्मानुष्ठितज्ञानकर्मयोगाभ्यामनुगृहीतेनेत्यर्थः । सम्यग्योगसमाधिना सम्यग्योगो भगवद्भक्तियोगो यस्मिंस्तेन समाधिना चित्तैकाग्र्येण यस्य तव पदं स्वरूपं शून्यागारेषु रागादिरहितेषु हृदयस्थानेषु द्रष्टुं साक्षात्कर्त्तुं यतन्ते अनेन प्राकृतमनआद्यगोचरत्वमुक्तम् ॥ २८ ॥ ❀ ❀ स एष भगवान् भवान् हेलनं कथमहं निःसमाभ्यधिको ग्राम्याणां गृहेषु निरयप्रायेषु जायेयेत्यवज्ञामविगणय्य ग्राम्याणां नोऽस्माकं गृहेषु जातोऽवतीर्णः । भक्तसुलभस्य भवतस्त्विदमुचितमेवेत्याह यस्त्वं स्वानां स्वभक्तानां पक्षं पोषयति तथा सः । अनेन भक्तसौलभ्यमुक्तम् ॥ २९ ॥ ❀ ❀ स्वीयं वाक्यमहं च स्वांशकलयेति वाक्यमृतं सत्यं कर्त्तुं मम गृहेऽवतीर्णोऽसि इदं सङ्कल्पितकरणमस्मद्भाग्यमेवेति भावः । अवतारप्रयोजनमाह । ज्ञानं ज्ञायतेऽनेनेति ज्ञानसाधनं सांख्यं तन्त्रं तच्चिकीर्षुः कर्त्तुमिच्छुः भक्तानां मानं बहुमानं वर्द्धयतीति तथा सन् अवतीर्णोऽसि साधून्परित्रातुं लोकोज्जिजीविषया सांख्यतन्त्रं च कर्त्तुमवतीर्ण इत्यर्थः ॥ ३० ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली ।

सूचीकटाहन्यायेन कर्दमजामातृणामनवसरादुक्तं कथाप्रसंगं विश्राव्य पुनरपि कर्दमचरितशेषं वक्ति । स चेति । कृतादिषु त्रिषु युगेषु प्रादुर्भावो यस्य स त्रियुगस्तं "युगत्रयावतारेण त्रियुगश्चेति कथ्यत" इति च आत्मना ब्रह्मवचनेन च सम्यक् ज्ञात्वा विविक्त एकान्ते ॥ २६ ॥ ❀ ❀ स्वाभीष्टश्रवणायोपोद्घातं रचयति । अहो इति । निरये नरकतुल्ये संसारे देवतास्तात्त्विका इन्द्रियाभिमानिदेवताः ॥ २७ ॥ ❀ ❀ भगवत्प्रसादं विना देवताप्रसादेन किं स्यादित्याशङ्क्य तत्प्रसादाविनाभूतोऽन्यथा तत्प्रसाद एव न स्यादतस्तस्य श्रीनारायणस्य प्रसादो नैकेन जन्मना किन्तु बहुभिर्जन्मभिः योग्यानामेवोपासकानां स्यादित्याह—बहुजन्मेति । यतयो निर्जितेन्द्रियग्रामाः शून्यागारेषु एकान्तस्थानेषु मधुवनादिषु समीचीनेन निर्दोषेण भक्तियोगेनाष्टाङ्गयोगेन वा युक्तेन समाधिना संप्रज्ञातसंज्ञेन यस्य पदं स्वरूपम् ॥ २८ ॥ ❀ ❀ यश्च स्वानां स्वभक्तानां पक्षं पुष्णातीति पक्षपोषणः स एव भगवानद्य ग्राम्याणां विषयलोलानां नो हेलनमवज्ञां न गणय्यानादृत्य केवलानुग्रहलक्षणबुद्ध्या गृहेषु जातः प्रादुर्भूत इत्यन्वयः न इत्युक्तानुसारेण गृहेष्विति बहुवचनं यद्वा मादृशानामिति वा ॥ २९ ॥ ❀ ❀ किंच भक्तानामभिवर्द्धनस्तेषामेव शर्म सुखं चिकीर्षुस्त्वं तव पुत्रत्वेनावतरिष्यामीति स्वीयं वाक्यमृतं सत्यं कर्तुं मे गृहे भार्यायामवतीर्णोऽसीत्यन्वयः । भक्तशर्मकरणाय तदभिमानवर्द्धनाय स्ववाक्यसत्यत्वकरणाय चेत्यवातर इति गम्यते ॥ ३० ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

साधारण्योऽपि देवता भूयसा कालेन प्रसीदन्ति त्वं न तथेत्याह । बह्विति युग्मकेन । तत्रासाधारणत्वमाह प्रथमेन योगोऽष्टाङ्गः स्वभक्तसम्बन्धमात्रवशत्वमाह । द्वितीयेन स्वानां शुद्धभक्तानां पक्षानुगतः ॥ २८—२९ ॥ ❀ ❀ तादृशवाक्यत्वे हेतुः । भक्तानामस्मदाद्याश्रयरूपाणां ब्रह्मादीनामपि ॥ ३० ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

स च मुनिः ॥ २६ ॥ ❀ ❀ मद्गृहे त्वदाविर्भावे निरुपाधिस्त्वत्कृपैव कारणं नतु मयि किञ्चिल्लक्षणमस्तीत्याह । अहो इति त्रिभिः । अत्र लोके त्रिविधा जना दृश्यन्ते देवतान्तरोपासका ब्रह्मोपासका भगवदुपासकाश्च । तत्राद्यानामुपासनाफलदशां दर्शयति । पापच्यमानानां निरये संसारे दन्दह्यमानानां भूयसेति एकस्मिन्नपि जन्मनि चेत् प्रसीदन्ति तदपि

भूयसैव कालेन न तु शीघ्रमेव ततश्च तत्तत्कामितानि फलान्यपि ददति ॥ २७ ॥ ❀ ❀ द्वितीयानान्तु बहुभिरेव जन्मभिः सिद्धिः सम्भाव्यते इत्याह । बह्विति । सम्यगेव योगैर्यः समाधिस्तेन यस्य तव पदं निर्विशेषं स्वरूपं द्रष्टुं साक्षात् कर्तुं यतन्ते तृतीयेषु मध्ये वयमतिमन्दास्तदपि तत्कृपा महिमा अपार एवेत्याह । स एवेति । हेलनं लोककृतावज्ञां स्वलाघवं नगणय्य अगणयित्वा स्वभाव एवायं ते यद्भक्ताभासानप्युत्कर्षयसीत्याह । यस्त्वं स्वानां भक्तानां पक्षं पुष्णासीति तानेवात्मीयान् जानासीति भावः ॥ २८—२९ ॥ ❀ ❀ एतदेव प्रपञ्चयति द्वाभ्याम् । ज्ञानं ज्ञानसाधनं साङ्ख्यं चिकीर्षुस्तदपि ज्ञानिभ्यः सकाशादपि भक्तानां मानमादरं वर्द्धयतीति सः भक्तिं विना भूतज्ञानस्याकिञ्चित्करत्वेन व्यवस्थापनादिति भावः ॥ ३० ॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

त्रीणि युगानि ऐश्वर्य्यादिलक्षणानि यस्य तम् ॥ २६ ॥ ❀ ❀ निरये संसारे अमङ्गलैः रागादिभिः पापच्यमानानां सन्तप्यमानानाम् ॥ २७ ॥ ❀ ❀ योगे भक्तियोगे समाधिश्चित्तैकाग्र्यं तेन ॥ २८ ॥ २९ ॥ ३० ॥

## श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

एवमैहिकं सर्वं समाप्य तस्य मुक्तिमाह यावदध्यायपरिसमाप्ति—स चावतीर्णमित्यादिना । आज्ञां भगवतो लब्ध्वा तस्यैवाज्ञानुसारतः । यदा सर्वं परित्यज्य विचरेत्स हि मुच्यते ॥ १ ॥ भगवन्तं ज्ञात्वा, स्तुत्वा, पश्चात्प्रार्थनीयमिति नियमादौ ज्ञानमिति वक्तुं तस्य पुत्रे प्रतिपत्तिमाह—स चाऽवतीर्णमिति । त्रियुगो धर्मो यज्ञात्मको भगवान् । यथा सृष्टौ क्रियात्मा वराहः, तथा ज्ञानात्मकः कपिल इति, अन्यथा सृष्टिरनन्ता स्यात्, भगवल्लीलात्वात् । विबुधर्षभं देवोत्तमं विष्णुम् । सैवा हि परमा देवतेति वैदिके मार्गे देवतैव सर्वोत्तमा । ब्रह्माऽपि देवतैव, तथा आत्मा । अतो विबुधश्रेष्ठत्वमुक्तम् । प्रतिवासिषु ऋषिषु परिज्ञानाभावार्थं भार्यायाश्च दुःखाभावार्थम्, विविक्ते एकान्ते, उपसङ्गम्य निकटे गत्वा, पादौ स्पृष्ट्वा, प्रणम्य, भगवानिति निश्चित्य, सम्यक् स्तोत्ररूपं वाक्यमभाषत ॥ २६ ॥ ❀ ❀ अहो इति । स्वगृहे भगवदवतारो न स्वधर्मसाध्यः, तादृशधर्माभावात् । किन्तु सर्वदेवानां प्रसादसाध्यः, यतस्ते भगवदवयवाः । प्रसादेऽपि नोऽस्माकं धर्मोऽस्ति, किन्तु बहुकालदुःखानुभावे दीनत्वे सति दयया प्रसादः । शास्त्रे तु देवतानां न दयया प्रसादः, किन्तु कर्मणैवेति विपरीतदर्शनादहो इत्याश्चर्यम् । स्वैरमङ्गलैः पापैरनन्यभोग्यैः, अत्यन्तं पच्यमानानां महता कालेन देवताः प्रसीदन्ति नूनम्, सात्त्विकस्वभावत्वात् । अस्य च निस्तारोपायाज्ञानात् प्रसाद आवश्यकः ॥२७॥ ❀ ❀ ननु किमेतद्दुर्लभम् ? यतः प्रसादफलत्वेन वर्ण्यते । तत्राऽह—बहुजन्मेति । बहुभिरेव जन्मभिः साधितो योगः पक्वश्चेद्भवति, तदा चित्तं निर्मलं भवति । तदा भगवति दिदृक्षा जायते, न तु दर्शनम् । एवं दुर्लभदर्शनश्चेद्गृहे अवतरति, तदा किं भाग्यं वर्णनीयम् । योगेन यः समाधिः, नतु चिन्तनादिना शून्यागारेष्विति प्रव्रज्या, तद्धर्मनिरतत्वम्, निर्भयं चोक्तम् । यत्पदं हृदये स्फुरितम् ॥ २८ ॥ ❀ ❀ तर्हि नाऽयं स भविष्यतीत्याशङ्क्याऽऽह—स एवेति । स एवाऽयं भगवान् । ब्रह्मवाक्यात्, स्वानुभवात्, भगवद्वाक्याच्चाऽवसीयते । ननु पुरुषोत्तमः कथमपमानन्नं सोढ्वा ग्राम्येष्ववतरिष्यति ? न हि बाधितमर्थं देवोऽपि बोधयति । स हि सर्वतो मानपात्रम्, अत आह—अद्य नो हेलनमवगणय्य । इतः पूर्वमेव मर्यादा स्थिता, अद्यैवैवं जातम् । अत एव ग्राम्याणां गृहेषु जातः । कस्यचित्पुत्रः, कस्याश्चिद् भ्राता, श्यालको, मातुल इति बहुधा सम्बन्धोत्पत्तेर्गृहेष्विति बहुवचनम् । अद्य तथा करणे हेतुः—यः स्वानां पक्षपोषण इति । पूर्वं भगवान् सर्वत्र समः, इदानीं भक्तिमार्गमुत्पाद्य विषमो जात इति स्वानां भक्तानां पक्षस्य पोषणं यस्मात् ॥ २९ ॥ ❀ ❀ किञ्च, यथा वेदाः प्रमाणं तथैव भगवद्वाक्यमिति 'अथाहं स्वांशकलया' इति वाक्यादवतीर्ण इत्याह—स्वीयं वाक्यमिति । अवतीर्णस्तु लोके ज्ञानप्रचारणार्थम्, भक्तानां मानं च वर्द्धयितुं काष्ठवृक्षादिकं परित्यज्य मे गृहेऽवतीर्णोसि, न तु स्वभाग्येन वा, कारणान्तरेण वेति ॥ ३० ॥

## श्रीगिरिधरकृता बालप्रबोधिनी

स च कर्दमः विबुधर्षभं देवश्रेष्ठं त्रियुगं त्रीणि युगानि ज्ञानादयः षड्गुणा यस्य तं भगवन्तमाज्ञाय विविक्ते एकान्ते तमुपसङ्गम्य समीपं गत्वा मूर्ध्ना प्रणम्य सम्यक् विनयपूर्वकमभाषत ॥ २६ ॥ ❀ ❀ तद्भाषणमेव दर्शयति—अहो इत्यष्टभिः । तत्र भगवतोऽनन्तक्रियानुष्ठानजन्यदेवताप्रसादलभ्यत्वं मन्यमान आह—अहो इति । स्वैः स्वीयैरमङ्गलैर्दुष्कृतैः इह निरये नरकवद्दुःखप्रदे संसारे पापच्यमानानां भृशं दह्यमानानां भूयसा कालेन बहुकालयोगध्यानादिसाधनानुष्ठानेन देवताः प्रसीदन्ति प्रसन्ना भवन्ति नूनं निश्चितमेतन्नात्र सन्देहः । दुर्लभलाभेन स्वभाग्यमभिनन्दति—अहो इति ॥ २७ ॥ ❀ ❀ कथं ज्ञायते देवताः प्रसन्ना इति चेत् दुर्लभलाभादेव, किं त्वया दुर्लभं प्राप्तमित्यपेक्षायां स्वगृहे तव प्रादुर्भाव एव । कथमेतस्य दुर्लभत्वमित्यत आह—बह्वित्यादित्रयेण । बहुजन्मविपक्वेन बहुषु जन्मसु निरन्तरसादरानुष्ठानात् परिपाकदशामापन्नेन सम्यक् भक्तिपूर्वको योगो यमनियमादिलक्षणो यस्मिन् तेन समाधिना चित्तैकाग्र्येण यस्य तव पदं स्वरूपं शून्यागारेषु निर्जनस्थानेषु यतयः सर्वतो विरक्ताः सन्न्यासिनो द्रष्टुं यतन्ते यत्नं कुर्वन्ति । शून्यागारेष्विति बहुवचनं विक्षेपकरं तत्तत्स्थानत्यागेन स्थानान्तरस्वीकारसूचकम् ॥ २८ ॥ ❀ ❀ स भगवान् ज्ञानैश्वर्यादिपूर्ण एव भवान् नोऽस्माकं हेलनमवज्ञानं न

गणय्य अगणयित्वा अद्य नो गृहेषु जात इति द्वयोरन्वयः। कथमवज्ञानमित्यपेक्षायामाह—ग्राम्याणामिति। गृहस्थानामविवेकित्वेन तत्र तैस्तिरस्कारस्यावश्यम्भावादित्याशयः। कस्यचिद् भ्राता कस्यचित्पुत्रः कस्यचिन्नप्तेत्येवं सम्बन्धस्य बहुत्वान्न इति गृहेष्विति च बहुवचनम्। भवतस्त्विदं भक्तसुलभत्वमुचितमेवेत्याशयेनाह—य इति। यो भवान् स्वानां भक्तानां पक्षं पोपयतीति तथा सः॥ २९॥ ❀ ❀ किञ्च अथाहं स्वांशकलयेति स्वीयं वाक्यमृतं सत्यं कर्तुं मे मम गृहेऽवतीर्णोऽसि। तदवतारप्रयोजनमाह—ज्ञानं ज्ञानसाधनं साङ्ख्यशास्त्रं चिकीर्षुः कर्तुमिच्छुरिति। तर्ह्यन्यं विहाय त्वद्गृहेऽवतारः कथमत आह—भक्तानामस्माकं मानं सम्मानं वर्द्धयते इति तथा। अस्मत्सम्मानार्थमिति भावः। तत्र हेतुमाह—भगवानिति। भगवान्यदि सन्मार्गं न प्रवर्त्तयेत् भक्तसन्मानं च न कुर्यात्तर्हि कः कुर्यादिति भावः॥ ३०॥

### हिन्दी अनुवाद

कर्दमजीने देखा कि उनके यहाँ साक्षात् देवाधिदेव श्रीहरिने ही अवतार लिया है, तो वे एकान्तमें उनके पास गये और उन्हें प्रणाम करके इस प्रकार कहने लगे॥ २६॥ ❀ ❀ 'अहो! अपने पापकर्मोंके कारण इस दुःखमय संसारमें नाना प्रकारसे पीड़ित होते हुए पुरुषोंपर देवगण तो बहुत काल बीतनेपर प्रसन्न होते हैं॥ २७॥ ❀ ❀ किंतु जिनके स्वरूपको योगिजन अनेकों जन्मोंके साधनसे सिद्ध हुई सुदृढ समाधिके द्वारा एकान्तमें देखनेका प्रयत्न करते हैं, अपने भक्तोंकी रक्षा करनेवाले वे ही श्रीहरि हम विपयलोलुपोंके द्वारा होनेवाली अपनी अवज्ञाका कुछ भी विचार न कर आज हमारे घर अवतीर्ण हुए हैं॥ २८-२९॥ ❀ ❀ आप वास्तवमें अपने भक्तोंका मान बढ़ानेवाले हैं। आपने अपने वचनोंको सत्य करने और सांख्ययोगका उपदेश करनेके लिये ही मेरे यहाँ अवतार लिया है॥ ३०॥

तान्येव तेऽभिरूपाणि रूपाणि भगवंस्तव। यानि यानि च रोचन्ते स्वजनानामरूपिणः॥ ३१॥

त्वां सूरिभिस्तत्त्वबुभुत्सयाद्धा सदाभिवादार्हणपादपीठम्।
ऐश्वर्यवैराग्ययशोऽवबोधवीर्यश्रिया पूर्तमहं प्रपद्ये॥ ३२॥
परं प्रधानं पुरुषं महान्तं कालं कविं त्रिवृतं लोकपालम्।
आत्मानुभूत्यानुगतप्रपञ्चं स्वच्छन्दशक्तिं कपिलं प्रपद्ये॥ ३३॥
आ स्माभिपृच्छेऽद्य पतिं प्रजानां त्वयावतीर्णर्ण उताप्तकामः।
परिव्रजत्पदवीमास्थितोऽहं चरिष्ये त्वां हृदि युञ्जन्[1] विशोकः॥ ३४॥

### श्रीभगवानुवाच

मया प्रोक्तं हि लोकस्य प्रमाणं सत्यलौकिके[2]। अथाजनि मया तुभ्यं यदवोचमृतं मुने॥ ३५॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

यानि तवालौकिकानि चतुर्भुजादिरूपाणि तान्येव तेऽभिरूपाणि योग्यानि यानि च स्वजनानां रोचन्ते मनुष्यसरूपाणि तान्यपि ते रोचन्त इत्यर्थः। अरूपिणः प्राकृतरूपरहितस्य॥ ३१॥ ❀ ❀ अभिवादार्हं पादपीठं यस्य ऐश्वर्यादिभिः पूर्तं पूर्णम्॥ ३२॥ ❀ ❀ ऐश्वर्यादिकं विवृण्वन्नाह। परं परमेश्वरम्। तत्र हेतुः। स्वच्छंदाः स्वाधीनाः शक्तयो यस्य ता एवाह। प्रधानं प्रकृतिरूपं पुरुषं तदधिष्ठातारं महान्तं महत्तत्त्वरूपं कालं तेषां क्षोभकं त्रिवृतमहंकाररूपं लोकात्मकं तत्पालात्मकं च तदेवं मायया प्रधानादिरूपतामुक्त्वा चिच्छक्त्या निष्प्रपंचतामाह। आत्मानुभूत्या चिच्छक्त्याऽनुगतः स्वस्मिन् लीनः प्रपंचो यस्य तम्। कविं सर्वज्ञम्। प्रधानाद्याविर्भावलयसाक्षिणमित्यर्थः॥ ३३॥ ❀ ❀ संन्यासानुज्ञां प्रार्थयते। आस्माभिपृच्छे यत्किंचिदभिपृच्छामीत्यर्थः। त्वया पुत्ररूपेणावतीर्णानि निवृत्तानि ऋणानि दैवादिरूपाणि यस्य स आप्तकामश्चाहं परिव्रजतां संन्यासिनां पदवीं मार्गमाश्रितः संस्त्वां युंजन् स्मरन्विचरिष्यामि॥ ३४॥ ❀ ❀ अहं तावज्ज्ञानोपदेशायैव त्वद्गृहेऽवतीर्णः अतस्तव गृहे वसतोऽपि मुक्तिः सुलभैव। यद्यवश्यं गन्तव्यमेवेत्याग्रहस्तथापि मामेवानुस्मरन् गच्छेत्याशयेनाह। मयेति षड्भिः। सत्यलौकिके वैदिके लौकिके च कृत्ये स्वोक्तस्य प्रामाण्यमभिदर्शयति यद्यस्मात्तुभ्यं तव पुत्रो भविष्यामीत्यवोचम्। अथ अत एव तदृतं सत्यं यथा भवति तथा मयाऽजनि जन्म स्वीकृतम्॥ ३५॥

---

१. प्रा० पा०—युञ्जन्नशोकः। २. प्रा० पा०—लौकिकम्।

## श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

सम्यगुक्तस्तं प्रदक्षिणीकृत्य ॥ ४१—४२ ॥ ❀ ❀ यत् सदसतोः भद्राभद्रात् व्यावहारिकवस्तुनः परं तस्मादतीतं तन्मनो ब्रह्मणि युञ्जानः कीदृशे गुणानां सौन्दर्य्यादिमाधुर्य्यैश्वर्य्यरूपाणां चिन्मयानामवभासः प्रकाशो यत्र तस्मिन् विगुणे विगतप्राकृतगुणे एकभक्त्या अव्यभिचारिण्या भक्त्यैव अनुभाविते नेत्रादिसर्व्वेन्द्रियानुभवगोचरतां प्रापिते ॥ ४३ ॥ ❀ ❀ ततश्च व्यावहारिके सर्व्ववस्तुनि निरहंकृतीत्यादि स्वस्मिन्नेव भक्तिः कियत्युद्भवति भविष्यतीति दृग्दृष्टिर्यस्य सः प्रत्यक् बहिर्वृत्तिरहिता अत एव प्रशान्ता धीर्यस्य सः ॥ ४४ ॥ ❀ ❀ एतावदद्भुतस्वभावत्वं तस्य सहसैव कथमभूत्तत्राह। वासुदेव इति। प्रतीचो जीवस्यात्मनि भक्तिभावेन भजनोत्थेन भावेन परेण श्रेष्ठेन प्रेम्णा हेतुना लिङ्गदेहनाशान्नष्टा अपि पुनर्लब्धा आत्मनश्चित्तमनोबुद्ध्यादयोऽप्राकृता येन सः। ननु पूर्व्ववदमी अपि बन्धहेतवो भवन्ति तत्राह। मुक्तबन्धनः 'अनावृत्तिः शब्दात्।४।४।२।३।' इति न्यायात् ॥ ४५ ॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

सम्यगुक्तः ॥ ४१ ॥ ❀ ❀ आत्मा परमात्मैवैकः शरणं यस्य सः मौनमन्तर्वृत्तित्वम् ॥ ४२ ॥ ❀ ❀ गुणावभासे कल्याणगुणवति विगुणे हेयगुणरहिते यद्ब्रह्म सदसतोः स्थूलसूक्ष्मयोः परं तस्मिन् ॥ ४३ ॥ ❀ ❀ निरहङ्कृतिः देहात्माभिमानशून्यः निर्ममः देहादौ ममतारहितः समदृक् अभिसमदृक् स्वदृक् देहेन्द्रियमनोबुद्धिप्राणादिविलक्षणज्ञानस्वरूपज्ञातृत्वादिधर्मकाणुपरिमाणभगवदायत्तस्वरूपानुसन्धानवान् अत एव प्रत्यगात्मनि जीवे प्रशान्ता धीर्यस्य सः ॥ ४४ ॥ ❀ ❀ वासुदेवे ब्रह्मणि प्रत्यगात्मनि प्रत्यञ्चो जीवस्य आत्मनि आश्रये अंशिनि यः परः ध्रुवानुस्मृत्याख्यः भक्तिभावस्तेन लब्धः साक्षाद्दृष्टः आत्मा वासुदेवपरब्रह्मादिशब्दाभिधेयो येन सः। मुक्तानि बन्धनानि वासुदेवादन्यत्र रागादीनि यस्य सः ॥ ४५ ॥

## श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

एवं स्वगृहीतदेहद्वयस्य साऽऽत्मनः प्रतिपत्तिं श्रुत्वा स्वरूपप्राप्तिपर्यन्तं कृतवानित्याह—एवमिति सप्तभिः। आदौ ततो निर्गमनं व्रतानि च बहिस्तथा। आन्तरं मनसा ध्यानं दोषाभावस्तथान्तरः ॥ १ ॥ ततो गुणाश्च तत्रैव ततो ज्ञानोदयस्तथा। ततः फलस्य सम्प्राप्तिः प्राप्ते ज्ञाने त्वियं क्रिया ॥ २ ॥ आदौ ततो निर्गमनमाह—एवमिति। तेन कपिलेन पूर्वोक्तप्रकारेणोदितः। तथा स्वयं चेन्न कुर्यादन्योऽपि न करिष्यतीति स्वयं प्रजापतिः पुत्रं प्रदक्षिणीकृत्य, तद्वाक्यात्प्रीतोवनमेव जगाम। हेत्वाश्चर्यम्। भगवन्तं विहाय वनं गत इति वाक्याच्च गतः ॥ ४१ ॥ ❀ ❀ गतस्य व्रतान्याह—व्रतमिति। मौनं वाग्व्यापारपरित्यागः, तद्व्रतत्वेन गृहीतमादेहपर्यन्तम्। अनेन नामप्रपञ्चः परित्यक्तो भवति। रूपप्रपञ्चपरित्यागमप्याह—आत्मैकशरण इति। आत्मैवैकं शरणं यस्य 'अयमात्मा ब्रह्म' इति। मुनिरिति वासनामयप्रपञ्चनिवृत्तिः। एवं स्वकर्तृकप्रपञ्चपरित्यागमुक्त्वा; अन्यकृतस्याऽपि सम्बन्धाभावमाह—निःसङ्ग इति। निर्गतः सङ्गो यस्मात्। परिभ्रमः स्वधर्मः। अनग्निः पाकादिरहितः। अनिकेतनो गृहादिरहितश्च। अग्निगृहसम्बन्धराहित्यं यथा भवति तथा व्यचरत्। नाग्निस्पृष्टं भक्षयति, न क्वापि गृहं प्रविशतीत्यर्थः ॥ ४२ ॥ ❀ ❀ आन्तरमाह—वैदिकोऽयमुपनिषत्प्रकारेणाऽऽवृत्तचक्षुर्भूत्वा मनो ब्रह्मणि नियम्य, अहङ्कारादिरहितः सन् भक्तिं प्राप्य, ज्ञानं च, भागवतीं गतिं प्राप्त इति पञ्चमेन सम्बन्धः। तद्ब्रह्मप्रपञ्चातीतमुभयरूपं परिज्ञाय, माहात्म्यार्थमेकं परिज्ञाय, अपरस्मिन्मनो निवेश्य। तच्च ब्रह्म कार्यकारणातीतमपि गुणानामवभासो यत्रेति। कारणगुणप्रवर्तकं, सदाद्यंशैश्च गुणानुत्पादकमिति। तत्र मनसः स्थापने उपायमाह—एकभक्त्याऽनुभावित इति। अनन्यया भक्त्या प्रेम्णैव तत्र मनः स्थिरं भवति। भक्त्या च तत्रानुभावो जनित इति न निःसङ्गत्वादयो ब्रह्मधर्मा बाधकाः ॥ ४३ ॥ ❀ ❀ मनश्चेत्संसक्तं ब्रह्मणि, देहादावहङ्कारः स्वत एव निवृत्तो भवतीत्याह—निरहङ्कृतिरिति। अहङ्कारस्य वृत्तिद्वयमहंममेति। तदुभयमपि नास्तीत्याह—निरहङ्कृतिर्निर्ममश्चेति। चकारादाकृत्यादिष्वपि तदध्यासाऽभावः। तदनन्तरमूर्म्यभावोऽपि जात इत्याह—निर्द्वन्द्व इति। यदेकस्मिन्नागतेऽपरमागच्छति, तत् द्वन्द्वम्; यथा लौकिकसुखानन्तरं दुःखमावश्यकमिति, यथा क्षुत्पिपासे, जरामृत्यू, शोकमोहाविद्यादीनि द्वन्द्वानि। तदा विषयेषु वैषम्यग्रहणे प्रयोजनाभावात् सर्वत्र समदृक् समं ब्रह्म पश्यति। आत्मानमात्मनि वा पश्यतीति स्वदृक्। तदा तस्य बहिर्मुखतयाऽऽत्मस्फूर्तिर्न जातेत्याह—प्रत्यगिति। स स्वयमन्तर्मुखतयैव स्फुरतीत्यर्थः। बुद्ध्या हि विक्षिप्तया बहिर्मुखो भवति, तदपि नास्तीत्याह—प्रशान्तधीरिति। बहिस्तादृशस्य ज्ञापकं दृष्टान्तेनाऽऽह—प्रशान्तोर्मिरिवोदधिरिति। प्रशान्ता ऊर्मयो यस्य। यथा निस्तरङ्गः समुद्रश्चाञ्चल्यरहितः ॥ ४४ ॥ ❀ ❀ एवं सर्वदोषरहितस्य भक्तिर्जातेत्याह—वासुदेव इति। अन्तःकरणे शुद्धसत्त्वात्मके आविर्भूते भगवति षड्गुणसंपन्ने ज्ञानशक्तियुक्ते ज्ञानसहितो भगवान् परमहंसैर्ज्ञेय इति सर्वज्ञ इत्युक्तम्। स च स्वस्य स्वरूपमेवेत्याह—प्रत्यगात्मनीति। प्रत्यक्त्वमात्रे भगवानेव तथा स्फूर्तियुक्तोऽपि भवेत्, अत आत्मनीति।

परेण माहात्म्यज्ञानपूर्वकस्नेहेन । भक्तिभावेन मानसभजनक्रियया सह परमादरेण तस्मिन् लब्धात्मा जातः, तत्रात्मभावं प्राप्तः । बहिर्निवर्तकानि बन्धनानि ततो निवृत्तानीत्याह—मुक्तबन्धन इति ॥ ४५ ॥

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः ।

एवमित्यत्र । प्राप्ते ज्ञाने त्वियं क्रियेति । अयं सप्तानां समुदायार्थो ज्ञेयः ॥ ४१ ॥

इति श्रीतृतीयस्कन्धसुबोधिनीप्रकाशे चतुर्विंशाध्यायविवरणं सम्पूर्णम् ।

### श्रीगिरिधरकृता बालप्रबोधिनी

तेन कपिलेनैवं सम्यगुदितोऽनुज्ञातः प्रजापतिः कर्दमः प्रीतः संस्तं प्रदक्षिणीकृत्य वनमेव जगामेत्यन्वयः । यद्यपि भगवतो ज्ञानोपदेशार्थमवतीर्णत्वात् तत्सन्निधाने तत्र स्थितावपि न काचित् क्षतिः तथापि वनमेव जगामेत्येवकारार्थः । तथाविधैश्वर्ययुक्तं गृहं भगवन्तं च त्यक्त्वा गमनमप्याश्चर्यमेवेति सूचयति—हेति ॥ ४१ ॥ ❀ ❀ स कर्दमः मुनिः शुभाश्रयसंशीलनपरः मौनं मौनोपलक्षितमहिंसादिलक्षणं व्रतमास्थितः आश्रितः, आत्मा परमात्मैव एकः शरणं रक्षको यस्य सः । अतएव निस्सङ्गो विषयासक्तिरहितः संसारिजनसङ्गरहितश्च, अनग्निः परित्यक्तगृहाश्रमत्वादाहवनीयाद्यग्निरहितः, अनिकेतनः नियतावसथरहितः क्षोणीं भूमिं व्यचरत् ॥ ४२ ॥ ❀ ❀ यत् सदसतः कार्यकारणसङ्घातात् परं तत् तस्मिन् ब्रह्मणि मनो युञ्जानः एकाग्रीकुर्वंस्तं भगवन्तं सर्वभूतेष्ववस्थितमपश्यदिति चतुर्थेनान्वयः । तद्ब्रह्म विशिनष्टि—गुणावभासे इति, प्राकृतानां गुणानां कार्यकारणात्मनां प्रसृतानामवभासः प्रकाशो यस्मात्तस्मिन्नित्यर्थः । विगुणे प्राकृतगुणसंसर्गरहिते एकया एकान्तया अव्यभिचारिण्या भक्त्या अनुभाविते अपरोक्षीकृते ॥ ४३ ॥ ❀ ❀ ब्रह्मिष्ठस्य लक्षणं वर्णयति—निरहङ्कृतिरिति द्वयेन । निर्द्वन्द्वः शीतोष्णाशनापिपासाशोकमोहदुःखसुखजरामृत्युकामक्रोधादिद्वन्द्वरहितः । तत्र हेतुमाह—प्रत्यक् प्रवणा प्रशान्ता विक्षेपरहिता धीर्यस्य स इति । तत्र दृष्टान्तमाह—प्रशान्ता ऊर्मयो यस्य स उदधिः समुद्रो यथा तथेति । तत्र हेतुमाह—निरहङ्कृतिरिति, देहेन्द्रियान्तःकरणादावात्माभिमानरहित इत्यर्थः । अत एव देहादिसम्बन्धिषु निर्ममश्च स्वीयत्वबुद्धिरहित इत्यर्थः । अहङ्कारनिवृत्तौ हेतुमाह—समदृगिति सर्वत्र समं परं ब्रह्मैव पश्यतीति तथा सः । तत्रापि हेतुमाह—समदृगिति, स्वं रूपं पश्यतीति तथा सः । तत्रापि हेतुमाह—मुक्तबन्धन इति, मुक्तमविद्यालक्षणं बन्धनमात्मावरकं यस्य सः ॥ ४४ ॥ ❀ ❀ तत्रापि हेतुमाह—वासुदेव इति । वासुदेवे परेण उत्कटेन भक्तिभावेन स्नेहविशेषेण लब्धः स्थिरीकृत आत्माऽन्तःकरणं येन सः । तत्र हेतुमाह—धीर इति, जितेन्द्रिय इत्यर्थः । तथाप्यन्यस्मिन् कथमेवं स्नेह इत्यत आह—प्रत्यगात्मनीति, प्रतीचो जीवस्यात्मनि अंशित्वेन स्वरूपभूत इत्यर्थः । तथापि तद्भक्तेः कथमविद्यानिवर्त्तकत्वमित्यपेक्षायामाह—भगवतीति, अचिन्त्यशक्तिमत्त्वादित्यर्थः । तथापि स्वभजनं कथं जानाति येनानुगृह्णातीत्यत आह—सर्वज्ञ इति ।

### हिन्दी अनुवाद

श्रीमैत्रेयजी कहते हैं—भगवान् कपिलके इस प्रकार कहनेपर प्रजापति कर्दमजी उनकी परिक्रमा कर प्रसन्नतापूर्वक वनको चले गये ॥ ४१ ॥ ❀ ❀ वहाँ अहिंसामय संन्यास-धर्मका पालन करते हुए वे एकमात्र श्रीभगवान्‌की शरण हो गये तथा अग्नि और आश्रमका त्याग करके निःसङ्गभावसे पृथ्वीपर विचरने लगे ॥ ४२ ॥ ❀ ❀ जो कार्यकारणसे अतीत है, सत्त्वादि गुणोंका प्रकाशक एवं निर्गुण है और अनन्य भक्तिसे ही प्रत्यक्ष होता है, उस परब्रह्ममें उन्होंने अपना मन लगा दिया ॥ ४३ ॥ ❀ ❀ वे अहंकार, ममता और सुख-दुःखादि द्वन्द्वोंसे छूटकर समदर्शी ( भेददृष्टिसे रहित ) हो, सबमें अपने आत्माको ही देखने लगे । उनकी बुद्धि अन्तर्मुख एवं शान्त हो गयी । उस समय धीर कर्दमजी शान्त लहरोंवाले समुद्रके समान जान पड़ने लगे ॥ ४४ ॥ ❀ ❀ परम भक्ति-भावके द्वारा सर्वान्तर्यामी सर्वज्ञ श्रीवासुदेवमें चित्त स्थिर हो जानेसे वे सारे बन्धनोंसे मुक्त हो गये ॥ ४५ ॥

**आत्मानं सर्वभूतेषु भगवन्तमवस्थितम् । अपश्यत्सर्वभूतानि भगवत्यपि चात्मनि ॥ ४६ ॥**
**इच्छाद्वेषविहीनेन सर्वत्र समचेतसा । भगवद्भक्तियुक्तेन प्राप्ता भागवती गतिः ॥ ४७ ॥**

**इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां तृतीयस्कन्धे [1]कापिलेये चतुर्विंशोऽध्यायः ॥ २४ ॥**

---

१. प्रा० पा०—कापिले ।

## श्रीधरस्वामिविरचिता भावार्थदीपिका

लब्धात्मतामेवाह। आत्मानमिति॥ ४६॥ ❀ ❀ तदेवं तेन भागवती गतिः प्राप्ता। पाठान्तरे स एव तां गतिं प्राप्त इति॥ ४७॥

इति श्रीमद्भागवते तृतीयस्कंधे टीकायां चतुर्विंशोऽध्यायः॥ २४॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

ततश्च तस्य भगवत्साक्षात्कारोभूदित्याह—आत्मानं सर्वान्तर्यामिणं तृतीयपुरुषं क्षीरोदशायिनमित्यर्थः। भगवन्तं तमेव स्वेष्टदेवं शुक्लं चतुर्भुजमपश्यत्। तथात्मनि प्रकृत्यंतर्यामिणि प्रथमपुरुषे कारणार्णवशायीनि सर्वभूतानि तदीयरोमकूपगतशतकोटिब्रह्माण्डस्थानि योगजनेत्रेणात्रैव स्थित्वाऽपश्यत्। तेन द्वितीयस्कन्धोक्तात् क्रममुक्ताद्योगिनः सकाशादस्योत्कर्ष उक्तः। स हि ब्रह्माण्डस्थसर्ववस्तु दिदृक्षुस्तत्र तत्र स्थूलदेहं त्यक्त्वा गच्छति। अयं त्वत्रैव स्थित्वा सर्वब्रह्माण्डबहिः कारणार्णवशायिनं तद्रोमकूपेषु सर्वभूतान्यपि निष्काम एवापश्यत्। भगवत्यपि चेति। तमेवात्मानं स्वेष्टदेवं शुक्लं भगवन्तमपश्यत्। तस्मिन्नपि सर्वभूतानि श्रीकृष्णे यशोदेवापश्यदित्यैश्वर्योपासके श्रीकर्दमे तादृगैश्वर्यदर्शनमुचितमेवेति ज्ञेयम्॥ ४६॥ ❀ ❀ ततश्च साक्षादेव तत्प्राप्तिमाह—इच्छेति। तदेवं भागवती भगवत्प्राप्तिरूपा। चक्रवर्ती तु—भगवत्पार्षदत्वलक्षणेत्याह। हेयत्वादन्यत्रेच्छाद्वेषविहीनेन तस्मादेव हेतोः सर्वत्र समचेतसेति। तदुक्तम्—"नारायणपराः सर्वे न कुतश्चन बिभ्यति। स्वर्गापवर्गनरकेष्वपि तुल्यार्थदर्शिनः॥" इत्युक्तेः। यद्वा। मया लक्ष्म्या सह वर्तते इति सम इति सहस्रनामभाष्यात्। भगवच्चेतसेति पाठान्तरे प्राप्तो भागवतीं गतिमिति पाठे स कर्दम एव तां गतिं प्राप्तः। अत्र भगवद्भक्तियोगेनेत्येव विशेष्यमिति। एवमेवोक्तं श्रीभगवदुपनिषत्सु। "बुद्ध्या विशुद्धया युक्तो धृत्यात्मानं नियम्य च। शब्दादीन्विषयांस्त्यक्त्वा रागद्वेषौ व्युदस्य च। विविक्तसेवी लघ्वाशी यतवाक्कायमानसः। ध्यानयोगपरो नित्यं वैराग्यं समुपाश्रितः। अहंकारं बलं दर्पं कामं क्रोधं परिग्रहम्। विमुच्य निर्ममः शान्तो ब्रह्मभूयाय कल्पते। ब्रह्मभूतः प्रसन्नात्मा न शोचति न कांक्षति। समः सर्वेषु भूतेषु मद्भक्तिं लभतेतराम्। भक्त्या मामभिजानाति यावान्यश्चास्मि तत्त्वतः। ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम्।" इति। अत्र विशतिर्मिलनार्थे। यथा "दुर्योधनं परित्यज्य युधिष्ठिरं प्रविष्टवानयं राजा" इति। श्रीदशमे श्रीगोपैर्ब्रह्मसंपत्त्यनन्तरमेव वैकुण्ठो दृष्ट इति स्वामिभिरेव व्याख्यातं च॥ ४७॥

इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे तृतीयस्कन्धे चतुर्विंशोऽध्यायः॥ २४॥

## श्रीमद्वीरराघवव्याख्या

धार्येषु सर्वभूतेषु अवस्थितं भगवन्तमात्मानं धारके परमात्मनि भगवति भूतानि धार्याण्यपश्यत् पूर्वोत्तरार्धाभ्यां भगवतो व्याप्तिर्धारकत्वं चोच्यते॥ ४६॥ ❀ ❀ इच्छाद्वेषादिप्राकृतगुणरहितेन सर्वत्र भूतेषु समचेतसा तत्तत्कर्मायत्तदेवत्वमनुष्यत्वादिवैचित्र्यानादरेण प्रकृतिपरिणामरूपान् देहान्प्रतिशरीरं जीवानां भेदेऽपि सर्वत्र ज्ञानैकाकारतया एकरूपान् जीवान् तत्तत्कर्मानुसारेण नियन्तृत्वाभेदेऽप्यन्तर्यामित्वनिरस्तसमस्तदोषत्वानन्तकल्याणगुणाकरत्वेन चैकरूपमीश्वरं च पश्यति यच्चित्तं तत्समचेतस्तेन भगवद्भक्तियोगेन च भागवती गतिः मुक्तिः प्राप्ता लब्धा। पाठान्तरे स एव तां भागवतीं गतिं प्राप्तः॥ ४७॥

इति श्रीभागवतमहापुराणे तृतीयस्कंधे श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रिकायां चतुर्विंशोऽध्यायः॥ २४॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

१ फलितमाह। वासुदेव इति। वासुदेवे सर्वत्र स्थित्वा क्रीडति अशेषविशेषाकारेण सर्वं जानाति प्रत्यगात्मनि स्वान्तर्यामिणि भगवति परेण पूर्णेन भक्तिभावेन लब्धात्मा लब्धमना अत एव मुक्तबन्धनः मुक्तदेहाभिमानः। यद्वा प्रथमं वासुदेवे श्रीकृष्णे भगवति लब्धात्मा समनन्तरं सर्वज्ञे सर्वज्ञत्वात्सृष्ट्यादिकर्तरि भगवति लब्धात्मा क्रमेण प्रत्यगात्मनि सूक्ष्मे स्वबिम्बभूते भगवति लब्धात्मा॥ ४६॥ ❀ ❀ एवं हरौ लब्धात्मनस्तस्य कर्दमस्य संसारापत्तिर्नास्ति किन्तु पुनरनावृत्तिरूपा श्रीनारायणावाप्तिलक्षणा मुक्तिरेवेति दर्शयति। इच्छाद्वेषेति। इच्छाद्वेषाभ्यां निषिद्धेच्छावैष्णवद्वेषाभ्यां विहीनेन सर्वत्र सर्वपदार्थेषु स्थितभवद्रूपेषु निर्दोषत्वसर्वगुणपूर्णत्वादिसमत्वज्ञानयुक्तेन चेतसा ज्ञानेन भागवतीं गतिं भगवत्प्राप्तिरूपां मुक्तिं प्राप्त इत्यन्वयः॥ ४७॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्यां चतुर्विंशोऽध्यायः॥ २४॥

---

१. अत्रैतत्पाठे श्लोकयोर्व्यत्ययस्तस्मादत्रैतद्व्याख्यास्ति।

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

भक्त्यतिशयेन लब्धात्मकत्वमेव प्रतिपादयति । आत्मानमिति । आत्मात्र परमात्मा सर्वथा तस्य भगवानेवास्फुरदिति वाक्यार्थः ॥ ४६ ॥ ❀ ❀ ततः साक्षादेव तत्प्राप्तिमाह । इच्छेति । तदेवं भागवती गतिः प्राप्ता हेयत्वादन्यत्रेच्छाद्वेषविहीनेन तस्मादेव हेतोः सर्व्वत्र समचेतसा तदुक्तं "नारायणपराः सर्व्वे" इत्यादि । यद्वा मया लक्ष्म्या सह वर्त्तते इति सम इति सहस्रनामभाष्यात् भगवच्चेतसेति प्राप्तो भागवतीं गतिमिति पाठे स कर्द्दम एव तां गतिं प्राप्तः । अत्र भगवद्भक्तियोगेनेत्येव विशेष्यमिति एवमेवोक्तं श्रीभगवदुपनिषत्सु ।

बुद्ध्या विशुद्धया युक्तो धृत्यात्मानं नियम्य च । शब्दादीन् विषयांस्त्यक्त्वा रागद्वेषौ व्युदस्य च ॥
विविक्तसेवी लघ्वाशी यतवाक्कायमानसः । ध्यानयोगपरो नित्यं वैराग्यं समुपाश्रितः ॥
अहङ्कारं बलं दर्पं कामं क्रोधं परिग्रहम् । विमुच्य निर्म्ममः शान्तो ब्रह्मभूयाय कल्पते ।
ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति । समः सर्व्वेषु भूतेषु मद्भक्तिं लभते पराम् ॥
भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वतः । ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम् ॥

इति अत्र विशतिर्मिलनार्थः, यथा दुर्य्योधनं परित्यज्य युधिष्ठिरं प्रविष्टवानयं राजेति श्रीदशमे श्रीगोपैर्ब्रह्मसंपत्त्यनन्तरमेव वैकुण्ठो दृष्ट इति श्रीस्वामिभिरेव च व्याख्यातम् ॥ ४७ ॥

**इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भस्य चतुर्विंशोऽध्यायः ॥ २४ ॥**

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

ततश्च तस्य भगवत्साक्षात्कारोऽभूदित्याह । आत्मानं सर्व्वान्तर्यामिणं तृतीयपुरुषं क्षीरोदशायिनमित्यर्थः । भगवन्तं तमेव स्वेष्टदेवं शुक्लं चतुर्भुजमपश्यत् तथा आत्मनि प्रकृत्यन्तर्यामिणि प्रथमपुरुषे कारणार्णवशायिनि सर्व्वभूतानि तदीयरोमकूपगतशतशतकोटिब्रह्माण्डस्थानि योगजनेत्रेणात्रैव स्थित्वा अपश्यत् तेन द्वितीयस्कन्धोक्तात् क्रममुक्ताद्योगिनः सकाशात् अस्य उत्कर्ष उक्तः स हि ब्रह्माण्डस्थसर्व्ववस्तुदिदृक्षुस्तत्र तत्र स्थूलदेहं त्यक्त्वा गच्छति अयं त्वत्रैव स्थित्वा सर्व्वब्रह्माण्डबहिः कारणार्णवशायिनं तद्रोमकूपेषु सर्व्वभूतान्यपि निष्काम एवापश्यत् । भगवत्यपि चेति तमेवात्मानं स्वेष्टदेवं शुक्लं भगवन्तमपश्यत् । तस्मिन्नपि सर्व्वभूतानि श्रीकृष्णे यशोदेवापश्यदित्यैश्वर्य्योपासके श्रीकर्दमे तादृगैश्वर्यदर्शनमुचितमेवेति ज्ञेयम् ॥ ४६ ॥ ❀ ❀ सर्व्वत्र जगति हेयत्वादिच्छाद्वेषविहीनेन तस्मादेव हेतोः समचेतसा कर्दमेन भागवती भगवत्पार्षदत्वलक्षणा गतिः प्राप्ता । भागवतीं गतिं प्राप्त इति पाठे समचेतसा युक्तः कर्दमः ॥ ४७ ॥

**इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् । चतुर्विंशस्तृतीयस्य सङ्गतः सङ्गतः सताम् ॥**

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

आत्मानं सर्वाश्रयं भगवन्तं सर्वभूतेषु एवं भूतानि भगवति च यः अपश्यत् ॥ ४६ ॥ ❀ ❀ स भागवतीं गतिमर्चिरादिगतिं प्राप्तः अर्चिरादिमार्गेण भगवद्भावापत्तिरूपां मुक्तिं प्राप्त इत्यर्थः ॥ ४७ ॥

**इती श्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे चतुर्विंशाध्यायार्थप्रकाशः ॥ २४ ॥**

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

तदा तस्य जातस्य ज्ञानस्य स्वरूपमाह—आत्मानमिति । भगवानेव स्वात्मा, स सर्वेषु भूतेषु समवस्थितः । एवं सर्वत्र स्वात्मानं भगवद्रूपं दृष्टवान् । सर्वाणि च भूतानि भगवद्रूप आत्मनि वा[१]ऽपश्यत् । जगत आधाराधेयभूतं स्वात्मरूपं भगवन्तं साक्षात्कृतवानित्यर्थः ॥ ४६ ॥ ❀ ❀ एवं जाते पूर्णज्ञाने फलमाह—इच्छाद्वेषेति । चित्तं तदैव ब्रह्मरसस्पृष्टं लौकिकान्निवर्तते, यदा इच्छा, द्वेषश्च विषयेभ्योऽपगच्छति, सर्वत्र च चित्तं वैषम्यं न गृह्णाति । चित्तदोषादेव विषये वैषम्यं स्फुरति, अन्यथैक[२]स्मिन्नेव विषये क्रमाद्रागद्वेषौ न भवेताम् । ब्रह्मरसस्पृष्टं सर्वत्र ब्रह्मस्थितमिति सममेव गृह्णाति । अनेन ब्रह्मभावस्तस्योक्तः । ततो मुख्यं भक्तिमाह—भगवद्भक्तियुक्तेनेति । 'यावान् यश्चास्मि यादृशः' इति ज्ञानसहिता प्रेमलक्षणा भक्तिरुत्पन्ना । भगवच्छब्दाच्च विषयपरिज्ञानलक्षणं ज्ञानमायाति । ततो भगवत्संबन्धिनीं गतिं प्राप्तवान्, यया गत्या भगवान् गच्छति । भगवति वा गतिः, भगवद्भावं सायुज्यं वा प्राप्तवानित्यर्थः ॥ ४७ ॥

**इति श्रीभागवतसुबोधिन्यां श्रीमल्लक्ष्मणभट्टात्मजश्रीमद्वल्लभदीक्षितविरचितायां तृतीयस्कन्धे चतुर्विंशाध्यायविवरणम् ।**

---

१. च. क. ख. । २. अपि. ग. च. ।

## श्रीगिरिधरकृता बालप्रबोधिनी

न केवलं भगवन्तमेव सर्वत्रापश्यत् किन्तु भगवदभिन्नत्वादात्मानमपीत्याह—आत्मानमिति। अतएव भगवति तदभिन्ने आत्मनि च सर्वभूतान्यपश्यदित्यन्वयः ॥ ४६ ॥ ❀ ❀ तत्फलमाह—इच्छेति। भगवद्भक्तियुक्तेन अतएव अविद्या-निवृत्त्या इच्छाद्वेषादिविहीनेन सर्वत्र समेन चेतसा हेतुभूतेन कर्दमेन भागवती भगवत्प्राप्तिलक्षणा गतिः प्राप्ता। प्राप्तो भागवतीं गतिमिति पाठान्तरम् ॥ ४७ ॥

इति श्रीवल्लभाचार्यवंश्यगोपालसूनुना ॥ श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा ॥ १ ॥
श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये ॥ श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी ॥ २ ॥
रचिता च तृतीयेऽत्र मोक्षसर्गनिरूपणे ॥ कपिलस्य चतुर्विंशः प्रादुर्भावनिरूपकः॥ ३ ॥

## हिन्दी अनुवाद

सम्पूर्ण भूतोंमें अपनी आत्मा श्रीभगवान्‌को और सम्पूर्ण भूतोंको आत्मस्वरूप श्रीहरिमें स्थित देखने लगे ॥ ४६ ॥ ❀ ❀ इस प्रकार इच्छा और द्वेषसे रहित, सर्वत्र समबुद्धि और भगवद्भक्तिसे सम्पन्न होकर श्रीकर्दमजीने भगवान्‌का परमपद प्राप्त कर लिया ॥ ४७ ॥

**२४ वाँ अध्याय समाप्त**

# अथ पञ्चविंशोऽध्यायः

### शौनक उवाच

कपिलस्तत्त्वसंख्याता भगवानात्ममायया । जातः स्वयमजः साक्षादात्मप्रज्ञप्तये नृणाम् ॥ १ ॥
न ह्यस्य[1] वर्ष्मणः पुंसां वरिम्णः सर्वयोगिनाम् । विश्रुतौ श्रुतदेवस्य भूरि तृप्यन्ति मेऽसवः ॥ २ ॥
यद्यद्विधत्ते भगवान् स्वच्छन्दात्माऽऽत्ममायया । तानि मे श्रद्दधानस्य कीर्तन्यान्यनुकीर्तय ॥ ३ ॥

### सूत उवाच

द्वैपायनसखस्त्वेवं मैत्रेयो भगवांस्तथा । प्राहेदं[2] विदुरं प्रीत आन्वीक्षिक्यां प्रचोदितः ॥ ४ ॥
पितरि प्रस्थितेऽरण्यं मातुः प्रियचिकीर्षया । तस्मिन् बिन्दुसरेऽवात्सीद्भगवान् कपिलः किल ॥ ५ ॥
तमासीनमकर्माणं तत्त्वमार्गाग्रदर्शनम्[3] । स्वसुतं देवहूत्याह धातुः संस्मरती वचः ॥ ६ ॥

### देवहूतिरुवाच[4]

निर्विण्णा नितरां भूमन्नसदिन्द्रियतर्षणात् । येन सम्भाव्यमानेन प्रपन्नान्धं तमः प्रभो ॥ ७ ॥
तस्य त्वं तमसोऽन्धस्य दुष्पारस्याद्य पारगम् । सच्चक्षुर्जन्मनामन्ते लब्धं मे त्वदनुग्रहात् ॥ ८ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

पंचविंशे जनन्या तु पृष्टो बंधविमोचनम् । आदावाह परं भक्तिलक्षणं कपिलः सुतः ॥ १ ॥
कपिलेनार्पिता मात्रे गूढभावनियंत्रिता । योगमाणिक्यमंजूषा स्फुटमुद्घाट्यतेऽधुना ॥ २ ॥

उक्तानुवादपूर्वकं कापिलं योगं पृच्छति कपिल इति त्रिभिः । तत्त्वानां संख्याता गणकः सांख्यप्रवर्तक इत्यर्थः । अत एव स्वयं जातः आत्मतत्त्वज्ञापनाय ॥ १ ॥ ❀ ❀ पुंसां मध्ये वर्ष्मणो वृद्धस्योत्तमस्येत्यर्थः । सर्वयोगिनां मध्ये वरिम्णः वरस्य भावो वरिमा भवितृप्रधानोऽयं निर्देशः वरिष्ठस्येत्यर्थः । यद्वा वरीयस्त्वादित्यर्थः । विश्रुतौ कीर्तौ असव इन्द्रियाणि भूयेलं न तृप्यंति । श्रुतेन श्रवणेन दीव्यति द्योतत इति तथा तस्य । यद्वा । भूरि बहुशः श्रुतो देवो येन तस्यापि मेऽसव इति संबंधः ॥ २ ॥ ❀ ❀ स्वानां पुंसां छंदेनेच्छया आत्मा देहो यस्य स यद्यत्कर्म विधत्ते तानि कर्माणि कीर्तनार्हाण्यनुकीर्तय ॥ ३ ॥ ❀ ❀ यथा त्वं मां प्रचोदयस्येवं प्रचोदितः सन् तथा तत्प्रश्नानुसारेण आन्वीक्षिक्यामात्मविद्यायाम् ॥ ४ ॥ ❀ ❀ विंदुसरे विंदुसरसि ॥ ५ ॥ ❀ ❀ तत्त्वमार्गस्याग्रं पारं दर्शयतीति तथा तम् । "एष मानवि ते गर्भं प्रविष्टः कैटभार्दनः" इत्यादि धातुर्वचः ॥ ६ ॥ ❀ ❀ असतामिंद्रियाणां तर्पणाद्विषयाभिलाषान्निर्विण्णा श्रांताऽस्मि येन संभाव्यमानेन पूर्यमाणेन ॥ ७ ॥ ❀ ❀ पारं गमयतीति पारगं त्वमेव श्रेष्ठं चक्षुर्मे मया लब्धम् । त्वदनुग्रहाज्जन्मनामंते भाव्ये सति ॥ ८ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

(१) मंजूषा पेटी । योगो भक्तियोग एव माणिक्यं रत्नं तस्य मंजूषा । एकत्वं समासे जात्यपेक्षम् । उद्घाट्यते नियंत्रा क्रियते प्रकाश्यत इति यावत् (२) इत्यर्थ इति । तत्त्वगणनामात्रकर्त्ता न ग्राह्य इति भावः । यतो भगवानत एव हेतोः स्वयमजस्तदापि जात इति । "न जातोहं न जायेय न जनिष्ये कदाचन । क्षेत्रज्ञः सर्वभूतानां तस्मादहमजः स्मृतः" इति स्मृतेः । आत्ममाययाऽतर्क्य-योगमायाशक्त्या जातः प्रादुर्भावित इति । 'जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः" इति भगवदुक्तेस्तज्जन्मनो मायिकत्वस्य व्याख्यातुमशक्यत्वात् । संदर्भस्तु—स्वयमजोपि आत्मनः स्वस्य भक्तविषया या माया कृपा तया साक्षाज्जातः प्रकटो बभूवेत्याह ॥१॥ ❀ ❀ इत्यर्थ इति । "वर्ष्म देहप्रमाणातिसुंदराकृतिषु स्मृतम्" इति मेदिन्युक्तेरतिसुंदराकारस्येति भावः । स्वामिचरणैर्वृद्धस्यो-

---

१. प्रा० पा०—तर्ह्यस्य । २. प्रा० पा०—आहेदं । ३. प्रा० पा०—मार्गप्रदर्शकम् । ४. प्राचीनपाठे 'देवहूतिरुवाच' अंशोऽयं टिप्पण्यां वर्तते ।

त्तमस्येति यद्व्याख्यातं तदप्यतिसुंदराकारपुरुषस्योत्तमत्वमुत्तमस्य च वृद्धत्वं लोके प्रसिद्धमित्याशयेनैवेति ज्ञेयम्। पुंसां क्षीरोदशायिप्रभृतिपुरुषाणां योगिनां दत्तात्रेयादीनामिति विश्वनाथः। वर्ष्मवरिमशब्दयोर्वस्तुत एकार्थत्वेन पुनरुक्तिं मत्वाह। यद्वेति। इत्यर्थ इति। हेतौ पञ्चमीयमिति भावः। संभवत्वाद्योजनांतरमाह—यद्वेति। श्रोत्रमात्रावेशे वक्तव्येऽसवो न तृप्यंतीति बहुत्वं तु चक्षुरादीनामपि तद्वक्तर्यावेशत्वात्। यद्वा। श्रोत्रद्वारा तादृशभगवद्रूपादीनामपि स्फूर्तेः श्रोत्रस्यैव चक्षुरादिमयत्वं निर्दिष्टम्॥ २॥ ❀ ❀ यद्वा। स्वच्छंदः स्वाधीनो न तु जीववत्कर्माधीन आत्मा देहो यस्य स तथा। "छंद आधीनपद्ययोः" इति कोशात्। आत्ममायया योगमायया न तु बहिरंगमायया। "जन्म कर्म च मे दिव्यम्" इत्याद्युक्तेः। यद्यदित्येकत्वेपि वीप्सया बाहुल्यात्तानीत्यनेन बहुवचनान्तेन सहान्वयः॥ ३॥ ❀ ❀ प्रचोदयसि पृच्छसि मां तथा विदुरेण पृष्टः॥ ४॥ ❀ ❀ बिंदुसर इत्यदंतत्वं समासांतप्रत्ययेनार्षत्वेन वा। मातुः प्रियचिकीर्षयेत्यनेन कौमारोचितस्तनपानादिलीलापि ज्ञेया॥ ५॥ ❀ ❀ तत्र देवहूतिरयमवसर इति मत्वा कपिलं वक्ति—तमिति आसीनमकर्माणमिति विशेषणद्वयं निश्चलबुद्धित्वमाह तदैव प्रश्नावसर इति। आसीनमित्यनेनैवाकर्मत्वे पुनस्तद्वचनं कंडूयनादिनिषेधार्थम्। तेन च सच्चिदानंदरूपत्वं ज्ञाप्यत इति। स्वसुतमिति। ऐश्वर्यदर्शनेपि स्नेहो व्यंजितः॥ ६॥ ❀ ❀ अंधं तमस्तत्त्वाज्ञानं प्राप्ता। प्रभो इति। तस्य तमोऽपाकरणसामर्थ्यं द्योतयतीति॥ ७॥ ❀ ❀ तस्य प्रकृतस्य॥ ८॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या।

परं साध्यं योगाः भक्तियोगाष्टाङ्गयोगसाङ्ख्यरूपा उपायास्त एव माणिक्यानि तेषां मञ्जूषा निधानपेटिका गूढाभिप्रायलक्षणैर्डांकैस्संबद्धा मात्रे अर्पितेदानीं स्फुटं यथा स्यात्तथा मया तत्कृपयोद्घाटयते तदन्तर्गतमाणिक्यानि निःसार्य्य दर्श्यन्ते। आत्ममायया स्वस्य भक्तविषयककृपया "मायादम्भे कृपायां च" इति विश्वप्रकाशः॥ १॥ ❀ निर्देशे द्विविधः भावप्रधानो भवितृप्रधानश्च तत्र प्रकृतिजन्यबोधे प्रकारीभूतोऽर्थो भावः प्रकृतिर्हि भवितेति ज्ञेयम्। तथाच धर्मितात्पर्य्यको निर्देश इति फलितोऽर्थः। अत एव इत्यर्थः इत्युक्तम्। किन्त्वस्यार्थस्य लाक्षणिकत्वान्मुख्यार्थं वक्तुं यद्वेति। यद्यपि श्रोत्रमात्रस्यातृप्तिर्वाच्या तथापि श्रोत्रद्वारा तदीयरूपरसादीनामपि तत्तदिन्द्रियेषु स्फूर्त्तिस्स्यादिति बहुत्वनिर्देशः। अलं न तृप्यतीत्युक्तेः किञ्चित्तृप्यतीत्यपि प्रतीतिस्स्यादित्यरुचौ यद्वेति। तथा च पुष्टार्थत्वाद्भूरीतिपदं नाधिकमिति पूर्वतः स्वारस्यम्॥ २॥ ❀ ❀ आत्ममायया स्वरूपशक्त्या॥ ३॥ ❀ ❀ एवं श्रीकृष्णतात्पर्यरीत्या॥ ४—५॥ ❀ ❀ अकर्माणम्। जीववत्कर्मलेपशून्यम्। स्वसुतमिति। ऐश्वर्य्यदर्शनेऽपि वात्सल्यातिशयो दर्शितः॥ ६॥ ❀ ❀ अत्र देवहूतिरुवाचेति क्वचित्पाठोऽनवहितश्रोत्रवधापनार्थम्। येन विषयाभिलाषेण पूर्य्यमाणेन न त्विदानीमपि पूर्त्तेन॥ ७॥ ❀ ❀ तस्यापूर्य्यमाणविषयाभिलाषसञ्जातस्य तमसो मोहस्य त्वमेव त्वद्रूपम्॥ ८॥

### श्रीमद्वीरराघवव्याख्या

एवमाकर्णितमनुतदपत्यचरित्रः शौनकः कपिलोक्तसाङ्ख्यशुश्रूषुरुक्तानुवादपूर्वकं पृच्छति त्रिभिः। कपिल इत्यादिना। ननु शारीरकमीमांसायाम् "ईक्षतेर्नाशब्दम्, रचनानुपपत्तेश्च नानुमानम्। विप्रतिषेधाच्चासमञ्जसम्" इत्यादिष्वब्रह्मात्मकप्रधानोपादानकारणत्वसृष्ट्यनुपपत्तिपरस्परविरुद्धार्थत्वादिभिर्दूषितं सांख्यं केवलब्रह्मस्वरूपरूपगुणविभूतितदुपासनतद्विरोधितत्प्राप्त्यादिप्रतिपादकवेदान्तार्थोपबृंहणपरेऽस्मिन्स्वकर्तृके पुराणे कथं भगवता बादरायणेन निवेशितम् उच्यते दूषितांशपरिहारेण तदुक्तवैदिकपरिगृहीतसत्कार्यवादादिपरिग्रहेण च कापिलमपि मतं शिक्षयितुं तदेव मतं समीचीनन्यायोपपन्नं कर्तुं च तदुक्तज्ञानयोगस्य भगवद्भक्तियोगाङ्गत्वकथनायात्र निवेशितमत एव शारीरकविरुद्धार्थाः कपिलोक्ता अत्र न निवेशिताः। कथं पुनर्भगवदवताररूपेण कपिलेन वैदिकापरिगृहीताब्रह्मात्मकप्रधानकारणत्वादिवादाः परिगृहीता इति चेत्तस्य विशिष्टभगवच्छक्तित्वेऽपि स्वस्य क्षेत्रज्ञत्वेन स्वाज्ञानमूलत्वाद्वेदविरुद्धार्थपरिग्रहस्य यथा हिरण्यगर्भस्य भगवदवतारत्वेऽपि क्षेत्रज्ञस्वाज्ञानमूला योगस्मृतिस्तेन रचिता तथैवेदमपीति ज्ञेयम्। अजः कर्मायत्तजन्मरहितः भगवानात्ममायया स्वयं स्वसङ्कल्पेन नृणामात्मप्रज्ञप्तये आत्मपरमात्मयाथात्म्यविशदीकरणाय तत्त्वसङ्ख्याता तत्त्वत्रयप्रकथकः कपिलः जातः अवतीर्णः॥ १॥ ❀ ❀ पुंसां वर्ष्मणः श्रेष्ठस्य सर्वयोगिनां वरिष्णः वरिष्ठस्यास्य कपिलस्य विश्रुतौ कीर्त्यां कीर्तिश्रवण इत्यर्थः। श्रुतो देवः कपिलो येन तस्य ममासवः इन्द्रियाणि भूरि भृशं न तृप्यन्ति॥ २॥ ❀ ❀ स्वच्छन्दात्मा स्वेच्छोपात्तशरीरो भगवान् कपिलः आत्ममायया आत्मीयसङ्कल्पेन यद्यच्चरितं विधत्ते करोति अकरोदित्यर्थः। तानि कीर्तनीयानि चरितानि श्रद्दधानस्य शुश्रूषात्वरान्वितस्य मे मह्यं कीर्त्तय॥ ३॥ ❀ ❀ एवमापृष्टः सूतो विदुरेणैवमेव पृष्टो मैत्रेय उक्तवानित्याह। द्वैपायनसखः द्वैपायनस्य सखा भगवान्मैत्रेय एवमान्वीक्षिक्यां तत्त्वनिरूपणे प्रचोदितः प्रवर्त्तितः विदुरं प्राह उवाच॥ ४॥ ❀ ❀ उक्तिमेवाह। पितरीत्यादिना पितरि कर्दमे अरण्यं प्रति प्रस्थिते गते सति भगवान्कपिलः मातुर्देवहूत्याः प्रियं कर्त्तुमिच्छया तस्मिन्नेव विन्दुसरस्तीरेऽवात्सीदुषितवान्॥ ५॥ ❀ ❀ आसीनमुपविष्टं तत्त्वमार्गस्याग्रं पारं पश्यतीति तं स्वसुतं कपिलं देवहूतिः धातुर्वचः "एष मानवि! ते गर्भं प्रविष्टः कैटभार्दनः।

अविद्यासंशयग्रन्थिं छित्त्वा गां विचरिष्यति" इति ब्रह्मवाक्यं छेत्ता ते हृदयग्रन्थिमौदर्यो ब्रह्मभावन इति कर्दमवाक्यं वा संस्मरन्त्याह॥६॥ ❀ ❀ तदेवाह। हे भूमन्नसतां प्रकृतिपरिणामरूपाणामिन्द्रियाणां तर्पणात् नितरां भृशं निर्विण्णा खिन्ना इन्द्रियतर्पणान्मोदेनैव भवितव्यं कथं निर्वेद उदित इत्यत्राह हे प्रभो! सम्भाव्यमानेन सम्पाद्यमानेन येनेन्द्रियतर्पणेनान्धमन्धयतीत्यन्धतमः अज्ञानं प्रविष्टास्मि॥७॥ ❀ ❀ दुष्पारस्यापारस्य तस्यान्धस्य तमसः पारं गमयतीति पारगं त्वमेव श्रेष्ठं चक्षुः मे मया जन्मनामन्ते बहुजन्मान्ते त्वत्प्रसादाल्लब्धम्॥८॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

आत्यन्तिकभक्तियोगस्य हरौ मनोयोगप्रकारस्य भक्त्यधिकारिणस्तत्साधनस्य च प्रतिपादनायास्याध्यायस्य प्रारम्भः। अत्रादौ कपिलदेवहूतिसंलापसंहितां श्रोतुकामः परीक्षिच्छ्रुतमनूद्य प्रशस्य वक्तव्यशेषं प्रार्थयत इत्याह। कपिल इति। "अजा विष्णुहरच्छागा" इत्यभिधानात्कोऽत्राभिधीयत इति संशयनिरासार्थं साक्षादिति विशेषणं "साक्षात्प्रत्यक्षतुर्ययोः" इत्यतस्तुर्योऽजः श्रीनारायणः स्वयमावेशं विनात्ममायया स्वेच्छयैव नृणामात्मप्रज्ञप्तये स्वस्वरूपज्ञानाय तदर्थं तत्त्वसङ्ख्याता अव्यक्तादितत्त्वविषयं सम्यक् ज्ञानं करिष्यन् कपिलनामा जात इति भवतोक्तं श्रुतं चेति शेषः॥१॥ ❀ ❀ श्रीनारायणसच्चरितश्रवणादौ प्रवर्तमानस्याशनादीच्छारहितस्यापि लोकस्य चित्तनिरोधेनालं बुद्धिर्जायते न मम तथा प्रत्युत रसायनसेविन इवाशनादिभोगरहितस्यापि इन्द्रियाणि हृष्यन्तीत्याह। अर्हत्तमस्येति। निवृत्तिलक्षणमोक्षधर्मा एषां स्वरूपभूताः सन्तीति धर्मिणस्तेषां पुंसामर्हस्य संमान्यस्य "अर्हन्तौ जिनसंमान्यौ" इत्यभिधानं सनकादिसर्वयोगिनां गरिम्णः गुरुतमस्य शास्त्रेण श्रुता देवाः क्रीडादिगुणाः श्रीनारायणस्य विद्यमाना यस्य स श्रुतदेवस्य तस्य कपिलनाम्नो हरेर्महिम्नो विश्रुतौ विशेषेण श्रवणे मे असव इन्द्रियाणि भूरि तृप्यन्ति परमानन्दं प्राप्नुवन्तीत्यन्वयः॥२॥ ❀ ❀ इदं चेच्छ्रुतं प्रथमतः परं किं नु प्रार्थ्येत इत्यत्राह। यद्यदिति। स्वच्छन्दः स्वतन्त्र आत्मा मनो यस्य स तथा भागवतानां कीर्तन्यानि नित्यं कीर्तनीयानि॥३॥ ❀ ❀ तत्र शुको विदुरमैत्रेयसम्वादेन राज्ञः प्रश्नं परिहरतीत्याह। द्वैपायनसखश्चेति। यथाहं त्वया आन्वीक्षिक्यां तत्त्वविद्याविषये प्रचोदितस्तथा विदुरेणापि पृष्टो मैत्रेयो मया वक्ष्यमाणमर्थं प्राहेत्यन्वयः॥४॥ ❀ ❀ कोऽयमर्थ इति तत्राह। पितरीति॥५॥ ❀ ❀ तत्र देवहूतिरयमवसर इति मत्वा कपिलं वक्तीत्याह। तमासीनमिति। आसीनमकर्माणमिति विशेषणद्वयेन सर्वदा निश्चलबुद्धिः सा च स्वतस्तथापि लोकदृष्ट्यापि तथेति सूचयति आसीनमित्यनेनाकर्मत्वे सिद्धे पुनस्तद्वचनं कण्डूयनादिविधिर्नास्तीति सूचनेन हरेः सच्चिदानन्दाद्यात्मत्वं विज्ञायते एवंविधस्य हरेः स्ववक्तव्यत्वे विज्ञानमस्तीति किं वक्तव्यमिति भावेनाह। तत्त्वेति। स्वसुतमिति सिद्धमाप्तत्वं धातुः संस्मरती वच इत्यनेन च पोष्यते॥६॥ ❀ ❀ श्रोतव्यार्थेऽस्यास्तात्पर्यमस्तीत्युपोद्घातं रचयतीत्याह। निर्विण्णेति। भूमन्! स्वतः पूर्ण असतामङ्गलानामिन्द्रियाणां तर्पणादतितरां निर्विण्णा विरक्ता विषयेष्विति शेषः। असत्त्वं कथमत्राह। येनेति। सम्भाव्यमानेन लाल्यमानेन येनेन्द्रियप्रीणनेनान्धं तमस्तत्त्वाज्ञानं प्रपन्नेत्यन्वयः। अनेनाधिकारिगुणौ विद्वत्तार्थितै दर्शिताविति ज्ञायते॥७॥ ❀ ❀ आत्मनो विद्वत्तां स्फोरयति। तस्येति। अतीतानामनेकेषां जन्मनामन्ते चरमलक्षणे जन्मनि तस्य दुष्पारस्य दूरीकृततीरान्तरस्यान्धस्य तमसः पारं गमयतीति पारगं त्वंनाम सच्चक्षुस्त्वदनुग्रहान्मया लब्धमित्यन्वयः। एतत्सन्निकृष्टं न दूरस्थमित्यर्थः। अनेन प्रोक्तार्थग्रहणे सामर्थ्यगुणोऽप्यसूचि प्राचीनचीर्णपुण्यनिचयेन चक्षुर्लाभात्॥८॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः।

स्वयमजोऽपि भक्तविषया यत्कृपा तथा साक्षाज्जातः प्रकटो बभूव॥१॥ ❀ ❀ उरोर्भावः वरिमा धर्मितात्पर्यकः, श्रोत्रमात्रावेशे वक्तव्ये असवो न तृप्यन्ति इति बहुत्वञ्चक्षुरादीनामपि तद्वत्कार्यविशत्वात्। यद्वा श्रोत्रद्वारा तादृशभगवद्रूपादीनामपि स्फूर्तेः श्रोत्रस्यैव चक्षुरादिमयत्वं निर्दिष्टम्॥२॥ ❀ ❀ तस्मात् यद्यदिति यदेतद्यच्चान्यदित्यर्थः आत्ममायया स्वरूपशक्त्या भगवान् श्रीकृष्णः॥३॥ ❀ ❀ द्वैपायनेति। एवं श्रीकृष्णतात्पर्य्यरीत्या॥४-५॥ ❀ ❀ स्वसुतमिति। ऐश्वर्यदर्शनेऽपि स्नेहातिशयो व्यञ्जितः॥६॥ ❀ ❀ निर्विण्णेत्यस्य प्राक् देवहूतिरुवाचेति क्वचित्॥७॥ ❀ ❀ सच्चक्षुर्न साधारणं किन्त्वनन्यापेक्षं सर्वप्रकाशकत्वात् सूर्य इव॥८॥९॥१०॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

मात्रा पृष्टः पञ्चविंशे कपिलो भक्तिमाह ताम्। तल्लक्षणं तत्प्रभावं तदुत्कर्षञ्च सर्वतः॥

तत्त्वसंख्याता तत्त्वसंख्यानकर्त्ता साङ्ख्यप्रवर्त्तकः स्वयमजस्तदपि आत्ममायया जातः अतर्क्ययोगमायाशक्त्या प्रादुर्भावितात्प्राकृतजन्मलील इत्यर्थः। "जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वत" इति भगवदुक्तेर्भगवज्जन्मनो मायिकत्वस्य व्याख्यातुमशक्यत्वात्॥१॥ ❀ ❀ पुंसां क्षीरोदशायिप्रभृतिपुरुषाणां तथा सर्वयोगिनां दत्तात्रेयादीनाञ्च मध्ये अस्य वर्ष्मणः

कपिलाकारस्य देहस्य यो वरिमा श्रेष्ठत्वं तस्य विश्रुतौ ख्यातौ मे असवः प्राणाः श्रवणादीन्द्रियाणि वा भूरि अलं न तृप्यन्ति। मम कीदृशस्य श्रुतेन श्रवणेन दीव्यति द्योतत इति तथा तस्य भूरि बहुशः श्रुतो देवो येन तस्यापीति वा ॥ २ ॥ ❀ ❀ स्वच्छन्दः स्वाधीनो नतु जीववत् कर्माधीनः आत्मा देहो यस्य सः स्वानां छन्देन इच्छया आत्मा देहो देहाविर्भावो यस्येति वा आत्ममायया योगमायया यद्यत् कर्म विधत्ते नतु बहिरङ्गमायया "जन्म कर्म च मे दिव्यम्" इत्युक्तेः। यद्यदित्येकत्वेऽपि वीप्सया बाहुल्यात्तानीत्यनेन सह सम्बन्धः। कीर्त्तन्यानि कीर्त्तनार्हाणि ॥ ३ ॥ ❀ ❀ एवमिति। यथा त्वं मां पृच्छसीत्यर्थः। आन्वीक्षिक्यां आत्मविद्यायाम् ॥ ४ ॥ ❀ ❀ विन्दुसरसि मातुः प्रियचिकीर्षयेत्यनेन कौमारोचितस्तनपानादिलीलापि ज्ञेया ॥ ५ ॥ ❀ ❀ तत्त्वमार्गस्याग्रं पारं दर्शयतीति तथा "एप मानवि ! ते गर्भं प्रविष्टः कैटभार्द्दन" इत्यादिधातुर्वचः ॥ ६ ॥ ❀ ❀ तर्पणात् विषयाभिलाषात् निर्विण्णा प्राप्ताधिकारा येन तर्पणेन सम्यक् भाव्यमानेन एतावत्कालपर्यन्तं क्रियमाणेन अन्धंतमः संसारम् ॥ ७ ॥ ❀ ❀ पारगं पारं गमयतीति तत् सच्चक्षुः तमः परिभविष्णुनेत्रम् ॥ ८ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः।

अथ नवभिरध्यायैः कपिलदेवहूतीसम्वादः परमाद्भुतो वर्ण्यते। तत्र तावत्पञ्चविंशे मात्रा पृष्टः श्रीकपिलो मोक्षोपायं परमभक्तिलक्षणं ध्यानं तत्साधनं ज्ञानवैराग्ययुक्तं सत्सङ्गलभ्यं भक्तियोगं चाहेति वर्ण्यते। तत्रादौ कपिलोक्तसिद्धान्तं शुश्रूषुः शौनकः पृच्छति। कपिल इति त्रिभिः। आत्ममायया स्वकृपया आत्मप्रज्ञप्तये परमात्मस्वरूपगुणादिज्ञापनाय ॥ १ ॥ ❀ ❀ अस्य प्रस्तुतस्य कपिलस्य 'कपिलो वासुदेवाख्यः साङ्ख्यं तत्त्वं जगाद ह। ब्रह्मादिभ्यश्च देवेभ्यो भृग्वादिभ्यस्तथैव च ॥ तथैवासुरये सर्ववेदार्थैरुपबृंहितम्। सर्ववेदविरुद्धं च कपिलोऽन्यो जगाद ह। साङ्ख्यमासुरयेऽन्यस्मै कुतर्कपरिबृंहितम् ॥' इति पाद्मात् वासुदेवस्य अत एव वर्ष्मणः वृद्धस्य वरिम्णः वरिष्ठस्य श्रुतेन शास्त्रश्रवणेन दीव्यति श्रोतृहृदि प्रकाशते इति स तथा तस्य विश्रुतौ कीर्तौ मे मम सर्वेषां योगिनां भगवज्ज्ञानभक्तियोगसम्पन्नानामितरेषां पुंसां च असवः इन्द्रियाणि भूरि अलं न तृप्यन्ति ॥२॥ ❀ ❀ स्वच्छन्दात्मा स्ववशोऽपि आत्मसु जीवेषु या माया कृपा तया यद्यच्चरित्रं विधत्ते तानि चरित्राणि कीर्तन्यानि कीर्तनार्हाणि अनुकीर्तय ॥ ३ ॥ ❀ ❀ यथा त्वयाहमान्वीक्षिक्यामात्मविद्यायां प्रचोदितः एवं चोदितो विदुरेणेति शेषः। इदं वक्ष्यमाणमाह ॥ ४ ॥ ५ ॥ ❀ ❀ धातुर्ब्रह्मणः ॥ ६ ॥ ❀ ❀ असतां दुष्टानामिन्द्रियाणां तर्पणाद्विषयलोभात् निर्विण्णा श्रान्तास्मि सम्भाव्यमानेन सम्पाद्यमानेन अन्धंतमः आत्मपरमात्मस्वरूपाज्ञानं प्राप्तास्मि ॥ ७ ॥ ❀ ❀ पारं गमयतीति तत् ॥ ८ ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

उक्तश्चतुर्भिरध्यायैः सप्रसङ्गो हरेर्भवः। ज्ञानरूपं चरित्रं तु नवभिः स्वस्य वर्ण्यते ॥ १ ॥
प्रकाराः सगुणाः सर्वे नवाऽध्यायास्ततोऽत्र हि। नवभावं गता साऽपि तदन्ते त्वभवो भवेत् ॥ २ ॥
भगवद्रूपनिष्पत्तौ भक्तिर्भूतानि सर्वथा। मात्रास्तत्त्वानि सर्वाणि भुङ्क्ते सर्वं यतो हरिः ॥ ३ ॥
आत्मा तस्येन्द्रियं प्रोक्तं येन सर्वं स पश्यति। योग एव हरेर्बुद्धिस्तस्मात्सर्वं प्रकाशते ॥ ४ ॥
पञ्चविंशे तथाऽध्याये भक्तियोगो निरूप्यते। वैतृष्ण्यं तस्य चाऽङ्गं हि इतरज्ञानमेव च ॥ ५ ॥
परमं साधनं भक्तिर्यथा भवति मुक्तये। यथाशास्त्रस्य कथनं सन्तो भक्तेश्च साधकाः ॥ ६ ॥
वंश एव मनोः पृष्टस्तेन ज्ञानं न वर्णयेत्। अतः शौनकसंप्रश्नश्चरित्रत्वं च बुध्यते ॥ ७ ॥

पूर्वाऽध्याये कपिलोत्पत्तिर्निरूपिता, तस्य चरित्रं ज्ञानरूपं न निरूपितमिति शौनकस्तत्पृच्छति—कपिल इति त्रिभिः। कपिल इति। चरित्रकथनप्रश्नस्तत्राऽतृप्तिस्तथाऽत्मनः। सामान्यतोऽप्यतृप्तिश्च प्रकृतौ साधिका मता ॥ १ ॥ प्रथमं चरित्रं पृच्छति। तत्त्वसङ्ख्याता तत्त्वसङ्ख्यानकर्ता। तत्त्वानां संदिग्धत्वान्नान्यो वक्तुमिहाऽर्हतीति भगवान्। ज्ञानस्य स्वगुणत्वात्स्वावतारव्यतिरेकेण न प्रकटं भवतीति, स्वात्ममायया सर्वभवनसामर्थ्येन, कपिलरूपेण जात आविर्भूतः साक्षात्। स्वयमजोऽपि सन्, स्वसजातीयत्वेनाऽपरिज्ञाने लोको न मन्यत इति नृणामात्मप्रज्ञप्तय आत्मनः सम्यक् ज्ञानाय, स्वयं मनुष्यरूपेण जात इत्यर्थः। अनेन तेन जीवानामात्मज्ञानार्थं किञ्चित् कृतवानिति निश्चितम्, तद्वक्तव्यमित्यर्थः ॥ १ ॥ ❀ ❀ उक्तमुपपत्त्या साधयति—न ह्यस्येति। पुंसां वर्ष्मणः श्रेष्ठस्य, सर्वयोगिनां वरिम्णो वरणीयस्य, विश्रुतौ कीर्तौ निरन्तरं श्रूयमाणायामपि। श्रुतावेव देवः प्रकाशते, श्रुतेन दीव्यतीति वा; कीर्तिप्रियस्य, कीर्तिगम्यस्य वा। मे असवः प्राणा भूरि न तृप्यन्ति। अतः सामान्यतो वर्णितमपि विशेषाकारेण वर्णनीयमिति भावः ॥ २ ॥ ❀ ❀ सामान्यतः सर्वमेव भगवच्चरित्रं पृच्छति—यदिति। स्वानां भक्तानां छन्द इच्छा, तदनुसारी आत्मा यस्य। चरित्रकरणेऽपि स्वात्ममायाकरणम्। यद्यदिति ज्ञानक्रियादिविशेषो नाऽपेक्षितः। तानि सर्वाण्येव सर्वथा कीर्तनीयानीति कथने तवाऽऽवश्यकानि। श्रद्धानस्येति श्रवणे ममाऽऽवश्यकानि। मच्छ्रद्धाऽपि तव कथने हेतुः ॥ ३ ॥ ❀ ❀ यथा शौनकः पृच्छति तथैव विदुरः पृष्टवानिति वदन् मैत्रेयद्वारैवैतच्चरित्रं कथयति—द्वैपायनसख इति। आन्वीक्षिक्यां

---

१. स्वयमेव ख. घ. ङ.।

विदुरेण प्रचोदितो मैत्रेयो विदुरं प्रत्याहेति संबन्धः। विदुरप्रश्ने अवश्यकथनार्थं मैत्रेये धर्मत्रयमाह—पितृमित्रत्वात्, जगन्मित्रत्वात्, भगवत्त्वाच्च। विदुरो हि द्वैपायनपुत्रः, प्राणी, भक्तश्चेति। आन्वीक्षिकी आत्मविद्या, मननरूपा विद्येत्येके ॥ ४ ॥ ❀ ❀ मैत्रेयो देवहूतिकपिलयोः संवादं वक्तुं कर्दमगम'नानन्तरं कपिलस्तत्रैव स्थित इत्याह—पितरीति। महतां गृहे स्थितिः पित्रोरर्थ इति ज्ञापयितुम्, पितरि अरण्यं प्रस्थिते सति मातुः प्रियचिकीर्षया तस्मिन्नेव बिन्दुसरेऽवात्सीत्। बिन्दुः सरसि यस्मिन्निति डच् समासान्तः। वासमेवकृतवात्, जिज्ञासानन्तरमेव वक्तव्यमिति। क्षुधितायैव ह्यन्नदानम्। भाव्यर्थज्ञानार्थम्—भगवानिति। कपिल इति तदर्थमेवाऽवतारः सूचितः। किलेति भगवतः सापेक्षतया कचिदपि स्थितिरयुक्तेति। किलेति प्रसिद्ध्या खदोपो निवारितः ॥ ५ ॥ ❀ ❀ तदा देवहूतिर्भर्तरि निर्गत उत्कटशोकापगमानन्तरं त पुत्रमासीनमाहेति संबन्धः। प्रसिद्धिर्ज्ञानोपदेशसमर्थने। आसीनमित्यव्यग्रत्वाय। अकर्माणमिति तपोयोगादिरूपे कस्मिन्नपि कर्मण्यप्रवृत्तम्, अन्यथा तादृशे प्रश्नो न युक्तः। प्रश्ने योग्यं रूपमाह—तत्त्वग्रामस्याऽग्रं पर्यवसानं तस्य दर्शनं यस्य। स्वसुतमिति विश्वासो निर्भयत्वम्, दोषाभावश्चोक्तः। भर्त्रा यद्यप्युक्तम्, तथाप्याश्वासनार्थमपि तद्भवतीति ब्रह्मोक्तमेव प्रमाणीकरोति—धातुः संस्मरती वच इति। स हि विधाता सर्वेषां पितृस्थानीय इति न तत्र कश्चिद्धेतुः सम्भवति 'एष मानवि ते गर्भम्' इति वचः ॥ ६ ॥ ❀ ❀ तस्याः प्रार्थनां वक्तुं स्वस्य प्रश्नकर्तृत्वं तस्य चोत्तरदानार्थमेवावतीर्णत्वं समर्थयन्ती भगवन्तं स्तौति त्रिभिः। तत्र प्रथमं स्वस्य वैराग्यमाह—निर्विण्णेति। भूमन्निति सर्वसामर्थ्यं सूचितम्। असदिन्द्रियतर्पणादहं निर्विण्णा। इन्द्रियाणि स्वार्थं नोपयुज्यन्ते। सर्वात्मको भगवानिति यदि भगवद्बुद्ध्याऽपि पोष्यन्ते, तदाऽप्येते स्वगुणं कुर्वन्त्येव, असत्त्वात्। सत्स्वेव भगवद्भजनमिति हि सिद्धान्तः। अत एवाऽसत्स्वपरिचितभगवच्चरणसेवां न कुर्यात्, अनभिव्यक्ते भगवत्याश्रमधर्माणां बलिष्ठत्वात्। अत आह—असदिन्द्रियतर्पणात् निर्विण्णा। निर्वेदे कारणमिन्द्रियकृतमपराधमाह—येनेति। येनेन्द्रियतर्पणेन निरन्तरं संभाव्यमानेन। सम्भावनाऽऽदरपूर्वकं तत्पूरणम्। असतां कार्यं पोषकनाशनमित्यन्धं तमो महामोहं प्रविष्टा। प्रभो इति क्रोशनम्, यथाऽन्यैः पीडितः प्रभोः स्थाने आक्रोशनं करोति ॥ ७ ॥ ❀ ❀ त्वं त्वेतदर्थमेवाऽवतीर्ण इत्याह—तस्येति। इन्द्रियादिभिः कृतस्याऽन्धस्य तमसः, देशतः कालतश्चाऽपरिच्छिन्नस्य, अलौकिकसामर्थ्येन यच्चक्षुस्तस्य पारं गच्छतीति तदेव भवान्। बहूनां जन्मनामन्ते मे मया लब्धम्। तत्रापि कारणं त्वदनुग्रह एव ॥ ८ ॥

## श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

अथ पञ्चविंशाध्यायं विवरिषवः 'करोति कर्माणि कृतावतारः' इति विदुरप्रश्नानुसारिणं कञ्चिद्विशेषमाहुः—उक्त इत्यादि। तेन यावन्त उक्ताः पदार्थास्ते सर्वे "श्रुतस्य पुंसाम्' इत्यादिप्रश्नाऽनुरोधेनोक्ता इति प्रासङ्गिकत्वे पर्यवस्यन्ति, तथैव वक्ष्यमाणा अपीत्यर्थः। एतेनैव पूर्वोत्तरप्रकरणयोर्हेतुमद्भावोऽपि समर्थितो ज्ञेयः, एतन्मुक्तेः पुंप्रयुक्तत्वादिति। एवं संवादस्य प्रकरणयोश्च सङ्गतिं प्रदर्श्य स्कन्धार्थविचारेणाऽऽद्यानां चतुर्णामध्यायानां तात्पर्यमाहुः—भगवद्रूपेत्यादि द्वाभ्याम्। सर्वथेति। सर्वप्रकारेणोपयुक्तत्वात्। एवं च भगवदर्थसृष्टिस्थानां भूतादीनामेताभ्यां लक्षणमेव कृतं ज्ञेयम्। एवं प्रकरणद्वयस्याप्यर्थं निरूप्य प्रस्तुताध्यायार्थं सप्रपञ्चमाहुः। पञ्चविंशेत्यादि। तस्येति। भक्तियोगस्य। अङ्गमिति। फलोपकार्यङ्गम्। इतरज्ञानमिति। विविक्तात्मज्ञानम्। तथाचाङ्गद्वयवती भक्तिर्भगवदर्थभूताधिदैविकसंस्काररूपाऽत्र निरूप्यत इत्यर्थः। विभागान्तर एतस्य धर्माध्यायत्वमिति तद्बोधनायाऽऽहुः—परममित्यादि। यथाशास्त्रस्य कथनमिति। शास्त्रमनतिक्रान्तस्य प्रकारस्य कथनम्। तथाहीदं तस्य प्रकारस्य धर्मत्वज्ञापकमित्यर्थः। सतां निरूपणं तु गुरूपयोगादुभयसाधारणमित्याहुः—सन्त इत्यादि। चाद्धर्मस्यापि। शेषं स्फुटम्।

कापिल इत्यत्र। न मन्यत इति अजत्वं, स्वराट्त्वं च न मन्यते। अनेन तेनेति। अनयोक्त्या तेनाऽऽभिर्भावेण ॥ १ ॥

## श्रीगिरिधरकृता बालप्रबोधिनी

देवहूत्या विपृष्टेन कपिलेन दयालुना। पराया लक्षणं भक्तेः पञ्चविंशे निरूप्यते ॥ १ ॥

एवं मनुतदपत्यचरितं श्रुत्वा कपिलाख्यानशुश्रूषुः शौनक उक्तानुवादपूर्वकं पृच्छति—कपिल इति त्रिभिः। अजः कर्मायत्तजन्मरहितो भगवानेव आत्ममायया स्वेच्छया नृणां आत्मतत्त्वज्ञापनाय स्वयमेव साक्षात् तत्त्वसङ्ख्याता साङ्ख्यशास्त्रप्रवर्त्तकः कपिलो जात इत्यन्वयः ॥ १ ॥ ❀ ❀ सत्यं जातस्तेन किमित्यपेक्षायामाह—नहीति। हि यस्मात् पुंसां वर्ष्मणः श्रेष्ठस्य सर्वयोगिनां च वरिम्णः वरिष्ठस्यास्य कपिलस्य विश्रुतौ कीर्त्तौ कीर्त्तिश्रवणे श्रुतदेवस्य भूरि भूरिशः श्रुतो देवो येन तथा भूतस्यापि मे मम असव इन्द्रियाणि न तृप्यन्ति अलमिति न मन्यन्ते ॥ २ ॥ ❀ ❀ तस्मात् स्वानां छन्देन इच्छया आत्मा देहाविर्भावो यस्य सः, यद्वा स्वच्छन्देन स्वेच्छयाऽऽत्मा देहग्रहणं यस्य स भगवान् कपिल आत्ममायया स्वेच्छया यद्यच्चरितं विधत्ते अकरोत् तानि चरितानि मे मम अनुकीर्त्तयेत्यन्वयः। श्रवणे स्वस्याधिकारित्वं सूचयन्नाह—श्रद्दधानस्येति, श्रवणे श्रद्धावत इत्यर्थः। कथने तत्रापि

---

१. समागमनानन्तरम् क.।

पुरुषार्थसिद्धिर्भविष्यत्येवेत्याशयेनाह—कीर्त्तन्यानीति ।। ३ ।। ❀ ❀ एवं शौनकेन पृष्टः सूत आह—द्वैपायनेति । यथा त्वं मां कपिलाख्यानकथने प्रचोदयसि एवं विदुरेणापि आन्वीक्षिक्यां कपिलोक्तब्रह्मविद्यायां प्रचोदितो मैत्रेयोऽपि प्रीतः सन् तथा तत्प्रश्नानुसारेण विदुरं प्रतीदं वक्ष्यमाणं प्राह, तच्छृण्विति शेषेणान्वयः । तुशब्दोऽप्यर्थे । मैत्रेयोक्तौ प्रामाण्यं सूचयंस्तस्य ज्ञानातिशयमाह—भगवानिति । तत्र हेतुमाह—द्वैपायनस्य वेदव्यासस्य सखेति पराशरशिष्य इत्यर्थः ।। ४ ।। ❀ ❀ तदुक्तिमेवाह—पितरीत्यादिपञ्चभिः । पितरि कर्दमेऽरण्यं प्रति प्रस्थिते गते सति भगवान् कपिलो मातुर्देवहूत्याः प्रियं कर्तुमिच्छया तस्मिन्नेव बिन्दुसरस्तीरे अवात्सीत् । किलेत्यवधारणे ।। ५ ।। ❀ ❀ धातुर्ब्रह्मणः 'एष मानवि ते गर्भं प्रविष्टः' इत्यादिवचः संस्मरती देवहूतिः तं स्वसुतं कपिलमाहेत्यन्वयः । तस्योपदेशे सावकाशं दर्शयति—आसीनं उपविष्टम् । तत्र हेतुः—अकर्माणं कर्ममार्गान्निवृत्तम् । उपदेशसामर्थ्यमाह—तत्त्वेति, तत्त्वज्ञानमार्गस्य अग्रं पारं सिद्धान्तं दर्शयतीति तथा ।। ६ ।। ❀ ❀ हे भूमन् हे प्रभो इति सम्बोधनद्वयेन न तवाग्रे किञ्चिदन्यथा वक्तुं शक्यते इति सूचयति । असतां नरकादिदुःखद्वारभूतानां दुस्तोषाणामिन्द्रियाणां तर्पणान्नितरां भृशमहं निर्विण्णा खिन्नाऽस्मि । तर्पणादिति पाठे विषयाभिलाषादित्यर्थः । कुतस्तत्राह—सम्भाव्यमानेन निरन्तरं क्रियमाणेन येनेन्द्रियतर्पणेन अहमन्धन्तमः महामोहं प्रपन्ना प्राप्ताऽस्मीति ।। ७ ।। ❀ ❀ तस्य दुःपारस्य दुरन्तस्य अन्धस्य गाढस्य तमसः पारं गमयतीति पारगस्तथाभूतं त्वमेव सत् श्रेष्ठं चक्षुः मे मया बहूनां जन्मनामन्ते त्वदनुग्रहादेव लब्धं, न स्वसाधनबलात् ।। ८ ।।

## हिन्दी अनुवाद

### देवहूतिका प्रश्न तथा भगवान् कपिल द्वारा भक्तियोगकी महिमाका वर्णन

शौनकजीने पूछा—सूतजी ! तत्त्वोंकी संख्या करनेवाले भगवान् कपिल साक्षात् अजन्मा नारायण होकर भी लोगोंको आत्मज्ञानका उपदेश करनेके लिये अपनी मायासे उत्पन्न हुए थे ।। १ ।। ❀ ❀ मैंने भगवान्के बहुत-से चरित्र सुने हैं, तथापि इन योगिप्रवर पुरुषश्रेष्ठ कपिलजीकी कीर्तिको सुनते-सुनते मेरी इन्द्रियाँ तृप्त नहीं होतीं ।। २ ।। सर्वथा स्वतन्त्र श्रीहरि अपनी योगमाया द्वारा भक्तोंकी इच्छाके अनुसार शरीर धारण करके जो-जो लीलाएँ करते हैं, वे सभी सुनाइये, मुझे उन्हें सुननेमें बड़ी श्रद्धा है ।। ३ ।। ❀ ❀ सूतजी कहते हैं—मुने ! आपकी ही भाँति जब विदुरने भी यह आत्मज्ञानविषयक प्रश्न किया, तो श्रीव्यासजीके सखा भगवान् मैत्रेयजी प्रसन्न होकर इस प्रकार कहने लगे ।। ४ ।। ❀ ❀ श्रीमैत्रेयजीने कहा—विदुरजी ! पिताके वनमें चले जानेपर भगवान् कपिलजी माताका प्रिय करनेकी इच्छासे उस बिन्दुसर तीर्थमें रहने लगे ।। ५ ।। एक दिन तत्त्वमार्गके पारदर्शी भगवान् कपिल कर्मकलापसे विरत हो आसनपर विराजमान थे । उस समय ब्रह्माजीके वचनोंका स्मरण करके देवहूतिने उनसे कहा ।। ६ ।। ❀ ❀ देवहूति बोली—भूमन् ! प्रभो ! इन दुष्ट इन्द्रियोंकी विषय-लालसासे मैं बहुत ऊब गयी हूँ और इनकी इच्छा पूरी करते रहनेसे ही घोर अज्ञानान्धकारमें पड़ी हुई हूँ ।। ७ ।। ❀ ❀ अब आपकी कृपासे मेरी जन्मपरम्परा समाप्त हो चुकी है, इसीसे इस दुस्तर अज्ञानान्धकारसे पार लगानेके लिये सुन्दर नेत्ररूप आप प्राप्त हुए हैं ।। ८ ।।

य आद्यो भगवान् पुंसामीश्वरो वै भवान् किल । लोकस्य तमसान्धस्य चक्षुः सूर्य इवोदितः ।। ९ ।।
अथ मे देव सम्मोहमपाक्रष्टुं त्वमर्हसि । योऽवग्रहोऽहंममेतीत्येतस्मिन् योजितस्त्वया ।। १० ।।

तं त्वा गताहं शरणं शरण्यं स्वभृत्यसंसारतरोः कुठारम् ।
जिज्ञासयाहं प्रकृतेः पूरुषस्य नमामि[1] सद्धर्मविदां वरिष्ठम् ।। ११ ।।

### मैत्रेय[2] उवाच

इति स्वमातुर्निरवद्यमीप्सितं निशम्य पुंसामपवर्गवर्धनम् ।
धियाभिनन्द्यात्मवतां सतां गतिर्बभाष ईषत्स्मितशोभिताननः ।। १२ ।।

### श्रीभगवानुवाच

योग आध्यात्मिकः पुंसां मतो निःश्रेयसाय मे । अत्यन्तोपरतिर्यत्र दुःखस्य च सुखस्य च ।। १३ ।।
तमिमं ते प्रवक्ष्यामि यमवोचं पुरानघे । ऋषीणां श्रोतुकामानां योगं सर्वाङ्गनैपुणम् ।। १४ ।।

---

१. प्रा० पा०—ज्ञानेन । २. प्राचीने पाठे 'मैत्रेय उवाच' अयं पाठो न ।

चेतः खल्वस्य बन्धाय मुक्तये चात्मनो मतम्। गुणेषु[1] सक्तं बन्धाय रतं वा पुंसि मुक्तये ॥ १५ ॥
अहंममाभिमानोत्थैः कामलोभादिभिर्मलैः। वीतं यदा मनः शुद्धमदुःखमसुखं समम् ॥ १६ ॥

श्रीधरस्वामिविरचिता भावार्थदीपिका

तत्प्रपंचयति। स भगवान् भवांश्चक्षुरूप उदितः सूर्यो यथा ॥ ९ ॥ ॐ ॐ अपाकृष्टमपनेतुम्। कोऽसौ संमोहस्तमाह। एतस्मिन्देहादौ त्वयैव योजितो योऽहंममेत्यवग्रह आग्रहः। द्वितीय इतिशब्दस्तत्कार्यरागादिग्रहणार्थः ॥ १० ॥ ॐ ॐ प्रकृतेः पुरुषस्य च जिज्ञासया त्वामहं शरणं गता सती नमामीत्यन्वयः। कुठारं छेत्तारम् ॥ ११ ॥ ॐ ॐ अपवर्गवर्धनं मोक्षे रतिजनकम्। ईषत्स्मितेन शोभितमाननं यस्य ॥ १२ ॥ ॐ ॐ आध्यात्मिक आत्मनिष्ठः यत्र यस्मिन् ॥ १३ ॥ १४ ॥ ॐ ॐ तत्र सर्वांगनैपुण्यं चित्तसंयमाधीनमिति दर्शयन्नाह। चेत इति। अस्यात्मनो जीवस्य गुणेषु विषयेषु पुंसि परमेश्वरे वाशब्दस्तुशब्दार्थे ॥ १५ ॥ ॐ ॐ यथा च चित्तसंयमे पुरुषार्थसिद्धिस्तद्दर्शयति। अहमिति त्रिभिः। मलैर्वीतं विरहितं यदा शुद्धं मनो भवति। मनःशुद्धेर्ज्ञापकमाह। अदुःखमिति ॥ १६ ॥

श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः।

तत्सचक्षुष्ट्वं न केवलं ममैवापि तु सर्वस्येत्याह—लोकस्येति ॥ ९ ॥ ॐ ॐ अथात एव संमोहं मिथ्याज्ञानलक्षणं भ्रमम् ॥ १० ॥ ॐ ॐ त्वा त्वाम्। स्वेषां भक्तानां ये भृत्या वेतनेनापि भरणीयास्तेषामपि संसारतरोः कुठारं भक्तिकर्तृकच्छेदनानन्यसाधनम्। पुरुषः खलु को यः संसारी प्रकृतिश्च का यतोस्य संसार इति ज्ञातुमिच्छया न चात्र कश्चिदन्यः प्रष्टव्य इत्याह। सतां यो धर्मस्तादृशसंसारनिवर्त्तको भक्तिरूपस्तद्विदांमध्ये श्रेष्ठम् ॥ ११ ॥ ॐ ॐ श्लेषेण अपकृष्टवर्गस्य त्रिवर्गस्य वर्द्धनं छेदनं यत्तत्। आत्मा स एव सेव्यत्वेन विद्यते येषां तेषां सताम्। ईषत्स्मितेति। मम परमेश्वरस्य माता त्वं तव का संसारवार्ता तथापि त्वां लक्ष्यीकृत्य लोकानुद्धर्तुं किमप्युपदिशामीति भावः। संदर्भस्तु—पुंसां साधारणानामपवर्गवर्द्धनम्। अस्यै तु मद्भक्त्याख्यं परमं सुखमपि दास्यामीति स्मिततात्पर्यमित्याह ॥ १२ ॥ ॐ ॐ आत्मनिष्ठं जीवात्मनिष्ठः योगे निःश्रेयसार्थमुपायः। स च भक्तिर्ज्ञानं योगश्चेति त्रिविधो वक्तव्यः। तत्राभक्तिपक्षे निःश्रेयसमननुसंहितं फलं ज्ञेयम्। यत्र योगो सति दुःखस्य सांसारिकस्य उपरतिरुन्मूलनम् ॥ १३ ॥ ॐ ॐ ऋषीणामृषीन्नारदादीन्। सर्वाण्यंगानि नैपुण्यानि तदनुष्ठानचातुर्याणि च यत्र तत् ॥ १४ ॥ ॐ ॐ परमेश्वररतेः कारणं भक्तिरेव न ज्ञानं नापि योगो मोचकत्वेन केवला भक्तिरेव समुचितेति ज्ञेयम् ॥ १५ ॥ ॐ ॐ ज्ञानवैराग्ययोश्च मोचकत्वं भक्तिसाहाय्येनैवेत्याह—अहमिति। कामादिमलराहित्यं च मनसः शमदमादिभिर्यमनियमादिभिश्च भवतीति ज्ञानयोगयोरंगानि सूचितानि। अदुःखं स्यादिति शेषः ॥ १६ ॥

श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या।

तत्। चक्षुष्ट्वं चक्षुपरसापेक्षप्रकाशकत्वादुपमानान्तरं सूर्यो यथेति। तथा निरपेक्षसर्वप्रकाशकस्त्वमुदितोऽसि ॥ ९ ॥ ॐ ॐ अथ प्रकाशकत्वात् तत्कार्य्यमहं मम कार्य्यम् ॥ १० ॥ ॐ ॐ तं चक्षूरूपं सर्वप्रकाशकं स्वेषां भक्तानां ये भृत्या वेतनेनापि भरणीयास्तेषामपि संसारतरोः कुठारं स्वभक्तकर्त्तृकच्छेदनेऽनन्यसाधनं पुरुषस्य च परमेश्वरस्य तत्र प्रकृतेः जिज्ञासा तत्यागेन पुरुषानुगतिस्सम्भवेन्नान्यथेति ॥ ११ ॥ ॐ ॐ स्वमातुर्वचनं निरवद्यं रागादिदोषखण्डकं साधारणानामेव पुंसां मोक्षे रतिजनकं स्वमात्रे तु मद्भक्त्याख्यं परमसुखमपि दास्यामीति स्मिततात्पर्य्यम् ॥ १२ ॥ ॐ ॐ तत्र तावत्साधारणजनानां मोक्षमात्रोपायमाह। योग इति। आत्मनिष्ठः परमात्मनिष्ठः यस्मिन् योगे ॥ १३ ॥ ॐ ॐ सर्वाङ्गेषु यमनियमादिषु भक्तियोगसंयोक्तृत्वलक्षणं नैपुणं यत्र तत् उर्वङ्गनैपुणमिति सम्बन्धोक्तिसम्मतः पाठः ॥ १४ ॥ ॐ ॐ रतं रतिमात्रं प्राप्तम् ॥ १५ ॥ ॐ ॐ अहमिति त्रिकम्। पुरुषार्थसिद्धिः परमात्मसाक्षात्कारः तदिति तं प्रकारं सममन्यत्र हेयोपादेयज्ञानरहितम् आत्मानं परमात्मानं निर्भेदं सजातीयादित्रिविधभेदरहितं सूक्ष्मं दुर्ज्ञेयमित्यर्थः। अपरिच्छिन्नं त्रिविधपरिच्छेदशून्यमुदासीनं सर्वसाक्षिणम् ॥ १६—१९ ॥

श्रीमद्वीरराघवव्याख्या

तदेव प्रपञ्चयति। य इति। पुंसां जीवानामीश्वरो नियन्ता आद्यो जगत्कारणभूतो यो भगवान् स एव भवान् तमसा अन्धस्य लोकस्य चक्षुः चक्षुरधिष्ठाता सूर्य इवोदितः। यद्वा सूर्य इवेत्येतस्योत्तरत्रान्वयः तदा चक्षूरूप उदितः ॥ ९ ॥ ॐ ॐ उदितसूर्य इव मे मम सम्मोहमपाकृष्टुमपनेतुं हे देव! त्वमर्हसि कोऽसौ सम्मोहः योऽपाकृष्टव्यः इत्यत्राह। अस्मिन् देहेऽहं ममेत्येवं रूपोऽवग्रहोऽभिमानः त्वयैव योजितः स एवेत्यर्थः। त्वत्सङ्कल्पादेव उत्पन्नो मोहस्त्वयैव निवर्त्यः। यो बन्धकः स एव मोचक इति न्यायादिति भावः ॥ १० ॥ ॐ ॐ तमुक्तविधं स्वभक्तानां संसार एव तरुस्तस्य कुठारं कर्तुरेव साधकत्वं विवक्षितं सद्धर्म-

१. प्रा० पा०—गुणे प्रसक्तं।

विदां निवृत्तिधर्मविदां वरिष्ठं श्रेष्ठं शरण्यं शरणार्हं त्वामहं प्रकृतेः पुरुषस्य जीवस्येदं परमात्मनोऽप्युपलक्षणं जिज्ञासया ज्ञातुमिच्छया शरणं गता सती नमामि ॥ ११ ॥ ❀ ❀ एवमुक्तः कपिलस्तामाबभाष इत्याह। मैत्रेयः पुंसामपवर्गवर्द्धनं मोक्षरुचिकरं निरवद्यं निर्दुष्टं स्वमातुर्देवहूत्या ईप्सितमभिप्रेतमेवं निशम्य श्रुत्वा धिया मनसाभिनन्द्यात्मवतां निगृहीतमनसां सतां गतिः मुक्त्युपायः कपिलः इत्युत्स्मितेन मन्दहासेन शोभितमाननं मुखं यस्य सः तां मातरमाबभाषे ॥ १२ ॥ ❀ ❀ तत्र ज्ञानकर्मयोगादिभिरनुगृहीतभगवद्भक्तियोगस्यैव साक्षान्मुक्त्युपायत्वमुत्तराध्यायेषु विस्तरेण प्रतिपादयिष्यमाणमत्र सङ्ग्रहेण प्रतिपादयंस्तावज्ज्ञानयोगमवतारयति। योग इति द्वाभ्याम्। आध्यात्मिकः प्रकृतिविविक्तात्मयाथात्म्यज्ञानरूपो योगः पुंसां मुमुक्षूणां निःश्रेयसाय मोक्षाय मे मया मतः। ज्ञानयोगो मुमुक्षूणां मोक्षसाधनमिति मन्मतमित्यर्थः। आत्मज्ञानयोगं प्रशंसन्नाह अत्यन्तेति। यत्र यस्मिन् आध्यात्मिके योगे निष्पन्ने सति दुःखस्य सुखस्य च वैषयिकसुखदुःखयोरत्यन्तमुपरतिर्विनाशो भवति ॥ १३ ॥ ❀ ❀ आत्मयोगं श्रोतुकामानां शुश्रूषूणामृषीणां पूर्वकालेऽहमवोचमुक्तवानस्मि तमिममात्मयोगमुरुभिर्बहुभिरङ्गैः शमदमादिभिर्निपुणं यथा भवति तथा ते तुभ्यं प्रवक्ष्यामि ॥ १४ ॥ ❀ ❀ एवमध्यात्मयोगमवतार्य तत्र प्रकृतिविविक्तात्मस्वरूपग्रहणयोग्यमनसः स्वरूपं कथयिष्यन् तावन्मनस एव बन्धमोक्षकारणत्वमाह। चेत इति। अस्यात्मनो जीवस्य बन्धाय मोक्षाय च चेत एव मतं खलु कारणमिति शेषः कीदृशं बन्धाय मुक्तये च कीदृशमित्यत्राह। गुणेषु गुणकार्येषु शब्दादिविषयेषु सक्तमासक्तं चेतः बन्धाय भवति पुंसीश्वरे रतं वा आसक्तं मुक्तये भवतीति विवेकः ॥ १५ ॥ ❀ ❀ प्रकृतिविविक्तात्मस्वरूपग्रहणयोग्यमनःस्वरूपमाह। अहमिति त्रिभिः। अहंममाभिमानाभ्यामनात्मनि देहे आत्माभिमानः अहमभिमानः अस्वीये स्वीयाभिमानः ममाभिमानः तथा च स्मर्यते। "अनात्मन्यात्मबुद्धिर्या अस्वे स्वमिति या मतिः। अविद्यातरुसम्भूतं बीजमेतद् द्विधा स्थितम्॥" इति आभ्यामभिमानाभ्यामुत्पन्नैः कामलोभादिभिः मलैः कामादिहेतुकैः पुण्यापुण्यरूपैर्मलैर्यदा वीतं रहितमनभिसंहितफलेश्वराराधनरूपतद्वर्णाश्रमोचितैर्धर्मैः कामादिभी रहितमत एव शुद्धमत एवादुःखमसुखमैन्द्रियिकदुःखैरभिभूतमत एव समं सदैकरूपं यदा भवति तदा पुरुष उक्तविधमनस्कः पुमान् ज्ञानवैराग्ययुक्तेन ज्ञानमत्र शास्त्रजन्यमात्मस्वरूपयाथात्म्यावगाहि ज्ञानं वैराग्यं विषयेष्वनासक्तिः ताभ्यां युक्तेन विशेष्यभूतभगवद्भक्तियुक्तेन चात्मना मनसा च प्रकृतेः प्रकृतिकार्यशरीरेन्द्रियमनःप्राणादिभ्यः परं स्वरूपतः स्वभावतश्चात्यन्तविलक्षणमत एव केवलं सत्त्वादिगुणरहितं प्रकृतिपरिणामगतदेवत्वमनुष्यत्वाद्याकाररहितमत एव निरन्तरं प्रतिशरीरं भिन्नत्वेऽपि सर्वत्र ज्ञानैकाकारतया वैषम्यरहितं निर्दोषं हि समं ब्रह्मेति ह्युच्यते अणिमानमणुतरं स्वरूपकथनमिदं ज्ञानस्वरूपत्वस्याप्युपलक्षणमिदम् अणिमत्वादेवाखण्डितं खण्डनानर्हमिदमदाह्यत्वाक्लेद्यत्वादीनामप्युपलक्षणं खण्डनदहनच्छेदनसाधनभूता हि परश्वग्निजलादयः छेद्यं दाह्यं क्लेद्यं प्राप्य च्छेदनादीन्निर्वर्त्तयन्ति। आत्मनस्तु निरतिशयाणुत्वेन सर्वान्तःप्रवेशयोग्यतया व्यापकत्वाद्व्याप्यपरश्वधादिसाध्यैश्छेदनादिभिर्न विनाश इत्यर्थः। स्वयंज्योतिः स्वयंप्रकाशं दीपादिवदिति दृष्टान्तोऽत्राभिप्रेतः। तत्र यथा-दीपादिस्तेजःस्वरूपं तेजोधर्मकश्च स्वयंप्रकाशस्तद्वदयमात्मापि ज्ञानस्वरूपो ज्ञानगुणकः स्वप्रकाशश्चेति भावः। एवंविधमुदासीनं निर्व्यापारमात्मानं प्रत्यगात्मानं हतौजसं संसारयितृत्वरूपबलहीनां प्रकृतिं च पश्यति ॥ १६ ॥ १७ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

न केवलं ममैवैतदनुग्रहायोदितं चक्षुर्मन्निमित्तं लोकस्याप्यतोऽहं पुण्यसागरा इत्याशयेनाह। य आद्य इति यः पुंसां ब्रह्मादीनां पुरुषाणामाद्यस्तेषामीश्वरः ऐश्वर्यप्रदः भगवानैश्वर्यादिगुणसमुद्रः स वै स एव भवांस्तमसान्धस्य लोकस्य दृष्टिप्रदः सूर्य इवोदितः किल सम्भावितमित्यन्वयः। "वार्ता सम्भाव्ययोः किल" इति यादवः ॥ ९ ॥ ❀ ❀ एवं भगवन्तं स्वाभीष्टार्थेऽभिमुखीकृत्य स्वाभिप्रायं विज्ञापयति। अथेति यथा विहितक्रियाकरणे महता प्रत्यवायेनानर्थरूपनरकप्राप्तिस्तथा ज्ञानस्य ग्राहके त्वादृशे सूर्ये सन्निहिते सति तद्ग्रहणेऽनुत्थानतमःप्राप्तिः स्यादिति यस्मादथ तस्मात्त्वया य एतस्मिन्देहगेहादावहंममेत्यवग्रहो ज्ञानदृष्टिप्रतिबन्धको मिथ्याभिमानो योजितः पूर्वादृष्टानुसारेणेति शेषः, तं सम्मोहं मिथ्याज्ञानलक्षणं भ्रमं मे विद्यमानमपाकृष्टुमुत्कृत्य त्यक्तुमर्हसि तत्त्वज्ञानोपदेशेनेत्यन्वयः ॥ १० ॥ ❀ ❀ "उपसन्नाय शिष्याय वक्तव्यं ब्रह्म शाश्वतम्" इति वचनादुपसत्त्यभावात्तव कथमुपदिशामीति शङ्का मा भूदिति भावेनाह। तन्त्वेति। यस्त्वमिह सिद्धिज्ञानोपदेशायावतीर्णस्तं त्वां शरणं गतेत्यन्वयः। केन हेतुनेत्यत उक्तं जिज्ञासयेति "नारायणो ब्रह्मवायूवीन्द्रशेषौ हरस्तथा। कामः शक्रो गुरुर्दक्षो मन्वाद्या भास्करादयः॥ सर्वजीवाश्च क्रमशः पुरुषाख्याभिशब्दिताः। एतत्पत्न्यो बन्धशक्तिः स्त्रियः सर्वास्तथा जडे। क्रमात्प्रकृतिशब्दोक्तास्तज्ज्ञानाद्विप्रमुच्यते ॥" इति वचनात्पुरुषस्य नारायणादेः प्रकृतेर्लक्ष्म्यादेश्च विवेकलक्षणतारतम्यजिज्ञासया ज्ञातुकामेन हेतुनेत्यर्थः। त्वं स समग्रानुग्रहं कर्तुं समर्थ इत्याशयेनाह। स्वभृत्येति। न केवलमिदमपसादनं वाचिकं किन्तु कायिकं चेत्याह। नमामीति। संसारतरोः कुठारस्य नैशल्याभावे तदुक्तिः स्तोत्रं स्यादित्यत उक्तं सद्धर्मेति ॥ ११ ॥ ❀ ❀ अत्र मैत्रेयो मात्रा प्रार्थितः कपिलस्तां प्रति वक्तीति विदुरं प्रत्याह। इतीति। ईप्सितं ज्ञातुमिष्टमपवर्गस्य संसारविनाशस्य चोदनं सूचकम् ईषद्बभाषे स्मितमाह। महतामल्पभाषितं गुणमनेन द्योतयति ॥ १२ ॥ ❀ ❀ नन्वहं भोक्ष्ये किं पितृवत्प्रव्रजिष्यामि किं चरको भवानीति किं तत्राह। योग इति। "परमात्मादिकं देहे यदध्यात्मकमीरितम्" इति वचनादाध्यात्मिकः देहमधिकृत्य वर्तमानानां

परमात्मादितत्त्वानां स्वरूपलक्षणो योगो मया पुंसां निःश्रेयसाय मतो निरूपितो यत्र मोक्षे शरीर[१]भोग्यस्य सुखस्य दुःखस्य साकल्येनोपरतिर्नाशस्तमिमं योगं तव वक्ष्यामीत्यन्वयः ॥ १३ ॥ ❀ ❀ आप्तत्वायाह । यमवोचमिति । ऋषीणां ब्रह्मादिज्ञानिनामुरुभिरङ्गैर्यमनियमादिसाधनैर्नैपुणं पाटवगुणोपेतं सुखं नास्ति चेन्मुक्तौ सुखमाप्तवान्न दुःखमित्याशीः कथं जागर्तीत्याशङ्का च शब्दसूचितया "सुखं शरीरभोग्यं तु दुःखं सर्वं तथैव च । मुक्तौ विलयमायाति नित्यानन्दस्तु भुज्यत" इत्यनया परिहृतेति मुक्तावतः स्वरूपानन्द एवाशास्यते न भौतिक इति सर्वत्र द्रष्टव्यम् । वैशब्देन स्वरूपानन्दावाप्तित्वलक्षणं निःश्रेयसं ध्वनयति न स्वर्गादिकं तस्य हेयत्वेनोक्तत्वाद्वक्ष्यमाणत्वाच्च ॥ १४ ॥ ❀ ❀ प्रतिज्ञातयोगसाफल्यसाधनाय मनोवशीकरणं प्रथमसाधनमित्याह । चेत इति । चिनोति आत्मनि मलमिति चेतो मनः अस्यात्मनो जीवस्य चेतः संसारबन्धाय तस्मान्मुक्तये चात्मनो मम मतमेकस्य कार्यद्वयापादनसामग्री कथमत्राह । गुणेष्विति । शब्दादिगुणेषु सक्तं बन्धाय तेषु गुणेष्वसक्तं मुक्तये ॥ १५ ॥ ❀ ❀ शब्दादिगुणेष्वसक्त्यैवालं किमित्याशङ्क्य विशिनष्टि । अहंममेति । यदात्मनोऽहं ममाभिमानोत्थैः कामलोभादिभिर्मलैर्वीतं रहितं शुद्धं चित्स्वरूपं दूरीभूता चिन्मनःसम्पर्कं परतत्त्वानुभवेन बाह्ये शब्दादिसुखेऽनासक्तेरिच्छाभावाद-सुखमत एव दुःखास्पर्शाददुःखं समं निश्चलं भक्तिरसायनेनैव नित्यानन्दं भवति ॥ १६ ॥

## श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

स्वेषां भक्तानां ये भृत्या वेतनेनापि भरणीयास्तेषामपि संसारतरोः कुठारं भक्तिकर्तृकच्छेदनानन्यसाधनं संसारशब्देन चात्र लोभनीयदुष्कुलकण्टकजालमयतया बन्धकत्वं ज्ञायते प्रकृतेर्मायायाः पुरुषस्य परमेश्वरस्य जिज्ञासयेति प्रकृतौ ज्ञातायां तत्त्यागेन पुरुषानुगतेः सम्भवात् ॥ ११ ॥ ❀ ❀ इतीति । पुंसां साधारणानामेवापवर्गवर्द्धनमस्यै तु मद्भक्त्याख्यं परमं सुखमपि दास्यामीति स्मिततात्पर्यं यद्वा तेषामपि अपवर्गाख्यभक्तियोगवर्द्धनं यतः सतां गतिः तत्सम्बन्धेनेति भावः । किमुतास्याः स्वमातुरिति ॥ १२ ॥ ❀ ❀ तत्र प्रथमं तावन्मुक्तिमात्रोपायमाह । योग इति । आध्यात्मिकः परमात्मनिष्ठः ॥ १३ ॥ ❀ ❀ योगमुर्वङ्गनैपुण्यमिति पाठः सम्बन्धोक्तिसम्मतः सर्वाङ्गेति तु स्वामिलिखितम् ॥ १४ ॥ ❀ ❀ पुंसि परमात्मनि रतं रतिमात्रं प्राप्तम् ॥ १५ ॥ ❀ ❀ अहमिति त्रिकम् ॥ १६ ॥

## श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

न केवलं ममैव चक्षुरपि तु सर्वस्यैवेत्याह । य इति । सूर्य इव सर्वतमोहन्ता ॥ ९ ॥ ❀ ❀ अथ अत एव प्रथमं मम सम्मोहान्धकारमपाक्रष्टुं दूरीकर्तुं यः खलु सम्मोहोऽवग्रहः भक्त्यमृतवृष्टेः प्रतिबन्धकः । कीदृशः एतस्मिन् देहगेहादावहंममेतीति प्रथम इतिशब्दः समाप्तौ । द्वितीय इतिशब्दः प्रकारे अहं सुखी । मम गेहं समृद्धिमदित्येतावत्प्रकार इत्यर्थः । त्वन्मायाकल्पित-त्वात्त्वयैव योजितः ॥ १० ॥ ❀ ❀ त्वा त्वां प्रकृतेः पुरुषस्य च जिज्ञासया पुरुषः खलु को यः संसारी प्रकृतिश्च का यतोऽस्य संसार इति ज्ञातुमिच्छया न चात्र कश्चिदन्यः प्रष्टव्य इत्याह । सतां यो धर्मस्तादृशसंसारनिवर्त्तकभक्तिरूपस्तद्विदां मध्ये श्रेष्ठम् ॥ ११ ॥ ❀ ❀ अपवर्गस्य मोक्षस्य वर्द्धनं वृद्धिः श्लेषेण अपकृष्टवर्गस्य त्रिवर्गस्य छेदनं यतस्तत् आत्मा स कपिल एव सेव्यत्वेन वर्त्तते येषां तेषां सतां भक्तानां गतिः ईषत्स्मितेति मम परमेश्वरस्य त्वं माता भवसि तवापि कः संसारो भवतु तदपि त्वां लक्ष्यीकृत्य लोकानुद्धर्त्तुं किमप्युपदिशामीति भावः ॥ १२ ॥ ❀ ❀ आध्यात्मिकः जीवात्मनिष्ठः योगः निःश्रेयसार्थमुपायः स च भक्तिर्ज्ञानं योगश्चेति त्रिविधो वक्तव्यः । तत्र भक्तिपक्षे निःश्रेयसमननुसंहितं फलं ज्ञेयम् । यत्र योगे सति सांसारिकस्य दुःखस्य सुखस्य चोन्मूलनम् ॥ १३ ॥ ❀ ❀ ऋषीणामृषीन्नारदादीन् उरूण्यङ्गानि नैपुण्यानि तदनुष्ठानचातुर्याणि च यत्र तत् ॥ १४ ॥ ❀ ❀ जीवात्मानं खलु मन एव दुःसङ्गसुसङ्गाभ्यां बध्नाति मोचयति चेत्याह । चेत इति । गुणेषु स्वबन्धनसाधकतमेषु सक्तमासक्तमिति बन्धने न्याय उक्तः पुंसि पुरुषोत्तमे निर्गुणे गुणबन्धध्वंसके रतं रतिमदिति मोचने च न्यायः वाशब्दस्तुशब्दार्थः । अत्र श्रीपुरुषोत्तमविषयिण्या रतेः कारणं भक्तिरेव भवेन्न ज्ञानं नापि योगो मोचकत्वेन केवला भक्तिरेव समुचिता ज्ञेया ॥ १५ ॥ ❀ ❀ ज्ञानयोगयोरपि मोचकत्वं भक्तिसाहाय्येनैवाह । अहमिति त्रिभिः । वीतं रहितं कामादिमलराहित्यञ्च मनसः शमदमा-दिभिः यमनियमादिभिश्च भवतीति ज्ञानयोगयोरङ्गानि सूचितानि शुद्धेर्ज्ञापकत्वमाह । अदुःखमित्यादि स्यादिति शेषः ॥ १६ ॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

बाह्यतमो निर्नाशकः सूर्य इव आन्तरीयतमोघ्नः चक्षूरूपो भवानुदितः ॥ ९ ॥ ❀ ❀ एतस्मिन् देहे अहमिति गेहादौ ममेति च अवग्रहः आग्रहः यस्त्वया योजितस्तं मे संमोहमपाक्रष्टुमपनेतुं मोक्षोपायं प्रकाशयितुमिति फलितोऽर्थस्त्वमर्हसि

---

१. अन्तःकरणपरिणतिरूपस्य ।

॥ १० ॥ ❀ ❀ प्रकृतेः पुरुषस्य जीवात्मपरमात्मभेदाद् द्विविधस्य स्वभृत्यानां संसारतरोः कुठारं छेदकं तं त्वां शरणं गता सती नमामि ॥ ११ ॥ ❀ ❀ पुंसामपवर्गे मोक्षे वर्द्धनं प्रवर्तकम् ॥ १२ ॥ ❀ ❀ पुंसां निःश्रेयसाय मोक्षाय आध्यात्मिकः आत्मनि परमात्मनि निष्ठायोगः ध्यानयोगः "आत्मा वा अरे द्रष्टव्यो मन्तव्यो निदिध्यासितव्य" इति श्रुतिप्रोक्तः मे मत्तः यत्र यस्मिन् योगे सुखस्य प्राकृतस्य ॥ १३ ॥ १४ ॥ ❀ ❀ पुंसि परमात्मनि अस्य जीवस्य चेतो रतं मुक्तये भवति भगवद्ध्यानेन मुक्तिर्भवतीत्यर्थः ॥ १५ ॥ ❀ ❀ एवं ध्रुवास्मृतिपरभक्तियोगाद्यपरपर्यायं भगवद्ध्यानं मोक्षासाधारणकारणमुक्त्वाथ तत्साधनानि ज्ञानवैराग्यसाधनरूपभक्त्याख्यानि भक्तेः श्रैष्ठ्यं सर्वेषां ज्ञानादीनां साधकं सत्सङ्गं सतां लक्षणं चाह । अहमित्यादिना। मलैर्यदा वीतं विरहितं शुद्धं भवति तदा पुरुषः आत्मानं स्वयंज्योतिश्च प्रकृतिं च पश्यतीति त्रयाणामन्वयः ॥ १६ ॥

## श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

किञ्च, साक्षाद्भगवान् भवानित्याह—य आद्य इति। आद्यः पुरुषः। सर्वेषां ब्रह्मादीनां पुंसां त्वमेवाद्यः, कारणम्। कारणमेव च ब्रह्म। कालादिव्यावृत्त्यर्थमाह—भगवानिति। केवलजनकत्वे ब्रह्मत्वं न सेत्स्यतीति नियामकत्वमप्याह—पुंसामीश्वरो वै भवानिति किलेति प्रमाणम्। किञ्च, पालनार्थं भवानवतीर्णश्च। यतस्तमसोऽन्धस्य लोकस्य चक्षूरूपः सूर्यरूपश्च भवानुदितः। तमसः सकाशादन्धस्य चक्षुः प्रकाशकः, सूर्यो भवानिति वा। ममापि भवान् चक्षुः, लोकानां चक्षुरित्यपौनरुक्त्यम्। आत्मानं प्रति चक्षुष्ट्वम्, सर्वान् प्रति सूर्यत्वमिति वा ॥ ९ ॥ ❀ ❀ एवं भगवन्तं स्तुत्वा विज्ञापनामाह—अथेति हे देव! मोहनाशक, मे मोहमपाकर्तुं त्वमर्हसि। तवैव चाऽत्र सामर्थ्यम्। यतस्त्वयैव अहंममेत्यस्मिन् शरीरे, असद्ग्रह आग्रहो योजितः। अतस्त्वयैव दूरीकर्तव्यः ॥ १० ॥ ❀ ❀ ननु सर्वेष्वेव मया युज्यते, न तु दूरीक्रियत इति चेत्तत्राऽऽह—तं त्वा गताऽहमिति। शरणागतस्य तु दूरीक्रियते। तं मोहदूरीकरणसमर्थं त्वां दैवात्प्राप्तम्। अतोऽहं शरणं गता। शरणार्हश्च भवान्। यथा विद्यासु या विद्या यस्य तत्रैव सा भवेत्। शरणागतधर्मोऽपि शरण्ये सोऽपि कश्चन। स्वस्वामी हरिरेवैकः शरण्य इति तद्वचः ॥ १ ॥ किञ्च, स्वभावतोऽपि भगवान् स्वभृत्यानां संसारं दूरीकरोति, शरणागताश्च भृत्यतुल्याः। अतः शरणागतौ संसारदूरीकरणं स्वयमेव करिष्यतीत्याह—स्वभृत्यसंसारतरोः, कल्पादारभ्य मोक्षपर्यन्तमनुवर्तमानस्य, अनादिसान्तस्य वा, कर्मकालनियतान्तररहितस्य कुठारं छेदकम्। तस्मिन् संसारे भगवांश्चेत् प्रविशेत् तदा स नश्येत्; यथा कुठारे प्रविष्टे। स हि भक्तानामेव संसारं प्रविशति नाऽन्यस्य पतिपुत्रादिरूपेण। अतः स्वभृत्येत्युक्तम्। ते हि भरणीयाः। कालः, कर्म वा तान् न बिभर्ति, अतः संसारप्रवेशोऽद्भुतकर्मत्वाच्च छेदकः संपद्यते। तरोरित्येकवचनं सर्वेषां भक्तानां भगवदीयत्वेन भावाद्वैतादिधर्मवत्त्वात् एक एव संसार इति सूचितम्। यद्यपि स्वप्रयत्नव्यतिरेकेणैव स्वयमेव करिष्यत्यन्तः प्रविष्टः, प्रवेशनप्रयत्नश्च नाऽयम्, तथाप्यौत्कण्ठ्यात् सर्वतत्त्वपरिज्ञानार्थं यत्नः क्रियत इत्याह—नमामीति। प्रकृतेः पुरुषस्य च ज्ञानेच्छया गुरुत्वेन त्वां नमामि। मातुरपि नमस्कार उपाधिभेदात् न दोषाय। यथा देहस्तत उत्पन्नः, पुष्टो वा, तथा ज्ञानं, गतिर्वा यस्मादुत्पद्यते, स सेवकः, पुत्रोऽन्यो वा नमस्करणीय एव भिन्नोपाधित्वादिति। प्रकृतपुरुषविवेको हि सर्वथा कर्तव्यः, पुरुष एव सेव्यो न प्रकृतिरिति ज्ञानार्थम्। गुरोर्लक्षणमाह—सद्धर्मभृतां वरिष्ठमिति। सद्धर्मा ब्रह्मधर्माः शमादयः, तान् ये बिभ्रति, न तु केवलं कदाचित् कुर्वन्ति; येषु शमादयो नियता इत्यर्थः। तेषां श्रेष्ठः। त एव गुरवो भवितुमर्हन्ति, किं पुनस्तेषां गुरुः ॥ ११ ॥ ❀ ❀ एवं युक्तिपूर्वकं मातृवचनं श्रुत्वा पृष्टमात्रस्वरूपे कथिते ज्ञातुं न शक्यत इति सर्वमेव शास्त्रार्थमाहेत्याह—इतीति। स्वमातृत्वाद् गुरुत्वेन तद्वच आदरणीयम्। निरवद्यं च तस्येप्सितम्, संसारातीतविषयत्वात्। यदर्थमवतीर्णः, तद्द्वयमपि एकरूपमेव जातमिति संतोषादपि कथनं बोधयति—पुंसामपवर्गवर्द्धनमिति। यद्येकः साधनेन मुच्यते, तदाऽन्योऽपि तं दृष्ट्वा साधने प्रवर्तेत इत्यपवर्गं वर्द्धयतीति। मुखेनाऽभिनन्दने कृते स्त्रीत्वात्कदाचिदभिमानमवलम्बेत। अतो धियाऽभिनन्द्य प्रष्टुर्धर्मविचारेण कथनं निरूप्य स्वधर्मविचारेणाऽपि निरूपणमावश्यकमित्याह—आत्मवतां सतां गतिरिति। आत्मवन्तः सकृष्णाः, तस्यैव बहिर्ज्ञापकं जितेन्द्रियत्वम्। सन्तस्तद्धर्मवन्तः। भगवद्धर्मधर्मिमतां पूर्णसाधनानां यो गतिः प्राप्यः। तेन फलरूपोऽयम्, तत्साधने सिद्धे प्राप्य इति स्वरूपदानौपयिकं साधनमवश्यं वक्ष्यतीत्युक्तम्। ईषत्स्मितेन शोभितमाननं यस्येति संतोषो ज्ञापितः। प्रसन्नोक्तमेव हि फलायेति मन्दहासस्याऽपि मन्दत्वमल्पमोहकत्वम्, यतः पुत्रत्वं स्थापयति ॥ १२ ॥ ❀ ❀ साङ्ख्ये परित्यागो नित्य इति तदनुक्त्वा अङ्गत्वेन च तद्वक्ष्यामीति विचार्य, योगानुसारेणैव शास्त्रार्थमाह—योग इत्यादि पञ्चदशभिः।

योग[1]: प्रशंसारूपेण प्रमाणेनाऽपि वर्ण्यते। चित्तालम्बनरूपो हि योगस्तत्र प्रतिष्ठितः ॥ १ ॥
अन्तरात्मा स्वयं चित्तमिन्द्रियाणि तथा तनुः। वेदे साङ्ख्ये च योगे च शैवे वैष्णव एव च ॥ २ ॥
मूलरूपाणि शास्त्राणां नियमार्थं निरूपणात्। आत्मशेषो ह्यहङ्कारः स साङ्ख्ये विनिरूप्यते ॥ ३ ॥

---

१. योगप्रशंसारूपेण ख. ग. ङ.।

एकीकृत्य मनश्चित्तं योगो ह्यत्र प्रवर्त्तते। ज्ञानक्रियारूपभेदाच्छास्त्रार्थे ज्ञानमुख्यता ॥ ४ ॥
अतश्चित्तं पुरस्कृत्य योगमाह हरिः स्वयम्। चित्तस्य रूपभेदश्च यत्र रूपमिहोचितम् ॥ ५ ॥
तादृशस्य फलं चाऽपि साधनानि बहूनि च। तत्राऽप्येकस्य निर्धारस्तस्य साधनमेव च ॥ ६ ॥
तस्याऽपि विषयः प्रोक्तश्चतुर्भिः षोडशात्मकः। तस्य साधनतारूपं तथात्वं मोक्षसाधने ॥
वलिष्ठात्तु फलं सिध्येत्तस्मादिति विनिर्णयः ॥ ७ ॥

आदौ योगप्रशंसामाह—द्वाभ्याम्। तत्र प्रथमं स्वरूपेणोत्कर्षमाह—योग इति। योगो हि बहुविधः। भगवत्साक्षात्कारे य उपयुज्यते स आधिदैविकः, [1]आत्मसाक्षात्कारे आध्यात्मिकः। आधिभौतिकस्त्रिविधः, अणिमादिसाधकः, शरीरसाधकः, प्राणसाधकश्च। आद्यस्तु शास्त्रान्तराङ्गम्, द्वितीयोऽत्र मुख्यः। तमाह—आध्यात्मिक इति। अतः पुंसां निःश्रेयसाय मतः। ये स्वरूपं प्रकृतितो भिन्नं ज्ञातवन्तः, ते लब्धविषया आध्यात्मिकयोगेऽधिकारिणः, स योगस्तेषां फलं साधयति। अतस्तेषां निःश्रेयसाय मतः संमतः। आध्यात्मिकयोगस्य तथात्वे हेतुमाह—अत्यन्तोपरतिरिति यत्र दुःखस्य सुखस्य चात्यन्तमुपरतिर्निवृत्तसजातीयस्य पुनरनुत्पादः। चकारादुभयत्र साधनानाम्। आत्मातिरिक्तसर्वनिवृत्तिर्यत्रेत्यर्थः ॥ १३ ॥ ❀ ❀ योगान्तरेभ्यो व्यावृत्त्य तमेव तेऽभिधास्यामीत्याह—तमिममिति। अस्याऽनादित्वमाह—यमवोचमिति। अनघे इति निष्पा[2]पानामेवाऽयं फलतीति ज्ञापयितुम्। ऋषीणामेवाऽत्र विश्वासो भवतीति ऋषिग्रहणम्। श्रोतुकामानामिति। तेषामप्यपेक्षितम्। उरुभिरङ्गैर्निपुणता यत्र, तदैव स्थिरो भवति ॥ १४ ॥ ❀ ❀ ननु भगवदिच्छया ज्ञानाद्वा संसारः, तत्र योगेन किमित्याशङ्क्य 'चित्ताधीनः संसारः' इति शास्त्रार्थं निरूपयति। 'योगश्चित्तवृत्तिनिरोधः' इति हि योगलक्षणम्। यदि संसारश्चित्तमूलक एव स्यात्, तदा योग उपपद्येत, नाऽन्यथेति चित्तं बन्धमोक्षहेतुत्वेन निरूपयति—चेत इति। खल्विति सर्वलोकप्रसिद्धमनुभवं प्रमाणयति। अस्यैकस्यैव बन्धाय मुक्तये च स्वस्यैव चेतो मतम्। तत्र [3]रूपभेदमाह—गुणेषु सक्तं बन्धायेति। गुणेषु विषयेष्वासक्तं रतं वा बन्धाय, पुंसि भगवत्यासक्तं, रतं वा मुक्तये भवति। स्वभावत एकरूपमपि करणं स्वधर्मविषयभेदात् बन्धमोक्षौ साधयति। चिरःस्वभाव आसक्तिर्यैस्त्यक्तुं नैव शक्यते। स्नेहो रतिरिति प्रोक्तः संस्काराच्छास्त्रतश्च सः ॥ १ ॥ १५ ॥ ❀ ❀ लोके विषयोऽनुभवसिद्ध इति तमसाधयित्वाऽऽत्मनि शुद्धेरत्यर्थमनुभवं साधयति—अहंममेति त्रिभिः। यादृशं मन आत्मानं गृह्णाति। तादृशत्वसिद्ध्यर्थं साधनान्याह—अहमिति। निर्मलमेव मन आत्मानं गृह्णाति। मलानि च मनसः कामलोभादीनि, तानि च देहादावहंममाऽभिमानात्। तैर्यदा वीतं भवतीति साधनानामा[4]वृत्तिः सूचिता। तानि च साधनान्यग्रे वक्ष्यति 'लिङ्गं व्यपोहेत्कुशलोऽहमाख्यम्' इति फलम्। 'हंसे गुरौ' इत्यादिसाधनानि, 'असङ्कल्पाज्जयेत्कामम्' इत्याद्युपायाश्च वक्ष्यन्ते। तैरुपायैर्यदा मलानि नश्यन्ति, तदा तैर्वीतं मनः शुद्धं भवति। शुद्धस्याऽभिज्ञानम्—अदुःखमसुखमिति। तस्मिन् मनसि[5] वैषयिके सुखदुःखे न स्फुरतः। तदेव कथं भवतीत्याशङ्क्याऽऽह—सममिति। यदा विषयगतं वैषम्यं न गृह्णाति सर्वत्र ब्रह्मभावनया, तदा समं मनो भवति। तत एव सुखदुःखे न गृह्णाति ॥ १६ ॥

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

योग इत्यत्र। पञ्चदशानां तात्पर्यं सार्धसप्तभिराहुः—योगः प्रशंसेत्यादि। रूपेणेति। लक्षणेन। वर्ण्यत इति। द्वाभ्यां वर्ण्यते। ननु साङ्ख्यप्रवर्तनार्थमवतीर्णो भगवान् योगं किमित्युपदिशतीत्याकाङ्क्षायां सप्तपञ्चचतुर्भिस्तात्पर्यमाहुः—चित्तेत्यादि। इदमर्थं चतुर्थस्योत्तरार्धेन युज्यते। तथा चाऽयमर्थः। हि यतो हेतोः, तत्र देवहूत्याम्, चित्तालम्बनरूपो योगः प्रतिष्ठितः'अथ मे देवसंमोहम्' इत्यादि पद्यद्वयोक्त्या प्रतिष्ठां प्राप्तोऽधिकारवशतः स्थिरोऽस्ति, अतश्चित्तं पुरस्कृत्य, तदधिकारं विचार्य, हरिः स्वयं योगमाहेति। नन्वस्त्वेवम्, तथापि योगानां बहूनां विद्यमानत्वात् आध्यात्मिकयोगोपदेशे किं बीजमित्याकाङ्क्षायां स्वावतारप्रयोजनमेव बीजमित्याशयेनोद्देश्यांशं वक्तुं प्रथमत उपदेशेन विज्ञेयानां सर्वमोक्षशास्त्रसम्मतं गणमाहुः—अन्तरात्मेत्यादि। अन्तरात्मा अहंकारः, स्वयं जीवः, मूलरूपाणि बोध्यानि रूपाणि, बोध्यत्वे हेतुः—शास्त्राणामित्यादि। यतः पञ्चानामपि शास्त्राणां स्वस्वरीत्या एतन्नियमनार्थं निरूपणादेतज्ज्ञानस्याऽऽवश्यकत्वेनैतानि बोध्यानीत्यर्थः। प्रकृते मुख्यतया नियम्यमाहुः—आत्मशेष इत्यादि। हि यतो हेतोरात्मशेषबाधकत्वेनात्मार्थोऽहङ्कारो यः, स सांख्ये विशेषेण नियम्यतया निरूपितः, सांख्ययोगौ च फलतोऽभिन्नौ, अतो मनश्चित्तं चैकीकृत्याऽत्रोपदेशे, हि निश्चयेन, योगः प्रकर्षेण वर्तते। तत्रापि हेतुः। ज्ञानक्रियारूपभेदात्। ज्ञानरूपं क्रियारूपं च भेदं प्राप्य स्थिते शास्त्रार्थे ज्ञानस्य यतो मुख्यतेति। तथा च ज्ञाने सत्यहङ्कारनिग्रहस्तच्च चित्तनिग्रहाधीनम्, स च योगात्, अत अध्यात्मयोगोपदेश इति फलितार्थः। एवं योगोपदेशतात्पर्यं निरूप्य पद्यानि विभजन्तो द्वयोरर्थस्य पूर्वमुक्तत्वात् त्रयोदशानामधुनाऽऽहुः—चित्तस्येत्यादिभिः। एकस्येति। भक्तिरूपसाधनस्य। तस्य साधनमिति। भक्तेः सङ्गरूपं साधनम्। तस्येति। सङ्गस्य। साधनतारूपमिति। साधनताप्रकारः। तथात्वमिति। यत्नात्मना उपयोगित्वम्। एवं कारिकाभिरर्थं सङ्गृह्य व्याकुर्वते—आदावित्यादि।

---

१. स्वात्म. ग. । २. निष्पापतायां ङ. । ३. रूपभेदकं घ. ङ. । ४. अनुवृत्तिः क. । ५. इतोऽग्रे प्रसन्ने इत्यधिकं क. घ. ।

शास्त्रान्तराङ्गमिति। भक्तिर्ज्ञानशास्त्राङ्गम्। लब्धविषया इति। लब्धो योगस्य विषयो यैस्ते तथेत्यर्थः॥ १३॥ ॐ ॐ चेत इत्यत्र। स्वधर्मविषयभेदादिति। स्वस्य चित्तस्य धर्मौ रत्यासक्ती, तयोर्विषयभेदादित्यर्थः। ननु लोके आसक्तिरत्योरैक्यार्थ्यादत्र पृथगुल्लेखस्य किं प्रयोजनमित्याकाङ्क्षायां तदर्थं तयोः स्वरूपभेदमाहुः—चित्तेत्यादि कारिकायाम्॥ १५॥

### श्रीगिरिधरकृता बालप्रबोधिनी

तदेव प्रपञ्चयति—य इति। यो वै पुंसां जीवानामीश्वरो नियन्ता आद्यो जगत्कारणभूतो भगवान् स एव भवान् तमसाऽज्ञानेन अन्धस्य लोकस्य चक्षुः प्रकाशक उदितः। तत्र दृष्टान्तमाह—सूर्य इवेति, यथोदितः सूर्योऽन्धकारं निरस्य वस्तु प्रकाशयति तथा भवानपि आविर्भूतः अन्धकारतुल्याज्ञानं निरस्य तत्त्वं प्रकाशयतीत्यर्थः॥ ९॥ ॐ ॐ अथ तस्मात् हे देव त्वं मे मम सम्मोहमपाक्रष्टुं दूरीकर्तुमर्हसि। कोऽसौ सम्मोह इति चेत्तत्राह—य इति, एतस्मिन् देहादौ अहम्ममेत्येवंरूपः अवग्रहः अभिमानस्त्वया योजितः स इत्यर्थः। त्वया प्रवर्तितस्त्वयैव निवर्त्तनीय इति भावः। द्वितीय इतिशब्दस्तत्कार्यरागादिसङ्ग्रहार्थः॥ १०॥ ॐ ॐ प्रकृतेः पूरुषस्य च तत्त्वजिज्ञासयाऽहं तं शरण्यं शरणयोग्यं त्वां शरणं गता सत्यहं नमामीत्यन्वयः। कथं शरणयोग्यतेत्यपेक्षायामाह—स्वेति, स्वभक्तानां संसार एव तरुस्तस्य कुठारं मूलोच्छेदकम्। तदपि कथमित्यपेक्षायां मोक्षसाधनोपदेशेनेत्याशयेनाह—सद्धर्मेति, सद्धर्मविदां मोक्षोपायाभिज्ञानानां वरिष्ठं श्रेष्ठमित्यर्थः॥ ११॥ ॐ ॐ पुंसां अपवर्गवर्धनं मोक्षे रतिजनकं अत एव निरवद्यं निर्दुष्टं स्वमातुरीप्सितमभिप्रेतमित्येवं निशम्य श्रुत्वा धियाऽभिनन्द्य आत्मवतां स्वोपासकानां सतां गतिः फलभूतो भगवान् कपिल ईषत्स्मितेन मन्दहासेन शोभितमाननं यस्य स तां बभाषे इत्यन्वयः। ईषत्स्मितेति तस्य प्रसन्नता द्योत्यते, तथाभूतेनैवोपदिष्टं सफलं भवति॥ १२॥ ॐ ॐ श्रीकपिलोपदेशमाह—योग इति। पुंसां मुमुक्षूणां निश्श्रेयसाय संसारदुःखाद्विमुच्य परमानन्दलाभाय आध्यात्मिकः प्रकृतिविविक्तात्मसाक्षात्कारलक्षणो योगो मे मम साधनतया मतः सम्मत इत्यर्थः। यत्र यस्मिन् योगे निष्पन्ने सति देहेन्द्रियान्तःकरणाद्यात्माध्यासस्य निवृत्तेः सांसारिकस्य दुःखस्य चात्यन्तमुपरतिर्निर्वृत्तिर्भवति। अत्यन्तमिति निवृत्तस्य पुनरनुत्पादः सूच्यते॥ १३॥ ॐ ॐ अतो यमात्मयोगं श्रोतुकामानामृषीणां पुरा पूर्वकाले अहमवोचमुक्तवान् तं सर्वैरङ्गैः शमदमादिभिर्नैपुणं यथा भवति तथा इमं योगं ते तुभ्यं प्रवक्ष्यामीत्यन्वयः। निष्पापस्यैव अत्राधिकारोऽस्ति तादृशी च त्वमिति कथने हेतुं सूचयन् सम्बोधयति—अनघेति॥ १४॥ ॐ ॐ एवं योगनिरूपणं प्रतिज्ञाय तस्य "योगश्चित्तवृत्तिनिरोधः" इति योगसूत्रोक्तलक्षणानुरोधेन चित्ताधीनत्वाच्चित्तस्यैव बन्धमोक्षहेतुत्वमाह—चेत इति। खलु निश्चये। अस्यात्मनो जीवस्य चेत एव बन्धाय मुक्तये च मतं कारणतया सम्मतम्। नन्वेकस्यैव चेतसः कथं विरुद्धकार्यद्वयहेतुत्वं सम्भवतीत्याशङ्क्य यथैकस्यैव विषस्य स्वतो मरणहेतुत्वेऽपि चिकित्सितस्य पुनस्तस्यैव रोगनिवर्त्तनद्वारा जीवनहेतुत्वं दृष्टं तथा विषयभेदेन चेतसोऽपि कार्यद्वयहेतुत्वमित्यभिप्रेत्य तदाह—गुणेष्विति। गुणेषु गुणकार्येषु शब्दादिविषयेषु सक्तं चेतोऽस्य बन्धाय भवति, पुंसि पुरुषोत्तमे भगवति रतं वा आसक्तं तु मुक्तये भवति॥ १५॥ ॐ ॐ एवं बन्धमोक्षयोश्चित्ताधीनत्वमुक्त्वा इदानीं चित्तमनसोरेकीकृत्य अशुद्धस्य तस्य वृत्तिनिरोधासम्भवाद्यदा तच्छुद्धं भवति तदा योगः सिद्ध्यतीत्याह अहमिति। यदा मनः शुद्धं भवति तदा आत्मानं स्वरूपं परिपश्यति साक्षात्करोतीति त्रयाणामन्वयः। शुद्धस्य लक्षणमाह—अहमिति। अनात्मनि देहेन्द्रियान्तःकरणादौ अहमित्यभिमानः सर्वस्यैव प्रपञ्चस्य भगवत्स्वामिकत्वेनास्वीयेषु स्त्रीपुत्रादिषु ममेत्यभिमानः ताभ्यामुत्थैः उत्पन्नैः कामलोभादिभिर्मलैर्दोषैर्यदा वीतं रहितं भवति। तत्र कामो विषयभोगाभिलाषः, लोभो विषयप्राप्तावपि ततोऽधिकसङ्ग्रहाग्रहः। आदिपदेन क्रोधमोहपुण्यपापादयः सर्वेऽपि विकारा गृहीताः। दोषराहित्यस्य ज्ञापकमाह—सममिति। समत्वमेव स्पष्टयति—अदुःखमसुखमिति, ताभ्यामनभिभूतमित्यर्थः॥ १६॥

### हिन्दी अनुवाद

आप सम्पूर्ण जीवोंके स्वामी भगवान् आदि-पुरुष हैं तथा अज्ञानान्धकारसे अन्धे पुरुषोंके लिये नेत्रस्वरूप सूर्यकी भाँति उदित हुए हैं॥ ९॥ ॐ ॐ देव! इन देह-गेह आदिमें जो मैं-मेरेपनका दुराग्रह होता है, वह भी आपका ही कराया हुआ है, अतः अब आप मेरे इस महामोहको दूर कीजिये॥ १०॥ ॐ ॐ आप अपने भक्तोंके संसाररूप वृक्षके लिए कुठारके समान हैं; मैं प्रकृति और पुरुषका ज्ञान प्राप्त करनेकी इच्छासे आप शरणागतवत्सलकी शरणमें आयी हूँ। आप भागवत-धर्म जाननेवालोंमें सबसे श्रेष्ठ हैं, मैं आपको प्रणाम करती हूँ॥ ११॥ ॐ ॐ श्रीमैत्रेयजी कहते हैं—इस प्रकार माता देवहूतिने अपनी जो अभिलाषा प्रकट की, वह परम पवित्र और लोगोंका मोक्षमार्गमें अनुराग उत्पन्न करनेवाली थी, उसे सुनकर आत्मज्ञ सत्पुरुषोंकी गति श्रीकपिलजी उसकी मन-ही मन प्रशंसा करने लगे और फिर मृदु मुसकानसे सुशोभित मुखारविन्दसे इस प्रकार कहने लगे॥ १२॥ ॐ ॐ भगवान् कपिलने कहा—माता! यह मेरा निश्चय है कि अध्यात्मयोग ही मनुष्योंके आत्यन्तिक कल्याणका मुख्य साधन है, जहाँ दुःख और सुखकी सर्वथा निवृत्ति हो जाती है॥ १३॥ ॐ ॐ साध्वि!

सब अङ्गोंसे सम्पन्न उस योगका मैंने पहले नारदादि ऋषियोंके सामने, उनकी सुननेकी इच्छा होनेपर वर्णन किया था। वही अब मैं आपको सुनाता हूँ ॥ १४ ॥ ❀ ❀ इस जीवके बन्धन और मोक्षका कारण मन ही माना गया है। विषयोंमें आसक्त होनेपर वह बन्धनका हेतु होता है और परमात्मामें अनुरक्त होनेपर वही मोक्षका कारण बन जाता है ॥ १५ ॥ ❀ ❀ जिस समय यह मन मैं और मेरेपनके कारण होनेवाले काम, लोभ आदि विकारोंसे मुक्त एवं शुद्ध हो जाता है, उस समय वह सुख-दुःखसे छूटकर सम अवस्थामें आ जाता है ॥ १६ ॥

तदा पुरुष आत्मानं केवलं प्रकृतेः परम्। निरन्तरं स्वयं ज्योतिरणिमानमखण्डितम् ॥ १७ ॥
ज्ञानवैराग्ययुक्तेन भक्तियुक्तेन चात्मना[1]। परिपश्यत्युदासीनं प्रकृतिं च हतौजसम् ॥ १८ ॥
न युज्यमानया भक्त्या भगवत्यखिलात्मनि। सदृशोऽस्ति शिवः पन्था योगिनां ब्रह्मसिद्धये ॥ १९ ॥
प्रसङ्गमजरं पाशमात्मनः कवयो विदुः। स एव साधुषु कृतो मोक्षद्वारमपावृतम् ॥ २० ॥
तितिक्षवः कारुणिकाः सुहृदः सर्वदेहिनाम्। अजातशत्रवः शान्ताः साधवः साधुभूषणाः ॥ २१ ॥
मय्यनन्येन भावेन भक्तिं कुर्वन्ति ये दृढाम्। मत्कृते त्यक्तकर्माणस्त्यक्तस्वजनबान्धवाः ॥ २२ ॥
मदाश्रयाः कथा मृष्टाः शृण्वन्ति कथयन्ति च। तपन्ति विविधास्तापा नैतान्मद्गतचेतसः[2] ॥ २३ ॥
त एते साधवः साध्वि सर्वसङ्गविवर्जिताः[3]। सङ्गस्तेष्वथ ते प्रार्थ्यः सङ्गदोषहरा हि ते ॥ २४ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

निरंतरं निर्भेदम् अणिमानं सूक्ष्मम्। अखंडितमपरिच्छिन्नम् ॥ १७ ॥ ❀ ❀ हतौजसं क्षीणबलाम् ॥ १८ ॥ ❀ ❀ मनःशुद्धौ च भक्तिरेवांतरंगसाधनमित्याह नेति ॥ १९ ॥ ❀ ❀ अस्य सर्वस्यापि सत्संगो मूलमित्याह। प्रसंगमिति। अपावृतं निरावरणम् ॥ २० ॥ ❀ ❀ साधूनां लक्षणमाह। तितिक्षव इति चतुर्भिः। साधवः शास्त्रानुवर्तिनः साधु सुशीलं तदेव भूषणं येषाम् ॥ २१-२२ ॥ ❀ ❀ एतानुक्तलक्षणान्भक्तान् तापा आध्यात्मिकादयो न तपंति न व्यथयंति। कुतः मद्गतं चेतो येषां तान् ॥ २३ ॥ ❀ ❀ ये तापैर्नाभिभूयंते ते साधव इत्यर्थः ॥ २४ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

पुरुषो जीवः प्रकृतेरविद्यातः "सूक्ष्माणामप्यहं जीवः" इति भगवदुक्तेः। अखंडितं विषयवासनाभिरिति वा ॥ १७ ॥ ❀ ❀ भक्तियुक्तेन चेति चकाराद्भक्तेस्तत्र साहाय्यमेव तद्विना ज्ञानस्य स्वीयफलसाधकत्वाशक्तेः। प्रकृतिं स्वाविद्यां क्षणबलां स्वस्मिन्किंचिदपि कर्तुमशक्ताम् ॥ १८ ॥ ❀ ❀ त्रयाणां मध्ये केवला भक्तिरेव श्रेष्ठा सुखमयी परममंगला चेत्याह—नेति। भगवति भक्तिरेव युज्यते समुचिता भवतीत्यर्थः। योगिनामुपायवतां, ब्रह्मणि परमेश्वरे विषयीकृते, सिद्धिर्दास्यसख्यादिनिष्पत्तिस्तस्यै। यद्वा ब्रह्मसिद्धये ब्रह्मावाप्तये स्वरूपानंदलाभायेति यावत् ॥ १९ ॥ ❀ ❀ अस्य भक्तिज्ञानादेः प्रपंचस्य प्रसंगं प्रकृष्टसंगम् अत्यंतासक्तिमिति यावत्। स्त्रीपुत्रादिषु कृतमिति शेषः। आत्मनो जीवस्य अजरं विमोक्तुमशक्यम्। तदुक्तं गारुडे—"लोहदारुमयैः पाशैः पुमान् बद्धो विमुच्यते। पुत्रदारमयैः पाशैः पुमान् बद्धो न मुच्यते" इति। वक्ष्यति च सप्तमे प्रह्लादचरिते। "को गृहेषु पुमान्सक्तमात्मानमजितेंद्रियः। स्नेहपाशैर्दृढैर्बद्धमुत्सहेत विमोचितुम्" इत्यारभ्य 'क्रीडामृगो यन्निगडो विसर्गः' इत्यंतेन प्रबंधेन, यः प्रसंगोऽजरोऽनर्थहेतुः स एवेत्यर्थः। मोक्षस्य सालोक्यादेः स्वरूपावाप्तिलक्षणस्य वा द्वारं प्रवेशमार्ग इत्यर्थः ॥ २० ॥ ❀ ❀ तटस्थलक्षणमाह। शांता अनुग्राः। साधवः सरलाः। साधून्भूषयंति मानयंति। यद्वा। साधव एव भूषणानि प्रियाः परिच्छदा वा येषां ते। अजा प्रकृतिस्तया तत्कार्यं देहो लक्ष्यते। अजयाऽतंति सातत्येन गच्छंतीत्यजाताः, स्थिते तिष्ठंति गते गच्छंतीति कामलोभादयस्तेषां शत्रवो नाशका अजातशत्रवः। यद्वाऽजां तनोतीत्यजातो दुःसंगस्तस्य शत्रवो वारकाः 'संतः संगस्य भेषजम्' इत्युक्तेः ॥ २१ ॥ ❀ ❀ स्वरूपलक्षणमाह—मयीति। अन्यादिपदानां तादृशार्थग्राहकत्वात्। न विद्यतेऽन्योऽहमिवाराध्यो ब्रह्मरुद्रादिविषयो यस्य तेन भावेन दास्यसख्यादिना अत एवैकमात्रविषयित्वाद् दृढाम्। मत्कृते मत्प्राप्त्यर्थम्। 'सर्वधर्मान्परित्यज्य' इत्यादिमदुक्तेस्त्यक्तकर्माणः 'ये दारागारपुत्रादि'त्याद्युक्तेश्च त्यक्तस्वजनाद्याः ॥ २२ ॥ ❀ ❀ मृष्टाः शुद्धाः अमायिकीः। एतान्। भक्तान् तापा इति। एते तापैर्नाभिभूयन्त इत्यर्थः। इति स्वयं संतापशून्यत्वे सति परसंतापापहारकाः साधव इति भावः ॥ २३ ॥ ❀ ❀ उपसंहरति त इति। त उक्तलक्षणाः सर्वसंगविवर्जिताः पुरुषार्थ-

---

१. प्रा० पा०—चेतसा। २. प्रा० पा०—नैकात्मगत०। ३. प्रा० पा—विनिर्गता।

चतुष्टयासक्तिशून्याः ते तव संगेनासत्संगेन यो दोषो नरकावाप्तिहेतुस्तद्धरास्तन्नाशकाः । "सत्संगतिः कथय किं न करोति पुंसाम्" इत्याद्युक्तेः ॥ २४ ॥

## श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

अस्य । मनःशुद्धिज्ञानवैराग्यादेः ॥ २० ॥ ❀ ❀ तितिक्षव इति चतुष्कम् । तत्र सन्तो द्विविधाः ज्ञानिनो भक्ताश्चेति तत्रैकेन ज्ञानिसाधुलक्षणं शान्ताः "शमो मन्निष्ठता बुद्धेः" इति श्रीभगवद्वाक्याच्छान्तिरतियुक्ताः ज्ञानिनः साधव उच्यन्ते । शुष्कज्ञानिव्यवच्छेदार्थं तटस्थलक्षणं तितिक्षव इत्यादि । स्वरूपलक्षणं तु शान्तिरतिमत्त्वमेव भक्तसाधुलक्षणं मयीति सार्द्धेन । नास्त्यन्यः ज्ञानकर्मादिसम्पर्को यस्मिन् तेन शुद्धेन दास्याद्यन्यतमेन भावेनोपलक्षितां दृढां ह्रासशङ्काच्युतां प्रेमलक्षणां भक्तिं ये कुर्वन्ति कथां शृण्वन्ति कथयन्ति चेति स्वरूपलक्षणं कर्मत्यागमारभ्य तापानभिभवपर्यन्तं तटस्थलक्षणं सर्वसङ्गविवर्जिताः पुरुषार्थचतुष्टयासक्तिशून्या इत्यपि तदेव ॥ २१ ॥ २२ ॥ २३ ॥ ❀ ❀ सङ्ग इत्यर्धकम् । हिशब्द उत्तरवाक्येऽपि हेतुः ॥ २४ ॥

## श्रीमद्वीरराघवव्याख्या

एवमात्मस्वरूपग्रहणयोग्यमनःस्वरूपशिक्षा आत्मयाथात्म्यशिक्षा च कृता । अत्र भगवद्भक्तियुक्तात्मनां पश्यतीत्यनेन न केवलं प्रकृतिविलक्षणतयात्मस्वरूपचिन्तनमात्रेण प्रत्यगात्मसाक्षात्कारः, किन्तु ब्रह्मात्मकप्रत्यगात्मानुसन्धानेनैव प्रत्यगात्मसाक्षात्कारोऽपि भवतीति सूच्यते । ब्रह्मात्मकत्वमेव तस्य प्रत्यगात्मनः स्वाभाविकं स्वरूपं तत्र विशेष्यभूतब्रह्मणोऽननुसन्धाने विशेषणभूतप्रत्यगात्मानुसन्धानासम्भव एव । न हि व्यक्तिगुणादीन् विना जातिगुणादयः पृथगुपलभ्यन्ते तस्मात् प्रकृतिविलक्षणप्रत्यगात्मचिन्तनमपि ब्रह्मशरीरतयैव कार्यम् । एवंविधं चिन्तनमेव पश्चाद्विशेष्यभूतभगवद्भक्तिरूपापन्नं मुक्तिसाधनं न केवलमित्याह । नेति । अखिलात्मन्यखिलानां जीवानामात्मभूते भगवति युज्यमानया भक्त्या सदृशस्तुल्यः ब्रह्मसिद्धये भावप्रधानो ब्रह्मशब्दः "द्व्येकयोः" इत्यादिवत् ब्रह्मत्वसिद्धये इत्यर्थः । ब्रह्मत्वं प्रकारः ब्रह्मप्रकारसिद्धये ब्रह्मवदपहतपाप्मत्वादिगुणाष्टकाविर्भावसिद्धये इति यावत् योगिनां शिवः अन्यानपेक्षः पन्था उपायः अन्यो नास्ति ब्रह्मात्मकप्रत्यगात्मानुसन्धानपूर्वकप्रत्यगात्मशरीरकभगवद्भक्तिसदृशो मुक्त्युपायः कश्चिदन्यो नास्तीत्यर्थः । एवमनभिसंहितफलस्वधर्मनिरस्तकामादिदोषविशुद्धान्तःकरणानुसंहितब्रह्मात्मकप्रत्यगात्मयाथात्म्यज्ञानयोगपूर्वकभगवद्भक्तिर्मोक्षसाधनमित्युक्तम् ॥ १८ ॥ १९ ॥ ❀ ❀ अथास्य सर्वस्य निवृत्तिधर्मस्य रुचिजनने सत्सङ्गतिरेव प्रथमं कारणमसत्सङ्गतिः संसृतिहेतुरिति वदन् सतां स्वरूपं चाह । प्रसङ्गमिति पञ्चभिः । प्रसङ्गमसत्स्विति शेषः असत्स्विन्द्रियार्थेषु तत्परायणेषु प्रसङ्गं प्रकृष्टासक्तिमात्मनो जीवस्याजरमशिथिलं पाशं बन्धं कवयः सुधियो विदुः स एव प्रसङ्ग एव स एवेत्यनेनासद्रूपविषयपरिहारेण प्रसङ्गमात्रस्य परामर्शः साधुषु कृतः अपावृतमविघ्नोपहतं मोक्षद्वारं मोक्षोपायः ॥ २० ॥ ❀ ❀ के ते साधव इत्यत्राह । तितिक्षवः मूर्खेष्वपि क्षितिवत्सहनशीलाः कारुणिकाः स्वार्थनिरपेक्षपरदुःखनिराचिकीर्षवः अत एव सर्वदेहिनां सुहृदः मित्राण्यत एवाजाताः अविद्यमानाः शत्रवो येषां ते शान्ताः । इदं यमादीनामुपलक्षणं शमदमादिसम्पन्नाः साधवः परकार्यसाधकाः साधुशीलं तदेव भूषणं येषां ते साधव इति शेषः । यद्वा साधव इति विधेयविशेषसाधव इत्यर्थः ॥ २१ ॥ ❀ ❀ किञ्च मयीश्वरे कपिलस्यानुप्रवेशावतारत्वेऽपि जीवशक्तेरभिभूतत्वाद्भगवच्छक्तेरेवोद्भूतत्वाच्च मयीति व्यपदेशः, अनन्येनाव्यभिचरितेन भावेनान्तःकरणेनाभिप्रायविशेषेण वा ये दृढामविचाल्यां भक्तिं कुर्वन्ति ते साधव इत्युत्तरत्रान्वयः । तानेव विशिनष्टि । मत्कृते मदर्थं त्यक्तानि कर्माणि यैस्ते परित्यक्तमदाराधनविधिप्रवृत्तिधर्मास्तथा त्यक्तमद्भक्तजनविरोधिस्वजनबान्धवाः ॥ २२ ॥ ❀ ❀ अहमेवाश्रयो विषयो यासां ताभिः कथाभिः हृष्टाः, कथाहृष्टत्वमेव प्रपञ्चयति । शृण्वन्ति कथयन्ति गायन्ति चेति मदाश्रयकथाश्रवणकथनादिभिर्हृष्टा इत्यर्थः । यद्वा कथास्मरणेन हृष्टाः पुनस्त एव शृण्वन्ति कथयन्ति यद्वा हृष्टाः इति व्यस्तं पदं हृष्टाः सन्तुष्टाः सन्तो मदाश्रयकथाः शृण्वन्ति कथयन्ति चेत्यर्थः । मय्येव गतं न्यस्तं चेतो यैस्ते अत एवैनान् विविधा नानाविधास्तापाः आध्यात्मिकादयः न तपन्ति न क्लेशयन्ति । ऐकात्म्यगतचेतस इति पाठान्तरम्, एकस्य भगवत एवात्मत्वमन्येषां चेतनाचेतनानां तच्छरीरत्वात् एक एव परमपुरुषः आत्मेति तस्मिन् गतं चेतः येषां तानित्यर्थः ॥ २३ ॥ ❀ ❀ हे साध्वि ! त एते सर्वैः सङ्गैर्विषयसङ्गैर्विवर्जिता विरहिताः साधवः तेषु साधुषु अथेति प्राथम्ये प्रथमं तेषु त्वया सङ्गः प्रार्थ्यः प्रार्थनीयः हि यस्मात्ते साधवः सङ्गदोषहराः इन्द्रियार्थप्रसङ्गहेतुकानादिपुण्यपापरूपदोषहरा इत्यर्थः ॥ २४ ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

तदा पुरुष आत्मानं स्वबिम्बभूतं हरिं पश्यतीत्यन्वयः । परीत्युपसर्गात्प्राणपर्यन्तं परितो वर्तमानाः स्वबिम्बदेवताश्चापरोक्षीकृत्य तत्प्रसादादिति ग्राह्यम् "बाह्यसुखे त्वनासक्तेरसुखं दुःखवर्जनात् । अदुःखं हरिभक्त्यैव नित्यानन्दं यदात्मनः । तदा तं परमात्मानं पश्यत्यात्मप्रसादतः ।" इति विशेषवचनाददुःखमसुखं सममिति प्रतीतार्थोऽनुपपन्न इति आत्मप्रसादत इत्यत्रात्म-

शब्देन प्राणादयोऽपि ग्राह्याः, तस्य तेष्वपि वृत्तेः। इयन्तं कालं परोक्षीभूतमात्मानं स्वं पश्यतीति मन्दाशङ्कां परिहरति। केवलमित्यादिविशेषणेन "अभेदात्स्वावतारेषु निरन्तर उदाहृतः। गुणदेहेन्द्रियाभेदात्केवलोऽसदृशत्वतः। अखण्डपूर्णशक्तित्वादहमेकः सदा मतः।" इत्यनेन व्याख्यातोऽयं ग्रन्थः। उक्तं सुष्ठु स्यात्प्रकृतेः परत्वे तदेव कथमित्यत उक्तं प्रकृतेः परमिति। चिज्जडप्रकृत्योः परमेतल्लक्षणं न कस्यापीत्यतोऽसाधारणमित्यर्थः। अणिमानमित्यनेन स्वबिम्बरूपमेवोच्यते य आत्मनि तिष्ठन्नित्यादेः केनेत्यत उक्तमात्मना चिन्मनसेति अस्य सदातनत्वात्॥ १७॥ ❀ ❀ इतः पूर्वं किमिति नापश्यदत उक्तम्। ज्ञानेति। प्रकृतिज्ञानाभावे तत्परत्वदर्शनं कथमित्यत उक्तं उदासीनामिति। प्रयोजकाभावेन परिणामलक्षणकार्यानभिमुखीं कुतोऽनुदितमिदमित्यत उक्तं हतौजसमिति। हतमोजो बन्धकशक्तिर्यस्याः सा तथा तां तदुक्तम् "बन्धशक्तिः प्रकृत्याख्या विष्णुशक्त्या वियुज्यत" इति॥१८॥ ❀ मुक्तेरन्तरङ्गसाधनं भक्तेरन्यन्नास्तीत्याह। न युज्यमानयेति॥ १९॥ ❀ ❀ इदानीं ब्रह्मज्ञानोत्पत्तौ प्रतिबन्धकमाह। प्रसङ्गमिति। असद्वार्यादिषु प्रसङ्गमतिस्नेहमजरं पुनर्नवत्वेनाक्षयम्। स एवेति। तर्ह्ययमेव सत्सु कृतश्चेत् किं कार्यं क्षेम इति तत्राह अपावृतमुद्घाटितं विवृतमित्यर्थः॥ २०॥ ❀ ❀ किंलक्षणाः साधवो येन तत्सङ्गो भक्तिज्ञानद्वारा मुक्तिसाधनं स्यादिति तत्राह। तितिक्षव इति। अजाशब्देन तत्कार्यं देह उपलक्ष्यते "अत सातत्यगमने" इति धातोस्तेन सहैव सततं वर्तमानत्वात्तस्मिन् गते गच्छन्ति स्थिते तिष्ठन्ति इत्यतो जाताः कामलोभादयस्तेषां शत्रवः। अत्र हेतुरयं शान्ताः श्रीनारायणनिष्ठावन्तोऽत एव साधवो निष्ठासाधनशीलाः साधुरुचिता भगवद्भक्तिः सैव भूषणं येषां ते साधुभूषणाः "साधुस्त्रिपूचिते सौम्ये "इति यादवः॥ २१॥ ❀ ❀ एतदेव विशिनष्टि। मयीति। अनन्यभावेनान्यस्मिन्विष्णोः अन्यस्मिन् ब्रह्मादौ तादृशो भावः स्नेहो नास्तीति अनन्यभावस्तेन। तदुक्तम् "यादृशी मयी भक्तिः स्यात्तादृश्यन्यत्र नैव चेत्। अनन्यभक्तिरुद्रेकात्सा ययैव तरेत्सृतिमिति।" दृढां मरणसद्भावेऽप्यचलां तदेव विशदयति मत्कृत इति। स्वजनबान्धवा लौकिका नतु पारलौकिकाः॥ २२॥ एवं निःसङ्गानां कालयापना कथमत्राह। मदाश्रया इति। तपआदिकर्माभावे विघ्नेषु कथं तिष्ठतीति तत्राह। तपन्तीति तापान् तपांसि 'ब्राह्मीं वाव तप उपनिषदं ब्रूमेति तस्यैव तपो दम' इत्यादिश्रुतिः। नन्वेवंविधतपः संचरणसमये शीतोष्णोपवासादिना इन्द्रियदौर्बल्यहेतुना हरेः सर्वोत्तमत्वादिज्ञानं तिरोहितं भवतीति मन्दाशङ्कां परिहरति। ऐकात्म्येति। "एकः पूर्णो हरिर्नान्यस्तदन्ये तद्वशा मताः। इति ज्ञानं स्थिरं यत्तदैकात्म्यज्ञानमुच्यत" इति स्मृतेः, ऐकात्म्ये हरेः सर्वोत्तमत्वपूर्णज्ञाने गतं स्थिरं स्थितं चेतो येषां ते तथोक्ताः॥ २३॥ ❀ ❀ उपसंहरति। त एत इति। त्यक्तस्वजनबान्धवा इत्युक्तम् विशदयति। सर्वसङ्गेति। दुष्टसर्वसङ्गवर्जिता इत्यर्थः। सन्त्वेवंविधाः साधवस्तत्र किं ममोपदिशसीति तत्राह। सङ्गस्तेष्विति। अथ तस्मात्तत्र हेतुमाह। सङ्गदोषेति॥ २४॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

निरन्तरं नित्यं यतोऽखण्डितं छेदादिरहितम्। यतोऽणिमानं दुर्ज्ञेयमित्यर्थः॥ १७॥ ❀ ❀ ज्ञानं विवेकः स च वैराग्यं च अहं ममेत्यादिराहित्येन प्रतिपादितं भक्तिर्भागवती तां विना सर्वार्थासिद्धेः हतौजसं स्वस्मिन् किञ्चिदपि कर्तुमशक्ताम्॥ १८—२०॥ ❀ ❀ शान्ताः शमदमादिसाधनचतुष्टयसम्पन्ना ज्ञानिनः साधव उच्यन्ते वक्ष्यते च "महान्तस्ते समचित्ताः प्रशान्ता" इत्यादिना तेषामानुषङ्गिकान् गुणानाह। तितिक्षव इत्यादिना। स्वयं साधवोऽपि ये साधूनन्यान् भूषयन्ति मानयन्ति साधव एव वा भूषणानि परिच्छदा येषां ते तथा प्रसङ्गतः साधुविशेषानप्याह। मयीति सार्द्धेन॥ २१—२३॥ ❀ ❀ तस्मान्न तपन्तीति उपसंहरति। त इति। सर्वसङ्गविवर्जिताः पुरुषार्थचतुष्टयासक्तिशून्याः सङ्ग इत्यर्द्धकम्। हिशब्द उत्तरवाक्येऽपि हेतुः॥ २४॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

तदा पुरुषो जीव आत्मानं स्वं प्रकृतेरविद्यातः परं निरन्तरं देहद्वयव्यवधानशून्यमत एव स्वयंज्योतिरनावृतप्रकाशमणिमानं सूक्ष्मं "सूक्ष्माणामप्यहं जीव" इति भगवदुक्तेः स्वरूपत एव परमाणुप्रमाणमित्यर्थः। विषयवासनाभिरखण्डितम्॥ १७॥ ❀ ❀ ज्ञानवैराग्ययुक्तेनात्मना मनसा भक्तियुक्तेन चेति चकाराद्भक्तेस्तत्र साहाय्यमेव तद्विना ज्ञानस्य स्वीयफलसाधकत्वाशक्तेः उदासीनमनासक्तं प्रकृतिं स्वाविद्यां हतौजसं स्वस्मिन् किञ्चिदपि कर्त्तुमशक्ताम्॥ १८॥ ❀ ❀ त्रयाणां मध्ये केवला भक्तिरेव श्रेष्ठा सुखमयी परममङ्गला चेत्याह। नेति। युज्यमानयेति भगवति भक्तिरेव युज्यते समुचिता भवतीत्यर्थः। काचित्त्वय्युचिता भक्तिरित्युत्तरोक्तेः। योगिनामुपायवतां ब्रह्मणि परमेश्वरे विषयीभूते सिद्धिर्दास्यसख्यादिनिष्पत्तिस्तस्यै॥ १९॥ ❀ ❀ तस्या भक्तेः साधुसङ्ग एव मूलमिति सयुक्तिकमाह। प्रसङ्गमिति। मोक्षस्य सालोक्यादेर्द्वारमपावृतं निरावरणमैकान्तिकभक्तानामपि मोक्षो भक्तेरनतुसंहितं फलं भवतीति तथोक्तम्॥ २०॥ ❀ ❀ साधूनां लक्षणमाह चतुर्भिः। तत्र तटस्थलक्षणमाह। तितिक्षव इति। शान्ता अनुग्राः साधवः सरलाः साधून् भूषयन्ति मान-

यन्तीति ते यद्वा साधव एव भूषणानीव प्रिया येषां ते स्वरूपलक्षणमाह। मयीति। अन्यादिपदानां सदृशार्थग्राहकत्वात् न विद्यतेऽन्योऽहमिवाराध्यो ब्रह्मरुद्रादिविषयो यस्य तेन भावेन दास्यसख्यादिना अत एवैकमात्रविषयत्वात् दृढां मत्कृते मत्प्राप्त्यर्थं सर्वधर्मान् परित्यज्येत्यादिमदुक्तेस्त्यक्तकर्माणः ये दारागारेत्यादौ कथं तांस्त्यक्तुमुत्सहे इति मदुक्तेस्त्यक्तस्वजनाद्याः ॥ २१ ॥ २२ ॥ ❀ ❀ मृष्टाः शुद्धा अमायिकीः। एतान् भक्तान् तापा आध्यात्मिकादयो न तपन्ति न व्यथयन्ति। एते तापैर्नाभिभूयन्ते चेन्मद्गतचेतसः स्मरणदार्ढ्यवन्तो ज्ञेयाः सर्वसङ्गविवर्जिताः पुरुषार्थचतुष्टयासक्तिशून्याः ॥ २३ ॥ २४ ॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः।

पुरुषो जीव आत्मानमुपासकस्वरूपं कथम्भूतमणिमानमणुपरिमाणम् "अणुर्ह्येष आत्मा चेतसा वेदितव्य" इति श्रुतेः। स्वयंज्योतिः अन्यप्रकाशनिरपेक्षं ब्रह्माण उपास्यस्वरूपं कथंभूतं केवलं सजातीयभेदशून्यं पुनर्ब्रह्मविशेषणं निरन्तरं सर्वव्यापकम्। प्रकृतेः परमखण्डितं चेत्युभयोर्विशेषणम् ॥ १७ ॥ ❀ ❀ उदासीनं प्राकृतपदार्थेभ्यो निर्विण्णं जीवमत एव प्रकृतिं च हतौजसं पराजिताम् ॥ १८ ॥ ❀ ❀ मनःशुद्धौ भगवज्ज्ञाने च प्रकृतिजये च ज्ञानपरभक्तियोगद्वारा ब्रह्मप्राप्तौ च भक्तिरेव हेतुरित्याशयेनाह ॥ १९ ॥ ❀ ❀ अपावृतं निरावरणम् ॥ २० ॥ ❀ ❀ साधूनि ऊर्ध्वपुण्ड्रादीनि भूषणानि येषां ते ॥ २१—२४ ॥

## श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

तादृशेन मनसा आत्मानं पश्यतीत्याह—तदा पुरुष इति। विविक्तात्मसाक्षात्कारस्तदैव भवति, अन्यदा सङ्गाते प्रविष्ट आत्मा प्रतीयते। केवलं सङ्गा[1]ताद्विनिर्मुक्तम्। स्वभावोऽत्र प्रकृतिशब्देनोच्यते। प्राकृतेषु प्रसक्त आत्मा प्रकृतिस्वभावो भवति। तस्य यदा नियन्ता भवेत् स्वभावजयो भवेदित्यर्थः, अन्यथा पूर्वमेव केवलत्वं निरूपितं पुनरुक्तं स्यात्। नियामकत्वे च प्रकृतिपरत्वं स्यात्। भगवता सह निरन्तरं जीवब्रह्मविभागशून्यम्, नाऽपि सायुज्येन, किन्तु ब्रह्मभावेनेत्याह—स्वयंज्योतिरिति। स्वयमेव स्वप्रकाशो जातोऽस्ति। अणिमानम[2]तिसूक्ष्मम्। प्रतीतावहङ्कारादीनां सहस्फुरणाभावात् सूक्ष्ममुच्यते; यथा विरलत्वेनाऽऽकाशम्, नत्वणुपरिमाणमपि। सर्वत्र देवतिर्यङ्मनुष्यादीनामात्मभूतं केनाप्यंशेन न खण्डितं सर्वात्मकमात्मानं पश्यति ॥ १७ ॥ ❀ ❀ एतादृशात्मस्वरूपसाक्षात्कारे मनसो न शुद्धत्वमात्रं प्रयोजकम्, किन्तु कारणत्रयमपीत्याह—ज्ञानवैराग्येति। ज्ञानवैराग्ये भक्तेरङ्गभूते, ते च फलोपकार्यङ्गे; न तु भक्तिजनके। भक्तिरपि योगरूपा साधनत्वेन निरन्तरं क्रियमाणा। चकाराद्भक्तिसाधनैरन्यैरपि युक्तेन। आत्मना मनसा, आत्मैक्यं प्राप्तेन, विषयाभिलाषया ततो न निर्गतेन, आत्मानं परिपश्यति। जाते ज्ञाने प्रकृतिप्रेरणसामर्थ्यं भवति, तदा महाभोग उपपद्यते। अतः प्रकृतिपूर्वकत्वं सम्भवति। तन्निषेधार्थमाह—उदासीनमिति। प्रकृतेस्तु न किञ्चिद्बलमित्याह—हतौजसं प्रकृतिं च पश्यति। वासनामात्रेण प्रकृतिस्तिष्ठतीत्यर्थः ॥ १८ ॥ ❀ ❀ एवमात्मज्ञानं सपरिकरमुपपाद्य तत्र रतिरासक्तिर्वा चित्तस्य चेद्भवति तदा तन्मनो मुक्तये भवतीत्युक्तम्। इदं परम्परया साक्षाच्च बहुसाधनसाध्यमिति एकमेव साधनं सर्वसाधनरूपं सर्वफलसाधकं च सौकर्यार्थं निरूपयति—न युज्यमानयेति। भगवति युज्यमानया भक्त्या सदृशः पन्था नाऽस्ति। सिद्धान्तान्तरत्वात् भगवन्मार्गेण सह विरोधः। पूर्वं योगाभ्यासपराणां ब्रह्मभावार्थं साधनप्रेप्सूनां भक्तिरेव साधनम्। अखिलात्मनीति चिद्रूपे नारायणे सर्वात्मकत्वे ज्ञाते पश्चाद्भक्तिः कर्तव्येति केचित्। सर्वत्र भगवतो भक्तिः कर्तव्येत्यपरे। स्पर्द्धासूयादिव्यावृत्त्यर्थं तथा ज्ञात्वा कर्तव्यम्। भगवानत्र ब्रह्मैव, सत्त्वमूर्तिर्वा। ब्रह्मसिद्धिर्ब्रह्मप्राप्तिः ॥ १९ ॥ ❀ ❀ तस्या भक्तेः कारणमाह—प्रसङ्गमिति। नहीयं भक्तिस्त्यागे भवति, किन्तु चित्तवत् सङ्गो यदा विषयभेदेन भिद्यते, तदा भक्तिं जनयति। तस्य चित्ततुल्यतामाह—प्रसङ्गमिति। अजरं जरारहितम्। पाशं बन्धकम्, न तु देहादेः, किन्तु आत्मनो विदुः। प्रकृष्टः सङ्गो यस्मिन् कस्मिंश्चित्। कवयो विदुरिति प्रमाणम्। स एव प्रसङ्गः साधुषु चेत् कृतः, तदा मोक्षद्वारमपावृतं भवति। यथा भगवति स्नेहो[3] मुक्तये, तथा सत्सङ्गो मोक्षद्वारम्। यथा ज्ञानादिषु सहजः सङ्गादिः कपाटरूपः, तदुद्घाटने ज्ञानादिभिर्मोक्षो भवति; नैवं सत्सङ्गे सहजः कश्चन संसर्गदोषोऽस्ति। तदाह—अपावृतमिति ॥ २० ॥ ❀ ❀ सतां लक्षणान्याह—

> सन्तः षोडशधर्मा वै धर्मास्ते त्रिविधा मताः। भौतिकादिविभेदेन एकस्तु सहजः स्मृतः ॥ १ ॥
> उपयोगी तथा चैको भौतिकास्त्रय एव हि। आध्यात्मिकास्तु चत्वारः सप्त चैवाधिदैविकाः ॥ २ ॥
> पञ्चधा चेद्गुणा न स्युः सर्वेषां सिद्धयो न हि। भौतिकानामभावे तु लौकिकास्ते न संशयः ॥ ३ ॥
> अलौकिका हि ते सेव्या निर्दुष्टास्तदनन्तरैः। सप्तभिस्ते महात्मानस्तदभावे न तैः फलम् ॥ ४ ॥

---

१. संगात्. घ. ङ. । २. इति सूक्ष्मप्रतीतौ, क. घ. ङ. । ३. युक्त एव. घ. ङ. ।

आदौ भौतिकांस्त्रीन् गुणानाह—सर्वेषां प्राणिनामपराधं सहन्त इति तितिक्षवः। तेषु कृतापराधेष्वपि करुणावन्तो भवन्ति, तद्दुःखदूरीकरणाय यत्नं कुर्वन्ति। किञ्च, तेषामन्येषां च सुहृदो मित्राणि, सर्वदा हितमाचरन्ति भावयन्ति च। लोके मित्र[1]देवतागावश्च सुहृदो भवन्ति, न हि ते सर्वेषां दुःखाभावार्थं यतन्ते। लौकिकाश्च दयालवो हेत्वर्था वा कारुणिका भवन्ति, निवृत्ते तु दुःखे न तेषां हितं भावयन्ति। मातापितरौ ? बालेषु तितिक्षवो भवन्ति, न तु ते कारुणिकाः, न वा सर्वसुहृदः। तस्मात् त्रितयधर्मयुक्ता अलौकिका एव। तादृशेषु दोषाभावमाह—अजातशत्रव इति। गुणास्त्रयो विपरीतरूपाः सन्तो दोषाः, ते कामक्रोधलोभात्मका भवन्ति। तत्र क्रोधो बहुविधः प्रकटाप्रकटधर्मादिविभेदेन। स्वक्रोधः स्वरूपेण, साधनरूपेण वा परक्रोधे निमित्त[2]त्वमापद्यते, तदा स शत्रुर्भवति। तस्याऽपि च धर्मः स्वस्य क्रोधहेतुर्भवेत्, तदाऽन्योन्यं शत्रवो भवन्ति। ते च पश्चात् रागादिजनकधर्मैर्बाधिताश्चेत् निवर्तन्ते। येषां तु शत्रवो नोत्पन्ना एव, जन्मान्तरीयाणाम[3]पगतदोषाणां नोत्पत्तिः, अस्मिंस्तु जन्मन्यनिष्पत्तिः। अनेन पूर्वमनेकजन्मस्वपि निवृत्तक्रोधास्त इत्युक्तम्। राजसो दोषः कामादिः, सोऽपि नास्तीत्याह—शान्ता इति। लयविक्षेपरहिता चेतसोऽवस्था शान्तिः, तया सहाऽभेदं स्वभावतः प्राप्ताः शान्ताः। एतदपि बहुजन्मसाधनैरेव भवति। एवमन्तःकरणजीवयोर्दोषाभावो निरूपितः। दैहिकं दोषाभावमाह—साधव इति। साधवः सदाचाराः। स एव सन् आचारः, य आत्मानं परं च न खेदयति। आत्मा त्वन्तःकरणजीवात्मकः। शारीरस्तु वेदमयः, परोऽपि तथा। सर्वथा वा येषामाचारेण न कोऽपि कस्याप्यपकारः, स सदाचारो भवति। तेनाऽपि धर्मेण देहस्वभावत ऐक्यं प्राप्ताः साधवः। तादृश एव धर्मो येषाम- लङ्करणे हेतुर्भवति। लोके तेनैव प्रतिष्ठा भवति। अनेन सर्वोऽपि परिकरः तेषां साधुरूपो भवति॥ २१॥ ❀ ❀ एवं सर्वदोषपरिहारमुक्त्वा तेषां सर्वपुरुषार्थसाधकत्वसिद्ध्यर्थं स्वस्मिन्नाधिदैविकान् गुणानाह—मयीति। भक्तिरग्रे वक्तव्या, सर्वेन्द्रियाणां मनसा सह अहमहमिकतया भगवत्कार्यपरत्वमिति। इन्द्रियाणि च निर्दुष्टानि, सगुणानि चेति। न विद्यते अन्यस्मिन् यो भावः। भावो नामाऽन्तःकरणधर्मोऽभिप्रायापरनामा सर्वत्र हेतुः। स भक्तिजनकोऽपि भवति, भावान्तरेणाऽपि भक्तिं जनयति। तत्फलविषयकमेव भवति। भावान्तरसहितो वा। स हि देवतान्तरविषयः, पदार्थान्तरविषयः, मार्गान्तर- विषयो वा। तत्सहभावोऽत्र निषिध्यते, फलभावश्च। अत एव मार्गान्तरेण न चाल्यत इति दृढा। यस्यां भक्तौ प्रमाणादि चतुर्द्धाऽपि बाधा नास्ति। सा दृढा। तदर्थमेव पूर्वसिद्धपदार्थानां त्यागः कर्तव्यः, ते च वेदलोकात्मकाः। तदाह—मत्कृते भगवत्कार्यार्थमेव त्यक्तानि विहितानि कर्माणि यैः। निरन्तरभगवत्स्मरणे, सेवायां च सर्वाण्येव कर्माणि बाधकानि, ज्ञानपूर्वकं सेवमानानामनन्यभावप्रतिबन्धकानि च। मत्कृत इति नाऽऽलस्यादिना तत्परित्यागः। लौकिकाः स्त्रीपुत्रादयः स्वजनाः, बान्धवा- स्त्वन्ये सजातीयाः। त उभये त्यक्तव्याः। तेषामपि सत्त्वे तु न स्वजनबन्धुत्वम्। परित्यागलक्षणमेकमपि साधनं लौकिकवैदिक- भेदेन द्विधा परिगणितम्। लौकिकानां परित्यागाऽसामर्थ्यबोधनार्थं वा॥ २२॥ ❀ ❀ एवं रूपासक्तौ त्रयो गुणा उक्ताः, नाम्नि त्रयमाह—मदाश्रया इति। भगवद्गतचित्तेन ये श्रुता भगवद्गुणाः। ये वा संकीर्तिता नित्यं यावत्ते रसतां ययुः। तावत्त्यक्तै- स्तदीयैश्च बाधा भवति सर्वथा॥ १॥

> विविधा अपि ते तापाः सोढव्यास्तापसत्वतः। बलात्कृत्वा तपस्यन्ते ततः प्राप्ताः स्वतो वराः॥ २॥
> भजनापेक्षया ते वै भगवत्प्रीतिहेतवः। दुःखेषु भगवांश्चाऽपि नित्यं साक्षात्क्रियेत वै॥
> देहादिविषयांस्त्यक्त्वा चित्तं तद्गतमेव यत्॥ ३॥

याः कथा भगवन्तमेवाऽऽश्रित्य वर्तन्ते, न तु प्रसङ्गाद्भगवद्विषयाः। मृष्टा उज्ज्वला निर्दोषपूर्णरूपाः। भाववर्णनेन वा भक्तैरुज्ज्वलीकृताः॥ २३॥ ❀ ❀ एवं तेषां लक्षणान्युक्त्वा तादृशेषु साधुत्वं विधत्ते—त इति। ननु केऽपि स्वभावतः साधवः, तेऽपि भगवन्निकटे वर्तन्त इति एत इत्युक्तम्। त एव प्रसिद्धा एते। विश्वासार्थं साध्वीति संबोधनम्। ननु तादृशाश्चेत् सन्ति बहवः ? कथं जगदमुक्तं तिष्ठतीत्याशङ्क्याऽऽह—सर्वसङ्गविवर्जिता इति। लौकिकास्तु स्वतो न तान् जानन्ति, ते तु सर्वापेक्षा- रहिता इति न केनापि प्रकारेण कस्यचित्संशयोऽपेक्षितः। अतस्तेषां योगाऽभावादेव न मुच्यन्ते, किं तेषां निरूपणेनेत्याशङ्क्या- ऽऽह—सङ्गस्तेष्विति। तेषु सङ्गस्ते प्रार्थ्यः। सङ्गस्त्यक्तव्यो भवति, स त्वया न शक्य इति सङ्गजनितदोषनिवर्तकम्। सङ्गत्याग- जनितगुणजनकं च किञ्चिदपेक्ष्यते, अन्यथा सङ्गत्यागस्य कारणता न स्यात्। शास्त्रान्तरेऽपि सङ्गत्यागानुकल्पत्वेन सत्सङ्गो निरूपितः। पूर्वोक्तोभयसाधकाः (?) तेऽपि तवाऽशक्यसङ्गा इति तेषां सङ्गप्रार्थनैव कर्तव्या। प्रार्थनाऽपि तावत् करिष्यतीति तद्धर्माणां तथात्वं वक्तुं सङ्गदोषदूरीकरणं तेषां सहजो धर्म इत्याह—सङ्गदोषहरा इति। सङ्गस्य हि कामजनकत्वम्, सङ्गेन हि कामादिदोषा जन्यन्ते, तांश्च दोषान् सन्तो दूरीकुर्वन्ति। तदाह—हीति। तथा सामर्थ्यं तेषामाह—त इति। ते हि भगवदीयाः प्रसिद्धाः॥ २४॥

---

१. मित्रः क. ग. घ. ङ. च.। २. निमित्तान्तरं क. निमित्तं ख. घ. ङ.। ३. गतदोषाणां क.।

## श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

तदा पुरुष इत्यत्र। स्वभाव इत्यादि। प्रकृतेः परमित्यत्र आत्मनो यः स्वभावः स प्रकृतिशब्देनोच्यत इत्यर्थः। स को वेत्याकांक्षायां तमाहुः—प्राकृतेष्वित्यादि। तथा च प्रकृतेः परमित्यस्य जितपूर्वस्वभावमित्यर्थो बोध्य इति भावः। ननु प्रकृतेः परमित्यस्य प्रकृतेर्भिन्नमित्यर्थोक्तौ को दोषः? येनैवं व्याख्यायत इत्यत आहुः—अन्यथेत्यादि। तर्हि प्रकृतिनियामकमित्येवाऽर्थोऽस्त्विति चेत्तत्राऽऽहुः—नियामकत्व इत्यादि। प्रकृतिपरत्वमिति नियमनार्थं तदपेक्षत्वम्। तथा सत्युदासीनपदविरोधः स्यात्, अतः पूर्वोक्त एवाऽर्थो निश्चेय इत्यर्थः॥ १७॥ ❀ ❀ प्रसङ्गमित्यत्र। तस्य चित्ततुल्यतामिति। तस्य सङ्गस्य प्रतियोगिभेदेन बन्धमोक्षसाधकतारूपां तुल्यताम्॥ २०॥ ❀ ❀ तितिक्षव इत्यत्र। गुणानां भौतिकादिभेदे त्रयो वा नव वा भवन्ति, न तु षोडशेत्याशङ्कायां विभजन्ते—एक इत्यादि। एकः सर्वसङ्गविवर्जितत्वरूपस्तु सहजः स्मृतः। धर्मोक्तौ पश्चात् स्मृत्वोक्तः। तथा सहज एकोऽन्यः सङ्गदोषहरत्वरूपः। उपयोगी प्रकृतेः सङ्गदोषनिरसन उपयुक्तः। सोऽपि पश्चात् स्मृत इत्यर्थः। तर्हि भौतिकादीनां त्रिविधानां किमर्थं कथनमित्यतस्तेषां प्रयोजनं सार्धेनाऽऽहुः—त इति। वक्ष्यमाणधर्मैः साधुत्वेन भासमानाः। तदनन्तरैराध्यात्मिकैः। तथा चाऽजातशत्रुत्वादयश्चत्वारो धर्माः सख्यत्वप्रयोजकाः। तदभावे नेत्यत्र पदच्छेदः, नेति भिन्नं पदम्। अतः सर्वेऽप्यवश्यवक्तव्यत्वादुक्ता इत्यर्थः। सर्वदेहिनामिति पदं प्रतियोगिबोधकत्वेन त्रिष्वपि तितिक्ष्वादिपदेष्वन्वेतीत्याशयेन तेषामलौकिकत्वाय व्युत्पादयन्ति—लोक इत्यादि। गुणा इति। अजातशत्रुत्वादयः। ते चेति। क्रोधाश्च। एवं लौकिकीं व्यवस्थामुक्त्वा, अजातशत्रुपदं व्याकुर्वते—येषामित्यादि। ननु शत्रूणां कथमजननमित्यतो व्युत्पादयन्ति—जन्मेत्यादि, क्रोधस्य निरद्वारत्वेन तद्वतां बहुकालं निरये वासात् पूर्वजन्मीयानां नोत्पत्तिरतस्तथेत्यर्थः। अन्तःकरणजीवयोरित्यत्र जीवलिङ्गभूतोऽहङ्कारो जीवपदेन बोध्यः। अखेदनक्रियाकर्मभूतयोरात्मपरयोः स्वरूपं विवृण्वन्ति—आत्मेत्यादि। ननु शारीरः केवल एकात्मपदेनोच्यत इति कथमेवं व्याख्यात इत्याकांक्षायामाहुः—शरीरस्तु वेदमय इति। तथा च वैदिकप्रक्रियायां तथैव, पौराणिकप्रक्रियायां तु 'एवं पञ्चविधं लिङ्गं त्रिवृत् षोडश विस्तृतम्। एष चेतनया युक्तो जीव इत्यभिधीयते' इति चतुर्थस्कन्धवाक्यात्तथैवेत्यत एवं व्याख्यायत इत्यर्थः। इदमेव परपदेऽप्यतिदिशन्ति—परोऽपि तथेति॥ २१॥ ❀ ❀ मयीत्यत्र भक्तिभावयोः कार्यकारणभावेन भेदबोधनादुभयोः स्वरूपं यदत्र विवक्षितं तदाहुः—भक्तिरित्यादि। भावो नामेत्यादि च। भावस्यानन्यत्वं विवृण्वन्ति—भावान्तरेणेत्यादि। तदिति। भावान्तरम्। तथा च, फलेपेक्षाशून्यो भावोऽनन्य इत्यर्थः। अन्यशब्दस्य सजातीयग्राहकत्वादनन्यपदेन सजातीयसंवलननिषेध एव युक्तो न फलनिषेध इत्यरुच्या पक्षान्तराण्याहुः—भावान्तरेत्यादि। फलभावश्चेति भक्तेरुच्यत इति शेषः। सत्त्वे तु न स्वजनबन्धुत्वमिति। पूर्वोक्तरीतिकभक्त्या साधुत्वे तु न तथात्वं किन्त्वत्यक्तव्यत्वमित्यर्थः॥ २२॥ ❀ ❀ मदाश्रया इत्यत्र। कारिकासु। ननु भगवत्कथाश्रवणादिकर्तॄणां पूर्वोक्तधर्मवैशिष्ट्यात्तापासम्भवेन तत्कृततापाभावोक्तिरनुपपन्नेत्याशङ्क्य तत्रोपपत्तिमन्यच्च किंचनाऽऽहुः—भगवदित्यादि। तावदिति रसत्वभवनात् पूर्वम्। सोढव्या इति। तथा च सोढव्यत्वान्न तपन्तीत्यर्थः। अन्यदाहुः—तापसत्वतो बलात्कृत्वा तपस्यन्त इति। कृत्वेति। त्यागं कृत्वा। ततोऽप्यन्यदाहुः—तत इत्यादि। स्वत इति। विप्रयोगस्वभावात्। तेषु गुणमाहुः—दुःखेष्वित्यादि॥ २३॥ ❀ ❀ त एत इत्यत्र। शास्त्रान्तर इति। ब्रह्मवैवर्ते मदालसोपाख्याने "सङ्गः सर्वात्मना त्याज्यः स चेत्त्यक्तुं न शक्यते। स एव सत्सु कर्त्तव्यः सङ्गः सङ्गस्य भेषजम्" इति॥ २४॥

## श्रीगिरिधरकृता बालप्रबोधिनी

आत्मानं विशिनष्टि—निरन्तरमिति, नित्यमित्यर्थः। यतः अखण्डितमिति, शस्त्राग्न्यादिभिः खण्डनदाहाद्यनर्हमित्यर्थः। यतः अणिमानमिति, अतिसूक्ष्ममित्यर्थः। यतः स्वयञ्ज्योतिरिति, स्वप्रकाशं सर्वप्रकाशकं चेत्यर्थः। यतः केवलमिति विशुद्धमित्यर्थः। यतः प्रकृतेः परमिति, कार्यकारणात्मना वर्त्तमानायाः प्रकृतेर्विलक्षणमित्यर्थः॥ १७॥ ❀ ❀ उदासीनं निर्व्यापारं तथा हतौजसं संसारयितृत्वरूपबलहीनां प्रकृतिं च पश्यति। केन मनो विशुद्धं भवतीत्यपेक्षायां साधनान्तराणि तु बहून्यग्रे वक्ष्यति, मुख्यानि त्रीणि तान्याह—ज्ञानेति। ज्ञानं शास्त्रजन्यं प्रकृतिपुरुषेश्वरयाथात्म्यज्ञानं, वैराग्यं विषयानासक्तिस्ताभ्यां युक्तेन भगवद्भक्तियुक्तेन चेति॥ १८॥ ❀ ❀ तत्रापि साधनत्रये किं मुख्यमित्यपेक्षायामाह—नेति। योगिनां मुमुक्षूणां ब्रह्मसिद्धये ब्रह्मत्वप्राप्तये भगवति युज्यमानया क्रियमाणया भक्त्या सदृशः शिवः सुकरत्वादन्यनिरपेक्षत्वाच्च सुखरूपोऽन्यो पन्था नास्ति। देवतान्तरकृतविघ्नसम्भवात् कथं फलप्राप्तिरित्याशङ्क्याह—अखिलात्मनीति। सर्वात्मकत्वाद्भगवद्भक्तानां विघ्नकर्ता कोऽपि नास्ति तदाराधनेनैव देवतान्तराराधनसिद्धेरिति भावः॥ १९॥ ❀ ❀ एवं बन्धमोक्षयोः अशुद्धशुद्धमनोमूलत्वमुक्तं, इदानीं तदशुद्धत्वशुद्धत्वयोरपि कुसङ्गसुसङ्गमूलत्वं सूचयितुं कुसङ्गसुसङ्गयोरेव बन्धमोक्षहेतुत्वमाह—प्रसङ्गमिति। असत्स्विति शेषः, असत्सु इन्द्रियार्थेषु तत्परायणेषु जनेषु च प्रसङ्गं प्रकृष्टामासक्तिं आत्मनो जीवस्याजरं दृढं पाशं कवयो विदुर्जानन्ति। तत्सङ्गे न निरन्तरं बन्धहेतुमनोमालिन्यकरदुरितोत्पत्तेरिति भावः। स एव प्रसङ्गः साधुषु भगवद्भक्तेषु कृतो ज्ञानवैराग्यभक्तिमनोविशुद्ध्याद्युत्पादनेन अपावृतं निवारणं मोक्षद्वारं भवति॥ २०॥ ❀ ❀ के ते साधव इत्यपेक्षायामाह—तितिक्षव इति

चतुर्भिः । तितिक्षवः परापराधसहनशीलाः । कारुणिकाः स्वार्थनिरपेक्षपरदुःखनिरासं चिकीर्षवः । अत एव सर्वदेहिनां सुहृदः मित्राणि । अतएव अजाता अविद्यमानाः शत्रवो येषां ते । शान्ताः रागलोभादिरहितचित्ताः । साधवः शास्त्रानुसारेण स्वकार्य-साधकाः, सदाचारनिष्ठा इत्यर्थः । साधुभूषणाः साधु सुशीलमेव भूषणं येषां ते, यद्वा साधूनि भूषणानि भूषणोपलक्षिताः सर्वे परिकरा येषां ते ॥ २१ ॥ ❀ ❀ अनन्येन न विद्यते अन्यस्मिन् देवतान्तरे पदार्थान्तरे च तेन भावेन अन्तःकरणेन अभिप्राय-विशेषेण वा दृढां केनापि कथमपि कदापि अविचाल्यामपि परमेश्वरे ये भक्तिं प्रीतिं कुर्वन्ति । मत्कृते मद्भजनार्थं तद्विरोधितया त्यक्तानि कर्माणि लौकिकवैदिकसर्वव्यापारा यैस्ते । त्यक्ताः स्वजनाः सम्बन्धिनः बान्धवाश्च यैस्ते ॥ २२ ॥ ❀ ❀ मदाश्रयाः मद्विषयाः मृष्टाः शुद्धाः शुद्धिकराः स्वादुविशिष्टाश्च कथाः शृण्वन्ति कथयन्ति च । सर्वसङ्गविवर्जिताः मद्व्यतिरिक्तं कुत्राप्यासक्ति-रहिताः त एते साधवः । ननु तापत्रयसन्तप्तानां कथमेते गुणाः सम्भवन्ति तत्राह—एतान् विविधा आधिदैविकाध्यात्मिकाधिभौति-कास्तापा नैव तपन्ति । तत्र हेतुमाह—मद्गतं चेतो येषां तानिति मदेकशरणत्वेन मया रक्ष्यमाणानित्यर्थः ॥ २३ ॥ ❀ ❀ हि यस्मात् ते साधवः सङ्गदोषहराः दुस्सङ्गजातानां सर्वदोषाणां दुरितानां निवर्त्तका अथ तस्मात् ते त्वया तेषु सङ्गः प्रार्थ्यः ॥ २४ ॥

### हिन्दी अनुवाद

तब जीव अपने ज्ञान-वैराग्य और भक्तिसे युक्त हृदयसे आत्माको प्रकृतिसे परे, एकमात्र ( अद्वितीय ), भेदरहित, स्वयंप्रकाश, सूक्ष्म, अखण्ड और उदासीन ( सुख-दुःखशून्य ) देखता है तथा प्रकृतिको शक्तिहीन अनुभव करता है ॥ १७ ॥ ॥ १८ ॥ ❀ ❀ योगियोंके लिये भगवत्प्राप्तिके निमित्त सर्वात्मा श्रीहरिके प्रति की हुई भक्तिके समान और कोई मङ्गलमय मार्ग नहीं है ॥ १९ ॥ ❀ ❀ विवेकीजन सङ्ग या आसक्तिको ही आत्माका अच्छेद्य बन्धन मानते हैं; किन्तु वही सङ्ग आसक्ति जब संतों—महापुरुषोंके प्रति हो जाती है, तो मोक्षका खुला द्वार बन जाती है ॥ २० ॥ ❀ ❀ जो लोग सहन-शील, दयालु, समस्त देहधारियोंके अकारण हितू , किसीके प्रति भी शत्रुभाव न रखनेवाले, शान्त सरलस्वभाव और सत्पुरुषोंका सम्मान करनेवाले होते हैं, जो मुझमें अनन्यभावसे सुदृढ प्रेम करते हैं, मेरे लिये सम्पूर्ण कर्म तथा अपने सगे-सम्बन्धियोंको भी त्याग देते हैं, और मेरे परायण रहकर मेरी पवित्र कथाओंका श्रवण, कीर्तन करते हैं तथा मुझमें ही चित्त लगाये रहते हैं—उन भक्तोंको संसारके तरह-तरहके ताप कोई कष्ट नहीं पहुँचाते हैं ॥ २१-२३ ॥ साध्वि ! ऐसे-एसे सर्वसङ्गपरित्यागी महापुरुष ही साधु होते हैं, तुम्हें उन्हींके सङ्गकी इच्छा करनी चाहिये; क्योंकि वे आसक्तिसे उत्पन्न सभी दोषोंको हर लेनेवाले हैं ॥ २४ ॥

सतां प्रसङ्गान्मम वीर्यसंविदो भवन्ति हृत्कर्णरसायनाः कथाः ।
तज्जोषणादाश्वपवर्गवर्त्मनि श्रद्धा रतिर्भक्तिरनुक्रमिष्यति ॥ २५ ॥
भक्त्या पुमाञ्जातविराग ऐन्द्रियाद् दृष्टश्रुतान्मद्रचनानुचिन्तया ।
चित्तस्य यत्तो ग्रहणे योगयुक्तो यतिष्यते ऋजुभिर्योगमार्गैः ॥ २६ ॥
असेवयायं प्रकृतेर्गुणानां ज्ञानेन वैराग्यविजृम्भितेन ।
योगेन मय्यर्पितया च भक्त्या मां प्रत्यगात्मानमिहावरुन्धे ॥ २७ ॥

### देवहूतिरुवाच

काचित्त्वय्युचिता भक्तिः कीदृशी मम गोचरा। यया पदं ते निर्वाणमञ्जसान्वाश्नवा अहम् ॥ २८ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका ।

सत्संगस्य भक्त्यंगतामुपपादयति । सतामिति । वीर्यस्य सम्यग्विद्वेदनं यासु ता वीर्यसंविदः । हृत्कर्णयो रसायनाः सुखदाः तासां जोषणात्सेवनादपवर्गोऽविद्यानिवृत्तिर्वर्त्म यस्मिंस्तस्मिन्हरौ प्रथमं श्रद्धा ततो रतिस्ततो भक्तिरनुक्रमिष्यति क्रमेण भविष्यतीत्यर्थः ॥ २५ ॥ ❀ ❀ ततः किमत आह । भक्त्येति मम रचना या सृष्ट्यादिलीला तस्या अनुचिंतया या भक्तिस्तया ऐन्द्रिया-त्सुखाज्जातविरागः सन् दृष्टश्रुतादैहिकामुष्मिकात् ततो यत्त उद्युक्तः संश्चित्तस्य ग्रहणे यतिष्यते ऋजुभिर्भक्तिप्रधानत्वादनायासैः ॥ २६ ॥ ❀ ❀ तदेवं प्रकृतेर्गुणानामसेवया ज्ञानादिभिश्चायं जीव इहैव देहे मामेवावरुंधे प्राप्नोति ॥ २७ ॥ ❀ ❀ काचिदिति का स्विदित्यर्थः । उचिता योग्या तत्रापि मम स्त्रियाः कीदृशी गोचरा योग्या । निर्वाणं मोक्षात्मकं तव पदं स्वरूपमन्वाश्नवै अनंतरमेव सर्वात्मना प्राप्स्यामि । अंजसा त्विति पाठे अहं त्विति संबंधः ॥ २८ ॥

### वंशीधरकृतो भावार्थदीपिकाप्रकाशः

साधुसंगत एव मनो भगवति रतिं वहतीत्यत्र क्रममाह। प्रकृष्टात्संगान्मम कथा भवन्तीत्युक्तेरप्रकृष्टात्संगाद्भजनक्रियामात्रं न तु कथा इति। इत्यर्थ इति। रसायनत्वेन प्रथमं रुचिस्तत्रापि पतितोद्धरणादिचरितश्रवणेन श्रद्धा विश्वासः। ततो रतिभक्ती भक्तेः पूर्वापरावस्थे इति भावः॥ २५॥ ❀ ❀ ततो भक्तेः ग्रहणे वशीकारे संप्रति मत्प्रवर्त्तयिष्यमाणैर्यतिष्यतेऽग्रे जनिष्यमाणः पुमानित्यर्थः। एतेन योग उक्तः॥ २६॥ ❀ ❀ ज्ञानमाह। गुणानां विषयाणां हेयत्वविचारेण वैराग्येणैहिकामुष्मिकभोगजिहासया विजृम्भितेन वर्द्धितेन योगेन मयि मनो निधानलक्षणेन मां प्रत्यगात्मानं तत्पदार्थमवरुन्धे त्वंपदार्थतादात्म्येन प्राप्नोति। इहैव प्रारब्धप्रतिबन्धकाभावे सति। भक्त्येति भक्तिं विना भूतस्य ज्ञानस्य वैकल्यात्॥ २७॥ ❀ ❀ तत्रापि उचितत्वेपि गोचरा ज्ञातुं कर्तुं च शक्या॥ २८॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

भक्त्यङ्गताम्। प्रेमभक्त्युत्पादकतां सुखदा इति रुचिजनकत्वं श्रद्धा विश्वासः रतिर्भावापरपर्याया प्रेम्णः पूर्वावस्था। तदुक्तं पञ्चरात्रे "प्रेम्णस्तु प्रथमावस्था भाव इत्यभिधीयत" इति भक्तिः प्रेमा तल्लक्षणं यथा श्रीभक्तिरसामृतसिन्धौ "शुद्धसत्त्वविशेषात्मा भाव एव पाकावस्थां प्राप्तः प्रेमेति लक्षितः "सम्यङ्मसृणितस्वान्तो ममत्वातिशयाङ्कितः। भावः स एव सांद्रात्मा बुधैः प्रेमा निगद्यते" इति॥ २५॥ ❀ ❀ अथ। मातुरुत्कण्ठानन्तरं मुख्यां भक्तिं निर्देष्टुं सङ्गसिद्धां योगमिश्रत्वेन गौणीं निर्दिशति। भक्त्येति। ततः। गौणभक्तेः तथा च भक्त्यैव योगसिद्धिर्नान्यथेति सूचितं युञ्जानानां भक्तानां "प्राणायामादिभिर्मन" इत्युक्तेः॥ २६॥ ❀ ❀ असेवया। हेयत्वविचारेण ज्ञानेन त्वंपदार्थनिर्णयेन योगेनाष्टाङ्गेन कीदृशेन वैराग्यं विषयवैतृष्ण्यं तेन प्रकाशितेन मय्यर्पितया मदनन्यविषययेति मोक्षेऽपि अनन्यभक्तिरेवान्तरङ्गसाधनमिति व्यञ्जितम्। प्रत्यगात्मानं तत्पदार्थं मां त्वंपदार्थतादात्म्येन प्राप्नोति योगमिश्रत्वाद्भक्तेः॥ २७॥ ❀ ❀ एवं सर्वजीवनरूपां भक्तिं श्रुत्वात्युत्कण्ठया दैन्येन तामेव पृच्छति काचिदिति। अत्र चित्प्रत्ययस्य स्विदित्यर्थकरणं कल्पनागौरवमत इत्यर्थ इत्युक्तम्। अहो त्वयि का योग्येत्यनेन शुद्धाया एवोद्देशः कृतः। पुनर्दैन्येनाह। तत्रापि शुद्धाया योग्यत्वेऽपि॥ २८॥

### श्रीमद्वीरराघवव्याख्या

कथं सतां प्रसङ्गान्निवृत्तिधर्माभिरुचिरुत्पद्यत इत्यत्राह। सतामिति। सतां साधूनां प्रसङ्गान्मम वीर्यसंविदः वीर्याणि संवेदयन्तीति वीर्यसंविदः णिजर्थगर्भमिदम्। यद्वा भावे क्विप् वीर्याणां संवित्संवेदनं यासु; ताः कथा यद्वा वीर्येण नित्यासंकुचितज्ञानगुणेन संवेत्ति सर्वं स्वरूपतः स्वभावतश्च साक्षात्करोति तथा तस्य सर्वज्ञस्य ममेत्यर्थः। कथा हृत्कर्णयोः रसायना अमृताद्रुचिकरा भवन्ति प्रवर्तन्ते तज्जोषणात्तासां कथानां जोषणात्सेवनादाशु अपवर्गवर्त्मन्यपवर्गस्य मोक्षस्य वर्त्मनि द्वारभूते गुरूपसदने श्रद्धा त्वरा भवत्युत्पद्यते। सत्सन्निधौ भगवत्कथाश्रवणे सति "तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते नास्त्यकृतः कृतेन तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् "आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन! मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते॥" इति। स्वर्गादीनां सुखानां सातिशयित्वं क्षयिष्णुत्वं ब्रह्मोपासनस्यानन्तस्थिरफलत्वं केवलकर्मणामनन्तत्वाद् दुष्करत्वात्परिमितफलत्वाच्च तुच्छत्वं निवृत्तिधर्माणां तद्विपरीतत्वं च श्रुतवतः जातविरागस्य पुंसस्तादृशनिवृत्तिधर्मो जायत इत्यर्थः। प्रत्येकाभिप्रायेणानुक्रमिष्यतीत्येकवचननिर्देशः॥ २५॥ ❀ ❀ सत्सङ्गतिप्रभृतिप्रणाड्या भगवति प्रीतिरूपापन्नभक्तावुत्पन्नायां तत्रैव चित्तं सावधानेन नियम्येतेत्याह। भक्त्येति। मम रचनानां सृष्ट्यादिव्यापाराणां चिन्ता यस्यां तया भक्त्या अनेन ब्रह्मस्वरूपवत्तद्गुणानामप्युपास्यत्वमुक्तं दृष्टश्रुतादैहिकामुष्मिकाद्दृष्टयन्नपशुपुत्रस्वर्गादिरूपात्फलात्तस्मिन्नित्यर्थः। जात उत्पन्नो विरागो यस्य स पुमान् योगयुक्तः अनभिसंहितफलधर्मयोगज्ञानयोगाभ्यां युक्तः स ऋजुभिः चित्तैकरूप्यसंपादकैः योगस्य भगवद्भक्तियोगस्य मार्गैः साधनैर्विवेकविमोकाभ्यासादिभिः चित्तस्य ग्रहणे नियमने यत्तः समाहितः यतिष्यते यत्नं कुर्यात् इत्यर्थः॥ २६॥ ❀ ❀ योगमार्गानेव दर्शयन्ननयैव भक्त्या पुमान् मां प्राप्नोतीत्याह। प्रकृतेर्गुणानां सत्त्वादिगुणपरिणामरूपाणामविहिताप्रतिषिद्धनिषिद्धानां कलञ्जगृञ्जनचण्डालपतितादिसंबन्धिकेशोच्छिष्टाद्युपहतरूपजात्याश्रयनिमित्तदुष्टानामन्नादीनामसेवया अनेन विवेक उक्तः वैराग्येण विजृम्भितं यज्ज्ञानं तेन वैराग्यं कामानभिष्वङ्गशमदमादिरिति यावत्। ज्ञानशब्देन प्रकृतिविलक्षणात्मयाथात्म्यज्ञानयोगः शुभाश्रयसंशीलनरूपं ज्ञानं च विवक्षितं अनेनाभ्यास उक्तः। योगेनानभिसंहितकर्मफलयोगेन। अनेन क्रिया उक्ता। चकारेण कल्याणानवसादानुद्धर्षा विवक्षिताः तत्र सत्यार्जवदयादानाहिंसानभिध्याः कल्याणानि अनभिध्या परकृतदोषाचिन्तनं पुत्रविपत्त्यादिस्मरणजनितखेदाभावेन अवसादः, अनुद्धर्षः पुत्रजन्मादिनिमित्तातिसन्तोषः, एतैः प्रकृतिगुणासेवादिभिर्मय्यर्पितया समर्पितया ऐश्वर्यकैवल्यादिप्रयोजनविधुरया इत्यर्थः। भक्त्या इहैतद्देहावसाने प्रतीचो जीवस्यात्मानमन्तरात्मानं मामवरुन्धे प्राप्नोति।

यद्वा प्रत्यगात्मशरीरिणं मामित्यर्थः । यद्वा प्रत्यग्जीवः आत्मानं मामवरुन्धे इत्यर्थः । अत्र गुणासेवादिभिर्भक्त्येति न सद्योपायसमुच्चयः । किन्त्वसेवादिभिरनुगृहीताया भक्तेरेव साक्षात्साधनत्वम् इतरेषां तदनुग्राहकत्वेनैव परम्परया साधनत्वमित्यभिप्रायेण गुणासेवादिभिर्भक्त्येत्युक्तम् । इहावरुन्धे इत्यनेन इह देहे जीवदशायामेव मुक्तिं लभत इति जीवन्मुक्तिरियमुच्यते इति व्याख्यानं नादर्त्तव्यं, जीवन्मुक्तेरप्रामाणिकत्वात् । तथा ह्यापस्तम्बेन जीवन्मुक्तिर्निरस्ता, वेदानिमं लोकममुं च परित्यज्यात्मानमन्विच्छेत् "बुद्धक्षेमप्रापणं तच्छास्त्रैर्विप्रतिषिद्धम् । बुद्धे चेत् क्षेमप्रापणामिहैव न दुःखमुपलभेत ।" एतेन परं व्याख्यातमिति का चेयं जीवन्मुक्तिः सशरीरस्यैव मोक्ष इति चेन्माता मे वन्ध्येति वदसङ्गतार्थमिदम् । यतः सशरीरत्वं बन्धः अशरीरत्वमेव मोक्ष इति "न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशत" इत्यादिश्रुतिभिस्तैनैवोपपादितत्वादिति दिक्विस्तरस्तु भाष्यादिष्वनुसन्धेयः । अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुत इति श्रुतिर्जीवन्मुक्तिमभिदधाति इति चेन्न, अत्रोपासनदशायामपि ब्रह्माश्नुते अनुभवतीति श्रुत्यर्थवर्णनात् । अन्यथा देहपातावधिविलम्बपरायास्तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ सम्पत्स्य, इति श्रुतेर्विरोधापत्तेः । तस्माद्यथोक्त एवार्थः ॥ २७ ॥ ❀ ❀ एवं विवेकादिभिर्ज्ञानेन योगेन चानुगृहीतभगवद्भक्तियोगस्यैव मुक्त्युपायत्वं संग्रहेणाश्रुत्य पुनः तद्विस्तरबुभुत्सया पृच्छति देवहूतिः । यद्वा ज्ञानयोगप्रतिपादनसाधुस्वरूपप्रतिपादनप्रसङ्गात्संग्रहेणोक्तभगवद्भक्तियोगस्य प्राधान्येन तत्स्वरूपतदङ्गस्वरूपविस्तरबुभुत्सया पृच्छति त्रिभिः । उचिता मुक्तिं साधयितुं योग्या त्वयि भक्तिः काचेति भक्तिस्वरूपप्रश्नः काश्विदित्यपि पाठान्तरं तदाप्ययमेवार्थः । कीदृशीति मम मतेर्गोचरा योग्यानेन भक्त्यधिकारानुसारेण सम्भावितावान्तरभेदश्च पृष्टः यया भक्त्याहं तापत्रयातुरा ते तव निर्वाणं निरतिशयसुखं पदमञ्जसा सुखेनान्वश्नवै अनुप्राप्नुवानि । अत्राहमित्युपासकप्रश्नः ते पदं स्वरूपमित्यनेन प्राप्यप्रश्नः निर्वाणमिति प्राप्तिफलप्रश्नः । अञ्जसेति विघ्नप्रतीत्या विरोधिवर्गप्रश्नः ॥ २८ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली ।

त्वच्चरितश्रवणादिना दुष्टसङ्गदोषनाशो दृष्टचरः सत्सङ्गात्कथमित्याशङ्क्य सत्सङ्गे हरिकथाश्रवणादिसम्भवेन तत्सङ्गाद्दुष्टसङ्गदोषविनाशः प्रतिज्ञायते तेषामन्यप्रसङ्गाभावादिति भावेनाह । सतां प्रसङ्गादिति । प्रसङ्गात्प्रकृष्टसङ्गात् वीर्याणां पराक्रमाणां सम्पदो यासु तास्तथा हृत्कर्णानां रसमानन्दमायन्ते इति हृत्कर्णरसायनाः । अयगतौ इति धातुस्ततः किं तत्राह । तज्जोषणादिति । तच्छब्देनोभये च ग्राह्यास्तेभ्यः सद्भ्यस्तासां कथानां जोषणान्निषेवणादपवर्गवर्त्मनि हरौ श्रद्धावती आस्तिक्यबुद्ध्युपेता भक्तिः अनुक्रमिष्यति पदं निधास्यतीत्यन्वयः ॥ २५ ॥ ❀ ❀ भक्त्या किं फलं स्यादिति तत्राह । भक्त्येति । पुमानर्थी समर्थो विद्वान् मद्विषयशास्त्रश्रवणादिनोत्पन्नया मद्भक्त्या ऐन्द्रियात् शब्दादिविषयाज्जातविरागः ब्रह्मादिस्तम्बपर्यन्तपदार्थानामसारत्वानित्यत्वसुखदुःखत्वज्ञानवांस्तथा जातः । वौ परमात्मनि रागः स्नेहः सारत्वनित्यत्वनिर्दुःखत्वज्ञानपूर्वको यस्य स तथा कैश्चिदुत्तमाधिकारिभिर्दृष्टस्य कैश्चिदवराधिकारिभिः श्रुतस्यात्मद्रविणस्य परमात्माख्यवस्तुनोऽनुचिन्तया निरन्तरध्यानेन तथा चित्तस्यानवस्थानस्य मनसो ग्रहणे विषयाद्व्यावर्तने यत्तः प्रयत्नवानृजुभिरक्लेशदैर्योगमार्गैर्यमादिसदुपायप्रकारैर्योगयुक्तः सत्संगवान्यतिष्यते परमात्मापरोक्षायेति शेषः । केषांचिद् दृष्टानाम् । केषांचित् श्रुतानामात्मद्रविणानां जीवादिपदार्थानामसारत्वादिचिन्तया ऐन्द्रियाज्जातविराग इति वा ॥ २६ ॥ ❀ ❀ अधिकारिणामेवम्विधः प्रयत्नो न निष्फलः, किन्तु सफल एव भवतीत्याह । असेवयेति । प्रकृतेर्गुणानां सेवा मुमुक्षुणा क्षुरधारावत्तृणपिहितमुखकूपवदलं परिहर्तव्येति पुनर्वचनं वैराग्येण विजृम्भितेन प्रवर्द्धितेन परमात्मादीनामान्तरतत्वानां तारतम्यज्ञानेन च मय्यर्पितया भक्त्या योगेन मयि मनोनिधानलक्षणेन प्रत्यगात्मानं स्वान्तर्यामिणं मामिह प्रारब्धप्रतिबन्धकाभावेऽस्मिन् जन्मनि अवरुन्धे वशीकृतवत्पश्यतीत्यन्वयः । विरक्तिभक्त्युपास्तिजनितज्ञानमेव पुरुषार्थसाधनं न कर्मेत्यतो वाह । असेवयेति । मय्यर्पितया भक्त्या योगेन समुत्पन्नेन योगध्यानोत्पन्नेन ज्ञानेन प्रत्यगात्मानं स्वबिम्बभूतं मां पश्यतीति । कीदृशेन भक्तियोगेन प्रकृतेर्गुणानामसेवयोत्पन्नेन वैराग्यविजृम्भितेन ॥ २७ ॥ ❀ ❀ देवहूतिः मय्यर्पितयेति विशेषणेनोत्पन्नोत्कण्ठया दत्तावसरा पृच्छति । काश्विदिति । कीदृशी मम गोचरा ज्ञातुं शक्येति निर्वाणं नित्यनिवृत्तम् ॥ २८ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

सतामिति । रसायनत्वेन प्रथमं रुचिः । तत्रापि पतितोद्धरणादिचरितश्रवणेन श्रद्धा विश्वासः ततो रतिभक्ती भक्तेः पूर्वापरावस्थे ॥ २५ ॥ ❀ ❀ तत्र तत्र सङ्गिनो द्विविधाः सत्सु ज्ञानादिसाधारणदृष्टयस्तेभ्योऽप्युत्कृष्टदृष्टयश्च । तत्रान्त्यानां मुख्यां भक्तिमग्रे वैशिष्ट्येन मातुरुत्कण्ठानन्तरं निर्देष्टुं साधारणदृष्टीनां गौणीं निर्दिशति । भक्त्येति द्वाभ्याम् । भक्त्यैव विरक्तत्वमुद्युक्तत्वं योगे योग्यत्वं चेत्यधिकारिविशेषणानि ॥ २६ ॥ ❀ ❀ असेवया हेयत्वविचारेण ज्ञानेन तत्त्वं पदार्थमवरुन्धे । त्वंपदार्थनिर्णयेन विषयवैतृष्ण्यप्रकाशितेन योगेनाष्टाङ्गेन मय्यर्पितया मदनन्यविषयया च भक्त्या मां प्रत्यगात्मानं तत्पदार्थमवरुन्धे त्वं पदार्थतादात्म्येन प्राप्नोति ॥ २७ ॥ ❀ ❀ अथ पूर्वपूर्वनिर्दिष्टभक्तेरेव सर्वजीवत्वमधिगम्य तामेव पृच्छन्ती

तत्रापि दैन्येन सर्वत्र निजानधिकारितां मन्वाना तद्विशेषं पृच्छति। काचिदित्यादिना। भक्तिर्नाम कीदृशी किंलक्षणेत्यर्थः, तस्यां च भक्तिजातौ काचिद्भक्तिस्त्वयि ममोचिता सती गोचरीकर्तुं शक्या स्यादिति ॥ २८—३१ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी।

साधुसङ्गत एव भगवति मनोरतिं वहतीत्यत्र क्रममाह। सतामिति। सङ्गः प्राथ्र्ये इति पूर्वोक्तेः प्रथमं श्रद्धा ततः सतां प्रकृष्टात् संगान्मम कथा भवन्तीत्यादावप्रकृष्टात् संगाद्भजनक्रियामात्रं न तु कथाः, ततः प्रकृष्टात् संगादनर्थनिवर्त्तिकाः कथा भवन्ति ततस्ता एव कथा निष्ठामुत्पादयन्त्यो मम वीर्यस्य मन्माहात्म्यस्य सम्वित् सम्यग्वेदनं यतस्तथाभूता भवन्ति ततो रुचिमुत्पादयन्त्यो हृत्कर्णरसायना भवन्ति ततस्तासां कथानां जोषणात् प्रीत्या आस्वादनात् अपवर्गो वर्त्मन्येव यस्य तस्मिन् भगवति श्रद्धा आसक्तिः रतिर्भावः भक्तिः प्रेमा अनुक्रमिष्यति अनुक्रमेण भविष्यति। सम्प्रति मया प्रवर्त्त्यमाना भक्तिरेवमनुक्रमेण लोके प्रचरिष्यतीत्यर्थः ॥ २५ ॥ ❀ ❀ शुद्धां भक्तिमुक्त्वा योगमाह। भक्त्येति। दृष्टश्रुतादैहिकामुष्मिकात् सुखात् मद्रचनानां मल्लीलानामनुचिन्तया योगयुक्तः सन् चित्तस्य ग्रहणे स्ववशीकारे यत्तो यत्नवानपि ऋजुभिर्भक्तिसम्वलितत्वेन सुगमैर्योगमार्गैः सम्प्रति मत्प्रवर्त्तयिष्यमाणैर्यतिष्यते अग्रे जनिष्यमाणः पुमानित्यर्थः ॥ २६ ॥ ❀ ❀ योगमुक्त्वा ज्ञानमाह। असेवयेति। प्रकृतेर्गुणानां विषयाणां या असेवा निष्कामकर्मलभ्या तया यज्ज्ञानं तेन मां प्रत्यगात्मानं तत्पदार्थमवरुन्धे प्राप्नोति योगेनेति शमादीनामपि ज्ञानाङ्गत्वात् भक्त्येति भक्तिं विनाभूतस्य ज्ञानस्य वैफल्यात् ॥ २७ ॥ ❀ ❀ काचिदिति। कास्विदित्यर्थः। त्वयि युज्यत इत्यर्थः। न युज्यमानयेत्यनेन युज्यमानाया भक्तेरुत्कर्षश्रवणात् मम स्त्रियाः कीदृशी गोचरा ज्ञातुं कर्तुञ्च शक्येत्यर्थः। पदं त्वच्चरणारविन्दं निर्वाणं निवृत्तिस्वरूपम्। "निर्वाणमस्तं गमने निर्वृत्तौ गजमज्जने। सङ्गमेऽप्यपवर्गे च" इति मेदिनी। यद्वा निर्वाणं निष्कण्टकं यथा स्यात्तथा अन्वाश्नवै प्राप्स्यामि अञ्जसा त्वाश्नवा इति पाठे अहं त्विति सम्बन्धः ॥ २८ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

सतां प्रकृष्टसङ्गात् मम वीर्यस्य सम्यग्वेदनं यासु ताः हृदः कर्णयोश्च रसायनाः सुखदाः तासां जोषणात्सेवनात् अपवर्गस्य मुक्तेर्वर्त्मनि प्रापके मुक्तिप्रदे आशु श्रद्धा विश्वासः ततो रतिः रुचिस्ततो भक्तिः अनुक्रमिष्यति क्रमतो भविष्यति ॥ २५ ॥ ❀ ❀ श्रद्धादिक्रमतो भक्त्युत्पत्त्यनन्तरं पुमान्मुमुक्षुः मद्रचनायाः विश्वनिर्माणादिरूपायाः अनुचिन्तया अनुस्मरणेन या भक्तिस्तया दृष्टादैहिकात् श्रुतादामुष्मिकात् ऐन्द्रियात् ऐन्द्रियविषयात् जातविरागः अत एव यत्तः सावधानः योगयुक्तः ज्ञानवैराग्यभक्तियुक्तः ऋजुभिः सुखसाध्यैः योगमार्गैर्भक्तियोगमार्गैः परमात्मस्वरूपगुणश्रवणमननादिभिः चित्तस्य ग्रहणे पुंसि योजने यतिष्यते, ध्रुवास्मृतिरूपं ध्यानयोगं प्राप्स्यतीत्यर्थः ॥ २६ ॥ ❀ ❀ निष्कृष्टार्थमाह। असेवयेति। गुणानामिन्द्रियविषयाणामसेवया मय्यर्पितया भक्त्या यद्वैराग्यविजृम्भितं ज्ञानं भक्त्या मामभिजानातीति श्रीमुखवचनात् तेन यो योगः ध्यानयोगः तेन इहैव मां प्रत्यञ्चो जीवास्तेषामात्मानमाश्रयमवरुन्धे प्राप्नोति साक्षात्पश्यतीत्यर्थः। "अत्र ब्रह्म समश्नुते" इति श्रुतेः तदनन्तरं प्रारब्धक्षये सति मुक्तो भवति ॥ २७ ॥ ❀ ❀ "न युज्यमानया भक्त्या भगवत्यखिलात्मनि। सदृशोऽस्ति शिवः पन्था योगिनां ब्रह्मसिद्धये" इति भक्तिमाहात्म्यं श्रुत्वा पृच्छति। त्वयि काचित् भक्तिः उचिता योग्या तत्रापि मम गोचरा मया कर्तुं योग्या कीदृशी यया स्वानुरूपया निर्वाणं निरतिशयं ते पदं धाम अञ्जसा सुखेन अन्वाश्नवै अन्वनन्तरमेव प्राप्स्यामि ॥ २८ ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

एवं भक्तिसाधकत्वेन सन्तो निरूपिताः। कथं तेषां साधकत्वमित्याशङ्क्य तं प्रकारमाह—सतां प्रसङ्गादिति। सतां संबन्धी यः प्रकृष्टः सङ्गः, तस्माद्धेतोर्मम वीर्यज्ञापिकाः कथा भवन्ति। तासां प्रीतिपूर्वकसेवया क्रमेण श्रद्धा, रतिः, भक्तिश्च भवति। भक्त्या च वैराग्यम्। ततोऽपि निरन्तरं स्मृतिः। ततो योगप्रवृत्तिः। एवं परित्यागज्ञानवैराग्ययोगभक्तिभिर्विद्याङ्गभूताभिर्भगवत्स्वरूपप्राप्तिरिति ससाधनं फलम्। साधनसाधिकाऽपि भक्तिर्निरूप्यत इति न विरोधः। सतामिति बहुवचनं सत्त्वे प्रमाणम्। सतां सद्भिरेव सङ्गो भवति। द्वितीयः सन् तदैव युज्यते, यदि प्रथमः सन् भवति। तेषां प्रकृष्टः सङ्गः सजातीय एव भवति। एकमतनिविष्टानामेकस्वभावानां वा। प्रसङ्गपदेन चैतत्सूचयति—तेषामन्योन्यं प्रकृष्टः सङ्गः, अन्यस्य प्रासङ्गिक इति। संसारिणामपि तेषां प्रसङ्गात् कथान्तरेषु वक्तव्यत्वेनोपस्थितादपि भगवत्कथा भवन्तीति च ज्ञापितम्। यद्यपि भगवत्कथाः सर्वत्र भवन्ति, तथापि न ता भगवत्पराक्रमप्रतिपादिकाः, तेषां मुखाद्भगवतः सामर्थ्यं लौकिकं निर्गतं भवति। सतामेव तु प्रसङ्गाद्भगवत्पराक्रमप्रतिपादिका भवन्ति। तैरेव वीर्याणि ज्ञायन्ते। स्वाभाविककथानां निरन्तरं श्रवणात्तत्संस्काराभिनिविष्टं हृदयं, श्रोत्रं च 'जातं न भगवत्कथां गृह्णाति। न हि हिमालयस्थिताः प्राणिन आतपं ग्रहीतुं शक्नुवन्ति। ते च पुनर्देशान्तरं गताः, यथाऽऽतपप्रेप्सवो भवन्ति, तद्देशस्व-

---

१. ज्ञानम् क. घ. ङ.।

भावापन्नाः तद्देशस्थद्रव्यैः, तथा भगवत्कथा अपि हृत्कर्णयोः पूर्वस्वभावोपमर्देनेन रसोत्पादिका भवन्तीत्यर्थः। प्रथमतः श्रुता हृदये रसमुत्पादयन्ति, पुनः पुनः श्रुताः कर्णयोः। यथा[1] कामाभिनिविष्टस्य चक्षुः कामिन्यां रसाविष्टं सत् बलान्निवर्त्यमानमपि न निवर्तते, किन्तु दिदृक्षैव निरन्तरं भवति। तथा कथा एव बलादपि भावयति। शुश्रूषाऽपि निरन्तरमुत्पद्यत इत्यर्थः। अतस्तासां प्रीत्या श्रवणं भवति। आदृत्या प्रीतिरुत्पद्यते। तदा लोकान्निवृत्तं मनोऽपहतपापं सन्मार्गे निविशते। तदा आशु सर्वलोकनिवृत्तिरूपे आत्मनि, मोक्षाख्ये भगवति वा, तन्मार्गे वा, प्रथमास्तिक्यबुद्धिर्भवति। ततो रतिः स्नेहो भवति, सर्वथैतत्प्राप्तव्यमिति। ततो वक्ष्यमाणा भक्तिर्भवतीत्यर्थः। विषयास्त्यक्ता अपि वासनया हृदि स्थिता रागापगम एव गच्छन्ति। स च भगवति स्नेहेन संजातया सेवया, फलरूपं प्राप्तया, इतररसविस्मारिकया निवर्तते। तदा जातविरागो भवति। ऐन्द्रियादिति विरागे हेतुः। न ते विषया आत्मपर्यवसिताः। ऐन्द्रियत्वे प्रमाणमपि वदन् विषयाणां भेदमाह—दृष्टश्रुतादिति दृष्टा राज्यादयः, श्रुताः स्वर्गादयः। तस्या भक्तेरनुवृत्त्यर्थं साधनमाह— मद्रचनानुचिन्तयेति। भगवत्कर्तृका या रचना कृतिः। रचनाशब्देनाऽलौकिकं निर्माणमुच्यते। तेनाऽलौकिकभगवच्चरित्रश्रवणेन भक्तिस्तिष्ठति। तदा चित्तस्य ग्रहणे यत्नो भवति। चित्तं हि चञ्चलस्वभावं न स्वतोऽवतिष्ठते, प्रयोजकं चोपेक्षायां न गृहीतं भवति। अतो यत्तः[2] सावधानः सन्, चित्तस्य ग्रहणार्थं योगयुक्तो भवति, योगस्य चित्तवृत्तिनिरोधरूपत्वात् योगेन चित्तनिरोधः कर्तव्य इति निश्चितार्थो भवतीत्यर्थः। तदा ऋजुभिरेव योगमार्गैः। हठक्लेशादिरहितैर्भगवद्ध्यानरूपैः, अचिन्तनदशायां प्राणायामादिरूपैर्वा। अतो भक्तौ सिद्धायामितरत्सुलभमिति भक्तिरेव[3] पञ्चमी विद्या मोक्षेऽन्तर[4]-तमा॥ २५॥ २६॥ ❀ ❀ एवं ससाधनं शास्त्रार्थमुक्त्वा साधनपरम्परां निरूपयन् फलकीर्तनेनोपसंहरति—असेवयेति। अयं पूर्वोक्तोऽधिकारी मां प्रत्यागात्मानमिहैव देहे जन्मनि, ब्रह्माण्डभेदनादिकमकृत्वा, अवरुन्धे; सद्यो मुक्तिं प्राप्नोतीत्यर्थः। तस्य प्रथमं प्रकृतेर्गुणानामसेवा, प्राकृतविषयाणां बन्धकानामसकृदनुभवाभावः। ततो विषयाभिनिवेशाभावे अन्तर्मुखं चित्तमात्मानं गृह्णाति। तदा ज्ञानं भवति, आत्मकामश्च। तदा विषयगतो रागो निवर्तते, तेन च पुनर्ज्ञानमुल्लसितं भवति। त्रयमेतदेकम्। योगः स्वतन्त्रश्चाञ्चल्यानिवृत्तिहेतुः। मय्यर्पिता च भक्तिः विषयवशीकर्त्री। विषयेभ्य आत्मानं विमुच्य, भक्त्या च भगवन्तं वशीकृत्य, लक्ष्यमिव स्थापयित्वा, तत्र सर्वमेव प्रकारं ज्ञात्वा; जीवं च सङ्घाताल्लक्ष्यप्रापणयोग्यं च ज्ञात्वा, योगारूढं विधाय, लक्ष्ये योजनं युक्तमेव। अतो विषयभेदात् पञ्चानामुपयोगः। मामिति प्राप्यरूपोऽहमेव। तव तु सिद्ध इति शास्त्रार्थज्ञापनमात्रं क्रियत इति बोधितम्। बहिः प्रवेशशङ्कां वारयितुमाह—प्रत्यागात्मानमिति प्रत्यगन्तर्मुखतया परिस्फुरन्। नाऽपि स्वात्मनो भिन्नम्॥ २७॥ ❀ ❀ पूर्वमत्र भक्तिर्भजनमात्रमुक्तम्, न विशेषत इति विशेषतो भक्तिं पृच्छति—काचिदिति। श्रद्धा, आराध्यत्वेन ज्ञानम्, सेवा, माहात्म्यज्ञानपूर्वकः स्नेहश्च। तेषु त्वयि युक्तः को भक्तिशब्दार्थ इति प्रश्नः। यद्यपि क्रमाच्चत्वारोऽपि युक्ताः, तथापि यः साक्षात्त्वां विषयीकरोति सा वक्तव्येति सप्तम्या सूचितम्। भक्तियोगोऽपि बहुविध इति जीवाधिकारमपुरस्कृत्य[5] त्वद्योग्या[6] केति प्रश्नः उचितेत्यविहिता भक्तिर्व्यावर्तिता। कीदृशी सगुणा अगुणा वा? तत्रापि मम योग्या कीदृशीत्याह मम गोचरेति। गोचरशब्दो विशेष्यनिघ्नोऽपि भवति। त्वय्येव सर्वे मार्गाः प्रवर्तिताः भवांश्च सर्वरूपः, अतः सर्व एव भक्तिमार्गा यद्यपि त्वयि युज्यन्ते, तथापि यया भक्त्या निर्वाणरूपं ते पदमञ्जसाऽनायासेनैव अहमश्नवै। अश्नवानीति वा पाठः। दैवगत्या सर्वेऽपि मार्गाः कदाचित्सुगमा भवन्ति। तद्व्यावृत्त्यर्थमाह—एवेति। निर्वाणाख्यं पदं व्यापिवैकुण्ठम्, तत्र या भक्तिः सर्वाधिकारशून्यमपि पुरुषं नयति। गतश्च तल्लोके आनन्दाऽनुभवसमर्थो भवति, तत्रत्यैस्तादृशी वक्तव्येत्यर्थः[7]॥ २८॥

## श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

सतामित्यत्र। आभासे। आहेति। त्रिभिः पद्यैराह। अग्रिमश्लोकस्यार्थं वदन्ति—भक्त्या च वैराग्यमित्यादि। तृतीयस्याऽऽहुः—एवमित्यादि। ननु पूर्वं सत्प्रसङ्गकथाश्रवणादिना जाताया भक्तेर्भगवदवरोधरूपं फलं प्रत्येव करणत्वं युक्तम्। न तु प्रथमोक्तं वैराग्यं प्रत्यपीत्याशङ्क्य समादधते साधनेत्यादि। तथा च भक्तेरसहायशूरत्वज्ञापनाय तथोक्तिरिति तस्या जघन्यकोटिप्रवेशाभावान्न भक्तिशास्त्रविरोध इत्यर्थः॥ २५॥ ❀ ❀ भक्त्या पुमानिति श्लोकं व्याकुर्वन्ति—विषयास्त्यक्ता अपीत्यादि॥ २६॥

## श्रीगिरिधरकृता बालप्रबोधिनी

न केवलं दोषनिवृत्तिमात्रमेव तत्सङ्गाद्भवति किन्तु मोक्षसाधनसम्पत्तिरपीत्याह—सतामिति। सतां प्रसङ्गात् मम वीर्यस्य सम्यक् वित् वेदनं यासु तथाभूताः हृत्कर्णयोः रसायनाः सुखप्रदाः कथाः भवन्ति प्रवर्त्तन्ते तासां जोषणात् सेवनात् प्रीत्या श्रवणात् आशु शीघ्रमेव अपवर्गवर्त्मनि मोक्षप्रदे भगवति प्रथमं श्रद्धा विश्वासः ततो रतिः प्रीतिः ततो भक्तिः प्रेमातिशयश्च

---

१. अन्यथा क. घ. ङ.। २. अतोऽत्र क. घ. ङ.। ३. भक्त्यैव म.। ४. अन्तरङ्गा क.घ. ङ.। ५. पुरस्कृत्य ग.। ६. त्वद्योग्या वा. ख. ग.। ७. तत्रत्य इव. तत्रत्यैव ग.।

अनुक्रमिष्यति भविष्यतीत्यर्थः ॥ २५ ॥ ❀ ❀ ततश्च किं भवति तत्राह—भक्त्येति। मम रचना या सृष्ट्यादिलीला तस्या अनुचिन्तया या भक्तिस्तया दृष्टश्रुतात् ऐहिकामुष्मिकात् ऐन्द्रियात् इन्द्रियजन्यसुखात् जातविरागः सन् पुमान् यत्त ग्रहणे आलस्यादिरहितः सावधानः योगयुक्तः योगमास्थितश्च सन् ऋजुभिः भक्तिप्राधान्याद् अनायासैर्योगमार्गैः प्राणायामादिभिश्चित्तस्य यतिष्यति यत्नं करिष्यति ॥ २६ ॥ ❀ ❀ ततश्चैवं प्रकृतेर्गुणानां शब्दादिविषयाणां असेवया ज्ञानादिभिश्च साधनैरयं जीव इहैव देहे मामवरुन्धे प्राप्नोति। अत्रैव तव प्राप्तिः कथमित्याकाङ्क्षायां तदात्मत्वादित्याह—प्रत्यगात्मानमिति। ज्ञानमपि शास्त्रजन्यं आत्मपरमात्मैक्यज्ञानं, तदपि वैराग्येण पुष्कलं सत्कार्यक्षमं भवति नान्यथेत्याशयेनाह—वैराग्यविजृम्भितेनेति। योगेनाष्टाङ्गेन मय्यर्पितया फलाभिसन्धिरहितया भक्त्या निरतिशयस्नेहरूपया ॥ २७ ॥ ❀ ❀ तदेवं योगस्य भगवदात्मैक्यसाक्षात्कारहेतुत्वं योगाङ्गानां च भक्तेः प्राधान्यं भक्तेश्च सत्सङ्गलभ्यत्वं सङ्क्षेपतः श्रुत्वा पुनस्तद्विस्तरबुभुत्सया भगवतः सकाशात् अन्यस्योत्कृष्टस्य सतोऽभावात् तमेव गुरुं मत्वा तत्तद्विशेषं पृच्छति—काचिदिति त्रिभिः। उचिता मुक्तिं साधयितुं योग्या त्वयि भक्तिः काचित् कास्वित्, किं स्वरूपा ? इत्यर्थः। तत्रापि मम स्त्रिया गोचरा योग्या कीदृशी ?। तत्रापि मोक्षसाधनभूता सुकरी चेति पृच्छति—ययेति। यया भक्त्याऽहं तापत्रयातुरा ते तव निर्वाणं तापत्रयरहितनिरतिशयानन्दमोक्षलक्षणं पदं स्वरूपं चरणं वा अञ्जसा सुखेन अन्वाश्नवै प्राप्नुवानि ॥ २८ ॥

## हिन्दी अनुवाद

सत्पुरुषोंके समागमसे मेरे पराक्रमोंका यथार्थ ज्ञान करनेवाली तथा हृदय और कानोंको प्रिय लगनेवाली कथाएँ होती हैं। उनका सेवन करनेसे शीघ्र ही मोक्षमार्गमें श्रद्धा, प्रेम और भक्तिका क्रमशः विकास होगा ॥ २५ ॥ ❀ ❀ फिर मेरी सृष्टि आदि लीलाओंका चिन्तन करनेसे प्राप्त हुई भक्तिके द्वारा लौकिक एवं पारलौकिक सुखोंमें वैराग्य हो जानेपर मनुष्य सावधानता-पूर्वक योगके भक्तिप्रधान सरल उपायोंसे समाहित होकर मनोनिग्रहके लिये यत्न करेगा ॥ २६ ॥ ❀ ❀ इस प्रकार प्रकृतिके गुणोंसे उत्पन्न हुए शब्दादि विषयोंका त्याग करनेसे, वैराग्ययुक्त ज्ञानसे, योगसे और मेरे प्रति की हुई सुदृढ भक्तिसे मनुष्य मुझे अपने अन्तरात्माको इस देहमें ही प्राप्त कर लेता है ॥ २७ ॥ ❀ ❀ देवहूतिने कहा—भगवन्! आपकी समुचित भक्तिका स्वरूप क्या है ? और मेरी-जैसी अबलाओंके लिये कैसी भक्ति ठीक है, जिससे कि मैं सहजमें ही आपके निर्वाणपदको प्राप्त कर सकूँ ॥ २८ ॥

यो योगो भगवद्बाणो निर्वाणात्मंस्त्वयोदितः। कीदृशः कति चाङ्गानि यतस्तत्त्वावबोधनम् ॥ २९ ॥
तदेतन्मे विजानीहि यथाहं मन्दधीर्हरे। सुखं बुद्ध्येय दुर्बोधं योषा भवदनुग्रहात् ॥ ३० ॥

### मैत्रेय उवाच

विदित्वार्थं कपिलो मातुरित्थं जातस्नेहो यत्र तन्वाभिजातः।
तत्त्वाम्नायं यत्प्रवदन्ति सांख्यं प्रोवाच[1] वै भक्तिवितानयोगम् ॥ ३१ ॥

### श्रीभगवानुवाच

देवानां गुणलिङ्गानामानुश्रविककर्मणाम्। सत्त्व एवैकमनसो वृत्तिः स्वाभाविकी तु या ॥ ३२ ॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

भगवद्बाणो यो भगवन्तं लक्ष्यीकरोतीत्यर्थः। यतो यस्माद्योगात् ॥ २९ ॥ ❀ ❀ विजानीहि विशेषेण ज्ञापय सुखमनायासेन ॥ ३० ॥ ❀ ❀ इत्थं मातुरर्थं प्रयोजनं विदित्वा। जातस्नेहत्वे हेतुः। यत्र यस्यां तन्वा देहेनाविर्भूतः तत्त्वान्याम्नायन्तेऽनुक्रम्यन्ते। किं तत्। यत्सांख्यं प्रवदन्ति तत्प्रोवाच भक्तिवितानं च योगं च ॥ ३१ ॥ ❀ ❀ काचित्त्वय्युचिता भक्तिरिति पृष्टामुत्तमां भक्तिं लक्षयति गुणा विषया लिंग्यन्ते ज्ञायन्ते यैस्तेषां देवानां द्योतनात्मकानामिन्द्रियाणां तदधिष्ठातॄणां वा सत्त्वे सत्त्वमूर्तौ हरावेव या वृत्तिः सा भक्तिः सिद्धेर्मुक्तेरपि गरीयसीत्युत्तरेणान्वयः। कथंभूता। अनिमित्ता निष्कामा स्वाभाविक्ययत्नसिद्धा। तेषामेवंविधवृत्तौ हेतुमाह। गुरोरुच्चारणमनुश्रूयत इत्यनुश्रवो वेदस्तद्विहितमानुश्रविकं तदेव कर्म येषाम्। अत एवैकमेकरूपमविकृतं मनो यस्य पुंसः शुद्धसत्त्वस्येत्यर्थः ॥ ३२ ॥

---

१. प्रा० पा०—प्रावोचद्वै ।

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः ।

यद्यपि त्वत्संमतायां भक्तावेव मम जिज्ञासा चिकीर्षा च तथापि "जिज्ञासुना निजमतं ज्ञेयं परमतं बुधैः" इति नित्ययोगश्च ज्ञानं च मम जिज्ञास्यमित्याह—य इति । भगवति बाणस्तत्र क्षिप्तः शर इव यो भगवन्तं लक्ष्यीकरोतीत्यर्थः । निर्वाणार्थं इति विश्वनाथसंमतः पाठः । तेन तथैव व्याख्यातं मोक्षप्रयोजनक इति । विजयध्वजेन तु हे निर्वाणात्मन्परमानंदमूर्त्ते इत्थमेव व्याख्यातम् । तत्त्वानामवबोधनं यतस्तत् ज्ञानञ्च ॥ २९ ॥ ❀ ❀ तदेतद्योगलक्षणं भक्तिलक्षणं, योषेति हेतुगर्भितं विशेषणम् । योषात्वाच्छास्त्रधारणसमर्थबुद्धिरहिताहमित्याह—मंदधीरिति । यथा दुर्बोधं दुर्ज्ञेयमपि योगादिकं सुखं यथा स्यात्तथा बुद्ध्येय जानीयां तथा कथयेति भावः ॥ ३० ॥ ❀ ❀ भक्तेर्वितानो विस्तारो यत्र तं भक्तियोगं योगमष्टांगञ्च ॥ ३१ ॥ ❀ ❀ इत्यर्थ इति । विकृतिस्तु रजस्तमोभ्यामेव भवति तद्रहितत्वाच्छुद्धांतःकरणस्येत्यर्थः । एवकारेण देवतांतरनिरासः । एकमेव स्वरूपमेव । सेवाबुद्धिमयत्वेन त्वद्रूपनामाद्युपादित्सु न तु योगिनामिवायत्यां तज्जिहासु मनो यस्य तस्य पुंसः । तथैकस्मिन्भजने एव मनो यस्य न तु ज्ञानकर्मादिषु तस्य पुंसः गुणाः सत्त्वादयो विषया लिंग्यन्ते ज्ञाप्यन्ते यैस्तेषां देवानामिंद्रियाधिष्ठातॄणां सद्विषयत्वाद्दीव्यतां क्रीडतामिंद्रियाणां सत्त्वे हरावेव या वृत्तिस्तदीयशब्दादिग्रहणरूपा व्यावृत्तिरनिमित्ता निष्कामा भगवती भक्तिरित्यन्वयः । अत्र सत्त्व एवैकमनसः सत्त्व एवेन्द्रियाणां वृत्तिरिति काकाक्षिगोलकन्यायेनोभयत्रान्वितम् । अत्र सत्त्व इत्यनेन सत्त्वगुणवति ब्रह्मरुद्रादाविति न शंक्यं भागवतीत्यनेन तद्व्यावृत्तेः । यद्वा । सतां भावः सत्त्वं वैष्णवत्वं वैष्णवो भवेयमिति तत्र मनसः वैष्णवत्व एवेन्द्रियाणां वृत्तिः सा भक्तिः । न च स्वच्छन्देनैव प्रवर्त्तमानानां तेषां वृत्तिर्भक्तिः । किं तु श्रीगुरूपदिष्ट-मंत्रोचिताचरणवतामित्याह । गुरोरुच्चारणमनुश्रूयते इत्यनुश्रवो मंत्रस्तद्विहितमानुश्रविकं तदेव कर्म नित्यकृत्यं येषां तेषाम् । किञ्च "उत्सर्गान्मलमूत्रादेश्चित्तस्वास्थ्यं यतो भवेत् । अतः पायुरुपस्थश्च तदाराधनसाधनम् ॥" इति विष्णुरहस्योक्तेः । पायूपस्थयोरपि वृत्तिर्भक्तिसंबंधेन भक्तिरिति । या तु तेषामिंद्रियाणां तथाभूतानामेव स्वाभाविकी वृत्तिः । सा सिद्धेर्मुक्तेरपि गरीयसी श्रेष्ठतरेत्य-स्वाभाविक्यपि वृत्तिर्मुक्तेर्गुरुः श्रेष्ठेत्यर्थो लभ्यते । स्वाभाविकी वृत्तिश्च द्विविधा । कदाचिच्छास्त्रशासनेनैव श्रीगुरूपदिष्टशुद्धभक्तौ प्रवृत्तिमतो भजनाभ्यासपौनःपुन्येन निष्ठा रुच्यासक्तिभूमिकाधिरूढस्येन्द्रियाणां वृत्तिर्हरौ स्वाभाविकी भवति । यथा प्राकृतलोकानां पतिपुत्रादिषु कदाचिच्च प्राचीनार्वाचीनतादृशमहत्संगकृपाजनितविलक्षणसंस्कारवशेन गुरूपदेशात्पूर्वमनंतरमेव वा शास्त्रशासनं विनैव स्वभावत एवेन्द्रियाणां भक्तिशास्त्रोक्ताचरणवत्येव या हरौ वृत्तिः सापि स्वाभाविकी ज्ञेया । पूर्वस्या वैधभक्तेः प्रमाणेनै-वोत्कर्ष उदाहरणञ्च नैकात्मतामित्यादिपद्यचतुष्टयं ज्ञेयम् ॥ ३२ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

वैष्णवं योगं पृच्छति । यो योग इति । कीदृशः किंलक्षणः भगवति लक्ष्ये बाण इव तथा च तद्विषयत्वमात्रस्य विवक्षि-तत्वादित्यर्थोक्तिः तत्त्वावबोधनं त्वंपदार्थतादात्म्येन तत्पदार्थसाक्षात्कारो भवतीत्यर्थः ॥ २९ ॥ ❀ ❀ तदेतत् भक्तियोगा-दिलक्षणम् ॥ ३० ॥ ❀ ❀ देहेनाविर्भूत इत्युक्त्या देहस्य स्वरूपाभिन्नत्वमभिप्रेतम् । विकारतया जन्मानङ्गीकारात् । अपृष्टस्यापि साङ्ख्यस्याभिधानं भक्त्युपयुक्तस्वरूपप्रतिपत्त्यर्थं योगं चाष्टाङ्गम् ॥ ३१ ॥ ❀ ❀ देवानामिति युग्मकम् । हरावेव नतु हरावपि देवतान्तरेऽपीति अनन्या वृत्तिस्तदानुकूल्येन प्रवृत्तिस्तत्र हस्तादीनां तथा प्रवृत्तिः करौ हरेर्मन्दिरमार्जनादावित्यादिनाम्बरीषादौ प्रसिद्धैव । पायूपस्थयोर्नात्युपयुक्तयोस्तु तथा वृत्तौ विष्णुधर्मोत्तरं मानम् "मलमूत्रपरित्यागाच्चित्तस्वास्थ्यं यतो भवेत् । अतः पायु-रुपस्थश्च तदाराधनसाधनम् ॥" इति अयत्नसिद्धा इति । विषयसौन्दर्य्यमेव हेतुरुपपत्तिः एवंविधवृत्तौ निष्कामस्वाभाविकप्रवृत्तौ वेदविहिततदर्पितकर्मणो भक्तिजनकत्वे "यदत्र क्रियते कर्म भगवत्परितोषणम् । ज्ञानं यत्तदधीनं हि भक्तियोगसमन्वितम्" इत्यादिमानं ज्ञेयमत एव वेदोक्तकर्मपरेन्द्रियवत्त्वात् प्रासङ्गिकी आनुषङ्गिकी मुक्तेरपि गरीयसीत्यनेन तस्या गुणातीतत्वं ततोऽपि घनपरमा-नन्दत्वं श्रीभगवत्प्रसादविशेषेणैव मनस्युदित्वरत्वं तत्तादात्म्येनैव तद्वृत्तिव्यपदेश्यत्वं दर्शितम् ॥ ३२ ॥ ३३ ॥

### श्रीमद्वीरराघवव्याख्या

हे निर्वाणात्मन् ! निरतिशयानन्दरूप ! भगवद्बाणः लक्ष्यरूपे भगवति बाणरूपेण प्रयुक्तो योगस्त्वयोदित उक्तः स कीदृशः किंप्रकारः तस्याङ्गानि कति कति सङ्ख्याकानि यतो येभ्योऽङ्गेभ्यः तत्त्वस्यात्मतत्त्वस्यावबोधनम् अवबुध्यते अनेनेत्यवबोधनं साक्षात्कारसाधनमुपासनं निर्वर्त्येत इत्यर्थः । कीदृश इति प्रकारप्रश्नः कति चाङ्गानीत्यङ्गगणनाप्रश्नः । एवमर्थपञ्चकं पृष्टं भवति ॥ २९ ॥ ❀ ❀ तदेतदुपायोपेयोपेतृविरोधिफलस्वरूपं दुर्ज्ञेयं हे हरे ! योषा अत एव मन्दधीरहं भवदनुग्रहात् सुखं बुध्येय जानीयां तथा मे मह्यं विजानीहि ज्ञापय ॥ ३० ॥ ❀ ❀ एवमापृष्टः कपिलो भगवद्भक्तियोगमवतारयामासेत्याह मैत्रेयः । विदित्वेति । कपिलो मातुर्देवहूत्याः अर्थं भक्तियोगादिरूपार्थसम्बन्धि शुश्रूषितं स्वरूपं विदित्वा जातस्नेहः मातर्युत्पन्नस्नेहः तत्र हेतुः यत्र यस्यां तन्वा देहेन जातः तत्त्वाम्नायं तत्त्वशास्त्रं सांख्यतत्त्वसंख्या तेनात्मस्वरूपप्रकाशकं यद्वदन्ति तद्भक्तिवितानयोगं

भक्तिविस्तररूपं योगमुवाच ज्ञानयोगस्य भक्तियोगाङ्गत्वादेकीकृत्योक्तम् ॥ ३१ ॥ ❀ ❀ तत्र भगवान् कपिलः साङ्गं सविस्तरं मुक्त्युपायं भक्तियोगमष्टाविंशाध्यायेन प्रतिपिपादयिषुस्तदङ्गभूतात्मयोगविषयभूतप्रत्यगात्मस्वरूपं सविस्तरं सप्तविंशाध्यायेन शोधयिष्यन् भजनीयस्य परस्य ब्रह्मणो माहात्म्यसूचनाय जगत्सृष्ट्यादिलीलाः षड्विंशेन कथयिष्यंस्तावद्भक्तियोगं संग्रहेणैतत्स्वरूपकथनपूर्वकं प्रशंसति । देवानामिति । गुणलिङ्गानां गुणाः शब्दादिविषयाः तेषां लिङ्गानां ज्ञापकानां देवानां देवाधिष्ठितानां स्वस्वदेवताधिष्ठितानां ज्ञानेन्द्रियाणामित्यर्थः, तथा आनुश्रविककर्मणामनुसृत्याविच्छिन्नपाठपरम्परया श्रूयते इत्यनुश्रवो वेदः तद्विहितमानुश्रविकमानुश्रविकं कर्म येषां शास्त्रप्रसिद्धव्यापारानुष्ठानपराणां कर्मेन्द्रियाणामित्यर्थः । तेषामुभयविधेन्द्रियाणामेकाग्रस्य मनसश्च सत्त्वे शुद्धसत्त्वमये भगवद्विग्रहे या स्वाभाविकी अनिमित्ता फलाभिसन्धिरहितेति यावत् वृत्तिर्व्यापारः ॥ ३२ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

ऋजुभिर्योगमार्गैरित्युक्तयोगलक्षणं पृच्छति । यो योग इति । निर्वाणात्मन् ! परमानन्दमूर्त्ते ! यतो यस्माद्योगात् ॥ २९ ॥ ❀ ❀ तदेतद्योगलक्षणं भक्तिलक्षणं विजानीहि विशेषेण ज्ञापय । योपेति हेतुगर्भविशेषणं त्वच्छास्त्रज्ञानाभावादित्यर्थः ॥ ३० ॥ ❀ ❀ मैत्रेयो विदुरायेमां कथां कथयतीति शुकः परीक्षिते वक्ति । विदित्वार्थमिति । यत्र यस्यां सच्चिदानन्दमयकरचरणादिमत्या तन्वाभिजातः शुक्रशोणितसम्पर्कं दूरीकृत्य प्रकाशितः तस्या मातुरित्थमर्थमभिप्रायं विदित्वा मन्मातुर्भगवद्भक्तिश्रवणे तात्पर्यमभून्नान्यत्रेति जातः प्रवृद्धः स्नेहोऽनुग्रहलक्षणो यस्य स तथा कपिलो भगवान् यत्तत्त्वाम्नायं परमात्मादितत्त्वप्रतिपादकं सांख्यशास्त्रं प्रवदन्ति तद्भक्तियोगवितानं भक्तियोगविस्तारलक्षणं शास्त्रं मात्रे प्रावोचत् व्याख्यातवानित्यन्वयः । हरेरितरवज्जननाङ्गीकारे "शुक्लेन जनिरन्येषां हरेः स्वतनुवैव तु । नित्योदितज्ञानतनोः कुतः स्याच्छुक्लतो जनिः" इति प्रमाणविरोधो दुर्निगमः । अत एव पुरा स्वयैव तन्वेत्युक्तमितरेषां प्रागशरीराणां पश्चाच्छरीरत्वेन जन्मदर्शनात् ॥ ३१ ॥ ❀ ❀ यद्यपि सत्त्वादिगुणभेदेन भक्तिरप्यनेकविधा तथापि सात्त्विकसंज्ञमुत्तमाधिकारियोग्यं भक्तियोगं निरूपयति । देवानामिति । सत्त्वे एकमनस इत्येतत्पदद्वयं तन्त्रेणोपात्तन्यायेन द्विरावृत्त्या व्याख्येयं "सदा सर्वगुणात्मत्वात्सत्त्वो विष्णुरुदीर्यत" इति वचनात् सत्त्वे सर्वगुणाढ्ये एव हरावेव एकमनस एकाग्रमनसः पुरुषस्य मनुष्याद्यन्यतमस्य गुणलिङ्गानां शब्दादिज्ञापनलक्षणानामिन्द्रियाभिमानिनामानुश्राविककर्मणाम् । "वेदोक्तकर्मानुष्ठानेन तदुक्तानतिलङ्घिनाम् । आनुश्राविककर्मासौ श्रुत्युक्तं यो न लङ्घयेत् ॥" इत्युक्तेः, देवानां तात्त्विकसंज्ञानां सत्त्वे भगवति एकमनसः एकाग्रतयान्यव्यापारमन्तरेणान्तःकरणस्य या वृत्तिः सा भक्तिरित्युच्यते । कीदृशी स्वाभाविकी गङ्गाप्रवाहलक्षणा अनिमित्ता फलसङ्कल्परहिता अत्यन्तचित्तनिरोधरूपत्वाद् दुःखहेतुशङ्का न कार्या, प्रत्युत पूर्णानन्दरूपत्वादपक्वभक्त्यावाप्तमुक्तेरुत्तमेत्याह । सिद्धेरिति । यस्मिन्काले पूर्णभक्तयः सब्रह्माणो मुक्तिमेष्यन्ति तस्मिन्नेव समये मुक्तिप्राप्तियोग्यस्य भक्तिपरिपाकमनवाप्तस्य पुंसो या सिद्धिरपूर्णसुखलक्षणा मुक्तिस्तस्याः सिद्धेर्गरीयसी । तदुक्तम् "अपूर्णभक्तेर्मुक्तौ तु न सुखं पूर्तिमेष्यति । अतस्तादृशमुक्तेश्च भक्तिः पूर्णा गरीयसीति" पूर्णसुखहेतुत्वात् ज्ञानवदन्तरङ्गत्वाच्च गरीयस्त्वं युक्तमित्याह । जरयतीति । कोशं लिङ्गशरीरं "कोशोऽस्त्री कुड्मले दिव्ये शस्त्रेऽर्थेऽथ तनौ" इति यादवः । समूलतूलनाशस्य विवक्षितत्वात् तस्मिन्नेवार्थे दृष्टान्तमाह । निगीर्णमिति । निगीर्णं सर्वतो ग्रस्तं देवानामसुरेन्द्रियाभिमानित्वेन च पापकर्मणि प्रेरणया तद्दर्शनेन जुगुप्सादिना चित्तविक्षेपसंभवेन भक्तेरात्यन्तिकत्वायोगादन्यत्रोभयेषामपि भगवति मनोवृत्तेर्गङ्गाप्रवाहवत् सिद्धत्वेन तदभावात् सत्त्वे एव एकमनसः पुंसां गुणलिङ्गानामिति विशिष्योक्तेरभिप्रायः । संभावनामात्राभिप्रायेणोक्तमिदमित्येतावता भक्तेर्न्यूनातिरेकभावो न कल्पनीयः । हर्याज्ञाकारित्वेन तत्प्रीतिहेतुत्वात् देवजातिमात्रपरिहाराय गुणलिङ्गानामिति कल्याद्यासुरव्यावृत्तये आनुश्रविककर्मणामिति तेषां वेदोक्तानुष्ठाननियमाभावात् उक्तविशेषणवतां देवानां सत्त्वे भगवत्येकमनसो वृत्तिर्भक्तिरित्युक्तेऽधमाधिकारिभिः क्रियमाणाया अभक्तित्वमात्यन्तिकाभावश्च स्यात्तस्मात् कीदृशी मम गोचरेति पृष्टत्वात्तत्परिहाराय च विभागो वक्तव्यः । देवानां सत्त्व एकमनसो वृत्तिरित्येतदेव सामान्यभक्तिलक्षणं गुणलिङ्गानामिति तद्विशेषभक्तिलक्षणम् आनुश्रविककर्मणामिति सर्वसामान्यभक्तिलक्षणं स्वाभाविक्यनिमित्तेति सर्वत्र समम् अधमाधिकारिभिः क्रियमाणा भक्तिरीदृशी सिद्धेर्मुक्तेर्गरीयसी प्रधानसाधनभूता ॥ ३२ ॥ ३३ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

देवानामिति युग्मकम् । ततः करुणया तदुचितं भक्तिविशेषमपि प्रतिपादयिष्यन्मुख्यामेव भक्तिं लक्षयति । देवानामिति सार्द्धेन "पूर्वं श्रद्धारतिर्भक्तिरनुक्रमिष्यति" इत्युक्तम् । तत्र यद्यपि रतिभक्तयोर्द्वयोरपि तारतम्यमात्रभेदयोः प्रीतित्वमेव, तथापि प्रीत्यतिशयलक्षणायां प्रेमाख्यायां भक्तौ तदतिस्फुटं स्यादिति कृत्वा भक्तिपदेन तामुपादाय लक्षयति । अर्थश्चायम् । गुणलिङ्गानां गुणत्रयोपाधीनामानुश्रविकं श्रुतिपुराणादिगम्यं कर्माचरितं येषां ते तथोक्ताः तेषां देवानां श्रीविष्णुब्रह्मशिवानां मध्ये सत्त्वे सान्निध्यमात्रेण सत्त्वगुणोपकारके स्वरूपशक्तिवृत्तिभूतशुद्धसत्त्वात्मके वा विष्णौ । एतच्चोपलक्षणं श्रीभगवदाद्यनन्ताविर्भावेष्वेकस्मिन्नपीत्यर्थः ।

एवकारेण नेतरत्र। न च तत्रापि च एकमनसः पुरुषस्य या वृत्तिः तदानुकूल्याद्यात्मको ज्ञानविशेषः। अनिमित्ता फलाभिसन्धिशून्या स्वाभाविकी स्वरसत एव विषयसौन्दर्योदयत्वेनैव जायमाना। न बलादापद्यमाना सा भागवती भक्तिः प्रीतिरित्यर्थः। प्रीतिसम्बन्धादेवास्या भक्तेः स्वाभाविकत्वं स्यात्। तस्माद् वृत्तिशब्देन प्रीतिरेवात्र मुख्यत्वेन ग्राह्येति सा च सिद्धेर्मोक्षाद्गरीयसी सालोक्यसार्ष्ट्यादिश्रवणात्। अत एव ज्ञानसाध्यस्यापि तिरस्कारप्रसिद्धेर्ज्ञानादिति व्याख्यानमसद्दृशमत्र मोक्षाद्गरीयस्त्वेन तस्या वृत्तेर्गुणातीतत्वं ततोऽपि घनपरमानन्दत्वं श्रीभगवत्प्रसादविशेषैणैव मनस्युदितत्वं तत्तादात्म्येनैव तद्वृत्तिव्यपदेश्यत्वं च दर्शितम्॥ ३२॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

यद्यपि त्वत्सम्मतायां भक्तावेव मम जिज्ञासा चिकीर्षा च, तदपि" जिज्ञासुना निजमतं ज्ञेयं परमतं बुधैः" इति नित्ययोगश्च ज्ञानञ्च मम जिज्ञास्यमित्याह। यो योग इति। भगवति बाणस्तत्र क्षिप्तः शर इव यो भगवन्तं लक्ष्यीकरोतीत्यर्थः। निर्वाणार्थः मोक्षप्रयोजकः। तथा यथा यतस्तत्त्वानामवबोधनं तज्ज्ञानञ्च कीदृशम्॥ २९॥ ॐ ॐ तत्तस्मात् एतन्मे मां विजानीहि विज्ञापय॥ ३०॥ ॐ ॐ अर्थं प्रयोजनं स्नेहे हेतुर्यैत्र तन्वा देहेनाविर्भूतः तत्त्वान्याम्नायन्ते अनुक्रम्यन्ते यस्मिन् किं तत् यत् सांख्यं प्रवदन्ति तत् प्रोवाच भक्तिवितानं योगञ्च॥ ३१॥ ॐ ॐ तत्र भक्तिवितानं वक्तुं काचित् त्वय्युचिता भक्तिरिति पृष्टां भगवति युक्तामुत्तमां निर्गुणां भक्तिं लक्षयति। देवानामिति। सत्त्व एव शुद्धसत्त्वमूर्त्तौ हरावेव नतु देवतान्तरे। एकमेकस्वरूपमेव सेवाबुद्धिमयत्वेन त्वद्रूपनामाद्युपादित्सु, न तु योगिजनादेरिवारत्यां तज्जिहासु मनो यस्य पुरुषस्य। तथा एकस्मिन् भजन एव नतु ज्ञानकर्मादिषु मनो यस्य तस्य पुंसः। गुणाः शब्दादयो विषयाः लिङ्ग्यन्ते ज्ञाप्यन्ते यैस्तेषां देवानामिन्द्रियाधिष्ठातॄणां सद्विषयत्वाद्दीव्यतां क्रीडतामिन्द्रियाणां वा सत्त्वे हरावेव या वृत्तिस्तदीयशब्दादिग्रहणरूपा व्यापृतिरनिमित्ता निष्कामा सा भागवती भक्तिरित्यन्वयः। अत्र सत्त्व एव एक मनस इति सत्त्व एव इन्द्रियाणां वृत्तिरिति काकाक्षिगोलकन्यायेनोभयत्रान्वितम्। अत्र सत्त्व इत्यनेन सत्त्वगुणवति ब्रह्मरुद्रादाविति नाशङ्क्यं भागवतीत्यनेन तद्व्यावृत्तेः। यद्वा सतां भावः सत्त्वं वैष्णवत्वं तत्र एकमनसः वैष्णवो भवेयमित्येकान्तमनसो वैष्णवत्वे एव या इन्द्रियाणां वृत्तिः सा भक्तिः। न च स्वच्छन्देनैव प्रवर्त्तमानानां तेषां वृत्तिर्भक्तिः, किन्तु श्रीगुरूपदिष्टमन्त्रोचिताचरणवतामित्याह। गुरोरुच्चारणमनुश्रूयत इत्यनुश्रवो मन्त्रस्तद्विहितमानुश्रविकं तदेव कर्म नित्यकृत्यं येषां तेषाम्। किञ्च। "उत्सर्गान्मलमूत्रादेश्चित्तस्वास्थ्यं यतो भवेत्। अतः पायुरुपस्थश्च तदाराधनसाधनम्॥" इति। विष्णुरहस्योक्तेः पायूपस्थयोरपि वृत्तिर्भक्तिसम्बन्धेन भक्तिरिति वैधी साधनभक्तिर्लक्षिता। अथ तुकारेण पृथक्कृत्य "तत्साध्यां भावभक्तिं" रागानुगाख्याञ्च भक्तिं तन्त्रेणैव लक्षयति। या तु तेषामिन्द्रियाणां तथा भूतानामेव स्वाभाविकी वृत्तिः सा सिद्धेर्मुक्तरपि गरीयसी श्रेष्ठतरेत्यस्वाभाविक्यपि वृत्तिर्मुक्तेर्गुरुः श्रेष्ठेत्यर्थो लभ्यते। स्वाभाविकी वृत्तिश्च द्विविधा कस्यचित् शास्त्रशासनेनैव श्रीगुरूपदिष्टशुद्धभक्तौ प्रवृत्तिमतो भजनाभ्यासपौनःपुन्येन निष्ठा रुच्यासक्तिभूमिका अधिरूढस्येन्द्रियाणां वृत्तिर्हरौ स्वाभाविकी भवति यथा प्राकृतलोकानां पतिपुत्रादिषु कस्यचिच्च प्राचीनार्वाचीनतादृशमहत्सङ्गकृपाजनितविलक्षणसंस्कारवशेन गुरूपदेशात् पूर्वमेवानन्तरमेव वा शास्त्रशासनं विनैव स्वभावत एवेन्द्रियाणां भक्तिशास्त्रोक्ताचरणवती एव या हरौ वृत्तिः सापि स्वाभाविकी ज्ञेया पूर्वस्या वैधभक्तेः प्रमाणेनैवोत्कर्ष उदाहरणञ्च नैकात्मतामित्यादि पद्यचतुष्टयं ज्ञेयम्॥ ३२॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

यो भगवद्बाणः भगवद्दर्शनहेतुः योगो ध्यानयोगः निर्वाणार्थः मोक्षप्रयोजनः यतो ध्यानयोगात् तत्त्वावबोधनं भगवत्तत्त्वदर्शनम्॥ २९॥ ॐ ॐ यथाहं सुखं बुध्येयं जानीयां तथा विजानीहि विज्ञापय॥ ३०॥ ॐ ॐ अपृष्टमपि भक्तभजनीययोर्ध्यातृध्येययोर्विविक्तस्वरूपध्यानार्थं यत्साङ्ख्यं वदन्ति तत्तत्त्वाम्नायं तत्त्वान्याम्नायन्ते अनुक्रम्यन्ते यस्मिन् तत्प्रोवाच भक्तेर्वितानं योगं ध्यानयोगं च प्रोवाच॥ ३१॥ ॐ ॐ तत्र साङ्ख्यं षड्विंशे भक्तिं सप्तविंशे विस्तरत एकोनत्रिंशे योगमष्टाविंशे वर्णयिष्यन् श्रवणादिरूपां भक्तिं भगवद्दर्शनहेतुं ध्यानं चैकीकृत्य देवानामित्यादिना अध्यायसमाप्तिपर्य्यन्तं संक्षेपतो वर्णयति। एकमनसः पुंसो मुमुक्षोः गुणाः शब्दादिविषयाः लिङ्गानि स्वोपलब्धिद्वारानुमापका येषां ज्ञानेन्द्रियाणाम्। अनुश्रवो वेदः। तद्व्याख्यारूपत्वात् स्मृतिग्रहणं तद्विहितं श्रुतिस्मृतिप्रोक्तमानुश्रविकं तदेव कर्म येषां कर्मेन्द्रियाणां च देवानां स्वस्वविषये द्योतनात्मकानामुभयेन्द्रियाणां सत्त्वे शुद्धेऽप्राकृतशरीरिणि भगवति या स्वाभाविकी अनिमित्ता अनभिसंहितफला वृत्तिः सा भक्तिरिति द्वयोरन्वयः। सा सिद्धेर्मुक्तेरपि गरीयसी। अयमर्थः मुक्तौ भगवान् न कस्यचित्सारथिर्भवति। न च "उवाह कृष्णो भगवान् श्रीदामानं पराजितः" इत्येवं केनचित्पराजितो भवति न च दामभिः श्रीयशोदयेव केनापि बद्धो भवति। अतो मुक्तेर्गरीयसीति सिद्धान्तोक्तिः। तथापि भक्त्या मुक्तिः प्रासङ्गिकी स्यादेवेत्याह। या भक्तिः कोशं लिङ्गशरीरं जरयति क्षपयति॥ ३२॥ ३३॥

## श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

योगं च पृच्छति—यो योग इति । भगवल्लक्षणलक्ष्ये आत्मनो योजनार्थं यो बाणरूपो योगः सोऽपि वक्तव्यः । भगवान् सर्वत्र नयेदित्यत्र भक्तिर्हेतुः । स्वतो गमने सामर्थ्यहेतुर्योगः । स्वयोदित इति 'योगेन मामवरुन्ध' इत्यत्र । तस्य स्वरूपमङ्गानि च वक्तव्यानि, शास्त्रे नानाविधानां निरूपणात् । स्वतन्त्रतया योगस्य कारणत्वाभावात्, भक्तेश्च पृष्टत्वात्, किं योगेनेत्याशङ्क्याऽऽह—यतस्तत्त्वावबोधनमिति । ज्ञानसाधनं योगः । अनेन चत्वारोऽर्थाः पृष्टाः—भक्तिः; योगः, स्वरूपतस्तदङ्गानि; फलसाधकत्वेन तदङ्गं साङ्ख्यम्; ज्ञानं च । योगो योगाङ्गानि चैकम्, अन्यानि त्रीणि ॥ २९ ॥ ❀ ❀ एतत्सर्वं वक्तव्यमिति निरूप्योपसंहरत्याव-श्यकत्वाय—तदेतन्म इति । शास्त्रप्रसिद्धमनुभवारूढपर्यन्तं वक्तव्यम् । विजानीहि ज्ञापय । ज्ञापने प्रयत्नाधिक्यार्थं स्वस्य निकृष्टाधि-कारमाह—मन्दधीरहम् । हरेः सुखं स्वरूपं सर्वैरेव दुर्बोधम्, भवदनुग्रहाद् बुद्ध्येय[1], हरेः संबन्धि वा पूर्वोक्तम्, सुखं यथा भवति तथा बुद्ध्येय[2] नापि वचनमात्रेण बुद्ध्यते, किन्त्वनुग्रहादेवेति तथोक्तम् ॥ ३० ॥ ❀ ❀ यद्यपि मात्रा गूढतया निर्दिष्टं चतुष्ट-यम्, तथापि ज्ञात्वा तन्निरूपयतीत्याह—विदित्वेति । योगो भक्तिः क्रियारूपा ज्ञानं साङ्ख्यं च वेदनम् । तेषां यत्रोपयोगः स्यात्तदग्रे वक्ष्यते स्फुटम् ॥ चतुर्णां यत्प्रयोजनं सोऽर्थः । विवेचनं तु सङ्ख्यातात् सांख्यकार्यं प्रचक्षते । विविक्तस्य तु विज्ञानं ज्ञानकार्यं निरूपितम् ॥ भक्त्या प्रसन्ने तु हरौ तं योगेनैव योजयेत् ॥ एतज्ज्ञाने सामर्थ्यम्—कपिल इति मातुरिति कथनावश्यकत्वम् । जातस्नेह इति गुप्तकथने हेतुः । यत्र मातरि, तन्वा कपिलदेहेनाऽभिजातः । अधिकस्नेहे हेतुः । यद्वक्ष्यति तत्परिगणयति । तत्त्वाम्नायं तत्त्वानामाम्नाय आवृत्तिर्यत्र । उद्देशलक्षणभेदेन, कारणत्वेन, कार्ये चानुप्रवेशेन, बहुधा आम्नातम्, तस्य लोके साङ्ख्यमिति प्रसिद्धिः । वदन्तीति प्रमाणम् । भक्तिवितानो योगश्च । प्रावोचदिति ज्ञानं प्रार्थः ॥ ३१ ॥ ❀ ❀ तत्र भक्तिं लक्षयति—देवानामिति द्वयेन—तस्य च परिकरः सर्वोऽप्यग्रे वक्ष्यत एकादशभिः पुरुषस्य सर्वेन्द्रियाणां सत्त्वमूर्तौ भगवति या स्वाभाविकी वृत्तिः, सा भक्तिरिति । इन्द्रियाणि हि द्विविधानि स्वभावतः 'द्वया ह प्राजापत्याः' इत्यत्र निरूपितानि । एकानि देवरूपाणि । यान्यालौकिकं वेदोक्तमेव कर्म ज्ञानं वा जनयन्ति, तानि देवरूपाणि; यानि लौकिकं कर्मादि जनयन्ति, तान्यासुराणि । तेषामन्योन्यं स्पर्द्धा । तत्र बलिष्ठान्यासुराणि तैर्देवरू-पाणि न स्वकार्ये प्रवर्तितुं शक्नुवन्ति । तानि चेदासन्योपासनादिना आसङ्गादिदोषान्निवृत्तानि स्वस्य देवभावं[3] प्राप्नुवन्ति, तदा कार्यतोऽपि देवरूपाणि भवन्ति । तत्र ऋषीणां बहुजन्माभ्यासादिन्द्रादिदेवानां च देवरूपाण्येवेन्द्रियाणि भवन्ति; ये वा दैव्यां संपदि जाताः, तेषामपि देवरूपाणि भवन्ति, आसुराण्यपि भवन्ति । एकस्मिन्नेव[4] गोलक उभयमपि तिष्ठति । यानि निषिद्धा-द्विचिकित्सन्ते, यथाऽमेध्यं दृष्ट्वा तथा कामिन्यामपि दृष्टायाम् । यानि पुनर्निषिद्धे लौकिके च रज्यन्ते, तानि बलाद्विहिते प्रवर्त-मानान्यपि न परितुष्टानि भवन्तीत्यासुराणि । तत्र भक्तिर्देवैरेव भवति, नासुरैरिति देवपदेन करणानि निर्मितानि । तेषां परिज्ञानार्थं लक्षणमाह—गुणलिङ्गानामिति । गुणा रूपादयः, तैर्लिङ्ग्यन्ते, गुणा लिङ्गानि येषामिति । देवरूपाणामिन्द्रियाणामेतल्लक्षणम्, तानि लयविक्षेपशून्यानि । ततो विक्षेपाभावात् न कार्येषु प्रवृत्त्या स्पष्टमुपलभ्यन्ते, नापि लयाभावात् मूढानि पदार्थमपि न गृह्णन्तीत्यपि । किन्तु रूपमात्रं चक्षुर्गृह्णाति पश्यतीति कृत्वा चक्षुरस्तीति ज्ञायते । एवमन्यानि तादृशानि कथं भवन्तीत्याकाङ्क्षाया-माह—आनुश्रविककर्मणामिति । गुरोरुच्चारणानन्तरं श्रूयत इत्यनुश्रवो वेदः, तेन प्रोक्तानि कर्माणि आनुश्रविकाणि; तान्येव कर्माणि येषाम् । लोके दर्शनादिमात्रम्, कार्याणि तु वैदिकान्येव तेषाम् । दैवात् येषामेतादृशानीन्द्रियाणि भवन्ति, तेषां भक्तिर्भवती-त्युक्तम् । किञ्च, तान्यपि कर्मयोगज्ञानादिबहुरूपे वैदिके कर्मणि प्रवर्तमानानि पूर्ववासनयाऽभ्यासात् भवन्ति । तेषामपि यदि फलावस्था भवति, तदा सत्त्व एव शुद्धसत्त्वरूपे भगवत्स्वरूपे प्रवर्तमानानि स्वभावतो भवन्ति । सत्त्व इति साङ्ख्यमतानुसारे-णोक्तम् । वस्तुतस्तु गुणातीते भगवति स्वाभाविकी वृत्तिरिति भगवच्छास्त्रम् । 'मन्निष्ठं निर्गुणे स्मृतम्' 'हरिर्हि निर्गुणः साक्षात्' इत्यादिवाक्यैः सर्वा भगवतः सामग्री निर्गुणा[5] । एवकारो राजसतामसव्युदासार्थः । एकमनस इति । एकमेव मनो यस्य । मनोऽपि द्विविधम्, दैवासुरविभेदेन । तत्रासुरं सङ्कल्पविकल्पात्मकं नानाभावापन्नं मननात्मकमेव । इन्द्रियाणि तूभयविधान्येव भवन्तु नाम । कार्यमेवासुराणां बाध्यते । मनसा तु द्वितीयेन न भाव्यमेव, तथा सतीन्द्रियाणां पूर्वोक्ता वृत्तिर्न स्यात् । अत एकमेक-स्वभावापन्नं मनो यस्य, तस्यैव भक्तिः । अन्येषां तु यथाकथञ्चित् क्रियमाणा भगवति खण्डशो वृत्तिरक्षयत्वात् बहुभिर्जन्मभिः पुष्टिं गता, अन्तिमजन्मनि भक्तिरूपां वृत्तिं जनयिष्यतीति, न काऽप्यनुपपत्तिः । वृत्तिस्तन्निष्ठता, न तु ग्रहणमात्रम् । साऽपि वृत्ति-रौत्पत्तिकी; यथा प्रह्लादस्य, अन्येषां वा भक्तानाम् । एँतावद्दूरे नाऽस्मिन् जन्मनि साधनसाध्यता, किन्तु पूर्वजन्मवशादेवैवंभूतो भवति । अग्रे विशेषं वक्तुं शब्दमाह । जन्मान्तरेण व्यवधानात्पूर्वजन्मवृत्तिर्यच्छब्देन परामृश्यते । फलरूपे जन्मनि सा अनिमित्ता भवति, स्वतन्त्रा, भगवन्निमित्ता वा । भगवतः सकाशात् फलानि निमित्तानि । याऽनिमित्ता सा भक्तिर्भवतीत्युत्तरेण संबन्धः । किञ्च, सा चेद्भागवती भवति, साक्षाद्भगवन्तं विषयीकरोति, भगवद्भावं वा षड्गुणरूपतामापद्यते । पूर्वे सत्त्वरूपे देवे विष्णौ वृत्तिः,

---

१. बुद्ध्येयम् । २. बुद्ध्येयमिति । ३. वृत्तिः ग । ४. देवस्वभावम्. ख. घ. ङ. । ५. अपि. ख. ङ. । ६. निर्गुणैव. ग. । ७. एतदेव क. घ. ङ. ।

सैव जन्मान्तरे भागवती भवतीति वा। पञ्चाग्निविद्यायां ज्ञानौपयिकदेहसिद्धिर्निरूपिता, तस्मिन् देहे ज्ञाने जाते मुक्तिर्भवतीति तस्य च ब्रह्मविदो जीवतो, म्रियमाणस्य, गच्छतः, सङ्गतस्य च व्यापारा निरूपिताः। सद्यो मुक्तावपि सायुज्यं निरूपितम्। तद्वस्तुतो भक्तानामेव भवतीति सिद्धान्तः, प्रकारान्तरेण प्राप्त्याऽभिव्यक्त्यभावात्। तथापि मुक्तेः सायुज्यादपि इयं भक्तिर्गरिष्ठेत्याह—सिद्धेर्गरीयसीति। सिद्धिः पूर्वोक्ता। गरीयस्त्वं निरूपयति—जरयतीति। या कोशं लिङ्गशरीरं जीर्णं करोति। बीजात्मकमित्यन्ते। यद्यपि सिद्धावपि कोशजीर्णता वर्तते, तथापि आशु जरयति। अनायासार्थं दृष्टान्तः—निगीर्णमनलो यथेति। न हि भुक्तकवलस्य परिपाकार्थमौदर्यादग्नेरन्यत्साधनं विधीयते, औषधादिकमप्यग्निमेव बोधयति। एतया मे पदं प्राप्यत इति भावः॥ ३२॥ ३३॥

## श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

विविदिष्वेत्यत्र। क्रियारूपेति। सेवारूपा। तदिति। साध्यं रूपं भक्तेः स्वरूपम्। मूलस्थमर्थपदं व्याकुर्वन्ति—चतुर्णामित्यादि। तत्प्रयोजनं किमित्याकाङ्क्षायां विवृण्वन्ति सार्द्धेन—विवेचनमित्यादि। तमिति। आत्मानं च। तथा च, चतुर्णामेतानि चत्वारि प्रयोजनानीत्यर्थः। उद्देशलक्षणभेदेनेति। परीक्षाया मूलेऽनुक्तत्वादुभयोरेव ग्रहणम्। भक्तिवितानो योगश्चेति। तेन भक्तिवितानसहितो योगो भक्तिवितान इति मूलार्थो बोधितः। ज्ञान प्रार्थ इति। तेन ज्ञानं यथा स्यात्तथा अवोचदिति मूलार्थः। तेन चतुरोऽप्यर्थान-वोचदित्यर्थो भवति॥ ३१॥ ❁ ❁ देवानामित्यत्र। आसङ्गादिदोषादिति। लौकिकासक्त्यादिदोषात्। विचिकित्सन्ते इति। ग्लानिं प्राप्नुवन्ति। तानि देवरूपाणीति शेषः। अग्रिमं श्लोकं व्याकुर्वन्ति—फलरूपे जन्मनीत्यादि।

## श्रीगिरिधरकृता बालप्रबोधिनी

हे निर्वाणात्मन् निरतिशयानन्दरूपभगवद्बाणः भगवत्प्रापको यो योगस्त्वया उदित उक्तः सः कीदृशः किम्प्रकारकः?। तस्याङ्गानि च कति कतिसङ्ख्यानि! यतस्तत्त्वानामवबोधनं निर्विचिकित्सितं ज्ञानं भवति॥ २९॥ ❁ ❁ तदेतत् साङ्ख्यं दुर्बोधं दुःखेनापि बोद्धुमशक्यमपि भवतः अनुग्रहात् मन्दधीरहं यथासुखमनायासेनैव बुद्ध्येय तथा मे मम विजानीहि विशेषेण ज्ञापयेति द्वयोरन्वयः। तव च परदुःखहरणशीलस्य मयि मन्दबुद्धावनुग्रहो युक्त एवेति सूचयन्ती सम्बोधयति—हरे इति। मन्दबुद्धित्वे हेतुमाह—योषेति॥ ३०॥ ❁ ❁ कपिलो मातुर्देवहूत्या इत्थमुक्तप्रकारकमर्थं भक्तियोगसाङ्ख्यश्रवणरूपं प्रयोजनं विदित्वा तत्त्वानि आम्नायन्ते निरूप्यन्ते यस्मिन् यच्च वृद्धाः साङ्ख्यमिति प्रवदन्ति तत्साङ्ख्यशास्त्रं तथा भक्तिवितानं भक्तिविस्तारं योगं चेत्येतत्तत्पृष्टं त्रयं प्रोवाचेत्यन्वयः। तत्कथने हेतुमाह—जातस्नेह इति। तत्र हेतुमाह—यत्र यस्यां तन्वा देहेन जात आविर्बभूवेति। तत्प्रयोजनं कथं न सम्मानयेदित्याशयः॥ ३१॥ ❁ ❁ तत्र तावत् मुख्यभक्तिलक्षणमाह—देवाना-मिति। गुणाः शब्दादयो विषयाः लिङ्ग्यन्ते ज्ञायन्ते यैस्तेषां गुणलिङ्गानाम्। तत्र हेतुमाह—देवानामिति, देवानां द्योतमानात्म-कानां इन्द्रियाणां या भक्तिः सत्त्वे सत्त्वमूर्तौ भगवत्येव वृत्तिः प्रवृत्तिः सा भागवती भक्तिः सिद्धेर्मुक्तेरपि गरीयसी गुरुतरेति द्वयोरन्वयः। सा च वृत्तिर्यथाऽम्बरीषेन्द्रियाणां नवमस्कन्धे उक्ता—'स वै मनः कृष्णपदारविन्दयोर्वचांसि वैकुण्ठगुणानुवर्णने। करौ हरेर्मन्दिरमार्जनादिषु श्रुतिं चकाराच्युतसत्कथोदये॥ मुकुन्दलिङ्गालयदर्शने दृशौ तद्भृत्यगात्रस्पर्शेऽङ्गसङ्गमम्। घ्राणं च तत्पादसरोजसौरभे श्रीमत्तुलस्या रसनां तदर्पिते। पादौ हरेः क्षेत्रपदानुसर्पणे शिरो हृषीकेशपदाभिवन्दने॥ कामं च दास्ये न तु कामकाम्यया यथोत्तमश्लोकजनाश्रया रतिः'। न च पायूपस्थयोः कथमुपयोग इति शङ्क्यम्, 'उत्सर्गान्मलमूत्रादेश्चित्तस्वास्थ्यं यतो भवेत्। अतः पायुरुपस्थश्च तदाराधनसाधनम्' इति विष्णुरहस्योक्तरीत्या तयोरपि तत्रोपयोगसम्भवात्। साऽपि वृत्तिः न बलात्सम्पादिता, किन्तु स्वाभाविकी अप्रयत्नसिद्धा तत्राप्यनिमित्ता निष्कामा। ननु कथमेवं निष्कामा निश्चला भक्तिः सम्भवति मनसश्चलत्वादित्याशङ्क्याह—एकमनस इति, एकमेकरूपं शुद्धमविकृतं मनो यस्य तस्य पुंस इत्यर्थः। तच्छुद्धिरपि कथमित्याका-ङ्क्षायां तत्तदिन्द्रियैः शुभाचरणादित्याशयेनाह—आनुश्रविककर्मणामिति, गुरोरुच्चारणं अनुश्रूयते इत्यनुश्रवो वेदः, तद्विहितमानु-श्रविकं तदेव कर्म येषां तेषामित्यर्थः॥ ३२॥

## हिन्दी अनुवाद

निर्वाणस्वरूप प्रभो! जिसके द्वारा तत्त्वज्ञान होता है और जो लक्ष्यको बेधनेवाले बाणके समान भगवान्‌की प्रीत करानेवाला है, वह आपका कहा हुआ योग कैसा है और उसके कितने अङ्ग हैं?॥ २९॥ ❁ ❁ हरे! यह सब आप मुझे इस प्रकार समझाइये जिससे कि आपकी कृपासे मैं मन्दमति स्त्रीजाति भी इस दुर्बोध विषयको सुगमतासे समझ सकूँ॥ ३०॥ ❁ ❁ श्रीमैत्रेयजी कहते हैं—विदुरजी! जिसके शरीरसे उन्होंने स्वयं जन्म लिया था, उस अपनी माताका ऐसा अभिप्राय जानकर कपिलजीके हृदयमें स्नेह उमड़ आया और उन्होंने प्रकृति आदि तत्त्वोंका निरूपण करनेवाले शास्त्रका, जिसे सांख्य कहते हैं, उपदेश किया। साथ ही भक्ति-विस्तार एवं योगका भी वर्णन किया॥ ३१॥ ❁ ❁ श्रीभगवान्‌ने कहा

माता ! जिसका चित्त एकमात्र भगवान्में ही लग गया है, ऐसे मनुष्यकी वेद-विहित कर्मोंमें लगी हुई तथा विषयोंका ज्ञान करनेवाली (कर्मेन्द्रिय एवं ज्ञानेन्द्रिय-दोनों प्रकारकी) इन्द्रियोंकी जो सत्त्वमूर्त्ति श्रीहरिके प्रति स्वाभाविकी प्रवृत्ति है, ॥ ३२ ॥

अनिमित्ता भागवती भक्तिः सिद्धेर्गरीयसी । जरयत्याशु या कोशं निगीर्णमनलो यथा ॥ ३३ ॥
नैकात्मतां मे स्पृहयन्ति केचिन्मत्पादसेवाभिरता मदीहाः ।
येऽन्योन्यतो भागवताः प्रसज्य सभाजयन्ते मम पौरुषाणि ॥ ३४ ॥
पश्यन्ति ते मे रुचिराण्यम्ब सन्तः प्रसन्नवक्त्रारुणलोचनानि ।
रूपाणि दिव्यानि वरप्रदानि साकं वाचं स्पृहणीयां वदन्ति ॥ ३५ ॥
तैर्दर्शनीयावयवैरुदारविलासहासेक्षितवामसूक्तैः ।
हृतात्मनो हृतप्राणांश्च भक्तिरनिच्छतो मे गतिमण्वीं प्रयुङ्क्ते ॥ ३६ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

मुक्तिश्च प्रासंगिकी भवत्येवेत्याह। या भक्तिः कोशं लिंगशरीरं जरयति क्षपयति। स्वप्रयत्नं विनैव सिद्धौ दृष्टान्तः। निगीर्णं भुक्तमन्नमनलो जाठरो यथा जरयतीति ॥ ३३ ॥ ❀ ❀ भक्तेर्गरिष्ठत्वमेवोपपादयति। नैकात्मतामिति पंचभिः। एकात्मतां सायुज्यमोक्षं मदर्थमीहा क्रिया येषाम्। प्रसज्ज्यासक्तिं कृत्वा पौरुषाणि वीर्याणि ॥ ३४ ॥ ❀ ❀ प्रसन्नानि वक्त्राण्यरुणानि लोचनानि च येषु तैर्मद्रूपैः साकं सह नित्यं परमेश्वरानुभवसुखं भक्तावधिकमिति भावः ॥ ३५ ॥ ❀ ❀ आत्मानंदस्त्ववश्यं भावीत्याह। तैरिति। दर्शनीया मनोहरा अवयवा मुखनेत्रादयो येषु तैः हृत आत्मा चित्तं येषाम्। हृता आकृष्टाः प्राणाश्चेंद्रियाणि येषां तान्भजतोऽनिच्छत इच्छाहीनानप्यण्वीं गतिं मुक्तिं प्रयुंक्ते प्रापयति। कैः साधनैर्हृतात्मनः उदारैर्विलासादिभिः तत्र विलासो लीला वामं मनोहरं सूक्तं मधुरभाषणम् ॥ ३६ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

परस्या वैराग्यानुगायास्तु जात्यैवोत्कर्ष उदाहरणञ्च "न कर्हिचित्" इत्यादिपद्यम्। अस्वाभाविक्यास्तु स्वाभाविकीभ्यां सकाशात्प्रमाणेन जात्या च निष्कर्षः उदाहरणं च "इमं लोकं तथैवामुम्" इत्यादि पद्यद्वयम्। अस्या द्विविधाया अपि भक्तेर्निष्कामत्वादननुसंहितं फलं च मोक्षस्तमाह—जरयतीति। या भक्तिः कोशं लिंगशरीरं जरयति क्षपयति। किञ्च ज्ञानहेतुकान्मोक्षादस्य मोक्षस्य दृष्टान्तेन वैलक्षण्यमाह—निगीर्णं भुक्तमन्नादिकमनलो जाठरो यथा जरयतीति स हि जाठरानलो देहपुष्ट्यान्यथानुपपत्तेर्भुक्तस्यान्नादेरसारांशमेव जरयति न तु सारांशं प्राणेन्द्रियादीनि सप्तधातूंश्च पुष्यति। येनैवौजःसहोबलवान्देहो भवति तथैव भक्तिर्मायिकानेव शब्दादींस्तत्करणकर्त्रादींश्चासारांशानेव जरयति न तु सारांशान्भगवत्सम्बन्धिनः शब्दादीनप्राकृतांस्तदिन्द्रियांदींश्च जरयति "चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रम्" इत्यादिश्रुतेः, यैरेव भक्तानां देहः सिद्धो भवति। अत एव मायिकोसारांश एव लिंगकोशदेहेंद्रियादिशब्दैः शास्त्रेपूच्यते यथा "देहेंद्रियासुहीनानां वैकुंठपुरवासिनाम्" इत्यादि। यथा च पुरुषप्रयत्नं विनैव जाठरोग्निर्भुक्तान्नादिकं जरयति येन प्रकारेण जरयति तं प्रकारं च पुरुषो न जानात्येवं मोक्षार्थं किमप्ययतमानं श्रवणकीर्त्तनादिकञ्च नित्यं कुर्वाणं तन्माधुर्यास्वादवन्तं भक्तजनं भक्तिः संसारान्मोचयति। भक्तस्तु केन प्रकारेण कदा मे मुक्तिर्भविष्यतीति नानुसंधत्ते तद्वक्ष्यति—"त्वत्पादपोतेन महत्कृतेन कुर्वंति गोवत्सपदं भवाब्धिम्" इति। पथि गच्छतः पुंसो गोष्पदलंघनानुसंधानं यथा न भवति तथेति भक्तानां त्रिभूमिकब्रह्मज्ञानाभावेपि "नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुधा श्रुतेन यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनुं स्वाम्" इति श्रुतेर्भगवत्कारुण्याद्भक्त्या तद्रूपगुणलीलैश्वर्यमाधुर्यानुभवरूपाज्ज्ञानादेव मोक्षः। "तमेव विदित्वा अतिमृत्युमेति" इति श्रुतावप्येवकारेण मुक्तौ तस्यैव ज्ञानस्य कारणत्वेनोक्तेस्तज्ज्ञानञ्चोक्तप्रकारकमेव। सर्वथा तत्त्वरूपज्ञानं तु "यतो वाचो निवर्त्ततेऽप्राप्य मनसा सह" इति "यस्यामतं तस्य मतं मतं यस्य न वेद सः" इति, "द्युपतय एव तेन ययुरंतमनंततया" इत्यादिश्रुतिस्मृतिभ्यो न कस्यापि संभवत्येव जीवब्रह्मैक्यरूपा मुक्तिस्तु भक्तैस्त्याज्यैवेत्यग्रे वक्ष्यते। किञ्च भुक्तमन्नादिकं जाठरानलो भोजनक्षणत एव जरयितुं प्रवृत्तोपि त्रिचतुर्यामानंतरमेव सम्यक्तया जरयति यथा तथा भजनक्षणत एव शोकमोहाद्यात्मकं संसारं नाशयितुं प्रवृत्तापि भक्तिः किंचित्कालविलंबेनैव सम्यक्तया नाशयतीत्यतो भजनदशायां शोकमोहाद्यनपगमेपि भक्तेषु संसारोयमिति न प्रत्येतव्यमिति ज्ञेयं, तदेवं गुरूपदिष्टमंत्रवती भक्तिशास्त्रोक्तविधानुसारिण्यन्याभि-

लपितशून्या ज्ञानकर्मादिरहिता भगवति श्रोत्रादींद्रियाणां वृत्तिर्भक्तिः, सा चाल्पप्रमाणा साधनभक्तिरस्वाभाविकी भवति, सैव पूर्णप्रमाणा साध्यभक्तिः स्वाभाविकी भावभक्तिर्भवति, सैव काचिदल्पप्रमाणापि जात्यैवाधिक्यात्स्वाभाविकी चेद्रागानुगानाम्नी साधनभक्तिः, सा च जातिप्रमाणाभ्यां पूर्णा रागानुगीयभावभक्तिर्भवतीति विवेको भक्तिरसामृतसिन्धौ ज्ञेयः। "निष्पत्तौ भोगमोक्षयोः। अणिमादिषु सिद्धिः स्यात्" इति धरणिः॥ ३३॥ ❀ ❀ लक्षणमुक्त्वोदाहरणमाह—सप्तभिस्तत्र प्रथमं स्वाभाविक्या भावभक्तेरुदाहरणं, चतुर्भिर्वदन्नेवानिमित्तेत्येतत्सहेतुकं स्पष्टयति। नेति—एकात्मतां ब्रह्मैक्यरूपां ये मुक्त्यै न स्पृहयंतीति सिद्धेः सकाशाद्गरीयस्त्वम्। ननु केन सुखेन पूर्णास्ते ब्रह्मसुखं न रोचयंति तत्राह—मत्पादयोः सर्वेंद्रियैर्या सेवा तस्यामेव न तु कर्मज्ञानादिषु अभि शास्त्राभिमुख्येन रता अत्यासक्तिमंतः। अनेन भक्तेर्भगवद्विषयत्वं सर्वेन्द्रियवृत्तिरूपत्वं कर्मज्ञानादिराहित्यं शास्त्रानुसारित्वं स्वाभाविकत्वं चोक्तम्। मय्येव मत्सौंदर्यमाधुर्यास्वादने एवेहा वांछा येषां ते इत्यन्याभिलाषशून्यत्वं प्रसह्यासह्यपौरुषाणि गोवर्द्धनोद्धारणादिलीलामृतानि सभाजयंते संततिकमास्वादयंति तेन चरणसेवानंदाभावात्सौंदर्य्यसौरभ्याद्यनुभवाभावान् लीलामृतास्वादनाभावाच्च ब्रह्मसुखं न रोचयंतीति मुक्तावस्पृहायां हेतुत्रयमुक्तम्॥ ३४॥ ❀ ❀ इति भाव इति। मुक्तौ पूर्वोक्तहेतूनामभावाद्भक्तौ तेषां संभवाद्भक्तिरेवादरणीयेत्याशयः। चक्रवर्त्ती—यतः सायुज्यपर्यंतेषु फलेषु स्पृहारहिता अतस्ते मत्त एतत्प्राप्नुवन्तीत्याह द्वाभ्यां—पश्यंतीत्युपलक्षणं गृणंति जिघ्रंति स्वादयंतीत्यादेरपि। रूपाणीत्युपलक्षणं शब्दस्पर्शरसगंधादीनां च। दिव्यान्यप्राकृतानि वरप्रदानि अभीष्टसेवाप्रदानि। यद्वा। हे भक्ता वरं वृणुतेत्याद्युक्तिमंति साकं मया सार्द्धं वदंति "न कामयेन्यं तव पादसेवनादकिञ्चनप्रार्थ्यतमाद्वरं विभो" "न पारमेष्ठ्यं न महेंद्रधिष्ण्यम्" इत्याद्युच्चारयंति। स्पृहणीयामिति तद्वचःशुश्रूषयैव मया वरं वृणुतेत्याद्युच्यते न त्वन्यवरदित्सा ममापि तेभ्य इति भावः। नित्यं परमेश्वरानुभवसुखं भक्तावधिकमिति स्वामिचरणैर्व्याख्यातमेवात इति। अंबेति स्नेहद्योतिका संबुद्धिः॥ ३५॥ ❀ ❀ तैरिति। दर्शनीया अतिमनोहरा ये अवयवाः श्रीकृष्णरामाद्यंगानि तैः उदारा भक्ताभीष्टप्रदातारो विलासादयो येषु तैर्हृतमनःप्राणत्वादनिच्छतोपि भक्तान् भक्तिरण्वीं गतिं प्रयुंक्ते 'भो भक्ताः ब्रह्मैक्यरूपां मुक्तिं गृह्णीत' इति प्रयोगमात्रं करोति न तु दातुमवकाशं लभते। भगवतो लीलाविलाससहासावलोकमधुरभाषणैस्तेषामात्मनां चोरितत्वेन संप्रदानाभावादिति भावः। नन्वेवं चेत्तर्हि परमविज्ञो भक्तिमनिच्छतस्तान् कथमेवं प्रयुंक्ते। उच्यते कश्चिच्चिंतामणिस्पर्शहीरकपद्मरागादिमहारत्नानां दाता खल्वर्थिभ्यः कनकमपि दातुं दर्शयत्यन्यथा कनकमस्य दातुर्नास्तीति कनकमात्रार्थिभिर्मंदधीभिरप्रतिष्ठा क्रियते इतिवद्भक्तिरपि मुक्तिमात्रार्थिज्ञानिमानिलोकवस्त्वभाननिरासार्थं स्वीयांस्तानपि तथा प्रयुंक्ते न पुनर्मुक्तिमेव तेभ्यो दित्सतीत्यवधेयम्। यद्वा। भक्तिरेव तान् हृतात्मनो जनान् अण्वीं गतिमनिच्छतः प्रयुंक्ते अण्वीं गतिं न एषयति नाभिलाषयति, अनिच्छायाः प्रयोजिका भवतीत्यर्थः। यथा कुर्वंतं प्रयुंक्ते इति कारयतीत्यनयोर्णिच्प्रत्ययवाक्यणिजंतयोस्तुल्य एवार्थः तथा हि न पाठयत्ययमिति वक्तव्ये न पठंतं प्रयुंक्त इति न पठनप्रयोजकोऽयमिति च यथोच्यते तथैव भक्तिर्भक्तजनान् अण्वीं गतिं नैषयति नाभिलाषयतीति वक्तव्येऽण्वीं गतिमनिच्छतः प्रयुंक्त इत्युक्तम्। यद्वा। "स्वकर्मफलनिर्दिष्टां यां यां योनिं व्रजाम्यहम्" इत्यादिरीत्या दैन्येन शुद्धभक्तिमात्रेच्छुत्वादनिच्छतोप्यण्वीं प्रकृत्यतीतत्वेन दुर्ज्ञेयां पार्षदत्वाख्यां गतिं प्रयुंक्ते प्रापयतीति संदर्भः। अण्वीं गतिमनिच्छतो जनान् विलासादिभिर्हृतमनःप्राणान् कुरुते इति श्रीरूपगोस्वामिचरणाः। अनिच्छत इच्छाहीनानप्यण्वीं गतिं प्रापयतीति स्वामिचरणाः। एतद्व्याख्यानमपि नात्यसंगतम्। "यथेंद्रियैः पृथग्द्वारैः" इत्यत्र भक्तानां सर्वसुखानुभवस्य व्याख्यास्यमानत्वात्। ततश्च भक्तिरिच्छाहीनानपि तान्बलाद्ब्रह्मसुखमप्यनुभावयितुं भक्तिं प्रापय्य "ते तु ब्रह्महृदं नीता मग्नाः कृष्णेन चोद्धृताः" इति रीत्या ततो निष्क्रमय्य भगवद्धाम्नि तांस्तत्पार्षदान्विधाय भजनानंदैः सदा निमज्जयतीति तात्पर्य्यमुत्तरश्लोकार्थावगाहनाज्ज्ञेयमिति केचिदाहुः। स्वामिव्याख्याने तत्रेत्यस्य विलासादिषु मध्य इत्यर्थः॥ ३६॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

केचिदसाधारणभक्तिरसिकाः सायुज्यं न स्पृहयन्तीत्युक्त्या मोक्षलघुताकृद्योक्त्या भावरूपेयमिति गम्यते। यच्च पूर्वं मोक्षं प्रति साधनत्वं तत्तु तां विना कस्याप्यर्थस्यासिद्धेरेवेति विवक्षया। तस्मान्मोक्षाद्यभिसन्धिना या भक्तिस्साभासरूपा ज्ञेया॥ ३४॥ ❀ ❀ रुचिराण्यम्ब सन्त इत्येव पाठः स्वामिसम्मतः। प्रसन्नपदमारभ्यैव समासाङ्गीकारात् रुचिरावतंसेति तु आगन्तुकः परमेश्वरानुभवसुखस्याधिकत्वोक्त्या तस्य घनत्वं परमनिर्गुणत्वादिकञ्च व्यञ्जितम्॥ ३५॥ ❀ ❀ तै रूपैरिति विशेष्यम्। मुक्तिमात्मानन्दरूपां साधनैः कारणैः॥ ३६॥

### श्रीमद्वीरराघवव्याख्या

सनिमित्ता भागवती भगवत्सम्बन्धिनी भक्तिरित्यर्थः। उभयविधेन्द्रियाणां मनसश्च सत्त्वे वृत्तिर्नाम श्रवणकीर्त्तनस्मरणादिः। अथ भक्तिं प्रस्तौति। सिद्धेः ऐश्वर्यकैवल्यादिसिद्धेः गरीयसी श्रेष्ठा निरतिशयानन्दरूपभगवदनुभवफलसाधनत्वादिति भावः। सिद्धेर्गरीयस्त्वमेवाह। या भागवती भक्तिः कोशमनादिपुण्यापुण्यरूपकर्मवासनाकोशं जरयति जीर्णं करोति नाशयति इति

यावत्, तत्र दृष्टान्तः निगीर्णं भुक्तमन्नपानादि अनलो जाठराग्निर्यथेति ।। ३३ ।। ॐ ॐ पुनर्भक्तिमेव प्रस्तोतुं निरतिशयानन्दभगवदनुभवरूपभक्तियोगनिष्ठास्तत्साधर्म्यरूपमुक्तिमपि नेच्छन्तीत्याह । केचिन्मत्पादयोः सेवायामभिरता आसक्ता मय्येव ईहा सर्वेन्द्रियचेष्टा येषां ते भागवताः अन्योऽन्यतः परस्परं मम पौरुषाणि कल्याणगुणप्रकाशकानि चेष्टितानि प्रसज्य प्रस्तूय सभाजयन्तः सम्यगनुमोदयन्तः पौरुषप्रसङ्गजनितानन्दसम्प्लुताः सन्तः मे ममैकात्मतां एकस्वभावतां मत्समानगुणकतां "मम साधर्म्यमागता" इति ह्युच्यते न स्पृहयन्ति नेच्छन्ति ।। ३४ ।। ॐ ॐ किन्तु हे अम्ब ! ते सन्तः मे मम रुचिराणि सुन्दराणि प्रशस्तानि वक्त्रारुणलोचनानि येषु तानि दिव्यान्यमानुषाणि वरप्रदानि अभिमतार्थप्रदानि रूपाणि दिव्यमङ्गलशरीराणि पश्यन्ति ध्यायन्ति रूपैः साकं सह वा स्पृहणीयां वाचं मदुक्तिं वदन्ति परस्परं कथयन्ति ।। ३५ ।। ॐ ॐ यद्यपि मुक्तिस्तैर्न प्रार्थ्यते तथापि तेषामवश्यं मद्भक्त्या मुक्तिर्भवित्रीत्याह । तैरिति द्वाभ्याम् । दर्शनीया अवयवा येषु तैः विलासलीला मन्दहासयुक्तमीक्षणमवलोकनं वामसूक्तं मधुरभाषणम् उदाराणि सुन्दराणि विलासादीनि येषु तैर्मद्रूपैः हृत आत्मा मनो येषां तान् हृताः प्राणाः ज्ञानकर्मेन्द्रियाणि येषां तान् अनिच्छतः मुक्तिमप्रार्थयमानानपि भक्तिः पूर्वोक्ता मद्भक्तिरण्वीं सूक्ष्मामेकपदीमित्यर्थः, गतिमर्चिरादिकां गतिं प्रति अर्चिरादिगतिर्बहुभिरक्षुण्णत्वादण्वीमित्युक्तं प्रयुङ्क्ते प्रारब्धावसाने प्रवर्त्तयति गमयतीति यावत् ।। ३६ ।।

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

अनेन के ते आत्यन्तिकभक्तिकर्तारो येन तद्भक्तेर्मुक्तेर्गरीयस्त्वं स्यादिति तत्राह । नैकात्म्यतामिति । ये भागवता अन्योऽन्यतः प्रसज्य मिलित्वा मम पौरुषाणि पराक्रमान् सभाजयन्ते संभाव्य वदन्ति शृण्वन्ति च ते मे मया दीयमानामप्यैकात्म्यतां मुक्तिं न स्पृहयन्ति नेच्छन्ति यदि भक्तिसन्तुष्टो हरिः किमपि ददाति तदपि तदाज्ञात्वेनैव गृह्णन्ति न भक्तिफलत्वेन दीयमानं बालोऽपि सन् गृह्णाति किमुत प्रेक्षावानत इदं भगवता स्तूयते ननु तत्त्वमिति मन्दाशङ्का "नेच्छन्ति सायुज्यमपि फलत्वेन हरिर्यदि ददाति भक्तिसन्तुष्ट आज्ञात्वेनैव गृह्णते । तादृशानां सुखाधिक्यं पुनर्मुक्तौ भविष्यती" त्यनेन परिहृतेति कुतो नेच्छन्तीति तत्राह । मत्पादेति । मम चरणनिषेवायाः पूर्णानन्दहेतुत्वादित्यर्थः । भगवदङ्घ्रिसेवायाः पूर्णानन्दहेतुत्वं कथं तद्रतानामप्यन्यत्र प्रवृत्त्या दुःखसम्भवादित्यत उक्तम् मदीहा इति । अनेन च प्रासङ्गिकान्यप्रवृत्तावप्यन्ते मदर्पणेन सापि मत्कर्मवत् मत्प्रीतिजनकत्वेन मदीहैवेत्युक्तं भवति ते च कियन्त इति तत्राह । केचिदिति ।। ३४ ।। ॐ ॐ ऐकात्म्याकाङ्क्षाभावे हेत्वन्तरमाह । पश्यन्तीति । भगवद्रूपसंदर्शनादेः कोऽन्योऽस्ति सुखहेतुरिति अतो नेच्छन्तीत्यर्थः ।। ३५ ।। ॐ ॐ ननु कालशक्तेर्दुरतिक्रमत्वेन किञ्चित्कालं भगवति भक्तिं कुर्वतोऽन्यथापि सम्भवेन संसारस्यादिवृत्तिसम्भवेन भक्तेर्न किमपि प्रयोजनमित्याशङ्क्याह । तैर्दर्शनीयेति । यैः सह वाचं वदन्ति यानि च पश्यन्ति तै रूपैर्हृतात्मनः अपहृतमनसो हृतप्राणस्य तद्विषयीकृतसर्वेन्द्रियचेष्टस्य भक्तिमेवान्विच्छतोऽपि पुंसः प्रसन्नोऽहमण्वीं सूक्ष्मां सायुज्यलक्षणां गतिं मुक्तिं प्रयुञ्जे ददामीत्यन्वयः । उदारशब्दः प्रत्येकमभिसम्बध्यते उदाराणि विलासहासेक्षितवामसूक्तानि येषां तानि तथा वामान्यानुकूलानि सूक्तानि शोभनवचनानि ।। ३६ ।।

## श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

तस्यामानुषङ्गिकगुणमाह । जरयतीत्यर्द्धेन ।। ३३ ।। ॐ ॐ ननु पूर्वं मुक्तिः फलत्वेनोक्ता कथं तस्या गरीयसीत्वम् । तत्राह । नैकात्मतामित्यादि केचिदसाधारणभक्तिरसिका ईहाभिलाषस्तस्माद्भक्त्याभास एव पूर्वेषां जायते इति भावः ।। ३४ ।। ॐ ॐ रूपाणीति । वासना प्रसङ्गयोर्नानाभेदेन साकमिति । मिथो मिलित्वेत्यर्थः ।। ३५ ।। ॐ ॐ स्वकर्म्मफलनिर्दिष्टामित्यादिरीत्या दैन्येन शुद्धभक्तिमात्रेच्छुत्वादनिच्छतोऽपि अण्वीं सूक्ष्मां प्रकृत्यतीतत्वेन दुर्ज्ञेयां पार्षदत्वलक्षणाम् ।। ३६ ।।

## श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

परस्या रागानुगायास्तु जात्यैवोत्कर्षः उदाहरणञ्च न कर्हिचिदिति पद्यम् । अस्वाभाविक्यास्तु स्वाभाविकीभ्यां सकाशात् प्रमाणेन जात्या च निकर्षः उदाहरणं चेमं लोकं तथैवामुमित्यादि पद्यद्वयमस्या द्विविधाया अपि भक्तेर्निष्कामत्वादनुसंहितं फलं सैव भक्तिरननुसंहितं फलं तु मोक्षस्तमाह । जरयतीति । या भक्तिः कोशं लिङ्गशरीरं जरयति क्षपयति किञ्च ज्ञानहेतुकान्मोक्षादस्य मोक्षस्य दृष्टान्तेन वैलक्षण्यमाह । निगीर्णं भुक्तमन्नादिकमनलो जाठरो यथा जरयतीति । स हि जाठरानलो देहपुष्ट्यन्यथानुपपत्तेर्भुक्तस्यान्नादेरसारांशमेव जरयति सारांशेन तु प्राणेन्द्रियादीनि सप्तधातूंश्च पुष्यति येनैवोजःसहोबलवान् देहो भवति तथैव भक्तिर्मायिकानेव शब्दादींस्तत्करणकर्त्रादींश्चासारांशानेव जरयति न तु सारांशान् भगवत्सम्बन्धिनः शब्दादीन् प्राकृतांस्तानिन्द्रियादींश्च जरयति "चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रम्" इत्यादि श्रुतेः, यैरेव भक्तानां देहः सिद्धो भवति । अत एव मायिकोऽसारांश एव लिङ्गकोशो देहेन्द्रियादिशब्दैः शास्त्रेषूच्यते । यथा "देहेन्द्रियासुहीनानां विकुण्ठपुरवासिना"मित्यादि । यथा च पुरुषप्रयत्नं विनैव जाठरोऽग्निर्भुक्तान्नादिकं जरयति येन प्रकारेण जरयति तं प्रकारञ्च पुरुषो न जानात्येवं मोक्षार्थं किमप्ययतमानं श्रवण-

कीर्त्तनादिकमेव नित्यं कुर्वाणं तन्माधुर्य्यास्वादवन्तं भक्तजनं भक्तिः संसारान्मोचयति भक्तस्तु केन प्रकारेण कदा मे मुक्तिरभूदिति नानुसंधत्ते । यद्वक्ष्यते "त्वत्पादपोतेन महत्कृतेन कुर्वन्ति गोवत्सपदं भवाब्धि" मिति । पथि गच्छतः पुंसो गोष्पदलङ्घनानुसन्धानं यथा न भवति तथेति भक्तानां त्रिभूमिकब्रह्मज्ञानाभावेऽपि । "नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन । यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनुं स्वाम् ॥" इति श्रुतेर्भगवत्कारुण्याद्भक्त्या तद्रूपगुणलीलैश्वर्य्यमाधुर्य्यानुभवरूपाज्ज्ञानादेव मोक्षः "तमेव विदित्वा अतिमृत्युमेति" इति श्रुतावप्येवकारेण मुक्तौ तस्यैव ज्ञानस्य कारणत्वेनोक्तस्तज्ज्ञानं चोक्तप्रकारकमेव । सर्व्वथा तत्स्वरूपज्ञानन्तु "यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह" इति "यस्यामतं तस्य मतं मतं यस्य न वेद सः" इति "द्युपतय एव ते न ययुरन्तमनन्ततया" इत्यादिश्रुतिस्मृतिभ्यो न कस्यापि सम्भवत्येव । जीवब्रह्मैक्यरूपा मुक्तिस्तु भक्तैस्त्याज्यैवेत्यग्रे वक्ष्यते । किञ्च भुक्तमन्नादिकं जाठरानलो भोजनक्षणत एव जरयितुं प्रवृत्तोऽपि त्रिचतुर्यामानन्तरमेव सम्यक्तया जरयति यथा तथा भजनक्षणत एव शोकमोहाद्यात्मकं संसारं नाशयितुं प्रवृत्तापि भक्तिः किञ्चित् कालविलम्बेनैव सम्यक्तया नाशयतीत्यतो भजनदशायां शोकमोहाद्यनपगमेऽपि भक्तेषु संसारोऽयमिति न प्रत्येतव्यमिति ज्ञेयम् । तदेवं गुरूपदिष्टमन्त्रवती भक्तिशास्त्रोक्तविध्यनुसारिणी अन्याभिलषिताशून्या ज्ञानकर्म्मादिरहिता भगवति श्रोत्रादीन्द्रियाणां वृत्तिर्भक्तिः । सा चाल्पप्रमाणा साधनभक्तिरस्वाभाविकी भवति, सैव पूर्णप्रमाणा साध्यभक्तिः स्वाभाविकी भावभक्तिर्भवति । सैव काचिदल्पप्रमाणापि जात्यैवाधिक्यात्स्वाभाविकी चेद्रागानुगा नाम्नी साधनभक्तिः, सा च जातिप्रमाणाभ्यां पूर्णा रागानुगीयभावभक्तिर्भवतीति विवेको भक्तिरसामृतसिन्धौ ज्ञेयः ॥ ३३ ॥ ❀ ❀ लक्षणमुक्त्वा उदाहरणमाह सप्तभिस्तत्र प्रथमं स्वाभाविक्या भावभक्तेरुदाहरणं चतुर्भिर्वदन्नेवानिमित्तेत्येतत्सहेतुकं स्पष्टयति । नेति । एकात्मतां ब्रह्मैक्यरूपायै मुक्त्यै न स्पृहयन्ति इति सिद्धेः सकाशाद्गरीयस्त्वम् । ननु केन सुखेन पूर्णास्ते ब्रह्मसुखं न रोचयन्ति तत्राह । मम पादयोः सर्वेन्द्रियैर्या सेवा तस्यामेव न तु कर्म्मज्ञानादिषु अभि शास्त्राभिमुख्येन रता अत्यासक्तिमन्तः अनेन भक्तेर्भगवद्विषयत्वं सर्व्वेन्द्रियवृत्तिरूपत्वं कर्म्मज्ञानादिराहित्यं शास्त्रानुसारित्वं स्वाभाविकत्वञ्चोक्तम् । मय्येव मत्सौन्दर्य्यमाधुर्य्याद्यास्वादन एव ईहा वाञ्छा येषां ते इत्यन्याभिलाषशून्यत्वं प्रसज्यासज्य पौरुषाणि श्रीगोवर्धनोद्धरणादिलीलामृतानि सभाजयन्ते सस्तुतिकमास्वादयन्ति । तेन चरणसेवानन्दाभावात् सौन्दर्य्यसौरभ्याद्यनुभवाभावात् लीलामृतास्वादनाभावाच्च ब्रह्मसुखं न रोचयन्तीति मुक्तावस्पृहायां हेतुत्रयमुक्तम् ॥ ३४ ॥ ❀ ❀ यतः सायुज्यपर्य्यन्तेषु फलेषु स्पृहारहिता अतस्ते मत्त एतत्प्राप्नुवन्तीत्याह द्वाभ्याम् । पश्यन्तीत्युपलक्षणं शृण्वन्ति जिघ्रन्ति स्वादयन्तीत्याद्यपि रूपाणीत्युपलक्षणं शब्दगन्धरसस्पर्शादीनां च दिव्यान्यप्राकृतानि वरप्रदानि अभीष्टसेवाप्रदानि । यद्वा हे भक्ताः ! वरं वृणुतेत्याद्युक्तिमन्ति साकं मया सार्धं वदन्ति । "न कामयेऽन्यं तव पादसेवनादकिञ्चनप्रार्थ्यतमाद्वरंविभो" इति "न पारमेष्ठ्यं न महेन्द्रधिष्ण्यमित्याद्युच्चारयन्ति स्पृहणीयामिति तद्वचःशुश्रूषयैव मया । वरं वृणुतेत्याद्युच्यते नत्वन्यवरदित्सा ममापि तेभ्य इति भावः । नित्यं परमेश्वरानुभवसुखं भक्तावधिकमिति श्रीस्वामिचरणाः ॥ ३५ ॥ ❀ ❀ मद्दर्शनादिमाधुर्य्येणैव सचमत्कारमनुभूयमानेन ब्रह्मसायुज्यस्यारोचकत्वमुत्पाद्यत इत्याह । तैरिति । दर्शनीया अतिमनोहरा ये अवयवाः श्रीकृष्णरामाद्यङ्गानि तैः उदारा भक्ताभीष्टप्रदातारो विलासादयो येषु तैर्हृत मनःप्राणत्वादनिच्छतोऽपि भक्तान् भक्तिः अण्वीं गतिं प्रयुङ्क्ते भो भक्ताः ! ब्रह्मैकरूपां मुक्तिं गृह्णीतेति प्रयोगमात्रं करोति न तु दातुमवकाशं लभते । भगवतो लीलाविलासहासावलोकमधुरभाषणैस्तेषामात्मनां चोरितत्वेन सम्प्रदानाभावादिति भावः । नन्वेवं चेत्तर्हि परमविज्ञा भक्तिरनिच्छतः तान् कथमेवं प्रयुङ्क्ते, उच्यते कश्चिच्चिन्तामणिस्पर्शहीरकपद्मरागादिमहारत्नानां दाता खल्वर्थिभ्यः कनकमपि दातुं दर्शयत्यन्यथा कनकमस्य दातुर्नास्तीति कनकमात्रार्थिभिर्मन्दधीभिरप्रतिष्ठा क्रियेतेतिवद्भक्तिरपि मुक्तिमात्रार्थिज्ञानिमानिलोकावज्ञाननिरासार्थं स्वीयांस्तानपि तथा प्रयुंक्ते, न पुनर्मुक्तिमेव तेभ्यो दित्सतीत्यवधेयम् । यद्वा भक्तिरेव तान् हृतात्मनो जनान् अण्वीं गतिमनिच्छतः प्रयुंक्ते अण्वीं गतिम् । युंक्ते गतिं न एषयति नाभिलाषयति अनिच्छायाः प्रयोजिका भवतीत्यर्थः । यथा कुर्व्वन्तं प्रयुंक्ते इति कारयतीत्यनयोर्णिच्प्रत्ययवाक्यणिजन्तयोस्तुल्य एवार्थः । तथाहि न पाचयत्ययमिति वक्तव्ये न पचन्तं प्रयुंक्ते इति न पचन् प्रयोजकोऽयमिति च यथोच्यते तथैव भक्तिर्भक्तजनान् अण्वीं गतिमनिच्छतः प्रयुङ्क्ते इत्युक्तम् । यद्वा "स्वकर्मफलनिर्दिष्टां यां यां योनिं व्रजाम्यहम्" इत्यादिरीत्या दैन्येन शुद्धभक्तिमात्रेच्छुत्वादनिच्छतोऽपि अण्वीं प्रकृत्यतीतत्वेन दुर्ज्ञेयां पार्षदत्वाख्यां गतिं प्रयुङ्क्ते प्रापयतीति सन्दर्भः अण्वीं गतिमनिच्छतो जनान् विलासादिभिर्हृतमनःप्राणान् कुरुत इति श्रीरूपगोस्वामिचरणाः । अनिच्छतः इच्छाहीनानपि अण्वीं गतिं प्रयुङ्क्ते प्रापयतीति श्रीस्वामिचरणाः । एतद्व्याख्यानमपि नात्यसङ्गतं यथेन्द्रियैः पृथग्द्वारैरित्यत्र भक्तानां सर्व्वसुखानां सर्व्वसुखानुभवस्याग्रे व्याख्यास्यमानत्वात् । ततश्च भक्तिरिच्छाहीनानपि तान् बलाद्ब्रह्मसुखमप्यनुभावयितुं भक्तिं प्रापय्य "ते तु ब्रह्महृदं नीता मग्नाः कृष्णेन चोद्धृता" इति रीत्या ततो निष्क्रमय्य भगवद्धाम्नि तांस्तत्पार्षदान् विधाय भजनानन्दैः सदा निमज्जयतीति तात्पर्य्यमुत्तरश्लोकार्थावगाहनाज्ज्ञेयमिति च केचिदाहुः ॥ ३६ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

मुक्तितोऽपि भक्तेर्गरिष्ठत्वं प्रपञ्चयति । नैकात्म्यतामिति । एकोनिःसमानातिशयः आत्मा एकात्मा भगवान् तस्य भावस्तत्ता तां तत्साम्यं तत्साधर्म्यमित्यर्थः । न स्पृहयन्ति नेच्छन्ति पौरुषाणि परमपुरुषासाधारणानि चरित्राणि अन्योऽन्यतः प्रसज्य सभाजयन्ते अनुमोदयन्ति ॥ ३४ ॥ ❀ ❀ हे अम्ब ! ते सन्तः प्रसन्नानि वक्त्राणि अरुणानि लोचनानि च येषु तानि मे रूपाणि पश्यन्ति ध्यायन्ति रूपैः साकं सह अन्योऽन्यं वा स्पृहणीयां वाचं वदन्ति अवतारवेलासु च तत्रत्यास्तानि रूपाणि पश्यन्ति तैः सह वा वाचं वदन्ति चेति बोध्यम् ॥ ३५ ॥ ❀ ❀ यद्यपि ते मुक्तिं नेच्छन्ति तथापि भक्तिस्तान् मुक्तिं प्रापयत्येवेत्याह । तैरिति । दर्शनीया ये अवयवाः पादपद्मादयस्तैर्विलासो लीला हासो मंदहासश्च ईक्षितं च वामं मधुरं सूक्तं च तैरुदारैः परमानन्ददैर्विलासादिभिश्च हृत आत्मा चित्तं येषां तान् हृताः प्राणाः इन्द्रियाणि येषां तान् अनिच्छतः मुक्तीच्छाहीनानपि भक्तिः अण्वीं भगवत्पराङ्मुखैः नानाकुतर्कविमोहितैरलक्ष्यां गतिं गम्यते इति गतिः भगवद्भावापत्तिस्तां प्रयुङ्क्ते प्रापयति ॥ ३६ ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

तादृशभक्तानां ज्ञानिनामिवाऽग्रिमकृत्यमाह प्रकारद्वयेन । तत्र प्रथमाह—त्रिभिर्नैकात्मतामित्यादिभिः । जीवतां साधनावस्था फलरूपा तथा परा । सायुज्यं च तृतीयं स्यादतो नोत्क्रान्तिप्रापणे ॥ १ ॥ तत्र प्रथमं भक्तानां साधनावस्थामाह—नैकात्मतामिति । इयं हि फलरूपा भक्तिर्ज्ञातव्या । ते भक्ता यावज्जीवन्ति च तावत्फलरूपां भक्तिं कुर्वन्तीत्यर्थः । फलरूपता तदैव भवति, यदा भजनाद्रसोऽभिव्यक्तो भवति बहुधा । तस्या अभिव्यक्तेर्निदर्शनम्, भगवत एकात्मतां सायुज्यरूपं फलं न स्पृहयन्ति । प्रार्थना दूरे । ते भक्तेषु विरलाः प्रसङ्गात् निरूप्यन्ते । केचिदिति दुर्लभाः । तेषां कायवाङ्मनोवृत्तिः स्वभावत एव भगवति भवतीत्याह—मत्पादेत्यादिना । मम पादसेवायामेव अभिरतिर्मनोवृत्तिर्येषाम् । सर्वतो गत्वा भगवत्कार्यं कर्तव्यमिति । पद्भ्यां सेवेत्यर्थः । अन्यत्तु सुखं गमनानन्तरसाध्यम् । इयं मनोवृत्तिर्निरूपिता । कायिकीमाह—मदीहा इति । मत्संबन्धिन्येव ईहा चेष्टा येषाम् । तेषां वाचनिकीमाह—अन्योन्यत इति । सर्वे भागवता एकरूपा भगवदीयाः प्रसज्ज्यासक्तिं कृत्वा, मम भगवतः, पौरुषाणि सभाजयन्ते । अन्योन्यमुक्तान्य[1]तिपौरुषाणि संमानयन्ति प्रकटं सुहृष्टाः । स्वकार्यनिर्धारविचारहेतौ प्रमाणमेतद्गणयन्ति नाऽन्यत् ॥३४॥ ❀ ❀ तेषां फलावस्थामाह—पश्यन्तीति । ते मे रूपाणि पश्यन्ति, निरन्तरं भगवत्साक्षात्कारो भवति । यथा मित्रैः सह क्रीडन्ति प्रथमतः पश्यन्ति । भगवतो रूपाणि वर्णयति रुचिराणि—श्रवतंसानि कर्णाभरणानि येषाम् । अनेन वृन्दावनादौ भगवत्साक्षात्कारो भवतीत्युक्तम् । प्रसन्नानि वक्त्राणि, अरुणानि लोचनानि येषामिति राममिव नृसिंहमिव पश्यतीत्यर्थः । तेषामिष्टोत्पादनार्थं राजसभावमिष्टानां स्थित्यर्थं च सात्त्विकभावं प्रकटयन्तीति वा । रूपाणीति परमोपासकानामेकरूपं कदाचित् साक्षात्कृतं भवति, तेषां तु बहूनि तानि च दिव्यानि, लौकिकबुद्ध्या न गृहीतानि । अलौकिकभावं वा प्रकटयन्ति, तान् प्रत्येव प्रकटानीति । तथा सति नातिप्रसक्तिः । तेषामन्यदीयव्यावृत्त्यर्थं निदर्शनान्तरमाह—वरप्रदानीति । न ह्यन्येन वरं दातुं शक्यते । प्रसन्नाद्रूपादेतेषां वैलक्षण्यमाह—साकं वाचमिति । जीवन्त एवैते एतस्मिन्नेव लोके भगवता सह स्पृहणीयां वाचं वदन्ति, यथा मित्रैः सह इष्टालापाः क्रियन्ते ॥ ३५ ॥ ❀ ❀ तैरिति । तैः पूर्वोक्तरूपैरनुभवसमय एवानन्दजनकैः । दर्शनीया अवयवा येषाम् । उदारो विलासः, हासपूर्वकमीक्षितम्, वामं मनोहरं सूक्तं वाक्यं च येषाम् । तैर्हृतान्तःकरणानां वशीकृतेन्द्रियाणां च सा पूर्वोक्ता भक्तिः, तामनिच्छतोऽप्यण्वीं गतिं सायुज्यं प्रापयति । भक्तस्य चतुर्विधपुरुषार्थसिद्ध्यर्थं चतूरूपत्वं च साध्यते । तत्र दर्शनीया अवयवाः कामपूरकाः, उदारो विलासोऽर्थजनकः, हासपूर्वकमीक्षितं धर्मजनकम्, वामसूक्तानि मोक्षजनकानि । कामो हि विषयसौन्दर्येण अन्तःशक्त्या च सिद्ध्यति, अतो दर्शनीयेति विशेषणं बहिरलौकिकसौन्दर्यार्थम् । विलासो ह्यर्थस्य नानाप्रकारत्वाय । उदारत्वं तस्य सर्वोपकारकत्वाय । भगवतो हि लीला सर्वेषां सर्वपुरुषार्थदायिनीति भगवत्त्वम्[2] । हासो देहादावध्यासजनकः, अन्यथा निरन्तरं धर्मो न सिद्ध्येत् । हासपूर्वकं च ज्ञानं धर्मजनकमेव । सूक्तं हितकारि, अविद्यानाशकम् । वामं परमानन्ददायकमिति । सूक्ष्मा हि गतिरेकरूपानन्दस्वरूपा, रूपाणि चाऽनन्तानन्दरूपाणि, अत एवाऽनिच्छा अत एवाऽन्तःकरणेन्द्रियाणां च तैराकर्षणम्, सर्वेन्द्रियसुखरूपत्वात् । स भगवान् स्वगृहं गच्छन् तानपि नयति । ते तु इन्द्रियाणि मनश्च नयन्ति । भक्तिस्तु फलावश्यम्भाविनी कालादीनामगम्यमतिसूक्ष्ममेव भगवदात्मकं फलं प्रयच्छति ॥ ३६ ॥

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

नैकात्मतामित्यत्र । प्रकारद्वयेनेति । ऐहिकपारलौकिकभोगप्रकारभेदेन । स्पृहाभावबोधकश्लोकत्रयतात्पर्यं कारिकया वदन्तस्तादृशां सद्योमुक्तौ प्रकारभेदे हेतुत्वं स्पृहाभावस्याऽऽहुः—जीवतामित्यादि । अत इत्यादि । यस्मादेतादृशं तेषामवस्थात्रयम-

---

१. अपि. ख. । २. भगवत्त्वाय. ख. ग. ।

तत्तदिन्द्रियाणां देहादुत्क्रान्तिदेवतात्वप्रापणं च नोक्तमित्यर्थः ॥ ३४ ॥ ❀ ❀ पश्यन्तीत्यत्र । नन्ववतीर्णस्य भगवतः सर्वेषां दर्शनविषयत्वेनाऽतिप्रसङ्गात् कथं दिव्यत्वमित्याकाङ्क्षायामाहुः—तानीत्यादि । यानि दिव्यानि तान्येव भक्तार्थं भूमौ प्रकटानि, इति हेतोर्दर्शनस्य भक्तार्थत्वे सति तदर्थसर्वगोचरीभावाद्दिव्यत्वस्य व्यभिचाररूपा अतिप्रसक्तिर्नेत्यर्थः । अन्यदीयव्यावृत्त्यर्थमिति । परार्थत्वलौकिकत्वव्यावृत्त्यर्थम् । रूपादिति ल्यब्लोपे पञ्चमी । वैलक्षण्यमिति । अन्येभ्यो दर्शनकर्तृभ्य आधिक्यम् ॥ ३५ ॥

### श्रीगिरिधरकृता बालप्रबोधिनी

तया भक्त्या तु तस्य संसारविमुक्तिः स्वप्रयत्नं विनैव भवतीत्याह—जरयतीति । या तु भक्तिः कोशमनन्तजन्मानुष्ठितकर्मवासनावासितं संसारहेतुभूतं प्राकृतं लिङ्गशरीरमाशु शीघ्रमेव जरयति क्षपयति । तत्र दृष्टान्तमाह—निगीर्णं भुक्तमन्नमनलो जाठराग्निर्यथा यत्नान्तरं विनैव जरयति तद्वदिति ॥ ३३ ॥ ❀ ❀ तर्हि मुक्तेर्भक्तेः कथं गरीयस्त्वमित्याकाङ्क्षायां भक्तौ भगवदनुभवसुखस्याधिक्यादित्याह—नेति । ये भागवता मद्भक्तास्ते मे ममैकात्मतां सायुज्यमपि न स्पृहयन्ति सालोक्यादेस्तु का वार्त्तेति शेषः । के त इत्यपेक्षायां तान् विशिनष्टि—मत्पादयोः सेवायामभिरता आसक्ताः मदीहाः मदर्थमेवेहाः सर्वेन्द्रियचेष्टा येषां ते । अन्योन्यतः परस्परं प्रसज्य मिलित्वा मम पौरुषाणि पराक्रमान् सभाजयन्ते श्लाघयन्ति । एवम्भूता दुर्लभा इत्याह—केचिदिति ॥ ३४ ॥ ❀ ❀ मातृत्वात्त्वाग्रेऽत्र न किञ्चित्प्ररोचनार्थं अन्यथा वदामि किन्तु यथार्थमेवेति विश्वासार्थं सम्बोधयति—हे अम्बेति । ते सन्तो मे मम रूपाणि पश्यन्ति, मया साकं सह स्पृहणीयां वाचं च वदन्तीत्यन्वयः । इदं चान्येषां घ्राणादिज्ञानेन्द्रियाणां करादिकर्मेन्द्रियाणां गन्धादितत्तद्विषयाणां च उपलक्षणम् । दर्शनादिना तेषां परमानन्दं सूचयन् रूपाणि विशिनष्टि—रुचिराणि अतिसुन्दराणि । तदेव प्रपञ्चयति–प्रसन्नानि वक्त्राणि अरुणानि च लोचनानि येषु तानि । वरप्रदानि दर्शनादिनैव सर्वमनोरथपूरकाणि । तत्र हेतुमाह—दिव्यानीति, अप्राकृतानीत्यर्थः ॥ ३५ ॥ ❀ ❀ दर्शनीया अवयवा मुखनेत्रादयो येषु तैः उदाराणि विलासादीनि येषु तैर्मद्रूपैः हृत आत्मा मनो येषां तान् तथा हृताः प्राणाः ज्ञानकर्मेन्द्रियाणि येषां तान् अतो देहान्तरं लोकान्तरं च अनिच्छतोऽपि मद्भक्तिरेव अण्वीं सूक्ष्मां देहेन्द्रियासुहीनानां वैकुण्ठपुरवासिनां 'प्रयुज्यमाने मयि तां शुद्धां भागवतीं तनुम्' इत्याद्युक्तां अप्राकृतीं दिव्यां गतिं तनुं प्रयुङ्क्ते प्रापयत्येवेत्यन्वयः । विलासो लीला हासो मन्दहासः ईक्षितं दर्शनम् । वामसूक्तं मधुरभाषणम् । तेषामुदारत्वं आनन्दपूर्वकत्वम् ॥ ३६ ॥

### हिन्दी अनुवाद

वही भगवान्‌की अहैतुकी भक्ति है । यह मुक्तिसे भी बढ़कर है; क्योंकि जठरानल जिस प्रकार खाये हुए अन्नको पचाता है, उसी प्रकार यह भी कर्मसंस्कारोंके भंडाररूप लिङ्गशरीरको तत्काल भस्म कर देती है ॥ ३३ ॥ ❀ ❀ मेरी चरणसेवामें प्रीति रखनेवाले और मेरी ही प्रसन्नताके लिये समस्त कार्य करनेवाले कितने ही बड़भागी भक्त, जो एक-दूसरेसे मिलकर प्रेमपूर्वक मेरे ही पराक्रमोंकी चर्चा किया करते हैं, मेरे साथ एकीभाव ( सायुज्यमोक्ष ) की भी इच्छा नहीं करते ॥ ३४ ॥ ❀ ❀ मा ! वे साधुजन अरुण-नयन एवं मनोहर मुखारविन्दसे युक्त मेरे परम सुन्दर और वरदायक दिव्य रूपोंकी झांकी करते हैं, और उनके साथ सप्रेम सम्भाषण भी करते हैं, जिसके लिये बड़े-बड़े तपस्वी भी लालायित रहते हैं ॥ ३५ ॥ ❀ ❀ दर्शनीय अङ्ग-प्रत्यङ्ग, उदार हास-विलास, मनोहर चितवन और सुमधुर वाणीसे युक्त मेरे उन रूपोंकी माधुरीमें उनका मन और इन्द्रियाँ फँस जाती हैं । ऐसी मेरी भक्ति न चाहनेपर भी उन्हें परमपदकी प्राप्ति करा देती है ॥ ३६ ॥

**अथो विभूतिं मम मायाविनस्तामैश्वर्यमष्टाङ्गमनुप्रवृत्तम् ।**
**श्रियं भागवतीं वाऽस्पृहयन्ति भद्रां परस्य मे तेऽश्नुवते तु लोके ॥ ३७ ॥**
**न कर्हिचिन्मत्पराः शान्तरूपे नङ्क्ष्यन्ति नो मेऽनिमिषो लेढि हेतिः ।**
**येषामहं प्रिय आत्मा सुतश्च सखा गुरुः सुहृदो दैवमिष्टम् ॥ ३८ ॥**
**इमं लोकं तथैवामुमात्मानमुभयायिनम् । आत्मानमनु ये चेह ये रायः पशवो गृहाः ॥ ३९ ॥**
**विसृज्य सर्वानन्यांश्च मामेवं विश्वतोमुखम् । भजन्त्यनन्यया भक्त्या तान्मृत्योरतिपारये[1] ॥ ४० ॥**

### श्रीधरस्वामिविरचिता भावार्थदीपिका

विभूत्यादिकं च तत्राधिकमित्याह । अथो अविद्यानि वृत्त्यनंतरं विभूतिं सत्यलोकादिगतां भोगसंपत्तिमणिमाद्यष्टांगमैश्वर्यमनुप्रवृत्तं भक्तिमनु स्वत एव प्राप्तमपि भागवतीं च श्रियं वैकुंठस्थां संपत्तिमस्पृहयंति । ते यद्यपि न स्पृहयंतीत्यर्थः । तथापि

---

१. प्रा० पा०—रभिपारये ।

लोके वैकुंठे अश्नुवते तु प्राप्नुवंत्येव ॥ ३७ ॥ ॐ ॐ नन्वेवं तर्हि लोकत्वाविशेषात्स्वर्गादिवद्भोक्तृभोग्यानां कदाचिद्विनाशः स्यात्तत्राह। शांतरूपे यद्वा शांतं शुद्धसत्त्वं तद्रूपे वैकुंठे मत्पराः कदाचिदपि न नंक्ष्यंति भोग्यहीना न भवंति अनिमिषो मे हेतिर्मदीयं कालचक्रं च नो लेढि तान्न ग्रसति। तत्र हेतुर्येषामिति। सुत इव स्नेहविषयः सखेव विश्वासास्पदम्। गुरुरिवोपदेष्टा सुहृदिव हितकारी इष्टं दैवमिव पूज्यः। एवं सर्वभावेन मां ये भजंति तान्मदीयं कालचक्रं न ग्रसतीत्यर्थः ॥ ३८ ॥ ॐ ॐ एवंभूतां तु मुक्तिमेकांतभक्तेभ्यो ददामीत्याह। इममिति द्वाभ्याम्। उभयार्थिनं लोकद्वयगामिनमात्मानं सोपाधिकमात्मानमनु ये पुत्रकलत्रादयो ये च पश्वादयः। रायः धनानि ॥ ३९ ॥ ॐ ॐ अन्यांश्च परिग्रहान् मृत्योः संसारादतिपारयेऽतितारयामि ॥ ४० ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

तत्र भक्तिदत्तमुक्तौ। इत्यर्थ इति। 'अमानोनाः प्रतिषेधे' इत्यव्ययचतुष्केऽकाररूपमप्यव्ययं निषेधेऽस्तीति भावः। यद्यपि न स्पृहयंति तथापीति। चक्रवर्ती तु-किञ्च कर्मज्ञानयोगादीनां भक्त्यविनाभावसिद्धत्वात्तत्तद्विनाभूताया अपि भक्तेस्तत्तत्फलदायित्वेन 'यत्कर्मभिर्यत्तपसा' इत्यादौ श्रुतत्वात्सर्गादीत्यपि। वस्तुतो भक्तेरेव फलानीति शुद्धभक्तिमंतो मल्लोकवासिन एव मद्भक्तजनानंतभूतान्येव सर्वसुखान्यनुभवंतीत्याह—अथो इति। अविद्यानिवृत्त्यनंतरमेव मायाचितां विभूतिं सर्वब्रह्मांडगतसुखानि। 'मायिनस्तान्' इति च पाठः। अणिमाद्यष्टयोगैश्वर्यसुखं चानुप्रवृत्तं भक्तिमनु स्वत एव प्राप्तं तथा भागवतीं श्रियं वैकुंठस्थां सार्ष्टिसंज्ञां सम्पत्तिं निश्चितं चकाराद् ब्रह्मानंदं चास्पृहयंति मदीयहासावलोकादिहृतात्ममनःप्राणत्वाद्यद्यपि तेभ्यो न स्पृहयंति तथापि परमेश्वरस्य मे लोके वैकुंठेऽश्नुवत इति स्ववात्सल्ये विशेषो दर्शितः ॥ ३७ ॥ ॐ ॐ अत्राक्षिपति—नन्विति। अप्राप्तज्ञानत्वात्तस्याः शांतरूपत्वामंत्रणं न संजाघटीति चेत्तत्राह—यद्वेति। मत्परा वैकुण्ठस्थाः तत्र कालचक्राग्रासे प्रियो लक्ष्म्यादीनामिव, सुतो भवदादीनामिव, सखा श्रीदामादीनामिव, गुरुः प्रद्युम्नादीनामिव, सुहृद एक एव नानाप्रकारः पांडवानामिव, दैवमिष्टमुद्धवादीनामिव, अतस्त्वत्वाभिजाते मयि सुतस्नेहरूपैव भक्तिस्तवोचितेति च दर्शितम्। अन्तिमनिष्ठा च तस्यास्तथा "ज्ञाततत्त्वाप्यभून्नष्टे वत्से गौरिव वत्सला" इति। येषां मां विना न कश्चिदपरः प्रेमभाजनमस्तीत्यर्थः। तथा चोक्तं नारायणव्यूहस्तवे "पतिपुत्रसुहृद्भ्रातृमित्रवत्पितृवद्धरिम्। ये ध्यायन्ति सदोद्युक्तास्तेभ्योपीह नमो नमः" इति "यमेवैष वृणुते तेन लभ्यः" इत्यादिश्रुतेः। यं प्रियत्वेन पितृत्वेन भ्रातृत्वेन सखित्वेन पितृपुत्रादित्वेन वा वृणुते इति श्रुतिपदार्थः। इत्यर्थ इति। "न स पुनरावर्त्तते" इति श्रुतेः। "मां प्राप्यैव तु कौंतेय पुनर्जन्म न विद्यते" इति गीतोक्तेश्चेति भावः। सुहृद इति। बहुत्वं सौहार्दस्य नानाभेदापेक्षम्। इदं रागानुगायाः स्वाभाविक्या भक्तेरुदाहरणम् ॥ ३८ ॥ ॐ ॐ एवंभूतामुक्तस्वरूपाम्। एकांतभक्तेभ्योऽनन्यभक्तेभ्यः। चक्रवर्त्ती तु—अस्वाभाविक्याः साधनभक्तेरुदाहरणमाह—द्वाभ्याम्। इमं दृष्टभोगासक्तिममुमदृष्टभोगासक्तिम्, आत्मानमहंतास्पदे भोक्तरि चासक्तिमिति। आदिना भ्रात्रादिग्रहः। द्वितीयादिना गृहादिग्रहः। "रा पुंसि स्वर्णवित्तयोः" इति मेदिनी ॥ ३९ ॥ ॐ ॐ विसृज्येति। यथैव भोगाद्यासक्तिर्भोगादिप्रशंसागम्या तथैव तत्तदासक्तित्यागस्तत्तन्निंदागम्य इति "जुषमाणश्च तान्कामान्दुःखोदर्कांश्च गर्हयन्" इत्युक्तेः। एवं प्रियत्वादिप्रकारेण विश्वतोमुखं तत्तद्भावानुसारेणानंताविर्भावम्। यद्वा। यस्यां दिशि ते यान्ति तत्रैवाहं तेषामभिमुख एव वर्त्ते इत्यर्थमाह विश्वनाथः। अनन्यया भावान्तरामिश्रयेति संदर्भः। देवतान्तरभक्तिज्ञानकर्मादिशून्ययेति चक्रवर्ती। मृत्योः संसारसिन्धोर्भक्तिमात्राभिलाषित्वेन संसारपारमनिच्छतोपि तानतिक्रम्य पारये पारं "यस्तस्य पारेऽभिविराजते विभुः" इत्युक्तेर्मां प्रापयामीत्यर्थः ॥ ४० ॥

## श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

तत्र। भक्तौ मुक्तेरधिकं यद्यपि सत्यलोकादिभोग्यसम्पत्तिस्तत्रत्यानामतितुच्छा तथापि सा तदधीनैवेति विवक्षितम्। "त्वत्पादुके अविरतं परि ये चरन्ति" इत्यादौ "आशासते यदि त आशिष ईश! नान्य" इत्युक्तेः "तेषां सर्वेषु लोकेषु कामचारो भवति" इति श्रुतेश्च क्रियया सह नञ्समासस्यासार्वत्रिकत्वादित्यर्थ इत्युक्तम्। मायया भक्तविषयककृपयाऽऽचितां सम्पादितामिति तेषामनर्थरूपत्वं व्यावृत्तं मायाविन इति पाठस्त्वागन्तुकः प्रकृतानुपयोगात् नु एव ॥ ३७ ॥ ॐ ॐ लोकत्वाविशेषात्। वैकुण्ठस्यापि लोकत्वेन तुल्यत्वात् पूर्वार्थे सम्बोधनस्य प्रकृतानुपयुक्तत्वेनाधिकत्वाद्यद्वेति। शुद्धसत्त्वं स्वप्रकाशशक्तिविशेषस्तद्रूपे तत्र कालकृतग्रासाभावे प्रियो लक्ष्म्यादीनामिव कान्तभावेन भावनीयः। एवमात्मा परमात्मा सनकादीनामिव शान्तभावेन भावनीयः। गुरुः प्रद्युम्नादीनामिव सुहृद एक एव नानाप्रकारतया हितकारी पाण्डवानामिव दैवमिव पूज्यो दासानामुद्धवादीनामिवेति। दास्यभावस्य द्वैविध्यं तत्र गौरवदास्यभावः श्रीप्रद्युम्नादीनां गुरुरयमिति बुद्ध्यालम्बनत्वात् सम्भ्रमदास्यभाववन्तश्चतुर्विधा अधिकृता ब्रह्मादयः आश्रिता कालियजरासन्धबद्धनृपादयः पार्षदाः श्रीमदुद्धवादयः। अनुचराः सुनन्दादय इति एवं सर्वभावो व्याख्यातः। तेन स्वस्ववासनोचितेनैकतमादिना मां ये भजन्तीति व्याख्येयम्। अन्यथा विरुद्धसमवाये रसाभासः प्रसज्येत। किम्वा गोलोकादौ तत्तन्नियतभावानां गोपादीनां सत्त्वात्तदपेक्षयैव व्याख्येयम्। तथा च तन्वाभिजाते मयि शुद्धसुतस्नेहरूपापरा भक्तिरेव तवोचितेति

'काचित्त्वय्युचिता भक्तिः कीदृशी मम गोचरेति' प्रश्नस्योत्तरमपि फलितमिति भावः । अत्र प्रमाणादिविशेषजिज्ञासा चेत्प्रीतिसन्दर्भो द्रष्टव्यः ॥ ३८ ॥ ॐ ॐ इममिति युग्मकम् । एवंभूतां नित्यां मुक्तिं तत्तद्भावेन तत्तद्रूपमत्साक्षात्काररूपां सोपाधिकमशुद्ध-माध्यात्मिकावस्थं जीवं विसृज्य शुद्धं तत्तद्भाववन्तं त्वम्पदार्थं स्वरूपत्वेनोपादायेत्यर्थः । विश्वतोमुखं तत्तद्भावानुसारेणानन्ता-विर्भावमनन्यया एकान्ततया संसारादतितारयामि न ते पुनरावर्त्तन्त इत्यर्थः "अनावृत्तिः शब्दात्" इतिन्यायात् "न स पुनरावर्त्तत" इति श्रुतेः । तथा परमं यः परायणमित्यत्र शङ्करभाष्यम् । परमुत्कृष्टमयनं स्थानं पुनरावृत्तिशङ्कारहितमिति परायणं पुल्लिङ्गपक्षे बहुव्रीहिरिति ॥ ३९ ॥ ४० ॥

### श्रीमद्वीरराघवव्याख्या

अथोऽर्चिरादिगत्या गमनारम्भानन्तरं मम मायया विसृष्टां विशेषेण सृष्टां विभूतिं ब्रह्मलोकपर्य्यन्तभूतिं तथानुप्रवृत्तं भक्तिमनुसृत्य प्रवृत्तमष्टाङ्गमणिमाद्यष्टप्रकारकमैश्वर्यं भागवतीं श्रियं मुक्तिं न स्पृहयन्ति । भागवतीं श्रियमिति दृष्टान्तार्थं यथा भागवतीं श्रियं न स्पृहयन्ति तथा मायाविभूत्यादीनित्यर्थः । कैमुत्यन्यायद्योतनार्थं वा भागवतीं श्रियमेव न स्पृहयन्ति किं मायाविभूत्यादीन्न स्पृहयन्तीति वक्तव्यमिति । अथवा ब्रह्माण्डान्तर्भूतभगवल्लोकस्थश्रियमपि नेच्छन्ति किन्तु ते परस्य प्रकृतिपुरुषविलक्षणस्य मे मम लोके नित्यविभूतावश्नुवते प्राप्नुवन्ति । क्षयिष्णून् सातिशयसुखान् लोकान्न प्राप्नुवन्ति किन्तु निरतिशयसुखं मल्लोकं प्राप्नुवन्ती-त्यर्थः ॥ ३७ ॥ ॐ ॐ ननु लोकत्वाविशेषात् स्वर्गादिवल्लोकस्तृभोग्यभोगोपकरणानां नाशः स्यात्तत्राह । नेति । हे शान्तरूपे ! यद्वा शान्तरूपे शुद्धसत्त्वमयात्मके मल्लोके मदनुभवपराः कर्हिचित्कदाचिदपि न नंक्ष्यन्ति न मदनुभवहीना भवन्ति, मे मदीयम-निमिषो हेतिः कालचक्रं न लेढि न ग्रसति । तत्र हेतुः येषामिति । येषां निरतिशयप्रीतिविषय आत्माहं सुत इव स्नेहविषयः सखेव विश्वासास्पदं गुरुरिव हितोपदेष्टा सुहृद् इव हितकारी इष्टदेवमिव पूज्यः एवं सर्वभावेनोपासीनानहरहरनुष्ठीयमानवर्णाश्रमधर्मानु-गृहीतमदुपासनरूपमत्समाराधनप्रीतोऽहं मद्याथात्म्यानुभवरूपानन्दं प्रापय्य पुनर्नावर्त्तयामीति भगवतोऽभिप्रायः । तथा च भगवता स्वयमेवोक्तम्

मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम् । नाप्नुवन्ति महात्मानः संसिद्धिं परमां गताः ॥
आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन ! मामुपेत्य तु कौन्तेय ! पुनर्जन्म न विद्यते ॥ इति च

श्रुतिरपि "स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसम्पद्यते न च पुनरावर्तते" इत्यादिका । एतेन यदि परमपुरुषा-यत्तं मुक्तैश्वर्यं तर्हि तस्य स्वतन्त्रत्वेन तत्सङ्कल्पान्मुक्तस्य पुनरावृत्तिसम्भावनाशङ्का परास्ता । नहि परमपुरुषः सत्यसंकल्पः अत्यर्थप्रियं ज्ञानिनं लब्ध्वा कदाचिदावर्तयिष्यति य एवमाह—

प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः । उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मतम् ॥
आस्थितः सहि युक्तात्मा मामेवानुत्तमां गतिम् । बहूनां जन्मनामन्ते ज्ञानवान्मां प्रपद्यते ॥
वासुदेवः सर्वमिति स महात्मा सुदुर्लभः ॥ ३८ ॥ इति

नन्वपहतपाप्मत्वादेः सत्यसंकल्पत्वपर्यन्तस्य गुणगणस्य प्रत्यगात्मनः स्वाभाविकस्यैवाविर्भावः, अतो न मुक्तैश्वर्यं परम-पुरुषायत्तमिति चेदुच्यते तस्य तथाविधत्वमेव परमपुरुषायत्तं तस्य नित्यस्थितिश्चेत्तदायत्ता परमपुरुषस्यैतन्नित्यतया नित्येष्टत्वान्नित्य-तया वर्त्तत इति न कश्चिद्विरोधः । एवमेव परमपुरुषभोगोपकरणस्य लीलोपकरणस्य च नित्यतया शास्त्रावगतस्य परमपुरुषस्य नित्येष्ट-त्वादेव तथावस्थानमस्तीति शास्त्रादवगम्यते । एतत्सर्वमभिप्रेत्याह । इममित्यादि द्वाभ्याम् । इमं लोकममुं लोकं परलोकं च विसृज्य उभावपि लोकौ हेयाविति निश्चित्येत्यर्थः । उभौ लोकौ यात्यनेनेत्युभयायिनमात्मानम् उभयलौकिकधर्मसाधनं देहमित्यर्थः । विसृज्य तस्मिन् देहे आत्माभिमानं परित्यज्येत्यर्थः । तथात्मानं देहमनु येऽनुबन्धिनो ये पुत्रकलत्रादयः ये च रायः धनानि पशवो गृहाश्च तानन्यांश्च परिग्रहादीन् विसृज्य तेषु ममतामपोह्येत्यर्थः । विश्वतोमुखं सर्वज्ञं मामेवं सुतसखिगुरुत्वादिभावेनानन्यया विषयान्तरवि-तृष्णया भक्त्या भजन्त्याराधयन्ति तान्मृत्योः संसारादतिपारयेऽत्यन्तं पारं नयामि पुनर्न संसारयामि । एतन्मम नित्येष्ट-मिति भावः ॥ ३९—४० ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

ननु सायुज्यभाजामन्तर्भूमदाहवद् दुःखरूपं स्यादिति तत्राह । अथो इति । ये मम मायया चितां निर्मितां ध्वजच्छत्र-व्यजनादिलक्षणां विभूतिमथो तथा अष्टाङ्गयोगामनुप्रवृत्तमनुप्राप्तमणिमाद्यैश्वर्यं तथा भद्रां सर्वाङ्गसम्पन्नां द्योतमानां श्रियं गवाश्वा-दिसंपदं न स्पृहयन्ति ते परस्य सर्वोत्तमस्य मे लोके सच्चिदानन्दलक्षणे देहेऽश्नुवते व्याप्यसुखमेवानुभूय तिष्ठन्तीत्यन्वयः । हिशब्दो-मुक्तेर्विलक्षणत्वान्न लोकवदित्यर्थद्योतनार्थः । यद्वा । सालोक्यमुक्तिमनेन वक्ति । तथा हि भक्तिज्ञानफलत्वेन विभूतिं सर्वं मह-र्लोकेऽनुवृत्तमष्टाङ्गैश्वर्यमिह लोके च समृद्धामुत्तुङ्गप्रासादिसंपदं च नेच्छन्ति, परिपक्वैराग्यसमुद्रमग्नत्वात्ते मे लोके वैकुण्ठादावति-

सुखमश्नुवते इत्यतस्त्वमपि स्वर्गादीच्छां हित्वा सर्वोत्तमः सच्चिदानन्दलक्षणो ममात्यन्तमुपकारकत्वेन सर्वस्मात्प्रेष्ठो हरिरिति कृत्वा भजस्व। त्वयापीदृशो लोकः प्राप्यत इति कीदृशी मम गोचरेत्यस्य परिहार उक्त इति ।। ३७ ।। ❀ ❀ कालस्य सर्वत्र सत्त्वा-त्स्वतन्त्रत्वात्ततोऽपि केनचिद्धेतुना तान्निवर्तयतीति तत्राह । न कर्हिचिदिति । हेत्वभावादित्याह । मे नो इति । मे हेतिरायुधमनिमिषः कालचक्रं तान् लोके नो लेढि नासादयति नाशलक्षणं कार्यं न करोतीत्यर्थः । अत्रापि हेतुरस्तीत्याह । येषामिति । आत्मा स्वामी "ज्ञानवतोऽभिव्यक्तो भवति" इति श्रुतेः चशब्दात्पिता च अनेकविधव्यसनप्राप्तावहमेवानिमित्तबन्धुरिति सुहृद इति बहुवचनम् ।। ३८ ।। ❀ ❀ किं बहुना वैराग्यविजृम्भितया भक्त्या भजतां संसारतारकोऽहमेवेत्याह । इमं लोकमिति । आत्मानं जीव-मुभयायिनं लोकद्वयसंचारिणं विज्ञायेति शेषः ये चेम इत्युक्तं विवृणोति । ये राय इति । रायो निष्कादयः यद्वा ये चेमे सुतादयः ।। ३९ ।। ❀ ❀ विश्वतोमुखं सर्वस्मान्मुख्यं सर्वज्ञं वा मृत्योः संसारादतीत्य पारये पारं प्रापयामि । यद्वा पारसमाप्ताविति धातोः संसारसमाप्तिं कृत्वा मुक्तान् करोमीति ।। ४० ।।

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

तामेव दर्शयति । अथो इति द्वाभ्याम् । अर्थात् पार्षदत्वानन्तरं मम मायया भक्तविषयककृपयाचितां तदर्थं प्रकटितां विभूतिं भोगसम्पत्तिं तथाणिमाद्यष्टैश्वर्य्यमनुप्रवृत्तं स्वभावसिद्धं तथा भागवतीं श्रियं साक्षाद्भगवत्सम्बन्धिनीं सार्ष्टिसंज्ञां सम्पत्ति-मपि अस्पृहयन्ति भक्तिसुखमात्राभिलाषेण यद्यपि तेभ्यो न स्पृहयन्तीत्यर्थः । तथापि तु ते मम लोके वैकुण्ठाख्ये अश्नुवते एवेति स्ववात्सल्यविशेषो दर्शितः। यथा सुदाममालाकारवरे "सोऽपि वव्रे चलां भक्तिं तस्मिन्नेवाखिलात्मनि । तद्भक्तेषु च सौहार्दं भूतेषु च दयां पराम् ।।" इति तस्मै वरान् दत्त्वा श्रियं चान्वयवर्धिनीमित्यादि । अतस्तेषां तत्रानासक्तिश्च द्योतिता अविद्यानन्तरमिति । मम कृपयाचितामिति च तेषामनर्थरूपत्वं खण्डितं किं वा माययाचितां ब्रह्मलोकादिगतां सम्पत्तिमपीति तेषां सर्व्ववशीकारत्व-मेव दर्शितं नतु तद्भोगः, तस्यातितुच्छत्वेन तेष्वनर्हत्वात् श्रुतिश्चात्र "तद्यथेह कर्म्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते" । इत्यनन्तरमथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामांस्तेषां सर्व्वेषु लोकेषु कामचारो भवतीति ।। ३७ ।। ❀ ❀ नन्वेवं तर्हि लोकत्वाविशेषात् स्वर्गादिवद्भोक्तृभोग्यानां कदाचिद्विनाशः स्यात् तत्राह । शान्तरूपे शान्तमविकृतं रूपं यस्य तस्मिन् वैकुण्ठे मत्परास्तद्वासिनो लोकाः कदाचिदपि न नङ्क्ष्यन्ति भोगहीना न भवन्ति । अनिमिषो मे हेतिर्मदीयं कालचक्रं नो लेढि तान्न ग्रसते "न स पुनरावर्त्तते" इति श्रुतेः ।

आब्रह्मभुवनाल्लोकाः पुनरावर्त्तिनोऽर्ज्जुन । मां प्राप्यैव तु कौन्तेय ! पुनर्ज्जन्म न विद्यते ।। इति

गीतोपनिषद्भ्यः । सहस्रनामभाष्येऽप्युक्तम्—परममुत्कृष्टमयनं स्थानं पुनरावृत्तिशङ्कारहितमिति परायणं परायण इति पुल्लिङ्गपक्षे बहुव्रीहिरिति । न केवलमेतावत्तेषां माहात्म्यमित्याह । येषामिति । प्रियो लक्ष्म्यादीनामिव तत्तया भावनीयः एवमात्मा परमात्मा सनकादीनामिव सुतो भवदादीनामिव सखा श्रीदामादीनामिव गुरुः प्रद्युम्नादीनामिव सुहृदः एक एव नानाप्रकारः पाण्डवानामिव दैवमिष्टमुद्धवादीनामिव अतस्तन्वाभिजाते मयि सुतस्नेहरूपैव भक्तिस्तवोचितेति च दर्शितम् । अन्तिमनिष्ठा च तस्यास्तथा "ज्ञाततत्त्वाप्यभून्नष्टे वत्से गौरिव वत्सलेति ।" येषां मां विना न कश्चिदपरप्रेमभाजनमस्तीत्यर्थः । यद्वा गोलोकादिकम-पेक्ष्यैवमुक्तं तत्र हि तथाभाव एव श्रीगोपा नित्या विद्यन्ते अथवा तं लोकं कीदृग्भावा अविद्यानन्तरं प्राप्नुवन्ति तत्राह । येषामिति । ये केचित्पाद्मोत्तरखण्ड-दर्शितमुनिगणसवासनाः प्रियः पतिरिति मां भावयन्ति ये केचिच्च सनकादिसवासनाः आत्मा ब्रह्मैवायं साक्षादिति मां भावयन्ति एवमन्ये च ये ये त एव प्राप्नुवन्तीत्यर्थः । सुहृद इति बहुत्वं सौहृद्यस्य नानाभेदा-पेक्षया । एवं चतुर्थे श्रीनारदवाक्ये "शान्ताः समदृशः शुद्धाः सर्व्वभूतानुरञ्जनाः । यान्त्यञ्जसाच्युतपदमच्युतप्रियबान्धवाः ।।" इति ।। ३८ ।। ❀ ❀ तथैवोपसंहरति । इममिति युग्मकेन । एवं प्रियत्वादिप्रकारेण ।। ३९ ।। ❀ ❀ विश्वतोमुखं तत्तद्भावानुसारेणानन्ताविर्भावमनन्यया भावान्तरामिश्रितया ।। ४० ।।

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी ।

किञ्च कर्म्मज्ञानयोगादीनां भक्त्यविनाभावसिद्धत्वात्तत्तद्विनाभूताया अपि भक्तेस्तत्तत्फलदायित्वेन यत्कर्मभिर्यत्त-पसेत्यादौ श्रुतत्वात् स्वर्गादीन्यपि वस्तुतो भक्तेरेव फलानीति शुद्धभक्तिमन्तो मल्लोकवासिन एव मद्भजनानन्दभूतान्येव सर्व्व-सुखान्यनुभवन्तीत्याह । अथो अविद्यानिवृत्त्यनन्तरमेव मायया चितां विभूतिं सर्व्वब्रह्माण्डगतसुखानि, मायिनस्तानिति च पाठः अणिमाद्यष्टयोगैश्वर्य्यसुखञ्चानुप्रवृत्तं भक्तिमनु स्वत एव प्राप्तुं तथा भागवतीं श्रियं वैकुण्ठस्थां सार्ष्टिसंज्ञां सम्पत्तिं नु निश्चितं चकारात् ब्रह्मानन्दञ्च अस्पृहयन्तीत्यर्थः । मदीयहासावलोकादिहृतात्ममनःप्राणत्वाद्यद्यपि तेभ्यो न स्पृहयन्तीत्यर्थः । तथापि परमेश्वरस्य मे मम लोके वैकुण्ठे अश्नुवते प्राप्नुवन्त्येवेति स्ववात्सल्यविशेषो दर्शितः ।। ३७ ।। ❀ ❀ नन्वेवं तर्हि लोकत्वा-

विशेषात् स्वर्गादिवद्भोक्तृभोग्यानां कदाचिद्विनाशः स्यात्तत्राह। शान्तमविकृतं रूपं यस्य तस्मिन् मल्लोके मत्परास्तद्वासिनो लोकाः कदाचिदपि न नङ्क्ष्यन्ति भोग्यहीना न भवन्ति। अनिमिषो मे हेतिर्मदीयं कालचक्रं नो लेढि तान्न ग्रसते "न स पुनरावर्त्तते" इति श्रुतेः। "आब्रह्मभुवनाल्लोकाः पुनरावर्त्तिनोऽर्जुन!। मामुपेत्य तु कौन्तेय! पुनर्जन्म न विद्यते॥ इति गीतोपनिषद्वचः। सहस्रनामभाष्येऽपि परमुत्कृष्टमयनं स्थानं पुनरावृत्तिशङ्कारहितमिति परायणपदं व्याख्यातं, येषामहं प्रिय इति प्रेयसीभाववतामात्मेति शान्तभक्तानां सुत इति वात्सल्यभाववतां सखेति सख्यवतां गुरुरिति दास्यविशेषवतां सुहृद इति बहुत्वमार्षं सख्यभेदवतामिष्टं दैवमिति दास्यभाववतां तथोचोक्तं नारायणव्यूहस्तवे "पतिपुत्रसुहृद्भ्रातृपितृवन्मित्रवद्धरिम्। ये ध्यायन्ति सदोद्युक्तास्तेभ्योऽपीह नमो नमः" इति "यमेवैष वृणुते तेन लभ्यः" इत्यस्याः श्रुतेरपि यं प्रियत्वेन वा पितृत्वेन वा भ्रातृत्वेन वा सखित्वेन पुत्रभृत्यादित्वेन वा वृणुते तेन लभ्य इत्यर्थो वेदितव्य इति रागानुगायाः स्वाभाविक्या भक्तेरुदाहरणं ज्ञेयम्॥ ३८॥ ❀ ❀ अस्वाभाविक्याः साधनभक्तेरुदाहरणमाह द्वाभ्याम्। इमं दृष्टभोगासक्तिममुम् अदृष्टभोगासक्तिमुभयायिनं तदुभयगामिनम् आत्मानमित्यहन्तास्पदे भोक्तरि चासक्तिं विसृज्येति यथैव भोगाद्यासक्तिर्भोगादिप्रशंसागम्या तथैव तत्तदासक्तित्यागस्तत्तन्निन्दागम्य इति यथोक्तम् "जुषमाणश्च तान् कामान् दुःखोदर्कांश्च गर्हयन्" इति तथात्मानमनुलक्ष्यीकृत्य ये पुत्रकलत्रादयः ये च व्यावहारिका रैप्रभृतयः। रायो धनानि॥ ३९॥ ❀ ❀ विश्वतोमुखं ते यस्यां दिशि यान्ति तत्रैवाहं तेषामभिमुख एव वर्त्ते इत्यर्थः। अनन्यया देवतान्तरभक्तिज्ञानकर्म्मादिशून्यया मृत्योः संसारसिन्धोः अतिपारये भक्तिमात्राभिलाषित्वेन संसारपारमनिच्छतोऽपि तानतिक्रम्य पारये पारं प्रापयामीति तानेवमज्ञापयित्वैवेत्यर्थः। यदुक्तं जरयत्याशु या कोशमित्यादि॥ ४०॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

तेषां मुक्तीतरपदार्थेच्छाहीनत्वं कैमुतिकन्यायेन दर्शयति। अथेति। ते भक्तिमात्रेणैव सिद्धार्था अपि उक्तरीत्या परस्य लोके भागवतीं श्रियं मुक्तौ प्राप्तां "यक्षत् क्रीडन् रममाण" इत्यादिश्रुतिप्रसिद्धां संपत्तिं च अश्नुवते प्राप्नुवन्ति। स्वतस्तु तां भद्रामपि अस्पृहयन्ति अथो किमुत मायिनः। मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् इति। श्रुतेः प्रकृतिस्वामिनः विभूतिं मायामयीं ब्रह्मलोकादिस्तम्बपर्यन्तां श्रियं भद्राम् "आब्रह्मभुवनाल्लोकाः पुनरावर्तिन" इति श्रीमुखोक्तामनित्यां तथानुवृत्तं भक्तिमनु स्वत एव प्राप्तमष्टाङ्गमणिमाद्यैश्वर्यं च अस्पृहयन्तीति नैव स्पृहयन्तीत्यर्थः॥ ३७॥ ❀ ❀ स्वलोकस्य तद्गतभोगोपकरणे च नाशाशङ्का नास्ति, तत्र कालप्रभावस्याभावादित्याह नेति। शान्तिरूपे प्राकृतदोषवर्जिते मल्लोके मत्पराः कर्हिचिदपि न नङ्क्ष्यन्ति भोगहीना न भवन्ति। अनिमिषः कालो मे हेतिर्मदीयं चक्रं नो लेढि नो ग्रसति, यस्मात्तेषामहमेव प्रिय आत्मादिरूपश्च। मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम्। नाप्नुवन्ति महात्मानः संसिद्धिं परमां गताः॥ मामुपेत्य तु कौन्तेय! पुनर्जन्म न विद्यते। इतिश्रीमुखोक्तेः "ये स्वर्गे लोके अमृतत्वं भजन्ते स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसम्पद्यते न स पुनरावर्तते" इति श्रुतेः। केचित्तु स्वर्गलोकशब्देन च चतुर्मुखलोकं प्रतिपादयन्ति त उपेक्षणीयाः, 'आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुनेति, श्रीमुखोक्तिविरोधात् सर्वशास्त्रेषु तल्लोकस्य विनाशित्वप्रसिद्धेश्चेत्यलं विस्तरेण॥ ३८॥ ❀ ❀ तं लोकं स्वानन्यभक्तान्प्रापयामीत्याह। इममिति द्वाभ्याम्। इमं लोकममुं च उभयायिनमहं ममाभिमानम् आत्मानं देहं तत्पालनपोषणचिन्तां सर्वथा देहत्यागे भजनानुपपत्तेः आत्मानं देहं ये अनु पुत्रकलत्रादयः रायः धनानि ये पशवो गृहाश्च तान् अन्याननुक्तान् सर्वान् भक्तिविरोधिपदार्थांश्च हित्वा ये मां भजन्ति तान् मृत्योः सकाशादति अतिरिक्तं विलक्षणं नित्यं निजलोकं नयामीत्यर्थः॥ ३९-४०॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

एवं सायुज्यरूपं फलमुक्त्वा सालोक्यादिरूपं फलमाह—अथो इति। सा चेद्भक्तिर्मध्यमा भवेत्, ततोऽयं भिन्नप्रक्रमः। अथो मम मायाविनो विभूतिं पुत्रधनादिरूपां स्वर्गादिरूपां च। न तत्र भोग्यमस्तीति मायाविन इत्युक्तम्। सर्वस्याऽपि विषयस्य भगवदीयानां भगवदधीनत्वाय षष्ठी। तामित्यलौकिकीं, सर्वलोकप्रसिद्धां वा। ऐश्वर्यमणिमादि। अष्टाङ्गानि यस्येति सर्वैश्वर्यप्राप्तिः। भगवद्भजनमनु, भगवन्तमनु वा, प्रविष्टां श्रियं सर्वामेव संपत्तिं मोक्षपर्यन्ताम्। भागवतीं च भगवत्कृतसम्पत्तिं च। वेत्यनादरे। सर्वमेव वा अ स्पृहयन्ति भद्रां मोक्षसम्पत्तिमपि। मध्यमा भक्तिः फलमवश्यं प्रयच्छतीति, यद्यन्यत्र तेषां भोगो न रोचते, तदा वैकुण्ठ एव तेभ्यो भोगं प्रयच्छतीत्याह—परस्य मे तेऽश्नुवते नु लोक इति। परस्य कालादक्षराच्च। लोके व्यापिवैकुण्ठे। सर्वमेवैश्वर्यादिकमश्नुवत इत्यर्थः॥ ३७॥ ❀ ❀ ननु लोकानां कालभयस्य विद्यमानत्वात् 'क्षीणे पुण्ये मर्त्यलोकं विशन्ति' इति स्वस्थानत्यागात्, किं वैकुण्ठलोके विषयाऽनुभावेनेत्याशङ्कयाऽऽह—न कर्हिचिदिति। हे शान्तरूपे मातः। शान्तं रूपं यस्येति सर्वदोषविवर्जिते वैकुण्ठे वा। अहमेवं परो येषां ते न नङ्क्ष्यन्ति। क्षीणपुण्या नश्यन्ति पतन्ति वा। न वा हेतिः कालचक्रं तान् लेढि, कालोऽपि तान् न भक्षयति। तत्र हेतुः—येषामहमिति। कालस्य यत्र विषयस्तत्र प्रवर्तते। तस्याऽष्टौ विषयाः—विषयाः, देहः, पुत्राः, मित्राणि, गुरवः, संबन्धिनः, इष्टदेवता, कामश्चेति। तस्मिन् लोके न एते सन्ति, किन्त्वेतेषां

कार्यमहमेव करोमि। अत एव तेषामहमेवाऽष्टविधः। न हि कालो मां विषयीकरोति। तेषां मदन्यः कोऽपि नास्ति देहादिः। प्रियो हि विषयो भवति। वैकुण्ठस्तु मद्रूप इति तत्राहमेव विषयः। सारूप्यस्य च प्राप्तत्वात् देहोऽप्यहमेव। देहेन विषयेषु भुज्यमानेषु प्रकृतिः सूयत इति सुता भवन्ति। तत्र[1] विषयभोगेनाऽप्यहमेव भवामि, पुत्रस्नेहस्तत्रत्यैर्मय्येव क्रियते। तत्र बाह्योऽपि सखा अहमेव, तत्रत्यानां पुरुषाणां मद्रूपत्वात्। एते चत्वार ऐहिकाः। पारलौकिकाश्चत्वारः। तत्र गुरुरुपदेष्टा वैकुण्ठे त्वहमेव। गुरोरुपदेशानन्तरं ये तत्र हितार्थं यतन्ते, ते बान्धवाः सुहृदः; सुहृत्कार्यं तु तत्रत्यैरेव क्रियत इति। दैवं देवता, पूज्यः; फलदाने स प्रयोजकः। फलं चेष्टम्। अतस्तेषां नाशाभाव उचित एव॥ ३८॥ ॐ ॐ ततोऽपि प्रथमां भक्तिं सफलां निरूपयति— इमं लोकमिति। ये पूर्वोक्ताधिकाररहितास्तादृशशरीरादिरहिताश्च, केवलं पुण्यपरिपाकवशादेवंभूताः, वक्ष्यमाणप्रकारेणोपासते, तेषां भक्त्यभावान् अहं तान् मृत्योरतिपारय इति द्वयोः संबन्धः। साङ्ख्यसिद्धान्तत्वात् परित्यागोऽत्र मुख्यः। मुख्ये सिद्धान्ते त्विह लोकादिषु अपेक्षाभाव एव हेतुः। त्याज्यान् गणयति। इह लोकस्त्याज्यश्चतुर्धा प्रमाणप्रमेयसाधनफलभेदेन। ऐहिकानां प्रमाणानि न प्रमाणानि; यदेषां प्रमेयम्, विषया ज्ञेया ग्राह्या वा, ते न ग्राह्याः; यदेषां फलसाधनम्, यद्वा फलम्, तदुभयमपि न तेषाम्। यस्त्वेवं करोति, स इमं लोकं त्यजति। तथैवाऽमुं चतुर्धा लोकं त्यजति। उभयलोककामी लौकिको वैदिकश्चोभयस्वभावापन्न आत्मा देहादिचतुर्विधः। सर्वत्र त्याग औदासीन्यम्। आत्मानं देहादिकमनु ये पुत्रादयः, चकाराद् गृहपरिच्छदादयश्च। इहेति सर्वमेव ममतास्पदाः प्रत्यक्षत एव उपलभ्यन्त इति सूचितम्। रायो धनानि पशवो गवादयः। एतान् विसृज्य। अन्यांश्च अनुक्तान् प्रतिष्ठादीन् धर्मान्। सर्वानिति। सर्वत्र विशेषणम्। चकारादभिमानादि। ननु सर्वत्यागे सर्वैः क्रियमाणानामुपकाराणामपेक्षितत्वात् कथं विस्तारो भविष्यतीत्याह—मामेवं विश्वतोमुखमिति। अहं हि सर्वात्मा, मदर्थे यावत् त्यजन्ति तेषामर्थे तावद्रूप भवामीति। एवं रूपं मां ये भजन्ति। विश्वतोमुखमिति। नूतनया भगवतो न किञ्चित्कर्त्तव्यमस्तीति सूचितम्। तत्र भजने साधनं भक्तिरेव। तत्राऽनन्यताऽपेक्ष्यते। परलोकार्थम्, भगवत्कृपार्थम्, अन्यार्थम् भक्तिव्यतिरेकेण, भगवद्व्यतिरेकेण वा, येषामन्यन्नास्ति। मृत्योरतिपारणं पुनस्तस्याऽऽत्मनो मृत्युग्रस्तदेहसम्बन्धाभावः। न मुक्तिर्नापि मृत्युरिति सनकादय इव तिष्ठन्ति। एवं भेदत्रयं निरूपितम्, सायुज्यम्, वैकुण्ठः, जीवन्मुक्तिश्चेति॥ ३९॥ ४०॥

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

अथेत्यत्र। अस्पृहयन्तीति। 'अमानोनाः प्रतिषेधे' इति प्रतिषेधार्थकम्। अपदमसमस्तमेव बोध्यम्॥ ३७॥ ॐ ॐ इममित्यत्र। देहादिचतुर्विध इति। देहेन्द्रियप्राणान्तःकरणाध्यासभेदभिन्नः॥ ४०॥

इति श्रीतृतीयस्कन्धसुबोधिनीप्रकाशे पञ्चविंशाध्यायविवरणं सम्पूर्णम्।

### श्रीगिरिधरकृता बालप्रबोधिनी

अथ दिव्यदेहप्राप्त्यनन्तरमपि यद्यपि एकान्तभक्ता मम मायाधिपतेस्तामतिश्रेष्ठत्वेन प्रसिद्धां विभूतिं सत्यलोकादिगतां भोगसम्पत्तिं अणिमाद्यष्टाङ्गमैश्वर्यमनुप्रवृत्तं भक्तिमनु स्वत एव प्राप्तमपि भागवतीं च श्रियं वैकुण्ठस्थां भोगसम्पत्तिं अस्पृहयन्ति न स्पृहयन्ति। तथापि वरस्य परमेश्वरस्य मे मम लोके वैकुण्ठे भद्रां दुःखेनासम्भिन्नां श्रियमश्नुवते प्राप्नुवन्त्येव। तुशब्दोऽवधारणे॥ ३७॥ ॐ ॐ नन्वेवं तर्हि लोकत्वाविशेषात् कदाचित् स्वर्गादिवद्भोक्तृभोग्यानां विनाशसम्भवात् कथं वैकुण्ठे दुःखं नास्तीत्याशङ्क्याह—नेति। शान्तं शुद्धं सत्त्वं तद्रूपे वैकुण्ठे मत्पराः अतो मया रक्ष्यमाणाः कर्हिचिदपि न नङ्क्ष्यन्ति स्वरूपतो भोग्यतो वा नाशं न प्राप्नुवन्ति। यतः अनिमिषः कालो हेतिः सर्वविनाशकश्चक्रविशेषः तान्नो लेढि न ग्रसति। के ते त्वत्परा इत्यपेक्षायामाह—येषामिति। अहं येषां प्रियः निरतिशयप्रीतिविषयः, आत्मा, सुत इव स्नेहविषयः सखेव विश्वासास्पदं, गुरुरिव आदरणीयवचनः, सुहृद् इव हितकारी इष्टं दैवमिव पूज्यः॥ ३८॥ भक्तरक्षकत्वमेव स्पष्टयति—इममिति द्वयेन। इमं दृश्यमानं लोकं तथैवामुं परलोकं च विसृज्य उभावपि लोकौ हेयतया निश्चित्य तत्सुखसाधनं त्यक्त्वा उभयार्थिनं उभयलोकगामिनं आत्मानं देहं विसृज्य तदभिमानं परित्यज्य। इह जन्मनि ये आत्मानं देहमनुवर्त्तन्ते पुत्रकलत्रादयः ये च रायो धनानि पशवो गृहाश्च तान्॥ ३९॥ ॐ ॐ अन्यांश्च सर्वान् परिग्रहान् विसृज्य तेषु ममतामपोह्य विश्वतोमुखं पुत्रादिरूपेण प्रकाशमानं सर्वत्र व्यापकं वा मामेवं पुत्रादिभावेन अनन्यया फलानुसन्धानरहितया भक्त्या भजन्ति तान् मृत्योः जन्ममरणादिसंसारात् अतिपारये अत्यन्तं पारं नयामि, पुनर्न संसारयामीत्यर्थः॥ ४०॥

### हिन्दी अनुवाद

अविद्याकी निवृत्ति हो जानेपर यद्यपि वे मुझ मायापतिके सत्यादि लोकोंकी भोगसम्पत्ति, भक्तिकी प्रवृत्तिके पश्चात् स्वयं प्राप्त होनेवाली अष्ट सिद्धि अथवा वैकुण्ठलोकके भगवदीय ऐश्वर्यकी भी इच्छा नहीं करते, तथापि मेरे धाममें पहुँचनेपर

---

१. ततोऽत्र. क. ग. २. तैः ग्र. ङ.।

उन्हें ये सब विभूतियाँ स्वयं ही प्राप्त हो जाती हैं ॥ ३७ ॥ ❀ ❀ जिनका एकमात्र मैं ही प्रिय, आत्मा, पुत्र, मित्र, गुरु, सुहृद् और इष्टदेव हूँ—वे मेरे ही आश्रयमें रहनेवाले भक्तजन शान्तिमय वैकुण्ठधाममें पहुँचकर किसी प्रकार भी इन दिव्य भोगोंसे रहित नहीं होते और न उन्हें मेरा कालचक्र ही ग्रस सकता है ॥ ३८ ॥ ❀ ❀ माताजी! जो लोग इहलोक, परलोक और इन दोनों लोकोंमें साथ जानेवाले वासनामय लिङ्गदेहको तथा शरीरसे सम्बन्ध रखनेवाले जो धन, पशु एवं गृह आदि पदार्थ हैं, उन सबको और अन्यान्य संग्रहोंको भी छोड़कर अनन्य भक्तिसे सब प्रकार मेरा ही भजन करते हैं—उन्हें मैं मृत्यु-रूप संसारसागरसे पार कर देता हूँ ॥ ३९-४० ॥

नान्यत्र मद्भगवतः प्रधानपुरुषेश्वरात् । आत्मनः सर्वभूतानां भयं तीव्रं[1] निवर्तते ॥ ४१ ॥
मद्भयाद्वाति वातोऽयं सूर्यस्तपति मद्भयात् । वर्षतीन्द्रो दहत्यग्निर्मृत्युश्चरति मद्भयात् ॥ ४२ ॥
ज्ञानवैराग्ययुक्तेन भक्तियोगेन योगिनः । क्षेमाय पादमूलं मे प्रविशन्त्यकुतोभयम्[2] ॥ ४३ ॥
एतावानेव लोकेऽस्मिन् पुंसां निःश्रेयसोदयः । तीव्रेण भक्तियोगेन मनो मय्यर्पितं स्थिरम् ॥ ४४ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां तृतीयस्कन्धे का[3]पिलेयोपाख्याने पञ्चविंशोऽध्यायः ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

अभक्तानां तु कथंचिदपि न मोक्ष इत्याह । नेति । मद्भगवतोऽन्यत्र भगवतो मत्तो विना सर्वभूतानामात्मनः भगवदादि-विशेषणत्रयेण सामर्थ्यं निरपेक्षत्वं हितकारित्वं चोक्तम् ॥ ४१ ॥ ❀ ❀ ऐश्वर्यं स्फुटयति । मद्भयादिति । श्रुतिश्च "भीषाऽस्माद्वातः पवते । भीषोदेति सूर्यः । भीषास्मादग्निश्चेंद्रश्च । मृत्युर्धावति पंचमः" इति ॥ ४२ ॥ ❀ ❀ मद्भजनादेव मोक्ष इत्यत्र सदाचारं प्रमाणयति । ज्ञानेति ॥ ४३ ॥ ❀ ❀ उपसंहरति । एतावानिति । मय्यर्पितं सन्मनः स्थिरं भवतीति यदेतावानेव ॥ ४४ ॥

इति श्री० तृती० टीकायां पञ्चविंशोऽध्यायः ॥२५॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

भक्तिं विना तु नैव निस्तार इत्याह—नेति । मत्तो विना मद्भक्तिं विना भक्तिविषयीभूतस्यानन्तस्वरूपत्वेपि विशेषणत्रयेण पूर्वपूर्वमुख्यानि सेव्यस्वरूपाणि कानिचित्सूचयति । भगवान्प्रथमतः पूर्णः श्रीकृष्ण एव ततः श्रीरामः प्रधानपुरुषेश्वरः परव्योमनाथः तत आत्मा प्रकृत्यन्तर्यामी समष्ट्यंतर्यामी व्यष्ट्यंतर्यामी चेति पुरुषत्रयं पुरुषावतारा मत्स्यकूर्मादयोपि ज्ञेयाः ॥ ४१ ॥ ❀ ❀ नन्वनन्यया भक्त्येति त्वयोक्तमतोन्ये खल्वसेविता देवाः कुप्यंतस्तत्तद्भक्तं कदाचिद् दुःखयन्ति न वेति तत्र साटोपमाह—"भीषास्मात्" इत्यादिश्रुतेरहमेव सर्वेश्वरस्तेन यदि कमपि ते मद्भक्तं कदाचिदपि दुन्वन्ति तदा तांस्तत्तदधिकारादप्यधः पातयितुं न विलम्ब इति भावः ॥ ४२ ॥ ❀ ❀ शुद्धां भक्तिमुक्त्वा ज्ञानादिमिश्रां भक्तिमाह—ज्ञानेति । योगिनो ज्ञानिभक्ताः क्षेमाय पुनर्दुःखाभावाय पादमूलप्राप्तिरूपं मोक्षम् "येनापवर्गाख्यमदभ्रबुद्धिर्ज्ञानेन वैयासकिशब्दितेन । भेजे खगेन्द्रध्वजपादमूलम्" इत्यत्र खगेन्द्रध्वजपादमूलस्यैवापवर्गत्वेनाभिधानात् । अकुतोभयं "मृत्युरस्मादपैति" इति देवक्युक्तेः ॥ ४३ ॥ ❀ ❀ शुद्धा भक्तिरेव सर्वतः श्रेष्ठेत्याह—एतावानिवेति । इतोऽधिको निःश्रेयसस्योदयो नैव कोप्यधिकोस्ति, किं त्वितो न्यून एव सर्व इति भावः । तीव्रेण दृढेन ज्ञानकर्मादिभिरभंगुरेण शुद्धेनेत्यर्थः । निःश्रेयसस्य परमपुरुषार्थस्योदय आविर्भावः ॥ ४४ ॥

इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे तृतीयस्कन्धे पञ्चविंशोऽध्यायः ॥ २५ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

विशेषणत्रयेण यथासंख्यतयेति ज्ञेयं निरपेक्षत्वं प्रधानपुरुषापेक्षारहितत्वम् ॥ ४१ ॥ ❀ ❀ अनन्यया भक्त्येत्युक्ते देवतान्तरभजनाभावात् कुप्यन्तोऽन्ये देवाः किं त्वद्भक्तं पीडयन्तीत्याशङ्क्यैश्वर्य्यं स्फुटयति । मद्भयादिति ॥ ४२ ॥ ❀ ❀ क्षेमायेति अत "आत्यन्तिकं क्षेमं पृच्छामो भवतोऽनघा" इत्युक्तेरनवरतं मत्स्फूर्त्तिरेव क्षेमं तदर्थं प्रविशन्ति निरन्तरं तद्ध्याय-न्तीत्यर्थः । यद्वा क्षेमाय मोक्षाय प्रविशन्ति भजन्ति ॥ ४३ ॥ ❀ ❀ स्वसम्मतां शुद्धां भक्तिमुपसंहरति । एतावानिति । तीव्रेण ज्ञानकर्म्माद्यपेक्षाराहित्याद् दृढेन शुद्धेनेत्यर्थः, निःश्रेयसस्य परमपुरुषार्थस्योदय आविर्भावः ॥ ४४ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीराधारमणदासगोस्वामिकृतदीपिकाटिप्पण्यां पञ्चविंशोऽध्यायः ॥२५॥

---

१. प्रा० पा—सर्वं । २. प्रा० पा०—कुतोभयाः । ३. प्राचीने पाठे 'कापिलेयोपाख्याने' अयमंशो न ।

### श्रीमद्वीरराघवव्याख्या

अनन्ययेत्यनेन सूचितं देवतान्तरभक्तेरमुक्तिसाधनत्वं वक्तुं देवतान्तराणां क्षेत्रज्ञत्वात्कर्मवश्यत्वान्मन्निदेशानुवर्तित्वाच्च न तद्भजनान्मुक्तिरित्याह । नान्यत्रेति । सर्वभूतानां सर्वजीवानामात्मनः धारकस्य अनेन सर्वभूतानां धार्यत्वेन शरीरत्वमुक्तं प्रधानपुरुषयोः सर्वावस्थावस्थितचेतनाचेतनयोरीश्वरादन्तःप्रविश्य नियन्तुरनेन कर्मायत्तसर्वावस्थावस्थितप्रधानपुरुषयोर्नियाम्यत्वमुक्तं मद्भगवतः अहं चासौ भगवांश्च तस्मात्पूर्णषाड्गुण्यान्मत्त इत्यर्थः । अनेन स्वस्यैव मुक्तिप्रदत्वमितरेषां दुर्भगत्वेनानुत्तारकत्वं च सूचितमन्यत्रान्यस्मिन्सेव्यमाने इति शेषः । तीव्रं दुःसहं भयं गर्भजन्मजरामरणादिसांसारिकभयं न निवर्तते ॥ ४१ ॥ ❀ ❀ प्रधानपुरुषेश्वरादित्यनेन सूचितमितरेषामाब्रह्मपर्य्यन्तक्षेत्रज्ञानां स्वनियाम्यत्वमाह । मद्भयादिति सार्द्धेन । वायुसूर्यादयः मन्निर्दिष्टस्वस्वव्यापाराकरणे मत्संजातमहाभयनिमित्तदण्डनमुद्भावयन्तः स्वकीयव्यापारेषु जागरूकास्तिष्ठन्तीत्यर्थः । अत्र "भीषास्माद्वातः पवते" इत्यादिश्रुत्यर्थः ॥४२॥ ❀ ❀ उक्तः मद्भजनादेव मोक्ष इत्यत्र सदाचारं प्रमाणयति । ज्ञानेति तस्माद्योगिनो मदुपासका ज्ञानवैराग्याभ्यां ज्ञानयोगविवेकादिसाधनप्राप्ताभ्यां युक्तेन मद्भक्तियोगेन क्षेमाय नित्यनिरतिशयानन्दरूपमदनुभवात्मकक्षेमायाकुतोभयं कुतश्चिद्भयरहितं मत्पादमूलमेव प्रविशन्ति भजन्ते प्राप्नुवन्तीति वा ॥४३॥ ❀ ❀ आलोड्य सर्वशास्त्राणीति न्यायेन उक्तं वक्ष्यमाणं च कृत्स्नशास्त्रार्थं सुखग्रहणाय संगृह्य निर्दिशति । एतावानिति । तीव्रेणान्तरायानुपहतेन भक्तियोगेन मनश्चित्तं मय्यर्पितं सत् तत्रैव स्थिरं सुनिश्चलं भवतीत्येतावानेवास्मिन्प्रकृतिमण्डले पुंसां बद्धजीवानां निःश्रेयसोदयः परमपुरुषार्थोत्कर्षः ॥ ४४ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायां पञ्चविंशोऽध्यायः ॥ २५ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली ।

मत्तोऽन्यः संसारतारकोऽस्तीति शङ्कां मा कार्षीरित्याह । नान्यत्रेति । प्रधानपुरुषयोः प्रकृतिहिरण्यगर्भयोः ईश्वरादात्मनः आदानादिकर्तुः ॥ ४१ ॥ ❀ ❀ वाय्वादीनां स्वाधिकारप्रवृत्तिर्न स्वनियता किमुत मुक्तिदानप्रवृत्तिः । अत उक्तार्थे तच्छङ्का दूरोत्सारितेत्याशयेनाह । मद्भयादिति ॥ ४२ ॥ ❀ ❀ अहमेव मुक्तिदाने नियतः, अत इदमेवात्र मुख्यसाधनमित्याह । ज्ञानेति । योगिनो ज्ञानिनः वाय्वादिवदन्यनियतत्वे तव मुक्तिदानशक्तिः प्रहता स्यादित्यत उक्तमकुतोभयमिति ॥ ४३ ॥ ❀ ❀ एकग्रामप्रवेशे बहुमार्गवदनेके मार्गाः संभवेयुरित्याशङ्कां परिहरन् अन्ययोगं व्यवच्छिनत्ति । एतावानेवेति । स्थितमचलत्वेनेति शेषः ॥ ४४ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्यां पञ्चविंशोऽध्यायः ॥ २५ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

यच्च भवत्या जिज्ञासया प्रकृतेः पुरुषस्येत्युक्तं तत्तु केवलं न किंचिदित्याह । नान्यत्रेति ॥ ४१ ॥ ४२ ॥ ४३ ॥ ❀ ❀ देवानामित्यादिवत्स्वस्य तु ( स्यात्तु ) मतमाह । एतावानिति । तीव्रेण दृढेन योगकर्म्मादिभिरभङ्गुरेण शुद्धेनेत्यर्थः । तेनैवार्पितम् । सत्स्थिरं भवतीति यत् एतावानेव निःश्रेयसस्य परमपुरुषार्थस्याविर्भावः ॥ ४४ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भस्य पञ्चविंशोऽध्यायः ॥ २५ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

मद्भक्तिं विना तु नैव निस्तार इत्याह । मत्तोऽन्यत्र मां विनेति मद्भक्तिं विनेत्यर्थः । भक्तिविषयीभूतस्य स्वस्यानन्तस्वरूपत्वेऽपि विशेषणत्रयेण पूर्व्वपूर्व्वमुख्यानि सेव्यस्वरूपाणि कानिचित् सूचयति । भगवान् प्रथमतः पूर्णः श्रीकृष्ण एव ततः श्रीरामः प्रधानपुरुषेश्वरः परमव्योमनाथः तत आत्मा प्रकृत्यन्तर्य्यामी समष्टयन्तर्यामी व्यष्टयन्तर्यामी चेति पुरुषत्रयं पुरुषावतारा मत्स्यकूर्म्मादयोऽपि ज्ञेयाः ॥ ४१ ॥ ❀ ❀ नन्वनन्यया भक्त्येति त्वयोक्तमतः अन्ये खल्वसेविता देवाः कुप्यन्तस्त्वद्भक्तं कदाचिद् दुःखयन्ति नवेति तत्र साटोपमाह । मदिति ।

श्रुतिश्च 'भीषास्माद्वातः पवते भीषोदेति सूर्य्यः । भीषास्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चमः' इति ।

तेन यदि कमपि ते मद्भक्तं कदाचिदपि दुन्वन्ति तदा तांस्तत्तदधिकारादप्यधः पातयितुं नैवाहं विलम्बे इति भावः ॥ ४२ ॥ ❀ ❀ शुद्धां भक्तिमुक्त्वा ज्ञानादिमिश्रां भक्तिमाह । ज्ञानेति ॥ ४३ ॥ ❀ ❀ तदपि मम शुद्धैव भक्तिः सर्व्वतः श्रेष्ठेत्याह । । एतावानेवेति । इतोऽधिको निःश्रेयसोदयो नैव कोऽप्यस्ति किं त्वितो न्यून एव सर्व्व इति भावः । तीव्रेण दृढेन ज्ञानकर्म्मादिभिरभङ्गुरेण शुद्धेनेत्यर्थः, निःश्रेयसस्य परमपुरुषार्थस्योदयः ॥ ४४ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् । तृतीये पञ्चविंशोऽयं सङ्गतः सङ्गतः सताम् ॥२५॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

प्रधानक्षेत्रज्ञपतिर्गुणेशः यमेवैष वृणुते तेन लभ्यः भीषास्माद्वातः पवते 'भीषोदेति सूर्यः भीषास्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चमः।' इत्यादिमुपबृंहयन् स्वस्य सर्वेश्वरत्वसर्वनियन्तृत्वादीन् गुणान् दर्शयति । नान्यत्रेति द्वाभ्याम् ॥ ४१ ॥ ४२ ॥ ❀ ❀ उक्तार्थे शिष्टाचारं प्रमाणयति । ज्ञानेति ॥ ४३ ॥ ❀ ❀ उपसंहरति । एतावानिति । तीव्रेण भक्तियोगेन मय्यर्पितं सन् मनः स्थिरं भवतीति यत् एतावानेव पुंसां मुमुक्षूणां निःश्रेयसोदयः निश्रेयसाय मोक्षाय उदयः उद्यमः उपाय इत्यर्थः ॥ ४४ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कंधे श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे पञ्चविंशोऽध्यायः ॥ २५ ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

मार्गान्तरेणाऽप्येतत् भविष्यतीत्याशङ्क्य निराकरोति—नाऽन्यत्रेति । 'भक्त्यैव तुष्टिमभ्येति विष्णुर्नाऽन्येन केनचित् । स एव मुक्तिदाता च भक्तिस्तत्रैव कारणम् ॥ मत् मत्तोऽन्यस्मात्, तीव्रं संसारात्मकं भयं न निवर्तते । संसारनिवृत्तिर्ज्ञानादिना, ते च भग[1]शब्दवाच्या भगवत्येव भवन्ति । तदाह—भगवत इति । किं च, संसारो जायते प्रकृतिपुरुषाभ्याम्, तयोर्यो नियामकः, तस्मादेव निवर्तत इति युक्तम् । किञ्च—आत्मनः सर्वभूतानामिति । आत्मैव तादृशमुपकारं करोति, न ह्यन्योऽन्यस्मा उपकरोति स्वार्थव्यतिरेकेण । अतो ज्ञानादिरूपत्वात् निवर्तकरूपत्वम्, प्रकृत्यादिनिवारकत्वात् पुनः संसाराजननम्, आत्मत्वादवश्यं हितकारित्वं च भगवत एवेति अन्यस्माद्भयं न निवर्तत इति युक्तम् । तीव्रमिति शीघ्रमागन्तृ, निकटस्थितादेव नियामकान्निवर्तत इति । निकटस्थितत्वात्सिद्धम् ॥ ४१ ॥ ❀ ❀ नियामकत्वं साधयति—मद्भयादिति । 'भीषास्माद्वातः पवते, भीषोदेति सूर्यः । भीषास्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चमः ॥ इति श्रुत्यर्थमाह । मद्भयादेवाऽयं वातो वाति, अन्यथा तस्य गमने प्रयोजनाभावात् सर्वत्र सर्वदा न वायात् । सूर्योऽपि मद्भयादेव तपति । श्रुतावुदेतीत्युक्तम्; तत्रोदयशब्देन तपनमेवोच्यते । अन्यथा ज्योतिश्चक्रगत्याऽप्युदयो भवतीति व्यर्थं भयं स्यात् । अग्नीन्द्रयोः क्रिया नोक्तेति स्वयमाह—वर्षतीन्द्र इति । अन्यथा स्वगृहस्थं जलमिन्द्रः कथं व्ययी-कुर्यात् । दहत्यग्निरिति । सर्वानेवाऽशुचिपदार्थानसम्मतानपि कथं दहेत् । मृत्युरपि दयालुः मद्भयादेव चरति, मारयितुं यतते । वाय्वाद्युपासनया मृत्युर्दूरीकर्तव्य इति मतमपास्तम् । अन्येन निवार्यमाणोऽपि मृत्युर्न निवर्तत इत्यपि सूचितम् ॥ ४२ ॥ ❀ ❀ एवमितरनिषेधेन स्वसिद्धान्तं निरूप्य तत्र पूर्वाचारं प्रमाणयति—ज्ञानेति । ज्ञानवैराग्ये भक्तेः सहकारिणी । योगोऽधिकारि-विशेषणम् । भक्तिरेव करणम् । क्षेमाय मोक्षाय, स्वरूपसंरक्षार्थं वा, मे पादमूलं पादपीठमक्षरं प्रविशन्ति । न विद्यते कुतश्चिद्भयं यस्मात् । प्रवेशे हेतुः ॥ ४३ ॥ ❀ ❀ एवं सर्वं शास्त्रार्थं निरूप्य स्पष्टपरिज्ञानार्थं कर्तव्यमनुवदन्नुपसंहरति—एतावानेवेति । पुंसां परलोकार्थं यततामस्मिन् लोके एतावानेव निःश्रेयसोदयः । निःश्रेयसस्योदयो यस्मात् । मोक्षहेतुरेतावानेव । पूर्वं मनोमूलकः संसार उक्तः, मोक्षेऽपि तदेव निमित्तमुक्तमिति तच्चेद्भगवति स्थिरीभवति, तदा कृतार्थतेति, तत्स्थिरीकरणार्थं भक्तिरेवेत्याह—तीव्रेणेति । शीघ्रं फलसाधकेन भक्तियोगेन सर्वप्रतिबन्धकरहितेन मनश्चेन्मय्यर्पितं सत् स्थिरं भवेत् । एतावानेव निःश्रेयसोदयः । केनाऽपि प्रकारेण भगवति स्थिरं मनः परमपुरुषार्थसाधकमिति योगसिद्धान्तः । तत्र भक्तिरेव स्थिरीकरणहेतुरिति स्वसिद्धान्ता-नुसारेणाऽपि भक्तिर्निरूपिता । भागवताऽनुसारेणाऽपि । तस्माद्भक्तिः सर्ववादिसम्मतेति सैव कर्तव्येति सिद्धम् ॥ ४४ ॥

इति श्रीभागवतसुबोधिन्यां श्रीलक्ष्मणभट्टात्मजश्रीवल्लभदीक्षितविरचितायां तृतीयस्कन्धे पञ्चविंशाध्यायविवरणम् ।

### श्रीगिरिधरकृता बालप्रबोधिनी ।

एवं स्वभजने संसारदुःखनिवृत्तिमुक्त्वा स्वविमुखानां देवतान्तरभक्तानां तदभावमाह–नेति । मत् मत्तः अन्यत्र मद्भजनं विना देवतान्तरभजने तीव्रं दुःसहं गर्भवासजन्ममरणादिसंसारभयं न निवर्त्तते इत्यन्वयः । तत्र हेतुमाह–सर्वभूतानां आत्मनोऽन्त-र्यामिणः सर्वेषामेव अन्तर्यामिवश्यतया भयग्रस्तत्वात् कथं तद्भजने भयं निवर्त्तेतेति भावः । सर्वान्तर्यामित्वे हेतुमाह—प्रधान-पुरुषयोरपि ईश्वरात् नियन्तुः । तत्रापि हेतुमाह—भगवत इति ॥ ४१ ॥ ❀ ❀ "भीषास्माद्वातः पवते भीषोदेति सूर्यः । भीषास्मादग्निश्चेन्द्रश्च, मृत्युर्धावति पञ्चमः" इत्यादिश्रुतिसिद्धं स्वस्य सर्वनियन्तृत्वेन भयजनकत्वमेव दर्शयति—मद्भयादिति । वातादयो मन्निर्दिष्टस्वस्वव्यापाराकरणे मत्तो दण्डमुद्भावयन्तो भीताः सन्तः स्वस्वव्यापारे सावधानास्तिष्ठन्तीत्यर्थः ॥ ४२ ॥ ❀ ❀ अतएव योगिनो मोक्षोपायाभिज्ञाः ज्ञानं मन्माहात्म्यज्ञानवैराग्यं विषयवैतृष्ण्यं ताभ्यां युक्तेन भक्तियोगेन स्नेहातिशयेन क्षेमाय परमानन्दरूपमोक्षलाभाय मे ममाकुतोभयं सर्वभयरहितं सर्वभयनिवर्त्तकं च पादमूलं प्रविशन्ति भजनीयतया आश्रयन्ते इत्यर्थः ॥ ४३ ॥ ❀ ❀ एवं मोक्षार्थस्वभजने सदाचारं प्रदर्श्य उक्तवक्ष्यमाणसर्वपुरुषार्थसाधनसारं उद्धृत्याह—एतावा-

---

१. भगवद्वयातव्य. क. । १. भगवच्छब्द क. घ. ङ. २. एतादशन् ख. ग. ।

निति । तीव्रेण विघ्नैर्विघटयितुमशक्येन भक्तियोगेन मनो मयि अर्पितं सत् तत्रैव स्थिरं निश्चलं भवतीत्येतावानेव अस्मिँल्लोके पुंसां जीवानां निश्श्रेयसस्य सर्वपुरुषार्थसाधनस्योदय उत्कर्षः ॥ ४४ ॥

इति श्रीवल्लभाचार्यवंश्यगोपालसूनुना ॥ श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा ॥ १ ॥
श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये ॥ श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी ॥ २ ॥
रचिता च तृतीयेऽत्र मोक्षसर्गनिरूपणे ॥ पञ्चविंशो गतो वृत्तिं भक्तिचिह्ननिरूपकः ॥ ३ ॥

## हिन्दी अनुवाद

मैं साक्षात् भगवान् हूँ, प्रकृति और पुरुषका भी प्रभु हूँ तथा समस्त प्राणियोंका आत्मा हूँ; मेरे सिवा और किसीका आश्रय लेनेसे मृत्युरूप महाभयसे छुटकारा नहीं मिल सकता ॥ ४१ ॥ ❀ ❀ मेरे भयसे यह वायु चलती है, मेरे भयसे सूर्य तपता है, मेरे भयसे इन्द्र वर्षा करता और अग्नि जलाती है तथा मेरे ही भयसे मृत्यु अपने कार्यमें प्रवृत्त होता है ॥ ४२ ॥ ❀ ❀ योगिजन ज्ञान-वैराग्ययुक्त भक्तियोगके द्वारा शान्ति प्राप्त करनेके लिये मेरे निर्भय चरणकमलोंका आश्रय लेते हैं ॥ ४३ ॥ ❀ ❀ संसारमें मनुष्यके लिये सबसे बड़ी कल्याणप्राप्ति यही है कि उसका चित्त तीव्र भक्तियोगके द्वारा मुझमें लगकर स्थिर हो जाय ॥ ४४ ॥

२५ वाँ अध्याय समाप्त

# अथ षड्विंशोऽध्यायः

श्रीभगवानुवाच

अथ ते सम्प्रवक्ष्यामि तत्त्वानां लक्षणं पृथक् । यद्विदित्वा विमुच्येत पुरुषः प्राकृतैर्गुणैः ॥ १ ॥
ज्ञानं निःश्रेयसार्थाय पुरुषस्यात्मदर्शनम् । यदाहुर्वर्णये तत्ते हृदयग्रन्थिभेदनम् ॥ २ ॥
अनादिरात्मा पुरुषो निर्गुणः प्रकृतेः परः । प्रत्यग्धामा स्वयंज्योतिर्विश्वं येन समन्वितम्[1] ॥ ३ ॥
स एष प्रकृतिं सूक्ष्मां दैवीं गुणमयीं विभुः । यदृच्छयैवोपगतामभ्यपद्यत लीलया ॥ ४ ॥

श्रीधरस्वामिविरचिता भावार्थदीपिका ।

षड्विंशे पुंप्रकृत्योस्तु विवेकायोपवर्ण्यते । सांख्येन सर्वभावानां जन्मलक्षणभेदतः ॥ १ ॥
धात्रा पुत्राय यत्प्रोक्तं क्षत्रे मित्रासुतेन यत् । मात्रे सांख्यं तदध्यात्मप्राधान्येनाह तत्त्ववित् ॥ २ ॥

तत्त्वाम्नायं यत्प्रवदंति सांख्यमित्यत्र सांख्यं भक्तिर्योगश्चेति त्रयमुपक्षिप्तम् । तत्र भक्तिमुक्त्वेदानीं सांख्यमाह । अथेति ॥ १ ॥ ❀ ❀ ननु मुक्तिरात्मज्ञानादेव न तु तत्त्वलक्षणज्ञानात् । "तमेव विदित्वाऽतिमृत्युमेति" इति श्रुतेरत आह ज्ञानमिति । आत्मदर्शनरूपं ज्ञानमत एव हृदयग्रंथिभेदनमहंकारनिवर्तकं निःश्रेयसप्रयोजनाय यदाहुस्तत्ते वर्णयामि । तत्त्वलक्षण-ज्ञानादेव विविक्तात्मज्ञानं भवतीति भावः ॥ २ ॥ ❀ ❀ तत्र पुरुषं लक्षयति । अनादिरिति । आत्मैव पुरुषः कोऽसावात्मा प्रत्यक्प्रतिलोमं धाम स्फूर्तिर्यस्य । क्षणिकपक्षं व्यावर्तयति । अनादिरिति । संसारित्वपक्षं व्यावर्तयति । प्रकृतेः परः अन्यः संगः । ज्ञानादिगुणत्वं वारयति निर्गुणः । मीमांसकाद्यभिमतज्ञानविषयत्वं वारयति । स्वयंज्योतिः अनेनैव प्राभाकराभिमतं ज्ञानाधारत्वेन स्फुरणमपि निरस्तम् । स्वयंज्योतिष्ट्वे हेतुः । विश्वं येन समन्वितं प्रकाशत इति शेषः । एतैरेव हेतुभिः पुरुषस्य प्रकृतेः परत्वमपि सिद्धम् ॥ ३ ॥ ❀ ❀ अत्रावरणविक्षेपशक्तिभेदेन प्रकृतिर्द्विविधा, तत्रावरणशक्त्या सैव जीवोपाधिरविद्या विक्षेपशक्त्या सैव माया पारमेश्वरी । पुरुषश्च जीवेश्वररूपेण द्विविधः तत्र यः प्रकृत्यविवेकेन संसरति स जीवः । यस्तु प्रकृतिं वशीकृत्य विश्वसृष्ट्यादि करोति स ईश्वरःतत्र प्रकृत्यविवेकेन जीवस्य संसारप्रकारमाह । स एष इति पंचभिः । सूक्ष्मामव्यक्तां देवीं देवस्य विष्णोः शक्तिं लीलयोपगतां यदृच्छयैवाभ्यपद्यतेत्यन्वयः ॥ ४ ॥

श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

सांख्येन तन्नामकशास्त्रेण तदुक्तरीत्या सर्वेषां भावानां तत्त्वानां जन्मप्राकट्यं लक्षणस्य स्वरूपस्य भेदतः ॥ १ ॥ पुत्राय नारदाय । क्षत्रे विदुराय । अध्यात्मस्यात्मज्ञानस्य प्राधान्येन । क्वचित्तु 'तदध्यात्मम्' इति पाठस्तत्र सांख्यविशेषणं ज्ञेयम् ॥ २ ॥ उपक्षिप्तं कथितं तत्र त्रयाणां मध्ये । अथ भक्तिनिरूपणानन्तरम् । ते तुभ्यम् । ननु यत्पुरुषार्थोपयोगि तदेव वक्तव्यं किं तत्त्वानां लक्षणज्ञानेनेति चेत्तत्राह—यदिति । पुरुषो जीवः । प्राकृतैः प्रकृतिकार्यभूतैर्गुणैः सत्त्वाद्यैः ॥ १ ॥ ❀ ❀ अत्राक्षिपति—नन्विति—तमात्मानमेवेत्येवकारेणान्ययोगव्यवच्छेदान्मृत्युं जन्ममरणलक्षणं संसारमत्येति अतिक्रामति । छन्दसीत्य-धिकारे "व्यवहिताश्च" इति व्यवहितेनातिपदेन सम्बन्धः । अतो ज्ञानस्य मोक्षहेतुत्वादाह । अत एवात्मसाक्षात्काररूपत्वादेव । आहुराद्याचार्या इति भाव इति । विना तत्त्वानां स्वरूपज्ञानं तत्पार्थक्येनात्मज्ञानं कथं स्यादतस्तज्ज्ञानस्यात्मज्ञानोपयोगित्व-मित्याशयः ॥ २ ॥ ❀ ❀ तत्र तत्त्वेषु प्रथमं पुरुषम् पुरुषः । परमात्मा अन्यपदार्थस्फूर्त्यपेक्षया प्रतिलोममंतर्मुखीकृतचित्ते इत्यर्थः । स्फूर्तिविषयान्पदार्थान् विज्ञानवादिनः क्षणिकान्मन्यन्ते सोपि किं तादृश इति चेदाह—अनादिः सदातनः, एतादृशस्तु जीवोप्यस्ति तत्राह—प्रकृतेरिति । नैयायिकाद्यभिमत ईश्वरोस्त्येतादृशस्तत्राह—निर्गुण इति । ते तु ज्ञानादिगुणकं मन्यन्ते इति ज्ञानादिगुणवत्त्वाभावेपि ज्ञानविषयोस्त्विति 'ज्ञानगम्यं ज्ञानज्ञेयम्' इत्याद्युक्तेस्तत्राह—मीमांसकादीति । अनेन स्वयंज्योतिष्टकथनेन यस्मिन् ज्ञानमस्ति स चात्मेति तैर्मन्यते येनात्मना समन्वितं सम्बद्धं विश्वस्य जडत्वात्तत्प्रकाशकत्वेन स्वमपि सूर्यवत्प्रकाश-यतीत्यर्थः । एतैरनादित्वादिभिः । अनादित्वान्निर्गुणत्वात्स्वयंज्योतिष्ट्वात्प्रत्यग्धामत्वात्पुरुषः प्रकृतेः परः योऽनादित्वादिर्न स प्रकृतेः परोपि न यथा महदादिरिति । सगुणपक्षे अनादिर्नित्य आत्मा परमात्मैव पुरुषः निर्गुणः प्राकृतगुणरहितः यतः प्रकृतेः परः

---

१. प्रा० पा०—प्रकाशितम् ।

प्रत्यक्सर्वेन्द्रियागम्यं धाम कारणार्णवो यस्य अत एव स्वयंज्योतिरिति ॥ ३ ॥ ❀ ❀ अत्र प्रकरणे तत्र द्विविधायां सैव प्रकृतिरेव। आवरणशक्तिर्हि रजःसत्त्वाभ्यामनभिभूतं तम एवेत्युक्तं तत्त्वानुसंधाने सा च नास्ति न प्रकाशत इति व्यवहारहेतु-रसत्त्वापादनमभानापादानं च। तदुक्तं विद्यारण्यैः—"न भाति नास्ति कूटस्थ इत्यापादनमावृतिः" इति। सैव मलिनसत्त्वप्रधाना सत्यविद्येत्युच्यते। मलिनसत्त्वं च रजस्तमोभिभूतं सत्त्वं सैव प्रकृतिरेव विक्षेपशक्तिश्च तमःसत्त्वाभ्यामनभिभूतं रज एव "रजसो लोभ एव च" इत्यादिस्मृतेर्लोभादीनां विक्षेपकत्वं प्रसिद्धमेव। सा चाकाशादिप्रपञ्चहेतुः तदुक्तं "विक्षेपशक्तिर्लिङ्गादिब्रह्मांडांतं जगत्सृजेत्" इति। पारमेश्वरी परमेश्वरशक्तिः। एवं च मायोपहितं चैतन्यमीश्वरो जगत्कारणमंतर्यामीत्युच्यते स एव तत्पदवाच्यार्थः। अविद्योपहितं चैतन्यं जीवः प्राज्ञ इति चोच्यते, तदुक्तं "तमोरजःसत्त्वगुणा प्रकृतिर्द्विविधा च सा। सत्त्व-शुद्ध्यविशुद्धिभ्यां माया विद्या च ते मते। मायां बिम्बो वशीकृत्य तां स्यात्सर्वज्ञ ईश्वरः। अविद्यावशगस्त्वन्यस्तद्वैचित्र्यादनेकधा ॥" इत्यलम्। प्रकृतमनुसरामः—तत्र द्वयमध्ये प्रकृतिविवेकेन प्रकृतिर्जडा भिन्नाऽहं पुरुषश्चेतनो भिन्नोस्मीति विवेकाभावेन "देवात्मशक्तिं स्वगुणैर्निगूढाम्" इति श्रुतेर्यदृच्छया भगवत इच्छया लीलया हेतुनोपगतां प्राप्तामभ्यपद्यत स्वरूपत्वेनाभ्यजानादि-त्यर्थः। संदर्भस्तु—एष परमात्मा यदृच्छयैव स्वैरितयैव स्वशक्तित्वादुपगतां कर्मबद्धजगत्सिसृक्षासमय एव लीलयाऽभ्यपद्यत ऐक्ष-तेत्यर्थः। "स ऐक्षत" इत्यादिश्रुतेः ॥ ४ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

लक्षणानां भेदो विवेकस्तत्पूर्वकं सर्वभावानां प्रकृतिपुरुषादिसर्वतत्त्वानां जन्मोपवर्ण्यते धात्रा ब्रह्मणा पुत्राय नारदाय द्वितीये यत् साङ्ख्यं प्रोक्तं प्राधान्येन मुख्यतया तत्त्ववित् कपिलः तत्र त्रिषु मध्ये अथेत्यारम्भे लक्षणं व्यावर्त्तको धर्मः यत् लक्षणम् ॥ १ ॥ ❀ ❀ तमेवात्मानमेव विदित्वा मृत्युमत्येति मुक्तो भवति आत्मदर्शनरूपं सत्त्वपुरुषान्यताप्रत्ययरूपं निःश्रेयसप्रयोजनाय कैवल्यलक्षणं प्रयोजनं साधयितुम्। ननु तर्हि तत्त्वानां लक्षणं संप्रवक्ष्यामीति पूर्वं कथं प्रतिश्रुतमत्र भावं व्याचष्टे। तत्त्वलक्षणज्ञानादेवेति। विविक्तस्य सर्वस्मात्पृथक्त्वेन शुद्धतया ज्ञातस्यात्मनो ज्ञानं तत्त्वलक्षणज्ञानादेव भवति, तदुक्तं श्रीकृष्णाचार्य्येण। 'एवं तत्त्वाभ्यासान्नास्मि न मे नाहमित्यपरिशेषम्। अविपर्य्ययाद्विशुद्धं केवलमुत्पद्यते ज्ञानम् ॥' इति ॥ २ ॥ ❀ ❀ तत्र। तेषु तत्त्वेषु मध्ये आत्मैव परमात्मैव मूलपुरुषः। आत्मशब्दस्य परमात्मपरत्वं व्यञ्जयितुं व्याचष्टे। कोऽसाविति। प्रतिलोमं सर्वेन्द्रियागम्यं स्वप्रकाशमिति यावत्, स्फूर्तिस्वरूपज्ञानं समासे षष्ठी राहोः शिर इतिवद्भेदे ज्ञेया। क्षणिकपक्षं विज्ञानवादिमतं तन्मते क्षणिकविज्ञानमेवात्मा तस्योत्पत्तिमत्त्वान्नानादित्वमिति तव्द्यावृत्तिर्ज्ञेया वस्तुतो जीवात्मनोऽपि तथात्वात्तत्रा-तिव्याप्तिं वारयितुं व्याचष्टे। संसारित्वेति। तथा च। 'स ईशो यद्वशे माया स जीवो यस्तयार्दितः' इति विष्णुस्वामिवचनात्तस्य प्रकृतिसङ्गित्वान्न तत्रातिव्याप्तिरित्यर्थः। तार्किकमते स्वतो जडाश्रियोगाच्चेतना आत्मानो भवन्ति। तन्मतं निराकर्त्तुं व्याचष्टे। ज्ञानादिगुणत्वमिति। ननु बाह्येन्द्रियाऽविषयत्वात्प्रतिलोमस्फूर्तित्वं भवतु तस्य, किन्तु 'अहंप्रत्ययविज्ञेयो ज्ञातव्यः सर्वदैव हि। विक्रिया ज्ञानरूपास्य न नित्यत्वे विरोत्स्यते ॥' इति जैमिनीयसिद्धान्तात् ज्ञानविषयत्वम्। अहमित्यान्तरीयज्ञानविषयत्वन्तु भवत्येव तद्वारयितुं व्याचष्टे। मीमांसकादीति। स्वयंज्योतिः स्वयंप्रकाशस्तथा च तस्यैवाहङ्कारादिसर्वेन्द्रियप्रकाशकत्वान्नाहमिति ज्ञानविष-यत्वं स्वव्यवहारे परानपेक्षत्वमेव हि तत्त्वम्। वैष्णवाभिमतास्मदर्थस्तु स्वयंप्रकाश एव, तस्य प्रकृतिकार्यत्वाभावात् अनेनैव स्वयंज्यो-तिरिति पदेनैव ज्ञानाधारत्वेनेति। आत्मनश्शरीराद्यतिरिक्तत्वाद्यत्र ज्ञानपरिणामो दृश्यते तत्रात्मास्तीत्यनुमीयते इत्येव ज्ञानाधा-रत्वेन स्फुरणं तदपि निरस्तं स्वरूपज्ञानस्य परिणामासम्भवात् नीलाद्याकारा वृत्तय एव परिणमन्ते नात्मेति न तदाधारत्वमपेक्षते तत्स्फुरणं स्वप्रकाशत्वादिति भावः। येन समन्वितमिति तस्योपादानत्वमपि स्वीकृतं निरीश्वरसाङ्ख्यमते तदभावेऽपि सेश्वरसाङ्ख्य-मते तदङ्गीकारात् एतैर्निर्गुणत्वादिभिरेव ॥ ३ ॥ ❀ ❀ अत्र। सेश्वरसांख्यमते तत्र रजस्सत्त्वानभिभूतं तम आवरणशक्तिः तमस्सत्त्वानभिभूतं रजोविक्षेपशक्तिस्तद्भेदेन तत्र भेदद्वये पारमेश्वरी जगत्सृष्टिनिमित्तं तदुक्तमभिज्ञैः "विक्षेपशक्तिर्लिङ्गादि-ब्रह्माण्डान्तं जगत्सृजेत्" इति तत्र। जीवेश्वरयोर्मध्ये प्रकृत्यविवेकेन प्रकृतकार्य्यदेहाद्यध्यासेन वशीकृत्य चिच्छक्त्या स्वाधीनीकृत्य 'मायां व्युदस्य चिच्छक्त्या कैवल्ये स्थित आत्मनि" इति श्रीमदर्जुनवाक्यात् तत्र एवं सति स एष जीवात्मा लीलया जीवमोहनरूपया व्यामोहनशक्त्या यदृच्छयेति तत्सम्बन्धस्य दुर्निरूप्यत्वं दर्शयति अभ्यपद्यत तादात्म्याध्यासेन प्राप ॥ ४ ॥

### श्रीमद्वीरराघवव्याख्या

एवं मुक्त्युपायभूतं भगवद्भक्तियोगं प्रस्तुत्य तस्य जगत्कारणविषयत्वस्य "कारणन्तु ध्येय" इति श्रुत्यैवोक्तत्वाद्भजनीयस्य भगवतः सृष्ट्यादिव्यापारान् विवक्षुस्तस्य लक्षणभूतसृष्ट्यादिकारणत्वं प्रकृतिपुरुषकालशरीरकस्य प्रकृतिपुरुषादिस्वरूपशोधनम-न्तरेण तच्छरीरकस्य तस्य सृष्ट्यादिकारणत्वकथनयोगात्प्रथमं प्रकृत्यादिस्वरूपशोधनं तद्विवेकस्य मुक्त्युपायकथनपूर्वकं प्रतिजानीते। अथेति। तत्त्वानां प्रकृतिपुरुषकालादीनां लक्षणं स्वरूपनिरूपकनिरूपितस्वरूपप्रतिपन्नधर्मजातं पृथगसङ्करेण ते तुभ्यं वक्ष्यामि। अप्रस्तुतप्रसङ्गाशङ्कां वारयति। यदिति। यत्प्रकृत्यादितत्त्वानां लक्षणं विदित्वा पुरुषः मुमुक्षुः प्रकृतेर्गुणैः

सत्त्वादिभिः सत्त्वादिगुणकार्यानादिबन्धकपुण्यपापरूपैर्दुरितैरित्यर्थः। विमुच्येत प्रकृत्यादिविवेकहेतुकहेयोपादेयविवेकेन भगवदुपासनद्वारा विमुच्यत इति भावः ॥ १ ॥ ❀ ❀ यत्साक्षान्मुक्त्युपायभूतं ज्ञानं तदपि वक्ष्यामीत्याह। ज्ञानमिति। आत्मदर्शनमात्मा परमपुरुषः दृश्यते साक्षात् क्रियतेऽनेनेत्यात्मदर्शनं यज्ज्ञानं पुरुषस्य मुमुक्षोर्निःश्रेयसाय मोक्षायाहुः वेदान्तास्तज्ज्ञाश्च। तज्ज्ञानं हृदयग्रन्थिभेदनमज्ञाननिवर्तकं ते तुभ्यं यद्वा ते तव हृदयग्रन्थिभेदनं वर्णये ॥ २ ॥ ❀ ❀ तावत्प्रकृतिविलक्षणात्मस्वरूपं शोधयति। अनादिरिति द्वाभ्याम्। पुरुषो जीवः तस्य स्वरूपनिरूपकधर्मद्वयमाह। स्वयंज्योतिः स्वयंप्रकाशः यः स्वात्मानमन्यांश्च प्रकाशयतीति तत् स्वयंज्योतिरित्युच्यते यथा दीपादिस्तद्वदयमपि स्वयंज्योतिः। तर्हि तद्वदेव किं जडस्वरूप इत्यत आह। प्रत्यग्धामा स्वस्मै भासमानत्वं प्रत्यक्त्वं परस्मै भासमानत्वं पराक्त्वम्। एतदेव जडत्वं प्रत्यक् स्वस्मै प्रकाशमानं धाम स्वरूपं यस्य सः। अनेन पराग्धामदीपादिभ्यो जडेभ्यो वैलक्षण्यसिद्ध्या ज्ञानस्वरूपत्वसिद्धिः स्वयंज्योतिरित्यनेन ज्ञानगुणकत्वसिद्धिः। तेन हि स्वपरप्रकाशत्वमुच्यते तत्र यथा दीपादिश्चतुरङ्गुलपरिमितस्तेजोरूप एकदेशस्थः स्वापृथक्सिद्धधर्मभूतया प्रभया अन्यान् प्रकाशयति स्वधर्मभूतप्रभामनपेक्ष्यैव स्वयमपि प्रकाशते तद्वदात्मापि स्वधर्मभूतज्ञानेनान्यान्प्रकाशयति स्वधर्मभूतज्ञाननिरपेक्षमेव स्वयमपि प्रकाशते इति ह्युच्यते। एतावांस्तु विशेषः—पराग्धामा दीपादिः स्वात्मानमन्यांश्च परस्मै प्रकाशयति, आत्मा तु प्रत्यक्त्वेन स्वात्मानमन्यांश्च स्वस्मा एव प्रकाशयतीति। प्रकाशो नाम व्यवहारानुगुण्यापादनम्। एवं च स्वयंप्रकाशत्वं दीपादिष्वात्मनि चाविशिष्टं प्रत्यग्धामत्वं त्वात्मन्येवासाधारणमिति ज्ञानगुणकं ज्ञानस्वरूपं चेति जडाद्विलक्षणमात्मस्वरूपमिति फलितं तदेवाह। प्रकृतेः प्रकृतिपरिणामरूपाच्छरीरेन्द्रियमनःप्राणादेः परः स्वरूपतः स्वभावतश्चात्यन्तविलक्षणः, अत एव निर्गुणः प्राकृतसत्त्वादिगुणरहितः तथाप्यात्मा शरीरान्तःप्रवेशेन तद्धारकः येनात्मस्वरूपेण विश्वमाब्रह्मस्तम्बपर्यन्तं स्थूलसूक्ष्मशरीरात्मकं विश्वं व्याप्तं येनेत्येकवचननिर्देशः "एको व्रीहिः सुसम्पन्नः सुपुष्टं कुरुते प्रजाः" इति वज्जात्यभिप्रायकृतः। अनेन देवादिशरीराणां व्याप्यत्वमात्मनो व्यापकत्वं निरतिशयसूक्ष्मत्वं चोक्तम् ॥ ३ ॥ ❀ ❀ अत एव व्यापकत्वान्निरतिशयसूक्ष्मत्वादनादित्वाद्देहादिविलक्षणत्वाच्च देहादीनामुपाधिभिरुत्पत्तिविनाशादिभिर्देहादिरुपैरुपाधिभिर्वा सह न जायते न म्रियते न नश्यति। ननु देवोऽहं देवोऽयं मनुष्योऽहं मनुष्योऽयं स्थूलोऽहं स्थूलोऽयमिति स्वस्य परेषाञ्च देहात्मनोरभेदेनैव प्रतीतेः कथं देहादिभिः सह जननादिरात्मन इत्यत्राह। निमित्तैः पुण्यपापरूपैः आत्तः देवोऽहं स्थूलोऽहमित्यारोपितः देहधर्मो यस्य स अतो न देहादिभिः सह जननादिरित्यर्थः। एतदेव दृष्टान्तेन स्पष्टयति। यथेति। यथा स्वप्नद्रष्टा स्वाप्नपदार्थनाशेऽपि न नश्यतीत्येवं जागराद्यवस्थासु दृश्यते। देहादिनाशेऽपि न नश्यतीत्यर्थः। एवं प्रकृतिविलक्षणमात्मस्वरूपं विशोध्यैवंविधस्य तस्य कथं कर्तृत्वभोक्तृत्वादिकमित्याशङ्कायां प्रकृतिसंसर्गकृतत्वादिवैशिष्ट्यमिति वक्तुं प्रकृतिसंसर्गप्रकारमाह। स इति। स एष उक्तलक्षणः विभुर्निरतिशयसूक्ष्मत्वेन सर्वान्तर्व्यापनसमर्थः प्रत्यगात्मा सूक्ष्मां नामरूपविभागानर्हनिरतिशयसूक्ष्मदशामापन्नामित्यर्थः। अनेन जगदादाविति सामर्थ्याल्लभ्यते तदैव प्रकृतेः सूक्ष्मदशापन्नत्वात् दैवीं देवस्य विष्णोर्लीलार्थामत एव लीलया देवसम्बन्धिपरमार्थलीलया हेतुभूतया पराभिध्यानेनेति वक्ष्यमाणत्वाद्दैवीमित्युक्तत्वाच्च यदृच्छयैवोपगतां प्राप्तां जीवस्य प्रकृतिसम्बन्धस्य सहजत्वाभावात्कादाचित्कीमित्यर्थः। गुणमयीं सत्त्वादिगुणप्रचुरां मायामभ्यपद्यत अपश्यत्। अत्र केचिदावरणविक्षेपभेदेन प्रकृतिं द्वेधा विभज्य पुरुषमपि जीवेश्वररूपेण द्वेधा विभज्य एकस्य प्रकृत्यविवेकेन संसारः इतरस्य प्रकृतिं स्ववशीकुर्वतः सृष्ट्यादिव्यापारस्तत्र प्रकृत्यविवेकेन यः संसरत्यावरणशक्त्या तिरोहितस्तस्य संसारप्रकारोऽनेन श्लोकेनोच्यते इति व्याचक्षते, तदयुक्तं नित्यमविद्याप्रत्यनीकस्वप्रकाशस्वरूपस्य प्रकृत्यविवेकानुपपत्तेः। स्वलीलारूपसृष्ट्यादिव्यापारनिवृत्तये आवरणशक्त्या मुह्यतीति चेन्न, विकल्पासहत्वात्किं भ्रान्तिहेतुर्लीला उत भ्रान्तिकार्या उत भ्रान्तिरेव, नाद्यः लीलायाः स्वभ्रमसम्पादनानुपपत्तेः। बहु स्यामिति सङ्कल्पेन हीश्वरो लीलारूपं सृष्ट्यादिकं करोति। नहि कश्चिद् भ्रान्तः स्यामिति सङ्कल्प्य भ्राम्यति। किञ्चेश्वरः सर्वज्ञश्चेत्स्वानर्थभ्रमरूपसंसार न प्रवर्तयति। अज्ञश्चेत्सर्वज्ञत्वश्रुतिविरोधः। विवेकनिष्पादनेन स्वानर्थपरिहाराय जगत् सृजतीति चेत्तथाऽपि लीलात्वमनुपपन्नम्, न हि व्याध्युपहतस्यौषधानयनप्रवृत्तिर्लीला भवति। न द्वितीयः प्रथमसंकल्पस्य लीलात्वानुपपत्तेस्तद्वदेवोत्तरत्रापि लीलामन्तरेण भ्रमोपपत्तेश्च। नापि तृतीयः द्विचन्द्रज्ञानस्य लीलात्वाप्रसिद्धेः। स्वयमभ्राम्यन्नीश्वरो लीलया परान्मोहयतीति चेन्न, त्वन्मते भ्रान्त्यादिना परदर्शनायोगात्परदर्शने सम्भवति तेषां स्वानन्यत्वज्ञानाच्च निर्विशेषसन्मात्रस्य ब्रह्मणो निर्विशेषत्वादेव न लीलासम्भवः। ईश्वरस्य तु सर्वज्ञत्वेन संसाररहितत्वेन जीवान् स्वानन्यत्वेन च जानतो जन्ममरणादिनिवर्तननरकपातनादिव्यापारो न लीला भवितुमर्हति। तस्मान्निखिलहेयप्रत्यनीकानन्तकल्याणगुणमहोदधेरीश्वरस्य लीलोपकरणभूतया तन्नियाम्यया मायया तन्नियाम्यस्य तच्छरीरभूतस्यानादित्वाद्युक्तधर्मकस्य तस्माद्विलक्षणस्य प्रत्यगात्मनः परमार्थभूतेश्वरलीलारूपजगत्सृष्ट्यादिव्यापारनिर्वृत्तये अभिपत्तिरनेन श्लोकेन प्रतिपाद्यते इत्यभ्युपगन्तव्यमत्र। लीलया यदृच्छयाभ्युपगतामभ्यपद्यतेत्यप्यन्वेतुं शक्यं तदा लीलयेत्यध्ययनेन वसतीतिवत्फलस्यैव हेतुत्वेन विवक्षया हेतुतृतीया लीलया भगवल्लीलारसनिर्वृत्त्यर्थं यदृच्छया यादृच्छिकभगवत्सङ्कल्पेनोपगतां प्राप्तामित्यर्थः ॥ ४ ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली ।

अस्मिन्नध्याये प्रसंख्यानाय तत्त्वानामिति यदुक्तं तत्प्रपञ्चः क्रियते इति प्रतिजानीते । अथ त इति । अथ भक्तिनिरूपणानन्तरं यत्पुरुषार्थोपयोगि तदेव वक्तव्यं किं तत्त्वानां लक्षणज्ञानेन प्रयोजनमिति तत्राह । यद्विदित्वेति । गुणैः सत्त्वादिभिः ॥ १ ॥ ❀ ❀ परमात्मज्ञानमेव निर्विचारं मुक्तिसाधनं श्रुतं तत्त्वलक्षणज्ञानस्य च कथं तत्साधनत्वं स्यादित्याशङ्क्य तत्त्वलक्षणज्ञानपरमात्मज्ञानाविनाभूतं तेषां मुख्यकारणत्वात् परमात्मन इति तज्ज्ञानमेव वर्णय, इति प्रतिजानीते। ज्ञानमिति। आत्मानं परमात्मानं दर्शयतीति आत्मदर्शनं यत् ज्ञानं पुरुषस्य श्रेयोऽर्थिनो निःश्रेयसाय मोक्षादिसर्वपुरुषार्थायाहुस्तत् हृदयग्रन्थिभेदनं संसारपाशच्छेदकरं ज्ञानं तव वर्णये इत्यन्वयः ॥ २ ॥ ❀ ❀ यज्ज्ञानं हृदयग्रन्थिभेदनमुक्तं तज्ज्ञानं किंगुणविशिष्टमुदीर्यमाणं संसारसमुच्छेदसमर्थं स्यादिति तत्राह । अनादिरिति । य अनादिराद्यन्तरहितः कारणमात्रशून्यो वात्मा विज्ञानादिगुणराशिः पुरुषपूर्णानन्दं सनोति ददातीति पुरुषः सर्वान्तर्यामी वा निर्गुणः गुणसम्बन्धरहितः चेतनप्रकृतेः परः प्रत्यग्धामाभिमुखपञ्चाख्यधामा स्वयंज्योतिः स्वप्रकाशेन दीप्यमानो विश्वं स्थावरजङ्गमात्मकं जगद्येन समन्वितं व्याप्तम् ॥ ३ ॥ ❀ ❀ स आत्मा परमात्मा न जातो न म्रियेत "अज आत्मा महान् ध्रुवः । न जायते म्रियते वा कदाचित्" इत्यादिश्रुतिस्मृतिप्रसिद्धमाद्यन्तरहित इत्यनेनापि जन्माद्यभावे सिद्धे न जात इत्यादि पुनर्वचनं प्रमाणप्रसिद्धिद्योतनाय युक्तिपूर्वश्रुत्यादेर्बलीयस्त्वं न केवलस्येति भावेन कैमुत्यन्यायमाह । देहाद्युपाधिभिरिति । देहाद्युपाधिलक्षणैर्निमित्तैरात्ततद्धर्मा स्वीकृतजननादिधर्मा जीवोऽपि न स्वरूपतो जायते किं तु भ्रान्त्याभिमानेन जायते म्रियते भ्रान्तत्वाद्देहात्मत्वस्य अत्र दृष्टान्तमाह । यथेति । यथा स्वप्ने तस्य स्वप्नस्येक्षिता द्रष्टा जाग्रति दृष्टश्रुतजननादिसंस्कारवशाज्जातो मृत इति पश्यति, न हि ते जननमरणे सत्ये स्तः । किन्तु भ्रान्त्यात्मना मन्यते तथा प्रकृतेः किमु सर्वज्ञत्वस्वतन्त्रत्वप्राकृतवैकृतदेहरहितत्वदूरीकृताविद्यत्वादिवैलक्षण्ययुत ईश्वरो न जात इति । तदुक्तम् । "परस्य जन्ममृत्य्वाद्याः स्युः स्वतन्त्रस्य किं पुनः । जीवस्यापि यतो भ्रान्तिर्जन्ममृत्य्वादिसंगतिः ॥" इति । निरवयवस्य जीवस्योपाधिसम्बन्धः ईशेच्छया घटत इत्यङ्गीकारेण न युक्तिविरोधोऽपि शङ्कनीयः "यद्वि युक्त्या विरुध्येत तदीशकृतमेव हि" इति वचनाच्च ॥ ❀ ❀ अधुना जीवेश्वरयोः पारतन्त्र्यापारतन्त्र्यादिवैलक्षण्यज्ञापनाय परस्य जगत्सृष्ट्यादिमाहात्म्यादिकथनपूर्वकं जीवस्य तदधीनत्वेन प्रकृतिबद्धत्वं वक्तुमाह । स एवेति । योऽनादिगुणविशिष्टो यश्च जन्मादिरहितो जन्मादिमज्जीवविलक्षणः स सूक्ष्मां दैवीं क्रीडादिगुणवतीं देवस्य विष्णोरियमिति वा गुणमयीं सत्त्वादिगुणाभिमानिनीं यदृच्छया हरेरिच्छयोपगतां सदा समीपस्थितां प्रकृतिं श्रियमभ्यपद्यत लीलयेति प्रयोजनान्तरं निवारयति । अत्र प्रकृतिशब्देन चिदचिदात्मके उभे ग्राह्ये । विभुः सर्वगत इत्यनेन प्रकृत्यभिपादनं नौपचारिकं किन्तु सृष्ट्यभिमुखीकरणं कार्यं सूचयति, तदपि स्वप्रयोजनं नेत्यत उक्तं लीलयेति ॥ ४ ॥

## श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

तदेवं कृतार्थयित्वा विवेकमात्राय सांख्यज्ञानयोगादिमार्गानप्याह यावत् समाप्ति । अथेति ॥ १ ॥ २ ॥ ❀ ❀ अनादिरिति आत्मा परमात्मैव पुरुषः निर्गुणः प्राकृतगुणरहितः, विश्वं येन समन्वितमिति सर्व्वकारणत्वं तेन विचित्रप्रकाशतया अनन्तशक्तित्वं दर्शितम् ॥ ३ ॥ ❀ ❀ स एष परमात्मा यदृच्छया स्वैरतया या लीला तया अभ्यपद्यत ऐक्षत । 'लोकवत्तु लीलाकैवल्यम्' । २ । २ । २१ । इति न्यायात् "स ऐक्षत" इति श्रुतेः ॥ ४ ॥

## श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

षड्विंशे महदादीनामुत्पत्तिर्लक्षणं तथा । तैर्विराट् तस्य चैतन्यमुक्तमात्मप्रवेशतः ॥

मात्रा पृष्टेषु भक्तिज्ञानयोगेषु भक्तिमुक्त्वा मातरं तथैव कृतार्थीकृत्यापि कर्म्मज्ञानयोगादिभिः स्वर्गमोक्षादिफलानां भक्त्या विना दातुमशक्यत्वात्तेष्वपि भक्तिमहादेव्या अधिकारात् सर्व्वत्र साम्राज्यवत्यास्तस्या उपासकजनैरपि कौतुकवशात् कर्म्मज्ञानादयोऽपि जिज्ञासनीया एवेति साम्प्रतं ज्ञानं वक्तुमाह । अथेति ॥ १ ॥ ❀ ❀ ननु तत्त्वलक्षणज्ञानेन किं भविष्यतीत्यत आह । ज्ञानमिति । तत्त्वलक्षणज्ञानादेव विविक्तात्मज्ञानं भवतीति भावः ॥ २ ॥ ❀ ❀ तत्र पुरुषं लक्षयति । अनादिर्नित्यः आत्मा परमात्मैव पुरुषः निर्गुणः प्राकृतगुणरहितः यतः प्रकृतेः परः प्रत्यक् सर्वेंद्रियागम्यं धाम कारणार्णवो यस्य सः, अत एव स्वयंज्योतिः स्वप्रकाशः स्वयंज्योतिष्ट्वे हेतुः विश्वं येन समन्वितं सत् प्रकाशत इति शेषः ॥ ३ ॥ ❀ ❀ एष परमात्मा यदृच्छयैव स्वैरतयैव स्वशक्तित्वादुपगतां कर्म्मबन्धजगत्सिसृक्षासमय एव लीलया अभ्यपद्यत जीवशक्तिरूपं वीर्य्यं तस्यामादधान ऐक्षतेत्यर्थः ॥ ४ ॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

भजनीयादिस्वरूपज्ञानार्थं साङ्ख्यमाह षड्विंशेन । अथेति । तत्त्वानां प्रकृतिपुरुषादीनां यत्तत्त्वानां लक्षणं विदित्वा । प्राकृतैः सत्त्वादिभिर्विमुच्यते ॥ १ ॥ ❀ ❀ ननु यद्विज्ञानेन सर्वं विज्ञातं भवति "आत्मा वा अरे द्रष्टव्यः विजिज्ञासितव्यः

सोऽन्वेष्टव्यः तमेव विदित्वातिमृत्युमेति।" इत्यादिश्रुतिभ्यः परमात्मैव वेद्यत्वेनोक्तस्तद्वेदनोपासनापरपर्यायेन ज्ञानेन मोक्षश्चोक्तः किं प्रकृत्यादिनानातत्त्वलक्षणज्ञानेनेत्यत आह। ज्ञानमिति। पुरुषस्य जीवस्य निःश्रेयसार्थाय मोक्षप्रयोजनाय यदात्मदर्शनम्। आत्मा परमात्मा दृश्यते साक्षात् क्रियतेऽनेनेति तत् अत एव हृदयग्रन्थिभेदनम् उपलक्षणं चैतत् सर्वसंशयच्छेदस्य कर्मक्षयस्य च एवंभूतं यज्ज्ञानं श्रुतय आहुस्तत्ते तुभ्यं वर्णये परमात्मन एव शक्तीनां प्रकृत्यादीनां जडत्वादिलक्षणम्। अंशभूतस्य जीवस्य च अल्पज्ञत्वादिलक्षणं तस्य चिदचिदात्मत्वसर्वकारणत्वादिगुणकथनाय ज्ञातृज्ञेयादिविविक्तस्वरूपज्ञानाय च क्रियते, नतु प्रकृत्यादीनां स्वातन्त्र्यप्रतिपादनायेति भावः॥ २॥ ❀ ❀ तत्र तत्त्वानि "भोक्ता भोग्यं प्रेरितारं च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतत्" इति श्रुत्युक्तानि त्रिविधानि तत्र नियन्तारं मुख्यं भगवन्तं वर्णयति। अनादिरिति द्वाभ्याम्। अनादिः सृष्टेः पूर्ववर्ती सर्वकारणभूतः आत्मा सर्वात्मा प्रत्यक् जीवतत्त्वं धाम लये यस्य सः "अन्तःप्रविष्टः शास्ता जनानाम्" इति श्रुतेः पुरूणि कर्मफलानि जीवेभ्यो भोक्तृभ्यः सनोति ददातीति पुरुषः। षणुदाने, जीवनियन्तेत्यर्थः। प्रकृतेः भोग्यरूपायाः स्वशक्तेः परः आश्रयः नियन्तेत्यर्थः। एवं चेतनाचेतननियन्ता निर्गुणः चेतनाचेतनासाधारणगुणरहितः यतः स्वयंज्योतिः स्वप्रकाशः येनैव भगवता विश्वं सर्वं चिदचिदात्मकं समन्वितम्। "येनैव पूर्णं पुरुषेण विश्वम्" इति वाक्यात् स एष उक्तलक्षणः विभुः सर्वव्यापी दैवीं स्वस्य देवस्य शक्तिं सृष्ट्यादिलीलया अभ्यपद्यत॥ ३—४॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

आत्मानात्मविवेकाय षड्विंशे साङ्ख्यमुच्यते। तत्त्वानां लक्षणान्यत्र निरुक्तिश्चेयमत्र च[१]॥ १॥
जीवब्रह्मविभागार्थं प्रक्रियाद्वितयं स्मृतम्। संसारे मूलभावे च पुरुषः प्रकृतिर्मता॥ २॥

पूर्वाध्याये उत्तमभक्त्या हृदयप्रविलापनमुक्त्वा, अन्यासां च फलं निरूप्य, ताः सत्सङ्गादेव भवन्तीति देवहूतेस्तदसम्भवात् शास्त्रार्थपरिज्ञानार्थमेव यन्निरूपितमिति मत्वा साङ्ख्यं तदर्थमेव कथयितुमाह—अथेति। अथेत्यपराधीनत्वाय भिन्नः प्रक्रमः। साङ्ख्यं ते तुभ्यमेवाऽभिधास्यामि। साङ्ख्यस्वरूपमाह—तत्त्वानां लक्षणं पृथगिति। यथाऽन्योन्यसंश्लेषो न भवति तथा तत्त्वानि लक्षणीयानि। लक्षणैरेवेतरभेदपरिज्ञानमित्यवोचाम। अतस्तत्त्वानां लक्षणं पृथक् पृथक् प्रवक्ष्यामि। नन्वन्तः स्थितसंसारस्य बहिः स्थितैस्तत्त्वादिपदार्थैर्ज्ञातैरपि किं स्यात्तत्राऽऽह—यद्विदित्वेति। पृथक् पृथक् लक्षणं विदित्वा स्वयं पुरुषः, प्राकृतैर्गुणैराध्यात्मिकतत्त्वैर्विमुच्यते। सञ्जाते विद्यमानस्तत्तल्लक्षणैस्तं तं पृथक्कृत्य केवलो भवितुं शक्नोति॥ १॥ ❀ ❀ एतदात्मानात्मविवेचनं यदर्थं तच्च ज्ञानं तुभ्यं कथयिष्यामीत्याह—ज्ञानमिति। यज्ज्ञानं निःश्रेयसार्थाय पुरुषस्य मोक्षं साधयति, तत्ते वर्णयिष्यामीति संबन्धः। नन्वात्माज्ञानात् संसार इति आत्मज्ञानमेव वक्तव्यं किमन्येन ज्ञानेनेत्याशङ्कयाऽऽह—आत्मदर्शनं यदाहुरिति। आत्मनो दर्शनं यस्मात्, आत्मसाक्षात्कारहेतुः, साक्षात्कार एव वा। तत्स्वरूपतः कारणतश्च ते तुभ्यं वर्णये। एतदपि भक्तिवत् हृदयप्रविलापकमित्याह—हृदयग्रन्थिभेदनमिति। हृदये चिदचितोर्ग्रथनं यस्मात् स हृदयग्रन्थिः, मोहः, कोशो वा। तस्य भेदनं यस्मादिति। साङ्ख्येन सहितं ज्ञानं स्वतन्त्रं साधनमित्युक्तम्॥ २॥ ❀ ❀ तत्र प्रथमं पुरुषस्य लक्षणमाह—यस्मिन् ज्ञाते इतरभिन्नतया ज्ञानमिति तल्लक्षणं यत्रैव न भविष्यति, तदेव दूरीकर्तुं शक्यत इति मुख्यतयाऽऽत्मलक्षणम्। पुरुषो लक्ष्यः, आत्मेति लक्षणम्। योऽयमहंप्रत्ययवेद्यः, देहेन्द्रियान्तःकरणानि लोका ममतास्पदाः, यागादिसाध्याः परलोकाश्च। सो(स्वो)पकारि सर्वमेवातति व्याप्नोतीति आत्मा, अस्मत्प्रत्ययवेद्यः, स एव पुरुष इति। तस्य देहाद्युत्पत्त्या जीवभावापन्नस्योत्पत्तिर्भविष्यतीति तद्व्यावृत्त्यर्थमाह—अनादिरिति। जननसमागमाविर्भावभेदेन भिन्ना काप्युत्पत्तिर्यस्य नास्ति सोऽनादिः। तस्योत्पत्त्यभावे हेतुमाह—निर्गुण इति। निर्गता गुणा यस्मात्। सर्वोत्पादका गुणाः, ते चेत्तत एवोत्पन्नाः, कस्तस्योत्पत्तिं साधयिष्यति। सुतरामेव निवृत्तिपक्षे गुणसंबन्धरहित इत्यर्थः। स्वस्य गुणहेतुत्वे, स्वतो वा गुणसंबन्धाभावे, प्रकृतेरेव वा गुणा आत्मन्यादिमत्त्वं साधयिष्यतीत्याशङ्कयाऽऽह—प्रकृतेः पर इति। न हि प्रकृतिनियन्ता प्राकृतैर्गुणैः संबध्यते, प्रकृतेरन्यः प्रकृतिसंबन्धरहितो वा। तत्र प्रमाणमाह—प्रत्यग्धामेति। प्रत्यक् अन्तर्मुखतया धाम स्फूर्तिर्यस्य। अहंवित्तिवेद्य इत्यर्थः। नन्वहङ्कारोऽपि तादृशो भवतीति चेत्तत्राऽऽह स्वयंज्योतिरिति। स्वयमेव ज्योतिः प्रकाशरूपम्। अनेन प्रमाणान्तरं तत्र नास्ति, नापेक्ष्यत इत्यप्युक्तम्। अहङ्कारस्तु स्वप्रकाशो न भवति, तदुत्तराध्याये वक्ष्यते। आत्मनोऽसाधारणं धर्मान्तरमाह—विश्वं येन समन्वितमिति। येनाऽऽत्मना सर्वमेव विश्वं समन्वितम्। तत्त्वानामन्योन्यव्यभिचारित्वात्, स्वभावकालकर्मणां नानात्वात्, एकेन सर्वजगतः सम्यक् संबन्ध आत्मनैव भवति, नाऽन्य[२]स्येति। सम्यगन्वयश्च तत्तद्गुणदोषसंबन्धाभावेन समन्वितमित्येव संसर्गः। अत्र पुरुषस्य आत्मेत्येव लक्षणम्, आत्मनः सङ्घातव्यावृत्त्यर्थमन्यानि लक्षणानि। अनादिपदेन देहो व्यावर्तितः; निर्गुणपदेन प्राकृताः सर्वे, प्रकृतेर्नियामकत्वेन प्रकृतिर्व्यावर्तिता, प्रत्यग्धामत्वेन कालो व्यावर्तितः। एवं चत्वारि पदान्येकं लक्षणं लौकिकम्। स्वयंज्योतिरित्यलौकिकं लक्षणम्। ज्ञाने साक्षादुपयोगिलक्षणं विश्वं

---

१. या. घ. ङ.। २. अन्येन. ङ.।

येन समन्वितमिति । एवमात्मनस्त्रीणि लक्षणानि । प्रत्यग्धामत्वं देहात्मविवेकात्पूर्वं देहेऽपि भवतीति प्रत्यग्धामेति न देहव्युदासः । तथा प्रकृतेः परे कालादयश्च न व्यावर्तिता भवन्ति, शास्त्रसहकृतबुद्धेरपि स्वभावनियामकत्वदर्शनात् ॥ ३ ॥ ❀ ❀ तस्याऽऽत्मरूपस्य पुरुषस्य वस्तुतो निर्लेपत्वात् प्रकृतिनियामकत्वाच्च जीवत्वं सहजं न भवतीति वक्तुं जीवोपाधिमाह—स एष इति । स एव लक्षितः कारणत्वेनोक्तः पुरुषः, एष आत्मा अहंप्रत्ययवेद्यः । तस्य कथमेवं विपर्यय इत्याशङ्क्य प्रकृतिरात्मव्यतिरिक्ता साङ्ख्यैकदेशिनो मते पुरुषवन्नित्या, भगवदीयसाङ्ख्ये तु भगवतः शक्तिः; साङ्ख्यशास्त्रं तु न भगवन्तं विषयीकरोति, तत्प्रवर्तकत्वात्तन्नियामकत्वाच्च, अक्षरादर्वागेव तच्छास्त्रप्रवृत्तेः, पञ्चधा भगवाननादिरिति । पुरुषोत्तमोऽक्षरं कालः प्रकृतिपुरुषाविति । इदं मतमाश्रित्य यत्र साङ्ख्यसिद्धान्तप्रवृत्तिः, न तु प्राकृतम् । तत्र पुरुषस्यैव प्रकृतिनियम[1]नावस्थां परित्यज्य प्रकृत्यधीनावस्थया जीवत्वं तदुच्यते—प्रकृतिमिति । सूक्ष्मा दुर्ज्ञेया कोमलाङ्गी । एष इत्यनेन कामोऽप्यस्य प्रथमं भगवदिच्छया संजात इति ज्ञातव्यम्, अन्यथा तस्यामासक्तिर्न स्यात् । 'काममय एवाऽयं पुरुषः' इति श्रुतेश्च । अतः कामवशात्तां भगवच्छक्तिरूपां प्रकृतिम्, देवस्य संबन्धिनीम्, मोहिकां बन्धनहेतुभूतगुणमयीमादौ । विभुः समर्थः तां भोक्तुम् । यदृच्छयेति सापि भगवत्प्रेरणया स्वयमेव भोग्यत्वेन समागता भोक्तुम् । प्रभोः सा लीलोचितेति तामभ्यपद्यत । उपभोक्तुं तया सहैक्यं प्राप्तवानित्यर्थः ॥ ४ ॥

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

अथ षड्विंशाध्यायं विवरिषवः संगतेः पूर्वमुक्तत्वात्तामनुक्त्वा भगवद्विचारितमर्थाख्यं द्वितीयपुरुषार्थं स्फुटीकर्तुमेष सर्वोऽपि विचार इति ज्ञापनाय प्रयोजनमेव मुख्यतया आहुः—आत्मेत्यादि । तथा चात्मानात्मविवेको भगवद्विचारितोऽर्थः । सोऽत्र मैत्रेयोक्तावध्यायार्थः । तदर्थमत्र तत्त्वानां लक्षणानि निरुक्तिरुद्देशश्च क्रियत इति शेषः । च पुनरत्र जीवब्रह्मविभागार्थं प्रक्रियाद्वितयं बन्धमोक्षरूपं कपिलाचार्यैः स्मृत्वोक्तम् । यदीदं द्वयं न स्यात् तदा विभागो न ज्ञायेत । तदाहुः—संसार इत्यादि मूलभावे पूर्वरूपापत्तौ पुरुषो मत इत्यन्वयः । तथा च पूर्वाध्याये भक्तेरुक्तत्वादत्र तदङ्गत्वेन भक्तकथनधिकारे च, फलार्थं तदनुकल्पत्वेनात्र सांख्यमुच्यत इति तद्विचारेऽङ्गाङ्गिभावो वा एककार्यत्वं वा संगतिरित्यर्थः । शास्त्रार्थविचारे तु भगवद्भोग्यतत्त्वानामत्र निरूपणान्मा(?)त्राध्यायत्वमिति न कोऽपि कुत्रापि संशय इति सर्वं सुस्थम् । अथेत्यत्र । आध्यात्मिकतत्त्वैरिति । शरीरस्थैर्वासनामयैश्च ॥ १ ॥ ❀ ❀ ज्ञानमित्यत्र । कोश इति । लिङ्गशरीरम् ॥ २ ॥ ❀ ❀ अनादिरित्यत्र । आत्मत्वस्य पुरुषलक्षणत्वं व्युत्पादयन्ति—देहेत्यादि । अत्रात्मा 'अहमात्मा गुडाकेश' इति वाक्योक्तौ विभूतिरूपो ज्ञेयः । आविर्भावभेदेनेत्यत्राऽऽविर्भावपदेन बहिःप्राकट्यं ज्ञेयम् । नानात्वादिति । अनेकविधत्वात् । समन्वितमित्येव संसर्ग इति । एवंप्रकारकः संसर्गः समन्वितशब्दार्थः । मूले परीक्षाया अनुक्तत्वादत्र परीक्षन्ते । अनादिपदेनेत्यादि । प्राकृता इति । महदादयः । अस्मदादिदेहापेक्षयाऽनादित्वस्य तेषु सत्त्वात्तद्व्यावृत्त्यर्थं निर्गुणपदमित्यर्थः । निर्गुणपदे गुणजनकत्वरूपार्थादरे प्रकृतावतिव्याप्तिरिति तद्व्युदासायाऽऽहुः—प्रकृतेरित्यादि । ननु प्रथमलक्षणे पदचतुष्टयस्य किं प्रयोजनमित्याकाङ्क्षायामाहुः—प्रत्यगित्यादि । तथा च, केवलमनादित्वं काले, गुणजनकत्वं च प्रकृतावुभयमपि प्रकृताविति ताभ्यां तद्व्युदासादेताभ्यां चैतदव्युदासात्समुदितमुपात्तमित्यर्थः । अत्रैतद्बोध्यम् । प्रकृतेः परः प्रत्यग्धामेति पदद्वयकथने विशेषणदलेन कालबुद्धिप्रकृत्यादीनां विशेषणदलेन देहस्य च व्युदासादनादिनिर्गुणपदे यद्यपि नात्यावश्यके, तथाप्यनादित्वस्याविकारित्वे निर्गुणत्वस्य चाऽनञ्जन उपयोगस्याऽग्रिमाध्यायारम्भ उपपादयिष्यमाणत्वादत्र तत्स्वरूपकथनमात्रपरे । किं चात्र प्रत्यग्धामत्वस्य देहेऽतिव्याप्तिबोधनेन ममात्मेत्यादि पराक्प्रत्ययोऽपि विवेकाभावकृत एवेति न तेनात्मनः प्रत्यग्धामत्वक्षतिरित्यपि ज्ञापितमिति च ॥ ३ ॥ ❀ ❀ स एष इत्यत्र । जीवोपाधिमिति जीवत्वप्रयोजकं धर्मम् । कारणत्वेनेति । गुणजनकत्वेन इत्याशङ्क्येति । अस्यामाशङ्कायाम् । अन्वयस्तु इदं मतमाश्रित्येत्यनेन बोध्यः । साङ्ख्यैकदेशिन इति । अनीश्वरादिसाङ्ख्यवादिनः । तत्प्रवर्तकत्वादिति भगवतः सांख्यमतप्रवर्तकत्वात् । तथा च, यदि विषयीकुर्यात् तदा ब्रह्मवादान्न व्यतिरिच्येत । तथा सति तस्याऽस्य च फलभेदो न स्यादतो भगवत एतत्प्रवर्तकत्वात्तथेत्यर्थः । किंचात्र प्रकृत्यधीनत्वं संसारार्थं पुरुषस्याऽत्र वाच्यम्, तदपि भगवतः प्रकृतिनियामकत्वादनुपपन्नम् । तदाहुः—तन्नियामकत्वादिति । साङ्ख्यान्तराद्विशेषं बोधयितुमत्रत्यां शास्त्रमर्यादामाहुः—पञ्चधेति । कालादित्रयस्याऽनादित्वमत्र स्पष्टम् । पुरुषोत्तमाक्षरयोस्तु गीतायां सिद्धमत्रानुमंस्यते, प्रकृतेः शक्तित्वं चानुमंस्यते—दैवीत्यनेन । अत इदं मतमन्यतो भिन्नम्, तदाहुः—नतु प्राकृतमिति । तत्रेति प्रस्तुतसाङ्ख्ये ॥ ४ ॥

### श्रीगिरिधरकृता बालप्रबोधिनी

चतुर्विंशतितत्त्वानां षड्विंशे लक्षणं पृथक् । उत्पत्तिसहितं त्वत्र कपिलेन निरूप्यते ॥ १ ॥

तदेवं मात्रा पृष्टेषु भक्तिसाङ्ख्ययोगेषु भक्तिं निरूप्य साङ्ख्यनिरूपणं प्रतिजानीते—अथेति । द्वाभ्याम् । अथेदानीं तत्त्वानां प्रकृतिपुरुषकालमहत्तत्त्वादीनां पृथक् लक्षणं उत्पत्तिपूर्वकासाधारणधर्मं वक्ष्यामि । तत्फलमाह—यदिति । यत् तत्त्वलक्षणं

---

१. नियता क. घ. ङ.

ज्ञात्वा मुमुक्षुः पुरुषः प्रकृतिपरिणामरूपैः सत्त्वादिभिः देहेन्द्रियान्तःकरणादिरूपेण परिणतैर्विमुच्येत इत्यन्वयः ॥ १ ॥ ❀ ❀ ननु तत्त्वलक्षणज्ञानात्कथं विमुक्तिः ? "तमेव विदित्वाऽतिमृत्युमेति" इत्यादिश्रुतेरात्मज्ञानादेव विमुक्तिश्रवणात्, इति चेत्सत्यम्, आत्मनोऽपि तत्त्वान्तःपातित्वात् । तत्त्वलक्षणज्ञानादेव विविक्तात्मज्ञानमपि भविष्यतीत्याशयेनाह—ज्ञानमिति । आत्मदर्शनं आत्मा दृश्यते साक्षात्क्रियते येन तथाभूतं यज्ज्ञानं पुरुषस्य निःश्रेयसाय मोक्षाय वेदान्ता आहुस्तत्ते तुभ्यं वर्णये । ज्ञानस्य मुक्तिहेतुत्वं कथमित्याकाङ्क्षायामाह—हृदयग्रन्थिभेदनमिति, देहान्तःकरणाद्यात्माध्यासनिवर्त्तकमित्यर्थः ॥ २ ॥ ❀ ❀ एवं प्रतिज्ञाय प्रथमं पुरुषं लक्षयति—अनादिरिति । पुरुषः अनादिः उत्पत्तिशून्यः, अततीत्यात्मा व्यापकः, प्रकृतेः त्रिगुणात्मिकायाः परो विलक्षणः, अतो निर्गुणः सत्त्वादिगुणरहितः, प्रत्यग्धामा अन्तस्स्फूर्तिः ज्ञानरूपः अत एव स्वयञ्ज्योतिः स्वयम्प्रकाशः, येन समन्वितं व्याप्तं सत् विश्वं प्रकाशते इति शेषः, विश्वप्रकाशक इत्यर्थः ॥ ३ ॥ एवं पुरुषस्वरूपं निरूप्य तस्य कर्त्तृत्वादि तु प्रकृत्यध्यासेनेति वक्तुं प्रकृतिनिरूपणपूर्वकं तेन तत्स्वीकारमाह—स एष उक्तलक्षणो विभुः स्वतन्त्रः पुरुषः सूक्ष्मामविभक्तनामरूपां गुणमयीं सत्त्वादित्रिगुणात्मिकां दैवीं देवस्य भगवतः शक्तिरूपां यदृच्छयैवोपगतां प्राप्तां प्रकृतिं लीलया हेतुभूतया लीलार्थं अभ्यपद्यत स्वीकृतवानित्यन्वयः ॥ ४ ॥

## हिन्दी अनुवाद

### महदादि भिन्न-भिन्न तत्त्वोंकी उत्पत्तिका वर्णन

श्रीभगवान्ने कहा—माताजी ! अब मैं तुम्हें प्रकृति आदि सब तत्त्वोंके अलग-अलग लक्षण बतलाता हूँ; इन्हें जानकर मनुष्य प्रकृतिके गुणोंसे मुक्त हो जाता है ॥ १ ॥ ❀ ❀ आत्मदर्शनरूप ज्ञान ही पुरुषके मोक्षका कारण है और वही उसकी अहङ्काररूप हृदयग्रन्थिका छेदन करनेवाला है, ऐसा पण्डितजन कहते हैं । उस ज्ञानका मैं तुम्हारे आगे वर्णन करता हूँ ॥ २ ॥ ❀ ❀ यह सारा जगत् जिससे व्याप्त होकर प्रकाशित होता है, वह आत्मा ही पुरुष है । वह अनादि, निर्गुण, प्रकृतिसे परे, अन्तःकरणमें स्फुरित होनेवाला और स्वयंप्रकाश है ॥ ३ ॥ ❀ ❀ उस सर्वव्यापक पुरुषने अपने पास लील-विलासपूर्वक आयी हुई अव्यक्त और त्रिगुणात्मिका वैष्णवी मायाको स्वेच्छासे स्वीकार कर लिया ॥ ४ ॥

गुणैर्विचित्राः सृजतीं सरूपाः प्रकृतिं प्रजाः । विलोक्य मुमुहे सद्यः स इह ज्ञानगूहया ॥ ५ ॥
एवं पराभिध्यानेन कर्तृत्वं प्रकृतेः पुमान् । कर्मसु क्रियमाणेषु गुणैरात्मनि मन्यते ॥ ६ ॥
तदस्य संसृतिर्बन्धः पारतन्त्र्यं च तत्कृतम् । भवत्यकर्तुरीशस्य साक्षिणो निर्वृतात्मनः ॥ ७ ॥
कार्यकारणकर्तृत्वे कारणं प्रकृतिं विदुः । भोक्तृत्वे सुखदुःखानां पुरुषं[1] प्रकृतेः परम् ॥ ८ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

तस्या लीलामाह । गुणैरिति । ज्ञानं गूहयत्यावृणोतीति ज्ञानगूहा तया । तथा च श्रुतिः "अजामेकां लोहितशुक्लकृष्णां बह्वीं प्रजां जनयन्तीं सरूपाम् । अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः" इति । मुमुहे आत्मानं विस्मृतवान् ॥ ५ ॥ ❀ ❀ पराभिध्यानं प्रकृत्यध्यासस्तेन प्रकृतेर्गुणैः कर्मसु क्रियमाणेषु कर्तृत्वमात्मनि मन्यते ॥ ६ ॥ ❀ ❀ तदिति कर्तृत्वमननमेव अस्य पुरुषस्य साक्षिमात्रत्वादकर्तुरेव सतः कर्मभिर्बंधः । ईशस्यापरतन्त्रस्यैव कर्मबंधकृतं भोगे पारतन्त्र्यं निर्वृतात्मनः सुखात्मकस्यैव संसृतिर्जन्ममृत्युप्रवाहः प्रकृत्यविवेककृतमेतत्सर्वं भवतीत्यर्थः ॥ ७ ॥ ❀ ❀ ननु चैतन्यसामानाधिकरण्येनैव कर्तृत्वादिप्रतीतेः स्वस्यैव तदंगीक्रियतां नेत्याह । कार्यं शरीरं कारणमिन्द्रियं कर्ता देवतावर्गः, तद्भावापत्तौ पुरुषस्य प्रकृतिं कारणं विदुः । कूटस्थस्य स्वतो विकाराभावात्प्रकृतिपरिणामभूतदेहाद्यहंकारकृतमेव कर्तृत्वादिकमित्यर्थः । भोक्तृत्वे तु पुरुषं कारणं विदुरित्यस्यायं भावः । यद्यप्यहंकारगतमेव कर्तृत्वादिकं भोक्तृत्वं च तथाऽपि विकारस्य जडावसानत्वादुपाधिप्राधान्यं भोगस्य चिदवसानत्वादुपहितप्राधान्यमिति ॥ ८ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

तस्याः प्रकृतेः सद्यः प्रकृतिसंसर्गावसर एव मुमुहे स्वरूपं विसस्मार । सदैवानाद्यविद्यया युक्तोपि जीवः सुषुप्तौ यथा स्वरूपं किञ्चिदुपलभते तथैव सृष्टेः पूर्वं प्रलयेपि स्वरूपमुपलभमान एवासीत् सृष्ट्यारम्भे तु तद्विसस्मारेत्यर्थः । गुणैः सत्त्वादिभिः । श्रुत्यर्थः—अजामनाद्यां वृत्त्यविवक्षयैकाम् । लोहितशुक्लकृष्णां रजःसत्त्वतमोरूपाम् । सरूपां समानरूपाम् । एकोऽजो जीवः जुषमाण एनां सेवमानोऽनुशेते स्वीयां मन्यतेऽन्योज ईशः इति श्रुतिपदार्थः । विशेषतोऽस्या व्याख्यानं वेदस्तुतिटीकायां करिष्यामः

---

१. प्रा० पा०—पुरुषः प्रकृतेः परः ।

॥ ५ ॥ ❀ ❀ परायाः प्रकृतेरभिध्यानं स्वरूपत्वेन मननम् । एवं "नृत्यतो गायतः पश्यन्त्यथैवानुकरोति ताम्" इति रीत्या सा च प्रकृतिर्देह एव कार्यकारणयोरभेदोपचारात् देह एवाहमिति मननेन कर्मसु रूपादिग्रहणेषु एतदर्थः श्रीगीतास्वप्युक्तः "प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः । अहंकारविमूढात्मा कर्त्ताहमिति मन्यत" इति ॥ ६ ॥ ❀ ❀ इत्यर्थ इति । प्रकृत्यविवेककृत एव संसारः "सत्त्वपुरुषान्यताख्यातिर्मोक्षः" इति पतंजलिना सूत्रितत्वात्तद्विवेके सति संसारो न भवतीति भावः ॥ ७ ॥ ❀ ❀ अत्र न हि जडेषु प्रकृतिगुणेषु कर्त्तृत्वादि संभवतीत्याक्षिपति नन्विति । चैतन्यसामानाधिकरण्येनाहं कर्त्तेत्येवंरूपेण तस्यैव चैतन्यस्यैव तत्कर्तृत्वादि । तत्तद्भावापत्तौ देहेन्द्रियदेवताभावप्राप्तौ पुरुषस्य जीवस्य देहोऽहमित्यादिमनने । इत्यर्थ इति । संसर्गवशात्सत्यसती भवतीति न्यायेनेति भावः । अत्राशयमाह—अयं भाव इति । विकाराणामंततो जडायां प्रकृतावेव समावेशात्तस्या एव प्राधान्यं भोगस्य संवेदनेन चिदवसानत्वमेवाहं सुखीत्यादिप्रतीतेरुपहितस्य चित एव प्राधान्यमित्यर्थः । विश्वनाथस्तु श्लोकमेनमित्थं व्याचष्ट, तथा हि—जीवस्य कर्मभिरेव बन्धस्तेषां कर्मणां च साधने फलभोगे च प्रकृतिपुरुषावेव कारणे इत्याह कार्येति । भूतेन्द्रियदेवताभिरेव कर्मसिद्धेस्तेषां भूतेन्द्रियदेवतानां कार्यकारणकर्तृत्वे प्रकृतिमेव कारणं विदुः । प्रकृत्यैव तेषां तद्भावस्य सृष्टत्वाज्जीवस्य कर्मकरणं मायाधीनमित्यर्थः । कर्मफलदाता च परमेश्वर एवेति जीवस्य कर्मफलभोक्तृत्वमीश्वराधीनमेवेत्याह भोक्तृत्वे जीवस्य कर्मफलानां भोगे पुरुषं कारणं विदुरित्यन्वयः ॥ ८ ॥

## श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

अत्र विलोक्येत्यनेन मुमुहे इत्यनेन च तस्य स्वरूपभूतज्ञानधर्मशालित्वं व्यज्यते । तदभावे घटवत् ज्ञानमात्रस्य तदुभयासंभवात् यथार्थज्ञानभ्रंश एव हि मोह इत्युच्यते । तदुक्तं श्रीगीतासु "अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तव" इति अत एवात्मानं विस्मृतवानिति स्वामिभिर्व्याख्यातम् । पूर्वमात्मस्मरणवतस्सत एव विस्मृतिस्संभवतीति ज्ञेयम् । इह शरीरे वर्त्तमानस्सन्मुमुह इति योजनीयम् ॥ ५ ॥ ❀ ❀ अत्र स्वरूपभूताहंभावशून्यस्य पराभिध्यानासम्भवात् तदनुस्मृतिर्नः "सुखमहमस्वाप्सम्" इत्यादौ अहङ्कारलयावस्थायां सुषुप्तौ अपि स्वरूपभूताहमर्थपरामर्शाच्च प्राकृताहङ्कारादन्यस्स्वरूपात्मकोऽहङ्कारोऽस्तीत्यवगम्यते । प्रकृतेः गुणैरिन्द्रियैः कर्मसु उपाधिप्राधान्येन क्रियमाणेषु केवलमात्मनि कर्तृत्वमात्मनि मन्यते "आत्मानं केवलन्तु य" इति गीतोक्तेः ॥ ६ ॥ ❀ ❀ तत् साक्षिणोऽकर्त्तुरस्य बन्धो भवति ईशस्य तत्कृतं पारतन्त्र्यं भवति निर्वृतात्मनः संसृतिर्भवतीति टीकानुसारी मूलान्वयः एतत्सर्वं कर्तृत्वभोक्तृत्वजन्ममरणादि ॥ ७ ॥ ❀ ❀ ❀ शङ्कते । नन्विति । चैतन्येनात्मधर्मेण सामानाधिकरण्यं तेन सह कर्तृत्वादेरेकाधिकरणवृत्तित्वं प्रतीयते । यस्मिन्देहे चैतन्यं तस्मिन्नेव कर्तृत्वभोक्तृत्वादि प्रतीयते ननु मृते यदि प्रकृतेः कर्त्तृत्वं तदा चैतन्याभावे कुतो न प्रतीयते तस्मात्तस्यैव चेतनस्यैव तत् कर्तृत्वादि अङ्गीक्रियतां न प्रकृतेरित्याशङ्कायां नेति सिद्धान्ती प्राह । शरीरेन्द्रियदेवता हि अधिभूताध्यात्माधिदैवानि तद्भावापत्तिर्हि पुरुषस्याविवेकतो भवति तत्र प्रकृतिं कारणं मुनयो विदुः । तत्संयोग एव तद्भावापत्तौ कारणमित्यर्थः । ब्राह्मणोऽहमित्यादिशरीरभावापत्तिं पश्यामि शृणोमीत्यादीन्द्रियभावापत्तिः । अत्र चक्षुः प्रकाशयामीत्यादिदेवताभावापत्तिः अयमर्थः चैतन्याश्रयो हि आत्मा कर्तृत्वाश्रयं हि प्रकृतिकार्यं लिङ्गमिति चैतन्यकर्तृत्वयोर्भिन्नाधिकरणत्वे चेतनोऽहं करोमीति कृतिचैतन्ययोः सामानाधिकरण्यं भ्रान्तिनिबन्धनमेवेति शङ्का दूरोत्सारिता । तदुक्तं साङ्ख्यतत्त्वकौमुद्याम् "तस्मात्तत्संयोगादचेतनं चेतनावदिव लिङ्गम् । गुणकर्त्तृत्वे च तथा कर्त्तेव भवत्युदासीन इति ।" ननु लोके कर्त्तृत्वभोक्तृत्वयोर्नियतसामानाधिकरण्यं दृश्यते इत्याशङ्कायामयं भाव इति अहङ्कारगतमेवेति हेतुत्वमप्यसति कर्त्तरि दुःखयोर्येत्स्वात्मनि विधत्त उपलब्धपरात्मकाष्ठ इति विकारस्य कर्तृत्वनिमित्तकस्य जडे देहेन्द्रियादावेव पर्य्यवसानात् कर्तृत्वं प्रति उपाधेः प्राधान्यं भोगस्य सुखाद्यनुसंधानस्य चैतन्यात्मनि पर्य्यवसानात् भोगं प्रति उपाधिविशिष्टस्य चिदात्मनः प्राधान्यमिति तत्र तत्र प्राधान्यविवक्षयैव तत्तद्व्यपदेश इत्यर्थः ॥ ८ ॥

## श्रीमद्वीरराघवव्याख्या

अस्तु प्रकृत्यभिपत्तिः कर्तृत्वादेः किमायातमित्याशङ्कायामभिपत्तिहेतुकस्वस्वरूपतिरोधानकृतमोहननिमित्तं कर्तृत्वादिकमिति वक्तुं प्रकृतिं सूक्ष्मामित्युक्तसूक्ष्मावस्थाप्रतिसम्बन्धिस्थूलावस्थां वदन् तया प्रकृत्या प्रत्यगात्मनः स्वस्वरूपतिरोधानेन मोहमाह । गुणैरिति । विचित्रा देवमनुष्यादिरूपेण बहुविधाः सरूपाः सर्वासां प्रकृतिपरिणामरूपत्वेनैकरूपाः प्रजा गुणैः सत्त्वादिभिः सृजतीं कार्यदशायां सृष्टिं प्रकृतिं विलोक्य तया ज्ञानगूहया ज्ञानतिरोधायिन्य सद्यः स इव मुमुहे तस्यां स्वानन्यताबुद्धिमकरोदित्यर्थः ॥ ५ ॥ ❀ ❀ एवं पराभिध्यानेन प्रकृत्या तिरोहितस्वस्वरूपविस्मरणपूर्वकप्रकृतिचिन्तनेन पुमान् जीवः प्रकृतेर्गुणैः कर्मसु क्रियमाणेषु सत्सु तानि कर्माणि आत्मनि मन्यते तानि स्वकर्तृकाणीति मन्यत इत्यर्थः । सांसारिकप्रवृत्तिष्वस्य कर्तृता सत्त्वरजस्तमोगुणसंसर्गकृता न स्वरूपप्रयुक्तेति भावः ॥ ६ ॥ ❀ ❀ तत्तस्मात्सत्त्वरजस्तमोगुणसंसर्गकृतात्कर्तृत्वादस्य जीवस्य संसृतिर्बन्धः संसाररूपो बन्धः तत्कृतं कर्तृत्वप्रयुक्तमेव पारतन्त्र्यं कर्मवश्यत्वं च भवति नतु स्वरूपप्रयुक्तमिति भावः । स्वरूपप्रयुक्तत्वाभावमेव विशदयितुं तस्य मुक्तावस्थायामवस्थितं प्रकृतिवियुक्तं स्वरूपं विशिनष्टि । अकर्तुरिति । अकर्तुः नत्वत्र प्रयत्नाश्रयत्वं निषिध्यते, किन्तु गमनादि-

से भिन्न तत्त्व न मानकर पुरुषका प्रभाव अर्थात् ईश्वरकी संहारकारिणी शक्ति बताते हैं। जिससे मायाके कार्यरूप देहादिमें आत्मतत्त्वका अभिमान करके अहङ्कारसे मोहित और अपनेको कर्ता माननेवाले जीवको निरन्तर भय लगा रहता है ॥ १६ ॥

प्रकृतेर्गुणसाम्यस्य निर्विशेषस्य मानवि। चेष्टा यतः स भगवान् काल इत्युपलक्षितः ॥ १७ ॥
अन्तः पुरुषरूपेण कालरूपेण यो बहिः। समन्वेत्येष सत्त्वानां भगवानात्ममायया ॥ १८ ॥
दैवात्क्षुभितधर्मिण्यां स्वस्यां योनौ परः पुमान्। आधत्त वीर्यं साऽसूत महत्तत्त्वं हिरण्मयम् ॥ १९ ॥
विश्वमात्मगतं व्यञ्जन् कूटस्थो जगदङ्कुरः। स्वतेजसापिबत्तीव्रमात्मप्रस्वापनं तमः ॥ २० ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

सृष्टिहेतुत्वेन लक्षयति। प्रकृतेरिति ॥ १७ ॥ ❀ ❀ कोऽसौ भगवांस्तमाह। अंतरिति अन्तः सर्वप्राणिनां यः पुरुषरूपेण नियन्तृत्वेन समन्वेति सम्यक् तद्विकाररहित एवानुस्यूतो वर्तते बहिश्च कालरूपेण। एष भगवान्। यद्वा यः पुरुष इति प्रसिद्धः कालः स पंचविंशः एके तु पुरुषस्य प्रभावं कालमाहुः। प्रभावस्यैव लक्षणं यत इति पुरुषस्यैव कालत्वे हेतुः प्रकृतेरिति। उभयथा विवक्षायां हेतुः अन्तरिति शेषं समानम्। तदेवं प्रकृतेश्चतुर्विंशतिभेदाः जीवेश्वरयोश्चैक्यविवक्षातः पंचविंशतिस्तत्त्वानि भवन्ति। तयोर्भेदविवक्षया च षड्विंशतिर्भवन्ति ॥ १८ ॥ ❀ ❀ इदानीं तत्त्वानामुत्पत्तिपूर्वकं लक्षणान्याह। दैवादित्यादिना। एतान्यसंहत्येत्यतः प्राक्तनेन ग्रन्थेन। तत्र चित्तस्योत्पत्तिपूर्वकं लक्षणमाह। चतुर्भिः दैवाज्जीवादृष्टात्क्षुभिता धर्मा गुणा यस्याः यो नावभिव्यक्तिस्थाने प्रकृतौ वीर्यं चिच्छक्तिम्। सा प्रकृतिर्महत्तत्त्वमसूत। महतः स्वरूपमाह। हिरण्मयं प्रकाशबहुलम् ॥ १९ ॥ ❀ ❀ विश्वमहंकारादिप्रपंचम्। आत्मगतं स्वस्मिन्सूक्ष्मरूपेण स्थितं व्यंजन्प्रकटयन्महांस्तीव्रं प्रलयकालीनं तमोऽपिबत्। कूटस्थो लयविक्षेपशून्यः कथंभूतं तमः आत्मानं प्रस्वापयति प्रच्छादयतीति तथा तत्पूर्वं प्रलयसमये महान्तं प्रकृतौ विलापयामासेत्यर्थः ॥ २० ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः।

गुणसाम्यस्य गुणानां साम्यावस्थारूपस्यात एव निर्विशेषस्य गुणानामपार्थक्यविवक्षया विशेपरहितस्य प्रकृतेः प्रधानस्य यतश्चेष्टा साम्यत्यागः ॥ १७ ॥ ❀ ❀ यद्वेति। पञ्चदशश्लोकान्तर्गतस्यैव व्याख्या यच्छब्देन पुरुषग्रहणं तु 'अन्तः पुरुषरूपेण' इत्यग्रिमोक्त्यैव संगच्छते। वस्तुतस्तु चतुर्विंशतिको गणः प्राधानिकः कालो जीवश्चेति द्वौ प्रकृतिपुरुषौ च द्वावेवं मिलित्वाऽष्टाविंशतितत्त्वानि संतीत्थमेव श्रीकृष्णोप्युद्धवायैकादशे वक्ष्यतीति ॥ १८ ॥ १९ ॥ ❀ ❀ इत्यर्थ इति। यत्तमो महत्तत्त्वस्य प्रकृतौ लयं कारयामास तत्तमोपिबदिति भावः। पुंस्त्वं त्वत्र तत्त्वपदत्यागेन महानित्येतस्यैव विशेष्यीकृतत्वादिति ॥ २० ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

यतः प्रभावरूपकालात् चेष्टा महदाद्युत्पत्तिहेतुस्साम्यत्यागः भगवत्प्रभावस्य तदभेदविवक्षया भगवानित्युक्तम्। तदुक्तं विष्णुपुराणे। "ज्ञानशक्तिबलैश्वर्य्यवीर्य्यतेजांस्यशेषतः। भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिः ॥" इति। वीर्य्यं प्रभावः ॥ १७ ॥ तद्विकारेति। श्रमादिविकाररहित एव। पूर्वार्थे कालस्य प्रकृत्यवस्थारूपत्वं मूले न स्फुटं भगवत्प्रभावस्य भगवत्त्वेन विवक्षायामपि अन्तःपुरुषरूपेणेति पद्यमसम्बद्धार्थमेव स्यादित्यरुचौ यद्वेति। उभयथा पुरुषत्वेन प्रभावत्वेन च विवक्षायां हेतुरन्तरिति नियन्तृत्वेनानुस्यूतत्वात्कालस्य पुरुषत्वं कलयति नियच्छतीति काल इति निरुक्तेः मृत्युहेतुत्वाद्भयजनककालरूपेण यो बहिस्समन्वेतीति। कालस्य प्रभावरूपत्वं कलयति नाशयतीति काल इति निरुक्तेरित्यर्थः ॥ १८ ॥ ❀ ❀ चिच्छक्तिं जीवाख्यचिद्रूपशक्तिम् "इमास्तिस्रो देवता" इति श्रुतेः ॥ १९ ॥ ❀ ❀ स्वस्मिन्कारणरूपे चित्तरूपत्वान्मनोवल्लयविक्षेपशून्यः तेजसा प्रभावेण ॥२०॥

### श्रीमद्वीरराघवव्याख्या

तथा हे मानवि! प्रकृतेः प्रधानस्य यद्गुणत्रयसाम्यं तस्य निर्विशेषस्य नामरूपादिविशेषशून्यस्य नामरूपादिविशेषपरिहारेण संहारदशायां साम्यावस्थापन्नगुणत्रयस्य प्रधानस्य चेत्यर्थः। यतश्चेष्टा व्यापारो भवति स भगवान्भगवदात्मकः कालः इत्युपलक्षितः। संहारदशायां नामरूपविभागानर्हनिरतिशयसूक्ष्मावस्थामापन्नयोः प्रकृतिपुरुषयोः परमात्मात्मकयोस्तस्मिन्नेव लीनयोः पुनः सृष्टिदशायां जगदाकारेण परिणामरूपो यो व्यापारस्तद्धेतुभूतः स कालः स च भगवदात्मक इत्यर्थः ॥ १७ ॥ ❀ ❀ एवं प्रकृतिपुरुषकालस्वरूपं शोधितं ते त्रयोऽपि भगवद्रूपाणि "प्रधानपुरुषाव्यक्तकालास्तु प्रविभागशः। रूपाणि" इत्युक्तेः, तेषु पृथिव्यादिस्थूलरूपेण परिणतत्वात्प्रायेण प्रकृतिः स्फुटस्वरूपा। पुरुषकालयोस्तु तादृशस्थूलपरिणामाभावात्तयोः प्रतीयमानत्वं

युक्त्या दर्शयन् तयोः शास्त्रैकसमधिगम्यं भगवदात्मकत्वमन्तरिति श्लोकेनाह। य आत्ममायया स्वसङ्कल्पेन सत्त्वानां पृथिव्यादिसम्भूतदेहानामन्तः पुरुषरूपेण इच्छामि द्वेष्मि सुख्यामि दुःख्यामीतीच्छाद्वेषसुखाद्याश्रयजीवाख्यरूपेणान्तः प्रविश्य तथा भवत्यभूद्भविष्यतीति तेषामेव सत्त्वानां विशेषणत्वेन बहिः कालाख्यरूपेण च समन्वेति अवभासते स भगवान् परमपुरुषः ॥ १८ ॥ ❀ ❀ एवं सृष्ट्युपयोगितया प्रकृतिपुरुषकालशरीरकत्वं भगवत उक्तम् अथ सृष्टिमाह। दैवादिति। परः पुमान् परमपुरुषः भगवान् स्वस्यां स्वीयायां योनौ जगद्योनौ प्रकृतौ दैवात्स्वसङ्कल्पात् क्षुभितधर्मिण्याम् "रजस्तमश्चाभिभूय सत्त्वं भवति भारत ! रजःसत्त्वं तमश्चैव तमः सत्त्वं रजस्तथा ॥" इत्युक्तरीत्या क्षुभितसत्त्वादिगुणायां वीर्यं महदादिप्रपञ्चसृष्टिसामर्थ्यं चेतनसमष्टिं वा आधत्तायुङ्क्त, ततः सा योनिः हिरण्मयं प्रकाशबहुलं महत्तत्त्वमसूत प्रसूतवती। क्षुभितधर्मिण्यामित्युक्तसत्त्वादिगुणक्षोभो नाम गुणानां साम्यावस्थाप्रहाणेनान्यतमगुणाभिभवपूर्वकमन्यगुणाविर्भावः ॥ १९ ॥ ❀ ❀ तत्र महत्तत्त्वसृष्टिः कस्य गुणस्याभिभवादित्यत्राह। विश्वमिति। जगदङ्कुरः, जगदङ्कुरस्थानीयं यस्य जगदङ्कुरः तथा सः जगत्कारणभूतः कूटस्थोऽद्वारको निर्विकारो भगवानात्मगतं "सोऽभिध्याय शरीरात् स्वात्" इति प्रकारेण स्वशरीरभूतप्रकृतिलीनं विश्वं व्यञ्जयन् व्यञ्जयितुं स्वतेजसा स्वसंकल्परूपज्ञानेनात्मप्रस्वापनं जीवात्मनां ज्ञानसंकोचकं तमस्तमोगुणमपिबदभिभूतमकरोदित्यर्थः ॥ २० ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

इतोऽपि हरिरेव कालनामा न त्रुटिलवात्मक इत्याह। प्रकृतेरिति। निर्विशेषस्य कार्योदासीनाया गुणसाम्यस्य ब्रह्मप्रलयावस्थाविशिष्टायाः प्रकृतेः प्रधानाभिमानिन्या मूललक्ष्म्याः पुनः श्रीभूदुर्गादिरूपभेदेन सिसृक्षुत्वादिविशेषलक्षणा चेष्टा यतो भवति स भगवान्काल इत्युपलक्षितः, इतीदं लक्षणं लक्ष्यमात्रव्यापकत्वान्नाव्याप्त्यतिव्याप्त्यसंभवदुष्टमिति ज्ञातव्यम् ॥ १७ ॥ ❀ ❀ अनेन[1] कालरूपात्पुरुषरूपं न भिन्नमित्याह। अन्तरिति। यो भगवानात्ममायया स्वरूपेच्छया सत्त्वानां सर्वप्राणिनामन्तः पुरुषरूपेण बहिःकालरूपेण सर्वान्तर्यामिसर्वव्यापकरूपभेदेन व्याप्नोतीत्यतोऽत्यन्तमेष एक एवेति नात्र दोषशङ्का कार्येति ॥ १८ ॥ ❀ ❀ प्रकृतेश्चेष्टाप्रदत्वप्रकारं वक्ति। दैवादिति। दैवात्प्रकृतिक्षोभकनारायणाख्यात्क्षुभितधर्मिण्यां स्वस्यां योनौ परः पुमान्वीर्यमाधत्तेत्यन्वयः। इदमुक्तं भवति दैवाख्यमूलरूपादभिव्यक्तो नाम्ना परः पुमान् तस्य नारायणस्य प्रेरणया सिसृक्षुत्वविशेषधर्मवत्याः प्रधानाभिमानिन्या लक्ष्म्या अभिव्यक्तायां नाम्ना श्रियां प्रागुक्तविशेषवत्यां स्वभार्यायां रेतोलक्षणं वीर्यमधादिति। तदुक्तम् "प्रकृतेः क्षोभकं रूपं दैवं नारायणाभिधम्। प्रकृतौ महतः स्रष्टा परमः पुरुषोत्तम इति ॥" अमोघवीर्यो हरिरिति भावेन तत्फलमाह। सासूतेति। सा श्रीनाम्नी हिरण्मयं महत्तत्त्वमसूतेति ॥ १९ ॥ ❀ ❀ प्रकृत्या गूढमिदं जगद्दैवाख्याद्धरेः कथङ्कारं व्यज्यते "तमसा गूढमग्र" इति श्रुतिरिति तत्राह। विश्वमात्मगतमिति। ब्रह्मादिसर्वजीवानां कूटस्थ आत्मोदरगतं विश्वं व्यञ्जन् व्यक्तं कर्तुकामो जगतोऽङ्कं रमयितृत्वात् जगदङ्कुरः परमः पुरुष आत्मप्रस्वापनं योगनिद्राकारणं तीव्रं निविडं तमः स्वतेजसा स्वरूपप्रभया अपिबत् विनष्टमकरोदित्यन्वयः। जगतोऽङ्कुरो जगदङ्कुर इति विग्रहे तद्विकारो हरिरित्यर्थोऽनुपपन्नः "निर्विकारोऽक्षरः शुद्ध" इत्यादिश्रुतिविरोधात्। अतः "अङ्के रमयते यस्मात्केशवो जगदङ्कुरः। महान्तं योऽसृजज्जीवमोहकं च तमोग्रसत् ॥" इति प्रमाणबलादुक्त एवार्थः ॥ २० ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः।

तत्र स्वमतमाह। प्रकृतेरिति। स भगवान् पुरुष एव स्वांशेन कालः तदेवमनेन लक्षणेन कालस्य प्राधानिकत्वं प्रत्याख्यातम्। तस्यापि क्षोभहेतुत्वात् ॥ १७ ॥ ❀ ❀ कालस्य जीवस्यापि तद्वदंशत्वमेवाह। अन्तरिति। सत्त्वानां देवाद्याख्यानामुपाधीनामेवं पौरुषे गणे द्विसंख्याकः कालो जीवश्चेति। प्रकृतिपुरुषौ तु द्वौ प्राधानिकश्चतुर्विंशतिसंख्यः। ततो विवेके सत्यष्टाविंशतिरेव तत्त्वानि ॥ १८ ॥ ❀ ❀ दैवमत्र काल एव पूर्व्वसम्वादात् जीवादृष्टस्यापि प्रकृतौ लीनत्वात् वीर्यं जीवाख्यचिद्रूपशक्तिम् "इमास्तिस्रो देवता" इति श्रुतेः ॥ १९ ॥ ❀ ❀ कूटस्थः मनोवञ्चयविक्षेपरहितः स्वतेजसा स्वप्रभावेण तमः अज्ञानम् ॥ २० ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

प्रकृतिक्षोभकत्वेनापि तं लक्षयति। प्रकृतेरिति ॥ १७ ॥ ❀ ❀ अत एव अन्तःपुरुषरूपेणान्तर्यामिरूपेण नियन्ता समन्वेति सम्यक् तद्विकाररहित एवानुस्यूतो वर्तते बहिश्च कालरूपेण नियन्ता सत्त्वानां सर्व्वप्राणिनां तदेवं प्राधानिको गणश्चतुर्विंशतिसङ्ख्यः कालो जीवश्चेति द्वौ प्रकृतिपुरुषौ च द्वौ मिलित्वा अष्टाविंशतिस्तत्त्वानि भवन्ति ॥ १८ ॥ ❀ ❀ इदानीं

---

१. पद्येन।

तत्त्वेषु लक्षयितव्येषु प्रथमं चित्तस्योत्पत्तिपूर्वकं लक्षणमाह। दैवात् कालात् क्षुभिता धर्म्मा गुणा यस्यास्तस्यां योनावभिव्यक्तिस्थाने वीर्य्यं जीवशक्त्याख्यं चैतन्यं सा प्रकृतिर्महत्तत्त्वमसूत हिरण्मयं प्रकाशबहुलम्॥ १९॥ ❀ ❀ विश्वमहङ्कारादिप्रपञ्चमात्मगतं स्वस्मिन् सूक्ष्मरूपेण स्थितं व्यञ्जयन् प्रकटयन् सर्व्वत्र पुंस्त्वं तत्त्वपदत्यागेन महानित्येतस्यैव विशेष्यीकृतत्वात्। कूटस्थः मनोवद्भयविक्षेपशून्यः आत्मानं प्रस्वापयतीति तथा यत्तमः पूर्वप्रलयसमये महान्तं प्रकृतौ विलापयामासेत्यर्थः॥ २०॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

अत्रब्रह्मात्मककालवादिमतं निराकुर्वन्प्रकृत्यादिक्षोभकत्वं कालस्याह। प्रकृतेरिति। प्रकृतेरित्युपलक्षणं तद्बद्धजीवतत्कार्यादीनाम्। यतः चेष्टा स प्रतिपादितः कालः इत्युपलक्षितः इत्यनेन भयदत्वक्षोभकत्वादिलक्षणेन उपलक्षितः स च शक्तित्वेन भिन्नोऽपि स्वाधीनस्थितिप्रवृत्त्याद्यभावात् भगवान् भगवदभिन्न इत्यर्थः॥ १७॥ ❀ ❀ एवं सङ्क्षेपतः प्रकृतिलक्षणं जीवविशेषस्य प्रकृतिकालवश्यत्वं लक्षणं च प्रसङ्गात् काललक्षणं चोक्त्वाथ स्वशक्तितो महदाद्युत्पादकस्य सर्वात्मनो भगवतो लक्षणमाह। अन्तरिति। आत्ममायया वयुनेन सङ्कल्परूपेण अन्तः पुरुषरूपेण निजरूपेण शास्त्रभूतेन "अन्तः प्रविष्टः शास्ता जनानाम्" इति श्रुतेः, बहिः कालरूपेण कालाख्यशक्तिरूपेण सम्यगन्वेति॥ १८॥ ❀ ❀ एवं भोग्यभोक्तृनियन्तृरूपाणां त्रयाणां तत्त्वानां सृष्ट्युपयोगित्वेन लक्षणान्युक्तान्यधुना चतुर्विंशतिप्राकृततत्त्वानामुत्पत्तिपूर्वकं लक्षणान्याह। दैवादित्यादिना। स्वस्यां स्वशक्तौ दैवात्स्वकीयसङ्कल्पात् क्षुभितधर्मिण्यां वीर्यं स्वावतारप्रवेशेन सृष्टिसामर्थ्यम् "प्रकृतिं पुरुषं चैव प्रविश्यात्मेच्छया हरिः। क्षोभयामास सम्प्राप्ते सर्गकाले व्ययाव्ययौ॥" इति स्मृतेः हिरण्मयं प्रकाशबहुलम्। शारीरकमीमांसायामुत्तरोत्तरकार्याणामुत्पादकः पूर्वपूर्वकारणरूपो भगवानेवेति अतो हिरण्मयकूटस्थादीनि विशेषणानि तदभिप्रायाणीति बोध्यम्। अन्यथा प्रकृतिकार्य्ये महति कूटस्थत्वं विरुद्धं स्यात्, अतः हिरण्मयत्वं नाम अप्राकृतनित्यविग्रहयुक्तभगवदधिष्ठितत्वम्। अभेदनिर्देशस्तु शक्तिशक्तिमतोर्भिन्नाभिन्नसम्बन्धाभिप्रायः महदादीनामपि भगवच्छक्तिकार्याणां भगवच्छक्तित्वम् "इति तासां स्वशक्तीनाम्" इत्यनेनोक्तम्॥ १९॥ ❀ ❀ जगज्जायमानमङ्कुरः कार्यं यस्य सः अत एव विश्वं चिदचिदात्मकं जगत् आत्मगतमात्मनि सूक्ष्मरूपेण स्थितं व्यञ्जयन् स्थूलतयोत्पादयन् आत्मानं जीवं ज्ञानावरकतया प्रस्वापयतीति तत्तमः अपिबत्, तमोऽभिभूय रजःसत्त्वोपबृंहितो जात इत्यर्थः। तथोक्तं द्वितीयस्कन्धे "महतस्तु विकुर्वाणाद्रजःसत्त्वोपबृंहितात्" इति॥ २०॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

स्वमते कालं लक्षयति—प्रकृतेरिति। गुणानां साम्यावस्था प्रकृतिः। प्रकृतेः संबन्धिनो ये गुणाः सत्त्वादयः, तेषां साम्यं गुणक्षोभात्पूर्वावस्था। स च क्षोभात्पूर्वं निर्विशेषः। मानवीति संबोधनं महत उत्पन्ना अलौकिकं जानातीति। एतादृशस्य यतश्चेष्टा, स कालः। कालादेव गुणानां क्षोभः। स कालो भगवानेव, रूपपञ्चकमध्ये गणनात्। ननु भगवतः काल इति संज्ञा कुत इत्याकाङ्क्षायामाह—इत्युपलक्षित इति। कलयत्याकलयतीति। सर्वो हि प्राणी येन रूपेण कृत्वा सर्वमाकलयति, मृत्युभीत एव हि सर्वमाकलयति। अतः काल इति भगवानेवोपलक्षित उपलक्षणविधया बोधितः। न हि काल इति साक्षाद्भगवन्नाम, किन्तु प्राणिनां बोधनहेतुत्वेन निरूपित इति॥ १७॥ ❀ ❀ एवं कालं भगवद्रूपत्वेनोक्त्वा तस्योपलक्षणतां निरूपयति—अन्तः पुरुषरूपेणेति। एक एव भगवान् सर्वप्राणिनामन्तः पुरुषरूपेण वर्तते, बहिः कालरूपेण, अन्यथा भगवतो व्याप्तिर्न स्यात्। बहिर्मुखान् कालरूपेण भक्षयति, अन्तर्मुखान् पुरुषेणाप्याययतीति। अत एव सत्त्वानां सर्वेषां भगवान् स्वमायया सर्वभवनसामर्थ्येनोभयविधो भूत्वा, समन्वेति सम्यगन्वयं प्राप्नोति। बहिः काले लयं प्राप्नोति, अन्तः पुरुष इति। कालो भयजनकः, अभयरूपश्च पुरुष इति विशेषः॥ १८॥ ❀ ❀ एवमुद्देशेन तत्त्वानि निरूप्य उत्पत्तिपूर्वकं लक्षणान्याह—दैवादिति। प्रथमतश्चित्तस्योत्पत्तिमुक्त्वा तस्याऽऽधिदैविकादिभेदान् निरूपयता[1] लक्षणान्युच्यन्ते। आदावुत्पत्तिः, तत आध्यात्मिकस्य लक्षणम्, तत आधिदैविकस्य, तत आधिभौतिकस्येति। एवमेकः पदार्थश्चतुर्भिरुच्यते। तत्र प्रथमं महत्तत्त्वस्योत्पत्तिमाह—दैवात् कालात्, क्षुभिता धर्मा यस्याः सा पुरुषस्य योनिः क्षेत्रम्, तस्यां परः पुमान् प्रथमपुरुषो वीर्यमाधत्त; यथा स्वभार्यायां पुरुषः। तस्येन्द्रियाणि भगवत इवाऽऽनन्दमयानि, रेतस्तु सच्चिदंशः। चिदंश एवेत्येके, सदंशस्तु प्रकृतेः सकाशात् संबध्यते। ततः सा प्रकृतिः महत्तत्त्वमसूत। तस्य शरीरं हिरण्मयम्, यथा सूर्यान्तर्गतस्य नारायणस्य। आनन्द[2]सतोरैक्ये हिरण्यरू[3]पता भवति॥ १९॥ ❀ ❀ आध्यात्मिकं लक्षयति—विश्वमिति। स हि महान् सर्वजगत्प्रसवहेतुः, विश्वाधारत्वं तस्य लक्षणम्। ब्रह्माण्डस्याऽप्यंशतो भवतीति कूटस्थ इत्युक्तम्। प्रकृतिव्युदासार्थम्—जगदङ्कुर इति। यथा वृक्षस्य प्रथमावस्था अङ्कुरः, तथा जगतः। स हि विश्वमात्मगतं व्यनक्ति। तत् किं कुर्वन्नित्याकाङ्क्षायामाह—स्वतेजसा आत्मप्रस्वापनं तमः पिबन्निति। येन तमसा पूर्वं महत्तत्त्वं प्रस्वापितं लयं प्रापितमासीत्, तन्मूलभूतं तमः महत्तत्त्वेन पीयते, अन्यथा जगत् केनापि प्रकारेण नाऽभिव्यक्तं स्यात्। अस्य महत्तत्त्वस्य माहात्म्यत्रयमु-

१. निरूपयन्. ख. ग. घ. ङ.। २. आनन्दतनोः ख.। ३. हिरण्मयरूपता. ख.।

क्तम्—जगत्प्रकाशकत्वेन, जगज्जनकत्वेन, अतिसमर्थतमोनाशकत्वेन च । त्रीण्यप्येतानि लक्षणानि कारणगुणत्रयसूचकानि सात्त्विकराजसतामसानि क्रमेणैव ॥ २० ॥

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

अन्तरित्यत्र । बहिः काल इत्यादि । इदमेव प्रमेयम् 'वीर्याणि तस्याऽखिलदेहभाजाम्' इत्यनेन दशमस्कन्धे गङ्गाऽनूदितं ज्ञेयम् । किंच प्रकृतेः 'ब्रूहि कारणयोरस्य' इत्यनेन जगत्कारणतया यत्पुरुषः पृष्टः, तस्य कारणताबोधकरूपमुत्तरमिदमेव पद्यम् । 'विश्वं येन समन्वितम्' इति ज्ञानोपयोगिलक्षणस्य पूर्वमुक्तत्वेऽपि पुनर्लक्षणप्रश्नेन तदनवबोधमवगत्यात्र समन्वयोपपादनादिति ॥१८॥

### श्रीगिरिधरकृता बालप्रबोधिनी

स्वमते कालं लक्षयति—प्रकृतेरिति । मनोविवेकित्वात् तत्पुत्र्यपि त्वं विवेकवतीत्यधिकारं सूचयन् सम्बोधयति—मानवीति । सत्त्वादिगुणत्रयसाम्यरूपस्य अत एव निर्विशेषस्य नामरूपादिविभागरहितस्य प्रकृतेः सृष्टेः पूर्वं यतश्चेष्टा साम्यावस्थात्यागपरिणामान्तरप्राप्तिहेतुभूता भवति स भगवानेव कालयतीति काल इत्येवमुपलक्षितो व्यवहितो भवतीति । न तत्त्वान्तरमित्यर्थः ॥ १७ ॥ ❀ ❀ उक्तं द्विरूपत्वमेव भगवतः स्पष्टयति—अन्तरिति । य एष आत्ममायया स्वप्रेरणशक्त्या सत्त्वानां सर्वप्राणिनां अन्तः पुरुषरूपेणान्तर्यामिरूपेण बहिश्च कालरूपेण सम्यक् तद्विकाररहित एव समन्वेति अनुस्यूतो वर्तते स भगवानेवेत्यन्वयः । तदेवं प्रकृतेश्चतुर्विंशतिभेदाः । जीवेश्वरयोश्चैक्यविवक्षया पञ्चविंशतिस्तत्त्वानि । तयोर्भेदविवक्षायां च षड्विंशतिर्भवन्ति ॥ १८ ॥ ❀ ❀ इदानीं तत्त्वानामुत्पत्तिपूर्वकं लक्षणान्याह—दैवादित्यादिना 'एतान्यसंहत्य' इत्यतः प्राक्तनेन ग्रन्थेन । तत्र चित्तस्योत्पत्तिपूर्वकं लक्षणमाह—दैवादिति चतुर्भिः । दैवात् कालात् क्षुभिता वैषम्यं प्राप्ता धर्मा गुणा यस्यास्तस्यां स्वकीयायां योनौ अभिव्यक्तिस्थाने प्रकृतौ परः पुमान् परमपुरुषो वीर्यं चिच्छक्तिमाधत्त । सा प्रकृतिः हिरण्मयं प्रकाशबहुलं महत्तत्त्वमसूत ॥ १९ ॥ ❀ ❀ स च जगतः अङ्कुरस्थानीयः महान् आत्मगतं स्वस्मिन् सूक्ष्मरूपेण स्थितं विश्वमहङ्कारादिप्रपञ्चं व्यञ्जन् व्यञ्जयन् व्यञ्जयितुमात्मप्रस्वापनमात्मानं प्रस्वापयतीति तथा यत्पूर्वं प्रलयसमये महान्तं प्रकृतौ लयं कृतवत्तत्तमोऽपिबन्, नाशितवानित्यर्थः । अङ्कुरत्वोक्तेस्तस्यापि तद्वद्विकारित्वमाशङ्क्याह—कूटस्थ इति, लयविक्षेपशून्य इत्यर्थः ॥ २० ॥

### हिन्दी अनुवाद

मनुपुत्रि! जिनकी प्रेरणासे गुणोंकी साम्यावस्थारूप निर्विशेष प्रकृतिमें गति उत्पन्न होती है, वास्तवमें वे पुरुषरूप भगवान् ही 'काल' कहे जाते हैं ॥ १७ ॥ ❀ ❀ इस प्रकार जो अपनी मायाके द्वारा सब प्राणियोंके भीतर जीवरूपसे और बाहर कालरूपसे व्याप्त हैं, वे भगवान् ही पचीसवें तत्त्व हैं ॥ १८ ॥ ❀ ❀ जब परमपुरुष परमात्माने जीवोंके अदृष्टवश क्षोभको प्राप्त हुई सम्पूर्ण जीवोंकी उत्पत्तिस्थानरूपा अपनी मायामें चिच्छक्तिरूप वीर्य स्थापित किया तो उससे तेजोमय महत्तत्त्व उत्पन्न हुआ ॥ १९ ॥ ❀ ❀ लय-विक्षेपादिसे रहित तथा जगत्के अङ्कुररूप इस महत्तत्त्वने अपनेमें स्थित विश्वको प्रकट करनेके लिये अपने स्वरूपको आच्छादित करनेवाले प्रलयकालीन अन्धकारको अपने ही तेजसे पी लिया ॥ २० ॥

**यत्तत्सत्त्वगुणं स्वच्छं शान्तं भगवतः पदम् । यदाहुर्वासुदेवाख्यं चित्तं तन्महदात्मकम् ॥ २१ ॥**
**स्वच्छत्वमविकारित्वं शान्तत्वमिति चेतसः । वृत्तिभिर्लक्षणं प्रोक्तं यथापां प्रकृतिः परा ॥ २२ ॥**
**महत्तत्त्वाद्विकुर्वाणाद्भगवद्वीर्यसम्भवात् । क्रियाशक्तिरहङ्कारस्त्रिविधः समपद्यत ॥ २३ ॥**
**वैकारिकस्तैजसश्च तामसश्च यतो भवः । मनसश्चेन्द्रियाणां च भूतानां महतामपि ॥ २४ ॥**

### श्रीधरस्वामिविरचिता भावार्थदीपिका

प्रसंगाच्चतुर्व्यूहोपासनामाह । यत्तदिति । सर्वागमप्रसिद्धत्वमाह । स्वच्छं विशदम् । शांतं रागादिरहितम् । भगवतः पदमुपलब्धिस्थानम् । अत एव वासुदेवाख्यं यदाहुः । अयमर्थः । अधिभूतरूपेण तस्यैव महानिति संज्ञा अध्यात्मरूपेण चित्तमिति उपास्यरूपेण वासुदेव इति अधिष्ठाता तु तस्य क्षेत्रज्ञः । एवमहंकारे संकर्षण उपास्यः रुद्रोऽधिष्ठाता मनस्यनिरुद्ध उपास्यः चंद्रोऽधिष्ठाता बुद्धौ प्रद्युम्न उपास्यः ब्रह्माऽधिष्ठातेति ज्ञातव्यम् ॥ २१ ॥ ❀ ❀ स्वच्छत्वं भगवद्बिम्बग्राहित्वम् । अविकारित्वं लयविक्षेपराहित्यम् । अपां प्रकृतिः फेनतरंगादिरहिताऽवस्था परा भूसंसर्गात्प्राक्तनी सा यथा मधुरा स्वच्छा शांता च तद्वदित्यर्थः ॥ २२ ॥ ❀ ❀ अहंकारस्योत्पत्तिपूर्वकं लक्षणमाह । महत्तत्त्वादिति चतुर्भिः क्रियासु शक्तिर्यस्य स क्रियाशक्तिः ॥ २३ ॥ ❀ ❀ त्रैविध्यमाह । वैकारिक इति तस्य कार्यमाह । यतो यस्मान्मनआदीनां भव उत्पत्तिः ॥ २४ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

प्रसंगादंतःकरणोत्पत्तिप्रसंगात् । महदात्मकं महत्तत्त्वमेव देहे चित्तरूपेण तिष्ठतीत्यर्थः । उपलब्धिस्थानमुपासनापीठम् । अत एवाधिष्ठानाधिष्ठेययोरुपचारेणाभेदविवक्षात एव । यद्यम् । उक्तमर्थं स्फुटयति—अयमर्थ इति ॥ २१ ॥ ❀ ❀ इत्यर्थ इति । यथा भूसंसर्गादिना जलानामस्वच्छत्वादिकं भवति तथा चित्तमपि दुर्विषयासक्तमस्वच्छादि भवतीति भावः ॥ २२ ॥ ❀ ❀ क्रियाशक्तिरित्युपलक्षणं ज्ञानशक्तिद्रव्यशक्त्योः ॥ २३ ॥ ❀ ❀ यस्माद्वैकारिकादिभेदत्रयवतोहंकारात्क्रमेण मनस इत्युपलक्षणं देवानामपि । अपिना सूक्ष्मभूतोत्पत्तिपूर्विकोत्पत्तिरुक्ता ॥ २४ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनीव्याख्या ।

अत एव । भगवदुपलब्धिस्थानत्वादेव अधिष्ठानाधिष्ठात्रोरभेदविवक्षया यदेव चित्तं वासुदेवाख्यमाहुः । एकस्यैव तत्तत्संज्ञायामभिप्रायं व्याचष्टे । अयमर्थ इति । अधिभूतरूपेण गोलकाधिष्ठानरूपेण अध्यात्मरूपेणेन्द्रियरूपेण चित्तमित्यनन्तर-क्रियाशक्तिरूपेण सूत्रमिति पूरणीयम् ॥ २१ ॥ ❀ ❀ वृत्तिभिर्धर्म्मैः । लक्षणं स्वरूपम् । भूसंसर्गात् भूसंयोगात् ॥ २२ ॥ ❀ ❀ क्रियासु मनआद्युत्पादनरूपासु ॥ २३ ॥ ❀ ❀ मनसश्चेति चकारेण देवतापरिग्रहः महतामपीति भूतसूक्ष्मक्रमोऽप्यवान्तरो ज्ञेयः ॥ २४ ॥

### श्रीमद्वीरराघवव्याख्या

कस्य गुणस्याविर्भावादित्यपेक्षायां तद्दर्शयन्मूलप्रकृतिमहतोर्वासुदेवाख्यव्यूहाधिष्ठितत्वं तयोरन्तःकरणभेदचित्तबुद्ध्य-नुग्राहकत्वं चाह । यत्तदिति । भगवतः पदम् "तत्र सत्त्वं निर्मलत्वात्प्रकाशकमनामयम्" इत्युक्तरीत्या सत्त्वस्य प्रकाशकत्वात्तद्गुण-कस्य चित्तस्य भगवदुपलम्भस्थानत्वमित्यर्थः । शान्तमभिभूततमस्कमत एव स्वच्छं प्रकाशकं सत्त्वगुणकं यच्च वासुदेवाख्यभगवद्व्-यूहाधिष्ठितं यच्चित्तमन्तःकरणभेदचित्तानुग्राहकं मूलप्रकृत्यपरपर्यायमव्यक्तं तदेव महदात्मकं महत्तत्त्वात्मनावस्थितमित्यर्थः । अत्र वासुदेवाख्यं चित्तमित्यधिष्ठात्रधिष्ठेययोरनुग्राह्यानुग्राहकयोश्चाभेदविवक्षया निर्देशः । नात्र चित्तस्य वैकारिकाहङ्कारकार्यान्तः-करणभेदस्य वासुदेवाधिष्ठितत्वं महदात्मकत्वं चोच्यते 'चित्तं चैत्यस्ततोऽभवदि'ति चित्तस्य क्षेत्रज्ञाधिष्ठितत्वस्य वक्ष्यमाणत्वात् । महत्कार्याहङ्कारकार्यस्य चित्तस्य महदात्मनावस्थानायोगाच्च कारणं हि कार्यात्मनावतिष्ठते न तु कार्यं कारणात्मना । तत्तु संहारदशायां यद्यपि संभवति तथाप्यत्र सृष्टिप्रकरणे तथावस्थानमयुक्तं वक्तुं नापि महदात्मकमिति चित्तस्यान्तःकरणभेदस्य महदनुग्राह्यत्व-मुच्यते । महतो बुद्ध्यनुग्राहकत्वान्महान् वै बुद्धिलक्षण इत्युक्तेः, न चात्र चित्तशब्देन बुद्धिरेवान्तःकरणभेदो विवक्षित इति वक्तुं शक्यम् । बुद्धेर्वासुदेवाधिष्ठितत्वानुपपत्तेः 'बुद्धेर्गिरां पतिरि'ति वक्ष्यमाणत्वात् तस्मादत्राभिभूततमस्कमुद्भूतसत्त्वगुणमव्यक्तमेव वासुदेवाधिष्ठितं महदात्मना परिणतमित्यवधारणीयं तत्र योऽव्यक्तस्याधिष्ठाता वासुदेवः स एव महतोऽप्यधिष्ठाता, अधिष्ठात्र-न्तरानुक्तेः ॥ २१ ॥ ❀ ❀ कदान्तःकरणव्यक्तानुगृहीतं सच्चित्तमिति । लक्ष्यत इत्यत्राह स्वच्छत्वमिति । स्वच्छत्वं भग-वद्बिम्बग्राहित्वमविकारित्वं विक्षेपादिराहित्यमत एव शान्तत्वं रजस्तमोभ्यामनभिभूतत्वमित्येवंरूपैः स्वच्छत्वादिभिश्चेतसो वृत्तिभिर्लक्षणं प्रोक्तं यदा स्वच्छत्वादिगुणकं मनस्तदा सत्त्वोत्तराव्यक्तानुगृहीतमिति चेतोवृत्तिभिर्लक्ष्यत इत्यर्थः । स्वच्छ-त्वादौ दृष्टान्तमाह । यथेति । अपामम्भसां परा प्रकृतिरनारोपितस्वस्वभावो यथा अपां स्वभावरूपं स्वच्छत्वं फेनतरङ्गादिराहित्यमेवं स्वच्छत्वादिकं यदा भवति तदाव्यक्तानुगृहीतं मन इत्यर्थः ॥ २२ ॥ ❀ ❀ एवमध्यवसायादिवृत्तिभिर्बुद्धेर्महत्तत्त्वानु-गृहीतत्वं वेदितव्यम् । अथाहङ्कारोत्पत्तिप्रकारं वदन् तत्स्वरूपं तदवान्तरभेदं तदधिष्ठातारं चाह त्रिभिः । महत्तत्त्वादिति । भगवतो वीर्येण सङ्कल्परूपज्ञानेन चोदितात्प्रेरितादत एव विकुर्वाणात् महत्तत्त्वाद्वैकारिकतैजसतामसभेदेन त्रिविधः, क्रियाशक्तिः क्रियाशब्देन प्रवर्तकरजोगुण उच्यते गुणोद्रिक्त इत्यर्थः, अहङ्कारः समपद्यत उदभूदित्यर्थः ॥ २३ ॥ ❀ ❀ कोऽसावह-ङ्कार इत्यत्राह । वैकारिक इति । यतः त्रिविधाहङ्कारान्मनसः इन्द्रियाणां ज्ञानकर्मोभयेन्द्रियाणां महतां भूतानामाकाशादीनामपि-शब्दाच्छब्दादितन्मात्राणां च भव उत्पत्तिः मनआदीनां कारणमित्यर्थः ॥ २४ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

दैवनाम्नो हरेरभिव्यक्तात्परमपुरुषान्महत्तत्त्वसृष्टिमुक्त्वा महत्तत्त्वेनाभिमन्यमानस्य चित्तस्य सृष्टिं वक्ति । यत्तत्सत्त्व-गुणमिति । सत्त्वगुणं पूर्णानन्दादिगुणं स्वच्छं धवलं शान्तमकलुषं स्तिमितं भगवतो हरेः पदं स्वरूपं यच्च ज्ञानिनो वासुदेवाख्य-माहुः । तस्मान्महत्तत्त्वाभिगताद्वासुदेवात् महत्तत्त्वेनाभिमन्यमानं सर्वप्राणिनां चित्तं जायत इति शेषः । तदुक्तम् "तदेव वासु-देवाख्यं महत्तत्त्वनियामकम्" इति "सत्त्वशब्देन चोच्यन्ते पूर्णानन्दादयो गुणा" इति च "महत्तत्त्वगतो योऽसौ वासुदेवाभिधो हरिः । स चित्तजनकः प्रोक्तः प्राणिनां हि पृथक् पृथक् ॥" इति वचनात् न चित्तस्य वासुदेवादन्यो जनकोऽस्तीति ज्ञायते ॥ २१ ॥ ❀ ❀ कारणगुणाः कार्येऽपि सङ्क्रम्यन्त इति भावेनास्य चित्तस्य लक्षणमाह । स्वच्छत्वमिति स्वच्छत्वं निर्मलत्वमविकारित्वं

स्तिमितोदकवदल्पविकारत्वं न सर्वात्मना विकाराभावः "स्तिमितोदकचित्तादेरविकारोऽल्पविक्रिया" इति वचनात्, शान्तः प्रसन्नता यथापां परा विशिष्टा प्रकृतिरुपाधिमन्तरेण धावल्यस्वभावस्तथा चित्तस्य वृत्तिभिः स्वभावैर्लक्षणं कथितमित्यन्वयः। "वृत्तिः स्वभावो वृत्तं च स्थितिरित्यभिधीयत" इति वचनात् स्वाभाविकं लक्षणमुक्तमित्यर्थः ॥ २२ ॥ ❀ ❀ महत्तत्त्वादहङ्कारसृष्टिमाचष्टे। महत्तत्त्वादिति। "ज्ञानप्रधानस्तु महानहङ्कारः क्रियाधिकः। इतरापेक्षया सोऽपि ज्ञानाधिक उदाहृतः इति ॥" विवक्षया क्रियाशक्तिर्नतु ज्ञानशक्तिरहितत्वादन्यथाहङ्कारस्य शक्तिद्वयकथनं व्यर्थं स्यादिति ॥ २३ ॥ ❀ ❀ पृथक् नाम्ना त्रैविध्यं वक्ति। वैकारिक इति। यतो यस्मात् त्रिविधाहङ्कारान्मनआदीनां भव उत्पत्तिः स इति महतां भूतानां पृथिव्यादीनाम् ॥ २४ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

स्वच्छत्वादेव भगवत्पदत्वं ततो द्रव्यादिमात्रग्रहणहेतुत्वं ज्ञेयम्। यदाहुर्वासुदेवाख्यमित्युपास्यतदधिष्ठानयोरभेदोक्ति-स्तादात्म्यभावनयोपचारात् टीकायां चित्तमित्यनन्तरं क्रियाशक्त्यात्मत्वेन सूत्रमिति च ज्ञेयम् ॥ २१ ॥ २२ ॥ ❀ ❀ क्रियासु मनआद्युत्पादनेषु शक्तिर्यस्य सः ॥ २३ ॥ ❀ ❀ मनस इत्युपलक्षणं देवानामपि भूतानां महतामपीत्यत्र भूत-सूक्ष्मादिक्रमस्त्ववान्तरो ज्ञेयः ॥ २४ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

यत्तत्। प्रसिद्धं चित्तं तन्महदात्मकं महत्तत्त्वमेव देहे चित्तरूपेण तिष्ठतीत्यर्थः। स्वच्छं निर्मलं शान्तं रागादिशून्यं भगवतः पदमुपासनापीठं यद्यं भगवन्तं वासुदेवाख्यमाहुरिति चित्ताहङ्कारबुद्धिमनःसु क्रमेण वासुदेवसङ्कर्षणप्रद्युम्नानिरुद्धा उपास्यदेवताः चित्तादिशुद्ध्यर्थं ज्ञेयाः विष्णुरुद्रब्रह्मचन्द्रास्त्वधिष्ठातारः ॥ २१ ॥ ❀ ❀ ननु देहस्थस्य चित्तस्य सर्वत्र स्वच्छ-त्वादिगुणो लभ्यते तत्राह। स्वच्छत्वं भगवद्बिम्बग्राहित्वमविकारित्वं लयविक्षेपराहित्यं शान्तत्वं रागादिराहित्यमिति लक्षणं चेतसश्चित्तस्य वृत्तिभिः स्वाभाविकीभिरेव प्रोक्तं यथा अपां परा प्रकृतिरुत्कृष्टः स्वभावः। तेन खल्वापः स्वच्छाः फेनतरङ्गादि-रहिता मधुराः शान्ता भवन्ति यथा च भूम्यादिसंसर्गादस्वच्छत्वादिमत्यो भवन्ति तथैव चित्तमपि दुर्विषये आसक्तं चेतनासंसर्गा-दस्वच्छमपि भवतीत्यर्थः ॥ २२ ॥ ❀ ❀ अहङ्कारस्योत्पत्तिपूर्व्वकं लक्षणमाह। महत्तत्त्वादिति। क्रियाशक्तिरित्युपलक्षणं ज्ञानक्रियाद्रव्येष्वपि तस्य शक्तिमत्त्वात् ॥ २३ ॥ ❀ ❀ यतो येभ्यो वैकारिकतैजसतामसेभ्यो मनइन्द्रियभूतानां क्रमेण भव उत्पत्तिः ॥ २४ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

अथ प्रसङ्गात् चतुर्व्यूहोपासनमाह। अत्रेयं प्रक्रिया अन्तःकरणचतुष्टयोत्पत्तिर्वैकारिकाहङ्कारात् तत्र चित्ते वासुदेवः उपास्यः क्षेत्रज्ञोऽधिष्ठाता अहङ्कारे सङ्कर्षण उपास्यः रुद्रोऽधिष्ठाता बुद्धौ प्रद्युम्नः उपास्यः ब्रह्माधिष्ठाता मनस्यनिरुद्धः उपास्यश्चन्द्रो-ऽधिष्ठातेति तत्राहङ्कारे उपास्यस्य सङ्कर्षणस्योपासनतो वासुदेवोपासनस्य महदात्मकचित्ते क्रियमाणत्वात् श्रैष्ठ्यमित्याशयेनाह। यदिति। यच्चित्तं तन्महदात्मकम्। अहङ्कारे वैकारिके महतो यः श्रेष्ठोंऽशस्तन्मयमित्यर्थः अत एव तत्सत्त्वगुणं सत्त्वगुणबहुलं स्वच्छं शान्तं च यत् यत एव हेतोः भगवतः पदमुपलब्धिस्थानम्। यत एव वासुदेवाख्यं वासुदेवोपासनस्थानमाहुरित्यन्वयः ॥२१॥ ❀ ❀ स्वच्छत्वं परमात्मग्राहकत्वम्। अविकारित्वं निर्विकारस्वरूपभगवदधिष्ठितत्वं शान्तत्वं रजस्तमोऽनभिभूतत्वम्। एवं भूताभिः स्वच्छत्वादिवृत्तिभिः चेतसः चित्तं तन्महदात्मकमित्युक्तमहदात्मकस्य लक्षणं, स्वच्छत्वे दृष्टान्तः यथापामम्भसां परा भूसंसर्गात्प्राक्तनी बुद्बुदादिरहिता प्रकृतिः स्वभावः ॥ २२ ॥ ❀ ❀ एवं महत्तत्त्वमन्तःकरणभेदेन चित्तेन सहैकीकृत्यैकं तत्त्वं चित्ताख्यमुक्त्वाथाहङ्काराख्यं द्वितीयं तत्त्वमाह। महत्तत्त्वादिति चतुर्भिः भगवतो वीर्येण सङ्कल्पेन चोदितात् प्रेरितात् क्रियासु शक्तिर्यस्य तथा ॥ २३ ॥ ❀ ❀ यतोऽहङ्कारात् मनआदीनामुद्भवः ॥ २४ ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

आधिदैविकं लक्षयति—यत्तदिति। तस्याऽऽधिदैविकं रूपम्—वासुदेव इति। वासुदेवाविर्भावस्थानत्वात्। वासुदेवे आविर्भवतीति वासुदेवः। विशुद्धं सत्त्वं वासुदेवः, तदेवास्याऽऽधिदैविकं रूपम्, यत्सर्वोपास्यत्वेन प्रसिद्धम्। तदेवैतत्। सत्त्वं गुणो यस्य। सत्त्वस्यापि सत्त्वम्, तस्य रूपत्रयमाह सच्चिदानन्दत्वाय। तत्र सद्रूपतामाह—स्वच्छम्[1] इतिनिर्मलम्, शान्तं चिद्रूपम्,

---

१. इति क. घ।

ज्ञानमेव हि शान्तरूपम्, भगवतः पुरुषोत्तमस्य पदमानन्दरूपम्। एवं सच्चिदानन्दरूपं सत्त्वस्य सत्त्वम्। तच्चित्तम्, सर्वेषु प्राणिषु चेतनारूपेण स्थितम्। तस्योपासनार्थं नामान्तरमाह—यदाहुर्वासुदेवाख्यमिति। वासुदेव इत्याख्या यस्य। वासुदेवशरीररूपत्वात्, वासुदेवाधारत्वाद्वा। यस्मादिति विग्रहः। आहुरिति प्रमाणम्। ननु चित्तस्य तादृशस्योत्पत्तिर्नोक्तेत्याशङ्क्याऽऽह—तन्महदात्मकमिति। महत्तत्त्वरूपमेव चित्तम्, तेन महदुत्पत्तिरुक्तेत्यर्थः ॥ २१ ॥ ❀ ❀ आधिभौतिकं लक्षयति—स्वच्छत्वमिति। स्वच्छत्वं निर्मलत्वम्, अविकारित्वं सर्वविकारराहित्यम्, शान्तत्वं ज्ञानरूपत्वम्। बुद्धिमनोऽहङ्कारव्युदासार्थं त्रीणि विशेषणानि। बुद्धिर्ज्ञानरूपाऽपि विषयाकारेति न स्वच्छा, चित्तं तु निर्विषयं केवलात्मावबोधरूपमिति स्वच्छम्। मनस्तु विकारात्मकं स्पष्टमेव। शान्तत्वं नाऽहङ्कारस्य, सात्त्विकाहङ्कारस्य तथात्वेऽपि पदार्थस्यैकत्वात्, शान्तघोरविमूढात् केवलशान्तत्वं व्यावर्तत एव। अत एव चेतसो वृत्तिभिर्लक्षणं प्रोक्तम्, नैता वृत्तयोऽहङ्कारादेर्भवन्ति। ननु चित्तमपि बुद्ध्यादिभिर्विषयग्रहणे कलुषितं जायते, अन्यथा तन्निरोधे यत्नो न कर्तव्यः स्यात्। अत आह—यथाऽपामिति। यद्यपि फेनतरङ्गादयोऽप्यपां भवन्ति, तथापि न तासां सहजस्वभावोऽयम्, किन्तु वाय्यादिकृतम्, स्वभावतो निर्मलमेव। अत एव परा प्रकृतिरपां स्वच्छैव। लक्षणं त्वकृत्रिमम्, औपाधिकास्तु कृत्रिमाः। न हि कदाचिदपि पृथिवी निर्मला भवति, वायुर्वा विकाररहितो भवति, तेजो[1] वा शान्तं भवति। अतस्तत्सम्बन्धे अपां तत्तद्भावापत्तिः ॥ २२ ॥ ❀ ❀ अहङ्कारस्योत्पत्तिपूर्वकं पूर्ववल्लक्षणान्याह—महत्तत्त्वादिति चतुर्भिः—विकुर्वाणात् कार्योन्मुखात्। कालेन हि गुणक्षोभे विकृतं सत् कार्यमुत्पादयति। न केवलं विकारमात्रेण, किन्त्वन्तर्भगवच्छक्तिरपि सार्वजनिकाऽपेक्ष्यते। तदाह—भगवद्वीर्यसम्भवादिति। भगवद्वीर्यस्य सम्भवो यस्मिन्। नहि जले मथ्यमाने तत्राऽविद्यमानं घृतमुत्पद्यते, किन्तु दुग्धे दध्नि वा। अनेनैव वैनाशिकप्रक्रिया निराकृता, अन्यथा सर्वस्मादेव सर्वं जायेत। स्वभावस्य नियामकत्वे तु स्वभावस्याऽपि तथात्वे प्रमाणं वक्तव्यम्। अचेतना हि सर्वे नियन्तुं शक्याः, ईश्वर एव केवलमनियम्यः। शास्त्रतः स्वभावस्यान्यथाभावोऽपि नोपपद्येत। पटादौ तन्त्वादिसामग्री, चिन्तामण्यादयश्च कारणत्वेन कल्प्यमाना व्यभिचारिणः स्युः, अतो भगवच्छक्तिरेवैव सर्वभवनरूपा, प्रतिनियता समुदाये, प्रत्येकं वा, यत्रैवावतिष्ठते भगवन्नियमात्, तत एवोत्पाद्यत इति युक्तं भगवानेव तथाऽऽविर्भवतीति न वैनाशिकगन्धोऽपि। श्रुतिरपि संवादिन्यत्र, अन्यत्र श्रुतिविरोधश्च, तस्माद्युक्तमुक्तम्—भगवद्वीर्यसम्भवादिति। ज्ञानप्रधानान्महत्तत्त्वात् क्रियाशक्तिरहङ्कार उत्पन्नः। स च त्रिविधः। उत्पत्त्यैव तथैव समपद्यत। क्रिया हि भेदिका कारणभूतं गुणत्रयं कार्यं[2] भिन्नतयैव उत्पादितवती ॥ २३ ॥ ❀ ❀ आध्यात्मिकस्वरूपमिव तान् भेदान् गणयति—वैकारिक इति। वैकारिकः सात्त्विकः। तैजसो राजसस्तामसश्च। आध्यात्मिके गुणा एव सधर्मा लक्षणानि। यतस्त्रिविधान्मनस इन्द्रियाणां भूतानां च सम्भवः। महतामिति तन्मात्राणाम्। महतामपि कार्यजननमपि लक्षणम्। मनःप्रभृतिकार्यजनकसत्त्वादिगुणवत्त्वं वा लक्षणमव्यभिचारात् ॥ २४ ॥

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

यत्तदित्यत्र। यस्मादिति विग्रह इति। वासुदेव इत्याख्या यस्मादिति विग्रह इत्यर्थः ॥ २१ ॥ ❀ ❀ स्वच्छत्वमित्यत्र। स्वाभाविकस्वच्छाविकारिशांतवृत्तिकत्वं चित्तत्वमिति चित्तस्य लक्षणं सिध्यति ॥ २२ ॥ ❀ ❀ महत्तत्त्वादित्यत्र। पूर्वं महत्तत्त्वस्योत्पत्तिकथन एव भगवद्वीर्यसम्भवत्वस्य ज्ञातत्वेऽपि पुनस्तदनुवादस्य यत्प्रयोजनं तदाहुः—न केवलमित्यादि। तथा च भगवद्वीर्यस्य तत्र विद्यमानत्वादेव सर्वं सच्चिदानन्दात्मकं कार्यं तत उत्पद्यत इत्यर्थः। भगवद्वीर्यसंभवत्वकथनस्य प्रयोजनान्तरमाहुः—अनेनेत्यादि। कथं निराकृतेत्याकांक्षायां बाधकतर्कोक्तिमुखेन तत्प्रकारमाहुः—अन्यथेत्यादि। अयमर्थः। वैनाशिकप्रक्रिया ह्याकस्मिकप्रक्रियैकदेशः। आकस्मिकत्वं तु चतुर्धा विकल्प्योदयनाचार्यैर्दूषितम्। 'हेतुभूतिनिषेधो न स्वानुपाख्यविधिर्न च। स्वभाववर्णना नैवमवधेर्नियतत्वतः' इति। अनुपाख्यविधिर्नाम अलीकादेव सर्वं जायत इति विधिः। वैनाशिका बाह्यास्तेषामियं प्रक्रिया, विनाशरूपादभावादसत एव सर्वं जायत इति। दूषणन्तु अभावस्याऽलीकस्य च सर्वत्र सुलभत्वात् सर्वस्मात् सर्वोत्पत्तिः। दृश्यते हि तन्तुभ्यः पटस्य मृदो घटस्य, निम्बबीजान्निम्बस्येति नियतावधिकत्वम्। अतो भगवद्वीर्यसंभवत्वकथनेन नियतावधिकत्वबोधनात् सा निराकृतेत्यर्थः। नन्वेवं वादान्तरं निराकृतं भवति, न तु स्वभाववादः। अयःकान्तसन्निधौ लोहस्य परिभ्रमणे मणिस्वभावस्येव नियामकत्वदर्शनात्। अवधिनियमाभावे तु सर्वमाकर्षयेत्। एवमेकत्र स्वभावस्य विधिनियामकत्वे दृष्टेऽन्यत्रापि तत्तत्स्वभाव एवाऽवधिनियामकोऽस्तु। तथा सति न सर्वस्मात् सर्वोत्पत्तिरिति किमर्थं भगवद्वीर्यस्य तत्र स्थितिकथनमित्याकांक्षायामाहुः—स्वभावस्येत्यादि। यद्यपि प्रदर्शितोदाहरणे प्रत्यक्षं मानम्, तथापि न तेन स्वभावस्यावधिनियामकत्वं सर्वत्र निश्चेतुं शक्यम्। सर्वदा कुसुमरहितत्वेन निश्चितस्वभावेष्वश्वत्थेक्षुकाण्डादिषु देशराजादिभङ्गे कर्पुकदारिद्यादौ च (भावि) भाविन्यौत्पत्तिककुसुमदर्शनेन व्यभिचारात्। यदि च तत्र जीवादृष्टं वा, कालो वा, अन्यद्वा सहकारित्वेनेष्यते, तदा तु हेतुवादापाताद्भग्न एव स्वभाववाद इति तस्यावधिनियामकत्वे प्रमाणमन्यद्वक्तव्यम्। तत्र हेतुः—अचेतना हीत्यादि। अचेतनत्वेन

१. रजः क. ख. ङ। २. कार्यं. क. ङ. कार्यम्. घ।

नियम्यत्वेन व्याप्तेः स्वभावस्याऽपि नियम्यत्वेन नियामकस्याऽऽवश्यकत्वादिति। किं बहुना, अचेतनमधिष्ठाय चेतना अपि नियम्यतां यान्तीति किं वक्तव्यन्तेषु। तदाहुः—ईश्वर एवेत्यादि। तथा चोक्तप्रत्यक्षानुमानाभ्यां न स्वभाववादनिर्वाह इत्यर्थः। नन्वियं व्याप्तिर्न सार्वत्रिकी, हीरके पृथिवीत्वलोहलेख्यत्वयोरिव क्वचिद्व्यभिचारस्य संभाव्यमानत्वादित्यतो दूषणान्तरमाहुः—शाश्वत इत्यादि। वन्ध्यावकेशिप्रभृतिषु पुत्रफलराहित्यं पूर्वं स्वभावतो दृश्यते, ततः पुत्रेष्टितरुशान्त्यादिरूपे कर्मणि कृते पुत्रफलानि च दृश्यन्ते। यदि सा व्याप्तिर्न स्यात्तदा शाश्वतः सोऽन्यथाभावो युक्तिबाधितः स्यादित्यर्थः। सार्वजनीनत्वाय दूषणान्तरमाहुः—पयादावित्यादि। स्पष्टम्। ननु मास्तु स्वभाववादः, तथापि तत्र तत्र तत्तत्प्रागभावस्य सत्त्वात् स एव स्वभावस्याऽत्रवेश्च नियामको भविष्यतीत्यर्थवैनाशिकमतमेवाऽऽदरणीयमिति चेन्न, कारणावस्थातिरिक्तस्य प्रागभावस्य वक्तुमशक्यत्वात्। कार्यभविष्यत्ता-ज्ञानेनानुभूयमानस्य तस्य कारणावस्थातोऽतिरेके मानाभावात्। इदं यथा तथा निबन्धे व्युत्पादितमिति नात्र विस्तरः। कारणत्वं च वस्तुतो भगवत एवेति सर्वत्र तच्छक्त्यैव कार्यसिद्धिः। तदेतदभिसंधायाहुः—अत इत्यादि। एवमङ्गीकारस्य गुणमाहुः—श्रुतिरपीत्यादि। सा तु श्वेताश्वतरोपनिषदि पठ्यते। 'ब्रह्मवादिनो वदंति, 'किं कारणं ब्रह्म, कुतः स्म जाता जीवाम, केन क्व च सम्प्रतिष्ठः। अधिष्ठिताः केन सुखेतरेषु वर्तामहे ब्रह्मविदो व्यवस्थाम्, इत्यृचा प्रश्नमुक्त्वा व्यवस्थानिर्णयं च प्रतिज्ञायाऽग्रे पठ्यते। 'कालः स्वभावो नियतिर्यदृच्छा भूतानि योनिः पुरुष इति चिन्त्यम्। संयोग एषां नत्वात्मभावादात्माप्यनीशः सुखदुःखहेतोः' इति। अस्यां त्वृचि काल-स्वभावादृष्टाकस्मिकपरमाणुप्रकृतिपुरुषवादान् चिन्त्यमित्यनेन दूष्यतयोक्त्वा सर्वसंयोगेन कार्योत्पत्तिवादमप्यग्रेऽर्धर्चेन पठ्यते 'ते ध्यानयोगे तु ता अपश्यन् देवात्मशक्तिं स्वगुणैर्निगूढाम्' इति। तथा चैतद्विरोधाद्वादान्तराणि नाद्रियन्त इत्यर्थः। फलितमाहुः—तस्मादित्यादि। तथैवेति। त्रिप्रकारक एव। तत्र हेतुमाहुः—क्रियेत्यादि। क्रियेति। उत्पादिका क्रिया॥ २३॥ ❀ ❀ वैकारिक इत्यत्र। सधर्मा इत्यादि। उत्पादकत्वधर्मसहिताः। यत इत्यादि। तथा च, कार्यानुगतमेव लक्षणमित्यर्थः॥ २४॥

### श्रीगिरिधरकृता बालप्रबोधिनी

प्रसङ्गाच्चतुर्व्यूहोपासनमप्याह—यत्तदिति। सर्वागमप्रसिद्धं भगवतः पदमुपलब्धिस्थानं अतएव अधिष्ठानाधिष्ठेयाभेदं अभिप्रेत्य वासुदेवाख्यं चित्तं यदाहुस्तन्महदात्मकमेव विद्धीति शेषः। भगवत्पदत्वे हेतुमाह—स्वच्छमिति, विशदमित्यर्थः। तत्र हेतुः— शान्तमिति, कामक्रोधादिरहितमित्यर्थः। तत्रापि हेतुमाह—सत्त्वगुणमिति। अत्रेदं बोध्यम्—अधिभूतरूपेण चित्तमिति, उपास्यरूपेण वासुदेव इति। अधिष्ठाता तु तस्य क्षेत्रज्ञः॥ २१॥ ❀ ❀ तल्लक्षणमाह—स्वच्छत्वं निर्मलत्वमविकारित्वं लयविक्षेपराहित्यं शान्तत्वं रागादिशून्यत्वं चेत्येवंरूपाभिर्वृत्तिभिः चेतसो लक्षणं प्रोक्तमित्यन्वयः। ननु चेतसोऽपि कलुषितत्वं मन्तव्यमन्यथा 'चेतः खल्वस्य बन्धाय' इत्युक्तं तस्य बन्धहेतुत्वं न स्यादित्याशङ्क्य तत्र दृष्टान्तमाह—यथेति। यथा पराभूसंसर्गात्प्राक्तनी अपां प्रकृतिः स्वतस्सिद्धः स्वभावः फेनपङ्कतरङ्गादिरहिता मधुरा स्वच्छा च भूमिवाय्वादिसम्बन्धात् फेनादिविकारवती च भवति तथा चित्तमपि स्वतः स्वच्छत्वादिमदपि बुद्ध्यादिद्वारा विषयसम्बन्धाद्विकारवद्भवतीत्यर्थः॥ २२॥ ❀ ❀ अहङ्कारस्योत्पत्तिपूर्वकं लक्षणमाह—महत्तत्त्वादिति चतुर्भिः। भगवद्वीर्यं चिच्छक्तिस्तेन सम्भव उत्पत्तिर्यस्य तस्मात् विकुर्वाणात् विक्रियमाणात् महत्तत्त्वात् क्रियासु शक्तिर्यस्य स तथाभूतस्त्रिविधोऽहङ्कारः समपद्यत बभूव॥ २३॥ ❀ ❀ वैविध्यमेवाह—वैकारिकः सात्त्विकः, तैजसो राजसः। तस्य कार्यमाह—यत इति, यस्मादहङ्कारान्मनआदीनां भव उत्पत्तिर्जाता॥ २४॥

### हिन्दी अनुवाद

जो सत्त्वगुणमय, स्वच्छ, शान्त और भगवान्‌की उपलब्धिका स्थानरूप चित्त है, वही महत्तत्त्व है और उसीको 'वासुदेव' कहते हैं[1]॥ २१॥ ❀ ❀ जिस प्रकार पृथ्वी आदि अन्य पदार्थोंके संसर्गसे पूर्व जल अपनी स्वाभाविक (फेन-तरङ्गादिरहित) अवस्थामें अत्यन्त स्वच्छ, विकारशून्य एवं शान्त होता है, उसी प्रकार अपनी स्वाभाविकी अवस्थाकी दृष्टिसे स्वच्छत्व अविकारित्व और शान्तत्व ही वृत्तियोंसहित चित्तका लक्षण कहा गया है॥ २२॥ ❀ ❀ तदनन्तर भगवान्‌की वीर्यरूप चित्-शक्तिसे उत्पन्न हुए महत्तत्त्वके विकृत होनेपर उससे क्रियाशक्तिप्रधान अहङ्कार उत्पन्न हुआ। वह वैकारिक, तैजस और तामस भेदसे तीन प्रकारका है। उसीसे क्रमशः मन, इन्द्रियों और पञ्चमहाभूतोंकी उत्पत्ति हुई है॥ २३-२४॥

**सहस्रशिरसं साक्षाद्यमनन्तं प्रचक्षते[2]। सङ्कर्षणाख्यं पुरुषं भूतेन्द्रियमनोमयम्॥ २५॥**
**कर्तृत्वं करणत्वं च कार्यत्वं चेति लक्षणम्। शान्तघोरविमूढत्वमिति[3] वा स्यादहंकृतेः॥ २६॥**

---

१. जिसे अध्यात्ममें चित्त कहते हैं, उसीको अधिभूतमें महत्तत्त्व कहा जाता है। चित्तमें अधिष्ठाता 'क्षेत्रज्ञ' और उपास्यदेव 'वासुदेव' है। इसी प्रकार अहङ्कारमें अधिष्ठाता 'रुद्र' और उपास्यदेव 'सङ्कर्षण' है, बुद्धिमें अधिष्ठाता 'ब्रह्म' और उपास्यदेव 'प्रद्युम्न' है तथा मनमें अधिष्ठाता 'चन्द्रमा' और उपास्यदेव 'अनिरुद्ध' है। २. प्रा० पा०—प्रवर्तते। ३. प्रा० पा०—शान्तं घोरं वि०।

### श्रीधरस्वामिविरचिता भावार्थदीपिका

तस्मिन्नुपास्यव्यूहमाह । सहस्रशिरसमिति ॥ २५ ॥ ॐ ॐ लक्षणमाह । कर्तृत्वमिति । कर्तृत्वं देवतादिरूपेण करणत्वमिंद्रियरूपेण कार्यत्वं भूतरूपेण शांतत्वादिकं तु तत्तत्कारणगुणत्रयरूपेण ॥ २६ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

तस्मिन्नहंकारे । यमिति यत्स्थमित्यर्थः । मञ्चाः क्रोशंतीतिवत् । संदर्भस्तु—उपास्यतदधिष्ठानयोस्तादात्म्यापत्तिं दृष्ट्वा तत्तुल्यं वदंतीत्यर्थमाह—"साक्षात्प्रत्यक्षतुल्ययोः" इत्यमरः ॥ २५ ॥ ॐ ॐ तत्कारणं शांतत्वादिकारणं यत्सत्त्वादि गुणत्रयं तेन रूपेण अहंकृतेरहंकारस्य ॥ २६ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

तस्मिन्नहङ्कारे उपास्यं व्यूहं मूर्त्तिभेदं यमहङ्कारं साक्षादनन्तमनन्ताधिष्ठानत्वादनन्ततुल्यं वदन्ति "साक्षात्प्रत्यक्षतुल्ययोः" इत्यमरः । अहङ्कारविशेषणं भूतेति । अनन्तविशेषणं सहस्रशिरसमित्यादिपदत्रयेण, पुरुषं प्रथमपुरुषम् ॥ २५ ॥ ॐ ॐ अहमस्मीति योऽभिमानः सोऽसाधारणव्यापारत्वात् अहङ्कार इति स्वरूपलक्षणम् । तटस्थं लक्षणन्तु कर्तृत्वमित्यादि, देवतानां प्रवर्तकत्वात् कर्तृत्वं तद्रूपेण प्रयोजककर्तृत्वम् इन्द्रियाणां करणत्वात्करणत्वं तद्रूपेण भूतानां शरीरतया कार्य्यत्वात्कार्य्यत्वं तद्रूपेणेति ज्ञेयं, तत्कारणेति शान्तत्वादिकारणं यत्सत्त्वादिगुणत्रयं तद्रूपेण ॥ २६ ॥

### श्रीमद्वीरराघवव्याख्या

तस्याहङ्कारस्य सङ्कर्षणाधिष्ठितत्वमाह । सहस्रशिरसमिति । सहस्रशिरसं सहस्रफणमनन्तशब्दवाच्यं साक्षात्सङ्कर्षणाख्यभगवद्व्यूहं पुरुषं परमपुरुषं भूतेन्द्रियमनोमयं भूतादीनां कारणमहङ्कारं प्रचक्षते सङ्कर्षणाधिष्ठितमहङ्कारं प्रचक्षत इत्यर्थः ॥ २५ ॥ ॐ ॐ अहङ्कारस्य लक्षणं तस्य स्वकार्यभूतान्तःकरणभेदाहङ्कारानुग्राहकत्वं तद्वृत्तिभिर्लक्ष्यत्वं चाह । कर्तृत्वमिति । कर्तृत्वाभिमानः आत्मनि गमनाद्याश्रयत्वाभिमानो यदा मनसि स्यात्तदाहङ्कारानुगृहीतं मन इत्यर्थः । एवं करणत्वमिन्द्रियत्वं कार्यत्वं देहत्वं चेति लक्षणमहङ्कारस्य लक्षणं चिह्नभूतेन्द्रियकारणत्वादहङ्कारस्येत्यर्थः । शान्तत्वं प्रकाशत्वं घोरत्वं विक्षिप्तत्वं मूढत्वं चेति वाहंकृतेर्लक्षणं तत्तत्कारणगुणत्रयरूपेणाहङ्कारो लक्षित इत्यर्थः ॥ २६ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

प्रकारान्तरेण त्रैविध्यं वक्ति । वैकारिक इति । "सप्तसु प्रथमा यत्र स्वातन्त्र्यं यद्विवक्षितम्" इति वचनात् वैकारिकात् अधिदैवमित्यादिप्रथमा पञ्चम्यर्थे वक्तव्या । "दैवताधिकृतं यत्तदधिदैवमिति स्मृतम्" इति वचनात् दिगादिदेवतासर्गमधिकृत्य वर्त्तमानाद्वैकारिकाहङ्कारात् दिगादिदेवता जाता इत्यर्थः । तैजसात् तैजसाहङ्कारात् बुद्धिर्बुद्धितत्त्वं तदभिमानिन्युमाहङ्कारिकः प्राणश्च जात इति शेषः । अर्थमात्रं शब्दादितन्मात्रा च तामसात्तामसाहङ्कारादभूदिति शेषः । तामसोऽहङ्कारोऽर्थानां शब्दादीनां मात्रं निर्मातेति वाऽनेन किमुक्तं स्यादित्यत उक्तं गुणव्यतिकर इति । गुणानां सत्त्वादीनां शान्तत्वादिव्यञ्जकानां व्यतिकरो यस्मिन्स तथा सोऽहङ्कार एवं त्रिवृत्त्रिविधः ॥ ० ॥ ॐ ॐ अहङ्कारतत्त्वस्य सूक्ष्मस्थूलरूपभेदेन स्थितस्याभिमानिविशेषमाह । सहस्रशिरसमिति । भूतेन्द्रियमनोमयमित्यत्र मयट्प्रत्ययः प्राधान्यार्थः, तथा च भूतादीनां प्रधानकारणं मुख्ये प्रवर्तकमित्यर्थः । "संकर्षणाख्यस्तु हरिः सूक्ष्माहङ्कारयामकः । स्थूलाहङ्कारनियमी विष्णुः प्रद्युम्ननामकः ॥ अनिरुद्धो मनस्तत्त्वनियन्ता भगवान् हरिः । महत्तत्त्वादिजीवास्तु ब्रह्मशेषोऽङ्गजस्तथा ॥ सूक्ष्मस्थूलविभेदेन कामजश्चानिरुद्धकः" इति विशेषवचनादर्थविशेषोऽत्र बुभुत्सुभिर्ज्ञातव्य इति । साक्षादिति विशेषणात् संकर्षणादिनाम्ना त्रिधाभिव्यक्तेन हरिणा प्रेरितः संकर्षणानामानन्तः त्रिविधाहङ्काराभिमानीति सम्यगवगन्तव्यम् ॥ २५ ॥ ॐ ॐ अहङ्कारलक्षणं वक्ति । कर्तृत्वमिति । वैकारिकाहङ्कारस्य मनोरूपेण परिणतत्वात् मनोव्याप्तित्वेन देहाद्यहंममतोत्पादकत्वेन कर्तृत्वं नाम लक्षणं तैजसाहङ्कारस्य करणानामिन्द्रियाणां कारणत्वादीन्द्रियाभिमानिनियतेन्द्रियद्वारा ज्ञानजनकत्वेन करणत्वं तामसाहङ्कारस्य । कार्यापरपर्यायदेहकारणत्वाद्देहस्य च पाञ्चभौतिकत्वात् देहरूपेण कार्यत्वं च इति शब्दः प्रकारवाची, तदुक्तम् 'मनोरूपेण कर्तृत्वं देहरूपेण कार्यता । इन्द्रियात्मतया चैव करणत्वमहङ्कृतेः ॥ यतो मनस्यहंभावस्तस्मात्कर्ता मनः स्मृतम् । स्वभावकर्तृजीवस्य त्वासन्नोपाधि तद्यतः ॥ कर्मज्ञाने करणता यतः करणमिन्द्रियम् । कार्यं देहः समुद्दिष्टमुत्पाद्यत्वात्पुनः पुनः ॥" इति स्वोत्पन्नपदार्थेषु तत्तत्स्वभावस्फुरणात् स तल्लक्षणमिति भावेन लक्षणान्तरमाह । शान्तेति । देवपितृजनकवैकारिकस्य सत्त्वांशप्राचुर्येणोत्पन्नत्वात् शुक्लात्मनो भगवन्निष्ठोपेतत्वात् शान्तत्वं करणापरपर्यायेणेन्द्रियाणां स्रष्टुस्तैजसाहङ्कारस्य सत्त्वरजोंऽशप्राचुर्य्येण जातत्वात् ज्ञानेन्द्रियैर्नानाविधघोरपदार्थविषयज्ञानजनकत्वात्

कर्मेन्द्रियैर्घोरतरनानाविधकर्मकारयितृत्वात् घोरत्वं वैकारिकतैजसयोर्यावत् ज्ञानस्य जनकत्वं तावत् ज्ञानजनकत्वाभावेन तमोंऽश-प्राचुर्येणोद्भूतत्वात् भूतादेश्च तामसाहङ्कारस्य विमूढत्वं "शान्तरूपो देवपिता घोरः करणसृड्भतः । तावज्ज्ञानस्याप्रकाशान्मूढो भूतपिता स्मृतः ॥ त्रिरूपोऽयमहङ्कारः शेष इत्येव तं विदुः ।" इति वचनात् अर्थविशेषः कल्प्यत इत्यर्थः ॥ २६ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

यमहङ्कारं साक्षादनन्तं प्रचक्षते उपास्यतदधिष्ठानयोस्तादात्म्यापत्तिं दृष्ट्वा तत्तुल्यं वदन्तीत्यर्थः "साक्षात् प्रत्यक्षतुल्ययोः" इत्यमरः । अहङ्कारं विशिनष्टि । भूतेति । अनन्तं विशिनष्टि । सहस्रशिरसमित्यादिपदत्रयेण तत्र सङ्कर्षणाख्यं पुरुषं प्रथमं पुरुष-मित्यर्थः ॥ २५ ॥ ❀ ❀ कर्तृत्वम् ॥ २६—२७ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

तत्रोपास्यदेवतामाह । सहस्रेति । यमिति मञ्चाः क्रोशन्तीति न्यायेन यत्स्थमित्यर्थः ॥ २५ ॥ ❀ ❀ कर्तृत्वं देवता-रूपेण करणत्वमिन्द्रियरूपेण कार्यत्वं भूतरूपेण शांतत्वादिकं त्रिगुणमयत्वेन ॥ २६ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

मनसि वैकारिकाहङ्कारकार्य्ये अनिरुद्धाख्यो व्यूह उपास्यः । मनोवृत्तिभेदेऽहङ्काराख्येऽन्तःकरणे सङ्कर्षण उपास्यः । तस्यानिरुद्धात् श्रैष्ठ्यं दर्शयितुं समष्ट्यहङ्कारात्मनोपास्यत्वं दर्शयति । सहस्रशिरसमिति । यमहङ्कारं साक्षादनन्तं शेषाख्यानन्तस्यां-शिनं प्रचक्षते अनन्तोपासनस्थानं प्रचक्षते इत्यर्थः ॥ २५ ॥ ❀ ❀ कर्तृत्वं मनोरूपेण कर्माणि जीवो मनसा करोति अतो जीव-द्वारा करणे मनस्यपि कर्तृत्वोपचारः कर्ता तु जीव एव । 'कर्ता शास्त्रार्थवत्त्वात्' ।२।३।३३। इति न्यायात् करणत्वमिन्द्रियरूपेण कार्यत्वं भूतरूपेण अहङ्करणस्य लक्षणं शान्तत्वादि तु वैकारिकत्वादिना ॥ २६ ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

आधिदैविकं लक्षयति—सहस्रशिरसमिति । यथा पूर्वं वासुदेवः, तथाऽत्र सङ्कर्षणः । स्वभावतोऽयं तामसः प्रलयकर्ता च । अहङ्कारेणोत्पादितं नाशकमेव । तस्याऽनेकधोत्पत्तिज्ञापनार्थं देवतायामनन्तानि शिरांसि निरूप्यन्ते—सहस्रशिरसमिति । सुखभेदा वा, 'सहस्रसंमितः स्वर्गो लोकः' इति श्रुतेः । अत एवाऽहङ्कारेण कालनिरूपितकर्माणि सफलान्यनन्तानि । अनन्तशब्दः काले, सङ्कर्षणे, शेषे च प्रवर्त्तते । प्रचक्षत इति प्रमाणम् । सात्त्वता यं सङ्कर्षणाख्यं प्रचक्षत इति सम्बन्धः । सा काचिदन्या देवता भविष्यतीत्याशङ्क्याऽऽह—पुरुषमिति । पुरुष एव सङ्कर्षणः, न मूलभूतः कालः । तस्य त्रिविधाहङ्काराधिष्ठातृत्वाय रूपत्रयमाह—भूतेन्द्रियमनोमयमिति । तत्र विद्यमानानि भूतेन्द्रियमनांसि कार्ये आविर्भवन्ति । मयट्प्रत्ययः प्रत्येकमभिसम्बध्यते । प्राचुर्ये चाऽयम् ॥ २५ ॥ ❀ ❀ आधिभौतिकं लक्षयति—कर्तृत्वमिति । कर्तृत्वं प्राणिषु विद्यमानाहङ्कारस्य सात्त्विकस्य लक्षणम्, कारणत्वं राजसस्य, कार्यत्वं तामसस्य । एतद्धर्मपुरःसरं लक्षणम् । धर्मिपुरःसरमाह—शान्तघोरविमूढत्वमिति । शान्तत्वं सात्त्विकस्य स्वरूपलक्षणम्, अत एवाऽहङ्कारेण शान्तिरप्रयोजिका । घोरत्वं राजसस्य, विमूढत्वं तामसस्य । निरहङ्कारस्य नैते भावा उत्पद्यन्ते । अत एव भगवत्परस्त्रितयविलक्षणो भवति । वेति विकल्पार्थः । अहङ्कृतेरहङ्कारस्य । भौतिकस्य दुर्बलत्वात् स्त्रीत्वम् ॥ २६ ॥

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

सहस्रेत्यत्र । उत्पादितमिति कालाग्निरुद्ररूपम् । तथा तज्जनकत्वमपि तल्लक्षणमप्यत्र संकर्षणपदेन सूच्यत इत्यर्थः । सुखभेदा वेति । तेन तादृशस्वर्गजनकत्वमपि तल्लक्षणमिति सूचितम् ॥ २५ ॥

### श्रीगिरिधरकृता बालप्रबोधिनी

तस्मिन्नुपास्यव्यूहमाह—सहस्रेति । यमहङ्कारं सहस्रशिरसं सहस्रफणं अनन्तमनादिनिधनं सङ्कर्षणाख्यं भूतादीनां कारणभूतं पुरुषं प्रचक्षते वदन्तीत्यन्वयः । यस्मिन्नहङ्कारे सङ्कर्षण उपास्यते इत्यर्थः । अभेदोक्तिश्च तथोपासनार्था । तदधिष्ठाता तु रुद्रः ॥ २५ ॥ ❀ ❀ अहङ्कारलक्षणमाह—कर्तृत्वमिति । देवादिपरिणामतया तत्तदिन्द्रियप्रेरकत्वेन कर्तृत्वमिन्द्रियरूप-परिणामेन कारणत्वं भूतादिरूपेण परिणम्य कार्यत्वमित्यहङ्कृतेरहङ्कारस्य लक्षणं स्यादित्यन्वयः । एवं कार्यप्रयुक्तं लक्षणमुक्तं सत्त्वादिकारणप्रयुक्तं लक्षणमाह—शान्तमिति । सात्त्विकत्वेन शान्तत्वं राजसत्वेन घोरत्वं तामसत्वेन मूढत्वमिति वाऽहङ्कृते-र्लक्षणं स्यात् ॥ २६ ॥

### हिन्दी अनुवाद

इस भूत, इन्द्रिय और मनरूप अहङ्कारको ही पण्डितजन साक्षात् 'सङ्कर्षण' नामक सहस्र सिरवाले अनन्तदेव कहते हैं ॥ २५ ॥ ❀ ❀ इस अहङ्कारका देवतारूपसे कर्तृत्व, इन्द्रियरूपसे करणत्व और पञ्चभूतरूपसे कार्यत्व लक्षण है तथा सत्त्वादि गुणोंके सम्बन्धसे शान्तत्व, घोरत्व और मूढत्व भी इसीके लक्षण हैं ॥ २६ ॥

वैकारिकाद्विकुर्वाणान्मनस्तत्त्वमजायत । यत्सङ्कल्पविकल्पाभ्यां वर्तते कामसम्भवः[1] ॥ २७ ॥
यद्विदुर्ह्यनिरुद्धाख्यं हृषीकाणामधीश्वरम् । शारदेन्दीवरश्यामं संराध्यं योगिभिः शनैः ॥ २८ ॥
तैजसात्तु विकुर्वाणाद् बुद्धितत्त्वमभूत्सति । द्रव्यस्फुरणविज्ञानमिन्द्रियाणामनुग्रहः ॥ २९ ॥
संशयोऽथ विपर्यासो निश्चयः स्मृतिरेव च । स्वाप इत्युच्यते बुद्धेर्लक्षणं वृत्तितः पृथक्[2] ॥ ३० ॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

मनस उत्पत्तिपूर्वकं लक्षणमाह । वैकारिकादिति द्वाभ्याम् । संकल्पश्चिंतनम् । विकल्पो विशेषचिंतनम् । यस्य मनसः संकल्पविकल्पाभ्यां कामसंभवो वर्तत इति कामरूपा वृत्तिर्लक्षणत्वेनोक्ता न तु प्रद्युम्नव्यूहोत्पत्तिः तस्य संकल्पादिकार्यत्वाभावात् उपास्यव्यूहस्य चानिरुद्धस्योक्तेः ॥ २७ ॥ ❀ ❀ शारदं शरत्कालीनमिंदीवरं नीलोत्पलं तदिव श्यामम् । यच्छनैः संराध्यं वशीकर्तुं योग्यं दुर्ग्रहत्वात् ॥ २८ ॥ ❀ ❀ बुद्धेरुत्पत्तिपूर्वकं लक्षणमाह । तैजसादिति द्वाभ्याम् । हे सति द्रव्यस्फुरणरूपं विज्ञानमिति चित्तव्यावृत्त्यर्थमुक्तम् । इंद्रियाणामनुग्रह इति सविकल्पज्ञाने हृषीकाणामधीश्वरमिति यदुक्तं तत्तु निर्विकल्पज्ञाने ॥ २९ ॥ ❀ ❀ द्रव्यस्फुरणस्यैव प्रपंचः संशयादिः विपर्यासो मिथ्याज्ञानम् । निश्चयः प्रमाणज्ञानम् । स्वापो निद्रा "प्रमाणविपर्ययविकल्पनिद्रास्मृतयः" इति पातंजलोक्तेः ॥ ३० ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

संकल्पः सामान्यतो विषयजिघृक्षा सामान्यविषयस्यैव विविधसंकल्पनेन विशेषतो जिघृक्षा विकल्पश्च ताभ्यां कामस्य मनोरथस्य संभवो भवतीति ॥ २७ ॥ ❀ ❀ यदिति पूर्ववत् ॥ २८ ॥ ❀ ❀ विज्ञानं विचारः । चेतनारूपविज्ञानं चित्तधर्मो ज्ञेयः । ज्ञानं च सविकल्पकनिर्विकल्पकभेदाद् द्विधा । तथाहि–अयं घटोयं दंडीत्यादिशब्दाभिलापयोग्यं विशेषणविशेष्यवैशिष्ट्यावगाहि वा सविकल्पकं तत्कारणत्वेन कल्प्यमतींद्रियं विशिष्टशब्दाभिलापायोग्यं विशेषणविशेष्यवैशिष्ट्यानवगाह्यंत्यम् । तद्यथा दंडी पुरुष इति ज्ञाने दंडो विशेषणं पुरुषो विशेष्यः संयोगः संबंध इति तदवगाहि तज्ज्ञानं सविकल्पकं तद्दंडज्ञानमंतरेण नोत्पद्यते तद्दंडज्ञानजन्यं यथा सुप्तोत्थितस्य जायमाने घट इति ज्ञाने घटत्वं विशेषणं घटो विशेष्यः समवायः संबंध इति तदवगाहितत्सविकल्पकं घटत्वज्ञानजन्यं वाच्यं तत्कारणीभूतं ज्ञानं चानुभवानास्पदत्वादतींद्रियं निर्विकल्पकमभिधीयत इति तदसत्त्वे सुप्तोत्थितस्यायं घट इति ज्ञानं न स्याद्विशेषणीभूतघटत्वाज्ञानात् । विशेषणज्ञानमंतरा विशिष्टज्ञानानुदयेन तस्य तद्धेतुत्वादित्यलं प्रसक्तानुप्रसक्त्येति । प्रकृतमनुसरामः–बुद्ध्या विनेंद्रियाणि न प्रवर्तितुं शक्नुवंतीत्यर्थः । यद्यपि चित्ताहंकारमनांस्यपींद्रियानुग्राहकाणि, तथापि बुद्ध्या तदनुग्रहविशेषो ज्ञेयः । तथा हि–शब्दं शृणोमीत्यत्र प्रथमं चित्तेन चेतनामात्रं निधीयते, बुद्ध्या शब्दोयमिति स्फूर्तिः, मनसा शब्दे जिघृक्षाऽहंकारेण तत्र स्वाभिमानार्पणमिति भेदः ॥ २९ ॥ ❀ ❀ संशयस्तु एकस्मिन्धर्मिणि विरुद्धविषयकनानार्थावमर्शः । यथा स्थाणौ स्थाणुर्वा पुरुषो वायमिति । स च त्रिधा-साधारणधर्मजोऽसाधारणधर्मजो विप्रतिपत्तिजश्च । स्थाणुपुरुषसाधारणोच्चत्वदर्शनज आद्य उक्तः । नित्यानित्यव्यावृत्तशब्दत्वादिदर्शनजशब्दो नित्योऽनित्यो वेति द्वितीयः । वादिविरुद्धार्थवाक्याज्जायमानस्तमो द्रव्यं न वेति तृतीयः । विपर्यासो, विपर्ययः, स च प्रतियोगिव्यधिकरणतदभाववति तत्प्रकारको निर्णयः यथा शुक्ताविदं रजतमिति रजतत्वाभाववत्यां शुक्तौ तन्निर्णयोऽयं भवत्येव । अयं वृक्षः कपिसंयोगीति ज्ञाने मूलावच्छेदेन कपिसंयोगाभाववति वृक्षे कपिसंयोगप्रकारकनिश्चयस्य सत्त्वात् । यद्यपि संशयविपर्ययस्वप्नानध्यवसायभेदेन मिथ्याज्ञानस्य वैशेषिकैश्चतुर्विधस्योक्तत्वादत्रापि तथात्वमेवोचितं तथापि स्वप्नानध्यवसायावत्र विपर्ययेंतर्भावयित्वा द्वैविध्यमेवोक्तं श्रीबादरायणेन । प्रमाणज्ञानं यथार्थज्ञानं तद्वति तत्प्रकारकानुभवरूपमिति यावत् । तच्च घटत्ववति घटे घटोयमित्येवंरूपमिति । अत्र बुद्धेरेव संशयादयो वृत्तय इत्यत्र पातंजलसूत्रं प्रमाणयति प्रमाणेति । अस्यार्थं सूत्रैरेवाह अविसंवादिज्ञानं प्रमाणं तच्च प्रत्यक्षानुमानादि । तथा हि "तत्र प्रत्यक्षाऽनुमानागमाः प्रमाणानि" ( ७ ) ॥ "विपर्ययो मिथ्याज्ञानमतद्रूपप्रतिष्ठम्" ( ८ ) अतथाभूतेऽर्थे तथोत्पद्यमानं ज्ञानं विपर्ययः । यथा शुक्तिकादौ रजतादिज्ञानं तस्यार्थस्य यत्पारमार्थिकं रूपं तन्न भासयतीत्यतद्रूपप्रतिष्ठम् ( ८ ) ॥ "शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः" ( ९ ) ॥ वस्तुनस्तत्त्वमनपेक्षमाणो योऽध्यवसायः स विकल्पः तथा पुरुषस्य चैतन्यं रूपमिति शब्दजनितज्ञाने बुद्ध्या षष्ठ्या योऽध्यवसितो भेदस्य च नास्त्येव चैतन्यस्यैव पुरुषरूपत्वादिति ( ९ ) ॥ "अभावप्रत्ययावलंबना वृत्तिर्निद्रा" ( १० ) या सततमुद्रिक्तत्वात्तमसः समस्तविषयपरित्यागेन प्रवर्त्तते वृत्तिः सा निद्रा ( १० ) ॥ अनुभूतविषयासंप्रमोषः स्मृतिः ( ११ ) प्रमाणेनानुभूतस्य विषयस्य योयमसंप्रमोषः संस्कारद्वारेण बुद्धावुपारोहः सा स्मृतिरिति ( ११ ) ॥ संशयादयो बुद्धेर्वृत्तयो

---

१. प्रा० पा०—कार्यं सं० । २. प्रा० पा०—क्वचित् ।

द्रष्टुः सर्वज्ञस्य परमात्मनः लिङ्गत्वं प्रमाणभूतत्वं भगवतः शास्त्रयोनित्वात् द्रष्टुः घटपटाद्यर्थद्रष्टुः लिङ्ग्यते प्रतीयते इति द्रष्टृलिङ्गं तस्य भावस्तत्त्वमिति वा घटपटाद्यर्थद्रष्टुर्हि तद्वाचकः शब्दः प्रतीयते, यद्यपि शब्द श्रवणादप्यर्थः प्रतीयते, तथापि तदपि शब्दस्य लक्षणमेव तदेव हि अर्थाश्रयत्वमित्युक्तम् । अर्थाश्रयत्वं नाम श्रोतुरर्थप्रत्यायकत्वमेव वक्तुर्द्रष्टृत्वेनानुमापकत्वं वा । अर्थं दृष्ट्वा हि वक्ताभिवदति कुड्याद्यन्तरितस्यापि वक्तुर्ज्ञापकत्वं वा नभसस्तन्मात्रमाकाशस्यासाधारणगुणत्वं सूक्ष्मत्वं वा शब्दस्य लक्षणं कार्यं कवयो विदुः ॥ ३३ ॥ ❀ ❀ नभसो लक्षणमाह । भूतानामिति । भूतानां ब्रह्मादिस्तम्बपर्यन्तभूतानां छिद्रदातृत्वमवकाशदातृत्वं बहिरन्तर्व्यवहारास्पदत्वं प्राणानामिन्द्रियाणामात्मनश्च धिष्ण्यत्वं स्थानत्वं नाड्यादिच्छिद्ररूपेण नभस आकाशस्य वृत्तिलक्षणं वृत्तिः छिद्रदातृत्वादि कार्यमेव लक्षणम् । एवमुत्तरत्राप्येकेन श्लोकेन तन्मात्रमहाभूतयोरुत्पत्तिः, द्वितीयेन तन्मात्रलक्षणं तृतीयेन महाभूतलक्षणमित्यनुसन्धेयम् ॥ ३४ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली ।

इन्द्रियाणि तैजसानि तैजसाहङ्कारादुत्पन्नान्येव तद्विवेकमाह । क्रियाज्ञानेति । क्रियाज्ञानविभागेन कर्मेन्द्रियज्ञानेन्द्रियसंज्ञाभेदेन तदभिमानिविशेषं वक्ति । प्राणस्य हीति । प्राणस्याहङ्कारिकस्य क्रियाशक्तिः कर्मेन्द्रियप्रेरकत्वशक्तिः बुद्धेरुमाया विज्ञानशक्तिता श्रोत्रादीन्द्रियैर्विज्ञानजनकत्वशक्तिः ॥ ३१ ॥ ❀ ❀ शब्दमात्रं शब्दाख्यो गुणस्तस्माच्छब्दाख्यगुणान्नभः उत्पन्नं शब्दं गमयति ज्ञापयतीति शब्दगं श्रोत्रेन्द्रियमुत्पन्नमिति शेषः ॥३२॥ ❀ ❀ शब्दतन्मात्रालक्षणमाह । अर्थाश्रयत्वमिति अर्थाश्रयत्वमर्थविषयत्वमभिधेयैकनिष्ठत्वमित्यर्थः । द्रष्टुः सर्वज्ञस्य लिङ्गत्वं ज्ञापकत्वं नभस आकाशस्य तन्मात्रत्वं स्पर्शाद्यभावात्तदेकनिष्ठत्वं शब्दस्य लक्षणं कवयो विदुरित्यन्वयः । तदुक्तम् "शब्देनैव यतो ज्ञेयो हरिर्लिङ्गं तु तस्य तत् । स्पर्शाद्यभावात्तन्मात्रा नभसश्चेति कीर्त्यते ॥ स्पर्शादयश्च तन्मात्रा इतरे पूर्वसंस्थिते । तिष्ठत्येको गुणो भूते प्रत्येकं पञ्चसु स्थितः ॥ शब्दो वर्णात्मको नित्यो ध्वनिराकाशसम्भवः । आकाश एव सूक्ष्मस्तु ध्वनिरित्येव शब्द्यते । स एव व्यज्यमानस्तु भवेत्कर्णैकगोचरः ॥" इति ॥ ३३ ॥ ❀ ❀ आकाशलक्षणं वक्ति । भूतानामिति । भूतानां जीवानां छिद्रदातृत्वं गमनाद्यर्थमवकाशदातृत्वं बहिरन्तर्दिगादिरूपत्वमेकं प्राणापानादीनामिन्द्रियाणामात्मनां जीवानां धिष्ण्यत्वमावासस्थानत्वं च नभसो वृत्तिलक्षणं स्वभावलक्षणं कवयो विदुरिति शेषः ॥ ३४ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

ज्ञानेन्द्रियाणामपि तैजसत्वं सविकल्पकज्ञानत्वेन रजःप्रचुरत्वात् ॥ ३१ ॥ ❀ ❀ भगवद्वीर्यं कालरूपस्तत्प्रभावः श्रोत्रन्तु शब्दगमित्यनेन तटस्थलक्षणं लक्ष्यते । श्रोत्रग्राह्यत्वं शब्दत्वमिति । अन्यदन्यत्तु विवरणमात्रम्, एवमुत्तरत्रापि ॥ ३२ ॥ अर्थाश्रयत्वं शब्दविशेषस्य द्रष्टुर्लिङ्गत्वञ्च । स्वरूपलक्षणन्तु तन्मात्रत्वं नभस इति लक्षणञ्चेदमभेदविवक्षयैव । वस्तुतस्तु शब्दादयो द्विविधाः । आकाशादिद्रव्याणां सूक्ष्मावस्था गुणावस्थाश्च । तत्राद्यास्तन्मात्ररूपाः अर्थाश्रयादिरूपास्त्वन्ये इति ॥ ३४ —३७ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

इन्द्रियाणि तैजसान्येव तैजसाहङ्काराज्जातानि, ज्ञानेन्द्रियाणां वैकारिकत्वशङ्कानिवृत्त्यर्थमेवकारः । द्विविधानामपीन्द्रियाणां तैजसत्वे हेतुः। प्राणस्येति । हि यस्मात् प्राणस्य क्रियाशक्तिरतः प्राणस्य तैजसत्वात् तत्तत्क्रियाशक्तिमतामपीन्द्रियाणां तैजसत्वं तथा बुद्धेर्विज्ञानशक्तिता । अतो बुद्धे सविकल्पकः ज्ञानवृत्तित्वेन रजःप्रचुरत्वात् तैजसत्वेन तदीयज्ञानशक्तिमतामिन्द्रियाणामपि तैजसत्वम् ॥ ३१ ॥ ❀ ❀ भगवद्वीर्यं कालरूपस्तत्प्रभावस्तेन प्रेरितात् । स शब्दः केन गृह्यते इत्यपेक्षायामाह । श्रोत्रं तैजसाहङ्कारकार्यं श्रोत्रेन्द्रियं कर्तृ शब्दं गच्छति प्राप्नोतीति तत् ॥ ३२ ॥ ❀ ❀ शब्दस्य लक्षणं कवय आहुः किन्तत् । अर्थाश्रयत्वं अर्थवाचकत्वं द्रष्टुर्लिङ्गत्वं रामकृष्णादिलीलाद्रष्टृव्यासशुकादिज्ञापकत्वं यद्वा कुड्यान्तरितस्यापि वक्तुर्ज्ञापकत्वं तथा नभस्तन्मात्रत्वम् आकाशसूक्ष्मरूपत्वम् ॥ ३३ ॥ ❀ ❀ आकाशस्य लक्षणमाह । छिद्रदातृत्वम् अवकाशदातृत्वं बहिरन्तरं बहिरन्तरव्यवहारास्पदत्वं प्राणेन्द्रियमनसां धिष्ण्यत्वं नाड्यादिच्छिद्ररूपेणाश्रयत्वं नभसो वृत्तिभिर्धर्मैर्लक्षणम् ॥ ३४ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः ।

दशेन्द्रियोत्पत्तिमाह । तैजसानीति । तैजसानि तैजसाहङ्कारकार्याणि । प्राणस्येति "तमुत्क्रामन्तं सर्वे प्राणा उत्क्रामन्ति" इति श्रुतौ सर्वेन्द्रियाणां प्राणसंज्ञा यद्यपि । तथापि वायुविशेषस्य प्राणस्य कर्मेन्द्रियगणे बहुप्रयोगादत्र कर्मेन्द्रियगणः प्राणस्तस्य क्रियायाः शक्तिः बुद्धेर्ज्ञानेन्द्रियगणस्य विज्ञानशक्तिता विज्ञाने शक्तिर्यस्य स तथा तस्य भावस्तत्ता ॥ ३१ ॥ ❀ ❀ इदानीं पञ्चतन्मात्रोत्पत्तिपूर्वकमाकाशादिपञ्चमहाभूतोत्पत्तिं तल्लक्षणं चाह । तामसादित्यादिपञ्चदशभिः । शब्दमात्रं शब्दतन्मात्रमभूत्ततः शब्दतन्मात्रात् श्रोत्रं तु शब्दं नभोगुणं गच्छति प्राप्नोतीति शब्दगम् । एवमग्रेऽपि विषयोत्पत्त्यनन्तरं तत्सम्बन्धमात्रं कथ्यते ।

उत्पत्तिस्तु श्रोत्रादीनां तैजसाहङ्कारादेव शब्दाद्युत्पतिश्च तद्गुण्युत्पत्त्यैव ज्ञेया ॥ ३२ ॥ ❀ ❀ शब्दस्य लक्षणमाह। अर्थाश्रयत्वमर्थबोधकत्वं तथा कुड्याद्यन्तरितस्येदं मया दृष्टमिति द्रष्टुरुच्चैर्वदतो लिङ्गत्वं ज्ञापकत्वं नभसस्तन्मात्रत्वमवस्थाभेदेन पूर्वरूपत्वं च शब्दस्य लक्षणम्। शब्दतन्मात्रादीनि पञ्चतन्मात्राणि आकाशादिमहाभूतकारणानि शब्दादयस्तु महाभूतगुणाः इत्यवस्थाभेदः ॥ ३३ ॥ ❀ ❀ भूतानां वाय्वादीनां बहिरन्तरं यथा भवति तथा छिद्रदातृत्वमवकाशप्रदत्वं प्राणानां ब्रह्मादिमत्कुणपर्यन्तदेहगतवातविशेषाणामिन्द्रियाणामात्मनां देहादीनाञ्च धिष्ण्यत्वं स्थानत्वं नभसः वृत्तिश्छिद्रदातृत्वादिरूपैव लक्षणम् ॥ ३४ ॥

## श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

तैजसानीति। ज्ञानकरणानि क्रियाकरणानि चोभयविधान्यपि राजसान्येव, न तु ज्ञानकरणानि सात्त्विकानि, क्रियाकरणानि तामसानि वा। ज्ञानक्रियान्यतरकरणमिन्द्रियमिति करणमतीन्द्रियमिन्द्रिय'मिति वा। तत्त्वानि दशाऽपि भिन्नानीति नैकं लक्षणं निर्दिष्टम्। उभयेषां राजसत्वे हेतुमाह—प्राणस्य हीति। क्रियायां प्राणो मूलम्, ज्ञाने बुद्धिः। उभयं राजसमित्यर्थादुक्तं भवति। प्राणो नामाऽऽसन्यः महत्तत्त्वभेदः, भगवद्रूपो वा। राजसाहङ्कारे तु तस्याऽवतार इति न तत्त्वतः, नाऽप्युत्पत्तिर्निरूपिता। मतान्तरसिद्धानां वैदिकानां वा प्राणानामत्र ग्रहणम्, इन्द्रियाणामाध्यात्मिकस्वरूपो वा प्राणः। बुद्धौ राजसीति तदनुगृहीतानि सर्वाणि राजसानि। प्राणस्तु क्रियाप्रधान इति राजसत्वम्। प्राणोऽपि सर्वेन्द्रियानुग्राहकः। क्रियाजनिका शक्तिः। विज्ञानरूपा शक्तिर्वा यस्याः, तस्याबुद्धेर्भावो वक्ष्यत्यग्रे। इन्द्रियाणां लक्षणानि भिन्नानि ॥ ३१ ॥ ❀ ❀ तामसादिति। तामसाहङ्कारात् पूर्ववद्विकुर्वाणात्तामसत्वादेव भगवद्वीर्येण प्रेर्यते, नतु भगवद्वीर्यसत्तामात्रम्। प्रथमतः शब्दमात्रमभूत्, तस्मात्पश्चान्नभः। शब्दे प्रमाणमाह—श्रोत्र'मिति श्रोत्रस्य गम्यम्। श्रोत्रसमधिगम्यः शब्दः। शब्दधर्मा अपि शब्द एवेति लक्षणं नाऽतिप्रसक्तम्। श्रोत्रं गच्छतीति वा। शब्दस्य लक्षणान्याह—अर्थाश्रयत्वमिति। अर्थो हि शब्दमाश्रित्य तिष्ठति। अर्थस्य घटपटादे रूपत्रयम्—तत्र यदाधिदैविकं रूपम्, तच्छब्दनिष्ठं शब्दैकसमधिगम्यं शब्देन नित्यसम्बद्धम्। आधिभौतिकन्तु प्रकटरूपम्; तस्य न शब्दाश्रयत्वम्, किन्तु पृथिव्याद्याश्रितमेव। आध्यात्मिकन्तु ज्ञानेच्छाप्रयत्नाश्रितम्। त्रितयमभेदेन सर्वत्र लक्ष्यते। शब्दस्याऽर्थाश्रयत्वं लक्षणम्, नत्वाकाशस्य। लक्षणान्तरमाह—द्रष्टृलिङ्गत्वमेव चेति। द्रष्टा ह्यर्थानामाध्यात्मिकं त्वर्थं संबन्धित्वेन ज्ञापयति। यथा भित्तिव्यवहितो गजं दृष्ट्वा गजोऽयमिति वदति, तदान्तःस्थितवाक्यप्रयोक्ता गजदर्शनवानिति लक्ष्यते। 'स्वराद्वा देवदत्तोऽयमिति धर्मतो लक्षणम्। चकाराद् दृश्यज्ञापकत्वं च। भौतिकमपि घटादिकं बोधयतीत्यर्थः। लक्षणान्तरमाह—तन्मात्रत्वं च नभस इति। नभसस्तन्मात्रत्वं सूक्ष्मरूपत्वं शब्दस्य लक्षणम्। सूक्ष्मावस्था शब्दः, स्थूलावस्था नभ इति। केचिदन्यथा मन्यन्ते इति स्वोक्ते प्रमाणमाह—कवयो विदुरिति ॥ ३३ ॥ ❀ ❀ आकाशं लक्षयति—भूतानामिति। भूतानां प्राणिनाम्, छिद्रदातृत्वम्, बहिरन्तः स्वरूपत्वम्, प्राणेन्द्रियान्तःकरणाधारत्वं चेति नभसो लक्षणत्रयम्। छिद्रमवकाशः, बहिरन्तर्व्यवहार आकाशविषय एव। पृथिव्यादेरावरणरूपस्य न बहिरन्तर्व्यवहारविषयत्वम्, परिच्छेदकत्वं परम्। प्रदेशोऽपि न व्यवहारहेतुस्तुल्यत्वात्। विवरे च व्यवहारः, अत आकाशस्यैव। चकारात्पृथिव्यादिसर्वाधारत्वं च लक्षणम्। लक्षणान्तरमाह—प्राणेन्द्रियात्मधिष्ण्यत्वमिति। प्राणानामिन्द्रियाणामन्तःकरणस्य च धिष्ण्यमाधारभूतं स्थानम्। धिष्ण्यशब्देन वैदिकत्वं तस्य स्थानस्य द्योतितम्। नभसो वृत्तिलक्षणमिति। नभो हि त्रिधा वर्तते, स्वस्याधिभौतिकं रूपं स्वयं प्रयच्छतीत्याधिदैविकत्वम्, बहिरन्तर्व्यवहाराश्रयमित्याध्यात्मिकत्वम्, देहान्तःस्थितपदार्थाश्रयत्वेनाधिभौतिकत्वम् ॥ ३४ ॥

## श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

तैजसानीत्यत्र। भिन्नानीति। पदार्थविभाजकोपाधिरूपाणीत्यर्थः तत्त्वत इति। तत्त्वतो राजसो न। राजसेऽवताराद्राजस इत्यर्थः। अतिप्रसङ्गसम्भावनया पक्षान्तरमाहुः—मतान्तरेत्यादि। अत्रापि प्रमाणविरहमाशङ्क्य पक्षान्तरमाहुः—इन्द्रियाणामित्यादि तामसादित्यत्र। श्रोत्रमिति शब्दमात्रं श्रोत्रगम्यम्। तदेवाहुः—श्रोत्रेत्यादि। धर्मधर्मिणोस्तादात्म्यमङ्गीकृत्याहुः—शब्दधर्मा इत्यादि ॥ ३२ ॥ ❀ ❀ अर्थेत्यत्र। नित्यसम्बद्धमिति। जैमिनीये औत्पत्तिकसूत्रे; वैयासके चातःप्रभवसूत्रे तथा साधितत्वात्तथेत्यर्थः। ज्ञानेत्यादि पश्यन्त्याख्यायामवस्थायामर्थस्य ज्ञानादिष्वेव भानात् तेषां कर्तृतानिर्वाहकत्वात् तेषु तदभावे भौतिकनिष्पत्तिरेव न स्यादिति तथेत्यर्थः। त्रितयमिति। आधिदैविकादिरूपम्। द्रष्टृलिङ्गत्वमिति। द्रष्टृलिङ्गताज्ञापकत्वम्। तदुपपादयन्ति—द्रष्टेत्यादि। अर्थानां भौतिकानाम्। सम्बन्धित्वेन स्वज्ञानेच्छाद्याश्रि(त)त्वेन। तस्योदाहरणम्—यथेत्यादि। नामसृष्टेर्भिन्नत्वं हृदिकृत्य पक्षान्तरमाहुः—स्वराद्वेति। अस्मिन् पक्षे दृशिर्ज्ञानसामान्यार्थकः, तच्च ज्ञानं स्वनिष्ठमिति पूर्वस्माद्विशेषः। अत्र मूलस्थलक्षणचतुष्टये श्रोत्रगम्यत्वं सामान्यलक्षणम्, द्वितीयन्तु वर्णादीनाम्, तृतीयन्तु पर्यायेण द्वयोः, तुरीयन्तु ध्वनेः। एषु प्रथमं तृतीयञ्च व्यवहारोपयोगि ॥ ३३ ॥ ❀ ❀ भूतानामित्यत्र। परिच्छेदकत्वमिति भागद्वयविभाजकत्वम्। प्रदेशेऽतिव्याप्तिमाशङ्क्य परिहरन्ति—प्रदेश

१. श्रोत्रगमिति. ख। २. स्वरद्वारा क. ख।

इत्यादि। आन्तरो देशो बाह्यो देश इत्याद्यभिलापात् तादृशव्यवहारहेतुः प्रदेशोऽप्यन्तर्बहिर्व्यवहारविषयो नेत्यर्थः। तत्र हेतुः—तुल्यत्वादिति। भित्त्यादिवत् प्रदेशस्यापि भागद्वयविभाजकत्वस्य तुल्यत्वादित्यर्थः। अत्र मध्यमं लक्षणं व्यवहारोपयोगि ॥ ३४ ॥

## श्रीगिरिधरकृता बालप्रबोधिनी

इन्द्रियाणामुत्पत्तिमाह—तैजसानीति। क्रियाज्ञानविभागशः कर्मेन्द्रियज्ञानेन्द्रियविभागेन उभयविधान्यपि इन्द्रियाणि तैजसानि राजसाहङ्काराज्जातान्येव। एवकारो ज्ञानेन्द्रियाणां वैकारिकत्वशङ्कानिरासार्थः। तत्र हेतुमाह—प्राणस्येति। हि यस्मात् प्राणस्य क्रियाशक्तिर्बुद्धेश्च विज्ञानशक्तिता, अतः प्राणस्य तैजसत्वात् तत्क्रियाशक्तिमतां इन्द्रियाणामपि तैजसत्वं, तथा बुद्धेरपि तैजसत्वात् तदीयज्ञानशक्तिमतामपीन्द्रियाणां तैजसत्वमित्यर्थः ॥ ३१ ॥ ❀ ❀ तन्मात्रोत्पत्तिपूर्वकमाकाशादिमहाभूतोत्पत्तिं तल्लक्षणं चाह—तामसादिति पञ्चदशभिः। भगवद्वीर्यचोदितात् भगवतो वीर्येण कालेन प्रेरितात्—इत्युपलक्षणं कालमायांशयोगत इति पूर्वोक्तेः—अत एव विकुर्वाणात्तामसाहङ्कारात् शब्दरूपमात्रं सूक्ष्मं द्रव्यमभूत्। तस्मान्नभ आकाशमभूत्। 'श्रोत्रं तु शब्दगं' इत्यादिभिर्विषयोत्पत्त्यनन्तरं तत्सम्बन्धमात्रं कथ्यते, नतूत्पत्तिस्तस्याः प्रागेव कथितत्वात्। शब्दं गच्छतीति तथा शब्दग्राहकमित्यर्थः ॥ ३२ ॥ ❀ ❀ शब्दस्य लक्षणमाह—अर्थाश्रयत्वमर्थप्रकाशकत्वम्। द्रष्टुर्लिङ्गत्वं कुड्याद्यन्तरितस्य गजो यातीति वदतो गजद्रष्टुः पुरुषस्य ज्ञापकत्वं 'लिङ्गं यद्दृष्टृदृश्ययोः' इत्युक्तत्वात्। नभसस्तन्मात्रत्वं सूक्ष्मरूपत्वं च शब्दस्य लक्षणं कवयो विदुरित्यन्वयः ॥ ३३ ॥ ❀ ❀ नभसो लक्षणमाह—भूतानामिति। ब्रह्मादिस्तंभपर्यन्तानां भूतानां छिद्रदातृत्वमवकाशदातृत्वं बहिरन्तरव्यवहारास्पदत्वं च प्राणानामिन्द्रियाणामात्मनो मनसश्च धिष्ण्यत्वं नाड्यादिच्छिद्ररूपेण स्थानत्वं च नभसः वृत्तिः कार्यरूपमेव लक्षणम्। एवमुत्तरत्राप्येकेन श्लोकेन तन्मात्रमहाभूतयोरुत्पत्तिः, द्वितीयेन तन्मात्रलक्षणम्, तृतीयेन महाभूतलक्षणमित्यनुसन्धेयम् ॥ ३४ ॥

## हिन्दी अनुवाद

इन्द्रियाँ भी तैजस अहङ्कारका ही कार्य हैं। कर्म और ज्ञानके विभागसे उनके कर्मेन्द्रिय और ज्ञानेन्द्रिय दो भेद हैं। इनमें कर्म प्राणकी शक्ति है और ज्ञान बुद्धिकी ॥ ३१ ॥ ❀ ❀ भगवान्की चेतनशक्तिकी प्रेरणासे तामस अहङ्कारके विकृत होनेपर उससे शब्दतन्मात्रका प्रादुर्भाव हुआ। शब्दतन्मात्रसे आकाश तथा शब्दका ज्ञान करानेवाली श्रोत्रेन्द्रिय उत्पन्न हुई ॥ ३२ ॥ ❀ ❀ अर्थका प्रकाशक होना, ओटमें खड़े हुए वक्ताका भी ज्ञान करा देना और आकाशका सूक्ष्म रूप होना–विद्वानोंके मतमें यही शब्दके लक्षण हैं ॥ ३३ ॥ ❀ ❀ भूतोंको अवकाश देना, सबके बाहर-भीतर वर्तमान रहना तथा प्राण, इन्द्रिय और मनका आश्रय होना—ये आकाशके वृत्ति ( कार्य ) रूप लक्षण हैं ॥ ३४ ॥

**नभसः शब्दतन्मात्रात्कालगत्या विकुर्वतः। स्पर्शोऽभवत्ततो वायुस्त्वक् स्पर्शस्य च संग्रहः ॥ ३५ ॥**
**मृदुत्वं कठिनत्वं च शैत्यमुष्णत्वमेव च। एतत्स्पर्शस्य स्पर्शत्वं तन्मात्रत्वं नभस्वतः ॥ ३६ ॥**
**चालनं व्यूहनं प्राप्तिर्नेतृत्वं द्रव्यशब्दयोः। सर्वेन्द्रियाणामात्मत्वं वायोः कर्माभिलक्षणम् ॥ ३७ ॥**
**वायोश्च स्पर्शतन्मात्राद्रूपं दैवेरितादभूत्। समुत्थितं ततस्तेजश्चक्षू रूपोपलम्भनम् ॥ ३८ ॥**

## श्रीधरस्वामिविरचिता भावार्थदीपिका

का सा त्वक् स्पर्शस्य संग्रहः सम्यग्ग्रहणं यया पुंस्त्वं नियतलिंगत्वात् यद्वा स्पर्शस्य संग्रहस्ततो भवतीति शेषः। शब्दतन्मात्रादित्यादितन्मात्राणामुत्तरोत्तरान्वयार्थमुक्तम् ॥ ३५ ॥ ❀ ❀ स्पर्शलक्षणमाह। मृदुत्वमिति। स्पर्शत्वं स्वरूपलक्षणमित्यर्थः। नभस्वतो वायोस्तन्मात्रत्वं च ॥ ३६ ॥ ❀ ❀ चालनं वृक्षशाखादेः व्यूहनं मेलनं तृणादेः प्राप्तिः संयोगो द्रव्यस्य गंधवतो घ्राणं प्रति तथा शैत्यादिमतः स्पर्शनं प्रति शब्दस्य श्रोत्रं प्रति नेतृत्वम्। सर्वेन्द्रियाणामात्मत्वमुपोद्बलकत्वम्। कर्मणा कार्येणाभिलक्षणम्। भावे ल्युट्। कर्मैवाभिलक्षणमिति विग्रहे तु करणे ॥ ३७ ॥ ३८ ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः।

संग्रहशब्दे नियतं पुंस्त्वमेवेति वक्तुं न शक्यते वृत्तावन्यलिंगस्यापि संभवात् 'बुद्धिर्निश्चयसंग्रहा' इत्यादिप्रयोगदर्शनेनेति चेत्तत्राह—यद्वेति। ततस्तया मूले तत इत्यस्य तस्मात्स्पर्शात् ॥ ३५ ॥ ❀ ❀ इत्यर्थ इति। मृदुत्वाद्येव स्पर्शस्वरूपमिति

भावः ॥ ३६ ॥ ❀ ❀ संयोगो वस्तुमात्रेण उपोद्बलकत्वं संजीवकत्वं तदाविनाभूतत्वं वा स्वकार्यासमर्थत्वमिति यावत् । अभि सर्वतोभावेन लक्षणं स्वरूपकथनम् ॥ ३७ ॥ ❀ ❀ रूपस्योपलंभनं ज्ञानं येन तत्तथा ॥ ३८ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या ।

पूर्वार्थे संग्रहशब्दस्य त्वग्विशेषणताभ्युपगता तत्र स्त्रीलिङ्गत्वं विवक्षितं पुंस्त्वे नियतलिङ्गत्वं सम्भावितमतो यद्वेति तथाच त्वग्ग्राह्यत्वं स्पर्शलक्षणमप्युक्तम् ॥३५॥ ❀ ❀ तन्मात्रत्वं स्वरूपलक्षणं किन्तु सूक्ष्मस्येति ज्ञेयम् ॥ ३६ ॥ ❀ ❀ चालनादिकर्मणाभिलक्षणं वायोर्ज्ञापनम् । विग्रहे समासावबोधके वाक्ये अभिलक्ष्यतेऽनेनेति अभिलक्षणं वृक्षचालनादिक्रियैव वायोरसाधारणो धर्म इत्यर्थः ॥ ३७ ॥ ❀ ❀ दैवेरितादन्तर्यामिप्रेरितात् पूर्वोत्पन्नं चक्षूरूपग्राहकमासीदिति तथाच चक्षुर्मात्रग्राह्यत्वं रूपलक्षणं रूपग्राहकत्वं च चक्षुर्लक्षणमिति द्वयोरपि लक्षणमूह्यम् । एवं पूर्वत्र परत्र च ज्ञेयम् ॥ ३८ ॥

### श्रीमद्वीरराघवव्याख्या

नभस इति शब्दतन्मात्रात् शब्दस्तन्मात्रमसाधारणो यस्य तस्मात्कालगत्या कालशरीरकभगवत्सङ्कल्पेन विकुर्वतो विक्रियमाणान्नभस आकाशात् स्पर्शः स्पर्शतन्मात्रमभवत् । ततः स्पर्शाद्वायुरभवत् कोऽसौ स्पर्शस्य ग्राहक इत्यत्राह । त्वक् त्वगिन्द्रियं स्पर्शस्य संग्रहः सम्यग् ग्राहकः सम्यक् ग्रहो यया सेति वा ( सम्यग् ग्रहो यया सेति वेति व्याख्यानं तु स्त्रीलिङ्गपाठाभिप्रायेण ) ॥ ३५ ॥ ❀ ❀ मृदुत्वादयः नभस्वतो वायोस्तन्मात्रत्वमसाधारणगुणत्वं च स्पर्शस्य स्पर्शत्वं लक्षणमित्यर्थः ॥ ३६ ॥ ❀ ❀ चालनं वृक्षशाखादेः व्यूहनं विभागकरणं प्राप्तिश्च चलितयोः संयोजकत्वं द्रव्यशब्दयोर्नेतृत्वं द्रव्यनेतृत्वं तत्र द्रव्यनेतृत्वं द्रव्यस्य गन्धवतो घ्राणं प्रति शब्दस्य नेतृत्वं दूरस्थ शब्दस्य श्रोत्रग्राह्यत्वकरणं सर्वेन्द्रियाणामात्मत्वं धारकत्वं वायोः कर्मैवाभिलक्षणम् ॥ ३७ ॥ ❀ ❀ वायोरिति । स्पर्शस्तन्मात्रोऽसाधारणगुणो यस्य तस्माद्दैवेरितादीश्वरप्रेरिताद्वायो रूपं रूपतन्मात्रमभूत्ततो रूपात्तेजः समुत्थितमुत्पन्नमभूत् । किन्तद्रूपस्य ग्राहकमित्यत्राह । चक्षुश्चक्षुरिन्द्रियं रूपोपलम्भनं रूपग्राहकम् ॥ ३८ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

नभसः स्पर्शोत्पत्तिं ब्रूते । नभस इति । शब्दाख्या तन्मात्रा यस्य तत्तथा तस्मान्नभसः कालगत्या भगवत्प्रेरणया विकुर्वतः स्पर्शोऽभवत् स्पर्शतन्मात्राया वायुरभूत् । "प्रधानवायुः सूत्रात्मा महता सह जायते । तैजसश्च खजः स्पर्श इत्याद्यास्तत्सुताः स्मृताः । तदाविष्टा अन्यजीवास्तदाधाराश्च तद्वलाः ॥" इति वचनात्तैजसो वायुराकाशाज्जातः स्पर्शवायुश्च मुख्यवायोः सुत इति ज्ञातव्यं, तैजसादिवायुभिराविष्टत्वात्तदुद्भूतत्वात्तद्वलत्वाच्च तद्विशिष्टा इत्युच्यन्ते "स्पर्शादयोऽपि वाय्वादेः सूक्ष्मावस्थाः प्रकीर्तिताः" इति वचनादत्र कार्यकारणभाव उपचयविवक्षयेति ज्ञायते । तदुक्तम् "सूक्ष्मेन्द्रियाणि सन्त्येव स्युः स्थूलान्यप्यहंकृतेः । भूतेभ्यश्चोपचीयन्ते पुनर्ब्रह्म शरीरतः ॥" इति स्पर्शतन्मात्रायाः संग्रहो ज्ञातृ त्वगिन्द्रियं चोपचितमभूदिति शेषः ॥ ३५ ॥ ❀ ❀ स्पर्शतन्मात्रालक्षणमाह । मृदुत्वमित्यादिना मृदुत्वमित्यादीनि नभस्वतो वायोः स्वभावलक्षणानि ॥ ३६ ॥ ❀ ❀ स्वरूपलक्षणमाह । चालनमित्यादि "स्वरूपमपि कर्मेति विषयत्वादुदीर्यते" इति वचनादेतानि चालनादीनि कर्मनिमित्तलक्षणानि । चालनं चलनकर्तृत्वं व्यूहनं पृथक् स्थितानामेकीकरणं, प्राप्तिः सर्ववस्तुव्याप्तिः "प्राप्नोति वायुः सर्वं तु स्वत एव हरेस्तथा । अतः प्राप्तिरिति प्राहुर्वायुं भूतपतिं प्रभुम् ॥ प्रधानवायुरन्येषु नित्याविष्टो यतः स्वतः । तद्गुणास्तेषु चोच्यन्ते नीचता नास्य तत्कृता ॥" इति वचनात् द्रव्यशब्दयोः पर्णादिद्रव्यस्य शब्दस्य वर्णात्मकस्य च नेतृत्वं देशान्तरप्रापकत्वं सर्वेन्द्रियाणामात्मत्वं स्वामित्वं तदविनाभूतप्रकृतित्वं वा कर्माभिलक्षणं स्वरूपलक्षणम् ॥ ३७ ॥ ❀ ❀ स्पर्श एव तन्मात्रो गुणो यस्यः सः स्पर्शतन्मात्रः, तस्माद्वायो रूपं रूपतन्मात्राभूत् , ततो रूपतन्मात्रायास्तेजः समुत्थितं रूपस्योपलम्भनं ज्ञानं यस्मात्तादृशं चक्षुरिन्द्रियं चोत्पन्नमित्यर्थः ॥ ३८ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

तेजसस्तेजस्त्वमसाधारणत्वमिति तद्बोधकमित्यर्थः । रूपेणैव हि तेजसोऽसाधारणत्वं गम्यते असाधारणरूपवद्द्रव्यं तेज इति ॥ ३८—४२ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

शब्द एव तन्मात्रं यस्य तथाभूतान्नभसः सकाशात् सङ्ग्रहः सम्यक् गृह्यतेऽनयेति करणे अप् । त्वक् त्वगिन्द्रियं स्पर्शग्रहणे करणमित्यर्थः ॥ ३५ ॥ ❀ ❀ स्पर्शस्य लक्षणमाह । स्पर्शत्वं स्वरूपलक्षणमित्यर्थः । नभस्वतो वायोस्तन्मात्रत्वम् ॥ ३६ ॥ ❀ ❀ वायोर्लक्षणमाह । चालनं वृक्षशाखादेः । व्यूहनं मेलनं तृणादेः । प्राप्तिर्वस्तुमात्रेण संयोगः द्रव्यशब्दयोः द्रव्यस्य गन्धवतो घ्राणं प्रति शैत्यादिमतस्त्वचं प्रति । शब्दस्य श्रोत्रं प्रति नेतृत्वम् । अत्र प्राप्तिः संयोग एव चालन व्यूहन-नेतृत्वानि संयोगविशेष इति ज्ञेयम् । सर्व्वेन्द्रियाणामात्मत्वं सञ्जीवकत्वं वायोः कर्मैव अभि सर्व्वतो भावेन लक्षणं लक्ष्यतेऽनेनेति लक्षणं करणे ल्युट् ॥ ३७—३८ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

शब्दतन्मात्रात् शब्दतन्मात्रकार्य्यात् स्पर्शः स्पर्शतन्मात्रं ततो वायुः स्पर्शस्य वायुगुणस्य सङ्ग्रहः सम्यक् ग्रहः ग्रहणं यया सा त्वक् सङ्ग्रहः इति पुंस्त्वं नियतलिङ्गत्वात् ॥ ३५ ॥ ❀ ❀ स्पर्शस्य कारणावस्थया नभस्वतो वायोस्तन्मात्रत्वं पूर्वरूपत्वं गुणावस्थया मृदुत्वादिकं स्पर्शत्वं तदसाधारणं लक्षणम् ॥ ३६ ॥ ❀ ❀ चालनं वियोजनं व्यूहनमन्योऽन्यतो द्रव्यादीनां योजनं प्राप्तिः स्वस्यान्यं प्रति द्रव्यगन्धयोः अन्यं प्रति नेतृत्वं कर्मलक्षणं कर्मद्वारा लक्षणम् ॥ ३७ ॥ ❀ ❀ स्पर्शतन्मात्रात् तत्कार्यात् रूपं रूपतन्मात्रं रूपोपलम्भनं तेजोऽसाधारणरूपाख्यगुणग्राहकम् ॥ ३८ ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

स्पर्शवाय्वोरुत्पत्त्यादिकमाह—नभस इति । शब्दतन्मात्रादिकं न विशेषणम्, किन्तु स्थूलात् सूक्ष्मादपि नभसः स्थूलं सूक्ष्मं कार्यं च भवतीति ज्ञापनार्थम्। कालगत्या विकुर्वत इति कालप्रेरणया जातगुणक्षोभादित्युभयोर्विशेषणम्। प्रथमं स्पर्शतन्मात्रा अभवत्। ततो वायुः। त्वगिन्द्रियम्। स्पर्शस्य सम्यक् ग्रहो यस्मात्। त्वगेव सङ्ग्रहः। चकाराद्वा[1]योरपि, न तु श्रोत्रवच्छब्दमात्रग्राहकम् ॥ ३५ ॥ ❀ ❀ स्पर्शभेदा एव प्रत्यक्षसिद्धाः स्पर्शलक्षणानीति तान् गणयति—मृदुत्वमिति। स्पर्शश्चतुर्विधः—मृदुत्वं कार्पासादौ, कठिनत्वं पाषाणादौ, शैत्यं शीतलता, उष्णत्वं चेति। एतच्चतुर्विधकारणरूपमेव कार्ये एकैकमभिव्यक्तम्। उष्णत्वं तेजसि; शीतत्वं जले; पक्वपृथिव्यां कठिनत्वम्, अपक्वे मृदुत्वमिति । एतत्स्पर्शस्य स्पर्शत्वमिति। स्पर्शो नाम स्पृश्यत इति व्युत्पत्त्या, स्पर्शनेन्द्रियग्राह्यत्वे वा वायावपि स्यात्। व्याकरणादौ कादयोऽपि स्पर्शाः; संयोगोऽपि स्पर्श इति लोकः; एतदेकमप्यस्माकं विवक्षितं न भवति, किन्तु यदेवाऽस्माभिरुक्तं मृदुत्वादिकं तदेव स्पर्शस्य स्पर्शत्वम्। लक्षणान्तरमाह—तन्मात्रत्वं नभस्वत इति। नभस्वतो वायोस्तन्मात्रत्वं सूक्ष्मरूपत्वम् ॥ ३६ ॥ ❀ ❀ वायोर्लक्षणमाह—चालनमिति। वायोः कर्मलक्षणम्। तत् कर्म पञ्चविधमिति पञ्चलक्षणानि। चालनं शाखादेः, व्यूहनं पतिततृणादेर्वात्ययैव मेलनम्, प्राप्तिर्गन्धस्य घ्राणप्रापणम्, द्रव्यशब्दयोर्नेतृत्वं देशान्तरस्थितवस्त्रादेर्देशान्तरे नयनम्। शब्दश्च भेरीदण्डसंयोगे जातः कर्णशष्कुलीपर्यन्तं स्वभावतो गच्छति, तत्प्रतिकूलवायौ न गच्छति, निकटेऽपि न श्रूयते। अनुकूले तु दूरादपि श्रूयत इति शब्दस्याऽपि देशान्तरप्रापणम्। सर्वेषामिन्द्रियाणामात्मा चाऽयम्, तदभावे किमपीन्द्रियं न कार्यक्षमं भवतीति। एतत्पञ्चविधं वायोः कर्मतोऽभितो लक्षणम् ॥ ३७ ॥ ❀ ❀ तेजस उत्पत्तिमाह—वायोरिति। पूर्ववत् स्पर्शतन्मात्रादिति रूपतन्मात्रं दैवेन कालेन। ईरितादित्युभयोर्विशेषणम्। प्रथमतो रूपं समुत्थितम्, ततस्तेजः। चक्षुस्तु रूपोपलम्भनम्, रूपमुपलभ्यतेऽनेनेति रूपे प्रमाणमुक्तम् ॥३८॥

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

नभस इत्यत्र। स्पर्शसद्भावे प्रमाणमाहुः—त्वगित्यादि। वायोरिति। वायुसम्बन्धिनः स्पर्शस्य। अनेन वायुः स्पार्शनप्रत्यक्षः शास्त्रकारस्याभिमत इति ज्ञापितम् ॥ ३५ ॥ ❀ ❀ मृदुत्वमित्यत्र। तदेवेति मृदुत्वादिधर्मकत्वरूपं सामान्यलक्षणमेवेत्यर्थः। एवं च तत्त्वात्मा चतुर्विधः, स्पर्शकार्यरूपो गुणात्मा तु गुरुत्वसंयोगादिभेदभिन्नोऽनेकविध एवेति फलति। द्वितीयस्कन्धे 'वस्तुनो लघुकाठिन्यम्' इत्यत्र तथा प्रतिपादनात्। तेन चित्रस्पर्शस्याऽप्यतिरिक्तत्वे बाधकाभाव इति बोध्यम् ॥ ३६ ॥ ❀ ❀ चालनमित्यत्र। कर्मलक्षणमिति। कर्मैव लक्षणमित्यर्थः। स्वभावतो गच्छतीति। इदं च यथा तथा प्रस्थानरत्नाकरे मया निपुणतरमुपपादितमिति तत एवाऽवधारणीयम्। एवं च अरूपित्वे सति चालनादिपञ्चकर्मकत्वं सामान्यलक्षणम्, चालनादन्यतमकर्मकत्वं च विशेषलक्षणं ज्ञेयम्। द्वयमपीदं व्यवहारोपयोगि चेति ॥ ३७ ॥

### श्रीगिरिधरकृता बालप्रबोधिनी

शब्दस्तन्मात्रमसाधारणो गुणो यस्य तस्मात् कालगत्याविकुर्वतो विक्रियमाणात् नभसः सकाशात् स्पर्शः तन्मात्रमभवत्। ततः स्पर्शाद्वायुरभवत्। कोऽसौ स्पर्शस्य ग्राहक इत्यत आह—त्वगिति। स्पर्शस्य संग्रहः सम्यग्ग्रहणं यया भवति सा त्वगित्यन्वयः ॥ ३५ ॥ ❀ ❀ मृदुत्वादयः नभस्वतो वायोस्तन्मात्रत्वं असाधारणगुणत्वं, च एतत्स्पर्शस्य स्पर्शत्वं लक्षणमित्यर्थः ॥ ३६ ॥ ❀ ❀ चालनं वृक्षादीनां प्रकम्पनम्। व्यूहनं तृणादीनां सम्मेलनम्। प्राप्तिः सर्वत्राप्रतिहतगतिः। द्रव्यशब्दयोर्नेतृत्वं, तत्र द्रव्यस्य गन्धवतो घ्राणं प्रति तथा शैत्यादिमतः स्पर्शनं प्रति शब्दस्य दूरस्थस्य श्रोत्रं प्रतीत्यादि यथायोग्यमूह्यम्। सर्वेन्द्रियाणामात्मत्वमुपोद्बलकत्वं भुक्तान्नादिप्रापकत्वेन कार्यक्षमतासम्पादकत्वमिति यावत्। वायोरेतत्कर्मैवाभिलक्षणम् ॥ ३७ ॥ ❀ ❀ स्पर्शतन्मात्रं यस्य तस्माद्दैवेन कालेनेरितात् प्रेरितात् वायोः सकाशात् रूपमभूत्। ततो रूपात् तेजः समुत्थितमुत्पन्नमभूत्। तत्र चक्षुरिन्द्रियं रूपस्योपलम्भनं ग्राहकमित्यर्थः ॥ ३८ ॥

---

१. द्वयोरपि. क. घ. २. तत्. क. घ. ङ.।

### हिन्दी अनुवाद

फिर शब्दतन्मात्रके कार्य आकाशमें कालगतिसे विकार होनेपर स्पर्शतन्मात्र हुआ और उससे वायु तथा स्पर्शका ग्रहण करानेवाली त्वगिन्द्रिय ( त्वचा ) उत्पन्न हुई ॥ ३५ ॥ ❀ ❀ कोमलता, कठोरता, शीतलता और उष्णता तथा वायुका सूक्ष्म रूप होना—ये स्पर्शके लक्षण हैं ॥ ३६ ॥ ❀ ❀ वृक्षकी शाखा आदिको हिलाना, तृणादिको इकट्ठा कर देना, सर्वत्र पहुँचाना, गन्धादियुक्त द्रव्यको घ्राणादि इन्द्रियोंके पास तथा शब्दको श्रोत्रेन्द्रियके समीप ले जाना तथा समस्त इन्द्रियोंको कार्यशक्ति देना—ये वायुकी वृत्तियोंके लक्षण हैं ॥ ३७ ॥ ❀ ❀ तदनन्तर दैवकी प्रेरणासे स्पर्शतन्मात्रविशिष्ट वायुके विकृत होनेपर उससे रूपतन्मात्र हुआ तथा उससे तेज और रूपको उपलब्ध करानेवाली नेत्रेन्द्रियका प्रादुर्भाव हुआ ॥ ३८ ॥

द्रव्याकृतित्वं गुणता व्यक्तिसंस्थात्वमेव च । तेजस्त्वं तेजसः साध्वि रूपमात्रस्य वृत्तयः ॥ ३९ ॥
द्योतनं पचनं पानमदनं हिममर्दनम् । तेजसो वृत्तयस्त्वेताः शोषणं क्षुत्तृडेव च ॥ ४० ॥
रूपमात्राद्विकुर्वाणात्तेजसो दैवचोदितात् । रसमात्रमभूत्तस्मादम्भो जिह्वा रसग्रहः ॥ ४१ ॥
कषायो मधुरस्तिक्तः कट्वम्ल इति नैकधा[1] । भौतिकानां विकारेण रस एको विभिद्यते ॥ ४२ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

द्रव्याकृतित्वं द्रव्यस्याकारसमर्पकत्वम् । गुणता द्रव्योपसर्जनतया प्रतीतिः, शब्दस्य तु स्वातंत्र्येणैव प्रतीतिः अप्रत्यक्ष-द्रव्यस्य स्पर्शादेरपि स्वातंत्र्येणैव प्रतीतिः । रूपस्य तु नैवमिति तस्यायं विशेष उक्तः, व्यक्तिसंस्थात्वं द्रव्यस्य या संस्था सन्निवेशः सैव संस्था यस्य तत्परिणामतया प्रतीतिरित्यर्थः । तेजसस्तेजस्त्वमसाधारणत्वम् ॥ ३९ ॥ ❀ ❀ द्योतनं प्रकाशनम् । पचनं तंडुलादेः क्षुत्तृडशनाया पिपासा च तद्द्वारेण पानमदनं च ॥ ४० ॥ ❀ ❀ जिह्वा रसनेंद्रियम् । रसो गृह्यतेऽनयेति रसग्रहः । यद्वा रसग्रहस्ततो भवतीति शेषः ॥ ४१ ॥ ❀ ❀ कषायादिषु लवणोऽपि द्रष्टव्यः । भौतिकानां संसर्गद्रव्याणाम् । य एको मधुर एव सन्नेवमनेकधा भिद्यते स रस इत्यर्थः ॥ ४२ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः ।

द्रव्ये उपसर्जनेन प्रतीतिः उपसर्जनप्रतीतिः अमुख्यत्वेन प्रतीतिः अप्रत्यक्षद्रव्यं वाय्वादिस्तस्य स्पर्शादेरादिना शब्दग्रहः । तस्य रूपस्य । इत्यर्थ इति । द्रव्यस्य परिमाणेनैव तत्प्रमाणप्रतीतिरिति भावः । असाधारणत्वं लक्षणम् । तथा च—रूपवद्द्रव्यं तेज इति रूपेणैव भास्वरशुक्लेन तेजसोऽसाधारणत्वं गम्यते इति संदर्भः । रूपं मात्रा तन्मात्रा यस्येति रूपमात्रं तस्य वृत्तयः स्वभावलक्षणानि ॥ ३९ ॥ ❀ ❀ हिममर्दनं शीतनिवारकत्वम् । शोषणं शुष्ककरणम् ॥ ४० ॥ ४१ ॥ ❀ ❀ रसानां षड्विधत्वं लवणं विना न पूर्यतेऽतस्सोप्यत्र ग्राह्य इत्याह—कट्वम्लादिष्विति "तुवरस्तु कषायोऽस्त्री मधुरो लवणः कटुः । तिक्तोऽम्लश्च रसाः पुंसि तद्वत्सु षडमी त्रिषु" इत्यमरः । इत्यर्थ इति । जलस्य केवलं मधुररसवत्त्वेपि संसर्गिद्रव्यस्वभावादन्येपि तत्र रसाः संभवंतीति भावः ॥ ४२ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या ।

द्रव्योपसर्ज्जनतया द्रव्ये गुणतया प्रथमं संयोगसम्बन्धेन चक्षुषा द्रव्यज्ञानं ततः संयुक्तसम्बन्धेन रूपज्ञानमित्यर्थः । लक्षणप्रयोजनभूतां व्यावृत्तिं व्याचष्टे । शब्दस्य त्विति । आकाशस्य श्रोत्रग्राह्यत्वाभावात् केवलं समवायसम्बन्धेन शब्दस्यैव प्रतीतिरित्यर्थः । अप्रत्यक्षद्रव्यस्येति । न प्रत्यक्षं द्रव्यं वाय्वादि यस्य तस्य स्पर्शादेरपि स्वातन्त्र्येणैव वाय्वादिद्रव्यप्रत्यक्षमनपेक्ष्यैव प्रतीतिः त्वगादिना ज्ञानमित्यर्थः, आदिना रसगन्धपरिग्रहः । रसनाघ्राणेन्द्रियाभ्यां जलपृथिव्योर्ग्रहणासम्भवात् स्वतन्त्र्येणैव रस-गन्धयोस्तत्तदिन्द्रियाभ्यां प्रतीतिर्न तु जलपृथिवीप्रत्यक्षमपेक्ष्येत्यर्थः । रूपस्य तु एवं शब्दादिवत्स्वातन्त्र्येण न प्रतीतिः, किन्तु रूपवद्द्रव्यप्रत्यक्षानन्तरं द्रव्यविशेषणतया प्रतीतिरित्येवं तस्य रूपस्यायं द्रव्योपसर्ज्जनतारूपो विशेषोऽसाधारणो धर्म उक्तः । कपिलेन असाधारणत्वम् असाधारणधर्मत्वम् ॥ ३९ ॥ ❀ ❀ हिममर्द्दनं शैत्यनाशनं वृत्तयोऽसाधरणधर्माः ॥ ४० ॥ ❀ ❀ तस्माद्रसमात्रात् रसो गृह्यतेऽनया सा रसग्रहा जिह्वेति वक्तव्ये पूर्ववत्पुंस्त्वं नियतलिङ्गत्वात्तथापि तत्र मानाभावाद्वेति । तथा च या पूर्वोत्पन्ना जिह्वा ततो रसग्रहो भवतीत्यन्वयः ॥ ४१ ॥ ❀ ❀ अत्र यत्तदोरध्याहारेण रसलक्षणादित्यर्थ इत्युक्तम् ॥ ४२ ॥

---

१. प्रा० पा०—नैकशः ।

### श्रीमद्वीरराघवव्याख्या

द्रव्याकृतित्वं द्रव्यस्य भूतासारव्यावर्तकत्वं गुणता नित्यं द्रव्याश्रयत्वं व्यक्तिसंस्थानं व्यक्तेर्व्यक्त्यन्तरव्यावर्तकत्वं तेजसः तेजस्त्वमसाधारणगुणत्वं च हे साध्वि! रूपमात्रस्य रूपतन्मात्रस्य वृत्तयः लक्षणानीत्यर्थः॥ ३९॥ ❀ ❀ द्योतनं प्रकाशनं पचनं तण्डुलादेः क्षुत्तृडशनायापिपासे च तद्द्वारेण पानमदनं च हिममर्द्दनं हिमाभिभवः शोषणं च तेजसो वृत्तयः लक्षणानि कार्याणीति यावत्॥ ४०॥ ❀ ❀ रूपमात्रादिति। दैवेन चोदितात्प्रेरिताद्विकुर्वाणाद्रूपमात्राद्रूपं तन्मात्रं यस्य तस्मात्तेजसः रसमात्रं रसतन्मात्रमभूत्, तस्माद्रसतन्मात्रादम्भः अभूत्। का रसतन्मात्रस्य ग्राहिकेत्यत्राह। जिह्वा रसनेन्द्रियं रसस्य ग्रहः ग्राहिका॥ ४१॥ ❀ ❀ कषाय इति। कषायादिषु लवणोऽपि द्रष्टव्यः, भौतिकानां सांसर्गिकद्रव्याणां विकारेण एक एव रसः कषायादिभेदेनानेकधा विभिद्यत इत्यर्थः॥ ४२॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

रूपतन्मात्राया लक्षणमाह। द्रव्याकृतित्वमिति। द्रव्याकृतित्वं यावद्द्रव्यव्याप्तित्वं गुणता प्रकाशित्वं व्यक्तिसंस्थात्वं व्यक्तित्वेन स्थितिः तेजस्त्वमुग्रत्वं "आलोको गुण इत्येव प्रकाशश्चापि कथ्यत इति। तेजस्त्वमथ चोग्रत्वं क्रौर्यमित्यपि चोच्यत" इति चोक्तार्थेऽभिधानं रूपमात्रस्य रूपतन्मात्राया वृत्तयः स्वभावलक्षणानि॥ ३९॥ ❀ ❀ तेजसो लक्षणमाह। द्योतनमिति। द्योतनं प्रकाशनं "द्युत प्रकाशन" इति धातुः पचनं पाककरणं पानं रसादनमदनं भक्षणं हिममर्दनं शीतनिवारकत्वं शोषणं शुष्कीकरणं क्षुत्तृडुद्भवः प्राणिनां क्षुत्तृड्जनकत्वं वृत्तयः स्वभावलक्षणानि॥ ४०॥ ❀ ❀ क्रमप्राप्तां तेजसो वारिसृष्टिं वक्ति। रूपतन्मात्रादिति। रूपमेव तन्मात्रा यस्य तद्रूपतन्मात्रं तस्मात्तेजस रसमात्रं रसतन्मात्राभूत् यया रसग्रहो भवति सा जिह्वा जिह्वेन्द्रियं चाभूत्॥ ४१॥ ❀ ❀ रसगुणलक्षणं वक्ति। कषाय इत्यादिना। कटुयुक्तोऽम्लः कट्वम्लः, अत्र लवणोऽपि ग्राह्यः, भौतिकानां भूतकार्याणां पदार्थानां विकारेण एको रसः षडात्मना भिद्यते॥ ४२॥

अस्मिन्पर्याये क्रमसन्दर्भो न

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

रूपस्य लक्षणमाह। द्रव्यस्याकृतित्वमाकारसमर्पकत्वं गुणता द्रव्योपसर्जनतया प्रतीतिः, शब्दस्य तु स्वातन्त्र्यणैव प्रतीतिः। अप्रत्यक्षद्रव्यस्य स्पर्शादेव स्वातन्त्र्येणैव प्रतीतिः। रूपस्य तु नैवं व्यक्तिसंस्थात्वं व्यक्तेर्द्रव्यस्य या संस्था सन्निवेशः सैव संस्था यस्य तस्य भावस्तत्त्वं द्रव्यपरिमाणेनैव यत्परिमाणप्रतीतिरित्यर्थः। तेजसस्तेजस्त्वं तन्मात्रत्वम्। वृत्तयो धर्म्माः॥ ३९॥ तेजसो लक्षणमाह। द्योतनं प्रकाशनम्। पचनं तण्डुलादेः क्षुत् क्षुधा तृट् तृष्णा तद्द्वारेण अदनं पचनं च॥ ४०—४१॥ ❀ ❀ रसस्य लक्षणमाह। कषाय इति। कषायादिषु लवणोऽपि द्रष्टव्यः। भौतिकानां संसर्गिद्रव्याणां य एको मधुर एव सन् एवमनेकधा भिद्यते स रस इत्यर्थः॥ ४२॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

द्रव्याकृतित्वं द्रव्यस्य ह्रस्वदीर्घाद्याकारसमर्पकत्वं गुणता द्रव्याश्रयत्वेन प्रतीयमानत्वम्। व्यक्तिसंस्थात्वं द्रव्यव्यक्तिसमसंस्थानत्वं तेजसस्तेजस्त्वं गुणत्वं हे साध्वि! रूपमात्रस्य रूपतन्मात्रस्य रूपस्येत्यर्थः। वृत्तयो लक्षणानीत्यर्थः॥ ३९॥ ❀ ❀ क्षुत् अशना तद्द्वारेण अदनं तृट् पिपासाद्वारेण पानम्॥ ४०॥ ❀ ❀ रूपं मात्रा गुणो यस्य यद्वा रूपं मात्रं तन्मात्रं यस्य तस्मात् यद्रसग्रहः स्यादिति शेषः, जिह्वा रसेन्द्रियः॥ ४१॥ ४२॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

रूपस्य लक्षणान्याह—द्रव्याकृतित्वमिति। द्रव्यस्य घटादेर्या आकृतिः सैव रूपस्य। पृथुबुध्नोदराकारं रूपमपि। आतानवितानात्मकं च। द्रव्यस्यैवाऽऽकृतिरिति द्रव्यस्य तु नोपमेयत्वम्, अतो रूपस्यैव लक्षणम्। गुणता सर्वदोषसर्जनतया प्रतीतिः। नैवं शब्दादिषु, स्वतन्त्रतयाऽपि प्रतीयमानत्वात्। व्यक्तेः संस्थैव संस्था यस्य। यदि व्यक्तिर्वक्रा भवेत्, रूपमपि वक्रं भवेदिति। उपविष्टे रूपवति रूपमुपविशति, रूपमुपविष्टं भवति। आतानवितानात्मकसङ्कुचीकरणयोर्भेदात्। तेजसश्च तेजस्त्वम्, रूपतन्मात्रत्वं सूक्ष्मावस्थेत्यर्थः। साध्वीति संबोधनं रूपस्याऽमोहार्थम्। रूपमात्रस्य रूपतन्मात्रस्य, सर्वगतरूपस्य वा चतस्रो वृत्तयः॥ ३९॥ ❀ ❀ तेजसो लक्षणान्याह—द्योतनमिति। द्योतनं प्रकाशनम्, सूर्यादेरिव। पाचनमौदर्यवह्नेः, पाककरणं वा वह्नेः। पानं जलादेः, तेजोव्यतिरेकेण नान्यः पिबति। अदनं भक्षणम्, अत्ताग्निरेव[1]। हिममर्दनं हिमदूरीकरणम्, शोषणं चेति तेजसः पञ्च वृत्तयः पञ्च कार्याणि। तत्र त्रयं प्रत्यक्षसिद्धम्, द्योतनम्, पाचनम्, हिममर्दनमिति। शोषणं चाऽनुमीयते वाय्वपेक्षया आतपे वस्त्रादिषु जलाकर्षणस्य शैघ्र्यात्। पानमदनं च न तेजःकार्यम्, चेतनकर्तृकत्वात्, क्षुत्पिपासाभ्यामेव तज्जनना[2]च्चेत्याश-

१. अग्निरिव क. ङ.। २. जननेन क.

क्त्याऽऽह—क्षुत्तृडेव चेति । क्षुत्तृड्रूपं तेज एव । अतः पानमदनं च तस्यैव कार्यमिति युक्तमित्यर्थः ॥ ४० ॥ ❀ ❀ जलस्योत्पत्तिमाह—रूपमात्रादिति । रूपमात्रात्तेजसः । विकुर्वाणात् दैवचोदितादित्युभयोर्विशेषणे । प्रथमतो रसमात्रमभूत्, तस्मादम्भः । जिह्वा रसं गृह्णातीति तथा । रसे जिह्वैव प्रमाणम् ॥ ४१ ॥ ❀ ❀ रसानां भेदकथनेनैव लक्षणमाह—कषाय इति । कषायः खदिरादिः, मधुरो गुडादिः, तिक्तो निम्बादिः, कटुर्मरीचादिः, अम्लस्तिन्तिण्यादिः । इतोऽप्यनेकप्रकारोऽस्तीत्याह—इति नैकधेति । एवमनेकप्रकारो भवतीत्यर्थः । ननु यदि रसः स्वभावत एवंविधः स्यात्, जलेऽप्युपलभ्येत, मधुरः पाकादिना तिक्तश्च न भवेत् । तत्राऽऽह—भौतिकानां विकारेति । एक एव रसो भौतिकानां पृथिव्यवयवानां संश्लेषादनेकधा भिद्यते । वस्तुतस्तु अव्यक्तमधुर एक एव रसः ॥ ४२ ॥

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

द्रव्याकृतीत्यत्र । द्रव्याकृतितुल्याकृतिकत्वस्य द्रव्यान्तरेऽपि दर्शनादिदं रूपलक्षणमतिव्यापकमित्याशङ्क्य तत्परिहारायाहुः—द्रव्यस्येत्यादि । नोपमेयत्वम् । किन्तूपमानत्वम्; अतः समासेन द्रव्यभिन्नत्वे सतीति विशेषणसूचनाद्रूपस्यैवासाधारणे धर्मरूपमिदमित्यर्थः । इमानि चत्वार्यपि रूपसामान्यलक्षणानि । व्यवहारोपयोगिता तु न तुरीयस्येति ज्ञेयम् । अत्र रूपभेदानामगणनात् सर्वजनीनप्रतीतिसिद्धत्वाच्च ते बहव एव ज्ञेयाः । चित्ररूपं चाऽतिरिक्तं ज्ञेयम् । गन्धलक्षणे तदुपपादयिष्यते ॥ ३९ ॥ ❀ ❀ द्योतनमित्यत्र । अत्र एकैकस्य कार्यस्याव्यापकत्वेन तेजोविशेषलक्षणतया द्योतनादिषड्वृत्तिकत्वं तेजःसामान्यलक्षणं ज्ञेयम् । विशेषमुखेन सामान्यसूचनाच्छास्त्रे न कोऽपि दोषः । यत्तु शास्त्रान्तरे उष्णस्पर्शवत्त्वं भास्वररूपत्वं च तेजःसामान्यलक्षणत्वेनोच्यते तत्त्वव्यापकत्वात् प्रतिबन्ध्यप्रतिबन्धकभावकल्पनाग्रस्तत्वाच्च विशेषलक्षणत्वेनैवादरणीयमिति दिक् ॥४०॥ ❀ ❀ कषाय इत्यत्र । इतोऽपीत्यादि । एतेन चित्ररसोऽप्यतिरिक्तोऽङ्गीकार्य इत्यपि ज्ञापितम् । एकपदस्य विवरणम्—वस्तुत इत्यादि । भूयसीष्वप्यप्सु स्वल्पस्याऽपि लवणादेर्निक्षेपे रसः परिवर्तत इत्यव्यक्तत्वमुक्तं ज्ञेयम् । एवं च कषायाद्यन्यतमत्वं जलतन्मात्रत्वं चेति द्वयं रसस्य सामान्यलक्षणं ज्ञेयम् ॥ ४२ ॥

### श्रीगिरिधरकृता बालप्रबोधिनी

द्रव्याकृतित्वं द्रव्यस्याकारसमर्पकत्वम्, गुणता द्रव्योपसर्जनतया प्रतीतिः, शब्दस्य स्वातन्त्र्येणैव प्रतीतिः अप्रत्यक्षद्रव्यस्पर्शादेरपि स्वातन्त्र्येणैव प्रतीतिः, रूपस्य तु नैवमिति तस्यायं विशेष उक्तः । व्यक्तिसंस्थात्वं द्रव्यस्य या संस्थासन्निवेशः सैव संस्था यस्य तथात्वम् । द्रव्यस्य स्थूलसूक्ष्मतया ऋजुवक्रतया चास्यापि तथात्वेन प्रतीतिरित्यर्थः । तेजसस्तेजस्त्वं असाधारणधर्मत्वं च । हे साध्वीति सम्बोधनेन तव प्रश्नेनैतच्छास्त्रप्रवृत्तेस्त्वमप्यनेकेषां कार्यसाधिकाऽसीति सूचयति । रूपमात्रस्य वृत्तयो लक्षणानीत्यर्थः ॥ ३९ ॥ ❀ ❀ द्योतनं प्रकाशनम्, पचनं तन्दुलादेः, क्षुत् तृट् अशनाया पिपासा च तद्द्वारेण पानमदनं च, हिममर्दनं शैत्यविनाशनम्, शोषणं च, एतास्तेजसो वृत्तयः, कार्यभूतानि लक्षणानीत्यर्थः ॥ ४० ॥ ❀ ❀ दैवेन कालादिना चोदितात् प्रेरितात् विकुर्वाणात् रूपं मात्रा यस्य तस्मात्तेजसः रसमात्रमभूत् । तस्माद्रसात् अम्भः जलमभूत् । रसस्य ग्राहकापेक्षायामाह—जिह्वेति, रसनेन्द्रियं रसस्य ग्रहः ग्राहकमित्यर्थः ॥ ४१ ॥ ❀ ❀ कषायादिषु लवणोऽपि द्रष्टव्यः । यः स्वत एको मधुर एव भौतिकानां संसर्गिद्रव्याणां बीजादीनां विकारेण नैकधा कषायादिभेदेन षोढा विभिद्यते स रसः ॥ ४२ ॥

### हिन्दी अनुवाद

साध्वि ! वस्तुके आकारका बोध कराना, गौण होना—द्रव्यके अङ्गरूपसे प्रतीत होना, द्रव्यका जैसा आकार-प्रकार और परिमाण आदि हो, उसी रूपमें उपलक्षित होना तथा तेजका स्वरूपभूत होना—ये सब रूपतन्मात्रकी वृत्तियाँ हैं ॥ ४९ ॥ ❀ ❀ चमकना, पकाना, शीतको दूर करना, सुखाना, भूख-प्यास पैदा करना, और उनकी निवृत्तिके लिये भोजन एवं जलपान कराना—ये तेजकी वृत्तियाँ हैं ॥ ४० ॥ ❀ ❀ फिर दैवकी प्रेरणासे रूपतन्मात्रमय तेजके विकृत होनेपर उससे रसतन्मात्र हुआ और उससे जल तथा रसको ग्रहण करानेवाली रसनेन्द्रिय ( जिह्वा ) उत्पन्न हुई ॥ ४१ ॥ ❀ ❀ रस अपने शुद्ध स्वरूपमें एक ही है; किन्तु अन्य भौतिक पदार्थोंके संयोगसे वह कसैला, मीठा, तीखा, कड़वा, खट्टा और नमकीन आदि कई प्रकारका हो जाता है ॥ ४२ ॥

**क्लेदनं पिण्डनं तृप्तिः प्राणनाप्यायनोन्दनम् । तापापनोदो भूयस्त्वमम्भसो वृत्तयस्त्विमाः ॥ ४३ ॥**

**रसमात्राद्विकुर्वाणादम्भसो दैवचोदितात् । गन्धमात्रमभूत्तस्मात्पृथ्वी घ्राणस्तु गन्धगः ॥ ४४ ॥**

**करम्भपूतिसौरभ्यशान्तोग्राम्लादिभिः पृथक् । द्रव्यावयववैषम्याद्गन्ध एको विभिद्यते ॥ ४५ ॥**

**भावनं ब्रह्मणः स्थानं धारणं सद्विशेषणम् । सर्वसत्त्वगुणोद्भेदः पृथिवीवृत्तिलक्षणम् ॥ ४६ ॥**

---

१. प्रा० पा०—प्राच्छा० ।

## श्रीधरस्वामिविरचिता भावार्थदीपिका

क्लेदनमार्द्रीकरणम्। पिंडनं मृदादेः पिंडीकरणम्। तृप्तिस्तृप्तिदातृत्वम्। प्राणनं जीवनम्। "आपोमयः प्राणः" इति स्मृतेः। आप्यायनं तृड्वैक्लव्यनिवर्तनम्। उंदनं मृदूकरणम्। ओंदनमिति पाठेऽपि स एवार्थः। भूस्त्वं कूपादावुद्धृतस्यापि पुनःपुनरुद्भवः ॥ ४३ ॥ ❀ ❀ गंधगो गंधं प्राप्नोति ॥ ४४ ॥ ❀ ❀ करंभो मिश्रगंधः यथा व्यंजनादीनां हिंग्वादिसंस्कारेण पूतिर्दुर्गंधः सौरभ्यं कर्पूरादेः शांतः शतपत्रादेः उग्रो लशुनादेः अम्लस्तिंतिण्यादेः संसर्गिणां द्रव्यावयवानां वैषम्यात् एवं विभिद्यते स गंध इत्यर्थः॥ ४५ ॥ ❀ ❀ ब्रह्मगो भावनं प्रतिमादिरूपेण साकारतापादनम्। स्थानं जलादिविलक्षणाऽऽश्रयांतरनैरपेक्ष्येण स्थितिः, धारणं जलाद्याधारत्वम्। सतामाकाशादीनां विशेषणमवच्छेदकत्वम्। सर्वेषां सत्त्वानां प्राणिनां तद्गुणानां च पुंस्त्वादीनामुद्भेदः परिणामविशेषैः प्रकटीकरणम्॥ ४६ ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

जलस्य जीवनत्वे श्रुतिमाह-आपोमयः जलविकारः। यद्वा। चंद्रादिदर्शनेन समुद्रादाविव भूयस्त्वम्॥ ४३ ॥ ४४ ॥ ❀ ❀ आदिनाऽवलेहादिग्रहः। पुनरादिना कस्तूर्यादिग्रहः। पुनरादिनोत्पलादिग्रहः। पुनरादिना पलांड्वादिग्रहः। पुनरादिना मातुलुंगादिग्रहः। इत्यर्थ इति। वस्तुत एकोपि गंधः संसर्गिद्रव्यवशेन नानात्वं भजतीति भावः॥ ४५ ॥ ❀ ❀ तन्नैरपेक्ष्येण जलाद्यपेक्षां विनैव। अत्रादिना वाय्वग्न्यादिग्रहः। अवकाशं विना स्थित्यसंभवादाकाशापेक्षा त्वस्त्येवेति ज्ञेयं, पुनरादिनाऽग्न्यादिग्रहः। अवच्छेदकत्वं व्यावर्त्तकत्वं गंधरूपस्वगुणेनेति बोध्यं, तथा हि आकाशादिगुणानां शब्दादीनां पृथिव्यां सत्त्वेनाकाशादिषु न व्यावर्त्तकत्वं पृथिवीगुणस्य गंधस्य तेष्वसत्त्वेन तस्याव्यावर्त्तकत्वम्। अन्यूनानतिरिक्तवृत्तिधर्मस्यैवावच्छेदकत्वादिति भावः। विश्वनाथस्तु-विशेषणहेतुः मलिनमाकाशं धूसरोऽनिल इत्यादिप्रतीतेरित्याह। पुंस्त्वादि हि-शिश्नवृषणाकारपरिणामेन पुंस्त्वं, योन्याकारपरिणामेन स्त्रीत्वमुभयविलक्षणसच्छिद्रभूभागाकारपरिणामेन च पंढत्वं पृथिव्या एव जायत इति विवेकः। संदर्भस्तु-ब्रह्मणः परमेश्वरस्य इंद्रनीलादिरूपायास्तस्या रूपादिदृष्टांतत्वेन भावनं स्मरणहेतुत्वमित्याह॥ ४६ ॥

## श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

अम्भसो लक्षणमाह। क्लेदनमिति। अम्भसो जीवनधर्म्मत्वे श्रुतिर्मानम् अम्मयं जीवनमित्यर्थः। वृत्तयोऽसाधारणधर्माः, तथा च क्लेदनादिधर्म्मवत्त्वमम्भसो लक्षणम्॥ ४३ ॥ ❀ ❀ तस्माद्गन्धतन्मात्रात् पूर्वमेव जातो घ्राणस्तु स्वविषयं गन्धं प्राप्तोऽभूदिति विषयेन्द्रिययोर्द्वयोरपि लक्षणं पूर्ववदूह्यम्। इन्द्रियसामान्यलक्षणन्तु "शब्देतरोद्भूतविशेषगुणानाश्रयत्वे सति ज्ञानकारणमनस्संयोगाश्रयत्वम्" इन्द्रियत्वमिति॥ ४४ ॥ ❀ ❀ य एक एव एवं विभिद्यते स गन्ध इति यत्तच्छब्दाध्याहारेण गन्धलक्षणादित्यर्थ इत्युक्तम्। शान्तोग्राम्लादिभिरिति क्वचित्पाठः। तत्राम्लश्चिञ्चिण्यादेरिति टीकाप्यस्ति॥ ४५ ॥ ❀ ❀ प्रतिमादीत्यादिना शालग्रामगोमतीचक्रादिपरिग्रहः। नैरपेक्ष्येण। जलाद्याधारापेक्षाराहित्येन विशेषणं विशेषणत्वमवच्छेदकत्वं घटाकाशो घटजलं काष्ठवह्निरित्यादिभेदकत्वमिति यावत्, परिणामविशेषैः रूपान्तरापत्तिप्रकारैः वृत्त्या कार्य्येण लक्षणमिति भावे ल्युट्, पृथिव्या वृत्तिर्धर्मस्य लक्षणमिति विग्रहे तु कारणे॥ ४६ ॥

## श्रीमद्वीरराघवव्याख्या

क्लेदनमार्द्रीकरणं पिण्डनं मृदादेः पिण्डीकरणं तृप्तिः तृप्तिदातृत्वं प्राणनं जीवनम् "आपोमयः प्राण" इति श्रुतेराप्यायनं तृड्वैक्लव्यनिर्वतनमौन्दनं मृदूकरणं भूयस्त्वं कूपादावुद्धृतस्यापि पुनरुद्गमः पाञ्चभौतिकेष्वपि जलांशस्य भूयस्त्वं वा तथा च सूत्रकारः। त्र्यात्मकत्वात्तु भूयस्त्वात्।३।१।२। इति इमाः क्लेदनादयः तेजसो वृत्तयः॥ ४३ ॥ ❀ ❀ दैवचोदिताद्विकुर्वाणाद्रसमात्रादम्भसः गन्धमात्रमभूत्तस्माद्गन्धमात्रात्पृथ्वी अभूत् घ्राणः। घ्राणेन्द्रियं गन्धगः गन्धग्राहकः॥ ४४ ॥ ❀ ❀ एक एव गन्धः द्रव्याणां संसर्गिद्रव्याणां वैषम्याद्विकुर्वाणात् पृथक्करम्भादिभेदेन विभिद्यते। तत्र करम्भो मिश्रगन्धः यथा व्यञ्जनादीनां हिङ्ग्वादिसंस्कारैः पूतिर्दुर्गन्धः सौरभ्यं कर्पूरादेः शान्तः शतपत्रादेः उग्रो लशुनादेः अम्लः पर्युषितभुक्तान्नादेः॥ ४५ ॥ ❀ ❀ भावनं घटादिनिष्पादनं ब्राह्मणस्थानं ब्राह्मणशब्दश्चराचरोपलक्षणार्थः सर्वेषामाधारत्वमित्यर्थः। ब्रह्मणः इति पाठे तु ब्रह्मणः ब्रह्मकुलस्य स्थानमिति स एवार्थः सद्विशेषणं सतां कार्याणां विशेषकत्वं ब्रह्मादिकार्याणां देशभेदेन सारासारवत्त्वदर्शनात् सर्वसत्त्वगुणोद्भेदः तत्तद्देशस्थप्राणिनामाकारविशेषहेतुत्वं यद्वा शब्दादिसर्वसत्त्वगुणवत्त्वं चेति पृथिव्या वृत्तिः कार्यमेव लक्षणमित्यर्थः॥ ४६ ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

उदकलक्षणं वक्ति। क्लेदनमित्यादिना। क्लेदनमार्द्रीकरणं पिण्डीकरणं तृप्तिरलंबुद्धिजनकत्वं प्राणनं चेष्टाहेतुत्वमाप्यायनं सुखकरत्वमुन्दनं विन्दुभावः तापापनोदस्तापनिवारणत्वमन्येभ्यो भूतेभ्यः कार्येषु भूयस्त्वमाधिक्यमिमा अम्भसो वृत्तयः जलस्य

स्वरूपलक्षणानि। "उदि विन्दुभाव" इति धातुः "उन्दनं विन्दुभावः स्यात्स्यन्दनं स्रवणं स्मृतम्" इत्यभिधानात् पृथिवीतेजः-परमाणुयोगादम्भस उन्दीभाव इति॥ ४३॥ ❀ ❀ अद्भ्यः पृथिव्युत्पत्तिं वक्ति। रसमात्रादिति। रस एव मात्रा यस्य तत्तथा। तस्मादम्भसो गन्धमात्रं गन्धतन्मात्राभूत् तस्मात् गन्धात् पृथिव्यभूत् गन्धं गमयति ज्ञापयतीति गन्धगो घ्राण इन्द्रिय-विशेषोऽप्यभूत्॥ ४४॥ ❀ ❀ गन्धलक्षणानि ब्रूते। करम्भेति। करम्भो दग्धपार्थिवविषयः, पूतिः छिन्नक्षतविषयः, शान्तो मिश्रगन्धः, उग्रो वचादिविषयः, अम्लः आरनालादिविषयः। आदिशब्देन कषायादिलक्षणो विवक्ष्यते। एकस्य गन्धस्य नानाविधत्वं कथमित्यत उक्तम्। द्रव्येति। द्रव्याणामवयवानामंशानां च वैषम्यात् विशेषलक्षणात् एको गन्धो नानाविधो भवतीत्यर्थः॥ ४५॥ ❀ ❀ पृथिवीलक्षणं वक्ति। भावनमित्यादिना। भावनमुत्पादकत्वं ब्रह्मस्थानं तु पृथिवीशरीरे ब्रह्मदर्शनादिति वचनात् पार्थिवशरीरेषु ब्रह्मणः सन्निधानात् तत्रैव ब्रह्मदर्शनाच्च 'यः पृथिव्यां तिष्ठन्नित्यादेश्च' धारणं मूर्तद्रव्याणामिति शेषः, सद्विशेषणं भूतत्रयम-पेक्ष्य विशेषेण व्यक्तत्वं तदुक्तम् "असदव्यक्तनाम स्याद्व्यक्तं सदिति चोच्यत" इति सर्वसत्त्वगुणोद्भेदः सर्वेषां सत्त्वानां प्राणिनां शरीरे सर्वगुणोद्भेदः सर्वेषां सत्त्वानां प्राणिनां शरीरे सर्वगुणानामुद्भेदो व्यक्तिः सापि संसारावस्थायामिति ज्ञातव्यम्। "शरीरं पार्थिवं ज्ञेयमिन्द्रियाण्यौदकानि तु। तैजसः कोष्टगोवह्निश्छिद्रमाकाशसंभवम्॥ प्राणा वायुमयाः सर्वे प्रत्येकं पञ्चधा पुनः।" इति वचनात् पृथिव्याः प्राधान्यादितरेषामल्पत्वाद्युक्तमुक्तं पृथिव्याः वृत्तिलक्षणम्॥ ४६॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

भूयस्त्वं चन्द्रादिदर्शनेन समुद्रादाविव॥ ४३—४५॥ ❀ ❀ भावनमिति। ब्रह्मणः परमेश्वरस्य तस्य भावन-मिन्द्रनीलादिरूपायास्तस्या रूपादिदृष्टान्तत्वेन स्मरणहेतुत्वं जलादौ गन्धाद्यभावात् असम्यक्त्वमिति। यद्वा विराड्रूपेण तस्य भावनं भावनोपाधित्वम्॥ ४६—४७॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

अम्भसो लक्षणमाह। क्लेदनमार्द्रीकरणं पिण्डनं मृदादेः पिण्डीकरणं तृप्तिस्तृप्तिदातृत्वं प्राणनं जीवनम् "आपोमयः प्राण" इति श्रुतेः। आप्यायनं तृड्वैक्लव्यनिवर्त्तनम्। ओन्दनं मृदूकरणम्। उन्दनमिति पाठेऽपि स एवार्थः। भूयस्त्वं कूपादावुद्धृतस्यापि पुनः पुनरुद्गमः॥ ४३—४४॥ ❀ ❀ गन्धस्य लक्षणमाह। करम्भो मिश्रगन्धः। यथा व्यञ्जनादीनां हिङ्ग्वादिसंस्कारे पूतिर्दुर्गन्धः॥ ४५॥ ❀ ❀ पृथिव्या लक्षणमाह। ब्रह्मणः परमेश्वरस्य भावनं प्रतिमानिर्म्माणकारणत्वं स्थानं जलादिविल-क्षणतया नैरपेक्ष्येण स्थितिः। धारणं जलाद्याधारत्वम्। सतामाकाशादीनां विशेषणं विशेषणे हेतुः 'मलिनमाकाशं धूसरोऽनिलः' इत्यादिप्रतीतिर्यत इत्यर्थः। सर्व्वेषां सत्त्वानां प्राणिनां तद्गुणानाञ्च पुंस्त्वादीनामुद्भेदः परिणामविशेषः प्रकटीकरणम्॥ ४६॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः।

क्लेदनमार्द्रीकरणं पिण्डनं चूर्णादेः पिण्डीकरणम्। तृप्तिः अम्भःसेवनफलरूपसुखदातृत्वं प्राणनं जीवनम्। आप्यायनं तृट्तापनिवर्तनमुन्दनं मृदूकरणम्॥ ४३॥ ❀ ❀ रसः मात्रं तन्मात्रं यस्य तस्मात्॥ ४४॥ ❀ ❀ करम्भो मिश्र-गन्धः पूतिः दुर्गन्धः सौरभ्यं सुगन्धः शान्तो गम्भीरः उग्रस्तीव्रः॥४५॥ ❀ ❀ भावनं गृहरथादिनिष्पादनम्। ब्रह्मणः भगवतः उपास्यस्य स्थानं धारणं जलाद्याधारत्वम्। सतां कार्याणां विशेषणमवच्छेदकत्वं सर्वेषां सत्त्वानां तद्गुणानां पुंस्त्वादीनां च उद्भेदः उत्तरोत्तराकारभेदः पृथिव्या वृत्तिलक्षणम्॥ ४६॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

अम्भसो लक्षणान्याह—क्लेदनमिति। क्लेदनमार्द्रीकरणं वस्त्रादेः, पिण्डनं चूर्णीभूतानां पिण्डतासम्पादनम्, यथा सक्तूनाम्; तृप्तिः क्षुदादिनिवृत्त्या पुरुषस्य सन्तर्पणम्, भुक्त्वाऽपि जले अपीते न तृप्तो भवतीति। प्राणनाप्यायनम्। प्राणनं जीवनम्, आप्यायनं प्राणसन्तर्पणम्। उन्दनं प्रेरणम्, जलेन हि पदार्थाः प्रवाहेण नीयन्ते, कूलादिश्च पात्यत इति। तापापनोदः सन्तापदूरीकरणम्। भूयस्त्वमेकस्मिन् देशे सजातीयप्रचुरस्यैवावस्थानम्। यद्वा, यत्राऽऽपः प्रविशन्ति तद्भूयो भवतीति। अम्भस इमा अष्टौ वृत्तयः॥ ४३॥ ❀ ❀ पृथिव्या उत्पत्तिमाह—रसमात्रादिति। स्थूलसूक्ष्मादम्भसः क्षुभितगुणात् कालप्रेरितात् प्रथमतो गन्धमा-त्रमभूत्। तस्मात् पृथिवी। घ्राणमिन्द्रियं गन्धग्राहकमिति प्रमाणम्॥ ४४॥ ❀ ❀ गन्धस्य भेदानाह—करम्भेति। करम्भो मिश्रो गन्धः, व्यञ्जनादिषु[1] प्रसिद्धः। पूतिर्दुर्गन्धः। सौरभ्यं चन्दनादिगन्धः। पूतिसौरभ्ययोरेव शान्तोग्रौ भेदौ। शतपत्रादिगन्धः शान्तः, उग्रश्चम्पकादेर्लशुनादेश्च। अम्लः पर्युषितसूपादेः। आदिशब्देन धूपादीनामनेकविधो गन्ध उक्तः। गन्धानां[2] न जातिसाङ्कर्यम्, किन्तु ते भेदाः पृथगेव; चित्ररस इव चित्रगन्धाभावात्। सजातीयरसस्य गन्धस्य वा कारणगतस्याऽनभिव्यक्तस्य कार्ये

---

१. करञ्जादिषु. क.। २. गन्धादीनाम्. क. घ. ङ.।

रसगन्धजननात्। अत एव हरीतक्यादेरपि रसो भिन्नः, धूपादेश्च गन्धः। अवान्तरानन्त्यं न दोषाय, अन्यथा पदार्थविभाजकोपाधीनां पञ्चविंशतिभेदा न स्युः। एतदाह—पृथगिति। तत्त्वे हेतुमाह—द्रव्यावयवेति। द्रव्यस्याऽऽधारभूतस्य ये अवयवाः, ते विजातीयरसगन्धवन्त इति ग¹न्धो विभिद्यते। अथवा, यथा योजिता अवयवा गन्धमुत्पादयन्ति। स्वभावतः सुर²भिम्; ते चेत् विषमायोजिता भवन्ति, तदा तं गन्धं नोत्पादयन्तीति। गन्धनाशः, सम्यगनभिव्यक्तिर्वा गन्धाभासः करम्भादिशब्दैरुच्यते। वैषम्यस्य नैकविधत्वात्, जलादीनां बहूनां तत्सम्पादकत्वात्, गन्धानन्त्यमेव। तदाह—एकोऽपि गन्धो विभिद्यत इति॥ ४५॥ ❀ ❀ पृथिवीं लक्षयति—भावनमिति। पृथिव्याः पञ्च वृत्तयः। स्वभावतः आधारभूता भवति, आधेयभूता च देहवृक्षादिरूपा। तेषां कारणभूता च, प्रतिमारूपा च, मनसोपासनार्थं कल्प्या च। एवं पञ्चविधा भ³वति। तत्र भावनं मानसम्। ब्रह्मणः स्थानं प्रतिमा। धारणरूपा स्थूला। सतां घटादिपदार्थानां विशेषणं नानाविधकारणरूपता। सर्वेषां सत्त्वानां जीवानां ये गुणाः स्थूलसूक्ष्मनीलपीतादिभेदा यस्मात्। अथवा, ब्रह्मणो भावनं प्रतिमा, स्थानं जलादीनाम्, धारणमाधारत्वमनियतं सर्वेषां भवति, स्थानं नियतमिति विशेषः। सतामाकाशादीनामवच्छेदकत्वम्, सर्वेषां सत्त्वानां प्राणिनां तत्तद्गुणानां च पुंस्त्वादीनामुद्भेदः परिणामविशेषैः प्रकटीकरणम्। वस्तुतस्तु पूर्वमुत्पन्नायाः पृथिव्या एतानि लक्षणानि जलादिभ्यो व्यावृत्तानि वक्तव्यानि। प्रतिमा चित्रादे ( दि ) श्चाकृतिमात्रे भवतीति ब्रह्मण इति वैयर्थ्यं स्यात्, नाऽपि स्थानं पृथक्तया स्थितिः, तत् सूर्यादेरपि संभवतीति न पृथिव्या विशेषलक्षणम्। तस्माद्भावनं सर्वपदार्थरूपापादकत्वम्, सर्वमेव भावयतीति। ब्रह्मणः, शब्दब्रह्मणः परब्रह्मणश्च, हृदयक⁴ण्ठादिस्थानरूपत्वम्। धारणं सर्वस्यापि जगतः। सतां सर्वेषामेव तत्त्वानां विशेषणं व्यावर्तकम्, अवयवभूतं वा। काष्ठादावग्निं प्रकटीकृत्य इतरव्यावृत्तिं जन⁵यति, इतरथा तेजसः स्वरूपमेव क्वापि नाभिव्यक्तमिति कुतो व्यावृत्तिर्भवेत्। एवं जलमपि स्वान्तर्गतं रसरूपं नद्यादौ प्रकटीकृत्य प्रदर्शयति। एवं व्यजनादिना वायुम्, गर्तादिना आकाशम्, शरीरादावहङ्कारादिसर्वाण्येवेन्द्रियाण्यात्मानं च। किञ्च, सर्वसत्त्वानां जीवानां यावन्तो गुणाः, आब्रह्मतृणस्तम्बपर्यन्तं भेदाः, तेषामुद्भेदः पृथिव्यामेव॥ ४६॥

**श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः।**

क्लेदनमित्यत्र। अष्टौ वृत्तय इति। एतेन क्लेदनाद्यष्टवृत्तिकत्वं जलस्य सामान्यलक्षणमत्र। घृततैलादौ यत्क्लेदकत्वं च दृश्यते, सोऽपि जलधर्म एव। वह्निसंसर्गादिना परमभिव्यज्यते कार्यस्य पाञ्चभौतिकत्वात्, तेन नाऽतिव्याप्तिशङ्कालेशः। तेषु यो जलव्यवहाराभावः, स तु भूतान्तरकृतप्रतिबन्धनिबन्धः, करकास्विव। करकास्वपि काठिन्यगाढत्वयोः प्रतीतिर्न भ्रान्ता, तत्र नैमित्तकयोस्तयोः सत्त्वात्। हत्येव जलेन संरुद्धे वायौ ततोऽतिशैत्येन जलस्य पिण्डने करकोत्पत्तेः। तेषां द्वैभौतिकत्वात्। अत एव हिमालयोपत्यकागतगङ्गाप्रवाहोपरि पुरुषाः पद्भ्यां पद्यमाना दृश्यन्ते, अन्था मज्जेयुरेव। शीतकाले च मिहिकायामम्भसि स्थापिते प्रातर्जलपात्रेऽधोमुखे कृतेऽपि न तस्य जलस्य पातः। छुरिकया विदार्य फलवज्जलस्य भक्षणमपि मध्यदेशीयजनानुभवगोचर इति दिक्॥ ४३॥ ❀ ❀ करम्भेत्यत्र। मिश्रशान्तोग्रगन्धस्वीकारे जातिसाङ्कर्यात् सुरभित्वादिषु जातित्वहानिः। यत्र सौरभ्यम्, तत्र पूतित्वाभावः। कुसुमादौ यत्र पूतित्वम्, तत्र सौरभ्याभावः; लशुनादौ उभयोः समावेशो व्यञ्जनादाविति शङ्कानिरासाय मिश्रगन्धमतिरिक्तमङ्गीकरोतीत्याशयेनाहुः—गन्धानामित्यादि। ते इति। मिश्राख्याः। तत्र हेतुः—चित्रेत्यादि। चित्रः सङ्करः। अतिरिक्ताङ्गीकारे उपपत्तिमाहुः—सजातीयेत्यादि। तथा च मधुराम्लसुरभिपूतिद्रव्येष्वनभिव्यक्तेष्वनभिव्यक्तौ मिश्ररसगन्धौ, तदुभयद्रव्यारब्धे द्रव्ये तदुभयद्रव्ये रसं गन्धं च जनयत इत्यर्थः। एकपदानुरोधेन पक्षान्तरमाहुः—अथवेत्यादि। तथा चैक एवानभिव्यक्तसुरभिगन्धः, शेषास्तु तदाभासा इत्यर्थः। अत्रेदं सिध्यति। अण्डसृष्टेः पूर्वभावात् तत्त्वत्वं गन्धादीनाम्, तदेव मूले एकपदेनोक्तम्। तदुत्तरं त्वेते भेदा भौतिकगुणरूपाः कार्या एव, न तु तत्त्वरूपा इति च 'द्रव्यावयववैषम्यात्' इत्यनेनोक्तम्। व्यावहारिकं प्रत्यक्षमपि न दुष्टमिति। एवं च भूमितन्मात्रत्वं करम्भाद्यन्यतमत्वं च गन्धसामान्यलक्षणं ज्ञेयम्॥ ४५॥ ❀ ❀ भावनमित्यत्र। भावनपदस्य ब्रह्मण इत्यनेनान्वयमङ्गीकृत्य श्रीधरोक्तं पक्षमाहुः—अथवेत्यादि। अस्मिन् पक्षे स्थानधारणयोरैकार्थ्येन पौनरुक्त्यमाशङ्क्य भेदकमाहुः—नियतमित्यादि। श्रीधरोक्ते व्याख्याने अस्वरसं दर्शयन्ति—वस्तुत इत्यादि। आकृतिमात्र इति। यस्य कस्यचिदाकृतिमात्रे। स्थानलक्षणमप्यसङ्गतमित्याहुः—नाऽपीत्यादि। सिद्धान्तमाहुः—तस्मादित्यादि। एवं सति भावनादिपञ्चवृत्तित्वं पृथिवीसामान्यलक्षणम्, एकैकवृत्तिकत्वं च विशेषलक्षणमित्येवं षड् लक्षणानि ज्ञेयानि। गन्धवत्त्वनीलरूपत्वादिकं विशेषलक्षणमेव, सामान्यलक्षणत्वे तु पाषाणशुक्लपटादावव्याप्त्यापत्तिः, अनुद्भूता (त) गन्धादिकल्पनापत्तिश्चेत्यादिकमूह्यम्। यद्यपि धारणवृत्तिकत्वं प्राणादिधिष्ण्यरूपे आकाशे मेघादिधारके वायौ तेजसि जले चाऽतिव्याप्नोतीति विशेषलक्षणत्वं तस्य न घटते, तथापि सांसिद्धिकशीतोष्णत्वानधिकरणसांसिद्धिकवेगव्यधिकरणस्पर्शाधिकरणत्वमत्र विवक्षितमिति न कश्चिद्दोष इति सर्वं समञ्जसम्। इदं च भौतिकेष्वपि व्यापकमिति व्यवहारोपयोगीति

---

१. गन्धोऽपि. क. घ. ङ.। २. सुरभिः. क.। ३. भवन्ति. ख.। ४. हृदयकरणादि घ. हृदयान्तःकरणादिः ङ.। ५. ज्ञापयति क. ङ.।

ध्येयम्। अत्र जलादिचतुष्केऽतिव्याप्तिवारणाय—शीतेत्यादि। सजलघटादावतिव्याप्तिवारणाय सांसिद्धिकेति। न चाऽसम्भवः। भूमौ नैमित्तिकस्यैव वेगस्याऽनुभवसाक्षिकत्वात् सांसिद्धिकत्वे गन्धादिवत् सर्वदाऽनुभवप्रसङ्गात्। यद्यपि पाकजाऽनुष्णी (ष्णाशी) तस्पर्शवत्त्वं व्यवहार उपयुज्यते, तथापि पाकजत्वस्य शास्त्रमात्रगम्यत्वेन दुरधिगमत्वात् इदमेव सम्यगिति दिक्॥ ४६॥

### श्रीगिरिधरकृता बालप्रबोधिनी

क्लेदनमार्द्रीकरणम्, पिण्डनं मृदादेः पिण्डीकरणम्, तृप्तिः तृप्तिकरत्वम्, प्राणनं जीवनम् "आपोमयः प्राणः" इति श्रुतेः, आप्यायनं तद्वैक्लव्यनिवर्तनम्, उन्दनं मृदुकरणम्—उदनमिति पाठेऽपि स एवार्थः—तापापनोदः सूर्यादिजनिततापनिवर्त्तनम्, भूयस्त्वं कूपादावुद्धृतस्यापि पुनः पुनरुद्गमः, इमाः क्लेदनाद्यो नभसो वृत्तयः कार्यभूतानि लक्षणानीत्यर्थः॥ ४३॥ ❀ ❀ दैवचोदिताद्विकुर्वाणात् रसतन्मात्रादम्भसो गन्धतन्मात्रमभूत्। तस्मात् पृथ्वी अभूत्। गन्धग्राहकापेक्षायामाह—घ्राण इति, गन्धगः गन्धग्राहकस्तु घ्राणः॥ ४४॥ ❀ ❀ य एक एव सन् संसर्गिद्रव्याणां अवयववैषम्याद्विकारात्। पृथक् करम्भादिभेदेन विभिद्यते स गन्ध इत्यन्वयः। तत्र करम्भो मिश्रगन्धः यथा व्यञ्जनादीनां हिङ्ग्वादिसंस्कारैः, पूतिर्दुर्गन्धः, सौरभ्यं कर्पूरादेः, शान्तः शतपत्रादेः, उग्रो लशुनादेः, अम्लश्चिञ्चिण्यादेः॥ ४५॥ ❀ ❀ ब्रह्मणो भगवतो भावनं उपासनार्थ-प्रतिमादिरूपेण साकारतापादनम्। स्थानं जलादिविलक्षणतया तन्नैरपेक्ष्येण स्थितिः, धारणं जलाद्याधारत्वम्, सतामाकाशादीनां विशेषणमवच्छेदकत्वम्, घटाकाशः मलिनाकाशः धूम्रो वायुरिति प्रतीतेः, सर्वेषां सत्त्वानां प्राणिनां तत्तद्गुणानां पुंस्त्वादीनामुद्भेदः परिणामविशेषैः प्रकटीकरणं पृथिव्या वृत्तिः कार्यमेव लक्षणमित्यर्थः॥ ४६॥

### हिन्दी अनुवाद

गीला करना, मिट्टी आदिको पिण्डाकार बना देना, तृप्त करना, जीवित रखना, प्यास बुझाना, पदार्थोंको मृदु कर देना, तापकी निवृत्ति करना और कूपादिमेंसे निकाल लिये जानेपर भी वहाँ बार-बार पुनः प्रकट हो जाना—ये जलकी वृत्तियाँ हैं॥ ४३॥ ❀ ❀ इसके पश्चात् दैवप्रेरित रसस्वरूप जलके विकृत होनेपर उससे गन्धतन्मात्र हुआ और उससे पृथ्वी तथा गन्धको ग्रहण करानेवाली घ्राणेन्द्रिय प्रकट हुई॥ ४४॥ ❀ ❀ गन्ध एक ही है; तथापि परस्पर मिले हुए द्रव्यभागोंकी न्यूनाधिकतासे वह मिश्रितगन्ध, दुर्गन्ध, सुगन्ध, मृदु, तीव्र और अम्ल (खट्टा) आदि अनेक प्रकारका हो जाता है॥४५॥ ❀ ❀ प्रतिमादिरूपसे ब्रह्मकी साकार भावनाका आश्रय होना, जल आदि कारण-तत्त्वोंसे भिन्न किसी दूसरे आश्रयकी अपेक्षा किये बिना ही स्थित रहना, जल आदि अन्य पदार्थोंको धारण करना, आकाशादिका अवच्छेदक होना ( घटाकाश, मठाकाश आदि भेदोंको सिद्ध करना ) तथा परिणामविशेषसे सम्पूर्ण प्राणियोंके [ स्त्रीत्व, पुरुषत्व आदि ] गुणोंको प्रकट करना—ये पृथ्वीके कार्यरूप लक्षण हैं॥ ४६॥

नभोगुणविशेषोऽर्थो यस्य तच्छ्रोत्रमुच्यते। वायोर्गुणविशेषोऽर्थो यस्य तत्स्पर्शनं विदुः॥ ४७॥
तेजोगुणविशेषोऽर्थो यस्य तच्चक्षुरुच्यते। अम्भोगुणविशेषोऽर्थो यस्य तद्रसनं विदुः।
भूमेर्गुणविशेषोऽर्थो यस्य स घ्राण उच्यते॥ ४८॥
परस्य दृश्यते धर्मो ह्यपरस्मिन् समन्वयात्। अतो विशेषो भावानां भूमावेवोपलक्ष्यते[1]॥ ४९॥
एतान्यसंहत्य यदा महदादीनि सप्त वै। कालकर्मगुणोपेतो जगदादिरुपाविशत्॥ ५०॥
ततस्तेनानुविद्धेभ्यो युक्तेभ्योऽण्डमचेतनम्। उत्थितं पुरुषो यस्मादुदतिष्ठदसौ विराट्॥ ५१॥
एतदण्डं विशेषाख्यं क्रमवृद्धैर्दशोत्तरैः। तोयादिभिः परिवृतं प्रधानेना[2]वृतैर्बहिः।
यत्र लोकवितानोऽयं रूपं भगवतो हरेः॥ ५२॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

श्रोत्रादीनां शब्दादिग्राहकत्वमुक्तं तेषां च लक्षणं तदेवेत्याह। पंचभिः श्लोकार्धैः। नभसो गुणविशेषः शब्दो यस्यार्थो विषयः॥ ४७॥ ४८॥ ❀ ❀ गुणविशेषशब्दव्यावर्त्यं दर्शयति। परस्येति। परस्य कारणस्य धर्मः शब्दादिरपरस्मिन्कार्ये वाय्वादौ कारणान्वयाद् दृश्यते। अतो भावानामाकाशादीनां विशेषो गुणः सर्वोऽपि शब्दादिर्भूमावेवोपलक्ष्यते चतुर्णां तत्रान्वयात् जलादिषु यथाऽन्वयमेव न सर्वः आकाशे त्वन्यान्वयाभावादेक एव॥ ४९॥ ❀ ❀ ❀ एवं कारणोत्पत्ति-

१. प्रा० पा०—लभ्यते। २. प्रा० पा०—नेन वृतै०।

मुक्त्वा कार्योत्पत्तिमाह सार्धैस्त्रिभिः । एतान्यसंहत्यामिलित्वा यदा स्थितानि तदा जगदादिरीश्वरः प्राविशत् । सप्तेति च प्राधान्याभिप्रायेणोक्तम् । प्रवेशस्तु सर्वेष्वप विवक्षित एव ॥ ५० ॥ ❀ ❀ अनुविद्धेभ्यः क्षुभितेभ्यः यस्मादंडादसौ विराट् पुरुप उदतिष्ठत् ॥ ५१ ॥ ❀ ❀ भगवतो रूपमिति पुरुषाभेदाभिप्रायेण ॥ ५२ ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

गुणविशेषो विशेषगुणः । विशेषगुणस्तु "रूपं गंधो रसः स्पर्शः स्नेहः सांसिद्धिको द्रवः । बुद्ध्यादिभावनांताश्च शब्दो वैशेषिका गुणाः" इति तार्किकोक्तेः ॥ ४७ ॥ ४८ ॥ ❀ ❀ अतः कारणान्वयात् । चतुर्णामाकाशादीनां, तत्र भूमौ, यथान्वयं कारणभूतान्वयानुसारेणैव गुणसद्भावः आकाशस्य भूतांतरकारणगुणाभावादेकः शब्द एवेत्यर्थः ॥ ४९ ॥ ❀ ❀ कालः क्षोभकः । कर्म जीवादृष्टं गुणः प्रकृतिस्तैः सहितः प्राविशत्संहननकारिण्या शक्त्या सर्वतत्त्वमेलनार्थं प्रथमं प्राविशत् । ततो वर्षसहस्रांतेंतर्यामित्वेन प्राविशदिति ज्ञेयम् ॥ ५० ॥ ❀ ❀ ततोंतर्यामिप्रवेशानंतरम् । तेन तत्प्रवेशेन । उत्थितमुत्पन्नम् । पुरुषो हिरण्यगर्भात्मकः समष्टिजीवः उदतिष्ठत् निद्रामिवातिक्रम्य सचेतनो बभूव ॥ ५१ ॥ ❀ ❀ विशेष इत्याख्या यस्य तत्तथा । दशोत्तरैरुत्तरोत्तरं दशगुणाधिकैः तोयस्यादिः पृथ्वी तदाद्यैरत्रैकादिपदलोपस्त्वार्षो ज्ञेयोऽन्यथा "ततो विशेषं प्रतिपद्य निर्भयस्तेनात्मनापोनलमूर्त्तिः" इति ब्रह्मांडभेदनोक्तक्रमविरोधः स्यादिति । यत्रांडेयं प्रत्यक्षदृश्यो लोकानां पातालादीनां वितानः समूहः किंभूतो भगवतो हरे रूपं मूर्त्तिवदधिष्ठानम् । अजहल्लिंगत्वात्षण्ढत्वम् ॥ ५२ ॥

## श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

तेषां च श्रोत्रादीनां लक्षणमसाधारणधर्मस्तदेव शब्दादिग्राहकत्वमेव यस्येन्द्रियस्य तदिन्द्रियम् ॥ ४७ ॥ ❀ ❀ तेज इति सार्द्धकम् ॥ ४८ ॥ ❀ ❀ गुणविशेषशब्दव्यावर्त्त्यमिति । यथाकाशस्य गुणविशेषः शब्दस्य वाय्वादावप्यनुगत इति । वाय्वादौ स शब्दः सामान्यगुणो न तु विशेषः, एवं वायोः स्पर्श एव विशेषगुणो न तु शब्दादिः । एवमनुगतोऽपि कारणगुणो न विशेषगुणशब्दाभिधानयोग्यः किन्तु सामान्यगुणस्स एव विशेषशब्दव्यावर्त्त्यस्तमाहेत्यर्थः । कारणान्वयात् कारणस्याकाशादेः वाय्वादौ कार्य्येऽनुगतत्वात् अतः कारणधर्मस्य कार्य्ये दर्शनात् तत्र भूमौ यथान्वयमेव कारणान्वयमनतिक्रम्यैव आकाशे वाय्वदिकारणेऽन्यस्य वाय्वादिकार्य्यस्यान्वयासम्भवादेकः शब्द एव ॥ ४९ ॥ ❀ ❀ कार्य्यस्याण्डस्योत्पत्तिं कालः सृष्टिसमयः कर्म जीवानामदृष्टं गुणा उपादानम् ॥ ५० ॥ ❀ ❀ ततः । प्रवेशानन्तरमेव तेनानुप्रवेशेन विराट् । हिरण्यगर्भात्मकः सूक्ष्मस्समष्टिजीवः उदतिष्ठत्सुषुप्तिमिवातिक्रम्य सचेतनो बभूव ॥ ५१ ॥ ❀ ❀ बहिः सर्वतः प्रधानेनावृतैस्तोयादिभिः परिवृतं यथोत्तरमावृतं यत्रेत्यर्द्धकम् । यत्राण्डे लोकानां चतुर्द्दशभुवनानां समूहः हरेरनिरुद्धस्य रूपं नवीनोपासकानां चित्तस्थैर्य्यार्थं पातालमेतस्य हि पादमूलमित्याद्यनुसारेण रूपत्वेन वर्णितम् ॥ ५२ ॥

## श्रीमद्वीरराघवव्याख्या

श्रोत्रादीनां शब्दादिग्राहकत्वमुक्तं तेषां च लक्षणं तदेवेत्याह पञ्चभिरर्धैः । नभस आकाशस्य गुणविशेषः शब्दो यस्यार्थः विषयः ग्राह्य इति यावत्, तच्छ्रोत्रमुच्यते आकाशासाधारणगुणशब्दग्राहकत्वमेव श्रोत्रत्वमित्यर्थः । एवमुत्तरत्रापि वेदितव्यम् ॥४७॥४८॥ ❀ ❀ यदुक्तं पृथिव्याः सर्वसत्त्वगुणोद्भेद इति लक्षणं तद्विशदयति । परस्येति । हि यस्मात्परस्य कारणस्य धर्मः शब्दादिरपरस्मिन् कार्ये वाय्वादौ समन्वयात् समवायात् दृश्यते अतस्तस्माद्भावानामाकाशादीनां विशेषः शब्दादिः भूमौ पृथिव्यामेवोपलक्ष्यते दृश्यते ॥ ४९ ॥ ❀ ❀ एवं महदादिपृथिव्यन्तभूतसृष्टिमभिधाय तेभ्योऽण्डोत्पत्तिमभिधास्यन् "नो वीर्याः पृथग्भूतास्ततस्ते संहतिं विना" इत्युक्तरीत्या ईश्वरानुप्रवेशमन्तरेण कार्य्यासामर्थ्यं वदंस्तेष्वीश्वरानुप्रवेशमाह । एतानीति । एतानि महदादिदिपृथिव्यन्तानि सप्ततत्त्वानि तन्मात्राणि भूतेषु इन्द्रियाणामहङ्कारे चान्तर्भाव्य सप्तेति निर्देशः यदासंहत्यामिलित्वा स्थितानि तदा कालकर्मगुणोपेतः कर्म अदृष्टं गुणः सत्त्वादिः कालादिभिरुपेतः जगदादिरीश्वरः तानि महदादितत्त्वानि उपाविशत् ॥ ५० ॥ ❀ ❀ मेलनं संहतत्वसमागतत्वभेदेन द्विविधं, संहतत्वं नाम पृथक्स्थित्यर्हसंयोगमात्रं, समागतत्वं पृथक्स्थित्यनर्हसंश्लेषविशेषः एतद्द्वयाभावात् सृष्ट्यसमर्थान्येवंस्थितानीश्वरानुप्रवेशादुभयं प्राप्तेभ्यस्तेभ्योऽण्डं सृष्टमित्याह । तत इति । ईश्वरानुप्रवेशानन्तरन्तेनेश्वरानुप्रवेशेन हेतुनानुविद्धेभ्यः समागतेभ्यः युक्तेभ्यः संहतेभ्यस्तत्त्वेभ्य अचेतनमधिष्ठातृचेतनरहितमण्डमुत्थितमुत्पन्नं कीदृशं तदेतदण्डमित्यत्राह । यस्मादण्डादसौ विराट् समष्टिपुरुषो ब्रह्मोदतिष्ठदुदभूत् ॥ ५१ ॥ ❀ ❀ पुनरण्डमेव विशिनष्टि । एतदिति । एतद्विशेषाख्यमण्डं बहिः प्रधानेन प्रकृत्या आवृतैः क्रमवृद्धैः क्रमश उत्तरोत्तरमधिकैः किं यदाधिक्यं तत्राह । दशोत्तरैर्दशगुणितोत्तरैः उत्तरोत्तरं दशगुणाधिकैरित्यर्थः, तोयादिभिः तोयग्रहणं पृथिव्या उपलक्षणं पृथिव्यादिभिरित्यर्थः, परिवृतं परिवेष्टितं यत्र यस्मिन्नण्डे लोकवितानः देवमनुष्यादिलोकविस्तारः भवति तद्भगवतो रूपं शरीरमित्यर्थः ॥ ५२ ॥

श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली ।

श्रोत्रादीनां लक्षणं वक्ति। नभ इत्यादिना। यस्य नभो गुणविशेषः शब्दोऽर्थो विषयस्तच्छ्रोत्रमिन्द्रियमित्यादि ज्ञातव्यं; नभोगुणविशेषोत्थ इति पाठे यस्य विषयः शब्दोद्भवशब्द एवार्थ इति ॥ ४७ ॥ ४८ ॥ ❀ ❀ शब्दादय आकाशादीनां विशेषगुणत्वेन व्यावर्तकधर्मा न व्यभिचीर्णा इति या वैशेषिकाणां प्रक्रिया तां विघटयितुमाह। परस्येति। परस्य पूर्वस्य कारणस्याकाशादेर्धर्मः शब्दादिगुणोऽपरस्मिन्पश्चात्तने कार्ये वाय्वादौ दृश्यते। हि कुतः समन्वयात्सम्बन्धात् ततः किं तत्राह। अत इति। य एवं गुणानां सम्बन्धोऽस्त्यत आकाशादिसर्वभावानां विशेषगुणो भूमावेवोपलक्ष्यत इति सर्वसत्त्वगुणोद्भेद इत्युक्तं साधु वैशेषिककल्पनायाः स्वमनीषोत्थत्वादप्रमाणत्वमित्यतो दृश्यत इति दृष्टेर्बलवत्प्रमाणत्वात्तद्विरोधोऽपि दुर्वार इति महदाद्यभिमानिदेवतास्तुतिप्रसन्नश्रीनारायणाविष्टैरुज्जृम्भितशक्तिभिस्तैरन्त्यावयविनिर्माणात् परमाणुभिर्द्व्यणुकादिक्रमेण खण्डावयव्यन्त्यावयवी च जायत इति कल्पनापि निर्मानेत्यभिप्रेत्याह। एतानीति। यदैतानि महदादीनि सप्त तत्त्वानि भोगायतनं ब्रह्माण्डं स्रष्टुं पुरुषं विराट्पुरुषशरीरं च स्रष्टुं न शेकुः कुत इत्यत उक्तमसंहत्येति। असंहत्या चेतनत्वेन स्वतः संयोजनशक्त्यभावेन विश्लिष्य स्थितत्वादित्यर्थः, अत एवाञ्जसेत्युक्तं तदा कालकर्मगुणोपेतो जगदादिः श्रीनारायणो महदादीन्युपाविशद्यथाकार्योत्पत्तिक्षमा शक्तिः स्यात्तथा सन्निहितवानित्यर्थः ॥ ५० ॥ ❀ ❀ तत्फलमाह। तत इति। तदनन्तरं तेन हरिणानुविश्यानुविद्धेभ्यः प्रेरितेभ्यस्तत्त्वेभ्योऽचेतनमण्डं ब्रह्माण्डमुत्थितमुत्पन्नम् "अचेतनाद्यतस्त्वण्डात् ब्रह्मा समजनि स्फुटम्। अतो ब्रह्माण्डमित्याहुर्विराट् ब्रह्मा प्रकाशनात् ॥" इति वाक्यमस्मिन्नर्थे मानमिति भावेनाह। पुरुष इति। यस्मादण्डादसौ विराट् विशेषेण प्रकाशमानः पुरुषः हिरण्यगर्भ उदतिष्ठदुत्पन्न इत्यन्वयः ॥ ५१ ॥ ❀ ❀ अस्याण्डस्य पृथिव्यंशानां भूयस्त्वं नामान्तरं च युक्तमिति भावेनाह। एतदण्डमिति। तोयाद्यावरणविशेषविशेषित्वाच्च विशेषाभिधानं युक्तमिति भावेनाह। क्रमवृद्धैरिति। क्रमवृद्धिमेव विशिनष्टि। दशोत्तरैरिति। ततो बहिर्गुणत्रयेण प्रधानेन मूलप्रकृत्या चावृतमन्तश्चतुर्दशभुवनलक्षणैर्विशिष्टत्वाद्विशेषाख्यमित्याशयेनाह। यत्रेति। यत्र यस्मिन्नण्डेऽयं लोकवितानः पातालादिलोकविस्तारो विशेषित इति शेषः, अयमपि कश्चन विशेषोऽस्तीत्याह। रूपमिति। रूपं मूर्तिः प्रतिमासन्निधानविशिष्टत्वात् ॥ ५२ ॥

श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

तेजस इति सार्द्धकम् ॥ ४८—४९ ॥ ❀ ❀ एतानीति। अधुना कालादिविशेषैरुपेत इति ज्ञेयम् ॥ ५० ॥ ❀ ❀ उत्थितमुत्पन्नं विराट्पुरुषो हिरण्यगर्भात्मकः समष्टिजीवः उतदिष्ठत्सुपुप्तमिवातिक्रम्य सचेतनो बभूव ॥ ५१—५२ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी ।

श्रोत्रादीनां शब्दादिग्राहकत्वमुक्तं तेषाञ्च लक्षणं तदेवेत्याह। नभसो गुणविशेषः शब्दो यस्यार्थो विषयस्तत् श्रोत्रम् ॥ ४७—४८ ॥ ❀ ❀ किञ्च पञ्चसु भूतेषु मध्ये यथोत्तरं गुणाधिक्यमाह। परस्य कारणस्य धर्म्मः शब्दादिः अपरस्मिन् कार्य्ये वाय्वादौ कारणान्वयात् दृश्यते तत्राकाशेऽन्यान्वयाभावादेक एव शब्दः वायौ द्वौ शब्दस्पर्शौ, तेजसि त्रीणिशब्दस्पर्शरूपाणि। जले चत्वारः शब्दस्पर्शरूपरसाः भूमौ पञ्चैव शब्दस्पर्श रूपरसगन्धा इत्याह। अत इति। भावानामाकाशादीनां विशेषः सर्व एव गुणः ॥ ४९ ॥ ❀ ❀ एवं कारणोत्पत्तिमुक्त्वा कार्य्योत्पत्तिमाह। एतानि तत्त्वानि असंहत्य अमिलित्वा यदा स्थितानि तदा जगदादिरीश्वरः प्राविशत् प्रथमे संहननकारिण्या शक्त्या सर्व्वतत्त्वसम्मेलनार्थमविशत् ततो वर्षसहस्रान्ते तदन्तर्यामित्वेन प्राविशदिति ज्ञेयम्। कालः क्षोभकः कर्म्म जीवादृष्टं गुणः प्रकृतिस्तैः सहितः सप्तेति प्राधान्याभिप्रायेणोक्तं प्रवेशस्तु सर्वेष्वेव विवक्षितः ॥ ५० ॥ ❀ ❀ तेन तत्प्रवेशेन अनुविद्धेभ्य आदौ क्षुभितेभ्यस्ततृक्षणादेव युक्तेभ्यो मिलितेभ्यस्तत्त्वेभ्योऽण्डमुत्पन्नम्। यस्माद्विराट् पुरुषो हिरण्यगर्भात्मकः समष्टिजीवः उदतिष्ठत् निद्रामिवातिक्रम्य सचेतनो बभूव ॥ ५१ ॥ ❀ ❀ अण्डमिति। विशेष इत्याख्या नाम यस्य तत् दशगुणाधिकैरुत्तरोत्तरैः बहिःस्थितप्रकृत्यावरणेनावृतैः रूपं मायिकम् ॥ ५२ ॥

श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

श्रोत्रादिलक्षणानुवादः नभो गुण इति सार्द्धद्वाभ्याम्। नभोगुणविशेषः शब्दोऽर्थो विषयो तस्य तच्छ्रोत्रमुच्यते। एवमग्रे स्पर्शनं त्वक् ॥ ४७—४८ ॥ ❀ ❀ परस्य कारणस्य धर्मः शब्दादिः अपरस्मिन् कार्ये समन्वयाद् दृश्यते। तथाहि नभसि शब्द एव वायौ शब्दस्पर्शौ तेजसि शब्दस्पर्शरूपाणि, जले शब्दस्पर्शरूपरसाः। अतः एवम्भूतात् समन्वयात् सर्वभावानां विशेषः शब्दस्पर्शादि रूपो भूमावेवोपलभ्यते ॥ ४९ ॥ ❀ ❀ एवं चतुर्विंशतिप्राकृततत्त्वगुणो दर्शितः, प्रकृतेस्तत्रैवान्तर्भावात् ब्रह्माण्डोत्पत्तिं दर्शयति। एतानीत्यादिना जगदादिः परमात्मा ॥ ५० ॥ ❀ ❀ अनुविद्धेभ्यः प्रेरितेभ्यः युक्तेभ्यो यूथीकृतेभ्यः ॥ ५१—५२ ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

श्रोत्रादीनां शब्दादिग्राहकत्वं प्रमाणत्वेनोक्तम्, तदेव तेषां लक्षणानीत्याह—सार्द्धद्वाभ्याम्—नभोगुण इति। तन्मात्ररूपोऽपि शब्द आकाशस्य गुणभूतो भवति। यथा कार्ये कारणप्रतीतिः, पटे तन्तुप्रतीतिवत्; तथा आकाशस्य शब्दो गुणः। एवमग्रेऽपि नभोगुणः शब्दोऽसाधारणः, न तु संयोगादिरूपः, स एवाऽर्थो विषयो यस्य तत् श्रोत्रम्। उच्यत इति प्रमाणम्, अनेनाऽन्ये व्याख्याताः। वायोर्गुणविशेषः स्पर्शः, तेजोगुणविशेषो रूपम्, अम्भोगुणविशेषो रसः, एवं भूमेर्गुणविशेषो गन्धः॥ ४७॥ ४८॥ ❀ ❀ कारणानुप्रवेशात् उत्तरोत्तरं धर्माधिक्यमाह—परस्येति। परस्य कारणस्य धर्मः, अपरस्मिन्कार्ये, कारणसमन्वयात् धर्मो दृश्यते। अतः स्वधर्मः कारणधर्मश्च कार्ये भवति। सर्वेऽपि विशेषाः, पञ्चाऽपि गुणाः, अन्तिमकार्ये पृथिव्यामेवेत्याह—अतो विशेष इति। साङ्ख्यशास्त्रत्वात् नाऽस्य विशेषतः सर्वबोधकत्वम्। वीणादिशब्दो वाङ्निमित्तक इति कारणसंबन्धेन तथात्वम्। चित्राणि च रूपाणि वरप्राप्तानि। सर्वेऽपि विशेषा भूमावेव उपलक्ष्यन्ते[1] दृश्यन्ते॥ ४९॥ ❀ ❀ एतेषामुत्पत्तिस्वरूपलक्षणान्युक्त्वा, कार्यतोऽपि तानि वक्तुम्, तेभ्यो ब्रह्माण्डोत्पत्तिमाह—एतानीति। यद्यचेतनेभ्य एव तत्त्वेभ्यः कार्यमुत्पद्येत, तदाऽस्मिन्सङ्घाते नाऽऽत्मा मृग्यः स्यात्, सर्वस्यैव जडत्वा[2]त्। अतः सङ्घातश्चेतनसहितानामिति वक्तुं केवलानामकारणत्वमाह—एतानि यदा, असंहत्य अमिलित्वा, मुख्यानि सप्त महादादीनि स्थितानीत्यर्थात्। तदा भगवान् कालप्राण्यदृष्टसत्त्वादिगुणैर्मिलितः सर्वजगत्कारण-कारणभूत एतान्युपाविशत्। अत्रैकं वाक्यमार्थिकं ल्य[3]पाऽऽक्षिप्यते। अथवा, भगवानेव असंहत्य, एतान्यमेलयित्वा, पश्चादु-पाविशदिति। अग्रे उत्पद्यमानं जगत् यथा चतुर्णामधीनं भवत्यात्मकालकर्मस्वभावानाम्, तदर्थं कालादिभिः सह प्रवेशः॥ ५०॥ ❀ ❀ ततो ब्रह्माण्डमुत्पन्नमित्याह—तत इति। ततो भगवत्प्रवेशानन्तरम्, तेन भगवता अनुविद्धेभ्यो योजनार्थं गुणान् गृहीत्वा सूच्येव विद्धेभ्यः, प्रथमतोऽचेतनमेवाऽण्डमुत्थितम्। यस्मादण्डादसौ पुरुषः पूर्वं तत्त्वेषु प्रविष्टः, स एव विराड्रूपो भूत्वा, उदतिष्ठत्॥ ५१॥ ❀ ❀ ब्रह्माण्डे चेतनाचेतनोत्पत्तिमुक्त्वा तस्य नामरूपे आह—एतदण्डमिति। विशेष इत्यस्य नाम। स्वयं सर्वतः पञ्चाशत्कोटियोजनविस्तृतं स्वतः। तत उत्तरोत्तरं पूर्वस्माद्दशगुणं वृद्धैस्तोयादिभिः सर्वतः परिवृतम्, अन्ततः प्रधानेन चाऽऽवृतम्। एवमस्य महत्त्वम्। अत्र स्थितसर्वजगतो भगवत्त्वेनाऽपि महत्त्वमाह—यत्र लोकवितानोऽयमिति। अयं सर्वोऽपि लोकविस्तारो भगवतो रूपम्। तस्मादेतद्भगवदाधारभूतम्॥ ५२॥

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः।

नभोगुण इत्यत्र। अत्र नभोगुणविशेषपदेन शब्दोल्लेखादन्योन्याश्रयोऽपि परिहृतो बोध्यः। यद्यप्यत्र गुणमात्रग्राहकत्वं लक्षणत्वेनोक्तम्, तथापि त्वग्दृशोर्द्रव्यग्राहकत्वमप्यस्ति। अन्येषां तु न, यदि स्यात्तदा परिमाणादिरपि द्रव्यगतो गृह्येतेति। अत्र तदनुक्तिस्तु शब्देऽव्यतिव्यापकत्वादवान्तरपदार्थानिरूपकत्वात् साधर्म्याप्रतिज्ञानाच्चेति ज्ञेयमिति दिक्॥ ४७॥ ४८॥ ❀ ❀ परस्येत्यत्र। स्पर्शरूपरसानां चतुस्त्रिद्विभूतेषु विद्यमानत्वेन सामान्यगुणत्वात् त्वक्चक्षूरसनानां लक्षणेषु गुणविशेषपद-मसङ्गतमित्याशङ्कानिरासायाहुः—कारणेत्यादि। तथा च, तेषु सामान्यत्वप्रतीतेः कारणसमन्वयप्रयुक्तत्वेन तेषां गुणने तदीयत्वा-भावान्न गुणविशेषत्वहानिरिति न तदसङ्गतिरित्यर्थः। 'परस्य' इत्यर्द्धेनैव चारितार्थ्यात् 'अतो विशेषः' इत्यर्द्धपद्यं व्यर्थमित्याशङ्काया-माहुः—साङ्ख्येत्यादि। तथा च वेदोक्तानां लोकसिद्धानां च धर्मान्तराणां यो भूमावुपलम्भः, सोऽपि तत्तत्कारणसमन्वयहेतुक एव, न त्वसतः सत्तारूप इति प्रमेयमुपलक्षणविधया निरूपयितुमिदमर्द्धम्, अतो न व्यर्थमित्यर्थः। तथात्वं वर्णपदादिरूपत्वम्। तेन शब्दोऽपि चित्रोऽतिरिक्त इति ज्ञापितम्॥ ४९॥ ❀ ❀ एतानीत्यत्र। सप्तेत्यादि। महदहंभूतानीति सप्त। अर्थादिति। घटेन जलमानयेत्युक्ते करणतानिर्वाहकत्वे सच्छिद्रेतरत्वं यथा करणतारूपार्थबलाद्वलाद्भासते, तथा स्थितिरप्यमेलननिर्वाह-कतया ल्यबर्थरूपार्थबलाद्भासत इत्यर्थः। कल्पनां विनापि श्लोकद्वयस्यैकवाक्यत्वे सुखे(न)प्रकृतार्थबोध इत्याशयेनाहुः—अथवेत्यादि। यदेत्यस्य व्याख्यानं पश्चादनेन क्रियते॥ ५०॥

### श्रीगिरिधरकृता बालप्रबोधिनी

श्रोत्रादीनां शब्दादिग्राहकत्वमुक्तं तदेव तेषां लक्षणमित्याह—पञ्चभिः श्लोकार्द्धैः। नभस आकाशस्य गुणविशेषः शब्दः अर्थो ग्राह्यो विषयो यस्य तच्छ्रोत्रमुच्यते। एवमग्रेऽपि वेदितव्यम्॥ ४७॥ ४८॥ ❀ ❀ ननु गुणविशेषशब्दे-नासाधारणगुणत्वं विवक्षितं तत्कथं घटते? शब्दादीनां वाय्यादिष्वपि दर्शनादित्याशङ्क्य अन्यत्र दर्शनं तु कारणान्वय-प्रयुक्तमेव, स्वतस्तु पूर्वोक्तप्रकारेण तत्र तत्रैवेत्याहुः—परस्येति। परस्य कारणस्याकाशादेर्धर्मः शब्दादिरपरस्मिन् कार्ये वाय्वादौ समन्वयात् आकाशादेरुपादानतयाऽनुवृत्तत्वात् हि यतो दृश्यते अतो हेतोः भावानामाकाशादीनां सर्व एव विशेषः शब्दादिगुणो

---

१. उपलभ्यन्ते. ख. घ। २. उद्गतत्वात्. क. ख. ङ. ३. कल्पनया. ग. अर्थबलात् घ.।

भूमावुपलक्ष्यते दृश्यते, तत्राकाशादिचतुर्णामन्वयात् । जलादिषु यथाऽन्वयमेव न सर्वः । आकाशे त्वन्यान्वया-भावादेकः शब्द एवेति ॥ ४९ ॥ ❀ ❀ एवं कारणोत्पत्तिमुक्त्वा ततः कार्योत्पत्तिमाह—एतानीति सार्द्धैस्त्रिभिः । यदा एतानि महदादीनि महदहङ्कारपञ्चमहाभूतानीति सप्त असंहत्य अमिलित्वा स्थितानि तथा भूतेभ्यः कार्योत्पत्यसम्भवात्तदा कालः क्षोभकः कर्म जीवादृष्टं गुणः सत्त्वादिः तैरुपेतः विशिष्टो जगदादिर्भगवान् उपाविशत् । तन्मात्राणि महाभूतेषु इन्द्रियाणि चाहङ्कारेऽन्तर्भाव्य सप्तेत्युक्तम् । अतः सर्वेष्वेव प्रवेशो बोध्यः ॥ ५० ॥ ❀ ❀ ततस्तत्प्रवेशानन्तरं तेन भगवत्प्रवेशेन अनुविद्धेभ्यः क्षुभितेभ्यः अतएव युक्तेभ्यः परस्परं प्रधानगुणभावेन मिलितेभ्यस्तत्त्वेभ्यः अचेतनमधिष्ठातृचेतनरहितं अण्डमुत्थितमुत्पन्नम् । किं तदण्ड-मित्यपेक्षायां तद्विशिनष्टि—यस्मादण्डादसौ विराट् समष्टिपुरुषः उदतिष्ठत् प्रादुरभूत् ॥ ५१ ॥ ❀ ❀ एतच्च विशेषाख्यमण्डं बहिः प्रधानेन व्यापकेनावृतैः क्रमवृद्धैः क्रमश उत्तरोत्तरमधिकैः—कियदाधिक्यं तत्राह—दशोत्तरैः उत्तरोत्तरदशगुणाधिकैः तोयादिभिः पृथिव्यप्तेजोवाय्वाकाशाहङ्कारमहत्तत्त्वैः परिवृतम् । यत्राण्डेऽयं देवमनुष्यादिलोकवितानः लोकविस्तारोऽस्ति । एवमनेकधा भेदप्रतीतेः । "सर्वं खल्विदं ब्रह्म" इति श्रुतिविरोधमाशङ्क्याह—रूपमिति । एतत्कार्यकारणात्मकं सर्वं भगवतोऽचिन्त्य-शक्तिमतो हरेः रूपमेव, न ततः पृथगित्यर्थः ॥ ५२ ॥

## हिन्दी अनुवाद

आकाशका विशेष गुण शब्द जिसका विषय है, वह श्रोत्रेन्द्रिय है, वायुका विशेष गुण स्पर्श जिसका विषय है, वह त्वगिन्द्रिय है ॥ ४७ ॥ ❀ ❀ तेजका विशेष गुण रूप जिसका विषय है, वह नेत्रेन्द्रिय है; जलका विशेष गुण रस जिसका विषय है, वह रसनेन्द्रिय है और पृथ्वीका विशेष गुण गन्ध जिसका विषय है उसे घ्राणेन्द्रिय कहते हैं ॥ ४८ ॥ ❀ ❀ वायु आदि कार्य-तत्त्वोंमें आकाशादि कारण-तत्त्वोंके रहनेसे उनके गुण भी अनुगत देखे जाते हैं; इसलिये समस्त महाभूतोंके गुण, शब्द, स्पर्श, रूप, रस और गन्ध केवल पृथ्वीमें ही पाये जाते हैं ॥ ४९ ॥ ❀ ❀ जब महत्तत्त्व, अहङ्कार और पञ्चभूत—ये सात तत्त्व परस्पर मिल न सके—पृथक्-पृथक् ही रह गये, तब जगत्के आदिकारण श्रीनारायणने काल, अदृष्ट और सत्त्वादि गुणोंके सहित उनमें प्रवेश किया ॥ ५० ॥ ❀ ❀ फिर परमात्माके प्रवेशसे क्षुब्ध और आपसमें मिले हुए उन तत्त्वोंसे एक जड अण्ड उत्पन्न हुआ । उस अण्डसे इस विराट् पुरुषकी अभिव्यक्ति हुई ॥ ५१ ॥ ❀ ❀ इस अण्डका नाम विशेष है, इसीके अन्तर्गत श्रीहरिके स्वरूपभूत चौदहों भुवनोंका विस्तार है । यह चारों ओरसे क्रमशः एक-दूसरे-से दसगुने जल, अग्नि, वायु, आकाश, अहङ्कार और महत्तत्त्व–इन छः आवरणोंसे घिरा हुआ है । इन सबके बाहर सातवाँ आवरण प्रकृतिका है ॥ ५२ ॥

हिरण्मयादण्डकोशादुत्थाय सलिलेशयात् । तमाविश्य महादेवो बहुधा निर्बिभेद खम् ॥ ५३ ॥
निरभिद्यतास्य प्रथमं मुखं वाणी ततोऽभवत् । वाण्या वह्निरथो नासे प्राणोऽतो घ्राण एतयोः ॥ ५४ ॥
घ्राणाद्वायुरभिद्येतामक्षिणी चक्षुरेतयोः । तस्मात्सूर्यो व्यभिद्येतां कर्णौ श्रोत्रं ततो दिशः ॥ ५५ ॥
निर्बिभेद विराजस्त्वग्रोमश्मश्र्वादयस्ततः । तत ओषधयश्चासन् शिश्नं निर्बिभिदे ततः ॥ ५६ ॥
रेतस्तस्मादाप आसन्निरभिद्यत वै गुदम् । गुदादपानोऽपानाच्च मृत्युर्लोकभयङ्करः ॥ ५७ ॥
हस्तौ च निरभिद्येतां बलं ताभ्यां ततः स्वराट् । पादौ च निरभिद्येतां गतिस्ताभ्यां ततो हरिः ॥ ५८ ॥
नाड्योऽस्य निरभिद्यन्त ताभ्यो लोहितमाभृतम् । नद्यस्ततः समभवन्नुदरं निरभिद्यत ॥ ५९ ॥
क्षुत्पिपासे ततः स्यातां समुद्रस्त्वेतयोरभूत् । अथास्य हृदयं भिन्नं हृदयान्मन उत्थितम् ॥ ६० ॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

तस्मिन्नध्यात्मादिविभागमाह । हिरण्मयादिति नवभिः । उत्थायौदासीन्यं विहाय तमाविश्याधिष्ठाय महांश्चासौ देवश्च खं छिद्रम् ॥ ५३ ॥ ❀ ❀ वाण्या सह वह्निरभवत् प्राविशत् । नासे निरभिद्येताम् । प्राणोतः प्राणेन ऊतः स्यूतः सन् घ्राण एतयोर्नासिकयोरभवदित्यनुषंगः ॥ ५४ ॥ ❀ ❀ घ्राणादनंतरं वायुश्च प्राणोत इति विशेषणं सर्वेन्द्रियेष्वपि द्रष्टव्यम् । न्यभिद्यतामन्वभिद्येतामिति पाठद्वयेऽप्येक एवार्थः । ततो दिशः प्राविशन् ॥ ५५ ॥ ❀ ❀ आदिशब्देन केशाः ॥ ५६ ॥ ॥ ५७ ॥ ❀ ❀ स्वराडिंद्रः हरिर्विष्णुः ॥ ५८ ॥ ❀ ❀ आभृतं जातम् ॥ ५९ ॥ ६० ॥

---

१. प्राचीने पाठे ? चिन्हात् । २. पर्यन्तांशो मूले न विद्यते टिप्पण्यां वर्तते । ३. प्रा०पा०—माश्रितम् ।

### वंशीधरकृतो भावार्थदीपिकाप्रकाशः

तस्मिन्नंडे । तमंडकोशम् । देवो हरिः । निर्बिभेद पृथक् चकार । इह जलेंद्रियतदधिष्ठातृदेवानां भगवदिच्छया तदानीमेवाविर्भावो जातस्ततः पूर्वं तेषामसत्त्वात् । तदुक्तं "सृजत्यमोघसंकल्पः कल्पादौ विविधास्तनूः । देहेंद्रियादिभेदेन सर्ववृद्धिकरो हरिः" इत्यादिपुराणे यमनु वेदगणा उभय इति सूचितं देवस्तुतौ ॥ ५३ ॥ ❀ ❀ धातूनामनेकार्थत्वाद्भवतेः प्रवेशार्थमभिप्रेत्याहाभवत्प्राविशदिति । तत इत्यादिपञ्चम्यंतानामनंतरार्थो वोध्यः ॥ ५४ ॥ ❀ ❀ इत्यर्थ-इति व्याख्येयम् ॥ ५५ ॥ ५६ ॥ ५७ ॥ ❀ ❀ हरिस्तदाविष्टो देवविशेष इति संदर्भः ॥ ५८ ॥ ❀ ❀ अस्य विराजः लोहितं रक्तादि ॥ ५९ ॥ ६० ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

तस्मिन्नण्डे प्रविष्टस्य तस्य शयनानभिधानादुत्थानासंभवादौदासीन्यं विहायेति लाक्षणिकोऽर्थः, छिद्रमिन्द्रियाधिष्ठानरूपं निर्बिभेद पृथक् कृतवान् ॥ ५३ ॥ ❀ ❀ मुखं व्यष्टिमुखानां कारणांशं ततस्तस्मिन्मुखे अभवत्प्राविशत् तत्र मुखमधिभूतं वाणी अध्यात्मं वह्निरधिदैवम् । एवं परत्रापि ज्ञेयम् । घ्राणेन्द्रियमभवत्प्राविशत् ॥ ५४ ॥ ❀ ❀ प्राणादनन्तरमिति व्याख्यानादग्रेऽपि पञ्चम्यन्तानां तदनन्तरमिति व्याख्या ज्ञेया । तस्मात्तस्मिंश्चक्षुषि सूर्यः प्राविशत्, ततः श्रोत्रप्रवेशानन्तरमभवन् प्राविशन्निति व्याख्यानादत्र सर्वत्र भवतेः प्रवेशार्थो विवक्षितः, अस्तिभूकृञर्थास्सर्वत्रानुगता इति सामान्यार्थो धातुः काष्ठानि कुर्वित्यत्राहरेतिवद्विशेषपरो दृष्टः ॥ ५५ ॥ ❀ ❀ त्वक् चर्माधिष्ठानमधिभूतं रोमादयोऽध्यात्मं ततः रोमश्मश्र्वादिभ्योऽनन्तरमोषधयः ओषध्यः महीरुहाभिमानिदेवताः अधिदैवं शिश्नं रेतोऽधिष्ठानं ततस्तदनन्तरम् ॥ ५६ ॥ ❀ ❀ रेत इन्द्रियम् । तस्माद्रेतसोऽनन्तरम् आपस्तदभिमानिन्यो देवता आसन्प्राविशन् । गुदादनन्तरमपानेन्द्रियं कर्तृ गुदं प्राविशत् । अपानानन्तरं मृत्युर्देवता प्राविशत् ॥ ५७ ॥ ❀ ❀ ताभ्यामनन्तरं बलं दानादानक्रियाख्यमिन्द्रियं निर्भिन्नं गतिः गत्याख्यकर्मेन्द्रियं हरिस्तदावेशावतारो देवताविशेषः ॥ ५८ ॥ ❀ ❀ नाड्य इत्यर्द्धकम् । लोहितं रक्तादिसञ्चारकशक्तिः नद्यस्तदभिमानिन्यो देवताः प्राविशन् ॥ ५९ ॥ ❀ ❀ क्षुत्पिपासे तदुद्दीपकशक्तिविशेष इन्द्रियम् । समुद्रस्तदभिमानिदेवः अभूत्प्रविवेश । ततः हृदयाधिष्ठानादनन्तरं मन इन्द्रियं जातम् ॥ ६० ॥

### श्रीमद्वीरराघवव्याख्या

एवं महदादिचतुर्मुखान्तसृष्टिरुक्ता । अथ समष्टिभूतचतुर्मुखशरीरस्य तत्तदवयवाद्देवादिव्यष्टिशरीराणामिन्द्रियतत्स्थानतदभिमानिदेवतानां विभागं विवक्षुः सोऽपि विभागश्चतुर्मुखशरीरकपरमात्मकर्तृक एवेत्याह । हिरण्मयादिति । सलिलेशयात् उषिताद्धिरण्मयात्प्रकाशबहुलादण्डकोशादुत्थायाण्डकोशे शयानोऽनिरुद्धरूपी भगवान् तत उत्थाय प्रवृत्त्युन्मुखो भूत्वा तं चतुर्मुखमाविश्य महादेवो भगवान् खमिन्द्रियगणं बहुधाऽनेकधा निर्बिभेद समष्टिभूतचतुर्मुखशरीरस्थमिन्द्रियगणं व्यष्टिरूपेणानेकधा विभक्तमकरोदित्यर्थः ॥ ५३ ॥ ❀ ❀ विभागमेवाह । निरभिद्यतेत्यष्टभिः । अस्य ब्रह्मणः प्रथमं मुखं निरभिद्यत} 'नटस्य शृणोतीतिवद'स्येति पञ्चम्यर्थस्यैव शेषत्वविवक्षया षष्ठी बोध्या, समष्टिभूतब्रह्मशरीरमुखाद्देवादीनां वागिन्द्रियाधिष्ठानं व्यष्टिमुखं विभक्तमभूदित्यर्थः । ततो वाणी वाग्व्यष्टिरभवत्, वाण्या वागिन्द्रियात्तदधिष्ठाता वह्निरभवद्विभक्तोऽभूत् । अथोऽनन्तरमस्य नासे घ्राणेन्द्रियाधिष्ठाने नासाबिले व्यष्टीनां निरभिद्येताम् । अतः नासाभ्यां घ्राणाः घ्राणेन्द्रियव्यष्टिः एतयोरेतस्या घ्राणेन्द्रियस्याधिष्ठानापेक्षया एतयोरिति द्विवचननिर्देशः, यद्वा एतयोर्नासिकयोः प्राणः प्राणाधीनः घ्राण एतयोरभवदित्यनुषङ्गः ॥ ५४ ॥ ❀ ❀ घ्राणादनन्तरं तदधिष्ठाता वायुश्च प्राणाधीनत्वं सर्वेन्द्रियेष्वपि द्रष्टव्यं, तथाहि छन्दोगवाजसनेयिनां प्राणविद्यायाम् 'एता ह वै देवता अहं श्रेयसे व्यूदिर अहं श्रेयसे विवदमाना, इति चोपक्रम्य वागाद्येकैकापक्रमणे अन्येषां सप्राणानामिन्द्रियाणां शरीरस्य च स्थितिं तत्कार्यं चाविकलं प्रतिपाद्य प्राणोत्क्रमणे सर्वेषां विशरणमकार्यकरत्वं चाभिधाय सर्वेषां प्राणाधीनस्थितित्वमभिहितम् । अक्षिणी चक्षुरिन्द्रियाधिष्ठाने भिद्येतां विभक्ते अभवतामेतयोरक्ष्णोश्चक्षुरिन्द्रियं निरभिद्यत । तस्माच्चक्षुषः सूर्यश्चक्षुषोऽधिष्ठाता अभवत् । कर्णौ श्रोत्रेन्द्रियाधिष्ठाने निरभिद्येतां ततः श्रोत्रेन्द्रियं तदधिदेवता दिशश्च निरभिद्यन्त ॥ ५५ ॥ ❀ ❀ विराजो ब्रह्मणः रोमश्मश्र्वादयः त्वगिन्द्रियाधिष्ठानभूताः ततस्त्वगिन्द्रियं ततस्तदधिदेवता ओषधयश्चासन् एवं । शिश्नमुपस्थेन्द्रियाधिष्ठानम् ॥५६॥ ❀ ❀ रेत उपस्थेन्द्रियं तदधिदेवता आपः गुदं पाय्विन्द्रियाधिष्ठानं पाय्विन्द्रियरूपोऽपानः प्राणस्तदधिष्ठाता लोकसंहर्ता मृत्युः ॥ ५७ ॥ ❀ ❀ हस्तौ पाणीन्द्रियाधिष्ठानं बलाख्यं प्राणेन्द्रियं तदधिष्ठाता स्वराट् स्वराडत्रेन्द्रः "स्वराडिन्द्रः प्रथममासीत्" इति श्रुतेः । पादौ पादेन्द्रियाधिष्ठानं गत्याख्यं प्राणेन्द्रियं तदधिदेवता हरिरुपेन्द्रः ॥ ५८ ॥ ❀ ❀ अस्य ब्रह्मणः नाड्यः अधिष्ठानम् । आभूतं पूर्णं लोहितमिन्द्रियस्थानीयं तदधिदेवता नद्यः उदरमधिष्ठानम् ॥ ५९ ॥ ❀ ❀ क्षुत्पिपासे इन्द्रियस्थानीये समुद्रोऽधिदेवता हृदयपुण्डरीकाकारमधिष्ठानं मनः सङ्कल्पाख्यवृत्त्यवच्छिन्नान्तरिन्द्रियम् ॥ ६० ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

इदानीमुदतिष्ठदसौ इत्युक्तं विवृणोति। हिरण्मयादिति। प्रासादात्प्रेक्षत इतिवत् द्वितीयार्थे पञ्चमी। महादेवो देवोत्तमो हरिः सलिलेशयं हिरण्मयाण्डकोशमुत्थायोत्थाप्य तदन्तः प्रविश्य स्वस्मादुत्पन्नस्य विराट्पुरुषस्याण्डवत् स्थितं शरीरं पुनः समाविश्य यथा सन्निधानविशेषो भवति तथान्तः स्थित्वा मुखविवरादिलक्षणं खमाकाशं निर्बिभेद व्यक्तमकरोदित्यन्वयः॥ ५३॥ ❀ ❀ ब्रह्मशरीरस्य मुखादिव्यक्तिप्रकारं वक्ति। निरभिद्यतेत्यादिना। अस्य ब्रह्मणः प्रथमं मुखं निरभिद्यत व्यक्तमभूत् ततो मुखाद्वाणी वागिन्द्रियं तस्माद्वागिन्द्रियात्तदभिमानी वह्निरभूदित्येवमेवोत्तरत्रानुसन्धेयं, नासे नासापुटे घ्राणो नाम नासिका अध्यात्माधिदैवभेदेन एकस्य प्राणो वायुरिति नामद्वयम्॥ ५४॥ ❀ ❀ दिशः दिग्देवताः॥ ५५॥ ❀ ❀ विराजः ब्रह्मणः ततो रोमादिभ्यः शिश्नं लिङ्गं तत उपस्थेन्द्रियम्॥ ५६॥ ❀ ❀ ततो रेतः तस्माद्रेतसो गुदशब्दस्तु गोलकेन्द्रिययोरपि वाचकः, गुदात्पाय्विन्द्रियं ततोऽपानो मृत्युर्मरणलक्षणः॥ ५७॥ ❀ ❀ स्वराडिन्द्रस्ताभ्यां पादाभ्यां गतिर्गन्तव्यमिन्द्रियं तदिन्द्रियाद्धरिरित्यत्रेदं तात्पर्यमिन्द्रियादियज्ञदेवनामाभिमानी तदन्तर्यामी हरिश्च[1] ब्राह्मणाङ्गुष्ठजलपायिनां फलदानार्थत्वेन कृतसन्निधानविशेषत्वाद्धरिरिति। 'यज्ञनामा तु देवोऽन्यो विज्ञेयः पाददेवता।' तमाविष्टो हरिर्नित्यं तमाहुः पाददैवतम्। इति वचनात्॥ ५८॥ ❀ ❀ विरिञ्चिशरीरान्नाड्युत्पत्तिं वक्ति। नाड्यश्चेति। आहृतमुत्पन्नं ततो रुधिरात्तत उदरात्॥ ५९॥ ❀ ❀ तयोः क्षुत्पिपासयोः अथोदरोत्पत्त्यनन्तरं भिन्नं व्यक्तम्॥ ६०॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

खमाकाशं बहुधा निर्बिभेद पृथक् पृथक् कृतवान्॥ ५३॥ ❀ ❀ मुखं व्यष्टिमुखानां कारणांशमेवं वाण्यपि॥ ५४॥ ५५॥ ❀ ❀ ओषध्य आपश्च तत्तदभिमानिन्यः॥ ५६॥ ५७॥ ❀ ❀ हरिस्तदावेशावतारो देवताविशेषः॥ ५८॥ ❀ ❀ नाड्य इत्यर्धकम्। लोहितं रक्तादिसञ्चारिका शक्तिः॥ ५९ ६०॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

तस्मिन्नध्यात्मादिविभागमाह। हिरण्मयादिति। आविश्य अधिष्ठाय महांश्चासौ देवश्च बहुविधं खं छिद्रं निर्बिभेद पृथक् पृथक् चकार॥ ५३॥ ❀ ❀ वाण्या सह वह्निरभवत् प्राविशत् नासे निरभिद्येतां प्राणोतः प्राणेन स्यूतः सन् घ्राणः एतयोर्नासयोरभवदित्यनुषङ्गः। प्राणोत इति विशेषणं सर्वेन्द्रियेषु लिङ्गविपरिणामेन द्रष्टव्यम्॥ ५४॥ ❀ ❀ घ्राणादनन्तरं वायुराविशत्। एवमेवाग्रेऽपि पञ्चम्यन्तानां तदनन्तरमिति व्याख्या ज्ञेया। सूर्योऽनुभिद्य तां न्यभिद्य तामिति पाठद्वयम्॥ ५५॥ ५६॥ ५७॥ ❀ ❀ स्वराट् इन्द्रः हरिः हरिणा आविष्टो देवविशेष इति सन्दर्भः॥ ५८॥ ❀ ❀ लोहितं रक्तादिसञ्चारकमिद्रियमाभृतं जातम्॥ ५९॥ ❀ ❀ हृदय एव मनआद्यन्तःकरणचतुष्टयस्याधिष्ठानं गिरां पतिर्ब्रह्म॥ ६०॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

हिरण्मयात्। भगवत्प्रकाशयुक्तात् महादेवः सर्वदेवदेवो भगवान् उत्थाय आत्मानं पृथक् विभाव्य आविश्य अधिष्ठाय खं छिद्रम्॥ ५३॥ ❀ ❀ अस्य विराजः प्रथमं मुखं निरभिद्यत ततस्तत्र वाणी वागिन्द्रियं तया सह वह्निश्चाभवत् विभक्तोऽभून्। नासे निरभिद्येताम् एतयोः नासयोः प्राणेनोतः स्यूतः अभवदित्यनुषङ्गः। प्राणोत इति विशेषणं सर्वेषु इन्द्रियेषु योज्यम्॥५४॥ ❀ ❀ घ्राणाद्वायुरभवन् दिशः श्रोत्रेन्द्रियदेवता निरभिद्यन्॥ ५५॥ ❀ ❀ आदिना केशाः ततस्तत्र॥ ५६॥ ❀ ❀ रेतस्तस्मात् आपः जलानि॥ ५७॥ ❀ ❀ स्वराडिन्द्रः हरिर्विष्णुः॥ ५८॥ ❀ ❀ आभृतं जातम्॥ ५९॥ गिरां पतिः ब्रह्मा॥ ६०॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या।

स बहुकालं पुरुषत्वसम्पादनार्थं तस्यां पुरि शयनं कृतवान् 'पुरि शेते' इति पुरुषपदनिर्वचनात्। यावदयं शयनं कृतवान्, तावत्पूर्वमनुवेदरूपेण प्रविष्टा भगवदंशा भोगं न प्राप्तवन्तः। यदा तु पुनस्तत उत्थाय तस्मात् पृथग्भूतः सन् तत्र निविष्टः, तदा सर्वांशानां भोगार्थं तत्र स्थानानि जातानीत्याह—हिरण्मयादिति। प्रकाशबहुलात् सुवर्णमयात् सलिले विद्यमानान्नारायणशब्दवाच्यात् विराड्देहादुत्थाय, पुनस्तमाविश्य सर्वत्र विद्यमानमाकाशं बहुधा निर्बिभेद, बहूनि छिद्राणि कृतवान्। भगवदुत्थानेऽपि कोशस्य नाशाभावार्थं हिरण्मयत्वमुक्तम्। रक्षसां बाधाभावार्थं सलिलेशयत्वमुक्तम्। महादेवो हि अल्पनिरूप्यो भवती-

---

१. यथा वैष्णवसिद्धान्ते शिवार्चनादेर्विधानाभावेऽपि तत्कुर्वतां तद्योग्यानित्यफलादिदातृत्वं मुख्यतो हरेरेव, तथात्रापि पाकाभिमानियज्ञस्य तज्जलपायिनां फलदाने स्वातन्त्र्याभावात् तादृशफलदानाय हरिसन्निधानम्, नतु वैष्णवानां कर्तव्यत्वेन विधायकमिति सत्संप्रदायः। अस्मिन् विषये विष्णुसंहितोक्तप्रमाणानि सन्ति। २. अनुवेध. क. अनुस्वेद. घ. २. पुनः. क. घ. ङ.।

त्यल्पैः सहितः समर्थस्तत्र शरीरे छिद्राणि कृतवान् । पुनरपि प्रविष्टोऽयं भेदमात्रं कृतवानिति पुरुषत्वमेव स्थितम् । ना'ऽनेन विराजः कार्यकरणसामर्थ्यं भवति । यथा प्रतिमादौ भगवान् तिष्ठति, तथैवाऽयं स्थित इति ज्ञातव्यम्, अन्यथा तत्त्वेभ्य आत्मविवेको न स्यात् ॥ ५३ ॥ ❀ ❀ छिद्राणां विनियोगमाह—निर्भिद्यतेत्यष्टभिः—प्रथमत आस्यं निर्भिन्नं विवरात्मकम् । तस्य मुखमिति नाम । अस्येति पाठः । प्रथममस्य मुखं निर्भिन्नम्, ततो वाणी वागिन्द्रियं तत्राऽभवत् प्रविष्टम्, वाण्या सह वह्निरपि तत्राऽभवत् अथो छिद्रान्तरे भिन्नप्रक्रमेण नासापुटे निरभिद्येताम् । तयोर्घ्राणमिन्द्रियं निविष्टम् । तत्र देवतया विद्धमित्याह—प्राणोत इति । प्राणेन उतः स्यूतः सम्बद्धः । उभयोरेक एव निविष्टः । अयं प्राणः नेन्द्रियदेवतारूपः, किन्तु सर्वनियामक आसन्यात्मकः ॥ ५४ ॥ ❀ ❀ तस्य तत्र कथनप्रयोजनमाह—प्राणादिति । तस्मात् प्राणात् वायुरिन्द्रियदेवतारूपो निरभिद्यत । भगवत्कृतसृष्टावश्विनीकुमाराविन्द्रियदेवता, भगवदर्थसृष्टौ तु वायुरिति विशेषः । ततोऽक्षिणी गोलके । उभयोरपि चक्षुरित्येकमिन्द्रियम्, तस्मात्सूर्य आविर्भूतः । कर्णावन्वभिद्येताम्, ततः श्रोत्रम्, ततो दिशः । विराजस्त्वक् निर्भिन्ना । निर्बिभेदेत्याविरभूदित्यर्थः । तत्र लोम इन्द्रियम्, श्मश्रुकेशाश्च लोमविशेषाः, तत्र देवता ओषधयः । अस्यां सृष्टौ त्वक्चर्मणोरैक्यम् । स्पर्शस्त्वगिन्द्रियेण । वायुर्देवता केन गृह्यत इति पूर्वमुक्तम् । शिश्नं गोलकम् । रेत इन्द्रियम्, आपो देवता 'आप एव पुरुषाकारा भवन्ति' इति । पूर्वं को देवः ? सर्वत्र वैलक्षण्ये सृष्टिभेदो नियामकः । गुदं पायुस्थानम्, अपान इन्द्रियम् । तत्र मृत्युर्देवः । स च लोकभयङ्कर इति वैराग्यार्थमुक्तम् । मृत्युरुपर्येव तिष्ठति, मध्ये मृत्युरिति च । हस्तौ गोलकस्थानीयौ, बलमिन्द्रियम् । ताभ्यां सहैव निर्गतमिति तृतीया । ततो बलात् स्वराट् इन्द्रः । एवं पादावपि गतिरिन्द्रियम् । ततो गतिरूपात् हरिर्विष्णुर्देवः । नाड्यो गोलकम् । आसमन्तात् भृतं लोहितमिन्द्रियम् । आभृतं जातमिति वा । नद्यो देवताः । उदरं गोलकम् । क्षुत्पिपासे इन्द्रियम् । समुद्रो देवता । हृदयं चतुर्णां गोलकम् । तत्रैकं मन इन्द्रियम् । मनसः सकाशाज्जातश्चन्द्रमास्तस्य देवः । बुद्धिरपीन्द्रियम् । गिरां पतिर्देवः । अहङ्कारः इन्द्रियम्, रुद्रो देवता । चित्तमिन्द्रियम्, चैत्यो जीवो देवता इति । एते सर्वे तत्तत्स्थानेऽभिव्यक्ता भगवदंशाः, चैत्यो मुख्यो भगवदंशः ॥ ५५ ॥ ५६ ॥ ५७ ॥ ५८ ॥ ५९ ॥ ६० ॥ ६१ ॥

## श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

हिरण्मयादित्यस्याभासे । पूर्वमनुवेदरूपेण प्रविष्टा इति । पूर्वं प्रवेशमनुलक्षीकृत्य वेदरूपेण शब्दार्थयोर्नित्यसम्बन्धात् तत्तत्प्रतिपाद्यनित्यपरिच्छिन्नभगवदवयवरूपेण प्रविष्टा इत्यर्थः । अल्पनिरूप्यो भवतीति । महत्त्वस्य सापेक्षवृत्तिकत्वात् तथा भवति । अनेनेति । क्रियादिरहितेन केवलावेशेन । सक्रियत्वेन (?) प्रयोजनमाहुः—अन्यथेत्यादि । अन्यथेति निष्क्रियतया स्थितौ । निर्भिद्यतेत्यत्र । उभयोरिति । नासयोः ॥ ५४ ॥

## श्रीगिरिधरकृता बालप्रबोधिनी

एवं ब्रह्माण्डोत्पत्तिमुक्त्वा तत्र विराडुत्पत्तिं निरूपयन् अध्यात्मादिविभागमाह—हिरण्मयादिति नवभिः । सलिलेशयात् स्थितात् हिरण्मयात् प्रकाशबहुलादण्डकोशात् उत्थाय तत्रस्थ एवौदासीन्यं त्यक्त्वा तमाविश्य तमधिष्ठायैव महांश्चासौ देवश्च महादेवो भगवान् खमिन्द्रियच्छिद्रं बहुधा निर्बिभेदेत्यन्वयः ॥ ५३ ॥ ❀ ❀ तद्विभागमेवाह—निरभिद्यतेत्यष्टभिः । अस्य विराजः प्रथमं मुखं निरभिद्यत । ततस्तत्र मुखे वाणी वागिन्द्रियं तया वाण्या सह तदधिष्ठाता वह्निरभवत् प्राविशत् । अथो अनन्तरं नासे नासिकाच्छिद्रे निरभिद्येताम् । एतयोश्छिद्रयोरधिष्ठानभूतयोः प्राणोतः प्राणेन उतः स्यूतः विशिष्टः सन् घ्राण इन्द्रियमभवदित्यनुषङ्गः ॥ ५४ ॥ ❀ ❀ प्राणोत इति विशेषणं सर्वेन्द्रियेष्वपि द्रष्टव्यं प्राणाधीनस्थितिकत्वात् । घ्राणादनन्तरं वायुश्च तद्देवताऽभवत् । अन्यत्र घ्राणाधिष्ठातृतयाऽश्विनीकुमारावुक्तौ, अत्र तु वायुरिति विशेषः । अक्षिणी इन्द्रियाधिष्ठाने अभिद्येताम्, एतयोश्चक्षुरिन्द्रियमभवत् । तस्मात्तदनन्तरं सूर्यो देवता प्राविशदिति शेषः । कर्णौ इन्द्रियाधिष्ठाने अनु अनन्तरमभिद्येताम् । ततस्तत्र श्रोत्रमिन्द्रियं दिशश्च देवताः प्राविशन् ॥ ५५ ॥ ❀ ❀ ततश्च विराजस्त्वक् अधिष्ठानं निर्बिभेद । ततस्तत्र रोमादय इन्द्रियस्थानापन्ना ज्ञेयाः । अत्र विशेषो द्वितीयस्कन्धे व्याख्यातो द्रष्टव्यः । आदिपदेन केशाः । तत्र ओषधयश्च देवता आसन् । ततश्च शिश्नमधिष्ठानं जातम् ॥ ५६ ॥ ❀ ❀ रेत इन्द्रियं तस्मात्, तस्मिन्नापः देवता आसन् । ततश्च गुदमधिष्ठानं निरभिद्यत । गुदात् गुदोत्पत्तेरनन्तरं तत्र अपान इन्द्रियमासीत् । अपानात् अनन्तरं च सर्वलोकभयङ्करो मृत्युस्तत्र देवता आसीत् ॥ ५७ ॥ ❀ ❀ हस्तौ निरभिद्येतां, ताभ्यां तयोर्बलमिन्द्रियमासीत्, स्वराट् इन्द्रश्च ततस्तस्य देवताऽऽसीत् । पादौ च निरभिद्येतां, ताभ्यां तयोर्गत्याख्यमिन्द्रियमासीत्, ततस्तत्र हरिरुपेन्द्रो देवताऽऽसीत् ॥ ५८ ॥ ❀ ❀ अस्य विराजः नाड्योऽधिष्ठानभूताः निरभिद्यन्त, ताभ्यस्तासु लोहितमिन्द्रियस्थानीयमाभृतं पूर्णम्, ततस्तस्य नद्यो देवताः समभवन् ।

---

२. नो चेत्. क. अनेनैव. घ. ङ. । १. निरभिद्यतः. ख. १. निरभिद्यत. क. ।

उदरमधिष्ठानं निरभिद्यत ॥ ५९ ॥ ❀ ❀ ततस्तत्र क्षुत्पिपासे इन्द्रियस्थानीये स्याताम्, एतयोर्देवता तु समुद्रोऽभूत्। अथ चास्य हृदयं कमलाकारं भिन्नम्, हृदयात् हृदये मन इन्द्रियं उत्थितं स्थितम् ॥ ६० ॥

## हिन्दी अनुवाद

कारणमय जलमें स्थित उस तेजोमय अण्डसे उठकर उस विराट् पुरुषने पुनः उसमें प्रवेश किया और फिर उसमें कई प्रकारके छिद्र किये ॥ ५३ ॥ ❀ ❀ सबसे पहले उसमें मुख प्रकट हुआ, उससे वाक्-इन्द्रिय और उसके अनन्तर वाक्का अधिष्ठाता अग्नि उत्पन्न हुआ। फिर नाकके छिद्र ( नथुने ) प्रकट हुए उनसे प्राणसहित घ्राणेन्द्रिय उत्पन्न हुई ॥ ५४ ॥ ❀ ❀ घ्राणके बाद उसका अधिष्ठाता वायु उत्पन्न हुआ। तत्पश्चात् नेत्रगोलक प्रकट हुए, उनसे चक्षु-इन्द्रिय प्रकट हुई और उसके अनन्तर उसका अधिष्ठाता सूर्य उत्पन्न हुआ। फिर कानोंके छिद्र प्रकट हुए, उनसे उसकी इन्द्रिय श्रोत्र और उसके अभिमानी दिग्देवता प्रकट हुए ॥ ५५ ॥ ❀ ❀ इसके बाद उस विराट् पुरुषके त्वचा उत्पन्न हुई। उससे रोम मूँछ-दाढ़ी तथा सिरके बाल प्रकट हुए। और उसके बाद त्वचाकी अभिमानी औषधियाँ ( अन्न आदि ) उत्पन्न हुईं। इसके पश्चात् लिङ्ग प्रकट हुआ ॥ ५६ ❀ ❀ उससे वीर्य और वीर्यके बाद लिङ्गका अभिमानी आपोदेव ( जल ) उत्पन्न हुआ। फिर गुदा प्रकट हुई,उससे अपानवायु और अपानके बाद उसका अभिमानी लोकोंको भयभीत करनेवाला मृत्युदेवता उत्पन्न हुआ ॥ ५७ ॥ ❀ ❀ तदनन्तर हाथ प्रकट हुए, उनसे बल और बलके बाद हस्तेन्द्रियका अभिमानी इन्द्र उत्पन्न हुआ। फिर चरण प्रकट हुए, उनसे गति ( गमनकी क्रिया ) और फिर पादेन्द्रियका अभिमानी विष्णुदेवता उत्पन्न हुआ ॥ ५८ ॥ ❀ ❀ इसी प्रकार जब विराट् पुरुषके नाडियाँ प्रकट हुईं, तो उनसे रुधिर उत्पन्न हुआ और उससे नदियाँ हुईं। फिर उसके उदर ( पेट ) प्रकट हुआ ॥ ५९ ॥ ❀ ❀ उससे क्षुधा-पिपासाकी अभिव्यक्ति हुई और फिर उदरका अभिमानी समुद्रदेवता उत्पन्न हुआ। तत्पश्चात् उसके हृदय प्रकट हुआ, हृदयसे मनका प्राकट्य हुआ ॥ ६० ॥

मनसश्चन्द्रमा जातो बुद्धिर्बुद्धेर्गिरां पतिः। अहङ्कारस्ततो रुद्रश्चित्तं चैत्यस्ततोऽभवत् ॥ ६१ ॥
एते ह्यभ्युत्थिता देवा नैवास्योत्थापनेऽशकन्। पुनराविविशुः खानि तमुत्थापयितुं क्रमात् ॥ ६२ ॥
वह्निर्वाचा मुखं भेजे नोदतिष्ठत्तदा विराट्। घ्राणेन नासिके वायुर्नोदतिष्ठत्तदा विराट् ॥ ६३ ॥
अक्षिणी चक्षुषाऽऽदित्यो नोदतिष्ठत्तदा विराट्। श्रोत्रेण कर्णौ च दिशो नोदतिष्ठत्तदा विराट् ॥ ६४ ॥
त्वचं रोमभिरोषध्यो नोदतिष्ठत्तदा विराट्। रेतसा[1] शिश्नमापस्तु नोदतिष्ठत्तदा विराट् ॥ ६५ ॥
गुदं मृत्युरपानेन नोदतिष्ठत्तदा विराट्। हस्ताविन्द्रो बलेनैव नोदतिष्ठत्तदा विराट् ॥ ६६ ॥
विष्णुर्गत्यैव चरणौ नोदतिष्ठत्तदा विराट्। नाडीर्नद्यो लोहितेन नोदतिष्ठत्तदा विराट् ॥ ६७ ॥
क्षुत्तृड्भ्यामुदरं सिन्धुर्नोदतिष्ठत्तदा विराट्। हृदयं मनसा चन्द्रो नोदतिष्ठत्तदा विराट् ॥ ६८ ॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका।

बुद्ध्यादिषु हृदयमेवाधिष्ठानम्। गिरां पतिर्ब्रह्मा चैत्यः क्षेत्रज्ञः ॥ ६१ ॥ ❀ ❀ अन्वयव्यतिरेकाभ्यां क्षेत्रज्ञं विवेक्तुं सर्वेषां पुनः प्रवेशमाह। एत इति नवभिः ॥ ६२–७० ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

चैत्यश्चित्ताधिष्ठाता वासुदेवः स एव चित्त उपास्यदेवता च स एव समष्टिजीवस्य हिरण्यगर्भस्य प्रद्युम्नत्वेनांतर्यामी स एव व्यष्टिजीवानामनिरुद्धत्वेनांतर्यामीति भागवतामृते। न तु चित्ताधिष्ठाता क्षेत्रज्ञो जीव इति वाच्यं तस्य कर्तृत्वकरणत्वाद्यभावस्य सर्वत्र प्रतिपादितत्वात्। "आचार्यचैत्त्यवपुषा स्वगतिं व्यनक्ति" इत्यादावपि चैत्त्यशब्देनांतर्यामिण एवोक्तिः। क्वचिच्चैत्त्यशब्देन जीवाभिधानं तु चित्तोपाधिकत्वादेव न तु चित्ताधिष्ठातृत्वादिति ज्ञेयम् ॥ ६१ ॥ ❀ ❀ अभ्युत्थिताः स्वस्वाधिष्ठानसंयोगं प्राप्ता अप्यस्य विराज उत्थापने वह्निश्चेष्टासंपादने आविविशुः प्रयत्नं चक्रुः ॥ ६२–६९ ॥

---

१. प्राचीने पाठेऽत्रायमुत्तरार्धो मूले नास्ति टिप्पण्यां वर्तते तथा ६५ श्लोकस्य 'रेतसा शिश्नमा०' अतः पूर्वं मूलेऽपि वर्तते परन्तु 'घ्राणेन' स्थाने 'प्राणेन' पाठोऽस्ति तथा 'नासिके' स्थाने 'नासिका' इति पाठः।

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

अहमित्यर्द्धकम्। क्षेत्रज्ञः हिरण्यगर्भान्तर्य्यामी प्रद्युम्नः नतु जीवः हिरण्यगर्भस्य जीवत्वेन कर्तृत्वाद्देवताद्यानुपपत्तेः चित्तेनेत्यादिना सर्वोत्थापनशक्तिमत्त्वेन तस्यैव वक्ष्यमाणत्वाच्च॥ ६१॥ ❀ ❀ अन्वयव्यतिरेकाभ्यामन्तर्य्यामिक्षेत्रज्ञप्रवेशसत्त्वे ब्रह्माण्डोत्थानसत्त्वमन्वयस्तत्प्रवेशाभावे तदुत्थानाभावो व्यतिरेकस्ताभ्यामभ्युत्थिताः स्वस्वाधिष्ठानसंयोगं प्राप्ता अपि उत्थापने वह्निश्रेष्ठासम्पादने आविविशुः प्रयत्नं चक्रुः॥ ६२-६९॥

### श्रीमद्वीरराघवव्याख्या

चन्द्रमा अधिदेवता हृदयादेवाधिष्ठानाद् व्यवसायाख्यवृत्त्यवच्छिन्नबुद्धिरूपां तदिन्द्रियं तदधिदेवता गिरां पतिर्ब्रह्मा तथा हृदयमेव वाधिष्ठानं तत्राभिमानाख्यवृत्त्यवच्छिन्नाहङ्काराख्यमन्तःकरणमिन्द्रियं तदधिदेवता रुद्रस्तथा हृदयमेवाधिष्ठानं चित्ताख्यवृत्त्यवच्छिन्नचित्ताख्यमन्तःकरमिन्द्रियं तदभिमानी चैत्त्यः क्षेत्रज्ञः निरभिद्यत इत्यर्थः। अत्र चतुर्मुखशरीराच्चतुर्मुखस्योपेन्द्रस्य विभागोक्तिरिन्द्रियाभिमानिदेवतात्वाकारेणेति न विरोधः॥ ६१॥ ❀ ❀ एवं समष्टिभूतचतुर्मुखदेहस्थवागादीन्द्रियतदधिष्ठानेभ्यो देवादिव्यष्टीनामिन्द्रियतत्स्थानतदधिदेवतासृष्टिरुक्ता अथ क्षेत्रज्ञभोगायतनत्वाद्देवादिशरीराणां तत्र प्राधान्यं भोक्तुः क्षेत्रज्ञस्येत्यन्वयव्यतिरेकाभ्यां प्रतिपिपादयिपुर्वागादीन्द्रियतदधिष्ठातृदेवतानां च व्यष्टीनां देवादिव्यष्टिशरीराधिष्ठानेषु प्रविष्टानामपि क्षेत्रज्ञानुप्रवेशमन्तरेण व्यष्टिशरीरभूतजातस्य प्रवृत्तिक्षमत्वसम्पादनासामर्थ्यमाह। एत इति। एते देवा इन्द्रियसहितास्तदभिमानिवागादिदेवा अभ्युत्थिताः समष्टिचतुर्मुखशरीरादुत्पन्ना अस्य देवादिव्यष्टिशरीररूपभूतजातस्य प्रविश्येति शेषः। उत्थापने प्रवृत्त्युन्मुखीकरणे नाशकन्न समर्था बभूवुः। एतदेव प्रपञ्चयति। पुनराविविशुरित्यादिना। पुनःशब्दोऽसामर्थ्यप्रतिपादनारम्भद्योतकः तं देवादिव्यष्टिशरीरं मुखानि देवाधिष्ठितानीन्द्रियाणि उत्थापयितुं प्रवृत्त्युन्मुखं कर्तुं क्रमादाविविशुः तत्तदधिष्ठानं प्रविविशुः॥६२॥ ❀ ❀ का देवता केनेन्द्रियेण कुत्र प्रविष्टा उत्थापनाशक्ताभूदित्यत्राह। वह्निरित्यादिभिः सप्तभिः। वह्निरधिदेवता वाचा वागिन्द्रियेण सह मुखं देवादिव्यष्टिमुखं भेजे आविशत् तदासौ विराट्कार्यभूतव्यष्टिशरीरजातं नोदतिष्ठन्न प्रवृत्त्युन्मुखोऽभूत्। एवमुत्तरत्रापि द्रष्टव्यं सर्वत्र विराट्छब्देन विराट्कार्यभूतत्वाद्व्यष्टिशरीरजातं लक्ष्यते। अन्यथा चतुर्मुखसृष्टानां वह्न्यादीनां चतुर्मुखशरीरोत्थापकत्वाशक्तेः॥६३—६९॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

तस्मात् हृदयात् मनोभेदरूपा बुद्धिर्जाता तस्या बुद्धेर्गिराम्पतिर्बृहस्पतिर्जात इत्यर्थः। ततो हृदयादेव मनोभेदरूपोऽहङ्कारोऽपि तदभिमानी रुद्रश्च तत एतस्मात् हृदयान्मनोविशेषरूपं चित्तं ततश्चित्ताच्चैत्त्यश्चित्ताभिमानी विरिञ्चो रूपान्तरेणासीत् अत्र चित्ताभिमानित्वेन विष्णुरपि चैत्त्य इति ग्राह्यं ब्रह्मान्तर्यामिणोऽपि स्वेच्छया तदभिव्यक्तरूपान्तरेण तज्जत्वं च युक्तं प्रामाणिकत्वादुक्तं च "चैत्योऽपि भगवान् विष्णुरन्तर्यामी चतुर्मुखात्। स्वेच्छया व्यक्तिमगमत्ततोऽसौ ब्रह्मजः स्मृतः॥" इति। इदं सर्वस्याभितप्तस्य मुखं निरभिद्यतेत्याद्यैतरेय्यामुपनिषद्युक्तम्॥ ६१॥ ❀ ❀ ब्रह्मवाय्वोरेकत्वेनैकस्योत्तमत्वकथनेऽन्यस्य तदविनाभूतमिति कृत्वा प्राणस्य सर्वचेतनोत्तमत्वं ज्ञापयितुमग्न्यादिदेवानां विवादेन तन्निर्णयप्रकारं वक्ति। एते हीति। एतेनाहमुक्थमस्मीत्यादिवाक्यार्थोऽपि विवृत इति ज्ञातव्यमस्य ब्रह्मशरीरस्योत्थापने खानि गोलकस्थानानि॥६२-६६॥ ❀ ❀ गत्यैवेत्येवकारेण विष्णोरुत्थापनाशक्तिर्न विधीयते किन्तु ब्रह्मवाय्वोर्बलज्ञापनायैवेति। "यज्ञान्तस्य स्वयं पादौ विशन्नोत्थापयद्धरिः। शक्तोऽपि ब्रह्मवाय्वोस्तु बलज्ञप्त्यै जनार्दनः॥ तत्स्य उत्थापयामास ब्रह्मदेहं विशन्प्रभुः।" इति वचनादनेन श्रियस्तदुत्तमत्वं तस्या हरेरनन्तगुणोत्तमत्वं ध्वनितम्। 'अहं सुवे पितरमस्य मूर्धन्नि'त्यादेः॥ ६७॥ ६८॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः।

अहमिति। अत्र चैत्त्यः क्षेत्रज्ञो हिरण्यगर्भान्तर्याम्यवस्थ ईश्वरः प्रद्युम्नरूपोऽयं ज्ञेयः। जीवस्य कर्तुः करणत्वाभावाद्देवतात्वाभावाच्च ईश्वरपुरुषतत्त्वेनैव प्रश्नोत्तराभ्यां च अतोऽस्यैव सर्व्वाधिकसामर्थ्यं दर्शयिष्यते चित्तेनेत्यादिना॥ ६१॥ ❀ ❀ अभ्युत्थिताः स्वस्वाधिष्ठानसंयोगं प्राप्ता अपि अस्य विराजः। उत्थापने वह्निश्रेष्ठासम्पादने आविविशुः प्रयत्नं चक्रुः॥ ६२-६९॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

चैत्यः चित्ताधिष्ठाता वासुदेवः स एव चित्ते उपास्यः देवता च। स एव समष्टिजीवस्य हिरण्यगर्भस्य प्रद्युम्नत्वेनान्तर्य्यामी। स एव व्यष्टिजीवानामनिरुद्धत्वेनान्तर्य्यामीति भागवतामृतमिति ज्ञेयम्। न तु चित्ताधिष्ठाता क्षेत्रज्ञो जीव इति वाच्यं, तस्य कर्तृत्वकरणत्वाद्यभावस्य सर्व्वत्र प्रतिपादितत्वात् "आचर्य्यचैत्त्यवपुषा स्वगतिं व्यनक्ति" इत्यादावपि चैत्त्यशब्देनान्तर्य्यामिण एवोक्तिः। क्वचिच्च चैत्त्यशब्देन जीवाभिमानं तु चित्तोपाधित्वादेव, नतु चित्ताधिष्ठातृत्वादिति ज्ञेयम्॥ ६१॥ ❀ ❀ अन्वयव्यतिरेकाभ्यामन्तर्यामिण एव सर्वशक्तिमत्त्वं दर्शयितुमुक्तमेव प्रवेशं सर्वेषां पुनराह। एत इत्यादिना॥ ६२-६९॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

चित्तं समष्टिचित्तं वासुदेवाख्योपास्यदेवाधिष्ठितं चैत्त्यः समष्टिचित्तयुक्तसमष्टिदेहाभिमानी क्षेत्रज्ञ इत्यर्थः ॥६१–६९ ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

सर्वेभ्यः तं विवेक्तुं पुनः सर्वेषां निर्गमनप्रवेशावाह—एते इति । एते देवाः स्वयमभ्युत्थिता अस्य देहस्योत्थापने न शक्ताः । य एवेनं देहमुत्थापयति, स जीव आत्मेति ज्ञातव्यम् । सामर्थ्ये विद्यमानेऽपि नोत्थापयन्तीति न मन्तव्यम्, किन्तु सामर्थ्यमेव नास्तीति । तदर्थमुपाख्यानमाह—पुनराविविशुरित्यादिना । तदेव शरीरम्, स्वस्वस्थाने पूर्वं भगवता सह निविष्टा अपि, पुनराविविशुः । खानि छिद्राणि । प्रयोजनम्—तमुत्थापयितुमिति । क्रमादिति स्वस्वबलपरीक्षार्थम् ॥ ६२ ॥ ❀ ❀ वह्निर्देवो वाचेन्द्रियेण सह प्रथमतो मुखं भेजे । ततो निर्गत्य तत्र प्रविष्टः । तस्मिन् प्रविष्टे विराट् सलिलात् नोदतिष्ठत् । सर्वत्रेन्द्रियेण सह देवता गोलके निविष्टा । विराट् ततो नोत्थितः । विष्णुर्गत्यैवेति । इन्द्रियेण सह प्रविष्टो विष्णुस्तावन्मात्रप्रयोजको नाऽधिकं करोति । एवं सर्वत्र ज्ञातव्यम् । मन्त्राधिष्ठातृरूपेष्वपि मर्यादैषा । पुरुषोत्तमस्तु सर्वं करोति चेत् स सेवितुं शक्यते, प्राप्यते वा । रुद्रपर्यन्तं देवाः सर्वे निविष्टाः प्रत्येकम् । ततो विराट् नोदतिष्ठत् ॥ ६३ ॥ ६४ ॥ ६५ ॥ ६६ ॥ ६७ ॥ ६८ ॥ ६९ ॥

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

विष्णुरित्यत्र । एषेति । तत्फलमात्रदायकत्वरूपेत्यर्थः ॥ ६८ ॥

इति श्रीतृतीयस्कन्धसुबोधिनीप्रकाशे षड्विंशाध्यायविवरणं सम्पूर्णम् ।

### श्रीगिरिधरकृता बालप्रबोधिनी

मनश्च चन्द्रमा देवता जातः । बुद्ध्यादीनामपि हृदयमेवाधिष्ठानम्, बुद्धिरिन्द्रियम्, बुद्धेर्गिराम्पतिर्ब्रह्मा देवता अहङ्कार इन्द्रियं, तत्र रुद्रो देवता । चित्तमिन्द्रियं, तत्र चैत्त्यः क्षेत्रज्ञो जीवोऽधिष्ठाताऽभवत् ॥ ६१ ॥ ❀ ❀ अत्र देहेन्द्रियादिसङ्घाते को वा मुख्यतया ध्येय इत्यपेक्षायां यद्यपि सर्वे एव देवा भगवदंशास्तथापि क्षेत्रज्ञ एव मुख्योंऽश इति स एव भगवदभेदेन ध्येय इति वक्तुं तावद्देवानामसामर्थ्यमाह—एत इति । पुनश्शब्दस्तथापीत्यर्थे । अभ्युत्थिताः अहङ्काराज्जाता एते हि प्रसिद्धा देवास्तं विराजमुत्थापयितुं खानि स्वस्वस्थानक्रमात् आविविशुः । तथापि अस्योत्थापने नैवाशकन्नित्यन्वयः ॥ ६२ ॥ ❀ ❀ एतदेव पूर्वोक्तरीत्या स्पष्टयति—वह्निरित्यादिभिः सप्तभिः ॥ ६३—६९ ॥

### हिन्दी अनुवाद

मनके बाद उसका अभिमानी देवता चन्द्रमा हुआ। फिर हृदयसे ही बुद्धि और उसके बाद उसका अभिमानी ब्रह्मा हुआ। तत्पश्चात् अहङ्कार और उसके अनन्तर उसका अभिमानी रुद्रदेवता उत्पन्न हुआ। इसके बाद चित्त और उसका अभिमानी क्षेत्रज्ञ प्रकट हुआ ॥ ६१ ॥ ❀ ❀ जब ये क्षेत्रज्ञके अतिरिक्त सारे देवता उत्पन्न होकर भी विराट् पुरुषको उठानेमें असमर्थ रहे, तो उसे उठानेके लिये क्रमशः फिर अपने-अपने उत्पत्तिस्थानोंमें प्रविष्ट होने लगे ॥ ६२ ॥ ❀ ❀ अग्निने वाणी के साथ मुखमें प्रवेश किया, परन्तु इससे विराट् पुरुष न उठा। वायुने घ्राणेन्द्रियके सहित नासाछिद्रोंमें प्रवेश किया, फिर भी विराट् पुरुष न उठा ॥ ६३ ॥ सूर्यने चक्षुके सहित नेत्रोंमें प्रवेश किया, तब भी विराट् पुरुष न उठा। दिशाओंने श्रवणेन्द्रियके सहित कानोंमें प्रवेश किया, तो भी विराट् पुरुष न उठा ॥ ६४ ॥ ❀ ❀ ओषधियोंने रोमोंके सहित त्वचामें प्रवेश किया, फिर भी विराट पुरुष न उठा। जलने वीर्यके साथ लिङ्गमें प्रवेश किया, तब भी विराट् पुरुष न उठा ॥ ६५ ॥ ❀ ❀ मृत्युने अपानके साथ गुदामें प्रवेश किया, फिर भी विराट् पुरुष न उठा। इन्द्रने बलके साथ हाथोंमें प्रवेश किया, परन्तु इससे भी विराट पुरुष न उठा ॥ ६६ ॥ ❀ ❀ विष्णुने गतिके सहित चरणोंमें प्रवेश किया, तो भी विराट् पुरुष न उठा। नदियोंने रुधिरके सहित नाडियोंमें प्रवेश किया, तब भी विराट् पुरुष न उठा ॥ ६७ ॥ ❀ ❀ समुद्रने क्षुधा-पिपासाके सहित उदरमें प्रवेश किया, फिर भी विराट् पुरुष न उठा। चन्द्रमाने मनके सहित हृदयमें प्रवेश किया, तो भी विराट् पुरुष न उठा ॥ ६८ ॥

बुद्ध्या ब्रह्मापि हृदयं नोदतिष्ठत्तदा विराट् । रुद्रोऽभिमत्या हृदयं नोदतिष्ठत्तदा विराट् ॥ ६९ ॥
चित्तेन हृदयं चैत्यः क्षेत्रज्ञः प्राविशद्यदा । विराट् तदैव पुरुषः सलिलादुदतिष्ठत ॥ ७० ॥
यथा प्रसुप्तं पुरुषं प्राणेन्द्रियमनोधियः । प्रभवन्ति विना येन नोत्थापयितुमोजसा ॥ ७१ ॥
तमस्मिन् प्रत्यगात्मानं धिया योगप्रवृत्तया । भक्त्या विरक्त्या ज्ञानेन विविच्यात्मनि चिन्तयेत् ॥७२॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां तृतीयस्कन्धे कापिलेये तत्त्वसमाम्नाये षड्विंशोऽध्यायः ॥ २६ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

विराड्देहस्य व्यष्टिदेहं दृष्टांतत्वेन दर्शयन्सांख्यानुकथनस्य प्रयोजनमाह। यथेति द्वाभ्याम् ॥ ७१ ॥ ❀ ❀ प्रथमं परमेश्वरे भक्तिस्ततोऽन्यत्र विरक्तिस्ततो योगप्रवृत्ता धीः एकाग्रं चित्तं ततो यज्ज्ञानं तेन प्रत्यगात्मानं क्षेत्रज्ञमस्मिन्नात्मनि कार्यकारणसंघाते विविच्य चिंतयेत् ॥ ७२ ॥

इति तृतीये टीकायां षड्विंशोऽध्यायः ॥ २६ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

चैत्यो वासुदेवः स एव क्षेत्रज्ञोंतर्यामी "क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत" इति श्रीगीतोक्तेः ॥ ७० ॥ ❀ ❀ येन चित्ताधिष्ठात्रा परमेश्वरेण विना प्रसुप्तं व्यष्टिं तथैव येन विना समष्टिविराडपि नोदतिष्ठदिति पूर्वेणान्वयः ॥ ७१ ॥ ❀ ❀ कार्यकारणसंघाते देहे जीवे वा ॥ ७२॥

इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे तृतीयस्कन्धे षड्विंशोऽध्यायः ॥ २६ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या।

क्षेत्रज्ञः हिरण्यगर्भस्यान्तर्यामी प्रद्युम्नः व्यष्टिजीवानामन्तर्यामी अनिरुद्धः चैत्यः श्रीवासुदेवेन रूपेण चित्ते उपास्यः प्राविशद्बहिश्चेष्टासम्पादनार्थमिच्छात्मकमुद्यमं पुनः कृतवान्। पुरुषोऽध्यासेन तत्तादात्म्यं प्राप्तो विराट् समष्टिदेहः उदतिष्ठत् बहिश्चेष्टामाप ॥ ७० ॥ ❀ ❀ यथेति युग्मकम्। प्रसुप्तं व्यष्टिदेहाभिमानिनं पुरुषं जीवं यथा येनान्तर्यामिणा विना यथा प्राणादय ओजसाप्युत्थापयितुं न प्रभवन्ति तं तथा येन विना समष्टिदेहमपि नोत्थापयितुं प्रभवन्ति प्रत्यगात्मानमन्तर्यामिणमस्मिन्नात्मनि विविच्य चिन्तयेदिति द्वयोरन्वयः। क्षेत्रज्ञं सर्वक्षेत्रान्तर्यामिणम् ॥ ७१—७२ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कंधे श्रीराधारमणदासगोस्वामिकृतदीपिकाटिप्पण्यां षड्विंशोऽध्यायः ॥ २६ ॥

### श्रीमद्वीरराघवव्याख्या

एवं स्वतः सेन्द्रियाणां देवानामुत्थापनाशक्तिमभिधाय क्षेत्रज्ञाधीनं तेषामुत्थापकत्वमित्याह। चित्तेनेति। चैत्यः चित्ताधिदेवः क्षेत्रज्ञः हृदयमधिष्ठानं चित्तेन सह यदा प्राविशत्तदैव विराट् पुरुषः विराट्कार्यभूतो देवादिरूप पुरुषः सलिलात्सलिलकार्यभूतब्रह्माण्डात्, इयं ल्यब्लोपे पञ्चमी सलिलमाविश्येत्यर्थः। उदतिष्ठत प्रवृत्तिक्षमोऽभूदित्यर्थः ॥ ७० ॥ ❀ ❀ एतदेव सदृष्टान्तमाह। यथेति। यथा प्राणादय ओजसा स्वबलेन प्रसुप्तं पुरुषं येन विना क्षेत्रज्ञेन विना यदिच्छामन्तरेत्यर्थः, उत्थापयितुं न प्रभवन्ति न समर्थाः तथा वह्न्यादयोऽपि स्वाधिष्ठेयैरिन्द्रियैः सह देवादिशरीराणि प्रविश्यापि क्षेत्रज्ञानुप्रवेशमन्तरेणोत्थापना शक्ता इत्यर्थः ॥ ७१ ॥ ❀ ❀ एवमन्वयव्यतिरेकाभ्यां भोक्तुं क्षेत्रज्ञस्यैव प्राधान्यमुक्तं तस्यैतस्य क्षेत्रज्ञस्यानुचिन्तनं भगवद्भक्तियोगाङ्गत्वेन कार्यमित्याह। तमिति। प्रत्यगात्मानं जीवं परिशुद्धस्वरूपं योगे तद्याथात्म्यविवेचनरूपयोगे प्रवृत्तया धिया अस्मिन् देहे विविच्य शरीरबुद्धीन्द्रियप्राणादिभ्यः पृथक्कृत्य भक्त्या ईश्वरभक्त्या विरक्त्या कामानभिष्वङ्गेण ज्ञानेन ब्रह्मात्मकत्वज्ञानेन चात्मनि मनसि चिन्तयेत्। यद्वा प्रत्यगात्मानं धिया विविच्यात्मनि तस्मिन्प्रत्यगात्मनि परमात्मानमिति शेषः। विरक्त्या अविहिताप्रतिषिद्धनिषिद्धविषयवैराग्येण, अनेन कर्मयोग उक्तः, ज्ञानेन प्रत्यगात्मयाथात्म्यज्ञानयोगेन भक्त्या ईश्वरभक्त्या ज्ञानकर्मयोगाभ्यामनुगृहीतया भक्त्येत्यर्थः चिन्तयेत् ॥ ७२ ॥

इति श्रीभागवतमहापुराणे तृतीयस्कंधे श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रिकायां षड्विंशोऽध्यायः ॥ २६ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

ब्रह्मा बृहस्पतिः यस्मिन्ब्रह्मा राजनि पूर्व एतीति श्रुतेः "बृहस्पतिः पुरोगश्च ब्रह्मा च ब्रह्मणस्पतिः" इति चाभिधानम् ॥ ६९ ॥ ❀ ❀ नन्वेवं तर्हि सलिले पतितं ब्रह्मशरीरमुत्थापकाभावात् क्लिन्नप्रायं भवेदित्याशङ्क्य वायुना सह निर्गमात् शरीरमपतत् स एव क्षेत्रज्ञो ब्रह्मान्तर्यामी वायुब्रह्मभ्यां सह प्रवेशेन शरीरमुदस्थापयदित्याह। चित्तेनेति। "अंशेन सुतो ब्रह्मा तु अंशेन निरगात्तथा। स्वदेहाद्वायुसहितो विष्णुना च जगत्प्रभुः ॥ तमुत्थापयितुं देवास्तानृते त्रीन्महाबलान्। नाशक्नुवन्नेकसंस्थास्ततस्ते त्वविशंस्त्रयः ॥ उदतिष्ठद्ब्रह्मदेहस्तदा तेषां प्रभावतः। विशेषेण हरेरेव प्रभावेण श्रियः पतेः ॥ चित्ताभिमानी ब्रह्मैव क्षेत्रज्ञस्तद्गतो हरिः। प्राणो वायुरिति प्रोक्तस्तयोरीशो हरिः स्वयम् ॥" इत्यनेन क्षुद्रोपद्रवशङ्का परिहृतेति सन्तोष्टव्यम् ॥ ७० ॥ ❀ ❀ नन्वत्र विष्णोः सर्वोत्तमत्वेन सर्वशक्तिमत्त्वं सम्यक् न प्रतीतं बलादाकृष्य प्रवेश्यते इत्याशङ्क्य प्रातीतिकौ प्राणस्योक्तौ अन्वयव्यतिरेकौ विष्णोरेवेति विशदयंस्तदुपास्तिं विदधाति यथेति। अनेन प्रसुप्तं पुरुषं ब्रह्माणं प्राणेन्द्रियमनोधियः प्राणेन्द्रियाद्य-

भिमानिनो देवास्तत्तदिन्द्रियार्थक्रियावत्त्वेनौजसा येन क्षेत्रज्ञेन विनोत्थापयितुं न प्रभवन्तीदं यथा यथार्थं सत्यं यस्मात्तस्मात्तं सर्वोत्तमं प्रत्यगात्मानं क्षेत्रज्ञं श्रीनारायणमस्मिञ्छरीरेऽन्तर्यामित्वेन स्थितं विरक्त्याष्टाङ्गयोगविपक्वक्रमविवृद्धया भक्त्या च जातधिया -निश्चयलक्षणबुद्धया जातेन ज्ञानेनात्मनि हृदये चिन्तयेदेवेत्यन्वयः ॥ ७१—७२ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्यां षड्विंशोऽध्यायः ॥ २६ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

चित्तेनेति । प्राविशत् बहिश्चेष्टासम्पादनार्थं स्वयमेव सर्वोत्थापने पुनरुद्यमं कृतवान् । उदतिष्ठत् बहिरपि चेष्टां प्राप्तवान् ॥ ७० ॥ ❀ ❀ यथेति युग्मकेन तथा येन विना विराट् नोदतिष्ठत् तमिति द्वाभ्यामन्वयः । प्रत्यगात्मान मन्तर्य्यामिणम् ॥ ७१—७२ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भस्य षड्विंशोऽध्यायः ॥ २६ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

चैत्यो वासुदेवः स एव क्षेत्रज्ञोऽन्तर्य्यामी "क्षेत्रज्ञं चापि मां विद्धि सर्व्वक्षेत्रेष्ववस्थितम्" इति गीतोक्तेः ॥ ७० ॥ ❀ ❀ समष्टिविराट्देहस्य व्यष्टिदेहं दृष्टान्तयति । यथेति । येन चित्ताधिष्ठात्रा परमेश्वरेण विना प्रसुप्तं व्यष्टिं यथा उत्थापयितुं न शक्नुवन्ति तथैव येन विना समष्टिः विराडपि नोदतिष्ठदिति पूर्वेणान्वयः ॥ ७१ ॥ ❀ ❀ सांख्यानुकथनस्य प्रयोजनमाह तं प्रत्यगात्मानं प्रत्यग्ज्ञानगम्यं परमात्मानमस्मिन् कार्य्यकारणसंघाते आत्मनि देहे जीवात्मन्येव वा चिन्तयेत् ॥ ७२ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् । षड्विंशोऽयं तृतीयस्य सङ्गतः सङ्गतः सताम् ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

चित्तेन सर्वनियन्तृवासुदेवाख्योपास्यदेवाधिष्ठितेन युक्तश्चैत्य उक्तप्रकारः क्षेत्रज्ञः यदा प्रविष्टः तदा विराट् समष्टिशरीरमुदतिष्ठत् विराजोऽचेतनत्वधार्य्यत्वभोग्यत्वादयो धर्माः वासुदेवस्योपास्यत्वनियन्तृत्वादयः क्षेत्रज्ञस्य चेतनत्वभोक्तृत्वदेहधारकत्वोपासकत्वभगवन्नियम्यत्वादयश्चानेन दर्शिताः ॥ ७० ॥ ❀ ❀ व्यष्टिक्षेत्रज्ञदृष्टान्तेनापि उक्तमर्थं द्रढयति । यथेति । यथा प्रसुप्तं पुरुषं देहं प्राणादयो येन क्षेत्रज्ञेन विना उत्थापयितुं न प्रभवन्ति स तु प्रभवति तद्वत् ॥ ७१ ॥ ❀ ❀ अस्मिन् चिन्तनयोग्ये क्षेत्रे तं वासुदेवं प्रत्यञ्चों जीवस्य क्षेत्रज्ञस्य आत्मानमन्तर्य्यामिणमात्मनि हृदि चिन्तयेत् ॥ ७२ ॥

इती श्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे षड्विंशाध्यायार्थप्रकाशः ॥ २६ ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

यदा पुनश्चित्तेनेन्द्रियेण सह । हृदयम् चैत्यो जीवः, क्षेत्रज्ञो देहाभिमानी, यदैव प्राविशत्; तदैव पुरुषो भगवत्सहितो देहः, सलिलादुदतिष्ठत ॥ ७० ॥ ❀ ❀ अन्तरङ्ग एव सेवको महाराजमुत्थापयितुं शक्नोति, नाऽन्य इति दृष्टान्तेन स्पष्टयति यथेति द्वाभ्याम्—यथा स्वसामग्र्या 'सुप्तं' पुरुषं बहिः स्थिताः प्राणेन्द्रियमनोधियः, येनाऽन्तःस्थितेन जीवेन विनोत्थापयितुं न प्रभवन्ति, तमेव प्रत्यगात्मानं शरीराभिमानिनं जीवम्, अस्मिन् सङ्घाते, इतरव्यावृत्त्या चिन्तयेत् । तत्र चिन्तने बुद्धिः करणम् । साऽपि न प्राकृती, किन्तु योगेन विपक्वा, योगेन प्रवृत्ता वा । योगसिद्धेत्यर्थः । तस्य सहायभूतं भक्त्यादित्रयम् । तैः सहितया बुद्धया इतरान् दूरीकृत्य तमेव चिन्तयेत् । बुद्धयभ्यासं तत्र कुर्यात् । तथा सत्युत्तरत्र तस्य ब्रह्मभावो भावयितुं सुकर इति भावः ॥ ७२ ॥

श्रीभागवतसुबोधिन्यां श्रीमल्लक्ष्मणभट्टात्मजश्रीमद्वल्लभदीक्षितविरचितायां तृतीयस्कन्धे षड्विंशाध्यायविवरणं समाप्तम्

### श्रीगिरिधरकृता बालप्रबोधिनी

एवं तत्तदिन्द्रियसहितानां देवानां विराडुत्थापने सामर्थ्याभावं निरूप्य जीवस्य तत्र सामर्थ्यमाह—चित्तेनेति । चैत्यः चित्ताधिष्ठाता क्षेत्रज्ञो जीवः चित्तेन स्वशक्तिभूतेन्द्रियेण सह हृदयकमलं स्वाधिष्ठानं यदा प्राविशत्तदैव विराट् पुरुषः सलिलादुदतिष्ठत् । इह ल्यब्लोपे पञ्चमी । सलिलमधिष्ठाय कार्यक्षमो जात इत्यर्थः ॥ ७० ॥ ❀ ❀ विराट् देहे व्यष्टिदेहं दृष्टान्तयति—यथेति । येन जीवेन विना प्राणादयो यथा प्रसुप्तं पुरुषं मनुष्यादिं ओजसा स्वबलेनोत्थापयितुं न प्रभवन्ति तथा वह्न्यादयो

---

१. गुप्तम् ग. ङ. ।

देवा अपि क्षेत्रज्ञप्रवेशमन्तरे विराजमुत्थापयितुं नाशक्नुवन्नित्यर्थः ॥ ७१ ॥ ❀ ❀ एवमन्वयव्यतिरेकाभ्यां चैत्त्यस्यैव प्राधान्यं निरूप्य भक्त्यादिसाधनसम्पत्त्या विविच्य तस्यैव चिन्तनं विधत्ते—तमिति। प्रथमं श्रवणकीर्त्तनस्मरणसमर्पणादिरूपा भगवति भक्तिः ततोऽन्तःकरणविशुद्ध्या विषयेषु विरक्तिः, ततश्च प्रकृतिपुरुषेश्वरविविक्तं ज्ञानं, तेनास्मिन्नात्मनि कार्यकारण-सङ्घाते देह एव तं प्रत्यगात्मानं विविच्य योगप्रवृत्तया अष्टाङ्गयोगाभ्यासेनैकाग्रया धिया चिन्तयेदित्यन्वयः। विविच्येत्यनेन प्रकृत्यादिसर्वोपाधिविवेके सति जीवेश्वरयोरभेदो दर्शितः, तच्चिन्तनस्यैव मोक्षहेतुत्वात् ॥ ७२ ॥

इति श्रीवल्लभाचार्यवंश्यगोपालसूनुना ॥ श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा ॥ १ ॥
श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये ॥ श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी ॥ २ ॥
रचिता च तृतीयेऽत्र मोक्षसर्गनिरूपणे ॥ षड्विंशोऽपि गतो वृत्तिं तत्त्वलक्षणवर्णकः ॥ ३ ॥

## हिन्दी अनुवाद

ब्रह्माने बुद्धिके सहित हृदयमें प्रवेश किया, तब भी विराट् पुरुष न उठा। रुद्रने अहङ्कारके सहित उसी हृदयमें प्रवेश किया, तो भी विराट् पुरुष न उठा ॥ ६९ ॥ किन्तु जब चित्तके अधिष्ठाता क्षेत्रज्ञने चित्तके सहित हृदयमें प्रवेश किया, तो विराट् पुरुष उसी समय जलसे उठकर खड़ा हो गया ॥ ७० ॥ ❀ ❀ जिस प्रकार लोकमें प्राण, इन्द्रिय, मन और बुद्धि आदि चित्तके अधिष्ठाता क्षेत्रज्ञकी सहायताके बिना सोये हुए प्राणीको अपने बलसे नहीं उठा सकते, उसी प्रकार विराट् पुरुषको भी वे क्षेत्रज्ञ परमात्माके बिना नहीं उठा सके ॥ ७१ ॥ ❀ ❀ अतः भक्ति, वैराग्य और चित्तकी एकाग्रतासे प्रकट हुए ज्ञानके द्वारा उस अन्तरात्मस्वरूप क्षेत्रज्ञको इस शरीरमें स्थित जानकर उसका चिन्तन करना चाहिये ॥ ७२ ॥

२६ वाँ अध्याय समाप्त

# अथ सप्तविंशोऽध्यायः

श्रीभगवानुवाच

प्रकृतिस्थोऽपि पुरुषो नाज्यते प्राकृतैर्गुणैः । अविकारादकर्तृत्वान्निर्गुणत्वाज्जलार्कवत् ॥ १ ॥
स एष यर्हि प्रकृतेर्गुणेष्वभिविषज्जते । अहंक्रियाविमूढात्मा कर्तास्मीत्यभिमन्यते ॥ २ ॥
तेन संसारपदवीमवशोऽभ्येत्यनिर्वृतः । प्रासङ्गिकैः कर्मदोषैः सदसन्मिश्रयोनिषु ॥ ३ ॥
अर्थे ह्यविद्यमानेऽपि संसृतिर्न निवर्तते । ध्यायतो विषयानस्य स्वप्नेनार्थागमो[1] यथा ॥ ४ ॥
अत[2] एव शनैश्चित्तं प्रसक्तमसतां पथि । भक्तियोगेन तीव्रेण विरक्त्या च नयेद्वशम् ॥ ५ ॥
यमादिभिर्योगपथैरभ्यसन् श्रद्धयान्वितः । मयि भावेन सत्येन मत्कथाश्रवणेन च[3] ॥ ६ ॥
सर्वभूतसमत्वेन निर्वैरेणाप्रसङ्गतः । ब्रह्मचर्येण मौनेन स्वधर्मेण बलीयसा[4] ॥ ७ ॥
यदृच्छयोपलब्धेन सन्तुष्टो मितभुङ् मुनिः । विविक्तशरणः शान्तो मैत्रः करुण आत्मवान् ॥ ८ ॥

श्रीधरस्वामिविरचिता भावार्थदीपिका

सप्तविंशे ततः सम्यग्बहुसाधनयोगतः । पुंप्रकृत्योर्विवेकेन मोक्षरीतिर्निरूप्यते ॥ १ ॥

विवेकज्ञानेन मोक्षमुपपादयितुं शुद्धस्यैव पुरुषस्य प्रकृत्यविवेकतः पूर्वोक्तं संसारमनुस्मारयति । प्रकृतिस्थोऽपीति त्रिभिः । देहस्थोऽपि नाज्यते न लिप्यते गुणैस्तत्कृतैः सुखदुःखादिभिः निर्गुणत्वादकर्तृत्वं ततोऽविकारित्वं तस्मात् ॥ १ ॥ २ ॥ ❀ ❀ अनिर्वृतः सन् प्रासंगिकैः प्रकृतिसंगकृतैः सदसन्मिश्रयोनिषु देवतिर्यङ्नरादिषु संसारपदवीं प्राप्नोति ॥ ३ ॥ ❀ ❀ ननु तर्ह्यवास्तवत्वात्संसृतेः किं तन्निवृत्तिप्रयासेन तत्राह । अर्थे हीति ॥ ४ ॥ ❀ ❀ यतो विषयध्यानमनर्थहेतुरतो मनो नियंतव्यमित्याह । अत एवेति । असतामिंद्रियाणां पथि विषयमार्गे तीव्रेण दृढेन विरक्त्या च तीव्रया ॥ ५ ॥ ❀ ❀ भक्तिविरक्त्योस्तीव्रत्वे कारणानि वर्णयन् ज्ञानेन मोक्षप्रकारमाह षड्भिः । यमादिभिर्योगमार्गैश्चित्तमभ्यसन्पुनः पुनरेकाग्री कुर्वन्नात्मानुमुपलभ्य सर्वानुस्यूतमद्वयं परमात्मानं प्रतिपद्यत इति षष्ठेनान्वयः । सत्येन निष्कपटेन भावेन प्रेम्णा ॥ ६ ॥ ❀ ❀ अप्रसंगतः संगत्यागेन बलीयसा ईश्वरेऽर्पितेन ॥ ७ ॥ ❀ ❀ विविक्तशरण एकांतवासी ॥ ८ ॥

श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः ।

ततो विराडंतर्यामित्वेन परमात्मविवेचनानंतरम् ( १ ) शुद्धस्यैव वस्तुतः प्रकृतिसंगरहितस्यैव तत्कृतैर्गुणकार्यभूतैः ततो निर्गुणत्वात् ॥ १ ॥ ❀ ❀ इह जलार्कदृष्टांतेन दर्पणमुखदृष्टांतो लक्ष्यस्तस्मात्स्वमुखस्य दर्पणदोषलिप्तत्ववत्तल्लिप्तत्वेन मिथ्यैवाभिमानं कुरुते इत्याह—स इति ॥ २ ॥ ❀ ❀ तेन कर्तृत्वमननेन ॥ ३ ॥ ❀ ❀ अत्राक्षिपति-नन्विति । अर्थे कर्मरूपेऽर्थे वस्तुतः आत्मनोऽकर्तृत्वादसत्यपि तत्र कर्तृत्वाभिमानेन तद्ध्यानात् संसृतिर्न निवर्तत इति । अनर्थागमः स्वशिरश्छेदादि ॥ ४ ॥ ❀ ❀ अत एव विषयध्यानस्यानर्थहेतुत्वादेव ॥ ५ ॥ ❀ ❀ आदिना नियमादिग्रहः । विश्वनाथः—मयि भावेन सत्येन मद्रूपनामलीलादीनां सत्यत्वदृष्ट्या मयि यः सत्यो भावः सत्यत्वभावना तेन, न तु मायाशबलितब्रह्मदृष्ट्या मय्यायत्यामसत्यत्वभावनयेत्यर्थः । तथात्वे "त्वय्यस्तभावादविशुद्धबुद्धयः । आरुह्य कृच्छ्रेण परं पदं ततः पतंत्यतो नादृतयुष्मदंघ्रयः" इति "नैष्कर्म्यमप्यच्युतभाववर्जितम्" इति "अवजानंति मां मूढा मानुषीं तनुमाश्रितम्" इति "न भजंत्यवजानंति स्थानाद्भ्रष्टाः पतंत्यध" इत्यादिभ्यो भगवद्विग्रहादौ चिदानंदभिन्नत्वभावनालक्षणावज्ञानिनामपि मोक्षाभावावगतेः ॥ ६ ॥ ७ ॥ ❀ ❀ यदृच्छयोपलब्धेन दैवात्प्राप्तेन धनादिनालंबुद्धिः । मितं परिमितं भुनक्तीति तथा "द्वौ भागौ पूरयेदन्नैस्तोयेनैकं प्रपूरयेत् । मारुतस्य प्रचारार्थं चतुर्थमवशेषयेत्" इत्युक्तेः, श्रुतिरप्येतमर्थमुपबृंहयति । तथाहि—"यदात्मसम्मतमन्नं तदवति न हिनस्ति यद्भूयो हिनस्ति तद्यत्कनीयो न तदवति" इति श्रुतिः । एतदर्थस्तु आत्मसम्मतं स्वोदरपरिमाणमनुकूलञ्च यदन्नं भुज्यते तदन्नं भोक्तारमवति धर्मनिर्वाहाय च भवति न हिनस्ति धातुवैषम्यं संपाद्य पुरुषं न हन्ति न पीडयति च । यद्भूयः स्वोदरपरिमाणादतिरिक्तमन्नं भुज्यते तद्धिनस्ति शूलादिकमुत्पाद्य पुरुषं हंति धर्मञ्च नाशयति । यत्कनीयोऽत्यल्पमन्नं भुज्यते न तत्पुरुषमवति क्षुन्निवृत्त्यै धर्मनिर्वाहाय

---

१. प्रा० पा—स्वप्नेनार्थाग० । २. प्रा० पा०—अतः शनैः । ३. प्रा० पा०—तु । ४. प्रा० पा०—महीयसा ।

च क्षमं न भवति। ततः परिमितमेव भोक्तव्यमिति सिद्धमत एव श्रीभगवताप्युक्तं गीतोपनिषदि "युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु। युक्तस्वप्नावबोधस्य योगो भवति दुःखहा" इति चिकित्साशास्त्रेप्ययमर्थो वर्णितः। 'ये गुणा लंघने प्रोक्तास्ते गुणा लघुभोजने' इति। मुनिर्मननशीलः। शांतो नियतचित्तः। मैत्रः सर्वत्र प्रीतिमान्। करुणो दयालुः। आत्मवान् स्थिरबुद्धिः॥ ८॥

## श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या।

बहुसाधनयोगतः नानासाधनोपायैः तत्सम्बन्धाद्वा जले दृष्टोऽप्यर्को यथा वस्तुतस्तद्गुणैरार्द्रत्वादिभिर्न लिप्यते तद्वत्॥१॥ ❀ ❀ एवं वस्तुतः शुद्धत्वमुक्त्वा प्रकृत्यविवेकतस्संसारमाह। स एष इति द्वाभ्याम्। स एष शुद्धः प्रकृतेर्गुणेषु कर्तृत्वसुखदुःखादिषु अहमेव देह इत्यहङ्कारेण विमूढस्सन्नभिविषज्जते धर्म्यध्यासं प्राप्नोति तदा कर्त्तास्मीति अभिमन्यते धर्माध्यासं प्राप्नोतीत्यर्थः॥ २॥ ❀ ❀ तेन कर्तृत्वाभिमानेन कर्मदोषैः शुभाशुभकर्मरूपैर्दोषैः संसारपदवीं जन्ममरणादिपरम्पराम्॥ ३-४॥ अत एव विषयध्यानस्यानर्थहेतुत्वादेव अत्र भक्तियोगेनेति तृतीयाश्रुत्या तस्य साधनत्वमात्रपर्य्यवसानेन सकैतवत्वमभिप्रेतम्॥ ५॥ ❀ ❀ अत एव ज्ञानकर्ममिश्रत्वमाह। यमादीति षट्केन। निष्कैतवेन विषयेच्छाकैतवशून्येन मोक्षेच्छाकैतवन्तु मोक्षप्रकारमाहेत्यवतारिकयोक्तमेव। न च मोक्षेच्छायाः कैतवत्वं नास्तीति वाच्यं, प्रशब्देन मोक्षाभिसन्धिरपि निरस्त इति प्रथमपद्यव्याख्यायां तस्यापि कैतवत्वमननादिति (१) (२) बहुवाक्यैकवाक्यत्वाद्गर्भेऽपि यदृच्छयेति सार्द्धकमिति अङ्कवैशिष्ट्यं ज्ञेयम्। अहंममतामकुर्वन्निति त्वंपदार्थस्य स्वरूपज्ञानं व्यज्यते (३) तदेव ज्ञानम् "अन्यार्थश्च परामर्शः" इति न्यायात् तत्पदार्थज्ञानार्थत्वेनोपपादयितुं स्पष्टयति। ज्ञानेनेति (४) उपलभ्येति सार्द्धकम्। एकस्यैव त्वंपदार्थस्योपाधिनावच्छेद उपहितत्वमनवच्छेदो निरुपहितत्वं शुद्धत्वमिति यावत्। तत्रोपहितस्य करणत्वं शुद्धस्य कर्मत्वं गगनस्थं चक्षुरनवच्छिन्नं निरुपाधिकमुपाधिस्पर्शशून्यं सद्रूपेणास्तित्वरूपेण घटोऽस्ति अहङ्कारोऽस्ति इत्येवं सर्वस्यैव सत्ताघटितत्वात् प्रधानस्याधिष्ठानं कार्य्यस्य प्रकाशकमिति विशेषणाभ्यां शुद्धजीवाद्विशेषो व्याख्यातस्तत्र प्रधाननियम्यत्वेन "जगद्व्यापारवर्ज्जम्" इति न्यायेन चोभयासम्भवादिति भावः॥ ५—११॥

## श्रीमद्वीरराघवव्याख्या

एवं जगत्सृष्ट्यादिव्यापारकथनेन भजनीयस्य भगवत ऐश्वर्यमावेद्य तत्प्राप्त्युपायभूतभक्तियोगाङ्गात्मयाथात्म्यज्ञानयोगमुपपिपादयिषुरतीन्द्रियमात्मस्वरूपं कथमनुसन्धातुं शक्यमित्याशङ्कां वारयितुं तस्य प्रत्यगात्मनो जागराद्यवस्थासु विशदतरावभासं कथयिष्यन् तस्यैतस्यात्मनः प्रकृतिसंसर्गकृतमेव जागराद्यवस्थारूपसांसारिकप्रवृत्तिषु कर्तृत्वं तदायत्तसुखदुःखभोक्तृत्वञ्च न स्वरूपप्रयुक्तमिति पूर्वोक्तमनुवदति। प्रकृतिस्थ इति। पुरुषो जीवः प्रकृतिस्थोऽपि देहस्थोऽपि प्राकृतैर्गुणैर्धर्मैर्देवत्वमनुष्यत्वादिहेतुकैः सुखदुःखादिभिश्च नाज्यते स्वतो न स्पृश्यते, कुतः अविकारात् स्वतो देवमनुष्यादिरूपेण परिणामाभावात् अकर्तृकत्वाद्गमनादिबाह्यसांसारिकव्यापाराश्रयत्वाभावात् निर्गुणत्वात् स्वतः सत्त्वादिगुणान्वयाभावात् स्वतो नाज्यते इत्यत्र दृष्टान्तः। जलार्कवदिति। मठाकाशादेरप्युपलक्षणमिदं, ननु जलादिषु सूर्यादयो भ्रान्त्या तत्रस्था इव गृह्यन्ते न परमार्थतस्तत्रस्थाः, अतो जलगतवृद्धिह्रसकम्पनादिदोषास्पर्शः सूर्य्यादिषु युक्तः। प्रत्यगात्मनस्तु देवादिशरीरेष्ववस्थितेः कथं तद्गुणैर्नाज्यते इत्युच्यते इति चेदुच्यते देशविप्रकर्षः कालविप्रकर्षः स्वभावविप्रकर्षश्चेति त्रिधा विप्रकर्षः। अत्रैकविप्रकर्षोऽपि दोषस्पर्शस्य हेतुः। अत्र देशविप्रकर्षस्योदाहरणं जलसूर्यादिः। स्वभावविप्रकर्षस्योदाहरणमाकाशादिः, तत्र देशविप्रकर्षवत् स्वभावविप्रकर्षस्यापि दोषास्पर्शहेतुत्वात् यथा घटकरकादिषु वृद्धिह्रासभाक्षु पृथक् पृथक् संयुज्यमानमप्याकाशं वृद्धिह्रासादिदोषैः न स्पृश्यते, यथा जलाधारेषु विषमेषु दृश्यमानोऽप्यंशुमान् देशविप्रकर्षात्तत्तद्गतवृद्धिह्रासादिभिर्न स्पृश्यते तथायं प्रत्यगात्मापि देवादिचतुर्विधशरीरेष्ववस्थितस्तद्गतैर्द्धर्मैः स्वतो नाज्यते स्वभावविप्रकर्षादिति। तर्ह्याकाश एव दृष्टान्तीकर्तव्यो नार्क इति चेन्न, दोषास्पर्शमात्राभिप्रायकत्वाद् दृष्टान्तस्य। दृश्यते चैवं सर्वात्मना साधर्म्याभावेऽपि विवक्षितांशसाधर्म्याद् दृष्टान्तोपादानं सिंहो माणवक इत्यादौ। यद्वा प्रकृतिगता देवत्वमनुष्यत्वादयः प्रकृतेरेव धर्मा नात्मनः, तस्य देवमनुष्याद्याकारस्य स्वतोऽभावात् देवोऽयं मनुष्योऽयमिति प्रतीत्या तेऽप्यात्माकारा इति चेत् सा प्रतीतिर्भ्रान्तिरूपेति सदृष्टान्तमाह। प्रकृतिस्थ इति। देहस्थोऽपि पुरुषो जीवः अकर्तृत्वादिभ्यो हेतुभ्यः प्राकृतैर्गुणैर्देवत्वादिधर्मैर्नाज्यते अत्राञ्जिर्गत्यर्थः, स्वतो देवत्वादिवैशिष्ट्येन न गम्यते तथा नानुसन्धीयत इति यावत्। तत्र दृष्टान्तः। जलार्कवदिति। यथा जले प्रतिबिम्बितः सूर्यो जलगतैर्द्धर्मैर्विशिष्टत्वेन परमार्थतो नाप्रतीयते तेषां जलगतत्वात्। एवं प्रकृतिधर्मैरात्मापि परमार्थतो न प्रतीयते, तेषां प्रकृत्याकारत्वेनात्माकारत्वाभावात्तेषामात्मगतत्वेन प्रतीतिर्भ्रान्तिरूपेत्यर्थः॥ १॥ ❀ ❀ एवंविधस्यात्मनः कथं देवमनुष्यादिदेहयोगः कथं वा सांसारिकप्रवृत्तिषु कर्तृत्वं सुखदुःखानुभवश्चेत्याशङ्कायां सर्वमिदं देहात्माभिमानस्वतन्त्रात्माभिमानकृतमित्याह। स इति। स एष प्रकृतिविलक्षणोऽप्यात्मा अहंक्रियाविमूढात्मा अहंक्रियाऽनात्मनि देहे आत्माभिमानः तया विमूढं तिरोहितमात्मस्वरूपं यस्य स यर्हि यदा प्रकृतेर्गुणेषु शब्दादिषु विषज्जते शब्दादिविषयप्रवणः स्यात् यदा च कर्तास्मीति स्वतन्त्र इत्यभिमन्यते। अनेन स्वतन्त्रा-

भिमानोऽपि बन्धहेतुरित्युक्तम् ॥ २ ॥ ❀ ❀ तदा तेन उभयविधाभिमानेनावशः कर्मपरतन्त्रः सन्नत एवानिर्वृतः कर्मायत्तसुखदुःखोपभोगेन नितरां सुखमलभमानः प्रासङ्गिकैः प्रकृतिसंसर्गकृतैः कर्मदोषैः पुण्यापुण्यरूपैर्दोषैः सदसन्मिश्रयोनिषु उत्तमाधममध्यमभूतेषु देवतिर्यङ्नरादिषु संसारपदवीमभ्येति प्राप्नोति ॥ ३ ॥ ❀ ❀ ननु देवाद्याकाराणामात्मनः स्वाभाविकाकारत्वाभावात् तैः कोऽनर्थः आत्मन इत्यत्राह । अर्थेति । अर्थे आत्मनो देवत्वमनुष्यत्वाद्याकारे स्वतोऽविद्यमानेऽपि अस्यात्मनः विषयान् शब्दादीन् ध्यायतश्चिन्तयतः संसृतिर्न निवर्तते संसाररूपोऽनर्थो न निवर्तते तथा स्वप्नशरीराणामात्माकारत्वाभावेऽपि स विषयचिन्तनद्वारा सुखदुःखरूपानर्थहेतुत्वं तद्वज्जागरेऽपि देहाकाराणामात्मत्वाभावेऽपि विषयप्रावण्यजननद्वारानर्थरूपबन्धहेतुत्वमित्यर्थः । हि यस्मात्तदेवम् ॥ ४ ॥ ❀ ❀ एवं मनो नियन्तव्यमित्याह । अत एवेति । असतां प्रकृतिपरिणामरूपाणामिन्द्रियाणां पथि शब्दादिविषये प्रसक्तं नितरामासक्तं चित्तं तीव्रेणान्तरायानुपहतेन भगवद्भक्तियोगेन विरक्त्या कामानभिष्वङ्गेण च शनैः वशं नयेत्स्ववशं कुर्यात् । विरक्तिः साधनसप्तकोपलक्षणं विरक्त्यानुगृहीतभगवद्भक्त्या स्वसमीहितभगवदनुचिन्तनपरं कुर्यात् । एवं चेत् बन्धो निवर्तत इति भावः ॥ ५ ॥ ❀ ❀ भक्तियोगानुग्राहकाण्येव वर्णयन्भक्त्या मोक्षप्रकारमाह षड्भिः । श्रद्धया मनोनियमनविषयया त्वरया युक्तः योगपथैः भक्तियोगेतिकर्तव्यताभूतैर्यमादिभिः शमदमादिभिः मयीश्वरे भावेन माता पिता भ्राता इत्युक्तविधभावेन सत्येन सत्यवचनेन ॥ ६ ॥ ❀ ❀ सर्वभूतेषु समत्वेन प्रकृतिपुरुषशरीरकेश्वरात्मकत्वानुचिन्तनेन अत एव निर्वैरेण प्रसङ्गतः शब्दादिविषयावाङ्मसक्त्या ब्रह्मचर्येण स्त्रीसङ्गादिराहित्येन मौनेन मितवाक्येन बलीयसा भक्तियोगानुग्राहकाणां मध्ये बलवत्तरेण स्वधर्मेण स्ववर्णाश्रमोचितधर्मेण चाभ्यसन् भक्तियोगमिति शेषः ॥ ७ ॥ ❀ ❀ यदृच्छयोपस्थितेन दैवादुपनतेनान्नादिना सन्तुष्टः दैवादुपनतमपि मितमेव भुञ्जानः मुनिः भोजनादिदशास्वपि शुभाश्रयसंशीलनपरः विविक्तशरण एकान्तवसतिः शान्तः भयादिरहितः मैत्रः भयजनकैरपि भूतैर्मैत्रीमेव कामयमानः करुणः तेष्वपि कारुणिकः आत्मवान् प्रशस्तमनस्कः ॥ ८ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

श्रोतृप्रवक्तृभेदाद् गुणनिकायात्तात्पर्यातिशयजननाय उक्तमेव प्रपञ्चयतेऽस्मिन्नध्याये । तत्र जीवपरमयोरेकशरीरस्थत्वात् जीववत्तद्गतदुःखादिभोगः परस्य कथं न स्यादित्याशङ्क्य परिहरति । प्रकृतिस्थ इति । "तं वा एतं पूर्णमाचक्षते पुरुष" इति श्रुतेः पूर्णत्वात्पुरुषो विष्णुः प्रकृतिस्थः जडप्रकृतौ तत्कार्यशरीरेषु अवस्थितोऽपि प्राकृतैः प्रकृतिनिर्मितशरीरगतैः सुखदुःखादिगुणैर्जननादिभिर्नाज्यते न लिप्यते । तत्र हेतुमाह अविकारादिति । अविकारात् षड्विकाररहितत्वादकर्तृत्वात्परतन्त्रकर्तृत्वरहितत्वान्निर्गुणत्वात्सत्त्वादिगुणरहितत्वाच्च जलार्कवत् यथा जलगतः सूर्यो जलदोषैः कम्पभेदादिभिर्न सम्बद्ध्यते तथा प्रकृतेऽपीत्यर्थः ॥ १ ॥ ❀ ❀ ननु यदि परमस्य सुखदुःखादिसम्बन्धो नास्ति तर्हि सुखी दुःखी जातो मृतो दरिद्र इति व्यवह्रियमाणः क इति तत्राह । स एष इति । यर्हि यदान्तरातीताध्याये प्रत्यगात्मानमात्मनि चिन्तयेदिति प्रकृतः सोऽहमिति प्रत्यक्षसिद्धत्वादेष जीवः प्रकृतेर्गुणेषु सत्त्वादिगुणरचितशरीरेषु अभिविषज्जते शरीरवान् जायते तदा तेषां त्रयाणां गुणानां सन्निपातजाताहङ्कारममकाराभ्यां विमूढात्मा विस्मृतपरमात्मस्वरूपः सन् पराधीनकर्तृत्वमन्तरेण स्वतःकर्तृत्वाभावेऽप्यहं कर्तास्मीत्यभिमन्यते ॥ २ ॥ ❀ ❀ तत्फलमाह । तेनेति । तेनाविद्यमानकर्तृत्वाभिमानेन मनसा शब्दादिषु क्षणभङ्गुरत्वेनानिर्वृतोऽलम्बुद्धिगोचरानन्दरहितोऽपि प्रासङ्गिकैर्विषयासक्तिजातैः कर्मदोषैः सदसन्मिश्रयोनिषु देवासुरमनुष्ययोनिषु जातः सुखदुःखलक्षणां संसारपदवीमभ्येतीत्यन्वयः ॥ ३ ॥ ❀ ❀ आभिमानिकसंसारानिवृत्तौ किं निमित्तमित्याशङ्क्य विषयाभिध्यानमित्याह । अर्थे हीति । स्वतः चित्सुखरूपस्यास्य जीवस्यार्थे सुखी दुःखी अहमित्यादिव्यवहारे अविद्यमाने सत्तारहितेऽपि संसृतिर्न निवर्तते ध्यायतो विषयान् इति हेतुगर्भविशेषणं "ध्यायतो विषयान्पुंसः संगस्तेषूपजायत" इत्यादिप्रसिद्धिं हिशब्द आपादयति । विषयध्यानसंस्कारपरम्पराया बीजाङ्कुरन्यायेनान्योऽन्यकारणत्वस्यानादित्वेन भगवत्प्रसादमन्तरेणानुच्छेदादित्यर्थः । एतमर्थं निदर्शयति । स्वप्न इति । यथा जाग्रदवस्थायां नानाविधपदार्थान् ध्यायतः स्वप्ने गर्दभाद्यारोहणादिना मरणाद्यनर्थागमो न निवर्तते 'पुरुषं कृष्णं कृष्णदन्तं पश्यति स एनं हन्ती'त्यादेः, अनेनार्थक्रियाकारित्वात्स्वप्नस्य मिथ्यात्वमपि प्रत्युक्तम् । यद्वा अर्थेऽबाधितप्रयोजने असत्यपीति ॥ ४ ॥ ❀ ❀ अस्य संसारस्य निवृत्त्युपायमाह । प्रबुध्येति । "अज्ञासुषुप्तिशब्दोक्तं स्वप्नश्चैव विपर्यय" इति वचनात् स्वप्नसुषुप्तिभ्यां विपरीतज्ञानाज्ञानाभ्यां विषयाणां सेवया स्यात्सा स्वतो न निवर्तते इति शास्त्राद्युपदेशेन प्रबुध्य प्रकृष्टं बोधं प्राप्यात्मवैशसं दुर्विषयसेवयात्मनाशं संसरन्नसौ पुरुषो विषयाणां वैतथ्यं निष्फलत्वं व्यभिचारमनित्यत्वं च ज्ञात्वा यतो विषयात् भयं संसारलक्षणं स्यात् तन्न ध्यायेन्न संस्मरेदित्यर्थः । आत्मसंसृतेरिति पाठे तस्यामिथ्यात्वमनैकान्तत्वं च दृश्यमानं संसरन्नित्यर्थः ॥

मनसि विजिते सर्वं विजितं स्यादिति कृत्वा मनोविजयप्रकारं वक्ति । अत इति । यत एवं मनसो विषयेषु सङ्गः संसारहेतुरत एव विषयसङ्गिनामसतां पथि प्रसक्तं चित्तं शनैर्हरौ तीव्रेण भक्तियोगेन विषयविरक्त्या चात्मवशं नयेदित्यन्वयः । असताममङ्गलानां विषयाणां पथीति वा ॥ ५ ॥ ❀ ❀ मनसः स्ववशानयनमेव नालं किन्तु यमादिसाधनसामग्र्या समुत्पन्ने-

नापरोक्षज्ञानेनानावृत्तिलक्षणश्रीनारायणप्राप्तिः स्यादित्याह । यमादिभिरिति । अभ्यसन्प्रणवमिति शेषः । सत्येन भूतहितवचनेन ॥ ६ ॥ ❀ ❀ सर्वभूतसमत्वेन सर्वान्तर्यामिणो मम पूर्णत्वादिज्ञानेन तत्तद्वस्तुयोग्यतानुकूलदर्शनेन वा निर्वैरेण वैष्णवद्वेषराहित्येनाप्रसङ्गतः विषयरागिभिः सह संलापादिप्रसङ्गराहित्येन मौनेन उपासनेन स्वधर्मेण स्वविहितवर्णाश्रमधर्मानुष्ठानेन ॥ ७ ॥ ❀ ❀ यदृच्छयोपलब्धेन दैवतः प्राप्तधनेन सन्तुष्टोऽल्पबुद्धिमान् शान्तः मदेकनिष्ठः सतामापदं मित्वा ज्ञात्वा त्रायत इति मित्रे सा बुद्धिर्यस्यास्ति स मैत्रः । मित्रादिदेवतानिष्ठ इति वा । करुणो मित्रोदासीनेषु सत्सु कृपावान् वशीकृतमनाः ॥ ८ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

अथ जीवाख्यं पुरुषमपि प्रकृतेर्विविनक्ति । प्रकृतिस्थोऽपीत्यादिना यथा जले दृष्टोऽप्यर्कस्तेन न लिप्यते तथेत्यर्थः ॥ १ ॥ ❀ ❀ किन्त्वत्र जलार्कदृष्टान्तत्वेन दर्पणमुखदृष्टान्तो लक्ष्यस्तस्मात् स्वमुखस्य दर्पणदोषलिप्तत्ववत् तल्लिप्तत्वेन मिथ्यैवाभिमानं कुरुते इत्याह । स इति । भक्तियोगेनेति ॥ २ ॥ ३ ॥ ४ ॥ ❀ ❀ तस्य साधनत्वमुक्त्वा फलान्तरतात्पर्य्येत्वात् सकैतवत्वं दर्शितम् ॥ ५ ॥ ❀ ❀ अत एव ज्ञानकर्म्ममिश्रत्वमाह । यमादीति षट्केन । भावेन भक्त्या । सत्येन यथार्थव्यवहारेण तदेवं सिद्धं जीवस्य शुद्धत्वज्ञानमीश्वरोपलब्ध्यार्थत्वेन योजयति ॥ ६—९ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी ।

सप्तविंशे भक्तिमिश्रज्ञानसाधनविस्तृतेः । पुंप्रकृत्योर्विवेकाच्च मोक्षरीतिरुदीर्यते ॥

विवेकज्ञानेन मोक्षमुपपादयितुं जीवात्मानं प्रकृतेर्विविक्तत्वेन दर्शयति । प्रकृतिस्थोऽपि । पुरुषो जीवः सुषुप्तिप्रलययोर्निर्गुणत्वादकर्तृत्वं ततोऽविकारित्वं तस्माद्धेतोर्नाज्यते । जलार्कवत् जलस्थः सूर्य्यमण्डलकिरण इव न वस्तुतो जलधर्म्माक्रान्तः यदा हि पवननिबन्धनो जलस्याकम्पः स्यात् तदा तदनुगतस्य जलार्कस्यापि कम्पः स्यात् । यदुक्तं "ज्योतिर्यथैवोदक पार्थिवेष्वदः समीरवेगानुगतं विभाव्यत" इति, अत एव मनसः सम्यक् शुद्धौ सत्यां त्वंपदार्थोऽपि शुद्ध्यतीति । "मन एव मनुष्याणां कारणं बन्धमोक्षयोः" इति शास्त्रम् ॥ १ ॥ ❀ ❀ तस्याभिमाननिबन्धन एव संसार इत्याह स एवेति द्वाभ्याम् । यर्हि जागरस्वप्नयोः ॥ २ ॥ ❀ ❀ प्रासङ्गिकैः प्रकृतिप्रसङ्गभवैः ॥ ३ ॥ ❀ ❀ ननु तस्य जीवस्य कर्तृत्वकारणत्वाद्यभावाद्वस्तुतः कर्म्माभावेऽपि देहकृतैः कर्म्मभिः कथं बन्धस्तत्राह । अर्थे कर्मरूपे वस्तुनि वस्तुतोऽविद्यमानेऽपि कर्तृत्वाभिमानेन विषयान् ध्यायतः । तत्र दृष्टान्तः स्वप्ने खल्वनर्थस्याप्यधिगमः साभिमानविषयध्यानपरिपाकादेवेत्यर्थः ॥ ४ ॥ ❀ ❀ यतो विषयध्यानमनर्थहेतुरतो नियन्तव्यमित्याह । अत इति । भक्तिश्च योगश्च तयोर्द्वन्द्वैक्यं तेन तीव्रेण बलिष्ठेन ॥ ५ ॥ ❀ ❀ उक्तमर्थं प्रपञ्चयन् ज्ञानेन मोक्षप्रकारमाह । यमादिभिर्योगपथैः अभ्यसन् अभ्यासेन चित्तमेकाग्रीकुर्व्वन् जीवात्मा परमात्मानमुपलभ्य सर्व्वानुस्यूतमद्वयं तं प्रतिपद्यते इति षष्ठेनान्वयः । मयि सत्येन भावेन मद्रूपनामलीलादीनां सत्यत्वदृष्ट्या मयि यः सत्यो भावः सत्यत्वभावना तेन न तु मायाशबलितब्रह्मत्वदृष्ट्या मय्यायत्यामसत्यत्वभावनयेत्यर्थः । तथात्वे "त्वय्यस्तभावादविशुद्धबुद्धयः । आरुह्य कृच्छ्रेण परं पदं ततः पतन्त्यधोनादृतयुष्मदङ्घ्रयः" इति "नैष्कर्म्यमप्यच्युतभाववर्जितम्" इति "अवजानन्ति मां मूढा मानुषीं तनु माश्रितम् ।" इति "न भजन्त्यवजानन्ति स्थानाद् भ्रष्टाः पतन्त्यध" इत्यादिभ्यो भगवद्विग्रहादौ चिदानन्दभिन्नत्वभावनालक्षणावज्ञया ज्ञानिनामपि मोक्षाभावावगतेः ॥ ६ ॥ ❀ ❀ महीयसा ईश्वरार्पितेन ॥ ७ ॥ ❀ ❀ विविक्तशरणः एकान्तवासी । आत्मवान् धृतियुक्तः असदाग्रहं अहंममताम् ॥ ८ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

"तमस्मिन् प्रत्यगात्मानं धिया योगप्रवृत्तया । भक्त्या विरक्त्या ज्ञानेन विविच्यात्मनि चिन्तयेत्" इति श्लोकं विवृणोति । प्रकृतिस्थोऽपीति सप्तविंशेनाध्यायेन । आत्मानात्मादिविवेकं वक्तुं तावत् गुणासक्त्या संसारं जीवस्य वर्णयति । प्रकृतिस्थोऽपीति चतुर्भिः । यथा जलार्कः जलस्थसूक्ष्मप्रतिबिम्बरूपः सूर्य्यः जलैरेव नाज्यते स्वसंसर्गीक्रियते तथा प्रकृतिस्थोऽपि पुरुषो जीवस्तद्गुणैरेव नाज्यते न स्वसंसर्गीक्रियते कुतः अविकारात् पुरुषस्य गुणविकाररूपत्वाभावात् ये गुणविकाररूपाः देहादयस्ते गुणसंसर्गिणः गुणसामर्थ्याद्भवन्तीत्यर्थः । अकर्तृत्वात् कर्तात्र निमित्तं न विद्यते कोऽपि प्राकृतो गुणः कर्ता निमित्तं यस्य तस्य भावस्तत्त्वं तस्मात् ये गुणा निमित्ताः शान्तघोरविमूढत्वादयो भावास्ते गुणसंसर्गिणो गुणसामर्थ्याद्भवन्तीत्यर्थः । नितरां गताः पुरुषधर्मत्वेन दूरीभूताः गुणाः यस्मात्तस्य भावस्तत्त्वं तस्मात् या गुणवती प्रकृतिः सा गुणसंसर्गिणी भवतीत्यर्थः ॥ १ ॥ ❀ ❀ कथं तर्हि पुरुषस्य संसारित्वमत्राह । स इति तथाविधोऽपि अभिविषजते अनादितः गुणतादात्म्यं स्वत एव कुरुते इत्यर्थः । अत एव अहंक्रियया देवोऽहं मनुष्योऽहमित्यभिमानेन विमूढबुद्धिः कर्तास्मि आत्मतदनुबन्धिष्वित्यादिहेतुरस्मीत्यादि मन्यते ॥ २ ॥ ❀ ❀ तेनाभिमानेन संसारपदवीं जन्ममरणप्रवाहमार्गं कर्मदोषैः प्रासङ्गिकैः अभ्येत्य सदसन्मिश्रयोनिषु शान्तघोरविमूढयोनिषु जन्मसु निर्वृत्तः

सुखितो भवति न तु विरज्यते ॥ ३ ॥ ❁ ❁ अर्थे अविद्यमानेऽपि गुणतादात्म्याभावेऽपि ॥ ४ ॥ ❁ ❁ एवं गुणाशक्त्या पुरुषस्य संसार इत्युक्तमथ परमपुरुषे चित्तसमाधानान्मुक्तिरित्याह । अत एवेति । वशं नयेत् गुणासक्तिं विहाय परमपुरुषे संयोजयेत् । 'गुणेषु सक्तं बन्धाय रतं वा पुंसि मुक्तये ।' इत्युक्तत्वात् एतदेवाह । यमादिभिरिति षड्भिः यमादिभिः भक्तिप्रधानैः अभ्यसन् चित्तं परमपुरुषे स्थिरीकुर्वन् अद्वयं प्रतिपद्यते इति षष्ठेनान्वयः ॥ ५ ॥ ६ ॥ ७ ॥ ❁ ❁ विविक्तं चित्तसमाधान-विरोधिजनवर्जितं शरणं स्थानं यस्य सः ॥ ८ ॥ ९ ॥

## श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

[1]साङ्ख्येनेतरभिन्नस्य ज्ञाने जाते तथाऽऽत्मनः । ब्रह्मरूपेण तज्ज्ञानं सप्तविंशे निरूप्यते ॥ १ ॥
साधनानि स्वरूपं च चिन्तनार्थमिहोच्यते । युक्तयोऽ[2]प्यत्र कथ्यन्ते विपर्ययनिवृत्तये ॥ २ ॥

पूर्वाध्याये सङ्घातेऽपि विद्यमान आत्मा भिन्नतया निरूपितः । तस्य मोक्षो निरूप्यते । स चेद्बहुकालं प्रकृतौ स्थितः, मञ्जिष्ठादिभिरिव रञ्जकद्रव्यैः वस्त्रमिव रक्तः स्यात्, तदा तस्य मोक्षो न सम्भावित इति सूच[3]यंस्तस्य स्थितिमाह—प्रकृतिस्थोऽपीति । सर्वदाऽयं जीवः प्रकृतावेव प्राकृतसङ्घाते वर्तते; तथापि प्रकृतेः सत्त्वरजस्तमोगुणैर्नाऽज्यते. अक्तो न भवति, यथा पुरुषस्तैलादि-नाऽज्यते । अञ्जनाभावे हेतुचतुष्टयमाह—अविकारादित्यादिचतुर्भिः पदैः । प्रकृतेर्गुणाः स्वस्मिन् प्रविष्टं व[4]स्तुतोऽक्तं कुर्वन्ति । स्वयं वा तत्र प्रविष्टाः तत्र प्रवेशे विकृतमेव प्रविशन्तीति विकाराभावान्न प्रवेशः । भावस्य हि विकारा भवन्ति । यो हि भवनमनु-भवति, स तु न केनाऽपि प्रकारेण भवतीति विकाराभावः । किञ्च, कर्ता हि क्रियाधर्मैरदृष्टप्रकारेण रज्यते । अकर्तृत्वात् नाऽदृष्टप्रकारेणाऽपि । विकाररहितोऽपि सजातीयग्राहक इति, यदि सगुणः स्यात्, तदा परगुणैरपि स्वसजातीयैर्विद्वानिव रक्तो भवेत् । एतद्रसाभिनिवेशाद्रञ्जनं फलतो रञ्जनमुच्यते । साधनतो व्यापारतः फलतश्च रञ्जनाभाव उक्तः । स्वस्मिन् प्रवेशे सति रञ्जनं भविष्यतीत्याशङ्क्य प्रवेशं दृष्टान्तेनाऽन्यथा निरूपयति—जलार्कवदिति । स हि प्रकृतौ प्रतिबिम्बन्यायेन प्रविशति, न तु कुण्डे बदरमिव; अन्यथा प्रकृतौ तत्प्रतीतिर्न स्यात्; सर्वत्र च प्रतीतिर्न स्यात्, प्रकृत्यपेक्षया व्यापकत्वाच्च । अतः स्वच्छा प्रकृतिः पुरुषच्छायां गृह्णातीति पुरुषो न तद्धर्मैः सूर्यवत् रज्यते ॥ १ ॥ ❁ ❁ तर्हि कथं संसार इत्याशङ्क्याह—स एष इति । स एव प्राकृतैर्गुणैरसंबद्धोऽपि, एष संसारी भवति । कथमित्याकाङ्क्षायामाह—यर्हीति । प्रकृतेर्गुणेषु यर्हि स्वयमभिरज्यते । यद्यपि गुणाः किञ्चित् कर्तुं न शक्ताः, तथापि स्वयं चेतनस्तान् गुणान् वशीकर्तुम्, स्वधर्मेण रञ्जयितुम्, शक्नोति । यथा सूर्यो जलं स्वगुणैस्तप्तं करोति, जलन्तु सूर्यं शीतलं कर्तुं न शक्नोति । तदा किरणैः शुष्यज्जलं सूर्ये प्रविशति, तदा तत्र गतं बहुधा प्रसूयते । एतदेव गुणेष्वभिविपक्तिर्नाम । तदा वशीकृतेषु, अहङ्कारेण विमूढः सन्, कर्ताऽस्मीत्यात्मानमभिमन्यते । प्रकृतेर्गुणाः स्वात्मन्या-गताः सर्वमेव कार्यं कुर्वन्ति; तत्र कर्ता अहङ्कारो गुणव्याप्तः । स चाऽहङ्कारो मोहात्मको भवति, य[5]तो जीवो मूढः सन् अहमित्यात्मानं मन्यते । अहङ्क्रिया अहङ्कारः । मोहे क्रिया उपयोगात् स्त्रीलिङ्गनिर्देशः । अहङ्क्रियया विमूढः, आत्मा अन्तः-करणं स्वरूपं वा, यस्य । अहं करोतीत्यहङ्कारः, तेन कर्तृत्वमहङ्कारस्यैव । तेन तदैक्यादात्मानमपि कर्ताऽस्मीति मन्यते ॥ २ ॥
ततः किमत आह—तेन संसारपदवीमिति । कर्तृत्वाभिमानात् कर्ता भोक्ता भवतीति संसारभोगार्थं संसारपदवीमेति । अवशः कर्माधीनः । अत एवाऽऽभिमुख्येनैति । नन्वेवं सति नित्यः संसारः स्यादत आह—अनिर्वृत इति । कर्मफले निर्वृतिरहितः । निर्वृतस्तु संसाराद्विमुच्यत इत्युक्तं भवति । ननु संसारमार्गे गमनमात्रेण किं स्यादित्यत आह—प्रासङ्गिकैरिति । प्रसङ्गेन हि कर्मणो दोषा जायन्ते । स्वभावतः कर्माणि न दुष्टानि, किन्तु प्रसङ्गादेव । यथान्नभोजनं न निषिद्धम्, किन्तु दुष्टान्नभोजनमेव । कर्ममा-र्गस्तु सदसन्मिश्रयोनिरूपः । सदादियोनिर्देवतिर्यङ्मनुष्ययोनिः ॥ ३ ॥ ❁ ❁ नन्वयं संसारः किं सत्यो मिथ्या वा ! आद्ये अनिर्मोक्षः, द्वितीये साधनवैयर्थ्यमित्याशङ्क्याऽऽह—अर्थे इति । यद्यप्यत्र संसारे संसरणरूपोऽर्थो नाऽस्ति । देवतिर्यङ्मनुष्य-योनिषु देह एवोत्पद्यते, देहे च आत्मनो न कोऽपि संबन्धः । असङ्गत्वादात्मनः संयोगो नाऽस्ति, सुतरां समवायः । स्वरूपसंबन्धोऽपि नास्ति, उभयोरेकत्र निरूपणाभावात्; महाराजसेव[6]कयोरिव । किन्त्वा[4]ध्यासिकः । स तु मोहादित्यलीकः । अतः संसारोऽलीकभूत एव, तथापि न निवर्तते । योहि मिथ्याभूतः सन् बाधते, स कथं निवर्तते, अन्यथा बाधनमेव न स्यात् । नन्वेतादृशस्य बाधने किं बीजम् ? तत्राऽऽह—ध्यायतो विषयानस्येति । अस्य संसारस्य ये विषयाः, तान् भोग्यत्वेन ध्यायतः । विषयभोगवासनायां सत्यामविद्यमानोऽपि संसारो बाधत इत्यर्थः । असतोऽपि बाधकत्वे दृष्टान्तः—यथा स्वप्ने अनर्थागमः । स्वप्नस्तु मायिक इति सिद्धान्तः । यद्यपि तत्र ताडनं मिथ्याभूतम्, तथापि जागरणात्पूर्वं न निवर्तत एव । अतः संसारनिवृत्त्यर्थं यत्नः कर्तव्य इति

---

१. सांख्येतरविभिन्नस्य क. । २. ह्यत्र क. । ३. सूर्यवत्. ग. । ४. च मनः क. । ५. ततः घ. ङ. । ६. मषकयोरिव. ख. ग. वराकयोरिव. ङ ।

सिद्धम् ॥ ४ ॥ ❀ ❀ तत्र स्वप्नदृष्टान्तेनैव बोधस्तस्य निवर्तक इत्यवसीयते । स बोधः कथं भवतीत्याकाङ्क्षायामन्तर्मुखे चित्ते भवतीति वेदान्तिश्रितम्, "कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन्" इति श्रुतेः । संसारनिवृत्तं चित्तमात्मगामि भवतीति निश्चितम् । तदसन्मार्गे प्रवृत्तं न निवर्तत एव । नापि निवर्तयितुं शक्यते, असतां बहुत्वात्, बलिष्ठत्वाच्च । तत्रापि प्रकर्षेणासक्तम् । तथाप्येतादृशमपि निवर्तनीयमित्यादौ तस्य वशीकरणे हेतुमाह—अत एवेति । यतोऽनिवृत्तमनर्थहेतुः, अत एव बहुकालमासक्तत्वाच्छीघ्रमनिवृत्तावपि शनैर्निवर्तनीयम्, यथा असन्तः परिपन्थिनो न भवन्ति, यथा वा चित्तमासक्तिं त्यजति । तत्र द्वयं हेतुः—भक्तियोगो विरक्तिश्चेति । भगवति स्नेहः, विषयेषु रागाभावश्च । पूर्वस्माद्वैपरीत्यम् । उभाभ्यां चित्तं वशे भवेत् ॥ ५ ॥ ❀ ❀ उभयोः साधनान्याह—यमादिभिरिति । पूर्वं भक्तिसाधनान्युक्तानि सत्सङ्गादीनि; तानि दुर्लभानीति ज्ञानमेव भक्तिसाधनमिति निरूप्यते । यमादिसाधनैरात्मानं चेज्जानाति, तदा भगवति स्नेहः । पश्चाद्भगवति चित्तस्थैर्यम् । तदा विषयध्यानाभावात् संसारो निवर्तते । तत्र प्रथमं यमा अहिंसादयः, ततो नियमाः स्नानादयः, तत आसनादियोगमार्गाः । तैः कृत्वा चित्तमभ्यसेत् चित्तं तत्परं कुर्यात्, संयमनाभ्यासं वा । मार्गे साधनेषु च श्रद्धयान्वितः । मयि भगवति, भावेन श्रद्धादिना । सत्येन सत्यभावेन, कायवाङ्मनस्तु सत्यप्रतिष्ठया । निरन्तरं भगवत्कथाश्रवणेन । चकारात् कीर्तनेन । सर्वभूतेषु समदृष्ट्या, सर्वप्राणिषु वैराभावेन, सर्ववस्तुषु सर्वप्राणिषु च प्रसङ्गाभावेन, अष्टाङ्गब्रह्मचर्येण, मौनेन वृथाऽऽलापपरिवर्जनरूपेण । महीयसा निग्रां प्राप्तेन, स्वधर्मेण वर्णाश्रमधर्मेण । यदृच्छया उपस्थितेन अन्नादिना संतुष्टो भवेत् । एतानि सर्वाणि साधनानि पूर्वेण पूर्वेण सिद्धान्युत्तरोत्तराणि द्वादश भवन्ति । अन्यैः सहितेन यदृच्छयोपस्थितान्नादिना वा सन्तोषः साध्यः । पूर्वोक्तानि स्वरूपोपकार्यङ्गानि । कस्यचिन्मते सन्तोष एव मुक्त्यङ्गमिति फलोपकार्यङ्गानि वा । अतः सन्तोषस्य कारणता नोक्ता । पृथक्स्थित्यभावार्थं वा कर्तृविशेषणत्वेनोक्तम् । तत्रापि मितभोजनम्, मननं च, एकान्ते स्थितिः, परमशान्तिः, सर्वत्र मैत्री, करुणा, स्वाधीनान्तःकरणत्वम्, पुत्रादिसहिते देहे मिथ्याभिनिवेशाकरणं चेत्यन्तरङ्गाण्यष्टावङ्गानि । यमादयो द्वादश, एकः सन्तोषः, मितभोजनादीन्यष्टौ; एवं त्रिविधैः साधनैरत्यन्तरङ्गसाधनैस्त्रिभिश्च आत्मदृग्भवति । तानि त्रीण्याह—ज्ञानेनेति । साङ्ख्यमेकम्, तुरीयावस्था भेदज्ञानाभावश्च । प्रकृतेः पुरुषस्य च दृष्टं तत्त्वं येन तादृशेन ज्ञानेन साङ्ख्यजनितेन ॥ ७ ॥ ८ ॥ ९ ॥

## श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

अथ सप्तविंशाध्याये विवरणं चिकीर्षवः सङ्गतेः पूर्वमेव निर्धारितत्वादर्थमेवाहुः—साङ्ख्येनेत्यादि । तथात्मन इति । सङ्ख्यातविवक्तस्यात्मन इत्यर्थः । एतेन ब्रह्मरूपतया ज्ञातस्यैवात्मन इन्द्रियरूपत्वमिति ज्ञापितम् । तादृशेनैव तेन सर्वदर्शनादिति । एवं च कपिलोक्तौ पूर्वोत्तराध्याययोः शेषशेषिभावोऽपि स्फुटो ज्ञापितः सङ्गतित्वेनेति ज्ञेयम् । अवान्तरवाक्यानां सङ्गतिमाहुः—साधनानीत्यादि । चिन्तनार्थमिति ब्रह्मभावचिन्तनार्थम् । तथा च साधननिरूपकाणां स्वरूपनिरूपकाणां च हेतुतासङ्गतिः, युक्तिनिरूपकाणां तूपोद्घात इत्यर्थः । एतेनाऽस्य कामाध्यायत्वमपि स्फुटीकृतम्, ब्रह्मभावस्यैव भगवद्विचारितकामरूपत्वादिति ।

आद्यपद्ये । तत्र प्रवेश इति । परस्मिन् गुणप्रवेशे विचार्यमाणे इत्यर्थः । विकाराभाव एव कथमित्याकाङ्क्षायामाहुः—भावस्येत्यादि । भावस्येति । भवनक्रियाश्रयस्य । व्युत्पत्तिस्तु, भवतीति भवः, स एव, स्वार्थाणा भाव इति । इदं चानादिरात्मेति पूर्वोक्तलक्षणेऽनादिपददानस्य प्रयोजनं ( सुष्ठूक्तम् )सूक्तम् । भवनानुभवितृत्वेनानादित्वं समर्थितम् । एवं सति अनुमानचतुष्टयेनाऽयमर्थः सिध्यतीति तानि प्रयुञ्जते । तथाहि पुरुषोऽनञ्ज्यः, अन्यकर्तृकप्रवेशायोग्यत्वात्; अन्यकर्तृकप्रवेशायोग्यः, अविकारित्वात्; अविकारी, अनादित्वात्; यदेवं तदेवम्, कालवत्; यन्नैवं तन्नैवम्, तत्त्वादिवत् । अनादिः, भवनानुभवितृत्वात्; यन्नैवं तन्नैवम्, देहादिवत्; इति । ननु लौकिकप्रकारेण अञ्ज्यो भविष्यतीति शङ्कानिवृत्त्यर्थमाहुः—किञ्चेत्यादि । अत्रापि अदृष्टप्रकारेण नाञ्ज्यः, अकर्तृत्वात्, कालवत्; यन्नैवं तन्नैवम्, नैयायिकादिप्रतिपन्नात्मवत्, इत्यनुमानं ज्ञेयम् । निर्गुणपदसिद्धमर्थमाहुः—विकाररहितोऽपीत्यादि । अत्रापि 'अञ्ज्यः गुणग्राहकत्वात्' इत्यनेन सत्प्रतिपक्षितेषु पूर्वानुमाने(षु) पुनः पूर्वस्थापनाय, गुणग्राहकत्वेऽपि परगुणैरनञ्ज्यः, सजातीयगुणरहितत्वात्, गीतानभिनिविष्टपण्डितवत्; यन्नैवं तन्नैवम्, गीताभिनिविष्टपण्डितवत् । साधनत इत्यादि । साधनं गुणः; व्यापारोऽदृष्टम्; फलं रसाऽभिनिवेश इति । स्वस्मिन् प्रवेश इति । प्रकृतौ प्रवेशे । उक्तप्रकारके प्रवेशे गमकमाहुः—अन्यथेति । अत्राऽपि 'अञ्ज्यः, प्रकृतौ प्रविष्टत्वात्' इत्यनेन सत्प्रतिपक्षिते पुनः स्थापनाय 'अनञ्ज्यः, प्रतिबिम्बन्यायेन प्रविष्टत्वात्, जलार्कवत्; यन्नैवं तन्नैवम्, कुण्ठबदर(व)त्' इत्यनुमातव्यमिति ज्ञापितम् ॥ १ ॥ ❀ ❀ स एष इत्यत्र । एतदेवेति । स्वप्रतिबिम्बोपरक्तगुणकृतसूर्यकिरणशुष्यज्जलन्यायकप्रवेशोत्तरभाविबहुप्रकारकगुणप्रसवनमेवेत्यर्थः । विमूढ इति । उपधानेन विस्मृतस्वरूपः । स्वगुणप्रवेशकं रञ्जनमुपरागः, स्वगुणप्रवेशकं रञ्जनमुपधानम् (?) इति तयोर्भेदः । स इति । उपधानात्मा । तत्र हेतुः—यत इत्यादि । अत्रैवं क्रमो ज्ञेयः । पूर्वं भगवदिच्छया

---

१. तादृशकरणे. क. स वशीकरणे. ख. सदृशीकरणे. ङ. । २. च. क. ग. ।

प्रकृतिपुरुषसंयोगः, ततः प्राकृतेषु चैतन्यात्मा पुरुषोपरागः, तत्तश्चैतन्यात्मन्यहङ्कारोपाधानमहङ्कारः. तेन मोहशब्द-वाच्या स्वरूपविस्मृतिः, तया कर्ताहमस्मीत्याकारिका संसारशब्दवाच्या अहंमतिरिति ॥ २ ॥ ❀ ❀ तेनेत्यत्र । निर्वृत इति । अलम्बुद्ध्या दोषबुद्ध्या वा सुखदुःखोदासीनतया सन्तुष्टः । अत्र संसारपदवी तु प्रतिजन्मन्यनुवर्त्तमानकर्तृत्वाभिमानपरम्परा, तस्या उत्पादने तज्जनकस्य मोहस्य अनिर्वृतिः सहकारिणी, कर्मदोषास्तु द्वारभूता इति बोध्यम् ॥ ३ ॥ ❀ ❀ अर्थ इत्यत्र । उभयोरित्यादि, एतेन स्वरूपसम्बन्धस्य लक्षणमिव कृतं ज्ञेयम्, उभयोरेकत्र निरूपणप्रयोजकं तयोः स्वरूपं स्वरूपसम्बन्ध इति सिद्धेः । आध्यासिक इति । अहंमत्यात्मकः ॥ ४ ॥ ❀ ❀ अत एवेत्यभास्ये । आवृत्तचक्षुरिति । सम्मुखीकृतदर्पणवदावृत्तं चित्तं यस्य स इत्यर्थः । यमादिभिरित्यत्र । अष्टाङ्गब्रह्मचर्येणेति । तानि च 'एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः' इति वाक्योक्तविरुद्धानि ज्ञातव्यानि ॥ ६ ॥ ९ ॥

### श्रीगिरिधरकृता बालप्रबोधिनी

हरिभक्त्यादियोगेन पुम्प्रकृत्योर्विवेकतः । जीवस्य सप्तविंशे तु मोक्ष इति निरूप्यते ॥

एवं पूर्वाध्यायान्ते भक्त्यादिना पुरुषं विविच्य चिन्तयेदित्युक्तं तदेव विवेकं दर्शयितुं शुद्धस्यैव पुरुषस्य पूर्वोक्तं प्रकृत्य-विवेकेन संसारमनुसारयति—प्रकृतिस्थोऽपीति त्रिभिः । पुरुषो जीवः प्रकृतिस्थोऽपि प्रकृतिकार्ये देवमनुष्यादिशरीरे स्थितोऽपि प्राकृतैर्गुणैः प्रकृतिगुणसत्त्वादिहेतुकैः पुण्यपापादिभिः सुखदुःखादिभिश्च नाज्यते न लिप्यते । तत्र हेतुमाह—अकर्तृत्वादिति । कर्त्तुरेव तत्फलसम्बन्धो युक्त इत्याशयः । अकर्तृत्वे हेतुमाह—अविकारादिति, रागलोभादिविकाराभावादित्यर्थः । विकाराभावे हेतु-माह—निर्गुणत्वादिति । तर्हि कथं तत्र दुःखित्वादिप्रतीतिरित्याशङ्क्य भ्रान्त्यैवेत्यत्र दृष्टान्तमाह—जलार्कवदिति । यथा जलगता मालिन्यप्रकम्पादयस्तत्र प्रतिबिम्बितस्य प्रतीयमाना अपि वस्तुतः सूर्यगतास्ते न भवन्ति, तस्य दिविस्थतया तैः सम्बन्धाभावात् । तथाऽन्तःकरणगता एव सुखादयोऽप्यात्मनि तदध्यासेन प्रतीयन्ते, न वस्तुतस्तत्र सन्तीत्यर्थः ॥ १ ॥ ❀ ❀ ननु तर्हि कथमेवम्भूतस्यात्मनः संसार इत्यपेक्षायामाह—स इति । स एष प्रकृतिविलक्षणः सर्वदोषरहितोऽप्यात्मा यर्हि यदा अहङ्क्रिया देहेन्द्रियान्तःकरणादावात्माभिमानः तेन विमूढः तिरोहित आत्मा स्वरूपं यस्य स तथाभूतः सन् प्रकृतेर्गुणेषु गुणकार्येषु शब्दादिविषयेषु अभि सर्वतो विशेषेण सज्जते आसक्तो भवति, तदा देहेन्द्रियादिभिः क्रियमाणेष्वपि कर्मसु अहं कर्त्ताऽस्मीत्यभिमन्यते अभिमानं करोतीत्यर्थः ॥ २ ॥ ❀ ❀ तेन कर्तृत्वाभिमानेन प्रासङ्गिकैः देहादिकृतैः कर्मदोषैः पुण्यपापात्मकैरवशः तदधीनः अतएवा-निर्वृतः कर्मायत्तदुःखभोगेन नितरां सुखमलभमानः सदसन्मिश्रयोनिषु उत्तमाधममध्यमासु देवतिर्यङ्मनुयादियोनिषु संसारपदवीं जन्ममरणादिलक्षणां अभ्येति प्राप्नोतीत्यन्वयः ॥३॥ ❀ ❀ ननु तर्ह्ययं संसारः सत्यो मिथ्या वा आदावनिर्मोक्षप्रसङ्गो द्वितीये तु साधनवैयर्थ्यमित्याशङ्क्याह—अर्थेति । यतो देवमनुष्यादिदेहानामेव जन्ममरणादिनाऽऽत्मनः अतः अर्थे जन्ममरणसुखदुःखादिरूपे अविद्यमानेऽपि हि यस्मात् शब्दादिविषयान् ध्यायतश्चिन्तयतोऽस्य जीवात्मनः संसृतिः देवमनुष्यादियोनिषु भ्रमणं तत्र सुखदुःखादिसाक्षात्कारश्च न निवर्तते । तत्र दृष्टान्तमाह—स्वप्ने इति । यथा स्वप्ने अविद्यमानस्याप्यनर्थस्य स्वशिरश्छेदादिरूपस्या-गमः प्राप्तिः जागरणमन्तरेण न निवर्तते तथेत्यर्थः ॥ ४ ॥ ❀ ❀ अतस्तस्मादेव असतां दुःपूराणां नरकपातहेतूनां इन्द्रियाणां पथि मार्गे शब्दादिविषये प्रकर्षेण सक्तं चित्तं तीव्रेणान्तरायानुपहतेन भगवद्भक्तियोगेन विरक्त्या वैराग्येण च तीव्रेण शनैर्बहुकालं विषयासक्तस्य झटिति वशागमनस्य दुर्घटत्वात् तत्रोद्वेगं अकुर्वन् वशं नयेत् ॥ ५ ॥ ❀ ❀ भक्तिविरक्त्योस्तीव्रत्वे कारणानि वर्णयन् ज्ञानेन मोक्षप्रकारमाह—यमादिभिरिति षड्भिः । यमादिभिर्योपगथैः योगमार्गैरभ्यसन् पुनः पुनः चित्तमेकाग्रीकुर्वन् अन्येन च मत्प्रेमादिसाधनसमुदायेन आत्मानमुपलभ्य प्रतिपद्यते इति षष्ठेनान्वयः । यमः अहिंसादिः । आदिपदेन नियमासन-प्राणायामप्रत्याहारधारणाध्यानसमाधीनां योगाङ्गानां ग्रहणम् । एतच्च साधनजातं श्रद्धया उत्साहेन कार्यम् । अश्रद्धया कृतस्य निष्फलकत्वादित्याह—श्रद्धयाऽन्वित इति । मयि भगवति सत्येन निष्कपटेन फलाभिसन्धिरहितेन भावेन प्रेम्णा । मत्कथाश्रवणेन । चकारात् कीर्त्तनस्मरणसेवनार्चनवन्दनदास्यसख्यनिवेदनानां ग्रहणम् ॥ ६ ॥ ❀ ❀ सर्वभूतेषु समत्वेन समदृष्ट्या । सर्वत्र निर्वैरेण वैरत्यागेन । अप्रसङ्गतः सर्वत्रासक्तित्यागेन । ब्रह्मचर्येणाष्टांगेन । मौनेन वृथालापवर्जनेन । बलीयसा भगवत्प्रीत्यर्थमनुष्ठितेन स्ववर्णाश्रमविहितधर्मेण ॥ ७ ॥ ❀ ❀ यदृच्छयोपलब्धेन प्रयत्नं विना प्रारब्धादेव प्राप्तेनान्नादिना सन्तुष्टः । मितभुक् प्रारब्धप्राप्तमपि मितमेव भुञ्जानः । अन्यथा व्याधिना पीडितः स्यादित्याशयः । मुनिः सर्वदा विचारतत्परः सावधानः । विविक्त-शरण एकान्तवासी । शान्तः रागलोभादिरहितः । मैत्रः सर्वेषां शुभचिन्तकः । करुणः स्वार्थनिरपेक्षपरदुःखप्रहाणेच्छुः आत्मवान् जितेन्द्रियमनस्त्वेन स्वदुःखेऽपि धैर्यवान् ॥ ८ ॥

---

१. देहादिकृतकर्मदोषाधीनः ।

## हिन्दी अनुवाद

### प्रकृति-पुरुषके विवेकसे मोक्ष-प्राप्तिका वर्णन

श्रीभगवान् कहते हैं—माताजी ! जिस तरह जलमें प्रतिबिम्बित सूर्यके साथ जलके शीतलता, चञ्चलता आदि गुणोंका सम्बन्ध नहीं होता, उसी प्रकार प्रकृतिके कार्य शरीरमें स्थित रहनेपर भी आत्मा वास्तवमें उसके सुख-दुःखादि धर्मोंसे लिप्त नहीं होता; क्योंकि वह स्वभावसे निर्विकार, अकर्ता और निर्गुण है ॥ १ ॥ ❀ ❀ किन्तु जब वही प्राकृत गुणोंसे अपना सम्बन्ध स्थापित कर लेता है, तब अहङ्कारसे मोहित होकर 'मैं कर्ता हूँ'—ऐसा मानने लगता है ॥ २ ॥ ❀ ❀ उस अभिमानके कारण वह देहके संसर्गसे किये हुए पुण्य-पापरूप कर्मोंके दोषसे अपनी स्वाधीनता और शान्ति खो बैठता है तथा उत्तम, मध्यम और नीच योनियोंमें उत्पन्न होकर संसारचक्रमें घूमता रहता है ॥ ३ ॥ ❀ ❀ जिस प्रकार स्वप्नमें भय-शोकादिका कोई कारण न होनेपर भी स्वप्नके पदार्थोंमें आस्था हो जानेके कारण दुःख उठाना पड़ता है, उसी प्रकार भय-शोक, अहं-मम एवं जन्म-मरणादिरूप संसारकी कोई सत्ता न होनेपर भी अविद्यावश विषयोंका चिन्तन करते रहनेसे जीवका संसारचक्र कभी निवृत्त नहीं होता ॥ ४ ॥ ❀ ❀ इसलिये बुद्धिमान् मनुष्यको उचित है कि असन्मार्ग ( विषय चिन्तन ) में फँसे हुए चित्तको तीव्र भक्तियोग और वैराग्यके द्वारा धीरे-धीरे अपने वशमें लावे ॥ ५ ॥ ❀ ❀ यमादि योगसाधनोंके द्वारा श्रद्धापूर्वक अभ्यास—चित्त को बारंबार एकाग्र करते हुए मुझमें सच्चा भाव रखने, मेरी कथा श्रवण करने, समस्त प्राणियोंमें समभाव रखने, किसीसे वैर न करने, आसक्तिके त्याग, ब्रह्मचर्य, मौन-व्रत और बलिष्ठ ( अर्थात् भगवान्को समर्पित किये हुए ) स्वधर्मसे जिसे ऐसी स्थिति प्राप्त हो गयी है कि—प्रारब्धके अनुसार जो कुछ मिल जाता है उसीमें सन्तुष्ट रहता है, परिमित भोजन करता है, सदा एकान्तमें रहता है, शान्तस्वभाव है, सबका मित्र है, दयालु और धैर्यवान् है, ॥ ६-८ ॥

सानुबन्धे च देहेऽस्मिन्नकुर्वन्नसदाग्रहम् । ज्ञानेन दृष्टतत्त्वेन प्रकृतेः पुरुषस्य च ॥ ९ ॥
निवृत्तबुद्ध्यवस्थानो दूरीभूतान्यदर्शनः । उपलभ्यात्मनाऽऽत्मानं चक्षुषेवार्कमात्मदृक् ॥ १० ॥
मुक्तलिङ्गं सदाभासमसति प्रतिपद्यते । सतो बन्धुमसच्चक्षुः सर्वानुस्यूतमद्वयम् ॥ ११ ॥
यथा जलस्थ आभासः स्थलस्थेनावदृश्यते । स्वाभासेन तथा सूर्यो जलस्थेन दिवि स्थितः ॥ १२ ॥
एवं त्रिवृदहङ्कारो भूतेन्द्रियमनोमयैः । स्वाभासैर्लक्षितोऽनेन सदाभासेन सत्यदृक् ॥ १३ ॥
भूतसूक्ष्मेन्द्रियमनोबुद्ध्यादिष्विह निद्रया । लीनेष्वसति यस्तत्र विनिद्रो निरहंक्रियः ॥ १४ ॥
मन्यमानस्तदाऽऽत्मानमनष्टो नष्टवन्मृषा । नष्टेऽहङ्करणे द्रष्टा नष्टवित्त इवातुरः ॥ १५ ॥
एवं प्रत्यवमृश्यासावात्मानं प्रतिपद्यते । साहङ्कारस्य द्रव्यस्य योऽवस्थानमनुग्रहः ॥ १६ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

असदाग्रहमहंममताम् । प्रकृतेः पुरुषस्य च दृष्टं तत्त्वं येन तेन ज्ञानेन ॥ ९ ॥ ❀ ❀ निवृत्तानि बुद्ध्यवस्थानानि जाग्रदादीनि यस्य सः, अत एव दूरीभूतमन्यदर्शनं यस्य आत्मनाऽहंकारावच्छिन्नेनात्मानं शुद्धमुपलभ्य एकस्यैवावच्छेदानवच्छेदाभ्यां करणकर्मत्वे दृष्टांतमाह । चक्षुषा चक्षुरवच्छिन्नेनार्केण गगनस्थमर्कमिव । एवमात्मदृक् शुद्धमात्मानं पश्यन् ॥ १० ॥ ❀ ❀ मुक्तलिंगं निरुपाधिकमसति मिथ्याभूतेऽहंकारे सदाभासं सद्रूपेणावभासमानं ब्रह्म प्राप्नोति । शुद्धजीवस्वरूपाद्विशेषमाह । सतः कारणस्य प्रधानस्य बंधुमधिष्ठानम् । असतः कार्यस्य चक्षुरिव प्रकाशकम् । सर्वेषु कार्यकारणेष्वनुस्यूतम् अद्वयं परिपूर्णम् ॥११॥ ❀ ❀ अहंकारोपहितेन शुद्धब्रह्मप्रतिपत्तिं सदृष्टांतमाह । यथेति । जले स्थित आभासः सूर्यप्रतिबिंबो यदा गृहांतर्वर्तिभित्तौ स्फुरति तदा गृहकोणस्थितैः पुरुषैर्भित्त्यादौ स्थले स्थितेन स्वाभासेन सूर्यप्रतिबिंबेन यथा प्रथमं जलस्य आभासोऽवदृश्यते लक्ष्यते गगनस्थस्य गृहमध्ये प्रतिबिंबायोगात् । चार्थे तथाशब्दः । यथा च जलस्थेन आभासेन दिवि स्थितः सूर्यो लक्ष्यते ॥ १२ ॥ ❀ ❀ एवं भूतेंद्रियमनोमयैर्देहेंद्रियमनोभिरवच्छिन्नैः स्वाभासैरात्मप्रतिबिंबैस्त्रिवृत्त्रिगुणोऽहंकारः सतो ब्रह्मण आभासो यस्मिंस्तेन रूपेण लक्षितः । अहंकारस्थाभासं विना विषयाभासानुत्पत्तेः । अनेन चाहंकारेण सदाभासवता सत्यदृक् परमार्थज्ञप्तिरूप आत्मा लक्षित इत्यर्थः ॥ १३ ॥ ❀ ❀ इदानीं सुषुप्तिसाक्षित्वेन शुद्धात्मप्रतिपत्तिमनुभवतो दर्शयति त्रिभिः । भूतादिष्वसत्यसत्तुल्येऽव्याकृते निद्रया लीनेषु सत्सु यस्तत्र तदा विनिद्रो निरहंक्रियस्तमात्मानं प्रतिपद्यत इति तृतीयेनान्वयः ॥ १४ ॥ ❀ ❀ ननु यदि तदा विनिद्रोऽसावस्ति तर्हि जाग्रत्स्वप्नयोरिव स्फुटः किं नावभासते तत्राह । पूर्वं स द्रष्टातो द्रष्टृत्वेन सविकल्पतया स्फुटं प्रतीतः सुषुप्तौ तु

---

१ प्रा० पा०—मगति । २. प्रा० पा०—यथा ।

भूतादेरहंकारविषयस्य लीनत्वात्तद्विषयेऽहंकारे नष्टे सति स्वयमनष्टोऽपि मृषैवात्मानं नष्टवन्मन्यमानो यः। अन्यस्य नाशेऽन्यस्य नष्टतुल्यत्वे दृष्टांतः। नष्टवित्तो यथा आतुरो विवशः नष्टवद्भवतीत्यर्थः ॥ १५ ॥ ❀ ❀ ननु सुषुप्तौ न किंचिदनुभूयते। मैवम्, "सुखमहमस्वाप्सं न किंचिदवेदिषम्" इति विशेषज्ञानं विना केवलस्यात्मनः प्रतिसंधानादित्याह। एवमिति। ननु प्रतिसंधाने साहंकारस्य प्रतीतेः कथं निरहंक्रियत्वं तत्राह। साहंकारस्य द्रव्यस्य कार्यकारणसंघातस्यानुग्रहः प्रकाशकः अवस्थानं च द्रव्यविशेषणतयाऽहंकारस्यापि दृश्यत्वाच्च तद्द्रष्टाऽऽत्मा तद्व्यतिरिक्तः तमात्मानमित्यन्वयः ॥ १६ ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

सानुबंधे दारापत्यादिसहिते तत्त्वं स्वरूपम् ॥ ९ ॥ ❀ ❀ अत एव निवृत्तबुद्ध्यवस्थत्वादेव । अन्यदर्शनं भेददृष्टिः। अत्र चक्रवर्ती—ततश्च ज्ञानी शुद्धेन जीवात्मनैव परमात्मानं भक्त्यैवानुभूय तमेव प्राप्नोतीत्याह—उपलभ्येति । आत्मना शुद्धजीवेन चित्कणेन आत्मानं परमात्मानं पूर्णचैतन्यनिधिमुपलभ्य भक्त्यानुभूय चक्षुषा पटलादिदोषरहितेन ज्योतिःकणेनार्कं ज्योतिर्निधिमिव आत्मदृक् ज्ञानी प्रतिपद्यते प्राप्नोति अत्र पटलादिदोषरहितेनापि चक्षुषा यथोलूकादिरर्कं न पश्यति किन्तु तद्भिन्नो मनुष्यादिरेवार्कं पश्यति तथैव शुद्धेनापि जीवात्मना भक्तिरहितो ज्ञानी परमात्मानं नानुभवति किन्तु भक्तिमानेवानुभवति "भक्त्याहमेकया ग्राह्य" इति "भक्त्या मामभिजानाति यावान्यश्चास्मि तत्त्वतः। ततो मां तत्त्वतो ज्ञात्वा विशते तदनंतरम्" इति भगवदुक्तेः ॥ १० ॥ ❀ ❀ कार्यस्य प्रपञ्चस्य। विश्वनाथः—तं कीदृशं मुक्तैर्जीवन्मुक्तैर्लिंग्यते ज्ञायते असति जगति सदैव भासतेंतर्यामित्वेनेति तं विशेषणपंचकेनानुभवज्ञानपूर्वदशायां तस्य शास्त्रोत्थज्ञानविषयीभूतत्वं ज्ञापितम् ॥ ११ ॥ ❀ ❀ प्रथमं जीवात्मैव केन प्रकारेण ज्ञातव्यस्ततस्तेन परमात्मा चेत्यत्र दृष्टांतमाह—यथेति। जले स्थित आभासः प्रतिबिंबाकारो निष्कंपः सूर्यप्रकाशो यदा गृहान्तर्वर्त्तिस्वच्छभित्त्यादौ स्थले स्फुरति तदा गृहकोणस्थितैः पुंभिः प्रथमं स्थलस्थ आभासो दृश्यते कुतश्च कुतोयं प्रकाश इति परामृशद्भिस्तैस्तेन स्थलस्थेन स्वाभासेन शोभनसूर्यप्रकाशेन जलस्थो निष्कंप आभासोवदृश्यते लक्ष्यते पुनश्चायमवभासः कुत इति तथा तेनैव प्रकारेण तेन जलस्थेन स्वाभासेन शोभनप्रकाशेन दिवि स्थितः सूर्यो लक्ष्यते ॥ १२ ॥ ❀ ❀ एवं सूर्यवत्। इत्यर्थ इति। न हि चैतन्यप्रकाशं विना जडैः किंचित्कर्तुं शक्यते इति भावः ॥ १३ ॥ ❀ ❀ चक्रवर्ती-नन्वार्केण चक्षुषार्क इवात्मनैव भक्तिमता ज्ञानिना परमात्मानुभूयत इति सत्यं जानीमः, किन्तु चक्षुःश्रोत्रादिकमिव जीवात्मानं त्रिवृदहंकारात्पृथग्भूतं साक्षाद्दर्शयेत्यपेक्षायामाह—भूतेति। भूतादिषु असति अनभिव्यक्तत्वादसत्तुल्ये प्रधाने निद्रया लीनेषु सत्सु यस्तत्र तदा विनिद्रो निरहंक्रियस्तमात्मानं जीवं प्रतिपद्यते लोकोनुभवतीति ॥ १४ ॥ ❀ ❀ अत्राक्षिपति—नन्विति। पूर्वं जाग्रत्स्वप्नयोः। स जीवः। अतः अनयोरवस्थयोः सप्तम्यर्थे तसिल् स्वामिचरणैः कृतः। भूतादेरिहादिर्नेन्द्रियादिग्रहः। इत्यर्थ इति। न तु नष्टो भवतीति भावः। चक्रवर्त्ती—तु नन्वलं तर्हि योगाभ्यासेन मनोबुद्धीन्द्रियादिलये सति यः केवलात्मानुभवो योगाभ्यासफलरूपस्तं खलु निद्रैव कारयतीति तत्राह-मन्यमान इति। भूतादीनामहंकार्याणामहंकारस्य च लयादहंकरणे नष्टे सति द्रष्टा जीवो दृश्यानामभावाद्दर्शने च नष्टे सति स्वयमनष्टोप्यात्मानं नष्टवन्मन्यमानो य इत्यविद्यावंतं जीवं सुषुप्तावुत्प्रेक्षते नष्टवित्त इव न तु नष्टवित्तासक्तिरित्यर्थः। अयमर्थः—योगाभ्यासेन जीवोपाधिभूतानां तत्त्वानामात्यंतिके लये सत्येव जीवः स्वरूपानंदमयो भवति, न तु नैमित्तिकयोः सुषुप्तिप्रलययोः यथा वित्ते नष्टे सत्याकिंचन्यं सुखं न भवति किं तु वित्तासक्तावेव नष्टायां सत्यां तथैव जीवस्य नैष्कर्म्यं विना सुषुप्तिप्रलययोरुपाधिनाशेपि न स्वरूपप्राप्तिर्नैष्कर्म्यं च भक्तिज्ञानाभ्यां विना न भवेदिति। सुषुप्तावविद्यातत्संस्काराणां च विद्यमानत्वात् केवलात्मानुभवोप्यकिंचित्कर एवेति ॥ १५ ॥ ❀ ❀ पुनराक्षिपति—नन्विति। प्रतिसंधानात्स्फुरणात्। एवमहंकारावभासकत्वेन कार्यकारणसंघातो देहस्तस्य ॥ १६ ॥

## श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

यथेति युग्मकम्। देहादिभिरवच्छिन्नैस्तत्र स्थितैः सदाभासवता ब्रह्माभासवता लक्षित इत्यस्यावृत्तेरित्यर्थः। इत्युक्तम् ॥ १२ ॥ १३ ॥ ❀ ❀ भूतसूक्ष्मेति त्रिकम्। अव्याकृतेऽज्ञाने तदा सुषुप्तौ तं शुद्धात्मानं सुषुप्तावात्मानुभवाभावमाशङ्कते। नन्विति। अतो जाग्रत्स्वप्नयोर्द्दृश्यसद्भावात् सविकल्पकतया ज्ञानादिविशेषेण विशिष्टतया तद्विषये भूतेन्द्रियादिविषयके अन्यस्याहंकारादेः नाशेऽन्यस्यात्मनः नष्टतुल्यत्वे अनष्टत्वे शङ्कते। नन्विति। परिहरति। मैवमिति। विशेषज्ञानं विनेति। यथा जाग्रत्स्वप्नयोर्द्दृश्यद्रष्टृदर्शनात्मकं विशेषज्ञानमस्ति तथा विशेषज्ञानं सुषुप्तौ नास्तीत्यर्थः। किन्तु सुखं यथा स्यात्तथा अहमस्वाप्समिति सुखस्वापसाक्षितया तथा न किंचिद् घटादिवस्तुजातमवेदिषमित्यज्ञानसाक्षितया श्रुत्युक्तया केवलस्य शुद्धस्यानुभूतस्य जाग्रदवस्थायां स्मरणात् अनुभवस्मृत्योस्सामानाधिकरण्येनानुभूतस्यान्येन स्मरणानुपपत्तेः सुषुप्तौ अस्त्येवात्मानुभवः विषयसम्बन्धाभावात् न स्पष्ट इत्यर्थः। सुषुप्तावुक्तं निरहंक्रियत्वं शङ्कते, ननु प्रतिसन्धान इति। यदि सुषुप्तावहङ्कारो नास्ति तदा जाग्रति कथं स्मर्य्यते, अनुभवमन्तरा स्मरणानुपपत्तेः। सति च तस्मिन्निरहंक्रियत्वं कथमित्याशङ्कायामाह। साहङ्कारस्येति। अवस्थानञ्चाधारः। द्रव्यविशेषणतयेति। जाग्रत्स्वप्नयोर्योऽहङ्कारस्स द्रव्यस्य कार्य्यकारणसङ्घातरूपदेहस्य विशेषणं कथंभूतोऽयं देहः अहमेवेति तस्मात्प्राकृताहङ्कारस्यापि

दृश्यत्वं तस्मादपि हेतोः तद्द्रष्टा ततो भिन्न एव। चकारेण नष्टेऽहङ्करण इत्यनेनोक्तोऽहङ्कारनाशरूपो हेतुः समुच्चितः। तस्मात्तत्र द्रव्यविशेषणीभूतप्राकृताहङ्काराभावेन निरहंक्रियत्वमुक्तम्, न तु स्मर्यमाणस्वरूपात्मकाभावेन द्वयोरविविक्तत्वन्तु स्वरूपाज्ञानेनैवेति भावः। मूले एवं प्रत्यवमृश्य सुखमहमस्वाप्समिति श्रुत्युक्तप्रकारेणात्मानं प्रतिसन्धाय ॥ १४—१६ ॥

## श्रीमद्वीरराघवव्याख्या

सानुबन्धे पुत्रकलत्राद्यनुबन्धसहितेऽस्मिन् देहेऽसदाग्रहं ममाभिमतिमकुर्वन् दृष्टं तत्त्वं याथात्म्यं यस्मिन् तेन प्रकृतेः पुरुषस्य च ज्ञानेन प्रकृतिपुरुषयोर्हेयोपादेयत्वज्ञानेनेत्यर्थः ॥ ९ ॥ ❀ ❀ निवृत्तानि बुद्धेर्मनसोऽवस्थानानि सङ्कल्पविकल्पादीनि यस्य सः, अत एव दूरीभूतमन्यस्य भगवद्व्यतिरिक्तस्य दर्शनं यस्य सः। आत्मदृक् प्रकृतिविविक्तात्मदर्शी ॥ १० ॥ ❀ ❀ असति देहे चक्षुषा आदित्याधिष्ठितचक्षुरिन्द्रियेणार्कमधिष्ठातारमादित्यमिवात्मना परमात्माधिष्ठितेन प्रत्यगात्मना आत्मानं परमात्मानमुपलभ्य साक्षात्कृत्य पश्चान्मुक्तलिङ्गः प्रारब्धावसाने मुक्तदेवादिशरीरः, द्वितीयान्तपाठे मुक्तकर्मायत्तदेहादिशरीरं सदाभासं नित्यासंकुचितज्ञानस्वरूपं सतः प्रत्यगात्मनः बन्धुं "पिता च रक्षकः शेषी भर्ता" इत्याद्युक्तसर्वविधबन्धुमसच्चक्षुः असतो देहादेरपि चक्षुरिव प्रकाशकं "तस्य भासा सर्वमिदं विभाति" इति श्रुतेः, सर्वानुस्यूतं सर्वान्तर्यामिणमद्वयं स्वसमाभ्यधिकरहितं परमपुरुषं प्रतिपद्यते प्राप्नोति ॥ ११ ॥ ❀ ❀ आत्मदृगात्मनात्मानमुपलभ्येत्यनेन प्रकृतिविविक्तस्वात्मस्वरूपं पश्यन्नेव तदन्तर्यामिणं परमात्मानमुपलभ्य तं प्रतिपद्यत इत्युक्तं, तत्र कथमतीन्द्रियं निरतिशयसूक्ष्ममात्मस्वरूपं दर्शनयोग्यमित्याशङ्कायां देहेन्द्रियादिभ्यो विलक्षणात्मस्वरूपप्रत्यवमर्शनप्रकारमात्मोपलम्भस्य जागराद्यवस्थास्वतिविशदतरत्वकथनमुखेन सदृष्टान्तमाह। यथेति। प्रथमं दृष्टान्तं शिक्षयति यथेत्येकेन, स्थलस्थेनाभासेन तृणलोष्टादिप्रकाशकेनादित्यालोकेनैवेत्यर्थः, जलस्थ आभास आदित्यप्रतिबिम्बं दृश्यते अनादित्ये आदित्यबुद्धिर्हि सा तथा स्वाभासेन स्वालोकेन जलस्थेन जलेऽपि प्रतिबिम्बं प्रकाशयता तेनैव दिवि स्थितः साक्षादादित्यो दृश्यते। अनादित्यादित्ययोरादित्यावलोकेनैव प्रतीतिरित्यर्थः॥ १२ ॥ ❀ ❀ दृष्टान्तेन शिक्षितमर्थं दार्ष्टान्तिके दर्शयति। एवमिति। एवं भूतेन्द्रियमनोमयैः भूतेन्द्रियमनआत्मकैस्त्रिभिः स्वकार्यैस्त्रिप्रकारोऽहङ्काराख्यः प्रकृतिपरिणामविशेषः स्वाभासैः स्वधर्मभूतज्ञानैः आत्मव्यतिरिक्तोऽप्यात्मतया गृह्यते सा हीन्द्रियमनोऽहङ्कारपञ्चभूतस्वरूपदेहात्मविषयात्मबुद्धिर्भ्रान्तिः तथा तेनैव स्वाभासेन स्वाभाविकस्य प्रभाभूतज्ञानेन सत्यदृक् निर्विकारज्ञानस्वरूप आत्मा गृह्यत इत्यर्थः। स्वाभासैरिति बहुवचनं देवोऽहं मनुष्योऽहं कृशोऽहमित्यादिनानाकारविषयत्वाभिप्रायम्। अयमर्थः न ह्यन्धकारे प्रतिबिम्बवज्ज्ञानमतोऽनादित्ये आदित्यभ्रान्तिः साक्षादादित्ये आदित्यबुद्धिश्चादित्यधर्मभूतालोकेनैव, एवमनात्मनि देहे आत्मभ्रान्तिः साक्षादात्मन्यात्मप्रतिपत्तिश्चात्मधर्मभूतज्ञानेनैव भवति ॥ १३ ॥ ❀ ❀ अथेन्द्रियाद्यनवधानदशायामप्यात्मावभासमाह। भूतेति। बुद्धिर्महान्, आदिशब्दादहङ्काराद्रव्यं भूतसूक्ष्मादिषु निद्रया लीनेषु अनवभासमानेष्वकार्यकरेष्विति वा तदा असति देहे यः निर्निद्रः वीतनिद्रः निरहंक्रियः देहात्माभिमानरहितः तमात्मानं प्रतिपद्यत इति तृतीयेनान्वयः ॥ १४ ॥ ❀ ❀ ननु यदि तदा विनिद्रोऽसावस्ति तर्हि जाग्रत्स्वप्नयोरिव स्फुटं किं नावभासते तत्राह। मन्यमान इति। पूर्वं स द्रष्टा देहादेर्द्रष्टृत्वेन सविकल्पकतया स्फुटं प्रतीतस्तदा सुषुप्तौ देहादेरनात्मन्यात्माभिमानरूपाहङ्कारविषयस्य लीनत्वात्तद्विषयेऽहङ्करणे नष्टे सति स्वयमनष्टोऽपि मृषैवात्मानं नष्ट इव मन्यमानो यः अन्यस्य नाशे अन्यस्य नष्टतुल्यत्वे दृष्टान्तः—नष्टवित्तो यथातुरो विवशः नष्टवद्भवति तथेत्यर्थः। ननु सुषुप्तौ न किञ्चिदनुभूयते तथा च श्रुतिः "नाहं खल्वयमेवं संप्रत्यात्मानं जानात्ययमहमस्मि" इति, मैवं तमोगुणाभिभवात्परागर्थानुभवाभावाच्चाहमर्थस्यात्मनो विविक्तब्राह्मणत्वादिस्फुटप्रतिभासाभावेऽप्यप्रबोधादहमित्येकाकारेणात्मनः स्फुरणात्सुषुप्तावपि नाहमर्थस्यात्मनो विगमः। अत एव हि सुप्तोत्थितस्यैवं परामर्शः सुखमहमस्वाप्सं न किञ्चिदवेदिषं मामप्यहं न ज्ञातवानिति, अनेन प्रत्यवमर्शेन तदानीमप्यहमर्थस्यैवात्मनः सुखित्वं ज्ञातृत्वं च ज्ञायते। सुखमहमस्वाप्समिति परामर्शे हि सुखमित्यनेन तदानीमनुकूलतया भासमानस्वरूपमनुसंहितं भवति, अहमित्यनेन स्वस्मै भासमानत्वरूपप्रत्यक्त्वं चानुसंहितं भवति यथा मन्दमगच्छं मधुरमगायमिति परामर्शे पूर्वं गमनेन सह तदानींतनतन्मान्द्यं गानेन सह तदानींतनतन्माधुर्यं चानुसंहितं भवति तद्वत् नन्वेतावन्तं कालं न किञ्चिदहमज्ञासिषमिति च परामृशतीति चेत्ततः किं न किञ्चिदिति कृत्स्नप्रतिषेध इति चेन्न, अहमवेदिषमिति वेदितुरहमर्थस्यानुवृत्तेः वेद्यविषयो हि स प्रतिषेधः, मामप्यहं न ज्ञातवानिति अहमर्थस्यापि तदानीमननुसंधानं प्रतीयत इति चेन्न, मामप्यहं न ज्ञातवानिति परामर्शे हि अहमर्थस्य ज्ञातुरनुवृत्तेर्न स्वरूपं निषिध्यतेऽपि तु प्रबोधसमयेऽनुसन्धीयमानस्याहमर्थस्य व्यावर्तकब्राह्मणत्वादिबाह्यधर्मविशिष्टत्वेन बुद्धिसुखाद्यनन्तरधर्मविशिष्टत्वेन च प्रतिभासाभावोऽहं मां न ज्ञातवानित्युक्तेर्विषयो विवेचनीयः। जागरितावस्थानुसंहितजात्यादिविशिष्टोऽस्मदर्थो मामित्यंशस्य विषयः, स्वापाप्ययावस्थाप्रसिद्धाविशदस्वानुभवैकतानश्चाहमर्थोऽहमित्यंशस्य विषयः, अत्र सुप्तोऽहमीदृशोऽहमिति च मामपि न ज्ञातवानहमित्येव खल्वनुभवप्रकारः। नाहं खल्वयमेवं संप्रतीत्युदाहृतश्रुतावहमित्यनेन अहमयमीदृशजात्यादिविशिष्ट इति न जानातीत्युच्यते, तस्मादहमर्थस्यात्मनः सुषुप्तौ स्फुरणमस्त्येव ॥ १५ ॥ ❀ ❀ एतदेवाभिप्रयन्नाह एवमिति। एवं सुषुप्तावहमर्थस्यात्मनो वृत्तिं प्रत्यवमृश्य परामृश्यासौ प्रकृतिविविक्तात्मस्वरूपजिज्ञासुरात्मानं प्रकृति-

विविक्तं प्रत्यगात्मानं प्रतिपद्यते यथावज्जानीयात्। पुनरात्मानमेव विशिनष्टि। साहङ्कारस्य द्रव्यस्य पञ्चभूतसमुदायस्य य अवस्थानमवस्थापक इत्यर्थः, आत्मविश्लेषे देहस्य विशरणस्वभावत्वादनुग्रहः अनुग्राहकः देहस्य प्रवृत्तिहेतुरित्यर्थः। न हि निरात्मको देहः प्रवर्त्तते ॥ १६ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

पुत्राद्यनुबन्धसहितेऽस्मिन् देहेऽसदाग्रहं मदीयं तदीयमिति भेदज्ञानमकुर्वन् प्रकृतेः पुरुषस्य दृष्टतत्त्वेन यथावत् ज्ञानस्वरूपेण ज्ञानेन ॥ ९ ॥ ❀ ❀ निवृत्तबुद्ध्यवस्थानः निवृत्तं बुद्धेरर्वाक्स्थानं निद्रादिलक्षणं यस्य स तथा, दूरीभूतमन्यदर्शनं शब्दादिविषयज्ञानं दुःशास्त्रं वा यस्य स तथा, चक्षुषार्कमिवात्मना बाह्यान्तःकरणेनाविमिश्रस्वरूपान्तःकरणेन आत्मानं स्वस्वरूपमुपलभ्य दृष्ट्वा द्रष्टव्यनामादिप्राणान्तदेवतानां च स्वस्वरूपं दृष्ट्वा तत्प्रसादादात्मानं स्वान्तर्यामिणं च एका मुख्या दृगेव ज्ञानमेव यस्य स तथा ॥ १० ॥ ❀ ❀ प्रारब्धक्षये सति मुक्तलिङ्गः समुत्सृष्टलिङ्गशरीरः देवयानेन विरिञ्चिलोकमुपागम्यासति ब्रह्मप्रलये अनिरुद्धद्वारेण विरिञ्चं प्रविशति तेन, सह सत्प्राण आभासः प्रतिबिम्बो यस्य तद् ब्रह्म प्रतिपद्यते इत्यन्वयः "शेषस्य प्रतिबिम्बास्तु देवाः शेषश्च ब्रह्मणः। स परब्रह्मणश्चैव ते स्वबिम्बप्रदर्शकाः। ततः स्वबिम्बद्वारेण परमात्मप्रदर्शनम्" इत्यनेन सर्वोऽप्युक्तार्थो ज्ञायते। सदाभासं विशिनष्टि। सतो बन्धुमिति। पितृत्वादिना सतः प्राणस्य बन्धुभूतं सतो बन्धुमसति निरविदन्नित्यादेः सर्वरूपेषु पूर्णगुणत्वादिना समं चक्षुः सर्वज्ञं सर्वेषु मुक्तामुक्तप्रपञ्चेषु मणिषु सूत्रमिव धारकत्वेनानुस्यूतं प्रोतमद्वयमसमाधिकम् ॥ ११ ॥ ❀ ❀ मुख्यप्राणादिप्रतिबिम्बस्य बिम्बभूतपरमात्मप्रदर्शकत्वमुक्तं, तत्र प्रतिबिम्बानां बिम्बप्रदर्शकत्वप्रकारः कथमिति तत्राह यथेति। गगनतलवर्तिनः सूर्यस्य भासो जले भवति जलस्यापि कदाचित्स्थले भित्त्यादौ भवत्येवं स्थिते यथा स्थूलस्थेन भित्त्यादिगतेनाभासेन जलस्य आभासो दृश्यते ज्ञायते यथा। यथा च जलस्थेन स्वाभासेन प्रतिबिम्बेन दिवि स्थितः सूर्यः बिम्बभूतोऽवगम्यते एवं वा योजनाभेदः जलस्य आभासः स्थलस्थेन जले प्रतिबिम्बितं मुखं तीरस्थपुरुषमुखमेतादृशलक्षणमिति यथा ज्ञापयति यथा जलस्थेन स्वाभासेन प्रतिबिम्बेन दिवि स्थितः सूर्यो दृश्यते जले स्थितं सूर्यमण्डलं व्योम्नि स्थितं बिम्बभूतं सवितृमण्डलमवगमयति ॥ १२ ॥ ❀ ❀ एवं तथा त्रिवृद्वैकारिकतैजसतामसाहङ्काराभिमानी शेषः स्वाभासे स्वप्रतिबिम्बैः भूतेन्द्रियमनोगुणैरभिमानिभिरिन्द्रादिदेवैर्लक्षितो भवत्यनेन शेषाख्येन प्रतिबिम्बेन सन् ब्रह्मा लक्षितस्तेन सदाभासेन चतुर्मुखाख्यप्रतिबिम्बेन सत्यदृक् यथार्थज्ञानी श्रीनारायणो लक्षितो भवति ॥ १३ ॥ ❀ ❀ ननु स्वतः सत्यदृक्त्वेऽप्याभासेनास्यासत्यदृक्त्वमभ्युपेयम्। अन्यथा स्वतोऽङ्गस्य सम्बन्धाभावेन लक्षणानुपपत्तिस्तदनुपपत्त्यावुक्तार्थानुपपत्तिरिति तत्राह भूतसूक्ष्मेति। इह संसारे भूतसूक्ष्मेन्द्रियमनोबुद्ध्यादिषु लीनेषु निद्रया नष्टवृत्तिषु सत्सु अतिसुप्तेषु यो विनिद्रः उत्फुल्ललोचनः स सत्यदृक्। अनेन कदाप्यस्य ब्रह्मणोऽज्ञानासम्भवो दर्शितोऽत उक्तानुपपत्तिः प्रेक्षावतां हृदि पदं न धत्ते ॥ १४ ॥ ❀ ❀ परमात्मस्थितिं निरूप्य जीवस्थितिमाह। मन्यमान इति। योऽनष्टोऽपि मनोधर्मे अहङ्करणे नष्टे सत्यात्मानं नष्टवन्मृषा मन्यमानः कदा तदा सुप्तावस्थायां नष्टवित्त इवातुरो द्रष्टा जीव इत्यन्वयः अनेन कदाप्यविनष्टद्रष्टृत्वं परस्य लक्षणमितरस्य तदन्यथेति वैलक्षण्यमुभयोरुक्तम् ॥ १५ ॥ ❀ ❀ जीवपरयोर्वैलक्षण्यज्ञानस्य फलमाह एवमिति। एवमुक्तप्रकारेण ब्रह्मादिजीवराशेः परस्य हरेर्जीवाद्वैलक्षण्यं प्रत्यवमृश्य युक्त्यालोच्य निश्चित्यासावुपासको जीवः। साहङ्कारस्य द्रव्यस्य योऽवस्थानं स्थितिहेतुरनुग्रहश्च सत्ताप्रतीतिदानेनानुगृह्णातीति ज्ञातः तमात्मानं विष्णुं प्रतिपद्यत इत्यन्वयः। एकस्यैव परब्रह्मणोऽवस्थाद्वयमत्रोच्यते न तु वैलक्षण्यं निश्चायकप्रमाणाभावादितीयमाशङ्का "नित्यदृक् परमात्मासौ मृतवद्यो न किञ्चन। जानाति जीवः स ज्ञेयः परमात्मा तदाश्रयः।" इत्यनेन निश्चायकेन परिहर्तव्या ॥ १६ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः।

उपलभ्येति सार्धकेन। असति औपाधिकेऽहङ्कारे आत्मना तदुपाधिकेनैव द्वारभूतेन ॥ १० ॥ ❀ ❀ मुक्तलिङ्गम् उपाधिस्पर्शशून्यम्। अत एव सद्रूपेण आ सम्यक् भासमानमात्मानमुपलभ्य ततस्तस्यापि भासनाद्युपकारकतया तत्रैव स्थितं परमात्मानमपि प्रतिपद्यते जानाति। तमेव विशिनष्टि। असतां तदन्येषामपि चक्षुर्भासकं सर्वत्र सति असति च अनुस्यूतम्। अत एवाद्वयं ततो मुख्यत्वात्तदुपलब्धार्थमेव शुद्धात्मदर्शनमिति भावः। "अन्यार्थश्च परामर्शः" इति न्यायेन ॥ ११ ॥ ❀ ❀ एवं स्वाप्रपरम्परया मूलदर्शनं दृष्टान्तयति। यथेति युग्मकेन निगमयति। एवमिति। भूतादिमयैः सङ्घातोपाधिकैः स्वाभासैः स्वस्याहङ्कारोपाधिकस्याभासो येषु तैः गृहकोणस्थितपुरुषस्थानीयैः पुरुषैस्त्रिवृदहङ्कार उपाधिकत्वेन वर्त्तते यस्य स लक्षितः। ततश्च क्रमादनेनाहङ्कारोपाधिकेन पारंपरिकद्वारभूतेन तथा सदाभासेन शुद्धेन च साक्षाद्द्वारभूतेन सत्यदृक् परमात्मापि लक्षित इत्यर्थः ॥ १२—१३ ॥ ❀ ❀ भूतसूक्ष्मेति त्रिकम्। असति सतः शुद्धजीवादितरस्मिन् अव्याकृते ॥ १४—१५ ॥ ❀ ❀ साहङ्कारे सति मामहं नाज्ञासिषमिति सुषुप्त्यनन्तरमेव प्रतिसन्धानान्तरे माम्पदोक्तभूतसूक्ष्मादिसङ्घातलक्षणद्रव्यविशेषणतया तदहङ्कारस्याप्यन्यदा दृश्यत्वापत्तेरहंपदोक्तस्तद्द्रष्टात्मा तद्व्यतिरिक्तो यः प्रकाशकः आश्रयश्चेत्यर्थः ॥ १६ ॥

## श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

प्रकृतेः पुरुषस्य च दृष्टं तत्त्वं येन तादृशेन ज्ञानेन निवृत्तानि बुद्ध्यवस्थानानि जाग्रदादीनि यस्य सः, अत एव दूरीभूतमन्यस्य विपयस्य दर्शनं यस्य सः ॥ ९ ॥ ❀ ❀ ततश्च ज्ञानी शुद्धेन जीवात्मनैव परमात्मानं भक्त्यैवानुभूय तमेव प्राप्नोतीत्याह। उपलभ्येति आत्मना शुद्धजीवेन चित्कणेन आत्मानं परमात्मानं पूर्णचैतन्यनिधिमुपलभ्य भक्त्यानुभूय चक्षुपा पटलादिदोपरहितेन ज्योतिःकणेनार्कं ज्योतिर्निधिमिवात्मदृग् ज्ञानी प्रतिपद्यते प्राप्नोति। अत्र पटलादिदोपरहितेनापि। चक्षुपा यथोलूकादिरर्कं न पश्यति, किन्तु तद्भिन्नो मनुष्यादिरेवार्कं पश्यति, तथैव शुद्धेनापि जीवात्मना भक्तिरहितो ज्ञानी परमात्मानं नानुभवति किन्तु भक्तिमानेवानुभवति। "भक्त्याहमेकया ग्राह्य" इति "भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वतः। ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम्"िति भगवदुक्तेः ॥ १० ॥ ❀ ❀ तं कीदृशं मुक्तैर्लिङ्ग्यते ज्ञायते इति। तमित्यनेनानुभवज्ञानविषयीभूतत्वं तस्योक्तम्। असति नश्वरे जगति सदैव भासतेऽन्तर्यामित्वेनेति तं सतः कारणस्य बन्धुं पतिमसतः कार्यस्य महदादेश्चक्षुरिव प्रकाशकं सर्वेपु कार्यकारणेष्वनुस्यूतं परिपूर्णमद्वयमेकमिति विशेषणपञ्चकेनानुभवज्ञानपूर्वदशायां तस्य शास्त्रोत्थज्ञानविषयीभूतत्वं ज्ञापितम् ॥ ११ ॥ ❀ ❀ प्रथमं जीवात्मैव केन प्रकारेण ज्ञातव्यस्ततस्तेन परमात्मा चेत्यत्र सदृष्टान्तमाह यथेति। जले स्थितः आभासः प्रतिबिम्बाकारो निष्कम्पः सूर्यप्रकाशो यदा गृहान्तर्वर्त्ती स्वच्छभित्त्यादौ स्थले स्फुरति तदा गृहकोणस्थितैः पुरुपैः प्रथमं स्थलस्य आभासो दृश्यते, ततश्च कुतोऽयं प्रकाश इति परामृशद्भिस्तैः तेन स्थलस्थेन स्वाभासेन शोभनसूर्यप्रकाशेन जलस्थो निष्कम्पः आभासोऽवदृश्यते। लक्ष्यते पुनश्चायमप्याभासः कुत इति तथा तेनैव प्रकारेण तेन जलस्थेन स्वाभासेन शोभनप्रकाशेन दिवि स्थितः सूर्योऽवदृश्यते ॥ १२ ॥ ❀ ❀ एवमेव विवेकिभिः प्रथमं भूतेन्द्रियमनांसि चैतन्यत्वात् परमात्मप्रकाशवन्ति दृश्यन्ते। ततश्च जडेष्वेपु परमात्मप्रकाशोऽयं कुतस्त्य इति भूतेन्द्रियमनोमयैः भूतेन्द्रियमनोवर्तिभिः स्वाभासैस्त्रिवृदहङ्कार उपाधित्वेन वर्त्तते यस्य स जीवात्मा परमात्मनः प्रकाशसंभूतः किरणरूपो लक्षितः, ततश्चानेन जीवात्मना सदाभासेन सता भक्तिमता प्रकाशेन सत्यदृक् सत्यज्ञानानन्दः परमात्मा लक्षित उपलब्धः ॥ १३ ॥ ❀ ❀ ननु आर्केण चक्षुपैवार्क इवात्मनैव भक्तिमता ज्ञानिना परमात्मानुभूयत इति सत्यं जानीमः, किन्तु चक्षुःश्रोत्रादिकमिव तं जीवात्मानं त्रिवृदहङ्कारात् पृथग्भूतं साक्षाद्दर्शयेत्यपेक्षायामाह भूतेति त्रिभिः। भूतादिपु असति अनभिव्यक्तत्वादसत्तुल्ये प्रधाने निद्रया लीनेपु सत्सु यस्तत्र तदा विनिद्रो निरहंक्रियः तमात्मानं जीवं प्रतिपद्यते लोकोऽनुभवतीति तृतीयेनान्वयः ॥ १४ ॥ ❀ ❀ नन्वलं तर्हि योगाभ्यासेन मनोबुद्धीन्द्रियादिलये सति यः केवलात्मानुभवो योगाभ्यासफलरूपस्तं खलु निद्रैव कारयतीति तत्राह मन्यमान इति। तदा भूतादीनामहंकार्याणामहङ्कारस्य च लयादहङ्करणे नष्टे सति द्रष्टा जीवो दृश्यानामभावाद्दर्शने च नष्टे सति। स्वयमनष्टोऽपि आत्मानं नष्टवन्मृषा मन्यमानो य इत्यविद्यावन्तं जीवं सुपुप्तावुत्प्रेक्षते नष्टवित्त इवातुर इति। नष्टवित्तासक्तिरित्यर्थः। अयमर्थः योगाभ्यासेन जीवोपाधिभूतानां तत्त्वानामात्यन्तिके लये सत्येव जीवः स्वीयरूपानन्दमयो भवति, नतु नैमित्तकयोः सुपुप्तिप्रलययोः। यथा वित्ते नष्टे सत्याकिञ्चन्यं सुखं न भवति किन्तु वित्तासक्तावेव नष्टायां सत्यां तथैव जीवस्य नैष्कर्म्यं विना सुपुप्तिप्रलययोरुपाधिनाशेऽपि न स्वरूपप्राप्तिर्नैष्कर्म्यं च भक्तिज्ञानाभ्यां विना न भवेदिति सुपुप्तौ अविद्यातत्संस्काराणाञ्च विद्यमानत्वात् केवलात्मानुभवोऽप्यकिञ्चित्कर इति ॥ १५ ॥ ❀ ❀ ननु सुपुप्तौ न किञ्चिदनुभूयते। मैवं, सुखमहमस्वाप्सं न किञ्चिदवेदिषमिति विशेषज्ञानं विना केवलस्यात्मनः प्रतिसन्धानादित्याह। एवमिति। किञ्च साहङ्कारस्य भूतेन्द्रियादिसङ्घातस्य देहस्य योऽवस्थानमाश्रयः यमेव जीवात्मानमाश्रित्य अहङ्कारादयो भोग्येपु विषयेपु प्रवर्त्तन्त इत्यर्थः। तथा य एव जीवात्मा अनुग्रहः स्वीयभोक्तृत्वलक्षणधर्मप्रदानादनुग्राह्य इत्यर्थः ॥ १६ ॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

निवृत्तानि बुद्ध्यवस्थानानि रागद्वेषादिद्वन्द्वानि यस्य सः, चक्षुपा अर्कप्रकाशितेन अर्कमिव आत्मना स्वप्रकाशितेन अन्तःकरणेन आत्मानं प्रकृतिविविक्तस्वस्वरूपमुपलभ्य अद्वयं प्रतिपद्यते इत्युत्तरेण सम्बन्धः ॥ १० ॥ ❀ ❀ मुक्तलिङ्गं सर्वदोपास्पृष्टरूपं सदाभासं नित्यापरिच्छिन्नज्ञानम्। सतः पुरुषस्य प्रकृतेश्च बन्धुं "प्रधानक्षेत्रज्ञपतिः" इति श्रुतेः असतः कार्यस्य चक्षुःप्रकाशकम्, 'तस्य भासा सर्वमिदं विभाति" इति श्रुतेः, सर्वानुस्यूतं सर्वात्मानम् अद्वयं निःसमानातिशयं भगवन्तं विश्वकारणमसति कार्ये विश्वस्मिन् प्रतिपद्यते प्राप्नोति ॥ ११ ॥ ❀ ❀ आत्मनात्मानमुपलभ्येत्युक्तं तत्र प्रकृतिविविक्तं जीवात्मानं वर्णयति यथेति पञ्चभिः। यथा गृहकोणस्थेन द्रष्ट्रा स्थलस्थेन स्वसमीपवर्तिभित्त्यादिस्थेन आभासेन जलस्थ आभासोऽवदृश्यते लक्ष्यते तेन जलस्थेन स्वाभासेन सूर्यप्रतिबिम्बेन दिवि स्थितः सूर्यो लक्ष्यते ॥ १२ ॥ ❀ ❀ एवमनेन प्रस्तुतेन सर्वाचेतनविलक्षणेन ज्ञात्रा सदाभासेन नित्यज्ञानेन स्वाभासैः स्वप्रकाशप्रकाशितैरचेतनैः भूतेन्द्रियमनोमयैः तामसराजससात्त्विकैः कार्यैः तत्कारणभूतः अचेतनः त्रिवृदहङ्कारो लक्षितो भवति स स्वदृक् स्वाभाविकज्ञानस्वरूपो ज्ञाता चेत्यर्थः ॥ १३ ॥ ❀ ❀ सुपुप्ति-

साक्षित्वेन जीवं दर्शयति भूतेति त्रिभिः। भूतसूक्ष्मादिषु निद्रया लीनेषु यस्तत्र तदा असति मृतकतुल्ये देहे निरहंक्रियः देहाभिमानशून्यः विनिद्रः स प्रत्यवमृश्यात्मानं प्रतिपद्यते इति तृतीयेनान्वयः ॥ १४ ॥ ❀ ❀ ननु यदि सुषुप्तौ विनिद्रस्तर्हि जाग्रत्स्वप्नयोरिव कुतो नावभासते इत्यत आह मन्यमान इति। अहं भूतादेर्द्रष्टेत्येवमहंकरणे द्रष्टृत्वाहङ्कारविषये भूतसूक्ष्मादौ नष्टे लीने सति अनष्टोऽपि द्रष्टा नष्टवित्तः आतुरो व्याकुलः मृत इव यथा भवति तद्वत् आत्मानं मृषैव नष्टवन्मन्यमानो यः ॥ १५ ॥ ❀ ❀ असौ एवंभूतं सुषुप्तौ सन्तमात्मानं प्रत्यवमृश्य सुखमहमस्वाप्सं न किञ्चिदवेदिषमित्येवं प्रबोधवेलायां परामर्शं कृत्वा आत्मानं सर्वावस्थानुगतत्वेन प्रतिपद्यते। कथंभूतः स आत्मा यः साहङ्कारस्य सान्तःकरणस्य द्रव्यस्य देहस्य अवस्थानं धारक इत्यर्थः, अत एव अनुग्रहः अनुग्राहकः ॥ १६ ॥

## श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

निवृत्तेति। निवृत्तानि बुद्ध्यवस्थानानि यस्य। [1]दूरीभूतान्यन्यानि दर्शनानि यस्य। एवं क्रमेण जाते आत्मनैवाऽऽत्मानमुपलभ्य आत्मदृग्भवति। एकस्यैव करणकर्मत्वे कथमित्याशङ्क्य दृष्टान्तमाह—चक्षुषेवाऽर्कमिति। चक्षुरपि तैजसमर्कोऽपि। परमिदमध्यात्मभूतमाधिदैविकश्च सूर्यः। तत्र यथा वस्त्वन्तरग्रहणे विषयप्रकाशकत्वेन सूर्यमपेक्षते, एवं न सूर्यग्रहणे सूर्यापेक्षा। नाऽपि चक्षुर्गतान्धकारनिवृत्त्यर्थं तदपेक्षा, किन्तु तेनैव प्रकाशितं चक्षुस्तदंशभूतमात्मानं गृह्णाति। एवं जीवेन भगवदंशभूतेन सर्वात्मस्वरूपं भगवल्लक्षणमात्मानं यः पश्यति, स आत्मदृग्भवतीत्यर्थः ॥ १० ॥ ❀ ❀ नन्वेवमात्मदर्शने किं स्यात्? तत्राऽऽह—मुक्तलिङ्गमिति। एवं मानसभावनाज्ञानेनाऽसत्यस्मिन्नेव सङ्घाते मुक्तलिङ्गं सदाभासं प्रतिपद्यते। मुक्तं लिङ्गं यस्य। अन्तरावरणलिङ्गात्मकं तस्य निवर्तते। तदा सतो मूलभूतजीवस्य आभासरूपं शरीरमात्मानं प्रतिपद्यते, अयमहमिति साक्षात्प्रतिपद्यते। एतावत्कालमाभासस्याऽपि न साक्षात्कारः, वहिरावरणानामनिवृत्तत्वात्। नन्वाभासे प्राप्ते कः पुरुषार्थः? तत्राऽऽह—सतो बन्धुमिति। अयमाभासः सतो मूलभूतात्मनो बन्धुर्भवति, पुत्रो भ्रातेव वा भवति। तत्प्रतिविम्बत्वात् सम्यङ्मूलज्ञापको भवतीति भावः। नन्वस्य सतो बन्धुत्वे किं प्रमाणम्? तत्राऽऽह—असच्चक्षुरिति। असतो देहादेश्चक्षुः। यथा आभासरूपमपि चक्षुर्विषयप्रकाशकं भवति, तेन ज्ञायते सूर्याभासोऽयमिति। नन्वसत्प्रकाशकत्वमात्रेण सौरादितुल्यत्वात् न सदाभासत्वं सिद्ध्यतीत्याशङ्क्याऽऽह सर्वाऽनुस्यूतमिति। सर्वत्रैव सङ्घातेनुस्यूतः सम्बद्धो वर्तते। व्यापकाभासव्यतिरेकेण सर्वत्राऽनुस्यूतता न भवति। आभासभेदे तदु[2]पपद्यत इति चेत्तत्राऽऽह—अद्वयमिति। सर्वत्र सङ्घाते एक एव प्रतिविम्बः, अन्यथा य एवाऽहं पश्यामि स एवाऽहं शृणोमीत्यनुसन्धानं न स्यात् ॥ ११ ॥ ❀ ❀ एवमस्य शारीरस्य सदाभासता निरूपिता, तेनाऽऽत्मज्ञाननिरूपणार्थं दृष्टान्तोपपत्ती निरूपयति द्वाभ्याम्—यथेति। गृहमध्ये स्थितः पुरुषो वहिर्जलादौ सूर्यप्रतिविम्बे सम्मुखगृहान्तर्भित्तौ तत्प्रतिफलनं भवति; धर्म इव तत्र भवति; तेन स जानाति साक्षादत्र सूर्यसम्बन्धो न सम्भवति, किन्तु वहिर्दर्पणादौ प्रतिविम्बितस्येदं प्रतिफलनमिति। एवं चक्षुरादौ प्रतिफलनं पूर्वोक्तसाधनैरेव, नाऽन्यथेति मन्तव्यम्। न हि वहिः पीठादौ धर्मरूपेण सम्बद्धोऽपि सूर्यो दर्पणादिस्थित इव प्रतिफलति। तथा सति सर्व एव सङ्घातोऽन्तः साक्षात्क्रियेत। अतः साधनेष्वेव जातेषु यद्भविष्यति, तद्दृष्टान्तेन प्रथमसम्भावनानिवृत्त्यर्थं प्रदर्श्यते। स्थलस्थेनाऽन्तर्भित्त्यादिप्रतिफलितेन वहिः स्थितो जलस्थ आभासोऽवदृश्यते ज्ञायते। तेनाऽपि जलस्थितेन स्वाभासेन दिवि स्थितः सूर्योऽवदृश्यते ॥ १२ ॥ ❀ ❀ एवमिति। एवं त्रिवृदहङ्कारस्थित आत्मा सदाभासः, भूतेन्द्रियमनःसु प्रतिफलितैराभासाभासैर्लक्ष्यते। तेन त्रिवृदहङ्कारस्थितेन सत आभासरूपेण सत्यदृगात्मा जीवभूतो लक्ष्यते ॥ १३ ॥ ❀ ❀ एवं दृष्टान्तेऽत्मसम्भावनां दूरीकृत्य दृष्टान्तस्याऽप्रामाण्यमाशङ्क्याऽनुभवेनोक्तमर्थं द्रढयति—भूतसूक्ष्मेति। जाग्रद्दशायां सङ्घातेन सह स्फुरणात् 'कोऽयमात्मा' इति यद्यपि विशेषतो न ज्ञायते; तथापि सुषुप्तौ केवल आत्मा सङ्घातव्यतिरिक्तो भासत इति तन्निरूपयति—भूतानि स्थूलानि, सूक्ष्माणि च तन्मात्रारूपाणि, इन्द्रियाणि मनो बुद्धिश्च। आदिशब्देनाऽहङ्कारः स्वप्नरहितनिद्रया एतेषामाभासा दूरीक्रियन्ते [3]तदैते न प्रकाशन्ते। आभासलय एवैषां लयः। तदा आभासप्रकाशरहिते, असति मूढे देहे, यस्तत्र प्रकाशते, स आत्मा ज्ञातव्य इति मन्त[4]व्यम्। ननु तत्र न कोऽपि भासत इति चेत्तत्राऽऽह—तत्र विनिद्र इति। तस्य तु निद्राव्याप्तिर्नास्ति। नन्वहंप्रत्ययवेद्य आत्मा, स चेद्विनिद्रः स्यात्, 'अहम्' इति जानीयात्। तत्राऽऽह—निरहङ्क्रिय इति। अहमिति प्रत्ययोऽहङ्कारसम्बन्धे भवति, तस्य च लीनत्वात् निद्रायां नाहऽमिति मन्यते ॥ १४ ॥ ❀ ❀ ननु तर्हि आत्मा न भासत इति[5] चेत्तत्राऽऽऽह—मन्यमान इति। तदा आत्मानमनष्टमपि नष्टं मन्यमानो भवति। यस्तु मन्यते, स आत्मा। नष्टत्वेन यन्मन्यते, अतो न प्रकटप्रकाशः, अन्यथा नष्टं को वा मन्येत। स्वप्ने शिरश्छि[6]न्नम्, को वा शिरश्छेदं पश्येत्। अतः कश्चिदस्ति द्रष्टा, य आत्मानमनष्टमपि नष्टं मन्यते नाऽहमस्मीति। अनष्टस्य नष्टप्रतीतावुपपत्तिदृष्टान्तावाह—नष्टेऽहङ्करण इति। स त्वहङ्कारसंवलितः, अहंकारे नष्टे, तदभेद-

१. दूरीभूतमन्यदर्शनं यस्य घ. ङ.। २. न तदुपपद्यते. ख.। ३. तदैव. क. घ. ङ.। ४. अवगन्तव्यम्. घ.। ५. इवेति क. एवेति. घ.। ६. शिरश्छिन्ने. क. ग. च.।

प्रतीतिदार्ढ्यादात्मानमेव नष्टं मन्यते, 'अहङ्काराध्यस्तस्यैव दृश्यत्वात्। केवलस्तु द्रष्टा। अत आत्मानं दृश्यरूपमहङ्कारसहितं नष्टं मन्यत एवेति युक्तम्। अन्यनाशे अन्यनाशप्रतीतिमाह—नष्टवित्त इति। धनात्माऽयं पुरुषो लौकिकः, धने नष्टे तद्व्यतिरेकेण स्वनिर्वाहाभावादात्मानमेव नष्टं मन्यते। आतुरो रोगी। स वा यथा देहे नष्टे आत्मानमेव नष्टं मन्यते। आतुरो वा भवति वित्ते नष्टे॥ १५॥ ❀ ❀ एवमात्मानं निरूप्योपसंहरति एवमिति। पूर्वोक्तप्रकारेणाऽऽत्मानं प्रत्यवमृश्य, असावेवाऽऽत्मा आत्मानं प्रतिपद्यते। नन्वहङ्कारनाशोऽपि न प्रतीयते, स्मरणे साहङ्कारस्य स्मरणात्, 'सुखमहमस्वाप्सम्' इति। नाऽहङ्कारनाश इति चेत्तत्राऽऽह—साहङ्कारस्येति। अहङ्कारसहितस्यात्मनो द्रव्यस्य, अवस्थानं पश्चात्स्मरणमनुग्रहो भवति। पश्चादहङ्कारः सम्बद्धः। यथा सोऽयं देवदत्तः कुण्डलीति पूर्वं कुण्डलाप्रतीतावपि प्रतीयते। योऽनुग्रहस्तदवस्थानमिति सम्बन्धः। अनुग्रहस्य प्रसिद्धिः प्रकृतोपयोगिनी॥ १६॥

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

निवृत्तबुद्ध्यवस्थ इत्यत्र। आत्मानमिति। स्वमूलभूतं सूर्यम्। इत्यर्थ इति। एकस्यैव करणकर्मत्वे दृशेव दृशमिति दृष्टान्तेनाऽपि सिध्यतः। एवं सत्यपि चक्षुषेवार्कमिति यदुक्तं तेनायमेवार्थः शास्त्रकारानुशयगोचर इत्यर्थः॥ १०॥ ❀ ❀ अग्रिमाभासे। एवमित्यादि। एवं सर्वात्मत्वेन रूपेण किं स्यात्? 'आत्मानं चेद्विजानीयादयमस्मीति पूरुषः। किमिच्छन् कस्य वा हेतोः शरीरमनुसञ्ज्वरेत्' इति श्रुत्या अयमहमिति ज्ञानस्यावश्यकत्वात्तदभावे किं फलं स्यादित्यर्थः। विवृतौ। मूलभूतजीवस्येति। सर्वात्मनः सृष्टीच्छावशगस्य प्रथमपुरुषस्य हरेरित्यर्थः। अनिवृत्तत्वादिति। यद्यपि सुषुप्तौ साक्षात्कारोऽस्ति, तथापि अयमहमित्याकारको न। 'तथापि हिरण्यनिधिं निहितमक्षेत्रज्ञा उपर्युपरि सञ्चरन्तोऽपि न विदुः' इति श्रुतेरनुभवाच्चेति सुष्टूक्तमिदम्। आभासे प्राप्त इति। मूलाभासोऽयमहमिति ज्ञाते इत्यर्थः। तत्प्रतिबिम्बत्वादिति। दर्पणादिसङ्क्रान्तसूर्यांशुवत् शुद्धचित्तसङ्क्रान्तांशरूपत्वादित्यर्थः। आभासरूपमिति। दर्पणादिसङ्क्रान्तं सूर्यस्य भास्वरं रूपम्। अयमिति प्रकाशकः। आहेति। विशेषणान्तरमाहेत्यर्थः। आभासभेदे इत्यादि। यथाऽऽदर्शे एकः सूर्याभासः, भग्ने तस्मिन्नेव दशधा प्रतीयमानः सर्वानुस्यूतत्वेन निश्चीयते, एवमाभासभेदेऽपि सर्वानुस्यूतत्वमुपपद्यत इत्यर्थः। एवमिति। अनुमानविधयेत्यर्थः। बोधसौकर्यार्थं तत्प्रदर्श्यते। तथाहि 'एकधा दशधा चैव दृश्यते जलचन्द्रवत्' इति, 'यथा ह्ययं ज्योतिरात्मा विवस्वानपो भिन्ना बहुधैकोऽनुगच्छन्' इति श्रुत्या स्मृत्या चाऽऽत्मन एकस्याभासेन नानात्वे निश्चिते ततः स आत्मा भासन्नसन्वेति सन्देहे ततः 'आत्माभासो मिथ्या, आभासत्वात्, मुख्याभासवत्' इत्यनेन मिथ्यात्वसाधने 'सत्यः, आ (भा) सत्वात्, सौराभासवत्,' इत्यनेन हेतोः साधारणत्वात् सन्देहानपगमे 'सत्यः, प्रकाशकत्वात्; यदेवं तदेवम्, यन्नैवं तन्नैवम्' इत्यनेन सत्तानिश्चये ततः 'प्राकृतः प्रकाशकाभासत्वात्, सौराभासवत्' इत्यनेन प्राकृतत्वरूपे असत्त्वे प्राप्ते अप्राकृतत्वनिश्चायनाय पुनरनुमाने क्रियमाणे 'अप्राकृताभासः, सर्वत्रानुस्यूतत्वात्, यन्नैवं तन्नैवम्, सौराभासवत्' इति 'प्राकृताभासः, सर्वत्रानुस्यूतत्वात्, यदेवं तदेवम्, भग्नादर्शप्रतीयमानसौराभासवत्' इति च प्रयोगाभ्यां हेतोः साधारणत्वे दर्शिते 'अयमाभासोऽप्राकृतः, सर्वानुस्यूतत्वे सत्येकत्वात्, यन्नैवं तन्नैवम्, सौराभासवत्' इत्यनुमानेन प्रस्तुतसिद्धिः। आभासत्वेन पक्षोल्लेखो मूलरूपव्युदासार्थः। एवं चाऽत्र 'सतो बन्धुः' इति विशेषणं 'यथा ह्ययम्' इत्यादिश्रुत्यर्थस्मारकम्। 'असच्चक्षुः' इति 'सर्वानुस्यूतमद्वयम्' इति चैकैकहेतुगर्भमिति पूर्वोक्तस्य ग्रन्थार्थतैवेति विभावनीयम्॥ ११॥ ❀ ❀ यथेत्यत्र। ननूक्तदृष्टान्तेन आत्मज्ञानं तु साधनमन्तरेणाऽप्यनुमानादिना सुकरमिति साधनोपदेशो व्यर्थ इत्याशङ्कायामाहुः—एवमित्यादि। नाऽन्यथा। आधारशुद्धिं विना न॥ १२॥ ❀ ❀ भूतेत्यत्र। 'लीनेषु' इति मूलेनोक्तस्य भूतादिलयस्य स्वरूपमाहुः—आभासेत्यादि। तथा च लीनपदं गौण्या लीनतुल्यत्वबोधकमित्यर्थः॥ १४॥ ❀ ❀ मन्यमान इत्यस्याभासे। तत्राऽऽहेति। निद्रायामेव प्रतीत्यन्तरं प्रमाणत्वेनाहेत्यर्थः। विवृतौ नाहमस्मीति। अत्रेदं बीजम्। निद्रायां परस्पर्शाद्यज्ञानान्न देहाध्यासः। पश्यामि, सङ्कल्पयामि, जानामि, श्वसिमीत्याद्यनुव्यवसायाभावदशायामिन्द्रियाद्यध्यासोऽपि न शक्यवचनः। अतः परमहङ्काराध्यासोऽवशिष्यते। नाऽहमस्मीति प्रतीतौ कोऽपि चेद्विषयत्वेन प्रतीतस्तदा केवलो द्रष्टैवाऽवशिष्ट इति स एवाऽऽत्मेति। चित्तं तु नाध्यासं जनयति, स्वच्छाविकारिशान्तवृत्तिकत्वात्। तस्मादियं प्रतीतिः स्वाप्न्यपि परिशेषादात्माऽनुमापिकेति दिक्॥ १५॥ ❀ ❀ एवमित्यत्र। अवस्थानमिति। पश्चात् सम्बन्ध इत्यर्थः। अनुग्रहस्येत्यादि। अयमर्थः। पूर्वं हि सुषुप्तावात्मभावाभाव आशङ्कितः, तन्निरासाय 'सुखमहमस्वाप्सम्, न किञ्चिदवेदिषम्' इति स्मरणं स्वसमानाकारानुभवजन्यम्, स्मरणत्वात्; यदेवं तदेवम्, यन्नैवं तन्नैवम्, इत्यनुमानेन सुषुप्तौ भानाभावादिविषयकभानसाधने तद्द्रष्टृत्वेनाऽऽत्मसिद्धौ साहङ्कारस्य स्मरणात् तादृश्येव सुषुप्तौ सिद्धिः, न तु केवलस्येति केवलनिश्चयार्थं पश्चादहङ्कारानुग्रह इति ज्ञानमावश्यकम्। तच, 'प्रस्तुतस्मरणं विशेषानुग्रहजन्यम्, सविशेषप्रत्ययत्वात्, यदेवं तदेवम्, सोऽयं देवदत्तः कुण्डलीति प्रत्ययवत्; यन्नैवं तन्नैवम्, सोऽयं देवदत्त इति प्रत्ययवत्' इत्यनुमानेन सिद्ध्यति, सविशेषप्रत्ययत्वन्तु तदानीमहङ्कारानुभवादेव सिद्धमिति न किञ्चिदनुपपन्नम्। एवं सति सोऽयं देवदत्तः कुण्डलीत्य-

---

१. नाहङ्कारा. क. घ. ङ.।

नुभवे यथा प्रत्यभिज्ञायाश्चक्षुःसहकारित्वम्, एवं सुखमहमस्वाप्सम्, न किञ्चिदवेदिषमिति स्मरणेऽप्यनुभवस्य मनःसहकारित्वं ज्ञेयमिति हृदयम्। एवं च निर्बाधः केवलत्वनिश्चयः। इत एव च प्रकृतोपयोगित्वमिति दिक्॥ १६॥

१७ श्लोकात् २६ श्लोकावधि सुबोधिनी प्रकाशो न

### श्रीगिरिधरकृता वालप्रवोधिनी

सानुबन्धे पुत्रकलत्राद्यनुबन्धसहितेऽस्मिन् देहे असदाग्रहं अहम्ममाभिमानमकुर्वन्। प्रकृतेः पुरुषस्य च दृष्टं तत्त्वं याथात्म्यं येन ज्ञानेन॥ ९॥ ❀ ❀ निवृत्तानि बुद्धयवस्थानानि जाग्रदादीनि यस्य सः, अत एव दूरीभूतमन्यस्य भगवद्व्यतिरिक्तस्य दर्शनं यस्य सः। आत्मना अहङ्कारावच्छिन्नेन आत्मानं शुद्धमुपलभ्य दृष्ट्वा। एकस्यैवावच्छेदाभ्यां करणत्वे कर्मत्वे च दृष्टान्तमाह—चक्षुषा चक्षुरवच्छिन्नेनार्केण गगनस्थमर्कमिवेति। एवमात्मदृक् शुद्धमात्मानं पश्यन्॥ १०॥ ❀ ❀ प्राप्यस्य शुद्धस्यात्मनः परमात्माभिन्नत्वं सूचयंस्तं विशिनष्टि—मुक्तलिङ्गं लिङ्गदेहविनिर्मुक्तम्। असति अनात्मतया तुच्छेऽन्तःकरणे सदाभासं सद्रूपेणाभासमानं सतः परमार्थभूतस्य परमात्मनो बन्धुं तदभिन्नमित्यर्थः। असतः तुच्छस्य प्रपञ्चस्य चक्षुः चक्षुरिव प्रकाशकम्। सर्वेषु कार्यकारणेषु अनुस्यूतं व्याप्तम्। अद्वयं सर्वात्मकं च॥ ११॥ ❀ ❀ अहङ्कारोपहितेन शुद्धब्रह्मप्रतिपत्तिप्रकारं सदृष्टान्तमाह—यथेति द्वयेन। जले स्थित आभासः सूर्यप्रतिबिम्बो यदा गृहान्तर्वर्त्तिभित्तौ स्फुरति तदा गृहकोणस्थितैः पुरुषैर्भित्त्यादौ स्थले स्थितेन स्वाभासेन सूर्यप्रतिबिम्बेन यथा प्रथमं जलस्य आभासोऽवदृश्यते, गगनस्थस्य सूर्यस्य गृहमध्ये प्रतिबिम्बायोगात्। चार्थे तथाशब्दः। यथा चेत्यन्वयः। यथा च जलस्थेनाभासेन दिवि स्थितः सूर्यो लक्ष्यते॥ १२॥ ❀ ❀ एवं दृष्टान्तमुक्त्वा दार्ष्टान्तिकमाह—एवमिति। तथा भूतेन्द्रियमनोमयैः देहेन्द्रियमनोभिरवच्छिन्नैः स्वाभासैरात्मप्रतिबिम्बैस्त्रिवृत् त्रिगुणोऽहङ्कारः सतो ब्रह्मणः आभासो यस्मिंस्तेन रूपेण लक्षितो भवति, अहङ्कारस्याभासं विना विषयाभासानुपपत्तेः। अनेन च सदाभासवताऽहङ्कारेण सत्यदृक् परमार्थज्ञप्तिरूप आत्मा लक्षितो भवतीत्यर्थः॥ १३॥ ❀ ❀ एवं युक्त्याऽऽत्मप्रतिपत्तिं प्रदर्श्येदानीं सुषुप्तिसाक्षित्वेन शुद्धात्मप्रतिपत्तिमनुभवतो दर्शयति—भूतेति। भूतानि आकाशादिपञ्चमहाभूतानि, सूक्ष्माणि शब्दादितन्मात्ररूपाणि, इन्द्रियाणि, मनः, बुद्धिः, आदिशब्देन अहङ्कारः। इह निद्रावस्थायां भूतादिषु असति अतिसूक्ष्मतया असत्तुल्ये अव्याकृते निद्रया लीनेषु सत्सु यस्तत्र तदा विनिद्रो निरहक्रियश्च स आत्मेति शेषः॥ १४॥ ❀ ❀ ननु यदि तदा विनिद्रोऽसावात्माऽस्ति तर्हि जाग्रत्स्वप्रयोरिव स्फुटः किं नाम भासते इत्याशङ्क्य निरहंक्रिय इत्युक्तमेव हेतुं स्पष्टयति—मन्यमान इति। जाग्रदादावसौ द्रष्टा अतो द्रष्टृत्वेन सविकल्पतया स्फुटं प्रतीयते, सुप्तौ तु भूतादेरहङ्कारविषयस्य लीनत्वात् तद्विषयेऽहङ्कारेऽपि नष्टे सति स्वयमनष्टोऽपि मृषैवात्मानं नष्टवन्मन्यमानो भवति नष्टप्रायो भवतीति न तथा प्रकाशते। अन्यस्य नाशेऽन्यस्य नष्टतुल्यत्वे दृष्टान्तमाह—नष्टेति। नष्टवित्तो यथा स्वयमनष्टोऽप्यातुरो व्याकुलः सन्नष्टवद्भवति तथेत्यर्थः॥ १५॥ ❀ ❀ असौ विवेकिजन एवं प्रत्यवमृश्य विचारेण विविच्य आत्मानं प्रतिपद्यते, जानातीत्यर्थः। ननु जाग्रदवस्थायां सुखमहमस्वाप्सं न किञ्चिदवेदिषमिति साहङ्कारस्यैव प्रतिसन्धानात् कथं सुषुप्तौ निरहङ्कारत्वम्? अन्यथाऽनुभूतस्य अन्यथानुसन्धानासम्भवादित्याशङ्क्याह—साहङ्कारस्येति। अहङ्कारसहितस्य द्रव्यस्य कार्यकारणसङ्घातस्य योऽनुग्रहः प्रकाशकः अवस्थानमाश्रयश्च तं प्रतिपद्यते इत्यन्वयः। अतो यद्यपि प्रकाशकत्वादाश्रयत्वाच्च जाग्रदवस्थायां तद्विशिष्ट एव प्रतीयते तद्विश्लेषे सङ्घातविशीर्णतैव स्यात् तथापि यथा कुण्डलहीनः पूर्वं दृष्टः पश्चात् कुण्डलसम्बन्धदशायामपि सोऽयं कुण्डलीति प्रतीतिः तद्वदहङ्कारविशिष्टप्रतीतिरपि उपपद्यते एवेत्याशयः॥ १६॥

### हिन्दी अनुवाद

प्रकृति और पुरुषके वास्तविक स्वरूपके अनुभवसे प्राप्त हुए ज्ञानतत्त्वके कारण स्त्री-पुत्रादि सम्बन्धियोंके सहित इस देहमें मैं-मेरेपनका मिथ्या अभिनिवेश नहीं करता, बुद्धिकी जाग्रदादि अवस्थाओंसे भी अलग हो गया है तथा परमात्माके सिवा और कोई वस्तु नहीं देखता—वह आत्मदर्शी मुनि नेत्रोंसे सूर्यको देखनेकी भाँति अपने शुद्ध अन्तःकरणद्वारा परमात्माका साक्षात्कार कर उस अद्वितीय ब्रह्मपदको प्राप्त हो जाता है, जो देहादि सम्पूर्ण उपाधियोंसे पृथक्, अहङ्कारादि मिथ्या वस्तुओंमें सत्यरूपसे भासनेवाला, जगत्कारणभूता प्रकृतिका अधिष्ठान, महदादि कार्यवर्गका प्रकाशक और कार्य-कारणरूप सम्पूर्ण पदार्थोंमें व्याप्त है॥ ११॥ ❀ ❀ जिस प्रकार जलमें पड़ा हुआ सूर्यका प्रतिबिम्ब दीवालपर पड़े हुए अपने आभासके सम्बन्धसे देखा जाता है और जलमें दीखनेवाले प्रतिबिम्बसे आकाशस्थित सूर्यका ज्ञान होता है, उसी प्रकार वैकारिक आदि भेदसे तीन प्रकारका अहङ्कार देह, इन्द्रिय और मनमें स्थित अपने प्रतिबिम्बोंसे लक्षित होता है और फिर सत् परमात्माके प्रतिबिम्बयुक्त उस अहङ्कारके द्वारा सत्य-ज्ञानस्वरूप परमात्माका दर्शन होता है—जो सुषुप्तिके समय निद्रासे शब्दादि भूतसूक्ष्म, इन्द्रिय और मन-बुद्धि आदिके अव्याकृतमें लीन हो जानेपर स्वयं जागता रहता है और सर्वथा अहङ्कारशून्य है॥ १२–१४॥ ❀ ❀ ( जाग्रत्-अवस्थामें यह आत्मा भूतसूक्ष्मादि दृश्यवर्ग के द्रष्टारूपमें स्पष्टतया अनुभवमें आता है; किन्तु ) सुषुप्तिके समय अपने

उपाधिभूत अहङ्कारका नाश होनेसे वह भ्रमवश अपनेको ही नष्ट हुआ मान लेता है और जिस प्रकार धनका नाश हो जानेपर मनुष्य अपनेको भी नष्ट हुआ मानकर अत्यन्त व्याकुल हो जाता है, उसी प्रकार वह भी अत्यन्त विवश होकर नष्टवत् हो जाता है ॥ १५ ॥ ❀ ❀ माताजी ! इन सब बातोंका मनन करके विवेकी पुरुष अपने आत्माका अनुभव कर लेता है, जो अहङ्कारके सहित सम्पूर्ण तत्त्वोंका अधिष्ठान और प्रकाशक है ॥ १६ ॥

### देवहूतिरुवाच

**पुरुषं प्रकृतिर्ब्रह्मन विमुञ्चति कर्हिचित्। अन्योन्यापाश्रयत्वाच्च नित्यत्वादनयोः[1] प्रभो ॥ १७ ॥**
**यथा गन्धस्य भूमेश्च न भावो व्यतिरेकतः। अपां रसस्य च यथा तथा बुद्धेः परस्य च ॥ १८ ॥**
**अकर्तुः कर्मबन्धोऽयं पुरुषस्य यदाश्रयः। गुणेषु सत्सु प्रकृतेः कैवल्यं तेष्वतः कथम् ॥ १९ ॥**
**क्वचित्[2] तत्त्वावमर्शेन निवृत्तं भयमुल्बणम्[3]। अनिवृत्तनिमित्तत्वात्पुनः[4] प्रत्यवतिष्ठते ॥ २० ॥**

### श्रीधरस्वामिविरचिता भावार्थदीपिका

भक्तिविरक्तिभ्यां सत्यपि विवेके प्रकृतिपुरुषयोः परस्परत्यागाभावात्कथं मुक्तिरिति पृच्छति पुरुषमिति चतुर्भिः। पुरुषव्यतिरेकेण प्रकृतेः स्वरूपलाभाभावात्प्रकृतिव्यतिरेकेण पुरुषस्याभिव्यक्त्यभावादित्यन्योन्यापाश्रयत्वान्नित्यत्वाच्च पुरुषं प्रकृतिः कदाचिन्न मुंचतीत्यर्थः ॥ १७ ॥ ❀ ❀ व्यतिरेकाभावमात्रे दृष्टांतः। यथा व्यतिरेकतो भावः सत्ता नास्ति। गंधस्य कदाचिदपक्षयदर्शनाद् दृष्टांतांतरम्। अपामिति। बुद्धेः प्रकृतेः परस्य पुरुषस्य च ॥ १८ ॥ ❀ ❀ ततः किमत आह। अकर्तुरिति। ये गुणा आश्रयो यस्य सः तेषु प्रकृतेर्गुणेषु सत्सु पुरुषस्य कैवल्यं कथम् ॥ १९ ॥ ❀ ❀ अत एव क्वचिन्निवृत्तप्रायस्यापि संसारभयस्य पुनरुद्भवो दृश्यत इत्याह क्वचिदिति ॥ २० ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

पुनराक्षिपति भक्तीत्यादिना। इत्यर्थ इति। पुरुषव्यतिरेकेण प्रकृतेः स्वरूपलाभाभावात्प्रकृतिव्यतिरेकेण पुरुषस्याभिव्यक्त्यभावादित्यन्योन्याश्रयत्वान्नित्यत्वाच्च पुरुषं प्रकृतिः कदाचिन्न मुञ्चतीति भावः ॥ १७ ॥ ❀ ❀ अपक्षयोऽभिभवः ॥ १८ ॥ ❀ ❀ ततः प्रकृतिपुरुषयोरन्योन्याश्रयत्वान्नित्यत्वाच्च किमागतमतोत्राह अतः प्रकृतेः कैवल्यं मोक्षः ॥ १९ ॥ ❀ ❀ यतः प्रकृतिगुणसत्त्वे मोक्षाभावोस्त्यत एव हेतोः तत्त्वविचारेण निवृत्तं निवृत्तप्रायं, न निवृत्तं निमित्तं कारणं रागरूपं यस्य तस्य भावस्तत्त्वं तस्मात् समूलनिवृत्त्यभावादपथ्यसेवनेनासम्यक्चिकित्सितगद इव विषयसंबंधादुत्तिष्ठत इत्यर्थः ॥ २० ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनीव्याख्या

अन्योऽन्यापाश्रयत्वेऽप्येकस्यानित्यत्वे स्वयमेव विमुक्तिस्स्यान्न च तदपीत्याह। नित्यत्वादिति ॥ १७ ॥ ❀ ❀ व्यतिरेकाभावमात्र इति। मात्रपदेन गुणगुणिभावव्यावृत्तिः गन्धस्योद्भूतस्य ॥ १८ ॥ ❀ ❀ मूले अतः। बन्धनहेतुप्रकृतिगुणसद्भावात् ॥ १९ ॥ ❀ ❀ अतः पूर्वोक्तहेतोरेव ॥ २० ॥

### श्रीमद्वीरराघवव्याख्या

एवमिन्द्रियाद्यनवधानदशायां तदवधानदशायां चात्मनो विशदतरावभास उपपादितः। अथैवम्विधप्रत्यगात्मस्वरूपचिन्तनं भगवद्भक्तियोगानुग्रहद्वारा मोक्षसाधनमिति पुत्रस्य विवक्षामालोच्यान्तरा प्रकृतिपुरुषयोरनादित्वात्तयोर्मिथः सम्बन्धस्याप्यनादित्वात्कथमुभयोर्विश्लेष इति मुक्त्यसम्भावनामुद्भावयन्ती पृच्छति देवहूतिः पुरुषमिति चतुर्भिः। हे ब्रह्मन्! पुरुषं जीवं प्रकृतिः कदाचिदपि न विमुञ्चति न त्यजति। कुतः अनयोः प्रकृतिपुरुषयोरन्योऽन्यापाश्रयत्वात्परस्परं दृढतरसम्बन्धत्वात् नचान्यतरविनाशेनापि विश्लेषः सम्भाव्येत, यतस्तयोः नित्यत्वं, चो हेतौ, यत इत्यर्थः हे प्रभो! पृथगवस्थानं न सम्भवति इति प्रश्नाभिप्रायः ॥ १७ ॥ ❀ ❀ इदमेव पृथगवस्थानं दृष्टान्तेन दृढीकरोति यथेति। यथा भूमेः पृथ्व्याः गन्धस्य तदपृथक्सिद्धस्य गन्धगुणस्य च व्यतिरेकतः पृथग्भावः अवस्थानं न सम्भवति यथा च अपां रसस्य तदपृथक्सिद्धरसगुणस्य च पृथग्भावो नास्ति तथा बुद्धेः प्रकृतेस्ततः परस्यात्मनश्च पृथग्भावो नास्ति। यद्वा बुद्धेः परस्य बोद्धुरात्मनः प्रकृतेश्चेत्यध्याहारेण योजना ॥१८॥ ❀ ❀ किञ्चाकर्तुः स्वतः सांसारिकगमनादिप्रवृत्त्यनाश्रयस्य पुरुषस्यात्मनः अयं कर्मबन्धः कर्मरूपो बन्धः यदाश्रयः यत्सम्बन्धाधीनः, यच्छब्दः प्रकृतिपरः, तस्याः प्रकृतेर्गुणेषु सत्स्वित्यन्वयः। यच्छब्दः सत्त्वादिगुणपरो वा तेष्वित्यन्वयस्वारस्यात्तेषु प्रकृतेर्गुणेषु

१. प्रा० पा०—नित्यत्वाच्चा०। २. प्रा० पा०—सकृत्। ३. प्रा० पा०—तत्त्वमु०। ४. प्रा० पा०—अनिमित्त०।

सत्त्वादिषु सत्स्वतः गुणेभ्यः प्रकृतेर्वा कैवल्यं विमुक्तत्वं कथं भवेत् ॥ १९ ॥ ❀ ❀ तत्त्वज्ञानेनात्मानं विमुञ्चति प्रकृतिरिति चेत्तत्राह। क्वचिदिति। उल्बणं संसाररूपभयं क्वचित्तत्त्वावमर्शेन पूर्वोक्ततत्त्वावमर्शेन निवृत्तं निवृत्तप्रायमपि अनिवृत्तनिमित्तत्वादनिवृत्तप्रकृतिसम्बन्धत्वात्पुनः प्रत्यवतिष्ठते उपस्थितं भवति ॥ २० ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

जीवपरयोर्भेदज्ञानमेव प्रकृतिबन्धमोक्षकारणं श्रुत्वा देवहूतिस्तदर्थमाक्षिपति। पुरुषं प्रकृतिरित्यादिना। त्रिगुणात्मिका प्रकृतिः पुरुणि पापपुण्यलक्षणानि कर्माणि सनन्तं भजन्तं "वनषण सम्भक्तौ" इति धातुः, कर्हिचित्कदापि न विमुञ्चति। तत्र हेतुरन्योऽन्येति। अनयोः प्रकृतिपुरुषयोर्नित्यत्वादविनाशित्वादन्योऽन्यापाश्रयत्वाच्च शरीरं विना पुरुषस्य चेष्टाभावात्पुरुषमन्तरेणाचेतनत्वेन प्रकृतेरपीतरेतरोपकारित्वाच्च ॥ १७ ॥ ❀ ❀ तत्र दृष्टान्तमाह। यथेति। भूमेस्तद्गुणस्य च व्यतिरेकतो भावः विनाभावो नास्ति अपामित्यनेनैव व्याख्यातं, बुद्धेः प्रकृतेः परस्य जीवस्य तथा पृथग्भावो नास्ति ॥ १८ ॥ ❀ ❀ इतोऽपि प्रकृतिबन्धमोक्षो न घटत इत्याह। अकर्तुरिति। अकर्तुः स्वातन्त्र्येण कर्तुमशक्तस्य पुरुषस्यायं संसारबन्धो यदाश्रयः यः प्रकृतिगुणसमुदाय आश्रयो यस्य बन्धस्य स यदाश्रयः तेषु प्रकृतेर्गुणेषु सत्सु पुरुषस्यातः गुणेभ्यः कैवल्यं मोक्षलक्षणं कथं न कथमपीत्यन्वयः। प्रकृतिगुणानिवृत्त्या तत्कृतसंसारबन्धानिवृत्तिरित्यर्थः ॥ १९ ॥ ❀ ❀ वैलक्षण्यज्ञानेन बन्धो निवर्तत इति अनेन मयायं प्रश्नोऽपि परिहृतो नन्विति तत्राह। सकृदिति। भगवतो वचनश्रवणात्तत्त्वावमर्शेन तत्त्वालोचनेनोत्पन्नं प्रकृतिबन्धभयं सकृन्निवृत्तं भयनिमित्तस्य बाह्यान्तःकरणस्यानिवृत्तत्वात्पुनः संशयरूपं भयं प्रत्यवतिष्ठते प्रत्यवस्थानं करोति, नापसरतीत्यर्थः ॥ २० ॥

## श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

अन्योऽन्यापाश्रयत्वेऽप्येकस्य नश्वरत्वे विमुञ्चतु नाम तच्च नेत्याह। नित्यत्वादिति ॥ १७ ॥ १८ ॥ ❀ ❀ अकर्त्तुरिति। अतः पूर्वोक्ताद्धेतोः ॥ १९ ॥ ❀ ❀ ❀ अन्याश्रयत्वेऽपि नभोवदन्यास्पृष्टत्वं पुरुषस्येति तत्त्वविवेकः कर्त्तव्य इत्यप्यकिञ्चित्करमित्याह। क्वचिदिति। क्वचित् पाठः एष एव सर्व्वसम्मतः ॥ २० ॥

## श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

ननु भक्तैरपि ज्ञानवैराग्यादिभिर्मोक्षो दुर्ल्लभ एवेत्यत्र युक्तिमाह। पुरुषमिति। अन्योऽन्येति। पुरुषः शक्तिमत्त्वात् विश्वसृष्ट्यादिलीलार्थं स्वशक्तिं प्रकृतिमुपाश्रयते। प्रकृतिरपि शक्तित्वात् स्वीयं पुरुषमाश्रयत एवेत्यर्थः। द्वयोरेकतरस्य नश्वरत्वे विमुञ्चतु नाम तच्च नेत्याह। नित्यत्वादिति ॥ १७ ॥ ❀ ❀ व्यतिरेकतो भावः सत्ता नास्ति गन्धस्य कदाचिदपक्षयदर्शनाद् दृष्टान्तान्तरमपामिति। बुद्धेः प्रकृतेः परस्य पुरुषस्य ॥ १८ ॥ ❀ ❀ ततः किमत आह। अकर्त्तुरिति। ये गुणा आश्रयो यस्य सः तेषु प्रकृतेर्गुणेषु सत्सु पुरुषस्य जीवस्य अत एव हेतोः कथं कैवल्यम् ॥ १९ ॥ ❀ ❀ अत एव क्वचिन्निवृत्तप्रायस्यापि संसारभयस्योद्भवो दृश्यते इत्याह। क्वचिदिति ॥ २० ॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः।

एवं जडत्वचेतनत्वाभ्यां ज्ञेयज्ञातृत्वादिभिश्च सत्यपि विवेके प्रकृतिपुरुषयोर्नित्ययोः गुणगुणिवत् संयुक्तयोः परस्परवियोगाभावात् कथं पुरुषमुक्तिरिति पृच्छति। पुरुषमित्यादिना ॥ १७ ॥ ❀ ❀ बुद्धिः अन्तःकरणादिरूपा प्रकृतिः परः देहेन्द्रियमनोबुद्ध्यादिविलक्षणः पुरुषः ॥ १८ ॥ ❀ ❀ अकर्त्तुः नास्ति संसारप्रापककर्मकर्त्तान्यो यस्मात्तस्य बद्धजीवस्य संसारप्रापककर्मकर्तुरित्यर्थः, ये गुणा आश्रयो यस्य सः कर्मबन्धः तेषु गुणेषु सत्सु कैवल्यं कथम् ॥ १९ ॥ २० ॥

## श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

एवमात्मज्ञानं मोक्षार्थमुपदिष्टम्। तत्प्रकृते नोपयुज्यते। प्रकृतिसम्बन्धो हि संसारे हेतुः। साङ्ख्ये प्रकृतिर्नित्या, पुरुषोऽपि नित्यः सम्बन्धश्च। तत्र ज्ञानं किं करिष्यति ? न हि ज्ञानेन प्रकृतिः[1] सम्बन्धो वा नाशयितुं शक्यते। अतो ज्ञानं कर्मवदभ्युदयहेतुरेव, न मोक्षहेतुरित्याशङ्कते—पुरुषमिति चतुर्भिः—प्रकृतिपुरुषयोर्नित्यः सम्बन्धः, नाऽपि कश्चित्प्रकृतिपुरुषविशेषोऽनित्यो भवति; नापि प्रकृतिसम्बन्धः कश्चिदबाधकः। अथ ज्ञानेन प्रकृतेर्बाधकत्वमपोद्यत इति मतम्। तदपि त्रिक्षणावस्थायित्वात् ज्ञानस्य, तस्मिन् निवृत्ते पुनः प्रकृतिर्बाधिष्यत इति मोक्षमार्गोऽसङ्गतः। स्वेच्छया पुरुषप्रकृत्योः सम्बन्धः। तत्र प्रथमं सम्बन्धे पुरुषो हेतुः, कामो निमित्तम्; तत्र पुरुषः काममय एवेति स्वयं प्रकृतिं न मुञ्चति। प्रकृतिरेव कदाचित्पुरुषं परित्यज्य गच्छेच्चेत्, तदा मुक्तिर्भवेदित्याशङ्कयाऽऽह—पुरुषं प्रकृतिः कदाचिदपि न विमुञ्चतीति। ब्रह्मन्निति सम्बोधनं प्रकृतिपुरुषयोः स्वरूपपरिज्ञानार्थम्, उभयोरुभयापेक्षत्वात्। किञ्च, अन्येनाऽप्युभयोर्विश्लेषः कर्तुं न शक्यते, अन्योन्यापाश्रयत्वात्।

---

१. प्रकृतेः क. ग. ङ.।

यद्युभौ स्वभावतो भिन्नौ मिलितौ स्याताम्, तदा विश्लेषः कर्तुं शक्येताऽपि। तौ तु परस्परं मिलितौ सन्तौ सम्बद्धौ; यथा पट्टकार्पासाभ्यामेकस्तन्तुरुत्पाद्यते, तेन निर्मिते पटे तन्तुद्वयविश्लेषेऽपि न पट्टकार्पासयोर्विश्लेषः। तथा प्रकृतौ प्रविष्टः पुरुषः प्रकृतिरूपो जातः प्रकृतिरित्युच्यते। पुरुषेऽपि प्रकृतिः प्रविष्टा पुरुषरूपा जाता पुरुष इत्युच्यते। एतादृशयोश्च सम्बन्धः। स कथं त्याजयितुं शक्यत इत्यर्थः। नाऽप्येकस्य नाशे विश्लेषः सम्भवति, उभयोर्नित्यत्वात्। प्रभो! इति सम्बोधनमघटमानघटनासमर्थो भवानिति बोधयितुम्॥ १७॥ ❀ ❀ नापि कञ्चित्पुरुषं काचित्प्रकृतिस्त्यक्ष्य'तीति शङ्कनीयमित्याह—यथा गन्धस्येति। भूमेर्गन्धः स्वाभाविको गुणः, स कदाचिदपि भूमिं न त्यजति, आश्रयपरित्यागे स्वरूपनाशप्रसङ्गात्। तदाह—व्यतिरेकतो न भाव इति। न हि भूमिव्यतिरेके गन्धः कस्यचिद् गुणः, योऽन्यत्र तिष्ठेत्। गन्धस्य चन्दनादौ कदाचिद्गुप्तत्वेन व्यतिरेकश्चेच्छंक्येत, तदा दृष्टान्तान्तरमुच्यते—अपां रसस्य चेति। न कदाचिदपि जले रसोऽनभिव्यक्तोऽपि भवति, अपाकजत्वेन नियतसम्बद्धत्वात्। तथैव बुद्धेः परस्याऽपि। प्रकृतिसम्बन्धो दूरे, प्राकृती या बुद्धिस्तस्या अपि सम्बन्धः सहज इत्यर्थः॥ १८॥ ❀ ❀ न च सम्बन्धे सत्यपि मोक्षो भविष्यतीति मन्तव्यमित्याह—अकर्तुरिति। अयमात्मा स्वभावतोऽकर्ता, प्रकृतिसम्बन्धादेव कर्तृत्वम्। कर्तुः कर्माण्यनन्तानि। तेषां च फलभोगेन विनाशे पुनस्तद्धेतुना कर्मान्तराणीति न कदाचिदपि मोक्षः। तदाह—अकर्तुरात्मनोऽयं संसारलक्षणः कर्मबन्धः प्रकृत्याश्रयः। तस्याश्च प्रकृतेर्गुणेषु सत्सु कथं कैवल्यम्। न च बन्धका गुणा अन्ये, मोचकाश्चान्य इति मोचकसम्बन्धे मुक्तिः स्यादिति चेत्तत्राऽऽह—तेष्विति। य एव बन्धकास्तेष्वेव सत्सु कथं मुक्तिरित्यर्थः॥ १९॥ ❀ ❀ न च तत्त्वज्ञानेन प्रकृतिबाधकत्वं दूरीक्रियत[2] इति मन्तव्यमित्याह—क्वचिदिति। क्वचित् पुरुषविशेषे, अवस्थाविशेषे वा, उत्पन्नं ज्ञानं संसारभयं निवर्तयति। तदपि न सङ्गच्छते। भयहेतोः प्रकृतिसम्बन्धस्य अनिवृत्तत्वात् पुनर्भयं प्रत्यवतिष्ठत एव उल्बणमसह्यम्॥ २०॥

## श्रीगिरिधरकृता बालप्रबोधिनी

एवमात्मज्ञानाद्विमुक्तिं श्रुत्वा तदसम्भावयन्त्याह—पुरुषमिति चतुर्भिः। परप्रबोधनसामर्थ्यं द्योतयन्ती सम्बोधयति—प्रभो इति। तत्र सर्वज्ञत्वं हेतुं सूचयन्ती पुनः सम्बोधयति—ब्रह्मन्निति। पुरुषं जीवं प्रकृतिः वर्हिचित् कदाचिदपि न विमुञ्चति। तत्र हेतुः—अन्योन्येति। पुरुषव्यतिरेकेण प्रकृतेर्नानाविधदेहेन्द्रियादिरूपेण परिणतायाः स्वरूपालाभात्, प्रकृतिव्यतिरेकेण च पुरुषस्य अभिव्यक्त्यभावादित्यन्योन्यापाश्रयत्वात्, परस्परं दृढतरसम्बन्धादित्यर्थः। तथापि अन्यतरविश्लेषसम्भवात् विमुक्तिर्भविष्यतीत्याशङ्क्याह—अनयोः प्रकृतिपुरुषयोरुभयोरपि नित्यत्वाच्चेति॥ १७॥ ❀ ❀ उक्तमेव पृथगनवस्था भावं दृष्टान्तेन दृढीकरोति—यथेति। यथा भूमेर्गन्धस्य च व्यतिरेकतः विश्लेषतः पृथग्भावोऽवस्थानं न भवति, तथा च अपां रसस्य च व्यतिरेकतो भावो न भवति तथा बुद्धेः प्रकृतेः परस्य पुरुषस्य च व्यतिरेकतो भावो न भवतीत्यन्वयः॥ १८॥ ❀ ❀ ततः किमत आह—अकर्तुरिति। स्वतः कर्तृत्वरहितस्यापि पुरुषस्य प्रकृतेर्गुणैः कर्मसु क्रियमाणेषु कर्तृत्वमात्मनि मन्यते इत्युक्तत्वात् अयं कर्मबन्धः नानाविधकर्मजनितपापपुण्यफलभोगाय नानायोनिषु जन्मादिलक्षणो यदाश्रयः ये आश्रया यस्य स यदधीनः तेषु प्रकृतिगुणेषु सत्सु प्रकृतेर्नित्यत्वात् तदसाधारणगुणेषु सत्त्वादिष्वपि नित्यतया सर्वदैव वर्त्तमानेषु सत्सु अतः संसारबन्धात् पुरुषस्य कैवल्यं मोक्षः कथं घटते इत्यर्थः॥ १९॥ ❀ ❀ तत्त्वज्ञानेन मुक्तिर्भविष्यतीत्यपि न सम्भवति प्रत्यक्षविरोधादित्याह—क्वचिदिति। तत्त्वावमर्शेन पूर्वोक्तप्रकारेण आत्मतत्त्वज्ञानेन क्वचित् पुरुषविशेषे अवस्थाविशेषे च निवृत्तं अनुसन्धानाभावेन निवृत्तप्रायमपि संसारभयं अनिवृत्तनिमित्तत्वात् निमित्तस्य तत्कारणस्य प्रकृतिगुणस्य सत्त्वादेरनिवृत्तत्वात् पुनः प्रत्यवतिष्ठते उपस्थितं भवति। न च तन्निवृत्ताविच्छाप्रयत्नाद्यभाव इत्याशयेनाह—उल्बणमिति, दुःसहमित्यर्थः॥ २०॥

## हिन्दी अनुवाद

देवहूतिने पूछा—प्रभो! पुरुष और प्रकृति दोनों ही नित्य और एक दूसरेके आश्रयसे रहनेवाले हैं, इसलिये प्रकृति तो पुरुषको कभी छोड़ ही नहीं सकती॥ १७॥ ❀ ❀ ब्रह्मन्! जिस प्रकार गन्ध और पृथ्वी तथा रस और जलकी पृथक्-पृथक् स्थिति नहीं हो सकती, उसी प्रकार पुरुष और प्रकृति भी एक-दूसरेको छोड़कर नहीं रह सकते॥ १८॥ ❀ ❀ अतः जिनके आश्रयसे अकर्त्ता पुरुषको यह कर्मबन्धन प्राप्त हुआ है, उन प्रकृतिके गुणोंके रहते हुए उसे कैवल्यपद कैसे प्राप्त होगा?॥ १९॥ ❀ ❀ यदि तत्त्वोंका विचार करनेसे कभी यह संसारबन्धनका तीव्र भय निवृत्त हो भी जाय, तो भी उसके निमित्तभूत प्राकृत गुणोंका अभाव न होनेसे वह भय फिर उपस्थित हो सकता है॥ २०॥

---

१. त्यजति. क. घ. ङ.। २. दूरीकृतम्. क. ङ.।

### श्रीभगवानुवाच॰

अनिमित्तनिमित्तेन स्वधर्मेणामलात्मना। तीव्रया मयि भक्त्या च श्रुतसम्भृतया चिरम् ॥ २१ ॥
ज्ञानेन दृष्टतत्त्वेन वैराग्येण बलीयसा। तपोयुक्तेन योगेन तीव्रेणात्मसमाधिना ॥ २२ ॥
प्रकृतिः पुरुषस्येह दह्यमाना त्वहर्निशम्। तिरोभवित्री शनकैरग्नेर्योनिरिवारणिः ॥ २३ ॥
भुक्तभोगा परित्यक्ता दृष्टदोषा च नित्यशः। नेश्वरस्याशुभं धत्ते स्वे महिम्नि स्थितस्य च ॥ २४ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

न हि प्रकृतिसंबंधमात्रं बंधहेतुः किं तु गुणबुद्ध्या तदासक्तिस्तन्निवृत्तौ सत्यां मोक्षो घटते। क्वचिदुद्भवस्तु साधनवैकल्यादित्यभिप्रेत्य साधनातिशयं कथयन्परिहरति त्रिभिः। निमित्तं फलं तन्न निमित्तं प्रवर्तकं यस्मिंस्तेन निष्कामेन धर्मेण अमलात्मना निर्मलेन मनसा श्रुतेन कथाश्रवणेन संभृतया पुष्ट्या ॥ २१ ॥ २२ ॥ ❀ ❀ दह्यमानाऽभिभूयमाना तिरोहिता भवति ॥ २३ ॥ ❀ ❀ एवं च सति पुनरुद्भवो नास्तीत्याह। भुक्तो भोगो यस्याः नित्यशः सदा दृष्टो दोषो यस्याः अत एव परित्यक्ता सतीश्वरस्यापरतंत्रस्य स्वे महिम्नि स्थितस्य स्वानंदं प्राप्तस्य ॥ २४ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

इदानीं तन्निवृत्त्युपायसाधनान्याह—न हीत्यादिना। गुणवुद्ध्या शोभनधिया तदासक्तिः प्रकृतिकार्ये देहगेहादौ रागः। तन्निवृत्तौ प्रकृत्यासक्तिनिवृत्तौ "निमित्तं हेतुलक्ष्मणोः फले प्रवर्त्तकेपि स्यात्" इति स्वामी। यद्वा। अः विष्णुः स निमित्तं फलं तेन हेतुना भगवदर्पणवुद्ध्या कृतेनेत्यर्थः। चिरं श्रुतसंभृतया ॥ २१ ॥ ❀ ❀ भगवति बलीयसा दृढेन आत्मनि दृष्टं तत्त्वं जीवेशपारमार्थ्यं येन तेन ज्ञानेन समाधिश्चेतःस्थापनं तेन तीव्रेणान्वहं क्रियमाणेन ॥ २२ ॥ ❀ ❀ इह लोके योनिरभिव्यक्तिस्थानम्। अरणिः काष्ठभेदः। यथाग्नेराविर्भावनिदानभूताप्यरणिः स्वत उत्पन्नेनाप्यग्निना दह्यमाना विनश्यति तथा साधनदशायामविद्याप्रयुक्तदेहाद्यभिमानाज्जातैर्ज्ञानादिसाधनैर्दह्यमाना प्रकृतिर्नश्यतीत्यर्थः ॥ २३ ॥ ❀ ❀ भोगः संसारानुभवः। दोष आनंदाद्यावरणलक्षणः। अत एव दृष्टदोषत्वादेव। यथा ज्ञातव्यभिचारादिदोषस्य पत्युरग्रे नारी स्वचांचल्यादि न प्रकटयति तथा ज्ञानिनः प्रकृतिरपीति भावः। अत्राशुभं संसारभयम् एतदभिप्रेत्यैवोक्तं सप्ततयाम्—"प्रकृतेः सुकुमारतरं न किञ्चिदस्तीति मे मतिर्भवति। या दृष्टास्मीति पुनर्न दर्शनमुपैति पुरुषस्य" इति। सुकुमारतरं सलज्जम् ॥ २४ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

अनिमित्तेति त्रिकम्। गुणवुद्ध्या। श्रेष्ठत्वज्ञानेनाविद्याकृता प्रकृतिकार्य्यदेहाद्यासक्तिर्बन्धहेतुः। तन्निवृत्तौ आसक्तिनिवृत्तौ दृष्टं निर्द्धारितं तत्त्वं स्वरूपं येन तादृशेन ज्ञानेन मन्तव्य इत्युक्तविचारेण बलीयसा तीव्रेण तपोयुक्तेन शमदमादियुक्तेन योगेन ध्यानेन "योगः संहननोपायध्यानसङ्गतियुक्तिषु" इत्यमरः, ध्यानमेव ध्यातृध्येयविवेकरहितं समाधिः, तस्य तीव्रत्वं चिरकालोदितत्वं प्रकृतिस्तत्कार्य्यलिङ्गदेहः। अत्र तृतीयाश्रुतिसामान्यात् "सर्वासामपि सिद्धीनां मूलं तच्चरणार्च्चनम्" इत्यादिप्रामाण्येन भक्तेर्मूलत्वेनाङ्गित्वेऽपि अङ्गसामान्यनिर्देशो मोक्षमात्रं फलं व्यनक्ति ॥ २१ ॥ २२ ॥ २३ ॥ एवं च सति साधनैः प्रकृतितिरोधाने सति भोगोऽत्र वहुधा नरकस्वर्गादिः। दोषो जीवस्वरूपानन्दावरणादिः ॥ २४ ॥

### श्रीमद्वीरराघवव्याख्या

सत्यमेवं तथापि वह्वङ्गोपकृतभक्तियोगाराधितपरमपुरुषप्रसादादात्मानं विमुञ्चति प्रकृतिः। क्वचिदुद्भवस्तु साधनवैकल्यादित्याह कपिलः। अनिमित्तेति। निमित्तं फलं तदनिमित्तमप्रवर्तकं यस्मिन्फलाभिसन्धिरहितेनेत्यर्थः, स्वधर्मेण स्ववर्णाश्रमोचितधर्मेणामलात्मना विशुद्धान्तःकरणेन "धर्मेण पापमपनुदति" इति श्रुतेः, श्रुतसंभृतया मत्कथाश्रवणेन संभृतया वर्द्धितया तीव्रया विघ्नानुपहतया मयि भक्त्या अनभिसंहितफलकर्मयोगपरिशुद्धान्तःकरणनिष्पाद्यया मत्कथाश्रवणादिभिरुपकृतया मद्भक्त्या प्रकृतिस्तिरोभवित्रीत्यन्वयः ॥ २१ ॥ ❀ ❀ अन्यान्यपि भक्तियोगाङ्गान्याह। दृष्टं तत्त्वं प्रकृतिपुरुषयोर्याथात्म्यं हेयोपादेयस्वरूपं यस्मिंस्तेन ज्ञानेन बलीयसा वैराग्येण कामानभिष्वङ्गेण तपोयुक्तेन देहशोषणादितपोयुक्तेन योगेन प्रकृतिविविक्तात्मयाथात्म्यचिन्तनेन तीव्रेणात्मसमाधिना चित्तैकाग्र्येण चोपकृतया मद्भक्त्या ॥ २२ ॥ ❀ ❀ अहर्निशं दह्यमाना पीड्यमाना पुरुषस्य प्रकृतिरात्मबन्धकरी प्रकृतिः शनकैस्तिरोभवित्री अवन्धकरी भविष्यति। निःशेषं निवर्तिष्यतीत्यर्थः। तत्र दृष्टान्तः अग्नेरिति। तिरोधायिका प्रकृतिः अग्न्याविर्भावहेतुररणिर्यथाग्निना दह्यते तथा तत्त्वज्ञानसम्पत्तिहेतुरपि प्रकृतिस्तेन दह्यत इत्यर्थः, यद्वाग्निनिति-

---

१. प्राचीने पाठे 'श्रीभगवानुवाच' अयमंशो न।

रोधायिकारणिरिवात्मतिरोधायिका प्रकृतिर्दह्यत इत्यर्थः ॥ २३ ॥ ❀ ❀ एवं सति न पुनः संसारयत्यात्मानं प्रकृतिरित्याह। भुक्तभोगेति। भुक्तः भोगो यस्याः नित्यशः सदा दृष्टो दोषो यस्याः अत एव परित्यक्ता सती प्रकृतिरीश्वरस्य कर्मवश्यस्य स्वे महिम्नि स्थितस्यापहतपाप्मत्वादिगुणाष्टकलक्षणमहिमवतः आत्मनः अशुभं संसारं न धत्ते न सम्पादयतीत्यर्थः ॥ २४ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

प्रकृतावपसृतायां तद्गुणाः स्वत एवापसरन्तीति भावेन तन्निवृत्तिरप्यसंक्लृप्तफलस्वधर्मादिना स्यादिति पूर्वोक्तमेव तत्परिहारत्वेनाह। अनिमित्तप्रवृत्तेनेति। अनिमित्तेन फलाभिसन्धिराहित्येन प्रवृत्तेन निरन्तरमनुष्ठितेनात एवामलात्मनातिशुद्धस्वरूपेण चिरं श्रुत्या वेदान्तशास्त्रश्रवणेन संभृतया सम्पादितया ॥ २१ ॥ ❀ ❀ दृष्टतत्त्वेनापरोक्षीकृतविष्ण्वादिदेवतास्वरूपेण योगेनाष्टाङ्गयोगेनात्मसमाधिना मनस एकाग्रतालक्षणेन ध्यानेन एव मुक्तसाधनसामग्रीसम्पन्नज्ञानाग्निनाहर्निशं दह्यमाना पुरुषस्य प्रकृतिः शनकैस्तिरोभवित्री नाशं गन्त्री स्यादित्यन्वयः। योनिरुत्पत्तिस्थानमग्नेर्ज्वालयेति शेषः। गन्धरसयोः पृथिवीजलसमवेतत्वेन यावद्द्रव्यभावित्वसम्भवेऽपि प्रकृतिपुरुषयोर्द्रव्यत्वेन तदभावात्संयोगमात्रसम्बन्धलक्षणस्य नाशलक्षणविभागोपपत्तेर्विषमस्त्वदुक्तो दृष्टान्त इति द्योतनायाग्न्यरणिदृष्टान्तकथनमन्यथा तदुपपादनं व्यर्थं स्यादिति ॥ २२ ॥ २३ ॥ ❀ ❀ समूलतूलसमुत्सृष्टायाः प्रकृतेर्भयं पुनरागतचोरादिवन्नास्तीत्याह। भुक्तभोगेति। भुक्तभोगत्वं नित्यशो दृष्टदोषत्वं परित्यागहेतुः स्वे महिम्नि ज्ञानानन्दात्मके अच्छेद्याभेद्याक्लेद्यादिस्वरूपमाहात्म्ये स्थितस्यापरोक्षीकृतस्वबिम्बभगवत्प्रसादादीश्वरस्य समर्थस्याशुभं दुःखलक्षणं संसारभयं न धत्त इत्यन्वयः ॥ २४ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

अत्रोच्यते। यदि तदविवेक एव पूर्वोक्तहेतुस्तदा तत्त्वावमर्शमात्रं तत्रोपयुक्तं स्यात् पूर्वं त्वीश्वरवैमुख्यमेव। 'भयं द्वितीयाभिनिवेशतः स्यादि'त्यादेः। ततः सर्वत्रेश्वराराधनपूर्वकत्वमेवोपयुक्तमित्युपदिष्टमपि निर्द्धारयति षड्भिः। अत्र अनिमित्तेति त्रिकम्। ज्ञानं विचारः। दर्शनं निर्द्धारणम्। तपः शमदमादि। योगो जीवात्मपरमात्मनोर्ध्यानं, "योगः संहननोपायध्यानसंगतियुक्तिषु" इति नानार्थवर्गात्। ध्यानमेव ध्यातृध्येयविवेकरहितं समाधिः अग्नेः प्राबल्ये सति तन्निर्वापणार्थं तदाविर्भावकारणमरणिर्यथा जनैस्ततोऽप्यन्तरिता क्रियते। तथा सापि माया स्वांशेन ततस्तिरोभवतीति। अत्र 'सर्वासामपि सिद्धीनां मूलं तच्चरणार्चनमि'त्युक्त्या भक्तेरङ्गित्वे अङ्गवन्निर्देशः तेषां तत्र साधनान्तरसामान्यदृष्टिरित्यभिप्रायेण। अत एव तेषां मोक्षमात्रफलमिति ॥२१॥ ॥ २२ ॥ ❀ ❀ ईश्वरस्य भगवच्छक्त्यंशे शक्तिमतः स्वे महिम्नि महिमहेतावीश्वरत्वे स्थितस्य प्राप्तस्फूर्त्तेरिति जीवस्य स्वरूपशक्तित्वं दर्शितं स यदजयामित्यादेः ॥ २४—२६ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

हे मातर्न प्रकृतिर्जीवस्य बन्धहेतुः, किन्तु तदीयगुणाध्यास एव। स चाविद्याकृत एव। अत एवाविद्यानिवृत्तौ मोक्षो घटते क्वचिद् भयस्योद्भवस्तु साधनवैकल्यादित्यभिप्रेत्य साधनातिशयं कथयन् परिहरति। निमित्तं फलं तदभावोऽनिमित्तमेव निमित्तं प्रवर्त्तको यत्र तेन अमलः शुद्ध आत्मा अन्तःकरणं यतः स्यात्तेन तीव्रया स्वभावादेव सर्वतस्तेजस्विन्या श्रुतसंभृतया मत्कथाश्रवणपरिपुष्टया ॥ २१, २२ ॥ ❀ ❀ प्रकृतिर्लिङ्गदेहः पुरुषस्य एभिः साधनैर्दह्यमाना अभिभूयमाना तिरोभवति। अग्नेरिति। अरणिः काष्ठमग्निर्यथा काष्ठादेवोत्पद्य काष्ठं दहति तथैव ज्ञानं लिङ्गदेहादुत्पद्य तमेव दहति ॥ २३ ॥ ❀ ❀ किञ्चावशिष्टापि दह्यमानारणिवल्लिङ्गदेहरूपा प्रकृतिः खल्वेवंभूता चेन्नापकुरुत इत्याह। भुक्तो भोगो बहुधा स्वर्गनरकादिर्यस्या अत एव विवेकिना चर्वितवत्त्यक्ता तदपि दैवादापतन्ती चेद् दृष्टो दोषो यस्याः सा ईश्वरस्य नित्यमेवं सदसद्विवेचने भुक्त्वा परित्यजने दोषदर्शने च समर्थस्य स्वे महिम्नि स्वीये महत्त्वे गुरूपदिष्टसाधुवर्त्मनि ॥ २४ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

न केवला प्रकृतिरेव बन्धहेतुः किं तु तदासक्तिः। अतस्तद्विरक्तिपूर्वकेन भगवज्ज्ञानभक्तिप्रधानेन साधनसमूहेन मुक्तिरित्याह। अनिमित्तनिमित्तेनेत्यादिना। न निमित्तं फलं निमित्तं प्रवर्तकं यस्मिन् तेन श्रुतसम्भृतया हरिकथाश्रवणलब्धया ॥ २१ ॥ २२ ॥ ❀ ❀ पुरुषस्य प्रकृतिः बन्धनभूता माया दह्यमाना अभिभूयमाना तिरोभवित्री पुरुषान्निवर्तिष्यति अरणिः भस्मीभूता यथा अग्नितो वियुक्ता भवति तद्वत् ॥ २३ ॥ ❀ ❀ ईश्वरस्य हेयोपादेयविवेकसंपन्नस्य ॥ २४ ॥ २६ ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

ज्ञानस्य क्षणिकत्वेऽपि सम्बन्धस्य नित्यत्वेऽपि, प्रकृतेरपि नित्यत्वे, तथा कानिचित्साधनानि सन्ति। यैः कृत्वा प्रकृतिस्तिरोभावं प्राप्नोति सम्बन्धश्च पुनर्नोद्गतो भवति। तानि साधनान्याह—अनिमित्तेति द्वाभ्याम्—अनिमित्तेन निष्कामेन,

निमित्तेन कर्मणा । सर्वत्र कर्मैवं निमित्तमिति निमित्तपदप्रयोगः । स्वधर्मः वर्णाश्रमधर्मः, निर्मलान्तःकरणं च साधनम् । उभाभ्यां वा निर्मलान्तःकरणत्वम् । एतानि ज्ञानोत्तरं पुनः कर्तव्यानि । अन्तःकरणस्य च नैर्मल्यं तारतम्येन । भगवतो भक्तिश्च तीव्रा निरन्तरं सर्वभावेन प्रवृत्ता स्नेहपूर्विका सेवा । स्नेहपूर्वकश्रवणादिकं वा । चकाराद् गुरुभक्त्या । साऽपि भक्तिर्निरन्तरसाधनेन पुष्टा कर्तव्येत्याह—श्रुतसम्भृतयेति । चिरकालं भगवद्‌गुणश्रवणेन सम्यक् भृता पूर्णा, हृदये आपूरिता वा ॥ २१ ॥ ❀ ❀ ज्ञानेनेति । सर्वतत्त्वसाक्षात्कारेण साङ्ख्यानुभवेन यज्जनितं ज्ञानम् , तत्पुनरावर्त्तनीयं साधनानुवृत्त्या । वलीयसा वैराग्येण, विषयैः कदाचिदपि रागजननात्यन्ताभावयुक्तेन । तपसा संयुक्तेन योगेन चाऽष्टाङ्गेन । आत्माविर्भावसमर्थेन समाधिना । एवं दश साधनान्युत्तरोत्तरं सञ्जातानि वा पुरुषस्य सम्बधिनीं प्रकृतिमन्वहं दहन्तीति ॥ २२ ॥ ❀ ❀ तथा सति यत्स्यात्तदाह—प्रकृतिरिति । अन्वहं दह्यमाना, अहर्निशं वा दह्यमाना, शनैस्तिरोभवित्री । नन्वेतानि साधनानि प्राकृतान्येव, कथं तैः प्रकृतिर्नश्यति ? प्रत्युत पुष्टैव भवेदित्याशङ्क्य तथात्वे दृष्टान्तमाह—अग्नेर्योनिरिति । यद्यप्यरणेः सकाशादेवाऽग्निरुत्पद्यते, तथापि स तां नाशयत्येव, न तु वर्द्धयति । तथैतानि साधनानि न तु काष्ठादिनिर्मितं पीठादिकं यथा काष्ठपोषकम् , तथाऽग्निर्भवति । तस्माल्लौकिकान्येव कर्मादीनि प्रकृतिपोषकाणि, नत्वेतानीति भावः ॥ २३ ॥ ❀ ❀ तस्याः पुनरुद्गमशङ्कां वारयति—भुक्तभोगेति । अभुक्ता चेत् वासनया हृदयं प्रविष्टा कदाचिन्न निवर्तेताऽपि, भुक्तभोगा तु निवृत्तैव भवेत् । तत्राऽप्यलम्बुध्या परित्यक्ता । तत्रापि दृष्टदोषा । यथा अमेध्यत्वेन परित्यक्तमन्नादिकं न रागं जनयति । कदाचिद्दोषे स्फुरितेऽपि रागश्चेदन्तःस्थो न निवर्तेत; कदाचित्तस्या दोषो न स्फुरत्यपि । तद्व्यावृत्त्यर्थमाह—नित्यश इति । सर्वदा दृष्टदोषा । तथात्वे तस्यां रागाभावो हेतुः । किञ्च, यथा गृहस्थस्य भार्या गृहस्थं बाधते, न तथेश्वरं शतशोऽपि भार्या बाधितुं शक्नुवन्ति; तथेयं प्रकृतिरपि दासभूतमेव जीवं बाधते, नत्वीश्वरभूतम् । ऐश्वर्यं च भगवत्कृपया तद्धर्मप्राप्त्या[1] भवति । तथाह—नेश्वरस्याऽशुभं धत्त इति । किञ्च, स्वे महिम्नि स्थितस्य च अशुभं न धत्ते । यस्तु स्वानन्द एव रमते, तं प्रकृतिर्न बाधते, प्रकृत्यपेक्षाभावात् । यथा सर्वतो विरक्तं भार्या बाधितुं न शक्नोति, नाऽप्यात्मारामममिति च शब्दार्थः ॥ २४ ॥

## श्रीगिरिधरकृता बालप्रबोधिनी

न प्रकृतिगुणसत्त्वमात्रं पुरुषस्य बन्धहेतुः किन्तु तत्रात्माभिमानमेव तत्र च हेतुर्भगवच्छक्तिरविद्या । तन्निवृत्त्या च तथाऽभिमाननिवृत्तौ मोक्षो घटते, अविद्यानिवृत्तिस्तु 'मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते' इति वाक्याद्बहुसाधनोपकृतया भगवद्भक्त्या भगवत्प्रसादादेव निवृत्तप्रायस्यापि संसारभयस्य पुनरुद्भवस्तु साधनवैकल्यादित्यभिप्रेत्य साधनातिशयं कथयन् शङ्कां परिहरति—अनिमित्तेति त्रिभिः । निमित्तं फलं तदनिमित्तमप्रवर्त्तकं यस्मिंस्तेन फलाभिसन्धिरहितेन स्ववर्णाश्रमोचितधर्मेण अमलात्मना विशुद्धान्तःकरणेन । "धर्मेण पापमपनुदति" इति श्रुतेः । चिरं श्रुतसम्भृतया बहुकालं मत्कथाश्रवणेन पुष्टया अत एव तीव्रया विघ्नानुपहतया मयि भक्त्या प्रेमविशेषेण ॥ २१ ॥ ❀ ❀ दृष्टं तत्त्वं प्रकृतिपुरुषयोर्याथात्म्यं हेयोपादेयत्वं च येन तेन ज्ञानेन बलीयसा कामानभिभूतेन वैराग्येण च । तपसा आहारसङ्कोचादिना युक्तेन अष्टाङ्गेन योगेन । तीव्रेण विघ्नानुपहतेन परमात्मविषयकसमाधिना ॥ २२ ॥ ❀ ❀ अहर्निशं दह्यमाना अभिभूयमाना पुरुषस्य मोहिका प्रकृतिरविद्या शनकैः साधनतारतम्यानुसारेण इहास्मिन्नेव जन्मनि तिरोभवित्री, तिरोहिता भवतीत्यर्थः । ननु प्रकृतिनिरोधाभावो नाम देहाद्यात्माभिमाननिवृत्तिरेव, स तु न सम्भवति, देहाद्यभिमानाज्जातानि ज्ञानभक्त्यादिसाधनानि तत्पोषकाण्येव स्युः न विनाशकानि उपजीव्यविरोधादित्याशङ्कां दृष्टान्तेन निराकरोति—अग्नेर्योनिरिवारणिरिति, यथाऽग्नेर्योनिः आविर्भावहेतुः अरणिः काष्ठं स्वतः आविर्भूतेनाग्निना दह्यमानो विनश्यति तथेत्यर्थः ॥ २३ ॥ ❀ ❀ ननु सुषुप्तौ तिरोहिताया अपि यथा पुनर्जाग्रदवस्थायां तस्या उत्थानं भवति तथा पुनरुत्थानं स्यादित्याशङ्क्याह—भुक्तभोगेति । भुक्तो भोगो नरकादिदुःखं यस्याः सा, अत एव परित्यक्ता । नन्वेवं सर्वोऽपि जनस्तस्या भोगं भुङ्क्ते कुतो न तां त्यजतीत्याशङ्क्य विवेकाभावेन तद्दोषदर्शनाभावादित्याशयेनाह—दृष्टेति । नित्यशो दृष्टो दोषो दुःखहेतुत्वं यस्याः सा ईश्वरस्य स्वतन्त्रस्य स्वे महिम्नि परमानन्दस्वरूपे स्थितस्याशुभं संसारभयं च पुनर्नाधत्ते, न सम्पादयतीत्यर्थः । सुषुप्तौ निद्रया लयोऽत्र तु साधनेनेति विशेषः ॥ २४ ॥

## हिन्दी अनुवाद

श्रीभगवान्‌ने कहा—माताजी ! जिस प्रकार अग्निका उत्पत्तिस्थान अरणि अपनेसे ही उत्पन्न अग्निसे जलकर भस्म हो जाती है, उसी प्रकार निष्कामभावसे किये हुए स्वधर्मपालनद्वारा अन्तःकरण शुद्ध होनेसे बहुत समयतक भगवत्कथा श्रवणद्वारा पुष्ट हुई मेरी तीव्र भक्तिसे, तत्त्वसाक्षात्कार करानेवाले ज्ञानसे, प्रबल वैराग्यसे, व्रतनियमादिके सहित किये हुए ध्यानाभ्याससे और चित्तकी प्रगाढ़ एकाग्रतासे पुरुषकी प्रकृति ( अविद्या ) दिन-रात क्षीण होती हुई धीरे-धीरे लीन हो जाती है ॥ २१–२३ ॥

---

१. प्राप्तौ, ग. ।

❀ ❀ फिर नित्यप्रति दोष दीखनेसे भोगकर त्यागी हुई वह प्रकृति अपने स्वरूपमें स्थित और स्वतन्त्र ( बन्धनमुक्त ) हुए उस पुरुषका कुछ भी नहीं बिगाड़ सकती ॥ २४ ॥

यथा ह्यप्रतिबुद्धस्य प्रस्वापो बह्वनर्थभृत् । स एव प्रतिबुद्धस्य न वै मोहाय कल्पते ॥ २५ ॥
एवं विदिततत्त्वस्य प्रकृतिर्मयि मानसम् । युञ्जतो नापकुरुत आत्मारामस्य कर्हिचित् ॥ २६ ॥
यदैवमध्यात्मरतः कालेन बहुजन्मना । सर्वत्र जातवैराग्य आ ब्रह्मभुवनान्मुनिः ॥ २७ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका ।

अविवेकावस्थायामनर्थहेतुरपि विवेकानंतरं न भवतीति सदृष्टांतमाह । यथेति द्वाभ्याम् । प्रस्वापः स्वप्नः बहूनर्थान्बिभर्ति पुष्णाति प्रतिबुद्धस्य संस्कारवशेन स्फुरन्नपि ॥ २५, २६ ॥ ❀ ❀ उपसंहरति यदैवमिति त्रिभिः । बहूनि जन्मानि यस्मिन्काले ॥ २७ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

एतद् दृष्टांतेन स्फुटयति—यथेति । दृष्टांतसिद्धमर्थं दार्ष्टांतिके योजयति एवमिति । विदितमपरोक्षितं तत्त्वं स्वस्य प्रकृतेश्च स्वरूपं येन तस्य न अपकुरुतेऽशोभनं न कुरुते ॥ २५, २६, २७ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

अनर्थान् चौरसर्पाद्युपद्रवान् ॥ २५ ॥ ❀ ❀ मयि मानसं युञ्जत इति सर्वसाधनमूलनिर्देशः ॥ २६ ॥ ❀ ❀ यदैवमिति त्रिकम् । भक्तस्त्वञ्जसेति पूर्वोक्ततत्तत्साधनानपेक्षत्वं दर्शितम् । अहमेवाश्रयो यस्य तन्मदाश्रयं तदुक्तं श्रीगीतासु "ब्रह्मणो हि प्रतिष्ठाहम्" इति । श्रीमत्स्यदेवेन च 'मदीयं महिमानञ्च परब्रह्मेति शब्दितमि'त्यादि । नष्टलिङ्गादि तथैवार्थिकोऽर्थः ॥ २७, २८, २९ ॥

### श्रीमद्वीरराघवव्याख्या

यस्य प्रकृतिसम्बन्धः ज्ञानस्य तु न सम्बन्धः इत्यत्र दृष्टान्तमाह । यथेति । यथा अप्रतिबुद्धस्य निद्रामुपगतस्य पुंसः स्वप्नो बह्वनर्थकृत् स्वशिरश्छेदादिबह्वनर्थकारी स एव प्रस्वापः प्रबुद्धस्य जाग्रतः मोहायानर्थाय न कल्पते न समर्थो भवेत् । अनर्थस्यास्थिरत्वाय स्वप्नदृष्टान्तः ॥ २५ ॥ ❀ ❀ एवं विदिततत्त्वस्य विदितप्रकृतिपुरुषेश्वरतत्त्वत्रयस्य मयि मानसं युञ्जतः आत्मारामस्यात्मन्येव रममाणस्य प्रकृतिविलक्षणत्वात् परमात्मानुभवपरस्य कर्हिचित्कदाचिदपि प्रकृतिर्नापकुरुते न बन्धं करोतीत्यर्थः ॥ २६ ॥ ❀ ❀ उक्तमुपसंहरति । यदेति । यदैवमुक्तरीत्यात्मरतः आत्मारामः बहूनि जन्मानि यस्मिन् तेन कालेन प्रतिबुद्धार्थः विदिततत्त्वहितपुरुषार्थः आब्रह्मभुवनात्सत्यलोकपर्यन्तेषु लोकेषु जातवैराग्यः सातिशयित्वक्षयिष्णुत्वबुद्ध्याभोग्यताबुद्धिरहितः ॥ २७ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

एतदेव सदृष्टान्तं विवृणोति । यथाहीति । अप्रतिबुद्धस्य निद्रितस्य प्रस्वापो· निद्रा बह्वनर्थकृत् व्याघ्रादिनिमित्तभयजनकः स्यात् । प्रतिबुद्धस्य निद्राया उत्थितस्य जाग्रतः ॥ २५ ॥ ❀ ❀ दृष्टान्तार्थं दार्ष्टान्तिके योजयति । एवमिति । विदितमपरोक्षितं नामादिमदन्तदेवतानां तत्त्वं निजं रूपं येन स तथा तस्य ॥ २६ ॥ ❀ ❀ इदानीमनुष्ठीयमानश्रेयःसाधनफलं वक्ति । यदेवमिति । यदेवमुक्तप्रकारेण बहुजन्मना कालेनाध्यात्मरतः स्वोत्तममारभ्य मदन्ततत्त्वेषु रतस्तदितरत्रानित्यत्वेनासारत्वेनाब्रह्मभुवनात्सत्यलोकपर्यन्तं जातवैराग्यो भूत्वा मुनिर्निरन्तरमदुपासनाशीलो मद्भक्तो भूयसा मत्प्रसादेन प्रतिबुद्धार्थोऽपरोक्षीकृतनामादिमदन्तविषयोऽत एव स्वदृशा स्वरूपज्ञानेन छिन्नसंशयो निश्चिततत्त्वः स्वसंस्थानं स्वरूपावस्थानं मदाश्रयं कैवल्याख्यं निःश्रेयसं पुरुषार्थमञ्जसा प्राप्नोति । तं विशिनष्टि यद्गत्वेति । योगी लिङ्गशरीरविनिर्गमे यद्गत्वा न निवर्तेत तादृशं पुरुषार्थमित्यर्थः ॥ २७, २८, २९ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

यदैवेति त्रिकम् । मद्भक्तस्तु मत्प्रसादेनाञ्जसैव निःश्रेयसं प्राप्नोतीत्याह । मद्भक्त इति । यदि मद्भक्तसङ्गेन मद्भक्तो भवति तदैवेत्यर्थः । भूयस्या सर्व्वत्र बलवत्तरयेत्यर्थः । अहमेवाश्रयो यस्य तत् तदुक्तं गीतासु । यो मामव्यभिचारेणेत्यारभ्य ब्रह्मणो हि प्रतिष्ठाहमिति ॥ २७, २८, २९ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

अविवेकावस्थायामनर्थहेतुर्यः स खलु विवेके सति न तथैवेत्याह । यथेति द्वाभ्याम् । प्रस्वापः स्वप्नः बहूनर्थान् व्याघ्र-सर्पादिदंशान् बिभर्त्ति प्रतिबुद्धस्य संस्कारवशेन स्फुरन्नपि ॥ २५-२७ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

उपसंहरति ।, यदेति त्रिभिः । बहूनि जन्मानि यस्मिन् तेन ॥ २७ ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

किञ्च—इयं प्रकृतिर्निद्रावत्पुरुषस्य बाधिका । तथा सति यथा निद्रा स्वप्नं जनयित्वा पुरुषं बाधते, तथेयमपि संसारं जनयित्वा बाधते । सोऽपि स्वप्नो भगवन्मायाजनितसर्वप्रपञ्चात्मकः, भगवदिच्छया विद्यमानोऽपि अप्रतिबुद्धस्यैव बह्वनर्थकृद्भवति न तु प्रतिबुद्धस्य कस्यचिदपि कदाचिदपि कस्मिन्नपि देशे । निश्चयेन मोहाय न कल्पते, किन्तु स्मृतिमात्रं जनयति ॥ २५ ॥ ❀ ❀ एवमेव विदिततत्त्वस्याऽपि पुरुषस्य प्रकृतिः संसारजननेन नाऽपकारं कर्तुं शक्नोतीत्याह—एवमिति । विदिततत्त्वस्येति । स्वभावतो मोहकत्वाभावे हेतुः । मयि भगवति मानसं युञ्जत इति । बलाददृष्टादिद्वाराऽप्यपकाराभावे हेतुः । कामादिजननद्वाराऽपि नाऽपकर्तृत्वमित्याह—आत्मारामस्येति । आत्मन्येव रमणं यस्य । अत एव प्रकारत्रयेणाऽपि बाधाभावात्कर्हिचिदित्युक्तम् ॥ २६ ॥ ❀ ❀ एवं प्रकृतेर्बाधकत्वाभावमुक्त्वा, विदिततत्त्वस्य [1]प्रकृतिबाधाभावानन्तरं साधनपूर्वकं भगवत्प्राप्तिलक्षणं मोक्षमाह—चतुर्भिर्यदैवमित्यादिभिः । साधनं च फलञ्चैव फलत्वं चाऽपि तस्य च । प्रतिबन्धनिवृत्त्यैव तत्प्राप्तिर्बाधनाशतः ॥ १ ॥ एतच्चतुष्टयं प्राऽऽह चतुर्भिर्नाऽन्यथा फलम् । तादृशस्याऽपि हि भवेदिति ज्ञानोत्तरक्रिया ॥ २ ॥ प्रथमं साधनान्याह—यदैवमिति । पूर्वं यानन्ति साधनानि निरूपितानि ज्ञानार्थं प्रकृतिजयार्थं च; तान्युभयविधान्यपि बहुजन्मसु आवृत्तानि सन्ति । अध्यात्मे आत्मज्ञाने रतिरुत्पद्यते । ज्ञानं तु बहुधा जायते, प्रमाणवस्तुपरतन्त्रत्वात् ज्ञानस्य । रतिस्तु कदाचिदेव जायते, तस्याः कालनियमाभावात्—यदैवमित्युक्तम् । एवमाकाङ्क्षायुक्तो बहुजन्मना कालेन अध्यात्मरतो भवेत्, तदैव सर्वत्र जातवैराग्यो भवेत् । ततोऽपि वा बहुजन्मना सर्वत्र वैराग्यम् । क्रममुक्तावपि वैराग्यमित्याह—आब्रह्मभुवनादिति । तत्रापि निरन्तरं मननं साधनम्, बहिः पदार्थनिवृत्तेरावश्यकत्वात् ॥ २७ ॥

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

यदैवमित्यत्र । अध्यात्मेत्यादि । इतः पूर्वमथेत्यध्याहार्यम् ॥ २७ ॥

### श्रीगिरिधरकृता बालप्रबोधिनी

अविवेकदशायां अनर्थहेतुरपि विवेकानन्तरं स तथा न भवतीति सदृष्टान्तमाह—यथेति । हीति प्रसिद्धमेतत् । यथा अप्रतिबुद्धस्य निद्रामुपगतस्य पुंसः प्रस्वापः स्वप्नः बहूनर्थान् स्वशिरश्छेदादीन् बिभर्ति पुष्णातीति तथाभूतोऽपि स एव संस्कार-वशेन स्फुरन्नपि प्रतिबुद्धस्य मोहाय नैव कल्पते समर्थो नैव भवति ॥ २५ ॥ ❀ ❀ एवं दृष्टान्तं निरूप्य दार्ष्टान्तिकमाह—एवमिति । एवमज्ञस्य मद्विमुखस्य विषयासक्तस्य अनर्थहेतुरपि प्रकृतिः विदितं तत्त्वं प्रकृतिपुरुषेश्वराणां याथात्म्यं येन तस्य अत एवात्मारामस्य परमानन्दस्वरूपलाभेनैव पूर्णकामस्य मयि परमेश्वरे मानसं मनो युञ्जतः कर्हिचिदपि नापकुरुते मोहेनापकारं कर्तुं नैव शक्नोतीत्यर्थः ॥ २६ ॥ ❀ ❀ उक्तमुपसंहरति—यदेति । बहूनि जन्मानि यस्मिंस्तेन कालेन तावत्कालं एवमुक्तप्रकारक-साधनानुष्ठानेन यदा अध्यात्मरतः स्वरूपनिष्ठः मुनिः विवेकी अत एव आब्रह्मभुवनात् सर्वत्र जातवैराग्यश्च भवति ॥ २७ ॥

### हिन्दी अनुवाद

जैसे सोये हुए पुरुषोंको स्वप्नमें कितने ही अनर्थोंका अनुभव करना पड़ता है, किन्तु जग पड़नेपर उसे उन स्वप्नके अनुभवोंसे किसी प्रकारका मोह नहीं होता ॥ २५ ॥ ❀ ❀ उसी प्रकार जिसे तत्त्वज्ञान हो गया है और जो निरन्तर मुझमें ही मन लगाये रहता है, उस आत्माराम मुनिका प्रकृति कुछ भी नहीं बिगाड़ सकती ॥ २६ ॥ ❀ ❀ जब मनुष्य अनेकों जन्मोंमें बहुत समयतक इस प्रकार आत्मचिन्तनमें ही निमग्न रहता है, तब उसे ब्रह्मलोक-पर्यन्त सभी प्रकारके भोगोंसे वैराग्य हो जाता है ॥ २७ ॥

---

१. प्रकृतिबाधानन्तरम्. ग. घ. ।

मद्भक्तः प्रतिबुद्धार्थो मत्प्रसादेन भूयसा । निःश्रेयसं स्वसंस्थानं कैवल्याख्यं मदाश्रयम् ॥ २८ ॥
प्राप्नोतीहाञ्जसा धीरः स्वदृशा च्छिन्नसंशयः । यद्गत्वा न निवर्तेत योगी लिङ्गाद्विनिर्गमे[1] ॥ २९ ॥
यदा न योगोपचितासु चेतो मायासु सिद्धस्य विषज्जतेऽङ्ग[2] ।
अनन्यहेतुष्वथ मे गतिः स्याद् आत्यन्तिकी यत्र न मृत्युहासः ॥ ३० ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां तृतीयस्कन्धे का[3]पिलेयोपाख्याने सप्तविंशोऽध्यायः ॥ २७ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

प्रतिबुद्धार्थो विदितात्मतत्त्वः कैवल्याख्यं स्वसंस्थानं देहादिव्यतिरिक्तं स्वरूपं मदाश्रयं निःश्रेयसं निरतिशयानंदम् ॥ २८ ॥ ❀ ❀ स्वदृशा आत्मज्ञानेन छिन्नाः संशया मिथ्याज्ञानानि यस्य । लिंगाद्विनिर्गमे लिंगशरीरनाशे सतीत्यर्थः ॥ २९ ॥ ❀ ❀ तदा त्वणिमादिसिद्धयोंतरायरूपा भवंति तासु योगेनोपचितासु समृद्धासु न योगादन्यो हेतुर्यासां तासु यदा सिद्धस्य चेतो न विषज्जते । अंग हे मातः अथ तदांतमतिक्रांतोऽत्यंतो योऽहं तत्संबधिनी यत्र यस्यां गतौ मृत्योर्हासो न भवति विषक्तौ तु सिद्धोऽपि मया वशीकृत इति मृत्योर्हासो गर्वो भवतीत्यर्थः ॥ ३० ॥

इति श्री० तृती० टीकायां सप्तविंशोऽध्यायः ॥२७॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

अहमेवाश्रयो यस्य तन्मदाश्रयं मदेकनिष्ठम् ॥ २८ ॥ ❀ ❀ यद्गत्वा इह संसारे न निवर्त्तते तद्धामेत्यध्याहार्य योज्यम् । "न स पुनरावर्त्तते" इति श्रुतेः । इत्यर्थ इति । "अलिंगत्वादसंभवः" इत्युक्तेरिति भावः ॥ २९ ॥ ❀ ❀ तत्संबंधिनी अंतशून्या सार्वकालिकी मोक्षलक्षणेति यावत् । विषक्तावासक्तौ सत्याम् इत्यर्थ इति । 'ईश्वरो धाममानिनाम्' इत्युक्तन्यायेन 'अंतरायान्वदन्त्येतान् युंजतो योगमुत्तमम्' इति श्रीमुखोक्त्या च सिद्धिर्स्वीकारो भ्रंशहेतुरतस्दस्वीकारश्च मोक्षहेतुरिति भावः ॥ ३० ॥

इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे तृतीयस्कन्धे सप्तविंशोऽध्यायः ॥ २७ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

यदा मत्प्रसादे सति 'तावन्न योगगतिभिर्यतिरप्रमत्तो यावद्गदाग्रजकथासु रतिं न कुर्यात्' इति वक्ष्यमाणत्वात् ॥ ३० ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीराधारमणदासगोस्वामिविरचितदीपिन्याख्यदीपिकाटिप्पण्यां सप्तविंशोऽध्यायः ॥२७॥

### श्रीमद्वीरराघवव्याख्या

मद्भक्तः निरतिशयप्रीतिरूपमद्भक्तियुक्तः भूयसा मत्प्रसादेन निःश्रेयसं पुरुषार्थरूपं मदाश्रयम् अनेन निष्कृष्टजीवस्वरूपस्य भगवद्धार्यत्वमुक्तम् ॥ २८ ॥ ❀ ❀ इह प्राप्नोत्युपासनदशायां साक्षात्करोति ततः स्वदृशा भगवदात्मकस्वात्मसाक्षात्कारेण छिन्नसंशयः विगतदेहात्माभिमानः योगी मद्भक्तियोगनिष्ठः लिङ्गविनिर्गमे प्रारब्धावसाने यत्स्थानं गत्वा प्राप्य न निवर्तेत न पुनरावर्तते तत्परमस्थानं प्राप्नोति ॥ २९ ॥ ❀ ❀ पूर्वश्लोकोक्तसाक्षात्कारवतोऽवान्तरसिद्धिवितृष्णस्य भगवत्प्राप्तिमाह । यदेति । अम्ब हे मातः ! सिद्धस्य परिनिष्पन्नभक्तियोगस्य तस्य पुंसश्चेतः योगोपचितासु योगसमृद्धासु अनन्यहेतुषु योगादन्यो हेतुर्नास्ति यासु यत्र मृत्योः संसारस्य हासो नाशो न भवति तासु मायासु आश्चर्यरूपाणिमादिसिद्धिषु यदा न विषज्जते अथ तदा आत्यान्तिकी निरतिशया मे गतिः मत्प्राप्तिः स्यात् ॥३०॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायां सप्तविंशोऽध्यायः ॥ २७ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली ।

प्राप्तस्वान्तरायानुपहतश्चेदुक्तपुरुषार्थमाप्नोतीत्याह यदा नेति । यदैवं साधनसिद्धस्य योगोपचितासु अष्टाङ्गयोगप्राप्तासु मायासु अणिमादिविभूतिषु बुद्धिर्न विषज्जते अनुभवानीति न विलम्बते अथ तदा यत्र यस्यां गतौ मृत्योरन्तकस्य हासः पुनरावृत्ति-

---

१. प्रा० पा०—लिङ्गविनिर्गमे । २. प्रा० पा०—जते कथम् । ३. प्राचीने पाठे 'कापिलेयोपाख्याने' इत्यंशो न ।

लक्षणो न स्यात् आत्यन्तिकी गतिर्मुक्तिलक्षणा स्यादित्यन्वयः नान्यो हेतुर्यासां तास्तथा तासामप्यहमेवाश्रय इत्यर्थः। तास्वनेनाणिमाद्यैश्वर्यमनुभूय पश्चान्मुक्त्यवाप्तेर्न मद्भक्तिर्निष्फलेति ध्वनितम्॥ ३०॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्यां सप्तविंशोऽध्यायः॥ २७॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

यदा मत्प्रसादे सति॥ ३०॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भस्य सप्तविंशोऽध्यायः॥ २७॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

स्वसंस्थानं देहादिव्यतिरिक्तं स्वरूपं कैवल्याख्यं ब्रह्म अहमेवाश्रयो यस्य तत्। यदुक्तं ब्रह्मणो हि प्रतिष्ठाहमिति। स्वद्दशा शुद्धान्तर्ज्ञानेन लिङ्गाद्विनिर्गमे लिङ्गशरीरे नष्टे सतीत्यर्थः॥ २८॥ २९॥ ❀ ❀ किञ्चाणिमादिसिद्धिपर्य्यन्ता विविधा भोगा अन्तरायरूपा भवन्ति। तासु योगी न विषज्जेदित्याह। यदा योगी उपचितासु समृद्धासु मायासु विविधभोग्यवस्तुषु सिद्धस्य चेतो न विषज्जते तदा आत्यन्तिकी गतिर्मुक्तिः स्यात्। मायासु कीदृशीषु न योगादन्यो हेतुर्यासां तासु यत्र यस्यां गतौ सत्यां मृत्योर्हासो न भवति, विषयासक्तौ तु सिद्धोऽपि मया वशीकृत इति मृत्योर्हासो गर्वो भवतीत्यर्थः॥ ३०॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्। तृतीये सप्तविंशोऽपि सङ्गतः सङ्गतः सताम्॥२७॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

कैवल्याख्यं देहेन्द्रियादिव्यतिरिक्तं स्वसंस्थानं स्वस्वरूपं यतो मद्भक्तोऽतो भूयसा मत्प्रसादेन मदाश्रयं मद्भावापत्तिलक्षणं निःश्रेयसं मोक्षं च प्राप्नोतीत्युत्तरेणान्वयः॥ २८॥ ❀ ❀ लिङ्गस्य लिङ्गशरीरस्य विनिर्गमे नाशे सति॥ २९॥ ❀ ❀ हे अम्ब! सिद्धस्य मम ज्ञानभक्तिभ्यां सिद्धस्य चेतः अनन्यहेतुषु हेत्वन्तरशून्यासु योगाभ्यां मज्ज्ञानभक्तिभ्यामुपचितासु प्राप्तासु मायासु अद्भुतासु अणिमादिसिद्धिषु यदा न विषज्जते अथ तदा अन्तमतिक्रान्तोऽत्यन्तोऽहं तत्सम्बन्धिनी यत्र यस्यां मृत्योर्हासः प्रभुत्वगर्वः न सा मद्भक्तिर्भवति। अन्यथा तु मद्भावापत्तावन्तरायः स्यादिति भावः॥ ३०॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कंधे श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे सप्तविंशोऽध्यायः॥ २७॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

मद्भक्त इति। एवं बहुजन्मनि जाते मद्भक्तो भवति। पश्चात्प्रतिबुद्धार्थो भवति। तावत् कः पुरुषार्थ इत्येव न जानाति, यावत् भगवति भक्तिर्न भवति। तदा भगवानेव परमपुरुषार्थ इति ज्ञाने महान् भगवत्प्रसादो भवति। तदा वैकुण्ठं प्राप्नोति। तद्देह हि नितरां श्रेयोरूपम्, स्वस्य भगवतो जीवस्याऽपि सम्यक् स्थानभूतम्। तत्रैव हि पुरुषः केवलो भवति, सर्वस्यात्मत्वात्, प्रतीतत्वाच्च। तदेव हि मम स्थानम्। यस्तु मम स्थानं प्राप्नोति सोऽहमेव भवति। अञ्जसाऽनायासेन। इहैव शरीरे, न तु ब्रह्माण्डभेदाद्यपेक्षा। ननु वैकुण्ठस्य भगवतो वा परमपुरुषार्थत्वं शास्त्रान्तरैर्युक्त्या च विरुद्धं भातीति बहुविधोऽपि सन्देहः स्वयं यदा तत्र पश्यति, तदा निवर्तेत इति स्वदृष्ट्या छिन्नसंशयो भवति। तस्य शास्त्रार्थत्वाय श्रुतिसूत्राभ्यां निरूपितशास्त्रपर्यवसानमाह—यद्गत्वा न निवर्ततेति। न च पुनरावर्तते, 'अनावृत्तिः शब्दात्' इति। तत्रैव परिसमाप्तिरुभयाः शास्त्रस्य च। यन्मत्स्थानं गत्वा मदीयो न निवर्तत एव। योगी च लिङ्गाद्विनिर्गमे सति, लिङ्गभङ्गं वा न निवर्तते॥ २८, २९॥ ❀ ❀ अन्तिमजन्मनि योगिनो विघ्नाः संभवन्ति, 'श्रेयांसि बहुविघ्नानि' इति स्मृतेः। तैर्विघ्नैश्चेन्नाऽभिभूयते, तदा कालमतिक्रम्य तत्र गच्छतीत्याह—यदेति। योगेन उपचितासु निकटे समानीतासु, मायास्वणिमादिषु, सिद्धस्य चेतो यदा न विषज्जते। अनन्यहेतुष्विति। न विद्यते स्वव्यतिरिक्तो हेतुर्यत्र। अनेनाऽऽयासाभाव उक्तः। तदैव मे गतिः स्याद्वैकुण्ठाख्या। फलान्तरेण सम्बद्धभुक्तब्राह्मण इव मुख्ये फले न युज्यते। आगतास्वपि सिद्धिषु चित्तं चेन्न युज्यते, अथ तदनन्तरमेव, भगवत्प्राप्तिर्भवति। यद्यपि भगवतो बहुविधा गतिर्भवति सगुणाऽपि, तथापीयमत्यन्तिकी। यत्र च फले मृत्योर्गर्वो न भवति! मृत्युर्हि सर्वप्रकारेण फलसाधनप्रमेयप्रमाणैर्भ्रामयित्वा स्ववशे नयति। तस्य यदि सर्वोऽपि प्रयासो व्यर्थो भवति, तदा गर्वो गच्छति 'तत्र यदा मृत्योर्हासो गर्वो नाऽस्तीति। अत एवाऽत्र श्रमो न कर्तव्यः। यस्मिन्नेव शास्त्रे मते वा, साधनेषु वा, कदाचिदपि प्राणी म्रियते, तदेवाऽसच्छास्त्रं साधनं च एतदेव निदर्शनमिति भावः॥ ३०॥

इति श्रीभागवतसुबोधिन्यां श्रीमल्लक्ष्मणभट्टात्मजश्रीमद्वल्लभदीक्षितविरचितायां तृतीयस्कन्धे सप्तविंशाध्यायविवरणम्।

---

१. तदा यत्र. ख. ग. घ. ङ. च.।

**श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः**

यदा नेत्यत्र। सम्बद्धभुक्तब्राह्मण इति। पूर्वं सम्बद्धः, पश्चाद्भुक्तो ब्राह्मणो यस्मिन् सः। तथाऽत्र यथा सम्बन्धिनि ब्राह्मणे भोजिते मुख्यं भोजनफलं न भवति, किन्तु फलान्तरेण संयुज्यते तथेत्यर्थः॥ ३०॥

इति श्रीतृतीयस्कन्धसुबोधिनीप्रकाशे सप्तविंशाध्यायविवरणं सम्पूर्णम्।

**श्रीगिरिधरकृता बालप्रबोधिनी**

मद्भक्तः मयि निरतिशयप्रीतियुक्तः। तत्र हेतुः—प्रतिबुद्धः विज्ञातः अर्थः परमपुरुषार्थो येन सः। तत्र हेतुः—स्वदृशा स्वरूपज्ञानेनच्छिन्नः संशयो देहाद्यात्माभिमानो यस्य सः। तत्र हेतुः—धीरः वशीकृतान्तःकरणः। तदा भूयसा महता मत्प्रसादेन निश्श्रेयसं परमपुरुषार्थं कैवल्याख्यं मोक्षशब्दवाच्यं मदाश्रयं मदधीनं मत्स्वरूपं स्वसंस्थानं स्वपरमार्थरूपम्। इहैव देहेऽञ्जसा साक्षात् प्राप्नोतीत्यन्वयः। तत्प्राप्तस्यापि पुनरावृत्तिं आशङ्क्याह—यद्गत्वेति। लिङ्गादिनिर्गमे प्रारब्धावसाने लिङ्गशरीरभङ्गे सति यत् गत्वा प्राप्य योगी पुनः संसारं प्रति न निवर्तेत न निवर्त्तते इत्यर्थः॥ २८॥ २९॥ ❀ ❀ स्वस्नेहं सूचयन् सम्बोधयति—अम्बेति। एवं मोक्षे त्वणिमादयः सिद्धयोऽन्तरायरूपा आयान्ति तासु योगेनोपचितासु सुसमृद्धासु अनन्य हेतुषु न योगादन्यो हेतुर्यासां तासु मायासु मोहिकासु यदा सिद्धस्य निष्पन्नयोगस्य चेतो न विषज्जते अथ तदा आत्यन्तिकी परम-पुरुषार्थरूपा मे मदीया मत्प्राप्तिलक्षणा गतिः स्यात्। यत्र यस्यां गतौ सत्यां मृत्योर्हासो न भवति। तासु विषक्तौ तु संसारानिवृत्तेः सिद्धोऽपि मया वशीकृत इति मृत्योर्हासो गर्वो भवत्येवेत्यर्थः॥ ३०॥

इति श्रीवल्लभाचार्यवंश्यगोपालसूनुना॥ श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा॥ १॥<br>
श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये॥ श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी॥ २॥<br>
रचिता च तृतीयेऽत्र मोक्षसर्गनिरूपणे॥ सप्तविंशो गतो वृत्तिं मोक्षरीतिनिरूपकः॥ ३॥

**हिन्दी अनुवाद**

मेरा वह धैर्यवान् भक्त मेरी ही महती कृपासे तत्त्वज्ञान प्राप्त करके आत्मानुभवके द्वारा सारे संशयोंसे मुक्त हो जाता है और फिर लिङ्गदेहका नाश होनेपर एकमात्र मेरे ही आश्रित अपने स्वरूपभूत कैवल्य-संज्ञक मङ्गलमय पदको सहजमें ही प्राप्त कर लेता है, जहाँ पहुँचनेपर योगी फिर लौटकर नहीं आता॥ २८-२९॥ ❀ ❀ माताजी! यदि योगीका चित्त योगसाधनसे बढ़ी हुई मायामयी अणिमादि सिद्धियोंमें, जिनकी प्राप्तिका योगके सिवा दूसरा कोई साधन नहीं है, नहीं फँसता, तो उसे मेरा वह अविनाशी परमपद प्राप्त होता है—जहाँ मृत्युकी कुछ भी दाल नहीं गलती॥ ३०॥

**२७ वाँ अध्याय समाप्त**

# अथाष्टाविंशोऽध्यायः

श्रीभगवानुवाच

योगस्य लक्षणं वक्ष्ये सबीजस्य नृपात्मजे। मनो येनैव विधिना प्रसन्नं याति सत्पथम् ॥ १ ॥
स्वधर्माचरणं शक्त्या विधर्माच्च निवर्तनम्। दैवाल्लब्धेन सन्तोष आत्मविच्चरणार्चनम् ॥ २ ॥
ग्राम्यधर्मनिवृत्तिश्च मोक्षधर्मरतिस्तथा। मितमेध्यादनं शश्वद्विविक्तक्षेमसेवनम् ॥ ३ ॥
अहिंसा सत्यमस्तेयं यावदर्थपरिग्रहः। ब्रह्मचर्यं तपः शौचं स्वाध्यायः पुरुषार्चनम् ॥ ४ ॥
मौनं सदाऽऽसनजयः स्थैर्यं प्राणजयः शनैः। प्रत्याहारश्चेन्द्रियाणां विषयान्मनसा हृदि ॥ ५ ॥
स्वधिष्ण्यानामेकदेशे मनसा प्राणधारणम्। वैकुण्ठलीलाभिध्यानं समाधानं तथाऽऽत्मनः ॥ ६ ॥
एतैरन्यैश्च पथिभिर्मनो दुष्टमसत्पथम्। बुद्ध्या युञ्जीत शनकैर्जितप्राणो ह्यतन्द्रितः ॥ ७ ॥
शुचौ देशे प्रतिष्ठाप्य विजितासन आसनम्। तस्मिन् स्वस्ति[1] समासीन ऋजुकायः समभ्यसेत् ॥ ८ ॥

श्रीधरस्वामिविरचिता भावार्थदीपिका

अष्टाविंशे ततोऽष्टांगयोगेन ध्यानशोभिना। सर्वोपाधिविनिर्मुक्तं स्वरूपज्ञानमीर्यते ॥ १ ॥
भक्तिं संक्षेपतः प्रोच्य सांख्यमाख्याय विस्तृतम्। अथाह वैष्णवं योगमष्टांगं कपिलो हरिः ॥ २ ॥

सबीजस्य सालंबनस्य प्रसन्नं सत् सत्पथं ब्रह्ममार्गम् ॥ १ ॥ ❀ ❀ तत्र यमनियमानाह त्रिभिरक्षरद्वयाधिकैः। शक्त्या स्वधर्माचरणम् ॥ २ ॥ ❀ ❀ ग्राम्यस्त्रैवर्गिको धर्मस्तस्मान्निवृत्तिः मितं च तन्मेध्यं शुद्धं च तस्यादनम्। तत्र मितं नाम "द्वौ भागौ पूरयेदन्नैस्तोयेनैकं प्रपूरयेत्। मारुतस्य प्रचारार्थं चतुर्थमवशेषयेद्" इति स्मृतिप्रसिद्धम्। विविक्तं विजनं क्षेमं निर्बाधं तस्य स्थानस्य सेवनम् ॥ ३ ॥ ❀ ❀ यावताऽर्थः प्रयोजनं तावन्मात्रस्य परिग्रहः ॥ ४ ॥ ❀ ❀ आसनादीन्यंगान्याह त्रिभिः। सत् आसनस्य जयेन स्थैर्यम् ॥ ५ ॥ ❀ ❀ स्वधिष्ण्यानां प्राणस्थानानां मूलाधारादीनां मध्ये एकस्मिन्देशे मनसा सह प्राणस्य धारणं धारणा। आत्मनो मनसः समाधानमात्माकारता ॥ ६ ॥ ❀ ❀ अन्यैश्च व्रतदानादिभिः पथिभिरुपायैः ॥ ७ ॥ ❀ ❀ आसनादीनि प्रपंचयति। शुचाविति ग्रावत्समाप्ति। आसनं कुशाजिनचैलोत्तरं प्रतिष्ठाप्य स्वस्तिकासनेन यथासुखमिति वा समभ्यसेत्प्राणमिति शेषः। "ऊरू जंघांतराधाय पादाग्रे जानुमध्यगे। योगिनो यदवस्थानं स्वस्तिकं तद्विदुर्बुधाः" ॥ ८ ॥

श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

ततः सिद्ध्यनंगीकरणोत्तरम्। ध्यानेन सगुणविग्रहचिंतनेन। शोभितुं शीलमस्येति तेन सर्वोपाधिभिरहंकारादिभिर्विनिर्मुक्तं रहितम् ॥ १ ॥ ❀ ❀ वैष्णवं विष्णुचिंतनात्मकं विष्णुप्रोक्तं वा "ऋषीणां श्रोतुकामानां यमवोचं पुरानघे। तमिमं ते प्रवक्ष्यामि योगं सर्वांगनैपुणम्" इत्युक्तेः ॥२॥ ❀ ❀ आलंबनं ध्यानविषयः स च विष्णुरेव तस्यैव सर्वबीजत्वात् "बीजं विष्णुर्हि जगतः शाखास्सर्वा हि देवताः" इति तीर्थोक्तेः। नृपात्मजायास्तव सालम्बनयोग एवाधिकारो निरालबंनस्य स्त्रीबुद्ध्यवस्थितेरसंभवात् "स्त्रीत्वान्मातुस्तिरोदधे" इति प्रह्लादोक्तेः "योषाहं मंदधीर्हरे" इति देवहूत्युक्तेश्चेति संबुद्ध्यभिप्रायः। विधिना प्रकारेण तत्प्रकारकं लक्षणं सतो ब्रह्मणः पंथा प्राप्तिमार्गस्तम् "ॐ तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः" इति श्रीगीतोक्तेः ॥ १ ॥ ❀ ❀ शक्त्या यथाशक्ति विधर्माद्धर्मबाधरूपात् "धर्मबाधो विधर्मः स्यात्" इति सप्तमे वक्ष्यमाणत्वात्। धर्मबुद्ध्या क्रियमाणेन येन धर्मस्य बाधो नाशो भवेत्स विधर्मो यथा चैत्यवंदनादिः। चात्परधर्मादयोपि ग्राह्यास्ते च "विधर्मः परधर्मश्च आभास उपमा छलः। अधर्मशाखाः पञ्चेमा धर्मज्ञोऽधर्मवत्त्यजेत्" इति। "धर्मबाधो विधर्मः स्यात्परधर्मोन्यनोदितः। यः स्वेच्छया कृतः पुंभिराभासो ह्याश्रमात्पृथक् ॥ उपधर्मस्तु पाखण्डो दम्भो वा शब्दभिच्छलः।" इत्येवं सप्तमे वक्ष्यते। आत्मविदां सगुणनिर्गुणब्रह्मविदां चरणयोरर्चनम् ॥ २ ॥ ❀ ❀ त्रैवर्गिको धर्मार्थकामप्रधानः ॥ ३ ॥ ❀ ❀ ब्रह्मचर्यं स्त्रीसंगादित्यागः। तपः कृच्छ्रादि।। शौचं बाह्याभ्यंतरम्।

---

१, प्रा० पा०—स्वस्तिकमासी०।

मृज्जलादिसाध्यं बाह्यं, भावशुद्धिरूपमांतरम् । स्वाध्यायः स्वशाखोचितवेदजपः । पुरुषार्चनं वेदाद्युक्तविधिना भगवत्पूजनम् ॥ ४ ॥ आदिना प्रत्याहारादिग्रहः । मौनं यथार्थमितभाषणम् । सतः पद्मासनादिषु श्रेष्ठस्यासनस्याक्लिष्टस्येत्यर्थः ॥ ५ ॥ ❀ ❀ मूलाधारादीनामित्यत्रादिना स्वाधिष्ठानादिग्रहः । एकदेशे मूलाधाराद्यन्यतमे वैकुंठस्य हरेर्लीलायाः सृष्ट्यादिरूपाया अभिध्यानं सततं स्मरणम् ॥ ६ ॥ ❀ ❀ आदिना तीर्थसेवादिग्रहः । असत्पथं विषयमार्गगमनम् एवं दुष्टं युंजीत सन्मार्गे योग इति शेषः ॥ ७ ॥ पूर्वं कुशासनं तदुपरि मृगचर्मादि तदुपरि चैलमौर्णादिवस्त्रमिति प्रतिष्ठाप्य एकदेशन्यायाश्रयापेक्षयाऽनन्यलभ्यार्थमुचितं मत्वाह– यथासुखमिति, वेति । स्मृत्यर्थस्तु– जंघांतर्जंघयोरंतराले ऊरुजानुनोर्मध्यगे पादाग्रे चाधाय शेषं स्पष्टम् ॥ ८ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

ध्यानशोभिनेति विशेषणेन निर्बीजयोगव्यावृत्तिः । वैष्णवं विष्णुध्यानमयं येनैव विधिना प्रकारेण मनः प्रसन्नमानन्दितं सत् सत्पथं भक्तिमार्गं याति तत्प्रकारकं योगस्य लक्षणं स्वरूपं वक्ष्य इत्यन्वयः ॥ १ ॥ ❀ ❀ स्वधर्मेति षट्कम् । तत्र बहुवाक्यैकवाक्यत्वाद्गर्भे द्विबिन्दुमस्तकाङ्का ज्ञेयाः । तत्राऽङ्कमध्ये ( १ ) ( २ ) तत्राऽहिंसा सत्यास्तेयापरिग्रहब्रह्मचर्य्यमौनानि यमाः । तदन्यानि स्वधर्म्माचरणादीनि नियमा इति ज्ञेयं पुरुषार्चनम् । श्रीभगवत्पूजनम् ( ३ ) सतः । कुशाजिनचैलोत्तरत्वात्सुखप्रदस्य ( ४ ) आत्माकारता वृत्तिनिरोधः समाधिः ( ५ ) असत्पथं विषयोन्मुखं यतो दुष्टं बुद्धया विषयाणां हेयत्वनिश्चयेन ( ६ ) ॥ ७ ॥ ❀ ❀ स्वस्तिकमासीन इत्येव स्वामिसम्मतः पाठः, सुष्ठु शोभनमस्ति स्थितिर्यत्र तद्यथा स्यात्तथेति यथासुखमित्येव फलितोऽर्थः । प्रथमपक्षोऽपि सङ्गच्छत एव स्वस्ति समासीन इति सम्बन्धोक्तिसम्मतस्तत्र यथासुखमिति व्याख्यानं सङ्गच्छते स्वस्तिकासनेनेति तु क्लिष्टकल्पनयैवेति ज्ञेयम् । तदवस्थानमेव स्वस्तिकासनं योगिनो विदुः ॥ ८ ॥

### श्रीमद्वीरराघवव्याख्या

एवं "पुरुषं प्रकृतिर्ब्रह्मन्" इति पृष्टस्य बह्वङ्गोपकृतभक्तियोगाराधितभगवत्प्रसादेन ब्रह्मात्मकस्वात्मसाक्षात्कारपूर्वकपरमात्मप्राप्त्या प्रकृतिर्विमुञ्चतीत्युत्तरमुक्तं भक्तियोगाङ्गभूतब्रह्मात्मकप्रत्यगात्मानुचिन्तनरूपज्ञानयोगश्चोक्तः अथ सविस्तरं भक्तियोगं तदङ्गजातं च विवक्षुः प्रतिजानीते कपिलः । योगस्येति । हे नृपात्मजे मनुपुत्रि ! सबीजस्य सकारणस्य ससाधनकस्येत्यर्थः । योगस्य भगवद्भक्तियोगस्य गतिं स्वरूपं प्रकारं च वक्ष्ये सप्रपञ्चं कथयिष्यामि । कोऽसौ योग इत्यत्राह । येन विधिना विधीयत इति विधिः कर्मणि "उपसर्गे घोः किः" विहितेन येन दैवयोगेन मनः प्रसन्नं रागाद्यकलुषितं सत्सत्पथं शुभाश्रयं याति तत्रैव स्थिरं भवतीत्यर्थः ॥ १ ॥ ❀ ❀ तत्र प्रथमं यमनियमासनप्राणायामप्रत्याहारधारणाध्याननिदिध्यासनरूपाष्टाङ्गयोगान् विवक्षुर्यमनियमान्तर्भूतविवेकादिसाधनसप्तकमाह । स्वधर्मेति । शक्त्या स्वशक्त्यनुसारेण स्वधर्माचरणमनभिसंहितफलस्ववर्णाश्रमोचितधर्मानुष्ठानं विधर्माच्च निवर्तनमविहिताप्रतिषिद्धनिषिद्धव्यापारान्निवर्तनं दैवाल्लब्धेनान्नादिना सन्तोषः, आत्मविच्चरणार्चनं भागवतसमाराधनम् ॥ २ ॥ ❀ ❀ ग्राम्यधर्मनिवृत्तिः त्रैवर्गिकधर्मान्निवृत्तिः मोक्षधर्मेषु रतिश्च एवं साधनसप्तकान्तर्भूतक्रियोक्ता । अथ विवेकमाह । शश्वत्सदा विविक्तक्षेमसेवनं जात्याश्रयनिमित्तदुष्टेभ्योऽन्नादिभ्यः विविक्तानां पृथक्कृतानां क्षेमाणां सात्त्विकानामन्नादीनां सेवनं तदपि मितमेध्यादनं मितं यथा भवति तथा मेध्यानां जात्यादिभिरदुष्टानामदनरूपम् । तत्र जातिदुष्टाः कलञ्जगृञ्जनादयः, आश्रमदुष्टं चण्डालपतितादिद्रव्यं, निमित्तदुष्टं केशोच्छिष्टाद्युपहतम् ॥ ३ ॥ ❀ ❀ कल्याणमाह । अहिंसेति । एवं विवेकादिष्वेवास्तेयादयोऽपि यथासम्भवमन्तर्भाव्याः । तत्रास्तेययावदर्थपरिग्रहतपःशौचस्वाध्यायपुरुषार्चनादयः क्रियायामन्तर्भाव्याः, ब्रह्मचर्यं विमोके अन्तर्भाव्यं, मौनमभ्यासशुभाश्रयसंशीलनरूपः । एवमन्येऽप्यनवसादादयो विवक्षिता द्रष्टव्याः । यावदर्थपरिग्रहः यावतार्थेनान्नादिना देहयात्रा भवेत्तावतोऽर्थस्य परिग्रहः, ब्रह्मचर्यं जितेन्द्रियत्वं, तपः कृच्छ्रचान्द्रायणादिः, शौचमाचारः स्वाध्यायः वेदाध्ययनादिः पुरुषार्चनं भगवत्पूजनम् ॥ ४ ॥ ❀ ❀ आसनादीन्यङ्गान्याह त्रिभिः । सदा आसनजयेन स्थैर्ये शनैः प्राणजयः प्राणवायोः स्ववशीकरणमिन्द्रियाणां मनसा विषयान् शब्दादिविषयान् हृदि प्रत्याहारः । मनसा इन्द्रियाणि विषयेभ्यः प्रत्याहृत्य हृद्यवस्थापनमित्यर्थः ॥ ५ ॥ ❀ ❀ तथा स्वधिष्ण्यानां प्राणापानादिस्थानानां हृदयगुदादिस्थानानां मध्ये एकस्मिन्मनसा सह प्राणानां धारणं वैकुण्ठस्य भगवतो लीलानां जगत्सृष्ट्यादिव्यापाररूपाणां लीलानामभिध्यानं तथा आत्मनो मनसः समाधानमेकाग्रीकरणम् ॥ ६ ॥ ❀ ❀ एतैरुक्तैः स्वधर्माचरणादिभिरन्यैश्च व्रतदानादिभिः पथिभिरुपायैरसत्पथमिन्द्रियार्थे प्रवणमत एव दुष्टं मनो बुद्ध्या शनकैः युञ्जीत शुभाश्रयप्रवणं कुर्यात् । कथम्भूतो युञ्जीत जितप्राणः अतन्द्रितः तन्द्रारहितः ॥ ७ ॥ ❀ ❀ आसनादीनि प्रपञ्चयति । शुचाविति । विजितासनः चिरमुपविशन्नपि क्लमरहितः शुचौ देशे आसनं चैलाजिनकुशोत्तरमास्तरणं प्रतिष्ठाप्य तस्मिन्नासने स्वस्तिके स्वस्तिकासने ऋजुकायः अकुटिलदेहः आसीनः समभ्यसेत्प्रणवमिति शेषः । "ऊरुजङ्घान्तरा पादौ पादाग्रे जानुमध्यगे । योगिनो यदवस्थानं स्वस्तिकं तद्विदुर्बुधाः ॥" इति स्वस्तिकासनलक्षणम् ॥ ८ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

कपिलो भगवानेवं तावद्विरक्तस्य भगवद्भक्तिसम्पन्नस्य परमात्मोपासनया जनितज्ञानेन स्वरूपाविर्भावलक्षणं कैवल्यं भवतीत्युक्तमिदानीं तस्य ज्ञानस्य साधनभूताष्टाङ्गयोगप्रकारं वक्ष्यामीति प्रतिजानीते योगस्येत्यादिना। बीजं विष्णुस्तेन सहितस्य वैष्णवस्येत्यर्थः। योगस्य लक्षणं वक्ष्येऽस्मिन्नध्याय इत्यन्वयः। "स बीजो वैष्णवो योगो निर्बीजस्त्वन्यदैवतः। बीजं विष्णुर्हि जगतः शाखाद्या अन्यदेवताः।" इति "सदिति ब्रह्म" इति श्रुतेः सतो ब्रह्मणः पन्थानं यातीत्यतश्च योगस्य विष्णुविषयत्वं ज्ञायते॥ १॥ ❀ ❀ योगस्तु ज्ञानसाधनमेव तस्य किं साधनमिति तत्राह। स्वधर्माचरणमित्यारभ्य समाधानं तथात्मन इत्यन्तेन ग्रन्थेन। विधर्माच्च निवर्तनं धर्मवदवभासमानानां च शास्त्रनिषिद्धानां पञ्चविधधर्मादीनां त्यागः सन्तोषोऽलम्बुद्धिः दैवं स्वादृष्टप्रेरको भगवान् तदनुग्रहतः प्राप्तेनात्मविदां ब्रह्मज्ञानिनां श्रीपादार्चनम्॥ २॥ ❀ ❀ ग्राम्यधर्मो विषयसेवा ततो निवृत्तिः प्रवृत्तिधर्मत्यागो वा मोक्षधर्मरतिर्निवृत्तिधर्मसेवा शश्वन्मितस्य सव्यंजनस्याशनस्यार्धमुदकस्य तृतीयं वायोः संचरणार्थं चतुर्थमवशेषयेदित्येवं परिमितस्य मेध्यस्य शास्त्रविहितस्यान्नस्यादनं विविक्तो हरिस्तस्य क्षेत्रसेवनम्॥ ३॥ ❀ ❀ अहिंसा शास्त्रनिषिद्धहिंसावर्जनं सत्यं मिथ्यावादवर्जनं भूतहितकथनं वा अस्तेयं स्वाम्यननुज्ञातस्य तृणाग्रस्याप्यग्रहणं यावता शरीरावस्थितिर्भवति तावत्परिमाणोऽर्थो यावदर्थस्तस्य परिग्रहः स्वीकारो यावदर्थपरिग्रहः। अष्टाङ्गं ब्रह्मचर्यम्—

स्मरणं कीर्तनं केलिः प्रेक्षणं गुह्यभाषणम्। सङ्कल्पोऽध्यवसायश्च क्रिया निर्वृतिरेव च॥
एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः। विपरीतं ब्रह्मचर्यमेतदेवाष्टलक्षणम्॥

तप उपवासादि तत्त्वपर्यालोचनं वा। शौचं बाह्याभ्यन्तरशुद्धिः स्वाध्यायो ब्रह्मयज्ञः पुरुषस्य श्रीनारायणस्य वैदिकतान्त्रिकार्चनम्॥ ४॥ ❀ ❀ सदा पद्माद्यासनजयः वैष्णवसिद्धान्तादचलनं स्थैर्यं विपद्यप्यात्मावष्टम्भनं धैर्यं वा प्राणायामैः प्राणानां जयः श्रोत्रादीन्द्रियाणां शब्दादिविषयेभ्यो मनसा हृदि स्थितं हरिं प्रत्याहरणं नानेन्द्रियस्थापनं प्रत्याहारः॥ ५॥ ❀ ❀ स्वस्य विष्णोर्धिष्ण्यानां पदादिस्थानानामेकदेशे एकैकावयवे मनसा प्राणस्य वृत्तेर्धारणं वैकुण्ठस्य हरेर्लीलायाः सृष्ट्यादिरूपायाः अभिध्यानं निरन्तरस्मरणं तथात्मनो मनसः समाधानमप्रयत्नेन हरौ स्थितिः। तदुक्तम् "समाधिरप्रयत्नेन मनसः संस्थितिर्भवेत्" इति॥ ६॥ ❀ स्वधर्माचरणाद्युक्तस्य प्रयोगप्रकारमाह। एतैरिति। असद्विषयसङ्गेन दुष्टमत एवासत्पथं दुर्मार्गवर्ति मनः॥ ७॥ ❀ ❀ योगे इतिकर्तव्यतामाह। शुचावित्यादिना। योगमभ्यसेदित्यन्वयः॥ ८॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

येनैव विधिना प्रकारेण तत्प्रकारकं लक्षणमित्यन्वयः॥ १—७॥ ❀ ❀ स्वस्तिकमासीन इत्यत्र तु यथासुखमिति न सङ्गच्छते स्वस्तिसमासीन इति सम्बन्धोक्तिसम्मतः अत्र तु स्वस्तिकासनेनेत्यपि सङ्गच्छते समानार्थत्वात्। स्वस्तिकशब्दस्य तत्रैव निरुक्तिरिति भावः। सु शोभनमस्ति स्थितिर्यत्रेति व्याख्याने तु यथासुखमिति व्याख्यानेऽपि स्वस्तिकमिति घटते॥ ८—११॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी।

अष्टस्वङ्गेषु योगस्य ध्यानं विस्तार्य्य वर्ण्यते। अष्टाविंशे यतो योगी मुक्तिं विन्देदयत्नतः॥
स्वभक्तिमुपदिश्यैवं साध्यमुक्त्वा तदन्वितम्। अष्टाङ्गयोगं तन्मिश्रमारेभे वक्तुमीश्वरः॥

सबीजस्य सावलम्बनस्य॥ १॥ २॥ ❀ ❀ तत्र यमनियमानाह त्रिभिरक्षरद्वयाधिकैः। तत्राहिंसासत्यास्तेयापरिग्रहब्रह्मचर्य्यमौनानि यमाः। तदन्यानि स्वधर्माचरणादीनि नियमाः। ग्राम्यस्त्रैवर्गिको धर्म्मः। मितमेध्यादनमिति तत्र मितं नाम "द्वौ भागौ पूरयेदन्नैस्तोयेनैकं प्रपूरयेत्। मारुतस्य प्रचारार्थं चतुर्थमवशेषयेत्॥" इति स्मृतिप्रसिद्धम्। विविक्तं निर्ज्जनं क्षेमं निर्भयञ्च यत्स्थानं तत्र स्थितिः॥ ३॥ ❀ ❀ यावता अर्थः प्रयोजनं तावन्मात्रस्य न त्वधिकस्य वस्तुनः परिग्रहः॥ ४॥ ❀ ❀ आसनादीन्यङ्गान्याह त्रिभिः। सत आसनस्य जयेन स्थैर्यम्॥ ५॥ ❀ ❀ स्वधिष्ण्यानां प्राणस्थानानां मूलाधारादीनां मध्ये एकस्मिन् देशे मनसा सह प्राणस्य धारणं धारणा लीलाभिध्यानं लीलासहितपादाद्यवयवध्यानम्। आत्मनो मनसः समाधानं समाधिरात्माकारता॥ ६॥ ❀ ❀ अन्यैश्च दानव्रतादिभिः पथिभिरुपायैः युञ्जीत ध्याने योजयेत्॥ ७॥ ❀ ❀ आसनादीनि विवृणोति। आसनं कुशाजिनचैलोत्तरं तस्मिन् स्वस्तिकं स्वस्त्येव यथा स्यादेवमासीनः। यद्वा स्वस्तिकासनेनोपविष्ट इत्यर्थः। यथा च "ऊरू जङ्घान्तराधाय पादाग्रे जानुमध्यगे। योगिनो यदवस्थानं स्वस्तिकं तद्विदुर्बुधाः॥" समभ्यसेत् प्राणमिति शेषः॥ ८॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

अष्टाविंशे भगवद्ध्यानयोगमाह। योगस्येति। योगस्य ध्यानयोगस्य सबीजस्य बीजं ध्येयं वस्तु तत्सहितस्य। यद्वा बीजं साधनं यमनियमादि तत्सहितस्येत्यर्थः। येनैव विधिना विधीयते इति विधिः क्रियमाणेन प्रसन्नं सत् मनः सत्पथं ध्येयं भगवन्तं

याति ॥ १ ॥ ❀ ❀ तत्र स्वधर्मेत्यादिना मौनमित्यन्तेन यमनियमानाह । शक्त्या यथाशक्ति स्वधर्माचरणं विधर्मान्निषिद्धान् आत्मविदां भगवत्तत्त्वज्ञानां चरणार्च्चनं ग्राम्यधर्मात् त्रैवर्गिकधर्मान् निवृत्तिः मोक्षधर्मे निष्कामकर्मज्ञानवैराग्यहरिकथाश्रवणादिरूपे धर्मे रतिः मितं स्वल्पं मेध्यं शुद्धं यददनं भोजनं विविक्ते एकान्ते क्षेमे अभये स्थितिः ॥२॥३॥४॥ ❀ ❀ मौनमयुक्तानुच्चारणम् । आसनादीन्यङ्गान्याह । सदासनजय इत्यादिना । सतः स्वस्तिकादेर्विहितस्य यथारुचिकृतस्य वा आसनस्य जयेन स्थैर्यं प्राणायामेन प्राणजयः विषयात् जातावेकवचनं विषयेभ्यः इन्द्रियाणां हृदि मनसा प्रत्याहारः ॥ ५ ॥ ❀ ❀ तथा यानि स्वधिष्ण्यानि प्राणस्थानानि तेषां मध्ये एकदेशे अर्थात् हृदि एव मनसा प्राणधारणमात्मनो मनसः ॥ ६ ॥ ❀ ❀ अन्यैर्व्रतमहत्सेवादिभिः युञ्जीत ध्येयप्रवणं कुर्यात् ॥ ७ ॥ ❀ ❀ उक्तान्यासनादीनि विशदयति । शुचाविति यावत्समाप्ति । आसनं चैलाजिनकुशोत्तरं प्रतिष्ठाप्य तस्मिन् स्वस्तिकमासनमुद्रां विधायेति शेषः । यद्वा स्वस्तिकं यथा सुखमासीनः तथा च श्रुतिः "सुखासनस्थः शुचिः समग्रीवशिरःशरीर" इति विजितासनः चिरमुपविशन्नप्यक्लमः समभ्यसेत् प्रणवमिति शेषः ॥ ८ ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

चित्तञ्चेद्भगवत्स्पृष्टं भक्तिज्ञानविरक्तिभिः । तदा शुद्धं स्वसम्बन्धिपुरुषं गमयेत्फलम् ॥ १ ॥
योगेनाऽपि भवेच्छुद्धमिति योगो निरूप्यते । अष्टाविंशे ध्यानयुक्तः सर्वसाधनसंयुतः ॥ २ ॥
यत्रैव भगवद्देशस्तत्प्रमाणादिकं भवेत् । स्वतः शुद्धो हरेर्नाऽन्यः स्वाध्याय इव सर्वथा ॥ ३ ॥

भक्तिसाङ्ख्यज्ञानानि निरूप्य योगं फलपर्यन्तं निरूपयति—योगस्येति । योगा बहुविधाः । सध्यानोऽपि द्विविधः—सबीजो निर्बीजश्चेति । सबीजोऽप्यनेकविधः नाना[1]विधार्थध्यानविषयः । तत्र भगवद्ध्यान एव चित्तं सन्मार्गे विशति, स्वदेव[2]-तायामेव प्रसादात् । तदाह—सबीजस्य योगस्य लक्षणं वक्ष्य इति । निर्बीजो योगो गीतायामुक्तः, 'यतो यतो निःसरति' इत्यादिना । सबीजस्तु ध्येयसहितः । सुगमश्चाऽयम् , यतस्त्वं नृपात्मजा । येनैव विधिना मनः शीघ्रमेव प्रसन्नं सत् सत्पथं याति । प्रसादस्तस्य स्वदेवताभिनिवेशात् । तदैव सन्मार्गे गच्छति । सत आत्मनो भगवतो वा मार्गः; वेदोक्तो वा ॥ १ ॥ ❀ ❀ तत्र पञ्चविंशतिसाधनान्याह । यमनियमरूपाणि कृशराणि कृत्वा । सर्वतत्त्वानामतिक्रमार्थे तावन्ति साधनानि । एकेन च साधनेन एकस्य तत्त्वस्याऽतिक्रमो न भवतीति साधनान्तराण्यप्यतिदिश्यन्ते—स्वधर्माचरणमिति । स्वधर्माणां देहधर्माणां वर्णाश्रमाधिकार-सिद्धानामाचरणं यथाशक्त्या कर्तव्यम् , न तु शक्तावपि सङ्कोचः । शास्त्रमपि 'यच्छक्नुयात् तत्कुर्यात्' इति । विधर्माच्च निवर्तनं द्वितीयं साधनम् । धर्मबाधो विधर्मः, यस्मिन् क्रियमाणे स्वस्य धर्मस्य बाधो भवति । स यथाधिकारमवसेयः । यावद्देहोऽयम् , तावद्वर्णाश्रमधर्मा एव स्वधर्माः । भगवद्धर्मादयोऽपि विधर्माः, परधर्मा वा । यदा पुनरात्मानं जीवं मन्यते, सङ्घातव्यतिरिक्तम् , तदा दास्यं स्वधर्मः, अन्ये वर्णाश्रमादयोऽपि परधर्माः । यदा पुनर्भगवद्भावं प्राप्ताः, तदाऽलौकिकधर्मा एव ऋषभादिष्विव गोचर्यादयः स्वधर्माः, अन्ये परधर्मा इति । चकारात् परधर्मादयश्चत्वारोऽपि संगृहीताः । अयं च प्राप्तज्ञान इति स्वशक्त्या भगवत्प्रेरणया, स्वज्ञानेन[3] वा, ज्ञानबाधाभावे शरीरशक्त्या वा, उभयात्मकस्वधर्मानुष्ठानम् , नत्वेकतरविरोधि । तृतीयं साधनम्—दैवाल्लब्धेन सन्तोषः । दैवादिति वचनात् आवश्यकप्राप्तिः सूचिता । अलब्धे वा महाहिरिवाऽप्रयत्नोऽपि सन्तुष्येदिति ज्ञातव्यम् । अन्यैश्चेत्यतिदेशात्[4] । आत्मविदां चरणार्चनं चरणपूजा, दास्यमिति यावत् । आत्मवित्त्वं च तेषां ज्ञातव्यमक्षोभा[5]दिना ॥ २ ॥ ❀ ❀ ग्राम्येति । ग्राम्यधर्मा लौकिकाः, इन्द्रियग्रामवन्तो वा ग्राम्याः । चकारात् स्वधर्मा अपि ग्राम्यधर्माश्चेत् त्यक्तव्या इति । मोक्षधर्मा अहिंसादयः, तेषु रतिः । तथेत्येतदपि ग्राम्यधर्मनिवृत्तिवत्साधनम् । परधर्मत्वेनाऽधर्मशङ्कायां तथोक्तम् । मितं परिमितं मेध्यं पवित्रञ्च, अशनं भोजनं कर्तव्यम् । शश्वदिति सर्वदा । मितमेध्यस्या (?) दनमिति पाठे चर्व्यमेव फलादिकं भक्षणीयमित्युक्तं भवति । विविक्तस्यैकान्तस्य, क्षेमस्य भयरहितस्य, सेवनम् । तादृशे देशे तद्देशं शुद्धं कुर्वन् सेवमान एव तिष्ठेदित्यर्थः ॥ ३ ॥ अहिंसेति । अहिंसा सर्वप्राणिषु कायवाङ्मनोभिर्द्रोहाकरणम् । अयाचितेऽप्यल्पद्रोह इति केचित् ; अतो न परिज्ञाते स्थातव्यमिति । सत्यं यथार्थभाषणम् । अस्तेयं परस्वग्रहणाभावः । यावानर्थो योगं साधयति, तावत एव परिग्रहः । ब्रह्मचर्यमष्टाङ्गम् । तपः कृच्छ्रादि । शौचमन्तर्बहिःशुद्धिहेतूनां करणम् । स्वाध्यायो वेदाध्ययनम् । पुरुषार्चनं भगवत्पूजा ॥ ४ ॥ ❀ ❀ मौनं जनैः सह सम्भाषणा-भावः, वृथालापपरिवर्जनं च सदाऽऽस[6]नस्याऽभितो जयः कर्तव्यः; यथा कदाचिदपि चित्तं परवशं न भवति । स्थैर्यमेकनिष्ठा, चाञ्चल्याभावः । शनैः प्राणजयः प्राणायामादिना । इन्द्रियाणां च विषयेभ्यो व्यावर्तनम्, बलात् प्रत्याहारः । जयश्च चकारात् । विषयान्मोहकात् । मनसा सहेन्द्रियाणाम् । मनो वा करणं प्रत्याहारे । आहृतानां हृदये स्थापनम् । एतदेकम् ॥ ५ ॥ ❀ ❀ धिष्ण्यानां स्थानानां मूलाधारादीनाम् , एकदेशेन सर्वधिष्ण्येभ्यः प्राणानाकृष्य क्वचित् हृदयादिस्थाने, एकदेशेन मनसा प्राणानां

---

१. पदार्थ । २. स्वदेवताया एव. घ. । ३. स्वाज्ञानेन वा ग. ।४. अनिर्देशात् क. घ. ङ. । ५. अलोभादिना क. घ. ।
६. सदाचित्तस्य ।

धारणम्। इन्द्रियजयादिष्वपि मनसो योजनम्, प्राणायामादिष्वपि। एकदेशे वा; सप्तम्यर्थे तृतीया। वैकुण्ठस्य भगवतो लीलानामभिध्यानम्। सर्वावस्थासु वैयग्र्याभावोऽन्तःकरणस्य समाधानम्। एतानि स्वसिद्धान्ते प्रोक्तानि साधनानि, अन्यानि च मतान्तरसिद्धानि ॥ ६ ॥ ❀ ❀ एतैरिति। सर्वैरेव पथिभिर्मार्गैः, असत्पथे लौकिके मार्गे, दुष्टं[१] मनो बुद्ध्या युञ्जीत। असन्मार्गं त्याजयित्वा आत्मनि विवेकवत्या बुद्ध्या योजयेत्। नाऽत्र बलं विधेयम्, अन्यथा मनः कलुषितं स्यात्। अत आह—शनकैरिति। जिताश्च प्राणा इन्द्रियाणि च सदा मृग्यन्ते ॥ ७ ॥ ❀ ❀ एवं खण्डशः कृतैः साधनैर्बहुजन्मसिद्धैर्यदा मन इन्द्रियाणि प्राणा देहश्च सिद्धानि भवन्ति, तदा फलपर्यवसायिनि योगे योजयेत्। तदाह—शुचौ देश इति। बहुधा आवर्तिताः पूर्वोक्ता एव यमनियमा जाताः। आसनमुच्यते—शुचौ देश इति। गङ्गातीरादिदेशे केशकीटास्थ्यादिवर्जिते, आसनं चैलाजिन-कुशरूपं प्रतिष्ठाप्य, अभ्यासेन विजितासनो भवेत्। सर्वाण्येवाऽऽसनानि तत्र शिक्षेत्। यदा भवेद्विजितासनः, तदा तस्मिन्नासने स्वयस्तिकासनमासीनः, ऋजुकायो भूत्वा, सम्यक् योगमभ्यसेत्। यावन्ति जीवजातानि, तावन्त्येवाऽऽसनानि। तत्र स्वस्तिकं पद्मासनं च श्रेष्ठम्। तत्र स्वस्तिकासने स्थित्वा प्राणस्यार्जवेन गत्यर्थमृजुकायो भूत्वा प्राणायाममभ्यसेत् ॥ ८ ॥

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

अथाऽष्टाविंशाध्यायविवरणं चिकीर्षवः शुकवाक्ये मैत्रेयवाक्ये चाऽवसरस्य पूर्वमुक्तत्वात् कापिलेयस्यैव सङ्गतिं वदन्तो द्वाभ्यामध्यायार्थमाहुः—चित्तमित्यादि। तलवकारश्रुतौ 'मनो हि द्विविधं प्रोक्तं शुद्धं वाऽशुद्धमेव च। अशुद्धं कामसङ्कल्पं शुद्धं कामविवर्जितम्' इति शुद्धस्य मनसो निष्कामत्वं लक्षणमुक्तम्। चित्तं निश्चयात्मकम्। तथा च, भक्त्यादिभिस्त्रिभिर्यदि भगवान् प्रसीदति, तदा तत्स्पृशतीति भगवत्स्पृष्टं कामरहितं सत् शुद्धं भवति। तत् शुद्धं चित्तं कर्तृ स्वसम्बन्धिपुरुषं फलं गमयेत्। एतदर्थं पूर्वाध्यायत्रये भक्त्यादीनि साधनान्युक्तानि। यथा तैश्चित्तं शुद्धं भवति, तथा योगेनाऽपि शुद्धं भवेदिति हेतोः साङ्गो योगोऽष्टाविंशे निरूप्यते। ननु त्रयाणां कार्यं कथमेकेनेत्यत आहुः—ध्यानयुक्त इति। ध्यानेन भगवत्सम्बन्धः सोऽपि तथा शुद्धं करोतीत्यर्थः। तेनैककार्यत्वं चतुर्णामध्यायानां सङ्गतिरित्यर्थः। ननु भवत्वेवम्, तथापि शास्त्रे मैत्रेयोक्तौ च योऽवसरः स कथमित्याकांक्षायामाहुः—यत्रैवेत्यादि। वेश आवेशः। यत्रैव वस्तुनि भगवदावेशः, तदेव प्रमाणरूपम्, प्रमेयरूपम्, प्रकृतसाधनरूपम्, प्रकृष्टफलरूपं च भवेत्। तत्र हेतुः—स्वत इत्यादि। 'अयमात्मा अपहतपाप्मा' इति छन्दोगश्रुतेः परमात्मनो हरेरन्यः स्वतः शुद्धो न, इति हेतोः स्वाध्यायो वेदः सर्वथा सर्वैः प्रमाणादिप्रकारैस्तत्सम्बन्धात् शुद्धस्तथा। यथा वेदो भगवत्सम्बन्धात् शुद्धः, तथा योगोऽपि भगवदाविष्टत्वाद्भगवद्योगसृष्टौ प्रमाणतया सर्वप्रकाशकत्वेन बुद्धिरूप इति शास्त्रीयाऽवसरसिद्धिः। स एव योगोऽत्र इन्द्रियसंयमात्मकत्वात् स्वरूपव्यवस्थापकत्वाच्च मोक्षरूप इति मैत्रेयोक्तावप्यवसर इत्यर्थः।

योगस्येत्यत्र। बहुविधा इति सिद्ध्युपसिद्ध्यादिसाधकत्वेन फलतः, बीजादिभेदेन साधनतश्चानेकविधाः ॥ १ ॥ ❀ ❀ स्वधर्मेत्यत्र। अप्यतिदिश्यन्त इति। एकतत्त्वातिक्रमेऽप्यतिदिश्यन्ते। स इति। विधर्मः। अधिकारविभागं स्फुटीकुर्वन्ति—यावदित्यादि। देहोऽयमिति। विपर्ययाभ्यासदार्ढ्येनात्मतया भातः। चत्वार इति परधर्माभासधर्मोपधर्मच्छलधर्माः सप्तमस्कन्धोक्ताः। शक्त्येत्यस्य तात्पर्यमाहुः—अयं चेत्यादि। उभयात्मकस्वधर्मानुष्ठानमिति। वर्णाश्रमधर्मात्मको ज्ञानात्मकश्च यः स्वधर्मस्तदनुष्ठानम्। कुर्यादिति शेषः। तथा चैवं ज्ञापनाय शक्त्येति पदमुक्तमित्यर्थः। अन्यैश्चेत्यतिदेशादिति। 'एतैरन्यैश्च पथिभिः' इत्यनेन वक्ष्यमाणादतिदेशात् ॥ २ ॥ ❀ ❀ अहिंसेत्यत्र। अयाचितेऽप्यल्पद्रोह इति। अयाचितत्वेन प्रसिद्धावन्यं विहाय लोकैरस्मै दाने क्रियमाणे तेषां वृत्तिभङ्गप्रयोजकतयाऽल्पद्रोह इत्यर्थः। तथा सत्याहिंसापदं यावदर्थावबोधकं तदाहुः—अत इत्यादि ॥ ४ ॥

### श्रीगिरिधरकृता बालप्रबोधिनी

देवहूत्या विपृष्टेषु भक्तिसाङ्ख्यनिरूपिते। अष्टाङ्गो वैष्णवो योगश्चाष्टाविंशे निरूप्यते ॥ १ ॥

अथ योगलक्षणनिरूपणं प्रतिजानीते—योगस्येति राजपुत्रीत्वात्तव योग्योऽयमेव योग इति सूचयन् सम्बोधयति—नृपात्मजे इति। योगो हि द्विविधः सबीजो निर्बीजश्च। तत्र निर्बीजो निरालम्बनो यो गीतायामुक्तः 'यतो यतो निश्चरति मनः' इत्यादि। सबीजस्तु सालम्बनस्तस्य योगस्य लक्षणं वक्ष्ये येन विधिना विधीयते इति विधिस्तेन विहितेन योगेन मनः प्रसन्नं त्यक्तकामक्रोधादिकालुष्यं विशुद्धं सत् सत्पथं सतो भगवतो मार्गं याति, तत्रैव स्थिरं भवतीत्यर्थः ॥ १ ॥ ❀ ❀ एवं प्रतिज्ञाय योगाङ्गेषु प्रथमं यमनियमानाह—स्वधर्मेति त्रिभिरक्षरद्वयाधिकैः। शक्त्या स्वशक्त्यनुसारेण स्वधर्माचरणं अनभिसंहितफलस्ववर्णाश्रमोचितधर्मानुष्ठानम्। विधर्मात् धर्मबाधकान्निवर्त्तनम्। चकारात् अधर्मस्य 'विधर्मः परधर्मश्च ह्याभास उपमा

---

१. इति क. घ. ङ.। २. दुष्टम् ग. च.।

च्छलः' इति सप्तमे उक्तानामधर्मशाखानां च परिग्रहः । दैवात् प्रारब्धाल्लब्धेनान्नादिना सन्तोषः । आत्मविदां चरणार्चनं सेवापूर्वकाराधनम् ॥ २ ॥ ❀ ❀ ग्राम्यधर्मः त्रैवर्गिकधर्मस्तस्मान्निवृत्तिः । मोक्षधर्माः श्रवणकीर्त्तनादयस्तेषु रतिः मितं च तन्मेध्यं शुद्धं च तस्यादनम्, तत्र मितं नाम 'द्वौ भागौ पूरयेदन्नैस्तोयेनैकं प्रपूरयेत् । मारुतस्य प्रचारार्थं चतुर्थमवशेषयेत्' इति स्मृतिप्रसिद्धम्, तत्राधिकादने आलस्यादि स्यात् । अशुद्धादने च चित्तं दुष्येदिति द्वयमुक्तम् । शश्वन्नित्यमिति यथासम्भवं सर्वेषामेव विशेषणम् । विविक्तमेकान्तं तत्रापि क्षेमं निर्बाधं तस्य स्थानस्य सेवनम् ॥ ३ ॥ ❀ ❀ अहिंसा सर्वप्राणिषु कायवाङ्मनोभिर्द्रोहवर्जनम् । सत्यं यथार्थभाषणम् । अस्तेयं परस्वानाहरणम् । यावताऽर्थेनान्नादिना देहनिर्वाहस्तावतोऽर्थस्य परिग्रहः । ब्रह्मचर्यं जितेन्द्रियत्वाद्यष्टाङ्गम् । तपः कृच्छ्रचान्द्रायणादिः, शौचं विशुद्धिः, सा च बाह्याभ्यन्तरभेदेन द्विधा, तत्र स्नानादिना बहिर्देहविशुद्धिः, भगवन्नामग्रहणस्मरणादिना अन्तर्मनसो विशुद्धिः । स्वाध्यायो वेदपाठादिः पुरुषोत्तमस्य भगवतोऽर्चनं पूजनम् ॥ ४ ॥ ❀ ❀ मौनं वृथालापवर्जनम् । आसनादीन्यङ्गान्याह–सतः समीचीनस्य स्वस्तिकादेरासनस्य जयेन शरीरस्य स्थैर्यम् । शनैः प्राणजयः प्राणायामेन प्राणवायोर्वशीकरणम् । इन्द्रियाणां विषयप्रवणानां मनसा विषयात् हृदि प्रत्याहारः मनसा इन्द्रियाणि विषयेभ्यः प्रत्याहृत्य हृद्यवस्थापनमित्यर्थः ॥ ५ ॥ ❀ ❀ स्वधिष्ण्यानां प्राणस्थानानां मूलाधारादीनां मध्ये एकस्मिन्देशे मनसा सह प्राणस्य धारणम् । वैकुण्ठस्य भगवतो जगत्सृष्ट्यादिलीलानामभिध्यानम् । तथा आत्मनः मनसः समाधानं भगवत्येकाग्रीकरणम् ॥ ६ ॥ ❀ ❀ एवं ध्यानपर्यन्तं योगमुक्त्वा पुनस्तमेव स्पष्टयति—एतैरिति । एतैः पूर्वोक्तैः स्वधर्माचरणादिभिरन्यैश्च व्रतदानादिभिः पथिभिरुपायैः असत्पथं असतामिन्द्रियाणां पथि विषये वर्त्तमानं अत एव दुष्टं मनः स्वयं जिताः प्राणाः वायव इन्द्रियाणि च येन तथाभूतोऽपि अतन्द्रितः अनलसः सन् शनकैः कालविलम्बेऽप्यनुद्विजन् बुद्ध्या युञ्जीत भगवत्प्रवणं कुर्यात् ॥ ७ ॥ ❀ ❀ आसनं स्पष्टयति—शुचाविति । विजितासनः अभ्यासबलेन चिरमुपविशन्नपि क्लमरहितः शुचौ गङ्गातीरादिपवित्रे देशे आसनं चैलाजिनकुशोत्तरमास्तरणं प्रतिष्ठाप्य तस्मिन् स्वस्ति स्वस्तिकासनेन ऋजुकायः अकुटिलदेह आसीनः समभ्यसेत् प्राणजयाभ्यासं कुर्यात् । ऊरू जङ्घान्तराधाय पादाग्रे जानुमध्यगे । योगिनो यदवस्थानं स्वस्तिकं तद्विदुर्बुधाः' इति हि स्वस्तिकासनलक्षणम् ॥ ८ ॥

## हिन्दी अनुवाद

### अष्टांग योगकी विधि

कपिल भगवान् कहते हैं—माताजी ! अब मैं तुम्हें सबीज ( ध्येयस्वरूपके आलम्बनसे युक्त ) योगका लक्षण बताता हूँ, जिसके द्वारा चित्त शुद्ध एवं प्रसन्न होकर परमात्माके मार्गमें प्रवृत्त हो जाता है ॥ १ ॥ ❀ ❀ यथाशक्ति शास्त्रविहित स्वधर्मका पालन करना तथा शास्त्रविरुद्ध आचरणका परित्याग करना, प्रारब्धके अनुसार जो कुछ मिल जाय उसीमें सन्तुष्ट रहना; आत्मज्ञानियोंके चरणोंकी पूजा करना ॥ २ ॥ ❀ ❀ विषयवासनाओंको बढ़ानेवाले कर्मों से दूर रहना, संसारबन्धनसे छुड़ानेवाले धर्मों में प्रेम करना, पवित्र और परिमित भोजन करना, निरन्तर एकान्त और निर्भय स्थानमें रहना, ॥ ३ ॥ ❀ ❀ मन, वाणी और शरीरसे किसी जीवको न सताना, सत्य बोलना, चोरी न करना, आवश्यकतासे अधिक वस्तुओं का संग्रह न करना, ब्रह्मचर्यका पालन करना, तपस्या करना ( धर्मपालनके लिए कष्ट सहना ), बाहर-भीतरसे पवित्र रहना, शास्त्रोंका अध्ययन करना, भगवान्की पूजा करना, ॥ ४ ॥ ❀ ❀ वाणीका संयम करना, उत्तम आसनोंका अभ्यास करके स्थिरतापूर्वक बैठना, धीरे-धीरे प्राणायामके द्वारा श्वासको जीतना, इन्द्रियोंको मनके द्वारा विषयोंसे हटाकर अपने हृदयमें ले जाना ॥ ५ ॥ ❀ ❀ मूलाधार आदि किसी एक केन्द्रमें मनके सहित प्राणोंको स्थिर करना, निरन्तर भगवान्की लीलाओंका चिन्तन और चित्तको समाहित करना ॥ ६ ॥ ❀ ❀ इनसे तथा व्रत-दानादि दूसरे साधनोंसे भी सावधानीके साथ प्राणोंको जीतकर बुद्धिके द्वारा अपने कुमार्गगामी दुष्ट चित्तको धीरे-धीरे एकाग्र करे, परमात्माके ध्यानमें लगावे ॥ ७ ॥ ❀ ❀ पहले आसनको जीते, फिर प्राणायामके अभ्यासके लिये पवित्र देशमें कुश-मृगचर्मादिसे युक्त आसन बिछावे । उसपर शरीरको सीधा और स्थिर रखते हुए सुखपूर्वक बैठकर अभ्यास करे ॥ ८ ॥

**प्राणस्य शोधयेन्मार्गं पूरकुम्भकरेचकैः । प्रतिकूलेन वा चित्तं यथा स्थिरमचञ्चलम् ॥ ९ ॥**
**मनोऽचिरात्स्याद्विरजं जितश्वासस्य योगिनः । वाय्वग्निभ्यां यथा लोहं ध्मातं त्यजति वै मलम् ॥ १० ॥**
**प्राणायामैर्दहेद्दोषान्धारणाभिश्च किल्बिषान् । प्रत्याहारेण संसर्गान्ध्यानेनानीश्वरान् गुणान् ॥ ११ ॥**
**यदा मनः स्वं विरजं योगेन सुसमाहितम् । काष्ठां भगवतो ध्यायेत्स्वनासाग्रावलोकनः ॥ १२ ॥**

---

१. प्रा० पा०—षम् ।

प्रसन्नवदनाम्भोजं पद्मगर्भारुणेक्षणम्। नीलोत्पलदलश्यामं शङ्खचक्रगदाधरम् ॥ १३ ॥
लसत्पङ्कजकिञ्जल्कपीतकौशेयवाससम्। श्रीवत्सवक्षसं भ्राजत्कौस्तुभामुक्तकन्धरम् ॥ १४ ॥
मत्तद्विरेफकलया परीतं वनमालया। परार्ध्यहारवलयकिरीटाङ्गदनूपुरम् ॥ १५ ॥
काञ्चीगुणोल्लसच्छ्रोणिं हृदयाम्भोजविष्टरम्। दर्शनीयतमं शान्तं मनोनयनवर्धनम् ॥ १६ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

बाह्यवायोरंतः प्रवेशनं पूरकः, प्रवेशितस्य धारणं कुंभकः, धृतस्य बहिर्निःसारणं रेचकः। प्रतिकूलेन वा रेचककुंभकपूरकैः। यद्वा इडयापूर्य पिंगलया रेचनं पिंगलयापूर्य इडया रेचनमित्येवं प्रतिकूलेन। वाशब्दश्चार्थे। स्थिरं सत्पुनरपि चंचलं यथा न भवति तथा शोधयेत् ॥ ९ ॥ ❀ ❀ ध्मातं संतप्तमित्यर्थः। लोहं सुवर्णं यथा मलं त्यजति तथा मनो विरजं स्यात्। ततश्चंचलं न स्यादिति भावः ॥ १० ॥ ❀ ❀ प्राणायामादीनां समाधौ द्वारकार्याण्याह। प्राणायामैरिति दोषान्वातश्लेष्मादीन् संसर्गान्विषयसंसर्गान्। अनीश्वरान् रागादीन्। वायुना सह मनसः स्थिरीकरणं धारणा। स्थिरस्य वृत्तिसंततिर्ध्यानम्। वृत्तिनिरोधः समाधिरिति भेदः ॥ ११ ॥ ❀ ❀ सुसमाहितं स्थिरं जातम्। काष्ठां कलां मूर्तिमित्यर्थः। स्वनासाग्रेऽवलोकनं यस्य। एतच्च लयविक्षेपयोः परिहाराय ॥ १२ ॥ ❀ ❀ ध्येयं हरिमाह सप्तभिः। प्रसन्नं वदनांभोजं यस्य तं ध्यायेदिति षट्केनान्वयः। पद्मगर्भवदरुणे ईक्षणे नेत्रे यस्य नीलोत्पलदलवच्छ्यामम् ॥ १३ ॥ ❀ ❀ लसत्पंकजस्य किंजल्कवत्पीते कौशेये वाससी यस्य श्रीवत्सो लांछनं वक्षसि यस्य भ्राजत्कौस्तुभेनामुक्ता संश्लिष्टा कंधरा यस्य ॥ १४ ॥ ❀ ❀ मत्तद्विरेफाणां कलो मधुरो ध्वनिर्यस्यां तया परीतं व्याप्तम्। परार्ध्यान्यमूल्यानि हारादीनि यस्य ॥ १५ ॥ ❀ ❀ कांचीगुणेनोल्लसंती श्रोणी यस्य। भक्तानां हृदयांभोजमेवविष्टरमासनं यस्य। भक्तानां मनोनयनानि वर्द्धयति हर्षयतीति तथा ॥ १६ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

ग्रन्थांतरसंमत्या प्रकारांतरमाह—यद्वेति। इडया वामनासया पिंगलया दक्षिणनासया। तदुक्तं तत्त्वानुसंधाने "इडया पिब षोडशभिः पवनं चतुरुत्तरषष्टिकमौदरिकम्। त्यज पिंगलया शनकैः शनकैर्दशभिर्दशभिर्दशभिर्युधिकैः" इति। षोडशादि संख्या चात्र मात्राणां प्रणवोच्चारणस्य वा ज्ञेयेति। अत्राकारप्रश्लेषेप्यर्थभेदो नास्तीति ॥ ९ ॥ ❀ ❀ इत्यर्थ इति। धमतेरग्निसंयोगार्थत्वमपीति भावः। लोहं पीतलोहं तच्च हेमलोहस्याष्टविधत्वमेकादशेऽर्चनोपाख्याने व्याख्यास्याम इति। इति भाव इति। रजस एव चालकत्वं सांख्यैरुक्तमित्याशयः ॥ १० ॥ ❀ ❀ द्वारकार्यं प्रवेशनम्। किल्बिषान् जन्मान्तरसंचितपापानि। तत्र धारणादीनां भेदमाह-वायुनेत्यादिना। वृत्तिसंततिः प्रत्ययैकतानता। तथा च पातंजलसूत्राणि। "देशबंधश्चित्तस्य धारणा" (१) "तत्र प्रत्ययैकतानता ध्यानम्" (२) "तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः" (३) ॥ ११ ॥ ❀ ❀ इत्यर्थ इति। "काष्ठोत्कर्षे सीम्नि दिशि" इत्यभिधानादुत्कृष्टं स्वरूपमिति भावः। संदर्भस्तु-काष्ठा दिक् अवधिः परमस्वरूपमिति यावदित्याह ॥ १२ ॥ ❀ ❀ चतुर्थं पद्ममपि ज्ञेयं योग्यत्वात् ॥ १३ ॥ ❀ ❀ श्रीवत्सो रोमावर्त्तो भृगुपादचिह्नं वा तथैव श्रीदशमे व्याख्यास्यमानत्वात्। कं शिरो धरतीति कंधरा ग्रीवा ॥ १४, १५, १६ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

पूर्वार्थे तादृक् प्रातिकूल्ये प्रामाण्यं न सङ्गच्छतेऽतो यद्वेति। इडया वामनासिकया पिङ्गलया दक्षिणया "इडया पूरयेद्वायुं त्यजेद्दक्षिणया पुनः" इति योगशास्त्रोक्तेः ॥ ९ ॥ ❀ ❀ ध्मा-धातोरग्निसंयोगो मुख्यार्थः। तेन च सन्तापो भवत्येवेति लक्ष्यार्थत्वेनेत्यर्थ इत्युक्तम् ॥ १० ॥ ❀ ❀ समाधौ द्वारभूतानि प्राणायामादीनां कार्य्याणि। समाधिरङ्गी प्राणायामादयस्तदङ्गानि सर्वत्र च साधने व्यापारोऽपेक्षितः स एव द्वारं तच्चात्र दोषादिदाहनमेवेत्यर्थः। वृत्तिर्ध्येयाकारेण परिणामस्तस्य सन्ततिर्नैरन्तर्य्यम्। वृत्तिनिरोधः ध्यातृध्येयविभागाभावेन शुद्धब्रह्मरूपता ॥ ११ ॥ ❀ ❀ योगेन प्राणायामाद्युपायेन एतच्च नासेत्यादिविशेषणम् ॥ १२ ॥ ❀ ❀ प्रसन्नेति षट्कम्। (१) (२) (३) (४) अपीच्यशब्दस्यातिसुन्दररूपेऽर्थे शक्तिग्रहस्सिद्धपदसान्निध्यात् कोषादीनामप्रसिद्धेः। भक्ता विषया अधिकारिणो यस्य, किम्वा भक्तकर्मकं सकरुणावलोकत्वात् स्थितं नित्यतयेति शेषः। तदुक्तं श्रीरसामृतसिन्धौ "वयसो विविधत्वेऽपि सर्वभक्तिरसाश्रयः। धर्म्मी किशोर एवात्र नित्यनानाविलासवान्।" इति। व्यग्रमिति। प्रतिक्षणमधिकाधिकसुखदानेऽप्यपरितोषात् (५) एवं समग्राङ्गं तावद्ध्यायेद्यावन्मनो न च्यवते ॥१३—१८॥

### श्रीमद्वीरराघवव्याख्या

बाह्यवायोरन्तःप्रवेशः पूरः, धारणं कुम्भकः, धृतस्य बहिर्निःसरणं रेचकः, प्रतिकूलेन रेचकपूरककुम्भकैर्वा। यद्वा इडया रेचनं पिङ्गलया पूरणं पुनः पिङ्गलया रेचनमिडया पूरणमित्येवं प्रतिकूलेन चित्तं स्थिरं सत्पुनरप्यचञ्चलं यथा स्यात्तथा प्राणस्य

मार्गं शोधयेत्। प्राणे स्ववशे तद्बन्धनं मनोऽपि स्ववशं भवेत्तथा च श्रूयते छान्दोग्ये "यथा शकुनिस्सूत्रेण प्रतिबद्धो दिशं दिशं पतित्वान्यत्रायतनमलब्ध्वा बन्धनमेवोपश्रयत एवं मनोऽपि" इत्यारभ्य "प्राणमेवोपश्रयते प्राणबन्धनं हि सौम्य! मन" इति॥ ९॥ ❀ ❀ किञ्च जितश्वासस्य जितप्राणस्य योगिनः अचिरादाशु विरजं विगतरजोगुणं रजोगुणेनाविक्षिप्तं निर्मलं वा स्यात्॥ १०॥ ❀ ❀ यथा लोहं सुवर्णादि वाय्वग्निभ्यां ध्मातं सुतप्तं सन्मलं त्यजति तथा प्राणायामादीनां समाधौ द्वारकार्याण्याह। प्राणायामैरिति। प्राणायामैः प्राणनियमैः दोषान्वातपित्तश्लेष्मादीन् दहेत् धारणाभिः किल्बिषं पापं प्रत्याहारेण संसर्गान् शब्दादिविषयसंसर्गान् ध्यानेनानीश्वरान् गुणान् क्लेशादीन् दहेत्। मनसः शुभाश्रयेऽवस्थापनं धारणं, धृतस्य मनसो वृत्तिसन्ततिर्ध्यानं, विजातीयप्रत्ययान्तराव्यवहितत्वं समाधिरिति भेदः॥ ११॥ ❀ ❀ अथ धारणापूर्वकं ध्यानमाह। यदेति। यदा स्वं स्वीयं मनः योगेन प्राणायामादियोगेन विरजं सुसमाहितं सम्यक्शुभाश्रये निहितं स्यात्तदा स्वनासाग्रारोपितदृष्टिः भगवतः काष्ठां विग्रहं ध्यायेत्॥ १२॥ ❀ ❀ विग्रहमेव विशिनष्टि प्रसन्नेति सप्तभिः। प्रसन्नं वदनाम्भोजं यस्य तं ध्यायेदिति षष्ठेनान्वयः। पद्मगर्भवदरुणे नेत्रे यस्य नीलोत्पलदलवच्छ्यामं शङ्खादिधरम्॥ १३॥ ❀ ❀ लसत्पङ्कजकिञ्जल्कवत्पीते कौशेयवाससी यस्य श्रीवत्सलाञ्छनं वक्षसि यस्य भ्राजत्कौस्तुभेनामुक्ता संश्लिष्टा कन्धरा यस्य॥ १४॥ ❀ ❀ मत्तद्विरेफाणां कलो मधुरो ध्वनिर्यस्यां तया वनमालया परीतं व्याप्तं परार्ध्यान्यमूल्यानि हारादीनि यस्य तम्॥ १५॥ ❀ ❀ काञ्चीगुणेन हिरण्मयमेखलासूत्रेणोल्लसन्ती श्रोणिर्यस्य भक्तानां हृदयाम्भोजमेव विष्टरमासनं यस्य भक्तानां मनोनयनानि वर्द्धयति हर्षयतीति तथा॥ १६॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

प्रतिकूलेन रेचकादिक्रमेण॥ ९॥ ❀ ❀ प्राणायामादिफलमाह। मन इति। विरजं रजोगुणरहितमेतदेव सोदाहरणमाह। वाय्वग्निभ्यामिति॥ १०॥ ❀ ❀ प्राणायामैरिति। रागादिदोषान् किल्बिषान् जन्मान्तरसञ्चितपापानि दुर्जनसंसर्गावाप्तदुरितानि अनीश्वरानैश्वर्यविरोधिनः प्रकृतेः सत्त्वादिगुणान्॥ ११॥ ❀ ❀ मनसि विरजसि सति कर्तव्यमाह। यदा मन इति। यदा मनो विरजं स्यात्तदा भगवतो हरेः काष्ठां पूर्णां मूर्तिं ध्यायेत्। नासाग्रेणावलोकनं निरीक्षणं यस्य स तथा॥ १२॥ ❀ ❀ "काष्ठोत्कर्षे सीम्नि दिशि" इत्यभिधानात्काष्ठाशब्दस्य अनेकार्थत्वादत्र विवक्षितः क इत्याशङ्क्य सर्वगुणोत्कृष्टं भगवद्रूपं विवक्षितमिति तत्स्वरूपं वक्ति। प्रसन्नवदनेति॥ १३॥ ❀ ❀ लसतः पङ्कजस्य किञ्जल्कं केसरस्तद्वत्पीतं कौशेयं वासो यस्य स तथा तं श्रीवत्सो वक्षसि यस्य स तथा तं भ्राजता कौस्तुभेनामुक्ता बद्धा कन्धरा यस्य स तथा तम्॥ १४॥ ❀ ❀ मत्तैर्द्विरेफैर्भृङ्गैराकुलया व्याप्तया परार्ध्यान्यनर्घ्यत्वेन श्रेष्ठानि हारश्च वलयश्च किरीटं चाङ्गदं च नूपुरं च परार्ध्यहारवलयकिरीटाङ्गदनूपुराणि यस्य स तथा तम्॥ १५॥ ❀ ❀ काञ्चीगुणेनोल्लसन्ती श्रोणी यस्य स तथा तं भक्तानां हृदयाम्भोजमेव विष्टरं यस्य स तथा तम्॥ १६॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः।

काष्ठा दिक् अवधिः परमस्वरूपमिति यावत्॥ १२॥ ❀ ❀ प्रसन्नेति षट्कम्। भृत्यानुग्रहकातरं सदैवाधिकाधिकस्वभक्तिसुखदानेऽप्यपरितोषात्॥ १३—१७॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

बाह्यवायोरन्तर्वामया नासया प्रवेशनं पूरकः। प्रवेशितस्य धारणं कुम्भकः। दक्षिणया नासया रेचनं रेचकः। प्रतिकूलेन रेचककुम्भकपूरकैः अस्थिरमपि चित्तं यथा अचञ्चलं स्यात्॥ ९॥ ❀ ❀ लोहं स्वर्णम्। ध्मातं सन्तप्तम्॥ १०॥ ❀ ❀ एतेषां कार्य्याण्याह। प्राणायामैरिति। दोषान् वातश्लेष्मादीन् किल्बिषाणि पापानि संसर्गान् विषयसङ्गान् अनीश्वरान् रागद्वेषादीन्॥ ११॥ ❀ ❀ योगेन यमादिना समाहितं स्थिरम्। काष्ठामुत्कृष्टस्वरूपम्। लयविक्षेपपरिहाराय स्वनासाग्रदर्शी॥ १२॥ ❀ ❀ "नवाङ्गभक्तावपि यं तृतीयमाहुर्महान्तः पुरुषार्थसारम्। ध्यानं हरेः सप्तमतामगात्तदष्टाङ्गयोगोऽत्र च मोक्षसिद्ध्यै॥" प्रसङ्गतो भक्तानां योगिनाञ्च ध्येयं स्वरूपमाह। प्रसन्नेति। शङ्खेत्यत्र चतुर्थं पद्ममपि अन्वेष्टव्यम्॥ १३॥ ❀ ❀ भ्राजत्कौस्तुभेन तदीयस्वर्णसूत्रेण आमुक्ता प्रतिबद्धा रुद्धा कन्धरा ग्रीवा यस्य तम्॥ १४॥ ❀ ❀ मत्तानां द्विरेफाणां कलो मधुरो ध्वनिर्यस्यां तया परार्ध्यं परार्द्धमूल्यक्रीतम्॥ १५॥ ❀ ❀ काञ्चीसूत्रेणोल्लसन्ती श्रोणिः कटिर्यस्य तं भक्तानां हृदयाम्भोजमेव विष्टरमासनं यस्य तं शान्तमनुग्रम्॥ १६॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

पूरकादिक्रमेण प्रतिकूलेन रेचकादिक्रमेण वा प्राणस्य मार्गं प्राणायामं शोधयेत् स्वनुष्ठितं कुर्यात् यथा येन स्वनुष्ठितेन प्राणायामेन चित्तमचञ्चलं सत् स्थिरं भवेत्। मनसः प्राणायत्तत्वं श्रूयते छान्दोग्ये "यथा शकुनिःसूत्रेण प्रतिबद्धो दिशं दिशं पतित्वा-

न्यत्रायतनमलब्ध्वा बन्धनमेवोपश्रयते एवं मनोपि" इत्युपक्रम्य 'प्राणमेवाश्रयते प्राणबन्धनं हि सौम्य ! मन' इति ॥ ९ ॥ ❀ ❀ लोहं सुवर्णं ध्मातं तप्तम् ॥ १० ॥ ❀ ❀ दोषान् वातश्लेष्मादीन् किल्बिषान् पापानि संसर्गान् शब्दादिविषयचिन्तनानि अनीश्वरान् अनाथत्वादीन् मनसः परमात्मनि स्थिरीकरणं धारणा स्थिरस्य तत्रैव वृत्तिसन्ततिर्ध्यानं भगवद्ध्यानानन्दसंप्लवे निमग्नत्वं समाधिरिति भेदः ॥ ११ ॥ ❀ ❀ योगेन प्राणायामादिना भगवतः काष्ठां मूर्तिं मूर्तिमन्तं भगवन्तं ध्यायेदित्यर्थः ॥ १२ ॥ ❀ ❀ मूर्तिमन्तमेव ध्येयं भगवन्तं वर्णयति । प्रसन्नवदनाम्भोजमिति सप्तभिः । प्रसन्नं वदनमेवाम्भोजं यस्य तं ध्यायेदिति षष्ठेनान्वयः । पद्मगर्भवदरुणे ईक्षणे लोचने यस्य तम् ॥ १३ ॥ ❀ ❀ लसत्पङ्कजकिञ्जल्कवत् पीते कौशेयवाससी यस्य तम् । श्रीवत्सं वक्षसि यस्य भ्राजत्कौस्तुभेन आमुक्ता युक्ता कन्धरा यस्य तम् ॥ १४ ॥ ❀ ❀ मत्तद्विरेफाणां कं सुखं लातीति सा तया परीतं व्याप्तम् । पराद्ध्यर्यान्यमूल्यानि हारादीनि यस्य तम् ॥ १५ ॥ ❀ ❀ काञ्ची हिरण्मयी मेखला तद्गुणेनोल्लसन्ती श्रोणी यस्य ध्यातृणां हृदयाम्भोजमेव विष्टरमासनं यस्य मनोनयनानां वर्द्धनमुत्साहकरम् ॥ १६ ॥

## श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

तस्मिन्नेवाभ्यासे प्राणस्य मार्गं शोधयेत् । भौतिक्यो नाड्यो मलादिना आपूरितास्तिष्ठन्ति, ताः पूरककुम्भकरेचकैः शोधयेत् । तत्र वायुं पूरयित्वा, संस्तभ्य, कुम्भकेन नाडीः शोषयित्वा, पक्वा विधाय, ततो मलं वायुं च रेचयेत् । एवं पुनः पुनः पूरणादिना प्राणस्य मार्गं शोधयेत् । प्राणायामभेदैर्वा कुम्भकादिभिः शोधयेत् । प्रतिकूलेन वा शोधयेद्रेचकपूरककुम्भकैः । किं बहुना, यथैव चित्तं चाञ्चल्यं परित्यज्य स्थिरं भवेत्, तथा प्राणस्य मार्गं शोधयेत् । प्राणायामादिभिरेव शोधनम्, न प्रकारान्तरेण कर्तव्यम् । अविहितत्वान्न तैश्चित्तं शुद्धं भवति ॥ ९ ॥ ❀ ❀ एवं कृते योगिनो मनो जितश्वासस्य विरजं भवे¹दचिरात् । ननु प्राणायामेन कथं मनसः शुद्धिः ? तत्रा दृष्टा²न्तेनाऽऽह—वाय्वग्निभ्यामिति । यथा लोहं सुवर्णादिकं वाय्वग्निभ्यां ध्मातं मलं त्यजति, तथा प्राणायामैः, तज्जनितधर्मेण च दृष्टादृष्टोपायैर्मनो त्यजति ॥ १० ॥ ❀ ❀ सर्वदोषाणां निवृत्तिप्रकारानाह—प्राणायामैरिति । दोषाः पापानि प्राणायामैर्दूरीकर्तव्यानि, वातादिजनितदोषान्वा । धारणाभिर्भगवन्मूर्तिचिन्तनैः, किल्बिषान् वासनासहितमहापातकादीन् दहेत् । प्रत्याहारेण इन्द्रियाणां संसर्गजनितान् दोषान् दहेत् । ध्यानेन पुनरनीश्वरान् संसारित्वापादकान् अज्ञानादीन् दहेत् । तत्र ये संसारदशायां गुणा ब्राह्मणशरीरापादकान्यपि कर्माणि भगवद्ध्यानं दहति ॥ ११ ॥ ❀ ❀ एवं कृते यदैव स्वं मनो विरजं भवति, योगेन च सुष्ठु समाहितं भवति, तदा भगवतः काष्ठां वैकुण्ठम्, हृदयं वा, हृदये वैकुण्ठं वा, स्वनासाऽग्रे निरीक्षणं यस्य तादृशो भूत्वा ध्यायेत् । अन्यथा दृष्टिश्चञ्चला मनसो व्यासङ्गमुत्पादयेत्, मीलिता निद्राम् ॥ १२ ॥ ❀ ❀ तत्र भगवन्तं ध्यायेदिति वक्ष्यति । को भगवानित्याकाङ्क्षायां पुरुषोत्तमस्यैतद्रूपमिति, मनसा तद्रूपं परिकल्प्य, निरन्तरं चिन्तनीयमिति तद्रूपं कल्पनार्थमनुवर्णयति—प्रसन्नवदनाम्भोजमिति—षड्भिः, षड्गुणत्वाद्भगवतः—प्रसन्नं वदनाम्भोजं यस्य । प्रसादो वरदानार्थः । अम्भोजत्वं दृष्ट्यैव सन्तोषजननार्थम्, मध्वर्थं च । पद्मस्य गर्भे स्थितपत्रवदरुणवर्णे ईक्षणे यस्य । तत्राऽपि प्रसादो दोषदूरीकरणं योगसिद्धिश्च सूचिता । नीलोत्पलानां दलवत् श्यामम् । सौन्दर्यशुद्धी, उग्रत्वाद्यभावः, शृङ्गाररसरू³पता च सूचिता । शङ्खचक्रगदाधरमित्यप्तेजोवायूनां शुद्धिर्दोषाभावार्थं शङ्खचक्रगदानां धारणम्, लसन्ति पङ्कजकिञ्जल्कानीव, प्रान्ते मुक्ताफलगुम्फितमन्ते आरक्तं परिधानयोग्यार्थं केसराकारेण कृतं यत्पीताम्बरम्; तदपि कौशेयं पट्टप्रकृतिकं सर्वदैवत्यं वासो यस्य । भगवान् त्रिभुवनसारभूतः, तस्य छन्दोमयं गूढरसाच्छादकम्, मुक्तान् रजोगुणम्, सत्त्वभेदांश्च गृहीत्वा स्थितपीताम्बरयुक्तम् । श्रीवत्सं वक्षसि यस्य । यो ब्रह्मानन्दः स हृदये प्रकाशते । भ्राजत्कौस्तुभेनामुक्ता कन्धरा यस्य । मुक्तान् भक्तान् जीवान् अतिप्रि⁴यत्वेन कण्ठस्थान् करोति ॥ १३ ॥ १४ ॥ ❀ ❀ मत्ता ये द्विरेफा भ्रमराः, तेषां कला पङ्क्तिर्यत्र, तादृश्या वनमालया परीतं व्याप्तम् । षट्दर्शनीपारं गतैः निरन्तरं स्तुतया कीर्त्या व्याप्तम् । परार्ध्यान्यमूल्यानि हारवलयकिरीटाङ्गदनूपुराणि यस्य । परार्ध्यानि भगवतः संबन्धीनि पञ्च भवन्ति–भगवद्भक्ताः, भगवदर्थक्लेशः, भगवदीयं ज्ञानम्, भक्तिः, गतिश्चेति । काञ्चीगुणेन उल्लसन्ती श्रोणिर्यस्य । पृथिव्यां स्त्रीधनाभ्यां सत्त्वरजस्तमोगुणः संसारः सुप्रसिद्धो भवति । स्वस्य हृदयाम्भोजमेव विष्टरं स्थानं यस्य । अनेन सर्वप्राणिषु विद्यमानो भगवान् ध्येयः, नत्वधिष्ठानादिषु परिच्छिन्नः । दर्शनीयतममतिसुन्दरं सर्वप्रापञ्चिकरसविस्मारकम् । शान्तं कामादिसर्वदोषनाशकं ज्ञानमयम् । मनोनयनयोर्वर्द्धनं यस्मात् सकृच्चेत् भावयति मनः पश्यति वा, पुनर्भावनामेवोत्पादयति, दिदृक्षां च । अनेन विषयबलादपि प्रत्याहारः साधितः । योगज्ञानयोश्च वृद्धिः ॥ १५ ॥ १६ ॥

## श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

प्राणस्येत्यत्र । प्रकारान्तरेणेति । मूत्रपानादिना ॥ ९ ॥ ❀ ❀ प्रसन्नेत्यत्र । सूचितेति । पद्मगर्भपदेनैव सूचिता । अग्रे पाठसन्देहादर्थो न भाति (?) ॥ १३ ॥ १४ ॥

---

१. भवत्यचिरात् ख. ग. च. । २. दृष्टान्तमाह ग. च. । ३. रूपंरसता क. ख. ग. घ. च । ४. अतिप्रयत्नेन. क. ।

### श्रीगिरिधरकृता बालप्रबोधिनी ।

पूरकादिभिः प्राणायामैः प्राणस्य मार्गं नाड्यादि शोधयेत् । तत्र प्राणायामस्त्रिविधः—तत्र बाह्यवायोरन्तः प्रवेशनं पूरकः, प्रवेशितस्य धारणं कुम्भकः,धृतस्य बहिर्निस्सारणं रेचकः, तैः । प्रतिकूलेन रेचककुम्भकपूरकैश्च । वाकारश्चार्थे । तच्छोधनप्रयोजनमाह—चित्तं स्थिरं सत्पुनरपि चञ्चलं यथा न स्यात्तथा शोधयेत् । प्राणे स्ववशे सति तद्वशवर्ति मनोऽपि वशं भवेत् ॥ ९ ॥ ❀ ❀ एतदेव दृष्टान्तेन स्पष्टयति—मन इति । जितः श्वासः प्राणो येन तस्य योगिनो मनोऽचिरात् आशु विरजं निर्मलं स्यात् । यथा वाय्वग्निभ्यां ध्मातं सन्तप्तं लोहं सुवर्णादिधातुः वै निश्चयेन मलं त्यजति निर्मलं भवति तथेत्यर्थः ॥ १० ॥ ❀ ❀ प्राणायामादिफलान्याह—प्राणायामैरिति । प्राणायामैः दोषान् वातपित्तश्लेष्मादीन् दहेत् । धारणाभिः किल्बिषान् पापानि दहेत् । प्रत्याहारेण संसर्गान् शब्दादिविषयसम्बधान् दहेत् । ध्यानेनानीश्वरान् गुणान् रागलोभक्लेशादीन् दहेत् । तत्र मनसो भगवत्यवस्थापनं धारणा, तत्र स्थितस्य वृत्तिसन्ततिर्ध्यानम् । सन्ततेर्विजातीयप्रत्ययान्तराव्यवहितत्वं समाधिरिति भेदः ॥ ११ ॥ ❀ ❀ यद्यपि रुच्यनुसारेण सन्ति बहवो ध्यानविषयाः, तथापि मुमुक्षुणा तु भगवद्ध्यानमेव कर्तव्यमित्याशयेनाह—यदेति । यदा स्वं स्वीयं मनःयोगेन प्राणायामेन विरजं निर्मलं सुसमाहितं सावधानं स्ववशवर्त्ति च स्यात् तदा स्वनासाग्रे दत्तदृष्टिः सन् भगवतः काष्ठां मूर्तिं ध्यायेत् । इतस्ततो दृष्टिचालने मनसः विक्षेपः स्यात् नेत्रमुद्रणे च लयः स्यादत उक्तं 'स्वनासाग्रावलोकनः' इति ॥ १२ ॥ ❀ ❀ ध्येयं भगवद्विग्रहमेव विशिनष्टि—प्रसन्नेति । प्रसन्नं वदनाम्भोजं यस्य तं ध्यायेदिति षष्ठेनान्वयः । पद्मगर्भवदरुणे ईक्षणे नेत्रे यस्य तम् । नीलोत्पलदलवत् श्यामम् । शङ्खादिधरम् । अनेन चतुर्भुजत्वमपि सूचितम् ॥ १३ ॥ ❀ ❀ लसत्पङ्कजस्य किञ्जल्कवत् पीते कौशेये वाससी यस्य तम् । श्रीवत्सो लाञ्छनं वक्षसि यस्य तम् । भ्राजत्कौस्तुभेनामुक्ता संश्लिष्टा कन्धरा यस्य तम् ॥ १४ ॥ ❀ ❀ मत्तद्विरेफाणां कलो मधुरो ध्वनिर्यस्यां तया वनमालया परीतं व्याप्तम् । परार्द्ध्यानि अमूल्यानि हारादीनि यस्य तम् ॥ १५ ॥ ❀ ❀ काञ्चीगुणेन मणिमयमेखलासूत्रेण उल्लसन्ती श्रोणी कटिर्यस्य तम् । भक्तानां हृदयाम्भोजमेव विष्टरमासनं यस्य तम् । दर्शनीयतमं अतिसुन्दरम् । शान्तं सुशीलम् । अतो भक्तानां मनोनयनानि वर्द्धयति हर्षयतीति तथा तम् ॥ १६ ॥

### हिन्दी अनुवाद

आरम्भमें पूरक, कुम्भक और रेचक-क्रमसे अथवा इसके विपरीत रेचक, कुम्भक और पूरक करके प्राणके मार्गका शोधन करे—जिससे चित्त स्थिर और निश्चल हो जाय ॥ ९ ॥ ❀ ❀ जिस प्रकार वायु और अग्निसे तपाया हुआ सोना अपने मलको त्याग देता है, उसी प्रकार जो योगी प्राणवायुको जीत लेता है, उसका मन बहुत शीघ्र शुद्ध हो जाता है ॥ १० ॥ ❀ ❀ अतः योगीको उचित है कि प्राणायामसे वातपित्तादिजनित दोषोंको, धारणासे पापोंको, प्रत्याहारसे विषयोंके सम्बन्धको और ध्यानसे भगवद्विमुख करनेवाले राग-द्वेषादि दुर्गुणोंको दूर करे ॥ ११ ❀ ❀ जब योगका अभ्यास करते-करते चित्त निर्मल और एकाग्र हो जाय तब नासिकाके अग्रभागमें दृष्टि जमाकर इस प्रकार भगवान्‌की मूर्तिका ध्यान करे ॥ १२ ॥ ❀ ❀ भगवान्‌का मुखकमल आनन्दसे प्रफुल्ल है, नेत्र कमलकोषके समान रतनारे हैं, शरीर नीलकमलदलके समान श्याम है; हाथोंमें शङ्ख, चक्र और गदा धारण किये हैं ॥ १३ ॥ ❀ ❀ कमलकी केसरके समान पीला रेशमी वस्त्र लहरा रहा है, वक्षःस्थलमें श्रीवत्सचिह्न है और गलेमें कौस्तुभमणि झिलमिला रही है ॥ १४ ॥ ❀ ❀ वनमाला चरणोंतक लटकती हुई है, जिनके चारों ओर भौंरे सुगन्धसे मतवाले होकर मधुर गुंजार कर रहे हैं; अङ्ग-प्रत्यङ्गमें महामूल्य हार, कङ्कण, किरीट, भुजबन्ध और नूपुर आदि आभूषण विराजमान हैं ॥ १५ ॥ ❀ ❀ कमरमें करधनीकी लड़ियाँ उसकी शोभा बढ़ा रही हैं; भक्तोंके हृदयकमल ही उनके आसन हैं, उनका दर्शनीय श्यामसुन्दर स्वरूप अत्यन्त शान्त एवं मन और नयनोंको आनन्दित करनेवाला है ॥ १६ ॥

अपीच्यदर्शनं शश्वत्सर्वलोकनमस्कृतम् । सन्तं वयसि कैशोरे भृ*त्यानुग्रहकातरम् ॥ १७ ॥
कीर्तन्यतीर्थयशसं पुण्यश्लोकयशस्करम् । ध्यायेद्देवं समग्राङ्गं यावन्न च्यवते मनः ॥ १८ ॥
स्थितं व्रजन्तमासीनं शयानं वा गुहाशयम् । प्रेक्षणीयेहितं ध्यायेच्छुद्धभावेन चेतसा ॥ १९ ॥
तस्मिँल्लब्धपदं चित्तं सर्वावयवसंस्थितम् । विलक्ष्यैकत्र संयुज्यादङ्गे भगवतो मुनिः ॥ २० ॥

सञ्चिन्तयेद्भगवतश्चरणारविन्दं वज्राङ्कुशध्वजसरोरुहलाञ्छनाढ्यम् ।
उत्तुङ्गरक्तविलसन्नखचक्रवालज्योत्स्नाभिराहतमहद्धृदयान्धकारम् ॥ २१ ॥

---

* प्रा० पा०—भूत्या० ।

यच्छौचनिःसृतसरित्प्रवरोदकेन तीर्थेन मूर्ध्न्यधिकृतेन शिवः शिवोऽभूत्।
ध्यातुर्मनःशमलशैलनिसृष्टवज्रं ध्यायेच्चिरं भगवतश्चरणारविन्दम् ॥ २२ ॥
जा[१]नुद्वयं जलजलोचनया जनन्या लक्ष्म्याखिलस्य सुरवन्दितया विधातुः।
ऊर्वोर्निधाय करपल्लवरोचिषा यत् संलालितं हृदि विभोरभवस्य कुर्यात् ॥ २३ ॥
ऊरू सुपर्णभुजयोरधिशोभमानावोजोनिधी अतसिकाकुसुमावभासौ।
व्यालम्बिपीतवरवाससि वर्तमानकाञ्चीकलापपरिरम्भि नितम्बबिम्बम् ॥ २४ ॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

अपीच्यमतिसुंदरं भक्तविषयं दर्शनं यस्य कैशोरे तारुण्ये वयसि संतं स्थितम्। भृत्यानामनुग्रहे कातरं व्यग्रम् ॥ १७ ॥ ❀ ❀ कीर्तन्यं कीर्तनार्हं तीर्थं यशो यस्य पुण्यश्लोका बलिप्रमुखास्तेषां यशस्करम्। समग्राण्यंगानि यस्मिन् न च्यवते नापयाति न पर्येति वा ॥ १८ ॥ ❀ ❀ प्रेक्षणीयमीहितं लीला यस्य ॥ १९ ॥ ❀ ❀ तदेवं समग्रध्यानमुक्त्वैकैकावयवध्यानमाह। तस्मिँल्लब्धं पदं स्थितिर्येन तच्चित्तं विलक्ष्य विशेषेण लक्षीकृत्य। एकत्रैकैकस्मिन्नंग इत्यर्थः ॥ २० ॥ ❀ ❀ तदेव पादादिक्रमेणाह त्रयोदशभिः। सम्यक् चिंतयेत् पादतले रेखात्मकानि वज्रादीनि लांछनानि तैराढ्यं युक्तम्। उत्तुंगाश्च रक्ताश्च विलसंतो नखास्तेषां चक्रवालं मंडलं तस्य ज्योत्स्नाभिराहतो महतां ध्यातॄणां हृदयांधकारो येन। एतच्च सर्वमुपादेयविशेषणं ध्येयत्वेनैवोच्यते ॥ २१ ॥ ❀ ❀ किं च यस्य शौचेन क्षालनेन निःसृतायाः सरित्प्रवराया गंगाया उदकेन तीर्थेन संसारतारकेण मूर्ध्न्यधिकृतेन धृतेन शिवोऽपि शिवोऽभूत्, अत्यधिकं सुखं प्रापेत्यर्थः। ध्यातुर्मनसि यः शमलशैलः पापपर्वतस्तस्मिन्निसृष्टं क्षिप्तं वज्रमिव यत्। यद्वा शमलशैले निसृष्टं स्वलांछनरूपं वज्रं येन तत् ॥ २२ ॥ ❀ ❀ विभोर्जानुद्वयं तत्पर्यंतं जंघाद्वयमखिलस्य विधातुर्ब्रह्मणो जनन्यालक्ष्म्या संलालितं स्पर्शचातुर्येण संसेवितम्। संसारित्वमिव प्रतीतं वारयति। अभवस्येति। हृदि कुर्याद्ध्यायेत् ॥ २३ ॥ ❀ ❀ सुपर्णस्य भुजयोः स्कंधयोरधि उपरि ओजसो बलस्य निधी आधारौ अतसिकायाः कुसुमवत्कांत्यावभासमानो व्यालंबि आगुल्फं लंबमानं यत्पीतांबरं वासस्तस्मिन्वर्तमानो यः कांचीकलापस्तेन परिरंभः संश्लेषो विद्यते यस्य तद्विभोर्नितंबबिंबं च। हृदि कुर्यादिति पूर्वेणैवान्वयः ॥ २४ ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

तारुण्ये तरुणसमीपे "कैशोरमापंचदश" इत्युक्तेः। "व्यग्रे कृशे कातरं स्यात्" इति कोशात् ॥ १७ ॥ ❀ ❀ तीर्थं सर्वदोषहरम् ॥ १८ ॥ ❀ ❀ विश्वनाथस्तु–प्रसंगतो रागानुगीयभक्तानामपि ध्येयां लीलामाह–स्थितं वैकुंठे। वृंदावनीयकल्पतरुमूले च व्रजंतं वैकुंठाद्गोष्ठाच्च वनाय। आसीनं रक्तसिंहासने गोवर्द्धनशृंगे च। शयानं शेषपर्यंके गोवर्द्धनगुहायाञ्च। शुद्धभावं शुद्धाभिप्रायं चेतस्तदा तेन प्रेक्षणीयं जालरंध्राद्बहिः स्थित्वैव द्रष्टुमर्हमीहितं क्रीडा चेष्टितं यस्य तम् ॥ १९ ॥ ❀ ❀ लक्ष्यीकृत्य ज्ञात्वा। इत्यर्थ इति। झटिति बुद्ध्यारोहार्थमेकैकांगं ध्यायेदिति भावः ॥ २० ॥ ❀ ❀ तदेव ध्यानमेव। वज्रेति। दक्षिणचरणतलध्यानं तस्यैव कल्पतरुमूले तिष्ठतस्त्रिभंगललितस्य कृष्णस्य भक्तैर्दृश्यत्वात्। दक्षिणचरणस्य कनिष्ठातलेंकुशं ध्यायेदंकुशतले वज्रमनामिकातले सरोरुहं सरोरुहतले ध्वजमेवमंगुष्ठतले यवचक्रादिकं ज्ञेयम्। अंधकारोत्र पापम्। एतच्च वज्रांकुशादि उपादेयस्य ध्येयत्वेन स्वीकृतस्य पादारविंदस्य विशेषणम् ॥ २१ ॥ ❀ ❀ अन्यदपि चरणोत्कृष्टमाह किञ्चेति। यस्यांघ्रेः। इत्यर्थ इति। अद्यैवाहमेतद्धृत्वा शिवोऽभूवमित्यभिमन्यते स्मेति भावः। इवेत्युपमानोत्तरसमासे लुप्तोपमायां च। गौरवं मत्वाह—यद्वेति। एवमेव यच्चरणारविंदं ध्यातुर्भक्तस्य मनोहस्तिनः स्ववर्त्मन्यानेतुमंकुशं धत्ते मनःसरसीमलं कर्तुं कमलं मनसे सर्वोत्कर्षसाम्राज्यं दातुं ध्वजं सर्वोत्कृष्टयशो दातुं यवं त्रिविधतापोपशमनाय छत्रं सर्वतो रक्षणार्थं चक्रादिकमपि धत्त इत्यपि ज्ञेयम् ॥ २२ ॥ ❀ ❀ शयानं ध्यायेदित्युक्तमतः शेषपर्यंके शयानस्य विभोर्जानुद्वयं हृदि कुर्यादिति। जलजलोचनयेति। तल्लोचनाभ्यां निर्बाधमेवास्वादितलावण्यमित्यर्थः। इदमेव जानुनोर्जंघयोश्च माधुर्य्यमैश्वर्यमेवमग्रेऽपि ज्ञेयम् ॥ २३ ॥ ❀ ❀ व्रजंतं ध्यायेदित्युक्तमतः पृथुध्रुवादिभ्यो वरं दातुं गच्छतो गरुडारूढस्य हरेरूरुद्वयं हृदि कुर्यादिति। नितंबयोर्बिम्बं मंडलम् ॥ २४ ॥

## श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

मनसि च्युते तु प्रकारान्तरेण ध्यायेदित्याह। स्थितमिति प्रेक्षणीयेहितमिति लीलाध्यानमभिप्रेतम् ॥ १९ ॥ ❀ ❀ तस्मिन् भगवद्रूपे आवृत्त्या व्याख्यानाद्विशेष्याध्याहाराच्चेत्यर्थ इत्युक्तम् ॥ २० ॥ ❀ ❀ तदेव। एकैकाङ्गध्यानमेव अन्ध-

१. प्राचीने पाठे 'जानुद्वयं'…' इत्यारभ्य '…'कुर्यात्' पर्यन्तं सम्पूर्ण एकः श्लोकः मूले नास्ति टिप्पण्यां लिखितः।

कारोऽसामर्थ्यम् । एतच्च वज्राङ्कुशेत्यादि उपादेयं वास्तवत्वेन ग्राह्यं न तु ध्यानार्थं विराड्रूपवदारोपितमित्यर्थः । न केवलं वस्तुस्थितिमात्रतयोच्यते किन्तु ध्येयत्वेनैवोच्यते ॥ २१ ॥ ❀ ❀ पर्य्यायरूपाः शब्दा द्विरुच्चारिताः स्वार्थाधिक्ये पर्य्यवस्यन्तीत्यालङ्कारिकाः । अत एवात्यधिकं सुखमित्यार्थिकोऽर्थः पूर्वार्थे पद्मकोमलचरणारविन्दस्य वज्रोपमाऽश्लीला इत्यरुचौ यद्वेति ॥ २२ ॥ ❀ ❀ जानुद्वयमिति युग्मकम् । वाससि वर्त्तमानो यः काञ्चीकलाप इति व्याख्यानं पदैकदेशान्वयाभ्युपगमादेव चैत्रस्य गुरुकुलमितिवत् । यथोक्तमभिज्ञैः—प्रतियोगिपदादन्यद्यदन्यत्कारकादपि । वृत्तशब्दैकदेशार्थे न तस्यान्वय इष्यते ॥' इति ॥२३॥२४॥

### श्रीमद्वीरराघवव्याख्या

अपीच्यं दर्शनम् अपीच्यमतिसुन्दरं भक्तिविषयं दर्शनं यस्य तं कैशोरे कौमारे वयसि सन्तं भृत्यानामनुग्रहे कातरं व्यग्रम् ॥ १७ ॥ ❀ ❀ कीर्तन्यं कीर्तनार्हं तीर्थं यशो यस्य पुण्यश्लोका बलिभीष्मादयस्तेषां यशस्करं, समग्राणि अङ्गानि यस्मिन् यथा भवति तथा एवं ध्यायेत् ॥ १८ ॥ ❀ ❀ तत्रोपासकः स्वेच्छानुसारेण स्थितमुत्तिष्ठन्तमासीनमुपविष्टं शयानं वा गुहाशयं हृदयकुहरे वसन्तं प्रेक्षणीयमीहितं लीला यस्य तं, भगवन्तं शुद्धः रागाद्यकलुषितः भावः वृत्तिर्यस्य तेन चेतसा ध्यायेत् ॥ १९ ॥ ❀ ❀ एवं ध्येयरूपसमुदाय उक्तः । अथ दिव्याङ्गेष्वेकैकत्रोपासना कार्येत्याह । तस्मिन्निति । तस्मिन् विग्रहे लब्धं पदं स्थितं स्थितिर्येन तत्सर्वावयेषु सम्यक् स्थितं चित्तं विलक्ष्य विशेषेण लक्ष्यीकृत्य भगवत एकत्रैकस्मिन्नङ्गे संयुञ्ज्यात्संयोजयेत् ॥ २० ॥ ❀ ❀ एतदेव पादादिक्रमेण प्रपञ्चयति । सञ्चिन्तयेदिति । त्रयोदशभिः भगवतश्चरणारविन्दं सम्यक् चिन्तयेत्कथम्भूतं पादतलरेखात्मकानि वज्रादीनि लाञ्छनानि तैराढ्यं युक्तमुत्तुङ्गाश्च रक्ताश्च विलसन्तो ये नखास्तेषां चक्रवालं मण्डलं तस्य ज्योत्स्नाभिराहतो महतां ध्यातृणां हृदयान्धकारो येन तं महत्त्वमन्धकारविशेषणं वा एतच्च सर्वमुपादेयविशेषणं ध्येयत्वेनोच्यते ॥ २१ ॥ ❀ ❀ किञ्च यस्य चरणारविन्दस्य शौचेन प्रक्षालनजलेन निःसृतायाः सरित्प्रवरायाः गङ्गाया उदकेन तीर्थेन संसारतारकेण मूर्द्धन्यधिकृतेन शिवो रुद्रः शिवः मङ्गलयुक्तोऽभूदित्यर्थः । ध्यातुर्मनसि यः शमलशैलः पापपर्वतः तस्मिन्विसृष्टं क्षिप्तं वज्रमिव यद्वा शमलशैले निसृष्टं स्वलाञ्छनरूपं वज्रं येन तद्भगवतश्चरणारविन्दं चिरं ध्यायेत् ॥ २२ ॥ ❀ ❀ जानुद्वयमिति । अखिलस्य जगतः जनन्या मात्रा "नित्यैवैषा जगन्माता विष्णोः श्रीरनपायिनी" इत्युक्तेः सुरवन्दितया ब्रह्मादिभिराराधितया जलजलोचनया लक्ष्म्या स्वस्याः ऊर्वोर्निधाय कपञ्जवरोचिषा प्रकाशमानकरपल्लवेन संलालितं स्पर्शनचातुर्येण संसेवितं, संसारित्वप्रतीतिं वारयति । अभवस्येति । विधातुर्जगत्कर्तुर्विभोः भगवतः जानुद्वयं पादपर्यन्तजङ्घाद्वयं हृदि कुर्यात् ध्यायेत् ॥ २३ ॥ ❀ ❀ ऊरू इति सुपर्णस्य गरुत्मतः भुजयोः स्कन्धयोरधि उपरि शोभमानावोजसः बलस्य औज्वल्यस्य वा निधी आश्रयावतसिकाकुसुमकान्तिवत् कान्त्या भासमानौ ऊरू हृदि कुर्य्यादिति पूर्वेणान्वयस्तथा व्यालम्बि आगुल्फं लम्बमानं यत्पीतं परमनर्घं वासस्तस्मिन् वर्त्तमानो यः काञ्चीकलापस्तेन परिरम्भः संश्लेषो विद्यते यस्य तद्विभोः नितम्बबिम्बञ्च हृदि कुर्य्यात् ॥ २४ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

अपीच्यदर्शनं प्राप्तषोडशवर्षवद् दृश्यमानं स्वतः कैशोरे वयसि द्वादशवर्षलक्षणे सन्तं वर्तमानम् ॥ १७ ॥ ❀ ❀ कीर्तन्यं कीर्तनीयं तीर्थं शुद्धं यशो यस्य स तथा तं पुण्यश्लोकाः ब्रह्मादयस्तेषां सृष्ट्यादिना यशः करोतीति पुण्यश्लोकयशस्करस्तं मनो यावन्न च्यवते न चलति सर्वाङ्गध्यानसक्तं यथा स्यात्तथा ध्यायेदित्यर्थः ॥ १८ ॥ ❀ ❀ हृदयगुहायां शेत इति गुहाशयं प्रेक्षणीयमीहितं चेष्टितं यस्य स तथा तम् ॥ १९ ॥ ❀ ❀ एवं समग्राङ्गध्यानमुक्त्वा तदशक्तौ एकैकाङ्गध्यानप्रकारमाह । तस्मिन्निति । तस्मिन्हरौ समग्राङ्गे लब्धपदं प्राप्तास्पदं सर्वावयवसंस्थितं सर्वावयवं व्याप्य स्थितं चित्तं विलोक्य भगवतः सर्वावयवसंस्मरणाशक्तावेकत्राङ्गे एकस्मिन्नवयवे पादमारभ्योत्तमाङ्गपर्यन्ते चित्तं संयुञ्ज्यादित्यन्वयः । "सर्वं स्मर्तुमशक्तः सन्नेकाङ्गं चिन्तयेद् बुध" इति वचनात् ॥ २० ॥ ❀ ❀ नन्वत्र पृथक् पृथगवयवस्थितं चित्तमेकं त्रैलोक्येन भावनायां संयुञ्ज्यात् नत्वेकैकावयवध्यानं विधीयतेऽशक्तस्येत्याशङ्क्यैकैकाङ्गध्यानविधानादुक्तं युक्तमिति भावेन तद्विशिनष्टि । वज्रेत्यादिना । उत्तुङ्गान्युन्नतानि रक्तानि विलसन्ति नखान्युत्तुङ्गरक्तविलसन्नखानि तान्येव चक्रवालं चन्द्रमण्डलं तस्य ज्योत्स्नाभिराहतो निर्दलितो महतां योगिनां हृदयान्धकारोऽज्ञानाख्यो येन तत्तथोक्तं नखानां चक्रवालमावलिस्तस्य ज्योत्स्नाभिरिव निर्मलाभिर्दीप्तिभिर्वा ॥ २१ ॥ ❀ ❀ यस्य चरणारविन्दस्य शौचात् प्रक्षालनलक्षणान्निःसृता सरित्प्रवरा गङ्गा तस्या उदकेन तीर्थेन पावनेन मूर्ध्न्यधिधृतेनाधिगतजटाबन्धधृतेन शिवो महादेवः शिवोऽतिशयितपुण्यभाजनीभूतोऽभूत् । ध्यातुः पुरुषस्य मनसि वर्तमानं यच्छमलं पापं तदेव शैलः पर्वतस्तस्य विदारणाय नितरां सृष्टं क्लृप्तं वज्रमिव वज्रं लुप्तोपमा ॥ २२ ॥ २३ ॥ ❀ ❀ जङ्घान्तं तु तच्चरणारविंदान्तर्भूतं जानुनी पूर्वोत्तरान्तर्भूत इति भावेनोरूपास्तिमाह । उरू इति । हरेरूरू ध्यायेदित्यन्वयः । सुपर्णो गरुडस्तस्य भुजयोरध्युपरि स्कन्धे ओजसां बलानां निधि "ओजोऽवष्टम्भबलयोः" इत्यभिधानं स्वतसिकाकुसुमं प्रोत्फुल्लकल्पकुसुमं तद्वदवभासो

ययोस्तौ तथोक्तौ हे अम्ब ! हरेर्नितम्बं ध्यायेदित्यन्वयः। व्यालम्बि चाप्रपदान्तं च वर्णेन पीतं च वरं च यद्वासस्तद्व्यालम्बिपीतवरवासस्तत्र वर्त्तमानो यः काञ्चीकलापः सप्तगुणितरसनाभूषणं तस्य परिरम्भोऽस्यास्तीति तदन्तर्वर्तमान इत्यर्थः ॥ २४ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

एवं समग्राङ्गं च तावद्ध्यायेत् यावन्मनो न च्यवते। मनसि च्युते सति प्रकारान्तरेण ध्यायेदित्याह। स्थितमित्यादिभिः ॥ १८ ॥ १९ ॥ ॐ ॐ विलक्ष्य निश्चित्य ॥ २० ॥ ॐ ॐ महतां ध्यातॄणां हृदयस्यान्धकारमसामर्थ्यम् ॥ २१ ॥ ॥ २२ ॥ ॐ ॐ जानुद्वयमिति त्रिकम् ॥ २३ ॥ २४ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

अपीच्यमतिसुन्दरं कैशोरे पञ्चदशवर्षे वयसि नित्यस्थितम् ॥ १७ ॥ ॐ ॐ कीर्तनार्हं तीर्थरूपञ्च यशो यस्य तम् ॥ १८ ॥ ॐ ॐ प्रसङ्गतस्तन्त्रेण रागानुगीयभक्तानामपि ध्येयां लीलामाह। स्थितं वैकुण्ठे वृन्दावनीयकल्पतरुमूले च व्रजन्तं वैकुण्ठात् गोष्ठाच्च वनाय आसीनं रत्नसिंहासने गोवर्द्धनशृङ्गे च शयानं शेषपर्यङ्के गोवर्द्धनगुहायाञ्च शुद्धभावं चेच्चेतस्तदा तेन प्रेक्षणीयं जालरन्ध्राद्वहिः स्थित्वैव द्रष्टुमर्हम्। ईहितं क्रीडाचेष्टितं यस्य तम् ॥ १९ ॥ ॐ ॐ समग्रध्यानमुक्त्वा एकैकावयवध्यानमाह। तस्मिन् भगवद्विग्रहे ॥ २० ॥ ॐ ॐ पादादिक्रमेणैकैकावयवध्यानमाह। वज्रेति। दक्षिणचरणतलध्यानं तस्यैव कल्पतरुमूले तिष्ठतस्त्रिभङ्गललितस्य कृष्णस्य भक्तैर्दृश्यत्वात् तस्य दक्षिणचरणस्य कनिष्ठातलेऽङ्कुशं ध्यायेत् अङ्कुशतले वज्रम् अनामिकातले सरोरुहं सरोरुहतले ध्वजम्। एवमङ्गुष्ठतले यवचक्रादिकं ज्ञेयम्। एतैर्लाच्छनैश्चिह्नैराढ्यमन्धकारं पापम् ॥ २१ ॥ ॐ ॐ चरणारविन्दस्य माधुर्यमुक्त्वा ऐश्वर्यमाह। यस्य शौचेन क्षालनेन निःसृता या सरित्प्रवरा गङ्गा तस्या उदकेन मूर्ध्नि आधिक्येन कृतेन यद्वा मूर्ध्नि धर्त्तुमधिकृतेन अधिकारेण प्राप्तेन शिवोऽपि शिवोऽभूदद्यैवाहं शिवोऽभूवमित्यभिमन्यते स्मेत्यर्थः। ध्यातुर्जनस्य मनःशमलानि रागद्वेषादीनि तेष्वेव शैलेषु निसृष्टं स्वलाञ्छनरूपं वज्रं येन तत् एवमेव यच्चरणारविन्दम्। ध्यातुर्भक्तस्य मनोहस्तिनं स्ववर्त्मन्यानेतुमङ्कुशं धत्ते मनःसरसीमलं कर्त्तुं कमलं मनसे सर्व्वोत्कर्षसाम्राज्यं दातुं ध्वजं सर्व्वोत्कृष्टयशो दातुं यवं त्रिविधतापोपशमनाय छत्रं सर्व्वतो रक्षणार्थं चक्रादिकमपि धत्ते इत्यपि ज्ञेयम् ॥ २२ ॥ ॐ ॐ शयानं ध्यायेदित्युक्तमतः शेषपर्य्यङ्के शयानस्य विभोर्जानुद्वयं तत्पर्यन्तं जङ्घाद्वयं हृदि कुर्य्यात् यत् खलु अखिलस्य विधातुर्ब्रह्मणः जनन्या लक्ष्म्या सम्वाहनचातुर्य्यवतोः करपल्लवयोः रोचिषा अरुणिम्ना पीतिम्ना च संलालितं शोभितीकृतं जलजलोचनयेति तल्लोचनाभ्यां निर्बाधमेवास्वादितलावण्यमित्यर्थः। एवमेव जङ्घयोर्जानुनोश्च माधुर्य्यमैश्वर्य्यञ्चैवमग्रेऽपि ज्ञेयम्। अभवस्य न विद्यते भवो यस्मात्तस्य ॥ २३ ॥ ॐ ॐ व्रजन्तं ध्यायेदित्युक्तमतः पृथुध्रुवादिभ्यो वरं दातुं गच्छतो गरुडारूढस्य हरेरूरुद्वयं हृदि कुर्य्यात् भुजयोरधि उपरि स्कन्धयोरित्यर्थः। नितम्बबिम्बं नितम्बमण्डलम् ॥ २४ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः।

शश्वत्सर्वदा अपीच्यं सुन्दरं दर्शनं यस्य भृत्येषु अनुग्रहेण कातरं व्यग्रम् ॥ १७ ॥ ॐ ॐ कीर्तन्यं कीर्तनार्हं तीर्थं पावनं यशो यस्य यावन्मनो न च्यवते तावदेवं समग्राङ्गं ध्यायेत् ॥ १८ ॥ ॐ ॐ उत्तिष्ठन्तं गच्छन्तमुपविष्टं शयानं वा स्वेच्छानुसारेण हृदि ध्यायेदित्याह। स्थितमिति ॥ १९ ॥ ॐ ॐ एवं समग्राङ्गध्यानमुक्त्वा एकैकाङ्गध्यानमाह। तस्मिन्निति। तस्मिन् भगवति लब्धं पदं स्थितिर्येन तत् चित्तं विलक्ष्य विशेषेण लक्ष्यीकृत्य भगवत एकस्मिन् अङ्गे सम्यक् योजयेत् ॥ २० ॥ ॐ ॐ तदेवाह। सञ्चिन्तयेदिति त्रयोदशभिः। वज्रादिलाञ्छनैराढ्यं युक्तम्। उत्तुङ्गाश्च रक्ताश्च ये विलसन्तो नखास्तेषां चक्रस्य समूहस्य बालज्योत्स्नाभिः नूतनचन्द्रिकाभिः आहतो महतां ध्यातॄणां हृदयान्धकारो येन तत् ॥ २१ ॥ ॐ ॐ मूर्ध्न्यधिकृतेन मस्तकेन भक्त्या धृतेन मनःशमलशैलेषु मनोगतपापपर्वतेषु निसृष्टं स्वलाञ्छनरूपं वज्रं येन तत् ॥ २२ ॥ ॐ ॐ नास्ति भवः संसारो ध्यातॄणां यस्मात्तस्य ॥ २३ ॥ ॐ ॐ भुजयोर्विषये अधि अधिकं शोभमानौ अतसिकाकुसुमस्येवावभासो ययोस्तौ ओजोनिधी अपरिमितबलनिधी विभो ऊरू तथा व्यालम्ब आगुल्फं लम्बमानं यत्पीताम्बरं श्रेष्ठं वासस्तस्मिन् वर्तमानेन काञ्चीकलापेन परिरम्भः संश्लेषो विद्यते यस्य तत् नितम्बबिम्बं च हृदि कुर्यात् ॥ २४ ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

अपीच्यं सुन्दरं दर्शनं यस्य। स्त्रीणामपि स्वासक्त्या मोक्षदायी। दर्शनेनैव परमानन्दजनकं च। भगवदनुभव आनन्दविनाभूत इति च सूचितम्। शश्वदिति। वयोवृद्धत्वादिना कदाचिदप्यन्यथा दर्शनं निवारितम्। सर्वलोकनमस्कृतं सर्वप्रमाणसिद्धम्। सर्वरूपं च। कैशोरे वयसि सन्तमिति। दशमवर्षमारभ्य षोडशवर्षपर्यन्तं किशोरावस्था। रसप्रादुर्भावस्तावद्दूरे। अग्रे

लावण्यस्य ह्रासः । अनेन देवोत्तमत्वमुक्तम् । भृत्येष्वनुग्रहार्थं कातरं व्यग्रम् । फलदानावश्यकत्वं सूचितम् । कीर्तनीयं तीर्थरूपं यशो यस्य । भगवानतिकृपालुः; यतः स्वस्य कीर्तिं कीर्तनीयां तीर्थरूपां च कृतवान् । लोके सन्ति तीर्थानि पापनिवर्तकानि, न तु तेषां सम्बन्ध आवश्यकः । उक्तिविशेषवाक्यानि कीर्तनीयानि भवन्ति । सर्वोऽपि रसाविष्टः कीर्तयति । सर्वपापनाशकं सर्वफलदात् चेन्नि'त्यसम्बद्धं भवेत्, सर्वोऽपि कृतार्थः स्यात् तादृशी च कीर्तिः । किञ्च, स्वकीयानामपि तादृशीं कीर्तिं सम्पादयतीत्याह—पुण्यश्लोकयशस्करमिति । पुण्याः श्लोकाः कीर्तिर्येषां भक्तानाम्, तेषामपि स्वसमानतां सम्पादयतीत्यशस्करः । एवं विंशतिधर्मात्मा ध्येयो हरिरिहोदितः । एकविंशो हि पुरुषः; विंशत्यङ्गुलयः, आत्मैकविंश इति । एते ध्येया धर्मा विंशतिः, स्वयं भगवानेकविंशः । एवमेतादृशं भगवन्तं निरूप्य तत्र कर्तव्यमाह—ध्यायेद्देवमिति । एवं समग्राङ्गं सर्वावयवपूर्णं ध्यायेत् । यावन्मनः एकमप्यवयवं न त्यजति, सम्पूर्णमेव रूपं स्फुरति, तावदेव ध्यायेदित्याह—यावन्न च्यवते मन इति । यावत् सम्पूर्णादङ्गात् न च्यवते नाऽपगच्छति । मनस्तु चञ्चलं नैकत्र स्थिरमिति तथोक्तम्, अन्यथा मुख्ययोगे सर्वदैव स्थिरं भवेत् ॥ १७ ॥ १८ ॥ ❀ ❀ अवस्थासु विकल्पमाह—स्थितमिति । स्थितमुत्थितं वा ध्यायेत्; व्रजन्तं वा; आसीनमुपविष्टम्; शयानं वा । चतुर्विधोऽपि गुहाशय एव, स्वहृदय एव । सर्वतो विलोकनार्थमुत्थितः, कार्यकरणार्थं चलति, पूजां गृह्णन्नुपविशति, कृतकार्यश्च शेते । किञ्च, प्रेक्षणीये हितो भगवान् ध्येयः प्रेक्षणीयमीहितं यस्य । चेष्टाऽपि भगवानिव प्रेक्षणीया । तेन भगवतः क्रीडा; बालैर्गोभिर्गोपालैर्गोपिकाभिरन्यैश्च नानाविधाः क्रीडाः, अपि ध्येया इत्युक्तम् । तत्र क्रीडासु तत्तद्रागेण स्वकामादिनाऽपि ध्यानं सम्भवतीति तन्निवृत्त्यर्थमाह—शुद्धभावेन चेतसेति । शुद्धो भावो यस्य चेतसः, सर्वकामनादिदोषरहितेन । एषा हि धारणा निरूपिता ॥ १९ ॥ ❀ ❀ एकैकावयवस्य रसं ज्ञातुं ध्यानं निरूपयति—तस्मिँल्लब्धपदमिति । तस्मिन् सम्पूर्णे, लब्धपदम्, तत्र स्थिरीभूतं चित्तं सर्वावयवेषु सुप्रतिष्ठितं विलक्ष्य ज्ञात्वा, व्यतिरेकतया वा लक्षयित्वा, भगवतः किञ्चिन्न्यूनं ज्ञात्वा एकस्मिन्नेवाऽङ्गे संयुञ्ज्यात् । यतोऽयं मुनिः, युक्त्यैव पदार्थान् स्थिरीकृत्य ध्यायति । अतोऽत्राऽप्येकैकस्यावयवस्य माहात्म्यं ज्ञात्वाज्ञात्वा सर्वज्ञानं करिष्यतीति भावः । तदेकमेकमङ्गं निरूपयति त्रयोदशभिः, मतान्तरत्वात् संवत्सरात्मकः स इति ॥ २० ॥ ❀ ❀ अतिक्रमस्य वक्तव्यत्वात्तत्र प्रथमं चरणारविन्दं तद्गुणाविष्कारेण वर्णयति—द्वाभ्याम्, स्वतः कार्यतश्च माहात्म्यप्रतिपादनेन । तत्र प्रथमं स्वतो माहात्म्यमाह—सञ्चिन्तयेदिति । भगवतश्चरणारविन्दं सम्यक् चिन्तयेत् । सम्यक्त्वं दीर्घकालादरनैरन्तर्यम्, माहात्म्यज्ञानपूर्वकत्वं च । चरणो भक्तिप्रतिपादकः, अरविन्दं सर्वतापनाशकम् । वज्राङ्कुशध्वजसरोरुहलाञ्छनाढ्यम् । चिह्नचतुष्टयेनाढ्यं सम्पन्नम् । भक्तानां पापपर्वतपक्षच्छेदनार्थं वज्रः; भक्तानां मनोगजवशीकरणार्थमङ्कुशम्; अत्र स्थितानां सर्वभयनाशनज्ञापनार्थं ध्वजः 'सुखसेवार्थं चाम्बुजम् । एतानि लाञ्छनानि चिह्नानि चतुर्विधपुरुषार्थज्ञापकानि एतादृशान्यनन्तानि चिह्नानि सन्तीति आढ्यतां ज्ञापयति । अनेन भजनीया गुणा उक्ताः फलदातारः । दोषनिवर्त्तकानाह—उत्तुङ्गेति । उत्तुङ्गानि रक्तानि यानि विलसन्ति नखानि, तेषां चक्रवालं मण्डलम्; तस्य ज्योत्स्नाभिराहतो महतां हृदयान्धकारो येन । बहिःस्थितेन प्रकाशेन नाऽन्तःस्थितोऽन्धकारोऽपगच्छति । महतां चाहङ्काराधिक्यम्; तत्रत्यश्चान्धकारः अवश्यं दूरीकर्तव्यः । स च नैकेन चन्द्रमसा भवति, सौरश्च प्रकाशस्तापजनकः; तेन दशनखात्मकाश्चन्द्रा दशावस्थासु सर्वदोषनिवारकाः । उत्तुङ्गा ऊर्ध्वतुङ्गाः, अतितुङ्गेऽप्यहङ्कारे विद्यमानमज्ञानं नाशयन्ति । रक्तास्तदर्थमेवोद्यन्तः, उद्यन्तश्चारक्ता भवन्ति । विलासयुक्तत्वात् नियतमप्यावरणं दूरीकुर्वन्ति; यथा कामिन्यावरणं कामुकः स एव विलासः । चन्द्रा भवन्ति; परं नखाः, न विद्यते खमाकाशं येषाम् । एक एव चन्द्र आकाशे भासते, एते तु नाऽऽकाशसम्बन्धिनः । एतेषां चक्रमायुधबालममृतपोषकम्; न तु केवलमन्धकारमेव नाशयति । वममृतमलं यत्रेति वा कलङ्करहितम् । ज्योत्स्नाभिरिति बहुवचनं नानाविधान्धकारनिवृत्त्यर्थम्; अनेन स्वत आनन्दरूपता, अज्ञाननिवृत्त्या च आनन्ददायकत्वं निरूपितम् ॥ २१ ॥ ❀ ❀ एवं स्वरूपोत्कर्षमुक्त्वा कार्यत उत्कर्षमाह—यच्छौचेति । भगवतश्चरणे पदार्थद्वयं परममाहात्म्यसूचकमस्ति—गङ्गा, भक्तिरसश्चेति । तत्र गङ्गाया माहात्म्यं प्रायश्चित्तानधिकृतानपि सर्वपूज्यान् करोति । तदाह—ययोश्चरणयोः शौचे प्रक्षालने सति निःसृतम्, यज्जलम्, तत् सरित्प्रवरा जाता । सरितां मध्ये गङ्गा श्रेष्ठा, तस्या यदुदकमेकदेशः; तेनापि मूर्ध्नि निहितेन अधिकारवत्प्राप्तेन, शिवः परमकल्याणरूपोऽपि, शिवोऽभूत् । यस्तु साधनेन सिद्धमेव स्वस्वरूपं प्राप्नोति, स आधिदैविकं प्राप्नोतीत्यध्यवसीयते । अपहतपाप्मन एवैतत्सामर्थ्यमाधिदैविकत्वप्रापणम् । यथा "स वाचमेव प्रथममत्यमुच्यत, स वागग्निरभवत्" इति । एवं शिवोऽपि स्वां देवतां प्राप्तवान्, अन्यथा भगवत इव तस्य स्वतन्त्रता न स्यात् प्रमाणादिचतुष्टयेनाऽपि । अतो गङ्गा स्वस्याऽऽधिदैविकं रूपं प्रापयतीति, चरणसम्बन्धिनामपि यत्रैतन्माहात्म्यम्, तत्र साक्षाच्चरणस्य ध्यातस्य तथात्वसम्पादकत्वं किं वक्तव्यमिति भावः । एतच्च गङ्गाया माहात्म्यं न गङ्गाजलस्थम्; नाऽपि तदभिमानिन्या देवतायाः; शिवापेक्षया अन्येषामचेतनाधिष्ठातृदेवतानां हीनत्वात्; किन्तु भगवच्चरणस्थमलस्यैतन्माहात्म्यम् । तानि रजांसि पूर्वं निरूपितानि भक्तानां पुण्यसंस्कृतभौतिकानीति । तानि चरणस्य मलरूपाण्येव भवन्ति, अन्यथा सेवकरूपदेहोत्पत्तिर्न स्यात् । अत एतज्जलं शौचे,

---

१. सत् क. घ. ङ. । २. सेव्यार्थम् क. ख. ङ. च ।

पादप्रक्षालने सति, तद्रजःसहितं निःसृतम्। महत्त्वात् रजःसम्बन्धात् देवताशरीरं तज्जातमित्याह—सरित्प्रवरेति। निःसृता सरित्प्रवरा जाता। सर्वभक्तोद्धारार्थे उपायभूता। सा चेद्रजोविशिष्टा धृता स्यात्, तदा भक्तानां देहोत्पत्तिर्न स्यादित्युदकमेव निरूपितम्। तस्मिन्नुदके रजःसामर्थ्याभावे शिवत्वसम्पादकत्वं न स्यादित्याशङ्क्य तीर्थत्वमाह—तत्साधारणमेव सर्वजगतामाधिदैविकत्वसम्पादनरूपं तीर्थं जातम्। नन्व[1]नेन जलेन आधिदैविकत्वमेव कुतः सम्पादितम्? 'यावदस्थि मनुष्याणाम्' इत्यादिवाक्यैः फलसाधकत्वं च श्रूयते। तत्राऽऽह—मूर्ध्न्यधिकृतेनेति। उत्तमाङ्गं शिरः, [2]स्वमस्तके तज्जलमधिकारि कृतवान्। अत उत्तमाङ्गे स्वस्य सर्वाधिकारं दत्त्वा स्थापितवतः साधारणं फलं प्रयच्छति; सर्वस्वनिवेदने आधिदैविकत्वप्रापणमेव युक्तम्। शिवत्वादेव न पापादिसम्बन्धः। अमङ्गलरूपस्यैव भजनीयत्वात् नाऽपि तद्रूपनिवृत्तिः। अत आधिदैविक एवाऽयं जातः। माहात्म्यान्तरमाह—ध्यातुर्मन इति। यो ध्यायति तस्य मनसि ये शमलशैलाः पापपर्वताः, तेषामर्थे निसृष्टो वज्रो येन। भगवतश्चरणे ये वज्रादयो निर्मिताः, तत्र स चरणो ध्याने परमासक्तियुक्तः, तान् प्राणिनः पापेनाऽतिगुरुतरान् मत्वा, बहुजन्मार्जितपापपर्वतान् दूरीकरोति। अनेन भक्त्यधिष्ठात्री देवतेयमिति निरूपिता। पक्षपातोऽपि निरूपितः। एवमङ्कुशादिकार्यमपि करिष्यतीति सूचितम्। मनःपदेन ध्यानस्य तत्र सम्बन्धात् सम्बन्धिन एव पापं नाशयतीति तथोक्तम्; न तु देहपापं नाशयतीति। देहस्याऽग्रे गमनापेक्षाभावाच्च। पापानामतिदार्ढ्यप्रचयात् पर्वतत्वम्। एवं भगवतश्चरणमाहात्म्यं ज्ञात्वा चरणं ध्यायेत्। चिरध्याने मनसोऽप्याधिदैविकत्वमापद्येत। उपसंहारेऽपि भगवतश्चरणारविन्दकीर्तनं मध्ये पदार्थान्तरध्यानव्यावृत्त्यर्थम्। प्रत्येकध्यानानि गुरुध्यानं वा निवारितम् ॥ २२ ॥ ❀ ❀ चरणध्यानानन्तरं जानुद्वयं ध्यायेदित्याह—जानुद्वयमिति। जानुद्वयस्य माहात्म्यं सर्वजगत्फलरूपाया ब्रह्मानन्दरूपायाश्च सेवकत्वेन। यथा वा सुवर्णे मरकतमणिर्योजितः स्वरूपतोऽपि सुन्दरो भवति। जानुद्वयस्योर्वोर्निरूपणात् शयानो भगवान् लक्ष्यते, शय्यागता च लक्ष्मीः। अनेन तस्यामनुग्रहोऽपि सूचितः। अतस्तज्जनितश्रमस्तयैव दूरीकर्तव्यः। जलजलोचनयेति कमलनयनया तद्रससौन्दर्यनिरूपणायोक्तम्। दोषाभावाय तथात्वप्रयोजनाय चाऽऽह—अखिलस्य जनन्येति। अन्यथा जगत्सृष्टिर्न स्यात्। 'मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहम्। सम्भवः सर्वभूतानां ततो भवति भारत' इति भगवद्वाक्यात्। लक्ष्म्येति सा ज्ञानशक्तिरित्यपि सूचितम्, लक्षधातुनिष्पन्नत्वात्। अनेन मातापित्रोर्ध्यानं निरूपितम्। तस्या ध्यानं योगिनो न कर्तव्यमिति शङ्कायामाह—सुरवन्दितयेति। सर्वदेवैर्वन्दिता सा परमा देवता; अतो ध्येया देवता; ध्यानाभाव इष्टसिद्धिर्न स्यादिति। ऊर्वोरुभयोर्निधानं लक्ष्म्याः कृतकृत्यताभावनार्थम्, स्नेहाधिक्यैक्यभावनार्थं च। निधायेति भगवच्छयनं लक्ष्यते; भगवदपेक्षाभावो वा। करपल्लवा अङ्गुलयः, तेषां रोचिर्दीप्तिः; लीलया शनैः स्थापनम्, अन्यथा भगवज्जान्वपेक्षया ऊरुकरपल्लवयोः कठिनत्वात् पीडा स्यात्। यथा शीतलस्पर्शेन तापो गच्छति, तथा हस्तानन्दस्याऽन्तःप्रवेशेनैव श्रमो गच्छतीत्यर्थः। यत् प्रसिद्धं जानुद्वयम्, एतद्धृदये भाव्यमिति; न तु बहिःस्थितं मनसा स्मर्तव्यम्। नन्वल्पे हृदये कथमेषा भावना भविष्यतीत्याशङ्क्याऽऽह—विभोरिति। स हि समर्थो ध्यातो हृदयं पुष्कलं कर्तुं समर्थः। ननु संसार एव निरूपणात् किमेतादृशेन ध्यानेनेत्याशङ्क्याह—अभवस्येति। न विद्यते भवः संसारो यस्मात्। यो हि भगवद्धर्मः सजातीयः, स तस्याऽऽधिदैविक इति तन्नाशसमर्थो भवति। यथा तस्याऽरणेरेव तत्रोत्पन्नोऽग्निर्दाहको भवति, न ह्यन्यो विजातीयं दहति। अत एव पुराविदां वचनम् 'स्तेयं हरेर्रति यन्नवनीतचौर्यम्' इति ॥ २३ ॥ ❀ ❀ तत[3] ऊरू ध्यायेदित्याह—ऊरू इति। गच्छन् भगवान् गरुडाधिरूढो ध्येयः। गरुडपृष्ठे उपविष्टः, स्कन्धयोर्लम्बितपादः, गरुडहस्तयोः स्थापितचरणो यो भगवान्, तस्य ऊरू ध्येयौ। सुपर्णभुजयोरध्युपरि अधिकं शोभमानौ। यथा दिव्येन्द्रनीलमणेरधिकः प्रकाशो भवति, तथा ओजोनिधी। अतसिकापुष्पवदवभासो ययोः। नितम्बबिम्बमपि ध्येयमित्याह—व्यालम्बीति। विशेषेण आलम्बि[4] यत्पीतम्, वरमुत्कृष्टं वासः; तस्मिन् वर्तमाना या काञ्ची, तस्याः कलापः समूहः; बहुसूत्रनिर्मितत्वात्, चित्ररूपाणि वा; मयूरकलापसदृशपदकयुक्ता वा काञ्ची। तस्याः परिरम्भयुक्तं नितम्बबिम्बं यस्य। गरुडो हि कालात्मा, ऊरू च दैत्योत्पत्तिस्थानभूतौ। तेषामाधिदैविकमूरुद्वयम्, तत्कालाधीनगतिमत्। कालस्य स्कन्धद्वयम्—कर्मस्वभावौ। कालस्याऽप्ययं गरुड आधिदैविकः; अत एव सुपर्णत्वम्। अधिकशोभमानत्वं कालकर्मस्वभावोपमर्दनेन। तद्भावनायां स्वस्याऽपि तथात्वं भविष्यति; यथा संसारनिवृत्तिः पूर्वं फलति, तथाऽत्र स्वभावादिजयः। सुपर्ण एव स्थितमिति नितम्बबिम्बं मुख्यतया कालातिक्रमहेतुः। अनेन विश्वातिक्रमोऽपि विश्वरूपभगवद्भा[5]वतयेत्युक्तम्। वेदैश्च कालातिक्रमरूपमाच्छादितम्। वेदव्यवहितमेव यज्ञादिकं कालसंबद्धं भवतीति कर्मणां कालोपाधिकत्वम्। अहोरात्रातिक्रमोऽग्निहोत्रेण; मासातिक्रमो दर्शपूर्णमासाभ्याम्; एवमृत्वतिक्रमश्चातुर्मास्यैः; अयनातिक्रमः पशुना; वर्षस्याऽतिक्रमः सोमेनेति। जगज्जननहेतुस्थानं च; तद्ध्यानेनैव जगति जन्मातिक्रमश्च। ओजोनिधित्वं तेजसोऽतिक्रमाय। अतसिका पृथिवीजलात्मिका, तत्र यो नीलो भावः पुष्पस्य, तत्पृथिव्याः; यः शुक्लः स जलस्य; अतस्तत्पुष्पावभासत्वं तदुभयातिक्रमाय। भगवांस्तु सर्वैरेवोपमीयत इति न प्राकृतोपमादोषः। विशेषेण पीताम्बरस्य लम्बता आच्छादनाधिक्यख्यापनाय। वेदो हि बहुपरिकरो भवतीति। पीतो ह्यर्थो धर्मसहितः; स श्रुति[6]रूपो भवतीति अग्निवेदाभ्यां कर्म साध्यते। आवरकसौन्दर्येणैव

---

१. एतेन क. ङ. । २. स्वयम् ग. । ३. अन्तरा क. । ४. तथा ङ. । ५. आलम्बम्. ख. ग. । ६. भावनया ख. । ७. कृति ङ. ।

व्यामोहार्थं वरत्वम्। वासश्चाऽऽच्छादकम्; तत्रैव माया व्यामोहयति। काञ्ची माया; कलापो जगद्वैचित्र्यम्; तत्परिरम्भो जगद्वैचित्र्यजननार्थम्। बिम्बत्वमाधिदैविकत्वख्यापनार्थम्॥ २४॥

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

तस्मिन्नित्यत्र। त्रयोदशसङ्ख्यातात्पर्यमाहुः—मतान्तरत्वादित्यादि। भक्तौ तु भगवानेव फलभूत इति समग्र एव ध्येयः, इह तु चित्तशोधनोपायभूतः कालात्मक इति तथात्वज्ञापनाय तथेत्यर्थः॥ २०॥ ❀ ❀ सञ्चिन्तयेदित्यत्र। नखानां चन्द्रत्वं ज्योत्स्नापदप्रयोगसूचितं बोध्यम्॥ २१॥ ❀ ❀ यच्छौचेत्यत्र। ययोश्चरणयोरिति द्विवचनेन बलिकृतं चरणक्षालनं सूच्यते। तेन तद्यज्ञवाटसम्बन्धिनार्मदजलेऽपि पावनत्वं सिध्यति; तेन दर्शनादेव नार्मदमित्यादीनां संगतिः। अपहतपाप्मन एवाऽऽधिदैविकप्रापकत्वे गमकमाहुः—यथेत्यादि। स्वस्याऽऽधिदैविकं रूपमिति शिवस्य परमशिवरूपम्। तेन मोक्षधर्मे छन्दोगानां प्रपदनमन्त्रे च ब्रह्मपुत्रत्वेन नमकमन्त्रेषु मन्युत्वादिना सिद्धस्य यद्ब्रह्माभिन्नत्वमर्थशिरःप्रभृतिषूक्तम् तत्परमशिवत्वं गङ्गासम्बन्धादेवेत्यर्थः। पूर्वमिति। प्रथमस्कन्धे 'या वै लसच्छ्रीतुलसीविमिश्र' इत्यत्र। धृता स्यादिति शिवेन धृता स्यात्। न मुक्तावपि॥ २२॥ ❀ ❀ ऊरू इत्यत्र। तेषामिति कालाद्युपमर्दकत्वम्। तदाहुः—यथेत्यादि। वेदैश्चेत्यादिना पीताम्बरतात्पर्यमुक्तं ज्ञेयम्। कालातिक्रमरूपमिति। कालस्याऽतिक्रमो येन तादृशं रूपम्। तत्प्रकारमाहुः—वेदेत्याद्यतिक्रमायेत्यन्तेन। स्थानं चेति। ध्येयमिति शेषः॥ २४॥

### श्रीगिरिधरकृता बालप्रबोधिनी।

अपीच्यमतिसुन्दरं भक्तविषयदर्शनं यस्य तम्। शश्वत्सर्वदा सर्वलोकैर्नमस्कृतम्। कैशोरे तारुण्ये वयसि सन्तं स्थितम्। दशवर्षमारभ्य षोडशवर्षपर्यन्तं कैशोरं बोध्यम्। भृत्यानां भक्तानामनुग्रहे कातरं व्याकुलम्॥ १७॥ ❀ ❀ कीर्त्तन्यं मनोरमत्वेन कीर्त्तनार्हं तीर्थं सर्वदोषनिवर्त्तकं यशो यस्य तम्। पुण्याः श्लोकाः कीर्त्तयो येषां बलिभीष्मादीनां तेषां यशस्करम्। यावत् समग्राङ्गान्मनो न च्यवते नापगच्छति तावत् समग्राण्यङ्गानि यस्मिंस्तमेवम्भूतं भगवन्तं ध्यायेत्॥ १८॥ ❀ ❀ एवं 'हृदयाम्भोजविष्टरं' इत्यनेन हृदये एवम्भूतं ध्यायेदित्युक्तं, इदानीं रुच्यनुसारेण लीलाविशिष्टं रामकृष्णादिरूपमपि ध्येयमित्याह–स्थितमिति। उत्थाय स्थितं व्रजन्तं वृन्दावनादिषु विहरन्तम्। गोवर्द्धनादिष्वासीनमुपविष्टं वा शेषशय्यायां पल्लवादिशय्यायां वा शयानं गोवर्द्धनगुहायां वा शयानं प्रेक्षणीयमीहितं लीला यस्य तं शुद्धभावेन फलसङ्कल्परहितप्रेमयुक्तेन चेतसा ध्यायेत्॥ १९॥ ❀ ❀ तदेवं समग्राङ्गध्यानमुक्त्वा एकैकावयवध्यानमाह—तस्मिन्निति। तस्मिन् भगवद्विग्रहे लब्धं पदं स्थिरीभूतं तत्रापि सर्वावयवेषु संस्थितं प्रतिष्ठितं स्वचित्तं विलक्ष्य ज्ञात्वा मुनिः योगी भगवत एकत्रैकस्मिन्नेकस्मिन्नङ्गे संयुञ्ज्यात्॥२०॥ ❀ ❀ एतदेव दर्शयति—सञ्चिन्तयेदिति त्रयोदशभिः। भगवतश्चरणारविन्दं सम्यक् चिन्तयेत्। तच्चिन्तनफलं सूचयन् विशिनष्टि—वज्रेति। रेखात्मकवज्रादिलाञ्छनाढ्यं चिह्नचतुष्टयसम्पन्नम्। तत्र ध्यातॄणां पापपर्वतविदारणार्थं वज्रः, मनोगजवशीकरणार्थमङ्कुशः, त्रिविधतापविनाशनार्थं ध्वजः, सुखसेव्यत्वार्थं चाब्जमिति ज्ञेयम्। उत्तुङ्गाश्च रक्ताश्च विलसन्तो ये नखास्तेषां चक्रवालं मण्डलं तस्य ज्योत्स्नाभिराहतो महतां ध्यातॄणां हृदयान्धकारोऽविद्यालक्षणो येन तत्। एतच्च सर्वं चरणादिविशेषणमपि ध्येयत्वेनैवोच्यते॥ २१॥ ❀ ❀ किञ्च यस्य चरणारविन्दस्य शौचेन प्रक्षालनजलेन निस्सृतायाः प्रवृत्तायाः सरित्प्रवरायाः गङ्गायाः उदकेन तीर्थेन संसारतारकेण मूर्धनि अधिकृतेन धृतेन शिवः मङ्गलरूपो जगद्वन्द्यो महादेवोऽपि शिवोऽभूत्। आत्मानं कृतकृत्यममन्यत, ध्यातुर्मनसि यः शमलशैलः पापपर्वतः तस्मिन्निसृष्टं निक्षिप्तं वज्रं स्वलाञ्छनरूपं येन तत्। भगवतश्चरणारविन्दं चिरं दीर्घकालादनैरन्तर्यमाहात्म्यज्ञानपूर्वकं ध्यायेत्॥ २२॥ विभोर्महतो भगवतो जानुद्वयं तत्पर्यन्तं जङ्घाद्वयं हृदि कुर्यात् ध्यायेदित्यन्वयः। तस्य माहात्म्यातिशयं सूचयन् विशिनष्टि—जलजलोचनया कमलनेत्रया लक्ष्म्या स्वस्या ऊर्वोर्निधाय करपल्लवरोचिषा प्रकाशमानकरपल्लवेन सँल्लालितं स्पर्शचातुर्येण यत् संसेवितं तदिति। तत्सेवनेऽपि किमित्यत आह—सुरवन्दितयेति। तत्र हेतुमाह—अखिलस्य जगतो विधातुः स्रष्टुर्ब्रह्मणो जनन्येति। तद्ध्यानफलं सूचयन् विशिनष्टि—अभवस्येति, भवः संसारस्तन्निवर्त्तकस्येत्यर्थः॥ २३॥ ❀ ❀ व्रजन्तं ध्यायेदित्युक्तं तत्र वरं दातुमागच्छतो गरुडारूढस्योरुद्वयध्यानमाह—ऊरू इति। सुपर्णस्य गरुडस्य भुजयोः स्कन्धयोरधि उपरि शोभमानौ ओजसो बलस्य निधी आश्रयौ अतसिकाकुसुमकान्तिवत् कान्त्या भासमानौ विभोरूरू हृदि कुर्यादिति पूर्वेणान्वयः। तथा आलम्बि आगुल्फं लम्बमानं यत्पीतं वरं श्रेष्ठं वासस्तस्मिन् वर्तमानो यः काञ्चीकलापस्तेन परिरम्भः संश्लेषो विद्यते यस्य तद्विभोर्नितम्बबिम्बं हृदि कुर्यादित्यन्वयः॥ २४॥

### हिन्दी अनुवाद

उनकी अति सुन्दर किशोर अवस्था है, वे भक्तोंपर कृपा करनेके लिए आतुर हो रहे हैं। बड़ी मनोहर झाँकी है। भगवान् सदा सम्पूर्ण लोकोंसे वन्दित हैं॥ १७॥ ❀ ❀ उनका पवित्र यश परम कीर्तनीय है और वे राजा बलि आदि

परम यशस्वियोंके भी यशको बढ़ानेवाले हैं। इस प्रकार श्रीनारायणदेव का सम्पूर्ण अङ्गोंके सहित तब तक ध्यान करे, जबतक चित्त वहाँसे हटे नहीं ॥ १८ ॥ ❁ ❁ भगवान्की लीलाएँ बड़ी दर्शनीय हैं; अतः अपनी रुचिके अनुसार खड़े हुए, चलते हुए, बैठे हुए, पौढ़े हुए अथवा अन्तर्यामीरूपमें स्थित हुए उनके स्वरूपका विशुद्ध भावयुक्त चित्तसे चिन्तन करे ॥ १९ ॥ ❁ ❁ इस प्रकार योगी जब यह अच्छी तरह देख ले कि भगवद्विग्रहमें चित्तकी स्थिति हो गयी, तब वह उनके समस्त अङ्गोंमें लगे हुए चित्तको विशेष रूपसे एक-एक अङ्गमें लगावे ॥ २० ॥ ❁ ❁ भगवान्के चरणकमलोंका ध्यान करना चाहिये। वे वज्र अङ्कुश, ध्वजा और कमलके मङ्गलमयचिह्नोंसे युक्त हैं तथा अपने उभरे हुए लाल-लाल शोभामय नखचन्द्र-मण्डलकी चन्द्रिकासे ध्यान करनेवालोंके हृदयके अज्ञानरूप घोर अन्धकारको दूर कर देते हैं ॥ २१ ॥ ❁ ❁ इन्हींकी धोवनसे नदियोंमें श्रेष्ठ गङ्गाजी प्रकट हुई थीं, जिनके पवित्र जलको मस्तकपर धारण करनेके कारण स्वयं मङ्गलरूप श्रीमहादेवजी और भी अधिक मङ्गलमय हो गये। ये अपना ध्यान करनेवालोंके पापरूप पर्वतोंपर छोड़े हुए इन्द्रके वज्रके समान हैं। भगवान्के इन चरणकमलोंका चिरकालतक चिन्तन करे ॥ २२ ॥ ❁ ❁ भवभयहारी अजन्मा श्रीहरिकी दोनों पिंडलियों एवं घुटनोंका ध्यान करे, जिनको विश्वविधाता ब्रह्माजीकी माता सुरवन्दिता कमललोचना लक्ष्मीजी अपनी जाँघोंपर रखकर अपने कान्तिमान् करकिसलयोंकी कान्तिसे लाड़ लड़ाती हैं ॥ २३ ॥ ❁ ❁ भगवान्की जाँघोंका ध्यान करे, जो अलसीके फूलके समान नीलवर्ण और बलकी निधि हैं तथा गरुड़जीकी पीठपर शोभायमान हैं भगवान्के नितम्बबिम्बका ध्यान करे, जो एड़ीतक लटके हुए पीताम्बरसे ढका हुआ है और उस पीताम्बरके ऊपर पहनी हुई सुवर्णमयी करधनीकी लड़ियोंको आलिङ्गन कर रहा है ॥ २४ ॥

नाभिह्रदं भुवनकोशगुहोदरस्थं यत्रात्मयोनिधिषणाखिललोकपद्मम् ।
व्यूढं हरिन्मणिवृ[1]षस्तनयोरमुष्य ध्यायेद् द्वयं विशदहारमयूखगौरम् ॥ २५ ॥
वक्षोऽधिवासमृषभस्य महाविभूतेः पुंसां मनोनयननिर्वृतिमादधानम् ।
कण्ठं च कौस्तुभमणेरधिभूषणार्थं कुर्यान्मनस्यखिललोकनमस्कृतस्य ॥ २६ ॥
बाहूंश्च मन्दरगिरेः परिवर्तनेन निर्णिक्तबाहुवलयानधिलोकपालान् ।
सञ्चिन्तयेद् दशशतारमसह्यतेजः शङ्खं च तत्करसरोरुहरा[2]जहंसम् ॥ २७ ॥
कौमोदकीं भगवतो दयितां स्मरेत दिग्धामरातिभटशोणितकर्दमेन ।
मालां मधुव्रतवरूथगिरोपघुष्टां चैत्यस्य तत्त्वममलं मणिमस्य कण्ठे ॥ २८ ॥
भृत्यानुकम्पितधियेह[3] गृहीतमूर्तेः सञ्चिन्तयेद्भगवतो वदनारविन्दम् ।
यद्विस्फुरन्मकरकुण्डलवल्गितेन विद्योतितामलकपोलमुदारनासम् ॥ २९ ॥
यच्छ्रीनिकेतमलिभिः परिसेव्यमानं भूत्या स्वया कुटिलकुन्तलवृन्दजुष्टम् ।
मीनद्वयाश्रयमधिक्षिपदब्जनेत्रं ध्यायेन्मनोमयमतन्द्रित उल्लसद्भ्रु ॥ ३० ॥
तस्यावलोकमधिकं कृपयातिघोरतापत्रयोपशमनाय निसृष्टमक्ष्णोः ।
स्निग्धस्मितानुगुणितं विपुलप्रसादं ध्यायेच्चिरं वि[4]पुलभावनया गुहायाम् ॥ ३१ ॥
हासं हरेरवनताखिललोकतीव्रशोकाश्रुसागरविशोषणमत्युदारम् ।
सम्मोहनाय रचितं निजमाययास्य भ्रूमण्डलं मुनिकृते मकरध्वजस्य ॥ ३२ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

अमुष्य हरेर्नाभिह्रदं ध्यायेत्। कथंभूतम्। भुवनानां कोशस्य समूहस्य गुहाधिष्ठानं यदुदरं तत्र स्थितम्। यत्र नाभिह्रदे आत्मयोनेर्ब्रह्मणो धिषणं धिष्ण्यमखिललोकात्मकं पद्मं व्यूढमुत्थितम्। तथा हरिन्मणिवृषौ मरकतमणिश्रेष्ठाविव यौ स्तनौ तयोर्द्वयं ध्यायेत्। विशदहाराणां मयूखैर्गौरं श्वेतम् ॥ २५ ॥ ❁ ❁ ऋषभस्य महाविभूतेर्महालक्ष्म्या अधिवासं स्थानं वक्षः कंठं

१. प्रा० पा०—मणिद्दशस्त०। २-३. प्राचीने पाठे '२' तः '३' चिह्नमध्यगतोंऽशः मूले खण्डितः टिप्पण्यां लिखितः। ४. प्रा० पा०—वितत.।

च मनसि कुर्यात् । कथंभूतं कंठम् । कौस्तुभमणिर्यो भूषणार्थं धृतस्तस्याधिकं भूषणमर्थः प्रयोजनं यस्य कौस्तुभमणिमेव स्वयमलंकुर्वंतमित्यर्थः । पुंसां स्मर्तृणां द्रष्टृणां च मनोनयनानां निर्वृतिमादधानमित्युभयोर्विशेषणम् ॥ २६ ॥ ❀ ❀ निर्णिक्तान्युज्ज्वलीकृतानि बाहुवलयान्यंगदानि येषु अधिश्रिता लोकपाला येषु दशशतारं चक्रम् । न सह्यं तेजो यस्य करसरोरुहे राजहंस इव तम् ॥ २७ ॥ ❀ ❀ अरातयो ये भटा योद्धारस्तेषां शोणितमेव कर्दमस्तेन दिग्धां लिप्ताम् । अस्य कंठे मालां मणिं च स्मरेत् । मधुव्रतानां वरूथस्य गिरा उपघुष्टां नादिताम् । चैत्यस्य जीवस्य तत्त्वम् । तदुक्तं वैष्णवे "आत्मानमस्य जगतो निर्लेपमगुणामलम् ॥ बिभर्ति कौस्तुभमणिं स्वरूपं भगवान् हरिः" इति ॥ २८ ॥ ❀ ❀ भृत्येष्वनुकंपिता कृतानुकंपा या धीस्तया गृहीता मूर्तिर्येन तस्य विस्फुरती ये मकरकुंडले तयोर्वल्गितेन प्रचलनेन विद्योतितावमलौ कपोलौ यस्मिंस्तत् । उदारा उन्नता नासा यस्मिंस्तत् ॥ २९ ॥ ❀ ❀ यच्च स्वया भूत्या शोभयाऽलिभिः परिसेव्यमानं मीनद्वयाश्रयं च श्रीनिकेतनं पद्ममधिक्षिपद्वर्तते तद्ध्यायेत् । तत्र कुंतलैरलीनामधिक्षेपः नेत्रद्वयेन मीनद्वयस्येति द्रष्टव्यम् । अब्जे इव नेत्रे यस्मिन्नित्युपमानांतरम् । उल्लसंत्यौ भ्रुवौ यस्मिन् मनोमयं मनस्याविर्भवत् ॥ ३० ॥ ❀ ❀ कृपयाऽधिकमत्यर्थम् । अक्षिभ्यां निसृष्टं प्रयुक्तम् । स्निग्धस्मितेनानुगुणितं संयुक्तम् । विपुलः प्रसादो यस्मिन् । गुहायां हृदि ॥ ३१ ॥ ❀ ❀ अवनता येऽखिललोकास्तेषां तीव्रशोकेन यान्यश्रूणि तेषां सागरं विशोषयतीति तथा तं हरेर्हासम् । अस्यात्युदारं भ्रूमंडलं च ध्यायेत् । कथंभूतम् । निजमायया मकरध्वजस्यापि संमोहनाय रचितं मुनिकृते मुनीनामुपकाराय मुनीनां संमोहने प्रवृत्तं काममेव संमोहयितुमित्यर्थः ॥ ३२ ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः ।

यद्वा । हरिन्मणिवर्णो वृषो धर्मो यत्र तथाभूतयोस्तनयोरिति 'धर्मस्तनाद्दक्षिणतः' इत्युक्तेस्तस्य दक्षिणस्तनस्य धर्मकारणत्वात् । श्वेतामिति दक्षिणस्तनोपरि दक्षिणावर्त्तश्वेतश्रीवत्सरेखामपि हरिकीर्तिमिव ध्यायेदिति सूचितम् ॥ २५ ॥ ❀ ❀ इत्यर्थ इति । कंठेनैव मणिशोभा कृतेति भावः ॥ २६ ॥ ❀ ❀ समुद्रं मथतो हरेर्बाहूंश्चिंतयेत् ॥ २७ ॥ ❀ ❀ मणेर्जीवस्वरूपत्वे पुराणांतरसंमतिमाह—तदुक्तमिति । स्पष्टोर्थः ॥ २८ ॥ ❀ ❀ यद्वाऽनुकंपितमनुकंपा कृपा तदात्मिका तन्मयी वा या धीस्तया स्वावासार्थं गृहीता मूर्तिर्यस्य "हे मत्स्वरूपशक्तिसारभूतानुकंपे इह मर्त्यलोके मन्मूर्तिषु मध्ये यामिच्छसि तां स्वनिर्भरनिवासार्थं गृहाण" इत्युक्ते तया विविच्य रामकृष्णमूर्ती एव विशेषतो गृहीते इत्यर्थः । यदिति मकरकुंडलयोर्वल्गनं खलु पार्श्वद्वयस्थपार्षदसंचालितचामरहेतुकेन मारुतेन वयस्यगणन मौक्तिहेतुकेन शिरःकंपेन वा सहचरीगणनृत्यगीतवाद्यतालतानवाद्यास्वादनसाधुत्वख्यापनहेतुकया ग्रीवाभंग्या ज्ञेयम् । अमलेति । कपोलयोर्मसृणमणिदर्पणायमानत्वं तयोश्चलन्मकरकुण्डलद्वयप्रतिबिंबेन नटन्तौ नयनखंजनौ नृत्योपाध्यायौ भूत्वा स्वतलस्थलमायातं मकरचतुष्टयं नर्त्तयत इवेत्युत्प्रेक्षा गम्या । 'उदारो दातृमहतोः' इत्यभिधानान्नासिकायास्तदास्वादनसभ्यत्वेन सर्वस्वदातृत्वम् ॥ २९ ॥ ❀ ❀ यच्च वदनारविंदं तत्र वदनांगेषु उल्लसंत्यौ भक्तेषु कृपाद्योतनायेति ॥ ३० ॥ ❀ ❀ तस्य हरेः । यद्वाऽन्वनुगुणितं पौनःपुन्येन स्फीतनीकृतं प्रथमं द्विगुणितं ततस्त्रिगुणितादिक्रमेण कोटिकोटिगुणितमित्यर्थः । अत एव विपुलः प्रसादो यत्रेति तत् । विपुलभावनया विततभक्त्या ॥ ३१ ॥ ❀ ❀ लोका भक्तास्तेषां दास्यसख्यादिभाववतां तद्विरहोत्थत्वात्तीव्रो यः शोकाश्रुसागरस्तं विशेषेण शोषयतीति । अत्युदारं शोकसागरादुद्धृत्यानंदसागरे निमज्जनं ददानमित्यर्थः । यद्वा । सांसारिकतीव्रदुःखशोकाश्रुसागरशोषणत्वेन हासस्य संसारातीतप्रेमानंदाश्रुसागरवर्द्धनत्वं ध्वन्यते तेन चंद्रत्वेप्यद्भुतत्वं प्रसिद्धं चंद्रो हि क्षीरोदं वर्द्धयतीति । इत्यर्थ इति । पत्रांबुभोजिनस्तपस्यतोपि मुनीनयं द्वेष्टीति कोपेनेवेति भावः ॥ ३२ ॥

## श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

मयूखै रश्मिभिः श्यामस्यापि श्वेतत्वं चाकचिक्येनाभिरूप्यात् ॥ २५ ॥ ❀ ❀ स्थानमिति । तस्या अपि परमलोभविषयत्वं दर्शितम् । कौस्तुभमणिमेव स्वयमलं कुर्वन्तमित्यनेन भूषणभूषणाङ्गमिति न्यायो दर्शितः । न च तर्हि तदाद्याभरणानां वैयर्थ्यमिति शङ्क्यम् , अङ्गैरेवाभरणपटली भूषिता दोग्धि भूषामिति पश्चात्तेषामलङ्कारत्वापत्तेः ॥ २६ ॥ ❀ ❀ यद्यपि बाहुवलयानां नित्योज्ज्वलत्वमेव तथापि अत्यन्ततिरस्कृतवाच्यध्वनिना शौटीर्य्यमात्रे तात्पर्य्यं परिवर्त्तनस्य च सुष्ठु स्थापनादिकमेव प्रयोजनमिति गम्यम् । राजहंसमिवेत्युपमितिसमासः ॥ २७ ॥ ❀ ❀ एवं शोणितकर्दमेन दिग्धमित्यत्रापि भक्तरक्षाव्यग्रतायामेव तात्पर्य्यम् । अत्यन्ततिरस्कृतवाच्यध्वनित्वात् जीवस्य तत्त्वं मूलस्वरूपं परमात्मानं "तत्त्वं वाद्यप्रभेदे स्यात्स्वरूपे परमात्मनि" इति विश्वः, तथैवाग्रे वैष्णववाक्यं मानमगुणत्वाद् गुणातीतत्वादमलम् । अगुणात्मकमिति क्वचित्पाठः । एवं तद्भूषणानामपि परब्रह्मत्वे तदाश्रयस्य कैमुत्यमानीतम् ॥ २८ ॥ ❀ ❀ गृहीता अप्रपञ्चात्प्रपञ्चे आनीता ॥ २९ ॥ ❀ ❀ यच्च वदनारविन्दं तत्र अलिमीनद्वयमध्ये एकोपमा नेत्रयोः मीनद्वयस्य द्वितीयोपमा अब्जयोरित्युपमानान्तरमित्युक्तम् ॥ ३० ॥ ❀ ❀ स्निग्धस्मितेन स्नेहातिशयाभिव्यञ्जकस्मितेन अत एव विपुल इत्यादि ॥३१॥ ❀ ❀ निजमायया स्वेच्छया "आत्ममाया तदिच्छा स्याद्गुण-

माया जडात्मिका'' इति महासंहितोक्तेः। मुनिकृते किं रचितमिति काकोत्प्रेक्षा व्यङ्ग्या। तस्य परमसुन्दरत्वेन नित्यसिद्धत्वात् मुनिशब्दस्य तदुपकारे लक्षणा, तस्याश्च कामोपद्रवान्मुनित्वरक्षणमेव प्रयोजनमित्यत एव मुनीनां सम्मोहने इत्याद्यार्थिकोऽर्थः॥ ३२॥

### श्रीमद्वीरराघवव्याख्या

नाभिह्रदमिति। अमुष्य भगवतः। नाभिह्रदं ध्यायेत्कथम्भूतम्भुवनानां कोशस्य गृहमधिष्ठानं यदुदरे तत्र स्थिरं यत्र नाभिह्रदे आत्मयोनेर्ब्रह्मणः धिषणं धिष्ण्यमधिष्ठानमखिललोकात्मकं पद्मं व्यूढमुत्थितं तथा हरिन्मणिवृषौ मरकतमणिश्रेष्ठाविव यौ स्तनौ तयोर्द्वयं विशदहारस्य मयूखैः गौरं श्वेतं ध्यायेत्। वक्षोविशेषणं वा॥ २५॥ ❀ ❀ वक्ष इति। महाविभूतेर्महालक्ष्म्या अधिवासं स्थानं पुंसां ध्यातॄणां मनोनयनयोर्निर्वृतिमानन्दमादधानमृषभस्य श्रेष्ठस्य भगवतः वक्षः ध्यायेत्तथाखिलैर्लोकैर्ब्रह्मादिभिर्नमस्कृतस्य सेवितस्य भगवतः कण्ठं च मनसि कुर्याद्ध्यायेत्। कथम्भूतं कौस्तुभमणिर्यो भूषणार्थं कृतस्तस्याधिकं भूषणमर्थः प्रयोजनं यस्य तं कौस्तुभमणिमेव स्वयमलङ्कुर्वन्तमित्यर्थः॥ २६॥ ❀ ❀ बाहूनिति। मन्दरगिरेः परिवर्त्तनेन परिभ्रमणेन निर्णिक्तान्युज्ज्वलीकृतानि बाहुवलयान्यङ्गदानि येषु अधिश्रिता लोकपालाः येषु तान् बाहून् सञ्चिन्तयेत्तथा दशशतारं सहस्रारं न सह्यं तेजो यस्य तच्चक्रं तस्य भगवतः करसरोरुहस्य राजहंसमिव स्थितं शङ्खं च सञ्चिन्तयेत्॥ २७॥ ❀ ❀ कौमोदकीमिति। तथा भगवतो दयितां प्रियामरातयः शत्रवो ये योद्धारस्तेषां शोणितमेव कर्दमस्तेन दिग्धां लिप्तां कौमोदकीं गदां स्मरेत तथास्य भगवतः कण्ठे मालां मणिं च स्मरेत कथम्भूतां मालां मधुव्रतानां भृङ्गाणां वरूथस्य सङ्घस्य गिरा उपघुष्टां नादितां मणिं कथम्भूतममलं चैत्यस्य जीवस्य तत्त्वं स्वरूपं जीवस्वरूपाधिष्ठातृदेवतारूपमित्यर्थः तदुक्तं वैष्णवे पुराणे

आत्मानमस्य जगतो निर्लेपमगुणामलम्। बिभर्ति कौस्तुभमणिं स्वरूपं भगवान् हरिः॥ इति॥ २८॥

भृत्येति। भृत्येष्वनुकम्पिता कृतानुकम्पा या धीस्तया गृहीता मूर्तिर्येन तस्य भृत्यानुग्रहाय स्वेच्छोपात्ततनोरित्यर्थः भगवतः यद्वदनारविन्दं सञ्चिन्तयेत्। कथम्भूतं विस्फुरन्ती ये मकरकुण्डले तयोर्वल्गितेन प्रचलितेन विद्योतितावमलौ कपोलौ यस्मिन्नुदारा उन्नता नासा यस्मिंस्तत्॥ २९॥ ❀ ❀ यच्च स्वया विभूत्या शोभयालिभिः परिषेव्यमाणं मीनद्वयाश्रयञ्च श्रीनिकेतं पद्ममधिक्षिपदतिवर्तयत्तद्ध्यायेत्। तत्र कुन्तलैरलीनामधिक्षेपः नेत्रद्वयेन मीनद्वयस्येति द्रष्टव्यं, अब्जे इव नेत्रे इत्युपमानान्तरमुल्लसन्त्यौ भ्रुवौ यस्मिन्मनोमयं योगपरिशुद्धमनोग्राह्यं वदनारविन्दमतन्द्रितोऽवहितमनाः ध्यायेत्॥ ३०॥ ❀ ❀ तस्येति। तस्य भगवतः अवलोकनं हृदि विततभावनया चिरं ध्यायेत् पाकं पचतीतिवद्भावनया ध्यायेदिति निर्देशः भावनां कुर्यादित्यर्थः कथम्भूतमवलोकमधिकमत्यर्थं कृपया अक्ष्णोरक्षिभ्यामतिदुःसहाध्यात्मिकादितापत्रयोपशान्तये निसृष्टं प्रयुक्तं स्निग्धेन स्मितेनानुगुणितं संपृक्तं विपुलः प्रसादो भक्तेष्वनुकम्पारूपो यस्मिंस्तमित्यर्थः॥ ३१॥ ❀ ❀ हासमिति। अवनता ये अखिललोकास्तेषां तीव्रशोकेन यान्यश्रूणि तेषां सागरं विशोषयतीति तथा हरेर्हासं ध्यायेत्। अस्यात्युदारं भ्रूमण्डलं ध्यायेत्कथम्भूतं मुनिकृते मुनिसम्मोहनाय प्रवृत्तस्य मकरध्वजस्य कामस्य सम्मोहनाय निजमायया आत्मीयसङ्कल्पेन रचितं परिगृहीतम्॥ ३२॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

हरेर्नाभिह्रदं ध्यायेदित्यन्वयः। निम्नत्वद्योतनाय लोकपद्मजन्महेतुत्वाद् ह्रदमिति चतुर्दशभुवनानां कोशो गृहं भुवनकोशो ब्रह्माण्डं तत् गूहयति ग्रसतीति भुवनकोशगृहं तदुदरं जठरं, तत्र स्थितम्। यद्वा भुवनकोशनिगरणगुहास्थानीयोदरे तिष्ठतीति। यद्वा भुवनकोशगुहोदरब्रह्माण्डगर्भोदके रंत्वा स्थितं यत्र यस्मिन्नाभिह्रदे आत्मयोनेश्चतुर्मुखस्य धिषणं धिष्ण्यं चाखिललोकात्मकं च पद्ममात्मयोनिधिषणाखिललोकपद्मं व्यूढमुत्पन्नमित्यर्थः। हरिन्मणिमुषः हरिन्मणिरिन्द्रनीलरत्नं तस्य प्रभां मुष्णतोऽमुष्य हरेस्तनयोर्द्वयं ध्यायेत्। विततस्य हारस्य मयूखेन गौरमतिधवलम्॥ २५॥ ❀ ❀ स्मर्तॄणां पुंसां मनोनयनानां निर्वृतिमानन्दमादधानमुत्पादयन्तं महाविभूतेर्लक्ष्म्या अधिवासस्थानमृषभस्य हरेर्वक्षो मनसि कुर्यादित्यन्वयः। कौस्तुभमणेरधिकं भूषणमेवार्थः प्रयोजनं यस्य तथा तं कण्ठं च मनसि कुर्यात्। अखिललोकनमस्कृतत्वादृषभत्वं युक्तम्॥ २६॥ ❀ ❀ हरेर्बाहूंश्च दशशतारं च शङ्खं च सञ्चिन्तयेदित्यन्वयः। मन्दरगिरेः परिवर्तनेन परिभ्रमणेन निर्णिक्ताः शोभिताः बाहुवलया अङ्गदादयो येषां ते तथा तान्। अधिश्रिता लोकपाला इन्द्रादयो येषु ते तथा तान्। दशशतं सहस्रमराणि दलानि यस्य तत्तथोक्तं शत्रूणामसह्यं सोढुमशक्यं तेजो वीर्यं यस्य तत्तथोक्तं तस्य हरेः करा एव सरोरुहाणि पद्मानि तेषु राजहंसमिव वर्तमानम्॥ २७॥ ❀ ❀ भगवतो दयितां कौमोदकीं गदां हरेः कण्ठे मालाममलं मणिं च स[illegible]त्यन्वयः। कथम्भूतां गदामरातयो दैत्या एव भटास्तेषां शोणितं रुधिरमेव कर्दमस्तेन दिग्धां रूपिताम्। अरातीनां भटानां च इत्यभिधानात्। कथम्भूतां मालां मधुव्रतानां नित्यसुखानां भृङ्गाकारमितानां भक्तानां वरूथाः समूहास्तेषां स्तुतिलक्षणया गिरोपघुष्टां शब्दायमानां कथम्भूतं मणिं चैत्यस्य चित्ताभिमानिनश्चतुर्मुखस्य तत्त्वं स्वरूपम्।

'ब्रह्मा चित्ताभिमानेन चैत्यस्तन्नियमाद्धरिः। स च ब्रह्मा हरेः कण्ठे कौस्तुभत्वेन भासते॥'

# अथैकोनत्रिंशोऽध्यायः

## देवहूतिरुवाच

लक्षणं महादादीनां प्रकृतेः पुरुषस्य च । स्वरूपं लक्ष्यतेऽमीषां येन तत्पारमार्थिकम् ॥ १ ॥
यथा सांख्येषु कथितं यन्मूलं तत्प्रचक्षते । भक्तियोगस्य मे मार्गं ब्रूहि विस्तरशः[1] प्रभो ॥ २ ॥
विरागो येन पुरुषो भगवन् सर्वतो भवेत् । आचक्ष्व जीवलोकस्य विविधा मम संसृतीः ॥ ३ ॥
कालस्येश्वररूपस्य परेषां च परस्य ते । स्वरूपं बत कुर्वन्ति यद्धेतोः कुशलं जनाः ॥ ४ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

एकोनत्रिंशके भक्तियोगस्तु बहुधोच्यते । कालस्य च बलं घोरा संसृतिश्च विरक्तये ॥ १ ॥

उक्तानुवादपूर्वकं भक्तिमार्गभेदान्पृच्छति द्वाभ्याम् । लक्षणं महदादीनां यथा सांख्येषु तथा कथितम् । येन लक्षणेन तत् पारमार्थिकं परस्परविभक्तमित्यर्थः । यो भक्तियोगो मूलं प्रयोजनं यस्य तद्यन्मूलं तत्कथितम् । तस्य भक्तियोगस्य मार्गं प्रकारं विस्तरतो मे ब्रूहि ॥ १ ॥ २ ॥ ❀ ❀ येन संसृतीनामाख्यानेन विगतरागो भवेत् ॥ ३ ॥ ❀ ❀ ईश्वररूपस्य महाप्रभावस्य ते त्वदात्मकस्य यद्धेतोर्यद्भयात्कुशलं पुण्यं कुर्वन्ति ॥ ४ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

घोरा भयंकरा (१) उक्तस्य महदादिलक्षणस्यानुवादपूर्वकं तत्स्वरूपममीषां महदादीनाम् । इत्यर्थ इति । लक्षणं विना परस्परभेदज्ञानं न भवतीति भावः ॥ १ ॥ ❀ ❀ यन्मूलमिति । सांख्यविविक्तात्मरूपभगवज्ज्ञानं विना तद्भक्त्यनुपपत्तेरिति भावः । विश्वनाथस्तु—तत्स्वरूपज्ञानं यत्कारणकं प्रचक्षते यं विना तेषां स्वरूपं ज्ञातमप्यज्ञातमेवेत्यर्थमाह । प्रभो इति । कथनसामर्थ्यमाह ॥ २ ॥ ❀ ❀ भक्तौ प्रवेशाय किंचिद्वैराग्यमपेक्ष्यते तदर्थं पृच्छति विराग इति ॥ ३ ॥ ❀ ❀ ते त्वद्रूपस्य "कालोस्मि लोकक्षयकृत्प्रवृत्तः" इति गीतोक्तेः ॥ ४ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

बहुधा सगुणनिर्गुणतदवान्तरभेदेनानेकधा लक्षणमिति युग्मकम् । परमार्थशब्दोऽत्र लक्षणस्यातिव्याप्त्यादिनिरासेन याथार्थ्यपरः । तस्य च "व्यावृत्तिर्व्यवहारो वा लक्षणस्य प्रयोजनम्" इत्युक्तेः परस्परविभाग एव प्रयोजनमिति तथा व्याख्यातम् । तत्कथितं लक्षणं कवयो यन्मूलं यद्भक्तियोगप्रयोजनकं प्रचक्षते वर्णयन्ति तस्य भक्तियोगस्येति योजनीयम् ॥ १—२ ॥ ❀ ❀ विराग इति युग्मकम् । येनेत्यस्य संसृतीनामाख्यानेनेति व्याख्यानात् अर्थक्रममनुसृत्य यच्छब्दस्योत्तरवाक्योपात्तत्वमभ्युपगतमिति तच्छब्दापेक्षा निरस्ता । अन्यथा यच्छब्दस्यासम्बद्धार्थता स्यादिति विवेचनीयम् । त्वच्चेष्टारूपत्वात्त्वदात्मकस्य कालस्य स्वरूपमाचक्ष्व ॥ ३—४ ॥

### श्रीमद्वीरराघवव्याख्या

एवं सप्रपञ्चमुपपादितं साङ्गं मोक्षसाधनभक्तियोगमाश्रुत्य पुनरुक्तानुवादपूर्वकं तस्यैव भक्तियोगस्य भेदान् तदङ्गवैराग्योत्पत्तिहेतुं जीवस्य स्वर्गनरकादिगमनादिरूपसंसृतिं कालस्वरूपं च पृच्छति देवहूतिः । लक्षणमिति प्रकृतेः । मलप्रकृतेः तत्कार्यभूतानां महदादीनां पुरुषस्य प्रत्यगात्मनश्चकारात्परमात्मनश्चेत्यमीषां पारमार्थिकमबाधितं स्वरूपं येन लक्ष्यते ज्ञायते तल्लक्षणं कथितं त्वयेति शेषः ॥ १ ॥ ❀ ❀ एवमुक्तानुवादः कृतः । साङ्ख्येषु सिद्धान्तेषु तत्प्रकृत्यादीनां लक्षणं यन्मूलं यस्य भक्तियोगस्य मूलं प्रचक्षते तस्य भक्तियोगस्य मार्गं भेदं यथा यथावद्विस्तरतः मे मह्यं ब्रूहि कथय हे प्रभो! कथनसमर्थ कपिल! ॥ २ ॥ ❀ ❀ येन संसृतिवर्णनेन पुरुषः मुमुक्षुः सर्वत्र इहामुत्र च विरागः वीतरागः भवेत् ताः जीवलोकस्य विविधाः संसृतीः

---

१. प्रा० पा०—रतः ।

ममाचक्ष्व कथय ॥ ३ ॥ ❀ ❀ तथा ईश्वररूपस्येश्वरशरीरस्य परेषां ब्रह्मादीनामपि परस्य प्रभोः कालस्य स्वरूपं वद मे कथय। यद्धेतोः यस्मात्कालाद्धेतोः कुशलं निवृत्तिधर्मं जनाः कुर्वन्ति यत्कालहेतुकजन्ममरणादिसांसारिकधर्मातिवृत्तये कुशलमनुतिष्ठन्ति तस्य कालस्य स्वरूपं कथयेत्यर्थः ॥ ४ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

एवं तावज्ज्ञानान्मोक्षो ज्ञानं चाष्टाङ्गयोगेन प्रचितया भगवदुपासनया जायत इत्यभिहितम्। अधुना भक्तियोगस्य तारतम्यमभिधीयतेऽस्मिन्नध्याये। तत्प्रसञ्जयितुं सामान्यतो ज्ञातमपि विविच्य ज्ञातुं महदादिलक्षणं पृच्छति देवहूतिः। लक्षण-मित्यादिना। येन लक्षणेनामीषां महदादीनां पारमार्थिकं स्वरूपं लक्ष्यते ज्ञायते ॥ १ ॥ ❀ ❀ वक्तव्यार्थे नियममाह। यथेति। यथा सांख्येषूक्तं तथा कथितं महदादिलक्षणज्ञानं पुरुषार्थोपयोगि स्यादिति शेषः, अन्यशास्त्रोक्तं किं न स्यादिति तत्राह। यन्मूलमिति। यत्साङ्ख्यमूलं तल्लक्षणं प्रचक्षते प्राज्ञा इति शेषः। तल्लक्षणं मम ब्रूहीत्यन्वयः। यद्वा यथा यथावत् साङ्ख्ये-षूक्तं तथा कथितं मे ब्रूहीत्यन्वयः। सांख्यमूलत्वाल्लक्षणस्येत्यर्थमिति उक्तमपीममर्थं विस्तरेण ब्रूहीत्याह। भक्तियोगस्येति। मार्गं प्रकारम् ॥ २ ॥ ❀ ❀ न केवलं भक्तियोगमार्गेणालं वैराग्याभावे तस्य चञ्चलत्वसम्भवादतो विरक्तिमता भाव्यमतस्त-त्प्रकारोऽपि वक्तव्य इत्याह। विराग इति। पुरुषः सर्वतो विरागा विगतरागो भवेदिति येनातो जीवलोकस्य गर्भवासादिलक्षणा विविधा कर्मसंसृतीर्ममाचक्ष्वेत्यन्वयः। यद्वा येन संसृतीनां ज्ञानेन विरागो भवेत्तादृक् ज्ञानोत्पत्तिमाचक्ष्वेति ॥ ३ ॥ ❀ ❀ कालस्वरूपज्ञानमपि पुरुषार्थोपयोगीति तद्विषयप्रश्नं करोति। कालस्येति। जनाः यद्धेतोर्यस्य कालनाम्नस्तव भयनिमित्तात्कुशलं कुर्वन्ति परेषामुत्तमानां सकाशादपि परस्योत्तमस्य च ते तव ईश्वररूपस्यैश्वर्यमूर्तेः कालस्य स्वरूपमाचक्ष्वेत्यन्वयः। बतादभुतं स्त्रीत्वा-दिदं बोद्धुमशक्यं तथापि त्वत्प्रसादाच्छक्ता स्यामित्यामन्त्रयामि। "बत त्वामन्त्रणेऽद्भुते" इति यादवः ॥ ४ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

लक्षणमिति युग्मकम्। तन्महदादीनां कथनम्। यो भक्तियोग एव मूलमुद्देश्यं यस्य तादृशं प्रचक्षते ॥ १ ॥ २ ॥ ❀ ❀ विराग इति युग्मकम् ॥ ३ ॥ ❀ ❀ कालस्य स्वरूपमाचक्ष्व ॥ ४ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

एकोनत्रिंशके भक्तिः सगुणा निर्गुणापि च। लक्ष्यते प्राणिसम्मानः क्रमः कालबलञ्च तत् ॥

साङ्ख्यं योगञ्च श्रुत्वा पुनरुक्तानुवादपूर्वकं स्वानुष्ठेयत्वात् श्रुतमपि भक्तियोगं सप्रभेदं शुश्रूषमाणा पृच्छति। महदा-दीनां लक्षणं सांख्येषु साङ्ख्यशास्त्रेषु यथा तथा कथितं येन लक्षणेन अमीषां महदादीनां स्वरूपं तत्प्रतिसिद्धं लक्ष्यते ज्ञायते कीदृशं पारमार्थिकं परस्परविभक्तमित्यर्थः। तत्स्वरूपज्ञानं यन्मूलं यत्कारणकं प्रचक्षते यं विना तेषां स्वरूपं ज्ञातमप्यज्ञातमेव भवतीत्यर्थः। तस्य भक्तियोगस्य मार्गं प्रकारं ब्रूहि ॥ १ ॥ २ ॥ ❀ ❀ भक्तौ प्रवेशाय किञ्चिद्वैराग्यमपेक्ष्यत इति तदर्थं पृच्छति। विराग इति। ताः संसृतीराचक्ष्व येन संसृत्याख्यानेन ॥ ३ ॥ ❀ ❀ कालस्य च स्वरूपमाचक्ष्व ते त्वद्रूपस्य। यद्धेतोः यतः काल-भयाद्धेतोः ॥ ४ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

एकोनत्रिंशे भक्तिर्विस्तरतः कालबलादिकं च वर्ण्यते। तत्रादौ श्रीदेवहूतिः उक्तानुवादपूर्वकं भक्तेर्भेदान् वैराग्योदयाय संसृतिं कालस्वरूपं च पृच्छति। लक्षणमित्यादिना। येन अमीषां महदादीनां पारमार्थिकं यथार्थं स्वरूपं लक्ष्यते ज्ञायते तल्लक्षणं महदादीनां प्रकृतेः पुरुषस्य जीवस्य चकारात् परमात्मनश्च ॥ १ ॥ ❀ ❀ सांख्येषु सम्यक् ख्यायन्ते तत्त्वानि येषु तेषु वेदान्तेषु यथास्ति तथा कथितं त्वयेति शेषः। तल्लक्षणं यन्मूलं यस्य भक्तियोगस्य मूलं प्रचक्षते तस्य भक्तियोगस्य मार्गं विस्तरतो मे मह्यं ब्रूहि कथय ॥ २ ॥ ❀ ❀ संसृतीः आचक्ष्व आख्याहि येन संसृतीनामाख्यानेन पुरुषो मुमुक्षुः सर्वतः ऐहिकादा-मुष्मिकाच्च विगतरागो भवेत् ॥ ३ ॥ ❀ ❀ ते तव प्रजाः यद्धेतोः यद्भयात् कुशलं कुर्वन्ति तस्य परेषां ब्रह्मादीनामपि परस्य ईश्वररूपस्य शक्तितद्वतोरभेदविवक्षया परमात्मरूपस्य कालस्य स्वरूपं च आचक्ष्व ॥ ४ ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

एवं ज्ञानप्रकरणं साङ्गं वै सुनिरूपितम्। अतः परं तु वैराग्यं चतुर्भिर्विनिरूप्यते ॥ १ ॥
वैराग्ये कारणं कालः परिच्छेदक ईरितः। कालस्य भक्तिहेतुत्वं माहात्म्यार्थं स्वतोऽपि तत् ॥ २ ॥
ततो जीवस्य गतयो लोकशास्त्रविभेदतः। लोको हि द्विविधः प्रोक्त परलोकस्तथैहिकः ॥ ३ ॥
वैदिको ब्रह्मपर्यन्तः कालश्चैवं चतुर्गतिः। यावन्निरूपितं पूर्वं तत्कालास्पृष्टमेव हि ॥ ४ ॥

अग्रे सर्वं कालसाध्यमतो वैराग्यहेतुकम् । कालस्तु सर्वत्र समः स्वतन्त्रैः स विरुद्धयते ॥ ५ ॥
दण्डनेतुर्यथा सर्वे हरिणैव तथा यतः । अतः कालवशानां हि वार्ता प्रकरणे तथा ॥ ६ ॥
एकोनत्रिंशदध्याये कालभक्तिः ससाधना । माहात्म्यं चापि कालस्य विस्तरेण निरूप्यते ॥ ७ ॥
सर्गे यद्यस्य नोत्पत्तिर्वैराग्यं न भवेत्ततः । आधिभौतिकभूतादीन्येतानीत्यपि बोध्यताम् ॥ ८ ॥

पूर्वप्रकरणे ज्ञानं साङ्गं सुविनिरूपितम् । वैराग्यभावे तन्नोपपद्येतेति पूर्वानुवादपूर्वकं वैराग्यहेतुं पृच्छति । यद्यपि भक्त्या वैराग्यं भवतीति पूर्वं सूचितम्, तथापि कीदृशी भक्तिः वैराग्यं जनयतीति भक्तिभेदानपि पृच्छति । तत्र प्रथमं पूर्वानुवादमाह— लक्षणमिति । त्वया महदादेः प्रकृतिपुरुषयोश्च लक्षणं कथितम् । येन लक्षणेन, स्वरूपात्मरूपम्, लक्ष्यते ज्ञायते; अमीषां च स्वरूपं ज्ञायते । अनेन ज्ञानोपायः सर्वोऽप्युक्त इत्युक्तम् ॥१॥ ❀ ❀ तत्र प्रमाणमप्युक्तमित्याह—यथा साङ्ख्येषु कथितमिति । साङ्ख्यस्य माहात्म्यमाह—यन्मूलं तत्प्रचक्षत इति । तत्पूर्वोक्तलक्षणादिकं यत्साङ्ख्यमूलमिति प्रचक्षते । यो भगवान् वा, तस्य साङ्ख्यस्य मूलमिति प्रचक्षते । एवमनूद्य वैराग्यहेतुभूतां भक्तिं पृच्छति—भक्तियोगस्येति । मे मह्यम् । मार्गं नानाविधम्, विस्तरतो बहुसाधनभेदतः, ब्रूहि । प्रभो इति तथाकथने सामर्थ्यम् ॥ २ ॥ ❀ ❀ किं ततः स्यात्तत्राऽऽह—विरागो येनेति । भगवन्निति सम्बोधनं वैराग्यस्याऽपि भगवद्गुणत्वेन भक्तिसाध्यत्वेऽपि न दोष इति ख्यापनार्थम् । येन भक्तिमार्गेण कृत्वा, पुरुषः सर्वतो विरागो भवेत् । इदमेव वाक्यमग्रेऽपि युज्यते । भक्तिर्हि अलौकिकप्रकारेण वैराग्यहेतुः । लौकिकप्रकारेण वैराग्यहेतुं पृच्छति—आचक्ष्वेति । जीवलोकस्य लोकप्राणिनः, विविधाः संसरणमार्गा देवतिर्यङ्मनुष्यादियोनिप्राप्त्युपायाः । मम मह्यम् ॥ ३ ॥ ❀ ❀ कालश्च वैराग्यहेतुरिति तस्य स्वरूपं कथयेत्याह—कालस्येति । ईश्वरस्य रूपमिव रूपं यस्य । ऐश्वर्यांशो भगवता काले स्थापितः, अतः कालस्य स्वरूपं ज्ञातव्यम् । किञ्च, परेषां ब्रह्मादीनामपि परो नियन्ता । किञ्च, बतेति हर्षे, सर्वे जनाः कालहेतोः कुशलं कुर्वन्ति । कालाद्भयाभावे कोऽपि कुशलं न कुर्यात् ॥ ४ ॥

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

अथ एकोनत्रिंशाध्यायं विवरिषवः प्रकरणस्य भिद्यमानत्वात् सङ्गतिबोधनाय प्रकरणयोरर्थमाहुः एवमित्यादि । तेनैव कार्यत्वमत्र संवादे प्रकरणसङ्गतिः, शास्त्रे मैत्रेयसंवादे च स्वस्वरीत्याऽवसर एवाऽध्यायसङ्गतिः । प्रकरणस्य तु तत्राऽप्येयैवेत्यर्थः । ननु चतुर्भिः कुतो वैराग्यनिरूपणमित्याकाङ्क्षायां तत्रोत्तरमध्यायार्थकथनेन सार्द्धाभ्यामाहुः—वैराग्य इत्यादि । परिच्छेदकः कालो वैराग्ये कारणमीरितः, स च कालः प्रथमे वैराग्यजनकसगुणभक्तिहेतुत्वेन स्वतो माहात्म्यवत्त्वेन चोक्तः, द्वितीये वैराग्यजनकद्विविधजीवगतिहेतुत्वेन, तृतीयचतुर्थयोस्तत्प्रयोजकद्विविधलोकहेतुत्वेनेत्येवं चतुर्गतिजनकः, अतो वैराग्ये चत्वार अध्याया इत्यर्थः । वैदिक इति चरणः परलोकविशेषणम् । न भक्त्यादीनामर्थानां; पूर्वमपि निरूपितत्वात् कथमत्र तस्यैव निरूपण (णं)वैराग्यार्थत्वमित्यत आहुः—यावदित्यादि । वैराग्यहेतुकमिति वैराग्यं प्रयोजकत्वेन निमित्तीकृत्योक्तम् । तथा च, वैराग्यस्य दुःखजनितजुगुप्साहेतुकत्वाद् दुःखस्य कालहेतुकत्वात् पूर्वेषु कालास्पृष्टत्वेन दुःखाद्यजनकत्वान्न वैराग्यहेतुत्वमतोऽत्र कालकृतं तदर्थमुच्यत इत्यर्थः । ननु मैत्रेयो हि 'अथ ते भगवल्लीला योगमायोपबृंहिताः इति भगवल्लीलाकथनाय प्रवृत्तस्तस्य कालवशवार्ता' निरूपणे किं प्रयोजनमतः आहुः—कालस्त्वित्यादि सार्द्धम् । यतो हरिणैव यथा सर्वे दण्डनेतुर्यमस्य वशगाः कृताः, तथा कालवशगा अपि । कालस्तु सर्वत्र समः स्वतन्त्रैः सह विरुद्धश्च, अतस्तद्वशानां वार्ता जीवस्वातन्त्र्यत्याजनाय, भगवच्चेष्टारूपकालस्वभावस्य भगवद्दत्ताधिकारस्य च ज्ञापनायोक्तविधलीलात्वेन रूपेण मैत्रेयो वदतीत्येतत्प्रयोजनमित्यर्थः । एवं प्रकरणार्थं निरूप्याध्यायार्थमाहुः—एकोनेत्यादि सार्द्धम् । अस्येति कालमाहात्म्यस्य । एवं मैत्रेयोक्तोऽवसरः साधितः । शुकोक्तं तं साधयन्ति—आधिभौतिकेत्यादि ।

### श्रीगिरिधरकृता बालप्रबोधिनी

हरिणा मातृपृष्टेन भक्तियोगः सविस्तरः । तथा कालप्रभावश्चैकोनत्रिंशे निरूप्यते ॥ १ ॥

एवं सपरिकरं मोक्षोपायं श्रुत्वा तदाढ्यार्थं पुनरुक्तानुवादपूर्वकं भक्तिभेदादीन् पृच्छति—लक्षणमित्यादिना । अमीषां महदादीनां लक्षणं यथा साङ्ख्येषु शास्त्रेषु कथितमस्ति, येन च लक्षणेन तेषां महदादीनां पारमार्थिकं अबाधितस्वरूपं लक्ष्यते ज्ञायते तत् महदादीनां प्रकृतेः पुरुषस्य च लक्षणं त्वया कथितमित्यन्वयः । एवमुक्तानुवादं कृत्वा प्रष्टव्यं पृच्छति । तत् प्रकृत्यादिस्वरूपज्ञानं यन्मूलं यस्य भक्तियोगस्य साधनं प्रचक्षते तस्य भक्तियोगस्य मार्गं भेदं मे मह्यं विस्तरशो ब्रूहि । तत्कथने त्वं समर्थोऽसीत्याशयेन सम्बोधयति—प्रभो इति ॥ १-२ ॥ ❀ ❀ भगवन् हे सर्वज्ञ येन संसृतिवर्णनेन मुमुक्षुः पुरुषः सर्वतः इहामुत्र च विरागो विगतरागो भवेत् ताः जीवलोकस्य विविधाः संसृतीर्मम आचक्ष्व कथय ॥ ३ ॥ ❀ ❀ परेषां ब्रह्मादीनामपि परस्य नियन्तुस्ते त्वदात्मकस्य अत एवेश्वरस्य रूपमिव रूपं यस्य तस्यामितप्रभावस्य कालस्य स्वरूपमाचक्ष्वेत्यन्वयः । अहो भाग्यं यत्त्वत्प्राप्तिर्जातेति हर्षं द्योतयति—बतेति । अमितप्रभावमेव स्पष्टयति—यदिति, यद्भयाज्जनाः कुशलं पुण्यं कुर्वन्तीत्यर्थः ॥ ४ ॥

## हिन्दी अनुवाद

### भक्तिका मर्म और कालकी महिमा

देवहूतिने पूछा—प्रभो ! प्रकृति, पुरुष और महत्तत्त्वादिका जैसा लक्षण सांख्यशास्त्रमें कहा गया है तथा जिसके द्वारा उनका वास्तविक स्वरूप अलग-अलग जाना जाता है और भक्तियोगको ही जिसका प्रयोजन कहा गया है, वह आपने मुझे बताया । अब कृपा करके भक्तियोगका मार्ग मुझे विस्तारपूर्वक बताइये ।। १-२ ।। ❀ ❀ इसके सिवा जीवोंकी जन्म-मरण-रूपों अनेक प्रकारकी गतियोंका भी वर्णन कीजिये; जिनके सुननेसे जीवको सब प्रकारकी वस्तुओंसे वैराग्य होता है ।। ३ ।। ❀ ❀ जिसके भयसे लोग शुभ कर्मोंमें प्रवृत्त होते हैं और जो ब्रह्मादिका भी शासन करनेवाला है, उस सर्वसमर्थ कालका स्वरूप भी आप मुझसे कहिये ।। ४ ।।

लोकस्य मिथ्याभिमतेरचक्षुषश्चिरं प्रसुप्तस्य तमस्यनाश्रये ।
श्रान्तस्य कर्मस्वनुविद्धया धिया त्वमाविरासीः किल योगभास्करः ।। ५ ।।

### मैत्रेय उवाच

इति मातुर्वचः श्लक्ष्णं प्रतिनन्द्य महामुनिः । आबभाषे कुरुश्रेष्ठ प्रीतस्तां करुणार्दितः ।। ६ ।।

### श्रीभगवानुवाच

भक्तियोगो बहुविधो मार्गैर्भामिनि भाव्यते । स्वभावगुणमार्गेण पुंसां भावो विभिद्यते ।। ७ ।।
अभिसन्धाय यो हिंसां दम्भं मात्सर्यमेव वा[1] । संरम्भी भिन्नदृग्भावं मयि कुर्यात्स तामसः ।। ८ ।।

### श्रीधरस्वामिविरचिता भावार्थदीपिका ।

अचक्षुषोऽज्ञस्य अतो मिथ्याभूते देहादावभिमतिरहंकारो यस्य । अतः कर्मस्वनुविद्धया आसक्तया धिया श्रांतस्य अत एवानाश्रयेऽपारे तमसि संसारे चिरं प्रसुप्तस्य लोकस्य प्रबोधाय त्वं योगप्रकाशको भास्करः किलाविर्भूतोऽसि ।। ५ ।। ❀ ❀ श्लक्ष्णं सुंदरम् ।। ६ ।। ❀ ❀ मार्गैः प्रकारविशेषैः तानेवाह । स्वभावभूता ये गुणास्तेषां मार्गेण वृत्तिभेदेन पुंसां भावोऽभिप्रायः फलसंकल्पभेदाद्भक्तिभेद इत्यर्थः ।। ७ ।। ❀ ❀ अभिसंधाय संकल्प्य संरंभी क्रोधी भिन्नदृक् भेददर्शी यो भावं भक्तिं कुर्यात्स त्रिविधोऽपि तामसः ।। ८ ।।

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

अतोऽचक्षुष्ट्वात् । अतो मिथ्याभिमतित्वात् । अत एव श्रांतत्वादेव । तथा च मिथ्याभिमतेरभिमानजाड्यनिवर्त्तनायाचक्षुषश्चक्षुःप्रकाशनाय प्रसुप्तस्य स्वापतमोनाशाय श्रांतस्य श्रमपल्वलशोषणाय योगयोर्भक्तिज्ञानयोगयोः कमलयोर्भास्करः प्रकाशकोसीति भावः ।। ५ ।। ❀ ❀ इति भक्तिमहिमज्ञानजत्वात् । प्रीतः प्रश्नसौष्ठवेन । करुणा तु दैन्येन । महामुनिः श्रीकपिलः ।। ६ ।। ❀ ❀ देवानां गुणलिंगानामित्यनेन निर्गुणाया भक्तेरुक्तत्वादिह प्रथमं सगुणां भक्तिं लक्षयति भक्तियोग इति । भाविनि भावोऽभिप्रायस्तद्वति पुरुषे । भामिनीति पाठे तेजोवतीत्यर्थः, संबुद्धिरियम् । भाव्यते ज्ञायते । तानेव मार्गानेव । इत्यर्थ इति । भक्तिः स्वरूपतो निर्गुणापि पुंसां स्वाभाविकतमआदिगुणोपरक्ता सती तामस्यादिनामभिः सगुणा भवतीति भावः ।। ७ ।। ❀ ❀ तत्र प्रथमं तामसीं भक्तिं लक्षयन्भक्तिस्तामसी स्यादिति वक्तुमनौचित्यं परामृशंस्तद्वान्पुरुष एव तामसादिशब्दैरुच्यते इत्याह—अभीति । भेददर्शी स्वस्मिन्निव परस्मिन्नपि सुखदुःखं समानं न पश्यतीति निरनुकंप इत्यर्थः । अस्यास्तामस्या भक्तेस्त्रैविध्यं बृहन्नारदीये स्पष्टमुक्तं यथा—"यश्चान्यस्य विनाशार्थं भजते श्रद्धया हरिम् । फलवत्पृथिवीपाल सा भक्तिस्तामसाधमा ।। योऽर्चयेत्कैतवधिया स्वैरिणी स्वपतिं यथा । नारायणं जगन्नाथं सा वै तामसमध्यमा ।। देवपूजापरान्दृष्ट्वा स्पर्द्धया योऽर्चयेद्धरिम् । शृणुष्व पृथिवीपाल सा भक्तिस्तामसोत्तमा" इति । एवं राजस्याः सात्त्विक्याश्च भक्तेस्त्रैविध्यमुक्तं द्रष्टव्यम् ।। ८ ।।

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

अत्र मिथ्याभिमत्यादिचतुर्णामपि विशेषणानां साकूतत्वात्परिकरालङ्कारः । मिथ्याभिमतेरज्ञानजाड्यनिवर्त्तनाद्भास्करसादृश्यं पुष्टं तथा चक्षुषश्चक्षुःप्रकाशनात् प्रसुप्तस्य स्वापतमोनिवर्त्तनात् श्रान्तस्य च श्रमपल्वलसंशोषणाच्च तत्पुष्टमिति योगप्रकाशकः

१. प्रा० पा०—च ।

भक्तिज्ञानयोगरूपपद्मविकाशकः ॥ ५ ॥ ॐ ॐ भक्तियोगस्य मूलत्वोक्त्या प्रीतः दैन्येन तु करुणार्दितः ॥ ६ ॥ ॐ ॐ गुणास्सत्त्वादयस्तेषां वृत्तिभेदेन शमादिकार्य्यभेदेन निर्गुणभक्तेरपि वक्ष्यमाणत्वात् । तस्याश्च क्रियात्वेन भावत्वेन च द्वैविध्यात् श्लेषेणायमप्यर्थः । स्वं च भावश्च गुणाश्च तेषां मार्गेण वृत्तिभेदेन तत्र स्वशब्दवाच्यभक्तियोगस्य वृत्तिभेदः श्रवणादिः भावस्य वृत्तिभेदः दास्यादिः गुणानां वृत्तिभेदो हिंसादिसङ्कल्पः तेन पुंसां भावोऽभिप्रायो भिद्यते इति ॥ ७ ॥ ॐ ॐ तत्र तावद् गुणमार्गेण भक्तिभेदानाह । अभिसन्धायेत्यादित्रिभिः । मम शत्रुर्म्रियतामिति सङ्कल्प्य भक्तिं जपादिरूपां भावशब्दस्यात्र रतिपर्य्यायत्वे क्रोधाद्यसम्भवात् भावनं जपादिनोपासनं भाव इत्यभिप्रेत्य भक्तिरिति व्याख्यातम् । वस्तुतस्तु भावं रत्याभासमिति वा व्याख्येयम् । परत्र त्वर्चनयागावेवोक्ताविति प्रक्रमसाजात्यात् क्रियारूपैव भावशब्देनापि विवक्षिता । दम्भं स्वस्य धर्मध्वजित्वेन महत्त्वदर्शनाल्लोकप्रतिष्ठां मात्सर्य्यं तज्जन्यं परोत्कर्षनाशम् ॥ ८-९ ॥

## श्रीमद्वीरराघवव्याख्या

एवं प्रष्टव्यं पृष्ट्वा पुत्रं प्रसादयति । लोकस्येति । मिथ्याभिमतेः मिथ्याभिमतिरभिमानो यस्य मिथ्याभूतदेहात्माभिमानस्वतन्त्रात्माभिमानस्येत्यर्थः । अत एवाचक्षुषः स्वात्मपरमात्मयाथात्म्यज्ञानरहितस्यात एव कर्मसु स्वर्गनरकादिसाधनेषु कर्मस्वनुबद्धया आसक्तया धिया श्रान्तस्यात एव अनाश्रये अपारे तमसि संसारे प्रसुप्तस्य लोकस्य प्रबोधाय त्वं योगभास्करः आविरासीराविर्भूतोऽसि किल ॥ ५ ॥ ॐ ॐ एवमापृष्टः कपिलो भक्तियोगमार्गादीन् कथयितुमाबभाष इत्याह मैत्रेयः । इतीति । हे कुरुश्रेष्ठ ! विदुर इत्युक्तविधं श्लक्ष्णं सरसं सुन्दरं वा मातुर्वचः प्रतिनन्द्य महामुनिः कपिलः प्रीतः समीचीनप्रश्नेन जातानन्दः मातरि करुणयार्दितः परिप्लुतः तां मातरं प्रत्याबभाषे ॥ ६ ॥ ॐ ॐ तदेवाह । भक्तियोग इति । हे भामिनि ! पुंसां स्वभावगुणमार्गेण सत्त्वादिगुणवृत्तिवशेन मार्गैः प्रकारविशेषैर्भक्तियोगो बहुधा नाना भाव्यते निष्पाद्यते । हि यतः पुंसां भावः मनोवृत्तिर्भिद्यते ततस्तदधीनोऽपि भक्तियोगस्तामसराजससात्त्विकादिभेदेन भिद्यत इत्यर्थः ॥ ७ ॥ ॐ ॐ तानेव भेदानाह । अभिसन्धायेति । हिंसादम्भमात्सर्याणामन्यतमं द्वयं त्रितयं वाभिसंधाय सङ्कल्प्य संरम्भी क्रोधी भिन्नदृग् अत्रह्मात्मकस्वतन्त्रवस्तुदर्शी मयीश्वरे भावं भक्तिं यः कुर्यात्स त्रिविधोऽपि तामसः तामसभक्तियोगयुक्तः । तत्रापि हिंसादम्भमात्सर्यादिभिरधममध्यमोत्तमत्वं बोध्यम् । एवमन्यत्रापि ज्ञेयम् ॥ ८ ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली ।

ऋषिदेवादिष्वेकं प्रत्ययं प्रश्नः किं न स्यात्किमिति मां प्रतीत्याशङ्क्य तस्य तादृशप्रश्नवचनप्रभुत्वाभावादिह लोके तव ज्ञानप्रवर्तनायावतीर्णत्वाच्च त्वमेव समर्थ इति भावेनाह । लोकस्येति । 'लुक् प्रकाशे' इति धातोः प्रकाशो ज्ञानं लोकस्य परमात्मज्ञानप्राप्तियोग्यस्य जनस्य संसारान्मुमुक्षोरित्यर्थः । हिताय योगभास्करः ज्ञानयोगादित्यस्त्वमाविरासीः किल लोकवेदादिवार्ता अन्यस्येदृक् सामर्थ्याभावादिदं सम्भावितं च "वार्तासम्भावयोः किल" इति च । अवतारसाफल्यमेवोपपादयति । अचक्षुष इत्यादिना । प्रत्यक्षतो दृश्यमानत्वाच्चक्षुर्हीनत्ववचनं व्याहतमिवेत्यत उक्तं चिरं प्रसुप्तस्येति । अनाश्रयेऽपारे तमस्यविद्यालक्षणेऽनादित एव प्रसुप्तस्य शयानस्य तत्फलमाह । मिथ्याभिमतेरिति । बोधकाभावादन्यथा ज्ञानिनो देहाद्यभिमानित्वादेतत्फलमाह । श्रान्तस्येति । कर्मसु पुण्यपापलक्षणेष्वनुविद्धयानुरक्तया धिया श्रान्तस्यानवस्थितेरिति ॥ ५ ॥ ॐ ॐ मातुर्वचः श्रुत्वा कपिलेन भगवता किमुत्तरं प्रत्यूचे इतीतरचोद्यं परिहरति । मैत्रेय इति । अर्द गताविति धातोः करुणामर्दितो गतः । अनेन करुणैव वक्तव्यत्वे कारणमित्यसूचि ॥ ६ ॥ ॐ ॐ पुरुषार्थसाधनेषु भक्तियोगस्य प्राधान्यादत्र प्रथमतस्तत्प्रकारं निरूपयति । भक्तियोग इति । भामिनि ! सौन्दर्यादिगुणपूर्णे ! मन्मातः ! शास्त्रमार्गैर्भाव्यते निरूप्यते । बाहुविध्ये निमित्तमाह । स्वभावेति । तामसादिस्वभावोद्बोधकसत्त्वादिगुणभेदेन भावो भक्तिर्विभिद्यते तामसादिभेदेन नाना भवतीत्यर्थः ॥ ७ ॥ ॐ ॐ बाहुविध्यं दर्शयति । अभिसन्धायेति । यो हिंसां परोपद्रवं दम्भं धर्मध्वजवृत्तिं मात्सर्यं चाभिसन्धाय मनसि कृत्वा हरिभक्तेषु संरम्भी गूढद्वेषो भिन्नदृक् वस्त्वयथार्थदर्शी मयि भावं कुर्यात्स तामसभक्त इत्युच्यत इत्यन्वयः ॥ ८ ॥

## श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

योगस्य भास्करः परमप्रकाशक इत्यर्थः ॥ ५ ॥ ॐ ॐ इति भक्तिमहिमज्ञानजत्वात् प्रतिनन्द्य प्रीतः प्रश्नसौष्ठवेन, करुणा तु दैन्येन ॥ ६ ॥ ॐ ॐ अनन्यनिमित्ता निर्गुणा भक्तिरपि वृत्तिभेदेन बहुविधेत्याह । मार्गैः प्रकारविशेषैः यतः स्वस्य भक्तियोगस्यैव मार्गेण वृत्तिभेदेन श्रवणादिना भावस्याभिमानस्य । तद्भेदेन दास्यादिना गुणानां तमआदीनाञ्च तद्भेदेन हिंसादिना पुंसां भावोऽभिप्रायो भिद्यते । अत्र मुक्ताफलटीका च अयमात्यन्तिकः ततः परं प्रकारान्तराभावात् । अस्यैव भक्तियोग इत्याख्या । अन्वर्थेन भक्तिशब्दस्यात्रैव मुख्यत्वात् इतरेषु फलेषु एव अनुरागः न तु विष्णौ फलाभावे भक्तित्यागादित्येषा

श्रीगोपालतापनीश्रुतौ च । भक्तिरस्य भजनं तदिहामुत्रोपाधिनैरास्येनामुष्मिन्मनःकल्पनमेव तदेव च नैष्कर्म्यमिति । अत्र भाविनीति भावयुक्ते पुरुष इत्यर्थः ॥ ७ ॥ ❀ ❀ अत्र विशेषो भक्तिसन्दर्भे द्रष्टव्यः । तत्र स्वमार्गेण भावमार्गेण च भेदः सतां प्रसङ्गादित्यादिना येषामहं प्रिय आत्मेत्याद्यन्तेन दर्शितः । अथ केवलस्वरूपसिद्धा उदाह्रियते । तत्र सकामा कैवल्यकामा च उपासकसङ्कल्पगुणैस्तत्तद्गुणत्वेनोपचर्य्यते । तत्र सकामा द्विविधा तामसी राजसी च । तत्र पूर्व्वस्या गुणमार्गेण भेदमाह । अभीति त्रिभिः । अभिसन्धाय सङ्कल्प्य संरंभी सक्रोधः भिन्नदृक् स्वस्मिन्निव सर्वत्र यत् सुखदुःखं तदवेत्ता निरनुकम्प इत्यर्थः । अत्र संरम्भीति लोभादीनामुपलक्षणं ज्ञेयम् ॥ ८ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी ।

लोकस्य मिथ्याभिमतेरभिमानजाड्यनिवर्त्तनाय अचक्षुषश्चक्षुःप्रकाशदानाय तमसि संसारे प्रसुप्तस्य स्वापतमोनाशाय कर्म्मस्वासक्तया बुद्धया श्रान्तस्य श्रमपल्वलसंशोषणाय योगभास्करः भक्तिज्ञानयोगकमलप्रकाशको भास्करः ॥ ५–६ ॥ ❀ ❀ देवानां गुणिलिङ्गानामित्यनेन निर्गुणाया भक्तेरुक्तत्वादिह प्रथमं सगुणां भक्तिं लक्षयितुमाह । भक्तियोगः एक एव भाविनि भावोऽभिप्रायस्तद्वति पुरुषे मार्गैः प्रकारविशेषैर्बहुविधो भाव्यते चिन्त्यते ज्ञायत इत्यर्थः । स च भावः स्वभावभूता ये गुणास्तम-आदयस्तेषां मार्गेण वृत्तिभेदेन विभिद्यते नाना विभेदवान् भवति । भक्तिः स्वरूपतो निर्गुणापि पुंसां स्वाभाविकतमआदिगुणोपरक्ता सती तामस्यादिनामभिः सगुणा भवतीति भावः ॥ ७ ॥ ❀ ❀ तत्र प्रथमं तामसीं भक्तिं लक्षयन् भक्तिस्तामसी स्यादिति वक्तुमनौचित्यं परामृशन् तद्वान् पुरुष एव तामसादिशब्दैरुच्यत इत्याह । अभिसन्धाय सङ्कल्प्य संरम्भी क्रोधी भिन्नदृक् भेददर्शी स्वस्मिन्निव परस्मिन्नपि सुखदुःखं समानं न पश्यतीति निरनुकम्प इत्यर्थः । यो मयि भावं भक्तिं कुर्य्यात् स त्रिविधोऽपि तामसः । अस्यास्तामस्या भक्तेस्त्रैविध्यं स्पष्टमुक्तं बृहन्नारदीये यथा ।

"यश्चान्यस्य विनाशार्थं भजते श्रद्धया हरिम् । फलवत् पृथिवीपाल ! सा भक्तिस्तामसाधमा ॥ योऽर्च्चयेत् कैतवधिया स्वैरिणी स्वपतिं यथा । नारायणं जगन्नाथं सा वै तामसमध्यमा ॥ देवपूजापरान् दृष्ट्वा स्पर्द्धया योऽर्च्चयेद्धरिम् । शृणुष्व पृथिवीपाल ! सा भक्तिस्तामसोत्तमा" ॥ एवं राजस्याः सात्त्विक्याश्च भक्तेस्त्रैविध्यमुक्तं द्रष्टव्यम् ॥ ८ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

अचक्षुषोऽज्ञादिमायावृतज्ञानस्य अतो मिथ्याभिमतेः देहात्मवादिनः अतः कर्मसु अनुविद्धया अनुगतया धिया श्रान्तस्य अत एवानाश्रयेऽपारे तमसि संसारे चिरं प्रसुप्तस्य लोकस्य तमोनिवारणाय योगभास्करो योगप्रकाशकस्त्वमाविरासीः ॥ ५ ॥ ❀ ❀ श्लक्ष्णं मधुरम् ॥ ६ ॥ ❀ ❀ स्वभावानां गुणानां च मार्गेण द्वारेण पुंसां भावोऽभिप्रायः विभिद्यते । अतः भक्तियोगोऽपि मार्गैः प्रकारविशेषैः बहुधा बहुप्रकारः भाव्यते निष्पाद्यते ॥ ७ ॥ ❀ ❀ यो भक्तः हिंसादिकमभिसंधाय सङ्कल्प्य संरम्भी क्रोधी भिन्नदृक् आत्मनः अन्यब्रह्मात्मकत्वदर्शी भावं भक्तिं कुर्यात् स त्रिविधोऽपि तामसः ॥ ८ ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

ननु मया सर्वं वक्तव्यमिति कोऽयं निर्बन्धस्तत्राऽऽह—लोकस्येति । लोकस्य निस्तारार्थे, योगभास्करः किल त्वमाविरासीः, अतस्त्वयैव सर्वमज्ञाननिवर्तकं वक्तव्यम्, सूर्येणैव हि सर्वं तमो बाध्यते । ननु लोकः स्वयमेव स्वाज्ञानं कथं न दूरीकुर्वन्ति ? तत्राऽऽह— मिथ्याभिमतेरिति । मिथ्या अभिमतिरभिमानो यस्य । अभिमानेन ग्रस्ता न सन्मार्गं जानन्तीत्यर्थः । किञ्च, चक्षुषा हि मार्गपरिज्ञानम्, लोकास्त्वचक्षुषः । चक्षुरत्र सच्छास्त्रम्, अन्यथा सूर्येणाऽपि कार्यं न किञ्चित् । अत्यन्ताविवेकार्थमाह—अनाश्रये अरक्षके, तमस्यज्ञाने, चिरं प्रसुप्तस्य पूर्वापरानुसन्धानव्यतिरेकेण संसार एव रमतः । तत्रापि कर्मस्वनुविद्धया धिया श्रान्तस्य । कर्मश्रान्तः शयानोऽज्ञः, अन्धः सुप्तस्तमस्यधः । दीनो भवति सर्वेषां ये समर्था दयालवः ।' तेषां योग[1]प्रकाशको भास्करः[2]; अतश्चक्षुरपि प्रयच्छति, तमोऽपि दूरीकरोति, सुप्तमपि प्रबोधयति, श्रमापनोदनं च करोति, कर्मासक्तिं च त्याजयति, मिथ्याभिमानं च दूरीकरोति, आश्रयश्च भवति, शीघ्रं च कृतार्थं करोतीति अष्टाङ्गोद्धारहेतुरयं भास्करः ॥५॥ ❀ ❀ सन्मार्गं पृच्छतीति सन्तुष्टः, वैराग्यहेतुर्नोक्त इति श्रोतृत्वावगत्याऽपि प्रीतः, मातृत्वादनुरुद्धः, तस्या दीनत्वं दृष्ट्वा करुणया पीडितः, अ[3]ग्रे इयं कृतार्था भविष्यतीति—महामुनित्वात् ज्ञात्वा अभिनन्दनेन सम्मुखीकृत्य बभाष इत्याह—इतीति । श्लक्ष्णं मनोहरं मातुर्वचः तथात्वेनाभिनन्द्य, तां पुरुषार्थोपयोगिनीमाबभाषे प्रत्युत्तरं दत्तवान् ॥६॥ ❀ ❀ मुख्यां भक्तिं वक्तुमादौ गुणैर्भिन्नां भक्तिमाह—भक्तियोगो बहुविध इति । मार्गैर्मतभेदैः, पुरुषस्वभावभेदैश्च,

---

१. निवर्त्तकं च. क. घ. ङ. । २. योगप्रकाशः. क. घ. ङ. । ३. अग्रेयम्. क. ।

बहुविधो भाव्यते । यतः स्वभावगुणमार्गेण पुंसां स्वभावो विभिद्यते । स्वभावो जीवभेदनिमित्तः; जीवा ह्यनेकविधा नानास्वभावाः । गुणा अपि भेदका अन्तःकरणस्वभावहेतवः । मार्गा देशकालनियमेन देह[1]नियामकाः । वर्णाश्रमधर्मपाखण्डादिप्रतिपादनशास्त्ररूपो मार्गः । तेषामावृत्त्या प्राणिनां भावो भिद्य[2]ते; अन्यथा श्रुत्वाऽपि स्वभाववशादन्यथा अर्थं कल्पयन्ति, तदनुसारिणश्च तथैव प्रवर्तन्ते; अतो बहुविधा मार्गा भक्तौ ॥ ७ ॥ ❀ ❀ तत्र प्रथमं तामसान् भक्तिभेदानाह—अभिसन्धायेति । शत्रूणां हिंसामुद्दिश्य यस्तु मयि भावं भक्तिं कुर्यात्; स तामसतामसो भवति । तस्माद्दम्भेन यः करोति परप्रतारणार्थं स राजसतामसः; परस्य बुद्धिर्धनं चाऽपह्रियते इति तामसत्वम् । मात्सर्येण परोत्कर्षासहनेन लोकानामसाधारणबुद्धिनिवृत्त्यर्थं यो मयि भावं कुर्यात्स सात्त्विकतामसः । अयं भाव आन्तरबुद्ध्यात्मकः, अभिध्यानरूपः, तपो[3]रूपो वा; न तु श्रवणादिरूपः; तत्र तस्याऽनधिकारात् । भिन्नदृगिति । अभिन्नदृष्ट्याऽप्येते भावा भवन्तीति तद्व्यावृत्त्यर्थमुक्तम्; 'यथा हि भगवानेव वस्तुतः सदसच्च यत् । सत्येनाऽनेन नः सर्वे यान्तु नाशमुपद्रवाः' इति वाक्यात् । तमसो मूलं संरम्भीति । भगवत्स्तोत्रेषु सर्वेषां संग्रहार्थं बहूनि फलान्युच्यन्ते; अतः फलविशेषकामनयैव स्तोत्रादीनां श्रवणं सम्भवतीति तामसी भक्तिरुक्ता ॥ ८ ॥

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

भक्तियोगो बहुविध इत्यत्र । पुरुषस्वभावभेदैरित्ययं हेतुरुत्तरार्द्धे अर्थतः प्राप्यत इति बोधयितुमाहुः—यत इत्यादि । ननु चिदंशानां जीवानां सर्वेषामेकविधत्वात् कथं स्वभावभेद इत्यत आहुः—स्वभाव इत्यादि । भगवतः सकाशाद्व्युच्चरिता आत्मानो वासनाविशिष्टनानाविधलिङ्गेषु प्रविष्टा जीवशब्दवाच्या भवन्तीत्यतः स्वभावभेद इत्यर्थः । अन्यद्भेदकद्वयमाहुः—गुणा इत्यादि । मार्गा इत्यादि च । मार्गाः कर्मादयः, देशा मगधकुरुक्षेत्रादयः, कालः कृतकलिसुदुर्मुहूर्तनक्षत्रादिरूपः; तत्कृतो यो नियमस्ताद्दशदेशकाल उत्पत्त्याऽऽचारसंसर्गादिरूपस्तेन तथेत्यर्थः ॥ ७ ॥ ❀ ❀ अभिसन्धायेत्यत्र । मूलस्थभावपदेनोक्तस्यार्थस्य स्वरूपमाहुः—अयमित्यादि । तत्र गमकमाहुः—तत्रेत्यादि । श्रवणादिरूपे तादृशस्याऽधिकारानुक्तेरित्यर्थः । एते भावा इति अभिध्यारूपाः । अभिन्नदृष्ट्या क्रियमाणत्वे उदाहरणमाहुः—यथेत्यादि ॥ ८ ॥

### श्रीगिरिधरकृता बालप्रबोधिनी

एवं प्रष्टव्यं पृष्ट्वोत्तरार्थं तं प्रसादयति—लोकस्येति । मिथ्याभिमतेः देहादौ मिथ्यैव आत्माभिमानवतः । हेतुः—अचक्षुषः आत्मपरमात्मादिज्ञानचक्षुःशून्यस्येत्यर्थः । अत एवानाश्रये रक्षकशून्ये तमसि अज्ञानकार्ये संसारे चिरं कालं प्रसुप्तस्य पतितस्य अत एव तत्साधनभूतेषु कर्मसु अनुबद्धया आसक्तया धिया श्रान्तस्य लोकस्य प्राणिजातस्य उद्धाराय योगभास्करः योगः ज्ञानयोगः भक्तियोगोऽष्टाङ्गयोगश्च तत्प्रदर्शकः सूर्यस्त्वमाविरासीरित्यन्वयः । अत्र सर्वं यथार्थमेवोक्तं न किञ्चित् स्तुतिपरत्वेनेति सूचयति—किलेति ॥५॥ ❀ ❀ विदुरभाग्यमभिनन्दन् सम्बोधयति—कुरुश्रेष्ठेति । इत्येवंविधं श्लक्ष्णं सरसं मातुर्वचः प्रतिनन्द्य सत्कृत्य महामुनिः कपिलः प्रीतो जातहर्षः करुणया चार्दितः परिप्लुतः संस्तां मातरमाबभाषे ॥ ६ ॥ ❀ ❀ तदेवाह—भक्तियोग इति । भामिनि हे मातः मार्गैः प्रकारविशेषैर्भक्तियोगो बहुविधो भाव्यते सम्पद्यते । एतदेव स्पष्टयति—स्वभावे हेतुभूताः ये तमआदयो गुणास्तेषां मार्गेण वृत्तिभेदेन यतः पुंसां भावोऽभिप्रायो विभिद्यते, फलसङ्कल्पभेदाद्भक्तिभेद इत्यर्थः ॥ ७ ॥ ❀ ❀ हिंसा परपीडा, दम्भः परप्रतारणम्, मात्सर्यं परोत्कर्षासहनम् । हिंसादीनामन्यतमं द्वयं वा त्रितयं वा अभिसन्धाय सङ्कल्प्य संरम्भी क्रोधी भिन्नदृक् आत्मपरमात्मनोः सर्वत्र भेददर्शी यः पुरुषो मयि परमेश्वरे भावं भक्तिं कुर्यात् तस्य स त्रिविधोऽपि भावस्तामसः । अस्यापि अधममध्यमोत्तमत्वमुक्तं बृहन्नारदीये—'यश्चान्यस्य विनाशार्थं भजते श्रद्धया हरिम् । भेददृक् पृथिवीपाल सा भक्तिस्तामसाधमा ॥ योऽर्चयेत्कैतवधिया स्वैरिणी स्वपतिं यथा । नारायणं जगन्नाथं सा वै तामसमध्यमा ॥ देवपूजापरान् दृष्ट्वा स्पर्द्धया योऽर्चयेद्धरिम् ॥ शृणुष्व पृथिवीपाल सा भक्तिस्तामसोत्तमा' इति । एवमग्रे राजस्याः सात्त्विक्याश्च भक्तेस्त्रैविध्यं द्रष्टव्यम् ॥ ८ ॥

### हिन्दी अनुवाद

ज्ञानदृष्टिके लुप्त हो जानेके कारण देहादि मिथ्या वस्तुओंमें जिन्हें आत्माभिमान हो गया है तथा बुद्धिके कर्मासक्त रहनेके कारण अत्यन्त श्रमित होकर जो चिरकालसे अपार अन्धकारमय संसारमें सोये पड़े हैं, उन्हें जगानेके लिये आप योग प्रकाशक सूर्य ही प्रकट हुए हैं ॥ ५ ॥ ❀ ❀ श्रीमैत्रेयजी कहते हैं—कुरुश्रेष्ठ विदुरजी ! माताके ये मनोहर वचन सुनकर महामुनि कपिलजीने उनकी प्रशंसा की और जीवोंके प्रति दयासे द्रवीभूत हो बड़ी प्रसन्नताके साथ उनसे इस प्रकार बोले ॥

---

१. देहनियामकवर्णाः''' ग. च. । २. अपि भिद्यते ख. । विभिद्यते घ. । ३. तपो वा ग. ङ. ।

६ ॥ ❀ ❀ श्रीभगवानने कहा—माताजी ! साधकोंके भावके अनुसार भक्तियोगका अनेक प्रकारसे प्रकाश होता है, क्योंकि स्वभाव और गुणोंके भेदसे मनुष्योंके भावमें भी विभिन्नता आ जाती है ॥ ७ ॥ ❀ ❀ जो भेददर्शी क्रोधी पुरुष हृदयमें हिंसा, दम्भ अथवा मात्सर्यका भाव रखकर मुझसे प्रेम करता है, वह मेरा तामस भक्त है ॥ ८ ॥

विषयानभिसन्धाय यश ऐश्वर्यमेव वा। अर्चादावर्चयेद्यो मां पृथग्भावः स राजसः ॥ ९ ॥
कर्मनिर्हारमुद्दिश्य परस्मिन् वा तदर्पणम्। यजेद्यष्टव्यमिति वा पृथग्भावः स सात्त्विकः ॥ १० ॥
मद्गुणश्रुतिमात्रेण मयि सर्वगुहा[१]शये। मनोगतिरविच्छिन्ना यथा गङ्गाम्भसोऽम्बुधौ ॥ ११ ॥
लक्षणं भक्तियोगस्य निर्गुणस्य ह्युदाहृतम्। अहैतुक्यव्यवहिता या भक्तिः पुरुषोत्तमे ॥ १२ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

पृथग्भावो भेददर्शी ॥ ९ ॥ ❀ ❀ कर्मनिर्हारं पापक्षयम्। परस्मिन्परमेश्वरे तदर्पणं कर्मार्पणम्। भगवत्प्रीतिमुद्दिश्येत्यर्थः। यष्टव्यमिति विधिसिद्धिमुद्दिश्येत्यर्थः। भेददर्शित्वमर्चादावर्चनं च त्रिष्वपि समानम्। तदेवं तामसादिभक्तिषु त्रयस्त्रयो भेदाः तासु यथोत्तरं श्रैष्ठ्यम्। एवं च श्रवणकीर्तनादयो नवापि प्रत्येकं नवनवभेदाः। तदेवं सगुणा भक्तिरेकाशीतिभेदा भवति ॥ १० ॥ ❀ ❀ निर्गुणा तु भक्तिरेकविधैव तामाह। मद्गुणश्रुतिमात्रेणेति द्वाभ्याम्। मद्गुणश्रुतिमात्रेण मयि पुरुषोत्तमे मनोगतिरिति या भक्तिः सा निर्गुणस्य भक्तियोगस्य लक्षणमित्यन्वयः। अविच्छिन्ना संतता ॥ ११ ॥ ❀ ❀ लक्षणं स्वरूपम्। अहैतुकी फलानुसंधानशून्या। अव्यवहिता भेददर्शनरहिता च ॥ १२ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

आदिना गुर्वादिग्रहः। पृथक् मत्तोन्यत्र विषयादिष्वेव भावः स्पृहा यस्य सः ॥ ९ ॥ ❀ ❀ कर्मनिर्हारमिति। यस्य भक्तेः कर्मनिर्हारमेव प्रयोजनमित्यर्थः। तदर्पणं कर्मार्पणं यथा स्यात्तथा यो यजेत् स्वधर्मार्पणप्रचुरां श्रवणादिभक्तिं यः कुर्यादित्यर्थः। इत्यर्थ इति। मत्कर्मणा भगवानेव प्रसीदतु नाहं किञ्चिदिच्छामीति भावः। इत्यर्थ इति। यष्टव्यं सर्वेषामिति नित्यविधिप्राप्तत्वेनावश्यमेव तत्पूजनं कर्त्तव्यं स्वाश्रमकर्मवदिति बुद्ध्यैव स्वाश्रमधर्माचरणपूर्वकं यो यजेत्पृथग्भावः भक्तेः पृथग्भूते मोक्षे भावोऽभिप्रायो यस्य सः यथोत्तरं तामसादिष्वधममध्यमोत्तमेपूत्तमभेदानां श्रैष्ठ्यम्। प्रत्येकं नवेति अधममध्यमोत्तमभेदत्रयवत्सात्त्विकं श्रवणं तादृशे एव तामसराजसे श्रवणे। एवं कीर्त्तनादीनामपि ज्ञेयम्। श्रवणादयो नव तु श्रवणं, कीर्त्तनं, स्मरणं, पादसेवनम्, अर्चनं वंदनं, दास्यं, सख्यम्, आत्मनिवेदनञ्चेति ॥ १० ॥ ❀ ❀ देवानां गुणलिङ्गानामित्यत्र लक्षितामेव निर्गुणां भक्तिं सुखबोधार्थं पुनर्लक्षयति मद्गुणश्रवणमात्रेणैव। न तु तत्रोद्देशांतरसिद्ध्यभिप्रायेण मय्येव सर्वगुहाशये सर्वांतःकरणवर्त्तिनि सुखध्येयमूर्त्तौ श्रीपुरुषोत्तमे मनसो गतिरविच्छिन्ना विषयांतरेणावच्छेत्तुं शक्या या न भवति। तत्र दृष्टांतः यथांबुधौ गंगांभसो गतिरिति हेतोरेतदर्थमेव भक्तियोगस्य लक्षणमुदाहृतमित्यन्वयः। यतो निर्गुणश्रवणादिभक्तियोगेनैव मयि मनोगतिरविच्छिन्ना भवेदतो भक्तियोगं सलक्षणमुदाहृतमिति फलितोर्थः। अम्बुधिना स्वलहरीभिः परावात्ततस्याप्यंभसो यथांबुधावेवं गतिस्तथा मयापि पारमेष्ठ्यसार्ष्टिसालोक्यादिफलैः प्रलोभितस्यापि तस्य मय्येव गतिरिति। एवञ्च भक्तमनसो गंगाजलदृष्टांतेन द्रौत्यशैत्यपावित्र्यजगत्पूज्यत्वादीन्युक्तानि। तदेवं लक्षणं किमित्यपेक्षायामाह—अहैतुकीति। हेतुः कारणं फलानुसंधानञ्च तद्रहिता। स्वप्रकाशत्वात्स्वतः फलरूपत्वाच नेयं ज्ञानयोगादिवदिति भावः। साधुसंगप्रेम्णोश्च प्रथमद्वादशभूतिकत्वादनयोर्हेतुत्वफलत्वे वस्तुत इति प्रथमस्कंधे एव व्याख्यातम्। अव्यवहिता ज्ञानकर्मादिव्यवधानशून्या या भक्तिः सैव निर्गुणेत्यर्थः। भक्तेरास्पदश्रद्धानिवाससुखादीनामपि निर्गुणत्वं "निर्गुणो मदपाश्रयः" इति। मत्सेवायां तु निर्गुणेति 'मन्निकेतं तु निर्गुणम्' इति "निर्गुणं मदपाश्रयम्" इत्येकादशस्कंधोक्तेः ॥ ११–१२ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

पापक्षयं मोक्षम्। "तस्मिन्समर्पितं कर्म स्वाभाविकमपीश्वरे। भवेद्भागवतं कर्म तत्कर्म किमुतार्पितम्" इत्युक्तमाहात्म्यं कर्मार्पणमुद्दिश्य तत्र श्रीवैष्णवानां मते कर्मार्पणस्यैव दास्यत्वात्तस्य च तत्प्रीतिफलत्वाल्लक्षणया भगवत्प्रीतिमुद्दिश्येत्यार्थिकोऽर्थः। विधिसिद्धिमुद्दिश्य न तु भक्तितत्त्वज्ञानेन यो यजेत्परमेश्वरं पूजयति। अत्र भेददर्शित्वं भक्तेर्मोक्षस्य पृथक् पुरुषार्थत्वभावनम् ॥ १० ॥ ❀ ❀ मद्गुणेति युग्मकम्। प्रत्येकं नवभेदा इति। यथा श्रवणं त्रिविधं तामसं त्रिविधं राजसं त्रिविधं सात्त्विकम्। एवं नवविधमेवं कीर्त्तनादिकमपि नवनवविधमेवं सगुणा भक्तिरेकाशीतिभेदा। मद्गुणश्रुतिमात्रेणेत्यत्र मात्रशब्देनोद्देश्यान्तरसिद्धेर्व्यावृत्तिः। मनोगतिः मनसः स्वकर्त्तृकतदानुकूल्याभिलाषरूपा प्रवृत्तिरिति या भक्तिस्तद्रूपा या भक्तिस्तत्प्रेरिता

[१]. प्रा० पा०—गुणाशये।

श्रवणादिरूपा च या भक्तिरिति भावरूपा चेष्टारूपा चेति द्विविधापि संगृहीता । सा निर्गुणस्य भक्तियोगस्य लक्षणं स्वरूप-मित्यन्वयार्थः ॥ ११-१२ ॥

## श्रीमद्वीरराघवव्याख्या

विषयान् शब्दादिविषयलाभं यशः ऐश्वर्यं वान्यतमं यथारुचि द्वयं त्रयं वाभिसन्धाय पृथग्भावः परमात्मनः स्वात्म-शरीरकत्वमज्ञात्वा देवतामात्रबुद्धित्वं पृथग्भावत्वमेवंविधः अर्चादौ मां योऽर्चयेत्स राजसः ॥ ९ ॥ ❀ ❀ कर्मनिर्हारं पापक्षयं परस्मिन् परमपुरुषे तदर्पणं कर्मसमर्पणं भगवत्प्रीतिमुद्दिश्येत्यर्थः । यष्टव्यमिति । शेषिण ईश्वरस्याज्ञारूपत्वाद्विधेर्वैधम-वश्यं स्वरूपानुबन्धि कर्तव्यमकरणे भगवता निगृहीतः स्यामिति वाभिसन्धायापृथग्भावः स्वात्मनो ब्रह्मशरीरत्वं जानन् यो मां यजेत् स सात्त्विको भक्तः । अत्र पृथग्भाव इति छित्त्वा भेददर्शित्वं त्रिष्वपि समानमिति केचिद्योजयन्ति । तत्र सात्त्विकत्वमसङ्गतं सत्त्वस्य यथावस्थितवस्तुप्रकाशकत्वस्य 'सत्त्वात्सञ्जायते ज्ञानं, तत्र सत्त्वं निर्मलत्वात्प्रकाशकमि'ति भगवता गीतत्वेन पृथग्भावस्य सत्त्वकार्यत्वाभावादतोऽपृथग्भाव इत्येव छेदोऽयमपि सात्त्विकः कर्मनिर्हाराद्यभिसन्धिभेदादधममध्यमोत्तमभेदेन त्रिविधः ॥ १० ॥ ❀ ❀ एवं च तामसादयस्त्रयोऽप्यवान्तरभेदैर्नवविधा । तत्र नवमस्यैव भक्तियोगस्य साक्षान्मुक्त्युपायत्वं वक्ष्यन् तस्य फलाव्य-वहितदशारूपलक्षणमाह द्वयेन । मद्गुणेति । सर्वगुहाशये सर्वेषां हृदयकुहरे वर्तमाने पुरुषोत्तमे मयि मद्गुणश्रवणमात्रेण गङ्गाम्भसोऽम्बुधाविव अविच्छिन्ना विजातीयप्रत्ययान्तराव्यवहिताहैतुकी फलाद्युपाधिरहिताव्यवहिता मोक्षं प्रत्युपायान्तर-व्यवधानरहिता भक्तिः प्रीतिपूर्वकानुस्मरणरूपा मनोवृत्तिरिति या सा निर्गुणस्य सत्त्वादिनैर्गुण्यसम्पादकस्य मुक्तिसाधनस्येत्यर्थः । भक्तियोगस्य लक्षणं स्वरूपमित्यर्थः ॥ ११-१२ ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

शब्दाविषयान् दिक्षु व्याप्तं यशश्छत्रचामराद्यैश्वर्यं वा मनसाभिसंधाय सङ्कल्प्य योऽर्चादौ प्रतिमादौ मामर्चयेत् स पृथग्भावस्तद्रूपाणां भेददर्शी अर्चादिस्थितानां तेषां रूपाणां भेदं पश्यन् राजसो भक्तः ॥ ९ ॥ ❀ ❀ यः कर्मनिर्हारं पाप-क्षयमुद्दिश्य मां यजेत् परस्मिन्सर्वोत्तमे मयि तदर्पणं कर्मार्पणञ्चोद्दिश्य यजेत् यष्टव्यं विहितत्वान्ममेदं कर्तव्यमिति वा मां यजेद-पृथग्भावः मद्रूपाणामभेददर्शी स सात्त्विको भक्तः । राजससात्त्विकयोर्भेदं पृथगपृथग्भावावेव निमित्तं नत्वर्चादावर्चनमज्ञस्य विहित-त्वात्तज्ज्ञस्य गुणहेतुत्वात् । तदुक्तम् 'अज्ञोऽर्चयेद्देवार्चायामन्यथा दोषवान् भवेत् । ज्ञस्त्वर्चयन् सुगुणवानन्यथा दोषवान्नतु' इति ॥ १० ॥ ❀ ❀ निर्गुणभक्तिलक्षणं वक्ति । मद्गुणेति । यथाम्बुधौ गङ्गाम्भसो गतिरविच्छिन्ना तथा मद्गुणश्रवण-मात्रेण यस्य सर्वगुणाश्रये सर्वगुणानामाश्रयो निषेवणं यस्मिन् स तथा सर्वगुणमूर्तिरित्यर्थः । तस्मिन्मयि मनोगतिरविच्छिन्ना निरन्तरा ॥ ११ ॥ ❀ ❀ तेन क्रियमाणस्य निर्गुणस्य भक्तियोगस्य लक्षणमुदाहृतम् । हीत्यन्वयः । आत्यन्तिकभक्तिलक्षणं ब्रूते । अहैतुकीति ॥ १२ ॥

## श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः ।

उत्तरा यथा विषयानिति । पृथक् मत्तोऽन्यत्र विषयादिष्वेव भावः स्पृहा यस्य न तु मयीति राजसत्त्वहेतुता दर्शिता ॥ ९ ॥ ❀ ❀ अथ कैवल्यकामा सात्त्विक्येव सा यथा कर्म्मनिर्हारमिति । कर्म्मनिर्हारं मोक्षमुद्दिश्य परस्मिन् परमेश्वरे यो वा कर्म्मार्पणं कुरुते यो वा यष्टव्यं सर्वेषां नित्यविधिप्राप्तत्वेनावश्यमेव तत्पूजनं कर्त्तव्यमिति बुद्धया न तु भक्तितत्त्वज्ञानेन यो यजेत् परमेश्वरं पूजयति अत एव पूर्ववत् पृथग्भावः भक्तेः पृथक् मोक्षमेव पुरुषार्थत्वेन भावयन् स सात्त्विक उच्यते । उत्तर-स्यापि तात्पर्यं कर्म्मनिर्हार एव भवेदिति । उक्तञ्च । सात्त्विकः कारकोऽसङ्गीति कैवल्यं सात्त्विकं ज्ञानमिति । सात्त्विकं सुख-मात्मोत्थमिति च तत् साधनसाध्ययोः सगुणत्वम् । अत्रत्योदाहरणं यजेदिति उदाहरणमेव ॥ १० ॥ ❀ ❀ अथ यस्या एव सर्वोत्कर्षज्ञानार्थमेते भक्तिभेदा निरूपिताः सा भक्तिमात्रकामत्वान्निष्कामा निर्गुणा केवला स्वरूपसिद्धा निरूप्यते । इयमेवाकिञ्च-नाद्याख्यात्वेन सर्वोर्ध्वमप्यभिहिता । तामाह । मद्गुणेति युग्मकेन । मद्गुणश्रुतिमात्रेण न तु तत्रोद्देश्यान्तरसिद्ध्यभिप्रायेण प्राकृतगुणमयकरणानां सर्वेषां गुहाकरणागोचरपदवी तस्यां शेते गुह्यतया निश्चलतया च तिष्ठति । यस्तस्मिन् मयि अविच्छिन्ना विषयान्तरेणावच्छेत्तुमशक्या या मनोगतिः सा । अविच्छिन्नत्वे दृष्टान्तः यथेति । गतिरिति पूर्वस्मादेवाकृष्यते छान्दसत्वात् । लक्षणं स्वरूपम् । ननु तस्या गुणश्रुतेः का वार्ता उद्देश्यान्तराभावेन मनोगतित्वाभावे च द्विधापि निर्देष्टुमशक्यत्वात् तत्राह । अहैतुकी फलानुसन्धानरहिता अव्यवहिता स्वरूपसिद्धत्वेन साक्षाद्रूपा नतु आरोपादिसिद्धत्वेन व्यवधानात्मिका तादृशी या भक्तिः श्रोत्रादिना सेवनमात्रं सा च तस्य स्वरूपमित्यर्थः । मात्रपदेनाविच्छिन्नेत्यनेन च मनोगतेरहैतुकीत्वादिसिद्धेः पृथग् योजनार्हत्वात् । सात्त्विकः कारको सङ्गीत्यादिषु निर्गुणो मदपाश्रय इत्यादिभिः । तदाश्रयक्रियादीनां निर्गुणत्वख्यापनात् । 'मां भजन्ति गुणाः सर्व्वे निर्गुणं निरपेक्षकम् । सुहृदं प्रियमात्मानं साम्यासङ्गादयो गुणाः ॥' इत्यत्र तद्गुणानामप्यप्राकृतत्वश्रवणात् ॥ ११-१२ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

पृथक् मत्तोऽन्यत्र विषयादिष्वेव स्पृहा यस्य सः ॥ ९ ॥ ❀ ❀ कर्म्मनिर्हारं कर्म्मक्षयमुद्दिश्य यो यजेत् यस्य भक्तेः कर्म्मक्षय एव प्रयोजनमित्यर्थः। परस्मिन् परमेश्वरे तदर्पणं तस्य कर्म्मणोऽर्पणं यत्र तद्यथा स्यात्तथा यो यजेत् स्वधर्म्मार्पणप्रचुरां श्रवणादिभक्तिं यः कुर्य्यादित्यर्थः। यष्टव्यं सर्वेषां नित्यविधिप्राप्तत्वेनावश्यमेव कर्त्तव्यं स्वाश्रमकर्म्मवत्तद्यजनमिति बुद्ध्यैव स्वाश्रमधर्म्माचरणपूर्व्वकं यो यजेत् पृथग्भावः भक्तेः पृथग्भूते मोक्षे भावोऽभिप्रायो यस्य सः। एवमेषा नवविधैव सकामा यथोत्तराधिक्या ज्ञेया। तत्र सात्त्विकी भक्तिः कस्यचिज्ज्ञानं जनयति, तत्रापि ज्ञानस्य गुणभावे स्वप्राधान्ये ज्ञानमिश्राभिधाना शान्तिरतिं निर्गुणामेवोत्पादयति। ज्ञानस्य प्राधान्ये स्वयं तदङ्गभूता तु सायुज्यमुक्तिमेव। कस्यचिदश्वमेधादिसफलकर्म्मार्पणवती भक्तिर्न तु कर्म्मार्पणमयी सुखैश्वर्य्यमयं सालोक्यमोक्षं निष्फलकर्म्मार्पणवती तु शान्तिरतिं राजस्यास्तामस्याश्च भक्तेः फलप्राप्तौ सत्यां भक्त्यभावे प्रायस्तत्तत्फलमेव फलं भक्तिमहिम्ना किञ्चिदधिकमपि फलप्राप्तौ सत्यामपि कस्यचिद्भक्तिसत्त्वे तु "सत्यं दिशत्यर्थितमर्थितो नृणाम्" इत्यादिदृष्ट्या सापि काले निर्गुणैव स्यादिति ज्ञेयम् ॥ १० ॥ ❀ ❀ देवानां गुणलिङ्गानामित्यत्र लक्षितामेव निर्गुणां भक्तिं सुखबोधार्थं पुनर्लक्षयति। मद्गुणश्रवणमात्रेणैव मय्येव सर्वगुहाशये सर्व्वान्तःकरणवर्तित्वेन सुखध्येयमूर्तौ श्रीपुरुषोत्तमे मनसो गतिरविच्छिन्ना भवति। यथा अम्बुधौ गङ्गाम्भसो गतिरिति हेतोरेतदर्थमेव भक्तियोगस्य लक्षणमुदाहृतमित्यन्वयः। यतो निर्गुणश्रवणादिभक्तियोगेनैव मयि मनोगतिरविच्छिन्ना भवेदतो भक्तियोगं सलक्षणमुदाहृतमिति फलितोऽर्थः। अम्बुधिना स्वलहरीभिः परावर्तितस्याप्यम्भसो यथा अम्बुधावेव गतिस्तथा मयापि पारमेष्ठ्यसार्ष्टिसालोक्यादिफलैः प्रलोभितस्यापि तस्य मय्येव गतिरिति। एवञ्च भक्तमनसो गङ्गाजलदृष्टान्तेन द्रौत्यशैत्यपावित्र्यजगत्पूज्यत्वादीन्युक्तानि। तदेव लक्षणं किमित्यपेक्षायामाह। अहैतुकी। हेतुः कारणं फलान्तराभिसन्धिश्च तद्रहिता स्वप्रकाशत्वात् स्वतः फलरूपत्वाच्च नेयं ज्ञानयोगादिवदिति भावः। साधुसङ्गप्रेम्णोस्तु प्रथमद्वादशभूमिकात्वान्न तयोर्हेतुफलत्वे वस्तुत इति प्रथमस्कन्ध एव व्याख्यातम्। अव्यवहिता ज्ञानकर्म्मादिव्यवधानशून्या या भक्तिः सैव निर्गुणेत्यर्थः। भक्तेरास्पदश्रद्धानिवासमुखादीनामपि निर्गुणत्वं निर्गुणो मदपाश्रय इति मत्सेवायां तु निर्गुणेति मन्निकेतं तु निर्गुणमिति निर्गुणं मदपाश्रयमित्येकादशस्कन्धाज्ज्ञेयम् ॥ ११-१२ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

पृथग्भावो भेददर्शी स्वस्य भगवदंशत्वमजानन्केवलभेददर्शी ॥९॥ ❀ ❀ कर्मनिर्हारं पापक्षयमुद्दिश्याथवा परस्मिन्भगवत्यर्पणं यथा भवति तथाऽथवा यष्टव्यमेवांशेनांशिपूजनं कर्तव्यमेवेति बुद्ध्या ह्यपृथग्भाव आत्मनो ब्रह्मात्मकभावयुक्तो यदा यजेदर्चादावर्चयेत्तदा भक्तियोगस्त्रिविधोऽपि सात्विकोऽत्र तामसादिभक्तिषु गुणतारतम्येन त्रयस्त्रयो भेदाः। तत्र च प्रत्येकं श्रवणादिनवभेदाः तदेव सगुणभक्तेरेकाशीतिभेदा ज्ञेयाः ॥१०॥ ❀ ❀ साधनरूपां भक्तिमुक्त्वा परां भक्तिमाह। मद्गुण इति द्वाभ्याम् ॥ ११,१२ ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

एवं राजसीं त्रिविधामाह। विषयान् स्रक्चन्दनादीन्, यशः कीर्तिम्, ऐश्वर्यं वा क्रमेणाऽभिसन्धाय गुणैर्भिन्नो राजसः प्रतिमादौ यो मां पूजयेत् स राजसः पृथग्भाव इति पूर्ववत्। एवेति समुदायव्यावृत्त्यर्थम्, वेति विकल्पार्थम्, अन्यथा चत्वारो भेदाः स्युः। आदिशब्देन सूर्यादयः ॥ ९ ॥ ❀ ❀ सात्त्विकभेदानाह—कर्मनिर्हारमिति। कर्मणः पापस्य निर्हारो दूरीकरणम्, प्रायश्चित्तमिति यावत्। पूर्वकृतकर्मणो वा रोगादिना परिज्ञाने [1]तन्निवृत्त्यर्थं यो भगवन्तं यजेत्, वैदिकतान्त्रिकमार्गेण पूजां कुर्यात्, स तामससात्त्विकः। परस्मिन् भगवति वा कृतानां सर्वकर्मणामर्पणं समर्पणमुद्दिश्य यो हरिं यजेत्, स राजससात्त्विकः। एवं विधानेन भगवन्तमिष्ट्वा तत्र सर्वाणि कर्माणि समर्पणीयानीति यो यजते, स तथोक्तः। यस्तु नित्यकर्मवद्यष्टव्य एव भगवानिति यजते, स[2] सात्त्विकसात्त्विकः। पृथग्भावः पूर्ववत् ॥ १० ॥ ❀ ❀ निर्गुणां भक्तिमाह द्वयेन—मद्गुणेति। परिच्छेदका हि गुणाः सत्त्वा[3]दयः। भगवद्गुणास्तु सर्वोत्कृष्टहेतुत्वेन श्रुताः स्वाश्रयं भगवन्तमनवच्छिन्नमेव बोधयन्ति, अन्यथा स्वस्य उत्कर्षहेतुत्वं न स्यात्। अतः—सर्वगुहाशये मयि भगवति, प्रतिबन्धरहिता अविच्छिन्ना या मनोगतिः। पर्वतादिभेदनमपि कृत्वा यथा गङ्गाम्भोऽम्बुधौ गच्छति, तथा लौकिकवैदिकप्रतिबन्धान् दूरीकृत्य या भगवति मनसो गतिः। मनस इत्युपलक्षणम्, दुर्लभत्वाय वा, यथा कायिकगतिर्गोपिकानाम्। सा गतिर्निर्गुणस्य भक्तियोगस्य भगवति प्रेम्णो गतिर्लक्षणं ज्ञापकमित्युत्तरेण सम्बन्धः ॥ ११ ॥ ❀ ❀ स्वरूपमुक्त्वा लक्ष्यलक्षणसम्बन्धमाह—लक्षणमिति। निर्गुणस्य भक्तियोगस्य तल्लक्षणमुदाहृतमिति प्रमाणम्। आत्यन्तिकभक्तेर्लक्षणमाह—अहैतुकीति सार्द्धाभ्याम्। या अहैतुकी पुरुषोत्तमे भक्तिः स एव भक्तियोग आत्यन्तिक उदाहृत इति सम्बन्धः। पुरुषोत्तम एव भक्तिः, न तु पुरुषेष्ववता[4]रेषु वा भक्तिश्च प्रेमपूर्विका सेवा। हेतुः फलानुस[5]न्धानम्, तद्रहिता अहैतुकी, अनिमित्ता वा। अनेन सगुणा निवारिता। अव्यवहितेति कालेन कर्मणा वा यत्र सेवायां व्यवधानं नास्ति, नतु निद्राभोजनादिना, तस्य सेवाहेतुत्वात्। याभक्तिरिति लोकवेदप्रसिद्धा, न तु चौर्यादिना विषयान् सम्पाद्य भगवत्सेवाकरणम् ॥ १२ ॥

### अस्मिन्पर्याये सुबोधिनीप्रकाशो न

---

१. परिज्ञानेन निवृत्त्यर्थम्. क. ग. । २. स च. ग. । ३. सात्त्विकादयः. ख. च. । ४. इतरेषु. ङ. । ५. फलाभिसन्धानम्. ख. ग. घ. ।

### श्रीगिरिधरकृता बालप्रबोधिनी

विषयान् स्रक्चन्दनवनितादीन् यशःसत्कीर्तिमैश्वर्यं धनादि एव वा अभिसन्धाय सङ्कल्प्य पृथग्भावः भेददर्शी यः अर्चादौ प्रतिमादौ आदिपदात्सूर्यादिग्रहणम्-मामर्चयेत्तस्य स भक्तियोगो राजसः ॥ ९ ॥ ❀ ❀ कर्मनिर्हारं पापक्षयमुद्दिश्य परस्मिन् परमेश्वरे वा तदर्पणं यथा स्यात्तथा भगवत्प्रीतिमुद्दिश्य यष्टव्यमिति विधिसिद्धिमुद्दिश्य वा पृथग्भावो भेददर्शी मां यजेत् पूजयेत् स भक्तियोगः सात्त्विकः ॥१०॥ ❀ ❀ तदेवं तामसादिभक्तिषु त्रयस्त्रयो भेदाः, तासु यथोत्तरं श्रैष्ठ्यं, तथाच श्रवण-कीर्त्तनादयो नवापि तामसादिभेदेन प्रत्येकं नव नव भेदा भवन्ति । अतः सगुणा भक्तिरेकाशीतिभेदेति सूचितम्, निर्गुणा भक्तिस्त्वेकविधैव, सा च 'देवानां गुणलिंगानां' इत्युक्ताऽपि सुखबोधाय तां पुनराह—मद्गुणेति द्वयेन । मद्गुणानां भक्तवात्सल्यादीनां श्रुतिमात्रेण श्रवणमात्रेण मयि पुरुषोत्तमे या मनसो गतिः प्रीतिपूर्वकानुस्मरणरूपा सा निर्गुणस्य भक्तियोगस्य लक्षणं स्वरूपमुदाहृ शास्त्रे निरूपितमिति द्वयोरन्वयः । साऽव्यविच्छिन्ना प्रत्ययान्तरेणाविच्छिन्ना सन्तता । तत्र दृष्टान्तमाह—यथा गङ्गाया अम्भसोऽम्बुधौ समुद्रे गतिर्भवति तथेति । अहैतुकी फलसङ्कल्परहिता । ननु "आत्मनस्तु कामाय सर्वं प्रियं भवति" इति श्रुतेः कथं त्वय्येवं भक्तिः सम्भवतीत्याशङ्क्याह—अव्यवहितेति, भेददर्शनरहितेत्यर्थः । ननु भिन्ने कथमभेददर्शनमित्यत आह—सर्वगुहाशये इति, सर्वप्रत्यगात्मत्वेन ममात्मैवासावित्यभेददर्शनेनेत्याशयः । मनोगतिरिति सर्वेन्द्रियगत्युपलक्षणं देवानामिति तथोक्तेः । अस्याः निर्गुणत्वे संशयो नास्तीत्याह—हीति ॥ ११-१२ ॥

### हिन्दी अनुवाद

जो पुरुष विषय, यश और ऐश्वर्यकी कामनासे प्रतिमादिमें मेरा भेदभावसे पूजन करता है, वह राजस भक्त है ॥ ९ ॥ ❀ ❀ जो व्यक्ति पापोंका क्षय करनेके लिये, परमात्माको अर्पण करनेके लिये और पूजन करना कर्तव्य है—इस बुद्धिसे मेरा भेदभावसे पूजन करता है वह सात्त्विक भक्त है ॥ १० ॥ ❀ ❀ जिस प्रकार गङ्गाका प्रवाह अखण्डरूपसे समुद्रकी ओर बहता रहता है, उसी प्रकार मेरे गुणोंके श्रवणमात्रसे मनकी गतिका तैलधारावत् अविच्छिन्नरूपसे मुझ सर्वान्तर्यामीके प्रति हो जाना तथा मुझ पुरुषोत्तममें निष्काम और अनन्य प्रेम होना—यह निर्गुण भक्तियोगका लक्षण कहा गया है ॥ ११-१२ ॥

सालोक्यसार्ष्टिसामीप्यसारूप्यैकत्वमप्युत । दीयमानं न गृह्णन्ति विना मत्सेवनं जनाः ॥ १३ ॥
स एव भक्तियोगाख्य आत्यन्तिक उदाहृतः । येनातिव्रज्य त्रिगुणं मद्भावायोपपद्यते ॥ १४ ॥
निषेवितेनानिमित्तेन स्वधर्मेण महीयसा । क्रियायोगेन शस्तेन नातिहिंस्रेण नित्यशः ॥ १५ ॥
मद्धिष्ण्यदर्शनस्पर्शपूजास्तुत्यभिवन्दनैः । भूतेषु मद्भावनया सत्त्वेनासङ्गमेन च ॥ १६ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

भक्तानां निष्कामतां कैमुत्यन्यायेनाह । सालोक्यं मया सहैकस्मिंल्लोके वासम् । सार्ष्टिं समानैश्वर्यम् । सामीप्यं निकटवर्तित्वम् । सारूप्यं समानरूपताम् । एकत्वं सायुज्यम् । उत अपि दीयमानमपि न गृह्णंति कुतस्तत्कामनेत्यर्थः ॥ १३ ॥ ❀ ❀ किमिति तर्हि भजंते भक्तेरेव परमफलत्वादित्याह । स एवेति । ननु त्रैगुण्यं हित्वा ब्रह्मप्राप्तिः परमफलं प्रसिद्धम् । सत्यं तत्तु भक्तावानुषंगिकमित्याह । येन भक्तियोगेन मद्भावाय ब्रह्मत्वाय ॥ १४ ॥ ❀ ❀ एवंभूताया भक्तेः साधनान्याह । पंचभिः । निषेवितेन सम्यगनुष्ठितेन अनिमित्तेन स्वधर्मेण नित्यनैमित्तिकेन महीयसा श्रद्धादियुक्तेन क्रियायोगेन पंचरात्राद्युक्तपूजाप्रकारेण शस्तेन निष्कामेन ॥ १५ ॥ ❀ ❀ मद्धिष्ण्यं मत्प्रतिमादि । तस्य दर्शनादिभिः सत्त्वेन धैर्येण असंगमेन वैराग्येण ॥ १६-१७ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः ।

इत्यर्थ इति । आत्यंतिकभक्तानां भक्तिरेवापेक्षिता "सत्याशिषो हि भगवंस्तवपादपद्ममाशीस्तथानुभजतः पुरुषार्थमूर्त्तेः" इति ध्रुवोक्तेरिति भावः ॥ १३ ॥ ❀ ❀ आक्षिप्य समाधत्ते किमितीति । अत्यंते सर्वांते भव आत्यंतिकः । अत्राक्षिपति नन्विति । तत्तु ब्रह्मप्राप्तिरूपमानुषंगिकम् । विश्वनाथस्तु—नन्वात्यंतिकशब्देन सायुज्यमुच्यते इत्याह भक्तियोगाख्यं भक्तियोगाख्यो भक्तिनामायं ततोप्यधिकफलमित्यर्थः । अत एवापवर्गशब्देन क्वचिद्ब्रह्मणि निर्वाणशब्देन चायमुच्यते यदुक्तं पञ्चमे "अपवर्गश्च भवति योसौ भगवत्यनन्यनिमित्तभक्तियोगलक्षणः" इति । सप्तमे च "अधोक्षजालंभमिह" इत्यादौ, "तद्ब्रह्मनिर्वाणसुखं विदुर्बुधाः" इति "हरावैकांतिकी भक्तिर्मोक्षमाहुर्मनीषिणः ।" इति पुराणान्तराच्च । भक्तिरस्य भजनं तदिहामुत्रोपाधिनैरास्येनामुष्मिन्मनःकल्पनमेतदेव नैष्कर्म्यमिति गोपालतापिनीश्रुतिश्च । ननु त्रिगुणमयाद्बन्धान्मोक्ष एव परमं फलं प्रसिद्धं, सत्यं तत्तु भक्तावानुषंगिकमिति स्वामिचरणैरुक्तमेव । अतिव्रज्योल्लंघ्य मच्चरणाश्रयणमात्रेणैव संसारसिंधोर्गोष्पदायमानत्वे जाते तल्लङ्घनानुसंधानं भवतीति भावः ।

मद्भावाय मद्विषयकप्रेम्णे ॥ १४ ॥ ❀ ❀ निषेवितेन पूर्वपूर्वैः शुद्धभक्तैर्नि षेवितेनांगीकृतेन स्वधर्मेणेति वा स च स्मृतिशास्त्रोक्त-प्रमाणैर्मृज्जलादिभिर्देहवस्त्रपात्रादिद्रव्यशुद्धिविधिरूपो निर्मंत्रक एव ज्ञेयः । महीयसाऽर्चनादिभक्त्युपयोगित्वात्प्रशस्तेन । व्याख्यांतरे मत्कृते त्यक्तकर्माण इति मयादिष्टानपि स्वकान् धर्मान् संत्यज्येत्यादिभगवद्भक्तिस्तथात्र निषेवितपदस्य वैयर्थ्यञ्च स्यात् । नातिहिंस्रेण—इह्यातिपदेन भगवन्मंदिरमार्जनलेपनतदर्थान्नादिविविधनैवेद्यसाधनादिष्वतिदुर्वारदुर्लक्ष्यजीवहिंसनशाकपत्रमूलफला-दित्रोटनादावपि न क्षतिरिति द्योतितम् ॥ १५ ॥ ❀ ❀ मद्भावनयांतर्यामित्वेन मच्चिंतनेन । सत्त्वेन धैर्येण ॥ १६ ॥

## श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या ।

मत्सेवनं विना न गृह्णन्तीत्युक्त्या यत्र सेवा तत्सालोक्यादिचतुष्टयं मत्सेवार्थमेव गृह्णन्ति न तु स्वसुखैश्वर्योत्कर्षार्थम् । एकत्वन्तु भगवत्सायुज्यब्रह्मसायुज्यलक्षणं द्विविधमपि न गृह्णन्ति सदा मत्सेवाविनाभूतत्वादिति व्यज्यते । तदुक्तं श्रीरसामृतसिन्धौ "सुखैश्वर्य्योत्तरा सेयं प्रेमसेवोत्तरेत्यपि । सालोक्यादिर्द्विधा तत्र नाद्या सेवाजुषां मता ॥" इत्यादिदीयमानस्यापि अग्राहका एते दानवीररसास्वादवन्तो ज्ञेयाः ॥ १३ ॥ ❀ ❀ स एव निर्गुणभक्तियोग एवात्यन्तिकः अन्तिमफलतया पञ्चमपुरुषार्थतया भवतीत्यात्यन्तिक उदाहृतः । तत्तु ब्रह्मकैवल्यमानुषङ्गिकमनायासलभ्यं मुमुक्षूणां भवतीत्याह । यद्यपि मुमुक्षुर्येन भक्तियोगेन ब्रह्मत्वाय ब्रह्मप्राप्तये योग्यो भवति तथापि "न परिलषन्ति केचिदपवर्गमपीश्वर ते" इत्यादेः नात्यन्तिकं विगणयन्त्यपि ते प्रसादमित्यादेश्च शुद्धभक्तानामनभीष्टं तत्तेभ्यो भगवान्न ददाति तत्क्रतुन्यायात् "ये यथा मां प्रपद्यन्त" इति भगवद्वाक्याच्च ॥ १४ ॥ ❀ ❀ एवंभूताया निरन्तरोक्तमोक्षप्रापिकायाः इति शुद्धत्वं प्रत्याख्यातम् । तेन ज्ञानकर्म्ममिश्रत्वं व्यञ्जितम् । निषेवितेनेति पञ्चकम् । तत्रापि बहुवाक्यैकवाक्यत्वाट्टीकाक्रमलाभाय मध्ये द्विबिन्दुमस्तका अङ्काः कल्पनीयाः । अतिहिंसारहितेनेति अतिशब्देन फलपत्रादि-जीवावयवस्वीकारोऽभिव्यज्यते । पूजाप्रकारे तस्यावश्यापेक्ष्यत्वात् नित्यश इति तस्य नित्यविधित्वं दर्शितम् ( १ ) प्रतिमादीत्यादिना गोब्राह्मणाद्यधिष्ठानपरिग्रहः । भूतेष्वन्तर्य्यामित्वेन मद्भावनया ( २ ) "अहिंसास्तेयब्रह्मचर्य्यापरिग्रहा यमाः" "शौचसन्तोषतपः-स्वाध्यायेश्वरप्रणिधानानि नियमाः" ( ३ ) आध्यात्मिकमात्मविवेकशास्त्रमार्ज्जवेन सारल्येन आर्य्याणां वैदिकाचारवतां साधूनां सङ्गेन निरहङ्क्रियया गर्वपरित्यागेन ( ४ ) मद्धर्म्मेण इत्येव पाठः न तु मद्धर्म्मिण इति चित्तं मामभ्येति मद्भ्रुवानुस्मृतिं प्राप्नो-तीत्यर्थः । अत्र शुद्धाया उपक्रान्तत्वेन वर्णनीयत्वेऽपि यन्मूलं तत्प्रचक्षत इति देवहूतिप्रश्नानुरोधादेव ज्ञानकर्ममिश्रवर्णनं स्वमतन्तु सतां प्रसङ्गादित्यादिना वर्णितमेव । देवहूत्या तथा प्रश्नोऽपि मुमुक्षूणामुपकारायैवेति ज्ञेयम् ( ५ ) ॥ १५-१९ ॥

## श्रीमद्वीरराघवव्याख्या

अहैतुकीत्यनेनोक्तं निर्गुणभक्तियोगनिष्ठानां फलकामनाराहित्यं कैमुत्यनयेन द्रढयति । सालोक्येति । सेवनं मदनुभवमन्तरेण मया दीयमानं सालोक्यादिरूपं पञ्चविधं मोक्षमपि न गृह्णन्ति जनाः निर्गुणभक्ताः । किमुत सांसारिकफलं न गृह्णन्तीति अत्रैकत्व-मेकाकारकत्वं सायुज्यमित्यर्थः । सालोक्यं समानलोकवासित्वं सार्ष्टिः समानभोगः सामीप्यं निकटवर्तित्वं सारूप्यं समानविग्रहवत्त्वम् ननु "विकल्पोऽविशिष्टफलत्वात्" इति मुक्तौ फलतारतम्यं प्रतिषिद्धम् । मैवम् । एते सर्वे सायुज्य एवान्तर्भूताः । तत्र सायुज्यं नाम समानगुणयोगः गुणाष्टकाविर्भावरूपः युज्यत इति युग्धर्मः । धर्मो हि धर्मिणा युज्यते समानः युग् यस्य स सम्युक् सयुजो भावः सायुज्यं साधर्म्यं तथा च गीतं भगवता "मम साधर्म्यमागता" इति । अत्र सालोक्यादिचतुष्टयस्यापि ब्रह्मसायुज्यान्तर्भूतत्वज्ञापनाय सालोक्यादीनां भेदेनोपादानं साधर्म्ये सति हि सालोक्यादिकं सर्वं सम्पन्नमेवेति सालोक्यादेः सायुज्यान्तर्भूतत्वं युक्तं, देवतान्तर-प्राप्तौ हि सालोक्यादिभेदावाप्तिः । ब्रह्मप्राप्तौ तु सायुज्यान्तर्भूतत्वेनैव सालोक्यादिप्राप्तिरिति विशेषः । यद्वा भगवत्प्राप्तावपि श्रीविष्णुलोकादिषु द्वारकादिष्विव तथाविधभेदोऽस्तीति तदपेक्षिणां प्राप्यभेदद्योतनाय पृथङ्निर्देशः । यदाहुः 'लोकेषु विष्णोर्निव-सन्ति केचित् समीपमृच्छन्ति च केचिदन्ये । अन्ये तु रूपं सदृशं भजन्ते सायुज्यमन्ये स तु मोक्ष उक्तः ॥' इति तस्मान्मुक्तौ फलतारतम्याशङ्का न कार्या ॥ १३ ॥ ❀ ❀ अस्य भक्तियोगस्य लक्षणमुपसंहरति । स एवेति । येन त्रिगुणान् सत्त्वादीनति-क्रम्य प्रकृतिसम्बन्धनिर्मुक्त इत्यर्थः । अनेन निर्गुणस्येति पूर्वमुक्तं निर्गुणत्वं स्पष्टीकृतं मद्भावाय मत्स्वभावाय मत्साम्यापत्तय इत्यर्थः । उपपद्यते योग्यो भवति । स एव भक्तियोगः आत्यन्तिकः चरमकाष्ठां गतः । इत्युदाहृतः मत्स्वभावापत्तिरूपफलाव्यवहितसाधनत्व-दशैव नवमस्य भक्तियोगस्य स्वरूपमुदाहृतमित्यर्थः ॥ १४ ॥ ❀ ❀ तस्य साधनान्याह पञ्चभिः । निषेवितेनानुष्ठितेन अनिमित्तेन फलाभिसन्धिरहितेन स्वधर्मेण स्ववर्णाश्रमोचितधर्मेण महीयसा अङ्गानां मध्ये बलवत्तरेण शस्तेन प्रशस्तेन क्रियायोगेन पञ्चरात्राद्युक्तपूजायोगेन ॥ १५ ॥ ❀ ❀ मद्धिष्ण्यं मत्प्रतिमायतनादिस्तस्य दर्शनादिभिः भूतेषु मद्भावनया मदात्मकत्वबुद्ध्या सत्त्वेन धैर्येणासङ्गेन वैराग्येण ॥ १७ ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

सार्ष्टिः समानैश्वर्यम् ॥ १३ ॥ ❀ ❀ तद्भक्तिफलमाह । येनेति । येनात्यन्तिकभक्तियोगेन त्रिगुणान् त्रिलिङ्गशरीरे-न्द्रियाणि अतिव्रज्यातिक्रम्य संत्यज्येत्यर्थः । मद्भावाय चिदानन्ददेहेन मयि सत्तायै औन्नत्यस्थित्यै उपपद्यते योग्यो भवतीत्यर्थः ॥१४॥

❀ ❀ एतादृशभक्त्युत्पत्तौ किं साधनमत आह। निषेवितेनेति। निषेवितेनानिमित्तेन निष्कामेन नितरां सेवितेन। अनिमित्त इति पाठे यथा फलाभिसंधिरहितो भवति तथा निषेवितेनेत्यर्थः। "अष्टवर्षं ब्राह्मणमुपनयीत" इत्यादिवेदविहितेन स्वधर्मेण क्रियायोगेन भगवत्पूजालक्षणयोगेन कर्मयोगेन वा नातिहिंस्रेण प्राण्युपद्रवरहितेन ॥ १५ ॥ ❀ ❀ मद्धिष्ण्यानां केशवादिप्रतिमानां दर्शनादिभिर्भूतेषु जीवेष्वन्तर्यामित्वेन मद्भावनया मम स्मरणलक्षणोपासनया सत्येन भूतहितेन वचसा सङ्गमेन दुर्जनसङ्गराहित्येन ॥ १६ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

अहैतुकीत्वमेव विशेषतो दर्शयति। जना मदीयाः सालोक्यादिकमपि उत अपि दीयमानमपि न गृह्णन्ति मत्सेवनं विनेति गृह्णन्ति चेत्तर्हि मत्सेवनार्थमेव गृह्णन्ति नतु तदर्थमेवेत्यर्थः। सार्ष्टिः समानैश्वर्यम् एकत्वं भगवत्सायुज्यं ब्रह्मसायुज्यञ्च। अनयोस्तल्लीलात्मकत्वेन तत्सेवनार्थत्वाभावादग्रहणावश्यकत्वमेवेति भावः ॥ १३ ॥ ❀ ❀ तस्मात् स एव निर्गुणभक्तियोगो भक्तियोगाख्य आत्यन्तिकः। स एष च अन्तिमफलतया भवतीत्यपवर्ग इत्यर्थः। नात्यन्तिकं विगणयन्तीत्यादेः आत्यन्तिकफलतया तत्प्रसिद्धेश्च। ननु गुणत्रयात्ययपूर्व्वकं भगवत्साक्षात्कार एवापवर्ग इति। चेत् तस्यापि तादृशधर्म्मत्वं स्वतः सिद्धमेवेत्याह। येनेति। येन कदाचिदप्यपरित्याज्येन मम भावाय विद्यमानतायै साक्षात्कारायेत्यर्थः। उपपद्यते समर्थो भवति। तद्वदन्येषां मत्साक्षात्कारो न भवतीत्यर्थः। यद्वा मद्भावाय मत्प्रेमविशेषायेति प्रेममात्रशून्यं तु सालोक्यादिकमपि नास्तीति भावः। यच्च व्रजन्त्यनिमिषमित्यादेः ब्रह्मकैवल्यं तु तेषां न भवत्येव। "ये यथा मां प्रपद्यन्ते" इत्यादिना सनिर्द्धारणभगवत्प्रतिज्ञानात् तत्क्रतुन्यायाच्च। राजन् पतिर्गुरुरित्यादौ तादृशभक्तेरेव दुर्लभत्वाच्च। यथोक्तं पञ्चमे यथावर्णविधानमपवर्गश्च भवति। योऽसौ भगवतीत्यादिकम्। अनन्यनिमित्तभक्तियोगलक्षणनानागतिनिमित्ताविद्याग्रन्थिवन्धनद्वारेण यदा हि महापुरुषपुरुषप्रसङ्ग इत्यन्तेन ॥ १४ ॥ ❀ ❀ ज्ञानकर्म्ममिश्रा यथा निषेवितेनेति पञ्चकम्। शस्तेन उत्तमदेशकालादिमता निष्कामेण च। नातिहिंस्रेण अतिहिंसारहितेन। अतिशब्दः प्राणादिपीडापरित्यागफलपत्रादिजीवावयवस्वीकारार्थः ॥ १५ ॥ ❀ ❀ मद्धिष्ण्यं मदर्च्चादिभूतेष्वन्तर्यामित्वेन मद्भावनया अहिंसास्तेयब्रह्मचर्य्यापरिग्रहा यमाः। शौचसन्तोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः ॥ १६-१७ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

अम्बुधौ गङ्गाम्भसो गतिरिति दृष्टान्तव्यञ्जितमर्थं स्पष्टयन्नुक्तलक्षणभक्तिमतां जनानां निष्कामत्वं कैमुत्यन्यायेनाह। सालोक्यं मया सहैकस्मिँल्लोके वासः। सार्ष्टिः समानैश्वर्य्यम्। सामीप्यं निकटवर्त्तित्वम्। सारूप्यं समानरूपत्वम्। एकत्वं सायुज्यम्। उत अपि दीयमानमपि न गृह्णन्ति कुतस्तत्कामनेति भावः। मत्सेवनं विनेति केचिद् गृह्णन्ति चेन्मत्सेवार्थमेव गृह्णन्तीत्यर्थः ॥ १३ ॥ ❀ ❀ किमिति तर्हि भजन्ते भक्तेरेव परमफलत्वादित्याह। स एवेति। अत्यन्ते सर्व्वान्ते भव आत्यन्तिकः। नन्वात्यन्तिकशब्देन सायुज्यमुच्यत इत्याह। भक्तियोगाख्यः भक्तियोगनामायं ततोऽप्यधिकं फलमित्यर्थः। अत एवापवर्गशब्देन क्वचिद्ब्रह्मणि निर्वाणशब्देन चायमुच्यते यदुक्तं पञ्चमे "अपवर्गश्च भवति योऽसौ भगवत्यनन्यनिमित्तभक्तियोगलक्षण" इति सप्तमे च। "अधोक्षजालम्भमिहेत्यादौ तद्ब्रह्म निर्व्वाणसुखं विदुर्बुधा" इति "हरावैकान्तिकीं भक्तिं मोक्षमाहुर्मनीषिण" इति पुराणान्तरे च। "भक्तिरस्य भजनं तदिहामुत्रोपाधिनैरास्येनामुष्मिन् मनःकल्पनमेतदेव च नैष्कर्म्म्यम्" इति गोपालतापनी श्रुतिश्च। ननु त्रिगुणमयाद्बन्धात् मोक्ष एव परमफलं प्रसिद्धम्। सत्यं, तत्तु भक्तावानुषङ्गिकमित्याह। येन भक्तियोगेन अतिव्रज्य अतिक्रम्य उल्लङ्घ्येति यावत्। मच्चरणाश्रयणमात्रेणैव त्रिगुणात्मकसंसारसिन्धोर्गोष्पदायमानत्वे जाते तदुल्लङ्घनमनुसन्धानं विनैव भवतीति भावः। मद्भावाय मद्विषयकप्रेम्णे ॥ १४ ॥ ❀ ❀ अस्या भक्तेरङ्गान्याह। निषेवितश्चासौ अनिमित्तरूपश्चेति। तेन पूर्व्वपूर्वैः शुद्धभक्तैर्निषेवितोऽङ्गीकृतो यः स्वधर्म्मस्तेनेत्यर्थः। स च स्मृतिशास्त्रोक्तप्रमाणैर्मृज्जलादिभिर्देहवस्त्रपात्रादिद्रव्यशुद्धिविधिरूपो निर्मन्त्रक एव ज्ञेयस्तेन महीयसा अर्चनादिभक्त्युपयोगित्वात् प्रशस्तेन। व्याख्यान्तरे 'मत्कृते त्यक्तकर्म्माण इति मया दिष्टानपि स्वकान् धर्म्मान् सन्त्यज्ये'त्यादिभगवदुक्तिविरोधस्तथात्र निषेवितपदस्य वैयर्थ्यञ्च स्यात्। क्रियायोगेन पञ्चरात्राद्युक्तपूजाप्रकारेण शस्तेन उत्तमदेशादिमता नातिहिंस्रेण अतिहिंसारहितेनेत्यतिशब्देन भगवन्मन्दिरमार्ज्जनलेपनतदर्थान्नादिविविधनैवेद्यसाधनादिष्वतिदुर्व्वारदुर्लक्ष्यसूक्ष्मजीवहिंसनशाकपत्रमूलफलादित्रोटनादावपि न क्षतिरिति ज्ञापितम् ॥ १५ ॥ ❀ ❀ सत्त्वेन धैर्य्येण असङ्गेन दुःसङ्गत्यागेन ॥ १६-१७ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

उत्तमभावानां निष्कामत्वं कैमुत्यन्यायेन द्रढयति। सालोक्येति। जनाः उत्तमभक्ताः सालोक्यादि तत्रापि मया दीयमानमपि न गृह्णन्ति। अपिशब्दः प्रसिद्धपदार्थपरः। उतशब्दः कैमुतिकन्यायद्योतकः। अव्ययानामनेकार्थपरत्वात्। यत्प्रसिद्धं स्वर्गे नरके प्राकृतं वस्तु मत्सेवनं विना न गृह्णन्तीति किमुत वक्तव्यमित्यन्वयः। तत्र सालोक्यं मया सहैकस्मिँल्लोके वासः।

सार्ष्टिः समानैश्वर्यम् । सामीप्यं निकटवर्तित्वम् । सारूप्यं समानरूपता । एकत्वं वक्ष्यमाणरीत्या स्वरूपतो भिन्नस्यापि जीवस्य ब्रह्मभिन्नावस्थानाभावात् समानगुणत्वाच्च ब्रह्मणा प्राप्येण सहैकता तदेव सायुज्यम् । अत्रेदमवधेयम् मुक्तिः स्वस्वमनीषया बहुभिर्बहुधोक्ता । तत्र बाह्यैः क्षणिकविज्ञानप्रवाहात्मवादिभिः प्रवाहशान्तिर्मुक्तिः स्वीकृता । तार्किका एकविंशतिदुःखात्यन्ताभावो मुक्तिरित्याहुः । मीमांसका निर्बोधतयात्मावस्थानं मुक्तिमाहुः । पातञ्जलाः समनस्केन्द्रियवृत्तिजयं मुक्तिमाहुस्ते सर्वे निर्मूलत्वादुपेक्षणीयाः । औपनिषदाः "निरञ्जनः परमं साम्यमुपैति" इति मुक्तिमाहुः अयं पक्षः श्रुतिमूलत्वात्साधुः "मम साधर्म्यमागताः" इति श्रीमुखवचनात् । तथा च अनादिमायापरियुक्तरूपो जीवोऽब्रह्मात्मकं स्वात्मानं मन्यमानः एष परस्यांशः "ममैवांशो जीवलोके जीवभूतः सनातन" इति श्रुतिस्मृत्युपदेशतः आत्मनो ब्रह्मांशत्वमवधार्य "तत्त्वमसि, क्षेत्रज्ञञ्चापि मां विद्धि" इति श्रुतिस्मृत्युपदेशतः अंशस्य अंशिनिरपेक्षस्थितिप्रवृत्त्याद्यभावेन ब्रह्मात्मकस्य स्वस्य ब्रह्माभिन्नत्वमवधार्य अनादिसिद्धमात्मनोऽपहतपाप्मत्वादिगुणगणं भगवज्ज्ञानभक्तिसाधनेन भगवत्कृपया कार्यकारणप्रकृतिसम्बन्धध्वंसे प्राप्नोति स च निरञ्जनत्वादिपदवाच्यः आविर्भूतापहतपाप्मत्वादिगुणः ब्रह्मांशत्वेन ब्रह्मभिन्नस्वरूपोऽपि अंशस्यांशिभिन्नावस्थानाभावादभिन्नभूतः प्राप्येण नित्याविर्भूतापहतपाप्मत्वादिगुणगणार्णवेन भगवता समतां प्राप्नोति । एवंभूता मुक्तिः ब्रह्मप्राप्तिभगवत्प्राप्तिभगवद्भावप्राप्तितत्साधर्म्यैकत्वसायुज्यादिशब्दैरुक्ता शास्त्रे । तत्र युज्यते धर्मिणीति युक् अपहतपाप्मत्वादिधर्मः समानः युक् धर्मो यस्य स सयुक् मुक्तो जीवः । तस्य सयुजो भावः सायुज्यम् । तदेवंभूतायामेव मुक्तौ सालोक्यादिभेदाः अन्तर्भूता इति दिक् । ये तु मायावादिनः जीवपरयोः स्वरूपैक्यं मुक्तिरित्याहुः । तत्पक्षस्य अध्यासगिरिवज्रादौ निराकृतत्वादत्रोपरम्यते ॥ १३ ॥ ❀ ❀ यद्यपि मुक्तिं न गृह्णन्ति तथापि भक्तिस्तेभ्यो मुक्तिं ददात्येवेत्याह । स एवेति । उत्तमाधिकारमते स उक्तप्रकारः आत्यन्तिकः परमपुरुषार्थः भक्तियोगाख्य एवोदाहृतः येन भक्तियोगेन त्रिगुणं कार्यकारणरूपप्रकृतिमण्डलमतिव्रज्य अतिक्रम्य मद्भावाय ब्रह्मसाम्याय उपपद्यते "हृतात्मनो हृतप्राणांश्च भक्तिरनिच्छतो गतिमण्वीं प्रयुङ्क्ते" इत्युक्तत्वात् ॥ १४ ॥ ❀ ❀ तस्याः साधनान्याह । निषेवितेनेति पञ्चभिः । स्वधर्मेण स्वाश्रमधर्मेण क्रियायोगेन अर्चनप्रकारेण च अनिमित्तेन निष्कामेण महीयसा श्रद्धादियुक्तेन शस्तेन शास्त्रप्रसिद्धेन ॥ १५ ॥ ❀ ❀ मद्धिष्ण्यानां मत्प्रतिमादीनां दर्शनादिभिः सत्त्वेन धैर्येण ॥ १६-१७ ॥

## श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

तस्या निदर्शनमाह—सालोक्येति । सैवाऽऽत्यन्तिकी या स्वतो रसभावं प्राप्ता, सैव नाऽन्यत्फलमङ्गीकारयति । अत्यन्तप्रेमोत्पत्तावेवं भवति । सालोक्यं वैकुण्ठे वासः, सार्ष्टिः समानैश्वर्यम्, सामीप्यं भगवत्समीपे स्थितिः, सालोक्येऽप्ययं विशेषः, सारूप्यं स्वस्याऽपि चतुर्भुजत्वम्, एकत्वं सायुज्यम् । उतेति तस्य मुख्यफलत्वं ज्ञापयति । तदपि दीयमानं न गृह्णन्तीत्यत्यन्तानादरे । दीयमानत्वं स्नेहात् । मत्सेवनमिति सेवैवानन्दरूपा जातेति समासाद्बोध्यते, यतस्ते जनाः सेवकाः । भक्तियोग 'इति तस्यैव नाम । स एवाऽऽत्यन्तिक इत्युदाहृतः तस्य स्वातन्त्र्याय भगवत इव फलसाकत्वमाह—येनेति । येन भक्तियोगेन त्रिगुणमतिव्रज्य, मद्भावाय भगव'त्त्वाय, उपपद्यते योग्यो भवतीत्यर्थः ॥ १३-१४ ॥ ❀ ❀ एतस्या भक्तेः साधनान्याह निषेवि'तेति चतुर्भिः—मुख्यं साधनमन्तःकरणशुद्धिः, तदन्तःकरणं षोडशकलं भवतीति तस्य शुद्ध्यर्थं षोडशसाधानान्युच्यन्ते । तान्यपि त्रिविधानि । आधिभौतिकान्येव तानि कृतान्यन्तःकरणशुद्धिं सम्पादयन्ति परमां धर्मार्थम्; तान्येवाऽऽध्यात्मिकानि ज्ञानार्थे शुद्धिं संपादयन्ति परमाम्, तान्येव च पुनराधिदैविकानि परमां शुद्धिं सम्पादयन्ति भक्त्यर्थम् । सा च भक्तिरात्यन्तिकी, इदं वैलक्षण्यं वक्ष्यति—मद्धर्माचरणैरेतैरिति । अन्यथा उक्तानां मद्धर्मत्वं न विहितं स्यात् । अत एव प्रथमं धर्मत्रयमाह—स्मार्तम्, श्रौतम्, तान्त्रिकं चेति, सार्द्धेन । प्रथमं श्रौते रुचिर्न भवतीति स्मार्तं विधत्ते । स्वधर्मेण परिसंशुद्धाशयः पुरुषो मत्संमुखमेति सम्बन्धः । एवमन्येष्वपि साधनेषु । स्वधर्मो वर्णाश्रमधर्मो देहप्रयुक्त्या निष्पन्नः । सोऽपि सम्यक् नितरां सेवितश्चेत्, नत्वनुकल्पेन । तत्रापि कामनारहितेन, तत्रापि सजातीयप्रचयसहितेन महीयसा । त्रिविधगुणयुक्तश्चे'त् स्वधर्मः स्नानादिरूपः स्मार्तः, स तु पार्थिवांशदोषं दूरीकरोतीति षोडशांशोपकारं करोति । एवं क्रियायोगो वैदिको यज्ञात्मकः प्रशस्तः—येषु ब्राह्मणवाक्यानि अतिप्रशंसकानि भवन्ति, न तु द्वादशाहा (?) हीनवन्निन्दितान्यपि भवन्ति । तत्रापि हिंसाप्रचुरं न कर्तव्यम् । अल्पहिंसा इध्माबर्हिषामर्थे । आलम्भेऽपि तादृक्पशुसद्भावे अल्पहिंसा भवति 'मृत्यवे वा एष नीयते' इति श्रुतेः । अतो नाऽतिहिंस्रेणेत्युक्तम् । सोऽपि सर्वदा कर्तव्यः । एवं क्रियायोगोऽपि गुणत्रयसहितः । अयमाध्यात्मिकं दोषं दूरीकरोति अपां चाऽऽध्यात्मिकत्वात् तच्छोधको भवति ॥ १५ ॥ ❀ ❀ एवं स्मार्तश्रौताभ्यां परिशुद्धस्तान्त्रिके अभिनिविष्टः पञ्चाङ्गं भगवद्भजनं करोतीत्याह—मद्धिष्ण्येति । भगवद्धिष्ण्यान्यधिष्ठानानि । धिष्ण्यपदेन च प्रमाणमूलकानि श्रीरङ्गादीनि । तेषां प्रथमतो दर्शनम्; ततश्चरणस्पर्शः, ततः पूजा, स्तुतिरभिवन्दनं चेति पञ्च । पञ्चानां प्रत्येकसामर्थ्यद्योतनाय बहुवचनम् । अनेन सर्वतैजसशुद्धिरुक्ता, पञ्चाग्न्यवयं जात इति ।

---

१. इतीति नास्ति क. घ. ङ. । २. भगवद्भावाय ख. ङ. च. । ३. निषेवितेनेति क. च. ।

चतुर्थं साधनमाह—भूतेष्विति। सर्वेष्वेव सङ्घातेषु भगवद्भावना कर्तव्या, भगवानेवैवं जातः, एवमवस्थ इति वा, यथा वायोः। साधनान्तरम्—सत्त्वेनेति। सत्त्वगुणः साधनम्। तत्त्रिविधम्—सात्त्विककर्मरूपम्, सतां स्वरूपत्वापादकम्, वसुदेवरूपान्तःकरणसाधकं च। अनेनाऽऽकाशशरीरत्वाद्भगवतस्तच्छुद्धिरुक्ता। इन्द्रियशुद्धिमाह—असङ्गेनेति। सर्वसङ्गनिवृत्तिः कर्तव्या। चकारात्तदिच्छापरित्यागः॥ १६॥

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

निषेवितेत्यत्र। तादृशपशुसद्भाव इति। इध्मादितुल्यपिष्टपशुसद्भावे॥ १५॥ ❀ ❀ मद्धिष्ण्येत्यत्र। यथा वायोरिति। येन कृतेन प्रकारेण वायोः शुद्धिरित्यर्थः॥ १६॥

### श्रीगिरिधरकृता बालप्रबोधिनी

अहैतुकीत्यनेनोक्तां भक्तानां निष्कामतामेव कैमुत्यन्यायेनाह—सालोक्येति। जनाः निर्गुणभक्ताः मत्सेवनं विनाऽन्यत् सालोक्यादिकं मया दीयमानमपि न गृह्णन्ति न कामयन्ते इति किं वक्तव्यम्?। सालोक्यं मया सहैकस्मिन् लोके वासम्। सार्ष्टिं समानैश्वर्यम्। सामीप्यं निकटवर्तित्वम्। सारूप्यं समानरूपत्वम्। एकत्वं सायुज्यम्। उत अपि॥ १३॥ ❀ ❀ अतः स उक्तलक्षण एव भक्तियोगाख्य आत्यन्तिकः मोक्षसाधनानां चरमकाष्ठामापन्नः उदाहृतः कथितः, येन भक्तियोगेन पुरुषस्त्रिगुणं गुणत्रयकार्यसुखदुःखमोहमयं संसारमतिव्रज्य अतिक्रम्य मद्भावाय भगवत्त्वायोपपद्यते, योग्यो भवतीत्यर्थः॥ १४॥ ❀ ❀ एवं परमफला भक्तिः कथं स्यादित्यपेक्षायां तत्साधनान्याह पञ्चभिः—निषेवितेनेति। निषेवितेन स्वनुष्ठितेन। अनिमित्तेन फलाभिसन्धिरहितेन स्वधर्मेण स्ववर्णाश्रमोचितधर्मेण स्नानादिरूपेण स्मार्तेन। तथा यज्ञादिक्रियायोगेन श्रौतेन। तत्रापि शस्तेन ब्राह्मणादिभिः स्तुत्येन। तत्रापि नातिहिंस्रेण। तदङ्गहिंसाया आवश्यत्वादतिशब्दः। महीयसा "यद्यच्छ्रद्धयोपनिषदावाकरोति तद्वीर्यवत्तरं भवति" इति श्रुतेः श्रद्धादियुक्तेन अनिमित्तेन महीयसा नित्यश इति विशेषणत्रयस्य यथोचितं सर्वत्र सम्बन्धः॥ १५॥ ❀ ❀ मद्धिष्ण्यं मत्प्रतिमा तस्य दर्शनादिभिः। भूतेषु स्थावरजङ्गमात्मकेषु मद्भावनया मदात्मकत्वबुद्ध्या। सत्त्वेन धैर्येण। असङ्गेन वैराग्येण च॥ १६॥

### हिन्दी अनुवाद

ऐसे निष्काम भक्त, दिये जानेपर भी, मेरी सेवाको छोड़कर सालोक्य[1], सार्ष्टि[2], समीप्य[3], सारूप्य[4] और सायुज्य[5] मोक्षतक नहीं लेते—॥ १३॥ भगवत्-सेवाके लिये मुक्तिका तिरस्कार करनेवाला यह भक्तियोग ही परम पुरुषार्थ अथवा साध्य कहा गया है। इसके द्वारा पुरुष तीनों गुणोंको लाँघकर मेरे भावको—मेरे प्रेमरूप अप्राकृत स्वरूपको प्राप्त हो जाता है॥ १४॥ ❀ ❀ निष्कामभावसे श्रद्धापूर्वक अपने नित्य-नैमित्तिक कर्तव्योंका पालन कर, नित्यप्रति हिंसारहित उत्तम क्रियायोगका अनुष्ठान करने, मेरी प्रतिमाका दर्शन, स्पर्श, पूजा, स्तुति और वन्दना करने, प्राणियोंमें मेरी भावना करने, धैर्य और वैराग्यके अवलम्बन, महापुरुषोंका मान, दीनोंपर दया और समान स्थितिवालोंके प्रति मित्रताका व्यवहार करने, यम-नियमोंका पालन, अध्यात्मशास्त्रोंका श्रवण और मेरे नामोंका उच्च स्वरसे कीर्तन करनेसे तथा मनकी सरलता, सत्पुरुषोंके सङ्ग और अहङ्कारके त्यागसे मेरे धर्मोंका ( भागवतधर्मोंका ) अनुष्ठान करनेवाले भक्त पुरुषका चित्त अत्यन्त शुद्ध होकर गुणोंके श्रवणमात्रसे अनायास ही मुझमें लग जाता है॥ १५-१९॥

**महतां बहुमानेन दीनानामनुकम्पया। मैत्र्या चैवात्मतुल्येषु यमेन नियमेन च॥ १७॥**
**आध्यात्मिकानुश्रवणान्नामसङ्कीर्तनाच्च मे। आर्जवेनार्यसङ्गेन निरहङ्क्रियया तथा॥ १८॥**
**मद्धर्मणो गुणैरेतैः परिसंशुद्ध आशयः। पुरुषस्याञ्जसाभ्येति श्रुतमात्रगुणं हि माम्॥ १९॥**
**यथा वातरथो घ्राणमावृङ्क्ते[6] गन्ध आशयात्। एवं योगरतं चेत आत्मानमविकारि यत्॥ २०॥**

### श्रीधरस्वामिविरचिता भावार्थदीपिका

आर्जवेनाकौटिल्येन॥ १८॥ ❀ ❀ मद्धर्मणो भगवद्धर्मानुष्ठातुः पुरुषस्याशयश्चित्तम्॥ १९॥ ❀ ❀ प्रयत्नं विनैव प्राप्तौ दृष्टांतः वातो रथः प्रापको यस्य गंधस्य आसयात्स्थानाद् आवृंक्ते आत्मसात्करोति अविकारि समं यच्चेतः॥ २०॥

---

१. भगवान् के नित्यधाम में निवास, २. भगवान् के समान ऐश्वर्य भोग, ३. भगवान् की नित्य समीपता, ४. भगवान् का सारूप्य और ५. भगवान्के विग्रहमें समाजाना, उनसे एक हो जाना या ब्रह्मस्वरूप प्राप्त कर लेना। ६. प्रा० प्रा०—मामुङ्क्ते।

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

"अहिंसास्तेयब्रह्मचर्यापरिग्रहा यमाः" ॥ पा० २, सू० ३० ॥ "शौचसंतोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः" ॥ पा० २, सू० ३२ ॥ इति पतंजलिः ॥ १७ ॥ ❀ ❀ आध्यात्मिकमात्मानात्मप्रतिपादकं शास्त्रमिति संदर्भः। चक्रवर्त्ती तु—आध्यात्मिकस्यांतःकरणभवस्य दोषस्य गुणस्य चानुश्रवणादंतःकरणस्य भक्तौ प्रवर्त्तनार्थं तद्गुणदोषावश्यं श्रोतव्यौ दंभाद्यंतः-करणदोषस्य स्वस्मिन्सति 'दंभं महदुपासनया जयेत्' इत्यादिविधौ भक्तप्रवृत्तिः स्यादित्याह। नामसंकीर्त्तनाद्य नामापराधत्यागेनैव कार्यम्। आर्याणां शास्त्रविदां संगेन निरहंक्रियया देहादिष्वहंतात्यागेन ॥ १८ ॥ ❀ ❀ मद्विषयकः श्रवणादिरेव धर्मो यस्य तस्य मद्गुणश्रुतिमात्रेणेत्युक्तलक्षणं साध्यं भक्तियोगं प्राप्नोति। अत्र शुद्धभक्तेः साध्यत्वेपि ज्ञानकर्ममिश्रभक्तिसाधनतया निर्देशः 'यन्मूलं तत्प्रचक्षते' इति देवहूतिप्रश्नानुसारात्। अनयापि मुमुक्षुमार्गश्रवणाय रुच्यतिशयेनैव तथा पृष्टमिति ज्ञेयम् ॥ १९ ॥ ❀ ❀ यथा वातः पद्माकरस्थं गन्धं नासिकां प्रापयति तथैवायं भक्त्यंगसमुदायो भक्तियोगनिष्ठं चित्तं परमेश्वरं प्रापयतीत्यर्थः ॥ २० ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या।

आशयात्कमलादिवनात् आत्मसात्करोति स्वेन वासितं करोति चित्तपक्षे आत्मानं परमात्मानं मामात्मसात्करोति स्वाश्रयाधीनं करोति ॥ २० ॥

### श्रीमद्वीरराघवव्याख्या

महतां स्वाधिकानां बहुमानेन दीनानां स्वापेक्ष्याधमानामनुकम्पया विषये षष्ठी आत्मतुल्येषु मैत्र्या तथा च वक्ष्यति "गुणाधिकान्मुदं लिप्सेदनुक्रोशं गुणाधमात्। मैत्रीं समानादन्विच्छेन्न तापैरभिभूयते" इति यमेन नियमेन च इदमासनादीना-मप्युपलक्षणम् ॥ १७ ॥ ❀ ❀ आध्यात्मिकस्य वेदान्तशास्त्रस्यानुश्रवणादार्जवेन मनोवाक्कायानामैकरूप्येणार्यसङ्गेन सत्सङ्गेन निरहङ्क्रियया देहात्माभिमानादिराहित्येन ॥ १८ ॥ ❀ ❀ इत्येतैर्गुणैर्मद्धर्मिणः भगवद्धर्मानुष्ठातुः पुरुषस्या-शयश्चित्तं परिसंशुद्धः निर्मलः श्रुतमात्रः गुणो यस्य तं मामञ्जसा प्रयत्नेनैवाभ्येति मद्गुणश्रवणमात्रेण मय्यासक्तो भवतीत्यर्थः ॥ १९ ॥ ❀ ❀ प्रयत्नं विनैवाभ्येतीत्यत्र दृष्टान्तः। यथेति। वातो वायुः रथः प्रापको यस्य स गन्धः आश्रयात्पुष्पादेः सकाशात् घ्राणेन्द्रियं प्रत्ययत्नेनैवावृङ्क्ते प्राप्नोति एवं योगरतमत एवाविकारि यच्चेतस्तदात्मानं मामावृङ्क्ते आत्मसात्करोतीत्यर्थः ॥ २० ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

महतां स्वोत्तमानां बहुमानेनार्चनेन हीनानां स्वाधमानामनुकम्पया तुल्येषु स्वसमेषु मैत्र्या मित्रभावेन ज्ञात्वा तद्रक्षणभा-वेनेत्यर्थः ॥ १७ ॥ ❀ ❀ आध्यात्मिकानुश्रवणाद्वेदान्तशास्त्रश्रवणाद् आर्जवेनावक्रबुद्धित्वेनार्याणां पण्डितानां सङ्गमेन निरहङ्क्रियया देहादावहंममतावर्जनेन ॥ १८ ॥ ❀ ❀ मद्धर्मेणोर्ध्वपुण्ड्रादिधारणादिना स्वधर्माद्यनुष्ठानफलमाह। यर्हीति। पुरुषस्योपासकस्य यर्हि यदा कथितैरेतैः धर्मादिभिरनुष्ठितैअन्तःकरणमाशयः परितः शुद्धः स्यात्तदाञ्जसा कालक्षेपमन्तरेण श्रुतमात्रगुणं केवलं गुणा एव श्रुता न दोषा यस्येति स श्रुतमात्रगुणस्तमञ्जसा तत्त्वं मामभ्येतीत्यन्वयः। गुणाः श्रुताः सविरुद्धाश्च दैव इत्यादिवाक्यं हि शब्दगृहीतम् ॥ १९ ॥ ❀ ❀ परिशुद्धाशयस्य हरौ मनःप्रसादप्रकारं वक्ति। यथेति। यथाशयात्पुष्पादागत्य वातरथो वात एव रथो यस्य स तथा गन्धो घ्राणमावृङ्क्ते आवृणोति वशीकरोति एवमुक्तसाधनाख्ययोगेन हरौ रतं यदविकारि विषयविकाररहितं तच्चेत आत्मानं हरिप्रसादाभिमुखं करोतीत्यन्वयः। अनेन निर्गुणभक्तियोगवानात्यन्तिक-भक्तियोगवान् भूत्वा परमात्मापरोक्षवान् भवतीत्युक्तम् ॥ २० ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः।

आध्यात्मिकमात्मानात्मविवेकशास्त्रं निरहङ्क्रियया गर्वराहित्येन ॥ १८ ॥ ❀ ❀ मद्धर्मणः मद्धर्म्मानुष्ठातुः पुरुषस्याशयः श्रुतमात्रगुणं मामञ्जसाभ्येति। मद्गुणश्रुतिमात्रेणेत्याद्युक्तलक्षणां ध्रुवानुस्मृतिं प्राप्नोतीत्यर्थः। अत्राध्यात्मिकश्रवणादिना ज्ञानाङ्गेन ज्ञानमिश्रत्वमपि। अत्र शुद्धभक्तेः साध्यत्वेऽपि ज्ञानकर्म्ममिश्रभक्तिसाधनतया निर्देशो यन्मूलं तत्प्रचक्षते इति श्रीदेवहू-तिप्रश्नानुसारात्। स्वभक्तेः साध्यत्वेऽपि ज्ञानकर्म्ममिश्रभक्तिसाधनमयत्वमेव दर्शितम्। अनया तु यत्तथा पृष्टं तदपि भक्तिमूलं निर्दिष्टं स्वमतन्तु सतां प्रसङ्गादिति प्रकरणे शुद्धभक्तिसाधनमिदमेव दर्शितम्। अनया तु यत्तथा पृष्ट मुमुक्षुमार्गश्रवणाय रुच्यति-शयेनैवेति ज्ञेयम् ॥ १९ ॥ ❀ ❀ यथेति। आत्मानं परमात्मानं मामनुकरोतीति सम्बन्धोक्तिः ॥ २० ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

आध्यात्मिकस्य अन्तःकरणभावस्य दोषस्य गुणस्य च अनुश्रवणात् अन्तःकरणस्य भक्तौ प्रवर्त्तनार्थं तद्दोषगुणावश्यश्रोतव्यौ। दम्भाद्यन्तःकरणदोषस्य स्वस्मिन् वर्त्तमानत्वज्ञाने सति दम्भं महदुपासनया जयेदित्यादिविधौ भक्ताः प्रवर्त्तेरन्नित्येतदर्थञ्च ॥ १८ ॥ ❀ ❀ मद्विषयकश्रवणकीर्त्तनादिरेव धर्म्मोऽनुष्ठेयो यस्य तस्य पुरुषस्य आशयो मनः। श्रुतमात्रगुणं मामेतीति मद्गुणश्रुतिमात्रेणेत्युक्तलक्षणं साध्यं भक्तियोगं प्राप्नोतीति भावः ॥ १९ ॥ ❀ ❀ प्रयत्नं विनैव प्राप्तौ दृष्टान्तः। वातो रथः प्रापको यस्य स गन्धआशयात् स्वस्थानात् सकाशात् घ्राणं नासिकामावृङ्क्ते भजते प्राप्नोति एवं भक्तियोगयुक्तं चेतः आत्मानं परमात्मानं यथा वातः पद्माकरस्थं गन्धं नासिकां प्रापयति तथैवायं भक्त्यङ्गसमुदायो योगरतं भक्तियोगनिष्ठं चित्तं परमेश्वरं प्रापयतीत्यर्थः ॥ २० ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

आध्यात्मिकं वेदान्तशास्त्रं तदनुश्रवणात् ॥ १८ ॥ ❀ ❀ मद्धर्मणः मद्धर्मनिष्ठस्य आशयश्चित्तं मामञ्जसा प्रयत्नं विनैवाभ्येति मयि अविच्छिन्ना चित्तवृत्तिः ध्रुवा स्मृतिलक्षणा भवतीति फलितोऽर्थः ॥ १९ ॥ ❀ ❀ प्रयत्नं विनैव प्राप्तौ दृष्टान्तमाह। यथेति। यथा वातारूढः गन्ध आशयात्पुष्पादितः घ्राणमावृङ्क्ते प्राप्नोति तथा अविकारि यत् योगरतं चेतः आत्मानं परमात्मानमावृङ्क्ते ॥ २० ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

स्वापेक्षया महतां बहुमाननम्, पीडितानां दीनानां स्वापेक्षया हीनानामनुकम्पा, तुल्येषु च मैत्री, न तु मात्सर्यम्। अवगणना, स्पर्द्धा च न कर्त्तव्येति चार्थः। चक्षुषो दर्शनस्य स्पर्शस्य च दोषा व्यावर्तिताः। यमेन नियमेन चेति प्रत्येकं द्वादशविधेनाऽपि करपादौ शोधितौ। अहिंसादयो यमाः, स्नानादयो नियमाः। चकारादवा[१]न्तरा गृहीताः ॥ १७ ॥ ❀ ❀ आध्यात्मिकानां शास्त्राणां साङ्ख्ययोगादीनाम्, अनुश्रवणं गुरुमुखाच्छ्रवणम्, श्रोत्रसंस्कारकम्। भगवतो निरन्तरं नामकीर्तनं च वाक्संस्कारकम्। चकाराद्गुणकर्मणामपि। म इति विषयो व्यावर्तितः। सर्वत्राऽऽर्जवमृजुत्वम्, घ्राणसंस्कार उक्तः। आर्याणां सतां सङ्गो जिह्वासंस्कारकः। त एवेतररसनिवारकाः। अहङ्काराभावस्तु मनःशोधकः सुप्रसिद्धः ॥ १८ ॥ ❀ ❀ एते सर्वे ये भक्तिजनकाः, ते मद्धर्माः, तैः परितः शुद्ध आशयो भवति। तदैव पुरुषः, अञ्जसा सामस्त्येन, श्रुतमात्रगुणं मामभ्येति। तथा चिरकाङ्क्षितविदेशगतपुत्रगुणे श्रुते, भर्तृगुणे वा, सर्वतो निवृत्तं मनस्तत्र प्रविशति, स्वयञ्चाऽभिमुखो भवतीति। युक्तमुक्तमिति हि शब्दार्थः। पुरुषस्याऽञ्जसेति पाठे आशय एव कर्ता ॥ १९ ॥ ❀ ❀ यथा वातरथ इति। निरन्तरं सेव्यमानो योग एक एव सर्वसाधकः। तत्र शुद्धिरपि नापेक्ष्यत इति दृष्टान्तेन तथात्वमाह—यथा गन्धो वातारूढः, स्वभावत एव वा, वातो रथो यस्य स तु घ्राणमेवावृङ्क्ते घ्राण एव तस्य ग्राहको भवतीति। एवं योगरतमपि चित्तमात्मानमेव गृह्णातीति आत्मगाम्येव भवति। अत्र पूर्वसाधनान्यपेक्ष्यन्त इत्याशयेनाऽऽह—अविकारि यदिति। यच्चितं सर्वमेव विकारं त्यक्तवत् ॥ २० ॥

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः।

मद्धर्माचरणैरित्यत्र। तदैव पुरुषोऽञ्जसेत्येवमर्थकथने 'अञ्जसा पुरुषोऽभ्येति' इति पाठो बोध्यः। श्रीधरीये तु 'मद्धर्मणो गुणैरेतैः' इति पाठः ॥ १९ ॥ ❀ ❀ यथेत्यत्र। साधनमाहेति। मुख्यं भगवत्प्राप्तिसाधनमाहेत्यर्थः ॥ २० ॥

### श्रीगिरिधरकृता बालप्रबोधिनी

महतां ज्ञानवयोभक्त्यादिगुणैः स्वाधिकानां बहुमानेन। दीनानां स्वापेक्षया गुणादिहीनानामनुकम्पया। विषये षष्ठी। गुणैरात्मतुल्येषु मैत्र्या चैव। तथा च वक्ष्यति—'गुणाधिकान्मुदं लिप्सेत्' इत्यादि। हिंसास्तेयानृतवर्जनादियमेन जपपाठादिनियमेन च ॥ १७ ॥ ❀ ❀ आध्यात्मिकस्य आत्मपरमात्मप्रतिपादकशास्त्रस्य अनु नित्यं श्रवणात्, मे मम नामसङ्कीर्त्तनाच्च आर्जवेन मनसो वचसश्चाकौटिल्येन। आर्याणां सन्मार्गिणां सङ्गेन। तथा निरहङ्क्रियया देहादावात्माभिमानराहित्येन ॥ १८ ॥ ❀ ❀ मद्धर्मिणो मदर्थमेव धर्माद्यनुष्ठानं यस्य तस्य पुरुषस्यैतैः पूर्वोक्तैर्गुणैः परिसंशुद्धो निर्मलः आशयो मनः श्रुतमात्रो गुणो यस्य तं मामञ्जसा अप्रयत्नेनैवाभ्येति, मद्गुणश्रवणमात्रेण मय्यासक्तो भवतीत्यर्थः ॥ १९ ॥ ❀ ❀ प्रपन्नं विनैव प्राप्तौ दृष्टान्तमाह—यथेति। वातः वायुः रथः प्रापको यस्य स गन्धः आशयात् स्वस्थानात् पुष्पादेः सकाशात् घ्राणमिन्द्रियं यथा स्वयमेव आवृङ्क्ते प्राप्नोति एवं योगरतं अतएव अविकारि विशुद्धं च यच्चेतस्तदात्मानं परमात्मानं मामावृङ्क्ते, आत्मसात्करोतीत्यर्थः ॥ २० ॥

---

१. अवान्तरभेदाः ख घ।

## हिन्दी अनुवाद

जिस प्रकार वायुके द्वारा उड़कर जानेवाला गन्ध अपने आश्रय पुष्पसे घ्राणेन्द्रियतक पहुच जाता है, उसी प्रकार भक्ति योगमें तत्पर और राग-द्वेषादि विकारोंसे शून्य चित्त परमात्माको प्राप्त कर लेता है ॥ २० ॥

अहं सर्वेषु भूतेषु भूतात्मावस्थितः सदा। तमवज्ञाय मां मर्त्यः कुरुतेऽर्चाविडम्बनम् ॥ २१ ॥
यो मां सर्वेषु भूतेषु सन्तमात्मानमीश्वरम्। हित्वार्चां भजते मौढ्याद्भस्मन्येव जुहोति सः ॥ २२ ॥
द्विषतः परकाये मां मानिनो भिन्नदर्शिनः। भूतेषु बद्धवैरस्य न मनः शान्तिमृच्छति ॥ २३ ॥
अहमुच्चावचैर्द्रव्यैः क्रिय[1]योत्पन्नयानघे। नैव तुष्येऽर्चितोऽर्चायां भूतग्रामावमानिनः ॥ २४ ॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

चित्तशुद्धिश्च सर्वभूतात्मदृष्ट्यैव भवतीति वक्तुं केवलप्रतिमादिनिष्ठां निंदन्नाह अहमिति सप्तभिः अर्चैव विडंबनमनुकरणम्। अर्चायां पूजाविडंबनमिति वा अवज्ञोपेक्षाद्वेषनिंदाः क्रमेण चतुर्भिर्निषिध्यंते ॥ २१ ॥ ❀ ❀ हित्वा उपेक्ष्य ॥ २२ ॥ २३ ॥ ❀ ❀ द्रव्यैरुत्पन्नया क्रियया भूतग्रामावमानिनस्तन्निंदकस्य ॥ २४ ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः।

किञ्चैतादृशीमपि भक्तिमपराध एव संकोचयति। स चापराधः प्रायो महदवज्ञानमूलक एव ते च महांतो लोके दुर्लक्ष्या अपि बहवस्तिष्ठंत्यतस्तदपराधाभावार्थं सर्वभूतान्येव स्वेष्टदेवाधिष्ठानबुद्धया संमाननीयानि। तदभावे श्रीभगवद्विग्रहसेवापि न सम्यक्फलतीति वदन्नीश्वरत्वात्प्राणिसंमानमकुर्वते स्वभक्ताय हितकारित्वेन वात्सल्यात्कुप्यन्निव श्रीकपिलदेव आह—अहमित्यादिषड्भिः। तत्रावज्ञोपेक्षाद्वेषनिंदाः क्रमेण चतुर्भिर्निषिध्यंते। अर्चाकर्तृत्वं त्वर्चकेतराणामपि दृश्यतेऽतः कर्मधारयेऽस्वारस्यमालक्ष्याह—अर्चायामिति। 'अर्चा पूजाप्रतिमयोः' इति धरणिः ॥ २१ ॥ ❀ ❀ स भूतांतर्याम्युपेक्षकार्चार्चकः। संदर्भस्तु—मौढ्यात् शैली दारुमयी वा काचित्प्रतिमेयमिति मूढबुद्धित्वात्। यः सर्वेषु भूतेषु वर्तमानं परमात्मानमीश्वरं मां हित्वा मयैक्यमविभाव्यार्चां मदीयां प्रतिमां पूजयते। केवलं लोकरीतिदृष्ट्या तस्यै जलादिकमर्पयति। यथाग्निपुराणे श्रीदशरथहृतात्मजतपस्विविलापे। "शिलाबुद्धिः कृता किं वा प्रतिमायां हरेर्मया ॥ किं मया पथि दृष्टस्य विष्णुभक्तस्य कर्हिचित् ॥ तन्मुद्रांकितदेहस्य चेतसा नादरः कृतः। येन कर्मविपाकेन पुत्रशोको ममेदृशः" इति। विष्णुधर्मेपि—"अर्चे विष्णोः शिलाधीर्गुरुषु नरमतिर्वैष्णवे जातिबुद्धिर्विष्णोर्वा वैष्णवानां कलिमलहरणे पादतीर्थेषु बुद्धिः। शुद्धे तन्नाम्नि मंत्रे सकलकलुषहे शब्दसामान्यबुद्धिर्विष्णोः सर्वेश्वरेशे तदितरसमधीर्यस्य वा नारकी सः" इति। तस्य मूढस्य मद्दृष्ट्याभावात्सर्वभूतावज्ञापि भवतीति तथा तद्दोषेण भस्मनि यथा जुहोति कश्चित्तथा तस्याश्रद्दधानस्य फलाभाव इत्यर्थः। "ये शास्त्रविधिमुत्सृज्य यजंते श्रद्धयान्विताः" इत्याद्युक्तरीत्या लोकपरंपरया जातकिंचिच्छ्रद्धासद्भावे तु कनिष्ठभागवतत्वमेव "अर्चायामेव हरये पूजा यः श्रद्धयेहते। न तद्भक्तेषु चान्येषु स भक्तः प्राकृतः स्मृतः" इत्येकादशोक्तेः। यद्यपि यथाकथंचिद्भजनस्यैव फलावश्यंभावतास्त्येव तथापि न झटिति भवतीति तथोक्तम्। वक्ष्यते च 'अर्चादावर्चयेत्तावत्' इत्यादिना ॥ २२ ॥ ❀ ❀ अवज्ञामात्रस्य तादृशत्वे सुतरां तु द्विषत इति। भिन्नदर्शिनः सर्वत्रांतर्याम्येकत्वदृष्टिरहितस्य स्वस्य दुःखमिवान्यस्य दुःखं समानमित्यजानत इति भावः। मानिनो देहाहंकारिणः अत एव बद्धवैरस्य तथा च महाभारते "पितेव पुत्रं वरुणो नोद्वेजयति यो नरः। विशुद्धस्य हृषीकेशस्तूर्णं तस्य प्रसीदति" इति ॥ २३ ॥ ❀ ❀ द्रव्यैर्गंधाद्यैरुत्पन्नया साधितया क्रिययाऽर्चया। अनघे इत्यामंत्रयंस्तस्यास्तत्राधिकारं द्योतयति। निंदकस्य "न तथा तप्यते विद्धः पुमान्बाणैर्हि मर्मगैः। यथा तप्यंति मर्मस्था ह्यसतां परुषेषवः" इत्युक्तेर्निन्दाद्वेषादप्यधिकेति नायं व्युत्क्रम इत्यभिप्रेत्य न द्वेषात्पूर्वमसौ पठितेति ॥ २४ ॥

## श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

भूतेषु वक्ष्यमाणानुसारादप्राणभृज्जीवमारभ्य मदर्पितात्मजीवपर्य्यन्तेषु भूतात्मा तत्तदन्तर्य्यामी अहं सदावस्थितः तं मामवज्ञाय मदधिष्ठानस्यावजानने ममैवावज्ञां कृत्वेत्यर्थः। अत्र चित्तशुद्ध्यर्थमेव सर्वत्रान्तर्य्यामिदृष्ट्योपासनं विधीयते न तु प्रतिमापूजनं निन्द्यते "अनिन्द्ये निन्दा निन्दयितुं न प्रवर्त्तते किन्तु विधेयं स्तोतुम्" इति न्यायात् टीकायामुक्ता अवज्ञादिनिषेधास्तु तदुपासनाङ्गमेवेति ज्ञेयम् ॥ २१ ॥ ❀ ❀ मां हित्वा शैली काष्ठमयी वा काचित्प्रतिमास्ति न तु भगवानिति बुद्ध्या मयैक्यमज्ञात्वेत्यर्थः। योऽर्चां प्रतिमां भजते लोकदृष्ट्या स्वप्रतिष्ठाद्यर्थं जलादिकमर्पयति स भस्मन्येव जुहोति तस्यां शिलादिबुद्धे

---

[1] प्रा० पा०—क्रियोत्पत्तेश्च मानिनि।

नरकपातकत्वात् यथोक्तमग्निपुराणे मृगयायां श्रीदशरथमारितपुत्रस्यान्धविप्रस्य विलापे "शिलाबुद्धिः कृता किम्वा प्रतिमायां हरेर्मया । किं मया पथि दृष्टस्य विष्णुभक्तस्य कर्हिचित् । तन्मुद्राङ्कितदेहस्य चेतसानादरः कृतः । येन कर्मविपाकेन पुत्रशोको ममेदृश" इति पुराणान्तरे च "अर्च्ये विष्णौ शिलाजीर्गुरुषु नरमतिर्वैष्णवे जातिबुद्धिर्विष्णोर्वा वैष्णवानां कलिमलमथने पादतीर्थेऽम्बुबुद्धिः । शुद्धे तन्नाम्नि मन्त्रे सकलकलुषहे शब्दसामान्यबुद्धिर्विष्णौ सर्वेश्वरेशे तदितरसमधीर्यस्य वा नारकी स" इति यद्यपि भक्त्याभासस्याप्यवश्यं फलवत्ता तथापि झटिति तदभावात्तत्तद्दोषवारणाय तथोक्तमिति ज्ञेयम् ॥ २२ ॥ ❀ ❀ यद्यवज्ञामात्रे दोषस्तर्हि द्वेषे सुतरामित्याह । द्विषत इति । हिंसकस्य भिन्नदर्शिनः सर्वत्रान्तर्य्यामयेकत्वदृष्टिरहितस्य अत एव मानिनः अत एव वद्धवैरस्य अत एव महाभारते व्यतिरेके गुणः श्रूयते "पितेव पुत्रं करुणो नोद्वेजयति योजनम् । विशुद्धस्य हृषीकेशस्तूर्णं तस्य प्रसीदति" इति ॥ २३ ॥ ❀ ❀ यद्यपि निन्दा द्वेषसमैव तथापि "न तथा तप्यते विद्धः पुमान् बाणैर्हि मर्मगैः । यथा तुदन्ति मर्मस्था असतां परुषेषव" इत्युक्तेः निन्दा ततोऽप्यधिकेत्युत्तरं निर्दिष्टेति न क्रमवैजात्यम् ॥ २४ ॥

### श्रीमद्वीरराघवव्याख्या

एवं निर्गुणभक्तियोगस्य साङ्ख्य स्वरूपमभिधाय तमेव प्रस्तोष्यंस्तामसादिभक्तियोगान्निन्दति । अहमिति षड्भिः । योऽहं सदा सर्वेषु भूतेषु भूतात्मावस्थितः भूतानात्मनि प्रत्यगात्मन्यवस्थितः अन्तरात्मतयाऽवस्थितः तं मामवज्ञायाभिभूयाज्ञात्वेत्यर्थः । मर्त्यः संसारी अर्चायां पूजायां विडम्बनं कुरुते ईश्वरत्वमिह पुष्कलमिति ज्ञानरहितानामर्चनं विडम्बनमित्युच्यते न त्ववतार-प्रभावतिरस्कार इह क्रियते ॥ २१ ॥ ❀ ❀ एतदेव स्पष्टयति । य इति । सर्वेषु भूतेषु आत्मानं सन्तमन्तरात्मतयावस्थितं मां हित्वा 'हि गतौ' आज्ञा वेत्यर्थः अर्चां भजते यः स भस्मन्येव जुहोतीश्वर इह स्थित इति ज्ञानरहितानामर्चार्चनादिकं भस्महुत-मतोऽर्चावतारे परत्वं ज्ञातव्यमित्यर्थः । अन्यथा मद्दर्शनस्पर्शः पश्यन्ति मे रुचिराणि अतोरूपाणि दिव्यानि वरप्रदानीत्यादि प्राकरणिकग्रन्थविरोधात् ॥ २२ ॥ ❀ ❀ मानिनो देहात्माभिमानिनः अत एव परकाये मां द्विषतः भिन्नदर्शिनः अर्चादौ भेददर्शिनः भूतेषु निवद्धवैरस्य मनः शान्तिं नार्च्छति न प्राप्नोति ॥ २३ ॥ ❀ ❀ हे अनघे ! उच्चावचैर्द्रव्यैरुत्पन्नया अनुष्ठितया क्रियया पूजया अर्चायामर्चितोऽप्यहं भूतसमूहावमानिनः नैव तुष्ये न तुष्टोऽस्मि ॥ २४ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

एवं विधैर्योगिभिः कुत्र ध्येय इति तत्राह । अहं सर्वेष्विति । भूतानां जीवानामादानादिकर्तृत्त्वाद्भूतात्मान्तर्यामित्वेन ध्येय इति भावः । तामसराजसभक्तयोरधमत्वे कारणमेकोक्त्याह-तमिति । सर्वेष्वेतदित्यनुवर्तते योऽहं सर्वभूतेष्ववस्थितस्तं मामवज्ञाय मर्त्यस्तामसो राजसश्चार्चायामर्चया विडम्बनं कुरुत इति यस्मादतस्तामसो राजसश्चायमित्यर्थः ॥ २१ ॥ ❀ ❀ एतदेव विवृणोति । यो मामिति । भस्मनीत्युक्त्या तामसात्किञ्चिदुत्तमत्वमववोद्धव्यं मन्त्रावृत्त्या फलसंभवात् ॥ २२ ॥ ❀ ❀ तामसस्य न किञ्चित्फलमित्याह । द्विषत इति परकाये मां द्विषत इत्यस्य विवरणं भिन्नदर्शिन इति । शातिर्नाम मन्निष्ठा भूतेषु वैष्ण-वेषु बद्धवैरस्य ॥ २३ ॥ ❀ ❀ मत्प्रीत्यभावादर्चाविडम्बनत्वं स्पष्टमाह । अहमिति । भूतग्रामे भूतसमूहे स्थितं मामवमन्तुं शीलमस्यास्तीति भूतग्रामावमानी तस्य ॥ २४ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

अहमिति । भूतेषु वक्ष्यमाणरीत्या अप्राणभृज्जीवमारभ्य भगवदर्पितात्मजीवपर्यन्तेषु भूतात्मा तत्तदन्तर्यामी तमवज्ञाय मां तेषामवज्ञया तदधिष्ठानकस्य ममैवावज्ञां कृत्वेत्यर्थः । ततस्तां कृत्वा योऽर्च्चां मत्प्रतिमां कुरुते स तद्विडम्बनं तस्या अवज्ञामेव कुरुतः इत्यर्थः ॥ २१ ॥ ❀ ❀ तामेवाह । यो मामिति । मौढ्यात् शैली दारुमयी वा काचित् प्रतिमेयमिति मूढबुद्धित्वात् यः सर्व्वेषु भूतेषु वर्त्तमानं परमात्मानमीश्वरं मां हित्वा तस्या मयैक्यमविभाव्य अर्चां मदीयां प्रतिमां भजते केवललोकरीतिहष्ट्या तस्यै जलादिकमर्पयति । यथाग्निपुराणे श्रीदशरथमारितपुत्रस्य तपस्विनो विलापे

शिलाबुद्धिः कृता किम्वा प्रतिमायां हरेर्मया । किं मया पथि दृष्टस्य विष्णुभक्तस्य कर्हिचित् ॥
तन्मुद्राङ्कितदेहस्य चेतसा नादरः कृतः । येन कर्म्मविपाकेन पुत्रशोको ममेदृशः ॥

इति यथोक्तम्

अर्च्ये विष्णौ शिलाधीर्गुरुषु नरमतिर्वैष्णवे जातिबुद्धिर्विष्णोर्वा वैष्णवानां कलिमलमथने पादतीर्थेऽम्बुबुद्धिः ॥
शुद्धे तन्नाम्नि मन्त्रे सकलकलुषहे शब्दसामान्यबुद्धिर्विष्णौ सर्व्वेश्वरेशे तदितरसमधीर्यस्य वा नारकी सः ॥

इति तस्य मूढस्य मद्दृष्ट्यभावात् सर्व्वभूतावज्ञापि भवति ततस्तद्दोषेण भस्मनि यथा जुहोति कश्चिस्तथा तस्याश्रद्धानस्य फलाभाव इत्यर्थः । "ये शास्त्रविधिमुत्सृज्य यजन्ते श्रद्धयान्विता" इत्याद्युक्तरीत्या लोकपरम्परामात्रजातं यत्किञ्चित् श्रद्धासद्भावे तु कनिष्ठभागवतत्वमेव ।

अर्च्चायामेव हरये पूजां यः श्रद्धयेहते। न तद्भक्तेषु चान्येषु स भक्तः प्राकृतः स्मृतः॥

इत्याद्युक्तेः। यद्यपि यथाकथञ्चित् भजनस्यैवाश्यफलावसानतास्त्येव तथापि झटिति न भवतीत्येव तथोक्तं वक्ष्यते च साफल्यम्। अर्चादावर्च्चयेत्तावदित्यादिना॥ २२॥ ❀ ❀ अवज्ञामात्रस्य तादृशत्वे सुतरां तु द्विषत इति भिन्नदर्शिनः सर्व्वत्रान्तर्याम्येकदृष्टिरहितस्य अत एव मानिनः अत एव बद्धवैरस्य तथा च महाभारते। पितेव पुत्रं करुणो नोद्वेजयति यो जनम्। विशुद्धस्य हृशीकेशस्तूर्णं तस्य प्रसीददति इति॥ ३३॥ ❀ ❀ किञ्च। अहमिति। अवमानिनो निन्दाकर्त्तुः निन्दापि द्वेषसमा किम्वा। न तथा तप्यते विद्धः पुमान् वाणैस्तु मर्म्मगैः। यथा तुदन्ति मर्म्मस्था ह्यसतां परुषेषवः॥ इत्युक्तरीत्यातातोऽधिकेति नायं व्युत्क्रम इत्यभिप्रेत्य न द्वेषात्पूर्व्वमसौ पठितः॥ २४॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

किञ्चैतादृशीमपि भक्तिमपराध एव सङ्कोचयति। स चापराधः प्रायो महदवज्ञानमूलक एव ते च महान्तो लोके दुर्लक्ष्या अपि वह्वस्तिष्ठन्त्यतस्तदपराधाभावार्थं सर्व्वभूतान्येव स्वेष्टदेवाधिष्ठानबुद्ध्या सम्माननीयानि तदभावे श्रीभगवद्विग्रहसेवापि न सम्यक् फलदेति वदन्नीश्वरत्वात् प्राणिसम्माननमकुर्व्वते स्वभक्ताय हितकारित्वेन वात्सल्यात् कुप्यन्निव श्रीकपिलदेव आह। अहमित्यादिषड्भिः। तत्रावज्ञोपेक्षाद्वेषनिन्दाः क्रमेण चतुर्भिर्निषिध्यन्ते अर्च्चा मत्प्रतिमा तस्यां मत्पूजनं मद्विडम्बनमेव कुरुते॥ २१॥ ❀ ❀ भस्मन्येव जुहोतीति प्रभुत्वात् स्वभक्तान् शिक्षयितुं तान् प्रति सतर्ज्जनोक्तिरियं तथैव स्वयं भगवतोऽपि यस्यात्मबुद्धिः कुणप इत्यत्र भौम इज्यधीरित्युक्त्वा स एव गोखर इत्याक्षेपः। यथैवाधुनिका अपि सद्गुरवः प्रियमपि स्वशिष्यं स्वसेवारतमपि काप्यन्यत्र हरिभक्तेष्वपराधलेशमात्रं दृष्ट्वैव मत्सेवां करोषि भस्म करोषि मां दुःखयस्येव केवलमित्याक्षिपन्ति वस्तुतस्तु ऋषयः क्वापि नैवमाहुः। यथा। "अर्च्चायामेव हरये पूजां यः श्रद्धयेहते। न तद्भक्तेषु चान्येषु स भक्तः प्राकृतः स्मृतः॥" इति। व्याख्या च श्रीस्वामिचरणानाम्। न तद्भक्तेषु चान्येषु सुतरामेव न करोति प्राकृतः प्रकृतिः प्रारब्धः अधुनैव प्रारब्धभक्तिः शनैरुत्तमो भविष्यतीत्येषा। अत्रापि वक्ष्यते अर्च्चादावर्च्चयेत्तावदित्यादीति॥ २२॥ ❀ ❀ भिन्नदर्शिनः स्वस्य दुःखमिवान्यस्यापि दुःखं समानमिति न जानतः॥ २३॥ ❀ ❀ अवमानिनो निन्दकस्य न तथा तप्यते विद्धः पुमान् वाणैर्हि मर्म्मगैः। यथा तुदन्ति मर्म्मस्था ह्यसतां परुषेषवः। इत्युक्तरीत्या निन्दाद्वेषादप्यधिकेत्याहुः॥ २४॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

एवं सगुणा निर्गुणा च भक्तिर्दर्शिता निर्गुणायाः साधनानि चोक्तानि तस्याः साधनेषु भूतेषु मद्भावनयेत्यनेन हरिभक्तिदूषकभूतद्वेषादिदोषनिवारणार्थं भूतेषु भगवदुपासनं महतां वहुमानेनेत्यनेन महत्सु विशेषतो भक्तिपोषकं तदुपासनमुक्तम्। तत्र मन्दाः केचिद्रुचिं न करिष्यन्ति तच्छिक्षार्थम्। सर्वभूतेषु विशेषतः ज्ञानभक्तिमत्सु महत्सु च भगवद्दृष्टिः कर्तव्येति प्रपञ्चयति। अहं सर्वेष्वित्यारभ्य ईश्वरो जीवकलया प्रविष्टो भगवानितीत्यन्तेन ग्रन्थेन। तं सर्वात्मानमविज्ञाय अर्चाविडम्बनमर्चायां पूजाविडम्बनं कुरुते अत्र सर्वशास्त्रसम्मतमर्चायां भगवदाराधनं नैव निन्द्यते किन्तु तस्य मर्त्यस्य दुरात्मता प्रकाश्यते यथा कश्चिदनेकानपराधान् कुर्वंश्चरणार्चनविडम्बनं करोति तद्दुरात्मतावत्॥ २१॥ ❀ ❀ आत्मानं सर्वात्मानमुपादानतया सन्तमीश्वरं नियन्तृत्वेन सन्तं हित्वा अर्चां यो भजते स भस्मन्येव जुहोति अस्वीकारात् "न भजति कुमनीषिणां स इज्याम्" इति वक्ष्यमाणाच्च॥ २२॥ २३॥ २४॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या।

एवमुत्तमां भक्तिं ससाधनां साधयित्वा पूर्वोक्तां सगुणां त्रिविधामपि निन्दति—अहमिति चतुर्भिः—करोति यत्तत्रवन्मुव्यस्याऽतिक्रममस्तथा। दोषोत्पत्तिश्च प्रचुरा मत्प्रीतेश्च न साधकम्॥ १॥ तत्र प्रथमं पूर्वभक्तिरनुकरणमात्रम्, न तु भक्तिरित्याह—सर्वेषु भूतेष्वहमात्मा। 'अवस्थितेरिति काशकृत्स्नः' इत्यत्र प्रतिपादितं भगवत एवाऽवस्थाविशेषो जीव इति। तदाह—अवस्थितः सदेति। अहमेव वा भूतात्मा सर्वभूतरूपः, तत्त्वरूपः, जीवरूपश्च, सङ्घातरूपश्चेति। अवस्थितः सदेत्यन्तर्यामी। अतः सर्वभावेन सर्वेषु भूतेषु विद्यमानं मामवज्ञाय, भेदबुद्धिं हिंसादिकं च तत्र जनयित्वा, स्वात्मानमपि केवलं मर्त्यं शरीरं मत्वा, यत् कुरुते तदर्चाविडम्बनमेव॥ २१॥ ❀ ❀ अथ भगवदाकाराभावात् स्वबुद्ध्या शास्त्रमुल्लङ्घ्य यदि भजते, तदा यत्तस्य फलं तदाह—यो मामिति। सङ्घाते अहं त्रिरूपो वर्ते—प्रथमं सर्वेषु भूतेषु तद्रूपः, तत आत्मरूपः, तत ईश्वरोऽन्तर्यामी नियामकः। एवं पुरुषे सर्वभावेन विद्यमानं भगवन्तं हित्वा, अर्चां प्रतिमाम्, यो भजते। भजने प्रमाणाभावमाह—मौढ्यादिति। न तु स्वतन्त्रो भगवन्मार्गो निषिद्धः, स गुणातीत इत्येकादशे वक्ष्यते, 'मन्निकेतं तु निर्गुणम्' इत्यादिभिः। प्रकरणेन च वाक्यानि सम्बद्धानि तत्प्रकरणस्थमेव गुणदोषं वदन्ति, तत्र पृथग्भावस्तु नोक्तः। द्वादशानुसारेण वा पुरुषो नारायण इज्यः। उभयत्राऽपि भेदगुणयोरभावान्नैतानि दूषणानि भवन्ति, किन्त्वत्रैव तानि पूर्वोक्तसगुणभक्तिदूषकाणि। अर्चायां ज्ञानक्रियाचैतन्यानन्दानामभावात् निष्पादनार्थं व्याप्तान्यप्येतानि पश्चात्त्यक्त्वा गतानीति भस्महुतप्रायं भवति। स इति पूर्वोक्त एव। पूर्वमग्निस्तत्र दृष्ट इति शान्तेऽप्यग्नौ भ्रमाद्धोम इति

सोऽत्र दृष्टान्तीकृतः ॥ २२ ॥ ❀ ❀ परद्वेषादिना अर्चायां भगवद्भजने कामाद्युत्पत्तेः कदाचिदपि न मनःशान्तिर्भवतीत्याह— द्विषत इति । स हि मामेव द्वेष्टि, यतो भूतेष्वहमेव वर्त इति । अतः परकाये मां द्विषतो मनः कदापि न शान्तिमृच्छतीति सम्बन्धः । ननु जीव एव द्वेषाश्रयः सङ्घातो वा; अन्यथा व्यवहारो न स्यात् अतो भेदो व्यवहारार्थं मृग्य एव, 'यं द्विष्यात्तं ध्यायेत्' इति श्रुतेश्च । तत्र कथमाह भगवान् 'मां द्विषतः' इति चेत् ; सत्यम् । तद्गतापकारक्रियया हि तस्मिन् द्वेषः । सा क्रिया मत्कृता, मत्प्रेरणया वा जातेति तन्निमित्तं चेदन्यं द्वेष्टि, तर्हि मामेव द्वेष्टि । भेदे तु यज्ञपरिपन्थिनो दैत्याः, मदधिष्ठिता अपि, रोगा इव निवर्तनीयाः; तुषादिरिव व्रीह्यादिषु । अतो यज्ञार्थं द्वेषः, न तु द्वेषार्थं यज्ञ उचितः । श्येनादावप्येवमेव, यज्ञभ्रातृव्य एव स्वभ्रातृव्य इति । तत्र तु यज्ञो निरभिमान इति तावदपि कर्तव्यम् ; अत्र तु भगवान् साभिमान इति द्विषन्तमपि न द्विष्यात् । कार्यं तु प्रह्लाद इव सेत्स्यति । अतोऽत्र मार्गे सर्वथाऽपि द्वेषोऽनुचितः । भगवदर्थं सृष्टिश्चेयम् ; अतोऽत्र भगवद्द्वेष एव भवति । किञ्च, मानिनः, भिन्नदर्शिनः, भूतेषु बद्धवैरस्येति दोषत्रयम् । सात्त्विकराजसतामसा दोषा निरूपिताः । न हि त्रिदोषव्याप्तस्य शान्तिरस्ति । अभिमानस्तु सात्त्विकदोष एव, उत्कृष्टकर्मणैवाभिमानो भवतीति । क्रियया हि भेद इति राजसं भेदज्ञानम् , वैरं तु तामसमिति ॥ २३ ॥ ❀ ❀ अहं तु न संतुष्टो भवामीति मुख्यं दूषणमाह—अहमिति । यद्यपि बहुसुवर्णपुष्पादिकं प्रयच्छति, तथापि उच्चावचैरनेकविधैर्द्रव्यैः पुष्पादिभिरुत्पन्नया क्रियया अहं नैव तुष्ये । तत्र हेतुः—भूतग्रामावमानिन इति । अर्चायामित्युपलक्षणम् । पुरुषविशेषेऽपि भजने भूतग्रामावमानिनो न तोष एव । परं तत्र तादृश एव भजतीत्यर्चायामित्युक्तम् ॥ २४ ॥

## श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

यो मामित्यत्र । नन्वेकादशस्कन्धे भगवता मदर्चां 'सम्प्रतिष्ठाप्य' इत्यादिना महता प्रपञ्चेन प्रतिमापूजनमेव मुख्यतया निरूपितम् , अत्र तु निन्द्यत इति कथमविरोध इत्यत आहुः— न त्वित्यादि । तत्र गमकमाहुः—स इत्यादि । तथा च विषयाधिकारिणोः प्रमाणस्य च भेदान्न विरोध इत्यर्थः । प्रकारान्तरं सङ्गृह्णन्ति—द्वादशेत्यादि । 'तान्त्रिकाः परिचर्यायाम्' इत्यादिनोक्तेः । एवं विरोधं परिहृत्य प्रस्तुतं व्याकुर्वन्ति—अर्चायामित्यादि । ज्ञानक्रिये इत्यत्र ज्ञानं धर्मात्मकं बोध्यम् । निष्पादनार्थं व्यापृतान्यप्येतानीति अर्चकस्य[2] ज्ञानादीनि अर्चायां भगवत्त्वनिष्पादनार्थं व्यापृतानि भूतेषु भगवदवज्ञया त्यक्त्वा गतानीत्यर्थः ॥ २१ ॥ ❀ ❀ द्विषत इत्यत्र । अत्र परकाये स्वद्वेषकथनं लोकवेदविरुद्धमित्याशङ्क्य समादधते—नन्वित्यादिना । अन्यथेति । जीवसङ्घातयोर्भगवदभिन्नत्वे । तन्निमित्तमिति । अपकारनिमित्तम् । ननु व्यवहारार्थं भगवतैव भेदः प्रकटित इति तत्प्रयुक्तो द्वेष इति शङ्कायां तत्र व्यवस्थामाहुः—भेदे त्वित्यादि नन्वेवं सति श्येनादिविधीनां का गतिरित्यत आहुः-श्येनेत्यादि इतीति अस्माद्धेतोः । विद्वेषार्थं श्येनयाग इति तस्याऽपि न भूतद्वेषे तात्पर्यम् । ननु श्येनदृष्टान्तेनाऽत्रापि विद्वेषः सङ्गमनीय इति चेत् तत्राऽऽहुः—तत्र त्वित्यादि । एतेन 'यो मां द्वेष्टि यं च वयं द्विष्मः' यं द्विष्मस्तस्मिन् प्रतिमुञ्चामि पाशम्' इत्यादावपि मामित्यनेन यज्ञादिरूपं भगवन्तं निरभिमानम् , वयमित्यनेन यज्ञद्वेषिप्रतिपक्षा इत्यादिरूपं जानीयादिति ज्ञापितम् । नन्वेवं सर्वाद्वेषे कथं कार्यसिद्धिरित्याकाङ्क्षायां भगवतैव सिद्धिरिति दृष्टान्तेनाहुः—कार्यं त्वित्यादि । नन्वेवं सर्वथा द्वेषत्यागे यो मां द्वेष्टीत्यादिषु लक्षणाप्रसक्तिः 'विश्वामित्रजमदग्नी वशिष्ठेनास्पर्धेताम्' इत्यादिवाक्योक्ताचारविरोधश्चापद्येतेति नेदं युक्तमित्याकाङ्क्षायामाहुः भगवदर्थमित्यादि । तथा चाऽन्यत्र यथा तथास्तु, यस्तावदस्यां सृष्टावुत्पन्नः स सर्वत्रैतामेवाऽनुसन्दध्यात् , अतः सर्वं समञ्जसमित्यर्थः । द्वेषाभावस्याऽऽवश्यकत्वं फलप्रदर्शनेन समर्थयन्ति—किञ्चेत्यादि । तथा च विद्वेषादीनामशान्तिरूपं प्रत्यक्षदोषमनुसन्धाय तया सुखाभावरूपं दोषं प्रत्यक्षात् 'अशान्तस्य कुतः सुखम्' इति वाक्याद्विमृश्य च द्वेषाभिमानादिकं त्यजेदित्यर्थः ॥ २३ ॥ ❀ ❀ अहमित्यत्र । द्वेषादेर्महान्तं दोषं वदन्ति—अहं त्वित्यादि । पुरुषविशेष इति गुर्वादौ ॥ २४ ॥

## श्रीगिरिधरकृता बालप्रबोधिनी

एवं परमफलां निर्गुणभक्तिं साङ्गां निरूप्य तां विहाय तामसादिभक्तिनिष्ठान्निन्दति—अहमिति षड्भिः । अहं सर्वेषु भूतेषु सदैवावस्थितस्तं मां अवज्ञाय तत्र मम दृष्टिमकृत्वा मर्त्यः मरणधर्मकदेहात्मदर्शी योऽर्चायां मामर्चति स अर्चाविडम्बनं कुरुते । सर्वत्रावस्थाने हेतुमाह—भूतानां तेषामात्मेति ॥ २१ ॥ ❀ ❀ एतदेव स्पष्टयति—य इति । सर्वेषु भूतेषु आत्मानं प्रत्यगात्मानं ईश्वरमन्तर्यामिणं चैनं रूपद्वयेन सन्तं विद्यमानं मां हित्वा यो मौढ्यान्मौर्ख्यात् अर्चां भजते सेवते स भस्मन्येव जुहोति तत्कृता सेवा भस्मनि होमवन्निष्फला भवतीत्यर्थः ॥ २२ ॥ ❀ ❀ ननु कथं निष्फलत्वमित्यपेक्षायां फलं हि सुखं तस्य च मूलं 'अशान्तस्य कुतः सुखम्' इति वाक्यात् मनसः शान्ति सा च तस्य न भवतीत्याह—द्विषत इति । भूतेषु बद्धवैरस्य पुरुषस्य मनः शान्तिं न ऋच्छति न प्राप्नोतीत्यन्वयः । ननु भूतवैरेण तव भजनं कथं निष्फलमित्यत आह—द्विषतः परकाये मामिति, सर्वप्राणिरूपेणाहमेव स्थितः अतस्तद्द्वेषो मय्येव पर्यवसित इति भावः । भूतवैरे हेतुमाह—भिन्नदर्शिन इति । तत्रापि हेतुमाह—

---

१. भजन् क. ग. ङ. च. । २. अर्चकस्य ज्ञाना० ।

मानिन इति,देहाद्यात्माभिमानिन इत्यर्थः ॥ २३ ॥ ❀ ❀ द्वेषादेव हे अनघे सर्वदोषरहिते उच्चावचैर्द्रव्यैरुत्पन्नया सम्पादितया क्रियया सामग्र्याऽर्चायामर्चितोऽप्यहं भूतग्रामावमानिनो जनस्य नैव तुष्ये तुष्टो भवामीत्यर्थः ॥ २४ ॥

### हिन्दी अनुवाद

मैं आत्मा रूपसे सदा सभी जीवोंमें स्थित हूँ; इसलिये जो लोग मुझ सर्वभूतस्थित परमात्माका अनादर करके केवल प्रतिमामें ही मेरा पूजन करते हैं, उनकी वह पूजा स्वाँगमात्र है ॥ २१ ॥ ❀ ❀ मैं सबका आत्मा, परमेश्वर सभी भूतोंमें स्थित हूँ; ऐसी दशामें जो मोहवश मेरी उपेक्षा करके केवल प्रतिमाके पूजनमें ही लगा रहता है, वह तो मानो भस्ममें ही हवन करता है ॥ २२ ॥ ❀ ❀ जो भेददर्शी और अभिमानी पुरुष दूसरे जीवोंके साथ वैर बाँधता है और इस प्रकार उनके शरीरोंमें विद्यमान मुझ आत्मासे ही द्वेष करता है, उसके मनको कभी शान्ति नहीं मिल सकती ॥ २३ ॥ ❀ ❀ माताजी! जो दूसरे जीवोंका अपमान करता है, वह बहुत-सी घटिया-बढ़िया सामग्रियोंसे अनेक प्रकारके विधि-विधानके साथ मेरी मूर्ति का पूजन भी करे तो भी मैं उससे प्रसन्न नहीं हो सकता ॥ २४ ॥

अर्चादावर्चयेत्तावदीश्वरं मां स्वकर्मकृत्। यावन्न वेद स्वहृदि सर्वभूतेष्ववस्थितम्[1] ॥ २५ ॥
आत्मनश्च परस्यापि यः करोत्यन्तरोदरम्। तस्य भिन्नदृशो मृत्युर्विदधे भयमुल्बणम् ॥ २६ ॥
अथ मां सर्वभूतेषु भूतात्मानं कृतालयम्। अर्हयेद्दानमानाभ्यां मैत्र्याभिन्नेन चक्षुषा ॥ २७ ॥
जीवाः श्रेष्ठा ह्यजीवानां ततः प्राणभृतः शुभे। ततः सचित्ताः प्रवरास्ततश्चेन्द्रियवृत्तयः ॥ २८ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

तर्हि किमर्चादावर्चनमनर्थकमेव नेत्याह। अर्चादाविति। सर्वभूतेष्ववस्थितं मां स्वहृदि यावन्न वेद स्वकर्मकृत्कर्माविरोधेन यथावकाशम्। अनेन कर्मनिष्ठाया अपि स एवावधिरित्युक्तं भवति ॥ २५ ॥ ❀ ❀ अंतरा अंतरं भेदम्। उत् अपि अरमल्पम्। अल्पमपि भेदं यः पश्यतीत्यर्थः। यद्वा अंतरा मध्ये उदरं शरीरम्। मृत्युरहं तस्य भयं विदधे करोमि ॥ २६ ॥ ❀ ❀ अथ अतः सर्वभूतेषु कृतावासम्। तत्र हेतुः। भूतानामात्मानमंतर्यामिणम्। अभिन्नेव चक्षुषा समदर्शनेन ॥ २७ ॥ ❀ ❀ तत्रापि यथोत्तरं मानाद्यतिशयः कर्तव्य इति वक्तुं तारतम्यमाह। जीवा इति सार्द्धैः षड्भिः। अजीवानामचेतनेभ्यस्त-तस्तेष्वपि प्राणभृतः प्राणवृत्तिमंतः सचित्ता ज्ञानवंतः इन्द्रियाणां वृत्तयो येषु इंद्रियवृत्तयो वृक्षाणामपि सूक्ष्माः संत्येव। तथाहि महाभारते मोक्षधर्मेषु स्मर्यते। "तस्मात्पश्यंति पादपाः तस्माज्जिघ्रंति पादपाः" इत्यादि। प्रसिद्धा तु स्पर्शनेन्द्रियवृत्तिरेव ॥ २८ ॥

### वंशीधरकृतो भावार्थदीपिकाप्रकाशः

अत्राक्षिपति तर्हीति। संदर्भस्तु—तदेवमीश्वरज्ञानाभावाद्भक्तावश्रद्दधानस्य दोष उक्तः। अथ तच्छ्रद्धाहेतुतज्ज्ञानस्य स्वधर्मसंयुक्ततदर्चनमेव कारणमुपदिशंस्तादृशार्चनस्याप्यव्यर्थतां स्वीकरोति अर्चादाविति। तत्र स्वकर्मसहायत्वमजातश्रद्धस्य शुद्धभक्तावनधिकारात्। तत्प्रतिपादयिष्यते 'जातश्रद्धो मत्कथासु' इत्यादिनाऽतो भगवज्ज्ञानादूर्ध्वं जातश्रद्धस्तु स्वकर्मकृन्नार्चयेत् किं तु शुद्धमर्चादिकमेव कुर्वीतेत्यायातं तच्च तावत्कर्माणि कुर्वीतेत्यादिना प्रतिपादयिष्यते न त्वर्चां परित्यजेदित्यर्थः। "प्रतिष्ठितार्चा न त्याज्या यावज्जीवं समर्चयेत्। वरं प्राणपरित्यागः शिरसो वापि कर्त्तनम्" इति हयशीर्षपंचरात्रोक्तेः। ये च पामराः "न तस्य प्रतिमास्ति" इति श्रुतिमाश्रित्य प्रतिमार्चनं नांगीकुर्वंति ते श्रुत्यर्थानभिज्ञतयोपेक्ष्या एव। तत्र प्रतिमापदं सादृश्यपरम् "मूर्तौ तुल्ये च प्रतिमा" इति निघंटूक्तेः। प्रतिमार्चनस्य श्रुतिप्रोक्तत्वादावश्यकत्वम्। तथा च श्रुतिः—"अरं दासो न मीढुषे कराण्यहं देवाय भूर्णयेऽनागाः। अचेतयदचितो देवोऽअर्थो गृत्सं राये कवितारो जुनाति" इति। अर्थश्च—न शब्द इवार्थः अहं मीढुषे—भूयसीं धनस्य वृष्टिं कृतवते स्वामिने। दासो न दास इव। देवाय चतुर्भुजमूर्त्तयेऽलंकराणि अलंकरवाणि 'प्रार्थनायां लोट्' यथा दासाः स्वामिनं स्रक्चंदनमुकुटादिनालंकुर्वंत्येवमहं पार्थिवं नंदनंदनविग्रहं भूषयेयमित्यर्थः। अनागा निषिद्धाचरणवर्जितः। ननु चेतनो ह्यलंक्रियमाणः सद्यः फलं ददाति किमचेतनायालं करणेनेत्यत आह। भूर्णये भूरि मनुष्यराजापेक्षयाधिकं द्रव्यं नयति भक्ताय प्रापयतीति भूर्णिस्तस्मै भूर्णये अचेतनोप्ययं सर्वान्कामान्दास्यतीति भावः। ननु दृष्टविरुद्धमेतत्। न हि प्रतिमाराधनेन धनं प्रतिमातः प्राप्यत इत्यत आह—अचेतयदिति। अर्यः भुक्तिमुक्तिकामैरभिगम्यः स्वामी देवः प्रतिमादिरूपः। अचितश्चेतना-रहितान्सर्वान्पिडानचेतयच्चेतनायुक्तान्करोति अहल्यावत् भूतनिर्देशश्छांदसः। अयं भावः—देह इव प्रतिमायामपि तीव्रभावनावता चैतन्यं स्पष्टमुपलभ्यते प्रसिद्धं चैतत्प्रतिमोन्मेषणं मंत्रशास्त्रे उपाख्यायते च पुराणादौ तस्मात्प्रतिमायाश्चेतनाधिष्ठितत्वेन चेतनस्य च सर्वपुरुषार्थप्रवर्त्तकत्वेन ततः फलसंभावनास्तीति। एवं परमेश्वरे श्रीमाधवादिप्रतिमारूपे सर्वपुरुषार्थप्रदे सत्यपि कवितरो

१. प्रा० पा०—भूतेष्वपि स्थितम्।

बुद्धिमत्तरो जनो गृत्सं प्राणं "प्राणो वै गृत्स" इति श्रुतेः। प्राणवंतं जीवंतं राजादिं राये धनार्थं जुनात्यनुसरति नानाविधैः काव्यैः क्षुद्रं प्रभुं प्रस्तौत्यहो दौर्भाग्यमस्येति श्रुतिरुरस्ताडं मंदानाक्रोशति कवितमस्तु परमेव नंदनंदनापरपर्यायं समस्तपुरुषार्थकामः शरणीकुर्यादिति भावः। स्थितं चैतद्वृत्तं महाभारतारम्भे नीलकंठवर्णितम् ॥ २५ ॥ ❀ ❀ इत्यर्थ इति। "मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति" इति श्रुतेरिति भावः। अंतरेत्यस्य भेदार्थाप्रसिद्धेः प्रसिद्धार्थमाह यद्वेति। आत्मन उदरं परस्याप्युदरं यः भिन्नं करोति तस्य मृत्युस्वरूपोहमेव उदरं खलु जाठरानलज्वालायुक्तं यमात्मनस्तथा परस्यापीति ज्ञात्वा क्षुधार्त्तंजीवमात्मानमिव भोजयेदेवान्यथा मृत्युभयं भवतीत्यर्थः ॥ २६ ॥ ❀ ❀ तत्र सर्वभूतकृतालयत्वे। विश्वनाथः—ननु पृथिव्यामनंता एव क्षुधार्त्ता जीवास्ते च दातारमायांत्येव तान्भोजयितुं कः प्रभू रंतिदेवनृप इव धैर्यं धत्त इत्यत आह—अथाथवा तेभ्यो यथेष्टदानासामर्थ्येपि मानादिभिरर्हयेत् "अथाथो संशये स्यातामधिकारे च मंगले। विकल्पानंतरप्रश्नेः कात्स्न्यारंभसमुच्चये" इति मेदिनी। किञ्च तेषु बुभुक्षुषु गालिप्रदानादिभिस्तिरस्कुर्वत्स्वपि प्रतितिरस्कारं न कुर्यात्। किन्तु तेष्वात्मनोप्याधिक्यान्मानेन स्तुत्यादिभिरादरेणार्हयेत्। यदुक्तं भगवता—"ये ब्राह्मणान्मयि धिया क्षिपतोर्चयंतस्तुष्यद्धृदः स्मितसुधोक्षितवक्रपद्माः" इत्यादि आत्मनस्तुल्यान् मैत्र्याभिन्नेनाविदीर्णेनाकुटिलेनेति यावत्। एवं निष्कैतवस्य व्यवहृत्यापि तेषु कुप्यत्स्वपि तदंतःस्थितः प्रभुस्तु न कुप्यादिति भावः ॥ २७ ॥ ❀ ❀ तत्रापि सर्वभूतेष्वपि। अजीवानामजीवद्भयो जीर्णसस्यादिभ्यः सकाशाज्जीवा अजीर्णसस्यादयः श्रेष्ठास्ततः प्राणभृतः भूमिष्ठजलाकर्षणवमनादिलिंगेन प्राणवृत्तिभृतो जीवत्पाषाणादयः ततः सचित्ताः पूर्वमुड्डयनादिचेष्टाः पश्चादिंद्रवज्रेण शुष्का इति श्रवणादंतःसंज्ञानाः पर्वताः तेभ्योपि ॥ २८ ॥

## श्रीराधारमणदासगोस्वामिविरचिता दीपिनीव्याख्या

पूर्वोक्तदोषचतुष्टयसद्भावेऽर्चनस्य सर्वथा वैफल्यमाशङ्क्य निराचष्टे तर्हि इति। अनेन स्वकर्मकृदित्यधिकारिविशेषणेन। स एव सर्वत्रान्तर्यामितया तद्दर्शनलक्षण एव तथा च तत्तद्दोषयुक्तस्याप्यर्चनं तत्तद्दोषशान्तिपूर्वकं सर्वत्र तज्ज्ञानजनकमिति नार्च्चनस्य वैफल्यमित्यर्थः ॥ २५ ॥ ❀ ❀ स्वकर्मानुष्ठानपूर्वकमर्च्चनं कुर्वतोऽपि न भूतदयां विना सिद्धिरित्याह। आत्मनश्चेति। अत्र साध्याहारादिव्याख्यानादरुचेः पक्षान्तरम्। भयं संसारम् ॥ २६ ॥ ❀ ❀ अतो भूतदयामन्तरासिद्धेः तत्र कृतालयत्वे मैत्र्या हिताचरणेन ॥ २७ ॥ ❀ ❀ तत्रापि मानादिभिरर्चनेऽपि अचेतनेभ्यो जीर्णसस्यादिभ्यः जीवा जीवत्सस्यादयः भूमिष्ठजलाकर्षणवमनादिलिङ्गेन प्राणवृत्तिमन्तो जीवत्पाषाणादयः तेष्वपि मध्ये उड्डयनादिचेष्टावत्त्वात् अन्तर्ज्ञानवन्तः पर्वताः प्रभूताः प्रत्यक्षत्वप्रयोजकधर्म्मावच्छिन्नाः ॥ २८ ॥

## श्रीमद्वीरराघवव्याख्या

अतः स्वहृदि सर्वभूतेषु चावस्थितमीश्वरं मां यावन्न वेद तावत् स्वधर्मदृक् स्वधर्मनिष्ठः अर्चादावर्चयेत् अर्चादावर्चनं हृत्पद्मे साक्षात्कारसाधनमतस्तत्सिद्धितः प्रागर्चायामर्चनविच्छेदो न कर्तव्य इत्यर्थः ॥ २५ ॥ ❀ ❀ आत्मन इति। स्वात्मनः परमात्मनि उदरम् उत् अपि अरमल्पमीषदपीत्यर्थ अन्तरा भेदं यः करोति ब्रह्मात्मकानां जीवानां ज्ञानैकाकारतया साम्ये सति कर्मायत्तदेवादिशरीरकृतवैचित्र्यमात्मगतत्वेन योऽनुसन्धत्ते तस्य भिन्नदृशः मृत्युर्यमः उल्बणं भयं विदधे स नरकपातीत्यर्थः ॥ २६ ॥ ❀ ❀ निर्गुणस्यानुष्ठानप्रकारमाह। अथ अतः सर्वेषु भूतेषु कृतालयं कृतावासं तत्र हेतुः भूतात्मानं भूतशब्दो देवादिदेहविशिष्टजीवपर्यन्तः तस्य तत्रैव स्वारस्यात् तेषामात्मानमन्तर्यामिणं मामभिन्नेन समेन चक्षुषा ज्ञानेन मैत्र्या दानमानाभ्यां चार्हयेत् स्वाधिकेषु बहुमानं समेषु मैत्री अधमेषु दानं सर्वेषु ज्ञानैकाकारत्वब्रह्मात्मकत्वानुसन्धानमविशेषेण कर्तव्यमित्यर्थः। मामर्हयेदित्यनेन मदात्मकत्वबुद्ध्या भूतेषु कृतं दानादिकं मत्सन्तोषकरमित्युक्तं भवति ॥ २७ ॥ ❀ ❀ अथ भूतेषु यथोत्तरं दानमानाद्यतिशयः कर्तव्य इति वक्तुं निर्गुणभक्तस्य सर्वोत्तमत्वञ्च वक्तुं भूतानां तारतम्यमाह। सार्द्धैः षड्भिः। जीवन्तीति जीवाः सर्गप्रलयान्तरकालस्थितिजीवनाः शरीरिणः ते पृथिव्याद्यचेतनेभ्यः श्रेष्ठा इत्यर्थः। अजीवानामित्यपादानस्य शेषत्वविवक्षया षष्ठी तत्रापि प्राणभृतः प्राणवन्तः हे शुभे! ततः सचित्ताः ज्ञानवन्तः प्रवराः तपरतेभ्यः इन्द्रियवृत्तयः इन्द्रियाणां वृत्तयो येषु ते वृक्षादयः वृक्षाणामपि इन्द्रियवृत्तयः सूक्ष्माः सन्त्येव तथाहि महाभारते स्मर्यते "तस्मात् पश्यन्ति पादपास्तस्माज्जिघ्रन्ति पादपा इति ॥ २८ ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

तर्ह्यर्चादिपूजाविधायकशास्त्रं व्यर्थमिति तत्राह। अर्चादाविति। आदिशब्दात्स्थण्डिले स्वकर्मकृद्विरहितं कुर्वन्निषिद्धं परित्यजन्स्वहृदि स्थितं देवदत्तादिसर्वभूतेष्ववस्थितं मामभेदतो न वेद सर्वभूतान्तर्यामिरूपेषु भेददर्शनस्यानर्थफलत्वमिति च ॥२५॥ ❀ ❀ अन्तर्यामिरूपाणि भिन्नानि पश्यतीति भिन्नदृक्त्वमित्याह। आत्मनश्चेति। य आत्मनः स्वस्य हृदि स्थितं परस्य देवदत्तादेर्हृदि गतमन्तरेण भेदेन युक्तमुदरं ब्रह्म करोति स्वतस्त्वभिन्नं ब्रह्मभिन्नं पश्यतीत्यन्वयः "उदरं ब्रह्म" इति श्रुतेः उदर-

मन्तरं कुरुत इति अन्तर्यामिरूपाणि भिन्नानि पश्यतीति भिन्नदृक्तस्य मृत्युः संसाराख्यदुर्जनमारयिता श्रीनृसिंहस्वरूपी उल्बणं भयं नित्यदुःखलक्षणमन्धन्तमो विधत्त इत्यन्वयः ॥ २६ ॥ ॐ ॐ उक्तार्थोपसंहारमुखेन सर्वान्तर्यामिपूजाप्रकारं वक्ति । अथेति । अन्तर्यामिरूपाणां भिन्नत्वज्ञानमनर्थकमिति यस्मादथ तस्मात्सर्वेषु भूतेषु कृतालयं हरेरन्तर्यामिरूपं भूतात्मानं मां द्रव्यादिदानमानाभ्यां मैत्र्या स्वस्मादयमेव ममार्हः सुहृदिति भावेन निमित्तेनाभिन्नेन चक्षुषा अभेददर्शनेनार्हयेदर्चयेदित्यर्थः ॥ २७ ॥ ॐ ॐ हरेरन्तर्यामिरूपाणां तत्र तत्र सन्निधानविशेषात्तत्क्लृप्तत्वाच्च चेतनानां तारतम्यं तज्ज्ञानं च पुरुषार्थसाधनमिति द्योतयंस्तत्तारतम्यं वक्ति । जीवा इत्यादिना । संसारावस्थायां व्यत्ययेऽपि पशुवृक्षादिभेदेन स्थितानां जीवानां मुक्तौ निजमेव रूपमपेक्ष्य तारतम्यमत्रोच्यते तदुक्तम् ।

पशुवृक्षादिभेदेन जीवा एव स्वतः स्थिताः । संसृतौ व्यत्ययस्तेषां मुक्तौ तत्तत्स्वरूपतः ॥
तत्र स्थावरमुक्तेभ्यो वरा जङ्गममुक्तकाः । तेभ्यो मानुषमुक्ताश्च विप्रा मुक्तास्ततोऽधिकाः ॥
तत्रोपदेशमात्रेण मुक्तेभ्यो वेदवादिनः । अर्थज्ञा ऋषयस्तेभ्यो देवताः संशयच्छिदः ॥
पूर्णधर्मास्ततस्त्विन्द्रो निःसङ्गो गरुडस्ततः । भक्तिपूर्णो हरेर्ब्रह्मा तस्मान्नान्योऽधिकस्ततः ॥
मुक्तौ वा संसृतौ वापि सम्यगेषु हि ते गुणा इति ।

अजीवाश्चलनरहिताः स्थावरमुक्तास्तेषां सकाशाज्जीवाः जङ्गममुक्ताः श्रेष्ठाः अत्रापि विशेषद्योतनार्थं इष्ठन्प्रत्ययः हिशब्देनेश्वरशक्तेरचिन्त्यत्वं सूचयति प्राणं प्रकृष्टचेष्टां बिभ्रतीति प्राणभृतः श्रेष्ठा इत्यनुवर्तते सचित्ता मनोव्यापारयुक्ता इन्द्रियवृत्तयश्च क्षुरादीन्द्रियैः प्रवर्त्तमानाः ॥ २८ ॥

## श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

तदेवमीश्वरज्ञानाभावाद्भक्तावश्रद्दधानस्य दोष उक्तः । अथ तच्छ्रद्धाहेतुतज्ज्ञानस्य स्वधर्मसंयुक्तं तदर्चनमेव कारणमुपदिशन् तादृशार्च्चनस्याप्यव्यर्थतामङ्गीकरोति । अर्चादाविति । तावदेव स्वकर्म्मकृत् सन् अर्चादावर्च्चयेत् यावत् सर्व्वभूतेष्ववस्थितमीश्वरं मां न वेद न जानाति । अत्र स्वकर्म्मसहायत्वम् । अजातश्रद्धस्य शुद्धभक्तावनधिकारात् तत्प्रतिपादयिष्यते । जातश्रद्धो मत्कथास्वित्यादिना अतो भगवज्ज्ञानादूर्ध्वं जातश्रद्धस्तु स्वकर्म्मकृन् सन् नार्च्चयेत् । किन्तु शुद्धमर्चादिकमेव कुर्व्वीतेत्यप्यायातम् । तच्च प्रतिपादयिष्यते "तावत् कर्म्माणि कुर्व्वीत" इत्यादिना नत्वर्चां परित्यजेदित्यर्थः ।

प्रतिष्ठितार्चा न त्याज्या यावज्जीवं समर्च्चयेत् । वरं प्राणपरित्यागः शिरसो वापि कर्त्तनम् ॥

इति श्रीहयशीर्षपञ्चरात्रविरोधात् ॥ २५ ॥ ॐ ॐ अथ स्वकर्म्मपूर्व्वकमर्च्चनं कुर्व्वंश्च भूतदयां विना न सिद्धतीत्याह । आत्मन इति । अन्तरोदरं उदरभेदेन भेदं करोति न तु मदधिष्ठानत्वेनात्मसमं पश्यति । ततश्च क्षुधितादिकमपि दृष्ट्वा स्वोदरादिकमेव केवलं सम्बिभर्त्तीत्यर्थः । तस्य भिन्नदृशो मृत्युरूपोऽहमुल्बणं भयं संसारम् ॥ २६ ॥ ॐ ॐ निगमयति । अथेति । अथ अतो हेतोः यथायुक्तं यथाशक्तिदानेन तदभावे मानेन च अभिन्नेन चक्षुषेति पूर्व्ववत् यथोक्तं सनकादीन् प्रति वैकुण्ठदेवेन । "ये मे तनूर्द्विजवरान् दुहतीर्मदीया भूतान्यलब्धशरणानि च भेदबुद्ध्या" इत्यादि । एष च प्रस्तावः पूर्व्वमभिसन्धाय यद्धिंसामित्यादिकं यदुक्तम् । तत्तत्पोषकत्वेन निर्दिष्टम् ॥ २७ ॥ ॐ ॐ तत्र सर्वेषां साधारण्येनैव प्राप्तेर्विशेषयति । सार्द्धैः षड्भिः । अजीवा जीर्णसस्यादयः जीवा जीवत्सस्यादयः । ततः तेष्वपि प्राणभृतः भूमिष्ठजलाकर्षणवमनादिलिङ्गेन प्राणवृत्तिभृतो जीवत्पाषाणादयः सचित्ताः पूर्व्वमुड्डयनादिचेष्टाः पश्चादिन्द्रवज्रेण स्तब्धाः इति श्रवणात् । अन्तः सञ्ज्ञानाः पर्व्वता इन्द्रियवृत्तयः दृष्ट्यादितुल्यया दूरतोऽपि स्पर्शवृत्त्या स्वोद्गमावकाशज्ञानिनो वृक्षादयः पूर्व्वपूर्व्वस्मादुत्तरोत्तरस्मिन्नेकैकगुणाधिक्येनाधिक्यम् ॥ २८ ॥

## श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

शुद्धभक्तिमतां स्वत एव शुद्धान्तःकरणत्वात् प्राणिमात्रावज्ञा प्रायो न सम्भवेत् कर्म्ममिश्रभक्तिमतां तु सा सम्भवेदेव यावदन्तःकरणस्याशुद्धिस्तस्य शुद्धौ सत्यां तु सा न तिष्ठेत् तेन कर्म्मापि न कर्त्तव्यमित्याह । अर्चादाविति । स्वकर्म्मकृत् कर्म्ममिश्रां सात्त्विकीं भक्तिं कुर्व्वाणः यावदिति सर्व्वभूतात्मदर्शित्वदशायामुद्भूतायां सत्यां कर्म्मानधिकारात् न स्वकर्म्मकृत् किन्तु ज्ञानमिश्रां भक्तिं कुर्व्वाणः सन्नर्चायां मामर्च्चयेदित्यर्थः ॥ २५ ॥ ॐ ॐ आत्मन उदरं परस्यापि उदरं यः अन्तरा भिन्नं करोति । तस्य मृत्युस्वरूपोऽहमेव । उदरं खलु जाठरानलज्वालायुक्तं यथा आत्मनस्तथा परस्यापीति ज्ञात्वा क्षुधार्त्तं जीवमात्मानमिव भोजयेदेवान्यथा मृत्युभयं न तरतीत्यर्थः ॥ २६ ॥ ॐ ॐ ननु पृथिव्यामनन्ता एव क्षुधार्त्ता जीवास्ते च भोजयितारं श्रुत्वा तत्समीपमायान्त्येव तान् भोजयितुं कः खलु रन्तिदेवनृप इव धैर्यं धत्ते इत्यत आह । अथ अथवा तेभ्यो यथेष्टदानासामर्थ्येऽपि दानादिभिरर्हयेन् "अथाथो संशये स्यातामधिकारे च मङ्गले । विकल्पानन्तरप्रश्नकात्स्न्यारम्भसमुच्चय" इति मेदिनी । किञ्च । तेषु

बुभुक्षुषु गालिप्रदानादिभिस्तिरस्कुर्व्वत्स्वपि प्रति तिरस्कारं न कुर्य्यात् किन्तु तेष्वात्मनोऽप्यधिकमानेन स्तुत्यादिभिरादरेणार्हयेत्। यदुक्तं भगवता "ये ब्राह्मणान् मयि धिया क्षिपतोऽर्च्चयन्तस्तुष्यद्धृदः स्मितसुधोक्षितवक्त्रपद्मा" इत्यादि। आत्मनस्तुल्यान् मैत्र्याभिन्नेनाविदीर्णेनाकुटिलेनेति यावत्। एवं निष्कैतवस्य व्यवहृत्यापि तेषु कुप्यत्स्वपि तदन्तःस्थितः प्रभुस्तु न कुप्येदेवेति भावः॥ २७॥ ❀ ❀ न च केवलज्ञानीव मद्भक्तः सर्व्वत्र तुल्यदृष्टिः साधारण्येनैवार्हयेदपि तु तारतम्येनैवेति तत्तारतम्यं दर्शयति। सार्द्धैः षड्भिः। अजीवानामजीवेभ्यो जीर्णसस्यादिभ्यः सकाशात् जीवा अजीर्णसस्यादयः श्रेष्ठास्ततः प्राणभृतः भूमिष्ठजलाकर्षणवमनादिलिङ्गेन प्राणवृत्तिभृतो जीवत्पाषाणादयः ततः सचित्ताः पूर्व्वमुड्डयनादिचेष्टाः पश्चादिन्द्रवज्रेण स्तब्धा इति श्रवणादन्तःसंज्ञानाः पर्व्वताः तेभ्योऽपि "तस्मात् पश्यन्ति पादपास्तस्माज्जिघ्रन्ति पादपा" इति मोक्षधर्म्मवचनादिन्द्रियवृत्तिमन्त उद्गमावकाशादिज्ञानवन्तो वृक्षादयः॥ २८॥ २९॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

भूतग्रामावमानिनः अर्चायामुच्चावचैर्द्रव्यैरुत्पन्नया क्रिययापि अर्चितस्त्वं न तुष्यसि चेत्तदा तादृशः सर्वभूतेषु त्वज्ज्ञानोत्पत्त्यर्थं किं कुर्यात् येन सर्वभूतेषु त्वज्ज्ञानं तदनन्तरमर्चायां त्वदर्चनाधिकारः स्यादित्यत्र क्रममाह। अर्चादाविति। यावत्सर्वेषु भूतेषु अवस्थितं मां स्वहृदि न वेद तावत् स्वकर्मकृत् भवेत् मज्ज्ञानहीनस्य मदर्चने श्रद्धाद्यसम्भवात् अन्यदा तु अर्चादौ मामर्चयेत्॥ २५॥ ❀ ❀ सर्वत्रार्चने हेतुं दर्शयितुं भगवतः सर्वात्मत्वमाह। आत्मनः आत्मैवेदं सर्वमित्यादि श्रुतिप्रोक्तस्य परस्य कार्यस्य स अन्तरा मध्ये उदरं भेदं करोति तस्य भिन्नदृशः भेददर्शिनः मृत्युरहमुल्बणं भयं विदधे॥ २६॥ ❀ ❀ अथ अतो हेतोः कृतालयमन्तर्यामिणं भूतानामात्मानं कारणं च अभिन्नेन चक्षुषा समदर्शनेन अर्हयेत्पूजयेत्॥ २७॥ ❀ ❀ तेष्वपि यथोत्तरमर्हणं कार्यमिति वक्तुमुत्तरोत्तरं श्रैष्ठ्यमाह! जीवा इति सार्द्धैः षड्भिः। अजीवानामचेतनेभ्यः इन्द्रियाणां वृत्तिर्येषु ते इन्द्रियवृत्तियुक्ताः॥ २८—३१॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

तर्ह्यर्चाविधायकानि वाक्यानि व्यर्थानि स्युरित्याशङ्क्याऽऽह—अर्चादाविति। यावत्सर्वात्मकं भगवन्तं न जानाति, तावदर्चायामर्चयेत्। यतोऽहमीश्वरः, अन्यथा मारयेत् साऽर्चा धर्मरूपेत्याह—स्वकर्मकृदिति। सन्ध्यावन्दनवत् भगवत्पूजाऽपि नित्या ब्राह्मणादीनाम्। अतः स्वकर्मकृत् शालग्रामादौ मां पूजयेत्, यावन्मां सर्वभूतेष्ववस्थितं स्वहृदि न वेद। अनुभवो न भवतीत्यर्थः। न तु शब्दज्ञानं प्रयोजकम्। यथा साक्षाद्भगवति समागते बुद्धिर्भवति, एवं कृमिकीटादावपि चेद्बुद्धिः, तदा कर्मनिवृत्तिरर्चानिवृत्तिश्चेति साधारणमेतद्वाक्यम्, गुणप्राधान्याभावात्॥ २५॥ ❀ ❀ ❀ ज्ञानोत्तरं तु न कर्तव्यमित्यत्र हेतुमाह—आत्मन इति। यदि ज्ञानोत्तरमपि पूजां कुर्यात्, भेदबुद्ध्या स्वसेवामिव कुर्वन् न दुष्यते। स्वसेवया च स्वयं सन्तुष्यते, 'यद्यन्यां देवतामुपास्ते, अन्योऽसावन्योऽहमस्मीति यथा पशुरेवं स देवानां पशुः' इति श्रुतेरात्मेत्येवोपासीत। यस्तु पुनः, आत्मनः परस्याऽपि अन्तरा[1] उत् अरमपि ईषदपि अरं भेदं करोति। अरा हि भेदकाश्चक्रस्य। 'यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते, अथ तस्य भयं भवति' इति श्रुतेः। तद्भयमहमेव प्रयच्छामीत्याह—तस्य भिन्नदृश इति। उल्बणं भयं विदधे विशेषेण तस्मिन् स्थापयामि। तद्भयं मृत्युरेव, न ह्यन्येन भयेन प्राणांस्त्यजति। सहजो हि प्रयत्नः प्राणधारकः, अतो भक्तिफलं दूरे;मृ[2]त्युस्तु सेत्स्यती[3]ति ज्ञानोत्तरं मृत्योरभावादेतन्न कर्तव्यमिति फलितम्॥ २६॥ ❀ ❀ अज्ञानदशायामप्यर्चापेक्षया ज्ञानार्थिनः सर्वभूतेष्वेव भजनं श्रेष्ठमित्याह—अथ मामिति। अथेति भिन्नप्रक्रमार्थः, पूर्वं ज्ञानिनो निरूपणात्। सर्वभूतेषु भजनं भक्तिमार्गेऽपि वर्तत इति तन्निवृत्त्यर्थमाह—भूतात्मानमिति। भूतानामात्मा जीवः। ननु स सर्वत्र वर्तत इति कोऽयं भूतेषु विशेषस्तत्राऽऽह—कृतालयमिति। यथा कश्चिद्गृहं कृत्वा क्वचित्तिष्ठति, तदुपलब्धिस्तत्र सुलभा, अत आत्मनोऽपि सङ्घातरूपं गृहं कृत्वा स्थितस्य तत्रोपलब्धिः सुलभा। लोकेऽपि गृहे पदार्थसमर्पणे गृहस्थः प्रीतो भवति, अतो भूतेष्वेव मामर्हयेत्। यथायोग्यं च पूजा. येनैव यः सन्तुष्यति। तत्र मुख्यं दानम्, मानं च, मैत्री च। निकृष्टे दानम्, उत्कृष्टे मानम्, समे मैत्री। एतदप्यभिन्नचक्षुषा सर्वत्राऽऽत्मज्ञानेन कर्तव्यम्, न तु लोकदृष्ट्येत्याह—अभिन्नेनेति॥ २७॥ ❀ ❀ विशेषपूजायामुत्कृष्टब्राह्मणलक्षणमधिष्ठानं वक्तुं सर्वजीवापेक्षया तस्योत्कर्षमाह—जीवा इति सार्द्धैः षड्भिः—जीवाः प्राणयुक्ता अजीवानां पाषाणादीनां मध्ये श्रेष्ठा वृक्षादयः। ततः प्राणभृतः श्वासोच्छ्वासवन्तो जङ्गमाः श्रेष्ठाः। शुभे इति सम्बोधनमुक्तविश्वासाय। देहापेक्ष[4]या स्थूलः प्राण उत्कृष्टः, ततोऽप्यासन्यः। एवमेते त्रयो निरूपिताः क्रियाशक्तिप्रधानाः। ततो ज्ञानशक्तिप्रधाना उत्तमा इत्याह— ततः सचित्ता इति चेतनाधारभूतमन्तःकरणं चित्तम्; ज्ञानवन्त इति यावत्। ततश्चेन्द्रियवृत्तय इति। सविषयज्ञानवन्तः। इन्द्रियाण्येतानि क्रियामयानि॥ २८॥

---

१. अन्तरा अन्तरमपि क. घ. ङ.। २. मृत्युमप्येतीति घ.। ३. नश्यति ङ.। ४. श्वासापेक्षया ङ.।

## श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः।

अर्चादावित्यत्र। अर्चाविधायकानीति। सगुणार्चाविधायकानि। यावदित्यादि, तथा च मुख्याधिकाराभावे कर्तव्यताबोधनेन सार्थक्यान्न तेषां वैयर्थ्यमित्यर्थः। नन्वेवं वाक्यवैयर्थ्याभावे पूजायाः फलाभावात् फलतो वैयर्थ्यं दुर्वारमित्यत आहुः—यत इत्यादि। तथा चानिवृत्तिरीदृशी ततो भवतीति न फलतो वैयर्थ्यमित्यर्थः। तादृशपूजायाः स्वरूपमाहुः—साऽर्चेत्यादि। प्रयोजकमिति पूजादिकर्मनिवृत्तिप्रयोजकम्। एतदेव व्याकुर्वन्ति—यथेत्यादि। साधारणामिति। पूजामात्रसाधारणम्। एतादृशत्वे 'गृहं सर्वात्मना त्याज्यम्' इत्युक्तरूपस्य त्यागस्यैवाऽधिकारादिति॥ २५॥ ❀ ❀ आत्मन इत्यत्र। आहेति। अभेददर्शनरूपं हेतुं भेदनिन्दामुखेनाह। पूजां कुर्यादिति। भिन्नदृशा पूजां कुर्यात्! तस्याहमेव भयं प्रयच्छामीत्यनेनाऽस्यान्वयः। तेन सिद्धमाहुः–भेदबुद्धयेत्यादि। अत्र अकारः पतित इति प्रतिभाति। विदध इत्युत्तमपुरुषयोगे मृत्युपदमन्वितमेव तिष्ठतीत्यत आहुः—तद्भयं मृत्युरेवेत्यादि॥ २६॥

## श्रीगिरिधरकृता बालप्रबोधिनी

नच 'मद्धिष्ण्यदर्शनस्पर्शपूजास्तुत्यभिवन्दनैः' इत्यादौ तत्र तत्र प्रतिमापूजादिविधानात् कथं तन्निन्द्यते इति शङ्कनीयम्, तत्र 'भूतेषु तद्भावनया' इत्यादिना सर्वत्र भगवद्दर्शनसन्मानानुकम्पामैत्र्यादीनामपि विधानात्, तद्विरोधिनामवज्ञाद्वेषायमानरूपापराधानां प्रतिषेध एव तात्पर्यं, न प्रतिमापूजानिषेधे, तथाचावज्ञादिदोषरहिता पूजा तु कार्यैवेत्याशयेन तदवधिमाह—अर्चादाविति। यावत्सर्वभूतेषु अवस्थितमीश्वरं सर्वनियन्तारं मां स्वहृदि न वेद तावत् स्ववर्णाश्रमाचारप्राप्तं कर्मकृत् तत्कुर्वन् यथावकाशमर्चादौ मामर्चयेत्। अनेन कर्मनिष्ठायाः सर्वत्रेश्वरदर्शनावधित्वं सूचितम्॥ २५॥ ❀ ❀ भेददर्शिनस्तु मत्सम्पादितजन्ममरणादिसंसारो नैव निवर्त्तते इत्याह—आत्मनश्चेति। यस्त्वात्मनः स्वस्य परस्य परमेश्वरस्य प्राण्यन्तरस्य चापि अन्तरा मध्ये उदरमुदरोपलक्षितं शरीरं करोति शरीरप्रयुक्तं भेदं पश्यति तस्य भिन्नदृशोऽहं मृत्युरूपः सन् उल्बणं दुस्सहं संसारभयं विदधे सम्पादयामि॥ २६॥ ❀ ❀ अथ अतः सर्वभूतेषु कृतालयं कृतावासम्। तत्र हेतुः भूतात्मानं सर्वभूतान्तर्यामिणं मां दानमानाभ्यां मैत्र्या चार्हयेत्। तत्र स्वाधिकेषु सन्माननम्, समेषु मैत्री, अधमेषु दानम्। तदप्यभिन्नेन चक्षुषा सर्वत्र सदात्मकत्वबुद्ध्येत्यर्थः॥ २७॥ ❀ ❀ सम्मानादिकमपि जीवेषु तारतम्यानुसारेण कर्त्तव्यमिति वक्तुं तेषां तारतम्यमाह—सार्धैः षड्भिः। हे शुभे इति मातृसम्बोधनं स्नेहसूचकम्। हीति नात्र किञ्चित्तिरोहितम्। अजीवानामिति षष्ठी पञ्चम्यर्था। अजीवेभ्योऽचेतनेभ्यो मृत्पाषाणादिभ्यो जीवाः सचेतना वृक्षादयः श्रेष्ठाः। ततः प्राणभृतः श्वासोच्छ्वासवन्तो जङ्गमाः श्रेष्ठाः। ततः सचित्ताः ज्ञानवन्तः प्रवराः श्रेष्ठाः। ततश्चेन्द्रियाणां वृत्तयो येषु ते रूपरसादिज्ञानवन्तः श्रेष्ठाः॥ २८॥

## हिन्दी अनुवाद

मनुष्य अपने धर्मका अनुष्ठान करता हुआ तबतक मुझ ईश्वरकी प्रतिमा आदिमें पूजा करता रहे जबतक उसे अपने हृदयमें एवं सम्पूर्ण प्राणियोंमें स्थित परमात्माका अनुभव न हो जाय॥ २५॥ ❀ ❀ जो व्यक्ति आत्मा और परमात्माके बीचमें थोड़ा-सा भी अन्तर करता है, उस भेददर्शीको मैं मृत्युरूपसे महान् भय उपस्थित करता हूँ॥ २६॥ ❀ ❀ अतः सम्पूर्ण प्राणियोंके भीतर घर बनाकर उन प्राणियोंके ही रूपमें स्थित मुझ परमात्माका यथायोग्य दान, मान, मित्रताके व्यवहार तथा समदृष्टिके द्वारा पूजन करना चाहिये॥ २७॥ ❀ ❀ माताजी! पाषाणादि अचेतनोंकी अपेक्षा वृक्षादि जीव श्रेष्ठ हैं, उनसे श्वास लेनेवाले प्राणी श्रेष्ठ हैं, उनमें भी मनवाले प्राणी उत्तम और उनसे इन्द्रियकी वृत्तियोंसे युक्त प्राणी श्रेष्ठ हैं। सेन्द्रिय प्राणियों में भी केवल स्पर्शका अनुभव करनेवालोंकी अपेक्षा रसका ग्रहण कर सकनेवाले मत्स्यादि उत्कृष्ट हैं तथा रसवेत्ताओंकी अपेक्षा गन्धका अनुभव करनेवाले (भ्रमरादि) और गन्धका ग्रहण करनेवालोंसे भी शब्दका ग्रहण करनेवाले (सर्पादि) श्रेष्ठ हैं॥ २८-२९॥

**तत्रापि स्पर्शवेदिभ्यः प्रवरा रसवेदिनः। तेभ्यो गन्धविदः श्रेष्ठास्ततः शब्दविदो वराः॥ २९॥**
**रूपभेदविदस्त[1]त्र ततश्चोभयतोदतः। तेषां बहुपदाः श्रेष्ठाश्चतुष्पाद[2]स्ततो द्विपात्॥ ३०॥**
**ततो वर्णाश्च चत्वारस्तेषां ब्राह्मण उत्तमः। ब्राह्मणेष्वपि वेदज्ञो ह्यर्थज्ञोऽभ्यधिकस्ततः॥ ३१॥**
**अर्थज्ञात्संशयच्छेत्ता ततः श्रेयान् स्वकर्मकृत्। मुक्तसङ्गस्ततो भूयानदोग्धा धर्ममात्मनः॥ ३२॥**

---

१. प्रा० पा०—विदस्तेभ्यस्ततश्चोभयवेदिनः। २. प्रा० पा०—पादास्ततो।

### श्रीधरस्वामिविरचिता भावार्थदीपिका

अतस्तेभ्यः स्पर्शवेदिभ्यो रसवेदिनो मत्स्यादयः श्रेष्ठाः गंधविदो भ्रमरादयः शब्दविदः सर्पादयः ॥ २९ ॥ ❀ ❀ रूपभेदविदः काकादयः उभयतो दंता येषाम् । अपादेभ्यो बहुपादास्तेभ्यश्चतुष्पादा इत्यर्थः । ततो द्विपान्मनुष्यः ॥ ३० ॥ ❀ ❀ ततस्तेषु वर्णाः ॥ ३१ ॥ ❀ ❀ संशयच्छेत्ता मीमांसकः । ततोऽपि केवलात्स्वकर्मकृन् मुक्तसंगस्य लक्षणमात्मनो धर्ममदोग्धा निष्काम इत्यर्थः ॥ ३२ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

तत्रापि तेष्वपींद्रियवृत्तिभ्योपि दूरतोपि स्पर्शवृत्त्या दृष्ट्यादितुल्यया स्वोद्यमावकाशज्ञानिनो वृक्षादयः पूर्वपूर्वस्मादुत्तरोत्तरस्मिन्नेकैकगुणाधिक्येनाधिक्यम् । केचित्तु अजीवाः काष्ठाद्यास्सजीवाः पाषाणादयस्तेषां वृद्धिदर्शनात् । प्राणभृतस्तृणादयो रसवृद्धिदर्शनात् । सचित्ता लताद्या वृक्षं प्रति चलनदर्शनात् । इद्रियवृत्तयो वृक्षाः गृहीतपर्शुं दृष्ट्वा कंपनात् । रसवेदिनः पिपीलिका मत्स्याद्याः स्वतंत्रव्यापारत्वात् । गंधविदो भ्रमराः । शब्दविदो हरिणसर्पादयः ॥ २९ ॥ ❀ ❀ रूपभेदविदो मर्कटादयः । उभयतो दतो अजादयः । बहुपदः शरभाद्याः । पक्षिणामपि गमनसाधनपक्षाभ्यां चतुष्पात्त्वमिति केचित् । एवमन्येषां चतुष्पात्त्व-द्विपात्त्वादौ सत्यपि तादृशतत्तद्गुणाधिक्याभावाभावाभ्यां तारतम्यं ज्ञेयम् । विशेषस्तु शास्त्रादवसेयः । यथा गोवर्द्धनतुलस्यादिषु सर्वतोऽर्हणीयत्वम् ॥ ३० ॥ ❀ ❀ ततस्तेषु । ततो वेदपाठमात्रज्ञेभ्यः ॥ ३१ ॥ ❀ ❀ संशयच्छेत्ता ऊहापोहकुशलत्वेन प्रष्टृसंदेहवारकः । स्वकर्मकृद्विहितानुष्ठायी । इत्यर्थ इति । स्वकर्मफलेप्सूनां न मुक्तसंगत्वमिति भावः ॥ ३२ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

अत एकेन्द्रियप्राधान्यादेव तत्रेत्यस्य व्याख्या तेभ्य इति वैजात्याद्यथा श्रुतैव पञ्चमी मत्स्यादीनां स्पर्शज्ञानवत्त्वे रसज्ञानातिरेकाद्वैशिष्ट्यम् । एवमुत्तरत्रापि तत्तज्ज्ञानप्रयुक्तं वैशिष्ट्यमूह्यम् । उभयतोदतः शालग्रामशिलायां तत्तल्लिङ्गोद्भेदनकर्त्तारो कीटविशेषाः परमार्थमाहात्म्येन श्रेष्ठाः ॥ २९—३१ ॥ ❀ ❀ मीमांसकः कर्मज्ञानभेदेन द्विविधः केवलात्स्वधर्म्मानुष्ठानशून्यात् दोहनं हि गवामेव प्रसिद्धमिति गौण्या वृत्त्या व्याख्यानादित्यर्थोक्तिः ॥ ३२ ॥

### श्रीमद्वीरराघवव्याख्या

तेभ्यः स्पर्शवेदिनः स्पर्शवेदितायवान्तरभेदास्तिर्यक्षुः द्रष्टव्याः प्रभृता तु स्पर्शनेन्द्रियवृत्तिरेव तेभ्यः स्पर्शवेदिभ्यः रसनेन्द्रियवृत्तयः मत्स्यादयः श्रेष्ठा गन्धविदो भ्रमरादयः शब्दविदः सर्पादयः रूपविदः काकादयः तेभ्य उभयतोदतः तेभ्यः बहुपदाः तेभ्यश्चतुष्पादः ततो द्विपान्मनुष्यः ॥ २९ ॥ ३० ॥ ❀ ❀ द्विपात्स्वपि चत्वारो ब्राह्मणादयो वर्णाः वर्णानां मध्ये ब्राह्मणः ब्राह्मणेष्वपि वेदाध्यायी ततोऽपि वेदार्थज्ञः अधिकश्रेष्ठ इत्यर्थः ॥ ३१ ॥ ❀ ❀ अर्थज्ञादपि संशयच्छेत्ता मीमांसकः ततोऽपि केवलात् स्वकर्मकृत् श्रेष्ठः ततो मुक्तसङ्गः भूयान् श्रेष्ठः तस्य लक्षणमात्मनो धर्ममदोग्धा निष्काम इत्यर्थः ॥ ३२ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

अत्रापीन्द्रियवृत्तिष्वपि स्पर्शज्ञाः प्रवरास्तेभ्यो माधुर्यादिरसज्ञाः गन्धविदो गन्धगुणज्ञाः शब्दविदः शब्दज्ञाः ॥ १९ ॥ ❀ ❀ रूपभेदविदः शुक्लादिरूपविशेषज्ञाः उभयतोदत उत्तराधरदन्तयुक्ता बहुपदः शरभादयः चतुष्पादो गवादयः द्विपान्मनुष्यो वर्णहीनः ॥ ३० ॥ ❀ ❀ ब्राह्मणादिलक्षणाश्चत्वारो वर्णाः ब्राह्मणो वेदसम्बन्धयोग्यः तत्र ब्राह्मणेष्वप्युपदेशमात्रानुष्ठानेन जातापरोक्षज्ञानेन वेदज्ञो विप्र उच्यते । अर्थज्ञो वेदार्थज्ञः ऋषिरुक्तः ॥ ३१ ॥ ❀ ❀ वेदार्थसंशयच्छेत्ता देवः जातावेकवचनं स्वस्य स्वतन्त्रस्य हरेर्धर्मं करोतीति स्वधर्मकृत् त्रैलोक्यरक्षणलक्षणपूर्णधर्मकर्तृत्वादिन्द्रः मुक्तसङ्गो गरुडः अस्य विवरणं न दोग्धेति आत्मनः स्वस्य धर्मं न दोग्धा भवत्प्रसादमन्तरेण कर्मफलमनकाङ्क्षमाणो भूयानुत्तरः ॥ ३२ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

अतस्तेभ्यः स्पर्शवेदिभ्यो रसवेदिनः रसास्वादेन मृत्तिकादिस्वस्वभोज्याभोज्यज्ञानिनो गण्डुपद्यादयः श्रेष्ठाः । गन्धविदो जलकीटमत्स्यादयः । तत्र केचित् संगमनपलायनादिहेतुशब्दविदोऽपि भवन्ति । तत्र केचिद्रूपभेदविदोऽपि भवन्ति ॥ २९ ॥ ❀ ❀ उभयतो दन्ताः सर्पादयः पुष्पकाष्ठादिकर्त्तनसामर्थ्यादुभयतो दन्तत्वं चैषाम् । चतुष्पादः पशवः गमनसाधनपक्षाभ्यां पक्षिणश्च द्विपात् मनुष्य इत्यर्थः । अन्येषां चतुष्पात्त्वद्विपात्त्वादौ सत्यपि तादृशतत्तद्गुणाभावान्न्यूनत्वमेषां तु पादहीनत्वं सचित्तत्वाद्यतिशये बुद्ध्यतिशये हस्तादिशालित्वेऽपि लिङ्गमिति पूर्वतो गुणोत्कर्षमयम् । पूर्वपूर्वस्मादुत्तरोत्तरस्मिन्नेकैकगुणाधिक्येनाधिक्यम् । तदेवमन्यत्राप्युत्तमगुणाधिक्यहानिभ्यां तारतम्यं ज्ञेयम् । यथा देवताधिष्ठानादिना हिमालयादिषु तुलस्यादिषु गवादिषु च परमाधिक्यम् ॥ ३०—३१ ॥ ❀ ❀ धर्म्ममदोग्धा निष्कामकर्म्मा ॥ ३२ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी ।

तत्रापि तेभ्योऽपि स्पर्शवेदिभ्यो वृक्षादिभ्यो रसवेदिनो मृत्तिकादिस्वभोज्याभोज्यज्ञानिनो गण्डुपद्यादयः । गन्धविदो बकुलादिपुष्पसूक्ष्मकीटाः शब्दविदः शब्दश्रवणेन पलायनवन्तः केचिज्जलकीटाः ॥ २९ ॥ ❀ ❀ रूपविदः काकादयः । उभयतोदन्ताः । सर्पादयः । बहुपदा भ्रमरादयः तेषां पुष्पकाष्ठादिकर्त्तनलिङ्गेन उभयतो दन्तत्वं ज्ञेयं चतुष्पादः पशवः द्विपान्मनुष्यः एतेषां पूर्व्वपूर्व्वत उत्तरोत्तरेषां सामान्यत एव गुणाधिक्यादाधिक्यं देवाधिष्ठानादिविशेषगुणाधिक्यविचारेण श्रीगोवर्द्धनवेङ्कटाचलादिषु तुलस्यादिषु च सर्वत एव परमाधिक्यादर्हणीयत्वाधिक्यं शास्त्रप्रसिद्धमेव ज्ञेयम् ॥ ३० ॥ ❀ ❀ ततस्तेषु ॥ ३१ ॥ ❀ ❀ ततस्तादृशादपि स्वकर्म्मकृत् सम्यगकर्त्तुः सकाशात् स्वकर्म्मकृत् । ततोऽपि मुक्तसङ्गो ज्ञानी यतः स्वस्वधर्म्ममदोग्धा पूर्व्वदशाकृतस्वस्वधर्मफलस्यागृहीता ॥ ३२ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

मुक्तसङ्गः निष्कामकर्मकर्ता तदेवाह । आत्मनः धर्ममदोग्धा फलानभीप्सुः ॥ ३२ ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

ततोऽपि ज्ञानवतां श्रैष्ठ्यमाह—तत्राऽपीति । ज्ञानेन्द्रियेषु निकृष्टः स्पर्शः; ततो रसना उत्कृष्टा, मधुरादयो हि रसाः स्पर्शापेक्षयाऽपि मोहका इति । ततोऽपि गन्धविदः, पृथिवीगुणत्वात् दूरादपि ज्ञानजनकत्वाच्च । स्पर्शवेदिनः प्रायेण सर्वे कृमयः; ततो मत्स्या रसवेदिनः । गन्धविदो भ्रमरादयः; ततः शब्दविदो हरिणाः, गन्धापेक्षयाऽपि शब्दो दूरादेवाऽर्थं ज्ञापयतीति । ततोऽपि चक्षुः अतिदूरादर्थं ज्ञापयतीति—रूपभेदविदः काकादयः श्रेष्ठाः । ततश्चोभयतो दतः साधनाधिक्यवन्तः मर्कटादयः श्रेष्ठाः, मूषकादयो वा । तच्च करणमन्तर्नयनार्थमेवेति ततोऽपि बहिःकरणवन्तः श्रेष्ठा इत्याह—तेषां बहुपदाः श्रेष्ठा इति । गोजरादयो बहुपदाः । ततोऽपि चतुष्पादः सर्वे मूषकमार्जारश्वादयः । ततो द्विपात्, सर्वे पक्षिणो मनुष्याश्च । ततो ब्राह्मणा त्रिवर्णा उत्तमाः, धर्मव[१]त्त्वात् । तेषामाद्यः, मुख्यधर्मवत्त्वात् । जातिब्राह्मणापेक्षयाऽपि वेदाध्यायी महान्, ततोऽपि वेदार्थवित् । ततोऽपि वेदार्थे सर्वसन्देहनिवारकः । ततोऽपि यज्ञादिकर्ता श्रेष्ठः । ततोऽपि मुक्तलिङ्गो गलितदेहाभिमानः श्रेष्ठः । ततोऽपि निरभिमानो भूत्वा ऐहिकामुष्मिकार्थं न किञ्चित्करोति, नाऽपि वाञ्छति स उत्तमः ॥ २९–३२ ॥

### अस्मिन्पद्यार्थे सुबोधिनीप्रकाशो न

### श्रीगिरिधरकृता बालप्रबोधिनी

तेभ्यः स्पर्शवेदिनः श्रेष्ठाः । स्पर्शवेदिभ्यो रसवेदिनः मत्स्यादयः प्रवराः श्रेष्ठाः । ततो गन्धविदो भ्रमरादयः श्रेष्ठाः । ततः शब्दविदः सर्पादयः श्रेष्ठाः ॥ २९ ॥ ❀ ❀ ततोरूपभेदविदः काकादयः श्रेष्ठास्ततः उभयोदतः मर्कटादयः श्रेष्ठाः । तेषां तेभ्यः अपादेभ्यो बहुपदाः श्रेष्ठाः तेभ्यश्चतुष्पादः श्रेष्ठाः । तेभ्यो द्विपान्मनुष्याः श्रेष्ठाः ॥ ३० ॥ ❀ ❀ ततस्तेषामपि ब्राह्मणादयश्चत्वारो वर्णाश्रेष्ठाः । तेषां मध्ये ब्राह्मण उत्तमः । ब्राह्मणेष्वपि वेदज्ञो वेदाध्यायी श्रेष्ठः । ततो हि वेदार्थज्ञोऽभ्यधिकः श्रेष्ठः ॥ ३१ ॥ ❀ ❀ अर्थज्ञात् संशयच्छेत्ता मीमांसकः श्रेष्ठः । ततोऽपि स्वकर्मकृत् श्रेयान् श्रेष्ठः । ततोऽपि मुक्तसङ्गो भूयान् श्रेष्ठः । तस्य लक्षणमाह—आत्मनो धर्ममदोग्धा निष्कामकर्मकृदित्यर्थः ॥ ३२ ॥

### हिन्दी अनुवाद

उनसे भी रूपका अनुभव करनेवाले ( काकादि ) उत्तम हैं और उनकी अपेक्षा जिनके ऊपर, नीचे दोनों ओर दाँत होते हैं, वे जीव श्रेष्ठ हैं । उनमें भी बिना पैरवालोंसे बहुतसे चरणोंवाले श्रेष्ठ हैं तथा बहुत चरणोंवालोंसे चार चरणवाले और चार चरणवालोंसे भी दो चरणवाले मनुष्य श्रेष्ठ हैं ॥ ३० ॥ ❀ ❀ मनुष्योंमें भी चार वर्ण श्रेष्ठ हैं; उनमें भी ब्राह्मण श्रेष्ठ हैं ब्राह्मणोंमें वेदको जाननेवाले उत्तम हैं और वेदज्ञोंमें भी वेदका तात्पर्य जाननेवाले श्रेष्ठ हैं ॥ ३१ ॥ ❀ ❀ तात्पर्य जाननेवालोंसे संशय निवारण करनेवाले, उनसे भी अपने वर्णाश्रमोचित धर्मका पालन करनेवाले तथा उनसे भी आसक्तिका त्याग और अपने धर्मका निष्कामभावसे आचरण करनेवाले श्रेष्ठ हैं ॥ ३२ ॥

**तस्मान्मय्यर्पिताशेषक्रियार्थात्मा निरन्तरः । मय्यर्पितात्मनः पुंसो मयि संन्यस्तकर्मणः ।**
**न पश्यामि परं भूतमकर्तुः समदर्शनात् ॥ ३३ ॥**
**मनसैतानि भूतानि प्रणमेद्बहु मानयन् । ईश्वरो जीवकलया प्रविष्टो भगवानिति ॥ ३४ ॥**

---

१. धर्ममयत्वात् क. धर्मत्वात् घ. ङ. ।

भक्तियोगश्च योगश्च मया मानव्युदीरितः । ययोरेकतरेणैव पुरुषः पुरुषं व्रजेत् ॥ ३५ ॥
एतद्भगवतो रूपं ब्रह्मणः परमात्मनः । परं प्रधानं पुरुषं दैवं कर्मविचेष्टितम् ॥ ३६ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

अर्पिता अशेषाः क्रिया अर्थास्तत्फलान्यात्मा देहश्च येन अत एव निरंतरोऽव्यवहितः अकर्तुः कर्तृत्वाभिमानशून्यात् ॥ ३३ ॥ ❀ ❀ जीवानां कलया परिकलनेन अंतर्यामितया प्रविष्ट इति दृष्ट्येत्यर्थः ॥ ३४ ॥ ❀ ❀ उक्तं भक्तियोगं पूर्वोक्तेनाष्टांगयोगेन सहोपसंहरति । भक्तियोगश्चेति । हे मानवि पुरुषं परमेश्वरम् ॥ ३५ ॥ ❀ ❀ यदन्यत्पृष्टं जीवस्य संसृतीः कालस्य स्वरूपं चाचक्ष्वेति तदाह । एतदिति सार्धेन । एतत्सर्वनियंतृ यद्भगवतो रूपम् । कीदृशम् । प्रधानपुरुषात्मकं परं तद्व्यतिरिक्तं च एतदेव दैवमित्यभिधीयते कीदृशं कर्मणो विचेष्टितं नानासंसृतिलक्षणं यस्मात्तद् दैवप्रेरितकर्मकृताः संसृतयो विचित्रा इत्यर्थः ॥ ३६ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

अत एव मदर्पिताशेषक्रियार्थत्वादेव पुंस इत्यत्र सामान्यतः पुंमात्रग्रहे प्रकरणविरोधाद्ब्राह्मणस्यैव ग्रहणं पुंस्त्वमपि विशेषतो ब्राह्मण एव भयार्त्तानां क्षत्त्रादीनां पालकत्वात्तच्च प्रथितं भारतादिषु "पाल्या नार्यः समाख्याताः पालकः पुरुषो भवेत्" इत्यभियुक्तोक्तेः । "लोके पुरुषमेवेह ह्यनुयांति यथाबलाः ॥ प्रजाखिलास्तया विप्रमतो विप्रः पुमान्स्मृतः" ॥ यद्वा । "धर्माधर्मोपदेशेन विप्रः पात्यखिलं जगत् । अतो विप्रः पुमान्पातेर्डुम्सुप्रत्ययेबुधः" इति सहितोक्तेश्च । विश्वनाथस्तु—मपि मत्प्राप्त्यर्थं सन्यस्तकर्मणस्त्यक्तवर्णाश्रमधर्मात् 'मत्कृते त्यक्तधर्म्माणः' इति पूर्वोक्तेः । अकर्त्तुः मद्भक्तावपि भगवानेव मे भक्तिं कारयतीति बुद्ध्या स्वातंत्र्येण कर्त्तृत्वाभिमानशून्यात् । समदर्शिनः स्वस्य सममेव सुखदुःखादिकं पश्यतः यदुक्तं भगवता "आत्मौपम्येन सर्वत्र समं पश्यति योऽर्जुन । सुखं वा यदि वा दुःखं स योगी परमो मतः" इति । "विद्याविनयसंपन्ने ब्राह्मणे गवि हस्तिनि । शुनि चैव श्वपाके च पंडिताः समदर्शिनः" इत्युक्तलक्षणसमदर्शित्वग्रहे तु 'जीवाः श्रेष्ठा अजीवानाम्' इत्याद्युक्तविरोधः स्यात् ॥ ३३ ॥ ❀ ❀ इत्यर्थ इति । "तत्सृष्ट्वा तदेवानुप्राविशत्" इति श्रुतेरिति भावः । संदर्भस्तु—तदेवं प्रथमोपासकानां सर्वभूतादरो विहितः । सश्रद्धसाधकानां तु भगवद्वैभवसार्वत्रिकतास्फूर्त्या भगवत्येवासौ यथोक्तं स्कांदे "एतेन ह्यद्भुता व्याध तवाहिंसादयो गुणाः । हरिभक्तौ प्रवृत्ता ये न ते स्युः परितापिनः" इति । वक्ष्यमाणरीत्या शुद्धवस्तुत्वादिभावसाधकानामपि वस्तुभावसिद्धश्रीगोकुलवास्यादिलीलानुसारेण तादृशभगवद्गुणानुसारेण चासौ जायते जात भवानां त्वहिंसा चोपरमश्चस्वीय एव स्वभावः । यथा "यत्रानुरक्ताः सहसैवधीरा व्यपोह्य देहादिषु संगमूढम् । व्रजंति तत्पारमहंस्यमंत्यं यस्मिन्न हिंसोपरमः स्वधर्मः" इति । ततः परमसिद्धानां "सर्वभूतेषु यः पश्येद्भगवद्भावमात्मनः" इत्याद्यनुसारेण सिद्ध एव सः । तत्र साधकानां यत्तु "यथा तरोर्मूलनिषेचनेन' इत्याद्युक्त्या तदन्योपासनानां पुनरुक्तत्वमुपलक्ष्यते । तत्पुनः केवलस्वतंत्रतत्तदृष्टयोपासनानामेव । अत्र तु तत्तदधिष्ठानकभगवदुपासनमेव विधीयते । तदादरावश्यकत्वञ्च तत्संबंधेनैव संपाद्यते । तच्चान्यत्र झटिति रागद्वेषविश्लेषार्थमिति ज्ञेयम् । अत एव भूतानुकंपया श्रीभगवदर्चनं त्यक्तवतो भरतस्यांतरायः परमात्मदृष्ट्या रंतिदेवादीनां तु कृतार्थत्वम् । तस्माद्भूतदयैव भक्तिर्मुख्या नार्चनमिति निरस्तम् । तथैवाऽव्यवहितपूर्वं निर्गुणभक्त्युपायत्वेन "क्रियायोगेन शस्तेन नातिहिंस्रेण नित्यशः" इत्यत्रातिशब्देन पञ्चरात्रिकार्चनलक्षणक्रियायोगार्था पत्रपुष्पावचयादिलक्षणा किञ्चिद्धिंसापि विहिता तस्मादन्येषामनादरो न कर्त्तव्यः भगवत्संबंधेनादरादिकं च कर्त्तव्यं स्वातंत्र्येणोपासनं तु धिक्कृतं साध्वेवोक्तम् । "अविस्थितं तं परिपूर्णकामम्" इत्यादि एष एव प्रस्तावः पूर्वम् 'अभिसंधाय यद्धिसाम्' इत्यादिकं यदुक्तं तत्पोषत्वेन निर्दिष्टम् ॥ ३४ ॥ ❀ ❀ भक्तियोगेन चिद्घनमदीयश्रीमूर्त्तिसाक्षात्कारः अष्टांगयोगेन च मन्निर्विशेषस्वरूपसाक्षात्कार इत्युभयोरेव मत्प्राप्तिसाधनत्वेन शास्त्रेषूक्तेः । तथाहि "यत्सांख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते" इति गीतोक्तेः ॥ ३५ ॥ ❀ ❀ कर्मणः पुण्यपापलक्षणस्य । इत्यर्थ इति । सति कर्मणि संसार इति भावः । चक्रवर्त्ती तु—ननु 'पुरुषः पुरुषं व्रजेत्' इति प्रब्रवीषि न तु 'पुरुषो मां व्रजेत्' इति ब्रूषेऽतः कः स पुरुषस्तत्र स्ववक्षस्तर्जन्या स्पृशन्नाह एतदिति । यः खलु भक्तेषु भगवान्भवति ज्ञानिषु ब्रह्मयोगिषु परमात्मेति तस्यैव परं यदप्राकृतं रूपं तदेतदेव त्वत्पुत्रोहमेव परमेश्वर इत्यर्थः । न केवलमेतावदेव किन्तु प्रकृतिपुरुषजीवा दृष्टकालाद्यपि मदीयमेतद्रूपमेवेत्याह—प्रधानञ्च तत्प्रवर्त्तकः पुरुषश्चेति द्वंद्वैक्यम् ॥ ३६ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

तस्मादित्यर्द्धकम् । तस्मात्केवलनिष्कामात् अव्यवहितः ज्ञानाद्यव्यवहितभक्तिर्भूयान् मदर्पितत्वेन करणात्स्वभरणचिन्ताशून्यत्वात्कर्तृत्वाभिमानरहितादिति व्याख्यातम् ॥ ३३ ॥ ❀ ❀ पूर्वोक्तसमदर्शनत्वस्यान्तर्यामिविषयकत्वमुपसंहरति ।

मनसेति । इति दृष्ट्या । एवं भावनया ॥ ३४ ॥ ❀ ❀ एकतरेणैवेति साधनान्तरव्युदासः यद्यपि भक्तिमिश्रत्वेन योगस्यापि साधकतमत्वमिति द्वयोः साम्यमेव तथापि सायासत्वानायासत्वाभ्यां दौर्बल्यप्राबल्यप्रतिपत्तेः प्राप्यतत्वेऽप्यसम्यगाविर्भावसम्यगाविर्भावभेदेन च तारतम्यमवर्ज्जनीयमिति ज्ञेयम् ॥ ३५ ॥ ❀ ❀ तदाह । संसृतिस्वरूपं कालस्वरूपं चाह । एतदिति सार्द्धकम् । कथम्भूतस्य भगवतः ज्ञानिषु ब्रह्मत्वेन प्रकाशमानस्य योगिषु च परमात्मत्वेन प्रकाशमानस्य प्रधानपुरुषयोस्तच्छक्तित्वात्तदात्मकं दैवं रूपं कीदृशं कर्मविचेष्टितं कालरूपं च कीदृशं रूपभेदास्पदं दिव्यं चेति योज्यम् । प्रधानपुरुषमिति स्वामिसम्मतः पाठः प्रधानमिति तु सर्वत्र दृश्यते ॥ ३६ ॥

## श्रीमद्वीरराघवव्याख्या

तस्मादपि मय्यर्पिताशेषक्रियार्थात्मा अर्पिताः अशेषाः क्रियाः क्रियार्थाः क्रियाफलान्यात्मा देहः स्वात्मा च येन सां ओमित्यात्मानं युञ्जीतेत्युक्तरीत्या न्यस्तात्मरक्षाभर इत्यर्थः । अत एव निरन्तरः भेदरहितः "ज्ञानीत्वात्मैव मे मतम्" इत्युक्तरीत्या ममात्मत्वेनाभिमत इत्यर्थः एतस्मात्कश्चिन्नाधिकोऽस्तीत्याह । मयीति । मयि शेषिणि रक्षकेऽन्तर्यामिण्यर्पितात्मनः न्यस्तात्मरक्षाभरस्य मयि प्रयोजककर्त्तरि क्रियाफलपदे सन्न्यस्तं कर्म येन सः "मयि सर्वाणि कर्माणि सन्न्यस्याध्यात्मचेतसा । निराशीर्निर्ममो भूत्वा" इत्युक्तरीत्या सर्वेषामात्मनमात्मभूते सर्वक्रियाप्रवर्त्तके मय्येवानुसंहितक्रियाकर्तृत्वादित्यर्थः । अत एवाकर्त्तुः स्वस्मिन् कर्तृत्वाभिमानरहितात् समदर्शनात् चेतनाचेतनात्मकं कृत्स्नं जगद् ब्रह्मात्मकमित्येवम्विधज्ञानवतः परमुत्कृष्टं भूतं न पश्यामि ॥ ३३ ॥ ❀ ❀ समदर्शित्वमेव स्पष्टयन्नाह । मनसेति । ईश्वरो भगवान् जीवकलया परिकलनं कला अन्तः प्रवेशनं जीवान् कलया जीवान्तर्यामितयेत्यर्थः । प्रविष्ट इति मनसा बुद्ध्या एतानि चराचराणि भूतानि बहु मानयन् प्रणमेत् ॥ ३४ ॥ ❀ ❀ एवं साङ्गस्य सावान्तरभेदस्य भक्तियोगस्य स्वरूपं प्रतिपादितं तदङ्गभूतप्रकृतिविविक्तब्रह्मात्मकप्रत्यगात्मानुसंधानरूपज्ञानयोगश्च पूर्वमुक्तः इदानीं तयोरन्यतरोऽपि मुक्तिं साधयतीति वदन्नुपसंहरति । भक्तियोगश्चेति । हे मानवि ! मया भक्तियोगः भगवदुपासनात्मकभक्तियोगस्तथा ज्ञानयोगः प्रकृतिविविक्तब्रह्मात्मकप्रत्यगात्मानुचिन्तनरूपो ज्ञानयोगश्च उदीरितः कथितः ययोर्भक्तियोगज्ञानयोगयोर्मध्येऽन्यतरेणैव पुरुषः ब्रह्मप्रेप्सुः पुरुषं परमपुरुषं व्रजेत् प्राप्नुयात् । ननु पूर्वं ज्ञानयोगस्य भक्तियोगाङ्गत्वमुक्तम् । अत्र तु साक्षाज्ज्ञानस्यैव मुक्तिसाधनत्वमुच्यत इति विरोध इति चेदुच्यते त्रिविधं हि प्रत्यगात्मोपासनम् । अब्रह्मात्मकस्वतन्त्रात्मोपासनं भगवदुपासनाङ्गतया अप्राधान्येनोपासनं ब्रह्मात्मकस्वात्मोपासनं चेति तत्राद्यस्य न भगवत्प्राप्तिसाधनत्वं "सर्वे च्यवनधर्माणः प्रतिबुद्धस्तु मोक्षभाक्" इति तन्निष्ठस्य च्यवनधर्मत्वोक्तेः अप्राधान्येनात्मानुचिन्तनन्तु भगवद्भक्तिनिवर्त्तकमिति पूर्वमुक्तं प्राधान्येन ब्रह्मात्मकप्रकृतिवियुक्तात्मस्वरूपोपासनं तु साक्षादेव मुक्तिसाधनमित्यत्रोच्यते तथा हि छान्दोग्ये पञ्चाग्निविद्यायां परब्रह्मोपासीनान् ब्रह्मात्मकस्वात्मानं चोपासीनांश्च "तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धा तप इत्युपासत" इति निर्दिश्य "तेऽर्चिषमभिसम्भवन्ति" इत्यर्चिरादिगत्या ब्रह्मप्राप्तिराम्नायते ॥ ३५ ॥ ❀ ❀ अथ "आचक्ष्व जीवनोकस्य विविधा मम संसृतिः" इति प्रश्नस्योत्तराध्यायत्रयेणोत्तरं विवक्षुः कालस्येश्वररूपस्येति प्रश्नस्योत्तरमाह यावदध्यायपरिसमाप्ति । एतदिति । प्रधानं प्रकृतिः पुरुषो जीवः दैवमीश्वरसंकल्पः कर्मादृष्टं प्रधानादिभ्यः परमित्यर्थः । दैवकर्मात्मचेष्टितमिति पाठे दैवकर्मात्मवस्तुस्वभावानुगुणचेष्टितं प्रधानपुरुषाभ्यां परं विलक्षणं कालाख्यं भगवत एतद्रूपं शरीरमभिधीयते भगवानेव कालशरीरकत्वेनावस्थितः इति भावः प्रधानं पुरुषमिति आर्षत्वात् व्यत्ययेन पञ्चम्यर्थे द्वितीया । दैवं कर्म्मविचेष्टितमिति पाठे कर्मणा विचेष्टितम् । संसृतिलक्षणं यस्मात्प्रधानादिभ्यः परं भगवतो रूपं काल इत्यर्थः । कालप्रेरितकर्मकृता हि संसृतिः पुनर्भगवदात्मकं कालं विशिनष्टि । महदादीनां भूतानां रूपभेदास्पदं रूपविशेषहेतुः परिणामहेतुः काल इत्यर्थः । उक्तं हि "कालाद्गुणव्यतिकर-" इति वक्ष्यते च "गुणव्यतिकरः काल" इति भिन्नदृशां सर्वत्र ज्ञानैकाकारे आत्मनि देवमनुष्यादिवैचित्र्यं पश्यतां देहात्माभिमानिनामित्यर्थः । यतः कालरूपाद्भगवतः, भयं जन्ममरणादिभयं भवति ॥ ३६-३७ ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली ।

तस्माद् गरुडान्मय्यर्पिताशोकक्रियार्थश्च मय्यर्पितसमस्तक्रियाफलश्चात्मरतिश्च मय्येव मनोरतिश्च स मय्यर्पिताशेषक्रियार्थात्मरतिः भक्त्या न रीयते न क्षीयत इति नरः पूर्णभक्तिः ब्रह्मा श्रेष्ठः पूर्वभक्तेभ्य इव चतुर्मुखब्रह्मणोऽप्युत्तमोऽस्ति किं नेत्याह । मयीति ॥ ३३ ॥ ❀ ❀ परमुत्तमम् अः हरिः कर्ता स्रष्टा जनको यस्य सोऽकर्ता तस्मात्समदर्शनान्निर्दोषब्रह्मज्ञानवतः । यद्वा । परमुक्तौ संसारावस्थायां भूतमुत्पन्नं पुरुषं ब्रह्मणः सममधिकं वा न पश्यामीति समदर्शनाच्छास्त्रेषु सम्यग्दर्शिनः एवं तारतम्यज्ञानवता किं कर्तव्यमित्याह । मनसेति । अत्र जीवकलयेति । द्विरावृत्त्या व्याख्येयं जीवकलया सहैतानि स्थावरादिब्रह्मान्तानि भूतानि मनसा बहुमानयन्नीश्वरो भगवान् जीवकलयाऽनिरुद्धाख्यांशेनैषु प्रविष्टस्तदालयत्वेन स्थित इति तमीश्वरं प्रणमेदियमुपास्तिर्योग्यस्येति शास्त्रान्तरसिद्धमिति ज्ञातव्यम् ॥ ३४ ॥ ❀ ❀ उक्तार्थमुपसंहरति । भक्तियोगश्चेति । हे मानवि ! मया तव भक्तियोगश्च ज्ञानयोगश्च च शब्दादर्चादावित्यादिना कथितकर्मयोगश्च गृह्यते स च कथित इत्यन्वयः । एतद्द्वयमेव पुरुषार्थसाधनं नान्यदिति

निर्धारयति । ययोरिति । ययोर्ज्ञानभक्त्योरेकतरेणैव ज्ञानयोगेनैव पुरुषः पुरुषं परमात्मानं व्रजेदित्यन्वयः एकतरोऽलं चेदितरविधानं व्यर्थं स्यात् एजभावेऽन्यतरस्य नियतत्वात् एकतरेणैवेत्युक्तं धूमाग्न्योरिवाविनाभावात् ॥ ३५ ॥ ❀ ❀ भक्तियोगप्रश्नानन्तरं पृष्टजीवसंसृतेर्वक्तव्यत्वेऽपि बाहुल्यात् तदुल्लङ्घ्य सूचीकटाहन्यानेन कालस्वरूपं वक्ति । यत्तदित्यादिना । ब्रह्मणः पूर्णस्य परमात्मनः सर्वान्तर्यामिणो भगवतो भाग्यनिवेर्थैतप्रधानात्प्रकृतेः पुरुषाद्विरिञ्चात्परमुत्तमं दैवं सर्वदेवोत्तमं यच्च कर्म विचेष्टितं सर्वकर्माणि यस्य विशिष्टचेष्टानिमित्तानि तत्तथोक्तम् ॥ ३६ ॥

## श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

तस्मादित्यर्द्धकम् । निरन्तरः ज्ञानाद्यव्यवहितभक्तिः अकर्तुः अर्पितात्मत्वेन स्वभरणादिकर्म्मानपेक्षमाणात् यद्भगवति भक्तिः क्रियते । तत्रापि स्वस्य भगवदधीनत्वं ज्ञात्वा तदभिमानशून्याच्च समदर्शनात् भगवदधिष्ठानतारतम्येनात्मवत् परेष्वपि हितमाशंसतः "जीवाः श्रेष्ठा ह्यजीवानाम्" इत्यादिना भेदो हि विवक्षितः तनो मद्भक्तेषु एवादरबाहुल्यादिकं कर्त्तव्यम् । अन्यत्र तु यथा प्राप्तं यथाशक्ति वेयि भावः वक्ष्यते च "मनसैतानि भूतानि" इत्यादि ॥ ३३ ॥ ❀ ❀ मनसैतानीति । तदेवं प्रथमोपासकानां सर्व्वभूतादरो विहितः सश्रद्धसाधकानां तु भगवद्वैभवसार्व्वत्रिकता स्फूर्त्त्या भगवत्येवासौ । यथोक्तं स्कान्दे । "एते न ह्यद्भुता व्याध ! तवाहिंसादयो गुणाः । हरिभक्तौ प्रवृत्ता ये न ते स्युः परतापिनः ।" इति वक्ष्यमाणरीत्या शुद्धबन्धुत्वादिभावः साधकानामपि बन्धुभावसिद्धश्रीगोकुलवास्यादिशीलानुसारेण तादृशभगवद्गुणानुसारेण चासौ जायते । जातभावानां त्वहिंसा चोपरमश्च स्वीय एव स्वभावः । यथा ।

यत्रानुरक्ताः सहसैव धीराः व्यपोह्य देहादिषु सङ्गमूढम् । व्रजन्ति तत् पारमहंस्यमन्त्यं अस्मिन्नहिंसोपरमः स्वधर्म्मः ॥

इति ततः परमसिद्धानाम् "सर्वभूतेषु यः पश्येद्भगवद्भावमात्मनः" इत्याद्यनुसारेण सिद्ध एव सः । तत्र साधकानां यत्तु "यथा तरोर्मूलनिषेचनेन" इत्यादौ तदन्योपासनानां पुनरुक्तत्वमुपलभ्यते तत्पुनः केवलं स्वतन्त्रतद्दृष्टयोपासनानामेव अत्र तु तत्तदधिष्ठानकभगवदुपासनमेव विधीयते तदादरावश्यकत्वञ्च तत्सम्बन्धेनैव सम्पाद्यते । तच्चान्यत्र झटिति रागद्वेषविश्लेपार्थमिति ज्ञेयम् । अत एव केवलभूतानुकम्पया श्रीभगवदर्चनं त्यक्तवतो भरतस्यान्तरायः परमात्मदृष्टया रन्तिदेवादीनां तु कृतार्थत्वम् । तस्माद्भूतदयैव भगवद्भक्तिर्मुख्या नार्च्चनमिति निरस्तम् । तथैवाव्यवहितपूर्व्वं निर्गुणभक्त्युपायत्वेन "क्रियायोगेन शस्तेन नातिहिंस्रेण नित्यश" इत्यत्रातिशब्देन पाञ्चरात्रिकार्चनलक्षणक्रियायोगार्था पत्रपुष्पावचयादिलक्षणा किञ्चिद्धिंसापि विहिता तस्मादन्येषामनादरो न कर्त्तव्यः । भगवत्सम्बन्धेनादरादिकञ्च कर्त्तव्यं स्वातन्त्र्येणोपासनं तु धिक्कृतम् । साध्वेवोक्तम् "अविस्मितं तं परिपूर्णकामम्" इत्यादि । एष एव प्रस्तावः पूर्व्वमभिसन्धाय यद्धिंसामित्यादिकं यदुक्तं तत्पोषणत्वेन निर्दिष्टः । जीवकलया तत्कलया तदन्तर्यामितयेत्यर्थः ॥ ३४ ॥ ❀ ❀ भक्तीति । योगस्यापि सबीजत्वेन भक्तिमिश्रत्वात् साधकतमत्वम् । किन्तु साधकतमद्वयेऽस्मिन् अनायाससायासकृतत्वभेदेन यथाक्रमं बलित्वदुर्बलित्वावगमात् साध्ये पुरुषेऽपि आविर्भावभेदेन तारतम्यं ज्ञेयम् ॥ ३५ ॥ ❀ ❀ तदेव दर्शयति । एतदिति सार्द्धकेन । एतद्भक्त्यादियोगद्वयगम्यं पुरुषाख्यतत्त्वमेव भगवतो ब्रह्मणः परमात्मनश्च रूपं स्वरूपं भगवदादिसंज्ञं रूपत्रयं न ततो भिन्नमित्यर्थः । पुरुषो ह्यत्र वदन्ति तत्तत्त्वविद इत्यत्रोक्तमद्वयज्ञानमेव "पूर्व्वमेवाहमिहासमिति तत्पुरुषस्य पुरुषत्वम्" इति श्रुतेः अत्र रूपरूपिणोरभेदेऽपि भेदविवक्षा शिलापुत्रस्य शरीरमितिवत् तत्तत्त्वरूपं परं निरुपाधिकमेव । एकस्यैव तस्य तत्त्वस्य स्वरूपधर्म्मविशेषाविर्भावानाविर्भावाभ्यां तत्तदाविर्भावभेद इति भावः । तदेवं प्राधान्येन शुद्धरूपत्रयं निरूप्यान्यत्त्रयं निरूपयति । एतदेव प्रधानपुरुषं प्रधानोपाधिकं पुरुषरूपमित्यर्थः । पुरि शेते पुरुष इति निरुक्तेः । प्रधानमिति बहुत्र पाठः किन्तु स्वाम्यसम्मतः । अत्र परमात्मनः साक्षित्वमस्य तु कर्तृत्वमिति भेदः स्वीकृतः । भगवद्ब्रह्मणोर्भेदश्च व्याख्यात एव एतदेव च पूर्व्वोक्तं तत्त्वं प्रकृत्युपाधिपुरुषरूपं भगवद्वृत्तिभेदेन दैवं कालश्चेत्यभिधीयते । तत्र दैवस्य लक्षणं कर्म्मणो विचेष्टितं यस्मात्तदिति । कालस्य लक्षणं रूपेति । यद्वा । तदिदमेतदित्यस्यैव विशेषणम् । तत्तद्रूपाश्रय इत्यर्थः तत्र हेतुः । दिव्यमचिन्त्यशक्तीत्यर्थः ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥

## श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

तस्मादपि सकाशात् मयि मन्नामरूपादिषु अर्पिता अशेषाः क्रियाः श्रवणनयनादिव्यापारा अर्था आश्रयाः आत्मनोऽहन्तास्पदममतास्पदमनोबुद्ध्यादयो येन सः । निरन्तरः कर्म्मज्ञानादिव्यवधानशून्यः मयि मत्प्राप्त्यर्थं सन्न्यस्तकर्म्मणः त्यक्तवर्णाश्रमधर्मात् मत्कृते त्यक्तधर्म्माण इति पूर्व्वोक्तैः अकर्तुः मद्भक्तावपि भगवानेव मे भक्तिं कारयतीति बुद्ध्या स्वातन्त्र्येण कर्तृत्वाभिमानशून्यात् समदर्शनात् स्वस्य सममेव सुखदुःखादिकं सर्व्वत्र पश्यतः । यदुक्तं भगवता ॥

आत्मौपम्येन सर्व्वत्र समं पश्यति योऽर्ज्जुन । सुखं वा यदि वा दुःखं स योगी परमो मतः ॥

इति । न च

विद्याविनयसम्पन्ने ब्राह्मणे गवि हस्तिनि। शुनि चैव श्वपाके च पण्डिताः समदर्शिनः॥

इत्युक्तं समदर्शित्वं वाच्यं जीवाः श्रेष्ठा ह्यजीवेभ्य इत्यादि प्रक्रान्तवाक्यविरोधात्॥ ३३॥ ❀ ❀ जीवरूपा या कला तया सह॥ ३४॥ ❀ ❀ उक्तं भक्तियोगं पूर्वोक्तेनाष्टाङ्गयोगेन सहोपसंहरति। भक्तीति। पुरुषं व्रजेत् परमेश्वरं मां प्राप्नुयात् भक्तियोगेन चिद्घनमदीयश्रीमूर्त्तिसाक्षात्कारः। अष्टाङ्गयोगेन च मन्निर्विशेषस्य रूपसाक्षात्कार इत्युभयोरेव मत्प्राप्तिशब्देन शास्त्रेरूक्तेः॥ ३५॥ ❀ ❀ ननु तयोरेकतरेणैव पुरुषः पुरुषं व्रजेदिति प्रब्रवीषि ननु पुरुषो मां व्रजेदिति ब्रूषे इत्यतः स पुरुष एव कस्तत्र स्वतर्ज्जन्या स्ववक्षः स्पृशन्नाह। एतदिति। अयमर्थः यः खलु भक्तेषु भगवान् भवति ज्ञानिषु ब्रह्मयोगिषु परमात्मा तस्यैव परं यदप्राकृतं रूपं तदेतदेव त्वत्पुत्रोऽहमेव परमेश्वर इत्यर्थः। न केवलमेतावदेव किन्तु प्रकृतिपुरुषजीवादृष्टकालाद्यपि मदीयमेतद्रूपमेवेत्याह। प्रधानञ्च तत्प्रवर्त्तकः पुरुषश्चेति द्वन्द्वैक्यम्। दैवं जीवादृष्टं कीदृशं कर्म्मभिः पुण्यपापैर्विविधं चेष्टितं यतस्तत् तथा काल इत्यभिधीयते यत्तदपि दिव्यमद्भुतप्रभावं मत्स्वरूपमेव रूपभेदस्य वस्तूनामन्यथाभावस्य आस्पदमाश्रयः कारणम्। उक्तं हि कालाद्गुणव्यतिकर इति त्वया पृष्टं कालस्य लक्षणमुक्तमुच्यते चेत्याह। यतः सकाशान्महदादीदां तत्तदभिमानिनां जीवानां सृष्ट्यादिमध्यान्तभावानां भिन्नदृशामज्ञानिनां सर्व्वेषां भयं भयप्रकारमाह। य इति। भूतैरेव भूतान्यत्ति संहरति अधियज्ञः यज्ञाधिकारित्वेन तत्फलदाता कलयतां वशीकुर्व्वतामपि॥ ३६॥ ४०॥

## श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

तस्मादपि

आत्मात्मीयभरन्यासो विधिना पुरुषोत्तमे। सा प्रपत्तिरिति ख्याता षडङ्गा वै मनीषिभिः॥
सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज। अहं त्वां सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः॥

इत्युक्तप्रकारः प्रपन्नः श्रेष्ठस्ततो न कोऽपि श्रेष्ठ इत्याह सार्द्धेन। तस्मादिति। मयि अर्पिताः अशेषाः सपरिकराः क्रियाः अर्थाः देहगेहादयः आत्मानः मनोबुद्धिचित्ताहङ्कारक्षेत्रज्ञाः येन सः निरन्तरः मदात्मकः अकर्तुः सर्वं वासुदेव एव करोति कारयति नाहं स्वातन्त्र्येण किञ्चित्करोमीति दृढज्ञानवान् समदर्शनः सर्वं सर्वात्मा वासुदेव एवेति ज्ञानवान् परं श्रेष्ठं न पश्यामीति "वासुदेवः सर्वमिति स महात्मा सुदुर्लभः, ज्ञानी त्वात्मैव" इत्यादिवचनाच्च ईश्वरः प्रेरकः भगवान् षडैश्वर्यसम्पन्नः भुक्तिमुक्तिप्रदः प्रेरकत्वेन भुक्तिमुक्तिप्रदत्वेन च स्वयं प्रविष्टः जीवोऽपि तस्यैव कला नान्यः अतस्तद्रूपेणापि प्रविष्ट इति शब्दो हेत्वर्थ इति हेतोर्बहुमानयन् भूतानि प्रणमेदेव। ननु पुत्रशिष्यादिविषये प्रणतिर्लोकविरुद्धा इत्यत आह। तत्र मनसैवेति॥ ३३, ३४॥ ❀ ❀ भक्तियोगः श्रवणध्यानादिरूपो नानाविधः योगः चिदचिद्ब्रह्मविवेकरूपः ज्ञानयोगः मया उदीरितः तयोरेकतरेण पुरुषो जीवः पुरुषं परमेश्वरं व्रजेत्

ज्ञानस्य वा मन्निष्ठो नैर्गुण्यो भक्तिलक्षणः। द्वयोरप्येक एवार्थो भगवच्छब्दलक्षणः॥

इति वक्ष्यमाणाच्च अयमर्थः ज्ञानं विना भक्त्यसम्भवाद्भक्त्युत्पादकतया ज्ञानस्यैव प्राधान्यविवक्षया किं च ज्ञानस्यैव ध्रुवास्मृतिरूपभक्त्याकारतया तेनैव व्रजेदित्यर्थः। ज्ञानस्य साधनत्वेन भक्त्युपयोगित्वविवक्षया भक्त्यैव व्रजेत्

स एव भक्तियोगाख्य आत्यन्तिक उदाहृतः। येनातिव्रज्य त्रिगुणं मद्भावायोपपद्यते॥

इत्युक्तत्वादिति॥ ३५॥ ❀ ❀ जीवकलया प्रविष्ट इत्यनेन जीवस्यैव ब्रह्मात्मकत्वं न किं तु सर्वपदार्थजातस्येति सिंहावलोकनन्यायेनाह। एतदिति। प्रधानं त्रिगुणं पुरुषं जीवं दैवं देवनिष्पादितं कर्मभिर्विचेष्टितं विविधं चेष्टितं यस्मिन् तत्सर्वं विश्वं परमन्यदपि कालादिकम्। एतत्सर्वं भगवतो रूपम्। सर्वस्य तन्मूलत्वात् "सर्वं खल्विदं ब्रह्म तज्जलान् इत्यादिश्रुतय आहुः॥ ३६॥

## श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

तस्मात्तादृशो भूत्वा यो भगवद्भक्तः स महानित्याह—तस्मादिति। व्यर्थत्या[1]गापेक्षया भगवति समर्पणमुत्तममिति मयि अर्पितोऽशेष क्रियार्थ आत्मा च येन, आत्मनिवेदी। तादृशोऽपि भूत्वा य आत्मत्वेनैव भगवन्तं जानाति, स महान्। अतोऽपि कश्चित् महानस्तीत्याशङ्क्य परिहरति—मय्यर्पितात्मन इति। मदर्थं संन्यस्तकर्मणां पुंसां मध्ये, मय्यर्पितात्मनः, अकर्तुः समदर्शनादन्यं परमुत्कृष्टं न पश्यामि। यद्यपि तत्तच्छास्त्रे ते ते श्रेष्ठा निरूपिताः, तथापि विचारकाणां हृदये ते नाऽऽयान्तीति न पश्यामीत्युक्तम्। सर्वापेक्षया भक्तिज्ञानयोरुत्कर्षः। भक्तावप्यात्मसमर्पणम्; ज्ञानं तु साङ्ख्यम्, ब्रह्मज्ञानं च। यद्यप्येते

---

१. अर्थत्यागा. क. घ. ङ.।

त्रयः, केवलपरित्यागिनश्च सर्वे परित्यागिनो भवन्ति, तथापि आत्मनिवेदनं ज्ञानद्वयं च यस्याऽस्ति, ततः किमधिकं भविष्यति। तत्पदत्रयेणोक्तम्, मय्यर्पितात्मनः, अकर्तुः, समदर्शनादिति ॥ ३३ ॥ ❀ ❀ नन्वेवं सति स एव भजनीयः स्यात्, स च सर्वैरेव स्वत एव सेव्यत इति शास्त्रवैफल्यं पूर्वदोषानिवृत्तिश्चेत्याशङ्क्याऽऽह—मनसेति। स्वार्थमेवैतज्ज्ञानं निरूपितम्, नत्वधिकारिणोऽन्यपूजार्थम्। अत एवंविद[1]पि एतानि परिदृश्यमानानि भूतानि प्रणमेत्। श्वापेक्षयाऽपि बहु मानयेत्। तत्र हेतुः—ईश्वरो भगवान् जीवकलया जीवकलारूपेण, सह वा, सद्गुणैः सह प्रविष्ट इति। इति शब्दो हेतौ, ईश्वरत्वात्, अन्यथा स्वस्थानात् प्रच्यावयेत्। जीवे तु न हीनबुद्धिः कर्तव्या; स[2] हि कला। लीलार्थं सा कलेत्यर्थः ॥ ३४ ॥ ❀ ❀ एवं भक्तिज्ञाने निरूप्य, नमस्कारभगवद्दर्शनाभ्यां च व्यवहारेपि तदुभयमुपपाद्य, भक्तिज्ञानयोः समुच्चयः विकल्पो वा, फलहेतुरित्याशङ्क्याऽऽह—भक्तियोगश्चेति। हे मानवि, भक्तियोगोऽष्टाङ्गयोगश्च मया द्वयमुदीरितम्। मानवीति परिज्ञानार्थम्। ययोर्मध्ये एकतरेणैव पुरुषः पुरुषमात्मा[3]नं भगवन्तं व्रजेत्। ज्ञाने योग उक्तः, उत्तराङ्गं साक्षात्कारावृत्त्यर्थं प्रवेशार्थं च[4]। भक्तिस्तु स्वतन्त्रा। एकप्राधान्ये अन्यद्गौणभावमेवाऽवलम्बते, अतो न समुच्चयः शास्त्रार्थः ॥ ३५ ॥ ❀ ❀ एवं पूर्णां भक्तिं निरूप्य, वैराग्यार्थं कालस्य पराक्रमं वक्तुम्, प्रथमतः कालस्य स्वरूपमाह—एतद्भगवत इति द्वयेन—कालस्य [5]कार्यं स्वरूपं चोच्यते, कार्ये निविष्टः स्वरूपं प्राप्नोतीति ज्ञापनार्थम्। एतज्जगत्सर्वं भगवतो रूपम्, अन्यथा [6]कालस्य भगवत्त्वात्कालस्य विधातुं न शक्यते। अत [7]एतज्जगद्भगवद्रूपमित्युक्तम्। श्रुतौ हि प्रकारद्वयेन निरूपणम्—आत्मत्वेन, ब्रह्मत्वेन च। 'आत्मैवेदं सर्वं ब्रह्मैवेदं सर्वम्' इति। बृंहणत्वं व्याप्तिं चापेक्ष्य पदद्वयं प्रवृत्तम्। उभयोः स्वरूपमानन्दः; तथापि सप्रकार आत्मा, निष्प्रकारं ब्रह्म; आत्मनोऽपि ब्रह्मत्वविधानात् 'अयमात्मा ब्रह्मविज्ञानमयः' इति। विचारे ब्रह्मैव प्रतिज्ञातम् 'अथातो ब्रह्मजिज्ञासा' इति। जगत उभयरूपत्वमाह—ब्रह्मणः परमात्मन इति। मतत्रयं वा सङ्गृहीतम् "ब्रह्मेति परमात्मेति भगवानिति शब्द्यते" इति। लोके ऐश्वर्यादिधर्मान् पुरस्कृत्य भगवत्त्वमाहुः। वैलक्षण्यं पुरस्कृत्यात्मत्वम्, सद्रूपतां पुरस्कृत्य ब्रह्मत्वमिति। तद्रूपं कियदित्याकाङ्क्षायां गणयति—परं प्रकृतिपुरुषनियामकम्, प्रधानं प्रकृतिः; पुरुषश्च; दैवं कालो भगवदिच्छा वा; कर्माऽदृष्टम्, विचेष्टितं विविधचेष्टायुक्तः स्वभावः। रूपभेदास्पदं सर्वमेव जगत् परिदृश्यमानम्, दिव्यमपरिदृश्यमानं च। एतत्सर्वं काल इत्यभिधीयते, कालाधारत्वात्, कालाधीनत्वाच्च। कालस्य कालत्वं साधयति—भूतानामिति। महदादीनामपि यस्मात्कालाद्भयं स कालः। भये भिन्नदर्शनं हेतुः, बहिर्मुखान् कालो ग्रसतीति ॥ ३६ ॥ ३७ ॥

श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

भक्तियोगश्चेत्यत्र। स्वतन्त्रेति स्वतन्त्रसाधनभूता, न तु योगवज्ज्ञानोपकारकतया तच्छेषा। ननु भक्तियोगयोरुभयोरपि निरूपणे इतरेतराङ्गत्वेनेतरेतरनिरूपणे (उ)भयोरपि स्वीकारात् समुच्चय एव कुतो नोक्त इत्यत आहुः—एकेत्यादि स्पष्टम् ॥ ३५ ॥ ❀ ❀ एतदित्यत्र। उभयथा कालनिरूपणस्य प्रयोजनमाहुः—कार्य इत्यादि। कालस्य कार्यं हि वक्ष्यमाणाव्युत्पत्तिप्रलयौ, तत्र निविष्टो जीवः स्वरूपं परादिदिव्यान्तं कालस्वरूपं यथाधिकारं प्राप्नोति, तत्र लीनस्तदात्मको भवति, एतज्ज्ञापनार्थमुभयथा निरूपणमित्यर्थः। स्वरूपं विवृण्वन्ति—एतदित्यादि। नन्वत्रैतत्त्वमुद्दिश्य कालत्वे सर्वस्य विधातव्ये भगवद्रूपत्वं मध्ये किमित्युच्यत इत्याकाङ्क्षायामाहुः—अन्यथेत्यादि। पूर्वं काललक्षणकरणे प्रकृते गुणसाम्यस्येत्यनेन प्रकृतिचेष्टाजनको भगवानेव काल इत्युक्तम्, तद्यदि जगतो भगवद्रूपत्वं नोच्येत, तदा तस्य जगतोऽभगवत्त्वात् कालत्वं विधातुं न शक्येत, अतस्तदर्थं तथेत्यर्थः। ब्रह्मणः, परमात्मनः इति विशेषणद्वयस्य प्रयोजनमाहुः—श्रुतावित्यादि। हिर्हेतौ। निरूपणमिति। जगतो निरूपणम्। बृंहणत्वमिति। पोषकत्वम्। उभयोरिति। आत्मब्रह्मपदवाच्ययोः। सप्रकार इति। अन्तर्यामिब्राह्मणे 'यस्य पृथिवी शरीरम्' इत्यारभ्य 'यस्यात्मा शरीरम्' इत्यन्तैः शरीराणां प्रकारतया सिद्धत्वात् सप्रकारः 'एकमेवाऽद्वितीयम्' इति श्रुतेर्निःप्रकारमित्यर्थः। ननु वाच्याभेदेऽर्थविभागः किं निबन्धन इत्याकाङ्क्षायामाहुः—आत्मनोऽपीत्यादि। 'इदं सर्वं यदयमात्मा' 'सर्वं खल्विदं ब्रह्म' इति श्रुतिद्वये यच्छब्दयोगप्राथम्याभ्यां सर्वसत्त्वस्योऽ(?)नूद्यतया यथोद्देश्यत्वम्, आत्मत्वब्रह्मत्वयोश्चौत्तर्याद्विधानं तथाऽयमात्मा ब्रह्मविज्ञानमय इति श्रुतावात्मनो ब्रह्मत्वेन विधानात्, तस्मिंश्च सति पूर्वप्रकारभेदस्याऽऽवश्यकत्वात् तथा विधाननिबन्धन इत्यर्थः। नन्वस्य विधानस्य बृहदारण्यके शारीरमात्मानमुपक्रम्य दर्शनात् तस्य च विज्ञानमय इत्यारभ्येदंमयोऽदोमय इत्यन्तैर्बहुभिर्विशेषणैस्तथात्वं प्रतिपादितमित्यर्थविभागो युक्तः; प्रकृते तूभयं भगवत एव विशेषणमिति नाऽयं विभागो युज्यते इत्याकाङ्क्षायामाहुः—विचार इत्यादि। तथा च, यदि विभागो नाऽभिप्रेतः स्यात् तदा व्यासचरणा आत्मजिज्ञासामेव प्रतिजानीयुः। तथा च, द्वेधाऽप्यभिप्रेतत्वादेव 'उभयव्यपदेशात्त्वहिकुण्डलवत्' इति 'पूर्ववद्वा' इति सूत्रद्वयं प्रणीतम्, अतोऽत्रापि विशेषणद्वयं युक्तमिति भावः। तदेतद्धृदिकृत्याऽऽहुः—जगत

---

१. एवंविदोऽपि. क. घ. ङ. च.। २. सा. ख. ग. घ.। ३. महात्मानम्. क. घ. ङ.। ४. वा. ग.। ५. कार्यस्य. क. घ. ङ.। ६. कालस्य कार्यं स्वरूपम्. क. घ. ङ. च.। ७. एवम्. क. घ.।

इत्यादि । उभयरूपत्वमिति प्रकारत्वमभेदं च । ननु भगवत्त्वेनैव प्रकारप्राप्तेः परमात्मन इति विशेषणवैयर्थ्यप्रतीत्यरुच्या पक्षान्तरमाहुः—मतत्रयमित्यादि । तद्व्याकुर्वन्ति—लोक इत्यादि । काल इति । चिरक्षिप्रादिव्यवहारहेतुत्वेन यो लोकसिद्धः ॥ ३६,३७ ॥

### श्रीगिरिधरकृता बालप्रबोधिनी

तस्मादपि मय्यर्पिता अशेषाः क्रियार्थाः क्रियाफलानि आत्मा देहादिसङ्घातश्च येन सः । अतएव निरन्तरः मत्प्राप्तावन्तरायरहितः श्रेष्ठः । ततश्चान्यः श्रेष्ठो नास्तीत्याह—मयीति । मय्यर्पित आत्मा येन तस्मात्, अतएव मयि सन्न्यस्तं कर्म क्रियाफलं येन तस्मात्, अतएव समदर्शनात् सर्वत्र मां पश्यतः, अतएवाकर्त्तुः कर्तृत्वाभिमानशून्यात् पुंसः सकाशात् परमुत्कृष्टं भूतं प्राणिनं न पश्यामीत्यन्वयः ॥ ३३ ॥ ❀ ❀ सर्वसाधनसारमाह—मनसेति । जीवकलया जीवरूपेण सर्वभूतेषु भगवान् प्रविष्ट इति मनसा एतानि चराचरात्मकानि भूतानि बहु मानयन्प्रणमेदित्यन्वयः । औपचारिकं भगवत्त्वं वारयति—ईश्वर इति ॥ ३४ ॥ ❀ ❀ उक्तमुपसंहरति—भक्तियोगश्चेति । हे मानवीति सम्बोधनमादरार्थम्, भक्तियोगशब्देनैव अष्टाङ्गयोगस्यापि ग्रहणं, तस्यापि भक्तिप्रधानत्वात् । योगः साङ्ख्योक्तज्ञानयोगश्च मयोदीरितः कथितः । तत्फलमाह—ययोर्द्वयोर्मध्ये एकतरेणैव पुरुषो मुमुक्षुः पुरुषं पुरुषोत्तमं भगवन्तं व्रजेत् प्राप्नुयात् ॥ ३५ ॥ ❀ ❀ एवं भक्तियोगयोर्विस्तारं निरूप्य कालस्वरूपं निरूपयति—एतदिति । यः काल इत्यभिधीयते कथ्यते सः एतद्भगवतो रूपमेव, न ततः पृथगिति द्वयोरन्वयः । तत्रौपचारिकभगवत्त्ववारणायाह—ब्रह्मण इति । तत्रापि चतुर्मुखव्यावृत्त्यर्थमाह—परमात्मन इति । न केवलं कालस्यैव भगवद्रूपत्वं किन्तु प्रधानादीन्यपि सर्वाणि भगवद्रूपाण्येव वदन्तीति शेषेणान्वयः प्रधानं प्रकृतिम् । पुरुषं तत्प्रवर्त्तकम् । परं महत्तत्त्वम् । दैवमिन्द्रियाधिष्ठातृदेवतावर्गम् । कर्मसु विविधं चेष्टितं यस्य तमिन्द्रियवर्गम् । रूपभेदस्य वस्तूनामन्यथात्वस्य आस्पदं कारणं स्वभावम् , 'परिणामः स्वभावतः' इत्युक्तेः । 'आद्योऽवतारः पुरुषः परस्य कालः स्वभावः सदसन्मनश्च ॥ द्रव्यं विकारो मन इन्द्रियाणि' इति द्वितीयस्कन्धोक्तेश्च कालरूपं विशिनष्टि—दिव्यमिति अद्भुतप्रभावमित्यर्थः । तदेव दर्शयति—भूतानामिति यावत्समाप्ति । महदादीनां तत्तदभिमानिनां भिन्नदृशां भेददर्शिनां भूतानां प्राणिनाञ्च यतो जन्ममरणादिभयं भवति ॥ ३६ ॥ ३७ ॥

### हिन्दी अनुवाद

उनकी अपेक्षा भी जो लोग अपने सम्पूर्ण कर्म, उनके फल तथा अपने शरीरको भी मुझे ही अर्पण करके भेदभाव छोड़कर मेरी उपासना करते हैं- वे श्रेष्ठ हैं । इस प्रकार मुझे ही चित्त और कर्म समर्पण करनेवाले अकर्त्ता और समदर्शी पुरुषसे बढ़कर मुझे कोई अन्य प्राणी नहीं दीखता ॥ ३३ ॥ ❀ ❀ अतः यह मानकर कि जीवरूप अपने अंशसे साक्षात् भगवान् ही सबमें अनुगत हैं, इन समस्त प्राणियोंको बड़े आदरके साथ मनसे प्रणाम करे ॥ ३४ ॥ ❀ ❀ माताजी ! इस प्रकार मैंने तुम्हारे लिये भक्तियोग और अष्टाङ्गयोगका वर्णन किया । इनमेंसे एकका भी साधन करनेसे जीव परमपुरुष भगवान्को प्राप्त कर सकता है ॥ ३५ ॥ ❀ ❀ भगवान् परमात्मा परब्रह्मका अद्भुत प्रभाव सम्पन्न तथा जागतिक पदार्थोंके नानाविध वैचित्र्यका हेतुभूत स्वरूपविशेष ही 'काल' नामसे विख्यात है । प्रकृति और पुरुष इसीके रूप हैं तथा इनसे यह पृथक् भी है । नाना प्रकारके कर्मोंका मूल अदृष्ट भी यही है तथा इसीसे महत्तत्त्वादिके अभिमानी भेददर्शी प्राणियोंको सदा भय लगा रहता है ॥ ३६-३७ ॥

**रूपभेदास्पदं दिव्यं काल इत्यभिधीयते । भूतानां महदादीनां यतो भिन्नदृशां भयम् ॥ ३७ ॥**
**योऽन्तः प्रविश्य भूतानि भूतैरत्त्यखिलाश्रयः । स विष्ण्वाख्योऽधियज्ञोऽसौ कालः कलयतां प्रभुः ॥ ३८ ॥**
**न चास्य कश्चिद्दयितो न द्वेष्यो न च बान्धवः । आविशत्यप्रमत्तोऽसौ प्रमत्तं जनमन्तकृत् ॥ ३९ ॥**
**यद्भयाद्वाति वातोऽयं सूर्यस्तपति यद्भयात् । यद्भयाद्वर्षते देवो भगणो भाति यद्भयात् ॥ ४० ॥**

### श्रीधरस्वामिविरचिता भावार्थदीपिका

एतदेव भगवतो रूपं काल इति चाभिधीयते । कीदृशम् । रूपभेदस्य वस्तूनामन्यथात्वस्यास्पदमाश्रयः कारणम् । उक्तं हि । "कालाद्गुणव्यतिकर" इति वक्ष्यते च "गुणव्यतिकरः काल" इति दिव्यमद्भुतप्रभावम् । तदेवाह । भूतानामिति यावत्समाप्ति । महदादीनां तत्तदभिमानिजीवानाम् ॥ ३७ ॥ ❀ ❀ भयहेतुत्वमाह । य इति भूतैरेव भूतान्यत्ति संहरति अधियज्ञो यज्ञफलदाता कलयतां वशीकुर्वताम् ॥ ३८–३९–४० ॥

---

१. प्रा. पा.—रप्य० ।

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

तदेव काललक्षणमेव । यतः कालात् भिन्नदृशामज्ञानाम् ॥ ३७ ॥ ❀ ❀ यः कालः ॥ ३८ ॥ ❀ ❀ अप्रमत्तः सावधानः ॥ ३९ ॥ ❀ ❀ देव इन्द्रः भगणस्तारासमूहः ॥ ४० ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या ।

तदेवाद्भुतस्वभावत्वमेवाह । भूतानामिति । सार्द्धकम् । प्रभुर्वशीकर्त्ता ॥ ३७ ॥ ३८ ॥ ❀ ❀ आविशति रोगरूपेण प्रविशति ॥ ३९ ॥ ❀ ❀ कालस्य भीषणत्वमाह । यदिति षट्केन । भगणो नक्षत्रसङ्घः ( १ ) जडानां भीत्यसम्भवात्तत्तदधिष्ठातृरूपेणेति ज्ञेयम् ( २ ) सगिरिभिरसह ( ३ ) पदं श्वासक्रियाणामवकाशं यदाज्ञां विना तु मृतानां तन्न ददातीति सर्वत्र ज्ञेयम् । लोकमिति विधेयमतो लोकत्वेनेति तृतीयान्ततया व्याख्यातम् ( ४ ) ब्रह्मादीनां प्रतियुगमन्यान्यत्वाभावाद्वारम्वारमित्यार्थिकोऽर्थः ( ५ ) अव्ययश्च मारणादौ श्रमादिविकारशून्यः ( ६ ) ॥ ४०—४५ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीराधारमणदासगोस्वामिविरचितदीपिन्याख्यदीपिकाटिप्पण्यामूनत्रिंशोऽध्यायः ॥२७॥

### श्रीमद्वीरराघवव्याख्या

यः कालरूपी भगवानन्तःप्रविश्य भूतैरेव भूतान्यत्ति अभिसंहरति असौ कालः योऽखिलाश्रयः अखिलाधारो विष्णवाख्यो भगवान् स एव शरीरशरीरिभावनिवन्धनमिदं सामानाधिकरण्यं पूर्वमेतद्भगवतो रूपमिति व्यधिकरणनिर्देशेनात्र सामानाधिकरण्यनिर्देशेन च शरीरात्मभावस्य नियतत्वं विवक्षितं शरीरवाचिशब्देन शरीरपर्यन्तो बोधनमाकृत्यधिकरणसिद्धमित्यन्यत्र विस्तरः अधियज्ञः यज्ञात्मकः काले हि कर्म चोद्यते कलयतां सर्वं स्ववशीकुर्वतां ब्रह्मादीनामपि प्रभुः स्ववशीकर्त्ता ॥ ३८ ॥ ❀ ❀ अस्य कालात्मनो भगवतः कश्चित्प्रियो द्वेष्यो बान्धवो वा न विद्यतेस्वयमप्रमत्तोऽसौ कालात्मको भगवान् प्रमत्तं जनमन्तकृत् संहर्ता सन्नाविशति परिच्छिनत्ति ॥ ३९ ॥ ❀ ❀ यद्भयात् यस्य कालात्मनो भगवतो भयात् वातो वाति प्रसरति "भीषास्माद्वातः पवते" इति श्रुत्यर्थोऽत्राभिप्रेतः देवः पर्जन्यः भगणो नक्षत्रगणः ॥ ४० ॥ ४१ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

यच्च रूपभेदास्पदं शुक्लादिरूपभेदानां ब्रह्माण्डादिपदार्थभेदानां चास्पदं दिव्यमप्राकृतं यतो यस्मात्कालाद्भिन्नदृशामल्पज्ञानिनां महदादिजीवानां भयं भवति तद्वस्तु काल इत्यभिधीयते "भिन्नमल्पं विजानीयादभिन्नं पूर्णमिष्यत" इति वचनादीश्वरापेक्षयात्र भिन्नशब्दोऽल्पवाची ॥ ३७ ॥ ❀ ❀ केचित्पूर्वापरकलाविकलः क्षणः काल इत्यादिलक्षणमाचक्षते तन्नेति भावेनाह । योऽन्तरिति । यो भूतानामन्तः प्रविश्य भूतैर्भूतान्यत्ति संहरति यश्चाखिलानामाश्रयः यश्च कलयतां संहरतां रुद्रादीनां प्रभुः संहारसमर्थः स विष्णवाख्यः कालो धिया साक्षिज्ञानेन ज्ञेय इत्यन्वयः । यमादिव्यवच्छेदार्थं विष्णवाख्य इति ॥ ३८ ॥ ❀ ❀ चेतनत्वाच्चेतनोक्तलक्षणः कालोऽत्रोच्यत इति भावेनाह । न चास्येति । "यथा योग्यातिरेकेण न द्वेष्यश्च प्रियो हरेः" इति वचनात् योग्यतातिरेकेण दयितो द्वेष्यश्च नास्तीत्यर्थः । अन्तकृत् संहारकर्ता ॥ ३९ ॥ ❀ ❀ इतरेषां तदाज्ञानियतकर्तृत्वाच्च विष्णुरेवायं काल इति भावेनाह । यद्भयादिति । भगणो नक्षत्रगणः ॥ ४० ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

"भीषास्माद्वातः पवते" इत्यादिश्रुतिप्रसिद्धमेतस्य भीषणत्वमपि कालरूपेणैवेत्याह । यदिति । षट्केन । यद्भयात् यस्य प्रेरणात् वाति स्वल्पत्वेन बहुत्वेन दिग्भेदेन च चलति तपति कुत्रचित् कदाचित्तापनपूर्व्वकं प्रकाशयति उदयास्तमयत्वात् एवं भाति च ॥ ४०—४१ ॥

### अस्मिन् पर्याये सारार्थदर्शिनी न

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

यत्पृष्टं जीवस्य संसृतीः कालस्वरूपं चाचक्ष्वेति तत्र जीवसंसृतिप्रश्नोत्तरमुत्तराध्यायत्रयेण विवक्षुः कालस्वरूपप्रश्नस्योत्तरमाह । रूपभेदास्पदमित्यादिना यावदध्यायसमाप्ति । रूपभेदस्य प्रधानादीनां महदाद्यवस्थाभेदस्य आस्पदमाश्रयो निमित्तं दिव्यं देवस्यैव शक्तिभूतं वस्तु काल इत्यभिधीयते यतः महदादीनां संहारनिमित्तत्वेन भिन्नदृशामात्मनो ब्रह्मात्मकत्वमजानतां देहाद्यात्मवादिनां च जन्मादिनिमित्तत्वेन भयं भवति ॥ ३७ ॥ ❀ ❀ कालस्य ब्रह्मशक्तित्वेन तदभिन्नत्वमाह । य इति । अधियज्ञः यज्ञफलदाता कलयतां क्षोभकानां प्रभुर्नियन्ता यः विष्णवाख्योऽखिलाश्रयः एव कालः कालशक्तिः ॥ ३८—४१ ॥

## श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

कालस्योपास्यतानिमित्तं कालस्याऽऽधिदैविकं रूपमाह—योऽन्तः प्रविश्येति। यो भगवान् स कालः। स को भगवानित्याकाङ्क्षायाम्—यस्त्वधियज्ञः; यज्ञाधिष्ठात्री देवता विष्णुः 'यज्ञो वै विष्णुः' इति श्रुतेः एकस्यैव कालं इति संज्ञा विष्णुरिति च। तत्र विष्णुसंज्ञा कथमित्याकाङ्क्षायां व्याप्तिं निरूपयन् अन्तः प्रवेशं निरूपयति—यो भूतैः सहाऽन्तः प्रविश्य अखिलाश्रयो जातः। अन्तर्व्याप्तिः प्रवेशात्, बहिर्व्याप्तिराश्रयत्वात्। कालत्वमाह—कलयतां प्रभुरिति। यस्तु कलयत्याकलयति, जानाति, भक्षयति वा; क्रियया ज्ञानेन वा यो व्याप्नोति, स कालः। कलयन्तीति कलयन्तः, तेषां कलयतां ब्रह्मादीनामपि नियन्ता। अतः काल इत्यर्थः ॥ ३८ ॥ ❀ ❀ इदं भगवतः केवलं मारणैकस्वभावमिति वक्तुं तस्य सर्वसाधारणत्वमाह—न चाऽस्येति। अस्य कालस्य, कश्चिदप्युपासकोऽपि, दयितो नास्ति। यो वा द्वेष्टि सोऽपि न द्वेष्यः। सर्व एव काले उत्पन्न इति सम्बन्धविशेषाभावात् कोऽपि न बान्धवः। परमयं सर्वप्रकृतिः, यः पश्यति, तं न गृह्णाति, किन्तु प्रमत्तमेव जनम्। असावप्रमत्तोऽन्तकर्ता, आविशति भक्षणार्थं तं प्रविशति, व्याघ्र इव ॥ ३९ ॥ ❀ ❀ अस्य कालत्वं सर्व एव जानन्तीति तेषां यज्ज्ञानकार्यं भयमाह—यद्भयादिति पञ्चभिः—वातादयः स्वस्वकार्यं कालभयादेव कुर्वन्ति, तत्र किं वक्तव्यम् 'प्राणी स्वधर्मं करिष्यति' इति। अधिकारिणो महान्तो ये ये वा मूढा अचेतनाः। तत्त्वानि देवाः सर्वे च कालाद्भीता इतीर्यते। १। अयं वातः, यत् काले काले वाति, सूर्योऽपि यस्मिन् नक्षत्रे यथा ताप उचितः' तथा तपति; देवः पर्जन्यः स्वकाले वर्षति; नक्षत्राणां गणोऽपि ज्योतिश्चक्रं स्वकाले भाति। तद्गताः शुक्रादयो यथाधिकारं भान्तीत्यर्थः। अतिमूढा वनस्पतयो लताश्च; अश्वत्थादयः, कूष्माण्डादिफलप्रधानलताः पुष्पप्रधानाश्च चकारात्पत्रप्रधाना अपि। ओषधिभिर्व्रीह्यादिभिः सह, स्वे स्वे काले, स्वस्वनक्षत्रदेशविशेषेष्वनतिक्रम्य, पुष्पाणि फलानि च गृह्णन्ति ॥ ४० ॥ ४१ ॥

## श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

योऽन्तरित्यत्र। प्रवेशादिति। अत्र प्रवेशो मारकत्वेन रूपेण ज्ञेयः। अत एव स्वतो वह्न्यादिनाशः सार्वजनीनोऽनुकूलीभवतीति। भक्षयतीति स्वार्थे णिच्, अतिव्याख्यानत्वात् ॥ ३८ ॥ ❀ ❀ न चाऽस्येत्यत्र। इदमिति। रूपमिति शेषः। सर्वप्रकृतिरिति। सर्वमूलकारणम्, न तु कस्याऽपि विकृतिरित्यर्थः ॥ ३९ ॥

इति श्रीतृतीयस्कन्धसुबोधिनीप्रकाशे एकोनत्रिंशाध्यायविवरणं सम्पूर्णम्।

## श्रीगिरिधरकृता बालप्रबोधिनी

तत्कृतं भयमेव दर्शयति—य इति। योऽसौ भूतानामन्तः प्रविश्य भूतैः पञ्चमहाभूतविकारैरेव सर्वाणि भूतानि अत्ति संहरति स कालः कलयतां वशीकुर्वतां ब्रह्मादीनामपि प्रभुर्वशीकर्त्ता। तत्र हेतुमाह—अखिलाश्रयः। तत्रापि हेतुमाह—अधियज्ञ इति, यज्ञादिकर्मफलदाता। तत्रापि हेतुमाह—विष्णवाख्य इति ॥ ३८ ॥ ❀ ❀ भूतान्यत्तीत्युक्तं तत्र स्वप्रीत्यादिविषयं न विनाशयेदित्याशङ्क्याह—न चेति। अस्य कालात्मनो भगवतः कश्चिदपि दयितः प्रियो न चास्ति, नच द्वेष्योऽस्ति, नच बान्धवोऽस्ति, अतः असौ स्वयं सदा अप्रमत्तः सावधान एव अन्तकृत् संहर्ता सन् प्रमत्तं विषयासक्त्या स्वोद्धारप्रयत्नशून्यं जनं आविशति, विनाशाय प्रविशतीत्यर्थः। अनेन पूर्वोक्तसाधनसम्पन्नानां देहेऽध्यासाभावात् परमानन्दनित्यस्वरूपलाभाच्च देहविनाशेऽपि स्वरूपविनाशे न प्रभवतीति सूचयति ॥ ३९ ॥ ❀ ❀ यदि जगद्यात्रानिर्वाहका अपि वातादयः कालात्मकाद्भगवतो भीताः सन्तः तत्कृतं नियमं नोल्लङ्घयन्ति तदा किं वक्तव्यं ? अन्येषां तन्नियमोल्लङ्घने भयं भवतीत्याशयेन वातादीनां कार्यं दर्शयति—यद्भयादित्यादिना। यस्य कालस्य भयात् वातः वायुर्वाति सर्वत्र प्रचरति। सूर्यश्च तत्तत्कालानुरूपं यद्भयात्तपति। यद्भयात् देवः पर्जन्यो वर्षति। यद्भयाद्भगणो नक्षत्रसमूहो भाति ॥ ४० ॥

## हिन्दी अनुवाद

जो सबका आश्रय होनेके कारण समस्त प्राणियोंमें अनुप्रविष्ट होकर भूतोंद्वारा ही उनका संहार करता है, वह जगत्का शासन करनेवाले ब्रह्मादिका भी प्रभु भगवान् काल ही यज्ञोंका फल देनेवाला विष्णु है ॥ ३८ ॥ ❀ ❀ इसका न तो कोई मित्र है न कोई शत्रु और न तो कोई सगा-सम्बन्धी ही है। यह सर्वदा सजग रहता है और अपने स्वरूपभूत श्रीभगवान्को भूलकर भोगरूप प्रमादमें पड़े हुए प्राणियोंपर आक्रमण करके उनका संहार करता है ॥ ३९ ॥ ❀ ❀ इसीके भयसे वायु चलता है, इसीके भयसे सूर्य तपता है, इसीके भयसे इन्द्र वर्षा करते हैं और इसीके भयसे तारे चमकते हैं ॥ ४० ॥

**यद्वनस्पतयो भीता लताश्चौषधिभिः सह। स्वे स्वे कालेऽभिगृह्णन्ति पुष्पाणि च फलानि च ॥ ४१ ॥**

**स्रवन्ति सरितो भीता नोत्सर्पत्युदधिर्यतः। अग्निरिन्धे सगिरिभिर्भूर्न मज्जति यद्भयात् ॥ ४२ ॥**

नभो ददाति श्वसतां [1]पदं यन्नियमाददः। लोकं स्वदेहं तनुते महान् सप्तभिरावृतम् ॥ ४३ ॥
गुणाभिमानिनो देवाः सर्गादिष्वस्य यद्भयात्। वर्तन्तेऽनुयुगं येषां वश एतच्चराचरम् ॥ ४४ ॥
सोऽनन्तोऽन्तकरः कालोऽनादिरादिकृदव्ययः। जनं जनेन जनयन् मारयन्मृत्युनान्तकम् ॥ ४५ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां तृतीयस्कन्धे कापिलेयोपा[2]ख्याने एकोनत्रिंशोऽध्यायः ॥ २९ ॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका।

यद्यस्माद्भीताः ॥ ४१ ॥ ॐ ॐ यतो भीताः सरितः स्रवंति। इंधे दीप्यते। सह गिरिभिर्भूः ॥ ४२ ॥ ॐ ॐ अदो नभो यन्नियमाद्यस्याज्ञया महान्महत्तत्त्वमंकुरात्मकं स्वदेहं लोकत्वेन तनुते विस्तारयति ॥ ४३ ॥ ॐ ॐ गुणाभिमानिनो गुणनियंतारो देवा ब्रह्मादयोऽस्य विश्वस्य सर्गादिषु प्रवर्तंते। अनुयुगं वारं वारमित्यर्थः ॥ ४४ ॥ ॐ ॐ जनेन पित्रादिना जनं पुत्रादिं जनयन्नादिकृत् मृत्युनांऽतकमपि मारयन्नंतकरः स्वयं त्वनादिरनंतोऽव्ययश्च ॥ ४५ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कंधे टीकायामेकोनत्रिंशत्तमोऽध्यायः ॥ २९ ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

स्वे स्वे यत्र यस्योत्पत्तिर्विहिता तदा तदेत्यर्थः ॥ ४१ ॥ ॐ ॐ स्रवन्ति क्वचिच्छिन्ना कलौ गंगा भविष्यति'' इति न्यायात्कदाचिन्न स्रवंतीत्यपि। इन्धे कदाचिदव्यक्तमपि स्थास्यतीति वर्त्तमाननिर्देशाल्लक्ष्यते। मज्जति किन्तु कष्टेनापि धैर्यमेवधत्तेऽतिकष्टे तु द्वापराद्यन्ते गोरूपिण्या तया ब्रह्मणे स्वभारज्ञापनमिति भावः ॥ ४२ ॥ ॐ ॐ सप्तभिः पृथिव्यादिभिः श्वसतां जीवतां प्राणिनां श्वासक्रियावतामवकाशं ददाति मृतानां तेषां तु न ददाति ॥ ४३ ॥ ॐ ॐ गुणानां सत्त्वादीनां नियंतारोऽधिष्ठातारः। आदिना विष्ण्वादिग्रहः। इत्यर्थ इति। प्रतिकल्पमिति भावः ॥ ४४ ॥ ॐ ॐ मृत्युना मृत्युहेतुना रुद्रादिना व्याघ्रादिकमप्यंतकं शरीरांतकरम् ॥ ४५ ॥

इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे तृतीयस्कन्धे एकोनत्रिंशोऽध्यायः ॥ २९ ॥

## श्रीमद्वीरराघवव्याख्या

स्वे स्वे काले वसन्तादावृतौ यतो भीताः सरितः प्रस्रवन्ति यतो भीत उदधिः समुद्रः नोत्सर्पति न पृथिवीं प्लावयति यतो भीतोऽग्निरिन्धे दीप्यते सह गिरिभिर्भूर्न निमज्जति ॥ ४१ ॥ ४२ ॥ ॐ ॐ अदो नभः यन्नियमनात् श्वसतां प्राणिनां मार्गमवकाशं ददाति महान् महतामपि महत्तमः कालात्मको भगवान् सप्तभिः पृथिव्यादिसप्तावरणैरावृतं स्वदेहं स्वशरीरभूतं ब्रह्माण्डं तनुते उत्पादयति। यद्वा यन्नियमनादित्यनुवर्त्तते महान् महत्तत्त्वं सप्तभिः पृथिव्यप्तेजोवाय्वाकाशाहङ्कारेन्द्रियैरावृतं स्वदेहं स्वपरिणामरूपं जगत्तनुते विस्तारयति। यद्वा सप्तभिर्धातुभिरावृतम् ॥ ४३ ॥ ॐ ॐ गुणाभिमानिनः रजस्तमोगुणप्रधाना देवाः ब्रह्मादयः अस्य विश्वस्य सर्गादिषु सृष्ट्यादिष्वनुयुगं प्रतिकल्पं वर्त्तंते येषां देवानां वशे एतच्चराचरात्मकं जगद्वर्त्तते चराचरात्मकं जगत्स्ववशीकुर्वन्तोऽपि ब्रह्मादयः कालात्मनो भगवतो भयात् स्वस्वव्यापारेषु जागरूका वर्त्तन्त इत्यर्थः ॥ ४४ ॥ ॐ ॐ सः कालात्मा भगवाननन्तः अन्येनापरिच्छिन्नः जनेन पित्रादिना जनं पुत्रादिकं जनयन् आदिकृत् मृत्युना मृत्योरपि मृत्युना स्वेनान्तकं मृत्युमपि मारयन्नन्तकरः स्वयं त्वनादिरनन्तोऽव्यय इत्यर्थः ॥ ४५ ॥

इति श्रीभागवतमहापुराणे तृतीयस्कंधे श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रिकायामूनत्रिंशोऽध्यायः ॥ २९ ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

यद्यस्माद्भीताः ॥ ४१ ॥ ॐ ॐ स्रवन्ति स्यन्दन्ते यतो यस्य भयान्नोत्सर्पति वेलामतीत्य न गच्छति इन्धे ज्वलति न मज्जति जल इति शेषः ॥ ४२ ॥ ॐ ॐ अदो नभो यन्नियमात् श्वसतां प्राणिनां मार्गं ददाति सप्तभिस्तत्त्वादिभिरावृतो महान् ब्रह्मा लोकस्य जनस्य देहं तनुते सृजति ॥ ४३ ॥ ॐ ॐ गुणाभिमानिनो रुद्रादिदेवाः यद्भयादस्य जगतोऽनुयुगं सर्गादिषु वर्तन्ते एतच्चराचरं येषां वशे तिष्ठति ॥ ४४ ॥ ॐ ॐ स कालः कालशब्दनिर्वचनभावेन कालं विशिनष्टि। अनन्त इत्यादिविशेषणैः। "कल ज्ञान" इति धातोर्ज्ञानरूपत्वात् भौतिकवदन्तवान्न भवतीत्यन्तः कलच्छेदन इत्यतः छेदनाख्यं सर्वेषामन्तं करोतीत्यन्तकरः। अन्ताभावादनादिः "जातस्य हि ध्रुवो मृत्युः" इत्यादेः अन्तकरत्वादादिकृत् कलकामधेनावित्यतोऽव्ययः

---

१. प्रा० पा०—मार्गं यन्नियमाच्च यः। २. प्राचीने पाठे 'कापिलेयोपाख्याने' इत्यंशो न।

अर्थिष्वासन्नेषु सम्भृतो निलीनो न भवतीति जन्ममरणे चाज्ञयैव राजवत्करोतीत्याह। जनमिति। स्वसन्निहितेन ब्रह्मादिजनेनात्मनो वशेन मृत्युना रुद्रदुर्गादिना अत एवंविधगुणविशिष्टः कालात्मा नारायणो मुमुक्षुभिरुपास्य इति सिद्धम्॥ ४५॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्यामूनत्रिंशोऽध्यायः॥ २९॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

स्रवन्ति "क्वचिच्छना कलौ गङ्गा भविष्यति" इति न्यायात् कदाचिन्न स्रवन्त्यपीति इन्वे कदाचित् कुत्रचित् अव्यक्तमपि तिष्ठतीति॥ ४२॥ ❀ ❀ अदः शारीरं नभः श्वसतां देहानां पदं श्वासक्रियाणामवकाशं ददाति मृतानां तेषां तु न ददाति तदास्पदं न भवतीत्यर्थः॥ ४३—४५॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भस्योनत्रिंशोऽध्यायः॥ २९॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

यद्यस्मात् विण्वाख्यात्॥ ४१॥ ❀ ❀ इन्वे दीप्यते सोऽग्निः गिरिभिः सह भूर्बहुपापात्मकपुरुषभारेणापि न मज्जति किन्तु कष्टेनापि धैर्य्यमेव धत्ते अतिकष्टे तु द्वापरान्ते तया गोरूपिण्या ब्रह्मणे स्वभावज्ञापनमिति भावः॥ ४२॥ ❀ ❀ अदो नभः यन्नियमात् यन्निदेशात् श्वसतां जीवतां प्राणिनां श्वासक्रियावतां पदमवकाशं न तु मृतानां ददाति महान् महत्तत्त्वं ब्रह्मा स्वदेहं वैराजं लोकं भूरादिलोकत्वेन विस्तारयति॥ ४३॥ ❀ ❀ गुणभिमानिनो ब्रह्मधर्मरुद्रादयः। अनुयुगं प्रतिकल्पम्॥ ४४॥ ❀ ❀ जनेन पित्रादिना जनयन् सन्नादिकृत्॥ ४५॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्। ऊनत्रिंशस्तृतीयस्य सङ्गतः सङ्गतः सताम्॥ २९॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

इन्वे दीप्यते॥ ४२॥ ❀ ❀ नियमात् आज्ञातः महान् स्वदेहं सप्तभिरावृतं लोकं ब्रह्माणं तनुते विस्तारयति॥ ४३॥ ❀ ❀ गुणाभिमानिनः ब्रह्मा शिवश्च अंशः विष्णुः कालशक्तेर्भगवतोऽवतारः तस्य गुणाभिमानित्वं छत्रिणो यान्तीतिवन्नास्ति अस्य विश्वस्य सर्गादिषु अनुयुगं वारम्वारं यद्भयात् वर्त्तन्ते प्रवर्तन्ते॥ ४४॥ ❀ ❀ स उक्तप्रभावोऽव्ययः कालः जनं पुत्रादिजनेन पित्रादिना जनयन् अनादिकृद्भवति मृत्युना अन्तकमपि मारयन् अन्तकरो भवति स्वयं तु अनादिरनन्तश्च॥ ४५॥

इती श्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे ऊनत्रिंशाध्यायार्थप्रकाशः॥ २९॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

चैतन्यरहिता अपि भीता इत्याह—सरितो नद्योऽपि भीताः सत्यः स्रवन्ति। उदधिर्भूमेरुद्धोऽपि मर्यादातोऽग्रे नोत्सर्पति। अग्निरपीन्धे[1] काष्ठादिभिर्ज्वलितो भवति, अन्यथा स्वयोनिं न दहेत्। गिरिभिः सह यद्भीत्या भूरपि न मज्जति। अग्निर्ज्वलति यद्भीत्येति वा पाठः॥ ४२॥ तत्त्वान्यपि भीतानीत्याह—नभो दधातीति। यस्य कालस्य नियमान्नभ आकाशम्, पदं स्वर्गादिलोकानां स्थानम्, अदस्तत् प्रसिद्धं दधाति, आकाशोऽपि धारको जातोऽस्तीत्यर्थः। श्रुतावाकाशादिसृष्टिरिति आकाशो निरूपितः, पुराणादौ महदादिरिति सोऽप्युच्यते। महान् स्वदेहमेव लोकात्मकं तनुते। सप्तभिः प्रकृत्यहङ्कारपञ्चमहाभूतैरावृतः॥ ४३॥ ❀ ❀ ब्रह्मादयोऽपि भीता इत्याह— गुणाभिमानिन इति। गुणाभिमानिनो देवा ब्रह्मादयः। रजःप्रभृतयो गुणाः, रजोभिमानी ब्रह्मा, सत्त्वाभिमानी आधिभौतिको विष्णुः, तमोऽभिमानी शिव इति। तेऽप्युत्पत्तिस्थितिप्रलयान् सर्वेषां कालानुसारेण कुर्वन्ति। अनुयुगं च एते वशे वर्तन्ते। अनेकधा अवतीर्याऽपि कार्यं कुर्वन्ति। येषां ब्रह्मादीनां वशे एतच्चराचरं जगदिति माहात्म्यम्॥ ४४॥ ❀ ❀ एवं कालस्य माहात्म्यमुक्त्वा तस्य कार्यं वदन् उपसंहरति—सोऽनन्त इति। स्वयमनन्तः, सर्वेषामन्तरः; स्वयमयादिः, सर्वेषामादिकृत्; कार्यं जनयन्नप्यव्ययः, इतरबीजादिवद्व्ययरहितः। उत्पत्तिरपि तस्य विचित्रा। जनेनैव उत्पन्नेनैव पित्रादिना, जनं पुत्रादिकं जनयन्, मृत्युना मरणरूपेण मारकमन्तकमपि मारयन्निव वर्तत इति माहात्म्यम्। अत एतत्परिज्ञानेनैव वैराग्यं भवतीत्युक्तम्। यस्तस्मान्न बिभेत्यस्मिन्नेव च तिष्ठति, तस्य गतिरुत्तरत्र वक्ष्यते॥ ४५॥

इति श्रीभागवतसुबोधिन्यां श्रीलक्ष्मणभट्टात्मजश्रीवल्लभदीक्षितविरचितायां तृतीयस्कन्धे ऊनत्रिंशाध्यायविवरणम्।

---

१. इन्धेत्. ख. ग.।

### श्रीगिरिधरकृता बालप्रबोधिनी

ओषधिभिः सह वनस्पतयो वृक्षा लताश्च यत् यस्माद्भीताः स्वे स्वे काले पुष्पाणि फलानि च गृह्णन्ति प्रकटयन्ति ॥ ४१ ॥ यस्माद्भीताः सरितः स्रवन्ति । यतश्च भीत उदधिर्नोत्सर्पति स्वमर्यादामुल्लङ्घ्य पृथ्वीं न प्लावयति, अनेन तस्य पृथिव्या उच्चत्वमपि सूचितम् । यद्भयादग्निरिन्धे दीप्यते । यद्भयाद्गिरिभिः सहिता बहुभाराक्रान्ता भूर्जले न निमज्जति ॥ ४२ ॥ ❀ ❀ यत्कृत-नियमात् अदो नभः श्वसतां प्राणिनां पदं स्थानमवकाशं ददाति । यन्नियमात् महान् महत्तत्त्वं स्वदेहं जगदङ्कुरभूतं सप्तभिः-पृथिव्यप्तेजोवाय्वाकाशाहङ्कारमहत्तत्त्वैरावृतं लोकं तनुते ब्रह्माण्डरूपेण विस्तारयति ॥ ४३ ॥ ❀ ❀ गुणाः रजस्सत्त्वतमोरूपाः तदभिमानिनस्तन्नियन्तारो देवा ब्रह्मविष्णुरुद्रा यद्भयात् अस्य विश्वस्य सर्गादिषु सर्गस्थितिप्रलयेषु अनुयुगं प्रतिकल्पं प्रवर्त्तन्ते । तेषां माहात्म्यमाह—येषामिति, चराचरमेतद्विश्वं येषां वशे वर्त्तते इत्यर्थः । नच स विष्णवाख्य इत्युक्तत्वात् स्वस्मात्स्वस्य भयासम्भवाच्च कथं विष्णोः कालभयं सम्भवतीति वाच्यम्, स्वस्यापि स्वकृतनियमभङ्गभयसम्भवात् अतस्तन्निर्वाहो युक्त एव ॥ ४४ ॥ ❀ ❀ एवं कालप्रभावमुक्त्वा तत्कार्यमाह—स इति । स कालो जनेन पित्रादिना जनं पुत्रादिं जनयन् आदि-कृद्भवति, मृत्युनाऽन्तकं मारकमपि चौरव्याघ्रादिकं मारयन् अन्तकरो भवति । स्वयं त्वयं त्वनादिः जन्मरहितः, अनन्तो मरण-शून्यः, अव्ययः अपक्षयादिविकारशून्यश्च ॥ ४५ ॥

इति श्रीवल्लभाचार्यवंश्यगोपालसूनुना ॥ श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा ॥ १ ॥
श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये ॥ श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी ॥ २ ॥
रचिता च तृतीयेऽत्र मोक्षसर्गनिरूपणे ॥ ऊनत्रिंशो गतो वृत्तिं भक्त्यादिविनिरूपकः ॥ ३ ॥

### हिन्दी अनुवाद

इसीसे भयभीत होकर ओषधियोंके सहित लताएँ और वनस्पतियाँ समय-समयपर फल-फूल धारण करती हैं ॥ ४१ ॥ ❀ ❀ इसीके डरसे नदियाँ बहती हैं और समुद्र अपनी मर्यादासे बाहर नहीं जाता । इसीके भयसे अग्नि प्रज्वलित होती है और पर्वतोंके सहित पृथ्वी जलमें नहीं डूबती ॥ ४२ ॥ ❀ ❀ इसीके शासनसे यह आकाश जीवित प्राणियोंको श्वास-प्रश्वासके लिये अवकाश देता है और महत्तत्त्व अहंकाररूप शरीरका सात आवरणोंसे युक्त ब्रह्माण्डके रूपमें विस्तार करता है ॥ ४३ ॥ ❀ ❀ इस कालके ही भयसे सत्त्वादि गुणोंके नियामक विष्णु आदि देवगण, जिनके अधीन यह सारा चराचर जगत् है, अपने जगत्-रचना आदि कार्योंमें युगक्रमसे तत्पर रहते हैं ॥ ४४ ॥ ❀ ❀ यह अविनाशी काल स्वयं अनादि किन्तु दूसरोंका आदिकर्ता ( उत्पादक ) है तथा स्वयं अनन्त होकर भी दूसरोंका अन्त करनेवाला है । यह पितासे पुत्रकी उत्पत्ति करता हुआ सारे जगत्की रचना करता है, और अपनी संहारशक्ति मृत्युके द्वारा यमराजको भी मरवाकर इसका अन्त कर देता है ॥ ४५ ॥

**२९ वाँ अध्याय समाप्त**

# अथ त्रिंशोऽध्यायः

## कपिल उवाच

तस्यैतस्य जनो नूनं नायं वेदोरुविक्रमम् । काल्यमानोऽपि बलिनो वायोरिव घनावलिः ॥ १ ॥
यं यमर्थमुपादत्ते दुःखेन सुखहेतवे । तं तं धुनोति भगवान् पुमाञ्छोचति यत्कृते ॥ २ ॥
यदध्रुवस्य देहस्य सानुबन्धस्य दुर्मतिः । ध्रुवाणि मन्यते मोहाद् गृहक्षेत्रवसूनि च ॥ ३ ॥
जन्तुर्वै भव एतस्मिन् यां यां योनिमनुव्रजेत् । तस्यां तस्यां स लभते निर्वृतिं न विरज्यते ॥ ४ ॥
नरकस्थोऽपि देहं वै न पुमांस्त्यक्तुमिच्छति । नारक्यां निर्वृतौ सत्यां देवमायाविमोहितः ॥ ५ ॥
आत्मजायासुतागारपशुद्रविणबन्धुषु । निरूढमूलहृदय आत्मानं बहु मन्यते ॥ ६ ॥
सन्दह्यमानसर्वाङ्ग एषामुद्वहनाधिना । करोत्यविरतं मूढो दुरितानि दुराशयः ॥ ७ ॥
आक्षिप्तात्मेन्द्रियः स्त्रीणामसतीनां च मायया । रहोरचितयाऽऽलापैः शिशूनां कलभाषिणाम् ॥ ८ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

त्रिंशे तु कायकांतादिलालनाकुलचेतसाम् । कामिनां तामसी पापादधोगतिरुदीर्यते ॥ १ ॥

कालप्रभाववर्णनपूर्वकं वैराग्याय विचित्रकर्मकृतां संसृतिमध्यायत्रयेण प्रपंचयति । तस्यैतस्य बलिनः कालस्य बलिनेति वा पाठः । काल्यमानो विचाल्यमानोऽपि वायोर्विक्रमं यथा मेघपंक्तिर्न वेद ॥ १ ॥ ❀ ❀ विक्रममेवाह । यं यमर्थं दुःखेन प्रयासेनोपादत्ते आपादयति तं तमर्थं भगवान्कालो धुनोति विनाशयति । यत्कृते यन्निमित्तम् ॥ २ ॥ ❀ ❀ शोके हेतुः । यद्यस्मात्सानुबंधस्य कलत्रादिसहितस्य देहस्य संबंधीनि गृहादीनि वसु द्रव्यम् । अनुक्तसमुच्चयार्थश्चकारः ॥ ३ ॥ ❀ ❀ दुर्मतित्वं दर्शयन्दुःखं प्रपंचयति । जंतुरिति चतुर्दशभिः ॥ ४ ॥ ❀ ❀ नारक्यां नरकाहारादिभिर्जातायाम् ॥ ५ ॥ ❀ ❀ निरुढमूलं प्रसृतमनोरथं हृदयं यस्य बहु मन्यते कृतार्थोऽहमिति श्लाघते ॥ ६ ॥ ❀ ❀ उद्वहनाधिना पोषणचिंतया ॥ ७ ॥ ❀ ❀ दुराशयत्वमाह । आक्षिप्त आत्मा इन्द्रियाणि च यस्य । कया । असतीनां पुंश्चलीनामपि रहसि रचितया संभोगादिरूपया मधुरभाषिणां शिशूनामालापैश्च सुखवन्मन्यत इत्युत्तरेणान्वयः ॥ ८ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

आदिना पुत्रादिग्रहः (१) 'बलिना' इति बहुसंमतः पाठः । एतस्योक्तलक्षणस्य ॥ १ ॥ ❀ ❀ प्रयासेन परसेवादिना भगवान्समर्थः ॥ २ ॥ ❀ ❀ ध्रुवमनने हेतुः दुर्मतिरिति ॥ ३ ॥ ❀ ❀ निर्वृतिं सुखम् ॥ ४ ॥ ❀ ❀ आदिना नारकीयस्त्रीसंगादिग्रहः ॥ ५ ॥ ६ ॥ ७ ॥ ❀ ❀ आक्षिप्तो गृहीतः ॥ ८ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

कायकान्तादिनिमित्तकात्पापात् तस्य पूर्ववर्णिताद्भुतप्रभावस्य एतस्य वर्ण्यमानस्य ॥ १ ॥ ❀ ❀ यन्निमित्तम् । नष्टार्थनिमित्तम् ॥ २ ॥ ❀ ❀ क्षेत्रम् । धान्यादेः ॥ ३ ॥ ❀ ❀ एतस्मिन् । प्रपञ्चे निर्वृतिं सुखम् ॥ ४ ॥ ❀ ❀ देहम् । नारकिशरीरम् ॥ ५ ॥ ६ ॥ ७ ॥ ❀ ❀ आक्षिप्तेति युग्मकम् । आत्मा मनः मायया विक्षेपशक्त्या ॥ ८ ॥

### श्रीमद्वीरराघवव्याख्या

एवं कालस्येश्वररूपस्येति प्रश्नस्योत्तरमुक्तमथ कालप्रभाववर्णनपूर्वकप्राप्यभूतपरब्रह्मव्यतिरिक्तवस्तुवैतृष्ण्यरूपवैराग्यरूपोपासनारम्भाभ्यर्हितोपायसिद्ध्यर्थमिहामुत्र संचरतो जीवस्य गर्भजन्मबाल्यकौमारपौगण्डयौवनजरामरणजाग्रत्स्वप्नसुषुप्तिमूर्च्छादिषु क्लेशान् "आचक्ष्व जीवलोकस्य विविधा मम संसृतीः" इति पृष्टानेव प्रपञ्चयत्यध्यायत्रयेण कपिलः । तत्र जीवास्त्रिविधाः केचन बद्धाः इष्टापूर्त्तदत्ताद्यकारिणः केवलपापकर्माणः अन्ये पुनरिष्टादिकारिणः पुण्यकर्माणः अपरे त्विष्टादिपूर्वकब्रह्मोपासकाः

---

१. प्रा० पा०—क्षेत्रधनानि च ।

तत्र केवलेष्टादिकारिणां भगवदुपासकानां च यावज्जीवं स्वानुष्ठेयपराणां धूमार्चिरादिगतिभ्यां चन्द्रमसः स्थानं भगवल्लोकं च प्राप्तानां तत्र भोगानुभवं तत्र भगवन्तं प्राप्तानामपुनरावृत्तिः चन्द्रमसः स्थानं प्राप्तानां तु पुनरावृत्तिरिति द्वात्रिंशेनाध्यायेन वक्ष्यन्न-निष्टादिकारिणां केवलपापकारिणां यावद्देहमधर्मेण देहकलत्रपुत्रादिपोषणरतिं तद्धेतुकक्लेशान् ततो मृतानां यमयातनानुभवप्रकारं पुनर्गर्भजन्मादिक्लेशानुभवप्रकारं चोपपादयत्यध्यायद्वयेन । न तस्येति । तस्य भगवदात्मकस्य एतस्य प्रकृतस्य बलिनः कालस्य उरुविक्रममयं जनः काल्यमानोऽपि स्वयं तेन परिच्छिद्यमानोऽपि न वेद नूनं ध्रुवं वायोर्विक्रमं यथा मेघपङ्क्तिर्न वेद तद्वत् ॥ १ ॥ ❀ ❀ विक्रममेवाह । यं यमिति । अयं पुमान् दुःखेन प्रयासेन सुखहेतवे सुखार्थं यं यमर्थमुपादत्ते संपादयति तं तमर्थं कालात्मको भगवान् धुनोति विहतं करोति यत्कृते यदर्थं यन्निमित्तं पुमान् शोचति ॥ २ ॥ ❀ ❀ शोके हेतुः यद्यस्मात् सानुबन्धस्य कलत्रादिसहितस्याध्रुवस्य देहस्य संबन्धीनि गृहादीनि वसु धनम् , अनुक्तसमुच्चयार्थश्चकारः, दुर्मतिरयं जनः मोहात् ध्रुवाणि मन्यते अतस्तद्विहतौ शोचतीत्यर्थः ॥ ३ ॥ ❀ ❀ दुर्मतित्वं दर्शयन् यौवनजरयोः शोकं प्रपञ्चयति । जन्तुरिति चतुर्दशभिः । एतस्मिन् भवे संसारेऽयं जन्तुर्जीवः यां यां देवमनुष्यादियोनिं प्राप्नुयात्तस्यां तस्यां योनौ निर्वृतिं सुखं लभते न विरज्यते न विरक्तो भवति च ॥ ४ ॥ ❀ ❀ नरकस्थोऽपि पुमान् भगवन्मायाविमोहितः नारक्यां नरकाहारादिभिर्जातायां निर्वृतौ सत्यां देहं नारकदेहमपि त्यक्तुं नेच्छति ॥ ५ ॥ ❀ ❀ आत्मा देहः अगारं गृहं द्रविणं धनं बन्धवः कुटुम्बिनः आत्मा-दिषु निरूढमूलं प्रसृतमनोरथं हृदयं यस्य स आत्मानं बहु मन्यते मादृशः कश्चित् सुखी नास्तीति श्लाघते इत्यर्थः ॥ ६ ॥ ❀ ❀ एषामात्मदीनामुद्वहनादिना पोषणचिन्तया परितप्तसर्वाङ्गः अत एव मूढः दुराशयः दुष्टचित्तः दुरितान्येवाविरतं करोति ॥ ७ ॥ ❀ ❀ दुराशयत्वमाह । आक्षिप्तेति स्त्रीणां मायया असतीनां पुंश्चलीनामपि रहसि रचितया संभोगादिरूपया मायया कलभा-षिणां मधुरभाषिणां शिशूनामालापैश्चाक्षिप्तान्यासक्तान्यात्मेन्द्रियाणि समनस्कानीन्द्रियाणि यस्य सः ॥ ८ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

भक्तिसाधनवैराग्यजननाय विविधाः कर्मसंसृतीराचक्ष्वेति देवहूत्याः प्रश्नः परिह्रियतेऽस्मिन्नध्याये । तदर्थं जीवस्य संसारस्य मूलकारणं ब्रूते । तस्यैतस्येति । यो जगत्सृष्ट्यादिकं करोति तस्यैतस्य कालनाम्नो बलिना कालेन काल्यमानो द्राव्यमाणः 'कल द्रावणे' वायोरिव घनावलिरित्येतत्तदभिमानिदेवतापेक्षयोक्तं विद्राव्यमाणत्वमात्रेण वायं दृष्टान्तः, अनेन जनस्य परमात्मा-ज्ञानं संसारकारणमुक्तं भवति ॥ १ ॥ ❀ ❀ उरुविक्रममेव दर्शयति । यं यमिति । अर्थं सुखसाधनं धुनोति विनाशयति । यत्कृते यस्यार्थस्यार्थे नष्टोऽभूदिति शोचति ॥ २ ॥ ❀ ❀ जनस्यायमप्यज्ञानातिरेक इत्याह । यदध्रुवस्येति । अध्रुवस्या-नित्यस्य देवमानुषादिलक्षणस्य भोगसाधनानि गृहक्षेत्रधनानि मोहादज्ञानात् ध्रुवाण्यनश्वराणि पुरुषो मन्यत इति यस्मादतो दुर्मतिः दुष्टज्ञानवान् ॥ ३ ॥ ❀ ❀ गृहादीनामनित्यत्वं पश्यन् न ततो विरक्तिमानिति यस्मादतोऽज्ञानातिरेकोऽयमपीत्याह । जन्तुर्वा इति ॥ ४ ॥ ❀ ❀ अत्र कैमुत्यन्यायमाह । नरकस्थ इति । नरकस्थोऽपि पुमान् नारक्यां निर्वृतौ सत्यां तं नारकं देहं त्यक्तुं नेच्छति किंमुत देवमानुषादिशरीरस्थ इति तत्र हेतुर्देवमायेति ॥ ५ ॥ ❀ ❀ रागसागरमयत्वाच्च विरागानुदय इति भावेनाह । आत्मजायेति । निरूढमूलं समुत्पन्नरागादिकं हृदयं यस्य स तथा ॥ ६ ॥ ❀ ❀ आत्मजायादिष्वहंममता-ज्ञानफलमाह । संदह्यमानेति । एषामात्मजायादीनाम् ॥ ७ ॥ ❀ ❀ कचिद्द्रव्यालाभादिना मनोदुःखाग्निना संदीप्ताङ्गत्वाद-सारोऽयं संसार इति विरक्तो भविष्यति स्वयमेवेति तत्राह । आक्षिप्तात्मेति । मायया मोहकशक्त्या ॥ ८ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

बलिनेति पाठे तेन कालेनैवेति शेषः ॥ १—६ ॥ ❀ ❀ सन्दह्येति कचित् पाठः, नैष पुण्यारण्यसम्मतः ॥ ७ ॥ ❀ ❀ आक्षिप्तात्मेति युग्मकम् ॥ ८—१३ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी ।

निर्गुणां सगुणां भक्तिं ज्ञानयोगौ च सात्त्विकौ । हरिः पञ्चभिरध्यायैर्दर्शयामास मातरम् ॥
अध्यायत्रितयेनाथ क्रमेण किल कर्मणाम् । तामसीं राजसीञ्चापि सात्त्विकीं गतिमैक्षयत् ॥
त्रिंशे तारुण्यवृद्धत्वमृतिनारकयन्त्रणाः प्राह सांसारिकाणां स्त्रीपुत्राद्याकुलचेतसाम् ॥

अथ हरिभक्तिं विना विचित्रकर्मकृतं सांसारिकं दुःखमध्यायत्रयेण प्रपञ्चयति । तस्य कालस्य बलिनो बलिनेति च पाठः ॥ १ ॥ ❀ ❀ भगवान् कालः ॥ २ ॥ ❀ ❀ शोके हेतुः यद्यस्मात् सानुबन्धस्य कलत्रादिसहितस्य ॥ ३ ॥ ❀ ❀ दुर्म्मतित्वं दर्शयति । जन्तुरिति ॥ ४ ॥ ❀ ❀ नारक्यां नारकाहारस्त्रीसङ्गादिभिर्जातायाम् ॥ ५ ॥ ❀ ❀ निरूढं मूलं यस्य तादृशं हृदयं यस्य सः ॥ ६ ॥ ❀ ❀ उद्वहनाधिना रक्षणपोषणानुरञ्जनविवाहप्रदानादिचिन्तया ॥ ७—८ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

अथ त्रिभिरध्यायैर्विविधाः संसृतयो वैराग्योत्पत्तये वर्ण्यन्ते। तत्र त्रिंशे देहादिरागिणोऽधोगतिमाह। तस्येति। तस्योक्तप्रभावस्य कालस्य काल्यमानः विचाल्यमानोऽपि जनः उरुविक्रमं न वेद वायोर्घनावलिरिव ॥ १ ॥ ❀ ❀ पुमान् यं यमर्थं दुःखेनातिप्रयासेन उपादत्ते स्वीकुरुते तं तं भगवान् कालः धुनोति अपनयति यत्कृते यन्निमित्तं शोचति ॥ २ ॥ ❀ ❀ नन्वागमापाय्यर्थकृते शोकोऽनुचित इत्यत आह। यद्यस्मात् सानुबन्धस्य कलत्रादिसहितस्य सम्बन्धीनि गृहादीनि ध्रुवाणि नित्यानि मन्यते तस्मात् तदपगमे शोचतीत्यर्थः ॥ ३ ॥ ❀ ❀ तस्य दुर्मतित्वं तन्निमित्तानि नानादुःखानि च वर्णयति। जन्तुरिति। चतुर्दशभिः निर्वृतिं सुखसम्पत्तिम् ॥ ४ ॥ ❀ ❀ नारक्यां स्वमांसमूत्रादिभक्षणपानादिभिः नरके जातायाम् ॥ ५ ॥ ❀ ❀ निरुढं सुदृढं वासनारूपं मूलं यस्य तत् हृदयमन्तःकरणं यस्य सः बहुमन्यते कृतार्थं मन्यते ॥ ६ ॥ ❀ ❀ एषां देहगेहादीनामुद्वहनार्थं पालनार्थं य आधिश्चिन्ता ज्वरस्तेन ॥ ७ ॥ ❀ . ❀ स्त्रीणां मायया शिशूनामालापैश्च आक्षिप्तः वशीभूतः आत्मा मन इन्द्रियाणि च यस्य सः सुखवन्मन्यते इत्युत्तरेण सम्बन्धः ॥ ८ ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

अभीतः कालकार्येषु यो मूढो वर्तते गृहे। नदीप्रवाहे गृहवत् स दुःखीति निगद्यते ॥ १ ॥
बहिर्मुखो हि कालस्य विषयो नाऽऽत्मदर्शनः। अतो बहिर्मुखे[१] कालः लोकयोर्दुःखदः स्मृतः ॥ २ ॥
त्रिंशत्तमे तथाऽध्याये गृहस्थस्योभयोर्महत्। लोकयोरुच्यते दुःखं पुनर्जन्मावधि स्फुटम् ॥ ३ ॥
अष्टादशभिराद्यन्तमरणावधि वर्ण्यते। पुनर्जन्मावधि परं श्लोकैः षोडशभिः पुनः ॥ ४ ॥

कालस्य भगवतो विष्णोर्बहिर्मुखत्वे बाधकत्वमज्ञात्वा दुःखं प्राप्नोतीति वक्तुं प्रथममज्ञानमाह—तस्यैतस्येति। यः पूर्वं सर्वभयजनकत्वेनोक्तः, स एवाऽयं कालः। एवमपि जनस्तत्रैवोत्पन्नः प्राणी, नूनं विक्रमं न वेद। ननु यावन्न बाधते, तावत्कथं जानीयादित्याशङ्क्याऽऽह—काल्यमानोऽपीति। प्रेर्यमाणः, पीड्यमानो वा; तद्वशवर्त्यपि न जानाति। असम्बन्धिनः पीडा सोढुं शक्या कादाचित्की, अयं तु वायोरिव घनावलिस्तस्य वशे ॥ १ ॥ ❀ ❀ सर्वकार्येषु तस्य पीडामाह—यं यमर्थमिति। सुखहेतवे महताऽपि दुःखेन यं यमर्थं भार्यागृहादिकमुपादत्ते, तं तमर्थं कालो धुनोति, भगवत्त्वात्समर्थो जानाति च। ननु कैषा भगवतो लीला यत्सर्वेभ्यो दुःखं प्रयच्छतीत्याशङ्क्याहऽऽह—पुमान् शोचति तत्कृत इति। यस्य भगवतः कृते अर्थे तदधीनं सर्वमिति तूष्णीं स्थातव्यम्, तदा स ईश्वरः पश्चान्न कुर्यात्; यदयं शोचति अतो धुनोतीति भावः। अनेन भगवतो दोषाभावो निरूपितः ॥ २ ॥ ❀ ❀ तथापि महतः किमेतत्कृत्यमत आह—यदध्रुवस्येति। तस्य वैराग्यार्थमेवं करोति—यतोऽयमध्रुवस्य देहस्य, नश्वरस्य अनुबन्धपुत्रादिसहितस्य सम्बन्धीनि गृहव्रीह्यादिक्षेत्रधनानि ध्रुवाणि मन्यते, तदर्थमायुश्च वृथा व्ययीकरोति। यतोऽयम्—दुर्मतिः। तदपि न प्रमाणात्, किन्तु मोहादेव; अतो दूरीकरणार्थं तथा करोतीति भावः ॥ ३ ॥ ❀ ❀ ननु किं धनादिदूरीकरणेन? निकृष्टयोनौ जातः स्वयमेव विरक्तो भविष्यतीत्याशङ्क्याऽऽह—जन्तुरिति। एतस्मिन् संसारे, स्वभावत उत्कर्षापकर्षरहिते, स्वयं जन्तुः प्राणी, यां यां योनिं श्वयोनिम्, शूकरयोनिं वा, अनुव्रजेत् कर्मवशाद्गच्छेत्; तस्यां तस्यामेव, निर्वृतिं सुखम्, स लभते। स्त्रियमन्नं निद्रां च प्राप्नोति, यथा राजशरीरे, इन्द्रशरीरे[२] वा; अतो न विरज्यते। तस्मान्न नीचयोनिसम्बन्धे वैराग्यम् ॥ ४ ॥ ❀ ❀ कर्मणा नरके जाते दारुणदुःखं दृष्ट्वा वैराग्यं भविष्यतीत्याशङ्क्याऽऽह—नरकस्थोऽपीति। कुम्भीपाकादिनरका उक्ताः, तत्र नारका देहा अपि निरूपिताः। तादृशानपि देहांस्ते त्यक्तुं न वाञ्छन्ति। नरकसम्बन्धिनी या निर्वृतिः, नरकस्थमज्जादिभक्षणसुखम्, यथाऽत्राऽमेध्यगर्ते कीटानाम्। अतस्तस्यां निर्वृतौ सत्यां तस्मिन् देहे गते सा गमिष्यतीति भयान्न त्यक्तुं वाञ्छति। नन्वेतद्दुःखात्मकं प्रत्यक्षसिद्धम्, कथं निर्वृतिरित्युच्यत इत्याशङ्क्याऽऽह—देवमायाविमोहित इति। मायामोहितो विपरीतमेव मन्यते, तीव्रवेदनामपि सुखत्वेन मन्यत इति। मायाया माहात्म्यख्यापनार्थं देवपदम् ॥ ५ ॥ ❀ ❀ नन्वस्मिन्मानुषे जन्मनि पुत्रभार्यादिभिरवश्यं पोष्यैर्दुःखे दत्ते वैराग्यं भविष्यतीत्याशङ्क्याऽऽह—आत्मजायेति। आत्मा देहः, जाया स्त्री, सुताः पुत्राः, अगारं गृहम्, पशवः, द्रविणानि, बान्धवाश्च; षडङ्गोऽयं प्राकृत आत्मा। साङ्गे तस्मिन्निरूढं मूलं यस्य, तादृशान्तःकरणो भूत्वा, भाराक्रान्तोऽपि दुःखं प्राप्नुवन्नपि, आत्मानम्, बहु कृतार्थम्, मन्यते। अतस्तैः प्रत्युत राग एव तस्य, न तु वैराग्यमिति भावः ॥ ६ ॥ ❀ ❀ न च मन्तव्यम्, ते सुखदायिन एवेत्याह—सन्दह्यमानसर्वाङ्ग इति। एषां भार्यादीनामुद्वहनं पोषणम्, तदर्थं य आधिः, तेन सन्दह्यमानानि सर्वाङ्गानि यस्य न केवलमिह लोके तत्कृतं दुःखं प्राप्नोति, किन्तु परलोकेऽपीत्याह—करोतीति। सर्वदा मूढः सन्, बाधकवाक्यान्यविचार्य, स्वतोऽप्यन्तःकरणशुद्धिरहितो दुरितानि दुष्टप्रकारेण धनोपार्जनादीनि, ऐन्द्रियकाणि वा पापानि करोतीत्यर्थः ॥ ७ ॥ ❀ ❀ एतावदपि कृत्वा नैहिकं सुखं प्राप्नोतीत्याह—आक्षिप्तेति त्रिभिः—असतीनां व्यभिचारिणीनामुभयलोकनाशिकानां स्त्रीणाम्, मायया

---

१. बहिर्मुखम् ख. । २. इन्द्रादिशरीरे ।

कपटेन वञ्चनार्थमेव कृतेन, आक्षिप्तानि स्त्रीवशे जातानि आत्मा इन्द्रियाणि यस्य । न हि परवशैरिन्द्रियैः सुखं भवति, स्त्रीसुखस्यैव प्रधानत्वात् । सा माया भगवद्भजनादिनाऽपि नापगच्छतीति ज्ञापयति—रहोरचितयेति । एकान्ते सा माया रचिता; एकान्तभक्त्यैवाऽपगच्छति; सा तु गृहस्थस्य न सम्भवतीत्यनुलङ्घ्या । कलभाषिणां सूक्ष्मपुत्राणामव्यक्तमधुरवाक्यानामालापैराक्षिप्तात्मेन्द्रियः, आक्षिप्तानि आत्मा इन्द्रियाणि च यस्य । अनेनैवैहिकसुखाभावो निरूपितः ॥ ८ ॥

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

अथ त्रिंशाध्यायं विवरिषवः संवादद्वयसङ्गत्योः पूर्वमुक्तत्वात् ते उभे स्फोरयितुमर्थमाहुः—अभीव इत्यादि । तथा च दुःखमेव मात्रा, लोकद्वयमेव चार्थ इति शुकमैत्रेयोक्तिविचारेण वोध्यम् । एवं पूर्वाध्याये भेददृष्टिर्वा दैहिकान्येव भूतानि तत्प्रयुक्त एव भक्त्यादिर्धर्म इत्यपि वोधितम् । कपिलोक्ते सङ्गतिं प्रदर्शयितुमाहुः—त्रिंशदित्यादि । तथा च कालविक्रमोऽध्यायार्थस्तस्य च वैराग्यजनकत्वादेककार्यत्वमध्यायसङ्गतिरित्यर्थः ।

तस्येत्यत्र । अयं काल इति । उत्पत्त्याद्याधारभूतः कालः ॥ १ ॥ ॐ ॐ यं यमित्यत्र । कृते अर्थ इति । तेन मूले यत्कृते इति सप्तमी, न तु तादर्थ्यबोधकमव्ययम् ॥ २ ॥

### श्रीगिरिधरकृता वालप्रवोधिनी

विषयाविष्टचित्तानां जनानां पापकर्मणाम् । त्रिंशे तु तामसी पापादधोगतिर्निरूप्यते ॥ १ ॥

एवं कालस्वरूपं तत्प्रभावं च निरूप्य वैराग्याय देवहूतिपृष्टां विचित्रकर्मकृतां जीवानां विचित्रां संसृतिं अध्यायत्रयेण निरूपयति—तस्येति । तस्य पूर्वोक्तप्रभावस्य कालस्य उरुमधिकं विक्रमं विनाशकत्वं अयं जनः प्राणी नैव वेद नैव जानाति । नूनमित्यवधारणे । यदि तद्विक्रमं जानीयात्तदा विषयाभिलाषं हित्वा मोक्षसाधनानुष्ठाने एव प्रवृत्तः स्यादिति भावः । ननु यावन्न वाधते तावत्कथं जानीयादित्याशङ्क्याह—वलिना तेन काल्यमानोऽपि इतस्ततो विचालनपूर्वकं पीड्यमानोऽपि । वलिन इति पाठान्तरम् । तत्र दृष्टान्तमाह—वायोरिति, इतस्ततो विचाल्यमानाऽपि घनावलिर्मेघपङ्क्तिर्यथा वायोर्विक्रमं न वेद तथेत्यर्थः ॥ १ ॥ ॐ ॐ विक्रममेवाह—यमिति । अयं पुमान् दुःखेन प्रयासेन सुखहेतवे सुखार्थं यं यं धनपुत्रादिरूपमर्थं उपादत्ते सम्पादयति तं तमर्थं कालात्मको भगवान् धुनोति विनाशयति । यत्कृते यदर्थनिमित्तं पुमान् शोचति ॥ २ ॥ ॐ ॐ शोके हेतुमाह—यदिति । यत् यस्मात् सानुवन्धस्य पुत्रकलत्रादिसहितस्य अध्रुवस्य नश्वरस्य देहस्य सम्बन्धीनि गृहादीनि मोहात् ध्रुवाणि नित्यानि मन्यते । अतस्तद्विहतौ शोचतीत्यर्थः । मोहहेतुमाह—दुर्मतिरिति, दुष्टा दुरितवासितत्वेन विवेकासमर्था मतिर्यस्य स इत्यर्थः । वसु धनम् । अनुक्तसमुच्चयार्थश्चकारः ॥ ३ ॥ ॐ ॐ एवं मन्यमानोऽपि यदि कदाचित्तद्विनाशाद्यनुभवादर्जनक्लेशाद्यनुभवाच्च विरज्येत तदा शोकनिवृत्तिः स्यादेवेत्याशङ्क्याह—जन्तुरिति । वा एवकारार्थे । एतस्मिन् भवे संसारे अयं जन्तुः जीवो यां यां देवमनुष्यादियोनिं अनुव्रजेत् प्राप्नुयात् तस्यां तस्यां योनौ स निर्वृतिं सुखं लभते, अतो न विरज्यते विरक्तो नैव भवतीत्यर्थः ॥ ४ ॥ देवादियोनिषु सुखाधिक्यात्तत्र विरक्त्यभावेऽपि नरकादौ विरक्तः स्यादित्याशङ्क्याह—नरकस्थ इति । पुमान् जीवो नरकस्थोऽपि तं कीटादिदेहं त्यक्तुं नैवेच्छति । तत्र हेतुमाह—नारक्यां विष्ठाहारादिभिर्जातायां निर्वृतौ सत्यामिति । तथापि दुःखाधिक्यस्यापि तत्रानुभवात् कथं न विरक्तिरित्याशङ्क्याह—देवस्य भगवतो मायया विमोहित इति ॥ ५ ॥ ॐ ॐ मनुष्यस्य शास्त्राधिकारित्वात्तं पुरस्कृत्य मोहं कर्मदुःखं च प्रपञ्चयति—आत्मेति । आत्मा देहः, आगारं गृहं, द्रविणं धनम् । आत्मादिषु निरूढमूलं प्रसृतमनोरथं हृदयं यस्य सः, आत्मानं वहु मन्यते सम्पन्नपुरुषार्थं मन्यते ॥ ६ ॥ ॐ ॐ एषामात्मादीनामुद्वहनाधिना पोषणचिन्तया सन्दह्यमानानि परितप्तानि सर्वाणि अङ्गानि यस्य स अविरतं निरन्तरं दुरितानि पापानि करोति । तत्र हेतुमाह—मूढः मोहितः । तत्र हेतुः—दुराशयः दुष्टचित्त इति ॥ ७ ॥ ॐ ॐ दुराशयत्वमेव स्पष्टयन्नेवं पापानि कृत्वाऽपि तस्यैहिकसुखाभावमाह—आक्षिप्तेति द्वयेन । असतीनां पुंश्चलीनां स्त्रीणां रहसि रचितया मायया सम्भोगादिरूपया कलभाषिणां मधुरभाषिणां शिशूनामालापैश्च आक्षिप्तः आकृष्टः आत्मा अन्तःकरणमिन्द्रियाणि यस्य सः ॥ ८ ॥

### हिन्दी अनुवाद

### देह-गेहमें आसक्त पुरुषोंकी अधोगतिका वर्णन

श्रीकपिलदेवजी कहते हैं—माताजी ! जिस प्रकार वायुके द्वारा उड़ाया जानेवाला मेघसमूह उसके बलको नहीं जानता उसी प्रकार यह जीव भी वलवान् कालकी प्रेरणासे भिन्न-भिन्न अवस्थाओं तथा योनियोंमें भ्रमण करता है, किन्तु उसके प्रबल पराक्रमको नहीं जानता ॥ १ ॥ ॐ ॐ जीव सुखकी अभिलाषासे जिस-जिस वस्तुको बड़े कष्टसे प्राप्त करता है, उसी-उसीको भगवान् काल विनष्ट कर देता है—जिसके लिये उसे बड़ा शोक होता है ॥ २ ॥ ॐ ॐ इसका कारण यही है कि यह मन्दमति जीव अपने इस नाशवान् शरीर तथा उसके सम्बन्धियोंके घर, खेत और धन आदिको मोहवश नित्य मान लेता है ॥

३ ॥ ❀ ❀ इस संसारमें यह जीव जिस-जिस योनिमें जन्म लेता है, उसी-उसीमें आनन्द मानने लगता है और उससे विरक्त नहीं होता ॥ ४ ॥ ❀ ❀ यह भगवान्‌की मायासे ऐसा मोहित हो रहा है कि कर्मवश नारकी योनियोंमें जन्म लेने पर भी वहाँके विष्ठा आदि भोगोंमें ही सुख माननेके कारण उसे भी छोड़ना नहीं चाहता ॥ ५ ॥ ❀ ❀ यह मूर्ख अपने शरीर, स्त्री, पुत्र, गृह, पशु, धन और बन्धु, बान्धवोंमें अत्यन्त आसक्त होकर उनके सम्बन्धमें नाना प्रकारके मनोरथ करता हुआ अपनेको बड़ा भाग्यशाली समझता है ॥ ६ ॥ ❀ ❀ इनके पालन-पोषणकी चिन्तासे इसके सम्पूर्ण अङ्ग जलते रहते हैं; तथापि दुर्वासनाओंसे दूषित हृदय होनेके कारण यह मूढ़ निरन्तर इन्हींके लिये तरह-तरहके पाप करता रहता है ॥ ७ ॥ ❀ ❀ कुलटा स्त्रियोंके द्वारा एकान्तमें सम्भोगादिके समय प्रदर्शित किये हुए कपटपूर्ण प्रेममें तथा बालकोंकी मीठी-मीठी बातोंमें मन और इन्द्रियोंके फँस जानेसे गृहस्थ पुरुष घरके दुःख-प्रधान कपटपूर्ण कर्मोंमें लिप्त हो जाता है । उस समय बहुत सावधानी करने पर यदि उसे किसी दुःखका प्रतीकार करनेमें सफलता मिल जाती है, तो उसे ही वह सुख-सा मान लेता है ॥ ८-९ ॥

गृहेषु कूटधर्मेषु दुःखतन्त्रेष्वतन्द्रितः । कुर्वन्दुःखप्रतीकारं सुखवन्मन्यते गृही ॥ ९ ॥
अर्थैरापादितैर्गुर्व्या हिंसयेतस्ततश्च तान् । पुष्णाति येषां पोषेण शेषभुग्यात्यधः स्वयम् ॥ १० ॥
वार्तायां लुप्यमानायामारब्धायां पुनः पुनः । लाभाभिभूतो निःसत्त्वः परार्थे कुरुते स्पृहाम् ॥ ११ ॥
कुटुम्बभरणाकल्पो मन्दभाग्यो वृथोद्यमः[1] । श्रिया विहीनः कृपणो ध्यायञ्छ्वसिति मूढधीः ॥ १२ ॥
एवं स्वभरणाकल्पं तत्कलत्रादयस्तथा । नाद्रियन्ते यथापूर्वं कीनाशा इव गोजरम् ॥ १३ ॥
तत्राप्यजातनिर्वेदो भ्रियमाणः स्वयम्भृतैः । जरयोपात्तवैरूप्यो[2] मरणाभिमुखो गृहे ॥ १४ ॥
आस्तेऽवमत्योपन्यस्तं गृहपाल इवाहरन् । आमयाव्यप्रदीप्ताग्निरल्पाहारोऽल्पचेष्टितः ॥ १५ ॥
वायुनोत्क्रमतोत्तारः कफसंरुद्धनाडिकः[3] । कासश्वासकृतायासः[4] कण्ठे घुरघुरायते ॥ १६ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

कूटाः वित्तशाठ्यादिबहुला धर्मा येषु दुःखप्रधानेषु ॥ ९ ॥ ❀ ❀ येषां पोषणेनाधो याति तान्पुष्णाति शेषभुगिति भोगोऽपि तस्य दुर्लभ इत्यर्थः ॥ १० ॥ ❀ ❀ वार्तायां जीविकायाम् । निःसत्त्वोऽशक्तः परार्थे परस्वे ॥ ११ ॥ ❀ ❀ अकल्पोऽसमर्थः ॥ १२ ॥ ❀ ❀ पूर्वं यथाऽऽद्रियंते तथाऽऽदरं न कुर्वंति कीनाशाः कृपणाः कृषीवलाः गोजरं वृद्धं बलीवर्दम् ॥ १३ ॥ ❀ ❀ भ्रियमाणः पुष्यमाणः १४ ॥ ❀ ❀ अवमत्याऽवज्ञयोपन्यस्तं समीपे प्रक्षिप्तम् । गृहपालः श्वा आहरन् भुंजानः आमयावी रोगी ॥ १५ ॥ ❀ ❀ उत्तारो बहिर्निर्गतनेत्रः कफेन संरुद्धा नाड्यो मार्गभूता यस्य कासश्वासाभ्यां कृत आयासो यस्य घुरघुर इति शब्दं करोति ॥ १६ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

'तंत्रं प्रधाने' इत्यादिकोशात् ॥ ९ ॥ ❀ ❀ इत्यर्थ इति । कदाचित्सर्वभुक्तौ शेषाभावान्निराहार एव तिष्ठतीति भावः । यद्यपि कुटुंबभरणं शास्त्रविहितं तथापि शास्त्रातिक्रमेण तद्भरणं नरकायैव "केवलेन ह्यधर्मेण कुटुंबभरणोत्सुकः" इत्याद्यग्रे वक्ष्यमाणत्वात् ॥ १० ॥ ❀ ❀ लोभाक्रांतः । स्पृहां छलादिना तद्भरणेच्छाम् ॥ ११ ॥ ❀ ❀ पुत्रादि-जीवनोपायं ध्यायन् ॥ १२ ॥ ❀ ❀ "कीनाशः कर्षुकक्षुद्रापांशुघातिषु वाच्यवत् । यमेना" इति मेदिनी । जरा विद्यतेऽस्येति जरः मत्वर्थीयोऽच् गौश्चासौ जरश्चेति गोजरस्तम् । वहनोल्लेखनासमर्थं वृषभमित्यर्थः ॥ १३ ॥ ❀ ❀ स्वकलत्राद्यनादरं दृष्ट्वा मोक्षाय यतिष्यत इति चेत्तत्राह—तत्रापीति । तस्यामवस्थायामपि ये पूर्वं स्वयं भृताः पुत्राद्यास्तैः आसन्न-मरणस्यापि गृहस्थारूढचेतसो वैराग्यं नोत्पद्यत इति भावः ॥ १४ ॥ ❀ ❀ अप्रदीप्ताग्निर्मन्दीभूतजाठरानलः । चेष्टितं गमनादि ॥ १५ ॥ ❀ ❀ उत्क्रमता कासाधिक्येनोर्ध्वमुत्तिष्ठता । आयासः क्लेशः ॥ १६-१८ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

गुर्व्या । बहुप्रयोगिन्या भोगोऽपि दुर्लभ इत्यपिना किं पुनः कुटुम्बकर्तृकं पोषणमिति सूच्यते ॥ १० ॥ ❀ ❀ लुप्यमानायामिति । शानचारम्भकालीनत्वं लोपस्य व्यञ्जितम् ॥ ११ ॥ ❀ ❀ मन्दभाग्यत्वादुद्यमस्य वैयर्थ्यं तद्वैयर्थ्यादेव

---

१. प्रा० पा०—वृथाश्रमः । २. प्रा० पा०—जरया जात० । ३. प्रा० पा०—नाडिना । ४. प्रा० पा०—यासकण्ठो घु० ।

श्रिया विहीनः अत एव कृपण इत्यादि योजनीयम् ॥ १२ ॥ ❀ ❀ स्वशब्दस्य वाक्यस्थकर्तृवाचकत्वात् स्वभरणाकल्पं कलत्रादिपोषणेऽशक्तम् इत्थं सर्वत्र स्वशब्दस्य शक्तिर्गम्या ॥ १३ ॥ ❀ ❀ तत्रापीति सार्द्धकम् । तत्रापि अनादरेपि गृह एवास्ते नतु विरज्यातुरसन्न्यासमपि करोतीत्यर्थः ॥ १४ ॥ ❀ ❀ आमयावीति सार्द्धकम् । आमयाव्यादिपदानां यथोत्तरं हेतुहेतुमद्भावः, उत्क्रमत ऊर्ध्वश्वासरूपेण वहता वायोर्मार्गभूताः ॥ १५-१८ ॥

### श्रीमद्वीरराघवव्याख्या

गृही । गृहाश्रमी कूटा अविचाल्या धर्मा येषु दुःखप्रधानेषु गृहेष्वतन्द्रितः दुःखनिवृत्तिकरमिव किञ्चित्कर्म कुर्वन् तत्सुखमिव मन्यते ॥ ९ ॥ ❀ ❀ इतस्ततः गुर्व्या बहुलया हिंसया हिंसादिनोपायेनापादितैः संपादितैरर्थैः वित्तादिभिस्तान् पुत्रकलत्रादीन् पुष्णाति येषां पुत्रादीनां पोषेण शेषभुक् तत्पोषणोपयुक्तावशिष्टमनुभवन् सुखलेशोऽपि तस्य दुर्लभ इति भावः स्वयमधः निरये याति ॥ १० ॥ ❀ ❀ वार्त्तायां जीविकायां पुनःपुनरारब्धायां लुप्यमानायां दैवेन विहतायां सत्यां लोभेनाभिभूतः व्याप्तो निःसत्त्वः अशक्तः परार्थे परस्वे स्पृहां कुरुते ॥ ११ ॥ ❀ ❀ कुटुम्बभरणेऽकल्पः असमर्थः मन्दभाग्यः भाग्यहीनः अत एव वृथोद्यमः व्यर्थप्रयत्नः क्रियाविहीनः सत्क्रियारहितः कृपणो दीनः ध्यायन् वृथा चिन्तयन् मूढधीर्वसति ॥१२॥ ❀ ❀ एवं स्वभरणे विकलं तत्कलत्रादयः पूर्वं कुटुम्बपोषणदशायां यथा आद्रियन्ते तथा नाद्रियन्ते नादरं कुर्वन्ति यथा गोजरं वृद्धबलीवर्दं कीनाशाः कृषीवला नाद्रियन्ते तद्वत् । गोरजमिति पाठान्तरं तदा यथा गां हित्वा अजं नेच्छन्ति तद्वदित्यर्थः ॥ १३ ॥ ❀ ❀ तत्राप्यनादरणेऽप्यजातनिर्वेदः अनुत्पन्नपरितापः स्वयमात्मना पूर्वं भृतैः पुष्टैर्भ्रियमाणः पोष्यमाणः जरया उपात्तं प्राप्तं वैरूप्यं पलितवलितादि यस्य सः मरणायाभिमुखः सम्मुखमरणः सन् गृहे आस्ते ॥ १४ ॥ ❀ ❀ अवमत्योपन्यस्तं परिभवपूर्वकमग्रे पातितमन्नादिकं गृहपालः श्वेवाहरन् अदन् आमयावी रोगी अप्रज्वलितजाठराग्निरत एवाल्पाहारः अत एवाल्पं चेष्टितं व्यापारो यस्य सः ॥ १५ ॥ ❀ ❀ कफेन श्लेष्मणा संरुद्धा नाड्यो यस्य तेन वायुना कफनिरुद्धनाडिरूपमार्गेण वायुना उत्क्रमिते बहिर्निर्गते तारे नेत्रे यस्य कासश्वासाभ्यां कृत आयासो यस्य सः । कण्ठे घुरघुरायते घुरघुरशब्दं करोति ॥ १६ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

कुटुम्बवञ्चनमेव धर्मो यत्र तेषु वञ्चनधर्मयुक्तेषु वा दुःखानां तन्त्रेषु साधनेषु दुःखानां प्रतीकारं सुखवन्मननाद्विरक्तो न स्यादित्यर्थः ॥ ९ ॥ ननु

"वृद्धौ च मातापितरौ साध्वी भार्या सुतः शिशुः ।
अप्यकार्यशतं कृत्वा भर्त्तव्या मनुरब्रवीत् ॥"

इति यया कयापि विधया कुटुम्बभरणस्य विहितत्वाद्विरक्त्या तत्त्यागे महान् दोषः स्यादतो न विरागो भूषणमित्याशङ्क्याशास्त्रविहितहिंसादिना प्राप्तमहापातकेनाधः पात एवेत्याह । अर्थैरिति । विप्रादेः सेवादिकमकार्यशतं महाविपदि विहितत्वात्तत्कृत्वा न दोष इत्यर्थपरं स्मार्तवचनं, पोष्यजनभुक्तशेषस्य भोक्ता ॥ १० ॥ ❀ ❀ अतिवृष्ट्यनावृष्टिव्याधिगोजरनाशादिना कुण्ठितजीवनस्य वृत्तिं कथयति । वार्तायामिति । पुनः पुनरारब्धायामृणद्रव्याद्यानीतगोवृषादिनोपक्रान्तायां वार्तायां कृषिगोरक्ष्यवाणिज्यादिलक्षणायां लुप्यमानायां विनाशं गच्छन्त्यां "लुभ गार्ध्ये" इति धातोर्लोभेन परद्रव्यादित्सालक्षणेनाभिभूतोऽत एव निःसत्त्वः सत्त्वगुणशून्यो बलरहितो वा परार्थे चौर्यादिना परद्रव्यादाने स्पृहां कुरुत इत्यन्वयः ॥ ११ ॥ ❀ ❀ परार्थप्राप्त्यशक्तत्वेन स्वकुटुम्बभरणाकल्पस्य चरमावस्थामाह । कुटुम्ब भरणाकल्प इति । श्रिया सम्पदा शरीरकान्त्या वा श्वसिति दीर्घश्वासं करोति । मूढधीः कर्तव्यबुद्धिरहितः ॥ १२ ॥ ❀ ❀ कीनाशः कर्षकः गोजरमुल्लेखनासमर्थं वृषभम् ॥ १३ ॥ ❀ ❀ स्वकलत्राद्यनादरं दृष्ट्वा विरक्तो मोक्षाय यतिष्यत इति चेत्तत्राह । तत्रापीति । तस्यामवस्थायामपि ॥ १४ ॥ ❀ ❀ अपत्याद्यैरवमत्या अवज्ञानेन दत्तान्नमाहरन् गृहपालः श्वेव गृह आस्त इत्यन्वयः । संसारिण आसन्नमरणावस्थायामपि विरागो नोत्पद्यत इत्याशयेनाह । आमयेनेत्यादिना ॥ १५ ॥ ❀ ❀ यस्य कासश्वासाभ्यां कृतायासः पूर्णक्लेशः कण्ठो घुरघुरायतेऽनुकारशब्दं करोति स आतुरः किमपि न ब्रूत इत्यन्वयः । उत्क्रमता निर्गच्छता उत्तारमुद्गतं कफश्लेष्म तेन संरुद्धा नासिका यस्य स तथा । अनेनासनशयनाद्युक्त्यवस्थायामपि विरागो नाभूदहो हरिमाहात्म्यमित्यदर्शि ॥ १६-१७ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

तत्रापीति सार्द्धकम् ॥ १४-१९ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

कूटा वित्तशाठ्यादिबहुला धर्म्मा येषु दुःखतन्त्रेषु दुःखप्रधानेषु ॥ ९ ॥ ❀ ❀ शेषभुक् तद्भुक्तावशिष्टभुगिति भोगोऽपि तस्य दुर्लभ इत्यर्थः ॥ १० ॥ ❀ ❀ वार्त्तायां जीविकायाम् ॥ ११ ॥ ❀ ❀ पुत्रादिजीवनोपायं ध्यायन् ॥१२॥

❀ ❀ कीनाशाः कृषीवलाः गोजरं वृद्धबलीवर्दम् ॥ १३ ॥ ❀ ❀ पूर्वं भृतैः पुत्रादिभिर्भ्रियमाणः पुष्यमाणः पोषणप्रकारमाह । अवमत्या अवज्ञया उपन्यस्तं प्रक्षिप्तं गृहपालः श्वेव आहरन् भुञ्जानः आमयावी रोगी ॥ १४,१५ ॥ ❀ ❀ उत्क्रमता कासाद्याधिक्येन ऊर्ध्वमुत्तिष्ठता कफरुद्धनाडीमार्गेण वायुना हेतुना उद्वर्त्तिता तारा अक्ष्णः कनीनिका यस्य सः । घुर्घुर इति शब्दं करोति ॥ १६-१७ ॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

गृही गृहाभिमानी कूटाः सकपटाः धर्मा येन दुःखतन्त्रेषु दुःखव्याप्तेषु दुःखानां प्रतीकारं निवृत्त्युपायं कुर्वन् सुखवन्मन्यते ॥ ९ ॥ ❀ ❀ गुर्व्या महत्या हिंसया भूतद्रोहेण आपादितैः सञ्चितैः येषां पोषेण अधो याति तान् पुष्णाति स्वयं शेषभुक् तदुच्छिष्टभुक् भवति । अतिथ्यादेस्तु का कथा ? श्वादिभ्योऽपि तदुच्छिष्टमपि दातुं नेच्छतीति भावः ॥ १० ॥ ❀ ❀ पुनः पुनरारब्धायां सम्पाद्यमानायामपि वार्तायां जीविकायां सत्यां निःसत्त्वः गतधैर्यः यतो लोभाभिभूतः परार्थे स्पृहां कुरुते ॥ ११ ॥ ❀ ❀ परार्थालाभे सति कुटुम्बभरणे अकल्पः अशक्तः श्वसिति रुदन् इव श्वासान्मुञ्चति ॥ १२ ॥ ❀ ❀ कीनाशाः कृपणाः कृषिकाराः गोजरं वृद्धं वृषमिव ॥ १३ ॥ ❀ ❀ तत्रापि एवमनादरेऽपि भ्रियमाणः पाल्यमानः मरणाभिमुखो भवति ॥ १४ ॥ ❀ ❀ आमयावी रोगी अत एव अप्रदीप्ताग्निः अत एवाल्पाहारः अत एवाल्पचेष्टितः अवमत्या अवज्ञया उपन्यस्तमन्नादि आहरन् भुञ्जन् आस्ते ॥ १५ ॥ ❀ ❀ उत्क्रमता कृच्छ्रान्निःसरमाणेन उत्तारः उद्गलितनेत्रः कण्ठे घुरघुरायते घुरघुर इत्येवं शब्दं करोति ॥ १६ ॥

## श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

स्पष्टं परलोकाभावमाह—गृहेष्विति । गृहा धर्मप्रधाना इति लोकप्रसिद्धिः, परं तत्र कपटरूप एव धर्मः, धर्मच्छलः, धर्माभासो वा । यश्च[1] प्रतिष्ठार्थं जनसमक्षमेव औदार्यं ख्यापयति, अन्यदा समागतेभ्यो जलमपि न प्रयच्छति, स तथोच्यते । दुःखमेव तन्त्रं परिकरो येषाम् । इह लोके दुःखम्, परलोकेऽपि कपटधर्मात् दुःखम् । तत्रैवाऽतन्द्रितः सावधानः । स्त्रीणामर्थे धर्मे महत्कार्यं कृत्वा तासामाश्रमे समागतस्तृपया म्रियमाणो यथा कथञ्चित् पानीयं पीत्वा आत्मानं सुखिनं मन्यते, कृतार्थं च । तदाह—कुर्वन् दुःखप्रतीकारं सुखवन्मन्यत इति । अत्र सुखं श्रुतमन्यगतं[2] वा । गृहीति सर्वदा गृहभाराक्रान्तः । शिरःस्थभारजलपानवत् तस्य सुखमिति निरूपितम् ॥ ९ ॥ ❀ ❀ ननु लोकद्वये सुखाभावेऽपि दुःखमपि न भविष्यतीति नाऽत्यन्तं गृहं निन्दितमित्याशङ्कयाऽऽह—अर्थैरिति । इतस्ततः स्वकीयानां परकीयानां च या गुर्वी हिंसा पीडा, तया आपादितैरर्थैः, तान् पुत्रादीन् पुष्णाति, येषां पोषेण, अधो नरके गच्छति । नरकविशेषेषु सामान्यतः कुटुम्बपोषको रौरवे पततीत्युक्तम् । 'यो राज्ञः प्रतिगृह्णीयाल्लुब्धस्योच्छास्त्रवर्तिनः । स पर्यायेण यातीमान्नरकानेकविंशतिम् ॥ तामिस्रं चान्धतामिस्रं' इत्यादिमनुवाक्यानि । 'कुम्भीपाके महाघोरे पुनरावृत्तिवर्जिते । तुलापुरुषप्रतिग्राही ऋत्विग्भिः सह मज्जति' इत्यादिशतशो वाक्यानि अहिंसयाऽप्युत्पादितधने श्रूयन्ते, ये पुनर्घातकास्तेषां किं वक्तव्यम् । अतोऽर्थैस्तत्कृतपोषणेन च सर्वथाऽधो याति । न चाऽत्र भोगः, यतः शेषभुगुच्छिष्टभोजी । ब्राह्मणादीन् हत्वा, स्त्रीणां मलनिवृत्तिस्थानकर्तारोऽपि लोके दृश्यन्ते, कस्तेषामिह लोकः परलोको वा भविष्यति । पुमानिति समर्थोऽपि भूत्वैवं नष्टो भवतीति ज्ञापितम् । स्वयमिति पाठे न पुत्रादयो गच्छन्ति नरके, किन्तु स्वयमेवेत्यर्थः ॥ १० ॥ ❀ ❀ एवं सामर्थ्यदशायां न कोऽपि धर्मो भोगो वा सिद्ध इत्युक्तम् । असामर्थ्ये तु सुतरां नरको भोगाभावश्चेत्याह द्वयेन—वार्तायामिति । प्रायेणाऽयं गृहस्थो वार्ताजीवनः । सा वार्ता कालवशात् पुनः पुनरारब्धाऽपि लुप्यमाना भवति । धनव्यतिरेकेण च न पोषः सिद्ध्यति, अतो लोभेनाऽभिभूतो विवेकधैर्यरहितश्च, परस्य श्रेष्ठस्याऽर्थे, गुर्वर्थे देवतार्थे वा स्पृहां कुरुते चोरयितुं विचारयति । प्राप्तिस्तु दुर्लभेति स्पृहैवोक्ता । अनेन पारलौकिकं महद् दुःखमुक्तम् ॥ ११ ॥ ❀ ❀ ऐहिकसुखाभावमाह—कुटुम्बेति । पूर्वोक्तन्यायेन कुटुम्बपोषणे असमर्थो भवति । दैवादपि तस्य धनप्राप्त्यभावमाह—मन्दभाग्य इति । अतोऽल्पमपि वृथा उद्यमो यस्य । सर्वथा धनेन कान्त्या च विहीनो भवति । ततोऽनालोचितयाचकः कृपणो भवति । तदा पूर्वसिद्धविषयान् केवलं ध्यायन् श्वसिति, यतोऽयं मूढधीः । तत्रापि परलोकार्थं यत्नरहितः ॥ १२ ॥ ❀ ❀ एवं स्वतः सुखाभावं दुःखं चोक्त्वा परकृते आह—एवमिति । स्वपोषणासमर्थम् । तत्कलत्रादयः पूर्ववदादरमपि न कुर्वन्ति । भक्ष्यादिकमपि न प्रयच्छन्तीत्यर्थः । अत्र दृष्टान्तमाह—कीनाशा दुष्टकृषीवलाः, गोजरं वृद्धबलीवर्दम्, नाऽऽद्रियन्ते । तस्यान्नं छायां वा यथा न सम्पादयन्तीत्यनुभवार्थं दृष्टान्तः ॥ १३ ॥ ❀ ❀ एवमपकृतोऽपि न विरक्तो जायत इत्याह—तत्रापीति । पूर्वं स्वयंभृतैरधुना भ्रियमाणो भवतीत्यवैराग्ये हेतुः । अनेन निरभिमानतया तिष्ठतीति दोषार्थमभिमाननाश उक्तः । अवश्यं मरणलक्षणानि च तस्य जातानीत्याह—जरयोपात्तवैरूप्य इति । वलीपलितादिकं वैरूप्यम् । तदाऽयं मरणाभिमुख इति निश्चयः ॥ १४ ॥ ❀ ❀ तथापि गृह

---

१. यथा क. ख. । २. अन्यत्र घ. ङ. ।

एवाऽऽस्ते । अवमत्या अवमानेन, उपन्यस्तमोदनादिकम्, गृहपाल इव श्वेव, आहरन् स्वयमेव गृहीत्वा भक्षयन्नपि गृह एवाऽऽस्ते । एवं बाह्यक्लेशमुक्त्वा आन्तरं क्लेशमाह—आमयावीति । आमयावी रोगवान, अजीर्णान्नो वा । तत्र हेतुः न प्रदीप्तोऽग्निर्यस्येति, तदा अल्पाहारो भवति । भोगाभावः पुरुषार्थाभावश्चोक्तः । चेष्टाऽप्यल्पैव भवति । अनेन स्वसिद्धान्यपि करणानि न सुखप्रदानि जातानीत्युक्तम् ॥ १५ ॥ ❀ ❀ अतिक्लेशमाह—वायुनोत्क्रमतोत्तार इति । उत्क्रमता देहं परित्यज्य गच्छता, ऊर्ध्वं गच्छता, प्राणेन उद्गते तारे अक्ष्णोर्यस्य, तादृशो भवति । तत्र हेतुः—कफेन संरुद्धा नाड्यो यस्य, तादृशेन वायुना । वायोर्मार्गो मुखगतः, नासागतो वा कफेन रुद्धः; अतः कफरहितेन मार्गेण गच्छामीति विचार्य नेत्रयोराघातं करोति, तदा पुरुष उत्तारो भवति । लोकदृष्ट्या तस्य खेदो निरूपितः । तस्यापि दुःखानुभवमाह—कासेति । कासश्वासौ रोगविशेषौ, ताभ्यां कृत आयासो यस्य । तादृशोऽपि न विरज्यत इत्युक्तम् । 'कण्ठे पुनर्घुरघुरायते । वाग्वनुकरणशब्दोऽयम्, घुरघुरवदाचरति । विड्वराहानुकरणशब्दोऽप्ययम्, तेनास्य दुर्गतिः सूचिता तदापि गृहमध्य एव शयानो भवति । बन्धुभिश्च परितः शोचद्भिः परीतो भवतीति लौकिकव्यवहारोऽपि । व्यर्थमयं प्राणी स्वात्मानं नाशितवानित्यनुकरणमिव वर्ण्यते, न हि कृतकार्यं कश्चिच्छोचति । तदा कालपाशेनावृतः 'तात' इत्युच्यमानोऽपि न ब्रूते ॥ १६-१७ ॥

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

एवमित्यत्र । परकृते । इति सुखाभावदुःखे ॥ १३ ॥

इति श्रीतृतीयस्कन्धसुबोधिनीप्रकाशे त्रिंशाध्यायविवरणं सम्पूर्णम् ।

### श्रीगिरिधरकृता बालप्रबोधिनी

गृही गृहाश्रमी दुःखतन्त्रेषु दुःखप्रधानेषु गृहेषु अतन्द्रित आलस्यरहितः सन् दुःखस्य प्रतीकारं निवृत्त्युपायं कुर्वन्नपि सुखवन्मन्यते, न तु सुखं लभते । ननु तत्र धर्मस्यापि सम्भवात्तेन कदाचित्सुखमपि स्यादेवेत्याशङ्क्याह—कूटधर्मेष्विति, कूटाः कपटप्रायाः प्रतारणार्थाः स्वोत्कर्षख्यापनार्थाश्च धर्माः येषु तेष्वित्यर्थः ॥ ९ ॥ ❀ ❀ न च केवलमत्रैव दुःखं किन्तु परलोकेऽपीत्याह—अर्थैरिति । इतस्ततः शास्त्रमर्यादोल्लङ्घनेन सर्वतो गुर्व्या महत्या हिंसया पीडया आपादितैरर्थैर्धनादिभिः तान् पुत्रकलत्रादीन् पुष्णाति । येषामेवं पोषेण स्वयमधो नरकं याति । अत्र तस्य भोगसुखलेशोऽपि दुर्लभ इत्याह—शेषभुगिति, लोके स्वमहत्त्वख्यापनाय स्वयं शेषं सर्वोपयुक्तावशिष्टं भुङ्क्ते इति तथा सः ॥ १० ॥ ❀ ❀ एवं यौवनावस्थावृत्तमुक्त्वा जरावस्थावृत्तमाह—वार्त्तायामिति । वार्त्तायां जीविकायां पुनः पुनः आरब्धायां लुप्यमानायां दैवेन विघ्नितायां सत्यां परार्थे परस्वे स्पृहां कुरुते । तल्लोपे हेत्वन्तरमाह—निरसत्त्व इति, अशक्त इत्यर्थः । परस्वग्रहणेच्छायां हेतुमाह—लोभेनाभिभूतः तिरस्कृतविवेक इति ॥ ११ ॥ ❀ ❀ कुटुम्बभरणे कुटुम्बपालने अकल्पः असमर्थः । तत्र हेतुः—वृथोद्यमः निष्फल[2]प्रयत्नः । तत्र हेतुः—मन्दभाग्यः, अतः श्रिया धनेन शोभया च हीनः, अत एव कृपणो दीनः ध्यायन् किं कर्त्तव्यं कथं ममोत्कर्षः स्यादिति चिन्तयन् श्वसिति उच्चैः श्वासान् विमुञ्चति । एवमपि यदि विवेकी स्यात्तदा नैवं शोकः स्यात् स तु मूढधीः विमोहितान्तःकरणः ॥१२॥ ❀ ❀ एवं पूर्वोक्तप्रकारेण स्वस्य भरणे पोषणे अकल्पमसमर्थं तस्य कलत्रादयो यथा पूर्वं स्वपोषणदशायामाद्रियन्ते स्म तथेदानीं नाद्रियन्ते भोजनाच्छादनादिकमपि न प्रयच्छन्ति । तत्र दृष्टान्तमाह—कीनाशा इति, गोजरं वृद्धबलीवर्दं कीनाशा दुष्टाः कृषीवला यथा नाद्रियन्ते तथेत्यर्थः ॥ १३ ॥ तत्राप्येवमनादरदशायामपि अजातनिर्वेदः अनुत्पन्नवैराग्यः सन् गृह एवास्ते इत्यन्वयः । तदा तस्य सर्वतो विरज्य गृहाद्विनिस्सृत्य भगवच्चिन्तनमेवोचितमिति सूचयंस्तं विशिनष्टि—स्वयमात्मना पूर्वं भृतैः पुष्टैः भ्रियमाणः पोष्यमाणः । जरया उपात्तं स्वीकृतं वैरूप्यं वलीपलितादि येन सः । मरणाभिमुख आसन्नमृत्युः ॥ १४ ॥ ❀ ❀ पुत्रादिभिः पोषणमप्यपमानपूर्वकमित्याह—अवमत्या परिभवपूर्वकं उपन्यस्तमग्रे प्रक्षिप्तं अन्नादिकं गृहपालः श्वा इवाहरन् भुञ्जानः, आमयावी रोगवान्, अतः अप्रदीप्ताग्निः, अत एवाल्पाहारः, अत एव चाल्पं चेष्टितं यस्य सः ॥ १५ ॥ ❀ ❀ कफेन श्लेष्मणा संरुद्धा नाड्यो यस्य सः, अतः कासश्वासाभ्यां कृत आयासो यस्य सः, अत एवोत्क्रमतोर्ध्वं गच्छता वायुना उद्गते बहिर्निस्सृते तारे कनीनिके यस्य सः, कण्ठे घुरघुरायते घुरघुरशब्दं करोति ॥ १६ ॥

### हिन्दी अनुवाद

जहाँ-तहाँसे भयङ्कर हिंसावृत्तिके द्वारा धन सञ्चयकर यह ऐसे लोगोंका पोषण करता है, जिनके पोषणसे नरकमें जाता है । स्वयं तो उनके खाने-पीनेसे बचे हुए अन्नको ही खाकर रहता है ॥ १० ॥ ❀ ❀ बार-बार प्रयत्न करनेपर भी जब इसकी कोई जीविका नहीं चलती तो यह लोभवश अधीर हो जानेसे दूसरेके धनकी इच्छा करने लगता है ॥ ११ ॥ ❀ ❀

---

१. कण्ठः घ. ङ. । २. विफलप्रयत्न इति ख-पाठः ।

जब मन्दभाग्यके कारण इसका कोई प्रयत्न नहीं चलता और यह मन्दबुद्धि धनहीन होकर कुटुम्बके भरण-पोषणमें असमर्थ हो जाता है, तब अत्यन्त दीन और चिन्तातुर होकर लंबी-लंबी साँसें छोड़ने लगता है॥ १२॥ ❀ ❀ इसे अपने पालन-पोषणमें असमर्थ देखकर वे स्त्री-पुत्रादि इसका पहलेके समान आदर नहीं करते, जैसे कृपण किसान बूढ़े बैलकी उपेक्षा कर देते हैं॥ १३॥ ❀ ❀ फिर भी इसे वैराग्य नहीं होता। जिन्हें उसने स्वयं पाला था, वे ही अब उसका पालन करते हैं, वृद्धावस्थाके कारण इसका रूप बिगड़ जाता है, शरीर रोगी हो जाता है, अग्नि मन्द पड़ जाती है, भोजन और पुरुषार्थ दोनों ही कम हो जाते हैं। वह मरणोन्मुख होकर घरमें पड़ा रहता है और कुत्तेकी भाँति स्त्री-पुत्रादिके अपमानपूर्वक दिये हुए टुकड़े खाकर जीवन-निर्वाह करता है॥ १४-१५॥ ❀ ❀ मृत्युका समय निकट आनेपर वायुके उत्क्रमणसे इसकी पुतलियाँ चढ़ जाती हैं, श्वास-प्रश्वासकी नलिकाएँ कफसे रुक जाती हैं, खाँसने और साँस लेनेमें भी इसे बड़ा कष्ट होता है तथा कफ बढ़ जानेके कारण कण्ठमें घुरघुराहट होने लगती है॥ १६॥

शयानः परिशोचद्भिः प[१]रिवीतः स्वबन्धुभिः। वाच्यमानोऽपि न ब्रूते कालपाशवशं गतः॥ १७॥
एवं कुटुम्बभरणे व्या[२]पृतात्माजितेन्द्रियः। म्रियते रुदतां स्वानामुरुवेदनयास्तधीः॥ १८॥
यमदूतौ तदा प्राप्तौ भीमौ सरभसेक्षणौ। स दृष्ट्वा त्रस्तहृदयः शकृन्मूत्रं विमुञ्चति॥ १९॥
यातनादेह आवृत्य पाशैर्बद्ध्वा गले बलात्। नयतो दीर्घमध्वानं दण्ड्यं राजभटा यथा॥ २०॥
तयोर्निर्भिन्नहृदयस्तर्जनैर्जातवेपथुः। पथि श्वभिर्भक्ष्यमाण आर्तोऽघं स्वमनुस्मरन्॥ २१॥
क्षुत्तृट्परीतोऽर्कदवानलानिलैः सन्तप्यमानः पथि तप्तवालुके।
कृच्छ्रेण पृष्ठे कशया च ताडितश्चलत्यशक्तोऽपि निराश्रमोदके॥ २२॥
तत्र तत्र पतञ्छ्रान्तो मूर्च्छितः पुनरुत्थितः। पथा पापीयसा नीतस्तमसा यमसादनम्॥ २३॥
योजनानां सहस्राणि नवतिं नव चाध्वनः। त्रिभिर्मुहूर्तैर्द्वाभ्यां वा नीतः प्राप्नोति यातनाः॥ २४॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

परिवीतः परिवेष्टितः वाच्यमानो बंधो तातेत्याहूयमानः॥ १७॥ ❀ ❀ अस्तधीर्नष्टमतिः॥ १८॥ ❀ ❀ मृतस्य पुण्यपापाभ्यां द्वे गती तत्र पापगतिमाह। यमदूतावित्यादि यावत्समाप्ति। सरभसं सक्रोधमीक्षणं ययोस्तौ दृष्ट्वा॥ १९॥ ❀ ❀ आवृत्य निरुद्ध्य॥ २०॥ ❀ ❀ तयोस्तर्जनैर्निर्भिन्नं हृदयं यस्य आर्तः संश्चलतीति द्वितीयेनान्वयः॥ २१॥ ❀ ❀ क्षुत्तृड्भ्यां परीतो व्याप्तः तप्ता वालुका यस्मिन् निर्गत आश्रमो विश्रामस्थानमुदकं च यस्मिन्॥ २२॥ ❀ ❀ यमसादनं नीतो भवति॥ २३॥ ❀ ❀ तत्रैव विशेषमाह। अध्वनः संबंधिनां योजनानां नवतिं नव च सहस्राणि पापाधिक्ये द्वाभ्यां वा नीतः सन्॥ २४॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

स पापी। शकृत्पुरीषम्॥ १९॥ ❀ ❀ नरकदुःखभोगयोग्यो देहो यातनादेहः "पापानां दुःखभोगाय देहा यातनसंज्ञकाः। अनन्ताः संति धर्मस्य नगरे यैश्च पापिनः॥ नीयन्ते यमदूतैश्च यमसद्मनि नित्यशः। छिन्ना दग्धाः पुनस्ते हि प्ररोहंति यथायथम्" इति पुराणांतरोक्तेः। असुभिश्चारुह्यमाणा इति न म्रियमाणः पुनरारोपितो निपतीति वक्ष्यमाणत्वाच्च। दंड्यं दंडार्हम्। राजभटा नृपभृत्याः नयतः प्रापयतः॥ २०॥ ❀ ❀ तयोर्यमदूतयोः। तर्जनैस्तर्जन्युत्थानपूर्वकभर्त्सनैः। स्वमघं स्वस्यैव पापस्य फलमनुभवामीति स्मरन्॥ २१॥ ❀ ❀ वालुकाः सिकताः। कशयाऽश्वताडनार्थं बहुतंतुकदृढहस्तिशुंडाकारकाष्ठदंडबद्धहस्तमितरज्जुःकशा तया 'कोडा' इति भाषायां प्रसिद्धया॥ २२॥ ❀ ❀ तत्र तत्र मार्गे पापीयसाऽतिक्लिष्टेन पथा मार्गेण सदनमेव सादनं यमस्य सादनं गृहं नरकमित्यर्थः। साद्यंतेऽवसाद्यंतेऽत्रेति सादनं नरकं यमाज्ञप्तं सादनं यमसादनमिति वा॥ २३॥ ❀ ❀ तत्रैव मार्गे एव। यातना नरकपीडाः॥ २४॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

तत्र। गतिद्वयमध्ये तदा। मरणकाले॥ १९॥ ❀ ❀ प्रवेशनपूर्वकं निरुद्ध्य॥ २०॥ ❀ ❀ तयोरिति युग्मकम्॥ २१॥ ❀ ❀ साध्यक्रियामन्तरा वाक्यसमाप्तिविरहाद्भवतीत्यध्याहृतम्॥ २३॥ ❀ ❀ योजनानामिति

---

१. प्रा० पा०—परीतश्च स्व०। २. प्रा० पा०—व्यावृता०।

चतुष्कम्। तत्रैव। तरसा नयन एव (१) यत्तच्छब्दाध्याहारादात्ममांसपदस्य सुपां सुलोपश्चेत्यनेन प्रथकृत्वाङ्गीकारादित्यर्थ इत्युक्तम् (२) जीवतश्च जीवतोऽपि स्वस्य गृध्रकर्तृकमन्त्राभ्युद्धारं प्राप्नोति सर्वत्र द्वितीयान्त एव पाठः, सर्पादिकर्तृभिः स्वसम्बन्धिनीं पीडां प्राप्नोति (३) अवयवशः प्रत्यवयवं कृन्तनं छेदनं प्राप्नोति भेदप्रापणस्य गजादादिकर्तृकत्वात्प्राप्तेश्च नारकिकर्तृकत्वादपौनरुक्त्यम्॥ २४—२७॥

### श्रीमद्वीरराघवव्याख्या

शयानः परितः शोचद्भिः स्वजनैः परिवेष्टितः वाच्यमानोऽपि संबोध्य तात! तातेत्याहूतोऽपि किञ्चिदपि न ब्रूते, यतः कालपाशवशं मृत्युपाशवशं गतः प्राप्तः। एवं यौवनजरयोः क्लेशा उक्ताः॥ १७॥ ❀ ❀ अथ मरणक्लेशानाह द्वाभ्याम्। एवं कुटुम्बभरणे व्यापृता व्यापारिताः आत्मानः देहेन्द्रियाणि येन सः। अत एवाजितेन्द्रिय उरुवेदनया बहुलया मरणवेदनयास्तधीर्नष्टमतिः स्वानां स्वबन्धूनां रुदतां सतां म्रियते॥ १८॥ ❀ ❀ तदा मरणसमये प्राप्तावागतौ सरभसं सक्रोधमीक्षणं ययोस्तौ भीमौ भयङ्करौ यमस्य दूतौ दृष्ट्वा सः म्रियमाणः त्रस्तहृदयः शकृन्मलं मूत्रं च विमुञ्चति॥ १९॥ ❀ ❀ मृतस्य पुण्यपापाभ्यां द्वे गती, तत्र पापगतिमाह। यावदध्यायसमाप्ति। तौ यमदूतौ मृतं यातनादेहे आवृत्य निरुध्य कण्ठे बलात्पाशैर्बद्ध्वा दीर्घमध्वानं नयतः गमयतः यथा लोके दण्डनार्हं राजभृत्यास्तद्वत्॥ २०॥ ❀ ❀ तयोर्दूतयोस्तर्जनैर्भिन्नं हृदयं यस्य सः अत एव सञ्जातशरीरकम्पः पथि श्वभिर्भक्ष्यमाणः दश्यमानशरीरः आर्त्तः सन् स्वीयमघं पापमनुस्मरंश्चलतीति द्वितीयेनान्वयः॥ २१॥ ❀ ❀ क्षुत्तृड्भ्यां परीतो व्याप्तः तप्ताः वालुका यस्मिंस्तस्मिन् पथि सूर्यदावाग्निभ्यामनिलेन च सन्तप्यमानः पृष्ठे कशया चर्ममय्या रज्ज्वा ताडितः अशक्तो गन्तुमसमर्थोपि निराश्रमोदके निर्गतः आश्रमः विश्रमादिस्थानमुदकञ्च यस्मिंस्तस्मिन् पथि कृच्छ्रेणातिप्रयासेन चलति॥ २२॥ ❀ ❀ तमसा तमःप्रचुरेण तामसकर्मप्राप्येण वा पापिष्ठेन पथा मार्गेण यमसादनं यमसन्निधिं प्रति नीतो भवति॥ २३॥ ❀ ❀ तत्रैव विशेषमाह। योजनानामिति। अध्वनः सम्बन्धिनां योजनानां नवतिं नव च सहस्राणि त्रिभिर्मुहूर्तैः पापाधिक्ये द्वाभ्यां मुहूर्त्ताभ्यां नीतः यातनां प्राप्नोति॥ २४॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

तस्यान्त्यामवस्थामाह। एवमिति॥ १८॥ ❀ ❀ मरिष्यतः प्रथमलक्षणमाह। यमदूताविति। यदा मरिष्यन्नास्ते तदा मूत्रं शकृत्पुरीषं च विमुञ्चति। रभसेन क्रोधवेगेन सह वर्तमाने ईक्षणे ययोस्तौ तथोक्तौ॥ १९॥ ❀ ❀ नरकदुःखभोगक्लृप्तो देहो यातनादेहस्तस्मिन्नावृत्य प्रवेश्य॥ २०॥ २१॥ ❀ ❀ नरकं प्रतिगच्छतो दशामाह। क्षुत्तृडिति। वालुकाः सिकताः॥ २२॥ ❀ ❀ यमसादनं यमगृहं नरकमित्यर्थः॥ २३॥ ❀ ❀ द्वाभ्यां वेति वाशब्देन दश दिनानि पक्षो मासश्च गृह्यते। तदुक्तम् "त्रिभिर्मुहूर्तैर्द्वाभ्यां वा दिनैर्दशभिरेव वा। पक्षान्मासेन वा याति यमलोकमितो मृतः॥" इति यातनां नरकम्॥ २४॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः।

यातनादेहे तमावृत्य प्रवेशनपूर्वकं निरुद्धयेत्यर्थः नयतः ताविति शेषः॥ २०॥ ❀ ❀ तयोरिति युग्मकम्॥ २१॥ ॥ २३॥ ❀ ❀ योजनानामिति चतुष्कम्॥ २४-२५॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

अस्तधीर्नष्टमतिः॥ १८॥ ❀ ❀ मृतस्य पापात्मनो गतिमाह। यमदूताविति। स म्रियमाणः॥ १९॥ ❀ ❀ स्थूलदेहान्निष्काश्य यातनामयदेहे तं प्रवेश्य आवृत्य निरुध्य तौ नयतः प्रापयतः॥ २०॥ ❀ ❀ तयोस्तर्जनैः स्वमघं तस्यैव पापस्य फलमिदमनुभवामीति स्मरन्॥ २१॥ ❀ ❀ निराश्रमोदके विश्रामस्थलजलरहिते पथि॥ २२॥ ॥ २३॥ ❀ ❀ अध्वनः सम्बन्धिनां योजनानां नवतिं सहस्राणि नवत्यधिकानि पापाधिक्ये द्वाभ्यामेव मुहूर्त्ताभ्यां नीतः सन्॥ २४॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

परिवीतः आवृतः॥ १७॥ ❀ ❀ व्यापृतात्मा जन्मप्रभृति व्याप्रियमाणबुद्धिः मरणवेलायां उरुवेदनया अस्ता मूर्च्छिता बुद्धिर्यस्य सः॥ १८॥ ❀ ❀ पापिनः पापां गतिमाह। यमदूतावित्यादि यावदध्यायसमाप्ति। सरभसे सक्रोधे ईक्षणे ययोस्तौ॥ १९॥ ❀ ❀ यातनादेहे आवृत्य सन्निवेश्य॥ २०॥ ❀ ❀ तयोस्तर्जनैर्निर्भिन्नं विदीर्णं हृदयं यस्य सः अशक्तोऽपि चलतीत्युत्तरेण सम्बन्धः॥ २१॥ ❀ ❀ क्षुत्तृड्भ्यां परीतो व्याप्तः अर्कश्च दावानलश्च तत्संतप्तो वायुश्च तैस्तप्ता वालुका यस्मिन् निर्गतः आश्रमः उदकश्च यस्मिन्॥ २२॥ ❀ ❀ तमसा निष्प्रकाशेन पापीयसा बहुक्ले-

शदेन पथा यमस्य सादनमालयं नीतो भवति ॥ २३ ॥ ❀ ❀ दीर्घमध्वानमित्युक्तस्याध्वनः एकदेशगतानि पापतारतम्येन त्रिभिर्द्वाभ्यां वा नवतिं नव च सहस्राणि नीतः । अनेन क्रमेण यातनाः प्राप्नोति ॥ २४ ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

एवं सर्वावस्थामुक्त्वा[1] मुख्यं तस्य मरणमाह—एवमिति । कुटुम्बभरणे व्यापृतात्मा योजितचित्तः, अग्रेऽपि खेदं प्राप्तुम-जितेन्द्रियश्च । अन्यकृतभगवन्नामश्रवणाभावार्थं स्वानां रुदतां सताम्, स्वयमपि स्मरणरहितः, उरुवेदनया अस्तबुद्धिर्म्रियते प्राणां-स्त्यजति । अनेनाऽष्टादशविद्यानां वैयर्थ्यमुक्तम् ॥१८॥ ❀ ❀ तस्य परलोकदुःखमाह—यमदूतावित्यादि षोडशभिः प्राणत्यागे यदि शुद्धो भवेत्, तदा पुत्रादिकृत संस्कारैरपि सिद्धिं गच्छेत्; तदभावार्थं यमदूतयोरागमने भीतः, तयोर्दर्शनेन[2] शकृदमेध्यम्, मूत्रं च, त्रस्तहृदयः सन् विसृजति । प्राणोत्क्रमणसमय एवैतज्जातमिति न शौचादिविलम्बः ॥१९॥ ❀ ❀ अतः पुण्याभावात्, तृणजलौकावत् देहसम्बन्धाच्च, यमनिर्मितो यातनादेहस्ताभ्यामेवाऽऽनीतः स्वदेहपरित्यागानन्तरमेव तं गृह्णातीत्याह—यातनादेह इति । तदा यमदूतौ अपानद्वारा निर्गतप्राणम्, यातनादेहे निरुध्य, आज्ञाकारिणमपि बलात्पाशैर्गले बद्ध्वा दीर्घमध्वानं नयतः । यातनापदेन देहसम्बन्ध एव क्लेशो निरूपितः । ननु बद्ध्वा नयनं किमर्थम्? नरकस्त्वग्रे वक्तव्य इत्याशङ्क्याऽऽह—दण्ड्यं राजभटा यथेति । प्रवृत्तिमार्गस्थितं सर्वमेव यमदूतौ नयतः । तत्र यो दण्ड्यः स बद्ध्वा नीयते । दण्डनज्ञापकं बन्धनम् । यथाऽधिकारिणं राजभटा नयन्त्येव, दण्ड्यं तु बद्ध्वा नयन्तीति ॥ २० ॥ ❀ ❀ मार्गेऽपि तत्कृतं क्लेशमाह—तयोरिति चतुर्भिः । पुरुषार्थचतुष्टयनाशक इति मार्गे चतुर्भिः क्लेशो निरूप्यते—दूतौ पुण्यपापयोरधिष्ठातृरूपौ । पुण्यस्याऽप्यकरणात् स क्रुद्धः, पापस्य करणात् द्वितीयः । उभाभ्यां निर्भिन्नं हृदयं यस्य । तयोरिति स्वरूपेणैव भयोत्पादकत्वात् षष्ठी निर्दिष्टा । महाभयेन हृदये भेदः, तर्जनैर्वा । वाग्दण्डनपूर्वकं ताडनं तर्जनम् । जातो वेपथुः कम्पो यस्य । अहोरात्राभिमानिन्यो देवता विकर्मसाक्षिण्यः श्वानः, तैश्च पथि भक्ष्यमाणो भवति । आर्तश्च भवति, रोगादिभिरिव व्याप्तः । स्वस्य अघमनुस्मरन्निति देवतासान्निध्यात्तस्य पूर्वज्ञानमुत्पद्यत इति ज्ञापितम् । प्राणोत्क्रमणक्षण-प्रभृतिक्लेशावश्यकत्वात् पथि शुनां भक्षणमुक्तम् ॥ २१ ॥ ❀ ❀ मार्गे दुःखान्तराण्यप्याह—क्षुत्तृट्परीत इति । क्षुत्तृषावपि यातनासम्बन्धिन्यौ, अतस्ताभ्यां व्याप्तः । अर्कदवानलावपि तथा अनिलश्च तैः सम्यक् तप्यमानः । सर्वतः क्लेशो निरूप्य इति अन्तः-स्थकृततापः, बहिःस्थितकृततापश्च वर्णितः । मार्गकृतमप्याह—पथि तप्तवालुक इति । मार्गे सर्वत्र वालुकैव, साऽपि तप्ता । कृच्छ्रेण चलतीति तत्कृतपीडानुभवो निरूपितः । महावेदनाभावमाशङ्क्य ताडनेनैव तथात्वमि'ति[3] वक्तुं ताडनमाह—पृष्ठे कशया च ताडित इति । वेत्रताडनं मुख्यम्, तयोः सहजम् । कशा अश्वप्रहरणी, तयाऽपि ताडितः । निराश्रमोदक इति यमदूताभ्यां नीयमानमार्गे न च्छाया गृहवृक्षादिकृता, नाऽपि जलम् ॥ २२ ॥ ❀ ❀ गतिसाधनानां क्लेशरूपत्वमुक्त्वा तस्य क्लिष्टां गतिमाह—तत्र तत्रेति । प्रतिपदं पतन् श्रान्तो भवति, अतिवेदनया मूर्च्छितश्च । तयाऽपि यातनादेहत्वात् पुनरुत्थितो भवति । तथा नयने तारतम्यं ज्ञापयन् हेतुमाह—यथा पापीयसा नीत इति । पापीयसा घातकेन, अरण्ये वधार्थं नीतो भवति, व्याघ्रादिना वा । यथा पापयुक्तो वा यथा पापीयान् स्व[4]कृतपापयुक्तो वा स्वकृतपापानुसारेण यो जातो देहः, यथा पापीयान्, तेन तरसा शीघ्रमेव यमसादनं नीत इति पापतार[5]तम्ये दुःखतारतम्यं निरूपितम् ॥ २३ ॥ ❀ ❀ बहुदूरं शीघ्रं नीयमानः क्लिश्यतीति प्रकारकृत्तमपि क्लेशमाह—योजनानामिति । कर्मभूमेः सकाशात् यातना[6]स्थाने एकसहस्रयोजनन्यूनलक्षयोजनानि सन्ति, तदाह सहस्राणि नवतिं नव चेति । भूमेर्दलं तावदेव 'अधस्वाद्भूमेः' इति वचनात् सहस्रं योजनानि तस्या अधोभागः यातनाभूमेर्वा अर्वाक् । वराहकल्पानुसारेण चैतदुक्तम्, ब्रह्मकल्पेनाऽपि न विरुद्ध्यते । त्रिभिर्मुहूर्तैरिति पापाल्पत्वे । द्वाभ्यामिति पापाधिक्ये । एतावद्दूरमेतावत्कालेन नीतो यातनाः प्राप्नोति । तावद्दुःखं प्राप्नोतीत्यर्थः ॥ २४ ॥

### श्रीगिरिधरकृता बालप्रबोधिनी

शयानः परिशोचद्भिः स्वबन्धुभिः परिवीतः परिवेष्टितः; तैर्वाच्यमानः हे बन्धो हे तातेत्याहूयमानोऽपि न ब्रूते । यतः कालस्य मृत्योः पाशवशं गतः ॥ १७ ॥ ❀ ❀ एवं यौवनजरयोः क्लेशमुक्त्वा मरणे तदाह—एवमिति । उक्तप्रकारेण कुटुम्बभरणे व्यापृत आत्मा देहादिसङ्घातो येन सः । तत्र हेतुः—अजितेन्द्रिय इति । उरुवेदनया महत्या पीडया अस्ता नष्टा धीर्यस्य सः । स्वानां बन्धूनां रुदतां सतां म्रियते ॥ १८ ॥ ❀ ❀ तदा मरणसमये प्राप्तावात्मानमानेतुमागतौ यमदूतौ दृष्ट्वा त्रस्तं हृदयं यस्य सः, शकृन्मलं मूत्रं च विमुञ्चति । त्रासे हेतुमाह—भीमौ भयङ्करौ, सरभसं सक्रोधमीक्षणं ययोस्तौ ॥ १९ ॥ ❀ ❀ मृतस्य पापफलमाह—यातनेति यावत्समाप्ति । तौ यमदूतौ मृतं यातनायोग्ये देहे आवृत्य निरुध्य गले कण्ठे बलात्पा-शैर्बद्ध्वा दीर्घमध्वानं नयतः गमयतः । तत्र दृष्टान्तमाह—दण्ड्यमिति, यथा लोके दण्डनार्हं जनं राजभटा बध्वा नयन्ति तद्वदित्यर्थः

---

१. पूर्वावस्थाम् ख. घ. । २. दर्शने. क. ङ. । ३. मपि. क. ङ. । ४. स्वकृतपापयुक्तो वा. इति नास्ति. ख. घ. च. । ५. पापतार-तम्येन. ख. ङ. । ६. यातनाभूमिस्थानम्. घ. ङ. ।

॥ २० ॥ ❀ ❀ तयोर्दूतयोस्तर्जनैश्छिन्धि भिन्धीत्यादिदुर्वचनैः निर्भिन्नं व्याकुलं हृदयं यस्य सः, अतएव जातः वेपथुः कम्पो यस्य सः, पथि मार्गे श्वभिर्भक्ष्यमाणः दश्यमानशरीरः, अतः आर्त्तः पीडितः, स्वं स्वीयमघं पापं अनुस्मरन् अशक्तः चलितुम-समर्थोऽपि कृच्छ्रेण कष्टेन चलतीत्युत्तरेणान्वयः ॥ २१ ॥ ❀ ❀ असामर्थ्ये हेतुं सूचयंस्तं मार्गं च विशिनष्टि—क्षुत्तृड्भ्यां परीतो व्याप्तः । अर्कादिभिः सन्तप्यमानः । कशया चर्ममय्या रज्ज्वा अश्वप्रहरण्या पृष्ठे च ताडितः । सूर्यदवाग्निभ्यां तप्ता वालुका यस्मिंस्तस्मिन् निराश्रमोदके निर्गतः आश्रमो विश्रामस्थानं उदकं च यस्मिंस्तस्मिन् पथि ॥ २२ ॥ ❀ ❀ यतः श्रान्तः अतो मूर्च्छितः संस्तत्र तत्र मार्गे पतन् पुनरुत्थितश्च सन् तमसा अन्धकारप्रचुरेण पापीयसा पापियोग्येन दुःखबहुलेन पथा मार्गेण यमस्य सादनं स्थानं प्रति नीतो भवतीत्यन्वयः ॥ २३ ॥ ❀ ❀ तत्रैव विशेषमाह—योजनानामिति । अध्वनः सम्बन्धिनां योजनानां नवतिं नव च सहस्राणि पापाल्पत्वे त्रिभिर्मुहूर्तैः पापाधिक्ये च द्वाभ्यां मुहूर्ताभ्यां नीतः अतिक्रामितः सन् यमस्थाने यातनाः प्राप्नोति ॥ २४ ॥

## हिन्दी अनुवाद

यह अपने शोकातुर बन्धु-बान्धवोंसे घिरा हुआ पड़ा रहता है और मृत्युपाशके वशीभूत हो जानेसे उनके बुलानेपर भी नहीं बोल सकता ॥ १७ ॥ ❀ ❀ इस प्रकार जो मूढ़ पुरुष इन्द्रियोंको न जीतकर निरन्तर कुटुम्ब-पोषणमें ही लगा रहता है, वह रोते हुए स्वजनोंके बीच अत्यन्त वेदनासे अचेत होकर मृत्युको प्राप्त होता है ॥ १८ ॥ ❀ ❀ इस अवसरपर उसे लेनेके लिये अति भयङ्कर और रोषयुक्त नेत्रोंवाले जो दो यमदूत आते हैं, उन्हें देखकर वह भयके कारण मल-मूत्र कर देता है ॥ १९ ॥ ❀ ❀ वे यमदूत उसे यातना देहमें डाल देते हैं और फिर जिस प्रकार सिपाही किसी अपराधीको ले जाते हैं, उसी प्रकार उसके गलेमें रस्सी बाँधकर बलात्कारसे यमलोककी लम्बी यात्रामें उसे ले जाते हैं ॥ २० ॥ ❀ ❀ उनकी घुड़कियोंसे उसका हृदय फटने और शरीर काँपने लगता है, मार्गमें उसे कुत्ते नोचते हैं । उस समय अपने पापोंकी याद करके वह व्याकुल हो उठता है ॥ २१ ॥ ❀ ❀ भूख-प्यास उसे बेचैन कर देती है तथा घाम, दावानल और लूओंसे वह तप जाता है ऐसी अवस्थामें जल और विश्राम-स्थानसे रहित उस तप्त बालुकामय मार्गमे जब उसे एक पग आगे बढ़नेकी भी शक्ति नहीं रहती, यमदूत उसकी पीठपर कोड़े बरसाते हैं, तब बड़े कष्टसे उसे चलना ही पड़ता है ॥ २२ ॥ ❀ ❀ वह जहाँ-तहाँ थककर गिर जाता है, मूर्छा आ जाती है, चेतना आनेपर फिर उठता है । इस प्रकार अति दुःखमय अंधेरे मार्गसे अत्यन्त क्रूर यमदूत उसे यमपुरीको ले जाते हैं ॥ २३ ॥ ❀ ❀ यमलोकका मार्ग निन्यानवे हजार योजन है । इतने लंबे मार्गको दो-दो-तीन मुहूर्तमें तै करके वह नरकमें तरह-तरहकी यातनाएँ भोगता है ॥ २४ ॥

आदीपनं स्वगात्राणां वेष्टयित्वोल्मुकादिभिः । आत्ममांसादनं क्वापि स्वकृत्तं परतोऽपि वा ॥ २५ ॥
जीवतश्चान्त्राभ्युद्धारः श्वगृध्रैर्यमसादने । सर्पवृश्चिकदंशाद्यैर्दशद्भिश्चात्मवैशसम् ॥ २६ ॥
कृन्तनं चावयवशो गजादिभ्यो भिदापनम् । पातनं गिरिशृङ्गेभ्यो रोधनं चाम्बुगर्तयोः ॥ २७ ॥
यास्तामिस्रान्धतामिस्रा रौरवाद्याश्च यातनाः । [1]भुङ्क्ते नरो वा नारी वा मिथः सङ्गेन निर्मिता ॥ २८ ॥
अत्रैव नरकः स्वर्ग इति मातः प्रचक्षते । या यातना वै नारक्यस्ता इहाप्युपलक्षिताः ॥ २९ ॥
एवं कुटुम्बं बिभ्राण उदरम्भर एव वा । विसृज्येहोभयं प्रेत्य भुङ्क्ते तत्फलमीदृशम् ॥ ३० ॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

यातनाः संक्षेपतो दर्शयति चतुर्भिः । आदीपनं प्रज्वलनं प्राप्नोति स्वेन कृत्तमन्येन वा कृत्तं छिन्नं यत्स्वस्य मांसं तस्य भक्षणमित्यर्थः ॥ २५ ॥ ❀ ❀ आत्मनो वैशसं पीडाम् ॥ २६ ॥ ❀ ❀ भिदापनं भेदप्रापणम् ॥ २७ ॥ २८ ॥ न चैतदसंभावितमत्रापि दृश्यमानत्वादित्याह । अत्रैवेति ॥ २९ ॥ ❀ ❀ उभयं कुटुंबं स्वं देहं च ॥ ३० ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

कृत्तमिति समासांतर्गतमप्यार्षत्वादन्वेति परतः परेण वा कृत्तमित्यर्थः इति । 'पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेन' इति न्यायो नात्रानुसरणीयस्तथात्वे स्वकृत्तपदस्यात्ममांसादनपदेनान्वयोऽनौचित्योद्भावकः स्यादतः पदार्थैकदेशेनात्ममांसपदेनै-वान्वयः कार्य इति भावः । "जातिव्यक्त्याकृतयः पदार्थः" इति गौतमसूत्राज्जात्यादित्रित्वं पदार्थं मन्यमानैस्तार्किकैर्गौरनित्येत्यत्र

---

१. प्राचीने पाठे 'भुङ्क्ते नरो वा नारी वा…'इत्यारभ्य 'इहाप्युपलक्षिताः' अवधिकः सार्धैकश्लोको न ।

व्यक्तिरेवानित्यांगीक्रियते सा च पदार्थैकदेश एव । किं च । कुंडली भुंक्ते इत्यत्रापि विशेष्यस्य देवदत्तस्यैव भोजनेऽन्वयो न तु विशेषणीभूतकुंडलस्येहापि विशिष्टस्य पदार्थत्वेप्येकदेश एवान्वयातपदार्थैकदेशन्यायस्यासार्वत्रिकत्वमेवेत्यलम् ॥ २५ ॥ ❀ ❀ वैशसं हिंसां पीडां वा "हिसायां पीडने वापि वैशसं नरकेऽपि च" इति निरुक्तिः । प्राप्नोतीत्यनेन द्वितीयांतानामन्वयः ॥ २६ ॥ २७ ॥ ❀ ❀ या यातनास्ताश्च भुंक्ते मिथः संगेन पापिष्ठगृहस्थप्रसंगान्नरनार्योः पापिष्ठत्वे प्राप्ते परस्परसंगः पापातिशयहेतुरिति ॥ २८ ॥ ❀ ❀ अत्रापि राजदंडे कासांचित्प्रत्यवयवकृन्तनादियातनानां तथा स्रक्चन्दनवनितादिसुखभोगानां च दर्शनादिति ॥ २९-३० ॥

## श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

मिथः सङ्गोऽत्र पापिष्ठगृहस्थसङ्गहेतुकत्वात्पापातिशयहेतुर्ज्ञेयः ॥ २८ ॥ ❀ ❀ एतत् । यातनाप्रदर्शनम् । अत्रैव मर्त्यलोक एव ॥ २९ ॥ ❀ ❀ तत्फलं पापकृतकुटुम्बभरणादिफलम् ॥ ३० ॥

## श्रीमद्वीरराघवव्याख्या

यातनाः संक्षेपतो दर्शयति चतुर्भिः । आदीपनमिति । उल्मुकादिभिर्वेष्टयित्वा च स्वाङ्गानामादीपनं प्रज्वलनं स्वेन कृत्तं यत्स्वमांसं तस्यादनं भक्षणम् ॥ २५ ॥ ❀ ❀ यमसादने श्वगृध्रैः जीवत एव स्वस्यान्त्राणामभ्युद्धारः बहिर्निष्कासनं दशद्भिः सर्पादिभिरात्मवैशसमात्मपीडाम् ॥ २६ ॥ ❀ ❀ अवयवशः कृन्तनं छेदनं गजादिभ्यः भिदापनं भेदप्रापणमन्धुगर्तयोः निरोधनमित्येवंरूपाः ॥ २७ ॥ ❀ ❀ याश्च तामिस्रादयः पञ्चमे स्कन्धे विस्तरेण वक्ष्यमाणा यातनाः स्त्री पुरुषो वा परस्परं संगेन निर्मिताः सम्पादिताः यातनाः भुङ्क्तेऽनुभवति ॥ २८ ॥ ❀ ❀ न चैतदसम्भावितमिति मन्तव्यमत्रापि दृश्यमानत्वादित्याह । अत्रैवेति । हे मातः ! स्वर्गो नरकश्चात्रैव लोके वर्त्तते इत्याचक्षते नारक्यः नरकसम्बन्धिन्यो या यातनास्त इहाप्युपलक्षिताः दृष्टाः । वै निश्चितम् ॥ २८ ॥ ❀ ❀ एवं कुटुम्बभरणः कुटुम्बपोषणपरः उदरम्भरः स्वदेहपोषणमात्रपरो वा उभयं कुटुम्बं स्वदेहं च विसृज्य प्रेत्य परलोकं प्राप्य ईदृशमुक्तविधं केवलकुटम्बपोषणादिफलं भुङ्क्ते ॥ ३० ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

स्वानुष्ठितदुष्कृतानुसारेण नरकदुःखानुभवं वक्ति । आदीपनमित्यादिना । स्वगात्राणां स्वावयवानाम् ॥ २५ ॥ ❀ ❀ आत्मवैशसमात्मनो हिंसाम् ॥२६॥ ❀ ❀ रोधनं शृङ्खलाबन्धे विष्ठागर्ते ॥२७॥ ❀ ❀ बाहुल्यात्संक्षिप्य यातनां ब्रवीति । यास्तामिस्रेति ॥ २८ ॥ ❀ ❀ ता नातिदूरे वर्तन्ते किन्तु समीप एवेत्याह । अत्रैवेति । तदुपपादयति । यातना इति । इहास्मिँल्लोके राजादिभिर्दण्ड्येषूपलक्षिता दृष्टा इत्यर्थः । वैशब्देन दण्ड्येषु स्वर्गिष्वपीति दर्शितम् "सामीप्ये च प्रधाने च एवशब्दोऽवधारण" इति च ॥ २९ ॥ ❀ ❀ कीदृशाः पापिन एवंविधनरकभोगयोग्या इति तत्राह । एवमिति । उभयं कुटुम्बमुदरञ्च विसृज्य तयोः कुटुम्बोदरपोषणयोः फलम् ॥ ३० ॥

## श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

उद्धारमिति सम्मतः पाठः । प्राप्नोतीति योजनया पीडामित्यपि द्वितीयान्तेन व्याख्या सामान्यत्वात् ॥ २६ ॥ ❀ ❀ कृन्तनं कर्त्तनम् ॥ २७ ॥ ❀ ❀ या यातना ताश्च भुङ्क्ते । मिथः सङ्गेनेति । पापिष्ठगृहस्थप्रसङ्गान्नरनार्योस्तयोः पापिष्ठत्वे प्राप्तेः परस्परसङ्गः पापातिशयहेतुरिति ॥ २८-३१ ॥

## श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

यातना एवाह । आदीपनं प्रज्वलनमित्यादीनां प्राप्नोतीत्यनेनान्वयः । स्वेन कृत्तं छिन्नं परतः परेण वा ॥ २५ ॥ ❀ ❀ वैशसं पीडाम् ॥ २६ ॥ ❀ ❀ भिदाया विदारणस्य आपनं प्रापणम् ॥ २७ ॥ २८ ॥ ❀ ❀ न चैतदसम्भावितमत्रापि राजदण्डे कासाञ्चित् प्रत्यवयवकृन्तनादियातनानां तथा स्रक्चन्दनवनितादिसुखभोगानाञ्च दृश्यमानत्वादित्याह । अत्रैवेति ॥ २९ ॥ ❀ ❀ उभयं कुटुम्बमुदरञ्च । प्रेत्य मृत्वा ॥ ३० ॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः ।

यातना एवाह । आदीपनमिति चतुर्भिः । तत्र स्वगात्राणामादीपनं ज्वलनं प्राप्नोति कृत्तं छिन्नं यदात्मनो मांसं तस्य अदनं भक्षणं च ॥ २५ ॥ ❀ ❀ आन्त्राणामभ्युद्धारो निःसारणं यस्तमपि प्राप्नोति आत्मनो वैशसं पीडाम् ॥ २६ ॥ ❀ ❀ भिदापनं छेदप्रापणम् ॥ २७—२९ ॥ ❀ ❀ इह अत्रैव उभयं देहं कुटुम्बं च विसृज्य ईदृशं तत्फलं भुङ्क्ते ॥ ३० ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

तत्र प्रकीर्णपापानां यथापापं त्रिविधं नरकमाह त्रिभिः—आदीपनमिति सात्त्विके पापे; जीवत इति राजसे; कृन्तनमिति तामसे। ज्व[1]लदुल्मुकानि गात्रेषु वेष्टयित्वा आदीपनं ज्वालनम्। आदिशब्देन तृणवस्त्रादिभिरपि वेष्टयित्वा दाहः। महापातकानामेतत्। अन्येषां तु आत्ममांसादनं क्वापि देशे। स्वेनैव कृतं कृन्तनम्, स्वदेहादुद्धृतम्। परतोऽपि वा अन्योद्धृतं वा। स्वत एव कृते पापे, अन्यप्रेरणया कृते। जीवतः स्वस्य गात्राणां शरीरावयवानामभ्युद्धारः श्वगृध्रादिभिः कृतः। तैरेव भक्ष्यत इति विशेषः। यमसादन इति। सर्वतो भयानकत्वं सूचितम्। श्वानः पूर्वमुक्ताः। गृध्राः पापण्डाभिमानिनः। सर्पवृश्चिकदंशाद्यैरिति[2]। दंशाः स्थूलाः मशकाः। आदिशब्देन मत्कुणादयः। आत्मवैशसं पूर्वं स्वमारणम्। तैरपि कृतो गात्राभ्युद्धार इति योजना। इक्षुदण्डानामिवावयवशः कृन्तनम्। गजव्या[3]घ्रादिभ्यो निपातनं भक्षणार्थं प्रक्षेपः। गिरिशृङ्गेभ्यश्चाऽधःपातनम्, जले च निरोधनम्, गर्ते च। यथायथमेतानि पापफलानि ॥ २५-२७ ॥ ❀ ❀ प्रकीर्णकान्युक्त्वा मुख्यान्याह—यास्तामिस्रेति। अष्टाविंशतियातना या उक्ताः, ता भुङ्क्ते। तासां लक्षणमुत्तरत्र वक्ष्यते। स्त्रिया भोग्यत्वेन नरकानु[4]भवाभावमाशङ्क्याऽऽह—नारी वेति। भोग्यत्वांशेऽपि नरकसम्बन्धार्थमाह—मिथः सङ्गेनेति। अन्योन्यसम्बन्धजनितपापेन निर्मिता यातनाः ॥ २८ ॥ ❀ ❀ भयमात्रत्वमित्याशङ्क्य लोकदृष्टान्तेन सत्यत्वं साधयति—अत्रैव नरकः स्वर्ग इति। इष्टाधिकारिणां राज्यादयः, अनिष्टकारिणां राजदण्डादयश्च प्रत्यक्षमुपलभ्यन्ते। एतत्सर्वं यतोऽस्मिन्नेव लोके दृश्यत इत्यत्रत्या यातनास्तदुपलक्षिकाः ॥ २९ ॥ ❀ ❀ एतत्सर्वं कुटुम्बपोषनिमित्तमेवेत्याह—एवमिति। यस्य वा कुटुम्बं नाऽस्ति, सोऽप्येवमनुभवतीत्याह—उदरम्भरिरेव चेति। इहैव कुटुम्बमुदरं च त्यक्त्वा, पश्चात् प्रेत्य, तदुभयपोषनिमित्तं फलमीदृशमनुभवति ॥ ३० ॥

### श्रीगिरिधरकृता बालप्रबोधिनी।

ता यातना एव सङ्क्षेपतो दर्शयति—आदीपनमिति चतुर्भिः। उल्मुकादिभिः ज्वलत्काष्ठादिभिः वेष्टयित्वा स्वगात्राणामादीपनं प्रज्वालनम्। क्वापि स्वेन कृत्तं छिन्नं परतोऽपि वा अन्येन वा छिन्नं यत्स्वमांसं तस्यादनं भक्षणम् ॥ २५ ॥ ❀ ❀ यमसादने यमपुरे श्वगृध्रैर्जीवत एव स्वस्यान्त्राणां अभ्युद्धारः बहिर्निष्कासनम्। जीवत इत्यादीपनादिषु सर्वत्र द्रष्टव्यं मृतस्य पीडाऽसम्भवात्। दशद्भिः सर्पादिभिः आत्मनो वैशसं पीडां प्राप्नोति ॥ २६ ॥ ❀ ❀ अवयवशोऽङ्गानां कृन्तनं शस्त्रैश्छेदनम्। गजादिभ्यः भिदापनं अङ्गावयवानां भेदप्रापणम्। गिरिशृङ्गेभ्यः पातनम्। अम्बुगर्त्तयोः रोधनं च ॥ २७ ॥ ❀ ❀ इत्युक्ताश्च तामिस्रादयः पञ्चमे विस्तरेण वक्ष्यमाणा यातना मिथः परस्परं सङ्गेन आसक्त्या निर्मिताः पापाचारेण सम्पादितास्ता नरो वा नारी वा भुङ्क्ते अनुभवति ॥ २८ ॥ ❀ ❀ न चैतदसम्भावितमत्रापि दृश्यमानत्वादित्याह—अत्रैवेति। हे मातः स्वर्गो नरकश्च अत्रैव लोके वर्त्तते इति प्रचक्षते विवेकिनो वदन्ति। कुतस्तत्राह—या एव यातना नारक्यो नरकसम्बन्धिन्यस्ता इह लोकेऽपि कीटकादावुपलक्षिताः प्रत्यक्षा एव ॥ २९ ॥ ❀ ❀ कुटुम्बं विभ्राणः कुटुम्बपोषणपर उदरम्भरः स्वदेहपोषणमात्रपरो वा एवमुक्तप्रकारेण उभयं कुटुम्बं देहं चेहैव विसृज्य त्यक्त्वा प्रेत्य यमलोकं प्राप्य तस्य तत्पोषणार्थकृतस्य पापस्येदृशं फलं भुङ्क्ते ॥ ३० ॥

### हिन्दी अनुवाद

वहाँ उसके शरीरको धधकती लकड़ियों आदिके बीचमें डालकर जलाया जाता है, कहीं स्वयं और दूसरोंके द्वारा काट-काटकर उसे अपना ही मांस खिलाया जाता है ॥ २५ ॥ ❀ ❀ यमपुरीके कुत्तों अथवा गिद्धों द्वारा जीतेजी उसकी आँतें खींची जाती हैं। साँप,बिच्छू और डाँस आदि डँसनेवाले तथा डंक मारनेवाले जीवोंसे शरीरको पीड़ा पहुँचायी जाती है ॥ २६ ॥ ❀ ❀ शरीरके काटकर टुकड़े-टुकड़े किये जाते हैं। उसे हाथियोंसे चिरवाया जाता है, पर्वतशिखरोंसे गिराया जाता है अथवा जल या गढ़ेमें डालकर बन्द कर दिया जाता है ॥ २७ ॥ ❀ ❀ ये सब यातनाएँ तथा इसी प्रकार तामिस्र, अन्धतामिस्र एवं रौरव आदि नरकोंकी और भी अनेकों यन्त्रणाएँ, स्त्री हो या पुरुष, उस जीवको पारस्परिक संसर्गसे होनेवाले पापके कारण भोगनी ही पड़ती है ॥ २८ ॥ ❀ ❀ माताजी ! कुछ लोगोंका कहना है कि स्वर्ग और नरक तो इसी लोकमें है, क्योंकि जो नारकी यातनाएँ हैं, वे यहाँ भी देखी जाती हैं ॥ २९ ॥ ❀ ❀ इस प्रकार अनेक कष्ट भोगकर अपने कुटुम्बका ही पालन करनेवाला अथवा केवल अपना ही पेट भरनेवाला पुरुष उन कुटुम्ब और शरीर—दोनोंको यहीं छोड़कर मरनेके बाद अपने किये हुए पापोंका ऐसा फल भोगता है ॥ ३० ॥

**एकः प्रपद्यते ध्वान्तं हित्वेदं स्वकलेवरम्। कुशलेतरपाथेयो भूतद्रोहेण यद् भृतम् ॥ ३१ ॥**
**दैवेनासादितं तस्य शमलं निरये पुमान्। भुङ्क्ते कुटुम्बपोषस्य हृतवित्त इवातुरः ॥ ३२ ॥**

---

१. ज्वलनवत् ग। २. अपि ख. ग. च। ३. व्यालादिभ्यः घ। ४. नरकानुभावाभावम् क. ख. ङ।

केवलेन ह्यधर्मेण कुटुम्बभरणोत्सुकः। याति जीवोऽन्धतामिस्रं चरमं तमसः पदम् ॥ ३३ ॥
अधस्तान्नरलोकस्य यावतीर्यातनाद'यः। क्रमशः समनुक्रम्य पुनरत्राव्रजेच्छुचिः ॥ ३४ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां तृतीयस्कन्धे कापिलेयो पाख्याने कर्मवि'पाको नाम त्रिंशोऽध्यायः॥३०॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

पापार्जितं धनं भुंजते बहवः कर्तैव नरकं यातीत्याह एक इति भूतद्रोहेण यद्भृतं तत्स्थूलं स्वकलेवरमिहैव हित्वा। कुशलादितरत् पापं तदेव पाथेयं भोग्यं यस्य ॥ ३१ ॥ ❀ ❀ ननु पापमपि विहाय गच्छतु तत्राह। दैवेनेति। तस्य कुटुंबपोपणस्य शमलं पापं दैवेनेश्वरेण प्रापितं भुंक्ते ॥ ३२ ॥ ❀ ❀ ननु कुटुंबपोषणं विहितमेव तत्राह। केवलेनेति। तमसो नरकस्य चरमं पदं स्थानम् ॥ ३३ ॥ ❀ ❀ पुनर्मनुष्यशरीरप्राप्तिप्रकारमाह। नरलोकस्य मनुष्यदेहस्य प्राप्तेरधस्तादर्वाग्यावत्यो यातनाः आदिशब्देन श्वसूकरादियोनयश्च यास्ताः सर्वाः क्रमेण संप्राप्य भोगेन क्षीणपापः शुचिः सन्नत्र पुनर्नरत्वं प्राप्नोतीत्यर्थः ॥ ३४ ॥

इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे तृतीयस्कन्धे त्रिंशोऽध्यायः ॥ २२ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

पाथेयं पथि भोज्यं शंबलमित्यर्थः ॥ ३१ ॥ ❀ ❀ अत्राशंकते नन्विति ॥ ३२ ॥ ❀ ❀ पुनराशंकते—नन्विति ॥ ३३ ॥ ❀ ❀ इत्यर्थ इति। "चतुरशीतिसाहस्रं भुक्त्वा मानुष्यमाप्नुयात्" इत्युक्तेरिति भावः। सहस्राणां समूहः साहस्रं लक्षमित्यर्थः ॥ ३४ ॥

इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे तृतीयस्कन्धे त्रिंशोऽध्यायः ॥ ३० ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

यत्कलेवरं भृतं पोषितमिदं तत् यच्छब्दसान्निध्ये इदमादिशब्दानां तच्छब्दार्थत्वात् ॥ ३१ ॥ ❀ ❀ ईश्वरेण प्रापितमित्युक्तेऽपि नेश्वरस्य नैर्घृण्यं शङ्क्यमीश्वरस्तु पर्जन्यवद् द्रष्टव्य इति न्यायात् ॥ ३२ ॥ ३३ ॥ ❀ ❀ अत्र नरजातौ मर्त्यलोके गवादिदेहानामपि सत्त्वात्तद्व्यवच्छेदार्थं नरत्वं प्राप्नोतीत्यार्थिकोऽर्थः ॥ ३४ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीराधारमणदासगोस्वामिविरचितदीपिन्याख्यदीपिका-टिप्पण्यां त्रिंशोऽध्यायः ॥ ३० ॥

### श्रीमद्वीरराघवव्याख्या

पापार्जितं धनं भुञ्जते बहवः कर्तैव नरकं यातीत्याह। एक इति। भूतद्रोहेण यद्भृतं पुष्टं तत्स्वकलेवरं चेहैव हित्वा कुशलात्पुण्यादितरत्पापं तदेव पाथेयं भोग्यं यस्य सः अध्वानं निरयमार्गमेक एव प्रपद्यते ॥ ३१ ॥ ❀ ❀ ननु पापमपि विहाय गच्छतु तत्राह। दैवेनेति। तस्य कुटुम्बपोषणस्य शमलं पापं दैवेनेश्वरेण प्रापितं निरये नरके पुमान् भुङ्क्ते अपहृतवित्त इवातुरः ॥ ३२ ॥ ❀ ❀ ननु कुटुम्बपोषणं विहितमेव तत्राह केवलेन ईषदपि धर्मलेशरहितेनाधर्मेण कुटुम्बभरणासक्तः जीवः तमसो नरकस्य चरमं पदं स्थानमन्धतामिस्राख्यं याति ॥ ३३ ॥ ❀ ❀ पुनर्मनुष्यशरीरप्राप्तिमाह। अधस्तादिति। नरलोकस्य मनुष्यदेहप्राप्तेरधस्तादर्वाग्यावत्यो यातनास्ताः क्रमेण सर्वाः संप्राप्य शुचिः भोगेन कर्मक्षयाच्छुचिः सन्नत्र पुनर्नरत्वं प्राप्नोतीत्यर्थः ॥ ३४ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कंधे श्रीमद्वीरराघवाचार्यकृतभागवतचंद्रचंद्रिकायां त्रिंशोऽध्यायः ॥ ३० ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

यः पापकृत्स एक एव नारकं पन्थानमाप्नोति नान्य इत्याह। एक इति। कुशलादितरत्पापं तदेव पाथेयं शम्बलं यस्य स तथा यत्कलेवरं भूतद्रोहेण भृतं पोषितम् ॥ ३१ ॥ ❀ ❀ ननु देहादिवत्पापमपि परित्यज्य गच्छति किं नेत्याह। दैवेनेति। कुटुम्बपोषणस्य तस्य यच्छमलं दैवेन पुण्यपापयोर्नियन्त्रा हरिणासादितं प्रापितं पुमान्निरये तदेव भुङ्क्ते परित्यक्तुं न शक्नोति दैवाधीनत्वात् यथा हृतवित्त आतुरो वा दैवोपनीतं दुःखं भुङ्क्ते तथेति ॥ ३२ ॥ ❀ ❀ यास्तामिस्राद्या यातनाः प्रस्तुता-स्तासां मध्ये तामिस्रान्धतामिस्रप्राप्तियोग्यं तत्साधनं चाह। केवलेनेति। योऽसुरप्रकृतिर्जीवः केवलं नैकेनाधर्मेण हरिभक्तद्वेष-

१. प्रा० पा०—नास्तु ताः। २. प्रा० पा०—के त्रिंश०।

लक्षणेन तमसः पदमन्धकारस्यैकस्थानं चरमं पश्चात्तनं पुनरावृत्तिरहितमन्धतामिस्रं तामिस्रप्राप्तियोग्यं यातीत्यन्वयः। हिशब्दः अनुत्थानवाची दुःखानुभवे तारतम्यवाची वा "तामिस्रश्चान्धतामिस्रौ द्वौ नित्यौ सम्प्रकीर्तितौ" इति वाक्यं सूचितं तामिस्रं यातीत्येतदर्थसूचको वा॥ ३३॥ ❀ ❀ अन्येषां पुनरावृत्तिरस्तीत्याह। अधस्तादिति। अत्र मनुष्यलोके पुनः पुनः स्वकर्मानुसृतां योनिमायाति पापफलभोगाच्छुचिः पुनः स्वर्गं याति अशुचिश्चेन्नरकं याति "पुनर्दरिद्रः पुनरेव पापी" इति वचनात्॥३४॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्यां त्रिंशोऽध्यायः॥ ३०॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

दैवेनेत्युक्तेऽपि नेश्वरस्य नैर्घृण्यमीश्वरस्तु पर्जन्यवद् द्रष्टव्य इति न्यायात्॥ ३२—३४॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भस्य त्रिंशोऽध्यायः॥ ३०॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

कुशलेतरत् पापमेव पाथेयं मरणपथभोग्यं यस्य सः। भूतद्रोहेण यद्भृतं पुष्टीकृतं तत् स्थूलं कलेवरं हित्वा॥ ३१॥ ❀ ❀ तस्य पापकृतस्य कुटुम्बपोषस्य शमलं मालिन्यं दैवप्रापितं कुटुम्बविरहित एव भुङ्क्ते हृतवित्त इव॥ ३२॥ ❀ ❀ तमसो नरकस्य पदं स्थानम्॥ ३३॥ ❀ ❀ यावत्यो यातनाः यावच्छब्देन श्वसूकरादियोनयो यास्ताः क्रमेण प्राप्य भोगेन क्षीणपापः शुचिः सन् पुनर्नरत्वं प्राप्नुयात्॥ ३४॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्। त्रिंशोऽध्यायस्तृतीयस्य सङ्गतः सङ्गतः सताम्॥३०॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः।

भूतद्रोहेण यद्भृतं तदिदं कलेवरं इहैव हित्वा कुशलेतरत् पापमेव पाथेयं पथि भोग्यं यस्य स एकस्त्यक्तकुटुम्बः ध्वान्तं नरकं प्रपद्यते प्राप्नोति॥ ३१॥ ❀ ❀ तस्य भूतद्रोहेण कुटुम्बपोषस्य शमलं पापं दैवेनेश्वरेण आसादितमर्पितं भुङ्क्ते॥ ३२॥ ❀ ❀ तमसो नरकस्य चरममवधिभूतं पदं स्थानमन्धतामिस्रं केवलेन अधर्मेण याति अधर्ममिश्रिताधर्मेण तु तत्तारतम्यानुरोधेन तमसः पदानि यातीति भावः॥ ३३॥ ❀ ❀ नरलोकस्य नरदेहप्राप्तेः अधस्तादर्वाक् यावत्यो यातना आदिना शूकरादियोनयः ताः स्वपापानुरूपाः क्रमेण सम्प्राप्य भोगेन क्षीणपापः शुचिः सन् अत्र पुनर्नरलोकं व्रजेत्॥ ३४॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कंधे श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे त्रिंशोऽध्यायः॥ ३०॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

सर्वेषां पापजनकद्रव्यानुभवेऽपि एक एव तत्फलं भुङ्क्ते इत्याह—एक इति। कलेवरसहितमेतत्सर्वं परित्यज्य, एक एव यमलोकाध्वानं प्रपद्यते, कुशलपाथेयः, इतरपाथेयो वा। उभयविधानामपि प्रवृत्तिपराणां यमलोक एव गमनमिति ज्ञापयितुं कुशलेतरपदम्। पाथेयं पथि शम्बलम्। भूतानां प्राणिनां द्रोहेण यद्भृतम्, तदवश्यं भोक्तव्यमिति ज्ञापनार्थं पुनरुक्तम्॥ ३१॥ ❀ ❀ ननु यमलोके वा प्रायश्चित्तं कुर्यात्, विवादं वा, 'न मयैव भक्षितम्' इति। तथा सति नरको न स्यादित्याशङ्क्याऽऽह—दैवेनेति। तत्र भगवदिच्छयैव तस्य शमलमुपस्थितम्, भुङ्क्ते च; न तु तदन्यथा कर्तुं शक्यते। शमलं पापफलम्। निरये नरकभूमौ। पुमानिति स्वतन्त्रः। ननु भगवदिच्छया चेत् कस्य दोषोऽयमित्याशङ्क्याऽऽह—कुटुम्बपोषस्येति। अन्तर्दुःखमपि तस्येत्याह—हृतवित्त इति। यथा रोगग्रस्तदेहो वित्ते गते दुःखमनुभवति, एवं कुटुम्बे देहेऽपि गते तद्वासनाया विद्यमानत्वात् शमलं भुङ्क्ते। धर्माधर्माभ्यां कुटुम्बोषकस्यैतदुक्तम्॥ ३२॥ ❀ ❀ केवलाधर्मेण कुटुम्बपोषकस्य फलमाह—केवलेनेति। पापोपार्जितेनैव द्रव्येण, व्याध इव, घातक इव वा, यः कुटुम्बं पोषयति; उत्सुको वा; सोऽन्धतामिस्रं याति। अस्मादन्धतामिस्रात् तद्भिन्नं दैत्यानामन्ते फलरूपम्। तदाह—चरममिति। तत्र गतो न निवर्तते। तत्र च निवृत्त्यभावार्थमाह—तमसः पदमिति॥ ३३॥ ❀ ❀ तत्र कल्पान्तं स्थित्वा पुनरायातीत्याह—अधस्तादिति। नरकलोकस्याऽधस्तात् यावतीर्यातनाः, ताः सर्वा एव क्रमेण, ऊर्ध्वमुखः सन्, अनुभूय, न तु सर्वाः सकृत्, किन्तु समनुक्रम्य। एकं नरकमारभ्य, तत् सम्यक् भुक्त्वा, पुनर्नरकान्तरं भोक्तुमारभत इत्यर्थः। पुनरत्रैव लोके शुद्धो भूत्वा आव्रजेदित्यर्थः॥ ३४॥

इति श्रीभागवतसुबोधिन्यां श्रीमल्लक्ष्मणभट्टात्मजश्रीमद्वल्लभदीक्षितविरचितायां तृतीयस्कन्धे त्रिंशाध्यायविवरणम्॥३०॥

### श्रीगिरिधरकृता बालप्रबोधिनी

पापार्जितं धनं बहवो भुञ्जते नरकं तु कर्त्तैव यातीत्याह—एक इति । भूतद्रोहेण प्राणिपीडया यद्भृतं पुष्टं तदिदं स्वकलेवरं स्थूलं शरीरं कुटुम्बं च इहैव हित्वा कुशलात् पुण्यात् इतरत् पापं तदेव पाथेयं पथि संसारमार्गे भोग्यं यस्य सः एकः स्वयमेव ध्वान्तं नरकं प्रपद्यते प्राप्नोति ॥ ३१ ॥ ❀ ❀ ननु कुटुम्बादिवत् पापमपीहैव विहाय गच्छतु तथा च नरकादि-दुःखं न स्यादित्यत आह—दैवेनेति । तस्य कुटुम्बपोषस्य शमलं पापं पापफलं दैवेन परमेश्वरेण आसादितं प्रापितं निरये नरके पुमान् भुङ्क्ते ईश्वराधीनत्वात् पापत्यागेऽस्य सामर्थ्यं नास्तीत्याशयः । ननु तर्हि तदा भगवच्छरणमेव कुतो न गच्छति ? तथा सति सर्वपापनिवृत्तिः सर्वदुःखनिवृत्तिश्च स्यादित्याशङ्कयाह—हृतवित्त इवातुर इति, दुःखेन विवशत्वात्तदा तदुपायं न पश्यती-त्याशयः ॥ ३२ ॥ ❀ ❀ ननु कुटुम्बपोषणमपि विहितमेव कथं ततो नरकपात इति चेत्, सत्यम्, तथाप्यधर्मेस्तु न विहितोऽतस्तद्भवतीत्याह—केवलेनेति । केवलेनाधर्मेण कुटुम्बभरणे उत्सुकः आसक्तो जीवः तमसो नरकस्य चरममन्तिमं पदं स्थानं अन्धतामिस्राख्यं याति । अत्र सन्देहो नास्तीत्याह—हीति । यथा कथञ्चिद्धर्मेण प्रायश्चित्ते सति यातनाल्पत्वमपि स्यादिति सूचयितुं केवलेनेत्युक्तम् ॥ ३३ ॥ ❀ ❀ पुनर्मनुष्यत्वप्राप्तिमाह—अधस्तादिति । नरलोकस्य मनुष्यदेहप्राप्तेः अधस्तादर्वाक् यावतीर्यावत्यो यातनाः आदिपदेन श्वसूकरादियोनयश्च यास्ताः सर्वाः क्रमशः क्रमेण समनुक्रम्य सम्प्राप्य तत्र दुःखभोगेन पापक्षयाच्छुचिः सन् पुनरत्र नरत्वमाव्रजेत् प्राप्नोतीत्यर्थः ॥ ३४ ॥

इति श्रीवल्लभाचार्यवंश्यगोपालसूनुना ॥ श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा ॥ १ ॥
श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये ॥ श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी ॥ २ ॥
रचिता च तृतीयेऽत्र मोक्षसर्गनिरूपणे ॥ त्रिंशोऽपि विवृतिं यातस्तामसीगतिरूपकः ॥ ३ ॥

### हिन्दी अनुवाद

अपने इस शरीरको यहीं छोड़कर प्राणियोंसे द्रोह करके एकत्रित किये हुए पापरूप पाथेयको साथ लेकर वह अकेला ही नरकमें जाता है ॥ ३१ ॥ ❀ ❀ मनुष्य अपने कुटुम्बका पेट पालनेमें जो अन्याय करता है, उसका दैवविहित कुफल वह नरकमें जाकर भोगता है । उस समय वह ऐसा व्याकुल होता है, मानो उसका सर्वस्व लुट गया हो ॥ ३२ ॥ ❀ ❀ जो पुरुष निरी पापकी कमाईसे ही अपने परिवारका पालन करनेमें व्यस्त रहता है, वह अन्धतामिस्र नरकमें जाता है—जो नरकोंमें चरम सीमाका कष्टप्रद स्थान है ॥ ३३ ॥ ❀ ❀ मनुष्य-जन्म मिलनेके पूर्व जितनी भी यातनाएँ हैं तथा शूकर-कूकरादि योनियोंके जितने कष्ट हैं, उन सबको क्रमसे भोगकर शुद्ध हो जानेपर वह फिर मनुष्ययोनिमें जन्म लेता है ॥ ३४ ॥

**३० वाँ अध्याय समाप्त**

# एकत्रिंशोऽध्यायः

श्रीभगवानुवाच

कर्मणा दैवनेत्रेण जन्तुर्देहोपपत्तये । स्त्रियाः प्रविष्ट उदरं पुंसो रेतःकणाश्रयः ॥ १ ॥
कललं त्वेकरात्रेण पञ्चरात्रेण बुद्बुदम् । दशाहेन तु कर्कन्धूः पेश्यण्डं वा ततः परम् ॥ २ ॥
मासेन तु शिरो द्वाभ्यां बाह्वङ्घ्र्याद्यङ्गविग्रहः । नखलोमास्थिचर्माणि लिङ्गच्छिद्रोद्भवस्त्रिभिः ॥३॥
चतुर्भिर्धातवः सप्त पञ्चभिः क्षुत्तृडुद्भवः । षड्भिर्जरायुणा वीतः कुक्षौ भ्राम्यति दक्षिणे ॥ ४ ॥

श्रीधरस्वामिविरचिता भावार्थदीपिका

एकत्रिंशे विमिश्रैस्तु पुण्यपापैरिहांतरा । मनुष्ययोनिसंप्राप्तिर्वर्ण्यते राजसी गतिः ॥ १ ॥
पुनरत्राव्रजेदित्युक्तं तदेव विशेषतो दर्शयति । कर्मणा पूर्वकृतेन दैवमीश्वरस्तदेव नेत्रं नेतृ प्रवर्तकं यस्य प्रविष्टो भवति ॥ १ ॥ ❀ ❀ कललं शुक्रशोणितमिश्रितं भवति बुद्बुदं वर्तुलाकारम् । कर्कंधूर्बदरीफलं तदाकारं कठिनम् । पेशीमांसपिंडाकारम् अंडं वा योन्यंतरे ॥ २ ॥ ❀ ❀ बाह्वंघ्र्यादीनामंगानां विग्रहो विभागः लिंगं च छिद्राणि च तेषामुद्भवः ॥ ३ ॥ ❀ ❀ जरायुणा गर्भवेष्टनेन वीतः प्रावृतः ॥ ४ ॥

श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

इहांतरा अत्र लोकमध्ये भारते वर्षे मनुष्ययोनेः प्राप्तिर्यस्यां राजसगतौ सा तथा ( १ ) अत्र गर्भोपनिषदर्थं दर्शयति— "भुक्तान्नादिषड्विधरसाच्छोणितं शोणितान्मांसं मांसान्मेदो मेदसः स्नायवः स्नायुभ्योऽस्थीन्यस्थिभ्यो मज्जा मज्जातः शुक्रं शुक्रशोणितसंयोगादावर्त्तते गर्भो हृदि व्यवस्थां नयति । तदिदं शुक्रमृतुकाले प्रयोगादेकरात्रोषितं कललं भवति सप्तरात्रोषितं बुद्बुदमर्द्धमासाभ्यंतरे पिंडं रक्तं कठिनं, मासद्वयेन शिरो ग्रीवा, मासत्रयेण पादप्रदेशश्चतुर्थे गुल्फौ जठरं कटिप्रदेशः, पञ्चमे पृष्ठवंशः, षष्ठे मुखनासिकाक्षिश्रोत्राणि, सप्तमे जीवेन संयुक्तोऽष्टमे सर्वलक्षणसंपूर्णः पितू रेतोऽतिरेकात्पुरुषो, मातू रेतोऽतिरेकात्स्त्री, उभयबीजतुल्यत्वान्नपुंसको, व्याकुलितमनसोंधाः खंजाः कुब्जा वामनका भवंत्यन्योन्यवायुपरिपीडितशुक्रद्वैविध्याद् द्विधातनुः स्यात्ततो युग्माः प्रजायंते पञ्चात्मकः समर्थः पंचात्मिका चेतसा बुद्धिर्गंधरसादिज्ञानाक्षराक्षरमोङ्कारं चिंतयतीति तदेकाक्षरं ज्ञात्वाष्टौ प्रकृतयः षोडश विकाराः शरीरे तस्यैव देहिनः अथ मात्राशितपीतनाडीसूत्रगतेन प्राण आप्यायते । नवमे मासि सर्वलक्षणज्ञानकरणसंपूर्णो भवति पूर्वजातीः स्मरति । शुभाशुभं च कर्म विंदति "पूर्वयोनिसहस्राणि दृष्ट्वा चैव ततो मया । आहारा विविधा भुक्ताः पीता नानाविधाः स्तनाः ॥ जातश्चाहं मृतश्चाहं जन्म चैवं पुनः पुनः । मृतश्चाहं पुनर्जातो जातश्चाहं पुनर्मृतः ॥ नानायोनिसहस्राणि मयोषितानि यानि वै । मातरो विविधा दृष्टाः पितरः सुहृदस्तथा ॥ अवाङ्मुखः पीडितोहं जंतुभिश्च समन्वितः । मया परिजनस्यार्थे कृतं कर्म शुभाशुभम् ॥ एकाकी तेन दह्येहं गतास्ते फलभोगिनः । अहो दुःखोदधौ मग्नो न पश्यामि प्रतिक्रियाम् ॥ यदि योन्या प्रमुच्येहं प्रपद्ये परमेश्वरम् । अशुभक्षयकर्त्तारं फलमुक्तिप्रदायकम् ॥ यदि योन्याः प्रमुच्येहं तत्प्रपद्ये नारायणम् । अशुभक्षयकर्त्तारं फलमुक्तिप्रदायकम् ॥ यदि योन्याः प्रमुच्येऽहं तत्सांख्यं योगमभ्यसे । अशुभक्षयकर्तारं फलमुक्तिप्रदायकम् ॥ यदि योन्याः प्रमुच्यामि ध्याये ब्रह्म सनातनम् ॥ अथ योनिद्वारं संप्राप्तो यंत्रेणापीड्यमानो महता दुःखेन जातमात्रस्तु वैष्णवेन वायुना संस्पृष्टस्तदानुस्मरति जन्ममरणानि न च कर्म शुभाशुभं विंदति" इति गर्भोपनिद्व्याख्यानरूपोऽध्यायोऽयमिति स्पष्टार्थत्वान्न व्याख्यातेति । "अन्याधिष्ठिते पूर्ववदभिलापात्" ( अन्यैर्जीवैरधिष्ठिते व्रीह्यादौ संसर्गमात्रमनुशायिनां पूर्ववदाकाशादिवदभिलापादित्यर्थः ) इति सूत्रात् जीवानां वर्षधाराद्वारा पृथिवीप्रवेशानंतरं पठ्यते "त इह व्रीहियवा ओषधिवनस्पतयस्तिला माषा इति जायंते" इति श्रुतेः । ते जीवाः "रेतःसिग्योगोथ" इति सूत्राच्च । अथ व्रीह्यादिभावानंतरमनुशायिनां रेतः सिंचतीति रेतस्सिक् तद्योगस्तद्भावः श्रुतावाम्नायते "यो रेतः सिंचति तद्भूय एव भवति" इति श्रुतेः । अनुशयी व्रीह्याद्यङ्गद्वारा पुरुषं प्रविष्टस्तद्भूयो भवति तद्भावं गच्छतीति न ह्यत्रानुशयिनो रेतःसिग्भावो मुख्योस्ति इदानीं पुरुषप्रविष्टत्वेनाप्राप्तयौवनत्वात् । अतस्तत्संसर्गो वक्तव्यः । तथा च व्रीह्यादावपि संसर्ग एवाकाशादावपि संसर्गमात्रावगतेरित्यर्थः । 'केचिद्दैवं वदंत्यन्ये' इति ध्रुवोपाख्यानोक्तेर्दैवमीश्वरः तदेव दैवमेव ॥ १ ॥ ❀ ❀ योन्यंतरे जरायुभिन्नपक्ष्यादियोनौ चांडमेव भवतीति ततो दशाहात्परमग्रे इत्यग्रिमेणान्वेति ॥ २ ॥ ❀ ❀ द्वाभ्यां मासा-

भ्याम्। लिंगं पुंस्त्वादि। छिद्राणींद्रियद्वाराणि ॥ ३ ॥ ❀ ❀ धातवस्त्वगादयः। दक्षिणे इति पुरुषमधिकृत्योक्तेः। "पुंगर्भो दक्षिणे कुक्षौ वामे स्त्रीगर्भ इष्यते। मध्यभागे षंढगर्भः" इति मार्कंडेयोक्तेः ॥ ४ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

तदेव। पुनरत्राव्रजनमेव रेतःकणाश्रयः सन्नुदरं प्रविष्टो भवतीति साध्यक्रियाध्याहारः ॥ १ ॥ ❀ ❀ तद्वासनामयं शरीरं शुक्रशोणितमिश्रं भवति एवं परत्रापि योन्यन्तरे पक्षिशरीरे ततः परं बदरीफलवत्काठिन्यानन्तरम् ॥ २ ॥ ❀ ❀ लिङ्गं पुंस्त्वाद्यभिव्यञ्जकचिह्नम् "लिङ्गं चिह्नेऽनुमाने च" इति विश्वः, इन्द्रियाणां चिह्नानि च ॥ ३ ॥ ❀ ❀ "पुत्री दक्षिणकुक्षौ स्याद्वामे कन्या भवेद् ध्रुवम्" इति प्रसिद्धेः, दक्षिणे इति पुंप्राधान्येनोक्तम् ॥ ४॥

### श्रीमद्वीरराघवव्याख्या

एवं यौवनजरामरणानन्तरक्लेशाः कथिताः। अथ गर्भजन्मादिक्लेशानाह कपिलः। तत्र पुनरत्राव्रजेदित्युक्तं तदेव विशेषतो दर्शयति। कर्मणेति। दैवमीश्वरः स एव नेतृ प्रवर्त्तकं यस्य तेन पूर्वकृतेन कर्मणा जन्तुर्जीवः देहोपपत्तये देहप्राप्तये पुंसः कस्यचित् पुरुषस्य रेतःकणाश्रयः इदमिष्टादिकारिणोऽप्युपलक्षणं सोऽपि स्वपुण्यफलभोगावसाने रेतोद्वारा स्त्रिया उदरं प्रविष्टो भवति। रेतःकणाश्रयः रेतःकणः आश्रयो यस्य व्रीह्याद्योषधिद्वारा रेत आश्रित्य रेतोद्वारा स्त्रिया उदरं प्रविष्टो भवति। ननु भोगेन सर्वकर्मणां विनष्टत्वात् कर्मणा दैवनेत्रेणेति कथमेतदुच्यते श्रुतिरपि ? कृत्स्नकर्मफलोपभोगमाह "यावत् सम्पातमुषित्वा अथैतमेवाध्वानं पुनर्निवर्तन्त" इति सम्पतन्त्यनेन स्वर्गनरकादिकमिति सम्पातः कर्मोच्यते श्रुत्यन्तरं च

'प्राप्यान्तं कर्मणस्तस्य यत्किञ्चेह करोत्ययम्। तस्माल्लोकात्पुनरेत्यस्मै लोकाय कर्मणे ॥'

इति अत इदं विप्रतिषिद्धं कृत्स्नकर्मोपभोगेन शुचित्वं पुनरत्रागमनञ्चेति। मैवम्। अभुक्तफलानामकृतप्रायश्चित्तानाञ्च कर्मणां कर्मान्तरफलानुभवेन नाशासम्भवात्तेभ्यः पुनरत्रागमनोपपत्तेः। शुचित्वस्योपभुक्तफलकर्मविषयत्वाच्च तथाचाभुक्तफलैः कर्मभिर्विशिष्टः पुनरायातीति श्रुतिः स्मृतिश्चाह। श्रुतिस्तावत् "य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन् ब्राह्मणयोनिं क्षत्रिययोनिं वैश्ययोनिं वा अथ य इह कपूयचरणा अभ्याशो ह यत्ते कपूयां योनिमापद्येरन् श्वयोनिं सूकरयोनिं चण्डालयोनिं वा" इति अमुष्माल्लोकाद्ये अभ्याशः अभ्यागन्तारः तेषां मध्ये ये रमणीयकर्माणः ते रमणीयां ब्राह्मणादियोनिं कपूयचरणाः कुत्सितकर्माणः कुत्सितां श्वसूकरादियोनिं प्रतिपद्यन्त इत्यर्थः। स्मृतिरपि "वर्णा आश्रमाश्च स्वकर्मनिष्ठाः प्रेत्य कर्मफलमनुभूय ततः शेषेण विशिष्टदेशजातिकुलरूपायुःश्रुतवृत्तवित्तसुखमेधसो जन्म प्रतिपद्यन्ते विश्वञ्चो विपरीता नश्यन्ति तथा तत्परिवृत्तौ कर्मफलशेषे जातिं रूपं वर्णम्। इत्यादिका यावत् सम्पातमिति फलदानप्रवृत्तकर्मविशेषविषयम् "यत्किञ्चेह करोत्ययम्" इत्यपि तद्विषयमेव भवति ॥ १ ॥ ❀ ❀ तज्जीवेनाश्रितं रेतः स्त्रीया उदरं प्रविष्टं सदेकरात्रेण कललं शोणितमिश्रं भवति पञ्चरात्रेण बुद्बुदं वर्तुलं भवति दशाहानन्तरं कर्कन्धूः बदरीफलाकारं किञ्चित्कठिनं पेशी मांसपिण्डाकारम् अण्डं वा तिर्यगादियोन्यन्तरापेक्षया इदमुक्तम् ॥ २ ॥ ❀ ❀ ततो मासेन शिरः द्वाभ्यां मासाभ्यां बाह्वाद्यङ्गानां विग्रहः विभागो भवति ततस्त्रिभिर्मासैर्नखादीनि लिङ्गं छिद्राणि च तेषामुद्भवः ॥ ३ ॥ ❀ ❀ ततश्चतुर्भिर्मासैः सप्त धातवः ततः पञ्चभिः क्षुत्तृट्समुद्भवः ततः षड्भिर्मासैर्जरायुणा गर्भवेष्टनेन वीतः प्रावृतः कुक्षौ दक्षिणपार्श्वे भ्राम्यति सर्वत्र पञ्चरात्रदशरात्रमासादिसङ्ख्या उदरप्रवेशकालमारभ्यैव न तु पूर्वपूर्वकालमारभ्य षोडशदिनाधिकसप्तविंशतिमासगणनापत्तेरिति बोध्यम् ॥ ४ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

अस्मिन्नध्याये संसारासारज्ञानलक्षणवैराग्याय गर्भवासादिदुःखानुभवः प्रतिपाद्यते। तस्माद्विरक्तो भक्तिसाध्यब्रह्मज्ञानाय प्रयतेत इति तत्र नरके कर्मफलं भुक्त्वा वृष्टिरूपेण नरलोकं प्राप्तो व्रीह्यादीतरजीवदेहगतो दैवाधीनेन कर्मणा शरीरस्वीकाराय पुरुषभुक्तान्नपरिणतरेतो विन्दुप्रवेशरूपेण ऋतुकाले योनिद्वारा स्त्रिया उदरं प्रविष्टो भवतीत्यन्वयः। "सूक्ष्मलेशलवश्लक्ष्णक्षुद्रदभ्रकणाणवः" इति हलायुधः "स्त्रियां मात्रा त्रुटिः पुंसि लवलेशकणाणव" इत्यमरः कणति निमीलतीति कणः ॥ १ ॥ ❀ ❀ स्त्रिया उदरं प्रविष्टस्य रेतसः काले क्रमेण शरीराकारतया परिणामप्रकारं वक्ति। कलिलमिति। तुशब्दाच्छोणितसंपर्कमाह। कलिलं रक्तधातुरसमिश्रत्वान्निर्यासतुल्यं भवति कर्कन्धूरीषत्काठिन्योपेतमयःपिण्डतुल्यः। पेशी मांसखण्डी तद्वान् भवति मनुष्यादीनामयं विशेषः न पक्ष्यादीनामन्डं पिण्डाकारवत्। "नानाविधा गर्भवृद्धिः कर्मभेदाद्भविष्यति। अतो नानाविधं ग्रन्थे गर्भसंस्थानमुच्यते ॥" इति वचनात् अण्डं वेति विकल्प्योक्तम् ॥ २ ॥ ❀ ❀ बाह्वङ्घ्र्यादिभिरङ्गैरवयवैर्युक्तो विग्रहो देहो भवति लिङ्गस्य पुल्लिङ्गादिलक्षणस्य छिद्रस्येन्द्रियद्वारस्य चोद्भव उत्पत्तिः ॥ ३ ॥ ❀ ❀ धातवस्त्वगादयः सप्त आवीतः संवेष्टितः ॥ ४ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

कललमिति। अत्र निरुक्तमुदाहार्य्यम्॥ १-३॥ * * दक्षिणं कुक्षाविति। पुरुषमधिकृत्योक्तत्वात् पुङ्गर्भो दक्षिणे स्त्रीगर्भो वामे भवतीति प्रसिद्धिः॥ ४॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

एकत्रिंशे गर्भजन्मबाल्यपौगण्डयातनाः। ब्रुवाणेनैव जीवस्य भक्तिर्गर्भेऽपि दर्श्यते॥

पुनरत्रात्रजेदित्युक्तम्। तत्प्रकारं दर्शयति। कर्म्मणा प्राचीनेन दैवमीश्वरस्तदेव नेत्रं नेतृ प्रवर्त्तकं यस्य तेन प्रविष्टो भवति ॥१॥ * * कललं शुक्रशोणितमिश्रितं भवति। बुद्बुदं बुद्बुदाकारम्। कर्कन्धुर्बदरीफलाकारं कठिनं पेशी मांसपिण्डं जरायुप्रकृतिः। अण्डं पक्ष्यादियोनिषु ॥२॥ * * द्वाभ्यां मासाभ्यां विग्रहो विभागः॥३॥ * * जरायुणा गर्भवेष्टनेन वीतः प्रावृतः। दक्षिणे कुक्षाविति। पुरुषमधिकृत्योक्तत्वात् "पुङ्गर्भो दक्षिणे स्त्रीगर्भो वाम" इति प्रसिद्धेः॥४॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

एकत्रिंशे विमिश्रपुण्यपापनिमित्ततः मनुष्यदेहप्राप्तिरूपां गतिमाह। पुनरत्रात्रजेदित्युक्तं तस्य गर्भवासादिकं वर्णयति कर्मणेत्यादिना। दैवमीश्वरो नेत्रं प्रवर्तकं यस्य तेन पूर्वकृतेन स्वकर्मणा॥१॥ * * कलिलं शुक्रशोणितमिश्रितम्। बुद्बुदं वर्त्तुलाकारम्। कर्कन्धूः बदरीफलाकारम्। अतः परं दशाहादुपरि पेशी मांसपिण्डम्। पक्षिण्यादिगर्भे वा अण्डं भवति॥२॥ * * बाह्वाद्यङ्गानां विग्रहो विभागो भवति॥३॥ * * जरायुना उल्बेन वीतो वेष्टितः॥४॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

एकत्रिंशे पुनस्तस्य गर्भादिकृतयातनाः। जानतोऽपि पुनर्मोहो दुःखं चापि तथोच्यते॥१॥
कृतिः प्रधानं न ज्ञानं यावद्देहस्मृतिर्भवेत्। अतस्त्यागो विधातव्यो ज्ञानं तस्मात्तु दु[१]र्वलम्॥२॥
क्रिया चेद्विषमा जाता ज्ञानं तस्य न साधकम्। क्रियां चेज्जनयेत्तद्धि तदुत्तममिहोच्यते॥३॥
अधर्माधिक्यतो धर्मं यः करोति गृही सदा। बहुजन्मविपाकेन गर्भे तस्य भवेन्मतिः॥४॥
तामसत्वात्तु धर्मस्य न भूमौ नोत्तरे फलम्। अतो गर्भे ज्ञानसिद्धिस्ताद्दशस्योच्यते हितम्॥५॥

पूर्वाध्यायान्ते नरकादिह लोके पुनरागमनमुक्तम्। ततश्च तस्य देहसम्बन्धः कथमित्याशङ्क्य यदा योनौ रेतः निर्जीवमेव तिष्ठति, तदा स आगत्य कर्मणा प्रविशेदित्याह—कर्मणेति। भगवदिच्छाधीनेन कर्मणा जन्तुरयं जायमानो देहोत्पत्त्यर्थं पुंसो रेतःकणमाश्रित्य, स्त्रिया उदरं प्रविष्टो भवति। प्रथमत उदरप्रवेशः, पश्चात् रेतःकणाश्रयः। मुखनासिकाद्वारा च प्रवेशः। तस्मिन् प्रविष्ट एव तत्प्रयत्नेन धारितं रेतस्तिष्ठति। दैववशात् समानकाले प्रवेशो रेतःसम्भवश्च भवतः। तत्र दिनमात्रे स्थिते तद्रेतः कललं भवति। शुक्रशोणिते मिलिते भवतः। पञ्चरात्रेण बुद्बुदाकारमुच्छूनं भवति। दशाहेन तु कर्कन्धूर्भवति, बदरीफलबीजसदृशं भवति। ततः परं पेशी, अण्डं वा भवति। अण्डाकारं वृत्तं वा अपूपाकृतिर्भवति। पुरुषश्चेदण्डम्, इतरौ चेत्पेशी। यो वा ऊर्ध्वं गच्छेत्, सोऽण्डाकृतिर्भवति। यः पुनरधस्तत्र वा तिष्ठेत् स पेशी भवति। ततः परं दशदिवसानन्तरम्। मासेन तु शिरो निष्पद्यते एकदेशेन। मासयोर्द्वाभ्यां बाह्वङ्घ्र्यादिसहितस्य अङ्गस्य देहस्य विशेषेण ग्रहः। देहाकृतौ निष्पन्नायां तत्राभिमानोऽपि विशिष्टो निष्पद्यत इत्यर्थः। बाहवः अङ्घ्रयश्च अङ्गानि यस्मिन् विग्रहे तादृशो भवतीति वार्थः। नखानि लोमान्यस्थीनि चर्माणि च त्रिभिर्मासैर्भवन्ति। लिङ्गस्य नवच्छिद्राणां च उद्भवः त्रिभिरेव मासैः। धातवस्त्वगादयः यद्यप्यस्थि पूर्वं जातम्, तथाऽप्यु[२]त्तरोत्तरभावेन न[३] जातमिति चतुर्भिः तथोद्भवः। क्षुत्तृषोः पञ्चभिरुद्भवः। षड्भिर्जरायुणा वीतो भवति। पुरुषत्वाद्दक्षिणे कुक्षौ भ्राम्यति॥ १-४॥

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

अथैकत्रिंशाध्यायं विवरिषवः सङ्गतीनां पूर्वमुक्तत्वादर्थमेवाहुः—एकत्रिंश इत्यादि। तथेति, वैराग्यजनकत्वेन प्रकारेण। नन्वस्मिन्नध्याये गार्भज्ञाननिरूपणस्य किं प्रयोजनमित्याकांक्षायामाहुः—कृतिरित्यादि। तस्मादिति। त्यागात्। हितमिति। त्यागरूपं हितम्। तथा च, हीनाधिकारे ज्ञानस्योपकारकत्वेऽपि नैर्बल्येनाऽकिञ्चित्करत्वात्त्यागस्याऽऽवश्यकत्वं बोधयितुं तन्निरूपणमित्यर्थः॥ १-४॥

---

१. सुदुर्बलम्. क. घ. ङ.। २. उत्तरभावेन. ग.। ३. नकराभावः ख. घ. ङ.।

### श्रीगिरिधरकृता बालप्रबोधिनी ।

विमिश्रैः पुण्यपापैस्तु भूलोके राजसी गतिः । मनुष्ययोनिसम्प्राप्तिरेकत्रिंशे निरूप्यते ॥ १ ॥

एवं मरणनरकादिक्लेशान् निरूप्य अथ गर्भजन्मादिक्लेशान् निरूपयति—कर्मणेति । 'पुनरत्राव्रजेत्' इत्युक्तं तत्र जन्तुर्जीवो देहोपपत्तये देहलाभाय दैवमीश्वरस्तदेव नेत्रं नेतृ प्रवर्त्तकं यस्य तेन कर्मणा कश्चित्पुरुषं प्रविशति ततश्च पुंसो रेतःकणाश्रयः रेतःकणमाश्रयो यस्य सः रेतोद्वारा स्त्रिया उदरं प्रविष्टो भवति ॥ १ ॥ ❀ ❀ तत्र स्त्रिया उदरं प्रविष्टं जीवेनाश्रितं रेतः एकरात्रेण कललं शोणितमिश्रं भवति । पञ्चरात्रेण बुद्बुदं वर्त्तुलाकारं भवति । दशाहेन च कर्कन्धूर्बदरीफलाकारं किञ्चित्कठिनं भवति । ततः परं पेशी मांसपिण्डाकारं भवति । अण्डं वेति तिर्यगादियोन्यन्तरापेक्षयोक्तम् ॥ २ ॥ ❀ ❀ ततो मासेन शिरो भवति । द्वाभ्यां मासाभ्यां बाह्वङ्घ्र्याद्यङ्गानां विग्रहो विभागो भवति । ततस्त्रिभिर्मासैर्नखादीनि भवन्ति, पुंस्त्वादिलिङ्गमिन्द्रियच्छिद्राणि च तेषामुद्भवश्च भवति ॥ ३ ॥ ❀ ❀ ततश्चतुर्भिर्मासैः मांसादयः सप्तधातवो भवन्ति । पञ्चभिर्मासैः क्षुत्तृषोरुद्भवो भवति । षड्भिर्मासैः जरायुणा चर्मविशेषेण वीतो वेष्टितः कुक्षौ दक्षिणे पार्श्वे भ्राम्यति । सर्वत्रैकरात्रमासादिसङ्ख्या उदरप्रवेशकालमारभ्यैव ज्ञेया, न तु पूर्वपूर्वकालमारभ्य, षोडशादिनाधिकैकविंशतिमासगणनापत्तेः, तथा च दशमासोक्तिर्विरुद्धयेत् ॥ ४ ॥

### हिन्दी अनुवाद

#### मनुष्ययोनिको प्राप्त हुए जीवकी गतिका वर्णन

श्रीभगवान् कहते हैं—माताजी ! जब जीवको मनुष्यशरीरमें जन्म लेना होता है, तो वह भगवान्‌की प्रेरणासे अपने पूर्वकर्मानुसार देहप्राप्तिके लिये पुरुषके वीर्यकणके द्वारा स्त्रीके उदरमें प्रवेश करता है ॥ १ ॥ ❀ ❀ वहाँ वह एक रात्रिमें स्त्रीके रजमें मिलकर एकरूप कलल बन जाता है, पाँच रात्रिमें बुद्बुदरूप हो जाता है दश दिनमें बेर के समान कठिन हो जाता है। और उसके बाद मांसपेशी अथवा अण्डज प्राणियोंमें अण्डेके रूपमें परिणत हो जाता है ॥ २ ॥ ❀ ❀ एक महीनेमें उसके सिर निकल आता है, दो मासमें हाथ-पाँव आदि अङ्गोंका भी विभाग हो जाता है और तीन मासमें नख, रोम, अस्थि, चर्म, स्त्री-पुरुषके चिह्न तथा अन्य छिद्र उत्पन्न हो जाते हैं ॥ ३ ॥ ❀ ❀ चार मासमें उसमें मांसादि सातों धातुएँ पैदा हो जाती हैं, पाँचवें महीनेमें भूख-प्यास लगने लगती है और छठें मासमें झिल्लीसे लिपटकर वह दाहिनी कोखमें घूमने लगता है ॥ ४ ॥

मातुर्जग्धान्नपानाद्यैरेधद्धातुरसम्मते । शेते विण्मूत्रयोर्गर्ते स जन्तुर्जन्तुसम्भवे ॥ ५ ॥
कृमिभिः क्षतसर्वाङ्गः सौकुमार्यात्प्रतिक्षणम् । मूर्च्छामाप्नोत्युरुक्लेशस्तत्रत्यैः क्षुधितैर्मुहुः ॥ ६ ॥
कटुतीक्ष्णोष्णलवणरूक्षाम्लादिभिरुल्बणैः । मातृभुक्तैरुपस्पृष्टः सर्वाङ्गोत्थितवेदनः ॥ ७ ॥
उल्बेन संवृतस्तस्मिन्नन्त्रैश्च बहिरावृतः । आस्ते कृत्वा शिरः कुक्षौ भुग्नपृष्ठशिरोधरः ॥ ८ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

मातुर्जग्धेन भक्षितेनान्नेन पानाद्यैश्चैधमाना धातवो यस्य जंतूनां संभवो यस्मिंस्तस्मिन्नसंमते गर्ते शेते । तथाच मार्कण्डेयपुराणे । "नाडी चाप्यायनी नाम नाभ्यां तस्य निबद्ध्यते ॥ स्त्रीणां तथांत्रसुषिरे सा निबद्धोपजायते ॥ क्रमंते भुक्तपीतानि स्त्रीणां गर्भोदरे तथा ॥ तैराप्यायितदेहोऽसौ जंतुर्वृद्धिमुपैति वै" इति ॥ ५ ॥ ❀ ❀ तत्रत्यैः कृमिभिः खादद्भिः सौकुमार्यात्कोमलत्वेन क्षतानि सर्वांगानि यस्य ॥ ६ ॥ ❀ ❀ उल्बणैर्दुःसहैः सर्वेष्वंगेषूत्थिता वेदना यस्य आस्त इत्युत्तरेणान्वयः ॥ ७ ॥ ❀ ❀ उल्बेन जरायुणा भुग्नं कुटिलीभूतं पृष्ठं शिरोधरा ग्रीवा च यस्य ॥ ८ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः ।

असंमतेऽशुचौ । अत्र प्रमाणमाह—तथा चेति । तस्य गर्भस्य । स्त्रीणामांत्रसुषिरे आंत्रच्छिद्रे । तैर्मातृभुक्तपीतैरन्नादिभिः ॥ ५ ॥ ❀ ❀ तत्रत्यैर्गर्भस्थमलगैः ॥ ६ ॥ ❀ ❀ कटुर्मरीचादिस्तीक्ष्णं सर्षपादि ॥ ७-८ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

तस्य बालस्य अन्त्रसुषिरे अन्त्रच्छिद्रे स्त्रीणां स्त्रीभिर्भुक्तपीताग्नयन्नपेयानि कर्त्तृभूतानि गर्भस्य बालस्योदरे सञ्चरन्ति तैर्भुक्तपीतैः ॥ ५ ॥ ❀ ❀ तत्रत्यैः गर्भस्थैः ॥ ६ ॥ ❀ ❀ कट्विति सार्द्धयुग्मकम् । तस्मिन् गर्भे जरायुणा गर्भवेष्टनत्वचा ॥ ७—८ ॥

### श्रीमद्वीरराघवव्याख्या

मातुर्जग्धेन भक्षितेनान्नेन पानाद्यैश्च एधन्तः वर्द्धमाना धातवो यस्य सः जन्तूनां सम्भवो यस्मिन् असम्मते विण्मूत्रयोर्गर्ते गर्भे शेते ॥ ५ ॥ ❀ ❀ तत्रत्यैः क्षुधितैः पुनः पुनः कृमिभिः क्षतानि खाद्यमानानि सर्वाण्यङ्गानि यस्य सः सौकुमार्यादुरुः अधिकः क्लेशो यस्य सः प्रतिक्षणं मूर्च्छामाप्नोति ॥ ६ ॥ ❀ ❀ उल्बणैः दुःसहैः मातृभुक्तैः कट्वादिभिरुपस्पृष्टः अत एव सर्वेष्वङ्गेषूत्थिता वेदना यस्य सः आस्त इत्युत्तरेणान्वयः ॥ ७ ॥ ❀ ❀ उल्बेन जरायुणा वीतः बहिरान्त्रैरावृतः भुग्नं कुटिलीभूतं पृष्ठं शिरोधरा ग्रीवा च यस्य सः शिरः कुक्षौ निधाय स्वाङ्गानां चेष्टायां व्यापारे पञ्जरे निबद्धः शकुन्तः पक्षीव अकल्पः असमर्थः आस्ते शेते इत्यर्थः ॥ ८ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली ।

सप्तमे मासे गर्भस्थस्य ज्ञानोत्पत्तिरित्याह । सप्तम इति । जगत्यां कर्मभूमौ यानि गतानि जन्मानि कर्माणि च स्वकृतानि तथा च देवस्य हरेर्माययेच्छया कटाक्षितमात्मनः स्वस्य बन्धं च ऋषिर्ज्ञानवान् स्मरते क्वचित् स्मरति क्वचिद्विस्मरति वेदनया ग्रस्तत्वादिति द्योतनाय आत्मनेपदं सन्धिकार्याभावश्च ॥

तत्र तस्य देहयात्राप्रकारं वक्ति । मातुरिति । आतुरो रोगी तस्य सम्मतः यथासौ परतः स्वदेहयात्रामाप्नोति तथायमिति अन्नादीनां प्रवेशस्तु आप्यायिनी नाम नाडी नाभिमूलादुत्पन्ना जरायुमुल्वं च निर्भिद्यास्य द्वारसम्बद्धोष्ठपुटचुम्बिकमलदण्डनाडीवत् तद्द्वारेत्यर्थः । तस्य निवासस्थानमाह । स जन्तुर्जन्तुभिः सह वर्तमानः । अनेनैवात्रैवेति विवृतं जन्तूनां सम्भवो यस्मिन् स तथा तस्मिन् अनेन जन्तूनामनवसानभयपरंपरोत्पत्तिः सूचिता ॥ ५ ॥ ❀ ❀ इदानीं तस्य दुःखानुभवप्रकारमाह । कृमिभिरित्यादिना । क्षतं च कण्डूश्चाङ्गेषु यस्य स क्षतकण्ड्वङ्गः ॥ ६ ॥ ❀ ❀ कटुर्मरीचिसंज्ञः द्रव्याश्रितधर्मो वा तीक्ष्णः सर्षपः उष्णमग्निमद्द्रव्यं क्षारं दग्धमत्स्यास्थिचूर्णमाम्लश्चूतादिसंज्ञः उल्वणैरतिक्रूरैरेतैरुपस्पृष्ट उपतप्तः सर्वाङ्गेषूत्थितोत्पन्ना वेदना यस्य स तथा ॥ ७ ॥ ❀ ❀ भुग्ने कुटिले पृष्ठशिरोधरे यस्य स तथा ॥ ८ ॥

### श्रीमज्जीवगोस्वामीकृत क्रमसन्दर्भः

असम्मते अनभीष्टे ॥ ५—८ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

एधद्धातुरिति ।

नाडी चाप्यायिनी नाम नाभ्यां तस्य निबध्यते । स्त्रीणां तथान्त्रसुषिरे सा निबद्धोपजायते ॥
क्रमन्ते भुक्तपीतानि स्त्रीणां गर्भोदरे तथा । तैराप्यायितदेहोऽसौ जन्तुर्वृद्धिमुपैति च ॥

इति मार्कण्डेयपुराणात् ॥ ५ ॥ ६ ॥ ❀ ❀ उल्वणैः दुःसहैः, उल्वेन जरायुणा कुटिलीभूतपृष्ठग्रीव आस्ते । शकुन्तः पक्षी ॥ ७—८ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

एधमाना धातवो यस्य सः जन्तूनां कृमीणां सम्भवः यस्मिन् ॥ ५ ॥ ६ ॥ ❀ ❀ उल्बणैः दुःसहैः उपस्पृष्टः आस्ते इत्युत्तरेणान्वयः ॥ ७ ॥ ❀ ❀ भुग्नं नम्रीभूतं पृष्ठं शिरोधरा ग्रीवा च यस्य सः ॥ ८ ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

तस्य जीविकामाह—मातुरिति । भक्षितान्नपानाद्यैरेवैधद्धातुर्भवति । तस्यावस्थामाह—असत्तमे स्वस्यात्यन्तमयोग्ये विण्मूत्रयोर्गर्ते शेत इति । अन्येऽपि जन्तवः तत्र शेरते । सजन्तुर्जन्तुभिः सहितः । ननु क्व तत्र जन्तव इत्याशङ्क्याऽऽह—जन्तुसंभव इति । जन्तूनां सम्भवो यस्मिन् गर्ते ॥ ५ ॥ ❀ ❀ तत्र क्लेशमाह—कृमिभिः क्षतसर्वाङ्ग इति । शरीरमत्यन्तं सुकुमारमिति कृमिभिः क्षतसर्वाङ्गः प्रतिक्षणं मूर्छामाप्नोति । मूर्च्छाप्राप्तिदशायामुरुक्लेशो भवति । कृमीणां क्षते हेतुमाह—क्षुधितैरिति । मुहुर्दशान्तितरां दुःखम् ॥ ६ ॥ ❀ ❀ आध्यात्मिकं दुःखमाह—कटुतीक्ष्णेति । मधुर एव न बाधकः, अन्ये कट्वादयो बाधका एव । आदिशब्देन द्रव्या[१]ण्यपरिणामतो बाधकानि । तेषां सम्बन्धार्थमाह—मातृभुक्तैरुपस्पृष्ट इति । जीवननाडिकाद्वारा मुखे रसः समायाति; बहिरपि स्पर्शो भवतीति सर्वाङ्गोत्थितवेदनो भवति ॥ ७ ॥ ❀ ❀ आधिदैविकीं पीडामाह—उल्बेनेति । बन्धनरज्जुवत् उल्बेन । गर्भवेष्टकेन तस्मिन्नेव गर्ते[२] सम्यक् वृतः, अन्त्रैश्च उल्बाद्बहिरप्यावृतः । एवं पीडितोऽपि शिरः स्वकुक्षौ कृत्वा [३]भुग्नपृष्ठशिरोधर आस्ते । अयमुपद्रवो दैविकः ॥ ८ ॥

---

१. द्रव्याण्यपि परिणामतः ग. ङ. । २. मार्गे—क. ङ. । ३. भग्नपृष्ठशिरोधरः क. घ. ङ. ।

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

उल्बेनेत्यत्र । अव्ययीभाव एभिः कृते आधिदैविकीति भव (ति) न्ति । देवाश्चात्रेन्द्रियाधिष्ठातार एव । तथा च, तेषु या पीडा सा तादृशी वाच्या । साऽत्र कथमित्याकांक्षायां तत्स्वरूपमाहुः—अयमित्यादि । देवनियामकेन तेषु कृत इत्येवं तत्सम्भव इत्यर्थः ॥ ८ ॥

### श्रीगिरिधरकृता बालप्रबोधिनी

तस्याहारस्थानयोग्यत्वमाह—मातुरिति । मातुर्जग्धेन भक्षितेनान्नेन पानाद्यैश्चैधन्तो वर्द्धमानाः धातवो यस्य सः । तत्प्रकारस्तूक्तो मार्कण्डेयपुराणे—'नाडी चाप्यायनी नाम नाभ्यां तस्य निबध्यते । स्त्रीणां तथाऽन्त्रसुषिरे सा निबद्धोपजायते ॥ क्रमन्ते भुक्तपीतानि स्त्रीणां गर्भोदरे तथा ॥ तैराप्यायितदेहोऽसौ जन्तुर्वृद्धिमुपैति वै' इति । जन्तूनां कीटादीनां सम्भवो यस्मिंस्तस्मिन् विण्मूत्रयोर्गर्त्ते अतः असम्मते अयोग्ये मात्रुदररूपे स्थाने जन्तुः शेते तिष्ठति ॥ ५ ॥ ❀ ❀ तत्रत्यक्लेशानाह—तत्रत्यैः क्षुधितैः कृमिभिर्मुहुः पुनः पुनः क्षतानि खाद्यमानानि सर्वाण्यङ्गानि यस्य सः प्रतिक्षणं मूर्च्छामाप्नोतीत्यन्वयः । ननु कृमिक्षतमात्रेण कथं मूर्च्छेत्यत आह—सौकुमार्यात् कोमलत्वात् उरुः अधिकः क्लेशो यस्य सः ॥ ६ ॥ ❀ ❀ उल्बणैः दुःखदैः मातृभुक्तैः कट्वादिभिरन्नैरुपस्पृष्टः अत एव सर्वेष्वङ्गेषूत्थिता वेदना यस्य सः ॥ ७ ॥ ❀ ❀ उल्बेन जरायुणा संवृतः संवेष्टितः बहिश्च मातृभुक्तैरन्नैरावृतः, भुग्नं कुण्डलीभूतं पृष्ठं शिरोधरा ग्रीवा च यस्य सः, तस्मिन् मातृकुक्षौ शिरः कृत्वा आस्ते इति द्वयेनान्वयः । पञ्जरे निबद्धः शकुन्तः पक्षीव स्वाङ्गचेष्टायामप्यकल्पः असमर्थ आस्ते ॥ ८ ॥

### हिन्दी अनुवाद

उस समय माताके खाये हुए अन्न-जल आदिसे उसकी सब धातुएँ पुष्ट होने लगती हैं और वह कृमि आदि जन्तुओंके उत्पत्तिस्थान उस जघन्य मल-मूत्रके गढ़ेमें पड़ा रहता है ॥ ५ ॥ ❀ ❀ वह सुकुमार तो होता ही है; इसलिये जब वहाँ के भूखे कीड़े उसके अङ्ग प्रत्यङ्ग नोचते हैं, तब अत्यन्त क्लेशके कारण वह क्षण-क्षणमें अचेत हो जाता है ॥ ६ ॥ ❀ ❀ माता के खाये हुए कड़वे, तीखे, गरम, नमकीन, रूखे और खट्टे आदि उग्र पदार्थोंका स्पर्श होनेसे उसके सारे शरीरमें पीड़ा होने लगती है ॥ ७ ॥ ❀ ❀ वह जीव माताके गर्भाशयमें झिल्लीसे लिपटा और आँतोंसे घिरा रहता है। उसका सिर पेटकी ओर तथा पीठ और गर्दन कुण्डलाकार मुड़े रहते हैं ॥ ८ ॥

अकल्पः स्वाङ्गचेष्टायां शकुन्त इव पञ्जरे । तत्र लब्धस्मृतिर्दैवात्कर्म जन्मशतोद्भवम् ।
स्मरन्दीर्घमनुच्छ्वासं शर्म किं नाम विन्दते ॥ ९ ॥
आरभ्य सप्तमान्मासाल्लब्धबोधोऽपि[१] वेपितः । नैकत्रास्ते सूतिवातैर्विष्ठाभूरिव[२] सोदरः ॥ ११ ॥
नाथमान ऋषिर्भीतः सप्तवध्रिः कृताञ्जलिः । स्तुवीत तं विक्लवया वाचा येनोदरेऽर्पितः ॥ ११ ॥

### ज[४]न्तुरुवाच

तस्योपसन्नमवितुं जगदिच्छयात्तनानातनोर्भुवि चलच्चरणारविन्दम् ।
सोऽहं व्रजामि शरणं ह्य[५]कुतोभयं मे येनेदृशी गतिरदर्श्यसतोऽनुरूपा ॥ १२ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

दैवात्पूर्वकर्मवशात् लब्धा स्मृतिर्येन सः दीर्घं दुरंतमनुच्छ्वासं यथा भवति तथा तत्र स्थितः सन् ॥ ९ ॥ ❀ ❀ सूतिहेतुभिर्वातैर्वेपितः सोदरः समानोदरजन्मा विष्ठाभूः कृमिरिवेति ॥ १० ॥ ❀ ❀ नाथमानो याचमान उपतप्यमान इति वा ऋषिर्देहात्मदर्शी भीतः पुनर्गर्भवासात् सप्त वध्रयो बंधनभूता धातवो यस्य सः । विक्लवया व्याकुलया ॥ ११ ॥ ❀ ❀ उपसन्नं जगद्रक्षितुं स्वेच्छया गृहीतनानामूर्त्तेर्भगवतश्चरणारविंदमकुतोभयं सोऽहं शरणं व्रजामि । भुवि चलदिति श्रीकृष्णावताराभिप्रायेण असतो मेऽनुरूपा योग्या येनेदृशी गर्भवासलक्षणा गतिर्दर्शिता तस्य ॥ १२ ॥

---

१. प्रा० पा०—संगात् किं । २. प्रा० पा०—ऽति० । ३. प्रा० पा०—सोऽचरत् । ४. प्रा० पा०—जीव उवाच । ५. प्रा० पा०—न कुतो० ।

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

तत्र गर्भे। नन्वतीव बीभत्सितस्थलस्थस्य सावधनाभावात्कथं जन्मशतज्ञानं बहिर्निर्गतस्य प्रयतमानस्याप्येकजन्मज्ञानमपि कथं नोदेतीत्याशंकायामाह—"गर्भे यदस्य विज्ञानं तन्माहात्म्यं स्थलस्य हि। गर्भाशये भवेज्ज्ञानं वाराणस्यां त्रिमुक्तिवत्॥ तस्माच्च्युतोऽज्ञतामेति मागधो दुर्गतिं यथा॥" इति शिष्टगीतात्॥ ९॥ १०॥ ❀ ❀ याचमानः एवंविधगर्भवासः पुनर्मे मा भूदिति प्रार्थयमानः। भगवत्कृपा मयि भूयादिति स्वस्मिन्नाशिषं कुर्वन्वा। अहो मयात्रातीव दुःखं भुक्तमित्येवमुपतप्यमानः प्राप्तज्ञानैश्वर्यो वेति 'नाथृ—याच्ञोपतापैश्वर्याशीःषु' इति धातोर्यद्यप्याशिष्येवात्मनेपदमस्ति तथाप्यार्षत्वादत्र सर्वार्थेष्वपि तदिति शानच्। अत एव स्वाभिचरणैर्याचमानः प्रतप्यमान इति च व्याख्यातम्। अत्र विश्वनाथः—तं स्तुवीतेति गर्भे विष्ण्वादेः संभवाभावात् "हेतुहेतुमतोर्लिङ्" इति लिङ्। ततश्च यो भगवंतं भजेतेति हेतुरत्र गम्यः तेन च यो भगवंतं भजेत स गर्भेपि स्तुवीतेत्यन्यो जीवस्तु न स्तुवीतेत्यर्थो लभ्यते। तस्यैव स्तुवानस्य जीवस्याग्रे संसारो वर्णयिष्यते वर्णितश्च न तु भगवंतं स्तुवानस्यापि। "अकामादपि ये विष्णोः सकृत्पूजां प्रकुर्वते। न तेषां भवबंधस्तु कदाचिदपि जायते" इति बृहन्नारदीये, "सकृदेव प्रपन्नाय तवास्मीति च याचते। अभयं सर्वदा तस्मै ददाम्येतद्व्रतं मम" इति गारुडे इत्येवं परस्सहस्रवचनविरोधात्। अत एव 'शेते विण्मूत्रयोर्गर्त्ते' इति 'मूर्च्छामाप्नोत्युरुक्लेश इति' 'आस्ते कृत्वा शिरः कुक्षौ' इत्यादिवद्दशमास्थो जीवो हरिं स्तौतीति वर्त्तमानप्रयोगो न कृतः, किन्तु जीव उवाचेति भूतकालप्रयोग एव। तेन च पूर्वकालभवः कश्चिद्भक्तो जीव एवं गर्भे हरिं स्तुवान आसीन्न तु सर्व इत्यर्थो ज्ञापितः। अत एव नैरुक्ता अपि पठंति नवमे सर्वांगसंपूर्णो भवतीति पठित्वा "मृतश्चाहं पुनर्जातो जातश्चाहं पुनर्मृतः" इत्याद्यनंतरम् "अवाङ्मुखः पीड्यमानो जंतुश्चैवं समन्वितः। सांख्यं योगं समभ्यस्येत्पुरुषं पञ्चविंशकम्॥ ततश्च दशमे मासि प्रजायते" इत्यादिगर्भोपनिषद्वाक्यम्। अत्र वाशब्दबलात्कश्चित्सकर्मा जीवो 'मृतश्चाहं पुनर्जातः' इत्यादि पूर्वपूर्वजन्ममात्रं स्मरति। कश्चिज्ज्ञानी सांख्यं कश्चिद्योगी योगं कश्चिद्भक्तश्चतुर्विंशात्प्रधानात्परं पंचविंशं पुरुषं परमेश्वरमभ्यस्येद्भजेदिति पूर्वाभ्यस्तमेव गर्भे स्फुरेदिति युक्तम्। अत्र भेदेप्येकत्वेन वर्णनं तु श्रीवराहावतारवज्ज्ञेयम्। तत्र प्रथममन्वंतरस्यादौ पृथिवीमज्जने ब्रह्मनासिकातोवतीर्णो वराहस्तामुद्धरन्हिरण्याक्षेण युद्धं कृतवानिति वर्ण्यते। हिरण्याक्षस्तु षष्ठमन्वंतरावसानजातप्राचेतसदक्षकन्याया दितेर्जातस्तस्मात्तथा वर्णनं तदवतारमात्रत्वपृथिवीमज्जनमात्रत्वैक्यविवक्षयैव घटेत तद्वदत्रापि कश्चिदेवान्यो जीवः स्तौति इत्यन्यः संसरतीत्येवं मंतव्यम्॥ ११॥ ❀ ❀ भुवि चलदिति कृष्णावताराभिप्रायेणेति नूनं तदानीं कृष्णावतारात्। अत्र लिंगं गृहीतनानातनोरिति वर्त्तमानार्थकशत्रंतप्रयोगश्च तस्यैवसर्वावतारित्वात्। श्रीकपिलोक्तिश्चेयं पूर्वकल्पगततदवतारापेक्षयेति संदर्भः। यद्वा। सतः परमापद्भिर्नश्यतो मम येनानुरूपा तदुद्धरणक्षमेदृशी स्वस्फूर्त्तिलक्षणगतिश्चित्तवृत्तिरदर्शि प्रकाशितेति॥ १२॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

अनुच्छ्वासमिति निर्मक्षिकमितिवदव्ययीभावः। तत्र गर्भे॥ ९॥ ❀ ❀ नास्ते स्थातुं न शक्नोति॥ १०॥ ❀ ❀ यद्यपि "सकृदेव प्रपन्नो यस्तवास्मीति च याचते। अभयं सर्वदा तस्मै ददाम्येतद्व्रतं मम॥" इति श्रीरामायणे भगवत्प्रतिज्ञावाक्यम् तथा "सकृदेव प्रपन्नाय तवास्मीति च याचते। अभयं सर्वदा तस्मै ददाम्येतद् व्रतं हरेः" इति गारुडवाक्यम्। "तथा आपन्नः संसृतिं घोरां यन्नाम विवशो गृणन्।" इति शौनकवाक्यम्। "तथा जीवितं विष्णुभक्तस्य वरं पञ्चदिनानि वै। न तु कल्पसहस्राणि भक्तिहीनस्य केशवे॥" इति विष्णुधर्मोत्तरवाक्यम्। तथा।" अकामादपि ये विष्णोः सकृत्पूजां प्रकुर्वते। न तेषां भवबन्धस्तु कदाचिदपि जायते।" इत्यादीनि परस्सहस्रवाक्यानि भक्तसंसरणे व्याकुप्यन्ति। तथापि विषयभेदेनाविरोधो व्याख्येयः। तथा हि नैरुक्तिकमते हि गर्भस्थानां त्रैविध्यं श्रूयते केषाञ्चित्पूर्वपूर्वकर्मजन्मस्मृतिमात्रं केषाञ्चित्साङ्ख्ययोगाद्यभ्यासः कस्यचिद्विरलस्य तु विष्णुस्मरणमिति। अयन्तु शुकसदृशः कश्चिद्भाग्यवानेव स्तौति तस्य च संसारो न भविष्यत्येव। अत एव जीव उवाचेति अतीतनिर्देश एकवचनं च। जीवकालसामान्यविवक्षायां तु जीवो वदतीत्येव युज्येत, एवञ्च लिङ्प्रत्ययश्चात्र सम्भावनायामेव। यदि कश्चित्प्राचीनमहत्सङ्गभाग्यवशाद्देहात्मदर्श्यपि श्रीभगवद्दर्शी स्यात्तदा तरत्यपि अन्यथा संसरत्येवेत्यर्थः॥ ११॥ ❀ ❀ भुवो भारावतारणस्य श्रीकृष्णे प्राधान्यात् श्रीकृष्णावताराभिप्रायेणेति व्याख्यातम्। चलदिति वर्त्तमानशतृनिर्देशश्च श्रीकृष्णावतारस्य तदानींतनत्वमभिप्रैति, तत्र हेतुः आत्तनानातनोरिति। तस्यैव स्वयं भगवत्त्वेन सर्वावतारकर्तृत्वान्मत्स्याश्वकच्छपनृसिंहवराहहंसेत्यादिप्रसिद्धेश्च॥ १२॥

### श्रीमद्वीरराघवव्याख्या

तत्र गर्भे दैवात्पूर्वकर्मवशाल्लब्धा स्मृतिर्येन सः जन्मशतोद्भवं बहुजन्मसञ्चितं कर्म स्मरन् दीर्घं दूरतरमनुच्छ्वासं यथा भवति तथा तत्र स्थितः सन् किं नाम शर्म सुखं विन्दते लभते न किञ्चिदित्यर्थः॥ ९॥ ❀ ❀ सप्तमान्मासादारभ्य लब्धो बोधः सुखदुःखादिज्ञानं येन सः सूतिहेतुभिर्वातैरतिवेपितः अतिदुःखितः सोदरः समानोदरजन्मा विष्ठाभूः कृमिरिवनैकत्रास्ते

॥ १० ॥ ❀ ❀ नाथमान उपतप्यमानः याचमान इति वा ऋषिर्जीवः सप्तवध्रिर्गर्भवासे सप्त वध्रयो बन्धनभूता धातवो यस्य स भीतः उक्तविधगर्भवासादिभयाद्भीतः विक्लवया व्याकुलया वाचा येन उदरेऽर्पितः तं भगवन्तं कृताञ्जलिः सन् स्तौति ॥ ११ ॥ ❀ ❀ स्तुतिमेवाह। तस्येति। उपपन्नं स्वेनैव सृष्टमिदं जगदवितुं रक्षितुं स्वेच्छयैव गृहीतनानामूर्तेः तस्य भगवतो भुवि चलच्चरणारविन्दमकुतोभयं सोऽहं शरणं व्रजामि असतो ममानुरूपा योग्या ईदृशी गतिर्येनादर्शिता तस्य चरणारविन्दं व्रजामीत्यन्वयः। नन्वेवं शरणागतं कथं भगवान् परित्यजतीति शङ्क्यं सदाचार्यानुग्रहाभावात्पुरुषकारसांनिध्याभावाच्चेति द्रष्टव्यम् ॥ १२ ॥

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली

मार्कण्डेये पितृपुत्रसम्वादे कथितमेतत्। नाडी चाप्यायिनी नाम नाभ्यां तस्य निबध्यते ॥
स्त्रीणां तथान्त्रसुषिरे सा निबद्धाथ जायते। क्रमन्ते भुक्तपीतानि स्त्रीणां गर्भोदरे तथा ॥
तैराप्यायितदेहोऽसौ जन्तुर्वृद्धिमुपैति वै। नारिकेलफलं यद्वत्सकोशं वृद्धिमृच्छति ॥
तद्वत्प्रयात्यसौ वृद्धिं सकोशोऽधोमुखस्थितः। एवं वृद्धिं क्रमाद्याति जन्तुः स्त्रीगर्भसंस्थितः ॥
तले तु जानुपार्श्वाभ्यां करयोर्न्यस्य वर्तते। अङ्गुष्ठौ चोपरि न्यस्य जान्वोरग्रे तथाङ्गुलीः ॥
जानुपृष्ठे तथा नेत्रे जानुमध्ये च नासिकाम्। स्फिचौ च पार्श्वद्वन्द्वस्थौ बाहूजङ्घाबहिःस्थितौ ॥ इति।

शकुन्तोऽनुत्पन्नपक्षः पक्षी शितस्तनूकृतः अर्धोत्पन्नः कुन्तः पक्षो यस्य स तथेति वा एवं क्लिश्यमानस्य तस्य नानाजातिसंज्ञा च लक्ष्यत। इत्याह। तत्रेति। तत्र गर्भे दैवाल्लब्धा स्मृतिर्येन स तथा जन्मशतोद्भवं कर्म पुण्यपापलक्षणं स्मरन् दीर्घमनुश्वासं कुर्वन् देही तस्मिन् गर्भे किं नाम विन्दते स्वकर्मवान्नानाजातिगर्भस्थत्वात् ब्राह्मणादिनानाजातिनाम लभत इत्यर्थः ॥ ९ ॥ ❀ ❀ लब्धस्मृत्या च गर्भवासासारतां विजानस्तस्य ततो निष्क्रमणप्रयत्नं वक्ति। आरभ्येति। विष्ठाभूः कृमिः सोदरः किं मे स्यादिति संशयोपेतः "उदरं संशयः प्रोक्तः" इत्यभिधानात् ॥ १० ॥ ❀ ❀ इतोऽपि निर्गमनाय स्वप्रयत्नो निष्फलः किन्तु हरेः प्रसाद एव प्रयोजक इति भावेन तं भगवन्तं स्तौति। नाथमान इति। "नाथ नाध" याञ्चायामिति धातुः। एवंविधगर्भवासो मा भूदिति नाथमानः याचमानः विक्लवया श्रोतृमनोद्रवणहेतुभूतया ऋषिरिति पदेन

तत्त्वज्ञानं तु देवानां गर्भस्थानां भविष्यति। उत्तमानामृषीणां वाप्यन्येषां बहुजन्मगम् ॥ इति।

वाक्यं सूचयति। सप्तवध्रय इन्द्रियाणि यस्य स तथोक्तः। 'वध्रयस्त्विन्द्रियाण्याहुर्हृषीकाणीति चाप्युते'ति ॥११॥ ❀ ❀ स्तुतिस्तत्र सिद्धैर्गुणैरुत मन्त्रगतैर्वा द्वावपि पक्षौ नोपपन्नौ, तस्य बुद्धेर्जन्मशतोद्भवकर्मविषयत्वेन चरितार्थत्वादनवगाहत्वेन गुणेष्वनारोहादत इयं स्तुतिर्या काचिदित्याशङ्क्य हरिशक्तेरचिन्त्यमहिमत्वेन सर्वं युक्तमिति भावेन तदुचितैर्गुणैः स्तौति। तस्योपसन्नमित्यादिना। योऽसौ दैवाल्लब्धस्मृतिः सोऽहं येन हरिणासतोऽशुभस्य ममेदृशी गर्भवासलक्षणा गतिरदर्शि तस्य हरेर्लसच्चरणारविन्दं शरणं व्रजामि किम्विशिष्टस्य तस्योपपन्नं शरणागतं जगदवितुः अव रक्षण इति रक्षया भक्तानुग्रहलक्षणया भुवि आत्तलीलातनोः स्वीकृतरामकृष्णादिलीलावतारस्य प्राप्यस्य देवदत्तवत् सभयत्वे किं शरणं व्रजनेन प्रयोजनमित्यत उक्तं न कुतोभयमिति "अभयं प्रतिष्ठां विन्दते युक्ता ह्यस्य हरयः शता दश" इत्यादिश्रुतिरत्र प्रमाणम् ॥ १२ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

दीर्घं चिरकालं व्याप्य अनुच्छ्वासं यथा भवति तथा स्मरन् ॥ ९ ॥ ❀ ❀ वेपितश्चालितः सन्नेकत्र नास्ते स्थातुं न शक्नोति ॥ १० ॥ ❀ ❀ नाथमान इति तात्पर्यं यथा सकृद्भजनेनैव सर्वमप्यायुः सफलमित्युदाहृतमेव श्रीशौनकवाक्येन। "आयुर्हरति वै पुंसाम्" इत्यादिग्रन्थेन। एवं भक्त्याभासेनाप्यजामिलादौ पापघ्नत्वं दृश्यते। तथा सर्व्वकर्म्मादिध्वंसपूर्व्वकपरमगतिप्राप्तौ स्वल्पायासेनैव भक्तेः कारणत्वं श्रूयते। लघुभागवते

वर्त्तमानञ्च यत्पापं यद्भूतं यद्भविष्यति। तत्सर्व्वं निर्दहत्याशु गोविन्दनामकीर्त्तनात् ॥

इति। तथैव च तत्र यथा कथञ्चिद्भक्तिसम्बन्धस्य कारणत्वं दृश्यते। ब्रह्मवैवर्त्ते

स समाराधितो देवैर्मुक्तिकृत् स्याद्यथा तथा। अनिच्छयापि हुतभुक् सम्पृक्तो दहति द्विज ॥
दीक्षामात्रेण कृष्णस्य नरा मोक्षं लभन्ति वै। किं पुनर्ये सदा भक्त्या पूजयन्त्यच्युतं नराः ॥

बृहन्नारदीये।

अकामादपि ये विष्णुं सकृत् पूजां प्रकुर्व्वते। न तेषां भयबन्धस्तु कदाचिदपि जायते ॥

पाद्मे।

सम्पर्काद्यदि वा मोहाद्यस्तु पूजयते हरिम्। सर्व्वपापविनिर्मुक्तः प्रयाति परमं पदम् ॥

इतिहाससमुच्चये श्रीनारदपुण्डरीकसम्वादे ।

ये नृशंसा दुराचाराः पापाचाररताः सदा । तेऽपि यान्ति परं धाम नारायणपराश्रयाः ॥
लिप्यन्ते न च पापेन वैष्णवा वीतकल्मषाः । पुनन्ति सकलाँल्लोकान् सहस्रांशुरिवोदितः ॥

अत एव । सकृदेव प्रपन्नो यस्तवास्मीति च याचते ।

अभयं सर्व्वदा तस्मै ददाम्येतद्व्रतं मम ॥

इति च श्रीरामायणे श्रीरामचन्द्रवचनम् ।

सकृदेव प्रपन्नो यस्तवास्मीति च याचते । अभयं सर्व्वभूताय ददाम्येतद्व्रतं हरेः ॥

इति गारुडवचनम् ।

जीवितं विष्णुभक्तस्य वरं पञ्चदिनानि वै । न तु कल्पसहस्राणि भक्तिहीनस्य केशवे ॥

इति विष्णुधर्मोत्तरवचनम् ।

अतो यदत्र गर्भस्थस्य जीवस्य भगवत्स्तुतिः श्रूयते तस्यैव च संसारोऽपि वर्ण्यते । तत्रोच्यते । जात्येकत्वेन तद्वर्णनमिति । वस्तुतस्तु कश्चिदेव जीवो भाग्यवान् स्तौति स च निस्तरत्यपि । न तु सर्व्वस्यापि भगवज्ज्ञानं भवति तथा चेति नैरुक्तमते च त्रिविधा जीवा लभ्यन्ते । एके पूर्व्वपूर्व्वजन्ममात्रं स्मरन्ति । एके साङ्ख्ययोगादिकमभ्यस्यन्ति एके तु परमपुरुषमिति । यथोक्तम् । तत्रैव तैः "नवमे सर्व्वाङ्गपूर्णो भवति" इति पठित्वा । "मृतश्चाहं पुनर्जातो जातश्चाहं पुनर्मृत" इत्यादितद्भावनापाठानन्तरम् ।

अवाङ्मुखः पीड्यमानो जन्तुश्चैव समन्वितः । साङ्ख्यं योगं समभ्यस्येत् पुरुषं पञ्चविंशकम् ॥

ततश्च दशमे मासि प्रजायते ।

इत्यादि पुरुषं वेति वाशब्दात् कस्यचिदेव भगवज्ज्ञानमिति गम्यते सर्वास्वप्यवस्थासु भक्तेः समर्थत्वं वर्णितं चतुःश्लोकीव्याख्यायां भेदेऽप्येकवद्वर्णनमन्यत्रापि दृश्यते । तृतीये यथा पाद्मकल्पसृष्टिकथनेऽपि सनकादीनां सृष्टिवर्णनम् । टीकायाञ्च ब्रह्मकृतसृष्टिकथनमात्रसाम्येनैकीकृत्योक्तिरियमिति योजितम् । श्रीवाराहवतारवच्च । तत्र प्रथममन्वन्तरस्यादौ पृथिवीमज्जने ब्रह्मनासिकातोऽवतीर्णः वराहस्तामुद्धरन् हिरण्याक्षेण संग्रामं कृतवान् इति वर्ण्यते । हिरण्याक्षस्तु षष्ठमन्वन्तरावसानजातप्राचेतसदक्षकन्याया दितेर्जातः । तस्मात्तथा वर्णनं तदवतारमात्रत्वपृथिवीमज्जनमात्रत्वैक्यविवक्षयैव घटते । तद्वदत्रापीति कश्चिदेवान्यो जीवः स्तौति इत्यन्यः संसरतीत्येवं मन्तव्यम् । अत्र पूर्व्ववत् परगतिप्राप्तौ भक्तेः परम्पराकारणत्वञ्च दृश्यते । बृहन्नारदीये

यतीनां विष्णुभक्तानां परिचर्य्यापरायणैः । ईक्षिता अपि गच्छन्ति पापिनोऽपि परां गतिम् ॥

एवं विष्णुधर्म्मे

कुलानां शतमागामि समतीतं तथा शतम् । कारयन् भगवद्धाम नयत्यच्युतलोकताम् ॥
ये भविष्यन्ति येऽतीता आकल्पात् पुरुषाः कुले । तांस्तारयति संस्थाप्य देवस्य प्रतिमां हरेः ॥

इति दूतान् प्रति यमाज्ञा चेयम्

येनार्चा भगवद्भक्त्या वासुदेवस्य कारिता । नवायुतं तत्कुलजं भवतां शासनातिगम् ॥ इति ।

यथाह ।

त्रिःसप्तभिः पिता पूतः पितृभिः सह तेऽनघ । यत् साधोऽस्य कुले जातो भवान् वै कुलपावनः ॥

त्रिःसप्तभिः प्राचीनकल्पगततदीयपूर्व्वपूर्व्वजन्मसम्बन्धिभिः पितृभिः सह । अस्मिन् जन्मनि हिरण्यकशिपुकश्यपमरीचिब्रह्माण एव तत्पितर इति अवतारिकारम्भे तद्वदत्रापीति कश्चिदेवान्यो जीवः स्तौत्यन्यः संसरतीत्येवमुन्नेयम् । स्तुवीतेति लिङ्प्रत्ययः स च सम्भावनामेव स्पष्टयति । अत एव तादृशभाग्ययुक्तमतीतमेकं जीवं लक्ष्यीकृत्य जीव उवाचेत्येकत्वलिट्प्रत्ययाभ्यां निर्द्देशः । जीवकालसामान्यविवक्षायान्तु जीवो वदतीत्येव युज्यते ॥ ११ ॥ ❀ ❀ भुवि चलदिति । नूनं तदानीं श्रीकृष्णावतारादत्र लिङ्गं गृहीतनानातनोरिति । तस्यैव सर्व्वावतारित्वात् । श्रीकपिलोक्तिश्चेयं पूर्व्वकल्पगततदवतारापेक्षया असतः परमापद्भिर्नश्यतो मम येन अनुरूपा तदुद्धरणक्षमा ईदृशी स्वस्फूर्त्तिलक्षणा गतिः चित्तवृत्तिरदर्शि प्रकाशिता । यद्वा मम दुष्टस्य योग्या ईदृशी दुःखात्मिकावस्था येन कृपादृष्टिविषयीकृता । अन्यथेयं तत्स्फूर्त्तिर्न स्यादेवेति भावः ॥ १२ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

दैवात् पूर्व्वकर्म्मवशाद्दीर्घं चिरकालं व्याप्य अनुच्छ्वासं यथा भवत्येवं स्मरन् ॥ ९ ॥ ❀ ❀ सूतिहेतुभिर्वातैर्वेपित-श्चालितः सन् सोदरः समानोदरजन्मा विष्ठाभूः कृमिरिव ॥ १० ॥ ❀ ❀ नाथमानः भगवत्कृपा मयि भूयादिति स्वस्मिन्नाशिषं कुर्व्वन् ऋषिरात्मदर्शी भीतः संसारात् सप्तवध्रयो बन्धनभूता धातवो यस्य सः। विक्लवया विह्वलया तं स्तुवीतेति गर्भे विध्यादेः सम्भवाभावात् "हेतुहेतुमतोर्लिङ्" इति फले लिङ् ततश्च यो भगवन्तं भजेतेति हेतुरत्र गम्यः। तेन च यो भगवन्तं भजेत स तं गर्भेऽपि स्तुवीतेत्यन्यो जीवस्तु न स्तुवीतेत्यर्थो लभ्यते तस्यैव स्तुवानस्य जीवस्याग्रे संसारो वर्णयिष्यते वर्णितश्च न तु भगवन्तं स्तुवानस्यापि

> अकामादपि ये विष्णोः सकृत्पूजां प्रकुर्व्वते। न तेषां भवबन्धस्तु कदाचिदपि जायते ॥
> इति सकृदेव प्रपन्नो यस्तवास्मीति च याचते। अभयं सर्वदा तस्मै ददाम्येतद्व्रतं मम ॥

इत्यादिपरःसहस्रवचनविरोधादत एव शेते विण्मूत्रयोर्गर्त्त इति मूर्च्छामाप्नोत्युरुक्लेश इति आस्तं कृत्वा शिर इत्यादिवद्दशमास्यो जीवो हरिं स्तौतीति वर्त्तमानप्रयोगो न कृतः किन्तु जीव उवाचेति भूतकालप्रयोग एव। तेन च पूर्व्वकालभवः कश्चिद्भक्तो जीव एवं हरिं स्तुवान आसीन्नतु सर्व्व इत्यर्थो ज्ञापितः। अत एव नैरुक्ता अपि पठन्ति। "नवमे सर्वाङ्गसम्पूर्णो भवति" इति पठित्वा "मृतश्चाहं पुनर्जातो जातश्चाहं पुनर्मृत" इत्याद्यनन्तरम्। अवाङ्मुखः पीड्यमानो जन्तुश्चैवं समन्वितः। साध्यं योगं समभ्यस्येत् पुरुषं पञ्चविंशकम् ॥ ततश्च दशमे मासि प्रजायत। इत्यादिगर्भोपनिषद्वाक्यमत्र वाशब्दबलात् कश्चित् कर्म्मी जीवो "मृतश्चाहं पुनर्जात" इत्यादिपूर्व्वपूर्व्वजन्ममात्रं स्मरति कश्चिज्ज्ञानी साङ्ख्यं कश्चिद्योगो योगं कश्चिद्भक्तश्चतुर्विंशप्रधानात् परं पञ्चविंशं पुरुषं परमेश्वरमभ्यसेत् भक्तेरिति पूर्वाभ्यस्तमेव गर्भे स्फुरेदिति युक्तेः ॥ ११ ॥ ❀ ❀ भुवि चलदिति। श्रीकृष्णावताराभिप्रायेणेति स्वामिचरणाः अत्र लिङ्गं गृहीतनानातनोरिति तस्यैव सर्व्वावतारित्वात्। कपिलोक्तिश्चेयं पूर्वकल्पगततदवतारापेक्षयेति सन्दर्भः। ईदृशी गर्भदुःखोदधिनिवासलक्षणा गतिः असाधोर्मम समुचितैव अदर्शि दर्शिता। यद्वा। अदर्शि कृपादृष्टिविपर्यीकृता अन्यथा इयं तदीयस्फुर्तिर्ममातिपापिष्ठस्य न सम्भवेदिति भावः ॥ १२ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः।

पञ्जरे शकुन्तः पक्षी यथा स्वाङ्गचेष्टायामकल्पः असमर्थः तत्र गर्भे दैवात् परमेश्वरात् लब्धस्मृतिः जन्मशतसञ्चितं कर्म स्मरन् दीर्घमनुच्छ्वासं यथा स्यात्तथा स्थितः सन् शर्म सुखं किं नाम विन्दते न किमपि ॥ ९ ॥ ❀ ❀ सूतिवातैर्वेपितः कम्पितः सोदरः समानोदरजातः विष्ठाभूः कृमीव नैकत्रास्ते ॥ १० ॥ ❀ ❀ नाथमानः स्तवमानः ऋषिर्दैवात्प्राप्तबहुजन्मबोधः भीतः पुनर्गर्भप्रवेशात् सप्त वध्रयः बन्धनभूता धातवो यस्य येन उदरे अर्पितस्तं विक्लवया वाचा स्तुवीत ॥ ११ ॥ ❀ ❀ येन असतः दुष्टस्य मे अनुरूपा योग्या ईदृशी गर्भवासरूपा गतिः अदर्शिदर्शिता। तस्य उपसन्नं जगदवितुमिच्छया स्वेच्छया आविष्कृतनानामूर्तेः भक्तकार्य्यार्थं भुवि चलच्चरणारविन्दम्। अकुतोभयं नास्ति कुतोऽपि भयं यस्मादुपासितात् एवम्भूतं सोऽहं शरणं व्रजामि ॥ १२ ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनीव्याख्या

उपद्रवाणां फलमाह—अकल्प इति। स्वाङ्गचेष्टायामप्यकल्पः। स्वतः सामर्थ्यनाशाभावायाऽऽह—शकुन्त एवेति। बाधककृत[1]मेवासामर्थ्यम्; न तु स्वत इत्यर्थः। पूर्वोक्तप्रकारेण पूर्वोपार्जितधर्मवशाद्भगवदिच्छयोर्ध्वगन्तुर्गर्भे सर्वज्ञता भवतीत्याह—तत्रेति। स्वस्यैव जन्मशतोद्भवं कर्म स्मरन्, उत्पन्नेन शोकेन दीर्घं श्वसन्, किं नाम शर्म विदन्ति, अपि तु न विन्दतीत्यर्थः। कर्माणि तु पूर्वोक्तानि, येषां स्मरणेन सुखसम्भावनाऽपि न भवति। एतादृशस्मरणे हेतुः–दैवाल्लब्धस्मृतिरिति ॥९॥ ❀ ❀ पूर्वजन्मस्मरणेन वैराग्ये जातेऽपि 'तरति शोकमात्मवित्' इति श्रुतेर्ज्ञानमवश्यमपश्यत इति। यथा भगवदिच्छया पूर्वकर्मस्मृतिः, तथा जीवब्रह्मस्वरूपज्ञानमपि तस्य जातमित्याह—आरभ्येति। सप्तममासमारभ्य सप्तमान्मासादूर्ध्वं जन्मपर्यन्तं लब्धबोधो भवति। कालादीनां च पराक्रमं स्मृत्वाऽतिवेपितश्च भवति। वस्तुस्वभावैश्च वेपितो भवतीत्याह—नैकत्राऽऽस्त इति प्रसूतिवातैर्वेपितः सन् नैकत्राऽऽस्ते। जातेऽपि ज्ञाने क्रियैव बलिष्ठेति ज्ञापयितुमाह—असत्तुल्यतां विष्ठाभूरिवेति। विष्ठायां जातो यथा कृमिः। ननु महतोऽस्य कथमेवं निन्दावचनं तत्राऽऽह—यतोऽयं सोदरः समानं उदरं यस्य। यद्ययं महान् स्यात् सोदरो न स्यात्। भगवत्प्रेरितवस्तुस्वभावानां बलिष्ठताप्रदर्शनं ज्ञानस्याप्रयोजकत्वं ज्ञात्वा भगवद्भजनार्थम् ॥ १० ॥ ❀ ❀ अतस्तथा ज्ञात्वा भगवत्स्तोत्रं कृतवानित्याह—नाथमान इति। नाथमान उपतप्यमानः। नाथृ-नाधृ याच्ञोपतापैश्वर्याशीःषु, इति धातुपाठात्। भगवन्तं वा नाथमानः स्तुवीतेत्यपि,

---

१. कृतत्वमेवा… क. घ. ङ.।

अर्थात् स्वनिस्तारम्। ऋषिरित्यलौकिकज्ञानस्य वृत्तत्वान्मन्त्रदर्शी। मन्त्रेण हि स्तुतः अलौकिक आत्मा प्रसन्नो भवति। ननु प्रसन्ने भगवति आविर्भूते स्तोत्रं कर्तव्यम्। अयमन्तर्यामी भगवान् नाविर्भूतो न प्रसन्नस्तत आह—भीत इति। स्तोत्रमुभयथाऽपि क्रियते, भीतेन, प्रसादविषयेण च। यद्यप्ययं प्रसादपात्रं न भवति, तथापि भीतः सन् प्रसादार्थं स्तोत्रं कुर्यात्। ननु गर्भान्निर्गमने जाते स्तोत्रं कर्तव्यं किमिदानीं स्तोत्रेणेत्याशङ्क्याऽऽह—सप्तवध्रिरिति। वध्रिश्चर्ममयी बन्धिका रज्जुः, तादृश्यः सप्त सन्ति त्वगाद्याः, तेन सर्वथा बद्धः विलम्बं न सहते। इयं स्तुतिः प्रार्थनार्थेति ज्ञापयति। कृताञ्जलिरिति। प्रेम्णो जातत्वात्सफलेयं स्तुतिरिति ज्ञापयितुमाह—विक्लवया वाचेति। फलं चेदानीं दुःखनिवृत्तिरेवेति येनोदरेऽर्पित इत्युक्तम्॥ ११॥ ❀ ❀ प्राणरक्षां पुरस्कृत्य दशभिः स्तोत्रमूचिवान्। भक्तिप्रपत्ती कर्तव्ये इति शास्त्रार्थबोधनात्॥ १॥ शरणागमनं पूर्वं जीवब्रह्मविभाजनम्। जीवहीनत्वतश्चापि सत्सङ्गादेव तद्भवेत्॥ २॥ एवं हरिस्तु हितकृत् कृपाप्रार्थनमेव च। प्रत्युपकारासामर्थ्यं ज्ञानदातृत्वमेव च॥ ३॥ संसारस्यातिदुष्टत्वं तदभावस्तु याच्यते। प्रथमत; शरणागमनमाह—तस्येति। पूर्वधर्मवशात् अवतीर्णस्य हरेः पूर्वं भावक इति तमेव शरणं गच्छति। अद्याऽपि भक्तिमार्गेण न निविष्ट इति जगद्रक्षार्थं भगवदवतारमाह—उपपन्नं स्वेनैव निर्मितं जगदवितुं स्वेच्छया आत्ताः स्वीकृताः नाना तनवो येन। अत एव तादृशस्य लसच्चरणारविन्दं शरणं व्रजामि। भक्त्यर्थमेवैषा शरणागतिश्चरणनिरूपणात्। युक्तमेव यद्भीताः[1] रक्षकस्य चरणशरणं गच्छन्तीति[2]। तत्रापि पूर्ववद्बाधश्चेत् व्यर्थं (?) शरणागतिरित्यत आह—अकुतोभयमिति। नन्वयमेव दुःखदाता 'सुखं दुःखम्' इत्यादिवाक्यात्। ततश्च मारकस्य शरणागमनमनुचितमित्याशङ्क्याऽऽह येनेदृशी गतिरदर्शि। यदि केवलमेतादृशीं गतिं प्रयच्छेत् न तु ज्ञापयेत् तर्हि शरणं न गच्छेत्। यत्पुनर्ज्ञापयति, असत एतादृशी गतिरिति। तेनैवं ज्ञायते सत्त्वे नैवं गतिर्भविष्यतीति ज्ञापयति। तत्र सत्त्वं सति भगवति प्रवेशादेव सदसतोर्विभागः हेयत्वेन, ग्राह्यत्वेन च निर्द्धारितः। प्राकृतमसत् भगवान् सन्निति। यथा जीवस्य स्वरूपतः सतोऽपि असति प्रवेशे असत्त्वम्। तथा सति प्रवेशत्वमिति सत्प्रवेशार्थं भगवच्छरणागतिर्युक्तैवेत्यर्थः॥ १२॥

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

अकल्प इत्यत्र। भगवदिच्छयोर्ध्वं गन्तुरिति। 'पुनरत्राऽऽव्रजेच्छुचिः' इति शुचित्वमुक्त्वा तदुत्तरमेतत्प्रघट्टकोक्त्याऽत्रैवमवसीयते। तथा च, गर्भे न सर्वस्य सर्वज्ञतेति हृदयम्॥ ९॥ ❀ ❀ तस्योपपन्नेत्यत्र। कारिकासु। जीवहीनत्वतश्चाऽपीति जीवहीनत्वतो नमनम्, चकारात् पूर्वश्लोके विभागादपि नमनमित्यर्थः। सत्सङ्गादित्यादि। अतो महदनुग्रहस्तु निरत्यर्थः। शेषः स्फुटम्। हेयत्वेन ग्राह्यत्वेनेति। न तु मिथ्यात्वेन सत्यत्वेनेत्यर्थः। एतदेव प्रदर्शयन्ति—यथेत्यादिना॥ १२॥

### श्रीगिरिधरकृता बालप्रबोधिनी

तत्र गर्भे दैवात् पूर्वकर्मवशात् भगवदिच्छावशाद्वा लब्धा स्मृतिर्येन सः। अतो जन्मशतोद्भवं बहुजन्मसञ्चितं कर्म स्मरन् दीर्घं बहुकालं अनुच्छ्वासं यथा भवति तथा स्थितः सन् किं नाम शर्म सुखं विन्दते?॥ ९॥ ❀ ❀ यदि तस्य ज्ञानं न स्यात्तदा दुःखं न स्यात् स तु सप्तमात् मासादारभ्य लब्धबोधोऽपि सञ्जातसुखदुःखादिज्ञानोऽपि सूतिहेतुभूतैर्वेपित इतस्ततश्चालितः सन् एकत्र नास्ते इत्यन्वयः। तत्र दृष्टान्तमाह—विष्ठाभूरिवेति, तत्रत्यकृमिरिवेत्यर्थः। तत्र हेतुमाह—सोदर इति, यतस्तत्समानोदरजन्मेत्यर्थः॥ १०॥ ❀ ❀ तदा च सप्त वध्रयो बन्धनभूताः धातवो यस्य सः जीवः कृताञ्जलिः सन् येन उदरे अर्पितः प्रवेशितस्तं भगवन्तं विक्लवया व्याकुलया वाचाऽस्तुवीत स्तौतीत्यन्वयः। तत्र हेतुमाह—नाथमान इति, उपतप्यमान इत्यर्थः। भीत इति गर्भवासादिलक्षणसंसारदुःखाद्भीतश्चेत्यर्थः। ननु तेन कथं ज्ञातं भगवताऽहमुदरे प्रवेशितोऽतस्तेनैव मोचनीय इतीत्यत आह—ऋषिरिति, आत्मपरमात्मगुणस्वरूपज्ञ इत्यर्थः॥ ११॥ ❀ ❀ तत्कृतां स्तुतिमेव दर्शयति—तस्येति दशभिः। उपसन्नं शरणागतं—उपपन्नमिति पाठः। स्वेनैव निर्मितं यज्जगत् तदवितुं रक्षितुं स्वेच्छयैव आत्ता गृहीता नाना मूर्त्तयो येन तस्य भगवतो भुवि चलच्चरणारविन्दं संसारतापसन्तप्तोऽहं शरणं व्रजामीत्यन्वयः। त्वया निबद्धोऽहं त्वयैव विमोचनीय इति सूचयन्नाह—येन त्वया मे मम असतो दुष्टस्यानुरूपा योग्या ईदृशी गर्भवासादिरूपा गतिः फलं अदर्शि प्रदर्शिता तस्येत्यन्वयः। तच्छरणव्रजनेनापि किमित्यपेक्षायां सर्वसंसारभयनिवृत्तिरित्याह—ह्यकुतोभयमिति, हि यस्मात् न कुतोऽपि शरणागतानां भयं यस्माद्रक्षकात् तथाभूतमित्यर्थः। भुवि चलदित्यनेन रामकृष्णाद्यवतारचरणारविन्दमभिप्रेतम्॥ १२॥

### हिन्दी अनुवाद

वह पिंजड़ेमें बन्द पक्षीके समान पराधीन एवं अङ्गोंको हिलाने-डुलानेमें भी असमर्थ रहता है। इसी समय अदृष्टकी प्रेरणासे उसे स्मरणशक्ति प्राप्त होती है। तब अपने सैकड़ों जन्मोंके कर्म याद आ जाते हैं और वह बेचैन हो जाता है तथा उसका

१. भीतः-ख. ग.। २. गच्छति ख. ग.।

दम घुटने लगता है। ऐसी अवस्थामें उसे क्या शान्ति मिल सकती है ? ॥ ९ ॥ ❀ ❀ सातवाँ महीना आरम्भ होनेपर उसमें ज्ञानशक्तिका भी उन्मेष हो जाता है; परन्तु प्रसूतिवायुसे चलायमान रहनेके कारण वह उसी उदरमें उत्पन्न हुए विष्ठाके कीड़ोंके समान एक स्थानपर नहीं रह सकता ॥ १० ॥ ❀ ❀ तब सप्तधातुमय स्थूलशरीरसे बँधा हुआ वह देहात्मदर्शी जीव अत्यन्त भयभीत होकर दीन वाणीसे कृपायाचना करता हुआ, हाथ जोड़कर उस प्रभुकी स्तुति करता है, जिसने उसे माताके गर्भमें डाला है ॥ ११ ॥ ❀ ❀ जीव कहता है—मैं बड़ा अधम हूँ; भगवान्‌ने मुझे जो इस प्रकारकी गति दिखायी है, वह मेरे योग्य ही है। वे अपनी शरणमें आये हुए इस नश्वर जगत्‌की रक्षाके लिये ही अनेक प्रकारके रूप धारण करते हैं; अतः मैं भी भूतलपर विचरण करनेवाले उन्हींके निर्भय चरणारविन्दोंकी शरण लेता हूँ ॥ १२ ॥

यस्त्वत्र बद्ध इव कर्मभिरावृतात्मा भूतेन्द्रियाशय[1]मयीमवलम्ब्य मायाम् ।
आस्ते विशुद्धमविकारमखण्डबोधमातप्यमानहृदयेऽवसितं नमामि ॥ १३ ॥
यः पञ्चभूतरचिते रहितः शरीरे च्छन्नो यथेन्द्रियगुणार्थचिदात्मकोऽहम् ।
तेनाविकुण्ठमहिमानमृषिं तमेनं वन्दे परं प्रकृतिपूरुषयोः पुमांसम् ॥ १४ ॥
यन्माययोरुगुणकर्मनिबन्धनेऽस्मिन् सांसारिके पथि चरंस्तदभिश्रमेण ।
नष्टस्मृतिः पुनरयं प्रवृणीत लोकं युक्त्या कया महदनुग्रहमन्तरेण ॥ १५ ॥
ज्ञानं यदेतददधात्कतमः स देवस्त्रैकालिकं स्थिरचरेष्वनुवर्तितांशः ।
तं जीवकर्मपदवीमनुवर्तमानास्तापत्रयोपशमनाय वयं भजेम ॥ १६ ॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका ।

ननु कोऽसौ यं शरणं व्रजसि को वा तव तस्य च विशेषो येन सेव्यसेवकत्वमित्यपेक्षायामाह। अत्र मातुर्देहे भूतेंद्रियाशयमयीं देहाकारपरिणतां मायामवलंब्याश्रित्य कर्मभिरावृतस्वरूप इव बद्ध इव च य आस्ते सोऽहम्। यस्त्वत्रैवास्ते तं नमामि। कथंभूतमित्यपेक्षायां तुशब्दोक्तं विशेषं दर्शयति। आतप्यमाने हृदयेऽवसितं प्रतीतमेवमप्यविकारम्। कुतः विशुद्धं निरुपाधिं तत्कुतः अखंडो बोधो यस्य तम् ॥ १३ ॥ ❀ ❀ ननु त्वमपि वस्तुतः शुद्ध एव। "असंगो ह्ययं पुरुषः" इत्यादिश्रुतेः। तत्कथं युवयोरयं विशेषस्तत्राह। यः पंचभिर्भूतै रचिते शरीरे अयथा मिथ्यैव छन्नो न वस्तुतः यतस्तेन शरीरेण रहितोऽसंगोऽतो यथैवेंद्रियगुणार्थचिदात्मकः इंद्रियाणि च गुणाश्च अर्थाश्च चिदाभासश्च तदात्मकः सोऽहं तं वंदे। कथंभूतम्। तेन शरीरेणाविकुंठो महिमा यस्य तम्। अवगुंठेति पाठेऽवसन्नं गुंठनमावरणं यस्य स महिमा यस्येत्यर्थः। तत्र हेतुः प्रकृतिपुरुषयोः परं नियंतारम्। कुतः ऋषिं सर्वज्ञं विद्याशक्तिमित्यर्थः। विद्याऽविद्याकृतो विशेष इति भावः ॥ १४ ॥ ❀ ❀ ननु ज्ञानेनायं बंधो निवर्तिष्यते किं परमेश्वरवंदनेन तत्राह। यस्य मायया नष्टस्मृतिः सन् संसारसंबंधिनि पथि तदभिश्रमेण तत्कृतेन क्लेशेन चरन्नयं जीवो महतस्तस्यैवेश्वरस्यानुग्रहं विना पुनः कया युक्त्या लोकं निजस्वरूपं प्रवृणीत संभजेत अभिश्रमहेतुत्वेन पंथानं विशिनष्टि। उरूणि गुणनिमित्तानि कर्माणि नितरां बंधनानि यस्मिन् ईश्वरस्य प्रसादं विना ज्ञानाभावात्स एव सेव्य इत्यर्थः ॥ १५ ॥ ❀ ❀ ईश्वर एव ज्ञानद इत्युपपादयन्नाह। यदेतत्त्रिकालविषयं ज्ञानं तत्तं विना कतमो मय्यदधान्न कोऽपि किं तु स देव ईश्वर एव। नन्वन्यः प्रकृष्टो जीवो दधातु। नेत्याह। जीवरूपां कर्मपदवीमनुवर्त्तमाना वयमिति तद्व्यतिरेकेण न कोपि समर्थ इत्यर्थः। अन्यस्यात्रासंभवमुक्त्वा तस्य संभवमाह। स्थिरेषु चरेषु चांतर्यामिरूपोऽनुवर्तितोंऽशो येन तं भजेम ॥ १६ ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

अत्राशंकते—नन्विति। तन्निरुपाधित्वम्। अत्र विश्वनाथः—तस्य स्वप्रभोरद्भुतां लीलां कृपालुताञ्च स्मरन्साश्चर्यमाह—यः खल्वत्रास्मद्विधदुर्जीवानां नानादुःखमयप्रतिशरीर एवास्ते किमस्मान्पालयितुं किं वा स्वैरलीलत्वेनेति न विद्म इति भावः तमहं नमामीत्यन्वयः। अहं स्वदुष्कृतफलं भुंजानो यदत्रास्मि तदुचितमेव स कथमत्र दुर्गंधे महानरकेंतर्यामित्वेनापि तिष्ठतीत्याह। कर्मभिर्बद्ध इव न तु बद्धो वृंदावनभुवि चलच्चरणारविंदत्वात्। आवृतात्माहं यथा तथैव देहेनावृतस्वरूप इव न त्वावृतः उक्तयुक्तेरेव मायां स्वशक्तिमवलंब्य प्रवर्त्य। नन्वेवं तर्हि तस्मिन्मायावलंबत्वान्मालिन्यं विकारश्च प्रसज्येतेत्यत आह—विशुद्धं निर्विकारञ्च, तत्र हेतुः अखंडबोधं मदज्ञातमिव यस्य ज्ञानं मायया खंडयितुमशक्यमित्यर्थः। ननु कथमिदमवगतं त्वयेत्यत आह—आसमंतात्त-

---

[1] प्रा० पा०—याश्रय० ।

ष्यमानेऽत्र हृदये मयाऽवसितं प्रतीतं संतप्यति हृदये स्थित्वा येन मह्यमपीदं ज्ञानं दत्तं तस्य ज्ञानं कथं खंडितं भवेदिति ॥ १३ ॥ ❀ ❀ पुनराशंकते—नन्विति । अतोऽसंगत्वात् । इत्यर्थ इति व्याख्येयम् । यत्राविकुंठमहिमत्वे नियंतृत्वे हेतुं पृच्छति कुत इति । इत्यर्थ इति । "विद्याशक्त्या त्रिकालज्ञा ऋषयः परिकीर्त्तिताः" इत्युक्तेरिति भावः । इति भाव इति । "योऽविद्यया युक्स्स तु नित्यबद्धो विद्यामयो यः स तु नित्यमुक्तः ।" इत्याशयः ॥ १४ ॥ ❀ ❀ पुनराक्षिपति—इत्यर्थ इति । "वासुदेवे भगवति भक्तियोगः प्रयोजितः । जनयत्याशु वैराग्यं ज्ञानं यत्तदहैतुकम्" इत्युक्तेः । 'मत्तो ज्ञानं हि जीवानाम्' इति गीतोक्तेश्च ॥ १५ ॥ ❀ ❀ आक्षिपति अन्यो जीव इति । इत्यर्थ इति । "अहं ज्ञानप्रदो गुरुः" इत्युक्तेर्गुरावपि स्थित्वा ज्ञानदाताहमेवेति भावः । अन्यस्येश्वरेतरस्य । अत्र गर्भे ॥ १६ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या ।

विशेषोऽत्र धर्मवैलक्षण्यं येन । विशेषेण अत्र । जीवभोग्यदेह एव यस्तु नियन्तृतयास्ते तं नमामि प्रतीतमनुभूतम् । एवमपि हृदयस्थत्वेऽपि चिच्छक्त्या मायाभिभावकत्वात् जीववज्जन्मादिविकारानभिभूतमखण्डो विषयकालानवच्छिन्नः ॥ १३ ॥ ❀ ❀ तत्तस्मादसङ्गत्वेन शुद्धत्वात् युवयोरिति वायुक्तिः अयं निर्विकारत्वसविकारत्वलक्षणः अयथैव मिथ्याज्ञानेनैव अर्थाश्च तत्तदिन्द्रियविषयाः चिदाभासश्च प्राकृताहङ्कारः सोऽहमध्यासवान् । तत्र अकुण्ठमहिमत्वे विद्या स्वरूपभूता चिच्छक्तिः अविद्या "अनात्मन्यात्मबुद्धिर्या साविद्येति च कथ्यत" इति विष्णुपुराणोक्ता । ताभ्यां कृतोऽयं नित्यमुक्तत्वसर्वज्ञत्वबद्धत्वकिञ्चिज्ज्ञत्वलक्षणो विशेष इति ॥ १४ ॥ ❀ ❀ अयमविद्याकृतः यस्य मायया बहिर्मुखत्वप्रयुक्तया "भयं द्वितीया भिनिवेशतः स्यात्" इत्यादेः, तत्कृतेन जन्ममरणलक्षणसंसारकृतेन ईश्वरानुग्रहहेतुजिज्ञासायान्तु श्लेषेण "महत्सेवां द्वारमाहुर्विमुक्तेः" इत्यादिप्रसिद्धया यादृच्छिकमहत्सङ्गो व्याख्येयः ॥ १५ ॥ ❀ ❀ प्रकृष्टः भक्तिशून्यत्वेऽपि विद्यादिगुणगरिष्ठ इति व्याख्येयमत एव वयमिति स्वसाधारणजीवान्तरदृष्ट्या बहुवचनम् । अन्यथा "रहूगणैतत्तपसा न याति" इत्यादिवाक्यं व्याकुप्येत् पश्चाद् द्वितीयान्तविशेषणत्वेन व्याख्यानादनु वर्त्तितांशमित्येव पाठो नत्वनुवर्त्तितांश इति ॥ १६ ॥

### श्रीमद्वीरराघवव्याख्या

कोऽसौ यं शरणं व्रजसि कौ वा तस्य तत्र च विशेषः येन शरण्यत्वशरणगन्तृत्वभाव इत्याकांक्षायामाह । य इति । अत्र मातुर्देहे भूतेन्द्रियाशयमयीं भूतादिरूपेण परिणतां मायामवलम्ब्य धृत्वा कर्मभिरावृतात्मा कर्मरूपाविद्यातिरोहितस्वरूपः बद्धो जीवः स इव यः स्वयमप्यास्ते तेन सह प्रकृतौ वसतीत्यर्थः । एवं जीवेन सह वसन्तमपि विशुद्धं प्रकृतिगतदोषैरस्पृष्टमनेनापहतपाप्मत्वमुक्तमविकारं जन्मजरामृत्युशोकमोहाशनायापिपासाविकाररहितमनेन हेयगुणराहित्यमुक्तं कल्याणगुणजातमाह । अखण्डबोधं नित्यासङ्कुचितज्ञानगुणकज्ञानस्वरूपमातप्यमाने । हृदये अवसितं प्रतीतं वा नमामि । कर्मवश्यो जीव इव स्वयमशुचिदेहे वसन्नपि तत्रतदोषैरस्पृष्टो यस्तं नमामीत्यर्थः । ननु भगवतोऽकर्मवश्यत्वे सत्यपि नानाविधाशुचिदेहसम्बन्धोऽपुरुषार्थ एव, तन्नियमनार्थं स्वेच्छया तत्प्रवेशेऽप्यपुरुषार्थसम्बन्धोऽवर्जनीयः, पूयशोणितादिमज्जनं हि स्वेच्छाकारितमप्यपुरुषार्थ एव । अतो यद्यपि जगदेककारणं सर्वज्ञतादिकल्याणगुणाकरं च ब्रह्म तथापि "यः पृथिव्यां तिष्ठन् य आत्मनि तिष्ठन् यो रेतसि तिष्ठन्" इत्यादिवचनात्तत्र तत्रावस्थितस्यापुरुषार्थाः सन्त्येव । मैवं निरस्तनिखिलदोषत्वस्य समस्तकल्याणगुणाकरत्वस्य चात्रैवोक्त्यापुरुषार्थप्रतिषेधात् जीवस्य तु तत्स्वरूपं कर्मणा तिरोहितमित्यपुरुषार्थसम्बन्धोऽवर्जनीयः । जीवस्य कर्मवश्यत्वात्तत्कर्मानुगुण्येन तत्तद्वस्तुसम्बन्ध एवापुरुषार्थः । परस्य तु ब्रह्मणः स्वाधीनस्य स एव सम्बन्धस्तद्विचित्रनियमनरूपलीलासारयैव स्यात् । ननु स्वेच्छया नियमनं कुर्वतोऽपि तत्तद्वस्तुस्वभावायत्तोऽपुरुषार्थसम्बन्धोऽवर्जनीयः । मैवं न ह्यचिद्वस्त्वपि स्वभावतोऽपुरुषार्थस्वरूपं कर्मवश्यानां तु कर्मस्वभावानुगुण्येन परमपुरुषसंकल्पादेकमेव वस्तुकालभेदेन पुरुषभेदेन च दुःखाय सुखाय च भवति । वस्तुस्वरूपप्रयुक्ते तु तादृप्ये सर्वं सर्वदा सर्वस्य सुखाय दुःखायैव वा स्यात् । न चैवं दृश्यते । तथाचोक्तम्

> नरकस्वर्गसंज्ञे वै पापपुण्ये द्विजोत्तम । वस्त्वेकमेव दुःखाय सुखायेर्ष्यागमाय च ॥
> कोपाय च यतस्तस्माद्वस्तुवस्त्वात्मकं कुतः । तदेव प्रीतये भूत्वा पुनर्दुःखाय जायते ॥
> तदेव कोपाय यतः प्रसादाय च जायते । तस्माद्दुःखात्मकं नास्ति न च किञ्चित्सुखात्मकम् ॥

इति तस्मात्कर्मवश्यत्वाकर्मवश्यत्वहेयार्हत्वहेयप्रतिभटत्वादिभिः जीवपरयोर्वैलक्षण्यमविहतमेव ॥ १३ ॥ ❀ ❀ एतदेव वैलक्षण्यं स्पष्टयन्नमस्करोति । य इति । पञ्चभूतरचिते पञ्चभिराकाशादिभूतैरारब्धे शरीरे यथाहं छन्नः आवृतः शरीरेणावृतः यथाच्छन्नोऽपि यो भगवान् रहितः शरीरसम्बन्धायत्तदोषैरस्पृष्टः तत्र हेतुः इन्द्रियगुणार्थचिदात्मकः इन्द्रियाणि ज्ञानकर्मोभयेन्द्रियाणि गुणार्थाः गुणपरिणामरूपाः शब्दादयः । यद्वा गुणाः सत्त्वादयः अर्थाः शब्दादयः चिज्जीवः, एते आत्मा शरीरं यस्य सः चिदचितोर्नियन्तृत्वेनावस्थितः नत्वहमिव कर्मसंकुचितस्वभावः प्रकृतिपारवश्येन नियाम्यतयावस्थित इत्यर्थः । यद्वा इन्द्रियगुणार्थचिदात्मक इत्यहमित्यस्य विशेषणमिन्द्रियाणां गुणपरिणामरूपेषु शब्दादिष्वेव चिद्भोग्यताज्ञानं यस्य विषयासक्तचित्तोऽहमित्यर्थः ।

तेन शरीरेणाविकुण्ठमहिमानं नित्यासंकुचितज्ञानमेवम् ऋषिं सर्वज्ञं प्रकृतिपुरुषयोः परं विलक्षणं तन्नियन्तारं पुमांसं परमपुरुषं वन्दे संसृतिनिवृत्तिकामः शरणं व्रजामीत्यर्थः ॥ १४ ॥ ❀ ❀ कथं मच्छरणवरणेन संसृतिनिवृत्तिष्यत इत्यपेक्षायाम् "य एव बन्धकः स एव मोचक" इति न्यायेन त्वत्सङ्कल्पायत्तावेव बन्धमोक्षावित्याह । यन्माययेति । अयं जीवः यन्मायया यस्य भगवतः सङ्कल्परूपज्ञानेन उरूणि सत्त्वादिगुणनिमित्तकानि कर्माणि बन्धसाधनानि यस्मिन् सांसारिके संसारसम्बन्धिनि पथि प्रवृत्तिमार्गे चरन् तदभिश्रमेण तत्र सञ्चारक्रमेण नष्टस्मृतिः विनष्टजीवपरयाथात्म्यज्ञानः पुनर्महदनुग्रहमन्तरेण महतस्तस्य भगवतोऽनुग्रहं विना कया मुक्त्या केनोपायेन पुनर्लोकं स्वलोकमाविर्भूतगुणाष्टकस्वस्वरूपं प्रवृणीत प्राप्नुयात् । यद्वा लोकं स्वपरयाथात्म्यज्ञानस्वरूपं मुक्त्युपायं प्राप्नुयादित्यर्थः ॥१५॥ ❀ ❀ भगवानेव ज्ञानप्रदानद्वारा संसृतेर्मोचकः न ब्रह्मादिष्वन्यतमो जीवः । न हि स्वयं निगडितोऽन्यान्निगडितान्मोचयेदिति वदन्नाह । ज्ञानमिति । यदेतत्त्रैकालिकं त्रिष्वपि कालेष्वसंकुचितं जीवपरयाथात्म्यज्ञानं महदनुग्रहमन्तरेण कतमो जीवः व्यधाद्दध्यादित्यर्थः । किन्तु देव ईश्वर एव नन्वन्यस्त्वत्तः प्रकृष्टो जीवो विदधातु नेत्याह । वयं ब्रह्मादयो जीवानामात्मनां यानि कर्माणि संसृतिकराणि तेषां पदवीं परम्परामनुवर्तमानाः सर्वे वयं कर्मरूपाविद्यातिरोहितज्ञाना इत्यर्थः । अतस्त्वद्व्यतिरेकेण कोऽपि न समर्थ इत्यर्थः । अन्यस्यासम्भवमुक्त्वा तस्य सम्भवमाह स्थिरचरेषु स्थावरजङ्गमेषु शरीरेष्वनुवर्तितः अन्तरात्मतयांशभूतो जीवो येन सः जीवान्तरात्मतया वसन्नित्यासंकुचितज्ञानस्वरूपज्ञानगुणकस्तं भजेम ॥ १६ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

यो भूतेन्द्रियाशयमयीमाकाशादीनि पञ्चभूतानि श्रोत्रादीनि दशेन्द्रियाणि आशयो मनः एतदात्मना विकृतां मायां प्रकृतिमवलम्ब्य प्रवर्तकत्वेनाश्रित्य पुण्यापापलक्षणैः कर्मभिरावृतात्मा सक्तः कर्मबद्धो जीव इव अत्रास्मिञ्छरीरे आस्ते । तुशब्देनात्यन्तवैलक्षण्यमनयोरस्तीति दर्शयति "तुच्छेनाभ्यपिहितम्" इति श्रुतेः वैलक्षण्यं स्पष्टमाह । विशुद्धमिति । अविकारमस्ति जायत इत्यादिविकारशून्यं तत्र हेतुगर्भविशेषणमाह । अखण्डेति । अखण्डबोधमपरिच्छिन्नज्ञानं मम तापत्रयेण तप्यमानहृदये निरस्ततापत्रयत्वेनावसितं निश्चितं हरिं नमामीत्यन्वयः । "सत्यं ज्ञानमनन्तं ब्रह्म । य आत्मनि तिष्ठन्" इत्यादिश्रुतिः ॥ १३ ॥ ❀ ❀ एतदेव विवृणोति । यः पञ्चेति । आत्मक आत्माभास इन्द्रियाणि चक्षुरादीन्द्रियाणि गुणान् सत्त्वादीनर्थाञ्छब्दादीनुपभोग्यतया वेत्ति मन्यत इति इन्द्रियगुणार्थविदहं यथा पञ्चभूतरचिते शरीरे छन्नो वसामि तथायमिन्द्रियगुणार्थतत्त्वज्ञो विष्णुः शरीरे छन्नोऽवहितोऽसङ्गत्वेन स्थितः तेन हरिणा प्रेरितोऽहं तमविकुण्ठमहिमानमृषिं सर्वज्ञं प्रकृतिपुरुषयोः श्रीब्रह्मणोः परमेनं पुमांसं वन्द इत्यन्वयः । स्वप्रत्यक्षविषयत्वादेनमित्युक्तं "त्वमग्ने ! प्रथमो अङ्गिरा ऋषिः । अक्षरमम्बरान्तधृतेः" इत्याद्यत्र मानम् ॥ १४ ॥ ❀ ❀ तत्प्रेरणयैव तद्वन्दनमिति कटाक्षितमिति स्पष्टयति । यन्माययेति । यस्य हरेर्माययेच्छयाधीनया प्रकृत्योरुभिर्महद्भिः सत्त्वादिगुणैः कर्मभिश्च नितरां बन्धनं यस्मिन् स तथा तस्मिन् संसाराभिधाने पथि चरन्नयं लोकः पुनस्तदतिश्रमेण तापत्रयातपतापेन नष्टस्मृतिर्नष्टज्ञानो महतो हरेरनुग्रहं प्रेरणालक्षणमन्तरेण विना कया युक्त्या तं हरिं प्रवृणीत मम स्वामीति शरणं गच्छेदित्यन्वयः ॥ १५ ॥ ❀ ❀ अतस्तदनुग्रहेणैव तज्ज्ञानमित्याह । ज्ञानमिति । यः कतमः सुखतमः सः भूमा देवस्त्रैकालिकमतीतजन्मादिविषयमेतज्ज्ञानं मेऽदधादिति यद्यस्मादतः प्रेष्ठत्वाद्वयं तं त्वां तापत्रयोपशमनाय भजेमेत्यन्वयः । न केवलं मय्येव स्थितोऽन्यत्राप्येवमिति भावेनोक्तम् । स्थिरचरेष्विति । अनुवर्तिता अन्तर्यामित्वेनानुगता अंशा अनन्तानि रूपाणि यस्य स तथा अनुमतजीवत्वलक्षणस्य ममानेन सहाभेदो नास्तीति भावेनोक्तं जीवेति । जीवानां कर्मपदवीं संसारमार्गमनुवर्त्तमानाः ॥ १६ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

आतप्यमाने स्वहृदये स्थितस्याप्यस्फुरतस्तस्य तामेवाकस्मिकीं स्फूर्त्तिं दर्शयति । यस्त्विति । अत्र मद्विधजीवशरीरे तत्सहस्थायित्वात् । तत्कर्मभिर्बद्ध इव तस्मिन् मत्स्फूर्त्तेस्तैरावृतात्मेव च यस्त्वास्ते नत्वहमिव निरुद्ध एवेति तुशब्दस्यार्थः । किं कृत्वा । मायामवलम्ब्य प्रवर्त्य । अतो मायाप्रवर्तके तस्मिन्न कर्म्मबन्धादिकम् । किन्त्वविवेकिनां प्रतीतिदोष एव स इति भावः । वस्तुतस्तु विशुद्धमित्यादि अवसितमनुभूतम् । यद्वा । अत्रेति भवतीत्यर्थः । अवतारसमये तथा तथानुकरणात् । तदुक्तम् । कृष्णमेनमवेहीत्यादि ॥ १३ ॥ ❀ ❀ तदेवं बन्धाबन्धादिकं योजयति । य इति । शरीरे यथाहं छन्नस्तथान्तर्यामितया तत्प्रवेशात् यस्तत्र छन्नोऽपि रहितस्तत्स्पर्शशून्यः । तत्र स्वस्य तत्स्पर्शे हेतुरिन्द्रियेति । तस्य तु तदस्पर्शेन विशेषमाह । तेनेति । शरीरेन्द्रियादिस्पर्शशून्यत्वेनाविकुण्ठेत्यादि । यतः प्रकृतिपुरुषयोः परमविद्यास्पर्शास्पर्शयोग्यस्वरूपवैलक्षण्यादावयोरिति भावः । यद्वा य इन्द्रियगुणार्थचिदात्मको लिङ्गशरीराध्यस्तचिद्रूपो यथा येन निजेश्वराज्ञानादिप्रकारेण पञ्चभूतरचिते शरीरे च्छन्नस्तेन चावृतस्तथा तेनैव प्रकारेण सोऽहं तेन पूर्वोक्तेन, निजेश्वरेण रहितस्तस्माद्विमुखतां प्राप्तस्तमेनमकस्मान्मनस्याविर्भवन्तं वन्दे महाकरुणामयतया स्तौमि । तत्र तस्य महिमकीर्त्तने स्वायोग्यतां दर्शयति । अविकुण्ठेत्यादिना । ऋषिं ब्रह्मादीनामपि गुरुं प्रकृतेस्तद्द्रष्टुर्महापुरुषस्य च परं परमतत्त्वं तं नराकारं श्रीकृष्णाख्यं स्वयम्भगवन्तमित्यर्थः ॥ १४ ॥ ❀ ❀ नान्वितो निःसृत्य भजनं कुरु इत्याशङ्क्य तस्य दुर्ल्लभतामाह । यदिति । यस्य माययेत्यादि तं लोकं स्वाश्रयं त्वां पुनस्तत्प्राप्तिकारणं महदनुग्रह एव तावद् दुर्ल्लभ इति भावः ॥ १५ ॥ ❀ ❀ तस्मात्

प्राचीनमहदनुग्रहादरेण प्रकटितात्मज्ञानं तमेवाविस्मृतये सम्प्रति प्रपन्ना इत्याह। ज्ञानमिति। बहुत्वं स्वसाधारणजीवान्तरसद्भावनया त्रैकालिकं नित्यरूपं तम्॥ १६–१७॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

तस्य स्वप्रभोरद्भुतां लीनां कृपालुताञ्च स्मरन् साश्चर्यमाह। यः खल्वत्रास्मद्विधदुर्जीवानां नानादुःखमयप्रतिशरीर एवास्ते किमस्मान् पालयितुं किम्वा स्वैरलीलत्वेनेति न विद्म इति भावः। तमहं नमामीत्यन्वयः। अहं स्वदुष्कृतफलं भुञ्जानः कर्म्मबद्धो यदत्रास्मि तदुचितमेव स कथमत्र दुर्गन्धे महानरके अन्तर्य्यामित्वेनापि तिष्ठतीत्याह। कर्म्मभिर्बद्धः इव न तु बद्धः वृन्दावनभुवि चलच्चरणारविन्दत्वादावृतात्मा अहं यथा तथैव देहेनावृतस्वरूप इव न त्वावृतः, उक्तयुक्तेरेव। किं कृत्वा भूतादिमयीं मायां स्वशक्तिमवलम्ब्य प्रवर्त्य। नन्वेवं तर्हि तस्मिन् मायावलम्बान्मालिन्यं विकारश्च प्रसज्येतेत्यत आह। विशुद्धं निर्विकारञ्च तत्र हेतुः अखण्डबोधं मज्ज्ञानमिव यस्य ज्ञानं मायया खण्डयितुमशक्यमित्यर्थः। ननु कथमिदमवगतं त्वयेत्यत आह। आसमन्तात्तप्यमानेऽत्र हृदये मया अवसितं प्रतीतम्। सन्तप्त इति। मदीयहृदये स्थित्वा येन मह्यमप्येवं ज्ञानं दत्तं तस्य ज्ञानं कथं खण्डितं भवेदिति॥ १३॥ ❀ ❀ नन्वेवञ्चेत् स कथमत्र शरीरे तिष्ठेत्तत्राह। यः शरीरेऽत्र रहितः इन्द्रियाणि गुणाश्च अर्थाश्च तेष्वेव चिच्चैतन्यं यस्य तथाभूत आत्मा स्वरूपं यस्य सोऽहं यथात्र शरीरे छन्न एव तथा योऽत्र रहितः स्थितोऽप्यस्थित एवेत्यर्थः तेन हेतुना न विशेषेण कुण्ठो महिमा यस्य तम्। तेनावगुण्ठेति पाठे भागुरिमतेऽकारलोपेनात्र समासेऽवगुण्ठमहिमानमनावृतैश्वर्य्यम्। प्रकृतेस्तद्द्रष्टुर्महापुरुषस्य च परं ताभ्यां परतत्त्वं पुमांसं श्रीकृष्णम्॥ १४॥ ❀ ❀ नन्वीदृशी भक्तिस्त्वया कथं प्राप्तेति तत्र भक्तेः प्राप्तिकारणं महदनुग्रह एवेत्याह। यदिति। तदपि श्रमेण तत्पथपर्यटनश्रमेण हेतुना नष्टस्मृतिरयं मल्लक्षणो जनः महदनुग्रहं विना कया युक्त्या लोकं भगवतो धाम प्रवृणीत स्वाभीप्सितपरत्वेन वृणुयात्। अपि तु न कयापीत्यतः पूर्वजन्मनि कृष्णभक्तस्य कस्यचिन्मद्गुरोः प्रसादविलसितमेवैतन्मे कृष्णभजनमिति भावः॥ १५॥ ❀ ❀ ननु तं परमेश्वरं केन प्रमाणेन ज्ञात्वा भजसीति तत्रानुमानेनैवेत्याह। ज्ञानं यदेतन्मय्यधमेऽपि अदधात् धारयामास अर्पयति स्मेत्यर्थः, स कतमो देवो भवेत् देवेषु मध्ये कश्चिन्मुख्यो भवेदिति मज्ज्ञानान्यथानुपपत्त्यैवानुमीयमानं त्रैकालिकं भूतभविष्यद्वर्त्तमानकालेषु विराजमानं स्थिरचरेष्वनुवर्त्तितोऽन्तर्य्यामिरूपोंऽशो येन तम्। जीवसम्बन्धिनीं कर्मपदवीम्॥ १६॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

अचेतनरूपायां भगवच्छक्तिभूतायां मायायां तन्मोहितश्चेतनो भगवदात्मकोऽपि स्वकर्मभिर्बद्धः विस्मृतात्मानात्मपरमात्मस्वरूपः चेतनाचेतनविलक्षणस्वरूपस्य कृपां विना विमुक्तो भवितुं नार्हतीति त्रिभिर्वदन् भगवन्तं प्रणमति। अहं तं प्रणमामि क सः यो बद्ध इव यथा प्रसिद्धः पापकर्मा नृपत्यादिभिर्बद्धो भवति तद्वत् निजकर्मभिर्बद्धः यत आवृतात्मा माययेति शेषः भूतादिमयीं मायामवलम्ब्य इयं सुखदेत्येवमाश्रित्य अत्र मायामये आतप्यमाने हृदये आस्ते सः कथम्भूतं ज्ञानप्रदत्वेनावसितं निश्चितं विशुद्धमविकारमखण्डबोधं च॥ १३॥ ❀ ❀ अहं तमेनं पुमांसं वन्दे कस्त्वं यस्तेन शरीरेण रहितः पृथग्भूतोऽपि यथा यथावदेव शरीरे छन्नः शरीरेण रहितत्वे छन्नत्वे च एकेनैव विशेषणेन हेतुमाह। इन्द्रियगुणाः शब्दादयः एव अर्थाः इष्टा तेषु वार्थः प्रयोजनं यस्य सः। चिद् ब्रह्म आत्मा अंशित्वेनाश्रयो यस्यांशभूतस्य स चिदात्मकः स चासौ स च ब्रह्मांशत्वेन शरीरभिन्न एव जीवः इन्द्रियगुणलुब्धत्वेन शरीरावृत इत्यर्थः। कथम्भूतं प्रकृतिपुरुषयोः परमकुण्ठमहिमानमृषिं सर्वधर्मप्रवर्तकञ्च॥ १४॥ ❀ ❀ यत् यस्य मायया नष्टस्मृतिः लुप्तविवेकः सन् अयं जीवः उरूणि गुणनिमित्तानि कर्माणि नितरां बन्धनानि यस्मिंस्तस्मिन् सांसारिके पथि तदभिश्रमेण तत्कृतेन क्लेशेन चरन् महतस्तस्यैवानुग्रहं विना पुनः कया युक्त्या लोकं वृणीत विमुक्तबन्धनः सन् परमात्मपदं प्राप्नुयादित्यर्थः॥ १५॥ ❀ ❀ स एव मम लुप्तानात्मपरमात्मविवेकस्य विवेकदातेत्याह। एकः त्रैकालिकं ज्ञानं कतमः मयि अदधात् न कतमोऽपि किन्तु य एव प्रकृतिपुरुषयोः परः तं स्थिरचरेष्वनुवर्तितांशं चेतनाचेतनेषु अनुवर्तितः अंशो येन तम्।

अथ वा बहुनैतेन किं ज्ञातेन तवार्जुन!। विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्॥

इति श्रीमुखवचनात् जीवानामस्माकं यानि कर्माणि तेषां पदवीं फलभूतां संसृतिमनुवर्त्तमानाः वयं भजेम॥ १६॥

### श्रीमद्वल्लभचार्यविरचिता सुबोधिनीव्याख्या।

जीवब्रह्मणोः पूर्वोक्तसिद्ध्यर्थं रूपभेदमाह—यस्त्वत्रेति। अत्रैव शरीरे यः शकुन्त इव बद्धः प्रतिभासते स जीवः। तस्य बन्धे हेतुः—कर्मभिरावृतात्मेति। कर्मभिरपि सम्बन्धे हेतुः। भूतेन्द्रियाशयमयीमवलम्ब्य मायामिति। भूतानि देहः, इन्द्रियाण्यन्तःकरणं च। आत्मानं व्यामोहयितुमेतद्रूपा माया जाता। अतस्तामवलम्ब्य आत्मत्वेनाधारत्वे वा य आस्ते, स बद्ध इव जीवः। यस्तु तथाविधां मायां नावलम्ब्याऽऽस्ते, स विशुद्धः। अनेनादेहरूपता निरूपिता। इन्द्रियरूपताव्यावृत्त्यर्थमाह—अविकारमिति। सर्वे

विकारा इन्द्रियजन्याः। अखण्डबोधमिति अन्तःकरणरूपताव्यावृत्त्यर्थम्। एवंभूतोऽपि सन् अस्मत्कृपया स्वस्य सखित्वप्रतिपादनार्थमासमन्तात् तप्यमाने हृदये अवसितं प्रतीतम्, अत एव नमामि। अतो भगवतो दोषाभावो गुणाश्चोक्ताः। जीवस्य च दोषा उक्तास्तन्निवृत्त्यर्थं च नमनमिति निरूपितम्॥ १३॥ ❀ ❀ ननु किन्नमनेन ज्ञानेन हि माया निवर्तिष्यते, ततः कर्मसम्बन्धाभावे देहसम्बन्धाभावः, ततो मुक्तो भविष्यतीति मुक्त्यर्थं भगवन्नमनं न[१] कर्तव्यमित्याशङ्क्याऽऽह—❀ यः पञ्चभूतरचित इति। अयं देहः पञ्चभूतैरचितः, तानि च भूतानि भगवन्नियमितानि भगवदधीनान्येव। 'अजनि च यन्मयं तदविमुच्य नियन्तृ भवेत्' इति वाक्यात्। तादृशे अन्याधीने शरीरे यो रहितस्तम्। तादृश एव शरीरे यच्छन्नः, यथावदिन्द्रियगुणार्थचिदात्मकः सोऽहं वन्द इति सम्बन्धः। शरीरस्याच्छादकत्वं तदैव भवति, यदि पूर्वं चिद्रूपोऽप्यन्यत्र सम्बद्धो भवति। यथा दर्पणगतः सूर्यः स्थाप्यते, प्रतिमागतो वा विष्णुः गन्धादिभिः पूज्यत इति। तदर्थं प्रथमतो देहसम्बन्धात्पूर्वमिन्द्रियादिसम्बन्धो निरूप्यते। यथेति दृष्टान्तेन वा शरीराच्छादनं स्थाप्यते। यथा इन्द्रियाणि गुणाः अन्तःकरणरूपाः, अर्थः आधिभौतिकः, त्रितये प्रकाशार्थं यश्चिद्रूपेण प्रविष्टः, स चतुष्टयात्मा भवति। आध्यात्मिकादिरूपस्थितये वेदनरूपश्च। यथा अ[२]हमिन्द्रियादिसम्बद्धस्तथाऽऽत्मसम्बद्धोपीत्यर्थः। अत एकस्मिन्नेव शरीरे विद्यमानयोः एको रहितो भवति, एकश्च छन्नो भवति। तेन कारणेन अविकुण्ठमहिमानं जीवस्यालौकिकोपकारकरणसमर्थम्, ऋषिमेनं पूर्वोपकारिणं पूर्वस्थितबाधकनिवृत्तये प्रकृतिपुरुषयोः परं नियन्तारम्, निराकारपक्षव्यावृत्त्यर्थं पुमांसम्। वन्द इति स्वस्य हीनतां निरूप्य पूर्वोक्तमेवानुवादेनोक्तम्॥ १४॥ ❀ ❀ एवं शरणागतिर्नमनादिकं च भगवद्भक्तकृपयैव भवतीत्यार्षज्ञानेन स्मृत्वा भक्तसङ्गमिव प्रार्थयितुं तदनुग्रहं स्तौति—यन्माययेति। स्वसामर्थ्ये गते शास्त्रतोऽप्यचिकित्स्ये अलौकिकद्वारा भगवद्भक्ता एव तं भगवत्परं कर्तुं शक्नुवन्तीति युक्तम्। अन्यथा स्वतः सामर्थ्ये एवं दुर्दशा न स्यात्। प्रतीकारो हि ज्ञानक्रिययोः सद्भावे भवति। तत्र ज्ञानाऽभावो नष्टस्मृतिरिति। श्रमप्रतिपादनात् क्रिया, शक्त्यभावश्च। श्रमस्य नित्यमुक्तत्त्यर्थं यस्य भगवतो मायया मोह[४]ने करणभूतया उरूणि यानि गुणकर्माणि तैर्नितरां बन्धनं यत्र। एतादृशेऽस्मिन् सांसारिके मार्गे निरन्तरं चरन्निति मुक्तोऽपि निरन्तरं चरन् श्रान्तो भवति, किमुत बद्धः। सोऽपि बन्धः कर्मकृतः स्वतोऽपि मोचयितुमशक्यः। कर्माण्यपि न प्रायश्चित्तादिना निवर्तयितुं शक्यानि, यतो भगवन्माययैव जायन्ते। गुणाश्च स्वभावभूताः, चित्तं तत्परमेव कुर्वन्ति। अस्मिन्निति निरन्तरं परिदृश्यमानत्वेन निवृत्तिर्दुर्घटा सूचिता। पथीति अनिवृत्तिः सूचिता। कया युक्त्येति लौकिक उपायो न सङ्गच्छत [५]इति युक्तम्॥१५॥ ❀ ❀ नन्वेवं भक्तकृपयैव कथं भवतीत्याशङ्क्याऽऽह—ज्ञानं यदेतदिति। यदेतदस्माकं जातं त्रैकालिकवस्तुविषयज्ञानं तद्भगवतैव दत्तम्। अन्यथा यो हृदयस्थितो न भवति स कथं हृदये ज्ञानं दधा[६]ति। अ[७]यंच स्थिरचरेष्वनुवर्तितः, स्वांशो यस्य येनेति वा। अयं हि स्वांशं जीवमनुवर्तते। अन्तर्यामिरूपो वा अंशः सर्वत्र वर्तत इति, अयमेव ज्ञानमदधात् (?)। ननु (?) सर्वेन्द्रियादौ अधिष्ठातारो देवाः सन्ति, न ते ज्ञानं प्रयच्छन्ति। अयं च सर्वेषु वर्तत इति; तथापि मह्यमेव दत्तवान्। अतोऽयं कतमो देवः अत्यन्तं कः परब्रह्मरूपः। अन्य[८]देवानां न कृत्यम्। कतम इत्यनेन विशेषतो वक्तुमप्यशक्य इत्युक्तम्। अत एवैतादृशमुपकारिणं जीवानां कर्मपदवीं संसारमार्गमनुवर्तमाना वयं सर्वे तापत्रयोपशमनाय भजेम। ये केचन जीवभावं प्राप्ताः तेषां दास्यं परमो धर्मः। देहभावं परित्यज्य ब्रह्मभावात्पूर्वं जीवभाव एव। प्रथमप्रवृत्तत्वात्तापत्रयोपशमनायेत्युक्तम्। वयमिति बहुवचनं स्वसमानशीलानां सर्वेषां विज्ञापनार्थम्। भजनेनैव भगवान् कृपयतीति॥ १६॥

## श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

यस्त्वत्रेत्यत्र। अत्र मूले यस्त्विति यत्पदेन, नमामीत्युत्तमपुरुषेण च। सोऽहमिति पदद्वयाक्षेपाद्य एवमास्ते सोऽहं नमामीति सम्बन्धो बोध्यः॥ १३॥ ❀ ❀ यः पञ्चभूते रहित इति, तत्र विद्यमानोऽपि निरभिमानत्वात् तत्सम्बन्धरहितः। नन्वेकस्मिन् उभयोर्विद्यमानत्वेऽपि कथमेकस्यैवाच्छाद्यत्वमित्यत उपपादयन्ति—शरीरस्येत्यादि। यथापदस्य यथावदिति व्याख्यानं क्लिष्टमिव मत्वा व्याख्यानान्तरमाहुः--यथेतीत्यादि। आच्छादनस्थापनप्रकारमाहुः--यथा अयमित्यादि। अत्रेन्द्रियाण्याध्यात्मिकानि, गुणा आधिदैविका ज्ञेयाः तथा चैवं चतुष्टयरूपत्वेन सांसारिकतया आच्छाद्यत्वमित्येकपद एव दृष्टान्तदार्ष्टान्तिकभाव इत्यर्थः। पूर्वोक्तमेवेति। नमनमेव॥ १४॥ ❀ ❀ यन्माययेत्यत्र। तदनुग्रहमिति महदनुग्रहम्॥ १५॥ ❀ ❀ ज्ञानं यदेतदित्यत्र। अन्यथेत्यस्य विवरणं यो हृदयेत्यादि। हृदयस्थितत्वं व्युत्पादयन्ति–अयं चेत्यादि अनुवर्तित इति। लक्षीकृत्य स्थापितः। वर्तत इति, 'य आत्मनि तिष्ठन्' इत्यादि श्रुतेस्तथेत्यर्थः तस्य सर्वत्र साम्यात् पक्षान्तरमाहुः—अन्तरित्यादि। अनुपपत्तिं समादधते—तथापीत्यादि। तथाऽत्र कतम इति निर्धारकं पदमित्यर्थः। शब्दमहिम्ना तु प्रश्नोऽपीत्याहुः—कतम इत्यादि। ननु भवतु उपकारित्वम्, भजनस्य किं प्रयोजनमत आहुः—ये केचनेत्यादि। दास्यं परमो धर्म इति। पूर्वं वन्दनमुक्तम्, तत उत्कृष्टत्वात्। संख्यादेश्च स्वाधीनत्वाद् दास्यमेव तथेत्यतो भजनमेवाऽऽवश्यकमित्यर्थः। प्रथमप्रवृत्तत्वादिति। मुख्याधिकारस्येदानीमजातत्वादित्यर्थः॥ १६॥

---

१. अहमद्रूपतया. ङ. । २. नकाराभावः, क. घ. ङ. । ३. अयम्. क. घ. ङ. । ४. मोहनेन. ग. । ५. सङ्गच्छतीत्युक्तम्. क. ङ. । ६. ददाति घ. ङ. । ७. अतः ङ. किञ्च. घ. । ८. अल्पदेवानाम्. ख. ग. ।

### श्रीगिरिधरकृता बालप्रबोधिनी

ननु तव तस्य च को विशेषो येन सेव्यसेवकभावः, स च कास्ति दूरस्थेन रक्षासम्भवादित्याशङ्क्य विशेषादि दर्शयन् प्रणमति—य इति। यस्त्वत्र मातुरुदरे बद्ध इव आस्ते सोऽहमातप्यमाने स्वहृदये अवसितं प्रतीतं भगवन्तं नमामीत्यन्वयः। स्वबन्धने हेतुमाह—भूतेन्द्रियांशमयीं देहेन्द्रियान्तःकरणाकारेण परिणतां मायां प्रकृतिमवलम्ब्यात्मत्वेन स्वीकृत्य तत्प्रयुक्तकर्मभिः पुण्यपापैरावृतः आत्मा स्वरूपं यस्य सः। तर्हि देहावस्थानाविशेषाद्भगवतोऽपि बन्धः स्यादित्याशङ्क्याह—विशुद्धमिति, पुण्यपापादिबन्धरहितमित्यर्थः। तत्र हेतुमाह—अविकारमिति, प्राकृतेषु देहादिषु आत्माभिमानशून्यमित्यर्थः। तत्र हेतुमाह—अखण्डबोधमिति, अखण्डः अविद्यया अप्रतिहतः स्वात्मबोधो यस्य तमित्यर्थः ॥ १३ ॥ ❀ ❀ उक्तमेव स्पष्टयन् पुनः प्रणमति—य इति। पञ्चभूतरचिते आकाशादिपञ्चमहाभूतारब्धशरीरे यथाऽहं स्थितस्तथा यः स्थितस्तथाप्यहमिन्द्रियाणि च गुणाः सत्त्वादिगुणपरिणामाः देहान्तःकरणादयः अर्थाः शब्दादयः चित् चैतन्यं तदात्मकः तत्समुदाय आत्माभिमानवान् यस्तु तद्रहितस्तमेनं पुमांसं पुरुषोत्तममहं वन्दे इत्यन्वयः। यदि सोऽपि शरीरेऽस्ति तदा कुतो न प्रतीयते तत्राह—छन्न इति। तस्य पुरुषोत्तमत्वं स्पष्टयति—तेन देहादिसङ्घातेन न विकुण्ठो न तिरस्कृतो महिमा स्वरूपानन्दो यस्य तम्। तत्र हेतुमाह—ऋपिमिति, स्वरूपसाक्षात्कारवन्तमित्यर्थः। तत्रापि हेतुमाह—प्रकृतिपुरुषयोः परमिति, तयोरपि नियन्तारमित्यर्थः ॥ १४ ॥ ❀ ❀ ननु ज्ञानादयं बन्धो निवर्त्तिष्यते किं भगवच्छरणादिनेत्याशङ्क्य 'मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते' इति सिद्धान्तमङ्गीकृत्याह—यदिति। यस्य मायया मोहितो उरूणि सत्त्वादिगुणनिमित्तानि कर्माणि नितरां बन्धनानि यस्मिंस्तस्मिन् सांसारिके पथि प्रवृत्तिमार्गे चरन् अतस्तदभिश्रमेण तदुचितव्यापारव्याकुलत्वेन नष्टस्मृतिः विस्मृतात्मपरमात्मस्वरूपोऽयं जनस्तस्य महतो भगवतोऽनुग्रहमन्तरेण कया युक्त्या केनोपायेन पुनः लोकं स्वरूपं प्रवृणीत जानीयात्? अतस्तदेकशरणतया भजनमेव युक्तमित्याशयः ॥ १५ ॥ ❀ ❀ भगवदनुग्रहेणैव ज्ञानमिति स्वानुभवेन द्रढयति—ज्ञानमिति। यदेतत् त्रैकालिकं कालत्रयसम्बन्धि ज्ञानं मम जातं तत्तं विना कतमो मय्यदधात्? किन्तु स एव। तत्र हेतुमाह—स्थिरचरेषु स्थावरजङ्गमेषु अनुवर्तितोंऽशः अन्तर्यामिरूपो येन सः। तत्र हेतुमाह—देव इति, प्रकाशात्मक इत्यर्थः। अतएव जीवबन्धनभूतानां कर्मणां पदवीं मार्गमनुवर्त्तमानाः कर्मानुसारेण प्राप्तं यदाध्यात्मिकादितापत्रयं तस्योपशमनाय निवृत्तये वयं तं भजेम ॥ १६ ॥

### हिन्दी अनुवाद

जो इस माताके उदरमें देह, इन्द्रिय और अन्तःकरणरूपा मायाका आश्रय कर पुण्य-पापरूप कर्मोंसे आच्छादित रहनेके कारण बद्ध-से जान पड़ते हैं, अपने सन्तप्त हृदयमें स्फुरित होनेवाले उन विशुद्ध ( उपाधिरहित ) अविकारी और अखण्ड बोधस्वरूप परमात्माको मैं नमस्कार करता हूँ ॥ १३ ॥ ❀ ❀ मैं वस्तुतः शरीरादि से रहित ( असङ्ग ) होनेपर भी देखनेमें पाञ्चभौतिक शरीरसे सम्बद्ध हूँ और इसलिये इन्द्रिय, गुण, शब्दादि विषय और चिदाभास ( अहङ्कार ) रूप जान पड़ता हूँ। अतः इस शरीरादिके आवरणसे जिनकी महिमा कुण्ठित नहीं हुई है, उन प्रकृति और पुरुषके नियन्ता सर्वज्ञ ( विद्याशक्ति सम्पन्न ) परमपुरुषकी मैं वन्दना करता हूँ ॥ १४ ॥ ❀ ❀ इन्हींकी मायासे अपने स्वरूपकी स्मृति नष्ट हो जानेके कारण यह जीव अनेक प्रकारके सत्त्वादि गुण और कर्मके बन्धनसे युक्त इस संसारमार्गमें तरह-तरहके कष्ट झेलता हुआ भटकता रहता है; अतः उन परमपुरुष परमात्माकी कृपाके विना और किस युक्तिसे इसे अपने स्वरूपका ज्ञान हो सकता है ॥ १५ ॥ ❀ ❀ मुझे जो यह त्रैकालिक ज्ञान हुआ है, यह भी उनके सिवा और किसने दिया है; क्योंकि स्थावर-जंगम समस्त प्राणियोंमें एकमात्र वे ही तो अन्तर्यामीरूप अंशसे विद्यमान हैं। अतः जीवरूप कर्मजनित पदवीका अनुवर्तन करनेवाले हम अपने त्रिविध तापोंकी शान्तिके लिये उन्हींका भजन करते हैं ॥ १६ ॥

देह्यन्यदेहविवरे जठराग्निनासृग्विण्मूत्रकूपपतितो भृशतप्तदेहः।
इच्छन्नितो विवसितुं गणयन् स्वमासान् निर्वास्यते कृपणधीर्भगवन् कदा नु ॥ १७ ॥
येनेदृशीं गतिमसौ दशमास्य ईश संग्राहितः पुरुदयेन भवादृशेन।
स्वेनैव तुष्यतु कृतेन स दीननाथः को नाम तत्प्रति विनाञ्जलिमस्य कुर्यात् ॥ १८ ॥
पश्यत्ययं धिषणया ननु सप्तवध्रिः शारीरके दमशरीर्यपरः स्वदेहे।
यत्सृष्टयाऽऽस तमहं पुरुषं पुराणं पश्ये बहिर्हृदि च चैत्य[1]मिव प्रतीतम् ॥ १९ ॥
सोऽहं वसन्नपि विभो बहुदुःखवासं गर्भान्न निर्जिगमिषे बहिरन्धकूपे।
यत्रोपयातमुपसर्पति देवमाया मिथ्यामतिर्यदनु संसृतिचक्रमेतत् ॥ २० ॥

---

१. प्रा० पा०—दैवमिति प्रतीतः।

### श्रीधरस्वामिविरचिता भावार्थदीपिका।

स्वदुःखं विज्ञापयन्नाह। देहीति। अन्यदेहविवरे मातुरुदरकुहरे योऽसृग्विण्मूत्रकूपस्तस्मिन्पतितस्तत्र जठराग्निना भृशं तप्तो देहो यस्यात एव कृपणधीरितो विवराद्विवसितुं निर्गंतुमिच्छन्स्वमासान्गणयन्नसौ कदा नु अहो बहिर्निर्वास्यते॥ १७॥ ॐ ॐ तत्कृतमुपकारं स्मरन्नाह। येनेदृशीं गतिं ज्ञानम्। भवादृशेनेति निरुपमेनेत्यर्थः। स्वकृतेनैव स्वयं तुष्यतु अंजलिमात्रं विना तत्कृतोपकारे प्रत्युपकारं कः कुर्यादित्यर्थः॥ १८॥ ॐ ॐ ईदृशीं गतिमित्यनेन जात्यंतरविलक्षणं ज्ञानं प्रापितवानित्युक्तं तदेव वैलक्षण्यमाह। पश्यतीति। अयमपरः पश्वादिः सप्तवध्रिर्जीवः स्वदेहे शारीरके शरीरभवे सुखदुःखे केवलं ननु पश्यति अहं पुनर्यत्सृष्ट्या धिषणया यद्दत्तेन विवेकज्ञानेन दमशरीरी दम इत्युपलक्षणं शमदमादियुक्तशरीरत्वानासमभवं तमेव च पुराणमनादिं पुरुषं पूर्णं बहिश्च हृदि च पश्ये पश्यामीत्यन्वयः। कथं अपरोक्षतया प्रतीतं चैत्यमिव अहंकारास्पदं भोक्तारमिवेत्यर्थः॥ १९॥ ॐ ॐ विवेकज्ञानकृतं संसारोद्वेगमनुवदन्मोक्षमार्गमेवाध्यवस्यति। सोऽहमिति द्वाभ्याम्। हे विभो बहुदुःखभासं तथा भवति यथा गर्भे वसन्नपि सोऽहं गर्भाद्बहिर्तिर्निर्गंतुमिच्छामि। तत्र हेतुः। अंधकूपप्राये यत्र बहिरुपयातं गतं प्राणिनं देवस्य तव मायोपसर्पति व्याप्नोति। यदनु यां मायामनु मिथ्यामतिर्देहेऽहंबुद्धिः। संसृतिचक्रं च कलत्रपुत्रादिसंबंधादुपसर्पति॥ २०॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः।

उदरकुहरे अत एव तप्तदेहत्वात्कृपणधीः स्वदुःखसुखदत्तदृष्टित्वात्कुबुद्धिः गणयन्नयमष्टमोऽयं नवमोऽयं दशमोऽयमिति मासगणनां कुर्वन् निर्वास्यते बहिर्निष्कास्यते अत्रत्यकष्टस्यासह्यत्वाद्बहिरागत्य त्वां भजेयमिति भावः। त्वयेति शेषः॥ १७॥ तत्कृतमीशकृतम्। इत्यर्थ इति। अन्यस्येश्वरस्याभावादिति भावः। भवतेत्याक्षेपलब्धस्य विशेषणमिदं भवादृशेनेति। किञ्च। भवत्सदृशे दयालुर्भवानेव न त्वन्य इति मद्बुद्धिरस्तीति त्वयापि दुर्गततमोयं यदि मत्कृपानुगृहीतः स्यात्तर्हि कथं त्याज्य इति विचार्य स्वयमेव तुष्यतु। इत्यर्थ इति। न कस्यापि प्रत्युपकारसामर्थ्यमस्तीति भावः। अस्य तव॥ १८॥ ॐ ॐ आसमिति पाठ एव प्रशस्तः प्रतिभाति स्वामिचरणैरभवमिति व्याख्यातत्वात्। छन्दोभंगस्त्वार्षः। आत्मनेपदमप्यार्षम्। इत्यर्थ इति। वस्तुतो न भोक्तारं भोक्तृत्वस्य मायिकत्वादिति भावः॥ १९॥ ॐ ॐ तत्र बहिर्निर्गमे॥ २०॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

तत्रोदरकुहरे इत उदरकुहरात्॥ १७॥ ॐ ॐ तत्कृतमीश्वरकृतं ज्ञानं भक्त्यनुकूलं न तु शुष्कं "श्रेयःसृतिं भक्तिमुदस्य" इत्यादिना तस्य मोचकत्वासम्भवात् स्वकृतेनैव ज्ञानग्रहणोपकारेण अस्य अनेनेश्वरेण कृतं तत्तमुपकारं कः प्रतिकुर्यादिति योज्यम्। "छन्दसि व्यवहिताश्च" इत्यनुशासनादत एव तत्कृतोपकारे इत्याद्यार्थिकोऽर्थः॥ १८॥ ॐ ॐ सप्तवध्रयस्त्वगाद्यावरणानि यस्य बहिश्च सत्तारूपेण अन्तश्चान्तर्यामिरूपेण यथाहङ्कारास्पदं भोक्ताहमिति प्रत्यक्षसिद्धस्तथान्तर्याम्यपि "कर्तुं नेच्छसि यन्मोहात्करिष्यस्यवशोऽपि" इति वाक्यानुभवबलात्प्रत्यक्षसिद्धः, किन्तु पूर्वत्र मानसप्रत्यक्षता उत्तरत्र ज्ञानलक्षणा प्रत्यासत्तिरिति ज्ञेयम्॥ १९॥ ॐ ॐ विवेको देहादात्मनः पृथक्त्वं तदज्ञानेन कृतं संसारोद्वेगं विवेकज्ञाने सति उद्वेगनिवृत्तेः विवेकज्ञानकृतमिति लेखकभ्रमः आत्मानात्मविवेके सति देहनाशे आत्माभिमाननिवृत्तेः संसारोद्वेगस्य तत्कार्य्यत्वाभावात् प्रत्युत तद्विनाश्यत्वात्तत्र बहिर्निर्गमनेच्छाभावे॥ २०॥

### श्रीमद्वीरराघवव्याख्या

एवं जीवान्तरात्मतयावस्थितस्य सर्वज्ञस्य भगवतो ज्ञानप्रदानद्वारा मोचकत्वात्तस्यैव भजनीयत्वं नत्वन्येषामित्युक्तम्। अथ विज्ञापयन्नाह। देहीति। हे भगवन्! अन्यदेहविवरे मातुरुदरकुहरे यः असृग्विण्मूत्ररूपः कूपस्तस्मिन् पतितस्तत्र जठराग्निना भृशं तप्तो देहो यस्य सः अत एव कृपणा धीर्यस्य सः इतो विवराद्गर्भाद्विवसितुं निर्गन्तुमिच्छन् स्वमासान् गणयन्नसौ देही जीवः कदा नु बहिर्निर्वास्यते निर्गमिष्यति॥ १७॥ ॐ ॐ एवं स्वदैन्यमावेद्य ज्ञानप्रदानरूपं भगवत्कृतं महोपकारं स्मरंस्तस्याप्रत्युपकार्य्यतामाह। येनेति। हे ईश! भवादृशेन त्वत्समेन निरूपमेनेत्यर्थः पुरुदयेन निरतिशयदयावता येन त्वया दशमास्यः दशमासपरिमितोऽसौ जीवः ईदृशीं गतिं विवेकं सम्यग्ग्राहितः स दीननाथो भगवान् स्वेनैव कृतेन स्वकल्पितेनैवोपकारेण तुष्यतु स्वयमेव तुष्यतु अञ्जलिं विना को नाम पुमान् तत्प्रति कुर्यात्तत्कृतोपकारं प्रत्यपकारं कुर्यादित्यर्थः॥ १८॥ ॐ ॐ एवं भगवत एव विवेकादिसम्पत्तिस्तस्य महोपकर्तृत्वं चोक्तं इमामेव भगवतो विवेकादिसम्पत्तिं विवेकिजननिदर्शनेन स्वस्मिन्नपि प्रार्थयते। पश्यतीति। शारीरके शारीरः परमपुरुषः तत्सम्बन्धिनि परमपुरुषाधिष्ठिते ब्रह्मपुरे इति यावत्तस्मिन् स्वदेहे स्वस्य जीवस्य देहे जीवकर्मायत्त इत्यर्थः। अपरः शरीराद्भिन्नः सप्तवध्रिः सप्तत्वग्वेष्टितदेहधारी अयं दमशरीरी शमदमादियुक्तो जीवः योगीति यावत्। यत्सृष्ट्या यस्मिन् कृतया येनेश्वरेण दत्तया धिषणया उपासनात्मिकया बुद्ध्या यत ईश्वराद्धेतोः सृष्ट्या कल्पितयेति वा अनेन निरन्तरायमुपासनानिर्वृत्तिरपि परमपुरुषप्रसादादेवेत्युक्तं यं पश्यति साक्षात्करोति तं चैत्यं योगपरिशुद्धचित्तग्राह्यं पुराणं पुरुषं स

इव दमशरीरीव अहमपि बहिर्हृदि च प्रतीतं प्रतीतिविषयं यत्स्मृष्टया धिषणया पश्यामि साक्षात्करोमीत्यर्थः ॥ १९ ॥ ❀ ❀ किं विशेषेण मदुपासनातो मत्साक्षात्कारं प्रार्थयसे यथा पूर्वं गर्भान्निर्गत्य प्रवृत्तिधर्मं नेच्छसीत्यत्र गर्भान्निर्गतस्य स्वस्यानर्थं स्वाभिप्रेतं च निवेदयन्नुपसंहरति । सोऽहमिति द्वाभ्याम् । हे विभो ! बहूनां दुःखानां वासो वसतिर्यस्मिन् बहुदुःखास्पदं गर्भं प्रतिवसन्नपि सोऽहं गर्भाद्बहिर्निर्जिगमिषे निर्गन्तुं नेच्छामि । कुतः यत्र गर्भाद्बहिरन्धकूपेऽन्धकूपवत् स्वपरयाथात्म्यज्ञानतिरोधायके गार्हधर्मे उपयातमुपगतं देवस्य भगवतः सम्बन्धिनी माया "दैवी ह्येषा गुणमयी" इत्युक्तविधा देहात्माभिमानस्वतन्त्रात्माभिमानकारिणी माया उपसर्पति । यदनु यस्या मायाया अनु पश्चान्मिथ्यामतिः देहात्माभिमानादिरूपमिथ्याभिमानस्तत्प्रयुक्तसुखदुःखानुभवः पुनर्गर्भवासादिरित्येतदेवंभूतं संसृतिचक्रं चक्रवत्परिवर्त्तमानं संसरणमुपयाति ॥ २० ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

इदानीमात्मनो गर्भादाशु निर्गमनाभिप्रायं विज्ञापयति । देहीति । अन्यदेहविवरे मातृदेहोदरे वर्तमानोऽसृग्विण्मूत्रपूर्णकूपे पतितो मातुर्जठराग्निना भृशतप्तदेहः इतो देहाद्विवसितुं निर्गन्तुमिच्छन् स्वमासान् कत्यतीताः कत्यवशिष्टा इति स्वविषयान्मासान् गणयन् कृपणधीर्देह्ययं भवता कदा नु निर्वास्यते निष्कास्यत इत्यन्वयः ॥ १७ ॥ ❀ ❀ यतः ईदृशमप्रतिक्रियं ज्ञानं मह्यं येन दत्तमतोऽसौ सर्वस्मात्प्रेयानित्याशयेनाह । येनेति । हे ईश ! असौ दशमास्योऽहं येन भवादृशेन पुरुषेणेदृशीं भगवद्विषयां मतिं संग्राहितः स दीननाथो भगवान् स्वेनैव कृतेन तुष्यतु "न ऋते त्वत्क्रियत" इत्यादिमन्त्रवर्णोऽत्र मानं को नाम तत्प्रति तस्य हरेः कृतस्य प्रतिनिधिं प्रत्युपकारमस्य हरेरञ्जलिं विना कुर्यात् न कोऽपि कर्त्तुं समर्थ इत्यर्थः । करोति चेद्भवादृश एव न त्वितर इत्यतो भवादृशेनेत्युक्तम् ॥ १८ ॥ ❀ ❀ भगवदनुगृहीतज्ञानफलमाह । पश्यत्ययमिति । सप्त वध्रयो ज्ञानेन्द्रियाणि यस्य स तथोक्तोऽयं जीवोऽस्य हरेरधीने देहे शारीराणां जीवानां भेदमुपलक्षणमेतज्जडादीनामपि । यद्दत्तया येन हरिणानुगृहीतया धिषणया मत्या ज्ञानेन पश्यति "श्रुतं मे अश्विनाहवं सप्तवध्रिश्च मुञ्चन्तम्" इति श्रुतिः । अत्राधिकदृष्टान्तमाह । अशरीरवदिति । अशरीर ; परमात्मा "अशरीरश्च" इति श्रुतेः । यथा पञ्चविधं भेदं पश्यति तथेति । अनेन ज्ञानस्य नैर्मल्यं सूचितं नन्वित्यनेनोक्तार्थावधृतिं प्रमाणानुमतिं वा दर्शयति । सोऽहं तं पुराणं पुरुषं चैत्ये चित्ताभिमानिनं चतुर्मुखमिव हृदि बहिश्च प्रतीतं विज्ञातं पश्ये संपश्य इत्यन्वयः । एतादृशं ज्ञानं देवानामेव योग्यं न त्वितरेषां बहुजन्मसाध्यं तदुक्तं तत्त्वज्ञानं तु देवानां गर्भस्थानां भविष्यति" इति ॥ १९ ॥ ❀ ❀ न केवलमेतज्ज्ञानं वर्तमानविषयं किन्त्वेष्यद्विषयमपीति भावेनाह । सोऽहमिति । भो विभो ! बहुदुःखवासं वसन्ननुभवन्नपि सोऽहं गर्भाद् बहिर्विपयं न निर्जिगमिषे निर्गन्तुं नेच्छामि, किं कारणमत्राह । यत्रेति । यत्र बहिरन्धकूपेऽज्ञानलक्षणगर्ते उपयातं पतितं मां देवस्य मायया प्रकृत्या निर्मिता मिथ्यामतिर्देहेऽहंममेत्यादिलक्षणोपसर्पति व्याप्नोति । ततश्च किमत्राह यदन्विति । यदनु यस्याः मिथ्यामतेरुत्पत्त्यनन्तरमेतत्संसृतिचक्रं जननमरणादिलक्षणं संसारमण्डलं भवत्यत इत्यर्थः ॥ २० ॥

## श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

ईदृशीं त्वद्भक्तिलक्षणां गतिमवस्थाम् । भवतेत्यध्याहारात् भवत्तुल्येन भवतेति निरुपमत्वं व्यञ्जितम् । स्वकृतेनैव स्वयं तुष्यत्विति दुर्गततमोऽयं यदि सकृन्मयानुगृहीतस्तर्हि कथं त्यजेतेति विचार्य्यैत्यर्थः ॥ १८ ॥ ❀ ❀ ईदृशीं गतिमित्यनेन मनुष्यजातावपि अन्यविलक्षणं ज्ञानं प्रापितवानित्युक्तं तदेव वैलक्षण्यं स्पष्टयति । पश्यतीति । अयं मनुष्यजातिमापन्नः सप्तवध्रिर्गर्भगतो जीवः सर्व एव तत्रोत्पन्नया धिषणया अनेकजन्मगतशरीरभवे सुखदुःखे केवले पश्यति । तेष्वपरस्तु कश्चिद्भाग्यवान् दमशरीरी तदुपलक्षितयोगयुक्तशरीरवानपि भवति । अहं पुनः स तत्तज्जीववन्निर्विशेषोऽपि यद्दत्तया धिषणया तमपि पश्यामि । तत्र निरुक्तश्च दर्शितम् । "मृतश्चाहं पुनर्जातो जातश्चाहं पुनर्मृत" इत्यादि तद्भावनावाक्यानन्तरम् । "साङ्ख्यं योगं समभ्यस्येत् पुरुषं वा पञ्चविंशकम्" इति । अत्र टीकाकृद्भिरपि अहंपुनरित्यनेन मनुष्यजातिष्वप्येवायं विलक्षणतया सम्मतः ॥ १९–२० ॥

## श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

हे प्रभो ! मम दुःखं सुखं त्वच्चरणप्राप्तिश्चेत्येवत्सर्वं त्वदधीनमित्यहमतिबाल्यादतितारल्याच्च किमपि पृच्छामीत्युद्देशेनैव भगवन्तमाह । अहं देही अन्यदेहविवरे मातुरुदरकुहरे अत इतो विवरात् विवसितुं वियुक्तीभवितुमिच्छन् स्वमासान् अयमष्टमोऽयं नवमोऽयं दशम इत्येवं गणयन् कृपणधीः स्वीयदुःखसुखदत्तदृष्टित्वात् कुबुद्धिर्मल्लक्षणोऽयं जनः कदा निर्वास्यते बहिर्निष्क्रमयिष्यते भवतेत्यत्रत्यस्य कष्टस्य सोढुमशक्यत्वाद्बहिरेव तत्र त्वां भजेयेति भावः ॥ १७ ॥ ❀ ❀ ननु तर्हि कदा निर्व्वास्यते इति मामुक्त्वा मयि सम्प्रत्यपि त्वामितो बहिर्निष्क्रमयति निर्दयत्वमेव किं प्रसञ्जयसीति तत्र सलज्जं सशङ्कं सरसनादृशं सात्मधिकारमाह । येन ईदृशीं देवैरपि दुर्ल्लभां गतिं त्वद्भक्तत्वलक्षणामवस्थां दशमास्यो गर्भस्थोऽप्यहं ग्राहितः पुरुदयेन भवादृशेनेति । भवतेत्याक्षेपलब्धस्य विशेषणात् भवत्सदृशो दयालुर्भवानेव नान्य इत्यनन्वयालङ्कारो बोधितः । एतत्प्रतिकृतिस्तु मया ब्रह्मायुषाप्यशक्येत्याह ।

स्वकृतेनैव स्वयं तुष्यतु । अञ्जलिमञ्जलिमात्रं विना तत्प्रतिविधिं को नाम कुर्य्यात् कर्तुं शक्नुयात् अस्य तव ॥ १८ ॥ ❀ ❀ स्वस्मिन् भगवत्कृपातिशयमन्यतो वैलक्षण्येनाह । पश्यतीति । अयं मनुष्यजातिमापन्नः सप्तवध्रिर्गर्भगतो जीवः शारीरके शरीरभवे सुखदुःखे एव धिषणया बुद्धया पश्यति । ततोऽप्यपरः कश्चिद्भाग्यवान् स्वदेहे स्थितो दमशरीरी ज्ञानी भवति । अहं तु स प्रसिद्धः पापात्मापि यत्सृष्टया यद्दत्तया धिषणया तं पुराणं पुरुषं पुरुषोत्तमं चैत्यं चित्ताधिष्ठातारं चित्तेनापि सेव्यं प्रभुं बहिश्च हृदि च प्रतीतमपरोक्षतया प्राप्तमिव पश्ये पश्यामि । अत्र निरुक्ते च वाशब्देन दर्शितं जीवानां त्रैविध्यम् "मृतश्चाहं पुनर्जातो जातश्चाहं पुनर्मृतः" इति तद्भावनावाक्यानन्तरं "साङ्ख्यं योगं समभ्यस्येत् पुरुषं वा पञ्चविंशकम्" इति ॥ १९ ॥ ❀ ❀ ननु त्वं भक्त्यैव मामेवं ब्रूषे किञ्चात्र दुःखेनोद्विजसे च यतः कदा निर्वास्यत इति निवेदयस्यतस्त्वामधुनैवातो गर्भान्निष्क्रमयामीति तत्र न नेत्याह । सोऽहमिति । यत्र बहिरुपयातं प्राणिनं देवस्य तव माया उपसर्पति व्याप्नोति यदनु यामनु मिथ्यामतिर्देहे अहंबुद्धिस्ततश्च संसृतिचक्रम् ॥ २० ॥

## श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

अन्यदेहविवरे असृग्विण्मूत्रकूपपतितः जठराग्निना भृशतप्तदेहः देही अहम् इतो विवसितुं निर्गन्तुमिच्छन् स्वमासान् गणयन् कृपणधीः कदा हे भगवन् ! निर्वास्यते ॥ १७ ॥ ❀ ❀ हे ईश ! येन भवादृशेन ईदृशीं गतिं ज्ञानवत्तां सङ्ग्राहितः स दीननाथः स्वेनैव कृतेन स्वयमेव च तुष्यतु अस्योपकारस्य प्रत्युपकारमञ्जलिं प्रणामं विना को नु कुर्यात् न कोऽपीत्यर्थः ॥ १८ ॥ ❀ ❀ अयमपरः पश्वादिः सप्तवध्रिर्जीवः स्वदेहे शारीरके सुखदुःखे केवलं ननु अहो पश्यति अहं तु यत्सृष्टया धिषणया आत्मानात्मपरमात्मविवेकवत्या बुद्धया तं पुराणमनादिं जगत्कारणं पुरुषं पूर्णं पूर्णत्वमाह । हृदि बहिश्च पश्ये चैत्यं चित्तस्थमन्तःकरणावच्छिन्नम् "बुद्धेर्गुणेनात्मगुणेन चैव ह्याराग्रमात्रो ह्यवरोऽपि दृष्टः" इति श्रुतिप्रसिद्धमणुपरिमाणकं जीवात्मानं च पश्ये प्रतीतं प्रत्यक्षमनात्मानं देहादिकञ्च पश्ये । इवशब्दोऽत्रावधारणार्थः । किं च दमशरीरी शमदमार्हतद्भजनयोग्यशरीरवान् आसमभवं यदनुग्रहादिति शेषः ॥ १९ ॥ ❀ ❀ गर्भाद् बहिर्निर्गमनेऽपि भगवद्दत्तेन ज्ञानेन दोषं दृष्ट्वाह । सोऽहमिति । बहुदुःखवासं यथा भवति तथा गर्भे वसन्नपि हे विभो ! गर्भात् बहिरन्धकूपे संसारे न निर्जिगमिषे, यत्र उपयातं हे देव ! माया उपसर्पति देहेन्द्रियमनोबुद्धीन्द्रियार्थरूपा प्रकृतिः व्यामोहयति। यदनु मायोपसर्पणानन्तरं मिथ्यामतिः परमात्मनि वासुदेवे देवतान्तरतुल्यबुद्धिः आत्मनि अवासुदेवात्मकत्वबुद्धिः अनात्मनि आत्मबुद्धिश्च भवति संसृतिचक्रं च मिथ्यामतियोगादुपसर्पति ॥ २० ॥

## श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

एवं भजनमुक्त्वा विज्ञापनमाह—देहीति । अयं स्वलक्षणो देही । अन्यस्य मातृलक्षणस्य देहविवरे उदरे जठराग्निना भृशं तप्तदेहः; असृग्विण्मूत्रपूर्णे पतितः त्रिविधदुःखभोक्ता । माता भूतस्थानीया, अग्निर्दैविकः । अतस्त्रिविधदुःखपीडित इतो विवसितुं निर्गन्तुमिच्छन् स्वमासान् गणयन् वर्तते पूर्वनिवृत्तान् । अग्रिममासानां नियमाभावात् । हे भगवन् ! कदा वा निर्वास्यते । हे भगवन्निति । अत्र त्वमेव समर्थः । कृपणधीरिति धैर्याभाव उक्तः । अनन्तदुःखस्मरणात् गणनाकालेनाऽपि दुःखनिवृत्तिं मत्वा, भवतेत्यर्थात् । एवं तत्र दुःखानुभवादन्यत्र गमनं प्रार्थितम् ॥ १७ ॥ ❀ ❀ ननु कृतोपकारस्य ज्ञानदानलक्षणस्य प्रत्युपकारं चेत्कुर्यात्, तदाऽग्रे विवासनमपि कुर्यात् । प्रत्युपकाराऽभावे कथं करिष्यतीत्याशङ्क्याऽऽह—येनेति । येन भवादृशेन, असौ मल्लक्षणः, दशमास्यः दशभिर्मासैः परिच्छिन्नः, ईदृशीं गतिं ज्ञानं सम्यक् ग्राहितः । ननु ग्राहकोऽन्यः कश्चिद्धर्माधिष्ठाता देवता, अहं त्वन्य इति किं मां प्रत्युच्यत इत्याशङ्क्याऽऽह—भवादृशेनेति । स एव भवान्, भवत्सदृशो वा । किमनेन विचारेण किन्तु स्वेनैव कृतेन स तुष्यतु । यथा पङ्कमग्नां गामुद्धृत्य स्वयमेव तुष्यति, तथा स्वत एव भगवान् तुष्यतु, को नाम तस्य प्रतिविधिं प्रत्युपकारं करिष्यति । स्वनिष्कृत्यर्थं चेत् किञ्चित्कुर्यात्तदाऽञ्जलिं कुर्यात्, न त्वतिरिक्तं कर्तुं शक्नोतीत्यर्थः ॥ १८ ॥ ❀ ❀ ननु कं प्रत्येवमुच्यते ? यतः कोऽपि नाभिव्यक्त इत्याशङ्क्याऽऽह—पश्यतीति । यद्यपि भगवान् नाभिव्यक्तः, अथाप्ययं दमशरीरी शमदमादिसाधकदेहसहितः । स्वयं सप्तवध्रिरपि येन भगवता सृष्टया धिषणया बुद्धया स्वदेह एव स्वयमपरो नियामकत्वेनाऽन्यो भाति । स्वयं तु नियम्यत्वेन । अतस्तद्दत्तज्ञानेनैव तं पश्ये । सोऽहं कृतोपकारः तमुपकारिणं भगवन्तमहं शारीरः अस्मिन्नेव पुरे शेते यः तमिति प्रतीतिरुक्ता । पुराणमिति नागन्तुकत्वम्, अतः परिचयोऽप्युक्तः । देहाद्बहिः हृदि च प्रतीतम्, यथा चैत्यो जीवः तद्वदपि प्रतीतम्, सर्वभावेन सर्वत्र प्रतीतम्, यथा जीवप्रतीतौ न साधनाद्यपेक्षा तथा भगवानपि स्वतः स्फुरतीति तत्संस्कारकत्वेन नाऽन्यापेक्षा । ज्ञानं तु साधनमुक्तमेव । अतो दृष्ट्वैव प्रार्थनादिकमिति न किञ्चिद् दूषणम् ॥ १९ ॥ ❀ ❀ एवं सर्वत्र भगवद्दर्शने 'अभितो ब्रह्म निर्वाणं वर्तते विदितात्मनाम्' इति भगवद्वाक्यात् किञ्चित्सुखं प्राप्य गर्भ एव गतव्यथः बहिर्बाधकं स्मृत्वा, अन्तरेव स्थितिं प्रार्थयति—सोऽहमिति । अस्मिन् गर्भे बहुदुःखवासं यथा भवति तथा वसन्नपि, इतो बहिर्न निर्जिगमिषे; यतो बहिरन्धकूपम् । यद्यपीदमपि सर्वतो वेष्टकं कूपप्रायम्, तथाऽप्यत्र ज्ञानमस्ति, बहिर्नास्तीत्यन्धकूपत्वम् । नन्विदं

ज्ञानं तत्राऽप्यनुवर्तिष्यत इति चेत् तत्राऽऽह—यत्रोपयातमिति । गर्भाद्ब[1]हिर्निर्गतं भगवतो माया अनुलङ्घ्या उपसर्पति । ततो मायामोहितस्य मिथ्यादेहादावहंमतिर्भवति । तदनु संसृतिचक्रं जन्ममरणाद्यावृत्तिश्च भवति । अतः पुनरत्रागन्तव्यम्; अतो निर्गतस्य न कश्चित्पुरुषार्थः । एतदिति परिदृश्यमानमावश्यकमित्यर्थः ॥ २० ॥

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

पश्यतीत्यत्र । पश्यतीत्यनेनोक्तस्य दर्शनस्य प्रकारमाहुः—स्वयमपर इत्यादि । कृतोपकार इत्यत्र पष्ठ्यर्थे बहुव्रीहिः । तत्संस्कारकत्वेनेति । बुद्धिसंस्कारकत्वेन ॥ १९ ॥

### श्रीगिरिधरकृता बालप्रबोधिनी

तव किं दुःखं किं चेच्छसीत्यपेक्षायामाह—देहीति । हे भगवन्निति सम्बोधनेन भवानेवात्र समर्थोऽस्तीति सूचयति । अन्यदेहविवरे मातुरुदरकुहरे यः असृग्विण्मूत्रकूपस्तस्मिन् पतितः, अतस्तत्र जठराग्निना भृशं तप्तो देहो यस्य सः, अतएव कृपणा दीना धीर्यस्य सः, इतो विवरात् विवसितुं निर्गन्तुमिच्छन् स्वमासान् गणयन्नसौ देही वर्त्तते स भवता कदा बहिर्निर्वास्यते निर्गमयिष्यते । तवात्र कृपैव युक्तेति सूचयति—न्विति ॥ १७ ॥ ❀ ❀ एवं स्वदैन्यमावेद्य ज्ञानप्रदानरूपं भगवत्कृतं महोपकारं स्मरन्नाह—येनेति । तवैतदेव युक्तमित्याशयेन सम्बोधयति—हे ईशेति । भवादृशेन निरुपमेन पुरुदयेन निरतिशयदयावता येन भवता दशमास्यः दशमासपरिमितः तदयोग्योऽप्यसावहमीदृशीं दुर्लभां गतिं ज्ञानं सम्यग्ग्राहितः स दीनानां नाथः पालको भगवान् स्वेनैव कृतेनोपकारेण स्वयमेव तुष्यतु अञ्जलिं नमस्कारं विना को नाम पुमान् तत्प्रति अस्य कुर्यात् ? तस्यास्य प्रत्युपकारं कर्तुं शक्नुयादित्यर्थः ॥ १८ ॥ ❀ ❀ ईदृशीं गतिमित्यनेन जात्यन्तरविलक्षणं ज्ञानं प्रापितवानित्युक्तं तदेव वैलक्षण्यं दर्शयति—पश्यतीति । अयमपरः पश्वादिः सप्तवध्रिर्जीवः स्वीये देहे शारीरके शरीरभवे सुखदुःखे केवलं पश्यति । अत्र निश्चयं सूचयति—नन्विति । अहं तु यत्सृष्ट्या धिषणया यद्दत्तेन विवेकज्ञानेन दमशरीरी इत्युपलक्षणं शमदमादियुक्तशरीरवान् आस अभवं तमेव च पुराणमनादिं सर्वकारणं पुरुषं सर्वत्र पूर्णं चैत्यमहङ्कारास्पदमिव अपरोक्षतया बहिश्च हृदि च प्रतीतं पश्ये पश्यामीत्यन्वयः ॥ १९ ॥ ❀ ❀ पूर्वं तु गर्भवासदुःखादुद्विग्नो बहिर्निस्सारणं प्रार्थितवान् इदानीं तु विवेकवशात्संसारादुद्विग्नस्तत्रैव स्थित्वा मोक्षमध्यवस्यति—सोहमिति द्वाभ्याम् । त्वमेतदपि कर्तुं समर्थोसीति सूचयन् सम्बोधयति—विभो इति । बहुभिर्दुःखैः सह वासं यथा स्यात्तथाऽत्रैव वसन्नपि सत्त्वसम्पादितविवेकोऽहं गर्भाद्बहिर्न निर्जिगमिषे न निर्गन्तुमिच्छामि । तत्र हेतुमाह—यत्र गर्भाद्बहिरन्धकूपे अन्धकूपवद्विवेकतिरोधायके उपयातं प्राप्तं देवस्य तव दुस्तरा माया उपसर्पति । तया मोहितस्य मिथ्यामतिः देहपुत्रादौ अहम्ममाभिमानो भवति । यदनु यस्य पश्चादेतत्संसृतिचक्रं नानाविधकर्म तत्प्रयुक्तनानाविधगर्भवासदुःखानुभवादिपरम्परा भवतीत्यर्थः ॥ २० ॥

### हिन्दी अनुवाद

भगवन् ! यह देहधारी जीव दूसरी ( माताके ) देहके उदरके भीतर, मल, मूत्र और रुधिरके कुएँमें गिरा हुआ है, उसकी जठराग्निसे इसका शरीर अत्यन्त सन्तप्त हो रहा है। उससे निकलनेकी इच्छा करता हुआ यह अपने महीने गिन रहा है। भगवन् ! अब इस दीनको यहाँसे कब निकाला जायगा ? ॥ १७ ॥ ❀ ❀ स्वामिन् ! आप बड़े दयालु हैं, आप-जैसे उदार प्रभुने ही इस दस मासके जीवको ऐसा उत्कृष्ट ज्ञान दिया है। दीनबन्धो ! इस अपने किये हुए उपकारसे ही आप प्रसन्न हों; क्योंकि आपको हाथ जोड़नेके सिवा आपके उस उपकारका बदला तो कोई दे भी क्या सकता है ॥ १८ ॥ ❀ ❀ प्रभो ! संसारके ये पशु-पक्षी आदि अन्य जीव तो अपनी मूढ़ बुद्धिके अनुसार अपने शरीरमें होनेवाले सुख-दुःखादिका ही अनुभव करते हैं; किन्तु मैं तो आपकी कृपासे शम-दमादि साधनसम्पन्न शरीरसे युक्त हुआ हूँ, अतः आपकी दी हुई विवेकवती बुद्धिमें आप पुराणपुरुषको अपने शरीरके बाहर और भीतर अहङ्कारके आश्रयभूत आत्माकी भाँति प्रत्यक्ष अनुभव करता हूँ ॥ १९ ॥ ❀ ❀ भगवन् ! इस अत्यन्त दुःखसे भरे हुए गर्भाशयमें यद्यपि मैं बड़े कष्टसे रहा हूँ, तो भी इससे बाहर निकलकर संसारमय अन्धकूपमें गिरनेकी मुझे बिल्कुल इच्छा नहीं है; क्योंकि उसमें जानेवाले जीवको आपकी माया घेर लेती है, जिसके कारण उसकी शरीरमें अहंबुद्धि हो जाती है और उसके परिणाममें उसे फिर इस संसारचक्रमें ही पड़ना होता है ॥ २० ॥

**तस्मादहं विगतविक्लव उद्धरिष्य आत्मानमाशु तमसः सुहृदाऽऽत्मनैव ।**
**भूयो यथा व्यसनमेतदनेकरन्ध्रं मा मे भविष्यदुपसादितविष्णुपादः ॥ २१ ॥**

---

१. इतः पूर्वं भवतीति विशेषः. घ. मतिर्भवतीति. ङ. ।

## कपिल उवाच

एवं कृतमतिर्गर्भे दशमास्यः स्तुवन्नृषिः। सद्यः क्षिपत्यवाचीनं प्रसूत्यै सूतिमारुतः ॥ २२ ॥
तेनावसृष्टः सहसा कृत्वावाक् शिर आतुरः। विनिष्क्रामति कृच्छ्रेण निरुच्छ्वासो हतस्मृतिः ॥ २३ ॥
पतितो भुव्यसृङ्मूत्रे विष्ठाभूरिव चेष्टते। रोरूयति गते ज्ञाने विपरीतां गतिं गतः ॥ २४ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

तस्मादत्रैव स्थितोऽपि विगतविक्लवोऽव्याकुलः सन्सुहृदा आत्मना सारथिरूपया बुद्ध्यैवात्मानं तमसः संसाराद्‌द्धरिष्यामि अनेकरंध्रं नानागर्भवासरूपमेतद्व्यसनं दुःखं यथा मे मा भविष्यन्न भविष्यति तथा काऽत्र तव साधनसामग्री तत्राह। उपसादितौ हृदयं प्रापितौ विष्णोः पादौ येन मया सः ॥ २१ ॥ ❀ ❀ दश मासाः परिच्छेदका यस्येति प्रसूतिपूर्वक्षणोपलक्षणम्। ऋषिर्जीवः सद्यस्तत्क्षणमेव अवाचीनमवाङ्मुखम्। सूतिहेतुर्मारुतः क्षिपति नुदति ॥ २२ ॥ ❀ ❀ अवसृष्टोऽधः क्षिप्तः सन् ॥ २३ ॥ ❀ ❀ रोरूयति रोरूयते ॥ २४ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

यतो वहिर्निर्यातस्य मायासंगो भवति तस्मादित्यर्थः। विष्णुरत्र श्रीकृष्णो नंदनंदन एवं "तत्रांशेनावतीर्णस्य विष्णोर्वीर्याणि शंस नः" इति प्रसिद्धेः किञ्च 'शूरो वैरिप्रशंसितः' इत्युक्तन्यायेन नास्तिकशिरोमणिनाऽमरसिंहेनापि विष्णुनामान्युक्त्वा 'वसुदेवोऽस्य जनकः' इति श्रीकृष्णजनकत्वेन प्रसिद्धवसुदेवस्य विष्णुपितृत्वोक्तेः। श्रीनंदनंदनस्यैव विष्णुत्वमुक्तमन्यथा 'कश्यपो ह्यस्य जनकः' इत्यादि ब्रूयात्। 'धनं न गोभिः सदृशं पृथिव्याम्' इति पाराशरोक्तेर्वसुपदोपलक्षितगोरूपैर्धनैरित्यभिप्रेत्याह–वसुभिर्गोभिर्दीव्यतीति वसुदेवः। यद्वा "द्रोणो वसूनां प्रवरो धरया सह भार्यया। जज्ञे नन्द इति ख्यातो यशोदा सा धराभवत्" इति श्रीदशमे वक्ष्यमाणत्वादवतारावतारिणोरभेदाद्वसुश्चासौ देवो वसुदेवस्स च श्रीनंदराज एवेत्यलं प्रसक्तानुप्रसक्त्या। अत्रोपसादितौ विष्णुपादौ येन तस्य मे इत्यन्वयः। "पादस्य लोपोऽहस्त्यादिभ्यः" इत्यनेनात्र पादशब्दस्याकारलोपे सत्यपि पदादेशाभाव आर्षः। अहमित्यस्य विशेषणे तु समाप्तपुनरात्तत्वदोषप्रसक्तिः स्यात्सा यदि पुराणादौ नाद्रियेत तर्हि तथैवास्त्वित्यलम् ॥ २१ ॥ ❀ ❀ य ऋषिर्भगवद्द्रष्टा पूर्वोक्तरीत्या ब्रह्मवैवर्तवर्णितश्रीशुकदेव इव कश्चित्स दशमास्य एव स्तुवन्कृतमतिः पूर्णभगवज्ज्ञानो भवति। अतः प्रसंगेनैवोक्तमहिम्नस्तस्य जन्मादिसांसारिकावस्थाभासो न वर्णनीय इति भावः। यस्तु प्रस्तुतो दुर्जीवस्तस्य तु पुनर्दुरवस्था श्रूयतामित्याह—सद्य इति। अवाचीनमधो गच्छंतं संसारपदवीमनुवर्त्तमानं तं दशमास्यत्वे सति सूतिहेतुर्मारुतः सद्यः क्षिपति। यस्तु शुकदेववद्भगवज्ज्ञानपूर्णः स तु तद्वत्स्वातंत्र्येणैवाविर्भातीत्यर्थः। मध्यस्थानां जीवानां तु तारतम्यं ज्ञेयमिति भावः। अत्रैक एव जीवो यदि विवक्षितो भवेत्तर्हि पूर्वार्द्धेऽपि कृतमतिमित्येव द्वितीयातान्येव पदानि प्रयुञ्ज्येरन्निति तत्त्वम् ॥ २२ ॥ ❀ ❀ तेन सूतिमारुतेन अवाक् अध आतुर इक्षुपीडनयंत्रनिक्षिप्तवत्पीडितः हता नष्टा स्मृतिः 'मृतश्चाहं पुनर्जातः' इत्यादिपूर्वपूर्वजन्मानुसंधानलक्षणा यस्य स तथा। तथा च पादप्राथम्येन जन्म तु कस्यचिदेव स्याच्छिरःप्राथम्येन जन्म तु प्रायो भवतीत्यप्युक्तं स्यात् ॥ २३ ॥ ❀ ❀ विण्मूत्रे विष्ठाभूः कृमिरिव ज्ञानेऽनेकजन्मगतसुखदुःखादिविषये पूर्वपूर्वमहादुःखे विस्मृते सति सांप्रतिकक्षुद्रदुःखेनैव दुःखी भवतीति भावः। विपरीतामज्ञत्वलक्षणां भक्तजीवस्यापि वस्तुस्वाभाव्यादाबाल्यं प्रायो ज्ञानमावृतं तिष्ठति। ततः किंचिन्मात्रं सत्संगोद्बुद्धपूर्वसंस्कारस्य भक्त्या भगवत्प्राप्तिरिति ज्ञेयम् ॥ २४ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

तस्माद्बहिरागमनस्यानर्थावहत्वादत्रैव गर्भ एव अत्र तादृशोद्धरणे भुवि चलच्चरणारविन्दमित्यत्रोक्तव्याख्यानुसारात् विष्णुशब्देनात्र श्रीकृष्ण एव वाच्यः "विक्रीडितं व्रजवधूभिरिदञ्च विष्णोः" इत्यत्र "तत्रांशेनावतीर्णस्य विष्णोर्वीर्याणि शंस न" इत्यादौ च सर्वावतारावतारिव्यापकत्वेन तस्यैव प्रसिद्धेः ॥ २१ ॥ ❀ ❀ नवममासादावपि प्रसूतिदर्शनात्प्रसूतेः पूर्वक्षणस्योपलक्षणमिदमेवं स्तुवन् सन् कृतमतिः कृतभगवदनुभवो भवतीति पृथगेव वाक्यम्। एवं प्रपन्नस्य वक्ष्यमाणसंसारासम्भवादत एवोत्तरार्द्धे द्वितीयान्तपदानां प्रयोगः कृतः। एकवाक्यत्वे तु पूर्वार्द्धेऽपि द्वितीयान्तपदान्येव प्रयुञ्ज्येरन्निति ज्ञेयम्। तस्मादुत्तरार्द्धे एवमवतरणिका। यस्तु बहिर्मुखो जीवस्तस्य तु दुरवस्था श्रूयतामित्याह। सद्य इति ॥ २२ ॥ ❀ ❀ हता स्मृतिः पूर्वपूर्वजन्मानुसन्धानलक्षणा यस्य भगवत्स्मृतेर्नाशायोगात् "न वै जनो जातु कथञ्चनाव्रजेत्" इत्यादौ "स्मरन्मुकुन्दाङ्घ्र्युपगूहनं

---

१. प्राचीनेपाठे 'रोरूयति...' अत उत्तरार्द्धात् ३६तमश्लोकस्य पूर्वार्द्धावधिकं श्लोकद्वयं मूले नास्ति टिप्पण्यां वर्तते।

पुनर्विहातुमिच्छेन्न रसग्रहो यतः" इत्युक्तेः ॥ २३ ॥ ❀ ❀ पतित इति त्रिकम्। ज्ञानेऽनेकजन्मगतसुखदुःखादिविषये गते नष्टे विपरीतां गतिं देहात्मविषयकं ज्ञानं प्राप्तः ॥ २४-२६ ॥

### श्रीमद्वीरराघवव्याख्या

तस्माद्विगतविक्लवः विगताधार्ष्ट्यं अहमात्मानं सुहृदात्मनैव सर्वभूतसुहृदात्मना त्वयैव हेतुभूतेन तमसः संसृतेराशू-द्धरिष्येऽनेकरन्ध्रं नानागर्भवासरूपमेतद्व्यसनं दुःखं पुनः यथा मे मा भविष्यत् किमत्र साधनं तत्राह। उपसादितौ शरणं प्राप्तौ विष्णोः पादौ येन सोऽहम् ॥ २१ ॥ ❀ ❀ एवं सप्तमान्मासादारभ्यादशमान्तं गर्भस्थजीवनिर्वेदमभिधायानन्तरावस्थामाह। एवमिति। एवमुक्तरीत्या गर्भे कृतनिश्चयं सपदि तदा दशमास्यं दशमासपरिमितम् ऋषिं जीवं सद्यः तत्क्षणमेवावाचीनमवाङ्मुखं तं प्रसूतिहेतुर्मारुतः प्रसूत्यै क्षिपति प्रेरयति बहिर्निःसारयितुं चालयतीत्यर्थः ॥ २२ ॥ ❀ ❀ तेन सूतिवायुनाऽवसृष्टः स्वस्था-नाच्चालितः शिरः अवागधः कृत्वा आतुरः दुःखितः उच्छ्वासरहितः हृतस्मृतिः विनष्टगर्भस्थदशास्मृतिरतिकृच्छ्रेणातिसंकटेन निष्क्रामति ॥ २३ ॥ ❀ ❀ असृजा लोहितेन दिग्धो लिप्तः भुवि पतितः विष्ठाभूः कृमिरिव चेष्टते ज्ञाने गर्भवासकालिके ज्ञाने गते सति तद्विपरीतां मतिं प्राप्तः रोरूयते भृशं रोदिति ॥ २४ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

तस्मात्किं निरणायीति तत्राह। तस्मादिति। यस्माद्गर्भान्निर्गमने संसारमण्डलं भवति तस्मादहं सुहृदात्मनैव अनिमि-त्तबन्धोर्हरेरनुग्रहादेव विगतविक्लवो भूत्वा तमसो नरकादात्मानमाशूद्धरिष्य इत्यन्वयः। भूयः पश्चाद्यथैतदनेकरन्ध्रमनेकानर्थद्वारं व्यसनं मा मे भविष्यन्माभूदिति कृत्वा अत्र किं बलमत्राह। उपसादितेति। अनेन हरिचरणशरणस्य पुरुषस्य स्वात्मोद्धारे न कोऽपि प्रयास इति सूचितम् ॥ २१ ॥ ❀ ❀ भगवतो हरेर्महिमाऽगणितप्रभाव इति ध्वनयन् गर्भस्थस्य प्रसूतिप्रकारं वक्ति। एवमिति। ऋष्यादिकुल उत्पत्स्यमानस्य तत्क्षणे ज्ञानं भवतीति द्योतनाय सपद्यृषिमित्युक्तम् 'ऋषिस्त्रिकालदर्शी स्यात्" इति हलायुधः। सर्वोऽपि क्षणिक इत्याशयेनोक्तं सद्य इति अवाचीनमधःशिरसम् ॥ २२ ॥ ❀ ❀ तेन वायुना येन देहाभिमानेन पूर्वमुपस्पृष्टः संसारमन्वभूत्तेन देहाभिमानेन सहेति वा शिरोऽवाक् कृत्वेत्यवाचीनमित्यस्य विवरणं तेन पादप्राथम्येन जन्म प्रायि-कमिदमेव सर्वत्र प्रधानमिति ध्वनयति गतस्मृतिर्नष्टजन्मान्तरज्ञानः ॥ २३ ॥ ❀ ❀ विष्ठैव भूः स्थानं यस्य स तथा विष्ठातो भवति उत्पद्यत इति वा विष्ठाभूः कृमिः रोरूयति रोरूयते तुशब्देन विपरीतां गतिं मनुष्यवासनां गतः ॥ २४ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

यस्मादीदृक्कृपाभाजनं कृतोऽस्मि तस्मादात्मना परमात्मनैव सुहृदा उपसादितौ सन्निधापितौ "तत्रांशेनावतीर्णस्य विष्णो-र्वीर्याणि शंस नः" इति प्रसिद्धेः श्रीकृष्णाख्यस्य विष्णुरूपस्य स्वस्य पादौ यत्र सोऽयं तथात्मानमुद्धरिष्ये यथाभूय इत्यादि ॥ २१ ॥ ❀ ❀ अत्र श्रीभगवानुवाचेति क्वचित्। य ऋषिर्भगवद्द्रष्टा पूर्वोक्तरीत्या ब्रह्मवैवर्तवर्णितश्रीशुकदेव इव कश्चित् स दशमास्य एव स्तुवन् कृतमतिः पूर्णभगवज्ज्ञानो भवति। अतः प्रसङ्गेनैवोक्तमहिम्नस्तस्य जन्मादिसांसारिकावस्थाभासो न वर्णनीय इति भावः। यस्तु प्रस्तुतो दुर्जीवस्तस्य तु पुनर्दुरवस्था श्रूयतामित्याह। सद्य इति। अवाचीनमधोगच्छन्तं संसारपदवीमनु-वर्तमानमित्यर्थः। तं दशमास्यत्वे सति सूतिहेतुर्मारुतः सद्यः क्षिपति। यस्तु शुकदेववद्भगवज्ज्ञानपूर्णः स तु तद्वत् स्वातन्त्र्ये-णैवाविर्भवतीत्यर्थः। मध्यस्थितानान्तु जीवानां तारतम्यं ज्ञेयमिति भावः। अत्रैकवाक्यत्वे सति पूर्वार्द्धेऽपि द्वितीयान्तान्येव पदानि प्रयुज्येरन्निति ज्ञेयम् ॥ २२ ॥ ❀ ❀ हृता स्मृतिः पूर्वपूर्वजन्मानुसन्धानलक्षणा यस्य सः ॥ २३ ॥ ❀ ❀ पतित इति त्रिकम्। विण्मूत्रे विष्ठाभूः कृमिरिव। ज्ञाने अनेकजन्मगतसुखदुःखादिविषये पूर्वपूर्वमहादुःखे विस्मृते साम्प्रतिक-क्षुद्रदुःखेनैव दुःखी भवतीत्यर्थः ॥ २४-२७ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

तर्हि किं निश्चिनोषीति तत्राह। तस्मादिति। तत्रैव स्थितो दुःखेनाऽपि विगतविक्लवोऽव्याकुलः सन् सुहृदा आत्मना सारथिरूपया बुद्ध्यैव अनया त्वद्दत्तया आत्मानं तमसः संसारादुद्धरिष्यामि यथा एतद् अनेकरन्ध्रं नवद्वारस्थूलदेहलक्षणं व्यसनं विपत्तिर्मे मम माभविष्यन्न भविष्यति। कात्र तव साधनसामग्री तत्राह। उपसादितौ स्मरणकीर्त्तनादिभिराश्रितौ विष्णोस्तव पादौ येन तस्य ॥ २१ ॥ ❀ ❀ एवं कृत्वा गर्भे एवोषित्वा कृष्णं भजामीति निश्चिता मतिर्येन सः स्तुवन् सन् ऋषिरेव भवेदित्यन्वयः। न तस्य गर्भान्निःसृतस्य पुनः संसार इति भावः। यस्तु प्रस्तुतः पूर्वाध्यायत एव प्रक्रान्तो जीवस्तस्य दुरवस्था श्रूयतामित्याह। सद्य इति। अवाचीनमधोगच्छन्तं सांसारिकं सूतिहेतुर्मारुतः प्रसूत्यै सद्यो दशमासीयक्षण एव क्षिपति। तेन

यः स्तुवन् ऋषिर्भवेत् स तु सूतिमारुतक्षेपं विनैव गर्भान्निर्गच्छतीत्यर्थो लभ्यते। अत्रैक एव जीवो यदि विवक्षितः स्यात्तदा पूर्वार्द्धेऽपि कृतमतिमित्येवं द्वितीयान्तान्येव पदानि प्रयुज्येरन्निति सन्दर्भः ॥ २२ ॥ ❀ ❀ हृता स्मृतिः "मृतश्चाहं पुनर्जातः" इत्यादि पूर्व्वपूर्व्वजन्मानुसन्धानलक्षणा यस्य सः ॥ २३ ॥ ❀ ❀ विष्ठाभूः कृमिरिव रोरूयति रोरूयते। ज्ञाने प्राचीने गते सति विपरीतामज्ञत्वलक्षणां, भक्तजीवस्यापि वस्तुस्वाभाव्यादावाल्यं प्रायो ज्ञानमावृतं तिष्ठति। ततः किञ्चिन्मात्रं सत्सङ्गेनोद्बुद्धपूर्व्वसंस्कारस्य भक्त्या भगवत्प्राप्तिरिति ज्ञेयम्। परस्य छन्दमभिप्रायमविदुषा स्तन्यार्थं रोदने उदरव्यथां प्रकल्प्य निम्बरसं पाययता उदरव्यथायां रोदने क्षुधां प्रकल्प्य स्तन्यं पाययता जनेन मात्रादिना नेशः न समर्थः रोरूयते इत्यनुषङ्गः ॥ २४-२६ ॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

यस्माद्बहिर्निर्गमने मायोपसर्पति तस्मादिहैव उपसादितविष्णुपादः विष्णिवतरबलरहितः अत एव आत्मना परमात्मना विष्णुनैव सुहृदा भक्तेषु चित्तेन उपायभूतेन आत्मानं तमसः संसारलक्षणादन्धकूपात् उद्धरिष्ये। अनेकरन्ध्रं नवच्छिद्रं शरीरं व्यसनं दुःखरूपं यथा मे भूयो मा भविष्यत् भविष्यति ॥ २१ ॥ ❀ ❀ एवं कृतमतिं मारुतः सूतिहेतुभूतः पवनः सद्यस्तत्क्षणमेव अर्वाचीनमवाङ्मुखं क्षिपति नुदति ॥ २२ ॥ ❀ ❀ तेन मारुतेन अवसृष्टः अधः क्षिप्तः ॥ २३ ॥ ❀ ❀ विष्ठाभूः कृमिरिव असृङ्मूत्रे चेष्टते ज्ञाने गते सति विपरीतां गतिं गतः रोरूयति रोरूयते। अयमर्थः भगवन्तं शरणं गतो नैव संसारं प्राप्नोति, किन्तु यावत् प्रारब्धकर्मसमाप्ति तावदेव संसारे तिष्ठति ततो विमुक्तो भवति। अत एवंविधविवेकपूर्वकं भगवच्चरणं शरणं सर्वो जनो न व्रजति किन्तु कश्चिन्मुमुक्षुरेव व्रजति तदभिप्रायेण भगवच्चरणशरणागतिरुक्ता, विपरीतां गतिं गत इत्युक्तिः। सामान्यतो गर्भे किंचिज्ज्ञानं प्राप्य यो जायते तदभिप्रायेण। अन्यथा सर्वेषां मुक्तिप्रसङ्गः स्यादिति ॥ २४ ॥

## श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

नन्वत्र स्थित्वा किं कर्तव्यं तदाह—तस्मादहमिति। अत्रैव स्थित्वा वैक्लव्यं परित्यज्य, आत्मानं तमसः सकाशात्सुहृदा आत्मनैव भगवतैव उद्धरिष्ये। सङ्घाते पतितमात्मानं स्वरूपे स्थापयिष्यामि। तत्र सत्सङ्गादिकं नाऽपेक्ष्यते; यतः परमोपकारी भगवानेव सर्वं संपादयति। ननुकिमुद्धारेण अत्रैव स्थित्वा भगवानिव कथं न स्वतन्त्रो भवेदित्याशङ्कयाऽऽह—भूय इति। यथाऽनेकरन्ध्रं व्यसनं मे मा भविष्यत्; अत्र स्थित्वैव तथा भगवद्ध्यानलक्षणमुपायं करिष्यामि, यथा व्यसनं न भविष्यति। जाते तु व्यसने प्रतीकारः कठिनः। अत्रापि व्यसनं भविष्यतीति चेत्तत्राऽऽह—मे उपसादितविष्णुपादः। उपसादितौ विष्णुपादौ येन स उपसादितविष्णुपात्; तादृशस्य मे। तत्र तु मायामोहादुपसादनं भविष्यति नवेति सन्देहः। एवमध्यवसायान्ता स्तुतिरुक्ता, भगवत्स्तोत्रस्य फलं चोक्तम्। यत्र कचित्स्थित्वा भगवच्चरणोपसादनं कर्त्तव्यमिति ॥ २१ ॥ ❀ ❀ एवं जीवस्योद्‌र्ध्वगमनार्थं बीजसंस्कारमुक्त्वा, तादृशस्योद्‌र्ध्वगतिं वक्तुं जननमाह—एवं कृतमतिरिति। दशमासपरिच्छिन्नो गर्भः स्तुवन् ऋषिर्भूत्वा निश्चयमतिर्जातः। मन्त्राऽदर्शित्वे भजनं न स्यादिति। 'कृतिर्बलिष्ठा' इति पूर्वमुक्तत्वात् सूतिमारुतस्तादृशमपि प्रसूत्यै प्रसवार्थमवाचीनं क्षिपति। अधोमुखो भवतीत्यर्थः ॥ २२ ॥ ❀ ❀ ततः किमत आह—तेनाऽवसृष्ट इति। तेन वायुना, अवसृष्टः ततः प्रक्षिप्तः कृच्छ्रेण विनिष्क्रामतीति सम्बन्धः। सहसेति सावधानाभावार्थम्। अवाक् शिरो भूत्वा, शिरः अवागधोमुखं कृत्वा वा प्रथमत आतुरो भवेत्; व्यसनस्य प्राप्तत्वात्; ततोऽतिकृच्छ्रेण निष्क्रामति। निष्क्रमणे हेतुः—निरुच्छ्वास इति। अन्तरुच्छ्वासस्थानाऽभावात् हतस्मृतिरपि भवति। अन्यथा क्रियायाः प्राबल्यं न स्यात्, साधनशास्त्राणां च वैयर्थ्यापत्तेः ॥ २३ ॥ ❀ ❀ निष्क्रमणानन्तरं कृत्यमाह—पतित इति। विष्ठा स्वस्यैव, मूत्रं गर्भोदकम्। पश्चाद्भुवि पतितः; प्रथमतो विष्ठाभूरिव चेष्टते। क्रियाव्यतिरेकेण ज्ञानस्याऽप्रयोजकत्वज्ञानार्थं निन्दावचनम्। तत्तु ज्ञानं ज्ञापकमेवेति प्रसूतिवायुना तदुपहतिमाह—रोरूयतीति। गते ज्ञाने विपरीतां गतिं गतः देहोऽहमिति बुद्ध्वा रोरूयति रोदिति। शब्दमात्रं करोतीति रोरूयतीत्युक्तम्। यथा सर्वस्वे गते प्राणी शब्दं करोति ॥ २४ ॥

विंशतितमाच्छ्लोकादष्टत्रिंशच्छ्लोकावधिको सुबोधिनीप्रकाशो न।

## श्रीगिरिधरकृता बालप्रबोधिनी

ततश्च किं निश्चितमित्यपेक्षायामाह—तस्मादिति। बहिर्निस्सरणयुक्तदोषात् यथा भूयः पुनः अनेकरन्ध्रं नानागर्भवासादि रूपं एतद्व्यसनं दुःखं मे मा भविष्यत् न भविष्यति। तथाऽत्रैव स्थितो विगतविक्लवः दुःखबाहुल्येऽपि धैर्यमालम्ब्याव्याकुलः सुहृदात्मना स्ववशवर्त्तिन्या बुद्ध्या उपसादितौ हृदयं प्रापितौ विष्णोः पादौ येन तथाभूतश्च सन्नहं आशु शीघ्रमेव आत्मानं तमसः संसारदुःखादुद्धरिष्ये इत्यन्वयः ॥ २१ ॥ ❀ ❀ एवं गर्भावस्थामुक्त्वा तदनन्तरावस्थामाह—एवमिति। दशमासाः परिच्छेदका यस्य स गर्भे एव एवमुक्तप्रकारेण यो भगवन्तं स्तुवन् कृतमतिः मोक्षे कृता मतिर्येन स ऋषिर्भवति तस्य च 'ये स्वधर्मान्न

---

१. प्रस्तुतम्. क. घ. । २. अर्वाक्. क. । ३. अर्वाक्. क. । ४. ननु क. घ. ङ. ।

दुह्यन्तीति' वक्ष्यमाणरीत्या मोक्षः । 'यतते च ततो भूयः संसिद्धौ कुरुनन्दन । पूर्वाभ्यासेन तेनैव ह्रीयते ह्यवशोऽपि सः ।' सकृदेव प्रपन्नो यस्तवास्मीति च याचते । अभयं सर्वदा तस्मै ददाम्येतद्व्रतं मम' इत्यादिवाक्यविरोधेन विवेकिनो भगवद्भक्तस्य संसार-परम्परासम्भवात् संसारयोग्यस्य च गर्भे एवं विवेकस्तुत्याद्यसम्भवाच्च तदितरस्यैव संसार इति विवेकसाधारणरीत्या जन्मप्रकार-माह—सद्य इति । अवाचीनमवाङ्मुखं तं प्रसूत्यै बहिर्निर्गमाय प्रसूतिहेतुर्मारुतः सद्यः तत्क्षणमेव क्षिपति प्रेरयतीत्यर्थः ॥ २२ ॥ ❀ ❀ तेन सूतवातेन सहसा अवसृष्टः स्वस्थानात्प्रचालितः शिरः अवाक् अधः कृत्वा आतुरः अवशः निरुच्छ्वासः मूर्च्छितः अतएव हता विनष्टा पूर्वोक्ता स्मृतिर्यस्य स अतिकृच्छ्रेण महता कष्टेन विनिष्क्रामतीत्यन्वयः ॥ २३ ॥ ❀ ❀ भुवि यन्मातु-दरादसृग्मूत्रं पतितं तस्मिन् पतितश्चेष्टते । तत्र दृष्टान्तः—विष्ठाभूः कृमिरिवेति । गर्भवासकालिके ज्ञाने गते विनष्टे सति तद्विपरीतां गतिं गतः देहाद्यात्माभिमानं प्राप्तः सन् रोरूयति रोरूयते भृशं रोदितीत्यर्थः । अनेन गर्भे जातमपि ज्ञानं बाल्यपौगण्डावस्थायां तिरोहितं भवति, पुनः सत्सङ्गादिनोद्बुध्यते इति ज्ञेयम् ॥ २४ ॥

### हिन्दी अनुवाद

अतः मैं व्याकुलताको छोड़कर हृदयमें श्रीविष्णुभगवान्के चरणोंको स्थापितकर अपनी बुद्धिकी सहायतासे ही अपने को बहुत शीघ्र ही इस संसाररूप समुद्रके पार लगा दूँगा, जिससे मुझे अनेक प्रकारके दोषोंसे युक्त यह संसार दुःख फिर न प्राप्त हो ॥ २१ ॥ ❀ ❀ श्रीकपिलदेवजी कहते हैं—माता ! वह दस महीनेका जीव गर्भमें ही जब इस प्रकार विवेकसम्पन्न होकर भगवान्की स्तुति करता है, तब उस अधोमुख बालकको प्रसवकालकी वायु तत्काल बाहर आनेके लिये ढकेलती है ॥ २२ ॥ ❀ ❀ उसके सहसा ठेलनेपर वह बालक अत्यन्त व्याकुल हो नीचे सिर करके बड़े कष्टसे बाहर निकलता है। उस समय उसके श्वासकी गति रुक जाती है और पूर्वस्मृति नष्ट हो जाती है ॥ २३ ॥ ❀ ❀ पृथ्वीपर माताके रुधिर और मूत्रमें पड़ा हुआ वह बालक विष्ठाके कीड़ेके समान छटपटाता है। उसका गर्भ-वासका सारा ज्ञान नष्ट हो जाता है और वह विपरीत गति ( देहाभिमान रूप अज्ञान-दशा ) को प्राप्त होकर बार-बार जोर-जोरसे रोता है ॥ २४ ॥

परच्छन्दं न विदुषा पुष्यमाणो जनेन सः । अनभिप्रेतमापन्नः प्रत्याख्यातुमनीश्वरः ॥ २५ ॥
शायितोऽशुचिपर्यङ्के जन्तुः स्वेदजदूषिते । नेशः कण्डूयनेऽङ्गानामासनोत्थानचेष्टने ॥ २६ ॥
तुदन्त्यामत्वचं दंशा मशका मत्कुणादयः । रुदन्तं विगतज्ञानं कृमयः कृमिकं यथा ॥ २७ ॥
इत्येवं शैशवं भुक्त्वा दुःखं पौगण्डमेव च । अलब्धाभीप्सितोऽज्ञानादिद्धमन्युः शुचार्पितः ॥ २८ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

परस्य च्छंदमभिप्रायमविदुषा अनभिप्रेतं स्तन्यार्थं रोदने उदरव्यथां प्रकल्प्य निंबरसपानमुदरव्यथया रोदने स्तनपान-मित्यादि ॥ २५ ॥ ❀ ❀ आसनोत्थानचेष्टने चानीशः सन् रोरूयतीत्यनुषंगः ॥ २६ ॥ ❀ ❀ आमा कोमला त्वग्यस्य तम् । विगतं गर्भे जातं ज्ञानं यस्य ॥ २७ ॥ ❀ ❀ शैशवं पंचवर्षाणि ततः पौगंडं यौवनादर्वाक् तत्र चाध्ययनादिदुःखम् । यौवने दुःखमाह । सार्धैस्त्रिभिः । अलब्धाभीप्सितत्वेन शुचार्पितो व्याप्तः अज्ञानादिद्धो दीप्तो मन्युर्यस्य सः ॥ २८ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

स नालतां गतः ॥ २५ ॥ ❀ ❀ अशुचिपर्यंके मलमूत्रलिप्तत्वादशुद्धे । दोलायमाने दारुविरचिततल्पविशेषे । जंतवश्च ये स्वेदजा जूकादयस्तैर्दूषिते शयनानर्हतां प्रापिते कचिज्जन्तुरिति पृथक्पदं तच्च शिशुपरम् ॥ २६ ॥ ❀ ❀ दंशाः सूचीमुखाः । मशकाः सूक्ष्ममक्षिकाः । मत्कुणाः शय्याजाता रक्तवर्णाश्चलद्रक्तपाः स्वेदजविशेषाः । आदिना लिक्षादिग्रहः । कृमिकं मणिकीटम् ॥ २७ ॥ ❀ ❀ पौगंडं दशमावधीति यद्यप्युक्तं तथाप्यत्र पठनादेस्ततः परत्रापि दर्शनाद्यौवनादर्वागिति व्याख्यातं स्वामिचरणैः । तत्र च पौगंडादौ ॥ २८ ॥ २९ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

मत्कुणः खटमलेति ख्यातः स्वेदजविशेषः । आदिना यूकादिपरिग्रहः ॥ २७ ॥ ❀ ❀ इतीति युग्मकम् । यौवनादर्वा-गिति व्याख्यानेन पौगण्डेनाजहल्लक्षणया आषोडशात्कैशोरमपि क्रोडीकृतं "दश वर्षाणि ताडयेत्" इत्युक्तेरध्ययनादिदुःखस्य तत्र पर्यवसानात् प्रारब्धमन्तरेप्सितासिद्धेरज्ञानादित्युक्तम् । प्रतिकूलेषु विग्रहं चकारादनुकूलेषु मैत्रीं करोति ॥ २८-२९ ॥

### श्रीमद्वीरराघवव्याख्या

परस्य शिशोः छन्दमभिप्रायमविदुषा जनेन सः शिशुः पुष्यमाणः अनभिप्रेतं स्तन्यार्थं रोदने उदरव्यथां परिकल्प्य पाययिष्यमाणं निम्बरसादिकमुदरव्यथया रोदने दीयमानं स्तन्यादिकं चापन्नः प्राप्तः ॥ २५ ॥ ❀ ❀ जन्तवः दंशमशकमक्षिकादयः स्वेदजाश्च तैर्दूषितेऽशुचिपर्यङ्के शायितः शयनं कारितः अङ्गानां कण्डूयने आसनादौ च नेशः असमर्थः रोरूयतीत्यनुषङ्गः ॥ २६ ॥ ❀ ❀ आमा कोमला त्वग्यस्य तं दंशाः दंशनस्वभावाः मत्कुणादयः विगतं गर्भज्ञानं यस्य तं तुदन्ति व्यथयन्ति यथा क्रमिम् ॥ २७ ॥ ❀ ❀ शैशवं पञ्चवर्षपरिमितवयःशिशुत्वं तद्दुखं ततः पौगण्डं यौवनात् प्रागवस्था तद्दुःखं च भुक्त्वा विग्रहं करोतीत्युत्तरत्रान्वयः। पौगण्डदुःखमाह अलब्धमभीप्सितं येन इत्थमज्ञानात् इद्धः प्रवृद्धः मन्युः क्रोधः यस्य सः शुचार्पितः व्याप्तः शोकं प्राप्तः ॥ २८ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

परच्छन्दमन्यस्याभिप्रेतं प्रत्याख्यातुं नापेक्षितमिति निराकर्तुमनीश्वरोऽसमर्थः ॥ २५ ॥ ❀ ❀ अशुचिपर्यङ्के शकृन्मूत्रमिश्रत्वादशुद्धे दोलायमाने दारुविरचिते तल्पविशेषे ॥ २६ ॥ ❀ ❀ आमत्वचं मृदुरूपनूतनत्वचं दंशाः सूचीमुखा मशकाः सूक्ष्ममक्षिकाः कृमिकं मणिकीटम् ॥ २७ ॥ ❀ ❀ पञ्चवर्षपर्यन्तं शैशवं तत आसप्तमवर्षात्कौमारं तत आदशवर्षात्पौगण्डमज्ञानादिति अनभीष्टकर्तुरभिमानिनामिति शेषः ॥ २८ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

इतीति युग्मकम् ॥ २८-३१ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतासारार्थदर्शिनी

आमा कोमला त्वग्यस्य तं कृमिकं क्षुद्रकृमिम् ॥ २७ ॥ ❀ ❀ इद्धमन्युरुद्दीप्तक्रोधः शुचार्पितः शोकव्याप्तः ॥२८-२९॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

छन्दमाशयम् ॥ २५-२६ ॥ ❀ ❀ आमत्वचम् आमा अपक्वा त्वग् यस्य तम् ॥ २७ ॥ ❀ ❀ अर्पितो व्याप्तः ॥ २८ ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

उत्पन्नस्य बाल्यदुःखमाह—परच्छन्दमिति। बालकस्य इच्छामविदुषा जनेन पुष्यमाणो भवति, ततोऽनभिप्रेतमापन्नो भवति। क्षुधया रोदने औषधम्, व्यथायां तु अन्नमिति। प्रत्याख्यातुं निराकर्तुमनीश्वरः असमर्थः। अतो महद् दुःखमुक्तम् ॥ २५ ॥ ❀ ❀ पीडाक्षुदभावदशायामपि दुःखमाह—शायित इति। अशुचिपर्यङ्के शायितो भवति। दशदिवसपर्यन्तं सूतीगृहस्थानां पदार्थानां शुद्धभावः। अनेन तस्य ज्ञानोत्पत्तौ प्रतिबन्ध उक्तः। जन्तवो मत्कुणादयः, स्वेदजा मशकाः, तैर्दूषितेति सुतरां सोपद्रव उक्तः। अधर्माद्व्यसनाच्च ज्ञानं नोत्पन्नमित्युक्तम्। व्यसनप्रतीकारे अशक्तिमाह—नेश इति। अङ्गानां कण्डूयने असमर्थः; आसने उत्थाने चेष्टने वा। किन्तु सर्वदा पतितस्तिष्ठतीत्यनिर्वृतौ हेतुः। अनेनाध्यात्मिकं दुःखमुक्तम् ॥ २६ ॥ ❀ ❀ भौतिकं दुःखमाह—तुदन्तीति। आमा अपक्वा त्वक् यस्य। दंशाः स्थूलमशकाः; मत्कुणा लोहितवर्णाः खट्वाकीटाः। आदिशब्देनान्येऽपि वस्त्रकीटादयः। उभयोर्ज्ञानाभावमाह—रुदन्तमिति। विगतं ज्ञानं यस्य; अतो रोदिति; अन्यथा सहेत। ततोऽप्यन्यं सजातीयं मत्वा दशन्तीत्याह—कृमयः कृमिकं यथेति। स्थूलः कृमिः कृमिकः। इति दुःखमतिबाल्ये। एवंप्रकारकमेव शैशवं पञ्चवर्षपर्यन्तम्। नरकादागतो विद्याधनयुक्ते कुले न भवतीत्यतिदरिद्राणां गृहे दुःखमेतादृशमेव। पौगण्डमपि तत्र दुःखम्। पञ्चवर्षादूर्ध्वं नववर्षपर्यन्तं पौगण्डम्। तत्राऽप्येतज्जातीयमेव दुःखम्; अतो दुःखाभिभूतस्य न ज्ञानमिति भावः। अग्रे ज्ञानं भविष्यतीत्याशङ्क्य तत्र कामादयो बाधका भवन्तीत्याह—अलब्धाभीप्सित इति। न लब्धमभीप्सितं येन; अभीप्सितमप्यज्ञानात्। अज्ञानादेव इद्धो मन्युर्यस्य। इद्धमन्युना[1] वा शोकेन च अर्पितो भवति। कामक्रोधशोका उत्पन्नाः ज्ञानमुत्पादयितुं न प्रयच्छन्तीत्यर्थः ॥ २७-२८ ॥

### श्रीगिरिधरकृता बालप्रबोधिनी

परस्य बालस्य छन्दमभिप्रायमविदुषा अजानता जनेन सः बालः पुष्यमाणः अत एव अनभिप्रेतमनिष्टं क्षुधया स्तन्यार्थं रोदने उदरव्यथां परिकल्प्य औषधादिकं उदरव्यथया रोदने च क्षुधां परिकल्प्य दीयमानं स्तन्यादिकं चापन्नः प्राप्तो भवति। तथापि प्रत्याख्यातुमनीश्वरः असमर्थः ॥ २५ ॥ ❀ ❀ जन्तुः शिशुः समासे तु जन्तवो मशकमक्षिकादयः स्वेदजाः मत्कुणादयश्च तैर्दूषिते दुःखप्रदे अशुचौ मलमूत्रादिलिप्ततया अशुद्धे पर्यङ्के शायितः शयनं कारितः अङ्गानां कण्डूयने सङ्घर्षणे आसने

1. विद्धमन्युना. ग.

उपवेशने उत्थाने चेष्टने च नेशः असमर्थः रोरूयते इत्यनुषङ्गः ॥ २६ ॥ ❀ ❀ आमा कोमला त्वग्यस्य तं रुदन्तं दंशादय-स्तुदन्ति व्यथयन्ति । तत्र दृष्टान्तः—कृमिकं स्थूलं कृमिं यथा सूक्ष्माः कृमयो व्यथयन्ति तथेति । व्यथया रोदने हेतुमाह—विगतज्ञानमिति । गर्भदशायामुत्पन्नस्य ज्ञानस्य विनष्टत्वात् यदि तत्स्यात्तदा व्यथा रोदनं च न स्यादित्याशयः ॥ २७ ॥ ❀ ❀ इत्येवमुक्तप्रकारकं शैशवं पञ्चवर्षपरिमितं वयः शिशुत्वं तत्र भवं दुःखं ततश्च पौगण्डं यौवनात्प्रागवस्था तत्र भवं पौगण्डमध्ययनादि दुःखं च भुक्त्वा यौवने च इद्धः प्रदीप्तो मन्युः क्रोधो यस्य स तेन मन्युना आत्मनोऽन्ताय विनाशाय कामिषु विग्रहं वैरं करोतीति द्वयोरन्वयः । यौवनदुःखमेव दर्शयति—अलब्धेति सार्द्धैस्त्रिभिः । मन्योर्दीप्तत्वे हेतुमाह—शुचार्पित इति, शोकेन व्याप्त इत्यर्थः । तत्र हेतुमाह—अलब्धेति, न लब्धं अभीप्सितमिष्टं येन सः । तदलाभेऽपि शान्तिमेव कुतो न करोत्यत आह—कामीति । प्रथमतो मन्युरेव कुत इत्यपेक्षायामाह—देहेन सहैव वर्द्धमानेन मानेनाहङ्कारेणेत्यर्थः । देहोऽन्नादिना वर्द्धतामहङ्कारवृद्धिश्च कुत इत्यपेक्षाया-माह—अज्ञानादिति ॥ २८–२९ ॥

## हिन्दी अनुवाद

फिर जो लोग उसका अभिप्राय नहीं समझ सकते उनके द्वारा उसका पालन-पोषण होता है। ऐसी अवस्थामें उसे जो प्रतिकूलता प्राप्त होती है, उसका निषेध करनेकी शक्ति भी उसमें नहीं होती ॥ २५ ॥ ❀ ❀ जब उस जीवको शिशु-अवस्थामें मैली-कुचैली खाटपर सुला दिया जाता है, जिसमें खटमल आदि स्वेदज जीव चिपटे रहते हैं, तब उसमें शरीरको खुजलाने, उठाने अथवा करवट बदलनेकी भी सामर्थ्य न होनेके कारण वह बड़ा कष्ट पाता है ॥ २६ ॥ ❀ ❀ उसकी त्वचा बड़ी कोमल होती है; उसे डाँस, मच्छर और खटमल आदि उसी प्रकार काटते रहते हैं, जैसे बड़े कीड़ेको छोटे कीड़े। इस समय उसका गर्भावस्थाका सारा ज्ञान जाता रहता है, सिवा रोनेके वह कुछ नहीं कर सकता ॥ २७ ॥ ❀ ❀ इसी प्रकार बाल्य (कौमार) और पौगण्ड अवस्थाओंके दुःख भोगकर वह बालक युवावस्थामें पहुँचता है। इस समय उसे यदि कोई इच्छित भोग नहीं प्राप्त होता, तो अज्ञानवश उसका क्रोध उद्दीप्त हो उठता है और वह शोकाकुल हो जाता है ॥ २८ ॥

**सह देहेन मानेन वर्धमानेन मन्युना । करोति विग्रहं कामी कामिष्वन्ताय चात्मनः ॥ २९ ॥**
**भूतैः पञ्चभिरारब्धे देहे देह्यबुधोऽसकृत् । अहंममेत्यसद्ग्राहः करोति कुमतिर्मतिम् ॥ ३० ॥**
**तदर्थं कुरुते कर्म यद्बद्धो याति संसृतिम् । योऽनुयाति ददत्क्लेशमविद्याकर्मबन्धनः ॥ ३१ ॥**
**यद्यसद्भिः पथि पुनः शिश्नोदरकृतोद्यमैः । आस्थितो रमते जन्तुस्तमो विशति पूर्ववत् ॥ ३२ ॥**

## श्रीधरस्वामिविरचिता भावार्थदीपिका

देहेन सहैव वर्धमानेनाभिमानेन मन्युना च विग्रहं विरोधकं आत्मनोऽताय नाशाय ॥ २९ ॥ ❀ ❀ अज्ञानं प्रपंचयति । भूतैरारब्धे देहे असदाग्रहोऽहंममेति मतिं करोति ॥ ३० ॥ ❀ ❀ तदर्थं देहार्थम् । यद्येन कर्मणा बद्धः यो देहः अनुयाति पुनरायात्यनुवर्तत इति वा । कुत अविद्याकर्मभ्यां बद्धयत इति तथा ॥ ३१ ॥ ❀ ❀ यद्यसद्भिरास्थितोऽधिष्ठितः संस्तेषां पथि रमते पथि सन्मार्गे आस्थितोऽपि यद्यसद्भिः सह रमत इति वा तर्हि यातनादेह आवृत्येत्यादिपूर्वोक्तप्रकारेण तमो नरकं प्रविशति ॥ ३२ ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

अबुधोऽज्ञः देहस्य स्वतोऽन्यत्वं स्पष्टमपि तदपि तत्रैवाहं ममेति बुद्धिं करोति । यतोऽसद्ग्रहः असद्वस्त्वेव गृह्णाति न तु सदिति ॥ ३० ॥ ❀ ❀ क्लेशं नरकादिदुःखं ददत् तं पापकर्मणापि पुष्णातीतीति मौढ्यम् ॥ ३१ ॥ ❀ ❀ तेषामिति पदाध्याहारेणन्वये गौरवमालक्ष्याह—यद्यसद्भिरिति । यदि अद्भिः कृष्णसेवाकृतोद्यमैरास्थितो रमते तदा जंतुः कृष्णं प्राप्नोतीत्यर्थो-लभ्यते । पूर्ववत्पूर्वोक्तभक्तजीववदिति भावः ॥ ३२ ॥

## श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

आरब्धे जनिते तत्र स्वदेहेऽहमिति पुत्रादिदेहे ममेति मतिं करोति स्वदेहपरदेहयोर्भौतिकत्वाविशेषात् भोक्तुश्चात्मनः सर्वत्रैक्यात् कुमतिरित्युक्तम् ॥ ३० ॥ ❀ ❀ यो देहः क्लेशं ददनुयाति तदर्थं तत्कर्म कुरुत इत्यन्वयः ॥ ३१ ॥ ❀ ❀ पापात्मककर्मणो निरयहेतुत्वं विशेषेणाह । यदीति । असद्भिः पापिष्ठैः यदीतिप्रतियोगिनिर्देशात् "यदि सद्भिः पथि पुनः कृष्णसेवा-परायणैः । आस्थितो रमते जन्तुः कृष्णं प्राप्नोति पूर्ववत् ।" इति तत्प्रतियोगिवाक्यं गम्यम् ॥ ३२ ॥

### श्रीमद्वीरराघवव्याख्या

यौवनदुःखमाह । सहेति । देहेन सहैव वर्द्धमानेनाभिमानेन मन्युना चात्मनोऽन्ताय नाशाय कामिषु विग्रहं विरोधं करोति । स्वयं कामी स्वकामविरोधिषु विग्रहं करोतीत्यर्थः ॥ २९ ॥ ❀ ❀ यौवनावस्थामेव प्रपञ्चयति । भूतैरिति । पञ्चभिर्भूतैरारब्धे देहे असदाग्रहः अहंममेति कुमतिं करोति ॥ ३० ॥ ❀ ❀ तदर्थं देहार्थं कर्म करोति येन कर्मणा बद्धः संसृतिं पुनर्याति तदेवाह । यो देही अविद्या कर्मबन्धनः "अविद्याकर्मसंज्ञान्या तृतीया शक्तिरिष्यते" इत्युक्तकर्माख्याविद्यावश्यः ददत् क्लेशं क्लेशावहं देहमनुयाति पुनः पुनरनुवर्त्तते ॥ ३१ ॥ ❀ ❀ असद्भिर्दारादिभिराश्रितः तेषां पथ्यसन्मार्गे स्थितः शिश्नोदरार्थं कृतप्रयत्नः यदि रमते वैषयिकेषु सुखेषु तर्हि पूर्ववत्तमः "यातनादेह आवृत्य" इत्यादिपूर्वोक्तप्रकारेण नरकं प्रविशति ॥ ३२ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

सह देहेन मानेन देहाभिमानेन विग्रहं वैरमात्मनोऽन्ताय स्वस्य नाशाय कामिषु विषयलालसेषु ॥ २९ ॥ ❀ ❀ सह देहेनेत्येतद्विवृणोति । भूतैरिति । अहंममेत्यसद्ग्राहो दुराग्रहो यस्यां सा तथा ताम् ॥ ३० ॥ ❀ ❀ तदर्थमहंममेत्यसद्ग्राहदृढीकरणाय येन कर्मणा बद्धः ॥ ३१ ॥ ❀ ❀ एतदेव स्पष्टयति । येनेति । ईदृशं नरकादिलक्षणं क्लेशमविद्याकर्मबन्धनञ्च मनुष्ययोनेः पुरुषार्थहेतुत्वात् कथं निन्द्यत्वमत्राह । यदीति । पथि पुरुषार्थहेतौ मनुष्ययोनौ स्थितो जन्तुः शिश्नोदरयोः पोषणे कृत उद्यमः प्रयत्नो यैस्ते तथा तैरसद्भिर्जीवपरमात्माद्यभेदविद्भिश्चासुरप्रकृतिभिः सह यदि रमते तर्हि पूर्ववत्तमो विशतीत्यन्वयः ॥ ३१ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

साधारणकामासक्तिदोषमुक्त्वा पापजतदासक्तिदोषमाह । यदीति असद्भिः पापिष्ठैः ॥ ३२ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी ।

अज्ञानं दर्शयति । भूतैः पञ्चभिरारब्ध इति । देहस्य स्वतोऽन्यत्वं स्पष्टमेव तदपि तत्रैव अहंममेति मतिं करोति । असद्ग्राहः असद्वस्त्वेव गृह्णाति न तु सत् ॥ ३० ॥ ❀ ❀ तदर्थं देहार्थं यद्येन कर्म्मणा बद्धः यो देहः जीवाय क्लेशं नरकादिदुःखं ददद्दातुमनुयाति अविद्यया कर्म्मबन्धनं यतः स यो देहः क्लेशं ददाति तमेव पापकर्म्मणापि पुष्यतीति मौढ्यम् ॥ ३१ ॥ ❀ ❀ पूर्व्ववदिति । "यातनादेह आवृत्य" इति पूर्व्वोक्तप्रकारेण नरकं विशति यद्यसद्भिरित्यनेन ।

'यदि सद्भिः पथि पुनः कृष्णसेवाकृतोद्यमैः । आस्थितो रमते जन्तुः कृष्णं प्राप्नोति पूर्व्ववत् ॥'

इति च लभ्यते । अत्र पूर्व्ववदिति पूर्व्वोक्तभक्तजीववदित्यर्थः ॥ ३२ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

अन्ताय नाशाय ॥ २९ ॥ ❀ ❀ असद्ग्रहः दुष्टाग्रहः देहेऽहमिति गृहादौ ममेति च मतिं करोति ॥ ३० ॥ ❀ ❀ अविद्ययानाद्यज्ञानेन यानि कर्माणि तैर्बन्धनभूतो यो देहः क्लेशं ददत् अनुयाति पुनः पुनः आयाति तदर्थं कुरुते कर्म यत् येन कर्मणा बद्धः संसृतिं याति ॥ ३१ ॥ ❀ ❀ शिश्नार्थमुदरार्थं च कृत उद्यमो यैस्तैः सहास्थितः सङ्गतस्तेषां पथि दुराचारे यदि रमते तदा जन्तुः पूर्ववत्तमो विशति ॥ ३२–३३ ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या ।

ततः पुष्टस्य सुतरां ज्ञाननाशहेतूनाह—सह देहेनेति । यथा देहो वर्द्धते, तथा मानो मन्युश्च; मन्युस्तु देहवृद्धिमपि नापेक्षते । अभिमानस्यैव तदपेक्षेति पृथग्वचनम् । आत्मनः अन्ताय नाशाय कामिषु विग्रहं करोति । एकवस्तुविषये कामश्चेद्बहूनां तदा बलिष्ठैर्बहुभिरितरो हन्यते । तदा पूर्ववत् स्वतन्त्रसुकृताभावान्नेष्टसिद्धिः ॥ २९ ॥ ❀ ❀ वाक्यमज्ञानं[1] दूरापास्तमिति वक्तुं प्रत्यक्षतोऽपि दृष्टे यत्र ज्ञानं न भवति तत्र किं वक्तव्यमन्यस्माद्भविष्यतीत्याह—भूतैरिति द्वाभ्याम्—आकाशादिपञ्चमहाभूतैरारब्धे देहे देही देहाभिमानवान् पूर्वज्ञानरहितः असकृदहं ममेति मतिं करोति; यतोऽयं कुमतिः । दृश्यत एव भूतादिजनितत्वं देहे । एवं प्रत्यक्षदृष्टेऽपि चेदबुधः । अबोधे हेतुः—देहाभिमानी, सर्वदा वासनावशाद्भौतिकत्वे ज्ञातेऽप्यहंममाऽभिमानो भवति । अयमभिमानः स्वतो न निवर्तेत इत्यसकृदित्युक्तम् । असद्ग्राह इति परबोधवैयर्थ्यम् । स्वतो युक्त्यनुसन्धानाऽभावाय कुमतिरिति ॥ ३० ॥ ❀ ❀ एवं देहे अहंममेति बुद्धौ स्थिरायां यद्भवति तदाह—तदर्थमिति । देहार्थं कर्म कुरुते । कर्मणा च बद्धो जन्ममरणरूपं संसारं याति । देहोऽपि तं न त्यजतीत्याह—योऽनुयातीति । यो देहः सर्वदा क्लेशं ददत्, अनु पश्चाद्याति । यतः आत्मना स बद्धः । प्रथमतोऽविद्या, ततः[2] कामः, ततः कर्माणि, तैर्बन्धनं यस्य । एवं देहाभिमानेन नष्टो

---

१. वाक्यमज्ञानम्. पा. । २. ततः काम इति [ ग ] नास्ति ।

भवतीत्युक्तम् ॥ ३१ ॥ ❀ ❀ एतदुपरि असत्सङ्गश्चेत् , तदा नष्ट एव जात इत्याह—यद्यसद्भिरिति । पुनः पथि पूर्वोक्त एव संसारमार्गे असद्भिः सह आस्थितः सन् रमते । तदा पूर्ववत् तमो विशति । अतो न तस्य किञ्चिद्वक्तव्यं व्याख्यातत्वात् । असद्भिरिति षष्ठ्यर्थे वा तृतीया । असतां लक्षणम्–शिश्नोदरार्थे कृत उद्यमो यैरिति न भगवदर्थे । अनेन गृहस्थाः सर्व एवासन्त इत्युक्तम् । यद्यन्येऽप्येतादृशाः सुतरां असन्तः । अ¹वर्जनीयतया यस्तिष्ठेन् यो वा न रतः तयोर्न नाश इत्युक्तम् । जन्तुरित्यल्पबुद्धिः, अतो रमणम् ॥ ३२ ॥

### श्रीगिरिधरकृता बालप्रबोधिनी

अज्ञानमेव प्रपञ्चयति—भूतैरिति । पञ्चभिर्महाभूतैरारब्धे देहे देही असकृत् पुनःपुनरहम्ममेति मतिं करोतीत्यन्वयः । तत्र हेतुः—असद्ग्राह इति, यतोऽसदेव अन्यथैव गृह्णातीति सः । तत्र हेतुः—अबुध इति, स्वरूपज्ञानशून्य इत्यर्थः । तत्र हेतुः—कुमतिरिति ॥ ३० ॥ ❀ ❀ असद्ग्राहत्वमेव स्पष्टयति—तदर्थमिति । योऽयं देहः एनं क्लेशं जन्ममरणजराव्याध्यादि-दशायां दुःखमेव ददत् अनुयाति अनुवर्त्तते तदर्थमेव कर्म कुरुते येन कर्मणा बद्धः सन् स्वयं संसृतिं श्वसूकरादिनानायोनिं यातीत्यन्वयः । देहस्य दुःखप्रदत्वे हेतुमाह—अविद्येति, अविद्यया देहाद्यात्माभिमानेन कृतं यत्कर्म तेन बद्धयते विरच्यते इति तथा । देहस्य कर्माधीनत्वेन जन्मादेरवश्यम्भावादभिमानेन जीवोऽपि तदा दुःखमेवानुभवतीत्याशयः ॥ ३१ ॥ ❀ ❀ एवं नरकपाताद्यनर्थो दुःसङ्गाद्भवतीत्याह—यदीति । असद्भिरिति तृतीया षष्ठ्यर्थे । यदि असतां पथि मार्गे आस्थितः संस्तैः शिश्नो-दरार्थे कृत उद्यमः प्रयत्नो यैस्तैः सह जन्तुर्जीवः पुनः रमते तदा पुनः पूर्ववत् यातनादेह आवृत्येत्याद्युक्तप्रकारेण तमो नरकं विशति ॥ ३२ ॥

### हिन्दी अनुवाद

देहके साथ-ही-साथ अभिमान और क्रोध बढ़ जानेके कारण वह कामपरवश जीव अपना ही नाश करनेके लिये दूसरे कामी पुरुषोंके साथ वैर ठानता है ॥ २९ ॥ ❀ ❀ खोटी बुद्धिवाला वह अज्ञानी जीव पञ्चभूतोंसे रचे हुए इस देहमें मिथ्याभिनिवेशके कारण निरन्तर मैं-मेरेपनका अभिमान करने लगता है ॥ ३० ॥ ❀ ❀ जो शरीर इसे वृद्धावस्था आदि अनेक प्रकारके कष्ट ही देता है तथा अविद्या और कर्मके सूत्रसे बँधा रहनेके कारण सदा इसके पीछे लगा रहता है, उसीके लिये यह तरह-तरहके कर्म करता रहता है—जिनमें बँधा जानेके कारण इसे बार-बार संसार-चक्रमें पड़ना होता है ॥ ३१ ॥ ❀ ❀ सन्मार्गमें चलते हुए यदि इसका किन्हीं जिह्वा और उपस्थेन्द्रियके भोगोंमें लगे हुए विषयी पुरुषोंसे समागम हो जाता है और यह उनमें आस्था करके उन्हींका अनुगमन करने लगता है, तो पहलेके समान ही फिर नारकी योनियोंमें पड़ता है ॥ ३२ ॥

**सत्यं शौचं दया² मौनं बुद्धिः श्रीर्ह्रीर्यशः क्षमा । शमो दमो भगश्चेति यत्सङ्गाद्याति सङ्क्षयम् ॥ ३३ ॥**
**तेष्वशान्तेषु मूढेषु खण्डितात्मस्वसाधुषु । सङ्गं न कुर्याच्छोच्येषु योषित्क्रीडामृगेषु च ॥ ३४ ॥**
**न तथास्य भवेन्मोहो बन्धश्चान्य³प्रसङ्गतः । योषित्सङ्गाद्यथा पुंसो यथा तत्सङ्गिसङ्गतः ॥ ३५ ॥**
**प्रजापतिः स्वां दुहितरं दृष्ट्वा तद्रूपधर्षितः । रोहिद्भूतां सोऽन्वधावदृक्षरूपी हतत्रपः ॥ ३६ ॥**

### श्रीधरस्वामिविरचिता भावार्थदीपिका ।

असत्संगं निंदति । सत्यमिति त्रिभिः बुद्धिः परमपुरुषार्थविषया श्रीर्धनधान्यलक्षणा ह्रीर्लज्जा यशः कीर्तिः क्षमा सहिष्णुत्वं शमो बाह्येंद्रियनिग्रहः दमो निग्रहः भग उन्नतिः यत्संगाद्येषामसतां संगात् ॥ ३३ ॥ ❀ ❀ खंडितात्मसु देहात्म-बुद्धिषु योषितां क्रीडामृगवदधीनेषु ॥ ३४ ॥ ❀ ❀ यथा च योषित्संगिनां संगतो बंधस्तथाऽन्यप्रसंगतो न भवेत् ॥ ३५ ॥ ❀ ❀ योषित्संगस्यानर्थहेतुतां प्रपंचयति । प्रजापतिरिति सप्तभिः । रोहिद्भूतां मृगीरूपां सतीमृक्षरूपी मृगाकारः सन् हतत्रपो निर्लज्जः ॥ ३६ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

सत्यं यथार्थोक्तिः । शौचं पावित्र्यम् । दया परदुःखासहनम् । बुद्धिः पुरुषार्थविषया । श्रीर्भक्तिसंपल्लक्षणा । ह्रीरकार्य-लज्जा । क्षमा परापराधसहिष्णुता । शमो बाह्येंद्रियनिग्रहः । दमोंतरिंद्रियनिग्रहः । भगो देशाधिपत्याद्यैश्वर्यम् । येषामसतां संगात् ॥ ३३ , ३४ ॥ तत्संगिसंगत इति । यथाग्नयाविष्टलोहो दहति तथाग्निरपि न दहतीति भावः । अन्येषां प्राकृतानां प्रसंगतः ॥ ३५ ॥

---

१. वर्जनीतया ग. । २. प्रा० पा०—तपो मौनं बुद्धिर्ह्रीः श्रीर्यशः । ३. प्रा० पा०—चास्य प्र० ।

पूर्वमेवानुवर्तत इत्यङ्गीकृता ग्लानिर्न दोषायेति न्यायेन भयं त्यक्तव्यम् । एते दुष्टास्त्याज्या एवेति, एतन्निर्वाहार्थं कार्पण्यमपि त्यक्तव्यम् । एतद्बाधकानामस्मन्मित्रत्वात् स्वस्य कर्तव्याभावात् का उत्तालता । जीवस्य गतिरुक्तैव, अतो जीवगतिं बुद्ध्वा देहगति-दोषातिक्रमं सोढ्वा, धीरो भूत्वा, बाधकं सङ्गं त्यक्त्वा चरेन्नैकत्र तिष्ठेदित्यर्थः ॥ ४७ ॥ ❀ ❀ एवं बहिः स्थितिरुक्ता । अन्तः स्थितिमाह—सम्यगिति । सम्यगात्मदर्शनं यस्याम् । तस्या बुद्धेर्योगो वैराग्यं चाङ्गम् । तया स्वात्मानं स्थिरीकृत्य मायया विशेषेण रचिते लोके कलेवरं न्यस्य लोकानुसारिणं कृत्वा स्वयं चरेदुदासीनो भवेदित्यर्थः ॥ ४८ ॥

इति श्रीभागवतसुबोधिन्यां श्रीलक्ष्मणभट्टात्मजश्रीवल्लभदीक्षितविरचितायां तृतीयस्कन्धे एकत्रिंशाध्यायविवरणम् ।

**श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः**

द्रव्योपलब्धीत्यत्र । दर्शनकरणत्वं कर्तृत्वं चेति । योग्यतारूप उत्पत्तिशेषः । तत्राऽयोग्यताऽत्र मरणमिति देहोत्पत्तिलय-कृत्याभ्यां जीवस्योत्पत्तिमरणे इत्येकश्लोकपाठेऽर्थ इत्यर्थः । श्लोकद्वयपाठे प्रथमश्लोककरणकर्त्रोर्योग्यत्वायोग्यत्वे एव प्रतिपाद्ये, द्वितीयश्लोके तूभयाधिष्ठानदेहस्य स्वभावनिवृत्त्या मरणसाधनम्, स्वाभाविककार्यकरणेनोत्पत्तिसाधनम्, जीवस्य तु तदभिमानादु-भयसाधनमित्यर्थः ॥ ४५ ॥ ❀ ❀ तस्मादित्यत्र । बाधनमिति, जीवश्रेयःप्रतिबन्धः । उक्तैवेति । त्रितयाभिमानत्यागेन स्वरूपावस्थानरूपा पूर्वमुक्तैवेत्यर्थः ॥ ४७ ॥ ❀ ❀ एवं चाऽस्मिन्नध्याये बाल्यादितारुण्यान्तास्ववस्थासु कालकृतः काम उक्तः, गर्भमारभ्य भौतिकेन्द्रियोत्पत्तिश्रोक्तेतिसंवादद्वयसम्बन्ध्यर्थो बोध्यः ॥ ४८ ॥

इति श्रीतृतीयस्कन्धसुबोधिनीप्रकाशे एकत्रिंशाध्यायविवरणं सम्पूर्णम् ।

**श्रीगिरिधरकृता बालप्रबोधिनी**

उक्तमेव स्पष्टयति—द्रव्येति । द्रव्याणां पृथ्व्यप्तेजोवाय्वाकाशादीनां उपलब्धिस्थानस्य साक्षात्कारकारणस्य भोगायतनस्य स्थूलदेहस्य द्रव्येक्षायां साक्षात्कारे यदा अयोग्यता भवति तदा तत्पञ्चत्वं मरणमुच्यते—तत्रात्माभिमानस्य निवृत्तत्वात् । ततश्च स देहोऽपि विशीर्यते । यदा तु पुनराविर्भूतेन स्थूलदेहेन द्रव्याणां दर्शनं भवति तदा तत्राहम्मानात् अयमेवाहमित्यात्माभिमाना-दुत्पत्तिर्जन्मेत्युच्यते ॥ ४५ ॥ ❀ ❀ ननु देहस्यायोग्यत्वे जीवस्य कथमयोग्यत्वं येन तन्मरणमुच्यते इत्याशङ्क्य तत्र दृष्टान्तमाह—यथेति । यथा अक्ष्णोर्गोलकयोर्यदा काचकामलादिदोषेण द्रव्यावयवस्य रूपादेर्दर्शने अयोग्यता भवति तदैव चक्षुष इन्द्रियस्यापि तद्दर्शने अयोग्यता भवति । यदा चानयोः गोलकेन्द्रिययोरयोग्यता भवति तदैव द्रष्टुर्जीवस्यापि द्रष्टृत्वायोग्यता भवति । एवं स्थूलदेहवैकल्ये लिङ्गदेहस्यायोग्यता तयोर्देहयोरयोग्यत्वे जीवस्यापि अयोग्यत्वेन मरणव्यवहारः, न तु वस्तुतस्तद्विनाश एवेत्यर्थः ॥ ४६ ॥ ❀ ❀ यस्मान्न वस्तुतो जीवस्य जन्ममरणादि तस्मान्मरणात् सन्त्रासो न कार्यः । सुखदुःखादेरपि प्रारब्धाधीनत्वात् तदर्थं कार्पण्यं दैन्यं न कार्यम् । तथा धनपुत्रादेरपि विनश्वरत्वात् तत्र सम्भ्रमो मोह आसक्तिर्न कार्यः । तर्हि किं कुर्यादित्यत आह—जीवस्य गतिं अच्छेद्यादाद्यादितत्त्वं बुद्ध्वा धीरो देहादौ मुक्तसङ्गः आसक्तिरहितश्च सन्निह संसारे विचरेदिति ॥ ४७ ॥ ❀ ❀ तथा मायाविरचिते प्रकृतिपरिणामरूपे लोके कलेवरं विन्यस्य इदमपि प्राकृतं नश्वरं मत्तो भिन्नमिति बुद्ध्या तदभिमानं त्यक्त्वा विचरेत् । बुद्ध्याप्येवं अभिमानत्यागः कथमित्यपेक्षायामाह—वैराग्ययुक्तयेति, सर्वत्र वैतृष्ण्येनेत्यर्थः । तदपि कथमित्यत आह—सम्यग्दर्शनयेति, सम्यक् आत्मानात्मयाथात्म्यस्य दर्शनं यस्यास्तयेत्यर्थः । तथापि निरालम्बतया कथं स्थिरता पुनरासक्ति-र्देहादौ स्यादित्याशङ्क्याह—योगयुक्तयेति, पूर्वोक्तप्रकारेण भगवद्ध्याननिष्ठयेत्यर्थः ॥ ४८ ॥

इति श्रीवल्लभाचार्यवंश्यगोपालसूनुना ॥ श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा ॥ १ ॥
श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये ॥ श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी ॥ २ ॥
रचिता च तृतीयेऽत्र मोक्षसर्गनिरूपणे ॥ एकत्रिंशो गतो वृत्तिं राजसीगतिरूपकः ॥ ३ ॥

**हिन्दी अनुवाद**

पदार्थोंकी उपलब्धिके स्थानरूप इस स्थूलशरीरमें जब उनको ग्रहण करनेकी योग्यता नहीं रहती; यह उसका मरण है; और यह स्थूलशरीर ही मैं हूँ—इस अभिमानके साथ उसे देखना उसका जन्म है ॥ ४५ ॥ ❀ ❀ नेत्रोंमें जब किसी दोषके कारण रूपादिको देखनेकी योग्यता नहीं रहती, तभी उनमें रहनेवाली चक्षु-इन्द्रिय भी रूप देखनेमें असमर्थ हो जाती है। और जब नेत्र और उनमें रहनेवाली इन्द्रिय दोनों ही रूप देखनेमें असमर्थ हो जाते हैं, तभी इन दोनोंके साक्षी जीवमें भी वह योग्यता नहीं रहती ॥ ४६ ॥ ❀ ❀ अतः मुमुक्षु पुरुषको मरणादिसे भय, दीनता अथवा मोह नहीं होना चाहिये। उसे जीवके स्वरूपको जानकर धैर्यपूर्वक निःसङ्गभावसे विचरना चाहिये तथा इसी मायामय संसारमें योग-वैराग्ययुक्त सम्यक्ज्ञानमयी बुद्धिसे शरीरको निक्षेप ( धरोहर ) की भाँति रखकर उसके प्रति अनासक्त रहते हुए विचरण करना चाहिये ॥ ४७-४८ ॥

**३१ वाँ अध्याय समाप्त**

# अथ द्वात्रिंशोऽध्यायः

## कपिल उवाच

अथ यो गृहमेधीयान्धर्मानेवावसन् गृहे। काममर्थं च धर्मान् स्वान् दोग्धि भूयः पिपर्ति तान् ॥ १ ॥
स चापि भगवद्धर्मात्काममूढः पराङ्मुखः। यजते क्रतुभिर्देवान् पितृंश्च श्रद्धयान्वितः ॥ २ ॥
तच्छ्रद्धयाक्रान्तमतिः पितृदेवव्रतः पुमान्। गत्वा चान्द्रमसं लोकं सोमपाः पुनरेष्यति ॥ ३ ॥
यदा चाहीन्द्रशय्यायां शेतेऽनन्तासनो हरिः। तदा लोका लयं यान्ति त[१] एते गृहमेधिनाम् ॥ ४ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

द्वात्रिंशे सात्त्विकैर्द्धर्मैरूर्ध्वं गतिरुदीर्यते। तत्र ज्ञानविहीनस्य ततश्च पुनरागतिः॥

तदेवं पापकर्मणो गतिरुक्ता इदानीं काम्यकर्मणो गतिमाह। अथेति चतुर्भिः। यो गृह एवावसन्स्वान्धर्मान्दोग्धि, दोह्यमाह–काममर्थं च तान्दुग्धान्धर्मान्भूयः पिपर्ति पूरयत्यनुतिष्ठति ॥ १ ॥ ❀ ❀ सोऽपि भगवदाराधनरूपाद्धर्मात्पराङ्मुखः सन्प्राकृतानपि देवान्पितॄंश्च यजते ॥ २ ॥ ❀ ❀ ततः किं तत्राह। तेषां श्रद्धयाऽऽक्रांता व्याप्ता मतिर्यस्य पित्रर्थं देवार्थं च व्रतं नियमो यस्य सोमपाः तत्र सोमं पीत्वेत्यर्थः ॥ ३ ॥ ❀ ❀ लोके तिष्ठत्यपि पुण्यक्षयात्पातमुक्त्वा लोकानामपि लयमाह। यदा चाहरहः प्रलये ॥ ४ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

तत्रोर्ध्वगतावपि। तत ऊर्ध्वगतेः (१) अथ कात्स्न्र्येऽव्ययम्। यः कात्स्न्र्येन गृहमेधीयानग्निहोत्रादीन् यथा गाश्चारयित्वा दुग्धानि दोग्धि पुनरपि दुग्धप्राप्त्याशया ताश्चारयतीत्येवमत्र बोध्यम् ॥ १ ॥ ❀ ❀ स च गृहमेधिधर्मानुष्ठाता। प्राकृतानपि क्षुद्रानपि ॥ २ ॥ ❀ ❀ ततः देवाद्यर्चनात्। तत्र चंद्रलोके। इत्यर्थ इति। पुनरायातीति भावः। तथा चात्र श्रुतयः—"अथ ये यज्ञेन दानेन तपसा लोकान् जयन्ति ते धूममभिसंभवन्ति धूमाद्रात्रिं रात्रेरपक्षीयमाणपक्षमपक्षीयमाणपक्षाद्यान्षण्मासान्दक्षिणादित्य एति मासेभ्यः। पितृलोकं पितृलोकाच्चन्द्रलोकं प्राप्यान्नं भवंति तांस्तत्र देवा यथा सोमं राजानमाप्यायस्वापक्षीयस्वेत्येवमेतांस्तत्र भक्षयन्ति तेषां यदा तत्पर्यवैति अथेममाकाशमभिनिष्पद्यन्ते ॥ आकाशाद्वायुं वायोर्वृष्टिं वृष्टेः पृथिवीं प्राप्यान्नं भवति एवमेवानुपरिवर्तंते" इति। अर्थस्तु—धूममभिसंभवन्ति प्रथमं धूमाभिमानिनीं देवतां प्राप्नुवन्ति एवमुत्तरोत्तरं ज्ञेयम्। अपक्षीयमाणपक्षं कृष्णपक्षं यान्कर्कादिचापांतान्षण्मासान्दक्षिणादित्य एति तानित्यर्थः। अन्नं देवान्नं तत्रस्था देवा यथा चन्द्रं चन्द्रादमृतं पिबन्ति तथा तान्भक्षयन्ति तेषां पुण्यफलमन्नं भक्षयन्तीत्यर्थः। तेषां यत्पुण्यं यदा पर्यवैति। तदा सोमलोकादिममाकाशं निष्पद्यन्ते प्राप्यन्ते पृथिव्यां मनुष्याद्यन्नं भवति ततो स्वीयैरूपेण परिणतात्पुनर्जायन्त इति शेषार्थः ॥ ३ ॥ ❀ ❀ त एते भूरादयस्त्रयः। "अन्तस्त्रिलोक्यास्त्वपरो गृहमेधो बृहद्व्रतः" इत्युक्तेः ॥ ४ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या।

धर्मैर्वर्णाश्रमनिबन्धनैः ततश्चोर्ध्वगतेः सकाशाद्धर्मान् स्वीयगृहस्थधर्मान् प्रति तेभ्यस्सकाशाद् दुग्धस्थानीयं कामं विषयभोगमर्थं धनादिद्रव्यं धर्म्मान् गोस्थानीयान् ॥ १ ॥ ❀ ❀ सोऽपि वेदोक्तकाम्यधर्म्मानुष्ठातापि चस्त्वर्थे, भगवद्धर्माच्छ्रीभगवदर्पितान्निष्कामधर्म्मात् पराङ्मुखत्वे हेतुः काममूढः कामेन विवेकरहितत्वात्तुच्छविषयलम्पट इत्यर्थः, क्रतुभिः काम्ययज्ञैः वेदवाक्यविश्वासरूपया श्रद्धया ॥ २ ॥ ❀ ❀ ततो यजनात्तेषां देवपितॄणां सम्बन्धिन्या अत्र पानकाले पुनरागमनासम्भवात्सोमपाः भूत्वेत्यध्याहारं कृत्वा तत्र लोके सोमं पीत्वेत्यार्थिकोऽर्थः ॥ ३ ॥ ❀ ❀ शेत इत्यत्र तमोवृत्तिरूपाया निद्राया असम्भवात्त्रिलोक्यामवधानं न करोतीत्यर्थः। लोकास्त्रीण्यपि भोगस्थानानि ॥ ४ ॥

### श्रीमद्वीरराघवव्याख्या

एवमतीताध्यायद्वयेन वैराग्यसिद्ध्यर्थं गर्भजन्मजरामरणादिक्लेशाः अनिष्टादिकारिणां गतिश्चोपपादिताः। अथेष्टादिकारिणां परब्रह्मोपासकानां च गतिमाह। तत्र तावदिष्टादिकारिणां गतिमाह। अथेति चतुर्भिः। अथ ननु यो गृहाश्रमी गृह

---

१. प्रा० पा०—तदैते।

एवावसन् गृहमेधीयान् गृहमेधो गृहाश्रमः तत्प्रयुक्तान् धर्मानेवानुतिष्ठन्निति शेषः, धर्मानेवेत्येवकारेण निवृत्तिधर्मव्यावृत्तिः धर्मानावसन् कुर्वन्निति वा स्वकान् धर्मान् काममर्थं दोग्धि प्रपूरयति धर्माननुतिष्ठन्कामार्थौं लभत इत्यर्थः, स भूयस्तान् धर्मान्पिपर्त्ति पालयति ॥ १ ॥ ❀ ❀ एवकारसूचितमर्थमाह। स इति। स चापि केवलगृहमेधीयधर्मी कामेन विषयासङ्गेन मूढः अत एव भगवद्धर्मात्पराङ्मुखः प्रतिनिवृत्तः श्रद्धया प्रतिनिवृत्तिधर्मत्वरया युक्तः क्रतुभिर्देवान्पितॄंश्च यजते ॥ २ ॥ ❀ ❀ तच्छ्रद्धया पितृदेवयजनश्रद्धया आक्रान्ता मतिर्यस्य पित्रर्थं देवार्थं च व्रतं नियमो यस्य सः सोमयाजी पुमान् चान्द्रमसं लोकं गत्वा धूमरात्र्यपरपक्षदक्षिणायनषण्मासपितृलोकाकाशचन्द्रक्रमेणारुह्य पुनः चन्द्रमसः स्थानादाकाशवायुधूमाभ्रक्रमेण एष्यत्यवरोहति ॥ ३ ॥ ❀ ❀ कल्पान्तरस्थायिचन्द्रादिलोकगतानां क्षयिष्णुफलत्वमुक्तमथ केवलेष्टादिकारिप्राप्यानां लोकानां क्षयिष्णुत्वमाह। यदेति। यदा कल्पान्तेऽनन्तासनः शेषासनो भगवान् अहीन्द्रः शेषः स एव शय्या तस्यां शेते तदा ये केवलगृहमेधिनां प्राप्या लोकास्त एते लोका लयं नाशं यान्ति ॥ ४ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

अर्चिरादिमार्ग एवानावृत्तिमुक्तिसाधनं स च भक्त्यैकलभ्य इत्यर्थमस्मिन्नध्याये वक्ति। तत्रादौ धूमादिमार्गः कर्मिणां स्वर्गप्राप्तिसाधनं सोऽपीषद्भगवद्भक्तिमत एवेत्यतः प्रधानसाधनं भक्तिरेवेति दर्शयितुमाह। अथेति। अथ प्रवृत्तिमार्गस्थस्य फलमुच्यते। किन्तदिति यो गृहे स्थितो गृहमेधीयान् गृहस्थयोग्यान् धर्मानेवावसन् तेष्वेव वर्तमानो धर्ममर्थञ्च कामञ्च दोग्धि। तत्फलमिति शेषः, भूयस्तानेव पिपर्ति "पॄपालनपूरणयोः" इति धातोः पुत्रादिपूपदेशेन रक्षति स्वयं कृत्वा वर्धयतीत्यर्थः ॥ १ ॥ ❀ ❀ तद्वर्धनप्रकारमाह। स चापीति। चशब्दो हेत्वर्थः। दुःखनिवृत्तिसुखप्राप्तिलक्षणभगवद्धर्माद्भक्तिसाधनात्पराङ्मुखोऽपि काममूढश्च स्रक्चन्दनवनितादिकाममूढत्वेन स गृही क्रतुभिर्देवान् यजते श्राद्धादिना पितॄंश्चेत्यन्वयः ॥ २ ॥ ❀ ❀ तत्पूजाफलमाह। तच्छ्रद्धयेति। तेषां देवादीनां यजनकर्तव्यताश्रद्धया पितॄणां देवानां सन्तुष्टियोग्यं व्रतं यस्य स तथा धूमादिमार्गेण चान्द्रमसं चन्द्रेणाधिकृतं लोकं स्वर्गैकदेशं गत्वा भगवद्धर्मात्पराङ्मुखः पुमान् पुण्यफलं भुक्त्वा पुनः पापफलं भोक्तुं निरयमेष्यति। भगवदीषद्भक्तः स्वर्गकाममूढः पुमान् स्वर्गं गत्वा भुक्तपुण्यशेषेण पुनर्भूलोकमुपैष्यति इत्येतत्तात्पर्यार्थः "ईषद्भक्तो भगवति सुकर्मा स्वर्गमेष्यति। अभक्तो निरयं याति सुकर्मापि न संशयः ॥" इत्यनेनावगम्यते ॥ ३ ॥ ❀ ❀ प्रवृत्तिधर्मिणां लोकानामन्तवत्त्वेन तच्छ्रद्धा न कार्येति भावेन तन्नाशावधिमाह। यदेति। चशब्देन लोकनाशस्यावश्यंभावित्वमाह ॥ ४-५ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः।

धर्म्मान् गोस्थानीयान् दुग्धस्थानीयं फलं दोग्धि। धर्म्मान् स्वानिति क्वचित्पाठः ॥ १ ॥ ❀ ❀ स चापीति। चशब्द उक्तसमुच्चयार्थः, यथा पूर्वोक्तः पापकर्म्मा भगवद्धर्म्मात् पराङ्मुखस्तथा स चेत्यर्थः। अपीति। यद्यपि वैदिककर्म्मा तथापीत्यर्थः। सर्व्वकामदादपि तस्माद्भगवद्धर्म्मात्पराङ्मुखत्वे तथा तदन्यसम्मुखत्वे च हेतुः। कामेन मूढः विवेकरहितः ॥ २-३ ॥ ❀ ❀ शेते त्रिलोक्यामवधानं न करोतीत्यर्थः ॥ ४ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी।

द्वात्रिंशे तु सकामानां निष्कामानाञ्च कर्म्मिणाम्। पुनरावृत्त्यनावृत्ती प्रोच्याभक्तान्निनिन्द च ॥

तदेवमविहितस्य पापस्य कर्म्मणो गतिमुक्त्वा विहितस्य काम्यकर्म्मणो गतिमाह। अथेति। गृह एव गृहमेव आवसन् धर्म्मान् दोग्धि दोह्यमाह काममर्थञ्च धर्म्मांश्चेति। भूयः पुनरपि तान् धर्म्मान् पिपर्त्ति पूरयत्यनुतिष्ठति। यथा गाश्चारयित्वा दुग्धानि दोग्धि पुनरपि दुग्धप्राप्त्याशया ताश्चारयतीति ॥ १ ॥ ❀ ❀ विहितकृदप्यसौ निन्द्य एवाधिकारीत्याह। स चापीति ॥ २ ॥ ❀ ❀ सकामकर्मिणां पुनः पुनरावृत्तिमुक्त्वा सोमपास्तत्र सोमं पीत्वा पुनरेष्यति पुनरधः पतिष्यति ॥ ३ ॥ ❀ ❀ तेषामधःपातस्य का वार्त्ता तेषां प्राप्या लोका अपि ब्रह्मणः प्रतिदिनमधः पतन्तीत्याह यदा चाहरहः प्रलये ॥ ४ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

भगवद्धर्मपराङ्मुखस्य सात्त्विकैर्धर्मैः ऊर्ध्वलोकप्राप्तिं ततः पुनरागतिं भगवद्भक्तानां भगवत्प्राप्तिं चाह। अथेति द्वात्रिंशेन। तान् धर्मान् पिपर्त्ति पूरयति ॥ १-२ ॥ ❀ ❀ तत्तेषां श्रद्धया आक्रान्ता अभिभूता मतिर्यस्य सः सोमपाः तत्र सोमं पीत्वा पुनरेष्यति अत्रैवागच्छति ॥ ३ ॥ ❀ ❀ यदा नैमित्तिकप्रलयकाले ॥ ४ ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

कालस्य बाधकत्वे हि निषिद्धात् फलमीरितम्। निषिद्धरूपता चोक्ता पुण्यस्य फलमीर्यते ॥ १ ॥
त्रिविधस्यापि धर्मस्य द्वात्रिंशे फलमुच्यते। ज्ञानं मुख्यं फलं तस्य ससाधनमिहोच्यते ॥ २ ॥
अधोगतिर्मध्यगतिः पूर्वमत्र निरूपिता। उत्तमा मोक्षपर्यन्तं यथा स्यात्तदिहोच्यते ॥ ३ ॥

तत्र प्रथमं तामस¹धर्मं सफलमाह चतुर्भिः—अथेति। पुरुषार्थत्रयं तस्य तदर्थं साधनं परम्। फलं च तादृशं तस्य तस्य नाशश्च वर्ण्यते॥ प्रथमं स्वरूपमाह—अथेति। ऊर्द्ध्वगतित्वाद्भिन्नः प्रक्रमः। यो गृहमेधीयानेव धर्मानाचरति; आश्रमधर्मा अपि गृहस्थानुगणा इति गृहमेधीयानेवेत्युक्तम्। धर्मानेवेति निषिद्धव्यावृत्तिः। आवसन्नित्युभयत्र सम्बन्धः। धर्मात्मा गृहे तिष्ठन्निति। सुतरां काम्यकर्मपर इत्याह—धर्ममर्थं च कामं च। धर्मे वहुवचनम्, पश्चान्निरूपणं च, तस्य मोक्षोपयोगमपि ज्ञापयितुम्। यथाऽन्नं भुक्त्वा कृष्याद्यन्नमुत्पादयति। धनेन धनं वर्द्धयति। धर्मेणापमृत्युं दूरीकृत्य पुनर्धर्मं वर्द्धयति तथा तं पिपर्त्ति पूरयति॥ १॥ ❀ ❀ एवं धर्मार्थकामपरोऽपि तद्विषयत्वेन भगवत्परश्चेत्तदापि न काचिच्चिन्ता, भगवत एव मोक्षपर्यवसानात्। अतस्तादृशोऽपि भगवद्वैमुख्येनैव सर्वं करोतीत्याह—स चापीति। भगवान् कामं दूरीकरोतीति कामरक्षार्थं भगवत्परित्यागः, कामेन विवेकाभावो वा। भगवद्धर्मेषु भगवानेव सेव्यो न त्वन्यः। तद्वैमुख्यान् नानाविधैः क्रतुभिर्देवान् पितॄंश्च यजते। सर्वत्राग्निहोत्रादिकर्मसु देवेषु पितृषु च तृप्तिर्भवतीति तदर्थं यः कर्माणि करोति स राजस इति। वस्तुतो देवा²दिश्रद्धया क्रान्तमतिः पितृदेवसन्तर्पणमेव व्रतं यस्य तादृशस्तैः साधितं फलं प्राप्नोतीत्याह—गत्वेति। चान्द्रमसं लोकं गत्वा पञ्चाग्निविद्यया पुनरिहैष्यति। सोमपा इति न सोमव्यतिरिक्तयागैरिदं फलं सिध्यतीत्युक्तम्॥ २-३॥ ❀ ❀ तस्य फलस्य परिमितकालत्वमाह—यदैवेति। यदैव भगवान् शेते, तदैव तेषां लोकाः क्षयं यान्ति। तच्छयनं वर्षास्वपि भवतीति तद्व्यावृत्त्यर्थमाह—अहीन्द्रशय्यायामिति। शेषशायी तदैव शेते। संवत्सरान्तेऽपि तादृशः प्रलयो भवतीति तद्व्यावृत्त्यर्थमाह—अनन्तासन इति। हरिरिति भगवच्छयनं सर्वसुखार्थम्। तदा गृहमेधिनां लोकाः क्षयं यान्ति। तेषामेव लोकानां क्षयो न तु त्रिलोक्याः॥ ४॥

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

अथ द्वात्रिंशाध्यायं विवरिषव एककार्यत्वरूपां प्रसङ्गरूपां च सङ्गतिं बोधयितुं पूर्वस्यार्थं बोधयन्तोऽस्यार्थमाहुः—कालस्येत्यादित्रिभिः। अत्र त्रिविधस्येति कथनाद्धीनमध्ययोर्वैराग्यजनकत्वादेव कार्यत्वम्, तृतीयस्य तु मुख्यमुक्तिवत्प्रसङ्ग इति बोध्यम्। ज्ञानमित्यादिना बुद्धिर्मोक्षश्च स्फुटीक्रियत इति शुकमैत्रेयोक्तयोरप्यवरः स्मार्यते इति बोध्यम्।

यदैवेत्यत्र। संवत्सरान्त इति वैराग्यप्रयुक्ताः॥ ४॥

### श्रीगिरिधरकृता बालप्रबोधिनी

कामिनां सात्त्विकैर्धर्मैर्देवादिसात्विकी गतिः निष्कामानां विमोक्षस्तु द्वात्रिंशे विनिरूप्यते॥ १॥

तदेवं पापकर्मणो गतिमुक्त्वा पुण्यकर्मगतिं वक्ष्यन् पुण्यस्यापि सकामनिष्कामभेदेन द्वैविध्यात् तत्र सकामकर्मगतिमाह—अथेति चतुर्भिः। अथेति भिन्नप्रक्रमे। यो गृह एवावसन् गृहमेधी यानेव गृहमेधो गृहाश्रमस्तदीयानेव धर्मानाचरन् तान् दोग्धि। दोहमेव दर्शयति—काममर्थं च धर्मांश्चेति। भूय एव तान् धर्मान् पिपर्त्ति पूरयति अनुतिष्ठति। यथा गाश्चारयित्वा दुग्धं दोग्धि पुनरपि दुग्धप्रत्याशया ताश्चारयति। तथा कामादिप्रत्याशया कर्माणि कृत्वा तत्फलानि भुक्त्वा पुनस्तदाशया कर्माणि करोतीत्यर्थः। तत्र कामो भोगः, अर्थो धनादि॥ १॥ ❀ ❀ स चापि पुमान् चान्द्रमसं लोकं गत्वा सोमपाः सन् तत्र सोमममृतं पीत्वा पुनरिमं लोकमेष्यति आगमिष्यतीत्युत्तरेणान्वयः। तत्र गमने ततः पुनरागमने च हेतुमाह—भगवद्धर्मात् पराङ्मुखः सन् श्रद्धयाऽन्वितः क्रतुभिर्यज्ञैर्देवान् श्राद्धैः पितृंश्च यजते पूजयति। तत्र हेतुमाह—पितृदेवव्रत इति, पितृदेवार्चन एव व्रतं सङ्कल्पो यस्य सः। तत्रापि हेतुमाह—तच्छ्रद्धया क्रान्तमतिरिति, तेषु पितृदेवेषु या श्रद्धा सर्वोत्कृष्टत्वेन स्वमनोरथपूरकत्वविश्वासः, तया आक्रान्ता व्याप्ता मतिर्यस्य सः। नन्वपुनरावृत्तिहेतुं भगवद्धर्मं विहाय कुतः पुनरावृत्तिहेतुकर्मणि प्रवृत्त इत्याशङ्क्याह—काममूढ इति। तत्तत्फलकामनया विक्षिप्तचित्ततया विवेकशून्य इत्यर्थः॥ २॥ ३॥ ❀ ❀ एवं लोके तिष्ठत्यपि पुण्यक्षयात् तत आवृत्तिमुक्त्वा लोकानामपि क्षयिष्णुत्वमाह—यदेति। यदा च कल्पान्ते अनन्तः शेष आसनं यस्य स हरिः अतः स अहीन्द्र एव शय्या तस्यां शेते तदा ये एते गृहमेधिनां गृहस्थानां प्राप्याः भूर्भुवस्स्वरात्मकाः लोकास्ते लयं विनाशं यान्तीत्यन्वयः॥ ४॥

### हिन्दी अनुवाद

#### धूममार्ग अर्चिरादि मार्गसे जानेवालोंकी गतिका और भक्तियोगकी उत्कृष्टताका वर्णन

श्रीकपिलदेवजी कहते हैं—माताजी! जो पुरुष घरमें रहकर सकामभावसे गृहस्थके धर्मोंका पालन करता है और उनके फलस्वरूप अर्थ एवं कामका उपभोग करके फिर उन्हींका अनुष्ठान करता रहता है वह तरह-तरहकी कामनाओंसे मोहित रहनेके कारण भगवद्धर्मोंसे विमुख हो जाता है और यज्ञोंद्वारा श्रद्धापूर्वक देवता तथा पितरोंकी ही आराधना करता रहता है॥ १॥ २॥

---

१. तामसधर्मस्य फलम् क. घ. ङ.। २. तद्देवादिश्रद्धया क.

❀ ❀ उसकी बुद्धि उसी प्रकारकी श्रद्धासे युक्त रहती है, देवता और पितर ही उसके उपास्य रहते हैं; अतः वह चन्द्रलोकमें जाकर उनके साथ सोमपान करता है और फिर पुण्य क्षीण होनेपर इसी लोकमें लौट आता है ॥ ३ ॥ ❀ ❀ जिस समय प्रलयकालमें शेषशायी भगवान् शेषशय्यापर शयन करते हैं, उस समय सकाम गृहस्थाश्रमियोंको प्राप्त होनेवाले ये सब लोक भी लीन हो जाते हैं ॥ ४ ॥

ये स्वधर्मान्न[1] दुह्यन्ति धीराः कामार्थहेतवे । निःसङ्गा न्यस्तकर्माणः प्रशान्ताः शुद्धचेतसः ॥ ५ ॥
निवृत्तिधर्मनिरता निर्ममा निरहङ्कृताः । स्वधर्माख्येन सत्त्वेन परिशुद्धेन चेतसा ॥ ६ ॥
सूर्यद्वारेण ते यान्ति पुरुषं विश्वतोमुखम् । परावरेशं प्रकृतिमस्योत्पत्त्यन्तभावनम् ॥ ७ ॥
द्विपरार्द्धावसाने[2] यः प्रलयो ब्रह्मणस्तु ते । तावदध्यासते लोकं परस्य परचिन्तकाः ॥ ८ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

भगवद्धर्मनिष्ठानां तत्प्राप्तिमेव गतिमाह त्रिभिः । ये तु कामार्थप्रयोजनाय स्वधर्मान्न दुह्यंति न दुहंति निःसंगा अनासक्ताः । न्यस्तानीश्वरे समर्पितानि कर्माणि यैः ॥ ५-६ ॥ ❀ ❀ विश्वतोमुखं परिपूर्णं पुरुषं यांति । तथा च श्रुतिः "सूर्यद्वारेण ते विरजाः प्रयांति यत्रामृतः पुरुषो ह्यव्ययात्मा" इति प्रकृतिमुपादानकारणम् । उत्पत्त्यंतभावनं निमित्तकारणम् ॥ ७ ॥ ❀ ❀ परमेश्वरदृष्टया हिरण्यगर्भोपासकानामपि क्रमेण तत्प्राप्तिमाह । द्विपरार्धावसान इति त्रिभिः । परस्य हिरण्यगर्भस्य परचिंतकाः परमेश्वरदृष्टया हिरण्यगर्भोपासकाः ॥ ८ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः ।

दुहंति कर्मफलं स्वर्गादि नेच्छन्ति प्रकर्षेण शांता भगवन्निष्ठबुद्धयः ॥ ५ ॥ ❀ ❀ स्वस्य पुरुषस्य धर्मः शुद्धसत्त्वगुणस्तेन । यद्वा सत्त्वेनात्मभावेन परमात्मभक्त्या परिशुद्धेनोभयत्रान्वेति ॥ ६ ॥ ❀ ❀ पुरुषप्राप्तौ प्रमाणमाह—तथा चेति । स्पष्टार्थत्वान्न व्याख्याता । उत्पत्त्यन्तौ भावयतीत्युत्पत्त्यंतभावनस्तम् ॥ ७ ॥ ❀ ❀ ब्रह्मा परमेश्वरस्य गुणावतार एवेति परमेश्वरदृष्टया क्रमेण भक्तिमिश्रज्ञानेन तत्प्राप्तिं मुक्तिम् । ये तु केवलं हिरण्यगर्भोपासकास्तेषां ब्रह्मणो मुक्तावपि न मुक्तिरिति । लोकं सत्यलोकम् । "अधिशीङ्स्थासां कर्म" इत्याधारस्य कर्मत्वम् ॥ ८ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

ये स्वधर्म्मानिति त्रिकम् । प्रकर्षेण शान्ताः भगवन्निष्ठबुद्धयः "शमो मन्निष्ठता बुद्धेः" इति श्रीभगवद्वाक्यात् निःसङ्गा विषयासक्तिशून्याः स्वधर्म्माख्येन भगवदर्पितनिष्कामवर्णाश्रमधर्माख्येन सत्त्वेन सत्त्वकार्य्येण सूर्यद्वारेणेति सूर्य्यस्य तदधिष्ठानत्वं व्यञ्जितम् "ध्येयः सदा सवितृमण्डलमध्यवर्ती" इत्युक्तेः । उपादानकारणमिति "प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्" इति न्यायात् चकारोऽत्र निमित्ततासमुच्चयार्थः । श्रुतौ विरजाः प्रकृतिसङ्गशून्याः यत्रेति धामप्राप्तेस्तत्प्राप्त्याभेदनिर्देशः तस्मान्मूलेऽपि सूर्य्यद्वारेणेत्युक्त्या तदन्तर्भावनायाः साधनत्वमेवाभिव्यञ्जितमन्यथा श्रुत्यैकार्थता न स्यादिति चिन्त्यम् ॥ ५-७ ॥ ❀ ❀ तत्प्राप्तिं भगवत्प्राप्तिं तावत्प्रलयाद्यांशपर्य्यन्तं ब्रह्मलोकमध्यासते ततः परं हिरण्यगर्भेण भक्तेन सह मुच्यन्ते । तस्याभक्तत्वे स च ते च यथा पूर्वं प्रजायन्त इत्यग्रे वक्ष्यत्येव ॥ ८ ॥

### श्रीमद्वीरराघवव्याख्या

अथ परब्रह्मोपासकानां गतिमाह । य इति । ये धीराः जितेन्द्रियाः कामार्थयोर्निमित्तं स्वधर्मान् वर्णाश्रमोचितधर्मान्न दुह्यन्ति नानुतिष्ठन्ति किन्तु निःसङ्गाः असत्सङ्गरहिताः न्यस्तानि भगवति समर्पितानि कर्माणि स्ववर्णाश्रमोचितकर्माणि यैस्ते प्रशान्ताः शमदमादिसम्पन्नाः शुद्धचेतसः स्वधर्मानुष्ठानेन निर्मलान्तःकरणाः ॥ ५ ॥ ❀ ❀ निवृत्तिधर्मा भगवद्गुणश्रवणकीर्त्तनादयः तेषु निरताः सत्त्वेन ।

त्यागो हि पुरुषव्याघ्र ! त्रिविधः सम्प्रकीर्त्तितः, यस्तु कर्मफलत्यागः स त्यागः सात्त्विकः स्मृतः ॥

इत्युक्तसात्त्विकत्यागयुक्तेन स्वधर्माख्येन पञ्चमहायज्ञादिना । यद्वा स्वधर्माख्येन सत्त्वेनेत्युपचारादुक्तं स्वधर्मजन्येनेत्यर्थः, परिशुद्धेन चेतसा भगवत्प्रवणेन चेतसा अहङ्कारममकाररहिताः ॥ ६ ॥ ❀ ❀ ते सूर्यद्वारेण सूर्यद्वारेणेत्यर्चिरादीनामुप-

---

१. प्रा० पा०—स्वधर्मे न । २. प्रा० पा०—साने यः ।

लक्षणम् । अर्चिरहः सितपक्षोदगयनाब्दमरुदर्केन्दुविद्युद्वरुणेन्द्रधातृक्रमेण पुरुषं परमपुरुषं मामुपयान्ति । पुनरनावर्त्तश्चितृत्वसूचनाय पुरुषं विशिनष्टि । अस्य विश्वस्य प्रकृतिं बन्धमोक्षकारणं परमपुरुषसङ्कल्पादेव हि बन्धो मोक्षश्च अस्य विश्वस्योत्पत्तिस्थितिसंहारान् भावयति करोतीति तथा विश्वतोमुखं सर्वज्ञं परे ब्रह्मादयोऽवरे यस्मात् स चासावीश्वरश्च अनेन विशेषणजातेन स्वसङ्कल्पकृत-जगदुदयविभवलयमोक्षलीलत्वान्निरतिशयप्रीतिविषयान् स्वभक्तान् स्वपदं प्रापय्य पुनरनावर्त्तयितुं समर्थ इत्युक्तं भवति । प्रतिपादितं चैतत्पुरस्तात् अत्र सूर्यद्वारेणेत्यनेन "सूर्यद्वारेण ते विरजाः प्रयान्ति यत्रामृतः स पुरुषो ह्यव्ययात्मा" इति श्रुत्यर्थ उक्तः ॥ ७ ॥ ❀ ❀ एवं धूमादिरर्चिरादिश्चेति मार्गद्वयमुक्तमथ योगियानेन चतुर्मुखलोकगतानामपि ब्रह्मणा सह महाप्रलयदशायां मुक्ति-रुच्यते द्विपरार्द्धेत्यादिना ।

उत्तरो देवमार्गस्तु योगियानस्तु मध्यमः । दक्षिणः पितृयानस्तु तत्रान्या नागवीथिका ॥

इति ह्युच्यते द्विपरार्द्धावसानः । द्वयोः परार्द्धयोः पूर्वोत्तरयोरवसानमन्तो यस्मिन् द्विपरार्द्धावसानरूपो वा यः ब्रह्मणश्चतुर्मु-खस्य प्रलयः तावत्तदवधि परस्य परमात्मनः परिचिन्तकायोगिनः लोकं ब्रह्मणो लोकं लोके "अधिशीङ्स्थासां कर्म" इत्याधार-स्यैव कर्मसंज्ञायां द्वितीया, अध्यासते इत्यनेन निष्कामकर्मणामपि पुष्कलज्ञानोत्पत्तेः प्रागेव मरणे ब्रह्मलोकप्राप्त्या तत्र ज्ञाना-भ्यास उक्तः ॥ ८ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

निवृत्तिधर्मिणां मार्गं गम्यं तत्साधनं च संक्षिप्याह । निवृत्तीति । पुरुषस्य स्वरूपधर्मः सत्त्वगुणस्तेन । यद्वा सत्त्वेनात्म-भावेन परमात्मभक्त्या ॥ ६ ॥ ❀ ❀ सूर्यद्वारेणार्चिरादिमार्गेण मानवनामानं पुरुषं यान्ति किं तत्रैवावस्थानमुतान्यत्रापीति तत्राह । विश्वतोमुखमिति । विभक्तिविपरिणामेन पुरुषेणेत्यनुवर्तनीयं मानवपुरुषेणाप्रतीकालम्बना अपि विश्वतोमुखं सर्वज्ञं परावरेशं मुक्तामुक्तप्रपञ्चेश्वरं प्रकृतिं मूलकारणमस्य जगत उत्पत्त्यन्तभावनं सृष्टिसंहारकारणं विष्णुं यान्तीत्यन्वयः । इदमुक्तं भवति प्रतीकालम्बना अप्रतीकालम्बना उभयेऽपि ज्ञानिनो विष्णुं प्राप्यापि मानवपुरुषेण कार्यब्रह्मप्रापितास्तत्समीपे वसन्तीति ॥ ७ ॥ ❀ ❀ प्रतीकालम्बनानामप्रतीकालम्बनानां च कियन्तं कालं तत्र निवास इति तत्राह । द्विपरार्धेति । द्विपरार्धस्यावसानं समाप्तिर्यस्मिन् काले स तथोक्तः स ब्रह्मणः प्रलयो यावता कालेन भवति तावन्तं कालं परस्य परिचिन्तकाः परमात्मोपासकास्ते उभयेऽपि कार्यब्रह्मणो लोके सत्याख्येऽध्यासते मुक्तवत्तिष्ठन्तीत्यन्वयः । नात्राधिकः कर्मापेक्षी किं त्वधिकर्तेति ज्ञातव्यम् ॥ ८ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

ये स्वधर्मानिति त्रिकम् । प्रशान्ता प्रकर्षेण शान्ता भगवन्निष्ठबुद्धय इति साक्षात्तदाराधननिर्देशः ॥ ५-६ ॥ ❀ ❀ सूर्येति । श्रुतौ तत्स्थानप्राप्तिनिर्देशेन तत्प्राप्तिनिर्देशः अत्र तु साक्षादिति तत्तात्पर्येणैकार्थता । तथा च तयोरैकात्म्यमेवोपलब्धम् । एवमन्यत्रापि ज्ञेयम् । तत्र श्रुतौ विरजाः प्रकृतिसङ्गरहिता इति पदार्थः । अनेन तस्य लोकस्याप्राकृतत्वं यत्रामृतः पुरुष इत्यनेन तद्विन्नित्यत्वञ्च बोधितम् ॥ ७ ॥ ❀ ❀ तावदिति । तस्याद्यांशं प्राप्येत्यर्थः ॥ ८ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

सकामकर्मिणां पुनः पुनरावृत्तिमुक्त्वा निष्कामकर्म्मिणां पुनरनावृत्तिमाह । ये इति । न दुह्यन्ति न दुहन्ति न धर्म्म-फलं स्वर्गादिकमिच्छन्तीत्यर्थः । निःसङ्गाः अनासक्ताः न्यस्तकर्म्माणः ईश्वरार्पितकर्म्मफलाः ॥ ५-६ ॥ ❀ ❀ ज्ञानं प्राप्य विश्वतोमुखं परिपूर्णं पुरुषं यान्ति प्राप्नुवन्ति मुक्ता भवन्तीत्यर्थः । तथा च श्रुतिः "सूर्यद्वारेण ते विरजाः प्रयान्ति यत्रामृतः पुरुषो ह्यव्ययात्मा" इति । अस्य जगतः प्रकृतिमुपादानकारणमुत्पत्त्यन्तभावनं निमित्तकारणम् ॥ ७ ॥ ❀ ❀ ब्रह्मा परमे-श्वरस्य गुणावतार एवेति परमेश्वरदृष्ट्या हिरण्यगर्भोपासकानामपि क्रमेण भक्तिमिश्रज्ञानेन ब्रह्मणा सह मुक्तिर्भवेदेव ।

ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसञ्चरे । परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम् ॥

इति श्रुतेः । ये तु केवलं हिरण्यगर्भोपासकास्तेषां ब्रह्मणो मुक्तावपि न मुक्तिरित्याह । द्विपरार्द्धावसान इति त्रिभिः । लोकं सत्यलोकं परस्य ब्रह्मणः परिचिन्तका वैराजध्यानपराः ॥ ८ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

ये तु भगवद्धर्मनिष्ठास्ते भगवन्तं प्राप्नुवन्तीत्याह । ये इति त्रिभिः ॥ ५-६ ॥ ❀ ❀ परावरेशं जीवप्रकृत्याख्ययोः परापरप्रकृत्योरीशं नियन्तारं चिदचिच्छक्तिमन्तमत एव अस्य चिदचिदात्मकस्य प्रकृतिमुपादानकारणमुत्पत्त्यन्तभावनं निमित्त-कारणं च अत एव विश्वतोमुखं सर्वात्मानं पुरुषं सूर्यद्वारेण यान्ति तथा च श्रुतिः "सूर्यद्वारेण ते विरजाः प्रयान्ति यत्रामृतः

पुरुषो ह्यव्ययात्मा" इति । अनेन "तेऽर्चिषमभिसम्भवन्ति" इत्यर्चिरादिमार्ग एव सूचितः । यत्रामृतः पुरुष इत्यनेन प्रकृतिमण्डलभिन्नदेशस्थः मुमुक्षुप्राप्यः पुरुषो दर्शितः "अत्र ब्रह्म समश्नुते" इति श्रुत्या तु ध्याने ब्रह्मप्राप्तिरुक्तेति दिक् ॥ ७ ॥ ❀ ❀ परमपुरुषदृष्ट्या ये हिरण्यगर्भोपासकाः हिरण्यगर्भं प्राप्य ततः पुनर्यथा भगवज्ज्ञानभक्ती लब्ध्वा तेनैव परमोपकारिणा सह भगवन्तं प्राप्नुवन्तीत्याह । द्विपरार्द्धावसाने इति त्रिभिः । यः प्राकृतिकः परस्य हिरण्यगर्भस्य परचिन्तकाः परमात्मदृष्ट्या हिरण्यगर्भध्यातारः ॥ ८ ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

अथ सात्त्विकानां निष्कामानां धर्मं सफलमाह—ये स्वधर्ममिति । फलार्थं धर्मं कृत्वा देहादिकं प्रसाद्य तेन पुनर्न धर्मं कुर्वन्ति सोऽदोहः । अपेक्षिताकरणे हेतुः—धीरा इति । धर्मार्थं तु धर्मं दुहन्त्येव, अतस्तद्द्वयाव्यावृत्त्यर्थमाह—कामार्थहेतव इति । काम अर्थश्च हेतुः धर्मदोहे तादृशं धर्मदोहं न कुर्वन्ति । तेषां निवृत्तिधर्मेऽधिकारमाह—निःसङ्गा इति । बहिःसङ्गपरित्यागः, तत्सङ्गेन च यानि कर्माणि क्रियन्ते तेषामपि परित्यागः । अन्यथा सापेक्षत्वादन्यतरपरित्यागो न सम्भवति । प्रशान्ताश्चेति इन्द्रियविक्षेपाभावः, रजोगुणाभाव उक्तः । विवेकवती शुद्धा मेधा येषाम् । एवं साधनचतुष्टयमुक्तम्, वैराग्यम्, संन्यासः, योगः, साङ्ख्यश्चेति ॥ ५ ॥ ❀ ❀ तदनन्तरधर्माभावे पातित्यं स्यादिति तद्धर्मनिरूपणपूर्वकं दोषत्रयाभावमाह—निवृत्तीति । निवृत्तिधर्मा वैराग्योपाधयः; भगवद्धर्माः; चतुर्थाश्रमधर्माश्च । तत्र निरता इति तद्धर्मैरेव नित्यसिद्धिः । अहंममेति दोषद्वयाभावमाह—निर्ममा निरहंकृता इति । अन्तःकरणाशुद्धिश्च महान्दोष इति साधनपूर्वकं तदभावमाह—स्वधर्माख्येनेति । स्वधर्माः दास्यरूपाः, निवृत्तिधर्मास्तूक्ता एव । अत एव स्वधर्म इत्याख्या यस्य । तादृशेनसत्त्वेन गुणेन परितः शुद्धेन चेतसा । एवं ज्ञानकर्मणोः फलम्—सूर्यद्वारेणेति । पुरुषं प्रकृतेः परम् । ब्रह्माण्डात्मकं व्यावर्त्तयति—विश्वतोमुखमिति । सर्वतोमुखः साकारात्मा । ततोऽपि पुरुषोत्तमं यान्तीति तमेव पुरुषोत्तमं विशिनष्टि—परे कालादयः अवरे ब्रह्मादयः तेषां नियन्ता सर्वस्यापि समवायी । अस्योत्पत्त्यादिनिमित्तं च । साकारं च नियन्तारं समवायिनिमित्तकम् । तेषां कालनियममाह—द्विपरार्द्धावसान इति । तुशब्दः कल्पान्तरव्यावृत्त्यर्थः । ते तावत् परस्य ब्रह्मणो लोकमध्यासते । यतस्ते परचिन्तकाः, पुरुषोत्तमत्वेन चिन्तयन्ति; परस्य भगवतो वा ॥ ६–८ ॥

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

सूर्येत्यत्र । तमिति । विश्वतोमुखमक्षरात्मकम् ॥ ८ ॥

### श्रीगिरिधरकृता बालप्रबोधिनी

के ते भगवद्धर्माः किञ्च तेषां फलमित्यपेक्षायामाह—ये इति । त्रिभिः । ये तु कामार्थयोः हेतवे प्रयोजनाय स्ववर्णाश्रमोचितत्वेन अनुष्ठितान् धर्मान्न दुह्यन्ति ते स्वधर्माख्येन सत्त्वेन निमित्तेन—तत्त्वेनेति पाठेऽप्ययमेवार्थः—परिशुद्धं यत्तेन चेतसा हेतुना सूर्यद्वारेण पुरुषं यान्ति प्राप्नुवन्तीति त्रयाणामन्वयः । ननु स्वधर्मत्वाविशेषेऽपि कथमेषां भगवद्धर्मत्वमित्यत आह—न्यस्तकर्माण इति, भगवति न्यस्तानि समर्पितानि कर्माणि यैस्ते । फलाभिसन्धिं विना भगवत्प्रीत्यर्थमनुष्ठितत्वमेव भगवद्धर्मत्वमिति भावः । तेऽपि धर्मा हिंसादिदोषरहिताः श्रवणकीर्त्तनादिप्रधाना इति सूचयन्नाह—निवृत्तिधर्मनिरता इति । एवमपि मोक्षोपयोगिधर्मोत्पत्तेरावश्यकत्वात् कामार्थहेतव इत्युक्तम् । धर्मादोहने हेतुमाह—निरसङ्गा इति, विषयासक्तिरहिता इत्यर्थः । तत्र हेतुमाह—धीरा इति, वशीकृतेन्द्रियान्तःकरणा इत्यर्थः । अतएव प्रशान्ताः क्रोधलोभादिरहिताः । तत्र हेतुमाह—शुद्धचेतसे इति, पूर्वपूर्वानुष्ठितधर्मेण शुद्धं चेतो येषां ते इत्यर्थः । शुद्धचेतसो ज्ञापकमाह—निर्ममाः धनपुत्रादौ ममाभिमानरहिताः । तथा निरहंकृताः, देहादावहमभिमानरहिता इत्यर्थः ॥ ५–६ ॥ ❀ ❀ सूर्यद्वारेणेति । 'अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम्' इत्युक्तानामन्येषामप्युपलक्षणम् । 'मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम् ॥ नाप्नुवन्ति महात्मानः संसिद्धिं परमां गताः' इत्युक्तामपुनरावृत्तिं सूचयन् पुरुषं विशिनष्टि–विश्वतोमुखमिति । 'सर्वतः पाणिपादं तत् सर्वतोऽक्षिशिरोमुखम् । सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति ॥ इत्युक्तलक्षणम् । परे ब्रह्मादयः अवरेऽस्मदादयस्तेषामीशं नियन्तारमित्यर्थः । तत्र हेतुमाह—अस्य विश्वस्य प्रकृतिमुपादानकारणम् । उत्पत्त्यन्तभावनं निमित्तकारणं च ॥ ७ ॥ ❀ ❀ प्रसङ्गात् परमेश्वरदृष्ट्या ब्रह्मोपासकानामपि क्रमेण तत्प्राप्तिमाह—द्विपरार्धावसान इति त्रिभिः । द्विपरार्धस्य चतुर्मुखायुःपरिमितकालस्य अवसाने अन्ते यो ब्रह्मणश्चतुर्मुखस्य प्रलयः भगवति लयस्तावत्पर्यन्तं ये परस्य चतुर्मुखस्य परचिन्तकाः परमेश्वरत्वेनोपासकास्ते तु ब्रह्मलोकमध्यासते सत्यलोके तिष्ठन्ति ॥ ८ ॥

### हिन्दी अनुवाद

जो विवेकी पुरुष अपने धर्मोंका अर्थ और भोग-विलासके लिये उपयोग नहीं करते, बल्कि भगवान्‌की प्रसन्नताके लिये ही उनका पालन करते हैं—वे अनासक्त, प्रशान्त, शुद्धचित्त, निवृत्तिधर्मपरायण, ममतारहित और अहङ्कारशून्य पुरुष

१. सूर्यद्वारेण ते यान्ति ग. । २ सकलात्मा घ. । ३. पुरुषं क. ग. ङ. ।

स्वधर्मपालनरूप सत्त्वगुणके द्वारा सर्वथा शुद्धचित्त हो जाते हैं ॥ ५-६ ॥ ❀ ❀ वे अन्तमें सूर्यमार्ग ( अर्चिमार्ग या देवयान ) के द्वारा सर्वव्यापी पूर्णपुरुष श्रीहरिको ही प्राप्त होते हैं—जो कार्यकारणरूप जगत्के नियन्ता, संसारके उपादान-कारण और उसकी उत्पत्ति, पालन एवं संहार करनेवाले हैं ॥ ७ ॥ ❀ ❀ जो लोग परमात्मदृष्टिसे हिरण्यगर्भकी उपासना करते हैं, वे दो परार्धमें होनेवाले ब्रह्माजीके प्रलयपर्यन्त उनके सत्यलोकमें ही रहते हैं ॥ ८ ॥

क्ष्माम्भोऽनलानिलवियन्मनइन्द्रियार्थभूतादिभिः परिवृतं प्रतिसञ्जिहीर्षुः[1] ।
अव्याकृतं विशति यर्हि गुणत्रयात्मा कालं पराख्यमनुभूय परः स्वयम्भूः ॥ ९ ॥
एवं परेत्य भगवन्तमनुप्रविष्टा ये योगिनो जितमरुन्मनसो विरागाः ।
तेनैव साकममृतं पुरुषं पुराणं ब्रह्म प्रधानमुपयान्त्य[2]गताभिमानाः ॥ १० ॥
अथ तं सर्वभूतानां हृत्पद्मेषु कृतालयम् । श्रुतानुभावं शरणं व्रज भावेन भामि[3]नि ॥ ११ ॥
आद्यः स्थिरचराणां यो वेदगर्भः सहर्षिभिः । योगेश्वरैः कुमाराद्यैः सिद्धैर्योगप्रवर्तकैः ॥ १२ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

क्ष्मादीनि पंचमहाभूतानि मनश्चेंद्रियाणि चार्थाश्च शब्दादयो भूतादिश्चाहंकार एवमादिभिः परिवृतं युक्तं ब्रह्मांडं प्रति संहर्तुमिच्छुः सन् अव्याकृतमीश्वरम् । पराख्यं द्विपरार्धलक्षणं कालम् ॥ ९ ॥ ❀ ❀ परेत्य दूरं गत्वा भगवंतं हिरण्यगर्भमनुप्रविष्टा ये योगिनोऽमृतं परमानंदरूपं प्रधानमुत्कृष्टं ब्रह्म तेनैव सहोपयांति न तु पूर्वम् । यतस्तदाऽगताभिमानाः । तथा च स्मृतिः "ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसंचरे । परस्यांते कृतात्मानः प्रविशंति परं पदम्" इति ॥ १० ॥ ❀ ❀ भगवदुपासकास्तु साक्षादेव तं प्राप्नुवंति न क्रमेणातस्त्वं साक्षात्तमेव भजेत्याह । अथ तस्मात् । भावेन प्रेम्णा ॥ ११ ॥ ❀ ❀ एवं तावद्भगवद्भक्तानां निरंतरमेव तत्प्राप्तिर्भगवद्भेदेन हिरण्यगर्भोपासकानां तु क्रमेणेत्युक्तम् । भेदेनोपासने तु ब्रह्मादयोऽप्यावर्तंते किमुतान्य इत्याह । आद्य इति चतुर्भिः । यो वेदगर्भः सोऽपि गुणव्यतिकरे जाते यथापूर्वं ब्रह्मपदाधिकृतः सन्प्रजायते इति तृतीयेनान्वयः । न केवलं स एवैकः किं तु ऋषिभिर्मरीच्यादिभिर्योगेश्वरादिभिश्च सह ॥ १२ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

ततश्च महाप्रलये सति ब्रह्मा मुच्यते इत्याह—क्ष्मेति । परिवृतं स्वदेहं वैराजं प्रति संजिहीर्षुस्त्यक्तुमिच्छुरव्याकृतं परमेश्वरं प्रकृत्यंतर्यामिणं विशति गुणत्रयात्मा रजोगुणोपाधिकोपि त्रिगुणांशेन सत्त्वतमसी अपि बिभर्तीत्यर्थः । प्रकृत्या तादात्म्यं प्राप्त इति संदर्भः ॥ ९ ॥ ❀ ❀ तेनैव ब्रह्मणैव । प्रमाणमाह—तथा चेति । ते हिरण्यगर्भोपासकाः । प्रतिसंचरे प्रलये । परस्य ब्रह्मणोंते शरीरे कृतात्मानः प्रविष्टदेहा इत्यर्थः । न तु पूर्वं ब्रह्मणः प्राक् न तदा तेषां साभिमानत्वाद्ब्रह्मलोकं गतास्तु स्वयं प्रभातवेदविचारेण गताभिमानाः संतः परं प्राप्नुवंतीत्यर्थः । विश्वनाथः—एवं ब्रह्मणो मुक्तावपि तदुपासका भक्त्यभावान्न मुच्यंत इत्याह—एवमिति । परेत्य ब्रह्मलोके देहं त्यक्त्वा भगवंतं ब्रह्माणमनुप्रविष्टा ये योगिनस्ते तेन ब्रह्मणा साकं पुरुषं परमेशं प्रधानमुत्कृष्टं ब्रह्मोपयांति प्रविशंति । अगताभिमाना वयं हिरण्यगर्भोपासका इत्यभिमानवतस्तेन परमेश्वरे तेषामात्यंतिको न लयः, किं तु प्राकृतिक एवेति तेन पुनर्जगत्सर्गे तेषामपि सर्गो भवतीति भावः ॥ १० ॥ ❀ ❀ यतस्तत्र क्रमापेक्षा नास्ति अतो हेतोः तमेव भगवन्तमेव भावेन 'येषामहं प्रिय आत्मा सुतश्च' इत्युक्तरीत्या प्रियत्वाद्यभिमानैकतमेन तत्रापि प्राप्ततया सुतभावेनेत्याह—भाविनीति संदर्भः ॥ ११ ॥ ❀ ❀ विश्वनाथः—ननु ब्रह्मा मुक्तो भवेदथ च स्वभक्तान्मोचयितुं नेष्ट इति कथं प्रतीमस्तत्र "मामेव ये प्रपद्यंते मायामेतां तरंति ते" इति भगवत्प्रतिज्ञाश्रुतेर्भक्तिं विना ब्रह्मापि संसरति के पुनरन्ये वराका इत्याह । आद्यः स्रष्टृत्वात्कारणरूपोपि सर्ववेदविदपि ऋषिभिर्मरीच्यादिभिरपि सह योगिभिः साधकैः सहेति किं वक्तव्यं योगेश्वरैः सिद्धेश्वरैरपि सह भेददृष्ट्या यथा रुद्रः संहरति विष्णुः पालयति तथाहमपि ब्रह्मा सृजामीति भगवतः सकाशाद्भेददृष्ट्या योऽभिमानस्तेन यत्कर्तृत्वं तस्मात्सगुणं कल्याणगुणमयं ब्रह्म महत्स्रष्टारं काले महाप्रलयकाले प्रविश्य पुनः कालेन गुणव्यतिकरे महत्तत्त्वादौ जाते सति यथापूर्वं प्रजायते ब्रह्मा भवतीत्यर्थः । तेपि तत्संगिनो महर्ष्यादयोपि कर्मज्ञानयोगादिविनिर्मिताणिमाद्यैश्वर्यादिकं पूर्वमहाकल्प एव निषेव्य पुनर्महाकल्पांतरे आयांत्यावर्त्तंते । ननु योगेश्वराणां सनत्कुमारादीनाञ्च सिद्धानामन्येषाञ्च योगप्रवर्त्तकत्वेन सर्वज्ञानिगुरूणां च कथं भेददृष्टिरभिमानो वा संभवेत्ताभ्यां स्थिताभ्याञ्च कथं योगेश्वरादित्वमुच्यते तेषां निरभिमानानां निर्भेदब्रह्मानुसंधानमस्त्येव । किं तु भेदव्युदासेन मायाशबलितब्रह्मत्वबुद्ध्या मायिकवस्त्वंतरवद्भेददृष्टिस्तथा वयं ब्रह्मानुभाविनः साकारं रूपं निषिध्याम इत्यभि-

---

१. प्रा० पा०—जिघृक्षुः । २. प्रा० पा०—यान्ति गता० । ३. प्रा० पा०—भाविनि ।

मानश्च ताभ्यामेव दोषाभ्यां यत्कर्तृत्वं कर्माधिकारस्तस्मादावृत्तिरित्येतच्च काचित्कब्रह्मांडवर्त्तिब्रह्मब्राह्मणयोगिज्ञानिकुमारादीनाम-भक्तत्वादुक्तं तदन्यसर्वब्रह्मांडवर्त्तिनां ब्रह्मादीनाम्। तेषां तु भक्तिमत्त्वान्मुक्तिप्रेमभक्तिभगवद्दास्यादिभावप्राप्तयो यथायथं भक्तितारतम्याज्ज्ञेयाः॥ १२-१३॥

## श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

भगवत्प्राप्तौ क्रममाह। क्ष्माम्भ इति। स्वदेहवैराजं प्रति संहर्तुं त्यक्तुं गुणत्रयात्मा प्रकृतितादात्म्यं प्राप्येत्यर्थः॥ ९॥ एवं हिरण्यगर्भवत् प्रकृतिपर्यन्तं दूरं गत्वा तेनैव हिरण्यगर्भेण सह तत्र हेतुद्वयं ब्रह्मोपासका इत्येवमभिमानो न गतो येषामिति भगवत उपास्यत्वज्ञाने पूर्वमेतत्प्राप्तिः स्यादित्यवधेयम्। ते सर्वे ब्रह्मोपासकाः प्रतिसञ्चरे प्रलये परस्य द्विपरार्द्धस्य॥ १०॥ ❀ ❀ तस्मात्साक्षात्प्राप्तेर्दुर्घटत्वात्॥ ११॥ ❀ ❀ भेदेनोपासने त्विति। तत्र ब्रह्मणो भेदेनोपासनं हिरण्यगर्भ एवाह-मीश्वर इति प्रतीकोपासनं तदुपासकानां तु तद्ब्रह्मैवेश्वर इत्याकारकमिति ज्ञेयम्। आद्य इति चतुष्कम्। भेददृष्ट्या परमेश्वराद्भिन्न-त्वेन हिरण्यगर्भत्वस्योत्कृष्टत्वदृष्ट्या यथा विष्णुः पालने तथा सृष्टौ स्वतन्त्रः कर्त्ताहमेवास्मीत्यभिमानेन कर्तृत्वाच्चेति जन्मनि हेतु-द्वयम्। स्वकर्मनिर्मितं योगादिलक्षणस्वकर्मजन्यमैश्वर्यमणिमादिपुरुषं प्रकृत्युपाधिकम्॥ १२—१५॥

## श्रीमद्वीरराघवव्याख्या

क्ष्माम्भ इति। क्ष्मादीनि वियदन्तानि पञ्च महाभूतानि मनश्चेन्द्रियाणि चार्थाश्च शब्दादयः भूतादिस्तामसाहङ्कारः एवमादिभिः परिवृतं युक्तं ब्रह्माण्डं सञ्जिघृक्षुः संहर्त्तुमिच्छुः गुणत्रयं सत्त्वादिगुणमयं जगद्यस्यात्मा शरीरं स्थूलचिदचिद्विशिष्टमित्यर्थः, गुणत्रयस्यात्मेति वा स भगवान् यर्हि यदाऽव्याकृतं विशति नामरूपविभागानर्हनिरतिशयसूक्ष्मचिदचिद्विशिष्टत्वावस्थां प्रविशति प्राप्नोति तदा परः इन्द्रादिभ्य उत्कृष्टः स्वयंभूर्ब्रह्मा द्विपरार्द्धाख्यं कालमनुभूय पुराणं पुरुषं यातीति विभक्तिविपरिणामेनोत्तरत्रान्वयः॥९॥ ❀ ❀ एवं तथा ये योगिनः भगवन्तं हिरण्यगर्भमनुप्रविष्टाः प्राप्तास्तेऽपि तत्र जितमरुन्मनसः जितप्राणेन्द्रियाः विरागाः प्राप्य परब्रह्मव्यतिरिक्ताणिमाद्यष्टैश्वर्यवैतृष्ण्ययुक्ताः विगतदेहात्माभिमानास्स्वतन्त्रात्माभिमानास्तेनैव साकं ब्रह्मणा सह प्रधानं सर्वोत्कृष्टं ब्रह्म स्वरूपतो गुणतश्च निरतिशयबृहत्पुराणं पुरातनं पुरुषं परमपुरुषमुपयान्ति अतः संन्यासयोगाद्यतयः शुद्धसत्त्वाः। ते ब्रह्मलोके तु परान्तकाले परामृतात् परिमुच्यन्ति सर्वे। "ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसञ्चरे। सर्वस्यान्ते कृतात्मानः प्रवि-शन्ति परं पदम्।" इत्यादिश्रुतिस्मृत्यर्थ उक्तः॥ १०॥ ❀ ❀ एवमत्रापरिनिष्पन्नभगवद्भक्तियोगानां केषांचिद्धिरण्यगर्भ-लोकप्राप्तिपूर्वकं परिपूर्णभगवद्भक्तिनिष्पादनेन भगवत्प्राप्तिरुक्ता। अथात्रैव पूर्णभक्तियोगानामविलम्बेनाचिरादिगत्या भगवत्प्राप्ति-रतस्त्वमपि पूर्णभक्तियोगं निर्वर्तयेत्याह। अथेति। हे भामिनि! अथ तस्मात् सर्वभूतहृत्पद्मावासं श्रुतप्रभावं मत्तस्त्वया श्रुतप्रभावं तं भगवन्तं शरणं भावेन "माता पिता भ्राता निवासः शरणं सुहृत्" इत्याद्युक्तभावेन भज व्रज। पूर्वं साङ्गः सपरिकरो भक्तियोग उक्तः, अत्र तदङ्गभूतशरणागतिरुक्ता। एवं चरमश्लोकोक्तरीत्या शरण्यो भगवान् भक्तियोगविरोधीनि पापानि निरस्य भक्तियोगं निर्वर्त्तयतीति हृदयमुपयान्ति गताभिमाना इति ब्रह्मलोकवासिनामपि देहात्माभिमानस्वतन्त्रात्माभिमानरहितानामेव भगवत्प्राप्ति-रुक्ता। अथ यदि केनचित्सुकृतविशेषेण ब्रह्मलोकं प्राप्ताः फलासङ्गरहितकर्माणोऽपि देहात्माभिमानादियुक्ताश्चैते पुनः संसरेयुरन्ये पुनः साभिमानाः संसरन्तीति किमु वक्तव्यम्॥ ११॥ ❀ ❀ ब्रह्मापि साभिमानश्चेत् सोऽपि नरकादिभिः संसरेदित्याह। आद्य इति चतुर्भिः। स्थिरचराणामाद्यः कारणभूतः श्रेष्ठ इत्यर्थः स पुरुषः समष्टिपुरुषः वेदगर्भः ब्रह्मापि सनत्कुमारप्रभृतिभि-र्मरीच्यादिभिः ऋषिभिस्तथा योगप्रवर्तकैरन्यैश्च सिद्धैः सह भेददृष्टिब्रह्मात्मकस्वतन्त्रवस्तुतयाभिमानः शरीरात्माभिमानस्तेन निःसङ्गे-नापि कर्मणा सगुणं साम्यावस्थापन्नगुणत्रयविशिष्टं ब्रह्म सूक्ष्मचिदचिद्विशिष्टं पुरुषं परमात्मानं व्रजेत् प्राप्नुयात्। सूक्ष्मचिदचिद्विशिष्टे ब्रह्मणि लीनो भवेत् कुतः कर्तृत्वात् भेददृष्ट्यभिमानपूर्वकं निःसङ्गकर्मकर्तृत्वात्॥ १२, १३॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली।

ब्रह्मप्रलये विमुक्तिः कीदृशीति तत्राह। क्ष्माम्भ इति। गुणत्रयात्मा सत्त्वादिगुणत्रयादानकर्ता परः सर्वजीवोत्तमः स्वयम्भूः ब्रह्मा परं द्विपरार्धाख्यं स्वयं कालमनुभूय प्रतिसंजिहीर्षुः स्वसृष्टं जगत्संहर्तुकामः क्ष्माम्भोनलानिलवियन्मनइन्द्रियार्थ-भूतादिभिः पृथिव्यादिपञ्चभूताभिमानिदेवैर्मनोभिमानिभिरिन्द्रियाभिमानिभिरर्थाः शब्दादयस्तदभिमानिभिश्च भूतादिभिरहङ्कार-तदभिमानिभिश्च देवैः स्वबिम्बद्वारेण गरुडशेषमार्गद्वयेनात्मानं प्रविष्टैः परिवृतः अव्याकृतं लक्ष्मीतत्त्वं यर्हि यदा विशति लक्ष्मी-द्वारा परब्रह्म विशतीत्यर्थः॥ ९॥ ❀ ❀ तदा परेत्य देहान् योगेन विसृज्यैवमुक्तप्रकारेण देवयानेन गत्वा भगवन्तं विकुण्ठ-नाथं ब्रह्माणं चानुप्रविष्टा जितमरुन्मनसःप्राप्तवायुमनोजया अत एव विरागा विषयतृष्णारहिता ये योगिनो ज्ञानिनस्ते स्वबिम्बद्वारेण प्रविष्टब्रह्माणस्तेन ब्रह्मणा साकममृतं नित्यमुक्तं प्रधानं सर्वोत्तमं पुरुषं पूर्णषड्गुणं ब्रह्मोपयान्ति लिङ्गशरीरत्यागलक्षणां मुक्तिं प्राप्नु-वन्तीत्यर्थः। ननु शरीराभावे जीवत्वमपि नष्टं स्यादित्यत उक्तगताभिमाना इति अत्यक्तजीवत्वाभिमानाः॥ १०॥ ❀ ❀ एत-

देव मुक्तिस्वरूपं विविच्य दर्शयति । आद्य इति । यो वेदगर्भो ब्रह्मा स्थिरचराणां स्थावरजङ्गमानामाद्यः आदौ भूतः सहर्षिभिर्मनुष्योत्तममारभ्य गरुडशेषान्तैर्ज्ञानिभिः सिद्धैः साधनसामग्रीमद्भिर्योगेश्वरैः कुमाराद्यैः सनकाद्यैर्योगाचार्यैश्च सह ॥ १२ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

प्रतिसञ्जिहीर्षुस्त्यक्तुमिच्छुर्जिघृक्षुरिति पुण्यारण्यः । गुणत्रयात्मेति प्रकृत्या सह तादात्म्यं प्राप्त इत्यर्थः ॥ ९, १० ॥ ॐ ॐ अथेति । भावेन "येषामहं प्रिय आत्मा सुतश्च" इत्युक्तरीत्या प्रियत्वाद्यभिमानैकतमेन । तत्रापि प्राप्ततया सुतभावेनैवेत्याह भाविनीति ॥ ११ ॥ ॐ ॐ आद्य इति चतुष्कम् । भेददृष्ट्या परमेश्वराद्भिन्नत्वेन हिरण्यगर्भदृष्ट्या । तथा हिरण्यगर्भ एवाहमस्मीत्यभिमानेन च यत् कर्तृत्वमुपासकत्वं तस्मादित्यर्थः । उपासना हि क्षयरहिता । ननु बलवत् कर्म्मान्तरमन्यथा जन्मान्तरं प्रापयतु तत्राह । निःसङ्गेनेति । तत्रापि कर्तृत्वादिति योज्यम् , किन्तु क्रियानिष्पादकत्वादित्यर्थः । तत्र महर्ष्यादीनां सृष्टिं विशिष्य दर्शयति । ऐश्वर्य्यमिति । पूर्व्ववत् कर्मणा धर्म्मेण योगेन च विनिर्मितम् ॥ १२—१५ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

ततश्च महाप्रलये सति ब्रह्मा मुच्यत इत्याह । क्ष्मेति । क्ष्मादिभिः परिवृतं स्वदेहं वैराजं प्रति सञ्जिहीर्षुः त्यक्तुमिच्छुः अव्याकृतं परमेश्वरं प्रकृत्यन्तर्य्यामिणं विशति गुणत्रयात्मा रजोगुणोपाधिकोऽपि त्रिगुणः पराख्यं द्विपरार्द्धलक्षणं कालं ज्ञात्वा ॥ ९ ॥ ॐ ॐ एवं ब्रह्मणो मुक्तावपि तदुपासका भक्त्यभावान्न मुच्यन्त इत्याह । एवमिति । परेत्य ब्रह्मलोक एव देहं त्यक्त्वा भगवन्तं ब्रह्माणमनुप्रविष्टाः ये योगिनस्ते तेनैव ब्रह्मणैव साकं पुराणं पुरुषं परमेश्वरं प्रधानमुत्कृष्टं ब्रह्म उपयान्ति प्रविशन्ति अगताभिमाना वयं हिरण्यगर्भोपासका इत्यभिमानवन्तः तेन परमेश्वरे तेषामात्यन्तिको न लयः, किन्तु प्राकृतिक एवेति तेन पुनर्जगत्सर्गे तेषामपि सर्गो भावीति भावः ॥ १० ॥ ॐ ॐ अथेति । यस्माद्भक्तिं विना न केऽपि निस्तरन्त्यतस्त्वं तमेव भगवन्तं शरणं व्रज हे भाविनि ! मयि परमेश्वरे पुत्रभाववतीति त्वयि भक्त्युपदेशः पिष्टपेषरूप एवेति भावः ॥ ११ ॥ ॐ ॐ ननु ब्रह्मा मुक्तो भवेदथ च स्वभक्तान्मोचयितुं नेष्ट इति कथं प्रतीमस्तत्र "मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते" इति भगवत्प्रतिज्ञाश्रुतेर्भक्तिं विना ब्रह्मापि संसरति के पुनरन्ये वराका इत्याह । आद्यः स्थिरचराणां स्रष्टृत्वात् कारणरूपोऽपि वेदगर्भः सर्व्ववेदविदपि ऋषिभिर्मरीच्यादिभिरपि सह योगिभिः साधकैः सहेति किं वक्तव्यं योगेश्वरैः सिद्धैरपि सह । भेददृष्ट्या यथा रुद्रः संहरति विष्णुः पालयति तथाहमपि ब्रह्मा सृजामीति भगवतः सकाशाद् भेददृष्ट्या योऽभिमानस्तेन यत्कर्त्तृत्वं स्रष्टृत्वं तस्मात् सगुणं कल्याणगुणमयं ब्रह्म महत्स्रष्टारं काले महाप्रलयकाले प्रविश्य पुनः कालेन गुणव्यतिकरे महत्तत्वादौ जाते सति यथापूर्व्वं प्रजायते ब्रह्मा भवतीत्यर्थः । तेऽपि तत्सङ्गिनो महर्ष्यादयोऽपि कर्म्मज्ञानयोगादिविनिर्मितमणिमाद्यैश्वर्य्यादिकं पूर्व्वमहाकल्प एव निषेव्य पुनर्महाकल्पान्ते आयान्ति आवर्त्तन्ते । ननु योगेश्वराणां सनत्कुमारादीनां च सिद्धानामन्येषाञ्च योगप्रवर्त्तकत्वेन सर्व्वज्ञानिगुरूणां च कथं भेददृष्टिरभिमानो वा सम्भवेत् । ताभ्यां स्थिताभ्याञ्च कथं योगेश्वरादित्वम् । उच्यते तेषां निरभिमानानां निर्भेदब्रह्मानुसन्धानमस्त्येव, किन्तु भेदव्युदासे भगवत्यपि मायाशबलितब्रह्मत्वबुद्ध्या मायिकवस्त्वन्तरवद्भेददृष्टिस्तथा वयं ब्रह्मानुभविनः साकारं रूपं निषिध्याम इत्यभिमानश्च ताभ्यामेव दोषाभ्यां यत्कर्त्तृत्वं कर्म्माधिकारस्तस्मादावृत्तिरित्येतच्च काचित्कब्रह्माण्डवर्त्तिब्रह्मब्राह्मणयोगिज्ञानकुमारादीनामभक्तत्वादुक्तम् । तदन्यसर्व्वब्रह्माण्डवर्त्तिनां ब्रह्मादीनां तेषान्तु भक्तिमत्त्वान्मुक्तिप्रेमभक्तिभगवद्दास्यादिभावप्राप्तयो यथायथं भक्तितारतम्याज्ज्ञेयाः ॥ १२—१५ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

क्ष्मा भूः अम्भो जलं अनलो वायुः वियन्नभः मनः इन्द्रियाणि अर्थाः शब्दादयः भूतादिरहङ्कारः तैः परिवृतं विश्वं स्वदेहं यर्हि सञ्जिहीर्षुर्भवति गुणत्रयकार्यभूतः प्रपञ्चः आत्मा देहो यस्य सः तर्हि पराख्यं द्विपरार्द्धं कालमनुभूय अव्याकृतं परमात्मानं विशति ॥ ९ ॥ ॐ ॐ ये योगिनो भगवन्तं ब्रह्माणमनुप्रविष्टास्तल्लोकं गताः तेऽपि एवं परेत्य तेनैव ब्रह्मणा सह अमृतं पुरुषं मुक्तप्राप्यमुपयान्ति ॥ १० ॥ ॐ ॐ तं ब्रह्मादिप्राप्यं त्वमपि य आद्यस्तेन श्वशुरेण ऋषिभिर्मनुकर्दमाद्यैः पितृभर्त्राद्यैश्च योगेश्वरैः शिवादिभिश्च कुमारैर्ज्येष्ठैश्च सिद्धैरस्मदादिभिश्च सह शरणं व्रजेति द्वयोरन्वयः । ब्रह्मादिसेवितं मार्गमाश्रित्य मुक्ता भवेति भावः ॥ ११, १२ ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

भगवद्भक्तानामेव तादृशधर्मयुक्तानां पुरुषोत्तमप्राप्तिः; नान्येषामिति वक्तुमन्येषां प्रकृतावेव लयमाह—क्ष्माम्भोऽनलेति द्वाभ्याम्—केचित्तु परस्य ब्रह्मणः परत्वेन भगवत्त्वेन चिन्तका इति पूर्वफलमपि हिरण्यगर्भोपासकानामेवेत्याहुः—तद्भिन्नप्रक्रमे निमित्ताभावात् चिन्त्यम् । त्रैविध्यस्यैव वक्तव्यत्वाच्च । क्ष्माम्भोऽनलानिलवियन्ति पञ्च भूतानि, मनश्च इन्द्रियाणि, अर्था विषयाः, भूतादिरहङ्कारस्तैः परितः कृतम् , वृतं वा ब्रह्माण्डम् , सर्वमेव प्रतिसञ्जिहीर्षुः प्रतिकूलेन संहर्तुमिच्छुः । यदा भगवानेवं भवति

तदा स्वयम्भूर्ब्रह्मा प्रकृतिं विशति। यर्हि गुणत्रयात्मा न तु भगवद्भक्तः। तस्य ब्रह्मत्वे फलम्—पराख्यं कालमनुभूयेति। परशब्देन ब्रह्मणः शतवर्षमायुः, न तु मुक्त्यर्थं ब्रह्मा जात इति। पुनरिति पूर्वमपि स एवंविध एव ॥ ९॥ ❀ ❀ तत्सहचरा अपि प्रकृतावेव लीना भवन्तीत्याह—एवं परेत्येति। ये परेत्य मृत्वा, लोकान्तरे वा गत्वा, भगवन्तमनुप्रविष्टा नारदादयोऽधिकारिणः, ये वा योगिनः योगाधिकारयुक्ताः। विरागा इति योगफलतत्फलानि निरूपितानि। तानि येषां जातानि ते तु ब्रह्मतुल्याः। अतस्तेनैव साकं ब्रह्मणा सह अमृतमक्षरात्मकं पुरुषं पुराणं पुरुषत्रयादतिरिक्तं ब्रह्मशब्दवाच्यम्, मूलभूतं प्रधानं प्रकृतिपुरुषोत्पादकमुपयान्ति, न तु पुरुषोत्तमे गच्छन्ति। तत्र हेतुः—भगताभिमानाः। न गतः अभिमानो येषाम्। वस्तुतस्तु कर्ता भगवान्। नारदादयस्तु आत्मानं मन्यन्ते। अतोऽक्षर एव लयः। पुनरागमने च वक्ष्यति। यद्यप्यक्षरमपि भगवानेव, तथापि सृष्टीच्छावशग इति पूर्वमुक्तम्। अमृतमिति तत्स्थानानाशाय। पुरुषमिति मतान्तरव्युदासाय। पुराणमिति पुरुषान्तरव्युदासाय। ब्रह्मेति अक्षरत्वख्यापनाय। प्रधानमिति 'आसीज्ज्ञानमयो ह्यर्थः' इत्यत्र एकादशे वक्ष्यति प्रकृतिपुरुषहेतुत्वेन। अत एवाक्षरोपासकानामपि भगवान् स्वसायुज्यमेवाऽऽह। एवकारेणाक्षरप्रवेशं वारयति—ते प्राप्नुवन्ति मामेवेति। ब्रह्मानन्दस्य लक्ष्म्यात्मकत्वादानन्दाभावे फलं न किञ्चिदित्यत एतेषामपि निरोधमात्रं न तु तद्गतफलसम्बन्धः। श्रोत्रियस्य चाकामहतस्येति तस्यापि तावान् स्वरूपानन्द एव ॥ १० ॥ ❀ ❀ अतो भगवद्भजनमवश्यं कर्तव्यं भगवदानन्दार्थमित्याह—अथेति। यतोऽभिमाने महत्यपि ज्ञाने योगे वा न सम्यक् कार्यसिद्धिः। अतो भगवद्भजनमेव कर्तव्यम्, न तु ब्रह्मादीनामिव वैयर्थ्यमुचितमित्यर्थान्तरत्वम्। तं पुरुषोत्तमम्। तत्प्राप्त्यर्थमाह—सर्वभूतानां हृत्पद्मेषु कृतालयमिति। यतोऽत्रैवान्तर्यामिभजने तत्प्राप्तिर्भविष्यतीति भावः। मन्त्रप्रकारेण भजनं व्यावर्त्तयति—श्रुतानुभावमिति। श्रुतोऽनुभावो यस्य। भगवन्माहात्म्यं श्रुत्वा भगवन्मार्गानुसारेण शरणं व्रज। भावेनेति स्नेहपूर्वकं भक्त्या सह वा प्रपन्ना भव! भामिनीति सम्बोधनमुत्तमस्यैव विश्वासो भवतीति तदर्थम्। भामिनी महती स्त्री ॥ ११ ॥ ❀ ❀ यतो न प्रकारान्तरेण पुनरावृत्तिरहितं फलं भवति। अतो भगवानेव सेव्य इति वक्तुं सर्वसाधनसम्पत्तिर्यथा ब्रह्मादीनां तथा नाऽन्यस्य भविष्यति। तेऽपि चेन्न मुक्ताः किं ज्ञानादिसाधनैरिति पूर्वोक्तं भगवद्भजनं दृढीकर्तुं ब्रह्मादीनां वृत्तान्तमाह—आद्य इति चतुर्भिः—स्वरूपतो महत्त्वं च दोषस्तत्फलमेव च। पुनरप्यधिकारित्वमन्येषां च निरूप्यते ॥ १ ॥ प्रथमं तेषां सर्वसाधनसहितं रूपमाह—स्थिरचराणामाद्य उत्पादकः, महत्त्वमुक्तम्। वेदगर्भ इति ज्ञानादिसर्वसाधनान्युक्तानि। ऋषिभिः सहेति सत्सङ्गः। ये सनत्कुमारादयोऽपि योगेश्वराः योगफलं नियमयितुं शक्नुवन्ति[1] किं पुनः प्राप्तुम्। कुमारशब्देन तेषां कालजयोऽपि सूचितः। केवलमधिष्ठातृदेववन्न योगनियामकत्वम्, किन्तु योगसिद्धिरप्यस्तीत्याह—सिद्धैरिति। योगप्रवर्तकैरिति अन्येभ्योऽपि स्वसमानफलदानसामर्थ्यं सूचितम् ॥ १२ ॥

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

क्षमेत्यत्र। भिन्नप्रक्रम इति द्विपरार्द्धेतिश्लोकीयतुशब्दोक्तेः ॥ ९ ॥ ❀ ❀ एवं परेत्येत्यत्र। तत्फलानीति। ब्रह्मसाहचर्यफलानि, लोकान्तरगमनफलानि वा। मन्यन्त इति। कर्तारं मन्यन्ते। पूर्वमुक्तमिति। तथाऽत्राभेदेप्येतावान् भेदं(?)पुनरागमनं न दूषकमित्यर्थः। मतान्तरव्युदासायेति। निराकारव्युदासाय। पुरुषान्तरव्युदासायेति। क्षरपुरुषव्युदासाय। ननु प्रधानशब्दः प्रकृतिवाचकत्वेन प्रसिद्ध इति कथमत्र ब्रह्मणोऽक्षरस्य प्रधानरूपतोच्यत इत्याकांक्षाया तत्तात्पर्यमाहुः आसीदित्यादि। तथा च, ''मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहम्' इति वाक्यात् प्रकर्षेण धीयते गर्भः प्रकृतिपुरुषरूपोऽस्मिन्नित्यधिकरणव्युत्पत्त्या, 'योनिश्च हि गीयते' 'प्रकृतिश्च प्रतिज्ञा' इत्यादिसूत्रेभ्योऽत्र प्रधानरूपत्वमुच्यते, न तावता ब्रह्मत्वक्षतिरित्यर्थः। अत्र गमकमाहुः—अत एवेति। ब्रह्मत्वादेव। नन्वक्षरस्य ब्रह्मत्वे तत्सायुज्यवारणं कुत इत्याकांक्षायामाहुः—ब्रह्मानन्दस्येत्यादि। तथा च, तत्रत्य आनन्दो भगवदेकता। न इति तस्याऽन्यसम्बन्धाभावात्, तदभावे चाऽक्षरसायुज्यस्याऽप्यफलत्वबोधनाय तद्वारणमित्यर्थः। तेन सिद्धमाहुः—अत एतेषामित्यादि। ननु यदि तादृशामपि फलसम्बन्धाभावस्तदा 'श्रोत्रियस्य चाऽकामहतस्य' इत्यनेन ब्रह्मानन्दस्याऽपि तादृशसम्बन्धित्वं कुत उच्यत इत्याकांक्षायामाहुः—श्रोत्रियस्येत्यादि। तस्याऽपि श्रोत्रियस्यापि तावान् जीवानन्द एव साधनाधिक्यादधिकोऽभिव्यक्तो भवति, न तु ब्रह्मानन्द इत्यर्थः ॥ १० ॥ ❀ ❀ अथेत्यत्र। ब्रह्मानन्दस्याऽऽधिक्य एवं सिद्धे तदर्थं साधनं वदन्तीत्याहुः—अतो भगवदित्यादि। अर्थान्तरत्वमिति। एतच्छ्लोकोक्तस्य फलात्मकस्य स्वरूपस्य पूर्वश्लोकोक्ताद्भिन्नत्वमित्यर्थः ॥ ११ ॥

### श्रीगिरिधरकृता बालप्रबोधिनी

पराख्यं द्विपरार्धलक्षणं कालमनुभूय तावत्कालस्याधिकारं निर्वाह्य क्ष्मादीनि पञ्चमहाभूतानि मनश्चेन्द्रियाणि चार्थाश्च शब्दादयः भूतादिश्चाहङ्कारः एवमादिभिः परिवृतं संयुक्तं ब्रह्माण्डं प्रतिसञ्जिहीर्षुः संहर्तुमिच्छुः सन् यर्हि गुणत्रयात्मा गुणत्रयात्मक-

---

१. अशक्नुवन्ति क.।

प्रपञ्चाभिमानी परः इन्द्रादिभ्यः उत्कृष्टः स्वयम्भूर्ब्रह्मा अव्याकृतं सर्वविकारशून्यं परमेश्वरं विशति मुक्तो भवति ॥ ९ ॥ ❀ ❀ तदा एवं पूर्वोक्तप्रकारेण चतुर्मुखोपासनया परेत्य ब्रह्मलोकप्राप्तये भगवन्तमनुप्रविष्टा ध्यानेन भगवन्निष्ठा योगिनस्तेऽपि तेन ब्रह्मणा साकमेव पुराणं पुरुषं भगवन्तमुपयान्ति प्रविशन्तीत्यन्वयः। ततः पूर्वं तदप्राप्तौ हेतुमाह—अगताभिमाना इति। तदानीं तत्प्राप्तौ हेतुमाह—विरागा इति, गताभिमान तया ब्रह्मलोकादिसुखेष्वपि तृष्णारहिता इत्यर्थः। तत्र हेतुमाह—जितमरुन्मनस इति, जितो वशीकृतो मरुत् प्राणो मनश्च यैस्ते। तथाच स्मृतिः—'ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसञ्चरे। परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम्' इति। ततः पुनरावृत्ति-शङ्कानिरासाय भगवन्तं विशिनष्टि—अमृतं परमानन्दरूपम्, ब्रह्मव्यापकं प्रधानं सर्वकारणतया मुख्यमित्यर्थः ॥ १० ॥ यस्माद्भगवदभेदेन ब्रह्मोपासकानां क्रमेण भगवत्प्राप्तिः साक्षाद्भगवदुपासकानां तु साक्षादेव तत्प्राप्तिः, अथ तस्मात् भामिनि हे मातः—इति सम्बोधनेन स्नेहद्योतकेन अप्रतारकत्वं सूचयति-भावेन परमप्रेम्णा तं भगवन्तमेव शरणं व्रजेत्यन्वयः। तत्र परमप्रेम कथं स्यात्तत्राह—श्रुतेति, मत्तः श्रुतोऽनुभावो यस्य तमित्यर्थः। तत्रापि भेददृष्टिस्तु नैव कर्त्तव्येत्याह—सर्वेति, सर्वभूतानां हृत्पद्मेषु कृत आलयः निवासस्थानं येन तं सर्वान्तरात्मानमित्यर्थः ॥ ११ ॥ ❀ ❀ भेददर्शने को दोष इत्यपेक्षायां भेददर्शनाभिमानाभ्यां तु ब्रह्मादयोऽपि भगवन्तं प्राप्यावर्त्तन्ते काऽन्यस्य वार्तेत्याह—आद्य इति त्रिभिः। ऋषिभिर्मरीच्यादिभिः योगेश्वरैः सनत्कुमाराद्यैः योगप्रवर्त्तकैर्योगसिद्धैरन्यैश्च सह यः स्थिरचराणामाद्यः स्रष्टा वेदा गर्भे यस्य स ज्ञानाधिको ब्रह्मा ॥ १२ ॥

### हिन्दी अनुवाद

जिस समय देवतादिसे श्रेष्ठ ब्रह्माजी अपने द्विपरार्द्धकालके अधिकारको भोगकर पृथ्वी, जल, अग्नि, वायु, आकाश, मन, इन्द्रिय, उनके विषय (शब्दादि) और अहङ्कारादिके सहित सम्पूर्ण विश्वका संहार करनेकी इच्छासे त्रिगुणात्मिका प्रकृतिके साथ एकरूप होकर निर्विशेष परमात्मा में लीन हो जाते हैं, उस समय प्राण और मनको जीते हुए वे विरक्त योगिगण भी देह त्यागकर उन भगवान् ब्रह्माजीमें ही प्रवेश करते हैं और फिर उन्हींके साथ परमानन्दस्वरूप पुराणपुरुष परब्रह्ममें लीन हो जाते हैं। इससे पहले वे भगवान् में लीन नहीं हुए, क्योंकि अबतक उनमें अहङ्कार शेष था ॥ ९-१० ॥ ❀ ❀ इसलिये माताजी! अब तुम भी अत्यन्त भक्तिभावसे उन श्रीहरिकी ही चरण-शरणमें जाओ; समस्त प्राणियोंका हृदय-कमल ही उनका मन्दिर है और तुमने भी मुझसे उनका प्रभाव सुन ही लिया है ॥ ११ ॥ ❀ ❀ वेदगर्भ ब्रह्माजी भी—जो समस्त स्थावर-जङ्गम प्राणियोंके आदिकारण हैं—मरीचि आदि ऋषियों, योगेश्वरों, सनकादिकों तथा योगप्रवर्तक सिद्धोंके सहित निष्काम कर्मके द्वारा आदिपुरुष पुरुषश्रेष्ठ सगुण ब्रह्मको प्राप्त होकर भी, भेददृष्टि और कर्तृत्वाभिमानके कारण भगवदिच्छासे, जब सर्गकाल उपस्थित होता है तब, कालरूप ईश्वरकी प्रेरणासे गुणोंमें क्षोभ होनेपर फिर पूर्ववत् प्रकट हो जाते हैं ॥ १२ ॥

भेददृष्ट्याभिमानेन निःसङ्गेनापि कर्मणा। कर्तृत्वात्सगुणं ब्रह्म पुरुषं पुरुषर्षभम् ॥ १३ ॥
स संसृत्य पुनः काले कालेनेश्वरमूर्तिना। जाते गुणव्यतिकरे यथापूर्वं प्रजायते ॥ १४ ॥
ऐश्वर्यं पारमेष्ठ्यं च तेऽपि[१] धर्मविनिर्मितम्। निषेव्य पुनरायान्ति गुणव्यतिकरे सति ॥ १५ ॥
ये त्विहासक्तमनसः कर्मसु श्रद्धयान्विताः। कुर्वन्त्यप्रतिषिद्धानि नित्यान्यपि च कृत्स्नशः ॥१६॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

जन्मनि हेतुद्वयम्। भेददृष्ट्याऽभिमानेन कर्तृत्वादिति च। यथापूर्वत्वे हेतुः। निःसंगेन निष्कामेन कर्मणेति ॥ १३ ॥ ❀ ❀ किं कृत्वाऽत्र प्रजायते प्रथमं पारमेष्ठ्यमैश्वर्यं निषेव्य पश्चात्प्रलये सगुणं गुणाधिष्ठातारं प्रथमावताररूपं पुरुषं संसृत्य प्राप्य तेऽपि ऋषिप्रमुखाः स्वकर्मनिर्मितमैश्वर्यं निषेव्य पुरुषं च संसृत्य यथापूर्वं स्वस्वाधिकारेण पुनरायांतीत्यन्वयः ॥ १४ ॥ १५ ॥ ❀ ❀ यदा ब्रह्मोपासकानामपि भेददर्शनाभिमानाभ्यामेवमावृत्तिस्तदा काम्यकर्मिणां किं वक्तव्यमिति तान्निंदन्नाह षड्भिः। ये त्विह कर्मस्वासक्तमनसः संतोऽप्रतिषिद्धानि काम्यानि नित्यानि च कर्माणि कृत्स्नानि कुर्वन्ति तेऽर्यम्णो दक्षिणेन पथा धूममार्गेण पितृलोकं व्रजंतीति पंचमेनान्वयः। मध्ये तन्निंदा ॥ १६-१७ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

अर्यम्णः सूर्यस्य "सूरसूर्यार्यमादित्य-" इत्यमरात् ॥ १६ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

ये त्विति पञ्चकम्। दैवेनेति। तेषामदृष्टं नरकप्रापकमेवेत्यलं तद्वर्णनेनेत्यर्थः। ननु सुधायामपि कथमरुचिस्तत्राह। पुरीषमिवेति। यथा विड्भुजो हि खण्डादि हित्वा पुरीषमेवान्विष्यन्ति तथा स्वभावत्वादिति भावः ॥ १६-२० ॥

१. प्रा० पा०—तु तेऽपि।

श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः ।

स मुमुक्षुर्निर्मलचित्तः आत्मना निर्मलेन चित्तेन आत्मानं परमात्मानं निःसङ्गमाकाशवत्सर्वचेतनाचेतनगुणास्पृष्टं समं दर्शनं यस्मात्तं निर्मलज्ञानदातारं हेयोपादेयाभ्यां बन्धमोक्षादिजीवधर्माभ्यां रहितमारूढं हृद्याविर्भूतं पदं पदनीयमीक्षते ॥ २५ ॥ अर्थानां समत्वं ब्रह्मात्मकत्वादित्याह । ज्ञानमात्रमिति । ज्ञानं प्रत्यक्तत्त्वं मात्रा अंशो यस्य तत् परं सर्वचेतनविलक्षणस्वरूपं तद्ब्रह्म बृहत्स्वरूपगुणयुक्तं परगुणयुक्तं परमात्मा ईश्वरः दृश्यादिभिः पृथग्भावैः कार्य्यैः कारणभूतः भगवानेकः समानाधिकशून्यः ईयते निश्चीयते इत्यर्थः ॥ २६ ॥ ❀ ❀ उक्तसाधनकदम्बस्य फलमाह । एतावानिति । योगिनः साधकस्य एतावानेव अर्थः प्रयोजनं कः अभिमतः परम इष्टः भगवान् योगेन साधनेन युज्यते, कृत्स्नशः संसारात्तु असङ्गः इति यद्वा संसारनिवृत्तिः परमेश्वरप्राप्तिश्च सर्वसाधनप्रयोजनमित्यर्थः ॥ २७ ॥ ❀ ❀ ननु नानाकार्यरूपैः कारणभूतः भगवानेक एवेयते इति न युक्तं, नानाकार्यरूपस्य जगतः अचेतनरूपस्याचेतनपरिणामत्वासम्भवादतः परमाण्वादिकारणवादो युक्त इत्यत आह । ज्ञानमिति । ज्ञानं ज्ञानस्वरूपमेवैकं ब्रह्मैवार्थरूपेण इन्द्रियार्थरूपेण शब्दादिधर्मिणा आकाशादिरूपेणावभाति । 'तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः । एतस्माज्जायते प्राणः मनः सर्वेन्द्रियाणि च । खम्वायुर्ज्योतिरापश्च पृथ्वी विश्वस्य धारिणी ॥' इत्यादिश्रुतिभ्यः । अत एकं चेतनं ब्रह्म श्रुतिप्रोक्तं विहाय नानाचेतनरूपपरमाण्वादिवादो निर्मूलत्वादुपेक्षणीय इति भावः । कथंभूतं निर्गुणं कृत्स्नहेयगुणशून्यम् । ननु यदि ब्रह्मैव अवभाति तर्हि साधनप्रयासः किमर्थस्तत्राह । पराचीनैः कार्यमात्रग्राहकैर्बहिर्मुखैरिन्द्रियैः अवभाति तत्रापि भ्रान्त्या बाह्योऽर्थोऽपि इन्द्रियैर्याथातथ्येन न गृह्यते, किमुत सर्वकारणं सर्वाधारं सर्वनियन्तृ ब्रह्म तैर्न गृह्यते इति वक्तव्यम् । तद्विज्ञानाद्यर्थं साधनप्रयास इति भावः ॥ २८ ॥

श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

किमेवं निदर्शनसहिते ज्ञाने भवतीत्याकांक्षायामाह—स तदैवेति । ज्ञानरूपं प्राप्तेनाऽऽत्मनैवाऽऽत्मानं स्वस्वरूपं प्रकृतिसङ्गरहितं सर्वत्र समदर्शनरूपम् । प्रकृतितद्विकारोपधानरहितमित्यर्थः । हेयोपादेयरहितं प्रवर्तकनिवर्तकसर्वशास्त्राणां पर्यवसानरूपं पदमारूढं साध्यांशरहितमीक्षते । मुक्तरूपं वात्मानमेव पश्यतीत्यर्थः ॥ २५ ॥ ❀ ❀ ननु ज्ञान एव जाते कथमेवं भवति, न हि ज्ञानं वस्तूत्पादयति । अतः स्वभावत एवात्मा तादृश इति मन्तव्यम् । ततश्च न साङ्ख्यसिद्धिः, किन्तु मायावादिनामिव मतं सेत्स्यतीत्याशङ्क्य ज्ञानस्यैव तत्सम्पादकत्वमुपपादयति—ज्ञानमात्रमिति । ज्ञानं नामाविर्भूतं नित्यं केवलोपनिषद्वेद्यं चैतन्यम्, तदेव ब्रह्मशब्देनोच्यते ब्रह्मप्रकरणे । तदेव पुनः स्वेच्छयाविर्भूतैश्वर्यमीश्वरशब्देनोच्यते । यस्मिन्नाविष्टे प्राकृतोऽपि पुरुषः 'मय्येव सकलं जातं मयि सर्वं प्रतिष्ठितम्' इति मन्यते । अतस्तदेवेश्वररूपं ब्रह्मरूपं च । उपाख्यानान्तरेऽपि अन्तर्दृष्ट्या बोधनभेदप्रकारेणाऽऽत्मेत्युच्यते । तदेव ज्ञानमन्तर्दृष्ट्या आत्मत्वेन दृष्टं परमात्मशब्देनोच्यते । तदेव च पुनर्बहिर्दृष्ट्या दृष्टमीश्वरशब्देन कालशब्देनोच्यते । स एव च पुनरुपास्यरूपेण व्यवहाररूपेण च दृष्टः पुमान् त्रिविधपुरुषरूपेण भासते । अतो मूलभूते तस्मिन्नाविर्भूते सर्वमेव सङ्गच्छत इति न किञ्चिदनुपपन्नम् । नन्वेकमेव वस्तु कथमनेकधा भवतीत्याकांक्षायामाह—दृश्यादिभिरिति । द्रष्टुर्भावभेदेनैव एक एव भगवान् बहुधा ईयते । भावास्तु पृथक् । यथैक एव देवदत्तः पित्रादिशब्दैरनेकभावैर्व्यवह्रियते, भवति च तथा । तथापि यस्य यो भाव उत्पद्यते, तं प्रति तथैवेति तथैवार्थसिद्धिः । अतो मूलरूपाविर्भावार्थं यत्नः कर्तव्य इति सिद्धम् ॥ २६ ॥ ❀ ❀ ज्ञानस्य प्रशंसां स्वरूपं चोक्त्वा वैराग्यस्य प्रशंसास्वरूपाण्याह—एतावानेवेति चतुर्भिः—प्रथमतः सर्वेषां शास्त्राणां वैराग्यमेव फलमिति प्रमाणनिर्णयमाह । संपूर्णेनापि योगेन । योगशास्त्रे सर्वेषामेव ज्ञानभक्तिकर्मादीनां योगशब्दवाच्यतैव । अतो योगिनः सर्वैरेवोपायैरयमेवार्थो युज्यते । यद्यदा सर्वतश्चेदसङ्गो भवति । तुशब्दः पक्षान्तरं व्यावर्तयति । ये वैराग्यं नाभिमन्यन्ते, वैराग्याभावे ज्ञानमेव न भवेत् । जातं वा न किञ्चित्कार्यं कुर्यात्, दोषस्यानिवृत्तत्वात् । सर्वथा निवृत्ते दोषे स्वप्रकाशरूप आत्मा आविर्भविष्यतीति कोऽपि न तत्र प्रयासः कर्तव्यः । अतः सर्वशास्त्राणां फलं वैराग्यम् ॥ २७ ॥ ❀ ❀ एवं प्रमाणविचारेण वैराग्योत्कर्षमुक्त्वा प्रमेयविचारेणाप्याह—ज्ञानमेकमिति । वस्तुतः सर्वं जगद् बोधान्वयव्यतिरेकानुसरणात् बोधमात्रमित्यवसीयते । यः कश्चन लौकिको वैदिकः, सर्वोऽपि व्यवहारः बोध एव पर्यवसित इति । यथा सर्वे तरङ्गाः समुद्रे पर्यवसिता इति । अत एकमेव ज्ञानं पराचीनैः प्रकृतैरिन्द्रियैर्व्यापकत्वात्, बृंहणत्वाच्च निर्गुणमेव, गुणानां तदतिरिक्तानामभावाद् घटपटाद्यर्थरूपेण भ्रान्त्याऽवभाति । अतः शुक्तिका रजतवत् प्रतिभासत इति वस्तुविचारेणाऽपि तत्रासक्तिर्नोचिता । ते हि प्राकृताः स्वबुद्ध्यनुसारेणैवतद्गृह्णन्ति । एकदेशग्रहणेन, स्वस्वभावग्रहणेन च तदन्यथा गृहीतं भवति । अतः स्वेन्द्रियादिधर्मा एव तत्रारोप्य गृह्यन्त इति ख्यातिवादा बहुविधा उत्पन्नाः । धर्माणामेव वस्तुतः प्रतिभानमित्यन्यख्यातिः । आधारमपि पुरस्कृत्य तत्र कञ्चनार्थं परिकल्प्य ग्राहकधर्मसम्बन्धादन्यथेत्यप्याहुः । यथा प्रतीतिर्भ्रान्ता तथा कल्पनापीति नात्यन्तमाग्रहः कर्तव्यः । शब्दादिधर्मवांश्चायम् । आदिशब्देनार्थः, तद्वच्छब्दधर्मादयो गृहीताः । ते च धर्मा अनादिवासनया स्फुरन्तीति मिथ्यावादिनोऽप्येकदेशिवैराग्यप्रवेशेन संगृहीता भवन्ति ॥ २८ ॥

---

१. भावार्थवत् ङ. । २. पराचीनैरेव क. । ३. अर्थतस्तद्वत्. ग. अर्थनद्धशब्द'''ख ङ. ।

## श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

स तदेत्यत्र। मुक्तरूपं वेत्यादि। उक्तरीत्या सिद्धत्वेन वा स्वात्मनि दृष्टे निरहङ्कारो भवतीत्यर्थः॥ २५॥ ❀ ❀ ज्ञानमात्रमित्यत्र। आभासे। न साङ्ख्यसिद्धिरित्यादि। सांख्ये हि वस्त्रमलिनत्ववत् आत्मनः प्रकृतितद्विकारसंसर्गेणाऽऽगन्तुको बन्ध इति क्षारेण वसनशोधनवन्नित्यानित्यवस्तूनामुक्तरीत्या विवेकेन तादृश आत्मा साध्यते, न तु स्वत एव। एतादृशस्याऽविद्यानिवृत्त्या विस्मृतकण्ठमणिस्मरणन्यायेन पश्चात्तादृशज्ञानमिति स्वीक्रियते। अत एवं ज्ञानेनाऽहङ्काराध्यासनिवृत्त्यङ्गीकारे न सांख्यसिद्धिः, किन्तु तथेत्यर्थः। तत्सम्पादकत्वमुपपादयतीति। मोक्षसम्पादकत्वम्। मोक्षो हि 'मुक्तिर्हित्वाऽन्यथारूपं स्वरूपेण व्यवस्थितिः', इतिलक्षणकः। तथा सति यथा वसने क्रियया शोधनम्, तथा अत्रात्मनि ज्ञानेन शोधनं विधाय स्वरूपमाविर्भाव्यत इति तथात्वमुपपादयतीत्यर्थः। विवृतौ। अत्र श्लोके भिन्नलिङ्गकमीश्वरपदं द्वयं भिन्नार्थकमिति बोधयितुं प्रथमस्यार्थमाहुः—तदेव पुनः स्वेच्छयेत्यादि। उपाख्यानान्तर इति। शारीरब्राह्मणमैत्रेयीब्राह्मणादौ। बोधनभेदप्रकारेणेति। द्रष्टृत्वदृश्यत्वादिरूपेण प्रकारेण।

त्रिविधपुरुषरूपेणेति। क्षराक्षरपुरुषोत्तमरूपेण। मूलभूत इति। 'ज्ञानं परमगुह्यं मे' इति श्लोकोक्तरूपे। न किञ्चिदनुपपन्नमिति। तथा च सर्वमतोपपादकत्वात् ज्ञानस्य स्वरूपावस्थानरूपमोक्षसाधकत्वे किं वक्तव्यमिति भावः। भवति च तथेत्यादि। तथाच, तं यथा यथोपासते तथैव भवति, तद्धैतान् भूत्वाऽवति' इति श्रुतेः, 'कामं क्रोधम्' इत्यादिपु सिद्धान्निदर्शनाच्च तथेत्यर्थः। अत इति। मूलज्ञानस्य भगवद्रूपत्वात्॥ २६॥ ❀ ❀ एतावानित्यत्र। योगफलकथनेन कथं सर्वप्रमाणनिर्णय इत्याकांक्षायामाहुः—योगशास्त्र इत्यादि। तथा च, योगपदेन सर्वसाधनसङ्ग्रहे तत्फलकथनादेव तद्बोधकप्रमाणनिर्णय उक्तः, तेन वैराग्यमाहात्म्यमत्र साधितमित्यर्थः। न मन्यन्त (?) इति। तेषामिति शेषः॥ २७॥ ❀ ❀ ज्ञानमेकमित्यत्र। प्रमेयविचारेणेति। स्वरूपविचारेण। ननु सर्वस्य कथं बोधान्वयव्यतिरेकानुसरणमित्याकांक्षायां तदुपपादयन्ति—यः कश्चनेत्यादि। तथा च 'अन्वयव्यतिरेकाभ्यां यत्स्यात्' इत्यत्र सर्ववस्तुस्वरूपस्य सदन्वयव्यतिरेकानुसरणात् सद्रूपत्वं यथा सिद्धम्, तथाऽत्र सर्वव्यवहारस्य बोधनान्वयव्यतिरेकानुसरणाद्बोधे पर्यवसानेन बोधमात्रत्वमित्यर्थः। ननु बोधेन जायमानोऽपि व्यवहारो नाभासत इति सोऽपि सन्मात्रपर्यवसित एव, न तु बोधपर्यवसित इति शङ्कायामाहुः यथा सर्व इत्यादि। तरङ्गा यथा जलादुत्पद्यमानाः समुद्रे पर्यवस्यन्ति, अत एव तरङ्गेषूत्पन्नोऽपि फेनः समुद्रफेन एवोच्यते, न तु तरङ्गफेनो जलफेनो वा; तथा सर्वे व्यवहाराः सता उत्पद्यमानाः सति पर्यवस्यन्तोपि सद्व्यवहारस्य ज्ञानमन्तरेणाऽभावाद्बोध एव पर्यवसिता इति मूलज्ञानस्य सतश्चाऽभेद एवाऽध्यवसेय इत्यर्थः। तेन सिद्धमाहुः—अत इत्यादि। तदतिरिक्तानामभावादिति। तज्जन्यत्वेन तदतिरिक्तत्वाभावात्। एवं बहिर्मुखप्रतीतेर्भ्रान्तित्वं व्युत्पाद्य वैराग्यजनिकां युक्तिं तत्र स्फुटीकुर्वन्ति—अतः शुक्तीत्यादि। तथा च, शुक्तिकारजतं यथा बुद्धिरूपत्वेऽपि तदतिरिक्तत्वेन भासते; तथा सर्वं ब्रह्मात्मकज्ञानरूपत्वेऽपि तदतिरिक्तं भासत इति पुरःस्फूर्तिके रूपे आसक्तिर्न कार्येत्यत्र प्रमेयस्वरूपविचार एव तज्जनिका युक्तिरित्यर्थः। नन्वेवं सर्वस्य ज्ञानरूपत्वे कथमर्थत्वेन प्रतीतिरित्याकांक्षायां पराचीनैरिन्द्रियैरित्यनेनोक्तमिन्द्रियदोषं तत्र हेतुत्वेन स्फुटीकुर्वन्ति ते हीत्यादि। तथा बुद्धिदोषादर्थत्वेन प्रतीतिरित्यर्थः। ननु सर्वजनीनप्रतीतेः कथं भ्रान्तत्वमित्याकांक्षायां प्रकारमाहुः—एकदेशेत्यादि। व्यापकस्य सर्वाकारस्य ज्ञानस्य य एकदेशः कश्चिदाकारः, परिच्छेदश्च तद्ग्रहणेन, स्वस्य यः स्वभावः पराक्त्वम्, तद्ग्रहणेन च तद्ब्रह्मात्मकं निर्गुणं ज्ञानम्, अन्यथा अर्थरूपेण गृहीतं भवति। अतो धर्माणां पराक्त्वस्य चाऽनन्तविधत्वात् ख्यातीनामपि बहुविधत्वेन, तासां प्रतीतीनां स्वरूपविचारेऽपि सर्वजनीनत्वाभावेन च भ्रान्तत्वमित्यर्थः। तान् ख्यातिवादान् दिङ्मात्रेण बोधयितुं ख्यातिस्वरूपमाहुः—धर्माणामित्यादि। वस्तुतो वस्तुनः सकाशात् वस्त्वनालोच्य वा धर्माणां शुक्तिरजतादौ रूपस्य, तिक्तगुडादौ रसस्य, दिङ्मोहादौ प्राचीनत्वादेरित्येव केवलानां धर्माणां रजतादौ वस्तुशून्यानामेव बुद्धौ प्रतिफलितानां तया भानमित्यन्यख्यातिस्वरूपम्, एवं प्रकृतेऽपि ज्ञानरूपधर्मिशून्यानां तदाकारादीनां भानं ज्ञेयम्। अन्यथाख्यातिस्वरूपमाहुः—आधारमित्यादि। आधारमिदंत्वावच्छिन्नं पुरस्कृत्य तत्र कल्पनार्थं पूर्वदृष्टं वस्तुधर्मं रजतत्वादिकं रजताद्यभेदं वा परिकल्प्य, ग्राहकाणां मनइन्द्रियाणां धर्मरूपो यो दोषः, तत्सम्बन्धात् शुक्तिप्रभृतिः पुरोवर्त्येवाऽन्यरजतादिरूपेणाभास इत्यन्यथाख्यातिरप्याहुरित्यर्थः। एवमनिर्वचनीयं रजतमुत्पद्यत इत्याद्यपि बोध्यम्। एवं तासां सर्वप्रतीतीनामसर्वजनीनत्वं साधयित्वा तासां तद्वादानां चाऽनादरणीयत्वमाहुः—यथेत्यादि। एतेन 'सर्वत्र तस्य सर्वं हि सर्वसामर्थ्यमेव च' इति विवेकधैर्याश्रयग्रन्थोक्तन्यायात् 'सर्वं सर्वमयम्' इत्यादि तापनीयश्रुतेश्चाख्यातिवाद एव ब्रह्मवादिसिद्धान्त इत्यपि बोधितम्। शब्दादिपदं व्याकुर्वन्ति—शब्देत्यादि। अयमिति अर्थरूपो ज्ञानधर्मः। अर्थतयेति। अभिधेयतया। तद्वदिति। अर्थवत्। तथा च ज्ञानरूप एव ब्रह्मणि तदविदुषामर्थशब्दतद्धर्मज्ञानरूपो भ्रम इत्यर्थः। एतेन सिद्धमाहुः—ते चेत्यादि। एकदेशिवैराग्यप्रवेशेनेति। एकदेशिनोऽभिमतं यद्वैराग्यम्, तत्प्रवेशेन। तथा च मिथ्यावादो मुख्यवदस्यैवैतत्साङ्ख्यस्याप्येकदेश इत्यर्थः॥ २८॥

## श्रीगिरिधरकृता बालप्रबोधिनी

स तदैव आत्मना तेन विशुद्धेन चित्तेन आरूढपदं स्वरूपभूतपरमात्मना एकीभूतमात्मानमीक्षते इत्यन्वयः। दृष्टं विशिनष्टि—निस्सङ्गं प्रकृत्यध्यासरहितम्। तत्र हेतुः—समं च तद्दर्शनं प्रकाशरूपं च तम्। अत एव हेयोपादेयविभागरहितम्॥ २५॥

समेष्वर्थेष्विति यदुक्तं तदेव समत्वं दर्शयति—ज्ञानमात्रमिति । ज्ञानमात्रमेक एव पदार्थस्तत्तच्छास्त्रे परब्रह्मादिशब्दैः प्रसिद्धः दृश्यादिभिः दृश्यद्रष्टृकरणादिभिः पृथग्रूपैः प्रतीयते इत्यन्वयः । तत्रोपनिषत्सु परं ब्रह्मेति, योगशास्त्रे परमात्मेश्वर इति, साङ्ख्ये पुमान् पुरुष इति, भक्तिशास्त्रे भगवानिति प्रसिद्धः ॥ २६ ॥ ❀ ❀ ननु यदि सर्वं परब्रह्मैव तदा सदैव प्राप्तत्वात्किं तदर्थ-साधनप्रयासेनेत्याशङ्क्याह—एतावानिति । अत्र योगशब्दः साधनमात्रपरस्तेन कर्मयोगभक्तियोगज्ञानयोगाष्टाङ्गयोगाः सर्वे एव गृहीताः । यत् यस्तु कृत्स्नशः साकल्येन सर्वत्रासङ्गः अनासक्तिः स एतावानेव योगिनः साधननिष्ठस्य समग्रेण योगेन अभिमतः शास्त्रसम्मतोऽर्थः फलं युज्यते प्राप्यते इत्यन्वयः । 'यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः । अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते' इत्यादिशास्त्रमत्र प्रमाणं सूचयन्नाह—हीति ॥ २७ ॥ ❀ ❀ ननु यदि सर्वं खल्विदं ब्रह्मैव तदा किं तदासक्तिनिरासेनापी-त्याशङ्क्याह ज्ञानमिति । पराधीनैः पराङ्मुखैरिन्द्रियैः शब्दादिधर्मिणा शब्दादिर्धर्मो यस्य तेन अर्थरूपेण आकाशादिपञ्चमहाभूत-परिणामदेवमनुष्यादिरूपेण भ्रान्त्या एकं ज्ञानरूपं निर्गुणं ब्रह्मैवावभातीति तत्र भेददर्शनपूर्वकाहम्ममासक्तिर्बन्धनम् । अतस्तन्निरा-सयत्नो मुमुक्षुणा विधेय एव ॥ २८ ॥

## हिन्दी अनुवाद

वही ज्ञानस्वरूप है, वही परब्रह्म है, वही परमात्मा है, वही ईश्वर है, वही पुरुष है; वही एक भगवान् स्वयं जीव, शरीर, विषय, इन्द्रियाँ आदि अनेक रूपोंमें प्रतीत होता है ॥ २६ ॥ ❀ ❀ सम्पूर्ण संसारमें आसक्तिका अभाव हो जाना—बस, यही योगियोंके सब प्रकारके योगसाधन का एकमात्र अभीष्ट फल है ॥ २७ ॥ ❀ ❀ ब्रह्म एक है, ज्ञानस्वरूप और निर्गुण है, तो भी वह बाह्य वृत्तियोंवाली इन्द्रियोंके द्वारा भ्रान्तिवश शब्दादि धर्मोंवाले विभिन्न पदार्थोंके रूपमें भास रहा है ॥ २८ ॥

यथा महानहंरूपस्त्रिवृत्पञ्चविधः स्वराट् । एकादशविधस्तस्य वपुरण्डं जगद्यतः ॥ २९ ॥
एतद्वै श्रद्धया भक्त्या योगाभ्यासेन नित्यशः । समाहितात्मा निःसङ्गो विरक्त्या[1] परिपश्यति ॥ ३० ॥
इत्येतत्कथितं गुर्वि ज्ञानं तद् ब्रह्मदर्शनम् । येनानुबुद्ध्यते तत्त्वं प्रकृतेः पुरुषस्य च ॥ ३१ ॥
ज्ञानयोगश्च मन्निष्ठो नैर्गुण्यो भक्तिलक्षणः । द्वयोरप्येक एवार्थो भगवच्छब्दलक्षणः ॥ ३२ ॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका ।

अर्थरूपत्वमेवोदाहृत्य दर्शयति यथेति । महान् महत्तत्त्वम् । अहंरूपोऽहंकारः स च त्रिवृत् त्रिगुणात्मकः पुनश्च भूतरूपेण पंचविधः इन्द्रियरूपेणैकादशविधश्च स्वराड् जीवरूपः तस्य जीवस्य वपुरंडं जगच्च यतो येभ्यो महदादिभ्यः तथाऽवभाति ॥ २९ ॥ ❀ ❀ ननु तर्हि जनः किमित्येवं न प्रत्येति तत्राह । एतद्ब्रह्म ॥ ३० ॥ ❀ ❀ उक्तमेवार्थं सुखप्रतिपत्त्यर्थं संक्षेपेणानुवदति इतीति । हे गुर्वि पूज्ये ॥ ३१ ॥ ❀ ❀ अनेन च ज्ञानयोगेन भगवानेव प्राप्यो यथा भक्तियोगेनेत्याह । नैर्गुण्यो ज्ञानयोगश्च मन्निष्ठो भक्तिलक्षणश्च यो योगस्तयोर्द्वयोरप्येक एवार्थः प्रयोजनम् । कोऽसौ । भगवच्छब्दोपलक्षणं ज्ञापको यस्य । तदुक्तं गीतासु "ते प्राप्नुवंति मामेव सर्वभूतहिते रताः" इति ॥ ३२ ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

तथावभाति अर्थरूपः प्रतीयत इत्यर्थः ॥ २९ ॥ ❀ ❀ अत्राशंकते-नन्विति । अत्राधिकारिणमाह-समाहितः संयत आत्मा चित्तं यस्य स तथेति ॥ ३० ॥ ❀ ❀ इतीत्थमेतदधुनैवोपदिष्टं मातृत्वात्तुभ्यमतिगोप्यमपि कथितं यत्तदेव ज्ञानं किंभूतं ब्रह्म दर्शयति साक्षात्कारयतीति तथा । येन ज्ञानेन तत्त्वं स्वरूपम् ॥ ३१ ॥ ❀ ❀ योगस्यायत्यां ज्ञानत्वादेतत्प्रक-रणोक्ते ज्ञानं भक्तियोगश्चेति द्वे एव साधने स्तस्तत्साध्ययोर्ब्रह्मप्राप्तिभगवत्प्राप्त्योर्द्वित्वेप्युक्तन्यायेन भगवत एव ब्रह्मत्वाद्भगवत्प्राप्ति-रित्येकमेव फलं स्यादित्याह—ज्ञानेति । मन्निष्ठ इति । ममैव ब्रह्मत्वादिति भावः । अत्र प्रमाणमाह–तदुक्तमिति । 'ब्रह्मणो हि प्रतिष्ठाहम्' इत्यनुक्तमप्यत्रानुसंधेयम् ॥ ३२ ॥

## श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

अर्थरूपत्वमेव । कल्पितस्वरूपत्वमेव उदाहृत्य कः कल्पितोऽर्थ इत्यभिनीय यथा महानिति सृष्टिक्रमेणोदाहरणम् । अण्डं ब्रह्माडं जगच्च स्थावरजङ्गमरूपम् ॥ २९ ॥ ❀ ❀ यर्हि बाधितसामानाधिकरण्येन सर्वं ब्रह्मैव तर्हि एवं ब्रह्मत्वेनैव भक्त्येति निरीश्वरयोगसांख्यादिव्युदासः ॥ ३० ॥ ❀ ❀ तस्य शास्त्रैकगम्यस्य ब्रह्मणो दर्शनं ज्ञानद्वारं प्रकृतेः प्रधानस्य

---

१. प्रा० पा०—विरक्तः ।

पुरुषस्य जीवस्य तत्त्वं यथावद्रूपम् ॥ ३१ ॥ ❀ ❀ यद्यपि निर्विशेषं ब्रह्मैव ज्ञानेन प्राप्यं, तथापि भगवत एवासम्यग्ज्ञानरूपत्वाद्विशेष्यमात्रं तद्विशिष्टान्न भिन्नमिति भगवानेव प्राप्य इत्युक्तम् । तत् ब्रह्मणो भगवदभिन्नत्वम् ॥ ३२ ॥

### श्रीमद्वीरराघवव्याख्या

परमप्रस्तुतं सर्वस्य ब्रह्मात्मकत्वमुपपादयति । यथेति । महान् महत्तत्त्वमहंरूपः अहङ्कारः स च त्रिवृद्वैकारिकादिभेदेन त्रिधा वर्तमानः पुनश्च भूतरूपेण पञ्चविधः इन्द्रियरूपेणैकादशविधः एतत्तत्त्वात्मकं यदण्डं स्वराट् ब्रह्म च यत उत्पन्नं तस्यैवैतत् सर्वं जगद्वपुः शरीरं यथा यथावत् परमार्थ इत्यर्थः ॥ २९ ॥ ❀ ❀ केनोपायेनायं सर्वात्मकत्वेन ब्रह्म साक्षात्कुर्यादित्यत्राह । एतदिति । एतत् कृत्स्नस्य ब्रह्मात्मकत्वं श्रद्धया भक्त्या वैराग्येण च परिपश्यति श्रद्धाभक्तिवैराग्यादिभिः सर्वात्मकं ब्रह्म साक्षात्कुर्यादित्यर्थः ॥ ३० ॥ ❀ ❀ अथाष्टाध्याय्या प्रतिपादितमर्थमुपसंहर्तुं सुखप्रतिपत्तये संक्षेपेणानुवदति । इतीति । हे गुर्वि ! पूज्ये ! इत्युक्तरीत्या एतत्कथितम् । किं तदित्यत्राह । येन प्रकृतेरचेतनायाः भूम्यादिरूपायाः "भूमिरापोऽनलो वायुः" इत्यादिनोक्तायाः तथा "अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम्" इत्युक्ताया जीवात्मकप्रकृतेश्च पुरुषस्य परमपुरुषस्य च तत्त्वं याथात्म्यमवबुध्यते तद्ब्रह्मदर्शनं ब्रह्मदर्शनोपायभूतं ज्ञानं कथितमित्यर्थः ॥ ३१ ॥ ❀ ❀ तथा ज्ञानयोगः प्रकृतिविलक्षणब्रह्मात्मकप्रत्यगात्मोपासनरूपो ज्ञानयोगो नैर्गुण्यः सत्त्वादिगुणत्रयराहित्यसंपादको मन्निष्ठो मद्विषयः भक्तिलक्षणः भक्तिरूपो योगश्च कथितः । द्वयोर्ज्ञानयोगभक्तियोगयोरुभयोरपि भगवच्छब्दो लक्षणम् "तत्र पूज्यपदार्थोक्तिपरिभाषासमन्वितः" इत्युक्तरीत्यानुपचारेण बोधको यस्य स एव परमपुरुषः एक एवार्थः प्रयोजनं फलमिति "भक्तियोगश्च योगश्च मया मानव्युदीरित" इति कथितः ॥ ३२ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

स्त्रीत्वादिममर्थं कथं जानामीत्यत उदाहरति । यथा महानिति । महान्महत्तत्त्वाभिमानी ब्रह्मा वैकारिकाद्यात्मना त्रिवृत्त्रिविधोऽहङ्कारोऽहङ्काराभिमानी रुद्रः आकाशादिपञ्चभूताभिमानित्वेन पञ्चविधः मनआद्येकादशेन्द्रियाभिमानित्वनैकादशविधः स्वराडिन्द्रश्चैते अज्ञानिनां भौतिकशरीरत्वेनापि यथा प्रतीयन्त तथा मत्स्यादिरूपं परं ब्रह्मेत्यर्थः । अभिमानित्वमात्रेणाभिमन्यमानदेहत्वं कथमित्येतत्स्पष्टयति । तस्येति । इदमण्डं सर्वजगच्च तस्येन्द्रस्य वपुरिति यतोऽत इति अनेन ब्रह्मरुद्रयोरपि भौतिकदेहत्वं स्पष्टमित्युक्तं भवति । अत्र यथा प्रतीतार्थो दार्ष्टान्तिकेऽनुपयुक्तः स्यादित्येवं व्याख्यातमिति ज्ञातव्यम् । "एकादशेन्द्रियात्मा च पञ्चभूतात्मकस्तथा । सर्वाभिमानी भगवान् स्वराडिन्द्रः पुरन्दरः ॥ इदमण्डं जगत्सर्वं शक्रदेहं विदुर्बुधाः । तत्पतिस्त्रिगुणो रुद्रस्तस्य ब्रह्मा ततो हरिः ।" इति वचनात् ॥ २९ ॥ ❀ ❀ तर्हि तद् ब्रह्म यथावज्ज्ञातुं कथं शक्यत इति तत्राह । एतदिति । एतैः साधनैः अधिकार्येतन्मत्स्याद्यवतारूपं ब्रह्म परिपश्यति प्राकृतदेहादिदोषपरित्यागेन ज्ञानानन्दाद्यनन्तगुणपूर्णत्वेनापरोक्षीकरोतीत्यन्वयः । कैरित्यत उक्तम् । श्रद्धयेत्यादिभिरिति । नित्यशोऽनुक्षणं यमादियोगाभ्यासेन कीदृशोऽधिकारी समाहितात्मा हरावेव सम्यगर्पितमनाः निसङ्गो दुष्टसङ्गरहितः निर्णीतसज्जनसङ्गो वा "निर्निर्णयनिषेधयोः" इति यादवः, विरक्तः सर्वमसारमनित्यं चेति ज्ञानवान् वा इत्यनेनैतैरेव साधनैर्नोपरैरैक्यज्ञानादिभिर्ब्रह्मदर्शनं स्यादिति सूचयति । ज्ञानरूपमेकं निर्गुणं ब्रह्म भ्रान्त्यार्थरूपेण पञ्चात्मनावभातीत्याद्यपव्याख्याननिरासाय च "मत्स्यकूर्मादिरूपं च विष्णोर्ज्ञानैकमात्रकम्" इत्याद्युदाहृतमाचार्यैरिति ज्ञातव्यम् ॥ ३० ॥ ❀ ❀ तत्त्वोपदेशमुपसंहरति । इतीति । ब्रह्म दर्शयतीति ब्रह्मदर्शनं तात्पर्यातिशयजननाय ज्ञानं विशिनष्टि । येनेति । प्रकृतिशब्दवाच्यस्य लक्ष्म्यादेः पुरुषशब्दवाच्यस्य विष्ण्वादेस्तत्त्वमनारोपितरूपं येन ज्ञानेनावबुध्यत इत्यन्वयः ॥ ३१ ॥ ❀ ❀ अवश्यज्ञानानुष्ठानार्थं येन विना मुक्तिमात्रं न स्यात्तत्साधनं निर्दिशति । ज्ञानमिति । यो नैर्गुण्यो भक्तिलक्षणो योगो यच्च ज्ञानं योगस्तयोर्द्वयोरप्येक एवार्थो विषयः स क इति तत्राह । भगवच्छब्देति । भगवच्छब्दवाच्य इत्यर्थः । भक्तिज्ञानयोगयोरैश्वर्याद्यनन्तगुणपूर्णश्रीनारायणो विषय इति भक्तिज्ञाने मुक्तेरवश्यसाधने मयोपदिष्टे इति । "ज्ञानभक्ती विना नैव मुक्तिः कस्यापि विद्यते । तयोरेकतरेणापि विष्णुनेनोभयं विना ॥" "एवमप्येतयोरेकभावेऽन्यनियतेध्रुवम् । एकेनापि भवेन्मुक्तिस्तदर्थं त्वन्यसाधनम् ॥" इति वाक्यार्थज्ञानाय लक्षण इत्युक्तम् "लक्ष दर्शनाङ्कनयोः" इति धातोः सूचितोऽयमर्थ इति ॥ ३२ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

तदेवं विवेके सति व्यष्टिरूपोऽयं जीवस्तथावभाति यथा समष्टिरूपो ज्ञानप्रधानतया स्वराट् स्वप्रकाशः सन्नवभातीत्यर्थः, समष्टिरूपोऽयं जीवः कीदृशोऽपि स्वराट्तयावभाति तत्राह । महानित्यादिना । समष्टिमहदादितादात्म्यापन्नोऽपीत्यर्थः । तस्य स्वराड्जीवस्य समष्टिरूपत्वमेव दर्शयति । तस्येति । यतो जगत् स्थावरजङ्गमवृन्दं भवतीति ॥ २९ ॥ ❀ ❀ एतच्चिद्वस्तु च श्रद्धापूर्विका या भक्तिर्भगवदुपासना तत्पूर्वको यो योगाभ्यासः पूर्वोक्तः सबीजो नित्यशः क्रियमाणस्तेनैव समाहितात्मेत्यादिरूपः सन् परिपश्यति । निरीश्वरसांख्यस्तु भक्त्यादिकं विना विवेकमात्रेण न पश्यतीत्येवेत्यर्थः ॥ ३० ॥ ❀ ❀ इत्येतत् पूर्वप्रकारकं ज्ञानं कथितं कीदृशं तस्य शास्त्रमात्रज्ञेयस्य ब्रह्मणो दर्शनं ज्ञानद्वारम् । पूर्वप्रकारत्वमेवानुवदति । येनेति । प्रकृतेः

प्रधानस्य पुरुषस्य जीवस्य ॥ ३१ ॥ ❀ ❀ ज्ञानमात्रमित्यत्रोक्तं सुष्ठु बोधयन् भगवत्येव सर्व्वतात्पर्यं दर्शयति । ज्ञानेति द्वयेन । मन्निष्ठो नैर्गुण्यश्चेत्युभयमप्युभयोरेव विशेषणं तत्र यद्यपि "कैवल्यं सात्त्विकं ज्ञानं सन्निष्ठं निर्गुणं स्मृतम्"इति भगवदुक्त्या नैर्गुण्यत्वं न सम्भवति । तथापि तत्फलस्य कैवल्यस्य निर्गुणत्वापेक्षया निर्गुणत्वमित्युक्तम् । एतदेवाह । द्वयोरप्येक एवार्थ इति ॥३२॥

**श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी**

अर्थरूपेणावभातीत्युक्तमतोऽर्थमध्यपतितमेव सर्व्वं मायिकं वस्त्विति दर्शयति । यथेति । महांश्चित्तम् । अहंरूपोऽहङ्कारः त्रिवृत् त्रिगुणात्मकः स च पञ्चविधः शब्दादिरूपेणाकाशादिरूपेण च पुनरेकादशविध इन्द्रियरूपेण स्वराट् समष्टिर्व्यष्टिश्च विराड-शुद्धजीवस्य वपुरण्डञ्चेति एतो महदादिभ्यो जगत् मायिकमिदं विश्वं भवति महदादीनामेषां बुद्धिविषयत्वादर्थरूपत्वम् ॥ २९ ॥ ❀ ❀ अस्य ज्ञानस्याधिकारिणमाह । एतज्ज्ञानरूपं ब्रह्म एतच्चिद्वस्तु च ॥ ३० ॥ ❀ ❀ उक्तमेवार्थं सुखबोधार्थं सङ्क्षे-पेणानुवदति गुर्व्वि ! हे मातः ! ॥ ३१ ॥ ❀ ❀ योगस्यायत्यां ज्ञानत्वादेतत्प्रकरणोक्तेर्ज्ञानं भक्तिश्चेति द्वे एव साधने भवतः, तत्साध्ययोर्ब्रह्मप्राप्तिभगवत्प्राप्त्योर्द्वित्वेऽप्युक्तन्यायेन भगवत एव ब्रह्मत्वात् भगवत्प्राप्तिरित्येकमेव फलं स्यादित्याह । ज्ञानेति । मन्निष्ठ इति । ममैव ब्रह्मत्वादिति भावः । नैर्गुण्यो निर्गुणो भक्तिलक्षणश्च यो योगस्तयोर्द्वयोरेक एवार्थः प्रयोजनम् । कोऽसौ भगवच्छब्दो लक्षणं ज्ञापको यस्य तदुक्तं गीतासु 'ते प्राप्नुवन्ति मामेव सर्वभूतहिते रताः' इति ।

'ब्रह्मणो हि प्रतिष्ठाहममृतस्याव्ययस्य च । शाश्वतस्य च धर्म्मस्य सुखस्यैकान्तिकस्य च ॥'

इत्यतः सायुज्यप्रेप्सोर्भगवत एव सिद्धिः ॥ ३२ ॥

**श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः**

उक्तार्थं द्रढयति । यतो ब्रह्मण एव चिदचिच्छक्तिनः सकाशात् महानहङ्कारश्च अभूत् । त्रिवृत् वैकारिकादिभेदेन पञ्चविधः भूतरूपेण एकादशविध इन्द्रियरूपेण स्वराट् जीवश्च तस्य स्वराजः वपुषः स्थानं ब्रह्माण्डं जगत् तथा यथावद्भूत् ॥ २९ ॥ ❀ ❀ एतत् विश्वकारणम् ॥ ३० ॥ ❀ ❀ हे गुर्वि ! आर्य्ये ! ॥ ३१ ॥ ❀ ❀ नैर्गुण्यः दम्भादिमाया-गुणवर्जितः ज्ञानयोगो भक्तियोगश्च मन्निष्ठ एव यतः तयोरेक एव अर्थो विषयः फलं कः भगवच्छब्दो लक्षणं वाचको यस्य सः ॥ ३२ ॥

**श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या**

तानेव भेदान् गणयति युक्त्या विचारयन्निव—यथेति । तत्त्वानां तद्भावापन्नत्वेन तत्त्वशब्दवाच्यत्वोपपत्तेः[1], यथा महदादयः प्राकृतैर्धर्मैः कृत्वा तत्त्वशब्दवाच्या[2] जायन्ते । वस्तुतोऽन्यधर्मवत्त्वेन ज्ञानमेव तत्तच्छब्दवाच्यम् । एवमिदानीमपि प्रतीयमानमित्यर्थः । अहङ्कारस्यानेकरूपत्वादहंपदस्यात्मशब्दवाच्यत्वाच्च तत्सन्देहनिवृत्त्यर्थं रूपपदम् । त्रिवृत्त्रिविधः । ततः सर्वे पञ्चविधाः, मात्राभूतप्राणादिरूपाः । एकादशविध इन्द्रियरूपः । मध्ये स्वराडिति पुरुषो नारायणः । इन्द्रियाद्यपेक्षारहित इति ततः पूर्वं निरूपितः । तस्य वपुर्विराट्, अण्डं तस्यावरकं जगत्तस्यैव मध्ये कार्यम् । यतो धर्मसहितज्ञानप्रतीत्यैव केवलमवभासते ॥२९॥ साधितं युक्त्या फलमुखेन साधयति—एतदिति । एतत्पूर्वोक्तं विरक्तः परिपश्यति, नाविरक्तः । एतच्च वैराग्यं भगवतः षष्ठो गुण इति ततः पूर्वं पञ्चभिः पदार्थसाधकैः सिद्ध्यतीति तत्साधकत्वेन पञ्च साधनान्याह—अत्रार्थे[3] आस्तिक्यबुद्धिर्भगवति बुद्धिः, अष्टाङ्गो योगश्चेति गुणत्रयम् । दोषाभावद्वयमाह—समाहितात्मा इति । अन्तर्बहिः सङ्गाभावो निरूपितः । एवं सप्तविधः शास्त्रार्थो निरूपितः । भगवत्प्रतिपादकत्वेन, गुणानां प्रत्येकप्रकारप्रतिपादकत्वेन च । अतः शास्त्राणां निरूपणभेदेषु परस्परविरोधो नाशङ्कनीयः ॥ ३० ॥ ❀ ❀ उपसंहरति—इत्येतदिति । हे गुर्वि एतावदुपदेशेऽपि नाऽहं गुरुः, किन्तु त्वमेव गुरुः । आज्ञया परं निरूपितमिति । इतीति समाप्त्यर्थे । एतत्सर्वं ज्ञानमेव निरूपितम् । सप्तविधोऽपि सिद्धान्तो ज्ञानविद[4] एवेति तेन उपसंहारः । अनेन ब्रह्माविर्भावो भवतीति ब्रह्माविर्भावः फलमुक्तम् । यद्यपि देवहूत्या पृष्टम्, 'जिज्ञासयाऽहं प्रकृतेः पुरुषस्य' इति । तदप्यनेनैव भवतीत्याह—येनाव-बुध्यत इति । एवं सप्तविधं ज्ञानशास्त्रम्, भक्तिशास्त्रं चापरम्, तस्य च बहुविधाभेदा उक्ताः । स हि क्रियाप्रधानः । यथा पुरुषस्य स्वरूपम्, गुणः, कर्माणि चेति । तत्र स्वरूपप्रतिपादकं वैदिकं शास्त्रम्, षडन्यानि गुणप्रतिपादकानि । क्रियाप्रतिपादकं च भक्तिशास्त्रम् । तेषां भिन्नान्येव सर्वेषां फलानि ॥ ३१ ॥ ❀ ❀ तत्र स्वरूपमुख्यभक्तिशास्त्रयोरेकं फलमित्याह—ज्ञानयोगश्चेति । मन्निष्ठ इति षण्णां व्युदासः । नैर्गुण्यो भक्तिलक्षण इति निर्दुष्टो भक्तिमार्ग उक्तः । द्वयोरप्येकमेव फलम्, भक्त्याऽपि भगवान् प्राप्यते धर्मी मुख्येनाऽपि ज्ञानेन । अत एव भगवच्छब्देन लक्ष्यते भगवच्छब्दो वा लक्षणं यस्येति । अतः शास्त्रद्वयमेकं षडन्यान्य-ङ्गशास्त्राणीति सिद्धम् ॥ ३२ ॥

---

१. उपपत्तौ, क. घ. । २. शब्दवाच्या. क. घ. । ३. तत्रार्थे. क. तत्रास्तिक्य. घ. तत्रादौ, ङ । ४. ज्ञानमिदमेव क. ज्ञानमेवेति घ. ज्ञानमिवेति ङ.

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

यथेत्यत्र। तद्भावापन्नत्वेनेति। तस्य भावस्तत्त्वम्, तदापन्नत्वेन। यथेति। भ्रान्त्या अनारोपितरूपत्वेन। अन्यधर्मवत्त्वेनेत्यर्थात्। एवमित्यादि। तथा च तद्यथा भ्रान्त्या, तथेदानीमपीत्यर्थः। यत इत्यस्यैव विवरणम्—धर्मसहितज्ञानप्रतीत्येति। एतेन वैराग्याभावाज्जगद्भ्रान्तमित्युक्तम्। अग्रिमे वैराग्यात् सर्वनिर्णयः स्पष्ट एव॥ २९॥ ❀ ❀ इतीत्यत्र। तस्येति। ज्ञानरूपस्य हरेः। अन्यानीति। दर्शनानि॥ ३१॥

इति श्रीतृतीयस्कन्धसुबोधिनीप्रकाशे द्वात्रिंशाध्यायविवरणं सम्पूर्णम्।

### श्रीगिरिधरकृता बालप्रबोधिनी

अर्थरूपत्वमेवोदाहृत्य दर्शयति—तथेति। यथा महदादिरूपेण ब्रह्मैव भाति। महान् महत्तत्त्वम्। अहंरूपः अहङ्कारः। स च त्रिवृत् त्रिगुणात्मकः। पुनश्चाकाशादिमहाभूतरूपेण पञ्चविधः। मनइन्द्रियरूपेणैकादशविधश्च। स्वराट् समष्टिपुरुषः। तस्येदं ब्रह्माण्डं वपुः। दतः समष्टिरूपात् सर्वमपि जगद् व्यष्टिरूपं भवति॥ २९॥ ❀ ❀ अतो भ्रान्तिनिरासेन सर्वत्र ब्रह्मत्वदर्शनार्थं साधनायास आवश्यक इत्याह—एतदिति। श्रद्धादिसाधनसम्पत्त्या समाहितः एकाग्रीकृत आत्माऽन्तःकरणं येन सः। अत एव निस्सङ्गः सर्वत्रासक्तिरहितः पुरुष एतत्सर्वं ब्रह्मात्मकं परिपश्यतीत्यन्वयः। नित्यश इति सर्वत्रान्वेति। श्रद्धा शास्त्रोक्ते आदरः। भक्तिः भगवति प्रेमातिशयः। योगाभ्यासः पूर्वोक्त एव। विरक्तिर्विषये दोषदर्शनम्॥ ३०॥ ❀ ❀ अथाध्यायीप्रतिपादितमर्थं सुखप्रतिपत्तये सङ्क्षेपेणानुवदति—इतीति। स्नेहं सूचयन् सम्बोधयति—गुर्वीति। हे गुर्वि पूज्ये इत्युक्तरीत्या येन प्रकृतेः पुरुषस्य च तत्त्वं याथार्थ्यमनुबुध्यते तदेतत् ज्ञानं कथितमित्यन्वयः। एतस्य ज्ञानस्यौपनिषदाज्ज्ञानाद्वैलक्षण्यमाशङ्क्याह—ब्रह्मदर्शनमिति, ब्रह्म दृश्यतेऽनेनेति तथा॥ ३१॥ ❀ ❀ ज्ञानभक्तिमार्गयोरुत्कर्षापकर्षविवाददर्शनात्तयोः प्राप्यभेदमाशङ्क्य परिहरति—ज्ञानयोग इति। नैर्गुण्यो निर्गुणविषयो मन्निष्ठो ज्ञानयोगो भक्तिलक्षणो योगश्च तयोर्द्वयोरप्येक एवार्थः फलम्। कोऽसावित्यपेक्षायामाह—भगवच्छब्दो लक्षणं ज्ञापको वाचको यस्य सः। यथोक्तं गीतास्वपि—'एकमप्यास्थितः सम्यगुभयोर्विन्दते फलम्। यत्साङ्ख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते' इति॥ ३२॥

### हिन्दी अनुवाद

जिस प्रकार एक ही परब्रह्म महत्तत्त्व, वैकारिक, राजस और तामस—तीन प्रकारका अहङ्कार, पञ्चमहाभूत एवं ग्यारह इन्द्रियरूप बन गया और फिर वही स्वयंप्रकाश इनके संयोगसे जीव कहलाया, उसी प्रकार उस जीवका शरीररूप यह ब्रह्माण्ड भी वस्तुतः ब्रह्म ही है, क्योंकि ब्रह्मसे ही इसकी उत्पत्ति हुई है॥ २९॥ ❀ ❀ किन्तु इसे ब्रह्मरूप वही देख सकता है, जो श्रद्धा, भक्ति और वैराग्य तथा निरन्तरके योगाभ्यासके द्वारा एकाग्रचित्त और असङ्गबुद्धि हो गया है॥ ३०॥ ❀ ❀ पूजनीय माताजी! मैंने तुम्हें यह ब्रह्मसाक्षात्कारका साधनरूप ज्ञान सुनाया, इसके द्वारा प्रकृति और पुरुषके यथार्थ स्वरूपका बोध हो जाता है॥ ३१॥ ❀ ❀ देवि! निर्गुण ब्रह्म-विषयक ज्ञानयोग और मेरे प्रति किया हुआ भक्तियोग—इन दोनोंका फल एक ही है। उसे ही भगवान् कहते हैं॥ ३२॥

**यथेन्द्रियैः पृथग्द्वारैरर्थो बहुगुणाश्रयः। एको नानेयते तद्वद्भगवान् शास्त्रवर्त्मभिः॥ ३३॥**
**क्रियया क्रतुभिर्दानैस्तपःस्वाध्यायमर्शनैः[1]। आत्मेन्द्रियजयेनापि संन्यासेन च कर्मणाम्॥ ३४॥**
**योगेन विविधाङ्गेन भक्तियोगेन चैव हि। धर्मेणोभयचिह्नेन यः प्रवृत्तिनिवृत्तिमान्॥ ३५॥**
**आत्मतत्त्वावबोधेन वैराग्येण दृढेन च। ईयते भगवानेभिः सगुणो निर्गुणः स्वदृक्॥ ३६॥**

### श्रीधरस्वामिविरचिता भावार्थदीपिका

ननु ज्ञानयोगस्यात्मलाभः फलं शास्त्रेणावगम्यते भक्तियोगस्य तु भजनीयेश्वरप्राप्तिः कुतस्तयोरेकार्थत्वमित्याशंक्य दृष्टांतेनोपपादयति। तथा बहूनां रूपरसादीनां गुणानामाश्रयो गुडक्षीरादिरेक एवार्थो मार्गभेदप्रवृत्तैरिंद्रियैर्नाना प्रतीयते चक्षुषा शुक्ल इति रसनेन मधुर इति स्पर्शनेन शीत इत्यादि तथा भगवानेक एव तत्तद्रूपेणावगम्यते॥ ३३॥ ❀ ❀ शास्त्रमार्गानेव प्रपंचयति। क्रिययेति त्रिभिः। क्रियया पूर्वरूपया क्रतुभिर्यागैः मर्शनं मीमांसा आत्मेन्द्रियजयो निषिद्धवर्जनम्॥ ३४॥ ❀ ❀ उभयचिह्नेन सकामनिष्कामलक्षणेन। तमेवाह य इति। सकामधर्मप्राप्यं स्वर्गाद्यपि भगवत एव सगुणं स्वरूपमिति भावः॥ ३५॥ ❀ ❀ एभिर्वर्त्मभिः स्वदृक् स्वप्रकाशः॥ ३६॥

---

१. प्रा॰ पा॰—दर्शनैः।

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः ।

अत्राक्षिपति—नन्विति । अयमर्थो भागवतामृते व्याख्यातस्तथा हि—यथा रूपरसादीनां गुणानामाश्रयः सदा क्षीरादिरेक एवार्थो ज्ञायते बहुभिरिन्द्रियैः दृशा शुक्लो रसनया मधुरो भगवांस्तथा उपासनाभिर्बहुधा स एकोपि प्रतीयते । "जिह्वयैव यथा ग्राह्यं माधुर्य्यं तस्य नापरैः । तथैव चक्षुरादीनि गृह्णन्त्यर्थं निजं निजम् ।। तथान्यबाह्यकरणस्थानीयोपासनादिना । भक्तिश्च चेतःस्थानीया तत्तत्सर्वार्थलाभतः ।। इति प्रबलशास्त्रेषु तस्य ब्रह्मस्वरूपतः । माधुर्यादिगुणाधिक्यात्कृष्णस्य श्रेष्ठतोच्यते ।।" इति चक्रवर्त्ती ।। ३३ ।। ❀ ❀ क्रियादित्रयं गृहस्थधर्मः । तपो वानप्रस्थस्य । स्वाध्यायमर्शने ब्रह्मचारिणः । आत्मेति द्वयं संन्यासिनः ।। ३४ ।। ❀ ❀ विविधानि यमादीन्यंगानि यस्य तेन । यद्वा विविधांगेन श्रवणकीर्त्तिनाद्यनेकांगेनेत्युभयत्रान्वेति । तमेवोभयचिह्नत्वमेव । यो धर्मः । विश्वनाथस्तु—भक्तियोगेन चैव हीति चकारेण क्रिययेत्यादीनां भक्तियोगमिश्रणं ज्ञापयति । क्रियया भक्तियोगेन च क्रतुभिर्भक्तियोगेन दानैर्भक्तियोगेन चेत्येव सर्वत्र योजनाद्भक्तियोगमिश्रणं विना क्रियादीनां स्वफलसाधकत्वाशक्तिं बोधयति । एवं हिशब्दाभ्यामवधारणनिश्चयवाचकाभ्यां क्रियादिसाध्यं वस्तु भक्तियोगेनैव केवलेन लभ्यं निश्चितं स्यादिति भक्तियोगस्य सर्वमुख्यत्वं भवत्स्वरूपवज्ज्ञेयमित्याह ।। ३५ ।। ❀ ❀ इति भाव इति । 'वासुदेवपरा गतिः' इत्याद्युक्तेरयमाशयः-सगुणपक्षे स्वानन्यभक्तानेव पश्यीति स्वदृक् भक्तियोगप्राप्य इत्यर्थः । "भक्त्या मामभिजानाति यावान्यश्चास्मि तत्त्वतः ।" इति श्रीगीतोक्तेः । ईयते ज्ञायते 'ई गत्यादौ' अतः कर्मणि लट् । यः कालः ।। ३६–३७ ।।

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

पृथग्भावैरिति पृथग्भावो दर्शनादिक्रिया येषां तैश्चक्षुरादिभिः पृथग्द्वारैरिति पाठान्तरं तत्र द्वारशब्दो व्यापारवचनः । इन्द्रियैर्नाना तत्तदंशतया गृह्यते मनसा तु सर्वांश एव गृह्यते तथा मनःस्थानीयेन भक्तियोगेन सर्वांशिभगवानिति ज्ञेयम् ।। ३३ ।। ❀ ❀ क्रिययेति त्रिकम् । तदेव शास्त्रमार्गैर्नानाप्रत्ययनमेव क्रियादित्रयं गृहस्थधर्मः तपः वानप्रस्थस्य स्वाध्यायमर्शने ब्रह्मचारिणः आत्मेन्द्रियाजयादिद्वयं भिक्षोरिति ज्ञेयमेवं हीति सर्वत्र भक्तिसापेक्षत्वं व्यञ्जितम् । एवं कर्मकाण्डमार्ग उक्तः । तत्फलञ्च सगुणः स्वर्गादिरूपस्तत्र गृहस्थस्य स्वर्गः वानप्रस्थादेस्तु तत्तत्तारतम्येन महर्लोकादि । उपासनाकाण्डमार्गानाह योगेनेति । पूर्वोक्तगृहस्थादिधर्मेष्वेव कञ्चन विशेषं फले आह । धर्मेणेति । तत्र वैष्णवयोगस्य भक्तिद्वारा भगवानेव फलं, निर्बीजस्य ब्रह्म, सकामस्याणिमादिसिद्धिद्वारा, आत्मतत्त्वावबोधस्य फलं ब्रह्मानुभवः । वैराग्यं तु ज्ञानाङ्गमेवेति न पृथक् फलं भक्तियोगस्य च फलं विशिष्टो भगवानेवेति ज्ञेयम् ।। ३४–३६ ।।

### श्रीमद्वीरराघवव्याख्या

कथं ज्ञानयोगभक्तियोगाभ्यां भगवानेव प्राप्य इत्यत्राह । यथेति । पृथग्द्वारैः पृथग्भिन्नानि द्वाराणि रूपरसादिग्रहणानि येषां तैरिन्द्रियैर्बहूनां गुणानां रूपरसादीनामाश्रयोऽर्थः क्षीरादिरूपोर्थः एक एव नाना ईयते प्रतीयते, रूपग्राहकेण चक्षुषा शुक्लादिगुणविशिष्टत्वेन रसनेन्द्रियेण मधुरादिगुणविशिष्टतया, त्वगिन्द्रियेण शीतोष्णादिस्पर्शविशिष्टतया च यथा गृह्यत इत्यर्थः, तथा भगवानेक एव शास्त्रोक्ततत्तन्मार्गविशेषैराराध्य त्वाकारेण प्राप्यत्वाकारेण च बुध्यत इत्यर्थः ।। ३३ ।। ❀ ❀ शास्त्रीयमार्गविशेषान् प्रपञ्चयति । त्रिभिः । क्रियया पञ्चरात्रोदितपूजाकलापेन क्रतुभिर्वेदपूर्वभागोदितयज्ञैः दानतपसी स्मृतिचोदिते । तत्र तपः कृच्छ्रचान्द्रायणादि, स्वाध्यायः वेदाध्ययनं, मर्शनं वेदार्थावमर्शनम् । आत्मजयः शमः, इन्द्रियजयो दमः, कर्मणां संन्यासः फलासङ्गराहित्येनानुष्ठानम् ।। ३४ ।। ❀ ❀ विविधाङ्गेन बह्वङ्गोपकृतेन भक्तियोगेन भगवद्भक्तियोगेन तथाविधेन योगेन प्रकृतिविविक्तात्मयाथात्म्यज्ञानयोगेन उभयचिह्नेन सकामनिष्कामलक्षणेन धर्मेण तमेवाह । य इति । सकामधर्मप्राप्यं स्वर्गाद्यपि भगवत एवेत्यर्थः । अत्र 'इष्टापूर्तं बहुधा जातं जायमानं विश्वं बिभर्ति भुवनस्य नाभिः, तदेवाग्निस्तद्वायुस्तत् सूर्य्यस्तदु चन्द्रमाः ।'

अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च । यो यो यां यां तनुं भक्तः श्रद्धयार्चितुमिच्छति ।।
तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम् । स तया श्रद्धया युक्तस्तस्याराधनमीहते ।।
लभते च ततः कामान् मयैव विहितान् हि तान् । अन्तवत्तु फलं तेषां तद्भवत्यल्पमेधसाम् ।।

'फलमत उपपत्तेः । ३ । २ । ३९' इत्यादिश्रुतिस्मृतिसूत्रार्थोऽभिप्रेतः ।। ३५ ।। ❀ ❀ तस्मादात्मतत्त्वावबोधेनात्मयाथात्म्यज्ञानयोगेन दृढेन वैराग्येण च एभिः क्रियाभिश्च सगुणः मङ्गलगुणकः निर्गुणः हेयगुणरहितः स्वदृक् स्वप्रकाशः भगवानेक एवेयते प्राप्यते तत्र क्रत्वादिभिरिन्द्रादिरूपेणाराध्यमानोऽन्तवत्फलप्रदः साक्षाज्ज्ञानयोगभक्तियोगादिभिराराधितस्तु निरतिशयमोक्षाख्यफलप्रद इति भावः ।। ३६ ।।

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

एकस्यानेकगुणविषयत्वं कुत्र दृष्टमिति तत्राह। यथेति। यथा बहूनां शब्दस्पर्शरूपरसगन्धगुरुत्वादीनां गुणानामाश्रयो बहुगुणाश्रय एकोऽर्थः पदार्थो नानेयते कैः पृथक्कारैः पृथक्कारश्चरणं वर्तनं येषां तानि तैर्भिन्नमार्गैरिन्द्रियैः श्रोत्रेण शब्दवान् त्वचा स्पर्शवांश्चक्षुषा शुक्लादिरूपवान् जिह्वया रसवान् घ्राणेन गन्धवान् पाणिना गुरुरिति ज्ञायते एवं स भगवानेको ज्ञानानन्दादिबहुगुणाश्रयः शास्त्रवर्त्मभिर्वेदान्तादिसच्छास्त्रमार्गैरानन्दवान् ज्ञानवानित्यादिबहुगुणविषयत्वेन ज्ञायत इत्यन्वयः॥ ३३॥ ❀ ❀ भक्तिज्ञानविषयवत्ससाधनक्रियादीनामपि भगवानेव विषय इत्याह। क्रिययेत्यादिश्लोकत्रयेण। क्रियया सन्ध्यावन्दनादिलक्षणया भगवल्लिङ्गानां दर्शनेनात्मनो मनसश्चक्षुरादीन्द्रियाणां जयेन कर्मणामशास्त्रविहितानां संन्यासेन त्यागेन॥ ३४॥ ❀ ❀ एकस्य धर्मस्योभयचिह्नत्वं कथमिति तत्राह। य इति। मतुप् प्रत्येकमभिसम्बद्ध्यते प्रवृत्तिमान्निवृत्तिमानिति भगवदुपासनादिप्रवृत्तिर्हिंसादिनिवृत्तिस्तद्वानित्यर्थः॥ ३५-३६॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः।

इन्द्रियैर्नानेयते इति मनसा तु सर्व्वांश एव गृह्यते इति, अतः सर्व्वांशप्रत्यायकत्वाद्भगवद्भक्तियोगस्तु मनःस्थानीयो ज्ञेयः। अतः स एवाङ्गित्वेन निगदितः। भावैरित्यत्र 'कामैरिति क्वचिन्नानायते' इति पुण्यारण्यः॥ ३३॥ ❀ ❀ तत्र पूर्णदर्शनहेतुं भक्तियोगं खण्डदर्शनहेतुं क्रियादिकञ्च गणयन् तत्तत्प्राप्यतदाविर्भावभेदान् दर्शयति। क्रिययेति त्रिकेण। क्रिययेत्यादित्रयं गृहस्थस्य धर्मः। तपो वानप्रस्थस्य स्वाध्यायमर्शने ब्रह्मचारिणः। आत्मेति द्वयं संन्यासिन इति कर्म्मकाण्डमार्गमुक्त्वा उपासनाकाण्डमार्गमाह। योगेनेति। विविधाङ्गेन नानाभेदेन ज्ञानकाण्डमार्गमाह। भक्तियोगेनेति। आत्मतत्त्वावबोधेनेति च प्रेम्णा ब्रह्मानुभवेन चेत्यर्थः। तत्र भक्तेर्द्वारभूतानुष्ठानविशेषमाह। धर्म्मेणेति। भगवद्धर्मेणेत्यर्थः। तदेव दर्शयति। उभयं चिह्नं यत्र तेनेति। उभयचिह्नत्वमेव व्यञ्जयति। यो धर्म्मः प्रवृत्तिः श्रीभगवति निवृत्तिरन्यत्र तद्द्वयवानिति। द्वितीयमार्गस्य द्वारमाह। वैराग्येण च निवृत्तिमात्रात्मकेनेत्यर्थः। अत्र साद्ध्यमप्यन्तर्भूतं ज्ञेयमत्र प्राप्यस्याविर्भावभेदानाह। सगुणः स्वर्गादिरूपः कर्म्ममार्गैः। निर्गुणो ब्रह्मरूपो ब्रह्मानुभवेन स्वदृक् स्वस्वरूपेणैव सर्व्वद्रष्टा भगवांस्तु भक्तियोगेन अष्टाङ्गयोगस्तु तद्द्वयाङ्गत्वसंपादनानुसारेण तद्द्वयप्रापकः। क्वचित् तत्तत् सिद्धिरूपसगुणप्रापकश्चेत्यर्थः॥ ३४-३६॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

न केवलं ज्ञानभक्तिगम्य एव भगवानपि त्वनन्तशक्तित्वात् सर्वसाधनगम्य इत्यत्र दृष्टान्तमाह। यथेति बहूनां रूपरसादीनां गुणानामाश्रयः क्षीरादिरेक एवापि पृथग्द्वारैः पृथङ्मार्गप्रवृत्तैरिन्द्रियैर्नाना प्रतीयते चक्षुषा शुक्ल इति। रसनेन मधुर इति। त्वचा शीत इति। नासिकया सुगन्ध इति। श्रोत्रेण क्षीराभिधान इत्येवमेकैक एव स्वग्राह्यो धर्म्मोऽनुभूयते नान्यग्राह्योऽत एव तत्तद्धर्मवान्नानापि क्षीररूपोऽर्थः। मनसेन्द्रियराजेन तु सुखदस्तृप्तिकरोऽयं शुक्लमधुरशीतलसुगन्धक्षीराभिधानोऽयमर्थ इति तत्तत्सर्व्वधर्म्मयुक्त एव स प्रतीयते तथैव शास्त्रवर्त्मभिः कर्म्मज्ञानादिभिरपि साधनैः स्वर्गापवर्गादिरूपत्वात् स्वर्गप्रद ईश्वर इत्यपवर्गप्रद आत्मा ब्रह्मेत्येकोंऽश एवानुभूयते, भक्त्या तु साधनमुख्यया प्रेमविषयीभूतो भगवान् स्वर्गापवर्गादिसर्व्वफलप्रद ईश्वरादिशब्दवाच्यः स सर्व्वथैवानुभूयत इति भागवतामृतदृष्टा व्याख्या। तथा हि

> यथा रूपरसादीनां गुणनामाश्रयः सदा। क्षीरादिरेक एवार्थो ज्ञायते बहुधेन्द्रियैः॥
> दृशा शुक्लो रसनया मधुरो भगवांस्तथा। उपासनाभिर्बहुधा स एकोऽपि प्रतीयते॥
> जिह्वयैव यथा ग्राह्यं माधुर्य्यं तस्य नापरैः। तथैव चक्षुरादीनि गृह्णन्त्यर्थं निजं निजम्॥
> तथान्या बाह्यकरणस्थानीयोपासनाखिलाः। भक्तिस्तु चेतःस्थानीया तत्तत्सर्व्वार्थलाभतः॥
> इति प्रबलशास्त्रेषु तस्य ब्रह्मस्वरूपतः। माधुर्य्यादिगुणाधिक्यात् कृष्णस्य श्रेष्ठतोच्यते॥ इति॥ ३३॥

शास्त्रमार्गानेव प्रपञ्चयति। क्रिययेति त्रिभिः। क्रियादित्रयं गृहस्थस्य धर्म्मः। तपो वानप्रस्थस्य। मर्शनं मीमांसा। स्वाध्यायमर्शने ब्रह्मचारिणः। आत्मेति द्वयं भिक्षोः॥ ३४॥ ❀ ❀ भक्तियोगेन चैव हीति चकारेण क्रिययेत्यादीनां भक्तिमिश्रत्वं ज्ञापयति। क्रियया भक्तियोगेन च क्रतुभिर्भक्तियोगेन च दानैर्भक्तियोगेन चेत्येवं सर्व्वत्र योजनाद्भक्तियोगमिश्रणं विना क्रियादीनां प्रतिस्वफलसाधकत्वाशक्तिं बोधयति। एवहिशब्दाभ्यामवधारणनिश्चयवाचकाभ्यां क्रियादिसाध्यं वस्तु भक्तियोगेनैव केवलेन लभ्यं निश्चितं स्यादिति च बोधयत्यतो भक्तियोगस्य सर्व्वमुख्यत्वं भगवत्स्वरूपस्येव ज्ञेयम्। उभयचिह्नेन सकामनिष्कामलक्षणेन तदेव स्पष्टयति। यो धर्मः प्रवृत्तिनिवृत्तिमान्॥ ३५॥ ❀ ❀ सगुणः क्रियाक्रत्वादिप्राप्यः स्वर्गादिरूप इत्यर्थः। निर्गुणः संन्यासयोगादिप्राप्यः ब्रह्मपरमात्मादि-

स्वरूप इत्यर्थः। स्वदृक्स्वरूपेणैव सर्वसाधनसाध्यद्रष्टा तन्त्रेणान्यश्चार्थः। स्वदृक् स्वाननन्यभक्तानेवासक्त्या पश्यतीति स्वदृक् स्वस्यैव भगवद्रूपस्यैव न तु परमात्मादिरूपस्य दृक् दर्शनं साध्यत्वज्ञानं यत्र सः शुद्धभक्तियोगप्राप्यो भगवद्रूप इत्यर्थः॥ ३६॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

अन्यान्यपि साधनानि सर्वाणि भगवद्विषयकाण्येवेति सदृष्टान्तमाह। यथेति। बहुगुणाश्रयः पुष्पादिर्नानेन्द्रियैः पृथग्द्वारैः पृथक् प्रवृत्तिनिमित्तैः। एक एवेयते विषयीक्रियते तद्वच्छास्त्रवर्त्मभिः शास्त्रीयैः साधनैर्भगवान् एष एव विषयीक्रियते॥ ३३॥ ॐ ॐ एतदेव प्रपञ्चयति। क्रिययेति त्रिभिः॥ ३४-३५॥ ॐ ॐ सगुणः कल्याणगुणनिधिः निर्गुणः हेयगुणशून्यः॥ ३६॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

नन्वेको भगवान् कथमनेकविधानि शास्त्राणीत्याशङ्क्य दृष्टान्तेन स्पष्टयति—यथेन्द्रियैरिति। यथा रूपरसगन्धस्पर्शवत् द्रव्यं सर्वैरेवेन्द्रियैः पृथक् प्रतीयते। चक्षू रूपपुरस्कारेण पदार्थं गृह्णाति, रसना घ्राणं गन्धपुरस्कारेणेत्यादि। एवमनेकधर्मयुक्तो भगवान् तद्धर्मपुरस्कारेण प्रतिपाद्यत इति सर्वेषां शास्त्राणामेक एव भगवान् तत्तद्धर्ममुख्यतया नाना ईयते॥ ३३॥ ॐ ॐ किञ्च, सर्वैरेव साधनैरेक एव प्राप्यत इत्याह—क्रिययेत्यादित्रिभिः। क्रियया स्नानादिस्मार्तक्रियया, क्रतुभिर्यज्ञैः, दानैस्तुलापुरुषादिभिः। तपः, स्वाध्यायो वेदाध्ययनम्, अवमर्शो विचारो मीमांसा। आत्मान्तःकरणमिन्द्रियाणि च तेषां जयः। संन्यासः अहंममेत्यादिसर्वपरित्यागः। कर्मणामित्यावश्यकत्वज्ञापकम्। विविधाङ्गो योगः षडङ्गोऽष्टाङ्ग इत्यादि। भक्तियोगोऽप्यनेकविधः। धर्मो यो विधीयते वैराग्यरागोपाधिभेदेन द्विविधः, अतस्तयोर्भेदमाह—यः प्रवृत्तिनिवृत्तिमानिति। आत्मतत्त्वावबोधः साङ्ख्यम्। दृढेन वैराग्येणेति विरक्तिशास्त्रम्। एवं सर्वैरेव साधनैरेक एव भगवान् पृथक् पृथगीयते। ननु सोपाधीनां गुणप्राप्तिः निरुपाधीनां चाऽऽत्मप्राप्तिरिति कथमेकफलमित्याशङ्क्याऽऽह—स एव सगुणो निर्गुणः स्वदृगात्मा चेत्यर्थः॥ ३४-३६॥

### श्रीगिरिधरकृता बालप्रबोधिनी

फलैकत्वे कथं मार्गभेद इत्यपेक्षायां तद्दृष्टान्तेन व्यवस्थापयति—यथेति। यथा बहूनां रूपरसादिगुणानामाश्रयो गुडक्षीरादिरेक एव पदार्थः पृथग्द्वारैः मार्गभेदप्रवृत्तैरिन्द्रियैः नाना प्रतीयते, चक्षुषा शुक्ल इति, रसनेन मधुर इति, घ्राणेन सुगन्धिरिति, स्पर्शनेन शीत इति तद्वदेकोऽपि भगवान् शास्त्रवर्त्मभिः नाना प्रतीयते। ज्ञानमार्गे निर्गुण इति भक्त्यादिमार्गे सगुण इति॥ ३३॥ ॐ ॐ शास्त्रमार्गानेव प्रपञ्चयति-क्रिययेति त्रिभिः। क्रियया पूर्त्तरूपया क्रतुभिर्यज्ञैः तुलापुरुषादिदानैः। तपः कृच्छ्रचान्द्रायणादिः, स्वाध्यायः वेदाध्ययनम्, मर्शनं वेदविचारः, तैः। आत्मनाऽन्तःकरणस्य जयेन शमेन, इन्द्रियाणां जयेन दमेन। कर्मणां स्ववर्णाश्रमविहितानां सम्यगनुष्ठितानां सन्न्यासेन भगवति समर्पणेन॥ ३४॥ ॐ ॐ विविधाङ्गेन अष्टाङ्गयुक्तेन योगेन। श्रवणादिनवधाभक्तियोगेन। चैवहीति निपातत्रयप्रयोगेण अस्य सर्वसाधनश्रेष्ठत्वं दर्शयति। उभयचिह्नेन सकामनिष्कामलक्षणेन धर्मेण। तमेवाह—य इति। रागवैराग्योपाधिभ्यां यो धर्मः प्रवृत्तिनिवृत्तिमानिति। तत्र सकामधर्मप्राप्यं स्वर्गाद्यपि भगवत एव सगुणरूपमिति भावः॥ ३५॥ ॐ ॐ आत्मनस्तत्त्वस्य याथात्म्यस्य अवबोधेन दृढेन स्थिरेण वैराग्येण च। एभिः क्रियादिसाधनजातैः सगुणः कल्याणगुणपूर्णः निर्गुणश्च स्वदृक् स्वप्रकाशो भगवानेव यथाधिकारमीयते प्राप्यते इत्यन्वयः॥ ३६॥

### हिन्दी अनुवाद

जिस प्रकार रूप, रस एवं गन्ध आदि अनेक गुणोंका आश्रयभूत एक ही पदार्थ भिन्न-भिन्न इन्द्रियों द्वारा विभिन्नरूपमें अनुभूत होता है, वैसे ही शास्त्रके विभिन्न मार्गोंद्वारा एक ही भगवान्‌की अनेक प्रकारसे अनुभूति होती है॥ ३३॥ ॐ ॐ ॐ नाना प्रकारके कर्मकलाप, यज्ञ, दान, तप, वेदाध्ययन, वेदविचार (मीमांसा), मन और इन्द्रियोंके संयम, कर्मोंके त्याग, विविध अङ्गोंवाले योग, भक्तियोग, निवृत्ति और प्रवृत्तिरूप सकाम और निष्काम दोनों प्रकारके धर्म, आत्मतत्त्वके ज्ञान और दृढ़ वैराग्य—इन सभी साधनोंसे सगुण-निर्गुणरूप स्वयंप्रकाश भगवानको ही प्राप्त किया जाता है॥ ३३-३६॥

**प्रावोचं भक्तियोगस्य स्वरूपं ते चतुर्विधम्। कालस्य चाव्यक्तगतेर्योऽन्तर्धावति जन्तुषु॥ ३७॥**
**जीवस्य संसृतीर्बह्वीरविद्याकर्मनिर्मिताः। यास्वङ्ग प्रविशन्नात्मा न वेद गतिमात्मनः॥ ३८॥**
**नैतत्खलायोपदिशेन्नाविनीताय कर्हिचित्। न स्तब्धाय न भिन्नाय नैव धर्मध्वजाय च॥ ३९॥**
**न लोलुपायोपदिशेन्न गृहारूढचेतसे। नाभक्ताय च मे जातु न मद्भक्तद्विषामपि॥ ४०॥**

---

१. प्रा० पा०—ज्ञानं।

### श्रीधरस्वामिविरचिता भावार्थदीपिका

तदेवं ज्ञानयोगमुपसंहृत्य तस्य च भक्तियोगेन समानार्थत्वमुक्त्वा भक्तियोगाद्युपसंहरति। प्रावोचमिति द्वाभ्याम्। चतुर्विधं त्रिगुणनिर्गुणभेदेन अंतर्धावति उत्पत्तिनिधनादि करोति। अंग हे मातः ॥ ३७-३८ ॥ ❀ ❀ उपदेशेऽनधिकारिणो दर्शयति। नैतदिति द्वाभ्याम्। खलाय परोद्वेजकाय भिन्नाय दुराचाराय धर्मध्वजाय दांभिकाय ॥ ३९-४० ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

संसृतीर्योनीः। यासु संसृतिषु प्रविशन्नयं जीव आत्मनः स्वस्य। गतिं शरणम्। मामात्मानं न वेद। अंगेत्यव्ययं संबुद्धौ ॥ ३८ ॥ ❀ ❀ खलो दूषणार्थमेव कृत्रिमभक्त्याऽधिजिगमिषुः। अविनीतः शिष्यमर्यादारहितः। स्तब्धो गर्वी। भिन्नो मतांतराभिनिवेशी। धर्मध्वजो लोभप्रतिष्ठाद्यर्थमेव धर्मनिष्ठः ॥ ३९ ॥ ❀ ❀ लोलुपस्तत्तदोषरहितोपि विषयभोगेतिलोभी। गृहारूढचेताः विषयेष्वनतिलोलुपोऽपि पुत्रदारधनादिष्वत्यासक्तः। अभक्त उक्तानुक्तसर्वदोषरहितोपि मद्भक्तिहीनः। किं च भ्रमप्रमादतः कदाचिदेभ्योप्युपदिशतु नाम जातु कदाचिदपि मद्भक्तद्विषामिति षष्ठ्यंतनिर्देशेन तत्संबंधवतेपि नोपदिशेत्किमुत तेभ्य इति ॥ ४० ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

प्रावोचमिति युग्मकम्। यासु गतिषु गतिं स्वरूपम्। ॥ ३७-३८ ॥ ❀ ❀ नैतदिति युग्मकम्। अविनीताय शिष्यमर्य्यादारहिताय स्तब्धायान्यहेलनगर्ववते। लोलुपाय पूर्वोक्तदोषाभावेऽपि लोभेन गतधैर्य्याय। न मद्भक्तद्विषामिति षष्ठ्यन्तनिर्देशस्तत्सम्बन्धिनेऽपि नोपदिशेदित्यभिप्रायेण बहुत्वं च तद्वेदेष्वेकस्याप्यग्रहणाय ॥ ३९-४० ॥

### श्रीमद्वीरराघवव्याख्या

अन्यदपि पूर्वोक्तमनुवदति। प्रावोचमिति द्वाभ्याम्। तथा भक्तियोगस्य चतुर्विधं तामसराजससात्त्विकादिभेदेन सात्त्विकावान्तरनैर्गुण्यरूपेण चतुर्विधं स्वरूपं नैर्गुण्यभक्तियोगस्य सात्त्विकभक्त्यन्तर्भूतत्वेऽपि तस्य सर्वोत्कृष्टत्वात्तदभिप्रायेण चतुर्विधमित्युक्तं जन्तुष्वन्तर्यो धावति परिच्छिनत्ति तस्याव्यक्तगतेः व्यक्तैरिन्द्रियैर्न व्यज्यते इत्यव्यक्ता गतिर्यस्य तस्य कालस्य स्वरूपम् ॥ ३७ ॥ ❀ ❀ तथा हे अम्ब! आत्मा जीवः यासु प्रविशन्नात्मनो गतिः प्रकारः याथात्म्यमित्यर्थः। तां न वेद ता अविद्याख्यकर्मनिर्मिता जीवस्य संसृतीश्च प्रावोचमुक्तवानहम् ॥ ३८ ॥ ❀ ❀ मयोक्तमिदं सर्ववेदान्तार्थरूपमतिगोप्यमनधिकारिणे नोपदेष्टव्यमधिकारिणे एवोपदेष्टव्यमिति वदन्नेतच्छ्रवणकीर्त्तनादिफलं च दर्शयन्नुपसंहरति। नैतदिति। खलाय परोद्वेजकाय स्तब्धाय मूर्खाय भिन्नाय दुराचाराय धर्मध्वजाय दाम्भिकाय ॥ ३९-४० ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली।

इदानीमुक्तपरमप्रमेयमुपसंहरति प्रावोचमिति ॥ ३७ ॥ ❀ ❀ संसृतीर्गतीः यासु संसृतिषु प्रविशन्नयं जीव आत्मनः स्वस्य गतिं शरणमात्मानं न वेद ॥ ३८ ॥ ❀ ❀ उपदिष्टतत्त्वज्ञानानधिकारिण आह। नैतदिति। खल इन्द्रियारामो दुर्जन इत्यर्थः। स्तब्धो गुरुनियोगमकुर्वाणः भिन्नो वैष्णवसमयेतरसमयनिष्ठः धर्मध्वजो दम्भवान् ॥ ३९ ॥ ❀ ❀ लोलुपो विषयाभिलाषी खलत्वादिदोषरहितोऽपि ममाभक्तश्चेन्नैवोपदेशयोग्यः प्रसङ्गेनापीत्याशयेनोक्तम् जात्विति। नैतावता पूर्यत इत्याह। न भक्तद्विषामिति ॥ ४० ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

तत्र भक्तियोगमेव प्राधान्यादनुवदति। प्रावोचमिति युग्मकेन। स्वं तस्यैव स्वरूपं रूप्यते येन तच्चतुर्विधं लक्षणम्। तदर्थमेव च कालादयो निरूपिता इत्याह। कालस्येति ॥ ३७-३८ ॥ ❀ ❀ नैतदिति युग्मकम्। खलः परपक्षोऽपि दूषयितुमिच्छया प्रविष्टः अविनीतः शिष्यमर्य्यादारहितः। स्तब्धो गर्व्वी भिन्नो मतान्तरेण भेदं प्राप्तः धर्म्मध्वजो जीविकामात्रार्थमात्मनि तादृशत्वव्यञ्जकः लोलुपस्तत्तद्दोषरहितोऽपि लोभेन गतधैर्य्यः। गृहारूढचेताः पुत्रजायादिष्वत्यन्तासक्तः अभक्तस्तद्विपरीतगुणयुक्तोऽपि मद्भक्तिविरोधिसंस्कारः भक्तद्विषो भक्तिसंस्काराभाससद्भावेऽपि भक्तविरोधरूपमहादोषवन्तः। बहुत्वं तद्वेदेष्वेकोऽपि न ग्राह्य इति भावः ॥ ३९-४० ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

तदेवं ज्ञानयोगमुपसंहृत्य तस्य च भक्तियोगप्राप्ये भगवत्येव निष्ठां प्रदर्श्य समुचितदृष्टान्तेन भगवत एव कर्म्मादिसर्व्वमार्गलभ्यत्वमुपपाद्येदानीं भक्तियोगादिकमुपसंहरति। प्रावोचमिति द्वाभ्याम्। चतुर्विधं त्रिगुणनिर्गुणभेदेन ॥ ३७-३८ ॥ ❀ ❀ एतदुपदेशानधिकारिणो दर्शयति। नैतदिति। खलो दूषणार्थमेव कृत्रिमभक्त्या अधिजिगमिषुः अविनीतः शिष्यमर्य्या-

दारहितः स्तब्धोऽतिगर्ववान् भिन्नो मतान्तरेण भेदं प्राप्तः धर्मध्वजो लाभप्रतिष्ठाद्यर्थमेव धर्मनिष्ठः । लोलुपस्तत्तद्दोषरहितोऽपि विषयभोगेऽतिलोभी गृहारूढचेताः विषयेष्वनतिलोलुपोऽपि पुत्रदारधनादिष्वत्यासक्तः अभक्तः उक्तानुक्तसर्वदोषरहितोऽपि मद्भक्तिहीनः । किञ्च भ्रमप्रमादतः कदाचिदेभ्योऽप्युपदिशतु नाम जातु कदाचिदपि मद्भक्तद्विषामिति षष्ठ्यन्तनिर्देशेन तत्सम्बन्धिनेऽपि नोपदिशेत् किमुत तेभ्य इति ॥ ३९, ४० ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

स्वोक्तं संगृह्णन्नुपसंहरति । प्रावोचमिति द्वाभ्याम् । अन्तर्धावति उत्पत्त्यादि कुर्वन् प्रविशति ॥ ३७ ॥ ❀ ❀ अङ्ग ! हे अम्ब ! ॥ ३८ ॥ ❀ ❀ स्वोक्तशास्त्रश्रवणादेः । अनधिकारिणः अधिकारिणश्चाह । नैतदिति चतुर्भिः खलाय । परोद्वेजकाय भिन्नाय बाह्याय ॥ ३९—४१ ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

एवमेकं फलमुपपाद्य, उक्तानां भक्तिभेदानां सगुणनिर्गुणभेदप्रतिपादनार्थं चातुर्विध्यमाह—प्रावोचमिति । भेदः पारमार्थिक इति शास्त्रं पुरस्कृत्य त्रिविधो भक्तियोग उक्तः । ते च साम्प्रतं विष्णुस्वाम्यनुसारिणः, तत्त्ववादिनः रामानुजाश्चेति तमोरजःसत्त्वैर्भिन्नः । अस्मत्प्रतिपादितश्च नैर्गुण्यः । एवं चतुर्विधोऽपि भगवता प्रतिपादितः "अभिसन्धाय यो[1] हिंसाम्" इत्यादिभिः वैराग्यार्थं कालस्याप्यव्यक्तगतेः स्वरूपमुक्तम् । अव्यक्ततायां हेतुः—योऽन्तर्धावति जन्तुष्विति ॥ ३७ ॥ ❀ ❀ तस्य वैराग्यशेषत्वप्रतिपादनायाऽह—जीवस्येति । त्रिविधा गतयो जीवस्योक्ताः, प्रत्येकं बहुविधाः, अविद्याकर्मनिर्मिता इति । सर्वा एव अज्ञानोपाधिकर्मनिर्मिताः प्रावोचमिति सम्बन्धः । तासां कथनस्य प्रयोजनमाह—यास्वनुप्रविशन्निति । यासु गतिषु कर्मणा स्वयमनुप्रविशन्नात्मनो गतिं न वेद । अत एव तत्प्रवेशाभाव एवाऽऽत्मगतिर्भवतीति निषेधार्थमुक्तमित्यर्थः ॥ ३८ ॥ ❀ ❀ एवं सर्वमेव सिद्धान्तमुक्त्वा, इयं सर्गलीलेति, अस्या वक्तारो भविष्यन्तीति येष्वेतद्वक्तव्यं येषु च न वक्तव्यम्, तानुभयान् भेदेन निर्दिशति नैतत् खलायेति चतुर्भिः—द्वाभ्यां निषेधमाह—खलः सूचकः परमर्मभेदी राजसभासु प्रसिद्धः । अनुरोधात् तस्योपदेशः प्राप्नोति । अविनीतः स्तब्धः श्रद्धारहितः स्पष्टः । भिन्नो मतान्तरैः । धर्मध्वजः पाखण्डी । लोलुप इन्द्रियविषयेष्वतिचपलः । गृहेष्वारूढं चित्तं यस्य सर्वथा गृहस्थः, मम चाऽभक्तः, मम भक्तानां सर्वेषामेव वा द्वेषी । एवं नवविधा अवक्तव्या निरूपिताः । एकादशविधाश्च वक्तव्याः, अन्ये मध्यमाः । श्रवणे परमश्रद्धावान् । भक्तो भगवतः । विनीतो वक्तरि । सर्वत्र च असूयारहितश्च । तथा सर्वप्राणिषु कृता मैत्री येन । शुश्रूषायामभितो रतिर्यस्य । बाह्येष्वर्थेषु जातो विरागो यस्य । शान्तं च चित्तं यस्य । मात्सर्यरहितो निर्मत्सरः । शुचिर्यः पापादिना नाभिभूतः । अथवा शुचय इति सर्वत्र विशेषणं पूर्वोक्तनवविधस्यापि । यस्य चाऽहं प्रेयसामपि प्रियः तस्मै सर्वथा वक्तव्यम् । सर्वगुणदोषविचाराभावेनेति पृथगुक्तम् ॥ ४२ ॥

### श्रीगिरिधरकृता बालप्रबोधिनी

एवं ज्ञानयोगस्य भक्तियोगेन समानार्थत्वमुक्त्वा पूर्वोक्तमेव भक्तियोगादिकमनुवदति—प्रावोचमिति द्वयेन । सगुणनिर्गुणभेदेन चतुर्विधभक्तियोगस्य स्वरूपम् । यो जन्तुषु प्राणिषु अन्तः प्रविश्य धावति स्वर्गनरकादौ नयति, अत एव अव्यक्ता गतिश्चेष्टा यस्य तस्य कालस्य च स्वरूपं ते तुभ्यं प्रावोचमुक्तवानस्मि ॥ ३७ ॥ ❀ ❀ अङ्ग हे मातः यासु प्रविशन् आत्मा जीवः आत्मनो गतिं स्वरूपयाथात्म्यं न वेद ताः अविद्यया देहाद्यात्माध्यासेन यानि कृतानि कर्माणि तैर्निर्मिताः प्राप्ताः बह्वीः देवमनुष्यनरकादिरूपाः जीवस्य संसृतीश्च प्रावोचमिति सम्बन्धः ॥ ३८ ॥ ❀ ❀ मयोक्तमिदं सर्वशास्त्ररहस्यं अनधिकारिणे नैव उपदेष्टव्यमित्याह—नैतदिति द्वयेन । एतत् खलादिभ्यः कर्हिचिदपि नैवोपदिशेदिति द्वयोरन्वयः । खलाय परोद्वेजकाय दूषणार्थं पृच्छकाय । अविनीताय अनम्राय । स्तब्धाय गर्विताय । भिन्नाय नास्तिकादिमतान्तरप्राप्ताय । धर्मध्वजाय लाभपूजार्थं स्वधर्मिष्ठत्वप्रकाशकाय ॥ ३९ ॥ ❀ ❀ लोलुपाय विषयभोगासक्ताय । गृहारूढचेतसे गृहस्त्रीपुत्रधनादिषु आसक्तचित्ताय । मे मम अभक्ताय भक्तिरहिताय । मद्भक्तद्वेषिभ्योऽपि ॥ ४० ॥

### हिन्दी अनुवाद

माताजी ! सात्त्विक, राजस, तामस और निर्गुणभेदसे चार प्रकारके भक्तियोगका और जो प्राणियोंके जन्मादि विकारोंका हेतु है तथा जिसकी गति जानी नहीं जाती, उस कालका स्वरूप मैं तुमसे कह ही चुका हूँ ॥ ३७ ॥ ❀ ❀

---

१. यत्. ख. ग. ङ. । १. मूलनतार्थशब्दस्यायं पर्यायः ।

देवि! अविद्याजनित कर्मके कारण जीवकी अनेकों गतियाँ होती हैं; उनमें जानेपर वह अपने स्वरूपको नहीं पहचान सकता ॥ ३८ ॥ ❀ ❀ मैंने तुम्हें जो ज्ञानोपदेश दिया है—उसे दुष्ट, दुर्विनीत, घमंडी, दुराचारी और धर्मध्वजी ( दम्भी ) पुरुषोंको नहीं सुनाना चाहिये ॥ ३९ ॥ ❀ ❀ जो विषयलोलुप हो, गृहासक्त हो, मेरा भक्त न हो अथवा मेरे भक्तोंसे द्वेष करनेवाला हो, उसे भी इसका उपदेश कभी न करे ॥ ४० ॥

श्रद्दधानाय भक्ताय विनीतायानसूयवे। भूतेषु कृतमैत्राय शुश्रूषाभिरताय च ॥ ४१ ॥
बहिर्जातविरागाय शान्तचित्ताय दीयताम्[1]। निर्मत्सराय शुचये यस्याहं प्रेयसां प्रियः ॥ ४२ ॥
य इदं शृणुयादम्ब श्रद्धया पुरुषः सकृत्। यो वाभिधत्ते मच्चित्तः स ह्येति पदवीं च[2] मे ॥ ४३ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां तृतीयस्कन्धे कापिलेयोपा[3]ख्याने द्वात्रिंशोऽध्यायः ॥ ३२ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

अधिकारिण आह। श्रद्दधानायेति द्वाभ्याम् ॥ ४१-४२ ॥ ❀ ❀ एतच्छ्रवणकीर्तनपरस्यापि मत्पदप्राप्तिरेव फलमित्याह। य इति। अप्यर्थे चकारः। सोऽपि मत्पदवीमेति हि निश्चितम् ॥ ४३ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कंधे टीकायां द्वात्रिंशत्तमोऽध्यायः ॥ ३२ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

तद्विपरीतानधिकारिणः। श्रद्धधानो मद्भक्तगुरुमदुपदिष्टशास्त्रयोर्विश्वासवान्। भक्तो भक्तिसंस्कारयुक्तः। विनीतः शिष्यमर्यादायुक्तः। अनसूयुः सतीर्थादिगुणाधिक्येन गुर्वादराधिक्यं दृष्टे प्रत्युत सुखवान्। कृतमैत्रो दयायुक्तः। शुश्रूषाभिरतो गुरुसेवायामनलसः ॥ ४१ ॥ ❀ ❀ बहिरिति द्वयस्य यथा बहिर्विरक्तस्तथान्तरपीत्यर्थः। निर्मत्सरः सर्वशुभाकांक्षी। शुचिर्बहिरंतः पवित्रः। एषां हेतुहेतुमद्भावो यथेष्टं विवेचनीयः। यस्याहमिति। तेन गुरुणा दीयते इत्यन्वयाद् गुरुलक्षणमप्युक्तम्। यद्वा। तादृशशिष्यस्य फलमाह–यस्येति। एवंभूतस्य यस्याहमतिप्रेयान्भविष्यामीत्यर्थः। अत्र यद्यपि पूर्वदोषा अपि त्यक्तास्स्युस्तथापि तेषामुद्देशो व्यतिरेकस्यापि पृथग्ज्ञानार्थं इति ज्ञेयम्। किं च एते गुणास्तु समुदिता एव ज्ञेयाः। तत्तदंगवैकल्ये तु न्यूनाधिकारित्वमिति तानेव गुणान्समुद्दिश्याह–शुचय इति ॥ ४२ ॥ ❀ ❀ 'अंब–हिताहितवेदने' इति धातोरजंताट्टापि संबुद्धौ हे अंबेति। मातृत्वादेवोक्तमिदं तुभ्यं पूर्वोक्ताधिकारिविशेषणानादरेणेति संबुद्धयभिप्रायः ॥ ४३ ॥

इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे तृतीयस्कन्धे द्वात्रिंशोऽध्यायः ॥ ३२ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

श्रद्धधानायेति युग्मकम् ॥ ४१ ॥ ❀ ❀ पदवीं भक्तियोगम् ॥ ४२-४३ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीराधारमणदासगोस्वामिविरचितदीपिन्याख्यदीपिकाटिप्पण्यां द्वात्रिंशोऽध्यायः ॥ ३२ ॥

### श्रीमद्वीरराघवव्याख्या

अधिकारिणमाह। श्रद्धधानाय शुश्रूषात्वरान्विताय बहिर्जातविरागायेति दम उक्तः। शान्तचित्तायेति शम उक्तः। इदं च शमदमादिगुणजातं श्रवणोपयुक्तं न त्वात्यन्तिकमुच्यते तस्य श्रवणानन्तरभाविनस्ततः पूर्वतनत्वासम्भवात्प्रशान्तचित्ताय शमान्वितायेत्यादिवच्छुचये सदाचारनिष्ठाय यस्य प्रेयसां प्रीतिविषयाणां वस्तूनां मध्ये अहं प्रियः निरतिशयप्रीतिविषयस्तस्मै ॥४१-४२॥ ❀ ❀ य इति। हे अम्ब! इत्थं मदुक्तमष्टाध्यायात्मकं यः पुरुषः श्रद्धया सकृदपि शृणुयाद्यश्चाभिधत्ते सोऽपि मच्चित्तः जातवैराग्यो मदुपासननिष्ठो भूत्वा मे पदवीं मार्गं मुक्तिमेति प्राप्नोति ॥ ४३ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कंधे श्रीमद्वीरराघवाचार्यकृतभागवतचंद्रचंद्रिकायां द्वात्रिंशोऽध्यायः ॥ ३२ ॥

---

१. प्रा० पा०—दीयते। २. प्रा० पा०—मम। ३. प्रा० पा०—कापिलीये।

दोषयुक्तो वा भवेत्; अतस्तत्र नाम न तिष्ठेत्। अतो निरन्तरं नामस्थानं श्वपचजिह्वैव, तस्यैव तथा दर्शनात्; स निरूपितो वाल्मीकिः। किञ्च, यज्जिह्वाग्रे विद्यमानमपि नाम तुभ्यं त्वदर्थमेव; न तु तेनाऽपि शुद्धौ जातायां कार्यान्तरं करोति; किन्तु यथा स रामकथामेव लोके प्रकटितवान्। एतन्नाममाहात्म्यमसम्भावितं मत्वा युक्त्या साधयति—तेपुस्तप इति। ये पूर्वजन्मनि प्रथमं तपस्तेपुः। ततः शुद्धब्राह्मणजन्मनि जुहुवुः यज्ञादिकं कृतवन्तः। ततोऽप्युत्कृष्टजन्मनि सस्नुः सर्वतीर्थाभिगमनं कृतवन्तः ततोऽग्रिमजन्मनि आर्याः सन्तो जाताः वेदवेदार्थपरिनिष्ठिताः। ततोऽप्यग्रिमजन्मनि परं मोत्कृष्टदेहं प्राप्य, व्यासवाल्मीकिशुकपराशरादिरूपा भूत्वा ब्रह्माऽनूचुः, ब्रह्मोपदेशकर्तारो जाताः। त एव नाम गृणन्ति। अतः श्वपचस्याऽपि तथा नामग्रहणे केवलमल्पपापवशाद्भगवदिच्छया नाममाहात्म्यं ख्यापयितुं श्वपचत्वं जातमिति निरन्तरनामोच्चारणादवसीयते। अयं महानेव तथा जात इति; अतो युक्तमुक्तमित्यर्थः। एवं भगवतो माहात्म्यं साक्षात्परम्परया चोक्त्वा, अभिप्रेतार्थसिद्ध्यर्थं तं नमस्यति—तं त्वामहमिति। तं पूर्वोक्तप्रसिद्धियुक्तम्, त्वां तथैव परिदृश्यमानम्। व्यवहारे पुत्रत्वान्नमस्कारानौचित्यमाशङ्क्याऽऽह—परं ब्रह्मेति। जीवानां मध्ये अयं व्यवहारः, न तु परब्रह्मणि; तस्य लौकिकसम्बन्धकृतगुणदोषौ न स्तः। पुमांसमिति स एव सर्वत्र पुरि वर्तत इति। किञ्च, उपास्यो भवानेव। यतः प्रत्यक् स्रोतस्यन्तर्मुखे चित्ते सम्यग्विभाव्यो भवान् 'कश्चिद्धीरः प्रत्यगात्मानमैक्षत्' इति श्रुतेः। स भवान् अतो फलरूपः, साधनरूपश्च। एवं भगवदवतारत्वमुक्त्वा, तत्रापि विशेषमाह—स्वतेजसा ध्वस्तगुणप्रवाहमिति। स्वस्यैव तेजसा चिच्छक्त्या स्वप्रकाशज्ञानेन ध्वस्तो गुणप्रवाहो देहाद्यध्यासो येन। अतो मोक्षेप्सोः ज्ञानकलावतीर्ण एव सेव्य इत्युक्तम्। अतस्तमेव वन्दे विष्णुमिति तस्य मूलरूपकीर्तनम्, वेदार्थरूपं वा। प्रमाणमाह—वेदगर्भमिति। तवैव निःश्वसिता वेदा इत्यर्थः॥ ८॥

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

त्वमित्यत्र। एतदिति। देहे तन्त्रत्वकथनम्॥ ५॥ ❀ ❀ यन्नामधेयेत्यत्र। द्वितीयमिति विश्वाधारस्य स्वोदरे स्थितिरूपम्। मन्त्रोपदेशपर इति। अनुकीर्तनशब्दो मन्त्रोपदेशपरः। तथा च, वैष्णवदीक्षाप्रकारेण प्राप्तोपदेशश्चाण्डालोऽपि तस्मिन्नेव जन्मनि सोमाभिषवयोग्यो भवतीति कस्यचिट्टीकाकारस्य मतमित्यर्थः। इदं मतं तंत्रावलम्बि। विष्णुतत्त्वं परिज्ञाय एकं वाऽनेकभेदवत्। 'दीक्षयेन्मेदिनीं सर्वां किं पुनश्चोपसंनतान्' इति विज्ञानोपनिषत्संहितायाः षोडशे पटले कथनादिति। श्रौतावलम्बिमतान्तरमाहुः—सर्वमेथ इत्यादि। तत्र द्वितीयेऽस्वरसं स्फुटीकुर्वन्ति—वस्तुत इत्यादि। वाल्मीकेरिति वाल्मीकेरुपाख्यानम्। तथा च नाममाहात्म्यपक्ष एव मुख्य इत्यर्थः॥ ६॥

### श्रीगिरिधरकृता बालप्रबोधिनी।

अतो हे विभो न मया त्वमपत्यान्तरवज्जठरे, धृतः किन्तु पाप्मनां पापिष्ठानां प्रशमाय विनाशाय निदेशभाजामाज्ञानुवर्तिनां विभूतये समृद्ध्ये च त्वं सदैव देहतन्त्रः स्वेच्छया स्वीकृतमूर्तिर्भवसीति। यथा तत्तत्कार्याय सूकरादयस्तथाऽऽत्मपथोपलब्धये ज्ञानमार्गप्रदर्शनायायमपि स्वेच्छयैव तवावतार इत्यन्वयः॥ ५॥ ❀ ❀ अतस्त्वद्दर्शनादेवाहं कृतार्थाऽस्मीति कैमुत्यन्यायेनाह—यन्नामेति। कचित् कदाचिदपि यस्य तव नामधेयस्य श्रवणात् अनुकीर्त्तनाद्वा यस्य तव प्रह्वणात् प्रणामात् यस्य स्मरणाच्च श्वादः श्वपचोऽपि सद्यस्तत्क्षणमेव सवनाय कल्पते सोमयाजिवदादरणीयो भवति। यद्येवं तर्हि हे भगवन् ते तव दर्शनादहं कृतार्था जातेति कुतः पुनः ? किं पुनर्वक्तव्यमित्यर्थः। न्वित्याश्चर्ये॥ ६॥ ❀ ❀ न केवलं यागादिकर्त्तृतुल्यः। किन्तु यस्य जिह्वाग्रे तुभ्यं तव नाम वर्त्तते स श्वपचः अतः त्वद्विमुखाद्यज्ञाद्यनुष्ठातुर्ब्राह्मणादेः सकाशात् गरीयान् श्रेयान्। अहो बतेति आश्चर्यादप्याश्चर्यमिदं तव नाममाहात्म्यम्। कुतः नामसङ्कीर्त्तनस्य तपआदिफलत्वेन तस्मिंस्तेषामन्तर्भूतत्वादित्याह—तेपुरिति। ये ते तव नाम गृणन्ति कीर्त्तयन्ति ते एव आर्याः सर्वतः श्रेष्ठाः ते तपस्तेपुः कृतवन्तः, जुहुवुर्होमं कृतवन्तः, सस्नुः सर्वतीर्थेषु स्नानं कृतवन्तः, ब्रह्म वेदमनूचुः वेदाध्ययनाध्यापनादि कृतवन्तः॥ ७॥ ❀ ❀ एवं स्तुत्वा प्रणमति—तमिति। तं पूर्वोक्तप्रभावं कपिलं त्वामहं वन्दे इत्यन्वयः। अहो दुर्लभं प्राप्तमिति स्वभाग्यमभिनन्दती विशिनष्टि—प्रत्यक्स्रोतसि विषयेभ्यः प्रत्याहृते आत्मनि मनसि संविभाव्यं सञ्चिन्त्यमिति। स्वतेजसा स्वरूपप्रकाशेन ध्वस्तो निरस्तो गुणप्रवाहः संसारो येन तम्। तत्र हेतुः—वेदा गर्भे यस्य तम्। तत्र हेतुः—परं ब्रह्मेति, साङ्ख्यशास्त्रे पुमांसमिति, पुराणेषु विष्णुमिति॥ ८॥

### हिन्दी अनुवाद

विभो! आप पापियोंका दमन और अपने आज्ञाकारी भक्तोंका अभ्युदय एवं कल्याण करनेके लिये स्वेच्छासे देह धारण किया करते हैं। अतः जिस प्रकार आपके वराह आदि अवतार हुए हैं उसी प्रकार यह कपिलावतार भी मुमुक्षुओंको ज्ञानमार्ग दिखानेके लिये हुआ है॥ ५॥ ❀ ❀ भगवन्! आपके नामोंका श्रवण या कीर्तन करनेसे तथा भूले-भटके

१. सर्वोत्कृष्टजन्मनि, ख. ङ.।

कभी-कभी आपका वन्दन या स्मरण करनेसे ही कुत्तेका मांस खानेवाला चाण्डाल भी सोमयाजी ब्राह्मणके समान पूजनीय हो जाता है; फिर आपका दर्शन करनेसे मनुष्य कृतकृत्य हो जाय—इसमें तो कहना ही क्या है॥ ६॥ ❀ ❀ अहो! वह चाण्डाल भी इसीसे सर्वश्रेष्ठ है कि उसकी जिह्वाके अग्रभागमें आपका नाम विराजमान है। जो श्रेष्ठ पुरुष आपका नाम उच्चारण करते हैं, उन्होंने तप, हवन, तीर्थस्नान, सदाचारका पालन और वेदाध्ययन—सब कुछ कर लिया॥ ७॥ ❀ ❀ कपिलदेवजी! आप साक्षात् परब्रह्म हैं, आप ही परम पुरुष हैं, वृत्तियोंके प्रवाहको अन्तर्मुख करके अन्तःकरणमें आपका ही चिन्तन किया जाता है। आप अपने तेजसे मायाके कार्य गुण-प्रवाहको शान्त कर देते हैं तथा आपके ही उदरमें सम्पूर्ण वेदतत्त्व निहित है। ऐसे साक्षात् विष्णुस्वरूप आपको मैं प्रणाम करती हूँ॥ ८॥

### मैत्रेय उवाच

ईडितो भगवानेवं कपिलाख्यः परः पुमान्। वाचा विक्लवयेत्याह मातरं मातृवत्सलः॥ ९॥

### कपिल उवाच

मार्गेणानेन मातस्ते सुसेव्येनोदितेन मे। आस्थितेन परां काष्ठामचिरादव[1]रोत्स्यति॥ १०॥

श्रद्धत्स्वैतन्मतं मह्यं जुष्टं यद्ब्रह्मवादिभिः। येन मामभवं याया मृत्युमृच्छन्त्यतद्विदः॥ ११॥

### मैत्रेय उवाच

इति प्रदर्श्य भगवान् सतीं तामात्मनो गतिम्। स्वमात्रा ब्रह्मवादिन्या कपिलोऽनुमतो ययौ॥ १२॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

अविक्लवया गंभीरया वाचा॥ ९॥ ❀ ❀ ते तव सुसेव्येन सुखसेव्येन मे मयोदितेन अस्थितेनानुष्ठितेन परां काष्ठां जीवन्मुक्तिमवरोत्स्यति प्राप्स्यति॥ १०॥ ❀ ❀ यायाः यास्यसि अतद्विदो मन्मतमविद्वांसः॥ ११॥ ❀ ❀ अनुमतोऽनुज्ञातः॥ १२॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

इति वक्ष्यमाणम्॥ ९–१०॥ ❀ ❀ मृत्युं संसारम्। मह्यं मम ब्रह्मवादिभिर्वैदिकैर्जुष्टं सेवितम्॥ ११॥ ❀ ❀ इतीत्थम्। ननु स्वस्याज्ञानोपदेष्टृत्वेन गुरुत्वात्पुत्रत्वेन सुहृत्त्वात्सा देवहूतिः पुत्रगमनं कथमनुजज्ञे निर्दयहृदयत्वेनेति चेत्तत्राह—ब्रह्मवादिन्या ब्रह्मरूपत्वात्तस्य तद्वियोगं विचारेण जानंत्येति भावः॥ १२॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

गम्भीरया दुर्विबोधाशयया॥ ९॥ ❀ ❀ सुसेव्येन भक्तियोगस्य सुकुमारस्वभावत्वात्॥ १०॥ ❀ ❀ येन मतेन॥ ११–१२॥

### श्रीमद्वीरराघवव्याख्या

कपिलाख्यः परमपुरुषो भगवानेवमीडितः स्तुतः पितृवत्सलः पित्रोर्वत्सलः अविक्लवया गम्भीरया वाचा मातरं प्रति इति वक्ष्यमाणप्रकारेणाह उवाच॥ ९॥ ❀ ❀ हे मातः! मे मया उदितेन कथितेन सुसेव्येन सुखमनुष्ठेयेनानेन मार्गेण स्थितेन त्वयानुष्ठितेनाशु परां काष्ठां फलपर्यन्तदशां मुक्तिमिति यावदरोत्स्यसि प्राप्स्यसि॥ १०॥ ❀ ❀ एतन्मह्यं मम मतं श्रद्धत्स्व एतस्मिन्मते श्रद्धां कुर्वित्यर्थः। मतं विशिनष्टि यन्मतं ब्रह्मवादिभिः ब्रह्मोपदेष्टृभिः जुष्टं पुनः पुनः संशीलितं येन मतेनाभयं मां यायाः प्राप्नुयाः। अतद्विदः मन्मतानभिज्ञाः मृत्युं संसारमृच्छन्ति॥ ११॥ ❀ ❀ इति एवं भगवान् कपिलः उशतीं कमनीयामात्मनो गतिं ज्ञानमार्गं मात्रे प्रदर्श्य तथा ब्रह्मवादिन्या मात्रानुमत आज्ञापितः ययौ गतवान्॥ १२॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

नन्वनेन स्तोत्रेण कपिलस्य कश्चित्प्रसादविशेषो जातश्चेदुक्तं सर्वं सत्यं स्यादिदं चाध्येतुः प्रयोजकं स्यादतोऽत्र तादृशं लिङ्गं किमित्याशङ्क्य भगवान् तादृग्लिङ्गगर्भितां वाचं वक्तीत्याह। ईडित इति। अविक्लवया अदीनया इदमेकं प्रसादलिङ्गमितीति

---

१. प्रा० पा०—दधिरो०।

शब्देन सूचितम् ॥ ९ ॥ ❀ ❀ प्रसादविशेषं स्पष्टयति । मार्गेणेति । काष्ठामानन्दोत्कर्षमवरोत्स्यसि नित्याभिव्यक्तं करिष्यसि अचिरादित्यनेन कपिलस्य मातरि प्रसादातिशयं सूचयति ॥ १० ॥ ❀ ❀ न मयैवं गाथावदुक्तं किन्तु मात्रोपदेशवदतोऽत्र त्वयास्तिक्यबुद्धिः कर्तव्येत्याह । श्रद्धत्स्वैतदिति मह्यं मम मामुद्दिश्येति वा नैतत्तन्त्रज्ञानमुक्तं किन्तु वैदिकमेवेति भावेनाह । जुष्टं यदिति । त्वत्प्राप्तावहेतुश्चेद्वैदिकमप्यप्रयोजकमिति तत्राह । येनेति । अनेन त्वं साक्षात्परं ब्रह्मेति देवहूत्या यदुक्तं तत्सत्यमिति द्योतितं, विपक्षे बाधकमाह । मृत्युमिति । न तन्मतं विदन्तीत्यतद्विदः मृत्युं संसारं तन्मतविरुद्धमैक्यमतं विदन्तीत्यतद्विदः मृत्युं नित्यमरणरूपमन्धं तमो गच्छन्तीत्यर्थः ॥ ११ ॥ ❀ ❀ देवानां नृपु चिरवासो न धर्म इति विदुषा स्वयमपि तज्ज्ञातित्वात्पुनर्हरिणा किमकारीति तत्राह । इतीति । इतिशब्देन गतेर्ज्ञानस्य समग्रानुग्रहहेतुत्वलक्षणत्वं वक्ति । उपदेशेन प्रदर्श्य मातुर्विश्वासार्थं कचित्प्रसङ्गात् स्वात्मनो गतिं स्वरूपस्थितिं वा प्रदर्श्येत्यनेन द्योतयति । उशतीमभीष्टवर्षिणीं स्वेच्छाज्ञानोपदेष्टृत्वेन गुरुत्वादात्मपुत्रत्वेन सुहृत्त्वात्सा देवहूतिः पुत्रगमनं कथमनुजज्ञे निर्दयहृदयत्वेनेत्याशङ्कापरिहार्यत्वाद् ब्रह्मज्ञानित्वात्स्वात्मस्थत्वाच्च ॥ १२ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

सुसेव्येन भक्तियोगस्य तथोक्तत्वात् ॥ १०–११ ॥ ❀ ❀ उशतीमित्यत्र सतीं तामिति कचित् ॥ १२ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

विक्लवया सगद्गदया यतो मातृवत्सलः ॥ ९ ॥ ❀ ❀ सुसेव्येन भक्तियोगेनेत्यर्थः । आस्थितेन अनुष्ठितेन परां प्रेमसिद्धिमवरोत्स्यसि प्राप्स्यसि नित्यसिद्धमातृभावेऽपि तां तथोक्तिर्लोकशिक्षार्थमेव ज्ञेया ॥ १० ॥ ❀ ❀ मह्यं मम । यायाः यास्यसि ॥ ११ ॥ ❀ ❀ अनुमतौ हेतुः ब्रह्मवादिन्या स्वपुत्रमपीमं ब्रह्मैव ब्रवीमि जानामि च तत्कथं स्वेच्छया गृहे रक्षितुं प्रभवामीति विचारेण ॥ १२ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

अविक्लवया विपुलया ॥ ९ ॥ ❀ ❀ त्वयि आस्थितेन अनुष्ठितेन परां काष्ठां मद्भावापत्तिलक्षणां मुक्तिमवरोत्स्यसि प्राप्स्यसि ॥ १० ॥ ❀ ❀ एतदेव द्रढयितुमाह । श्रद्धत्स्वेति । मां मद्भावं यायाः यास्यसि ॥ ११ ॥ ❀ ❀ आत्मनः स्वस्य गतिं प्राप्तिमार्गमनुमतः अनुज्ञातः ॥ १२ ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

एवं स्तुते मातुरभिप्रायं ज्ञात्वा प्रसन्नो जात इत्याह—ईडित इति । स्तोत्रमस्य युक्तमिति ज्ञापयितुमाह—भगवानिति । एवमीडितः । कपिल इत्याख्यामात्रम् । वस्तुतः पर एव पुमान्, कार्यभगवत्त्वव्यावृत्त्यर्थमुक्तम् । विक्लवया वाचेति तस्यां दयोत्पत्तिः सूचिता । मातुः स्तोत्रमात्रमेव महदिति मातरमित्याह । अयं च प्रसादः सर्वथा न मर्यादाकृतः, किन्तु पुष्टिकृत इत्याह—मातृवत्सल इति । मातरि वत्सलः ॥ ९ ॥ ❀ ❀ प्रसादमार्गमाहात्म्ये क्रमेणाऽऽह—मार्गेणेति । हे मातः ! अनेन मदुक्तेन मार्गेण भगवद्ध्यानयुक्तयोगेन कर्तुं सुकरेण । मया उदितेनेति अन्योक्तकथने तद्गताङ्गान्तरापेक्षा अस्ति, नवेति सन्देहोऽपि भवेत्, मयैवोक्तमिति नात्राऽन्यापेक्षा । अत एव सम्यगास्थिता अचिरादेव परां काष्ठामसंप्रज्ञातसमाधिम्, ततो भगवत्सायुज्यं च अवरोत्स्यसि प्राप्स्यसीति वरः ॥ १० ॥ ❀ ❀ स्वोक्तमार्गस्योत्कर्षं चाऽऽह—श्रद्धत्स्वैतदिति । फलमप्यहमेवेत्याह—मह्यमिति । एतन्मतसम्बन्धिमतं प्रामाणिकम्, यतो ब्रह्मवादिभिर्जुष्टम् । अवश्यं फलसाधकमित्याह—येन मामभयं यायादिति । येन मतेन, अभयमिति स्वस्य[१] फलत्वम्, एतन्मतानभिज्ञास्तु मृत्युमेव ऋच्छन्तीत्यन्यनिन्दयाऽप्येतद्दृढीकृतम् । मृत्युप्राप्तिस्तु स्वकारणादेव । तस्माद्विधेयप्रशंसार्थमेव एतावदुक्तं सर्वभावेन तत्र श्रद्धार्थम् ॥ ११ ॥ ❀ ❀ एतावदुक्त्वा तां कृतकृत्यां ज्ञात्वा, ततः स्वयं निर्गत इत्याह—इतीति । कथनमात्रेणैव वक्तुर्माहात्म्यात्तस्या शास्त्रार्थज्ञानं भविष्यतीत्यभिप्रायेणाऽऽह—भगवानिति । गतिश्चोशती कमनीया । स्वस्यैव गतिरिति स्वेनैव ज्ञायते, नान्येनेति ज्ञापितम् । तयापि तदुक्तोऽर्थो हृदये निश्चित इति ज्ञापयितुमाह—स्वमात्रेति । सापि पूर्वभाषां परित्यज्य शास्त्रार्थदार्ढ्याद्ब्रह्मवादिनी जाता । यस्त्वत्यन्तं यन्मताभिनिविष्टः स व्यवहारेऽपि तदेव वदति । तस्य च फलं मोहाभावः । अत एव तयाभ्यनुज्ञातः, स्वयं तु मोहरहितः ततो ययौ । गन्तव्यो देशः पश्चाद्वक्ष्यते तस्याः सिद्ध्यनन्तरम्, अन्यथा फलविसंवादे सर्वमेवोक्तं व्यर्थं स्यात् ॥ १२ ॥

**९ तः १४ श्लोकावधि सुबोधिनी प्रकाशो न ।**

---

१. तस्यैव ङ ।

### श्रीगिरिधरकृता बालप्रबोधिनी

कपिलाख्यः परः पुमान् परमपुरुषो भगवान् एवं देवहूत्या ईडितः स्तुतः मातृवत्सलः तत्र प्रीतियुक्तः विक्लवया स्नेहेन गद्गदया वाचा इति वक्ष्यमाणं मातरं प्रत्याह ॥ ९ ॥ ❀ ❀ कपिलोक्तिं दर्शयति—मार्गेणेति । हे मातः मे मया उदितेन उपदिष्टेन ते त्वया सुसेव्येन सुखमनुष्ठेयेन अत आस्थितेन अनुष्ठितेनानेन मार्गेण अचिरात् शीघ्रमेव त्वं परां काष्ठां परमफलरूपां मुक्तिमवरोत्स्यसि प्राप्स्यसि ॥ १० ॥ ❀ ❀ एतत् मह्यं मम मतं त्वं श्रद्धत्स्व, एतस्मिन्मते श्रद्धां कुर्वित्यर्थः । न तदाधुनिकं निष्प्रमाणकं किन्तु ब्रह्मवादिभिः ब्रह्मोपदेष्टृभिः जुष्टं प्रीत्या सेवितं येन सेवितेन एतन्मतेन त्वमपि अभयं सर्वभयरहितं सर्वभयनिवर्त्तकं मां यायाः यास्यसि । अतद्विदः एतन्मतानभिज्ञास्तु, मृत्युमृच्छन्ति मृत्युग्रस्ते संसार एव पतन्तीत्यर्थः ॥ ११ ॥ इत्येवं तां ब्रह्मवित्सेवितां सतीं श्रेष्ठां उशतीमिति पाठे कमनीयां सुकरामात्मनो गतिं आत्मप्राप्तिमार्गं आत्मतत्त्वं वा मात्रे प्रदर्श्य तया ब्रह्मवादिन्या ब्रह्मात्मतत्त्वाभिज्ञया स्वमात्राऽनुमतोऽनुज्ञातो भगवान् कपिलो ययौ ॥ १२ ॥

### हिन्दी अनुवाद

श्रीमैत्रेयजी कहते हैं—माताके इस प्रकार स्तुति करनेपर मातृवत्सल परमपुरुष भगवान् कपिलदेवजीने उनसे गम्भीर वाणीमें कहा ॥ ९ ॥ ❀ ❀ श्रीकपिलदेवजीने कहा—माताजी ! मैंने तुम्हें जो यह सुगम मार्ग बताया है, इसका अवलम्बन करनेसे तुम शीघ्र ही परमपद प्राप्त कर लोगी ! ॥ १० ॥ ❀ ❀ तुम मेरे इस मतमें विश्वास करो, ब्रह्मवादी लोगोंने इसका सेवन किया है; इसके द्वारा तुम मेरे जन्म-मरणरहित स्वरूपको प्राप्त कर लोगी । जो लोग मेरे इस मतको नहीं जानते, वे जन्म-मृत्युके चक्रमें पड़ते हैं ॥ ११ ॥ ❀ ❀ श्रीमैत्रेयजी कहते हैं—इस प्रकार अपने श्रेष्ठ आत्मज्ञानका उपदेशकर श्रीकपिलदेवजी अपनी ब्रह्मवादिनी जननीकी अनुमति लेकर वहाँसे चले गये ॥ १२ ॥

सा चापि तनयोक्तेन योगा[1]देशेन योगयुक् । तस्मिन्नाश्रम आपीडे[2] सरस्वत्याः समाहिता ॥ १३ ॥
अ[3]भीक्ष्णावगाहकपिशान् जटिलान् कुटिलालकान् । आत्मानं चोग्रतपसा बिभ्रती चीरिणं कृशम् ॥ १४ ॥
प्रजापतेः कर्दमस्य तपोयोगविजृम्भितम् । स्वगार्हस्थ्यमनौपम्यं प्रार्थ्यं वैमानिकैरपि ॥ १५ ॥
पयःफेननिभाः शय्या दान्ता रुक्मपरिच्छदाः । आसनानि च हैमानि सुस्पर्शास्तरणानि च ॥ १६ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका ।

सरस्वत्या आपीडे पुष्पमुकुटतुल्ये । सरस्वत्येति पाठे मुकुटेनेव संवेष्टिते बिंदुसरसि समाहिता बभूव ॥ १३ ॥ ❀ ❀ कथंभूता सती समाहिता तदाह । अभीक्ष्णं त्रिषवणमवगाहः स्नानं तेन कपिशान्पिशंगान् स्वत एव कुटिलानलकान्केशांस्तथाऽऽत्मानं देहं चीरधारिणं कृशं च बिभ्रती सती ॥ १४ ॥ ❀ ❀ प्रजापतेः कर्दमस्य तपोयोगाभ्यां विजृंभितमतिशयितं स्वगार्हस्थ्यं हित्वा पुत्रभूतेश्वरविरहातुरा सती वदनं किंचिदनिर्वाच्यं शोकव्याकुलं चकारेति षष्ठेनान्वयः ॥ १५ ॥ ❀ ❀ यत्र गार्हस्थ्ये क्षीरफेननिभा मृदुशुभ्राः शय्या आस्तरणान्याभांति दंतघटिता मंचकाश्च स्वर्णमयाः परिकराः आसनानि पीठादीनि सुस्पर्शान्यास्तरणानि येषु ॥ १६–१७ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

सा देवहूतिः । योगस्यादेशो भक्तिज्ञानयोगस्योपदेशस्तेन योगं भगवद्ध्यानं युनक्तीति योगयुक् सती । समाहिता समाधिस्था ॥ १३–१४–१५ ॥ ❀ ❀ पीठादीन्यादिनासंग्याद्ग्रिहः "वेत्रादिनिर्मितं पीठमासदीत्यभिधीयते" इति ॥ १६ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

सा चेति युग्मकम् । सरस्वत्येति तृतीयान्तपाठे आपीडे इति अर्शआदिभ्यो मत्वर्थीयाच्प्रत्ययत्वादापीडवति सरस्वत्येति प्रकृत्याभिरूप इतिवदभेदे तृतीया । तथा च मुकुटेनेव मुकुटनिरूपितसादृश्यप्रयोजकधर्म्मवदभिन्नया सरस्वत्या सम्वेष्टित इत्यर्थः । समाहिता बभूवेति साध्यक्रियाध्याहारः ॥ १३–१४ ॥ ❀ ❀ प्रजापतेरिति षट्कम् । तत्रापि बहुवाक्यैकवाक्यत्वाद्गर्भेऽङ्काः कर्तव्याः । तत्र प्रजापतेरित्येकमेव पय इति त्रिकम् । अन्यद्द्वयमेकैकं तथैव मूले टीकायां चाङ्काः कर्त्तव्याः । एवमन्यत्रापि शोकव्याकुलमतिमलिनमिति यावत् यत्रेत्यग्रिमपद्यादाकृष्टं दन्तघटिताः हस्तिदन्तरचिताः परिकरा घटकरकस्थाल्यादयः तद्गार्हस्थ्यम् ॥ १५–२० ॥

---

१. प्रा० पा०—योगमार्गेण । २. प्रा० पा०—पीले । ३. प्रा० पा०—नीरावगाहकपिशं जटिलं कुटिलालकम् ।

### श्रीमद्वीरराघवव्याख्या

सा चापि देवहूतिरपि पुत्रोपदिष्टेन योगानुशासनेन तस्मिन्नेव सरस्वत्या नद्या आपीडेऽलङ्कारभूते आश्रमे समाहितचित्ताभूत् ॥ १३ ॥ ॐ ॐ कथम्भूता सती समाहिता साभीक्ष्णावगाहस्त्रिषवणस्नानं तेन कपिशान् पिशङ्गान् स्वत एव कुटिलानलकान् केशांस्तथा उग्रतपसा कृशं चीरिणं वल्कलधारिणं चात्मानं देहं बिभ्रती ॥ १४ ॥ ॐ ॐ कथमस्य प्रजापतेस्तपोयोगाभ्यां विजृम्भितमतिशयितं वैमानिकैरपि प्रार्थ्यं स्वगार्हस्थ्यं गृहाश्रमसम्बन्धि गृहं हित्वा पुत्रविरहातुरा सती वदनं किञ्चिच्चकारेति षष्ठेनान्वयः ॥ १५ ॥ ॐ ॐ गार्हस्थ्यं विशिनष्टि । यत्र गार्हस्थ्ये क्षीरफेनवन्मृदुला दान्ताः शुभ्राश्च स्वर्णमयाः परिच्छदाः परिकरा आसनानि पीठादीनि सुवर्णमयानि सुखस्पर्शान्यास्तरणानि ॥ १६ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

तथापि तस्या इतोऽधिकं दुःखं नाभूदिति लक्षयति । सा चापीति । सा चापीति सा देवहूतिश्च स्वगार्हस्थ्यं तृणवद्धित्वा अक्लेशापि पुत्रविश्लेषणातुरा सती वदनं किञ्चिच्चकार पुत्रविरहोत्पन्नदुःखानलशुष्कं कृतवतीत्यर्थः । अपि सम्भावितमेतल्लोकदृष्टत्वात्किं ततोऽन्यत्र गतेत्यत उक्तं तस्मिन्निति । सरस्वत्यास्तटे आसीनत्वात् समाहिता समाधानस्य फलमाह । योगादेशेनेति । योगादेशेन ज्ञानलक्षणोपायोपदेशेन कारणेन योगं भगवद्ध्यानं युङ्क्ते इति योगयुक् ॥ १३ ॥ ॐ ॐ तथानेनान्तरशुद्धिरस्या एवं बाह्यशुद्धिरप्यस्तीति भावेनाह । अभीक्ष्णेति । अनेन नित्यस्नानेन स्त्रीणां तिथ्यादौ स्नानं व्यावर्तयति । आत्मानं देहं कृशं बिभ्रतीत्यनेन फलमूलाद्यशनमपि नास्तीति लभ्यते ॥ १४ ॥ ॐ ॐ स्वगार्हस्थ्यत्यागे किं कारणं येन योगेन दुःखं स्यादिति तत्राह । अनौपम्यमित्यादिना । न उपमाया योग्यं यस्य तदनौपम्यं वैमानिकैर्देवैरेवम्बिधमाहात्म्ये निमित्तमाह । प्रजापतेरिति ॥ १५ ॥ ॐ ॐ प्रार्थ्यत्वेऽपि निमित्तमाह । पयःफेननिभा इति । यत्र गार्हस्थ्ये गोरक्षीफेनमृदुशय्यादयः सन्तीति शेषः । दान्ताः गजदन्तनिर्मिताः रुक्मेण स्वर्णेन परिच्छदोऽलङ्कारो यासां ताः सुस्पर्शाः स्पर्शसुखकराः आस्तरणानि कटादयो येषु तानि तथा ॥१६॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

सा चेति युग्मकम् । सरस्वत्येति पाठे आपीडवति तस्मिन् बिन्दुसरसीत्यर्थः । प्रकृत्याभिरूप इतिवत्तृतीया ॥ १३ ॥ ॐ ॐ अभीक्ष्णवगाहेत्यत्र अभीक्ष्णगाहेति स्वामिपुण्यारण्ययोर्मतः ॥ १४ ॥ ॐ ॐ प्रजापतेरिति षट्कम् । विबुधानुचरा विबुधानुचर्य्यः किंचित् किमपि अनिर्वचनीयम् । अतिमलिनमिति यावत् । तत्र हेतुः पुत्रेति ॥ १५–२० ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

आपीडे पुष्पमुकुटतुल्ये ॥ १३ ॥ ॐ ॐ अभीक्ष्णं त्रिषवणमवगाहः स्नानं । कुटिलालकान् जटिलान् । आत्मानं देहं च चीरिणं चीरधारिणम् ॥ १४ ॥ ॐ ॐ प्रजापतेरित्यादीनां वदनं किञ्चिदनिर्वाच्यं शोकव्याकुलं चकारेति षष्ठेनान्वयः । प्रविष्टमात्मानं देवहूतिम् ॥ १५–२० ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

तस्मिन् स्वाश्रमे सरस्वत्याः आपीडे पुष्पमुकुटतुल्ये समाहिता सती स्वगार्हस्थ्यं हित्वापत्यविरहातुरा वदनं किञ्चिच्चकारेत्यष्टश्लोकानामन्वयः ॥ १३ ॥ ॐ ॐ अभीक्ष्णावगाहेन त्रिकालनित्यस्नानेन कपिशान् ॥ १४ ॥ ॐ ॐ तपोयोगाभ्यां विजृम्भितमतिशयितम् ॥ १५ ॥ ॐ ॐ गार्हस्थ्यमेव वर्णयति । पयःफेननिभेत्यादिना । यत्र गार्हस्थ्ये पयःफेननिभाः श्वेताः कोमलाः शय्याः ॥ १६ ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनीव्याख्या

तस्याः स मार्गः सिद्ध इत्याह—सा चापीत्यादिविंशत्या—योगे परित्यागस्यानङ्गत्वात् स्वस्य परित्यागाधिकाराभावात् तस्मिन्नेवाश्रमे सा[1] स्थितेत्याह—सा चापि पूर्वोक्तापि तस्मिन्नेव स्वाश्रमे स्थिता, तनयोक्तेन योगोपदेशेन योगयुक्ता जाता । स्वगृहे योगो न सिद्ध्यतीति दूषणं तत्र नास्ति, यतः सरस्वत्यास्तदाश्रममापीडं मुकुटस्थानीयम् । गृहमगृहं वा न प्रयोजकं किन्तु विशिष्टदेशत्वमेव । समाहितेति सावधानान्तःकरणा । अनेन यमा उक्ताः ॥ १३ ॥ ॐ ॐ नियमानाह अभीक्ष्णेति । स्निग्धकुञ्चितकेशा

---

१. संस्थिता क. ।

अपि संस्कारव्यतिरेकेण निरन्तरावगाहेन कपिलवर्णा जाताः, केशा जटिलाश्चान्योन्यश्लेषयुक्ताः, पूर्वं कुटिलालकाः, एतादृशान् बिभ्रतीति । देशपरिकराणामसंस्कार उक्तः । शरीरस्याप्यसंस्कारमाह—आत्मानमिति चकारेण दन्तनखादिसंस्कारा अपि निवर्तिताः । उग्रतपसा युक्तं कृशं वा । तपसैव ज्ञानं भवतीति नियमानन्तरं तपो निरूपितम् । तपः साङ्गं चेत्याह—चीरिणामिति । चीरवाससैव तपः कर्तव्यमिति । कृशत्वं च तस्याभिव्यञ्जकम् ॥ १४ ॥ ❀ ❀ तस्या वैराग्यं वक्तुं पदार्थानामुत्कर्षं वर्णयति—प्रजापतेरिति पञ्चभिः—'अलौकिकं तदुत्कृष्टं सर्वोपकरणोत्तमम् । गृहं च सर्वशोभाढ्यमुद्यानातिमनोहरम् । 'मनःसौख्यप्रदं[1] स्वस्य तादृशे ममतां त्यजेत् ॥ अविद्यमानसन्त्यागे लोकयोर्भ्रष्ट एव हि ॥ ऐहिकं सुगमं नो चेत् दूरे ह्यन्यस्य साधनम् ॥' प्रथमं तदलौकिकं गार्हस्थ्यमित्याह—प्रजापतेर्ब्रह्मतुल्यस्य, नाम्नापि तुल्यस्य, तपोयोगाभ्यां विजृम्भितं विवाहप्रभृतिविमानभोगादिकं तपोयोगाभ्यामेव जातम् । यद्यपि भगवता संपादितम् , तथापि त्यागे तत्त्वं हेतुर्न भवतीति तपोयोगाभ्यामेव विजृम्भितमित्युक्तम् । गार्हस्थ्यं गृहस्थाश्रमः सपरिकरः । अनौपम्यमुत्तरलोकानां फलस्वरूपत्वात् , किन्नरादीनां च फलरूपत्वात् , मर्यादात्वेन तथोत्कर्षाभावाच, ब्रह्मादीनां गार्हस्थ्याभावात् गार्हस्थ्यं कर्दमस्यानुपममेव । वैमानिकानां किन्नरादीनां तत्स'[2]म्भवमाशङ्क्य परिहरति—प्रार्थ्यमिति । नियतभोगिनां मध्ये वैमानिका उत्तमाः ॥ १५ ॥ ❀ ❀ परिकराणामुत्कर्षमाह—पय इति । दुग्धफेनवत् कोमला उज्ज्वला उत्तुङ्गाः शय्या दन्तनिर्मिता रुक्मपरिच्छदाः शय्याः, काष्ठांशाः सुवर्णेन चित्रिता अन्तभागा येषाम् । दन्ता[3]नामासनानि चकाराद्भाण्डादीन्यपि हैमानि । सुस्पर्शानि कोमलानि नानाविधानि वस्त्राण्यास्तरणानि । परिकराणि द्विविधानि, भाण्डमयानि वस्त्रमयानि चेति द्वयमुक्तम् ॥ १६ ॥

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

प्रजापतेरित्यत्र । नाम्नाऽपि तुल्यस्येति । कर्चासौ दमश्रेत्यन्वर्थनाम्न इत्यर्थः ॥ १५ ॥

### श्रीगिरिधरकृता बालप्रबोधिनी

सा चापि देवहूतिरपि तनयोक्तेन पुत्रोपदिष्टेन योगमार्गेण समाहितचित्ता सती सरस्वत्यां आपीडे मुकुटवदलङ्कारभूते तस्मिन् बिन्दुसरआख्ये आश्रमे योगयुक् योगे स्थिता जातेत्यर्थः ॥ १३ ॥ ❀ ❀ तत्स्वरूपमाह—अभीक्ष्णं त्रिकालं योऽवगाहः स्नानं तेन कपिशान् पिशङ्गान् जटिलान् कुटिलानलकान् उग्रतपसा कृशं चीरिणं वल्कलादिधारिणम् आत्मानं देहं च बिभ्रतीति ॥ १४ ॥ ❀ ❀ प्रजापतेः कर्दमस्य तपोयोगाभ्यां विजृम्भितमतिशयितं अतः अनौपम्यं वैमानिकैरपि प्रार्थ्यं स्वगार्हस्थ्यं गृहं हित्वा पुत्रभूतेश्वरविरहेणातुरा व्याकुला सती वदनं किञ्चिदुदासीनं चकारेति षष्ठेनान्वयः ॥ १५ ॥ ❀ ❀ गार्हस्थ्यमेव वर्णयति—यत्र गार्हस्थ्ये शय्यादयो भान्तीत्यन्वयः । पयःफेननिभाः पयःफेनसदृश्यः मृदुलाः शुभ्राः, दान्ताः हस्तिदन्तेन निर्मिताः, रुक्मपरिच्छदाः स्वर्णमयाः परिकराः यत्र करकादयो यासु, तथाभूताः शय्याः । हैमानि सुवर्णरचितानि सुस्पर्शान्यास्तरणानि येषु तान्यासनानि च ॥ १६ ॥

### हिन्दी अनुवाद

तब देवहूतिजी भी सरस्वतीके मुकुटसदृश अपने आश्रममें अपने पुत्रके उपदेश किये हुए योगसाधनके द्वारा योगाभ्यास करती हुई समाधिमें स्थित हो गयीं ॥ १३ ॥ ❀ ❀ त्रिकाल स्नान करनेसे उनकी घुँघराली अलकें भूरी-भूरी जटाओंमें परिणत हो गयीं तथा चीर वस्त्रोंसे ढका हुआ शरीर उग्र तपस्याके कारण दुर्बल हो गया ॥ १४ ॥ ❀ ❀ उन्होंने प्रजापति कर्दमके तप और योगबलसे प्राप्त अनुपम गार्हस्थ्यसुखको, जिसके लिये देवता भी तरसते थे, त्याग दिया ॥ १५ ॥ ❀ ❀ जिसमें दुग्धफेनके समान स्वच्छ और सुकोमल शय्यासे युक्त हाथी-दाँतके पलंग, सुवर्णके पात्र, सोनेके सिंहासन और उनपर कोमल-कोमल गद्दे बिछे हुए थे ॥ १६ ॥

स्वच्छस्फटिककुड्येषु महामारकतेषु च । रत्नप्रदीपा आभान्ति ललनारत्नसंयुताः ॥ १७ ॥
गृहोद्यानं कुसुमितै रम्यं बह्वमरद्रुमैः । कूजद्विहङ्गमिथुनं गायन्मत्तमधुव्रतम् ॥ १८ ॥
यत्र प्रविष्टमात्मानं विबुधानुचरा जगुः । वाप्यामुत्पलगन्धिन्यां कर्दमेनोपलालितम् ॥ १९ ॥
हित्वा तदीप्सिततममप्याखण्डलयोषिताम् । किञ्चिच्चकार वदनं पुत्रविश्लेषणातुरा ॥ २० ॥

---

१. मानसौख्यप्रदम् , ख. ग. च. । २. सम्भावनामाशङ्क्य. ग. । ३. दान्तानाम्. क. ग. ङ. ।

### श्रीधरस्वामिविरचिता भावार्थदीपिका

वहुभिरमरद्रुमैः रम्यम् ॥ १८ ॥ ❀ ❀ यत्रोद्याने प्रविष्टमात्मानं देवहूतिम् ॥ १९ ॥ ❀ ❀ आखंडल इन्द्रस्तस्य या योषितस्तासामपीप्सिततमं प्राप्तमिष्टतमं तद्धित्वा तत्राभिमानं त्यक्त्वा ॥ २० ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

स्वच्छानि यानि स्फटिकस्य कुड्यानि भित्तयस्तेषु । मरकतै रचितानि कुड्यानि मारकतानि महांति तानि तेषु च । रत्नमयाः प्रदीपाः ललनारत्नैः प्रतिबिंबितोत्तमस्त्रीभिस्संयुताः 'कुड्यं भित्तौ विलेपने' इति मेदिनी ॥ १७ ॥ ❀ ❀ अमरद्रुमैः संतानकल्पद्रुमहरिचंदनमंदारपारिजातैः । "संतानः कल्पवृक्षश्च पुंसि वा हरिचंदनम् । पंचैते देवतरवो मंदारः पारिजातकः ॥" इत्यमरः । कूजंति विहंगानां मयूरादीनां मिथुनानि यत्र तत् ॥ १८ ॥ ❀ ❀ यत्र वाप्यां प्रविष्टम् ॥ १९ ॥ ❀ ❀ किंचिच्चकार दीनं चक्रे पतिविरहादपि पुत्रविरहो दुःसह इत्याह—पुत्रविश्लेषेति ॥ २० ॥

### अस्मिन्पर्याये दीपनी न

### श्रीमद्वीरराघवव्याख्या

महान्त्यनर्घाणि मरकतानीन्द्रनीलान्यलङ्कारार्थं संयुक्तानि येषु तेषु स्वच्छस्फटिकमयकुड्येषु ललना एव प्रतिबिम्बिता रत्नानि तैः संयुता रत्नानि पद्मरागादीन्येव दीपास्तेषामर्चिषा भान्ति ॥ १७ ॥ ❀ ❀ बहुभिरमरद्रुमैः पारिजातादिभिः कुसुमितैः रम्यं गृहोद्यानं हित्वेत्युत्तरत्रान्वयः । गृहोद्यानं विशिनष्टि । कूजन्ति विहङ्गानां मिथुनानि यस्मिन् गायन्तो मधुपानमत्ता भ्रमरा यस्मिन् ॥ १८ ॥ ❀ ❀ यत्र यस्मिन् गृहोद्याने प्रविष्टमात्मानं देहं विबुधानुचराः किन्नरादयः जगुः उत्पलगन्धिन्यां वाप्यां कर्दमेनोपलालितमात्मानं च हित्वा आखण्डलस्येन्द्रस्य योषितामपीप्सिततममभीष्टतमं त्यक्त्वा तत्राहंममतामकृत्वापि पुत्रस्य विश्लेषणेनातुरा दुःखिता सती वदनं किञ्चित्सङ्कुचितं चकार ॥ १९–२० ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

ललनारत्नैः संयुताः रत्नदीपार्चिषः कुड्येषु न्यस्तस्त्रीरत्नहस्तन्यस्तरत्नदीपार्चिषः स्वच्छस्फटिकादिमणिमयकुड्येषु भान्तीत्यर्थः ॥ १७ ॥ ❀ ❀ कुसुमितैर्बहुभिरमरद्रुमैः रम्यं गृहोद्यानं च भातीत्यर्थः ॥ १८ ॥ ❀ ❀ यत्र गृहोद्याने उत्पलगन्धिन्यां वाप्यां प्रविष्टं कर्दमेनोपलालितमात्मानं विबुधानुचरा जगुरित्यन्वयः ॥ १९ ॥ ❀ ❀ पुनरपि कीदृशं स्वगार्हस्थ्यमाखण्डलयोषतामिन्द्रस्त्रीणामीप्सिततममत्यर्थं कमनीयम् ॥ २० ॥

### अस्मिन्पर्याये क्रमसन्दर्भो न, सारार्थदर्शिनी न

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

ललनारत्नैः संयुताः ॥ १७–१८ ॥ ❀ ❀ यत्रोद्याने ॥ १९ ॥ ❀ ❀ आखण्डलयोषितामिन्द्रभार्याणामीप्सिततमं प्रार्थ्यतमं हित्वोपेक्ष्य वदनं किञ्चिच्चकार पुत्रविरहव्यथाव्याप्तमकरोत् ॥ २० ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या ।

स्वच्छेति । स्वच्छानि निर्मलानि स्फटिकमयानि कुडयानि येषु गृहेषु; कुडयान्येव वा । महामरकतनिर्मितेषु च तत्र योजिता रत्नमयाः प्रदीपा आभान्ति । स्त्रीरहिता गृहा [1]अपि न शोभन्त इति ललनाः स्त्रियोऽपि रत्नाभरणसंयुतास्तेषु गृहेष्वाभान्ति । गृहस्योद्यानं पुष्पवाटिका, देवद्रुमैः कल्पवृक्षैः रम्यम् । कूजतां विहङ्गानां मिथुनानि यत्र । गायन्तो मत्ता मधुव्रता यत्र । उद्यानस्य सर्वविषयत्वप्रतिपादनाय, उद्दीपनविभावत्वाय च [2]पारावतानां कूजनम्, भ्रमराणां च गानमुक्तम् । यत्र विमाने उद्याने, गृहे वा प्रविष्टमात्मानं देवहूतिं विबुधानुचरा गन्धर्वादयो जगुः । वाप्यां च प्रविष्टमुत्पलगन्धयुक्तायाम्, कर्दमेन चापलालितम्, कर्दमसहितं वाऽऽत्मानं जगुः ॥ १७-१८-१९ ॥ ❀ ❀ एवं गार्हस्थ्यं वर्णयित्वा तत्त्यागो भगवद्ध्यानार्थं एव युक्त इति वक्तुं कैवल्यशास्त्रे भगवत्स्मरणं दृढं न भवतीति निरन्तरभगवत्स्मरणार्थं भगवदिच्छया भगवत्त्वेन, पुत्रत्वेन च पुत्रे स्नेहः स्थित इत्याह—हित्वेति । आखण्डलयोषितामिन्द्रस्त्रीणामीप्सिततमं तद्गृहं हित्वा, पुत्रे निर्गते पुत्रविश्लेषेण किञ्चित् कातरं वदनं चकार । शास्त्रपुत्रत्वयोः संरक्षार्थम्—किञ्चिदिति । किञ्चिदित्यव्ययम्, क्रियाविशेषणं वा ॥ २० ॥

### १६ तः २४ श्लोकावधि सुबोधिनीप्रकाशो न

---

१. गृहाश्चापि क. ङ. । २. पारावतादीनाम्. ख. ।

### श्रीगिरिधरकृता बालप्रबोधिनी

महान्त्यनर्घाणि मारकतानि इन्द्रनीलान्यलङ्कारार्थं संयुक्तानि येषु तेषु स्वच्छस्फटिकमयकुड्येषु रचिताः प्रतिबिम्बिता वा रत्नालङ्कारसंयुता ललनाः, पद्मरागादिरत्नमयाः प्रदीपाश्चाभान्ति ॥ १७ ॥ ❀ ❀ गृहोद्यानं स हित्वेत्युत्तरेणान्वयः। तद्विशिनष्टि—बहुभिरमरद्रुमैः पारिजातादिभिः कुसुमितैः रम्यम्। कूजन्ति विहङ्गानां मिथुनानि यस्मिंस्तत्। गायन्तो मधुव्रताः भ्रमराः यस्मिंस्तत् ॥ १८ ॥ ❀ ❀ यत्र यस्मिन् गृहोद्याने तत्राप्युत्पलगन्धिन्यां वाप्यां प्रविष्टं कर्दमेनोपलालितं आत्मानं देवहूतिं विबुधानामनुचराः किन्नरगन्धर्वादयो जगुरित्यन्वयः ॥ १९ ॥ ❀ ❀ आखण्डल इन्द्रस्तस्य योषितामपि ईप्सिततमं प्राप्तुमिष्टतमं तत् गृहादिकं हित्वा तत्राभिमानं त्यक्त्वा ॥ २० ॥

### हिन्दी अनुवाद

तथा जिसकी स्वच्छ स्फटिकमणि और महामरकतमणिकी भीतोंमें रत्नों की बनी हुई रमणी-मूर्तियोंके सहित मणिमय दीपक जगमगा रहे थे, जो फूलोंसे लदे हुए अनेकों दिव्य वृक्षोंसे सुशोभित था, जिसमें अनेक प्रकारके पक्षियोंका कलरव और मतवाले भौंरोंका गुंजार होता रहता था, जहाँकी कमलगन्धसे सुवासित बावलियोंमें कर्दमजीके साथ उनका लाड़-प्यार पाकर क्रीड़ाके लिये प्रवेश करनेपर उसका ( देवहूतिका ) गन्धर्वगण गुणगान किया करते थे और जिसे पानेके लिये इन्द्राणियाँ भी लालायित रहती थीं—उस गृहोद्यानकी भी ममता उन्होंने त्याग दी। किन्तु पुत्रवियोगसे व्याकुल होनेके कारण अवश्य उनका मुख कुछ उदास हो गया। ॥ १७-२० ॥

> वनं प्रव्रजिते पत्यावपत्यविरहातुरा। ज्ञाततत्त्वाप्यभून्नष्टे वत्से गौरिव वत्सला ॥ २१ ॥
> तमेव ध्यायती देवमपत्यं कपिलं हरिम्। बभूवाचिरतो वत्स निःस्पृहा तादृशे गृहे ॥ २२ ॥
> ध्यायती भगवद्रूपं यदाह ध्यानगोचरम्। सुतः प्रसन्नवदनं समस्तव्यस्तचिन्तया ॥ २३ ॥
> भक्तिप्रवाहयोगेन वैराग्येण बलीयसा। युक्तानुष्ठानजातेन ज्ञानेन ब्रह्महेतुना ॥ २४ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका।

सुहृद्वियोगस्य दुःसहतामाह। वनमिति। नष्टे वत्से वत्सला गौरिवाभूत् ॥ २१ ॥ ❀ ❀ विरहकृतध्यानफलमाह। निःस्पृहा निर्वासना। वत्स विदुर ॥ २२ ॥ ❀ ❀ ततः स्वसुतः कपिलो यदाह तद्भगवतो रूपं ध्यायंती तदाऽऽत्मानं च विश्वतोमुखं सर्वगतं ध्यायन्ती ब्रह्मण्यवस्थितमतिर्बभूवेति पूर्वस्यैवानुषंगः। केन ध्यायंती विशुद्धेनात्मना मनसा ॥ २३ ॥ ❀ ❀ विशुद्धौ कारणान्याह। भक्तिप्रवाहरूपेण योगेन वैराग्येण च युक्तानुष्ठानेन जातं यज्ज्ञानं तेन च। युक्तानुष्ठानं च गीतासूक्तम्। "युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु। युक्तस्वप्नावबोधस्य योगो भवति दुःखहा" इति ब्रह्महेतुना ब्रह्मत्वापादकेन ॥ २४ ॥

### श्री वंशीधरकृतो भावार्थदीपिकाप्रकाशः

भगवति वात्सल्याख्यायाः प्रीतेः सर्वोपमर्दित्वमाह—वनमिति। पत्यौ कर्दमे वनं गते यदपत्यं वीक्षमाणा जीवंत्यासीत्तस्यापि विरहेणातुरेति हंत भोः के कुत्र वर्त्तते पश्यंतो मदपत्यं शीघ्रमेव परावर्त्तयंतां भवंतो नो चेदहं न जीविष्यामीति विलपंती गौरिवेति सर्वमेव तत्त्वज्ञानं सहसैव विस्मृतवती वेति भावः ॥ २१ ॥ ❀ ❀ तादृशे इन्द्रस्त्र्यभिलषिते। वत्सेति हरियशःश्रवणानुरागित्वेन प्रियत्वोद्द्योतिका संबुद्धिः ॥ २२ ॥ ❀ ❀ ततः निस्पृहत्वात्। ध्यानस्य गोचरं विषयम् ॥ २३ ॥ ❀ ❀ बलीयसा ब्रह्मलोकमपि काकविट्समं ज्ञात्वाऽनिच्छितेन ॥ २४ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

वात्सल्याख्याया रतेः प्राबल्यमाह। वनमिति वत्सेति देवहूतिशोकेनार्त्या सम्बोधनम् ॥ २१ ॥ ❀ ❀ तमेवेति सार्द्धचतुष्कम्। ब्रह्मणि चिन्मात्रे विशेष्याकारे ब्रह्मज्ञानं चात्र "ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति" इति न्यायेन क्रमसोपानवद्भगवज्ज्ञानपोषकमेव ज्ञेयं परिच्छेद उपाधिना परिच्छिन्नत्वं भगवति षडैश्वर्य्यपूर्णे निवृत्तेति सार्द्धकम्। जीवभावो लिङ्गशरीराध्यासः ॥ २२-२७ ॥

### श्रीमद्वीरराघवव्याख्या

सुहृद्भ्यां पतिपुत्राभ्यां वियोगस्य दुःसहतामाह। वनमिति। पत्यौ कर्दमे वनं प्रति प्रव्रजिते संन्यस्य गते सति नितरां पुत्रविश्लेषेण खिन्ना सती ज्ञातं तत्त्वं चिदचिदीश्वरयाथात्म्यं यया सापि वत्से नष्टे सति वत्सला गौरिवाभूदित्यर्थः ॥ २१ ॥

❀ ❀ तमेवापत्यं कपिलाख्यं हरिं देवं हे वत्स ! विदुर ! अचिरतः बहुकालपर्यन्तं ध्यायन्ती तादृशे उक्तविधे गृहे निःस्पृहा विगतस्पृहाभूदित्यर्थः ॥ २२ ॥ ❀ ❀ तत्सुतः कपिलो भगवान् ध्यानयोग्यं यद्भगवतो रूपं प्रसन्नवदनाम्भोजम् इत्यादिना आह । तदेव प्रसन्नवदनादियुक्तं भगवद्रूपं कार्त्स्न्येनावयवशश्च चिन्तया ॥ २३ ॥ ❀ ❀ भक्तेर्यः प्रवाहः प्रवृत्तिः स एव योगस्तेन बलीयसा वैराग्येण तथायुक्तानुष्ठानं स्वोचितपूजादिरूपकर्मानुष्ठानं तेन जातेन ज्ञानेनात्मयाथात्म्यज्ञानेन ब्रह्महेतुना ब्रह्म-प्राप्तिहेतुना ज्ञानयोगकर्मयोगवैराग्यादिभिरनुगृहीतेन मुक्त्युपायभूतेन भक्तियोगेनेत्यर्थः ॥ २४ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

पतिविरहादपि पुत्रविरहो दुःसह इति भावेनोक्तमेव विवृणोति । वनमिति ॥ २१ ॥ ❀ ❀ नन्वेवं तर्हि पुत्रविरहो-द्भूतदुःखार्तमना भगवदुपास्तिमप्यभाङ्क्षीत्किं तत्राह । तमेवेति । अनेन तस्या उपास्तिप्रकारो दर्शितः इति एवकारेण सूचितां विजातीयव्यावृत्तिं स्पष्टयति । निःस्पृहेति ॥ २२ ॥ ❀ ❀ ननु सुतोक्तमन्यदन्यदुपास्ते पुत्रवियोगभ्रान्तबुद्धित्वादित्याशङ्क्याह । ध्यायन्तीति समस्तचिन्ता सर्वावयवचिन्ता व्यस्तचिन्तैकैकावयवचिन्ता तया ॥ २३ ॥ ❀ ❀ तस्या उपास्तेः फलमाह । भक्तिप्रवाहेति । सा देवहूतिर्विष्णुः सर्वोत्तम इति ज्ञानसहितनिरतिशयप्रेमलक्षणभक्तिनदीप्रवाहयोगेन बलीयसा स्वर्गादेः पुरुषार्थ-वादिशास्त्रार्थश्रुतिमुग्धबुद्धिराहित्येन बलिष्ठेन वैराग्येण युक्तं यदनुष्ठानमखण्डध्यानं तस्माज्जातेन ब्रह्महेतुना परब्रह्मप्रसादजननकारण-ब्रह्महेतिनेति पाठे ब्रह्मवशीकरणायुधेनेत्यर्थः ॥ २४ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

भगवति वात्सल्याख्यायाः प्रीतेः सर्व्वोपमर्द्दित्वमाह । वनमिति । ज्ञाततत्त्वापि शुद्धान्तःकरणत्वात् श्रवणसमय एव तत्तत्साधनसाध्याविर्भाववत्यपि ॥ २१ ॥ ❀ ❀ तमेवेति सार्द्धचतुष्कम् । तत्र पूर्व्ववर्णितगृहत्यागोऽपि तथैव जात इत्याह । तमिति । हरिं कपिलं ध्यायन्ती कपिलरूपेणैवाविर्भूतं स्मरन्ती तच्चापत्यं ध्यायन्ती अपत्यत्वेनैव स्मरन्तीत्यर्थः ॥ २२ ॥ ❀ ❀ कथं वा कीदृशत्वेन वा ज्ञाततत्त्वाप्यभूत्तत्राह । ध्यायन्तीति सार्द्धैस्त्रिभिः । ज्ञानकथनसमये ब्रह्मण्यवस्थितमतिर्बभूव । भक्तिकथन-समये भगवत्यवस्थितमतिर्बभूव । किन्तु ब्रह्मज्ञानमपि तत्र भगवज्ज्ञानोपोद्बलकमेव जातमिति ज्ञेयम् "ब्रह्मभूतः प्रसन्नात्मा" इत्यादिगीताद्यनुसारात्तथैव भगवन्तं विशिनष्टि । आत्मसंश्रये "ब्रह्मणो हि प्रतिष्ठाहम्" इति श्रीगीतानुसारात् "शुभाश्रयः सचि-त्तस्य सर्वगस्य तथात्मनः" इति श्रीविष्णुपुराणानुसाराच्च ब्रह्मण्यवस्थाने हेतुरिति अस्य विशेषणं युक्तानुष्ठानजातेन ब्रह्महेतुजातेन ब्रह्महेतुरिति च ब्रह्माविर्भावकारणेनेत्यर्थः । पूर्व्वं साधनवैराग्येणेति विशुद्धेनेत्यादि च आत्मानं शुद्धजीवं विशेषतः शुद्धेन अविद्या-स्पर्शसम्भावनामात्रहीनेन आत्मना परमात्मना तत्तादात्म्येन विश्वतोमुखं सर्व्वगतं ध्यायन्तीति जीवात्मनः शुद्धत्वप्रकारमाह । स्वानुभूत्येति । भगवत्यवस्थाने हेतुर्भक्तिप्रवाहयोगेनेति । मद्गुणश्रुतिमात्रेणेत्यादिरीत्या प्रेमप्रवर्तितसन्ततमनोगत्येत्यर्थः । तत्पूर्व-साधनं समस्तव्यस्तचिन्तया अन्वयव्यतिरेकविचारपूर्वकं यद्भगवद्रूपं प्रसन्नवदनः सुतो ध्यानगोचरमाह । ध्यानविषयत्वेनोपदिष्ट-वान् तत् ध्यायन्तीति । यदेव वासनान्तरानुसारेण ज्ञानफलतयोपदिष्टं तदेव हि स्ववासनानुसारेण प्रेमफलतयानुष्ठितमिति भावः । तथाप्यानुषङ्गिकतया ज्ञानहेतुत्वमपि तस्यैव ज्ञेयम् । "श्रेयः सृतिं भक्तिमुदस्य"इत्यादेः । तदानीन्तनीं तदवस्थामाह । सार्द्धै-स्त्रिभिः । तत्र निवृत्तेति सार्द्धकम् । जीवापत्तिर्लिङ्गशरीराध्यासः ॥ २३–२७ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

भगवति वात्सल्याख्यायाः प्रीतेः सर्वोपमर्द्दित्वमाह । वनमिति । पत्यौ कर्दमे वनं गतेऽपि यदपत्यं वीक्षमाणा जीवन्त्यासीत् तस्यापि विरहेणातुरेति हन्त भोः के कुत्र वर्तन्ते पश्यन्तु मदपत्यं शीघ्रमेव परावर्त्तयन्तां भवन्तो नो चेदहं न जीविष्यामीति विलपन्ती गौरिवेति सर्व्वमेव तत्त्वज्ञानं सहसैव विस्मृतवती वेति भावः ॥ २१ ॥ ❀ ❀ विरहोत्थध्यान-फलमाह । तमेवेति ॥ २२ ॥ ❀ ❀ ततश्च हन्त हन्त विरहातुराया मम मनो भगवति पुत्रभावं न जहाति तदहं क्षणमेकान्ते उपविश्य पुत्रभावं विहाय मनःप्रणिधाय तदुक्तं ध्यानमेवाभ्यस्यामीति सा दध्याविस्याह । ध्यायन्तीति । भगवद्रूपं ध्यायन्ती ब्रह्मणि भगवत्यवस्थितमतिरासीदित्यन्वयः । भक्तैः प्रवाहरूपेण योगेन युक्तं समुचितं यदनुष्ठानजातं तेन । यद्वा । गीतासूक्तम् ।

युक्ताहारविहारस्य युक्तचेष्टस्य कर्म्मसु । युक्तस्वप्नावबोधस्य योगो भवति दुःखहा ॥

इति युक्तानुष्ठानं तस्माज्जातेन वैराग्येण तथा ज्ञानेन ब्रह्महेतुना तथा ब्रह्मानुभवस्य हेतुना शुद्धभक्त्युत्थेनेत्यर्थः । न तु ब्रह्मरूपेण ऐक्यपदार्थज्ञानेनेत्यर्थः । अत एव निर्गुणत्वाद्विशुद्धेन तदात्मानं तस्य भगवतः आत्मानं स्वरूपं विश्वतो दशदिक्ष्वेव मुखं यस्य तथाभूतं स्फूर्तिप्राप्तं स्वानुभूत्या स्वानुभवेन पश्यन्तीति शेषः । तिरोभूता मायाया गुणविशेषा यत्र तद्यथा स्यात्तथा पश्यन्तीति ब्रह्मणि भगवति आत्मनां जीवानां संश्रये परमात्मनीति क्रमेण ज्ञानिनां भक्तानां योगिनाञ्च प्राप्ये वस्तुनि परिपूर्णेऽङ्गिनि स्वरूपे अवस्थिता मतिर्यस्याः सा । तेन भक्तिप्रवाहयोगेनेत्यनेन प्रवाहपदव्यञ्जिता मद्गुणश्रुतिमात्रेणेत्युक्तलक्षणा भावभक्तिस्तस्याः अभू-

देव। तथा ज्ञानिनां तृतीयभूमिकाविनाभूतं यत् त्वंपदार्थतत्पदार्थयोर्ज्ञानं तद्भक्तिमते उपासकोपास्ययोर्भक्तभगवतोर्ज्ञानमुपयुज्यते एव यदुक्तम् "ज्ञानवैराग्ययोर्भक्तिप्रवेशायोपयोगिता" इति तथैवाष्टाङ्गयोगिनां यत् सप्तमं ध्यानं तन्नवाङ्गभक्तेस्तृतीयमङ्गं परमोपयुक्तमेवेति देवहूत्या ज्ञानिनां तज्ज्ञानं योगिनां ध्यानञ्च सारङ्ग इव सारभुगिति न्यायेन गृहीत्वा स्वानुष्ठेयायां भक्तावन्तर्भावितमत एवोक्तं ज्ञानेन ब्रह्महेतुनेति यदाह। ध्यानगोचरं सुत इति, ततश्च"जरयत्याशु या कोषम्" इत्युक्तलक्षणं भक्तेरानुषङ्गिकञ्च फलं तस्यामुद्भूतमित्याह। निवृत्ता जीवस्य जीवात्मनः आपत्तिरापद्रूपा अविद्या यस्यास्तस्या भावस्तत्त्वं तस्मात् क्षीणक्लेशा अत एवाप्तनिर्वृतिः यद्वा भगवन्मातृत्वात् स्वरूपत एव सा अविद्यारहिता तदपि तथोक्तिरयमात्मा अपहतपाप्मेतिवत्। भक्तानां मते ध्यानानन्दमोह एव समाधिरुच्यते इति तस्या नित्यारुढसमाधित्वात् परावृत्तः शान्तः गुणेषु विषयेषु भ्रमो भ्रमणं पर्य्यटनं यस्याः सा, आत्मानं देहम्॥ २३-२७॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः।

नष्टे वत्से वत्सला गौरिवाभूत्॥ २१॥ ❀ ❀ वत्स! हे विदुर!॥ २२॥ ❀ ❀ भगवतो विग्रहं सर्वतोमुखं स्वस्वरूपं च तिरोभूतमायागुणविशेषणं जीवस्वरूपं च ध्यायन्ती आत्मानं विसस्मारेत्याह। ध्यायन्तीति पञ्चभिः। सुतः कपिलः यदाह तद्भगवतो रूपं विग्रहं ध्यायन्ती॥ २३॥ ❀ ❀ भक्त्यादिना युक्तं यदनुष्ठानजातं तेन च ब्रह्महेतुना ब्रह्मप्रापकेण॥ २४॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

न केवलं वदन एव विकारः, किन्तु हृदयेऽपीत्याह—वनमिति। पत्यौ प्रव्रजिते सति वनं च प्रविष्टे सति प्रव्राजस्तु परित्यागो लोकस्येति लोकस्थितो न परित्यागी। ये तु भिक्षादिनियमा उक्तास्ते आश्रमस्थानाम्, तत्र परित्यागः पूर्वसिद्धपदार्थानामेव। स्वतन्त्रपरित्यागे वनप्रवेश एव। तदाह—वनं प्रव्रजित इति। अपत्यविरहेण चातुरा भर्तुर्विरहो नित्य उक्तः। वनगमनात् तत्सङ्गे पुत्रविरह उक्त इति सोऽपि नित्यः; अतः आतुरा। ननु शास्त्रतो ज्ञानेन देहाध्यासे निवृत्ते विरहद्वयं न बाधकमिति चेत्तत्राऽऽह—ज्ञाततत्त्वेति। ज्ञातं तत्त्वमात्मनो यया। एतादृश्यपि पुत्रे दूरं गते वत्से नष्टे गौरिव व्याकुला जाता, यतो वत्सला पुत्रस्नेहाधिक्ययुक्ता॥ २१॥ ❀ ❀ अयं स्नेहः तस्या उपकाराय जात इत्याह—तमेवेति। तमेव पुत्रं भगवन्तं योगे ध्यायती अचिरतः शीघ्रमेव तादृशे गृहे निःस्पृहा जाता; यतः स हरिः। 'स्पृहा च दुःखात्मिका। वत्सेति विदुरसम्बोधनं त्वयाऽप्येतत्कर्तव्यमिति बोधनार्थम्। परित्यागलक्षणं वैराग्यं प्रकृते नास्तीति स्पृहाभाव एवोक्तः॥ २२॥ ❀ ❀ न केवलं भगवद्ध्यानेन गृहानासक्तिः सिद्धा, किन्तु योगोऽपि सिद्ध इत्याह—

ध्यायतीति। सुतो यदाह भगवद्रूपं सर्वेषामेव योगिनां ध्यानगोचरं सुत एव भगवानिति सुतं ध्यायती। सुत इति वा पाठः। प्रसन्नवदनमिति तस्य ध्याने भगवान् प्रसन्न एवाभिव्यक्त इति कार्यसिद्धिसूचनार्थं प्रसाद उक्तः। समस्तव्यस्तप्रकारो ध्यान उक्तः इति तथैवाऽऽह—समस्तव्यस्तचिन्तयेति। समस्तचिन्ता प्रसन्नवदनाम्भोजमिति; व्यस्तचिन्ता सञ्चिन्तयेद्भगवत इति॥ २३॥ ❀ ❀ तादृशध्यानेन यदासीत्तदाह—भक्तिप्रवाहयोगेनेति चतुर्भिः-चित्तशुद्धेः साधनानि कार्यं "शुद्धस्य चेतसः। ज्ञानस्याऽप्युत्तमावस्था दोषाभावश्च सर्वतः।" भगवच्चिन्तनेन क्रमेण परमामवस्थां प्राप्तवतीति वक्तुं चिन्तनेन जातं क्रममाह—आदौ भक्तिप्रवाहो जातः। स चोपायभूत इति योगः, ध्यानेन प्रथमं भक्तियोगो जात इत्यर्थः। भक्तेः प्रवाहनित्यतैवेति प्रवाहपदम्; ततो दृढं वैराग्यम्; ततो भगवद्धर्मेषु परमश्रद्धया परलोके युक्तं यदनुष्ठानजातं निवृत्तिधर्मरूपम्, तदनन्तरं ब्रह्मप्रापकं ज्ञानम्। एतावता साधनत्रयसहितेन ज्ञानेन चित्तमत्यन्तं शुद्धं भवति॥ २४॥

### श्रीगिरिधरकृता बालप्रबोधिनी

ज्ञाततत्त्वस्यापि सुहृद्वियोगो दुस्सह इत्याह—वनमिति। ज्ञातं तत्त्वं आत्मपरमात्मानात्मयाथात्म्यं यया तथाभूताऽपि पत्यौ कर्दमे वनं प्रति प्रव्रजिते सन्न्यस्य गते सति अपत्यस्य कपिलस्य विरहेणातुरा व्याकुला अभूत्। तत्र हेतुः—वत्सलेति, तत्र प्रीतियुक्तेत्यर्थः। तत्र दृष्टान्तमाह—नष्टे इति, वत्से नष्टे सति वत्सला गौर्यथाऽऽतुरा भवति तथेत्यर्थः॥ २१॥ ❀ ❀ पुत्रभावेनापि भगवच्चिन्तनं तस्याः सफलं जातमित्याह—तमिति। वत्सेति स्नेहेन विदुरसम्बोधनम्। तमेवापत्यरूपं कपिलं हरिं संसारहर्त्तारं देवं परमेश्वरं ध्यायती सती अचिरतोऽल्पेनैव कालेन तादृशे पूर्वोक्तप्रकारके गृहे निस्पृहा बभूवेत्यन्वयः॥ २२॥ ❀ ❀ ततश्च विशुद्धेनात्मना मनसा स्वसुतः कपिलो ध्यानस्य गोचरं योग्यं प्रसन्नवदनं यद्भगवद्रूपमाह यद्ध्यायती तदा चात्मानमपि विश्वतोमुखं तदभिन्नतया सर्वगतं ध्यायती सती तदात्मानं स्वशरीरमपि न सस्मारेति पञ्चमेनान्वयः। ध्यानप्रकारमाह—समस्तस्य विग्रहस्य व्यस्तस्यैकैकावयवस्य वा चिन्तयेति॥ २३॥ ❀ ❀ मनसो विशुद्धौ कारणान्याह—भक्तेः

---

१. सा च. क.।

प्रवाहो नैरन्तर्यं स एव योगस्तेन । बलीयसा अप्रतिहतेन वैराग्येण युक्तानां यथोचितपूजाजपादीनां आहारशयनादीनां च अनुष्ठान-जातेन अनुष्ठानसमूहेन ब्रह्मात्मसाक्षात्कारहेतुना ज्ञानेन ॥ २४ ॥

### हिन्दी अनुवाद

पतिके वनगमनके अनन्तर पुत्रका भी वियोग हो जानेसे वे आत्मज्ञानसम्पन्न होकर भी ऐसी व्याकुल हो गयीं, जैसे बछड़ेके बिछुड़ जानेसे उसे प्यार करनेवाली गौ ॥ २१ ॥ ❀ ❀ वत्स विदुर ! अपने पुत्र कपिलदेवरूप भगवान् हरिका ही चिन्तन करते-करते वे कुछ ही दिनोंमें ऐसे ऐश्वर्यसम्पन्न घरमें भी उपरत हो गयीं ॥ २२ ॥ ❀ ❀ फिर वे, कपिलदेवजीने भगवान्के जिस ध्यान करनेयोग्य प्रसन्नवदनारविन्दयुक्त स्वरूपका वर्णन किया था, उसके एक-एक अवयवका तथा उस समग्र रूपका भी चिन्तन करती हुई ध्यानमें तत्पर हो गयीं ॥ २३ ॥ ❀ ❀ भगवद्भक्तिके प्रवाह, प्रबल वैराग्य और यथोचित कर्मानुष्ठानसे उत्पन्न हुए ब्रह्मसाक्षात्कार करानेवाले ज्ञानद्वारा चित्त शुद्ध हो जानेपर वे उस सर्वव्यापक आत्माके ध्यानमें मग्न हो गयीं, जो अपने स्वरूपके प्रकाशसे मायाजनित आवरणको दूर कर देता है ॥ २४-२५ ॥

विशुद्धेन तदाऽऽत्मानमात्मना विश्वतोमुखम् । स्वानुभूत्या तिरोभूतमायागुणविशेषणम् ॥ २५ ॥
ब्रह्मण्यवस्थितमतिर्भगवत्यात्मसंश्रये । निवृत्तजीवापत्तित्वात्क्षीणक्लेशाऽऽप्तनिर्वृतिः[1] ॥ २६ ॥
नित्यारूढसमाधित्वात्परावृत्तगुणभ्रमा । न सस्मार तदाऽऽत्मानं स्वप्ने दृष्टमिवोत्थितः ॥ २७ ॥
तद्देहः परतः पोषोऽप्यकृशश्चाध्यसम्भवात । बभौ मलैरवच्छन्नः सधूम इव पावकः ॥ २८ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका ।

विश्वतो मुखत्वे हेतुः । स्वानुभूत्या स्वरूपप्रकाशेन तिरोभूतम् । मायागुणैर्विशेषणं परिच्छेदो यस्य ॥ २५ ॥ ❀ ❀ कथंभूते ब्रह्मणि आत्मनां जीवानां संश्रये भगवति तस्या जीवन्मुक्तिमाह । सार्धैस्त्रिभिः । तदा च निवृत्ता जीवापत्तिर्जीवभावो यस्यास्तस्या भावस्तत्त्वं तस्मात् विगतक्लेशा प्राप्तनिर्वृतिश्च सत्यात्मानं देहं न सस्मारेत्युत्तरेणान्वयः ॥ २६ ॥ ❀ ❀ ननु तथापि गुणानां विद्यमानत्वात्कथमस्मरणं तत्राह । नित्यारूढो लब्धप्रतिष्ठः समाधिर्यस्यास्तस्या भावस्तत्त्वं तस्मात् । परावृत्तः शांतो गुणनिमित्तो भ्रमो यस्याः सा ॥ २७ ॥ ❀ ❀ परतः पराभिरेव कर्दमसृष्टविद्याधरीभिः पोषः पोषणं यस्य आधिर्म-नोग्लानिस्तदसंभवादकृशः मलैरवच्छन्नोऽपि बभौ ॥ २८ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

मायागुणैः सत्त्वादिभिर्विशेषणं 'शुद्धसत्त्वमयो हरिः' इत्यादिपरिच्छेदः । निर्गुणे गुणविशेषणासंभवात् । "न तत्र सत्त्वं न रजस्तमश्च" इत्यादिश्रुतेः ॥ २५ ॥ ❀ ❀ जीवभावो लिंगशरीराध्यासः । यद्वा जीवस्यापत्तिर्यया सा जीवा-पत्तिरविद्या जीवस्येति भावप्रधानो निर्देशः ॥ २६ ॥ ❀ ❀ अत्राक्षिपति—नन्विति ॥ २७ ॥ ❀ ❀ तस्या देवहूतेर्देहः ॥ २८ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या ।

मनोग्लान्यसम्भवे भगवदावेशानन्दो हेतुर्ज्ञेयः ॥ २८,२९ ॥

### श्रीमद्वीरराघवव्याख्या

विशुद्धेनात्मना मनसा आत्मानं विश्वतोमुखं सर्वज्ञं स्वानुभूत्या स्वप्रकाशेन विरहिता मायागुणाः सत्त्वादयः तेषां विशेष-णानि विशेषाः शोकमोहादीनि यस्य तमशनायाद्यूर्मिषट्करहितमात्मानं परमपुरुषं ध्यायन्ती ॥ २५ ॥ ❀ ❀ आत्मनां जीवानां संश्रये आश्रये भगवति ब्रह्मण्यवस्थिता मतिर्यस्याः सा निवृत्तजीवापत्तिः जीवस्यापत्तिः क्लेशाद्यापत्तिर्यतः सा प्रकृतिः । यद्वा आपत्तिरापत्क्लेशादिरूपा यतः सा प्रकृतिः । निवृत्ता निवृत्तप्राया जीवापत्तिर्यस्याः सा तस्याः भावस्तत्त्वं तस्मान्निवृत्तप्राय-प्रकृतिसम्बन्धत्वादित्यर्थः । वीतक्लेशा विगतशीतोष्णादिक्लेशा आप्ता परमात्मानुभवरूपा निर्वृतिरानन्दो यया सा ॥ २६ ॥ ❀ ❀ नित्यमारूढः समाधिर्यया सा तस्याः भावस्तत्त्वं तस्मान्नित्यं प्रकृतिविलक्षणप्रत्यगात्मशरीरकपरमात्मनि समाहितचित्त-त्वात् परावृत्तः निवृत्तः तमआदिप्रकृतिगुणकार्यदेहात्माभिमानादिविपरीतभ्रमो यस्याः सा सती आत्मानं शरीरं न सस्मार । स्वप्नादुत्थितः पुरुषः स्वप्ने दृष्टं वस्तुजातमिव यथा स्वप्नादुत्थितः पुरुषः स्वाप्नं वस्त्वनित्यमिति निश्चित्य स्वाप्नवस्त्वायत्तसुख-दुःखादिभिरनाकुल एवं देहानुबन्धि सर्वं कर्मायत्तमस्थिरमिति मत्वा तत्पोषणापोषणादिनिमित्तसुखदुःखैरनभिभूता सती देहः पुष्टः

1. प्रा० पा०—त्वाद्धीनक्लेशा०

कर्शित इति वा न सस्मारेत्यर्थः ॥ २७ ॥ ❀ ❀ अत एव तस्याः देहः परतः परैः पोष्योऽपि परायत्तपोषणोऽप्यकृशः कुत आध्यसम्भवात्पोषणाभावप्रयुक्तमनःपीडाया अभावान्मलैरवच्छन्नः अभ्यङ्गोद्वर्त्तनाभावान्मलैर्युक्तोऽपि सधूमः पावक इव बभौ ॥२८॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

अत एव विशुद्धेनैकत्वसंशयलक्षणदोषरहितेनाविर्भूतेन ज्ञानेनात्मना स्वस्वरूपमनसात्मानं स्वबिम्बभूतं विश्वतोमुखं सर्वज्ञं च स्वत एव स्वानुभूत्या तिरोभूतं दूरतो निरस्तं मायागुणैः सत्त्वादिभिः देहबन्धलक्षणं यस्य स तथा तं हरिं ददर्शेति शेषः ॥ २५ ॥ ❀ ❀ सापरोक्षज्ञानोदयानन्तरमीदृशीमवस्थां प्रापेत्याह । ब्रह्मणीति । सा यदा परमात्मानमद्राक्षीत्तदात्मानं स्वशरीरं न सस्मारेत्यन्वयः । कीदृशी आत्मसंश्रये स्वाधारे भगवति षड्गुणपूर्णे ब्रह्मणि कालतो देशतो गुणतो व्याप्ते हरावववस्थितमतिरेकाग्रमना निवृत्तजीवभावत्वान्मुक्तलिङ्गशरीराभिमानत्वाद्वीतक्लेशा निरस्तदुःखा प्राप्तनिर्वृतिराप्तपरमानन्दा ॥ २६ ॥ ❀ ❀ नित्यारूढसमाधित्वान्नित्यं हरावेव सन्निविष्टमनस्कत्वात्परावृत्तगुणभ्रमात्परावृत्तः पराभूतः गुणेषु शब्दादिविषयेषु दुःखसाधनेषु सुखसाधनत्वबुद्धिभ्रमो यस्याः सा कथमिव स्वप्नदृष्टमिवोत्थितः स्वप्नादुत्थितः स्वप्ने दृष्टं यथा न स्मरति तथेति । नन्विदं निदर्शनं निवृत्तजीवभावत्वे कथमुपपद्यते स्वप्नदृशो जीवत्वानिवृत्तेरितीयमाशङ्का "जीवोपाधिप्रभृतय आमुक्तेः सर्वदेहिनाम् । नियमात्सन्त्यभावस्तु निष्फलत्वादुदीर्यते ॥" इत्यनेन परिहरणीया । एतत्स्मृत्यर्थद्योतनाय स्वप्नोत्थितनिदर्शनमिति तात्पर्यार्थो ज्ञातव्यः ॥२७॥ ❀ ❀ इदमपरोक्षज्ञानोदयानन्तरं लक्षणमित्याह । तद्देह इति । यस्य दोषोऽपगतः स तस्या देहो बभावित्यन्वयः । आध्यसम्भवाच्छरीरकार्श्यहेतुमनोदुःखाभावादकृशत्वमकृत इति पाठे विहितस्नानादिशून्य इत्यर्थः "युगेऽक्षपाते पर्याप्ते कृतं क्लीबे हितेऽर्थवत्" इति यादवः । यद्वा अपर्याप्तोऽसमाप्तप्रारब्धकर्मा ॥ २८ ॥

## श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

न केवलमेतावत् किन्तु तद्देहश्चाकृशोऽभूत् कीदृशोऽपि तत्राह । परत इति । अकृशत्वे हेतुः । आध्यसम्भवादिति । भगवदावेशानन्देनेति भावः । अत एव बभौ कीदृशोऽपि तत्राह । मलैरिति । अपीति योज्यम् । तत्र दृष्टान्तः । सधूम इति ॥ २८ ॥

## श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

तदानीन्तनीं तदवस्थामाह । तस्या देहः परतः पराभिरेव कर्दमसृष्टविद्याधरीभिः पोषः पोषणं यस्य सः आधिर्मानसी व्यथा तदसम्भवाद्भगवदावेशानन्दादकृशश्च "निर्वृतिरतिस्थूलङ्करणी" इति वैद्यकोक्तेः ॥ २८ ॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

विश्वतोमुखं सर्वगतं सर्वात्मानं ध्यायन्ती स्वानुभूत्या देहेन्द्रियमनोबुद्धिप्राणादिविलक्षणाणुपरिमाणज्ञानस्वरूपबन्धमोक्षार्हस्वस्वरूपानुभवेन तिरोभूतं मायागुणविशेषणं देहात्माहङ्कारादिकं यस्मात्तं स्वात्मानं च ध्यायन्ती ॥ २५ ॥ ❀ ❀ आत्मनो जीवस्य संश्रये आश्रये अंशिनि आपत्तयः शोकमोहाद्याः निवृत्ता जीवापत्तयो यस्याः सकाशात्सा तथा तस्याः भावस्तत्त्वं तस्मात् ॥ २६ ॥ ❀ ❀ नित्ये विश्वकारणे भगवति रूढः सुस्थिरः समाधिर्यस्यास्तस्या भावस्तत्त्वं तस्मात् परावृत्ता गुणकृता भ्रमाः परमेश्वरे देवान्तरसमत्वादिबुद्धिवृत्तयः जीवे अब्रह्मात्मकत्वादिबुद्धिवृत्तयः देहादावहंममादिबुद्धिवृत्तयो यस्याः सा आत्मानं देहम् ॥ २७ ॥ ❀ ❀ परतः पराभिः पोषः पोषणं यस्य सः ॥ २८,२९ ॥

## श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

तदा शुद्धचित्तकार्यमाह—विशुद्धेनेति । तदेति तदैव शुद्धिः, न ज्ञानात्पूर्वं चित्तं शुद्धं भवतीत्युक्तम् । अतो विशुद्धेनाऽऽत्मना आत्मानं ध्यायती जातेति पूर्वेणैव सम्बन्धः । संसारावस्थातः तदानींतनमात्मानं विशिष्टमाह—विश्वतोमुखमिति । पूर्वमात्मा हृदयाभिमुखः शरीरप्रवणः । शुद्धे [1]तु चित्ते सर्वतोमुखमात्मानं दृष्टवती । सर्वत्र विद्यमानः सर्वतोमुखः । पूर्वं चाविद्यावच्छिन्नो देहाभिमानी, साम्प्रतं च तद्रतमित्याह—स्वानुभूत्यैव तिरोभूता माया प्रकृतिः, तद्गुणाः सत्त्वादयः, तद्विशेषास्तत्कार्याणि परिच्छेदादयो यस्य ॥ २५ ॥ ❀ ❀ आत्मज्ञाने प्रादुर्भूते मायागुणकार्याणि लीयन्त इति अविद्यातत्कार्यविलये ब्रह्मण्येव स्थितो जात इत्याह—ब्रह्मण्यवस्थितिरिति । तदेव ब्रह्म पूर्वं ध्यातो भगवानिति ततो ज्ञातवती । ततोऽपि स भगवान् न[2] ध्यानमपेक्षते, किन्तु

---

१. ख पुस्तके नास्ति । २. नेति नास्ति क. ङ. ।

आत्मन्येव स्वस्मिन्नेव सम्यक् आश्रयो यस्य तादृशं ज्ञातवती । एवं स्वस्मिन् भगवत्स्फुरणे जीवभावो निवृत्त इत्याह–निवृत्तेति । आधाराधेयभावोऽपि निवृत्तः स्वस्य परिच्छेदेऽपि तिरोहितानन्दत्वं जीवभावः, प्रकटानन्दः स्वयमेव भगवान् जात इत्यर्थः । एवं सति अविद्यादयः सर्वे क्लेशाः क्षीणा भवन्ति, क्लेशेषु च निवृत्तेषु परमा निर्वृतिः प्राप्यते । प्राप्यं रूपमधिकारातीतमिति. ज्ञापनार्थम् । प्राप्तेऽपि भगवद्रूपे पुनर्निवृत्तिरुक्ता । ब्रह्मभावेऽपि वा आधाराधेयभावः स्थित एव । मध्यावस्था वा एषा ॥२६॥ ❀ ❀ निवृत्तौ जातायामिन्द्रियैः पुनरानयनापेक्षाभावात् नित्यारूढसमाधिर्जाता । नित्यमारूढः समाधिर्यया सा देवहूतिर्नित्यारूढसमाधिः । तस्या भावकथनं तत्स्थैर्यार्थम्, एवं समाधिदार्ढ्ये परावृत्ताः गुणैः कृता भ्रमा यस्याः । आनन्दतिरोभावस्तमसः, परिच्छेदो रजसः, भेदः सत्त्वस्येति त्रयोऽपि निवृत्ताः । एवं सति अध्यासाश्रयभूतस्य देहस्यापि स्फुरणं सर्वदोषहेतुर्न जातमित्याह—न सस्मारेति । स्वप्नदृष्टं देहं यथा उत्थितः अहमिति न मन्यते, तदपेक्षयाऽपि इमं देहमात्मानं न सस्मार स्मृतवत्यपि न[1] ॥ २७ ॥ ❀ ❀ ननु देहास्मरणे कथं देहस्थितिरिति शङ्कां परिहरन् तस्य देहस्यान्तर्ज्ञानप्रकाशेन[2] प्रकाशमानत्वमाह—तद्देह इति । परतः योगनिर्मितस्त्रीभिः पोषितोऽप्यकृशः, वहिर्वस्त्रादिनैव पोषो न तु भोजनकृतः, तथापि न कृशः । तत्र हेतुः—आध्यसम्भवादिति । आधिर्मनः[3] पीडा । मृत्युः पूर्वमेव जित इति देहवृद्धिश्चानपेक्षितेति केवलं मनःपीडयैव देहह्रासो भवति; तदभावादकृशः । चकारात् कान्तिनाशाभावश्च । अन्तः स्थितज्ञानेन, वहिः स्थितमलेन च मलैरवच्छन्नो बभौ । उभयमेकत्र साधयितुं दृष्टान्तः—सधूम इव पावक इति । 'अन्तः प्रज्वलितो वह्निर्बहिर्निःसृतधूमकः । तादृशो ज्ञानसंपन्नस्तपसा मलिनो बभौ' ॥ २८ ॥

### श्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणविरचितः सुबोधिनीप्रकाशः

ब्रह्मणीत्यत्र आधाराधेयभाव इति । स्वस्मिन् ब्रह्मस्फूर्तिर्हि आधाराधेयभावप्रयोजिका तन्निवृत्तौ स निवृत्त इत्यर्थः । तद्विवृण्वन्ति—स्वस्येत्यादि । अग्रिमग्रन्थः प्रकटार्थः ॥ २६ ॥

तृतीयस्कन्धविवृतेर्यो भावो हृदि मेऽस्फुरत् । श्रीमदाचार्यकृपया तं प्रकाशितवानहम् ॥ १ ॥
यदबुध्वा मया किञ्चिदुदितं बुद्धिदोषतः । तत् क्षन्तव्यं दयालुत्वाद्दीनस्याऽप्यधमस्य मे ॥ २ ॥

इति श्रीतृतीयस्कन्धसुबोधिनीप्रकाशे श्रीमद्वल्लभदीक्षितचरणैकतानपीताम्बरात्मजपुरुषोत्तमदासविरचितं त्रयस्त्रिंशाध्यायविवरणं सम्पूर्णम् ।

### श्रीगिरिधरकृता बालप्रबोधिनी

विश्वतोमुखत्वे हेतुमाह—स्वेति । स्वानुभूत्या स्वरूपप्रकाशेन तिरोभूतं मायागुणैः कृतं देहेन्द्रियान्तःकरणरूपं विशेषणं यस्मात्तम् ॥ २५ ॥ ❀ ❀ देहाद्यस्मरणे हेतुमाह—ब्रह्मणीति । ब्रह्मण्यभेदेन अवस्थिता मतिर्यस्याः सा । चतुर्मुखव्यावृत्त्यर्थमाह—भगवति ज्ञानादिगुणपूर्णे । तदभेदं कथं सम्भवतीत्यत आह—आत्मनां जीवानां संश्रये कारणे अत एव निवृत्ता जीवापत्तिर्जीवभावो यस्यास्तस्या भावस्तत्त्वं तस्मात् क्षीणाः क्लेशाः रागादय आप्ता निर्वृतिः परमानन्दो यया तथाभूता ॥ २६ ॥ ❀ ❀ ननु तथापि गुणानां विद्यमानत्वात् पुनर्देहाद्यनुसन्धानं स्यादित्याशङ्क्याह—नित्येति । नित्यारूढो लब्धप्रतिष्ठः समाधिर्यस्यास्तस्या भावस्तत्त्वं तस्मात् परावृत्तः शान्तो गुणनिमित्तो भ्रमो देहाद्यात्माध्यासो यस्याः । अस्मरणे दृष्टान्तमाह—स्वप्न इति, स्वप्ने दृष्टमात्मानं यथोत्थितो न स्मरति तथेत्यर्थः ॥ २७ ॥ ❀ ❀ तर्हि तस्याः देहस्थितिः कथमित्यपेक्षायामाह—तद्देह इति । तस्या देहः परतः पराभिः कर्दमसृष्टविद्याधरीभिः पोषो पोषणं यस्य तथाभूतोऽप्यकृशः । तत्र हेतुमाह—आधिर्मनोग्लानिस्तदसम्भवादिति । अभ्यङ्गोद्वर्तनाद्यभावान्मलैरवच्छन्नोऽपि सधूमः पावक इव बभौ ॥ २८ ॥

### हिन्दी अनुवाद

इस प्रकार जीवके अधिष्ठानभूत परब्रह्म श्रीभगवान्में ही बुद्धिकी स्थिति हो जानेसे उनका जीवभाव निवृत्त हो गया और वे समस्त क्लेशोंसे मुक्त होकर परमानन्दमें निमग्न हो गयीं ॥ २६ ॥ ❀ ❀ अब निरन्तर समाधिस्थ रहनेके कारण उनकी विषयोंके सत्यत्वकी भ्रान्ति मिट गयी और उन्हें अपने शरीरकी भी सुधि न रही—जैसे जागे हुए पुरुषको अपने स्वप्नमें देखे हुए शरीरकी नहीं रहती ॥ २७ ॥ ❀ ❀ उनके शरीरका पोषण भी दूसरोंके द्वारा ही होता था । किन्तु किसी प्रकारका मानसिक क्लेश न होनेके कारण वह दुर्बल नहीं हुआ । उसका तेज और भी निखर गया और वह मैलके कारण धूमयुक्त अग्निके समान सुशोभित होने लगा । उनके बाल बिथुर गये थे और वस्त्र भी गिर गया था, तथापि निरन्तर श्रीभगवान्

---

१. स्मृतवानपि. क. ग. घ. ङ. च. । २. देहस्येति नास्ति ग. । ३. मानसी. क. ।

में ही चित्त लगा रहनेके कारण उन्हें अपने तपोयोगमय शरीरकी कुछ भी सुधि नहीं थी, केवल प्रारब्ध ही उसकी रक्षा करता था ॥ २८-२९ ॥

स्वाङ्गं तपोयोगमयं मुक्तकेशं गताम्बरम् । दैवगुप्तं न बुबुधे वासुदेवप्रविष्टधीः ॥ २९ ॥
एवं सा कपिलोक्तेन मार्गेणाचिरतः परम् । आत्मानं ब्रह्म निर्वाणं भगवन्तमवाप ह ॥ ३० ॥
तद्वीरासीत्पुण्यतमं क्षेत्रं त्रैलोक्यविश्रुतम् । नाम्ना सिद्धपदं यत्र सा संसिद्धिमुपेयुषी ॥ ३१ ॥
तस्यास्तद्योगविधुतमार्त्यं मर्त्यमभूत्सरित् । स्रोतसां प्रवरा सौम्य सिद्धिदा सिद्धसेविता[1] ॥ ३२ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

दैवगुप्तमारब्धकर्म पालितम् ॥ २९ ॥ ❀ ❀ निर्वाणं नित्यमुक्तम् ॥ ३० ॥ ❀ ❀ हे वीर विदुर! उपेयुषी प्राप्ता ॥ ३१ ॥ ❀ ❀ हे सौम्य ! तस्यास्तन्मर्त्यं शरीरं सरिदभूत् । कथंभूतम् । योगेन विधुता विलीना मार्त्या दैहिका धातुमला यस्य ॥ ३२ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः ।

दैवेन हरिणा गुप्तं "किमजितोवति नोपसन्नान्" इति न्यायेन ॥ २९ ॥ ❀ ❀ सा देवहूतिः ॥ ३० ॥ ❀ ❀ अज्ञानजये प्रवृत्तत्वाद्वीरेति संबुद्धिः । संसिद्धं मुक्तिम् ॥ ३१ ॥ ❀ ❀ सोमवंशोद्भूतत्वात्प्रियदर्शनोसीति प्रियत्वं व्यंजयन्नाह-सौम्येति । सिद्धिदा तटवासिनां स्नातृणाञ्च ॥ ३२ ॥

### श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

प्रकाशभेदेनात्मानं परमात्मानं ब्रह्म च ॥ ३० ॥ ❀ ❀ तत्स्थानं यत्रेत्यनेनान्वयात् ॥ ३१ ॥ ❀ ❀ सरिन्नदीविशेषः ॥ ३२ ॥

### श्रीमद्वीरराघवव्याख्या

तपोयोगप्रचुरं मुक्तकेशं विकीर्णशिरोजं विगतवस्त्रमपि स्वाङ्गं देहं दैवगुप्तं दैवेन रक्षितं न बुबुधे न बुद्धवती तत्र । हेतुः वासुदेवे भगवति प्रविष्टा धीर्यस्याः सा भगवदनुभवजनितानन्दसंप्लवे मग्नत्वान्न बुबुधे इत्यर्थः ॥ २९ ॥ ❀ ❀ एवं कपिलोपदिष्टेन ज्ञानमार्गेणाशु सा देवहूतिः परब्रह्म निरतिशयमानन्दरूपं भगवन्तमवाप हेति विस्मये ॥ ३० ॥ ❀ ❀ हे वीर ! विदुर ! यत्र सा मुक्तिमवाप तत्पुण्यतमं क्षेत्रं नाम्ना त्रैलोक्ये विश्रुतं प्रसिद्धमासीत् किं नाम तत्राह । यत्र क्षेत्रे सिद्धपदं सिद्धशब्दः प्रवर्त्तते सिद्धाश्रम इत्युच्यत इत्यर्थः । सिद्धपदप्रवृत्तौ निमित्तमाह । यत्र क्षेत्रे सा देवहूतिः संसिद्धिं मुक्तिमुपेयुषी प्राप्तवती अतस्तत्सिद्धक्षेत्रमिति प्रसिद्धमित्यर्थः ॥ ३१ ॥ ❀ ❀ तस्या इति । हे सौम्य ! तस्या देवहूत्याः मर्त्यं शरीरं तद्योगविधुतमार्त्यं तस्या देवहूत्याः योगेन विधुताः निरस्ता मार्त्याः वलिपलितादयो देहधर्मा यस्मिंस्तत्तथाभूतं सत्तया त्यक्तं शरीरं स्रोतसां नदीनां मध्ये प्रवरा सिद्धादिभिः सेविता सरिदभूत् सरिद्रूपेण प्रावहदित्यर्थः ॥ ३२ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

शरीराभिमानाभावादाध्यसम्भवोऽनुमीयत इति भावेनाह । स्वाङ्गमिति । गोप्त्वभावात्कथं तद्देहावस्थानमत्राह । दैवेति । दैवेन हरिणा गुप्तं रक्षितं रक्षणे निमित्तमाह । वासुदेवेति ॥ २९ ॥ ❀ ❀ श्रवणसुखस्याप्यस्य प्रसङ्गस्य कदा नु समाप्तिरिति मन्दाशङ्कां परिहरंस्तद्देहस्य प्रारब्धकर्मनिर्वाणेन तस्याः श्रीनारायणप्राप्तिं वक्ति । एवं सेति । अविरहं सर्वगतं निर्वाणं प्रकृतिप्राकृतशरीररहितं निर्वृतं वा । हेत्यनेनेतिहाससमाप्तिं सूचयति ॥ ३० ॥ ❀ ❀ पूर्वं शुक्लस्य हरेरश्रुबिन्दुनिपाताद्बिन्दुसरो नामाभूदिदानीमस्याः देवहूत्याः सिद्धपदहेतुत्वात्सिद्धपदमिति नामान्तरं वक्ति। तद्वीरेति । वीर ! विदुर ! ॥ ३१ ॥ ❀ ❀ तत्र तद्देहो दाहकाभावाच्छ्वसृगालगोचरश्चेल्लोकहितैषणक्षेत्रस्तुतिर्व्यर्था स्यादिति तत्राह । तस्या इति । तन्मर्त्यं शरीरं स्रोतसां नदीनां प्रवरा सरित् ॥ ३२ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः ।

दैवेन श्रीवासुदेवेनैव गुप्तम् "किमजितोऽवति नोपसन्नान्" इति न्यायेन ॥ २९ ॥ ❀ ❀ प्रकाशविशेषेण परमात्माख्यं ब्रह्माख्यञ्च भगवन्तं महावैकुण्ठनाथमवाप तं च निर्व्वाणं संसारदुःखनिवृत्तिपूर्व्वकं यथा स्यात्तथा अवापेत्यर्थः । तदाभास-

---

१. प्रा० पा०—सिद्धि० ।

स्यापि तदानवस्थितेः॥ ३०-३१॥ ❀ ❀ श्रीकपिलदेववद्रूपान्तरेण महावैकुण्ठस्थितापि लोकनिस्तारार्थं स्वदेहं सर्वत्र भ्रमयतीति लोकप्रसिद्धं सरिद्रूपमासाद्य स्वयं तदधिष्ठात्री भूत्वा पृथिव्यामपि व्यूह्य स्थितेत्याह। तस्या इति॥ ३२॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

दैवगुप्तं भगवता रक्षितम्॥ २९॥ ❀ ❀ परं श्रेष्ठमात्मानं भगवन्तं वैकुण्ठनाथम्। ननु सा किं निर्वाणं न प्राप तत्राह। तस्या भगवानेव ब्रह्मनिर्व्वाण इत्याह। ब्रह्मेति। यद्वा अधोक्षजालम्भमिहेत्यादौ "तद् ब्रह्म निर्व्वाणसुखं विदुर्बुधाः" इति सप्तमोक्तेर्ब्रह्मनिर्व्वाणपदवाच्यं तं कपिलमेव स्वपुत्रं कपिलं वैकुण्ठे प्राप॥ ३०॥ ❀ ❀ हे वीर! विदुर!॥ ३१॥ ❀ ❀ हे सौम्य! तस्यास्तन्मर्त्यं शरीरं सरिद्भूत् कीदृशं योगेन विधुता विलीना मार्त्या दैहिकाः धातुमला यस्य तत्॥३२-३३॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

तस्या भगवत्प्राप्तिलक्षणां मुक्तिमाह। एवमिति॥ ३०॥ ❀ ❀ हे वीर! सिद्धिं मुक्तिमपेयुषी प्राप्ता॥ ३१॥ ❀ ❀ हे सौम्य! तस्याः तन्मर्त्यं शरीरं सरिद्भूत्। कीदृशं योगविधुतमार्त्यं योगेन भगवद्ध्यानेन विधुता मार्त्या दैहिकाः धातुमला यस्य तत्॥ ३२-३३॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

कदाचिदुत्थानदशायां देहं स्मरिष्यतीत्याशङ्क्याऽऽह—स्वाङ्गमिति। तपोयोगाभ्यां व्याप्तम्। मुक्तकेशमिति दैवगत्या केशविमोकेऽपि, वस्त्रविमोकेऽपि[१], स्त्रीणां लज्जया अत्यावश्यकेऽपि निमित्ते देहं न बुबुधे। स्थितिस्तु दैवाधीनेत्याह—देवगुप्तमिति। अबोधे हेतुः—वासुदेवे प्रविष्टा धीर्यस्य॥ १९॥ ❀ ❀ एवं तस्या बाह्याभ्यन्तरव्यवस्थामुक्त्वा, आन्तरं फलितमाह—एवमिति। सा देवहूतिः कपिलोक्तेन मार्गेण भक्तिज्ञानयोगात्मकेन, अचिरतः शीघ्रमेव, परमात्मानं ब्रह्मानन्दं भगवन्तं सर्वशास्त्रप्रतिपाद्यम् अवाप। हेत्याश्चर्ये। स्त्रिया मुक्तिर्दुर्लभेति॥ ३०॥ ❀ ❀ तस्या मुक्तिः सर्वजनीना जातेति क्षेत्रप्रसिद्ध्या निरूपयति—तद्वीरासीदिति। वीर इति सम्बोधनं तथा शौर्यकरणार्थम्, स्वधर्मप्रतिपादनेन विश्वासार्थं वा[२]। तत् क्षेत्रं नाम्ना सिद्धशब्दवाच्यम्, सिद्धपदं पुण्यतममासीत्, त्रैलोक्यविश्रुतमिति तन्मुक्त्यैवेति तन्मुक्तौ प्रमाणम्। अन्यथा सर्वेषु तीर्थेषु विद्यमानेषु तस्यैव कथं प्रसिद्धिः स्यात्। अतः प्रसिद्धिहेतुमाह—सा संसिद्धिमुपेयुर्षीति। सा हि सम्यक् सिद्धिमुपेयुषी प्राप्तवती॥ ३१॥ ❀ ❀ शरीरस्य विनियोगमाह—तस्या इति। तपोयोगेन विधुतं मार्त्यं मृदंशो यस्य। जलमेव हि घनीभूतं मृद्भवति, यथा हिमः, यथा वा करकाः, यथा वा सैन्धवम्, योगीश्वरो[३] वा, महता तापेन तत् विशकलितं भवति, अत एव एतादृशं मर्त्यं तत् सरिद्भूत्। सा स्रोतसि सरस्वत्याः प्रविष्टा स्रोतसां प्रवरा सरस्वत्येवाभूत्। सौम्येति विश्वासार्थम्। यथा वा सोमः अमृतमयः, पाने विशकलितावयवो भवति; नवम्याः सोमकलायाः पातायम इति। ततः प्रभृति सा सरस्वती सिद्धिदा जाता तत्रैव। अतः सिद्धसेविता जाता॥ ३२॥

### श्रीगिरिधरकृता बालप्रबोधिनी

तपोयोगप्रचुरं मुक्ता विकीर्णाः केशा यस्मिंस्तत् गतमम्बरं वस्त्रं यस्मात्तत् दैवेन प्रारब्धेन गुप्तं रक्षितं स्वाङ्गमपि सा न बुबुधे न ज्ञातवती। तत्र हेतुमाह—वासुदेवे भगवति प्रविष्टा धीर्यस्याः सेति॥ २९॥ ❀ ❀ एवं कपिलोपदिष्टेन मार्गेण सा देवहूतिरचिरतः निर्वाणं मोक्षमवाप। हेति विस्मये। शास्त्रभेदेन नामभेदमाह—स्मृतौ परमात्मानम्, वेदे ब्रह्मेति, पुराणे भगवन्तमिति॥ ३०॥ ❀ ❀ संसारविजये विहता विधेयेत्याशयेन सम्बोधयति—वीरेति। यत्र सा सिद्धिमुपेयुषी मुक्तिमवाप तत् स्थानं नाम्ना सिद्धपदं त्रैलोक्ये विश्रुतं प्रसिद्धं पुण्यतमं क्षेत्रमासीदित्यन्वयः॥ ३१॥ ❀ ❀ विश्वासार्थं सम्बोधयति—सौम्येति। तस्या देवहूत्यास्तन्मर्त्यं शरीरं स्रोतसां नदीनां प्रवरा श्रेष्ठा सरिन्नदी अभूत्। प्रवरत्वमेव दर्शयति—सिद्धसेवितेति। तत्र हेतुमाह—सिद्धिदेति। शरीरस्य कथमेवम्प्रभावः धात्वादिविरचितत्त्वेन वैभत्स्यादित्यत आह—योगेति, योगेन विधूता विलीना मार्त्या दैहिका धातुमला यस्य तत्॥ ३२॥

### हिन्दी अनुवाद

विदुरजी! इस प्रकार देवहूतिजीने कपिलदेवजीके बताये हुए मार्गद्वारा थोड़े ही समयमें नित्यमुक्त परमात्मस्वरूप श्रीभगवान्‌को प्राप्त कर लिया॥ ३०॥ ❀ ❀ वीरवर! जिस स्थानपर उन्हें सिद्धि प्राप्त हुई थी, वह परम पवित्र क्षेत्र त्रिलोकीमें 'सिद्धपद' नामसे विख्यात हुआ॥ ३१॥ ❀ ❀ साधुस्वभाव विदुरजी! योगसाधनके द्वारा उनके शरीरके सारे दैहिक मल दूर हो गये थे। वह एक नदीके रूपमें परिणत हो गया, जो सिद्धगणसे सेवित और सब प्रकार की सिद्धि देनेवाली है॥ ३२॥

---

१. अपीति नास्ति क. ग.। २. च. क. ङ.। ३. वागीश्वरः क. घ.।

कपिलोऽपि महायोगी भगवान् पितुराश्रमात्। मातरं समनुज्ञाप्य प्रागुदीचीं दिशं ययौ ॥ ३३ ॥
सिद्धचारणगन्धर्वैर्मुनिभिश्चाप्सरोगणैः । स्तूयमानः समुद्रेण दत्तार्हणनिकेतनः ॥ ३४ ॥
आस्ते योगं समास्थाय सांख्याचार्यैरभिष्टुतः। त्रयाणामपि लोकानामुपशान्त्यै[1] समाहितः ॥ ३५ ॥
एतन्निगदितं तात यत्पृष्टोऽहं तवानघ[2]। कपिलस्य च संवादो देवहूत्याश्च पावनः ॥ ३६ ॥
य इदमनुशृणोति योऽभिधत्ते कपिलमुनेर्मतमात्मयोगगुह्यम्।
भगवति कृतधीः सुपर्णकेतावुपलभते भगवत्पदारविन्दम् ॥ ३७ ॥

इति श्रीमद्भागवते महापुराणे वैयासिक्यामष्टादशसाहस्त्र्यां पारमहंस्यां संहितायां तृतीयस्कन्धे कापिलेयोपाख्याने[3] त्रयस्त्रिंशोऽध्यायः।

## श्रीधरस्वामिविरचिता भावार्थदीपिका

कपिलोऽपि ययावित्युक्तं तदेव प्रपंचयति। कपिलोऽपीति त्रिभिः समनुज्ञाप्यानुज्ञां संप्राप्य ॥ ३३ ॥ ❋ ❋ दत्तमर्हणमर्घ्यं निकेतनं च यस्मै ॥ ३४ ॥ ❋ ❋ उपशांत्यर्थं समाहित आस्ते ॥ ३५ ॥ ❋ ❋ प्रकरणार्थमुपसंहरति। एतदिति। तव त्वया ॥ ३६ ॥ ❋ ❋ एतच्छ्रवणकीर्त्तनफलमाह। य इति। सुपर्णकेतौ गरुडध्वजे उपलभते प्राप्नोति ॥ ३७ ॥
इति श्रीमद्भागवते महापुराणे तृतीयस्कंधे टीकायां भावार्थदीपिकायां श्रीधरस्वामिविरचितायां त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

प्राक् प्रथमं सदाचारादुदीचीमुत्तराम् "गतपूर्वां महात्मभिः" इत्युक्तेः। ततो गंगासागरसंगमे स्थिरतामवापेत्यर्थः ॥ ३४-३५ ॥ ❋ ❋ सांख्याचार्यैरासुर्यादिभिः। मां दृष्ट्वाऽन्येपि मोक्षार्थं योगाचरणे प्रवृत्ताः स्युरित्यालोच्य समाहितोभूदित्याह-त्रयाणामित्यादि ॥ ३५ ॥ ❋ ❋ प्रियत्वात्तुभ्यमेतन्निगदितमित्याह-तातेति ॥ ॥ ३६ ॥ ❋ ❋ श्रीमत्कपिलदेवोक्तं तात्पर्यं फलेन दर्शयन्देवहूत्यास्तादृशीं गतिमेव द्रढयति-योऽभिधत्ते मात्रं यो वा शृणोति मात्रं किमुतानुतिष्ठति यः किमुततरां श्रीदेवहूतिः। उपाधिक्येन प्रेमवत्पार्षदतया भगवत्पदारविंदसेवार्थं प्राप्नोति ॥ ३७ ॥

यो मात्रे कापिलं रूपं धृत्वा ज्ञानमदात्प्रभुः। स सदा संसृतेः पातु यशोदानंदनो हरिः ॥ १ ॥
भावार्थदीपिकाटीकाप्रकाशोऽतिप्रयत्नतः। वंशीधरेण संदृब्धो बहुटीकावलोकनैः ॥ २ ॥
प्रीयतां यमुनातीरवल्लवीकेलितत्परः। श्रीराधारमणोऽनेन वृषार्कसुतया सह ॥ २ ॥

इति श्रीगौडवंशोद्भूतकौशिकगोत्रवंशीधरशर्मकृतस्तृतीयस्कंधभावार्थदीपिकाप्रकाशः समाप्तः।

## श्रीराधारमणदासगोस्वामिविरचिता दीपिनी व्याख्या

तदेव यानमेव प्राक् प्रथमं योगिनां सदाचारादुदीचीमेव दिशं ययौ। पश्चाद्गङ्गासागरसङ्गम एव स्थिरो बभूवेत्यर्थः ॥ ३३ ॥ ❋ ❋ सिद्धेति युग्मकम्। समाहित इति मर्य्यादालीलाशालित्वं व्यञ्जितम् ॥ ३४,३५ ॥ ❋ ❋ यद्वस्तु प्रतिपृष्ट एतन्निगदितम्। सामान्यत उक्तस्यैव विवरणं कपिलस्येति ॥ ३६ ॥ ❋ ❋ अत्र श्रोतृवक्त्रोरपि साक्षात्पदारविन्दलाभाभिधानेन देवहूत्या निर्विशेषप्राप्तिः प्रकरणस्य तत्परत्वं च दूरोत्सारितमिति ज्ञेयम् ॥ ३७ ॥

मृत्योर्विमोच्य येनाहं तृतीयस्कन्धदीपनम्। प्रापितोऽस्मि प्रपद्येऽहं चैतन्यं प्राणपालकम् ॥ १ ॥
कृष्णगोविन्दमित्रेण राधारमणसेविना। राधारमणदासेन तृतीये दीपनं कृतम् ॥ २ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीराधारमणदासगोस्वामिविरचितदीपिन्याख्यदीपिकाटिप्पण्यां त्रयस्त्रिंशोऽध्यायः ॥३३॥

## श्रीमद्वीरराघवव्याख्या

कपिलोऽनुमतो ययावित्युक्तं क ययौ इत्यत्राह। हे विदुर! महायोगी भगवान् कपिलोऽपि मातरं देवहूतिं समनुज्ञाप्य मात्रानुज्ञातः प्रागुदीचीमीशानदिशं प्रति ययौ ॥ ३३ ॥ ❋ ❋ तत्र सिद्धचारणादिभिः स्तूयमानः समुद्रेण दत्तमर्हणं निकेतनं निवासस्थानं च यस्य स ययौ ॥ ३४ ॥ ❋ ❋ आस्ते इति। साङ्ख्याचार्यैः कपिलोक्तसाङ्ख्यप्रवर्तकयोगिभिरभिष्टुतः

---

१. प्रा० पा०—कानां सुखायास्ते समा०। २. प्रा० पा०—त्वया०। ३. कापिलेये।

लोकानामुपशान्त्यै क्षेमाय समाहितमनाः स्वयमपि योगमास्थायाध्यास्त इत्यर्थः ॥ ३५ ॥ ॐ ॐ स्वायम्भुवस्य च मनोर्वंश इत्यादिना कृतस्य प्रश्नस्य यदुत्तरमुक्तं तदुपसंहरति । एतदिति । हे अनघ विदुर ! अहं यत्पृष्टः यत्प्रति त्वया पृष्टस्तदेतत्तव तुभ्यं निगदितं मया तत्प्रसङ्गात् कपिलस्य देवहूतेश्च लोकपावनः शुश्रूषणकथनपराणां च लोकानां पावनः सम्वादोऽपि निगदितः ॥ ३६ ॥ ॐ ॐ कपिलदेवहूतिसम्वादश्रवणादिफलमाह । य इति । कपिलेन पूर्वं फलमुक्तमत्र तु मैत्रेयेणेति वक्तृभेदान्न पौनरुक्त्यम् । इदमात्मनो योगरूपं गुह्यतमं कपिलमुनेर्मतं यः शृणोति वक्तरि सति यो वाभिधत्ते श्रोतृषु सत्सु श्रावयति स पुमान सुपर्णकेतौ गरुडध्वजे भगवति कृतधीः निष्पन्नभक्तियोगो भूत्वा भगवत्पदारविन्दं लभते प्राप्नोति ॥ ३७ ॥

इति श्रीवत्सान्वयपयःपारावारराकासुधाकरस्य सर्वविद्यानिधेः श्रीशैलगुरोः सुतेन तच्चरणकमलपरिचर्याप्रसन्नतत्सूक्तिसमधिगतश्रीमद्भागवतार्थहृदयेन श्रीवैष्णवदासेन श्रीवीरराघवविदुषा कृतायां श्रीमद्भागवतचन्द्रचन्द्रिकाख्यायां श्रीभागवतव्याख्यायां तृतीयस्कन्धे त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

श्रीमते रामानुजाय नमः श्रीमते निगमान्तमहादेशिकाय नमः ।

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

पूर्वं कपिलगमनस्य कर्म नोक्तमधुना तत्पूर्वं तद्गमनं वक्ति । कपिलोऽपीति । महायोगी पूर्णज्ञानी प्रागुदीचीं दिशं शङ्कररक्षिताम् ॥ ३३ ॥ ॐ ॐ दत्ते अर्हणनिकेतने पूजानिवासस्थाने यस्मै स तथा ॥ ३४ ॥ ॐ ॐ योगं ध्यानलक्षणप्राणायामलक्षणं वा साङ्ख्याचार्यैः यथार्थज्ञानोपदेष्टृभिः सनकादिभिः नायं योगः स्वप्रयोजनोपदेशार्थः किं तु लोकसुखार्थ इत्याह । त्रयाणामिति । उपशान्त्यै मङ्गलाय ॥ ३५ ॥ ॐ ॐ मैत्रेयो विदुरं सम्बोधयंस्तत्प्रश्नपरिहारकथनमुपसंहरति । एतन्निगदितमिति । न केवलं देवहूत्या एव सिद्धिहेतुः किं तु लोकस्य चेति चार्थः ॥ ३६ ॥ ॐ ॐ श्रोत्रादीनां क्षिप्रप्रवृत्त्यर्थं श्रवणादिफलमाह । य इदमिति । आत्मयोगगुह्यं परमात्मप्राप्तिसाधनज्ञानोपायानां मध्ये रहस्यं यः सुपर्णकेतौ गरुडध्वजे भगवति कृतधीः श्रवणादिनेदं मतमभिधत्ते अभ्यस्यति स च भगवत्पदारविन्दमुपलभतेऽपरोक्षीकरोतीति ॥ ३७ ॥

सुनीलनीरदश्यामं सच्चिदानन्दविग्रहम् । रमारमणमीशेशं विठ्ठलं समुपास्महे ॥ १ ॥
पदरत्नावली नाम तृतीयस्कन्धकाशिनी । वनमालेव देवेश ! तव कण्ठे विराजताम् ॥ २ ॥
तृतीयस्कन्धमारुह्य गिरीन्द्रमिव गह्वरम् । अवरूढे मयि स्निग्धाः कृपां कुर्वन्तु साधवः ॥ ३ ॥

इति श्रीमन्महेन्द्रतीर्थपूज्यपादशिष्यविजयध्वजमुनीन्द्रकृतायां श्रीमद्भागवतटीकायां पदरत्नावल्यां तृतीयस्कन्धे त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

प्राक् प्रथमं सदाचारादुदीचीमेव दिशं ययौ पश्चाद्गङ्गासागरसङ्गम एव स्थिरतामवापेत्यर्थः ॥ ३३ ॥ ॐ ॐ सिद्धेति युग्मकम् ॥ ३४ ॥ ३५ ॥ ॐ ॐ एतदित्यत्र एवमिति पुण्यारण्यः ॥ ३६ ॥ ॐ ॐ श्रीकपिलदेवोक्तातात्पर्यं फलेन दर्शयन् श्रीदेवहूत्यास्तादृशीं गतिमेव द्रढयति । य इदमिति । योऽभिधत्ते मात्रं यो वा शृणोति मात्रं किमुतानुतिष्ठति यः किमुततरां श्रीदेवहूतिरिवेत्यर्थः ॥ ३७ ॥

इति श्रीमद्भागवते महापुराणे तृतीयस्कन्धे श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी ।

कपिलो ययावित्युक्तं तदेव प्रपञ्चयति । कपिलोऽपीति त्रिभिः । समनुज्ञाप्य अनुज्ञां प्राप्य प्राक् प्रथमं सदाचारादुदीचीमेव दिशं ययौ । पश्चाद्गङ्गासागरसङ्गम एव स्थिरतामवापेत्यर्थः ॥ ३३–३६ ॥ ॐ ॐ श्रीमत्कपिलदेवोक्तं तात्पर्यं फलेन दर्शयन् देवहूत्यास्तादृशीं गतिमेव द्रढयति । य इदमिति । योऽभिधत्ते मात्रं यो वा शृणोति मात्रं किमुतानुतिष्ठति यः किमुततरां श्रीदेवहूतिः उप आधिक्येन प्रेमवत्पार्षदतया भगवत्पदारविन्दसेवार्थं प्राप्नोति ॥ ३७ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् । तृतीयस्य त्रयस्त्रिंशः सङ्गतः सङ्गतः सताम् ॥ ३३ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

समुद्रेण दत्तमर्हणं पूजनं निकेतनं च यस्मै सः ॥ ३४ ॥ ३५ ॥ ❀ ❀ प्रकरणार्थमुपसंहरति । एतदिति ॥ ३६ ॥ ❀ ❀ प्रकरणश्रवणादिफलमाह । य इति । आत्मयोगाः परमात्मप्रापका ये ज्ञानभक्त्यादिरूपा उपायाः तेषां गुह्यं रहस्यं यः शृणोति यश्चाभिधत्ते श्रावयति स भगवति सुपर्णकेतौ गरुडध्वजे कृतधीः अर्पितबुद्धिः सन् भगवत्पदारविन्दं लभते प्राप्नोति ॥ ३७ ॥

इति श्रीमद्भगवन्निम्बार्कचरणचिन्तकशुकसुधीप्रणीते तृतीयस्कन्धीये श्रीमद्भागवते सिद्धान्तप्रदीपे त्रयस्त्रिंशाध्यायार्थप्रकाशः ॥ ३३ ॥

### श्रीमद्वल्लभाचार्यविरचिता सुबोधिनी व्याख्या

एवं तस्याः सर्वसिद्धिमुक्त्वा स्त्रीमुक्त्यवधिभूतां सर्गलीलां समाप्य, तस्य सर्गस्य विसर्गसाधकत्व एव सर्गत्वं सेत्स्यती त्युत्तरोपयोगार्थं कपिलस्य स्थितिमाह—कपिलोऽपीति त्रिभिः—गतिः स्तोत्रं प्रतिष्ठा च त्रयमाह गुणान्वितम्। तत्र प्रथमं गतिमाह— महायोगी गमनेऽपि प्रयासरहितः, मातुः सिद्धिं च ज्ञात्वा, अग्रे कर्त्तव्यमपि जानातीति। भगवानिति सर्गनियामकत्वे हेतु। पितुराश्रमात् मातरं समनुज्ञाप्य प्रागुदीचीं दिशं प्रति ययौ। एषा वै देवमनुष्याणां शान्ता दिक् ॥ ३३ ॥ ❀ ❀ गमने सिद्धादीनां स्तोत्रमाह—सिद्धेति । ये केचित् सिद्धिकामुकाः, ते भगवदंशाः षड्विधा निरूपिताः । उरगा वासुकिप्रभृतयः । गणैरिति पाठे, अप्सरसां गणा येषां ते इन्द्रादयः, तैः स्तूयमानः । यत्र गच्छति तेनाऽपि पुरस्कृत इत्याह—समुद्रेण दत्ते अर्हणनिकेतने यस्य ॥ ३४ ॥ ❀ ❀ एवं तस्य गमनमध्यस्थितिं निरूप्य तत्र स्थितस्य कृत्यमाह—आस्त इति योगं सम्यगास्थाय सम्यगास्ते । तत्र स्थितो द्वयं कृतवान्—साङ्ख्यमतप्रवृत्तिः, त्रयाणामपि लोकानामुपशान्त्यर्थं शुभाशंसनं च । अतः साङ्ख्याचार्यैः स्तुतः ॥ ३५ ॥ ❀ ❀ एवं तच्चरित्रमुक्त्वा उपसंहरति—एतन्निगदितमिति । कपिलस्य यच्चरित्रं पृष्टं तन्निगदितम्। संवादोऽपि पावन इति निगदितः । एतस्य द्वितीयसर्गरूपत्वात्सर्गोऽपि निगदित इत्यर्थः । चकारद्वयेन द्विविधोऽपि सर्ग उपसंहृतः ॥ ३६ ॥ ❀ ❀ एतच्चरित्रश्रवणस्य फलमाह—य इदमनुशृणोतीति । कपिलमुनेर्मतं साङ्ख्यम् । आत्मयोगेष्वात्मप्राप्त्युपायेषु गुह्यं गोप्यमनुशृणोतीति शिष्यरूपेण, न तु प्रभुरूपेण । योऽभिधत्ते सम्यक् शिष्यहृदये स्थापयति, तावुभावपि भगवति कृतबुद्धी, तस्मिन्नेव सुपर्णकेतौ गरुडध्वजे कालातिक्रमार्थम्, शास्त्रपर्यवसानार्थं च तादृशे निश्चितबुद्धिः, तत्पदारविन्दमुपलभते । एतस्य मतस्य श्रवणं भगवति मतिनिश्चयार्थम् । यत्रैतन्मतश्रवणेऽपि भगवत्पदप्राप्तिर्भवति तत्र किं वक्तव्यं तन्मतानुसारेण प्रवृत्तस्य सम्पूर्णसर्गलीला-श्रोतुर्वा ॥ ३७ ॥

तृतीयस्कन्धविवृतिः श्रीकृष्णचरणाम्बुजे । निवेदितातियत्नेन सर्वसिद्धान्तगुम्फिता ॥ १ ॥
सुज्ञेषु भक्तिहृदयेषु निवेदयाभि सर्गाभिधा यदि यथार्थतया विचिन्त्या ।
लीला सदैव मतियुक्तिभिरन्विताङ्गी भाव्या तदा विवृतिरुज्ज्वलयुक्तियुक्ता ॥ २ ॥
सर्वभक्तसमुद्धारे सर्वार्थोत्पादकं हरिम् । त्रयस्त्रिंशत्सर्गयुतं वन्दे सर्गाय माधवम् ॥ ३ ॥

इति श्रीभागवतसुबोधिन्यां श्रीमल्लक्ष्मणभट्टात्मजश्रीमद्वल्लभदीक्षितविरचितायां तृतीयस्कन्धे त्रयस्त्रिंशा-ध्यायविवरणं समाप्तम् ।

### श्रीगिरिधरकृता बालप्रबोधिनी

कपिलोऽपि ययावित्युक्तं तत्र क ययावित्यपेक्षायामाह—कपिल इति त्रिभिः । कपिलोऽपि मातरं समनुज्ञाप्य पृष्ट्वा पितुराश्रमात् प्रागुदीचीमैशानीं दिशं ययौ ॥ ३३ ॥ ❀ ❀ तत्र च सिद्धादिभिः स्तूयमानः समुद्रेण दत्तमर्हणमर्घ्यं निकेतनं निवासस्थानं च यस्मै सः ॥ ३४ ॥ ❀ ❀ स्वप्रवर्तितसाङ्ख्यशास्त्रस्य ये आचार्यास्तैरभिष्टुतः । स्वयमपि समाहितः एकाग्रमनाः योगं समास्थाय आस्ते इति द्वयोरन्वयः । ननु भगवतो योगस्य किं प्रयोजनमित्यपेक्षायामाह—त्रयाणामिति । त्रिलोकस्य जनानामुपशान्त्यै स्वाचारेण योगप्रवृत्त्या विमोक्षायेत्यर्थः ॥ ३५ ॥ ❀ ❀ स्वायम्भुवस्य च मनोर्वंश इति प्रश्नस्योक्तमर्थमुप-संहरति—एतदिति । अनघ हे तातेति सम्बोधनद्वयेन निर्दोषत्वेनाधिकारित्वात्तव स्नेहेन कथितमिति सूचयति यन्मनुवंशादि तव त्वयाहं पृष्टस्तदेतत्तुभ्यं मया निगदितं कथितं प्रसङ्गात्कपिलस्य देवहूत्याश्च पावनः पापनाशकः संवादश्च कथितः ॥ ३६ ॥ ❀ ❀ एतच्छ्रवणकीर्त्तनफलमाह—य इति । इदमात्मयोगं भगवद्ध्यानं गुह्यं सर्वशास्त्ररहस्यं कपिलमुनेर्मतं योऽनुदिनं शृणोति यश्चाभिधत्ते श्रावयति स सुपर्णकेतौ गरुडध्वजे भगवति कृतधीः निष्पन्नभक्तियोगः सन्भगवत्पदारविन्दं लभते प्राप्नोति ॥ ३७ ॥

इति श्रीवल्लभाचार्यवंश्यगोपालसूनुना ॥ श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा ॥ १ ॥
श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये ॥ श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी ॥ २ ॥
रचिता च तृतीयेऽत्र मोक्षसर्गे तु विवृतिः ॥ त्रयस्त्रिंशो गतो देवहूतिमोक्षनिरूपकः ॥ ३ ॥
तृतीयस्कन्धटीकेयं यत्प्रसादाद्विनिर्मिता ॥ स तुष्यतु प्रयत्नान्मे मुकुन्दो दीनवत्सलः ॥ ४ ॥

## हिन्दी अनुवाद

महायोगी भगवान् कपिलजी भी माताकी आज्ञा ले पिताके आश्रमसे ईशानकोणकी ओर चले गये ॥ ३३ ॥ ❁ ❁ वहाँ स्वयं समुद्रने उनका पूजन करके उन्हें स्थान दिया । वे तीनों लोकोंको शान्ति प्रदान करनेके लिए योग मार्गका अवलम्बन कर समाधिमें स्थित हो गये हैं । सिद्ध, चारण, गन्धर्व, मुनि और अप्सरागण उनकी स्तुति करते हैं तथा सांख्याचार्यगण भी उनका सब प्रकार स्तवन करते रहते हैं ॥ ३४-३५ ॥ ❁ ❁ निष्पाप विदुरजी ! तुम्हारे पूछनेसे मैंने तुम्हें यह भगवान् कपिल और देवहूतिका परम पवित्र संवाद सुनाया ॥ ३६ ॥ ❁ ❁ यह कपिलदेवजीका मत अध्यात्मयोगका गूढ़ रहस्य है । जो पुरुष इसका श्रवण या वर्णन करता है, वह भगवान् गरुड़ध्वजकी भक्तिसे युक्त होकर शीघ्र ही श्रीहरिके चरणारविन्दोंको प्राप्त करता है ॥ ३७ ॥

३३ वाँ अध्याय समाप्त

## समाप्तोऽयं तृतीयः स्कन्धः

॥ श्रीहरिःशरणम् ॥

परिशिष्टम् १

श्रीकृष्णाय नमः।
श्रीगोपीजनवल्लभाय नमः।
श्रीमदाचार्यचरणकमलेभ्यो नमः।
श्रीभागवतप्रतिपदमणिवरभावांशुभूषितमूर्तिर्विजयते।
श्रीमद्वैश्वानरावतारशुद्धाद्वैतनिर्गुणभक्तिमार्गप्रवर्त्तकाचार्यचक्रचूडामणिश्रीवल्लभाचार्यचरणविरचिते

# सप्रकाशतत्त्वार्थदीपनिबन्धे

## तृतीयं

## श्रीमद्भागवतार्थप्रकरणम्।

( श्रीगो० श्रीपुरुषोत्तमचरणप्रणीतावरणभङ्गाख्यव्याख्यासमेतम् )

## अथ तृतीयस्कन्धार्थः।

प्रकाशः—तृतीयस्कन्धनिबन्धनं चिकीर्षुरुक्तविवक्षितयोः सङ्गतिमाह अधिकारिष्विति।

निबन्धः—अधिकारिषु साङ्गं हि श्रवणं सुनिरूपितम्। स्कन्धद्वयेन शेषेषु क्रियते विषयाभिधा॥ १॥

प्रकाशः—अधिकारः प्रथमस्कन्धार्थः। साङ्गश्रवणविधिर्द्वितीयार्थः। तृतीयादिदशस्कन्धेषु श्रोतव्यविषयः प्रतिपाद्यत इत्यर्थः॥ १॥

एवं दशानां साधारणमर्थमुक्त्वा तृतीयस्कन्धार्थमाह त्रयस्त्रिंशदथाध्यायास्तृतीये सर्गवर्णने इति,

निबन्धः—त्रयस्त्रिंशद[1]थाध्यायास्तृतीये सर्गवर्णने। स्वाभिप्रेते सविशेषे स्वोपयुक्तार्थसंयुते॥ २॥

एकदेशे सर्गप्रतिपादनव्यावृत्त्यर्थं 'त्रयस्त्रिंशदथाध्याया' इत्युक्तम्। सर्वेषां सर्ग एवार्थः "सर्गः कारणसम्भूतिः" इति वाक्यात्। सर्गश्च लौकिकालौकिकभेदेन द्विविध इति। अलौकिके त्रयस्त्रिंशद्देवा सृष्टाः सन्तो यज्ञं साधयन्तीत्यविवादम्। लौकिकेऽप्यष्टाविंशतितत्त्वानि चतुर्विधभूतबीजानि कालश्चेति त्रयस्त्रिंशत्प्रकारा सृष्टिर्भवति। अत एव सर्गस्य विशेषणमाह स्वाभिप्रेत इति। न तु सर्गो यः कश्चित्सृष्टिसाधारणः। तत्र स्वाभिप्रेतः पूर्वमुक्तो लौकिकालौकिकभिन्नः। तत्रापि भगवद्रूपता सर्वत्रेति विशेषः। तत्रापि स्वोपयुक्तार्थसहितो मोक्षादिफलयुक्तः। जीवस्य हि द्विधा सृष्टिः, बहिः स्वरूपे च। बहिः सृष्टिर्लोके प्रसिद्धा। सा हि वस्तुतो जीवस्य नाशरूपत्वात्प्रलयो भवति। अतो मोक्ष एव मुख्यसृष्टिः। अधिकारिदेहव्यतिरेकेण स न भवतीति मोक्षार्थ-

---

अथ तृतीयस्कन्धप्रकाशावरणभङ्गः।

श्रीकृष्णाय नमः। अथ तृतीयस्कन्धनिबन्धं व्याकुर्वन्तः प्रथमस्कन्धस्य हेतुतारूपां द्वितीयस्य विषयित्वरूपां शेषाणां विषयत्वरूपाञ्च सङ्गतिं स्फुटीकर्त्तुं प्रथमां कारिकां विवृण्वन्त्यधिकार इत्यादि॥ १॥

एवमेकेन सङ्गतिरुक्ता। अतः परं सार्धत्रयेण स्कन्धार्थमाहुरेवं दशानामित्यादि। ननु स्कन्धार्थे वक्तव्ये प्रथमत एवाध्यायसङ्ख्याकथने किं प्रयोजनमित्याकाङ्क्षायामाहुरेकदेश इत्यादि। "सर्गः कारणे"तिवाक्यं पुराणान्तरीयम्। तथा च, प्रत्यध्यायं तस्य तस्य कारणस्य सम्भूतेरुक्तत्वात्तथेत्यर्थः। नन्वेवं सत्यष्टाविंशतिसङ्ख्या युक्ता, न तु त्रयस्त्रिंशदित्यत आहुः सर्गश्चेत्यादि। तथा चैतानि कारणानि लौकिकरूपेणोत्पन्नानि लौकिकं देवत्वेनोत्पन्नानि च यज्ञं साधयन्तीन्येवं द्विविधसर्गसाधनात्

---

१, "तथा" इति पाठः।

मुत्पत्तिरपि निरूप्यते। तत्र गृहस्थस्यैव मुक्तिः सन्दिग्धेति दम्पत्योर्मुक्तिनिरूपणम्। तत्र गृहस्थस्य मुक्तौ भगवत्सन्तोषः प्रयोजकः। तस्यापि[1] भक्तिः, ज्ञानं योगश्चाऽऽज्ञाकरणं च। तस्मादेतत्सर्वं सर्गमध्य इति स्वोपयुक्तार्थे-युक्तम् ॥ २ ॥

प्रसिद्धिविरोधमाशङ्क्याह—लोके सर्गविसर्गाविति।

**लोके सर्गविसर्गौ हि यादृशौ नेह तौ मतौ। किन्तु तौ सार्थकौ वाच्यौ तेन स्कन्धद्वयं ततम् ॥ ३ ॥**

प्रकाशः—सार्थकौ पुरुषार्थपर्यवसायिनौ। तेनैकैका लीला स्वतन्त्रेति प्रत्येकमेकैकस्कन्धवाच्यता, तेन स्कन्ध-द्वयविस्तरः ॥ ३ ॥

तत्रापि मैत्रेयविदुरसंवादप्रकारेण लीलाकथनमुचितमित्याह—लीलाद्वयस्येति।

**लीलाद्वयस्य श्रवणात्सिद्धः क्षत्ताऽधिकारतः। किं पुनः सकलश्रोतेत्यतस्तस्य कथा तता[2] ॥ ४ ॥**

प्रकाशः—सर्गलक्षणमाह तत्रेति।

**तत्र सर्गो रजोभाजो लीला कारणजन्मदा। देवस्य तु द्विरूपत्वात्कारणानां त्रिरूपतः।**

**पञ्चधा सा स्वतो द्वेधा बन्धमोक्षविभागतः ॥ ५ ॥**

प्रकाशः—"भूतमात्रेन्द्रियधियां जन्म सर्ग उदाहृतः। ब्रह्मणो गुणवैषम्याद्" इति मूले लक्षणम्। तत्र गुणवैषम्यं रजसैव, तस्यैव सृष्टिकारणत्वात्। ब्रह्मण इति सन्देहाभावाय। भगवत इति भूतमात्रेन्द्रियधियो देहरूपाः, कार्या अपि भवन्तीति सङ्ख्या युक्तैवेत्यर्थः। अत्र त्रयस्त्रिंशद्देवाः, "अग्निः, पृथिवी, वायुः, अन्तरिक्षम्, आदित्यो, द्यौः, चन्द्रमाः, नक्षत्राणीति अष्टौ वसवः, दश प्राणाः, आत्मा, चेति एकादश रुद्राः, संवत्सरस्य द्वादश मासाः, आदित्याः, स्तनयित्नुः, पशवश्चेति, इन्द्रप्रजापती" इत्येवं बृहदारण्यकोक्ता ज्ञेयाः। 'स्तनयित्नु'पदेन मेघनादाभिमानी। 'आत्म'पदेन च मनो ज्ञेयम्। तत्र यज्ञप्रकरण एवोक्तत्वा-देतेषां यज्ञसाधकत्वञ्च बोध्यम्। यज्ञस्य च "नायं लोकोस्त्ययज्ञस्ये'तिवाक्यात् फलोपयोगित्वम्। फलञ्चाभ्युदयनिःश्रेयसभेदेन द्विविधम्। तत्र वसूनां कर्मफलसाधकवस्त्वाश्रयत्वेन यज्ञोपयोगः। रुद्राणां लोकान्तरगमनसाधकत्वेन, आदित्यानामायुर्हारकतया फलनियामकत्वेन, इन्द्रस्य दानदमदयाबोधकत्वेन, पशूनां यज्ञनिष्पादकत्वेन[3]। तदत्र पञ्चप्रकरणैः सेत्स्यतीति तत्प्रकारं समाप्तौ वक्ष्यामः। [4]यत्पुनर्द्वितीयस्कन्धसुबोधिन्यामष्टाविंशतितत्त्वान्युक्त्वा 'सर्गो द्विविधः, 'प्रत्येकसमुदायभेदेन। वैषम्यं त्रिविधं चतुर्विधं वा। प्रत्येकं विषमाः, समुदायेनापि विषमा भवन्तीति त्रयस्त्रिंशद्विधश्चतुस्त्रिंशद्विधो वे'त्युक्तम्। तत्र समुदायसर्गो यः सोऽलौकिक-सर्गसङ्ग्राहकः, श्रौतानां देवानां सामुदायिकदेहाभिमानित्वात्। तदा स सङ्ख्याप्रयोजक एव, न तु घटको, यथात्र द्वौ,, घटकस्तु प्रत्येकसर्ग एव। तदा वैषम्यचातुर्विध्येन सङ्ख्यापूर्तिः। यदा सोपि घटकस्तदा वैषम्यत्रैविध्यमिति न सङ्ख्याधिक्यम्। "चतुस्त्रिंशद्वे"त्युक्तिस्तु सर्गवैषम्याभ्यां कृतायां पूर्त्तावनादरसूचनाय। तेनात्रोक्त एव पूर्त्तिप्रकारो मुख्य इति सिद्धम्। तदेतदभि-सन्धायाहुरत एवेत्यादि, अत एवेति। अत्रोक्तस्य प्रकारस्य तात्पर्यविषयत्वादेव यः कश्चिदिति। अव्याकृतं वा महान्तं वाऽऽरभ्योक्तः। स्वाभिप्रेत इति, द्वितीयस्कन्धे लक्षितो व्यासाभिप्रेतः। न "त्वव्याकृतगुणक्षोभान्महतस्त्रिवृतोऽहमः। भूतमात्रेन्द्रि-यार्थानां संभवः सर्ग उच्यत "इति द्वादशस्कन्धे ल[5]क्षितः, तस्य पुराणान्तरसाधारण्यात्। "एवं लक्षणलक्ष्याणि पुराणानि पुराविद" इत्युपसंहारात्[6]। एतस्याभिप्रेतत्वे बीजं व्याकुर्वन्ति तत्रापीत्यादि, भगवद्रूपतेति। "यथा महान्ती"त्यत्रोक्तरीतिका तद्रूपता। एतादृशस्यैवाभिप्रेतत्वे किं बीजमित्यत आहुस्तत्रापि स्वोपयुक्तेत्यादि। स्वपदेन श्रोताऽत्र ज्ञेयः ननु कथमस्यैव फलसाधकत्वमित्या-काङ्क्षायां तदुपपादयन्ति जीवस्येत्यादि। नाशरूपत्वादिति। धात्वर्थविचारेण "तस्याहं न प्रणश्यामि स च मे न प्रणश्यति" इति प्रयोगेण चादर्शनरूपत्वात्। एतस्य मोक्षार्थत्वे गमकमाहुस्तत्रेत्यादि, तस्यापीति। सन्तोषस्यापि प्रयोजकमिति शेषः। तथा च जीवमोक्षोपयोगिसृष्टिनिरूपकत्वादस्याभिप्रेतत्वमित्यर्थः। एतेनाध्यायार्थानां परस्परं हेतुता प्रयोजकताऽङ्गतादिकं यथासम्भवं सङ्गतिरित्यपि बोधितम् ॥ २ ॥

प्रसिद्धिविरोधमाशङ्क्येति। ननु श्रीभागवतस्य सर्ववेदेतिहाससारत्वात् पुराणान्ते यथा सर्गप्रतिसर्गाविकत्रैवोच्येते, तथैवात्रापि वक्तव्यौ, देहापादकत्वसामान्यात्। तयोर्भिन्नतया कथने तु तत्प्रसिद्धिविरोध इति तमाशङ्क्येत्यर्थः। समाधानग्रन्थस्तु प्रकटार्थ इति न व्याख्यायते ॥ ३ ॥

ननु तथापि संवादान्तरोपक्षेपस्य किं प्रयोजनमित्याकाङ्क्षायामाहुस्तत्रापीत्यादि। उचितमिति फलार्थोपोद्घातत्वादु-चितम् ॥ ४ ॥

---

१. "भक्तिज्ञानं" इति पाठः। २. तथा। ३. 'यज्ञोपयोगः इति अध्याहार्यम्. ४. स्कं० २-१०-४. ५. स्कं० १२-७-११. ६. स्कं० १२-७-२२.

कारणजन्मदा लीलेत्युक्तम्। एवं व्याख्यानस्यार्थान्तरमभिप्रेतम्। रजोभाजोपि लीलासृष्टिर्मुख्यब्रह्मणोपि लीला। कालत्वेन कालस्यापि सृष्टिर्लीला। जीवोपि कारणमिति तस्यापि स्वरूपस्थितिः सृष्टिप्रयोजनत्वेन सर्गमध्यपातिनी भवति। अगुणवैषम्याद्ब्रह्मणोपि जन्मेति व्याख्यानार्थं कारणानां जीवानां जन्म द्यति खण्डयतीति व्याख्यानम्। अतः प्रकरणानि विभजते, देवस्य तु द्विरूपत्वादिति गुणातीतसगुणभेदेन कारणानां तत्त्वजीवानां त्रयो भेदास्तेन पञ्चधा पञ्च प्रकरणानि भवन्ति। एकप्राधान्येऽन्यस्य विभूतित्वमिति स्थितिः। यथा तत्त्वसृष्टिर्गुणातीतविभूतिः, यथा सगुणसृष्टिर्विसर्गरूपा ब्रह्मप्रभृतीनामुत्पत्तिः, यथा वा दशविधा लीला कालस्य सृष्टिः, यथा तत्त्वानां लीला गुणसृष्टिः साङ्ख्यप्रकरणोक्ता, यथा जीवसृष्टिर्मतान्तरभाषया, एवं पञ्चविधापि लीला सर्गरूपा बन्धमोक्षविभेदेन द्विरूपा, सगुणस्य मोक्षलीलायोगः गुणातीतस्य ज्ञानं, कालस्य भक्तिः, तत्त्वानां मोक्षः, जीवस्य वैराग्यमिति। तस्मादर्थभेदेन दशप्रकरणानि भवन्ति। तदाह बन्धमोक्षविभागत इति॥ ५॥

तान् भेदान् स्पष्टयति गुणातीतादिति।

निबन्धः—गुणातीतात्सृष्टिरेका सगुणाद् ब्रह्मणोऽपरा॥ ६॥
कालो जीवस्तथा नाम तत्राऽपीशेच्छया भवः।

प्रकाशः—तत्त्वानां वक्तव्यत्वेपि नामसृष्टेः परिग्रहार्थं नामेत्युक्तम्। तेषां[1] पूर्ववत्स्वातन्त्र्यं वारयति तत्रा'पीशेच्छया भव इति न केवलं कालादेः॥ ६½॥

ननु सर्गे भूम्युद्धारस्य कुत्रोपयोगस्तदाह सर्वाधारस्वरूपा या इति।

निबन्धः—सर्वाधारस्वरूपा या तदर्थं भुव उद्धृतिः॥ ७॥
मुक्तोऽपि जायते जीव इति शापकथा तता।

प्रकाशः—भूम्युद्धारः सर्वसृष्ट्युपयोगी सर्वेषामाधारभूतः साधारणः। तेन बन्धलीलान्ते निरूपितः। जीवप्रकरणं व्यर्थमित्याशङ्क्याह मुक्तोपि जायत इति। मुक्तिर्गौणीति केचित्। वस्तुतस्तु सनकादयो मुक्ता एव पूर्वं सिद्धज्ञाना एवोत्पन्ना,

---

तत्रेत्यादि। एतेन 'भूतमात्रे'ति 'रजोभाज' इतिवाक्ययोर्विरोधः परिहृतः। भूतमात्रेत्यादि। एतेन लक्षणद्वयस्यापि विसर्गेतिव्याप्तत्वं 'सर्गः कारणसम्भूतिरि'ति तृतीयवाक्यस्थकारणपदमादाय परिहृतं बोध्यम्। तेन लक्षणत्रयमपि सङ्गतमिति साधितम्। ननु रजसैव सर्गविसर्गयोः सम्भवे द्वयोरपि लौकिकत्वमेव सेत्स्यति न त्वलौकिकत्वमपीति, कथं तयोः फलपर्यवसायित्वमिति शङ्कायां सर्गलक्षणवाक्यत्रयविचारिते यत् सिद्ध्यति तदाहुरेवमित्यादि, अभिप्रेतमिति, शास्त्रकाराभिप्रेतम्। मुख्यब्रह्मण इति, "रजोभाजो भगवत" इति वाक्यस्थभगवत्पदस्यार्थः। तत्रत्यं लीलापदं व्याख्यातरीतिकलीलाचतुष्टयसङ्ग्राहकम्। मुख्यब्रह्मलीलाव्याख्यानाय अगुणवैषम्यादिति। एतेन श्रौती क्रमसृष्टिरपि सङ्गृहीता। तत्रापि द्यतीतिपदं "कारणसम्भूतिरि"ति वाक्यस्य सम्यक्त्वव्याख्यानरूपम्। एवं व्याख्याने वीजन्तु तत्तदध्यायादिषु तत्तन्निरूपणार्थापत्तिरेव। द्वितीयस्कन्धोक्तं लक्षणञ्च द्विविधसृष्ट्यङ्गीकारे बीजम्। अत्र च रजोभजने करणतया गुणवैषम्यस्य व्यापारतया भूतादिजन्मनः फलतया स्कन्धार्थत्वं बोध्यम्।

एवं सार्धत्रयेण स्कन्धार्थ उक्तः। स एव प्रकरणविभागे बीजमित्याशयेनाहुरत इत्यादि, विभजते इति। त्रयोदशभिर्विभजते। नन्वेकस्य प्रकरणेऽन्यस्यापि निरूपणदर्शनादयं प्रकरणविभागो न युक्त इति शङ्कायामाहुरेकेत्यादि। विभूतित्वमिति शेषत्वम्। एतदेवोदाहृत्य स्फुटीकुर्वन्ति यथेत्यादिना तत्त्वसृष्टिरिति, पञ्चमाध्यायोक्ता। सगुणसृष्टिरिति सगुणविभूतिः। दशविधलीलेति, दशमाध्यायोक्तो दशविधः सर्गः कालविभूतः। गुणसृष्टिः साङ्ख्यप्रकरणोक्तेति विंशाध्यायोक्ता महदादिसृष्टिः। जीवसृष्टिर्मतान्तरभाषयेति, चतुर्दशादिषडध्यायोक्ता मुक्तजीवसृष्टिर्मुक्तजीवविभूतिरित्यर्थः। एवमिति। कर्तृद्वैविध्येन कारणत्रैविध्येन च द्विरूपेति, स्वरूपतो द्विरूपा। ननु बन्धस्य देहस्वीकारात्मकस्यात्र प्रसिद्धत्वादत्र बन्धलीला युज्यते, मोक्षस्तु तत्त्यागरूपो नात्र दृश्यते। का वा मोक्षलीलेत्याकाङ्क्षायां तां स्फुटीकुर्वन्ति सगुणस्येत्यादि। सगुणो हि तेन तेन भावेन तत्तत् सृजन् भयादिकं प्राप्नोति। तद्भावत्यागे च स्वरूपेऽवतिष्ठत इति चित्तवृत्तिनिरोधस्यैव तत्र कारणत्वमिति स तस्य मोक्षलीला। 'एवं मेने सन्तमि'त्यादिना अज्ञानादेव सृष्टेरुक्तत्वादज्ञानस्य च ज्ञानादेव निवृत्तेर्गुणातीतस्य ज्ञानमेव सा। एवं दशविधो वक्ष्यमाणः कालात्मको भजन्नेव मुच्यत इति भक्तिस्तस्य सा। तत्त्वानां प्रतिसङ्क्रम एव स्वरूपलाभ इति स तेषां सा। जीवस्य तु वैराग्यं स्फुटमेव, तथा च मोक्षजनका, अत्र मोक्षपदेनोच्यन्त इति ते तथेत्यर्थः॥ ५½॥

तेषामित्यादि। कालजीवनामतत्त्वानां सगुणनिर्गुणब्रह्मवदुत्पत्तौ स्वातन्त्र्यं वारयतीत्यर्थः। मूले तत्रापीति, शब्दब्रह्मात्मके नाम्नीत्यर्थः॥ ६½॥

---

१. "तेषाम्" पाठः।

अग्रे ज्ञानोपदेशाभावात् । तथा वैकुण्ठवासिनामपि भक्तानां मुक्तानामीश्वरेच्छया सम्भवः । अतः शापकथा । एकः कर्ता अपरो विषय इति ॥ ७½ ॥

**निबन्धः—उपपत्तिरनेनोक्ता फलार्थं प्रक्रियान्तरम् ॥ ८ ॥**
**मतान्तरेण हि फलं राजसत्वान्निरूप्यते ।**

प्रकाशः—एवं जीवोत्पत्तावुपपत्तिरेवोक्ता, न त्वयं प्रकारो भागवताभिमतस्तेषां जीवानां मोक्षार्थं प्रक्रियान्तरं साङ्ख्य-प्रकरणम् । मतान्तरेण फलनिरूपणे हेतुमाह राजसत्वादिति ॥ ८½ ॥

तथा सति फले वैषम्यमाशङ्कयाह फले हि नास्तीति ।

**निबन्धः—फले हि नास्ति वैषम्यमितीशस्योद्भवाभिधा ॥ ९ ॥**
**उपपत्तौ फले चैव तेनावतरणद्वयम् । क्रियाज्ञानविभेदेन कर्माधीनाऽन्यथा भवेत् ॥ १० ॥**

प्रकाशः—यत ईश एवोद्भूय तत्रापि फलं प्रयच्छति । अतोऽस्यां लीलायामवतारद्वयम्, क्रियावतारो वराहो, ज्ञानावतारः कपिल इति । ननु सृष्टौ किमर्थमवतारस्तत्राह कर्माधीनाऽन्यथाभवेदिति ॥ १० ॥

नन्वपूर्वं निरूप्यते यन्मुक्तानां पुनरुत्पत्तिरिति तत्राह मुक्तेपीति ।

**निबन्धः—मुक्तेपि यदि नोत्पत्तिरुत्पन्ने मुक्तिरेव वा । तदा कृष्णेच्छया सृष्टिरित्यर्थो हि विरुध्यते ॥ ११ ॥**

प्रकाशः—तदा ईश्वरत्वं व्याहतं भवेदित्यर्थः ॥ ११ ॥

सृष्टिः सफलेति स्पष्टयति स्त्रीपुंसेति ।

**निबन्धः—स्त्रीपुंसमुक्तिकथनात्तदर्थं सृष्टिकृद्धरिः । ऐहिकामुष्मिकफलं मोक्षं प्रीतः प्रयच्छति ॥ १२ ॥**
**तस्मात्सृष्ट्यवतीर्णस्तु भजेत हरिमादरात् ।**

प्रकाशः—किमत्र स्कन्धार्थे फलितमित्याशङ्कयाह ऐहिकामुष्मिकफलमिति ॥ १२½ ॥

ननु साङ्ख्यप्रकरणे तदनुसारिणी सृष्टिः कथं नोक्ता, तत्राह साङ्ख्येनेति ।

**निबन्धः—साङ्ख्येन मुक्तिकथनात्सृष्टिः सामान्यतोदिता ॥ १३ ॥**
**तामसी राजसी चैव सात्त्विकीति क्रमात्त्रिधा । गुणसृष्टेस्तन्मतत्वाद्गौणत्वान्न विरुध्यते ॥ १४ ॥**

प्रकाशः—सामान्यतो मता या काचिद्वक्तव्येत्युक्ता, उदितेति सन्धिरार्षख्यापकः । अत एव गौणी तदविरोधार्थं निरूपिता ॥ १४ ॥

---

तेनेति, निर्वाहकत्वेन । आहेति, उपोद्घातेन सार्थकत्वमाह । मुक्तिरिति, जयविजयमुक्तिः । ततापदस्यार्थमाहुरेकः कर्तेत्यादि । न च मोक्षोत्तरं बन्धस्य "न स पुनरावर्तत" इतिश्रुतिविरुद्धत्वात्तेषां शापतः पातरूपेण लिङ्गेन गौण्येव मुक्तिरङ्गी-कार्येति वाच्यम्, "देहेन्द्रियासुहीनानां वैकुण्ठपुरवासिनामि"ति सप्तमस्कन्धीयवाक्यविरोधात् । अत्र स्वरूपावस्थानस्यैव स्फुटत्वात् । न च क्रोधासम्भवः शङ्क्यः, तस्येश्वरेच्छयैव भवनात् न चेच्छायां मानाभावः, "न विदुस्तच्चिकीर्षितमि"ति तत्रैव वाक्यात् ॥ ७½ ॥

तदेतदभिसन्धायाहुरेवमित्यादि । शापकथाविस्तारेण मुक्तजीवोत्पत्तावुपपत्तिरेवोक्ताऽतो न मुक्तिर्गौणीत्यर्थः । नन्वत्रैव-कारेण कस्य व्यावृत्तिरित्यपेक्षायामाहुर्न त्वित्यादि । प्रकार इति उत्पत्तिप्रकारः । किमत्र गमकमित्यपेक्षायामाहुस्तेषामित्यादि । तेषामिति मुक्तियोग्यानाम् । तथा चानभिमतत्वे साङ्ख्यप्रक्रियाकथनमेव गमकमित्यर्थः । नन्वयमप्यभिमतः, अन्यथा पुनः कतिपयैः स्थानं प्रपत्स्येतेह जन्मभिरिति फलं नोक्तं स्यादित्याशङ्कायामाहुर्मतान्तरेत्यादि । अस्याः कथायां मतान्तरत्वन्तु "अथात्रा-पीतिहासोयं श्रुतो म" इति परोक्तिकथनादवसीयते । राजसत्वादिति, संरम्भित्वेन राजसत्वात् ॥ ८½ ॥

अत इति । मुक्तोत्पत्तिमुक्तफलयोर्भगवदधीनत्वज्ञापनस्यावश्यकत्वात् । कर्माधीनान्यथा भवेदिति, सृष्टाववताराभावे मुक्तोत्पत्तिः कर्माधीना भवेत् । अवतारे तु यथा स इच्छया, तथा सापीति बोधनायावतार इत्यर्थः ॥ ९-१०-११ ॥

स्त्रीपुंसोरित्यत्र मूले तदर्थमिति, गृहस्थमुक्त्यर्थम् ॥ १२½ ॥

तदनुसारिणीति, प्रकृतिपुरुषसंसर्गस्वभावजन्या । मूले, साङ्ख्येन मुक्तिकथनादिति, मुक्त्यर्थमत्र साङ्ख्यप्रक्रियोक्ता । मुक्तिस्तु परमा, तत्प्रकारकसृष्टिज्ञानान्न भवतीत्यतो नोक्तेत्यर्थः । तर्हि सत्त्वादिगुणजन्या किमित्युक्तेत्यत आहुरत एवेत्यादि । अत एवेति साङ्ख्येन मुक्तिकथनादेव । तथा चोभयसामञ्जस्यार्थमेवं निरूपितेत्यर्थः ॥ १४ ॥

ननु कर्दमस्य मुक्तौ साधनं नोक्तमिति चेत्तत्राह ज्ञानस्य पूर्वसिद्धत्वादिति ।

निबन्धः—ज्ञानस्य पूर्वसिद्धत्वान्मुक्तिर्भोगादिसंयुता । उपदेशेन च परा चतुर्भिर्नवभिः क्रमात् ॥ १५ ॥

प्रकाशः—उपदेशेन स्त्रीमुक्तिः ॥ १५ ॥

निबन्धः—चतुःप्रकरणी स्थौल्ये सौक्ष्म्ये तु दशधा मता । अधिकारस्तथा सृष्टिरुपपत्तिः फलं तथा ॥ १६ ॥

प्रकाशः—तेन क्रमात्प्रकरणचतुष्टयं भवति । दश प्रकरणानि पूर्वं निरूपितानि । स्थूलानि गणयति अधिकार इति ॥ १६ ॥

निबन्धः—पञ्चधा सृष्टिरुक्ता हि तृतीया तु द्विधा मता । चतुर्थी तु त्रिधा प्रोक्ता दशैते सृष्टिसङ्गताः ॥ १७ ॥

अधिकारस्ततो भिन्नः स्कन्धद्वययुतः परः ।

प्रकाशः—पञ्चधा सृष्टिः पूर्वमेवोक्ता । चतुर्णामेव दशधात्वमिति । तत्र सृष्टिः पञ्चविधा, उपपत्तिर्द्विधा । त्रिधा मुक्तिः । एवं त्रयाणां दश भेदाः । अधिकारस्तु ततो भिन्नः, तस्य स्कन्धद्वयोपयोगात्, स्कन्धद्वयमेकं प्रकरणवत् । तेन षष्ठ्यध्यायाः सर्गविसर्गयोः । अधिकारे चतुष्टयमिति । भगवतः कला निरूपिता भवन्ति ॥ १७ $\frac{1}{2}$ ॥

एवं प्रकरणार्थं निरूप्य अधिकारेऽध्यायचतुष्टयमिति तत्र प्रथमाध्याये यादृशोऽधिकारः संपन्नस्तं प्रतिपादयितुमाह प्रतिबन्ध इति ।

निबन्धः—प्रतिबन्धो गृहासक्तिः शुद्धिस्तीर्थाटनं मता ॥ १८ ॥

बाह्या हरिकथाश्रुत्या तथा चाऽऽभ्यन्तरी मता । कृष्णप्रसादयुक्तश्चेदधिकारी परः स्मृतः ॥ १९ ॥

प्रकाशः—प्रतिबन्धनिवृत्तिः शुद्धिस्तीर्थाटनमिति । भगवदीयत्वेपि त्रयो गुणा अधिकाः । तेन पूर्वस्माद्विशिष्टोऽयं प्रथमः । तस्य भगवत्कथाश्रवणं चेत्ततोप्युत्तमो भवति । तत्राऽऽभ्यान्तरश्चेद्भगवद्गुणो भवति तदा तृतीयः । भगवत्कृपायां चतुर्थ इति । भगवदीयत्वेपि चतुष्टयं चेत्परमोऽधिकारी भवति । बाह्या शुद्धिर्द्विधा, दोषनिवृत्तिरूपा गुणाधायिका च । तत्र प्रथमाध्यायार्थः गृहासक्तिरेव प्रतिबन्धः । अतस्तन्निवृत्तिर्वक्तव्येति शेषः ॥ १९ ॥

---

पूर्वं निरूपितानीति, शुकोक्तरीत्या निरूपितानि । अस्मिन् पक्षेऽध्यायविभाग एवं प्रतिभाति । अधिकारेण सह षड्भिर्गुणातीतलीला । ततस्त्रिभिः सगुणलीला । ततो द्वाभ्यां कालस्य, तन्मध्य एव प्रथमे कालाधीनयोस्तत्वामुक्तजीवयोः सृष्टिः, ततो द्वादशे मुक्तजीवसृष्टिः, ततः सप्तभिस्तदुपोद्घात इत्यष्टाध्याय्या मुक्तजीवसृष्टिरेवमेकोनविंशत्या पञ्चधा बन्धलीला । तत एकेन मोक्षोपोद्घातश्चतुर्भिः पुम्मुक्तिः, सा च तत्त्यक्तानां तत्त्वानां स्वस्वरूपापादकत्वात्तेषां मुक्तिरूपा । तत एकेन मुख्यभक्तिः, सा कालस्य मुक्तिलीला । ततो द्वाभ्यां ज्ञानं, सा गुणातीतस्य । तत एकेन योगः स सगुणस्य । अग्रिमे याऽस्ति भक्तिः सा योगस्यैव शेषः । ततो द्वाभ्यां वैराग्यं, तज्जीवस्य मोक्षलीला । ततो द्वाभ्यां स्त्रीमुक्तिः, पूर्ववदेवेति चतुर्दशभिर्मोक्षलीलेति । गणयतीति, मैत्रेयाभिप्रेतपक्षेण गणयति ॥ १६ ॥

अत्राध्यायविभागमन्यथा वक्तुं पूर्वस्मात्स्माद्वैलक्षण्यं स्मारयन्ति पञ्चधेत्यादि । पूर्वमिति, बन्धलीलाविभागे, चतुर्णामिति, स्थूलप्रकरणानाम् । इति हेतौ । अत्रत्यविभागं स्पष्टयन्ति तत्रेत्यादि । आद्यांश्चतुरो विहाय पूर्ववदेव पञ्चधा सृष्टिर्द्वादशाध्यायावधिः । ततः सप्तभिर्बन्धोपपत्तिरेकेन मोक्षोपपत्तिरीत्यष्टाभिर्द्विधोपपत्तिस्ततो भक्तिसाङ्ख्ययोगैस्त्रिधा मुक्तिः, तत्र चतुर्भिः पुम्मुक्तिः साङ्ख्यफलरूपा । तत एकेन सफला मुख्यभक्तिः । ततो द्वाभ्यां साङ्ख्यम्, ततो द्वाभ्यां योगस्तच्छेषभूता भक्तिश्च । ततश्चतुर्भिर्वैराग्यसर्वनिर्द्धारौ सर्वशेषौ, योगफलभूता देवहूतिमुक्तिश्चेति प्रकरणत्रये दशभेदाः । नन्वस्मिन् पक्षेऽधिकारस्य प्रकरणित्वे किं बीजमत आहुरधिकारस्त्वित्यादि । ननु स्कन्धद्वये कुत एकाधिकार इत्यत आहुः स्कन्धेत्यादि । कलेत्यादि, तेन मैत्रेयोक्तिविचारे स्कन्धद्वयात्मकं भगवत्कलाप्रकरणं भवतीति तदैक्यादेकोधिकार इत्यर्थः । एवं त्रयोदशभिः प्रकरणार्थो निरूपितः ॥ १७ $\frac{1}{2}$ ॥

अतः परमध्यायार्थं वदन्त्येवमित्यादि । आहेति, सामान्यतोऽध्यायचतुष्टयार्थं त्रिभिराह । पूर्वस्मादिति परीक्षितः, प्रथम इति प्रथमाध्यायोक्तोधिकारी । एवमग्रेपि । भगवद्गुण इति, स च शोकनिवर्तकज्ञानरूप इति प्रतिभाति । तत्रेति प्रकरणे ॥ १९–२० ॥

---

† "एव" इतिपाठः ❋ प्रथमः १ कारिकात्मकः प्रथमः स्तबक सप्तसततिपृष्ठे, ३॥ कारिकात्मको द्वितीय स्तबकोऽशीति पृष्ठे समाप्तो भूत् । अत्र तु १३ कारिकात्मकस्तृतीयः समाप्तः ।

ननु क्षत्रियाद् भगवदीयाच्छूद्रः कथमधिकारी ततोऽप्युत्तमो वा कथं ? तत्राह शतं वर्षाणीति ।

**निबन्धः—शतं वर्षाणि शूद्रत्वं पश्चाद्राजन्यताऽस्य हि । तावत्क्षत्ता ततो मन्त्री तस्मात्कृष्णसभोज्यता ॥ २० ॥
अतोऽधिकारस्तस्याऽत्र यथायुक्तं तु जीवनम् ।**

प्रकाशः—"शापाद्वर्षशतं यमः" इति वाक्यात् । शतवर्षपर्यन्तं शूद्रत्वम् । अन्यथा ब्रह्मबीजस्य मुख्यशूद्रत्वं नोपपद्येत, राजत्वार्थं प्रार्थितत्वात् । क्षत्रियत्वमेव पश्चात् । अत एव मन्त्रादाह्वानम् । तस्याऽशूद्रत्वे हेत्वन्तरमप्याह कृष्णसभोज्यतेति । अतः क्षत्रियत्वात्तस्याऽधिकारः । ब्रह्मबीजत्वं चाऽधिकप्रयोजनम् । ननु स शतवर्षाण्येव जीवतीत्यभिप्रायेण कथं न शाप इत्यभिप्रायेणाह यथायुक्तमिति । जीवनं तु युक्त्या तस्य बहुकालं लक्ष्यते । स हि धृतराष्ट्रसमानः दुर्योधनसमानो भीमः । ततोपि कनिष्ठोऽर्जुनः । तत्समानः कृष्णः । तत्र च "पञ्चविंशाधिकशतम्" इति वाक्यम् । अतः सार्धं शतं वा तस्य जीवनं भवति ॥ २०½ ॥ *

एवं चतुर्णामर्थमुक्त्वा प्रथमाध्यायार्थमाह अपमानाद्धि निर्विण्ण इति ।

**निबन्धः—अपमानाद्धि निर्विण्णो विशुद्धस्तीर्थसेवया ॥ २१ ॥
क्षत्ता सत्सङ्गतः प्रीतः प्रश्नत्रितयकृद्धरेः । सामान्येन विशेषेण कुशलं चरितं तथा ॥ २२ ॥**

प्रकाशः—स्वतो निर्विण्णः कदाचिदागच्छेदपि । अतो हेतुपूर्वको निर्वेदः साधनीयः, स चेन्निर्विण्णोऽन्यत्र तिष्ठेत्पुनरासक्तिर्भवेत् । अतस्तीर्थसेवैव कर्तव्या । तत्रापि तीर्थे देवताबुद्धिस्तदैव सेवा भवति । तत्रापि कामनाभावाय विशुद्ध इति । क्षत्तेति पूर्वमेव जितेन्द्रियता सिद्धा । सत्सङ्ग उद्धवसङ्गः, तेनैव प्रीतः, न तु प्रश्नार्थम् । तत्र प्रश्नत्रयं कृतवान् , भगवतः कुशलप्रश्नः सर्वेषां कुशलप्रश्नमिषेण भगवतः सामान्यप्रश्नश्चरितप्रश्नश्चेति । तदाह सामान्येनेति ॥ २२ ॥

उत्तरे क्रमेण उत्तराभावात्प्रकारमाह अन्तिमं मध्यतः कृत्वेति ।

**निबन्धः—अन्तिमं मध्यतः कृत्वा द्वयोः सम्बन्धकारणात् । मारणे प्राप्तदोषस्य भक्तोद्धारेण वारणम् ॥ २३ ॥**

प्रकाशः—अन्तिमं चरित्रं मध्यतो विशेषप्रश्नोत्तरमुक्त्वा सामान्योत्तरमनुक्त्वा मध्ये चरित्रमुक्तम् । "कृष्णद्युमणिनिम्लोचे" इति विशेषोत्तरं "राजँस्त्वयाऽनुपृष्टानाम्" इति सामान्योत्तरम् । मध्ये भगवतश्चरित्रं च द्विविधमपि निरूपितमित्यर्थः । तत्र हेतुः, सम्बन्धकारणादिति, भगवतश्चरित्रकथनव्यतिरेकेणोत्तरासम्भवात्सम्बन्धे कारणम् । ननु भगवतश्चरित्रं नेदं समीचीनं, भक्तानां बन्धूनां मारणादतः कथमधिकारसिद्ध्यर्थं तच्चरित्रमुक्तमित्याशङ्क्याह मारणे प्राप्तदोषस्येति । यद्यपीश्वरत्वान्न दोषस्तथापि प्रतीत्या दोषसम्भवेऽपि ते सर्वे भक्तास्तेन प्रकारेणोद्धृता इति दोषनिवृत्तिः ॥ २३ ॥

ननु तथापि विदुरः परीक्षिदपेक्षया कथमुत्तमो भगवदीयत्वस्य तुल्यत्वादित्याशङ्क्याह सेवनादिति ॥

**निबन्धः—सेवनात् कृष्णदेवस्य तदाज्ञाकरणादपि । माहात्म्यस्य श्रुतत्वाच्च श्रेष्ठ उत्तमतो ह्ययम् ॥ २४ ॥
अतस्तस्य कथा प्रोक्ता कृष्णविश्वासदायिनी ।**

प्रकाशः—पूर्वं भगवत्सेवा तेन महती कृता । तदाज्ञाकरणं पाण्डवानां रक्षा । विशेषतो भगवन्माहात्म्यश्रुतिश्च । एतद्धेतुत्रयं परीक्षिति नास्तीति ततोऽप्ययमुत्तमः । उत्तमत्वं कुत्रोपयुज्यत इत्याशङ्क्याह कृष्णविश्वासदायिनीति । विश्वासस्याभिज्ञापिका निःशङ्कं प्रवृत्तिः ॥ २४½ ॥[१]

---

अर्थमुक्त्वेति, शुकाशयगोचरमर्थं सामान्यत उक्त्वा प्रथमाध्यायार्थमिति संवादोपयोगिनं तदर्थम् । आहेति चतुर्भिराह ॥ २२ ॥

इति सामान्योत्तरमिति एकजातीयकम् "अथ ते तदनुज्ञाता" इत्यादि श्लोकद्वयोक्तं सामान्योत्तरम् । द्विविधमिति बन्धमोक्षभेदेन द्विविधम् ॥ २३ ॥

भगवदीयत्वस्य तुल्यत्वादिति, भगवदीयत्वे सति गृहासक्त्यभावादीनां परीक्षित्युक्तत्वादिति भावः । उत्तमत्वमित्यादि, द्वितीयतृतीयाध्यायोक्तं श्रुतमाहात्म्यस्वरूपमुत्तमत्वमधिकारे कस्मिन्नंश उपयुज्यते । प्रवृत्तिरिति, भगवद्वाक्यश्रवणार्था मैत्रेयोपसत्तौ प्रवृत्तिः ॥ २४½ ॥

---

* ३ कारिकात्मकश्चतुर्थः स्तवकः । १. इति ४ कारिकात्मकः पञ्चमः स्तवकः ।

एवं प्रकरणार्थमुपपाद्य द्वितीयाध्यायार्थमाह द्वितीय इति ।

निबन्धः—द्वितीये तु तथाऽध्याये सामान्योत्तरमुच्यते ॥ २५ ॥
तदर्थं हरिमाहात्म्यमार्थिकं कृतमेव च ।

प्रकाशः—विशेषमाहात्म्यमेव प्रश्नस्य जीवपरत्वे सामान्यमाहात्म्यं भवति । तदेवमर्थः । भगवत्प्रश्नो जीवानां साधारणप्रश्नः, विशेषप्रश्नस्तु तत्तन्नाम्ना । अतो भगवतोऽन्तशेषत्वात्तत्र विश्वासार्थं भगवत आर्थिकं माहात्म्यं प्रथमम्, पश्चात्कृतं निरूप्यते ॥ २५½ ॥

तस्योत्तराङ्गत्वमाह कृतमिति ।

निबन्धः—कृतं यद्यप्युत्तराङ्गं साम्यात्सम्बन्धतोऽपि तत् ॥ २६ ॥
अत्रोक्तं फलसिद्ध्यर्थमुद्धवप्रेम चोच्यते ।

प्रकाशः—तृतीयाध्याये चरित्रमुक्तमिति । तत्साम्यादिदमप्युत्तरशेषत्वेनोच्यते । कथया कथा सम्बध्यत इति हेत्वन्तरम् । नन्वेवं सति किमत्र कथानिरूपणेनेत्याशङ्क्याह अत्रोक्तमिति । द्वितीयाध्याये विश्वासार्थं भगवत्कृतं फलमुक्तम्, तच्चरित्रेऽपि यथा भवति तदर्थं तत्सम्बद्धमुक्तम् । भगवतो वार्ताकथनमध्यायार्थः । तत्रोत्तराङ्गद्वयम् । विश्वासार्थं माहात्म्यम् । कथाया अपि तथात्वं च । पूर्वाङ्गमेकम् । परमा भक्तिः । अभक्तोक्ते सर्वथा न विश्वास इति उद्धवप्रेम चोच्यते ॥ २६½ ॥

तत्र श्लोकान् विभजते षड्भिरिति ।

निबन्धः—षड्भिस्तथैकेन पुनर्दशयुक् सप्तभिस्तथा ॥ २७ ॥
दशभिश्च क्रमादत्र चत्वारोऽर्था निरूपिताः ।[१] तृतीयेऽष्टाविंशतिभिश्चरित्रं केवलं कृतम् ॥ २८ ॥
विशेषस्योत्तरं तुर्ये श्लोकाभ्यां विंशतिः पुनः । भक्तोद्धारेऽविद्यमाने चत्वार्येकं वियोजकम् ॥ २९ ॥
द्वयोराज्ञाप्रसिद्ध्यर्थं पञ्च सन्देहवारणे । चतुर्भिः सङ्गमश्चेति षडर्थाः क्रमतोदिताः ॥ ३० ॥

प्रकाशः—विशेषस्य कुशलस्य । चतुर्थाध्याये उत्तरं श्लोकद्वयेन । तद्दोषपरिहाराय पुनर्भक्तोद्धारे विंशतिः । अविद्यमाने भक्तोद्धारे चत्वारि वाक्यानीति शेषः । एकं वियोजकम् । "इति सह विदुरेण" इति । उभयोरुद्धवविदुरयोः । सन्देह-निवृत्तिः परीक्षितः । चतुर्भिर्गुरुशिष्यङ्गमः । विद्यमानो भक्त उद्धवः । अविद्यमानो विदुरः, एतदकथने क्रूरत्वादभजनीयः स्यात् ॥ २९–३० ॥

एवं श्रोतुरधिकारं निरूप्य वक्तुरधिकारमाह मैत्रेयस्यापीति ॥

मैत्रेयस्यापि वक्तृत्वं [२]श्रवणाज्ज्ञापनान्मतम् । अत एव हरिस्तस्य सङ्गं चक्रे स्वसिद्धये ॥ ३१ ॥[३]

---

एवं चतुर्भिः प्रथमाध्यायार्थ उक्तः । द्वितीयाध्यायार्थं त्रिभिराहुरेवं प्रकरणार्थमुपपाद्येति, अधिकारभेदव्युत्पादनेनोपपाद्य ननु सर्वेषां कुशलप्रश्नमिषेण भगवत्प्रश्नो हि भगवतः सामान्यप्रश्नस्तदुत्तरं तृतीये "अथ ते तदनुज्ञाता" इत्यनेन वक्ष्यते, "कृष्ण-द्युमणि" इति तु विशेषोत्तरमतो द्वितीये कथं तस्योत्तरमित्याकाङ्क्षायामाहुर्विशेषेत्यादि । 'कच्चिद्वरूथाधिपतिरि'त्यादिनोक्तप्रश्नस्य जीवपरत्वे द्युमणिपदोक्तं विशेषमाहात्म्यं जीवसामर्थ्यसम्पादनाभिप्रायेण सामान्यमाहात्म्यं भवति तदेवमित्यर्थः । वक्ष्यमाणरीत्या प्रथमाध्याये प्रश्नद्वयम् । अत एवं प्रश्नविचाराद्भगवतो जीवशेषत्वात् तत्र भगवति विदुरस्य विश्वासार्थमीश्वरत्वबुद्धिदार्ढ्यार्थमर्थ-सम्बन्धि माहात्म्यं प्रथमं द्युमणिपदोक्तम् । तथा चैवं विचारे तत्सामान्योत्तरमित्यर्थः ॥ २५½ ॥

फलमुक्तमिति, "अहो बकीय"मित्यादिना दयारूपं फलमुक्तम् । यथा भवतीति, यथा ज्ञानं भवति । तत्रेत्यादि, अध्यायार्थे माहात्म्यं कथाया माहात्म्यबोधकत्वञ्चेति द्वयं तृतीयाध्यायोक्तकथाङ्गम् । तयोः प्रयोजनं विश्वास इत्यर्थः । पूर्वाङ्गमिति, सामान्योत्तरस्याङ्गम् । पूर्वे विश्वासदायिनीति यदुक्तं तदेतेन दृढीकृतम् ॥ २६½ ॥

एवं त्रिभिर्द्वितीयाध्यायार्थ उक्तः । अर्धेन तृतीयस्य, त्रिभिस्तुरीयस्यार्थं वदन्तो व्याकुर्वन्ति विशेषस्येत्यादि । अविद्यमान-भक्तोद्धार इति, विदुरोद्धारे । सन्देहनिवृत्तिरिति, 'आज्ञाप्रसिद्ध्यर्थं' मित्यनेन मूले या भगवदाज्ञासिद्धिरुक्ता, तद्विषयकसन्देह-निवृत्तिरित्यर्थः ॥ २९–३० ॥

---

१. इति ३ कारिकात्मकः षष्ठः स्तबकः । २. श्रवणाद । ३. इति ३॥ कारिकात्मकः सप्तमः स्तबकः ।

प्रकाशः—श्रोतर्येवाऽनुप्रवेशः। ननु वक्तुः प्राधान्याद्भिन्नतया निरूपणमुचितं, तत्कथं श्रोतृशेषत्वमित्याशङ्क्याह अत एवेति। न हि मैत्रेयकृपया मैत्रेयो निकटे स्थापितः, किन्तु विदुरकृपया। अतो भगवन्मार्गे भक्त एव श्रेष्ठो नाऽन्य इत्यर्थः॥ ३१॥

एवं चतुर्भिरधिकारं निरूप्य श्रोतरि सिद्धे मुख्यसृष्टिं निरूपयतीत्याह अधिकार इति।

**अधिकारेऽथ संसिद्धे द्वाभ्यां सृष्टिर्निरूप्यते। तत्त्वकार्यविभेदेन गुणातीता द्विधा हि सा॥ ३२॥**

प्रकाशः—उभयोर्भेदकमाह तत्त्वकार्यविभेदेनेति। कार्यं पुरुषशरीरम्। गुणातीता द्विधा हि सृष्टिः। अग्रे उभयोः कारणत्वाद् द्वयं कारणत्वेनैव निरूपितम्॥ ३२॥

तत्र तत्त्वेषु सन्देहाभावात्समष्टेः कारणत्वं साधयति समष्टेरिति।

**समष्टेः कारणत्वं हि कर्माणि प्रति वर्णिनाम्। प्रश्नत्रयं तृतीये तु द्वैविध्यं प्रथमे पुनः॥ ३३॥**

**षड्भेदा नाऽवतारे हि साधनेनोपसंहृतिः। द्वयोरपि विभेदेन प्रकटे ह्येक एव तु॥ ३४॥**

**जन्मादयः प्रवेशश्च प्रकारद्वयमेव च।**

प्रकाशः—एवं प्रकरणाध्यायार्थं निरूप्य विचारमारभते। तत्र प्रथमं विदुरस्य प्रश्नः "सुखाय कर्माणि" (३-५-२) इति पञ्चदशभिः श्लोकैः। तत्र किं पृष्टमिति विचारणीयम्। उत्तरत्वेन भगवल्लीलामाह उत्पत्तिस्थितिप्रलयरूपाम्। ततस्तदनुरोधेनैकः प्रश्नः कर्तव्य इति भवति तदभावाद्विचारः। तत्र प्रथमं कर्मफले सन्देहः, फलार्थं विहितानि कर्माणि क्रियमाणानि विपरीतं फलं साधयन्तीत्येकः प्रश्नः। तत्रांशत्रयमस्तीत्याह कर्माणि प्रति वर्णिनामिति। नैतानि कर्माणि लौकिकानि, किन्तु वैदिकानि। अन्यथा भ्रान्तस्य फलविपर्यये न किञ्चिद्दूषणम्। अतो वर्णिनामेव कर्माणि प्रति प्रश्नत्रयम्। कथं सुखं न जायते? दुःखाभावो वा उद्देश्यभेदेन। कथं वाऽसङ्कलितं दुःखं जायत? इति। अथ यदि कर्ममार्ग एतादृश एव तदा प्राणिना किं कर्तव्यमिति प्रथमः प्रश्नः। तत्र यद्युत्तरं भगवद्भजनं कर्तव्यमिति, तत्रापि भजनमपि कर्मेति, येन प्रकारेण कृतं भगवत्प्रीतिजनकं भवति तं प्रकारं कथयेति द्वितीयः प्रश्नः। अवतारचरीतप्रश्नस्तृतीयः। अवतारव्यतिरेकेण कृते चरित्रे प्रश्नचतुष्टयम्—उत्पत्तिस्थितिप्रलया नानात्वमिति। कार्यप्रश्नः पञ्चमः। सर्वत्र भिन्नप्रकारकरणहेतुः प्रश्नः षष्ठः। एवमवतारचरित्रेण सह सप्त भवन्ति। एवं सति प्रश्नत्रयं भवति। जीवकर्माणि द्विविधानि, स्वार्थानि भगवदर्थानि चेति। भगवत्कर्माणि च तृतीयानि, तत्सामान्यतः प्रविजानीते प्रश्नत्रयं भवति। एतत्पदं पूर्वेणापि सम्बध्यते, वर्णिनामित्यनेन तद् द्योतितं प्रश्नप्रथमश्लोकार्थत्वेन, साधारण्येन। तत्राऽनवतारप्रश्ने अवतारानवतारभेदेन द्वैविध्यम्। तत्राऽनवतारप्रश्ने षड्भेदाः। स एव प्रथम इति प्रथमे पुनरित्युक्तम्। पश्चादवताराः। उद्देशेन ग्रहणसन्देहं वारयति नाऽवतारे हीति। अतोऽनभिव्यक्तभगवत एव षट् प्रश्नाः कृताः, उपसंहारेपि निरूपिताः। "यानीश्वरः कीर्तय तानि मह्यम्" (३-५-१६) इति गृहीतावतारस्य च तेन भगवत्कर्मस्वेव द्विविधेष्वपि तस्योपसंहार इति तत्रैवोत्तरमुक्तमिति न दोषः। यतः साधने जीवकर्तृककर्मणि नोपसंहृतिः। हेत्वन्तरमपि द्वयोरपि विभेदेनेति। 'तदस्य कौषारव' (३-५-१५) इति। "स विश्वजन्मस्थिती"ति (३-५-१६)। इदानीं प्रश्नान् गणयितुं प्रथम उद्देशप्रकारेण एक एव प्रश्न इत्याह प्रकटे ह्येक एव त्विति। प्रकटोऽवतारः। अप्रकटे षड्भेदान् वदति जन्मादय इति, उत्पत्तिस्थितिप्रलयाः यथा "ससर्जाग्रे" इत्यादिना। प्रवेशनानात्वे एकत्वेन गणिते। तदनन्तरं प्रकारद्वयप्रश्नः, "यैस्तत्त्वभेदैः," "येन प्रजानामि"ति ३-५-९॥३३, ३४॥

---

मूले श्रवणाऽऽज्ञापनादिति, श्रवणसहितादाज्ञापनात्। एवं त्रिभिश्चतुर्थाध्यायार्थ उक्तः। तावता सार्धैर्नवभिः प्रथमं प्रकरणं स्थूलपक्षे विभक्तम्॥ ३१॥

अतः परं द्वादशाधिकशतेन बन्धसृष्टिप्रकरणं वदिष्यन्तस्तस्य प्रथमं प्रकारं नवभिः स्फुटीकर्तुमाहुरेवञ्चतुर्भिरित्यादि। निरूपयतीति, मैत्रेयो निरूपयति। उभयोः कारणत्वादिति, तत्त्वपुरुषशरीरयोर्जगत्कारणत्वात्॥ ३२॥

साधयतीति, व्याख्येयग्रन्थे "हि" शब्देन मुखतोऽवर्त्तत ब्रह्मेत्यादीनामर्थं सङ्गृह्णन् साधयतीत्यर्थः। एवमिति, गुणातीतत्वेन तत्त्वकार्यविभेदेन च नैतानि कर्माणीत्यादि, "श्रेयस्त्वं कतमद्राजन् कर्मणात्मन ईहसे, दुःखहानिः सुखावाप्तिश्रेयस्तन्नेह चेष्यते" इति प्राचीनबर्हिषं प्रति नारदवाक्यादित्यर्थः। नन्वत्र तान्येवाभिप्रेतानीति कथं ज्ञेयमित्यत आहुरन्यथेत्यादि। तथा च प्रश्नकर्तुः स्वभावविचारादेव ज्ञेयमित्यर्थः। कर्माणि प्रतीति कर्माणि लक्ष्यीकृत्य। प्रथमः प्रश्न इति, उक्तप्रश्नत्रयघटितः 'सुखाय कर्माणि' इति पद्योक्तः। द्वितीय इति, 'तत्साधुवर्यादिशे'ति (३-५-४) पद्योक्त "करोति कर्माणी'त्यादिभिः पञ्चपद्यैः सप्तप्रश्नानाहुरवतावरेत्यादि। एवं सतीति, श्लोकाष्टकतात्पर्ये विचारिते सति। एतत्पदमित्यादि, "एतच्च नो वर्णय विप्रवर्ये"त्यत्रोक्तमेतत्पदं (३-५-९) "करोति कर्माणि कृतावतार" (३-५-५)इत्यादिग्रन्थेनापि सम्बध्यत इत्यर्थः। तद्द्योतितमिति, चकारसूचितं वैदिककर्मविषयत्वं द्योतितमित्यर्थः। स एव प्रथम इत्यादि, प्रश्ने पश्चादुक्तेपि उत्तरेऽनवतारप्रश्न एवोत्तरित इत्याशयेन प्राथम्यमुक्तमित्यर्थः। ग्रहणसन्देहमिति, प्राथम्यग्रहणसन्देहम्। हेत्वन्तरमपीति, द्वाभ्यामुपसंहृतिरूपं तत्रैवोत्तरोक्तौ हेत्वन्तरमित्यर्थः। प्रथमे उद्देशप्रकारेणेति, उद्देशप्रकारेण प्रथमे प्रश्ने॥ ३३,३४॥

